# श्रीमद्भागवत महापुराणम्

## दशमः स्कन्धः - उत्तरार्धः

### ३५ टीका

५० से ८० अध्याय

॥ श्रीकृष्णाय नमः ॥

ॐ नमो भगवते वासुदेवाय

# दशमः स्कन्धः–उत्तरार्धः

## अथ राजससाधनप्रकरणम्

## अथ पञ्चाशत्तमोऽध्यायः

| श्लोकाः | अनु. | वंश. | मि. उ. | उ. | श्लो. अ. | उ. अ. | अ. अ. | सं. श्लो. अ. | सं. श्लो. अ. |
|---|---|---|---|---|---|---|---|---|---|
| ५८ | ४८ | १ | ६ | ३ | २०२८ | १६ | ८१ | २११२८ | ६६॥ |

श्रीशुक[1] उवाच

अस्तिः [2]प्राप्तिश्च कंसस्य महिष्यौ भरतर्षभ । [3]हते भर्तरि दुःखार्ते ईयतुः [4]स्म पितुर्गृहान् ॥ १ ॥
पित्रे मगधराजाय जरासंधाय दुःखिते । वेदयाञ्चक्रतुः सर्वमात्मवैध[5]व्यकारणम् ॥ २ ॥
स [6]तदाऽप्रियमाकर्ण्य शोकामर्षयुतो [7]नृप । अयादवीं[8] महीं कर्तुं चक्रे परममुद्यमम् ॥ ३ ॥
अक्षौहिणीभिर्विंशत्या[9] तिसृभिश्चाभि[10] संवृतः । यदुराजधानीं मथुरां न्यरुणत् सर्वतोदिशम् ॥ ४ ॥

**कर्वंमक्षमा**

अन्वयः—श्रीशुक उवाच–भरतर्षभ ! कंसस्य, महिष्यौ, अस्तिः, च प्राप्तिः, भर्तरि हते, दुःखार्ते, पितुः, गृहान्, ईयतुः स्मः ॥ १ ॥ दुःखिते, मगधराजाय, जरासंधाय, पित्रे, सर्वम्, आत्मवैधव्यकारणम्, वेदयाञ्चक्रतुः ॥ २ ॥ नृप ! सः, तदा, अप्रियम्, आकर्ण्य, शोकामर्षयुतः, महीम्, अयादवीम्, कर्त्तुम्, परमम्, उद्यमम् चक्रे ॥ ३ ॥ तिसृभिः, च, विंशत्या, अक्षौहिणीभिः, अभिसंवृतः, यदुराजधानीम्, मथुराम्, न्यरुणत् ॥ ४ ॥

**श्रीवरस्वामिविरचिता भावार्थदीपिका**

ततः पंचाशत्तमे तु जरासंधभयादिव । कारयित्वाम्बुधौ दुर्गं तन्निनाय निजं जनम् ॥ १ ॥
कपटान्कपटैरेव हत्वा दैत्यानयत्नतः । अजयच्च जरासंधं धर्मेणैव तु धार्मिकम् ॥ २ ॥

अस्तिप्राप्तिसंज्ञिके ईयतुर्जग्मतुः ॥ १–२ ॥ कंसे शोकः कृष्णे चामर्षस्ताभ्यां युतः ॥ ३ ॥ न्यरुणद्रुरोध ॥ ४ ॥

**श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः**

श्रीकृष्णं राधिकानाथं वृन्दावननिकुंजगम् । गोपगोपीगवां सेव्यं वन्दे सर्वार्थसिद्धये ॥ १ ॥

ततोऽक्रूरागमनोत्तरम् । इवपदं भयाभावमाह । दुर्गं शत्रुभिः दुःखेन गम्यं राज्ञामावासयोग्यं स्थलविशेषे प्रासादविशेषम् "दुर्गो ना नीलि ( ली ) कठिनदुर्गमेषु च वाच्यवत्" इति धरणिः । "राज्ञां स्थानं भवेद्दुर्गं बह्वम्बुतृणधान्यकम् । सर्वसांग्रामिकोपेतं सर्वतो वीर्यसंयुतम् ॥ वर्तुलं चतुरस्रं वा भूमिष्ठं वातितुङ्गकम् । वार्क्षपार्वततौयादिभेदेन बहुधा मतम् ॥ वीर्यं वर्तुलमत्युच्चं गोलोत्क्षेपणरंध्रयुक् । निरन्तीरक्षं दुर्गांगं कथितं युधि कोविदैः ॥" इति संहितायां दुर्गलक्षणम् । तत् तत्र । नियाय प्रापयामास ( १ ) कपटांस्तृणापर्तवकादीन् । धर्मेण युद्धधर्मेण । धार्मिकं युद्धधर्मविदं वा ( २ ) । सच्छास्त्रस्याऽसच्छास्त्रेणेव श्रीकृष्णस्य जरासंधेन सह संग्रामं वर्णयति । सदसत्तां तत्त्वनिर्णगेन भक्तिद्वेषाभ्यामुद्वृद्धाभ्यां विहितमोक्षावाप्तिर्भवति, तत्र कथां

---

१. बादरायणि–प्रा. पा. । २. प्रास्तिश्च–वीर. ; अस्तिः प्रास्तीति–विज. । ३, हते–वीर. विज. · मृते–श्रीधर. वंशी. जीव. विश्व. ।
४. स्वपितु–विज. । ५. वैरूप्य–विज. । ६. स तदप्रिय–श्रीधर. बंशी. जीव. वीर. विज. विश्व. । ७. नृपः–इति कस्यचित् । ८. दवां–वीर. ।
९. विंशद्भि–विज. । १०. श्चापि–श्रीधर. वंशी. जीव. वीर. विज. विश्व. ।

प्रसञ्जयितुमाह—अस्तिप्राप्तिशब्दाभ्यामविद्याया द्वे रूपे संशयविपरतिनामनी कथ्येते। कंसस्य 'कसि—हिंसायाम्' हिंसात्मनोऽधर्मस्य महिष्यौ महि महिमानं धर्मस्य सिनुत इति महिष्यौ 'षिञ्—बन्धने' अस्मादौणादिको डट्, संबंधिन्यौ। भर्तरि स्वनिर्वाहके कंसनाम्न्यधर्मे कृष्णनाम्ना धर्मेण मृते मारिते। निपातनाणि चो लोपः। स्वपितुः स्वपोषकस्य जरासंधस्य जरा व्यर्थवयोहानिहेतुभूता कौलिकमार्गेण शैवत्वावेशरूपा, तस्यां संधा मरणापत्तावपि न मुंचामीति प्रतिज्ञा यस्य तस्य। गृहान् प्रमितिविषयानीयतुः प्राप्य स्थिते। शब्दशक्तिनिपुणैरयमर्थोऽध्यात्मविषयतया ज्ञातव्यः। एवमन्यत्रापि ध्येयम्, ग्रन्थविस्तरभिया न प्रदर्श्यत इति। भरतर्षभेति भरतवंश्यत्वात्त्वैतद्ब्रवीमीत्यभिप्रायः॥ १॥ मगधराजाय द्विजातिनिषिद्धकुलधर्मेण राजमानाय 'मगधस्त्यक्तनीवृतोः' इति कोशात्। आत्मनो वैधव्यस्य वैरूप्यस्य प्रतिपादनासामर्थ्यलक्षणं कारणम्॥ २॥ सं जरासंधः। तदप्रियं जामातृमृतिरूपममंगलम्। नून् कौलिकान् नयान् पिबति, नरान्पातीति नृपः। अयः शुभावहः सताम् अदो नाशकोऽसतामित्ययादः श्रीकृष्णस्तं वांति शरणं गच्छन्तीत्ययादवा वैष्णवास्तद्रहिताम्॥ नृपः सर्वनरपतिः, सम्राडित्यर्थः। नृपेति क्वचित्पाठः। न विद्यन्ते यादवा यस्यां तामयादवाम्। क्वचित् 'अयादवीम्' इति पाठः॥ ३॥ अक्षौहिणीलक्षणार्थमवांतरसंज्ञाप्यमरेणोक्ता—"एकेभैकरथा त्र्यश्वा पत्तिः पञ्चपदातिका। पत्त्यंगैस्त्रिगुणैः सर्वैः क्रमादाख्या यथोत्तरम्॥ सेनामुखं गुल्मगणौ वाहिनी पृतना चमूः। अनीकिनी दशानीकिन्योऽक्षौहिणी॥" इत्यमरः। एको गज एको रथस्त्रयोऽश्वाः पञ्च पदातय इति दशसंख्या पत्तिः, त्रिगुणिता पत्तिः सेनामुखम्, तत्त्रिगुणितं गुल्मः, गुल्मं त्रिगुणितं गणः, त्रिगुणो गणो वाहिनी, त्रिगुणिता वाहिनी पृतना, त्रिगुणिता पृतना चमूः, त्रिगुणा चमूरनीकिनी, दशानीकिन्योऽक्षौहिणीति विवेकः। सर्वसंकलने २१८७० गजाः, २१८७० रथाः, ६५६१० हयाः, १०९३५० पदातय इति। 'विंशत्याद्याः सदैकत्वे' इत्यमराद्विशत्येत्येकत्वम्॥ अक्षौहिणीसंख्येयम्—"खबाणाग्निनवव्योमचन्द्रसंख्याः १०९३५० पदातयः। खेन्दुषट्शरषट्संख्या ६५६१० अश्वा नागा रथा अपि॥ खाद्रिनागेन्दुदृक्संख्या २१८७० इत्येषाऽक्षौहिणी स्मृता॥" इति। यदुराजधानीमिति तस्या निरोधस्य च महत्त्वे हेतुः। सर्वदिङ्निरोधविशेषो हरिवंशे जरासंधोक्तौ—"सर्वतो नगरी चेयं जनौघैः परिवार्यताम्। अयोयंत्राणि युंज्यंतां क्षेपणीयाश्च मुद्गराः॥ ऊर्ध्वं चापि निवार्यंतां प्राप्ता वै तोमरास्तथा।" इति। किञ्च "मल्लः कलिंगाधिपतिश्चेकितानः सबाह्लिकः। काश्मीरराजो गोनर्दः केकयाधिपतिस्तथा॥ द्रुमः किं पुरुषश्चैव पार्वतीयो ह्यनामयः। नगर्याः पश्चिमद्वारं शीघ्रमारोधयन्तु वै॥ पौरवो वेणुदारश्च वैदर्भः सोमकस्तथा। रुक्मी च भोजाधिपतिस्सूर्याक्षश्चैव गालवः॥ विन्दानुविन्दावावन्त्यौ दन्तवक्त्रश्च वीर्यवान्। छागलिः पुरुमित्रश्च विराटश्च महीपतिः॥ कौशल्यो मालवश्चैव शतधन्वा विदूरथः। भूरिश्रवास्त्रिगर्तश्च बाणः पञ्चनदस्तथा॥ उत्तरं नगरद्वारमेते दुर्गसहा नृपाः। आरुह्य चापि मर्दन्तां वज्रप्रतिमगौरवाः॥ उलूकः कैतवेयश्च वीरश्चांशुमतः सुतः। एकलव्यो बृहत्क्षत्रः क्षत्रधर्मा जयद्रथः॥ उत्तमौजाश्च शल्यश्च कौरवाः केकयास्तथा। वैदेहो वामदेवश्च शाकल्यश्च सिनीपतिः। पूर्वं नगरनिर्व्यूहमेतेष्वायत्तमस्तु नः॥ अहं च वरदश्चैव चेदिराजेन संगताः। दक्षिणं नगरद्वारं वारयिष्याम दंशिताः॥" इति॥ ४॥

### श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी

महाब्धिमध्ये पतितं व्याकुलं शरणागतम्। चैतन्यदेव भगवन् पारं प्रापय सत्वरम्॥ १॥

गोकुलं पाण्डवकुलञ्च सान्त्वयितुमुभयत्र गन्तुमर्हेऽपि श्रीभगवति नरलीलत्वादन्तरायप्रायं महायुद्धादिकं वक्तुमारभते—अस्तिरित्यादिना। हे भरतर्षभेति खलु क्षत्रियस्त्रीणां स्वभावस्त्वया ज्ञायत एवेति भावः। दुःखेनार्त्ते व्यग्रे स्वशब्देन सम्प्रति पतिगृहे ममत्वाभावः सूचितः। स्मेति क्वचित् पाठः॥ १॥ मगधदेशस्य राज्ञ इति तावद्दूरगमनं बोधयति। दुःखिते दुःखाभिव्यञ्जकरोदनादियुक्ते॥ २॥ नृपः सर्वनरपतिः सम्राडित्यर्थः। नृपेति क्वचित् पाठः। अयादवीं न विद्यन्ते यादवा यस्यां तादृशीं अयादवीम् इति पाठः क्वचित्॥ ३॥ अक्षौहिणीसंख्येयं। खबाणाग्नि नवव्योम चन्द्रसङ्ख्याः पदातयः। (१०९३५०) खेन्दु षट्शर षट्सङ्ख्या अश्वाः (६५६१०) नागा रथा अपि। खाद्रि नागेन्दु दृक् संख्या (२१८१०) इत्येषाऽक्षौहिणी स्मृतेति। यदुराजधानीमिति तस्या निरोधस्य च महत्त्वे हेतुः सर्वदिङ्निरोधे विशेषः श्रीहरिवंशे जरासन्धोक्तौ—

"सर्वतो नगरी चेयं जानोघैः परिवार्य्यताम्। अयोयन्त्राणि युज्यन्तां क्षेपणीयाश्च मुद्गराः॥
उदर्ध्वञ्चापि निवार्य्यन्तां प्रासा वै तोमरास्तथा।
किञ्च—मल्लः कलिङ्गाधिपतिश्चेकितानः सबाह्लिकः। काश्मीरराज्ये गोनर्द्दः करुषाधिपतिस्तथा॥
द्रुमः किंपुरुषश्चैव पार्व्वतीयो ह्यनामयः। नगर्याः पश्चिमद्वारं शीघ्रमारोधयन्त्विति॥
पौरवो वैणुदारवः बैदर्भः सोमकस्तथा। रुक्मीच भोजाधिपतिः सूर्य्याक्षश्चैव गालवः॥
विन्दानुविन्दावावन्त्यौ दन्तवक्त्रश्च वीर्यवान्। छागलिः पुरुमित्रश्च विराटश्च महीपतिः॥
कौशल्यो मालवश्चैव शतधन्वा विदूरथः। भूरिश्रवास्त्रिगर्त्तश्च बाणः पञ्चनदस्तथा॥
उत्तरं नगरद्वारमेते दुर्गसहा नृपाः। आरुह्य चापि मर्द्दन्तां वज्रप्रतिमगौरवाः॥

उलूकः कैतवेयश्च वीरश्चांशुमतः सुतः। एकलव्यो वृहत्क्षत्रः क्षत्रधर्म्मा जयद्रथः॥
उत्तमौजाश्च शल्यश्च कौरवाः केकयास्तथा। वैदेहो वामदेवश्च साकेतश्च सिनीपतिः॥
पूर्वं नगरनिर्व्यूहमेतेष्वायत्तमस्तु नः।
अहञ्च वरदश्चैव चेदिराजेन सङ्गताः। दक्षिणं नगरद्वारं वारयिष्यामः दंशिताः॥ इति ॥ ४॥

**श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी**

महाब्धिमध्ये पतितं व्याकुलं शरणागतम्। चैतन्यदेव भगवन् पारं प्रापय सत्वरम्॥

भक्तवात्सल्येन सपुत्रां श्रीकुन्तीं सान्त्वयितुं विशेषतश्च 'आयास्यामि' इति स्वोक्तिप्रतिपालनाद्यर्थं गन्तुमर्हस्यापि श्रीभगवतः प्रयाणे विघ्नरूपं महायुद्धादिकं वक्तुमारभते—अस्तिरित्यादिना। हे भरतर्षभेति खलक्षत्रिय-स्त्रीणां स्वभावस्त्वया ज्ञायत एवेत्यर्थः। दुःखेन आर्ते व्यग्रे; अतः 'सर्व्वेषामेव भूतानाम्' इत्यादि-स्वोक्तस्यापि विमर्शो न वृत्त इति ज्ञेयम्। अतएव भर्तृगेहादपि पितृगृहेषु मोहाधिक्येन स्व-शब्दः॥१॥ किमर्थम्? तदाह-'पित्रे' इति। कुत्र तस्य गृहा इत्यपेक्षायामाह-मगधेति; मगध-देशे तत्रापि राजगृह इति ज्ञेयम्, तस्य तद्राजधानीत्वात्; तथा च श्रीहरिवंशे (विष्णु० प० ३५।३) 'राजा राजगृहेश्वरः' इति, 'दुःखिते' इति पितुः स्नेहविवर्द्धनेन शोकामर्षार्थमार्त्तनादरोदनादिकं कुर्व्वत्यावित्यर्थः॥ २॥ नृप इति-तदानीं तस्य साम्राज्येन सर्व्वनरनरपतित्वं सूचयति। अयादवीं न विद्यन्ते यादवा यस्यां तादृशीम्, अतएव परमोद्योगं चक्रे॥ ३॥ तदेवाह—अक्षौ-हिणीभिरिति। तत्सङ्ख्या चेयम्—'खराणाग्निनवव्योमचन्द्रसंख्याः पदातयः (१०९३५०) खेन्दुषट्शरषट्संख्या अश्वाः (६५६१०) नागा रथा अपि। खाद्रिनागेन्दुदृक्संख्याः (२१८७०) इत्येषाऽक्षौहिणी स्मृता॥' इति। अपि एव, सम्यग् वृतो वेष्टित एव, यदुभ्यो भयात् महाराजस्य सर्व्वसैन्यान्तर्व्वर्त्तित्वाच्च, नितरामरुणत् रुरोध। ननु धार्म्मिकोऽसौ सर्व्वतीर्थशिरोमणि श्रीमथुरां कुतो न्यरुण? तत्राह—यद्विति। तदानीं सर्व्वेषामपि यदूनां तत्रैवैकत्र निवासात्। सर्व्वदिङ्निरोधे विरोधे विशेषः श्रीहरिवंशे जरासन्धोक्तौ (विष्णु० प० ३५।३४)—

'सर्व्वतो नगरी चेयं जनौघैः परिवार्य्यताम्। अयोयन्त्राणि युज्यन्तां क्षेपणीयाश्च मुद्गराः।
ऊर्द्ध्वं चापा निवाह्यन्तां प्रासा वै तोमरास्तथा॥' किञ्च, (विष्णु-प० ३५।३९-४८)—
'मद्रः कलिङ्गाधिपतिश्चेकितानः सवाह्लिकः॥
काश्मीरराजो गोनर्द्दः करुणाधिपतिस्तथा। द्रुमः किम्पुरुषश्चैव पार्व्वतीयो ह्यनामयः॥
नगर्य्याः पश्चिमद्वारं शीघ्रमारोधयन्त्विति। पौरवो वेणुदारिश्च वैदर्भः सोमकस्तथा॥
रुक्मी च भोजाधिपतिः सूर्य्याक्षश्चैव गालवः। विन्दानुविन्दावन्त्यौ दन्तवक्रश्च वीर्य्यवान्॥
छागलिः पुरुमित्रश्च विराटश्च महीपतिः। कौरव्यो मालवश्चैव शतधन्वा विदूरथः॥
भूरिश्रवास्त्रिगर्त्तश्च वाणः पञ्चनदस्तथा। उत्तरं नगरद्वारमेते दुर्गसहा नृपाः॥
आरुह्य चाभिमर्द्दन्तां वज्रप्रतिमगौरवाः। उलूकः कैतवेयश्च वीरश्चांशुमतः सुतः॥
एकलव्यो बृहत्क्षत्रः क्षत्रधर्म्मा जयद्रथः। उतमौजाश्च शल्यश्च कौरवाः केकयास्तथा॥
वैदेहो वामदेवश्च साकेतश्च सिनीपतिः। पूर्व्वं नगरनिव्यूहमेतेष्वायत्तमस्तु नः॥
अहञ्च दरदश्चैव चेदिराजेन संगताः। दक्षिणं नगरद्वारं पालयामः सुदंशिताः॥ ४॥' इति।

**श्रीमद्वीरराघवाचार्यकृता भागवतचन्द्रचन्द्रिका**

व्याख्यातं दशमस्कन्धपूर्वार्द्धं मे यथाश्रुतम्। यथामतीतस्तुष्यन्तु क्षाम्यन्तु गुणवत्तमाः॥

अथ जरासन्धजयात्मकं भगवच्चेष्टितं वर्णयितुकामः तावज्जरासन्धस्य भगवता सह युयुत्साकारणं प्रस्तौति—अस्तिरिति सार्द्धद्वयेन। हे भरतर्षभ! अस्तिः प्राप्तिश्चेति द्वे कंसस्य भार्ये ते भर्त्तरि कंसे हते सति भगवतेतिशेषः दुःखार्त्ते दुःखपीडिते भूत्वा पितुः जरासन्धस्य गृहानीयतुर्जग्मतुः॥ १॥ ततो मगधदेशाधिपतये जरासन्धाय स्वपित्रे दुःखिते अस्तिप्राप्ती सर्वमात्मनोः वैधव्यकारणं निवेदयाञ्चक्रतुः ज्ञापितवत्यौ॥ २॥ स जरासन्धस्तद्दुहितृभ्यामावेदितमप्रियमाकर्ण्य शोकामर्षाभ्यां युतः महीं यादवाङ्कुररहितां कर्तुं परममुद्यमं प्रयत्नं चक्रे॥ ३॥ तदेवाह—अक्षौहिणीति। त्रयोविंशत्यक्षौहिणीबलपरिवेष्टित इत्यर्थः। यदुराजानामाश्रयभूतां मथुरां चतुर्दिक्षु निरुद्धवान्॥ ४॥

**श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली**

सच्छास्त्रस्यासच्छास्त्रेणेव कतिपयेष्वध्यायेषु श्रीकृष्णस्य जरासन्धेन सह सङ्ग्रामं वर्णयति—तत्त्वनिर्णयेन सदसतां भक्तिद्वेषाभ्याम् उद्बुद्धाभ्यां विहितनिर्वाणाऽवाप्तिर्भवति तत्र कथां प्रसञ्जयितुमाह—अस्तीति। अस्तिप्राप्तिशब्दाभ्यां अविद्याया द्वे

रूपे संशयविपरीतज्ञाननामनी उच्येते तत्र संशये ज्ञानसत्तामात्रमस्ति विपरीते तदपि नास्तीत्यस्तिप्रास्ती "असभुवि" "भू सत्तायाम्" इति धातोः । यद्वा, निश्चायकप्रमाणाभावेन निश्चयज्ञानाभावात्संशयविपरीतज्ञानवाचकावेतौ "असु निरसने" इति धातोः कंसस्य महिष्यौ "कसि हिंसायाम्" इति धातोः हिंसात्मनो धर्मस्य महिमवन्धकत्वेन सम्बन्धिन्यौ "षिञ् बन्धने" इति धातोः कृष्णानाम्ना धर्मेण भर्तरि स्वनिर्वाहके कंसनाम्न्यधर्मे हते विनाशिते स्वपितुः स्वपोषकस्य जरासन्धस्य "जॄ वयोहानौ" इति धातोर्वयोहानिहेतुभूता शैवी शास्त्रसंहितां जरेत्युच्यते तस्यां सन्धा मरणापत्तावपि न मुञ्चामीति प्रतिज्ञा यस्य स तथा तस्य गृहान् प्रमेयविशेषानीयतुः प्राप्य स्थिते शब्दशक्तिविचक्षणैः पुरुषैरध्यात्मविषयतया अत्रार्थो ज्ञातव्य इति ग्रन्थबाहुल्यभीरुणा मया न प्रदर्श्यत इति ॥ १ ॥ आत्मवैरूप्यकारणम् आत्मवैधव्यादिनिमित्तम् अन्यत्र प्रतिपादनासामर्थ्यम् ॥ २ ॥ "नॄ नये" इति धातोः नॄन् नयान् शैवशास्त्रोक्तान् पिबतीति नृपः शास्त्रज्ञः यः प्रतिसंभूमेत्यभिधानात् यो विष्णुः स एवादो दुष्टदण्डकस्तं वान्ति शरणं गच्छन्तीति यादवाः वैष्णवाः तद्रहिताम् ॥ ३ ॥ एकस्थानमारभ्य षोडशस्थाने या सङ्ख्या साऽक्षौहिणीत्युच्यते इति अन्ये गजानां सप्तसहस्राणि द्विशती साशीतिः एवं रथानामपि सङ्ख्या अश्वानामेकविंशतिसहस्री पञ्चशती विंशतिश्च पदातीनां पञ्चत्रिंशत्सहस्रं विंशतिभिश्चेत्यक्षौहिणीसङ्ख्यां ब्रुवते एको गज एको रथस्त्रयोऽश्वाः पञ्च पदातय इति दशसङ्ख्यापत्तिर्नाम त्रिगुणिता पत्तिः सेनामुखमिति भिन्नं वा पदं सेनामुखस्त्रिगुणो गुल्मनामा तत्त्रिगुणो गुणनामा गुणत्रिगुणा वाहिनीनामा वाहिनीत्रिगुणा पृतना तत्त्रिगुणा चमूः त्रिगुणिता चमूरनीकिनी दशानीकिनीत्यक्षौहिणीति केचित्—

एकेभैकरथात्र्यश्वा पत्तिः पंच पदादयः । अत्यङ्गैस्त्रिगुणैः सर्वैः क्रमादाख्या यथोत्तरम् ।
सेनामुखं गुल्मगणौ वाहिनी पृतना चमूः । अनीकिनी दशानीकिन्यक्षौहिणी—" इत्यमरः ॥ ४-९ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

दशमस्यैव पूर्वार्द्धोऽनुगृह्णान्मे धियं यथा । परार्द्धोऽप्यनुगृह्णातु तथा श्रीगुरवे नमः ॥
पञ्चाशत्तम ईशोऽपि विजित्वापि जरासुतम् । द्वारकां स्वजनं निन्ये तद्भीत्याष्टादशे मृधे ॥ १-४ ॥

### गूढार्थदीपिनी

पञ्चाशत्तम ईशाभ्यां जरासन्धपराजयः । यावनैर्मथुरारोधाद् दुर्गनिर्माणमुच्यते ॥ १ ॥

एतन्नामिके द्वे महिष्यौ । स्मेति प्रसिद्धौ । ईयतुर्जग्मतुः ॥ १-२ ॥ कंसे शोकः कृष्णे चामर्षस्ताभ्याम् ॥ ३-४ ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

पञ्चाशत्तमे कंसवधश्रवणकुपितेन जरासन्धेन सहासकृद्युद्धक्रीडां भगवान् कृतवान् समुद्रे दुर्गं कारयित्वा तत्र स्वजनतां च स्थापितवानित्याह—अस्तिरिति । ईयतुः । जग्मतुः ॥ १ ॥ वेदयाञ्चक्रतुः ज्ञापितवत्यौ ॥ २ ॥ तद्दुहितृभ्यामावेदितं जामातृवधमाकर्ण्य जमातरि शोकः श्रीकृष्णे अमर्षः ताभ्यां युतः ॥ ३ ॥ सर्वतो दिशं सर्वासु दिक्षु न्यरुणत् रुरोध ॥ ४ ॥

### श्रीसत्यधर्मकृता श्रीभागवतटिप्पणी

हरिः ॐ ॥ यदर्थमत्यर्थमर्थितदोऽवनावतीर्णश्चकार चाङ्कुरार्पणं तत्तूर्णमुदीर्णं विधातुमिव गते गतपतिके द्वे सुते मागधस्येन्नादिरेतदादिकथनाकर्णनादिकं च मुक्तिकारणमिति निरूप्यतेऽस्मिन्स्कन्धे । तत्रादौ का कथोत्तरत्र प्रवृत्तेत्यौत्तरीयस्यान्तरीं शङ्कां स्वयमेव शुक आशु करुणः परिहरन्वक्तीति वक्ति ॥ श्रीशुक इति । हे भरतर्षभ । अत्रोत्तरत्र यौष्माकीणपूर्वपुरुषकर्मैव प्रतिपाद्यते प्राप इति प्रोत्साहयितुं सम्बोधनमिति मन्तव्यम् । कंसस्यास्ति प्रास्तीति द्वे महिष्यौ मूर्धाभिषिक्ते योषितौ निर्विसर्गे द्वे नामनी अस्तीति प्रास्तीति विवेकः । अस्ति प्रास्तिश्चेन्नापि हरिवंशपाठस्तत्रेतिशब्दोऽध्याहार्यः । भर्तरि कंसे हते कृष्णेनेति शेषः । दुःखार्ते स्वपितुर्जरासन्धस्य गृहानीयतुः । अत्र भर्तृगेहे तन्निवेशकर्तुरदर्शनात्पुत्रौ नष्टा चेत्पितृशरणं शरणमिति नीत्या गते । हरिरेव तदायुरवलोक्यैतेऽत्रैरयत्तत्र गन्तुमिति तात्पर्यम् चावधेयं । यच्च भागवतं तत्र नामातीवदुर्वचः । आध्यात्मिकोऽर्थो विदुषां विदुषैतत्कृते कृत । ईदूदे द्विवचनमिति प्रगृह्यसंज्ञायां प्लुतप्रगृह्या अचि नित्यमिति प्रकृतिभावः ॥ १ ॥ मगधराजाय तद्देशेशाय नाम्ना जरासन्धाय । यद्यपि पूर्वं स्वपितुर्गृहानित्युदीरणादेव जरासन्धस्य पितृत्वं ज्ञातं भवति तथाऽपि मन्दस्य सन्देहः स्यात्स्यपितुर्गेहं गत्वा भ्रात्रे जरासन्धायेतीति तमातङ्कयितुं पुनः पित्र इत्युक्तिरिति ज्ञेयम् । आत्मवैरूप्यस्य वैधव्यस्य कारणं सर्वं वेदयाञ्चक्रतुः । पदे द्वे । अनुप्रयोगमात्रं नियतं तं पातयां प्रथममासेत्यादयोऽपभ्रंशा इति शेखराद्युदीरणात् । विज्ञापयामासतुः । णये पुत्र्यौ किमुर्वरितैं रणो न कार्य इत्यतोऽभ्याहतुः । आत्मनेर्वैरूप्यकस्तेन न विद्यते रणो यस्य तं च सर्वेऽपि तद्भ्रातरश्च मृता न रणधुरीणस्तत्रास्तीति चात्मवैरूप्यकारणं च वेदयाञ्चक्रुरिति । तस्मादरणं रक्षणमुद्दिश्येति । बहुव्रीहौ कप् । यद्वा स्वजनकाक्रोशजननायात्मनोर्वैरूप्यं येन स आत्मवैरूप्यः स च कः कुत्सित इति कटाक्षयत इति वा ॥ २ ॥ स नृपस्तदप्रियं । तदाप्रियमिति

पाठे तदाकर्ण्य शोकेन कंसहिंसाश्रवणजेनामर्षेण कृष्णकर्मासहनेन च युतो महीमयादवी न विद्यन्ते यादवा यस्यां साऽयादवी तां कर्तुं परममुद्यमं चक्रे । आत्मनेपदेन तदुयोगोद्भवोऽनर्थस्तस्यैवेति सूच्यते । अत्र नारदबोधितमथुरायोजने यतो गदां गदाग्रजमुद्दिश्य चिक्षेपेत्यादिकथाऽनुसन्धेया । क्षुब्धोऽतिकोपवशतः स्वगदामित्यारभ्य राजा स्वमातृत उत गदया च हीन इत्यन्तेन चाचार्योक्तेः ॥ ३ ॥ विंशतिविसृमिरुपरि चाहूय त्रयोविंशद्भिरक्षौहिणीभि । दशनीकिन्यक्षौहिणीत्यमरः । षट्सहस्रं पञ्चशतं षष्ठिरेका तु वाहिनाम् । द्विसहस्रं शतं ससाशीनिर्गजरथस्य च । पत्रयुतं गवशतीत्रिंशत्ययपदातयः । अनीकिन्यभिधेया सेत्युक्तानीकिनी दशकमक्षौहिणी । अन्यत्राप्युक्तम् । प्रयुतं नवसाहस्रं पञ्चशात्रिशतं मटाः । पञ्चाशत् षष्ठिसाहस्रं षट्शतं दशवादिनः । एकविंशतिसहस्रं शतानामष्टसप्ततिः द्विशतस्पन्दना यत्र साऽक्षौहिण्युच्यते बुधैरिति । अक्षादूहिन्यामुपसङ्ख्यानमिति वृद्धिः । संवृतः । अक्षौहिणी रथास्तस्यां खसप्तवसुमुर्छनाः । गजास्तावन्त एव स्युस्त्रिपञ्चधा हया नरा इति । व्याख्याता च सङ्ख्या महाभारततात्पर्यनिर्णयटीकायां बुधवन्याम् । तथा चापिभिर्धनुष्पाणिभिः संवृतोऽक्षौहिणीभिः सह यदुराजधानी मथुरां सर्वतो दिशं न्यरुणद्रुरोध ॥ ४ ॥

### श्रीमद्वल्लभाचार्य्यकृता सुबोधिनी

उत्तारार्धे हरेर्लीला स्वतः सर्वात्मना कृता । यदर्थमवतीर्णोऽसौ सा निरूप्या विभागशः ॥ १ ॥
एषा निरोधलीलैव स्वसंसारहरा परम् । भगवांश्च तदीयाश्च तच्छास्त्रं चेति सा त्रिधा ॥ २ ॥
चतुर्दशभिरध्यायैः प्रमाणं तस्य रूप्यते । तदीया एकविंशत्या षड्भिः स च निरूप्यते ॥ ३ ॥
कृतिः प्रमाणं तु हरेः स्वतश्चान्यानुरोधतः । सप्तभिः सप्तभिः प्रोक्तो गुणैर्युक्तो हरिस्तथा ॥ ४ ॥
वाक्यात्तदीया विज्ञेयास्तस्यैव न तु शास्त्रतः । एकविंशविधं सर्वे श्रुत्वा तद्बहुधोदितम् ॥ ५ ॥
षड्गुणैर्भगवान् रूप्यस्ते सर्वं प्रतिष्ठितम् । तत्र तु प्रथमेऽध्याये स्वावतारप्रयोजनम् ॥ ६ ॥
निरूप्यतेऽत्रधर्मेण जयोऽन्यश्च निरूप्यते । राजसानां साधने तु निरोधे भगवत्कृतिः ॥ ७ ॥
सर्वथा साधनमिति तदेवादौ निरूप्यते । विवाहपुत्रजन्मान्ता सा निरूप्या विशेषतः ॥ ८ ॥
अलौकिकं तु तत्स्थानं निरूप्यमिति रूप्यते । तस्योपद्रवनाशाय भ्रमोत्पादनमीरितम् ॥ ९ ॥
निग्रहानुग्रहौ चैव प्रसङ्गात् सुनिरूपितौ । अन्यथा लौकिकी लीला कृष्णस्य स्यान्न चान्यथा ॥ १० ॥
त्रिविधो हि क्षत्रियाणां विवाहः परिकीतितः । गान्धर्वो राक्षसश्चैव विहितश्च स्वगृह्यतः ॥ ११ ॥
पुत्रस्यापि कथा वाच्या ह्यन्येनापि समर्पिता । भार्यामाहुः क्षत्रियस्य तत्प्रसङ्गात्तथा परा ॥ १२ ॥
सत्यभामाविवाहान्ता कथेयं विनिरूपिता । त्रिविधं दुःखमादौ हि भक्तानां विनिरूपणम् ॥ १३ ॥
भूमेर्मातुर्वैष्णवानां वैकुण्ठादागतिर्यतः । द्वयमप्यत्र मथुरात्यागे हेतुर्निरूप्यते ॥ १४ ॥
प्रमाणरक्षासिद्ध्यर्थमनिवार्यं तु तद्द्वयम् । निवार्यः सप्तदशधा ब्रह्माण्डे तु प्रजापतिः ॥ १५ ॥
सप्तदशधा प्रोक्तस्तन्निवृत्तावशक्यता । अतोऽत्र प्रथमं वाच्यं कृतिशक्यमनेकधा ॥ १६ ॥
उत्तरार्धसमैः श्लोकैरतिदेशस्ततः परम् । द्वाभ्यां कलाभिपरः साधिकाभिरिति स्थितिः ॥ १७ ॥

भगवानक्लिष्टकर्मेति निरूपयितुं प्रथमं कंसभार्ययोरुपद्रवहेतुमाह अस्तिप्राप्तीति द्वाभ्याम् । उभयोः क्रियायोगित्वाय प्रथमत एव तथा निरूपितम् । अस्तीति सर्वधात्वर्थः, क्रियासामान्यम् । प्राप्तिः सर्वक्रियाफलम् । भगवदिच्छया एते पुत्ररहिते अतिक्रुद्धे भगवत्सान्निध्यादेव भर्त्रा सह गमनरहिते पितृगृहे गते । दिग्विजये पराजितः सोऽपि दुहितरामदादिति पुराणान्तरप्रसिद्धिः । चकारात्तत्सम्भृतिर्दास्यः सर्वाश्च । पितुर्गृहानीयतुः । आकारणं तत एव नोपेक्षितम् । निमित्तंभर्तृमरणम् । भगवतोऽतिसमर्थस्याक्लिष्टकर्मत्वज्ञापनाय तयोर्गमनं प्रसिद्धमेव जातमित्याह स्मेति । नन्वेवं साधनफलरूपयोः कथं वैधव्यमिति चेत्, तत्राह कंसस्य महिष्याविति । महिषीत्वात् पराधीनत्वम् । तद्भोगातिशये प्रवृत्ते अपि भगवदिच्छया तथाभूते तद्विश्वासार्थं भरतर्षभेति । नात्र तयोर्दुःखे लौकिकं किञ्चिदस्तीति भाव । गमनेऽपि न दुखान्तरं हेतुः, किन्तु भर्तृहननमेव ॥ १ ॥ गतयोः कृत्यमाह पित्रे इति । मगधराजायेति । प्राकृतदेशाधिपतित्वेन दोषोऽपि निरूपितः । दुर्जयत्वं निरूपयितुं जरासन्धायेति । दुहितृप्रियत्वं निरूपयितुं दुःखित इति । सर्वमाकाशवाणीप्रभृति मरणान्तम्, आत्मनो धवाभावकारणम्, कृष्णचरितमिति यावत् ॥ २ ॥ पूर्वं तेन कंसवधः श्रुत एव, परं मल्लक्रीडायां मञ्चात् पतितो दैवान्मृत इति । इदानीं हेतुपूर्वकं भगवच्चरित्रं श्रुत्वा पयसा पुष्टः सर्प इव जात इत्याह स तदाऽप्रियमाकर्ण्येति । छलेन मारणादमर्षः । मरणं त्वप्रियम् । राजा हि दुःखशोकप्रतीकारं करोत्येव, समर्थस्य तूष्णीम्भावो न युक्त इति । अयं दोषो वस्तुतो वसुदेवस्य । तद्रक्षार्थं सर्व एव यादवाः प्रवर्तिष्यन्त इति पृथिवीमयादवीमेव करिष्यामीति मनसि विधाय, तदर्थं महान्तमेवोद्योगं कृतवान् । स हि महान् भवति, कृष्णस्य च दोषं न पश्यति । आनुपूर्वी तादृशी श्रुतेति । परमोह्युद्यमः तद्बन्धूनामपि स्ववशीकरणमुपायैः । सेनादिसम्पत्तिः स्पष्टैव ॥ ३ ॥ तस्योद्यमस्य फलमाह अक्षौहिणीभिर्विंशत्येति । अक्षौहिणी त्रितयं तस्य गृहस्थम् । विंशतिरुद्यमेन सम्पादिता । पूर्वस्थितं विशेषेण प्रवक्ष्यतीति चकारेण

समुच्चयः, पृथङ्निरूपणं च कृतम्। अभिमतः संवृत इत्येकमत्यमेकप्रभुत्वं चोक्तम्। यादवानां जये स्थानग्रहणं मूलमिति मथुराग्रहणार्थं तां न्यरुणत्। यतः सा राजधानी। सर्वतोदिशमिति तत्रत्यानां निर्गमनाभावाय। न्यरुणत् आवृतवान्, अष्टदिक्ष्वावरणम्। अनेन रात्रावेव व्याजान्तरेण समागत्यावरणं कृतवानिति लक्ष्यते ॥ ४॥

**श्रीसुबोधिनी-सारः**

ॐ गोविंदो गोमती गंगा गायत्री गीर्गया गुरुः। गीता गीतं सुगाथाश्च ग्रामदेवा दिशन्तु शम् ॥ १॥

हत्वा कांश्चिद्धातयित्वाऽभयं दत्वा सुभक्ततः। संक्रीडद्द्वारकाधीशो विजयीतेति कीर्त्यते ॥ २॥

शुकोक्तिः। हे भरतर्षभ अस्तिः प्राप्तिश्च द्वे कंसस्य महिष्यौ पट्टराज्यौ भर्त्तरि कंसे मृते सति दुःखेनार्त्ते पीडिते पितुर्जरासंधस्य गृहान् जग्मतुः स्म प्रसिद्धम् ॥ १॥ मगधस्य देशस्य राजा तथा तस्मै जरासंधाय पित्रे दुःखिते सत्यौ सर्वमात्मनो वैधव्यस्य कारणं विज्ञापयाम्बभूवतुः ॥ २॥ अप्रियं दुःखहेतुत्वात् तदाकर्ण्य श्रुत्वा शोकामर्षाभ्यां युतः स जरासंधोऽयादवीं यदुवंशीयरहितां पृथिवीं कर्त्तुं परमं श्रेष्ठं महान्तं वोद्यमं चकार ॥ ३॥ तिसृभिर्विंशत्या त्रयोविंशत्या अक्षौहिणीभिः सेनाभिः संवृतो युक्तो यदूनां राजधानीं मथुरां चतुर्दिशं रुरोध। "सा सेनाक्षौहिणी नाम खागाष्टैकद्विकैर्गजैः। रथैरेतैर्हयैस्त्रिघ्नैः पंचघ्नैश्च पदातिभिः" इति तत्संख्या ॥ ४॥

**विवरणटिप्पणी**

श्रीहरिः। उत्तरार्धे प्रथमाध्याये। कारिकासु। स्वतः सर्वात्मनेति। अन्यानुरोधेन लीला पूर्वार्धे निरूपिता। अत्र स्वतः कृता लीला निरूप्यते इत्यर्थः। इदं पूर्वार्धान्ते सुबोधिन्यां निरूपितम्। निबन्धे 'अलौकिकेन भावेन यावद्धि भगवत्कृतः। स पूर्वार्धं' इति लक्षणमुक्तम्। तत्र अलौकिको भावो भगवतः पुरुषोत्तमस्य भक्तानुरोध इत्यर्थः। 'लोकधर्मं पुरस्कृत्य यच्चकार यदूद्वहः। तदुत्तरार्धकार्य'मित्यत्र लोकवद्धर्मो महाराजवत्प्रकटतया स्वतः सर्वकरणमित्यर्थः। एवमविरोध उभयोः। यदर्थमिति। भक्तिमप्यनपेक्ष्य स्वत एव सर्वोद्धारार्थमित्यर्थः। अत एव स्वतोप्युद्यम्य विवाहादिकरणमिति। नन्वत्र प्रद्युम्नादिलीला अप्युच्यन्ते, अतः सर्वस्या अप्युत्तरार्धलीलायाः कथं निरोधत्वम्, 'निरोधोऽस्यानुशयन'मित्यत्र अस्येतिपदेन भगवल्लीलाया एव निरोधत्वेनोक्तेरित्यत आहुः एषेति। एषा सर्वाप्युत्तरार्धलीला निरोधलीलैव। क्वचित्प्रद्युम्नादिभक्तलीलाकथनेन ईशानुकथात्वं शङ्कितं मा भूदित्येवकारः। परन्तु स्वस्य भगवतो यः संसारः पुत्रादिरूपस्तत्परा। क्वचित्तद्द्वाराप्युच्यते, तथापि लीला भगवत एव। अत एव 'बलपार्थभीमव्याजाह्वयेने'ति वाक्यानीति भावः। भगवांश्चेति। तदीयाश्चेति। धर्मा इति शेषः। भगवद्धर्मविशात्तेषां तथाकृतिः। धर्माश्च भगवद्रूपा। यतः स भगवानेव त्रिधा। अतः सर्वा भगवल्लीलैवेत्यर्थः। तच्छास्त्रं चेति। भगवतः शास्त्रमनुशासकं भगवत्प्रमाहेतुरिति यावत्। तदीयानामेकविंशतिभिर्निरूपणे हेतुमाहुः वाक्यादिति। अत्र भगवत एव वाक्यात्तदीया धर्मज्ञानं निरूपितम्। तच्च सर्वं भगवद्वाक्यं कालातिक्रमेण निरोधसंपादकत्वात्कालस्य चैकविंशतिविधत्वादेकविंशतिविधम्। अतस्तदीया धर्मा एकविंशतिभिर्निरूप्यन्ते इत्यर्थः। तदेव वाक्यं श्रुत्वा अन्यैर्बहुधोदितम्, परन्तु मूलं तदेवेति भावः। भगवतोऽनन्तगुणत्वेपि षड्गुणैरेव निरूपणे हेतुमाहुः तेष्विति। राजसानामिति। साधनरूपे राजसानां निरोधे वक्तव्ये भगवत्कृतिरेव सर्वथा साधनमिति हेतोस्तदेव साधनमाद्याध्याये निरूपितमित्यर्थः। विवाहेति। सा भगवत्कृतिरेतदन्ता साधनप्रकरणे निरूप्या। सप्तमाध्यायस्याग्रिमाध्यायेनैकवाक्यतेति तत्रैव वक्ष्यत इति भावः। अलौकिकमिति। यतो भगवत्कृतिरेव साधनत्वेनोच्यते ततो हेतोः स्थानमप्यलौकिकमेव निरूप्यमिति हेतोस्तादृशं द्वारकारूपं स्थानं निरूप्यते इत्यर्थः। तस्येति। तस्य स्थानस्योपद्रवाभावाय 'सोपि दग्धा'विति श्लोकेन जरासन्धस्य भ्रमोत्पादनमीरितम्। द्वारिकागमनज्ञाने तत्राप्यागत्योपद्रवं कुर्यादिति भावः। निग्रहो जरासन्धस्य, अनुग्रहो मुचुकुन्दस्य। पुत्रस्यापीति। पुत्रोपि क्षात्रप्रकारेणैव विवाहं संपादितवानित्यपिशब्दः। तत्पुत्रत्वाद्युक्तमेवेति हिशब्दः। अन्येनापीति। शम्बरेणापि समर्पितां सूपौदनपाचने विनियुक्ताम्। अन्यथा दृष्टिशङ्काभावाय तत्र समर्पितामित्युक्तम्। ततस्तं हत्वा समानीतामिति शेषः। परा रुक्मिणः पुत्र्यपि तत्प्रसङ्गात्क्षात्रधर्मप्रसङ्गादेव स्वयं सर्वान् राज्ञो निर्जित्य हृता प्रद्युम्नस्य भार्या जातेत्यर्थः। आदौ हीति। दशमस्कन्धप्रथमाध्याये इत्यर्थः। इदं च तत्र सम्यग्विवृतमिति तत्संमत्यर्थं हिशब्दः। तन्मध्ये भूमेर्वैष्णवानां चेति दुःखद्वयं मथुरात्यागे हेतुः। तद्द्वयमपि मथुरास्थितावनिवार्यम्, तत्र हेतुः, प्रमाणेति। प्रमाणं वरदानवाक्यं ब्रह्मणोक्तं तस्य रक्षासिद्ध्यर्थमिति। सप्तदशकृत्वो निवारणे अष्टादशे अनिवारणे च हेतुमाहुः निर्वार्य इति। 'यो वै सप्तदशं प्रजापतिं यज्ञमन्वायत्तं वेदेति श्रुतौ प्रजापतेर्ब्रह्माण्डे सप्तदशत्वमुक्तम्। ब्रह्माण्डे तु प्रजापतिः। स च सप्तदशधा। अतो ब्रह्माण्डप्रकारेण यावदागतस्तावत्पर्यन्तं निवारितवान्। अग्रे निवारणं तु अलौकिकभावेन भवति। तादृशो भावस्तु उत्तरार्धे लोकधर्मपुरस्कारेण लीलाकरणान्न संभवति। अतः प्रजापतिनिवृत्तौ सत्यामग्रे भगवतोऽशक्यता। क्वचित्तथाभावोपि स्वीकर्तव्यः, परं प्रयोजनवशात्। तत्तत्रैव विवरिष्यते। अतो हेतोरत्र कृतिशक्यं सप्तदशधा हननमनेकप्रकारेण उत्तरार्धसमैरेकचत्वारिंशद्भिः श्लोकैः प्रथमं वाच्यम्। ततः परं द्वाभ्यामतिदेशो वाच्यः। ततः साधिकाभिः कलाभिः सार्धपञ्चदशभिरपरोतिदेशो वाच्यः। इति स्थितिः। अस्मिन्नध्याये इति शेषः।

अस्ति प्राप्तीत्यत्र । तत एवेति । पितृगृहादेव हेतोरित्यर्थः । तद्भोगातिशये इति । कंसस्य भोगातिशयार्थं प्रवृत्ते अपि भगवदिच्छया तथाभूते विधवे भोगरहिते जाते इत्यर्थः । तदिति । साधनफलरूपयोरपि भगवदिच्छया भोगराहित्यमित्यत्र विश्वासार्थमित्यर्थः । आभासे वाक्यद्वयार्थ उक्त इति प्रत्येकवाक्यार्थावाहुः गतयोरिति । तथाच गतिः प्रथमवाक्यार्थः, कृत्यं द्वितीयवाक्यार्थ इति भावः । पित्रे इत्यत्र । प्राकृतदेशेति । निषिद्धदेशेत्यर्थः । स तदाऽप्रियमित्यत्र । ननु भगवतो घातकत्वान्निष्कृतिसिद्धये भगवदर्थमुद्योगः कर्तव्यो, न तु वसुदेवार्थं यादवार्थं वेत्यत आहुः स हीति । महान् विचारकुशलः । 'जिघांसन्तं जिघांसीया' दिति शास्त्रात्कृष्णस्य न दोष, किन्तु कापट्यकरणाद्वसुदेवस्य तद्रक्षकत्वाद्यादवानां चेति भाव ।

## गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

अथ पञ्चाशत्तमे तु जरासन्धेन संयुगम् । द्वारकाया विनिर्माणं सप्रसङ्गं निरूप्यते ॥ १ ॥

जरासन्धस्य भगवता सह युयुत्साकारणं प्रस्तौति—अस्तिः प्राप्तिश्चेति । महत एव विश्वासो भवतीति तदर्थं तत्कुलमहतो भरतस्य नामग्रहणेन राजानं सम्बोधयति—भरतर्षभेति । अस्तिप्राप्तिसंज्ञके कंसस्य द्वे महिष्यौ भार्ये अतस्ते भर्तरि कंसे मृते सति दुःखेनार्ते पीडिते पितुर्जरासन्धस्य गृहान् ईयतुर्जग्मतुः, स्म प्रसिद्धमेतत् ॥ १ ॥ तत्र गत्वा च ते दुःखिते आत्मनो वैधव्यस्य कारणं देवकीविवाहप्रभृतिकंसमरणान्तं कृष्णचरितं स्वपित्रे जरासंधाय निवेदयाञ्चक्रतुः ज्ञापितवत्यौ । तस्य प्रावल्यं सूचयन्नाह—मगधराजायेति । मगधदेशाधिपतये इत्यर्थः ॥ २ ॥ जरासन्धस्तद्दुहितृभ्यामावेदितं सकारणं स्ववैधव्यमाकर्ण्य कंसे मृते शोकः, तन्मारके कृष्णे अमर्षस्ताभ्यां युतौ महीमयादवीं यादवाङ्कुररहितां कर्तुं परममुद्यमं प्रयत्नं चक्रे ॥ ३ ॥ तदुद्यममेवाह—त्रयोविंशतिभिरक्षौहिणीभिः संवृतो यदुराजधानीं मथुरां सर्वतोदिशं न्यरुणत् निरुद्धवान् ॥ ४ ॥

## अन्वितार्थप्रकाशिका

कृष्णः पञ्चाशत्तमे तु जित्वा भूरि जरासुतम् । वकीयान्द्वारकां निन्ये श्लोकाः सार्द्धा गजेषवः ( ५८॥ ) ॥

उवाचवाक्त्रयं ( ३ ) सार्द्धा त्रयः षष्टिरनुष्टुभः ( ६३॥ ) ॥ ५० ॥

अस्तिरिति ॥ हे भरतर्षभ ! अस्तिः प्राप्तिश्चेति संज्ञिके कंसस्य महिष्यौ भर्तरि कंसे मृते सति दुःखार्ते तद्व्यञ्जकरोदनादियुक्ते सत्यौ पितुर्जरासन्धस्य गृहान् ईयतुः जग्मतुः ॥ १ ॥ पित्रे इति । दुःखिते ते स्वपित्रे मगधराजाय जरासन्धाय सर्वं आत्मनो वैधव्यकारणं वेदयाञ्चक्रतुः बोधयांचक्रतुः ॥ २ ॥ स इति ॥ हे नृप ! अप्रियं जामातृमरणसूचकं तत् वचनमाकर्ण्य कंसे शोकः कृष्णे चामर्षस्ताभ्यां युतः स जरासन्धो महीम् अयादवीं यादवराहिताम् । उपसर्जनात् ङीवार्पः । यद्वा । यादवानामियं यादवी न यादवी अयादवी तां यादवसम्बन्धरहिताम् इत्यर्थ । कर्त्तुं परमम् उद्यमं चक्रे ॥ ३ ॥ अक्षौहिणीभिरिति । विंशत्या तिसृभिश्चाक्षौहिणीभिः संवृतः जरासन्धः यदुराजधानीं मथुरां सर्वतो दिशं न्यरुणत् निरुद्धवान् । तत्र कालिङ्गबाह्लीकाद्याः पश्चिमद्वारं रुरुधुः । रुक्मिविदूरथाद्या उत्तरं जयद्रथकेकयाद्याः पूर्वं चैद्यजरासन्धाद्याः दक्षिणमिति हरिवंशात् ज्ञेयम् । अक्षौहिणीप्रमाणं प्रथमव्याख्यायां प्रोक्तम् ॥ ४ ॥

## श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्

योऽधर्मन्युदजीजयद्विसकुलं वात्येव तू लंक्षितौ धाम्नो ब्रह्मपुराह्वयस्य भवने प्रादुर्बभूवादितुम् ।
धर्मंभागवतं हरिः स भगवान् ववंति सर्वोपरि तस्मिन्भक्तिसुते भवन्तु सकलामवृन्तयोऽहर्निशम् ॥ १ ॥
दशमेऽथोत्तरार्धस्य व्याख्यानं क्रियते मया । गोपालानंद मुनिनातुष्टये श्रीहरेः सताम् ॥ २ ॥

इदानीं पंचाशत्तमेऽध्याये युद्धाय जरासंधाऽऽगमनं स्वस्यान्यावतारधारणनिश्चयं च यादवरक्षणाय द्वारिकानिर्माणं तत्र निजजननिवासनं च निरूपयति । तत्रादौ जरासंधागमननिमित्तं शुकः प्राह अस्तिरिति अस्तिः प्राप्तिश्चेत्यभिधे । कंसस्यमहिष्यौषट्ट योषितौ । पितुर्गृहान् ईयतुः जग्मतुः ॥ १ ॥ दुःखिते दुःखव्यंजकरोदनादियुक्ते । आत्मवैधव्यं पतिमरणजन्यं दुःखं तस्य कारणं हेतुं ॥ २ ॥ तयोः अस्ति प्राप्तिनाम्योः स्वदुहित्रोरप्रियं वैधव्यं । शोकामर्षयुतः । जामातरि कंसे शोकः तद्भर्तरि । श्रीकृष्णे अमर्ष क्रोधश्च ताभ्यां युतः । अयादवीं यादवहीनां ॥ ३ ॥ त्रयोविंशति भिरिति वक्तव्येति सृभिर्विंशत्येति पृथगुच्चारणमार्षं यद्वाविंशत्या सहिताभिति सृभिरक्षौणीभिःसंवृत्तः अक्षौहिणी लक्षणमुक्तं । खबाणाग्निनवव्योमचंद्र ॥ १०९३५० ॥ संख्याः पदातयः खेंदु षट्शरषट् ॥ ६५६१० ॥ संख्या अश्वानागरथा अपि ॥ खाद्रिनागेंदुदृक् संख्या ॥ २१८७० ॥ इत्येषाक्षौहिणी स्मृतेति । मथुरांन्यरुणत् रुरोध ॥ ४ ॥

**भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी**

यः क्षत्रियान्वयजनौ धृतकृष्णनामा विप्रान्वये स जनने हरिकृष्णनामा।
सद्धर्मरक्षणसुरारिविनाशने तु तुल्ये द्वयोर्हितनुवृत्तिविनाशनाभ्याम् ॥ १ ॥
एकावुभाविति सदा स्वहितानुरक्तौ स्यातां मदीयहृदयस्थितिकारिणौ हि।
याचे त्वदित्थमहमीश ततो मदीयान् दोषान् निवर्त्य दयया कुरु मे हितं यत् ॥ २ ॥
पौत्रोऽहं तव भगवत्प्रसादनामेत्यन्वर्थां कुरु भगवन्ममाभिधां त्वम्।
सत्वेवं दशमपरार्द्धकस्य टीकां कर्त्तुं स्यामलमितरप्रकारतो नो ॥ ३ ॥
दशमस्कन्धपूर्वार्द्धं व्याख्यायैव यथामति। अथोत्तरार्द्धं व्याख्यामि तेन तुष्यन्तु साधवः ॥ ४ ॥
स पञ्चाशत्तमेऽध्याये भयादिव जरासुतात्। विधाप्य जलधौ दुर्गं तं निनाय जनान्निजान् ॥ ५ ॥

अथ जरासंधजयात्मकं श्रीकृष्णभगवच्चेष्टितं वर्णयितुकामो मुनिस्तावज्जरासंधस्य भगवता सह युयुत्साकारणं प्रस्तौति सार्द्धद्वयेन। अस्तिरिति। हे भरतर्षभ, अस्तिः, प्राप्तिश्चेति, द्वे कंसस्य महिष्यौ भार्ये, भर्त्तरि कंसे, हते सति, भगवतेति शेषः। मृते इत्यपि पाठः। दुःखार्त्ते दुःखपीडिते, भूत्वेति शेषः। पितुः जरासंधस्य, स्मेति प्रसिद्धान्, गृहान्, गृहं प्रतीत्यर्थः। ईयतुः जग्मतुः ॥ १ ॥ पित्र इति। ततः मगधराजाय मगधदेशाधिपतये, जरासंधाय, पित्रे स्वजनकाय, दुःखिते वैधव्यदुःखवत्यावस्तिप्राप्ती, सर्वं आत्मवैधव्यकारणं, वेदयांचक्रतुः ज्ञापितवत्यौ ॥ २ ॥ स इति। स जरासंधः नृपः, तत् दुहितृभ्यामावेदितं, अप्रियं, आकर्ण्य, शोकश्चामर्षश्च ताभ्यां युतो युक्तः, कंसे शोकः कृष्णेऽमर्षस्तदुभययुक्त इत्यर्थः। महीं पृथ्वीं, न विद्यन्ते यादवा यस्यामित्ययादवी तां, यादवाङ्कुररहितामित्यर्थः। कर्त्तुं, परमं, उद्यमं यत्नं, चक्रे ॥ ३ ॥ अक्षौहिणीभिरिति। विंशत्या तिसृभिश्चापि, अक्षौहिणीभिः संवृतः, त्रयोविंशत्यक्षौहिणीवलपरिवेष्टितः सन्नित्यर्थः। यदुराजधानीं यदुकुलोत्पन्नराज्ञामाश्रयभूतामित्यर्थः। मथुरां, सर्वतोदिशं चतुर्दिक्षु, न्यरुणत् निरुद्धवान्। अक्षौहिणीसंख्या यथा। 'अक्षौहिण्याः प्रमाणं तु खागाष्टैकद्विकैर्गजैः २१८७०। रथैः—२१८७०—रेतैर्हयैस्त्रिघ्नैः ६५६१० पञ्चघ्नैश्च १०९३५० पदातिभिः' इति ॥ ४ ॥

**कृष्णप्रिया**

श्रीमद्भागवत जी के उत्तरार्द्ध में भगवान् ने भक्तों के अनुरोध के बिना ही स्वतः लीलाएँ की है। यह सब निरोध लीला है। उत्तरार्द्ध में ४१ अध्याय है। उत्तरार्द्ध में २॥ प्रकरण है। इस अध्याय में ५८ श्लोक है। यहाँ से राजसलीला के अवान्तर साधन प्रकरण का प्रारम्भ होता है।

श्रीशुकदेव जी ने कहा, भरत कुल मुकुटमणि राजन् परीक्षित् ? अस्ति एवं प्राप्ति नाम की राजा कंस की दो रानियाँ भर्त्ता कंस की मृत्यु के दुःख से दुःखित हो अपने पिता जरासंध के घर चली गई ॥ १ ॥ पति मृत्यु से दुःखित उन दोनों ने मगधाधिपति अपने जनक जरासन्ध को निज वैधव्य का सर्व कारण को निवेदित किया ॥ २ ॥ महाराज परीक्षित ? जरासन्ध ने जब यह अप्रिय बात सुनी तव वह शोक एवं रोष से भर उठा और सारी मही को यादवों से विहीन करने के लिए सर्वथा प्रयत्न शुरु किया ॥ ३ ॥ अपने घर रही तीन अक्षौहिणी सेना और बीस अक्षौहिणी सेना बटोर कर बनी हुई तेईस अक्षौहिणी सेना से यादवों की राजधानी मथुरा पुर को चारों ओर से घेर लिया ॥ ४ ॥

**निरीक्ष्य तद्बलं कृष्ण उद्वेलमिव सागरम्। स्वपुरं तेन संरुद्धं स्वजनं च भयाकुलम् ॥ ५ ॥**
**चिन्तयामास भगवान् हरिः कारणमानुषः। तद्देशकालानुगुणं स्वावतारप्रयोजनम् ॥ ६ ॥**
**हनिष्यामि बलं ह्येतद् भुवि भारं समाहितम्। मागधेन समानीतं 'वश्यानां सर्वभूभुजाम्² ॥ ७ ॥**
**अक्षौहिणीभिः संख्यातं भटाश्वरथकुञ्जरैः³। मागधस्तु⁴ न हन्तव्यो भूयः कर्ता बलोद्यमम् ॥ ८ ॥**

**कर्वमक्षमा**

**अन्वयः**—कारणमानुषः, भगवान्, हरिः, कृष्णः, उद्वेलम्, सागरम्, इव, तद्बलम्, निरीक्ष्य, तेन, संरुद्धम्, स्वपुरम्, च, स्वजनम्, भयाकुलम्, निरीक्ष्य, तद्देश कालानुगुणम्, स्वावतारप्रयोजनम्, भगवान्, चिन्तयामास ॥ ५-६ ॥ वश्यानाम्, सर्वभूभुजाम्, भटाश्वरथकुञ्जरैः, अक्षौहिणीभिः, संख्यातम्, समाहितम्, एतद्, बलम्, समानीतम्, हि हनिष्यामि, तु ( परन्तु ) मागधः, न, हन्तव्यः ( सः ) भूयः बलोद्यमम् कर्त्ता ॥ ७-८ ॥

---

१. वंश्यानां—वीर. ; पश्यतां—विज. । २. भूभृतां—विज. । ३. संकुलं—वीर. । ४. धोऽपि—विज. ।

**श्रीधरस्वामिविरचिता भावार्थदीपिका**

तस्य बलं सैन्यमुद्वेलं लंघितमर्यादं सागरमिव । तेन तस्य बलेन संरुद्धम् ॥ ५ ॥ किं बलमेव हन्मि न मागधम् । मागधं वा हत्वा बलं गृह्णामि । यद्वा समागधं सर्वं हन्मीति चिन्तयामास । ननु प्रथमं कथं जेष्यामीत्येवं चिंतयितुं युक्तं तत्राह । कारण-मानुष इति । भूभारावतारकारणेन मानुषो न तु तत्त्वत इति ॥ ६ ॥ एवं त्रिधा विचिंत्य प्रथमं पक्षं निर्धारितवांस्तदाह चतुर्भिः । हनिष्यामीति ॥ ७ ॥ बलोद्यमं कर्ता करिष्यतीति ॥ ८ ॥

**श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः**

तस्य जरासन्धस्य । उत्त्यक्ता वेला येन स तथा "वेला काले च सीमायामब्धेः कूलविकारयोः" इति मेदिनी ॥ निरीक्ष्येति युग्मकम् ॥ ५ ॥ असंभाव्यमाशंकते—नन्विति । तत्राक्षेपे । तद्देशेति—तस्मिन्देशे काले च यदनुगुणमुचितम्; इहाधुना किं कार्यमिति विचारितवान्, स्वावतारप्रयोजनं भूभारहरणरूपं च चिंतयामासेति चानुकर्षोऽत्र ॥ कारणं सर्वकारणं यत्तत्त्वं तद्रूप एव मानुषस्तदाकारो न तु प्राकृतरूप इति तल्लीलत्वेऽपि सर्वज्ञानादिशक्तिसत्त्वम् । तस्य देशस्य कालस्य चानुरूपं महासैन्येन श्रीमधुपुर्या निरोधादवश्यमत्रैव तद्धन्तुं योग्यम् । तत्रात्यधुना; विलंबं विनैवेत्यर्थः । किञ्चात्र केचिदाशंकन्ते—अष्टादशाक्षौहिणीक-महाभारतीय युद्धस्य श्रीव्यासदेवेन बहुमहत्त्वं वर्णितमिह चतुर्दशोत्तरचतुःशताक्षौहिणी काहवस्य न किमपि तद्वर्णितमत्र को हेतुरिति । अत्रेदमवधेयम्—तत्र श्रीकृष्णभक्तानां श्रीभीष्मयुधिष्ठिरादीनां महद्युद्धनीत्यादिकौशलवर्णनं श्रोतृजनोद्धारायैव न तु पौत्रसंबंधेनेति, जरासंधादीनां कृष्णभक्तिहीनत्वात्त दीयसंग्रामस्य प्रचुरसैन्यत्वेऽपि न तन्महत्त्ववर्णनमिति । अत एवोक्तम्—"श्रुतस्य पुंसां सुचिरश्रमस्य नन्वंजसा सूरिभिरीडितोऽर्थः । तत्तद्गुणानुश्रवणं मुकुंदपादारविंदं हृदयेषु येषाम् ॥" इति । यद्वा—अक्षाणां रथचक्राधाराणामूहः समूहो यस्यां सेनायां साक्षौहिणीति सेनाबाहुल्यमेवावयवशक्त्या ज्ञेयं, न तु वाचनिकम् । अत एवोक्तम्—"आजगाम जरासंधस्त्रयोविंशत्यनीकपः" इति । अनीकश्चाक्षौहिण्यवयव एव । तदुक्तममरसिंहेन—'दशानीकिन्योऽक्षौहिणी' इति ॥ ६ ॥ एवमुक्तविधया । प्रथमं पक्षं बलहननरूपम् । तत् बलहननम् । एतद् उपस्थितम् । वश्यानां निजायत्तानाम् समाहितं सम्यक्सर्वतः समाहृत्य प्रोत्साह्य चानीतम् । वश्यानां वंशे स्थितानाम्, अत एव श्रीभीष्मः पांडवाश्च नायाता इति ज्ञेयम् ॥ ७ ॥ भटाश्वरथकुंजरैरुपलक्षिताभिरक्षौरिणीभिः संख्यातं कृतसंख्यामिति पूर्वान्वयि । "भटः परमजातौ स्यात्पदातौ वीरविज्ञयोः" इति निरुक्तिः । बलाय सेनानयनाय । यद्वा—'त्रयोविंशत्यनीकाख्यम्' इति वक्ष्यमाणत्वात्त्रयोविंशतिधाविभक्त-सेनापटलैरिति । सेनापटलेऽपि यौगिकोऽक्षाणां रथचक्रावयवानामूहः समूहो यस्यां सेनायां साऽक्षौहिणीति प्रयोगो नाऽसंगत इति ध्येयम्, अष्टादशकृत्वो लाक्षणिकसैन्याऽऽनयनस्य दौर्घट्यप्रतीतेः ॥ भटादिभिरुपलक्षिताऽक्षौहिणीभिस्संख्यातं कथितम्, न तत्र प्रत्येकं तासां संख्या कर्तुं शक्यते बहुलत्वादाधिक्यमेव विवक्षितम्, चतुरंगिणीत्वादक्षौहिणीशब्दप्रयोगश्चेति प्रतीयते । अघटन-घटनापटीयस्त्वान्मायया यथाश्रुतमपि संभाव्यत एवेति तत्त्वम् ॥ ८ ॥

**श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी**

निरीक्ष्येति युग्मकम् । कारणं सर्व्वकारणं यत्तत्त्वं तद्रूप एव मानुषस्तदाकारः नतु प्राकृतरूप इति तल्लीलत्वे सर्वज्ञानादि शक्तिमत्त्वं तस्य देशस्य कालस्य चानुरूपं महासैन्येन सर्व्वतः श्रीमधुपुर्य्या निरोधादवश्यमत्रैव योग्यं तत्राप्यधुना विलम्बं विनैवेत्यर्थः ॥ ५-६ ॥ तदेवाभिव्यञ्जयति—हनिष्यामीति सार्द्धकेन । बलं सैन्यं हि यतः सम्यक् आहितमर्पितं भारस्वरूपं सम्यक् सर्व्वतः समाहृत्य प्रोत्साह्य चानीतं वश्यानां वशेस्थितानाम् अत एव पाण्डवाः श्रीभीष्मश्च नायाता इति ज्ञेयम् ॥ ७ ॥ भटा-दिभिर्या अक्षौहिण्यः आभिरेव नतु तासां प्रत्येकं सङ्ख्यातमित्यन्तं बाहुल्यमुक्तं मागधस्त्वित्यर्द्धकम् ॥ ८ ॥

**श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी**

उद्वेलमिति पारावार-निमज्जनेन सागरस्यानन्त्यम्, तेन बलस्यापि तदुक्तम् । हरिरिति भूभारहरणाभिप्रायेण । भगवान् सर्व्वैश्वर्य्ययुक्तोऽप्यचिन्तयत् । कुतः ? कारणेन भूभारहरणादिप्रयोजनेन मानुषस्तच्चेष्टित इत्यर्थः । किं चिन्तयामास ? तदाह—तदिति । तस्य देशस्य कालस्य चानुरूपं महासैन्येन सर्व्वतः श्रीमधुपुर्य्या निरोधादवश्यमत्रैव तद्धन्तुं योग्यम्, तत्राप्यधुनाऽवि-लम्बेनैवेत्यर्थः ॥ ५-६ ॥ तदेवाभिव्यञ्जयति—हनिष्यामीति । हि यतः सम्यगाहितमर्पितं भारस्वरूपं सम्यक् सर्व्वतः समाहृत्य प्रोत्साह्य चानीतम्, वश्यानामिति तदा तस्य महाप्रतापेन सर्व्वराजवर्गवशीकरणात्, तथा च श्रीहरिवंशे (विष्णु. प. ३४।११-१२)—

'प्रतापावनता ये च जरासन्धस्य पार्थिवाः । मित्राणि ज्ञातयश्चैव संयुक्ताः सुहृदस्तथा ॥
तमेवानुययुः सर्व्वे सैन्यैः समुदितैर्नृपाः । महेष्वासा महावीर्य्या जरासन्धहितैषिणः ॥' इति ।

अतएव पाण्डवाः श्रीभीष्मश्च नायाता इति ज्ञेयम् ॥७॥ भटादिभिर्या अक्षौहिण्यस्ताभिरेव, न तु तेषां प्रत्येकं सङ्ख्यया सङ्ख्यातमित्यत्यन्तं बाहुल्यमुक्तम्, बलेन निजसाम्राज्यशक्त्या उद्यममेतावत्सैन्यानयने युद्धोद्योगम् ॥ ८ ॥

### श्रीमद्वीरराघवाचार्यकृता भागवतचन्द्रचन्द्रिका

तदा श्रीकृष्णः उद्वेलं लङ्घितमर्यादं सागरमिव स्थितं तस्य जरासन्धस्य बलं तेन बलेन संरुद्धं स्वपुरं भयेन व्याकुलं स्वजनं च निरीक्ष्य चिन्तयामासेति सम्बन्धः ॥ ५ ॥ हरिः कारणमानुष इति हेतुगर्भं यद्यपि न तस्योपद्रवः सर्वकारणत्वेन न तद्बलसंहारे प्रयासश्च तथापि आश्रितार्ति—हरत्वात्सर्वकारणत्वेपि मानुष्यत्वात् गृहीतमनुष्यरूपतत्सजातीय चेष्टितत्वान्मनुष्यवच्चिन्तयामास चिन्तयित्वा निश्चितवानित्यर्थः । किङ्कृथमित्यत्राह—तद्देशेति । तद्देशकालानुगुणं यथा भवति तथा स्वावतारप्रयोजनं विचार्य्याऽध्यवास्यत् ॥ ६ ॥ विचार्य्य निश्चितमेव दर्शयति—हनिष्यामीति चतुर्भिः । वंशे भवाः वंश्याः तेषां सर्वेषां भूभुजां राज्ञामेतद्भूमेर्भाररूपं समाहितं समुदितं मागधेन जरासन्धेन आनीतमत्र प्रापितम् ॥ ७ ॥ अन्योपि वराहादिदेहः । धर्मरक्षायै प्रभवतः उद्भवतः अधर्मस्य विरमाय च मया सम्भ्रियते ॥ ८ ॥

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः

कारणं सर्व्वकारणं यत्त्वं तद्रूप एव मानुषस्तदाकारः नतु प्राकृतरूप इति तल्लीलत्वेऽपि सर्व्वज्ञानादिशक्तिमत्त्वं दर्शितम् ॥ ६ ॥ वश्यानां वशे स्थितानाम् अत एव भीष्मपाण्डवांश्च नायातानिति ज्ञेयम् ॥ ७-१० ॥

### श्रीमज्जीवगोस्वामिकृतः बृहत्क्रमसन्दर्भः

चिन्तयामासेत्यादि । हरिः कारणमानुष इति कारणरूपः सर्वस्य हेतुरूपो मानुषो मानुषाकारो द्विभुज इत्यर्थः ॥ ( ६-९ ) ॥

### श्रीनाथचक्रवर्तिपादविरचिता चैतन्यमतमञ्जूषा

हरि कारण-मानुष इति कारणरूपो मानुपो मानुषाकारो द्विभुजविग्रह इत्यर्थः । अतएव ( भा० १।३।३ ) "यस्यावयवसंस्थाने" इति प्रथमे व्याख्यान्तरम् । स्वावतारप्रयोजनं चिन्तयामासेति भावः ॥ ६-९ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

उद्वेलं वेलातस्तीरादप्युद्गतं लङ्घितमर्य्यादमित्यर्थः । ननु किमनेन चिन्तयामास तत्र नहि नहीत्याह, कारणं सर्व्वकारणस्वरूपो महामहेश्वरश्चासौ मानुषश्चेति सः ॥ ५ ॥ तच्चिन्तनमाह चतुर्भिः ॥ ६ ॥ बलं सैन्यं तदर्थमुद्यमं कर्त्ता करिष्यति ॥ ७-८ ॥

### गूढार्थदीपिनी

निरीक्ष्येति युग्मकम् । बलं सैन्यम् । उद्वेलं लङ्घितमर्यादम् । अनुगुणमनुरूपं यत् भूमारहरणरूपं प्रयोजनं तत् चिन्तयामासेत्यन्वयः ॥ ५-६ ॥ हनिष्यामीति युग्मम् । समाहितं संस्थितम् भाररूपं बलम् । बलाय सेनानयनाय उद्यमं कर्ता करिष्यति ॥ ७-८ ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

वेलायास्तीरादुद्गतं बहिर्गतं लङ्घिततीरं सागरमिव भगवान् चिन्तयामासेति नन्वाप्तकामस्य चिन्तने किं कारणमत्राह । कारणमानुष इति । कारणचिन्तनेतिमितं । निग्रहानुग्रहविषया मानुषाः यस्य सः कारणं विश्वहेतुश्चासौ स्वकृतसेतुपरिक्षया मानुषः मनुष्याणामयं निग्रहानुग्रहकर्ता चेति वा कथं धार्मिका अनुगृहीताः । अधार्मिकाः निगृहीताश्च स्युरिति चिन्तयामासेत्यर्थः ॥५-६॥ बलं सैन्यं तदुद्यमं कर्त्ता करिष्यति ॥ ७ ॥ अन्योऽपि वराहादिदेहः । धर्मरक्षायै प्रभवतः उद्भवतः अधर्मस्य विरमाय च मया सन्भ्रियते ॥ ८ ॥

### श्रीसत्यधर्मकृता श्रीभागवतटिप्पणी

उद्वेलं वेलामुद्गत्यायान्तं सागरमिव विद्यमानं तद्बलं सैन्यं तेन बलेन संरुद्धं स्वपुरं मधुरां भयाकुलं स्वकुलं च निरीक्ष्येत्यन्वयः ॥ ५ ॥ कारणेनैव मानुषस्तत्त्वेनावतरितस्तद्देशकालानुगुणं स्वावतारस्य प्रयोजनं भगवांश्चिन्तयामास लोकमनुकुर्वन् ॥ ६ ॥ भारं समाहितं तत्त्वेन स्थितं पश्यतां सर्वभूभृतांताननादृत्येत्यर्थः ॥ ७ ॥ कीदृग्बलमित्यत आह । अक्षौहिणीभिः सङ्ख्यातं भटाश्च रथकुञ्जरैः सङ्ख्यातं तदेव हनिष्यामि । मागधोऽपि मागधस्तु न हन्तव्यः । कुतस्तस्य न हननमित्यत आह ॥ भूयः कर्त्ता बलोद्यममिति ॥ ८ ॥

### श्रीमद्वल्लभाचार्य्यकृता सुबोधिनी

तदा भीतानां वार्ताकथनं व्यर्थमिति भगवतश्चरित्रमाह निरीक्ष्येति । यतो भगवान् कालात्मा अवतीर्णः । तच्च समागतं बलरूपम्, न तु स्नेहार्थमन्यार्थं वा समागतम् । तस्य अमर्यादत्वं चाह । वेलामतिक्रम्य समागच्छन्तं सागरमिव

दृष्टवान्। नन्वक्लिष्टकर्मा भगवान्, यादवनयनार्थमागतो जरासन्धः यादवान् नयतु, राजा वा विचारं करिष्यति, स्वयं किमित्येवं कृतवानित्याशङ्क्याह स्वपुरं तेन संरुद्धमिति। मथुरा तु स्वनगरम्, न केवलं यादवपुरीमात्रम्। निरीक्ष्येति त्रिषु सम्बन्धः। एका मोचनीया, अन्ये निर्भयाः कर्तव्याः, एकं च मारणीयमिति। गुणानां कार्यमुपस्थितमिति दर्शनम्। स्वजना भक्ताः, ते च भयाकुलाः। चकारात् तत्सम्बन्धिनोऽन्ये पुरवासिनः। बलस्यैकत्वमनायासेन मारणज्ञापनाय। पुर्यास्त्वावश्यकत्वाय। स्वजने वसुदेवं ज्ञापयितुम् ॥ ५ ॥ तत्र भगवान् पदार्थद्वयस्योपस्थितत्वात् किं कर्तव्यमिति चिन्तां कृतवानित्याह चिन्तयामासेति। ननु किमेतत् द्वयं यदर्थं चिन्तेत्याशङ्क्याह हरिः कारणमानुष इति। भगवानित्युभयथापि करणे सामर्थ्यमुक्तम्। किमक्लिष्टकर्मत्वात् कंसवदयं मारणीयः, तावत् स्वजनाभिभवः सोढव्यः, आहोस्विदक्लिष्टकर्मत्वं परित्यज्य वैषम्यमङ्गीकृत्य युद्धादिकं कर्तव्यमिति। किं तावत्प्राप्तम्। स्वधर्मपरित्यागोऽनुचित इति हरिस्त्वं दूरीकृत्य कारणार्थं व्याजेन मनुष्यो जात इति कंसवदेव मारणीयः, अन्यथा व्याजकरणं व्यर्थं स्यात्। अक्लिष्टकर्मत्वरक्षार्थमेव मानुषभावेनावतीर्णः। तस्माद्युद्धं न कर्तव्यमिति पूर्वः पक्षः। सिद्धान्तस्तु कर्तव्य इति। यतो हरिरयम्, न भक्तानां दुःखं सहते, स्वधर्मश्च कर्तव्यः, सान्नाहिको हि षोडशवार्षिको भवति, युद्धार्थमागतेन च सह युद्धं कर्तव्यमिति। ननु स्वधर्मोऽन्यथा भविष्यतीति कथं क्लिष्टकरणमित्याशङ्क्य देशानुरोधेन करणं निरूपयति तद्देशकालानुगुणमिति। तस्य देशस्य तस्य च कालस्य युद्धकरणमेवानुगुणम्। कदाचिदङ्गानुरोधेनाप्यङ्गिनो धर्मा अन्यथा क्रियन्ते। यथा प्रवर्ग्यसम्भारे आदित्यास्तमयेविरमणम्, कृतान्तादेव विरमेदिति। यथा वा देशदोषेण प्रधानयागस्यापि नाशः दक्षयज्ञे। तस्मात् तस्मिन्देशे अभक्ताः स्थास्यन्तीति तदनुरोधेन ते मारणीयाः, तेषां च मृत्युकाल उपस्थित इति कालानुरोधोऽपि कर्तव्यः, अतः क्लिष्टकरणं तद्देशकालानुगुणं भवति। किञ्च, स्वावतारस्य प्रयोजनमपि भवति। अवतारो हि भक्तानामुद्धारार्थः। स च कालं वञ्चयित्वा, लौकिकवत् कृत्वा, भक्ता नेयाः। तत्र क्लिष्टकरणमुपयुक्तं भवति। अन्यथा कालो भक्तेषु द्रोहं कुर्यात् कर्मादिभिः। ततो बहुकर्तव्यमापद्येत। अतः स्वावतारस्य प्रयोजनं यस्मात् तादृशमपि विषमकरणमिति भगवतश्चिन्ता युक्ता ॥ ६ ॥ चिन्तया निर्धारितं पक्षमाह हनिष्यामीति चतुर्भिः। बलं हनिष्यामीति प्रतिज्ञा। युक्तश्चायमर्थः। लोके हि यदुपरि यो गच्छति, स तन मार्यत इति नात्र विरोधः। एतदिति प्रदर्शनेन बलस्यातिक्रमोऽपि सूचितः। बलेन समागत इति बलेनैव वधो युक्तो, न तु व्याजेन। पूर्वोक्तास्तु व्याजेन समागताः। अतस्तेषां व्याजेनैव हननं युक्तम्। 'ये यथा मां प्रपद्यन्ते' इति भगवतो व्रतरूपोऽपि धर्मः परिपालितो भवति। अनेन मारणवैषम्यबुद्धिरपि परिहृता भवति। मार्याणामेव तथा बुद्धिर्जातेति। एतत्सर्वमभिसन्धाय भगवान् हिशब्दमाह। किञ्च, सर्वैर्भूभारहरणार्थं विज्ञापिते कार्यान्तरमागच्छन्नपि तेषां कृपयापि तथा समागतः। अत आगमनकार्यसिद्ध्यर्थमपि मारयिष्यामीत्याह भुवि भारमिति। एतद्भाररूपमेव बलम्। अत एव सर्वाधः पाताले स्थापितं तत्कालेन भुवि समाहितम्। सम्यगाहितत्वात् न कृत्रिमकालकर्मादिभिः दूरीकर्तुं शक्यते। ननु राज्ञो बलं धर्महेतुर्भवतीति तद्वधे प्राणिवधः अधर्मश्च स्यादिति चेत्? तत्राह। मागधेन अधमदेशोद्भवेन समानीतमिति। नन्वेतावतां स्वामी महानेव भविष्यतीत्याशङ्क्याह वश्यानां सर्वभूभुजामिति। तद्वश्या दुष्टा एव। तेऽपि तत्स्वभावापन्ना जाता इति। अनेन तद्बलं न ग्राह्यमित्यप्युक्तम्। दुष्टं भारात्मकमिति। तस्याजेयत्वज्ञापनायाह अक्षौहिणीभिः संख्यातमिति। समूहशो युद्धे भङ्गो भवेत्। सजातीया बहवोऽपि एकेन विजातीयेन हस्त्यादिना मार्यन्त इति। आदौ पञ्चभटा युद्धं कुर्वन्ति। तेषां पराजयशङ्कायां त्रयोऽश्ववाराः। तेषामपि पराजये एको रथी प्रवर्तते। तस्यापि तथात्वे षाष्टिहायनो गजः। एवमेकापि पत्तिः क्रमतः सन्निविष्टा जतुमशक्या। तादृशमेतदित्याह। भटाश्वरथकुञ्जरैः कृत्वा पत्त्यङ्गत्रिगुणन्यायेन क्रमवृद्ध्या अक्षौहिणीसंज्ञापन्नाः। तेऽपि बहवः। अतोऽन्येषामशक्यत्वात् मयैव हन्तव्यं बलम्। अनेन सार्द्धश्लोकेन बलस्यावश्यवधार्थं दुष्टत्वं भारत्वं च निरूपितम्। ननु 'शास्त्रफलं प्रयोक्तरी'ति न्यायेन मागध एव किं न हन्यते एते च दीना मोचनीया इति चेत्? तत्राह मागधस्त्विति। तुशब्दस्तेषां वधाभावं निराकरोति, भाररूपत्वात्। यद्यपि मागधोऽपि भाररूपः, तथापि शवदाहककाष्ठदाहकदीर्घवंशवदन्तपर्यन्तं संरक्षणीयः। अतो मागधो न हन्तव्यः। तदेवाह भूयः कर्ता बलोद्यममिति बलानयनार्थं उद्यमं करिष्यति, अन्यथा बलं निलीय तिष्ठेत् भारभूतम्। समानयनार्थं वा अधिकः प्रयत्नो भवेत्। यतोऽयं मागधो दुष्टः। आमरणान्तं यत्नं करिष्यतीति ॥ ७-८ ॥

### श्रीसुबोधिनी–सारः

उद्वेलं वेलामतिक्रान्तं समुद्रमिव तद्बलं दृष्ट्वा तेन बलेन संरुद्धं स्वस्य पुरं मथुरां दृष्ट्वा भयेनाकुलं व्याप्तं स्वजनं च। देशकालयोरनुगुणमनुरूपं स्वावतारप्रयोजनं तत् दृष्ट्वा कारणेन भूभारहरणेन मानुषो हरिर्भगवान् कृष्णो दध्यौ ॥ ५-६ ॥ तथाहि वश्यानां स्वाधीनानां सर्वेषां भुभुजां राज्ञां समाहितं वर्त्तमानं भुवि पृथिव्यां भारं भाररूपं मागधेन जरासंधेन समानीतमेतद्बलं हनिष्यामि भटाः पत्तयः चतुरङ्गाः भिन्नाक्षौहिणीभिः संख्यातं मागधो न वध्यः तत्र हेतुः बलेनोद्यमं पुनः करिष्यति ॥ ७-८ ॥

### विवरणटिप्पणी

भगवतस्तु यादवत्वाभिमानाभावान्नाहत्य रक्षकत्वमिति तेन ज्ञातम्। अतः अयादवीमित्युक्तम्। चिन्तयामासेत्यत्र। स्वधर्मश्चेति। क्षात्रधर्म इत्यर्थः। ननु क्षात्रधर्मास्तु षोडशवर्षानन्तरं विहिता इत्यत आहुः सान्नाहिको हीति। अतिसमर्थस्य

पूर्वमेव सन्नाहग्रहणे तदेव षोडशवार्षिकधर्माः कर्तव्या इति युक्तिबोधनाय हिशब्दः । तं धर्ममाहुः युद्धार्थमिति । ननु स्वधर्म इति । अक्लिष्टकर्मत्वमित्यर्थः । देशदोषेणेति । दैवान्निर्ऋतिग्रहीते देवयजने इति निबन्धे निरूपणादित्यर्थः । हनिष्यामीत्यत्र । कृत्रिमकालेति । कालेन स्वकृतपापेन वा दूरीभविष्यन्तीति नेत्यर्थः । एतदर्थं इत्यत्र । दोषो लौकिक इति । लोकदृष्टान्तसिद्ध इत्यर्थः । यत्रेति । दैत्यवधे पूर्वोक्तप्रकारेण दोषत्वं नापद्यते इत्यर्थः ।

### गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

तदा च कृष्णः उद्वेलं लङ्घितमर्यादं सागरमिव स्थितं तस्य जरासन्धस्य बलं तेन निरुद्धं स्वपुरं तथा भयेन आकुलं व्याप्तं स्वजनं च निरीक्ष्य ॥ ५ ॥ चिन्तयामासेत्यन्वयः 'किं चिन्तयामास ।' इत्यपेक्षायामाह—तद्देशेति । अस्मिन् काले देशे वा किं केवलं सैन्यहननं युक्तं, समागधसैन्यस्य हननं वा, केवलमागधहननं वेति, तथा स्वावतारप्रयोजनं च चिन्तयामासेत्यन्वयः । 'ननु कथं प्रथमतो हनननिश्चयं कर्तुं शक्यते' तत्राह—भगवानिति । ननु 'कथं तर्हि अस्मदादिवत्प्रतीयते' तत्राह—कारणमानुष इति । भूभारावतारकारणेन मानुषवज्जातः, न वस्तुतो मानुष इत्यर्थः । भारावतारणेनापि तस्य किं प्रयोजनमित्यपेक्षायामाह—हरिरिति । भक्तदुःखहरणशीलत्वादित्यर्थः ॥ ६ ॥ एवं विचिन्त्य यन्निश्चितवांस्तदाह—हनिष्यामीति । स्ववश्यानां सर्वभूभुजां राज्ञामेतद्भूमेर्भाररूपं समाहितं समुदितं मागधेन जरासन्धेन समानीतमत्र प्रापितम् ॥ ७ ॥ भटैः पदातिभिः, अश्वैः, रथैः, कुञ्जरैश्च व्याप्तं त्रयोविंशतिभिरक्षौहिणीभिः सङ्ख्यातं च बलमेव हनिष्यामि । मागधस्तु मया न हन्तव्यः न हननयोग्य इति द्वयोरन्वयः ॥ तत्र हेतुमाह—भूय इति । अयमधुनैव निहितश्चेत्तदा पुनर्दुष्टानामानेता न स्यात्, तदन्वेषणे च महान् प्रयासः स्यात् । यदि च न हतस्तदा पुनः दुष्टं बलं समानयन्नेवावतिष्ठेत तदा कृत्स्नदुष्टहननं सुकरं स्यात्, अतोऽयमधुना न हन्तव्य इत्यर्थः ॥ ८ ॥

### अन्वितार्थप्रकाशिका

निरीक्ष्येति द्वयम् ॥ कारणेन भूभारहरणेन मानुषरूपः भगवान् हरिः कृष्णः उद्वेलम् उत्क्रान्तो वेला तीरमित्युद्वेलः तं लंघितमर्यादं सागरमिव स्थितं तस्य जरासन्धस्य बलं तेन निरुद्धं स्वपुरं तथा स्वजनं भयाकुलं निरीक्ष्य तस्य देशस्य कालस्य चानुगुणमनुरूपं स्वावतारस्य प्रयोजनं चिन्तयामास । किं बलमेव हन्यां किंवा मागधहितं बलमित्यचिन्तयत् ॥ ५-६ ॥ चिन्तितमाह—हनिष्यामीति द्वयेन ॥ स्ववश्यानां सर्वभूभुजां राज्ञामेतद् भुवि भाररूपं समाहितं समुदितं मागधेन जरासन्धेन समानीतमत्र प्रापितं भटैः पदातिभिः अश्वै रथैः कुञ्जरैश्च व्याप्तं त्रयोविंशतिसंख्याभिरक्षौहिणीभिः संख्यातं च बलमेव हनिष्यामि । मागधस्तु मया न हन्तव्यः । यतोऽसौ भूयः बलस्य सैन्यसम्पादनस्योद्यमं कर्त्ता करिष्यति । ततश्च भूभारभूतदुष्टसमूहस्यैकत्रैव लाभात्तद्धननं सुकरं स्यात् ॥ ७-८ ॥

### श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्

तस्य मागधस्य बलमनीकं । उद्वेलमुल्लंघिततटं समुद्रमिव तेन जरासुतसैन्येन संरुद्धम् ॥ ५ ॥ कारणमानुषः कारणं भूभारहरणधर्मस्थापनयोर्निमितं तदर्थं मानुषो मनुष्यत्तुल्यतयेहवर्त्तमानः हरिः शरणगतपीडाहारकः देशः क्षत्रियजातिषु जन्मस्थानं कालो युद्धाय जरासंधागमनसमयश्च तयोर्देशकालयोः अनुगुणं योग्यं । स्वावतारस्य पुरुषोत्तममुख्यावतारस्य प्रयोजनं मुख्यहेतुं स्वमनसि चिंतयामास ॥ ६ ॥ तामेवाचिंतामाह चतुर्भिः हनिष्यामीति । वश्यानां जरासंधाधीनानां भूभुजां राज्ञां वंश्यानामिति पाठे तु भूभुजां राज्ञां वंशे उत्पन्नानां क्षत्रियाणां एतत् बलं सैन्यमेव भुवि समाहितं स्थितं भारं सच्छास्त्रसत्पुरुषोदितधर्मविरुद्धाचरणेन भारभूतं यत् तदेव मागधेन जरासन्धेन सम्यक् आनीतं सत् हनिष्यामि ॥ ७ ॥ तत्र मागधस्तु मया न हन्तव्यः कुतः यतो भूयः पुनर्बलोद्यमं बलाय सैन्याय उद्यमं उद्योगं कर्त्ता करिष्यति अतो न हन्तव्य इत्यर्थः ॥ ८ ॥

### भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

निरीक्ष्येति ॥ तदा, कृष्णः उद्वेलं लङ्घितमर्यादं, सागरमिव स्थितं, तद्बलं जरासंधसैन्यं, तेन बलेन, संरुद्धं, स्वपुरं भयाकुलं, स्वजनं च, निरीक्ष्य ॥ ५ ॥ चिन्तयामासेति । कारणमानुषः कस्मैचन प्रयोजनाय मानुषवत् प्रतीयमानः हरिः स्वाश्रितापद्धरः, भगवान् श्रीकृष्णः, तद्देशकालानुगुणं तद्देशतत् कालानुगुणं यथा भवति त ा, स्वावतारप्रयोजनं चिन्तयामास । अयं भावः । मया क्षत्रियस्य स्वारिविनाशनमेव मुख्यमस्ति, साम्प्रतं तदर्हौ देशकालौ प्राप्तावती जरासन्धेन युद्धं विधेयं तत्र किमेतद्बलमेव हन्मि, न मागधमिति, युक्तमथवा मागधं हत्वा, तद्बलं गृह्णामि, यद्वा समागधं सर्वं हन्मीति विचारयामासेति द्वयोरेकसंबन्धः ॥ ६ ॥ एवं प्रकारत्रयं विचार्य प्रथमं पक्षं निर्द्धारितवान् तदाह चतुर्भिः ॥ हनिष्यामीति ॥ अक्षौहिणीभिरिति च ॥ वंशे उत्तमान्वये भवा वंश्यास्तेषां, सर्वे च ते भूभुजश्च तेषां, भूमेः भारं भाररूपं, समाहितं समुदितं, मागधेन जरासंधेन, समानीतं, भटाः पत्तयश्चाश्वाश्च रथाश्च कुञ्जराश्च तैः, संकुलमिति शेषः ।अक्षौहिणीभिः त्रयोविंशतिसंख्याकाभिरिति शेषः । संख्यातं एतत्, बलं सैन्यं, हनिष्यामि हि । भूमेरित्यत्र भुवीत्यपि, वंश्यानामित्यत्र वश्यानामित्यपि पाठः । इदानीं मागधो जरासन्धः तु, न हन्तव्यः यतोऽयं जीवन् सन्निति शेषः । भूयः पुनरपि, बलोद्यमं, कर्त्ता करिष्यति । अतोऽयमधुना न हन्तव्य इति भावः । इति द्वयोरेकान्वयः ।७-८।

**कृष्णप्रिया**

भगवान् श्रीकृष्ण उभरते हुए, सागर के समान जरासंध की विशाल सेना से घिरी हुई अपनी मथुरा नगरी तथा भय से व्याकुल निज प्रजाजन को देखकर मन में विचार करने लगे ।। ५ ।। पुनः कारण मानुष भगवान् श्रीहरि वर्तमान देश एवं वर्तमान काल के अनुरूप अपने भूतल पर प्राकटच का प्रयोजन को सिद्ध करने के लिए अपने वर्तमान कार्य पर विचार करने लगे ।। ६ ।। विमर्श के अन्त में भगवान् श्रीकृष्ण ने अपना निश्चय दर्शाया कि वर्तमान में तो जरासन्ध राजा के आधीन समस्त राजाओं की भूतल पर भार जो तेईस अक्षौहिणी सेना यहाँ इकट्ठी हुई है उसका ही विनाश करूँगा ।। ७ ।। अभी तो पदाति सैनिक, अश्व, रथ-कुञ्जरों की विपुल अक्षोहिणी सेनाओं का नाश करना है लेकिन मागध जरासन्ध को मारना हैं क्योंकि यदि जरासन्ध जीवित रहा तो वार वार उद्यम कर सेना इकट्ठी कर लाएगा ।। ८ ।।

**एतदर्थोऽवतारोऽयं भूभारहरणाय च[1] । संरक्षणाय साधूनां कृतोऽन्येषां वधाय च ॥ ९ ॥**
**अन्योऽपि धर्मरक्षायै देहः संभ्रियते मया । विरामायाप्य[2] धर्मस्य काले प्रभवतः क्वचित् ॥ १० ॥**
**[3]एवं ध्यायति गोविन्द आकाशात् सूर्यवर्चसौ । रथावुपस्थितौ सद्यः ससूतौ सपरिच्छदौ ॥ ११ ॥**
**आयुधानि च दिव्यानि पुराणानि यदृच्छया । ॐदृष्ट्वा [4]तानि हृषीकेशः सङ्कर्षणमथाब्रवीत् ॥ १२ ॥**

**कर्दमक्षमा**

**अन्वयः**—अयम्, अवतारः, एतद्, अर्थः, च, भूभारहरणाय, साधूनाम्, संरक्षणाय, च, अन्येषाम्, वधाय, कृतः ॥९॥ मया, अन्यः, अपि, देहः, धर्मरक्षायै, अपि प्रभवतः, अधर्मस्य, विरामाय, क्वचित्, काले, ध्रियते ॥ १० ॥ एवम्, गोविन्दे, ध्यायति, आकाशात्, सूर्यवर्चसौ, सपरिक्छदौ, ससूतौ, रथौ, सद्यः समुपस्थितौ ॥ ११ ॥ अथ, दिव्यानि, च, पुराणानि, यदृच्छया उपस्थितानि, तानि, आयुधानि, दृष्ट्वा, हृषीकेशः, संकर्षणम्, अब्रवीत् ॥ १२ ॥

**श्रीधरस्वामिविरचिता भावार्थदीपिका**

नन्वत एव हंतव्यस्तत्राह । एतदर्थ इति । एतच्छब्दार्थं स्पष्टयति । भूभारहरणायेति ॥ ९ ॥ अयमेतदर्थोऽवतार इत्युपलक्षणमित्याह । अन्योऽपीति । प्रभवतः उद्भवतः ॥ १० ॥ ससूतौ सारथिसहितौ । परिच्छदः परिकरो ध्वजकवचादिस्तत्सहितौ ॥ ११-१२ ॥

१. मे-श्रीधर. वंशी. जीव. वीर. विज. विश्व. । २. माथ ह्य-विज. । ३. अयं सार्धः श्लोकः कुण्डलितपाठे पाठभेदेन ११ श्लोकरूपेण दृश्यते ।

ॐएवं ध्यायति गोविन्दे मागधाधिपतिर्बली । मथुरां सवनोद्यानां रुरोधः बहुसैनिकः ॥ १ ॥
कलिङ्गश्चेकितानश्च दन्तवक्रविदूरथौ । उल्मुको वेणुदारी च सालवश्चैद्यश्च दुर्मतिः ॥ २ ॥
पूर्वद्वारं समासाद्य रुरुधुर्मागधाज्ञया । विन्दानुविन्दावावन्त्यो विराटो दरदस्तथा ॥ ३ ॥
एकलव्यो वाह्लिकश्च तथा पञ्चनदेश्वरः । रुरुधुर्दक्षिणद्वारं पौण्ड्रकश्च महावलः ॥ ४ ॥
युधामन्युर्बृहत्क्षत्रः सालवो भूरिश्रवास्तथा । उत्तमौजाश्च रुक्मी च द्रुमश्चैव सुदक्षिणः ॥ ५ ॥
एते नियुक्ता राजानो जरासन्धेन भारत । पश्चिमद्वारमासाद्य रुरुधुर्मधुरां पुरीम् ॥ ६ ॥
द्रुपदः शिशुपालश्च त्रिगर्तोऽथ जयद्रथः । शकुनिः सोमदत्तश्च कुणिन्दश्च महाबलः ॥ ७ ॥
जरासन्धेन सहिताः सर्वे मदबलान्विताः । उत्तरद्वारमासाद्य रुरुधुर्भरतर्षभ ॥ ८ ॥
ते निरुद्धच चतुर्द्वाराण्युद्वेलांभोधिसंनिभाः ।
सिंहनादं च कुर्वन्तो दध्मुः शङ्खाननेकशः । क्ष्वेलन्तो युद्धसंनद्धा जघ्नुर्भेरीः सहस्रशः ॥ ९ ॥
तद्वीरभूपालकदंबजृंभितं युगावसानार्णवघूर्णितोपमम् । निशम्य कृष्णो न चचाल चेतसा मृगालघोषं मृगराडिवोद्धतः ॥ १० ॥
एतस्मिन्नेव काले तु गगनात्सूर्यवर्चसौ । रथावुपस्थितौ सद्यः ससूतौ सपरिच्छदौ ॥ ११ ॥
आयुधानि च दिव्यानि पुराणानि यदृच्छया । चक्रं सुदर्शनं घोरं सहस्रारं मनोरमम् ॥ १२ ॥
गदा कौमोदकी गुर्वी नाम्ना कौमोदकी शुभा । त्रिणतं कार्मुकश्रेष्ठं शार्ङ्गसंज्ञं गुणान्वितम् ॥ १३ ॥
तीक्ष्णधारः शितमुखः खड्गो नन्दकसंज्ञितः । लघू शरान्विती रम्यौ तूणौ चाक्षयसायकौ ॥ १४ ॥
तुरगाः शैव्यसुग्रीवमेघपुष्पबलाहकाः । हलं च बलभद्रस्य मुसलं च दृढं गुरु ॥ १५ ॥
इत्येतान्यायुधान्याजौ गगनादागतानि सः ॥ १६ ॥ ( एते श्लोकाः ११॥ श्लोकानन्तरं विजये दृश्यन्ते । )

४. राजन्-विज. ।

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

ननु निश्चयेन यतः पुनरानयिष्यतीत्यत एव हेतोर्हन्तव्यो भूसार इति । यद्वा—'न त्वतः' इति पाठः स्वामिनां, लेखकप्रमादान्नन्विति जातः, तत्पक्षे, अत एव यतः पुनर्बलमानयिष्यति जरासंधोऽतोऽयं न हन्तव्य इति व्याख्येयम् । एषोऽर्थः प्रयोजनं यस्य स एतदर्थः । एतदर्थम् एतस्मा इत्यर्थः । कस्मै ? तत्राह—भूभारहरणायेत्यादि । अवतारः प्रपंचे प्राकट्यम् । 'अयम्' इति पाठः स्वामिसंमतः । 'हि' इति क्वचित्पाठः । भूभारहरण स्पष्टयति—संरक्षणागेति । स शब्देन स्वभक्तिप्रवर्तनादिना लोकद्वयेऽपि रक्षा सूचिता ॥ ९ ॥ अन्योपि रामादिरपि विरामाय विनाशाय ॥ अन्योऽपि किमुत सर्वैश्वर्यादि पूर्णोऽयमित्यर्थः । संम्रियते प्रकाश्यते इत्यर्थः । तथा च श्रीगीतासु—"यदा यदा हि धर्मस्य ग्लानिर्भवति भारत" इत्यादि ॥ १० ॥ एवमुक्तप्रकारेण । आकाशाद्वैकुंठात् "आकाशो ब्रह्मवैकुंठस्वर्लोक गगनेषु च" इति धरणिः । सद्यश्चितनावसरे । उपस्थितौ प्राप्तौ ॥ एवमिति सार्द्धकम् । मां पृथ्वीं विन्दतीति गोविन्द इति, भूभारहरणार्थं साक्षादवतीर्णो भगवानित्यर्थः, तस्मिन् । आकाशादूर्ध्वलोकात्तदीयमहावैकुंठादित्यर्थः ॥ ११ ॥ पुराणानि शंखचक्रगदादीनि । यदृच्छयाऽकस्मादेव । "यदृच्छा निर्निमित्ते स्वादद्भुताकस्मिकेऽथवा" इति धरणिः । तानि स्थायुधादीनि । अथ स्थाद्युपस्थित्युत्तरम् ॥ दिव्यानि लोकातीतानि । यतः पुराणानि पुरापि नवानि नित्यानीत्यर्थः । यदृच्छया स्वैरितर्या, आनयनादिप्रयत्नं विनैवोपस्थितानि, तेषां भगवदभिप्रायज्ञत्वेन चेतनाभिप्रेता । यद्यपि "हलं संवर्तकं नाम सौनन्दं मुशलं तथा । धनुषां प्रवरं शार्ङ्गं गदां कौमोदकीं तथा ॥" इति श्रीहरिवंशात्, तथा श्रीविष्णुपुराणे च चत्वार्येवायुधान्युक्तानि तथाप्यत्र श्रीभगवच्चक्रं श्रीबलदेवस्य धनुरादिकमपि ज्ञेयं योग्यत्वादन्यत्राऽऽगमनश्रवणाच्च । अत एवाग्रे "एष ते स्थ आयातो दयितान्यायुधानि च" इति बहुत्वम् । दृष्ट्वेत्यर्द्धकम् । हृषीकेशः विनैव वचनेन सर्वं प्रवर्तयितुं समर्थोऽपि संकर्षणं सर्वं दृष्टिमात्रेण नाशयितुं समर्थमपि । अथ कार्त्स्न्येनाब्रवीत् । लीलाकौतुकावेशेन युक्तिपूर्वकमेव बभाष इत्यर्थः ॥ १२ ॥

### श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी

एतदर्थ इति एतस्मा इत्यर्थः । कस्मै तत्राह—भूभारहरणायेत्यानि अवतारः प्रपञ्चे प्राकट्यं अयमिति तैः ( स्वामि ) सम्मतः पाठः उत्तरावतारिकानुरोधात् हीति क्वचित् मे मया भूभारहरणं स्पष्टयति, संरक्षणायेति । संशब्देन स्वभक्तिप्रवर्त्तनादिना लोकद्वयेऽपि रक्षा सूचिता ॥ ९ ॥ अन्योऽपि किमुत सर्व्वैश्वर्य्यादिपूर्णोऽयमित्यर्थः सम्म्रियते प्रकाश्यते इत्यर्थः । तथा च श्रीगीतासु "यदा यदा हि धर्म्मस्य ग्लानिर्भवति" इत्यादि ॥ १० ॥ एवमिति सार्द्धकम् । गां पृथ्वीं विन्दतीति गोविन्दः इति भूभारहरणार्थं साक्षादवतीर्णो भगवानित्यर्थः । तस्मिन् आकाशादूद्र्ध्वलोकात् तदीयमहावैकुण्ठादित्यर्थः ॥ ११ ॥ दिव्यानि लोकातीतानि यतः पुराणानि पुरापि नवानि नित्यानीत्यर्थः । यदृच्छया स्वैरितया आनयनादिप्रयत्नं विनैवोपस्थितानि इति तेषां भगवदभिप्रायज्ञत्वेन चेतनाभिप्रेता । यद्यपि—

"हलं सम्वर्त्तकं नाम सौनन्दं मुसलन्तथा । धनुषां प्रवरं शार्ङ्गङ्गदां कौमोदकीं तथा ॥"

इति श्रीहरिवंशे तथा श्रीविष्णुपुराणे चत्वार्य्येवायुधान्युक्तानि तथाप्यत्र श्रीभगवतश्चक्रं श्रीबलदेवस्य धनुरादिकमपि ज्ञेयं योगात्वादन्यत आगमनाश्रवणाच्च अतएवाग्रे एष ते रथ आयातो दयितान्यायुधानिचेति बहुत्वं । दृष्ट्वेत्यर्द्धकं हृषीकेशः विनैव वचनेन सर्वं प्रवर्त्तयितुं समर्थोऽपि सङ्कर्षणं दृष्टिमात्रेण सर्वं नाशयितुं समर्थमपि अथ कार्त्स्न्येनाब्रवीत् लीलाकौतुकावेशेन युक्तिपूर्वकमेव बभाष इत्यर्थः ॥ १२ ॥

### श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी

अवतारः श्रीवैकुण्ठलोकादवतरणम्, स मया । ननु भूभारहरणार्थं साधवोऽपि किं हन्तव्याः ? न, साधवः परिपाल्याः, असाधव एव हन्तव्या इत्याह–संरक्षणायेति । सं-शब्देन भक्तिप्रवर्त्तनादिना लोकद्वयेऽपि रक्षा सूचिता । अन्यत्तैर्व्याख्यातम् । यद्वा, ननु साक्षात् त्वया हतस्य सतो नाधिकारिणोऽपि मोक्षो भवितेत्याशंक्याह—एतदिति, भूभाररूपाणां प्राणिनामपि मोक्षप्रदानेन भूभारकेरणाय । तत्प्रकारमेवाह—साधुनां संरक्षणाय योऽसाधूनां वधस्तस्मै चिरान्मोक्षदानाय च, किं वक्तव्यमशेषैश्वर्यप्रकटनावतारेऽस्मिन् साधवः संरक्ष्या असाधवश्च हन्तव्या इति ॥ ९ ॥ अन्यावतारेऽपि तदेतत् क्रियत इति तदावश्यकताभिप्रायेणाह—अन्योऽपीति । संभ्रियते प्रकाश्यत इत्यर्थः । क्वचित्काले प्रभवतो वर्द्धमानस्येति, यदैव प्रभवेत्, तदैवेत्यर्थः; तथा च श्रीगीतासु ( ४।७ )—'यदा यदा हि धर्म्मस्य ग्लानिर्भवति' इत्यादि; यद्वा, क्वचित् काले संभ्रियत इत्यन्वयः । एवं धर्म्मरक्षया साधूनां संरक्षा, अधर्म्मविरामेण चासाधूनां वधः सिद्ध एव ॥ १० ॥ गां पृथ्वीं विन्दतीति गोविन्दः, भूभारहरणार्थं भुवि साक्षादवतीर्णो भगवानित्यर्थः । तस्मिन् भूभारहरणार्थमीदृशं चिन्तयति सति, आकाशात् ऊद्र्ध्वलोकात् श्रीवैकुण्ठादित्यर्थः ॥११॥ दिव्यानि लोकातीतानि, यतः पुराणानि पूर्व्वसिद्धानि नित्यानीत्यर्थः । इति श्रीभगवदभिप्रायाभिज्ञताभिप्रेता । अतो यदृच्छया लीलया स्वयमेवोपस्थितानि, यद्यपि ( विष्णु० प० ३५।६० )–'हलं सम्वर्त्तकं नाम सौनन्दं मुषलं तथा । धनुषां प्रवरं शार्ङ्गं

गदा कौमोदकी तथा ॥' इति श्रीहरिवंशे, तथा श्रीविष्णुपुराणे च चत्वार्य्येवायुधान्युक्तानि, तथाप्यत्र श्रीभगवतश्चक्रं श्रीवलदेवस्य च धनुरादिकमपि ज्ञेयम् । अतएवाग्रे ( १३ श० श्लो० ) 'एष ते रथ आयातो दयितान्यायुधानि च' इति बहुत्वं युद्धे चक्राद्यप्रयोगश्च तुच्छत्वादिति ज्ञेयम् । हृषीकेशः सर्वेन्द्रियप्रवर्तक इति सर्व्वेषां तदधीनत्वमुक्तम्; किञ्च, संकर्षणं सदा तस्मादपृथग्भूतमग्रजं साहित्याय तेन युद्धक्रीड़ासुखार्थञ्चाह । अथ तत्तद्दर्शनानन्तरमिति तं सद्यो युद्धे प्रवर्त्तयितुं वचनेऽविलम्बतां बोधयति ॥ १२ ॥

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम्

प्रभवतः प्रकर्षेण भवतः ॥ १०-१२ ॥

### श्रीमद्वीरराघवाचार्यकृता भागवतचन्द्रचन्द्रिका

ननु, किं वृथा बलहनने न ममार्थः यो द्वेष्टि स एव हन्तव्यः इत्याशङ्क्य तर्ह्यवतरणं नार्थवत्स्यादित्यभिप्रयन्नाह—एतदर्थ इति । मे मम अवतारः एतदर्थः एष अर्थः प्रयोजनं यस्य तथाभूतः । कोऽसावर्थ इत्यपेक्षायां भूमारेत्यादिभिश्चतुर्थ्यन्तैः प्रयोजनविशेषान्निर्द्दिशति—भूभारहरणाद्यर्थमयमवतारः कृत इत्यन्वयः । अन्येषामसाधूनां वधाय च ॥ ९ ॥ नेदं प्रयोजनविशेषपरिगणनमपि तु प्रदर्शनमात्रमित्यभिप्रेत्याह—अन्योऽपीति । अन्योऽप्यवतारस्यार्थः प्रयोजनं कोऽसावतस्तं दर्शयति—धर्मरक्षाया इति । अन्योऽपीति एकवचनंसामान्याभिप्रायकं काले कदाचित् क्वचित्प्रभवतः प्रकर्षेण भवतो वर्द्धमानस्य अधर्मस्य विरामाय विध्वंसनाय च मया देह सम्भ्रियते परिगृह्यते ॥ १० ॥ एवमिति । ध्यायति विचार्य्य निश्चितवति सति तदैव द्वौ रथावाकाशादवतीर्योपस्थितौ स्तः कथम्भूतौ सूर्यस्येव वर्चो ययोस्तौ सारथिसहितौ परिच्छदः परिकरो ध्वजकवचादिस्तत्सहितौ ॥ ११ ॥ नथ हृषीकेशः पुराणानि पुरातनानि दिव्यान्यमानुषाण्यायुधानि चकारात् तैस्सहितौ रथौ च दृष्ट्वा सङ्कर्षणं प्रत्युवाच ॥ १२ ॥

### श्रीविजयध्वजतीर्थकृता पदरत्नावली

अन्योऽपि वाराहादिरपि स्वकाले प्रभवतः वर्द्धमानस्य विरामाय विनाशाय ॥ १० ॥ मथुरां योग्यानां परमानन्ददात्रीं वेदान्तविद्यां तस्याश्चतुर्द्वाराणि ऋगादीनि पाषण्डशैववीरादयः लिङ्गादिशब्दिता बहवः सैनिकाः सेनारक्षकाः यस्य स तथा "सेनारक्षाश्च सैनिकाः" इत्यमरः ॥ ( क-झ ) क्ष्वेलन्तः अट्टहासं कुर्वन्तः ॥ ( ञ ) ॥ कदम्बः समूहः ॥ ( ट ) ॥ सपरिच्छदौ सोपस्करणौ ॥ ११-१२ ॥

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः

आकाशात् ऊर्द्ध्वलोकात् तदीयमहावैकुण्ठादित्यर्थः ॥११॥ हृषीकेशः विनैव वाण्या सर्व्वं प्रवर्त्तयितुं समर्थोऽपि सङ्कर्षणं दृष्टिमात्रेण सर्व्वं नाशयितुं समर्थमपि अथ कार्त्स्न्येनाब्रवीत् । लीलाकौतुकावेशेन युक्तिपूर्व्वकमेव बभाष इत्यर्थः ॥ १२-२९ ॥

### श्रीमज्जीवगोस्वामिकृतो बृहत्क्रमसन्दर्भः

धर्मरक्षायै अन्योऽपि देहो मूर्तिर्मयाध्रियते । इदानीं स्वयमेवावतीर्णो यद्धर्मं रक्षिष्यामि, तत् किमित्यर्थः ॥ १०-१३ ॥

### श्रीनाथचक्रवर्तिपादविरचिता चैतन्यमतमञ्जषा

धर्म-रक्षायै अन्योऽपि देहो मयाध्रियते, अधुना तु स्वयमेवावतीर्ण इत्यर्थः ॥ ११-१३ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

एतदर्थोऽवतारः कृतः अर्थं विवृणोति—भूभारेति । अन्येषामसाधूनाम् ॥ ९ ॥ अन्योऽपि देहो वाराहादिः ॥ १० ॥ उपस्थितौ तदिच्छयैव वैकुण्ठादागत्य निकटे स्थितौ ॥ ११-१२ ॥

### गूढार्थदीपिनी

एतच्छब्दार्थं विवृणोति भूभारेति । मे मया कृतः ॥ ९ ॥ अन्यो रामादिरपि । प्रभवतां वर्धमानस्य । विरामाय विनाशाय ॥ १० ॥ एवमिति सार्द्धकम् । सूतः सारथिः परिच्छदो युद्धसामग्री ॥ ११ ॥ दृष्ट्वेत्यर्द्धम् । पुराणानि नित्यानि उपस्थितानि ॥ १२ ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

सूर्यवर्चसी प्रकाशात्मकौ ससूतौ सारथिसहितौ परिच्छदः परिकरं ध्वजकवचादिस्तत्सहितौ उपस्थितौ तदिच्छयैव निजलोकादागत्य समीपे स्थितौ ॥ ९ ॥ दिव्यान्यमानुषाणि पुराणानि पुरापि नवानि । अनादिसिद्धानीत्यर्थः । आयुधावतरणप्रकारः । हरिवंशे—

ततः खान्निपतन्ति स्म दिव्यान्याहवसङ्कुले । लेलिहानानि दीप्तानि महान्ति सुदृढानि च ॥
क्रव्यादैरनुयातानि मूर्तिमन्ति बृहन्ति च । तृषितान्याहवे भोक्तुं नृपमांसानि वै भृशम् ॥
दिव्यसृग्दामधारीणि त्रासयन्ति च राक्षसान् । प्रभया भासमानानि पतमानानि चाम्बरात् ॥
हलं सम्वर्तकं नाम सौनन्दं मुसलं तथा । धनुषां प्रवरं शार्ङ्गं गदा कौमोदकी तथा ॥
चत्वार्येतानि तेजांसि विष्णुप्रहरणानि च । ताभ्यां समवतीर्णानि यादवाभ्यां महामृधे ॥
जग्राह प्रथमं रामो ललामप्रतिमं हलम् । सर्प्पन्तमिव सर्पेन्द्रं दिव्यमाताकुलं मृधे ॥
सौनन्दं च ततं श्रीमान् निरानन्दकरं द्विषाम् । सव्येन सात्त्वतां श्रेष्ठो जग्राह मुसलोत्तमम् ॥
दर्शनीयं च लोकेषु धनुर्जलदनिस्वनम् । नाम्ना शार्ङ्गमिति ख्यातं कृष्णो जग्राह वीर्य्यवान् ॥
देवैर्निगदितार्थस्य गदा तस्यापरे करे । निक्षिप्ता कुमुदाक्षस्य नाम्ना कौमोदकीति सा इति ॥

प्रकरणान्तरे । तत्रैव श्रीसुदर्शनाद्यागमनं प्रोक्तं श्रीपाञ्चजन्यप्राकट्यं प्राक् प्रदर्शितमेव ॥ १० ॥ त्वं स्वामी विद्यसे येषां ते त्वावन्तः तस्यात्वमार्षम् तेषां व्यसनं प्राप्तम् । न हि स्वामिना भृत्या उपेक्षितव्या इति भावः ॥ ११-१३ ॥

## श्रीसत्यधर्मकृता श्रीभागवतटिप्पणी

अयमवतारो भूभारहरणाय साधूनां रक्षणायान्येषां बलादीनां सकाशाद्वधाय च मे मया कृत इतीदानीमेतदर्थ एतस्य जरासन्धस्यार्थो निवृत्तिस्त्याग इति यावत् ॥ ९ ॥ अन्योऽपि वराहादिरपि देहो मया सम्भ्रियते । क्वचित्प्रभवतः कालेऽधर्मस्य विरामाय विनाशाय देहो व्यासादिदेहो भ्रियते ॥ १० ॥ बहवः सैनिकाः सेनायां समवेता यस्य सः ॥ ११ ॥ दुर्मतिरिति कलिङ्गादिविशेषणम् ॥ १२ ॥

## श्रीमद्वल्लभाचार्य्यकृता सुबोधिनी

ननु कथं सर्वेषां वधार्थे प्रयत्नो ब्रह्मणः सर्वात्मनः तत्राह एतदर्थोऽवतारोऽयमिति । मलप्राया व्याधिप्राया दैत्या इति तन्निराकरणे न सर्वात्मत्वं भज्यते । उच्छूनः स्वावयवोऽपि छिद्यत इति । अत एव भगवान् स्वयं पुरुषरूपं प्राप्य तत्र दोषरूपान् दैत्यान् हन्तुं स्वयमेवौषधरूप आविर्भूतः । तदाह एतदर्थोऽवतारोऽयमिति । वैषम्यलक्षणो हि दोषो लौकिकः । स यत्र दोषत्वं न भजते, स दोषो न भवति । अक्लिष्टकर्मत्वं तु पूर्वमेव परित्यज्य समागतमिति 'अङ्गीकृता ग्लानिर्न दोषायेति न्यायेन न दूषणं भवति । स्वतश्चोद्यम्य न हन्यते, निष्कपटेन युद्धार्थमागतं निष्कपटेन युद्धेन हन्तव्यमिति मे अवतारः । मे च भूः । धर्म्यो वधो दोषाय न भवतीति धर्मार्थमप्येतद्वधं करिष्यामीत्याह संरक्षणाय साधूनामिति । कृतत्वान्न करणम् । प्रकारान्तरेण साधुरक्षा कर्तव्येत्याशङ्क्याह अन्येषामपि वधायेति । चकाराद्भक्तिस्थापनार्थम् । ततः कार्यचतुष्टयार्थमवतार इत्युक्तं भवति । भूभारहरणार्थं साधुरक्षार्थं दुष्टनिराकरणार्थं भक्तिप्रवर्तनार्थं चेति । समप्रधानं चतुष्टयम्, नत्वेकमन्यार्थम् । भूभारनिराकरणं राजसम्, रक्षा सात्त्विकी, निग्रहः तामसः, भक्तिर्निर्गुणेति । न हि दुष्टहनने भूभारो गच्छति, पुनरुत्पत्तिसंभवात् । हननार्थमेव प्रयत्ने तु भगवतस्तात्पर्याद्धता एव भवन्ति, न पुनरुत्पद्यन्ते, मुक्तश्च भवन्ति । एवमेव सद्रक्षायामपि । असत्संसर्गात् सतामप्यसत्तापत्तौ सर्ववधे अनिष्टमेव स्यात् । अतस्तेषां बुद्ध्यादिबाधकमेव दूरीकर्तव्यमिति सद्रक्षापि स्वतन्त्रैव । भक्तरनत्नुप्रवेशः स्पष्ट एव । तदाह अन्येषां वधाय चेति ॥ ९ ॥ साम्प्रतवेशस्य प्रयोजनचतुष्टयमुक्त्वा पक्षपातलक्षणो धर्मः पूर्वमपि मयि वर्तत इति सृष्ट्यादावेव तथाङ्गीकारात् न दोषायेति वक्तुं पूर्वमपि धर्मरक्षार्थं मयावताराः क्रियन्त इत्याह अन्योऽपि धर्मरक्षाया इति । एतद्व्यतिरिक्तानामवतारणां धर्मरक्षा अधर्मनिवृत्तिश्च फलम् । एतदेवाभिप्रेत्याह 'यदा यदा हि धर्मस्ये'ति । नत्वयमवतारो धर्मरक्षार्थः केवलः । अपिशब्दात्सोपि संगृह्यते । ततश्च षट् प्रयोजनानि भविष्यन्ति । अधर्मनिराकरणं धर्मरक्षा चेति । अत्रापि पूर्ववदुभयं प्रधानम् । अत एव 'संस्थापनाय धर्मस्ये'त्यपि वाक्यमविरुद्धम् । अत एव बुद्धावतारे केवलं धर्मरक्षैव प्रयोजनम्, कल्क्यन्यवतारे अधर्मनिवृत्तिरेव, परशुरामावतारे दुष्टनिग्रह एव, बलभद्रे भूभारहरणमेव, पृथ्ववतारे सत्परिपालनमेव । एवं सर्वत्र यथायथमूह्यम् । सर्वाणि तु भगवत्येव । भक्तिश्च स्वतन्त्रा अधिका । नन्वेतत्सर्वं कालकर्मादिभिरेव स्वतन्त्रतया आज्ञया वा सिध्यतु, किं विशेषावतारेणेत्याशङ्कायामाह काले प्रभवत इति । धर्माधर्मौ क्वचिदेव काले प्रभवतः । अतो यदा अनपेक्षितः, तदा अवतीर्य निराकरणं स्थापनं वा कर्तव्यम्, कालस्तु जनक एवेति न तेन तन्निराकरणम्, नियतस्योभयशक्तित्वाभावात् । तस्मादवश्यं वैषम्यं अक्लिष्टकर्मत्वं च भक्ताद्यनुरोधेन कर्तव्यमिति ॥ १० ॥ भगवद्ध्यानमात्रेण भूमिष्ठानां पदार्थानां दैत्यांशवासितत्वात् तेषां सज्जीकरणे विलम्बात् वैकुण्ठादेव साध्ये स्मृते स्वयमेव साधनमागतमित्याह एवं ध्यायतीति । सर्वे हि देवाः अधिकारन्यायेनापि भगवद्वशा इति ज्ञापयितुं गोविन्द इति । आकाशात्सर्वेषामलौकिकत्वज्ञापनाय । दृष्ट एवालौकिकज्ञानं भवतीति दर्शनार्थं सूर्यसङ्काशत्वमाह सूर्यवर्चसाविति । न हि सूर्यं कदाचिदुदितं न पश्यति । अनेन अक्लिष्टकर्मताप्युक्ता । स्वानां भयं च निवारितम् । अलौकिकरथागमनं दृष्ट्वापि यदि युद्धार्थं यतन्ते, तदा मत्युं निश्चित्यैव यतन्त इति न भगवद्दोषः कश्चन । यथा धनुर्भङ्गादिसामर्थ्यप्रदर्शनम्, तथैतदपि । सद्य

एवोपस्थिताविति सिद्धावेव समागतौ, ननु लक्ष्मीवत् रुक्मिण्यादिभावेनोत्पत्तिरपेक्ष्यते । यद्यप्यलौकिकरथस्य न सूताद्यपेक्षा, तथापि तदभावे शोभार्थं वा सूतः कर्तव्य इति प्राकृते स्थापिते तदनुरोधाननुरोधाभ्यां कार्याभावः । अतः ससूतौ । युद्धादिसामग्री कवचादिर्ध्वजादिश्च परिच्छदशब्देनोच्यते ॥ ११ ॥ सायुध एव रथमारोहतीति पृथगायुधानामागमनमाह आयुधानि चेति । धनुः खड्गादीनि दिव्यानि शार्ङ्गप्रभृतीनि । भिन्नान्याकृतिमन्ति निषेधति पुराणानीति । केनचिन्नानीय दत्तानि, किन्तु यदृच्छया स्वयमेवागतानि । एवं सायग्रीं दृष्ट्वा कार्यषट्के भूभारहरणस्योपस्थितत्वात् तदर्थमेव बलभद्रस्यागतत्वात् बलभद्रं इत्याह दृष्ट्वा तानीति । यद्युक्तं न करिष्यति, तथाप्यवतारान्यथानुपपत्त्या तथैव प्रेरयिष्यामीत्यभिप्राय इत्याह हृषीकेश इति । सर्वेन्द्रियप्रेरकस्तथैव प्रेरयिष्यतीति । सङ्कर्षणः सम्यक् भारमाकृष्य दूरीकर्तुं समर्थः ॥ १२ ॥

### श्रीसुबोधिनी–सारः

एषोऽर्थो यस्य सोऽयमवतारः कोऽसावित्यत आह भूभारस्य हरणार्थं साधूनां संरक्षणायान्येषामभक्तानां वधाय च मे मया कृतः ॥ ९ ॥ क्वचित्काले समये प्रभवत उद्भवतो धर्मस्य पापस्य विरामाय निवृत्तये धर्मरक्षार्थं चान्योपि देहो मया संध्रियते ॥ १० ॥ गोविंदे एवं ध्यायति सति आकाशात् सूर्यदीप्ती ससूतौ सारथिसहितौ सोपकरणौ द्वौ रथौ उपस्थितौ प्राप्तौ सद्यस्तत्क्षणमेव ॥ ११ ॥ दिव्यानि पुराणानि आयुधानि च प्राप्तानि स्वेच्छया तानि दृष्ट्वा हृषीकेशः श्रीकृष्णो राम माह ॥ १२ ॥

### गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

'अवतारप्रयोजनमपि एवमेव सिद्धयेत्, नान्यथा' इत्याह–एतदर्थ इति । हिशब्दोऽवधारणे । एष अर्थः प्रयोजनं यस्य तथाभूतोऽयमवतारो मे मया कृतः । 'कोसावर्थ' इत्यपेक्षायामाह–अन्येषां दुष्टानां वधायेति । 'दुष्टवधेनापि किम्' इत्यपेक्षायां तत्र प्रयोजनद्वयमाह–भूभारहरणायेति, साधूनां संरक्षणाय चेति ॥ ९ ॥ न केवलमयमेवावतार एतदर्थः, किन्त्वन्योऽपि देहो दुष्टवधेन धर्मरक्षायै क्वचित्कदाचित् काले प्रभवतः प्रकर्षेण वर्धमानस्याधर्मस्य विरामाय विनाशायैव मया सम्ध्रियते परिगृह्यते । यशोविस्तारस्यापि साधुरक्षार्थत्वान्न तद्विस्तारोक्तिविरोधः ॥ १० ॥ गोविन्दे एवं ध्यायति सति सद्यस्तत्क्षणमेव ससूतौ सारथिसहितौ सपरिच्छदौ परिच्छदः परिकरो ध्वजकवचादिस्तत्सहितौ सूर्यस्येव वर्चस्तेजो ययोस्तथाभूतौ द्वौ रथौ आकाशादवतीर्य उपसमीपे स्थितौ ॥ ११ ॥ तथा पुराणानि सनातनानि दिव्यानि आयुधानि चक्रादीनि च यदृच्छया अकस्मादेव रथाभ्यां सहैवागतानीति शेषः । अथ अनन्तरं च तानि दृष्ट्वा हृषीकेशः श्रीकृष्णः सङ्कर्षणमब्रवीत् ॥ १२ ॥

### अन्वितार्थप्रकाशिका

एतदिति ॥ हि यतः एष एव अर्थः प्रयोजनं यस्य तथाभूतोऽयमवतारो मे मया कृतः । प्रयोजनमाह । भूभारहरणाय साधूनां रक्षणाय अन्येषामसाधूनां वधाय चेति ॥ ९ ॥ अन्य इति ॥ न केवलमयमेवावतार एतदर्थः किं त्वन्योऽपि वराहनृसिंहादिर्देहो दुष्टवधेन धर्मरक्षायै क्वचित्कदाचित्काले प्रभवतः प्रकर्षेण वर्धमानस्याधर्मस्य विरामाय विनाशायैव मया संध्रियते परिगृह्यते ॥ १० ॥ एवमिति । गोविन्दे एवं ध्यायति सति सद्यस्तत्क्षणमेव ससूतौ सारथिसहितौ सपरिच्छदौ परिच्छदः परिकरः कवचध्वजादिस्तद्युक्तौ सूर्यस्येव वर्चस्तेजो ययोस्तथाभूतौ द्वौ रथौ आकाशात्तदिच्छयैव वैकुण्ठादवतीर्य उप समीपे स्थितौ ॥ ११ ॥ आयुधानीति । यदृच्छयैव पुराणानि सनातनानि दिव्यानि आयुधानि च उपस्थितानि । अथ तानि रथादीनि दृष्ट्वा हृषीकेशः संकर्षणमब्रवीत् ॥ १२ ॥

### श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्

एवं देशकालानुगुणं कर्त्तव्यं स्वप्रयोजनं विचिन्त्येदानीं स्वावतारासाधारणप्रयोजनचिंतामाह एतदिति एष दुष्टजननाश एव अर्थः प्रयोजनं यस्य सः अतः अयं अवतारः पूर्णावतारः भूभारहरणाय साधूनां सच्छास्त्रोदित साधुलक्षणसंपन्नानां मद्भक्तानां यद्वा । साधूनां मदनुकूलानां यादवादीनां संरक्षणाय च अन्येषां मत्प्रतिकूलानां वधाय च मे मया कृतो धृतः । यद्वा अन्येषां मद्भक्तप्रतिकूलानां पुरुषाणां स्वभावानां च नाशाय मयाधृतः । अस्मिन् कृष्णावतारे मदिष्टवेदपुराण प्रवर्त्तनलक्षणधर्मस्थापनविरोधकदैत्यांशरजन्यान् स्वयं हत्वा अर्ज्जुनादिभिर्घातयित्वा च युधिष्ठिररक्षितद्वैपायनव्यासद्वारातच्छिष्यैः प्रशिष्यैश्च भरतखंडे सांगवेदपुराणप्रवर्त्तनलक्षणधर्मं स्थापयितास्मीतिभावः तदुक्तमत्रैवाह । त्वानृपानधर्मिष्ठान् घातयित्वाऽर्ज्जुनादिभिः अंजसावर्त्तयामास धर्मं धर्मसुतादिभिरिति ॥ ९ ॥ अनेन क्षात्रकृष्णावतारेण दैत्यांशराजन्यहननपूर्वकं वेदपुराणप्रवर्त्तनलक्षणधर्मस्थापनमुक्त्वा इदानीं मोक्षविरोधिका कामक्रोधाद्यधर्मसर्गनाशनपूर्वकसाधुरक्षणरूपधर्मस्य धर्मज्ञानवैराग्यसहितभक्तिलक्षणैकांतधर्मस्य चैवं द्विविधवृषस्य संस्थापनाय नारायणमुनिसंज्ञमन्यं विप्रकुले स्वप्रादुर्भावमाह अन्योऽपीति धर्मरक्षायै उक्तद्विविधधर्मरक्षणार्थं एकान्तधर्मप्रतिपादकशास्त्रविधानेन साधुजनेषु तद्धर्मशिक्षया च साधूनामेकान्तधर्मस्यापि च परिरक्षणायेत्यर्थः क्वचित् कस्मिंश्चित्काले

विक्रमार्कभूपति शकस्याष्टादशशतोपरिसंवत्सरेषु। प्रभवतो ब्राह्मणादिषूद्भवतः अपेयपानाभक्ष्यभक्षणागम्य स्त्रीगमनस्तेय हिंसादिरूपस्याधर्मस्य विरामायापि विनाशाय च। यो मामेवमसंमूढो जानाति पुरुषोत्तममित्युक्तेन मयापूर्णपुरुषोत्तमेन अन्यः क्षात्रदेहाद्भिन्नः देहो ब्राह्मणतनुः पुनः संभ्रियते ध्रियते। क्षात्राऽऽविर्भावादन्येन शांतेन ब्राह्मणरूपेण सामवेदिब्राह्मणकुले आविर्भवामीत्यर्थः। पुरुषोत्तमकालमानदृष्ट्या स्वाविर्भावकालस्यात्यल्पत्वाद्वर्त्तमानप्रयोगः। तज्जन्मोक्तस्कांदेस्फुटमेव। मया कृष्णेन निहताः सार्ज्जुनेन रणेषु ये। प्रवर्त्तयिष्यन्त्यसुरास्तेत्वधर्मं यदाक्षितौ धर्मदेवात्तदामूर्त्तौ नरनारायणात्मना प्रवृत्तेऽपि कलौ ब्रह्मन् भूत्वाऽहंसाम गोद्विज इति अस्य नारायणस्य संबंधेन तत्परा बहवो जनाः कलौ भविष्यंतीत्युक्तं जनकं प्रतियोगेश्वरैरपि। कृतादिषु प्रजाराजन् कलाविच्छंति संभवं कलौ खलु भविष्यन्ति नारायणपरायणाः अस्यार्थस्तु अस्मत्कृतैकादशस्कन्धव्याख्याने विवृत्तस्ततोवगन्तव्यः ननु श्रीकृष्णनिश्चितमन्यत् स्वपूर्णावतारत्व मन्येष्वाचार्येष्वपि प्रतिभातीति चेन्मैवं कुतः। यदा यदा हि धर्मस्य ग्लानिर्भवति भारत। अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यहम्। परित्राणाय साधूनां विनाशाय च दुःकृताम्। धर्मसंस्थापनार्थाय संभवामि युगे युगे। इति भगवद्गीतोक्तश्लोकद्वयेनोक्तानि ब्राह्मणादिषु प्रवृत्तस्य श्रुतिस्मृतिनिषिद्धस्यापेयपानाभक्ष्यभक्षणागम्यस्त्रीगमनस्तेय हिंसाद्य धर्मस्य विनाशनरूपं कामक्रोधलोभादिनिवर्त्तनेन साधूनां परित्राणरूपं च वर्णाश्रमव्यवस्थारूपधर्मस्थापनं चेत्यादीनि समग्राणि भगवदवतारमात्रव्यापकलक्षणान्यपि तेष्वाचार्येषु न भांति तर्हि अर्जुनोद्धवौ प्रतिप्रोक्तयोः। श्रीभगवद्गीतैकादशस्कंधयोरुपदिष्टधर्मज्ञानवैराग्यसहित भक्तिरूपैकांतिकधर्मस्य भक्तजनेषु स्थापनं तथा च गोपादीनां प्रकृत्यतीतब्रह्मपुरादिस्वधामदर्शनं च साधनरहितानेकजनवृंदानां स्वस्वरूपे चित्तनिरोधनं चासंख्यकोटिचन्द्रार्क वृंदादप्यधिकप्रकाशमये ब्रह्मपुरे स्वधामनि ब्रह्मभूतदिव्यविग्रहयुक्तकोटिभिः। परिषेव्यमाणस्य स्वस्य स्वभक्तेभ्यो दर्शनदानं समग्रस्वावताराणां स्वमूर्त्तौ दर्शनदानं च स्वयमेकत्रस्थितः। सन् नानाविधदूरदेशस्थितानां भक्तजनसंघानां मरणादिसंकटसमये स्वप्रत्यक्षदर्शनदानं चेत्यादीनां मुख्यानां पूर्णावतारलक्षणानां तु लेशोऽपि तेष्वाचार्येषु किं संभवति न संभवति तानि समग्राणि लक्षणानि श्रीनारायणमुनिचरणेष्वेव वरीवृततीति निःशंकतयाबोध्यम्॥ १०॥ एवं श्रीकृष्णे ध्यायति चिंतयति सति। सूर्यवर्चसौ रविप्रभौ। ससूतौ सारथिना सहितौ। सपरिच्छदौ आयुधादिसामग्रीसहितौ। द्वौ रथौ सद्यः उपस्थितौ भवतः॥ ११॥ तानि दृष्ट्वा संकर्षणमब्रवीत्॥ १२॥

**भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी**

ननु किं वृथा बलहृत्यया यः स्वं द्वेष्टि स एव हन्तव्यः, इत्याशङ्क्य ममावतारो भूभारहरणाय बलमेतद्भूभाररूपमेव तच्चायमितस्ततोऽन्विष्यानयिष्यति, तस्यात्रैव स्थित्वा हनने कृते सहजतया ममार्थसिद्धिः स्यादित्यभिप्रयन्नाह। एतदर्थं इति। मे मया, अयं, अवतारः, एषोऽर्थः प्रयोजनं यस्येत्येतदर्थः, कृतः। कोऽसावर्थ इत्यपेक्षायां भूभारेत्यादिभिश्चतुर्थ्यन्तैः प्रयोजनविशेषान्निर्दिशति। भूभारहरणाय, साधूनां संरक्षणाय, अन्येषां तत्प्रतिपक्षभूतानां, वधाय विनाशनाय, चकाराद्धर्मरक्षणपूर्वमधर्मस्य विनाशनायेत्यर्थः। भूभारहरणाद्यर्थमयमवतारो मया धृतोऽस्तीति भावः॥ ९॥ एवं निर्द्धार्य्यापि भमावसुरांशभूतनृपदेशिकानां प्राचुर्यमालोच्यानेनावतारेण तु असुरांशभूताऽधर्मिविनाशनद्वारा भूभारह रणतदनुगुणसत्परित्राणधर्मरक्षेत्येतावदेवावश्यं कार्यं विशेषतः सत्परित्राणं सत्प्रतिकूलानामसतामहिंस्रतया वधो धर्मपरित्राणमधर्मविनाशनं तानि यथार्थं त्वन्येनावतारेणैव करिष्यामीति निश्चित्याह। अन्योऽपीति। क्वचित् कदाचित् कस्मिंश्चित् काले, विक्रमार्कशकप्रवृत्तेः संवदष्टादशशतोपरितनेषु संवत्सरैष्वित्यर्थः। प्रकर्षेण भवतीति प्रभवस्तस्य प्रभवतो वर्द्धमानस्य, अधर्मस्यापेयपानाऽभक्ष्यभक्षणाऽगम्यागमनस्तेयहिंसादिरूपस्य धर्मप्रतिपक्षस्य, विरामाय विध्वंसनाय, धर्मरक्षायै अपि, धर्मरक्षणार्थं चेत्यर्थः। अन्योऽपि देहः मया, संभ्रियते परिगृह्यते इति तदर्थः। तत्रास्य श्रीकृष्णस्य पुनः क्व प्रादुर्भाव इति चेत्, स स्कान्दे स्फुटमुक्तः। 'मया कृष्णेन निहताः सार्जुनेन रणेषु ये। प्रवर्त्तयिष्यन्त्यसुरास्ते त्वधर्मं यदा क्षितौ। धर्मदेवात्तदा मूर्त्तौ नरनारायणात्मना। प्रवृत्तेऽपि कलौ ब्रह्मन् भूत्वाऽहं सामगो द्विजः' इत्यादिना। एवमेव ब्रह्माण्डभविष्यदादावपि सम्यगेवोक्तमस्ति, नारायणस्यास्य सम्बन्धेन जनानां तत्परायणत्वमेकादशेऽपि योगेश्वरैर्जनकं प्रत्युक्तमस्ति। 'कृतादिषु प्रजा राजन् कलाविच्छन्ति संभवम्। कलौ खलु भविष्यन्ति नारायणपरायणाः' इत्यादिना। नन्वेकस्यैव कृष्णस्य वारद्वयं कथमवतारः संगच्छेतेति चेन्मत्स्यद्वयकूर्मद्वयवराहद्वयधन्वन्तरित्रयादिवत् घटते। सततत्प्रपञ्चो लघुभागवतामृतात्सविस्तरं बोध्यः। उक्तप्रकारं भगवदवतारप्रयोजनं भगवता श्रीकृष्णेनापि स्वमुखेनोक्तमस्ति। 'यदा यदा हि धर्मस्य ग्लानिर्भवति भारत। अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यहम्। परित्राणाय साधूनां विनाशाय च दुष्कृताम्। धर्मसंस्थापनार्थाय संभवामि युगे युगे' इत्यादिना। सतत् स्फुटतया श्रीमद्गोपालानन्दस्वामिकृतदशमस्कन्धटीकायामेतच्छ्लोकव्याख्यानतोऽवगन्तव्यम्। किं च पुनः प्रादुर्भविष्यन् कृष्णः क इति चेत्, स स्वामिनारायण एवेत्यपि सत्सङ्गिजीवनहरिलीलाकल्पतरुसुधासिन्धुहरिदिग्विजयसम्प्रदायशुद्ध्यादेः सविस्तरं बोध्यमकृतत्वादत्र न प्रपञ्च्यते। इति द्वयोरप्येकसंबन्धः॥ १०॥ एवमिति। एवमित्थं, गोविन्दे श्रीकृष्णभगवति, ध्यायति विचार्य निश्चितवति सति, सूर्यवर्च्चसौ सूर्यतेजः समानतेजसौ, ससूतौ सारथिसहितौ, परिच्छदः परिकरो ध्वजकवचादिस्तत्सहितौ, द्वौ रथौ, आकाशात्, सद्यः उपस्थितौ, आकाशादवतीर्य पुरतः स्थितौ स्तः स्मेत्यर्थः॥ ११॥ आयुधानीति। अथ हृषीकेशः श्रीकृष्णः, पुराणानि पुरातनानि, दिव्यान्यमानुषाणि, तानि प्रसिद्धानि, आयुधानि, यदृच्छया, प्राप्तानीति शेषः। चकारादुक्तविधौ रथावपि, दृष्ट्वा संकर्षणं संकर्षणावतारं, बलभद्रं, अब्रवीत्। यद्वक्तव्यं तत् प्रत्युवाचेत्यर्थः॥ १२॥

**कृष्णप्रिया**

मेरा भूतल पर अवरण का लक्ष्य भूमि का भार दूर करना, साधुजनों की रक्षा करना और असाधुजनों के विनाश करने का ही है ॥ ९ ॥ मैं कभी कभी अन्य अवतार भी लेता हूँ लेकिन एक ही कार्य करने के लिए होता है और वह कार्य किसी भी प्रकार के धर्म की रक्षा के लिए एवं अधर्म के निराबल हो, ऐसे कार्य तो कभी किसी समय होते हैं ।। १० ॥ इस प्रकार भगवान् गोविन्द विचार कर रहे थे इतने में सूर्य के समान तेजस्वी, समराङ्गण की सामग्री से सजे, एवं सारथियों सहित शीघ्र ही दो रथ उतर आए ॥ ११ ॥ इस रथ में यद्यपि नूतन तथापि असल आकृति वाले दिव्य आयुध सजे थे। भगवान् श्रीकृष्ण ने उन दोनों रथ को देखकर अपने बड़े भैया संकर्षण जी से कहा ॥ १२ ॥

**पश्यार्य व्यसनं प्राप्तं यदूनां [1]त्वावतां प्रभो । एष ते रथ आयातो दयितान्यायुधानि च ॥ १३ ॥**
**[2]यानमास्थाय जह्येतद् व्यसनात् स्वान् समुद्धर । एतदर्थं हि नौ जन्म साधूनामीश [3]शर्मकृत् ॥ १४ ॥**
**त्रयोविंशत्यनीकाख्यं[4] भूमेर्भारमपाकुरु । एवं सम्मन्त्र्य दाशार्हौ दंशितौ रथिनौ[5] पुरात् ॥ १५ ॥**
**[6]निर्जग्मतुः [7]स्वायुधाढ्यौ बलेनाल्पीयसाऽऽवृतौ[8] । [9]शङ्खं दध्मौ विनिर्गत्य हरिर्दारुकसारथिः ॥ १६ ॥**

**कर्वमक्षमा**

**अन्वयः**—हे, आर्य, पश्य, त्वा, अवताम्, यदूनाम्, व्यसनम्, प्राप्तम्, पश्य, एष, ते, रथः, आयातः, च ते, दयितानि, आयुधानि, आयातानि ॥ १३ ॥ हे ईश ! यानम्, आस्थाय, एतत्, जहि, स्वान्, व्यसनात्, समुद्धर, हि, नौ, जन्म, साधूनाम्, शर्मकृत्, एतद्, अर्थम्, हि वर्तते ॥ १४ ॥ भूमेः, त्रयोविंशत्यनीकाख्यम्, भारम्, अपाकुरु, एवम्, सम्मन्त्र्य, दंशितौ, रथिनौ, स्वायुधाढ्यौ, बलीयसा, बलेन, आवृतौ, दाशार्हौ, पुरात्, निर्जग्मतुः, दारुकसारथिः, हरिः, विनिर्गत्य शङ्खम् दध्मौ ॥ १५–१६ ॥

**श्रीधरस्वामिविरचिता भावार्थदीपिका**

त्वमेवावन् रक्षकौ नाथो विद्यते येषां ते त्वाबन्तस्तेषाम् ॥ १३–१४ ॥ दंशितौ बद्धकवचौ ॥ १५ ॥ स्वायुधाढ्यौ शोभनायुधसंपन्नौ ॥ १६ ॥

**श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः**

त्वावतामत्र समासे त्वदादेशस्य टेराकारश्छांदसः । पश्य अवधेहि । तत्किम्—व्यसनमिति 'व्यसनं विपदि भ्रंशेऽत्याशक्तौ' इति कोशात् । त्वम् नाथः विद्यसे येषां ते त्वावन्तः । मतुप्यात्वमार्षम् । यद्वा—त्वमवन् । रक्षको येषामिति शतर्यपि तथा । "रक्षकोऽवस्त्राणकरो नाथः स्वाम्यधिपो गुरुः" इति कोशात् ॥ १३ ॥ एतद्बलम् । ईशेति संबुद्धिः ॥ निर्णयमाह—यानमिति । एतत्सैन्यं जहि । तन्मुख्यप्रयोजनमादिशति—व्यसनादिति । स्वान् सकलसाधुजनालंबनरूपान्परिकरान्सम्यगक्षततत्वादिनोद्धर । एतच्चावश्यकतार्थमित्याशयेनाह—एतदर्थमिति । हि यस्मात् । यत एवान्येषां च साधूनां शर्मकृद्भवेदित्यर्थः । हे ईशेति प्रोत्साहनम् ॥ १४ ॥ अनीकपदमक्षौहिणीपरम् एवमित्थम् । 'दंशितः कवचाचितः, इति मेदिनी ॥ आवश्यकतार्थमेव सैन्यस्य हननस्य च वैशिष्ट्यमाह–त्रयोविंशतिरनीकान्यक्षौहिण्योऽनीकिन्यो वा, तदाख्यं तावत्संख्यम् । यद्वा–त्रयोविंशतिश्च ता अक्षौहिण्यस्त्रयोविंशत्यक्षौहिण्यस्ता एवानीकं सैन्यं त्रयोद्विवशत्यनीकम् । मध्यमपदलोपो समासः त्रयोविंशत्यनीक माक्या यस्य तथेति । भारं भारभूतम् । दाशार्हाविति मनुष्यलीलापरत्वमभिप्रेतम् । अत एव दंशितौ ॥ १५ ॥ अल्पीयसाऽल्पप्रमाणेन । दारुकस्तन्नामा सारथिर्यस्य स तथा 'दारुकः कृष्णसारथिः' इति कोशात् ॥ अल्पीयसेति जरासंधबलापेक्षया, तत्रापि हरिवंशोक्तविकद्रुदुर्मन्त्रणया सर्वेषामागमनेन च । अत एवावृतौ आवरणशक्त्या चतुर्दिक्षु वेष्टितौ । स्वैनिजायुधैराढ्यौ युद्धे संसपन्नौ तत्तदायुधदर्शनेनैव परसैन्यं क्षोभयंतावित्यर्थः । विशेषेण सर्वतो वैलक्षण्यन निर्गत्य, यतो दारुकसारथिः तत्सारथित्वोपलक्षणया दिव्यातिदिव्यतत्तद्द्रव्यादिशक्तिमान् । हरिरिति शंखध्वनिनैव परेषां वीर्यादिहरणाभिप्रायेण ॥ १६ ॥

**श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी**

पश्य अवधेहि तत् किं व्यसनमिति त्वावतामित्यत्रात्वमार्षं किञ्च, एष इति । आर्येति सादरसम्बोधनं स्वभावात् प्रभो इति वक्ष्यमाणनिर्णयसामर्थ्यबोधनाय । दयितानीति स्वतः सामर्थ्येप्यङ्गीकारावश्यकं सूचयति ॥ १३ ॥ निर्णयमाह—यानमिति । एतत् सैन्यं जहि तन्मुख्यप्रयोजनमादिशति व्यसनादिति स्वान् सकलसाधुजनालम्बनरूपान् परिकरान् सम्यगक्षतत्वादिनोद्धर । एतच्चावश्यकार्यमित्याशयेनाह–एतदिति हि यस्मात् यत एवान्येषाञ्च साधूनां शर्म्मकृद्भवेदित्यर्थः । हे ईशेति प्रोत्साहनम् ॥ १४ ॥

१. सात्वतां–वीर. २. एन–वीर. । ३. तत् कृतम्–बिज. । ४. नीकानां–विज. । ५. रथिनां वरी–विज. । ६. [ दंशितैश्च यदुश्रेष्ठैर्बहुभिश्च समन्वितां ]–विजये. ७. पुरवरात्–विज. । ८. नृप–विज. ९. शंखं–इत्यारम्य चत्वार श्लोका विजये न सति ।

आवश्यकतार्थमेव सैन्यस्य हननस्य च वैशिष्ट्यमाह—अर्द्धकेन त्रयोविंशतिरनीकानि अक्षौहिण्यः तदाख्यं तावत्सङ्ख्यमित्यर्थः। यद्वा त्रयोविंशतिः अक्षौहिण्यः तत् सङ्ख्याकमनीकं सैन्यमित्याख्या यस्य तं भावरूपं दाशार्हाविति मनुष्यलीलापरत्वमभिप्रेतम् अत एव दंशितौ। अल्पीयसेति जरासन्ध बलाद्यदुर्बलस्याल्पताभिप्रायेण तत्रापि हरिवंशोक्तविकद्रुदुर्मन्त्रणया सर्वेषामागमनेन च अतएवावृतौ आवरणतया चतुर्दिक्षु वेष्टितौ स्वैर्निजनिजायुधैराढ्यौ युद्धे सम्पन्नौ तत्तदायुधदर्शनायैव परसैन्यं क्षोभयन्ताविल्यर्थः। विशेषेण सर्वतो वैलक्षण्येन निर्गत्य यतो दारुकसारथिः तत् सारथित्वोपलक्षणया दिव्यातिदिव्य तद्द्रव्यादिसम्पत्तिमान् हरिरिति शङ्खध्वनिनैव परेषां वीर्य्यादिहरणाभिप्रायेण ॥ १५-१६ ॥

**श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी**

आर्य्येति—सादरसम्बोधनं साहाय्यार्थम्, 'प्रभो' इति युद्धादि समर्थेति प्रोत्साहनार्थम्, दयितानीत्येषामागमनसाफल्यार्थमपि। हन्तमर्हसीति, किंवा एतैः सुखं हननं सिध्येदेवेति भावः ॥ १३ ॥ एतत् सैन्यं जहि। तन्मुख्यप्रयोजनमादिशति—व्यसनादिति, सम्यगक्षतत्वादिनोद्धव। एतच्चावश्यं कार्य्यमेवेत्याशयेनाह—एतदिति। हि एव, एतदर्थमेव न तु केवलं क्रीडासुखार्थम्, एतच्छब्दार्थमेव पुनरत्यौत्सुक्येन कृतपदार्थ्यार्थिमभिव्यञ्जयति—साधूनां शर्म्म सुखं करोतीति तथा तदिति तत्स्वभाव उक्तः, हे ईशेति प्रोत्साहयति ॥ १४ ॥ अतस्त्रयोविंशतिरनीकानि अक्षौहिण्यस्तदाख्यं तावत्सङ्ख्यमित्यर्थः। यद्वा, त्रयोविंशतिस्त्रयोविंशत्यक्षौहिण्यस्तत्सङ्ख्यकमनीकं सैन्यमित्साख्या संज्ञामात्रं यस्य तम्, दाशार्हौ यदुकुलोद्भवाविति मनुष्यलीलापरत्वमभिप्रेतम्। अत एव दंशितौ, अल्पीयसेति जरासन्धबलाद्यदुबलस्यात्यल्पताभिप्रायेग, किंवा प्रियतमानां स्वसंगिनां दुस्त्यजानां कतिपयानामेव युद्धे नयनात्, अत एवावृतौ अवरणतया चतुर्दिक्षु परिवेष्टितौ, विशेषेण सर्व्वतो वैलक्षण्येन निर्गत्य, यतो दारुकसारथिः। हरिरिति शङ्खध्वनिनैव परेषां वीर्य्यादिहरणाभिप्रायेण। अत एव विशिष्टत्रासेन वेपथुः ॥ १५-१६ ॥

**श्रीहरिसूरिविरचितं श्रीभक्तिरसायनम्**

त्वावतां त्वया नाथवतां संहारान्निर्वर्त्तितुमिति शेषः ॥ १३-१८ ॥

**श्रीमद्वीरराघवाचार्यकृता भागवतचन्द्रचन्द्रिका**

उक्तिमेवाह-सार्द्धद्वयेन। हे आर्य हे प्रभो! यदूनां व्यसनं प्राप्तम् एतत् पश्य नैते यदव उपेक्ष्या इत्यभिप्रायेण तानेव विशिनष्टि-सात्त्वतामिति। सात्त्वतां भक्तानां भृत्यानामितियावत् न हि स्वामिभृत्यानुपेक्षितुमर्हतीति भावः। तर्हि किम्विधेयमित्यत्राह-एष इति। दयितानि प्रियाण्यायुधानि चकारात् कवचादीनि च आयातानीति लिङ्गवचनविपरिणामः ॥ १३ ॥ एनं रथमास्थायाऽधिष्ठायैतत्परबलं जहि नाशय स्वाम् स्वकीयान् व्यसनादापद उद्धर एतदर्थं प्रतिपक्षनिरसनार्थं हि इह लोके नावावयोर्जन्मावतारः। यद्वा नौ जन्म एतत्प्रतिपक्षनिरसनमर्थः प्रयोजनं यस्य तत्तथा साधूनां शर्मकृत् सुखकारि च ॥ १४ ॥ अतस्त्रयोविंशत्यनीकाख्यं त्रयोविंशत्यक्षौहिणीसैन्यव्यपदेशं केवलं भूमेर्भारमपाकुर्वपनय। एवमिति। इत्थं मिथः सम्मन्त्र्य आलोच्य दाशार्हौ रामकृष्णौ दंशिनौ कवचितौ रथिनौ रथारूढौ स्वासारणैरायुधैराढ्यौ युक्तौ चाल्पीयसा कतिपयेन बलेन चावृतौ च भूत्वा पुरान्मथुराया निष्क्रान्तौ। ततो हरिर्दारुकाख्यः सारथिर्यस्य सः तथाभूतः शङ्खं पाञ्चजन्यं दध्मौ ध्वनयामास ॥ १५-१६ ॥

**श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली**

चक्रं सुदर्शनं घोरं सहस्रारं मनोरमम्। गदा कौमोदकी गुर्वी नाम्ना कौमोदकी शुभा ॥
त्रिनतं कार्मुकश्रेष्ठं शार्ङ्गसंज्ञं गुणान्वितम्। तीक्ष्णधारः शितमुखः खड्गो नन्दकसंज्ञितः ॥
लघूशराचितौ रम्यौ तूणौचाक्षयसायकौ।
तुरगाः शैब्यसुग्रीवमेघपुष्पवलाहकाः। हलं च बलभद्रस्य मुसलं च दृढं गुरु ॥
इत्येतान्यायुधान्याजौ गगनादागतानि सः। सहस्रमराणि दलानि यस्य तत्तथा ॥

कौ मह्यां मोदको नारायणः तस्य विद्यमाना कौमोदकी त्रिषु स्थानेषु कोटिद्वये मध्ये च नतं वक्रं विनतं "कार्मुकं तु चतुर्हस्तम्" इति यादवः शार्ङ्गं शृङ्गविकृतं गुणेन ज्यया अन्वितं सहितम्। त्वावतां त्वद्युक्तानाम्। यद्वा, त्वम् अवः रक्षको येषां ते त्वावन्तः तेषां त्वावतामिति पाठश्छान्दसः साधूनां साधुभिः सत्कृतं कृद्योगे षष्ठी ॥ १३-१४ ॥ त्रयोविंशत्यनीकानां त्रयोविंशदक्षौहिणीनां समुत्पन्नं भूमेर्भारम् ॥ १५ ॥ ब्रह्मसूत्रादयः वसुदेवादिशब्दवाच्याः। दुःखं मन्दयन्ति अल्पीकुर्वन्तीति दुर्मदास्तान् नुमागमाभावश्छान्दसः महाप्राणं महाघोषम्। युद्धदुर्मदान् युद्धे दुष्टमदान्। वसुदेवादिभिश्चतुर्भिः कलिङ्गाद्यधिष्ठानां "कदक्लद हिंसार्थौ" इतिधातुः कदनं युद्धम्। गोविन्देनाध्मातमाश्वासितं चेतो येषां ते तथा तेषां राजन्यानां कटकेन सैन्येन सैन्येपि कटकोऽस्त्रियामित्यभिधानं समूहेन वा ॥ १६-२० ॥

**श्रीमज्जीवगोस्वामिकृतः बृहत्क्रमसन्दर्भः**

एतदर्थमित्यादि। नौ आवयोर्जन्म प्रादुर्भावः ॥ १५-१६ ॥

### श्रीनाथचक्रवर्तिपादविरचिता चैतन्यमतमञ्जूषा

नौ जन्म प्रादुर्भावः ॥ १५–१६ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

त्वं नाथो विद्यसे येषां ते त्वावन्तस्तेषां दकारस्यात्वमार्षम् ॥ १३ ॥

### गूढार्थदीपिनी

त्वावतां त्वमेव अवन् रक्षको येषां तेषाम्। आत्वमार्षम्। यद्वा। त्वत्सदृशानां युष्मदस्मदोः सादृश्ये वतुप् 'आसर्व-नाम्नः' इत्यात्वम् ॥ १३ ॥ एतत् सैन्यम्। यानं रथम्। शर्म सुखम् ॥ १४ ॥ त्रयोविंशतीत्यर्द्धम्। अपाकुरु दुरीकुरु ॥ १५ ॥ दाशार्हौ यदुवंशीयौ। दंशितौ धृतकवचौ ॥ १६ ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

एतत् परसैन्यम् शर्मकृत्सुखकृत् ॥ १४ ॥ दंशितौ बद्धकवचौ ॥ १५–१६ ॥

### श्रीसत्यधर्मकृता श्रीभागवतटिप्पणी

विराटादयस्तु तत्पराजिता इति तन्निघ्नाः ॥ १३ ॥ पौण्ड्रको वासुदेवः ॥ १४ ॥ वृहत्क्षत्रस्तन्नामा ॥ १५ ॥ नियुक्ता आज्ञप्ताः ॥ १६ ॥

### श्रीमद्वल्लभाचार्य्यकृता सुबोधिनी

अथ विचारव्यतिरेकेण निर्धारितमेवाह पश्यार्येति। एकान्ते स्थितावुभौ। अतो यथा लोके परिज्ञानं न भवति, तथा शनैर्वचनानि त्रिभिः। आर्येति सम्बोधनं कृतानुकरणत्वाभावाद्वक्तव्यत्वज्ञापकम्। त्वत्त एव अवनं येषां ते त्वावन्तः। अतो रक्ष्याणां व्यसनं प्राप्तमिति तन्निराकरणमवश्यं कर्तव्यम्। रक्षाप्यवश्यं कर्तव्येत्याह यदूनामिति। अप्रतीकार्यं दुःखं व्यसन-मित्युच्यते। यद्यपि पूर्वमेव विचारः कर्तव्यः तन्न कृतमित्यनौचित्यमपि ज्ञापयन्नाह प्राप्तमिति। सामर्थ्यं तु वर्तत इत्याह प्रभो इति। अवताराणां गुणव्यवधानात् साधनानि बोधयति एष ते रथ आयात इति। भवदीय एवायं रथ इत साधने सन्देहाभावः। प्रियाणि च मुसलादीनि आयुधानि। चकारादपेक्षितं सर्वम् ॥ १३ ॥ भूभारहरणं तस्यैव मुख्यमिति तमेव बोधयति यानमास्थायेति। रथमस्थाय एतद्बलं जहि, रथारोहणे सर्वा शक्तिः प्रादुर्भविष्यतीति। विलम्बाभावायाह व्यसनात् स्वान् समुद्धरेति। आवश्यकत्वं स्पष्टम्। कार्यस्याप्यावश्यकतामाह एतदर्थं हि नौ जन्मेति। आवयोर्जन्म एतदर्थम्। युक्तश्चाय-मर्थः। भूम्या प्रार्थितमिति, अन्यथा जन्मैव न स्यात्। सर्वत्रानुस्यूतं प्रयोजनमाह साधूनां शर्मकृदिति। साधूनां सुखमस्माद्भवतीति सर्वैरेव प्रकारैः ते सुखिनो भवन्तीति महतः आविर्भूतस्यैतदेव कृत्यम्। ईशेति सामर्थ्यम्। अन्यथोपेक्षादोषो भविष्यतीति भावः। परिमितमेवेति प्रयासाभावायाह त्रयोविंशत्यनीकाख्यमिति। अनीकशब्देनाक्षौहिणी। अल्पसङ्ख्याशब्दनिर्देशः अनायासेन निरा-करणार्थः। त्रयोविंशत्यनीकान्याख्या नाममात्रं यस्य। वस्तुतस्तु न किञ्चित्, तथापि निराकर्तव्यमेवेत्याह भूमेर्भारमिति ॥ १४ ॥ प्रकटतया कथने राजा निर्गच्छेत्, स्नेहाद्वसुदेवादयः प्रतिबन्धं कुर्युः, अत एकान्ते तथा सम्मन्त्र्य युद्धार्थं प्रवृत्तावित्याह एवं सम्मन्त्र्येति। यतो दाशार्हौ सेवकप्रियौ। दंशितौ पूर्वं बद्धकवचौ। ततो रथिनौ। तत पुरान्निर्जग्मतुः। ततः सुष्ठु आयुधाढ्यौ आयुधं गृहीत्वा युद्धार्थं प्रवृत्तौ। तावता पूर्वं राजाज्ञाभावात् विचाराभावाच्च न सर्वं बलमेकीभूतम्, अतोल्पेनैव बलेनावृतौ जातौ। तत्राप्यङ्गवैकल्यं प्रत्ययार्थः। आदौ पाञ्चजन्यं वादितवानित्याह, सैनिकानामुद्योगोत्साहनिवृत्त्यर्थम्। 'यस्य ध्वनिर्दानव-दर्पहन्ता' इति। अन्तःप्रवेशाभावाय बहिर्निर्गम्य शङ्खं दध्मौ यतो हरिः। अन्यथा पुरस्थानां शङ्का स्यात्। दारुकः सारथिर्यस्यति सङ्कर्षणांश एवात्र विशेषाकारेण प्रवृत्त इति ज्ञापयितुम्। तृतीयप्रकरणे तस्याप्युपयोगः सूचनीयः, यथा द्वितीये अनिरुद्धे सान्त्व-नम्। अग्रे आयुधान्तराणामपि कार्यं भविष्यतीति ज्ञापयितुं कृतस्य नादस्य फलमाह ततोऽभूदिति। शत्रुभूतानां सैन्यानां भावि-मरणमदूरे प्रतिभातमिति हृदि विशेषेण त्रासो भयं जातम्। तेन कम्पश्च। शरीरेत्यर्थात् ॥ १६ ॥

### श्रीसुबोधिनी–सार

हे आर्य हे प्रभो त्वमेवावन् पालको येषां ते त्वावन्तस्तेषां यदूनां प्राप्तं व्यसनं दुःखं त्वं पश्य एष ते तव रथ आयातः। दयितानि प्रियाणि आयुधानि वायातानि ॥ १३ ॥ यानं रथमारुह्यैतद्बलं त्वं जहि। व्यसनाद्दुःखात्स्वानात्मोयान् समुद्धर। नौ आवयोर्जन्म एतदर्थं एतत्प्रयोजनकं किं तत् आह साधूनां सुखकृत् हे ईश ॥ १४ ॥ त्रयोविंशत्यक्षौहिणीसेनात्मकं भूमेर्भारम् अपाकुरु उत्तारय एवं संमन्त्र्य दाशार्हौ रामकृष्णौ दंशितौ रथस्थौ पुरान्मथुरातः ॥ १५ ॥ निश्चक्रमतुः स्वैःस्वैरायुधैः चक्रहला-दिभिराढ्यौ युक्तौ अल्पीयसातितुच्छेन बलेन सैन्येनावृतौ। ततः किं कृतवान् तत्राह। विनिर्गत्य दारुकः सारथिर्यस्य स हरिः शंखं दध्मौ वादितवान् ॥ १६ ॥

## विवरणटिप्पणी

पश्यार्येत्यत्र। वचनानि त्रिभिरिति। 'दृष्ट्वा तानी'त्यर्धमादाय श्लोकत्रयं ज्ञेयम्। अत एव तदाभासे प्रत्याहेति भगवद्वाक्यत्वमेवोक्तम्। कृतानुकरणेति। अनुकरणं नास्ति, किन्तु वस्तुत एव त्वं महान्। तथा च कृतमनुकरणं येन तादृशत्वाभावादित्यर्थः। शङ्खं दध्माविवत्यत्र। तृतीयप्रकरणे इति। साधनप्रकरणे इत्यर्थः। द्वितीये इति। प्रमेयप्रकरणे इत्यर्थः। एतेन प्रमाणादिप्रकरणचतुष्टये प्रद्युम्नानिरुद्धसंकर्षणवासुदेवचरित्रमपि सूचितम् ॥ १३–१६ ॥

## गोस्वामीश्रीगिरधरलालकृता बालप्रबोधिनी

तदुक्तिमेवाह—पश्येति सार्धद्वयेन। हे आर्य हे भ्रातः! यदूनां प्राप्तं व्यसनं जरासन्धनिरोधजं कष्टं पश्य। 'नच ते उपेक्षायोग्याः, निजभक्तत्वात्' इत्याशयेन विशिनष्टि—त्वावतामिति। त्वं स्वामितया वर्तसे येषां ते त्वावन्तः तेषाम्। 'तेषां च तवोपेक्षाऽयुक्ता, समर्थत्वात्' इत्याशयेन सम्बोधयति—प्रभो इति। तर्हि किं विधेयमित्यपेक्षायामाह—एष इति। एषः ते त्वदर्थं रथ आयातः, तथा दयितानि तव प्रियाणि आयुधानि च हलमुसलादानि आगतानि। अतो यानमेनं रथमास्थाय आरुह्य एतत्सैन्यं जहि, तेन स्वान् स्वकीयान् व्यसनात् समुद्धर ॥ १३ ॥ हे ईश परपक्षनिरसनसमर्थ! एतदर्थं हि प्रतिपक्षनिरसनार्थमेव नौ आवयो र्जन्म, अतः प्रतिपक्षनिरसनादेव साधूनां सदाचारनिष्ठानां शर्म सुखं करोतीति तथा तत्। अतः अनीकशब्दः अक्षौहिणीवाचकः, त्रयोविंशतिः अक्षौहिण्य इति आख्या नाम यस्य तं भूमेर्भारमपाकुरु दूरीकुरु ॥ १४ ॥ एवं सम्मन्त्र्य मिथः सम्मतिं कृत्वा दाशार्हौ रामकृष्णौ दंशितौ बद्धकवचौ रथिनौ रथाधिरूढौ स्वासाधारणैरायुधैराढ्यौ अल्पीयसा बलेन सैन्येनावृतौ च भूत्वा मथुराया निर्जग्मतुर्निर्गच्छतुरित्यन्वयः ॥ १५ ॥ दारुकाख्यः सारथिर्यस्य स हरिर्बहिर्निर्गत्य शङ्खं पाञ्चजन्य दध्मौ वादितवान्। ततः शङ्खध्वनिश्रवणात् परस्य जरासन्धस्य सैन्यानां हृदि वित्रासो भयम्, तेन वेपथः प्रकम्पो बभूव ॥ १६ ॥

## अन्वितार्थप्रकाशिका

पश्येति। हे आर्य! हे प्रभो! त्वमवन् रक्षको येषां त्वं नाथत्वेन विद्यसे येषां तेषामिति वा। उभयत्रात्वमार्षम्। यद्वा। त्वावतां त्वत्सदृशानां "युष्मदस्मदोः सादृश्ये वतुप्" इति छान्दसवार्तिकात् "आसर्वनाम्नः" इत्यात्वम्। यदूनां प्राप्तं व्यसनं कष्टं पश्य अवधेहि। एष ते त्वदर्थं रथ आयातः तथा दयितानि तव प्रियाणि आयुधानि च हलमुसलादीनि आगतानि ॥ १३ ॥ यानमिति। यानं रथमास्थाय आरुह्य एतत्सैन्यं जहि। तेन स्वान् स्वकीयान् व्यसनात् समुद्धर। हे ईश! साधूनां शर्मकृत् नौ आवयोर्जन्म एतदर्थं हि प्रतिपक्षनिरसनार्थमेव ॥ १४ ॥ त्रयोविंशतीति अर्द्धम्। त्रयोविंशतिः त्रयोविंशत्यक्षौहिणीकमनीकं सैन्यमित्याख्या नाम यस्य तं भूमेर्भारमपाकुरु दूरीकुरु ॥ १५ ॥ एवमिति। एवं संमन्त्र्य मिथः संमतिं कृत्वा दाशार्हौ रामकृष्णौ दंशितौ बद्धकवचौ रथिनौ रथाधिरूढौ स्वैरसाधारणैरायुधैः शोभनायुधैर्वा आढ्यौ युक्तौ अल्पीयसा बलेन सैन्येनावृतौ च भूत्वा पुरात् मथुराया निर्जग्मतुः ॥ १६ ॥

## श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्

त्वावतां त्वमेव अवन्। रक्षिता पतिर्येषां ते त्वावंतस्तेषां यदूनां व्यसनं कष्टं त्वदवतामिति वक्तव्ये त्वावतामित्युच्चारणमार्षम्। हे आर्य राम ॥ १३ ॥ यानं रथं एतत्सैन्यं जहि। शर्मकृत्सुखकृत् ॥ १४ ॥ त्रयोविंशतिसेनाख्यं। अपाकुरु नाशय। एवं संमन्त्र्य पूर्वोक्तप्रकारेण समग्रं विचार्य। दाशार्हौ रामकृष्णौ। स्वविधेयनिश्चयं कृत्वा दंशितौ धृतवर्माणौ पुरान्निर्जग्मतुरित्युत्तरैणान्वयः ॥ १५ ॥ स्वायुधाढ्यौ समीचीनायुधयुक्तौ ॥ १६ ॥

## भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

उक्तिमेवाह सार्द्धद्वयेन ॥ पश्येति। हे आर्य हे प्रभो, त्वमेवावन् रक्षको नाथः विद्यते येषां ते त्वावन्तस्तेषां, यदूनां यदुकुलोत्पन्नानामेषां, त्वन्नाथानां त्वद्रक्ष्याणां यदूनामित्यर्थः। व्यसनं महती विपदित्यर्थः। प्राप्तं, तत् पश्य। न हि स्वामी भृत्यानुपेक्षितुमर्हतीति भावः। तर्ह्येतदर्थं किं विधेयमित्यत आह। एष इति। एषः, ते तुभ्यं त्वदर्थमित्यर्थः। रथः, आयातः। दयितानि त्वत् प्रियाणि, आयुधानि च, आयातानीति लिङ्गवचनविपरिणामः। पश्य ॥ १३ ॥ एतावता ते वक्तव्यं किमस्तीत्यत आह ॥ यानमिति ॥यानमेतं रथं, आस्थायाधिष्ठाय, एतत्परबलं, जहि नाशय। स्वान् स्वकीयान् यादवान्, व्यसनादापदः, समुद्धर। एतदर्थं प्रतिपक्षनिरसनार्थं, हि इह लोके इत्यर्थः। हे ईश, नावावयोः साधूनां शर्मकृत्, जन्मावतारः अस्ति। अतः त्रयोविंशत्यनीकाख्यं त्रयोविंशत्यक्षौहिणीत्वेन व्यपदेश्यं केवलं, भूमेः भारं अपाकुरु अपनय ॥ १४ ॥ एवमिति ॥ एवमित्थं, संमन्त्र्य मिथ आलोच्य, दाशार्हौ रामकृष्णौ, दंशितौ कवचिनौ, रथिनौ रथाधिरूढौ, स्वायुधाढ्यौ स्वासाधारणैरायुधैर्युक्तौ, अल्पीयसा कतिपयेन, बलेन सैन्येन च, आवृतौ युक्तौ सन्तौ, पुरान्मथुरायाः, निर्जग्मतुः निष्क्रान्तौ ॥ १५ ॥ शङ्खमिति ॥ ततः,

दारुको दारुकाख्यः सारथिर्यस्य सः, हरिः श्रीकृष्णः, विनिर्गत्य पुराद्बहिरागत्य, शङ्खं पाञ्चजन्यं दध्मौ ध्वनयामास । ततः पाञ्चजन्यध्वनिश्रवणात्, परसैन्यानां शत्रुसेनासमवेतानां, हृदिवित्रासो भयं तेन वेपथुर्गात्रकम्पः, अभूत् ॥ १६ ॥

**कृष्णप्रिया**

हे बड़े भयाजू ! हे प्रभो ! कृपया देखिए। जिन यादवों के आप रक्षक हैं उन पर कैसा संकट आ पड़ा है, जिसका निवारण आपके विना अन्य कोई नहीं कर सकता है। इसलिए आपके उपयोग के हेतु आपके प्रिय हल मुसल आदि शस्त्र भी रथ के साथ आ गए हैं ॥ १३ ॥ रथ में बैठकर इस जरासन्ध की सेना का नष्ट कर अपने जनों को एवं स्थलों को कष्टों से मुक्त करें। हे नाथ ? अपने अवतार साधुजनों के श्रेयस् के लिए एवं लोक मङ्गल के लिए तो धारण किए हैं। अतः आप तेईस अक्षौहिणी सेना का भूमि भार को दूर करें ॥ १४ ॥ इस प्रकार सेवक के प्रिय श्रीकृष्ण एवं बलभद्रजी दोनों भ्राताओं ने परस्पर परामर्श कर, प्रथम कवच अस्त्र आदि धारण किए। पुनः शस्त्रादि से सज्ज होकर रथ में बैठ गए और युद्ध के लिए निकल पड़े। दोनों के साथ स्वरूप सेना थी। अब दोनों भाई नगर से बाहर निकले। श्रीकृष्ण के रथ को दारुक सारथि चला रहा था। भगवान ने प्रस्थान के समय अपना पाञ्चजन्य शङ्ख को बजाया। शङ्खनाद से शत्रु की सेना के हृदय में भयंकर त्रास उत्पन्न हुआ और शरीर में कंपन भी पैदा हो गई ॥ १५–१६ ॥

**ततोऽभूत् परसैन्यानां हृदि वित्रासवेपथुः । तावाह मागधो वीक्ष्य हे कृष्ण पुरुषाधम ॥ १७ ॥**
**न त्वया योद्धुमिच्छामि बालकेन विलज्जया[1] । गुप्तेन हि त्वया मन्द न योत्स्ये याहि बन्धुहन् ॥१८॥**
**त्वं तु[2] राम यदि श्रद्धा युध्यस्व धैर्यमुद्वह[3] । हित्वा वा मच्छरैश्छिन्नं देहं स्वर्याहि मां जहि ॥ १९ ॥**

**श्रीभगवानुवाच**

**न वै शूरा विकत्थन्ते दर्शयन्त्येव पौरुषम् । न गृह्णीमो वचो राजन्नातुरस्य मुमूर्षतः ॥ २० ॥[4]**

**कर्दमक्षमा**

**अन्वयः**—ततः, परसैन्यानाम्, हृदि, वित्रासवेपथुः, अभूत्, तौ, वीक्ष्य, मागधः, आह—हे कृष्ण ! हे मन्द ! हे पुरुषाधम ? हे बन्धुहन्, गुप्तेन, बालकेन, त्वया योद्धुम्, नेच्छामि, विलज्जया, याहि, न, योत्स्ये ॥ १७–१८ ॥ हे राम ! यदि श्रद्धा, तु, त्वम्,

---

१. बालेनैकेनलज्जया–श्रीधर. वंशी. जीव. वीर. विज. विश्व. । २. त्वं च राम–इति कस्यचित्; तप–श्रीधरादयः । ३. स्थैर्यं–इति कस्यचित् ।

४. निर्गत्य सदनात्कृष्णो वृष्णीनाहूय सर्वशः । आज्ञयापमास तूर्णं चतुर्द्वारस्य पालने ॥ १ ॥
वसुदेवं च निशठं कृतवर्माणमुद्धवम् । कृष्णो निर्यातयामास पूर्वद्वारेण भारत ॥ २ ॥
उग्रसेनं सुदामानं पृथुं विपृथुमेव च । हरिर्निर्यातयामास द्वारेणानुत्तरेण वै ॥ ३ ॥
सात्यकिं च गदं चैव प्रसेनं गान्दिनीसुतम् । हरिः प्रतीचीद्वारेण प्रेषयामास दुर्मदान् ॥ ४ ॥
गोविन्दस्तु महातेजाः स्वयं दारुकसारथिः । आत्ताभीष्टप्रहरणः सङ्कर्षणसहायवान् ॥ ५ ॥
उत्तरेण विनिर्गत्य द्वारेण जगदीश्वरः ।
शङ्खं दध्मौ महाप्राणं दैत्यदानवभीषणम् । आह दारुकमासीनं रथाग्रे माधवः स्मयन् ॥ ६ ॥

**श्रीभगवानुवाच—**

रथं वाहय धर्मज्ञ यत्र तौ चैद्यमागधौ । तर्पयामि नृपान्सर्वान्सायकैर्युद्धदुर्मदान् ॥ ७ ॥

**श्रीशुक उवाच—**

इत्युक्तो दारुकस्तेन हयांस्तूर्णमचोदयत् । व्यनदत्सिंहनादं च गोविन्दः परवीरहा ॥ ८ ॥
शङ्खमाध्माय रामोऽपि सिंहनादं व्यनीनदत् । ततोऽभूत्परसैन्यानां हृदि चिन्ता सवेपथुः ॥ ९ ॥
पूर्वद्वारि नृपैः सार्धं यदूनां कदनं महत् । आसीच्चतुर्भिरष्टानां तदद्भुतमिवाभवत् ॥ १० ॥
दक्षिणद्वार्यपि तथं गोविन्दाध्मातचेतसाम् । आसीद्यदूनां कदनं राजन्यकटकेन वै ॥ ११ ॥
अपरद्वार्यपि तथा यदूनां दृढधन्विनाम् । आसीद्राजसमाजेन सङ्ग्रामो रोमहर्षणः ॥ १२ ॥
ते हन्यमाना यदवो राजभिः शक्रविक्रमैः । न चेलुः सङ्गराद्राजँल्लोकद्वयजिगीषवः ॥ १३ ॥
तत्र यादवशार्दूलो विष्णुस्त्रैलोक्यवल्लभः । आससाद महाघोरौ यत्र तौ चैद्यमागधौ ॥ १४ ॥ ]

एते विजये गृहीताः । मुनिभावप्रकाशिकापाठेऽपि सन्ति ।

युध्यस्व, धैर्यम्, उद्वह, मच्छरैः, छिन्नम्, देहम्, हित्वा, स्वर्, याहि, वा, माम्, जहि ॥ १९ ॥ श्रीभगवान् उवाच—राजन्! शूराः, वै, न, विकत्थन्ते, पौरुषम्, एव दर्शयन्ति, आतुरस्य, मुमूर्षतः, वचः, न, गृह्णीमः ॥ २० ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

पुरुषा अधमा यस्मादिति वास्तवोऽर्थः। हे पुरुषोत्तमेति ॥ १७ ॥ गुप्तेन सर्वान्तरत्वादृर्शनानर्हेण। हे अमन्द। व्वध्नातीति वंधुरविद्या तां हन्तीति तथा हे अविद्यानिरसनेति। याहि प्राप्नुहि ॥ १८ ॥ अच्छेद्यदेहोऽसाविति स्वयमेव मत्वा परितोषात्पक्षांतरमाह। यद्वा मां जहीति ॥ १९ ॥ यथाश्रुतार्थग्रहणेन भगवत उत्तरम्। न वै शूरा इति। विकत्थंते श्लाघन्ते ॥ २० ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

ततः शंखध्वनेः वित्रासेन वेपथुः कम्पः। तौ रामकृष्णौ ॥ अत एव विशिष्टत्रासेन वेपथुः। श्रीकृष्णं साक्षात्कालरूपं मत्वा तेन साकं युद्धं परिहर्तुमाह—ताविति सार्धेन ॥ १७ ॥ गुप्तेन निघ्नेन 'गुप-सोपीजारेणेत्यर्थः। यद्वा गुप्तेन नंदगोपपालितेन वैश्येनेत्यर्थः ॥ बालेनैकेनेति—'बालकेनैव' इति च पाठः। ननु युद्धे शक्तिरेवापेक्ष्यते न तु वय इत्याह—गुप्तेनेत्यर्द्धकेन, कंससार्थेन गोकुले निवासात्, ननु वैरिवञ्चनार्थं काले गुप्तिरेव सर्वान्तरत्वादृर्शनानर्हेण अमन्द हे अभद्र। कुतः-बन्धुहन्। अतो याहि धर्मयुद्धादितोऽपसर। तत्त्वार्थस्तु न्याख्यातस्तैः। यद्वा—याहि स्वगृहम्, युद्धश्रमेण ते प्रयोजनाभावादिति भावः। गतस्य तत्र वैश्यपालित्त्वेन वैश्यधर्मप्राप्तेः ॥१८॥ श्रद्धा युद्धश्रद्धा। 'त्वं च' इति वा पाठः। च शब्दस्त्वर्थे। श्रद्धा युद्धेच्छा। यदीति मद्भयानुभवितैव यदि कथं चित्स्यादित्यर्थः। स्थैर्यमुच्चैर्वहुबलादात्मानमुद्वह प्राप्य, न जातूद्विग्नो भव, न पलायस्वेत्यर्थः। 'वैर्यम्' इत्यपि पाठे स एवार्थः। यद्वा—मत् मत्तः पापात्मनः सकाशात्स्ववैकुंठं याहि। किं कृत्वा—शरैश्छिन्नं मम देहं हित्वा त्यक्त्वा, अत्रैव प्रक्षिप्येत्यर्थः ॥ १९ ॥ आतुरस्य जामातृमरणेन दुःखितस्य मुमूर्षतः मर्तुमिच्छवः। ''गीर्वुद्धी विपरीते स्त आसन्नमरणस्य नुः'' इति शिष्टोक्ते ॥ आत्मना सह युद्धकौतुके त प्रवर्तयितुं व्यक्तार्थमाश्रित्य सोलुंठमुत्तरमाह—नेति। वै प्रसिद्धम्। न च तव गालिप्रदानेन वयं क्षुभ्याम इत्याह नेति। आतुरस्य वातादिदोषव्याकुलस्य, तत्रापि मुमूर्षतः संत्येव मरिष्यतः वाचो न गृह्णीमो वस्तुबुद्ध्या न भावयामः, कुतः कोपं कुर्म इत्यर्थः। राजन्निति—यद्यपि राज्ञस्ते तदतीवानुचितमिति भावः ॥ २० ॥

### श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी

एत एव विशिष्टत्रासेन वेपथुः। श्रीकृष्णं साक्षात् कालरूपं मत्वा तेन सह युद्धं परिहर्त्तुमाह—ताविति सार्द्धेन ॥ १७ ॥ बालेनैकेनेति वालकेनैवेति च वा पाठः। ननु, युद्धे शक्तिरेवापेक्ष्यते न तु वय इत्याह—गुप्तेनेत्यर्द्धकेन। कंसभयेन गोकुले निवासात्। ननु, वैरिवञ्चनार्थं काले गुप्तिरेव योग्येत्यत आह, मन्द ! हे अभद्रेति। कुतः हे बन्धुहन् ! अतो याहि धर्म्मयुद्धादितोऽपसर तत्त्वार्थस्तैर्न्याख्यातः। यद्वा, याहि स्वगृहं याहि युद्धश्रमेण ते प्रयोजनाभावादिति भावः ॥ १८ ॥ तवेति। त्वञ्चेति वा पाठः। त्वर्थे चशब्दः श्रद्धा युद्धेच्छा। यदीति मद्भयानुभवितैव यदि कथञ्चित् स्यादित्यर्थः। स्थैर्य्यमुच्चैर्व्वहुबलादात्मानं प्राप्य न जातूद्विग्नो भव न च पलायस्वेत्यर्थः। धैर्य्यमिति क्वचित् पाठः ॥ १९ ॥ आत्मना सह युद्धकौतुके तं प्रवर्त्तयितुं व्यक्तार्थमेवाश्रित्य सोल्लुण्ठमुत्तरमाह—नेति। न विकत्थन्ते नात्मानं श्लाघन्ते वै एतत् प्रसिद्धमेवेत्यर्थः। नच तव गालिप्रदानेन वयं क्षुभ्याम इत्याह—नेति। आतुरस्य वातादिदोषव्याकुलस्य तत्रापि मुमूर्षतः सम्प्रत्येव मरिष्यतः वचो न गृह्णीम न वस्तु बुद्ध्या भावयामः कुतः कोपं कुर्म्म इत्यर्थः। राजन्निति यद्यपि राज्ञस्त्वेतदतीवानुचितमिति भावः ॥ २० ॥

### श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी

महापराक्रमं साक्षात् कालरूपं श्रीकृष्णं मत्वा, तेन सह निजयुद्धं परिहर्त्तुमाह—ताविति द्वाभ्याम्। लज्जयैव, न तु भयादिना। कुतः ? वालकेन, तच्च निजवयोऽपेक्षया अल्पवयस्त्वात्। ननु युद्धे शक्तिरेवापेक्ष्यते, न तु वय इत्यत आह—गुप्तेनेति, कंसभयादिव गोकुले निवासात्। ननु वैरिवञ्चनार्थं काले गुप्तिरपि योग्येत्यत आह—मन्द ! हे अभद्रेति। कुतः ? हे बन्धुहन्, अतो याहि, धर्म्मयुद्धादितोऽपसर। तत्त्वार्थस्तैर्व्याख्यातः। यद्वा, याहि, स्वगृहं याहि, युद्धश्रमेण ते प्रयोजनाभावादिति भावः ॥ १७ ॥ श्रद्धा युद्धेच्छा, यदीति मद्भयान्न भवितैव, यदि कुतोऽपि कथञ्चित् स्यादित्यर्थः। स्थैर्य्यमुच्चैर्वहुबलादात्मानं प्राप्य, न जातूद्विग्नो भव, न च पलायस्वेत्यर्थः। एषा सर्व्वा महागर्व्वोक्तिः 'युद्धे धैर्य्यं समुद्वह' इति पाठान्तरं सुगमम्; स्वर्याहीति धर्म्मयुद्धेनैव क्षत्रियस्य स्वर्गसिद्धेः ॥ १८ ॥ आत्मना सह युद्धकौतुके तं प्रवर्त्तयितुं व्यक्तार्थमाश्रित्योत्तरमाह—नेति। वै एतत् प्रसिद्धमेवेत्यर्थः। ननु मदुक्तितो लज्जादिनाऽशूरोऽपि कथं त्वमहो पौरुषं दर्शयिष्यसि ? तत्राह—न गृह्णीमः, हृदि कर्णयोर्वा न धारयामः। कुतः ? आतुरस्य व्याकुलस्य, यतो मुमूर्षतः स्वयं मरिष्यत इत्यर्थः,—आसन्नमरणस्यासम्बन्धवाक्योत्पत्तेः; यद्वा, दुरुक्त्या मद्रोषोत्पादनादिना स्वयं शीघ्रं मर्त्तुमिच्छतः ॥ १९ ॥ जरासुत इति जरानाम-राक्षस्या सन्धितदेहत्वात् तद्दत्तशक्तित्वेन मनुष्यातीतशक्तिरुक्ता, अतोऽभिसृत्य आभिमुख्येनाग्रतो गत्वा प्राप्य वा, माधवौ मधुकुलोद्भवाविति दाशार्हावितिवत्, अतएवावृणोत् ॥ २० ॥

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम्

माञ्जहि मां वा जहि ॥ १९ ॥ मूमूर्षया आतुरस्य तवेत्यर्थः ॥ २०–२२ ॥

### श्रीमद्वीरराघवाचार्यकृता भागवतचन्द्रचन्द्रिका

ततः शङ्खध्वनात्परसैन्यानां हृदि वित्रासो भयं तेन वेपथुर्गात्रकम्पो बभूव । तावििति । तौ रामकृष्णौ अवलोक्य मागधो जरासन्ध आह; उक्तमेवाह–कृष्णेत्यादिना । गुप्तेन कर्त्तरि क्तः गोपयता आत्मानमिति शेषः स्वजनेनेति वा त्वया सह न योत्स्ये न युद्धं करोमि याहि गच्छ तत्र कारणं वदन् सम्बोधयति—हे मन्द, मूढ ! तत्र हेतुः हे बन्धुहन् ! अत एव हे पुरुषाधम ! बन्धुर्मातुलस्तस्य हन्तः ॥ १७ ॥ न केवलं न यौत्स्याम्येवापितु त्वया योद्धुं नेच्छाम्यपि यथा बालकेन सह लज्जया न युयुत्स्ये तद्वदित्यर्थः ॥ १८ ॥ अथ राममाह–त्वमिति । यदि श्रद्धा युद्धार्थमस्तीति शेषः तर्हि हे राम ! युद्धयस्व स्थैर्यमावह न तु प्रारभ्य पलायस्वेति भावः । एवं चेन्मच्छरैर्भिन्नं देहं त्यक्त्वा स्वर् स्वर्गं याहि यास्यसीत्यर्थः । यद्वा, समर्थश्चेत्त्वं मामेव जहि इति ॥ १९ ॥ एवमुक्तः प्राह भगवान्-नहीति विकत्थन्ते विविधम् आत्मानं न श्लाघन्ते शूराः किन्तु रिपूणामपि श्लाघ्यं पौरुषमेव दर्शयन्ति अतस्तवाशूरस्य मुमूर्षतः मर्तुमाशंसमानस्य अत एवातुरस्य वचो वयं न गृह्णीमः न बहुमन्यामहे इत्यर्थः ॥ २० ॥

### श्रीमज्जीवगोस्वामिकृतः बृहत्क्रमसन्दर्भः

तावाहेत्यादि । हे कृष्ण ! पुरुषाधाम ! इति पुरुषा अधमा यस्मात् स तथा पुरुषोत्तमेत्यर्थः ॥ १८–५७ ॥

इति श्रीदशमे श्रीबृहत्क्रमसन्दर्भे पञ्चाशत्तमोऽध्यायः ॥ ५० ॥

### श्रीनाथचक्रवर्तिपादविरचिता चैतन्यमतमञ्जूषा

पुरुषा अधमा यस्मात् पुरुषोत्तम इत्यर्थः ॥ १७–५७ ॥

इति पञ्चाशत्तमोऽध्यायः ॥ ५० ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

पुरुषा अधमा यस्मात् हे पुरुषोत्तमेति भवत्यभिमतोऽर्थः ॥ १७ ॥ बाले बाल एव को ब्रह्मा यस्य तेन महामहेश्वरेण लज्जयेति मम दुर्जीवत्वेनायोग्यत्वादिति भावः । गुप्तेनेति कंसस्य भयाद्गोकुलं प्रति गतस्य एव वैश्यपालितत्वेन वैश्यसाधर्म्य-प्राप्तेः पक्षे सर्व्वान्तरत्वाद्दर्शनानर्हेण हे अमन्द बन्धुहन् हे मातुलहन्तः पक्षे बध्नातीति बन्धुरविद्या तां हन्तीति तथा ॥ १८ ॥ अच्छेद्यदेहोऽसाविति । स्वयमेव मत्वा परितोषात् । पक्षान्तरमाह—यद्वा मां जहीति । श्रीस्वामिचरणाः । यद्वा, मत्‌मत्तः पापात्मनः सकाशात् स्ववैकुण्ठं याहि किं कृत्वा शरैश्छिन्नम् अर्थात् मम देहं हित्वा त्यक्त्वा अत्रैव प्रक्षिप्येत्यर्थः ॥ १९–२० ॥

### गूढार्थदीपिनी

वेपथुः कम्पः ॥ १७ ॥ पुरुषा अधमा यस्मात् । हे पुरुषोत्तम बालवत्प्रतीयमानेन वस्तुतस्तु एकेनाद्वितीयेन ॥ १८ ॥ गुप्तेनेत्यर्द्धम् । हे मन्द भीरो हे बन्धुहन् मातुलघातिन् गुप्तेन वैश्येन नन्दपालितत्वात् । इति निन्दा । हे अमन्द वीर । बध्नातीति बन्धुरविद्या तां हन्तीति । गुप्तेन अदृश्येन कालरूपेणेति स्तुतिः ॥ १९ ॥ मत् मत्तः पापिनः सकाशात् स्ववैकुण्ठं याहि । किं कृत्वा । शरैश्छिन्नं मम देहं हित्वा गर्ते प्रक्षिप्य । निन्दा तु स्पष्टैव ॥ २० ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

रामकृष्णौ नरकौ इति वीक्ष्येति भावः मागध आह ॥ १७–१९ ॥ भगवानपि तदनुरूपमुत्तरं दत्तवान्–न वै इति । विकत्थन्ते श्लाघन्ते ॥ २० ॥

### श्रीसत्यधर्मकृता श्रीभागवतटिप्पणी

कुलिन्दो महाबल इति योग्यान्वयि ॥ १७ ॥ मदश्च बलं च ताभ्यामन्विताः ॥ १८ ॥ चतुर्द्वाराण्येवं गतम् । अनेकश इति प्रथमाबहुवचनान्तं द्वितीयाबहुवचनान्तं च सत्त इत्यस्य शङ्खानां च विशेषणम् ॥ १९ ॥ क्ष्वेलन्तः सिंहनादं कुर्वन्तः ॥ २० ॥

### श्रीमद्वल्लभाचार्य्यकृता सुबोधिनी

एवं ज्ञात्वा चतुरो जरासन्धः भगवन्तं युद्धान्निवर्तयितुं किञ्चिदुक्तवानित्याह तावाहेति । ननु सदुत्तरेणैव भगवता सह युद्धमनुचितमिति चेद्वदेत्, तदा भगवान् युद्धं न कुर्यात्, स्वकार्यं च भवेत्, तत्परित्यज्य किमिति विषममुक्तवानित्याशङ्कायामाह मागध इति । देशदोषात्तथा बुद्धिः । ता वीक्ष्याहेति । तेजः स्वानुभावेन ज्ञात्वेत्येतदर्थम् । आदौ भगवता सह युद्धं न मन्यते,

तदाह, हे कृष्णेति । त्रिधा सम्बोधनं करोति, आनन्दचित्सद्रूपैः । कृष्ण आनन्दः, पुरुषश्चिद्रूपः । अधो मातीत्यधमः प्रपञ्चः सद्रूपः। न हि सदानन्दरूपेण पुरुषार्थरूपेणात्मना स्वोपकारिणा कश्चिद्युद्धमभिकाङ्क्षति । अत आह न त्वया योद्धुमिच्छामीति । किञ्च, बालकेनेति । बालानामपि कं सुखं यस्मात् । बाले बाले को वा । न हि ब्रह्माण्डकोटिविग्रहेण कार्यपक्षेऽपि योद्धुं शक्यते । किञ्च, विलज्जयेति । धाष्टर्येन यद्यपि युद्धं कर्तुं शक्यते, मरणेन मोक्षो भविष्यतीति, तथापि लोकलज्जयापि न युद्धमुचितम्, लोको हसिष्यति, स्वामिना सह युध्यतीति । अतो विशिष्टलज्जयापि न योत्स्ये । अन्यत्र स्वशक्तिं स्थापयसि चेत्, तथापि युद्धं न करिष्यामीत्याह गुप्तेन हीति । त्वया गुप्तः केन वा हन्तुं शक्यते । पराजयपक्षे त्वत्त एव मरणमुचितम्, न त्वन्यस्मात्, अपकीर्तिरपि भवेदिति । अतो युक्तमेव त्वद्रक्षितेन सहायुद्धम् । किञ्च, अमन्देति । अमो मोक्षः । न विद्यते मा माया यत्रेति । अमं ददातीत्यमन्द इति । न हि मोक्षदात्रा आराध्येन सह कश्चिद्युद्धमभिकाङ्क्षति । अतो याहि मोक्षं दातुम् । नन्वहं यादव एव, न तु मोक्षदातेत्याशङ्क्याह बन्धुहन्निति । यदि यादवः स्यात्, तर्हि बन्धून् कंसादीन् किं हन्यात् ? अतो यादवमारकत्वात् अस्मत्स्वाम्येव, नतु यादव इत्यर्थः । यदापाततः प्रतिभात्यन्यथा, तत्प्रकरणविरुद्धत्वात् निन्दापरवचनमुपेक्षणीयमेव । भ्रामकाणि परं वचनानि ।। १८ ।। एवं भगवन्तमयुद्धार्थं प्रार्थयित्वा तेनैव बलभद्रोऽपि निवृत्तो भविष्यतीति तं युद्धायाह्वति त्वं त्विति । तुशब्दः पूर्वप्राप्तार्थव्यावृत्त्यर्थः । अन्यथावयोर्बन्धुमारणं च तुल्यमिति कथं रामं गृह्णीयात् । तेन यादवा एव तस्य मारणीया इति सत्त्वव्यवहितानां सुतरामावेशिनां देहोऽस्तीति यादवत्वं सिद्धमिति वसुदेववैरं तत्पुत्रे पातनीयमिति वसुदेवे युद्धप्रतिप्रसवः । तत्रापि यदि श्रद्धेत्याह । अयं हि वसुदेवानुकल्पत्वेन द्विष्टो भवति । तथा सति यदि पितरि श्रद्धा, क्षत्रियत्वेन युद्धे वा, तदा युध्यस्व। आवयोर्थद्यपि समानं बलम्, तथापि सेना महतीति तद् दृष्ट्वा कदाचिद्भीतो भवेत्, अत आह धैर्यमुद्वहेति । भगवद्व्यतिरिक्तानामन्यधर्मः प्रवर्तते इति, अन्तर्बलमस्तीति धैर्यमस्त्येव, बहिरपि धैर्यं सम्पादयेत्याह उदिति । ततो यद्भविष्यति तदनिश्चयेनाह हित्वेति । एकतरनिश्चये युद्धार्थं प्रवृत्तिरेव न स्यात् । अतो मच्छरैः छिन्नं देहं हित्वा धैर्यमुत् धैर्येण जातां मुदं स्वर्गलक्षणां वह। अथवा मच्छरैः छिन्नं देहं हित्वेति । 'सविशेषणे विधिनिषेधौ विशेषणमुपसङ्क्रामतः' इति न्यायेन शरच्छादनं दूरीकृत्य मां जहि । अनेन प्रथममहमेव प्रहारं करिष्यामीति ।। १९ ।। एवं बलभद्रं प्रति यत्स्वपौरुषं ख्यापितम्, तदयुक्तं मत्वा भगवान् निषेधति न वै शूरा इति । ये हि शूरास्ते स्वख्यातिं न वदन्ति, किन्तु पौरुषमेव दर्शयन्ति । यदप्युक्तं 'न त्वया योद्धुमिच्छामी'ति, तत् तव वाक्यं न गृह्णीमः । अनेन तद्वाक्यमप्रमाणमित्युक्तम् । न हीश्वरेणामतं प्रमाणं भवति । तेन हि शङ्काद्वयेन युद्धं त्यक्तम्, मरणं भविष्यति, मोक्षे प्रतिबन्धो वा भविष्यतीति, तदुभयं न कर्तव्यम्, इदानीं न मारणीयः, मोक्षश्च देय इति। अत एव भगवान् सर्वस्वदानं कारयित्वा मोक्षं दत्तवान् । अतो युक्तमुक्तं न गृह्णीमो वच इति । किञ्च, हे राजन् ! राज्ञां शूरक्षत्रियाणां युद्ध एव मुक्तिः । 'द्वाविमौ पुरुषौ लोके सूर्यमण्डलभेदिनौ । परिव्राड् योगयुक्तश्च रणे चाभिमुखो हतः' इति ब्राह्मणक्षत्रिययोः मोक्षप्रकारस्य प्रतिपादितत्वात् । तयोरेव च मोक्षोपदेशः 'यस्य ब्रह्म च क्षत्रं च उभे भवत ओदन' इत्यत्र निरूपितः। अतो मद्रक्षितेनापि त्वया युद्धं कर्तव्यम्, अहं तु त्वया सह युद्धं न करिष्यामि, बलभद्र एव करिष्यति, बलं परं मारणीयमिति भावः । अयमुपदेशोऽग्रे कार्यार्थः । अन्यथा भीमेनापि न युध्येत् । किञ्च, आतुरस्य वचनं न ग्राह्यम् । स हि स्वापथ्यमेव याचते। अनेन याचितं देयमिति पक्षो निवारितः । किञ्च, मुमूर्षतः मुमूर्षां प्राप्नुवतः । कृदन्तात् षष्ठी । स हि मोक्षं दूरीकृत्य वृथा मरणं वाञ्छति । तादृशं नाङ्गीकर्तव्यम् ।। २० ।।

## श्रीसुबोधिनी-सारः

ततः शंखशब्दात् परस्य जरासंधस्य सैन्यानां सैनिकानां हृदि चित्ते वित्रासेनोद्वेगेन वेपथुः कंपोऽभूत् तौ रामकृष्णौ वीक्ष्य दृष्ट्वा मागधो जरासुत आह हे कृष्ण हे पुरुष बालेन एकेन त्वया योद्धुं नेच्छामि लज्जया हेतुना । गुप्तेन गूढेन एतावत्कालमप्रसिद्धत्वात् त्वयाहं न योत्स्ये न युद्धं करिष्यामि हे मन्द त्वं याहि गच्छ हे बन्धुहन् ।। १७-१८ ।। हे राम यदि तव श्रद्धास्ति तर्हि युध्यस्व धैर्यमुद्वह कुरु धर वा पक्षान्तरे मम शरैर्बाणैः छिन्नं देहं हित्वा स्वर्याहि स्वर्गं गच्छ मां वा जहि घातय ।। १९ ।। श्रीकृष्णोक्तिः । शूरा न कत्थंते आत्मश्लाघां न कुर्वंति वै एव किं तु पौरुषं स्ववीर्यं दर्शयन्त्येव हे राजन् आतुरस्य दुःखितस्य मुमूर्षतो मरणमिच्छतस्ते वचो वयं न श्रद्दध्मः ।। २० ।।

## गोस्वामिश्रीगिरधरलालकृता बालप्रबोधिनी

तौ रामकृष्णौ वीक्ष्य मागधो जरासन्ध आह । तदुक्तिमेव दर्शयति—हे कृष्ण इत्यादिना । हे कृष्ण ! हे पुरुषाधम ! त्वया बालेनैकेन सहाहं योद्धुं नेच्छामि । तत्र हेतुमाह—लज्जयेति । बालत्वात्त्वया सह युद्धे मम वीरस्य लज्जा भवतीत्यर्थः । 'एकेन' इत्यनेन रामादिसहितेन तेन सह युद्धे सम्मतिं सूचयति । अतएव युद्धप्रवृत्तिः । निषेधोक्तिस्तु केवलं तिरस्कारार्था ।।१७।। एवमुक्त्वाऽपि तिरस्कारदार्ढ्यमाह—गुप्तेनेति । हे मन्द मन्दबुद्धे ! तत्र हेतुं सूचयन् पुनः सम्बोधयति—बन्धुहन् हे मातुलहन्तः ! गुप्तेन स्वजनै रक्षायोग्येन बालेन त्वया सह अहं नैव योत्स्ये, युद्धं नैव करिष्ये, अतस्त्वं प्रतियाहि ।। १८ ।। एवं कृष्णं प्रत्युक्त्वा

रामं प्रत्याह—तवेति । हे राम ! तव यदि मया सह युद्धश्रद्धा तर्हि युद्धयस्व । 'परन्तु युद्धं प्रारभ्य पलायनं न कर्तव्यम्' इत्याशयेनाह—धैर्यमुद्वहेति । युद्धफलमाह—हित्वेति । अथवा समर्थश्चेत्तर्हि मां जहि ॥ १९ ॥ एवमुक्तो भगवानाह—नेति । शूरा नैव विकत्थन्ते आत्मानं नैव श्लाघन्ते, किंतु श्लाघाहेतुं पौरुषमेव दर्शयन्ति । त्वं तु मन्दवुद्धित्वादात्मानं श्लाघसे, अतस्तव वचो न गृह्णीमः यथार्थत्वेन न स्वीकुर्मः । 'तव तु राजत्वात् पौरुषप्रदर्शनमेव युक्तम्, नात्मश्लाघा' इति सूचयन् सम्बोधयति—राजन्निति । 'आसन्नमृत्यवो हि पीडया विवशा अनन्वितं वदन्ति, तवापि तथात्वात्त्वद्वचो न गृह्णीमः' इत्याह—आतुरस्य मुमूर्षत इति ॥ २० ॥

**अन्वितार्थप्रकाशिका**

शङ्खमिति ॥ दारुकाख्यः सारथिर्यस्य स हरिर्वहिर्विनिर्गत्य शङ्खं पाञ्चजन्यं दध्मौ वादितवान् । ततः शङ्खध्वनिश्रवणात् परस्य जरासन्धस्य सैन्यानां हृदि वित्रासो भयं तेन वेपथुः प्रकम्पोऽभूत् ॥ १७ ॥ ताविति ॥ रामकृष्णौ वीक्ष्य मागधो जरासन्ध आह स्म । हे कृष्ण पुरुषाधम ! वस्तुतः पुरुषा अधमा यस्मादिति पुरुषोत्तम ! बालेन एकेन त्वया सह लज्जयाऽहं योद्‌धुं नेच्छामि । वस्तुतो महाप्रभावेण त्वया बालेन एकेनापि च पराभवलज्जया न योद्‌धुमिच्छामि किं पुनः ससैन्येन ॥ १८ ॥ गुप्तेनेत्यर्द्धम् । हे मन्द ! हे बन्धुहन् मातुलघातिन् ! गुप्तेन कंसभयेन गोकुले उषितेन त्वया सह न योत्स्ये अतः याहि । वस्तुतः हे अमन्द ! वध्नातीति बन्धुरविद्या तां हन्तीति हे अविद्यानिरसन ! गुप्तेन अन्तर्यामितया अदृश्येन कालरूपेण वा न योत्स्ये॥१९॥ तवेति ॥ हे राम ! तव यदि मया सह युद्धे श्रद्धा सामर्थ्यमिच्छा वा तर्हि युध्यस्व धैर्यमुद्वह । मच्छरैश्छिन्नं देहं हित्वा स्वः स्वर्गं जाहि प्राप्नुहि । समर्थश्चेन्मां जहि । वस्तुतः मत् मत्तः पापिनः सकाशादपसृत्य त्वदीयशरैश्छिन्नं मम देहमत्रैव हित्वा प्रक्षिप्य स्वः वैकुण्ठं याहि ॥ २० ॥

**श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्**

वित्रासो विशेषो यस्त्रासो भीतिः वेपथुः कम्पश्च । यद्वा विशेषत्रासेन युक्तोवेपथुः ॥ १७ ॥ लज्जया हेतु नाराकेनबालेन त्वया सह हे वन्धुहन् मातुलघातक ॥ गुप्तेन गोकुले अप्रसिद्धतया स्मितेन त्वया सह अहं न योत्स्ये न युद्धं करोमि त्वया हि इतोऽन्यत्र गच्छ ॥१८॥ उद्वह प्राप्नुहि ॥१९॥ एवं तस्य वचनं श्रुत्वा हरिराह नेति ॥ विकत्थं तेन स्वश्लाघां कुर्वन्ति पौरुषं स्वसामर्थ्यं आतुरस्य मस्तक प्रविष्ट वायुना व्याकुलस्य ॥ अत एव मुमूर्षतः । मरणमिच्छोः ॥ २० ॥

**भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी**

ताविति ॥ तौ रामकृष्णौ, वीक्ष्यालोक्य, मागधो जरासंधः, हे पुरुषाधम कृष्ण, बालेन एकेन, त्वया साकं, लज्जया त्रपाहेतुना, योद्‌धुं न इच्छामि । इति आह । महतो योद्‌धुर्बलिन युद्धविधाने लोकाभिहितविषमयुद्धजत्रपाभरान्न त्वया योत्स्यामीत्याहेति भावः ॥ १७ ॥ तत्र कारणं वदन् संबोधयति । गुप्तेनेति । हे मन्द मूढ, हे बन्धुहन् मातुलहन्तः, गुप्तेन गोपायित्रा, कर्त्तरि क्तः । आत्मानमिति शेषः । त्वया सह, न हि योत्स्ये युद्धं नैव करिष्यामि । अतः याहि इतः पलायनं कुरु । अथ राममाह । हे राम, यदि तव, श्रद्धा युद्धार्थमस्तीति शेषः । तर्हि मया सह, युध्यस्व । धैर्यं, वा चार्थे । आवह, प्रारभ्य पलायनं मा कृथा इति भावः । एवं चेत् मच्छरैः छिन्नं भिन्नं, देहं हित्वा त्यक्त्वा; स्वः स्वर्गं, याहि । यास्यसीत्यर्थः । यद्वा त्वं समर्थः स्याश्चेत्, मां जहि ॥ १८ ॥ एवं जरासंधोक्तो भगवांस्तमाह ॥ न वै इति । हे राजन्, शूराः न विकत्थयन्ते, वै । नात्मानं स्वसुखेन श्लाघन्ते इत्यर्थः । किं तु पौरुषं रिपूणामपि श्लाध्यं पराक्रमं एव, दर्शयन्ति । अतः आतुरस्याशूरत्वादातुरतावतः, मुमूर्षतो मर्त्तुमाशङ्कमानस्य तव, वचः वयं, न गृह्णीमः न वहु मन्यामहे ॥ १९ ॥ जरासुत इति । जरासुतो जरासंधः, सैन्येन, यानध्वजै रथध्वजैः, वाजिभिरश्वैः, सारथिभिश्च सहिताविति ससैन्यमानध्वजवाजिसारथी, माधवौ मधुवंशभवौ, द्वयोरपि मधुवंशजत्वान्माधवाविति निर्देशः । रामस्य माधवांशजत्वाद्वा माधवशब्देन व्यपदेशः । तौ रामकृष्णौ, अभिसृत्याभिमुखमागत्य, बलीयसा अतिवलवता, महाबलौघेन महता सैन्यसमूहेन, वायुः अभ्राणि च रेणवश्च तैः, सूर्यश्चानलो वह्निश्च ताविव, अभ्रैः सूर्यं, रेणुभिश्चाग्निं यथा तथा, आवृणोत् । अनेनादर्शनमात्रमेव, नावरणमिति सूचितम् ॥ २० ॥

**कृष्णप्रिया**

भगवान् श्रीकृष्ण एवं श्री वलभद्र को देखकर पहिचान कर जरासन्ध दोनों को कहने लगा । हे कृष्ण ? आनन्दस्वरूप हे श्रीकृष्ण ? हे पुरुषाधम ? हे चिद्रूप एवं सद्रूप ! तुम तो बालक हो इसलिए तुमसे युद्ध करना नहीं चाहता हूँ । छोटे बालक से लड़ते हुए लज्जा आती है । तुम तो बन्धु-मातुल कंस की हत्या करने वाला एवं छिप कर रहने वाला है इसलिए हे मन्द मैं तुमसे युद्ध करना नहीं चाहता हूं ॥ १७–१८ ॥ हे राम ! बलभद्र ! यदि आप को युद्ध करने की श्रद्धा हो तो आइए युद्ध करें, धैय को धारण कीजिए, मेरे बाणों से छिन्न देह त्यागकर स्वर्ग की ओर जाओ या तो मुझे मार दो ॥ १९ ॥ भगवान् श्रीकृष्ण कहने लगे राजन् जरासन्ध ! शूरवीर पुरुष अपनी प्रशंसा अपने आप नहीं करते हैं किन्तु अपना सामर्थ्य कार्य करने से ही दिखाते हैं। राजन् ! हम आतुर एवं मौत जिसकी निकट आ चुकी है उसके वचनों पर ध्यान नहीं देते हैं ॥ २० ॥

**श्रीशुक उवाच**

जरासुतस्तावभिसृत्य[1] माधवौ महाबलौघेन बलीयसाऽऽवृणोत् ।
ससैन्ययानध्वजवाजिसारथी सूर्यानलौ वायुरिवाभ्ररेणुभिः ॥ २१ ॥
सुपर्णतालध्वजचिह्नितौ रथावलक्षयन्त्यो हरिरामयोर्मृधे ।
स्त्रियः पुराट्टालकहर्म्यगोपुरं समाश्रिताः सम्मुमुहुः [2]शुचार्दिताः ॥ २२ ॥
हरिः परानीकपयोमुचां मुहुः शिलीमुखात्युल्बणवर्षपीडितम् ।
स्वसैन्यमालोक्य सुरासुरार्चितं [3]व्यस्फूर्जयच्छार्ङ्गशरासनोत्तमम् ॥ २३ ॥
गृह्णन् निषङ्गादथ सन्दधच्छरान् विकृष्य मुञ्चञ्छितबाणपूगान् ।
निघ्नन् रथान् कुञ्जरवाजिपत्ती[4]न्निरन्तरं यद्वदलातचक्रम् ॥ २४ ॥

**कर्दमक्षमा**

अन्वयः—श्रीशुक उवाच—जरासुतः, अभिसृत्य, बलीयसा, महाबलेन, ससैन्य-यान-ध्वज-सारथी, तौ, माधवौ, वायुः, अभ्ररेणुभिः, सूर्यानलौ, इव, आवृणोत् ॥ २१ ॥ हरिरामयोः, सुपर्णतालध्वजचिह्नतौ, रथौ, मृधे, अलक्षयन्त्यः पुराट्टालक-गोपुरम्, समाश्रिताः, शुचार्पिताः, स्त्रियः, सम्मुमुहुः ॥ २२ ॥ हरिः, मुहुः, परानीकपयोमुचाम्, शिलीमुखात्युल्वणवर्षपीडितम्, सुरासुरार्चितम्, स्वसैन्यम्, आलोक्य, शार्ङ्गशरासनोत्तमम्, व्यस्फूर्जयत् ॥ २३ ॥ अथ, निषङ्गात्, शरान्, गृह्णन्, विकृष्य, संदधत्, शितबाणपूगान्, अलात्तचक्रम्, यद्वत्, मुञ्चन्, निरन्तरम्, रथान्, कुञ्जरवाजिपत्तीः, निरन्तरम्, निघ्नन् ॥ २४ ॥

**श्रीधरस्वामिविरचिता भावार्थदीपिका**

माधवौ मधुवंशभवौ । महता सैन्यसमूहेनावृतवान् । वायुरभ्रैः सूर्यं रेणुभिश्चाग्निं यथेत्यदर्शनमात्रमेवावरणमिति सूचितम् ॥ २१-२२ ॥ परस्यानीकानि सैन्यानि तान्येव पयोमुचो मेघास्तेषां शिलीमुखा बाणास्तेषामत्युल्वणं वर्षं तेन पीडितम् । व्यस्फूर्जयदुज्जृंभितवान् ॥ २३ ॥ तदाह । गृह्णन्निति । निषंगादिषुधेः शरान् गृह्णन् अथ तान्गुणे संदधत् गुणमाकृष्य निशित-बाणसमूहान्मुञ्चन् । निघ्नन्प्रहरन् । पत्तिः पदातिः । निरंतरमिति ग्रहणादिक्रियाविशेषणम् । ज्वलत्काष्ठं भ्रमणे यथा चक्रवद्भवति तद्वद्व्यस्फूर्जयदिति ॥ २४ ॥

**श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः**

तौ रामकृष्णौ । सैन्येन, यानध्वजै रथध्वजैः वाजिभिरश्वैः, सारथिभिश्च सहितौ । 'वाजी त्वश्वे शरे खगे' इति हलायुधः । श्रीशुक उवाचेति क्वचित्कः । जरासुत इति जराराक्षस्या संहितदेहत्वात्तद्दत्तशक्तित्वेन मनुष्यातीतशक्तिरुक्ता । माधवाविति दाशार्हावितिवत् । वस्तुतस्तु, साक्षान्मायानाशकत्वेन, तत्कार्यप्रपञ्चनाशने तु किंचिदपि प्रयासादिनेत्यर्थः ॥ २१ ॥ तालो वृक्षविशेषः । पुरं गृहम्, अट्टालकं गृहोपरीष्टकादिविरचितुरस्रस्थलम्, हर्म्यं धनिनां वासः, गोपुरं पुरद्वारम् । "पुरं नपुंसकं गेहं देहपाटलिपुत्रयोः । पुष्पादीनां दलावृत्तौ ना गुग्गुलो न ना पुरि ।' इति मेदिनी । "गोपुरं द्वारि पूर्द्वारिकैवर्ते मुस्तकेऽपि च" इत्यपि । 'हर्म्यादि धनिनां वासः' इत्यमरः । "इष्टिकादिविरचितं चतुरस्रं गृहोपरि । स्थलमट्टालिकं प्रोक्तमट्टः क्षौमं तदेव हि ।" इति कोशात् । सुपर्णेति तत्तद्ध्वजादर्शनमपि सूचितम् । पुरस्याट्टालिकं दुर्गोपरिरचितमुच्चगृहम्, हर्म्यं चोच्चप्रासादः, गोपुरं पुरद्वारम्, द्वन्द्वैक्यम् । उच्चारूढा अप्यलक्षयन्त्यो लक्षणैरप्यतर्कयन्त्यः शुचा शोकेनार्पिता व्याप्ताः । 'अर्दिताः' इति पाठे पीडिताः सत्यः सम्मुमुहुः । स्त्रीणां स्वभावतः एव स्नेहार्द्रचित्तत्वादिति भावः ॥ २२ ॥ 'अलिबाणौ शिलीमुखौ' इत्यमरः । उज्जृंभितवान् उच्चैश्चकार । हरिरिति युग्मकम् । हरिरिति परसैन्यहरणात् । पडिनमत्र सम्पातेन वित्रासनमेव न तु छेदनम् 'मुकुन्दोऽथाऽक्षतबलः' इति वक्ष्यमाणत्वात् ॥ २३ ॥ तत् शरासनोहस्तृमणम् । 'निषंगः संगते तूणे' इति मेदिनी । अथ ग्रहणो-त्तरम् । तान्शरान् । गुणे मौर्व्याम् । "अलातं दीप्तकाष्ठे स्यादगृहीते तु वाच्यवत्" इति धरणिः तद्विद्याविशेषाभिव्यञ्जमं शृण्वित्याह—गृह्णन्निति । निषंगादिषुधेः सकाशादेकैकशरान् गृह्णन् अथानुगुणे तान्सन्दधत् । गुणमाकृष्य तान्मुंचँस्तैश्च रथा-दीन्निघ्नन् । निरन्तरमिति ग्रहणादिसर्वक्रियाविशेषणम्, तेन ग्रहणयोजनकर्षणनिक्षेपणप्रहरणक्रियाः क्रमेणोद्भूता अपि सदैवोद्भू-वन्त्य एव द्रष्टृन्प्रति ताः क्षणार्थमध्ये शतकोटिकत्व उद्भवंतीत्यर्थः । अतएव अलातचक्रदृष्टान्तः ॥ २४ ॥

---

१. गम्य-वीर, वभिवीक्ष्य-विज. । २. पिताः-वीर विज. । ३. व्याघूर्णयत्-विज. । ४. पत्तीन्-श्रीश्वर. वंशी. जीव. वीर. विज. विश्व. शुक. सु. ।

### श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी

श्रीशुक उवाचेति क्वाचित्कं जरासुत इति जरा नाम राक्षस्या संहितदेहत्वात् तद्दत्तशक्तित्वेन मनुष्यातीतशक्तिरुक्ता। माधवाविति दाशार्हावितिवत् अत एवावृणोत्। सूर्य्यानलौ प्रलयकालसम्बन्धिनौ ज्ञेयौ। तम्प्रति महायोगितया तथैव भासमानत्वात् ॥ २१ ॥ सुपर्णेति तत्तद्ध्वजादर्शनमपि सूचितम्। हरिर्निजमनोहरणात् राम इति तन्मनोरमणात्। तयोरिति परमप्रियत्वं सूचितम्। पुरस्याट्टालकं दुर्गोपरि रचितमुच्चगृहं हर्म्यञ्चोच्चप्रसादं गोपुरञ्च द्वन्द्वैक्यं सम्यगाश्रिता उपर्य्यधिरूढा अपि मृधे युद्धभूमौ अलक्षयन्त्यः लक्षणैरप्यतर्कयन्त्यः शुचार्पिताः शोकेन व्याप्ताः सत्यः अर्द्दिता इति पाठे पीडिताः सत्यः सम्यङ् मुमुहुः यतः स्त्रियः स्त्रीणां स्वभावत एव स्नेहार्द्रचित्तत्वादिति भावः ॥ २२ ॥ हरिरिति युग्मकम्। तन्नाम च परसैन्यसंहाराभिप्रायेण पीडनमत्र सम्पातेन वित्रासनमेव नतु छेदनं मुकुन्दोप्यक्षत वल इति वक्ष्यमाणात् तच्च तेन स्वविद्याविशेषाभिव्यञ्जनात् अहो तत्र परमाश्चर्य्यं शृण्वित्याह—गृह्णन्नित्यादिना। अथानन्तरं तत्क्षणमेवेत्यर्थः। अस्य वक्ष्यमाणस्यानेकश इत्यस्यापि सर्व्वैरेवान्वयः ॥ २३ ॥ रथानिति तदीयांश्च ध्वजादीन् एतच्चाग्रे व्यक्तं भावि। अन्यत्तैः अत्रोज्जृम्भितवान् सटङ्कारं मुहुराकृष्य नमितवानित्यर्थः। चक्रवद्भ्रवतीति मण्डलाकारतया सर्व्वत्र वर्त्तत इत्यर्थः। तद्वदिति तादृशीं कृत्वेत्यर्थः। यद्वा, ततश्च यद्वदलातचक्रं तद्वदेव हरिः सर्व्वत्राप्यदृश्यतेति शेषः। किं कुर्व्वन् परेषां शितबाणपूगादीन् निघ्नन् ॥ २४ ॥

### श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी

सुपर्णेति तद्ध्वजादर्शनमपि सूचितम्, हरिनिजमनोहरणात्, रामो मनोरमणात्, तयोरिति परमप्रियत्वं सूचितम्, पुरस्य अट्टालकं हर्म्म्यञ्च उच्चप्रासादं गोपुरञ्च द्वन्द्वैक्यम्, सम्यगाश्रिता उपर्य्यधिरूढा अपि मृधे युद्धभूमौ अलक्षयन्त्यो लक्षणैरपश्यन्त्यः, शुचार्पिताः शोकव्याप्ताः सत्यः, सम्यङ् मुमुहुः, यतः स्त्रियः, स्त्रीणां स्वभावतः स्नेहार्द्रचित्तत्वात् श्रीभगवति भावविशेषाच्च ॥ २१ ॥ हरिरिति परसैन्यसंहाराभिप्रायेण; सुरैरसुरैश्चार्च्चितमादृतम्, तेषु तादृशधनुरभावात्; अतएवोक्तमुत्तममिति, एवं तस्यासाधारणत्वमुक्तम्। अथ अनन्तरं तत्क्षणमेवेत्यर्थः। अस्य वक्ष्यमाणस्यानेकश इत्यस्यापि सर्व्वैरेवान्वयः। रथानिति तदीयांश्च ध्वजादीन्, एतच्चाग्रे व्यक्तं भावि। कुञ्जरादींश्च नितरां घ्नन् ॥ २२-२३ ॥ नितरां पेतुर्मरणात् ॥ २४ ॥

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम्

शिलीमुखं रजः। पूरयामास ॥ २३-२५ ॥

### श्रीमद्वीरराघवाचार्यकृता भागवतचन्द्रचन्द्रिका

जरासुत इति। तौ सैन्यादिभिः सहितौ मधुवंशजत्वाद्द्वयोरपि माधवौ इति निर्द्देशः रामस्य माधवांशत्वाद्वा माधवव्यपदेशः अभिसृत्याभिमुखमागत्य बलीयसा महता सैन्यसमूहेनावृणोत् आवृतवान् ससैन्य इत्यस्य प्रथमैकवचनान्तपाठे जरासुतविशेषणत्वं यथा वायुरभ्रैः सूर्य्यं रेणुभिश्चाग्निमावृणोति तथेति दृष्टान्तार्थः अनेनादर्शनमात्रमेव नावरणमिति सूचितम् ॥ २१ ॥ सुपर्णेति। तदा पुरस्त्रियः पुरस्याट्टालकादीनां च समाहारः तत्समाश्रिता अधिरूढा अट्टालकाः उपरि भूमिका मृधे युद्धे सुपर्णध्वजतालध्वजाभ्यां चिह्नितौ सञ्जातचिह्नौ हरिरामयोः रथावपश्यन्त्यः अत एव शुचा अर्पिताः व्याप्ताः सम्मुमुहुर्विचित्ता बभूवुः ॥२२॥ हरिरिति परस्यानीकानि सैन्यानि तान्येव पयोमुचो मेघास्तेषां शिलीमुखा बाणास्तेषामत्युल्वणं दुःसहं वर्षं तेन पीडितं स्वसन्यमवलोक्य सुरैरसुरैश्च बहुमतमत्यर्थं (अन्वर्थं) शार्ङ्गाख्यं शरासनोत्तमं धनुःश्रेष्ठं विस्फूर्जयदुज्जृम्भितवान् सघोषज्यायुक्तमकरोदिति वा ॥ २३ ॥ गृह्णन्निति। निषङ्गात् तूणात् शरान् गृह्णन् धनुषीति शेषः विकृष्य सन्निहितत्वाच्छरानाकृष्य निशितबाणसमूहान् मुञ्चन् रथादीन्निघ्नन् ध्वंसयन्नवतस्थे इति शेषः पत्तयः पदातयः न विद्यतेऽन्तरं विच्छेदो यस्यां गृहणादिक्रियायां तद्यथा भवति तथा अवतस्थ इत्यर्थः। तादात्विकभगवच्छार्ङ्गस्य दृष्टान्तमाह–यद्वदलातचक्रमिति। यद्वद्यथा ज्वलत्काष्ठभ्रमणं चक्रवद्भाति तद्वद्धनुरासीदित्यर्थः। निरन्तरमित्यलातचक्रस्यैव वा विशेषणं विच्छेदरहितमलातचक्रं यथा तद्वद्धनुर्व्यस्फूर्जयदिति पूर्वेण सम्बन्धो वा ॥ २४ ॥

### श्रीविजयध्वजतीर्थकृता पदरत्नावली

माधवौ मधुकुले जातौ सैन्येन यानध्वजैः रथध्वजैर्वाजिभिरश्वैः सारथिभिश्च सहितौ "वाजीत्वश्वेशरे खगे" इति अभ्रै जलधरैः रेणुभिरच ॥ २१ ॥ सुपर्णतालध्वजाभ्यां चिह्नितौ अङ्कितौ हरिरामयोः कृष्णबलभद्रयोः रथौ विलक्षयन्त्यः पश्यन्त्यः पुरं गृहं अट्टालकं गृहोपरीष्टकादिविरचितचतुरस्रस्थलं हर्म्यं धनिनां वासः गोपुरंपुरद्वारम् अल्पवयसो अल्पसेनौ कृष्णरामो मागधं प्रलयार्णवोपमसेनं दृष्ट्वा समुत्पन्नया शुचा ॥ २२ ॥ व्यघूर्णयत् विस्फारयामास परानीकपयोमुचां शत्रुसेनामेघानाम् ॥ २३ ॥ श्रीकृष्णस्य हस्तलाघवं कथयति–गृह्णन्निति। निषङ्गात्तूणीरात् भ्राम्यमाणमलातचक्रम् उल्मुकमण्डलं निरन्तरं छिद्रदर्शनं दुःशकं यद्वत्तद्वत् ॥ २४ ॥

**श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी**

माधवौ मधुवंशोद्भूतौ वायुर्यथा सूर्यमभ्रैरग्निञ्च रेणुभिरावृणोति तथेत्यदर्शनमात्रमेवावरणमिति सूचितम् ॥ २१ ॥ शुचार्पिताः शोकव्याप्ताः शुचार्दिता इत्यपि पाठः । स्त्रिय इति पुम्भ्यः सकाशात् कृष्णे स्त्रीणामासक्त्याधिकात् ॥ २२ ॥ परेषां शत्रूणामनीकान्येव पयोमुचो मेघास्तेषां शिलीमुखा बाणास्तेषामत्युल्बणवर्षेण पीडितं व्यस्फूर्जयत् उज्जृम्भयामास ॥ २३ ॥ किं कुर्वन्नित्यत आह । निषङ्गात् इषुधेः सकाशात् शरान् एकैकान् गृह्णन् । अथ तदनन्तरं तान् गुणे सन्दधत् गुणमाकृष्य तान् मुञ्चन् तैश्च रथादीन्निघ्नन्निरन्तरमिति ग्रहणादि सर्वक्रियाविशेषणम् । तेन ग्रहणयोजनविकर्षणनिःक्षेपणप्रहरणक्रियाः क्रमेणोद्भूता अपि सदैवोद्भवन्त्य इव द्रष्टॄन् प्रतिभाताः क्षणार्द्धमध्ये शतकोटिकृत्वोद्भवन्तीत्यर्थः । ततश्च अलातचक्रं ज्वलत्काष्ठं भ्रमणे यथा चक्रवद्भवति तद्वदेव मथुरायाश्चतुर्दिक्षु सैन्याभिमुखं भ्रमन् शार्ङ्गं व्यस्फूर्जयदिति ॥ २४-२५ ॥

**गूढार्थदीपिनी**

न वै विकत्थन्ते नैव श्लाघन्ते ॥ २१ ॥ यथा वायुः अभ्रैः सूर्यं रेणुभिश्चानलम् तथा सैन्यादिसहितौ माधवौ रामकृष्णौ जरासुतः जरासन्धः तवावृणोदित्यन्वयः । अभिसृत्य संमुखमागत्य ॥ २२ ॥ गोपुरं पुरद्वारम् । संमुमुहुः उद्विग्ना बभूवुः ॥ २३ ॥ परेति शत्रुसैन्यरूपमेघानां मेघानां ये शिलीमुखा वाणास्तेषां दुःसहं वर्षं वृष्टिस्तेन । शार्ङ्गस्त्रियं धनुःश्रेष्ठं व्यस्फूर्जयत् टङ्कारयुक्तमकरोत् ॥ २४ ॥

**श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः**

माधवौ मधुवंशोद्भवौ अभिसृत्य अभिमुखमागत्य महाबलौघेन आवृणोत् आवृतवान् वायुरभ्रैः सूर्यं रेणुभिरग्निं यथा ऽऽवृणोति तद्वदिति अदर्शनमात्रमेवावरणमिति सूचितम् ॥ २१-२२ ॥ हरिः स्वभक्तक्लेशहरः परस्य जरासन्धस्य अनीकानि सैन्यान्येव पयोमुचो मेघाः तच्छिलीमुखानां वाणानामत्युल्बणेन वर्षेण पीडितं स्वसैन्यमालोक्य मुहुः व्यस्फूर्जयत् उज्जृम्भितवान् ॥ २३ ॥ किं कुर्वन् व्यस्फूर्जयदित्यत आह—गृह्णन्निति । निषङ्गादिषुधेः असङ्ख्येयवाणालयात् युगपत् अनेकान् गृह्णन् अथानन्तरं तान् गुणे सन्दधत् गुणमाकृष्य तान् मुञ्चन् तैश्च रथादीन् निघ्नन् ध्वंसयन् निरन्तरमिति ग्रहणादिक्रियाविशेषणम् ज्वलत्काष्ठभ्रमणे यथा चक्रवद्भवति तद्वत् शार्ङ्गं शरासनोत्तमं व्यस्फूर्जयत् इति पूर्वेण सम्बन्धः ॥ २४ ॥

**श्रीसत्यधर्मकृता श्रीभागवतटिप्पणी**

वीराश्च ते भूपालाश्च तेषां कदम्बः सङ्घस्तस्य जृम्भितमास्फोटजं शब्दम् । जृम्भितं करणे स्त्रीणामीहास्फुटितयोरपीति विश्वः । युगावसानस्य प्रलयस्य यद्घूर्णितं ध्वनिविशेषस्तेनोपमा यस्य तत् । उद्धृतो मृगराट् सृगालानां गोमायूनां घोषं निशम्येव कृष्णो निशम्य चेतसा न चचाल ॥ २१ ॥ सपरिच्छदौ सोपस्करणौ ॥ २२ ॥ सुदर्शनसहस्रारशब्दौ यौगिकौ । सु शोभनं दर्शनं यस्य तत् सहस्रमराणि दलानि यस्य तत् घोरं रिपूणां मनोरमं साधूनाम् ॥ २३ ॥ कुमोदकस्य हरेरियं कौमोदकी नाम्ना च कौमोदकी गुर्वी गदा शुभा सतां त्रिषु भागेषु कोट्योर्मध्ये चेति न तं शार्ङ्गेति संज्ञा यस्य तत् गुणेन ज्ययाऽन्वितं कार्मुकश्रेष्ठम्॥२४॥

**श्रीमद्वल्लभाचार्यकृता सुबोधिनी**

एवमुपदिष्टः युद्धं स्वहितं मन्यमानः ससामग्रीको युद्धार्थमागत इत्याह जरासुत इति । मातुः पुत्रोऽयम् । तत्रापि सा जरा, सर्वानेव विरूपान् करोति, कथमेनं त्यक्ष्यतीति । तत्रापि राक्षसी । तेन दुर्बुद्धिरप्ययं ज्ञापितः । अन्यथा तदुपदेशमेव गृहीत्वा, मरणं निश्चित्य, तेनैव सह किं युद्धं कुर्यात् । तौ कृष्णरामावभिसृत्य सर्वतः संवेष्टयित्वा महाबलौघेन आवृणोत् । माधवाविति । मधुवंशोत्पन्नाविति भगवन्ताविति वा, धनं दास्यत इति वा, पित्रोः स्वबलं प्रदर्शनीयमिति वा । जेष्यामीति बुद्ध्या प्रवृत्त इति ज्ञापयितुं साधनाधिक्यमाह बलीयसा महाबलौघेनेति । महत्त्वं स्वरूपेण, तादृशानां बहुत्वमोघः अन्तस्सारं बलम् । एवं गुणत्रयस्य विद्यमानत्वात् आवरणं कृतवान् । भगवत्सहायं सर्वमेव स्वार्थं गृहीतवानित्याह ससैन्येति । सैन्यसहितौ, यानसहितौ, तत्र त्वजवाजिसारथिभिः सहितौ । अनेनैवमुक्तं भवति, केचन सैन्ये लग्नाः, केचन रथे, केचन ध्वजयोः, केचनाश्वेषु, सूतयोरिति । एतयोरसम्भावितमावरणमिति ज्ञापयितुं दृष्टान्तमाह सूर्यानलाविति । न ह्यावरणं सूर्यं स्पृशति, अग्निं वा, परं पश्यतां चक्षुः प्रतिरोधकमेव । वायुस्थानीयो जरासन्धः, अभ्राणि सूर्यावरकाणि, रेणवोऽग्नेः ॥ २१ ॥ अतः स्वरूपे फलस्यायुक्तत्वात् दृष्टौ तज्जातमित्याह सुपर्णतालध्वजचिह्नितावितिति । सुपर्णध्वजो भगवद्रथः । तालध्वजो बलस्य । सेनामध्ये पतिताविति रेणुभिः विजातीयध्वजादिभिश्च व्यवधानात् अलक्षयन्तः अपश्यन्तो जाताः । एको दुःखहर्ता, अपरो रमयतीति सुखदाता । उभयोरत्यावश्यकत्वात् तददर्शने व्याकुलता उचितैव । स्त्रियश्च तत्र मुख्यतया द्रष्टुं समागता इति युद्धानभिज्ञत्वात् रसान्तरपरिग्रहे स्ववैयर्थ्यं सूचयन्त्यः शोकेनार्पिता जाता इत्याह स्त्रिय इति । पुरस्य अट्टालकाः अत्युच्चा भवन्ति । हर्म्याणि राज्ञां गृहाः । पुरद्वारं चात्युच्चम् । एतानि समाश्रित्यापि अलक्षयन्त्यः सम्यक् मुमुहुः, मूर्च्छां प्राप्तवत्यः । ततो जागरणे शुचा चार्पिताः । कृष्णो हि

भगवान् स्त्रीणामेवार्थे अवतीर्ण इति तद्बाधकत्वेनैव सैन्यं मारितवान्। न त्वन्यथेति स्वरूपविचारसिद्ध्यर्थमुक्तम्। अन्यथा सङ्कर्षणकार्ये भगवान् प्रविष्ट इति भवेत्। तच्चैकादशे न पुनरुक्तम्॥ २२॥ अतः स्त्रीणां दुःखनिवृत्त्यर्थं भगवान् सैन्यं निहतवानित्याह हरिरिति। सूर्यस्थानीयो हि भगवान्। तत्र मेघस्थानीयाः तदीयाः। अतस्तेषां निराकरणमनायासेनैव भविष्यतीति निरूपयितुं तेषां सेनामनुवदति परानीकपयोमुचामिति। शत्रूणामनीकमेव पयोमुचः मेघाः। तेषां शिलीमुखान्येवोल्वणवर्षः। तेन पीडितं स्वसैन्यम्। अनेन महाशूरा अपि, अहन्यमाना अपि, यथा वृष्टौ समागतायां सर्व एव भीताः पलायन्ते, न हि वृष्टिः कांश्चिन्मारयति, मृता वा भवन्ति केचन, तथापि महाशूरा अपि राजानमपि परित्यज्य पलायन्ते, तथा अत्र जातमित्युपहासार्थं निरूपितम्। स्त्रीषु कृपा, तेषु च हास्यरसमुत्पन्नमिति भावः। अत उभयोरपि हितचिकीर्षया स्वशार्ङ्गं गृहीतवानित्याह सुरासुरार्चितमिति। सुराणां हितम्, असुराणां मोक्षम्, द्वयं दास्यतीति ज्ञात्वा शार्ङ्गं धृतवान्, विशेषेणास्फूर्जयत्। शार्ङ्गज्यानिनादः सुराणां चित्ते भयनिवर्तको भवतीति प्रथमं सन्देहनिवारणार्थमाश्वासनमुक्तवान्। 'यज्ज्यानिनादश्रवणात् सुराणां चेतांसि निर्मुक्तभयानि सद्यो भवन्ति' इति वाक्यात्। शार्ङ्गं एव शरासनेषु उत्तमम्। अनेनाशनिवाणवर्षमिति तस्य द्वितीयं माहात्म्यमुक्तम्। भगवतः अनेकान्यपि धनूंषि सन्तीति बोधितम्। शरासन्धपदेन देवतारूपत्वं प्रतिषिद्धम्। अन्यथा माहात्म्यमुक्तं न भवेत्॥ २३॥ इदानीं भगवतो युद्धचातुर्यमाह गृह्णन्निषङ्गादिति। अतितेजस्विनां स्वागमेऽपि स्वशक्तिस्तिष्ठतीति क्रियाशक्तेर्व्यापकता नित्यता चोक्ता भवति। निषङ्गात् तूणीरात् शरान् गृह्णन्, अथ तदनन्तरं तस्य योजनाप्रकारेण योजितवान्। ततो विकृष्य मुञ्चन्, ततः चतुरङ्गिणीं सेनां निघ्नन्। जात इति प्रत्येकं वा सम्बन्धः। चतुर्धा भगवत्कृतिः।

स्थानात् प्रच्यावनं पूर्वं साधने योजनं तथा। फलार्थं विनियोगश्च फलसिद्धिरिति क्रमात्॥ १॥

मोचनसमयेऽपि ग्रहणमावर्तते चेत्, तदा क्रिया अपरिच्छिन्ना भवति, नान्यथेत्यत आह निरन्तरमिति। अन्तराभावो यथा भवति तथेति। चतुर्णां विशेषणं। तदसंभावितं मत्वा दृष्टान्तमाह यद्वदलातचक्रमिति। अलातचक्रं परिभ्रममाणं सर्वत्र विद्यमानमिव मण्डलाकृति भाति, तद्वन्निरन्तरमिति सम्बन्धः। यद्यपि भगवतः क्रियाशक्तौ न सन्देहः, तथापि स्वयमपि वक्ष्यति। लोके निरूपणे असंभावना मा भवत्विति दृष्टान्तमप्याह। निषङ्गादित्येकवचनेनाक्षयतूणीरता निरूपिता। अथेति भिन्नोपक्रमेण। अनेक शरेण एतावत् मारयिष्यामीति पूर्वं सङ्कल्पो निरूपितः। तदैव च निघ्नन् जातः, अन्यथा काकतालीयवत् भगवत्प्रवृत्तिरपि स्यात्। ततश्च न पराक्रमः सिध्येदिति। एतावदथशब्देन निरूपितम्। सन्दधत् सम्यग् धनुषि योजयन्। शरानित्यस्त्रव्यावृत्यर्थम्। अन्यथा देवताया एव सामर्थ्यं भवेत्। शरानिति बहुवचनं सकृदपि बहूनां सन्धानं सूचयन्ति। विकृष्य मुञ्चनिति। मानुषक्रियैवात्र व्यापृता भगवता, न त्वलौकिकं किञ्चित्प्रकाशितमिति ज्ञापितम्। शितास्तीक्ष्णाः ते च ते बाणाश्च तेषां पूगः समूहो येषु। एकस्मिन् बाणे भगवत्क्रिया व्यापृतेति भगवता स मुक्त इति परिच्छेदे निवृत्ते सहस्ररूपः स एव जात इति बाणस्यानन्तत्वे प्रतिपादिते तेन मोचितशराणामपि अनन्तत्वं फलिष्यतीति तथोक्तम्। अन्यथा पुनरुक्तदोषः स्यात्। सन्धितानामेव विमोकस्य सिद्धत्वात्। नितरांघ्नन्निति सकृत् प्रहारेणैव प्राणवियोगः शरीरस्य शतधा खण्डाश्च प्रदर्शिताः। चतुरङ्गसेना सर्वैव मारिता इति ज्ञापयितुं गणनामाह। रथान् कुञ्जरान् वाजिनः पत्तयः पदातयः। पत्तीरिति स्त्रीप्रयोगः। एको बाणः एकां पत्तिमनेकां वा मारयतीति सूचयति। 'एकेभैकरथा अश्वा पत्तिः पञ्चपदातिके'ति। पत्तीनिति वा पाठः। शूराणां प्राणवियोगमात्रे न सामर्थ्यं सिध्यति। मर्मस्थानस्पर्शे अल्पप्रहारेणापि प्राणवियोगसम्भवात्॥ २४॥

## श्रीसुबोधिनी-सारः

शुकोक्तिः। जरायाः सुतो जरासन्धोऽभिसृत्य बलीयसा महाबलौघेन महता सैन्यसंघेन सैन्ययानध्वजवाजिसारथिभिः सहितौ माधवौ रामकृष्णवावृणोत् परिवेष्टितवान्। वायुरभ्रैः सूर्यं रेणुभिरग्निमिव ॥२१॥ सुपर्णो गरुडः तालो वृक्षस्ताभ्यामुपलक्षिताभ्यां ध्वजाभ्यां चिह्नितौ हरिरामयो रथौ अलक्षयन्त्योऽपश्यन्त्यः पुरादिकमारूढाः स्त्रियो माथुर्य्यः शुचा शोकेनार्दिता व्याप्ताः संमुमुहुर्मोहं प्रापुः॥ २२॥ परस्य शत्रोरनीकानि सैन्यानि तान्येव पयोमुचो मेघास्तेषां शिलीमुखा बाणास्तेषामत्युल्वणं वर्षं तेन पीडितं स्वस्य सैन्यम् आलोक्य दृष्ट्वा सुरैरसुरैरर्चितं पूजितं शार्ङ्गं शरासनोत्तमं धनुर्वरं सज्जं चकार॥ २३॥ निषंगात् बाणकोशात् शरान् गृह्णन् अथ गुणे संदधत् आरोपयन् विकृष्य शितास्तीक्ष्णा ये बाणास्तेषां पूगान् समूहान् मुञ्चन् त्यजन् रथान् हस्तिघोटकपदातीन् निघ्नन् सन् निरन्तरमच्छिद्रं यथा भवति तथा अलातचक्रं ज्वलत्काष्ठचक्रं यद्वत्॥ २४॥

## विवरणटिप्पणी

जरासुत इत्यत्र। धनं दास्यत इति वेति। लक्ष्मीधवत्वादिति भावः। पित्रोरिति। तदा मापदेन एकदेशग्रहणेन माता तस्याः धवः पितेत्यर्थः। भगवत्सहायमिति। सर्वमेव भगवद्बलं स्वाधीनं कृतवानित्यर्थः। सुपर्णेत्यस्याभासे। स्वरूपे इति। भगवत्स्वरूपे जरासन्धाभिलषितस्य विपरीतफलस्यायुक्तत्वात्सर्वेषां दृष्टौ तत्फलं जातमित्याह। स्त्रीणां दर्शनाभावाच्छोकोपि जातः। भगवति तु न कापि क्षतिः सम्पन्नेत्यर्थः। सुपर्णेत्यत्र। रमयतीति। यथैव भगवद्रमणं सम्भवति, तथैव संपादयतीत्यर्थः।

अतएव हेतुमण्णिजन्तमुक्तम् । स्त्रियश्चेति । अलक्षयन्तः सर्वेऽपि जाताः । तत्र स्त्रियः शोकार्पिता अपि जाता इत्यर्थः । हरिरित्यत्र । अनेन अशनीति । शार्ङ्गस्य शरासनोत्तमत्वकथनेनेत्यर्थः । शार्ङ्गपदस्य तात्पर्यमाहुः भगवतः इति । गृह्णन्नेव संदधत्, संदधदेव मुञ्चन्, मुञ्चन्नेव निघ्नन् इति सर्वासां क्रियाणां वर्तमानतेत्याशयेनाहुः व्यापकता नित्यता चेति । तथा सति अथपदमनर्थकं स्यादित्यत आहुः निषङ्गादिति । स्वयमपीति । वक्ष्यतीति लृडादेशशत्रन्तात्सप्तम्यन्तम् । शुके स्वयमपि वक्ष्यति सति लोके इत्याद्यग्रिमेणान्वयः । प्रथमपक्षे अथपदस्यार्थमाहु' अथेतीति । ते च ते बाणाश्चेति । बाणाः शराग्रभागाः । बृहदारण्यके 'बाणवन्तौ सपत्नातिव्याधिना'वित्यत्र तथा निरूपणात् । तेन मोचितशराणामिति । बाणेन सह मोचितानां शराणामित्यर्थः । बाणस्यैव कार्यकारित्वेन मुख्यत्वाच्छराणां सहभावः । संधितानामिति । संधितानामेव विमोकः सिद्धोभवति । तत्र तु ततो मुक्तस्य बाणस्य सहस्रत्वमधिक' विवक्षितमतो न पुनरुक्तिरित्यर्थः ॥ २४ ॥

### गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

इत्युक्तो जरासुतो जरासन्धः सैन्यादिभिः सहितौ माधवौ मधुवंशे जातौ तौ रामकृष्णावभिसृत्य अभिमुखमागत्य बलीयसा महता बलौघेन सैन्यसमूहेनावृणोत् आवृतवान् । 'तदावरणमप्यदर्शनमात्रमकिञ्चित्करमेव' इति सूचयन् दृष्टान्तद्वयमाह- सूर्यानलाविति । वायुर्यथा अभ्रैः सूर्यं, रैणुभिश्चाग्निमावृणोति तथेत्यर्थः ॥ २१ ॥ तदा च पुरस्य अट्टालिकादि समाश्रिता अधिरूढाः स्त्रियो मृधे युद्धभूमौ सुपर्णध्वजतालध्वजाभ्यां चिह्नितौ हरिरामयो रथौ अपश्यन्त्यः शुचार्दिताः शोकव्याप्ताः सत्य सम्मुमुहुः विचित्ता बभूवुरित्यन्वयः ॥ २२ ॥ तदा हरिः परस्यानीकानि सैन्यान्येव पयोमुचो मेघास्तेषां शिलीमुखा बाणास्तेषां अत्युल्बणं दुःसहं वर्षम्, तेन पीडितं स्वसैन्यमवलोक्य सुरैरसुरैश्च अर्चितं श्रेष्ठत्वेन सम्मतं शार्ङ्गाख्यं शरासनोत्तमं धनुश्रेष्ठं व्यस्फूर्जयत् सघोषज्यायुक्तमकरोत् ॥ २३ ॥ ततश्च निरन्तरं यथा भवति तथा निषङ्गात् तूणीरात् शरान् निगृह्णन् अथ तान् धनुषि सन्दधन् अथ तान् शितबाणपूगान् तीक्ष्णशरसमूहान् विकृष्य मुञ्चन् तैश्च रथादीन् विघ्नन् यद्वत् यथा अलातचक्रं परिभ्रमज्ज्वलत्काष्ठं तथा चतुर्दिक्षु सैन्याभिमुखं परिभ्रमन् बभूवेति शेषेणान्वयः ॥ २४ ॥

### अन्वितार्थप्रकाशिका

नेति ॥ शूरा नैव विकत्थन्ते आत्मानं नैव श्लाघन्ते किन्तु श्लाघाहेतु पौरुषमेव दर्शयन्तीति । अतः हे राजन् ! आतुरस्य जामातृमरणदुःखितस्य मुमूर्षतः मर्त्तुमिच्छतः तव गुप्तेनेत्यादिवचो न गृह्णीमः ॥ २१ ॥ जरासुत इति ॥ इत्युक्तो जरासुतः सैन्ययानध्वजवाजिसारथिभिः सहितौ तौ माधवौ रामकृष्णौ अभिमुखमागत्य बलीयसा महता बलौघेन सन्यसमूहेनावृणोत् आवृतवान् । तत्र दृष्टान्तः वायुरिव वायुर्यथा अभ्रैः सूर्यं रैणुभिश्चानलमग्निं प्रावृणोति तथा अदर्शनमात्रमेवावरणमिति सूचितम् ॥ २२ ॥ सुपर्णेति ॥ पुरस्य अट्टालकः दुर्गोपर्युच्चगृहाणि हर्म्याणि उच्चप्रासादाः गोपुराणि पुरद्वाराणि च तेषां समूहं समाश्रिताः अधिरूढाः स्त्रियो मृधे युद्धभूमौ सुपर्णध्वजतालध्वजाभ्यां चिह्नितौ हरिरामयो रथौ अलक्षयन्त्यः अपश्यन्त्यः शुचार्पिताः शोकव्याप्ताः सत्यः संमुमुहुः विचित्ता बभूवुः । पुमपेक्षया स्त्रीणामधिककातर्यात् कृष्णे आसक्त्याधिक्याच्च ॥ २३ ॥ हरिरिति ॥ तदा हरिः परस्यानीकानि सैन्यान्येव पयोमुचो मेघास्तेषां मुहुः शिलीमुखा बाणास्तेषामत्युल्बणं दुःसहं वर्षं तेन पीडितं स्वसैन्यमालोक्य सुरैः असुरैश्च अर्चितं श्रेष्ठत्तेन संमतं शार्ङ्गाख्यं शरासनोत्तमं धनुःश्रेष्ठं व्यस्फूर्जयत् सघोषद्वयायुक्तमकरोत् ॥ २४ ॥

### श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्

अभिसृत्यतयोः संमुखमागत्य सैन्यादिसहितौ । तौ माधवौ मधुकुलोत्पन्नौ । महता बलौघेनानीकसमुदायेनाऽऽवृणोत् आवृतवान् । काविव । अनिलः । अभ्रैर्भानुमिवरेणुभिश्च अनलमिव तद्वत् ॥२१॥ सुपर्णतालध्वजचिह्नितौ सुपर्णो गरुडः तालस्तालवृक्षश्च तच्चिह्नवन्तौ यौ ध्वजौ ताभ्यां चिह्नितौ हरिरामयोः रथौ गरुडध्वजचिह्नितं कृष्णरथं तालध्वजचिह्नितं रामरथं च । पुरस्य अट्टालकं दुर्गोपर्युच्च गृहं च । हर्म्यमुच्चप्रासादश्च गोपुरं च तेषां समाहारस्तत् । एतत्त्रयं समाश्रिताः समारूढा अपि मृधे रणभूमौ । अलक्षयत्यो लक्षणैरप्यतर्कयन्त्यः ॥ २२ ॥ परेषां शत्रूणामनीकानि सैन्यान्येव पयोमुचो मेघास्तेषां । शिलीमुखैः शरैस्तद्रूपैर्विंदुभिः । अत्युल्वणं दुःसहं । यद्वार्षणं तेन पीडितं । शरासनोत्तमं चापोत्तमं च तत् शार्ङ्गं च शार्ङ्गशरासनोत्तमं तत् व्यस्फूर्जयत् सज्यंकृतवान् । राजदंतादित्वात् शरासनोत्तमराष्टस्य परनिपातः ॥ २३ ॥ गृह्णन्निति । निषंगात् शरधेस्तूणीरादिति यावत् । शरान् गृह्णन् । अथ तान् प्रत्यंचायां संदधत् । तामाकृष्यतीक्ष्णवाणपूगानमुंचन् । रथांदींश्च निघन् ताडयन् । पत्तीन् पदातीन् निरन्तरमिति बाणग्रहणादिक्रियाणां पृथक्पृथग्विशेषणं यद्वत् यथा । अलातचक्रं ज्वलत्काष्ठं भ्रमणे चक्रवत् दृश्यते तद्वत् संततग्रहणमुंचनादिक्रियाबोध्या ॥ २४ ॥

### भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

सुपर्णेति । सुपर्णो गरुडः तालो वृक्षविशेषस्ताभ्यां युक्ताभ्यां ध्वजाभ्यां चिह्नितावङ्कितौ, हरिरामयोः कृष्णबलभद्रयोः, रथौ, पुरा प्राक् सम्यग्विलोकयन्त्य इति शेषः । सांप्रतं, मृधे संग्रामे, अलक्षयन्त्यः, अट्टालकहर्म्यगोपुरं, समाश्रिताः स्त्रियः, शुचा

शोकेन, अर्पिता व्याप्ताः सत्यः, संमुमुहुः विचित्ता बभूवुः । स्त्रियः पुरोऽट्टालकेति पाठे, पुरो मथुरायाः, स्त्रिय इत्यन्वयः । पुराट्टालकेति समस्तपाठे पुरस्य अट्टालकाः, तत्राट्टालका उपरि भूमिकाः, हर्म्याणि गृहाणि, गोपुरं पुरद्वारम् ॥ २१ ॥ हरिरिति । हरिः परस्य शत्रोरनीकानि सैन्यानि तान्येव पयोमुचो मेघास्तेषां, मुहुः शिलीमुखा बाणास्तेषामत्युल्बणं दुःसहं वर्षं प्रवर्षणं तेन पीडितं, स्वसैन्यं आलोक्यावलोक्य, सुराश्चासुराश्च तैरर्चितं बहुमतं, शार्ङ्गं शरासनोत्तममतिश्रेष्ठं शार्ङ्गाख्यं धनुरित्यर्थः । व्यस्फूर्जयत् उज्जृम्भितवान् । सघोषज्यायुक्तमकरोदिति वा ॥ २२ ॥ गृह्णन्निति । शरान् बाणान्, निषङ्गात्तूणीरात्, गृह्णन्, अथ संदधत्, धनुषीति शेषः । विकृष्य शरासनमाकृष्य, शितबाणपूगान् निशितबाणसमूहान्, मुञ्चन्; रथान्, कुञ्जरवाजिपत्तीन्, कुञ्जरा हस्तिनः, वाजिनोऽश्वाः, पत्तयः पदातयः, निघ्नन् ध्वंसयन् सन्, निर्नविद्यते अन्तरं विच्छेदो यस्यां ग्रहणादिक्रियायां यथा भवति तथा, अवतस्थ इति शेषः । तदा, धनुरपि, यद्वद्यथा, अलातचक्रं भ्रमज्ज्वलत्काष्ठं तद्वत् । आर्यादिति शेषः । निरन्तरमित्यलातचक्रस्यैव वा विशेषणम् । विच्छेदरहितमलातचक्रं यथा तद्वद्धनुर्व्यस्फूर्जयदिति पूर्वेण सम्बन्धो वा ॥ २३ ॥ तादात्विकं भगवच्छरपीडितं परसैन्यमनुवर्णयति । निर्भिन्नेति । तदा, निर्भिन्नाः कुम्भाः कुम्भस्थलानि येषां ते, करिणो गजाः, निपेतुः । शरैः वृक्णा कन्धरा ग्रीवा येषां तथाभूताः, अनेकशः, अश्वा हयाः, अश्वाश्च ध्वजाश्च सूताः सारथयश्च नायका रथिनश्च हता अश्वादयो येषां ते, रथाः, भुजा बाहवश्च ऊरवश्च कंधरा ग्रीवाश्च छिन्नाः भुजादयो येषां ते, पदातयश्च, निपेतुः ॥ २४ ॥

**कृष्णप्रिया**

श्रीशुकाचार्यजी ने कहा राजन् परीक्षित ! जरा दासी का पुत्र जरासन्ध ने समीप जाकर अपनी विशाल सेना से श्रीकृष्ण बलभद्रजी को, उनकी सेना को, सारथि सहित रथ ध्वजा अश्वों को इस प्रकार घेर लिया, कि जैसे वायु बादलों से रवि को एवं रेणुओं से अग्नि को घेर लेता है ॥ २१ ॥ गरुडध्वज भगवान श्रीकृष्ण का रथ को एवं तालध्वज श्रीबलभद्रजी के रथ को युद्ध में न देखकर श्रीमथुरानगरी के अट्टालिकाओं, राज महल और नगर के विशिष्ट भवनों के बड़े दरवाजों पर चढ़ी हुई नगर नारियाँ शोक से संतप्त होकर मूर्छित हो गई ॥ २३ ॥ भगवान् श्रीकृष्ण ने जब देखा कि शत्रु सैन्य के वीर पुरुष हमारे सैन्य पर इस प्रकार शरवृष्टि कर रहे हैं मानों मेघ भयकर जलधाराओं से वृष्टि कर रहा है और हमारा सैन्य अतिशय व्यथित एवं पीड़ित हो रहा है तब प्रतीकार एवं सैन्य रक्षा के लिए सुर और असुरों से समर्चित अपने शार्ङ्गनाम के धनुष का टङ्कार किया ॥ २३ ॥ पुनः पुरुषोत्तम तरकस में से बाणों को निकालने, धनुष पर चढ़ाने और धनुष की डोरी-प्रत्यञ्चा खींचकर बाणों के समूह को छोड़ने लगे । तब श्रीकृष्ण भगवान का वह शार्ङ्ग धनुष इतनी वेगीली गति से चल रहा था मान लो कोई अत्यन्त वेग से अलाव चक्र को घुमाता हो भगवान् श्रीकृष्ण राजा की हाथी, घोड़े, पैदल, रथों की चतुरंगिणी सेना का संहार करने लगे ॥ २४ ॥

**[1]निर्भिन्नकुम्भाः करिणो निपेतुरनेकशोऽश्वाः शरवृक्णकन्धराः ।**
**रथा हताश्वध्वजसूतनायकाः पदातयश्छिन्नभुजोरुकन्धरा ॥ २५ ॥**
**संछिद्यमानद्विपदेभवाजिनामङ्गप्रसूताः शतशोऽसृगापगाः ।**
**भुजाहयः पूरुषशीर्षकच्छपा हतद्विपद्वीपहयग्रहाकुलाः ॥ २६ ॥**
**करोरुमीना नरकेशशैवला धनुस्तरङ्गायुधगुल्मसङ्कुलाः ।**
**[2]अच्छूरिकावर्तभयानका महामणिप्रवेकाभरणाश्मशर्कराः ॥ २७ ॥**
**प्रवर्तिता भीरुभयावहा मृधे मनस्विनां हर्षकरीः[3] परस्परम् ।**
**विनिघ्नतारीन् मुसलेन दुर्मदान् सङ्कर्षणेनापरिमेयतेजसा ॥ २८ ॥**

---

१. ततः शशाङ्काकृतिपाञ्चजन्यं महारवं दैत्यकुलापचारम् । मुखे निधायाशु पुपूर यादवानाश्वासयन् क्षत्रियकूटघट्टितान् ॥ १ ॥
नृपास्तदाकर्ण्य तु कर्णनिष्ठुरं क्रमेण निर्भिन्नहृदो बभूविरे । यदुप्रवीराश्च समुद्यतायुधा रणे नृपाञ्जघ्नुरनीकसंयुताः ॥ २ ॥
ततश्चातुर्द्वारगतान्महीपतीन्यदुप्रवीराः परिभूय सर्वशः । चक्रुः शरौघैः सहसैकवाहिन आप्यायिताः शार्ङ्गरवेण शौरिणा ॥ ३ ॥
ततो हरिं चैद्यपतिर्मण्डलीकृतकार्मुकः । भर्त्सयन्कृष्णकृष्णेति तिष्ठतिष्ठेति चाब्रवीत् ॥ ४ ॥
तमभ्यधावद्गोविन्दो विमुञ्चन्सायकान्बहून् । मण्डलीकृतकोविदण्डस्तैलधौताञ्छिताञ्शरान् ॥ ५ ॥
ततः पञ्च शरान्घोरानादाय दमघोषजः । चतुर्भिस्तुरगानाशु विव्याधैकेन सारथिम् ॥ ६ ॥
भूयो दशाशु सन्धाय विव्याध मधुसूदनम् । व्यनदत्सिंहनादं च तदद्भुतमिवाभवत् ॥ ७ ॥

**कवमक्षम।**

**अन्वयः—**करिणः, निर्भिन्नकुम्भाः, निपेतुः, शरवृक्णकन्धराः, अनेकशः, अश्वाः निपेतुः, हताश्वध्वजसूतनायकाः, रथाः निपेतुः, छिन्नभुजोरुकन्धराः, पदातयः, निपेतुः ॥ २५ ॥ अपरिमयतेजसा, सङ्कर्षणेन, मुसलेन, दुर्मदात्, अरीत्, संछिद्यमान, द्विपद इभवाजिनाम्, अङ्गप्रसूताः, शतशः, असृगापगाः, प्रवर्तिताः, ( ताः सरितः ) भुजाहयः पुरुषशीर्षकच्छपाः हतद्विपद्वीपहय-ग्रहाकुलाः ( भान्ति, ( पुनः ताः सरितः ) करोरुमीनाः, नरकेशशैवलाः, धनुस्तरङ्गायुधगुल्मसंकुलाः, अच्छूरिकावर्तभयानकाः, महामणिप्रवेका भरणाश्मशर्कराः ( असृगापगाः शोणितसरितः ) मृधे, भीरुभयावहाः, मनःस्विनाम्, परस्परम् हर्षकरीः, ( समभवन् ) ॥ २६-२८ ॥

**श्रीधरस्वामीविरचिता भावार्थदीपिका**

हता अश्वा ध्वजाः सूता नायका रथिनश्च येषु ते ॥ २५ ॥ संछिद्यमाना द्विपदा इभा वाजिनश्च तेषामङ्गेभ्यः प्रसूता असृगापगा रुधिरनद्यः परस्परं प्रवर्तिता इति तृतीयेनान्वयः । प्रसिद्धनदीरूपकमाह । भुजा एवाहयो यासु ताः । पुरुषाणां शीर्षाण्येव कच्छपा यासु ताः । हता द्विपा एव द्वीपा अन्तर्वर्तितटानि हया एव ग्रहा ग्राहास्तैश्चाकुला व्याप्ताः ॥ २६ ॥ करा ऊरवश्च मीना यासु ताः नराणां केशा एव शैवालं यासु ताः । धनूंष्येव तरंगा आयुधान्येव गुल्मास्तैश्च तैश्च संकुलाः । अच्छरिकाश्चर्माणि चक्राणि वा तान्येवावर्तास्तैर्भयानकाः । महामणीनां प्रवेका उत्तमा आभरणानि च यथायथमश्मानः शर्कराश्च यासु ताः ॥ २७ ॥ भीरूणां भयावहाः । मनस्विनां धाराणां हर्षकर्यः किं च संकर्षणेनापि तद्वलं क्षयं प्रणीतम् ॥ २८ ॥

**श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः**

निर्भिन्नकुम्भा विदलितमूर्धानः "कुंभो राश्यंतरे हस्तिमूर्द्धांसे राक्षसांतरे" इति मेदिनी । अनीकशः राशिशः "अनीकोऽस्त्री रणे सैन्ये समूहे दुर्गतेऽपि च" इति धरणिः ॥ २५ ॥ 'इभः स्तंबेरमः पद्मी' इत्यमरः । "द्वीपोऽस्त्रियामन्तरीपं यदन्तर्वारिणस्तटम्" इति च । 'ग्रहो ग्राहे च रव्यादौ' इति धरणिः ॥ २६ ॥ "जलनीली तु शैवालं शैवलोऽथ" इत्यमरः गुल्मा लवल्यः "गुल्मः सेनाघट्टभिदोः सैन्यरक्षणरुग्भिदोः । स्तंबे स्त्रियामामलक्यां लवलीवस्त्रवेशयोः ॥" इति मेदिनी । "अच्छूरिका स्यात्पुलके वृत्तचक्रध्वनिष्वपि" इति तीर्थः । "प्रवेकस्तूत्तमे पुंसि वाच्यवत्स्याद्विवेक्तरि" इति निरुक्तिः । 'आवर्तस्त्वंभसां भ्रमः' इति । यथायथं । मणय अश्मानः पाषाणानि 'अश्मनी मणि पाषाणे' इति कोशात् । अलंकाराश्च शस्त्रभेदनाच्छर्करावज्जाताः, शर्कराः सिकता वालुका इति यावत् "शर्करा खण्डविकृतावुपलाकर्परांशयोः । शर्करान्वितदेशेऽपि रुग्भेदे शकलेऽपि च ॥" इति मेदिनी । अच्छूरिकाचर्माणि चक्राणि वा । पञ्चमस्कन्धे 'अच्छूर्यमृतमणी' इत्यादौ प्रयुक्तश्चक्र एव ॥ २७ ॥ परस्परमन्योन्यम् । न केवलं श्रीकृष्णेनैव नद्यः प्रवर्तिता इत्याह—किञ्चेति । यद्यपीह कृष्णेनेति नोक्तं तथापि 'क्षयं प्रणीतं वसुदेवपुत्रयोः' इत्यग्रिमप्रद्योक्तिविरोधात्तेनापीति बोध्यम् । दुर्मदान् दुष्टाहंकारान् । साक्षाच्छ्रीभगवता सह युद्धात् । यद्वा—निजबलादिना महामत्तानित्यर्थः । तेजः पराक्रमः ॥ २८ ॥

**श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी**

निर्भिन्नकुम्भा इत्यादिना तत्रापि योग्यायोग्यस्थान एव वेधनमिति विशेषोक्तिः ॥ २५ ॥ संच्छिद्येति सार्द्धद्वयम् । गुल्माः स्तम्बा अप्रकाण्डवृक्षजातयः अच्छूरिकाशब्दो वैदिकः पञ्चमस्कन्धेऽपि प्रयुक्तोऽस्ति अस्फूर्यमृतमणीत्यादौ परस्परं हर्षकरी वीर-

ततस्तमाह गोविन्दः साधुसाध्विति पूजयन् । भो भो चैद्य महेष्वास वीरोसि बलवानसि ॥ ८ ॥
अतो मे पश्य दुर्बुद्धे धानुष्मत्त्व स्वयं रणे । इति ब्रुवति गोविन्दे राजानः सर्व एव ते ॥ ९ ॥
विव्यधुर्निशितैर्बाणैर्युगपद्येन माधवम् । तांस्तान्प्रत्येकशः कृष्णो विद्ध्वा पञ्चभिराशुगैः ॥ १० ॥
सारथिं चतुरो वाहाननयद्यमसादनम् । त्रिभिस्त्रिभिः शरैर्भूयोप्येकैकं नृपतीन्रणे ॥ ११ ॥
वक्षस्यास्ये ललाटे च विव्याध यदुनन्दन । ततश्च त्रिशतां राज्ञां त्रिशत्कार्मुकमाहवे ॥ १२ ॥
त्रिशद्भिः सायकैराशु चिच्छेद यदुपुङ्गवः । दमघोषसुतस्यापि धनुश्छित्वा त्रिभिः शरैः ॥ १३ ॥
ध्वजं च मुकुटच्छत्रे चकर्त प्रहसन्निव । ततो दश हरिर्भल्लान्शार्ङ्गे सन्धाय माधवः ॥ १४ ॥
आकर्णान्तं समाकृष्य चैद्यं विव्याध सङ्गरे । तेन राजन्यकटकं विभ्रान्तं शरताडितम् ॥ १५ ॥
कालान्तमारुतोद्धूतशैलद्रुमलतोपलम् । त्रातारं नाध्यगच्छद्वै हताश्वरथसारथि ॥ १६ ॥
शरान्विमुञ्चञ्जलजं च पूरयन्विस्फूर्जयन्कार्मुकमुग्रपौरुषः । विलोकयन्मागधसैन्यमाहवे निरन्तरं यद्वदलातचक्रम् ॥ १७ ॥

एते सप्तदश श्लोकाः विजये मुनिभावप्रकाशिकापाठेऽपि दृश्यन्ते ।

२. आस्थू-वीर । आस्फूजिता-विज. । अस्थू-इति कस्यचित् । ३. वहाः-विज ।

स्वाभाव्यान्मारयतां मार्यमाणानाञ्चानन्दप्रदाः प्रवर्त्तिताः श्रीभगवतैव । यद्वा असृगापगा एव परस्परं प्रवर्त्तिताः मिलित्वा मर्हिता इत्यर्थः । तत्र प्रथमपक्षे निर्भिन्नकुम्भा इत्यादिना तत्पराक्रमवर्णनस्यैव सोत्साहमपक्रान्तत्वात् मुकुन्दोऽप्यक्षत बल इत्यादि वक्ष्यमाणात् परस्परं हर्षकरीरित्यव्यवहितान्वयाच्च । द्वितीयपक्षे तत्रैव तात्पर्यात् ॥ २६-२७ ॥ दुर्मदान् दुष्टाहङ्कारान् साक्षात् श्रीभगवता सह युद्धात् । यद्वा, निजबलादिना महामृत्तानपीत्यर्थः । तेजः पराक्रमः विशिष्टक्रीडितं लीलाविशेष इत्यर्थः । यतः लीलया वसुदेवपुत्रयोरपि अव्यभिचारिसर्वैश्वर्ययोः परमिन्यनेन तत्र भूभारहरणप्रयोजस्यानुषङ्गिकत्वं व्यञ्जितम् ॥ २८-२९ ॥

### श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी

अच्छूरिकेति शब्दोऽयं वैदिकः, पञ्चमस्कन्धेऽपि प्रयुक्तोऽस्ति (भा० ५।३।३) 'अच्छूर्य्यमृतमणि'-इत्यादौ ॥२६॥ परस्परमन्योन्यं मृधे यादवैः परैश्च यद् युद्धं तस्मिन् प्रवर्चिता श्रीभगवतैव निर्भिन्नकुम्भा इत्यादौ, तैनैव तत्तद्वधोक्तेः, अन्यथा अग्रे वक्ष्यमाणेन ( भा० १०।५०।३५ ) 'अक्षतबलः' इत्यनेन विरोधापत्तिः । दुर्म्मदान् दुष्टाहंकारान्, साक्षात् श्रीभगवतां सह युद्धात्, यद्वा, निजबलादिना महामत्तानपीत्यर्थः । अपरिमेयम्—अनन्तत्वात् परिमातुमशक्यं तेजः पराक्रमो यस्य तेन, यतः संकर्षणेन चतुर्व्यूहैकतमेन भगवता क्षयं प्रकर्षेण मुक्त्या पुनरावृत्त्यभावादिना नीतम्, विशिष्टं क्रीडितं लीला विशेष इत्यर्थः । यतो जगदीशयोर्वसुदेवपुत्रयोरिति क्रीडार्थमेव तत्पुत्रताप्राप्त्या जगदीशत्वेऽपि सा क्रीडोचितेति भावः । परमित्यनेन तत्रायासादिकं भूभारहरणादिमात्रप्रयोजनञ्च निरस्तम् ॥ २७-२८ ॥

### श्रीसुदर्शनसूरिकृतं शुकपक्षीय

ग्रहाकुलाः ग्रहः नक्रः ॥ २६ ॥ प्रवेकः श्रेष्ठः ॥ २७-२८ ॥

### श्रीमद्वीरराघवाचार्यकृता भागवतचन्द्रचन्द्रिका

तादात्विकं भगवच्छरपीडितं परसैन्यमनुवर्णयति-निर्भिन्नेति निर्भिन्नानि कुम्भानि कुम्भस्थलानि येषां ते करिणो गजा निपेतुः तथा अश्वाश्वानेकशः शर्रैर्मन्नाः कन्धरा ग्रीवाः येषां तथाभूताः निपेतुरित्यनुपज्यते हताः अश्वाः ध्वजा सूता नायका रथिनश्च येषु ते रथाः तथा पदातयश्च छिन्ना भुजा ऊरवः कन्धाराश्च येषां तथाभूता निपेतुः ॥ २५ ॥ अथ भगवच्छरनिर्भिन्नपरसैन्यतनुप्रभवरुधिरनदीः प्रसिद्धनदीत्वेन निरूपयति—सञ्छिद्येति संछिद्यमानेभ्य पदातिगजाश्वानाम् अङ्गेभ्यः प्रसूता असृगापगा रुधिरनद्यः शतशः प्रवर्तिताः इति तृतीय श्लोकेनान्वयः । कथंभूताः ? भुजा एव अहयः सर्पा यासु पुरुषाणां शीर्षाण्येव कच्छपा यासु तथाभूता हृता द्विपा गजाः एव द्वीपा अन्तरीपभूमयः हया अश्वा एव ग्रहाः तैश्चाकुलाः व्याप्ताः ॥ २३ ॥ करा ऊरवश्चैव मीनाः यासु नराणां केशा एव शैवलं यासु ताः धनूंष्येव तरङ्गा आयुधान्येव गुल्मानि च तैश्च सङ्कुलाः आस्थूरिकाश्चक्राणि ता एव आवर्त्तास्तैर्भयानकाः महामणीनां प्रवेकाः श्रेष्ठाः उत्तमाभरणानि च यथायथं शिलाः शर्कराश्च यासु ताः ॥ २७ ॥ भीरूणां भयावहाः मनस्विनां धीराणां मिथो हर्षकारिण्यः, विनिघ्नतेति किं च अङ्ग हे राजन् ? अपरिमेयमपरिच्छेद्यं तेजः पराभिभवसामर्थ्यं यस्य तेनारीन् शत्रून् मुसलेनायुधेन विनिघ्नता ताडयता सङ्कर्षणेन कर्त्रा ॥ २८ ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

दैत्यकुलस्यापचारं नाशकरं क्षत्रियाणां कूटेन समूहेन घट्टितान् संवेष्टितान् ॥ क ॥ क्रमेण तत्तद्योग्यतानुसारेण ॥ ख ॥ एकवाहिनः एकवाहनगतान् पृष्ठवाहनहीनानित्यर्थः ॥ ग-ङ ॥ दमघोषजः शिशुपालः ॥च॥ सिंहनादं व्यनदत् सिंहनादं चकार ॥छ॥ वीरः शूरोऽसि बलवान् शक्तिमानसि ॥ ज ॥ धानुष्मत्वं धनुष्मतां माहात्म्यम् ॥ झ ॥ आशुगैः शरैः ॥ ञ-ट ॥ यदून्नन्दति बलेन समर्द्धयतीति यदुनन्दनः ॥ ट-ण ॥ कठान्तमारुतेन प्रलयकालवायुना ॥ त-थ ॥ निमिरम्भाः विदलीकृतमूर्द्धानः अनीकगः राशिशः करिप्रभृतयो निमिकम्भादयो बभूवुरित्यन्वयः ॥ २५ ॥ अङ्गप्रसूताः देहापन्नाः असृगापगाः रुधिरं नद्यः भुजा एवाहयो यासु तास्तथा एवउत्तरत्रापि कच्छपाः कूर्मा द्विपा एव द्वीपाः अन्तरद्वीपाः हया एव ग्रहा ग्राहाः ॥ २६ ॥ धनुस्तरङ्गैः आयुधगुल्मैश्च सङ्कुलाः आस्फूर्जिता अतस्थलादयः तज्जलध्वनयः तैरावर्तैः जलभ्रमणैश्च भयानका भयप्रवृत्तकालकध्वनयो वा स्फूर्जितास्त एव आवर्त्ता महामणिप्रवेकाः प्रवेका उत्तमा एवाश्मान आभरणान्येव शर्करा यासु तास्तथा ॥ २७ ॥ सङ्कर्षणेन एवं विधा असृगापगाः प्रवर्तिता इत्यन्वयः ॥ २८ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

ततश्च संच्छिद्यमानानां द्विपदादीनाम् अङ्गेभ्यः प्रसूता असृगापगा रुधिरनद्यः परस्परं कृष्णरामाभ्यां प्रवर्तिता इति तृतीयेनान्वयः । प्रसिद्धनदीरूपकमाह—भुजा एवाऽहयो यासु ताः हतद्विपा एव द्वीपाः अन्तर्वर्तिन उच्चप्रदेशाः हया एव ग्रहा ग्राहाश्चलास्तैराकुलाः व्याप्ताः ॥ २६ ॥ अस्थूरिकाश्चर्माणि चक्राणि वा ता एवावर्तास्तैः भयानकाः महामणीनां प्रवेकाः श्रेष्ठा आभरणानि च क्रमेण अश्मानः शर्कराश्च यासु ताः । मनस्विनां वीराणां हर्षकर्यः ॥ २७ ॥ अङ्ग हे राजन् ! त्वद्बलम् अर्णववत्

दुर्गं भैरवञ्च दुरन्तपारं दुःशब्दो निषेधे अन्तस्तलं पारमवधिः। विक्रमेणागाधं देशतश्च निरवधिकमित्यर्थः। वस्तुविचारे तयोस्तत् कर्म केवलं विक्रीडितं ननु पराक्रमः ।। २८-२९ ।।

## गूढार्थदीपिनी

निरन्तरं यथा स्यात्तथा निषङ्गात् तूणीरात् शरान् गृह्णन् तान् धनुषि संदधत् पुनः मुञ्चन् कुञ्जरादीन् निघ्नन् यथा अलातचक्रं ज्वलत्काष्ठं सर्वतो भ्रमति तथा सेनायां चतुर्दिक्षु भ्रमन् भगवान् सवैरदृश्यतेत्यन्वयः। शितान् तीक्ष्णान् बाणसमूहान् ।। २५ ।। अनीकश इति पाठे राशिशः। शरैः छिन्नाः कन्धरा ग्रीवाः येषां। नायका रथिनः ।। २६ ।। संच्छिद्यमानेति सार्द्धद्वयम्। द्विपदादीनाम् अङ्गेभ्यः प्रसूताः शतशो रुधिरनद्यो भगवता प्रवर्तितेति तृतीयेनान्वयः। हता गजा एव द्वीपा हया एव ग्रहा ग्राहास्तैर्व्याप्ता 'ग्रहो ग्राहे च ख्यादौ' इति धरणिः। धनूंष्येव तरङ्गा आयुधान्येव गुल्माः झाड़ी इति तैः अच्छूरिकाश्चक्राणि। ढालेति वा। मणिप्रवेका मण्युत्तमा पाषाणा अलङ्काराश्च शर्करा बालुकारूपा यासु ताः। वीराणां हर्षकर्यः ।।२७-२८।।

## श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

तदा शरैर्निर्भिन्नकुम्भाः करिणो शरवृक्णकन्धराः शरैश्छिन्नग्रीवाः अश्वाः तथा हताः अश्वादयो येषु ते रथाः छिन्ना भुजादयो येषां ते पदातयश्च अनेकश इति सर्वेषां विशेषणं निपेतुः ।। २६ ।। इदानीं रामकृष्णयुधनिर्भिन्नपरपक्षगद्विपदादिदेहप्रसूतरुधिरनदीः प्रसिद्धनदीरूपकेण वर्णयति—संच्छिद्यमानेति। सार्द्धद्वाभ्याम्। संच्छिद्यमानानां द्विपदानां मनुष्याणामभिमानां वाजिनां च अङ्गेभ्यः। पर्वताकारेण संस्थितेभ्यः प्रसूताः असृगापगाः सङ्कर्षणेन अपरिमेय तेजसा श्रीकृष्णेन च प्रवर्तिता इति तृतीयेनान्वयः भुजा एव अहयः सर्पा यासु ताः पुरुषाणां मनुष्याणां शीर्षाण्येव कच्छपा यासु ता हता द्विपा एव द्वीपा अन्तर्गता उच्चप्रवेशास्तैः हया एव ग्रहास्तैश्चाकुला व्याप्ताः ।। २६ ।। करा ऊरवश्च मीना यासु ताः नराणां केशा एव शैवलं यासु ता धनूंष्येव तरङ्गा आयुधान्येव गुल्माः तैश्च तैश्च सङ्कुला अच्छूरिकाश्चर्माणि चक्राणि वर्ता एव आवर्ताः तैर्भयानका महामणिप्रवेकाः महामण्युत्तमा आभरणानि च यथायथम् अश्मानः शर्कराश्च यासु ताः ।।२७।। भीरूणां भयावहाः मनस्विनां च परस्परं हर्षकरी हर्षकर्य्यः ।।२८।।

## श्रीसत्यधर्मकृता श्रीभागवतटिप्पणी

तीक्ष्णा धारा यस्य स शितं निशितं मुखं यस्य स नन्दकसंज्ञितः खड्गः शरचितौ शरैर्नालैः पुङ्खैरिति यावच्चितौ सम्बद्धौ। बाणस्त्वयोमयः प्रोक्तः शरो नालोऽस्य कीर्तित इति बृहद्भाष्योक्तेः। तौ चैवम्भूतावित्याह। अक्षयसायकाविति। अक्षयाः सायका ययोस्तौ ।। २५ ।। शैव्येत्यपि केचित्पठन्ति। दृढं गुर्विति हलमुसलयोर्विशेषणम्। कुसलं मुसलं तु स्यादिति विश्वः। गगनादागतानि स्वयम्। स कृष्णोऽथ सङ्कर्षणमब्रवीत् ।। २६-२७ ।। हे आर्य अग्रज त्वावतां त्वद्युक्तानां त्वत्स्वामिकानामिति यावत्। आद्य त्वा वात्मनेत्यृग्भाष्ये त्वद्वान्। टीकायां त्वत्स्वासिक इत्युक्तेः। युष्मदोर्मपर्यन्तस्य प्रत्ययोत्तरलोपश्चेति त्वादेशे दृग्दशवतुष्वेव विहितेऽपि चोन्मतुप्यापि आ सर्वनाम्न इति दकारस्यात्वे त्वमस्यास्तीति मतुपो मस्य झत्र इति वत्वे च त्वावानिति रूपं ज्ञेयम्। दयितानि प्रीतिपात्राणि। आयुधानि हलमुसलादीनि ।। २८ ।।

## श्रीमद्वल्लभाचार्य्यकृता सुबोधिनी

अतो भगवतः क्रियाशक्तिं बोधयितुं बाणानां महत्कार्यमाह निर्भिन्नकुम्भा इति। करिणो हस्तिनः नितरां खण्डशो निर्भिन्नाः। यद्यपि निर्भिन्नकुम्भाः करिण एव भवन्ति, तथापि स्वतन्त्रः करो येषामिति परिग्रहायनपरः करिशब्दः। अनीकशः अश्वा एकैकेन शरेण वृक्णाः। कन्धरासु केशाः सन्तीति तत्र बाणप्रचारो न भविष्यतीति कन्धरपदम्। रथास्तु, हता अश्वा ध्वजाः सूता नायकाश्च येषां, तादृशा जाताः। नत्वेकमारणेन शिष्टं दैवान्मृतमिति। रथोऽपि अवयवशः वृक्णः इति ज्ञातव्यम्, अन्यथा निपेतुरिति क्रियासम्बन्धो न स्यात्, अन्यथा जाता इति क्रियान्तरं कल्प्यं प्रसज्येत। पदातयश्च निपेतुः। आघातेनापि पतन्तीति तेषां विशेषणमुच्यते। छिन्नाः भुजाः ऊरवः कन्धराश्च येषाम्। उरु स्थूला वा कन्धरा। नाभेरधो बाणप्रहारस्य निषिद्धत्वात्। अनेन शिरश्छेदः अर्थादुक्तः ।। २५ ।। एवं चतुरङ्गसेनामारणमुक्त्वा तस्याधिक्यं वक्तुं तेन जाता रुधिरनदीर्वर्णयति संच्छिद्यमानेति सार्द्धाभ्याम्। चतुरङ्गेषु त्रय एव रुधिरवन्तः, एकं दारुमयम्। अतस्त्रीन् गणयति। द्विपदाः मनुष्याः, इभाः हस्तिनो, वाजिनश्च, तेषामङ्गैः छिन्नैः प्रसूताः शतशः असृगापगा जाताः। अनेन मृतानां निर्भयत्वं सूचितम्। अन्यथा भयेन रुधिरशोष एव स्यात्। विजातीया अपि एकैकप्रकृतिका जाता इत्यपि। अङ्गपदं तु तेषां हनने जाते दैवकृतां रुधिरवृष्टिं व्यावर्तयति। प्रशब्देन मरणानन्तरमपि संस्कारेणापि भयाभावः सूच्यते। अन्योन्यं प्रवाहमेलनात् पूर्वं नामान्तरमप्यापन्नाः पश्चादनेकानि नामानि प्राप्नुवन्तीति शस्प्रत्ययः। असृगापगा रुधिरनद्यः। ननु नदीत्वं कुतः, नहि प्रवाहमात्रेण नदीत्वं भवति, अन्यथा वर्षाकाले जगदेव नदी स्यादित्याशङ्क्य नदीसमानाकृतित्वसिद्ध्यर्थं वर्णयति भुजाहय इति। भुजा एवाहयः सर्पा यत्र। पुरुषशीर्षाण्येव कच्छपा यत्र। एतत्सात्त्विकम्। हता ये द्विपास्त एव द्वीपप्रायाः। द्विर्गता आपो यत्रेति। तस्मिन् द्वीपे छिन्ना ये हयाः

अश्वास्त एव हि ग्रहा ग्राहाः । तैराकुलाः । द्वीपा एव तामसा नदीत्वख्यापकाः । तथापि तत्र प्रवाहेण गच्छतां हयावयवानामारोहावरोहौ द्वीपाधिक्यार्थमेव निरूपितौ । आगन्तुका एवैते नदीधर्माः, न तु सहजा इति । साधारणान् वर्णयति करोरुमीना इति । करा एव उरु अधिका मीना यत्र । करा ऊरवश्च मीना इति वा । मध्यच्छेदे शिष्टो भागः ऊरुशब्देन ग्राह्यः । उरुशब्द एव वा । नराणां केशा एव शैवालानि शैवाला यत्र । धनूंष्येव तरङ्गाः । मीनाः सात्त्विकाः । तरङ्गास्तामसाः इति । त्रयं पूर्वेण वा । नरके शान्तास्त्रयः । आयुधान्येव तूणीरादीनि गुल्माः, तैः सङ्कुलाः । अत एव धनुस्तरङ्गाश्च ताः आयुधगुल्मसङ्कुला इति कर्मधारयः । अच्छूरिकान्येव आवर्ताः । तैर्भयानकाः । अच्छूरिकाश्चक्राणि चर्माणि वा । अनेनातिगाम्भीर्यं नद्याः प्रदर्शितम् । महामणिप्रवेका महामण्युत्तमाः, तद्युक्तान्याभरणान्येव शर्करा यासाम् ॥२७॥ पुराननदीस्थाने कदाचित्पतितं रुधिरं जलेन सहितं तथा जातमिति शङ्कां व्यावर्तयति प्रवर्तिता इति । नूतनतया प्रवर्तिताः । पूर्वस्माद्वैलक्षण्यमाह भीरुभयावहा इति । भीरूणामेव भयावहाः । मनस्विनां तु हर्षकरीः । अन्येषां तु साधारणा यथावद्वर्णिताः । परस्परमिति समयुद्धे । अन्याययुद्धे तु जयशीलानां प्रायेण हर्षो भवतीति नाश्चर्यमेतत् । एवं भगवत्कृतं सपर्यवसानं युद्धमुक्त्वा बलभद्रकृतमाह विनिघ्नतारीनिति । अरयः कथञ्चित् हन्तव्याः । भगवतस्त्वरयो न सन्तीति बलभद्रे तदुक्तम् । हलेनाकृष्य मुसलेन विनिघ्नता सङ्कर्षणेन सह । भगवान् गृह्णन् निषङ्गादित्यादि जात इति पूर्वेणैवान्वयः । अथवा । अरीन् विनिघ्नता सङ्कर्षणेन कृत्वा नद्यः प्रवर्तिता इति । हनने हेतुः दुर्मदानिति । दुष्टो मदो येषां उद्धृत्तिकरणरूपः । सङ्कर्षणपदेनैव तेषामाकर्षणं निरूपितम् । सामर्थ्ये हेतुमाह । अपरिमेयं तेजो यस्येति । अन्तर्बलमस्त्येव, बहिस्तेजोऽपि । कस्याप्येतावदिति मातुमशक्यम् ॥ २८ ॥

## श्रीसुबोधिनी-सार

निर्भिन्नाः कुम्भा मस्तकानि येषां ते करिणो गजा निपेतुः अनेकशोऽसंख्याताः शरैर्वृक्णाः छिन्नाः कंधरा ग्रीवा येषां तेऽश्वाः हता अश्वा ध्वजाः सूता नायका रथिनश्च येषु ते रथाः छिन्ना भुजा ऊरवः कंधरा येषां ते पदातयो निपेतुः ॥ २५ ॥ संछिद्यमानानां द्विपदानां मनुष्याणाम् इभानां हस्तिनां वाजिनामश्वानाम् अङ्गेभ्यः प्रसूता उत्पन्ना असृगापगा रुधिरनद्यः परस्परं प्रवर्त्तिताः शतशः स्पष्टयति । भुजा एवाहयः सर्पा यासु ताः पूरुषाणां शीर्षाण्येव कच्छपा यासु ताः हता द्विपा गजा एव द्वीपा अंतर्वर्त्तितटानि हया अश्वा एव ग्रहा ग्राहास्तैराकुला व्याप्ताः ॥ २६ ॥ करा हस्ता ऊरवश्च मीना यासु ताः । नराणां केशा एव शैवलं जंबालं यासु ताः । धनूंष्येव तरंगा आयुधान्येव गुल्मास्तैः तैः संकुलाः अच्छूरिकाश्चक्राण्येवावर्त्तास्तैर्भयानकाः । महामणीनां प्रवेका उत्तमा आभराणि च यथायथमश्मानः शर्कराश्च यासु ताः ॥ २७ ॥ भीरूणां कातराणां भयावहाः मृधे संग्रामे मनस्विनां शूराणां धीराणां च हर्षकरीः आर्षम् । आनंदकर्त्र्यः अपरिमेयं तेजो यस्य तेन संकर्षणेन मुसलेनायुधेनारीन् शत्रून् विनिघ्नता कर्त्रा ॥ २८ ॥

## विवरणटिप्पणी

संछिद्यमानेत्यत्र । प्रशब्देनेति । शूराणां मरणानन्तरमपि संस्कारस्तिष्ठति । यद्वशात्कबन्धोऽपि युध्यति । तदापि भयाभाव इत्यर्थः । करोरुमीना इत्यत्र । नाभेरधः प्रहारोऽनुचितः इति पूर्वमुक्तत्वादूरुमात्रं भिन्नं न संभवतीत्यत आहुः मध्यच्छेदे इति । त्रयं पूर्वेणेति । ऊरुणा सह त्रयम् । तथा च नरके शान्तास्त्रयो जाता इत्यर्थः । अत एवेति । धनुस्तरङ्गस्य त्रिकेऽप्रवेशादेव अग्रिमेण कर्मधारयः कृत इत्यर्थः ।

## गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

तदा भगवच्छरपीडितं परसैन्यमनुवर्णयति—निर्भिन्नेति । निर्भिन्नानि कुम्भानि मस्तकानि येषां ते करिणो गजाः निपेतुः । तथा शरैः वृक्णाः छिन्नाः कन्धरा ग्रीवा येषां तथाभूता अनेकशोऽश्वाश्च निपेतुः । तथा हता अश्वाः, ध्वजाः, सूताः, नायकाः रथिनश्च येषु ते रथाश्च निपेतुः । तथा छिन्ना भुजाः, उरवः, कन्धराश्च येषां तथाभूता पदातयश्च निपेतुः ॥ २५ ॥ तदा च भगवच्छरैः सञ्छिद्यमानेभ्यः द्विपदेभवाजिनां पदातिगजाश्वानां अङ्गेभ्यः प्रसूता असृगापगा रुधिरनद्यः शतशः प्रवर्तिता इति तृतीयेनान्वयः । ताश्च प्रसिद्धनदीतया निरूपयति—भुजा एव अहयः सर्पा यासु ताः पूरुषाणां शीर्षाण्येव कच्छपा यासु ताः । हता द्विपा गजा एव द्वीपाः अंतराभूमयः, हया अश्वा एव ग्रहास्तैश्चाकुला व्याप्ताः ॥ २६ ॥ करा उरवश्च मीना यासु ताः । नराणां केशा एव शैवलं यासु ताः । धनूंष्येव तरङ्गाः, आयुधान्येव च गुल्मानि, तैश्च तैश्च सङ्कुला व्याप्ताः । अच्छूरिकाश्चक्राणि ता एव आवर्तास्तैर्भयानकाः । महामणीनां प्रवेकाः उत्तमाः तन्निर्मितान्याभरणानि यथायथं अश्मानः शर्कराश्च यासु ताः ॥ २७ ॥ भीरूणां भयावहाः । मृधे युद्धे मनस्विनां वीराणां तु परस्परं हर्षकर्यः । एवं श्रीकृष्णकृतं सैन्यविनाशमुक्त्वा बलभद्रकृतं तदाह—विनिघ्नतेति । स्ववाक्ये विश्वासार्थं सम्बोधयति—अङ्गेति । अपरिमेयमपरिच्छेद्यं तेजः परामिभवसामर्थ्यं यस्य तेन अरीन् शत्रून् मुसलेनायुधेन विनिघ्नता सङ्कर्षणेनापि ॥ २८ ॥

**अन्वितार्थप्रकाशिका**

गृह्णन्निति । निरन्तरं यथा स्यात्तथा निषङ्गात् तूणीरात् एकैकान् शरान् गृह्णन् धनुंषि सन्दधत् । अथ तान् शितबाण पूगान् तीक्ष्णशरसमूहान् विकृष्य मुञ्चन् तैश्च रथान् कुञ्जरान् वाजिनः पत्तीन् पदातीन् निघ्नन् यद्वत् यथा अलातचक्रं परिभ्रमज्ज्वलत् काष्ठं यथा चक्रवद्भवति तथा मथुरायाः चतुर्दिक्षु सैन्याभिमुखं परिभ्रमन् समदृश्यत् । निरन्तरमिति ग्रहणादिसर्वक्रिया-विशेषणं तेन ग्रहणयोजनविकर्षणक्षेपणप्रहरणक्रियाः क्रमेणोद्भूता अपि युगपदेवोद्भवन्त्य इव द्रष्टॄन् प्रतिभाता इति ॥ २५॥ निर्भिन्नेति । निर्भिन्नाः कुम्भा मस्तकस्था येषां ते करिणो गजा निपेतुः तथा शरैर्वृक्णाः छिन्नाः कन्धरा ग्रीवा येषां तथाभूताः पदातयश्च निपेतुः । निर्भिन्नकुम्भा इत्यादिना तत्तद्योग्यस्थानेष्वेव भेदच्छेदादिप्रदर्शनेन विशेष उच्यत इति न निघ्नन्नित्यादिना पुनरुक्तिः ॥ २६ ॥ संच्छिद्यमानेति सार्द्धद्वयम् । भगवच्छरैः संच्छिद्यमानानां द्विपदेभवाजिनां पदातिगजाश्वानामङ्गेभ्यः प्रसूताः शतशः असृगापगा रुधिरनद्यः भगवता प्रवर्तिता इति तृतीयेनान्वयः । ता वर्णयति । भुजा एव अहयः सर्पा यासु ताः धनूंष्येव तरङ्गास्तैः आयुधरूपैः गुल्मैः अप्रकाण्डवृक्षैश्च संकुला व्याप्ताः अच्छूरिकाश्चक्राणि चर्माणि वा ता एव आवर्त्तास्तैर्भयानकाः महामणीनां प्रवेकाः उत्तमाः तन्निर्मितान्याभरणानि च यथायथम् अश्मानः शर्कराश्च यासु ताः भीरूणां भयावहाः मृधे युद्धे मनस्विनां वीराणां तु परस्परं हर्षकरीः हर्षकर्यः । पूर्वसवर्णदीर्घ आर्षः ॥ २७-२८ ॥

**श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्**

विभिन्नकुम्भस्थला गजाः शरैः वृक्णाच्छिन्नाः कंधरा येषां तथाभूता अश्वाश्च हता अश्वादयो येषु तथा भूता रथाश्च सूतः सारथिः नायकोरथी ॥२५॥ संच्छिद्यमानानां द्विपदानां मनुष्याणां इभवाजिनां गजाश्वानां ॥ अङ्गेभ्योगात्रेभ्यः प्रसूता उत्पन्नाः असृगापगाः रुधिरसरितो बभूवुः तासां महानदी समत्वं निरूपयन्नाह ॥ भुजा एव अहयः सर्पा या सुताः हता येद्विपा गजास्त एव द्वीपाः जलमध्यवर्त्तिनोजनदृशोन्नतभूप्रदेशा हया अश्वा एव ग्रहाग्राहाश्च तैराकुलाः संकुलाः ॥ २६ ॥ करा उरवश्च त एव मीना अल्पमध्य महामध्यश्च यासुताः मनुष्य केशा एवं शैवलंगातुताः धनूंष्येव तरंगाः आयुधान्येव गुल्मास्तृणपुग्रंथयश्चतैर्व्याप्ताः अच्छूरिकाः चक्राकार चर्माणिता एव आवर्त्तजलभ्रमरास्तैर्भयानकाः महामणि प्रवेकः श्रेष्ठामणय आभरणानि च । श्मानः पाषाण-शकल निशर्कराः पाषाण क्षुद्रशकलानि च यासु ताः ॥ २७ ॥ भीरूणां भयावहाभयप्रापकाः । मृधेरणभूमौ मनस्विनामुभय च मूस्यशूराणां ॥ परस्परं हर्षकरीः हर्षकर्युः एवं भूतारक्तनद्यो बभूवुः कुर्मदान दुष्टानरीन् शत्रून् मुसलेन विनिध्नता ताडयता संकर्षणेनापि एवमसृगापगाः प्रवर्तिताः ॥ २८ ॥

**भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी**

अथ भगवच्छरनिर्भिन्नपरसैनिकतनुप्रभवरुधिरनदीः प्रसिद्धनदीत्वेन निरूपयति सार्द्धद्वाभ्याम् ॥ संछिद्येति ॥ संछिद्य माना ये द्विपदाः इभा वाजिनोऽश्वाश्च तेषां, अङ्गप्रसृताः अङ्गेभ्य उद्भूताः, असृगापगाः रुधिरनद्यः, शतशः प्रवर्त्तिता इति तृतीयश्लोकगतेनान्वयः । कथंभूताः । भुजा एव अहयः सर्पा यासु ताः, पुरुषाणां शीर्षाण्येव कच्छपाः कूर्मा यासु ताः । हता ये द्विपा गजास्त एव द्वीपा अन्तर्वर्त्तितटानि हया हताश्वा एव ग्रहा ग्राहास्तैश्च तैश्च, आकुला व्याप्ताः ॥ २५ ॥ करेति । कराः ऊरवश्च मीना मत्स्या यासु ताः, नराणां केशा एव शैवलानि यासु ताः, धनूंष्येव तरङ्गाः आयुधान्येव गुल्मा अप्रकाण्डद्रुमास्तैश्च संकुलाः । अच्छूरिकाश्चर्माणि चक्राणि वा तान्येवावर्त्ता जलभ्रमास्तैर्भयानकाः । महामणीनां प्रवेकाः श्रेष्ठा, आभरणानि च यथायथमश्मानः शर्कराश्च यासु ताः ॥ २६ ॥ प्रवर्त्तिता इति ॥ मृधे संग्रामे, भीरुभयावहाः भीरूणां भयकर्त्र्यः, मनस्विनां वीराणां, परस्परं मिथः, हर्षकरीर्हर्षकारिण्यः, असृगापगाः प्रवर्त्तिताः कृष्णेनेति शेषः । अपरिमेयमपरिच्छेद्यं तेजः पराभिभवसामर्थ्यं यस्य तेन, मुसलेनायुधेन, दुर्मदान् अरीन् शत्रून्, विनिघ्नता ताडयता, संकर्षणेन बलभद्रेणापि, प्रवर्त्तिता इति सम्बन्धः ॥२७॥ बलमिति ॥ अङ्ग हे राजन्, एवं दुरन्तपारमन्तोऽत्र तलं पारोऽवधिः, दुःशब्दो निषेधे । विक्रमेण गाधं देशतश्च निरवधिकमित्यर्थः । अर्णववत् दुर्गं दुर्गमं सत्, भैरवं भयंकरं, मगधेन्द्रो जरासंधस्तेन पालितं च तत् , बलं सैन्यं, क्षयं प्रणीतं नाशितमित्यर्थः । अहोऽ-द्भुतमेवैतद्यत्त्रयोविंशत्यनीकात्मकं बलं द्वाभ्यामेव हतमिति विस्मयमानं प्रत्याह । तत्त्रयोविंशत्यक्षौहिणीसैन्यहननात्मकं कर्म, जगदीशयोः वसुदेवपुत्रयोः, परं केवलं, विक्रीडितं क्रीडामात्रमेव । न तु पराक्रम इति भावः ॥ २८ ॥

**कृष्णप्रिया**

इस रण संग्राम में फटे-कटे हुए मस्तक वाले मतवाले हाथियों गिरने लगे । अश्व ध्वज-सारथि एवं सेनापतियों के छिन्न-भिन्न हो जाने से बहुत से बड़े-बड़े रथ ही निकम्मे हो गये । कटे हुए हाथ जाँघ-बाहु सिर वाली पैदल सेना भी नष्ट हो गयी ॥ २५ ॥ इस मशहूर संग्राम में बलवीर श्रीबलदाऊजी ने अपने प्रसिद्ध आयुध मुसल की चोट से मरे हुए मतवाले महान् वीरों के अङ्ग-प्रत्यङ्ग को चूर-चूर करने से खून की शतशः सरिताएँ बहने लगी । उन शोणित सरिताओं में कटके गिरी हुई

सैकड़ों सैनिकों की भुजाएँ साँप जैसी दीख पड़ती थी। कट कर गिरे हुए सिर मानो कि कछुओं की भीड़ लग गयी हो। उन सरिताओं में मरे हुए हाथी द्वीप समान मालुम होते थे और घोड़े ग्राहों के समान जान पड़ते थे। मरे हुए मनुष्यों के हाथ और जाँघें मछलियाँ मालुम पड़ती थी और सैनिकों केश सेवार समान, धनुष के समूह तरङ्ग जैसे, और आयुध लता एवं तिनकों के समान दीख पड़ते थे। बड़ी-बड़ी ढालें मानों कि सरिता के भयानक भँवर हो और महामूले मणि और आभरण पत्थर के रोडों और सिकता रेता समान लग रहे थे। उस भयानक दृश्य को देखकर कायर पुरुष भयभीत हो जाते थे नव वीर नरों का परस्पर उत्साह उमड़ रहा था ॥ २६-२८ ॥

बलं [1]तदङ्गार्णवदुर्गभैरवं दुरन्तपारं मगधेन्द्रपालितम्।
क्षयं प्रणीतं वसुदेवपुत्रयोर्विक्रीडितं तज्जगदीशयोः परम् ॥ २९ ॥
स्थित्युद्भवान्तं भुवनत्रयस्य यः समीहतेऽनन्तगुणः [2]स्वमीलया।
न तस्य चित्रं परपक्षनिग्रहस्तथापि मर्त्यानुविधस्य वर्ण्यते ॥ ३० ॥
[3]जग्राह विरथं रामो जरासंधं महाबलम्[4]।
हतानीकावशिष्टासुं सिंहः [5]सिंहमिवौजसा ॥ ३१ ॥
बध्यमानं हतारातिं पाशैर्वारुणमानुषैः।
वारयामास गोविन्दस्तेन कार्यचिकीर्षया ॥ ३२ ॥

**कर्दमक्षमा**

**अन्वयः**—( उभाभ्याम्-भ्रातृभ्याम्-) तदङ्गार्णवदुर्गभैरवम्, मगधेन्द्रपालितम्, दुरन्तपारम्, तद्, बलम्, क्षयं, प्रणीतम्, वसुदेवपुत्रयोः, जगदीशयोः, तत्, परम्, विक्रीडितम् ॥ २९ ॥ अनन्तगुणः, यः, स्वलीलया, भुवनत्रयस्य, स्थित्युद्भवान्तं समीहते, तस्य, परपक्षनिग्रहः, चित्रम्, न, तथापि, मर्त्यानुविधस्य, वर्ण्यते ॥ ३० ॥ रामः, सिंहः, सिंहम्, इव ओजसा, हतानीकावशिष्टासुम्, विरथम्, महाबलम्, जरासन्धम्, जग्राह ॥ ३१ ॥ गोविन्दः, तेन, कार्यचिकीर्षया, वारुणमानुषैः, पाशैः, बध्यामानम्, हतारातिम्, वारयामास ॥ ३२ ॥

**श्रीधरस्वामिविरचिता भावार्थदीपिका**

अंग हे राजन्। अर्णववद्दुर्गं दुर्गमं भैरवं भयंकरं च यतो दुरन्तपारम्। अंतोऽत्र तलम्। पारमवधिः। दुःशब्दो निषेधे। विक्रमेणागाधं देशतश्च निरवधिकमित्यर्थः। किं च मगधेन्द्रेण च पालितं बलम्। यदेवंभूतं रामकृष्णयोः कर्मोक्तं तत्परं केवलं तयोर्विक्रीडितं न तु पराक्रमः ॥ २९ ॥ न चेतदाश्चर्यमित्याह। स्थित्युद्भवांतमिति। तर्हि किमित्याश्चर्यमिव वर्णितं तत्राह। तथापीति। मर्त्याननुविधत्तेऽनुकरोतीति मर्त्यानुविधस्तस्य ॥ ३० ॥ किं च जग्राहेति। हतान्यनीकानि यस्य अवशिष्टा असव एव यस्य तं च तं च ॥ ३१ ॥ हता बहुशोऽरातयो येन तथाभूतमपि जरासंधं बध्यमानं वारयामासेति ॥ ३२-३३ ॥

**श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः**

यतो दुरन्तपारमतोऽर्णववदिति योज्यम्। तलमिति 'तलं स्वरूपेऽनूदध्वें स्त्री' इति मेदिनी। इत्यर्थ इति व्याख्येयमिति। रक्षकप्रबलत्वेपि नाशोऽनायासमाह—किञ्चेति। तयो रामकृष्णयोः। विक्रीडितं लीलाविशेष एव परं केवलं न त्वावेशिकं युद्धमित्यर्थः ॥ २९ ॥ एतद्बलनाशनम्। यः कृष्णः। समीहते कुरुते। चित्राभावे तद्वत्कुतो वर्णितमित्याह—तर्हीति। यद्यपि हरेः

---

१. तुरङ्गा—प्रा. पा.। २ स्म लीलया—श्रीधर. टी.।

३. हतेषु सर्वसैन्येषु जरासन्धो महाबलः। विद्रुतेष्ववशिष्टेषु रथेनैकेन सारिणम् ॥ १ ॥
तावुभौ गिरिसंकाशौ मत्ताविव महागजौ। परस्परमयुध्येतां सामर्षौ लशालिनौ ॥ २ ॥
मागधस्तु गदां गुर्वीमादायामर्षविह्वलः। भ्रामयित्वा शतगुणं चिक्षेप बलवक्षसि ॥ ३ ॥
तामापतन्तीं तरसा गदा श्रृङ्गोपमां गिरेः। व्यंसयित्वा हलधरो मुधा चक्रे स्मयन्निव ॥ ४ ॥
व्यर्थीकृत्य गदां तस्य मुसलेन हलायुधः। पोथयित्वा रथे क्षब्धो निहत्य हतसारथी ॥ ५ ॥

एते पञ्च विजये-मुनिभावप्रकाशिकापाठे दृश्यन्ते।

४. बलाः—इति कस्यचित्। ५. क्षुद्रमृगं यथा—वीर.।

परपक्षनिग्रहश्चित्रं न तथापीति । तस्य मनुष्यधर्ममनुकुर्वतो हरेस्तद्युद्धं वर्ण्यते, बुद्ध्यवतारार्थं प्रशस्यत इत्यर्थः । ननु जगदीशता चेत्तर्हि कथं क्षुद्रातिक्षुद्रैः स्वाननुरूपैर्जीवैः सह युद्धे रसः सिध्यति, न चेत्तर्हि तद्वर्णनेन किं तत्राह—स्थितीति । तर्हि किमत्याश्चर्यमिव वर्णितं तत्राह—तथापीति । मर्त्यः सन्ननुरूपमेव विधत्त इति मर्त्यानुविधस्तस्य । अयमर्थः—येन स्वाकारेण जगत्सृष्ट्यादिकं करोति तेनैव यदि जरासन्धं जयति तदा खल्वननुरूपत्वान्न रसः, यदि च मर्त्यः सन् जयति तदा मर्त्यस्य प्रतियोद्धा मर्त्य एवानुरूपस्तत्रातिप्रौढस्य जरासंधस्य जयाच्चमत्कार इति रस एव भवति । न च मर्त्यदेहस्यास्वरूपत्वमिति वाच्यम् 'परमात्मा नराकृतिः'' ''नराकृति परं ब्रह्म हरिः कारणमानुषः'', 'यन्मित्रं परमानन्दं पूर्णं ब्रह्म' इत्यादिश्रवणात्, 'अहं ब्रह्म परं धाम' इति गीतोक्तेश्च ॥ ३० ॥ अन्यदद्भुतमाह—किञ्चिति । ओजसा बलेन । सिंहस्सिंहमिति मर्त्यानुविधतया साम्याभिप्रायात् । 'महाबलम्' इति क्वचित्पाठः । तत्र महाबलत्वमपि मर्त्यानुविधापेक्षयैव न तु ऐश्वर्यापेक्षया ॥ ३१ ॥ वारुणैर्नागादिरूपैः, मानुषैः रज्वादिभिः । वारयामास मोचयामास । तेन जरासन्धेन । कार्यस्य पुनस्तदानींतनसेनावधस्य चिकीर्षया । मानुषीयैस्त्वत्यन्तापमानार्थम् । गोविंद इति पूर्ववत् । अत एव तेन जरासंधेन यत्कार्यं हननार्थं भूभारसैन्यसंमेलनं तस्य कर्तुमिच्छया । महाराजोऽयं संबन्धी च ततोऽधुना कृतापराधोऽपि त्यज्येतेति रामस्तमत्रायतेत्यर्थः । अत्र प्रकरणप्राप्तस्य बन्धनस्य ''भीत्रार्थानां भयहेतुः'' इत्यनेनापादानत्वम्, गोभ्यो यवान्वारयतीतिवत् ॥ ३२ ॥

### श्रीमज्जीवगोस्वामीकृता वैष्णवतोषिणी

ननु, यदि जगदीशता तर्हि कथं क्षुद्रातिक्षुद्रैर्नीचैर्युद्धे रसः सिद्ध्यति न चेत्तर्हि तद्वर्णनया च किं तत्राह—स्थितीति । स्थितौ तस्य साक्षाल्लीलत्वात् तस्याः प्रथमोक्तिः य इति द्वयोरैक्याभिप्रायेण । ननु, कथमेकोऽनन्तानां स्थित्यादि कुरुते तत्राह—अनन्ता गुणाः सार्वज्ञ्यचातुर्यादयो यस्य सः तच्च स्वकीयया लीलयैव । न च तत्साधनप्रयासादिना स्वशब्देन तत्र परमं स्वाच्छन्द्यमुक्तम् । चित्रमाश्चर्यहेतुरित्यर्थः । हेतुमति हेतुत्वोपचारान्न लिङ्गत्यागः । एवं पूर्वपक्षमनूद्य सिद्धान्तनाह—मर्त्यानुविधस्येति । यस्तादृशलौकिककर्माण्यपि मनुष्यलीलयैव करोति । नत्वैश्वर्याविष्कारादिना तस्येत्यर्थः ॥ ३० ॥ अतोऽन्यच्च तादृशं तच्चरितं शृण्वित्याह—जग्राहेति । ओजसा वेगेनेत्यर्थः । सिंहः सिंहमिवेति मर्त्याऽनुविधतया साम्याभिप्रायात् । अतो महाबलत्वमपि तदपेक्षयैव नत्वैश्वर्यापेक्षया महाबलमिति क्वचित् पाठः ॥ ३१ ॥ मानुषीयैस्त्वत्यन्तापमानार्थम् । गोविन्द इति पूर्ववत् । अत एव तेन जरासन्धेन कृत्वा यत् कार्य्यं हननार्थं भूभारसैन्यसम्मेलनं तस्य चिकीर्षया वारयामास महाराजोऽयं सम्बन्धी च ततोऽधुना कृतापराधोऽपि त्यज्यतेति रामस्तमत्रावतेत्यर्थः अत्र प्रकरणप्राप्तस्य भीतार्थानां भयहेतुरित्यनेनापादानत्वं गोभ्यो यवान् वारयतीतिवत् ॥ ३२ ॥

### श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी

तथापि लीलया सद्यस्तदनन्तबलमारणमाश्चर्य्यमपि न मन्तव्यमिति वदन् जगदीशत्वमेव दर्शयन् केवल विक्रीडितत्वमेव साधयति—स्थितीति । द्वन्द्वैक्यं स्थित्यादेर्यथोत्तरं प्रस्तावापेक्षया श्रैष्ठ्यमूह्यम् । ततश्च किं वक्तव्यं स्थितिमुद्भवं वा अन्तं संहारमपीत्यर्थः । अत एव स्थितेरादौ निर्द्देशः । भुवनत्रयस्येति श्रीब्रह्मणः प्रतिदिनमेव त्रिलोक्यास्तत्तदाचरणात् । य इति जगदीशतया द्वयोरैक्याभिप्रायेण, किं वा प्राधान्याच्छ्रीकृष्णोद्देशेनैव सम्यक् तत्तन्निष्ठया ईहते करोति, यतोऽनन्ता गुणाः सार्व्वज्ञ्य-चातुर्य्यादयो यस्य सः, तच्च स्वकीयया लीलयैव, न च तत्तत्साधनप्रयासादिना, स्वशब्देन तत्र परमस्वाच्छन्द्यमुक्तम्, परस्य यदुकुलशत्रोर्जरासन्धस्य, पक्षः सहायस्तत्सैन्यं तस्य निग्रहो वध इत्येतच्चित्रमद्भुतं न भवति । मर्त्यानुविधस्येति तादृशलौकिककर्म्मण्यपि मनुष्यलीलानुसारात् । एवं सर्व्वतो विलक्षणा पूर्व्ववल्लीला माधुरी दर्शिता ॥२९॥ प्रस्तुतमाह—जग्राहेति । विरथं सन्तम्, तद्विस्तारस्तु श्रीहरिवंशाज्ज्ञेयः । ओजसा वेगेनेत्यर्थः । यतो महाबलः, किञ्च, हतेति तस्य मानसशारीरशक्त्योर्हानिः, गदायुद्धादौ लोकदृष्ट्या द्वयोः साम्येऽप्येकस्य बलहान्योऽन्य च बलातिरेकेण ग्रहणे दृष्टान्तः—सिंहः सिंहमिवेति ॥ ३० ॥ वारुणैर्मानुषैश्च दिव्यैर्लौकिकैश्चेत्यर्थः । दृढबन्धनार्थं लोकेऽपमानार्थञ्च । यद्वा, वारुणवन्मानुषैरिति तेषां महादार्व्यादिकमुक्तम् । गोविन्द इत्यस्याभिप्रायः पूर्व्ववत् । अत एव तेन जरासन्धेन कृत्वा कार्य्यस्य भूभारहरण-प्रयोजनस्य चिकीर्षया इतस्ततस्तेनानीय तस्य स्वतो बहुतरसैन्यस्यैकत्रैवानायासेन वधसिद्धेः । वारयामास तद्बन्धनं न्यषेधदित्यर्थः ॥ ३१ ॥ लोकनाथाभ्यामिति सर्व्वलोकनाथत्वेन तस्यापि हितार्थमिति भावः । पुनः पुनः श्रीभगवद्दर्शनादिसिद्धेः, मुक्तो बन्धनात् ग्रहणाद्वा, मुक्तत्वादेव व्रीडितः, यतो वीराणां सम्मतो वीर श्रेष्ठ इत्यर्थः । वीराणां युद्धे ग्रहणादेरतिनिन्द्यत्वात् । अत एव तपसे यदुकुलजयार्थे वानप्रस्थधर्म्मानुष्ठानाय । पथीति निजदेशगमनमार्गे, किंवा युद्धस्थानादेव तस्मात् सद्यो वनं गच्छतो वर्त्मनि ॥ ३२ ॥

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम्

अर्णवं पर्वसमुद्रघोषोपमं विक्रीडितं परम् उत्कृष्टमभूत् ॥ २९ ॥ मर्त्यानुविध्यस्य मर्त्याऽनुविधायिनः ॥ ३०-४८ ॥

### श्रीमद्वीरराघवाचार्यकृता भागवतचन्द्रचन्द्रिका

तन्निहतावशिष्टं मगधेन्द्रपालितमर्णववद्दुर्गमं भैरवं च बलं क्षयं प्रणीतं नाशितमित्यर्थः। अद्भुतमेतद्द्वाभ्यामेव त्रयोविंशत्यनीकात्मकं बलं हतमिति विस्मयमानं राजानं प्रत्याह वसुदेवपुत्रयोरिति। यदुक्तं रामकृष्णयोः कर्म केवलं जगदीश्वरयोस्तयोः क्रीडितं क्रीडामात्रमेव न तु पराक्रम इति भावः॥ २९॥ न चात्रविस्मयः कार्य इत्याह—स्थितीति। स्थित्यादिनां समाहर द्वन्द्वः यो भगवानसंख्येयकल्याणगुणः स्वलीलयैव त्रिलोक्याः स्थित्यादिकमेवेहते करोति तस्य शत्रुपक्षनिग्रहो न चित्रं नाश्चर्य्यविषयः तर्हि किमिति वैचित्र्येणोपवर्ण्यत इत्यत आह तथापीति। चित्रत्वाभावेऽपि। मर्त्याननुविधत्ते अनुकरोतीति तथा तस्य वर्ण्यते कर्मेति शेषः मर्त्यानुविधस्यामानुषं कर्म चित्रमेवत्यभिप्रायेण वर्ण्यत इति भावः॥ ३०॥ जग्राहेति। हतान्यानीकानि सैन्यानि यस्य अवशिष्टा असवः प्राणा एव यस्य स चासौ स च तं विरथं जरासन्धं जग्राह ग्रहीतवान् यथा सिंहः क्षुद्रमृगं ग्रह्णाति तद्वत्॥ ३१॥ बध्यमानमिति। हता अरातयो येन तं वारुणैर्मानुषैश्च पाशैः साधनैर्बध्यमानं जरासन्धं रामेणेति शेषः। गोविन्दः दृष्ट्वेति शेषः वारयामास राममिति शेषः तत्र हेतुः तेन जरासन्धेन सह यत्कार्यं पुनर्युद्धात्मकं तत्कर्तुमिच्छया हेतुभूतया न्यवारयदितिसम्वन्धः॥ ३२॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

अङ्ग हे विष्णुरात! यन्मगधेन्द्रेण पालितम् अर्णववद्दुर्गमम् अत एव भैरवं दुरन्तपारं चक्षुरविषयतीरान्तरम् अनवसितसमाप्ति वा तद्बलं कृष्णरामाभ्यां क्षयं प्रणीतमित्यन्वयः। जगदीश्वराभ्यामनायासेन कृतमेतद्युद्धमित्याह–वसुदेवपुत्रयोरिति। जगदीशयोः वसुदेवपुत्रयोः तद्युद्धं परं केवलं विक्रीडितं क्रीडामात्रमेव॥ २९॥ योऽनन्तगुणो भुवनत्रयस्य स्वलीलया स्थित्युद्भवान्तं समीहते करोति स्थितिः उद्भवश्च अन्तश्च तत्तथा मिथो विरुद्धत्वादेकवद्भावः। यद्यपि तस्य हरेः परपक्षनिग्रहः चित्रं न भवति तथापि मर्त्यानुविधस्य मनुष्यधर्ममनुकुर्वतो हरेस्तद्युद्धं बुद्धयवतारार्थं वर्ण्यते प्रशस्यत इत्यन्वयः॥ ३०॥ सीरिणं बलभद्रमापेति शेषः॥ क॥ व्यंसयित्वा वञ्चयित्वा॥ घ॥ ङ॥ हतानीकश्च हतसेनश्च अवशिष्टासुश्च अवशिष्टप्राणश्च स तथा तं हतानीकावशिष्टास्विति पाठे क्रियाविशेषणं॥ ३१–३२॥

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः

स्थित्युद्भवः॥ ३०॥

### गूढार्थदीपिनी

अत्रासृगापगाः न केवलं कृष्णेनैव, प्रवर्तिता किन्तु बलदेवेनापीति व्याख्येयमन्यथाऽग्रिमपद्योक्तवसुदेवपुत्रयोरित्यनेन विरोधः स्यादित्यवधेयम्। विनिघ्नेति सार्द्धम्। अङ्ग हे राजन् सङ्कर्षणेन तद्बलं क्षयं प्रणीतं तत् तयोः परं केवलं विक्रीडितं क्रीडैव न तु पराक्रमः। दुरन्तमनन्तम्। दुर्गं दुर्गमम्॥ २९॥ स्थितिः पालनम्। समीहते करोति। चित्रमाश्चार्य न। मर्त्याननुविधत्तेऽनुकरोतीति तस्य। मनुष्यदेहमनुकुर्वतोऽमानुषं कर्मेत्यतो वर्ण्यत इत्यर्थः॥ ३०॥ हतानि सैन्यानि यस्य अवशिष्टा असव एव यस्य स चासौ स च तम्॥ ३१॥ हता बहुशोऽरात्तयो रिपवः येन। वारुणै वरुणदेवताकैः नागपाशैः। वारयामास मोचयामास॥ ३२–३३॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

अङ्ग, हे राजन्! तद्बलं सैन्यम् अर्णववत् दुर्गं दुःप्रवेशं भैरवं भयङ्करं च दुर्गमः अन्तोऽग्रभागः पारमवधिस्थानं च यस्य मुखाग्रे कोऽपि विजिगीषुर्मन्तुं न शक्नोति तदलङ्घ्यपारं कुतो व्रजेदेवंभूत क्षयं प्रणीतं नाशितम् वसुदेवपुत्राभ्यामिति विभक्तिव्यत्ययेन सम्बन्धः तत् कर्म परं केवलं वसुदेवपुत्रयोर्विक्रीडितं लीलामात्रं न तु पराक्रमः॥ २९॥ यतो योऽनन्तगुणोऽसङ्ख्येयस्वाभाविकगुणः भुवनत्रयस्य स्थित्युद्भवान्तं लीलामात्रेणैव समीहते तस्य परपक्षनिग्रहः शत्रुपक्षदमनं विक्रीडितमिति किं चित्रम् तथापि मर्त्यान् शिक्षणीयान् अनुविधत्ते शिक्षकत्वेनानुकरोतीति स तस्य अत्यल्पमपि कर्माश्चर्य्यमिव वर्ण्यते इत्यर्थः॥ ३०॥ हतान्यनीकानि यस्य अवशिष्टा असवो यस्य स चाऽसौ स च तम्॥ ३१॥ हताः अरातयो येन तम् ते चारातयोऽन्यत्र न तु प्रस्तुत युद्धे मुकुन्दोऽप्यक्षतबल इति वचनात् तेन जरासन्धेन भूमारभूतानां पुनरानीयमानानां वधरूपकार्यस्य चिकीर्षया॥ ३२॥

### श्रीसत्यधर्मकृता श्रीभागवतटिप्पणी

एतज्जरासन्धसैन्यं स्वान्व्यसनात्कष्टात् साधूनां साधुभिः सत्कृतम्। कर्तृकर्मणोरिति कर्तरि षष्ठी। ईशेति बलसम्बोधनम्॥ २९॥ अत्रानोकशब्दोऽक्षौहिणीपरः। यद्वा त्रयोविंशतिपदेन तावदक्षौहिणीग्रहोऽनीकशब्दः सेनावाची। तेषां भारं

सङ्ग्रोऽपाकुरु। दंशितौ कवचखचिताङ्गौ॥ ३०॥ अल्पीयसा बलेन गणनतोऽल्पतमेन॥ ३१॥ सदनात्समादितश्चतुर्द्वारस्य समाहारः॥ ३२॥

**श्रीमद्वल्लभाचार्यकृता सुबोधिनी**

एवमुक्तं युद्धमुपसंहृति बलमिति। शीघ्रमुपसंहारे ततोऽपि महत्वं भवतीति बलमिति। अङ्गैरश्वादिभिः अर्णवरूपैः दुर्गं भैरवं भयानकं च। अनेन स्वरूपतो माहात्म्यमुक्तं बलस्य। दुरन्ताः पाला यस्येति बलस्य रक्षकाः। सङ्गे समागताः राजानः दुरन्ताः। न हि तेषामन्तं कश्चित्कर्तुं शक्तः। ततोऽपि माहात्म्यमाह मगधेन्द्रपालितमिति। जरासन्धेन पालितम्। इन्द्रपदेन सर्वतो बलस्य समृद्धता द्योतिता। एतादृशमपि क्षणमध्ये क्षयं प्रणीतम्। एतदपि वसुदेवपुत्रयोः क्रीडितम्। यद्यपि वसुदेवपुत्रत्वेन नाट्यं कृतम्। तथा सति पुत्रत्वनिर्वाहार्थं प्रयासोऽपि बाललीलायामिव प्रकाशनीयः। तथापि न प्रकाशितम्, किन्तु क्रीडयैव सर्वं मारितमिति। एवं करणे हेतुमाह जगदीशयोरिति। सर्वजगत एव ईश्वरयोः। नहीश्वरः सदैकरूपो भवति। कदाचिदभिनयं करोतीति सर्वदा अभिनयमेव करिष्यति। परमित्यनेन विशेषक्रीडायामप्यनादरः, ततोऽप्यल्पमिति सूचनार्थः॥ २९॥ ननु किमित्येषा कथा वर्णिता विशेषाकारेण, सामान्यत एवैतद्वक्तव्यम्, जरासन्धसमानीतसैन्यस्य बहुशो वधं कृतवानिति, अल्पे हि पौरुषत्वेन युद्धं वर्णनीयम्, न तु भगवतीति चेत्, सत्यम्, इत्याह स्थित्युद्भवान्तमिति। यस्त्वनन्तः सर्वतः परिच्छेदरहितः, स्वरूपविचारे क्रियमाणे। गुणविचारे त्वाह अनन्तगुण इति। अनन्ताः कोटिब्रह्माण्डेषु यावन्तः पदार्थाः तावद्गुणो भगवान्। ततोप्यधिक इति मुख्यः सिद्धान्तः। कांश्चिद्गुणान् प्रकटीकरोति। क्रियाविचारे त्वाह। भुवनत्रयस्य स्थित्युद्भवप्रलयं स्वस्य लीलामात्रेण समीहत इति। तत्र कियदिदं बलम्। अतः तस्यैतन्न चित्रम्। तथापि तस्य परपक्षनिग्रहो वर्ण्यते भक्तिस्थापनार्थम्। नन्वीश्वरे परपक्षनिग्रहव्यतिरेकेणापि महत्त्वादेव भक्तिर्भविष्यति, किं निग्रहवर्णनेनेत्याशङ्क्याह मर्त्यानुविधस्येति। भगवान् मर्त्यानुविधानं करोति। तथा सति कदाचिद्भक्तपक्षपातं न कुर्यात्, अन्यधर्माभिनिवेशादिति। तत्रापि चेत् भक्तपक्षपातं कुर्यात्, तदा निःसन्दिग्धं भक्तिमार्गः प्रवर्तेतेति। अत एव वर्ण्यते विशेषाकारेणेति॥ ३०॥ एवं दूषणं परिहृत्य जरासन्धेन बलभद्रं प्रति यदुक्तं तद्बलभद्रः कृतवानित्याह जग्राह विरथमिति। तस्य रथेऽपि छिन्नः। केवलं पदातिरवशिष्टः। यद्यपि शरीरेणापि महाबलः, तथापि तं जग्राह विरथो हन्तव्यो न भवतीति बद्ध्वा गृहे नेय इति बन्धनार्थं गृहीतवान्। यतोऽयं रामः। सर्वेषां रमणार्थे प्रवृत्तः। सः हन्तुमप्यशक्य इति तस्य नामाह। महाबलमिति च दैवं मानुषं च बलं तग्य निरूपितम्। तर्हि दैवगतया गृहीत इति चेत्, तत्राह ओजसेति तर्हि पाशादिभिर्गृहीतो भविष्यतीति चेत्, तत्राह सिंहः सिंहमिवेति। हस्ताभ्यामेव निगृह्य स गृहीतः, न तु हलादिना आकृष्टः। तस्य मोचकाभावमाह। हतमनीकं यस्य, अवशिष्टा असवो यस्येति॥ ३१॥ ग्रहणानन्तरं परोपकारार्थमागतो न बन्धनीय इति बध्यमानं भगवान् निवारयामासेति आह वध्यमानमिति। महतो बन्धनमनुचितमिति तं विशिनष्टि हतारातिमिति। हताः अरातयो येन। अनेन शत्रुभूयस्त्वात् तेषां च दुष्टत्वात् तत्सुखं भविष्यतीत्यपि मोचने तदभावो हेतुरुक्तः। केवलबन्धनानि तत्र न समर्थानीति पाशैर्बद्धः। ते आकृष्टाः निग्रहहेतवो भवन्ति। तत्रापि वारुणैर्मानुषैश्च। जरादीनां मोचनाभावाय वारुणाः पाशाः, मनुष्याणामर्थे मानुषाः। एतादृशमपि स्वाधीतं जातं परमशत्रुं वारयामास, बन्धनं न कर्तव्यमिति। ननु कथमेवं भूभारहर्ता तं मोचयतीति चेत्, तत्राह गोविन्द इति। सिंहावलोकनन्यायेन पूर्वलीलां स्मृतवान्। अतस्तेनापि काचिल्लीला सेत्स्यतीति तं मोचितवान्। ननु किमिति दुष्टो मुच्यते, तत्राह तेन कार्यचिकीर्षयेति। निरोधो हि कर्तव्यः, एतदभावे सर्वे भगवत्परा राजसाः सात्त्विकाश्च न भविष्यन्तीति तदर्थमयं रक्षितः। अक्लिष्टकर्मत्वाय च॥ ३२॥

**श्रीसुबोधिनी-सारः**

हे अङ्ग अर्णवः समुद्रस्तद्वत् दुर्गं दुर्गमं भैरवं भीतिकरमनन्तपार मागधानामिन्द्रेण पालितं तद्बलं क्षयं प्रणीतम्। जगतामीशयोर्वसुदेवस्य पुत्रयोः तत् परं केवलं विक्रीडितं लीला॥ २९॥ अनन्तगुणो यो हरिर्भुवनत्रयस्य स्थित्युद्भवान्तं पालनसृष्टिसंहारं कुरुते स्वलीलया तस्य परपक्षस्य निग्रहो वधो न चित्रमाश्चर्यं मर्त्याननुविधत्ते नु करोतीति तथा तस्य तथापि उच्यते॥ ३०॥ विरथं रथहीनं हतान्यनीकानि यस्य अवशिष्टा असवः प्राणा यस्य तं च तं च महाबलं जरासंधं रामो बलदेवो जग्राह ओजसा बलेन सिंहः सिंहमिव॥ ३१॥ हताः पूर्वमरातयः शत्रवो येन तं वध्यमानं वारुणैर्मानुषैः पाशैरावृत्यमानं मागधं वारयामास मोचयामास गोविंदः श्रीकृष्णः तेन जरासन्धेन कार्यस्य चिकीर्षया करणेच्छया॥ ३२॥

**विवरणटिप्पणी**

बलं तदित्यत्र। शीघ्रमिति। बलिष्ठस्यापि शीघ्रमुपसंहारे पूर्वस्मादप्यधिकं भगवतो महत्त्वं भवतीत्यर्थः। बध्यमानमित्यत्र वीक्ष्येति शेषः। अनेनेति। जरासन्धस्य शत्रवो भूयांसः। एतद्बन्धने ते सुखिता भविष्यन्ति। तेऽपि दुष्टाः। अतस्तेषां

सुखाभावार्थं मोचनीय इत्यर्थः। काचिल्लीला सेत्स्यतीति। जरासन्धेन हेतुना द्वारिकालीला सिध्यति, महिष्यादिषु लीलाश्च भवन्ति। एतद्बन्धनस्थापने तु द्वारिकानिर्माणमेव न स्यादिति भावः। एतदभावे इति। पुरीनिर्माणाभावादिति भावः॥ ३२॥

## गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

तन्निहतावशिष्टं मगधेन्द्रेण पालितं अर्णववत् दुर्गमं दुःप्रवेशं भैरवं भयानकं च दुरन्तपारं दुःशब्दो निषेधे, दुरन्तं अन्येन नाशयितुमशक्यं अपारं देशतोऽप्यवधिरहितं बलं सैन्यं क्षयं प्रणीतमिति सार्धान्वयः। अहोऽद्भुतमेतत्। द्वाभ्यामेव त्रयोविंशत्यक्षौहिण्यात्मकं बलं निहतमिति विस्मयमानं राजानं प्रत्याह—वसुदेवपुत्रयोरिति। तत् जरासन्धसैन्यविनाशनं वसुदेवपुत्रयो रामकृष्णयोः परं विक्रीडितं क्रीडामात्रमेव, नतु पराक्रमः। तत्र हेतुमाह—जगदीशयोरिति॥ २९॥ न चैतदाश्चर्यमित्याह—स्थित्युद्भवान्तमिति। अनन्तगुणो यो भगवान् स्वलीलया अनायासेनैव सङ्कल्पमात्रेण भुवनत्रयस्य भूरादिलोकत्रयस्य स्थित्यादिकं समीहते करोति, तस्य पूर्वोक्तोऽयं परपक्षनिग्रहश्चित्रमाश्चर्यविषयो न भवति। 'तर्हि किमिति वैचित्र्येण उपवर्ण्यते' इत्यत आह—तथापीति। चित्रत्वाभावेऽपि मर्त्यान् अनुविधत्ते अनुकरोतीति तथा तस्य मनुष्यदृष्ट्यैतद्वैचित्र्येण वर्ण्यते इत्यर्थः॥ ३०॥ ततश्च हतान्यनीकानि सैन्यानि यस्य अवशिष्टा असवः प्राणा एव यस्य स चासौ स च तं विरथं महाबलमपि जरासन्धं रामो जग्राहेत्यन्वयः। ननु 'महाबलश्चेत् स तर्हि कथं तं जग्राह' इत्यपेक्षायामाह—ओजसेति। स्वबलेनेत्यर्थः। सोऽपि महाबल इत्याशयः। तत्र दृष्टान्तमाह—सिंहो यथा सिंहं गृह्णाति तथेति॥ ३१॥ हता अरातयो येनं तं महाबलं वारुणैर्वरुणदेवताकैर्मानुषैश्च पाशैः रामेण बद्ध्यमानं दृष्ट्वा गोविन्दस्तद्बन्धनं वारयामास। तत्र हेतुमाह—तेन जरासन्धेन कार्यस्य दुष्टसङ्ग्रहस्य कर्तुमिच्छयेति॥३२॥

## अन्वितार्थप्रकाशिका

विनिघ्नतेति सार्द्धम्। अङ्ग हे राजन्! अपरिमेयमपरिच्छेद्यं तेजः पराभिभवसामर्थ्यं यस्य तेन दुर्मदान् अरीन् शत्रून् मुसलेनायुधेन विनिघ्नता संकर्षणेनापि तन्निहतावशिष्टं मगधेन्द्रेण पालितम् अर्णव इव दुर्गमं दुष्प्रवेशं भैरवं भयानकं च दुरन्तपारं दुःशब्दो निषेधे नास्ति अन्तस्ततं पारोऽवधिश्च यस्य तेन विक्रमेणागाधं देशतोऽप्यवधिरहितं च बलं सैन्यं क्षयं प्रणीतं तत् जरासन्धसैन्यविनाशनं जगदीशयोः वसुदेवपुत्रयोः परं केवलं विक्रीडितं क्रीडामात्रमेव नतु पराक्रमः॥ २९॥ स्थितीति। अनन्तगुणो यो भगवान् एकत्वं द्वयोरैक्याभिप्रायेण स्वलीलया अनायासेनैव भुवनत्रयस्य स्थित्युद्भवान्तं पालनादित्रयं समीहते करोति। तस्य पूर्वोक्तोऽयं परपक्षनिग्रहश्चित्रमाश्चर्यविषयो न भवति। तथापि चित्रत्वाभावेऽपि मर्त्यान् अनुविधत्ते अनुकरोतीति तथा तस्य मनुष्यदृष्ट्यैतद्वैचित्र्येण वर्ण्यते॥ ३०॥ जग्राहेति। रामः हतान्यनीकानि सैन्यानि यस्य अवशिष्टाः असवः प्राणा एव यस्य स चासो स च तं विरथं महाबलमपि जरासन्धमोजसा बलेन जग्राह। सिंहो यथा सिंहं गृह्णाति तथेति॥ ३१॥ बध्यमानमिति। हता अरातयो येन तं महाबलं हतप्रायमरातिमिति कर्मधारयो वा। वारुणैर्वरुणदेवताकैः पाशैः अत्यन्तापमानार्थं मानुषैश्च पाशैः रामेण बध्यमानं दृष्ट्वा तेन जरासन्धेन कार्यस्य दुष्टसंग्रहस्य चिकीर्षया सम्पादनेच्छया गोविन्दस्तद्बन्धनं वारयामास॥ ३२॥

## श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्

अङ्ग हे परीक्षित् अर्णवः समुद्रस्तद्वत् दुर्गं अनवगाह्यं भैरवं भयानकं च दुरन्तपारं दुरिति निषेधेनास्ति अंतस्तल स्पर्शः पारोःवधिश्च यस्य तथा भूतः पयोधिस्तद्वत् पराक्रमेणागाधं देशतश्चावधिहीनमित्यर्थः तत् मगधेंद्र पालितं बलं सैन्यं रामकृष्णाभ्यां क्षयं प्रणीतं गमितं॥ तत् तयोः। परं केवलं विक्रीडितं लीलामात्रं नतु सामर्थ्यम्॥ २९॥ एतच्वनाद्भुतमित्याह स्थितीति॥ य इत्येक वचनं तु रामोऽवतारः कृष्णश्चावतारीति भेदज्ञापनाभिप्रायेण। परयक्षाणां शत्रुपक्षस्थ जनानांनिग्रहोनाशः चित्रमाश्चर्यं नास्तिमर्त्यानुविधस्य मनुष्यभावमनुसृतस्य शत्रुनिग्रहः॥ ३०॥ हतानी कोनष्ट सैन्यश्चासाववशिष्टप्राणाश्वतं॥ उर्जसा बलेन जग्राह॥ ३१॥ हता बहवः॥ अरातयः शत्रवो येन तथाभूतमपि जरासंधं वारुणैर्वरुणो या सत्कृतैः॥ मानुषैरज्वादिभिश्चपाशैः अत्यंतापमानार्थं बध्यमानं बध्नन्तं रामं गोविंदः वारयामास॥ ३२॥

## भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

न चात्र विस्मयः कार्यं इत्याह। स्थितीति। भगवान्, अनन्यगुणः असंख्येयकल्याणगुणगणः, स्वलीलयैव भुवनत्रयस्य त्रिलोक्याः, स्थितिश्च उद्भवश्च अन्तश्च तत्समाहारं, समीहते सम्यक्करोति। तस्य भगवतः परपक्षनिग्रहः शत्रुपक्षविनाशनं, न चित्रं नैवाश्चर्यमित्यर्थः। यदि शत्रुपक्षनिग्रहो नाश्चर्यरूपस्तर्हि किमिति विचित्रतया भवद्भिर्वर्ण्यतेऽत आह। तथापि विचित्रत्वाभावेऽपि, मर्त्याननुविधत्तेऽनुकरोतीति मर्त्यानुविधस्तस्य, वर्ण्यते। कर्मेति शेषः मर्त्यानुविधस्यामानुषं कर्म चित्रमेवेत्यभिप्रायेण वर्ण्यत इति भावः॥ २९॥ जग्राहेति हतान्यनीकानि सैन्यानि यत्य अवशिष्टा असवः प्राणा यस्य स चासौ स च तं, विरथं रथरहितं, महाबलमपि, जरासन्धं, रामः, सिंहः ओजसा, स्वसामर्थ्येन, सिंहम् इव, जग्राह गृहीतवान्॥ ३०॥ बद्धयमानमिति।

हता अरातयो येन तं, वारुणैर्वरुणदेवसाकैः मानुषै रज्जुप्रभृतिभिः, पाशैर्बन्धनसाधनैः, बद्धयमानं जरासन्धं, रामेणेति शेषः। गोविन्दः श्रीकृष्णः, दृष्ट्वेति शेषः। तेन जरासन्धेन, कार्यचिकीर्षया हेतुना, वारयामास। राममिति शेषः। कार्य तु भूमारभूतान्यतस्तत आनीय सेनां संपाद्य पुनर्युद्धाय तदागमनरूपं बोध्यम्॥ ३१॥ स मुक्त इति। वाक्यैरिति च। लोकनाथाभ्यां रामकृष्णाभ्यां, मुक्तः पातबन्धनाद्विमुक्तः वीरसम्मतः स जरासन्धः, व्रीडितः लज्जितः अत एव, तपसे यादवपराजयार्थकतपश्चरितुं, कृतसंकल्पोऽपि, पथि स्वदेशगमनमार्गे, राजभिः सम्मिलितैर्नृपैः कर्तृभिः, विचित्रा अर्थाः पदानि शब्दाश्च येषु तैः, वाक्यैः प्राकृतैः नयनैः अपि, न्यायैश्च साधनैः, वारितः। तत्र लौकिकन्यायमाहुः। स्वकर्मेति। हे राजन्, यदुभिरल्पकैरेतैर्यादवैः, ते महतस्तव, अयं पराजयः, पराभवः, केवलं स्वकर्मबन्धः प्राप्तः। अतस्त्वया न लज्जितव्यमिति भावः। एवंविधैर्नयैरिति सम्बन्धः। इत्युभयोरेकान्वयः॥ ३२–३३॥

### कृष्णप्रिया

हे अङ्ग! राजन् जरासन्ध रक्षित वह सैन्य, सागर के समान दुस्तर दुष्पार दुर्गम, और खतरनाक और अजेय सा था। लेकिन वसुदेवजी के वीर पुत्र बलभद्र जी एवं श्रीकृष्ण भगवान ने अल्पश्रम से अल्प समय में साफ कर दिया। जगदीश गोविन्द एवं बलभद्र जी के लिये तो वह बाँये हाथ का खेल था॥ २९॥ राजन्! अनन्तगुण सम्पन्न भगवान् त्रिभुवन की उत्पत्ति पालन संहार विना श्रम निजलीला से करते हैं। उन भगवान के लिए खलों की दुष्ट दैत्यों की जरासंध आदि शत्रुओं की सेना का विनाश करना कोई बड़ी बात नहीं है। फिर भी जब जब भगवान् मनुष्यावतार लेकर साधारण मनुष्य की लीला करते हैं तब भक्तगण प्रभु की इन लीलाओं का गान करते हैं॥ ३०॥ श्रीबलदेव जी ने रथ विरहित बने हुए और सम्पूर्ण सेना भी नष्ट होने पर केवल उनके प्राण अवशिष्ट रहे थे वैसे महाबलिष्ठ जरासन्ध को जैसे युवराज केसरी दूसरे अन्य केसरी को पकड़ ले वैसे उसको पकड़ लिया॥ ३१॥ पूर्व में जरासन्ध ने असंख्य विपक्षी नरपतियों का नाश किया था, आज उसी जरासन्ध को श्रीबलभद्र जी जब वरुण के पाश से एवं मनुष्यों के फंदे से बांध रहे थे तब दयालु दयानिधि श्रीकृष्ण भगवान ने बहुत ही सोचकर छुड़ाया क्योंकि यदि जरासन्ध जीवित रहा तब बार-बार सेनाओं को इकट्ठी कर ले आयगा और उनके भूमि का भार हलका किया जायेगा॥ ३२॥

**स मुक्तो लोकनाथाभ्यां व्रीडितो वीरसम्मतः। तपसे [१]कृतसंकल्पो वारितः पथि राजभिः॥ ३३॥**
**[२]वाक्यैः [३]पवित्रार्थपदैर्नयनैः प्राकृतैरपि। स्वकर्मबन्धनः[४] प्राप्तः यदुभिस्ते पराभवः॥ ३४॥**
**हतेषु सर्वानीकेषु नृपो बार्हद्रथस्तदा। उपेक्षितो भगवता मगधान्[५] दुर्मना ययौ॥ ३५॥**
**मुकुन्दोऽप्यक्षतबलो निस्तीर्णारिबलार्णवः। [६]विकीर्यमाणः कुसुमैस्त्रिदशैरनुमोदितः॥ ३६॥**

### कर्दमक्षमा

**अन्वयः**—लोकनाथाभ्याम्, मुक्तः, व्रीडितः, तपसे, कृतसंकल्पः, वीरसम्मतः, सः, राजभिः, पथि, वारितः॥ ३३॥ पवित्रार्थपदैः, प्राकृतैः, नयनैः, अपि, 'स्वकर्मबन्धनः', यदुभिः, ते पराभवः प्राप्तः, इति वाक्यैः, निवारयामासुः॥ ३४॥ तदा, सर्वानीकेषु, हतेषु, भगवता, उपेक्षितः, बार्हद्रथः, नृपः, दुर्मनाः, मगधान्, ययौ॥ ३५॥ निस्तीर्णारिबलार्णवः, अक्षतबलः, मुकुन्दः, अपि, त्रिदशैः, कुसुमैः, विकीर्यमाणः, अनुमोदितः॥ ३६॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

पवित्रार्थानि धर्मोपदेशपराणि पदानि येषु तैर्वाक्यैः। नयनैर्नीतिभिः। प्राकृतैर्लौकिकैः। तत्र लौकिकन्यायमाहुः। स्वकर्मेति। यदुभिरल्पकैः कृत्वा ते महतः पराभवः केवलं कर्मबन्धेन प्राप्तोऽतस्त्वया न लज्जितव्यमिति॥ ३४॥ बार्हद्रथो जरासंधः॥ ३५॥ मुकुंदोऽपि ययावित्यनुषङ्गः। न क्षतं बलं यस्य सः। तस्यैवामृतदृष्ट्या क्षतप्रतिसंधानादिति भावः। निस्तीर्णोऽनायासेनैव तीर्णोखिलार्णवो येन। साधुसाधु इत्यनुमोदितश्च॥ ३६॥

---

१. वनं विविक्षुस्तपसे–वीर. विज.; विविक्षुस्तपसेऽरण्यं–इति कस्यचित्। २. अयं विजये नास्ति। ३. विचित्रा–विज। ४. बन्धप्राप्तोऽयं–श्रीधर. वंशी वीर. जीव.; बन्धतश्चाप्तौ–प्रा. पा.। ५. मागधो–विध.। ६. गृहीत्वा मगधेन्द्रस्य धनं स्त्रीकोशवाहनम्–विजयेऽधिकम्।

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

मुक्तो विसृष्टः । वारितो निवारितः ॥ स मुक्त इति युग्मकम् । लोकनाथाभ्यामिति पूर्वोक्तरीत्या लोकहितार्थमेवेति भावः । अथ च महाशयत्वाज्झटिति तद्धनने त्वनाग्रहश्च दर्शितः । ततो वीरसंमतोऽतो बन्धे ततोऽपि मोचने व्रीडितः । अत एव तपस उद्यतः, कथं यादवबलादपि पराजयो मम जातस्तत इतः क्षात्रधर्मं न करिष्यामि किन्तु तपसैव शरीरं त्यक्ष्यामीति बहिरभिमानज्ञापनायाऽन्तस्तु वीर्यातिशबलाभायेति ज्ञेयम् । पथि वनवर्त्मनि तपोऽर्थमाश्रिते ॥ ३३ ॥ तत्र नयेषु ॥ पवित्रार्थपदैः क्षत्रियस्य वार्द्धक्य एव सति वैराग्ये तपः, युद्धादिको मुख्यो धर्मः लज्जया तत्त्यागोऽनुचित इत्यादि लक्षणैः । तवैतत्परामवदुःखं ललाटे लिखितमेव तत्कथमन्यथा भवति 'अवश्यमेव भोक्तव्यम्' इति स्मृतेः । अतः स्वकर्मभिरेवैतत्परामवस्तया च प्रारब्धाधीनत्वात्तत्र का लज्जा, कः खलु बुद्धिमानतिक्षुद्राद्यादवादपि दुर्बलं मस्यते । यादवेन युद्धे तव जये सति न किमपि यशः, पराजयेपि न काचिल्लजा, जरासंधसिंहो हि कृष्णसारं जित्वापि न कमप्युत्कर्षमजित्वापि न कामपि निन्दां प्राप्नोतीति वयं जानीमः । समपक्षेणापि सह युद्धे जयपराजयाभ्यां क्षत्रियैर्न गर्वदैत्ये धार्ये, किमुत स्वतोऽतिन्यूनेनेति शास्त्रम् ॥ ३४ ॥ 'नृपो बार्हद्रथस्तदा' इत्येवपाठः सम्यक् । तीर्थस्तु—'नृपतिर्वार्हद्रथः' इति पपाठ, तत्रार्षत्वाश्रयणमृते निर्वाहो नास्ति ॥ हतेष्विति त्रिकम् । बृहद्रथः राजचक्रवर्त्ययं तदपत्यमिति तन्नामविख्यापक इत्यर्थः । अत एव साभिमानत्वादुपेक्षितोऽपि दुर्मना दुःखितचित्तः ॥ ३५ ॥ अपिना पूर्वक्रिया गृह्यते । तस्यैव मुकुन्दस्यैव । क्षतप्रतिसंधानं विक्षतीभवनम् । इति भावः—दृष्ट्या मृतिनाशकस्य विक्षतीजरणं नाद्भुतमित्याशयः । अखिलार्णवः शत्रुसेनासमुद्रः ॥ मुकुन्द इति जरासंधमोचनाभिप्रायेण । निस्तीर्णेति मर्त्यानुविधित्वात् । मुकुन्दोऽपि मथुरां ययाविति । अनुमोदितः जयजयेत्यादि शब्दैर्वर्द्धितः ॥ ३६ ॥

### श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी

स मुक्त इति युग्मकम् । लोकनाथाभ्यामिति पूर्वोक्तरीत्या लोकहितार्थमेवेति भावः । अथ च महाशयत्वात् झटिति तद्धननेत्वनाग्रहश्च दर्शितः । यतो वीराणां सम्मतः अतो बन्धे ततोऽपि मोचने व्रीडितः । अत एव तपस उद्यतः । कथं यादवबलादपि मम पराजयः तत इतः क्षात्रधर्मं न करिष्यामि तपसैव शरीरं त्यक्ष्यमीति बहिरभिमानज्ञापनाय । अन्तस्तु वीर्यातिशयमलाभायेति ज्ञेयम् । पथि वनवर्त्मनि तपोऽर्थमाश्रिते ॥ ३३ ॥ पवित्रार्थपदैः क्षत्रियस्य वार्द्धक्य एव वैराग्ये सति तपः युद्धादिकमेव मुख्यो धर्मः लज्जया तत्त्यागोऽनुचित इत्यादिलक्षणैः युद्धे कदाचित् जयः कदाचित् पराजयोऽपि तेन निर्वेदः क्षत्रियस्यायोग्य इत्यादिलक्षणैर्नयनैश्च । च एवार्थे स्वकर्मबन्धत एव प्राप्तः नतु वीर्य्याद्यभावतः अयमिति पाठेऽन्यो न भावीति भावः । अन्यत्तैः । यद्वा, तत्र पवित्रार्थपदान्याह–सेति । "अवश्यमेव भोक्तव्यं कृतं कर्म" इत्यादि शास्त्रीयन्यायानुगृहीतत्वात् पवित्रार्थपदत्वं प्राकृतैरिति युद्धे वीरस्य मरणमपि श्रेयः न तु तत्राशक्त्यादिना तप इत्यादिलक्षणैः अन्यत् समम् ॥ ३४ ॥ हतेष्विति त्रिकम् । नृपेति वार्हद्रथः राजचक्रवर्त्त्ययं तदपत्यमिति तन्नामविख्यापक इत्यर्थः । अत एव साभिमानत्वादुपेक्षितोऽपि दुर्मनाः दुःखितचित्तः ॥ ३५ ॥ मुकुन्द इति जरासन्धमोचनाभिप्रायेण निस्तीर्णेति मर्त्यानुविधित्वात् ॥ ३६ ॥

### श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी

पवित्रार्थपदैः क्षत्रियस्य वार्द्धक्य एव वैराग्ये सति तपोयुद्धादिकमेव मुख्यो धर्म्मः । लज्जया तत्त्यागोऽनुचित इत्यादिलक्षणैः, युद्धे कदाचिज्जयः, कदाचित् पराजयोऽपि, तेन निर्व्वेदः क्षत्रियस्यायोग्य इत्यादिलक्षणैर्नयनैश्च, 'च' एवार्थे, स्वकर्म्मबन्धत एव प्राप्तः, न तु वीर्य्यादिह्रासात् । 'अयम्' इति पाठे अन्योन्यभावीति भावः । अन्यत्तैर्व्याख्यातम् । यद्वा, तत्र परित्रार्थं-पदान्याह—स्वेति । 'अवश्यमेव भोक्तव्यं कृतं कर्म्म' इत्यादिशास्त्रीयन्यायानुगृहीतत्वात्, परित्रार्थपदत्वं व्यक्तमेव; प्राकृतैरिति युद्धे वीरस्य मरणमपि श्रेयः, न तु तत्राशक्त्यादिना तप इत्यादिलक्षणैः । अन्यत् समानम् ॥३३॥ नृपतिः सम्राट् तथापि बृहद्रथस्य महावीरस्य पुत्रः, अतएव दुर्म्मना दुःखितचित्तः, पुनः श्रीभगवता सह युद्धेच्छानपगमात् ॥ ३४ ॥ मुकुन्दः परमानन्दप्रदो भगवानिति भावः । अतएव न विद्यते क्षतमपि तदीयामृतदृष्ट्या यस्मिन् तथाभूतं बलं यादवसैन्यं यस्य सः । अतएवोक्तं श्रीहरिवंशे ( विष्णु० प० ३६।४० )—'जित्वा तु मागधं सङ्ख्ये जरासन्धं महीपतिम् । विहरन्ति स्म सुखिनो वृष्णिसिंहा महारथाः ॥' इति । कुसुमैः कृत्वा विकीर्य्यमाणो व्याप्यमान इत्यर्थः ॥ ३५ ॥ माथुरैः सूतादिभिः, उप अधिकं गीयमानविजयः, किंवा माथुरैर्यादवैः; कथम्भूतैः ? अभित आभिमुख्ये वा संगम्य श्रीभगवता सह मिलित्वा, विज्वरैः—विगतो ज्वरः श्रीभगवददर्शनादिना तापो येषां तैः । न च केवलं विज्वरत्वम्, प्रहर्षश्च जात इत्याह—मुदित आत्मा मनो देहो वा येषां तैः, उभयेषां वा विशेषणद्वयमिदम् ॥३६॥

### श्रीमद्वीरराघवाचार्यकृता भागवतचन्द्रचन्द्रिका

स इति । लोकनाथाभ्यां रामकृष्णाभ्यां विमुक्तः स वीरश्रेष्ठो जरासन्धः तावत्तपसे तपश्चरितुं वनं प्रवेष्टुमिच्छुः पथि राजभिः शिशुपालादिभिः कर्तृभिः विचित्रा अर्थाः पदानि शब्दाश्च येषु तैः वाक्यैः प्राकृतैर्नन्यायैश्च साधनैर्वारितः अत्र लौकिक-

न्यायमाहुः—स्वकर्मेति। यदुभिरल्पकैर्महतस्ते पराभवः केवलं स्वकर्मबन्धप्राप्त इत्येवम्बिधैर्नयैरिति सम्बन्धः ।। ३३–३४।। हतेष्विति सर्वेष्वनीकेषु हतेषु सत्सु बार्हद्रथो जरासन्धः राजा भगवतोपेक्षितो दुःखितचित्तो मागधान् जनपदान् ययौ ।। ३५।। मुकुन्द इति। अक्षतमविहतं बलं स्वीयं स्वकीयं यस्य निस्तीर्णोऽरीणां बलमेवार्णवो येन तथाभूतः मुकुन्दः अपि त्वर्थः मुकुन्दस्त्वित्यर्थः साधु साध्विति देवैरनुमोदितः कुसुमैर्विकीर्यमाणश्च विगतः ज्वरः शत्रुपीडात्मको येभ्यः तैरत एव मुदितचित्तैः माथुरैर्जनैरुपसङ्गम्य मिलित्वा सूतादिभिः उपगीयमानो विजयः यस्य येन तथाभूतो ययौ इति सम्बन्धः। तत्र सूताः पौरुषप्रकाशकाः मागधाः गायकाः वन्दिनः स्तुतिपाठकाः इति विवेकः ।। ३६–३७ ।।

### श्रीविजयध्वजतीर्थकृता पदरत्नावली

मुक्तो विसृष्टः ।। ३३–३७ ।।

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

लज्जितत्वे हेतुः वीरसम्मत इति ।। ३३ ।। पवित्राणि तत्त्वोपदेशपराणि अर्था पदानि च येषु तैः। नयनैः नीतिभिः प्राकृतैर्लौकिकैः तत्र तत्त्वोपदेशमाहुः—स्वकर्मेति। तवैतत् पराभवदुःखं ललाटे लिखितमेव तत् कथमन्यथा भवति "अवश्यमेव भोक्तव्यं कृतं कर्म" इति स्मृतेः एतद्व्यङ्गयनार्थेन नीतिश्चाहुः स चार्थो यथा यद्येष पराभवस्ते प्रारब्धकर्माधीन एव तर्हि का लज्जा कः खलु बुद्धिमानतिक्षुद्रात् यादवादपि त्वां दुर्बलं मंस्यते यादवेन सह युद्धे तव जये सति न किमपि यशः पराजयेऽपि न काचिल्लज्जा जरासन्धसिंहो हि कृष्णसारं जित्वापि न कमप्युत्कर्षमजित्वापि न कामपि निन्दां प्राप्नोतीति वयं जानीमः समकक्षेणापि सह युद्धे जयपराजयाभ्यां क्षत्रियैः न गर्वदैन्ये धार्ये किमुत स्वतोऽतिन्यूनेनेति शास्त्रमिति ।। ३४।। बार्हद्रथोऽपि बृहद्रथोऽपि बृहद्रथपुत्रो जरासन्धः ।। ३५ ।। मुकुन्दोऽपि ययावित्यनुषङ्गः ।। ३६ ।।

### गूढार्थदीपिनी

पवित्रार्थानि धर्मोपदेशपराणि पदानि येषु तैः। क्षत्रियस्य युद्धमेव मुख्यो धर्मः तपस्तु वार्धक्य एवेति बोधकानीत्यर्थः। नयनैर्नीतियुक्तैः। प्राकृतैर्लौकिकैः तदेवाह स्वेति कर्मबन्धेन ।।३४।। बृहद्रथपुत्रो जरासन्धः ।।३५।। मुकुन्द इति युग्मम्। मुकुन्दोऽपि ययौ इति योज्यम्। अखिलार्णवः शत्रुसेनासमुद्रः। विकीर्यमाण आच्छाद्यमानः। जयजयेत्यादिशब्दैरनुमोदितश्च ।। ३६–३७ ।।

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

राजभिर्वाक्यैर्वारित इति सम्बन्धः ।। ३३ ।। कथम्भूतैर्वाक्यैः नयनैः नीतिशास्त्रस्थैः प्राकृतैः स्वोत्प्रेक्षितैश्च पवित्रार्थानि श्रोतृमोहघ्नानि पदानि येषु तैः तत्रोभयवाक्यसारमूचुः ते त्रयोविंशत्यक्षौहिणीपतेः यदुभिः स्वल्पसङ्ख्यैरपि अयं पराभवः स्वकर्मबन्धेन स्वकर्मबन्धनेन प्राप्त इति ।। ३४।। बार्हद्रथो बृहद्रथसुतो जरासन्धः ।। ३५ ।। न क्षतं वलं यस्य स मुकुन्दोऽपि ययौ इत्यनुषङ्गः ।। ३६ ।।

### श्रीसत्यधर्मकृता श्रीभागवतटिप्पणी

वसुदेवः पितरं निर्यातयामास गमयामास ।। ३३ ।। अनुत्तरेणोत्तरभिन्नेन सामुख्येन तत्सदृशेन दक्षिणेनेति यावत् ।।३४।। दुर्मदान् रणकर्मणि ।। ३५ ।। सङ्कर्षणश्चासौ सहायश्च तद्वान् ।। ३६ ।।

### श्रीमद्वल्लभाचार्य्यकृता सुबोधिनी

ततो यज्ञातं तदाह स मुक्त इति। अन्ये यादवाः पुनर्बन्धनं करिष्यन्तीत्याशङ्क्याह लोकनाथाभ्यामिति। त्रैलोक्यनाथाभ्यां मुक्तं को वा बद्धुं शक्तः। द्विवचनेन विभक्तसामर्थ्यं सर्वमेव मोचने नियुक्तमिति सूचितम्। ननु तादृशः त्यक्तोऽपि म्रियेति कथं कार्यसिद्धिरिति चेत्? सत्यम्। व्रीडितः। अत्र हेतुः वीरसंमत इति। वीरेषु अयमतिवीर इति संमतः। ततः मानुषपराक्रमस्य हतत्वात् अलौकिकं पराक्रमं साधयितु तपसे कृतसङ्कल्पो जातः। ततस्तपःकरणार्थं गच्छन् पथि राजभिर्वारितः, ये राजनो भारभूताः। अनेन भगवच्चरित्रमलौकिकमित्युक्तम्। येषामुपकारं करोति तैस्त्यक्तः, येषां त्वपकारं करिष्यति तैर्गृहीत इति ।। ३३ ।। तेषां बोधने करणान्याह वाक्यैरिति। त्रिविधा हि बोधकाः। तत्र सात्त्विकानां वचनं पवित्रार्थपदैरिति पवित्रार्थानि पदानि येषु वाक्येषु। वाक्यैरिति त्रिष्वपि सम्बध्यते। नयनैः प्राकृतैरपि। भगवानीश्वरः सर्वात्मा, तत्र पराजयो भाग्यमेवेति पवित्रार्थपदानि। नीतिवाक्यानि तु स्वदेशो न भवति, विचारश्च न कृतः। अकस्माद्युद्धे पलायनमुचितमेवेति राजसाः। अतो

नीतिविरुद्धं न कर्तव्यमित्युपदेशपरैः । प्राकृतास्तु बहूनामेव महतामपि पराजयो जायत इति प्राकृतवचनैः बोधमुक्तवन्तः । एते त्रिविधा अपि दृष्टन्यायेनैवोक्तवन्तो, नादृष्टन्यायेन । अन्ये पुनरन्तरङ्गाः अदृष्टप्रकारेण बोधयामासुरित्याह स्वकर्मबन्धन इति । त्वया हि बह्वो जिताः, तत्कर्मफलं च भोक्तव्यम्, अन्यथा प्रकारान्तरेण दुष्टैः सह पराजयो भवेत्, यतः स्वकर्मणा बन्धनं यस्य तादृशः पराभवः । अपिशब्दात् सर्वे चतुर्धा व्यस्तैः समस्तैश्च बोधयामासुरित्यर्थः । यदुभिः सह पराभव इति । युक्तमेवैतत् । यतो ज्येष्ठो यदुरित्यपि ज्ञापितम् ॥ ३४ ॥ ततो यज्जातं तदाह । हतेषु सर्वानीकेष्वपि, तथापि सर्वैः पुरस्कृत इति राजचिह्नानि प्राप्य स्वदेशान् गतः जरासन्धः । यतो नृपः दैवमानुषसहायः सूचितः । तदा बोधनानन्तरं दृष्टसामग्र्यां च सत्यां पश्चाद्गत इत्याह तदेति । इत्याशङ्क्याह उपेक्षितो भगवतेति । भगवतः स्थाने यद्यप्युक्तम्, यद्यपि भगवत्त्वाच्च जानाति, तथापि तानि वाक्यान्यनादृत्योपेक्षामेव कृतवान् । भगवत्त्वादग्रिमकार्यमेव विचारयति, न तु नीतिविरोधम् । उपेक्षया सुतरां दुर्मना जातः । तत्त्वे अवगतेऽपि मागधत्वान्न शरणमागतः । नापि तूष्णीं स्थास्यति । मागधत्वादेव मागधान् ययौ ॥ ३५ ॥ तस्य स्वगृहप्राप्तिमुक्त्वा भगवतोऽपि परमवैभवेन मथुराप्रवेशमाह मुकुन्दोऽपीति पञ्चभिः । न क्षतं बलं यस्य । एकोपि न हतः । यद्यपि मोक्षदाता तानपि मारयित्वा मुक्तिं दद्यात्, जरासन्धं वा मोचयेत् । न हि भगवान् जयहेतुः, किन्तु मोक्षहेतुः लीनाः केचन पुनरायास्यन्तीति शङ्काभावार्थमाह । निस्तीर्णः नितरामुत्तीर्णः अखिलरूप एवार्णवो येन । अर्णवो हि नान्यत्र समायाति । महत्त्वेन पौरुषं पुनरागमनाभावश्च निरूपितः । ततः कुसुमैः विकीर्यमाणः त्रिदशैरनुमोदितो जातः । अन्यथा अनन्तवधे तदधिष्ठातृदेवानां दुःखं भवेदित्याशङ्क्येत । देवार्थमेतत्कृतमित्यपि सूचितम् ॥ ३६ ॥

### श्रीसुबोधिनी-सारः

लोकनाथाभ्यां मुक्तस्त्यक्तोऽत एव व्रीडितो लज्जितो वीरेषु सम्मतः तपसे तपस्तप्तुं कृतः संकल्पो येन स जरासंधः पथि मार्गे राजभिर्वारितो निवृत्तिं गमितः ॥३३॥ कैरित्यत्राह । पवित्रमर्थो येषु तानि पदानि येषु तैर्वाक्यैः नयनैर्नीतिभिः प्राकृतैर्लौकिकैः सर्वतोऽधिबलं दैवमित्याह । यदुभिस्ते तवायं पराभवः स्वकर्मबंधेन प्राप्तोऽतो न विषादः कर्त्तव्य इत्यपरोऽर्थः ॥ ३४ ॥ सर्वसैन्येषु हतेषु सत्सु भगवतोपेक्षितोऽवज्ञातो बार्हद्रथो जरासंधो नृपस्तदा दुर्मना उदासीनो मागधान् देशान् जगाम ॥ ३५ ॥ न क्षतं नष्टं बलं यस्य स निस्तीर्णारिखिलं शत्रोः सैन्यमेवार्णवः समुद्रो येन स मुकुन्दोऽपि ययौ । कुसुमैः पुष्पैरभिवृष्यमाणस्त्रिदशैर्देवैरनुमोदितः ॥ ३६ ॥

### विवरणटिप्पणी

सत्यमिति । अङ्गीकृत्योत्तरम् । व्रीडां प्राप्तस्तथाप्यलौकिकोद्यमार्थं न मृत इत्यर्थः । मुकुन्दोऽपीत्यत्र । मोक्षे हेतुरित्यास्यानन्तरं तथापि न कोऽपि हत इति शेषो ज्ञेयः । अन्यथेति । त्रिदशानुमोदनाकथने दुःखं भवेदिति शङ्का स्यादिति शेषः । इत्येवाशङ्क्य इत्यपि सूचितमित्यन्वयः ।

### गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

स जरासन्धो लोकनाथाभ्यां रामकृष्णाभ्यां विमुक्तस्तपसे वनवासपूर्वकं तपः कर्तुं कृतसङ्कल्पः पथि मार्गे राजभिः शिशुपालादिभिः कर्तृभिर्वाक्यैः साधनभूतैर्वारित इत्यन्वयः । लोकनाथाभ्यामित्यनेन ताभ्यां विमुक्तस्य नान्येन केनापि ग्रहणमिति सूचितम् । स्वदेशागमने तपःसङ्कल्पे च हेतुमाह—व्रीडित इति । तत्र हेतुमाह—वीरतया सम्मत इति ॥ ३३ ॥ तत्र वाक्यानां त्रैविध्यमाह—नयनैर्नीतिभिः न युद्धे एकस्यैव जयः पराजयो वेति नियमः, अतः पराजयेऽपि का लज्जेत्यादिभिः । प्राकृतैरपीति, कः खलु बुद्धिमानतितुच्छेभ्योऽपि यादवेभ्यस्त्वां महाबलं दुर्बलं मंस्यते ? अतस्तेभ्य एकदा पराजयेऽपि का लज्जेत्यादिभिः । तथा पवित्रार्थानि धर्मोपदेशपराणि पदानि येषु तैः । तान्याह—स्वकर्मेति । यदुभिरल्पकैरपि कृत्वा ते महतोऽयं पराभवः केवलं कर्मनिमित्तेन प्राप्तः, 'अवश्यमेव भोक्तव्यं कृतं कर्म शुभाशुभम्' इति स्मृतेः । अतस्त्वया न लज्जितव्यमित्यर्थः ॥ ३४ ॥ एवं सर्वेष्वनीकेषु सैन्येषु हतेषु सत्सु बार्हद्रथो बृहद्रथपुत्रो मागधो नृपतिर्मगधदेशराजा जरासन्धो भगवता उपेक्षितो दुर्मनाः संस्तदा स्वदेशं ययावित्यन्वयः ॥ ३५ ॥ न क्षतं बलं सैन्यं यस्य सः, तस्यैवामृतदृष्ट्या क्षतप्रतिसन्धानादित्याशयः । निस्तीर्णः अनायासेनैव तीर्णोऽखिलार्णवो येन सः त्रिदशैर्देवैः साधुसाध्वित्यनुमोदितः कुसुमैर्विकीर्यमाणः आच्छाद्यमानो मुकुन्दोऽपि स्वपुरं ययावित्यन्वयः ॥ ३६ ॥

## अन्वितार्थप्रकाशिका

स इति द्वयम् । व्रीडितः वीरेषु सम्मतः स जरासन्धः लोकनाथाभ्यां रामकृष्णाभ्यां मुक्तः बालैः पराजितोऽहं क्षात्रधर्मं न करिष्ये । इति विचार्य तपसे तपः कर्तुं कृतसंकल्पः पथि तपोवनमार्गे राजभिः शिशुपालादिभिः कर्तृभिः पवित्राणि तत्त्वभूतानि अर्थाः पदानि च येषु तैर्नयनैः नीतिसंवलितैः प्राकृतैः लौकिकैरपि वाक्यैः वारितः वाक्यान्याहुः । अल्पकैरपि यदुभिर्योऽयं ते पराभवः स स्वकर्मबन्धेन प्राप्तः तव ललाट एतल्लिखितमतोऽत्र का लज्जा । इदमेव नीतावपि वाक्यं स्वकर्मप्राप्तत्वात् युद्धे जयः पराजयो वा न नियतः । अतः पराजयेऽपि न खेदः कार्यः । प्राकृते तु कः खलु धीमान् यादवेभ्यस्त्वां दुर्बलं मंस्यते अतः कर्मबन्धेन एकदा पराजयेऽपि न लज्जितव्यमित्यादि ॥ ३३–३४ ॥ हतेष्विति । सर्वेषु अनीकेषु सैन्येषु हतेषु सत्सु बार्हद्रथो बृहद्रथपुत्रो नृपः जरासन्धः भगवता उपेक्षितो दुर्मनाः संस्तदा मगधान् स्वदेशान् ययौ ॥ ३५ ॥ मुकुन्द इति द्वयम् । न क्षतं बलं सैन्यं यस्य सः तस्यैवामृतदृष्ट्याक्षतप्रतिसन्धानादित्याशयः । निस्तीर्णः अनायासेनैव तीर्णोऽखिलार्णवो वैरिसैन्यसमुद्रो येन सः त्रिदशैर्देवैः साधुसाध्वित्यनुमोदितः कुसुमैर्विकोर्यमाणः आच्छाद्यमानः सूतमागधवन्दिभिरुपगीयमानो विजयो यस्य स मुकुन्दोऽपि प्रत्यायातैः विज्वरैर्निवृत्ततापैर्मुदितात्मभिः प्रसन्नचित्तैर्माथुरैर्मथुरावासिभिरुपसंगम्य मिलित्वा स्वपुरं ययौ इत्यनुषङ्गः ॥ ३६–३७ ॥

## श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्

वीरैः सूरैः संमतः । अतो व्रीडितः सन् तपसे कृतसंकल्पोऽभू ॥ ३३ ॥ पवित्रार्थानि धर्ममिश्राणि पदानि येपु तैः नयनैः नीतियुक्तैश्च । प्राकृतैर्लोकरीतिबोधकैश्च वाक्यैः कृत्वा पथि राजभिर्वारित इति पूर्वेणान्वयः । एवं बोधितेषु त्रिविधेषु वाक्येषु लौकिकवाक्यमाहुः यदुभिस्तुच्छैः कृत्वा यो महतस्ते तव पराभवः सोयं स्वकर्मणां बंधेनैवप्राप्तो नत्वसामर्थ्यतयोपलब्धः ततस्त्वया लज्जा न प्राप्येतिभावः ॥ ३४ ॥ उपेक्षित उपेक्षयात्यक्तः । बार्हद्रथो बृहद्रथनाम्नश्चक्रवर्त्तिराज्ञः सुतो जरासंधो भवति । अतोऽभिमानित्वेन दुर्मनाः ॥ ३५ ॥ निस्तीर्णः स्वभावेनैवतीर्णः अखिलार्णवः । शत्रुसैन्यसमुद्रो येन स । अक्षतं बलं यस्य सः मुकुंदोऽपि स्वपुरं ययावितिशेषः स कथंभूतः । विकीर्यमाणः सक्रियमाणः सुंदरं सुंदरं कृतमित्यनुमोदितः प्रशंसितश्च ॥ ३६ ॥

## भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

हतेष्विति ॥ सर्वाणि च तान्यनीकानि सैन्यानि तेषु हतेषु, रामकृष्णाभ्यां विनाशितेषु सत्सु, बार्हद्रथः राजा जरासंधः, भगवता, यदा उपेक्षितः, तदा दुर्मना दुःखितचित्तः सन्, मागधान् जनपदान् प्रति, ययौ ॥ ३४ ॥ मुकुन्दः श्रीकृष्णोऽपि, अक्षतमविहर्त बलं सैन्यं यस्य सः, निस्तीर्णोऽरीणां बलमेवार्णवो येन सः, त्रिदशैर्देवैः, कुसुमैः विकीर्यमाणः अनुमोदितः साधु साध्वित्यनुमोदितः सन् ॥ ३५ ॥ माथुरैरिति ॥ मुदितात्मभिः प्रसन्नचित्तैः, विज्वरैः शात्रवीयपरितापवर्जितैः, माथुरैर्मथुरावासिजनैः, उपसंगम्य मिलित्वा, सूताश्च मागधाश्च तैः, उपगीयमानः संवर्णितो विजयो यस्य तथाभूतः संश्च, स्वपुरं प्रत्याययाविति शेषः ॥३६॥

## कृष्णप्रिया

जब वीरवरों में अति सम्मानित लोकनाथ वलभद्र जी और भगवान् श्रीकृष्ण के हाथों से दयादृष्टि से मुक्त हुआ तब उसे बड़ी लज्जा आई और वन में जाकर तपश्चर्या करने का निश्चय किया लेकिन मार्ग में जाते हुए जरासन्ध को मित्र राजाओं ने रोक लिया ॥ ३३ ॥ जरासंध के साथी नरपतिजन कहने लगे कि राजन् ? आप क्यों संकुचाते हो ? यादव को क्या सामर्थ्य है वे आपको पराजित कर सकें ? यह सब विधि का प्रारब्ध का ही खेल है जिससे आपको नीचा देखना पड़ा । राजन् ! पराजय में भगवान की इच्छा का कारण है पुनःमौका मिलने पर विजय प्राप्त करेंगे, राजाओं ने और अनेक लौकिक दृष्टान्त दलीलों से समझाकर तपश्चर्या से रोक लिया ॥ ३४ ॥ राजन् परीक्षित् । इधर मगध नरेश जरासन्ध की सारी सेना मर चुकी थी, पुनः दाऊजी उपेक्षा एवं करुणा की दृष्टि से मुक्त किया था इससे वह हताश बनकर अपने देश मगध को ओर चुपचाप चला गया ॥ ३५ ॥ महाराज ? भगवान् मुकुन्द की सेना में किसी का वाल भी बाँका न हुआ और श्रीकृष्ण ने समुद्र समान अगाध जरासन्ध की तेईस अक्षौहिणी सेना पर विजय पाई थी । उस आनन्द के अवसर पर समर्थ देववृन्द श्रीवृन्दावन विहारी जी पर नन्दन वन के कुसुमों की वृष्टि करने लगे, भगवान् के इस दिव्य कार्य की स्तुति करने लगें ॥ ३६ ॥

**माथुरैरुपसङ्गम्य विज्वरैर्मुदितात्मभिः । उपगीयमानविजयः सूतमागधवन्दिभिः ॥ ३७ ॥**
**शङ्खदुन्दुभयो नेदुर्भेरीतूर्याण्यनेकशः । वीणावेणुमृदङ्गानि पुरं प्रविशति प्रभौ ॥ ३८ ॥**
**सिक्तमार्गां हृष्टजनां पताकाभिरलङ्कृताम् । निर्घुष्टां ब्रह्मघोषेण कौतुकाबद्धतोरणाम् ॥ ३९ ॥**
**निचीयमानो[1] नारीभिर्माल्यदध्यक्षताङ्कुरैः । निरीक्ष्यमाणः सस्नेहं [2]प्रीत्युत्कलितलोचनैः ॥ ४० ॥**
**आयोधनगतं वित्तमनन्तं[3] वीरभूषणम् । यदुराजाय तत् सर्वमाहृतं प्रादिशत्प्रभुः ॥ ४१ ॥[4]**

१. विकीर्यमाणो–प्रा. पा. । २. त्कण्ठित–वीर । ३. माहृतं–वीर. । ४. विजये एकोनपञ्चाशत्तमोऽध्यायः ।

**श्रीशुक उवाच—**

तृतीये मासि भूयश्च राजा बार्हद्रथो बली । दिवानिशं तप्यमानः स्मरन्पूर्वापराभवम् ॥ १ ॥
आहूय सर्वभूपालान् चकार कलहोद्यमम् । मत्स्यान्मालवांश्चेदीन् कुलपांचालकेरलान् ॥ २ ॥
कुलिन्दकुन्तलावन्तिकाशिगांधारसृंजयान् । कलिंगकेकयानांध्रान् दशार्णान्वंगसैन्धवान् ॥ ३ ॥
माद्रान् त्रिगर्त्तान्सौवीरान्यावर्ततेयांश्च सर्वशः । आहूयाक्षौहिणीगणैस्त्रयोविंशतिभिर्युतः ॥ ४ ॥
समागधानतिक्रम्य पश्चिमाभिमुखो ययौ । आकर्षन्निव भूपालान् गजाश्वरथवल्लभान् ॥ ५ ॥
आगत्य मथुरां रोद्धुं प्राविशद्यमुनातटे । स्कन्धावारेण महता राजभिर्बहुभिर्वृतः ॥ ६ ॥
उपगीयमानो न्यरमत्सूतमागममागधवंदिभिः । तदाकर्ण्य रणोद्योगं मागधस्य बलीयसः ॥ ७ ॥
मंत्रयामास शर्वर्यां कृष्णः संकर्षणादिभिः । वसुदेवोद्धवाक्रूरशैनेयाहुकासारणैः ॥ ८ ॥
एभिरालोच्य शर्वर्यां सम्यङ्निर्धारितक्रियः । उषस्यनुदिते सूर्ये समाहूयभटोत्तमान् ॥ ९ ॥
त्रिधा विभज्य गोविन्दः स्वसेनां चतुरंगिणीम् । न्ययोजयदमेयात्मा मागधेन्द्रबलं प्रति ॥ १० ॥
संकर्षणं च हार्दिक्यं गदं सारणमेव च । वामेन प्रेषयामास मार्गेण मधुसूदनः ॥ ११ ॥
सात्यकिं विपृथुं चैव पृथुमुद्धवमेव च । दक्षिणेनैव मार्गेण प्राहिणोत्सेनया सह ॥ १२ ॥
स्वयं कतिपयैर्युक्तो रथैः कमललोचनः । अग्रे मगधराजस्य प्रविवेश महद्बलम् ॥ १३ ॥
सा सेना बहुनागाश्वरथपादातिसंकुला । प्रसुप्ता यमुनातीरे विस्रब्धा रमते सुखम् ॥ १४ ॥
उदयाद्रिसमारोहत्यर्के तमसि नश्यति । नीडस्थेष्वेव कूजत्सु विहंगेषु ततस्ततः ॥ १५ ॥
विकसत्सु सरोजेसु गायत्स्वलिकूलेषु च । प्रविवेश बलं भीमं मागधेन्द्रस्य दुर्जयम् ॥ १६ ॥
हयाश्चाबद्धवैराणाः श्रेणीबद्धाः समंततः । कुंजराश्च तदा राजन्ननारोपितपंजराः ॥ १७ ॥
अनादत्तप्रहरणा भटाश्चाबद्धमूर्धजाः । अप्रविष्टास्तवर्माणस्तदानारूढवाहताः ॥ १८ ॥
रथाश्चाबद्धतुरगाः सर्वतोनुद्धृतध्वजाः । सेनायां मगधेन्द्रस्य प्रवेशे पीतवाससः ॥ १९ ॥
त्रिदिक्ष्वापतितं सैन्यं दृष्ट्वा तद्राजमंडलम् । इति कर्तव्यतामूढं विभ्रांतं समपद्यत ॥ २० ॥
केचिद्भटाः समापेतुर्भयात्केचिच्च दुद्रुवुः । केचिदात्तप्रहणास्त्वभिसस्रुररीन् रणे ॥ २१ ॥
केचिद्विभिन्नवर्माणच्छिन्नपादोरुबाहवः । रिपूनेवाभ्यवर्तंत क्रोधोद्वृत्तारुणेक्षणाः ॥ २२ ॥
केचिद्धयानपर्याणानारुह्य दृढविक्रमाः । मर्दयन्तो रिपून्युद्धे विमलं लेभिरे यशः ॥ २३ ॥
राजानः सहसोत्बुध्य दृष्ट्वा सैनिकसंक्षयम् । विनारणोपस्करणं चक्रुः केचन संगरम् ॥ २४ ॥
केचिद्विसृज्य शिबिरं विविशुर्गहनं वनम् । केचिन्मागधमासाद्य विजयस्वेति चाब्रुवन् ॥ २५ ॥
रथेनैकेन गोविंदः प्रविश्य रिपुवाहिनीम् । जघान सुबहून्वीरान्सायुधान्सरणोद्यमाम् ॥ २६ ॥
संकर्षणोऽपि बलवान्महत्या सेनया वृतः । बलं प्रविश्य वामेन मर्दयामास मागधम् ॥ २७ ॥
शैनेयोऽपि महाबाहुर्दक्षिणेनैव वर्त्मना । प्रविश्य चतुरंगेण सैन्येन महताऽर्दयत् ॥ २८ ॥
एवं सा व्यथिता सेना मागधेंद्राभिरक्षिता । दुद्राव त्रास्यमाना वै क्षणमात्रं दिशो दश ॥ २९ ॥
तामनुद्रुत्य वार्ष्णेयः सात्यकिः पंच योजनम् । निहत्य मागधं सैन्यं जयी व्यवर्त्तताहचात् ॥ ३० ॥

मतंगजान्पर्वतसन्निभान्बहून्निगृह्य सोपस्करतोमरांकुशान् ।
रथांश्च शस्त्रध्वजवाजिसंयुतान्निनाय कृष्णो मधुरां मनोरमाम् ॥ ३१ ॥

छत्राणि हेमांवररत्नमिश्रितान्यनेकवालव्यजनानि माधवः ।
किरीटपट्टांगदकुंडलांशुकान्यत्राप कृष्णोऽगणितानि संयुगे ॥ ३२ ॥
हलायुधो मागधकोशवाहतप्रजावरोधायुधभूषणादिकम् ।
नियोजितः कंसभिदारणाजितं यदुप्रवीराय धनं न्यवेदयत् ॥ ३३ ॥

इति श्रीविजयध्वजीयपाठे पञ्चाशत्तमोऽध्यायः ॥ ५० ॥ ]

## विजयध्वजीयपाठे एकपञ्चाशत्तमोऽध्यायः

**श्रीशुक उवाच—**

मागधस्तु रणश्लाघी माधवेन पराजितः । जगाम शोणितपुरं बाणं द्रष्टुं बलेः सुतम् ॥ १ ॥
तं तथायान्तमाकर्ण्य वृतराजन्यमंडलम् । मित्रं पराजितं युद्धे विष्णुना दानवेश्वरः ॥ २ ॥
अलंकृतैर्गजैरश्वैर्विचित्रस्यंदनैर्भटैः । वारकांताकदम्बैश्च सूतमागधवंदिभिः ॥ ३ ॥
ध्वजैः पताकैश्छत्रैश्च माङ्गल्यैः पटहस्वनैः । सुवर्णतोरणैश्चित्रैर्दीपैः कलशदर्पणैः ॥ ४ ॥
उपतस्थे जरासंधं बाणो बाहुसहस्रवान् । तौ दृष्ट्वा परमस्निग्धौ परस्परमनोऽनुगौ ॥ ५ ॥
पूजां चक्रतुरन्योन्यमन्योन्यप्रियकारिणौ । ततोऽब्रवीज्जरासंधो बाणमाभाष्य संसदि ॥ ६ ॥
दानवेन्द्र निबोधेदं गोपेनाधर्मचारिणा । रात्रौ चौर्यप्रतापेन वंचितोऽस्मि दुरात्मना ॥ ७ ॥
गृहीता बहवस्तुंगा मातंगा मदशालिनः । तुरंगमाश्च बहवो रथाश्च सपरिच्छदाः ॥ ८ ॥
द्वंद्वेन सज्जमानं मामिमे भूपा न सेहिरे । निरुद्धस्तैरहं भूपैरेतैः समसुखासुखैः ॥ ९ ॥
त्वत्सन्निधिमिहायातः साहाय्यं कुरु मे प्रभो । इत्युक्तस्तं निजपुरं प्रवेश्य बलिनंदनः ॥ १० ॥
सराजमंडलायाशु कारयामास सत्क्रियाम् । भोजनस्नानशयनगंधतांबूलपूर्वकैः ॥ ११ ॥
अर्हणैरर्हयामास स राजन्य जरासूतम् । तं भुक्तवन्तं विश्रान्तं दृष्टदर्शनकौतुकम् ॥ १२ ॥
अलंकृतं सह नृपैरासीनं कांचनासने । उवाच दानवपतिर्नृपानाभाष्य सादरम् ॥ १३ ॥

**बाण उवाच—**

जरासंध निबोधेदं न मृषा कथ्यते मया ।
एते गजा इमे अश्वा इदं राज्यमिमाः प्रजाः । त्वदधीनमिदं विश्वं यच्चान्यद्वस्तु विद्यते ॥ १४ ॥

**श्रीशुक उवाच—**

इत्युक्त्वा प्रददौ तस्मै मागधाय बले सुतः ।
गजानां षष्टिसाहस्रं रथानां नियुतं तथा । प्रयुतं च तुरंगाणां मनोमारुतरंहसाम् ॥ १५ ॥
दानवानां प्रसिद्धानां मायासंग्रामवेदिनाम् । त्रिशतं स्वात्मसाम्यानां ददौ बाणो बलेः सुतः ॥ १६ ॥
विचित्रशिबिकाछत्रव्यजनाकल्पवाससाम् । असंख्यातं ददौ राजन् भांडशय्यासनादिकम् ॥ १७ ॥
कुंभांडं कूपकर्णं च मंत्रिणौ दैत्यसत्तमौ । आज्ञापयामास बाणः साहाय्यार्थं कुरूद्वह ॥ १८ ॥
क्व सुरासुरसंघातसंहारणपटुर्हरिः । कुंभांडकूपकर्णौ क्व वराकौ बाणमंत्रिणौ ॥ १९ ॥
अजानतो विष्णुशक्तिं भूपालाविनशिष्णवः । चक्रुर्भूयो रणोद्योगं मागधेन प्रचोदिताः ॥ २० ॥
बाणेन समनुज्ञातो मागधः शोणितात्पुरात् ।
निर्गत्यानेकभूपालचतुरंगबलान्वितः । दिनैः कतिपयैर्भूयो मधुरामन्वपद्यत ॥ २१ ॥
संनिरुध्य पुरद्वारं गोपुराट्टालतोरणैः । दीर्घिकोपवनोद्यानैरुपेतं सालभूषितम् ॥ २२ ॥
कुन्तैः कुठारैः कुद्दालैर्दण्डभारैश्च भूरिभिः । कर्षणस्थैश्च पाषाणैर्बभंज परितः पुरम् ॥ २३ ॥
भज्यमाने पुरे तस्मिन् श्रुत्वा मागधमागतम् । सन्नाहभेरीः सन्नाद्य रामकृष्णावमर्षिणौ ॥ २४ ॥
रथाश्वकुंजरानीकैः सायुधैः सपरिच्छदैः । सात्यकिं कृतवर्माणमुग्रसेनं तथागदम् ॥ २५ ॥
आहुकं वसुदेवं च पुरस्कृत्यमहाबलौ । निर्जग्मतुरसंभ्रांतौ दीप्तौ केसरिणौ यथा ॥ २६ ॥
मथुराया विनिर्गत्य कृष्णः कमललोचनः । पांचजन्यं महाशंखं प्रदध्मौ रिपुभीषणम् ॥ २७ ॥

ततः प्रववृते युद्धं यदूनां क्षत्रियैः सह । कुंभाण्डकूपकर्णौ च दानवौ बाणमन्त्रिणौ ॥ २८ ॥
दैत्यसैन्येन महता वृतौ मायाविशारदौ । युयुधाते महावीर्यौ मायया वृष्णिभिः सह ॥ २९ ॥
स्वसैन्यं मायया क्लिष्टं दृष्ट्वा यादवसत्तमः ।
विज्ञानास्त्रेण तन्मायामपास्य निमिषांतरे । सात्यकिं कृतवर्माणं प्रोवाचाहवलालसौ ॥ ३० ॥

आभ्यां भवन्तौ रणदुर्मदाभ्यां रणं सुघोरं कुरुतां रणप्रियौ ।
तावेव मुक्तौ कदनं भयानकं महाबलौ संप्रति चक्रतुर्नृप ॥ ३१ ॥

चापेनैकेन गोविंदः क्षत्रियैः शतसंमितैः । युयुधेन हितच्चित्रं राजन्विश्वात्मनो हरेः ॥ ३२ ॥
केचिद्धताः समापेतुः कुंजराश्छिन्नपुष्कराः । निपेतुर्बहवो राजंस्तुरंगाः कृत्तकन्धराः ॥ ३३ ॥
विशीर्णैरास्तृता पृथ्वी स्यंदनैश्छिन्नबंधनैः ॥ ३४ ॥
भटाश्च रुधिराक्तांगाश्छिन्नपादोरुबाहवः । पेतुः कृत्तमहामूलाः किंशुका इव पुष्पिताः ॥ ३  ॥
शार्ङ्गमुक्ताः शरगणाः कंकबर्हिणवाससः ।
तैलाक्तानतपर्वाणः स्वर्णपुंखा अयोमुखाः । एकैकस्मिन्दशदश भटे चाश्वे शतंशतम् ॥ ३६ ॥
रथेरथे च साहस्रमयुतं च गजेगजे । अदृश्यन्त परानीके तदद्भुतमिवाभवत् ॥ ३७ ॥
रथातैरर्द्यमानेषु चतुरंगेषु मागधः । रथेन क्रोडचिह्नेन बलभद्रमुपाद्रवत् ॥ ३८ ॥

सपूर्ववैरं नृपतिः स्मरन् रुषारथं महाकांचन तालकूबरम् ।
आलक्ष्य दूरादधिगम्यरंहसा जरासुतः प्राह हलायुधं गदी ॥ ३९ ॥
आदत्स्वं ते मुसलं राम तूर्णं येनाहितानिच्छसि जेतुमाहवे ।
बलं च बाह्वोस्तत्र दर्शयाशुभे यावद्गदां न प्रहराम्यहं त्वयि ॥ ४० ॥
इत्येवमुक्तो मगधेश्वरेण संकर्षणो मर्षणविह्वलेक्षणः ।
आदाय घोरं मुसलं तडित्प्रभं दण्डं यथा सूर्यसुतो युगक्षये ॥ ४१ ॥
आवर्त्तयित्वा मुसलं हलायुधः सहस्रकृत्वो रिपुदर्पहारिणम् ।
धूमांकुरोद्गीरिणमाशु तस्मै चिक्षेप राजन्व्यनदद्धरियंथा ॥ ४२ ॥

रामबाहुविमुक्तेन मुसलेन जरासुतः । साश्वसूते रथे क्षुब्धे क्षणेन व्यंसितः स्वयम् ॥ ४३ ॥
ततः कालायसीं गुर्वीं गिरिकूटोपमां गदाम् । बिभ्रद्गुर्वी पदा पृथ्वीं चालयन्नभ्यगाद्बलम् ॥ ४४ ॥
तमापतन्तमालोक्य विरथं रोहिणीसुतः । तमेवाभ्यद्रवत्पद्भ्यां विसृज्य स्यन्दनं रणे ॥ ४५ ॥
पश्यतां सर्वभूतानां मागधः क्रोधविह्वलः ।
आवर्त्तयन्गदां गुर्वीमयःसारमयीं दृढाम् । अभ्येत्य गदयारामं प्रजहार ननाद च ॥ ४६ ॥
तां गदां पतितां वक्षस्यश्मकुट्टनिभां दृढाम् । वामेन जगृहे रामः स्वहस्तेन कुरूद्वह ॥ ४७ ॥
विसृज्य सगदां तूर्णमुरस्याहत्य मागधम् । जग्राहाश्लिष्य बलिनं बलवान् रोहिणीसुतः ॥ ४८ ॥
बबन्ध पद्भ्यां जठरं मागधस्य हलायुधः । चकार कुक्षौ तत्कंठं ततस्तौ पेततुर्भुवि ॥ ४९ ॥
तयोर्निपतितो राजन्नुपर्यासीद्धलायुधः । तं मागधस्य क्षणेनाधश्चकारामितविक्रमः ॥ ५० ॥
तत उत्थाय तौ वीरौ क्रोधसंरक्तलोचनौ । भूयो जग्राहतुर्घोरौ मत्तौ द्वाविव कुंजरौ ॥ ५१ ॥
तावुभौ परमक्रुद्धौ परस्परवधैषिणौ । उरसोरःसमाहत्य भीमौ च क्षपतूरणे ॥ ५२ ॥
एवंधनुःशतशतं तावाकृष्यपरस्परम् । निकटस्थान् द्रुमान् शैलांश्चूर्णयामासतुर्नृप ॥ ५३ ॥
तं विसृज्य जरासंधो गदामादाय दुर्मदः ।
उदतिष्ठदमेयात्मा रामोऽपि स महाबलः । क्षणादादत्तमुसलं प्रहर्तुमुपचक्रमे ॥ ५४ ॥

तं कामपालो मुसलेन मूर्ध्नि जत्रुण्यंसे भुजयोर्नाभिदेशे ।
ऊरौ च जानौ जठरे च वक्षस्यनेकशो वै प्रजाहार युद्धे ॥ ५५ ॥
तं मागधो वक्षसि कंधरे च मुखे ललाटे चुबुके तथांऽसे ।
नाभौ नितंबे च तथैव पार्श्वे समं समानोप्रजहारराम ॥ ५६ ॥

एवं प्रहरतोस्तत्र राममागधयोर्मृधे । राजानो रणसंविग्ना बभूबुर्भृशपीडिताः ॥ ५७ ॥
क्रमेण ते विमनसो निवृत्तकदनोद्यमाः । आसन्नासन्ननिधनं मन्वानामागधेश्वरम् ॥ ५८ ॥

सात्यकिस्तु महातेजाः संगरे बाणमंत्रिणा । युध्यमानस्त्रिभिर्बाणैः कुंभाण्डेन समर्दितः ॥ ५९ ॥
सोऽतिविद्धो महाबाहुः क्रुद्धः सर्प इव श्वसन् । आददे पंचनाराचान्कुंभांडं हन्तुमाहवे ॥ ६० ॥
ततो हाहारवो जज्ञे सेनायां दैत्यमंत्रिणः । सात्यकिस्तं महाबाहुराकृष्याकर्णमाशुगैः ॥ ६१ ॥
विव्याध कुरु शार्दूल कुंभांडं बाणमंत्रिणम् । नाभौ कंठे ललाटे च हृदि मूर्ध्न्यपि दानवम् ॥ ६२ ॥
अभिविद्धो रथोपस्थे निषसाद विचेतनः ।
तं विचेतनमालोक्य दुर्मनास्तस्य सारथिः । अपोवाहरणात्तूर्णं रथेन भरतर्षभ ॥ ६३ ॥
कूपकर्णस्तु दैतेयः प्रसक्तः कृतवर्मणा ।
गतं कुंभांडमालोक्य प्राप्तं च प्राणसंशयम् । विसृज्य कृतवर्माणमपायात्समरांगणात् ॥ ६४ ॥
तौ विसृज्य रणं दैत्यावनापृच्छ्य च भूपतिम् ।
अविसृष्टौ मागधेन हतशेषबलान्वितौ । दैत्यौ तेनैव मार्गेण जग्मतुः शोणितं पुरम् ॥ ६५ ॥

इति वीजयध्वजीयपाठे एकपञ्चाशत्तमोऽध्यायः ॥ ५१ ॥

—***—

## विजयध्वजीयपाठे द्विपञ्चाशत्तमोऽध्यायः

**श्रीशुक उवाच –**

बाणसेनां गतां दृष्ट्वा शस्त्रौघेन भृशार्दिताः । राजपुत्रा विमनसो बभूवुर्नृपसत्तम ॥ १ ॥
गतां च दानवीं सेनां श्रांतांश्च धरणीपतीन् । दृष्ट्वा कृष्णं च युध्यन्तं रामस्य ववृधे बलम् ॥ २ ॥
स मागधं गृहीत्वाजौ मौलौवामेन पाणिना । प्रहर्तुमैच्छच्छिरसि मुसलेन हलायुधः ॥ ३ ॥

ततोऽन्तरिक्षे घनघोषघर्घरां शुश्राव वाणीं विशदाशरीरिणीम् ।
न रामवध्यो भवता जरासुतः सुखी निवर्त्तस्वरणादितिस्फुटम् ॥ ४ ॥
वचस्तदाकर्ण्य हलायुधो वली विसृज्य चास्थाय रथं रणांगणात् ।
न्यवर्तत ब्रह्मर्षिसिद्धसंघैरभिष्टुतो मागधसूतबन्दिभिः ॥ ५ ॥
जरासुतः संप्रति नम्रकन्धरो नृपैश्च युद्धाभिजितैः समन्वितः ।
हतावशिष्टाल्पबलेन संवृतो निवृत्तयुद्धः प्रययौ स्वकं पुरम् ॥ ६ ॥

**श्रीशुक उवाच—**

गोविंदस्तु महातेजाः सपत्नाञ्छरसंचयैः । आच्छाद्य भूपान्विद्राव्य हत्वा च सुबहून्रणे ॥ ७ ॥
संस्तूयमानः संतुष्टैः सूतमागधवंदिभिः । ब्राह्मणैश्च महाविद्यैः स्तोत्रं कुर्वद्भिरुच्चकैः ॥ ८ ॥
अन्वीयमानो भगवान्प्राविशन्मथुरां पुरीम् । हृष्टपुष्टजनाकीर्णां तुङ्गप्राकारतोरणाम् ॥ ९ ॥
चलत्कदलिकोपेतां दीपांकुरविराजिताम् । प्रविशन्राजमार्गेण स्त्रीभिः प्रासादसंस्थितैः ॥ १० ॥
पुष्पैश्च लाजांजलिभि फार्यमाणो व्यराजत । उपायनानि दिव्यानि पुष्पस्रगनुलेपनान् ॥ ११ ॥
प्रियंकरा माधवाभ्यामुपजह्रु पुरौकसः । एवं स राजमार्गेण गत्वा यादवसत्तमः ॥ १२ ॥
सभां प्रविश्य विपुलामुपविश्य वरासने । रामेण सहितो वीरः शैनेयेन च धीमता ॥ १३ ॥
पूजितो यदुभिर्विप्रैर्दिवि शक्र इवामरैः । तत्रासीनैर्बुद्धिमद्भिर्यदुवृद्धैर्महात्मभिः ॥ १४ ॥
उग्रसेनोद्धवमुखैरक्रूरप्रमुखैर्हरिः । समाभाष्याभ्याम्यनुज्ञातः संकर्षणसहायवान् ॥ १५ ॥
द्रष्टुकामो महादुर्गं गोमन्तं पर्वत्तोत्तमम् । निर्गम्य मथुरां प्रातर्दक्षिणाऽभिमुखो ययौ ॥ १६ ॥
सरामानुगतः श्रीमानुत्तीर्य यमुनां हरिः । देशान्बहूनतिक्रम्य पर्वतान्सरितो गिरौ ॥ १७ ॥
गच्छन्क्वचिद्वनोद्देशे वृक्षमूलनिवासितम् । ददर्श कंचन मुनिं जटामण्डलमण्डितम् ॥ १८ ॥
चीरकृष्णाजिनधरं कमण्डलुविराजितम् । माधवौ समुपाविष्टं तेजसा भास्करोपमम् ॥ १९ ॥
फलमूलकृताहारं वृतं शिष्यशतैर्मुनिम् । दृष्ट्वा परमसंतुष्टौ रामकृष्णौ जगत्पती ॥ २० ॥
प्रणामं च क्रतुर्वीरौ यथान्यायमतन्द्रितौ । इदं चोवाच भगवान्कृष्णस्तं मुनिपुंगवम् ॥ २१ ॥
नभस्तेभार्गव श्रीमन्जामदग्न्य तपोधन । रामकृष्णौ स्मृतावावां क्वचित्ते श्रवणं गतौ ॥ २२ ॥

इत्युक्तस्तेन धर्मात्मा वासुदेवेन भार्गवः । निरीक्ष्य माधवौ प्राह प्रीत्युत्फुल्लमुखेक्षणः ॥ २३ ॥
स्वागतं ते यदुश्रेष्ठ साग्रजाय महात्मने । जाने त्वां यदुषूत्पन्नं भगवन्तमधोक्षजम् ॥ २४ ॥
कार्याणां कारणं पूर्वं जगतामादिपूरुषम् । नमस्ते पुंडरीकाक्ष विश्वलोकैककारण ॥ २५ ॥
किमर्थमिह संप्राप्तौ भवन्तौ विश्ववन्दितौ । इत्युक्तौ जामदग्न्येन प्राहतू रामकेशवौ ॥ २६ ॥
गोमन्तं द्रष्टुमिच्छावो दुर्गहेतोरिह प्रभो । तदाकर्ण्याब्रवीद्रामो जामदग्न्यो जनार्दनम् ॥ २७ ॥
एवमस्तु महाबाहो गोमन्तं गच्छ साग्रजः । करवीरपुरं नाम तन्मूले परिपालितम् ॥ २८ ॥
श्रृगालवासुदेवेन स युवां न सहिष्यति । तं हत्वा समरे शैलं गोमन्तं साध्ववाप्स्यथ ॥ २९ ॥
इत्युक्तौ तेन रामेण जामदग्न्येन माधवौ । तमनुज्ञाप्य सर्वत्र जग्मतुर्दक्षिणामुखौ ॥ ३० ॥
तौ तथा यदुशार्दूली गच्छन्तौ दक्षिणापथम् । ददर्शतुश्च गोमन्तमभ्रंकषमहाद्रुमम् ॥ ३१ ॥
करवीरपुरं चैव तन्मूले तुंगतोरणम् । दृष्ट्वा विचित्रप्राकारं हर्म्यप्रासादगोपुरम् ॥ ३२ ॥
शंखमाध्मापयामास शंखचक्रगदाधरः । तस्य शंखध्वनिं श्रुत्वा बभूव क्रोधविह्वलः ॥ ३३ ॥
श्रृगालो वासुदेवाख्यः प्रत्यगाद्यदुनन्दनौ । सोऽभ्येत्य बहुपादाति तुरंगरथकुञ्जरः ॥ ३४ ॥
अभ्यवर्षच्छरौघेण छादयन्निव माधवौ । तदनीकमनाधृष्यं दृष्ट्वा यादवसत्तमौ ॥ ३५ ॥
योधयामास तुर्वीरौ द्वावेवाजौ पदातिनौ । सैन्यं च बाणपूगेन व्यथितं भृशविह्वलम् ॥ ३६ ॥
दृष्ट्वा श्रृगालभूपालस्तावधावदमर्षणः ।
तमायान्तमभिप्रेक्ष्य रथिनं धृतकार्मुकम् । न्यवारयद्वासुदेवो वेलेव वरुणालयम् ॥ ३७ ॥
तावुभौ परमक्रुद्धौ वासुदेवौ महाबलौ । युयुधाते तथाऽन्योन्यमन्योऽन्यवधकांक्षिणौ ॥ ३८ ॥
स तथा विद्यमानस्य वासुदेवस्य संगरे । शिरो जहार गोविन्दः क्षणेन मुकुटोज्ज्वलम् ॥ ३९ ॥
ततस्तत्सैनिकाः सर्वे हतशेषाः कुरूद्वह । कृष्णेन स्वामिनि हते दुद्रुवुः सर्वतो दिशम् ॥ ४० ॥
ततस्तौ रामगोविन्दौ करवीरपुरं महत् । प्रविश्य पूजितौ विप्रैर्वणिग्भिश्च यथाप्रियः ॥ ४१ ॥
तद्गजाश्वरथानीककोशादिधनसंचयम् । मधुरां प्रेषयामास तदीयैर्भृत्यपूरुषैः ॥ ४२ ॥

इति श्रीविजयध्वजीयपाठे द्विपञ्चाशत्तमोऽध्यायः ॥ ५२ ॥

## विजयध्वजीयपाठे त्रिपञ्चाशत्तमोऽध्यायः

रामकृष्णयोर्गोमन्तपर्वतारोहणम् ॥ १ ॥ अत्रान्तरे महाबलिना श्वेतद्वीपं गत्वा भगवतः किरीटहरणम् ॥ २ ॥ गरुडेन तंजित्वा किरीटमादाय गच्छतां मार्गे गोमन्ते स्थितस्य श्रीकृष्णस्य शिरसि तत्किरीटस्थापनम् ॥ ३ ॥ ततो रामकृष्णयोर्मधुरागमनम् ॥ ४ ॥ पुनर्युद्धायागतस्य जरासन्धस्य पराजयः ॥ ५ ॥

**श्रीशुक उवाच—**

गोमन्तं पर्वतश्रेष्ठं तुंगद्रुमलतान्वितम् । सालतालतमालाढ्यं प्रियालाशोकशोभितम् ॥ १ ॥
कदंबनिंहितालपूगपुन्नागशोभितम । आरुह्य कदलीखण्डमण्डितं मत्तकोकिलम् ॥ २ ॥
भ्रमद्भ्रमरसंघातप्लवंगाकपितद्रुमम् । फलभारनतैः स्कन्धैर्नारिकेलैर्विराजितम् ॥ ३ ॥
बहुप्रस्रवणोपेतं सुच्छायं निर्मलोदकम् । रम्यन्द दृशतुर्वीरौ प्रदेशं रामकेशवौ ॥ ४ ॥
तत्र प्रवर्षणं नाम श्रृङ्गं पर्वतमूर्धनि । अवापतुर्यत्र मेघा नित्यं वर्षंत्यविक्लवाः ॥ ५ ॥
तत्रारुह्य यदुश्रेष्ठौ पश्यन्तौ हि दिशोदश । रममाणौ यथाकाममूषतुः पर्वतोत्तमे ॥ ६ ॥
एतस्मिन्नेवकाले तु क्षीरोदे सागरोत्तमे । निवासे देवदेवस्य शंखचक्रगदाभृतः ॥ ७ ॥

उपासीनो महाबाहुः श्रीमान्वैरोचनो बलिः। जहार देवदेवस्य किरीटं रत्नचित्रितम् ॥ ८ ॥
इन्द्रनीलसहस्राढ्यं गोमेदकशताचितम्। पद्मरागमहानीलमुक्ताफलविराजितम् ॥ ९ ॥
पुष्परागप्रवालाढ्यं दिव्यकांचननिर्मितम्।
हृतं दानववीरेण विदित्वा पुरपालकः। तमन्वधावत्त्वरितं वैनतेयो विहंगराट् ॥ १० ॥
तमंतरेसमासाद्य दानवेन्द्र दुरासदम्। कृत्वा युद्धं महाघोरं जित्वा दानवपुंगवम् ॥ ११ ॥
गृहीत्वा रत्ननिचयं किरीटं भास्करोपमम्। आगच्छन्ददृशे देवं देवकीनन्दनं हरिम् ॥ १२ ॥
वसन्तं साग्रजं रम्ये गोमन्ते पर्वतोत्तमे।
तस्य मूर्ध्नि निधायाशु किरीटं दिव्यभूषणम्। प्रणम्य पादयोर्मूर्ध्ना स्तोतुं समुपचक्रमे ॥ १३ ॥

**गरुड उवाच—**

नमोनमः कारणपूरुषाय नारायणायाखिलवल्लभाय।
सुरारिसंहारणकारणाय नारायणायाखिलकर्मसाक्षिणे ॥ १४ ॥
हिरण्यगर्भत्वमुपेत्य मूले सृजस्यशेषं भुवनं स एव।
नारायणात्मन्परिपासि भूयो जहार चान्ते भगवन्शिवात्मन् ॥ १५ ॥
तं त्वा यदोर्वंशकरं सुरेशं जानेऽवतीर्णं भुवने वृषाकपिम्।
अहं हि भृत्यस्तव वैनतेयो ब्रूहि क्रियां किं करवाणि देव ॥ १६ ॥

**श्रीशुक उवाच—**

इत्युक्त्वा देवदेवेशं प्रणिपत्य विहंगराट्। जानुनी धरणीं कृत्वा तस्थौ प्रांजलिरग्रतः ॥ १७ ॥
तं दृष्ट्वा यादवश्रेष्ठो गरुडं पक्षिपुंगवम्। प्रीत्युत्फुल्लमुखो दोर्भ्यां पस्पर्शाङ्गन्तदुत्तमम् ॥ १८ ॥
गच्छ भद्र यथाकाममेहि काले मया स्मृतः। इत्युक्त्वा तं विसृज्योभावीश्वरौ रामकेशवौ ॥ १९ ॥
फलमूलकृताहारौ पीतनिर्झरवारिणौ। अवरुह्य गिरेः शृङ्गात्करवीरपुरं गतौ ॥ २० ॥
तत्र तौ चतुरों मासानुषित्वा भरतर्षभ। महत्या सेनया सार्धं जग्मतुर्मधुरां पुरीम् ॥ २१ ॥
शृगालं निहतं श्रुत्वा मागधः क्रोधविह्वलः। आजगाम कुरुश्रेष्ठ महत्या सेनया वृतः ॥ २२ ॥
तेन सार्धमभूद्युद्धं सप्ताहं रामकृष्णयोः। तदा पराजितो युद्धे मागधो बहुसैनिकः ॥ २३ ॥
जगाम मगधानेव हतैः क्षत्रियैः सह।
रामकृष्णौ च धर्मज्ञौ सूतमागधबन्दिभिः। स्तूयमानौ विविशतुः सानुगौ मधुरां पुरीम् ॥ २४ ॥

नमोनम इति पुनरुक्तिरादरार्था पुरुषायेत्युक्ते जीवायेति शङ्कास्यात् अतस्तन्निरासार्थं कारणेति "कारणं बन्धमोक्षयोः" इति श्रुतेः। जीवस्यापि कारणत्वप्रतीतेर्निस्तुषत्वेन शङ्कानिवृत्तये नारायणायेति अयं शब्दो देवदत्तादिशब्दवत्साङ्केतिको न भवति किन्तु गुणनिबद्ध इति भावेनाह—अखिलेति। न तर्हि शौर्यादिगुणयोगोऽस्येत्यत्राह—सुरारिराक्षसवत्संमारीचेन्न कोप्येनमाश्रयतीत्यत्राह-नारायणेति। नारो नरसमुदायस्तदाश्रयो नारायणः तस्मै। ननु, सर्वाश्रयत्वं राजवद्भमिस्यत्वेनोतान्तःस्थत्वेनाहोस्विद्वायुवदुभयरूपेण ? नाद्यः। "अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः" इति श्रुतिव्याकोपात्। न द्वितीयः कर्मभोगप्राप्तेः। न तृतीयः अखण्डात्मनो द्वितीयत्वानुपपत्तेरिति तत्राह—अखिलेति ।१४। सृष्टिसंहारयोश्चतुर्मुखपञ्चमुखहेतुत्वोक्तेस्याखण्डहेतुत्वं कथमिति तत्राह—हिरण्यगर्भत्वमिति। मूले आदिकाले हिरण्यगर्भं सृष्ट्वा तदन्तर्यामित्वेन तन्नामवाच्यत्वमुपेत्य भूयः पश्चान्नरायणान्मन्नारायणनामपरमात्मन् पुनः शिवात्मानं सृष्ट्वा तदन्तर्यामित्वेन तन्नाम आच्यं तदुक्तं "ब्रह्मस्थो ब्रह्मनामासौ रुद्रस्थो रुद्रनामकः" इत्यादि ॥ १५ ॥ एवं विधो विष्णुस्त्वमित्याह—तं त्वेति। भुवने प्रसिद्धं वृषाकपिं विष्णुभवतीर्णं तत्सृष्ट्यादिहेतुं च जान इत्यन्वयः। "विष्णौ रुद्रे वृषाकपि" इत्यतो यदोर्विशकरमित्यादिक्रियाविशेषणं कर्तव्यं धर्मप्रेरकत्वेन फलवर्षणाद्वृषः अकस्यासुखस्य पातृत्वादकपि' यद्वा अकाद्दुःखात् शरणागतं जगत्पातीति वृषाकपिरिति ॥ १६–१७ ॥ तस्य उत्तममङ्गम् उत्तमाङ्गं शिर इत्यर्थः ॥ १८–२५ ॥

( एतावत्पर्यन्तं विजयध्वजतीर्थीयपठित श्लोकाः )

### कर्दमक्षमा

**अन्वयः**—विज्वरैः, मुदितात्मभिः, माथुरैः, उपसङ्गम्य, सूतमागधवन्दिभिः, उपगीयमानविजयः, पुरम्, विवेश ॥३७॥ प्रभौ, पुरं, प्रविशति, शङ्खदुन्दुभयः, अनेकशः, भेरीतूर्याणि वीणावेणुमृदङ्गानि, नेदुः ॥ ३८ ॥ सिक्तमार्गाम्, हृष्टजनाम्, पताकाभिः, अलङ्कृताम्, ब्रह्मघोषेण, निर्घुष्टाम्, कौतुकाबद्धतोरणाम्, पुरीम्, विवेश ॥ ३९ ॥ प्रीत्युत्कलितलोचनैः, नारीभिः, सस्नेहं, निरीक्षमाणः, दध्यक्षताङ्कुरैः, निचीयमानः, प्रभुः, आयोधनगतम्, अनन्तम्, वित्तम्, वीरभूषणम्, आहृतम्, तत्, सर्वम्, यदुराजाय, प्रादिशत् ॥ ४०-४१ ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

प्रत्युद्यातैर्मथुरावासिभिर्जनैः उपसंगम्य मिलित्वा ॥ ३७ ॥ तदा प्रभौ पुरं प्रविशति सति शंखादयो नेदुः ॥ ३८ ॥ कथंभूतां पुरं तदाह । सिक्तमार्गामिति । ब्रह्मघोषेण वेदघोषेण निर्घुष्टां निनादिताम् । कौतुकेनोत्सवेन आ सर्वता बद्धानि तोरणानि यस्यां ताम् ॥ ३९ ॥ निचीयमानो विकीर्यमाणः । प्रविवेशेति विपरिणताऽनुषंगः ॥ ४० ॥ आयोधनं रणभूमिस्तत्रस्थं वित्तम् । वीराणां भूषणम् ॥ ४१ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

प्रत्युद्यातैरानयनार्थं सम्मुखमागतैः ॥ ३७ ॥ प्रभौ सर्वेश्वरे श्रीकृष्णे । शङ्खेति युग्मकम् । अनेकश इत्यस्य सर्वै-रेवान्वयः । ॥ ३८ ॥ तोरणानि वन्दनमालाः । हृष्टेति दिव्यवस्त्रादिधारणं सूचयति । कौतुकेनेति तृतीयालुक्छान्दसः । अतः सर्वत्रान्वेति ॥ ३९ ॥ अंकुरैर्दूर्वांकुरैः । विपरिणतस्य शत्रन्तविशेर्लिडन्तत्वेन विपरिणतस्य । अनुषंगः पृष्ठपाठत आनयनम् । उत्कलितानि प्रफुल्लानि । कीदृशस्सन् प्रविवेश तत्राह—निचीयेति । प्रीत्या हर्षेणोत्कलितैर्विकसितैर्लोचनैः कृत्वा । अत्र विपरिण-तानुषङ्ग इति 'पुरं प्रविशति प्रभौ' इति पूर्वोक्तशतृप्रत्ययस्य सप्तम्याश्च लिट्त्वप्रथमत्वेन विपरिणामात् । यद्वा—निचीयमान इति परेण युग्मकम् ॥ ४० ॥ यदुराजायोग्रसेनाय । वीराणां भूषणं गात्रालंकरणम्, वेषामतिबहुलतयानन्तं मूल्येनाप्यनिरूप्यमित्यर्थः । आहृतं जनैरानायितम् । यदुराजाय स्वयमेव तथात्वेन स्थापितायोग्रसेनाय । प्रकर्षेण राजयोग्यादरपूर्वकमदिशदुपहृतवान् । यतः प्रभुः स्वयं तद्वैभवानपेक्षः, स्वमर्यादापालनपरश्चेत्यर्थः ॥ ४१ ॥

### श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी

कुमुन्दोऽपि माथुरैः सहाभिमुख्येन सङ्गम्य ययाविति पूर्वेणैवान्वयः । मधुपुरीमिति शेषः । तादृशवर्णितप्रावीण्यात् पराख्रादिभिर्न क्षतमेव बलं यस्य सः जयजयेत्याद्यनुमोदितः ॥ ३७ ॥ शङ्खेति युग्मकम् । अनेकश इत्यस्य सर्वैरप्यन्वयः ॥ ३८ ॥ हृष्टेति । दिव्यवस्त्रादिधारणञ्च सूचयति—कौतुकेनेत्यर्थः । तृतीयालुक् छान्दसः अतः सर्वत्रापि योज्यम् ॥ ३९ ॥ कीदृशः सन् प्रविवेश ? तत्राह—निचीयेति । प्रीत्या हर्षेण उत्कलितैर्विकसितैर्लोचनैः कृत्वा अत्र टीकायां विपरिणतानुषङ्ग इति पुरं प्रविशति प्रभाविति पूर्वोक्तशतृप्रत्ययस्य सप्तम्याश्च विपरिणामात् । यद्वा, निचीयमानः इति परेण युग्मकम् ॥ ४० ॥ वीराणां भूषणं गात्रालङ्करणम् अत एवानन्तं तेषामतिबाहुल्याद्गणनया महासम्पन्नत्वान्मूल्येन चानिरूप्यमित्यर्थः । आहृतं जनैरानायितं यदुराजाय स्वयमेव तथा स्थापितायोग्रसेनायैव प्रकर्षेण राजयोग्यादरपूर्वकमदिशत् उपहृतवान् यतः प्रभुः स्वयं तद्वैभवानपेक्षः स्वमर्यादापालनपरश्चेत्यर्थः ॥ ४१ ॥

### श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी

नेदुः स्वयमेवावाद्यन्त, अनेक इत्यस्य सर्व्वैरप्यन्वयः । प्रभौ जगदीश्वरे श्रीमथुरानाथे वा ॥ ३७ ॥ अयं महोत्सवेन स्वयं नदने हेतुः—हृष्टा जना विप्रादयः सर्वलोका यस्यामिति ॥ ३८ ॥ पौराणां दिव्यवस्त्रालंकारपरिधानादिकं सूचयति । प्रीत्या हर्षेणोत्कलितैरुत्फुल्लैर्लोचनैः कृत्वा ॥ ३९ ॥ वीरभूषणमिति वित्तेनैव राज्ञां शोभासिद्धेः, यद्वा, वीराणां भूषणञ्च गात्रालंकारम्, जातावेकत्वम्, आहृतं जनैरानीतं सत्, यदुराजाय उग्रसेनाय तदर्थं तस्मिन् समर्पयितुं प्रकर्षेणानन्यस्वामित्वादिना आदिशत्, यतः प्रभुस्तस्यापीश्वरः, तदिति तेन तस्यैव तत्सिद्धेरिति भावः । यद्वा, स्वप्रतिज्ञापालनसमर्थः, अन्यथा ( भा० १०।४५।१४ ) 'मयि भृत्य उपासीने' इत्यादि-स्वोक्त-व्यभिचारः स्यादिति ॥ ४० ॥ एवमित्यनेन प्रतिवारं पूर्ववत् त्रयोविंशत्यक्षौहिण्यो ज्ञेयाः । अन्यत्तैर्व्याख्यातम्, यद्वा, तावतीत्यत्र पुंवद्भावाभाव आर्षः, केचिद्वैयाकरणा अत्र पुम्वद्भावो न स्यादित्याहुः, तावत्यस्त्रयो-विंशति संख्या अक्षौहिण्यो बलं सैन्यं ताभिर्वा युद्धसामर्थ्यं यस्य सः । कृष्णेन साक्षाद्भगवता पालितैरिति पूर्ववदक्षतत्वादिकं बोधयति ॥ ४१ ॥

### श्रीमद्वीरराघवाचार्यकृता भागवतचन्द्रचन्द्रिका

शङ्खेति । प्रभौ भगवति पुरं प्रविशति सति शङ्खादयो नदुर्दध्वनुः भेर्यश्च तूर्याणि च तानि परिवल्लिङ्गवचनाः तथा वीणावेणुमृदङ्गानीति च ॥ ३८ ॥ पुरं विशिनष्टि—सिक्तमार्गामिति । सिक्ताश्चन्दनाम्बुभिर्मार्गाः यस्यां हृष्टा जना यस्यां तां

ब्रह्मघोषेण वेदपाठघोषेण निनादितां तथा कौतुकेनं त्सवेन आ सर्वतो बद्धानि तोरणानि यस्यां ताम् ॥ ३९ ॥ निचीयमान इति। मालामर्हन्तीति माल्यानि कुसुमानि तत्प्रभृतिभिः निचीयमानः विकीर्य्यमाणः प्रीत्योत्कण्ठितानि भरितानि लोचनानि येषां तैर्जनैरिति शेषः। स्नेहेन सहितं यथा तथानिरीक्ष्यमाणो मुकुन्दः प्रविवेशेति विपरिणतेनान्वयः ॥ ४० ॥ ततः किं कृतवान् ? तदाह—आयोधनगतमिति। आयोधनं रणभूमिः तत्र आसमन्तादगतं स्थितं यत्तत्सर्वमनन्तमानीतं वीराणां भूषणं यदुराजाय उग्रसेनाय प्रादिशत्सर्मपितवान् ॥ ४१ ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

पुरं प्रविशति, सति दुन्दुभ्यादयो नेदुरित्यन्वयः ॥ ३८ ॥ कौतुकाभिर्दण्डमाणभिराबद्धतोरणाम् ॥ ३९ ॥ निचीयमानः राशीक्रियमाणः ॥ ४० ॥ यदुराजाय उग्रसेनाय ॥ ४१ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

पुरं विशिनष्टि—सिक्तमार्गामित्यादिना ॥ ३९ ॥ निचीयमानः विकीर्यमाणः प्रभुः प्राविशदिति विपरिणतानुषङ्ग इति श्रीस्वामिचरणाः। यद्वा, प्रादिशदिति परेणान्वयः ॥ ४० ॥ आयोधनं युद्धभूमिस्तत्र पतितं वीराणां भूषणं गात्रलयम् ॥ ४१ ॥

### गूढार्थदीपिनी

शंखेति युग्मम्। ब्रह्म वेदः। कौतुकेनोत्सवेन ॥ ३८-३९ ॥ निचीयमानो विकीर्यमाणो भगवान् तत्सर्वं वित्तमुग्रसेनाय प्रादिशत् मर्मार्पितवानित्युत्तरेणान्वयः। आयोधनं रणभूमि। उत्कलितानि विकसितानि ॥ ४०-४१ ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

अभिसङ्गम्य मिलित्वा ॥ ३७ ॥ प्रभौ भगवति पुरं प्रविशति। शङ्खादयो नेदुः दध्वनुः ॥ ३८ ॥ कथम्भूतं पुरमित्याकाङ्क्षायां पुरं विशिनष्टि—सिक्तमार्गामित्यादिना। कौतुकेनोत्सवेन आ सर्वतो बद्धानि तोरणानि यस्यां ताम् ॥ ३९ ॥ मालामर्हन्तीति माल्यानि कुसुमानि तदादिभिर्निचीयमान अवकीर्यमाणः प्रीत्या उत्कलितानि लोचनानि येषां तैर्जनैरिति शेषः। सस्नेहेन सहितं यथा भवति तथा निरीक्ष्यमाणः आयोधनगतं रणभूमिगतं वीराणां भूषणमाहृतम्। सर्वं वित्तं यदुराजाय प्रादिशत् दत्तवानिति द्वयोरन्वयः ॥ ४० ॥

### श्रीसत्यधर्मकृता श्रीभागवतटिप्पणी

महाप्राणं वहुवलं यथा तथा ॥ ३७ ॥ धर्मज्ञ सारथिधर्ममर्मज्ञ। आवृत्या हयधर्मज्ञेति वा। पशुपालेन शिशुपालपुर आलपनं मागधादपि न वलिष्ठतया किन्तु स्वेनैवान्ततो गत्वा संहार्य त्वं निमित्तोक्त्येति बोध्यम् तौ यत्र वर्तते तत्र रथं वाहय ।३८। परवीरहा गोविन्दः सिंहनादं व्यनदच्चकार ॥ ३९ ॥ ततोऽद्धन्द्वशङ्खद्वन्द्वशब्दश्रवणसमनन्तरं सवेपथुर्वेपथुना कम्पेन सहिता सा चिन्ता परसैन्यानां ह्यभूत् ॥ ४० ॥ अल्पीयसा बलेनेत्युक्तं तत्प्रकारं जल्पति। चतुर्भिर्वसुदेवादिभिरष्टान्कलिङ्गादिकानां तदद्भुतमिवाभवदिति ॥ ४१ ॥

### श्रीमद्वल्लभाचार्य्यकृता सुबोधिनी

ततो मानुषैरप्यनुमोदित इत्याह माथुरैरिति। दुर्गमुद्घाट्य सर्वे समागताः। यतो विज्वराः मरणशङ्कारहिताः। ज्वरो हि समागत एव मरणशङ्कामुत्पादयति। तेषां स एव ज्वरः प्राप्त इति। कालदेहादिधर्मास्तु पूर्वमेव निवारिताः। किञ्च, बहिर्बुद्ध्यापि मुदितात्मानो जाताः। ततः सूतमागधबन्दिभिः उपगीयमानविजयो जातः। शङ्खदुन्दुभयश्च नेदुः। ततः शनैः गमनसूचनाय। वीणावेणुमृदङ्गान्यपि वादितानि। यतः प्रभुः पुरं प्रविशतीति। लौकिकमेतदिति सूचितम् ॥ ३७-३८ ॥ अन्तःपुरं वर्णयति सिक्तमार्गामितिद्वाभ्याम्। सिक्ताः सर्वे मार्गा यस्याम्, गन्धोदकैः सेकः। हृष्टा जना यस्याम्। पताकाभिः जयलेखाङ्किताभिरलङ्कृतामिति। अधो मध्ये उपरि च शोभा निरूपिता। नितरां घुष्टा ब्रह्मघोषेण वेदपाठेनेति। प्रत्यागाशिषो मन्त्राः प्रवेशे पठनीया इति पुरप्रवेशे तदर्थमेव ब्राह्मणैः ब्रह्मघोषः पठितः। वैश्यानां विशेषचेष्टामाह। कौतुकैराबद्धानि तोरणानि यस्यामिति। सर्वाभिरेव नारीभिः माल्यादिभिः विकीर्यमाणो जातः। दध्यक्षताः विकीर्णाः, यवाङ्कुराश्च। एवं तासां क्रिया भगवति निरूपिता त्रिविधा। ज्ञानमपि तथा निरूपयति निरीक्ष्यमाण इति। स्नेहो बन्धुभावेन। प्रीतिः पुरुषभावेन। उत्कण्ठा कामभावेनेति। एवं त्रिस्वभावैर्लोचनैर्निरीक्ष्यमाणो जातः। स्नेहः पृथक् कृतो लौकिकदोषाभावाय ॥ ४० ॥ ततः प्रासधनस्य राजन्येव विनियोगं वदन् स्वस्य तदाज्ञया युद्धादिकरणं सूचयति, तद्दुःखाभावाय, आयोधनगतमिति। आयोधनं युद्धभूमिः, तत्र योधैरानीतं द्रव्यमाभरणादिप्रकारेण। अनन्तं बह्वेव। बहव एव हता इति। अनन्तत्वे हेतुमाह वीरभूषणमिति। यावदाहृतं तत्सर्वं यदुराजाय प्रादिशत् प्रकर्षेण बोधितवान्। रक्षास्थापनादिकं तु स्वकृत्यमेवेति निवेदनमात्रं राज्ञे निरूपितम्। प्रभुत्वात् न सह गतानां यथेष्टं द्रव्यविनियोगः ॥ ४१ ॥

### श्रीसुबोधिनी-सारः

हर्षितचित्तैर्विज्वरैः सुखिभिर्माथुरैर्नागरिकैर्जनैरुपसंगम्य मिलित्वा सूतादिभिरुपगीयमानकीर्तिः ॥ ३७ ॥ प्रभौ श्रीकृष्णे पुरं मथुरां प्रविशति सति शंखादयो नेदुः ॥ ३८ ॥ सिक्ता मार्गा यस्यां तां हृष्टा जना यस्यां तां पताकामण्डितां वेदनादेन निर्घुष्टां नादितां कौतुकेनोत्सवेन सर्वतो बद्धानि तोरणानि यस्यां तामिति पुरविशेषणानि ॥ ३९ ॥ पुष्पदध्यक्षतांकुरैः नारीभिः स्त्रीभिः निचीयमानो विकीर्यमाणः सस्नेहं सप्रेम यथा भवति तथा प्रीत्या उत्कलितान्युज्जृंभितानि लोचनानि तैरालोक्यमानः प्रविवेशेति शेषः ॥ ४० ॥ अनन्तमसंख्यातमायोधनं संग्रामस्थानं तत्र गतं वित्तं धनं वीराणां भूषणं च यदाहृतमानीतं तत्सर्वं प्रभुः कृष्णो यदुराजायोग्रसेनायादात् ॥ ४१ ॥

### विवरणटिप्पणी

आयोधनमित्यस्याभासे । तद्दुःखाभावायेति । दुःखाभावसूचनायेत्यर्थः । एवं सप्तदशकृत्व इत्यत्र । एक इति । समर इति शेषः । सर्वसाम्यत्वायेति । सर्वैः साम्यं यस्य तादृशत्वाय युद्धस्येति शेषः ।

### गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

पुरीं प्रविशन्तं भगवन्तमेव वर्णयति—शत्रुविनाशात् विज्वरैर्निवृत्ततापैर्मुदितात्मभिः प्रसन्नचित्तैर्मथुरावासिभिरुपसङ्गम्य मिलित्वा सूतादिभिरुपगीयमानो विजयो यस्य सः ॥ ३७ ॥ प्रभौ कृष्णे पुरं प्रविशति सति शङ्खादयो नेदुः ॥ ३८ ॥ पुरं वर्णयति—सिक्ताश्चन्दनाद्यम्बुभिर्मार्गा यस्यां ताम्, हृष्टाः जना यस्यां ताम्, ब्रह्मघोषेण वेदपाठघोषेण निर्घुष्टां निनादिताम्, कौतुकेनोत्सवेन आ सर्वतो बद्धानि तोरणानि यस्यां ताम् ॥ ३९ ॥ पुनर्भगवन्तं वर्णयति—नारीभिः मालामर्हन्तीति माल्यानि कुसुमानि तत्प्रभृतिभिर्निचीयमानः विकीर्यमाणः, प्रीत्या उत्कलितानि उत्फुल्लानि लोचनानि येषां तैर्जनैः सस्नेहं यथा भवति तथा निरीक्ष्यमाणो मुकुन्दः पुरं प्रविवेशेति परिणतेनान्वयः ॥ ४० ॥ आयोधनं रणभूमिः तद्गतं तत्र स्थितं अनन्तमसङ्ख्यातं वित्तं धनम् । तदेव स्पष्टयति—वीराणां भूषणं यत् आहृतं यत् समानीतं तत् सर्वं यदुराजाय उग्रसेनाय प्रभुः श्रीकृष्णः प्रादिशत् समर्पितवान् ॥४१॥

### अन्वितार्थप्रकाशिका

शङ्खेति द्वयम् । सिक्ताश्चन्दनाद्यम्बुभिः मार्गा यस्यां तां हृष्टा जना यस्यां तां पताकाभिरलंकृतां ब्रह्मघोषेण वेदपाठघोषेण निर्घुष्टां निनादितां कोतुकेनोत्सवेन आ सर्वतो बद्धानि तोरणानि यस्यां तां पुरं मथुरां प्रभौ श्रीकृष्णे प्रविशति सति अनेकशः अनेकानि शङ्खदुन्दुभयः भेर्यस्तूर्याणि च वीणावेणुमृदङ्गानि च नेदुः ॥ ३८-३९ ॥ निचीयमान इति । नारीभिः कर्त्रीभिः मालामर्हन्ति माल्यानि कुसुमानि तैः दध्यक्षतयवाङ्कुरैश्च करणैर्निचीयमानः विकीर्यमाणः प्रीत्या उत्कलितानि उत्फुल्लानि लोचनानि येषां तैर्जनैः सस्नेहं यथा भवति तथा निरीक्ष्यमाणो मुकुन्दः पुरं प्रविवेशेति शेषः । यद्वा । एवंभूतो मुकुन्दः युद्धलब्धं धनं यदुराजाय प्रादिशदित्युत्तरेणान्वयः ॥ ४० ॥ आयोधनेति । आयोधनं रणभूमिः तद्गतं तत्र पतितम् अनन्तमसंख्यातं वित्तं धनं वीराणां भूवणं गात्रलग्नं च यत् आहृतम् आनीतं तत्सर्वं यदुराजाय उग्रसेनाय प्रभुः श्रीकृष्णः प्रादिशत् समर्पितवान् ॥ ४१ ॥

### श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्

अभिमुखागतैः माथुरैर्मथुराजनैः उपसंगम्य ॥ अभिसंगम्येति पाठे मिलित्वास्वपुरे ययाविति संबन्धनीयम् ॥ ३७ ॥ प्रभौ श्रीकृष्णे पुरं प्रविशति सति शंखादयो नेदुः ॥३८॥ अथ पुरीशोभामाह सिक्तेति ॥ ब्रह्मघोषेण वेशब्देन निर्घुष्टांसुशब्दितां ॥ कौतुकेन महोत्सवेन आसवन्तात् वधानि तोरणांनि यस्यां तां ॥ ३९ ॥ निचीयमानो विकीर्यमाणः प्रीत्यानुत्कलितैः प्रफूल्लर्लोचनैः निरीक्ष्यमाणः सन् पुरीं प्रविष्टः सन् राजगेहं जगामेत्यध्याहार्थं ॥ ४० ॥ आयोधने युद्धभूमौ गतं स्थितं चित्तं वीराणां भूषणमाभरण समूहं आकृतं आनीते । उग्रसेनाय ददौ ॥ ४१ ॥

### भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

शङ्खेति । प्रभौ श्रीकृष्णभगवति, पुरं प्रविशति सति, अनेकशः शङ्खाश्च दुन्दुभयश्च ते, भेर्य्यश्च तुर्याणि च तानि, 'परवल्लिङ्गं द्वन्द्व'-इत्यादिना परवल्लिङ्गता । तथा, वीणावेणुमृदङ्गानि च, नेदु. ॥ ३७ ॥ पुरं विशिनष्टि । सिक्तमार्गामिति । सिक्ताश्चन्दनाम्बुभिरुक्षिता मार्गा यस्यां तां, हृष्टा जना यस्यां तां, पताकाभिः, अलंकृतां, ब्रह्मघोषेण वेदपाठघोषेण, निर्घुष्टां निनादितां, कौतुकेनोत्सवेन आ सर्वतो बद्धानि तोरणानि यस्यां ताम् ॥ ३८ ॥ निचीयमान इति । मालामर्हन्तीति माल्यानि कुसुमानि च दधि अक्षताश्च अङ्कुराश्च तैः करणै, नारीभिः कर्तृभिः, निचीयमानो विकीर्यमाणः, प्रीत्या उत्कण्ठितानि प्रेमाश्रुभरितानि लोचनानि येषां तैः, जनैरिति शेषः । सस्नेहं स्नेहसहितं यथा तथा, निरीक्ष्यमाणः मुमुन्दः, प्रविवेशेति विपरिण-

तेनान्वयः ॥ ३९ ॥ ततः किं कृतवांस्तदाह। आयोधनेति। आयोधनं रणभूमिस्तद्गतं, पाठान्तरे तत्रासमन्तात् गतं प्राप्तं, वीरभूषणं वीराणामाभरणात्मकं, अनन्तं, आहृतं, वित्तं आनीय सर्वमपि, तत् यदुराजायोग्रसेनाय, प्रभुः श्रीकृष्णः, प्रादिशत् ॥४०॥ एवमिति। एवमुक्तप्रकारेण, मागधः राजा जरासन्धः, तावत्यः त्रयोविंशतिसंख्याकाः अक्षौहिण्यो बलं सैन्यं यस्य स तथाभूतः सन्, कृष्णपालितैः यदुभिर्यादवैः सह, सप्तदशकृत्वः सप्तदशवारान्, युयुधे ॥ ४१ ॥

**कृष्णप्रिया**

मागध की विपुल सेना के पराजय से निर्भय बने हुए माथुर जनों के हृदय आनन्दित हो गये थे। तब भगवान् नगर में पधार कर स्वजनों से मिल गये और सूत मागध एवं बन्दी बाण भगवान के विजय गाने लगे ॥ ३७ ॥ जब भगवान् श्रीकृष्ण ने मथुरा पुरी में प्रवेश किया तब नगर में शङ्ख, नगारे, मेरी, तुरही, वीणा, मृदङ्ग, बांसुरी आदि मङ्गल बाजे बजने लगे ॥ ३८ ॥ विजयी भगवान् एवं श्रीबलभद्रजी ने विजय पाकर जल के छिड़काव से सिंचित किए हुए सड़कों एवं राजमार्गों से मण्डित मथुरा जी में प्रवेश किया। नगर के नागरिकों की आनन्दोल्लास भरी चहल-पहल हो रही थी। सम्पूर्ण नगर छोटी-छोटी झंडियों और बड़ी-बड़ी ध्वजाओं से सजाया गया था। विप्रदेवों की वेदध्वनि चारों ओर गूंज रही थी। सारे नगर में आनन्दोत्सव सूचक वंदववार बांध दिये गये थे ॥ ३९ ॥ भगवान् श्रीचन्द्रजी ने जब श्री मथुरा पुरी में प्रवेश किया तब नगर नारियाँ स्नेह सभर नजरों से नाथ को निहार रही थी एवं कुसुम माला दही दूर्वा तण्डुल जौ आदि के अङ्कुरों को भगवान पर वर्षा कर रही थी ॥४०॥ श्रीकृष्ण भगवान् समर भूमि से जो वीरों के आभूषण और अपार धनराशि लाये थे प्रभु ने सह यदुनरेश महाराज उग्रसेन जी के समीप भेज दिया ॥ ४१ ॥

**एवं सप्तदशकृत्वस्तावत्यक्षौहिणीबलः[1]। युयुधे मागधो राजा यदुभिः कृष्णपालितैः ॥ ४२ ॥**
**[2]अक्षिण्वंस्तद्बलं सर्वं [3]वृष्णयः कृष्णतेजसा। हतेषु स्वेष्वनीकेषु त्यक्तोऽयादरिभिर्नृपः ॥ ४३ ॥**

**कर्दमक्षमा**

**अन्वयः**—एवम्, तावत्यक्षौहिणीबलः, राजा, मागधः, सप्तदशकृत्वः, कृष्णपालितैः, यदुभिः, युयुधे ॥ ४२ ॥ वृष्णयः, कृष्णतेजसा, सर्वम्, तद्, बलम्, अक्षिण्वन्, हतेषु, स्वेषु, अनीकेषु, अरिभिः, त्यक्तः, नृपः, अयात् ॥ ४३ ॥

**श्रीधरस्वामिविरचिता भावार्थदीपिका**

तावतीति च्छेदः। तावति पराजये वर्तमानेऽप्यक्षौहिण्यो बलं यस्य सः। सप्तदशकृत्वः सप्तदशवारान्युयुधे ॥ ४२ ॥ अक्षिण्वनुक्षयं निन्युः ॥ ४३ ॥

**श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः**

एवं प्रथमयुद्धवत्। तावति तत्प्रमाणकेऽर्थात्पराजये सति। एवमिति प्रतिवारं त्रयोविंशत्यक्षौहिण्यः, तादृशं युद्धम्, वनगमनागमश्च ज्ञेयः। यद्वा—तावतीत्यत्र पुंवद्भावाभाव आर्षः। तावत्यस्त्रयोविंशतिसंख्या अक्षौहिण्यो बलं सैन्यं ताभिर्वा युद्धसामर्थ्यं यस्य सः कृष्णपालितैरिति पूर्ववदक्षतत्वादि बोध्यते ॥ ४२ ॥ तद्बलं जरासन्धबलम्। अनीकेषु सैन्येषु। अरिभिः कृष्णादिभिः। वृष्णय एव न तु पूर्ववत् कृष्णरामौ, तत्र सात्यक्यादीनां प्राधान्यं क्रमशो ज्ञेयम्। कृष्णतेजसा वह्निना ज्वालानामिव श्रीकृष्णेन समवाय एव तेषां तेजो व्यवर्द्धतेत्यभिप्रायेण, न तु तदभावापेक्षया "नृलाके चाप्रतिद्वन्द्वो वृष्णीञ्छ्रुत्वात्मसम्मितान्" इति वक्ष्यमाणात्। अत एवारिभिर्वृष्णिभिरेव त्यक्तः श्रीकृष्णाभिप्रायेणेति भावः। यद्वारिभिर्हतेषु पूर्ववच्छ्रीभगवता त्यक्तः सन् ॥ ४३ ॥

**श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी**

एवमित्यनेन प्रतिवारं त्रयोविंशत्यक्षौहिण्यो ज्ञेयाः तादृशं युद्धादिकं वनगमनोद्यमश्च अन्यत्तैः। यद्वा तावतीत्यत्र पुम्वद्भावाभाव आर्षः। तावत्यः त्रयोविंशतिसङ्ख्याः अक्षौहिण्यो बलं सैन्यं ताभिर्वा युद्धसामर्थ्यं यस्य सः कृष्णपालितैरिति पूर्ववदक्षतत्वादिकं बोध्यते ॥ ४२ ॥ वृष्णय एव नतु पूर्व्ववत् श्रीकृष्णः श्रीरामो वा नतु तत्र च सात्त्विक्यादीनां प्राधान्यं क्रमशो ज्ञेयम् कृष्णतेजति वह्निना ज्वालानामिव श्रीकृष्णेन समवाय एव तेषां तेजो वर्द्धत इत्यभिप्रागेणैव नतु तदभावापेक्षया "नृलोके चाप्रतिदन्द्वो वृष्णीन् श्रुत्वाऽऽत्मसम्मितान्" इति वक्ष्यमाणात् अत एवारिभिर्वृष्णिभिरेव त्यक्तः श्रीकृष्णाभिप्रायेणेति भावः। किम्वा अरिभिर्हतेषु पूर्व्ववत्। श्रीभगवता त्यक्तः सन् ॥ ४३ ॥

१. हिणीर्बलः। २. अक्षिण्वत—विज। ३. वृष्णिभिः।

### श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी

वृष्णय एव, न तु पूर्व्ववत् श्रीकृष्णो रामो वा, अतएव परिभिर्वृष्णिभिरेव त्यक्तः, किंवा अरिभिर्हतेषु पूर्व्ववत् श्रीभगवता त्यक्तः सन् ॥ ४२ ॥ प्रत्यदृश्यत सहसैवाभिमुखे ददृशे वृष्णिभिः; यद्वा, स्वयमेव प्रत्यक्षोऽभूदित्यर्थः, नारदेन प्रेरित इत्यादौ विशेषः श्रीविष्णुपुराणे ( ५।२३।१-६ )—

'गार्ग्य गोष्ठे द्विजं श्यालः षण्ढ इत्युक्तवान् द्विज । यदूनां सन्निधौ सर्व्वे जहसुः सर्व्वयादवाः ॥
ततः कोपसमविष्टो दक्षिणाब्धिमुपेत्य सः । सुतमिच्छंस्तपस्तेपे यदुचक्रभयावहम् ॥
आराधयन् महादेवं सोऽयश्चूर्णमभक्षयत् । ददौ वरञ्च तुष्टोऽस्मै वर्षे द्वादशमे हरः ॥
समाजयामास च तं यवनेशो ह्यनात्मजः । तद्योषित्संगमाच्चास्य पुत्रोऽभूदतिसंप्रभः ॥
तं कालयवनं नाम राष्ट्रे स्वे यवनेश्वरः । अभिषिच्य वनं यातो वज्राग्रकठिनोरसम् ॥
स च वीर्य्यमदोन्मत्तः पृथिव्यां वलिनो नृपान् । पप्रच्छ नारदश्चास्मै कथयामास यादवान् ॥' इति ।

अप्रतिद्वन्द्वः प्रतियोधरहितः स्वतुल्य-हीनः, श्रुत्वा श्रीनारदादेव ॥ ४३-४४ ॥

### श्रीमद्वीरराघवाचार्यकृता भागवतचन्द्रचन्द्रिका

एवमिति । इत्थं पुनः तावत्यः त्रयोविंशतिसङ्ख्याका अक्षौहिण्यो बलं यस्य तथाभूतः सप्तदशवारं कृष्णपालितैर्यदुभिः सह युयुधे ॥ ४२ ॥ अक्षिण्वन्निति कृष्णतेजसा हेतुभूतेन वृष्णया यादवः तस्य जरासन्धस्य बलं सर्वमक्षिण्वन्नाशितवन्तः इत्थं सर्वेष्वनीकेषु हतेषु सत्सु नृपो जरासुतो प्ररिभिः रामादिभिः त्यक्तो जगाम ॥ ४३ ॥

### श्रीविजयध्वजतीर्थकृता पदरत्नावली

अक्षिण्वत अक्षीयत ॥ ४३-४५ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

तावत्य त्रयोविंशतिसङ्ख्या अक्षौहिण्यो बलं सैन्यं यस्य सः पुंवद्भावाभाव आर्षः ॥ ४२ ॥ अक्षिण्वन् क्षयं निन्युः ॥४३॥

### गूढार्थदीपिनी

तावति पराजये वर्तमानेऽपि । सप्तदशकृत्वः सप्तदशवारान् ॥ ४२ ॥ अक्षिण्वन् नाशितवन्तः ॥ ४३ ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

एवं तावत्यः त्रयोविंशतिसङ्ख्याकाः अक्षौहिण्यो बलं यस्य स पुम्वद्भाव आर्षत्वान्नेति बोध्यम् सप्तदशकृत्वः सप्तदशवारान् युयुधे ॥ ४२ ॥ कृष्णतेजसा वृष्णयः अल्पसङ्ख्याकाः अपि तस्य जरासन्धस्य बलम् अक्षिण्वन् क्षयं निन्युः ॥ ४३ ॥

### श्रीसत्यधर्मकृता श्रीभागवतटिप्पणी

तथा दक्षिणद्वारि उग्रसेनादिभिश्चतुर्भिर्विन्दादिपौण्ड्रकान्तानामष्टानां तथेतरेण राजन्यकटकेन । सैन्येऽपि कटकोऽस्त्रियामित्यभिधानम् । गोविन्दस्याध्मातेन शङ्खध्माननेन चेतो मनो युद्धे येषां तेषां यदूनां कटनं युद्धम् ॥ ४२ ॥ अपरद्वारि पश्चिमद्वारि सात्यक्यादिभिश्चतुर्भिर्युधामन्वादिसुदक्षिणान्तानां राजसमाजनेतरेण रणः ॥ ४३ ॥

### श्रीमद्वल्लभाचार्य्यकृता सुबोधिनी

एवमेकप्रकारेण भगवतो जयं निरूप्य जयान्तरेष्वपीमं प्रकारमतिदिशति एवं सप्तदशकृत्व इति । अनेनापि सह सप्तदश । एकः सप्तदशधा आवृत्त इति सर्वसाम्यत्वाय कृत्वसुच्प्रत्ययः । देशदोषात् न विवेक उत्पद्यते इति मागध इत्युक्तम् । सम्पत्तिस्तु राजत्वात् । अन्यत्रापि भगवान् न स्वयं युयुधे । तथा सति लोकप्रतीत्या सर्वदा क्लेश एव भवेत्, किन्तु कृष्णरक्षितैर्यदुभिः सह युयुधे । अत एव च तद्वलमक्षिण्वन् । न केवलं रक्षार्थमेव भगवद्विनियोगः, किन्तु निराकरणार्थमपीत्याह कृष्णतेजसेति ॥ ४२ ॥ पुनः पुनः तस्यापि गमनं वाक्यैरधिकैरावेशेन चेति वक्तुमाह हतेष्विति । यतो नृपः । राज्ये हृते हि स निवृत्तो भवेत् । तद्भगवान् न करोतीति स निवर्तत इत्यर्थः ॥ ४३ ॥

### श्रीसुबोधिनी-सारः

तावति पराजये वर्त्तमाने सति एवं प्रकारेण सप्तदशकृत्वेति भूपवारान् अक्षौहिण्यो बलं यस्य स तावत्योऽक्षौहिण्यो बलं यस्येत्येके मागधो राजा जरासंधः कृष्णेन पालितैर्यदुभिर्युयुधे ॥ ४२ ॥ कृष्णस्य तेजसा वृष्णयो यादवाः तत्सर्वं बलमक्षिण्वन् अघ्नन् स्वेष्वनीकेषु सैन्येषु हतेषु सत्सु अरिभिर्वैरिभिस्त्यक्तो नृपो जरासुतोऽयात् अगमत् ॥ ४३ ॥

### गोस्वामीश्रीगिरधरलालकृता बालप्रबोधिनी

एवमेकं भगवतो जयं निरूप्य जयान्तरेष्वपीममेव प्रकारमतिदिशति—एवमिति । तावत्यः त्रयोविंशतिसङ्ख्याकाः अक्षौहिण्यः बलं सेना यस्य तथाभूतो भूत्वा तावत्सैन्यमादाय मागधो राजा जरासन्धः कृष्णपालितैर्यदुभिः सह सप्तदशवारान् एवमेव युयुधे इत्यन्वयः ॥ ४२ ॥ कृष्णतेजसा युक्ता वृष्णयः यादवास्तस्य जरासन्धस्य सर्वं बलं अक्षिण्वन् नाशितवन्तः, एवमेव तेषु सर्वेषु अनीकेषु सैन्येषु हतेषु सत्सु अरिभिः रामकृष्णादिभिस्त्यक्तः उपेक्षितो नृपो जरासन्धोऽगात् स्वपुरं जगाम ॥ ४३ ॥

### अन्वितार्थप्रकाशिका

एवमिति ॥ तावत्यः त्रयोविंशतिसंख्याका अक्षौहिण्यः बलं सेना यस्य सः तावतीति । पुंवत्त्वाभाव आर्षः । यद्वा तावतीति छेदः । तावति पराजयेऽप्यक्षौहिण्यो बलं यस्येति तथाभूतो भूत्वा तावत्सैन्यमादाय मागधो राजा जरासन्धः कृष्णपालितैर्यदुभिः सह सप्तदशकृत्वः सप्तदशवारान् एवमेव युयुधे ॥ ४२ ॥ अक्षिण्विन्निति ॥ कृष्णतेजसा युक्ता वृष्णयो यादवास्तस्य जरासम्धस्य बलं सर्वम् अक्षण्वन्नाशितवन्तः । एवमेव तेषु सर्वेषु अनीकेषु सैन्येषु हतेषु सत्सु अरिभिः रामकृष्णादिभिस्त्यक्त उपेक्षितो नृपो जरासन्धोऽयात् स्वपुरं जगाम ॥ ४३ ॥

### श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्

तावति इति पदच्छेदः तावति पराजये सत्यपि अक्षौहिण्यो बलं यस्य सः । यद्वा । तावत्यः । त्रयोविंशतिसंख्याका अक्षौहिण्यः । सैन्यानि यस्य सः पुंवत्त्वाभाव आर्षः सप्तदशकृत्वः सप्तदशवारान् युयुधे ॥ ४२ ॥ अक्षिण्वन् नाशं प्रापयामासुः । अरिभिर्यादवैस्त्यक्तो मागधः ॥ ४३ ॥

### भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

अक्षिण्वन्निति । कृष्णतेजसा श्रीकृष्णैश्वर्येणेत्यर्थः । पर्याप्ता इति शेषः । वृष्णयो यादवाः, सर्वं समग्रमपि, तद्बलं जरासन्धसैन्यं, अक्षिण्वन् नाशितवन्तः । इत्थं स्वेषु अनीकेषु सैन्येषु, हतेसु सत्सु, नृपो जरासन्धः, अरिभिर्बलभद्रादिभिः त्यक्तः सन्, अयात् अगात् । स्वपुरं प्रतीति शेषः ॥ ४२ ॥ अष्टादशम इति । अष्टादशमे संग्रामे युद्धे, आगामिनि भाविनि सति, तदन्नरा तन्मध्ये, भाव्याष्टादशमसंग्रामात् पूर्वमित्यर्थः । नारदप्रेषितः नारदेन संप्रेषितः, वीरः यवनः कालयवनः, प्रत्यदृश्यत । माथुरैर्जनैरिति शेषः ॥ ४३ ॥

### कृष्णप्रिया

राजन् ! बलवान् जरासन्ध ने इस प्रकार सत्रह बार आश्रित नृपतियों से इकट्ठी की हुई तेईस तेईस अक्षौहिणी सेना से श्रीकृष्ण भगवान से सुरक्षित यदुवीरों से युद्ध किया ॥ ४२ ॥ लेकिन पूर्ण पुरुषोत्तम भगवान् श्रीकृष्ण की सहायता से प्रत्येक समय जरासन्ध की सारी सेना का विनाश हो गया । राजा जरासन्ध की अपनी संपूर्ण सेना नष्ट हो जाती, तब यदुवीरों के उपेक्षा पूर्वक छोड़ देने से राजा जरासन्ध लौट जाता था ॥ ४३ ॥

**अष्टादशमसंग्रामे[1] आगामिनि तदन्तरा । नारदप्रेषितो[2] वीरो यवनः प्रत्यदृश्यत[3] ॥ ४४ ॥**
**रुरोध मथुरामेत्य तिसृभिर्म्लेच्छकोटिभिः । [4]त्रैलोक्ये चाप्रतिद्वन्द्वो वृष्णीञ्छ्रुत्वाऽऽ[5]त्मसम्मितान् ॥४५॥**
**तं दृष्ट्वा चिन्तयत् कृष्णः संकर्षणसहायवान् । अहो यदूनां वृजिनं प्राप्तं ह्युभयतो महत् ॥ ४६ ॥**
**यवनोऽयं निरुन्धेऽस्मानद्य [6]महान् महाबलः । [7]मागधोऽप्यद्य वा श्वो वा परश्वो वाऽऽगमिष्यति ॥४७॥**

### कर्दमक्षमा

**अन्वयः**—अष्टादशमसङ्ग्रामे, आगामिनि, तदन्तरा, नारदप्रेरितः, वीरः, यवनः, प्रत्यदृश्यत ॥ ४४ ॥ नृलोके, अप्रतिद्वन्द्वः, वृष्णीन्, आत्मसम्मितान्-श्रुत्वा, च, तिसृभिः म्लेच्छकोटिभिः, एत्य, मथुराम्, रुरोध ॥ ४५ ॥ तम्, दृष्ट्वा, संकर्षण-सहायवान्, कृष्णः, अहो, हि, यदूनाम्, हि, उभयतः, महत्कष्टम्, प्राप्तम्, इति, अचिन्तयत् ॥ ४६ ॥ महाबलः, अद्य, तावत्, महान्, यवनः, अद्य, निरुन्धे, अद्य, वा, श्वः, वा, परश्वः, मागधः, आगमिष्यति ॥ ४७ ॥

---

१. अथाष्टादशमे युद्धे–वीर. । २. प्रेरि–प्रा. पा. । ३. पद्यत–श्रीधर. टि. । ४. नृलोके–श्रीधर. वंशी. जीव. वीर. विज. विश्व. । ५. मत्वात्मसन्मितान्–श्रीधर. टि. ; सम्म–विज. । ६. तावन्–श्रीधर. वीर. जीव. विश्व. ; श्वो वा–विज. । ७. मागधोऽप्येति दुष्टात्मा पराश्वो नैव संशयः–विज. ।

## श्रीधरस्वामिविरचिता भावार्थदीपिका

अष्टादशमेऽष्टादशे संग्रामे भाव्ये तन्मध्येऽकस्मात्कालयवनः प्राप्तः ॥ ४४ ॥ आत्मसंमितान्स्वतुल्यान् ॥ ४५ ॥ वृजिनं दुःखम् । उभयतो यवनाज्जरासंधाच्च ॥ ४६ ॥ तदाह द्वयेन । निरुन्धे निरुणद्धि ॥ ४७ ॥

## श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

तद्बलं जरासंधबलम् । अनीकेषु । अरिभिः कृष्णादिभिः । वृष्णय एव न तु पूर्ववत् कृष्णरामौ, तत्र सात्यक्यादीनां प्राधान्यं क्रमशो ज्ञेयम् । कृष्णतेजसा वह्निना ज्वालानामिव श्रीकृष्णेन समवाय एव तेषां तेजो व्यवद्धतेत्यभिप्रायेण, न तु तदभावापेक्षया ''नृलोके चाप्रतिद्वंदो वृष्णीञ्छ्रुत्वात्मसंमितान्'' इति वक्ष्यमाणात् । अत एवारिभिर्वृष्णिभिरेव त्यक्तः श्रीकृष्णाभिप्रायेणेति भावः । यद्वारिभिर्हतेषु पूर्ववच्छ्रीभगवता त्यक्तः सन् ॥ ४३ ॥ मडत्रार्थः ॥ प्रत्यदृश्यत सहसैव माथुराणां दृष्टिविषयो बभूवातिशीघ्रं प्राप्त इत्यर्थः । नारदेन प्रेरितोऽत्र विशेषो विष्णुपुराणे—''गार्ग्यं गोष्ठे द्विजं श्यालः पण्ढ इत्युक्तवान्द्विज । यदूनां सन्निधौ सर्वे जहसुर्यादवा स्ततः ।। ततः कोपसमाविष्टो दक्षिणापथमेत्य सः । सुतमिच्छेस्तपस्तेपे यदुचक्रमयावहम् ॥ आराधयन्महादेवं सोयश्चूर्णमभक्षयत् । ददौ वरं च तुष्टोऽसौ वर्षे द्वादशमे हरः ॥ सभाजयामास च तं यवनेशोप्यनात्मजः । तद्योषित्संगमाच्चास्य पुत्रोऽभूदलिसंप्रभः ॥ तं कालयवनं नाम राष्ट्रे स्वे यवनेश्वरः । अभिषिच्य वनं यातो वज्रांगकठिनोरसम् ॥ स च वीर्यबलोन्मत्तः पृथिव्यां बलिनो नृपान् । पप्रच्छ नारदश्चास्मै कथयामास यादवान् ॥'' इति । 'प्रेषितः' इति पाठेऽपि स एवार्थः ॥ ४४ ॥ न प्रतिद्वन्द्वः प्रतियोद्धा यस्य स तथा ॥ अप्रतिद्वन्द्वः प्रतियोधरहितः । श्रुत्वा श्रीनारदादेव ॥ ४५ ॥ तं पवनम् ॥ 'संकर्षणसहायवान्' इति मथुरातो दूरगमने तस्य संप्रति ग्रहणार्थं तेन सहेत्यर्थः । मत्यानुविधत्वादेवेति भावः । अत एवाह—अहो इत्यादि । अहो खेदे । हि निश्चितम् ॥ ४६ ॥ तद् वृजिनम् । तावदधुना । श्व आगामिदिने । परश्वस्ततः परदिने ॥ नितरां रुंधे आवृणोति । यतो महाबलोऽतोऽपसर्तुमपि न शक्यत इति भाव ॥ ४७ ॥

## श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी

प्रत्यदृश्यत सहसैवाभिमुख्येन माथुराणां दृष्टिविषयो बभूव अतिशीघ्रं प्राप्त इत्यर्थः । नारदेन प्रेरित इत्यादौ विशेषः श्रीविष्णुपुराणे—

''गार्ग्यं गोष्ठे द्विजं श्यालः षण्ढ इत्युक्तवान् द्विजः । यदूनां सन्निधौ सर्व्वे जहसुर्यादवास्ततः ॥
ततः कोपसमाविष्टो दक्षिणापथमेत्य सः । सुतमिच्छंस्तपस्तेपे यदुचक्रभयावहम् ॥
आराधयन् महादेवं सोऽयश्चूर्णमभक्षयत् । ददौ वरञ्च तुष्टोऽसौ वर्षे द्वादशमे हरेः ॥
सभाजयामास च तं यवनेशोऽप्यनात्मजः । तद्योषित्सङ्गमाच्चास्य पुत्रोऽभूदलिसम्प्रभः ॥
तं कालयवनं नाम राष्ट्रे यवनेश्वर । अभिषिच्य वनं यातो वज्राङ्गकठिनोरसम् ॥
स च वीर्यबलोन्मत्तः पृथिव्यां बलिनो नृपान् । पप्रच्छ नारदश्चासौ कथयामास यादवान्'' ॥ इति

प्रेषित इति पाठः क्वचित् ॥ ४४ ॥ अप्रतिद्वन्द्वः प्रतियोधरहितः श्रुत्वा श्रीनारदादेव ॥ ४५ ॥ सङ्कर्षणसहायवानिति मथुरातो दूरगमने तस्य सम्मतिग्रहणार्थं तेन सहेत्यर्थः । मर्त्यानुविधत्वादेवेति भावः । अत एवाह—अहो इत्यादि ''अहो खेदे हि निश्चितम्'' ॥ ४६ ॥ नितरां रुन्धे आवृणोति यतो महाबलः अत इत्यतोपसर्तुमपि न शक्यत इति भावः ॥ ४७ ॥

## श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी

श्रीमथुरातो दूरगमने तस्य सम्मतिग्रहणार्थं तेन सहेत्यर्थः । अहो खेदे, हि निश्चितम् ॥ ४५ ॥ नितरां रुन्धे आवृणोति, वर्त्तमानया नित्यं निरोधस्याविच्छेदो दार्ढ्यञ्च बोध्यते, यतो महाबलः अत इतोऽपसर्त्तुमपि न शक्यत इति भावः । सर्व्वज्ञस्यापि अद्य वेत्यादि-विकल्पोक्तिरियं कथनरीतिस्वभावात् ॥ ४७ ॥ बन्धूनामवध्यत्वमनुसन्धाय स्वयमेव पक्षान्तरमाह—नेष्यत इति । यतो बली, एतच्च स्नेहविशेषोदयस्वभावात्, किंवाऽन्यत्र तेषां नयनाय भयोत्पादनार्थम् ॥ ४७ ॥

## श्रीमद्वीरराघवाचार्यकृता भागवतचन्द्रचन्द्रिका

अथ अष्टादशमे युद्धे आगामिनि भाविनि सति तदन्तरा तन्मध्येऽष्टादशसङ्ग्रामात्पूर्वमित्यर्थः । नारदेन प्रेषितः कालयवनाख्यो वीरः प्रत्यदृश्यत माथुरैर्जनैरिति शेषः ॥ ४४ ॥ रुरोधेति । मनुष्यलोके न विद्यते प्रतिद्वन्द्वस्तुल्यबलो यस्य तथाभूतः कालयवनः यदून् स्वात्मना तुल्यबलसम्मितान् श्रुत्वा नारदमुखादिति शेषः । तिसृभिर्म्लेच्छानां कोटिभिः सहागत्य मथुरां सर्वतो निरुद्धवान् ॥ ४५ ॥ तमिति । तं कालयवनं दृष्ट्वा श्रीकृष्णश्चिन्तयामास, चिन्तामेवाह—अहो इति सार्द्धद्वयेन । उभयतो यवनाज्जरासन्धाच्च वृजिनं दुःखं महत् यदूनां प्राप्तम् ॥ ४६ ॥ तदेवाह—यवन इति । महद्बलं यस्य स यवनोऽधुनाऽस्मान्निरुन्धे निरुणद्धि अद्यास्मिन्नहनि वा श्वः परस्मिन्नहनि वा परश्वस्तदनन्तरे अहनि वा मागधोऽप्यागमिष्यति ॥ ४७ ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

उभयतो मागधाद्यवनाच्च प्राप्तं वृजिनं दुःखम् ॥ ४६-४७ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

नारदप्रेरित इति विष्णुपुराणे कथा। यथा, कदाचिद्गार्ग्यः स्वश्यालेन षण्ड इति परिहसितः तत् श्रुत्वा यदवो बहु जहसुः ततस्तेषां हास्येन बहु कुपितो गार्ग्यो दक्षिणापथं गत्वा यादवभयङ्करो मे पुत्रो भवत्विति सङ्कल्प्य अयश्चूर्णं भुञ्जानो महादेवमाराध्य द्वादशवर्षान्ते तस्मात् स्वाभीष्टं वरं प्राप्य हृष्यन् स्वगृहमागच्छन्नपुत्रकेण यवनेश्वरेण पुत्रार्थं स वृतस्तद्भार्य्यायाम् कालयवनं पुत्रं जनयामास स च कालयवनः महाबलोन्मत्तः पृथिव्यामिदानीं के बलिनो नृपा इति नारदं पप्रच्छ सच यदून् प्राह एवं नारदप्रेषितो मथुरायां दृष्टो बभूव ॥४४-४५॥ कृष्णो यादवस्नेहाविष्टत्वादचिन्तयत् उभयतो यवनात् जरासन्धाच्च ॥४६-४७॥

### गूढार्थदीपिनी

तदन्तरातन्मध्येः प्रतिद्वन्द्वः प्रतियोद्धा। सम्मितान् तुल्यान् ॥ ४५ ॥ वृजिनं दुःखम्। अहो खेदे ॥ ४७ ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

अगामिनि भाव्ये तदन्तरा तन्मध्ये अष्टादशमसङ्ग्रामात्पूर्वमेव यवनः प्रत्यदृश्यत नारदप्रेषित इति। एवं हरिवंशे कथा–

"वृष्णीनामन्धकानाञ्च गुरुर्गार्ग्यो महातपाः। ब्रह्मचारी पुरा भूत्वा न स्म दारान् स विन्दति ॥
तथा हि वर्तमानं तमूर्ध्वरेतसमव्ययम्। श्यालोऽभिशप्तवान् गार्ग्यमपुमानिति राजनि ॥
सोऽभिशप्तस्तदा राजन्! नगरे त्वजितं जये। लिप्सुः पुत्रं ततो गत्वा तपस्तेपे सुदारुणम् ॥
ततो द्वादश वर्षाणि अयश्चूर्णमभक्षयत्। आराधयन् महादेवमचिन्त्यं शूलपाणिनम् ॥
रुद्रस्तस्मै वरं दत्वा समर्थं युधि निग्रहे। वृष्णीनामन्धकानां च सर्वतेजोमयं सुतम् ॥
ततः शुश्राव तं राजा यवनाधिपतिर्वरम्। पुत्रप्रसवजं देवादपुत्रः पुत्रकामुकः ॥
स नृपस्तमुपामन्त्र्य सान्त्वयित्वा द्विजर्षभम्। तं योषमध्ये यवनो गोपस्त्रीषु समासृजत् ॥
गोपालीत्वप्सरा तत्र गोपस्त्रीवेषधारिणी। धारयामास गार्ग्यस्य गर्भं दुर्द्धरमच्युतम् ॥
मानुष्यां राजभार्यायां नियोगाच्छूलपाणिनः। स कालयवनो नाम जज्ञे शूरो महाबलः ॥
अपुत्रस्याथ राज्ञस्तु ववृधेऽन्तःपुरे शिशुः। तस्मिन्नुपरते राजन्! स कालयवनो नृपः ॥
युद्धाभिकामो नृपतिः पर्यपृच्छद्द्विजोत्तमान्। वृष्ण्यन्धककुलं तस्य नारदेन निवेदितम् ॥
विज्ञाय वरदानं तं नारदान्मधुसूदनः। उपप्रेक्षिततेजस्वी वर्द्धन्तं यवनेषु तम् ॥
स वृद्धो हि यदा राजा यवनानां महाबलः। तत एनं नृपा म्लेच्छाः संश्रित्याऽनुययुस्तदा ॥
शकास्तुषारा दरदाः पारदास्तङ्गणाः खशाः। पल्हवाः शतशश्चान्ये म्लेच्छा हैमवतास्तथा ॥
स तैः परिवृतो राजा दस्युभिः शलभैरिव। नानावेषधरैर्भीमैर्मथुरामभ्यवर्तत" ॥ इति ॥ ४४ ॥

आत्मसम्मितान् आत्मतुल्यान् ॥ ४५ ॥ वृजिनं दुःखम् ॥ ४६-४७ ॥

### श्रीसत्यधर्मकृता श्रीभागवतटिप्पणी

लोकद्वयजिगीषवः। साम्राज्यं वा स्वाराज्यं वेति लोबद्ध जिगीषवो जेतुमिच्छवो न लोकेति षष्ठीनिषेधात् ॥ ४४ ॥ यादवेषु श्रेष्ठो यादवशार्दूलः ॥ ४५ ॥ तौ माधवौ मधुकुलोत्पन्नाविति यानध्वजां रथकेतवोऽभ्रे रेणुभिश्च वायुः सूर्यानलौ विवस्वद्विभावम्। आवृणोत् ॥ ४६ ॥ हरिरामयोः सपर्णतालध्वजचिह्नितौ सुपर्णश्च तासश्च तौ ध्वजौ च केतू ताभ्यां चिह्नितौ रथौ मृधे विलक्षयन्त्यः पुराट्टालकहर्म्यगोपुरं समाश्रिताः स्त्रियः शुचार्पिताः सन्मुहुः ॥ ४७ ॥

### श्रीमद्वल्लभाचार्य्यकृता सुबोधिनी

ब्रह्माण्डे हि प्रजापतिरध्यक्षः, स कालात्मा यज्ञात्मा च, स सप्तदशो भवति, स पराजित एव। अतः परं प्रमाणरूपाः ब्राह्मणा अवशिष्यन्ते। शिवश्च वेदरूपः। उभयबलमाश्रित्य अष्टादशे पर्याये समागमिष्यतीत्याह अष्टादशम इति। एवं पुराणान्तरे कथा। बहुधा सर्वैः सम्प्रार्थितोऽपि सप्तदशे पर्याये पराजितः तपस्तप्तुं गतः। तत्र समाराधितः शिवः। पश्चात् प्रसन्नेन शिवेन ब्राह्मणसमाराधनार्थं निरूपितः। ब्रह्मण्यः कृष्णो ब्राह्मणवाक्यमन्यथा करिष्यतीति। ततः स्वनगरीं समागत्य ब्राह्मणानाहूय सिंहासने उपवेशितवान्। ततः प्रीतैर्ब्राह्मणैः पुनस्तस्मै सिंहासनं दत्वा वरोऽपि दत्तः, 'शत्रुं जेष्यसी'ति। 'अजेयश्च त्रैलोक्यस्य भविष्यसी'ति। एतत् ज्ञात्वा नारदः मध्ये कालयवनं च प्रेषितवान्। सोऽपि सर्वयादवनिराकरणार्थं प्रतिज्ञां चक्रे। स चेत्पश्चादागच्छेत्, द्वारकां गच्छेदिति। तस्य तत्र निराकरणं मर्यादापालकेनाशक्यमिति उभयमेकहेलया निर्वहत्विति मध्ये देवगुह्यकर्ता

नारदो यवनं प्रेषितवान्। स हि वृद्धगर्गस्य पुत्रः। महायवनो ह्यग्रज आसीत्। तेन पुत्रार्थं प्रार्थितो वृद्धगर्गः तद्भार्यायां पुत्रमधात्। 'अजेयश्च तव पुत्रो भविष्यती'त्याह। ततः कालान्तरे यदुसभायां स एव वृद्धगर्गो यदुभिरुपहसितः स्वपुत्रं प्रार्थितवान् 'यादवा मारणीया' इति। एवं वैरे सिद्धे नारदेन तेषु प्रविष्ट एव सन्धिकालोऽयम्, शीघ्रं गम्यतामिति तं प्रेषितवान्। तदाह। आगामिनि अष्टादशमे सङ्ग्रामे तदन्तरा नारदेन प्रेषितो यवनः वीरत्वाद्युद्धरसाभिनिविष्टः प्रत्यदृश्यत प्रतिकूलतया समागतो दृष्टः। तस्य प्रतिकूलतामाह रुरोधेति। स्वयं समागत्य म्लेच्छकोटिभिः मथुरां रुरोध। तत्र कारणमाह त्रैलोक्ये अप्रतिद्वन्द्वः। चकारादनुभावेनापि। वृष्णींश्च आत्मसम्मितान् तुल्यान् श्रुत्वा नारदात् तदसहमानो रुरोधेति सम्बन्धः॥ ४४-४५॥ तदा भगवान् तत्स्थानपरित्यागार्थं निरोधं चिन्तयामासेत्याह तं दृष्ट्वेति। इदं तु प्रकटचिन्तनम्। अतो गूढाभिप्रायेणैव चिन्तयति। अभिप्रायस्तु स्थानात् परित्याजनीयाः ये निरोद्धव्याः। यथा वृहद्वनात् निष्कासिताः, तथा मथुरातोऽपि निष्कासनीयाः। यदि देशान्तरं न गच्छेयुः, तदा निरुद्धा एव न भवेयुः, लोके तथा दर्शनात्। अतो भगवानेतानन्यत्र नेतुं विचारयति। तत्संमतिरेकेण नयने मन्त्रभेदः स्यादिति मर्मज्ञेन बलभद्रेण सह मन्त्रयामास। यतोऽयं कृष्णः, निरोधार्थमेव प्रवृत्तः। अन्यथा सदानन्दः तेषां न भवेत्, वहिश्चित्तत्वादिति। सङ्कर्षण एव सहायो यस्येति। अतस्तेन सह चिन्तनम्। अहो इत्याश्चर्ये। कथमयमकस्मादागत इति, कथं वा सन्धिकालं ज्ञातवानिति। यदूनां वृजिनं दुःखमुभयतोऽपि प्राप्तमिति प्रतिज्ञा। तां निरूपयति। महान् यवनोऽयमद्य निरुन्ध इति। अस्मानिति तैः सहाभेदः कार्यार्थं निरूपितः। स्वरूपतोऽपि महान् महावलश्च। अद्य महावल इति उभयोर्ब्राह्मणवाक्यं वलमिति सूचितम्। यावज्जरासन्धो नायाति, तावदनेनैव निरुद्धा इति। तर्हि जरासन्धस्थाने अयमेव जातः, को विशेष इति चेत्, तत्राह मागध इति। मागधोऽप्यद्यैवायास्यति। तर्हि तद्बुद्धिः प्रेरणीया, यथाद्य नायास्यतीति चेत्, तत्राह श्वो वा समागमिष्यतीति। तर्ह्यन्तर्यामी वक्तव्यः, श्वोऽपि नानेतव्यः, तत्राह परश्च इति। तर्हि कालो वक्तव्य इत्याशङ्क्य त्र्यधिकपर्याये कोऽपि वक्तुं न युक्त इति वाशब्दं प्रयुक्तवान्। किमद्य श्वो वचनेन आगमिष्यतीत्यत्र तु न सन्देहः। अत उपाय एव कर्तव्य इत्यर्थः॥ ४७॥

## श्रीसुबोधिनी-सारः

आगामिनि भाविनि अष्टादशमे धृतिसंख्याके संग्रामे तदन्तरा तन्मध्ये नारदेन प्रेषितो वीरो यवनः प्रत्यदृश्यत कालयवनः प्राप्तः॥ ४४॥ एत्य प्राप्य तिसृभिर्म्लेच्छानां कोटिभिर्मथुरां रुरोध। कीदृशोऽसौ तत्राह। नृलोके मर्त्यलोके न प्रतिद्वन्द्वो यस्य स एकवीरः आत्मना स्वेन समितांस्तुल्यान् वृष्णीन् यादवान् श्रुत्वा॥ ४५॥ संकर्षः सहायोस्यास्तीति कृष्णः तं कालयवनं दृष्ट्वाऽचिन्तयद्दध्यौ यदूनामुभयतो यवनाज्जरासंधाच्चाहो महद्दुःखं प्राप्तमिति॥ ४६॥ तावत् प्रथमं महाबलोऽयं यवनोऽद्य इदानीमस्मान्निरुन्धे आवेष्टयति। अद्य वा श्वो वाऽऽगामिदिने वा परश्वो वाऽऽगामिदिने वा मागधोप्यायास्यति॥ ४७॥

## गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

अष्टादशमे सङ्ग्रामे आगामिनि सति तदन्तरा तन्मध्ये अष्टादशमसङ्ख्यामात्पूर्वमेव नारदेन प्रेषितः कालयवनाख्यो वीरः प्रत्यदृश्यत मथुरां प्राप्तस्तत्रत्यैर्जनैर्दृष्टो बभूवेत्यर्थः॥ ४४॥ तदागमने कारणं वदंस्तेनागत्य यत् कृतं तदाह—रुरोधेति। नृलोके न विद्यते प्रतिद्वन्द्वस्तुल्यबलो यस्य तथाभूतो कालयवनाख्यो स्वतुल्यबलं योद्धारं नारदं पृष्टवान्, तन्मुखाच्चात्यसम्मितान् स्वतुल्यबलान् वृष्णीन् श्रुत्वा तैः सह युद्धार्थं तिसृभिर्म्लेच्छकोटिभिः सह मथुरामागत्य सर्वतो निरुद्धवान्॥ ४५॥ तं कालयवनं दृष्ट्वा सङ्कर्षणसहायवान् बलरामेण सह श्रीकृष्णोऽचिन्तयत्। चिन्तामेवाह—अहो इति सार्धद्वयेन। अहो आश्चर्यं यदूनामुभयतः कालयवनाज्जरासन्धाच्च महद्वृजिनं महद्दुःखं प्राप्तम्॥ ४६॥ उक्तमेव स्पष्टयति—महत् बलं यस्य स अयं यवनोऽद्य तावदस्मान्निरुन्धे निरुणद्धि। अद्यास्मिन्नहनि वा, श्वः परस्मिन्नहनि वा, परश्वस्तदनन्तरेऽहनि वा, मागधोऽप्यागमिष्यति॥ ४७॥

## अन्वितार्थप्रकाशिका

अष्टादशम इति। मडार्थः। अष्टादशे संग्रामे आगामिनि सति तदन्तरा तन्मये अष्टादशसंग्रामात्पूर्वमेव नारदेन प्रेषितो यवनः कालयवनाख्यो वीरः प्रत्यदृश्यत मथुरां प्राप्तस्तत्रत्यैर्जनैर्दृष्टो बभूव। एवं हि विष्णुपुराणे कथा। कदाचित् गार्ग्यस्तस्य श्यालेन षण्ढ इत्युपहसितस्तदा यादवा अपि गार्ग्यमुपजहसुः। ततः गार्ग्यः क्रुद्धः श्रीमहेशं प्रसाद्य यदुभीषणं पुत्रं वरं लब्धवान्। ततश्च यवनेन्द्रेण अपुत्रेण स्वक्षेत्रे पुत्रोत्पादनाय प्रार्थितः स गार्ग्यः कालयवनमजीजनत्। स च कालयवनो बलोन्मत्तः पृथिव्यां के बलिनो नृपा इति नारदं पप्रच्छ। नारदश्च यदून् प्राह। एवं नारदप्रेषितो यवनो मथुरायां दृष्टः॥ ४४॥ रुरोधेति। नृलोके न विद्यते प्रतिद्वन्द्वस्तुल्यबलो यस्य तथाभूतः कालयवनः स्वतुल्यबलं योद्धारं नारदं पृष्टवांस्तन्मुखाच्च वृष्णीन् आत्मसम्मितान् स्वतुल्यबलान् श्रुत्वा तैः सह युद्धार्थं तिसृभिर्म्लेच्छकोटिभिः सह मथुरामेत्यागत्य सर्वतो निरुद्धवान्॥ ४५॥ तमिति। तं कालयवनं दृष्ट्वा संकर्षणेन सहायः सहागमनं तद्वान् रामेण सहितः श्रीकृष्णोऽचिन्तयत्। अहो आश्चर्यं यदूनामुभयतः काल-

यवनाज्जरासन्धाच्च महद्वृजिनं दुःखं प्राप्तम् ॥ ४६ ॥ यवन इति । महाबलोऽयं यवनोऽद्य तावदस्मान्निरुन्धे निरुणद्धि अद्यास्मिन्नहनि वा श्वः परस्मिन्नहनि वा परश्वस्तदनन्तरेऽहनि वा मागधोऽप्यागमिष्यति ॥ ४७ ॥

### श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्

अष्टादशे संग्रामे । आगामिनि भाविनि सति तदन्तरातन्मध्ये यवनः । प्रत्यदृश्यतमाथुराणां दृष्टिविषयोऽभूत् ॥ ४४ ॥ अप्रतिद्वन्द्वः नास्ति प्रतिद्वन्द्वस्तुल्यभटो यस्य सः । आत्मसंमितान् स्वतुल्यान् वृष्णीन् श्रुत्वा यदून्मत्वेत्यपिपाटः ॥ ४५ ॥ संकर्षणः सहायोऽनुकूलोऽस्ति अस्येति संकर्षणसहायवान् । उभयतः । कालयवनान्मागधाच्च वृजिनं कष्टम् ॥४६॥ तदेवाह द्वाभ्यां तावत्प्रथमं अद्यनिरुन्धे ॥ ४७ ॥

### भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

रुरोधेति । नृलोके सनुष्यलोके, न विद्यते प्रतिद्वन्द्वस्तुल्यबलो यस्य तथाभूतः कालयवनः, वृष्णीन् यादवान्, आत्मसंमितान् आत्मतुल्यबलान्, श्रुत्वा, नारदमुखादिति शेषः । तिसृभिः म्लेच्छकोटिभिः सह, एत्यागम्य च, मथुरां रुरोध सर्वतो निरुद्धवान् ॥ ४४ ॥ तमिति । तं कालयवनं, दृष्ट्वा संकर्षणसहायवान् बलभद्रेण सहितः, कृष्णः, अहो यदूनां उभयतः यवनाज्जरासंधाच्च, महदतिशयितं, वृजिनं दुःखं, प्राप्तं हि । इति, अचिन्तयत् ॥ ४५ ॥ एतदेवाह । यवन इति । महदतिशयितं बलं सैन्यं यस्य सः, अयं यवनः, अद्याधुना, अस्मान् तावत् प्रथमतः, निरुन्धे निरुणद्धि । मागधो जरासन्धोऽपि, अद्यास्मिन्नहनि, वा श्वः आगामिनि दिवसे, वा परश्वः, वा आगमिष्यति ॥ ४६ ॥ आवयोरिति । अस्येति तृतीयार्थे षष्ठी । अस्य अनेन, आवयोः युध्यतोः सतोः, जरासुतः जरासंधः, अन्तरेति शेषः । यदि, आगन्ता आगमिष्यति, तर्हि बन्धून् अस्माकमिति शेषः । वधिष्यति । अथवा बली प्रशस्तबलं ऽयं जरासुतः, स्वपुरं प्रति, नेष्यते । स्वनगरं प्रापयिष्यतीत्यर्थः ॥ ४७ ॥

### कृष्णप्रिया

जब अठारवां युद्ध होने जा रहा था तब महर्षि नारद जी से प्रेरित वीर कालयवन मथुरा जी समीप दिखायी पड़ा ॥ ४४ ॥ वह काल भूतल पर संग्राम में अद्वितीय माना जाता था । जब यवन ने यह बात सुनी की यदुवीर कालयवन के साथ समराङ्गण में समतुल है तब तीन करोड़ म्लेच्छों की सेना लेकर यवन ने मथुरा नगर को घेर लिया ॥ ४५ ॥ कालयवन, की यकायक जब मथुरा पर चढ़ाई देखकर भगवान् श्रीकृष्ण जी ने दाऊजी भैया के साथ परामर्श किया कि—आश्चर्य है कि अब यदुवीरों पर एवं मथुरा नगर पर जरासन्ध एवं काल ववन–ये दो दो विपत्तियाँ एक ही साथ मंडरा रही है ॥ ४६ ॥ बलिष्ठ काल यवन ने तो आज हमें चढाई कर घेर लिया है और जरासन्ध भी समीप आ पहुँचा है और आज कल या तो परसों में आ ही जायेगा ॥ ४७ ॥

**आवयोर्युध्यतोरस्य यद्यागन्ता[1] जरासुतः । बन्धून्[2] हनिष्यत्यथवानेष्यते स्वपुरं बली ॥ ४८ ॥**
**तस्मादद्य विधास्यामो दुर्गं द्विपददुर्गमम् । तत्र ज्ञातीन् समाधाय यवनं [3]घातयामहे ॥ ४९ ॥**
**इति सम्मन्त्र्य [4]दाशार्हो दुर्गं द्वादशयोजनम् । अन्तःसमुद्रे नगरं [5]कृष्णोऽद्भुतमचीकरत्[6] ॥ ५० ॥**
**दृश्यते यत्र हि त्वाष्ट्रं विज्ञानशिल्पनैपुणम् । रथ्याचत्वरवीथीभिर्यथावास्तु विनिर्मितम् ॥ ५१ ॥**
**सुरद्रुमलतोद्यानविचित्रोपवनान्वितम् । हेमशृङ्गैर्दिविस्पृग्भिः स्फाटिकाट्टालगोपुरैः ॥ ५२ ॥**
**राजतारकुटैः[7] कोष्ठैर्हेमकुम्भैरलंकृतैः । रत्नकूटैर्गृहैर्हेमैर्महामरकतस्थलैः ॥ ५३ ॥**
**वास्तोष्पतीनां च गृहैर्वलभीभिश्च निर्मितम् । चातुर्वर्ण्यजनाकीर्णं [8]यदुदेवगृहोल्लसत् ॥ ५४ ॥**

### कर्दमक्षमा

**अन्वयः**—अस्य, आवयोः, युध्यतोः, यदि, जरासुतः, आगन्ता, बली, बन्धून्, हनिष्यति, अथवा, स्वपुरम्, नेष्यते ॥४८॥ तस्मात्, अद्य, द्विपददुर्गमम्, दुर्गम्, विधास्यामः, तत्र, ज्ञातीन्, समाधाय, यवनम्, यातयामहे ॥ ४९ ॥ इति, दाशार्हः, कृष्णः, सम्मन्त्र्य, अन्तः समुद्रे, द्वादश योजनम्, अद्भुतम्, दुर्गम्, नगरम्, अचीकरत् ॥ ५० ॥ यत्र, हि, रथ्याचत्वरवीथीभिः, यथावास्तु

---

१. गच्छेज्ज–विज. । २. न्हनि–वीर., वधि–श्रीधर. वंशी. जीव. । ३. मारया–वीर. । ४. भगवान्–श्रीधर. वंशी. जीव. विज. विश्व. । ५. कृत्स्ना–श्रीधर. वंशी. जीव. वीर. विश्व.: कृष्णोऽ–विज. । ६. क्लृपत्–विज. । ७. कूटकोटैः–श्रीटि.; कुटै ज्युष्टं–इति कस्यचित् । ८. यदूनां च गृहे–विज. ।

निर्मितम्, त्वाष्ट्रम्, विज्ञानशिल्पनैपुण्यम्, हि,दृश्यते ॥ ५१ ॥ दिविस्पृग्भिः, हेमशृङ्गैः, अन्वितम्, स्फाटिकाट्टालगोपुरैः, अन्वितम्, सुरद्रुमलतोद्यानविचित्रोपवनान्विनम्, ( नगरं रचयामास ) आसीत् ॥ ५२ ॥ राजतारकुटैः, कोष्टैः, हेमकुम्भैः, अलङ्कृतैः, रत्नकूटैः, गृहैः, महामरकतस्थलैः, निर्मितमासीत् ॥ ५३ ॥ वास्तोष्पतीनाम्, गृहैः, च, वलभीभिः, निर्मितम्, च, चातुर्वर्ण्य जलाकीर्णम् यदुदेवगृहोल्लसत्, नगरम्, आसीत् ॥ ५४ ॥

**श्रीधरस्वामिविरचिता भावार्थदीपिका**

अस्य अनेन ॥ ४८–४९ ॥ समुद्रमध्ये दुर्गं तन्मध्ये नगरम् । कृत्स्नाद्भुतं सर्वाश्चर्यमयम् । अचीकरत्कारयामास ॥५०॥ त्वष्टा विश्वकर्मा तदीयं शिल्पनैपुणं च क्रियाकौशलम् । तदाह सार्द्धैस्त्रिभिः । रथ्येति । रथ्या राजमार्गाः पुरतः वीथ्य उपमार्गाः पश्चिमतः उभयतोऽपि चत्वराण्यंगणानि तन्मध्ये कोष्ठास्ततोऽप्यन्तः सुवर्णभवनानि तदुपरि स्फाटिकाट्टालिकास्तदुपरि हेमकुम्भा इति बहुभूमिकम् । यथावास्तु वास्तु गृहादिनिर्माणस्थानं तदनतिक्रम्य विनिर्मितम् ॥ ५१ ॥ सुराणां द्रुमा लताश्च येषु तान्युद्यानानि विचित्रोपवनानि च तैरन्वितम् । हेममयानि शृंगाणि येषु तैः । दिविस्पृग्भिरत्युच्चैः स्फाटिका अट्टाला उपरिभूमिका गोपुराणि द्वाराणि च तैर्निर्मितमित्युत्तरेणान्वयः ॥ ५२ ॥ रजतारकुटैः रजतं च आरकुटं च पीतलोहं ताभ्यां निर्मितैः कोष्ठैरश्वशालान्नशालादिभिः । कथंभूतैः । हेमकुम्भैरलंकृतैः तथा रत्नकूटैः पद्मरागादिशिखरैः । हैमैः सौवर्णैः । महामरकतमयानि स्थलानि येषु तैर्गृहैश्च ॥ ५३ ॥ किं च नगरगृहादौ वास्तोष्पतीनां देवानां च गृहैर्वलभीभिश्चन्द्रशालिकाभिश्च निर्मितम् । यदुदेवगृहैराजगृहैरुल्लसच्छोभमानम् ॥ ५४ ॥

**श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः**

"छन्दसि बहुलम्" इति तृतीयार्थे षष्ठी । तदेवाह—अनेनेति । आवयोः सगणयोरिति शेषः । बन्धून् अयोद्धृंस्तत्रत्यवृद्धबालादीनिति भावः । व्रजस्थगोपांश्च तेषामवध्यत्वमनुसंधाय नेष्यत इति ॥ ४८ ॥ यतो जरासन्ध आयास्यति तस्माद्धेतोः । दुर्गमं मनुष्यागम्यम् । तत्र दुर्गे । समाधाय स्थापयित्वा । अद्यैव विधास्यामः, बहुत्वं श्रीरामस्य महत्त्वापेक्षम् । सम्यक् स्थिरतयाधाय स्थापयित्वा । घातयामह इति अन्यकर्त्रपेक्षया, रुद्रवचनपालनार्थम् । अत्र हरिवंशे त्वियमपि भगवतो हेतूक्तिः—"इयं च माथुरी भूमिरत्यगम्या परस्य तु । वृद्धिश्चैव पराऽस्माकं बलतो मित्रतस्तथा । कुमारकोट्यो याश्चेमाः पदातीनां गणाश्च ये । एषामपीह वसतां संमर्दमुपलक्षये ॥" इत्यादि । अत्रेदं विमृशामः—यादवावासान्तःपुरयोग्यसमुद्रान्तःस्थद्वादशयोजनात्मकपरागम्यद्वारकातो मथुराभूमेर्विस्तीर्णत्वान्नायं केवलयादवानधिकृत्य श्रीभगवतः परामर्शः, किन्तु निगूढोऽयमभिप्रायः—संप्रति यादवजातिकतया तदादिसाहाय्येन लीलान्तरमारब्धाः स्मः । अतः श्रीगोपानां स्वस्मिन्नेव निश्चितमज्जातिभावानां नित्यमेव वर्द्धमानैर्यांदवैर्भाविनी संकीर्णता न युक्ता । दुष्टोपद्रवाऽऽशंका च तेषामप्युपस्थिता स्यात् । श्रीमदुद्धवद्वारा मदीयतत्रत्यलीलास्फोरणेन विरहदुःखसमाधानप्रायं च कृतवानस्मि तेषाम् । अतो दुष्टान्प्रति तेष्वौदासीन्यव्यंजनाय यादवानां गोपालकैरनैक्यप्रदर्शनाय च मर्त्यानुविधस्य मम विदूरगमनमेव युक्तमिति ॥ ४९ ॥ इतीत्थम् । समुद्रस्यान्तर्द्वादशयोजनं, बहिश्चाष्टादशयोजनमन्यत्र ज्ञेयम् । एवं त्रिंशद्योजनं श्रीद्वारकापुरख्यातम् । योजनश्चोक्तम्—"अष्टभिर्यवमध्यैस्स्यादंगुलं द्वादशांगुलम् । तालं त्रितालको हस्तो हस्तौ द्वौ किष्कुरुच्यते । किष्कुद्वयं धनुर्ज्ञेयं धनुषो हि सहस्रकम् । क्रोशः क्रोशौ तु गव्यूतिर्गव्यूती द्वे तु योजनम् ।" इति । अचीकरत् विश्वकर्मणा कारितवान् आविर्भावयामास ॥ ५० ॥ यत्र नगरे । त्वष्टरि विश्वकर्मणि स्थितं त्वाष्ट्रम् । शिल्पनैपुणं शिल्पविद्यापटुत्वम् । रथ्या राजमार्गः, चत्वरमंगणम् 'चत्वरं स्थण्डिलेऽङ्गणे' इति मेदिनी । वीथी "आपणः पण्यवीथी च द्वयं वीथीति शब्दितम्" इति शाश्वतः । आपणो हट्टशून्यविक्रयमार्गः, पण्यवीथी हट्टयुतविक्रयमार्ग इति भेदः । स्वामिचरणास्तु–पुरतः पूर्वभागे राजमार्गाः, पश्चिमतः पश्चाद्भागे उपमार्गाः, उभयतोऽपि पार्श्वद्वयेऽपि अंगणानि, तन्मध्येगणयोर्मध्ये, ततोप्यन्तः कोष्ठेषु मध्ये, सुवर्णरसलिप्तानि गृहाणि, तदुपरि स्वर्णगृहोपरि, तदुपरि स्फाटिकाट्टालिकोपरि स्वर्णकलशा इति बह्व्यो भूमिका रचनाविशेषा यत्र तत्तथेति । यथावास्त्विति वास्तुशास्त्रानुसारेण गृहरचनायुतम् । तथाहि—"द्वात्रिंशदष्टाधिकविंशतिश्च सिद्धा नखा भूमिपतेर्द्विजातेः । दशांशयुक्तान्यपि क्षत्रियस्य वैश्यस्य वस्वंगुल उज्झितानि । शूद्रस्य च स्वस्वचतुर्विभागयुक्तानि चेत्थं प्रभवन्ति भेदाः । कश्चिज्जनो भूपसमानधर्मो गृहं विदध्याद्विधिनाप्यनेन । अष्टाधिकं हस्तशतं शतं वा यन्नेत्रनन्दप्रमितं पृथुत्वे । वेदाष्टहस्तं रससप्तकं च दैर्घ्ये सपादानि भवन्ति भेदाः ।" इत्येवं गृहशुद्धिपूर्वं गृहाणि कुर्यात् । प्राच्यां दिशि स्नानगृहमाग्नेय्यां पचनालयम् । शयनं याम्यदिग्भागे नैर्ऋत्यां शस्त्रमन्दिरम् । प्रतीच्यां भोजनगृहं वायुभागेऽन्नसंग्रहम् । भाण्डारसदनं सौम्ये त्वैशान्यां देवढालयम् । पूर्वस्यां श्रीगृहं कुर्याद्वायव्यां पशुमन्दिरम् । इन्द्राग्न्योर्मथनं मध्ये याम्याग्न्योर्घृतमन्दिरम् । यमराक्षसयोर्मध्ये पुरीषत्यागमन्दिरम् । राक्षसांवुपयोर्मध्ये विद्याभ्यासस्य मन्दिरम् । तोयेशानिलयोर्मध्ये रौदनं मन्दिरं स्मृतम् । वायव्योत्तरयोर्मध्ये संभोगस्यैव मन्दिरम् । उत्तरैशानयोर्मध्ये त्वौषधागारमुच्यते । पुरन्दरेशयोर्मध्ये सर्ववस्तुसुसंग्रहम् । सदनं कारयेदेव क्रमादुक्तानि षोडश ।" इत्येवमुक्तप्रकारेण गृहादिरचनाढ्यमित्यर्थः । कृत्स्नाद्भुतत्वमेव दर्शयति–दृश्यत इति चतुष्केण । हि एव । विज्ञानं

शिल्पधीः, शिल्पाभिज्ञतेत्यर्थः। तन्नैपुण्यं हस्तक्रियासौष्ठवं दृश्यते पराकाष्ठापन्नतया विभाव्यते, इदानीं भगवत्प्रसादेन परमशक्तिलाभादिति भावः ॥ ५१ ॥ सुरद्रुमाः—सन्तानकल्पवृक्षहरिचन्दनमन्दारपारिजाताख्याः "सन्तानः कल्पवृक्षश्च पुंसि वा हरिचन्दनम्। पञ्चैते देवतरवो मन्दारः पारिजातकः।" इत्यमरः। यद्वा—आम्रजम्बूकदम्बादयो देवतरवः "आम्रो जम्बूः कदम्बश्च बोधिः पालाशबिल्वकौ। प्लक्षोदुम्बरमाधूकौ बहुपात्पिचुमन्दकौ। एते चान्ये च बहवो देववृक्षाः स्मृता बुधैः।" इति। तथा सुरलताः—स्वर्णवल्लीमुक्तावल्लीविद्रुमवल्यादयो विष्णुक्रान्तादयो वा। "मुक्तावल्ली स्वर्णवल्ली तथा कल्पलतादयः। देववल्ल्यो बुधैः प्रोक्ता विष्णुकांतादयस्तथा।' इति संहितोक्तेश्च। उद्यानोपवनयोः पुष्पफलप्रधानत्वेन भेदः। यदुदेवा यदुश्रेष्ठाः श्रीकृष्णबलदेववसुदेवोग्रसेनादयः। अत्रेवं वासस्थानं ज्ञेयम्—परितस्तावत्समुद्रः, पुरतः संक्रमार्थमालिः, समुद्राभ्यन्तरे तीरे सुखविहारार्थं परितश्चत्वराणि, तदन्तर्दुर्गप्राचीरालिः, तत्कोणेषु तन्मध्येषु च रत्नकूटा यदुपरि हेमकूटाः, तदुपरि हेमकुन्ताः पताकाश्च ज्ञेयाः। दुर्गचतुर्दिक्षु गोपुराद्बहिरवलोकाय तदुपरि स्वच्छस्फाटिकाट्टालिकाः, दुर्गान्तःपुरश्चत्वराणि, तदन्तरुद्यानोपवनानि, तदुपलक्षितकूपादीनि च, तदन्तर्वास्तोष्पतिगृहाः। तदन्तर्यथाभ्यन्तरमश्वान्नगृहादयः, कोष्ठाः, तदन्तः पुरोभागे ब्राह्मणगृहाः, पश्चाच्छूद्रगृहाः, वामे च वैश्याः, दक्षिणे क्षत्रियगृहाः, मध्ये सुधर्मामग्रे विधाय श्रीकृष्णबलदेववसुदेवोग्रसेनगृहाः, गृहाणां मरकतस्थली, उपरि वलभ्यो हेमकुन्तादयश्च यथाशोभं सुधर्मामारभ्य यथा वीथय उपमार्गाश्च तत इति। पारिजातप्रस्थापनं तु तत्त्याग एव। यद्वा—अग्रे स्वयं भगवदानीतपारिजातादस्य न्यूनत्वेन भेदः कल्प्यः, सुरद्रूमलतोद्यानेति वर्णितत्वात्। सुधर्मायास्त्वेकत्वेन नान्या गतिरितींद्रस्तथा नाकरोदिति ज्ञेयम्। हरेर्हरये, अन्यथा प्रसह्य स्वयमेव हरेदिति विभाव्यैवेति भावः। (इति सार्द्धत्रयाऽन्वयः) ॥ ५२ ॥ "कोष्ठः कुसूले चात्मीये मध्ये कुक्षौ गृहस्य च। संग्रहस्थापनस्थाने तृणागारादिकेऽपि च ॥" इति धरणिः ॥ ५३ ॥ न केवलं मनुष्यावासशोभित तदित्याह—किञ्चेति। "वास्तोष्पतिर्बलारातौ देवमात्रे धराधरे। मुख्ये गेहे" इति निरुक्तिः। "शुद्धान्ते वलभीचन्द्रशाले सौधोद्धर्ववेश्मनि" इति रभसः। यदुदेवः श्रीकृष्ण उग्रसेनो वा ॥ ५४ ॥

## श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी

आवयोः सगणयोरिति शेषः। बन्धून् अयोद्धृन् तत्रत्यवृद्धबालादीन् व्रजस्थगोपांश्च तेषामवध्यत्वमनुसन्धायाह—नेष्यत इति ॥ ४८ ॥ अद्यैव विधास्यामः बहुत्वं विनयेन श्रीरामाद्यपेक्षया सम्यक् स्थिरतया सुखम् आधाय स्थापयित्वा घातयामहे इत्यन्य कर्त्रपेक्षया रुद्धरपालनार्थम् अत्र श्रीहरिवंशेत्वियमपि भगवतो हेतूक्तिः—

"इयञ्च माधुरी भूमिरल्पागम्या परस्य तु। वृद्धिश्चैव पराऽस्माकं बलतो मित्रतस्तथा ॥
कुमारकोट्यो याश्चेमाः पदातीनां गणाश्च ये। एषामपीह वसतां सम्मर्द्दमुपलक्षये" ॥

इत्यादि अत्रेदं विमृशामः यादवावासान्तःपुरीयोग्यसमुद्रान्तस्थ द्वादशयोजनात्मकपरागम्यद्वारकातो मथुराभूमेर्विस्तीर्णत्वान्नायं केवलयादवानधिकृत्य श्रीभगवतः परामर्शः किन्त्वयं निगूढोऽभिप्रायः सम्प्रति यादवज्ञातिकतया तदादिसाहाय्येन भूभारहरणाय लीलान्तरमारब्धाः स्मः अतः श्रीगोपानां स्वस्मिन्नेव निश्चितमज्ज्ञातिभावानां नित्यमेव वर्द्धमानैर्यादवैर्भाविनी सङ्कीर्णता न युक्ता दुष्टोपद्रवाशङ्का च तेषामप्युपस्थिता श्रीमदुद्धवद्वारा मदीयतत्रत्यनित्यलीलास्फोरणेन विरहदुःखसमाधान प्रायश्च तेषां कृतवानस्मि ततो दुष्टान् प्रति तेषु निजौदासीन्यव्यञ्जनाय यादवानां गोपालकेन ये च मर्त्यानुविधस्य मम विदूरदुर्गगमनमेव युक्तमिति ॥ ४९ ॥ समुद्रस्यान्तर्द्वादशयोजनं बहिश्चाष्टादशयोजनमन्यत्र ज्ञेयम् एवं त्रिंशद्योजनं श्रीद्वारकापुरं ख्यातं योजनञ्चोक्तम् "अष्टभिर्यवमध्ये स्यादङ्गुलं द्वादशाङ्गुलम्। तालं त्रितालको हस्तो हस्तौ द्वौ किष्कुरुच्यते ॥ किष्कुद्वयं धनुः प्रोक्तं धनुषो द्विसहस्रकम्। क्रोशः क्रोशौ तु गव्यूतिः गव्यूती द्वे तु योजनम्" इति अचीकरद्विश्वकर्मणा कारितवान् कृत्स्नाद्भुतमिति कृत्स्नमपि वस्त्वद्भुतं यत्र ॥ ५० ॥ कृत्स्नाद्भुतत्वमेव दर्शयति—दृश्यत इति चतुष्केण। हि एव यत्रैव विज्ञानं शिल्पधीः शिल्पाभिज्ञातेत्यर्थः। शिल्पनैपुण्यं हस्तक्रियाकौशलञ्च दृश्यते परा काष्ठापन्नतया विभाव्यते तदानीं भगवत्प्रसादेन परमशक्तिलाभादिति भावः। अन्यत्तैः तत्र तन्मध्ये कोष्ठा इत्यादिकं वक्ष्यमाणश्लोकोक्तानां संस्थानं ज्ञेयम् उद्यानोपवनयोः पुष्पफलप्रधानत्वेन भेदः आरकुटैरिति ह्रस्वत्वमार्षं चातुर्वर्ण्यं चत्वारो वर्णाः यदुदेवा यादवश्रेष्ठाः श्रीकृष्णबलदेववसुदेवोग्रसेनाः अत्रेदं वासस्थानं ज्ञेयम् परितस्तावत्समुद्रः पुरतः सङ्क्रमार्थमालिः समुद्राभ्यान्तरे तीरे सुखविहारार्थं परितश्चत्वराणि तदन्तर्दुर्गप्राचीरालिः तत्कोणेषु तन्मध्येषु च यथाशोभं रत्नकूटाः तदुपरि हेमशृङ्गाः तदुपरि हेमकुम्भाः पताकाश्च ज्ञेयाः दुर्गचतुर्द्दिक्षु गोपुराणि बहिः अवलोकाय तदुपरि स्वच्छस्फटिकभित्तिमयाट्टालिकाः दुर्गान्तः पुरश्चत्वराणि तदन्तरुद्यानोपवनानि तदुपलक्षितानि वापीकूपादीनि च तदन्तर्वास्तोष्पतिगृहाः तदन्तर्यथाभ्यन्तरमश्वान्नगृहादयः कोष्ठाः तदन्तःपुरभागे ब्राह्मणगृहाः पश्चात् शूद्रगृहाः वामे वैश्यगृहाः दक्षिणे क्षत्रियगृहाः मध्ये सुधर्म्मामग्रे विधाय श्रीकृष्णबलदेववसुदेवोग्रसेनगृहाः गृहाणामधो मरकतस्थली: उपरि वलभ्यो हेमकुम्भादयश्च यथाशोभं सुधर्मामारभ्य रथ्या वीथयः तदुपमार्गाश्च तत इति ॥ ५१-५४ ॥

**श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी**

अद्यैव विधास्यामः, बहुत्वं विनयेन श्रीरामाद्यपेक्षया सम्यक् स्थिरतया सुखमाधाय स्थापयित्वा घातयामहे, श्रीरुद्रदत्त-वरपालनार्थमन्येन मारयिष्याम इत्यर्थः। अत्रेदं तत्त्वम्—श्रीमथुरेयं विंशतियोजनमण्डला, तत्रापि श्रीगोपेन्द्रमहाव्रजश्रीवृन्दावनादिमयी, वयञ्च धनपरिवारविभूतिभिर्महावृद्धिं नित्यं प्राप्नुमः। तथा च श्रीहरिवंशे श्रीभगवदुक्तौ ( विष्णु प० ५६।५–६ )—

'इयञ्च माथुरी भूमिरल्पागम्या परस्य तु। वृद्धिश्चैव परास्माकं बलतो मित्रतस्तथा॥
कुमारकोट्यो याश्चेमाः पदातीनां गणाश्च ये। एषामपीह वसतां सम्मर्दमुपलक्षये॥' इत्यादि।

अतो बहुयोजनं वसतीस्थानमपेक्ष्यते, अत्रैव निवासेन व्रजभूमिव्याप्तिः स्यादिति सुदूरैः ( हरिवंशे विष्णु प० ३८ अ० ) विकद्रूक्तप्रामाण्येन श्रीमथुरासम्बन्धवत्यामेव कुशस्थल्याँ वसतिः कार्य्येति श्रीभगवदिच्छा जाता, तदर्थमेव तत्तन्मन्त्रणादिकमिति अत एवोक्तं भगवान् सर्वविचारकुशल इति॥ समुद्रस्यान्तर्द्वादशयोजनं बहिश्चाष्टादश योजनमेवं त्रिंशद्योजनं श्रीद्वारकापुरं ख्यातम्। योजनञ्चोक्तम्—

'अष्टभिर्यवमध्यैः स्यादङ्गुलं द्वादशाङ्गुलम्। तालं त्रितालको हस्तो हस्तौ द्वौ किष्कुरुच्यते॥
किष्कुद्वयं धनुः प्रोक्तं धनुषो द्विसहस्रकम्। क्रोशः क्रोशौ तु गव्यूतिर्गव्यूती द्वे तु योजनम्॥ इति।

अचीकरत् विश्वकर्म्मणा कारितवान्॥४९॥ कृत्स्नादभुतत्वमेव दर्शयति—दृश्यत इति चतुर्भिः। हि एव यत्रैव विज्ञानं शिल्पे धीः शिल्पाभिज्ञातेत्यर्थः। शिल्पनैपुण्यं हस्तक्रियाकौशलञ्च, विशेषेण निर्मितमिति वि-शब्दार्थस्तैर्व्यञ्जित एव। उद्यानोपवनयोः पुष्पफलप्रधानत्वेन भेदः॥ ५१॥ आरकुटैरिति ह्रस्वत्वमार्षम्। महान्ति मरकतानि येषु तानि स्थलानि येषु तैर्गृहैः, चातुर्वर्ण्यं चत्वारो वर्णास्तैराकीर्णं व्याप्तम्, अतोऽन्त्यजानां बहिर्वासो ज्ञेयः। यदुदेवः श्रीभगवान्, तस्य यदुदेवत्वेन सर्वयदुवर्गः गेहेभ्यः परमोत्तमा गृहाः अत एव तैरुल्लसत्॥ ५२–५३॥ पारिजातं प्राहिणीदिति तैर्व्याख्यातमेव। यद्वा अग्रे स्वयं श्रीभगवता स्वर्गादानेतव्यात् पारिजातादस्य न्यूनत्वेन भेदः कल्प्यः। हरेः हरिं प्रति, अन्यथा बलात् स्वयमेव हरेदिति भावः॥ ५४॥

**श्रीसुदर्शनसूरिकृतशुकपक्षीयम्**

द्विपददुर्गमं मनुष्यदुष्प्रवेशम्॥ ४९–५०॥ त्वाष्ट्रं त्वष्टृ सम्बन्धि॥ ५१–५२॥ आरकुटैः पित्तलैः॥ ५३–५८॥

इति श्रीमद्भागवतव्याख्याने दशमस्कन्धे श्रीसुदर्शनसूरिकृतशुकपक्षीये पञ्चाशत्तमोऽध्यायः॥ ५०॥

**श्रीमद्वीरराघवाचार्यकृता भागवतचन्द्रचन्द्रिका**

आवयोर्यवनस्य च मम च मिथो युध्यतोः सतोर्जरासुतो यद्यागमिष्यति स तर्ह्यस्मत्बन्धून् यदून् हनिष्यत्यथवा तान् स्वपुरं प्रति नेष्यति प्रापयिष्यति यतः स बली॥ ४८॥ अथ विचार्य्य निश्चितमाह—तस्मादिति। द्विपदैर्मनुष्यैर्दुःखेनापि गन्तुमशक्यं दुर्गं जलदुर्गं विधास्यामः करिष्यामः। तत्र दुर्गे ज्ञातीन् यदून् समाधाय निधाय यवनं मारयामहे घातयामहे॥ ४९॥ इत्थं सम्मन्त्र्य विचार्य निश्चित्य भगवान् समुद्रमध्ये दुर्गं तत्र नगरञ्चाचीकरत् कारयामास विश्वकर्मणेति शेषः। नगरं विशिनष्टि—द्वादशयोजनविस्तीर्णं कृत्स्नादद्भुतं सर्वाश्चर्यमयम्॥ ५०॥ यत्र नगरे त्वाष्ट्रं विश्वकर्मणः सम्बन्धि विज्ञानसूचकं क्रियाकौशलं दृश्यते, तदाह—सार्द्धैस्त्रिभिः रथ्येति। रथ्या राजमार्गाः पुरते वीथ्यः उपमार्गाः पुरतः पश्चिमत उभयतोऽपि चत्वराण्यङ्गणानि तन्मध्ये कोष्ठाः ततोऽप्यन्तः स्वर्णभवनानि तदुपरि स्फटिकाट्टालकास्तदुपरि हेमकुम्भा इति बहुभूमिकं यथावस्तु गृहादिनिर्माणस्थानं तदनतिक्रम्य निर्मितम्॥ ५१॥ सुराणां द्रुमाः लताश्च येषु तानि उद्यानानि विचित्राण्युपवनानि च तैरन्वितं हेममयानि शृङ्गाणि येषां तैर्दिवस्पृग्भिरत्युच्चैः स्फाटिकाट्टालका उपरि भूमिकाः गोपुराणि चत्वराणि तैः॥ ५२॥ राजतारकुटैः रजतञ्चारकुटञ्च पीतलोहं पित्तलमि यावत्, ताभ्यां निर्मितैः कोष्ठैरश्वशालान्नशालादिभिः, कथम्भूतैः हैमैः कुम्भैः स्वलङ्कृतैः तथा रत्नकूटैः पद्मरागादिशिखरैः सौवर्णैः महान्ति मरकतस्थलानि येषु तैर्गृहैश्च जुष्टं सेवितम्॥ ५३॥ किञ्च, नगरगृहादौ वास्तोष्पतीनां देवानां च गृहैः बलभीभिः चन्द्रशालिकाभिश्च निर्मितं यदुदेवगृहैरुल्लसच्छोभमानम्॥ ५४॥

**श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली**

अस्येति षष्ठी तृतीयार्थे अनेन सह चावयोर्युध्यतो॥ ४८॥ दुःखङ्गच्छत्यस्मिन्निति दुर्गं "सुदुरोरधिकरणे" इति गमेर्डः प्रत्ययः विशिनष्टि, द्विपदेति। द्वे पदे येषां ते तथा द्विपदः पदेति निपातो विवक्षितः मनुष्यैरगम्यमित्यर्थः॥ ४९–५०॥ त्वष्टुर्विश्वकर्मणो विद्यमानं त्वाष्ट्रं किं तद्विज्ञानमत्राह, शिल्पनैपुणमिति शिल्पविद्यापटुत्वं रथ्या राजमार्गः वीथीः वणिजां मार्गं यथावास्तु वास्तुलक्षणमनतिक्रम्य॥ ५१॥ दिविस्पृग्भिः "हृद्युभ्यामुपसङ्ख्यानम्" इत्यलुक्समासः॥ ५२॥ राजतैः रजतमयैरपुटैर्लोहविशेषैः क्लृप्तैः कोष्ठैरन्तर्गृहैः रत्नकूटैः रत्नशृङ्गैः॥ ५३॥ वास्तोष्पतीनां वास्तुदेवतानाम्॥ ५४॥

**श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः**

अचीकरत् अविर्भावयामास ॥ ३१–५० ॥ दृश्यते यत्रेति ब्रह्मज्ञानेन सर्वविज्ञानवत् "यद्धर्मसूनार्वत राजसूये" इत्यादिवच्चेति भावः ॥ ५१ ॥ अतएव नित्यस्थितस्यैव तस्याविर्भाव इति दर्शितः अत एव वक्ष्यते चातुर्वर्ण्यजनाकीर्णमिति ॥ ५२ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धीये श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे पञ्चाशत्तमोऽध्यायः ॥ ५० ॥

**श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी**

अस्त्य अनेन ॥ ४८–४९ ॥ समुद्रमध्ये द्वादशयोजनमिति । "अष्टभिर्यवमध्यैः स्यादङ्गुलं द्वादशाङ्गुलम् । ताले त्रितालको हस्तो हस्तो द्वौ किष्कुरुच्यते । किष्कुद्वयं धनुः प्रोक्तं धनुषो द्विसहस्रकम् । क्रोशः क्रोशो तु गव्यूतिर्गव्यूती द्वे तु योजनम् । इति तन्मध्ये नगरम् ॥ ५० ॥ त्वाष्ट्रं विज्ञानं विश्वकर्मणः पाण्डित्यं शिल्पे शिल्पकर्मणि नैपुण्यं यतस्तत्, नगरं विशिनष्टि—सार्द्धैस्त्रिभिः । रथ्याराजमार्गाः चत्वराण्यङ्गणानि वीथ्य उपमार्गाः वास्तुगृहादिनिर्माणस्थानं तमनतिक्रम्य निर्मितं राजतं च आरकुटं पीतं लोदं च ताभ्यां निर्मितैः रत्नकूटैः पद्मरागादिशिखरैः वास्तोष्पतीनां देवानां वलभीभिश्चन्द्रशालाभिः यदुदेवः श्रीकृष्णः तस्य गृहैरुत्कर्षेण लसत् ॥ ५१–५४ ॥

**गूढार्थदीपिनी**

अचीकरत् कारयामास । विश्वकर्मणेति शेषः ॥ ५० ॥ त्वष्टा विश्वकर्मा तस्य सम्बन्धि विज्ञानं ज्ञानसूचकं क्रियाकौशलम् । रथ्या राजमार्गाः । वास्तु ग्रहनिर्माणशास्त्रं तदनुसारेण ॥ ५१ ॥ सुरेति नगरविशेषणम् । गोपुरैः पुरद्वारेश्च निर्मितमित्युतरेणान्वयः ॥ ५२ ॥ रजतम् आरकुटं पित्तलं च ताभ्यां निर्मितैः कोष्ठैरन्नशालादिभिश्च निर्मितम् । कूटैः शिखरैः गृहैश्च निर्मितम् ॥ ५३ ॥ वास्तोष्पतीनां देवानां मन्दिरैः । यदुदेव उग्रसेनः श्रीकृष्णो वा तेषां गृहैः उल्लसदिति नगरविशेषम् ॥ ५४ ॥

**श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः**

अस्य अनेन ॥ ४८–४९ ॥ अन्तःसमुद्रे समुद्रमध्ये दुर्गं तन्मध्ये कृत्स्नाद्भुतं सर्वाश्चर्य्यमयं नगरं च अचीकरत् कारयामास ॥ ५० ॥ यत्र नगरे त्वष्टुर्विश्वकर्मणो विज्ञानं शिल्पनैपुण्यं क्रियाकौशलं च दृश्यते लक्ष्यते, पुरं वर्णयति—रथ्येत्यादिना, रथ्याः राजमार्गाः चत्वराण्यङ्गणानि वीथ्य उपमार्गा तैः वास्तुगृहादिनिर्माणस्थानं तमनतिक्रम्य निर्मितम् ॥ ५१ ॥ सुराणां द्रुमाः लताश्च येपु तान्युद्यानानि विचित्रोपवनानि च तैरन्वितं हेममयानि शृङ्गाणि दिविस्पृग्भिरत्युच्चैः स्फाटिकाः अट्टालाः उपरिभूमिकाः गोपुराणि च पुरद्वाराणि तैर्निर्मितमित्युत्तरेणान्वयः ॥ ५२ ॥ रजतं च आरकुटं पीतलोहं च ताभ्यां निर्मितैः कोष्ठैः अश्वशालान्नशालादिभिः तथा हेमकुम्भैरलङ्कृतैः रत्नकूटैः पद्मरागादिशिखरैः हैमैः सौवर्णैः महामरकतमयानि स्थलानि येषु तैर्गृहैश्च ॥ ५३ ॥ तथा नगरगृहादौ वास्तोष्पतीनां देवानां गृहैः वलभीभिश्चन्द्रशालिकाभिश्च निर्मितं यदुदेवगृहैरुल्लसत् ॥ ५४ ॥

**श्रीसत्यधर्मकृता श्रीभागवतटिप्पणी**

निषङ्गादिषुधेः शरान्नाराचात्तस्मिन्गृह्णन् । अय सन्दधच्छितबाणसञ्चयं विकृष्य मुञ्चत् मुक्तेन तेन रथान्कुञ्जरवाजियूथपान्निघ्नंश्च । अलातचक्रमुल्मुकमण्डलं यद्वत्तद्वन्निरन्तरं यथा तथा भगवानदृश्यत ॥ ४९ ॥ शशाङ्काकृतिपाञ्चजन्यं शशाङ्कस्याकृती रूपमिव रूपं यस्य स चासौ पाञ्चजन्यश्च तम् । आकृतिः कथिता रूप इति विश्वः । दैत्यकुलस्य गर्भनिर्भेदनेनापचारो नाशो येन तम् । योग्यतया रवावन्वयीदम् । दैत्यकुलापचारमहारवोपेतमिति निर्गलितोऽर्थः । मुखे तदद्वावरि निधायाशु यादवानाश्वासयत् । सबलान्कुर्वन्क्षत्रियकूटेन समूहेन घट्टितान्पुपूर पूरयामास । पपारेति वक्तव्ये पुपूरेत्यार्षः प्रयोगः ॥ ५० ॥ नृपा रिपुनृपाः कर्णनिष्ठुरं स्वश्रोत्रकठोरमाकर्ण्य क्रमेण निर्भिन्नं येषां ते तथा । बभूविरे बभूवुः । निर्भिन्नहृदयः कायानिति शेषः । बभूविरे प्रापुः । भू प्राप्तावात्मनेपदीति स्मरणादिति वा । यदुवीराश्च तदाकर्ण्येति समुच्चायकः । समुद्यतान्यायुधानि यैस्ते रणेऽनीकसयुताः सेनासमेताः नृपाञ्जघ्नुः ॥ ५१ ॥ शौरिणा कत्री शार्ङ्गरवेण करणेनाप्यायितः समेधिता यदुप्रवीरा यादवश्रेष्ठाः । यदस्ति तत उच्चत्वाद्यदुरित्सृग्भाष्योक्तेर्यदुर्हरिः स प्रवीरो येषां त इति वा । चतुर्द्वारगतान्महीपतीन्सर्वशः सर्वान्परिभूय पराभाव्य शरोघैः सहसैकवाहिन एकश्चासौ वाहश्च सोऽस्त्येषामित्येकवाहिन स्वरक्षकपृष्ठवाहीनांश्चक्रुः ॥ ५२ ॥ कृष्ण कृष्ण तिष्ठेति भर्त्सयन्नब्रवीत् ॥ ५३ ॥ मण्डलीकृतकोदण्डस्तैलधौतात् शितान्निशितान्सायकान् शरान्बहून्विमुञ्चंस्तंस्तं गोविन्दोऽभ्यधावत् । आसायकं मघवादत्तवज्रमित्यृग्भाष्ये सायङ्करं लयकृत इति टीकायां च सायक इत्यपि वज्रनाम । ततः पुनरुक्तिपरिहाराय निर्वक्ति । सायङ्करमिति । सायमिति षोन्तकर्मणीत्यस्य रूपम् । सायमन्तं करोतीत्युक्तेः ॥ ५४ ॥

**श्रीमद्वल्लभाचार्यकृता सुबोधिनी**

तर्हि उभावपि मारणीयाविति चेत्, तत्राह आवयोर्युध्यतोरिति। उभावजेयौ, अतः प्रधानपरिहारेण केवलबलहनने विलम्बो भवतीति यवनेन सह आवयोर्युध्यतोः सतोः, प्रक्रान्तस्य त्यागायोगात्, यदि मध्ये जरासन्धः चतुरः समागच्छेत्, तदा अस्मानन्यत्रासक्तान् विहाय बन्धून् वसुदेवादीन् हनिष्यति। स्वपुरं वा वद्ध्वा नेष्यति। पश्चान्मोचनार्थं बहु कर्तव्यं पतेत्। मारयितुमशल्य एवेत्याह बलीति। एवं सति यत्कर्तव्यं तदाह तस्मादिति। द्विपदाना मनुष्यमात्रस्य दुर्गमं दुर्गं विधास्याम इति। नन्वेतावदलौकिकं यः करोति, स तानेव कथमन्यथा न करोति, किमिति स्थानं त्याजयतीति चेत्? मैवम्। द्वारकादिनिर्माणे न काचिन्मर्यादा बाध्यते, अन्यत्र तु ब्राह्मणवाक्यानि बाध्यन्ते। एतदर्थमेव द्वारकानिर्माणमिति न तत्र ब्राह्मणवाक्यं प्रभविष्यति। सर्वत्रधिकप्रयत्नः साधारण्यं निराकरोतीति। अत एव पूर्वं बलीति पदम्, अत्र च द्विपदमिति। अतो ब्राह्मणा अपि द्विपदा एवेति तेषामपि स दुर्ग एव। पश्चान्निर्भये स्थाने ज्ञातीन् वसुदेवादीन् समाधाय यवनं घातयामहे, तदा विलम्बो न बाधक इति। अन्यथा भगवत्यन्यत्र गते मुचुकुन्दगुहायाम्, वसुदेवादयो भीताः खेदं प्राप्नुयुः॥ ४९॥ एवं निर्धारिते मन्त्रे यदासीत्, तदाह इति संमन्त्र्येति। वतो दाशार्हो भक्तरक्षकः। अनेन क्लिष्टकरणदोषोऽपि परिहृतः। ननु कालादिभिरनिर्मितं कथं निर्मास्यति, तथा सति कालादयो वा कथं न प्रतिबन्धं करिष्यन्तीत्याशङ्क्याह तद्दुर्गमेव करिष्यति। जलादिदुर्गाः प्रसिद्धाः। अतो नालौकिकं करिष्यति। किञ्च, कालहितमपि करिष्यतीत्याह द्वादशयोजनमिति। द्वादशात्मा हि कालः। प्रतिपक्षतया वा करिष्यति। अलौकिकत्वाच्चतुरस्रं तत्। सर्वापेक्षया विशेषं वक्तुं तत्रत्यं गुणत्रयमाह। अन्तःसमुद्र इति समुद्रमध्ये। न सा पृथिव्यां तिष्ठति, किन्तु भूमिवत् नगर्यप्यन्तरिक्षे समुद्रमध्ये जलोपरि तिष्ठति। अन्यथा नीचे स्थिता भवेत्। तत्र वैलक्षण्यं संभविष्यतीति तन्निराकरणार्थं नगरमिति। तत्रापि विशेषः अद्भुतमिति। कृष्ण इति। सदानन्दः। तेन कृतं स्थानं तत्प्रापकं भविष्यतीति ज्ञापितम्। अचीकरदिति। स्वयमेव चकार। विश्वकर्मणा कृतमित्येके, त्वाष्ट्रमिति पदात्। वस्तुतस्तु विश्वकर्मणो यावन्नैपुण्यम्, तावदत्र भगवतैव निर्मितमिति। स हि जले कर्तुं न शक्नुयात्। अन्यथा इति भगवति क्रमेण षड्गुणेष्वपि गतेषु सप्तमे दिवसे तं न प्लावयेत् समुद्रः, विश्वकर्मणो विद्यमानत्वात्। अस्तु वा विश्वकर्मणा कारितमिति। अचीकरद्विश्वकर्मणैति करणं वा यत्र नगरे त्वाष्ट्रं विज्ञानमनेकचातुर्ययुक्तं दृश्यते। शिल्पे नैपुण्यं यस्मात् विज्ञानादिति ज्ञानमायां हेतुरुक्तः। किञ्च, रथ्याचत्वरवीथीभिः सहितम्। यथावास्तु वास्तुशास्त्रसहितम्। विशेषेण निर्मितम्, चित्रादिरहितेऽपि सामान्यनिर्माणेऽपि वैशिष्ट्ययुक्तम्। दैविकं लौकिकं शास्त्रीयं च ज्ञानं तस्मिन् नगरनिर्माणे प्रतिष्ठितमिति वर्णनावधित्वं निरूपितम्। विशेषतो वर्णयति। सुरद्रुमाः पारिजातादयः। ते उद्यानेषु यत्र। उद्यानं पुष्पप्रधानम्। उपवनं फलप्रधानम्, तैरन्वितमिति सर्वत उभयेषां सम्बन्ध उक्तः। अन्तर्नगरवैशिष्ट्यमाह हेमशृङ्गैर्दिविस्पृग्भिरिति। एकविंशतिगृहोपरि सुवर्णशृङ्गाणि सुवर्णकलशस्य परितः स्थापितानि। अत एव दिवं स्पृशन्ति। तत्र निदानप्रस्तरामाह स्फाटिकेति। स्फाटिकैरेव निर्मिताः अट्टालाः गोपुराणि च। दुर्गत्वादन्नसङ्ग्रहार्थं रजतैरारकूटैश्च निर्मितानि कोष्ठानि रजतारकूटशब्दादण्। हेमकुम्भैश्च सर्वतः अलङ्कृतम्। घृतदध्याद्यर्थं राजतानि कोष्ठानि। अन्नार्थं तु पैत्तलनिर्मितानि। सर्वधातूपलक्षणपारकूटपदम्, आद्यन्तयोः रजतसुवर्णयोगपादानात्। उपरि शोभातिशयमुक्त्वा मध्ये शोभामाह रत्नकूटैर्गृहैर्हैमैरिति। सर्वत्र गृहाः रत्ननिर्मितपदकवत् सौवर्णाः। भूमिश्च मरकतशिलाभिः निर्मितेत्याह। महामारकतानि स्थलानि येष्विति॥ ५३॥ अनुप्रयुक्ता अपि धर्मसाधकाः कौतुकासाधकाश्च गृहाः सन्तीत्याह। वास्तोष्पतीनां वास्तुदेवताविपतीनामिन्द्रादीनाम्। वस्तून्यस्मिन्निति वासुदेवता भूमिः, तस्याः पतयः सर्वे लोकपालाः। चकारात् दुर्गादीनामपि। अनेन मध्ये भगवतः परित आशापालानां गृहा इत्युक्तं भवति। वलभीभिरिति सर्वत्र छजानिर्याणम्। अनेनाग्रे निर्माणक्रिया कापि नापेक्षितेति सूचितम्। किञ्च चातुर्वर्ण्यजनाकीर्णम्। चातुर्वर्ण्यैर्जनैः पूर्वमेवाकीर्णम्। तेन ते भगवत्कृता एव जना निरूपिताः। अन्यथा इतो गतानां वैद्यामिव पातो भवेत्। ते हीदानीमपि तिष्ठन्ति। अतस्तत्सन्निधानेन सर्वदा विद्यमानत्वसाम्यात् भगवद्गृहमाह यदूदेवगृहेण उल्लासदिति। मध्ये भगवद्गृहम्, चतुर्दिक्षु वर्णचतुष्टयानाम्। आकीर्णमिति। किमीरितत्वं निरूपितम्॥ ५४॥

**श्रीसुबोधिनी-सारः**

तस्माद्धेतोरद्य इदानीं द्विपदानां मनुष्याणां दुर्गमं दुर्गं वप्रं वयं करिष्यामः तत्र दुर्गे ज्ञातीन् समाधाय निरूप्य यवनं घातयामो मुचुकुन्देन॥ ४९॥ इत्येवं संमन्त्र्यान्तःसमुद्रे समुद्रमध्ये द्वादशयोजनमष्टचत्वारिंशत्क्रोशविस्तारायामं दुर्गं तन्मध्ये कृत्स्नं सर्वमद्भुतमाश्चर्यं यस्मिंस्तन्नगरं विश्वकर्मणा कारितवान् भगवान्॥ ५०॥ तद्यथा यत्र नगरे त्वष्टा विश्वकर्मा तदीयं त्वाष्ट्रं शिल्पनैपुणं क्रियाकौशलं विज्ञानं दृश्यते। यथावस्तु यथागृहं रथ्यादिभिर्विनिर्मितम्॥ ५१॥ सुराणां द्रुमा वृक्षा लताश्च येषु तानि उद्यानानि विचित्राण्युपवनानि तैरन्वितं युक्तं हेममयानि शृङ्गाणि येषु तैर्दिविस्पृग्भिरत्युच्चैः स्फाटिकाः स्फटिकमणिमया अट्टाला उपरितनभूमिका गोपुराणि पुरद्वाराणि तैर्निर्मितम्॥ ५२॥ रजतं प्रसिद्धम् आरकूटं पीतलोहं ताभ्यां निर्मितैः कोष्ठैरश्वशालान्नशालादिभिः स्वर्णकलशैरलंकृतैः तथा रत्नकूटैः पद्मरागादिगर्भैर्हैमैः सुवर्णमयैः महामरकतमयानि स्थलानि येषु तैर्गृहैर्निर्मितम्

अलङ्कृतमिति पाठः साधुः ॥ ५३ ॥ वास्तोष्पतीनामिन्द्रादिदेवानां च गृहैर्मंदिरैः वलभीभिश्चंद्रशालिकाभिश्च निर्मितम् । चातुर्वर्ण्येन जनेनाकीर्णं व्याप्तं यदुदेवस्योग्रसेनस्य गृहैः राजस्थानैरुल्लसच्छोभमानम् ॥ ५४ ॥

## विवरणटिप्पणी

दृश्यते इत्यत्र । वर्णनावधित्वमिति । वास्तुशास्त्रे यथा वर्णितम् । तादृगं निर्मितमित्युक्त्या शास्त्रवर्णनमवधिर्यस्य तादृशत्वं निर्माणस्य निरूपितम् । अग्रे । ते उद्यानेषु यत्रेति । यत्र उद्यानेषु ते सन्ति । तथा च सुरद्रुमलतायुक्तान्युद्यानानि विचित्राण्युपवनानि च तैरन्वितमित्यर्थः । एकविंशतिगृहोपरीति । यथावास्तु इत्युक्तत्वात्तत्रोपर्युपर्येकविंशतिप्राकारपर्यन्तं गृहा निरूपिताः तथात्रापीति भावः । दिवमिति । तच्छास्त्रोक्तत्वादत्राप्येवमुक्तम् । निदानेति । यदुपर्यन्ये गृहा भवन्ति ते मूलकारणभूताः प्रस्तराः स्फटिकमया इत्यर्थः । अग्रे । वर्णचतुष्टयानामिति । वर्णचतुष्टयमपि चतुर्दिक्षु । अतो बहुवचनम् ॥ ५४ ॥

## गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

यत एवमुभयतो दुःखं तस्मात् द्विपदैर्मनुष्यैर्दुर्गमं गन्तुमशक्यं दुर्गमद्यैव विधास्यामः करिष्यामः । तत्र दुर्गे ज्ञातीन् यदून् समाधाय यवनं घातयामहे । एवमुभयतोऽपि यदूनां कष्टं न स्यादित्याशयः ॥ ४९ ॥ भगवान् सङ्कर्षणेन सहेति सम्मन्त्र्य विचार्य अन्तःसमुद्रे समुद्रमध्ये दुर्गं तत्र चकृत्स्नाद्भुतं सर्वाश्चर्यमयं द्वादशयोजनविस्तीर्णं नगरं चाचीकरत् कारयामास विश्वकर्मणेति शेषः ॥ ५० ॥ यत्र नगरे हि त्वाष्ट्रं त्वष्टा विश्वकर्मा तस्य सम्बन्धि विज्ञानं ज्ञानसूचकं शिल्पनैपुणं क्रियाकौशलं दृश्यते । तदेव दर्शयति–रथ्येति चतुर्भिः । रथ्या राजमार्गाः, चत्वराण्यङ्गणानि, वीथ्यः उपमार्गाः, तैर्यथावास्तु वास्तु गृहादिनिर्माणस्थानं तदनतिक्रम्य विनिर्मितम् ॥ ५१ ॥ सुराणां द्रुमा लताश्च येषु तानि उद्यानानि वाटिकाश्च विचित्राणि उपवनानि समीपवनानि च तैरन्वितम् । हेममयानि शृङ्गाणि येषां तैर्दिविस्पृग्भिः अत्युच्चैः स्फाटिका अट्टाला उपरिभूमिकाः गोपुराणि पुरद्वाराणि तैश्च निर्मितमित्युत्तरेणान्वयः ॥ ५२ ॥ राजतारकूटैः रजतं च आरकूटं पित्तलं च ताभ्यां निर्मितैः कोष्ठैः अन्नशालाश्वशालादिभिश्च निर्मितम् । कोष्ठानि विशिनष्टि—हेमकुम्भैरलङ्कृतैरिति । तथा रत्नकूटैः पद्मरागादिशिखरैः हैमैः सौवर्णैः महामरकतस्थलानि येषु तैर्गृहैश्च निर्मितम् ॥ ५३ ॥ किञ्च नगरगृहादौ वास्तोष्पतीनां देवानां च गृहैर्वलभीभिश्चन्द्रशालिकाभिश्च निर्मितम् ब्राह्मणादिचातुर्वर्ण्यजनैराकीर्णं व्याप्तम् तथा यदुदेवस्य उग्रसेनस्य गृहैरुल्लसत् शोभमानम् ॥ ५४ ॥

## अन्वितार्थप्रकाशिका

तस्मादिति ॥ यत एवमुभयतो दुःखं तस्मात् द्विपदैर्मनुष्यैर्दुर्गमं गन्तुमशक्यं दुर्गमद्यैव विधास्यामः करिष्यामः । तत्र दुर्गे ज्ञातीन् यदून् समाधाय यवनं मुचुकुन्दद्वारा घातयामहे । श्रीरुद्रवरपालनाय स्वयं मारणं तु अनुचितम् ॥ ४९ ॥ इतीति ॥ भगवान् सङ्कर्षणेन सहेति संमन्त्र्य विचार्य अन्तः समुद्रे समुद्रमध्ये दुर्गमचीकरत् कारयामास । तत्र च कृत्स्नमपि वस्तु अद्भुतं सर्वाश्चर्यमयं यत्र तत् द्वादशयोजनविस्तीर्णं नगरं चाचीकरत् । विश्वकर्मणेति शेषः । "अष्टभिर्यवमध्यैः स्यादङ्गुलं द्वादशाङ्गुलैः ॥ वितस्तिस्तद्द्वयं हस्तो हस्तौ द्वौ किष्कुरुच्यते ॥ किष्कुद्वयं धनुः प्रोक्तं धनुषो द्विसहस्रकम् ॥ क्रोशः क्रोशौ तु गव्यूतिर्गव्यूती द्वे तु योजनम् ॥" इति अत्र द्वादशयोजनं नगरं बहिश्च दुर्गमष्टादशयोजनम् । एवं त्रिंशद्योजनं द्वारकापुरम् ॥ ५० ॥ नगरं विशिनष्टि—दृश्यते इति ॥ यत्र नगरे त्वाष्ट्रं त्वष्टा विश्वकर्मा तस्य संबन्धिविज्ञानं ज्ञानसूचकं शिल्पनैपुणं क्रियाकौशलं दृश्यते "रथ्या चत्वरवीथिभिः" रथ्या राजमार्गाः पुरतः वीथ्य उपमार्गाः पश्चिमतः चत्वराण्यङ्गणान्युभयतः रथ्यादिभिर्यथा वास्तु वास्तुगृहादिनिर्माणस्थानं तदनतिक्रम्य निर्मितम् ॥ ५१ ॥ सुरेति ॥ सुराणां द्रुमा लताश्च येषु तानि उद्यानानि वाटिकाश्च विचित्राणि उपवनानि समीपवनानि च तैरन्वितं हेममयानि शृङ्गाणि येषां तैर्दिविस्पृग्भिः अत्युच्चैः स्फाटिका अट्टाला उपरिभूमिकाः गोपुराणि पुरद्वाराणि तैश्च निर्मितमित्युत्तरेणान्वयः । अन्वितमिति समस्तादपि छित्वा वा ॥ ५२ ॥ राजतेति ॥ "हेमकुम्भैरलंकृतैः" इति कोष्ठविशेषणम् । राजतारकुटैः रजतं च आरकूटं पित्तलं च तद्विकारैः ताभ्यां निर्मितैः कोष्ठैः अन्नशालाश्वशालादिभिश्च निर्मितं तथा रत्नकूटैः पद्मरागादिशिखरैः हैमैः सौवर्णैः महामरकतमयानि स्थलानि येषु तैर्गृहैश्च विनिर्मितम् ॥ ५३ ॥ किंच—वास्तोष्पतीनामिति ॥ नगरगृहादौ वास्तोष्पतीनां देवानां च गृहैर्वलभीभिश्चन्द्रशालिकाभिश्च निर्मितं ब्राह्मणादिचातुर्वर्ण्यजनैराकीर्णं व्याप्तं तथा यदुषु देवाः श्रेष्ठाः कृष्णरामवसुदेवोग्रसेनास्तेषां गृहैरुल्लसत् शोभमानम् । अत्रैवं रचना । परितस्तावत्समुद्रः तदभ्यन्तरे तीरे सुखविहारार्थं परितश्चत्वराणि तदन्तर्दुर्गप्राचीराणि तस्य मध्ये मध्ये रत्नकूटाः तदुपरि हेमशिखराणि तदुपरि हेमकुम्भाः दुर्गचतुर्दिक्षु गोपुराणि तदुपरि स्फाटिकभित्तिमयाट्टालिकाः दुर्गान्तः पुनश्चत्वराणि तत उद्यानोपवने तत्र वापीकूपादि तदन्तः सुरालयाः तदन्तर्यथासन्निधि अश्वान्नगृहाद्याः तदन्तरग्रे विप्राणां गृहाः पश्चाच्छूद्राणां वामे वैश्यानां दक्षिणे क्षत्रियाणां मध्ये सुधर्मामध्ये मिलित्वा श्रीकृष्णादिचतुर्णां गृहाः गृहमध्ये मरकतस्थल्यः उपरि बलमीहेमकुम्भादय इति ॥ ५४ ॥

**श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्**

इति संमन्त्र्य उभौ विचार्यकृष्णः अन्तःसमुद्रे समुद्रमध्ये दुर्गं तत्र । कृत्स्नाऽद्भुतं समग्नाश्चर्यमयं त्वष्ट्राऽद्भुतमिति पाठे तु त्वष्ट्रा विश्वकर्मणा अद्भुतं सर्वोत्तमं नगरं अचीकरत् कारयाम्बभूव ।। ५० ।। त्वष्टुर्विश्वकर्मण इदं त्वाष्ट्रं शिल्पस्य हस्तक्रियाया नैपुणं चातुर्यं यस्मिन् तत् विज्ञानं बुद्धिसामर्थ्यं यत्र पुरे दृश्यते । रथ्या अग्नतोराजमार्गाः वीथ्यो वामदक्षिणत उपमार्गाः उभयतः । चत्वराणि गृहां गणानि यथा वास्तु ब्राह्मणादीनां गृहादिनिर्माणरीतिमनतिक्रम्य निर्मितं ।। ५१ ।। सुराणां द्रुमालताश्च येषु तानि उद्यानानि पुष्पप्रधानगृहसमीपवाटिकाः विचित्रोपवनानि नगराद्बहिः फलप्रधानवाटिकाश्च तैरन्वितं दिवि स्पृग्भिः बहुच्चैः हेममिश्राणि श्रृंगाणि अग्रभागा येषां तैः स्फाटिकाः स्फटिकमणिभिः रचिता अट्टालाहर्म्योपरितनभूमिकाः तथाभूतानि गोपुरद्वाराणि अन्यद्वाराणि च तैर्निर्मितमित्युत्तरेण संबंधः ।। ५२ ।। राजतारकूटैः रजतं रौप्यं च आरकूटं पीतधातुश्च ताभ्यां रचितैः कोष्ठैः अन्नशालाहयशालादिभिः कीदृशैः सुवर्णकुम्भैः कृत्वा अलंकृतैः तथारत्नकुटैः पद्मरागादिमणिशिखरैः । महामरकतमयानि इन्द्रनीलमणिमयानि स्थलानि येषु तैः हैमैः कांचनमयैः गृहैश्चनिर्मितं ।।५३।। पुरगेहादौ वास्तोः पतीनां सुराणां गृहैर्मंदिरैश्च वलभीभिश्चंद्रशालिकाभिः । गृहाच्छादनाग्रभागैरित्यर्थः । निर्मितं यदूनां मध्ये देवाः श्रीकृष्णारामाद्याः श्रेष्ठ्यादवास्तेषां गृहैः उल्लसत् प्रकाशमानं नगरं । अचीकरदितिसंबन्धनीयम् ।। ५४ ।।

**भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी**

इतीति । इतीत्थं, सम्मन्त्र्य विचार्य निश्चित्येत्यर्थः । भगवान् महैश्वर्ययुक्तः श्रीकृष्णः, अन्तःसमुद्रे समुद्रमध्ये, दुर्गं दुर्गमकोट्टं, द्वादशयोजनं द्वादशयोजनविस्तीर्णं, कृत्स्नानि समग्राण्यद्भुतान्याश्चर्याणि तस्मिंस्तथाभूतं, नगरं अचीकरत् कारयामास । विश्वकर्मणेति शेषः ।। ४९ ।। दृश्यते इति । यत्र नगरे, त्वाष्ट्रं विश्वकर्मणः सम्बन्धि, विज्ञानं विज्ञानसूचकं शिल्पनैपुणं क्रियाकौशल्यं, दश्यते हि । तदाह सार्द्धं त्रिभिः । रथ्या च चत्वराणि च वीथ्यश्च ताभिः, यथावास्तु वास्तुर्गृहादिनिर्माणस्थानं तमनतिक्रम्य, विनिर्मितं, अत्र रथ्या राजमार्गाः, वीथ्यं उपमार्गाः, चत्वाराण्यङ्गणानि, तद्युक्तभवनोपेतमिति ।। ५० ।। सुरद्रुमेति । सुराणां द्रुमाः कल्पवृक्षाः पारिजातादयः लताः कल्पलताश्च येषु तानि उद्यानानि विचित्राण्युपवनानि च तैरन्वितम् । हेममयानि श्रृङ्गाणि येषां तैः, दिविस्पृग्भिरत्युच्चैः, स्फाटिकाः स्फटिकमणिकृताः अट्टाला उपरितनभूमिकाः गोपुराणि द्वाराणि च तैः, निर्मितमिति तृतीयेनान्वयः ।। ५१ ।। राजतेति । रजतं रूप्यं आरकूटं पित्तलं च ताभ्यां निर्मिता राजतारकूटास्तैः, हेमकुम्भैः, अलङ्कृतैः कोष्ठैः अश्वशालान्नशालादिभिः, तथा रत्नकूटैः पद्मरागादिशिखरैः, हैमैः सौवर्णैः, महामरकतमयानि स्थलानि येषु तैः, गृहैश्च, विनिर्मितमित्यनेनान्वयः । उक्तविधैतद्गृहाणां मध्ये कोष्ठाः ततोऽप्यन्तः स्वर्णभवनानि तदुपरि स्फटिकाट्टालकाः तदुपरि हेमकुम्भा इति वहुभूषितमिति ।। ५२ ।। वास्तोष्पतीनामिति । किं च, नगरद्वारादावविति शेषः । वास्तोष्पतीनां वास्तुदेवतानां, गृहैः वलभीभिश्चन्द्रशालाभिश्च, निर्मितं, यदुदेवगृहैः राजगृहैरुल्लसत् शोभमानं, चातुर्वर्ण्यजनैराकीर्णं व्याप्तं च ।। ५३ ।। सुधर्मामिति । यत्र यस्यां, अवस्थितः मर्त्यो जनः मर्त्यधर्मैः अशनापिपासाशोकमोहजरामरणादिभिश्चापि, न युज्यते । तथाविधां, सुधर्मां सुधर्माख्यां सभां, पारिजातं च, महेन्द्रः, हरेर्हरये इत्यर्थः । प्राहिणोत् । शुकपरीक्षित्संवादात्पूर्वभावित्वाद्भूतनिर्देशः ।। ५४ ।।

**कृष्णप्रिया**

इसलिये हम आज एक ऐसा किला बनायेंगे कि जहाँ किसी भी मनुष्य का प्रवेश होना दुःशक्य हो । पुनः उस किले में हमारे पारिवारिकजन-स्वजन आदि को पहुँचा दै और कालयवन का आसानी से मृत्यु करायेंगे ।। ४९ ।। श्रीकृष्णचन्द्रजी दाऊदयाल भैया से ऐसा परामर्श करके महासागर के मध्य में एक दुर्गम और दिव्य नगर वनवाया, जिस नगर में सर्व सर्वोत्कृष्ट सामग्री थी और इस नगर का क्षेत्रफल बारह योजन ( अड़तालीस कोस ) था ।। ५० ।। नगर को वस्तुओं में और सामग्रीओं में वास्तोपति का विज्ञान एवं शिल्पकलाचातुर्य का दर्शन हो रहा था । नगर निर्माण में वासुशास्त्र विधान अनुसार वड़े-वड़े राजपथ चौराहों छोटी-मोटी गलियाँ का स्थान-स्थान पर विभाजन किया था ।। ५१ ।। नगर में रमणीय नयन रम्य उद्यान बनाये गये थे, कलाप्रचुर विविध उपवन भी थे । विशेष करके उछाल में एवं नगर में देवतरुवर देवलताएँ लह-लहा रही थी । सुवर्ण निर्मित अतिशय ऊँचे शिखर आकाश मण्डल को छूते थे । श्वेतवर्ण स्फटिक मणियों की अटारियाँ थीं । अति ऊँचे रमणीय दरवाजे नगर शोभा को वैठाते थे ।। ५२ ।। धान्य रक्षा के लिये बड़े-बड़े रजत और पीतल के कोठे बनाये गये थे । नगर हवेलियाँ सुवर्ण की बनायी गयी थी । महलों के शिखरों पर कला कौशल्य पूर्ण वने हुए सुवर्ण कलश सजे हुए थे । राजभवनों के शिखर रत्ननिर्मित थे और गच पन्ने की बनायी थी वह भली-भाँति सोहानी थी । इस नये नगर में विश्वकर्मा के मन्दिर भी विशिष्ट रचनाओं से सम्पन्न थे मन्दिरों पर रमणीय छज्जे भी रचे गये । चतुर्वर्ण प्रजाजनों का नगर में निवास था और यदुकुल शिरोमणि महाराज उग्रसेनजी श्रीवसुदेवजी श्रीबलभद्रजी एवं भगवान श्रीकृष्ण के राजमहल जगमगाते थे ।। ५४ ।।

**सुधर्मां पारिजातं च महेन्द्रः प्राहिणोद्धरेः । यत्र चावस्थितो मर्त्यो मर्त्यधर्मैर्न [1]युज्यते ॥ ५५ ॥**
**[2]श्यामैककर्णान् वरुणो हयाञ्छुक्लान् मनोजवान् । [3]अष्टौ निधिपतिः कोशान् लोकपालो[4] निजोदयान्॥**
**[5]यद् यद् भगवता दत्तमाधिपत्यं स्वसिद्धये । सर्वं प्रत्यर्पयामासुर्हरौ भूमिगते नृप ॥ ५७ ॥**
**तत्र योगप्रभावेण नीत्वा [6]सर्वजनं हरिः ।**
**[7]प्रजापालेन रामेण कृष्णः समनुमन्त्रितः । निर्जगाम पुरद्वारात् पद्ममाली निरायुधः ॥ ५८ ॥**

**इति श्रीमद्भागवते महापुराणे[8] दशमस्कन्धे[9] [10]दुर्गनिवेशनं नाम [11]पञ्चाशत्तमोऽध्यायः ॥ ५० ॥**

### कर्दमक्षमा

**अन्वयः**—महेन्द्रः, हरेः, सुधर्माम्, च, पारिजातम्, प्राहिणोत्, च, यत्र, अनस्थितः, मर्त्यः, मर्त्यधर्मैः, न, युज्यते ॥५५॥ वरुणः, शुक्लान्, श्यामैककर्णान्, मनोजवान्, हयान्, प्राहिणोत्, निधिपतिः, अष्टौ, कोशान्, प्राहिणोत्, लोकपालः, निजोदयान्, प्राहिणोत्, ॥ ५६ ॥ हे नप ! भगवता, स्वसिद्धये, यद्, यद्, आधिपत्यम्, दत्तम्, भूमिगते, हरौ, सर्वम्, प्रत्यर्पयामासुः ॥ ५७॥ हरिः, तत्र, योगप्रभावेण, सर्वजनम्, नीत्वा, प्रजापालेन, रामेण, समनुमन्त्रितः, पद्ममाली, निरायुधः, कृष्णः, पुरद्वारात्, निर्जगाम ॥ ५८ ॥

इति पञ्चाशत्तमाध्यायस्यान्वयाः समाप्ताः ।

### श्रीधरस्वामिविरचिता भावार्थदीपिका

पारिजातं च प्राहिणोत्प्रस्थापयामासेति शुकपरीक्षित्संवादातपूर्वभावित्वाद्भूतनिर्देशः । मर्त्यधर्मैः क्षुत्पिपासादिषड्ूर्मिभिः ॥५५॥ निधिपतिः कुवेरः अष्टौ कोशान्निधीन् । ''पद्मश्चैव महापद्मो कुन्दकूर्मौ तथौदकः । नीलो मुकुन्दः शंखश्च निधयोऽष्टौ प्रकीर्तिताः'' इति प्रसिद्धान् । निजोदयान्निजविभूतीः ॥ ५६ ॥ अन्ये च सिद्धादयो भगवता स्वाधिकारसिद्धये यद्यदाधिपत्यं दत्तमासीत्तत्सर्वं प्रत्यर्पयामासुरिति ॥ ५७ ॥ यथा कालयवनो न वेत्ति न चासौ जनस्तथा योगप्रभावेण नीत्वा त्वमत्र स्थित्वा प्रजाः पालयाहं पलायिष्य इति समनुमंत्रितः कृतानुमन्त्र इत्यर्थः ॥ ५८ ॥

इति श्रीमद्भा० म० दशमस्कंधोत्तरार्धे भावार्थदीपिकायां श्री० टीकायां पंचाशत्तमोऽध्यायः ॥ ५० ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

'स्यात्सुधर्मा देवसभा' इत्यमरः । पारिजातं वांछितदं वृक्षम् । यत्र सुधर्मायाम् । सुधर्मां पारिजातं च पराजितः सन्देवराजः श्रीकृष्णाय ददौ न तु प्रीत्येति । ''अधिक्रमंत्यंघ्रिभिराहृतां बलात्सभां सुधर्मां सुरसत्तमोचिताम् । निर्जित्य संख्ये त्रिदशांस्तदाशिषो हरन्ति'' इत्युक्तेः, ''पारिजातं तदुत्पाट्य आरोप्य च गरुत्मति । सेन्द्रान्देवान्विनिर्जित्य'' इति वक्ष्यमाणत्वाच्च । अत एव प्राहिणोदित्युक्तं न तु समर्पयामासेति ॥ ५५ ॥ हयान् सहस्रसंख्यान् ''ददौ सहस्रसंख्यातानश्वान्देवाय तोयराट्'' इति पुराणान्तरात् । औदकः कुन्दः खर्वः, यद्वा—तन्नामैव । क्वचित्तु नव निधयोऽपि—''महापद्मश्च पद्मश्च शंखो मकरकच्छपौ । मुकुंदकुंदनीलाश्च खर्वश्च निधयो नव ॥'' इति शब्दार्णवात् ॥ ५६ ॥ सिद्धा देवविशेषाः, आदिना गन्धर्वकिंपुरुषादयश्च । आधिपत्यमधिपतित्वापादकं गायनाद्यैश्वर्यम् । प्रत्यर्पयामासुर्निवेदयामासुः, गायनाद्यैस्तोषयामासुरिति भावः । हरौ क्रीडार्थं निजाशेषविभूतिसमाहरणकौतुकिनि भगवति, यतः भूमिगते तादृशविनोदार्थमेव पृथिव्यामवतीर्णे । एवं परमकौतुकेन संबोधनम्—नृपेति । यथा भवादृशां नृपाणामपि विभूतयो विनोदार्था एव तथा तस्यापि परमनृपतेः परमविभूतयो विनोदायैवेति संबुद्ध्यभिप्रायः । विशेषस्तु हरिवंशे दृश्यः ॥ ५७ ॥ तत्र नगरे । नीत्वा प्रापय्य । यद्वा—योगस्य प्रभावः सामर्थ्यं मथुरास्थिताखिलनिजनिजपदार्थराशेर्द्वारिकायां भवनं तेनेत्यर्थः । अत्र मथुरायाम् । इत्यर्थ इति—उभयोः पलायने प्रजास्त्रस्ता भविष्यंतीति भावः । पुरद्वारान्मथुराद्वारतः । योगोऽचिंत्यैश्वर्यम्, तस्य प्रभावेण माहात्म्येन । तथा च पाद्मोत्तरखण्डे—''सुपुप्तान्मथुरायां तु पौरांस्तत्र

१. वि यु–वीर. विध. । २. यत्प्रियं देवदेवस्य विष्णोः क्षीरोदवासिनः–विजयेऽन्यत्रचाधिकम् । ३. ददौ सहस्रसंख्याताम् देवदेवाय तोयराट्–विजयेऽन्यत्र । ४. रत्नपूर्णानिवक्षयान्–विज. । ५. तथाऽन्ये लोकपालाश्च ददुःस्वाधिकृतं धनम् । ६. स्वान् भगवान्–श्रीधर. टि. । ७. प्रत्यागत्याय–वीर. ; मधुरायाश्च–विज ; मथुरामेत्य–इति कस्यचित् । ८. पारमहंस्यां संहितायां–प्रा. पा. । ९. उत्तरार्धे–प्रा. पा. । १०. नास्ति–प्रा. पा. । ११. त्रिपञ्चाशत्–विज. ।

जनार्दनः। उद्धृत्य सहसा रात्रौ द्वारकायां न्यवेशयत्॥ प्रबुद्धास्ते जनाः सर्वे पुत्रदारसमन्विताः। हैमहर्म्यतलाविष्टा विस्मयं परमं ययुः॥" इति। हरिरिति तथा नयनात्। त्वमत्र स्थित्वा प्रजाः पालयेति तैर्यद्व्याख्यातं तत्तु द्वारकानीतप्रजाभ्योऽवशिष्ट-बहिरङ्गप्रजागतमेव ज्ञेयम्, निजपार्श्वरक्षितसैन्यगतमेव वा। यद्वा—अस्य यादवाऽवध्यत्वान्मा शंकां कृथाः, त्वमत्र स्थित्वा पुरं पालय मुचकुन्देनैनमहं घातयिष्यामीत्येव मंत्रो ज्ञेयः। सम्यगनुरूपश्च मन्त्रः समनुमन्त्रः स जातोऽस्येति तारकादित्वादितच्। पद्ममालीति नारदोक्तलक्षणापेक्षया। निरायुध इति पलायनमननार्थम्॥ ५८॥

इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे दशमस्कन्धे उत्तरार्द्धे पञ्चाशत्तमोऽध्यायः॥ ५०॥

## श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी

सुधर्म्मामिति युग्मकम्। पारिजातं प्राहिणोदिति तैर्व्याख्यातं तत्र प्रस्थापनं नाम परित्याग एव। ज्ञेयः यद्वाग्रे स्वयं श्रीभगवता स्वर्गादानीय पारिजातादस्य न्यूनत्वेन भेदः कल्प्यः मुरद्रुमलतोद्यानेति वर्णिततत्त्वात् सुधर्म्मायास्त्वेकत्वेन नान्या गतिरितीन्द्रस्था नाकरोदिति ज्ञेयम् हरेर्हरयेऽन्यथा बलात् स्वयमेव हरेदिति विभाव्यैवेति भावः। लोकपाला अन्येऽपि॥ ५५-५६॥ हरौ क्रीडार्थं निजाशेषविभूतिसमाहरणकौतुकिनि भगवति यतः भूमिगते तादृशविनोदार्थमेव पृथिव्यामवतीर्णे एवं परमकौतुकेन नृपेति श्रीद्वारकानिर्माणादिविस्तारः ( विधिः ) श्रीहरिवंशे दृश्यः॥ ५७॥ योगोऽचिन्त्यैश्वर्य्यं तस्य प्रभावेण माहात्म्येन तथा च पाद्मोत्तरखण्डे—

"सुषुप्तान्मथुरायां तु पौरांस्तत्र जनार्द्दनः। उद्धृत्य सहसा रात्रौ द्वारकायां न्यवेशयत्॥
प्रबुद्धास्ते जनाः सर्वे पुत्रदारसमन्विताः। हेमहर्म्यतले विष्टा निस्मयं परमं ययुः"॥ इति

हरिरिति तथानयनात् त्वमत्र स्थित्वा प्रजाः पालयेति तैर्यत् व्याख्यातं तत्तु द्वारकानीतप्रजाभ्योऽवशिष्टबहिरङ्गप्रजा-गतमेव शेयं निजपार्श्वरक्षितसैन्यगतमेव वा। यद्वाऽस्य यादवैरवध्यत्वान्माशङ्कां कृथाः त्वमत्र स्थित्वा पुरं पालय अहन्तु मुचुकुन्देन एनं घातयिष्यामीत्येव मन्त्रो ज्ञेयः। रामेण सह सम्यगनुरूपश्च मन्त्रः सोस्यसञ्जात इति तारकादित्वादितच्। अत्र सर्वजनं हरि-रितिपाठे स्वान् भगवान् हरिरिति कचित्। मथुरामेत्येति पाठे प्रजापालनेति कचित् पूर्व्वत्र द्वारकाशिर्माणार्थं तव गमनं योग-प्रभावेणैव वा ज्ञेयम् पद्ममालीति श्रीनारदोक्तलक्षणापेक्षया निरायुध इति पलायनमननार्थम्॥ ५८॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे श्रीमज्जीवगोस्वामिकृतवैष्णवतोषण्यां पञ्चशत्तमोऽध्यायः॥ ५०॥

## श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी

लोकपाला अन्ये श्रीब्रह्मरुद्रादयः। भगवता परमेश्वरेण तेनैव हरौ क्रीडार्थं निजाशेषविभूतिसमाहरणपरे भगवति। कुतः भूमिगते अपूर्वविनोदार्थमेव पृथिव्यामवतीर्णे। एवं परमाश्चर्य्येण हर्षभरोदयेन वा सम्बोधयति—नृपेति। श्रीद्वारकानिर्म्माणादि-विस्तारः श्रीहरिवंशाद्विज्ञेयोऽत्र न विस्तरभयान्न लिख्यते॥ ५५-५६॥ योगोऽचिन्त्यैश्वर्य्यं तस्य प्रभावेण माहात्म्येन, यद्वा, योगेन यः प्रमाणः सामर्थ्यविशेषस्तेन नीत्वा स्वस्वगृहे रात्रौ निद्रितानामलक्षितं तथैव तत्र नयननं ज्ञेयम्। तथा च पाद्मोत्तरखण्डे—

'सुषुप्तान् मथुरायान्तु पौरांस्तत्र जनार्द्दनः। उद्धृत्य सहसा रात्रौ द्वारकायां न्यवेशयत्॥
प्रबुद्धास्ते जनाः सर्व्वे पुत्रदारसमन्विताः। हेमाहर्म्यतले विष्टा विस्मयं परमं ययुः॥'

हरिरिति तथा तत्तदानेन, तत्तदज्ञातत्वेन तत्र सद्यो नयनात्। त्वमत्र स्थित्वा प्रजा पालयेति तैर्यदुक्तम्; तत्तु द्वारका-नीतप्रजाभ्योऽवशिष्टा इति ज्ञेयम्। यद्वा, अस्य यादवैरवध्यत्वान्माशंकां कृथाः। मुचुकुन्देनैनं घातयिष्यामीति कृतानुमन्त्रः। पद्ममानीति दूरतो यवनेन लक्षयितुम्, किंवा श्रीनारदोक्तलक्षणापेक्षया। निरायुध इति शस्त्रत्यागेन पलायनं मत्वा तथैव पृष्ठतो धावतस्तस्य श्रीमुचुकुन्दगुहायां नयनार्थम्॥ ५८॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे उत्तरार्द्धे श्री श्रील-सनातन-गोस्वामिपाद-कृतायां श्रीवृहद्वैष्णवतोषण्यां श्रीदशम-टिप्पण्यां पञ्चाशत्तमोऽध्यायः॥ ५०॥

## श्रीमद्वीरराघवाचार्यकृता भागवतचन्द्रचन्द्रिका

सुधर्मां नाम सभां पारिजातं च महेन्द्रो हरये प्राहिणोत् प्रस्थापयामासेति शुकपरीक्षित्सम्वादात्पूर्वभावित्वाद्भूतनिर्देशः सुधर्मां विशिनष्टि—यत्रेति। मर्त्योऽपि यत्र सुधर्मायां स्थितो मर्त्यधर्मैरशनायापिपासाशोकमोहजरामरणादिभिर्न युज्यते॥ ५५॥ वरुणस्तु श्यामः एककर्णो येषां तान् सर्वतः शुक्लान् मनोजवान् अश्वान्प्राहिणोदित्यनुषङ्गः निधिपतिः कुबेरस्त्वष्टौ कोशान्निधीन्—

"पद्मश्चैव महापद्मो मत्स्यः कूर्मस्तथापरः। नीलो मुकुन्दः शङ्खश्च निधयोऽष्टौ प्रकीर्तिताः" ॥

इत्युक्तान् प्राहिणोत् ॥ ५६ ॥ तथाऽन्ये च लोकपालाः निजोदयान्निजविभूतीः तथान्ये च सिद्धादयो यद्यत्स्वाधिकारसिद्धये भगवता दत्तमाधिपत्यं तत्सर्वं भगवति भूमिगते भूमाववतीर्णे सति तस्मै प्रत्यर्पयामासुः ॥ ५७ ॥ तत्रेति। यथा कालयवनो माथुराश्च जना न जानीयुस्तथा योगप्रभावेन योगामायात्मिकाश्चर्य्यशक्तिप्रभावेन माथुरं सर्वं जनं तत्र दुर्गे नीत्वा प्रापय्य पुनरागत्य अथ रामेणानुमन्त्रितः आलोचितो भगवान् पद्ममालाधरो निरायुधश्च भूत्वा पुरद्वारात् निष्क्रान्तवान् ॥ ५८ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम् पञ्चाशत्तमोऽध्यायः ॥ ५० ॥

## श्रीविजयध्वजतीर्थकृता पदरत्नावली

मर्त्यधर्मैर्जरादिलक्षणैः ॥ ५५ ॥ क्षीरोदशायिनो विष्णोर्यत्प्रियं हृद्यं तदपि ददौ०। निधिपतिः कुबेरः अष्टौ कोशान्निधीन् अविक्षयानव्ययान् ॥ ५६ ॥ स्वाधिकृतं स्वकीयत्वेनाभिमतम्। क्षीरोदधिमथने हरिणा दत्तम् ॥ ५७ ॥ योगप्रभावेण मथुरास्थितपदार्थराशिर्यथा द्वारकास्थितो भवति तथा करणसामर्थ्येन रामेण समनुमन्त्रितः सहितः ॥ ५८ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम् पञ्चाशत्तमोऽध्यायः ॥ ५० ॥

( विजयध्वजरीत्या त्रिपञ्चाशत्तमः ॥ )

## श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

पारिजातं च प्राहिणोदिति शुकपरीक्षित्सम्वादात् पूर्वंभूतत्वाद्भूतनिर्देशः ॥ ५५ ॥ निधिपतिः कुबेरः कोशान् निधीन्—पद्मश्चैव महापद्मो मत्स्यः कूर्मस्तथौदकः। नीलो मुकुन्दः शङ्खश्च निधयोऽष्टौ प्रकीर्तिताः। इति निजोदयान् स्वीयसम्पत्तीः ॥ ५६—५७ ॥ योगो योगमाया तत्प्रभावेन तत्प्रकारः पाद्मोत्तरखण्डे यथा।

सुषुप्तान् मथुरायां तु पौरांस्तत्र जनार्द्दनः। उद्धृत्य सहसा रात्रौ द्वारकायां न्यवेशयत् ॥
प्रबुद्धास्ते जनाः सर्वे पुत्रदारसमन्विताः। हैमहर्म्यतले विष्टा विस्मयं परमं ययुः ॥ इति

रामेण सह समनुमन्त्रितः त्वमत्रैव मुहूर्त्तं तिष्ठ अहमनया युक्त्या इमं घातयिष्ये इति कृतमन्त्रेण इत्यर्थ ॥ ५८ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम्। दशमे सङ्गतः पञ्चाशत्तमः सङ्गतस्सताम् ॥ ५० ॥

## गूढार्थदीपिनी

प्राहिणोत् प्रस्थापयमास। हरेः हरये। मर्त्यधर्मैः क्षुत्पिपादिभिः ॥ ५५ ॥ लोकपालो वरुणः निजोदयान् निजविभूतीः प्राहिणोदित्यनुषङ्गः ॥ ५६ ॥ स्वसिद्धये स्वाधिकारसिद्धये ॥ ५७ ॥ तत्रेति सार्द्धम्। समनुमन्त्रितः त्वमत्र पुरं पालय अहं तु एनं मुचुकुन्देन घातयिष्यामिति कृतानुमन्त्रः। सम्यगनुरूपो मन्त्रः समनुमन्त्रः संजातोऽस्येति तारकादित्वादितच् ॥ ५८ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्ये पूर्वार्धे गूढार्थदीपिन्यां पञ्चाशत्तमोऽध्यायः।

## श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

सुधर्मां देवसभां पारिजातं च देवद्रुमं प्राहिणोत् प्रस्थापयामासेति शुकपरीक्षित्संवादात्पूर्वभूतत्वाद्भूतनिर्देशः ॥ ५५ ॥ कोशान् निधीन्—

"पद्मश्चैव महापद्मो मत्स्यः कूर्मस्तथौदकः। नीलो मुकुन्दः शङ्खश्च निधयोऽष्टौ प्रकीर्तिताः" ॥ इति

प्रसिद्धान् अन्येऽपि लोकपालाः निजोदयान् निजविभूतीः ॥ ५६ ॥ अन्ये च सिद्धादयः यत्स्वाधिकारसिद्धये आधिपत्यं भगवता दत्तं तत्तत्सर्वं प्रत्यर्पयामासुः ॥ ५७ ॥ तत्र योगप्रभावेनेति योगः नरलोकानुरूपो मौहूर्त्तिकस्ततप्रभावेन तत्प्रकारः हरिवंशे दर्शितः—

"एतस्मिन्नन्तरे चैव यदूनां नन्दिवर्द्धनः। केशवः पुनरेवाह यादवान् सत्यसङ्गरः ॥
अद्यैव दिवसः पुण्यो निर्यामि; सबलानुगाः। ततो निश्चक्रमुः सर्वे यादवाः कृष्णशासनात् ॥
ओघा इव समुद्रस्य बलौघप्रतिनादिताः। प्रगृह्य ते कलत्राणि वसुदेवपुरोगमाः ॥
सुसन्नद्धैर्गजैर्मत्तै रथैरश्वैश्च दंशिता; । आहत्य दुन्दुभी; सर्वे सधना ज्ञातिवान्धवाः ॥
निर्ययुः यादवाः सर्वे मथुरामपहाय वै" ॥

इत्यादिना—

निवेश्य द्वारकां राजन् ! वृष्णीनां स्वस्य चैव हृ । पदातिः पुरुषव्याघ्रो बाहुप्रहरणस्तदा ॥
आजगाम महार्थागी मथुरां मधुसूदनः ।

इत्यन्तेन । योगो योगमाया तत्प्रभावेन वा युज्यते इतियागः सङ्कल्पस्तेन स्वसङ्कल्पप्रभावेन वा तत्प्रकारः पाद्मोत्तरखण्डे दर्शितः—

"सुषुप्तान्मथुरायां तु पौरांस्तत्र जनार्दनः । उद्धृत्य सहसा रात्रौ द्वारकायां न्यवेशयत् ॥
प्रबुद्धास्ते जनाः सर्वे पुत्रदारसमन्विताः । हैमहर्म्यतले विष्टा विस्मयम्परमं ययुः" ॥ इति ॥ ५८ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धीये श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे पञ्चाशत्तमाध्यार्थप्रकाशः ॥ ५० ॥

## श्रीसत्यधर्मकृता श्रीभागवतटिप्पणी

चतुर्भिः शरैश्चतुरस्तुरगान् ॥ ५५ ॥ दशशरान् ॥ ५६ ॥ साधु साध्विति पूजयन् । भो भो चैद्य महेष्वास वीरोऽसि वलत्रांश्चासि । महेष्वासेत्युक्तौ धानुष्कतामात्रप्रतीतिः स्यादेकेनैवासीत्यनेनैव पूर्तौ वीरोऽसि वलवानिति चैकपद्येऽसिनापि बलवानसि वीरश्चासीत्यर्थविशेषं ध्वनयितुं पुनरसिपदं यथा समस्तं भवेच्च तथा समव्यदिति मन्तव्यम् ॥ ५७ ॥ धनुष्मतो भावो धानुष्मत्त्वं तदेव धानुष्मत्त्वं मेऽपि स्वयं साक्षात्पश्य ॥ ५८ ॥ यौगपद्येनैकदेवमिलित्वा प्रत्येकश इत्याशुगैः पञ्चभिरित्यनेनान्वितं वीप्सासमर्थ भवति । तास्तान्पञ्चभिः सायकैर्विद्ध्वा ॥ ५९ ॥ पञ्चकाशुगविनियोगं प्रपञ्चयति ॥ सारथिमिति । एकैकं नृपतीस्त्रिभिस्त्रिभिः शरैः रणे ॥ ६० ॥ त्रयाणां सायकानां काये निकाय्यमाह ॥ वक्षस्यास्ये ललाटे चेति । ततोऽनन्तरं त्रिशतां तत्सङ्ख्यानां राज्ञां त्रिंशत्कर्मूकं तत्सङ्ख्यं धनुः ॥ ६१ ॥ त्रिंशद्भिः सायकैस्त्रिशद्राजमध्येऽसावपीति तद्धनुश्छित्वा त्रिभिः शरैः ॥ ६२ ॥ ध्वजं मुकुटछत्रेश्चकर्त । प्रहासस्तु मुकुटच्छेदवच्छिरच्छेदोऽपि कर्तुं शक्यं किन्तु कालान्तरे भवत्वित्युक्षितमिति भावोऽवसेयः ॥ ६३ ॥ आकर्णान्तं कर्णप्रान्तपर्यन्तं तेन कृष्णेन शरताडितराजन्यकटकं विभ्रान्तम् ॥ ६४ ॥ शैलोपरि विद्यमानश्चासौ द्रुमश्च तस्मिन्विद्यमाना च सा लतावल्ली कालान्तो हि प्रलयकालिको मारुतो मारुतोद्धूता च सा सा च तयोपमा यस्य तत् । हताश्वरथसारथिस्त्रातारं रक्षकं नागच्छन्नाप ॥ ६५ ॥ विस्फूर्जयन् टङ्कारयन् उग्रपौरुष उग्रान्यत्युग्रं पौरुषं यस्य सः ॥ ६६ ॥ निर्भिन्नकुम्भा दलितशिरस्का अनीकशः सङ्घशः शरै रुग्णा मग्नाः कन्धरा ग्रीवा येषां ते तथा नायका रथिकाः पदातयः पतयः ॥ ६७ ॥ सञ्छिद्यमानाश्च ते द्विपदे भवाजिनश्च तेषां सेनाङ्गत्वादेकवद्भावे चैकेका व्यक्तिरित्यपि मायादतस्तमुद्गणं गन्तव्यम् । अङ्गभङ्गप्रसूतः शतशोऽसृगापका रुधिरसरितो विशेषकेन रणमण्डलस्य तदापणसारूप्यमाह। भुजा एवाहयः सर्पा यासु ताः पुरुषशीर्षाण्येव कच्छपाः कुर्मा यासु ता हता द्विपा एव द्वीपा गतम् । हया एव ग्रहा हतद्विपद्वीपैर्हयग्रहैश्चाकुला व्याप्ताः ॥ ६८ ॥ करा एवोरवो मीना यासु ता नरकेशशैवला नराणां केशा एव शैवलानि जलाञ्चलानि यासु ताः शैवलं पद्मकाष्ठेऽपि जलन्वित इति विश्वः । धनूश्चेव तरङ्गा यासु ताश्च ता आयुधान्येव गुल्मास्तैः सङ्कुला आस्फूर्जितैर्ध्वनिविशेषैरावृत्तैर्नर्णैरन्यत्राम्भासां भ्रमैर्भयानका भीतिप्रदा महामणिप्रवेकमरणात्मशर्करा महामणिप्रवेका अत्युत्तममणय आभरणानि चाश्मानः शर्कराः क्षुद्रपाषाणाश्च यासु ताः क्रामिकोऽन्वयः॥६९॥ भीरूणां भयावहा मनस्विनां धीराणां हर्षवहाः परस्परमरीनृते तथा मुसलेन दुर्मदानरीन्निघ्नता । अपरमेयतेजसा बलेन मृधे प्रवर्तिता इत्यन्वयः । परस्परं कृष्णेन रामेणेति पस्परं वा ॥ ६० ॥ अङ्ग दे राजन् ! अर्णवदुर्गं भैरवं च तद्बलं दुरन्तपारं दुःशब्दः प्रतिषेधे । दुर्नं विद्यतेऽन्तेऽपि परो यस्य तत् । अन्तः प्रान्तेऽन्तिक इति विश्वः । अन्तरालं च पारं परतटं दुर्नं विद्येते यस्येति वा । मगधेन्द्रपालितं बलं रामकृष्णाभ्यां क्षयं प्रणीतम् । कियानप्यायासो नास तयोरित्याह । जगदीशयोर्वसुदेवपुत्रयोः परं केवलं तद्विक्रीडितं लीलैवेति ॥ ७१ ॥ ग्रन्थकृन्मन्दामन्दरधरवद्बलयमपि निरवध्यधिकं जगतो जानीयुर्भवेयुश्च दुष्प्रज्ञा इति तदुद्दिधीरिया विविच्याच्युतगुण एवायं मयोपचारतः प्राङ्निर्देशः कृत इति वक्ति ॥ स्थितीति । भुवनत्रयस्य स्थित्युद्भवान्तम् सर्वो द्वन्द्व इत्येकवद्भाव उत्तरपदलोपी वा समासः । पालनोत्पत्तिनाशान्समहितैः करोति स्वलीलयेत्यनायासेनेत्याह । अनन्तगुणः प्रागजगदीशत्वेनप्रशक्तस्यानन्तस्य गुणा येनेति वा । अनन्तो गुणोऽप्रधानं यस्मादिति वा । तम्य कृष्णस्य परपक्षनिग्रहाश्चित्रं न । तर्हि वर्णनं कुत इत्यत यथाऽपीति । मर्त्यानिनु विधा प्रकारो यस्य स तस्य तत् । युद्धादिकं वर्ण्यते ॥ ७२ ॥ अवशिष्टेषु हतेभ्य एकेन स्वेन रथेन शौरिणमाप ॥ ७३ ॥ बलेन शाले इति तौ ॥ ७४ ॥ शतगुणं शतधारं बहुवारमिति यावत् ॥ ७५ ॥ व्यंसयित्वा मृधा वृथा ॥ ७६ ॥ रथे पोषयित्वा । करणमीरयति । मुसलेनेति । क्षुब्धः क्षुमितो रथश्च तौ निहत्य ताडयित्वा मारयित्वा क्षुब्धो यथा मथ्नन्नपि स्वयं निस्सङ्गस्तथा सज्जमान इति लुप्तोपमा वा । क्षुब्धेत्यादिनिपातितः शब्दो मन्थनदण्डवाची । हतान्यनीकानि यस्य स चासाववशिष्टा असवो यस्य च तम् ॥ ७७-७८ ॥ वारुणमानुषैः पाशैर्बध्यमानं गोविन्दो वारयामास । तेन जीवितेन कार्यं चिकिर्षया तद्द्वारेण भूमारहरणरूपकार्यकरणेच्छया कारयमास ॥ ७९ ॥ मुक्तो जीवेति विसृष्टो राजभिर्विद्रुतमिलितैर्वाभिरितिं वारितो नेत्रयोरिति शेष इत्यप्यर्थः । श्लोकद्वयं प्रक्षिप्तमिति सम्प्रदायविदः । अक्षतं बलं सेना यस्य सः ॥ ८१ ॥ त्रिदशैः कर्तृभिः कुसुमैः कर्णाविकीर्यमाणोऽनुमोदितश्च

मधुरैस्तन्नगरागारैः ॥ ८२ ॥ उपगीयमानो विजयो यस्य सः मैर्यश्च तूर्यणि च तानि कीदृशानि वीणाभिः सहिता वेणुमृदङ्गा येषां तानि । अतो न मृदङ्गो न बोधे । प्रभौ पुरं प्रविशति नेदुः ॥ ८३-८४ ॥ ब्रह्मघोषः स्वाध्यायध्वनिः कौतुकेनोत्सवेन हर्षेण वा । उत्सवे नर्महर्षयोरिति विश्वः । आसमन्ताद्बद्धानि तोरणानि यस्यां सा ताम् ॥ ८५ ॥ निचीयमानो विकीर्यमाणो विवेशेति विपरिणतानुषङ्गः प्रीत्योत्कलितानि च तानि लोचनानि च तैर्निरीक्ष्यमाणः ॥ ८६ ॥ अनन्तं बहु । अबद्धं तथैव राशीकृतं वा यदुराजायोग्रसेनाय ॥ ८७ ॥

इति श्रीभागवतटिप्पण्यां सत्यधर्मकृतायां दशम उत्तरार्धे एकोनपञ्चाशोऽध्यायः ॥ ४९ ॥

## श्रीमद्वल्लभाचार्य्यकृता सुबोधिनी

एवं भगवता स्थाने निर्मिते, विशेषतो निर्माणे कृते, पारिजातादीनामनन्यत्वप्रतिष्ठा गमिष्यतीति लोकपाला सर्वे स्वस्वसमृद्धि प्रेषितवन्त इत्याह सुधर्मामिति त्रिभिः । यदग्रे पारिजातहरणम्, तन्मतान्तरभाषया निरूपितम्, तदग्रे विस्तरेण वक्ष्यामः । सुधर्मा देवसभा । नवरत्ननिर्मितेव भूमिरूपा काचित् देवता सुधर्मेत्युच्यते । यत्रा प्रवेशनमात्रेणैव धर्मो धर्मफलं च भवतीति । चकारादन्येऽपि सुरद्रुमाः । इन्द्रः सिंहासनादिकं च प्रस्थापितवानिति उभयोर्माहात्म्यं वर्णयति यत्र चेति । यत्र सुधर्मायाम्, चकारात् पारिजाता धर्मश्च । अनेन समीपे विद्यमानः सर्वदा नियतमरणधर्मापि तैः स्वाभाविकैः मर्त्यधर्मैः न युज्यते । अनेन पूर्वद षपरिहारोऽप्युक्तः । गुणास्तु सुधर्मापदेनैवोक्ताः । अन्यामपि सम्भृतिमाह श्यामैककर्णानिति । एकः कर्णः श्यामः दक्षिणः । शिष्टः सर्वोऽपि कुन्दसन्निभः । उच्चैः श्रवस एतद्वैलक्षण्यम् । अयं स्वर्गः कर्म चेति उभयबोधनार्थ प्रवृत्तिशास्त्रस्थाने श्यामता निरूपिता । ते चाश्वाः सैन्धवा एवेति ज्ञापयितुं वरुणेन प्रस्थापितमित्युक्तम् । अन्यत्र वर्णान्तरसम्भावना स्यादिति तन्निवृत्त्यर्थं शुक्ला इति । अव एव तेषां श्लाघ्य इति शुक्लाश्च ते मनोजवाश्चेत्युक्तम् । शुक्ले जवाभावमाशङ्क्य समास उक्तः । निधिपतित्वादष्टौ निधीन् प्रेषितवानिति गम्यते । अष्टौ लोकपालाश्च कोशान् भण्डारवस्तूनि । निजस्य स्वस्य स्वस्य अभ्युदयांश्च । ननु स्वयमनेकसुकृतेन प्राप्तं भोगसाधनमधिकारज्ञापकं च किमिति दत्तवन्त इत्याकाङ्क्षायामाह यद्यद्भगवता दत्तमिति । न हि तानि वस्तूनि स्वधर्मोपार्जितानि, किन्तु भगवता दत्तानि । यतस्तदाधिपत्यम्, ईश्वरेणैव ह्याधिपत्यं दीयते । तथापि प्रतिदाने को हेतुरिति चेत्, तत्राह स्वसिद्धय इति । स्वस्य सिद्धये । अधिकारो हीश्वरेच्छयैव भवति । सा च ज्ञातुमशक्येति यथा तन्नियतं भवति, तथोपायः कर्तव्यः, तद्भगवति दान एवाक्षयं भवति । अतः स्वस्य धनस्य अधिकारस्य वा सिद्धये सम्यङ्निष्पत्त्यर्थं सर्वं प्रत्यर्पयामासुः । ननु भगवता तत्कथं ग्राह्यमिति चेत्, तत्राह हरौ भूमिगत इति । भूमिरपि दत्ता ब्रह्मणे मानवे वा । पुनर्भक्तोद्धारार्थं स्वयमप्यागतः । तन्न्यायेन सर्वामपि समृद्धि भक्तेभ्यो दातुं प्रदर्शयितुं वा अपेक्षेतेति प्रत्यर्पणमुचितम् । एतदभिज्ञानाय नृपेति सम्बोधनम् ॥ ५५-५६ ॥ यदर्थमेतन्निर्माणं तदाह तत्रेति । अणिमादयो हि योगस्य सहजफलानि । इदं तु वक्ष्यमाणं योगस्यानुभावस्य फलम् । यथास्थितान् शयानान् सर्वानेव तेषां दुःखनिराकरणार्थं तत्र द्वारकायां नीत्वा स्वयं पुनरागतः । तत्रत्यप्रजानां देशवासिनां दुःखनिवृत्त्यर्थं बलभद्रं निरूप्य प्रजापालने अङ्गीकृते तेन प्रजापालने वस्तुतोऽपि रामेण रत्युत्पादकेन कृष्णः स्वयं सदानन्दः नातः परमत्र मथुरायां स्थेयमिति ज्ञापयन्निव साधनानुमतिं गृहीत्वा फलरूपः ॥ ५७ ॥ ततो निवृत्त इत्याह निर्जगामेति । नितरां गमनं नित्यसन्निधिरूपेणापि ततो निर्गत इति ज्ञापयितुम् । नित्यक्रियारूपेण तु वर्तत इति न काप्यनुपपत्तिः । पुरद्वारादिति निर्गमनं सर्वजनीनं भवत्विति । निर्गच्छता भगवता द्वयं ज्ञापितमिति विशेषणद्वयमाह पद्ममाली निरायुध इति । ततः कीर्तिर्नीता, रक्षा तु कृतेति । एवं निर्गमनस्य प्रयोजनमग्रे स्पष्टं भविष्यति ॥ ५८ ॥

इति श्रीभागवतसुबोधिन्यां श्रीमद्वल्लभदीक्षितविरचितायां दशमस्कन्धे उत्तरार्धे प्रथमाध्यायविवरणम् ॥ १ ॥

## श्रीसुबोधिनी–सारः

सुधर्मां सभां पारिजातं कल्पवृक्षं च हरेर्हरये महेन्द्रः शक्रः प्रैषयत् यत्र यस्यां सभायां आस्थितो मर्त्यो मर्त्यधर्मैः क्षुत्पिपासादिभिर्नार्द्यते ॥ ५५ ॥ शुक्लान् श्वेतवर्णान् मन इव जवो वेगो येषां तान् श्याम एकः कर्णो येषां तान् हयान् अश्वान् वरुणः प्रैषयत् । निजोदयान्स्वविभूतीरष्टौ कोशान् निधीन् "पद्मश्चैव महापद्मो मत्स्यकूर्मौ तथोदकः । नीलो मुकुंदः शंखश्च निधयोष्टौ प्रकीर्त्तिताः" इत्युक्तानणिमादीन् वा निधीनां पतिर्लोकपालः कुबेरः प्रैषयत् ॥५६॥ सर्वे सर्वं समर्पयन्नित्याह । स्वसिद्धये स्वाधिकारनिष्पत्त्यर्थं भगवता यद्यदाधिपत्यं दत्तं तत्तत्सर्वं प्रत्यर्पयांचक्रुः । कदेत्यत आह । हरौ भूमिगते नगरनिर्माणभूप्रदेशं गते सति हे नृप ॥ ५७ ॥ तत्र नगरे योगस्य प्रभावेण सर्वजनं नीत्वा संधाय प्रजापालेन त्वमत्र स्थितः प्रजाः पालयेतिरामेण कृतानुमंत्रः पद्ममाली निरायुधः शस्त्ररहितो हरिः पुरद्वारान्मथुरातो निश्चक्राम ॥ ५८ ॥

इति श्रीमद्भा० दशम० उत्त० सुबोधिन्यां टीकायां पंचाशोऽध्यायः ॥ ५० ॥

**विवरणटिप्पणी**

श्यामैककर्णानित्यत्र। उच्चैःश्रवस इति। स सर्वोऽपि कुन्दसन्निभः। एतद्वैलक्षण्यमित्यर्थः। अयमिति। एकः कर्णः प्रवृत्तिशास्त्ररूपः, एको निवृत्तिशास्त्ररूपः। तत्रायं वामः प्रवृत्तिशास्त्ररूपः कर्णः स्वर्गरूपः, तत्साधनकर्मरूपश्च। उभयोरपि दोषशङ्काकलुषितत्वाच्छ्यामत्वमित्यर्थः। निर्जगामेत्यत्र। रक्षा त्विति। एतत्प्रकरणीयलीलायाः प्रद्युम्नचरित्रत्वाद्वन्धुरक्षार्थमायुधग्रहणम्। स्थानदानेन रक्षायास्तु कृतत्वान्निरायुधो निर्गतः। तथा च निरायुधत्वेन रक्षाकरणं ज्ञापितमित्यर्थः॥ ५८॥

प्रथमाध्यायव्याख्या समाप्ता॥

**गोस्वामीश्रीगिरधरलालकृता बालप्रबोधिनी**

सुधर्माख्यां सभां पारिजाताख्यं वृक्षं च हरेः हरये महेन्द्रः प्राहिणोत् प्रस्थापयामास। सभां विशिनष्टि—यत्रेति। यत्र सभायां स्थितो मर्त्यो मनुष्यो मर्त्यधर्मः क्षुत्पिपासाशोकमोहजरामरणादिभिर्न युज्यते॥ ५५॥ वरुणस्तु श्याम एकः कर्णो येषां तान् सर्वतः शुक्लान् मनोवत् जवो वेगो येषां तान् हयान् प्राहिणोदित्यनुषङ्गः। निधिपतिः कुबेरः अष्टौ कोशान् "पद्मश्चैव महापद्मो मत्स्यः कूर्मस्तथौदकः। नीलो मुकुन्दः शङ्खश्च निधयोऽष्टौ प्रकीर्तिताः" इत्युक्तान् निधीन् प्राहिणोत्। तथाऽन्ये च लोकपाला निजोदयान् निजविभूतीन् प्रस्थापितवन्तः॥ ५६॥ 'चक्रवर्तिनि खण्डमण्डलेश्वराः स्वस्मिन् विद्यमानं उत्तमं वस्तु समर्पयन्त्येव तत्तु तव विदितम्' इति सूचयन् सम्बोधयति—नृपेति। अन्ये च सिद्धादयो यद्यदाधिपत्यं विभूतिविशेषं भगवता दत्तं तत्सर्वं हरौ भूमिं गते सति स्वसिद्धये स्वाधिकारसिद्ध्यर्थं स्वाधिकारनिश्चलतासिद्ध्यर्थं तस्मै प्रत्यर्पयामासुरित्यन्वयः॥ ५७॥ यथा कालयवनो माथुरा जनाश्च न विदुस्तथा योगस्य योगमायाख्याचिन्त्यशक्तेः प्रभावेण सर्वं स्वकीयं जनं तत्र द्वारकायां नीत्वा प्रापय्य प्रजापालेन रामेण सह समनुमन्त्रितः 'त्वमत्र स्थित्वा विशिष्टाः प्रजाः पालय, अहं पलायिष्ये' इति कृतानुमन्त्रः पद्ममाली निरायुधः आयुधरहित एव कृष्णः पुरद्वारान्निर्जगामेत्यन्वयः। 'एवं पुरनिर्माणादौ किं प्रयोजनं' तत्राह—हरिरिति। स्वाश्रितजनदुःखहरणशीलत्वात् तेषां दुःखनिवृत्त्यर्थमित्याशयः। द्वारकानयनप्रकारः पाद्मोत्तरखण्डे उक्तः—"सुषुप्तान् मथुरायां तु पौरांस्तत्र जनार्दनः। उद्धृत्य सहसा रात्रौ द्वारकायां न्यवेशयत्॥ प्रबुद्धास्ते जनाः सर्वे पुत्रदारसमन्विताः। हेमहर्म्यतले विष्टा विस्मयं परमं ययुः" इति। तथा भगवतः पलायनकारणमपि "कदाचित् गार्ग्यः शाल्येन त्वं षण्ढः इत्युक्तः, तदा यादवैरुपहसितः सोऽसौ क्रुद्धः सन् श्रीमहेशं प्रसाद्य यदुभीषणपुत्रं वरं लब्धवान्, ततश्च यवनेन्द्रेण अपुत्रेण स्वक्षेत्रे पुत्रोत्पादनाय प्रार्थितः स गार्ग्यः कालयवनमजीजनत् इति। श्रीकृष्णः श्रीमहादेवदत्तवरसत्यतासिद्ध्यर्थं पलायितः इति" पुराणान्तरप्रसिद्धं ज्ञेयम्॥ ५८॥

इति श्रीवल्लभाचार्य-वंश्यगोपालसूनुना। श्रीमन्मुकुन्दरायाणां पादसेवाधिकारिणा॥ १॥
श्रीमद्गिरिधराख्येन भजनानन्दसिद्धये। श्रीमद्भागवतस्येयं टीकाबालप्रबोधिनी॥ २॥
रचिता पञ्चाशत्तमो राजसानां निरोधने। दशमेऽगाज्जरासन्धयुद्धादिविनिरूपकः॥ ३॥

**अन्वितार्थप्रकाशिका**

सुधर्मामिति। यत्र च अवस्थितो मर्त्यो मनुष्यो मर्त्यधर्मैः क्षुत्पिपासाशोकमोहजरामरणादिभिर्न युज्यते तां सुधर्माख्यां देवताविशेषाधिष्ठितां सभां पारिजातं च हरेः हरये महेन्द्रः प्राहिणोत् त्यक्तवान्। शुकपरीक्षित्संवादात्पूर्वभावित्वाद्भूतनिर्देशः। यद्वा। किञ्चिन्न्यूनगुणं पारिजातं प्राहिणोत् प्रास्थापयत्। मुख्यपारिजातं तु हरिर्बलाद्धरिष्यति॥ ५५॥ श्यामेति। वरुणस्तु श्यामः एकः कर्णो येषां तान् सर्वतः शुक्लान् मनोवत् जवो वेगो येषां तान् हयान् प्राहिणोदित्यनुषङ्गः। निधिपतिः कुबेरः अष्टौ कोशान् "पद्मश्चैव महापद्मो मत्स्यः कूर्मस्तथापरः। नीलो मुकुन्दः शङ्खश्च निधयोऽष्टौ प्रकीर्तिताः।" इत्युक्तान् निधीन् प्राहिणोत्। तथाऽन्ये च लोकपाला निजोदयान् निजविभूतीः प्रस्थापितवन्तः। लोकपाल इत्येकत्वपाठे अन्यो लोकपाल इति॥ ५६॥ यद्यदिति। हे नृप! अन्ये च सिद्धादयः यद्यदाधिपत्यं विभूतिविशेषं भगवता दत्तं तत्सर्वं हरौ भूमिं गते सति स्वसिद्धये स्वाधिकारनिश्चलतासिद्ध्यर्थं तस्मै प्रत्यर्पयामासुः॥ ५७॥ तत्रेति सार्द्धम्। यथा कालयवनो माथुराश्च न विदुस्तथा योगस्य योगमायाख्याचिन्त्यशक्तेः प्रभावेण सर्वं स्वकीयं जनं तत्र द्वारकायां नीत्वा प्रापय्य पाद्मोत्तरखण्डे "सुषुप्तान् मथुरायां तु पौरांस्तावज्जनार्दनः। उद्धृत्य सहसा रात्रौ द्वारकायां न्यवेशयत्॥ प्रबुद्धास्ते जनाः सर्वे पुत्रदारसमन्विताः। हैमहर्म्यतले विष्टा विस्मयं परमं ययुः।" इतिप्रजापालेन रामेण समनुमन्त्रितः त्वमत्र स्थित्वा प्रजाः पालयाहं पलायिष्ये ततो यादवैरवध्यमेनं मुचुकुन्देन घातयिष्यामीति कृतानुमन्त्रः पद्ममाला निरायुधः आयुधरहित एव हरिः भक्तदुःखहरः कृष्णः पुरद्वारान्निर्जगाम। पद्ममालावत्त्वं नारदोक्तलक्षणापेक्षया निरायुधत्वं पलायनसौकर्यार्थम्॥ ५८॥

इति श्रीभागवते महापुराणे दशमस्कन्धेऽन्वितार्थप्रकाशिकायां पञ्चाशोऽध्यायः॥ ५०॥

**श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्**

पारिजातं सामान्यपारिजातवृक्षकलापम् । यत्र सुधर्मायां ॥ ५५ ॥ हरेः हरये निधिपतिः कुबेरः कोशान् निधीन् लोकपालाः । निजोदयान् स्वस्वसमृधीः प्राहिण्वन् प्रेषयामासुः ॥ ५६ ॥ येऽन्येऽधिकारिदेवास्तेऽपि स्वसिद्धये स्वाधिकारनिष्पत्तये भगवतायद्यदाधिपत्यं दत्तमभूत् त तत्तत्सर्वं ॥ ५७ ॥ हरियोगप्रभावेण योगैश्वर्येण सर्वजनं तत्र द्वारिकायां नीत्वा तदुक्तं पाद्मे सुषुप्तान् मथुरायां तु पौरांस्तत्रजनार्दनः । उद्धृत्य सहसा रात्रौ द्वारकायां न्यवेशयेत् । प्रबुद्धास्तेजनाः सर्वे पुत्रदारसमन्विताः हैमहर्म्यतले विष्ठा विस्मयं परमं ययुरिति रामं प्रति मथुरायां त्वं स्थित्वा प्रजाःपालयेतिरामं प्रत्युक्ते सति तथाऽहं करिष्यामीरि-दत्तोतरेण प्रजापालेन रामेण सहसं मनुमन्त्रितः कृतविचार इत्यर्थः मथुरामेत्यरामेणेत्यपि पाठः । यादवैरवध्यं यवनं मुचुकुन्देन घातयितुं पुरद्वारान्नगरगोपुराद्बहिर्निर्जगाम ॥ ५८ ॥

इति श्रीशुद्धैकांतधर्मप्रवर्त्तकानतकोटिजनसंसारसमुद्रोद्धारकदर्शनभजनकर्त्तृजनब्रह्मपुरारिस्वधामदर्शकसज्जनपद्मविकाशनाधर्मध्वांतनाश-कदिनमणिगुरुराजेंद्राश्रीसहजानन्दस्वामिशिष्यगोपालानन्दमुनिविरचिते निगूढार्थप्रकाशके पुराणार्के श्रीमद्भागवतस्यदशमस्कन्ध-व्याख्यानेद्वारकानिवेशननामपंचाशत्तमोऽध्यायः ॥ ५० ॥

**भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी**

श्यामेति । वरुणः तु, श्यामः कृष्णवर्णः एकः कर्णो येषां तान्, शुक्लान् श्वेतवर्णान्, सनोजवान् हयान् प्राहिणोदित्य-स्यानुषङ्गः । निधिपतिः कुबेरस्तु, अष्टौ कोशान् निधीन्, 'पद्मश्चैव महापद्मो मत्स्यकूर्मो तथौदकः । नीलो मुकुन्दः शङ्खश्च निध-योऽष्टौ प्रकीर्त्तिताः इति प्रसिद्धान्, प्राहिणोत् । तथा, लोकपाला अपि, निजोदयान् निजविभूतीः, प्राहिण्वन् ॥ ५५ ॥ यद्यदिति । अन्ये सिद्धादयश्चापि, भगवता स्वसिद्धये स्वाधिकारसिद्धयर्थं, यत् यत्, आधिपत्यं, दत्तं आसीत्, तत् तत् सर्वं, हे नृप, हरौ श्रीहरिकृष्णभगवति, भूमिगते भूमाववतीर्णे सति, तस्मै हरये, प्रत्यर्पयामासुः ॥ ५६ ॥ तत्रेति ॥ यथा कालयवनः माथुरा जनाश्च न जानीयुरिति शेषः । तथा, योगप्रभावेण योगमायातमिकाश्चर्यस्वशक्तिप्रभावेण, हरिः, सर्वजनं, तत्र दुर्गे, नीत्वा दुर्गं प्रापय्ये-त्यर्थः । प्रजापालिन प्रजाः पालयता, रामेण,समनुमन्त्रितः, हे आर्य अविदितैतत् पुरीयरथ्याप्रतोल्यादिकाः प्रजाः रथ्यादिप्रदर्शन-पूर्वमत्र स्थित्वा पालय, अहं मथुरामेत्य यवनेन वीक्षितस्तदग्रत एव पलायिष्ये, तं च रैवताद्रिगुहाप्रसुप्तमुचुकुन्ददृशा भस्मसात् कारयित्वा मुचुकुन्दमनुगृह्य पुनः जरासंधवेष्टितां मथुरां गमिष्यामि, त्वमपि पुनस्तत्रागच्छेः तत आवां नृचेष्टां स्वीकृत्य जरासन्धा-ग्रतः पलायनं करिष्याव इति कृतानुमन्त्र इत्यर्थः । कृष्णः, पद्ममाली पद्ममालाधरः, निरायुधः आयुधधारणरहितः भूत्वा, पुर-द्वारात् निर्जगाम । यदा गार्ग्यः श्यालेन षण्ढ इत्युक्तस्तदा यादवैरुपहसिते क्रुद्धोऽसौ श्रीमहेशं प्रसाद्य यदुभीषणं पुत्रं वरं लब्धवानेवं वरं लब्ध्वा आगच्छन् सोऽपुत्रेण यवनेन्द्रेण स्वक्षेत्रे पुत्रोत्पादनाय प्रार्थितः संस्तत्क्षेत्रे कालयवनमजीजनदिति पुराणे प्रसिद्धं, तत् सत्यं कर्त्तुं, निष्क्रान्तवान् ॥ ५७ ॥

इति श्रीधर्मधुरंधरश्रीधर्मात्मजप्रत्यक्षपुरुषोत्तमश्रीसहजानन्दस्वामिसुतश्रीरघुवीराचार्यसूनुभगवत्प्रसादाचार्यविरचितायामन्व-यार्थावबोधिन्यां भक्तमनोरञ्जन्याख्यायां श्रीमद्भागवतटीकायां दशमस्कन्धे उत्तरार्द्धे पञ्चाशत्तमोऽध्यायः ॥ ५० ॥

**कृष्णप्रिया**

महाराज इस दिव्य नगर में भक्ति निष्ठा से महाराज इन्द्र ने भगवान श्रीकृष्ण की सेवा में पारिजात वृक्ष एवं सुधर्मा सभा को भेज दिया । राजन् दिव्यश्री इस सभा में विराजमान विराजमान सदस्यों को भूव-तरस आदि पाञ्चभौतिक देह धर्म छू नहीं सकते थे ॥ ५५ ॥ राजन् इस नगर में श्रीवरुणदेव ने श्याम वर्ण वाले विपुल संख्या में अब भेज दिये थे । अश्वों की चाल गज जैसी थी । निधिपति भगवान कुबेर ने अपनी आठ निधियाँ भगवान को सेवा में भेज दी और अन्य लोकपालों ने अपनी अपनी विभूतियाँ भगवान् की सेवा में भेजी ॥ ५६ ॥ राजन् भगवान् श्रीकृष्ण ने सर्व लोकपालों को अपने-अपने अधिकारों के निर्वाह के लिये जो-जो सिद्धियाँ और विभूतियाँ समर्पित की थी । राजन् भगवान् श्रीकृष्ण भूतल पर जब लीला विस्तार के लिये पधारे तब लोकपालों ने सर्व सम्पत्तियाँ निज नाथ को समर्पित कर दी ॥ ५७ ॥ सागर में दिव्यपुर निर्माण के बाद भगवान् श्रीकृष्णने अपने परिवारजन-स्वजन-सम्बन्धिजन सर्व प्रजाजन को अपनी अचिन्त्य माया शक्ति से श्रीद्वारिकाजी में पहुँचा दिया । अवशिष्ट प्रजाजन के सरक्षणार्थ श्रीबलभद्रजी को मथुराजी में रहने का निवेदन किया और अपने अस्त्र-शस्त्र लिये बिना अकेले नगर के मुख्य द्वार से बाहर निकले ॥ ५८ ॥

**श्रीमद्भागवत दशमस्कन्ध उत्तरार्द्ध में श्रीद्वारिका निर्माण प्रवेश कथन का निरूपण करने वाला ५० अध्याय का भाषान्तर समाप्त ॥**

# अथैकपञ्चाशत्तमोऽध्यायः

| श्लोकाः | अनु. | वंश. | मि. उ. | मालि. | उ. | उ. अ. | अ. अ. | श्लो. अ. | सं. श्लो. अ. | सं. श्लो. अ. |
|---|---|---|---|---|---|---|---|---|---|---|
| ६४ | ५१ | ३ | ९ | १ | ८ | ५० | ४४ | २२८४ | २३७८ | ७४। २ |

**श्रीशुक उवाच**

तं विलोक्य विनिष्क्रान्तमुज्जिहानमिवोडुपम् । दर्शनीयतमं श्यामं पीतकौशेयवाससम् ॥ १ ॥

श्रीवत्सवक्षसं भ्राजत्कौस्तुभामुक्तकन्धरम् । पृथुदीर्घचतुर्बाहुं नवकञ्जारुणेक्षणम् ॥ २ ॥

नित्यप्रमुदितं श्रीमत्सुकपोलं शुचिस्मितम् । मुखारविन्दं बिभ्राणं स्फुरन्मकरकुण्डलम् ॥ ३ ॥

वासुदेवो ह्ययमिति पुमाञ्छ्रीवत्सलाञ्छनः । चतुर्भुजोऽरविन्दाक्षो वनमाल्यतिसुन्दरः ॥ ४ ॥

**अन्वयः**

अन्वयः—श्रीशुक उवाच—उज्जिहानम्, उडुपम्, इव, ( पूर्वस्यांदिशि उदीयमानम् पूर्णचन्द्रम् इव ) दर्शनीयम्, श्यामम्, पीतकौशेयवाससम्, श्रीवत्सवक्षसम्, भ्राजत्कौस्तुभामुक्तकन्धरम्, पृथुदीर्घचतुर्बाहुम्, नवकञ्जारुणेक्षणम्, नित्यप्रमुदितम्, श्रीमत्सुकपोलम्, शुचिस्मितम्, मुखारविन्दंबिभ्राणम्, स्फुरन्मकरकुण्डलम्, विनिष्क्रान्तम्, तम्, विलोक्य, श्रीवत्सलाञ्छनः, चतुर्भुजः, अरविन्दाक्षः, वनमाली ॥ १–४ ॥

**श्रीधरस्वामिविरचिता भावार्थदीपिका**

एकपंचाशत्तमेऽह्नमुचुकुन्ददृशा हरिः । यवनं मुचुकुन्देन स्तुतः सन्नन्वकंपत ॥ १ ॥

यवनेन्द्रसुतात्कालयवनाद्यदुभीषणात् । हरिर्हरगिरः स्वैरं पालनायापलायत ॥ २ ॥

यदा गार्ग्यः श्यालेन षंढ इत्युक्तस्तदा यादवैरुपहसिते क्रुद्धोऽसौ श्रीमहेशं प्रसाद्य यदुभीषणं पुत्रं वरं लब्धवान् । ततश्च यवनेन्द्रेणापुत्रेण स्वक्षेत्रे पुत्रोत्पादनाय प्रार्थितो गार्ग्यः कालयवनमजीजनदिति पुराणेप्रसिद्धम् । पुरद्वारान्निष्क्रान्तम् । उज्जिहान-मुद्गच्छन्तम् ॥ १–२ ॥ नित्यप्रमुदितमित्यादि मुखारविंदविशेषणम् ॥ ३–४ ॥

**श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः**

मुचकुन्दो राजा, तद्दृशा दृष्ट्या ( १ ) । यदून्भीषयते भययुक्तान्करोतीति तथा तस्मात् । हरगिरः शिववाचः ( २ ) । पुराणे विष्णुपुराणे प्रसिद्धम् । तथाहि—"गार्ग्यं गोष्ठ्यां द्विजं श्यालः षंढ इत्युक्तवान्यदा । यदूनां सन्निधौ सर्वे जहसुर्यादवास्तदा ॥ सुतमिच्छंस्तपस्तेपे यदुचक्रभयावहम् । आराधयन्महादेवं सोऽयश्चूर्णमभक्षयत् ॥ ददौ वरं तु संतुष्टो वर्षे हि द्वादशे शिवः । संयोजयामास च तं यवनेशो ह्यनात्मजः ॥ तद्योषित्संगमाच्चास्य पुत्रोऽभूदलिसन्निभः । तं कालयवनं नाम राजानं प्राहुरुत्तमाः ॥" इति । गार्ग्यः शैशिरायणः । श्यालोऽपि यादवपुरोहितः, स च हस्तेन गार्ग्यलिंगं चालयन्यदोत्थानं न ददर्श तदा 'गार्ग्यः षंढः' इति प्रोवाचेत्यर्थः । तं कृष्णम् । उज्जिहीत इत्युज्जिहानस्तम् 'ओ–हाङ्–गतौ' शानच् ॥ तमिति षट्कम् । विनिष्क्रान्तमित्यादि–विशब्देन सम्यङ्निष्क्रम एव तस्य निश्चयोऽभूदिति ध्वनितम् । उज्जिहानमित्यादिना श्रीकृष्णमाधुर्यवर्णनं स्वप्रेमतस्तत्स्वभाव-वर्णनापेक्षयैव न तु यवनस्यानुभवापेक्षया, तत्र सति वैराऽसंभवात् "नाहं प्रकाशः सर्वस्य योगमायासमावृतः" इति श्रीगीतोक्तेश्च । यथा तिक्तादिरुचिस्वभावाः खंडादिमाधुर्यं नानुमोदन्ते इति तद्ग्रहणाभास एव तेषां, तद्वत्तदेवमहो पश्यंतोपि न पश्यन्तीति भावः ॥ १ ॥ "आमुक्तः प्रतिमुक्तश्च पिनद्धश्चापिनद्धवत्" इत्यमरः । कौस्तुभेनामुक्ता पिनद्धा कन्धरा यस्य तम् ॥ पृथुदीर्घ-चतुर्बाहुमिति श्रीनारदोपदेशानुसारेणोदयात्, तेन तथोपदेशश्च विलक्षणलिङ्गेन शीघ्रमसौ निश्चिनोत्विति । नवकंज इवारुणे ईक्षणे नेत्रे यस्य तम् 'अव्यक्तरागस्त्वरुणः' इत्यमरः ॥ २ ॥ सच्चिदानन्दस्वरूपत्वान्नित्यप्रमुदितमिति । श्रीमत्कांतियुक्तम् । प्रशंसायां मतुप् । सुकपोलमित्यवयवसौष्ठवोपलक्षणम् । शुचिस्मितमिति विलासस्य स्फुरदित्यादिविषस्य ॥ ३ ॥ अय प्रत्यक्षदृश्यः । द्वयोरन्वयः । षट्केऽपि वासुदेव इति सार्धमवांतरमन्वितम् । इत्येतैर्लक्षणैर्वासुदेव एवायमिति भवितुमर्हति नान्य इति संबन्धः । इति शब्दो वासुदेवपरामर्शकः ॥ ४ ॥

### श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी

तमिति षट्कम् । विनिष्क्रान्तमिति विशब्देन सम्यक् निष्क्रम एव तस्य निश्चयोऽभूदिति ज्ञापितम् उज्जिहानमित्यादिना श्रीकृष्णमाधुर्य्यवर्णनं स्वप्रेमतस्तत्स्वभाववर्णनापेक्षययैव नतु यवनस्यानुभावापेक्षया तत्र सति वैरासम्भवात् "नाहं प्रकाशः सर्वस्य योगमायासमावृतः" इति श्रीगीताभ्यश्च यथातिक्तादिरुचि स्वभावाः खण्डादिमाधुर्य्यं नानुमोदन्त इति तद्ग्रहणाभास एव तेषां तद्वत् तदेवमहो पश्यन्तोऽपि न पश्यन्तीति भावः । पृथुदीर्घचतुर्बाहुमिति श्रीनारदोवदेशानुसारेणोदयात् तेन तथोपदेशश्च विलक्षणलिङ्गेन शीघ्रं निश्चिनोत्यसाविति नवकञ्जे इव अरुणे ईक्षणे यस्य तं "अव्यक्तरागस्त्वरुणः" इत्यमरः । श्रीमत्कान्तियुक्तं प्रशंसायां मतुप् सुकपोलमित्यवयवसौष्ठवस्योपलक्षणं शुचिस्मितमिति विलासस्य स्फुरदित्यादिवेषस्य षट्केऽपि वासुदेव इति सार्द्धमवान्तरमन्वितम् इति एतैर्लक्षणैर्वासुदेव एवायं भवितुमर्हति नत्वन्य इति सम्बन्धः लक्षणान्येवाह—पुमानित्यादिना। तस्मान्निरायुध इति इतीति वासुदेव इत्यादिपरामर्शकं प्रकर्षेण लीलाविशेषेण च आ ईषद्द्रुतगत्या द्रवन्तं जिघृक्षुरिति तस्यगर्वितत्वं दुरापमित्युपहासास्पदत्वं च व्यञ्जितम् ॥ १-६ ॥

### श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी

विशेषेण एकाकितया पद्भ्यामेव लीलागतया निष्क्रान्तं सन्तम्, उज्जिहानमुडुपमिवेति—मनोनयनाह्लादक-तेजोमण्डलव्याप्तत्वम्, अतो दूरतोऽपि सम्यग् दृश्यत्वञ्चोक्तम्, दर्शनीयतमं परममहासुन्दरं तमेव दर्शयति—श्याममित्यादिविशेषणैः ॥ १ ॥ पृथुदीर्घचतुर्बाहुमिति श्रीनारदेन तादृशरूपस्यैव सदा दृश्यमानतया यवनं प्रति तथैवोक्त्या तस्मिन् तादृशपरिस्फूर्त्तेः । दृश्यमानतया पवनं प्रति तथैवोक्त्या तस्मिन् तादृशपरिस्फूर्त्तेः । नवकञ्जवरुणे ईक्षणे यस्य तमिति केवलमारुण्ये उक्तेऽपि नवशब्दादि-बलेन विशालत्वप्रसन्नत्वादिकं ज्ञेयमेव, तयोस्तत्तन्नित्यत्वात् । नित्यं प्रकर्षेण मुदितमिति सदा सुप्रसन्नतोक्ता, अत एव श्रीमत् सर्वशोभायुक्तम्, श्रीमत्त्वे हेत्वन्तरमप्याह—सुकपोलमित्यादिविशेषणैस्त्रिभिः । बिभ्राणं दधतमपि तत्तद्विशेषणविशिष्टत्वे तात्पर्य्यम्, किंवा प्रकटयन्तमित्यर्थः । हि एव, वासुदेवः श्रीवसुदेवनन्दन एव श्रीवत्सलाञ्छनत्वादीन्यसाधारणलक्षणानि । वनमालीति—पूर्वोक्तपद्मगालाया एवापादतललम्बितत्वादंतिं सुन्दर इति पूर्वोक्तमनुक्तञ्च परमसौन्दर्य्यं संगृह्णाति ॥ ४ ॥

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम्

उज्जिहानम् उद्गच्छन्तम् ॥ १—३५ ॥

### श्रीमद्वीरराघवाचार्यकृता भागवतचन्द्रचन्द्रिका

दुष्कृन्निग्रहसाध्वनुग्रहावेकेन भगवच्चेष्टितेन दर्शयन् कथाशेषमाह—तमित्यादिना । पुरद्वाराद्विनिष्क्रान्तं तं श्रीकृष्णमवलोक्य नारदोक्तैरेतैर्लक्षणैरयं पुमान् वासुदेवो नान्यो भवितुमर्हत्ययं च निरायुधोऽनेन पद्भ्यामेव चलन्निरायुधश्चाहं योत्स्यामीति निश्चित्य पराङ्मुखं प्राद्रवन्तं तम् अन्वधावदित्यन्वयः तं कथंभूतम् ? उज्जिहानं उद्गच्छन्तम् उडुपं चन्द्रमिव स्थितमतीव दर्शनीयं पीते कौशेये वाससी यस्य तम् ॥ १ ॥ श्रीवत्सो वक्षसि यस्य भ्राजता कौस्तुभेनाऽऽमुक्ता बद्धा अलङ्कृतेति यावत् सा ग्रीवा यस्य पृथवः पीनाः दीर्घाः चत्वारो बाहवो यस्य नवकञ्ज इवारुणे ईक्षणे यस्य तम् ॥ २ ॥ नित्यप्रमुदितेत्यादि । मुखारविन्दविशेषणं श्रीमत्सौन्दर्य्यसम्पद्वच्छोभनौ कपोलौ यस्मिन् शुचि विशुद्धं स्मितं यस्मिन् स्फुरन्ती मकराकारे कुण्डले यस्मिन् तथाभूतं मुखारविन्दं बिभ्राणम् ॥ ३ ॥ श्रीवत्सो लाञ्छनं चिह्नं यस्य चत्वारो भुजा यस्य अरविन्दे इवाक्षिणी यस्य वनमालाऽस्यास्तीति तथा व्रीह्यादित्वान्मत्वर्थीयः ॥ ४ ॥

### श्रीविजयध्वजतीर्थकृता पदरत्नावली

उज्जिहानमुद्यन्तम् ॥ १-५ ॥

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः

उज्जिहान इत्यादिना श्रीकृष्णमाधुर्य्यवर्णनं स्वप्रेमतस्तत्स्वभाववर्णनापेक्षैव येन तु यवनस्यानुभावापेक्षया तत्र वैरासम्भवात् अतस्तिक्तादिस्वभावानां खण्डादिचर्व्वणदेवेदं ज्ञेयम् ॥ १—७ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

एकपञ्चाशत्तमे श्रीमुचुकुन्दो दृशाऽदहत् । यवनं तुष्टुवे कृष्णं स तुष्टोऽस्मै वरं ददौ ॥

उज्जिहानमुद्गच्छतं प्रकटितमपि अन्यैर्यथायोगमास्वाद्यमानमपि भगवन्माधुर्य्यमसुरा वैरभावादेवानुभवितुं चक्षुर्भ्यां पश्यन्तोऽपि न शक्नुवन्तीति ज्ञापयितुं दर्शनीयेत्यादिना सौन्दर्यं वर्णितं प्राद्रवन्तं पलायमानम् ॥ १-६ ॥

### गूढार्थदीपिनी

यवनं दग्धवानेकपञ्चाशत्तम ईश्वरः । मुचुकुन्ददृशा तेन स्तुतस्तस्मै वरानदात् ॥ १ ॥

तमिति षट्कम् । तं कृष्णम् विनिष्क्रान्तम् उज्जिहीते इति उज्जिहानस्तम् उद्यन्तं चन्द्रमिव । ओहाङ्गतौ शानच् । भ्राजता कौस्तुभेन आयुक्ता बद्धा ग्रीवा यस्य । नित्यैत्यादि पञ्च विशेषणानि मुखारविन्दस्य । श्रीमत् इत्यत्र प्रशंसायां मतुप् । वासुदेव इति सार्द्धम् । श्रीवत्सेति द्विरुक्तिरावेशात् । पराङ् मुखं पृष्ठं दर्शयन्तम् ॥ १-६ ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

एकपञ्चाशत्तमे कालयवनस्य प्रतिकूलभक्तस्य हरितद्भक्तद्विषो वधो मुचुकुन्दे हरिभक्ते भगवदनुग्रहश्च वर्ण्यते–तं विलोक्येति । तं श्रीकृष्णं पुराद्विनिष्क्रान्तम् विलोक्य नारदप्रोक्तैर्लक्षणैरयं पुमान् वासुदेवः अयं च निरायुधः । अतोऽहमपि पद्भ्यां चलन् अनेन निरायुध एव योत्स्ये इति निश्चित्य तं पराङ्मुखं प्राद्रवन्तमन्वधावदिति षण्णामन्वयः दर्शनीयः क्षरो देहादिः दर्शनीयतरो क्षरो जीवः । दर्शनीयतमः पुरुषोत्तमस्तम् ॥ १ ॥ श्रीवत्सो वक्षसि यस्य तं भ्राजता कौस्तुभेन आमुक्ता बद्धा कन्धरा यस्य तम् ॥ २ ॥ नित्यप्रमुदितं मुखारविन्दं बिभ्राणम् ॥ ३-६ ॥

### श्रीसत्यधर्मकृता श्रीभागवतटिप्पणी

हरिः ॐ ॥ तृतीये मासि । पद्न्निति मासशब्दस्य मासित्यादेशः ॥ १ ॥ मत्स्यसहितान्नालवान् ॥ २ ॥ कुलिन्दादिदेशान् ॥ ३ ॥ मद्रान्मद्राधिपान् ॥ ४ ॥

### श्रीमद्वल्लभाचार्य्यकृता सुबोधिनी

निग्रहं प्रथमेऽध्याये निरूप्य हरिणा कृतम् । द्वितीयेऽनुग्रहं प्राह मुचुकुन्दाय यत्कृतम् ॥ १ ॥
तामसी हननाख्या हि राजसी नगरोद्यमा । सात्त्विकी नयनाख्या च निर्गुणा निर्गमस्तथा ॥ २ ॥
निर्गुणस्य निमित्तत्वं न तु कर्तृत्वमीर्यते । प्रबोधो मरणं चैव संवादश्च यथाक्रमात् ॥ ३ ॥
स्तुतिश्च निर्गुणा प्रोक्ता तदग्रे हि फलिष्यति ।
अतो निर्गुणलीलात्र द्वितीये विनिरूप्यते । क्रिया भगवतो द्वेधा गुणेषु स्वे यतः स्थिता ॥ ४ ॥

पूर्वाध्यायान्ते तत्त्वान् परित्यज्य केवलं तं व्यामोहयितुं कीर्तिमयीं वनमालां बिभ्रत् निर्गत इत्युक्तम्, कालयवनस्य मुक्त्यर्थं नारदोपदेशं गृहीतवतः साक्षात्कारः । ततस्तदनुसरणम्, ततो दृष्ट्या ज्ञानरूपेण ज्ञानाग्निना संघातनाशश्च निरूप्यते । निर्गुणक्रियाया मोक्षपर्यवसानात् । परं तस्य काल एव मुक्तिरिति निरूपयितुं द्वादशभिर्निरूप्यते तं विलोक्येति । तं विलोक्य वासुदेवोऽयमिति निश्चित्य, तं जिघृक्षुरन्वधावदिति षष्ठेन सम्बन्धः । तत्रादौ त्रिभिस्तदृष्टं रूपं वर्णयति । पञ्चदशकलापूर्णमिव तावद्भिर्विशेषणैः । अतः प्रथमतः चन्द्रदृष्टान्तेनैव निरूपयति । विशेषेण निष्क्रान्तम्, यथा उदयाद्रेश्चन्द्रः, न तु राहोर्मुखात्, नापि मेघेभ्यः । तथा भगवानपि न मारयितुं, नापि भयमुत्पादयितुं, भयेन वेति तदाह उज्जिहानमिति । प्रथमदर्शनापेक्षया द्वितीयदर्शने अधिककान्तियुक्तः प्रतीयत इति । ननु विशेषकान्तिप्रदर्शनं किमर्थमित्याशङ्क्याह उडुपमिवेति । चन्द्रो हि नक्षत्राणां रक्षमः । यदि तत्तन्नक्षत्रे न गच्छेत्, गत्वा वा तं न प्रकाशयेत्, स्वरूपतः फलतश्च, तदा नक्षत्राणां वैयर्थ्यमेव स्यात् । तथा भगवान् नारदादीनां रक्षार्थं तदुपदिष्टेषु स्वानुभावं ख्यापयितुं प्रतिक्षणं रूपवैशिष्ट्यं प्रकाशितवानित्यर्थः । किञ्च, तस्मिन् दृष्टे युद्धार्थं समागतानां क्रोधः कदाचिद्भवेत्, ततश्चासन्मतया मोक्षो न भवेदिति भगवात्स्वस्वरूपं सुन्दरत्वेनैव प्रकाशितवानित्याह दर्शनीयतममिति । दर्शनीयोऽतिसुन्दरः । अत्याश्चर्यं हि परस्मै प्रदर्श्यते । स्वस्यापि पुनः पुनर्द्रष्टव्यो भवति । श्याममिति । रसात्मकता निरूपिता । सर्ववेदयुक्तत्वमाह पीतकोशेयवाससमिति । नग्नान्न मुक्तिरिति वैदिकः सिद्धान्तः । 'आद्यन्तमध्ये बद्धो हि वेदेनामृतमश्नुत' इति ।

कच्छाशिखोपवीतानि बन्धनान्याह वेदतः ।

पीतवर्णं कौशेयं वासो यस्येति । वेदो यज्ञो देवाश्च पदत्रयेण परिगृहीताः । छन्दोमयं पीतमिति । कौशेयं क्षौमम् । 'सौम्यं वै क्षौम'मिति श्रुतेः । सर्वदैवत्यं वास इति च । अन्यथा पीताम्बरमित्येव ब्रूयात् । भगवदीयं हि न प्राकृतप्रकृतिकं भवतीति विशेषणवैयर्थ्यं च ॥ एवं धर्मरूपतां निरूप्य अर्थरूपतामाह श्रीवत्सवक्षमिति । श्रीवत्सो वक्षसि यस्येति । दक्षिणावर्तरोमरेखायां सुवर्णरेखावत्तेजोविशेषः श्रीवत्सशब्देनोच्यते । वक्षसि जीवः सन्निहित इति तत्रैव भगवता अर्थः स्थापितः सुतराम् । दक्षिणः स्तनो धर्मो भवतीति धर्मप्रतिष्ठित एवार्थो भगवता परिगृहीतः । अत एव तत्र जीवप्रतिषपाह । भ्राजत्कौस्तुभेनामुक्ता कन्धरा यस्येति । 'पुरुषः काममय' इति कामस्तन्निरूपणेन निरूपितः । मोक्षस्तु स्वेनैव दीयत इति प्रसङ्गादन्यदानमपि चतुर्भुजत्वेन

निरूपयति पृथुदीर्घेति। पृथवो दीर्घाः चत्वारो भुजा यस्येति। कृपया ज्ञानमपि प्रयच्छतीति ज्ञापनार्थमाह नवकञ्जारुणेक्षणमिति। नवकमलवदरुणे ईक्षणे यस्य। नूतनत्वेन कालाग्रासः, कञ्जत्वेन सात्त्विकता, अरुणत्वेन राजसता च, ईक्षणस्य निरूपिता। तेन सरसा सदया ज्ञानदृष्टिर्भगवदीया भक्तिं साधयतीति पञ्चमोऽपि पुरुषार्थो निरूपितः। प्रार्थनावसर इति ख्यापयति नित्यप्रमुदितमिति। एवं सर्वपुरुषार्थदातारं भगवन्तं निरूप्य, मुखारविन्दमपि पञ्चभिर्विशेषणैः विशिष्टं पञ्चपर्वविद्यारूपं स्वतन्त्रभक्तिमार्गत्वेन निरूपयन्नाह श्रीमदिति। मुखारविन्दं बिभ्राणमिति भगवद्विशेषणम्। स मार्गो भगवतैव स्थाप्यत इति ख्यापयितुम्। तदपि श्रीयुक्तं भवति परमसुन्दरम्। भगवानिव। सुष्ठु कपोले यस्येति। प्रवृत्तिनिवृत्तिप्रकारेणापि रसानुभवस्थानयुक्तम्। शुचि शुद्धं स्मितं यस्मिन्निति। सेवनार्थमेव समीचीनं मोहं सम्पादयति, नान्यथेति निरूपितम्। स्फुरन्ती मकरसदृशे कुण्डले यस्येति। बहिर्निर्गमने ग्रासार्थं स्थापिताविव मकरतुल्यौ वेदौ निरूपितौ। मोक्षदित्सया गच्छन् भगवन्मार्गं भक्तिमार्गं च स्थापयतीति निरूपितम् ॥ ३ ॥ एतादृशो भगवानेव भवतीति नारदशिक्षया ज्ञातवानित्याह वासुदेवो ह्ययमिति। सत्त्वे आविर्भूतः मोक्षदाता वा अयमेव वासुदेव इति निश्चयं कृतवान्। कथं निश्चय इत्याशङ्क्य असाधारणानि षड्गुणरूपाणि षड्विशेषणान्याह। इतीति निश्चयार्थः। यतः पुमान्, न तु प्रकृतिः। दिव्यदृष्ट्या पश्यतीति सर्वजगतः प्राकृतत्वं, भगवतः पुरुषत्वं च, दृष्टवान्। अनेनैश्वर्यमपि निरूपितम्। 'विष्णोस्तु त्रीणि रूपाणी'ति वाक्यात् तेषां पुरुषरूपत्वं न बाधकम्, प्रत्युत मूलस्य पुरुषत्वे तेषां पुरुषरूपत्वमुपपद्यत इति साधकत्वमेव। श्रीवत्सो लाञ्छनं यस्येति। क्रियाशक्तिः पूर्णा वीर्यत्वेन निरूपिता। भगवत्येव सा यतः। ततो यशो निरूपयन् सर्वपुरुषार्थदातृत्वे तद्भवतीति चतुर्भुजत्वमाह। ततो दृष्ट्यैव तापहारकत्वं भक्तिप्रदत्वेन निरूपयति अरविन्दाक्ष इति। रविव्यतिरिक्तान् सर्वानेव द्यति खण्डयति। महातेजस्विनमेव स्थापयतीति तादृशमक्षि निरूपयन् श्रियं भक्तिं च निरूपितवान्। वनमालां अन्तः प्रवेश्य ज्ञानवत्तिष्ठतीति ज्ञाननिरूपणेन पूर्णता निरूपिता। अतिसुन्दरः सर्वथा कल्मषाभावात्। देशपरित्याग एव हि वैराग्यमिति। अतः कारणात् वासुदेव इति निश्चयः ॥ ४ ॥

### श्रीसुबोधिनी-सारः

शुकोक्तिः। उज्जिहानं उद्गच्छन्तमुडुपं चन्द्रमिव विनिष्क्रान्तं दर्शनीयतममतिसुन्दरं श्यामं श्यामवर्णं घनश्यामं वा पीताम्बरम् ॥ १ ॥ श्रीवत्सो वक्षसि यस्य भ्राजता कौस्तुभेनामुक्ता व्याप्ता कन्धरा यस्य पृथवो दीर्घाश्चत्वारो बाहवो यस्य नवकञ्जवत् अरुणे ईक्षणे यस्य तम् ॥ २ ॥ नित्यप्रमुदितं सदोज्जृंभितं श्रीमन्तौ सुष्ठु कपोलौ यस्मिन् शुचि स्मितं यस्मिन् तत् स्फुरंती मकराकारे कुण्डले यस्मिंस्तन्मुखारविंदं बिभ्राणं तं श्रीकृष्णं विलोक्य दृष्ट्वा श्रीवत्सचिह्नः पद्मनेत्रो वनमाली अतिरम्यः चतुर्भुजो वासुदेवः पुमानयमिति एवं भवितुमर्हति ॥ ३-४ ॥

### विवरणटिप्पणी

द्वितीयेऽध्याये। निर्गुणस्येति। निर्गुणस्वरूपस्य कर्तृत्वाभावान्निर्गमलीलाविष्टस्य स्वरूपस्य यवनवधे निमित्तत्वम्, नतु वधकर्तृत्वमित्यर्थः। अत्रापि लीलाचतुष्टयमित्याशयेनाहुः प्रबोधः इति। मुचुकुन्दस्य जागरणं यवनस्य मरणं मुचुकुन्देन भगवतः सम्वादश्च सात्त्विकतामसराजसा इत्यर्थः। तदग्रे ह्रीति। निर्गुणस्वरूपेण मुचुकुन्दस्य दत्तं मोक्षलक्षणं फलं जन्मान्तरे फलिष्यतीत्यर्थः। अत इति। पूर्वाध्यायोक्ता निर्गुणलीला न फलपर्यवसायिनीं, अतोऽविशेषाल्लीलाचतुष्टयमपि तत्राध्यायार्थः। अत्र तु निर्गुणलीला मोक्षलक्षणं फलं फलिष्यति। अतः फलसम्बन्धादत्र निर्गुणलीलैवाध्यार्थ इत्यर्थः। गुणेष्विति। गुणेषु स्थिता सगुणा। स्वे स्वरूपे स्थिता निर्गुणेत्यर्थः। तत्त्वानीति। चतुर्णामायुधानां तत्वरूपत्वान्निरायुधपदेन तत्त्वपरित्याग उक्त इति भावः। एतदाशयेनैव निर्गमलीलाया निर्गुणत्वमुक्तमिति भावः। परं तस्येति। ये च प्रलम्बेत्यत्र यवनस्य मुक्तिर्निरूपिता। परन्तु कालरूपे एवेत्यर्थः। तं विलोक्येत्यत्र। नारदादीनामिति। वाक्यस्येतिशेषः। उडुरक्षार्थं चन्द्र इव नारदादिवाक्यरक्षार्थं भगवानागतः। अतस्तस्योडुषु गमनमिव भगवतो नारदवाक्यानुगमनमिति भावः। सौम्यं वै क्षौममिति। सौम्यं सोमलतासम्बन्धि यज्ञार्हमित्यर्थः। बहिर्गमन इति। मुखस्य भक्तिरूपत्वेन भक्तिमार्गाद्बहिर्निर्गमने वेदग्रासः कालाधीनत्वं भवतीत्यर्थ। कपोलयोः प्रवृत्तिनिवृत्तित्वस्योक्तत्वात्तत्र स्थितयोः कुण्डलयोर्वेदत्वमुक्तम्। भगवन्मार्गमिति। भगवत्त्वं ब्रह्मभावस्तत्साधकं मार्गं सांख्ययोगमार्गमित्यर्थः। कुण्डलयोः साङ्ख्ययोगरूपत्वादिति भावः। भक्तिमार्गमिति। मुखस्य भक्तिरूपत्वादिति भावः। ननु 'विष्णोस्त्वि'तिवाक्यादक्षरस्य पुरुषत्वम्, नतु पुरुषोत्तमस्येत्याशङ्क्याहुः विष्णोस्त्विति। इतिवाक्यात्तेषां रूपाणां पुरुषत्वं पुरुषोत्तमस्य पुरुषत्वे बाधकं न, किन्तु मूलस्य पुरुषोत्तमस्य पुरुषत्वात्तेषामपि पुरुषत्वं जातमिति साधकत्वमेव तस्येत्यर्थः।

### गोस्वामीश्रीगिरधरलालकृता बालप्रबोधिनी

एकपञ्चाशत्तमे तु यवनस्य वधस्तथा। संस्तुतो मुचुकुन्देन कृष्ण इति निरूप्यते ॥ १ ॥

दुष्टनिग्रहसाध्वनुग्रहावेकेनैव भगवच्चरितेन दर्शयन्नग्रिमकथामाह—तमित्यादिना। पुरद्वाराद्विनिष्क्रान्तं निसृतं तं कृष्णमवलोक्य "नारदोक्तैर्लक्षणैरयमेव पुमान् वासुदेवो भवितुमर्हति, न ततोऽन्यो भवितुमर्हति, अयं च निरायुधः पद्भ्यामेव

चलति, अतोऽहमपि निरायुधः पद्भ्यामेव चलन्ननेन सह योत्स्योमि" इति निश्चित्य पराङ्मुखं प्राद्रवन्तं तं जिघृक्षुः यवनः अन्वधावदिति षण्णामन्वयः। नारदोक्तानि लक्षणान्येन दर्शयति—उज्जिहानं उद्गच्छन्तमुडुपं चन्द्रमिव दर्शनीयतमं अतिसुन्दरम्, श्यामम्, पीते कौशेये वाससी यस्य तम् ॥ १ ॥ श्रीवत्सो दक्षिणावर्तरोमरेखायां सुवर्णरेखावत्तेजोविशेषो वक्षसि यस्य तम्। भ्राजत्कौस्तुभेनामुक्ता बद्धा अलङ्कृता कन्धरा ग्रीवा यस्य तम्। पृथवः पीना दीर्घाश्चत्वारो बाहवो यस्य तम्। नवकञ्ज इव अरुणे ईक्षणे यस्य तम् ॥ २ ॥ 'नित्यप्रमुदितम्' इत्यादि मुखारविन्दविशेषणम्। श्रीमती सौन्दर्यातिशययुक्ते सुष्ठु कपोले यस्य तत्, शुचि शुद्धं निर्विकारं स्मितं यस्य यस्मिन् वा तत्, स्फुरती मकराकारे कुण्डले यस्मिंस्तथाभूतं मुखारविन्दं बिभ्राणम् ॥ ३ ॥ 'श्रीवत्सो लाञ्छनं चिह्नं यस्य' इत्यादिविशेषणद्विरुक्तिर्वक्तृभेदाच्च क्रियाभेदाच्च न दोषायेति ज्ञेयम् ॥ ४-५ ॥

### अन्वितार्थप्रकाशिका

एकपञ्चाशत्तमे तु घातनं यवनेशितुः। मुचुकुन्दानुग्रहश्च तत्र श्लोकाः शरारयः ( ६५ ) ॥
अष्टोवाचेति ( ८ ) पादोना द्वासप्ततिरनुष्टुभः ( ७१॥। ) ॥ ५१ ॥

तमिति षट्कम् ॥ तदन्तर्गन्तं वासुदेव इति सार्द्धम् ॥ तं पुराद्विनिष्क्रान्तं निःसृतम् उज्जिहानम् उद्गच्छन्तमुडुपं दर्शनीयतममतिसुन्दरं श्यामं पीते कौशेये वाससो यस्य तं श्रीवत्सो दक्षिणावर्तरोमरेखायां सुवर्णरेखावत्तेजोविशेषो वक्षसि यस्य तं भ्राजत्कौस्तुभेनामुक्ता बद्धा अलंकृता कन्धरा ग्रीवा यस्य तं पृथवः पीना दीर्घाश्चत्वारो बाहवो यस्य तं नवकञ्जे इवारुणे ईक्षणे यस्य तं नित्यप्रमुदितमित्यादिपञ्चविशेषणविशिष्टं मुखारविन्दं बिभ्राणं तं श्रीकृष्णं विलोक्य श्रीवत्सलाञ्छनः चतुर्भुजः अरविन्दाक्षः वनमाली अतिसुन्दरः अयमेव पुमान् नारदोक्तैर्लक्षणैर्वासुदेवो भवितुमर्हति। ततोऽन्यो न भवितुमर्हति। अयं च निरायुधः पद्भ्यामेव चलति अतोऽहमपि निरायुधः पद्भ्यामेव चलन्ननेन सह यौत्स्ये। इति निश्चित्य पराङ्मुखं प्राद्रवन्तं योगिनामपि दुरापं तं कृष्णं जिघृक्षुर्यवनः अन्वधावत्। श्रीवत्सलाञ्छन इत्यादिद्विरुक्तिर्वक्तृभेदात् क्रियाभेदाच्च न दोषाय ॥ १-६ ॥

### श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्

इदानीमेकपंचाशत्तमेऽध्याये मुचुकुन्देन यवनघातनं। मुचुकुन्दस्तुतिश्च हरेर्मुचुकुन्दो परिप्रसादश्चनिरूप्यतेगार्ग्यः ॥
श्यालेनपंटस्त्वमित्युक्तो यदुभिस्तदा। हसिते कोपवान् विप्रोमहादेवमतोषायत् ॥ १ ॥
रुद्राद्वरं लब्धवान्सपुत्रं यादवभीषणं। अपुत्रयवनेन्द्रेणार्थितो गार्ग्योवरंसुतम् ॥ २ ॥
तत्क्षेत्रे कालयवनमजीजनदतः प्रभुः हरिर्म्लेछाद्धरगिरां। पालनायापलायतेति पुराणे विख्यातं ॥ ३ ॥

तं विलोक्येति पुरोडुपं चंद्रमिवोज्जिहानं उद्गच्छन्तं ॥ १ ॥ भ्राजन् शोभमानः कौस्तुभ आमुक्तोबद्धः। कंधरायां ग्रीवायां यस्य तं ॥ २ ॥ नित्यप्रमुदितमित्यादिविशेषणविशिष्टं मुखारविंदं बिभ्राणं तं श्रीकृष्णं विलोक्येति पूर्वेणान्वयः ॥ ३ ॥ नारदप्रोक्तैः दृष्टैर्लक्षणैरयं पुमान् वासुदेव एवास्ति अन्यो भवितुं नार्ऽहतीति द्वितीयेनान्वयः ॥ ४ ॥

### भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

मुचुकुन्ददृशा कृष्णो यवनं न्यहनत् स्तुतः। सन्नेकाधिकपञ्चाशत्तमे तेनान्वकम्पत ॥ १ ॥

दुष्कृतनिग्रहसाध्वनुग्रहावेकेत भगवच्चेष्टितेन दर्शयन् कथाविशेषमाह तत्रादौ श्लोकषट्कस्यैकान्वयः॥ तमिति ॥ श्रीवत्सेति ॥ नित्येति ॥ वासुदेव इति ॥ लक्षणैरिति ॥ इतीति विनिष्क्रान्तः, पुरद्वारादिति शेषः। उज्जिहानमुद्गच्छन्तं, उडुपं चन्द्रमिव स्थितं, दर्शनीगतममतीव दर्शनीयं, श्यामं घनवत् कृष्णवर्णं, पीते कौशेये वाससी यस्य तं, श्रीवत्सो वक्षसि यस्य तं, भ्राजत् कौस्तुभेनामुक्ता बद्धाऽलंकृतेति यावत्। सा कन्धरा ग्रीवा यस्य तं, पृथवः पीनाः दीर्घाः चत्वारो बाहवो यस्य तं नवकञ्जे नवीनकमले इव अरुणे रक्ते ईक्षणे लोचने यस्य तं, नित्यप्रदितमित्यादीनि चत्वारि मुखारविन्दविशेषणादिति। तत्र नित्यप्रमुदितं नित्यदा प्रमोदसंयुतं, श्रीमन्तौ सौन्दर्यपद्युतौ सुशोभनौ कपोलौ यस्मिंस्तत्, च विशुद्धं स्मितं यस्मिंस्तत्, स्फुरती मकराकारे कुण्डले यस्मिंस्तथाभूतं, मुखारविन्दं, बिभ्राणं, तं श्रीकृष्णं, यवनः विलोक्य, नारदप्रोक्तैः एतैः लक्षणः, श्रीवत्सो लाञ्छनं चिह्नं यस्य सः, चत्वारो भुजा यस्य सः, अरविन्दे कमले इवाक्षिणी यस्य सः, वनमालास्यास्तीति वनमाली, व्रीह्यादित्वादनिर्मत्वर्थीय। अतिसुन्दरः, वासुदेवः पुमान्, अयं हि एव। अन्यः भवितुं, न अर्हति। इति निश्चित्य, अयं च निरायुधः पद्भ्यामेव चलन्, अतोऽहमपि, निरायुधः पद्भ्यां चलन् संश्च, अनेन वासुदेवेन सह, योत्स्यामि। इति च, निश्चित्य पराङ्मुखं प्राद्रवन्तं योगिनां अपि, दुरापं तं वासुदेवं जिघृक्षुः ग्रहीतुमिच्छुः सन्, अन्वधावत् ॥ १-६ ॥

### कृष्णप्रिया

श्रीशुकदेवजी कहते हैं—महाराज परीक्षित्! भगवान् श्रीकृष्ण मथुरापुरी के मुख्य द्वार से जब बाहर पधारे तब ऐसा दर्शनीय दृश्य बना कि पूर्वदिशा से चन्द्रोदय हो रहा हो। भगवान का श्यामल कोमल श्रीअङ्ग अत्यन्त दर्शनीय था उस पर

प्रियतम प्रभु ने पीत कौशेय वस्त्र धारण किया था जिसकी शोभा निराली थी। वक्षःस्थलपर श्रीवत्सलाञ्छन शोभा प्राप्त कर रहा था और कण्ठ में कौस्तुभमणि जगमगा रही थी, लम्बी एवं कुछ बड़ी नाथ की चार भुजाएँ थी, फिर देखिये कि ताजे खिले हुए कमल के सदृश रतनारे रमणीय कोमल नयन थे। श्रीकृष्ण का मुखारविन्द नित्य प्रसन्न एवं आनन्दपूर्ण, सौन्दर्यपूर्ण श्रेष्ठ छटादार दोनों कपोल थे, स्मितहास्य मधुर और मङ्गल मय था, दोनों कानों में तेजोमय मकराकृति कुण्डलों को धारण किये थे। भगवान का रमणीय दर्शन पाते ही कालयवन ने निश्चय कर लिया कि अवश्य यही श्रीकृष्ण वासुदेव भगवान है। महर्षि नारद जी ने भगवान के जो जो लक्षण बताये थे वे सर्व इसमें मिल रहे हैं। यह श्रीवत्सलाञ्छन है, चतुर्भुज है, अरविन्द नेत्र है, गले में वैजयन्ती माला भी है और सुन्दरता की तो सीमा ही है॥ १-४॥

**लक्षणैर्नारदप्रोक्तैर्नान्यो भवितुमर्हति। निरायुधश्चलन्[१] पद्भ्यां योत्स्येऽनेन निरायुधः॥ ५॥**
**इति निश्चित्य यवनः प्राद्रवन्तं पराङ्मुखम्। अन्वधावज्जिघृक्षुस्तं दुरापमपि योगिनाम्॥ ६॥**
**हस्तप्राप्तमिवात्मानं[२] हरिणा स पदे पदे। नीतो दर्शयता दूरं यवनेशोऽद्रिकन्दरम्॥ ७॥**
**पलायनं यदुकुले जातस्य तव नोचितम्। इति क्षिपन्ननुगतो नैनं प्रापाहताशुभः॥ ८॥**

**कर्दमक्षमा**

**अन्वयः**—पद्भ्याम्, निरायुधः, चरन्, अयम्, पुमान्, नारदोक्तैः, लक्षणैः, वासुदेवः, हि, अन्यः, भवितुम्, न, अर्हति, इति, निश्चित्य, यवनः, पराङ्मुखम्, प्राद्रवन्तम्, योगिनाम्, अपि, दुरापम्, तम्, जिघृक्षुः, अन्वधावत्॥ ५-६॥ हरिणा, पदे, पदे, आत्मानम्, हस्तप्राप्तम्, इव, दर्शयता, सः, यवनेशः, दूरम्, अद्रिकन्दरम्, नीतः॥ ७॥ यदुकुले, जातस्य, तव, पलायनम्, न, उचितम्, इति, क्षिपन्, अनुगतः, अहताशुभः, एवम्, न, प्राप॥ ८॥

**श्रीधरस्वामिविरचिता भावार्थदीपिका**

नारदोक्तैर्लक्षणैरयं पुमान्वासुदेव एव नान्यो भवितुमर्हति। अयं च निरायुधोऽतोऽनेन पद्भ्यामेव चरन्निरायुधोऽहं योत्स्यामीति निश्चित्य तं पराङ्मुखं प्राद्रवतमन्वधावदित्यन्वयः॥५-६॥ आत्मानं हस्तप्राप्तमिव दर्शयता दूरं नीत इत्यन्वयः॥७॥ अहताशुभोऽक्षीणकर्मा॥ ८-९॥

**श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः**

लक्षणैश्चिह्नैः 'चिह्नं लक्ष्म च लक्षणम्' इत्यमरः। यतोऽयं निरायुधोऽतो हेतोः॥ ५॥ इतीत्थम्। पराङ्मुखं पृष्ठं दर्शयन्तम्। तं श्रीकृष्णम्। जिघृक्षुर्ग्रहीतुमिच्छुः॥ प्रकर्षेण लीलाविशेषेण आ ईषत् द्रुतगतया चलन्तं जिघृक्षुरिति तस्य गर्विततत्वम्। दुरापमित्युपहासास्पदत्वं व्यंजितम्॥ ६॥ स कालयवनः॥ तत्रापि भगवतश्चातुर्यं दर्शयति—हस्तेत्यादि॥ ७॥ अशुभमत्र भगवद्ग्रहणाऽयोग्यतापादकमात्रमेव ग्राह्यं न सर्वम्, अथाऽनेकजन्मसंचितसुकृतपुजेनाऽप्राप्यं श्रीकृष्णदर्शनं तस्य न भवेत् "बहुजन्मविपाकेन सम्यग्योगसमाधिना। द्रष्टुं यतन्ते यतयः शून्यागारेषु यत्पदम्॥" इति कर्दमोक्तेः, "यत्पादपांशुर्बहुजन्मकृच्छ्र-धृतात्मभियोगिभिरप्यगम्यः" इत्युक्तेश्च। इतीत्थम्। क्षिपन्निदम्। प्राप पस्पर्श॥ तथाप्यप्राप्यं स्थिरीकर्तुं पुरुषमाह—पलायन-मिति। यदुकुल इति यादवानां सुप्रसिद्धमहावीर्यवत्त्वादिति भावः। हताऽशुभ इति—अस्यापातप्रतीत्यर्थता चेत्तर्हि तदप्राप्तौ हताशुभ इत्यस्य हेतुत्वं वक्तुं महदेवानुचितम्। यवनस्यास्य यदि भाग्यमप्रतिहतमभविष्यत्तर्हि सोऽयं तच्छन्तुर्हस्तगतश्चाभविष्य-दिति शोचन्प्रतिपत्त्याविरुद्धमतिक्रत्त्वप्रतिपत्तेः। न च यवनस्य मुक्तिक्रियातिपत्त्या शोचनमिदमिति वक्तव्यम्, तन्मुक्तेरनन्तरं भावित्वात्। तच्च 'ये च प्रलंबखरदर्दुरकेश्यरिष्टमल्लेभकंसयवनाः' इत्यादौ द्वितीयस्कंधाभिधानात्। न च प्रसिद्धाऽऽशुभहानि-मात्रेण तत्प्राप्तियोग्यता वक्तव्या, 'यत्पादपांबहुकृच्छ्रधृतात्मभिर्योगिभिरप्यगम्यः' इत्यत्राऽसंमतत्वात्, 'भक्त्याहमेकया ग्राह्यः' इति लक्षणसाधनन्तरस्वप्रतिपन्नत्वाच्च। तस्मात् 'अपरे हतपाप्मानो व्रजजनैः' इत्यत्र हतपाप्मतया समस्तेन तटस्थेन प्रतिपक्षेण भावेन रहितायां परमभक्तावेव तात्पर्यावसानम्। तत्राप्यहतशुभतायास्तद्विरुद्धभाव एव पर्यवसितिरितीत्थमेव साक्षात् प्राप्त्यभावे हेतुता गम्यते, यथा व्रजेश्वरी पश्चाद्धावन्ती तं परादृवन्तमपि प्राप्तवत्येव तथा सोऽप्ययं कथं प्राप्नुयादित्यभिप्रायात्॥ ८॥

**श्रीमज्जीवगोस्वामीकृता वैष्णवतोषिणी**

श्रीभगवतस्तु तत्रापि चातुर्यं दर्शयति—हस्तेति। पदे पदे दर्शयता॥ ७॥ तथाप्यप्राप्यं विलोक्य स्थिरीकर्त्तुं परुषमाह—पलायनमिति। यदुकुल इति। यादवानां सुप्रसिद्धमहावीरत्वादिति भावः क्षिपन्नुपलभमानः अनुगतम् अनुगच्छन्नपि न प्रकर्षेण स्पर्शेनापि तत्र हेतुः। अहताशुभ इति, अस्यापातप्रतीतार्थता चेत्तर्हि तदप्राप्तौ हेतुत्वं वक्तुं महदेवानुचित्तं यवनस्यास्य यदि

१. चरन्–वीर.। २. प्राप्य–प्रा. पा.।

भाग्यमप्रतिहतमभविष्यच्च तर्हि सोऽयं तच्छत्रुर्हस्तगतश्चाभविष्यदिति शोचन् प्रतिपत्त्या विरुद्धमतिकृत्वप्रतिपत्तेः। न च यवनस्य मुक्तिक्रिया प्रपत्या शोचनमिदमिति वक्तव्यं तन्मुक्तेरनन्तरभावित्वात् तच्च "येच प्रलम्बखरदर्दुरकेश्यरिष्टमल्लेभकंसयवनाः" इत्यादेर्द्वितीयस्कंधेऽभिधानात् नच प्रसिद्धाशुभहानिमात्रेण तत्प्राप्तियोग्यता वक्तव्या "यत्पादपांसुर्बहुजन्मकृच्छ्रतोधृतात्मभिर्योगिभिरप्यलभ्यम्" इत्यात्रासम्मतत्वात् "भक्त्याहमेकया ग्राह्यः" इति विलक्षणसाधनान्तरस्य प्रतिपन्नत्वाच्च तस्मादपरे हतपाप्मानो "व्यजनैः समवीजयन्" इत्यत्र हतपाप्मा तया यथा समस्तेन तटस्थेन प्रतिपक्षेण भावेन रहितायां परमभक्तावेव पर्य्यवसानं तथात्राप्यहताशुभातायास्तद्विरुद्धभाव एव पर्य्यवसितिरितीत्थमेव साक्षात्तत्प्राप्त्यभावे हेतुता गम्यते यथा श्रीव्रजेश्वरी पश्चाद्धावन्ती तं परा्द्रवन्तमपि प्राप्तवत्येव तथासोऽप्ययं कथं प्राप्नुयादित्यभिप्रायात् ॥ ८ ॥

### श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी

'इति' एतैर्लक्षणैरित्यन्वयः। यद्वा, नान्यो भवितुमर्हतीति तथा निरायुधमित्यादिकञ्च, निश्चित्येति प्रकर्षेण लीलाविशेषेण आ ईषद्द्रुतगत्या चलन्तम्, जिघृक्षुरिति निजमहागर्वादिना स्वग्राह्यत्वमननात्, योगिनामपि दुरापम्, पदभ्यामन्वधावदिति परममज्ञत्वमेवोक्तम् ॥ ५–६ ॥ हस्तप्राप्तमिव दर्शयतेति तदाश्वासाय, अन्यथा निराशतया, निवृत्तिसम्भवात्। यवनानामीशोऽपि ॥ ७ ॥ तथाप्यप्राप्यं विलोक्य स्थिरीकर्त्तुं परुषमाह—पलायनमिति, यदुकुल इति यादवानां सुप्रसिद्धमहावीरत्वादिति भावः। क्षिपन् भर्त्सयन्, न प्रकर्षेण स्पर्शनादिना आप, यतोऽहताशुभस्तत्स्पर्शादिवाधकदोषाक्षयादित्यर्थः। दर्शनादिना तस्य मुक्तिर्जातैव; तथा च द्वितीयस्कन्धे श्रीब्रह्मणोक्तम् ( भा० २।७।३४ )—'ये च प्रलम्बखरदर्दुरकेश्यरिष्ट,–मल्लेभकंसयवनाः कुजपौण्ड्रकाद्याः' इत्यादि ॥ ८ ॥

### श्रीमद्वीरराघवाचार्यकृता भागवतचन्द्रचन्द्रिका

एवंविधैर्नारदप्रोक्तैर्लिङ्गैर्वासुदेव एवायमित्यन्वयः ॥ ५ ॥ इतीति। इत्थं निश्चित्य यवनः पलायमानं पराङ्मुखं च भगवन्तं गृहीतुम् इच्छुरन्वधावत् तस्य दुष्प्राप्यतां वक्तुं विशिनष्टि योगिनामपि दुरापं योगविशुद्धमनसामपि दुर्ग्राह्यम् ॥ ६ ॥ हस्तेति। प्रतिपदमात्मानं हस्तप्राप्तमिव दर्शयतो भगवता दूरं नीतः स यवनाधीशोऽन्ततोऽद्रिकन्दरं प्रापित इत्यर्थः ॥ ७ ॥ यदुकुले जातस्य तव पलायनमनुचितमित्येवं क्षिपन्नभिभवन्नाशुगतोऽपि यवन एनं भगवन्तं न प्राप तत्र कारणं वदंस्तं विशिनष्टि—अहताशुभोऽक्षीणदुष्कृतः ॥ ८ ॥

### श्रीविजयध्वजतीर्थकृता पदरत्नावली

जिघृक्षुर्ग्रहणेच्छुः ॥ ६ ॥ दूरमद्रिकन्दरं प्रति नीतः पदेपदे हस्तप्राप्तमिवात्मानं दर्शयित्वेति शेषः। दर्शयता आत्मानमिति शेषः ॥ ७ ॥ अहताशुभः अनष्टपापः ॥ ८–१२ ॥

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः

अनुगतः अनुगच्छन्नपि न प्रकर्षेण स्पर्शेनापि यस्मादहताशुभः तत्स्पर्शबाधकापराधाक्षयादित्यर्थः ॥ ८–९ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

आत्मानं हस्तप्राप्तमिव दर्शयता दूरं नीत इत्यन्वयः ॥ ७–८ ॥

### गूढार्थदीपिनी

आत्मानं हस्तप्राप्तमिव दर्शयता हरिणा स यवनेशः दूरं नीत इत्यन्वयः ॥ ७ ॥ क्षिपन् निन्दन् इत्यावेशात् ॥ ८ ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

पदेपदे आत्मानं हस्तप्राप्तमिव दर्शयता हरिणा स दूरं दूरे वर्तमानमद्रिकन्दरं नीतः ॥७॥ क्षिपन् अभिभवन् अहताशुभः अक्षीणदुष्कृतः ॥ ८ ॥

### श्रीसत्यधर्मकृता श्रीभागवतटिप्पणी

अक्षौहिणिगणैः। संज्ञात्वाङ्ङीपो ह्रस्वः ॥ ५ ॥ आकर्षन्निवेत्यनेन तेषामुत्साहाभावेऽप्यनिर्वहिन समूहानामगतिरिति ध्वनयति ॥ ६ ॥ महता स्कन्धावावेण शिविजेण ॥ ७ ॥ न्यरमन्न्यरमत ॥ ८ ॥

### श्रीमद्वल्लभाचार्य्यकृता सुबोधिनी

किञ्च, लक्षणैरिति। नारदोक्तैः वासुदेवादन्यो भवितुं नार्हति। पुराणान्तरादत्र कथानुसन्धेया। गतो हि नारदः कालयवनमाह। यादवाः त्वत्सदृशाः इति, परं कृष्णोरक्षकः, स च सर्वथा ज्ञातुमेवाशक्यः, कुतो जय्यः। कथमशक्य इत्याकाङ्क्षायां

नूतनान्यनेकानि रूपाणि सम्पादयतीत्युक्त्वाह 'तं त्वं न ज्ञास्यसी'ति। ततो विशेषजिज्ञासायां लक्षणानि निरूपितवान्। स एकाकी निरायुधः अयुध्यमानः सर्वाभरणभूषितः पदातिर्निर्गमिष्यतीति। तं यः सायुधः अश्वाद्यारूढोनुगच्छेत्, तं पापं प्रसर्पेदिति। कालयवनस्यापि स्वपापादेव भयं, नान्यत इति निरूपितम्, अतोऽस्मिन्नारदोक्तलक्षणानि वर्तन्त इति वासुदेवश्च। तर्हि किं करिष्यसीत्याशङ्कायामाह निरायुध इति। यतोऽयं निरायुधः पद्भ्यां च चलन् गच्छति, अतोऽहमपि निरायुध एव गमिष्यामि, पद्भ्यामेव चलन्, ततो योत्स्ये मल्लप्रकारेण। अनेन सह युद्धार्थमेव यतः समागतमिति। अहमपि निरायुधः, अयमपीति ॥ ५॥ इतीति। एवं निश्चित्य पराङ्मुखमपि भगवन्तं प्राद्रवत्। नारदो हि हितप्रश्ने उक्तवान्। यथा भगवान् करोति, तथा कर्तव्यमिति, तदा ते जयः जीवनं च भविष्यतीति। तदनेनान्यथाबुद्धम्। भगवान् पराङ्मुखः, अयं भगवत्सम्मुखो भूत्वा सर्पणं कृतवानिति। वाक्याज्ञाने हेतुमाह यवन इति। जातिदोषात् न ज्ञातवानित्यर्थः। यदि गच्छति भगवति तूष्णीमयं तिष्ठेत्, बलभद्रेण वा युद्धं कुर्यात्, तदा जयो भवेदपि, भगवांश्च सम्मुखमागच्छेत्, तथागमने प्रयोजनाभावात्, अतः पराङ्मुखमपि भगवन्तं प्राद्रवन्तं जिघृक्षुः सन्स्वयमन्वधावत्। ननु जिघृक्षया गमनमुचितमेवेत्याशङ्क्याह योगिनामपि दुरापतिमिति। अत्र प्रमाणं तमिति। तथैव प्रसिद्धम् ॥ ६॥ ननु कियद्दूरं गत्वा अप्राप्तौ कथं न निवृत्त इति चेत्, तत्राह हस्तप्राप्तमिवेति। स हि हरिणा नीतः। तर्हि वञ्चयतीति कथं न ज्ञातवान्, तत्राह। पदे पदे हस्तप्राप्तमात्मानं भगवन्तं मन्यमान इति। हस्तमात्रगमनानन्तरं भगवान् प्राप्यत इति स जानन् गतः। नहि कश्चिद्धस्तमात्रादुदासीनो भवति। अत आकाङ्क्षा न निवृत्ता। यदा हि प्राणी क्रियया आत्मानं प्राप्स्यामीति मन्यते स हि भ्रान्त एव भवति। ननु भगवता वा किमर्थं नीत इति चेत्, तत्राह हरिणेति। स हि हरिः। तस्याप्यविद्या हर्तव्या, मुचुकुन्दस्य च निद्रेति। भगवान् हि यः स्वात्मानमनुसरति, तन्नोपेक्षत इति, पदे पदे तथा बुद्धिमुत्पादितवान्। तदाह दर्शयतेति। पदे पदे आत्मानं हस्तप्राप्तं दर्शयता। उभयत्रापीदं वाक्यं युज्यते। अतो गन्तुर्नेतुश्च इच्छाया अनिवृत्तत्वात् दूरं नीतः। ततः अद्रेः कन्दरा यत्र तत्स्थानमपि नीतः। नन्वेतावत्यपि दूरे अप्राप्तिश्चेत्, तदा नीतिशास्त्रविचारेणापि 'शिथिलाश्च सुबद्धाश्चे'ति न्यायेन कथं न निवृत्त इति चेत्, तत्राह यवनेश इति। दुष्टानां स्वामी न नीतिज्ञः। मथुरातो दशयोजनान्ते धवलपुरमिति प्रसिद्धमिदानीम्, पूर्वं तु आसीत् मुचुकुन्दगुहा ॥ ७॥ क्रियया प्राप्त्यभावमाशङ्क्य, जपादिनेव वचनाद्भगवान् प्राप्तव्य इति मत्वा, मध्ये वचनमप्युक्तवानित्याह पलायनं यदुकुल इति। यद्धि धर्मात्मा। अन्यथा अस्मत्सदृशत्वेन कथमुक्तो भवेत्। तादृशवंशे जातस्य सर्वागम्यस्यापि अवतारधर्मानुसरणमुचितमिति पलायनमनुचितमित्यर्थः। ननु भगवान् कथमेतद्वाक्यं न गृहीतवान्, तत्राह इति क्षिपन्ननुगत इति। स हि न यथार्थतया वदति, किन्तु तिरस्कारार्थं वदतीति। यदुकुले तस्य श्रद्धाभावात् किं तस्याग्रे यदुकुलप्रतिष्ठारक्षणेनेति युक्तमेव भगवतस्तद्वाक्यानङ्गीकरणम्। अत एव नैनं प्राप। अन्यथा भगवदनुगमने भगवान् प्राप्तः स्यात्। तेन वचनेन पापमपि जातमित्याह अहताशुभ इति। यतः अशुभमपि न निवृत्तम्, अतो न प्राप। पूर्वाशुभमिति केचित्। तद्भगवद्दर्शनेनानुगमनेन च निवर्त्यत एवेत्युपेक्षणीयम्। आहतः अशुभेनेति वा। वाक्यजनितपापेन पृष्ठतस्ताडितः न भगवन्तं प्रापेत्यर्थ ॥ ८॥

### श्रीसुबोधिनी–सारः

नारदेन प्रोक्तैर्लक्षणैः अन्यो न। कर्त्तव्यं चिंतयति। अयं निरायुधो विशस्त्रः पद्भ्यां चलन् अस्ति अतोऽनेन निरायुधोऽहं योत्स्यामि ॥ ५॥ इति निश्चित्य विमुखं पलायमानं योगिनामपि दुरापं तं श्रीकृष्णं जिघृक्षुर्ग्रहीतुमिच्छुर्यवनः पृष्ठतोऽगमत् तत्र शिववरप्रदानं हेतुरिति हरिवंशे प्रसिद्धम् ॥ ६॥ हस्तेन प्राप्तमिवात्मानं स्वमूर्त्ति दर्शयता हरिणा पदेपदे प्रतिपदं स यवनानामीशो दूरं गिरेः कन्दरां नीतः ॥ ७॥ यदोः कुले जातस्य तव पलायनं नोचितं न युक्तमिति क्षिपन् आक्षेपम् अनुगतः पृष्ठतो यातोऽपि न हतानि अशुभानि पापानि यस्य स यवन एनं कृष्णं न प्राप ॥ ८॥

### विवरणटिप्पणी

पलायनमित्यत्र। न निवृत्तमिति। वचनेन जायमानमशुभं भगवदनुगमनेन प्रतिबद्धमित्यर्थः। आहत इति। तदा 'उपसर्जनं पूर्व'मित्यनेन पूर्वप्रयोगच्छान्दसत्वान्न जात इति ज्ञेयम्। फले निमित्तमिति। निमित्तमेव, ननु जनक इत्यर्थः। तद्भगवतीति। तद्भगवद्व्यापारनिमित्तकं वधरूपं फलं भगवति प्रतिष्ठे सति यवने फलितमिति हेतोर्यवनस्यापि प्रवेशमाहेत्यर्थः।

### गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

'भगवतो योगिभिरपि दुर्ग्राह्यत्वात्तदनुधावनं तस्य दुर्मुखत्वसूचकमेव' इत्याशयेनाह—दुरापमिति ॥ ६॥ प्रतिपदमात्मानं हस्तप्राप्तमिव दर्शयता हरिणा स यवनेशो दूरमद्रिकन्दरं प्रति नीत इत्यन्वयः ॥ ७॥ 'यदुकुले जातस्य तव पलायनमनुचितम्' इत्येवं क्षिपन् वचसाभिभवन्ननुगतोऽपि यवन एनं भगवत्तं नैव प्राप। तत्र हेतुमाह—अहताशुभ इति, अक्षीणपाप इत्यर्थः। इत्यर्थः। तदासक्त्या विशुद्धचित्तस्यैव भगवत्प्राप्तिः, नान्यस्य। अयं च शत्रुभावेनापि न भगवदासक्तः, अतः सदोप एवेत्याशयः॥८॥

### अन्वितार्थप्रकाशिका

हस्तेति ॥ पदे पदे प्रतिपदमात्मानं हस्तप्राप्तमिव दर्शयता हरिणा स यवनेशो दूरमद्रिकन्दरं प्रति नीतः पलायनं चेदं श्रीशिववरपालनाय ॥ ७ ॥ पलायनमिति ॥ यदुकुले जातस्य तव पलायनं न उचितमित्येवं क्षिपन् वचसाऽभिभवन् वस्तुतस्तु इदं तव पलायनं न भवति । किन्तु यदुकुले जातस्य यादवावध्यत्वरूपं महेशवरं पालयतो विधानान्तरेण शत्रुपराभवञ्चिकीर्षतस्तवोचितं संप्रति योग्यमेवेदमिति क्षिपन् द्रुतं गन्तुं प्रेरयन् अनुगतोऽपि न हतमशुभं भगवत्स्पर्शादिलाभप्रतिबन्धकं दुरितं यस्य मुक्तिप्रतिबन्धकं तु दुरितं भगवद्दर्शनादेव नष्टम् । मल्लेभकंसयवना इत्यादिना तन्मुक्तेरुक्तत्वात् । अत एनं भगवन्तं स्प्रष्टुं न प्राप ॥ ८ ॥

### श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्

पद्भ्यां चलन् निरायुधोऽयमस्ति अतोऽहमपि अनेन कृष्णेन सह पद्भ्यां चलन् निरायुध एवयोत्स्यामि ॥ ५ ॥ तं कृष्णं जिघृक्षुः गृहीतुमिच्छुः पराङ्मुखं युद्धात्प्रतिमुखं ॥ ६ ॥ आत्मानं श्रीमूर्त्ति हस्तप्राप्तं ग्राह्यतया करगतमिव पदे पदे दर्शयता हरिणा स यवनेशः दूरं अद्रिकन्दरं रैवताचलगुहां प्रतिनीतः प्रापितः ॥ ७ ॥ क्षिपतिरकुर्वन् । अहताशुभः । अक्षीणपापः ॥ ८ ॥

### भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

हस्तेति ॥ पदे पदे प्रतिपदं, आत्मानम्, इव, दर्शयता हरिणा भगवता, दूरं नीतः सः, यवनेशः अद्रिकन्दरं रैवताचलगुहां, प्रापित इति शेषः ॥ ७ ॥ पलायनमिति ॥ यदुकुले जातस्य तव, पलायनं, उचितं योग्यं, न भवति । इत्येवं, क्षिपन् अनुभर्त्सयन्, अनुगतः सन्नपि, यतः सः, अहताशुभः अक्षीणकर्मा, अतः एनं कृष्णं, न प्राप ॥ ८ ॥

### कृष्णप्रिया

श्री नारदजी के निर्दिष्ट चिह्न इसी स्वरूप में सुस्पष्ट है यह स्वयं एकाकी है निरायुध है विना उपानह नंगे पाँव किसी दिशा की ओर चल पड़े हैं इसलिये मैं भी इसके निरायुध युद्ध करूँगा। ऐसा निर्णय करके कालयवन, बड़े समर्थ योगिजनों के लिये भी जो अगम्य है केवल कृपैक गम्य है वैसे श्रीकृष्ण भगवान के पीछे-पीछे दौड़ने लगा ॥ ५-६ ॥ चतुर शिरोमणि चतुर्भुज भगवान कृष्णचन्द्र भी जैसे उनके हाथ में आ रहा हूँ ऐसी स्थिति को दिखाते हुए लीला पुरुषोत्तम दौड़ने की लीला से श्रीहरि कालयवन को दूर सुदूर धवलपुर के समीप मुकुन्द राजा को अद्रिकन्दरा में ले गये ॥ ७ ॥ भगवान श्रीकृष्ण जी के पीछे दौड़ता कालयवन बार-बार आक्षेप करता कह रहा था कि अरे वीर पुरुष ? आप यदुवीरों के वीर कुल के जाये हो, खुद भी वीर हो आपके लिये रण संग्राम को छोड़कर कायरों की तरह भागना योग्य नहीं है। फिर भी भगवान दौड़ते ही रहे थे कारण यह था कि अभी भी उसके अशुभ निःशेष नहीं हुए थे इसलिये भगवान पा नहीं सका था ॥ ८ ॥

**एवं क्षिप्तोऽपि भगवान् प्राविशद् गिरिकन्दरम् । सोऽपि प्रविष्टस्तत्रान्यं शयानं ददृशे नरम् ॥ ९ ॥**
**नन्वसौ दूरमानीय शेते मामिह साधुवत् । इति मत्वाच्युतं मूढस्तं पदा समताडयत् ॥ १० ॥**
**स उत्थाय चिरं सुप्तः शनैरुन्मील्य लोचने । दिशो विलोकयन् पार्श्वे तमद्राक्षीदवस्थितम् ॥ ११ ॥**
**स तावत्तस्य रुष्टस्य दृष्टिपातेन भारत । देहजेनाग्निना दग्धो भस्मसादभवत् क्षणात् ॥ १२ ॥**

### कर्दमक्षमा

**अन्वयः**—एवम्, क्षिप्तः, अपि, भगवान्, गिरिकन्दरत्, प्राविशत्, सः, अपि प्रविष्टः, त, शयानम्, अन्यम्, नरम्, ददृशेः ॥ ९ ॥ ननु, असौ, माम् , इह, दूरम्, आनीय, साधुवत्, शेते, इति, मूढः, तम्, अच्युतम्, मत्वा, पदा, समताडयत् ॥१०॥ चिरम्, सुप्तः, उत्थाय, शनैः, लोचने, उन्मील्य, दिशः, अवलोकयन् सः, अवस्थितम्, तम्, अत्राक्षीत् ॥ ११ ॥ भारत ? रुष्टस्य, तस्य दृष्टिपातेन, तावत्, देहजेन, अग्निना, दग्धः, सः, क्षणात्, भस्मसात्, अभवत् ॥ १२ ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

तं शयानमच्युतं मत्वाऽताडयदिति ॥ १०-११ ॥ तस्य क्रुद्धस्य दृष्टिपातेन संदीप्तो यः स्वदेहजोऽग्निस्तेन ॥ १२ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

एवम् 'पलायनं यदुकुले' इत्युक्तरीत्या । सोऽपि यवनोऽपि । तत्राद्रिकन्दरे । भगवान् सर्वज्ञः गिरिगुह्यान्तःशायिमुचुकुन्दस्य प्रभावं भक्तिं च जानन्नित्यर्थः । प्राविशदिति प्रविश्य मुचुकुन्दस्य शिरःप्रदेशेऽतिष्ठदिति ज्ञेयम् । तथा च हरिवंशे—"शिरस्थाने तु राजर्षेर्मुचुकुन्दस्य केशवः । संदर्शनपथं मुक्त्वा तस्थौ बुद्धिमतां वरः ॥" इति । कालयवनस्य तत्रावकाशाय प्रथमतः स्वगोपनाय चेति भावः । अन्यमेव ददृशे न तु तत्रैव स्थितं भगवन्तम् ॥९॥ असौ कृष्णः । इह कन्दरे । ननु वितर्के । अच्युतमिति ततोऽन्यत्र भगवत्प्रयाणस्य तेनाऽमननाभिप्रायेण । नन्वनुगम्यमानः सद्यः कथं सुप्यादिति विचारयोग्योऽप्यसौ दृष्टचतुर्भुजत्वादिरूपादत्यन्तविलक्षणं नरं दृष्ट्वाऽप्यच्युतं कथममन्यत तत्राह—मूढः गुहातमसो व्याप्त्या क्रोधादिना च हततत्तद्विचार इत्यर्थः ॥१०॥

स शयानो मुचुकुन्दः। उन्मील्योद्घाट्य। तं यवनम्। चिरमिति वैवस्वतमन्वन्तरादाद्यचतुर्युगे त्रेतायां जातस्य तस्य सम्राजो देवसाहाय्यात्। शनैरिति बलान्निद्राभंगेन घूर्णाव्याप्तत्वात्॥ ११॥ स यवनः। तस्य मुचुकुन्दस्य। स्वदेहजो यवनदेहजः। यावदद्राक्षीत्तावदेव दर्शनसमकालता दाहस्योक्ता, क्षणादिति च भस्मसाद्भवने शीघ्रता। भारतेति महावंशजातत्वेन महावंश्यानां तादृशप्रभावे न किमप्यद्भुतं मन्तव्यम्, यथा भरतवंशजशन्तन्वादिभिः स्वपुत्रभीष्मादिभ्यः स्वेच्छामरणादिकमपि दत्तं तथा मुचुकुन्देनापि स्वनेत्राग्निना भस्मसात्कृतो यवनदेहो दग्धो देवादिवरस्तूपलक्षणमिति बादरायणेर्मतम्। अत एव स नात्र प्रस्तूयते। 'स्वपन्तं यो गुहामध्ये' इत्येतदग्रे पद्यं तु विगीतमसंलग्नश्च। श्रीपराशरवैशंपायनमते तु वरादेव तत्। तथा च विष्णुपुराणे—"प्रोक्तश्च देवैः संसुप्तं यस्त्वामुत्थापयिष्यति। देहजेनाग्निना सद्यः स तु भस्मीभविष्यति॥" इति। हरिवंशे च देवेषु तत्प्रार्थने—"स्वपन्तं बोधयेद्यो मां तं दहेयमहं सुराः। चक्षुषा क्रोधदीप्तेन एवमाह पुनःपुनः॥ एवमस्त्विति तं शक्र उवाच त्रिदशैः सह।" इति। अनेन निद्राप्रार्थनमिदं यावद्भगवद्दर्शनं भविष्यति तावन्मम निद्रैव समीचीना न तु जागरणमित्यभिप्रायेण। जागरणहेतुदाहप्रार्थना च पूर्ववदमुष्य भक्तोऽपि मां न जागरयेदित्यभिप्रायेण॥ १२॥

## श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी

भगवान् सर्वज्ञः गिरिगुहान्तशायिमुचुकुन्दस्य प्रभावं भक्तिं च जानन्नित्यर्थः। प्राविशदिति प्रविश्य मुचुकुन्दस्य शिरःप्रदेशेऽतिष्ठदिति ज्ञेयम्, तथा च श्रीहरिवंशे।

शिरःस्थानेतु राजर्षे मुचुकुन्दस्य केशवः। सन्दर्शनपथं मुक्त्वा तस्थौ बुद्धिमतां वरः॥ इति।

कालवनस्य तत्रावकाशाय प्रथमतः स्वगोपनाय चेति भावः अन्यमेव ददृशे नतु तत्रैव स्थितं भगवन्तम्॥ ९॥ ननु अनुगम्यमानः सद्यः कथं तथा सुप्यादिति विचारयोग्योऽप्यसौ दृष्टचतुर्भुजत्वादिरूपादत्यन्तविलक्षणरूपं नरं दृष्ट्वाऽप्यच्युतं कथममन्यत ? तत्राह—मूढः गुहातमसा व्याप्ता क्रोधादिना च हततत्तद्विचार इत्यर्थः॥ १०॥ चिरमिति वैवस्वतमन्वन्तराद्यचतुर्युगे त्रेतायां जातस्य तस्य साम्राज्ये देवसाहाय्यात् शनैरिति बलान्निद्राशङ्गेन घूर्णाव्याप्तत्वात्॥ ११॥ यावदद्राक्षीत्तावदेवेति दाहस्य दर्शनसमकालतोक्ता क्षणादिति च भस्मसाद्भवने शीघ्रता भारतेति महावंशजातेन भवता इति महावंश्यानां तादृशप्रभावे किमप्याश्चर्य्यं न मन्तव्यमिति अतस्तस्येति तस्य महापुरुषस्य क्रोधदृष्ट्यग्निनैव दग्धः देवादिवरस्तूपलक्षणमिति श्रीवादरायणेर्मतम् अत एव स नात्र प्रस्तूयते "स्वपन्तं यो गुहामध्ये" इत्येतदग्रे पद्यं तु विगीतमसंलग्नं च श्रीपराशरवैशम्पायनमते तु वरादेव तत् तथा च श्रीविष्णुपुराणे—

प्रोक्तश्च देवैः संसुप्तं यस्त्वामुत्थापयिष्यति। देहजेनाग्निना सद्यः स तु भस्मीभविष्यति इति॥

श्रीहरिवंशे च देवेषु तत्प्रार्थने—

प्रसुप्तं बोधयेद्यो मां ते दहेयमहं सुराः। चक्षुषा क्रोधदीप्तेन एवमाह पुनः पुनः॥

एवमस्त्विति तं शक्र उवाच त्रिदशैः सह। इति अनेन स्वनिद्राप्रार्थनमिदं भगवद्दर्शनं यावद्भविष्यति तावन्मम निद्रैव समीचीना न तु जागरणमित्यभिप्रायेण जागरणहेतुमाह प्रार्थना च पूर्ववदसुरसेनानाशनार्थमसौ भक्तोऽपि मां न जागरयेदित्यभिप्रायेण॥ १२॥

## श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी

भगवान् सर्व्वज्ञो गिरिगुहान्तःशायि—श्रीमुचुकुन्दस्य प्रभावं भक्तिञ्च जानन्नित्यर्थः। प्राविशदिति प्रविश्य श्रीमुचुकुन्दस्य शिरः प्रदेशेऽतिष्ठदिति ज्ञेयम्। तथा च श्रीहरिवंशे ( विष्णु० पु० ५७।५० )—'शिरः स्थाने तु राजर्षेर्मुचुकुन्दस्य केशवः। सन्दर्शनपथं मुक्त्वा तस्थौ बुद्धिमतां वरः।' इति। अन्यमेव ददृशे, न तु तत्रैव स्थितमपि श्रीभगवन्तम्॥ ९॥ ननु वितर्के, असौ श्रीवासुदेवः; साधुर्निर्द्दोषस्तद्वत्, तस्यैव निश्चिन्ततया निद्रासुखसम्भवात्। अच्युतमिति ततोऽन्यत्र श्रीभगवत्प्रयाणस्य तेनामननाभिप्रायेण। ननु धावित्वा स्वयमनुगम्यमानोऽसौ सद्यः कथं तथा सुप्यादित्यविचार्य्य कथञ्च पूर्व्वं साक्षाद्दृष्टस्य श्रीचतुर्भुजत्वादिरूपस्यात्यन्तविलक्षणं नरं दृष्ट्वाप्यच्युततममन्यत तत्राह—मूढो गुहातमसा व्याप्तः, किंवा क्रोधादिना हततत्तद्विचार इत्यर्थः। अतः सम्यग् दृढमताड़यत्॥ १०॥ चिरमिति—बहुतराणि चतुर्युगानि ज्ञेयानि, चतुर्विंशतितमयुगेऽवतीर्णस्य श्रीरघुनाथस्य पूर्व्वपूर्व्वत्वात्, तथा एतद्वैवस्वत—मन्वन्तराचतुर्युगे त्रेतायां जातस्य तस्य साम्राज्ये देवसाहाय्यात्, शनैरिति बलान्निद्राभंगेन घूर्णव्याप्तत्वात्॥ ११॥ तावदिति वाक्यालङ्कारे, किंवा यावदद्राक्षीत्तावदेवेति। दाहस्य दर्शनसमकालतोक्ता, क्षणादिति च भस्मसाद्भवने शीघ्रता। एवं तस्य प्रभावभरो दर्शितः। च-कारात् महदपराधविशेषेण चेत्यर्थः। हे अनघेति निष्पापाणां महात्मनां भवादृशामीदृशः प्रभावः स्यादेवेति भावः। भारतेति पाठे महावंशजातेन भवता महावंश्यानां तादृशप्रभावे किमप्याश्चर्य्यं न मन्तव्यम्। अतः क्रुद्धस्येति तस्य महापुरुषस्य क्रोधदृष्ट्यग्निनैव दग्धः, न देवादिवरेणेति श्रीवादरायणेर्मतम्। अतएव

( भा० १०।५१।२१ ) स्वपन्तं यो गुहामध्ये इत्येतदग्रे पद्यं विगीतं ज्ञेयम्; श्रीपराशरवैशम्पायनयोर्मते तु देव-वरादेव; तथा च श्रीविष्णुपुराणे ( ५।२३।२२ )—'प्रोक्तश्च देवैः संसुप्तं यस्त्वामुत्थापयिष्यति । देहजेनाग्निना सद्यः स तु भस्मीभविष्यति ॥' इति; श्रीहरिवंशे च देवेषु तत्प्रार्थने ( विष्णु पु० ५७।४५–४६ )—

'प्रसुप्तं बोधयेद्यो मां तं दहेयमहं सुराः । चक्षुषा क्रोधदीप्तेन एवमाह पुनः पुनः ॥
एवमस्त्विति तं शत्रु उवाच त्रिदशैः सह ॥' इति ॥ १२ ॥

**श्रीमद्वीरराघवाचार्यकृता भागवतचन्द्रचन्द्रिका**

भगवांस्त्वित्थं क्षिप्तोऽपि तूष्णीं गिरिकन्दरं प्राविशत् स तु यवनस्तत्र गिरिकन्दरे प्रविष्टस्तत्रान्यं शयानं कञ्चित्पुरुषमद्राक्षीत् ॥ ९ ॥ तं शयानं पुरुषमसौ वासुदेवो मामित्थं दूरमानीय साधुवदधुना तूष्णीं शेते नूनमसौ श्रीकृष्ण एवेति मूढस्सन्नच्युतमेव मत्वा तं पदा पादेनाताडयत् ॥ १० ॥ स ताडितः पुरुष उत्थाय चिरं सुप्तः हेतुगर्भमिदं तत्त्वात् शनैर्लोचने उन्मील्य दिशोऽवलोकयन् पार्श्वस्थितं यवनं ददर्श ॥११॥ हे भारत ! स यवनः रुष्टस्य क्रुद्धस्य तस्य पुंसः दृष्टिपातेन सन्दीप्तो यः स्वदेहजोऽग्निस्तेन तावत्तदैव क्षणाद्भस्मीबभूव ॥ १२ ॥

**श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः**

मूढः हतविचारः ॥ १०–१४ ॥

**श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी**

सोऽपि कालयवनोऽपि अन्यं नरं ददर्श ॥ ९–११ ॥ तस्य क्रुद्धस्य दृष्टिपातेन सन्दीप्तो यः स्वदेहजोऽग्निस्तेनेति तथैव तद्वरप्रार्थनात्तद्वरदानाच्च तथा हरिवंशे—

"प्रसुप्तं बोधयेद्यो मां तं दहेयमहं सुराः ! । चक्षुषा क्रोधदीप्तेन एवमाह पुनः पुनः" ॥ इति

अत्र निद्राप्रार्थनमिदं वृद्धगर्गोक्तकृष्णदर्शनं यावद्भविष्यति तावन्निद्रैव मम सुखाय न तु जागरः तद्दर्शनसमुत्कण्ठस्य मम बहुतरचतुर्युगावच्छिन्नकालो जागरेण यापयितुमशक्यः निद्रया तु तत्त्वानपि कालः क्षणप्राय एव भविष्यतीत्यभिप्रायेण क्रोधकरणकदाहप्रार्थनं तु शक्रं भीषयितुमेवान्यथा स्ववैरिघातनार्थं पुनरपि तं शक्रो जागरयेदित्यभिप्रायेण, ततश्च तद्वरो विष्णुपुराणे यथा—

"प्रोक्तश्च देवैः संसुप्तं यस्त्वामुत्थापयिष्यति । देहजेनाग्निना सद्यः स तु भस्मीभविष्यति" ॥ इति ॥ १२ ॥

**गूढार्थदीपिनी**

सोऽपि यवनोऽपि । तत्र कन्दरे शयानम् ॥९॥ असौ कृष्णः ननु वितर्के ॥१०॥ स शयानो मुचुकुन्दः । तं यवनम् ॥११॥ स यवनः । तस्य मुचुकुन्दस्य ॥ १२ ॥

**श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः**

सोऽपि यवनेन्द्रोऽपि प्रविष्टः सन् अन्यं नरं ददृशे अद्राक्षीत् ॥ ९ ॥ तं पुरुषमच्युतं श्रीकृष्णं मत्वा ॥१०–११॥ हे भारत ! स यवनेन्द्रः रुष्टस्य तस्य पुरुषस्य दृष्टिपातेन सन्दीप्तो यः स्वदेहजोग्निस्तेन क्षणाद्भस्मसादभवत् तथा हरिवंशे—

"प्रसुप्तं बोधयेद्यो मां तं दहेयमहं सुराः । चक्षुषा क्रोधदीप्तेन एवमाह पुनः पुनः" ॥ इति

वैष्णवे च देवानां वाक्यम् ।

"सुषुप्तं नो वरेणाऽथ यस्त्वामुत्थापयिष्यति । देहजेनाग्निना सद्यः स तु भस्मीभविष्यति" ॥ इति ॥ १२ ॥

**श्रीसत्यधर्मकृता श्रीभागवतटिप्पणी**

सङ्कर्षणादिभिरित्यादिपदेन कनिष्ठानां बलतो ज्येष्ठानां कृष्णतो मन्त्रिणां ग्रहणम् । वसुदेवेत्यादिना स्ववर्यवर्णानां मन्त्रिणां च ग्रहणमिति विवेको ज्ञेयः । यद्वा सङ्कर्षणादिभिर्विहितमन्त्राबहिःपातार्थमित एहीति स्वसमीपं प्रति सम्यक्कर्षणं छोटिकावादनं पृष्टस्फालनं चेत्येतदादिभिर्वसुदेवसारणादिभिरित्यर्थः ॥ ९ ॥ निर्धारिता क्रियोत्तरकार्यं कार्यं येन सः । उषसि तत्रापि सूर्येऽनुदिते जाग्रतां सति प्रकाशेऽजाग्रतां निद्रायाः किञ्चित्तमसि च निकृतिरुपरि निकृत्यापतितव्यमिति शिक्षयितुं ततानैवं श्रीनाथो न त्वशक्ततथेति मन्तव्यम् ॥ १० ॥ चतुरङ्गिणीमङ्गचतुष्कवतीम् ॥ ११ ॥ वामेनादक्षिणेन ॥ १२ ॥ सेनया सहेत्यत्रेव पूर्वत्रापि

सम्बन्धनीयम् । सर्वेषां निद्रितत्त्वाद्वस्तुतोऽग्रे ॥ १३ ॥ पादातिभिः पदतीनां समूहः पादातं तस्य समूह इत्यण् । पादातं पत्ति-संहतिरित्यमरः । तदस्ति येषामिति नान्तः शब्दः अन्यथाऽज्यतिभ्यामितीणि पादस्य पदाज्यातिगोपहतेष्विति पदादेशे पदातिरि-तीदन्ततया स्यादिति भावः । सर्वे विधयश्छन्दसि विकल्प्यन्त इति निर्गलो मार्ग इति वा । नारब्धमधुना युद्धमिति विश्रब्धो विश्वस्ता । सुखं यथा तथा रमतेऽरमत ॥ १५ ॥ अर्के सूर्ये उदयाद्रिं समारोहति सति विहगेषु नीडस्थेष्वेव कुलायस्थेष्वेव बहिरबहुमहस्कत्वाद्विहायसः ॥ १६ ॥ दुर्जयमितरैः ॥ १७ ॥ अबद्धं वैराणं पल्याणं खलीनं वा येषां ते तथा । श्रेणी पङ्क्तिस्तया बद्धा हया वाजिनः कुञ्जरा अपि । अनारोपितमुपरिभागानर्पितं पञ्जरं येषां ते । रूप उपरिभाग इति धातुः । सुभद्रां रथमारोप्ये-त्यादिवच्चेति द्वितीयतात्पर्योक्तिः । वाहनमाहितादिति निपातितां वाहनशब्दः ॥ १८ ॥ अनादत्तान्यस्वीकृतानि प्रहरणानि यैस्ते तथाऽबद्धमूर्धजाः शिरोरुहा यैस्ते । अप्रविष्टान्यात्मनो देहान्वर्माणि येषां ते । अनारूढानि वाहनानि यैस्ते ॥ १९ ॥ अबद्धास्तुरगा येषां ते सर्वतः सर्वत्रानुद्धृता अनुच्छ्रिता ध्वजा येषां त इति वा पीतवाससः पीताम्बरस्य मगधेन्द्रस्य सेनायाः प्रदेशे तत्काले दशेयमवर्तिष्ठेति भावः ॥२०॥ त्रिदिक्षु तिस्रश्च ता दिशश्च तास्वापतितं तत्सैन्यं राजमण्डलमुत्थितं स दृष्ट्वा । मण्डलं त्रिष्वित्युक्तेः । शक्यं स दृष्ट्वा राजमण्डल इति मण्डयितुं तथाऽपि सर्वथा तेषु न पौरुषमिति द्योतयितुं मण्डलमित्युक्तिरिति तात्पर्यं ज्ञेयम् । कर्तव्य-ताविषये मूढं सदित्येवं विभ्रान्तम् । भावे क्तः । बभ्रामानवस्थानं समपद्यत प्रापत् ॥ २१ ॥ रणे केचिद्भटा अरीन्प्रति समापेतुर-पतन् निद्रया द्रावयन्त्या समापेतुरपतन्निति वा । अभिसस्रुरभ्यसरन् ॥ २२ ॥ विभिन्नानि कलिङ्गस्य वर्मश्चैद्यश्चैद्यस्य लिङ्ग इति । विभिन्नानि वर्माणि येषां ते । अप्रविष्टात्मवर्माण इत्युक्तिस्वारस्यमेवं चेद्भविष्यति । त्वया स्थापितान्यपि तानि विभिन्नानि येषां त इति वा । क्रोधोरिक्तान्यरुणानीक्षणानि येषां ते ॥ २३ ॥ अपल्याणानखलीनान् । विमलं यशो लेभिरे प्रापुः । रणोपस्करणं तत्साधनमायुधादि ॥ २४ ॥ गहनं कान्तारं केचिदम्भस्तम्भनज्ञा वनं जलं विविशुः । विजयस्वेत्यन्ववंश्च ॥ २५ ॥ स गोविन्दो रण उद्यमो येषां तान् रणोद्यमेन सहितानिति वा सरणे रणान्निस्सरणे उद्यमो येषामिति वा ॥ २६ ॥ मागधं मगधस्वामिकं बलमर्दय-दर्दयामास ॥ २८ ॥ व्यथिता त्रस्यमाना क्षणमात्रं दिशो दश दुद्राव ॥ २९ ॥ वार्ष्णेयः सात्यकिः पश्चयोजनं विशेषणसमासः । मागधं गतम् । सैन्यं निहत्य जयी सन्न्यावर्तत ॥ ३० ॥ मतङ्गजान् गजान् सोपस्करास्तोमराङ्कुशा येषां तान्निनाय यद्यन्मतं तत्सर्वं निनायेति नीतवान् ॥ ३१ ॥ हेमाम्बररत्नमिश्रितानि छत्राण्यनेकवालव्यजनानि पट्टेन क्षामेण सहितं च तदङ्गदं चांशुकानि सूक्ष्मवस्त्राणि । अंशुकं सूक्ष्मवस्त्रे स्याद्वस्त्रमात्रोत्तरीययोरिति विश्वः ॥ ३२ ॥ अवरोधः शुद्धान्तोऽगणितान्पदार्थानिति शेषः । अवरोधस्तिरोधाने शुद्धान्ते राजवेश्मनीति विश्वः । कंसभिदा कृष्णेन नियोजितो रणार्जितं रणसम्पादितं यदुप्रवीरायोग्रसेनाय । एवमादिधनं न्यवेदयत् ॥ ३३ ॥

इति श्रीभागवतटिप्पण्यां सत्यधर्मकृतायां दशम उत्तरार्धे पञ्चाशोऽध्यायः ॥ ५० ॥

॥ हरिः ॐ ॥ यो रणश्लाघी तेन माधवेन परैरपराजितोऽपि पराजित इत्यावृत्त्याऽन्वयः । तुरणेन पलायनत्वरणेन श्लाघीति वा ॥ १ ॥ विशेषकेणाह ॥ तमिति । मृतोर्वरितक्षितिपतिततिवृतं दानवेश्वरो बाणः ॥ २ ॥ वारकान्ताकदम्बैर्वेश्या-समूहैः ॥ ३ ॥ पताका येषां सन्तीति पताका इति यथायथं ध्वजछत्रादिविशेषणम् । तेन न पताका वैजयन्त्यां च सौभाग्यां वा ध्वजेऽपि च । पताका वैजयन्ती स्यात्केतनं ध्वजमस्त्रियामिति विश्वामरादिशंसितलिङ्गभङ्ग इति ज्ञेयम् । माङ्गल्यैर्मङ्गल्यस्य श्वेतागुरोरिमे माङ्गल्यास्तत्परिमलैर्मल्लिकादिपरिमलैरिति वा । मङ्गल्यं मल्लिगन्धि यत् मङ्गल्यं दधिमङ्गल्योर्मङ्गली रोचनायां च प्रियङ्गुशतपुष्पयोरधः पुष्पेत्याद्यमरयुक्तोपयुक्तविश्वौ । मङ्गलातोद्यादिभिर्मङ्गलयौतकैरिति वा ॥ ४ ॥ तथायातं मित्रं जरासन्ध-माकर्ण्य बाहुसहस्रवान्बाण उपतस्थे । एवमन्वयने उपाच्चेत्युक्तादकर्मकात्तिष्ठतेरात्मनेपदता सङ्गच्छत इति ज्ञेयम् ॥ ५ ॥ परस्परं दृष्ट्वा ततः परस्परं सत्कारानन्तरं ॥ ६ ॥ गोपेन तमधर्मत्वमेव व्यक्तं वक्ति ॥ रात्राविति । चौर्यमेव प्रतापः प्रभावस्तेन ॥ ७ ॥ तुरङ्गमागतम् ॥ ८ ॥ द्वन्द्वेन नियुद्धेन समे असुखं दुःखं चेति मया येषां ते तैः ॥ ९ ॥ प्रवेशयित्वा प्रवेश्य ॥ १० ॥ सत्क्रियां सम्माननम् । तत्साधनमभिधत्ते ॥ भोजनेति । भोजनमामकीनसत्कुर्वेतानित्युक्त्वा कारयामासेत्यन्वयः ॥ ११ ॥ दर्शनेन कौतुकं येन पदार्थेन स दृष्टो येन स त ३ । कदाऽप्यदृष्टं दृष्टवन्तमिति यावत् । जाग्रद्दशायां कदाऽप्यदृष्टं दृष्टं दर्शनस्य स्वप्नस्य तत्सम्बन्धि कौतुकमिवाद्भुतं येनेति वा । दर्शनं नयनस्वप्नबुद्धिधर्मोपलब्धिष्विति विश्वः ॥१२॥ सह नृपैरासीनमाभाष्य । सादरमित्यनुपचारतां वचनस्य ध्वनयति ॥ १३ ॥ हे जरासन्ध महामते । इदं वक्ष्यमाणं निबोध जानीहि मया मृषा न कथ्यते । एते गजा इमे चाश्वा इदं राज्यं इमाः प्रजाश्चेतीदं प्रात्यक्षिकं विश्वं त्वदधीनं त्वन्निघ्नम् । अन्यदन्तर्वस्तु धनादिकं विद्यते तदपि त्वदधीनम् ॥ १४ ॥ इत्युक्त्वा गजानां षष्टिसाहस्रम् । स्वार्थिकोऽणिति केचित् । शतमानेत्यादिनाणे । रथानां नियुतो लक्षम् ॥ १५ ॥ मनोमारुतरंहसां मनोवन्मारुतवच्च रंहो येषां ते तथा तेषां केषाञ्चिन्नावनिस्पर्शः केषाञ्चितत्स्पर्शश्चेति विशेषद्योतनाय निदर्शनद्वयमिति केचित् । मारुतं निःशब्दं मनसो रंह इव रंहो येषां तेषामिति वा शब्देऽरिसमुद्बोधः स्यादिति तथाभ्यासवतां तुरगाणां प्रयुतं दशलक्षम् ॥१६॥ मायासङ्ग्रामः कपटयुद्धानि । आत्मना धृत्या साम्यं येषां ते आत्मसाम्याः स्वस्यात्मसाम्यास्तेषां त्रिशतम् ॥ १७ ॥ असङ्ख्यातं भाण्डानि पात्राणि राज्याभरणानि वा राशिम् । भाण्डं भूषणमात्रेऽपि भाण्डं मूलवणिग्धने । नदीपात्रे तुरङ्गाणां भूषणे भाजनेऽपि

चेति विश्वः ॥ १८ ॥ मन्त्रिणौ स्वामात्यौ ॥ १९ ॥ साहाय्यार्थमित्युक्त्या नन्दनन्दनविषये कथं जेष्यत्येतावितिं मन्दसन्देह-मङ्कूरितं श्रीशुकः पारवश्येन पराकुर्वन्स्वरसनां व्यापारयते ॥ क्वेति । सुरासुरसङ्घातसंहरणपटुर्लयलवे वराकौ विधवासुतौ । वराको विधवासुत इति वचनात् ॥ २० ॥ विष्णुशक्तिमजानन्तो भूपाला विनिशिष्णव इति मागधेन प्रचोदिताः परं रणोद्योगं भूयश्चक्रुरिति योजना ॥ २१ ॥ अनेकभूपालाश्च तुरङ्गबलं च तैरन्वितः कतिपयैर्दिनैरल्पवासरैः ॥ २२ ॥ दीर्घिका वाप्य उप समीपे वनं जलं येषां तान्युद्यानानि च तैः सालैर्वृक्षैस्तालैर्वा । सालः पादपमात्रे स्यात्प्राकारे शङ्कुकद्रुमे ताले वेति विश्वः ॥ २३ ॥ कुन्ताद्यास्तु गताः कर्षणानि क्षेपिण्यः सन्नाहभेरीराहवदुन्दुभीन् सन्नाद्य वादयित्वा ॥ २४ ॥ अनीकं पर्तिर्निर्जग्मतुर्मथुराया निर्गत्य बहिरागत्य च ॥ २७ ॥ क्षत्रियैः शत्रुसम्बन्धिभिः ॥ २८ ॥ मायायां तत्सृष्टौ कुशलौ । तदेव व्यनक्ति ॥ मायया वृष्णिभिः सहेति । बहुवचनमाद्यर्थे । वृष्ण्यादिभिः । वृष्णिभिरिति पाठः सुन्दरः ॥ २९ ॥ विज्ञानाखेण निमिषान्तरेऽपास्य निराकृत्य ॥ ३० ॥ आहवलालसौ समरतृष्णायुक्तौ ॥ ३१ ॥ आभ्यां कुभाण्डकूपकर्णाभ्यां सुघोरं रणं कुरुतम् । कुरुतामिति पाठे भवन्तौ वर्तमानकाले युवां कुरुतामित्यर्थः । सम्प्रतीदानीं शतसम्मितैर्बहुत्वेन गणितैर्विश्वात्मनस्तदन्तर्यामिणस्तत्स्वामिनो वा छिन्नपुष्कराश्छिन्नानि पुष्कराणि शुण्डानि येषां ते कुन्ताश्छिन्नाः कन्धरा ग्रीवा येषां ते तथा छिन्नबन्धना इति विशीर्णास्तैः पुष्पिताः । तारकादीतच् । किंशुकाः पालाशवृक्षाः । कङ्कश्छद्मद्विजे ख्यातो लोहपृष्ठकृतान्तयोरिति विश्वः । बर्हिणो मयूरास्तत्पक्षा वासांसि येषां ते शरगणाः स्वर्णस्य पुङ्खा येषां तथाऽयोमुखेऽग्रभागे येषां ते । एकैकस्मिन्भटे दशदश तथैकैकस्मिन्नश्वे शतंशतम् ॥ ३६ ॥ रथे रथे च साहस्रं गतम् । यद्वा सहस्रपरिमाणमस्येति साहस्रं तत्सङ्ख्यस्तदस्य परिमाणमित्यर्थे । शतमानविंशतिकसहस्रवसनादित्यण् । गजे गजे प्रतिगजम् । अयुतं दशसहस्रम् । एवं परानीके परसेनायां शरगणा अदृश्यन्त ॥ ३७ ॥ क्रोडचिह्नेन वराहध्वजेन ॥ ३८ ॥ महाकाञ्चनमयस्तालः कूबरो युगन्धरश्च यस्मिंस्तं दूरादालक्ष्य रंहसा सङ्क्रम्य गदी हलायुधं प्राह ॥ ३९ ॥ येन मुसलेनाहितानाहवे जेतुमिच्छसि तन्मुसलं राम आदत्स्व गृहाण त्वयि यावद्गदां न प्रहरामि तन्मध्ये तव बाह्वोर्बलं मे आशु दर्शय ॥ ४० ॥ युगक्षये प्रलयकाले सूर्यसुतो यमो दण्डमिवादाय ॥४१॥ हलायुधः सहस्रकृत्वो रिपुदर्पहारिणं मुसलं मुसलः किसलायत इत्यादेः पुल्लिङ्गोऽपि मुसलशब्दः । तूलोपलशालकमलमुसलेति लिङ्गानुशासने पुंसि चेत्युक्तेः । धूमस्याङ्कुरस्योद्गारो वमनमस्येति णिनिर्वा तम् । चिक्षेप व्यनदच्च हरिः सिंहो यथा तथा क्षुब्धे क्षुण्णे क्षणेन स्वयं जरासुतो व्यंसितो वञ्चितः कालायसी कृष्णायोविकृतां गिरिकूटेन शिखरेणोपमा यस्याः सा तां गुर्वी बिभ्रत् गुर्वीमुर्वी पदा चालयन् बलमभ्यगात् । पद्भ्यां नीतिवित्वमेव ध्वन्यते । गुर्वीमयः सारमयीमिति पर्यायतोऽनुवादः । गदां गद्यते व्यक्तं स्तुत्यत इति गदा तां गदाम् । अतो न गदातिरेको गदनीयः । अश्मकुट्टनिभा-न्यप्यङ्गानि द्यति खण्डयतीत्यङ्गदेति वा । अश्मानं कुट्टयतीत्यश्मकुट्टोऽयःसारस्तत्सन्निभां रामो वामेन स्वहस्तेन जगृहे । अनेना-स्मत्सुन्दर्या धर्तुं शक्या त्वद्गदेत्युपजहास राम इति ध्वन्यते ॥ ४७ ॥ विसृत्य प्रक्षिप्य तूर्णं मागधमुरस्याहत्य बलिनमाश्लिष्ट जग्राह ॥ ४८ ॥ पद्भ्यां स्वचरणाभ्यां कुक्षौ तत्कण्ठं मागधकण्ठं चकार ॥ ४९ ॥ निपततोस्तयो राममागधयोर्मध्ये उपरि जरासुत-स्योपरि अमितविक्रम उपचारतः ॥ ५० ॥ भूय जगृहतुः ॥ ५१ ॥ उरसा उरो वक्षसा वक्षो निकटस्थान्समीपवर्तिपादपान् तं रामं कामपालो हलायुधो जत्रुणि गलतले । सन्धीतस्यैव जत्रूणीत्यमरः । अंसे स्कन्धे भुजयोः । शङ्खे चेति पाठे शङ्खो निध्यन्तरे कम्बु-ललाटास्थिनखेषु चेति विश्वाल्ललाटास्थिषु वा नखेषु वेत्यर्थः । ऊरावििति चेन्दुसङ्ग इत्यर्थः । जानौ जानुनि जायते । वृसनिजनि-चरीति अप् । जनिवध्योश्चेति न प्रवर्तते । उणित्यनुबन्धद्वयसामर्थ्यात् । जानुः अर्धर्चादिः । अस्त्रियामिति त्रिभिः सम्बन्ध्यते । रात्रौ जानुर्दिवा भानुरित्यादेः । जठरे उदरे वक्षस्युरसि । एकैकस्थानेऽनेकशः प्रजहार ॥ ५५ ॥ कन्धरे कन्धरायां हे कन्धर इति सम्बोध्य प्रजहारेति वा मुखे तथा ललाटे चुबुके । अधस्ताच्चुबुकमित्युक्तेरोष्ठाधःप्रदेशः । स मानी । सममिति वचनादत्रानुक्तमङ्गं ततस्तत्रानुक्तमतः सङ्ग्राह्यमिति सूचयति समं युगपदिति वा । रणसंविग्ना एतद्युद्धभीताः स्वयं निवृत्तकदनोद्यमा आसन्नं समीप-वर्तिनिधनं मरणं यस्य तमिति च । मागधेश्वरं मन्वानास्तन्वानाः सञ्चरमासन् । सह किञ्चित्सेनः शैनेयो गतः किल तत्र किमभू-दित्यतस्तां कथां कथयति ॥ सात्यकिरिति । बाणमंत्रिणा कुभाण्डेन त्रिभिर्बाणैः समर्पितस्ताडितः ॥ ५९ ॥ नाराचान् शरवि-शेषान् ॥ ६० ॥ दैत्यस्य बाणस्य मन्त्रिणोऽमात्यस्य सेनायाम् । अत्राशुगैरित्यस्यशीघ्रगामिभिरित्यर्थः ॥ ६१ ॥ कुभाण्ड इत्यपि नाम भारते हरिवंशे । एवमुक्ते तु वचने कुभाण्डेन महात्मना । तथेत्याह कुभाण्डमिति निरवकाशयुक्तेः ॥६२॥ पञ्चानां विषयानाह । नाभावित्यादिना ॥ ६३ ॥ तस्य कुभाण्डस्य रणात्तं तूर्णमपोवाहापानयत् । प्रसक्तः सङ्गतः समराङ्गणात् गतम् । कुभाण्डमालोक्य तथा प्राणसंशयं च गतमालोक्य समराङ्गणात्कृतवर्माणं विसृज्यापायादपगतः । प्राणसंशयं गतमात्मानं च । इत उपर्यवस्थाने ममापीयं दुर्दर्शकेति विलोक्यालोच्यापायादेष्यतोपायादिति वा । भूर्पति जरासन्धमनापृच्छ्यापृष्ट्वाऽत एव मागधेनाविसृष्टावनाज्ञप्तौ तेनैव येन पथा गतौ तेनैव प्रत्यङ्गशोणितं जग्मतू रक्तमिति शोणितं तदाख्यं पुरं च ॥ ६६ ॥

इति श्रीभागवतटिप्पण्यां सत्यधर्मकृतायां दशम उत्तरार्धे एकपञ्चाशोऽध्यायः ॥ १०-५१ ॥

॥ हरिः ॐ ॥ राजपुत्रा नृपसत्तमेत्याभ्यां परम्परया राजपुत्रा इति न भाव्यं भीतैस्तथाऽपि भीता इति प्रतिपक्षिबलिष्ठतामिव तवैतादृशी दशा कदाऽपि नायाता विद्वानेव विजानाति विद्वज्जनपरिश्रममिति त्वमेतन्न जानीष इति च ध्वनयति ॥ १ ॥ दानवी

बाणसम्बन्धिनी धरणीपतीन् राज्ञः श्रान्ताकृष्णं युद्धयन्तं च दृष्ट्वा रामस्य बलस्य बलं ववृधे ॥ २ ॥ स हलायुध ऐच्छत् मौलौ चूडायाम् । मौलिः किरीटे धम्मिल्ले कङ्कालद्रुमचूडयोरिति विश्वः ॥ ३ ॥ ततः । हे राम । भवता जरासुतो न वध्यो रणात्सुखी निवर्तस्वेति स्फुटमन्तरिक्षे घनघोषघर्घरां तद्वद्गम्भीराम् । गाम्भीर्ये नूपुरारावे घर्घरः समुदाहृत इति, घर्घरस्तु चलद्वारि वारिदध्वान इति विश्वः । घनघोपाज्जायमानो घर्घरो गलज्जलारावस्तद्वद्विद्यमानामिति वा विशदा च सा शरीरिणी च वायुसम्बन्धिनीम् । वैशद्यं चार्थप्रतिभासो यथा भवेच्छ्रुतवतां तथेति मन्तव्यम् । विशदवत्क्षीरमाधुर्यवन्मधुरा च साऽशरीरिणी च तामिति । विशदं क्षीरमाधुर्यमित्युक्तेः । वाणी शुश्रावाश्रृणोत् ॥ ४ ॥ बली हलायुधस्तद्वच आकर्ण्य श्रुत्वा विसृज्य जरासन्धं रथमास्थाय रणाङ्गणात् ब्रह्मर्षिसिद्धसङ्घैर्मागधसूतवन्दिभिष्टुतो न्यवर्तत निववृते ॥ ५ ॥ नम्रः पराजयजातलज्जया कन्धरो यस्य स युद्धाभितैर्नृपैस्समन्वितो युक्तः समनुभिर्मनुभिर्मन्त्रैर्गुप्तालोचनैः सहिता इति समनवस्तैरित इति वा । सामर्थ्यात्समनुपदार्थस्य नृपपदार्थे तादात्म्यसम्बन्धेनान्वयः । समनुभी राजभिरिति इति । आगमार्थः वरस्य चेति कथालक्षणटीकायां परस्येत्येतत्सामर्थ्यादागमशब्देन सम्बध्यत इत्युक्तेः । हतावशिष्टेनेत्युक्त्वावन्नशेषैः किं क्रियतामित्यादिवदवशिष्टस्य बहुलताभायान्न तथेति बोधयितुमल्पे त्यजल्पदिति ज्ञेयम् ॥ ६ ॥ सपत्नान् रिपून्भूपान्कांश्चिद्विद्राव्य सुबहून्हत्वा ॥ ७ ॥ महाविद्यैर्बहुज्ञैर्यैरसन्तुष्टैः सेनागमनसमयेऽन्वीयमानस्तैरेव सन्तुष्टैर्महावित्सर्वज्ञोऽन्वीयमान इति वा ॥ ८ ॥ अत एव मधुरां मनोज्ञां मधुरां तन्नाम्नीम् ॥ ९ ॥ दीपैरङ्कुरैश्च दीपाङ्कुरैदीपकलिकाभिरिति वा स्त्रीभिस्तथा प्रासादसंस्थितैर्वलिष्ठैर्वृद्धैः पुरुषैश्च पुष्पैर्लाजाञ्जलिभिर्भ्रष्टव्रीह्याञ्जलिभिः कीर्यमाणो व्यराजत ॥ १० ॥ अनुलेपनशब्दः करणे ल्युडन्त इति पुंल्लिङ्गः । उपलिप्यतेऽनेनेति गन्धादिस्तम् ॥ ११ ॥ प्रियङ्करा गतम् । माधवाभ्यां रामकृष्णाभ्याम् ॥ १२ ॥ धीमतेत्युभयविशेषणम् ॥ १३ ॥ शक्र इवेत्येकवचनेन यदि द्वौ स्यातां शक्रौ तदा समौ स्यातामिति स्वोक्तितात्पर्यं ध्वनयामासेति वा । बलान्तर्गतस्य शुक्लकेशस्य श्रीकृष्णस्य च तादात्म्यमेव चेति ज्ञेयम् ॥ १४ ॥ अक्रूरः प्रमुखे सम्मुखे येषां तैरुग्रसेनोद्धवमुखैरुग्रशेनादिभिः । उग्रायां क्रूरायां सेनायां सत्यामार्गतायां ये उद्धवोपेतं मुखास्तैरक्रूरप्रमुखैरक्रूरादिभिरिति वा । इदं द्वारत्वादक्रूरपुरस्कृतिः । नेनोऽतिरेकतो मुखमङ्ग इति ध्येयम् । सम्भाष्यालोच्येति यावत् ॥ १५ ॥

मधुरायाः । षट्सु द्वितीयेति स्मरणात्पञ्चम्यर्थे द्वितीया ॥ १६ ॥ रामानुगतः स श्रीमान् ॥ १७ ॥ गिरौ महेन्द्रे तत्रापि गो वृक्षमूलनिवासिनं जटामण्डलमण्डितं कञ्चनं मुनिं ददर्श ॥ १८ ॥ प्रावृणमेकमेकं परिधानीयमिति चीरकृष्णाजिनयोर्धरतोतितम् ॥ १९ ॥ फलमूलकृत आहारो यस्य तम् । लोकदृष्ट्या फलमूलकृत आहारोऽस्मिन्कर्मणि तद्यथा भवति तथा शिष्यशतैर्वृतमिति वाऽन्वयः । फलमूलाहारवच्छिष्यकर्तृकवरणं तेन युत इत्यर्थः ॥ २० ॥ प्रमाणं चक्रतुर्वीरौ यथान्यायमिति श्लोके नम्यत्वं भार्गवस्य नन्तृता च कृष्णस्य तेनोच्चत्वं भृगुजातस्य शौरेर्नीचता साऽपि न चेतसा चिन्तयितुं योग्योत्तरत्र नमस्ते पुण्डरीकाक्षेति कृष्णस्य नम्यता नन्तृता च जामदग्न्यस्येत्युक्तेरनिर्णयस्तयोर्भेद एवादौ वासुदेवः सङ्कर्षणः प्रद्युम्नोऽनिरुद्धोऽहं मत्स्यः कूर्मो वराहो नरसिंहो वामनो रामो रामः कृष्णोः बुद्धः कल्किरहं शतधेत्यादिबाधितो न च तादात्म्ये नम्यत्वादिः सम्भवतात्यतः प्रमाणेन तात्पर्यमाह । सर्वेति । सर्वावताररैरभिन्नः समा शक्तिर्यस्य स तथा स्वयं हरिः पूज्यपूजनीयोच्चम् । द्वन्द्वैकवद्भावः । भावप्रधानश्च । पूज्यत्वं पूजकत्वमेतत्प्रयोजकमुच्चत्वं नोचत्वं च तानि । अत्र यथाक्रममुच्चनीचमिति यद्यपि वक्तव्यम् । कथमुक्तावप्यभेदे किमित्येवं व्यत्ययस्योक्तिः । पाठक्रमादर्थक्रमो गरीयानित्युक्तेरुक्तप्रकारेणान्वयार्थौ ज्ञेयौ । अखण्डैकरसोऽपि ज्ञानघनोऽपि विष्णुर्दुरात्मनां मोहाय तत्र तत्रावतारेषु दर्शयेत् । हीति विद्वन्मुग्धवच्चैव केशवो वेदनार्तवदित्येकस्मिन्नपि दुरात्मनां मोहाय दर्शयेदित्वाद्यर्थविशेषं सूचयति । इति षाड्गुण्योक्तेर्न नम्यनन्तृभाषोऽपीदं बाधितुमलमिति भावः । वीरौ धीरः प्रेरकरहित एकश्च वीरो विवद्गरुडवद्वीर ईर्यश्चैको वीरोऽपरश्चेति वीरौ यथान्यायमतन्द्रितौ निरालस्यौ प्रमाणं चक्रतुः । अनन्तरं कृष्णो भगवान् तं मुनिपुङ्गवमिदमुवाच ॥ २१ ॥ हे भार्गव श्रीमंस्ते नमः । वक्तारो नाननुयोक्तारं प्रति लोका नायं नायको यदूनामप्राक्षीन्नोत्तरमूचे कश्चित्किञ्च पूर्वं वञ्चनमुनिपुङ्गवमित्यरूपनामवित्त्वं चोक्तं प्रतीयतेऽतः कथं जामदग्न्यभार्गवेत्युक्तिरित्यतोऽत एव कञ्चनेत्यादिकं कञ्चन विलासं जानीहीति भाव उपसंहार एवमीरणेन ज्ञेयः स्मृतौ । आवां ते श्रवणं श्रोत्रं क्वचिद्गतौ किम् ॥ २२ ॥ मुखं चेक्षणे चोत्फुल्लानि यस्य सः ॥२३॥ हे यदुश्रेष्ठ । त आगतं स्वागतं समीचीनमागमनम् । भगवन्तमधोक्षजं यदुषूत्पन्नं त्वामहं जाने ॥२४॥ कार्याणां कारणं कर्तारं पूर्वं जगतामादिपुरुषमित्यनन्यथासिद्धनियतपूर्वभावस्य तत्प्रयोजकस्योक्तिः । तस्मै साग्रजाय महात्मने ते नमः । विश्वे च लोकाश्च तेषामेकस्वरूपभूतं कं सुखं मौक्तम् । तस्यारण मुख्यावास तद्दातरिति यावत् । विश्वस्य योग्यजगतो लोको रोचमानः को वा वैकुण्ठे लोकस्तस्यैककारणतत्सुखव्यक्तिहेताविति वा । प्राग्बृहद्भाष्यमुदाहृतमनुसन्धेयम् ॥ २५ ॥ प्राज्ञोऽप्यभवत्पृच्छति ॥ किमर्थमिति । तावपि तथैवाहतुरित्याह ॥ इत्युक्ताविति ॥ २६ ॥ दुर्गहेतोरितराशक्यस्थाननिमित्तम् । इच्छाव इति पाङ्क्तः पाठः । इच्छाम इति पाठेऽस्मदोर्द्वयोश्चेति वयमिच्छाम इति बहुवचनं ज्ञेयम् ॥ २७ ॥ तद्वचनसंवलितलपितस्य तात्पर्यमेकस्मिन्पर्यवसायवन्दर्शयति ॥ एवमस्तु महाबाहाविति । तन्मूले गोमन्तदाधःप्रदेशे सृगालवासुदेवेन त्वज्ज्येष्ठेन । स युवां न सहिष्यति गतम् ॥२८॥ तं सृगालवासुदेवं सर्वज्ञं तमनुज्ञाप्य दक्षिणामुखे जग्मतुः ॥ २९ ॥ अभ्रङ्कषा महाद्रुमाः । अभ्राणि मेघान् अभ्रमम्बरं वा कषन्तीति ते द्रुमा यस्मिंस्तम् । सर्वकूलाभ्रकरीषेषु कष इति खच् । खित्यनव्ययस्येति ह्रस्वे मुम् । ददर्शतुर्ददृशतुः ॥ ३० ॥ तुङ्गतोरणं तुङ्गानि तोरणानि यस्मिंस्तत् तुङ्गतस्तुङ्गत्वतः । अरणं युद्धानास्पदमिति वा । विचित्रप्राकारहर्म्यप्रासादगोपुरम् ॥३१॥

शङ्खचक्रगदाधरः शङ्खमाध्मापयामास दध्मौ ॥ ३२ ॥ सृगालो वासुदेवेत्याख्या यस्य सः । व्यासो व्यासेन निर्दिशन्गोमायुसमतां तस्य स्पष्टयामासेति ज्ञेयम् । प्रत्ययादभ्युच्चयौ । पादातिः गतम् ॥ ३३ ॥ तदनीकं तदीयं सैन्यम् ॥ ३४ ॥ पदातिनौ पदाभ्याम-न्योन्यमतः सञ्चारोऽनयोरस्तीति तौ नीरयत्वात् ॥ ३५ ॥ वेला तीरं वरुणालयं समुद्रम् । रथिनमित्यनेन सद्योद्धृसम्प्रदायानभिज्ञतां ध्वनयति ॥ ३६ ॥ वासुदेवसुतावन्योन्यं वधस्य काङ्क्षाऽनयोरस्तीति । काङ्क्षत इति णिनिर्वा ॥ ३७ ॥ मुकुटेन किरीटेनोज्ज्वलं प्रकाशमानम् ॥ ३८ ॥ सर्वतो दिशं दुद्रुदुः ॥ ३९ ॥ प्रियो जामात्रादिर्यथा तथा पूजितौ तद्गजाश्वरथानीकं च कोशादिधनसञ्चयं कोशादौ विद्यमानो यो धनसञ्चयस्तम् । तदीयैः सृगालवासुदेवसम्बन्धिभिर्भृत्याश्च तेऽपूरुषा नराश्च तैर्भृत्या उदरस्मरणार्थमपूरुषाः परम्परागतां इति यावत् ॥ ४०–४१ ॥

इति श्रीभागवतटिप्पण्यां सत्यधर्मकृतायां दशम उत्तरार्धे द्विपञ्चाशोऽध्यायः ॥ ५२ ॥

हरिः ॐ ॥ सालः सर्जस्तालस्तृणराजो तमालः कालस्कन्धस्तैराढ्यं सम्पन्नं प्रियालो राजादनोऽशोको वञ्जुलः ततं सालं सर्जं सूरयस्तृणराजस्तालः कथ्यते कालस्कन्धस्तमालः स्यात् राजादनः प्रियालः स्यात् वञ्जुलोऽशोक उच्यते इत्यभिधानात् । कदम्बौ हरिप्रियो निम्बः पिचुमन्दः । पिचुमन्दस्तु निम्बः स्यात् । हिन्तालो वनक्रमुको नागो नागकेशरः पूगः क्रमुकः पुन्नागः सुरर्वणिकः ॥ प्लवगैराकम्पिता द्रुमा यस्मिंस्स तं फलभारेण नताः स्कन्धा येषां ते तैर्भारैर्नारिकेलैर्लाङ्गलिभिः । नारिकेलस्तु लाङ्गलीत्यमरः । विराजितं विभिः पक्षिभिश्च राजितमित्यपि नारीकेलैः सहितमिति तदाऽर्थः ॥ २–३ ॥ प्रस्रवणैर्निर्झरैरुपेतं युक्तम् ॥ ४ ॥ अथ प्रवर्षणनामके श्रृङ्गेऽत एव प्रवर्षणेति नाम ॥ ५ ॥ दिशो दश पश्यन्तौ । अत्युच्चत्वात्तदवलोकनं सम्भवतीति मन्तव्यम् ॥ ६ ॥ एतस्मिन्नेव काले तु क्षीरोदे सागरोत्तम इत्यारभ्य हृतं दानववीरेणेत्यन्तपद्येषु क्षीरसमुद्रस्थभगवत्समीपवर्तिता वलेरुच्यते । न च मुक्तैकगम्यस्य वलिसङ्गिता सम्भावनार्हा कथञ्चिदपि । कथन्तरां कर्मजदेवो देवोत्तमस्य मस्ते यः पदमदीधरतस्य स्तेयकर्म कथन्तमाम् । विद्रावितदोषस्याजमनिन्द्रमिति श्रुतेर्निद्रेस्यतो माहात्म्यवचनेन तात्पर्यं विवक्षुर्वलिर्यस्थले वर्तत न तन्मुक्त-स्थानमिति वक्तुं स्थानस्थितिमादावाह ॥ वहूनीति । कृष्णस्य हरेः क्षीरसागरे स्थाननातानि स्थानसमूहा वहूनि वहवः स्थानत्वेन जातानि प्राप्तानि कृतानीति यावत् । वहूनि तत्र मुक्तगम्यानि कानिचित् । देवाश्चेद्गच्छेयुः किमित्यत आह ॥ नेति । अमुक्तैस्त्रि-दशैरपि न गन्तुं शक्यानि अथान्यानि कानिचिदन्यैरमुक्तैर्गम्यानि क्वचिद्भागान्तरे कानिचित्सन्ति । तत्रामुक्तस्थाने देवा योगीन्द्रा अन्ये भक्ताश्च जनार्दन इति पाठे विष्णौ भव इत्यन्वयः । द्वितीयान्तपाठेऽर्चयन्तीत्यनेनान्वयः । गत्वा देवेशं जनार्दनमर्चयन्ति तत्क्वचिद्वलिः । आगमाद्द्वितीयमपाकरोति ॥ तस्येति । तत्र तदानीमसुरावेशात्पापवृद्धिरजायत । एतेनौपाधिकोऽयम्भावो देवस्यापि बलेरित्युक्तं भवति । तृतीयमपाकरोति ॥ तद्व्यक्तयेऽर्थमिति । तदसुरा वेशव्यक्त्यर्थमव्ययो जगन्नाथः सुप्तवच्छिश्ये । वनितानट-नमाटीकत हरिरेवमिति सूचयति । सुप्तिरेव किन्न स्यादित्यत आह ॥ अव्यय इति । अविः सूर्योऽयतेऽयं चक्षुद्वारेत्यव्ययः । नित्य-जागर इत्यर्थः । पापया । अर्श आद्यच् । पापमस्या अस्तीति तथा वुद्ध्या प्रभोः किरीटमहरत् । स्वशिरश्चरणकरणरूपा मुकुटाप-हारोऽन्याय्यः भगवानपि येन प्रागवन्धयत्तेनैव तत्पराभवः कार्य इति विनतातनयं प्रत्युङ्क्तैज्जय इत्याह ॥ तमिति । गरुडः तं वलिं जित्वा तत्तदपि हृत्वाऽऽव्रजन्गोमन्तं ददृशे तत्र च दृष्ट्वा कृष्णं तस्य शिरसि किरीटममुचत् । प्रभुरियत्कार्यपर्याप्तशक्तिः ॥ तत्तश्चायं पद्यानामर्थः । सागरश्रेष्ठे क्षीरोदे देवदेवस्य निवासेऽमुक्तगम्ये ॥ ७ ॥ वैरोचन इति पितुर्गुणा इति स्मारयति रत्न-चित्रम् ॥ ८ ॥ रत्नानि तद्गणानां च भणति ॥ इन्द्रानीलेति । पद्मरागाश्च महेन कान्त्याऽलीलानि सितानि मुक्ताफलानि च तैर्विराजितम् । अतो नेन्द्रनीलपुनरुक्तता ॥९॥ पुष्परागप्रवालैराढ्यं दिव्यकाञ्चनं निष्टप्ताष्टापदं तेन निर्मितं पुरपालकस्तत्पालनवि-नियुक्तः ॥ १० ॥ अन्तरे भूरध्रे पाताल इति यावत् । अन्तरं तु पराधीन भेदे रन्ध्रं इति विश्वः ॥ ११ ॥ रत्ननिचयं बहु-व्रीहिः ॥ १२ ॥ तस्य मूर्ध्नि शिरसि तं कृष्णम् ॥ १३ ॥ तदा दुग्धाब्धौ संसृतिस्थैः सुराद्यैः पूजां प्राप्तुं स्थानमेषां च योग्यम् । मुक्तस्थानादाप नारायणोऽजो बलिञ्चागात्तत्र सन्द्रष्टुमीशम् । तत्रासुरावेशमनुष्य विष्णुः सन्दर्शयन्सुप्तिहीनोऽपि नित्यम् । संसुप्त-वच्छिश्य उदारकर्मा संज्ञायै देवानां मुखमीक्ष्याप्रमेयः । देवाश्च तद्भावविदोऽस्तिलाश्च निमीलिताक्षाः शयनेषु शिश्शिरे । तदा बलिस्तस्य विष्णोः किरीटमादायागाज्जहसुः सर्वे देवाः । ब्रह्मादिभिः सर्वदेवैः समेते ब्रह्मादिभिर्हसमाने सुपर्णः । गत्वा पातालं युधि जित्वा बलिं च किरीटमादायाभ्ययाद्यत्र कृष्णः । तत्तस्य शीर्ष्णि प्रतिमुच्य नत्वा खगः स्तुत्वा देवदेवं रमेशम् । स्मृत आगच्छ-त्येव विसर्जितोऽमुना ययौ दुग्धाब्धि यत्र नारायणोऽसौ । किरीटं तत्कृष्णमूर्ध्नि प्रविष्टं तत्तुल्यमासीत्तस्य रूपेष्वभेदात् । यदिच्छया चैव नारायणस्य शीर्ष्णेऽप्यासीत्तस्य रूपेष्वभेदादित्यादिश्रीमदुक्तेर्विशेषो ज्ञेयः । मेलकोट्यामिदानीं तदेव देवमुकुटं ववर्तीति किं वदन्ती ॥ १३ ॥ वेदशिरोवेदितगुणकत्वेन हरिं नमति ॥ नमो नम इति । मद्वदन्यनमस्या त्वयाऽनुष्ठिता चेत्किं वैशिष्ट्यं ममेत्यत आह ॥ अनम इति । नाराय त्वद्भिन्नसङ्घाय अनमः स्वतन्त्रतया नमनाभावोऽस्त्वित्यर्थः । तुभ्यं नमः । नमो नम इत्याद-रेणोक्तिर्वा । कारणेनैव पुरुषस्तस्मै नारायणायाखिलात्पुत्रादेः प्रियाय । प्रस्तुतकार्यकारित्वेन स्तौति ॥ सुरारीति । णाय सुखात्म-काय णश्च निर्वृत्तिवाचक इत्यादेः । न बहिरेव रक्षकः किन्त्वखिलकर्मणां साक्षीत्यन्तः स्थित्वा द्रष्टा नारायणाय नाम्ना नारायणाय गुणाश्रयायेति वा ॥ १४ ॥ हिरण्यगर्भत्वमुपेत्य मूल इति मूले कमलभवतादात्म्यमुष्यत इति प्रतीयते तां मानानुतो विवक्षितमर्थं

प्रदर्श्य शमयति ॥ ब्रह्मस्थ इति । स्वातन्त्र्यं तद्गतस्थं च शब्दवृत्तेर्हि कारणमितीरणाद्ब्रह्मणि तिष्ठतीति ब्रह्मस्थः ब्रह्मेति नाम यस्यासौ तथा। ब्रह्मादिस्थ इत्युक्तौ सर्वसङ्ग्रहे लघुनैव भविष्यति रुद्रस्थ इत्युक्तिः स्वतन्त्रकार्यद्वयापप्रथानुगुण्येन तत्रापि यावती कण्डूतिस्तावत्कण्डूयनमिति रुद्रग्रहणमिति मन्तव्यम् । तत्स्थतावत्स्यातन्त्र्यमप्याह ॥ तयोरपीति । स्वमेवेति तथैक इति स्वस्यान्यनियम्यताया इव जगतो नियामकान्तरसाहित्या अपि परासो ज्ञेयः । स्कन्दोक्तेर्न तादात्म्यमर्थ इत्यर्थः ॥ ततश्चायं मूलार्थः मूले जगदादौ हिरण्यगर्भ त्वं तन्नियामकत्वात्तस्थात्तच्छदवाच्यत्वमुपेत्याशेषं भुवनं सृजति । नारायणात्मन् स एष त्वं परिपासि अन्ते शिवात्मन् भगवन्भवान् भूयो जहार च । तस्मै नम इत्यतीतेन वोत्तरेण वाऽन्वयः ॥ १५ ॥ उपसंहरति ॥ तमिति । यदोर्वंशकरं तद्वंशविस्तारकारकं भुवनेऽवतीर्णं वृषाकपिम् । हरविष्णू वृषाकपीत्यमरः । अहं जाने । अहं हि यतस्तव भृत्यो वैनतेयः । एतेन यन्माता विनता तत्पुत्रत्वान्नाहमप्रवण इति ध्वन्यते । किमित्यव्ययं कां क्रियां करवाणि हे देव तां ब्रूहि । सेवायां कस्याञ्चिद्विनियोज्येति भावः । हे भृत्य स्तवविदानां मृत्यानां स्तवः स्तोत्रं यस्येति वा । वृषाकपिरिति षष्ठे स्पष्टम् । वृषाकपिः पुमान्कृष्णे शङ्करे जातवेदसीति भानुः ॥ १६ ॥ इत्युक्त्वा जानुनी गतम् । धरणी तत्र कृत्वादेऽग्रतो हरिधुरि प्राञ्जलिः संस्तस्थौ ॥ १७ ॥ तद्वैनोरसा शिरसा दृष्ट्वेत्युक्तेर्यन्नतं तत् उत्तममङ्गं शिरो दोर्भ्यां षस्पर्श । तदित्यव्ययं षष्ठ्यर्थे । तस्योत्तममङ्गमिति वा ॥ १८ ॥ भद्र मङ्गलात्मन् । इदानीं गच्छ मया यथाकामं स्मृत एहि यथाकामं गच्छेति वाऽन्वयः ॥ १९ ॥ पीतकौशेयं वासो नीलं च ययोस्तौ नीलाम्बरत्वात् औपाधिकं कदाचित्कं पीताम्बरं वा तस्येति । पीतनिर्झरवारिणीति पाठः सरलः । तत्र करवीरपुर्याम् ॥ २० ॥ महत्या सेनया तत्र सङ्गृहीतया ॥ २१ ॥ शृगालं दुरात्मतानुबन्धेन क्रोधविह्वलः ॥ २२ ॥ सप्ताहं दिनसप्तकं गतम् ॥ २३ ॥ बहुभिर्हतावशिष्टैः । धर्मज्ञावित्यनेन पश्चादगत्वा पलायनविलयनकर्तारो वध्या इति धर्मममर्मज्ञावित्याह ॥ २४ ॥ सप्तदशकृत्व इति पदमेकम् । मुमागमो वा । निन्दुर्वा । तत्र किञ्चिन्न्यूनतेति सूचयति । एवं सप्तदशवारं कृत्वसुजन्तः शब्दः । तावती त्रयविंशत्यात्माक्षौहिणीवलं यस्य सः । कृष्णपालितैर्यदुभिर्मागधो राजा युयुधे । कृष्णतेजसा मुख्येन वृष्णिभिस्तद्बलमक्षिण्वताहीयत ॥ २६ ॥ त्यक्तो जीवेति मुक्तः । अष्टादशमेऽष्टादशे । मट् स्वार्थे । आगमिनि सङ्ग्रामे एष्यति तदन्तरा तन्मध्ये ॥ २७ ॥ नारदेन देवताकार्यविदा विदा च तदायुषः प्रेषितः । अत्र हरिवंशशंसिता कथाऽप्यनुसन्धेया । तथा हि तप्त्वा सुदारूणं घोरं तपः परमदुश्चरम् । गर्गः । एवमस्त्विति रुद्रो प्रददौ मुनये सुतम् । एवं गर्गस्य तनयः । यथा वदति राजेन्द्र मगधाधिपतिर्नृपः । तथाऽहं सम्प्रवक्ष्यामि श्रूयतां यवनाधिपेति । साल्वः । इत्येवं नरपतिभास्करप्रणीतं वाक्यं ते कथितं मया हितं नृपाणाम् । तत्सर्वं सह सचिवैर्विमृश्य वुद्ध्या प्रयुक्तं कुल मनुजेन्द्र आत्मनेष्टम् । यवनः । धन्योऽस्म्यनुगृहीतोऽस्मि सफलं जीवितं च मे । हुत्वाऽग्निं विधिवद्राजा कृतकौतुकमङ्गलः । प्रस्थानं कृतवान्सम्यग्जेतुकामो जनार्दनमित्यादिना नन्दकुमारमारकः । कुमारो गर्गेन वृतो हरवरतो जातश्च । तमाज्ञापयामास ससाल्वतः सहनृपो जरासुतः । तथाऽत्रापि नारदप्रेषितो वीर इतीरणाच्चाकस्मादिति कस्मादीरणं श्रीधरीय इति न जानीमः । कृष्णेन दूततो घटघटितसर्पप्रेषणं तेन च पिपीलिकापूरणेन मारणं च तस्येति चानुसन्धेया । तथा हि तत्रैव । अपयाने मतिं कृत्वा दूतं तस्मै ससर्ज ह । ततः कुम्भे महासर्पं भिन्नाञ्जनचयोपमम् । घोरमाशीविषं कृष्णं कृष्णः प्राक्षेपयत्तदा । ततस्तं मुद्रयित्वा तु स्वेन दूतेन हारयत् । निदर्शनार्थं गोविन्दः कृष्णसर्पोपमः कृष्ण इति । तत्कालयवनो बुद्ध्या त्रासनं यादवैः कृतम् । पिपीलिकाभिश्चण्डाभिः पूरयामास तं घटम् । स सर्पो बहुलैस्तीक्ष्णः सर्वतस्तैः पिपीलकैः । भक्ष्यमाणः किलाङ्गेषु भस्मीभूतोऽभवत्तदा । तं मुद्रयित्वा तु घटं तथैव यवनाधिपः । प्रेषयामास कृष्णाय बाहुल्यमुपदर्शयन् । वासुदेवस्तु तं दृष्ट्वा स्वयोगं विहितं प्रभुरिति । आचार्यवर्या अपि । स कृष्णः पन्नगं घटे निधाय केशवोऽर्पयत् । निरायुधोऽप्यहं क्षमो निहन्तुमप्रियानिति । घटं पिपीलिकागणैः प्रपूर्य यावनोऽर्पयेत् । बहुत्वतो विशेष्य इत्यहि मृतं व्यदर्शयत् । किमत्र सत्यमित्यहं प्रदर्शयिष्य इत्यजः । उदीर्य दूतमभ्ययादिति जगदुः । काञ्चनशङ्कां तन्वते । हरेरवन्ध्यसन्धत्वे कथमिदं दन्दशूकहिंसनं तेन तदन्वथात्वमिति । तत्रैदमुत्तरं मन्वते च । कृष्णवर्णतश्चूर्णयाम्यहमेक एवानेकान् । बहिः । अन्तश्चान्तरङ्गिकभावं वापसाद्यनासज्जणेनाहेर्वलो बहिः कालयवनकालने तव बलस्य शक्त इति सूचयामास । कृष्णेऽहिर्वाऽहिशयो वेत्यविवेकेन हरवरयथार्थतां पौत्र इत्यादि यदुदेव इति प्रसङ्गसङ्गतमिदमुक्तमिति ज्ञेयम् । तिसृभिर्म्लेच्छकोटिभिः सह मधुरां रुरोध । तदहन्तामाह ॥ नृलोके स्वयमप्रतिद्वय इति । आत्मसम्मितान्वृष्णीन् श्रुत्वा तमागतं यवनं दृष्ट्वा सङ्कर्षणसहायवान्कृष्णोऽचिन्तयत् ॥ २८-२९ ॥ वृजिनं दुःखम् । व्रजिन वृजिनं दुःखमिति वृहद्भाष्योक्तेः । उभयतो भयं प्रकाशयति । यवनो निरुद्धेऽस्मान्नय श्वो वा परश्वो वा मागधो महाबलोऽन्येति । लोकानुकृतिरत्रोत्तरत्र चेति ज्ञेयम् ॥ ३० ॥ अस्यानेन यवनेन युध्यतोः सतोर्यदि जरासुत आगच्छेत् ॥ ३१ ॥ बन्धून्वधिष्यति बहुवारं पराभूतिरूपा । अथवा स्वपुरं नेष्यते खेदयितुम् । बल्यस्मत्परोक्षं बलवान् । द्विपदं दुर्गमं पदशब्दोऽयम् । द्वे पदे येषां तद्दुर्गमं दुर्गं विधास्यामः । आलस्यादभूतं विषमित्युक्तेरद्येत्युक्तिः ॥ ३२ ॥ तत्र दुर्गे ज्ञातीन्वसुदेवादीन्समाधाय निधाय भीतानां समाधनमपि कृत्वेत्यर्थः । यवनं घातयामहे । अनेन हन्ताऽन्योऽस्ति । अतो हतिमेतस्य कारयाम इति ध्वनयति ॥ ३३ ॥ अन्तःसमुद्रगतं यत्र त्वष्टुर्विश्वकर्मणः सम्बन्धि शिल्पनैपुणं करव्यापारकौशलं दृश्यते । विज्ञानं च महदिति दृश्यते उद्यत इति वा । अचीक्लृपत्कारयामास ॥ ३४ ॥ रथ्या रथादिमार्गा वीथ्य उपमार्गा यथावस्तु तत्तत्पदार्थलक्षणानुसारेण यथावस्तु स्वशक्त्यनुसारेणेति वा शक्तं वस्त्विति भण्यत इत्युक्तेः । सुरेति द्रुमलतान्वयि । तद्युतान्युद्यानानि विचित्राण्युपवनानि तैरन्वितम् । उद्याने महति बिचित्रोपवनैर-

वान्तरैरन्वितमिति वा ॥ ३५ ॥ दिवस्पृग्भिस्तावदुच्चैर्धनुः सहस्रोर्ध्वभागदिवस्पृग्भिर्वा। मातूक्ता। स्फाटिकानि स्फाटिकानि स्फटिकविकृतानि च तानि चाट्टालगोपुराणि च तै राजतारकूटैलोहविशेषैः कोष्ठैरन्तर्गृहैर्हैमैः कलशैरिति शेषः ॥ ३६ ॥ रत्नकूटैस्तच्छृङ्गैर्महामरकतस्थलैर्वास्तोष्पतीनां वास्तोर्गृहक्षेत्रस्य पतयोऽधिष्ठातारः। वास्तोष्पतिगृहमेधाच्छेति निपातनादलुक्त्वं चेत्येके। वस्तुतस्त्विवणः परत्वात्कस्कादिषु चेति षत्वं ज्ञेयम्। वलभीभिश्चन्द्रशालाभिः ॥ ३७ ॥ चतुर्वर्ण्येति स्वार्थे ष्यञ्। सुधर्मां शर्मतः सभां पारिजातं शक्रशक्तिर्मशम्। अन्यथा सत्यभामाप्रार्थनं तदुत्पाद्यानयनादिकं सङ्गतेतरस्यात्। प्राहिणोत्प्रेषयामास॥३८॥ यत्र सुधर्मायां मर्त्यैर्धर्मैर्जरादिभिर्वियुज्यते वियुक्तो भवति। क्षीरोदवासिनो देवदेवस्य विष्णोर्यत्प्रियं तत्सर्वं प्राहिणोत् ॥ ३९ ॥ तोयराण्णीरनायकः ॥ ४० ॥ निधिपतिर्धनदोऽष्टौ निधीन्। पद्मश्चैव महापद्मो मत्स्यकूर्मौ तथौदकः। नीलो मुकुन्दः शङ्खश्च निधयोऽष्टौ प्रकीर्तिता इति कीर्तनात् महापद्मपद्मयोरेकीकरणेन महापद्मश्च पद्मश्च शङ्खो मकरकच्छपौ। मुकुन्दकुन्दनीलाश्च खर्वश्च निधयो नवैति वाऽमरोक्तानष्टौ निधीन्। श्रीमुकुन्दे निधिनिधौ सति किं मुकुन्दनिधनेति तदप्रेषणेष्टकसम्पत्तेरिति केचित्। केचिच्चैकस्मिन्न प्रहितेऽपि तत्कार्यं यथा भविष्यति तथेतरेषामप्रेषणेऽपि हरिशक्तितः सर्वकार्यं भविष्यत्येव तथाऽपि सेवार्थमेव तत्प्रेषणमिति द्योतयितुमेकत्यागेनाष्टेति स्पष्टोक्तिरिति भावं भावयन्ति। अपरे तु नाम्ना शिखण्डिव्रजमित्यादिवन्खर्वेति ह्रस्वम्। स्वल्पमित्यर्थकं भवन्न महत्त्वोपयोगि भवेदिति तत्त्याग इति वर्णयन्ति। अविक्षयान्विक्षयरहितान्। व्यये कियति सति कृतेऽप्यन्ययान् स्वाभिमतिमत्तया भगवत्कृतम्। अभिमतिमदलाभे स्वेषामाधिक्रन्मानसपीडाकारि। स्वमनःपूर्वकं कृतम्। सम्पादितमिति वा। आधिर्मनोवरूथं चेति तृतीयतात्पर्यात् ॥ ४१ ॥ यद्यस्याधिपत्यं भगवता दत्तं तत्सर्वं हरौ भूमिगतेऽर्पयामासुः। तदर्पयामासुः। तदर्पणफलं लयति। स्वसिद्धये स्वस्वरूपलाभाय स्वं ज्ञातावात्मधनयोः सिद्धिनिष्पत्तिलाभयोरिति विषेषो ॥ ४२ ॥ रामेण सम्यगनुमन्त्रितं येन स मथुरायाः सकाशात्तत्रयोगप्रभावेन नीत्वा प्रस्थाप्य रामं च मथुरापालने नियुज्य स्वयं पद्ममाली निरायुधः पुरद्वारान्निर्जगाम ॥ ४३ ॥

इति श्रीभागवतटिप्पण्यां सत्यधर्मकृतायां दशम उत्तरार्धे त्रिपञ्चाशोऽध्यायः ॥ ५३ ॥

हरिः ॐ ॥ उज्जिहानमुद्यन्तमुडुपं नक्षत्रत्रातारं श्यामं वर्णतो वयतश्च ॥ १ ॥ कौस्तुभाख्यरत्नसम्यक्सम्बद्धग्रीवम्। नवकञ्जरुणेक्षणमिति कृष्णस्य वा मुखारविन्दस्य वा विशेषणम् ॥ २ ॥ नित्यप्रमुदितं सदा सन्तुष्टं श्रीमन्तौ सुशोमनौ कपोलौ यस्य तच्छुचिस्मितं मुखारविन्दं बिभ्राणं दधन्तं स्फुरन्मकरकुण्डलमिदमपि तथा ॥ ७ ॥ श्रीवत्सलाञ्छनः पुमानयं वासुदेव एव। नारद प्रोक्तैर्लक्षणैरित्यनुवादेन नारदप्रेषित इत्यत्र लक्षणान्युक्त्वा प्रेषयामासेति वाद ऊह्यः ॥ ४ ॥ धर्मज्ञतां स्फोरयति ॥ निरायुध इत्यादिना ॥ ५ ॥ पराङ्मुखं न तु पराजयात् अनारब्धत्वाद्युद्धस्य। योगिनां दुरापमित्यनेनाविज्ञत्वं यवनस्य प्रकटयामास ॥६॥ आत्मानं स्वं पदे पदे हस्तप्राप्तमिव दर्शयता हरिणा दूरमद्रिकन्दरं नीतः। इदानीं धरिष्यामीत्याशामुत्पाद्य दूरं तं चकर्षेत्यर्थः॥७॥ यदुकुले जातस्य तव पलायनं नोचितमिति वाचा क्षिपैतिरस्कुर्वन्। अहतमनष्टमशुभं यस्य स एनं न प्राप ॥ ८ ॥ एवं वाचाः क्षिप्तो भगवान् अद्रिकन्दरमेव प्राविशत्। सोऽपि यवनोऽपि तत्र गिरिकन्दरे शयानमन्यं नरं ददृशे। वस्तुस्थितिकथनमिदम् ॥ ९ ॥ अस्मिन्नुत्पन्नकृष्णभ्रमो मनस्येवमालोच्य स्वमरणानुगुणं कार्यमकरोदित्याह ॥ नन्विति। असौ कृष्णो मां दूरमानीय साधुरिव शेत इत्यच्युतं मत्वा तं पदा समताडयत्। ताडनादिकमेतत्कारणकमित्याह ॥ मूढ इति ॥१०॥ चिरं सुप्त इति शनैर्लोचने उन्मील्य दिशो विलोकयन्पार्श्वे एव स्थितमद्राक्षीत् ॥११॥ सः कालयवनो यावत्तस्य रुष्टस्य को वा मामनागसमताडयत्पदेति कुपितस्य दृष्टिपातेन हेतुना देहजेन स्वदेहादेव जातवेदसाऽग्निना दग्धस्तावदेव क्षणाद्भस्मसादभवत् ॥ १२ ॥

## श्रीमद्वल्लभाचार्य्यकृता सुबोधिनी

भगवान् पुनर्वराहो हिरण्याक्षवाक्यमिव सर्वसमर्थोऽपि, कार्यगौरवं मन्यमानोऽपि, न निवृत्त इत्याह एवं क्षिप्तोऽपीति। 'वधानुकल्पः स्वद्रोहे भक्तद्रोहे वधः स्मृत' इति वधानुकल्पमेव कर्तुं गिरिकन्दरं प्राविशत्। एतावानेव भगवद्व्यापारः निर्गुणो फिले निमित्तमिति ज्ञापयितुं निरूपितः। तद्भगवषि फलितमित्याह सोऽपि प्रविष्ट इति। यदा भगवान् गिरिकन्दरं प्राविशत्, तदा सोऽपि प्रविष्टः। प्रवेशानन्तरं तस्य भ्रमो जात इत्याह तत्रान्यं शयानं नरं ददृश इति। नरत्वमेव तत्र प्रतीतम्, नत्वन्यलक्षण्यम्। यद्यपि ससामग्रीकः शेते, तथापि पूर्वमेव शयनार्थं सामग्रीं प्रेषयित्वा पश्चादागत्य शयनं कृतवानिति तस्य बुद्धिः ॥ ९ ॥ ननु भगवान् शयनार्थं चेदागतः, तदा तवागमनमनुचितमिति सुतरामतिक्रमोऽनुचित इत्याशङ्क्य, तस्य भ्रान्तस्याभिप्रायमाह नन्वसाविति। स्वयमागच्छतु नाम, कथं नोक्तवान् शयनार्थं गच्छामीति, युद्धं वा न करिष्यामीति। यो हि यमनुधावति, तस्यानिषेधे 'अप्रतिषिद्धमनुमतं भवती'ति न्यायेन दूरे गत्वा युद्धं करिष्यतीत्यभिप्रायो भवति। निकटे ससहायो बलवान् भवतीति। तस्मादेवं भ्रमं जनयित्वा एतावद्दूरमानीय, युद्धमप्यकृत्वा, साधुवत् शेते। यो हि वञ्चयति, स साधुः। असाधोरनिद्राणस्योत्थापनं न दोषायेति दुर्बुद्धिः शयानं भगवन्तं मत्वा पदा समताडयत्। पादयोर्व्यथा जनितेति, महांश्चातिक्रमो भवत्विति। शयानोद्बोधनं पादताडनमतिक्रमार्थमच्युतबुद्धिश्चेति त्रयो दोषाः। ननु महानयं महतश्चोपदेशं प्राप्य कथमेवं दुर्बुद्धिर्जात इति चेत्,

तत्राह मूढ इति । स्वभावतो मूढः । अच्युत इति तद्बुद्ध्या ताडितत्वान्महतोऽपि पादप्रहारे न राज्ञः कश्चिदपकारो जात इति सूचितम् ॥ १० ॥ ततो यज्जातं तदाह स उत्थायेति । पादप्रहारेण चिरं सुप्तोप्युत्थाय सर्वा दिशो विलोकयन् पार्श्वे तं कालयवनमद्राक्षीत् । स नु प्रथमतः तत्प्रतिकलां दिशं दृष्टवान्, ततः क्रमेण दृष्टिं प्रसारयन् द्वितीयपार्श्वे अवस्थितमुत्थितं पश्चाद्ददृशे ॥११॥ ततः कोऽयमिति प्रश्नात्पूर्वमेव दर्शनमात्रेणैव स भस्मसाज्जात इत्याह स तावत्तस्य रुष्टस्येति । निरपराधस्ताडित इति तस्य क्रोधः । अतो रुष्टस्य तस्य दृष्टिपातेन निमित्तेन कालयवनदेहस्थित एवाग्निः काष्ठस्थितो वह्निर्वह्निस्पर्शेनेव प्रादुर्भूतः । ततो देहजेनैवाग्निना दग्धः सन् क्षणमात्रेणैव भस्मसादभवत् । बहिःस्थितोऽग्निः दवानल इवाल्पमेव दहेत्, पलायनं वा कुर्यात् । अतः स्थितोग्निरिति सर्वव्यापारं दूरीकृत्य भस्मसादेव कृतवान् ॥ १२ ॥

## श्रीसुबोधिनी-सारः

शुकोक्तिः । एवं तेन क्षिप्तोपि भगवान् गिरिकंदरं पर्वतगुहां नीतः सोऽपि यवनः प्रविष्टस्तत्र स्थाने शयानम् अन्यं नरं ददर्श ॥ ९ ॥ मां दूरमानीयासौ इह साधुवत् शेते ननु निश्चितम् इत्येवमच्युतं कृष्णं तं मत्वा मूढो यवनः पदा पादेनाऽहन् ॥ १० ॥ चिरं बहुकालेन सुप्तः स पुरुष उत्थाय शनैर्लोचने नेत्रे उन्मील्य दिशोऽवलोकमानः पार्श्वे समीपेऽवस्थितं तं यवनमद्राक्षीत् सेक्षत ॥११॥ रुष्टस्य क्रुद्धस्य तस्य सुप्तोत्थितस्य पुंसो दृष्टिपातेनोद्भूतेन देहजेनाग्निना तावत् साकल्येन स यवनः क्षणात् तत्कालं भस्मसादभवत् भस्मीभूतोऽभवत् हे भारत ॥ १२ ॥

## गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

भगवांस्तु एवं क्षिप्तोऽपि तेन मुचुकुन्दं प्रबोधयितुं मुचुकुन्ददृष्ट्यैवैनं भस्मीकर्तुं च तूष्णीमेव गिरिकन्दरं प्राविशत् । स यवनोऽपि तत्र गिरिकन्दरे प्रविष्टः सन्नन्यं शयानं कञ्चिन्नरमद्राक्षीत् ॥ ९ ॥ ननु अवधारणे । असौ वासुदेव एव मां दूरमानीय इह गुहायां साधुवत् शेते इति तं सुप्तं नरं अच्युतं कृष्णं मत्वा स मूढः पदा पादेन समताडयदित्यन्वयः ॥ १० ॥ स चिरं सुप्तताडितः पुरुष उत्थाय शनैर्लोचने उन्मील्य सर्वा दिशो विलोकयन् स्वपार्श्वे स्थितं तं कालयवनमद्राक्षीत् इत्यन्वयः ॥ ११ ॥ हे भारत ! स यवनः रुष्टस्य निद्राभङ्गात् क्रुद्धस्य तस्य पुंसस्तावद्दृष्टिपातेन सन्दीप्तो यस्तद्देहजोऽग्निस्तेन दग्धः संस्तत्क्षणादेव भस्मसात् अभवत् ॥ १२ ॥

## अन्वितार्थप्रकाशिका

एवमिति ॥ एवं क्षिप्तोऽपि भगवात् मुचुकुन्ददृष्ट्या तं भस्मीकर्तुं तूष्णीमेव गिरिकन्दरं प्राविशत् । प्रविश्य च मुचुकुन्दशिरःप्रदेशेऽतिष्ठदिति हरिवंशे । स यवनोऽपि तत्र गिरिकन्दरे प्रविष्टः सन्नन्यं शयानं कञ्चिन्नरं ददृशे । तङ्गर्वः ॥ ९ ॥ नन्विति ॥ नन्ववधारणे । असौ वासुदेव एव मां दूरमानीयेह गुहायां साधुवत् शेते इति तं सुप्तं नरमच्युतं कृष्णं मत्वा स मूढः पदा पादेन समताडयत् ॥ १० ॥ स इति ॥ स चिरं सुप्तस्ताडितः पुरुष उत्थाय शनैर्लोचने चोन्मील्य सर्वा दिशो विलोकयन् स्वपार्श्वेऽवस्थितं तं कालयवनमद्राक्षीत् ॥ ११ ॥ स इति ॥ हे भारत ! स यवनः रुष्टस्य निद्राभङ्गात् क्रुद्धस्य तस्य पुंसस्तावद्दृष्टिपातेन सन्दीप्तो यस्तद्देहजोऽग्निस्तेन दग्धः संस्तत्क्षणादेव भस्मसादभवत् ॥ १२ ॥

## श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्

स यवनोऽपि ददृशे ददर्श ॥९॥ मां दूरमानीय साधुवत् शेते इति तं मुचुकुंदसंज्ञं नरं हरिं मत्वा ॥ १० ॥ स मुचुकुंदाभिधः पुरुषः तं यवनं ॥११॥ रुष्टस्य क्रुद्धस्य मुचुकुंदनाम्नो नरस्य दृष्टिपातेन स यवनः सद्यः स्वस्य देहजेनाग्निनादग्धः सन् ॥१२॥

## भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

एवमिति ॥ भगवांस्तु, एवं इत्थं, तेन क्षिप्तः सन्नपि, तूष्णीं गिरिकन्दरं रैवतगिरिगुहां, प्राविशत् । स यवनोऽपि, तत्र प्रविष्टः सन्, शयानं अन्यं कंचित्, नरं पुरुषं, ददृशे अद्राक्षीत् ॥ ९ ॥ नन्विति ॥ असौ वासुदेवः, मां इत्थं इह दूरम्, आनीय, साधुवत् अधुना तूष्णीं, शेते नूनम् । इति कृतविचारः मूढः यवनः, तं शयानं पुरुषम्, अच्युतं कृष्णं मत्वा, पदा पादेन समताडयत् ॥ १० ॥ सः इति ॥ स तत्ताडितः पुरुषः, उत्थाय चिरं सुप्तः, हेतुगर्भमिदम् । तत्त्वात् शनैः लोचने उन्मील्य, दिशः विलोकयन् सन्, पार्श्वे अवस्थितं, तं यवनं, अद्राक्षीद्ददर्श ॥ ११ ॥ स इति ॥ हे भारत, सः यवनः, रुष्टस्य क्रुद्धस्य, तस्य पुंसः, तावत्तत्क्षणजेन, दृष्टिपातेन देहजेन अग्निना, तद्दृष्टिपातसंदीप्ततद्देहजवह्निनेत्यर्थः । दग्धः सन्, क्षणात् भस्मसात्, अभवत् ॥ १२ ॥

## कृष्णप्रिया

कालयवन आक्षेप करता ही रहा और श्रीकृष्ण प्रभु उस अद्रि कन्दरा में प्रविष्ट हो ही गये । कालयवन भी भगवान के पीछे गुफा में घुसा । यवनने उस कन्दरा में सोते हुए किसी एक अन्य मनुष्य को देखा ॥ ९ ॥ सोये हुए मनुष्य को देखकर

ऐसा सोचा कि 'देखो तो सही यह' मुझे इस रीति से यहाँ तक खींच लाया और स्वयं अनजान बनकर सीधे मनुष्य के समान सो रहा है। ऐसा सोचकर उस मूढ़ ने-जड़मति ने कसकर उसको-भगवान् कृष्ण को एक लात लगाई ॥ १० ॥ सुचिर समय से सोया हुआ यह पुरुष पाँव की ठोकर लगने से जाग गया और धीरे-धीरे अपनी आँख खोली। वह चारों ओर देखने लगा, मुझे किसने जगाया? क्यूं जगाया? ऐसा सोचते ही खड़ा हुआ कालयवन को देखा ॥ ११ ॥ हे भरतकुलदीपक राजन्! इस प्रकार ठोकर लगाकर जगाये हुए और नींद भंग हो जाने से रुष्ट हुए मुचुकुन्द राजा की दृष्टि से उत्पन्न हुई उनके देह की अग्नि से क्षणमात्र में भस्मसात् हो गया ॥ १२ ॥

[1]राजोवाच

**को नाम स पुमान्? ब्रह्मन्! कस्य किंवीर्य एव च। कस्माद् गुहां [2]गतः शिश्ये? किन्तेजो? [3]यवनार्दनः ॥१३॥**

श्रीशुक उवाच

**स इक्ष्वाकुकुले जातो मान्धातृतनयो महान्। मुचुकुन्द इति ख्यातो ब्रह्मण्यः सत्यसङ्गरः ॥१४॥**
**स याचितः सुरगणैरिन्द्राद्यैरात्मरक्षणे। असुरेभ्यः परित्रस्तैस्तद्रक्षां सोऽकरोच्चिरम् ॥१५॥**
**लब्ध्वा गुहं ते स्वःपालं मुचुकुन्दमथाब्रुवन्। राजन् विरमतां कृच्छ्राद् भवान् नः परिपालनात् ॥१६॥**

### कवंमक्षमा

**अन्वयः**—राजोवाच—हे ब्रह्मन्! यवनार्दनः, सः, पुमान्, कः, नाम? कस्य? च, किम्वीर्यः एव? कस्माद्, गुहाम्, गतः, शिश्ये? किन्तेजः? ॥१३॥ श्रीशुक उवाच—सः, इक्ष्वाकुकुले, जातः, मान्धातृतनयः, महान्, ब्रह्मण्यः, सत्यसङ्गरः, मुचुकुन्दः, इति, ख्यातः ॥ १४ ॥ असुरेभ्यः, परित्रस्तैः, इन्द्राद्यैः, सुरगणैः, आत्मरक्षणे, याचितः सः चिरम्, तद्रक्षाम्, अकरोत् ॥ १५ ॥ अथ ते, गुहम्, स्वःपालम्, लब्ध्वा, मुचुकुन्दम्, अब्रुवन्, राजन्, नः, परिपालनात्, कृच्छ्रात्, भवान् विरमताम् ॥ १६ ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

यवनमर्दयति हिनस्तीति तथा स कस्य वंश्यः? किंवीर्यः? कीदृक्प्रभाववान्? किंतेजः? कस्य वीर्यम्? पुत्र इत्यर्थः। शिश्ये अशयिष्ट ॥१३॥ सत्यः संगरो युद्धं प्रतिज्ञा वा यस्य सः ॥१४-१५॥ गुहं कार्तिकेयम्। स्वःपालं स्वर्गपालकं सेनान्यम् ॥१६॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

सोऽद्रिकन्दरशायी। नामेति प्रसिद्धम्। वंश्यो वंशोद्भवः। किं वीर्यं यस्य स तथा। कस्य तेजः किंतेजः? इत्यर्थ इति-तेजःशब्दोदितवीर्यपदेन पुत्रो लक्ष्यते, सूत्रशाटिकान्यायेनेति भावः। 'तेजो वीर्येऽनले सूर्ये चन्द्रशंपोडुषु ग्रहे। प्रतापदीप्ति-पुत्रेषु' इति नाममालोक्तेः पुत्रवाचको वा तेजःशब्द इति। को नाम? किन्नामेत्यर्थः। यद्वा-नाम प्राकाश्ये कः केन जात्यादिना प्रसिद्धः किंनाम? किंजातिरित्यर्थः ॥ १३ ॥ सोऽद्रिकन्दरशायी। 'संगरो युधि चापत्तौ प्रतिज्ञायां विषे ध्वनौ। शमीफले क्रियाकारे तथा मित्रकलत्रयोः।' इति निरुक्तिः। महान् महाभागवतः ॥ १४ ॥ स मुचुकुन्दः। तद्रक्षां सुरगणरक्षाम्। आत्मरक्षणे निमित्ते। चिरं कतिचिच्चतुर्युगानि ॥१५॥ ते सुरगणाः। अथ सेनानीप्राप्त्युत्तरम्। कृच्छ्रात् कृष्टसाध्यात्। अथ कार्त्स्न्येन। कृच्छ्राद् दुःखैक-रूपात् ॥ १६ ॥

### श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी

को नाम? किं नामेत्यर्थः। यद्वा, नाम प्रकाश्ये कः केन जात्यादिना प्रसिद्धः? किंजातिः? किं नाम? चेत्यर्थः ॥१३॥ महान् महाभागवतः ॥ १४ ॥ आत्मरक्षणे निमित्ते याचितः चिरं कतिचिच्चतुर्युगाणि ॥१५॥ अथ कार्त्स्न्ये कृच्छ्रात् दुःखैकरूपात् ॥१६॥

### श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी

को नाम? किं नामेत्यर्थः; यद्वा कः किंजातिः? किंनामा? इत्यस्यैवार्थद्वयञ्चेत्यर्थः; नाम प्राकाश्ये, केन जात्यादिना प्रसिद्धः? इत्यर्थः। एव समुच्चये, कस्माद्वा? अन्यत्तैर्व्याख्यातम्। यद्वा, कस्य पुत्रः? किंतेजः? मूर्त्तं तेज एव किम्? ॥ १३ ॥ युवनाश्वपुत्रो मान्धाता इक्ष्वाकोरूनविंशकः, तस्य तनयो महान् भगवद्भक्त्यादिगुणैर्लोकेषु श्रेष्ठ इत्यर्थः। ( भा० ९।६।३८ )

१. परीक्षिदु-प्रा. पा. । २. मुहायतः-विज. : ३. किंतेजा-वीर. ; किं तेजो यवनार्दन-विज. ।

'पुरुकुत्समन्वन्तरीयं मुचुकुन्दञ्च योगिनम्' इति नवमस्कन्धे मान्धातृपुत्रोत्पत्तिप्रसंगे तस्य भक्तियोगवत्त्वमुक्तमेव ॥१४॥ आत्मरक्षणे निमित्ते याचितः, आद्यशब्देन वरुणादयः, तेषां रक्षाम्, चिरं कानिचिच्चतुर्युगानि ॥ १५ ॥ अथ गुहकर्तृकरक्षणादनन्तरम्, किंवा, गुहलब्धे, हे राजन्निति भवानिति च परमादरात्, कृच्छ्राद् दुःखरूपात् ॥ १६ ॥

### श्रीमद्वीरराघवाचार्यकृता भागवतचन्द्रचन्द्रिका

तत्र शयानस्य पुरुषस्य कुलनामवीर्यशयनकारणादिबुभुत्सया पृच्छति राजा—को नामेति ? हे ब्रह्मन् ! स यवनार्दनो यवनस्य हन्ता शयानः को वा नाम ? किं तस्य नामधेयमित्यर्थः । कस्य सम्बन्धी ? कस्य कुले जातः ? किं कीदृशं वीर्यं ? यस्य सः कस्मात्कारणाद् गुहां प्राप्तः शेते स्म ? किं कीदृशं तेजो यस्य स तथाभूतः ? ॥१३॥ तत्रोत्तरमाह मुनिः—स इति नवभिः । ब्रह्मणि ब्रह्मकुले साधुः ब्रह्मण्यः । सत्यो धर्म्यः सङ्गरो युद्धं यस्य सः ॥ १४ ॥ स इति । स च मुचुकुन्दः असुरेभ्यो भीतैरिन्द्राद्यैर्देवैरात्मनो रक्षणे निमित्ते सहायत्वेन याचितश्चिरं तेषां रक्षामकरोत् ॥ १५ ॥ तदा ते देवाः गुहं कार्तिकेयं स्वःपालं स्वर्गपालकं सेनान्यं लब्ध्वा ऽथ मुचकुन्दमब्रुवन् ॥ १६ ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

कस्य पुत्र इति शेषः । यवनमर्दितवान् हिंसितवान् ॥ १३-१४ ॥ तेषां सुराणां रक्षाम् ॥१५॥ स्वःपालं स्वर्गरक्षाकरं । परिपालनाज्जातात्कृच्छ्रात् ॥ १६ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

कस्य वंश्यः ? किम्वीर्यः ? किं प्रभावः ? किं तेजः ? कस्य वीर्यं कस्य पुत्रः ? इत्यर्थः ॥१३-१५॥ गुहं कार्त्तिकेयम् ॥१६-१७॥

### गूढार्थदीपिनी

नामेति प्रसिद्धे । कस्य वश्यः ? किंवीर्यः किंप्रभावः ? किंतेजः कस्य पुत्रः ? 'तेजो वीर्ये' इति नाममाला ॥ १३ ॥ सङ्गरो युद्धं प्रतिज्ञा वा ॥ १४ ॥ स मुचुकुन्दः । रक्षणे निमित्ते ॥ १५ ॥ गुहं कार्तिकेयम् । स्वःपालं स्वर्गपालं सेनापतिम् । नः परिपालनाद् यत् कृच्छ्रं कष्टं तस्मात् ॥ १६ ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

हे ब्रह्मन् । स यवनमर्दयति हिनस्तीति तथा यवनहन्ता कस्य वंश्यः ? किंवीर्यः ? किंप्रभावः ? किंतेजः ? कस्य वीर्यं ? कस्यापत्यमित्यर्थः ॥१३॥ सत्यो धर्म्यः सङ्गरो युद्धं यस्य सः ॥१४-१५॥ गुहं कार्तिकेयं स्वःपालं स्वर्गपालं सेनान्यं लब्ध्वा ॥१६॥

### श्रीसत्यधर्मकृता श्रीभागवतटिप्पणी

राजा श्रुततदेतद्व्यापारस्तत्स्वरूपादिकं पृच्छति मुनिमित्याह ॥ राजेति । स पुमान् लोचनानलनिर्मूलितकालयवनो नामैव प्रसिद्धः कः किन्नामा ? जातिर्वा । कस्य पुत्रः ? किं वीर्यः ? किं कीदृग्वीर्यं यस्य सः । गुहां गतः कस्माच्छिश्ये ? किं तेजो यवनार्दन इति पाठे यवनमर्दयतीति तत्तेजः किं ? किं रूपमित्यर्थः । किन्तेजो यवनार्दनः ? इति पाठे यवनार्दनो यो दृष्टिर्वा तज्जो जातवेदाः किं तेजः ? इत्युद्देश्यविधेयभावेनान्वयः । यद्वा पदमेकम् । यवनमर्दयतीति यवनार्दनं यस्य स पुमान्क इत्यन्वयः ॥१३॥ शुकः परीक्षित्प्रश्नान्परिहरति ॥ स इति इक्ष्वाकुकुले जातः क्षत्रियजातीयः । कस्येत्युत्तरयति ॥ मान्धातृतनय इति । किन्नामेति परिहरति ॥ मुचकुन्द इति ख्यात इति । ब्रह्मण्यो ब्रह्मणि हरौ ब्राह्मणजातौ वा साधुर्ब्रह्मण्यस्तत्पूजापरः । उत्तरकथोपयोगि-माहात्म्यङ्कुरयति ॥ सत्यसङ्गर इति । प्रामाणिकयुद्धः सत्यप्रतिज्ञो वा । अथ सप्रतिज्ञाजिसंविदेत्यमरः ॥ १५ ॥ कस्माच्छिश्ये ? किन्तेजः ? इत्यादिकं वक्तुं तदुपोद्धातं रचयति ॥ स इति । इन्द्राद्यैः सुरगणैरात्मरक्षणेऽसुरेभ्यः परित्रस्तैर्याचितः । एतादृशं किमिति मतिमन्तो देवाः समुद्रे प्लवन्गातो निर्भाग्यकरमदीधरदिति नीत्याऽदीधरन्नित्यतो न तथाऽयमित्यप्याह ॥ येति । या इहं कार्यपर्यव-सायकसम्पदाचितः सम्यक्सम्बद्ध इति देवोमिति । चिरं तद्रक्षामकरोत ॥ १५ ॥ ते देवाः स्वस्वगृहान्प्रति व्यूहादीन् लब्ध्वा । गुहं स्वःपालं लब्ध्वेति पाठे गुहं षण्मुखं स्वःपालं स्वर्गरक्षक लब्ध्वा प्राप्येत्यर्थः । एवञ्च स्वःपालं मुचुकुन्दं चाथाब्रुवन् । हे राजन्नः परिपालनादेतज्जातकृच्छ्राद्भवानितः परं विरमतात् । व्याङ्परिभ्यो रम इति परस्मैपदता । विरमतादिति पाठे विपूर्वकत्वे परस्मै-पदताभाव आर्षः । विश्रमं यातु ॥ १६ ॥

### श्रीमद्वल्लभाचार्य्यकृता सुबोधिनी

प्रकृते भगवता यवनोऽयं यथाकथञ्चिन्मारित इति विवक्षितत्वाद्विशेषं न कथयिष्यतीत्याशङ्क्य सावधानं च शृणोतीति ख्यापयितुं राजा तं पृच्छति को नामेति ? प्रसिद्ध्याऽज्ञानं वारयति । 'अन्य'मिति पुल्लिङ्गात् पुंस्त्वं ज्ञातमेव । अन्ये पञ्चार्था ज्ञातव्याः !

नामसम्बन्धरूपाणि निमित्तं शयने तथा। दाहकत्वं दृष्टिमात्राद् ब्रह्मविज्ज्ञास्यते परः ॥ १ ॥

कस्य सम्बन्धी ? किं वीर्यं यस्य, अन्यथा एकाकी सिंहादिसम्भाविते देशे कथं शयीत ? कस्माद्वा हेतोः उत्तमस्थानेषु विद्यमानेषु गुहां गतः शेते ? किं वा तस्य तेजः ? किं तेजो यस्येति किंतेजाः ? यतो यवनार्दनो जातः ? अग्निसूर्यादीनामपि नैवंविधं तेजः सम्भवति। यवनपदेन तस्यापि महत्त्वमुक्तम्। विशेषतो वक्तव्यैवैषा कथेति ॥ १३ ॥ एतदर्थमेव भगवानागत इति तस्य विशेषमाह **स इक्ष्वाकुकुल इति सप्तभिः**। भगवत्त्वमग्रे तस्य भविष्यतीति भगवत्कथैवैषेति ज्ञापयितुं च; अन्यथा भगवद्व्यतिरिक्तकथा न श्रोतव्येति श्रोतृणां विरक्तिः स्यात्। इक्ष्वाकोः कुले जातः। मनोः पुत्राणां मध्ये मुख्य इक्ष्वाकुः। मान्धाता चायोनिजः, केवलपुंसवनजलाज्जातः। अप्राकृतवीजजोऽपि स्वरूपतोऽपि महान्। कुलोत्कर्षः पितुरुत्कर्षः स्वरूपोत्कर्षश्चोक्तः। तस्य नामोत्कर्षमाह **मुचुकुन्द** इति। **ख्यात** इति। तस्य वैदिकं सहजं च धर्ममाह **ब्रह्मण्यः सत्यसङ्गर** इति। ब्राह्मणानां हितश्चेत्सर्वेऽपि वैदिको धर्मः सेत्स्यति। सत्यः सङ्गरो युद्धं यस्य ॥ १४ ॥ एवं पड्गुणयुक्त इति इन्द्राद्यैरात्मरक्षणे स याचितः। अनेन भगवत्तुल्यतैव निरूपिता। स्वरूपतो लोकतः कार्यतश्च गुणानामुत्कर्षो निरूपितः। **संसारा**द्भीताः महापुरुषमिव प्रार्थितवन्तो भविष्यन्तीत्याशङ्क्याह-**असुरेभ्यः परित्रस्तै**रिति। ये हि देवानपि मारयन्ति, तानपि मारयित्वा, रक्षां कृतवानित्याह **तद्रक्षा**मिति। दैत्यानां पलायने पुनरागमनशङ्का भवतीति चिरकालं रक्षामकरोत्। यावदिन्द्रादयोऽतिपुष्टाः। क्षत्रियस्यायमेव धर्मः यज्ञादेरप्यधिक उक्तः ॥ १५ ॥ सा च रक्षा पयवसानपरा जातेति रक्षाया अवधित्वं निरूपयन्नाह **लब्ध्वा गुह**मिति। कार्तिकेयश्चेदुत्पन्नः, पश्चात्तारकादयो हता इति तस्य सेनापतित्वे जाते पश्चाद्विरामं प्रार्थयामासुः। अनेनास्य रयिन्यायेन स्वार्थाभावः सूचितः। **अथ** स्वस्थाः सन्तः भिन्नप्रक्रमेण राजानमब्रुवन्। पूर्वं भीताः, इदानीं सन्तुष्टा इति भिन्नः प्रक्रमः। तेषां वाक्यान्याह **राजन्निति**। क्रियमाणमादौ व्यावर्तयन्ति। नोऽस्माकं परिपालनरूपात् कृच्छ्राद् विरमतामिति। यद्यपि स्वर्गे स्थितः, तथापि भोगाभावात् सर्वदा युद्धकरणाच्च क्लेश एव ॥ १६ ॥

### श्रीसुबोधिनीसारः

राजोक्तिः। हे ब्रह्मन् स पुमान् को नाम ? कस्य वंश्यः ? किंवीर्यः ? कीदृक् तेजस्वी ? किं तेजः ? कस्य पुत्रः ? यवनमर्दयति हिन स्तीति तथा कस्माद्धेतोर्गुहांगतः=कंदरां प्राप्तः शिश्येऽशयिष्ट ॥१३॥ शुकोक्तिः। इक्ष्वाकोः कुले जातः मांधातुस्तनयः पुत्रो महान् प्रसिद्धः स मुचुकुन्द इति उक्तः ब्रह्मणे साधुः सत्यः संगरो युद्धं प्रतिज्ञा वा यस्य सः ॥ १४ ॥ परेभ्यः शत्रुभ्यो दैत्येभ्यः परित्रस्तैर्भीतैरिन्द्राद्यदेवगणै रात्मपालनार्थं याचितः स प्रार्थितः। तेषां रक्षां स मुचुकुन्दः चिरं बहुकालमकरोत् ॥ १५ ॥ स्वःपालं स्वर्गरक्षकं गुहं स्वामिकार्तिकेयं लब्ध्वा प्राप्य ते देवा मुचुकुन्दमवदन्। हे राजन् ! नोऽमाकं परिपालनात्कृच्छ्रात् कष्टात् भवान् विरमतां निवर्त्तताम् ।। १६ ॥

### विवरणटिप्पणी

को नामेत्यत्र। ब्रह्मविद् ज्ञास्यते इति। पर उत्कृष्टो ब्रह्मविदिदं सर्वं ज्ञास्यते। अतो ब्रह्मन्निति सम्बोधनमुक्तमिति शेषः।

### गोस्वामिश्रीगिरधरलालकृता बालप्रबोधिनी

तद्वीर्येण विस्मितो राजा पृच्छति—को नामेति। 'तव तु न किञ्चिदज्ञातम्' इति सूचयन् सम्बोधयति—ब्रह्मन्निति। स पुमान् को नाम ? किं तस्य नामधेयमित्यर्थः। कस्य कुले जातः ? किंवीर्यः ? कस्य पुत्रः ? किंतेजः कीदृक्प्रभाववान् ?। 'अद्भुतश्चास्य प्रभावः, दृष्टिमात्रेणैव यवनं भस्मीकृतवान्' इत्याह—यवनार्दन इति। स एवंप्रभावोऽपि कस्मात् कारणाद् गुहां प्रविष्टः शिश्ये अशयिष्ट ? ॥ १३ ॥ एवं पृष्टः उत्तरमाह—स इति। गुणैर्महान्, ब्रह्मण्यः ब्राह्मणभक्तः, सत्यः धर्म्यः सङ्गरो युद्धं यस्य सः ॥ १४ ॥ तथाशयनप्रसङ्गमाह—स इति। स मुचुकुन्दः असुरेभ्यो भीतैरिन्द्राद्यैः देवैरात्मसंरक्षणे निमित्ते सहायत्वेन याचितः संस्तेषां चिरं रक्षामकरोत् ॥ १५ ॥ अथ ते देवाः गुहं कार्तिकेयं स्वःपालं स्वर्गपालं सेनान्यं लब्ध्वा मुचुकुन्दमब्रुवन्। तदुक्तिमेवाह—राजन्निति सार्द्धैश्चतुर्भिः। हे राजन् ! नोऽस्माकं परिपालनात्मकात् कष्टात् भवान् विरमतां विरामं करोतु ॥ १६ ॥

### अन्वितार्थप्रकाशिका

को नामेति। हे ब्रह्मन् ! यवनार्दनः यवनहिंसकः स पुमान् कः किंजातीयः ? नाम च तस्य किं ? कस्य कुले जातः ? किंवीर्यः ? कस्य पुत्रः ? तस्य किं कीदृक् तेजः प्रभावः ? कस्मात् कारणात् गुहां गतः प्रविष्टः शिश्ये अशयिष्ट ? ॥१३॥ स इति। स इक्ष्वाकुकुले जातः मान्धातृतनयः गुणैर्महान् नाम्ना मुचुकुन्द इति ख्यातः ब्रह्मण्यः ब्राह्मणभक्तः सत्यः धर्म्यः सङ्गरो युद्धं प्रतिज्ञा वा यस्य तादृश आसीत् ॥ १४ ॥ स इति। सः मुचुकुन्दः असुरेभ्यः परित्रस्तैः सुरगणैरिन्द्राद्यैः देवैरात्मरक्षणे निमित्ते सहायत्वेन याचितः सन् चिरं तेषां रक्षामकरोत् ॥ १५ ॥ लब्ध्वेति। अथ ते देवाः गुहं कार्तिकेयं स्वःपालं स्वर्गपालं सेनान्यं लब्ध्वा मुचुकुन्दमब्रुवन्। हे राजन् ! नोऽस्माकं परिपालनात्मकात् कृच्छ्रात् कष्टाद् भवान् विरमतां विरमतु। तद्भावः ॥ १६ ॥

### श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्

को नाम किंसंज्ञः ? इत्यर्थः । कस्य वंशजोऽस्ति ? किंवीर्यः ? कस्यवीर्यं यस्य सः किंवीर्यः ? कस्य सुतः ? इत्यर्थः । किंतेजः ? कीदृक्तेजः प्रभावो यस्य सः । नपुंसकत्वमार्षं । कुतः यतो यवनमर्द्दयति हंतीति तथाभूतः ॥ १३ ॥ सत्यः संगरः संग्रामः प्रतिज्ञा वा यस्य सः ॥ १४ ॥ चिरं कतिचिच्चतुर्युगानि ॥ १५ ॥ स्वःपालं स्वर्गरक्षकं गुहं स्वामिकुमारं लब्ध्वा ॥ १६ ॥

### भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

तत्र शयानपुरुषस्य कुलनामवीर्यशयनकारणानि बुभुत्सया पृच्छति राजा । को नामेति । हे ब्रह्मन्, यवनार्द्दनः यवनस्य हन्ता, सः शयानः पुमान्, को नाम ? को वा ? तस्य नामधेयं किमित्यर्थः । कस्य, कस्य सम्बन्धी ? कस्य कुले जातश्चेत्यर्थः । किं कीदृशं वीर्यं यस्य सः किंवीर्यः ? कीदृक्प्रभाववानित्यर्थः । किंतेजः, ? कस्य वीर्यं ? कस्य पुत्रः इत्यर्थः । गुहां गतः सन् एव, कस्माद्धेतोः, शिश्ये च ? ॥ १३ ॥ तत्रोत्तरमाह मुनिः स इति नवभिः । स इति । ब्रह्मणि ब्रह्मकुले साधुर्ब्रह्मण्यः, सत्यो धर्म्यः संगरो युद्धं यस्य सः, स पुमान्, मुचुकुन्दः इति ख्यातः, मुचुकुन्द इति नाम्ना प्रसिद्ध इत्यर्थः । इक्ष्वाकुकुले जातः । मांधातृतनयः मांधातुर्नृपस्य सुत इत्यर्थः । अत एव, महान् ॥ १४ ॥ स इति । स एवंभूतोऽयं नृपः, असुरेभ्यः परित्रस्तैः भीतैः, इन्द्राद्यैः सुरगणैः, आत्मरक्षणे स्वरक्षणे निमित्ते, याचितः । सहायत्वेनेति शेषः । अभूत् । ततः, स मुचुकुन्दो नृपः, चिरं बहुकालपर्यन्तं तद्रक्षां देवानां परित्राणकरोत् । इति द्वयोरेकसम्बन्धः ॥ १५ ॥ लब्ध्वेति । ततः ते देवाः, गुहं कार्त्तिकेयं, स्वःपालं स्वर्गपालकं सेनान्यमित्यर्थः । लब्ध्वा, अथानन्तरं, मुचुकुन्दमब्रुवन् । हे राजन्, नोऽस्माकं परिपालनात् परिपालनात्मकात्, कृच्छ्राच्छ्रमात्, भवान् विरमतां विरामं प्राप्नोतु ॥ १६ ॥

### कृष्णप्रिया

महाराजा ने पूछा भगवन् ! जिसके केवल दृष्टिपात से कालयवन भस्मसात् हो गया वह पुरुष कौन था ? किस वंश का था ? उसमें कैसी शक्ति थी ? एवं किसका पुत्र था ? और कृपा करके यह भी बताईए कि वह अद्रिकन्दरा में जाकर क्यों सो रहा था ? ॥ १३ ॥ श्रीशुकाचार्य महाराज कहते हैं—राजन् परीक्षित् ! वे श्रीइक्ष्वाकुवंश के ख्यात नाम महाराजा मान्धाता के पुत्र राजा मुचुकुन्द थे । वे मुचुकुन्द ब्रह्मण्यदेव-ब्राह्मणों के परमभक्त सत्यप्रतिज्ञ, समर विजेता यशस्वी थे ॥ १४ ॥ असुरों के त्रास से संत्रस्त इन्द्रादि देवों ने अपने संरक्षण के लिये महाराजा मुचुकुन्द जी से प्रार्थना की तब कृपालु राजा ने चिरकाल पर्यन्त देवों की देवलोकों की रक्षा की ॥ १५ ॥ राजन् दीर्घकाल के वाद देववरों को भगवान् स्वामि कार्तिकेय जी प्राप्त हो गये तब उनको अपने संरक्षक वनाये और देवों ने श्रीमुचुकुन्द राजाजी को निवेदन किया कि महाराज ? आपने बहुत परिश्रम लेकर चिरकाल पर्यन्त हमारी रक्षा की अब आप विश्राम कीजिये ॥ १६ ॥

**नरलोकं[1] परित्यज्य राज्यं [2]निहतकण्टकम् । अस्मान् पालयतो वीर कामास्ते सर्वे उज्झिताः ॥ १७ ॥**
**सुता महिष्यो भवतो ज्ञातयोऽमात्यमन्त्रिणः । प्रजाश्च तुल्यकालीना[3] नाधुना सन्ति कालिताः ॥ १८ ॥**
**कालो वलीयान् बलिनां भगवानीश्वरोऽव्ययः । प्रजाः कालयते क्रीडन् पशुपालो यथा पशून् ॥ १९ ॥**
**वरं [4]वरय भद्रं ते ऋते कैवल्य[5]मात्मनः । एक एवेश्वरस्तस्य भगवान् विष्णुरव्ययः ॥ २० ॥**

### कर्दमक्षमा

**अन्वयः**—वीर ! हतकण्टकम्, राज्यम्, च, नरलोकम्, अस्मान्, पालयता, ते, सर्वे, कामाः, उज्झिताः ॥ १७ ॥ भवतः सुताः, महिष्यः, ज्ञातयः, अमात्यमन्त्रिणः, च, तुल्यकालीनाः, च, प्रजाः, कालिताः, अधुना. न, सन्ति ॥ १८ ॥ राजन् ! कालः, बलिनाम्, वलीयान्, भगवान्, ईश्वरः, अव्ययः, पशुपालः, यथा, पशून्, तथा, क्रीडन्, ( कालः ) प्रजाः, कालयते ॥ १९ ॥ राजन् ! आत्मनः, कैवल्यम्, ऋते, वरम्, वरय, ते, भद्रम्, भगवान्, अव्ययः, विष्णुः, एक, एव, तस्य, ईश्वरः ॥ २० ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

उज्झितास्त्यक्ता गता इत्यर्थः ॥ १७ ॥ किं च सुता इति । तुल्यकालीयास्त्वत्समानकालीनाः । कालिता विचालिता ॥ १८ ॥ मत्प्रजाः कोऽन्यः कालयेदिति चेदत आहुः । काल इति । कालयते इतस्ततश्चालयति ॥ १९ ॥ तस्य कैवल्यस्य ॥ २०–२१ ॥

---

१. लोके–श्रीधर. वंशी. विश्व. शुक. सु. ; लोकं–वीर. विज. । २. निहत–श्रीधर. वंशी. जीव. विज. विश्व. । ३. कालीना–विज. ; कालीया–श्रीधर. वंशी. जीव. वीर. विश्व. शुक. ; तुल्यकलिना–श्रीधर. टि. । ४. वृणीष्व–श्रीधर. वंशी. जीव. वीर. विज. विश्व. ।, ५. मात्मनः–श्रीधर. वंशी. जीव. वीर. विज. विश्व. शुक. सु. ।

**श्रीवंशीधरकृतो भावार्थबोधिकाप्रकाशः**

इत्यर्थ इति-त्यक्तगतवस्तुनोर्वियुक्तत्वेन समानार्थकत्वात्यक्तगतपदे पर्याये ॥ १७ ॥ अन्यदाह-किञ्चेति । अमात्याः समीपवर्तिनः । कालेनेति शेषः । विचालिता लोकान्तरं नीताः । यद्वा-कालो मृत्युर्जातो येषां ते तारकादित्वादितच् । अमात्याः पार्षदा मन्त्रिणश्च ॥ १८ ॥ बलगर्वितः प्राह-मत्प्रजा इति । कः कालः-भगवानिति । तमपि युद्धेन जेष्यामीति चेदाह-ईश्वर इति । अहमपि तादृश इति चेदाह-अव्यय इति । स्वरूपतोऽव्ययवतो गुणतश्च नाशरहित इत्यर्थः । भगवानिति श्रीनारायणशक्तित्वेन तदभेदात् । अत एवेश्वरो नियन्ता । न व्येतीत्यव्ययः अनाद्यंतप्रवाहः । कालयतेऽन्यत्र नयति । ननु किमर्थं तत्राह-क्रीडन्, तस्य तादृश्येव क्रीडेत्यर्थः । इति तस्य बलीयस्त्वातिशयो दर्शितः । पशुपाल इति तेषु तस्य स्वाच्छन्द्ये दृष्टान्तः ॥ १९ ॥ कैवल्यं मोक्षम् । ऋते विना । मुक्तिः कैवल्यनिर्वाण-' इत्यमरः । एको विष्णुरेवेति विशेष्यसम्बद्धान्ययोगव्यवच्छेदार्थकैवकारेण पार्थ एव धनुर्धर इतिवत्पार्थादन्यत्र धनुर्धरत्वस्येव विष्णोरन्यत्र कैवल्यप्रदत्वस्य योगो व्यवच्छिद्यत इति । 'आरोग्यं भास्करादिच्छेन्मोक्षमिच्छेज्जनार्दनात्' इति, भवपाशाच्च मोक्षकः । 'विष्णुरेव परं ब्रह्म' इति च स्मृतेः, 'कृष्णं विना नैव सृतिं तरन्ति' इति श्रीधरोक्तेश्च । यानि च-'या मुक्तिहेतुरविचिंत्यमहाव्रता त्वमभ्यस्यसे सुनियतेन्द्रियतत्वसारैः । मोक्षार्थिभिः-' इत्यादीन्यन्य देवताभजनस्य मोक्षबोधकवाक्यानि तान्यपि विष्णुभक्तिं द्वारीकृत्यैवेति ज्ञेयं हरिवंशीयघण्टाकर्णाख्यानतः, अन्यथा स कथं शिवेन विष्णुपार्श्वे प्रेषितः, प्रसिद्धं चैतद्धरिवंशे । नन्वत्रैवकारस्यैकशब्देन सम्बन्धो न तु विष्णुशब्देनेति चेदत्राह-'पाठक्रमादर्थक्रमो बलीयान्' इति 'अग्निहोत्रं जुहोति, यवागूः पचति' इतिवत्, 'आत्मा वा अरे द्रष्टव्यः श्रोतव्यः' इत्यादिवद्धेत्यलं प्रपंचेन । भद्रं ते इति सामान्यतस्तावत्तव मंगलं भूयात् । विशेषस्तु वरं वृणीष्वेत्यर्थः । कैवल्यं संसारनिवृत्तिपूर्वकं परमपदप्राप्तिम् । विष्णुरेवैक ईश्वरः प्रदानसमर्थः । तत्र हेतुः-भगवान् सर्वशक्तिसम्पन्नः । असंख्येभ्यस्तदादिदानेप्यव्ययो न त्वस्मदादिवदल्पशक्तियुक्तः । तपआदिव्ययेन सव्ययो वा ॥ २० ॥

**श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी**

कामाः विषयाः राज्यं चेति पाठे राज्यानीति क्वचित् पाठः ॥१७॥ अमात्याः पार्षदाः मन्त्रिणस्तद्विशेषाश्च तुल्यकालीना इति क्वचित् ॥ १८ ॥ भगवानिति श्रीनारायणशक्तित्वेन तदभेदात् अत एवेश्वरः नियन्ता । न व्येतीत्यव्ययः अनाद्यनन्तप्रवाहः कालयते अन्यत्र नयति । ननु किमर्थम् ? तत्राह-क्रीडन् तादृश्येव तस्य क्रीडेत्यर्थः । इति तस्य बलीयस्त्वातिशयो दर्शितः । पशुपाल इति तेषु तस्य स्वाच्छन्द्ये दृष्टान्तः ॥ १९ ॥ भद्रं तं सामान्यतस्तावन्मङ्गलं तव भूयात् विशेषतस्तु वरं वृणीष्वेत्यर्थः । कैवल्यं संसारनिवृत्तिपूर्वकं परमपदप्राप्तिं विष्णुरेवैक ईश्वरः प्रदानसमर्थः; तत्र हेतुः भगवान् सर्वशक्तियुक्तः असङ्ख्येभ्यस्तदादिदानेप्यव्ययः नत्वस्मदादिवदल्पशक्तिः तप आदिव्ययेन सव्ययो वा ॥ २० ॥

**श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी**

कामा विषयोपभोगाः । हे वीरेति—सर्व्वसामर्थ्ययुक्तस्य तवैतद्युक्तमेवेति भावः । अतएव स्नेहविशेषेण त इत्युक्तिः एवमग्रेऽप्यूह्यम् । ते त्वयेति वा ॥ १७ ॥ अमात्य-मन्त्रिण इत्यत्र करोदग्रहणमन्त्रप्रदानादिना भेदः कल्प्यः, अधुना न सन्तीत्यत्र हेतुः—कालिता देहान्तरं प्रापिता इत्यर्थः, यद्वा, संहृताः ॥ १८ ॥ बलिनां सर्व्वेषां मध्ये बलीयस्त्वे हेतुर्भगवान् श्रीनारायण इत्यंशांशिनोरभेदाभिप्रायेण, अतएवेश्वरः सर्व्वशक्तिमान्, न व्येतीत्यव्ययश्च अनन्तत्वात् । कालयते अन्यत्र नयति । ननु तत् किमर्थम् ? तत्राह—क्रीडन् क्रीडितुमिति । तादृश्येव तस्य क्रीडेत्यर्थः, यद्वा, न च तस्य तत्र कोऽपि श्रमोऽस्तीति बलीयस्त्वमेव दर्शयति—क्रीडन् लीलयैवेत्यर्थः । क्रीडया पशुपालो यथा पशून् समाहरति, तद्वत्; पशुपाल इति तेषु तस्य स्वामित्वेन स्वाच्छन्द्यमात्रमभिप्रेतम् ॥ १९ ॥ भद्रं तेऽस्त्विति परमसन्तोषात्; यद्वा, सदा मंगलमेव, तव तथाप्यद्य अधुना नोऽस्मान् वरमभीष्टं वृणीष्व; यद्वा, भद्रमुत्तमं ते वरं त्वत्सम्मतं वरं वृणीष्व, कैवल्यं मोक्षं श्रीकृष्णपादाब्जैकान्तित्वं वा विना, भगवान् सर्व्वैश्वर्य्ययुक्तो विष्णुरेवैक ईश्वरः प्रदानसमर्थः स्वामी वा, कैवल्यस्य तदधीनत्वात्, यत आत्मदानेनापि न व्येतीत्यव्ययः; विष्णुरिति बहिरन्तर्व्यापकतया बाह्यान्तरभावादि-सम्पादनशक्त्या कैवल्यप्रदानसामर्थ्याभिप्रायेण ॥ २० ॥

**श्रीमद्वीरराघवाचार्यकृता भागवतचन्द्रचन्द्रिका**

उक्तिमेवाह—राजन्निति, सार्द्धैश्चतुर्भिः । हे राजन् ! नोऽस्माकं परिपालनात्मकात् कृच्छ्राच्छ्रमाद्भवान् विरमतां विरामं प्राप्नोतु । हे वीर ! शत्रुरहितं राज्यं नरलोकं च त्यक्त्वा केवलमस्मान्पालयतस्ते कर्त्तरि शेषे षष्ठी । त्वया सर्वे कामा भोगा उज्झितास्त्यक्ताः ॥ १७ ॥ किञ्च, तव सुतादयः त्वत्तुल्यकालीनाः प्रजाश्च कालिताः कालवशीकृताः अधुना न सन्ति, किन्तु कालवशङ्गता मृता इति यावत् ॥ १८ ॥ कोऽसौ मत्तो बलीयान् कालो नामेति शङ्कायामाब्रह्मस्तम्वपर्यन्तकृत्स्नजगतः कालवश्यतां बलीयस्त्वं च वक्तुं कालो नाम नेश्वरात्पृथग्भूतः किन्तु कालशरीरक ईश्वर एव कलयतीत्याहुः—काल इति । कालः कालशरीरकः

अव्ययः कालकृतनाशादिविकाररहित ईश्वरः सर्वनियन्ता भगवान् स्वयं क्रीडन् प्रजाः कालयते वशीकरोति, यथा पशुपालः पशून् वशीकरोति तद्वत् ॥ १९ ॥ वरमिति । अतस्त्वम् अद्य नोऽस्मान्प्रति वरमभिमतं वरय तर्हि मुक्तिं प्रयच्छतेत्यत्राहुः—ऋते कैवल्यमिति । कैवल्यं प्रकृतिसम्बन्धराहित्यं मुक्तिम् इति यावत् ततोऽन्यं वरं वरयेत्यर्थः कैवल्यस्यावरणीयत्वे हेतुं प्राह—एक एवेति । तस्य कैवल्यस्येश्वरः अधिपतिर्दातेति यावत् भगवान् विष्णुरेक एव अतो न वयं कैवल्यं दातुं प्रभव इति भावः ॥ २० ॥

## श्रीविजयध्वजतीर्थकृता पदरत्नावली

उज्झितास्त्यक्ताः ॥ १७ ॥ तुल्यकालीनास्तत्समानकालजाताः कालिताः कालेन विनाशिता ॥१८॥ कालयते उभयपदी । काल कः ? इति तत्राह—भगवानिति । अव्यय स्वरूपतोऽव्ययवतो गुणतोपि नाशरहितः ॥ १९-२६ ॥

## श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः

काल इति भगवान् नारायणशक्तित्वेन तदभेदात् कैवल्यम् । संसारनिवृत्तिपूर्वकपरपदप्राप्तिः ॥ १९-२७ ॥

## श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

कालिताश्चालिताः ॥ १८ ॥ केन कालिता इत्यत आहुः—काल इति ॥ १९ ॥ तस्य कैवल्यस्य दातेत्यर्थः ॥ २०-२२ ॥

## गूढार्थदीपिनी

उज्झिताः त्यक्ताः ॥१७॥ अमात्याः समीपवर्तिनः । कालिता मारिताः कालेनेति शेषः ॥१८॥ कालयते चालयति ॥१९॥ नोऽस्माकं सकाशाद् वरमिति योज्यम् । ईश्वरो दाता ॥ २० ॥

## श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

उज्झिताः त्यक्ता गता इत्यर्थः ॥ १७ ॥ तव सुतादयः तुल्यकालीनाः त्वत्समानकालीना न सन्ति; यतः कालिताः विचालिताः कालेन नष्टा इत्यर्थः ॥ १८ ॥ कालः प्रजाः कालयते इतस्ततश्चालयति । ननु, जडस्यैतत्कथं सङ्गच्छते ? इत्यत आह—भगवानिति । शक्तिशक्तिमतोरभेदनिर्देशः कालशक्त्या भगवानेव सर्वाः प्रजा इतस्ततश्चालयतीत्यर्थः ॥१९॥ तस्य कैवल्यस्य दाता भगवान् विष्णुरेव हरिवंशेऽपि 'मुक्तिः प्रदाता सर्वेषां विष्णुरेव न संशयः' इति ॥ २०-२१ ॥

## श्रीसत्यधर्मकृता श्रीभागवतटिप्पणी

निहतकण्टकं राज्यं परित्यज्य नरलोकं च परित्यज्यास्मान्पालयतस्तव सर्वे कामा उज्झितास्त्यक्ताः ॥१७॥ कामांस्तानेव विशदयन्ति ॥ सुता इति । महिष्यो भार्याः; ज्ञातयो बान्धवाः; अमात्याश्च ते मन्त्रिण आलोचनपराश्च । सामान्यविशेषभाव इत्यन्ये । तुल्यकालीनाः समसमयवर्तिन्यः प्रजाश्चाधुना न सन्ति कालिताः संहृताः ॥ १८ ॥ बलिनां मध्ये कालो बलीयान् । ईयसुन्निर्धारणषष्ठीलब्धाऽतिवलतोपपादकः । पुरुतमं पुरूणामित्यृग्भाष्यटीकोक्तप्रकारेण स्वार्थे वेयसुन् । बलिनामित्यस्येश्वर इत्यनेनान्वयो वा । क्रीडन्स्वयमव्यय इति क्रीडेयर्मिति । प्रजाः कालयते । णिचश्चेत्यात्मनेपदम् । यथा पशुपालः स्वावसरे तान्भक्षयति तथेति । अनेन कालः कालनकर्तेव न पालयितेति निरस्तम् । पलानां मांसानामयं तत्कामुकः । योग्यतया पश्वित्यस्य सम्बन्धे पशुमांसापेक्षावान्पशून्ययेति वा । पलमेव पालं वा । पलं च मापमांसयोरिति विश्वः । पशूनां पालं यस्यापेक्षणीयमिति सः । पशवश्चाजाद्याः । पशुपालो यथा पशून्न कालयते न तथाऽयमिति व्यतिरेक इति केऽपि । कालयत इत्यनेन तस्मै नम इत्यपि सूचयति ॥ १९ ॥ हे राजन्वरं वृणीष्व वरय । ते भद्रमस्तु । यर्हि देयो दयातो वरो हन्त तर्हि दिशतु मुक्तिमिति न वदेति मुखं बध्नन्ति ॥ ऋत इति । आत्मान इति षष्ठ्यन्तं सत्स्वस्येत्यर्थकं द्वितीयाबहुवचनं सदस्मान्वरयेत्यर्थकं चेति ज्ञेयम् । कैवल्यमपवर्गमृते । ज्ञानसूर्यमृते नान्यस्य स्वातन्त्र्यं तद्वितरण इतीरयन्ति । तस्य कैवल्यस्यैक एव विष्णुर्भगवानव्यय ईश्वरः समर्थः । न समर्थास्तद्दाने वयमिति भावः ॥ २० ॥

## श्रीमद्वल्लभाचार्य्यकृता सुबोधिनी

न केवलं देहक्लेशः अस्मत्परिपालने, किन्तु सर्वस्वमपि तव नष्टमित्याहुः नरलोकं परित्यज्येति द्वाभ्याम् । भोगो भोगसाधनानि च गतानीति । जन्मभूमिः सहजा च सर्वेषां सुखदा । अतो नरलोकपरित्यागोऽपि दुःखहेतुर्भवति । हतकण्टकं च राज्यमिति । शूरत्वात् अज्येष्ठत्वेऽपि एतदधीनमेव राज्यमित्यस्मिन्नेव भोगः प्रतिष्ठितः । एवं सर्वथाऽनिषिद्धं भोगं परित्यज्य अस्मानेव पालयतः ते सर्व एव कामा उज्झिताः त्वया सर्वेऽपि कामास्त्यक्ताः । तत्र हेतुः वीरेति । वीररसप्रधानः नान्यं कामं सुखत्वेन मन्यत इति । एतत्कीर्तनं महानुपकारः त्वयास्मासु कृत इति ज्ञापनार्थम् । दैहिका अपि निवृत्ता इत्याह सुता महिष्य इति । दिवसस्य स्वर्गे वर्षात्मकत्वात् तस्य कालज्ञानम्, यथा ब्रह्मसभायां गतस्य रैवतस्य । अतो ज्ञापयन्ति—महिष्यः स्त्रियः, ज्ञातयो भ्रात्रादयः, अमात्याः सेवकप्रभवः, मन्त्रिणश्च । एते राज्यसंबन्धिन उभये तुल्यकालीनाः । प्रजा मित्राणि । अधुना ते तत्र

न सन्ति, यतः कालिताः कालेन भक्षिताः। अनेन तत्र गन्तव्यमिति शङ्का निर्वातिता ॥ १७–१८ ॥ तर्हि भवद्भिः कथं तेषां रक्षा न कृता, देवा ह्यायुषः प्रभवो भवन्तीत्याशङ्क्याह कालो बलीयानिति। बलिनां वाय्वासन्यगुणानां मध्ये। ततोऽपि बलीयान्। तत्र हेतुर्भगवानिति। ननु धर्मे क्रियमाणे अक्लिष्टकर्मा भगवान् कथमस्मदीयान् भक्षितवानित्याशङ्क्याह ईश्वर इति। नहीश्वरे नियमोऽस्ति। तर्हि भगवान् भक्तस्य कथमेवं कृतवानित्याशङ्क्याह अव्यय इति। अक्षरात्मा सः। न तु पुरुषोत्तमात्मा। तेन न तस्य भक्तपक्षपातः। पक्षपातेऽपि अव्ययमेव पदं दास्यतीति पुत्रादीन् दूरीकृतवान्। तस्यायमेव स्वभाव इत्याह। क्रीडन्नपि प्रजाः कालयत इति। स हि यतस्ततः विक्षिप्तान् स्वस्मिंश्चानयति, स्वगृहे रोधयति। तस्मिन् दोषबुद्धिर्भविष्यतीति दृष्टान्तमाहुः पशुपालो यथा पशूनिति। बहिःस्थिताः पशवोपि व्याघ्रादिभिर्हन्यन्त इति; तथा कालोऽपि बहुकालं बहिस्थिताः उत्पथा भविष्यन्तीति बहिर्न स्थापयति। अतः अशक्यप्रतिकारात्ते गताः ॥ १९ ॥ तस्य मनःसन्तोषार्थं वरं वरयेत्याहुः। ननु कालश्चेन्मामपि ग्रहीष्यति, तदा किं वरेणेत्याशङ्क्य अप्रार्थितमपि कालाग्रासं तुभ्यं दास्याम इति सूचयन्त आहुः भद्रं त इति। ते भद्रमेव, न कालग्रासोऽनिच्छत इत्यर्थः। तर्हि कालजयानन्तरं मोक्षो दीयतामित्याशङ्क्याहुः ऋते कैवल्यमिति। वयं हि संघातस्वामिनो देवास्तत्त्वांशाः। अतोऽस्माकं नात्मन्यधिकारः। केवल्यं चात्मनः, देहादेस्तु कैवल्यमपुरुषार्थत्वादप्रार्थ्यम्। यद्यप्याधिदैविकाश्चेत्सर्वे निवृत्ता भवेयुः, तदा केवलता सिध्यतीति, कैवल्यमपि देवाधीनमेव, प्राणिनां दुःखनिवृत्तिरभिप्रेता, न परमानन्दप्राप्तिः, 'आत्मलाभान्न परं विद्यते, इत्यादिश्रुतिभिश्च सिद्धत्वाच्चात्मनः प्राप्ताप्राप्तविवेकेन स्मृतिन्यायेन कैवल्यमपि देवाधीनं भवति; तथापि भगवदाज्ञया प्रवृत्तिस्वभावा एवैते, प्रवृत्तावेव यथाभिलषितं दातुं समर्थाः। न तु स्वतो निवृत्तौ। तथा सतीश्वरस्यापराधो भवेत्। भगवदानन्दो वा रूढ्या कैवल्यम् आनन्दाभिव्यक्तिर्वा। अतः कैवल्यव्यतिरिक्तं प्रार्थनीयम्। आत्मपदाच्चात्महितातिरिक्तं च प्रार्थनीयमिति सूचितम्। तर्हि कैवल्यसिद्धिः कथमित्याशङ्क्य तत्प्रभुं निर्दिशन्ति एक एवेति। तस्यात्मकैवल्यस्य एक एव प्रभुः। सर्वं सर्वेभ्यो दत्वा आत्मार्थं तत्स्थापितवानिति। यतो भगवान्, स्वतःसिद्धान्यैश्वर्यादीनीति। ननु तमसः परस्तात्पुरुषोत्तमो विद्यमानः अनधिकारित्वात् कथमात्मार्थे तत्स्थापितवान्। तथा सति कस्यापि मोक्षो न स्यादित्याशङ्क्याह विष्णुरिति। स एवात्र मोक्षं दातुं विष्णुरिति प्रसिद्धः। ततो विष्णोर्भगवत्त्वमधिकाररूपत्वं भगवत्त्वं चेति द्वयमुक्तम्। तेन कालातिक्रमोऽपि भवतीति सूचयितुमाहुः अव्यय इति। स व्ययरहितः। अनेन तस्य निरपेक्षतापि सूचिता। अनेन पालनाधिकारेऽपि निवृत्तिमपि कारयिष्यतीति बोधितम्। तेन देवानां कैवल्यादाने तस्य च कैवल्यदाने हेतुरप्युक्तः। अनुक्तमप्यत्रापेक्षितमर्थादुक्तं ज्ञातव्यम् ॥ २० ॥

### श्रीसुबोधिनीसारः

मर्त्यलोके निहताः कंटकास्तत्तुल्याः शत्रवो यस्मिन् तत् राज्यं परित्यज्यास्मान् पालयतः ते तव सर्वे कामा भोगा उज्झिता गताः। षष्ठी कर्तृतृतीयार्थे वा ॥ १७ ॥ तथाहि। 'पुत्रा राज्ञ्यः कुटुंबीया अमात्या मंत्रिणस्तव। तत्कालीनाः प्रजा नष्टा कालेन संति नाधुना' ॥ १८ ॥ बलिनां बलीयान् कालो भगवानव्ययोऽखण्ड ईश्वरः प्रभुः क्रीडन् सन् प्रजाः कालयते इतस्ततश्चालयति गोपः पशूनिव ॥ १९ ॥ ते तव भद्रं कल्याणम् अद्याधुना नोस्मत्तो वरं त्वं वृणुष्व कैवल्यं मोक्षमृते विना तस्य मोक्षस्यैको भगवान् अव्ययो विष्णुर्रेवेश्वरः स्वामी तद्दाताऽन्यो नास्तीति भावः ॥ २० ॥

### विवरणटिप्पणी

वरं वरयेत्यत्र। तर्हीति। एतस्यैव विवरणं कालेति ॥ २० ॥

### गोस्वामिश्रीगिरधरलालकृता बालप्रबोधिनी

हे वीर! निहतकण्टकं शत्रुरहितं राज्यं नरलोकं च परित्यज्य केवलमस्मान् परिपालयतस्ते तव पालयता त्वया सर्वे कामा भोगा उज्झितास्त्यक्ताः ॥ १७ ॥ 'न केवलं भोगहानिः, किंतु स्वजनवियोगोऽपि जातः' इत्याह—भवतः सुतादयस्तुल्यकालीनाः त्वत्समानकालीनाः प्रजाश्च कालिताः कालेन चालिता मृता इति, अधुना न सन्ति ॥ १८ ॥ कालस्य प्राबल्यमाह—काल इति। सर्वेषामपि बलिनां मध्ये कालो बलीयान्, अत एव क्रीडन् अनायासेनैव प्रजाः कालयते इतस्ततश्चालयति ॥ तत्र दृष्टान्तमाह—पशुपालो यथा पशून् कालयते तथेति। 'तर्हि तन्नियामकोऽन्यः स्यात्' इत्याशङ्क्याह—अव्यय इति। स्वयं पारवश्यरहित इत्यर्थः। तत्र हेतुमाह—ईश्वरः सर्वनियन्ता भगवानिति ॥ १९ ॥ एवं राज्ञ उपकारमुक्त्वा वरं ददति—ते तव भद्रं भवतु। वरं स्वाभिमतं वृणीष्व। 'एवं चेत्तर्हि कालातीतं मोक्षमेव प्रयच्छत' इत्यत्राहुः—ऋते कैवल्यमिति। मोक्षंविना वरान्तरं वरयेत्यर्थः। तत्र हेतुमाह—तस्य मोक्षस्येश्वरः अधिपतिर्दाता भगवान् विष्णुरेक एव। तत्रापि हेतुमाह—अव्यय इति। कालादिपारवश्यरहित इत्यर्थः। अतः कालकर्मादिपरवशा वयं न मोक्षप्रदाने समर्था इति भावः ॥ २० ॥

### अन्वितार्थप्रकाशिका

नरेति ॥ हे वीर! निहतकण्टकं शत्रुरहितं राज्यं नरलोकं च परित्यज्य केवलमस्मान् पालयतस्ते तव सर्वे कामाः उज्झिता गताः ॥ १७ ॥ सुता इति ॥ भवतः सुताः महिष्यः ज्ञातयः अमात्या मन्त्रिणश्चेत्यमात्यमन्त्रिणोः कर्म-मन्त्रसहायतया

भेदः कल्प्यः। तुल्यकालीयाः त्वत्समानकाले भवाः। आर्षश्छप्रत्ययः। प्रजाश्च कालिताः कालेन चालिताः मृता अतः अधुना न सन्ति ॥ १८ ॥ काल इति ॥ सर्वेषामपि बलिनां मध्ये कालो बलीयान् भगवान् ईश्वरः अव्ययश्च अत एव क्रीडन् अनायासेनैव प्रजाः कालयते चालयति। यथा पशुपालः पशून् कालयते तथेति ॥१९॥ वरमिति ॥ ते तव भद्रं भवतु अद्य नः अस्माकं सकाशात् कैवल्यं मोक्षम् ऋते विना वरं वृणीष्व। तस्य मोक्षस्य ईश्वरः दाने समर्थस्तु एको भगवान् अव्ययः विष्णुरेव न वयमिति। अत्र प्रकरणे 'स्वपन्तं यस्तु वै मध्ये बोधयेत्त्वामचेतनः। स त्वया दृष्टमात्रस्तु भस्मीभवतु तत्क्षणात् ॥' इति 'निद्रामेव ततो वव्रे स राजा श्रमकर्षितः ॥ यः कश्चिन्मम निद्राया भङ्गं कुर्यात्सुरोत्तमाः ॥ स हि भस्मीभवेदाशु तथोक्तश्च सुरैस्तदा' इति च प्रक्षिप्तं सार्द्धश्लोकद्वयम् ॥ २० ॥

### श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्

कामा विषया उज्झिताः विनाशं प्राप्ता इत्यर्थः ॥ १७ ॥ तदेवाह सुता इति अमात्याः राज्यकार्यकर्त्तारः। मंत्रिणो राज्यविचारे सहायकाश्चेति भेदेन द्विविधाः प्रधानाः। तुल्यकालीयाः तव समानकालोत्पन्नाः। कालिताः नाशिताः; अतो न संति ॥ १८ ॥ ननु मम प्रजानाशकः कोस्तीति ? चेत्तत्राहुः काल इति कालयते यत्र तत्र चालयते ॥१९॥ नोस्मत्तः कैवल्यम् ऋते। कैवल्यमात्मन इत्यपि पाठः। तस्य कैवल्यस्य ईश्वरः प्रदाता ॥ २० ॥

### भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

नरलोकमिति। हे वीर, निहतकण्टकं शत्रुरहितं, राज्यं, नरलोकं च परित्यज्य, केवलं अस्मान् पालयतः ते तव। कर्त्तरि षष्ठी। त्वया इत्यर्थः। सर्वे कामा भोगाः, उज्झिताः त्यक्ताः ॥ १७ ॥ सुता इति। किं च हे राजन्, भवतः, सुताः पुत्राः, महिष्यो राज्यः, ज्ञातयः, अमात्याः, मन्त्रिणश्च, तुल्यकालीयाः, प्रजाश्च कालिताः कालवशीकृताः, अधुना न सन्ति। कालवशं गततया मृता इत्यर्थः। त्वं त्वस्मल्लोकस्थतयाऽस्मत्समानायुर्भोगवशतया प्राणान् धारयसे इति भावः। 'यो यं लोकं व्रजेल्लोकस्तत्रत्यायुर्भुगप्यसौ' इति भविष्योक्तेः ॥ १८ ॥ कोऽसौ मत्तोऽपि बलीयान् कालो नामेति शङ्कायामाब्रह्मस्तम्बपर्यन्तकृत्स्नजगतः कालवश्यतां कालस्य बलीयस्त्वं च वक्तुं कालो नाम नेश्वरात् पृथग्भूतः, किं तु कालशरीरक ईश्वर एव कालयतीत्याहुः। काल इति। कालः कालशरीरकः, अव्ययः कालकृतनाशादिविकाररहितः, ईश्वरः सर्वनियन्ता, भगवान् स्वयं परमेश्वरः, क्रीडन् सन्, प्रजाः जनान्, पशुपालः पशून् यथा वशीकरोति, तद्वत्। कालयते वशीकरोति ॥ १९ ॥ एवं कालबलवत्तामुक्त्वा वक्तव्यमाहुः। वरमिति। हे राजन्, अद्य नोऽस्मान् प्रति कैवल्यम् ऋते, प्रकृतिसंबन्धराहित्यतारूपां कैवल्यपर्यायां मुक्तिं विनेत्यर्थः। वरमभिमतवरं, वृणीष्व वरय। ते भद्रम्, अस्तु। मम मुक्तिरेवाभीष्टास्ति ततस्तामेव प्रयच्छतेति विवक्षमाणमालक्ष्याहुः। तस्य मुक्त्यपरपर्यायकैवल्यस्म, प्रदाता त्विति शेषः। अव्ययः अविनाशी, विष्णुरन्तरात्मा, भगवान् एकः ईश्वरः परमेश्वर एव। अतो न वयं कैवल्यं दातुं प्रभव इति भावः ॥ २० ॥

### कृष्णप्रिया

हे वीर महापुरुष ! हमारे रक्षण के लिये आपने भूमण्डल का अपना निष्कण्टक साम्राज्य छोड़ दिया, एवं सर्व प्रकार के सुख भोग कामनाओं का भी त्याग किया ॥ १७ ॥ राजन् ! और एक तिवेदन सुनें ! आज भूतल पर आपका परिवार पुत्र पौत्र रानियाँ स्वजन, बन्धुजन, अमात्य, मन्त्री एवं आपके राज्यकाल के प्रजा में से भी कोई नहीं रहा है सर्व लोक काल के कवल बन गये है ॥ १८ ॥ राजन् काल बलवानों में से सबसे अधिक बलिष्ठ है। काल स्वयं अविनाशी नित्य समर्थ और भगवत्स्वरूप है। राजन् जैसे पशुपाल पशुओं को अपने वश में रखते हैं, वैसे ही काल भी सारे लोक को आसानी से अपने अधीन रखता है ॥ १९ ॥ राजन् ! आपका सर्व विध मङ्गल हो। आप अभीष्ट वरदान हमसे माँग लीजिये। राजन् केवल कैवल्य को छोड़कर आपको सब कुछ हम दे सकते हैं। मोक्षप्रदानशक्ति तो अविनाशी विष्णु भगवान की ही है ॥ २० ॥

**[1]एवमुक्तः स वै देवानभिवन्द्य महायशाः। अशयिष्ट गुहाविष्टो निद्रया देवदत्तया ॥ २१ ॥**
**[2]स्वापं यातं यस्तु मध्ये बोधयेत्त्वामचेतनः। स त्वया दृष्टमात्रस्तु भस्मीभवतु तत्क्षणात् ॥ २२ ॥**
**यवने भस्मसान्नीते[3] भगवान् सात्वतर्षभः। आत्मानं दर्शयामास मुचुकुन्दाय धीमते ॥ २३ ॥**
**तमालोक्य घनश्यामं पीतकौशेयवाससम्। श्रीवत्सवक्षसं भ्राजत्कौस्तुभेन विराजितम् ॥ २४ ॥**

---

१. अयाचत गुहाविष्टो निद्रां तु बहुकालिकाम्। तथेत्युक्ते तु तैर्देवैर्मुचुकुन्दो महामनाः ॥–विजयेऽधिकः।
निद्रामेव ततो वव्रे स राजा श्रमकर्षितः। यः कश्चिन्मम निद्राया भङ्गं कुर्यात्सुरोत्तमाः ॥
स हि भस्मीभवेदाशु तथोक्तैश्च सुरैस्तदा। कुत्रचिदुपरिनिर्दिष्टश्लोकस्थाने अयं सार्धैकः श्लोको दृश्यते।

२. अयं श्लोको नास्ति–प्रा. पा. विज.; "स्वापयन्तं" प्रा. पा.; प्रति बोधयति त्वां वै स्वपन्तं यस्त्वचेतनः। स त्वया दृष्टिमात्रेण–वीर.। ३. भस्मतां–वीर.।

### कर्दमक्षमा

**अन्वयः**—एवम्, उक्तः, सः, महायशाः, देवान्, अभिवन्द्य, देवदत्तया, निद्रया, गुहाविष्टः, वै, अशयिष्ट ॥ २१ ॥ यः, तु, अचेतनः, स्वापम्, यातम्, त्वाम्, बोधयेत्, स, त्वया, दृष्टमात्रः, तु, तत्क्षणात्, भस्मीभवतु ॥ २२ ॥ यवने, भस्मसात्, नीते, सात्वतर्षभः, भगवान्, धीमते, मुचुकुन्दाय, आत्मानम्, दर्शयामास ॥२३॥ पीतकौशेयवाससम्, श्रीवत्सवक्षसम्, भ्राजत्, कौस्तुभेन विराजितम् ॥ २४ ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

गुहायां प्रविष्टः शेते स्म ॥ २२-२५ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

एवमुक्तरीत्या । स मुचुकुन्दः । ( तदा देववरदानकाले । शुभाम् अन्ते हरिदर्शनाच्छुभीकरीम् । यथा ते तव ईप्सितमेवं तथास्त्वित्यर्थः । इह पाठानां बहुत्वादयं पाठः श्रेयान् । तथाहि–'अयाचत तदा निद्रामनयोपद्रवां शुभाम् । अस्त्वेवं राजराजस्ते कुरु निद्रां यथेप्सितम् ।' इति । महायशा इत्यस्यायं भावः—विष्णुरेवैकः कैवल्यदाता चेत्तर्हि तैरन्यैर्वा किम्, प्रत्युतान्यदर्शनमप्ययोग्यमतस्तद्दर्शनं यावत्तत्प्रियतममथुरांतिके विविक्ते सुप्तमेवाह्यमिति निद्राया एव वरणान् सर्वतो महायशो वितताननेति । निद्रया तदनुमोदनाद्वरत्वेन दत्तया । तच्छयनगुहा तु मथुरामंडलस्य दक्षिणसीमायां धवलपुरमध्ये लोकप्रसिद्धा । या तु मथुरापरिक्रमप्रसंगे श्रीवाराहदेवेन पुर्यन्तरेवोक्ता सा तदनुकारिदेवालय एव ज्ञेया । 'यशोदालयवद्गिरिगह्वरे' इति वक्ष्यमाणात् ॥ २१ ॥ स बोधयिता ) ॥ २२-२३ ॥ भस्मसान्नीते भूते । 'भस्मतां नीते' इति पाठः प्राक्तनो मे प्रतिभाति लेखकप्रमादात्तास्थाने सेति जातम् । धीमते तद्भक्त्येकनिष्ठत्वात्प्रशस्तबुद्धये ॥ २४ ॥ तं कृष्णम् । तत्सौंदर्यविशेषाकृष्टचित्तः पुनर्मुचुकुंद भाग्यं प्रशंसागर्भं वर्णयति–तमिति चतुष्केण । भ्राजता तद्वक्षोलब्धकांतिविशेषेण कौस्तुभेन विराजितम्, विशब्दो भूषणांतरापेक्षया ॥ २५ ॥

### श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी

महायशा इत्यस्यायं भावः श्रीविष्णुरेवैकः कैवल्यदाता चेत्तर्ह्येतैरन्यैर्वा किं प्रत्युतान्यदर्शनमप्ययोग्यम् अतस्तदर्शनं यावत्तत्प्रियतमश्रीमथुरान्तिके विविक्ते स्वप्तुमेवार्हामीति निद्राया एव वरणात् सर्वतो महायशो वितताननेति एवं देवैरपि तदनुमोदनाद्वरत्वेन दत्तया तच्छयनगुहा तु श्रीमथुरामण्डलस्य दक्षिणसीमायां धवलपुरगिरिमध्ये लोकप्रसिद्धा या तु सथुरापरिक्रमप्रसङ्गे श्रीवराहदेवेन पुर्य्यान्तिरेवोक्ता सा तदनुकारिदेवालय एव ज्ञेयः श्रीयशोदालयवत् गिरिगह्वर इति वक्ष्यमाणात् ॥ २१-२३ ॥ धीमते तद्भक्त्येकनिष्ठत्वात्प्रशस्तबुद्धये ॥ २४ ॥ तत्सौन्दर्यविशेषाकृष्टचित्तः पुनर्मुचुकुन्दभाग्यप्रशंसासागर्भं वर्णयति–तमिति चतुष्केण । भ्राजता भ्राजमाणेन तद्वक्षोलब्धकान्तिविशेषेण कौस्तुभेन विराजितं विशब्दो भूषणान्तरापेक्षया पूर्वोक्ता पद्ममालैवापादलम्बित्वेन वनमालेति पूर्वं निर्दिष्टा सम्प्रत्यस्मिन् गर्गोपदेशानुसारेण वैजयन्ती तया स्फुरदिति ज्ञेयम् इयन्तु पञ्चवर्णपुष्पा इति सर्वतद्भूषणानां भगवद्वदनन्तरूपत्वं व्यञ्जितम् अपीच्यं सुन्दरतरं वयो नवयौवनरूपं यस्य तम् ॥ २५-२७ ॥

### श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी

अभितो वन्दित्वा, तेषां शुद्धभावोक्त्या भगवद्भक्त्या च साष्टांगं मुहुर्बहुधा प्रणम्येत्यर्थः । 'महायशाः' इत्ययं भावः–श्रीविष्णुरेवैकः कैवल्यदाता चेत्तर्ह्येतैरन्यैर्वा किं प्रयोजनम्, अन्यदर्शनमप्ययोग्यम्, अतस्तद्दर्शनं यावत्तावत् प्रियतमश्रीमथुरान्तिके विविक्ते स्वप्तुमेवार्हामीति निद्रामेव देवेभ्योऽवृणीतेति सर्वतो महायशो वितताननेति । एवं देवैस्तदनुमोदनाद्वरत्वेन दत्तयेति । वै प्रसिद्धौ, एतत् सर्वं सुविख्यातमेवेत्यर्थः । तच्छयनगुहा च श्रीमथुरामण्डलस्य दक्षिणसीमायां धवलपुरीयगिरिमध्ये लोकप्रसिद्धा, या च श्रीमथुराप्रदक्षिणप्रसंगे पुर्य्यन्तरेव श्रीवराहेण भगवतोक्ता, सापि कल्पान्तरव्यवस्थया घटेतैवेति दिक् ॥ २१ ॥ सात्वतर्षभो यदुकुलश्रेष्ठो यो भगवान् परमेश्वर इति परमभक्तवात्सल्यादिकमभिप्रेतम् । किञ्च, धीमते निजभक्त्येकनिष्ठायेत्यर्थः । अत आत्मानं दर्शयामास, प्रकटोऽभूदित्यर्थः । पुरा यथा श्रीनारदोक्तरूपेण यवनोऽसौ तं ददर्श, तथा वृद्धगर्गाद्युक्तानुसारेण तादृशरूपं श्रीमुचुकुन्दायाप्यदर्शयदित्यभिप्रायेण ॥ २२ ॥ तत्सौन्दर्य्यविशेषाकृष्टचेतस्त्वेन च पुनरपि विशेषतो वर्णयति–तमिति त्रिभिः । विराजितमिति सदा स्वतो राजत एव, विशेषणतया शोभितमित्यर्थः ॥ २३ ॥

### श्रीमद्वीरराघवाचार्यकृता भागवतचन्द्रचन्द्रिका

एवमिति । देवैस्तर्हि बहुकालमनिद्रस्य मम शयनार्थंनिर्जनं प्रदेशं प्रदर्शयतेत्युक्तैरित्यर्थसामर्थ्यादत्र शेषो बोद्धव्यः स्वपतं यस्त्विति वक्ष्यमाणोक्तप्रकारेणोक्तो महायशाः स मुचुकुन्दो देवैः प्रदर्शितायां तस्यां गुहायां प्रविष्टः देवैर्दत्तया विघ्नानुपहतीकृतया निद्रया अध्ययनेन वसतीतिवद्धेत्वर्थे तृतीया अशयिष्ट शायितवान्निमित्तभूतया वा ॥ २१-२२ ॥ एवं शब्दविवक्षितं

प्रकारमाह–स्वपन्तमिति । अचेतनोऽजानन्यः कश्चित्स्वपन्तं शयानं त्वां प्रतिबोधयति जाग्रदवस्थां प्रापयिष्यति सपुमांस्त्वया कर्त्रा दृष्टिमात्रेण करणेन त्वद्दृष्टिप्रसरणमात्रेणेति पदद्वयफलितोऽर्थः तत्क्षणादेव भक्षणादेन भस्मीभवत्विति ॥ २३ ॥ प्रश्नस्योत्तरमुक्त्वा कथामाह–यवन इत्यादिना, भस्मसान्नीते भस्मतां प्रापिते सति सात्वतर्षभो भगवान् श्रीकृष्णः धीमते मुचुकुन्दायात्मानं दर्शयामास ॥ २४ ॥ तमिति । तस्य भगवतस्तेजसा धर्षितः अबिभूतः अत एव शङ्कितः कस्येदं तेज इत्यादि शङ्कमानः तेजसा दुर्द्धर्षम् अधृष्यमिव स्थितं तं भगवन्तं शनकैरवलोक्य महती विपुलावुद्धिर्यस्य स राजा मुचुकुन्दः पर्यपृच्छदिति सम्बन्धः । तं कथम्भूतम् ? घनमिव श्यामं पीतकौशेय वाससी यस्य श्रीवत्सो वक्षसि यस्य तं भ्राजता कौस्तुभेन विराजितम् ॥ २५ ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

आत्मनस्तु बहुकालिकीं बहुकालभोग्याम् ॥ ० ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

स्वपन्तमिति पद्यं न सर्वसम्मतम् ॥ २३–२७ ॥

### गूढार्थदीपिनी

भस्मतां नीते इत्येव पाठः प्राक्तनः लेखकभ्रमात्तास्थाने सेति जातम् इति वंशीधरी ॥ २२ ॥ तमिति चतुष्कम् राजा तमालोक्य शंकितः सन् पर्यपृच्छदिति चतुर्थेनान्वयः । वैजयन्ती पञ्चरत्नमाला । अपीच्यं त्वति सुन्दरे । वयो यौवनम् । मृगेन्द्रस्य सिंहस्येव उदारः पराभवजनकः । विक्रमो यस्य धर्षितोऽभिभूतः । दुर्धर्षम् अपराभाव्यम् ॥ २३–२६ ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

अशयिष्ट शेते स्म ॥ २२–२७ ॥

### श्रीसत्यधर्मकृता श्रीभागवतटिप्पणी

एवं देवैरुक्तः सर्वदेवानभिवाद्य नमस्कृत्य गुहाविष्टः सन् बहुकालजां बहुकालभवां निद्रां कुर्यामित्ययाचिष्ट ययाचे ॥२१॥ तथेति तैर्देवैरुक्तो महामना मुचुकुन्दो गुहाविष्टोऽशयिष्ट । अत्रैकश्लोक उत्सन्नः । [ यः कश्चिन्मम निद्राया भङ्गं कुर्यात्सुरोत्तमाः । स तु भस्मीभवेदाशु तथोक्तश्च सुरैः सह ॥ ] स्वायन्तं यस्तु मध्ये बोधयेत्त्वामचेतनः । स त्वया दृष्टमात्रस्तु भस्मीभवतु तत्क्षणादिति श्लोकस्यैतद्याचनश्लोकपूर्वकत्वावश्यम्भावात् । तत्त्यागे सर्वत्यागोऽस्तु । हरिवंशशंसितरीत्या कथाया ज्ञातुं शक्यत्वात् । तथा हि हरिवंशे । पुरा देवासुरे युद्धे कृतकर्मा महाबलः । वरेण छन्दितो देवैर्निद्रामेव गृहीतवान् । श्रान्तस्य तस्य वागेवं तदा प्रादुरभूत्किल । प्रसुप्तं बोधयेद्यो मां तद्दहेऽयमहं सुराः । चक्षुषा क्रोधदीप्तेनेत्येवमाह पुनः पुनः । एवमस्त्विति तं शक्र उवाच त्रिदशैः सह । स सुरैरभ्यनुज्ञातो मानुषं लोकमागतः । स पर्वतगुहां काञ्चित्प्रविश्य श्रमकर्षितः । सुष्वाप कालमेतं वै यावत्कृष्णस्य दर्शनम् । तत्सर्वं वासुदेवस्य नारदेन निवेदितम् । वरदानं च देवेभ्यस्तेजस्तस्य च भूपतेः । अनुगम्यमानः कृष्णस्तु तेन म्लेच्छेन शत्रुणा । तां गुहां मुचुकुन्दस्य प्रविवेश विनीतवत् । शिरस्थाने तु राजर्षेर्मुचकुन्दस्य केशवः । सन्दर्शनपथं त्यक्त्वा तस्थौ बुद्धिमतां वर इति । निद्रया देवदत्तया वरसम्पदा यवने भस्मसान्नीते भस्माधीने तद्रूप इति यावत् । सात्वतर्षभो भगवान् हे मुचुकुन्देत्यात्मानं तं दर्शयामासेत्यन्वयः । गतिवुद्धीत्यादेः । अयधीरिति गतबुद्धीरिति मतोयधीमतस्तस्मिन्पवन इत्यन्वयः । विवक्षाभावे मुचुकुन्दाय धीमते आत्मानं दर्शयामासेत्यन्वय इति वा ॥ २३ ॥ महाबुद्धिस्तं पर्यपृच्छदित्यनेनान्वय इति विशेषकम् । घनवच्छ्यामः ॥ २४ ॥ यावद्वनमाल्या ॥ २५ ॥

### श्रीमद्वल्लभाचार्य्यकृता सुबोधिनी

तत्र स विष्णुः कथं प्रासव्य इत्याशङ्कायाम्, सोऽवतरिष्यति मोक्षमेव दातुम्, तदा तस्य अनुवृत्तौ तदाज्ञाकरणे वा मुक्तिर्भविष्यतीति प्रतिवचने, कदा अवतरिष्यतीति पुनर्जिज्ञासायाम्, अष्टाविंशतितमे युगे अवतरिष्यतीत्यभिज्ञाय, तावत्पर्यन्तं तूष्णीस्थितौ कामादयः क्षुत्पिपासादयश्च बाधका भविष्यन्तीति, समाधावप्येतद्दुःखमिति, सुषुप्तिसमाध्योः तुल्यश्चानन्दानुभव इति, फलदाता विष्णुरेवेति योगादीनमप्रयोजकत्वात्, प्रयत्नाधिक्येन क्लेशसम्भवाच्च. सुषुप्तिमेव प्रार्थयामास । ततो देवाः स्वकीयां निद्रां ददुः । ते ह्यस्वप्नाः । अर्थात्सुषुप्तिरेव भवतीति वरत्वेन निद्रां प्राप्य, तत्र विघ्नकर्ता दर्शनमात्रेणैव भस्मसाद्भविष्यतीत्यपि वरं प्राप्य, अष्टाविंशतियुगपर्यन्तं निद्रां कृतवानित्याह **अशयिष्टे**ति । गुहायां शीतवाताद्युपद्रवाभावात् तत्राविष्टः **अशयिष्ट** निद्रां कृतवान् ॥ २१ ॥ एवं प्रासङ्गिकमुक्त्वा प्रस्तुतमाह **यवन** इति । देवानामभिवन्दनं तत्प्रत्याशया स्थितत्वं भगवन्माहात्म्यश्रवणेन श्रद्धा चेति गुणत्रयं तस्य दृष्ट्वा, भक्तहितमपि प्रसङ्गात्तत्कृतं ज्ञात्वा, यवने भस्मसान्नीते, भगवान् सर्वज्ञः सर्वसमर्थश्च सात्वतानामृषभः स्वामी तादृशाय चेत् कृपां न कुर्यात्, तदा भक्तानां दुःखमपि भवेदिति भक्तहितकारित्वं स्वतन्त्रत्वं चावलम्बितवानित्याशयेनाह **सात्वतर्षभ** इति । तत्र प्रथमं हितचर्यामाह **आत्मानं दर्शयामासे**ति । ननु प्राकृताय सर्वसाधनं

परित्यज्य निद्राणाय कथमात्मानं दर्शितवानित्याशङ्क्याह **मुचुकुन्दायेति**। सर्वत्र उकारः दोषाभावसूचकः। मकारः पुरुष आनन्दः, मुदं ( मुद् ) वा परमानन्दः। चु शब्देन निर्दुष्टं चैतन्यम्। कुशब्देन निर्दुष्टः सदंशः। सच्चिदानन्दरूपं पूर्वं ज्ञानादिद्वारा लोकेभ्यो दत्तवानिति तादृशाय स्वरूपं प्रदर्शनीयमेव। ज्ञापनं नापेक्ष्यत इति, विरुद्धं वा न मंस्यत इत्यत आह **धीमत** इति। स हि बुद्धिमान्। पूर्वोपदेशमपि स्मरतीत्यपि सूचितम्॥ २२॥ ततो यज्जातं तदाह **तमालोक्येति** चतुर्भिः। तमालोक्य पर्यपृच्छदिति चतुर्थेन संवन्धः। तस्य कालातिक्रमेण मोक्षसिद्ध्यर्थं भगवन्तं वर्णयति त्रयोदशधा, तावद्भिर्विशेषणैः। **घनश्याममित्यादिभिः**। केवलरसात्मकत्वे दुःखसहितसुखं न पुरुषार्थत्वायेति घनश्यामता निरूपिता। मेघवत् श्यामः, स हि तापहारको भवति। क्रियाफलदाता आप्यायकश्च। एवं गुणत्रयसहितो रसः भगवान् फलरूपो निर्दिष्टः। संसारं निवर्तयन् कर्म च सफलं कुर्वन् परमानन्ददाता पीतकौशेयवासमिति व्याख्यातम्। एवं प्रमेयप्रमाणरूपं निरूप्य तेनैव मोक्षधर्मौ सूचयित्वा अर्थकामावाह **श्रीवत्सयुक्तं** वक्षो यस्य भ्राजत्कौस्तुभेन विराजितश्च॥ २३॥

### श्रीसुबोधिनी–सारः

एवमुक्तो महायशाः पुण्यकीर्त्तिः स मुचुकुन्दो देवानभिवंद्य प्रणम्य गुहां गतो देवैर्दत्तया निद्रयाशयिष्ट चिरमसुप्तत्वात्॥ २१॥ स्वापं यातं प्राप्तं त्वां मध्येन्तराऽचेतनो मूढो निरीश्वरो वा यस्तु उत्थापयेत् त्वया दृष्टमात्रोऽवलोकित एव सद्यः भस्मीभवतु॥ २२॥ प्रकृतमनुसरति। यवने भस्मसात्कृते भगवान्कृष्णो धीमते विवेकिने मुचुकुन्दायात्मानं स्वरूपं दर्शयामास॥ २३॥ घनश्यामं पीताम्वरं श्रीवत्सो वक्षसि यस्य तम् भ्राजता कौस्तुभेन विराजितं शोभमानम्॥ २४॥

### विवरणटिप्पणी

**तमालोक्येत्यत्र**। अन्त्यविशेषणे उदारपदसूचितं मोक्षपर्यवसायित्वं त्रयोदशः प्रकारः॥ २३॥

### गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

अत्रापेक्षितः शेषो ज्ञेयः। एवं देवैरुक्तः स महायशाराजा मुचुकुन्दः चिरप्रजागरश्रान्तत्वात् देवानभिवन्द्य निद्रां याचितवान्। ततश्च देवदत्तया निद्रया गुहाविष्टः सन् स अशयिष्ट इत्यन्वयः॥ २१॥ निद्राप्रदानप्रकारं दर्शयति–स्वपन्तमिति। यस्त्वचेतनः अजानन् मध्ये स्वत उत्थानात् पूर्वं स्वपन्तं शयानं त्वां प्रतिबोधयेत्, स त्वया दृष्टमात्र एव तत्क्षणाद्भस्मीभवत्विति त्यन्वयः। तुशब्दोऽवधारणे। वै निश्चये। अयं श्लोकः क्वचिन्नास्ति॥ २२॥ एवं प्रासङ्गिकमुक्त्वा प्रस्तुतमाह–यवन इति। एवं यवने भस्मसान्नीते भस्मतां प्रापिते सति सात्वतर्षभः भक्तपालको भगवान् कृष्णः धीमते विवेकिने मुचुकुन्दाय आत्मानं दर्शयामास॥ २३॥ राजा मुचुकुन्दस्तमालोक्य शनकैः पर्यपृच्छदित्यन्वयः। एवंप्रश्ने हेतुमाह—शङ्कित इति। 'अतितेजस्वी कोऽयं' इति शङ्कायुक्त इत्यर्थः। तत्रापि हेतुमाह—तस्य तेजसा धर्षितः अभिभूत इत्यर्थः। एवं सत्यपि प्रश्ने हेतुमाह–महाबुद्धिरिति, विवेकीत्यर्थः। शङ्काहेतुत्वेनैव भगवतोऽलौकिकं स्वरूपमपि वर्णयति—घन इव श्यामम्। पीते कौशेये कीटनिर्मितकोशजनिततन्तुनिर्मिते वाससी यस्य तम्। श्रीवत्सो दक्षिणावर्तरोमरेखायां सुवर्णवत्तेजो विशेषो वक्षसि यस्य तम्। भ्राजता प्रकाशमानेन कौस्तुभेन विराजितम्॥ २४॥

### अन्वितार्थप्रकाशिका

एवमिति॥ एवं देवैरुक्तः स महायशाः मुचुकुन्दः देवानभिवन्द्य निद्रां याचितवानिति शेषः। ततश्च देवदत्तया निद्रया गुहामाविष्टः सन् अशयिष्ट। अत्र निद्राप्रार्थनमिदं वृद्धगर्गोक्तकृष्णदर्शनं यावद्भविष्यति तावन्निद्रैव मम सुखाय न तु जागरः। भगवद्दर्शनोत्कण्ठितस्य मम वहुचतुर्युगावच्छिन्नः कालो जागरेण यापयितुमशक्यः। निद्रया तु स कालः क्षणप्राय एव भविष्यतीति जागरयितुर्दाहप्रार्थनं तु शक्रं भीषयितुमेव। अन्यथा पुनरपि दैत्यवधार्थं शक्रो जागरयेत् इति। तच्छयनगुहा तु मथुरामण्डलस्य दक्षिणसीमायां धवलपुरगिरिमध्ये प्रसिद्धा॥ २१॥ यवन इति॥ एवं यवने भस्मसान्नीते भस्मतां प्रापिते सति कृष्वादि योगं विना। सातिरार्षः। सात्वतर्षभः भक्तपालको भगवान् कृष्णः धीमते विवेकिने मुचुकुन्दाय आत्मानं दर्शयामास॥ २२॥ तमिति चतुष्कम्॥ घनश्यामं पीतकौशेयवाससं श्रीवत्सवक्षसं भ्राजता भ्राजमानेन कौस्तुभेन विराजितम्। शता आर्षः॥ २३॥

### श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्

गुहायामाविष्टः प्रविष्टः अशयिष्ठशिश्ये॥ २१–२४॥

### भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

एवमिति तर्हि वहुकालमनिद्रस्य मम शयनार्थं निर्जनं प्रदेशं प्रदर्शयतेत्युक्तैरिति शेषः। देवैः, एवं वक्ष्यमाणश्लोकोक्तप्रकारेण, उक्तः महायशाः, स मुचुकुन्दः, देवान् अभिवन्द्य, गुहाविष्टः देवैः प्रदर्शितायां रैवताद्रिगुहायां प्रविष्टः सन्नित्यर्थः देवदत्तया देवैः प्रदत्तया निद्रया, अध्ययनेन वसतीतिवद्धेत्वर्थे तृतीया। अशयिष्ट शेते स्म॥ २१॥ एवंशब्दविवक्षितप्रकारमाह।

स्वपन्तमिति। अचेतनोऽजानन्, यः कश्चित्, स्वपन्तं शयानं, त्वां तु, मध्ये बोधयिष्यति त्वां जाग्रदवस्थां प्रापयिष्यतीत्यर्थः। स पुमान्, त्वया कर्त्रा, दृष्टिमात्रेण करणेन, त्वदृष्टिप्रसरणमात्रेणेति पदद्वयफलितोऽर्थः। तत्क्षणादेव, भस्मीभवतु। इति श्लोकद्वयस्यैवमेकसम्बन्धः॥ २२॥ प्रश्नस्योत्तरमुक्त्वा प्रकृतां कथामाह। यवन इति। यवने कालयवने, भस्मसात् नीते, भस्मभावं गमिते सतीत्यर्थः। सात्त्वतर्षभः यादवश्रेष्ठः, भगवान् श्रीकृष्णः धीमते महामतये, मुचुकुन्दाय, आत्मानं दर्शयामास॥ २३॥ तमिति। चतुर्भुजमिति। प्रेक्षणीयमिति। पर्यपृच्छदिति। तस्य भगवतः, तेजसा धर्षितः अभिभूतः। अत एव, शङ्कितः कस्येदं तेज इत्याशङ्कमानः, महती विपुला बुद्धिर्यस्य सः, राजा मुचुकुन्दः, तेजसा दुर्द्धर्षं इव मध्यस्थमिव स्थितमित्यर्थः। तं भगवन्तं, शनकैः आलोक्य पर्यपृच्छत्। कथंभूतं तम्। घनवत् श्यामस्तं, पीते कौशेये वाससी यस्य तं, श्रीवत्सो वक्षसि यस्य तं भ्राजच्चासौ कौस्तुभश्च तेन, विराजितं, चत्वारो भुजा यस्य तं, वैजयन्त्या मालया, रोचमानं च, चारु सुन्दरं प्रसन्नं च वदनं मुखं यस्य तं, स्फुरती मकराकारे कुण्डले यस्य तं, त्रिलोकस्य प्रेक्षणीयं दर्शनीयं, सुन्दरतममिति यावत्। अनुरागस्मिताभ्यां सहिते इति सानुरागस्मिते ईक्षणे नयने यस्य तं, अपीच्यं सुन्दरं वयो यस्य तं, मत्तस्य मृगेन्द्रस्य सिंहस्येवोदारो विक्रमः पराक्रमः पादविक्षेपो वा यस्य तं, पर्यपृच्छदिति चतुर्णामिकान्वयः॥ २४-२७॥

### कृष्णप्रिया

महायशा महाराज मुचुकुन्दजी ने देववरों के वचनों का श्रवण करके उनकी वन्दना की और चिरकाल से परिश्रान्त मुचुकुन्दजी ने केवल निद्रा का ही वर माँगा। पुनः देवों से वरदान प्राप्तकर नींद से भरकर राजा अद्रिकन्दरा में जाकर सो गये॥ २१॥ राजा के प्रस्थान अवसर पर देववरों ने कह दिया था कि मुचुकुन्द महाराज! यदि आप के निद्राकाल में कोई मूढ जन आप को मध्य में जगायेगा तो वह आपकी दृष्टि पड़ते ही उसी क्षण में भस्मीभूत होगा॥ २२॥ राजन्! कालयवन जब भस्म हो चुका तब सात्वतकुलशिरोमणि भगवान् श्रीकृष्ण ने भक्तिसम्पन्न बुद्धिमान् मुचुकुन्द राजा को अपना दर्शन दिया॥२३॥ महाराज मुचुकुन्द ने भगवान का दर्शन किया तब भगवान का स्वरूप कैसा था? मुकुन्द भगवान का श्रीविग्रह वर्षाकालीन मेघ के समान श्याम था नाथ ने दुकूल पीताम्बर धारण किये हुए थे। वक्षःस्थल में श्रीवत्सलाञ्छन था। कण्ठ में विराजती तेजोमय कौस्तुभमणि अपनी दिव्यकान्ति चारों ओर बिखेर रही है॥ २४॥

**चतुर्भुजं रोचमानं वैजयन्त्या च मालया। चारुप्रसन्नवदनं स्फुरन्मकरकुण्डलम्॥ २५॥**
**प्रेक्षणीयं त्रिलोकस्य[1] सानुरागस्मितेक्षणम्[2]। [3]अपीच्यवयसं मत्तमृगेन्द्रोदारविक्रमम्॥ २६॥**
**पर्यपृच्छन्महाबुद्धिस्तेजसा तस्य [4]धर्षितः। शङ्कितः शनकै राजा दुर्धर्षमिव तेजसा॥ २७॥**

**मुचुकुन्द उवाच**

**को भवानिह सम्प्राप्तो विपिने गिरिगह्वरे। पद्भ्यां पद्मपलाशाभ्यां विचरस्युरुकण्टके॥ २८॥**

### कर्दमक्षमा

**अन्वयः**—चतुर्भुजम्, च, वैजयन्त्या, मालया; रोचमानम्, चारुप्रसन्नवदनम्, स्फुरन्मकरकुण्डलम्॥ २५॥ त्रिलोकस्य, प्रेक्षणीयम्, सानुरागस्मितेक्षणम्, अपीच्यवयसम्, मत्तमृगेन्द्रोदारविक्रमम् तम्, आलोक्य॥ २६॥ तस्य, तेजसा, धर्षितः, तेजसा, दुर्धर्षम्, इव, शङ्कितः, महाबुद्धिः, राजा, शनकैः, पर्यपृच्छत्॥ २७॥ मुचुकुन्द उवाच—इह, विपिने, गिरिगह्वरे, सम्प्राप्तः, पद्मपलाशाभ्याम्, पद्भ्याम्, उरुकण्टके, विचरसि, कः, भवान्॥ २८॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

धर्षितोऽभिभतः। दुर्धर्षमप्रधृष्यम्॥ २८॥ विपिनेऽरण्ये तत्रापि गिरेर्गह्वरे दुष्प्रवेशस्थाने तत्राप्युरुकंटके पद्मपलाशसदृशाभ्यां पद्भ्यां विचरसीति॥ २९॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

तं कृष्णम्॥ तत्सौंदर्यविशेषाकृष्टचित्तः पुनर्मुचुकुंद भाग्यं प्रशंसागर्भं वर्णयति—तमिति चतुष्केण। भ्राजता तद्वक्षोलब्धकांतिविशेषेण कौस्तुभेन विराजितम्, विशब्दो भूषणांतरापेक्षया॥ २५॥ वैजयन्ती पंचरत्नमाला॥ पद्ममालैव पूर्वोक्ता

१. नृलोकस्य—श्रीधर. वंशी. जीव. विश्व.; त्रिलो—वीर. विज.। २. स्मितेक्षितम्—प्रा. पा.। ३. अपीता—प्रा. पा.। ४. विस्मितः—विज.।

वनमालेति पूर्वं निर्दिष्टा संप्रत्यस्मिन् गर्गोपदेशानुसारेण वैजयन्ती तया स्फुरदिति ज्ञेयम् । इयं तु पञ्चवर्णपुष्पेति सर्वतस्तद्भूपणानां भगवदनंतरूपत्वं व्यञ्जितम् ॥ २६ ॥ अपीच्यवयसं शोभमानयौवनम् ॥ अपीच्यं सुन्दरतरं वयो नवयौवनं यस्य तम् ॥ २७ ॥ तस्य कृष्णस्य । अधृष्यमानभिभाव्यम् ॥ महावुद्धिरिति–श्रीभगवद्वेपेण नायमन्यो मां भ्रमयति मद्विधधर्पकप्रभावत्वाभावादन्यस्येति विचारसमर्थप्रज्ञ इत्यर्थः । वुद्धेर्महत्त्वहेतुरपि प्रह्लादस्येव भक्ति बलमेव वेति वाक्यालंकारः ॥ २८ ॥ तत्राप्यरण्येऽपि । तत्रापि दुःप्रवेशस्थानेऽपि । 'अरण्यं विपिनं गहनं काननं वनम्' इत्यमरः । "गुहा गहनदंभेपु निकुंजे गह्वरः स्मृतः" इति कोशान्तरम् ॥ विपिने निर्जने ॥ २९ ॥

**श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी**

राजा तस्य तेजसा धर्षितः सन् शनकै पर्य्यपृच्छत् यतो महावुद्धिरिति श्रीभगवद्वेषेण नायमन्यो मां भ्रमयति मद्विधधर्षकर्षकप्रभाववत्वादन्यस्येति विचारसमर्थप्रज्ञ इत्यर्थः । अत एव शङ्कितः क्रमशः खण्डनाय प्रथमं नानावितर्कं कृतवानित्यर्थः । शनकैरित्यत्र हेतुः, तेजसा हेतुना दुर्द्धर्षं प्रश्नविषयमपि कर्तुं दुःशकम् तमिति शेपः । इवेति वाक्यालङ्कारे तथापि परि सर्वतोभावेनेति महावुद्धित्वादेवेति भावः । महत्त्वञ्चात्र श्रीप्रह्लादस्येव भक्तिवलं ज्ञेयम् ॥ २८ ॥ प्रश्नमेवाह–को भवान् इत्यादिद्वाभ्याम् । तैर्व्याख्यातं च तत्रोरुकण्टक इत्यनन्तरं सम्प्राप्त इति तत्रापि पद्मेत्यादियोज्यं पद्भ्यामित्यादिना स्नेहो व्यञ्जितः प्रभावश्च तर्कितः ॥ २९ ॥

**श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी**

रोचमानं सूर्य्यकोटिवत् प्रकाशमानम्, यद्वा, तदीयमनोनयनादिभ्यो रुचिं जनयन्तम्, पञ्चवर्णपुष्पा वैजयन्ती, तया विशिष्टम्, किंवा तयैव रोचमानं शोभमानम्, पूर्वोक्तपद्ममालैव वृद्धगर्गाद्युक्तापेक्षया तस्मिन् वैजयन्तीतयाऽस्फुरदिति ज्ञेयम् । चारुचिवुकादि-ललाटान्ताशेषांगैर्मनोहरं प्रसन्नं च सदास्येरत्वादिना वदनं यस्य तं त्रिलोकस्य जगतः प्रेक्षणीयम् । एवमनुक्तमन्यदपि सौन्दर्य्यं संगृहीतम्, अनुरागेण यत् स्मितं तत्सहितमीक्षणमवलोकनं यस्य तम्, यद्वा, सानुरागस्मिते, सदा कृपया स्मेरे इत्यर्थः, किंवा अनु पश्चात् प्रान्ते राग आरुण्यं स्मितं च स्मेरता सदा सुप्रसन्नतेत्यर्थः, ताभ्यां सहिते ईक्षणे नेत्रे यस्य, अपीच्यं सुन्दरतरं वयो नवयौवनरूपं यस्य तम्, मत्तमृगेन्द्रादप्युदारो विक्रमो यस्य तम्, इति महावलिष्ठतासिद्धभुजमध्यवक्षःस्थलादि-सौन्दर्य्यविशेषः सूचितः ॥ २४–२५ ॥ महावुद्धिरपि तेजसा धर्षितः, शंकितश्च भीतः सन्, अत एव शनैः परि सर्व्वतोभावेन गद्गदादिपर्य्याकुलवाक्यतया वा पृच्छत् । ननु सोऽपि तद्भक्तो महाप्रभावः, कुतस्तादृशोऽभूत् ? तत्राह—तेजसा स्वस्य प्रभावेण पराक्रमेण वा दुर्द्धर्षमभिभवितुमशक्यमित्यर्थः; यद्वा, सूर्य्यादितेजसापि दुर्द्धर्षमिति महातेजस्वितोक्ता । तेजसा धर्षित इत्यादावयं हेतुः । इवेति लोकोक्तिरीत्याऽनधिकार्थम्; यद्वा, तस्यैव तेजसा दुर्द्धर्षं प्रष्टुमशक्यमित्यर्थः, तथाप्यपृच्छत्, यतो महावुद्धि-गम्भीराशयः, प्रश्नं विनास्य तत्त्वाज्ञानेन भक्तिविशेषानुदयान्मे सर्व्वजन्मकर्म्मादिकं विफलमेव स्यात्, विशेपतोऽस्य वाक्यामृतञ्च पिवानीत्यादिकं विचारयन्नित्यर्थः ॥ २६ ॥ संप्राप्तः साक्षादागतः । एतच्च तव योग्यं न स्यादिति भक्तिविशेषेण वदंस्तस्य जगद्वैलक्षण्यं वक्तुमादौ पदाब्जयोः सुकोमलत्वेऽपि कण्टकावेध्यत्वादिकमाह—विपिन इत्यादिना । यद्वा, तस्य सौन्दर्य्यसौकुमार्य्या-दिभिराकृष्टोऽतिस्निह्यन्नाह—पद्भ्यामिति । एतच्च तैरेव व्यक्तीकृतम्; विचरसि परिभ्रमसि ॥ २७ ॥

**श्रीमद्वीरराघवाचार्यकृता भागवतचन्द्रचन्द्रिका**

वैजयन्त्या वनमालया शोभमानं च विराजितमित्युक्तसमुच्चयार्थश्चशब्दः अनुक्ताभरणान्तरसमुच्चयार्थो वा चारु सुन्दरं प्रसन्नं च वदनं यस्य तम् ॥ २६ ॥ त्रिलोकस्य प्रेक्षणीयं दर्शनीयं सुन्दरतमम् इति यावत् । अपीच्यं सुन्दरम् वयो यस्य तं प्रादुर्भूतवयसमिति भावः । मत्तस्य सिंहस्येवोदारो विक्रमः पराक्रमः पादविक्षेपो यस्य तम् ॥ २७–२८ ॥ तं प्रश्नमेवाह—क इत्यादिना वयन्त्विवत्यतः प्राक्तनेन । इह सम्प्राप्तो भवान् कः ? किं देवः ? उत मानुषः ? इहेति विवक्षितमाह—विपिने अरण्ये तत्रापि गिरिगह्वरे दुष्प्रवेशस्थाने तत्राप्युरूणि कण्टकानि यस्मिंस्तस्मिन् पद्मपलाशसदृशाभ्यां पद्भ्यां विचरसि ॥ २९ ॥

**श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली**

त्रिलोकस्य मध्ये दर्शनीयगुणम् ॥ २७ ॥ अतितेजसा अधिकतेजसा ॥ २८ ॥ गिरिगह्वरे प्रवेष्टुमशक्ये ॥ २९ ॥

**श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः**

शक्तितः क्रमशः खण्डनाय प्रथमं नानावितर्कं कृतवानित्यर्थः ॥ २८–३९ ॥

**श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी**

शङ्कितः किमयमीश्वर एव वेत्यागताशङ्कः दुर्द्धर्षमधृष्यम् इवेति वाक्यालङ्कारे ॥२८॥ पद्मपलाशतुल्यां पद्भ्याम् ॥२९-३०॥

### गूढार्थदीपिनी

यस्त्वं गह्वरे दुर्गमे विपिने विचरसि स भवान् क इत्यन्वयः। उरूणि बहूनि कण्टकानि यस्मिन् ॥ २७ ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

धर्षितः अभिभूतः शङ्कितः किमयं भगवाविति भगवानिति जातशङ्कः दुर्द्धर्षमधृष्यं श्रीकृष्णं पर्य्यपृच्छत् इवेति वाक्यालङ्कारे ॥ २८-२९ ॥

### श्रीसत्यधर्मकृता श्रीभागवतटिप्पणी

त्रिलोकस्य प्रेक्षणीयं दृश्यम्। कृत्यानां कर्तरि वेति षष्ठी। त्रिलोकस्य मध्ये दर्शनीयमिति वा। अपीच्यवयसं गतम् ॥ २६ ॥ तस्यातितेजसा तेजांस्यतिक्रम्य विद्यमानं तेन तेजसाऽपूर्वेण शङ्कितः झटिति प्रष्टं संशयः शनकैर्दुर्धर्षं पर्यपृच्छत्॥२७॥ उरुकण्टके गिरिगह्वरे पद्मपलाशाभ्यां पद्भ्यां विचरसि भवान्कान्तिमानिह सम्प्राप्तस्त्वं कः। इह स एः मन्मथस्य हंसोपहासो यथा प्राप्त इति वा। मन्मथव्यथाजनकसौन्दर्यवानिति तात्पर्यम्। दीप्तिर्भाभश्चेत्यनेकार्थध्वनिपदमञ्जरी ॥ २८ ॥ तेजस्विनां तेजः समुदितं किंस्वित् भगवान्विभावसुरग्निः किं स्वित् सूर्यः सोमश्चन्द्रश्चन्द्रशेखरो वा। उमया सहितः सोम इति विग्रहः। अपरो लोकपालो नाकपालादिर्वा ॥ २९ ॥

### श्रीमद्वल्लभाचार्य्यकृता सुबोधिनी

एवं चतुर्विधपुरुषार्थरूपं निरूप्य तद्दातृत्वमप्याह **चतुर्भुज**मिति। सेवमानेभ्यः तान् प्रयच्छतीति। प्रथमतः प्रवृत्तिसिद्ध्यर्थं कीर्तेरुपयोगमाह **वैजयन्त्या मालया रोचमान**मिति। कीर्त्या रुच्युत्पादकः। वैजयन्तीपदेन कीर्तेः सानुभावत्वमुक्तम्। एवं सोपपत्तिकं सर्वपुरुषार्थदातृत्वं निरूप्य भक्तिदातृत्वमाह। चारु प्रसन्नं वदनं यस्य। अत्रापि चारुत्वं मनोहरत्वम्, प्रसादः फलसाधकः, साधनफलसहिता भक्तिरत्र निरूपिता। **स्फुरन्मकरकुण्डल**मिति। पूर्ववत्तत्र प्रवृत्तिनिवृत्तिशास्त्रे अङ्गभूते निरूपिते ॥ २४ ॥ एवं शास्त्रीयोत्कर्षमुक्त्वा लोकोत्कर्षमाह **प्रेक्षणीयं त्रिलोकस्ये**ति। लोको हि दृष्टमेव मन्यते, लौकिकः, त्रिलोकस्यापि स एव प्रेक्षणीय इति नान्यः केनचित्स्वीकर्तव्यः। तेषां दृष्ट्या प्रवृत्तौ फलसिद्धिमाह **सानुरागस्मितेक्षण**मिति। अनुरागपूर्वकं स्मितपूर्वकमीक्षणं यस्येति। **अनुरागे**ति सकलं ( सफलं ) काम्यं, कर्म, **स्मित**मित्यल्पमोहा भक्तिः। ईक्षणं ज्ञानम्। तेन त्रितयमपि भगवान् प्रयच्छतीति सूचितम्। पुरुषाणामेवं साधनफलान्युक्त्वा स्त्रीणामाह **अपीच्यवयस**मिति। प्रियः स्त्रीणामपीच्य इति परमप्रीतिविषयं वयो यस्य। तेन तासां प्रवृत्तिरुक्ता। फलमाह **मत्तमृगेन्द्रोदारविक्रम**मिति। मत्तो यो मृगेन्द्रः सिंहः। न हि सिंहाक्रान्तं सिंहगृहं कश्चित्प्रवेष्टुमर्हति। न केवलं संबन्धमात्रेण पाति, किन्तु उदारः यथेष्टं मनःपूर्तिपर्यन्तं विक्रमः पराक्रमः तासामभीष्टो यस्य। उदारत्वात्। मोक्षपर्यवसायित्वमपि सूचितम् ॥ २५ ॥ एवं वैदिकलौकिकैः सर्वैरेव विशेषेण मृग्यः भगवानेक एव फलसाधनरूप इति तादृशं दृष्ट्वा, प्रपत्त्यर्थं संवादेन परिचयं कृत्वा, पश्चाद्भजनीय इति प्रथमतः पृच्छति **पर्यपृच्छ**दिति। नन्वेवं भावः कथं वर्ण्यते, अज्ञात्वैव लौकिकन्यायेन कथं न पृष्टवानित्याशङ्क्याह **महाबुद्धि**रिति। महती तस्य बुद्धिरतिचतुरः। एतदर्थमेव सुषुप्तिं साधयित्वा स्थितः। किञ्च। तेजसा तस्य घर्षितः। भगवत्तेजसा पराहतः स ह्यात्मानं जानाति, इन्द्रादिभ्योऽप्यधिकतेजस्विनम्। स चेत्तस्य तेजसा तिरस्कृतः, तदा कथं ( न ) जानीयादयं पुरुषोत्तम इति। तस्मात्परिचयार्थं प्रश्नः। ननु प्रश्नोऽपि कथं पुरुषोत्तमे सम्भवतीत्याशङ्क्याह **शङ्कितः शनकैरि**ति। प्रश्नेऽपि शङ्कां प्राप्तवानेव। तथापि समागतो भगवानित्यल्पं धार्ष्ट्यमवलम्ब्य शनैरपृच्छत्। किञ्च। राजा नीतिमपि जानाति। महांश्च राजसगुणोऽपि तस्य धार्ष्ट्ये सहाय इति केचित्। **तेजसा दुर्धर्षमिवे**ति। भगवन्तं दृष्ट्वा राजत्वेऽपि तत्तेजसा दुर्धर्ष इति शनैरेवोक्तवान्, विज्ञापनापूर्वकम्। आयुधानि सेवकाः सामग्री च न दृष्टेति। स्वयमपि राजेति इवेत्युक्तम्। अन्यथा पादयोरेव पतेत्। भगवान् वा तथा सन्देहविषयमात्मानं प्रकाशितवानितीवशब्दः ॥ २६ ॥ प्रश्नमाह को भवानिति अष्टभिः। प्रश्ने हेतून् वदति। अन्यथा कृत्रिमत्वमाशङ्क्येतेति। स्ववृत्तान्तमपि कथयति। भगवतोऽपि स्ववृत्तान्तकथनार्थम्। अष्टैश्वर्यं भगवति सिद्धम्। तथा सति विशेषाज्ञाने प्रतिपत्तिरयुक्तेति, स्वयं च फलार्थी न भवतीत्यष्टभिः प्रश्नः। प्रश्नत्रयं निरूपयति, स्वरूपक्रियाप्रकाराणाम्, तत्र विरोधख्यापनार्थम्। एतादृशं रूपं सहजं भवत्येव, कृत्रिममन्येषामपि भवतीति को भवानिति स्वरूपप्रश्नः। अस्तु वा विशेषः। एतादृशे विपिने अरण्ये, तत्रापि गिरिसंबन्धेन गह्वरे स्थाने, कथं संप्राप्त इति क्रियाप्रयोजनः प्रश्नः। **पद्भ्यां पद्मपलाशाभ्या**मिति प्रकारप्रश्नः। इयं हि भूमिरसंस्कृतेति उरूणि कण्टकानि भवन्ति। पलाशपत्रादपि कोमलाभ्यां पद्भ्यां तादृशस्थाने विचलनं महत्कार्यव्यतिरेकेण न भवतीति किं तादृशं महत्कार्यमिति प्रकारप्रयोजनप्रश्नः ॥ २७ ॥

**श्रीसुबोधिनीसारः**

चतुर्भुजं वैजयंत्या मालया रोचमानं तल्लक्षणं ब्रह्मांडपुराणे—

"शुक्तिः शंखो गजः क्रोडः फणी मत्स्यश्च दर्दुरः। वेणुरेते समाख्यातास्तज्ज्ञैर्मौक्तिकयोनयः॥ १॥
एतदुत्पन्नमुक्तानां माला भगवतश्च या। तां विदू राजशार्दूल वैजयंतीति नामतः॥ २॥"

चारु सुरम्यं प्रसन्नं वदनं मुखं यस्य तम् स्फुरंती मकराकारे कुंडले यस्य तम्॥ २५॥ मनुष्यलोकस्य दर्शनीयं सानुरागं सप्रेमस्मितम् ईक्षणे यस्य तम् अपीच्यं मनोहरं वयोऽवस्था यस्य तम्। मत्तो यो मृगेंद्रः सिंहस्तद्वदुदारो विक्रमो यस्य तम् आलोक्य दृष्ट्वा महाज्ञानी तस्य कृष्णस्य तेजसा धर्षितस्तिरस्कृतः शंकितो राजा मुचुकुंदः तेजसा दुर्धर्षमप्रधृष्य इव तं पर्यपृच्छत् शनैः॥ २६-२७॥ इह संप्राप्तः समायातो भवान् कः। विपिने वने गिरेर्गह्वरे दुर्गमस्थाने उरुकंटके बहुदुःखदे पद्मपत्राभ्यां पद्भ्यां त्वं विचरसि॥ २८॥

**विवरणटिप्पणी**

को भवानित्यत्र। प्रश्नहेतूनिति। स्वरूपक्रियाप्रकारहेतूनित्यर्थः। अन्यथेति। हेतुज्ञानाभावे चतुर्भुजादिरूपस्य कृत्रिमत्वं शङ्केत। अन्य एव कश्चिदेवं रूपं संपाद्य समागत इति स्यादित्यर्थः। तथासतीति। अष्टैश्वर्ये भगवति सिद्धे सति अयं भगवानेव कृत्रिमो वेति विशेषज्ञानाभावे तस्य प्रपत्तिरयुक्ता। स्वयं च भगवान् फलार्थी न। मुचुकुन्दात्किञ्चिद्याचयितुं नागतः। अतः कृत्रिमत्वमपि न संभवतीत्युत्कटकोटिकः संशयः। तथा च प्रश्नस्याष्टविधैश्वर्यविशेषज्ञानार्थकत्वादष्टभिः प्रश्न इत्यर्थः।

**गोस्वामिश्रीगिरधरलालकृता बालप्रबोधिनी**

वैजयन्त्या बहुवर्णपुष्पनिर्मितया मालया च रोचमानम्। अनुक्ताभरणान्तरसमुच्चयार्थश्चकारः। चारु सुन्दरं प्रसन्नं च वदनं यस्य तम्। स्फुरती मकाराकारे कुण्डले यस्य तम्॥ २५॥ सानुरागं स्मितमीक्षणं यस्य तम्। अपीच्यं अति सुन्दरं वयो यस्य तम्। मत्तस्य मृगेन्द्रस्य सिंहस्येव उदारो विक्रमो गतिर्यस्य तम्। अत एव नृलोकस्य प्रेक्षणीयम्॥ २६॥ स्वतेजसा दुर्धर्षम्, अभिभवितुमशक्यमेव। इवशब्दः एवकारार्थः॥ २७॥ तत्प्रश्नमेवाह—क इत्यादिना। य इह पद्भ्यां विचरसि स भवान् त्वं क इति सम्बन्धः। 'अत्र तव विचरणमसम्भावितम्' इति सूचयन् चरणं विशिषन्निहशब्दार्थमाह—पद्मपलाशसदृशाभ्यां पद्भ्यां विपिने अरण्ये, तत्रापि गिरिभिर्गह्वरे दुःप्रवेशस्थाने, तत्राप्युरूणि कण्टकानि यस्यिन्॥ २८॥

**अन्वितार्थप्रकाशिका**

चतुर्भुजं वैजयन्त्या बहुवर्णपुष्पनिर्मितया मालया च रोचमानम्। अनुक्ताभरणान्तरसमुच्चयार्थश्चकारः। चारु सुन्दरं प्रसन्नं च वदनं यस्य तं स्फुरती मकराकारे कुण्डले यस्य तम्॥ २४॥ नृलोकस्य प्रेक्षणीयं दर्शनयोग्यं सानुरागं स्मितमीक्षणं च यस्य तम्। अपीच्यं अतिसुन्दरं वयो यस्य तं मत्तस्य मृगेन्द्रस्य सिंहस्येव उदारः श्रेष्ठः विक्रमो गतिर्यस्य तम्॥ २५॥ स्वतेजसा दुर्धर्षम् अभिभवितुमशक्यमेव। इवशब्दः एवकारार्थः। तं श्रीकृष्णमालोक्य तस्य तेजसा धर्षितः शङ्कितश्च महाबुद्धी राजा मुचकुन्दः शनकैः पर्यपृच्छत्॥ २६॥ क इति॥ यस्त्वं विपिने अरण्ये तत्रापि गिरेर्गह्वरे दुष्प्रवेशस्थाने तत्राप्युरूणि कण्टकानि यस्मिन् तस्मिन् इह स्थाने संप्राप्तः पद्मपलाशसदृशाभ्यां पद्भ्यां विचरसि स भवान् कः॥ २७॥

**श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्**

अपीच्यंसुदरं वयो यौवनं यस्य तं मत्तश्चासौ मृगेन्द्रः सिंहश्च तद्वदुदारो विक्रमो यस्य तं॥२५॥ तेजसा धर्षितः परिभूतः दुर्धर्षं प्रष्टुमशक्यमिव स्थितं॥ २६॥ विपिने वने तत्रापि गिरेर्गह्वरे दुर्गमस्थाने। तत्रापि उरुकंटके। तत्रापि पद्मदलोपमाभ्यां पद्भ्यां त्वं विचरसि इह प्राप्तो भवान् कोस्ति॥ २७॥

**भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी**

प्रश्नमेवाह क इत्यादिना वयमित्यतः प्राक्तनेन ग्रन्थेन। क इति। इह सम्प्राप्तः, भवान् कः, किं देव उत वा मानुषः। इहेति विवक्षितमाह। विपिने अरण्ये, तत्रापि गिरिगह्वरे दुष्प्रवेशस्थाने, तत्रापि उरुकण्टके प्रचुरकण्टकवति प्रदेशे, पद्मपलाशाभ्यां कमलदलकोमलाभ्यां, पद्भ्यां पादाभ्यां, विचरसि। एवंविधस्य तेऽत्र विचरणं न घटत इति भावः॥ २८॥

**कृष्णप्रिया**

नाथ चतुर्भुज हैं। चरण कमलों को चुमती वैजयन्ती माला गले में विराजमान थी। भगवान का मुखारविन्द अत्यन्त प्रसन्न और सौन्दर्य पूर्ण है। श्रीहरि के कर्णों में मकराकृत कर्णपूर जगमगा रहे हैं। अधरों पर स्नेहमयी कृपामयी मुस्कुराहट दीख रही है और नजरों की चितवन स्नेह की सुभग वर्षा कर रही है। भगवान् की चाल नवयुवा दर्शनीय सिंह किशोर की स्मृति करा रही है। परम विक्रम परिपूर्ण प्रभु का दर्शन से अत्यन्त आश्चर्य चकित बने हुए मुचुकुन्द राजा मुग्ध बन गये।

यद्यपि राजा विचक्षण मेधावी धीर गम्भीर पुरुष थे फिर भी भगवान का लोकोत्तर दिव्य श्रीविग्रह के दर्शन से आश्चर्य विभोर हो गये। प्रियतम प्रभुजी के तेज से आकर्षित चित्त मनीषी मुचुकुन्दजी अप्रतिम तेज से क्षणभर शंकित होकर नाथ को पूछने लगे ॥ २४-२५-२७-२७ ॥ राजा मुकुकुन्दजी ने कहा धृष्टता के लिये क्षमा करें! आप श्रीमान् कौन है? कण्टकों से भरे घोर इस जंगल में कमल-कोमल सुकुमार चरणों से विचर रहे हो। कहिये? इस गिरि कन्दरा में पधारने का क्या आशय है ॥ २८॥

**किंस्वित्तेजस्विनां तेजो भगवान्[1] वा विभावसुः। सूर्यः सोमो महेन्द्रो वा लोकपालोऽपरोऽपि वा ॥२९॥**
**मन्ये त्वां देवदेवानां त्रयाणां पुरुषर्षभम्। यद्[2] बाधसे गुहाध्वान्तं प्रदीपः प्रभया यथा ॥ ३० ॥**
**शुश्रूषतामव्यलीकमस्माकं नरपुङ्गव। स्वजन्म कर्म गोत्रं वा कथ्यतां यदि रोचते ॥ ३१ ॥**
**वयं[3] च पुरुषव्याघ्र ऐक्ष्वाकाः क्षत्रबन्धवः। मुचुकुन्द इति ख्यातो[4] यौवनाश्वात्मजः प्रभो ॥ ३२ ॥**

### कर्दमक्षमा

**अन्वयः**—तेजस्विनाम्, तेजः, किंस्विद्, भगवान्, विभावसुः! सूर्यः! सोमः! महेन्द्रः! वा, लोकपालः! अपि, वा, अपरः, वा! ॥ २९ ॥ अथवा, त्वाम्, त्रयाणाम्, देवानाम्, पुरुषर्षभम्, मन्ये, यथा, प्रदीपः, प्रभया, तथा, यद्, गुहाध्वान्तम्, प्रभया, बाधसे ॥३०॥ हे नरपुङ्गव? अव्यलीकम्, अस्माकम्, स्वजन्म, कर्म, गोत्रम्, शुश्रूषताम्, यदि वा, रोचते, कथ्यताम् ॥३१॥ हे पुरुषव्याघ्र? वयम्, च, ऐक्ष्वाकाः, क्षत्रबन्धनः, हे प्रभो? यौवनाश्वात्मजः, मुचुकुन्द, इति, ख्यातः ॥ ३२ ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

तेजोमूर्तिः प्रभावो दीप्तिर्वा ॥ ३० ॥ सर्वत्रापरितोषादाह। मन्य इति। पुरुषर्षभं श्रीविष्णुम्। गुहाध्वांतमंतस्तमः ॥ ३१-३२ ॥ वयं त्विति वंश्याभिप्रायेण बहुवचनम्। तेष्वहं मुचुकुंद इति प्रोक्त इति। युवनाश्वो मांधातुः पिताऽतो मांधाता यौवनाश्वः ॥ ३३-३८ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

तेजस्विनां ज्योतिष्मतां सूर्यादीनां पुंजीभूतमेकं तेजः। किं स्विदिति वितर्के। स्वामी तु तेजो मूर्तिः मूर्तिमत् प्रभावः प्रतापः, दीप्तिः प्रकाशः। विकल्पत्रयं तु तेजस्यवयवासंभवात्तथा प्रभावस्यापि चरमपक्षः साधीयान्। अपरः कुबेरादिः ॥ स्विद्वितर्के। किं तेजस्विनामखिलानां सूर्यादीनां पुंजीभूतं तेजः, अपितु नेत्यर्थः। तदपेक्षया तावतोप्यल्पप्रमाणत्वादिति भावः। एवमुत्तरत्रापि। टीकायां तेजोमूर्तिः तेजः शब्दो हि न मूर्तिवाची "तेजो बले च दीप्तौ च तेजो धाम्नि पराक्रमे। प्रभावरेतसोश्च" इत्येतावन्त एवार्था विश्वप्रकाशादौ दर्शिताः। 'मूर्तः' इति निष्ठान्तो वा पाठः। तस्य प्रभावदीप्ताभ्यां प्रत्येकमन्वय इति महाभूततेजोंशरूपम्। तत्तेजोऽपि कियदित्याह—भगवान् भगवद्विभूतिरूपो महाभूततेजोऽधिष्ठातृरूपो देवो विभावसुरपि नेत्यर्थः। त्रयीतनुत्वेन तेजोऽपि महिष्ठम्। अन्यत्तद्वितर्क्य तमप्यल्पप्रमाणत्वेन खण्डयति-सूर्य इति। तेषामतापहारकत्वमनाह्लादकत्वञ्चाशंक्य चन्द्रं वितर्क्य तमपि खण्डयति-महेन्द्रः, तत्तत्सर्वदेवानामधिपोऽपि। ततोऽन्यत्रात्यतमनस्व्याह—लोकेति। वा शब्दः कटाक्षे ॥३०॥ सर्वत्र सर्वपक्षेषु। अन्तस्तमः अन्तःकरणाज्ञानम् "यो वेद निहितं गुहायाम्" इत्यत्र गुहापदमंतःकरणपरम्। प्रदीपो गुहान्तर्वर्त्ति ध्वान्तं यथेति ॥ तेभ्य ऊर्ध्वमपि विविच्याह—मन्य इति। त्रयाणां मध्ये पुरुषर्षभं विष्णुत्वमारभ्य महाभगवत्तापर्यंतवैभवत्त्वात्। सर्वपुरुषश्रेष्ठो यस्तं गुहयोर्बाह्याभ्यन्तरयोर्गिरिकन्दरहृद्रूपयोस्तमः यथा स्वं ध्वान्तं दुःखं च प्रभया तेजसा प्रदीप इवेति शश्वत्सर्वानुभूतत्वेन दृष्टांतितं न तु योग्यत्वेन ॥ ३१ ॥ अव्यलीकं सत्यम्। शुश्रूषतां श्रोतुमिच्छताम्। गोत्रं नाम वंशप्रवर्तकश्च "गोत्रं संभाव्यबोधे च काननक्षेत्रवर्त्मसु। कुलाख्ययोर्गिरौ: पुंसि भूगोरक्षकयोस्त्रियाम् ॥" इति निरुक्तिः। नरपुंगवेति भूमिस्पर्शादिमनुष्यलीलाभिप्रायेण। अत एवाव्यलीकं निजप्रियं त्वज्जन्मामिशुश्रूषतामस्माकं सकाशे कथ्यतां भवतेति शेषः। तदनुक्तिः कर्मणि प्रयोगश्च गौरवेण 'व्यलीकमप्रियाकार्यवैलक्ष्येष्वपि' इति विश्वः। गोत्रं नाम। यद्वा—अव्यलीकं निष्कपटं कथ्यतामित्यन्वयः। वा समुच्चये, विकल्पे वा। गुह्यत्वेप्येकतरमपि कथ्यतामित्यर्थः। यदि रोचत इति विनयोक्तिः ॥ ३२ ॥ पुरुषव्याघ्र पुरुषश्रेष्ठ "व्याघ्रः स्यात्पुंसि शार्दूले रक्तैरंडकरंडयोः। श्रेष्ठे नरादुत्तरस्थः कंटकार्यां तु योषिति ॥" इति मेदिनी। ऐक्ष्वाका इक्ष्वाकुकुलजाः ॥ अहो महत्तमस्य जन्मादिप्रश्ने नीचकस्य का शक्तिः, कथं वा तेन नीचे तत्कथ्यतामत आत्मनः समर्पणार्थमात्मन एव जन्मादिकं कथयेयं तत्प्रसंगादसौ स्वयमपि तत्कथयेच्च, यतो नरलील इति गूढाभिप्रायेणाह—वयमिति। तुशब्दो निजाल्पतामननाद्भिन्नोपक्रमे। ऐक्ष्वाका इक्ष्वाकव इत्यर्थः। क्षत्रबंधवो नीचक्षत्रिया इत्यपि विनयभावात् ॥ ३३ ॥

---

१. भगवांस्त्वं—वीर. विज.। २. यद् भाससे—विज.। ३. वयं तु—श्रीधर वंशी. जीव. वीर. विज. विश्व. शुक.; वयं च इह विख्याताः—प्रा. पा.। ४. प्रोक्तो—श्रीधर. वंशी. जीव. विज. विश्व.; ख्यातो—वीर।

**श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी**

स्वित् विनर्के। किं तेजस्विनामखिलानां पुञ्जीभूतं तेजः ? अपि तु नेत्यर्थः। तदपेक्षया तावतोऽप्यल्पप्रमाणत्वादिति भावः। एवमुत्तरत्रापि। अत्र टीकायां तेजोमूर्त्तिरिति तेजोरूपा मूर्त्तिरित्यर्थः। प्रभावो दीप्तिर्वेति, तच्च तेजः प्रभाव उच्यते दीप्तिर्वेत्यर्थः। तेजःशब्दो हि न मूर्त्तिवाची 'तेजो बले च दीप्तौ च तेजो धाम्नि पराक्रमे। प्रभावरेतसोश्च' इत्येतावन्त एवार्था विश्वप्रकाशादौ दर्शिताः। मूर्त्तिरित्यत्र मूर्त्त इति निष्ठान्तो वा पाठः; तस्य प्रभावदीप्ताभ्यां प्रत्येकमन्वय इति महाभूततेजोंशरूपं तत्तेजोऽपि कियदित्याह—भगवान् भगवद्विभूतिरूपो महाभूततेजोऽधिष्ठातृदेवो विभावसुरपि नेत्यर्थः। त्रयीतनुत्वेन ततोऽपि महिष्ठमन्यत्त-द्वितर्क्य; तमप्यल्पप्रमाणत्वेन खण्डयति-सूर्य इति। तेषामतापहारकत्वमनाह्लादकत्वं चाशङ्क्य चन्द्रं वितर्क्य; तमपि तथा खण्डयति—सोम इति। प्रभावार्थमालम्ब्य महेन्द्रमपि तथा खण्डयति महेन्द्रस्तत्तत्सर्वदेवानामधिपोऽपि ततोऽन्यत्रात्यन्तमनास्त्व-याह—लोकेति। वाशब्दः कटाक्षे ॥ २९ ॥ तेभ्य ऊर्द्ध्वमपि विविच्याह—मन्ये इति। त्रयाणां मध्ये पुरुषर्षभं विष्णुत्वमारभ्य महाभगवत्तापर्यन्तवैभवत्वात् सर्वपुरुषश्रेष्ठो यस्तं गुहयोः बाह्याभ्यन्तरयोः गिरिकन्दरहृद्रूपयोर्ध्वान्तं यथा स्वमन्धकारं दुःखं च प्रभया तेजसा प्रदीप इवेति शश्वत् सर्वानुभूतत्वेन दृष्टान्तितं न तु योग्यत्वेन ॥ ३० ॥ नरपुङ्गवेति भूमिस्पर्शादिमनुष्यलीलाभि-प्रायेण अत एवाव्यलीकं निजप्रियं त्वज्जन्मादिशुश्रूषतामस्माकं सकाशे कथ्यतां भवतेति शेषः। तदनुक्तिः कर्मणिप्रयोगश्च गौरवेण 'व्यलीकमप्रियाकार्य्यवैलक्ष्येष्वपि' इति विश्वः। गोत्रं नाम यद्वा अव्यलीकं निष्कपटं कथ्यतामित्यन्वयः। वा समुच्चये। यद्वा, विकल्पे गुह्यत्वेप्येकतरमपि कथ्यतामित्यर्थः। यदि रोचत इति विनयोक्तिः ॥ ३१ ॥ अहो महत्तमस्य जन्मादिप्रश्ने नीचस्य का शक्तिः ? कथं वा तेन नीचे तत्कथ्यताम् ? अतः आत्मनः समर्पणार्थमात्मन एव जन्मादिकं कथयेयं तत्प्रसङ्गादसौ स्वयमपि तत्कथ-येच्च यतो नरलील इति गूढाभिप्रायेणाह—वयमिति। तुशब्दो निजाल्पतामननाद्भिन्नोपक्रमे। ऐक्ष्वाकाः इक्ष्वाकव इत्यर्थः। क्षत्र बन्धवो नीचक्षत्रिया इत्यपि विनयभावात् ॥ ३२ ॥

**श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी**

ननु तेजः किं साकारं स्यादिति पक्षान्तरमाह—भगवानिति। तस्यापि श्रीभगवद्विभूतित्वेन सर्वत्रशक्तिमत्वात्, एवमिद-मग्रेऽप्यनुवर्त्तयितव्यम्। अपि किमपरः श्रीब्रह्मा श्रीरुद्रो वेत्यर्थः ॥२९॥ त्रयाणां मध्ये पुरुषोऽन्तर्य्यामी चासौ, अतएव ऋषभः श्रेष्ठश्च, तं श्रीविष्णुमित्यर्थः। गुहयोर्बाह्यान्तरयोर्गिरिकन्दरहृद्रूपयोस्तमः, तत्रान्तरं तमोवाधनं सद्यस्तत्सद्वुद्ध्यादिप्रकाशात्। एकदेश-स्थस्यापि व्यापकत्वे दृष्टान्तः—प्रदीप इति; प्रभयेति तथा व्यापकत्वसिद्ध्यर्थम् ॥ ३० ॥ चतुर्भुजत्वादिकं साक्षात् पश्यन्नपि 'नहि देवा भुवं स्पृशन्ति' इत्यादिकमनुस्मरन् भूचरत्वादिना श्रीविष्णुत्वं निश्चेतुमशक्नुवन् लोकातीतरूपं मनुष्यं मन्यमानः सम्बोधयति—नरपुंगवेति। मनुष्यश्रेष्ठत्वादेव अव्यलीकं निजप्रियं तज्जन्मादि शुश्रूयताम्, तथा च विश्वः—'व्यलीकमप्रिया-कार्य्यवैलक्ष्येष्वपि' इति; यद्वा, अव्यलीकं निष्कपटं कथ्यतामित्यन्वयः। अस्माकमिति बहुत्वं तत्सन्दर्शनादिनात्मनो बहुमानात्। वा समुच्चये; यद्वा, विकल्पे, गुह्यत्वेन जन्म न कथ्यते चेत्तर्हि किं करोषि ? किंवा अधुना चिकीर्षसीति ? कर्म कथ्यताम्। तदपि चेन्न कथ्यते, तर्हि गोत्रं नामैव कथ्यतामित्यर्थः। तदपि यदि ते रोचते, तर्हीति परमविनयोक्तिः ॥ ३१ ॥ अहो महत्तमस्य जन्मादिप्रश्ने नीचस्य का शक्तिः ? परमधार्ष्ट्यापत्तिरेव, कथं वा तेन नीचे तत् कथ्यताम्, अत आत्मन एव जन्मादिकं कथयेयम्, तत्प्रसंगाद्वा स्वयमपि निजं तत् कथयेदिति गूढाभिप्रायेणाह-वयमिति। तु-शब्दो निजाल्पतामननाद् भिन्नोपक्रमे, ऐक्ष्वाका इक्ष्वाकव इत्यर्थः। क्षत्रबन्धवो नीचक्षत्रिया इत्यपि विनयभरात्, यौवनाश्वो युवनाश्वपुत्रो मान्धाता, तस्य नामाग्रहणं गुरुत्वात्, तस्यात्मनः पुत्रः। हे पुरुषव्याघ्रेति ऐक्ष्वाकत्वेनास्माकं नरश्रेष्ठत्वेऽपि भवानेव सर्व्वथा सर्वश्रेष्ठतम इति भावः। तत्र हेतुत्वेन सम्बोधयति—प्रभो इति, प्रभावविशेषादिति भावः ॥ ३२ ॥

**श्रीमद्वीरराघवाचार्यकृता भागवतचन्द्रचन्द्रिका**

किंस्विदिति। किं वा त्वं तेजस्विनां येत्तेजस्तदेव मूर्त्तीभूतः किं वा भगवान् विभावसुरग्निः ? अथवा सूर्यः ? यद्वा, सोमेन्द्रयोरन्यतमः ? उत वरुणादन्यतमो लोकपालः ॥ २९ ॥ सर्वत्रापरितोषादाह—मन्य इति। देवानाम् इन्द्रादीनामपि देवा ये ब्रह्मविष्णुरुद्रास्तेषां त्रयाणां मध्ये यः पुरुषोत्तमो भगवांस्तं त्वामहं मन्ये, कुतः ? यद्यस्मांद्गुहाध्वान्तं हृदयगुहास्थमपि ध्वान्त-मज्ञानं च बाधसे विधुनोषि यथा दीपः स्वप्रभया अन्धन्तमः तद्वत् ॥ ३० ॥ शुश्रूषतामिति। यद्यपि चतुर्भुजत्वादिलिङ्गैः परमात्मासाधारणैः पुरुषर्षभं मन्ये इति पुरुषोत्तमत्वं निश्चित्य नरपुङ्गवेति सम्बोधनानुपपत्तिः; तथापि पुनस्तथैव द्विभुजत्वाद्वि-शिष्टरूपेणावस्थितं तमवलोक्य तथा सम्बोधितं नरशब्दस्य पुरुषमात्रपरत्वं वा स्वस्य जन्म कर्म गोत्रं वाशब्दश्चार्थकः श्रोतु-मिच्छतामस्माकमव्यलीकं निष्कपटं यथा तथा कथ्यतां यदि रोचते न वयं विधातुं प्रभव इति भावः ॥ ३१ ॥ तर्हि तव जन्मादिकं कथयेत्यत आह—वयन्त्विति। वयमिति वश्याभिप्रायकं बहुवचनम्। हे पुरुषव्याघ्र ! तावद्वयं क्षत्त्रबन्धवः क्षत्रेण वर्णेन

वध्यन्ते इति क्षत्त्रबन्धवः क्षत्रिया इत्यर्थः; तत्राप्यैक्ष्वाकाः इक्ष्वाकुवंश्याः 'दाण्डिनायन' ६।४।१७४ ) सूत्रे निपातनात्साधुः। बहुषु लुगभाव आर्षः। तत्राप्यहं यौवनाश्वात्मजः युवनाश्वस्यापत्यं यौवनाश्वो मान्धाता तस्यात्मज; पुत्रः मुचुकुन्द इति ख्यातः ॥ ३२ ॥

**श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली**

तेजस्विनां ज्यं तिष्मतां पुञ्जीभूतमेकं तेजः किंस्वित् सामान्योक्तं विशिनष्टि—भगवानिति ॥ २९ ॥ त्रयाणां ब्रह्मविष्णुशिवानां मध्ये पुरुषर्षभं पुरुषश्रेष्ठं विष्णुं मन्ये यदिति, गुहाध्वान्तमित्युपलक्षणं ब्रह्माण्डगुहाव्यापितिमिरमपि प्रदीपो गृहान्तर्वर्त्तिज्योतीरूपं परं न गृह्यते किन्तु सूर्योपि ॥ ३० ॥ अव्यलीकं सत्यं शुश्रूषतां श्रोतुकामानाम् ॥ ३१ ॥ ऐक्ष्वाका इक्ष्वाकुकुले जाताः ॥ ३२-३५ ॥

**श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी**

गुहयोर्गिरिकन्दरमदन्तः करणयोर्ध्वान्तं तमस्तच्चान्धकारमविद्यां च प्रदीपो मणिमयः ज्ञानमयश्च ॥३०॥ शुश्रूषतामिति बहुवचने स्वगौरवप्रख्यापनं तत् प्रतिवचनश्रवणार्थमेव स्वस्य निकृष्टत्वे प्रत्युत्तरानर्हत्वात् ॥ ३१ ॥ तदपि मौनमालक्ष्य स्वोत्कर्षमपि व्यञ्जयन् तं परिचाययति वयन्त्विति। क्षत्रबन्धव इति स्वस्य निकर्षो निरहङ्कारित्वज्ञापनया प्रकर्ष एव ॥ ३२-३४॥

**गूढार्थदीपिनी**

स्वित् वितर्के। अपरः कुबेरादिः ॥ २९ ॥ ऋषभमुत्तमं श्रीविष्णुम्। गुहाध्वान्तं हृदयाज्ञानम् ॥ ३० ॥ अस्माकमिति शेषे षष्ठी। अन्यलीकं सत्यं सत्यं कथ्यताम्। गोत्रं नाम। यद्वा अन्यलीकं निष्कपटं शुश्रूषतामित्यत्रान्वेति ॥ ३१ ॥ ऐक्ष्वाका इक्ष्वाकुवंशीयाः। 'दाण्डिनायन' इत्यादिना निपातः। यौवनाश्वो युवनाश्वपुत्रो मान्धाता। क्षत्रबन्धवा क्षत्रियाधमा अपि इति विनयात् ॥ ३२ ॥

**श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः**

पुरुषर्षभं पुरुषोत्तमम् ॥ ३० ॥ देवानां त्रयाणां पुरुषर्षभं त्वां मन्ये इत्यनेन पुरुषोत्तमसम्भावनामात्रमुक्त्वाऽथ नरश्रेष्ठमात्रदृष्ट्या तज्जन्मादि पृच्छति—शुश्रूषतामिति। बहुवचनेन कुलतः पराक्रमतश्च स्वस्यापि नरश्रेष्ठत्वं दर्शितम् हे नरपुङ्गव! नरश्रेष्ठ! स्वजन्मादिकं कथ्यताम् ॥३१॥ यदि तव जन्मादिकथने कश्चित् सङ्कोचस्तर्हि अस्माकं शृण्वित्याशयेनाह—वयं त्विति। अत्र वहुवचनम् इक्ष्वाकुवंश्याभिप्रायेण। तेष्वहं मुचुकुन्द इति। निरभिमानत्वं क्षत्रबन्धव इत्यनेन द्योत्यते ॥ ३२-३८ ॥

**श्रीसत्यधर्मकृता श्रीभागवतटिप्पणी**

सहसैवं वितर्क्य सर्वत्रारुचिमान्निष्कृष्य वक्ति ॥ मन्य इति। हे देव देवानां त्रयाणां हरिहरहिरण्यगर्भाणां मध्ये पुरुषर्षभं पुरुषं श्रेष्ठं विष्णुं मन्ये। स्वमननमन्यथाऽनुपपत्त्योपोद्वलयति ॥ यदिति। प्रदीपः प्रमया यथा दृष्यन्तं परिहरति तथा यद्यतो गुहाण्वान्तं गुहायामध्वान्ताभावो यथा तथा भाससे। न विष्णोरन्यस्यैवं विधं मानं सम्भवत्यतस्त्वं स एवेति भावः। गुहाया अ अध्वान्तं मार्गान्तिप्रदेशपर्यन्तं भाससे इति वा। हृदयगुहाध्वान्तमज्ञानं यथा न तथा भाससे। त्वद्दर्शनमात्रेणेयान्विमर्शो मम जात इति भावः। यद्वाधस इति पाठः सरलो विरलार्थश्च ॥ ३० ॥ शुश्रूषतां श्रोतुमिच्छूनामव्यलीकमनृतं सत्यमिति यावत्। स्वजन्म तत्कर्म गोत्रं वा यदि रोचते तुभ्यं मां प्रति वक्तव्यमिति तर्हि कथ्यताम् ॥ ३१ ॥ अहं तु मम सर्वं वच्मि त्वं कः? प्रवदेति प्रश्नतः प्राक् स्वस्वरूपादिकं स्वयमेवाह ॥ वयं त्विति ॥ पुरुषव्याघ्र ऐक्ष्वाका इत्यत्र विवक्षाभावान्न वृद्धिः। पुरुषव्याघ्रे त्वयि विज्ञापयाम इति विशेणान्वयो वा। ऐक्ष्वाका इक्ष्वाकुकुलजा बहुत्वे तद्राजलुगभाव आर्षः। दाण्डिनायननिपातितश्चैक्ष्वाकशब्दः। क्षत्रवन्धवः क्षत्रियास्तत्रापि युवनाश्वापत्यं मान्धाता तदपत्यमहमिति यौवनाश्वात्मजो मुचकुन्द इति प्रोक्तः। यद्यप्यनुशासनसिद्धं वयन्त्विति बहुवचनं तथाऽपि प्रतीयेताहं तातेन नाहं तादृश इति पुनरेकवचनतो वक्ति। मुचुकुन्द इत्यादिना ॥ ३२ ॥

**श्रीमद्वल्लभाचार्य्यकृता सुबोधिनी**

तर्केण जानीहीत्याशङ्कायां तर्कानाह **किं स्वित्तेजस्विनामिति द्वयेन**। आदावहमेव वितर्के। सर्वेषामेव तेजस्विनां तेजः एकीभूतमेतदिति। अथवा। यत्पूर्वं कारणत्वेन तेजः सृष्टं 'तत्तेजोऽसृजत'ेति, तद्वा तेजो भगवान्। जगत्कारणत्वाद् तस्य भगवत्त्वम्, तेनाप्यापः सृष्टा इति। अथवा। त्वं विभावसुरग्निः मूर्तीभूतः। सर्वस्यापि तेजसः एकीभावे कारणाज्ञानात् द्वितीयः पक्षः। ततो मूलभूतस्य अत्रागमनासम्भवात् तदधिष्ठातृदेवताप्रश्नः। एवमाधिभौतिकादिभेदेन विकल्पत्रयम्। त्रितयमप्येतत् राजसमिति। सात्त्विकं त्रितयमाह **सूर्यः सोमो महेन्द्रो वेति**। एक एव सूर्यो देवतेति 'सूर्य आत्मा जगतस्तस्थुषश्चे'ति 'ध्येयः सदा सवितृमण्डलमध्यवर्ती नारायण' इति च सूर्यो भवितुमर्हति। चतुर्भुजत्वदर्शनात्। ततोऽपि शीतरश्मिरमृतमयः सुन्दर इति सोमः। ततोऽप्यैश्वर्यदर्शनान्महेन्द्रो भविष्यसि। एवं सात्त्विकभेदानुक्त्वा मनुष्याकृतिमिव पश्यन् तृतीयं गुणं कल्पयन्निव तत्रोत्तमं

सम्भावनया निरूपयति **अपरो वा लोकपाल** इति । ( अग्नि ) वायुवरुणादीनामन्यतमः । ते हि लोकरक्षार्थं परिभ्रमन्ति । वेत्यस्य पक्षस्यानादरे ॥ २९ ॥ एवं कार्यकारणरूपाणि सम्भाव्य तान् पूर्वपक्षे निधाय; परमकारणरूपं पुरुषोत्तमं तं सम्भावयति—**मन्ये त्वामिति** । देवानामपि देवानां ब्रह्मविष्णुशिवानां मध्ये पुरुषर्षभं विष्णुं त्वां मन्ये । तेषां वा पुरुषर्षभः । तेषां पुरुषः स्वराट् नारायणः । तस्याप्यृषभः पुरुषोत्तम इति वा । श्रद्धयैवं कल्पयतीत्याशङ्क्य; तत्र साधिकामन्यथानुपपत्तिमाह **यद्बाधस** इति । गुहान्धकारः न केनापि दूरीकृतः, उत्पत्तिशिष्टः सः । यो हि व्यवधायकं न मन्यते, तेन दूरीकर्तुं शक्यः । अतः पूर्वोक्तानां भगवत्तेजःसहितानामपि नात्र पराक्रमः । मूर्तीभूतानां तु बहुधा समागतानां गुहाध्वान्तनिराकरणं न दृष्टमिति, य एवास्माभिर्न दृष्टः पूर्वम्, स भगवान् भवितुमर्हतीति निश्चीयते । किञ्च । प्रदीप्तोऽप्यग्निर्भगवत्सहितोऽप्येतद्विधप्रभायुक्तो न भवति । एकैव हि तत्र भगवच्छक्तिः । दीपे तु शक्तिद्वयम् । अत एव कारीषाद्दारुमयाच्च दीपस्य प्रभा महती, स्नेहाग्निस्थानाग्निसंयोगैः । 'वर्तिका अग्निस्थानं अग्नेस्तूपाधान'मिति श्रुतेः । 'एतद्वा अग्नेस्तेजो यद्घृत'मिति घृतमपि तथा । अग्निश्च तत्र संयुक्त इति । अतस्तस्य प्रभा कलिकामात्रस्यापि सर्वगृहव्यापिनी भवति । तथा भवत्तेजः गुहाभ्यन्तरस्थानं यत्कदापि न दृष्टं तद्दर्शयतीति पुरुषोत्तम एव भवितुमर्हसि । उत्कृष्टप्रभा व्यवहार्या दृष्टान्तत्वेनाभिमतेति दीपो दृष्टान्तः । अथवा । त्वमेव प्रकृष्टो दीपः, यतः स्वया प्रभया ध्वान्तं बाधस इति । अदृष्टपूर्वत्वेन पुरुषोत्तमत्वसिद्धिः ॥ २९ ॥ तर्हि ज्ञात्वा कथं प्रश्न इति चेत् ? तत्राह **शुश्रूषतामिति** । **व्यलीकं** सन्देहः, तद्रहितं यथा भवति तथा श्रोतुमिच्छास्माकम् । असमानत्वान्न संभाष्यस्त्वमित्याशङ्क्याह **नरपुङ्गवेति** । नराकृतिर्दृश्यत इति । संव्यवहार्या नरा इति वयमपि संव्यवहार्याः । नराकृतित्वं च सहेतुकं प्रतिभातीति विशेषान् पृच्छति **स्वजन्म कर्म गोत्रं वेति** । स्वस्य जन्म किंरूपं, कथं प्रादुर्भूत इति कारणप्रश्नः । **कर्मेति** प्रयोजनप्रश्नः । **गोत्रमिति** कस्मिन्वंशे प्रादुर्भाव इति वंशप्रश्नः । **वेति** अन्यदपि वक्तव्यमित्यभिप्रायसूचकम् । एवं गुणत्रयस्वभावमिव पृष्ट्वा स्वस्य नियोजकत्वाभावायाह **कथ्यतां यदि रोचत** इति ॥ ३० ॥ नरत्वेऽपि तुल्या एव संभाष्या इत्याशङ्क्य स्वजन्मकर्मगोत्राणि निरूपयति त्रिभिः । **वयं चेति** । चकारोऽर्थविशेषे । वयमपि नात्यन्तं हीना असम्भाष्याः । **किन्त्वैक्ष्वाकाः** इक्ष्वाकुषु जनपदेषु आविर्भूताः । जनपदशब्दादित्यत्र् दांडिनायनेति निपातनादुकारलोपः । अतो देशेन कुलेन च प्रसिद्धिरुक्ता । **पुरुषव्याघ्रेति** । पुरुषश्रेष्ठो मन्यत इति लौकिकन्यायेनापि विश्वासार्थमुक्तम् । **क्षत्रबन्धव** इति गर्वपरिहारः । पितृपितामहयोः स्वस्य च नामाह **मुचुकुन्द इति ख्यात** इति । प्रसिद्धिरपि सत्कीर्तिमत्त्वेन निरूपिता । युवनाश्वः पितामहः, यौवनाश्वो मान्धाता पिता, तस्यात्मज इत्यौरसः । **प्रभो** इति संबोधनं नियन्तरि अन्यथाकथनाभावाय । तादृशस्यात्रागमने हेतुं वदन् स्वपौरुषमपि ख्यापयति ॥ ३१ ॥

### श्रीसुबोधिनीसारः

तेजस्विनां तेजः किं स्वित् इति वितर्के भगवान् विभावसुरग्निर्वा सूर्यश्चंद्र इंद्रो वाऽपरोऽन्यो लोकपालो वा ॥ २९ ॥ स्वमनीषितमाह । हे देव त्रयाणां देवानां ब्रह्मविष्णुशिवानां मध्ये पुरुषोत्तमं त्वामहं मन्ये । यद् यस्माद् गुहाया ध्वांतं तमो बाधसे निरस्यसि । प्रदीपः प्रभया दीप्त्या इव ॥ २९ ॥ हे नरपुंगव श्रोतुमिच्छतामस्माकम् अव्यलीकं निष्कपटं यथा भवति तथा स्वजन्म कर्म गोत्रं वा त्वयोच्यतां यदि रोचते तर्हि ॥ ३० ॥ आत्मनस्तावद् ब्रूते हे पुरुषव्याघ्र ! इक्ष्वाकुवंश्या राजानो वयं स्मः । अहं तु यौवनाश्वस्यात्मजः पुत्रो मुचुकुन्द इत्युक्तः । हे प्रभो ॥ ३१ ॥

### विवरणटिप्पणी

**मन्ये त्वामित्यत्र** । यो **हि व्यवधायकमिति** । सूर्यादीनां तेजो भित्त्यादिव्यवधाने प्रतिबद्धं भवतीत्यर्थः । **भगवत्सहितोपीति** । यज्ञात्मको भगवानग्नौ तिष्ठति । अत एव यज्ञपुरुषस्य ततः प्रादुर्भाव उक्तः । तथा च भगवद्युक्तोपीत्यर्थः । **एकैवेति** । तेज एवेत्यर्थः । **शक्तिद्वयमिति** । तेजः प्रभा चेत्यर्थः । **कारीषादिति** । कारीषं ज्वाल्यते, दारु च ज्वाल्यते, उभयविधादपि प्रकाशकादित्यर्थः । **दीपस्येति** । वर्तिकामयस्येत्यर्थः । **अतस्तस्येति** । शक्तिद्वयस्य विद्यमानत्वादित्यर्थः । **प्रभया स्वयेति** पाठपक्षे आहुः **अथवेति** ।

### गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

किंशब्दार्थमेव विकल्प्य पृच्छति—किंस्विदिति । विभावसुः अग्निः । सोमश्चन्द्रः । अपरो लोकपालो वरुणाद्यन्यतमः ॥ २९ ॥ एवं विकल्प्य तेषु सर्वेष्वपरितोषात् स्वनिश्चितमाह—मन्ये इति । देवानामिन्द्रादीनामपि देवा ये ब्रह्मविष्णुरुद्रास्तेषां त्रयाणां मध्ये यः पुरुषर्षभः पुरुषोत्तमो भगवान् विष्णुस्तं त्वामहमन्ये । तत्र हेतुमाह—यदिति । यत् यस्मात् गुहाध्वान्तं गिरिगुहागतं तमः स्वप्रभया प्रदीप इव बाधसे विधुनोषि ॥ ३० ॥ हे नरपुङ्गव पुरुषोत्तम ! शुश्रूषतां श्रोतुमिच्छतामस्माकं अव्यलीकं निष्कपटं यथा भवति तथा स्वजन्म गोत्रं च कथ्यतामित्यन्वयः । 'वयं तु त्वां नियोक्तुं न प्रभव' इति सूचयन्नाह—यदि रोचत इति । बहुवचनं स्वगौरवख्यापनार्थम्, तेनोत्तरार्हत्वं सूचयति ॥ ३१ ॥ उत्तरयोग्यत्वमेव सूचयन् स्ववंशादिकमाह—वयं

त्विति । वयमिति वंशाभिप्रायकं बहुवचनम् । हे पुरुषव्याघ्र पुरुषश्रेष्ठ ! वयं तु क्षत्रबन्धवः क्षत्रेण वर्णेन बध्यन्ते सम्बध्यन्ते इति क्षत्रबन्धवः क्षत्रियाः, तत्राप्यैक्ष्वाकाः इक्ष्वाकुवंश्याः ! 'तवाग्रेऽन्यथाकथनं तु नोचितम्' इति सूचयन् सम्बोधयति–प्रभो इति तत्राप्यहं यौवनाश्वात्मजः युवनाश्वस्य अपत्यं यौवनाश्वो मान्धाता, तस्यात्मजः पुत्रो मुचुकुन्द इति नाम्ना प्रोक्तः ॥ ३२ ॥

## अन्वितार्थप्रकाशिका

किंस्विदिति ॥ किं स्विद्वितर्के तेजस्विनां सूर्यादीनां सर्वेषां पुञ्जीभूतं तेजः मूर्तिः प्रभावो दीप्तिर्वा किं तेजोधिष्ठाता भगवान् विभावसुरग्निर्वा किम् एवं सूर्यः सोमो महेन्द्रो वा अपरो लोकपालो वरुणाद्यन्यतमोऽपि वा ॥ २८ ॥ सर्वं विविच्याह—मन्ये इति ॥ देवानामिन्द्रादीनामपि देवा ये ब्रह्मविष्णुरुद्रास्तेषां त्रयाणां मध्ये यः पुरुषर्षभः पुरुषोत्तमो भगवान् विष्णुस्तं त्वामहं मन्ये । यद् यस्माद् गुहाध्वान्तं गिरिगुहागतं हृद्गुहागतं च ध्वान्तं तमो दुःखं च स्वप्रभया तेजसा ज्ञानेन च प्रदीप इव बाधसे विधुनोषि ॥ २९ ॥ शुश्रूषतामिति ॥ हे नरपुङ्गव पुरुषोत्तम ! यदि रोचते तर्हि शुश्रूषतां श्रोतुमिच्छताम् । आर्षः शता । अस्माकं शेषे षष्ठी । अव्यलीकं निष्कपटं यथा भवति तथा स्वजन्म कर्म गोत्रं च कथ्यताम् ॥ ३० ॥ वयमिति ॥ हे पुरुषव्याघ्र पुरुषश्रेष्ठ ! हे प्रभो ! वयं तु क्षत्रबन्धवः क्षत्रियाणां बन्धव इति वंश्याभिप्रायेण बहुवचनम् । तत्राप्यैक्ष्वाकाः इक्ष्वाकुवंश्याः 'दाण्डिनायन' इत्यादिना निपातः । तत्राप्यहं यौवनाश्वात्मजः युवनाश्वस्यापत्यं यौवनाश्वो मान्धाता तस्यात्मजः पुत्रो मुचुकुन्द इति नाम्ना प्रोक्तः ॥ ३२ ॥

## श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्

सकलानां तेजस्विनां पुंजीभूतं तेजः किमसि ? वा विभावसुरनलस्त्वमसि ॥ २८ ॥ तेभ्योप्यधिकं विचिंत्याह मन्य इति । पुरुषर्षभं श्रीहरिम् ॥ २९ ॥ शुश्रूषतां श्रोतुमिच्छतां अव्यलीकं सत्यं ॥ ३० ॥ ऐक्ष्वाकाः । इक्ष्वाकुवंशोत्पन्नाः क्षत्रियाः । बहुवचनं तु वंशाऽभिप्रायेण । तेष्वहं मुचुकुंद इति नाम्ना प्रोक्तो विख्यातः ॥ ३१ ॥

## भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

किं स्विदिति । भवान् तेजस्विनां तेजः, अस्ति किंस्वित् ? । मूर्त्तं तेजस्विनां तेजस्त्वमसि किमित्यर्थः । वा अथवा, अपरः कश्चित्, लोकपालः । वरुणाद्यन्यतमो भवान् लोकपालो भवति किं ? वेत्यर्थः ॥ २९ ॥ सर्वत्रापरितोषादाह । मन्य इति । देवानामिन्द्रादीनामपि, देवा ब्रह्मविष्णुरुद्रास्तेषां, त्रयाणां मध्ये, पुरुषर्षभो यः पुरुषोत्तमो भगवांस्तं, त्वामहं मन्ये । कुतः यद्यस्मात्, प्रदीपः प्रभया यथा, तद्वत् गुहाध्वान्तं बाधसे । गुहाध्वान्तनाशनेन न तव दीपोपमानत्वं हृदयकुहरगानादिध्वान्तं स्वप्रभया नाशयतस्तव तु ततोऽतीव विलक्षणत्वादिति भावः ॥ ३० ॥ शुश्रूषतामिति । हे नरपुङ्गव नरेषु श्रेष्ठ, स्वजन्मकर्मगोत्रं तव यस्मिन् कुले जन्म, यानि चारित्राणि, यन्नाम चेत्यर्थः । शुश्रूषतां श्रोतुमिच्छतामस्माकम्, अव्यलीकं यथा तथा, यदि वा रोचते, तर्हि, कथ्यताम् । एतत् कथनं विधापयितुं वयं न प्रभव इति भावः । यद्यपि चतुर्भुजत्वादिलिङ्गैः परमात्मसाधारणैः पुरुषर्षभं मन्ये, इति पुरुषोत्तमत्वं निश्चित्य पुनरत्र नरपुङ्गवेति सम्बोधनं कृतं तदनुपपत्तिः, तथापि भगवता वसुदेवदेवक्योरिवादौ चतुर्भुजतया स्वदर्शनं विधाप्य; ततो द्विजभुजरूपेण दर्शनं कारितं, ततस्तस्य तथाविवेक्षया तथा सम्बोधितमिति द्विवेक्षणान्नानुपपत्तिः । यद्वा । पुरुषोत्तमनरपुङ्गवशब्दयोः समानार्थत्वादेवमुपपद्यत एव ॥ ३१ ॥ तर्हि त्वमादौ तव जन्मादिकं कथयेत्यत आह । वयमिति । वंश्याभिप्रायकं बहुवचनम् । हे पुरुषव्याघ्र, वयं तु, क्षत्त्रेण वर्णेन बद्ध्यन्ते, इति क्षत्त्रबन्धवः । क्षात्रेत्यर्थः । तत्रापि, ऐक्ष्वाकाः इक्ष्वाकुवंश्याः, 'दाण्डिनायन'—इत्यादि सूत्रे निपातनात् साधुः । तत्रापि. हे प्रभो, अहं यौवनाश्वस्यात्मजः युवनाश्वो मांधातुः पिता; अतः मांधाता यौवनाश्वस्तस्यापत्यमहमित्यर्थः । मुचुकुन्दः इति प्रोक्तः विख्यातः ॥ ३२ ॥

## कृष्णप्रिया

क्या समस्त तेजस्वियों के पुञ्जीभूत आप कोई तेजोमूर्ति तो नहीं हो । नाथ ! कहिये साक्षात् अग्निनारायण हो ! अथवा तो सूर्य नारायण ! पूर्णचन्द्र ! देवराज इन्द्र ! या तो लोकपाल विशेष हो ॥ २९ ॥ महाराज ! मेरा तो यह मन्तव्य है कि ब्रह्मा विष्णु महेश्वर इन तीन देवताओं के और अन्य समस्त देवों के आराध्य देव साक्षात् नारायण है । जैसे तेजोमय दीपक अंधेरे को दूर कर देता है वैसे ही आप अपने श्री अङ्गों के दिव्यतेज से इस गुहा के अंधेरे को नष्ट कर रहे हैं ॥ ३० ॥ यदि नाथ ! आपका मन माने तो कृपया हमें अपना जन्म, कर्म और गोत्र बतलाइये; क्योंकि हम श्रवण के लिये सचमुच समुत्सुक है ॥ ३१ ॥ नाथ ! मैं क्षुद्र जीव; मेरा परिचय दे रहा हूँ, मैं इक्ष्वाकुवंशज हूँ, क्षत्रिय हूँ; मेरा नाम मुचुकुन्द है; और महाराजा युवनाश्व के कुलनन्दन मान्धाता राजा का पुत्र हूँ ॥ ३२ ॥

[1]चिरप्रजागरश्रान्तो [2]निद्रयोपहतेन्द्रियः। शयेऽस्मिन् विजने कामं केनाप्युत्थापितोऽधुना ॥ ३३ ॥
सोऽपि भस्मीकृतो नूनमात्मी [3]येनैव पाप्मना। अनन्तरं भवाञ्छ्रीमान्[4] लक्षितोऽमित्र[5]शासनः ॥ ३४ ॥
तेजसा तेऽविषह्येण भूरि [6]द्रष्टुं न शक्नुमः। [7]हतौजसो महाभाग माननीयोऽसि देहिनाम् ॥ ३५ ॥
एवं सम्भाषितो राज्ञा भगवान् भूतभावनः। प्रत्याह प्रहसन् वाण्या मेघना[8]दगभीरया ॥ ३६ ॥

**कर्दमक्षमा**

**अन्वयः** – चिरप्रजागरश्रान्तः, निद्रया, उपहतेन्द्रियः, अस्मिन्, विजने, कामं शये, अधुना, केन अपि उत्थापितः ॥३३॥ सः अपि, आत्मीयेन, एव, पाप्मना, नूनम्, भस्मीभूतः, अनन्तरम्, अमित्रशासनः, भवान्, श्रीमान्, लक्षितः ॥ ३४ ॥ अविषह्येण, ते, तेजसा, हतौजसः, भूरि, द्रष्टुम्, न शक्नुमः, हे, महाभाग ! देहिनाम्, माननीयः, असि ॥ ३५ ॥ एवम्, राज्ञा, सम्भाषितः, भूतभावनः, भगवान् मेघनादगभीरया, वाण्या, प्रहसन्, प्रत्याह ॥ ३६ ॥

**श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः**

शये अशयिषि, वर्तमानसमीपे भूते लट् ॥ एवं जन्म नाम च कथयित्वा विनयादिना स्वस्यान्तरं भावं गोपयन्वाह्यं शयनकारणं कथयन्निजकर्माह—चिरेति। प्रजागरकारणाऽकथनञ्च विनयादेव ॥ ३३ ॥ आत्मीयेन तदीयेनैव। अमित्रशातनेति पादप्रहर्तृयवननाशनाभिप्रायेण ॥ नूनं वितर्के। आत्मीयेनैवेति स्वापराधः परिहृतो विनयश्च व्यंजितः। स्वस्यापराधाऽभावं परमभाग्यदशां च व्यंजयति—अनंतरमिति। 'श्रीमन्' इति-वा पाठः। भगवतैव निजशत्रुरसौ बुद्धया घातित इत्यपि बुद्धमित्याशयेनाह—अमित्रं शास्ति दंडयतीति तथा। 'अमित्रशातनः' इति पाठेऽपि स एवार्थः ॥ ३४ ॥ हतौजसो नष्टतेजसः। महैस्तेजोभिरासमंताद्भज्यते सेव्यत इति महाभाग, अतितेजस्विन्नित्यर्थः। अत एव माननीयोसीति ॥ तव तेजसा हतमोजो येषां तथाभूता वयं, भुवि किमर्थमत्रागतोऽसि किं वाधुना करिष्यसीत्यादिकं वहु प्रष्टुं न शक्नुमः। वक्तुमिति वक्तव्ये हतौजस्त्वादेव भावावरणाशक्तेः प्रष्टुमित्युक्तम्। 'द्रष्टुम्' इति पाठे द्रष्टुमिति कुतो वक्तुं प्रष्टुं वेत्यर्थः। एतावत्तु निर्णीतमित्याह—देहिनां ब्रह्मादीनां माननीयोसि। तच्च युक्तमेवेति संबोधयति—महल्लोकोत्तरं भागं माहात्म्यसमूहो यस्य हे तथाविधेति। भगशब्दात्समूहेऽण् प्रत्ययः ॥ ३५ ॥ एवमुक्तविधया। संभावितः पूजितः 'संभावितार्चितौ समौ' इति धरणिः। मेघनादा चासौ गभीरा निम्नार्था तया 'निम्नं गभीरं गंभीरम्' इत्यमरः ॥ अनुकंपया भूतमात्रं भावयति पालयितुं प्रवृत्तः किमुत तादृशमिति तत्राह। अतएव प्रहसन्निति, स्वभावानुवादः ॥ ३६ ॥

**श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी**

एवं जन्म नाम च कथयित्वा विनयादिना स्वस्यान्तरं भावं गोपयन् वाह्यं शयनकारणं कथयन् निजकर्माऽऽह–चिरेति। प्रजागरकारणाकथनं च विनयादेव ॥ ३३ ॥ नूनं वितर्के आत्मीयेनैवेति स्वापराधः परिहृतः विनयश्च व्यञ्जितः स्वस्यापराधाभावो परसभाग्यदशां च व्यञ्जयति, अनन्तरमिति। श्रीमानिति श्रीमन्निति वा पाठः भवतैव निजशत्रुरसौ बुद्धया घातित इत्यपि वुद्ध इत्याशयेनाह—अमित्रं शास्ति दण्डयतीति तथा सः। अमित्रशातन इति पाठेऽपि स एवार्थः ॥ ३४ ॥ तव तेजसा हतम् ओजः प्रभावो येषां तथाभूताः वयं भूरि किमर्थमत्रागतोऽसि ? कुत्र वा यास्यसि ? किं वाऽधुना करिष्यसि ? इत्यादिकं वहु प्रष्टुं न शक्नुमः वक्तुमिति वक्तव्ये हतौजस्त्वादेव भावावरणाशक्तेः प्रष्टुमित्युक्तम् द्रष्टुमिति पाठे द्रष्टुमपि कुतो वक्तुं प्रष्टुं वेत्यर्थः। एतावत्तु निर्णीतमित्याह–देहिनां ब्रह्मादीनामपि माननीयोऽसीति। तच्च युक्तमेवेति सम्बोधयति–महत् लोकोत्तर भागं माहात्म्यसमूहो यस्य हे तथाविधेति भगशब्दात्समूहेऽण्प्रत्ययः ॥ ३५ ॥ अनुकम्पया भूतमात्रं भावयितुं पालयितुं प्रवृत्तः किमुत तादृशमिति तथा अत एव प्रहसन्। मेवेति स्वभावानुवादः ॥ ३६ ॥

**श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी**

एवं जन्म नाम च कथयित्वा विनयादिना स्वस्यान्तरभावं गोपयन्, वाह्यं ज्ञापयन्, शयनकारणं कथयन् निजकर्माह—चिरेति। प्रजागरकारणाकथनञ्च विनयादेव, उपहतानि उपद्रुतानि इन्द्रियाणि यस्य सः। कामं यथेष्टम्, 'शये' इत्यात्मनो विषयभोगाद्यपेक्षा नास्तीति ज्ञापितम्, काममित्येव सुष्ठु बोधयति—अधुनैवेति। चिरनिद्रायामपि न कदाचित् पूर्वं विघ्नो जात इत्यर्थः ॥ ३३ ॥ नूनं वितर्के, आत्मीयेनैवेति निजापराधः परिहृतः, विनयो वा व्यञ्जितः, अनन्तरं सद्य एव श्रीमान् लक्ष्मीधरो

---

१. चिरं–विज. । २. निद्रयाऽ–वीर. विज. । ३. त्मने–प्रा. पा. । ४. श्रीमल्ल–श्रीधर. टि. । ५. शातन–श्रीधर. वंश. जीव. विश्व. ; शासनः–वीर. विज. ; नाशनः–प्रा. पा. । ६. प्रष्टुं–श्रीधर. टि. । ७. ततो वै त्वं–च. पु. टि. । ८. ह्राद–विज. ।

भगवानिति प्राग्लक्षणैर्बुद्धः, श्रीमान् सर्वशोभायुक्तो लक्षितः। अहो मम भाग्यमिति भावः। 'श्रीमन्' इति क्वचित् पाठः। तदपि स एवार्थः। तदनन्तरं भवलक्षणाच्च भवतैव निजशत्रुरसौ बुद्धया घातित इत्यपि बुद्धमित्याशयेनाह—अमित्रं शस्ति दण्डयतीति तथा सः। पाठान्तरेऽपि स एवार्थः॥ ३४॥ ननु भक्तवत्सलस्य मम सन्तोषार्थमन्यदपि निजवृत्तं कथयेति चेत्त्राह—तेजसेति। तव तेजसा हतमोजः प्रभावो येषां तथाभूताः सन्तः, भूरि किमर्थमत्रागतोऽसि ? कुत्र वा यास्यसि ? किं वाऽधुना करिष्यसीत्यादिकं बहुलं प्रष्टुमपि न शक्नुमः, किं पुनः स्ववृतं कथयितुमित्यर्थः। पाठान्तरे बहुकालं द्रष्टुमपि न शक्नुमः। कुतः ? प्रष्टुं कथयितुं वेति। अतः केवलं त्वद्भक्तिरेव कार्य्येत्याह—देहिनां सर्वजीवानां माननीयोऽसीति। महत् लोकोत्तरं भागं माहात्म्यसमूहो यस्येति माहात्म्यार्थ-भग-शब्दात् समूहार्थेऽण्प्रत्ययः॥ ३५॥ भक्तवात्सल्येन श्रीभगवांस्त्वात्मानमगोपयन्नुत्तरं ददावित्याह—एवमिति। उक्तप्रकारेण सुष्ठु भाषितो भूतभावितो भूतभावनः स्वभावत एव सर्वजीवपालकः, तत्रापि भगवान् भक्तवात्सल्याद्यशेषगुण-प्रकटकः, अतः प्रत्याह, प्रहसन् स्मयमानः श्रीमुखप्रसत्तिस्वभावादेव, तस्मिन् प्रसादविशेषाद्वा। मेघेत्यपि स्वभावादेव हर्षविशेषो-दयेनाधुना तद्विशेषाद्वा, यद्वा, स्वस्य श्रीविष्णुत्वबोधनाय। तथा च श्रीविष्णुपुराणे (५।२३।२७) तस्य तन्निर्ह्रादे श्रीमुचुकुन्द-वाक्यम् 'तथाहि सजलाम्भोद-नादधीरतरं तव। वाक्यम्' इति॥ ३६॥

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम्

ऐश्वर्यप्रसरणेन समर्थतेजसा हतौजसो वयं न शक्नुम इत्यन्वयः॥ ३६-३८॥

### श्रीमद्वीरराघवाचार्यकृता भागवतचन्द्रचन्द्रिका

चिरं बहुकालं प्रजागरेण श्रान्तः; अत एव निद्रयोपहतान्यभिभूतानीन्द्रियाणि यस्य सोऽहमस्मिन्निर्जने देशे कामं यथेच्छं शये शयितवानस्मि। अधुना केनापि केनचिदुत्थापितश्च ॥३३॥ यो मामुत्थापितवान् सोऽपि स्वीयेनैव पापेन हेतुना नूनं भस्मीकृतः; अस्मद्दृष्टिप्रसारस्तु निमित्तमात्रमिति भावः। अनन्तरम् अस्य भस्मीभावादनन्तरममित्रशातनः शत्रूणां शास्ता श्रीमान् भवांल्ल-क्षितः दृष्टः मयेतिशेषः॥ ३४॥ सोढुमशक्येन त्वतेजसाभिभूतदृष्टयो वयं त्वां भूरि चिरं प्रष्टुं न शक्नुमः महाभाग हे भगवन्! हतमोजः सामर्थ्यं येषां तेषां कर्म सङ्कुचितज्ञानात्मकसामर्थ्यानामशानां मादृशां देहिनां माननीयोऽसि पूज्योऽसि भजनीयोऽसीति यावत्॥ ३५॥ एवमिति। राज्ञा मुचुकुन्देनैवमुक्तो भगवान् प्रहसन् मेघगर्जितवद्गम्भीरया गिरा प्रत्युवाच॥ ३६॥

### श्रीविजयध्वजतीर्थकृता पदरत्नावली

हतौजसः नष्टतेजसः॥ ३५॥ ह्रादः निःस्वनः॥ ३६॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

अमित्रशासनेति मन्ये मद्द्वारेण त्वयैव स्वशत्रुर्घातित इति भावः॥ ३४-३६॥

### गूढार्थदीपिनी

उपहतानि व्याकुलानि। कामं यथेच्छं शये अशयिषि। भूते लट्॥ ३३॥ शातनः नाशकः॥ ३४॥ भूरि चिरम् अधिकं वा॥ ३५॥ सम्भाषितः पृष्टः। संभावित इति पाठे पूजितः॥ ३६॥

### श्रीसत्यधर्मकृता श्रीभागवतटिप्पणी

चिरं प्रजागरेण रणकरणक्षणे कामं यथेच्छं शये। अधुना केनापि पुरुषेणोत्थापितः॥ ३३॥ आत्मीयेन पाप्मनैव सोऽपि मदुत्थापको भस्मीकृतोऽनन्तरममित्रशासनः श्रीमान्भवांल्लक्षितः॥ ३४॥ अविषह्येण ते तेजसा त्वां भूरि द्रष्टुं हतौजसो हतं नष्टं तेजो नायनं येषां ते तथा सन्तो विस्पष्टं द्रष्टुं न शक्नुमः। बहुवचनेन मादृशा बहवोऽसमर्था इति ध्वनयति। अतो देहिनां प्रशस्त-शरीरवतां सतां माननीयस्त्वमसि। लोकचेष्टकत्वं देहिनां मननीयश्श्रेष्टः कोऽसीति ? वा॥ ३५॥ एव राज्ञा सम्भाषितो भूतभावनो भगवान्। तं प्रति प्रहसन्मेघानां ह्रादो निर्ह्लादस्तद्वद्गभीरया वाण्याऽऽह प्रति सम्यगाहेति वा। तृतीयस्कन्धे प्रत्यङ्क्मुख्याङ्कित-मन्दराणीति श्लोकतात्पर्यटीकायां ब्रह्मा प्रत्यङ्क्वान्विष्णुः सम्यग्लक्षणवत्तम इति तन्त्रमालायां प्रतिशब्दः सम्यगर्थ इत्युक्तेः प्रतिशब्दः सम्यगर्थकः। प्रति तदाभिमुख्येन स्थितः। यथोक्तं तु प्रतिनरमित्यृग्भाष्यटीकयोः प्रतिः प्रतिरथश्च प्रतिरयमुपसर्गः। उपसर्गाश्च सति क्रियावचने तत्सम्बन्धिनो भवन्ति। असति ससाधनं क्रियामाहुः। तुविर्महाश्चासौ प्रतिः प्रतिरथश्चेतीति। प्रत्याहेत्यखण्डतायां झटिति निराहेत्येव भायान्न भातव्यं तयेति व्याकृतिरे.मिति ज्ञेयम्॥ ३६॥

### श्रीमद्वल्लभाचार्य्यकृता सुबोधिनी

**चिरप्रजागर इति।** बहुकालं देवरक्षार्थं चिरप्रजागरो जातः। ततः श्रमोऽपि जातः। ततो निद्रयोपहतानीन्द्रियाणि च जातानि। अतो निद्रोपभोगार्थं विजनेऽस्मिन् स्थाने शये, यथा न केनापि उत्थाप्येत। अयं देववत्तनिद्रया शयनं करोमीति न

कथयति । तथा सति ध्यानतपःप्रभृति सर्वं परित्यज्य तामस्यवस्था किमित्यङ्गीकृतेत्युपालभ्यः स्यात् । तदर्थं स्वखेदमेव वर्णयति । अतः **कामं** यथेष्टं शये । अत्रापि कश्चिदागत्योत्थानं कारितवानित्याह **केनाप्युत्थापितोऽधुनेति** । स्वापराधशान्त्यर्थं तदज्ञान-कथनम् । तस्य च दण्डो मया न कृतः, किन्तु स्वपापेनैव जात इत्याह **सोऽपि भस्मीकृत** इति । **आत्मीयेनैव** स्वकृतेनैव पापेन । 'न शयानं प्रबोधये'दिति निषेधोल्लङ्घनेन भस्मीकृतः । **नूनमिति** नात्र कोऽप्यस्मदपराध इति निरूपितम् । तदनन्तरमेव भवद्दर्शनं जातमित्यतोऽपि हेतोः न ममापराधः । अन्यथा तव दर्शनं न स्यात् । एतदर्थमेव पुनर्भगवन्तं वर्णयति **श्रीमानिति** । सर्वसौन्दर्य-युक्तः लक्ष्मीवांश्च । **अमित्रशासन** इति । शत्रुमारकस्त्वमेवेति त्वयैवायं प्रायेण मारितः ॥ ३३ ॥ तर्हि यथैतावन्निर्णीतम्, तथा जन्मकर्माण्यपि योगबलेनैव कथं न निर्णीयन्ते ? इत्याशङ्क्याह **तेजसा तेऽविषह्येणेति** । **अविषह्येण** निकटेऽपि स्थातुमशक्येन ते तेजसा भूरि पुनः पुनः द्रष्टुमपि न शक्नुम. : तस्य निदानजिज्ञासा दूरापास्तेति । अन्तर्दृष्ट्या द्रष्टव्यमित्याह **हतौजस** इति । हे महाभाग ते तेजसैव हतम् ओजः मनःशक्तिर्येषाम् । अतो दूरापास्तैव योगेन चिन्तनकथा । अन्यज्ज्ञातमस्तु न वा, द्वयं ज्ञायत इत्याह । हे महाभाग देहिनां च त्वं माननीय इति । त्रैलोक्यादधिकं भाग्यं दृश्यते । अत एव देहग्रहणमात्रेणैव अवश्यमिष्ट-मपेक्षितमिति सर्वेष्टपूरकः त्वं सर्वेषामेव माननीयः पूज्यः सेव्यश्चेत्यर्थः ॥ ३४ ॥ एवं तस्य विज्ञापितमाकर्ण्य तदर्थमेव समागत इति तत्रोत्तरमुक्तवानित्याह **एवं सम्भाषित** इति । सम्यक् भाषितः । राज्ञेति सोऽपि महान्, राजप्रश्ने चावश्यमुत्तरं देयमिति निरूपितम् । भगवांश्च निरूपित एवोत्तरे तस्य कृतार्थता भविष्यतीति जानाति । अतस्तथोत्तरं दत्तवान् । यद्यपि प्रकारान्तरेणापि तदुद्धारं कर्तुं शक्तः, तथापि तत्कृपयापि तथोक्तवानित्याह **भूतभावन** इति । **प्रहसन्निति** विशेषेण मोहितवान् । तर्ह्यहितकारी स्यादित्याशङ्क्याह **मेघनादगभीरयेति** । मेघनादादपि अधिकगम्भीरया सर्वथा तापनाशिकया ॥ ३५ ॥

## श्रीसुबोधिनीसारः

चिरं प्रजागरेण श्रांतः । निद्रया उपहतानींद्रियाणि यस्य सोहं विजने निर्जनेऽस्मिन् वने कामं स्वैरं शये । केनाप्यधुना उत्थापितः ॥ ३२ ॥ कासावित्यत आह स्वीयेन पापेनैव सोपि उद्बोधयिता भस्मीभूतः अनन्तरं तत्क्षणे एव श्रीमान् शत्रुहंता भवान् लक्षितो दृष्टवानसि ॥ ३४ ॥ ते तवाविषह्येण सोढुमशक्येन तेजसा भूरि बहु द्रष्टुं वयं न समर्थाः स्मः; यतो हतौजसस्ति-रस्कृतदीप्तयः । हे महाभाग देहिनां माननीयोसि पूज्योसि ॥ ३५ ॥ एवं राज्ञा मुचुकुन्देन संभाषितो भूतपालको भगवान् प्रहसन् सन् मेघशब्दगम्भीरया वाण्या प्रत्याह ॥ ३६ ॥

## गोस्वामिश्रीगिरधरलालकृता बालप्रबोधिनी

सोऽहं देवैः प्रार्थितः तेषां रक्षां कुर्वन् चिरप्रजागरेण श्रान्तः निद्रयाभिभूतानीन्द्रियाणि यस्य सोऽस्मिन् विजने देशे कामं यथेच्छं शये शयितवान् केनाप्यधुनोत्थापितोऽस्मि ॥ ३३ ॥ यो मामुत्थापयितवान् सोऽपि स्वीयेनैव पापेन 'शयानं न प्रतिबोधयेत्' इति वाक्योल्लङ्घनजनितेन नूनं भस्मीकृतः, अस्मदृष्टिप्रसादस्तु निमित्तमात्रमित्याशयः । तदनन्तरं च श्रीमान् भवान् लक्षितो मया दृष्टः । 'त्वयैव अनेन उपायेन स नाशितः' इति सूचयन्नाह—अमित्रशातन इति, शत्रूणां शास्ता ॥ ३४ ॥ महान् भागो भक्तानां भोगो यस्मात्तत्सम्बोधनं हे महाभागेति । वयं तु भूरि चिरं त्वां द्रष्टुमपि न शक्नुमः । तत्र हेतुमाह—ते तव अविषह्येण सोढुमशक्येन तेजसा हतमोजः दर्शनसामर्थ्यं येषां ते इति, अतो देहिनां मादृशां त्वं माननीयोऽसि इति ॥ ३५ ॥ राज्ञा मुचुकुन्देन भगवानेवं सम्यक् सत्कारपूर्वकं भाषितः पृष्टः सन् प्रहसन् मेघगर्जितवद्गभीरया वाण्या तं प्रत्याहेत्यन्वयः । एवं कृपयोत्तरदाने हेतुं सूचयन्नाह—भूतभावन इति । भक्तजनपालक इत्यर्थः ॥ ३६ ॥

## अन्वितार्थप्रकाशिका

चिरेति । सोऽहं देवैः प्रार्थितः तेषां रक्षां कुर्वन् चिरप्रजागरेण श्रान्तः निद्रया उपहतान्यभिभूतानींन्द्रियाणि यस्य सोऽस्मिन् विजने देशे कामं यथेच्छं शये शयितवान् केनाप्यधुनोत्थापितोऽस्मि ॥ ३२ ॥ सोऽपीति । यो मामुत्थापितवान् सोऽपि आत्मीयेन स्वीयेनैव पापेन शयानं न प्रबोधयेदिति वाक्योल्लङ्घनजनितेन नूनं भस्मीकृतः । मद्दृष्टिप्रपातस्तु निमित्तमात्रमित्या-शयः । तदनन्तरं च अमित्राणां शातनो नाशकः श्रीमान् भवान् लक्षितः ॥ ३३ ॥ तेजसेति । हे महाभाग ! ते तव अविषह्येण तेजसा हतमोजो दर्शनसामर्थ्यं येषां ते वयं तु भूरि चिरं त्वां द्रष्टुमपि न शक्नुमः । कुतस्तत्त्वतो ज्ञातुं तथापि त्वं देहिनाम्मान-नीयोऽसीत्येतावदेव ज्ञायते ॥ ३४ ॥ एवमिति । राज्ञा मुचुकुन्देन भूतभावनः भगवानेवं सम्यक् सत्कारपूर्वकं भाषितः पृष्टः सन् प्रहसन् मेघस्य नादो गर्जितं तद्वद् गभीरया वाण्या तं प्रत्याह स्म ॥ ३५ ॥

## श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्

विजने जनवर्जितस्थाने कामं यथेच्छं शये ॥ ३२ ॥ अमित्रशातनः शत्रुनाशनः ॥ ३३ ॥ हतौजसो वयम् ॥ ३४-३६ ॥

**भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी**

चिरेति ॥ चिरं बहुकालं यः प्रजागरस्तेन श्रान्तः अत एव, निद्रया उपहतान्यभिहतानि इन्द्रियाणि यस्य सोऽहं, अस्मिन् विजने निर्जने देशे, कामं, शये शयितवानस्मि। अधुना, केनापि केनचित्पुरुषेणेत्यर्थः। उत्थापितश्च ॥ ३३ ॥ सोऽपीति। यो मामुत्थापितवान्, सोऽपीत्यर्थः। आत्मीयेन स्वीयेनैव, पाप्मना पापेन हेतुना, नूनं भस्मीकृतः। अस्मद्दृष्टिप्रसारस्तु निमित्तमात्रमिति भावः। अनन्तरं तस्य भस्मीभावादनन्तरमित्यर्थः। अमित्रशातनः शत्रूणां शास्ता, श्रीमान् भवान्, लक्षितो मया दृष्टः ॥ ३४ ॥ तेजसेति। अविषह्येण सोढुमशक्येन, ते तव, तेजसा, हृतमोजः सामर्थ्यं येषां ते, अभिभूतदृष्टयो वयमित्यर्थः। त्वामिति शेषः। भूरि चिरं, द्रष्टुं, न शक्नुमः। हे महाभाग भगवन्, देहिनां कर्मसंकुचितज्ञानात्मकसामर्थ्यानामज्ञानां मादृशां शरीरिणामित्यर्थः। माननीयः, असि। पूज्योऽसि भजनीयोऽसीति यावत् ॥ ३५ ॥ एवमिति ॥ राज्ञा मुचुकुन्देन, एवमुक्तप्रकारेण, संभाषित उक्तः, भूतभावनो जगत्स्रष्टा, भगवान्, प्रहसन् सन्, मेघनादगभीरया मेघगर्जितवद्गभीरतायुतया, वाण्या वाचा, प्रत्याह प्रत्युवाच ॥ ३६ ॥

**कृष्णप्रिया**

चिरकाल के प्रजागर के कारण मैं थक गया था। निद्रा ने मेरी समग्र इन्द्रियों की सम्पूर्ण शक्ति छीन ली थी। नींद ने मुझे बेकाम बना दिया था। विश्राम के लिये मैं इस विजन में गुफा के एकान्त स्थल में अकेला अचिंत बन सो रहा था, किसी अनजान मनुष्य ने मुझे अभी जगा दिया ॥ ३३ ॥ वह खुदी के पापों से ही खुद भस्म हो गया है इतना मेरा ख्याल है। आगे की बात में शत्रु विनाशक सर्व सुन्दर आपने मुझे दर्शन दिया ॥ ३४ ॥ नाथ आप सर्व के सर्वथा सम्माननीय है। आपका लोकोत्तर दिव्य और असह्य तेज से मेरी बुद्धि और शक्ति कुण्ठित हो गई है। मैं सुदीर्घ काल तक आपको देख भी नहीं सकता ॥ ३५ ॥ प्राणीमात्र के मङ्गल कर्त्ता भगवान् श्रीकृष्ण ने राजा मुचुकन्द की वार्ता सुनी और सस्मित मुख से मेघनाद गम्भीर वाणी से मुचुकुन्द को कहा ॥ ३६ ॥

## श्रीभगवानुवाच

**जन्मकर्माभिधानानि सन्ति मेऽङ्ग सहस्रशः। न शक्यन्तेऽनुसंख्यातुमनन्तत्वान्म[१]यापि हि ॥ ३७ ॥**
**[२]क्वचिद् रजांसि विममे पार्थिवान्युरुजन्मभिः। गुणकर्माभिधानानि न मे जन्मानि कर्हिचित् ॥ ३८ ॥**
**कालत्रयोपपन्नानि जन्मकर्माणि मे नृप। अनुक्रमन्तो नैवान्तं गच्छन्ति परमर्षयः ॥ ३९ ॥**
**तथाप्यद्यतनान्यङ्ग श्रृणुष्व गदतो मम।**
**विज्ञापितो विरञ्चेन[३] पुराहं धर्मगुप्तये। भूमेर्भारायमाणानामसुराणां क्षयाय च ॥ ४० ॥**

**कदंमक्षमा**

**अन्वयः** -श्रीभगवान् उवाच—अङ्ग! जन्मकर्माभिधानि, मे, सहस्रशः, सन्ति, अनन्तत्वात्, मया, अपि, हिं, अनुसंख्यातुम्, न, शक्यन्ते ॥ ३७ ॥ क्वचित्, उरुजन्मभिः, पार्थिवानि, रजांसि, विममे, कर्हिचित्, मे, गुणकर्माभिधानि, जन्मानि, न, विममे ॥ ३८ ॥ हे नृप ? परमर्षयः, कालत्रयोपपन्नानि, मे, जन्मकर्माणि, अनुक्रमन्तः, न, एव, अन्तम्, गच्छन्ति ॥ ३९ ॥ अङ्ग तथा, अपि, अद्यतनानि. मम, गदतः, श्रृणुष्व; पुरा, अहम्, विरञ्चेन धर्मगुप्तये, च, भूमेः, भारायमाणानाम्, असुराणाम्, क्षयाय, विज्ञापितः ॥ ४० ॥

**श्रीधरस्वामिविरचिता भावार्थदीपिका**

क्वचित्कदाचित्कश्चिद्यद्यपि रजांस्यपि विममे गणितवांस्तथापि जन्मानि कर्माणि न विमिमीते ॥ ३९-४२ ॥

**श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः**

मयापीति मत्कर्तृकसंख्याकत्वेप्यनंतत्वहानिः स्यादिति भावः। नैतावता मत्सार्वज्ञ्यमपि त्रपते, सतोऽज्ञानस्यैव सार्वज्ञ्यनाशकत्वादिति। तानि च सहस्राणि अनुसंख्यातुं संख्यानसदृशमपि कर्तुम् 'अनु हीने सहार्थे च पश्चात्सादृश्ययोरनु' इति विश्वः। हि निश्चितम् ॥३७॥ अनंतत्वमाह—कश्चिदिति। चिदव्ययमत्रावधारणे ज्ञेयम्, तथा च को ब्रह्मैव सर्वस्रष्टृत्वात् ॥३८-३९॥ तथापि पार्थिवरजोगणकत्वेपि। स एवोरुजन्मभिरपि, स्वामिना जायत इति जन्मानि कर्माणीत्यर्थः कृतः। किंभूतानि—गुणाः कर्माणि

१. ममापि–विज.। २. कश्चिद्–विज.। ३. विरिञ्चेन–श्रीधर. वंशी. जीव. वीर. विज. विश्व. शुक.।

जन्मान्यभिधानानि नामानि च विद्यंते येषु तानीत्यर्थः। इह मत्वर्थीयोच्। 'जन्म स्याज्जनने देहे वंशे स्थाने च कर्मणि' इति निरुक्तिः। 'कर्म व्याप्ये क्रियायां च जनने मरणेऽपि च' इति च। विपूर्वात् 'माङ्-माने' अस्माल्लँडर्थे लिट्। विममे = विमिमीते। तथापि मे जन्मानि न विमिमीत इत्यर्थः। कीदृशानि ? गुणैः कर्मभिश्चाभिधानानि नामानि यत्र तादृशानि। टीकायां तु जन्मानीति कर्माण्युपलक्षयत्युत्तरानुरोधात्। न मे जन्मानीत्यन्वय इति चित्सुखः॥ ३९॥ अनुक्रमन्तो नितरां गणयन्तः। परमर्षयो वशिष्ठादयः। कालेति सार्द्धकम्। कालत्रय उपपन्नानि सिद्धानि, भूते वा भविष्यति वा वर्तमाने वा कानिचिदपीत्यर्थः। कर्माणीति गुणनाम्नामुपलक्षणम्। अनुक्रमन्तः क्रमेण गणयन्तो न गच्छन्ति 'यतो वाचो निर्वर्तन्ते' इत्यादेः। एव निर्धारणे। परमर्षयो वेदांता अपि। तथापि भगवदनुरोधेनाद्यतनानि सांप्रतिकानि परमदुरूहाण्यपि गदतो मम कथयतो मत्तः सकाशाच्छृणुष्वमात्रं न तत्त्वतो वा परिणामतो ज्ञातुमिच्छेत्यर्थः॥ ४०॥ यद्यपि नान्तं गच्छन्ति तथापि। अद्यतनान्याधुनिकानि। भारायमाणानां भारवदाचरताम् 'कर्तुः क्यङ्-' इति क्यङ्। विज्ञापित इति सार्द्धकम्। धर्मगुप्तये साधूनां रक्षणायेत्यर्थः॥ ४१॥

**श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी**

तानि च सहस्राणि अनुसङ्ख्यातुं सङ्ख्यातसदृशमपि कर्त्तुम् 'अनु हीने सहार्थे च पश्चात्सादृश्ययोरपि' इति विश्वः हि निश्चितम्॥ ३८॥ विममे विमिमीते तथापि मे जन्मानि न विमिमीतेत्यर्थः। कीदृशानि ? गुणैः कर्मभिश्चाभिधानानि नामानि यत्र तादृशानि। टीकायां जन्मानीति कर्माण्युपलक्षयति-उत्तरानुरोधात् न मे जन्मानीत्यन्वय इति चित्सुखः॥ ३९॥ कालेति सार्द्धकम्। कालत्रये उपपन्नानि सिद्धानि भूते वा भविष्यति वा वर्त्तमाने वा कानिचिदपीत्यर्थः। कर्माणीति गुणनाम्नामुपलक्षणम्। अनुक्रमन्तः क्रमेण गणयन्तः न गच्छन्ति 'यतो वाचो निवर्तन्ते' इत्यादेः एव निर्द्धारणे परमर्षयः वेदान्ता अपि तथापि भवदनुरोधेनाद्यतनानि साम्प्रतानि परमदुरूहाण्यपि गदतो मम कथयतो मत्तः सकाशाच्छृणुष्वमात्रं न तु तत्त्वतः परिमाणतो वा ज्ञातुमिच्छेत्यर्थः॥ ४०॥ विज्ञापित इति सार्द्धकम्। धर्मगुप्तये साधूनां रक्षणायेत्यर्थः॥ ४१॥

**श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी**

अंगेति सादरसम्बोधने। अनु सादृश्ये, तथा च विश्वः—'अनु हीने सहार्थे च पश्चात् सादृश्ययोरपि' इति। केनचिद्रज आदि-दृष्टान्तेनापि सङ्ख्यातुम्, हि निश्चितम्। ननु तर्हि सर्वशक्तिमत्त्वमाहात्म्यहानिः स्यात् ? तत्राह—अनन्तत्वादिति। खपुष्पाद्यज्ञानेन सर्व्वज्ञस्य ज्ञानाहानेरिति भावः॥ ३६॥ 'विममे' इति सम्भावनायामतीतप्रत्यय आर्षः, विमिमीतेत्यर्थः। कर्म्मादिवद् गुणानामप्यानन्त्येनापृष्टानामपि प्रसंगात्तेषां कथनं ज्ञेयम्। गुणादीनीति लेख्ये जन्मानीत्यादिकं लेखकभ्रमात्। यद्वा, अत्र मूलपाठान्तरमनुसन्धेयम्। तच्च न मे जन्मानीत्यन्वय इति व्याख्या चित्सुखस्यापि सम्मता, अन्यथा यथावस्थितपाठे तादृशलिखनानुपयोगः स्यादिति दिक्॥ ३७॥ कालत्रये उपपन्नानि सिद्धानि भूतानि वर्त्तमानानि भविष्याणि चेत्यर्थः। जन्मकर्म्माण्यपि किं पुनर्गुणनामानि, तेषां ततोऽप्याधिक्यादित्यर्थः। तत्र ( भा० १०।१४।७ ) 'गुणात्मनस्तेऽपि गुणान् विमातुम्' इत्यादिवचनतो गुणानां तत् प्रसिद्धमेव, गुणकर्म्मोत्थत्वान्नाम्नामपि तत् सुसिद्धमेव, जन्मनामप्यानन्त्यं काले काले बहुधाविर्भावात्, एकस्यैव रूपस्य च वैविध्याद् बाहुल्याच्च, तत्र च कालस्यानन्त्यादिति दिक्। अनुक्रमन्तः क्रमेण गणयन्तः, न गच्छन्ति नाद्यापि यान्ति, एव निर्धारणे, परमर्षयो भृग्वादयोऽपि। हे नृपेति सद्राजत्वेन परमर्षीणामपि समागमात् त्वयैतद्विज्ञायत एवेति भावः॥ ३८॥ अद्यतनानि आधुनिकानि, पञ्चमार्थे षष्ठी, गदतो मत्तः सकाशादिति श्रद्धावधानाद्यर्थम्, विशेषेण क्षीरसागरतीरे श्रीरुद्र-भूम्यादिभिः सह विविधनियमपूर्वकोपस्थानादिना ज्ञापितः। धर्म्मगुप्तय इति साधूनां पालनं सिद्धमेव॥ ३९॥

**श्रीसुदर्शनसूरिकृतशुकपक्षीम्**

क्वचिज्जन्मभिः उपलक्षितः रजांसि लोकान्॥ ३९-४२॥

**श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका**

उक्तिमेवाह-जन्मेत्यादिना, इत्युक्त इत्यतः प्राक्तनेन। तावद्यत्पृष्टं स्वजन्मकर्मेत्यादि तस्योत्तरमाह—जन्मेति। अङ्ग हे मुचुकुन्द ! मम जन्मादीनि सहस्रशः सन्ति अतस्तान्यत्राधुना मयाऽपि सङ्ख्यातुम् एतावन्तीति परिच्छिद्य वक्तुं न शक्यन्ते। ननु किमनादिसंसरणशीलैरस्मदादिभिरिव विस्मृतत्वान्न शक्यन्ते ? इत्याशङ्कावारणायानन्तत्वान्ममापीत्युक्तम्। अयं भावः—यद्यपि भवज्जन्मादीनि कर्मसङ्कुचितज्ञानैर्भवद्भिर्विस्मृतत्वाद्बहुत्वाच्च न सङ्ख्यातुं शक्यन्ते, तथापि सर्वज्ञेन मया तु शक्यन्त एवास्मज्जन्मादीनि त्वानन्त्यत्वान्नैव शक्यन्ते। नचैवं सर्वज्ञत्वहानिरानन्त्यानामानन्त्यज्ञानमेव हि सर्वज्ञत्वावहं, न तु तेषां परिच्छिन्नत्वज्ञानं तस्यायथार्थत्वेनाज्ञत्वावहत्वादिति॥ ३८॥ दुःसङ्ख्य यत्वमेवोपपादयति-क्वचिदिति। यद्यपि क्वचित् कदाचित् कश्चित्सूक्ष्मबुद्धिमान् बहुभिः जन्मभिः पृथिव्याः सम्बन्धीनि रजांसि विममे गणयेत्तथापि मम गुणकर्माभिधानानि न विममे न गणयितुं शक्नुयादित्यर्थः। 'विष्णोर्नुकं वीर्याणि प्रावोचं यः पार्थिवानि विममे रजांसि' इति श्रुत्यर्थोऽत्रानुसंहितः॥ ३९॥ तथाहि परमर्षयः

पराशरवैशम्पायनशौनकादयः कालत्रयोपपन्नानि कालत्रयोपयुक्तानि कालत्रयगोचराणि इति यावत् जन्मानि कर्माणि च अनुक्रमन्तः अनु वर्णयन्तोऽप्यन्तं पारं नैवं गच्छन्ति ॥ ४० ॥ यद्यप्येवं तथाप्यङ्ग हे मुचुकुन्द ! अद्यतनान्याधुनिकानि मम जन्मादीनि गदतो मत्तः शृणु धर्मपरित्राणार्थं भूमेर्भारभूतानामसुराणामासुरसम्पत्त्याभिजातानां क्षयाय च ब्रह्मणा प्रार्थितोऽहं यदुकुले तत्राप्यानकदुन्दुभेर्वसुदेवस्य गृहे गृहिण्यामिति भावः । अवतीर्णवानस्मि ज्ञानशक्त्यादिस्वस्वभावमजहदेव जात इत्यवतीर्णशब्दप्रयोगाभिप्रायः । एवमाधुनिकं जन्म प्रोक्तम् । अथ नामधेयमाह–वदन्तीति । वसुदेवसुत इत्यस्य हेतुत्वद्योतको हिशब्दः वसुदेवसुतत्वाद्वासुदेवेति वदन्ति । सन्धिरार्षः । प्रातिपदिकमात्रानुवादो वा । तस्यैव नामधेयत्वात्प्रदर्शनीयत्वाद्विभक्तेः साधुत्वार्थत्वाच्च ॥ ४१-४२ ॥

### श्रीविजयध्वजतीर्थकृता पदरत्नावली

मातुं सङ्ख्यातु न शक्यन्ते, कुतः ? अनन्तत्वात् अतोऽनन्तानामनन्ता इत्येव परिसंख्यानमन्यथानन्तत्वहानिः ॥ ३८॥ अनन्तत्वमाह—कश्चिदिति । कश्चित् क इव ब्रह्मेव सोऽपि मे जन्मानि गुणकर्माभिधानानि न विममे ॥ ३९ ॥ अनुक्रमन्तः निरन्तरं पठन्तः ॥ ४० ॥ भारायमाणानां भरवदाचरतां 'कर्तुः क्यङ् सलोपश्च' ( ३।१।११ ) इति पाणिनिः ॥ ४१ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

परमनिरहङ्कारित्वेपि मद्वचनश्रवणार्थमेव स्वोत्कर्षमसौ द्योतयत्यतोऽहमपि परमनिरहङ्कारोऽपि निजमुखेनैवास्मै स्वोत्कर्षमभिधास्यामि 'ये यथा मां प्रपद्यन्ते' इति मदुक्तेरिति विमृश्याह—जन्मेति ॥३८॥ विममे कश्चिद् गणयामास ॥३९-४४॥

### गूढार्थदीपिनी

अङ्ग हे राजन् । अनुसंख्यातुं गर्णायतुम् ॥ ३६ ॥ क्वचित्कदाचित्कश्चित् । यद्यपि रजःकणान् विमिमीते गणयति लँडर्थे लिट् । उरुभिर्बहुभिः ॥ ३७ ॥ कालत्रयसम्बन्धीनि । अनुक्रमन्तो गणयन्तः । अन्तं पारम् न गच्छन्ति । परमर्षयो वसिष्ठादयः ॥ ३८ ॥ तथापीति अर्द्धम् ॥ ३९ ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

कचित् कदाचित् कश्चिदुरुजन्मभिः यद्यपि रजांसि विममे गणितवान् तथापि मे गुणादीनि न विमिमीते, तथा च श्रुतिः 'विष्णोर्नु कं वीर्य्याणि प्रावोचं यः पार्थिवानि विममे रजांसि' इति ॥ ३९-४२ ॥

### श्रीसत्यधर्मकृता श्रीभागवतटिप्पणी

स्वजन्म कर्म गोत्रं वा कथ्यतां यदि रोचत इत्युत्तरयति ॥ जन्मेति । जन्मानि कर्माण्यभिधानानि च । अङ्ग मुचकुन्द ! सहस्रशोऽपराणि सन्ति । तव जन्मादीयताज्ञा वर्तेतेति । नेत्याह—नेति । न शक्यन्ते तु मातुं शक्यन्ते नु व्यातुमिति च पाठौ । सख्यं भजतो मातुं सङ्ख्यातुं मातुमित्यर्थः । कुतोऽनन्तत्वात् ममापि हि । न ह्यनन्तमन्यान्प्रति यत्तन्नानन्तमनन्तप्रतीतिः सम्भवति । उक्तं चैकादशतात्पर्ये—अनन्तमिति वेत्तीशस्त्वनन्तवत्तथा । अनन्तस्य तु सङ्ख्याने न तु सर्वज्ञता भवेदित्यादि । मेङ्गेत्यत्र मा इङ्गेति छेदः । सङ्ख्यातुं मा इङ्ग न गच्छ प्रयत्नं न कुर्विति यावदिति वा । अतो म इत्यस्य ममेत्यस्य वाऽऽवृत्त्या च सम्भवे एकस्यातिरेक इति निरस्तम् ॥ ३७ ॥ विष्णोर्नु कं वीर्याणि प्रवोचं यः पार्थिवानि विममे रजांसीति श्रुतिफक्किकामर्थतः सङ्गृह्य कथयति—कश्चिदिति । कश्चित्पुमानुरुजन्मभिः पार्थिवानि रजांसि धूलीर्विममे गणयाञ्चकार । सोऽपि मे मम गुणकर्माभिधानानि जन्मानि च कर्हिचिदपि न विममीते । यदा कदाचिद्येन केनापि रजःकणगणनं कर्तुं शक्यं न मम गुणकर्मादिगणनमिति भावः । स्वजन्मकर्मगोत्रं वेति मुचुकुन्दप्रार्थनायां जन्मकर्माभिधानानि सन्ति मे । जन्मकर्माणि मे नृपेति पूर्वोत्तरस्ववाक्ययोश्च जन्मनां कर्मादित्वेनोक्तावपि मध्ये गुणकर्माभिधानानि न जन्मानीति तेषां कर्माद्यनन्तरोदाहरणेन न जननानीति भगवद्भाव इत्यवधेयम् ॥ ३८ ॥ कालत्रयोपपन्नानि युगत्रयसम्बद्धानि मे मम जन्मानि कर्माणि परमर्षयो महाज्ञाना अनुक्रमन्तो निरन्तरं वक्तुमुद्यता अपि नान्तं गच्छन्ति न पारयन्ति ॥ ३९ ॥ तर्हि प्रष्टुर्ममैवाविवेक इति न वद, किञ्चिद्वच्मीति वक्ति—तथाऽपीति । अद्यतनान्येतत्कालभवानि गदतो मम सकाशाच्छृणुष्व धर्मगुप्तये तद्रक्षायै ॥ सैवं सिध्यतीत्याह ॥ भूमेरिति ॥ ४० ॥

### श्रीमद्वल्लभाचार्यकृता सुबोधिनी

भगवद्वाक्यान्याह—जन्मेति **अर्धाधिकाष्टभिः** । तदुक्तं भगवानधर्मेव फलं तस्य दास्यामीति ज्ञापितवानिति । आदौ यत्नेन पृष्टं 'जन्मकर्माभिधानानि वदे'ति, तत्र कानि वक्तव्यानीत्याकाङ्क्षामिव वदन् आदौ जन्मनामसङ्ख्यातत्वमाह—**मे जन्मकर्माभिधानानि सहस्रशः सन्तीति** । नन्विदानीन्तनेषु पृष्टेषु किमिति व्यधिकरणमुत्तरं दत्तवान् ? ततश्चायं प्रतारक एव, न भगवानिति शङ्का च स्यादिति चेत् ? सत्यम् । भगवान् प्रथमतः स्वरूपे ज्ञाते जन्मकर्माभिधानानि ज्ञातव्यानीति मन्यते । अतः

स्वरूपं वदन् स्वभावं ख्यापयितुं जन्मान्याह—ब्रह्मेति स्वरूपं वक्तव्यम्। तस्य कथं जन्मेत्याकाङ्क्षायां भक्तिप्रतिपादकोऽपि स भवतीति भक्तिसिद्ध्यर्थं कर्माणि करिष्यन्, भक्तिपरिपालनार्थं कर्माणि च करिष्यन् बहून्येवावतरणानि करोतीति वक्तव्यम्। तस्मिन्ननुक्ते तस्य बोधनार्थमुक्तमप्यनुक्तं स्यात्। अतः सुष्ठूक्तं **मे जन्मकर्माभिधानानि सहस्रशः सन्तीति**। अङ्गेत्यप्रतारणाय संबोधनम्। सन्तीत्यनेन सर्वेषामेव **विद्यमानता** निरूपिता। सर्वद्वीपेषु विद्यमानानां वा सहस्रत्वमुच्यते। तर्हि भक्तिसाधकत्वात्तानि कथयेत्याशङ्क्याह **न शक्यन्तेऽनुसंख्यातुमिति**। आनुपूर्व्येण संख्यातुं मयापि न शक्यन्ते॥ ३३॥ तदेवासङ्ख्यातत्वेनोपपादयति, अज्ञानव्यावृत्त्यर्थम्, **क्वचिद्रजांसीति**। कदाचित्पार्थिवान्यपि रजांसि कश्चिद्विममे। अहं वा। उरुजन्मभिरपि विमानं संभवत्यन्यस्य। यद्येकमेव ब्रह्म पर्यायेण सर्वेषु ब्रह्माण्डेष्ववतरति, तदा तत्रत्यानां परमाणूनां सृज्योपयोगित्वेन गणनां करोति। अन्यथा अव्यवस्था स्यात्। ततश्च ब्रह्मणा गणयितुं शक्याः। मयापि सृष्ट्यादौ ज्ञानपूर्वकं सृजामीति गणितुं शक्या एव। **क्वचिति**। सृष्टिविशेषे। गुणकर्माभिधानानि मदीयानि तु कदाचिदपि गणयितुं न शक्यानि। एकस्मिन् जन्मनि कोटिशः कर्माणि नामानि च भवन्ति। एकस्मिन् दिवसे ब्रह्माण्डकोटिषु द्वीपादिदेशविशेषेषु कोटिशो जन्मानि भवन्ति। अतः अपरिमितत्वात् जन्मादीनां परिगणनाभावो युक्तः॥ ३७॥ बहुभिर्मिलितैर्गणना भविष्यतीत्याशङ्क्याह **कालत्रयोपपन्नानीति**। भूतान्येव बहूनि वर्तन्ते, भविष्याणि च। म इति ब्रह्मणः। जीवो हि परिच्छिन्नः, एकदा एकस्मिन् देशे एकं देहं गृह्णाति, स देहः शतवर्षाणि तिष्ठति, भगवतस्तु देहाभावात्स्वरूपं यथासुखं प्रदर्शयतीति एकस्मिन्नपि क्षणे बहुभिर्बहुधा दृश्यत इति अनेकरूपाणि भवन्ति। चलने च मायाजवनिकायाः स्थलान्तरे उद्गमस्य भिन्नत्वाच्चलनमात्रेणैवानेकानि रूपाणि भवन्ति। स ह्याकाशशरीरः सर्वतःपाणिपादान्तत्वेन, मूर्त्यानन्त्यात् अनन्तरूपत्वं युक्तमेव। अत आह भगवान्—कालत्रयोपपन्नानि मदीयानि **अनुक्रमन्तः** आनुपूर्व्येण गणनां कुर्वाणा अन्तं न गच्छन्तीति। नृपेति संबोधनं महत्त्वेन वञ्चनाभावाय। तत्रापि कालत्रयस्य योग्यानीति कर्मणामानन्त्यम्। कालत्रयस्य उपमर्दनसमर्थानि नामानीति कालत्रये उपपन्नान्यनन्तान्येव॥ ३८॥ एवं त्रीभिः स्वस्य ब्रह्मत्वं निरूप्य धर्माणामपि ब्रह्मत्वेनानन्त्यमुक्त्वा अवक्तव्यत्वमुपपाद्य तथापि राजकृपया राज्ञो दुर्ज्ञेयमपि वक्ष्यामीत्यभिप्रायेणाह **तथापीति**। अद्यतनानि जन्मकर्माभिधानानि शृणुष्व। यद्यपि त्वां प्रति न वक्ष्यामि, तथापि मे गदतः सतः त्वया सावधानतया श्रोतव्यम्। आदौ जन्महेतुमाह। स एव पृष्ट इति। पुरा विरिञ्चेन विज्ञापितः ब्रह्मणा प्रार्थितः सन् धर्मरक्षा कर्तव्येति। भूमेर्भारायमाणानामसुराणां क्षयार्थं च। अनेन द्वयं गृहीतम्। भूमिभारहरणमसुराणां क्षयश्चेति। चकाराद्भक्तिसिद्ध्यर्थं च॥ ३९॥

### श्रीसुबोधिनीसारः

श्रीकृष्णोक्तिः। हे अंग मे मम जन्मकर्मनामानि सहस्रशोनंतानि संति। मयापि अनुसंख्यातुं गणितुं न शक्यंते हि युक्तम् अनंतत्वात्॥३७॥ बहुजन्मभिः क्वचित् समये पार्थिवान् पृथिवीसंबंधीनि रजांसि रेणून् विममे गणितवान्। मे मम गुणकर्मनामानि जन्मानि कदापि न विममे न विगणयति॥ ३८॥ हे नृप कालत्रयेणोपपन्नानि युक्तानि मे मम जन्मकर्माणि अनुक्रमंतो गणयंतः परमर्षयोप्यंतं न यांति॥ ३९॥ तथाप्यसंख्यातत्वादगणितत्वेपि हे अंग अद्यतनानि वर्त्तमानकालीयानि नामानि गदतो मम मत्तः त्वं शृणु। पुरा पूर्वं धर्मरक्षार्थं भूमेः पृथिव्या भाररूपाणामसुराणां क्षयाय च नाशार्थं विरिंचेन ब्रह्मणा विज्ञापितः प्रार्थितोहम्॥४०॥

### विवरणटिप्पणी

**जन्मकर्मेत्यत्र। अर्धमेवेति**। अष्टभिः कृतस्य प्रश्नस्याष्टमिरुत्तरं जातम्। फलदानप्रतिपादक एकः श्लोकोऽतः परमपेक्षितः, तत्रार्ध एवोक्त इत्यर्थः **स्व भावमिति**। अनन्तरूपेण भवनमित्यर्थः। **जन्मान्याहेति**। जन्मनां बहुत्वमाहेत्यर्थः।

### गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

तत्र 'स्वजन्म कर्म गोत्रं वा कथ्यताम्' इति यदुक्तं तत्राह—जन्मेति। 'परमकृपाविषयत्वान्नात्र प्रतारणा काचित्' इत्याशयेन सम्बोधयति—अङ्गेति। मे मम जन्मानि कर्माणि अभिधानानि नामानि च सहस्रशः असङ्ख्यानि सन्ति, अतः अनन्तत्वात् मयापि सङ्ख्यातुं गणयितुं नैव शक्यन्ते। एवकारार्थे हिशब्दः। न चैवं सर्वज्ञत्वहानिः। अनन्तानां अनन्ततया ज्ञानमेव सर्वज्ञत्वावहम्, नतु परिच्छिन्नतया अज्ञानम्, तस्य यथार्थत्वेन अज्ञत्वावहत्वात्॥ ३७॥ असङ्ख्यत्वमेवोपपादयति—क्वचिदिति। कदाचित् कश्चित् सूक्ष्मदर्शी बहुभिर्जन्मभिः पार्थिवानि पृथिव्याः सम्बन्धीनि रजांसि विममे गणितवान् गणयेदपि मे मम गुणान् कर्माणि अभिधानानि जन्मानि च कर्हिचिदपि न गणयितुं शक्नुयादिति॥ ३८॥ 'नृपत्वेन सूक्ष्मबुद्धित्वात्त्वयापि विचारणीयम्' इत्याशयेन सम्बोधयति—नृपेति। नात्र गोप्यं किञ्चित्, प्रसिद्धत्वात्। परमर्षयः नारदादयोपि कालत्रयोपपन्नानि भूतादिकालत्रयसम्बधीनि मम जन्मानि कर्माणि चानुक्रमन्तोऽनुक्रमेण वर्णयन्तोऽप्यन्तं पारं नैव गच्छन्ति॥ ३९॥ यद्यपि कालत्रयोपपन्नानि जन्मादीनि वर्णयितुमशक्यानि, तथापि हे अङ्ग! अद्यतनानि आधुनिकानि मम जन्मादीनि गदतो मत्तः शृणु। एवं वर्णनं प्रतिज्ञाय वर्णयति–धर्मस्य गुप्तये संरक्षणार्थं तथा भूमेर्भारभूतानामसुराणामसुरसम्पत्त्यभिजातानां क्षयाय च

विरिञ्चेन ब्रह्मणा पुरा विज्ञापितः प्रार्थितोऽहं यदुकुले, तत्राप्यानकदुन्दुभेर्वसुदेवस्य गृहेऽवतीर्णोऽस्मीति द्वयोरन्वयः। अवतारशब्देन ज्ञानबलादिस्वाभाविकशक्तिपूर्णत्वं सूचयति ॥ ४०-४१ ॥

### अन्वितार्थप्रकाशिका

जन्मेति ॥ अङ्ग हे राजन्! मे मम जन्मानि कर्माणि अभिधानानि नामानि च सहस्रशः असंख्यानि सन्ति। अतः अनन्तत्वात् मयापि अनुसंख्यातुं गणयितुं नु इति च्छेदो वा नैव शक्यन्ते। एवकारार्थे हिशब्दः। न चैवं सर्वज्ञत्वहानिः, अनन्तानाम् अनन्ततया ज्ञानमेव सर्वज्ञत्वावहं न तु परिच्छिन्नतया ज्ञानं तस्यायथार्थत्वेन अज्ञत्वावहत्वात् ॥ ३६ ॥ क्वचिदिति ॥ क्वचित् कदाचित्कश्चित्सूक्ष्मदर्शी उरुभिर्बहुभिर्जन्मभिः पार्थिवानि पृथिव्याः संबन्धीनि रजांसि विममे गणितवान् गणयेदपि। किन्तु मे मम गुणान् कर्माणि अभिधानानि नामानि जन्मानि च कर्हिचिदपि न गणयितुं शक्नुयात्। यद्वा। गुणैः कर्मभिश्चाभिधानानि नामानि यत्र तादृशानि जन्मानि ॥ ३७ ॥ कालेति ॥ हे नृप! परमर्षयः नारदादयोऽपि कालत्रयोपपन्नानि भूतादिकालत्रयसंबन्धीनि मम जन्मानि कर्माणि चानुक्रमन्तोऽनुक्रमेण वर्णयन्तः। दीर्घाभाव आर्षः। अद्याप्यन्तं पारं नैव गच्छन्ति ॥ ३८ ॥ तथापीति अर्द्धम् ॥ अङ्ग हे राजन्! तथापि अद्यतनानि आधुनिकानि मम जन्मादीनि गदतो मत्तः शृणुष्व। तङार्षः ॥ ३९ ॥

### श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्

क्वचित्कदाचित् कश्चिज्जनः रजांस्यपि विममे अगणयत् तथापि गुणैः कर्मभिश्चाभिधानानि येषु तानि मे जन्मानि तु कर्हिचिदपि न गणयेत् ॥ ३७ ॥ अनुक्रमंतः अनुक्रमेण गणयंतः ॥ ३८-४० ॥

### भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

उक्तिमेवाह जन्मेत्यादिना इत्युक्त इत्यतः प्राक्तनेन ग्रन्थेन। तावद्यत् पृष्टं स्वजन्मकर्मेत्यादि तस्योत्तरमाह—जन्मेति ॥ अङ्ग हे मुचुकुन्द, मे मम, जन्मानि च कर्माणि चाभिधानानि च तानि, सहस्रशो बहुशः सन्ति। अतस्तान्यधुनेति शेषः। मयापि, संख्यातुमेतावन्तीति परिच्छिद्य वक्तुमित्यर्थः। न शक्यन्ते। नु एव। ननु किमनादिसंसरणशीलैरस्मदादिभिरिव विस्मृतत्वान्न शक्यन्त इत्याशङ्कावारणायाह—अनन्तत्वात् हि एव। ननु यद्यपि भगवज्जन्मादीनि कर्मसंकुचितज्ञानैर्जीवैस्तु स्वधर्मभूतज्ञानतिरोहिततया विस्मृतस्मृतित्वतो बहुत्वाच्च संख्यातुमशक्यानि सन्त्वेव सर्वदाऽलुप्तज्ञानतयाऽखण्डितस्मृतिप्रवाहेण भगवता संख्यातुं न शक्यन्ते इति यदभिहितं तदयुक्तवत् प्रतिभाति, जीववदज्ञताप्राप्तेरिति कैश्चिदत्र तर्क्यते तदयुक्तं, यदनन्तवत् स्यात्तदन्तानवगम एवाज्ञतामापादयति न त्वनन्तस्यान्तस्यानवगमः। यथावस्थितवस्तुविषयज्ञानस्यैव सर्वज्ञत्वावहत्वादपरिच्छिन्नस्य परिच्छिन्नत्वज्ञानस्याज्ञत्वावहत्वाच्चातो नैतावता भगवतः सर्वज्ञत्वभङ्गः शङ्क्य इति ॥ ३७ ॥ भगवज्जन्मादेर्दुःसंख्यत्वमेवोपपादयति—क्वचिदिति ॥ क्वचित् यद्यपि, कदाचित् कश्चित् सूक्ष्मबुद्धिमानित्यर्थः। उरुजन्मभिर्बहुजन्मभिः, पार्थिवानि पृथिव्याः संबन्धीनि, रजांसि रेणून्, विममे गणयेदित्यर्थः। तथापि, मे मम, जन्मानि गुणाश्च कर्माणि च अभिधानानि च तानि, कर्हिचित् न विममे। गणयितुं न शक्नुयादित्यर्थः। 'विष्णोर्नु कं वीर्याणि प्रवोचं यः पार्थिवानि विममे रजांसि' इति श्रुत्यर्थोऽत्रानुसंहितः ॥ ३८ ॥ कालेति ॥ हे अनघ, नृपेति क्वचित् पाठः। परमर्षयः पराशरवैशंपायनादयः, कालत्रयोपपन्नानि कालत्रययुक्तानि कालत्रयगोचराणीति यावत्। मे मम, जन्मकर्माणि जन्मानि कर्माणि चेत्यर्थः। अनुक्रमन्तोऽनुवर्णयन्तः सन्तोऽपि, अन्तं पारं, नैव गच्छन्ति ॥ ३९ ॥ तथापीति। भूमेरिति च। तथापि यद्यप्येवं तथापीत्यर्थः। अङ्ग हे मुचुकुन्द, अद्यतनान्याधुनिकानि, मम जन्मादीनि इति शेषः। गदतः कथयतो मत्तः, शृणुष्व आकर्णय। पुरा, अहं धर्मगुप्तये धर्मपरित्राणार्थं, भूमेः, भारायमाणानां, भूभारभूतानामित्यर्थः। असुराणामासुरसंपत्त्याभिजातानां, क्षयाय च, विरिञ्चेन ब्रह्मणा, विज्ञापितः प्रार्थितः सन् ॥ ४० ॥

### कृष्णप्रिया

भगवान श्रीकृष्ण ने कहा कि—राजन् मुचुकुन्द! मेरे अनन्तजन्म असंख्य नाम एवं कर्म है। ये सब अनन्त होने से मैं भी स्वयं उनकी संख्या नहीं बता सकता ॥ ३७ ॥ राजन् यह बात शायद शक्य होगी कि कोई पुरुष अपने अनेक जन्मों में पृथिवी के छोटे-छोटे रेणुओं की गणना कर सकता है फिर भी मेरे जन्म गुण कर्म नामों की गिनती किसी भी हालत में नहीं कर सकता ॥ ३८ ॥ मरीचि नारद सनत्कुमारादि महर्षि वृन्द मेरे त्रिकाल सिद्ध जन्म कर्म और गुणों का गान कर सकते हैं लेकिन उनका पार नहीं पाते ॥ ३९ ॥ मुचुकन्द! यद्यपि ऐसा होने पर भी स्नेहवश अपने वर्तमान जन्म कर्म, एवं नामों का निरूपण करता हूँ सुनो बावा! एक बार ब्रह्माजी ने मुझसे कहा कि महाराज! धर्म का रक्षण करें और जो असुरों का भार धरणी पर बढ़ गया है तो कृपया दूर कीजिये ॥ ४० ॥

**अवतीर्णो यदुकुले गृह आनकदुन्दुभेः । वदन्ति वासुदेवेति वसुदेवसुतं हि माम् ॥ ४१ ॥**
**कालनेमिर्हतः कंसः प्रलम्बाद्याश्च सद्द्विषः । अयं च यवनो दग्धो राजंस्ते तिग्मचक्षुषा ॥ ४२ ॥**
**सोऽहं तवानुग्रहार्थं गुहामेतामुपागतः । प्रार्थितः प्रचुरं पूर्वं त्वयाहं भक्तवत्सलः ॥ ४३ ॥**
**वरान् वृणीष्व राजर्षे सर्वान् कामान् ददामि ते । मां प्रपन्नो जनः कश्चिन्न भूयोऽर्हति शोचितुम् ॥ ४४ ॥**

### कर्दमक्षमा

अन्वयः—यदुकुले, आनकदुन्दुभेः, गृहे, अवतीर्णः । माम्, वसुदेवसुतम्, वासुदेव, इति, वदन्ति ॥ ४१ ॥ हे राजन् ! कालनेमिः, कंसः, हतः, च, प्रलम्बाद्याः, सद्द्विषः, हताः, अयम्, यवनः, ते, तिग्मचक्षुषा, दग्धः ॥ ४२ ॥ भक्तवत्सलः, अहम्, त्वया, पूर्वम्, प्रचुरम्, प्रार्थितः, सः, अहम्, तेन, अनुग्रहार्थम्, एताम्, गुहाम्, उपागतः ॥ ४३ ॥ राजर्षे ! वरान्, वृणीष्व, ते, सर्वान्, कामान्, ददामि, माम्, प्रपन्नः, कश्चित्, जनः, भूयः, शोचितुम्, न, अर्हति ॥ ४४ ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

ते तिग्मचक्षुषा निमित्तेन मयैव दग्धः ॥ ४२-४३ ॥ अपूर्णोऽहमिति शोचितुम् । यद्वा अन्यैर्दत्तेषु वरेषु क्षीयमाणेषु यथा शोचति नैवं मा प्रपन्नाः, मद्दत्तवराणामक्षय्यत्वादिति भावः ॥ ४४ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

गृहे—भार्यायाम् । प्रवृत्तिनिमित्तमाह—वसुदेवेति । आदौ जन्माह—अवतीर्ण इति । नामाह—वदन्तीत्यर्द्धकेन । वासुदेवेति 'सह सुपा' इति सामान्यतः समासः । ननु 'असन्ति तत्र भूतानि' इत्यादिना तव नामेदं पूर्वमपि प्रसिद्धमेव—सत्यम्, किन्तु मध्ये मध्ये तिरोभूतेन प्रवृत्तिविशेषेणाधुनिकमिव प्रतीयत इत्याह—वसुदेवसुतमिति । हि प्रसिद्धौ । श्रीरामादिष्वनेकेष्वपि तत्पुत्रेषु सत्सु प्राधान्यान्मय्येव तत्प्रसिद्धिरित्यर्थः ॥ ४२ ॥ कालनेमिरिति प्रागजन्माभिप्रायेण । सद्विषः सतां द्वेष्टारः । मया हताः, प्रलम्ब आदिर्येषामघधेनुकादीनां ते तथा । अतद्गुणसंविज्ञानबहुव्रीहिणा प्रलम्बरहिता इत्यर्थः । तिग्मचक्षुषा कोपाग्निना । कर्माह—कालनेमिरिति । मयेति शेषः ॥ ४३ ॥ पूर्वं पुरा जन्मनि । न च तद्धननार्थमेवागतोस्म्यन्यथापि तस्य शक्यत्वात्, किन्तु त्वत्कृतार्थ-मेवेत्याशयेनाह—स इति । तादृशमाहात्म्योऽप्यहमुप दाक्षिण्येनागतः । 'उप सामीप्यदाक्षिण्यदोषाख्यानात्ययेष्वपि' इति विश्वः । प्रचुरं यथा स्यात्तथा प्रकर्षेण शुद्धभावादिनार्थितः द्रष्टुं याचितो वांछित इत्यर्थः ॥ ४४ ॥ 'अपूर्णोऽहमधन्योऽहमसुखी जन्मवानिति' इत्यर्द्धश्लोकः पुस्तकांतरे लभ्यते, इह स्वामिचरणैस्तत्प्रतीकोच्चारणेन स्वीकृतः प्रतीयते । सर्वेश्वरदत्तापहारित्वाभावमाह—यद्वेति । अन्यैर्मद्भिन्नैर्देवतांतरैः । इति भाव इति—'विषयतृषो नरपशवो य उपासते विभूतीर्न परं त्वाम् । तेषामाशिष ईश तदनु विनश्यन्ति यथा राजकुलम्' इति चित्रकेतूक्तेर्भगवद्दत्तवराणामेवाक्षयित्वमन्यदत्तानां क्षयित्वश्रवणादित्याशयः । हे राजर्षे इति—राज्ञ ऋषेश्च योग्यान्सर्वानपीति भावः । प्रपन्नः शरणागतोऽपि, कि पुनर्भक्तिमांस्त्वादृश इत्यर्थः । न भूय इति । तस्मात्तुच्छो वरो न मृग्य इति गूढोऽभिप्रायः ॥ ४५ ॥

### श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी

आदौ जन्माह—अवतीर्ण इति । नामाह—वदन्यीत्यर्द्धकेन वासुदेवेतीति । 'सह सुपा' ( २।१।४ ) इति सामान्यः समासः । ननु, वसन्ति तत्र भूतानि' इत्यादिना तव नामेदं पूर्वमपि प्रसिद्धमेव सत्यं किन्तु मध्ये मध्ये तिरोभूतेन प्रवृत्तिनिमित्त-विशेषेणाधुनिकमिव प्रतीयत इत्याह—वसुदेवसुतमिति । हि प्रसिद्धौ श्रीरामादिष्वन्येष्वपि तत्पुत्रेषु सत्सु प्राधान्यान्मय्येव तत्प्रसिद्धिरित्यर्थः ॥ ४२ ॥ कर्माह—कालनेमिरिति मयेति शेषः ॥४३॥ न च तद्धननार्थमेवागतोस्मि अन्यथाऽपि तस्य शक्यत्वात् किन्तु त्वत्कृपार्थमेवेत्याशयेनाह—स इति । तादृशमाहात्म्योप्यहम् उप दाक्षिण्येनागतः 'उप सामीप्यदाक्षिण्यदोषाख्यानात्यये ष्वपि' इति विश्वः । प्रचुरं यथा स्यात्तथा प्रकर्षेण शुद्धभावादिनाऽर्थितः द्रष्टुं याचितः वाञ्छित इत्यर्थः ॥ ४४ ॥ हे राजर्षे इति राज्ञ ऋषेश्च योग्यान् सर्वानेवेति भावः । प्रपन्नः शरणागतोऽपि किं पुनर्भक्तिमांस्त्वादृश इत्यर्थः । न भूय इति । तस्मात्तुच्छो वरो न मृग्य इति तु निगूढो भावः ॥ ४५ ॥

### श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी

आदौ जन्माह—अवतीर्ण इति । स्वयमेव साक्षादागतोऽस्मि, न तु गर्भवासादिनोत्पन्नोऽस्मीत्यर्थः । आनकदुन्दुभेरिति देवकृतोत्सवेन तस्य प्रसिद्धिं माहात्म्यञ्च सूचयति । नामाह—वदन्तीति । हे वासुदेवेति वदन्ति लोकाः । ननु चित्ताधिष्ठातृत्वादिना

---

१. वि–वीर. ।

पूर्वमपि नामेदं वर्त्तत एव, तत्राह—वसुदेवसुतमिति। तत्सुतत्वेनैवैतन्नाम्नः सुप्रसिद्धेरित्यर्थः। इत्यद्यतनता तन्नाम्नः सम्यगर्थता च दर्शिता। हि एव, मामेव, श्रीरामादीनां तत्पुत्रत्वेन तन्नामसम्भवेऽपि पितृस्नेहाधिक्यादिना मय्येव तत्प्रसिद्धेः। श्रीकृष्ण-दामोदर-गोविन्दादिगोकुलसम्बन्धि-नामानि गुह्यत्वान्नोक्तानि। अत एव तस्य तज्जन्मनि तच्छ्रवणायोग्यत्वेन योग्यजन्मान्तरावाप्तिः, श्रीभगवतैवाग्रे वक्ष्यते। एवमग्रेऽपि कर्म्मोक्तौ श्रीगोकुलचरितमनुक्त्वा केवलं दुष्टहननमेवोच्यत इति ॥ ४० ॥ कर्म्माह—कालनेमिरिति। महादैत्यत्वहनने कारणम्—सतः साधून् द्विषन्तीति सद्द्विषः। राजन् हे वृद्धयादिना राजमानेति त्वया तद्बुध्यत एवेति भावः, यद्वा, श्रीरुद्रवरादिना प्रकाशमान इति स्वस्यावध्यत्वं सूचितम् ॥ ४१ ॥ न चैतदर्थमेवावगतोऽस्मि, केनचिदन्येनाप्युपायेन तद्धननसुसिद्धेः, किन्तु त्वदर्थमेवेत्याशयेनागमनमुख्यप्रयोजनमाह—स इति। तादृशमाहात्म्योऽप्यहमुप दाक्षिण्येनागतः, 'उप सामीप्यदाक्षिण्यदोषाख्यानात्ययेषु च' इति विश्वः। प्रचुरं यथा स्यात्तथा प्रकर्षेण शुद्धभावादिनार्थितो द्रष्टुं याचितो वाञ्छित इत्यर्थः। यतो भक्तवत्सलः, दर्शनमात्रेणैव भक्ताशेषमनोरथपूरणाद्भक्तार्थं सर्वार्थकत्वाच्चेत्यर्थः। यद्वा, अस्य पूर्वार्द्धे नान्वयः ॥४२॥ हे राजर्षे! इति सर्वकामदानपात्रतोक्ता। अतो राज्ञ ऋषेश्च योग्यान् सर्वानिवेति भावः। प्रपन्नः शरणागतत्वमात्रेणाप्याश्रितः, कश्चिदपि, किं पुनर्भक्तिमांस्त्वादृश इत्यर्थः। भूयः पुनर्वरप्राप्तेः पश्चात्, अन्यत्तैर्व्याख्यातम्, यद्वा, पश्चात् कदाचित् कथञ्चित् किञ्चिदपि तव दुःखं नास्त्येव, तथापीहामुत्रापि सुखार्थं वृणीष्व। तत्र हेतुः—राजर्षे इति! तव राजत्वेन ऋषित्वेन च लोकद्वय-सुखोपभोगयोग्यत्वादित्यर्थः ॥ ४३ ॥

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम्

अयंचेति ते तिग्मचक्षुषा उपकरणभूतेन मयैव दग्ध इत्यर्थः ॥ ४३–४६ ॥

### श्रीमद्वीरराघवाचार्यकृता भागवतचन्द्रचन्द्रिका

अथाधुनिकानि कर्माण्याह—कालनेमिरिति। हे राजंस्तव तिग्मेन तीक्ष्णेन चक्षुषा निमित्तेन मयैवायं यवनो दग्धः धर्मगुप्त्याद्यर्थं प्रार्थितत्वाद्युक्त्यैव तदुपयुक्तसार्वज्ञत्वसर्वशक्तित्वादिगुणानामुक्तप्रायत्वान्न पृथग्गुणोक्तिः ॥ ४३ ॥ तर्हीह किमर्थमागतः? इत्यत्राह—सोहमिति। स उक्तविधोहं त्वामनुग्रहीतुम् इमां गुहां प्रति समुपागतः। तर्हि सर्वानपि जनान् किं नानुगृह्णासीत्यत आत्मानं विशिनष्टि—भक्तवत्सल इति। नाहं भक्त इत्यतो विशिनष्टि–पुरा जन्मनि त्वया अहं प्रचुरं यथा तथा प्रार्थित आराधितः ॥ ४४ ॥ कोऽसावनुग्रहः? इत्यत आह–वरानिति। हे राजर्षे! ते तुभ्यं सर्वान् काम्यन्त इति कामास्तानिष्टान् ददामि। नन्वित्थं प्रचोदितेन मया देवाः प्रत्याख्याता इति सर्वज्ञः त्वं किं न जानासीत्यत्राह–मामिति। भूयः पुनः शोचितुं संसर्तुं नार्हति किन्तु मुक्तिमेवार्हतीति भावः। मुक्तिन्दास्याम्येव किन्तु ततोन्येपि यदि कामा प्रार्थ्यास्तानपि प्रार्थयस्वेति भावः ॥ ४५ ॥

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली

गुहे भार्यालक्षणे निमित्तं कथयति–वसुदेवेति ॥ ४२ ॥ तिग्मचक्षुषा चण्डनेत्राग्निना ॥ ४३–४६ ॥

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी

शोचितुं नार्हतीत्यन्यैर्दत्तेषु वरेषु क्षीयमाणेषु सत्सु यथा शोचति नैवं मां प्रपन्नः मद्दत्तवराणामक्षयत्वादिति भावः ॥४५॥

### गूढार्थदीपनी

भारायमाणानां भारवदाचरताम्। 'कर्तुः क्यङ्–' इति क्यङ्। गृहे – भार्यायाम् ॥४०॥ वासुदेवेति सुप्सुपेति समासः। पूर्वं यः कालनेमिः स कंसः। प्रलम्ब आदिर्येषान्ते एव धेनुकादयो न तु प्रलम्बस्तस्य बलदेवकृतहननादित्यतद्गुणसंविज्ञानो बहुव्रीहिः ॥ ४१ ॥ चक्षुषा निमित्तेन मयैवेति योज्यम् ॥ ४२ ॥ प्रार्थित इति सार्द्धम्। द्रष्टुमिति शेषः ॥ ४३ ॥

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः

ते तिग्मचक्षुषा निमित्तेन मयैव दग्धः ॥ ४३–४५ ॥

### श्रीसत्यधर्मकृता श्रीभागवतटिप्पणी

आनकदुन्दुभेर्गृहे – भार्यायाम्। आनकदुन्दुभेर्गृहे गदतो गदनामकात्पुरा पूर्वमेवावतीर्ण इत्यन्वयः (?) गदाग्रज इत्यर्थः ॥ नामापि सनिरुक्तिकं वक्ति—वदन्तीति ॥ वासुदेवेति। वसुदेवसुतं तत्त्वाद्वदन्ति। हीति पुराणान्तरनिर्वचनसूचकम् ॥ ४१ ॥ कालनेमिः प्राक् कंस इदानीं प्रलम्बाद्या सद्द्विषः सद्वैरिणः। अनेन बलोऽपि मद्बलत एवावधीत्प्रलम्बमिति ध्वन्यते। तिग्मचक्षुषा तदग्निना सोऽहं तव त्वदुपरि ॥ ४२ ॥ मम तव चानुबन्धः प्राचीनो वर्तत इत्याह—प्रार्थित इति। भक्तवत्सलोऽहं त्वया पूर्वं प्रचुरं यथा तथा प्रार्थितः ॥ ४३ ॥ वरानुत्तमान्कामान्वृणीष्व तान्सर्वांस्ते ददामि। मां प्रपन्नो जनो भूयः शोचितुं नार्हति सः। मां सम्पदं प्रपन्न एवेत्यावृत्त्याऽन्वयः ॥ ४४ ॥

### श्रीमद्वल्लभाचार्य्यकृता सुबोधिनी

**यदुकुले** इति गोत्रमुक्तम् । आनकदुन्दुभेर्गृह इति विशेषोऽप्युक्तः । नामाह **वदन्ति वासुदेवेति** । सन्त्येव बहूनि नामानि, एकस्यापि, एकस्यापि नाम्नः बहून्येव निर्वचनानि सन्ति, तथापि एकं नाम एकप्रकारनिर्वचनं लोका वदन्ति । **वासुदेवेति** नाम । वसुदेवसुतमिति निर्वचनम् । हीति युक्तश्चायमर्थः । यतो मां वदन्ति । मया च तथा कृतमिति ॥ ४० ॥ कर्माण्याह **कालनेमिर्हत** इति । कंसो मातुल इति तस्य हननं निषिद्धमिति पूर्वं स कालनेमिः स्थित इत्युक्तम् । प्रलम्बादयोऽपि हताः, यतस्ते सद्द्विषः । अनेन सद्रक्षार्थं प्रलम्बादयो हताः, न तु तेषां हनने स्वतन्त्रं कार्यमस्तीति भावः । प्रकृतकृत्यं द्विरूपमाह—**अयमिति** । तत्र यवनः ते तिग्मचक्षुषा बाणप्रायेण करणेन मयैव दग्धः । चकारः कर्तृसमुच्चयार्थः । **राजन्निति** संबोधनं तथैव सम्मत्यर्थम् ॥ ४१ ॥ द्वितीयं भक्तिलक्षणं धर्मलक्षणं वा प्रयोजनमाह—सोऽहमिति । अनेकार्थेऽवतीर्णो यतोऽहं अतस्तवाप्यनुग्रहः कर्तव्य इति एतां गुहामुपागतः । अन्यथा प्रकारान्तरेण भ्रममुत्पाद्य कालयवन एवात्रानीतः स्यात् । ततश्च स्वयमेव स भस्मीभवेत् । अतस्त्वदर्थमेवास्मिन् सङ्कटे देशेऽपि समागतः । तत्र हेतुः **प्रार्थितः प्रचुरं पूर्वमिति** । बहुवारं पूर्वंजन्मसु त्वयाऽहं प्रार्थितः । अनेन यत्सामर्थ्यं त्वयीदानीमुपलभ्यते, तत्केवलं मदनुभावेनेत्यपि ज्ञापितम् । तथापि स्वक्लेशेनाप्यागमने स्वस्यासाधारणं धर्ममाह **भक्तवत्सल** इति अहं स्वभावतो भक्तवत्सलः ॥ ४२ ॥ आगतस्य प्रयोजनमाह **वरान् वृणीष्वेति** । ये वरणीयाः तवाभीष्टाः तान् बहूनपि वृणीष्व । यतस्त्वं **राजर्षिः** राजा च ऋषिश्च, राजधर्मं वैदिकं च धर्मं कृतवानिति । अहं पुनः ते अस्मिन् जन्मनि सर्वानेव कामान् दास्यामि, न तु मोक्षमिति भावः । तर्हि किं वरेणेत्याशङ्क्याह **मां प्रपन्न** इति । यस्तु शरणागतः, स भूयः शोचितुं नार्हति । यस्मिन् जन्मनि प्रपद्यते, तस्मिन् जन्मनि कश्चिच्छोचितुमर्हति, न सर्वः । अतः सर्वेषां शोकः प्रपत्तिमात्रेण निवर्तते, अजनश्च भवति । जनश्चेत् मदिच्छया, तथापि भूयः शोचितुं नार्हति । एष विकल्पः राज्ञ एवार्थे । अतः कामितं सर्वमेव दास्यामि मुक्तिमपि एकजन्मव्यवधानेनेति भावः ॥ ४३ ॥

### श्रीसुबोधिनीसारः

यदूनां कुले वसुदेवस्य गृहेऽवतीर्णोऽस्मि । तेन वसुदेवस्य सुतं मां वासुदेवेति वदन्ति हि युक्तम् ॥ ४१ ॥ येन कालनेमिः पूर्वजन्मनि । इह तु कंसो हतः । सतां द्विषः शत्रवः प्रलंबाद्या निहताः । हे राजन् ! ते तव तिग्मचक्षुषा घोरदृष्ट्यायं यवनो दग्धः ॥ ४२ ॥ तव कृपार्थम् एतां गुहां सोहमुपागतः प्राप्तोस्मि । तत्र हेतुः । प्रचुरं बहुशो यथा भवति तथा त्वया पूर्वं भक्तवत्सलोहं प्रार्थितोस्मि ॥ ४३ ॥ हे राजर्षे वरान् त्वं वृणीष्व । सर्वान् कामान् वांछितपदार्थान् ते तुभ्यं ददामि । मां प्रपन्नः शरणं गतः कश्चिज्जनो भूयः पुनः शोचितुं नार्हति ॥ ४४ ॥

### विवरणटिप्पणी

**अयं च यवन** इत्यास्याभासे । **द्विरूपमाहेति** । धर्मरक्षारूपं भूमारहरणरूपं चेत्यर्थः । **विमोहितोऽयमित्यत्र** स्वसमानेति । गृहेपि सुखसमान एव प्रकार इत्याकारकज्ञानजन्येत्यर्थः ॥ ४६ ॥

### गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

एवं सहेतुकं जन्म उक्त्वा नामधेयमाह–वदन्तीति । हि शब्दो हेतुत्वद्योतकः । वसुदेवसुतत्वादेव मां वासुदेवेति वदन्ति । सन्धिरार्षः । अथाधुनिकानि कर्माण्याह—कालनेमिरिरिति । कंसरूपेण जातः कालनेम्याख्योऽसुरो मया हतः, तथा सद्द्विषः सतां धर्मवर्तिनां द्वेषिणः प्रलम्बाद्या दैत्याश्च धर्मरक्षार्थं मया हताः ॥ ४२ ॥ 'इयं च राजनीतिः' इति सूचयन् सम्बोधयति—राजन्निति । अयं च कालयवनस्ते तव तिग्मेन तीक्ष्णेन चक्षुषा निमित्तेन सर्वोपायविदा मयैव दग्धः । अत्र कण्टकादिविशिष्टस्थाने आगमनकारणमाह—स इति । स उक्तविधः परमेश्वरोऽहं तवानुग्रहार्थमेतां गुतामुपागतः ॥ ४३ ॥ अनुग्रहे हेतुमाह—पूर्वं प्रचुरं यथा भवति तथा त्वया प्रार्थितः समाराधित इति । 'न चाहं भक्तमुपेक्षितुं शक्नोमि' इति सूचयन्नाह—भक्तवत्सल इति । 'त्वं वरदानपात्रामोसि' इति सूचयन् सम्बोधयति—राजर्षे इति । त्वं च मत्तो वरान् उत्कृष्टान् स्वाभिलषितान् वृणीष्व कामान् विषयान् याचयस्व, अहं च ते तुभ्यं सर्वान् दान् ददामि दास्यामि । मां प्रपन्नो यः कोपि जनो भूयः 'अपूर्णोहम्' इति शोचितुं नार्हति, मत्प्रसादेन तं प्रति धर्मादीनां सुलभत्वादित्याशयः ॥ ४४ ॥

### अन्वितार्थप्रकाशिका

विज्ञापित इति सार्द्धम् ॥ धर्मस्य गुप्तये संरक्षणार्थं तथा भूमेर्भारायमाणानां भारभूतानाम् असुराणां क्षयाय च विरिञ्चेन ब्रह्मणा पुरा विज्ञापितः प्रार्थितोऽहं यदुकुले तत्राप्यानकदुन्दुभेर्वसुदेवस्य गृहेऽवतीर्णोऽस्मि ॥ ४० ॥ वदन्तीति ॥ हि यतः वसुदेवसुतत्वादेव मां वासुदेवेति वदन्ति । सुप्सुपेति समासः । तथा मया कंसरूपः कालनेमिः तन्नामा असुरः हतः । सद्द्विषः सतां द्वेषिणः प्रलम्बाद्याश्च हताः ॥ ४१ ॥ अयमिति ॥ हे राजन् ! अयं च कालयवनस्ते तव तिग्मेन तीक्ष्णेन चक्षुषा निमित्तेन सर्वोपायविदा

मयैव दग्धः। स ईश्वरोऽहं तवानुग्रहार्थमेतां गुहामुपागतः ॥ ४२ ॥ प्रार्थित इति सार्द्धम् ॥ भक्तवत्सलोऽहं पूर्वं प्रचुरं यथा स्यात्तथा त्वया प्रार्थितः समाराधतः। अतः हे राजर्षे ! त्वं वरान् वृणीष्व। अहं ते तुभ्यं सर्वान् कामान् ददामि दास्यामि। मां प्रपन्नो यः कश्चित् कोऽपि जनो भूयः अपूर्णोऽहमिति शोचितुं नार्हति। यद्वा। अन्यैर्दत्तेषु वरेषु यथा क्षयवशाच्छोचति तथा मां प्रपन्नः शोचितुं नार्हति। मद्दत्तवराणामक्षयत्वात् ॥ ४३ ॥

### श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्

कंसो हतः मयेति शेषः ॥ ४१-४२ ॥ प्रचुरं बहुतरम् ॥ ४३-४४ ॥

### भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

यदुकुले, तत्रापि आनकदुन्दुभेर्वसुदेवस्य, गृहे गृहिण्यामित्यर्थः। 'न गृहं गृहमित्याहुर्गृहिणी गृहमुच्यते' इति स्मृतेः। अवतीर्णः अवतोर्णवान् अस्मि। ज्ञानशक्त्यादिस्वस्वभावमजहदेव जात इत्यवतीर्णशब्दप्रयोजनाभिप्रायः। अन्यथा समुत्पन्न इत्येव ब्रूयात्। इति द्वयोरेकान्वयः ॥ ४१ ॥ एवमाधुनिकं जन्म प्रोक्तमथ नामधेयमाह। वदन्तीति। वसुदेवसुतं हि, हेतुत्वद्योतको हिशब्दः। वसुदेवसुतत्वादित्यर्थः। मां, वासुदेवः इति, वदन्ति। इतिनाऽभिहिते कर्मणि प्रथमा। संधिरार्षः। अथाधुनिकानि कर्माणि प्राह। कालनेमिः कालनेमिनाम्नोऽसुरस्यैवावताररूपः, कंसः, हतः, सद्विषः साधुजनद्वेष्टारः, प्रलम्बाद्या असुराश्च हताः मया व्यापादिता इत्यर्थः ॥ ४२ ॥ अयं चेति। हे राजन्, ते तव, तिग्मचक्षुषा तीक्ष्णेन चक्षुर्निमित्तेन मयैवेत्यर्थः। अयं यवनश्च, दग्धः। धर्मगुप्त्याद्यर्थं प्रार्थितत्वाद्युक्त्यैव तदुपयुक्तसार्वज्ञ्यसर्वशक्तित्वादिगुणानामुक्तप्रायत्वान्न पृथगुक्तिः। तर्हीह किमर्थमागत ? इत्यत्राह-स उक्तविधोऽहं तव अनुग्रार्थं त्वामनुग्रहीतुमित्यर्थः। एतामिमां, गुहामुपागतः। तर्हि सर्वानपि जनान् किं नानुगृह्णासीत्यत आह-भक्तवत्सलः अहं, त्वया, पूर्वं पूर्वजन्मनि, प्रचुरं यथा तथा, प्रार्थित आराधितः। मम भक्तवत्सलत्वात्तव च पूर्वजन्मनि मद्भक्तत्वात्त्वामनुग्रहीतुमहमत्रागत इति भावः ॥ ४३ ॥ कोऽसावनुग्रह ? इत्यत आह-वरानिति। हे राजर्षे ! ते तुभ्यं, काम्यन्ते इति कामास्तान्, इष्टानित्यर्थः। सर्वान्, वरान् ददामि। अतः, वृणीष्व। नन्वित्थं प्रचोदितेन मया देवाः प्रत्याख्याता-स्तत् सर्वज्ञस्त्वं किं न जानासीत्यत्राह-मामिति। मां, प्रपन्नः कश्चिदपि जनः, भूयः पुनः, शोचितुं संसत्तुं, न अर्हति। किं तु मुक्तिमेवार्हतीत्यर्थः। मुक्तिं तु दास्याम्येव किं तु ततोऽन्येऽपि कामा यदि प्रार्थ्यास्तानपि प्रार्थयस्वेति भावः ॥ ४४ ॥

### कृष्णप्रिया

भैया ! मैंने ब्रह्माजी प्रार्थना से यदुकूल में श्रीवसुदेवजी के यहाँ अवतार लिया है। अब मैं वसुदेवजी का पुत्र हूँ इसलिये सर्वलोग वासुदेव कहते हैं ॥ ४१ ॥ सुनो बाबा ! भूतलपर कालनेमि कंस के रूप में आया था मैंने उस असुर का संहार किया है। साथ में उसके वध के पूर्व साधुओं के द्रोही पूतना तृणावर्त प्रलम्ब आदि असुरों का भी विनाश कर चुका हूँ। राजन् यह जो भस्म हो गया वह काल यवन था। सुनो ! मेरी ही सूचना से अथवा प्रेरणा से तुम्हारी दृष्टि पड़ते ही भस्म हो गया है ॥ ४२ ॥ राजन् मुचुकुन्द तुम मुझे प्रिय हो इसलिये तुमपर अनुकम्पा करने के लिये ही मैं इस गुफा में आया हुँ। भैया इस जन्म के पूर्व में भी तुमने मेरी बहुत आराधना की है और स्वभाव भक्तवत्सल होने के कारण मैं आया हूँ ॥ ४३ ॥ भैया मुचुकुन्द ! हे राजर्षे ! जो कुछ कामना हो विना संकोच माँग लो। राजन् जो भी इच्छा लालसा अभिलाषायें होगी सर्व पूर्ण करूँगा। जो जीव मेरी शरण आता है उसके लिये मैं काम पूरक हूँ। उसके लिये कोई इच्छा अपूर्ण नहीं रहती, जिसके लिये वह चिन्ता करे ॥ ४४ ॥

### श्रीशुक उवाच

**इत्युक्तस्तं प्रणम्याह मुचुकुन्दो मुदान्वितः। ज्ञात्वा नारायणं देवं गर्गवाक्यमनुस्मरन् ॥ ४५ ॥**

### मुचुकुन्द उवाच

**विमोहितोऽयं जन ईश मायया त्वदीयया त्वां न भजत्यनर्थदृक्।**
**सुखाय दुःखप्रभवेषु सज्जते गृहेषु योषित् पुरुषश्च वञ्चितः ॥ ४६ ॥**
**लब्ध्वा जनो दुर्लभमत्र मानुषं कथञ्चि[1]दव्यङ्गमयत्नतोऽनघ।**
**पादारविन्दं न भजत्यसन्मतिर्गृहान्धकूपे पतितो यथा पशुः ॥ ४७ ॥**
**ममैष कालोऽजित निष्फलो गतो राज्यश्रियोन्नद्धमदस्य भूपतेः।**
**मर्त्यात्मबुद्धेः सुतदारकोशभू[2]ष्वासज्जमानस्य दुरन्तचिन्तया ॥ ४८ ॥**

---

१. दप्यङ्ग-वीर. विज. । २. कोशेष्वा-विज. ।

### कर्दमक्षमा

अन्वयः—श्रीशुक: उवाच—इति उक्त:, मुचुकुन्द:, मुदान्वित:, तम्, नारायणम्, देवम्, ज्ञात्वा, गर्गवाक्यम्, अनुस्मरन् तम्, प्रणम्य, आह ॥ ४५ ॥ मुचुकुन्द: उवाच—हे ईश ! त्वदीयया, मायया, विमोहित:, अयम्, जन:, पुरुष:, च, योषित्, वञ्चित:, अनर्थदृक्, दुःखप्रभवेषु गुहेषु, सुखाय, सज्जते, किन्तु, त्वाम्, न, भजति ॥ ४६ ॥ हे अनघ ! अयम्, जन:, अयत्नत:, कथञ्चित्, अत्र अव्यङ्गम्, दुर्लभम्, मानुषम्, लब्ध्वा, असन्मतिः, गुहान्धकूपे, पतित:, यथा, पशु: तथा, पादारविन्दं न भजति ॥४७॥ हे अजित ! सुतदारकोशभूषु, आसज्जमानस्य, मर्त्यात्मबुद्धे:, राज्यश्रिया, उन्नद्धमदस्य, भूपते:, दुरन्तचिन्तया, मम, एष:, काल: निष्फल: गत: ॥ ४८ ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

अष्टाविंशतितमे युगे भगवानवतरिष्यतीति वृद्धगर्गवाक्यमनुस्मरन्नित्यर्थः ॥ ४५ ॥ त्वद्भक्तिरेव केवलं दुर्लभा । कामास्तु तुच्छा न वरणयोग्या इत्याशयेनाभक्तानां संसारमष्टभिः प्रपंचयंस्तौति । विमोहित इति । हे ईश योषित्पुरुषश्चेति द्विविधोऽप्ययं जनस्त्वदीयया मायया विमोहितोऽतोऽनर्थदृक् । अनर्थे संसारे दृक् दृष्टिर्यस्यासौ । यद्वा । अर्थं परमार्थस्वरूपं त्वां न पश्यतीति तथा । अतस्त्वां न भजति । किं तु परस्परं वंचितः सन्सुखेच्छया दुःखानामेव प्रभवो येषु तेषु गृहेष्वेव सज्जत इति ॥ ४६ ॥ किं च कामसुखं सुकरादिष्वपि संभवति । भगवद्भजनं तु न मानुषजन्मव्यतिरेकेणेति मानुषत्वं प्राप्य त्वामभजन्नतिमूढ इत्याह । लब्ध्वेति । अत्र कर्मभूमौ । अव्यंगमविकलांगम् । किं च । असति विषयसुखे मतिर्यस्य सः । गृहमेवांधकूपस्तस्मिन्निपतितः । यथा पशुस्तृणलुब्धोंऽधकूपे पततीति ॥ ४७ ॥ न केवलमस्य जनस्येयं गतिः । किं तु ममापि तथैवेत्याह । ममैष इति । मर्त्ये शरीरे आत्मबुद्धिर्यस्य तस्य ममात एव सुतादिष्वासज्जमानस्य ॥ ४८ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

इतीत्थम् । तं कृष्णम् । अष्टाविंशतितमे वैवस्वतमन्वन्तरगताष्टाविंशतितमावृत्त्या गते द्वापरे युग इत्यर्थः । वृद्धगर्गवाक्यं गर्गेण तस्मै प्रोक्तं वाक्यमिति पुराणान्तरात् । इत्यर्थ इति—गर्गपदेन वृद्धगर्गो ग्राह्य इति ज्ञेयम् ॥ ४६ ॥ भगवद्भक्तेर्दौर्लभ्यं द्योतयन्कामानामनर्थहेतुतामाह—त्वद्भक्तिरित्यादिना । यतो विमोहितोऽतो हेतोः । अनर्थमनर्थहेतुं सांसारिकविषयसुखं पश्यतीति तथा । अतोऽनर्थदृक्त्वात् । परस्परं पुरुषेण स्त्रीवंचिता, स्त्रिया च पुरुषः, निजनिजकपटेनेति ज्ञेयम् । सज्जते आसक्तो भवति । त्वदीययेति दुर्लंघ्यत्वमभिप्रेतम् । अयमिति—एतच्च प्रत्यक्षमेवेत्यर्थः । गृहेषु तत्संबंधिपुत्रधनादिषु चासक्तो भवति । न च साक्षाद्दुःखेऽपि कदाचिन्निर्विण्णः स्यात्, रत्यादिना प्रतारितत्वादित्याह—वञ्चित इति ॥ ४७ ॥ विषयसुखसौलभ्येऽपि हरिभजनं दुर्लभमित्याह—किञ्चेति । अत्यनर्थमाह—किञ्चेति । तथायमपि विषयलुब्ध इत्यर्थः । अहो द्वित्रिवराटकमूल्येनाऽज्ञश्चिन्तामणिं विक्रीणातीत्याह—लब्ध्वेति । अनघ हे यत्किंचिद्भजनेन सर्वदुःखनिवर्तक । कथंचित् पूर्वादृष्टेन । पादारविंदं त्वदीयमिति प्रकरण-बलात्साक्षादनुक्तिः । संभ्रमेणाऽयत्नतो न भजति अप्रयासेन तस्य यद्भजनं तदपि न कुरुते । अभजने हेतुः—यथा पशुस्तथैवासंमतः विवेकरहितः, अतो गृहांधकूपे पतितश्च भवति ॥ ४८ ॥ स्वस्यापि तथात्वमाह—नेति । एष एतच्छरीरसंबंधी । अजित सर्वेश्वर । उन्नद्धमुच्छृङ्खलम् । अत एव अनात्मबुद्धित्वादेव । दुष्टोंतः परिणामा येषां ते दुरन्ता विषयास्तेषां चिंतया संपादनेच्छया । यमहं निन्दामि स चाहमेवेत्याह—ममेति विश्वनाथः । मम तु तत्राऽविशेष इत्याह—ममेति । एष बहुयुगलक्षणः । निष्फलत्वे हेतुः—अजित हे मद्विधबहिर्मुखावशीकृत । भक्तिविघ्ने हेतुः—भूपतेः सर्वपृथ्वीशाभिमानिनः । अतो राज्यश्रियोन्नद्धः संवृद्धो मदो यस्य तस्य । यत एव मर्त्यात्मबुद्धेः, यत एव च सुतादिष्वप्यासज्यमानस्य तत्रापि 'इदमद्य मया लब्धम्' इत्याद्युक्तदुरंतचिन्तयाऽपार-चिंतनेन, यद्वा—दुःखमते यस्यास्तया तादृशचिन्तया । अतो न केवलं निष्फलत्वं किन्तु दुःखदत्वमपीति भावः ॥ ४९ ॥

### श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी

इति एतदुक्तः सन् गर्गवाक्यमनुस्मरन् तं नारायणं देवं स्वयं भगवन्तं कृष्णं ज्ञात्वा सुष्ठु निश्चित्य मुदाऽन्वितः प्रणम्य साष्टाङ्गं नत्वाऽऽह ॥ ४६ ॥ त्वदीययेति दुर्लङ्घ्यत्वमभिप्रेतम् अयमिति एतच्च प्रत्यक्षमेवेत्यर्थः । गृहेषु तेषु तत्सम्बन्धिपुत्र-धनादियु च सज्जते आसक्तो भवति न च साक्षात् दुःखेपि कदाचिन्निर्विण्णः स्यात् रत्यादिना प्रतारणादित्याह—वञ्चित इति ॥ ४७ ॥ मानुषं मानुष्यम् अनघ हे यत्किंचिद्भजनेन सर्वदुःखनिवर्त्तक ! कथञ्चित्पूर्वादृष्टेन लब्ध्वा पादारविन्दं त्वदीयमिति प्रकरणबलात् साक्षादनुक्तिः सम्भ्रमेण अयत्नतो न भजति अप्रयासेन तस्य तद्भजनं तदपि न कुरुते अभजने हेतुः यथा पशुस्तथै-वासन्मतिः विवेकरहितः अतो गृहान्धकूपे पतितश्च भवति ॥४८॥ मम तु तत्र विशेष इत्याह ममेति—एष बहुयुगलक्षणः निष्फलत्वे हेतुः, अजित, हे मद्विधबहिर्मुखावशीकृत ! भक्तिविघ्ने हेतुः भूपतेः सर्वपृथ्वीशाभिमानिनः, अतो राज्यश्रिया उन्नद्धः सम्वृद्धो मदो यस्य तस्य अतो मर्त्यात्मबुद्धेः, अत एव च सुतादिष्वप्यासज्जमानस्य तत्रापि "इदमद्य मया लब्धम्" इत्याद्युक्तदुरन्तचिन्तया अपारचिन्तनेन । यद्वा, दुःखमन्ते यस्यास्तया तादृशचिन्तया अतो न केवलं निष्फलत्वं किं तु दुःखदत्वमपीति भावः ॥ ४९ ॥

### श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी

'इति' एतदुक्तः सन् गर्गवाक्यमनुस्मरन् तं नारायणं ज्ञात्वा मुदान्वितः प्रणम्य साष्टांगं नत्वाह। अत एव देवं द्योतमानम् ॥ ४४ ॥ ईश हे परमेश्वर ! त्वदीययेति मायाया अपि महाशक्तित्वेन दुर्लङ्घ्यत्वमभिप्रेतम्। अत एव विशेषेण मोहितः, अयमिति—एतच्च प्रत्यक्षमेवेत्यर्थः। यद्वा, सर्व्वोऽप्ययं जनो जीवो गृहेषु तत्सम्बन्धिपुत्रधनादिषु सज्जते आसक्तो भवति, न च साक्षाद्दुःखेऽपि कदापि निर्व्विण्णः स्यात्, रत्यादिना प्रतारणादित्याह—वञ्चित इति। अन्यत्तैर्व्याख्यातम्। यद्वा, अयं सत्कुल-जन्मापि मल्लक्षणो जनो निर्व्वेदेन देहादौ निरभिमानत्वादहमित्यस्याप्रयोगः। अनर्थदृक् विषयदृष्टिः, योषित् पुरुषो मर्त्यः, च अपि, योषिद्भिर्गृहैर्वा वञ्चितोऽपि। अन्यत् समानम् ॥ ४५ ॥ मानुषं मनुष्यं नृदेहमित्यर्थः। अनघ ! हे भजनमात्रेण सर्व्वदुःख-निवर्त्तक ! कथञ्चित् पूर्व्वादृष्टेन त्वदिच्छया वा, अत एवायत्नतो लब्ध्वापि; यद्वा, कथञ्चिदप्ययत्नतोऽप्रयासेनापि न भजति, पादारविन्दं त्वदीयमिति प्रकरणबलात्। यद्वा, अरविन्दरूपकेण स्वत एव त्वदीयत्वबोधनात् साक्षात्तदनुक्तिर्भक्तिविशेषेण। पतितो भवति किंवा वर्त्तमानेऽप्यतीतनिर्द्देशः, पातनिर्द्धारात्। अन्यत्तैर्व्याख्यातम्। यद्वा, अभजने हेतुः—यथा पशुस्तथा असन्मतिर्विवेक-रहितः, अतो गृहान्धकूपे पतितः सन्। पक्षान्तरे जनोऽयं मल्लक्षणः; अर्थः पूर्व्ववत् ॥४६॥ एष बहुयुगलक्षणः, यद्वा, त्वदवतरणेन सर्व्वोत्तमोऽयम्, यद्वा, द्वापरशेषरूपः। अजित ! हे कालावशीकृत ! यद्वा, निष्फलत्वे हेतुः—अजितेति, भक्त्या त्वदवशीकरणादिति भावः। किञ्च, राज्यश्रियेत्यादि भूपतेः सर्व्वपृथ्वीस्वाम्यभिमानिनः, अतो राज्यश्रियोन्नद्धः संवृद्धो मदो यस्य तस्य, अत एव मर्त्यात्मबुद्धेः, विपरीतो वा हेतुहेतुमद्भावः। दुरन्तचिन्तया सुतादिपोषणाद्यर्थमनन्तचिन्तया ( गी० १६।१३ ) 'इदमद्य मया लब्धम्' इत्याद्युक्तदुरन्तया अपारचिन्तनेन, यद्वा, दुःखमन्ते यस्यास्तया चिन्तया। एवमन्यतोऽधिकमात्मनः कालनिष्फलत्वमुक्तम्। पक्षान्तरे—अतोऽयं मल्लक्षणो जनः पदारविन्दं न भजति, अतो निष्फल एव गतः। न च केवलं त्वदभजननिष्फल एव, किन्तु साम्राज्यादिना दुःखदोऽपि वृत्त इत्याह—राज्येति ॥ ४७ ॥

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम्

योषित्पुरुषश्च योषिदात्मकः पुरुषात्मकश्च लोक इत्यर्थः ॥ ४७–५० ॥

### श्रीमद्वीरराघवाचार्यकृता भागवतचन्द्रचन्द्रिका

इतीति। इतीत्थम्भगवतोक्तो मुचुकुन्दः तं श्रीकृष्णं तदेवं तत्रापि नारायणं ज्ञात्वा तदुक्तिभिरिति शेषः। गर्गस्य वृद्धगर्गऋषेर्वाक्यमष्टाविंशतितमे युगे भगवान् वसुदेवगृहेऽवतरिष्यतीत्येवम्विधमनुस्मरंश्च मुदा हर्षेण युक्तः प्रणम्योवाच ॥ ४६ ॥ उक्तिमेवाह—विमोहित इत्यादित्रयोदशश्लोकात्मिकां यदुक्तं "वरान् वृणीष्व राजर्षे सर्वान् कामान् ददामि ते" इति तस्योत्तरोप-युक्तमाह—विमोहित इति। विषयाभिलाषेणैव निदानेनेदृग्संसृतिरूपानर्थं प्राप्तोऽहं भूयो विषयानेव वरयेति चोदयता त्वया वञ्चितः स्यामतो भक्तवञ्चनं तवानुचितमिति मैवं वादीरित्यभिप्रायः। हे ईश ! त्वदीयया मायया विमोहितो योऽयं मत्प्रभृतिर्योषिच्च योषिदात्मकः पुरुषात्मकश्चेत्यर्थः। जनस्त्वां निरतिशयपुरुषार्थभूतं न भजति किन्तु स्वानर्थविषये दृग्बुद्धिर्यस्य तथाभूतः वस्तुतोऽनर्थहेतुमप्यर्थवन्मन्यमानः प्रभवन्त्येभ्य इति प्रभवाः दुःखस्य प्रभवाः तेषु दुःखैकनिदानेषु गृहेषु सुखलेशाभासप्रभवेषु सुखाय सज्जते सक्तो भवति स जनः पूर्वमेव त्वया वञ्चित इत्यर्थः ॥ ४७ ॥ नन्वित्थं जनं वञ्चयन्नहं निर्घृणो विषमश्च किमित्यत आह, लब्ध्वेति। हे अनघ ! न विद्यते यद्भजनादघं तथाभूतेत्यर्थः अयत्नतः स्वप्रयत्नमन्तरेणापि केवलमनुजिघृक्षैकस्वभावत्वत्-सङ्कल्पादेव हेतोरत्र कर्मक्षेत्रे दुर्लभमपि मानुषमङ्गं शरीरं त्वदाराधनोपयुक्तं प्राप्याप्ययं जनस्त्वत्पादारविन्दं निरतिशयपुरुषार्थरूपं तत्प्राप्त्युपायभूतं च न भजति। किन्त्वसन्मतिः प्रकृतिपरिणामात्मकदेह एव मतिरात्माभिमानो यस्य तथाभूतः केवलं गृहमेवान्ध-कूपः तस्मिन् पतितो भवति यथा पशुरजानंस्तृणावृते कूपे जिघृक्षया गतस्तत्र पतितो भवति तद्वत् नह्येतावता तव वैषम्यादि-कमापादयितुमुचितं केवलमनुजिघृक्षयैव स्वाराधनोपयुक्तकरणकलेवरादिप्रदानादिति भावः ॥ ४८ ॥ जनसामान्योद्देशेनोक्तमर्थं स्वस्मिन् पर्यवसाययति-ममेति। हे अजित ! एष भूतः कालो मम निष्फलो गतः मया निष्फलो नीत इत्यर्थ। कथम्भूतस्य राज्य-श्रियोन्नद्धः प्रभूतमदो यस्य दुष्टा विषयाभिलाषिणी मतिर्यस्य तत्र मर्त्ये मरणशीले देहे आत्मेति बुद्धिर्यस्य न केवलं मर्त्यात्मबुद्धे-रेव किन्तु सुतादिषु तद्रक्षणपोषणादिविषययापारचिन्तया आसज्जमानस्याऽऽसक्तस्याहङ्कारममकारयुक्तस्येति पदद्वयफलितोऽर्थः। तत्र कोशो धनागारम् ॥ ४९ ॥

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली

अनर्थदृक् स्वपुरुषार्थदर्शी न भवतीत्यर्थः। यद्वा, अनर्थं संसारमर्थं पश्यतीति दुःखप्रभवेषु दुःखहेतुषु पुरुषेण वञ्चिता योषित् तया पुनः पुरुषश्च वञ्चितः ॥ ४७ ॥ मायया मोहितत्वमुपपादयति-लब्ध्वेति। अत्र कर्मभूमौ मानुषमङ्गं देहम् असत्सु विषयेषु मतिर्यस्य स तथा अन्धकूपे पतितः पशुर्यथा स्वरूपं न भजति तथा गृहलक्षणान्धकूपे ॥ ४८ ॥ मर्त्यात्मबुद्धेर्देहात्म-बुद्धेः ॥ ४९ ॥

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी

अष्टाविंशतितमे युगे भगवानवतरिष्यति तं त्वं द्रक्ष्यसीति बृहद्गर्गवाक्यमनुस्मरन्नित्यर्थः ॥ ४६ ॥ त्वद्भक्तिं परिहाय कामा यतः व्रियन्ते एवैव तव मायेत्याशयेनाह—विमोहित इति । योषिच्च जनः पुरुषश्च जनो वञ्चित इत्यन्वयः ॥ ४७ ॥ अहो द्वित्रिवराटिकामूल्येनाज्ञश्चिन्तामणिम्विक्रीणातीत्याह—लब्ध्वेति । अत्र भारतभूमौ अव्यङ्गमविकलाङ्गम् ॥ ४८ ॥ यमहं निन्दामि स चाहमेवेत्याह—ममेति । मर्त्ये शरीरे एव आत्मबुद्धिर्यस्य तस्य ॥ ४९ ॥

### गूढार्थदीपिनी

गर्गवाक्यम् । द्वापरे भगवानवतरिष्यति त्वं च द्रक्ष्यसीत्येवंरूपम् ॥ ४४ ॥ अनर्थे संसारे दृक् दृष्टिर्यस्य । वञ्चितः परस्परं निजनिजकपटेन । सज्जते आसक्तो भवति ॥ ४५ ॥ अत्र कर्मभूमौ । कथञ्चित् भगवदनुग्रहेण । अव्यङ्गं पूर्णाङ्गम् । असति विषयसुखे । यथा पशुस्तृणलुब्धः सन् कूपे पतति ॥ ४६ ॥ उन्नद्धः संवृद्धः । आसज्जमानस्य आसक्तस्य । दुरन्ता अपारा ॥ ४७ ॥

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः

जन्मकर्माभिधानानीत्यादिभगवद्वाक्येन तं भगवन्तं नारायणं देवम् ज्ञात्वा अष्टाविंशतितमे युगे भगवानवतरिष्यतीति बृहद्गर्गवाक्यमनुस्मरन् मुदा हर्षेण युक्तः प्रणम्य आह ॥ ४६ ॥ वरान् वृणीष्वेति यदुक्तं तत्र प्राकृतपदार्थविषयकं वरं न कामये तव भक्तिमेव कामये इति वक्तुं तत्र कारणं दर्शयितुं प्राकृतपदार्थाशक्तेः संसारहेतुत्वं भगवद्भक्तेः मोक्षहेतुत्वं चाह–विमोहित इति नवभिः । हे ईश ! योषित् पुरुषश्चेत्युभयविधो जनः त्वदीयया मायया प्रकृत्या मोहितः, अनर्थे अनात्मनि देहे ह्यस्वकीये गृहादौ च दृक् अहन्तारूपा ममतारूपा च दृष्टिर्यस्य सः त्वां मुक्तिप्रदं न भजति अन्योन्यवञ्चितः सुखाय अत्यल्पसुखाय जैह्व्यौपस्थ्यानन्दाय दुःखानां तापत्रयाणां प्रभवेषु गृहेषु सज्जते ॥ ४७ ॥ अत्र त्वत्पादारविन्दभजनार्हे मनुष्यलोके अव्यङ्गमविकलाङ्गं भवत्पादारविन्दभजनार्हं मानुषं शरीरं लब्ध्वापि असति दुष्टे विषये मतिर्यस्य सः पादारविन्दं न भजति किन्तु तृणजिघृक्षया पशुर्यथा कूपे पतति तद्वद्विषयजिघृक्षया गृहान्धकूपे पतितो भवति ॥ ४८ ॥ आस्तामन्यस्य जनस्य कथाऽहमपि त्वन्मायामोहितोऽस्मीत्याह—ममेत्यादिना । मर्त्ये मरणधर्मिणि शरीरे आत्मबुद्धिर्यस्य तस्य ॥ ४९ ॥

### श्रीसत्यधर्मकृता श्रीभागवतटिप्पणी

गर्गवाक्यं स्वं प्रति प्रागुक्तं मुकुन्दमुचकुन्दसंवादो हरिभक्त्यङ्कुरप्ररोहकः श्रोतॄणामिति मतिमान्स एवं वासुदेवमुवाचेत्याह ॥ ४५ ॥ मुचुकुन्द उवाचेति । हे ईश अयं मनस्त्वदीयया त्वदधीनप्रकृतिरूपिण्या तवेच्छारूपिण्या च विमोहितः सन् त्वां न भजति । अर्थमनर्थत इत्यर्थः । स्वप्राप्यस्तं पश्यति सोऽर्थदृक् स नेत्यनर्थदृक् । नित्यपुमर्थभूतत्वदनवलोकक इत्यर्थः । अनर्थमर्थान्यं संसारादिकं पश्यतीति वा । सुखाय तत्प्राप्त्यर्थं दुःखप्रभवेषु दुःखस्य प्रभव उत्पत्तिर्येभ्यस्तेषु गृहेषु, जन इत्युक्तविभजनं करोति । योषित्पुरुषश्चेति । पुरुषेण वञ्चित इत्युचितविपरिणामेनान्वेति । वञ्चितो योषिद्वंचितः पुरुष इति योषित्पुरुषः पुरुषापदेशो योषिदधीरत्वात् । दुःखसाधनेषु सुखसाधनताभ्रमजनककर्मणा वञ्चितः सज्जते न धीरः पुमानित्ययं भामिनी सम इति वा ॥ ४६ ॥ मुख्यया त्वदिच्छयाऽमुख्यया प्रकृत्या निमित्तेन स्वकर्मणा च विमोहित इत्युक्तं मोहितत्वं विशदयति । लब्ध्वेति । हे अनघ ! जनोऽयत्नतः प्रयत्नं विना कथञ्चित्केनाप्येकेन सुकर्मणा । अत्र संसारेऽसारे दुर्लभं दुष्प्रापं मानुषं मङ्गलं लब्ध्वाऽप्यसन्मतिः सत्त्वं यद्भिन्नत्वादसद्विषयजातं तत्र मतिर्यस्य गृहरूपान्धकूपे पतितः पशुः स्वोत्तारकर्मचक्षाणोऽपि तत्र तृणादिचरणतो भवति तथा पादारविन्दं त्यजति ॥४७॥ स्वानुभूतं भूतनाथं प्रति विज्ञापयति ॥ ममेति । हेऽजित । एष एतावान्कालो राजश्रियोन्नद्धो मदो हन्ता यस्य स तस्य । भूपतेर्मर्त्ये शरीरे आत्मन इति ममेति बुद्धिर्यस्य तस्य । सुतदारकोशेष्वासज्जमानस्य मम दुरन्ता चैतत्पोषादिविषयिणी च सा चिन्ता च तया निष्फलो गतः । न नित्यं फलं सम्पादितमित्यर्थः ॥ ४८ ॥

### श्रीमद्वल्लभाचार्य्यकृता सुबोधिनी

एवं वचनेन यदर्थं स्वयं स्थितः स एवायमिति निश्चित्य स्तोत्रं कर्तुमियेषेत्याह **इत्युक्त** इति । भगवता वरं प्रार्थयेत्युक्तः स्तुत्वैव वरः प्रार्थनीय इति तं प्रणम्य स्तुतिमाह । यतोऽयं **मुचुकुन्दः** प्रसिद्धः, मुदा चान्तरन्वितो जातः । भगवद्वाक्येन संतोषोऽप्येका भगवत्स्तुतिः । तदा गर्गवाक्यमनुस्मरन्, भगवद्वाक्येन तस्यापि स्मरणे जाते, नारायणोऽयमिति निश्चित्य, स्तोत्रं कृतवान् । अनेन नारायणः पुरुष एव ज्ञातः न तु पुरुषोत्तमः । अथवा पुरुषमेव पुरुषोत्तमं मन्यते । भगवद्वाक्यं गर्गवाक्यस्मारकत्वेन जातमिति न फलसिद्धिः । अनेनैवाभिप्रायेण भगवतापि 'कामान् ददामी'त्युक्तम् ॥ ४४ ॥ भगवन्तं स्तौति त्रयोदशभिः **विमोहित** इति । अत्र द्वादशधा कालो निरूप्यते । तदतिक्रमार्थं च एकेन भगवत्प्रपत्तिरिति । तत्र कालेन सर्वे व्यामोहिता इति प्रथमं तामसराजससात्त्विकान् मुग्धान् गणयति त्रिभिः । तत्राप्याद्येन तामसमोहो निरूप्यते । अयं जनः त्वदीयया मायया विशेषेण मोहितः ।

ननु कालेनैव मोहितोऽस्तु, किं भगवन्मायाविमोहनेनेत्यत आह **ईशेति** । भवानेवेशः । तेन कालरूपो भूत्वा तान् विमोहयसीत्युक्तं भवति । अन्येनैतावत्कर्तुं न शक्यत इति । न ह्यन्यः भगवद्भजनं निवारयितुं शक्नोति । अपराधी स्यात् । अन्ये व्यामोहाः कालकृता भवन्तु नाम, भगवद्भजनहेतुः कालो भगवानेव । तदाह यतस्त्वां **न भजतीति** । ननु परमानन्दे कथं विचारकाणामप्रवृत्तिरिति चेत्, तत्राह **अनर्थदृगिति** । अनर्थ एव दृष्टिर्यस्य । यद्धि पश्यति, तज्जानाति, उभयं चेत्पश्येत्, तारतम्यं च जानीयात्, अयं त्वनर्थमेव पश्यति । ननु सर्वोऽपि दुःखान्निवर्तते, सुखार्थे प्रवर्तते, सुखदुःखे चात्मानुभववेद्ये, अतः कथमनर्थदर्शनमिति चेत्, तत्राह **सुखाय दुःखप्रभवेषु सज्जत** इति । प्रवृत्तिस्तु स्वसमानप्रकारज्ञानजन्यैव, परं तज्ज्ञानं भ्रान्तम्, तेन फले विपर्ययः । यद्दुःखस्थानम्, यतोदुःखमेवोत्पद्यते, तत्र सुखं भविष्यतीति, यतः प्रवर्तते, तत्राप्यासज्जते, तत्स्थानं निर्दिशति **गृहेष्विति** । दुःखप्रभवत्वमुपपत्त्योपपादयति **योषित्पुरुषश्चेति** । गृहे हि द्वयमेवास्ति । द्वयमप्यन्योन्यतः सुखापेक्षम् । यद्येकस्मिन् सुखं भवेत्, तत्रापि पुष्कलम्, तदा ह्यन्यस्मै प्रयच्छेत् , इतरेतराश्रयं कार्यं च न सिध्यत्येव । अतस्तयोर्दुःखमेव सहजम् ,तदनुवृत्तौ दुःखमेव भवेत् । न हि नद्यामग्निः प्राप्यते । नन्वनुभूयते सुखं कथमिति चेत्, तत्राह **वञ्चित** इति । केनचिद्वञ्चितः सुखं मन्यते । न हि युक्तिबाधितं प्रमाणबाधितं च क्वचित्सुखं भवति । अनुभवस्तु भ्रान्तानुभवतुल्यः । अतो लौकिके युक्तिबाधितं न प्रमाणम्, वैदिके श्रुतिरेव प्रमाणमिति। अन्योन्यसुखापेक्षित्वेन प्रवृत्तेः सुखाभावस्तत्र सिद्धः । 'पुन्नाम्नो नरकान्त्रायत' इति वाक्यात् पुरुषशब्देन नरक उच्यते, योषिच्छब्देन च सुतरां नरकम्, 'शालावृकाणां हृदयान्येता' इति 'स सोमो नातिष्ठते'त्यादि श्रुतिभिः स्त्रीणां निन्दाश्रवणात् । 'प्रजापतिरमृतमानन्द इत्युपस्थ' इति उपासनार्थं निरूपितम् । लोकप्रतिपन्नं दृष्टान्तीकर्तुं वा । आविर्भूते वा रसे तद्भवति । गृहत्वादेव परिच्छिन्नत्वान्न रसाविर्भावः । उभयोः परिगणनायाः कृतत्वात्तत्रेतराभावः सिद्धः । यत उभयोः सुखं भवेत् । चकारात्तदपत्यानि च । ते च व्याघ्रवत्ताभ्यामेव सुखेप्सवः । अतो युक्तिप्रमाणाभ्यां बाधादन्योन्यप्रवृत्तौ वञ्चित एव । समुदाये च तां निराकर्तुं वञ्चित इत्येकवचनम् ॥ ४५ ॥ एवं गृहासक्तस्य तामसस्य वञ्चनामुक्त्वा शास्त्रादिरतस्यापि विवेकिनोऽपि राजसस्य वञ्चितत्वमाह **लब्ध्वा जनो दुर्लभमिति** । विवेकसहितं मानुषमपि देहं प्राप्य कथञ्चिन्महता कष्टेन । **अव्यङ्गं** सर्वाङ्गसहितं सर्वेन्द्रियसहितं सर्वबुद्धिसहितं च महता शास्त्रप्रयासेन, जनत्वात्सर्वदा जायमानः, विशिष्टं कदाचिदेव प्राप्नोतीति । तादृशमपि प्राप्य भगवन्तं न भजतीति असन्मतिरेव । प्राप्तसामग्र्या अन्यथा उपयोगाभावात् । इन्द्रियाणामुपयोगोनुपयोगश्च पूर्वं निरूपितः । 'बिले बतोरुक्रमविक्रमान्ये' 'सा वाग्यया तस्य गुणान् गृणीत' इति च । अतो भगवत्पादारविन्दाभजने असन्मतिरेव भवति । असन्मतित्वाद्वा अभजनम् । अत एव गृहान्धकूपे पतति । उपर्युद्गमाभावात् । तत्र च पदार्थदर्शनाभावात् अन्धकूपत्वम् । विवेकी कूपेऽपि पतितः कदाचिदुपायेनोद्गच्छति । तदपि नास्तीति दृष्टान्तमाह यथा पशुरिति । पशुश्च तत्र व्याकुलोऽपि भवति । यतोऽधिकमेव दुःखं प्राप्नोति । निर्गमनोपायं च न वेद ॥ ४६ ॥ एवं राजसानां दूषणमुक्त्वा सात्त्विकानामपि स्वदृष्टान्तेन दूषणमाह **ममैष काल** इति । एष इति पूर्वमनुभूतः । स सर्वोऽपि शोकेन पुर एवावतिष्ठते । **अजितेति** संबोधनम् । न कालेन भवान् जितः, वयं तु जिता इति स्वदुःखनिवेदनमप्युक्तम् । कालो हि पुरुषस्य पुरुषार्थसाधने हेतुर्भवति । तदभावे निष्फल एव गतः । ननु विवेकयुक्तो भवान्, कथमेवं वदतीत्याशङ्क्याह **राज्यश्रियोन्नद्धमदस्येति** । राज्यश्रिया परमोन्मादजनिकया उन्नद्धो मदो यस्य । ननु राज्यश्रियाः मदजनकत्वे को हेतुः, तत्राह **भूपतेरिति** । सर्वे हि दोषा भूमौ भवन्ति, न स्वर्गे, नापि पाताले । तस्याश्च पतिः तद्दोषेण दूषित एव भवति । अतो दोषसंबन्धात् सज्वरस्यान्नभोजनमिव श्रियापि वृद्धिनाश एव भवति । **मर्त्यात्मबुद्धेरिति** । मर्त्ये मरणधर्मके शरीरे आत्मबुद्धिर्यस्य । पापं तु भूपतित्वजनितमल्पम्, आत्मनोन्यथाज्ञानं तु महत्पापम् । 'योऽन्यथा सन्तमात्मानमन्यथा प्रतिपद्यते। किं तेन न कृतं पापं चौरेणात्मापहारिणे'ति वाक्यात् । नित्यं चात्मानं बुद्ध्या मारयतीति मर्त्यपदेन वधदोषोऽपि सूचितः । किञ्च। **सुतदारकोशभूषु** आसमन्तात्सज्जमानोऽपि जातः । ममतामपि भवदीयेषु अकृत्वा पुत्रादिषु चतुर्षु कृतवान् । तत्राप्यासक्तिम्, तत्रापि तेषां तत्संबन्धेनात्मनश्च सहस्रचिन्तायुक्तः, तदीयान् पोषयिष्यामि, तच्छत्रून्मारयिष्यामीत्यादि दुरन्ता चिन्ता । यस्या अन्तोऽग्रिमफलं नरकपात इति । एवं त्रिदोषेण अहमपि मग्नः । आयुषो निष्फलता मर्त्यात्मबुद्धिः, पुत्रादिष्वासक्तिश्चेति । एकैकमप्यनर्थायेति न्यायेन चतुष्टयमुक्तम् ॥ ४७ ॥

### श्रीसुबोधिनीसारः

शुकोक्तिः । इत्येवमुक्तो मुचुकुंदो मुदा हर्षेणान्वितः तं प्रणम्याह । नारायणं देवं ज्ञात्वा अष्टाविंशे युगे विष्णुरवतरिष्यतीति वृद्धगर्गवाक्यं चिंतयन् ॥ ४५ ॥ हे ईश त्वदीयया मायया विमोहितो योषित् स्त्री पुरुषश्चेति द्विविधोऽनर्थे संसारे दृक् दृष्टिर्यस्य सोयं जनस्त्वां न भजति किं तु वंचितः सुखार्थं दुःखानां प्रभव उत्पत्तिर्येषु तेषु गृहेषु सज्जते रजति ॥ ४६ ॥ दुर्लभं दुष्प्रापम् अव्यंगं व्यंगरहितं मानुषं कथंचित्केनापि प्रकारेणायत्नतः स्वतो लब्ध्वा प्राप्यात्र भरतखंडे ते पादारविंदं न भजति। असत्सु मिथ्यापदार्थेषु मतिः सत्यधीर्यस्य स गृहमेवांधकूपस्तस्मिन् पतितः पशुरिव हे अनघ ॥ ४७ ॥ गतं शोचति । हे अजित। राज्यस्य श्रिया लक्ष्म्योन्नद्धो मदो यस्य मर्त्ये देहे आत्मबुद्धिर्यस्य तस्यानंतचिंतया पुत्रस्त्रीकोशभूमिषु आसज्जमानस्य भूपते राज्ञो मम एष कालो निष्फलो गतः ॥ ४८ ॥

## विवरणटिप्पणी

विमोहितोऽयमित्यत्र। **स्वसमानेति**। गृहेपि सुखसमान एव प्रकार इत्याकारकज्ञानजन्येत्यर्थः।

## गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

इत्येवं भगवतोक्तः, अतस्तद्वचनादेव गर्गस्य ऋषेर्वाक्यं 'अष्टाविंशतितमे युगे भगवान् वसुदेवगृहेऽवतरिष्यति' इत्येवविधमनुस्मरन् तं कृष्णं नारायणं देवं ज्ञात्वा मुदान्वितो हर्षेण पूर्णो मुचुकुन्दस्तं प्रणम्याहेत्यन्वयः॥ ४५॥ तदुक्तीरेव दर्शयति—विमोहित इति त्रयोदशभिः। 'त्वन्मायामोहितस्य पुनर्वरदानवचनेन प्रलोभनं परमेश्वरस्यानुचितमेव' इत्याशयेन सम्बोधयति—ईशेति। अयं मत्प्रभृतिसर्वोऽपि योषिदात्मकः पुरुषात्मकश्च जनस्त्वदीयया मायया विमोहितः। मोहमेव प्रपञ्चयति—अनर्थदृगिति। अर्थं परमपुरुषार्थभूतं परमार्थभूतं परमानन्दस्वरूपं त्वां न पश्यति इति तथा, अत एव त्वां न भजति। किंतु परस्परं वञ्चितः सन् सुखेच्छया दुःखान्येव प्रभवन्ति येषु ते दुःखप्रभवास्तेषु गृहेष्वेव सज्जते आसक्तो भवति॥ ४६॥ 'तव दर्शनादि लब्धवतो मम संसारो न युक्तः, सर्वपापनिवर्त्तकत्वात्' इत्याशयेन सम्बोधयति—अनघेति। अयतनतः-अनायासेन कथञ्चित् भवदनुग्रहेण अव्यङ्गं अविकलाङ्गं अन्तःकरणेन्द्रियादियुक्तं भजनयोग्यं मानुषं शरीरं अत्र भूमौ भारते वर्षे लब्ध्वाप्यसन्मतिः असती दुष्टा क्रान्ता विषयव्याप्ता मतिर्यस्य स जनो भवत्पादारविन्दं न भजति, किन्तु गृह एवान्धकूपस्तस्मिन् पतितो भवति। तन्न युक्तम्, विषयसुखस्य श्वसूकरादिसाधारणत्वात् नरकादिदुःखहेतुत्वाच्च। तत्र दृष्टान्तमाह—यथा पशुरिति। पशुर्यथा तृणलोभेनान्धकारयुक्ते कूपे पतति तद्वदित्यर्थः। 'गृहासक्तस्य न किञ्चित्सुखम्' इति सूचयितुमन्धत्वम्। 'ततो निःसरणमशक्यम्' इति सूचयितुं कूपत्वम्। 'विवेकी कथंचिन्निःसरति, अपि न विषयासक्तः' ममेति। इति सूचयितुं पशुतुल्यत्वं चोक्तम्॥ ४७॥ एवं जनसामान्योद्देशेन उक्तमर्थं स्वस्मिन् पर्यवसाययति। 'त्वमेवैकः कालकर्मस्वभावादिभिर्न वशीकृतः, 'अन्योऽपि त्वत्कृपयैव तद्वशाद्विमुच्यते नान्यथा' इति सूचयन् सम्बोधयति—अजितेति। कालो हि पुरुषस्य पुरुषार्थसाधने हेतुः। पुरुषार्थासिद्धौ च कालस्य निष्फलत्वम्। मम तु न त्वद्भजनादिपुरुषार्थः सिद्धः, अत एष भूतः कालो मम निष्फलो गतः मया निष्फलो नीत इत्यर्थः। 'कुतः पुरुषार्थप्रयत्नो न कृत' इत्यपेक्षायामाह—सुतदारकोशभूषु आसज्जमानस्य तद्रक्षणपोषणादिविषया दुरन्ता अपारा चिन्ता तया निष्फलो गतः, चिन्ताकुलचित्तस्य पुरुषार्थानुसन्धानाभावात्। कदाचिदनुसन्धाने सत्यप्यवकाशाभावाच्चेत्याशयः। कोशो धनागारम्। पुरुषार्थाननुसन्धाने हेत्वन्तरमप्याह—राज्यश्रिया उन्नद्धः प्रभूतो मदो यस्य तस्येति। तत्र हेतुमाह—भूपतेरिति। 'एवं सर्वथानर्थः कथम्' इत्यपेक्षायां "योऽन्यथा सन्तमात्मानमन्यथा प्रतिपद्यते। किं तेन न कृतं पापं चौरेणात्मापहारिणा" इति श्रुत्युक्तं सर्वानर्थमूलं दोषमाह—मर्त्यात्मबुद्धेरिति। मर्त्ये मरणशीले देहे आत्मा इति बुद्धिर्यस्य तस्येत्यर्थः॥ ४८॥

## अन्वितार्थप्रकाशिका

इत्युक्त इति॥ इत्येवं भगवतोक्तः अतस्तद्वचनादेव वृद्धगर्गस्य ऋषेर्वाक्यम् अष्टाविंशतितमे युगे भगवान् वसुदेवगृहेऽवतरिष्यति। तं त्वं द्रक्ष्यसीत्येवं विधमनुस्मरन् तं कृष्णं नारायणं देवं ज्ञात्वा मुदान्वितो हर्षेण पूर्णो मुचुकुन्दस्तं प्रणम्याह स्म॥ ४४॥ भक्तिरेव वरणीया नतु कामा इत्याशयेनाभक्तानां संसारं वदन् स्तौति—विमोहित इति॥ हे ईश! योषित्पुरुषश्चेति द्विविधोऽप्ययं जनः त्वदीयया मायया विमोहितोऽनर्थदृक् अनर्थे संसारे दृक् दृष्टिर्यस्यासौ। यद्वा। अर्थं परमार्थस्वरूपं त्वां न भजति किं तु परस्परं वञ्चितः सन् सुखाय सुखं लब्धुं दुःखानामेव प्रभवो येषु तेषु गृहेष्वेव सज्जते॥ ४५॥ लब्ध्वेति॥ हे अनघ! अयतनतः अनायासेन कथं चित् भवदनुग्रहेण दुर्लभम् अव्यङ्गम् अविकलाङ्गम् अन्तःकरणेन्द्रियादियुक्तं भजनयोग्यं प्रत्यङ्गमित्यपि पाठः। मानुषं शरीरम् अत्र भूमौ भारते वर्षे लब्ध्वाऽप्यसन्मतिः असती दुष्टा विषयव्याप्ता मतिर्यस्य स जनो भवत्पादारविन्दं न भजति किं तु गृह एवान्धकूपस्तस्मिन्पतितो भवति। पशुर्यथा तृणलोभेनान्धकारयुक्तेकूपे पतति तद्वत् यमहं निन्दामि स चाहमेवेत्याह—ममेति॥ हे अजित! राज्यश्रिया उन्नद्धः प्रभूतो मदो यस्य तस्य भुवः पतेमर्त्ये मरणशीले देहे आत्मा इति बुद्धिर्यस्य तस्य दुरन्तया चिन्तया पोषणादिविषयया सुतदारकोशभूषु आसज्जमानस्य आसक्तस्य मम एषः भूतः कालो निष्फल एव गतः॥ ४६-४७॥

## श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्

अष्टाविंशतिमे युगे भगवानवतरिष्यतीति वृद्धगर्गवाक्यमनुस्मरन् युगे कलियुगे॥ ४५॥ इदानीं सांसारिकजनं निंदयन्नष्टभिर्हरिं स्तौति विमोहित इत्यादिना। हे ईश अयं योषित् पुरुषश्चेति द्विविधो जनः मायया विमोहितः। अतः, अन्योऽन्यं वंचितः अतोऽनर्थदृक् अनर्थे प्रयोजनशून्ये प्राकृतवस्तूनि दृक् दृष्टिर्यस्यासौ। यद्वा। अर्थं परमपुरुषार्थरूपं तवोपासनं पश्यतीत्यर्थदृक् तथाभूतो न भवतीत्यनर्थदृक्। अतस्त्वां न भजति। तर्हि किं करोति तत्राह दुःखानां नानाविधक्लेशानां प्रभवो येषु तेषु गृहेषु सुखाय सुखप्राप्तये एव सज्जते सक्तो भवति॥ ४६॥ किंच स्त्रीसुखं तु पश्वादिष्वप्यस्ति त्वदुपासनं तु मानुषतनुं विना न भवति

अतो मनुष्यदेहप्राप्तौ सत्यामपि यस्त्वां न भजति स दुर्मतिरित्याह लब्ध्वेति । अत्र भारते अव्यंगं सर्वांगसंपन्नं यथा पशुस्तथा असति कामसुखे मतिर्यस्य सः । अतो गृहमेवांधकूपस्तत्र पतितः ॥४७॥ अहमपि तथाविध इत्याह ममेति हे अजित देवदैत्यैरजेय । मर्त्योमरणधर्मात्मकदेहे आत्मा अहमिति बुद्धिर्यस्य तस्य राज्यलक्ष्म्या उन्नद्धमदस्यात्यंतमदांधस्य अत एव सुतादिष्वत्यासक्तस्य मम ॥ ४८ ॥

## भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

इतीति । इतीत्थं, उक्तो भगवताऽभिहितः, मुचुकुन्दः, तं श्रीकृष्णं, देवं तत्रापि, नारायणं ज्ञात्वा, तदुक्तिभिरिति शेषः । गर्गवाक्यमष्टाविंशतितमे कलौ युगे भगवान् वसुदेवगृहेऽवतरिष्यतीत्येवंविधं वृद्धगर्गस्य ऋषेर्वाक्यं, अनुस्मरन् सन्, मुदा हर्षेण, अन्वितो युक्तः, प्रणम्य, आहोवाच ॥ ४५ ॥ तत्र यदुक्तं 'वरान् वृणीष्व राजर्षे सर्वान् कामान् ददामि ते' इति तत् सत्यं, परं तु विषयाभिलाषेणैव निदानेनेदृशसंसृतिरूपानर्थमहं भूयः प्राप्तस्तान्विषयानेव वरयेति चोदयता त्वया पुनः कामवरणं प्रति लालसोत्पादनं कृतं तेन यदि कामयाचनं कुर्यां, तर्हि सर्वथाऽहं त्वत्कृतवञ्चनवान् स्यां, मोक्षदस्य तव चैवं वञ्चनमनुचितमिति मादृशान् प्रति कामवरणमेव मा वादीस्त्वद्भक्तिरेव केवलं दुर्लभा, कामास्तु तुच्छा अतो न वरणयोग्या इत्यभिप्रयन् भगवदभक्तानां संसारमष्टभिः प्रपञ्चयन् स्तौति । विमोहित इति । हे ईश, त्वदीयया मायया, विमोहितः यः. अयं मत्प्रभृतिः, योषित्, पुरुषश्चेति द्व्यात्मकः जनः, त्वां निरतिशयपुरुषार्थभूतं, भवन्तं, न भजति । किं तु अनर्थे स्वानर्थभूते विषय एव दृक् बुद्धिर्यस्य तथाभूतः सन्, वस्तुतोऽनर्थहेतुमप्यर्थवन्मन्यमानः सन्, इत्यर्थः । प्रभवन्त्येभ्य इति प्रभवा दुःखस्य प्रभवास्तेषु, दुःखैकनिदानेष्वित्यर्थः । गृहेषु, सुखाय सज्जते सक्तो भवति । अतः सः, वञ्चितः । त्वया पूर्वमेव वञ्चित इत्यर्थः । परमेश्वरस्य तव कामदानेन वञ्चितवञ्चनं युक्तमिति भावः ॥ ४६ ॥ नन्वित्थं जनं वञ्चयन्नहं निर्घृणो विषमश्च किमित्यत आह । लब्ध्वेति । हे अनघ, न विद्यते यद्भजनादघमिति तथाभूतेत्यर्थः । अयत्नतः स्वप्रयत्नमन्तरेणापि, केवलमनुजिघृक्षैकस्वभावस्य तव संकल्पाद्धेतोरेवेत्यर्थः । अत्र कर्मक्षेत्रे भरतखण्डे, दुर्लभमुद्यमकोटिभिरपि दुष्प्राणं, अव्यङ्गमविकलाङ्गं, मानुषं मनुष्यसंबन्धि, त्वदाराधनोपयुक्तं शरीरं, अयत्नतः शरीरं, अयत्नतः प्रयासं विनैव, कथंचित् लब्ध्वा प्राप्यापि, अयं जनः, पादारविन्दं निरतिशयपुरुषार्थसाधनभूतं तव चरणकमलं न सेवते । किं तु असति प्रकृतिपरिणामात्मके देहे एव मतिरात्माभिमानो यस्य तथाभूतः सन्, केवलं गृहमेव विषयतृणाच्छादितोऽन्धकूपस्तस्मिन्, पशुः यथा तथा, पतितः । यथा पशुस्तृणाद्यैराच्छादितत्वात् कूपमजानंस्तृणबुभुक्षया तत्र गतस्तत्र निपतति, तद्वदयमपि विषयतृणलिप्सया पतित इत्यर्थः । केवलमनुजिघृक्षयैव स्वाराधनोपयुक्तकरणकलेवरादिप्रदातृत्वादवञ्चके त्वयि कथंचिदपि नैर्घृण्यवैषम्यादिसंभवो नास्त्येत्येव, तेन त्वया दयादत्तं नृजन्म लब्ध्वा त्वामभजन्मूढः कामसुखस्य श्वशूकरादिष्वपि संभवाद्भगवद्भजनस्य तु मनुष्यजन्मन्येव संभवादिति भावः ॥ ४७ ॥ जनसामान्येनोक्तमर्थं स्वस्मिन् पर्यवसाययति । ममेति । हे अजित, राज्यश्रिया, उन्नद्धः प्रभूतो मदो यस्य तस्य, दुष्टा विषयाभिलाषिणी मतिर्यस्य तस्य, मर्त्ये मरणशीले देहे, आत्मेति बुद्धिर्यस्य तस्य, सुताश्च दाराश्च कोशश्च भूश्च तेषु, आसज्जमानस्य आसक्तस्य अहंकारममकारयुक्तस्येत्यर्थः । मम एषः भूतः, कालः, दुरन्तचिन्तया सुतादिरक्षणपोषणादिविषययाऽपारचिन्तया, निष्फलः गतः । मया निष्फलो नीत इत्यर्थः । सुताः पुत्राः, दाराः स्त्रियः, कोशो धनागारम् ॥ ४८ ॥

## कृष्णप्रिया

श्रीशुकाचार्य जी कहने लगे कि राजन् ! जब भगवान् श्रीकृष्ण ने अनुग्रह कर अपना स्वरूप परिचय दिया तब महाराज मुचुकुन्द को महर्षि गर्ग जी का वचन स्मरण पथ में आया कि यही भगवान् पूर्ण पुरुषोत्तम हैं जो यदुवंश में प्रकट होने वाले थे आनन्दोल्लक्षित होकर राजा मुचुकुन्द श्री ठाकुरजी के श्रीचरणों में प्रणाम करके भगवान का गुणगान करने लगे ॥ ४५ ॥ हे नाथ ! संसार के सर्व जन आपकी माया से मुग्ध बन गये हैं इसलिये आपके श्रीचरणों की सेवा से विमुख हो रहे हैं । नश्वर पदार्थों के सुखों को नित्यसुख मानकर दुःख ही जिसका परिणाम है वैसे व्यर्थ कर्मों में ही लगे रहे हैं । स्त्री एवं पुरुष दोनों ही ठगे जा रहे हैं और गृह संसार सुख में ही लुब्ध बन चुके हैं ॥ ४६ ॥ हे पुण्यपुञ्ज, हे संसार से सर्वथा पर ! यह भूतल-भूमि सर्वथा पुण्यभूमि है इस पवित्र भूमि में मानव शरीर की प्राप्ति अति दुर्लभ है इसमें सर्वाङ्ग सुभग और सेवोपयोगी शरीर अनायास ही मिला । यदि इतनी नाथ की अहैतुकी कृपा और सर्वविध भजन सुविधा के रहने पर भी नश्वर संसार सुखों में ही—तुच्छ विषयों में ही जीवन खो दिया और श्रीहरि के श्री चरण कमलों की सेवा न किया उसने तो, तृण लोभ से पशु जैसे जल रहित अन्धकूप में पड गिरा वैसे वह जीव मोहान्ध कूप में गिर गया ॥ ४७ ॥ महाराज ! हे अजित ! राज्यलक्ष्मी के मद से एवं भूपति पद मद से पागल बने हुए मेरा सारा जीवन निष्फल गया । मैं आज पर्यन्त नश्वर देह को नित्य स्वरूप आत्म स्वरूप समझ कर पुत्र-पत्नी कोश सम्पत्ति पृथ्वी आदि पदार्थों में ही आसक्त रहा उन वस्तुओं को प्राप्त करने की रक्षण की बढ़ाने की चिन्ता में लगा रहा ॥ ४८ ॥

कलेवरेऽस्मिन् घटकुड्यसन्निभे निरूढमानो नरदेव इत्यहम् ।
वृतो रथेभाश्वपदात्यनीकपैर्गां [1]पर्यटंस्त्वागणयन् सुदुर्मदः ॥ ४९ ॥
प्रमत्तमुच्चैरितिकृत्यचिन्तया प्रवृद्धलोभं विषयेषु लालसम् ।
त्वमप्रमत्तः सहसाभिपद्यसे क्षुल्लेलिहानोऽहिरिवाखुमन्तकः ॥ ५० ॥
पुरा रथैर्हेमपरिष्कृतैश्चरन् मतङ्गजैर्वा नरदेवसंज्ञितः ।
स एव कालेन दुरत्ययेन [2]ते कलेवरो विट्कृमिभस्मसंज्ञितः ॥ ५१ ॥
निर्जित्य दिक्चक्रमभूतविग्रहो वरासनस्थः समराजवन्दितः ।
गृहेषु मैथुन्यसुखेषु[3] योषितां क्रीडामृगः पूरुष ईश [4]नीयते ॥ ५२ ॥

**कर्दमक्षमा**

अन्वयः—घटकुड्यसन्निभे, अस्मिन्, कलेवरे अहम्, नरदेव, इति, निरूढमानः, रथेभाश्वपदात्यनीकपैः, वृतः, त्वाम्, अगणयन्, सुदुर्मदः, गाम्, पर्यटन् ॥ ४९ ॥ इतिकृत्यचिन्तया, उच्चैः, प्रमत्तम्, प्रवृद्ध लोभम्, विषयेषु, लालसम्, क्षुल्लेलिहानः अहिः, आखुम्, इव, अप्रमत्तः, त्वम्, अन्तकः, सहसा, अभिपद्यसे ॥ ५० ॥ पुरा नरदेवसंज्ञितः हेमपरिष्कृतैः, रथैः, वा, मतङ्गजैः, चरन्, स, एव कलेवरः, ते, दुरत्ययेन, कालेन, विट्कृमिभस्मसंज्ञितः, भविष्यति ॥ ५१ ॥ हे ईश ! अभूतविग्रहः, दिक् चक्रम्, निर्जित्य, वरासनस्थः, समराजवन्दितः, पूरुषः, मैथुन्यसुखेषु, गृहेषु, योषिताम्, क्रीडामृगः, नीयते ॥ ५२ ॥

**श्रीधरस्वामिविरचिता भावार्थदीपिका**

उन्नद्धमदत्वं प्रपंचयति । कलेवर इति । घटकुड्यादिसदृशे दृश्येऽनात्मनि यत एवं सुदुर्मदोऽभवम् । अतो ममैष कालो निष्फलो गत इति ॥ ५० ॥ त्वामगणयंतं त्वमाक्रमसीत्याह । प्रमत्तमिति । प्रमत्तमनवहितम् । त्वामंतकमविगणय्य देहादिष्वासक्तमिति यावत् । कुतः प्रमत्तम् । इतिकृत्यचितया एवमेवं करणीयमिति मनोरथपरंपरया मनोरथे भग्नेऽपि विषयेषु लालसमुत्सुकम् । प्राप्तेऽपि पुनः प्रवृद्धो लोभस्तृष्णा यस्य तमंतकस्त्वमभिपद्यसेऽभिभवसीत्यर्थः । क्षुधा सृक्किणी लेलिहानोऽहिराखुं मूषकमिवेति ॥ ५१ ॥ किं च कालात्मना त्वयाऽभिपन्नो देह एवं भवतीत्याह । पुरेति । श्वसृगालादिभिर्भक्षितो विट्संज्ञितस्तैरभक्षितः कृमिसंज्ञितो दग्धो भस्मसंज्ञितो भवति इति बुद्धया विचार्यैवं भूतशरीरे ममतां कुर्वंतो जना हरिं नाराधयन्ति ते आत्मनि शत्रुभूता ज्ञेयाः सततम् । यतः "योनेः सहस्राणि बहूनि गत्वा दुःखेन लब्ध्वाऽपि च मानुषत्वम् ॥ सुखावहं ये न भजन्ति विष्णुं ते वै मनुष्यात्मनि शत्रुभूताः" इति ॥ ५२ ॥ किं च अंतकप्राप्तेः प्रागपि दिग्विजयिनो राज्ञोऽपि पारतंत्र्यदुःखं तदवस्थमेवेत्याह । निर्जित्येति । अभूतविग्रहोऽविद्यमानसंग्रामः । पूर्वं ये समाना राजानस्तै राजभिर्वंदितोऽपि मिथुनीभावः सुरतमेव परं सुखं येषु तेषु योषितां गृहेषु क्रीडामृग इव इतस्ततो नीयते ॥ ५३ ॥

**श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः**

कले शुके वरा स्थितिर्यस्य तत्कलेवरम् । अलुक्समासः । "वरा प्रोक्ता शतावर्षा सुभगास्थितिभक्तिषु' इति धरणिधरोक्तेः । घटकुड्यसन्निभे निपभित्त्यादितुल्ये आदिपदमुपलक्षणलब्धमिति स्वामिचरणाभिप्रायः ॥ अस्मिन्सर्वदोषास्पदे । अगणयन् विस्मरणादिभिरनाद्रियमाणः ॥ ५० ॥ उत्सुकमुत्कंठावन्तम् । प्राप्तेऽपि—विषये इत्यर्थः । लेलिहान आसास्वादानः उं'दुरुर्मूषिकोऽप्याखुः' इत्यमरः ॥ त्वामभजन्तं जनं त्वत्स्वरूपः काल एवं ग्रसेदित्याह—प्रमत्तं विषयासक्तत्वेन त्वत्स्मरणादाववधानरहितम् । प्रवृद्धलोभं तेषां भोगादनुपरतम् । कालरूपेणान्तयतीत्यंतकस्त्वमित्यभेदोक्तिः । कालशक्तेस्तव भजनं भयेनापि युक्तमिति विवक्षया सहसा तर्कमतिक्रम्याभिपद्यसे आभिमुख्येन सर्वतो वा प्राप्नोषि । दृष्टान्ते विशेषणानि समानानि ॥५१॥ अन्यदाह—किञ्चेति । अभिपन्नो ग्रस्तः । तैः श्वशृगालाद्यैः । यतः उक्तं ग्रंथान्तरे—योनेरिति । सुखावहं स्वर्गापवर्गदम् । दुरत्ययेनानिक्रांतुमशक्येन । ते तत्रांशभूतेनेत्यर्थः । 'प्रभावं पौरुषं प्राहुः कालम्' इत्याद्युक्तेः । कलेवर इति पुंस्त्वमार्षम् ॥ ५२ ॥ अन्यदाह—किञ्चेति । अंतकप्राप्तेर्मरणात् । तस्मिन्नतिष्ठत इति तदवस्थम् । दिशां चक्रं मंडलं दिक्चक्रम् । समा विद्यावयःकुलदानैर्ये तुल्याः । नीयते प्राप्यते ॥ कामिमात्रस्य जीवने मरणेऽपि सुखं नास्तीति वदन्नादावैहिककामिनः साम्राज्येऽपि पराधीनतादुःखमाह—निर्जित्येति द्वाभ्याम् । वरासनस्थो महासिंहासनस्थः । योषिद्भिस्तद्दास्यादिभिश्च । गृहेषु विविधान्तःपुरेषु । क्रीडामृगो भवन्नीयते । हे ईश सर्वेषां त्वन्मायाधीनत्वादिति भावः ॥ ५३ ॥

---

१. स्त्वामगणय्यदु–वीर. विज. । २. चेल्क–वीर ; वै–विज. । ३. परेषु–विज. । ४. गी–विज. ।

### श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी

अस्मिन् सर्वदोषास्पदे अगणयन् विस्मरणादिभिरनाद्रियमाणः ॥ ५० ॥ तादृशचिन्तायाः पर्यवसानदशां व्यञ्जयति—प्रमत्तमिति । उच्चैः प्रमत्तं त्वयि स्मरणादौ चावधानरहितम् अतः प्राप्तेषु विषयेषु प्रवृद्धलोभं तेषां भोगादनुपरतम् अप्राप्तेषु तु तेषु लालसां च तदीप्साभराकुलं कालरूपेणान्तयसीत्यन्तकस्त्वम् अभेदोक्तिः कालशक्तेस्तव भजनं भयेनापि युक्तमिति विवक्षया सहसा तर्कमतिक्रम्य अभिपद्यसे आभिमुख्येन सर्वतो वा प्राप्नोषि दृष्टान्तेऽपि विशेषणानि समानानि ॥५१॥ मरणे चात्यन्तघृणाकरं कलेवरं स्यादिति समुखविकारमाह—पुरेति । यश्चरन्नासीत् स एव अत्र पुंस्त्वमार्षं ते तव प्रभावरूपेण कालेन ॥५२॥ कामिमात्रस्य जीवने मरणेऽपि सुखं नास्तीति वदन्नादावैहिककामिनः साम्राज्येऽपि पराधीनतादुःखमाह—निर्जित्येति, द्वाभ्याम् । वरासनस्थः महासिंहासने स्थितः नीयते योषिद्भिस्तद्दास्यादिभिरपि हे ईशेति सर्वेषां त्वन्मायाधीनत्वादिति भावः ॥ ५३ ॥

### श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी

अस्मिन्नचेतनत्वेन घटादितुल्यतया सर्वैः साक्षादनुभूयमाने, किंवा सर्व्वदोषास्पदे देहे च रथादिभिर्वृतो वेष्टित इति तेषां बाहुल्यं सूचितम्, अतः परितोऽटन् गच्छन् इतस्ततः सर्वत्र परिभ्रमन्नित्यर्थः । तत्र रथादयः सेनायाश्चत्वार्य्यङ्गानि, अनीकपाः सेनापतयः, रथादीनां यथोत्तरं वेष्टने नैकट्याधिक्यात्तत्तत्क्रमेण निर्द्देशः । अगणयन् विस्मरणादिना नाद्रियमाणः ॥ ४८ ॥ सुदुर्म्मदत्वेऽपि मरणमवश्यमेव, तदप्यकस्मादेव स्यादित्याह—प्रमत्तमिति । उच्चैरतिशयेन प्रमत्तं कालरूपेणान्तयसीत्यन्तकस्त्वमप्रमत्तो निजकृत्ये सदा सावधानः, सहसा सद्य एव अतर्कितं वा, अभिपद्यसे मारयसीत्यर्थः । अप्रमत्ततया सहसाभिपत्तौ दृष्टान्तः—क्षुदिति, अनेनाप्रमत्तत्वं सहसापत्तिश्च तस्य दर्शितम् । अन्यत्तैर्व्याख्यातम् । यद्वा, उच्चैः प्रमत्तं त्वयि स्वमरणादौ वावधानरहितम्, अत एव विषयेषु प्रवृद्धलोभम्, प्राप्तौ सत्यां तेषां भोगादनुपरतं तेष्वेव लालसमप्राप्तौ सदा तदीप्साभराकुलम् । अन्यत् समानम् ॥ ४९ ॥ मरणे चात्यन्तघृणाकरं कलेवरं स्यादिति समुखविकारमाह—पुरेति । यश्चरन्नासीत्, स एव, अत्र पुंस्त्वमार्षम् । इत्यत्यन्तविरोधस्थानतोक्ता । दुरत्ययेन यागयोगादिना केनचित् प्रयासेनाप्यपरिहार्य्येण । कुतः ? ते त्वदीयेन त्वदंशत्वादित्यर्थः ॥ ५० ॥ जीवनेऽपि साम्राज्यसम्पत्तावपि सुखं नास्त्येवेति द्वाभ्यां वदन्नादौ विषयभोगे पराधीनतादुःखमाह—निर्जित्येति । वरासनस्थो महासिंहासने स्थितः, नीयते योषिद्भिस्तद्दासदास्यादिभिर्वा । हे ईशेति सर्व्वेषां तन्मायाधीनत्वादिति भावः ॥ ५१ ॥

### श्रीसुदर्शनसूरिकृतशुकपक्षीम्

त्वमप्रमत्त इति अन्तकरूपस्त्वमप्रमत्तोऽभिपद्यते इत्यर्थः । क्षुल्लेलिहानः क्षुधा लोलजिह्वः ॥ ५१–५२ ॥ अभूतविग्रहः असञ्जातयुद्धः ॥ ५३ ॥

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका

उन्नद्धमदत्वमेव प्रपञ्चयति—कलेवर इति । घटकुड्यसदृशे जडे अस्मिन् कलेवरे रूढमूलः मानः आत्माभिमानो यस्य सोऽहं नरदेव इत्यभिमन्यमान इति शेषः । रथाश्चेभाश्चाश्वाश्च पदातयश्च तेषामनीकानि सैन्यानि तानि पान्तीति तथा तैः परिवृतो गां भूमिं पर्यटन् त्वामगणय्य तुच्छीकृत्य दुर्मद आसमिति शेषः ॥ ५० ॥ त्वामगणयन्तम् इत्थं दुर्मदं मां त्वं कालरूपेणाक्रमसीत्याह, प्रमत्तमिति । इतिकृत्यचिन्तया एवमेवं कर्त्तव्यम् इति मनोरथपरम्परया नितरां प्रवृद्धः लोभो यस्य तं विषयेषु शब्दादिषु लालसमासक्तचित्तं प्रमत्तं स्वहितानभिज्ञं मां त्वमप्रमत्तः, अन्तं करोतीत्यन्तकः विनाशहेतुः कालरूपो भूत्वाऽभिपद्यसे आकर्षसि ग्रससीति यावत्, यथा क्षुधा बुभुक्षया लेलिहान आस्वादमानः क्षुधा लोलजिह्व इति यावत्, यङ्लुङन्ताल्लिहेः कर्मणि लटः शानजादेशः अहिः सर्प आखुं मूषकमापद्यते तद्वत् ॥ ५१ ॥ नन्वतिदुर्ल्लभकल्याणतमं नरदेवशरीरं प्राप्यापि किमिति तन्निन्दयसीत्याशङ्कायामन्ततः कालाभिपन्नस्य तस्य गतिं पश्येत्यभिप्रायेणाह—पुरेति । पुरा तावत्स्वर्णालङ्कारालङ्कृतैः रथैर्गजैर्वा सञ्चरन् यो नरदेवसंज्ञितः नरदेव संज्ञाऽस्य सञ्जातेति तथा तारकादित्वादितच् स एव देहः दुरतिक्रमणीयेन कालेनाभिपन्नश्च तावत् श्वशृगालादिभिर्भक्षितो विट्संज्ञितः तैरभक्षितश्चेत् कृमिसञ्ज्ञितः दग्धश्चेद्भस्मसञ्ज्ञितः भवतीत्यर्थः ॥ ५२ ॥ "सर्वस्येशानः" इति श्रुत्युक्तविविधसर्वस्वत्वपेक्षस्वातन्त्र्यं त्वामविगणय्य स्वतन्त्रं मन्यमानस्य मम निहनिप्रतियोगिकपारतन्त्र्यमवर्जनीयमेवासीदित्याद्यभिप्रेत्याह–निर्जित्येति । दिक्चक्रं दिङ्मण्डलं निर्जित्याभूतोऽसम्भावितः विग्रहो विरोधो यस्य तथाभूतः असम्भावितप्रतिपक्ष इत्यर्थः । वरासनस्थः सार्वभौमासनाधिष्ठितः ये पूर्वं समास्तुल्या राजानः तैरपि वन्दितः पुरुषः हे ईश ! मैथुनमेव सुखं येषु तेषु गृहेषु योषितां स्त्रीणां केवलं क्रीडामृगः । क्रीडार्थं पोषितो वानरादिरिव नीयत इतस्ततश्चाल्यते इत्यर्थः । पुरुष इति पारोक्ष्यनिर्देशः सर्वदिग्विजयपुरुषाभिप्रायः ॥ ५३ ॥

### श्रीविजयध्वजतीर्थकृता पदरत्नावली

देहात्मबुद्धित्वं दर्शयति—कलेवर इति । दुरन्तविषयचिन्तया दुष्टो मदो विद्याभिजनलक्षणो यस्य स तथा ॥ ५० ॥ धनादिनिमित्तमदस्य दुष्टत्वं कथमत्राह—प्रमत्तमिति । क्षुधा जिह्वया सृक्किणी लेलिहन् ॥ ५१ ॥ किमत्र प्रमाणमित्यतः प्रत्यक्ष-

मेवेत्याह—पुरेति। यो देहः पुरा नरदेवसञ्ज्ञितः स एव देहो दुरत्ययेन कालेन विट्क्रमिभस्मसञ्ज्ञितो भवतीति शेषः श्वादिभक्षितो विष्ठासंज्ञितो भवति अदग्धः क्रमिसञ्ज्ञितः दग्धः भस्मसञ्ज्ञित इति विशेषः॥ ५२॥ इदं च लज्जाकरमित्याह—निर्जित्येति। दिक्चक्रं दिङ्मण्डलम् अभूतविग्रहः अजातयुद्धः वयसा कुलेन दानेन विद्यया च समं राजभिर्वन्दितः बहिरेवंविधः पुरुषो मैथुन्यपरेषु ग्राम्यसुखमात्ररतेषु योषितां क्रीडामृगो नीयत इत्यन्वयः॥ ५३॥

### श्रीमज्जीवगोस्वामिकृतक्रमसंदर्भः

कालत्रयोपपन्नानि भूतो,वा भविष्यति वा वर्त्तमाने वा कानिचित्दपीत्यर्थः॥ ४०-५४॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

कुड्यं भित्तिः यतोऽहं सुदर्मदोऽभूवम् अत एष कालो निष्फलो गत इति पूर्वेणान्वयः॥ ५०॥ त्वामभजन्तं जनं त्वत्स्वरूपः काल एवं ग्रसेदित्याह—प्रमत्तं विषयासक्तत्वेन त्वय्यनवहितम् इतिकृत्यमेवमेवङ्करणीयमिति तच्चिन्तया विषयेषु प्रवृद्धलोभं मनोरथे भग्नेऽपि लालसं विषयेषूत्सुकम् अन्तकः कालरूपी त्वं तु अप्रमत्तः सावधान एवाभिपद्यसे अभिभवसि क्षुधा सृक्किणी लेलिहानोऽहिराखुं मूषकं यथाभिपद्यते तथा॥ ५१॥ कालग्रस्तो देह एवं भवेदित्याह—पुरेति। यो रथैर्मतङ्गजैर्वा चरन् नरदेवनामा शोभित आसीत् स एव देहः विट्क्रमिभस्मनामा वीभत्सितो भवतीत्यर्थः॥ ५२॥ एवं स्वसजातीयजनस्य नरदेवत्वं विट्क्रमित्वं कालभेदगतमुक्तं दिग्विजयित्वं योषित्क्रीडामृगत्वं तु समकालगतमेवेत्याह—निर्जित्येति। अभूतविग्रहः निवृत्तसङ्ग्रामकृच्छ्र इत्यर्थः। पूर्वं ये समास्तैः राजभिर्वन्दितोऽपि पुरुषः योषितां क्रीडामृगो भवन्। गृहेषु विविधान्तःपुरेषु नीयते योषिद्भिस्तद्दास्यादिभिर्वेति शेषः॥ ५३॥

### गूढार्थदीपिनी

अस्मिन् नरदेवोऽहमिति निरूढाभिमानो गां भूमिं पर्यटन् त्वामपि अगणयन् अनाद्रियमाणः सुदुर्मदोऽभवम् अतो निष्फलो गत इति पूर्वेणान्वयः। कुड्यं भित्तिः। सन्निभे सदृशे॥ ४८॥ उच्चैरतिशयेन प्रमत्तमेनं जनम् अप्रमत्तस्त्वं सहसा अकस्मादेव अभिपद्यसे ग्रससे। अहिर्यथा मूषकम्। लेलिहानो लोलजिह्व इत्यर्थः।।४९।। चरन् विचरन्। श्वादिभिर्भक्षितो विष्ठेति। अभक्षितः क्रमिरिति। दग्धो भस्मेति। दुरत्ययेन दुरतिक्रमणीयेन॥ ५०॥ दिक्चक्रं दिङ्मण्डलम्। अभूतविग्रहोऽसंभावितसंग्रामः। पूर्वं ये समास्तैः वन्दितः। क्रीडामृगो वानर इव नीयते इतस्ततश्चाल्यते। वरासनं सिंहासनम्॥ ५१॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

घटकुड्यसन्निभे घटभित्तिसदृशे जडे अनात्मभूते कलेवरे अहं नरदेव इति निरूपमाणः गां भूमिं पर्यटन् त्वामगणयम् दुर्मदोऽभूवमिति शेषः॥ ५०॥ किञ्च, इतिकृत्यचिन्तया इदं कृतमिदं करिष्ये इति लोकप्रसिद्धकृत्यचिन्तया उच्चैरत्यन्तं प्रमत्तमनवहितं माम् अप्रमत्तस्तदनुरूपनिग्रहानुग्रहादौ सदा सावधानः, अन्तं तत्तत्काम्यकर्मफलसमाप्तिं करोतीति तथाभूतस्त्वमभिपद्यसे अभिभवसीत्यर्थः क्षुधा सृक्किणी, लेलिहानः अहिः आखुं मूषकमिव॥ ५१॥ यः कलेवरः नरदेवसंज्ञित आसीत्स एव ते तव शक्तिभूतेन कालेन श्वादिभक्षितो विट्संज्ञितस्तैरभक्षितः क्रमिसंज्ञितो दग्धो भस्मसंज्ञितो भवति तादृशकलेवराशक्त्या त्वामभजतां धिगिति भावः॥ ५२॥ किञ्च, दिक्चक्रं दिङ्मण्डलं निर्जित्य स्वप्रतापेन निष्कण्टकं कृत्वा अभूतविग्रहः अविद्यमानविग्रहः समराजवन्दितः समैः समसुखदुःखैः स्वकीयैराजभिर्वन्दितः एवं त्वदाराधनावसरं प्राप्यापि योषितां क्रीडामृगस्सन् मैथुनसुखेषु गृहेषु नीयते ताभिरिति शेषः। दुःखोदर्कं गृहं कलत्रादिपरवशानां त्वाभजतां धिगिति भावः॥ ५३॥

### श्रीसत्यधर्मकृता श्रीभागवतटिप्पणी

घटसन्निभे कुड्यसन्निभे घटैरेव विना मृदमेकस्योपर्येकस्थापनेन निर्मिते कुड्य इति वा। अनेन तीव्रव्रजनं ध्वनयति। कलेवरे शरीरेऽहं नरदेवो नृप इति निरूढो दृढो मानो मनःसमुन्नतिरहन्ता वा तद्वानहम्। रथेभाश्वपदात्यनीकपैर्वृतस्त्वामगणय्याविगणय्य। ल्यप् छान्दसः। दुर्मदो मां भूमिं पर्यटन् त्वागणयन्सुदुर्मद इति च पठन्ति। स च निश्शठः पाठः। य एवंविधस्तस्य मम कालो निष्फलो गत इत्यतीतेनान्वयः॥ ४९॥ इतिकृत्यचिन्तया। एवमनुष्ठाने स्वस्वकीयहितं विहितं स्यादित्यादिचिन्तया। उच्चैः प्रवृद्धलोभं विषयेषु लालसं तृष्णावन्तं विषयेषु प्राप्तेषु सत्सु प्रमत्त उच्चैः स्वस्वरूपातिरेकेण लब्धैर्विषयैः प्रमत्त इति वा। सहसा मदतर्कणेन हे सहस अप्रमत्त त्वं प्रतिपद्यसे। अप्रमत्तस्य तवाभिपत्तिर्मां प्रमत्तं प्रति भवति भगवन्नेवमिति निदर्शनं दर्शयति। क्षुधा लेलिहानो द्वे सृक्किण्यौ। अन्तको नाशकोऽहिराखुमिव मूषकमिवेति। स यथाऽऽखुं ग्रसति तथा त्वमप्रमत्तः प्रमत्तं मामभिपद्यसे। अत्र विशेषणीभूतमदादिनाशो ज्ञेयः॥ ५०॥ हेमपरिष्कृतै रथैर्मतङ्गजैश्चरन् मत्तवशश्चरन्निति वा। नरदेवेति

शंसितो यो देहः स एव कालेन दुरत्ययेनात्येतुमशक्येन कलेवरः कलेवरम् । अथ कलेवरं गात्रमितत्यमरात्कलेवरम् । हलदन्तादिति सप्तम्या अलुक् । सारमेयादिभुक्तश्चेद्विट्संज्ञितः । अदग्धोऽभक्षितश्च कृमिसंज्ञितो भवति दग्धश्च भस्मसंज्ञितो भवति कालमूलत इयतीदशां यातीति ॥५१॥ सहस्राश्वनायको गृहगृहिणीकार्पाससिचयप्रचयकृदितिवदेतादृशः प्रागेतादृशो मृगदृशां पुरत इतीरयति । निर्जित्येति । अभूतविग्रहोऽजातार्विदिक्चक्रं निर्जित्य परासनस्थः समराजैर्वन्दितश्चेदपि कदाचिदेवमपि भवतीत्याह। समरेऽजयं यथा भवति तथाऽऽदितः परैः खण्डित इति वा । पूरुषो मैथुन्यपरेषु मैथुयं ग्रामधर्मस्तदेव परं येषां ते तेषु गृहेषु योषितां क्रीडामृगो लीलामृगः कपिरिति यावत् । गीयते तस्यैतस्य च न तिलतुल्यव्यत्यास इति भावः । यो मैथुनी तन्निरत इति तद्वान् । अपरेषु पुरुषो गीयते । योषितां गृहेषु क्रीडामृगो गीयत इति वा ॥ ५२ ॥

## श्रीमद्वल्लभाचार्यकृता सुबोधिनी

एवं त्रिविधानामपि मोहमुक्त्वा विशेषतः स्वस्य परमं दोषत्रयमाह कलेवरेऽस्मिन्निति त्रिभिः । कालेन ग्रासोऽत्र निरूप्यते । तत्र कालस्य दोषाभावाय स्वदोषं निमित्तत्वेन निरूपयति **कलेवर** इति । अस्मिन् कलेवरे शरीरे निरूढमानः सन् सुदुर्मदो भूत्वा त्वामगणयन् जातोऽस्मि, तदा त्वं अन्तको भूत्वा अभिपद्यस इति द्वयोः संबन्धः । भगवतो ग्रासे षट् दोषाः अस्मदीया निमित्तभूताः । आदौ **कलेवरं** कले कलने कालभक्षणे वरमुत्कृष्टम् । कालः प्रथमतस्तदेव भक्षयति मृत्पाषाणादिभ्यः। अत एव प्रस्तरादयः चिरस्थायिनः, कलेवरमाशुतरविनाशि । न हि कालस्य भक्ष्ये तत्त्वेनैव कृते स्वस्याभिमानः सुखदायी भवति। किञ्च । **अस्मिन्निति** शयानः स्वकीयो देहः प्रदर्शितः । असंस्कृतो मृतप्रायः । अनेन स्वतोऽपि दोष उक्तः । परिच्छेदाचेतनत्वे निरूपयति । यथा घटः जलानयनार्थमुपयुज्यते, तच्च जलमन्यत्र विनियुज्यते, तथा कर्माणि संपाद्यन्ते, पुनस्तानि यत्र क्वचिद्विनियुज्यन्त इति । तादृशस्य केवलं कर्मसाधनभूतस्य आत्मतया स्वीकारः अत्यतं कुमतिफलम् । किञ्च । कुड्यसन्निभं भवेत् । कुड्ये गृहे यथा कश्चित्तिष्ठति, तथा कियत्कालस्थित्यर्थं भगवता कृतम् । एवमधिकरणत्वेन करणत्वेन आत्मनो भेदे प्रतीयमानेऽपि पुनस्तत्र **निरूढमानः** नितरां रूडो मानोऽभिमानोऽहमेवेति यस्य । अयमेकः पञ्चपर्वात्मको महान् दोषः । द्वितीयमाह **नरदेवेति**। **नरत्वमेव सन्दिग्धम्, कुतोऽमेध्यभाण्डस्य देवत्वम्** । नराणां देवः पूज्यो राजा । **इतीति** निश्चयार्थे । अहमित्यनुभवः प्रमाणम्। अतोऽत्र पर्वत्रयं निरूपितम् । तृतीयं दोषमाह **वृत** इति । रथादिभिश्चतुर्भिः सेनाङ्गैः सहितं यदनीकं सेना तेषां रक्षकैः सेनापतिभिः वेष्टितः । ते हि दुष्टाः घातुकाः । तैः सहित इति दुःसङ्गो निरूपितः । भूभाररूपं चतुर्थं दोषमाह । **गां पर्यटन्निति** । ननु भूमौ कश्चन पुरुषार्थः साध्यते, किन्तु भूमिमेव परितः, अटते । महान्तं दोषमाह पञ्चमं **त्वामगणयन्निति** । यदधीनं सर्वं स एव न गण्यत इति । सुष्ठु दुष्टो मदो यस्येति स्वाज्ञानमपि । एवं षड्भिर्दोषैर्व्याप्तं कालो भक्षयतीत्याह **प्रमत्तमिति** । एते षट् दोषाः सहजाः । ते च मिलिताः शीघ्रं फलपर्यवसायित्रिदोषमुत्पादयन्तीति निरूप्यते । उच्चैरितिकृत्यचिन्तया प्रमादः प्रवृद्धो लोभः। विषयलालसेति । तुल्यत्वाभावाय भगवतो दोषत्रयाभावश्च निरूप्यते । अप्रमत्तः क्षुल्लेलिहानः लोभरहितः विषयलालसारहितत्वाय सहसाभिपद्यस इति । यो हि विषयलालसः स कार्ये शिथिलप्रयत्नो भवति, भंगाभिनिवेशात्, क्रियाभोगयोर्विरोधात् । तस्य दोषाभावाय दृष्टान्तः प्रमत्तः असावधानः स्वार्थे । तत्र यद्यप्यज्ञानमपि हेतुः, तथापि दोषान्तरमप्याह **उच्चैरितिकृत्यचिन्तयेति**। इत्येतावन्निश्चयेन कर्तव्यमिति । एवं वा कर्तव्यमिति । **उच्चै**रिति सर्वापेक्षया इदमेवावश्यकम् । तत्रापि यदि कार्यमुपस्थितं भवेत्, तदा दोषो वा न भवेत् । तदपि नास्तीत्याह **चिन्तयेति** । चिन्तामात्रमेव । अनेनान्तःकरणं तत्रैव व्यापृतमिति । भगवता आत्मार्थमन्तःस्थापितं बहिर्विनियुक्तमिति महानेवापराधो निरूपितः । अयमसिद्धार्थसाधनरूप इति सिद्धार्थे भिन्नं—दोषमाह। प्रकर्षेण वृद्धो लोभो यस्येति । उपभोगार्थं हि तस्य सम्पादनं तदपि कृत्वा स्थापयत्येव, नोपभुङ्क्ते । किञ्च भुक्त्वापि तद्गतवैरस्यं ज्ञात्वापि पुनर्लालसो भवति । विषं यान्तीति विषयाः । विषं हि मारकं मृत्युमुखम्, तत्र स्वयं गच्छन्तः स्वभक्तमपि नयन्ति । एकोऽपि नयेत्, किं पुनर्बहव इति बहुवचनम् । यद्यपि भगवत इतिकृत्यचिन्ता वर्तते, अन्यथा न मारयेत्, तथापि न प्रमत्तः । अत एव हेतुर्वतत इति साध्यप्राप्तौ निषेधः । **सहसेति** । यदैव दोषत्रयोद्भवः, तदैव प्रतीकारकरणात् । पूर्वमेव क्वापि पलायनाभावायाभीति । कालस्य रूपमहिरिति । आखुश्च लीलाकर्ता, अन्यस्य भक्ष्यरूपं शरीरं गृहीत्वा सर्वदा सर्वापकाराय व्यापृतो भवति । ननु राज्ञोऽयं धर्मः परिपालनं कर्तव्यम्, तदर्थं शत्रवश्च मारणीयाः, तदर्थं चतुरङ्गबलसङ्ग्रहः, प्राणिनां हितार्थे धनग्रहणम्, कर्मफलभोगार्थं च विषयलालसेति गुणभूता एवैते किमिति दोषत्वेन गण्यन्ते इत्याशङ्क्याह **पुरा रथैरिति** । सत्यमेवं भवेत्, यद्ययं देहो देवो भवेत्, पूर्वं रथादिभिः चरन्नपि, राजत्वेन सम्मानितोऽपि, कलेवरो देहो विट्कृमिभस्मसंज्ञामेव लभते। मृतदेहस्य त्रिधा विनियोगः । काकादिभिर्भक्षिते विट्, शीर्णं सत् कृमयो वा भवन्ति, दाहे भस्म वा भवति । तामसराजससात्त्विकभावा निरूपिताः । अतः पर्यवसाने दुष्टत्वात् वृथाभिमानो दोषायैवेत्यर्थः ॥ ४८–५० ॥ एवं फलतः दोषानुक्त्वा क्रियातोऽपि त्रैविध्यमाह **निर्जित्य दिक्चक्र**मिति त्रिभिः । राजधर्माणां तामसत्वं, कर्मणां राजसत्वं, सत्सङ्गस्य सात्त्विकमिति विविच्य कर्मस्वरूपकथने वस्तुविवेको निरूपितो भवति । साधनप्रतिपादकाश्चैते त्रयः । तत्र राजत्वस्य स्त्रीसेवकत्वं भवति इत्यधोगतिः फलत्वेन निरूपिता । साधारणानां स्त्री दास्यमपि करोति । राज्ञां तु तत्सम्भावनाभावात् स्वयमेव दासो भवतीति तुल्यगतिरपि

नास्तीत्युक्तम् । आदौ **दिक्चक्रं** सप्तद्वीपवतीं भूमिं **निर्जित्य** वशीकृत्य, महता प्रयासेन तत्साधयित्वा, ततोऽपि महता कालेन अभूतविग्रहो भवति, न भूतः भवनयोग्यो विग्रहो यस्येति। ततः स्वस्थो भूत्वा वरासनस्थो भवति। ततः समराजभिः वन्दितः। एवं चतुर्धाप्युत्कर्षं प्राप्य चतुर्धापकर्षं प्राप्नोतीत्याह **गृहेष्विति**। योषितां गृहेषु बहुषु, एको बहुषु दासो भवतीति वैयग्र्यम्। **मैथुन्यपरेष्विति**। आन्तरोऽपि व्ययः। **क्रीडामृग** इति बाह्यसर्वनिवेदनम्। **मृग** इति। विद्यमानादप्यधिकपदार्थसाधकत्वमिति। परलोकनाशश्च। स्वयं पुरुषः सर्वसमर्थः, **ईशेति** निवेदनार्थं सम्बोधनम्। **ईयत** इति। प्रमाणं नात्र तिरोहितं किञ्चिदित्यर्थः॥ ५१॥

## श्रीसुबोधिनीसारः

घटकुड्याभ्यां संनिभे तुल्ये दृश्यत्वादनात्मत्वात् अस्मिन्कलेवरे शरीरे नराणां देव इति क्षीरस्वामी नरेषु देव इवेति भट्टिः। इति निरूढमान उत्पन्नगर्वोऽहं रथगजाश्वपतिसेनापतिभिर्वृतः त्वा त्वामगणयन् सुदुर्मदो गां पृथिवीं पर्यटन् आर्षं क्रियापदं व्यचरम्॥ ४९॥ इति कृत्यमेवं कर्त्तव्यम् तस्य चिंतया प्रवृद्धो लोभो यस्य तमुच्चैः प्रमत्तं विषयेषु लालसमुत्सुकम् अप्रमत्तोऽंतकः कालरूपस्त्वं सहसाऽकस्मादभिपद्यसे प्राप्नोषि ग्रससीति वा क्षुधा लेलिहानः सृक्किणी सास्वद्यमानोऽहिः सर्प आखुं मूषकमिव॥५०॥ पुरा पूर्वं हेम्ना सुवर्णेन परिष्कृतैरलंकृतैरथैर्मतंगजैर्हस्तिभिर्वा नरदेव इति संज्ञा यस्य जातास्तीति यश्चरन् चेष्टते स एव कलेवरः दुरत्ययेनानिवार्येण कालेन ते त्वया तद्रूपत्वात् कृमिविट्भस्मानीति संज्ञा जातास्तीति तथा भवति॥ ५१॥ राज्ञोपि दुःखमित्याह दिशां चक्रं मंडलं निर्जित्याभूतविग्रहो निर्वैरः सम्राट्त्वात् वरमासनं राज्यपदं तत्र स्थितः समैरात्मतुल्यैराजभिर्वन्दितः नमस्कृतः मैथुन्यं मिथुनीभाव एव सुखं येषु तेषु गृहेषु योषितां स्त्रीणां क्रीडामृग इव वश्यः पुरुष इतस्ततश्चाल्यते हे ईश॥ ५२॥

## विवरणटिप्पणी

कलेवरेऽस्मिन्नित्यस्याभासात्पूर्वं **चतुष्टयमिति**। वक्ष्यमाणं दोषत्रयं चतुर्थो दोषो ज्ञेयः। **दोषत्रयमाहेति**। मानं मदं भगवदवगणनां चाहेत्यर्थः। व्याख्याने **स्वदोषमिति**। अवगणनाया मुख्यदोषत्वादेकवचनम्। **निर्जित्येत्यत्र**। **मृग इतीति**। **मृगयत इति मृगः**। अधिकमन्वेषतीत्यर्थः।

इति द्वितीयाध्यायव्याख्या।

## गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

उन्नद्धमदत्वमेव प्रपञ्चयति—कलेवर इति। परभोगसम्पादकत्वेन भौतिकत्वेनाशुविनाशित्वेन मलसङ्ग्राहकत्वादिना च घटकुड्यसदृशेऽस्मिन् कलेवरे देहे नरदेवो राजा इत्येवं निरूढाभिमानोऽहं त्वा त्वां कालरूपमगणयन् रथाश्च इभाश्च गजाश्च अश्वाश्च पदातयश्च तेषामनीकानि सैन्यानि तानि पान्तीति तथा तैर्वृतो गां भूमिं पर्यटन् दुष्टो मदो यस्य तथाभूतो जातः, अतो ममैष कालो निष्फलो गत इति पूर्वेणैवान्वयः॥ ४९॥ 'त्वद्विमुखविषयिणं तु त्वमेव कालरूपेण ग्रससि' इत्याह—प्रमत्तमिति। इतिकृत्यचिन्तया 'इत्येवमिदं कर्तव्यम्' इति चिन्तया उच्चैरतिशयेन प्रमत्तं स्वकर्तव्यभवद्भजनानुसन्धानशून्यं जनमप्रमत्तः सावधानस्तत्तत्प्राणिकर्मभोगसमाप्तिमनुसन्दधानः अन्तकः कालरूपस्त्वं सहसा अकस्मादेव अभिपद्यसे बलाद्ग्रससीत्यन्वयः। इति कृत्यचिन्तायां हेतुमाह—विषयेषु लालसमिति। शब्दादिविषयेषु लालसा अभिलाषो यस्य तमित्यर्थः। ननु 'तत्तद्विषयप्राप्त्या तत्तत्कामनानिवृत्तौ इति कृत्यचिन्तापि निवर्तेतेति, तदा सावधानता स्यादेव' इत्याशङ्कानिरासार्थं विशेषणान्तरमाह—प्रवृद्धलोभमिति। तत्तद्विषयलाभेऽपि प्रवृद्धो लोभस्तृष्णा यस्य तम्। "लोभस्यान्तं न ययुर्जित्वा भुक्त्वा दिशो दश" इति वचनाल्लोभस्यान्ताभावान्न कदापि तस्य सावधानता सम्भवतीति भावः। कालाभिभवे दृष्टान्तमाह—क्षुल्लेलिहान इति। यथाऽन्नराशिं दृष्ट्वा मनोरथाकुलं तत आकृष्य स्वबिले अन्नसञ्चयं कुर्वन्तमन्नमुखमाखुं मूषकं मध्य एव क्षुधा लेलिहानो जिह्वयोष्ठप्रान्तौ स्पृशन् अहिः सर्पोऽभिपद्यते गिलति "इदमद्य मया लब्धमिमं प्राप्स्ये मनोरथम्। इदमस्तीदमपि मे भविष्यति पुनर्धनम्॥ असौ मया हतः शत्रुर्हनिष्ये चापरानपि" इत्यादिमनोरथव्याकुलं त्वमभिपद्यसे इत्यर्थः॥ ५०॥ 'कालात्मना त्वयाऽभिपन्नो देह एवं भवति' इत्याह पुरेति। पुरा जीवदवस्थायां हेमपरिष्कृतैः सुवर्णालङ्कारालङ्कृतै रथैर्गजैर्वा संचरन् यो नरदेवसंज्ञितो भवति स एव कलेवरो दुरत्ययेन दुरतिक्रमणीयेन ते त्वया कालरूपेण अभिपन्नः शृगालादिभिर्भक्षितो विट्संज्ञितः, तैरभक्षितो दग्धश्चेत् भस्मसंज्ञितः भवति। एवंभूते देहे ममतां कुर्वन्तो ये जनास्त्वां न भजन्ति ते आत्मनि शत्रुभूताः। तदुक्तं—"योनेः सहस्राणि बहूनि गत्वा दुःखेन लब्ध्वापि च मानुषत्वम्। सुखावहं ये न भजन्ति विष्णुं ते वै मनुष्यात्मनि शत्रुभूता" इति॥ ५१॥ 'किञ्च मरणात् प्रागपि चक्रवर्त्तिनोपि पारतन्त्र्यदुःखं तु तदवस्थमेव' इत्याह—निर्जित्येति। दिक्चक्रं दिङ्मण्डलं निर्जित्य अभूतः—असम्भावितः विग्रहो विरोधो यस्य तथाभूतः असम्भावितप्रतिपक्षः, अत एव वरासनस्थः सार्वभौमासनाधिष्ठितः, अत एव ये पूर्वं समास्तुल्याः राजानस्तैरपि वन्दितोऽपि पुरुषः हे ईश! मैथुन्यमेव सुखं येषु तेषु गृहेषु योषितां स्त्रीणां तु क्रीडामृगः वानर इव नीयते इतस्ततश्चाल्यते इत्यर्थः॥ ५२॥

## अन्वितार्थप्रकाशिका

कलेवर इति ॥ दृश्यत्वानात्मत्वादिना घटः कुड्यं भित्तिः तेन सन्निभे सदृशेऽस्मिन्कलेवरे देहे नरदेवो राजा इत्येवं निरूढाभिमानोऽहं त्वा त्वां कालरूपमगणयन् रथाश्च इभाश्च गजाश्च अश्वाश्च पदातयश्च तेषामनीकानि सैन्यानि तानि पान्तीति तथा तैर्वृतो गां भूमिं पर्यटन् दुष्टो मदो यस्य तथाभूतो जातः अतो ममैष कालो निष्फलो गतः ॥ ४८ ॥ प्रमत्तमिति ॥ कृत्यचिन्तया इदम् एवं कर्तव्यमित्यादिचिन्तया उच्चैरतिशयेन प्रमत्तं प्रवृद्धलोभं विषयेषु लालसमतिस्पृहावन्तं जनमप्रमत्तः सावधानस्तत्तत्प्राणिकर्मभोगसमाप्तिमनुसन्दधानः अन्तकः कालरूपस्त्वं सहसा अकस्मादेवाभिपद्यसे बलाद् ग्रससे । यथा क्षुधा सृक्किणी लेलिहानोऽहिराखुं मूषकं ग्रसते तद्वत् ॥ ४९ ॥ पुरेति ॥ पुरा जीवदवस्थायां हेमपरिष्कृतैः सुवर्णालङ्कारालङ्कृतैः रथैर्मतङ्गजैर्वा चरन् यो नरदेवसंज्ञितो भवति स एव कलेवरः । पुंस्त्वमार्यमिति तोषिणी । दुरत्ययेन दुरतिक्रमणीयेन ते त्वया कालरूपेणाभिपन्नः सृगालादिभिर्भक्षितो विट्संज्ञितः तैरभक्षितो न जग्धश्चेत् कृमिसंज्ञितो दग्धश्चेद्भस्मसंज्ञितो भवति ॥ ५० ॥ निर्जित्येति ॥ हे ईश ! दिक्चक्रं दिङ्मण्डलं निर्जित्य अभूतः असम्भावितः विग्रहो विरोधी शत्रुवर्गः यस्य तथाभूतः असम्भावितसंग्रामो वा । अत एव वरासनस्थः सार्वभौमासनाधिष्ठितः अत एव पूर्वं समास्तुल्या राजानस्तैरपि वन्दितोऽपि पुरुषः मैथुन्यमेव सुखं येषु तेषु गृहेषु योषितां स्त्रीणां तु क्रीडामृगः वानर इव नीयत इतस्ततश्चाल्यते ॥ ५१ ॥

## श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्

तदेवात्यंतमदांधत्वमाह कलेवर इति घटकुड्यादितुल्ये अनाच्छादितभित्तिकादिवत् क्षणभंगुरे । अहं नरदेवः चक्रवर्त्ति राजा इति नितरां प्राप्ताभिमानः । रथादिचतुरंगसैन्यपैर्वृतः, अतः सुदुर्मदः त्वां कालनियामकमगणयन् सन् गां भूमिं पर्यटन् पर्यटामि स्म ॥ ४९ ॥ दुरंतं चितापरिणामं प्रकटयन्नाह । प्रमत्तमिति । इति कृत्यचिंतया इदमेवं करणीयं इदमेवं करणीयमिति विचारेण । उच्चैः प्रमत्तम् अत्यंतासावधानम् । अतो धने प्रवृद्धलोभम् । एवं कुतः यतो विषयेषु लालसं सतृष्णम् । अंतकस्त्वम् अप्रमत्तः सन् सहसाभिपद्यसे प्राप्नोषि । अत्र दृष्टांतमाह क्षुल्लेलिहानः क्षुधा ओष्ठप्रांतभागौ लेलिहानः । अहिः सर्पः, आखुं मूषकमिवेति ॥५०॥ मरणे च सति कलेवरमतिगर्ह्यं स्यादित्याह पुरेति । सुवर्णालंकृतैरथादिभिर्यश्च रत्नभूत् स एव कलेवरः पुंस्त्वमत्रार्षं ते तव त्वदीयेन कालेन जीवाद्वियोजितः सन् भक्षणाभक्षणदहनैः विटादिसंज्ञितः ॥ ५१ ॥ विषयाभिलाषुकस्य जीवनेपि सुखं नास्तीत्याह द्वाभ्यां निर्जित्येति । आदौ दिशां चक्रं प्राच्यादिदिङ्मण्डलं वर्त्तं निर्जित्य पश्चादभूतविग्रहो निवृत्तयुद्धः वरासनस्थः सार्वभौमासनस्थः, अत एव पूर्वं ये समास्तुल्या राजानस्तैर्वंदितोपि मैथुन्यं स्त्रीपुरुषयोः परस्परसुखं परं प्रधानं येषु तेषु योषितां गृहेषु क्रीडाया मृगो मर्कट इव पुरुषः, इतस्ततो नीयते ताभिर्योषिद्भिस्तद्दासीभिरपि ॥ ५२ ॥

## भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

उन्नद्धमदत्वमेव प्रपञ्चयति । कलेवर इति । घटश्च कुड्यं च ताभ्यां संनिभस्तस्मिन्, घटकुड्यादिसदृशतया जडे इत्यर्थः । अस्मिन् कलेवरे देहे, निरूढः प्रसृतमूलः मान आत्माभिमानो यस्य सः, अहं नरदेवः इति, अभिमन्यमान इति शेषः । रथाश्च इभाश्च अश्वाश्च पदातयश्च तस्यानीकानि सैन्यानि तेषां पाः पतयस्तैः, वृतः परिवृतः, गां भूमिं, पर्यटन् त्वाम्, अगणय्य तुच्छीकृत्य, दुर्मदः, आसमिति शेषः ॥ ४९ ॥ इत्थं त्वामगणयन्तं दुर्मदं मां त्वं कालरूपेणाक्रमसीत्याह । प्रमत्त इति । इतिकृत्यचिन्तया एवमेवं कर्त्तव्यमिति मनोरथपरंपरया, प्रवृद्धो नितरां वृद्धिं प्राप्तः लोभो यस्य तं विषयेषु लालसं शब्दादिष्वासक्तचित्तं, उच्चैः प्रमत्तं अतिशयेन स्वहितानभिज्ञं, मां त्वम् अप्रमत्तः, अन्तं करोतीत्यन्तकः विनाशहेतुकालरूपः, भूत्वा क्षुधा बुभुक्षया लेलिहान आस्वादमानः, क्षुधालोलजिह्व इति यावत् । यङन्ताल्लिहेः कर्मणि लटः शानजादेशः । अहिः सर्पः, आखुं मूषकम् इव सहसाऽकस्मादेव, अभिपद्यसे ॥ ५० ॥ नन्वतिदुर्लभकल्याणतरनरदेवशरीरं प्राप्यापि किमिति तन्निन्दसीत्याशङ्कायामन्ततः कालाभिपन्नस्य तस्य गतिं पश्येत्यभिप्रायेणाह । पुरेति । पुरा तावत् हेमपरिष्कृतैः स्वर्णालंकारालंकृतैः, रथैः मतंगजैः स्वर्णपरिष्कृतहस्तिभिर्वा चरन्, नरदेव इति संज्ञाऽस्य संजातेति तथाभूतः, तारकादित्वादितच् । सः एव, कलेवरो देहः, ते त्वत्संबन्धिना, दुरत्ययेन दुरतिक्रमणीयेन, कालेन अभिपन्नः स्याच्चेत्तदा, विट्कृमिभस्मसंज्ञितः, भवति । श्वशृगालादिर्भक्षितः सन्, विट्संज्ञितः। यदा तैरभक्षितोऽदग्धः स्याच्चेत्कृमिसंज्ञितः । दग्धश्चेद्भस्मसंज्ञितो भवति ॥ ५१ ॥ किं चान्तकप्राप्तेः प्रागपि दिग्विजयिनोऽपि राज्ञोऽपि विषयाभिलाषुकस्य स्त्र्यधीनतया पारतन्त्र्यदुःखं तदवस्थमेवेत्याह । निर्जित्येति । दिक्चक्रं दिङ्मण्डलं निर्जित्य, अभूतोऽसंभावितो विग्रहो विरोधो यस्य तथाभूतः असंभावितप्रतिपक्ष इत्यर्थः । वरासनस्थः सार्वभौमासनाधिष्ठितः, समराजवन्दितः ये पूर्वं समास्तुल्या राजानस्तैरपि वन्दितः, पुरुषः हे ईश, मैथुन्यमेव सुखं येषु तेषु, गृहेषु योषितां स्त्रीणां, केवलं, क्रीडामृगः क्रीडार्थं योषिद्भिः पोषितो वानरादिः इव, नीयते इतस्ततश्चाल्यते । योषिद्भिरेवेति शेषः । पुरुष इति पारोक्ष्यनिर्देशः कृतदिग्विजयसर्वपुरुषाभिप्रायकः ॥ ५२ ॥

**कृष्णप्रिया**

मिट्टी की दिवाल एवं मिट्टी के घड़े जैसा इस पाञ्चभौतिक देह में मैं दृढ अभिमान कर बैठा और मैं नरपति हूँ पृथ्वीपति हूँ ऐसे अभिमान में लदा था इससे रथ हाथी अश्व पैदल से बनी चतुरङ्गिणी सेना एवं सेनापतियों से घिरा हुआ अत्यन्त मदान्ध होकर आपकी अवहेलना करता भूतल में भटकता ही रहा ॥ ४९ ॥ भगवन् ! क्या कहूँ ? मैं महान् गाफल था, मैंने यह किया और यह अवशिष्ट रहा अब मैं यह करूँगा इस प्रकार की व्यर्थ कार्यों की व्यर्थ चिन्ता में काल गुमाया। लेकिन काल सावध एवं सक्रिय था, लोभ से घिरा हुआ और विषयों में लंपट गाफल जीव को सदा सावधकाल जो आपका ही स्वरूप है वह तो, जैसे भूखा और खुराक खाने के लिये जीभ लपलपाता सर्प गाफल चूहे को दबोच लेता है वैसे यकायक विषयासक्त गाफल जीव को पकड़ लेता है ॥ ५० ॥ जो कलेवर है जो अजगर जैसा आयुष्य गिलने में निपुण है ऐसा शरीर की एक मृत्यु के पीछे पशुओं पक्षियाँ के खाने से मल-विष्ठा संज्ञा बनेगी, यदि शरीर को मिट्टी में गाड़ दिया तो सड़ जाने पर कीड़ा बनेगा और अग्नि से काया जलायी गयी तब भस्म संज्ञा होने वाली है ऐसे नश्वर शरीर में मैं चक्रवर्ती हूँ ऐसी पामर मति से सुवर्ण रथों में, एवं सजाये हुए गजराजों पर चढ़कर घूमता रहा लेकिन ऐसे दिव्य शरीर से हरि भजन हरि सेवा न की यही दुर्भाग्य है ॥ ५१ ॥ हे ईश ! समस्त दिशाओं पर विजय पाकर, मेरे समकक्ष और कोई सम व वीर है नहीं ऐसा अप्रतिम वीर बनकर, सम्राट् के सिंहासन पर बैठकर, अपने समकक्ष नरपतियों के पराजित होने के कारण नित्य चरणों में प्रणामों को प्राप्त करने वाला, असाधारण वीर पुरुष वनिताओं के विषय सुखों के लिये गृह विलासों में लुब्ध होकर वनिताओं के हाथ का खिलौना बन जाता है और उनका पालतू पशु बन जाता है इससे अधिक अधोदशा और क्या हो सकती है ॥ ५२ ॥

**करोति कर्माणि तपस्सुनिष्ठितो निवृत्तभोगस्तदपेक्षया [1]ददत् ।**
**पुनश्च [2]भूयेयमहं स्वराडिति प्रवृद्धतर्षो न सुखाय कल्पते ॥ ५३ ॥**
**भवापवर्गो भ्रमतो यदा भवेज्जनस्य तर्ह्यच्युत सत्समागमः ।**
**सत्संगमो यर्हि तदेव सद्गतौ परावरेशे त्वयि जायते [3]मतिः ॥ ५४ ॥**
**मन्ये ममानुग्रह ईश ते कृतो राज्यानुबन्धापगमो यदृच्छया ।**
**यः प्रार्थ्यते साधुभिरेकचर्यया वनं विविक्षद्भिरखण्डभूमिपैः ॥ ५५ ॥**
**न [4]कामयेऽहं तव पादसेवनादकिञ्चनप्रार्थ्यतमाद् वरं विभो ।**
**आराध्य कस्त्वां ह्यपवर्गदं हरे वृणीत आर्यो वरमात्मबन्धनम् ॥ ५६ ॥**

**कर्दमक्षमा**

अन्वयः—निवृत्तभोगः, तद्, अपेक्षया, ददत्, ( दानादि कुर्वन् ) तपःसु, निष्ठितः, कर्माणि, करोति, प्रवृद्धतर्षः, अहम्, पुनः, स्वराट्, भूयेयम्, इति, प्रवृद्धतर्षः, सुखाय, न, कल्पते ॥ ५३ ॥ हे, अच्युत ! भ्रमतः, जनस्य, यदा, सत्समागमः, भवेत्, तर्हि सत्सङ्गमः तदा, एव, सद्गतौ, परावरेशे, मतिः, जायते ॥ ५४ ॥ हे ईश ! वनम्, विविक्षद्भिः, साधुभिः, अखण्डभूमिपैः, एकचर्यया यः, राज्यानुबन्धापगमः प्रार्थ्यते, ( सः ) यदृच्छया, कृतः ( हे ईश ) ते कृतः, मम, अनुग्रहः मन्ये ॥ ५५ ॥ हे हरे ! अकिञ्चनप्रार्थ्यतमात्, तव, पादसेवनात्, अन्यम्, वरम्, न, कामये, हे विभो ! अपवर्गदम्, हि, त्वाम्, आराध्य, कः, आर्यः आत्मबन्धनम्, वरम्, वृणीत ? ॥ ५६ ॥

**श्रीधरस्वामिविरचिता भावार्थदीपिका**

किं च तत्रातितृष्णाकुलस्य न भोगक्षणः कश्चिदस्तीत्याह। करोतीति। तपस्यधःशयनब्रह्मचर्यादौ सुनिष्ठितः पुनश्च स्वराडिंद्रः स्यामिति। यद्वा जन्मांतरेष्वेवमेव चक्रवर्ती स्यामिति ॥ ५४ ॥ तदेवमष्टभिः श्लोकैरीशबहिर्मुखानां संसारं प्रपंच्य भक्त्या तन्निवृत्तिक्रममाह। भवापवर्ग इति। भो अच्युत भ्रमतः संसरतो जनस्य यदा त्वदनुग्रहेण भवस्य बन्धस्यापवर्गोंतो भवेत्प्राप्तकालः स्यात्तदा सतां संगमो भवेत्। यदा च सत्संगमो भवेत्तदा सर्वसंगनिवृत्त्या कार्यकारणनियन्तरि त्वयि भक्तिर्भवति। ततो मुच्यत इत्यर्थः ॥ ५५ ॥ मम तु सत्संगमात्पूर्वमेव यो राज्यादिसंगविच्छेदो जातः सोऽयं त्वया महाननुग्रहः कृत इत्याह।

१. सकृत्–च. पु. टि। २. भूयास–वीर ; भूयायमहीशराधसे–विज.। ३. रतिः–श्रीधरः टि.। ४. ऽन्यं श्रीधर. बंशी. जीव. वीर. विज. विश्व. शुक.।

मन्य इति। ते त्वया साधुभिर्विवेकिभिस्तपसे वनं विविक्षद्भिः प्रवेष्टुमिच्छद्भिः स्वयं त्यक्तुमलभमानैः प्रार्थ्यत इति ॥ ५६ ॥ तदेवं विषयसेवामार्गं च विनिच्य वरान् वृणीष्वेति यदुक्तं तत्रोत्तरमाह। न कामय इति। अकिंचना निवृत्ताभिमानाः। आर्यो विवेकी ॥ ५७ ॥

**श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः**

अभक्तस्य कर्मादि कुंजरशौचवदित्याह—किन्त्वेति। तत्र वर्तित्वे। कर्माणि स्वाराज्यदानि। निवृत्ता गता भोगा यस्मात्स तथा। तेषां भोगानां सजातीयभोगेच्छयाददत्, धनानीति शेषः। स्वर्गस्य कर्मभूमित्वाऽभावात्कर्मांतराऽसंभवेन सुखांतरोत्पादकत्वं नास्तीत्यत आह—यद्वेति। "यस्य मूर्धनि दृश्येत विना छत्रेण भूपतेः। पद्मानुकारिणी छाया तमाहुश्चक्रवर्तिनम् ॥" इति नीलकण्ठः। प्रवृद्धतर्ष उद्रिक्ततृष्णः। सुखाय मुक्तिसुखाय। धर्ममाचरतोऽपि पारलौकिककामिनोऽपि सदा दुःखमेवेत्याह—करोतीति। अत्र विश्वनाथस्तु—स्वामभजतो विषयभोगो यथा निन्द्यस्तथा विषयभोगाभावोऽपि निन्द्य इत्याह—करोतीति। कर्माणि व्रतयज्ञादीनि। तपस्तु निष्ठितत्वान्निवृत्तविषयभोगोऽपि ! तस्य भोगस्यैवापेक्षया ददद्विविधदानं कुर्वन्। यद्वा—कर्मसांगतार्थं दक्षिणां ददत्। एवमैहिकमर्थक्षयादिदुःखं सूचितम्। सुखाय न कल्पते योग्योऽपि न भवति। एवं स्वर्गेऽपि पातभीतस्य क्षयिष्णोर्नास्ति निर्वृतिरित्यादिन्यायेनेन्द्रत्वेऽपि सुखाभावात्पारलौकिकमपि दर्शितम्। श्रीविष्णुपुराणे चास्यैव स्तुतौ "देवलोकगतिं प्राप्तो नाथदेवगणोऽपि हि। मतः साहाय्यकामोऽभूच्छाश्वती कुत्र निर्वृतिः" इति ॥ ५४ ॥ तदिति वाक्यालंकारे। तन्निवृत्तिक्रमं संसारनिवृत्तिक्रमम्। "स्यादपवर्गस्त्यागे मोक्षे कार्यावसानसाफल्ये" इति मेदिनी। तदा भवापवर्गपूर्वकाले। इत्यर्थ इति-भक्त्यवांतरव्यापारीभूतज्ञानावाप्त्या मुक्तो भवतीत्यर्थः। तर्हि कदा भद्रं स्यात्तत्राह—भवेति। यदा भवेत् सर्वशः संभावितो भवति तर्हि सत्संगमोऽपि विवेकिभिः संभाव्यत इत्यर्थः। यद्वा—अतिशयोक्तिनाम्नोऽलंकारस्य चतुर्थोऽयं भेदः। यथोक्तं तद्विवृतौ—"चतुर्थी सा कारणस्य गदितुं शीघ्रकामिताम्। या हि कार्यस्य पूर्वोक्तिः" इति। तस्माद्यर्हि भवापवर्गः शीघ्रमेव भवेदित्यर्थः। यतः सत्संगम इत्यादि ! यतस्त्वयि मतौ च जातायां भवापवर्गस्याप्यवराभिचारः स्यादित्याह। एवकारान्नान्यदा कदापीत्यर्थः। अच्युतेति सम्बोध्य तत्र त्वमच्युतौ भवसीति भावः। ननु मत्कृपां विना सत्संगोऽपि न स्यादिति सैवास्त्वादिकारणं तत्राह-संत एव गतिराश्रयो यस्य तस्मिन्। 'स्वेच्छामयस्य' इति 'अहं भक्तपराधीनः' इति सदिच्छयैव तत्र प्रवर्तते। न तु स्वतः, अतः सापि तदनुगतैवेति भावः। सतां गतावित्यस्मिन्नर्थेऽपि असतां गतिः 'प्रार्थितः प्रचुरं पूर्वं त्वयाहम्' इति भवदुक्तरीत्या ययाऽसौ भवापवर्गदाता त्वं लब्ध इति भावः। मतिरिति। 'रतिः' इति च पाठः। समर्थ एव सत्संगमेन रत्यंकुररूपैव मतिर्जायत इति ॥ ५५ ॥ निजभाग्यं श्लाघते—मम त्वित्यादिना। राज्यस्य तदनुवन्धकस्य सम्पादकस्य कोशादेश्चापगमस्त्यागः। 'एक एव चरेद्भिक्षुः' इत्युक्तेरेकाकिचरणेच्छया। अखण्डभूमिपैः सार्वभौमैः। ततस्तदारभ्यैव मयि त्वदनुग्रहो लक्षित इत्याह—मन्य इति। हे ईश 'मूकं करोति वाचालम्' इति न्यायेन हे दुर्घटघटनापटो। राज्यानुबन्धस्य राजत्वासक्तेरपगमो यस्मात्तादृशोऽनुग्रहस्ते त्वयैव यदृच्छया स्वैरितया कृत इति तर्कयामि "त्रैवर्गिकाऽयासविघातमस्मत्पतिर्विधत्ते पुरुषस्य शक्रः। ततोऽनुमेयो भगवत्प्रसादो यो दुर्लभोऽकिंचनगोचरोन्यैः।" इति वृत्रोक्तेः, "यस्याहमनुगृह्णामि हरिष्ये तद्धनं शनैः" इति स्वयं भगवदुक्तेश्च। योऽनुग्रहोऽखंडभूमिपैरपि मृग्यते किं पुनर्भारतवर्षैकदेशपतिभिरित्यर्थः। एकचर्यया एकांतनिष्ठया। तेषां कथं वनविवक्षा स्यात्तत्राह—साधुभिः विवेकेनासन्निष्ठात्यागिभिरित्यर्थः ॥ ५६ ॥ तत्र तयोर्द्वयोः। आत्मबन्धनमात्मनः संसारकारणम्। अतः पादसेवनात्साक्षाद्विविधपरिचर्याया अन्यं वरं वरणीयार्थं न कामये, तदेव कामय इत्यर्थः। कुतः—अकिञ्चना मुक्तिपर्यंतमर्थं तुच्छीकृत्य भक्तास्तैरपि प्रार्थ्यतमात्। प्रार्थ्या भक्तिः, प्रार्थ्यतरं दर्शनं, प्रार्थ्यतमं पादसेवनं, तस्मात्सर्वपुरुषार्थत आधिक्यमुक्तं तदेव हि योग्यमित्याशयेन सम्बोधयति—विभो हे सर्वपुरुषार्थाधिकसुखदानसमर्थ। आराध्य प्रार्थ्य सेवित्वा वा। अपवर्गो भक्तिः। तथा च पञ्चमस्कन्धे—"यथा वर्णविधानमपवर्गश्च भवति योऽसौ भगवति सर्वभूतात्मन्यनात्म्येऽनिरुक्तेऽनिलयने वासुदेवेऽनन्यनिमित्तभक्तियोगलक्षणे" इति। यद्वा—मुक्तिं कथं न वृणुषे, तत्राह—आराध्येति। वरमीषत्प्रियेऽव्ययम्। आराध्य कस्त्वा मुक्तिप्रदं सन्तं वृणीत वरमात्मबन्धनमेव वृणीतेत्यर्थः। अहं तु मोक्षेऽपि निरपेक्षः कथं तं वृणुयामिति भावः ॥ ५७ ॥

**श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी**

धर्ममाचरतोऽपि पारलौकिककामिनोऽपि सदा दुःखमेवेत्याह, करोतीति। कर्माणि व्रतयज्ञादीनि तपस्सुनिष्ठितत्वान्निवृत्तविषयभोगःऽपि तस्य भोगस्यैवापेक्षया ददत् विविधदानं कुर्वन् यद्वा, कर्मसाङ्गतार्थं दक्षिणां ददत् एवमैहिकमर्थक्षयादिदुःखं सूचितं सुखाय न कल्पते न योग्यो भवति एवं स्वर्गेऽपि पातभीतस्य "क्षयिष्णोर्नास्ति निर्वृत्तिः" इत्यादिन्यायेनेन्द्रत्वेपि सुखाभावात् पारलौकिकमपि दर्शितम् विष्णुपुराणे चास्यैव स्तुतौ—

"देवलोकगतिं प्राप्तो नाथ देवगणोऽपि हि। मत्तः साहाय्यकामोऽभूच्छाश्वती कुत्र निर्वृतिः ॥" इति ॥ ५४ ॥

तर्हि कदा भद्रं स्यात्तत्राह—भवेति । यदा भवेत्सर्वज्ञैः सम्भावितो भवति तर्हि सत्सङ्गमोऽपि विवेकिभिः सम्भाव्यत इत्यर्थः । यद्वा, अतिशयोक्तिनाम्नोलङ्कारस्य चतुर्थोऽयं भेदः यथोक्तं तद्विवृतौ—

"चतुर्थी सा कारणस्य गदितुं शीघ्रकामिता । या हि कार्य्यस्य पूर्वोक्तिः"—

इति तस्माद्यर्हि सत्सङ्गमो भवेत्तर्हि भवापवर्गः शीघ्रमेव भवेदित्यर्थः । यतः सत्सङ्गम इत्यादि यतस्त्वयि मतौ च जातायां भवापवर्गस्याव्यभिचारः स्यादित्याह—तदैवेति । एवकारान्नान्यदा कदापीत्यर्थः । अच्युतेति सम्बोध्य तत्र त्वमप्यच्युतो भवसीति भावः । ननु, मत्कृपां विना सत्सङ्गमोऽपि न स्यादिति सैवास्त्वादिकारणं तत्राह—सन्त एव गतिराश्रयो यस्य तस्मिन् स्वेच्छामयस्येति "अहम्भक्तपराधीनः" इति सदिच्छयैव तत्र सर्वं प्रवर्त्तते न तु स्वतः ततः साऽपि तदनुगतैवेति भावः । सतां गतौ इत्यस्मिन्नर्थेप्यसताङ्गतिर्न भवसीति भावः पूर्वपूर्वेण सत्तापरपस्यसत्त्वे निष्पादित एव सा प्रवर्त्तते न तु पूर्वं "स्वयं समुत्तीर्य" इत्यादेः ततः प्रथमतः सत्सङ्गमेनैव त्वन्मतिः स्यादिति भावः, तत्र हेतुः परावरेशे परेषामवरेषां च ज्ञानाद्यनधीने अतो ममापि श्रीगर्गसङ्गमादेव त्वन्मतिर्जाता प्रार्थितः प्रचुरं पूर्वं त्वयाऽहमिति भवदुक्तरीत्या ययाऽसौ भवापवर्गदाता त्वं लब्ध इति भावः, मतिरिरिति रतिरिति च पाठः समर्थ एव सत्सङ्गमेन रत्यङ्कुररूपैव मतिर्जायत इति ॥ ५५ ॥ ततस्तदारभ्यैव मयि त्वदनुग्रहो लक्षित इत्याह—मन्य इति । हे ईश ! "मूकं करोति वाचालम्" इत्यादिन्यायेन हे दुर्घटघटनापटो ! राज्यानुबन्धस्य राजत्वासक्तेरपगमो यस्मात्तादृशोऽनुग्रहः ते त्वयैव यदृच्छया स्वैरितया कृत इति तर्कयामि योऽनुग्रह एकचर्यया एकान्तनिष्ठया अखण्डभूमिपैरपि मृग्यते किं पुनर्भारतवर्षैकदेशपतिभिरित्यर्थः । तेषां कथं वनविविक्षा स्यात्तत्राह—साधुभिः विवेकेनासन्निष्ठात्यागिभिरित्यर्थः ॥ ५६ ॥ अतः पादसेवनात् साक्षाद्विविधपरिचर्य्यायाः अन्यं वरं वरणीयार्थं न कामये तदेव कामय इत्यर्थः । कुतः ? अकिञ्चनाः मुक्तिपर्य्यन्तमर्थं तुच्छीकृत्य भक्ताः तैरपि प्रार्थ्यतमात् प्रार्थ्या भक्तिः प्रार्थ्यतरं दर्शनं प्रार्थ्यतमं पादसेवनं तस्मात् इति सर्वपुरुषार्थत आधिक्यमुक्तं तदेव हि योग्यमित्याशयेन सम्बोधयति विभो हे ! पुरुषार्थाधिकसुखदानसमर्थ सर्व आराध्य प्राप्य सेवित्वा वा अपवर्गो भक्तिः तथा च पञ्चमस्कन्धे यथा वर्णविधानमपवर्गश्च भवति योऽसौ भगवति सर्वभूतात्मन्यनात्म्येऽनिरुक्ते निलयने वासुदेवेऽनन्यनिमित्तभक्तियोगलक्षण इति यद्वा मुक्ति कथं न वृणुषे ? तत्राह—आराध्येति । वरमीषत् प्रियेऽव्ययम् आराध्य सेवित्वा वा कस्त्वामपवर्गदं मुक्तिप्रदं सन्तं वृणीत वरमात्मबन्धनमेव वृणीतेत्यर्थः ॥ ५७ ॥

**श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी**

धर्म्ममाचरतोऽपि कामिनः सदा दुःखमेवेत्याह—करोतीति कर्म्माणि व्रतयज्ञादीनि, तपःसुनिष्ठितत्वान्निवृत्तविषयभोगोऽपि, तस्य भोगस्यैवापेक्षया तत्संगतार्थं दक्षिणादिना धनं ददत् । एवमर्थक्षयादिदुःखञ्च सूचितम् ! सुखाय न कल्पते, न योग्यो भवति स्वर्गेऽपि पातभीतस्य 'क्षयिष्णोर्नास्ति निर्वृतिः' इत्यादि, न्यायेनेन्द्रत्वेऽपि सुखाभावादित्यर्थ । तथा च श्रीविष्णुपुराणेऽस्यैव स्तुतौ ( ५।२३।४० )—'देवलोकगतिं प्राप्तो नाथ देवगणोऽपि हि । मत्तः साहाय्यकामोऽभूच्छाश्वती कुत्र निर्वृतिः ॥' इति ॥ ५२ ॥ यदा भवापवर्गः सम्भाव्यः स्यात्तदा सत्संगमेन कृतार्थः स्यादित्याह—भवेति । भवस्य संसारदुःखस्यापवर्गो नाशो भवेदिति सम्भावनायां सप्तमी, जनस्य कस्यचिज्जीवस्य सद्भिस्त्वद्भक्तैः समागमः संगतिः, हे अच्युतेति त्वत्कृतनिर्वन्धस्य च्युतिराहित्यादिति भावः । यद्वा, गृहाद्यासक्तिलक्षणस्यापवर्गः परित्यागः; यद्वा, भवोऽभ्युदयस्तद्रूपोऽपवर्गो मोक्षः श्रीवैकुण्ठलोक इत्यर्थः । अच्युतस्य तव ये सन्तः किंवा अच्युता भक्तिमार्गाच्युतिरहिता ये सन्तस्तैः, यद्वा, अच्युतः स्थिरः सत्समागमः, एवेति, अन्यथा कथञ्चित् कदाचिदपि न जायत इत्यर्थः । यद्वा, तस्मिन् क्षणे, कुतः ? सतां गतौ गम्ये, तव सत्संगमैकवश्यत्वात्, तथा चैकादशस्कन्धे श्रीभगवद्वाक्यम् ( भा० ११।१२।१ )—'न रोधयति मां योगः, इत्यादि । तदपि कुतः ? परश्चतुर्वर्गश्रेष्ठो मोक्षोऽप्यवरोऽपकृष्टो यस्या भक्तेस्तदीशे भक्त्येकप्राप्यत्वादित्यर्थः । यद्वा, परावराणामुच्चनीचानां श्रीब्रह्मादिस्तत्वर्यन्तामामीशे स्वामिन्यपि सतामेव गतौ । 'रतिः' इति पाठे भक्तिरित्यर्थः संसारनिवृत्तौ सत्यां सत्संगमेन त्वयि इतिः स्यादित्यर्थः ॥ ५३ ॥ अतस्त्वयानुग्रहः कृत इति मन्ये । कथम् ? तदाह—राज्ये राजत्वे राज्य-तत्सम्बन्धिसुतादारादौ वा, अनुबन्धस्य आसक्तेः प्रकृतानुसरणस्य वा अपगमो यदृच्छयाऽयत्नोऽभूदिति । यद्वा, राज्यानुबन्धस्यापगमो यस्मात् सः । हे ईशेति निजैश्वर्यादेव, न च मम योग्यत्वादिति भावः । योऽनुग्रह एकचर्य्यया परमभक्त्या, अखण्डभूमिपैरित्यशेषभोगसम्पत्त्या विवेकयोग्यतोक्ता । यद्वा, अखण्डभूमिपैरपि, किं पुनर्भारतवर्षैकदेशपतिभिरित्यर्थः । तेषां कथं वनविविक्षा स्यात् ? तत्राह—साधुभिः सद्भिरिति ॥ ५४ ॥ अतः पादसेवनात् साक्षाद्विविधपरिचर्य्याया अन्यं वरं वरणीयार्थं न कामये, तदेव कामय इत्यर्थः, कुतः ? अकिञ्चना मुक्ता भक्ता वा तैरपि प्रार्थ्यतमात्, प्रार्थ्या भक्तिः, प्रार्थ्यतरं दर्शनम्, प्रार्थ्यतमं पादसेवनं तस्मात्, इति सर्वपुरुषार्थाधिक्यमुक्तम् । तदेव हि योग्यामित्याशयेन सम्बोधयति—विभो हे प्रभो ! इति दासस्य स्वामिपादसेवैकयोग्यत्वादित्यर्थः । आराध्य प्राप्य सेवित्वा वा, अपवर्गो भक्तिः, तथा च पञ्चमस्कन्धे भारतवर्षवर्णनान्ते ( भा० ५।१९।१८-५९ )—'यथावर्णविधानमपवर्गश्च भवति, योऽसौ भगवति सर्वभूतात्मन्यनात्म्येऽनिरुक्तेऽनिलयने वासुदेवेऽनन्य नमित्तभक्तियोगलक्षणः' इति । यद्वा, अपकृष्टो वर्गश्चतुर्वर्गो यस्मात् पादसेवनात्तद्दातारमात्मानं बध्नाति सुखलोपेन इष्टविघातेन वा यन्त्रयतीति तथा तम् । हरे ! हे सर्वबन्धहर ! हे मनोहरेति वा ॥ ५५ ॥

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम्

तदपेक्षया भोगेच्छया ॥ ५४ ॥ भवापवर्गः संसारनाशः तदा भवेत् आसनः स्यात् तर्हि तदा ॥ ५५ ॥ भूमिपैराजर्षिभिः ॥ ५६-५७ ॥

### श्रीमद्वीरराघवाचार्यकृता भागवतचन्द्रचन्द्रिका

ननु, भोग्यभोगोपकरणादिसमृद्धान् राजगृहान् दुःखप्रभवेषु मैथुनसुखेष्विति चेत्येवं कथं निन्दसीत्यतस्तत्र सुखाभावमाह—करोतीति । पुनश्च जन्मान्तरेपि स्वराट् सार्वभौमो भूयासम् इतीत्थं प्रवृद्धः तर्षः तृष्णा यस्य तथाभूतः तपस्सु जन्मान्तरीयसार्वभौमसाधनेषु तपस्सु तपस्स्वधःशयनब्रह्मचर्य्यादिषु निष्ठितः सञ्जातनिष्ठः अत एव निवृत्तो भोगो यस्य तथाभूतः तदपेक्षया भाविजन्मभोगापेक्षया दधद्धिभ्राणः तपांसीति विपरिणतेनान्वयः । कर्माणि वर्त्तमानदेहभोगार्थानि भोजानादिकर्माणि करोति इत्थम्भूतोसौ न सुखाय कल्पते न सुखी भवति किन्तु दुःख्येवेति भावः । यद्वैवमन्वयः तावद्राजशरीरप्राप्तिसाधनानि कर्माणि करोति ततो दधद्राजशरीरमिति शेषः । निवृत्तभोगः तपःसुनिष्ठितस्तदपेक्षया तद्धेतुभूतः स्वराट् स्याम् इति प्रवृद्धस्तर्षो यस्य तथाभूतः न सुखाय कल्पत इति ॥ ५४ ॥ तर्हि कदा सुखाय कल्पत इत्यत आह—भवापवर्ग इति । एवं संसृतौ भ्रमतः पुंसो भवापवर्गः संसारान्तः भवनिवृत्तिर्मुक्तिरिति यावत् स यदा भवेदासन्नः स्यात्तदैवायं जनः सुखाय कल्पत इति पूर्वेण सम्बन्धः । कदा तर्हि भवापवर्गो भवेदित्यत आह—तर्हीति । हे अच्युत ! अस्य संसरतो जनस्य यर्हि यदा यस्मिन् जन्मनि सत्समागमः सद्भिर्भागवतैः समागमः सङ्गतिः सहवास इति यावत् तदा भवापवर्गः नहि ( किं ) सत्समागमः साक्षाद्भवापवर्गसाधनभूतः (न) किन्तु त्वद्भक्तिजननादिप्रणाड्येत्याह—सत्सङ्गम इति । यदा हि सत्सङ्गमः तर्ह्येव परे इन्द्रादय अपरे अवमा यस्मात्तस्य चतुर्मुखस्यापि ईशे नियन्तरि सतां गतौ त्वत्प्राप्त्युपायभूते त्वयि मतिर्भक्त्यात्मिका बुद्धिर्जायते उत्पद्यते ॥ ५५ ॥ यदुक्तं सोहं तवानुग्राहार्थं "गुहामेतामुपागतः" इति तत्सत्यमेव किन्तु पूर्वमेव देहानुवन्ध्यपनयनेन लिङ्गेन त्वयाऽनुगृहीतोऽहम् इति मन्य इत्यभिप्रेत्याह—मन्य इति । हे ईश ! यदृच्छया त्रिदशसाहाय्यकृत्यव्याजेन राज्यरूपो योऽनुबन्धः पाशस्तस्यापगमोपायः, इत्येष महांस्त्वयैवानुग्रहः कृत इति मन्ये तस्यानुग्रहप्रयुक्तत्वे हेतुं वदन् तमेव राज्यानुबन्धापगमं विशिनष्टि—य इति । यो राज्यानुबन्धापनयः साधुभिर्विवेकिभिः तपसे वनं प्रवेष्टुम् इच्छद्भिः सार्वभौमैरेकचर्य्या एकचर्य्यार्थम् एका ( शि ) कित्वेन सञ्चारार्थं प्रार्थ्यते ॥ ५६ ॥ तदेवं प्रतिवचनोपयुक्तार्थः, उक्तः, अथ साक्षात्प्रतिवचनमाह—न कामय इति । हे विभो ! अकिञ्चनैरनन्यप्रयोजनैरेकान्तिभिरतितरां प्रार्थनीयात् तव पादसेवनादन्यं वरं न कामयेऽन्यो मदिष्टो वरणीयोऽर्थ एव नास्तीत्यभिप्रायः । आर्यः श्रेष्ठो विवेकी चेत्को वा पुमान् साक्षान्मुक्तिप्रदं त्वामाराध्याऽऽराधनेन प्रसन्नीकृत्य केवलमात्मा बध्यते येन तदात्मबन्धनं शब्दाविषयजालं वृणति वृणुयान्मूर्खश्चेद्वृणीत इत्यर्थः ॥ ५७ ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

त्वद्भक्तिरहितस्य पुंसः कर्मकरणं गजस्नानतुल्यमिति भावेनाह—करोतीति । हे महीश ! निवृत्तभोगः तदपेक्षया तेषां भोगानां सजातीयभोगेच्छया सुनिष्ठितस्तद्योग्यदेवतापूजासु नितरां स्थिरो यः कर्माणि तदनुगुणं तपश्च करोति स पुनश्च धनादि ददत् भूयाय भूयसे महतो राधसे सम्पदे प्रवृद्धतर्षः अत्युद्रिक्ततृष्णः सुखाय न कल्पत इत्यन्वयः सुखं नाम मुक्तिलक्षणम् ॥ ५४ ॥ तर्हि कदा मोक्षः स्यादत्राह—भवेति । हे अच्युत ! नानायोनिषु भ्रमतो जनस्य यदा सत्सङ्गमः तर्हि तदा भवापवर्गः स्यात् भगवज्ज्ञानफलं मोक्षः कथमन्यतः स्यादिति तत्राह—सत्सङ्गम इति । यर्हि यदा सत्सङ्गमः स्यात्तदैव त्वयि श्रवणादिलक्षणः सङ्गमः स्यात् तस्मात्परावरेशे मुक्तामुक्तस्वामिनि त्वयि मतिस्त्वत्प्रसादजनकं ज्ञानं स्यात् ॥ ५५ ॥ अतो ज्ञानद्वारा सत्सङ्गमो मुक्तिसाधनमसत्सङ्गमोऽनर्थहेतुरिति गृहादिसङ्गत्यागः सत्सङ्गहेतुरित्याशयेनाह–मन्य इति । ते त्वया राज्यानुबन्धापगमः राज्यस्य तदनुबन्धकस्य कोशादेश्चापगमस्त्यागः एकचर्यया "एक एव चरेद्भिक्षुः" इति वचनात् एकाकित्वेन चरणम् अखण्डभूमिपैः सार्वभौमैः विविक्षद्भिः प्रवेष्टुमिच्छद्भिः ॥५६॥ फलितमाह—नेति । आर्यो ज्ञानी आत्मनः स्वस्य बन्धनं संसारकारणं वरम् ॥५७॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

भवापवर्गः अत्र यदा सत्सङ्गमो भवेत् इत्यादावतिशयोक्तिनामालङ्कारो ज्ञेयः यथोक्तं "कार्यकारणयोर्यश्च पौर्व्वापर्य्याविपर्य्ययोः । विज्ञेयातिशयोक्तिः स्यात्" सेति व्याख्याति च कारणस्य शीघ्रकारितां वक्तुं कार्य्यस्य पूर्व्वानूक्तौ चतुर्थीति यद्वा यदा भवेत् सर्वज्ञैः सम्भावितो भवति तर्हि सत्सङ्गमोऽपि विवेकिभिः सम्भाव्यत इत्यर्थः यतः सत्सङ्गमो इत्यादि ॥ ५५-५६ ॥ न कामय इति वरमित्यव्ययमीषत् प्रिये अपवर्गदं सन्तं त्वां को वृणीत न कोऽपि किन्तु वरमात्मबन्धनमेव वृणीतेत्यर्थः व्याख्यान्तरे वरमिति पुनरुक्तं स्याद् वृणीतेत्यनेनैवार्थप्राप्तेः ॥ ५७ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

त्वामभजतो विषयभोगो यथा निन्द्यस्तथा विषयभोगाभावोऽपि निन्द्य इत्याह—करोतीति। तपसि अधश्शयनब्रह्मचार्यादौ सुनिष्ठितः पुनश्च स्वराडिन्द्रश्चक्रवर्ती वा ॥ ५४॥ तर्हि सर्वदुःखोपशमनी परमसुखमयी भक्तिरेव कदा भवेदित्यत आह—भवेति। हे अच्युत! भ्रमतो जीवस्य यदा भवापवर्गो भवबन्धस्य नाशः स्यात्तदा सत्सङ्गमः अनुग्राहकसाधुसङ्गो भवेत् यर्हि सत्सङ्गमस्तदैवेत्येवकारान्नान्यदा कदापीत्यर्थः। अत्र यर्हि तर्हि इति स्थूलकालमवलम्ब्यैवोक्तिः सूक्ष्मकालमवलम्ब्य तु सत्समागमभवापवर्गयोः कारणकार्य्ययोः पौर्वापर्य्यमवश्यमेव वक्तुमुचितं तदपि तद्विपर्य्ययेणोक्तिः कार्य्यस्यातिशैघ्र्यबोधिन्यतिशयोक्तिश्चतुर्थी ज्ञेया अत्र सद्गतावित्यस्य वैष्णवतोषिण्यां व्याख्या यथा। ननु, मत्कृपां विना सत्सङ्गमोपि न स्यादित्यतो मत्कृपैवादिकारणमस्तु तत्राह, सन्त एव गतिराश्रयो यस्य तस्मिन् स्वेच्छामयस्येति "अहं भक्तपराधीनः" इत्यादेः सदिच्छयैव, तच्च सर्वं प्रवर्त्तते न स्वत इति बुध्यते अतस्त्वत्कृपापि सदनुगतैवेति भावः। सतां गतावित्यस्मिन्नर्थेऽप्यसताङ्गतिर्न भवतीति पूर्वपूर्वेण सतां परपरस्य सत्त्वे निष्पादित एव त्वत्कृपा प्रवर्त्तते न तु पूर्वं स्वयं समुत्तीर्य्येत्यादेरित्येषा ॥ ५५॥ मम तु त्वद्भक्तगर्गसङ्गानन्तरमकस्मादेव यो राज्यादिसङ्गविच्छेदो जातः स तवैवानुग्रहादित्यहं जानामीत्याह—मन्य इति।

"त्रैवर्गिकायासविघातमस्मत्पतिर्विधत्ते पुरुषस्य शक्रः। ततोऽनुमेयो भगवत्प्रसादो यो दुर्ल्लभोऽकिञ्चनगोचरोऽन्यैः" ॥

इति श्रीवृत्रोक्तेः यो राज्यानुबन्धोपगमः साधुभिर्भूमिपैः प्रार्थ्यते एकचर्य्यया एकचारित्वेन निर्विघ्नत्वदीयध्यानभक्तिसिद्ध्यर्थमिति भावः ॥ ५६ ॥ वरान् वृणीष्वेति यदुक्तं तत्रोत्तरमाह—नेति। अकिञ्चनैः प्रार्थ्या भक्तिः प्रार्थ्यतरः प्रेमा प्रार्थ्यतमं पादसेवनं तस्मात्। अन्यं मोक्षमपि न कामये किमुतान्यान् वरान्। अपवर्गदं भक्तियोगप्रदं पञ्चमस्कन्धे अपवर्गशब्देन भक्तियोगोक्तेः अथ वा दृष्टान्तमपि कैमुत्येनैवाह हि अप्यर्थे अपवर्गदं मोक्षार्थित्वात् मोक्षप्रदमपि त्वाम्, आराध्य कः खलु विवेकी आत्मनो बन्धनं वरं त्वया दित्सितमपि वृणीत अहं तु मोक्षेऽपि निरपेक्षः कथं तद् वृणुयामिति भावः ॥ ५७ ॥

### गूढार्थदीपिनी

तदपेक्षया भोगापेक्षया। स्वराट् इन्द्रः। पुनर्जन्मान्तरे चक्रवर्ती वा। तर्षस्तृष्णा यस्य सः। न कल्पते न समर्थो भवति ॥ ५२ ॥ हे अच्युत! भ्रमतः पुंसः यदाभवस्यांतो भवेत् तन्निवृत्तिकालः प्राप्तः स्यात्। तर्हि तदा सतां समागमः सङ्गमः भवेत्। मतिर्भक्तिः। परं कारणमवरं कार्यं तयोरीशे नियन्तरि त्वयि ॥ ५३ ॥ राज्यानुबन्धो राज्यासक्तिस्तस्या अपगमः त्यागः यदृच्छयाऽकस्मादभूत् इत्येष ते त्वया कृतः। योऽपगमः। एकचर्यया एकान्तनिष्ठया अखण्डभूमिपैः सार्वभौमैरपि प्रार्थ्यते ॥ ५४ ॥ अकिञ्चनैर्भक्तैः। पादसेवनादन्यं वरं नेत्यन्वयः। क आर्यो विवेकी वर्णाति। बन्धनं संसारकारणम् ॥ ५५ ॥

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः

देहगेहाद्यासक्तो भगवद्विमुखो निन्द्य इत्युक्तमथ देहगेहाद्यर्थकसाधनपरोपि निन्द्य एवेत्याह—करोतीति। स्वराडिन्द्रः चक्रवर्ती वा स्यामिति प्रवृद्धतर्षः तदपेक्षया भाविस्वराडभावापेक्षया ददत् दानानि कुर्वन् तपस्सु विविधेषु निष्ठितः कर्माणि काम्यानि करोति यः सोऽपि सुखाय न कल्पते परमानन्दयोग्यो भवति जन्ममरणप्रवाहलक्षणं संसारमेव प्राप्नोतीत्यर्थः ॥ ५४ ॥ तर्हि कदा संसारनिवृत्तिः परमानन्दप्राप्तिश्च स्यादत्राह—भवापवर्ग इति। हे अच्युत! भ्रमतः संसरतः यदा सत्समागमस्तर्हि भवस्य संसारस्य अपवर्गोऽतो भवेत् यतः यर्हि सत्सङ्गमः तदेव सतां गतौ गम्यते इति गतिः मुमुक्षुप्राप्ये त्वयि मतिर्जायते प्रथमं सत्समागमस्ततः परमानन्दे प्राप्ये मतिस्ततः संसारनिवृत्तिस्तदन्तरं परमानन्दप्राप्तिरित्यर्थः ॥५५॥ एवं देहगेहादिप्राकृतपदार्थाशक्ते संसारहेतुत्वं भगवद्भक्तेर्भगवत्प्राप्तिहेतुत्वं चोक्त्वाथ स्वस्य लब्धभगवदनुग्रहत्वं सम्भावयन् प्राकृतदेहगेहादौ वैराग्यं च दर्शयन् भगवद्भक्तिरूपं वरं वृणीते—मन्ये इति द्वाभ्याम्। यः, एकचर्यया एकचारित्वेन त्वद्ध्याननिष्ठापादकभावेन वनं विविक्षद्भिः साधुभिर्भूमिपैः प्रार्थ्यते स मम राज्यानुबन्धापगमः राज्यरूपानुबन्धस्य पाशस्य अपगमः, अपायः यदृच्छयाऽभूत् एष ते त्वया कृतः अनुग्रह इति मन्ये ॥ ५६ ॥ अकिञ्चनैर्निरभिमानिभिः प्रार्थ्यमानत्वात् अन्यत् ऐहिकामुष्मिकं देहगेहादिरूपम् न कामये पादसेवनरूपं वरमेव कामय इत्यर्थः आराध्य अनुकूलीकृत्य आर्यो विवेकी ॥ ५७ ॥

### श्रीसत्यधर्मकृता श्रीभागवतटिप्पणी

त्वत्वदितरसुरामक्तकृतं कर्म निष्फलमिति लपति ॥ करोतीति। हे महीश धरावर। कश्चिदधिकारी निवृत्तभोगो निवृत्ता सहसा गता अप्राप्ता इति यावत्। भोगा यस्य सः। यदा तदा तदपेक्षया तद्भोगकामनया तपः प्रागालोचनं करोत्यनन्तरं कर्माणि तत्फलोपलम्भककाम्यकर्माणि करोति। नानादरेणेतीरयति ॥ सुनिष्ठितस्तत्रैव स्थिरान्तर इति। धनादिकं तत्साहितीकृद्भ्यो ददत्सन् पुनश्च भूयः शब्दपर्यायो भूयःशब्दः। भूयसे राधसे सिद्ध्ये तदर्थं प्रवृद्धतर्ष एधमानधनाद्यभिलाषस्तच्चिन्तया स्वान्तः

सुखाय न कल्पते । महीशानां राधसे तत्सम्पदर्थमिति वा पुनश्च भूयेयमहं स्वराडिति पठन्ति स च स्फुटार्थः । हे कल्प समर्थ श्रीहरे । ते सुखाय त्वद्द्येयमौक्तसुखाय स न कर्माणि करोतीत्याद्यन्वयो वा । न कल्पत इत्यावृत्याऽन्वयो वा । अनिवृत्तभोगो निवृत्ततदिच्छस्तदपेक्षया पुनर्द्विगुणधनापेक्षया धनं ददिति वा ॥ ५३ ॥ तर्हि कथङ्कारमेतत्संसारकारागारापहारो राजन्नित्यत्र वक्ति । भवापवर्ग इति । यो भ्रमतो यर्हि हे अच्युत सत्समागम उपदेशकदैशिकसहवासो भवेदच्युते भगवति सन्तस्त्वद्रता वा तेषां समागम इति वा । व्याप्तिं दर्शयितुमनूद्य वक्ति । सत्सङ्गमो यर्हीति । तदैव तद्गतौ तद्गतिरूपे परावरेशे मुक्तामुक्तप्रेरके स्वामिनि वा त्वयि मतिजायते सा यर्हि जायते तदा भवापवर्गः । अत्रापवर्गशब्दस्त्यागमात्रार्थकः । भवत्यागो मोक्षः स्यात् । ग्रहकल्लोलेऽपवर्गस्त्यागमोक्षयोरिति विश्वः । अन्यथा भवपदमभवं भजत इति ज्ञेयम् । नान्यः पन्था इत्यादेः । एतावत्स्तुत्वा प्रस्तुतं स्वाशयं विशदयन्वृणीष्वेत्युत्तरयति कैश्चित् श्लोकैः ॥ मन्य इति । अखण्डभूमिपैरखण्डभूमण्डलेशैरेकचर्यया । एक एव चरेद्भिक्षुरित्यादेः । सन्न्यासधर्मेणैकनिष्ठया वा विविक्षुद्भिर्भवनं प्रवेष्टुमिच्छुद्भिः । इच्छा क्वचित्तदकरणमिति विविक्षुद्भिरित्युक्तिरिति ध्येयम् । विविक्षुशब्दपर्यायोऽयं विविक्षुच्छन्दः । अखण्डप्रकृतिः । विविक्षुद्भिरिति पाठे विविक्षेति धातुस्ततः कर्तरि शतेति ज्ञेयम् । विशिष्टा क्षुद्विगता येभ्यस्तैरित्यर्थान्तरं द्योतयितुं चैवं पाठः । साधुभिर्यः प्रार्थ्यते स यदृच्छया राज्यानुबन्धापगमो राज्यस्यानुबन्धस्य तदनुबन्धस्य कोशादेश्चापगमो राज्या पङ्क्तिशः क्रमादनुबन्धस्य कलत्रपुत्रमित्राद्यनुबन्धस्यापगमोऽपहारः । ईश ते त्वया मम ममोपर्यनुग्रहः कृत इति मन्य इत्यन्वयः । हे अमा अपरिच्छिन्न । एवमनुगृहीतारो नान्य इति मन्य इत्यप्याह । अनुग्रहे एतादृशे कृतः कर्तृत्वेन सन्प्रतिपन्ना जीव मा ईश ते न समर्था भवन्तीति । हरे विभो । तत्र पादसेवनादन्यं वरं न कामये नेच्छामि । तदर्थनं न मयैकलेन क्रियते किन्तु सन्ति ते सन्त इत्याह । अकिञ्चन प्रार्थतमान्न विद्यते किञ्चन त्वद्व्यतिरिक्तं येषां तैः प्रार्थ्यतमादत्यर्थनीयादिति । क आर्यो बुद्ध्याऽपवर्गदं त्वामाराध्यात्मबन्धनं वरं दुर्विषयं वृणीते । हीत्येकान्तानां न कस्यचिदित्यादिमानप्रसिद्धिद्योतकम् ॥ ५६ ॥

## श्रीमद्वल्लभाचार्य्यकृता सुबोधिनी

एवं लौकिकवैयर्थ्यमुक्त्वा वैदिकवैयर्थ्यमाह **करोति कर्माणीति** । यस्तु राज्यं प्राप्य विषयभोगं करोति, सोऽधम एव, ततोऽप्यधमो यस्तपः करोति, तत्रापि यत्तपः काम्यम्, पुनस्तादृशमेव राज्यं सम्पादयति । प्राप्तं राज्यं न समीचीनं क्षयिष्णिवति हि स प्रवर्तते । यदपि तेन कर्मणा साध्यम्, तदपि तादृशमेवेति प्राप्तं परित्यज्य कष्टेनापि तादृशं साधयन् भ्रान्त एव । नानाविधानि च कर्माणि करोति । तपस्सु नितरां स्थितः सन् तदर्थं निवृत्तभोगश्च । ननु ततोऽप्यधिकापेक्षया उत्कर्षापेक्षया वा करोतीति चेत्, तत्राह **तदपेक्षयेति** । ततोऽधिकस्याश्रुतत्वाददृष्टत्वाच्च रस एव न जायते । अतस्तदर्थमेव करोतीत्याह **तदपेक्षया तदेवाददिति** । सकृद्भ्रान्तस्य द्वितीयपर्याये भ्रमो निवर्तिष्यत इत्याशङ्क्याह **पुनश्च भूयेयमिति** । वारंवारमपि राज्यं प्राप्य तदेव भूयेयमिति । कामनाया नियतत्वात् न सुखाय कल्पते । ननु सजातीयोत्कर्षः सर्वेषामेवापेक्षित इति तस्यैव कथमादानमिति चेत् । **स्वराडिति** । ब्रह्माण्डाधिपत्यमपि कामयन् प्रवृद्धतर्ष एव भवति । नहि तृष्णायां विद्यमानायां सुखमस्ति, आकाङ्क्षाया दुःखात्मकत्वात् । अत उत्कृष्टमपि वाञ्छन् सुखोपभोगार्थं न समर्थो भवतीत्यर्थः ॥ ५२ ॥ एवं कर्मफलं निन्दित्वा कामनाभावं स्तोतुं सात्त्विकस्य कर्मणः ग्राह्यत्वेन स्तुतिमाह **भवापवर्ग इति** । यदा भगवदिच्छया भवापवर्गो भवत्, तदा ससाधनेच्छायां जनस्य सत्समागमो भवेत् । सद्भिः सह सम्यगागमः वोध्यवोधकभावसंबन्धः । **भ्रमत** इति नानाविधयोनिषु भ्रमणजनितक्लेशः भगवत्कृपायां हेतुरुक्तः । अथवा । भवापवर्गस्थानानि कानिचिज्जन्मानि सन्ति । योगिकुले महतां कुले वा जन्मानि । तत्रापि गतस्य न स्वत एव मुक्तिः, किन्तु सत्सङ्गादेव । शरीरसन्ताने सत्सङ्गसमानकालीन एव देहः, अपवर्गशब्दार्थ इति मानुषदेहवत्तन्निरूप्यते । तद्व्याख्यास्यते 'दुर्लभो मानुषो देह' इत्यत्र । अत एव तर्ह्येव सत्समागम इत्याह **तर्हीति** । योग्यतायां वा । **अच्युतेति** संबोधनात् तदीयानां सतामभावेन न विलम्व इत्युक्तम् । तस्य च सङ्गस्य दृष्टद्वारैव पुरुषार्थपर्यवसायित्वं वदन् आह **सत्सङ्गमो यर्हीति** । यर्हि सत्सङ्गमः, तदैव त्वयि मतिर्जायते । भगवानक्लिष्टकर्मेति न स्वार्थं कञ्चित्प्रवर्तयति । कालकर्मादयश्च बाधका एव । अतो भक्तव्यतिरेकेण न कोऽपि भगवन्मतिं सम्पादयति । तेषां तत्सम्पादनमावश्यकमित्यत्र हेतुमाह **सद्गताविति** । सतां स एव गतिरिति । ते साध्यत्वेन साधनत्वेन फलत्वेन च भगवन्तमेव जानन्तीति तत्सन्निधिमात्रेणैव भगवति मतिर्भवति । ततः किं स्यादत आह **परावरेश** इति । **परे** कालादयः, **अवरे** कर्मादयः, तेषां फलदाने स एव नियामक इति सर्वमेव फलं ततो भवतीत्यर्थः ॥ ५३ ॥ अनेन अस्माकं सर्वाणि साधनानि सिद्धानीत्युक्तं भवति, साधनार्थं प्रवृत्त्यभावश्च सूचितः । अतो गर्गवाक्यप्रामाण्यादपि कृपा विधेयेत्यभिप्रायः साधनप्रकरणे निरूपितः । फलं निरूपयति त्रिभिः । **मन्य** इति । फलं हि त्रिविधम्, राज्यं कामाः भगवांश्चेति । तत्र द्वयं निषेधति तत्रापि राज्यस्य दोषरूपत्वं स्वानुभवसिद्धमिति दैवाज्जातां तन्निवृत्तिमभिनन्दति **मन्य** इति । सर्वस्य कारणं स भगवानेवेति । ते त्वया कृतः राज्यानुबन्धापगमः स्वत एव राज्यसम्बन्धनिवृत्तिः ममानुग्रह एवायं भगवता कृत इत्यहं मन्ये । **यदृच्छयेति** । कारणाभावेनैव जात इति भगवत्कृत एव । भगवांश्च हितार्थमेव करोतीति निर्धारः । ननु राज्यस्य इष्टसाधनस्य निवृत्तिः कथं फलम्, अनिष्टानुबन्धित्वं तु स्वदोषात्, न तु स्वत एव राज्यमनिष्टहेतुः, अन्नमिव ज्वरि-

तस्यैव तदनिष्टजनकम्, तथोद्धतस्यैव स्वभावतामसस्यानिष्टजनकमिति चेत्, तत्राह **यः प्रार्थ्यत** इति। साधवोऽपि राज्यं यतस्त्यजन्ति, अतो ज्ञायते राज्यं स्वभावदुष्टमिति। अन्यथा सतां तेषां भगवद्भजनसाधनमपि राज्यं भवतीति तत्परित्यागेच्छा न स्यात्। किञ्च। प्रार्थ्यते सः। साधूनां कर्मसाध्योऽपि न भवति, अतोऽशक्यप्रतीकारः, अत एतदर्थं भगवानेव प्रार्थ्यते। प्रार्थनापि न केवलं मानसी वाचनिकी वा, किन्तु कायिकीत्याह **एकचर्ययेति**। एकाकिचरणपूर्वकं वनं विवक्षद्भिः प्रार्थ्यते। सर्वं परित्यज्य एकाकी भूत्वा वनं प्रविशन्नपि राज्याद्बिभेति। विद्यमाने सम्बन्धे शत्रवः परलोकाधिकारिणो वा पीडयिष्यन्तीति। अल्पं राज्यमिति हीनतुल्यत्वात्कदाचित्परित्यागमाशङ्क्याह **अखण्डभूमिपैरिति**। अखण्डां भुवं पान्तीति सप्तद्वीपाधिपतयः। अतः संबन्धनिवृत्तिर्ममाभीष्टमेव ॥ ५४ ॥ कामनान्तरं व्यावर्तयति **न कामयेऽन्यमिति**। एकं कामये, यत्तव पादसेवनम्, एतत्साधकं च, अन्यत्तु एतद्व्यतिरिक्तं एतदसाधकं या न कामये। ननु को विशेषः, एकं शास्त्रस्तुतम्, अपरं च लोकप्रतीतिसिद्धम्, अत उभयोस्तुल्यत्वादत्याग्रहेणान्यनिषेधे को हेतुरिति चेत्, तत्राह **अकिञ्चनप्रार्थ्यतमा**दिति। धनिनां कदाचिद्धनस्य विद्यमानत्वात् अन्याकाङ्क्षापि भवति। अकिञ्चनानां तु उभयाभावात् लौकिकत्वाद्धनापेक्षायाश्च नियतत्वात् तत्परित्यज्य यत्केवलं चरणसेवैव प्रार्थ्यते। तत्रापि परमेष्ठत्वेन दीयमानमप्यन्यदगृहीत्वा, असाध्यमपि प्रार्थयन्त इति प्रार्थ्यतमत्वम्। क्लेशेनाप्रार्थितत्वं वारयति **वरमिति**। दातुरसामर्थ्यादपि तथात्वं वारयति **विभो** इति। ननु ते भ्रान्तो भवन्तु, तेषां तथा वा रुचिः, तथापि विषये को दोष इति चेत्, तत्राह **आराध्य कस्त्वामिति**। त्वामाराध्य को वा वरं वृणीत। कर्मवशादागतं अनभिप्रेतमप्यनुभूयते, भगवन्तं त्वाराध्य दुर्लभमेव प्रार्थनीयम्। तत्रापि विरुद्धं कथं प्रार्थनीयमित्युभयथा विरोधमाह। अपवर्गदं भवन्तमात्मबन्धनं वरमिति। यो हि यं सेवते, स तत्सम्बन्धं लोकयोः प्राप्नोति। तत्र मोक्षात्मा भगवान्, अन्यत्संसारात्मकमिति। ननु तर्हि मोक्षो ज्ञानं वा प्रार्थनीयं स्यात्, नतु पादसेवनमिति चेत्। सत्यम्। ज्ञानं हि कैवल्यमेव साधयति। मोक्षोऽपि कैवल्यरूपश्चेत्, तथापि न पुरुषार्थः, भगवत्प्राप्तिरूपश्चेत्, तदा एकरसतामापन्नः भगवानेव भवतीति अस्य पृथगनुभवो न स्यात्। अतः परमानन्दः सन् योऽनुभूयते तदेकं चरणोवासनमेव। असाधनं साध्यं न सिध्यतीति साधनत्वेन वा प्रार्थनमित्येके ॥ ५५ ॥

### श्रीसुबोधिनीसारः

तृष्णार्दितस्य न सुखं कदाचिदित्याह। तपसि स्वधर्मादौ सुनिष्ठितः कर्माणि करोति। त्यक्तभोगः तदपेक्षया राज्येच्छया ददत् दानं कुर्वन् पुनरग्रिमजन्मनि अहं स्वराट् चक्रवर्त्ती भूयेयं स्यामिति प्रवृद्धः तर्षस्तृष्णा यस्य स सुखाय नार्हति ॥ ५३ ॥ एवं बहिर्मुखानां संसृतिमुक्त्वा भक्तानां तन्निवृत्तिप्रकारमाह। हे अच्युत भ्रमतः संसारतो जनस्य यर्हि भवस्य बंधस्यापवर्गोऽतो मोक्षो भवेत्तर्हि सतां समागमः यदा सद्भिः संगमः तदैव पराणामवराणामीशे सतां गतौ त्वयि मतिर्जायते। रतिर्मतिर्भक्तिरनुक्रमेणेति भावः ॥ ५४ ॥ मम राज्यमेवानुबंधस्तस्याऽपगमो निवृत्तिर्यदृच्छयेति ते त्वयानुग्रहः कृतोस्ति हे ईश वनं गंतुमिच्छद्भिः सार्वभौमैः साधुभिरेकचर्यया एकांतसेवया योऽनुग्रहः प्रार्थ्यते ॥ ५५ ॥ अकिंचनैः प्रार्थ्यतमात्तव पादसेवनात् अन्यं किंचन वरं न कामये नेच्छामि। हे विभो हे हरे अपवर्गदं मोक्षदं त्वामाराध्य संसेव्यात्मनो बंधनं वरं क आर्यः श्रेष्ठो वृणीत याचेति हि युक्तम् ॥ ५६ ॥

### गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

ननु 'दरिद्राणां भवतु गृहेषु दुःखं भोगसामग्र्यभावात्, धनाढ्यानां तु भोगसामग्रीसत्त्वात् ततः सुखं स्यादेव, कथं सामान्यतो गृहस्य दुःखप्रभवत्वमुच्यते' इत्याशङ्क्य 'विषयभोगेच्छाकुलचित्तानां भ्रान्तानां भोगोऽपि न सिद्ध्यति' इत्याह—करोतीति। राजादिशरीरं दधदपि सुखाय न कल्पते सुखमनुभवितुं समर्थो न भवति। तत्र हेतुमाह—निवृत्तभोग इति। तत्रापि हेतुमाह—पुनश्चाहं स्वराट् सार्वभौमो भूयेयं भूयासमिति। तस्य सार्वभौमराज्यस्यापेक्षया प्राप्तीच्छया तपःसु अधःशयनब्रह्मचर्यव्रतादिषु निष्ठितः नितरां स्थितः सन् सार्वभौमसाधनभूतानि कर्माणि करोतीत्यन्वयः। तत्रापि हेतुमाह—प्रवृद्धतर्ष इति। प्रवृद्धः तर्षः भोगेच्छा यस्य सः ॥ ५३ ॥ एवमष्टभिः श्लोकैर्भगवद्विमुखानां संसारं प्रपञ्च्य तद्भक्तानां संसारनिवृत्तिक्रममाह—भवापवर्ग इति। न च्यवन्ते भक्ता यस्य तत्सम्बोधनं हे अच्युत! भ्रमतः संसरतो जनस्य यदा भवस्य संसारस्य अपवर्गः विनाशः, आसन्नो भवेत् तदा सद्भिः त्वद्भक्तैः सह समागमः सम्मेलनं भवति। यदेव सत्समागमो भवति तदेव तदुपदेशादिना सद्गतौ सद्भिः प्राप्ये अपरे कालकर्मस्वभावादयः, अवरे तदधीना ब्रह्मादयः, तेषामीशे नियन्तरि त्वयि मतिः प्रेमलक्षणा भक्तिर्जायते ॥ ५४ ॥ मम तु इतः प्रागेव ते त्वया महाननुग्रहः कृतः इत्यहं मन्ये। तत्रौचित्यं सामर्थ्यं च सूचयन् सम्बोधयति—ईशेति। 'कोऽसौ अनुग्रह' इत्यपेक्षायामाह—यदृच्छया अनायासेनैव राज्यरूपो योऽनुबन्धः पाशः तस्यापगमः अपायः, इति। 'कथं राज्यापगमस्य ममानुग्रहत्वम्' इत्युपेक्षायां अन्यथा तस्य दुर्लभत्वमाह—य इति। यो राज्यानुबन्धापगमः, एकचर्यया. एकाकीसञ्चरणपूर्वकं वनं विविक्षुभिस्तपसे वनं प्रवेष्टुमिच्छद्भिः, अखण्डभूमिपैः सार्वभौमैरपि राजभिस्त्वत्तो प्रार्थ्यते। 'विषयाविष्टचित्तानां तु एतत्प्रार्थनापि दुर्लभा' इति सूचयन्नाह—साधुभिरिति। विवेकिभिः सदाचारनिष्ठैरित्यर्थः ॥ ५५ ॥ तदेवं विषयसेवामार्गं च विविच्य वरान् वृणीष्व' इति यदुक्तं तत्रोत्तरमाह—न कामये इति। सर्वदानसामर्थ्यं द्योतयन् सम्बोधयति—विभो इति। तथापि 'भक्तदुःखहरणशीलत्वान्मम संसारदुःखनिवृत्तिरेव कार्या, न संसारबन्ध' इति सूचयन् पुनः सम्बोधयति—हरे इति। तव पादसेवायाः, अन्यं बरं न कामये न

इच्छामि । 'तदेव दुर्लभम्, न विषयभोग' इत्याशयेनाह—अकिञ्चनैस्त्यक्तसर्वभोगैरपि प्रार्थ्यतमात् प्रार्थनीयादिति । विषयभोगदोषमाह—अपवर्गदं मोक्षप्रदं त्वामाराध्य आराधनेन प्रसन्नीकृत्य आर्यो विवेकी चेत् को वा पुमान् आत्माऽनुवध्यते येन तत् शब्दादिविषयजालं वृणीते वृणुयादिति । हि शब्दो निश्चये ॥ ५६ ॥

### अन्वितार्थप्रकाशिका

करोतीति ॥ तपःसु ब्रह्मचर्यव्रतादिषु निष्ठितः नितरां स्थितः, अतः निवृत्तभोगः तदपेक्षया भोगापेक्षयाददत् दानादि कुर्वन् जनः कर्माणि करोति ततः पुनश्चाहं स्वराट् इन्द्रः जन्मान्तरे चक्रवर्ती वा भूयेयं भूयासम् आर्षः प्रयोग इति प्रवृद्धतर्षः जनः सुखाय न कल्पते सुखमनुभवितुं न शक्नोति ॥ ५२ ॥ एवं बहिर्मुखानां संसरणमुक्त्वा तन्निवृत्तिकालमाह—भवेति ॥ हे अच्युत ! भ्रमतः संसरतो जनस्य यदा सतां समागमो मेलनं भवति तर्हि भवापवर्गः संसारनिवृत्तिर्भवेत् । तत्र हेतुः । यतः यर्हि यदेव सत्सङ्गमो भवति तदैव तदुपदेशादिना सद्गतौ सद्भिः प्राप्ये परे कालादयः अवरे देवाद्यास्तेषामीशे त्वयि मतिः प्रेमभक्तिः जायते ॥ ५३ ॥ मन्य इति ॥ हे ईश ! यदृच्छया अनायासेनैव राज्यरूपो योऽनुबन्धः पाशः तस्यापगमो जात इति मम त्वितः प्रागेव ते त्वया महान् अनुग्रहः कृतः इति मन्ये । यो राज्यानुबन्धापगमः साधुभिः एकचर्यया एकाकिसंचरणपूर्वकं वनं विविक्षद्भिस्तपसे वनं प्रवेष्टुमिच्छद्भिः अखण्डभूमिपैः सार्वभौमैरपि राजभिस्त्वत्तः प्रार्थ्यते । नेति ॥ हे विभो ! हे हरे ! अकिञ्चनैः त्यक्तसर्वभोगैरपि प्रार्थ्यतमात् तव पादसेवनात् तत्र प्रार्थ्या भक्तिः प्रार्थ्यतरं दर्शनं प्रार्थ्यतमं साक्षात् पादसेवनं तस्मात् अन्यं वरं न कामये । हि यतः अपवर्गदं मोक्षप्रदं भक्तिप्रदं वा त्वामाराध्य आराधनेन प्रसन्नीकृत्य आर्यो विवेकी चेत्को वा पुमान् आत्मनो बन्धनं त्वया दित्सितमपि विषयजातं वरं वृणीते वृणुयात् । अहं तु मोक्षमप्यनिच्छन् कथन्तरां वृणुयाम् ॥ ५४–५५ ॥

### श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्

किं च करोतीति तपसि चांद्रायणादौ सुनिश्चितस्तदपेक्षया तस्य राज्यादेः अपेक्षया ईच्छया निवृत्तभोगः सन् दानादि ददत् । पुनश्च स्वराट् सार्वभौमः पुरंदरो वाहं भूयासं स्याम् इति । प्रवृद्धतर्षो जनः सुखाय न कल्पते ॥५३॥ इदानीं पंचभिर्जनानां संसारावृत्तिप्रकारमाह भवापवर्ग इत्यादिना । हे अच्युत संसारे भ्रमतो जनस्य यदा यर्हि सतां समागमो भवेत्तर्हि भवापवर्गो जन्ममरणनाशः शीघ्रमेव भवेदित्यर्थः सत्समागमे नान्यदपि स्यादित्याह । यर्हि सत्संगमस्तर्ह्येव सतां गतौ आश्रये प्राप्ये । पराणां अक्षरसंज्ञयोक्तानां मुक्तपुरुषाणां अवराणां क्षरसंज्ञयोक्तानां बद्धजीवानां चेशे नियामके त्वयि पुरुषोत्तमे मतिः । अत्युत्कृष्टस्नेहयुक्ताबुद्धिर्जायते ॥ ५४ ॥ मम तु राज्यवियोग एव तवानुग्रह इत्याहं मन्ये इति । ईश दुर्घटघटनापटो । यदृच्छया दैवेच्छेया राज्यबंधनस्यापगमो नाशो यस्मात् सोऽनुग्रहस्ते त्वयैव कृत इत्यहं मन्ये यश्च अनुग्रहः साधुभिः सारासारविवेकिभिः । अतः, एकचर्यया ध्यानायैकाकिगमनेन वनं विविक्षद्भिः प्रवेष्टुमिच्छद्भिः अखंडभूमिपैः भरतादिचक्रवर्त्तिभिः प्रार्थ्यंते ॥ ५४ ॥ संसारक्लेशं भगवत्सुखं च विचार्य वरान् वृणीष्वेति यत्कथितं तस्योत्तरं वदति नेति । नास्ति किंचन आत्मस्वरूपव्यतिरिक्तं किमपि येषां तैरकिंचनैरपि प्रार्थ्यतमात् अन्यं वरं । त्वाम्, आराध्य आत्मबंधनं राज्यादिप्राकृतसुखरूपं वरं को वृणीत वृणुयात् ॥५५॥ रजआदिगुणैरनुबध्यंते इति तां गुणमयदेहभोगस्थानैश्वर्यादिरूपाः सर्वा आशिषो मनोरथान् । विसृज्य । हे ईश निरंजनं निर्दोषं अतो निर्गुणं प्रकृतिगुणातीतम् । परं बद्धमुक्तेभ्यः श्रेष्ठम् । अतोऽद्वयं स्वरूपस्वभावगुणपार्षदादिभिर्नास्ति द्वितीयस्तुल्यो यस्य तम् । न तत्समश्चाप्यधिकश्च दृश्यते इति श्रुतेः ज्ञप्तिमात्रं ज्ञानघनमूर्त्ति । पुरुषमनादिसिद्धदिव्यपुरुषविग्रहम् । त्वां पुरुषोत्तमं व्रजामि अहं प्राप्तोस्मि ॥५६॥

### भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

ननु नार्पयत्यान् भोगान् किमेवं निन्दसि सर्वैरभीप्सितानिति चेत्तान् प्राप्यातितृष्णाकुलस्य न कश्चिद्भोगक्षणोऽस्तीत्याह । करोतीति ॥ इमे राज्यादयः, पूर्वजन्मोपार्जितसुकृतेन तु लब्धाः, इति शेषः । परं तु, पुनश्च पुनरपि जन्मान्तरेऽपीत्यर्थः । स्वराद् इन्द्रः, भूयासं स्यां, इति यद्वा सार्वभौमश्चक्रवर्त्ती स्यां इति, प्रवृद्धस्तर्षस्तृष्णा यस्य सः पुमान्, दधत् सांप्रतं भोगान् दधानः सन्नपि, तदपेक्षया अधिकतयैव तल्लब्धीच्छया, निवृत्तास्त्यक्ताः भोगाः, संप्राप्ता भोगा, येन सः, तपःसु जन्मान्तरीयसार्वभौमतादिसाधनेषु, तपश्चरणेषु अधःशयनब्रह्मचर्यसेवनादिष्वित्यर्थः । निष्ठितः संजातनिष्ठः सन्, कर्माणि करोति । अतः भोगान् लब्ध्वापीति शेषः । सुखाय पूर्वोपार्जितसुकृतफलरूपलब्धभोगादिसेवनसुखानुभवाय, न कल्पते समर्थो न भवति ॥ ५३ ॥ तदेवमष्टभिः श्लोकैरीशबहिर्मुखानां संसारं प्रपञ्च्य भक्त्या संसृतिनिवृत्तिं सूचयन्, यदा साक्षाद्भगवत्तज्जनसंबन्धस्तदैव सुखाय कल्पत इत्याह भवापवर्ग इति ॥ भ्रमत उक्तरीत्या संसारे भ्रममाणस्य, जनस्य पुंसः, यदा त्वदनुग्रहेणेति शेषः । भवापवर्गः संसरणस्यान्तः, भवेत् प्राप्तकालः स्यात्, तर्हि तदा, अच्युतश्च सन्तश्च तेषां समागमः, सह संवासः, भवेत्, तस्मिन् काले प्रादुर्भूतस्य भगवतस्तत्संबन्धवन्तो ये सन्तश्च तेषां समागमः स्यादित्यर्थः । अच्युतेति संबोधनं वा । यर्हि यदा, सत्संगमः, तदैव परे इन्द्रादयः अवरे अवमा यस्मात्तस्य चतुर्मुखस्यापीशो नियन्ता तस्मिन्, सद्गतौ सतां शरणभूते त्वयि, मच्चक्षुर्विषये भवतीत्यर्थः । मतिः त्वद्भक्त्याचरणात्मिका धीः, जायते । तथा च शिक्षापञ्चकेऽभियुक्ताः 'सकलजनविमोचनैकहेतुर्भुवनगुरुः कृपया यदा मुकुन्दः ।

प्रकटितकरुणार्द्ररम्यमूर्त्तिर्मिलति तदेव भवप्रवाहमुक्तिः' इत्यादि। 'यावत् स्युस्तेऽत्र सन्तोऽर्च्चास्त्वयैवास्थापितास्तथा। त्वच्छास्त्राणि तथेह त्वं जाने साक्षादिह स्थितः। तवार्च्चा नैष्ठिकैर्जुष्टा धर्मिष्ठाः साधवस्तथा। न गौणश्चागमो धर्मो भवेद्यावदिह प्रभो। तावदेवावताराणां कारणं पुरुषोत्तमः। साक्षात्त्वं वर्त्तसे लोके जानामीत्थं दयानिधे इति चाभियुक्तोक्तेः। एतदर्थप्रपञ्चः सत्सङ्गिजीवनाभिहितन्यग्रोधपत्तनीयवादिसदसि मुक्तानन्दमुनिकृत तत् प्रश्नोत्तरतः हरिदिग्विजयगतैतत् प्रकरणतश्च सविस्तरं बोध्यः॥ ५४॥ यदुक्तं 'तवानुग्रहार्थं गुहामेतामुपागत' इति तत्सत्यमेव देहानुवन्धापनयनेन लिङ्गेन पूर्वत एव त्वयाऽनुगृहीत इत्यहं मन्य इत्यभिप्रायेणाह मन्य इति॥ हे ईश, यदृच्छया त्रिदशसाहाय्यव्याजेन, राज्यरूपो योऽनुवन्धः पाशस्तस्य अपगमः अपायः, एषः ते त्वया, कृतः मम अनुग्रहः, इति अहं मन्ये। राज्यानुबन्धापगमस्यानुग्रहप्रयुक्तत्वे हेतुं वदन् तमेव विशिनष्टि। यो राज्यानुबन्धापगमः, साधुभिर्विवेकिभिः, तपसे इति शेषः। वनं, विविक्षद्भिः प्रवेष्टुमिच्छद्भिः, अखण्डभूमिपैः सार्वभौमैः, एकचर्यया एकाकित्वेन संचारार्थमित्यर्थः। प्रार्थ्यते। स्वयं त्यक्तुमलभमानैः संप्रार्थ्यत इति भावः॥ ५५॥ तदेवं विषयसेवामार्गं भगवत्सेवामार्गं च विविच्य वरान् वृणीष्वेति यदुक्तं तत्रोत्तरमाह॥ न कामय इति॥ हे विभो, अकिंचनैरनन्यप्रयोजनैरेकान्तिभिः प्रार्थ्यतमादतितरां प्रार्थनीयात्, तव पादसेवनात्, अन्यं वरं, न कामये। उपादिष्टादन्यो वरणीयोऽर्थ एव नास्तीत्यभिप्रायः। आर्यः श्रेष्ठः, विवेकी चेदित्यर्थः। को वा पुमान्, अपवर्गदं साक्षान्मुक्तिप्रदं, त्वां निष्कारणापारकरुणं भवन्तम्, आराध्य आराधनेन प्रसन्नीकृत्य, केवलं, आत्मा अनुवद्धयते येन तमात्मवन्धनं शव्दादिविषयजालरूपं वरं, वृणीत वृणुयात्। मूर्खश्चेद्वृणीते इत्यर्थः॥ ५६॥

**कृष्णप्रिया**

मनुष्य तपश्चर्यादि करता है लेकिन लक्ष्य यह है कि मैं अब दूसरे जन्म में एक अजेड़ सम्राट् बन जाऊँ ऐसे अज्ञान से विषय सुखों का त्याग करके दान पुण्य सत्कर्म तप ध्यान उपासना आदि करता लेकिन उसकी तृष्णायें तो बढ़ रही है वह कितना सत्कर्म करे लेकिन वह कभी सुख नहीं पाता, कारण कि वह संतुष्ट नहीं है एवं भगवत् चरणों का भक्त नहीं है॥ ५३॥ हे अच्युत प्रभो हे निजानन्द निरतनाथ! जीव तो सनातन काल से जन्म मृत्यु की श्रेणी में चक्कर ले रहा है। कभी भगवान की कृपा से उस चक्कर से मुक्त होने का मौका आ जाता है तब उसे सत्समागम हो जाता है और जैसे सत्सङ्ग मिला वैसे ही मुक्ति में मति हो जाती है और स्थावर जङ्गम, इहलोक परलोक के स्वामी आप की सेवा में उस पुण्यात्मा की पुण्य मति अत्यन्त स्थिरता से लग जाती है॥ ५४॥ श्री मुचुकुन्दजी दैन्यभाव से निवेदन करते हैं कि हे नाथ? मेरा निश्चित मन्तव्य है कि आपने मुझ पर अनुकम्पा की अमृतवर्षा की, क्योंकि अनायास ही मेरा साम्राज्य बन्धन टूट गया। हे नारायण! नारायण परायण सन्त स्वभाव वाले चक्रवर्ती राजा लोग भी अपना साम्राज्य का त्याग कर एकान्त में हरिभजन करने की उत्तम भावना से जब वन में जा रहते हैं और मोह ममता के बन्धनों से मुक्त होने के आपके श्रीचरणों में प्रार्थना करते रहते हैं वह बन्धन आपकी अनुकम्पा से अनायास छूट गया॥ ५५॥ हे विभो! हे कृपालो! आपके श्री चरणों की सेवा से अतिरिक्त कोई वरदान की अभिलाषा नहीं है। नाथ सेवा का महत्व इसलिये है कि जो अकिंचन भक्तजन है अथवा संग्रह से सर्वथा पर है वे लोग भी आपके पादसरोज सेवन की ही लालसा रखते हैं। हे हरे हे दयानिधे? परमपद देने वाले या निजपाद पद्मपराग में अनुराग देने वाले आपकी सेवा करके ऐसा कौन भगवदीयजन होगा कि संसार के बन्धनों में विषयों की लालसा करें॥ ५६॥

**तस्माद् विमृज्याशिष ईश सर्वतो रजस्तमःसत्त्वगुणानुबन्धनाः।**
**निरञ्जनं निर्गुणमद्वयं परं त्वां ज्ञप्तिमात्रं पुरुषं व्रजाम्यहम्॥ ५७॥**
**चिरमिह वृजिनार्तस्तप्यमानोऽनुतापै[१]रवितृषषडमित्रोऽलब्धशान्तिः कथञ्चित्।**
**शरणद समुपेतस्त्वत्पदाब्जं परात्मन्नभयमृतमशोकं पाहि माऽऽपन्नमीश॥ ५८॥**

**श्रीभगवानुवाच**

**सार्वभौम महाभाग[२] मतिस्ते विमलोर्जिता। वरैः प्रलोभितस्यापि न कामैर्विहता यतः॥ ५९॥**
**प्रलोभितो वरैर्यत्त्वमप्रदाय विद्धि तत्। न धीर्मय्येकभक्तानामाशीर्भिर्भिद्यते क्वचित्॥ ६०॥**

**कर्दमक्षमा**

अन्वयः—हे ईश! तस्मात्, अहम् रजस्तमःसत्वगुणानुबन्धनाः, आशिषः, सर्वतः, विसृज्य, निरञ्जनम्, निर्गुणम्, अद्वयम्, ज्ञप्तिमात्रम्, परम्, पुरुषम्, त्वाम्, (अहम्) व्रजामि॥ ५७॥ हे शरणद! इह, चिरम्, वृजिनार्तः-अनुतापैः, तप्यमानः,

१. अविदित-वीर.; अवितृष उरुकृच्छ्रे-विज.। २. राज-श्रीधर. वंशी वीर. विज जीव विश्व.।

अवितृषषडमित्रः, अलब्धशान्तिः, कथञ्चित्, हे परात्मन् ! अभयम्, अमृतम्, अशोकम्, त्वत्, पदाब्जम्-आपन्नम्, मा, हे ईश ! पाहि ॥ ५८ ॥ श्रीभगवान्, उवाच- हे सार्वभौम ! हे महाभाग ! ते, मतिः, ऊर्जिता, यतः, वरैः, प्रलोभितस्य, अपि, कामैः, न, विहता ॥ ५९ ॥ यत्, त्वम्, वरैः, प्रलोभितः, तत्, अप्रमादाय, विद्धि, मयि, एकान्तभक्तानाम्, धीः, आशीभिः, क्वचित्, न, भिद्यते ॥ ६० ॥

## श्रीधरस्वामिविरचिता भावार्थदीपिका

रजस्तमः सत्त्वगुणैरनुबध्यन्त इति यथा ता आशिष ऐश्वर्यादिशत्रुमारणादिधर्मादिरूपा विसृज्य परं पुरुषमीश्वरं ज्ञप्तिमात्रं ज्ञानघनम्। कुतः। निरञ्जनम्। तत्कुतः। निर्गुणम्। तदपि कुतः। अद्वयम्। अत एव अक्षरं त्वां शरणं व्रजामीति ॥ ५८ ॥ भुंक्ष्व तावद्भोगान्कैवल्यं तु करस्थमेवेति पुनर्वरैः प्रलोभयंतं श्रीकृष्णं पादोपग्रहणेन प्रार्थयते। चिरमिति। वृजिनैः कर्मफलैरार्तः पुनस्तद्वासनाभिस्तप्यमानस्तथाऽप्यवितृषषडमित्रः। तृडेव तृषा तृष्णा। न विगततृषाः षडमित्राः शत्रव इन्द्रियलक्षणा यस्य सः। अत एवालब्धशांतिः कथंचिद्दैववशेन लब्धशांतिरिति वा। शरणं स्वज्ञानं तद्ददातीति तथा। हे शरणद समुपेतः प्राप्तोऽहम्। अशोकत्वे हेतुः। अभयम्। तत्रापि हेतुः। ऋतं सत्यम्। आपन्नमापदाव्याप्तं पाहीति ॥५९-६०॥ अप्रमादाय प्रमादाय न भवत्येव। कुत इत्यत आह। न धीरिति। एकांतभक्तानां धीराशीर्भिः प्राप्ताभिरपि न भिद्यते नासज्जत इत्यर्थः ॥ ६१ ॥

## श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

तर्हि किं करोषीत्यत आह—तस्मादिति। यतो वराणां बन्धकत्वं तस्माद्धेतोः। तथाभूता मानुषराक्षसदैवीर्वाऽऽशिषो मनोरथास्संपदो वा 'स्यात्संपदिच्छयोराशीः' इति निरुक्तिः। ज्ञानघनत्वे हेतुमाशंकते-कुत इति। निरञ्जनं निरुपाधिम्। अत्रापि हेतुमाशंकते—कुत इति। तदपि निर्गुणमपि कुतो द्वैत वर्जितम्। अत एव द्वैतवर्जितत्वादेव। आशिषः फलानि। सर्वश इति पादसेवनविरुद्धो मोक्षोऽपि निरस्तः "सर्वतः" इति पाठेऽपि स एवार्थः। तस्यापि ज्ञानहेतुसत्त्वगुणानुवंधनत्वात्, सेवायास्तु नैर्गुण्यहेतुकत्वात्। 'सात्त्विक्याध्यात्मिकी श्रद्धा' इत्यादौ 'मत्सेवायां तु निर्गुणा इति श्रीभगवदुक्तेः। अन्यत्तैः। तत्र त्वामित्येतदाकारेणाऽविर्भवन्तमित्यर्थः। तं च 'परं सत्यं परं धीमहि', इति, 'आद्योवतारः पुरुषः परस्य' इति, 'कृष्णस्तु भगवान्स्वयम्' इत्यादिदृष्ट्या स्वयं भगवन्तमित्यर्थः। पुरुषमीश्वरमिति-"विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत्" इति गीतादृष्ट्यांतर्याम्याकारेण परमात्माख्यमित्यर्थः। ज्ञप्तिमात्रमिति-'ज्ञानमात्रं परं ब्रह्म' इति दृष्ट्या चिन्मात्राकारेण सर्वत्र ब्रह्माख्यमित्यर्थः। तदुक्तम्—'ब्रह्मे'ति परमात्मेति भगवानिति शब्द्यते" इति। तदेवमाविर्भावत्रयात्मके मयातीतत्वमाह-कुत इत्यादिना। तत्र त्रिधापि निरंजनमुपाधिं विना स्वरूपेणैव तथा तथा स्थितं, भगवत्त्वे परमात्मत्त्वेऽपि निर्गुणं निर्गता प्राकृतेभ्यो गुणेभ्यः गुणाः स्वरूपशक्तिवृत्तिरूपा ऐश्वर्यादयो यस्य तम्। मध्यपदलोपी समासः। 'मां भजन्ति गुणाः सर्वे' इत्यादौ 'साम्यासंगादयो गुणाः' इति श्रीभगवदुक्तेः। अद्वयं सजातीयविजातीयभेदरहितम्। ज्ञप्तिमात्रत्वेऽपि स्वरूपशक्तिर्यत्किंचिदुपलभ्यते, ईक्षितृत्वस्य स्वाभाविकतयाऽवश्यं मंतव्यत्वात्। तदुक्तम्—"ईक्षतेर्नाशब्दम्" इत्यत्र भाष्यकृद्भिर्ज्ञानस्वरूपस्य तस्य ज्ञानसाधनापेक्षा नास्ति प्रकाशस्वरूपवस्तुनः प्रकाशसाधनापेक्षाभावादिति भगवत्त्वे परमात्मत्वे च स्पष्टमेव सा श्रूयते—"न तस्य कार्यं करणं च विद्यते न तत्समश्चाभ्यधिकश्च दृश्यते। पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च।" इति, 'अपाणिपादो जवनो ग्रहीता' इति च। विग्रहश्च "यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा वृणुते तनूं स्वाम्" इति। यद्वा-निरंजनं नितरां रंजकम्, निर्गुणं निःशेषेण गुणयत्युत्तरोत्तरं भक्तिविस्तारेण वर्धयतीति तम्, अद्वयं प्रतिद्वन्द्विशून्यम्, ज्ञप्तिश्चिदेकलक्षणं ब्रह्माख्यं वस्त्वपि मात्रांशो यस्य तम्, सच्चिदानन्दरूममनंतशक्तिं पुरुषाकारं त्वामेतमित्यर्थः। व्रजामि सेव्यत्वेनाऽऽसादयामि। शेषं पूर्ववत् ॥ ५८ ॥ तद्वासनाभिः कर्मफलवासनाभिः। तथापि कर्मवासनातप्यमानत्वेपि। अत एवाऽतृप्तेंद्रियारातित्वादेव। अरुच्या न पक्षांतरमत्र तत्राप्यभयत्वे सत्यस्य भयाभावप्रसिद्धेः। अतोऽधुना कथमपि मामुपेक्षितुं नार्हसि किन्तु सर्वतो रक्षेति सदैन्यमर्थयते-चिरमिति। इह संसारे। वृजिनैः पापभोगैरार्तः, अनुतापैः पुण्यभोगक्षये शोकैस्तप्यमानः कथंचिदपि न लब्ध्वा शांतिश्चित्तस्थैर्यं सुखं वा येन सः। यद्वा-कथंचित्प्रयत्नाभावादनिरूप्येण केनचित्कारणेन सम्यक्प्रत्यक्षतया तथापि उप समीपे इतः प्राप्तः, तच्च तव योग्यमित्याह—हे शरणद। 'आर्तानां शरणं त्वहम्' इत्यादिस्वप्रतिज्ञापेक्षया स्वाश्रयदायक। न च वक्तव्यं तद्भक्तिवशादिति भक्तेरपि प्रवर्तकस्त्वमेवेत्याशयेन सम्बोधयति—परमात्मन्निति। अतोऽधुना निजपादाब्जमाहात्म्यानुरूपमेव दातुमर्हसि न त्वन्यदित्याशयेन पादाब्जं विशिनष्टि—पदैस्त्रिभिः। अतः पाहि निजसेवकत्वेन पालय। तच्च केवलं दीनवात्सल्यादेवेत्याशयेन पुनराह-आपन्नमिति। तत्र च त्वमेवैकः समर्थ इत्याह-ईशेति ॥ ५९ ॥ ऊर्जिताऽत्युच्चा। तत्र हेतुः— वरैरित्यादि। हे सार्वभौमेष्वपि महाराज इत्यत्यन्तादरात्पौनरुक्त्यं वा हे सार्वभौम महाराजेति। ततः परमेश्वरस्यापीदृशं वचनमित्यहो सौशील्यमिति भावः। विमला संसारवासनाशून्या, ऊर्जिता प्रबलरसविदग्धेत्यर्थः। तत्र हेतुः-प्रकर्षेण मां प्रपन्नो जन

इत्याद्युक्तयुक्त्या लोभितस्यापि कामैः साम्राज्याद्यैर्मोक्षपर्यन्तैर्मद्भक्त्या काम्यमानैरर्थैर्न विहृता किन्तु तस्यामेव बद्धस्पृहा जातेत्यर्थः। ऊर्जिता चालयितुमशक्यत्वाद्बलवती ॥ ६० ॥ तत्प्रलोभनम्। एवं कुतः प्रामादाभावाय कुतो ज्ञायते। इत्यत इत्यत्र। इत्यर्थ इति—विषयसंग एव बुद्धिभेद इति भावः। अप्रमादाय अप्रमादं दर्शयितुमन्योपासकानिति "क्रियार्थोपपदस्य—" इत्यादिना चतुर्थी। एतद्दर्शनायैव प्रलोभितोऽसीति भावः ॥ ६१ ॥

### श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी

आशिषः फलानि सर्वश इति पादसेवनविरुद्धो मोक्षोपि निरस्तः सर्वत इति पाठे स एवार्थः तस्यापि ज्ञानहेतुसत्त्वगुणानुबन्धत्वात् सेवायास्तु नैर्गुण्यहेतुकत्वात् सात्त्विकाध्यात्मिकी श्रद्धेत्यादौ मत्सेवायां तु निर्गुणेति श्रीभगवदुक्तेः, अन्यत्तैः तत्र त्वामिति एतदाकारेणाविर्भवन्तमित्यर्थः। तं च सत्यं परं धीमहीति आद्योऽवतारः पुरुषः परस्येति कृष्णस्तु भगवान् स्वयमिति दृष्ट्या स्वयं भगवन्तमित्यर्थः। पुरुषमीश्वरमिति "विष्टभ्याहमिदं कृत्स्नमेकांशेन" इति गीतादृष्ट्यान्तर्य्याम्याकारेण परमात्माख्यमित्यर्थः ज्ञप्तिमात्रमिति ज्ञानमात्रं परं ब्रह्मेति दृष्ट्या चिन्मात्राकारेण सर्वत्र ब्रह्माख्यमित्यर्थः। तदुक्तं "ब्रह्मेतिपरमात्मेति भगवानिति शब्द्यते" तदेवमाविर्भावत्रयात्मत्वेपि मायातीतत्वमाह—कुत इत्यादिना तत्र त्रिधापि निरञ्जनम् उपाधिं विना स्वरूपेणैव तथा तथास्थितं भगवत्त्वे परमात्मत्वेऽपि निर्गुणं निर्गता गुणेभ्यः प्राकृतेभ्यो गुणाः स्वरूपशक्तिवृत्तिरूपा ऐश्वर्य्यादयो यस्य तं मध्यपदलोपः "मां भजन्ति गुणाः सर्वे" इत्यादौ साम्यासङ्गादयोऽगुणा इति श्रीभगवदुक्तेः अद्वयं सजातीयविजातीयभेदरहितं ज्ञप्तिमात्रत्वेपि स्वरूपशक्तिर्यत्किञ्चिदुपलभ्यते ईक्षितृत्वस्य स्वाभाविकतयावश्यम्मन्तव्यत्वात् तदुक्तम् "ईक्षतेर्नाशब्दम्"। १।१।५ इत्यत्र भाष्यकृद्भिः ज्ञानस्वरूपस्य तस्य ज्ञानसाधनापेक्षा नास्ति प्रकाशस्वरूपवस्तुनः प्रकाशसाधनापेक्षाभावादिति भगवत्त्वे परमात्मत्वे च स्पृष्टमेव सा श्रूयते। "न तस्य कार्य्यं करणं च विद्यते न तत्समश्चाभ्यधिकश्च दृश्यते। परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च" इति "अपाणिपादो जवनो ग्रहीता" इति च विग्रहश्च "यमेवैष वृणुते तेन लभ्यस्तस्यैव आत्मा विवृणुते तनुं स्वाम्" इति यद्वा निरञ्जनं नितरां रञ्जकं निर्गुणं निःशेषेण भूषयति उत्तरोत्तरं भक्तिविस्तारेण गुणयति वर्द्धयतीति तम् अद्वयं प्रतिद्वन्द्वशून्यं ज्ञप्तिश्चिदेकलक्षणं ब्रह्माख्यं वस्त्वपि मात्रा अंशो यस्य तं सच्चिदानन्दस्वरूपमनन्तशक्ति पुरुषाकारं त्वामेतमित्यर्थः। व्रजामि सेव्यत्वेनासादयामि शेषं पूर्ववत् ॥ ५८ ॥ अतोऽधुना कथमपि मामुपेक्षितुं नार्हसि किन्तु सर्वतो रक्षेति सदैन्यमर्थयते—चिरमिति। इह संसारे वृजिनैः पापभोगैरार्त्त अनुतापैः पुण्यभोगक्षये शोकैस्तप्यमानः कथञ्चिदपि न लब्धा शान्तिश्चित्तस्थैर्य्यं सुखं वा येन सः यद्वा कथञ्चित् प्रयत्नाभावादनिरूप्येण केनापि कारणेन सम्यक्प्रत्यक्षतया तत्रापि उपसमीपे इतः प्राप्तः तच्च तव योग्यमित्याह—हे शरणद ! "आर्तानां शरणं त्वहम्" इत्यादिस्वप्रतिज्ञापेक्षया स्वाश्रयदायक, नच वक्तव्यं त्वद्भक्तिवशादिति भक्तेरपि प्रवृत्तकस्त्वमेवेत्याशयेन सम्बोधयति, परमात्मन्निति, अतोऽधुना निजपादाब्जमाहात्म्यानुरूपमेव दातुमर्हसि न त्वन्यदित्याशयेन पादाब्जं विशिनष्टि—पदैस्त्रिभिः। अतः पाहि निजसेवकत्वेन पालय तच्च केवलं दीनवात्सल्यादेवेति दैन्येन पुनराह आपन्नमिति। तत्र च त्वमेवैकः समर्थ इत्याह हे ईशेति ॥५९॥ हे सार्वभौमेष्वपि महाराज ! हे सार्वभौम महाराजेत्यत्यन्तादरात् पौनरुक्त्यं वा ततः परमेश्वरस्यापीदृशं वचनमित्यहो सौशील्यमिति भावः, विमला संसारवासनाशून्या उर्जिता प्रखरा रसविदग्धेत्यर्थः तत्र हेतुः प्रकर्षेण मां प्रपन्नो जन इत्याद्युक्तयुक्त्या लोभितस्यापि कामैः साम्राज्यादिमोक्षपर्यन्तैर्मद्भक्त्या काम्यमानैरर्थैर्न विहृता किं तु तस्यामेव बद्धस्पृहा जातेत्यर्थः ॥ ६० ॥ प्रलोभित इति तैर्व्याख्यातं तत्र प्रमादश्चिन्तान्तरं तथा न भवत्येवेत्यनन्तरम् इति तद्विद्धीति शेषः एकान्तभक्तानामुपासनान्तरकामनानन्तरशून्यानाम् आशिर्भिः कामनाभिः ( कर्त्रीभिः ) न भिद्यते न प्रविश्यते तासु नासज्जत इत्यर्थः। एतद्दर्शनायैव प्रलोभितोसीति भावः, अप्रमादाय अप्रमादभावाय ॥६१॥

### श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी

आशिषः फलानि, सर्वश इत्यनेन मोक्षोऽपि निरस्त एव, तस्यापि ज्ञाने हेतुः—सत्त्वगुणानुबन्धनात्त्वामद्वयमेकमेव व्रजामि, आश्रयामि, कुतः ? परं पुरुषं परमेश्वरं श्रीपुरुषोत्तमं वा, अत एव निःशेषा गुणा यस्मिन् तम्, यद्वा, निःशेषेण गुणयति उत्तरोत्तरं भक्तिविस्तारणेन वर्द्धयतीति तथा तम्, अत एव नितरां रञ्जयतीति तथा तम्, तत्प्रकारविज्ञापनापेक्षा च नास्तीत्याह ज्ञप्तिमात्रमिति, ज्ञानघनविग्रहत्वादित्यर्थः। अहं व्रजामि, अन्यस्त्वाशिषो गृह्णातु नामेत्यर्थः। यद्वा, दीर्घाशाबद्धहृदयोऽहम्। एवमहमिति लेख्ये टीकायामत एवाक्षरमिति लेखकभ्रमात्। ननु यदर्थमाश्रयसि, तन्ममादेयम्, तत्राह—ईश हे सर्वप्रदानसमर्थेति, यद्वा, किमन्यवेद्यविज्ञाप्यादधिकमपि त्वं जानास्येवेत्याह—ज्ञप्तिमात्रमिति। प्रार्थितादधिकमपि दातुं शक्नोषीत्याह—हे ईशेति। अन्यत् समानम् ॥ ५६ ॥ अतोऽधुना कथमपि मामुपेक्षितुं नार्हसि, किन्तु सर्वतोऽनिष्टाद्रक्षेति सदैन्यं प्रार्थयते—चिरमिति। इह संसारेऽस्मिन् जन्मनि वा, वृजिनैः पापभोगैरार्तः, अनुतापैः पुण्यभोगक्षये शोकैस्तप्यमानश्च, यद्वा, वृजिनैः पापकर्मभिरार्त्तः पुण्यकर्माणामपि क्षयिष्णुफलत्वादिश्रवणादनुतापैस्तपैस्तप्यमान इत्यर्थः। यद्वा, वृजिनैः पूर्वपापैरार्त्तः पुनश्चाधुनानुतापैः कामादिकृतैस्तप्यमान इति बाह्यान्तरदुःखमुक्तम्। कथञ्चिदपि त लब्धाशान्तिश्चित्तस्थैर्य्यं सुखं वा येन सः, यद्वा, कथञ्चित् स्वप्रयासाभावा-

दिना निजरूपप्रकाशनाद्यनिर्वचनीयप्रकारेण वा सम्यक् प्रत्यक्षत्वेन तत्रापि उप समीपे इतः प्राप्तः, तच्च तदनुग्रहप्रभावादेवेत्याशयेन सम्बोधयति—शरणद ! 'आर्त्तानां शरणं त्वहम्' इत्यादि-स्वप्रतिज्ञापेक्षया स्वाश्रयदायक, न च वक्तव्यं त्वद्भक्तिवशादिति भक्तेरपि प्रवर्त्तकस्त्वमेवेत्याशयेन सम्बोधयति—परात्मन्निति। अन्तर्यामितया सर्वत्र प्रवर्त्तकेत्यर्थः। अतोऽधुना निजपादाब्जमाहात्म्यानुरूपमेव दातुमर्हसि, न त्वन्यदित्याशयेन पादाब्जं विशिनष्टि पदैस्त्रिभिः। अतः कालभयव्याप्तं पारमेष्ठ्यादिपदमसत्यमणिमाद्यैश्वर्य्यञ्च भक्तजनसंगात्तुच्छत्वज्ञानेन पश्चाच्छोककरं मोक्षमपि दातुं नार्हसीति भावः। अतः पाहि, त्वत्प्राप्तिविघ्नादिसर्वापद्भ्योऽनिष्टाद्वा रक्ष, तच्च केवलं दीनवात्सल्यादेवेत्याह—आपन्नमिति। एतच्च प्राक् 'वृजिनार्तः' इत्यादिनोक्त्वापि परमार्त्योक्तम्। तत्र च त्वमेवैकः समर्थ इत्याह—हे ईशेति, यद्वा, अभयमित्यादिकं क्रियाविशेषणम्, पुनर्यथा संसारभयं शोकश्च न स्यात्, सत्यञ्च यथा स्यात्तथा पाहीत्यर्थः। न चाप्रियं कथञ्चिद्दातुमर्हसीत्याह—परात्मन् हे परमप्रियतमेति। परमात्मतया परमप्रियतमत्वञ्च चतुर्दशाध्यायान्तादौ बहुशो निरूपितमेव। अवश्यञ्च शरणागतं रक्षितुमर्हसीत्याह—आपन्नं प्रपन्नमिति। न चाधमं प्रतीदृशानुग्रहेण कुतोऽपि तव लज्जाशंकादिकं सम्भवेदित्याह—ईश, हे परमस्वतन्त्रेत्येषा दिक्॥ ५७॥ सार्वभौम ! हे अखण्डपृथ्वीपते ! अतो महाराज ! हे चक्रवर्त्तिन् ! किंवा सर्वसम्पत्त्यान्तर्बहिश्च परमप्रकाशमान ! यद्वा, सार्वभौमेषु महाराज ! अन्यत् समानम्। पाठान्तरे महाभाग्ययुक्तेत्यर्थः। विमला कामादिदोषरहिता ऊर्ज्जिता च गभीरा प्रखरा वा प्रकर्षेण (भा० १०।५१।४३) 'मां प्रपन्नो जनः' इत्याद्युक्तयुक्त्या लोभितस्यापि, काम्यन्त इति कामा विषयभोगादयस्तैः, यद्वा, मद्व्यतिरिक्तकामैर्न विहता नोपहता न क्षोभितेत्यर्थः॥ ५८॥ प्रमादोऽनर्थः प्रकृष्टमतता वा, क्वचित् कदाचिदपि प्राप्तैरपि तैः प्रमादो न भवतीत्यर्थः अन्यतैर्व्याख्यातम्। यद्वा, अप्रमादाय सदा वरोपेक्षायामवधानार्थम्, यत एकान्तभक्तानामेव धीर्न भिद्यते न प्रविश्यते, अतस्तवैकान्तभक्त्यभावेन पश्चात् कदाचित् कथञ्चिदपि न भिद्यतामित्येतदर्थमित्यर्थः॥ ५९॥

## श्रीसुदर्शनसूरिकृतशुकपक्षीयम्

निरञ्जनं सुखदुःखरहितम्। निर्गुणं गुणत्रयरहितम् अद्वयं द्वितीयरहितं समाभ्यधिकरहितत्वात्। ईश्वरद्वित्वं हि नास्ति। ज्ञप्तिमात्रं क्वचिदपि जडत्वरहितम्॥ ५८॥ ऋतं पूर्वैरभिगतं सत्यं नित्यं वा॥ ५९-६१॥

## श्रीमद्वीरराघवाचार्यकृता भागवतचन्द्रचन्द्रिका

यस्मात्त्वत्पादारविन्दसेवनमेव प्रार्थनीयं तस्मात् हे ईश ! सर्वतः सर्वाः आशिषः रजस्तमस्सत्त्वगुणैः रजआदिगुणकार्यैः कामक्रोधादिभिरनुबध्यन्ते पृष्ठतः सम्बध्यन्तः इति तथा कामक्रोधाद्युत्तरफलका इत्यर्थः। आशिषः कामान् विसृज्याहं त्वां व्रजामि "व्रज गतौ" गत्यर्था बुद्ध्यर्थाः त्वत्प्राप्त्युप्रायत्वेन त्वामध्यवस्यामीत्यर्थः। शरण्यस्य तस्य जीवतुल्यत्ववारणाय तं विशिनष्टि—निरञ्जनं पुण्यपापसम्बन्धरहितं प्रकृतिपारवश्यरूपाञ्जनरहितं वा। ननु, किमहं मुक्तजीवः ? नेत्याह—निर्गुणं कदापि गुणत्रयसम्बन्धरहितम् अनेन बद्धदशायां गुणत्रयतत्कार्य्यरागादिसम्बन्धवन्मुक्तव्यावृत्तिः तर्हि किं नित्यसिद्धः ?। नेत्याह–अद्वयं द्वित्वरहितं समाभ्यधिकरहितं तत्सत्त्वेहीश्वरद्वित्वप्रसङ्गः अतः समाभ्यधिकराहित्यादीश्वरद्वित्वं नास्ति नित्यसिद्धस्तु समाभ्यधिकवानिति तद्व्यावृत्तिरतःपरं सर्वोत्कृष्टं सौलभ्याभावे केवलं परत्वं न शरण्यत्वप्रयोजकमतस्सौलभ्यमाह—पुरुषम्पुरुषरूपेण यदुषु वर्तमानमिति भावः। दिव्यात्मस्वरूपं निर्दिशति–ज्ञप्तिमात्रमिति। मात्रशब्देन क्वचिदपि जडत्वव्यावृत्तिः ज्ञानैकस्वरूपम् इत्यर्थः। अत्र पुरुषपदसौलभ्य ( तालभ्य ) मन्येषामपि वात्सल्यादिशरण्यतोपयुक्तगुणानामुपलक्षणम्॥ ५८॥ इत्थं शरणं प्रतिपद्याथात्मनः कार्पण्यनिवेदनपूर्वकं रक्षां प्रार्थयते–चिरमिति। इह संसारे उरुभिर्विपुलैः तापराध्यात्मिकादिभिस्तप्यमानोऽत एव चिरं वृजिनेन दुःखेनार्त्तः पीडितः अविजिताः षडमित्राः शत्रवो मनःषष्ठानीन्द्रियाणि येन सः, अवितृषषडमित्र इति पाठे विगता तृषा येषां ते वितृषाः अवितृषाः ते षडमित्रा यस्येत्यर्थः। अत एवालब्धा शान्तिर्मनःप्रसादो येन तथा भूतोऽहं हे शरणद ! कथञ्चित्वत्सङ्कल्पादिवशेन त्वत्पदाब्जं समुपेतः शरणं गतवान् पादाब्जं कथम्भूतं न विद्यते भयं संसारो यस्मात् अत एव न विद्यते शोको यस्मात् ऋतं सत्यं नित्यं वानेन स्वर्गयागादिसाध्यसाधनवैलक्षण्यमुक्तं हे परमात्मन् ! हे सर्वनियन्तः, इत्थमापन्नमापदाव्याप्तमधुना प्रपन्नं मां पाहि संसृतिभयात्त्रायस्व॥ ५९॥ एवं विज्ञापितः प्राह—भगवान् सार्वभौमेत्यादिना। यावत्समाप्ति। तव मतिर्विमला रागादिमलरहिता ऊर्ज्जिता बलवती निवृत्तिधर्म एव दृढेत्यर्थः। कुतः ? यतः वरैः हेतुभिः प्रलोभं प्रापितस्यापि तव मतिः कामैर्विषयैर्न विहता न विहन्यते॥ ६०॥ वरैः प्रलोभित इति यत्तदप्रमादाय विद्धि बुद्धेरप्रमादार्थं विजानीहि। ननु, प्रलोभनात्कदाचिद्बुद्धिप्रमादोऽपि स्यात्ततश्च भ्रश्येदत आह—न धीरिति। मय्येकभक्तानामनन्यप्रयोजनभक्तानां मतिः क्वचित्कदाचिदपि आशीर्भिः कामैः न भिद्यते न विहन्यते॥ ६१॥

## श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली

तर्हि किं करोषीति तत्राह—तस्मादिति। आशिषः स्वर्गादिसंपदः रजसा मानुषः तमसा राक्षसादिः सत्त्वेन देवादिः ज्ञप्तिमात्रं ज्ञानघनम्॥ ५८॥ अधुना कर्तव्यं किं तत्राह—चिरमिति। वृजिनार्तः दुःखक्लिष्टः एतदेव विवृणोति तप्यमान इति

अवितृषः सतृष्णा उरुक्रच्छ्रविषये कथञ्चिल्लब्धशान्तिः लब्धेमोक्षः प्राप्तत्याग इत्यर्थः। ऋतं शश्वदेकप्रकारं पन्नं संसारकूपे पतितम् उरुकृच्छ्रे वृजिनार्त इति वा ॥ ५९–६० ॥ वरैः प्रलोभित इति यत्तदप्रमादाय विद्धि नैतच्चित्रमित्याशयेनाह—नेति ॥ ६१ ॥

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः

आशिषः फलानि सर्व्वंश इति मोक्षोऽपि निरस्तः तस्यापि ज्ञानहेतुसत्त्वगुणानुबन्धनत्वात् सेवायास्तु नैर्गुणहेतुकत्वात् सात्त्विक्याध्यात्मिकी श्रद्धे त्यादौ मत्सेवायान्तु निर्गुणेति श्रीभगवदुक्तेः ज्ञप्तिमात्रं ज्ञानघनं सच्चिदानन्दविग्रहमित्यर्थः निरञ्जनम् उपाधिं विना स्वरूपणैव तथास्थितं निर्गुणं निर्गता गुणेभ्यः प्राकृता गुणा यस्य तं मध्यपदलोपः, अद्वयं प्रकृतिसम्वन्ध-रहितम् ॥ ५८–६३ ॥

### श्रीमज्जीवगोस्वामिकृतः बृहत्क्रमसन्दर्भः

तस्मादित्यादि। हे ईश! ईश्वर! तस्माद्धेतोः सर्वा आशिषः सर्वविषयसुखान्युत्सृज्य त्वां पुरुषं पुरुषोत्तमं व्रजामि शरणं यामीत्यर्थः। आशिषः कीदृशीः? व्रजस्तमः सत्वगुणानुबन्धनाः। न केवलं गुणानुवन्धत्वादाशिष एवोत्सृज्य, निर्गुणं निरञ्जनमद्वयं यन्निर्विशेषं ब्रह्मे ति तदप्युत्सृज्य तदनुसन्धानमप्यकृत्वेत्यर्थः। त्वदाराधनेनैव तल्लब्धिरित्यादि ज्ञप्तिमात्रं ज्ञानमात्रं ज्ञानमेव मात्रांशो यस्य ज्ञानमिति यत् तदपि तवैवांश इति त्वदाश्रयेणैव तल्लब्धेः। किमिति पृथङ् निराकार भावनयेति भावः ॥ ५७ ॥ अतस्त्वत्पादाब्जमेवानुगतोऽस्मीत्याह—चिरमिहेत्यादि। हे शरणद! त्वत्पदाब्जं समुपेतोऽहम्, मा पाहि भक्तरूपेण मां रक्ष, मा मोक्षं दाः। शरणमाश्रयं ददातीति तथा शरणं गृहं द्यतीति वा गृहवन्धच्छेदकेत्यर्थः। शरणं गृहरक्षित्रोः इत्यमरसिंहः ॥ ५८ ॥ भगवानपि तथैवान्वमोदतेत्याह—प्रलोभित इत्यादि। वरैः प्रलोभितोऽपि यत्त्वमप्रमादाय प्रमत्तो नाभूरित्यर्थः। विद्धि जानीहि तत्। मय्येकान्तभक्तानां धीराशीर्भिः क्वचिदपि न भिद्यते। तेन त्वमेकान्तभक्तोऽसि। तस्मात्मत्पदाब्जं विना नान्यन्मोक्षाधिकमपि यदभिलषसि तत्तदुचितमेवेति वाक्यार्थः ॥५९॥ व्यतिरकं दोषमाह—युञ्जानानामित्यादि। अभक्तानां प्राणायामादिभिर्मनो युञ्जानानामाप्यक्षीणवासनं मनः पुनरुत्थितं दृश्यते मद्भक्तानां तु मनो मयि लीनत्वान्न पुनरुत्तिष्ठतीति वाक्यार्थः ॥ ६० ॥

### श्रीनाथचक्रवर्तिपादविरचिता चैतन्यमतमञ्जूषा

तस्मादित्यादि। आत्मबन्धनं वरं को वृणीते, न कोऽपीत्यर्थः। तस्माद्धेतो, सर्वा आशिषः सुखानि विसृज्य किम्भूता आशिष रजस्तम इत्यादि—केवलमाशिषमुत्सृज्य, निरञ्जनं निर्गुणं ज्ञप्तिमात्रं यद्ब्रह्म तदपि विसृज्य, परं केवलं त्वां पुरुषं पुरुषोत्तमं व्रजामि प्राप्नोमीत्यर्थः ॥ ५७ ॥ अतस्त्वत्पदाब्जं समुपेतोऽहं हे शरणद ! मां पाहि। भक्तरूपेण मां रक्षः, कैवल्यं मा दाः ॥ ५८ ॥ भगवानपि तथैवान्वमोदत "न धीरेकान्तभक्तानामाशीर्भिर्भिद्यते क्वचित्" क्वचिदाशीभिर्मोक्षप्रभृतिभिः ॥ ५९ ॥

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी

स्वस्य सर्वकामनिस्पृहं स्पष्टीकृत्याह–तस्मादिति। सर्वशः सर्वा एव सर्वत इति पाठेऽपि स एवार्थः रजस्तमःसत्त्वगुणैरनुबध्यन्त इति ताः तेन ज्ञानहेतुसत्त्वगुणानुबन्धिनीमुक्तिरपि विसृष्टा गुणत्रयातीता पादसेवनात्मिका भक्तिरेव प्रार्थिता श्रीमद्गीतास्वेकादशे च भक्तेरेव त्रिगुणातीतत्वश्रवणात् त्वां पुरुषं व्रजामि प्राप्नुयामित्यर्थः। ननु, पुरुषाकारम्मां मायाशरणं ब्रह्मे ति केचिदाचक्षते तत्राह निरञ्जनम् अञ्जनमुपाधिस्तद्रहितं यतो निर्गुणं ननु च सत्यं निर्गुण एवास्मि इदं मदीयं वपुस्तु गुणमयमेव वदन्तीत्यत आह अद्वयं त्वन्त्वद्वपुश्च न भिन्नं त्वमेव त्वद्वपुरित्यर्थः। तर्हि वपुरिदं किं स्वरूपं तत्राह ज्ञप्तिमात्रं चित्स्वरूपं ब्रह्मै—वेत्यर्थः। गुणमयजगतोऽपि त्वच्छक्तिमयत्वेन त्वद्भिन्नत्वाभावाददृयम्। स्वरूपशक्त्या तु ज्ञप्तिमात्रं पुरुषम् ॥ ५८ ॥ भुङ्क्ष्व तावत् भोगान् तदन्ते साक्षात् पादसेवनं तु ते दास्याम्येवेति पुनर्वरैः प्रलोभयन्तं श्रीकृष्णं पादोपग्रहणेन प्रार्थयते, चिरमिति। वृजिनैः सङ्ग्रामे शक्रवैरिजिगीषालक्षणैरुपद्रवैरेवार्तः हरिहरि एतावद्दिनानि भगवन्तं नाभजमित्यनुतापैस्तप्यमानः विषयभोगे प्रस्तुते सत्यवितृषषडमित्रः विगततृष्णानि मे षडिन्द्रियाणि न भवन्ति कथञ्चित् स्वकृतेनान्यदत्तेन विवेकेनाप्यलब्धशान्तिः तेन त्वद्दत्तेष्वपि भोगेष्वेवनमेव पुनरप्यहं भविष्यामि विषयभोगस्य स्वभाव एवायं तस्मात् मा देहि भोगानिति द्योतितम्। हे परात्मन्! अन्तर्यामिन्! सर्वं त्वं जानास्येवेति भावः। अभयमृतमशोकमिति पदाब्जस्य विशेषणत्रयेण अन्यत्र मानुषसम्पत्तौ रोगविपक्षादिभयं, दिव्यसम्पत्तौ अचिरस्थायित्वलक्षणमनृतत्वं, ब्राह्मसम्पत्तौ त्वत्पादसेवनवञ्चितत्वलक्षणः शोक इत्यलन्ताभिरिति द्योतितं तस्मान्मा माम् आपन्नमापद्ग्रस्तं पाहि स्वपादाब्ज एव रक्षेत्यर्थः॥ ५९ ॥ ऊर्जिता चालयितुमशक्यत्वाद्बलवती ॥ ६० ॥ अप्रमादाय तवाप्रमादं द्रष्टुमन्योपासकान् दर्शयितुमिति वा "क्रियार्थोपपदस्य" (२।३।१४) इत्यादिना चतुर्थी यतो धीरित्यादि ॥ ६१ ॥

### गूढार्थदीपिनी

वृजिनैः पापभोगैः। अनुतापैः पुण्यभोगक्षयैः। न वितृषा न तृप्ता षडिन्द्रियलक्षणा शत्रवो यस्य। कथञ्चिल्लब्धशान्तिरिति वा तत् समुपेतः प्राप्तोऽहम्। तस्य विशेषणत्रयम्। आपन्नम् आपद्ग्रस्तं मां पाहीति। मालिनी वृत्तम्॥ ५७॥ विमला निर्वासना ऊर्जिता बलवती च ते मतिः। कामैर्विषयै न विहता नाकृष्टा॥ ५८॥ अप्रमादाय अनासक्तिं दर्शयितुम्। आशीर्भि न भिद्यते न चाल्यते॥ ५९॥ पुञ्जानानां निरोधार्थं प्रयतमानानाम्। उत्थितं विषयासक्तं दृश्यते॥ ६०॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

ननु, मम पादसेवनेन तव को लाभ इत्यत आह—तस्मादिततस्मात्तव पादसेवनात् रज आदिगुणैरनुवध्यन्ते इति तथा ताः आशिषः कामान् सर्वतो विसृज्य निरञ्जनो भूत्वा निरञ्जनं सर्वदा सर्वप्राकृताञ्जनवर्जितं यतो निर्गुणं प्राकृतगुणशून्यम् अद्वयं निरतिशयं सर्वात्मानं ज्ञप्तयो ज्ञानस्वरूपा जीवाः मात्राः अंशा यस्य तं मुक्तोपसृप्यं ज्ञप्तिमात्रं ज्ञानैकस्वरूपमिति पुरुषं श्रीमन्मङ्गलविग्रहयुक्तं त्वां व्रजामि प्राप्नुयामि॥ ५८॥ भगवत्कृपां विना सर्वसाधनस्यानुष्ठितस्यापि स्वातन्त्र्येण फलदत्वाभावात् स्वदैन्यं निवेदयत् त्वच्चरणशरणङ्गतं मां भगवन् पाहीति प्रार्थयते—चिरमिति। इह संसारे अनुतापैःआध्यात्मिकादिभिस्तप्यमानः। अत एव वृजिनैर्दुःखैरार्तः न विगता तृषा येषां ते अवितृषा ते षट् मनः षष्ठानीन्द्रियाण्यमित्राः यस्य सः अत एव अलब्धशान्तिः एवम्भूतोऽहं हे शरणद! त्वत्पदाब्जं शरणम्। कथञ्चित्समुपेतोस्मि अतो हे ईश! आपन्नं आपदाव्याप्तं मां पाहि॥ ५९॥ विमला रागादिमलरहिता ऊर्जिता सुदृढा चालयितुमशक्या॥ ६०॥ त्वं वरैः प्रलोभित इति यत् तदप्रमादाय अप्रमादख्यापनाय विद्धि जानीहि आशीर्भिः प्राप्ताभिरपि न भिद्यते न सज्जते दीयमानाभिर्वा न भिद्यते न चाल्यते इत्यर्थः॥ ६१॥

### श्रीसत्यधर्मकृता श्रीभागवतटिप्पणी

तस्माद्रजस्तमःसत्त्वगुणानुबन्धनाः। मानुष्यो राजस्यस्तामस्यो राक्षसाद्याः सात्त्विक्यो दैव्यो यास्तास्तद्गुणानुबन्धनास्तदनुबन्धवतीराशिषः सर्वशः सर्वा विसृज्य निरञ्जनं निर्दुष्टं निर्गुणं सत्त्वादिगुणरहितं भिन्नगुणरहितं वा। अव्ययं परं ज्ञप्तिमात्रं ज्ञानघनं पुरुषं व्रजामि शरणम्॥ ५७॥ चिरमिह नानायोनौ वृजिनमार्तः सम्यक् प्राप्त इत्यनुतापैः सांसारिकतापसाधनैस्तप्यमानोऽहं कथञ्चित्केनचित्सुकृतेनावितृषो न विद्यते विविधा तृषा यस्य स उरुकृच्छ्रे भविष्यद्बहुकष्टे संसारे लब्धा शान्तिरितः परं न मम संसारः स्यादित्युपरतिर्येन सः। हे ईश शरणद परमात्मन्। अभयमृतं शाश्वतकमशोकं स्वयं शोकराहित्येनेतरशोकपरिहारकत्वेन चाशोकं त्वत्पादाब्जं समुपेतः संसारे पन्नं पतितं मां पाहि॥ ५८॥ वरैः कामैरुत्तमैः काम्यैः प्रलोभितस्यापि यतो न विहिता ततो हे सार्वभौम गतम्। सर्वोर्वीश महाराज। विमलौर्जितोद्रिक्ता च ते मतिः॥५९॥ यद्यतो मय्येकभक्तानां मुख्यदासानामाशीर्भिर्धीः क्वचिदपि न भिद्यते तस्माद्वरैः प्रलोभितोऽपि तद्वरोपदेशनमप्रमादायैवेति विद्धि जानीहीति केचित्। वस्तुतस्तु विद्धीति छेदः। पूर्वोत्तरग्रन्थस्वारस्यात्॥ ६०॥

### श्रीमद्वल्लभाचार्यकृता सुबोधिनी

अत उत्कृष्टप्रार्थनार्थं प्रथमतः शरणं गच्छामीत्याह **तस्माद्विसृज्येति**। हे ईश समर्थ, सर्वतः अन्तर्बहिः सर्वं विसृज्य, त्वां ज्ञप्तिमात्रं शरणं व्रजामि। सर्वेषां परित्यागार्थं त्रिगुणत्वमाह **रजस्तमःसत्त्वगुणानुबन्धना** इति। रजःप्रभृतीनां बन्धकत्वाय गुणानुबन्धत्वमुक्तम्। अनिच्छतोऽपि बन्धहेतव इति तत्सम्बन्धमात्रेण तथात्वाय अनुपदप्रयोगः। ननु भगवानपि स्मार्तानां मते सोपाधिक इति तत्रापि रजःप्राप्तिरेवेत्याशङ्क्याह **निरञ्जनमिति**। अञ्जनमुपाधिः प्रकृत्यादिः, तद्रहितो निरुपाधिः, ततः किमत आह **निर्गुणमिति**। सोपाधिक एव सगुणो भवति। नतु निरुपाधिक इति। ननु भगवान् पूर्वं केवल एव स्वभोगार्थं स्वेच्छया प्रकृतिं गुणांश्चोत्पादितवान्, अतः कथं त्वदर्थेऽपि तन्न करिष्यतीत्याशङ्क्याह **अद्वयमिति**। द्वयरहितो भेदरहितः। यो हि भेदार्थं यतते, तं प्रति तथा सम्पादयति, अहं तु न तथेति मां प्रति न सम्पादयिष्यतीति भावः। स स्वतन्त्र इति वक्तुमाह परमिति। अन्यशङ्कां वारयति त्वामिति। ननु तथापि त्वं गुणमय इति त्वदधिकारानुसारेण तथैव करिष्यतीति चेत्, तत्राह **ज्ञप्तिमात्रमिति**। तादृशस्य शरणागमनं न सम्भवतीति पुरुषरूपतामाह। **शरणमिति** पाठे अर्थात् पुरुषरूपमेवेति त्वांपदात् ज्ञातव्यम्। पुरुषपदे तु त्वां व्रजामीत्यर्थात् शरणमिति ज्ञातव्यम्॥ ५६॥ एवं शरणागतः स्वरक्षां प्रार्थयते **चिरमिहेति**। सङ्घातात्पीडितः असमर्थः तत्पीडापरिहाराय रक्षां प्रार्थयते। नत्वन्यस्मात्। तदर्थं बाधकानि गणयति। चिरं वृजिनैर्दुःखैरार्तः, अनुतापैस्तप्यमानोऽपि जातः। अनुतापा नियता आध्यात्मिकादयः। अग्रेऽपि तापजनकान् दोषानाह **अवितृषषडमित्र** इति। पूर्वत्र प्रवाहे तु षडिन्द्रियाण्यमित्राणि न वितृष्णानि। तस्मात् शत्रुभिः पीडितः। ते भक्षयिष्यन्तीति शङ्कया प्रार्थना। नन्विन्द्रियोपरत्यभावे व्यर्थं सर्वमिति चेत्, रक्षितोऽपि यदीन्द्रियहितमेव कुर्यात्, तदा किं रक्षयेत्यत आह **लब्धशान्तिरिति**। कथञ्चिदन्तःकरणमुपरतमित्यर्थः। त्वं च शरणप्रदः, अहं च सम्यगुपेतः, तत्रापि त्वत्पदाब्जसेवकत्वेन। **परात्मन्निति**। जीवानां स्वामी भगवानिति शरणगमनं नायुक्तमिति भावः। गुणत्रयपीडितस्य पीडानिवारकं भगवति गुणत्रयमाह **अभयमृतमशोकमिति**। सत्त्वगुणाभावात् भयाभावः। अत एवान्यं

च पालयितुं शक्तः। ऋतत्वात् रजसः अभावः, रजःसम्बन्धेन शुद्धं भवतीति, ऋतता युक्तैव। **अशोकमिति** तमसा शोकः। **आपन्नमिति** रक्षायां हेतुः। **ईशेति** सामर्थ्यम् ॥ ५७ ॥ ततो भगवान् वृथा शयनं कृतवानिति, तं तपसि प्रवर्तयितुं मर्यादारक्षार्थं च प्रार्थितदानमाह **सार्वभौमेति** षड्भिः। सार्वभौमत्वेन तस्य भाग्याभिनन्दनमुक्तम्। महाभागेति अग्रिमसिद्ध्यर्थं च भाग्यमुक्तम्। तव मतिर्विमला ऊर्जिता च। सांसारिकधर्मनिवृत्त्या विमलत्वम्, भगवत्परत्वेन ऊर्जितत्वं चेति। भगवदाज्ञोल्लङ्घने भगवान् कथं संतुष्ट इत्याशङ्कां निवारयितुमाह **वरैः प्रलोभितस्यापीति**। सर्वान् कामान् ददामीति यदुक्तम्, तत्केवलं लोभप्रदर्शनार्थम्, तेषु तव रुचिरस्ति नवेति, तदिदानीमवगतं नास्तीति, यतः कामैर्न विहता बुद्धिः। अत एव विमलत्वमूर्जितत्वमिति सम्बन्धः ॥ ५८ ॥ ननु स्वामिना कथमेवं प्रलोभ्यते, तत्राह **प्रलोभित** इति। यदपि वरैस्त्वं प्रलोभितः, तदप्यप्रमादायैव, भगवदीयस्य कदाचिदिच्छा स्यात् विषया न दृष्टा इति, तदन्यदत्तैर्विषयैः स्वाभाविकैर्वा इष्टं न भवतीति मयैव दीयन्ते, ततो विषयभोगः प्रमादाभावश्च सिध्यति। **विद्धीति**। नात्र सन्देहो विधेयः। हेत्वन्तरमप्याह **न धीर्मय्येकभक्तानामिति**। एकभक्ताः एकस्यैव भक्ताः, न मार्गान्तरप्रेप्सवः, किन्तु भक्ता एवेति वा। आशीर्भिर्वरप्राप्ताभिः, तत्रापि भगवतः सकाशात्। क्वचिदित्यस्य पक्षस्याव्यभिचारः उक्तः ॥५९॥

## श्रीसुबोधिनीसारः

तस्माद्धेतोः हे ईश रजस्तमःसत्त्वान्येव गुणास्तैरनुबध्यंते इत्येवंभूता आशिषश्चितितसिद्धिरूपाः सर्वतः सर्वप्रकारेण विसृज्य त्यक्त्वाऽद्वयम् एकं निरंजनमुपाधिरहितं निर्गुणं ज्ञप्तिमात्रं ज्ञानघनं परं पुरुषं त्वां शरणमहमुपैमि ॥ ५७ ॥ इह संसारे चिरं बहुतिथं वृजिनेन दुःखेन ऋतो व्याप्तः पीडितो वानु पश्चात्तापैरध्यात्मादिभिः तप्यमानः न विगता तृषा येषां तानि षडिन्द्रियाण्यमित्राणि शत्रवो यस्य सः न लब्धा शांतिर्येन कथंचित् दैवात्प्राप्तशांतिर्वाहम् अभयं मोक्षरूपं सत्यम् ऋतं तव पदाब्जं पादपद्मं समुपेतः प्राप्तोस्मि। हे शरणद हे परात्मन् हे ईश आपन्नम् आपद्ग्रस्तं मा मां त्वं पाहि रक्ष ॥५८॥ श्रीकृष्णोक्तिः। हे सार्वभौम! हे महाराज। ते तव मतिर्धीर्विमला शुद्धोर्जिता सत्त्वोद्रिक्ता। यतो वरैः प्रलोभितस्यापि तव बुद्धिः कामैर्न विहता न चलिता ॥५९॥ नहि पिष्टपेषणवत्प्रलोभनं मिथ्येत्याह। मया वरैर्यस्त्वं प्रलोभितोसीति तत् अप्रमादाय निवृत्त्यर्थं विद्धि जानीहि। मयि एकभक्तानां धीर्वुद्धिराशीर्भिः क्वचिन्न भिद्यते न पृथक् क्रियते ॥ ६० ॥

## गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

तस्माद्बन्धनरूपत्वात् हे ईश! सर्वतः सर्वाः आशिषः सर्वान् विषयान् विसृज्य त्यक्त्वाऽहं त्वां शरणं व्रजामीत्यन्वयः। बन्धहेतुत्वे हेतुं सूचयन्नाह—रज इति। प्राकृतै रजआदिभिर्गुणैरनुबध्यन्ते विसृज्यन्ते इति तथा, रजआदिकार्यरूपा इत्यर्थः। भगवतः शरणयोग्यत्वं दर्शयन्नाह—परं पुरुषमिति। पुरुषोत्तममित्यर्थः। तत्र हेतुमाह—अद्वयमिति। समाभ्यधिकरहितमित्यर्थः। तत्रापि हेतुमाह—निरञ्जनमिति। पुण्यपापरागलोभादिसर्वदोषरहितमित्यर्थः। तत्रापि हेतुमाह—निर्गुणमिति। प्राकृतगुणपारतन्त्र्यरहितमित्यर्थः। तत्रापिहेतुमाह—ज्ञप्तिमात्रमिति। ज्ञानैकस्वरूपमित्यर्थः॥ ५७ ॥ एवं शरणमागत्य आत्मनः कार्पण्यनिवेदनपूर्वकं रक्षां प्रार्थयते—चिरमिति। हे शरणद आश्रयप्रद! 'तव अविदितं किञ्चिन्नास्ति' इत्याशयेन सम्बोधयति—परात्मन्निति। हे अन्तर्यामिन्! रक्षायां सामर्थ्यं द्योतयन् सम्बोधयति—ईशेति। इह संसारे अनुतापैः आध्यात्मिकादिदुःखैश्चिरं तप्यमानः। तापहेतुमाह—वृजिनार्त इति। वृजिनैः पापैः पीडित इत्यर्थः। पापहेतुं सूचयन्नाह—अवितृषषडमित्र इति। तृडेव तृषा तृष्णा, न विगता तृषां येषां ते अवितृषाः षट् अमित्राणि शत्रवः निषिद्धाचरणपापोत्पत्तिद्वारा दुःखहेतवो मनःषष्ठानि इन्द्रियाणि यस्य सः, अत एव न लब्धा शान्तिः कामक्रोधादिराहित्येन मनःप्रसादो येन सः, कथञ्चिदन्तर्यामिणस्तव प्रेरणया त्वत्पदाब्जं समुपेतः शरणं प्राप्तः, स्तमापन्नं आपदा व्याप्तं मां पाहि संसारदुःखात्त्रायस्व। 'त्वच्चरणशरणानां संसारदुःखनिवृत्तिरेव युक्ता' इत्याशयेन चरणं विशिनष्टि—अभयमिति। न भयं यस्मात्, शरणागतभयनिवर्तकमित्यर्थः। अशोकं शोकनिवर्तकम् ऋतं सत्यफलरूपमित्यर्थः॥ ५८ ॥ एवं सम्प्रार्थित आह—हे सार्वभौम हे महाराज! तव मतिर्विमला रागलोभादिमलरहिता, अत एव ऊर्जिता परमार्थदर्शने समर्था। यतो वरैः प्रलोभितस्यापि तव बुद्धिः कामैर्विषयैर्न विहता नाकृष्टा॥ ५९ ॥ ननु 'सर्वज्ञस्त्वं निराकाङ्क्षं ज्ञात्वापि किमिति मां प्रलोभितवान्?' तत्राह—प्रलोभित इति। यत्त्वं मया वरैः प्रलोभितस्तत् प्रलोभनमप्रमादाय लोके भक्तस्य बुद्धेरप्रमादमनासक्तिं दर्शयितुं विद्धि जानीहीत्यन्वयः। एतदेवाभिनयेनाह—नेति। मय्येकान्तभक्तानां धीराशीर्भिर्विषयैर्न भिद्यते, मत्तः पृथक्कृता न भवतीत्यर्थः॥ ६० ॥

## अन्वितार्थप्रकाशिका

तस्मादिति ॥ हे ईश! तस्मात् तवैव प्राप्यत्वात् रजस्तमःसत्त्वैर्गुणैरनुबध्यन्ते संसृज्यन्ते इति। तथा आशिषः ऐश्वर्यशत्रुनाशधर्मादिरूपाः सर्वतो विसृज्य इति पादसेवनान्तराभूतो मोक्षोऽपि निरस्तः। निरञ्जनं निर्गुणम् अद्वयं परं पुरुषमीश्वरं ज्ञप्तिमात्रं ज्ञानघनं त्वां शरणं व्रजामि ॥ ५६ ॥ ननु भुङ्क्ष्व भोगान् प्रेमपादसेवनमपि ते दास्याम्येवेति वरैः प्रलोभयन्तं पादोप-

सङ्ग्रहेण प्रार्थयते—चिरमिति ॥ शरणं स्वज्ञानं ददातीति हे शरणद ! हे परात्मन् ! हे ईश ! इह संसारे चिरं वृजिनैः कर्मफलैः आर्त्तः पुनश्च अनुतापैस्तद्वासनाभिस्तप्यमानस्तथापि अवितृषषडमित्रः तृडेव तृषा तृष्णा न विगततृषाः षडमित्रा शत्रव इन्द्रियलक्षणा यस्य सः तत एवालब्धशान्तिः अतः कथञ्चिद्दैववशेन लब्धशान्तिर्वा अहम् अभयम् ऋतं सत्यम् अशोकं त्वत्पदाब्जं समुपेतः, अतः, आपन्नम् आपद्व्याप्तं मां पाहि ॥ ५७ ॥ सार्वभौम ! हे महाराज ! तव मतिर्विमला रागलोभादिमलरहिता अत एव ऊर्जिता परमार्थदर्शने समर्था यतो वरैः प्रलोभितस्यापि तव बुद्धिः कामैः साम्राज्यादिमोक्षान्तैर्न विहता नाकृष्टा ॥ ५८ ॥ प्रलोभित इति ॥ यत्त्वं मया वरैः प्रलोभितस्तत् प्रलोभनप्रमादाय लोके भक्तस्य बुद्धेरप्रमादमनासक्तिं दर्शयितुं विद्धि जानीहि । यतः मय्येकान्तभक्तानां धीः प्राप्ताभिरप्याशीर्भिर्विषयैः कचिदपि न भिद्यते नासज्जते ॥ ५२ ॥

## श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्

अतोऽधुनाकथंचिदपि मामुपेक्षितुं नार्हसीति सदैन्यं प्रार्थयते चिरमिति । हे परात्मन् सर्वोत्कृष्टमूर्त्ते इह संसारे चिरं वृजिनैर्नानाविधदुःखैरार्त्तः पीडितः । अनुतापैराध्यात्माधिभूताधिदैवैस्त्रितापैस्तप्यमानः । अवितृषाः स तृष्णाः षट् इंद्रियाख्या अमित्रारिपवो यस्य सः अत एव अलब्धशांतिः । कथंचिल्लब्धशांतिरितिवाहे शरणद ऋतं नित्यं सत्यम् । अभयं भयनिवर्त्तकम् । अशोकं शोकनिवर्त्तकम् । त्वत्पदाब्जं समुपेतः प्राप्तोऽस्मि । अतः । हे ईश समर्थ आपन्नमापद्ग्रस्तं मां त्वं पाहि ॥ ५७ ॥ ऊर्ज्जिताज्ञानवैराग्यशोभिता ॥ ५८ ॥ तत्प्रलोभनं । अप्रमादाय तव सावधानत्वाय विद्धिनयातनायेत्यर्थः । यतो मय्येकभक्तानामेकांतभक्तानां धीर्बुद्धिः । आशीर्भिः प्राकृतसुखप्रापकाशीर्वादरूपवरैः । क्वचित्कर्हिचिदपि न भिद्यते ॥ ५९ ॥ युंजानानां वशीकुर्वाणानाम् । उत्थितं विषयार्थमुद्युक्तम् ॥ ६० ॥

## भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

तस्मादिति । यस्मात्तव पादारविन्दसेवनमेव प्रार्थनीयं तस्मादित्यर्थः । सर्वतः सर्वा, रजश्च तमश्च सत्त्वं च तानि च ते गुणास्तैः, रजआदिगुणकार्यैः, कामक्रोधादिभिः सह, अनुबद्धयन्ते पृष्ठतः संसृज्यन्ते इति रजस्तमःसत्त्वगुणानुबन्धनाः कामक्रोधाद्युत्तरफलका इत्यर्थः । आशिषः कामान्, हे ईश, विसृज्य परित्यज्य, अहं, निरञ्जनं पुण्यपापरहितं प्रकृतिपारवश्यरूपाञ्जनरहितं वा । ननु किमहं मुक्तजीवो नेत्याह । अद्वयं द्वित्वरहितं, समाभ्यधिकरहितमित्यर्थः । सर्वोत्कृष्टं, पुरुषं पुरुषाकारं, प्राकृततावारणायाह । ज्ञप्तिमात्रं ज्ञानैकस्वरूपं, निर्गुणं प्राकृतगुणवर्जितं, त्वां व्रजामि । शरणमिति शेषः ॥ ५७ ॥ इत्थं शरणं प्रतिपद्यात्मनः कार्पण्यनिवेदनपूर्वकं रक्षां प्रार्थयते । चिरमिति । इह संसारे, चिरं बहुकालं, वृजिनैः कर्मफलभोगैरार्त्तः, अनुतापैस्तद्वासनाभिः, तप्यमानः, पाठान्तरे, उरवो विपुलास्तापा आध्यात्मिकादयस्तैः, तप्यमानः, संधिरार्षः । अविजिताः षडमित्राः मनःषष्ठेन्द्रियरूपाः शत्रवो येन सः, अवितृषषडमित्र इति पाठे, न विगता तृषा येषां तेऽवितृषाः षडमित्रा यस्य सः, अत एव, न लब्धा शान्तिर्मनः प्रसादो येन तथाभूतोऽहं, हे शरणद, कथंचित् त्वत्संकल्पादिवशतः, न विद्यते भयं संसरणभीतिर्यस्मात्, न विद्यते शोको यस्मात्, ऋतं, सत्यं नित्यं वा, त्वत्पदाब्जं त्वच्चरणकमलं, समुपेतः शरणं संप्राप्तः, अस्मि । अतः, हे परात्मन् सर्वनियन्तः, हे ईश, आपन्नमापदा व्याप्तं, मा मां, पाहि संसृतिभयात्त्रायस्व ॥ ५८ ॥ एवं विज्ञापितः प्राह भगवान् सार्वभौमेत्यादिना यावदध्यायसमाप्ति । सार्वभौमेति । हे सार्वभौम, महाराज, यतः वरैर्हेतुभिः, प्रलोभितस्य प्रलोभं प्रापितस्यापि, ते तव, मतिः विमला रागादिमलरहिता, ऊर्जिता बलवती निवृत्तिधर्मदृढा सतीत्यर्थः । कामैर्विषयैः, न विहता न विहन्यते इत्यर्थः ॥ ५९ ॥ प्रलोभित इति । हे राजन्, त्वं वरैः प्रलोभित इति यत्, तत् अप्रमादाय, विद्धि । बुद्धेरप्रमादार्थं जानीहीत्यर्थः । ननु प्रलोभनात् कदाचिद्बुद्धिप्रमादोऽपि स्यात्ततश्च भ्रश्येदत आह नेति । मयि, एकभक्तानां ममानन्यभक्तजनानामित्यर्थः । धीर्मतिः, क्वचित् कदाचिदपि, आशीर्भिः कामैः, न भिद्यते न विहन्यते ॥ ६० ॥

## कृष्णप्रिया

हे ईश इसलिये सत्त्वगुण तमोगुण रजोगुण से जुड़ी हुई सारी कामनाओं का त्याग कर केवलानन्द स्वरूप, निरञ्जन, गुणातीत, अद्वितीय, चित् स्वरूप पूर्ण पुरुषोत्तम आपकी ही शरण आया हूँ ॥ ५७ ॥ हे कृपासिन्धो ? सुचिर काल से कर्मफलों के भोगों से उब गया हूँ—थक गया हूँ और त्रिविध या विविध तापों से संतप्त बना हूँ, और काम क्रोध लोभ मद मोह मत्सर नाम के षड् रिपु कभी शान्त नहीं होते हैं उनकी भोग लालसा बढ़ती ही रही है, किसी भी उपाय से एक पल भी मुझे शान्ति नहीं मिली इसलिये अब हे शरणागत वत्सल ! हे परात्मन् ! आप के अभय, अमृतमय, आनन्दमय चरण कमलों की शरण में आया हूँ । हे विश्वपते हे दयानिधे ! अब शरणागत का संरक्षण कीजिये ॥ ५८ ॥ भगवान् श्रीकृष्ण ने कहा—हे सार्वभौम ? हे सम्राट् ! हे महाराज तुम्हारी बुद्धि श्रेष्ठ है और विशुद्ध हैं मैंने वार वार वरदान देने का प्रलोभन दिया लेकिन निश्चल मति होने के कारण कामनाओं के अधीन न हुई ॥ ५९ ॥ बार बार वरदान देने का जो मैंने प्रलोभन दिया वह भैया आपके निश्चय अचल करने के लिये और सावधान बनाने के लिये । जो मेरे अनन्य भक्त होते हैं उनकी मति कभी भौतिक भोगों की ओर नहीं टलती और वासनाओं में नहीं भटकती ॥ ६० ॥

[1]युञ्जानानामभ[2]क्तानां प्राणायामादिभिर्मनः। अक्षीणवासनं राजन् दृश्यते [3]क्वचिदुत्थितम् ॥ ६१ ॥
विचरस्व महीं कामं मय्यावेशितमानसः। [4]अस्त्वेव नित्यदा तुभ्यं भक्तिर्मय्यनपायिनी ॥ ६२ ॥
[5]क्षात्रधर्मस्थितो जन्तून् न्यवधीर्मृगयादिभिः। समाहितस्तत्तपसा जह्यघं [6]मदपाश्रयः ॥ ६३ ॥
जन्मन्यनन्तरे राजन् सर्वभूतसुहृत्तमः। भूत्वा द्विजवरस्त्वं वै मामुपैष्यसि केवलम् ॥ ६४ ॥

इति श्रीमद्भागवते महापुराणे[7] दशमस्कन्धे[8] [9]मुचुकुन्दस्तुतिर्नामैक[10]पञ्चाशत्तमोऽध्यायः ॥ ५१ ॥

**कर्दमक्षमा**

अन्वयः—राजन्! प्राणायामादिभिः, युञ्जानानाम्, अभक्तानाम्, अक्षीणवासनम्, मनः, क्वचित्, उत्थितम्, दृश्यते ॥ ६१ ॥ राजन्! मयि, आवेशितमानसः, कामम्, महीम्, विचरस्व, तुभ्यम्, मयि, अनयायिनी, भक्तिः, नित्यदा, एव, अस्ति ॥ ६२ ॥ क्षात्रधर्मश्रितः, मृगयादिभिः, जन्तून्, व्यवधीः, तद्, अघम्, तपसा, समाहितः, मदपाश्रयः, जहि ॥ ६३ ॥ हे राजन्! अनन्तरे, जन्मनि, त्वम्, सर्वभूतसुहृत्तमः, द्विजवरः भूत्वा, माम्, केवलम्, उप, एष्यसि ॥ ६४ ॥

इति एकपञ्चाशत्तमाध्यायस्यान्वयाः समाप्ताः।

**श्रीधरस्वामिविरचिता भावार्थदीपिका**

व्यतिरेकमाह। युञ्जानानामिति। उत्थितं विषयाभिमुखम् ॥ ६२ ॥ तुभ्यं तव ॥ ६३ ॥ युक्त्याभासेन भीषयंस्तपसि लोकसंग्रहे प्रवर्तयसि। क्षात्त्रधर्मेति ॥ ६४–६५ ॥

इति श्रीमद्भा० म० दशमस्कंधे उत्तरार्धे श्री० भावार्थदीपिकायामेकपंचाशत्तमोऽध्यायः ॥ ५१ ॥

**श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः**

व्यतिरेकं बुद्धिरेकं युञ्जानानामपि न क्षीणा दुष्कर्मवासना यस्मिंस्तत्तथा। अन्योपासकानां तु प्रमादो भवत्येवेत्याह—युंजानानामिति। अभक्तानां मद्भक्तभिन्नानां योगिनां ज्ञानिनां चेत्यर्थः ॥ ६२ ॥ अनपायिनी जन्मांतरेऽप्यपायहीना। अस्त्वेव भविष्यत्येव ( यादादीनां तुबादीनाञ्च कालविशेषाकथनेऽपि भविष्यत्कालो वोध्य इत्युक्तमाकरे )। इतः परं कृतकृत्य एव त्वमित्याह—विचरस्वेति ॥ ६३ ॥ युक्तिस्तूचितार्था तद्भिन्नो युक्त्याभासः, न हि भगवद्दर्शिनः पापानि कदापि तिष्ठतीत्यतो नेयं युक्तिः किन्तु तदाभास एवेत्याशयः। लोकसंग्रहे तन्निमित्तम्। निमित्ते सप्तमी। क्षात्रधर्मे राजधर्मे। आदिना प्रमादोऽपि राज्ञां भवतीति तद्ग्रहः। तज्जन्तुवधोत्थम्। अघं पापम्। हा हा अतः परमपि मां स्वसंगाद्वियोजयितुमिच्छसि, मैवं मैवमिति तस्य महोत्कंठामालक्ष्य भगवता विचारितम्—अयमस्मिन्नवतारे स्वसंगे नेतुमनर्हः, मदीयलीलापरिकरा हि द्वापरांतर्भवा उद्धवाक्रूरादयो युधिष्ठिरार्जुनादयश्च इममेतन्मन्वन्तरप्रथमसमयभवमतिप्राचीनं दृष्ट्वा–अहो कोऽयमतिस्थूलतमोऽतिदीर्घतमोऽस्मदननुरूपो मानुप इत्युक्त्वा हसिष्यन्ति, तथा संप्रत्येव जरासंधात्पलायनलीलायां तथाग्रिमासु रुक्मिणीहरणादिलीलासु जरासंधादिभिः शाल्वादिभिश्च संग्रामे नायं मत्संगानुरूपो भवितुमर्हति, अयं तान्मद्विपक्षान्मशकानिव करतलाभ्यामेव घृष्ट्वा वधिष्यतीत्यत इमं संगाद्विमोचयितुं कां युक्तिं करोमीति विचिन्त्य केवलमलीकोक्तिमयं तत्प्रत्यायकं किमप्याह—क्षात्रेति ॥ ६४ ॥ तत्त्वमाह—जन्मनीति। अनंतरे एतद्देहपातानन्तरभाविनि। सर्वभूतसुहृत्तम इत्यनेन सर्वाऽभयप्रदानलक्षणः संन्यासो लक्ष्यते। आत्यन्तिकमुक्तिहेत्वौपनिषदात्मसाक्षात्कारोपयोगिपारिव्राज्ययोग्यत्वात्सर्वतनुषु प्रायो ब्राह्मणतनुरेव चरमदेहत्वान्मत्प्राप्तियोग्या नान्येति सूचयन्नाह—भूत्वेत्यादि। द्विजवरो ब्राह्मणः 'प्रव्रज्या ब्राह्मणस्यैव' इत्येवकारेणान्यवर्णस्य तद्व्यवच्छेद इत्युक्तं हारीतस्मृतौ। उपैष्यसीति "ब्रह्मैव सन्ब्रह्माप्येति" इति श्रुतेर्ब्रह्म भूत्वा ब्रह्म प्राप्नोतीति प्रतीयते। तथा च—"ब्रह्म ब्राह्मण आत्मना" इति श्रुतेः, "अव्यक्तरूपिणो विष्णोः स्वरूपं ब्राह्मणा भुवि" इति स्मृतेश्च ब्राह्मणो ब्रह्मैवाऽतो ब्रह्मैव सन् अपरोक्षात्मज्ञानवान्ब्राह्मणजातिर्भूत्वा ब्रह्म परमात्मानं प्राप्नोतीत्यर्थ इति श्रुत्यर्थो भगवता ध्वनितः। यत्तु 'स एष साधो चरमो भवानाम्' इत्युद्धवं प्रत्युक्तं श्रीकृष्णेन, तदपि निजभक्तानां देहत्यागसमलक्षणमेव ब्राह्मण्यं संपाद्य निजशक्त्या मोक्षदानपरमिति ध्येयम्, अन्यथा भूत्वा द्विजवर इत्युक्तिर्व्याकुप्येतेति। ननु तर्हि त्वत्संगी कदा भविष्यामीत्यत आह—जन्मनीति। अतः परं त्वं मद्धाम वैकुंठं यास्यस्येव स्ववैरिभ्योऽप्यस्मिन्नवतारे मोक्षं वैकुण्ठवासश्च ददामि किं पुनस्तुभ्यं परमभक्ताय, किंचावतारान्तरे च त्वां संगिनं लीलापरिकरं करिष्यामि,

---

१. ज्ञानिनामेक–विज. । २. युक्ता–प्रा. पा. । ३. पुनरु–श्च बर. वंशी. जीव. वीर. विज. विश्व. शुक. सु. । ४. अस्त्येव–श्रीधर. टि. । ५. क्षत्रधर्मे–वीर. ; क्षत्रधर्म–विज. । ६. मदु–श्रीधर वंशी. जीव. वीर. विश्व ; मामुपा–विज. । ७. पारमहंस्यां संहितायां–प्रा. पा. । ८. उत्तरार्द्धे । ९. न्वे यवनवधो मुचुकुन्दस्तव एक । १०. चतुःपञ्चाशत्तमो–बिज. ।

यदा त्वां स्वञ्च समकालमेवाऽविर्भावयिष्यामीत्यनंतरे जन्मनि मम च तव चेत्यर्थः। सर्वभूतानामुपकारकत्वात्, यथायोगं विद्याप्रदानाच्च। सुहृत्तमो द्विजवरः परमादरणीयो विप्रो भूत्वा मां केवलं वैराग्यत्वान्निष्परिग्रहं समेष्यसि, मत्संग एव स्थास्यसीत्यर्थः॥ ६५॥

इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे दशमस्कन्धे उत्तरार्द्धे एकपञ्चाशत्तमोऽध्यायः॥ ५१॥

## श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी

मार्ग्गांतरे तु कामत्यागयत्नवतामपि प्रमादः स्यादित्याह—युञ्जानानामिति। समादधानानां क्रमात्तादृशनिष्ठाजनकस्य भक्तिमात्रस्याभावादेव न क्षीणा विषयादिवासना यस्य तत्॥६२॥ इतः परं कृतकृत्य एव त्वमित्याह—विचरस्वेति। मय्यावेशितमानसस्त्वं कामं यथेष्टं विचरस्व विहर यतः अस्त्वेवेति अस्त्येवेति पाठे यथास्ति तथैवास्तीत्यर्थः॥ ६३॥ क्षात्रेति तैरवतारितं तत्र भीषयन्निति सहजसौशील्येन तद्गुणमनूद्य पुनरतिकारुण्यात् स्वस्मिन्। तस्य प्रेमविशेषसम्पादकोत्कण्ठावर्द्धनार्थं कालविलम्बनेनेति भावः, आनुषङ्गिकप्रयोजनमाह—लोकसङ्ग्रह इति। अतः भीषयन्नित्यार्ष इव प्रयोग आर्षानुगामित्वादिति ज्ञेयम् यद्वा, तदर्थमेव कृत्यशेषाभासं प्रदर्शयन्नाह, क्षात्रेति। तपसा मयि चित्तैकाग्रेण अघं मूर्ज्जितां तादृशवासनाम्॥ ६४॥ तथैवाह—जन्मनीति। उत्तरपक्षे तथैव प्रारब्धादिति भावः त्वदभीष्टं मामेव केवलं न तु त्वदनभीष्टं विभूत्यादिकमपि उप सामीप्ये नैष्यसि प्राप्स्यसि साक्षाद्विचित्रमत्परिचर्य्यां करिष्यसीत्यर्थः॥ ६५॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिण्यां एकपञ्चाशत्तमोऽध्यायः॥ ५१॥

## श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी

न च वक्तव्यम्, अष्टांगयोगेन मनःसमाधानादाशीर्भिर्धीर्न भेद्येति, एकान्तभक्त्यभावादित्याह—युञ्जानानामिति। अभक्तानां भक्तिरहितानाम्, यद्वा, त्यक्तान्नानामपि भक्त्यभावादेव न क्षीणा विषयादिवासना यस्य तत्, राजन्निति त्वयेदं बुध्यत एवेत्यर्थः। यद्वा, जन्मन्यस्मिन् राजत्वेन राजधर्म्मापेक्षया चिरं देवरक्षया च दीर्घनिद्रयाप्येकान्तभक्तिर्न सम्पन्नास्तीति भावः। अत एव जन्मान्तरावाप्तिर्वक्ष्यते, भक्तिस्तु तस्य भात्येव, सा च, ( १४ श० श्लो० ) 'महान्' इत्यादौ प्राक् व्यञ्जितैव; अन्यथा श्रीभगवत्तादृशानुग्रहासम्भवः स्यादिति दिक्॥ ६०॥ ननु कथमेकान्तभक्तिः स्यादित्यपेक्षायामादिशति—विचरस्वेति। मय्यावेशितमानसः सन् कामं यथेष्टं मत्पादसेवासिद्ध्यनुसारेण, अत एव विशेषेण एकाकित्वादिना मद्भक्तसंगमसंकीर्तनादिना वा, चरस्व; ततश्च अनपायिनी एकान्तित्वादनवच्छिन्ना अहैतुकी वा भक्तिरस्ति, भवत्येवेत्यर्थः। पाठान्तरे एवमस्त्विति वरस्तादृशविचरणेनाप्येकान्तभक्तेः सुदुर्लभत्वात्॥ ६१॥ तत्रादौ तावत् तपश्चरेत्यघक्षपणव्याजेनादिशति—क्षात्रेति। अनेन निर्दयत्वमुक्तम्, वस्तुतस्त्वघराहित्यमेव, क्षत्रियस्य तद्विहितत्वात्। जन्तून् जीवान्, आदिशब्दाद् युद्धादयः। एवं सर्व्वभूतसौहृदाभावेनैकान्तिकभक्त्ययोग्यत्वञ्च सूचितम्। तपसा वानप्रस्थधर्म्मेण समाहितः कृतचित्तस्थैर्य्यः, अतो मदपाश्रयस्तपोऽर्पणादिना मदेकशरणः सन्। अयं भावः—एकान्तभक्त्यभावेनाधुना साक्षान्मत्पादसेवायोग्यता नास्ति, कलिकालेऽस्मिन् महीविचरणञ्च मनःक्षोभकरम्, तदधुना लोकसंगत्यागेन कुत्रापि निर्जनेऽस्य स्थितिरेवास्य हिताय स्यात्, तत्र यथाधिकारं तप एवोचितं तदर्पणादिना च मदाराधनमपि स्वतः फलिष्यत्येवेत्यघक्षयप्रयोजनव्याजेन तप आदिशामीति॥ ६२॥ एवं जन्मान्तरे एकान्तभक्तत्वसम्पत्त्या तवाभीष्टं सेत्स्यतीत्याह—जन्मनीति। अनन्तरे अव्यवहिते, हे राजन्निति क्षत्रियत्वेन, तत्र च राज्येन, तद्वासनानुसारेणाधुना सर्व्वभूतसुहृत्तमत्वाभावः सूचितः। द्विजवरो ब्राह्मण इति तस्यैव स्वभावतः सुहृत्तमत्वसिद्धेः। तत्र सर्व्वभूतानां सुहृत् ज्ञानी, सुहृत्तरो भक्तः, सुहृत्तम एकान्तभक्तः, सहजकारुण्यभरेण भक्तिविस्तारणादिना निरुपाधिसर्व्वोपकारसहजकारुण्यभरेण भक्तिविस्तारणादिना निरुपाधिसर्व्वोपकारपरत्वात्। तथा चोक्तं श्रीभगवतैव 'सुतरां मत्कृतात्मनाम्' इति। एवमेकान्तित्वमेवाभिप्रेतम्। यद्वा, द्विजेषु विप्रेषु वरः श्रेष्ठ एकान्तभक्तत्वात्, अत एव राजन् राजमानः, सर्व्वभूतसुहृत्तमश्च। वै एव, अतो मामेव केवलमेकम्, न तु मद्विभूत्यादिकम्; यद्वा क्रीड़ाविशेषेणैकान्ते एकाकितया वर्त्तमानमपि उप सामीप्येन, एष्यसि प्राप्स्यसि, साक्षान्मद्विचित्रपरिचर्य्यां करिष्यसीत्यर्थः। अथवा तस्य पादसेवैकवाञ्छया तथा न धीरित्यादिभगवदुक्त्या चैकान्तभक्तत्वं गम्यत एव, अन्यथा कृपाकोमलशीलस्य विनयाद्यशेषगुणनिधेर्भक्तं प्रति साक्षादेकान्तभक्तत्वाभावोक्तेरघटनात्। ततश्च ( भा० ११।१९।३६ ) 'तपो मन्निष्ठता बुद्धेः' इति स्वनिष्ठतार्थमेव तथोक्तम्, भक्तेरात्यन्तिकशोधकत्वात्। जन्मान्तरे द्विजवरत्वञ्च ( भा०१०।५१।४७ ) 'ममैष काल' इत्यादिना राजत्वस्य दोषोद्घाटेनैव विप्रजन्मतोऽभिप्रेतत्वात्। किंवा श्रीनारदादिवन्महाभागवतोत्तमतामाहात्म्यविशेषसिद्ध्यर्थं महाभागवतोत्तमलक्षणं चोक्तं पद्मपुराणोत्तरखण्डे—'तापादिपञ्चसंस्कारी नवेज्याकर्मकारकः। अर्थपञ्चकविद्विप्रो महाभागवतोत्तमः॥' इति। अस्यार्थः श्रीभगवद्भक्तिविलास-टीकातो ज्ञेयः। एतदनुसारेणोक्ततत्तदर्थश्चोह्यः। तत्र च भक्तिरस्ति वर्त्तत एव, अतः कामं विचरस्वेति, अन्यत् स्पष्टमेव। स्वामिपादानां व्याख्यानुसारेण तत्र तत्र प्रथमपक्षे

व्याख्यातमपि गोकुलसम्बन्धिनामाद्यकथनञ्च, तस्य श्रीनारायणज्ञानेन तदैश्वर्य्यश्रवणेनैव विश्वासोत्पत्तेः। तथेश्वर-दृष्टि-मति-युक्तेरविशेषमयगुह्यप्रकाशनायोग्यत्वाच्चेति दिक् ॥ ६४ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे उत्तरार्द्धे श्री श्रील-सनातन-गोस्वामिपाद-कृतायां श्रीबृहद्वैष्णवतोषण्यां श्रीदशम-टिप्पण्यामेकपञ्चाशत्तमोऽध्यायः ॥ ५१ ॥

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम्

उत्थितं विषयेषु प्रवृत्तम् ॥ ६२–६३ ॥ मृगयादिभिः लोकरक्षाऽनुपयुक्तव्यापारैः ॥ ६४–६५ ॥

इति श्रीमद्भागवतव्याख्याने दशमस्कन्धे श्रीसुदर्शनसूरिकृतशुकपक्षीये एकपञ्चाशत्तमोऽध्यायः ॥ ५१ ॥

### श्रीमद्वीरराघवाचार्यकृता भागवतचन्द्रचन्द्रिका

अभक्तानां तु भिद्यत एवेत्याह—युञ्जानानामिति। प्राणायामादिभिरुपायैर्युञ्जानानां नियुञ्जानानाम्मनोनियमनं कुर्वतां तु मन अक्षीणवासनम् अक्षीणा वासना यस्य तत् हेतुगर्भमिदं तत्त्वात्। क्वचिद्विषये कदाचिद्वा उत्थितं विषयप्रवणं दृश्यते ॥ ६२ ॥ विचरस्वेति मय्यावेशितं मानसं येन तथाभूतस्त्वं महीं कामं यथेच्छं विचरस्व नित्यम् अनपायिनी भक्तिस्त्वय्यस्त्येव तथानुगृह्णामीति भावः ॥ ६३ ॥ ननु, भक्त्यैकलभ्यो भवांस्तामन्तरेणाप्यधुना प्रत्यक्षितः किमिति मुक्तिं विलम्बयसीति विदिततदभिप्रायः प्राह—क्षत्रेति। क्षत्रवर्णोचितधर्मनिष्ठो मृगयादिभिर्लोकरक्षानुपयुक्तमृगयादिव्यापारैर्जन्तून् हतवानसि ततस्त्वमहमेवापाश्रयः संश्रयो यस्य सः मद्भक्तिनिष्ठः संस्तपसा मत्प्राप्तिप्रतिबन्धनिवर्तकेन भक्तियोगोत्पत्तिप्रतिबन्धकनिवर्त्तकेन वा तपसा तज्जन्तुवधप्रयुक्तं पापं जह्यपनय प्रत्यक्षितपरमात्मनामप्यघे प्रारब्धे तपसानुभवेन वा विनाशिते सत्येव परमात्मप्राप्तिरिति भावः ॥ ६४ ॥ कदा तर्ह्यघक्षयः त्वत्प्राप्तिश्चेत्यत आह—जन्मनीति। अनन्तरे एतज्जन्माव्यवहितोत्तरजन्मनि त्वं द्विजश्रेष्ठो भूत्वा सर्वभूतसौहार्द्दवान् समः कृत्स्नं जगद्ब्रह्मात्मकं पश्यंश्च केवलं प्रकृतिमण्डलात्परतः स्थितं मामुपैष्यसि प्राप्स्यसि वै नूनम् ॥ ६५ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम् एकपञ्चाशत्तमोऽध्यायः ॥ ५१ ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

क्षीणा दुष्कर्मवासना यस्मिन्तत्तथा उत्थितं विषयाभिमुखम् ॥६२–६४॥ केवलं मां "केवलो निर्गुणश्च" इति श्रुतेः ॥६५॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम् एकपञ्चाशत्तमोऽध्यायः ॥ ५१ ॥
( विजयध्वजरीत्या चतुःपञ्चाशत्तमः ५४ )

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

त्वदभीष्टं मामेव केवलं नतु त्वदभीष्टं विभूत्यादिकमपि उपसेवार्थं सामीप्ये नेष्यामि ॥ ६४–६५ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धीये श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे एकपञ्चाशत्तमोऽध्यायः ॥ ५१ ॥

### श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः

तस्मात् त्वया यदभिलषितम्, तदेवास्त्वित्याह—अस्त्येवमित्यादि। भक्तिर्मय्यनपायिनीति, अनपायिनी कैवल्यनिरपेक्षिणी ॥ ६१–६२ ॥ भूत्वा द्विजवर इत्यादि। द्विजवरस्त्वं क्षत्रियश्रेष्ठस्त्वं भूत्वा उत्पत्य स्थितः अचिरादचिरेणैव मामवाप्स्यसि अवापः अतीतार्थे भविष्यत्प्रयोगः। यद्वा, हे द्विज! क्षत्रिय! त्वं वरो भूत्वा अप्राकृतो भूत्वा प्राप्स्यसि इदानीं तु प्राप्तवानसि किन्त्वयं ते देहः प्राकृतः ॥ ६३ ॥

इति श्रीदशमे श्रीबृहत्क्रमसन्दर्भे एकपञ्चाशत्तमोऽध्यायः ॥ ५१ ॥

### श्रीनाथचक्रवर्तिपादविरचिता चैतन्यमतमञ्जूषा

व्यतिरेके दोषमाह—युञ्जानानामभक्तानामित्यादि–प्रार्थितं प्रत्यनुमोदयन्नाह—अस्त्वेवमित्यादि। अनपायिनीति कैवल्यनिरपेक्षिणी ॥ ६२–६३ ॥

इत्येकपञ्चाशोऽध्यायः ॥ ५१ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

अन्योपासकानां तु प्रमादो भवत्येवेत्याह—युञ्जानानामिति। अभक्तानां मद्भक्तभिन्नानां योगिनां ज्ञानिनां चेत्यर्थः। प्राणायामशमदमादिभिः, उत्थितं विषयाभिमुखं भवति ॥ ६२ ॥ तुभ्यमिति पूर्वमधुनापि विशेषतो दत्तैव ॥ ६३ ॥ हा हा अतः परमपि मां स्वमङ्गाद्वियोजयितुमिच्छामि मैवं मैकमिति तस्य महोत्कण्ठामालक्ष्य भगवता विचारितम् अयमस्मिन्नवतारे स्वसङ्गे

नेतुमनर्हः मदीयलीलापरिकरा हि द्वापरान्तर्भवा उद्धवाक्रूरादयो युधिष्ठिरार्ज्जुनादयश्च इममेतन्मन्वंतरप्रथमसमयभवमतिप्राचीनं दृष्ट्वा अहो कोऽयमतिदीर्घतमोऽतिस्थूलतमो अस्मदननुरूपो मानुष इत्युक्त्वा हसिष्यन्ति तथा सम्प्रत्येव जरासन्धात् पलायनलीलायां तथाग्रिमासु रुक्मिणीहरणादिलीलासु जरासन्धादिभिः शाल्वादिभिश्च सङ्ग्रामे नायं त्वसंगानुरूपो भवितुमर्हति अयं हि तान् मद्विपक्षान् मशकानिव करतलाभ्यामेव धृष्ट्वा वधिष्यन्तीत्यत इमं स्वसङ्गाद्वियोजयितुं कां युक्तिं करोमीति विचिन्त्य केवलमलीकोक्तिमयं तत् प्रत्यायकं किमप्याह—क्षात्रेति ॥ ६४ ॥ ननु, तर्हि त्वत्सङ्गी कदा भविष्यामीत्यत आह—जन्मनीति । अयमर्थः अतः परं देहान्ते त्वं मद्धाम वैकुण्ठं यास्यस्येव स्ववैरिभ्योऽप्यस्मिन्नवतारे मोक्षं वैकुण्ठवासं च ददामि किं पुनस्तुभ्यं परमभक्ताय किं त्ववतारान्तरे त्वां स्वसङ्गिनं लीलापरिकरं च करिष्यामि यदा त्वां स्वं च तुल्यकाल एवाभिर्भावयिष्यामीति अनन्तरे जन्मनि मम च तव चेत्यर्थः सर्वभूतानामुपकारकत्वात् यथायोगं विद्याप्रदानाच्च सुहृत्तमः द्विजवरः परमादरणीयो विप्रो भूत्वा मां केवलं वैराग्यत्वान्निष्परिग्रहमुपैष्यसि मत्सङ्गे एव स्थास्यसीत्यर्थः ॥ ६५ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् । एकपञ्चाशत्तमोऽयं दशमेऽजनि सङ्गतः ॥ ५१ ॥

## गूढार्थदीपिनी

कामं यथेच्छम् । तुभ्यं तव ॥ ६१ ॥ तत् अघं जन्तुवधोत्थं पापम् ॥ ६२ ॥ अनन्तरे आगमिनि । केवलमद्वितीयं मामुपैष्यसि ॥ ६३ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे उत्तरार्धे गूढार्थदीपिन्यामेकपञ्चाशत्तमोऽध्यायः ।

## श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

उत्थितं विषये प्रवृत्तम् ॥ ६२ ॥ तुभ्यं तव ॥ ६४ ॥ केवलमनुपमं प्रकृतिमण्डलात् परतः स्थितम् ॥ ६५ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धीये श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे एकपञ्चाशत्तमाध्यार्थप्रकाशः ॥ ५१ ॥

## श्रीसत्यधर्मकृता श्रीभागवतटिप्पणी

एकभक्तानां ज्ञानिनामेके मुख्याश्च ते भक्ताश्च तेषां ज्ञानवतां प्राणायामादिभिर्मनःक्षीणवासनं क्षीणा वासना यस्य तत्सत् । हे राजन् क्वचिद्विषये उत्थितं तदभिमुखमिति यावत् ॥ ६१ ॥ हे स्व महीं काममिच्छानुसारं मय्यावेशितमानसो विचर नित्यदाऽनपायिनी भक्तिस्तुभ्यं तव मय्येवास्तु । मय्यावेशितमानसो मय गतौ मय्यो गम्य इति आवेशितं मानसं यस्य स इति वा । मयीति पुनर्वचनं दार्ढ्यार्थं वा ॥ ६२ ॥ क्षत्रधर्मस्थितो नित्यं जन्तून्प्राणिनो मृगयादिभिर्भवानवधीत् । तत्तद्वधजमघं तपसा समाहितो मामुपाश्रितो जहि गमय ॥ ६३ ॥ मधुनाथाधुनाऽपि भ्रामणमेव किमित्यतो वक्ति । अनन्तरे जन्मनि सर्वभूतसमो द्विजवरो विप्रो भूत्वा केवलमनन्यसदृशत्वाच्च केवलोऽसौ हरिः स्मृत इति चतुर्थतात्पर्योक्तेरसदृशं मामुपैष्यसीति । द्विजवरस्त्वं सर्वभूतसमो भूत्वेति वा ॥ ६४ ॥

इति श्रीभागवतटिप्पण्यां सत्यधर्मकृतायां दशम उत्तरार्धे चतुःपञ्चाशोऽध्यायः ॥ १०–५४ ॥

## श्रीमद्वल्लभाचार्य्यकृता सुबोधिनी

एवं भोगमोक्षाववविरुद्धौ भगवन्मार्ग एव, नत्वन्यत्रेति वदन् पक्षान्तरं दूषयति **युञ्जानानामिति** । भक्तिमार्गव्यतिरेकेण केवलानामभक्तानां प्राणायामादिभिर्मनो युञ्जानानां मनोनिरोधार्थं यतमानानां क्वचिदुत्थितं दृश्यते, यथा सौभरिप्रभृतीनाम्, तत्र हेतुः **अक्षीणवासनमिति** । **राजन्निति** सम्बोधनं वासनाक्षयाभावानुभवार्थम् । भक्त्या तु वासना क्षीयते । तत्र अलौकिकप्रकारं वारयितुं कामा दीयन्ते, तदुपद्रवाभावश्च संपाद्यत इति, भगवता भक्तिमार्गः स्तुतः ॥ ६० ॥ एवं स्तुत्वा तन्मार्गे प्रविष्टस्य भयाभावः सिद्ध एवेति वदन् कामविहारं बोधयति **विचरस्वेति** । यतो महांस्त्वमतोऽन्यथा विहारः स्वत एव निवृत्तः । किञ्च । मय्यावेशितमानसः सन् विचरस्व । कीदृशी जगति भगवल्लीलेति जिज्ञासुरिव । चरणसेवामेव प्रार्थये, नान्यदिति यदुक्तम्, तत्राह **अस्त्वेवेति** । अत्र भक्तिदानं नापेक्ष्यते, त्वयि भक्तिः सहजैवास्ति । उत्कर्षोऽपि भक्तेः सहज एवेत्याह **अनपायिनीति** । नित्यदेति च । देशकालवस्तुपरिच्छेदा निवारिताः । अपायः स्वतो देशतश्च । यद्यपि कालनिषेधोऽप्यायाति, तथापि निषेधमात्रपरत्वाभावाय निमित्तभूतः कालः तव भक्तेरनुगुण इति ज्ञापनार्थं **नित्यदेत्युक्तम्** । **तुभ्यमिति** । सम्प्रदानत्वेनैव पूर्वं दानं सूचितम् । **मय्यनपायिनीति** वा । मद्विषयिणी मत्कृपया वा । अग्रेऽपि न निर्वर्तिष्यत इति वरदानम् ॥ ६१ ॥ ननु सायुज्यं कुतो न दीयत इत्याशङ्क्याह **क्षात्रधर्मस्थित इति** । क्षत्रियाणां धर्मः जातिप्रयुक्तो घोरो द्विविधः । युद्धे भ्रातरमपि हन्यात् । पापर्द्धौ पलायमानानपि मृगान् हन्यात् । अतस्तस्य दोषस्य परिहारः कर्तव्यः । **जन्तूनिति** । तेषामपराधाभावः सूचितः । आदिशब्देन भ्रममुत्पाद्य मारणं, वागुरादिना वा । तस्य निराकरणोपायमाह **समाहित** इति । जितेन्द्रियान्तःकरणः सन् तत्पापं तपसा जहि । ननु तपस्यपि पापं श्रूयते, कियान्वार्थः स्वपरद्रुहा धर्मेण, 'मां चैवान्तःशरीरस्थ'मित्यादिवाक्यैः, तत्राह **मदपाश्रय** इति । मामेवाश्रित्य तपःकरणे अन्तर्म-

ट क्लेशजननाभावात् न तपो दोषो भविष्यतीति भावः ॥ ६२ ॥ ततो यद्भाव्यं तदाह **जन्मन्यनन्तर** इति। अनन्तरे जन्मनि त्वं द्विजवरो भविष्यसि, उत्कृष्टकुले जन्म प्राप्स्यसि। तत्रापि सर्वभूतसुहृत्तमो भविष्यसि, न तु प्रवृत्तिपरः। ततः केवलं मामुपैष्यसि। अन्यथा पुरुषेषु कालरूपे वा लयो भवेत्। लीलासहिते। ततो लीलार्थं पुनरागमने आगमनमपि स्यात्। केवले पुरुषोत्तमे तु आगमनशङ्काभावः। अस्य च प्रमाणे श्रद्धा महती स्थितेति पुष्टिमार्गे न योजितवान्। मर्यादायां ब्राह्मणस्यैव मुक्तिः। तत्रापि कैवल्यमिति। 'ये यथा मां प्रपद्यन्त' इति सिद्धान्तान्न कोऽपि दोषः॥ ६३ ॥

इति श्रीभागवतसुबोधिन्यां श्रीलक्ष्मणभट्टात्मजश्रीमद्वल्लभदीक्षितविरचितायां दशमस्कन्धे उत्तरार्धे द्वितीयाध्यायविवरणम् ॥ २ ॥

## श्रीसुबोधिनीसारः

बहिर्मुखानां लक्षणमाह। प्राणायामादिभिर्युञ्जानानां योगं कुर्वाणानामभक्तानां मन उत्थितं विषयाभिमुखं सवासनं पुनर्दृश्यते। हे राजन्॥ ६१ ॥ उपदिशति। मयि युक्तचित्तस्त्वं कामं स्वैरं महीं विचरस्व। तुभ्यं तव नित्यदा मय्यखंडा भक्तिरस्त्येव ॥ ६२ ॥ पूर्वं क्षत्रियधर्ममाश्रितस्त्वं मृगयादिभिर्जन्तून् मृगादीन् न्यवधीः न्यहः तदघं पापं मदाश्रितः सावधानः तपसा जहि नाशय। हि युक्तं लोकाचारात् ॥ ६३ ॥ अनंतरेऽग्रिमे जन्मनि सर्वभूतानां सुहृत्तमः द्विजवरो ब्राह्मणोत्तमो भूत्वा त्वं केवलं शुद्धमद्वयं पूर्णं मां प्राप्स्यसि वै एव ॥ ६४ ॥

इति श्रीमद्भा० दशमस्कन्धे उ० सुबोधिन्यां टीकायामेकपंचाशत्तमोऽध्यायः ॥ ५१ ॥

## गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

'अभक्तानां तु भिद्यते एव' इति व्यतिरेकमाह—युञ्जानानामिति। 'त्वयाप्येतज्ज्ञायत एव' इत्याशयेन सम्बोधयति—राजन्निति। अभक्तानां तु प्राणायामादिभिर्युञ्जानानां निरोधार्थं प्रयतमानानामपि मनः क्वचित् कदाचिदुत्थितं विषयाभिमुखं दृश्यते। तत्र हेतुमाह—अक्षीणवासनमिति ॥ ६१ ॥ तुभ्यं तव तु अनपायिनी अव्यभिचारिणी भक्तिर्मयि नित्यदा सर्वदा अस्त्येव, अतः कृतार्थत्वात् मयि आवेशितं मानसं येन तथाभूतस्त्वं कामं यथेच्छं महीं विचरस्व ॥ ६२ ॥ 'एवं विचरतोऽपि मम त्वत्प्राप्तिः कदा कथं वा स्यात्' इत्यपेक्षायां प्रतिबन्धकनिवृत्त्युपकथनपूर्वकं तदाह—क्षात्रेति द्वयेन। क्षात्रधर्मे राज्ये स्थितः सन् लोकरक्षानुपयुक्तमृगयादिव्यापारैः त्वं जन्तून् न्यवधीः हतवान् असि, अतः अहमेवाश्रयो यस्य तथाभूतः समाहितो जितेन्द्रियश्च सन् तत् मृगयाजनितमघं पापं जहि अपनयेत्यन्वयः ॥ ६३ ॥ ततश्च हे राजन्! अनन्तरे एतज्जन्माव्यवहिते जन्मनि त्वं सर्वभूतानां सुहृत्तमः सौहार्दयुक्तो द्विजवरश्च भूत्वा केवलं प्रकृतिकार्यातीतं परमानन्दस्वरूपं मामेवोपैष्यसि प्राप्स्यसि। वै अवधारणे ॥ ६४ ॥

इति श्रीवल्लभाचार्य-वंश्यगोपालसूनुना। श्रीमन्मुकुन्दरायाणां पादसेवाधिकारिणा ॥ १ ॥
श्रीमद्गिरिधराख्येन भजनानन्दसिद्धये। श्रीमद्भागवतस्येयं टीकाबालप्रबोधिनी ॥ २ ॥
रचिता दशमे तत्र राजसानां निरोधने। एकपञ्चाशत्तमे तु मुचुकुन्दस्तुतिरूपकः ॥ ३ ॥

## अन्वितार्थप्रकाशिका

युञ्जानानामिति ॥ हे राजन्! अभक्तानां तु प्राणायामादिभिर्वुञ्जानानां निरोधार्थं प्रयतमानानामपि मनः यतः अक्षीणवासनं अतः क्वचिदुत्थितं विषयाभिमुखं दृश्यते ॥ ६० ॥ विचरस्वेति ॥ तुभ्यं तव तु अनपायिनी अव्यभिचारिणी भक्तिर्मयि नित्यदा सर्वदा। दा आर्षः। अस्त्येवातः कृतार्थत्वात् मयि आवेशितं मानसं येन तथाभूतस्त्वं कामं यथेच्छं महीं विचरस्व। तङार्षः ॥ ६१ ॥ क्षात्रेति ॥ क्षात्रधर्मे राज्ये स्थितः सन् लोकरक्षानुपयुक्तमृगयादिव्यापारैस्त्वं जन्तून्न्यवधीर्हतवान् असि। अतः अहमेवाश्रयो यस्य तथाभूतः समाहितो जितेन्द्रियश्च संस्तत् मृगयादिजनितमघं पापवासनां जहि अपनय ॥ ६२ ॥ जन्मनीति ॥ हे राजन्! अनन्तरे एतज्जन्माव्यवहिते जन्मनि त्वं सर्वभूतानां सुहृत्तमः सौहार्दयुक्तो द्विजवरश्च भूत्वा केवलमद्वयं मामेवोपैष्यसि तथैव प्रारब्धात् इति भावः ॥ ६३ ॥

इति श्रीकृष्णसेवार्थमन्वितार्थप्रकाशिकाम् दशमस्यैकपञ्चाशे व्यधाद्गङ्गासहायकः ॥
इति श्रीभागवते महापुराणे दशमस्कन्धेऽन्वितार्थप्रकाशिकायामेकपञ्चाशत्तमोऽध्यायः ॥ ५१ ॥

## श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्

तुभ्यं तव ॥ ६१ ॥ स्वस्मिन्नात्यंतिकप्रेमप्राप्त्यर्थं तस्य कृत्यशेषं दर्शयन्नाह क्षात्रधर्म इति त्वं न्यवधीः हतवान् ॥ ६२ ॥ अनंतरे इतो द्वितीये ॥ ६३ ॥

इति श्रीशुद्धैकांतधर्मप्रवर्त्तकगुरुराजेन्द्रश्रीसहजानंदस्वामिशिष्यगोपालानंदमुनिविरचिते निगूढार्थप्रकाशके श्रीमद्भागवतस्य दशमस्कंध व्याख्याने मुचुकुन्दस्तुतिर्नामैकपंचाशत्तमोऽध्यायः ॥ ५१ ॥

### भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

अभक्तानां तु भिद्यत एवेत्याह। युञ्जानानामिति। हे राजन्, प्राणायामादिभिः, उपायैः युञ्जानानां मनोनियमनं कुर्वतां, अभक्तानां मनः, अक्षीणा वासना यस्य तत्, हेतुगर्भमिदं तत्त्वात् क्वचिद्विषये कदाचिद्वा, उत्थितं विषयप्रवणतां प्राप्तं, दृश्यते ॥ ६१ ॥ विचरस्वेति। मय्यावेशितं मानसं येन तथाभूतस्त्वं, महीं कामं विचरस्व। तुभ्यं तव, नित्यदा मयि, अनपायिनी भक्तिः, अस्त्वेव। तथाऽनुगृह्णामीति भावः ॥ ६२ ॥ ननु भक्त्यैकलभ्यो भगवांस्त्वं तु तामन्तरेणाप्यधुना प्रत्यक्षितः किमिति मुक्तिं विलम्बयसीति विदिततदभिप्रायः प्राह। क्षात्त्रेति। जन्मनीति। हे राजन्, त्वं क्षात्त्रधर्मस्थितः क्षत्त्रवर्णोचितधर्मनिष्ठः सन्, मृगयादिभिः लोकरक्षाऽनुपयुक्तमृगयादिव्यापारैः, जन्तून् प्राणिनः, अवधीर्हतवानसि, ततः त्वं समाहितः मन्मूर्त्तिध्यानैकनिष्ठः सन्, तपसा तत् अघं, मम सम्यक्प्राप्तिप्रतिबन्धकं पापं, जह्यपनय। अनेन स्वस्याहिंसाधर्मशीलत्वमहिंस्रप्राणिप्रियत्वं च सूचितम्। केनचिज्जन्मान्तरीयसुकृतेन प्रत्यक्षभगवत्संबन्धं प्राप्तानामपि वज्रलेखावत्सुदृढतत्तत्स्वरूपानिश्चयत्वतः कारणगताघशेषसद्भावात्तत्तद्भक्त्या तपसा चापनोदेनैवानिवार्या परमात्मप्राप्तिरिति भावः। कदा तर्हि मम तथा वर्त्तमानस्य तव प्राप्तिः स्यात्तत्राह। हे राजन्, अनन्तरे जन्मनि, सर्वभूतसुहृत्तमः, द्विजवरो मयरामाख्यया प्रसिद्धो ब्राह्मणोत्तमः, भूत्वा, त्वं मदुपाश्रयः धृतहरिकृष्णावतारस्य मम कृतसमाश्रयः सन्, केवलं प्रकृतिमण्डलातपरःस्थितं, मां वै मामेव, उपेष्यसि प्राप्स्यसि। इति द्वयोरेकान्वयः ॥ ६३–६४ ॥

इति श्रीधर्मधुरंधरश्रीधर्मात्मजप्रत्यक्षपुरुषोत्तमश्रीसहजानन्दस्वामिसुतश्रीरघुवीराचार्यसूनुभगवत्प्रसादाचार्यविरचितायामन्वयार्थविवोधिन्यां भक्तमनोरञ्जन्याख्यायां श्रीमद्भागवतटीकायां दशमस्कन्धे उत्तरार्द्धे एकपञ्चाशत्तमोऽध्यायः ॥ ५१ ॥

### कृष्णप्रिया

राजन् मुचुकुन्द ! प्राणायामादि सिद्ध साधनों से मन को ब्रह्म में संलग्न करने के योगादि वल करने पर भी यदि भक्ति का आश्रय न लिया और मन की वासनाएँ क्षीण न हुई तब निरुद्ध मन पुनः चलित हो जाता है ॥ ६१ ॥ भैया ! तुम्हारा मुझे समर्पित कर दो मनो भावनाओं को मुझमें लगादो फिर निर्भय वनकर यथेच्छ भूतल पर विचरते रहो मैं वरदान देता हूँ कि विषय लालसा से मुक्त आपकी अविचल एवं विमल भक्ति मुझमें रहेगी ॥ ६२ ॥ राजन् क्षत्रिय के धर्मों का पालन करते कभी-कभी आपने मृगया के अवसर पर धर्म रक्षा के लिये पशुओं का वध किया है। भैया ? अब मेरा आश्रय लेकर सावधान रहकर सुदृढ तपश्चर्या के आश्रय से उन पापों का मार्जन कर दीजिये ॥ ६३ ॥ मुचुकुन्द ? अब पुनर्जन्म में आप विप्र बनेंगे। प्राणीमात्र के हितकर स्वजन बनेंगे और निश्चय रूप से आनन्दमात्र करपाद मुखोदरादि मुझे प्राप्त करेंगे यह मेरा अनुग्रह और बरदान है ॥ ६४ ॥

श्रीमद्भागवत दशमस्कन्ध उत्तरार्द्ध में मुचुकुन्द महाराज की स्तुति निरूपण करनेवाला ५१ मा अध्याय का हिन्दी भाषान्तर समाप्त।

# अथ द्विपञ्चाशत्तमोऽध्यायः

| श्लोकाः | अनु. | व. | उ. | उ. अ. | अ. अ. | श्लो. अ. | सं. श्लो. अ. | सं. श्लो. | अक्ष. |
|---|---|---|---|---|---|---|---|---|---|
| ४४ | ३७ | ७ | ५ | २७ | ४४ | १५७६ | १६४७ | ५१। | ७ |

श्रीशुक उवाच

इत्थं सोऽनुगृहीतोऽङ्ग कृष्णेनेक्ष्वाकुनन्दनः। तं परिक्रम्य संनम्य निश्चक्राम गुहामुखात् ॥ १ ॥
स वीक्ष्य क्षुल्लकान् मर्त्यान् पशून् वीरुद्वनस्पतीन्। मत्वा कलियुगं प्राप्तं जगाम दिशमुत्तराम् ॥ २ ॥
तपःश्रद्धायुतो [1]धीरो निःसङ्गो मुक्तसंशयः। समाधाय मनः कृष्णे प्राविशद् गन्धमादनम् ॥ ३ ॥
वदर्याश्रममासाद्य [2]नरनारायणालयम्। सर्वद्वन्द्वसहः शान्तस्तपसाऽऽराधयद्धरिम् ॥ ४ ॥

कर्दमक्षमा

अन्वयः—श्रीशुक उवाच, अङ्ग ? इत्थम्, कृष्णेन, अनुगृहीतः, सः, इक्ष्वाकुनन्दनः, तम्, परिक्रम्य, संनम्य, गुहामुखात्, निश्चक्राम ॥ १ ॥ सः, क्षुल्लकान्, मर्त्यान्, पशून्, वीरुद्वनस्पतीन्, वीक्ष्य, कलियुगम्, प्राप्तम्, मत्वा, उत्तराम्, दिशम्, जगाम ॥ २ ॥ तपःश्रद्धायुतः, मुक्तसंशयः, निःसङ्गः, धीरः, कृष्णे, मनः, समाधाय गन्धमादनम्, प्राविशत् ॥ ३ ॥ सर्वद्वन्द्वसहः, शान्तः, नरनारायणालयम्, वदर्याश्रमम्, आसाद्य, तपसा, हरिम्, आराधयत् ॥ ४ ॥

श्रीधरस्वामिविरचिता भावार्थदीपिका

द्विपञ्चाशत्तमे धावन्भयादिव गतः पुरीम्। अन्वमोदत सन्देशं रुक्मिण्या द्विजवर्णितम् ॥ १ ॥

क्षुल्लकानल्पप्रमाणान् ॥ १–२ ॥ तपसि श्रद्धायुतः ॥ ३ ॥ तत्र च वदर्याश्रमम् ॥ ४ ॥

श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

इवेनात्रापि भयाभाव एवोक्तः। पुरीं द्वारवतीम्। अन्वमोदत स्वीचकार (१) इत्थं सार्वभौमेत्याद्युक्त्या। स मुचुकुन्दः। इक्ष्वाकून्नन्दयतीति तथा। तं कृष्णम् ॥ १ ॥ स मुचुकुन्दः। 'क्षुल्लकस्त्रिषु नीचेल्पे' इति मेदिनी। गुणतः प्रमाणतश्चाल्पप्रमाणानित्यर्थः उत्तरामिति नरनारायणाश्रमाभिप्रायेण, तत्र हि कलिर्न प्रभवतीति। यद्यपि "यावत्सपादपद्माभ्यां स्पृशन्नास्ते रमापतिः। तावत्कलिस्तु पृथिवीं पराक्रान्तुं न चाशकत्।" इति द्वादशोक्तानुसारेण श्रीकृष्णप्राकट्ये तत्रापि तत्प्रभावो नासीत्तथापि चिरं तत्प्राकट्यं न स्यादित्यभिप्रायेण तथा कृतमिति ज्ञेयम् ॥ २ ॥ मुक्तसंशयः कृष्णबोधितत्वात्सर्वसंशयहीनः। धीरो विवेकनिपुणः। अतो मुक्तसंशयः शास्त्रादिभिः कृतपरमनिश्चयः। अतो निःसंगः अन्योपासनाफलाऽऽकांक्षारहितः। यद्वा—मुक्तसंशयत्वादेव तपसि भगवदेकाग्रचित्तत्वे श्रद्धायुक्तः। अत एव निस्संगः। अतः कृष्णे मनः समाधिनिष्ठं कृत्वा प्रकर्षेण सर्वोत्कृष्टप्रकारेणाविशत् ॥ ३ ॥ तत्र च गंधमादनेऽपि। बदरीभिर्घोंटाभिरुपलक्षित आश्रमो बदर्याश्रमस्तम्। नरनारायणयोरालय आश्रयो यस्मिंस्तम् ॥ ४ ॥

श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी

कृष्णेन साक्षात् स्वयं भगवतानुऽगृहीतः अतः इक्ष्वाकुकुलनन्दनः सम्यक् साष्टाङ्गं बहुशो नत्वा एवमस्य पूर्वमेव निष्क्रामणं श्रीभगवदाज्ञया महादरेण शैघ्र्यात् श्रीभगवता च स्वसङ्गेनानिष्क्रामणं तस्य तद्योग्यतानवाप्तेः प्रथममेव निष्क्रामणञ्च स्वोपदिष्टस्य शीघ्रानुष्ठानबोधायेति ज्ञेयम् ॥ १ ॥ वीरुधो वनस्पतींश्च उत्तरामिति श्रीनरनारायणाश्रमगमनस्याभिप्रायेण तत्र हि कलिर्न प्रभवतीति यद्यपि—

"यावत्स पादपद्माभ्यां स्पृशन्नास्ते रमापतिः। तावत्कलिर्वै पृथिवीं पराक्रान्तुं न चाशकत् ॥"

इति द्वादशोक्तानुसारेण श्रीकृष्णप्राकट्ये तत्रापि तत्प्रभावो नासीत् तथापि चिरं तत्प्राकट्यं न स्यादित्यभिप्रायेण तथा कृतमिति ज्ञेयम् ॥ २ ॥ धीरः विवेकनिपुणः अतो मुक्तसंशयः शास्त्रादिभिः कृतपरमनिश्चयः अतो निःसङ्गः अन्योपासनाफला-

---

१. वीरो–प्रा. पा.। २. णाश्रमम्–विज.।

काङ्क्षारहितः। यद्वा, मुक्तसंशयत्वादेव तपसि भगवदेकाग्रचित्तत्वे श्रद्धायुक्तः अत एवात्र निःसङ्गः अतः कृष्णे मनः समाधिनिष्ठं कृत्वेत्यर्थः। अथवा तपसि भगवत्येव चित्तैकाग्रे श्रद्धायुतः सादरः अतः कृष्णे स्वयं भगवति तस्मिन्नेव मनः सम्यक् तदेकनिष्ठत्वेनाधाय अत एव प्रकर्षेण सर्वोत्कृष्टप्रकारेणाविशत् ॥ ३ ॥ बदर्य्याश्रमेऽपि नरनारायगालयमासाद्येत्यर्थः। यद्वा, नरनारायणयोरालयः आश्रमो यस्मिन् तम् ॥ ४ ॥

### श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी

कृष्णेन साक्षाद्भगवतानुगृहीतः, अतः इक्ष्वाकुकुलनन्दनः, सम्यक् साष्टांगं बहुशो नत्वा ॥ १ ॥ क्षुल्लकान् अतिह्रस्वान् वीरुधो वनस्पतींश्च। उत्तरामिति महाशीतादिना विविक्तत्वेन महात्मभिः प्रायः सेवितत्वात् ॥ २ ॥ धीरो विवेकी, दुःखेऽपि धैर्य्यवान् वा, निःसंगो बाह्यान्तरसम्बन्धरहितः सुखनिस्पृहा वा, मुक्तसंशयः श्रीकृष्णपादाब्जभक्तौ कृतविश्वासौ दृढनिश्चयो वा, विशेषणानामेषामुत्तरोत्तरस्मिन् हेतुत्वमूह्यम्। अतः कृष्णे परमानन्दघनमनोहरमूर्त्तौ मनः समाधाय स्थिरीकृत्य किंवा सम्यक् तदेकनिष्ठत्वेनाधाय निधाय, अत एव प्रकर्षेण सर्वोत्कृष्टप्रकारेणाविशत् ॥ ३ ॥ तत्र च नरनारायणालयमासाद्येत्यर्थः। यद्वा, नरनारायणयोरालय आश्रमो यस्मिंस्तम्। अयं तपसे तत्र गमने मुख्यो हेतुः, तपःप्रवर्त्तकयोः साक्षात् श्रीकृष्णावतारयोस्तयोस्तत्र साक्षाद्वृत्तेः, सर्वाणि द्वन्द्वानि शीतोष्णादीनि सहत इति तथा सः, अत एव शान्तोऽनुद्विग्नचित्तः सन्, हरिमिति तस्य तपोदुःखादिहरणान्मनोहरणाद्वा ॥ ४ ॥

### श्रीसुदर्शनसूरिकृतशुकपक्षीम्

क्षुल्लकान्। अल्पपरिमाणान् ॥ १-१५ ॥

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका

अथावशिष्टं मुचुकुन्दवृत्तान्तमित्थं मुचुकुन्दमनुज्ञाप्यानुगृहीतवतो भगवतोऽनन्तरचेष्टितं चाह—इत्थमिति। अङ्ग हे राजन्! श्रीकृष्णेनेत्थमनुगृहीतो मुचुकुन्दस्तं श्रीकृष्णं प्रदक्षिणीकृत्य प्रणम्य च गुहाद्वारान्निर्गतवान् ॥ १ ॥ स मुचुकुन्दः क्षुल्लकानल्पपरिमाणान् मर्त्यादीनवलोक्य कलियुगं प्राप्तं विज्ञायोत्तरां दिशं प्रतिजगाम तपस इति शेषः ॥ २ ॥ धीरो जितेन्द्रियः देहतदनुबन्ध्यादिष्वासक्तिरहितः मुक्तसंशयः सेत्स्यामि वा न वेत्येवंविधो येन सः श्रद्धायुतः कर्त्तव्यविषयत्वरायुक्तः कृष्णे भगवति स्वमनः सम्यगाधाय स्थिरीकृत्य गन्धमादनं पर्वतं प्राविशत् ॥ ३ ॥ तत्रापि बदर्याश्रमं नरनारायणयोरालयं स्थानं प्राप्य सर्वाणि द्वन्द्वानि शीतोष्णादीनि सहत इति तथा शान्तः जितमनाः हरिमाश्रितवन्धहरं भगवन्तं तपसाऽऽराधयामास ॥ ४ ॥

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली

इक्ष्वाकोर्वंशं नन्दयतीति इक्ष्वाकुनन्दनः सन्नम्य सम्यङ् नत्वा ॥ १ ॥ क्षुल्लकान्। गुणतः परिमाणतश्चाल्पमानान् ॥२॥ इदं तत्त्वमुतातत्त्वमिदमिति संशयो मुक्तो येन स तथा ॥ ३-४ ॥

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी

द्विपञ्चाशत्तमे वैरिदुर्लक्ष्यत्वं हरेर्गिरेः। प्रवर्षणस्य दाहश्च भैष्मीसन्देशवाक्श्रुतिः ॥ १ ॥

प्राप्तम् आसन्नत्वात् प्राप्तप्रायमित्यर्थः ॥ २-४ ॥

### गूढार्थदीपिनी

द्विपञ्चाशतमे धावन् गतः कृष्णः प्रवर्षणम्। तद्दाहात्स्वपुरीं यातो भैष्मीसन्देशमभ्रृणोत् ॥ १ ॥

अङ्ग हे राजन्! स मुचुकुन्दः। मुखात् द्वारात् ॥ १ ॥ क्षुल्लकान् अल्पप्रमाणान्। 'क्षुल्लकस्त्रिषु नीचेऽल्पे' इति मेदिनी ॥ २ ॥ तपसि कृष्णाराधने। गन्धमादनं पर्वतम् ॥ ३ ॥ द्वन्द्वं शीतोष्णादि सहते ॥ ४ ॥

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः

द्विपंचाशत्तमे मुचुकुन्दस्य श्रीकृष्णाराधनपरत्वं श्रीकृष्णस्य म्लेच्छवधप्रवर्षणगिरिप्रवेशजरासन्धविमोहनं द्वारवतीप्रवेशरुक्मिणीसन्देशश्रवणादिचरितं च वर्ण्यते तत्र तावन्मुचुकुन्दवृत्तं वर्णयति—इत्थमिति चतुर्भिः ॥ १ ॥ मर्त्यादीन् क्षुल्लकान् अल्पपरिमाणान् प्राप्तं प्राप्तप्रायम् ॥ २ ॥ तपसि कृष्णाराधनप्रधाने श्रद्धायुतः ॥ ३-४ ॥

### श्रीसत्यधर्मकृता श्रीभागवतटिप्पणी

हरिः ॐ ॥ इक्ष्वाकून्नन्दयतीति स तथा येन कृष्णेनेत्यमनुगृहीतो अङ्ग परीक्षित्। तं कृष्णं परिक्रम्य तथा सन्नम्य प्रणम्य गुहामुखात्तद्द्वारान्निश्चक्राम ॥ १ ॥ क्षुल्लकान्परिमाणादितो ह्रस्वान्मर्त्यांस्तथा पशून्वीरुद्वनस्पतीत्येवमादीन्क्षुल्लकांश्च वीक्ष्य कलियुगं प्राप्तं मत्वोत्तरां दिशं जगाम। कदा सुप्तः कदोत्थित इति तु त्रेतायुगे प्रसुप्तोऽसि विदितो मेऽसि नारदात्। इदं

कलियुगं विद्धि किमन्यत्करवाणि ते। मम शत्रुस्त्वया दग्धो देवदत्तवरो नृप। अवध्यो यो मया सङ्ख्ये भवेद्वर्षशतैरपि। इत्युक्तः स तु कृष्णेन निर्जगाम गुहामुखात्। अन्वीयमानः कृष्णेन कृतकार्येण धीमता। ततो ददर्श पृथिवीमावृतां ह्रस्वकैर्नरैः। अल्पोत्साहैरल्पबलैरल्पवीर्यपराक्रमैः। परेणाधिष्ठितं राज्यं दृष्ट्वा केवल आत्मना। ततो विसृज्य गोविन्दं प्रविवेश महावनमित्यादि हरिवंशशंसनेन ज्ञातव्यम् ॥ २ ॥ तपश्च श्रद्धा च ताभ्यां तपसि श्रद्धा तस्य वा युक्तो वीर ईरयतीतीरो विरीरो यस्य स भगवत्प्रेरित इति यावत्। निःसङ्गो मुक्तसंशयो भगवदुपदिष्टे मार्गे यथार्थत्वायथार्थतत्वमतिरहितो यथार्थज्ञानवानेवेत्यर्थः। कृष्णे मनस्समाधाय गन्धमादनं प्राविशत् ॥ ३ ॥ बदर्याश्रममासाद्य प्राप्य तत्रापि नरनारायणाश्रमं चासाद्य नरनारायणाश्रमं तद्रूपं बदर्याश्रममासाद्येति वा। नरनारायणाभ्यामेवाश्रमः संसारश्रमाभावो यत्र तं बदर्याश्रममिति वा सर्वद्वन्द्वसहः शान्तस्त्यक्तकोपस्तपसा हरिमाराधयत् ॥ ४ ॥

### श्रीमद्वल्लभाचार्य्यकृता सुबोधिनी

पुरुषानुग्रहं पूर्वमुक्त्वा भगवता कृतम्। स्त्रीषु तं विस्तरेणाह रूपत्रयविभेदतः ॥ १ ॥
अनुग्रहः कालतुल्यस्ततो द्वादशधोदितः। तत्र मुख्या तु लक्ष्मीः स्यात्तस्यां त्रेधा हरेः कृपा ॥ २ ॥
मानसेनाथ कायेन वेदेनेति निरूप्यते। गान्धर्वो मानसः प्रोक्तो दूरत्वाद्वचनाभिधा ॥ ३ ॥
कृष्णानुग्रहयुक्तानां कृतार्थत्वे ततः परम्। स्त्रीणां मुक्तिर्निरूप्येति मुचुकुन्दतपःकथा ॥ ४ ॥
प्रसङ्गात्तामसानां हि वधो देवहिताय हि। पलायनं लीलयैव सोऽप्यनुग्रह ईर्यते ॥ ५ ॥
सात्त्विके राजसे चैव तामसे च हरेः कृपा। इति दर्शयितुं राज्ञो वृत्तं लक्ष्म्याः शिवस्य च ॥ ६ ॥

तृतीयेऽध्याये अनुग्रहनिरूपणप्रस्तावैर्मुचुकुन्दस्य शिवस्य लक्ष्म्याश्च हितं कृतवानिति निरूप्यते। कायिकवाचिकमानसिकभेदेन। प्रथमं सात्त्विके भगवान् मुचुकुन्दे कृपां कृतवानिति तस्य भगवद्वाक्येन तपःकरणमुच्यते इत्थमिति **चतुर्भिः**। एवं प्रकारेण भगवता अनुगृहीतः मुचुकुन्दः तपोनिमित्तं गुहातो निर्गतः। भगवदनुग्रहव्यतिरेकेण भगवद्वाक्ये श्रद्धा न भवतीति भगवदनुग्रहः कारणत्वेनोच्यते। **इक्ष्वाकुनन्दन** इति। इक्ष्वाकुरत्यन्तं भक्त इति तद्वंश्योऽयमिति कृपाया हेतुत्वेनोक्तम्। ततस्तं भगवन्तं कृष्णं **परिक्रम्य** प्रदक्षिणीकृत्य, ततः सम्यङ्नत्वा, साष्टाङ्गं प्रणम्य पूर्वमेव शयनस्थानात् गुहामुखे प्रकाशयुक्ते स्थित इति ततोऽपि निश्चक्राम ॥ १ ॥ ततस्तपः कच्चित्कर्तव्यमिति विचार्य, भारतखण्ड एव चतुर्युगधर्माणां प्रवृत्तिरिति विरुद्धकालयुक्ते देशे तपो न कर्तव्यमिति वर्षान्तरं गन्तुं उत्तरदेशं गत इत्याह **स वीक्ष्येति**। स हि सत्ययुगे शयनं कर्तुं प्रवृत्तः, कलियुगे उत्थितः। यदैव भगवता मथुरा त्यक्ता, तदैव कलिः प्रवृत्त इति मुख्यः सिद्धान्तः। 'पञ्चविंशे वर्षे कलिरायास्यती'त्येव विनिश्चित्य, भरतखण्डं परित्यज्य, समुद्रमध्ये द्वारकां कृतवान्। ततो भगवति तत्र गते कलिः सम्यक् प्रविष्टः। कालाभिमानिनी देवता तु भगवति स्वस्थानं गते समायास्यति। अयं विचारो द्वादशे कर्तव्यः। कलिस्त्वियदानीं प्रविष्टः। सन्ध्यासमयोऽयं वा। मध्यकाल एवाग्रे निर्णेय इति कालस्य प्रवृत्तौ नियतं हेतुं दृष्टवानित्याह। स मुचुकुन्दः **क्षुल्लकान्** अल्पप्रमाणान् कालेन ह्रासं प्राप्तान् **मर्त्यान्मनुष्यान्**। अनेन तेषां मरणमपि शीघ्रं कालेनेति सूचितम्। वीरुधः लतागुल्मादीन् वनस्पतीन्, वृक्षानपि चतुर्विधानल्पायुःप्रमाणाभ्यां ह्रासयुक्तान् विलोक्य, कलेरेवायं धर्म इति असाधारणत्वाद्विनिश्चित्य उत्तरां दिशं जगाम ॥ २ ॥ ततो विधानपूर्वकमिमं देशमतिक्रम्य गत इत्याह **तपःश्रद्धायुत** इति। **तपः** सर्वेन्द्रियनिग्रहः, **श्रद्धा** च भगवद्वाक्ये, ताभ्यां युतः, दृष्ट्वापि विषयान् विघ्नत्वेन प्राप्तान्वा न व्यामुग्धः, किन्तु धीर एव जातः। ततो गच्छन् राजेति यं कञ्चिदनुवर्तमानमपि परित्यज्य, निःसङ्ग एव सन्, शरीररक्षादौ मुक्तसंशयः, इतस्ततो दर्शनाद्यर्थं विक्षिप्तमपि मनः कृष्णे समाधाय गन्धमादनपर्वतं प्राविशत्। गरुडगङ्गातः उत्तरे भागे बदरिकाश्रमपर्यन्तं सर्वोऽपि पर्वतो गन्धमादनः ॥ ३ ॥ ततस्तत्रापि बदर्याश्रममासाद्य, यत्र नरनारायणयोरालयं तत्र शीतादिबाधा महतीति तन्निवृत्त्यर्थं यत्नकरणे तपो न युज्यत इति तदर्थमाह **सर्वद्वन्द्वसह** इति। अन्तरपि शान्तः। तपसा हरिमाराधयत्। हरिपदेन यथैव तस्य तपसा आराधनं सिध्यति, तथैव कृतवानिति लक्ष्यते ॥ ४ ॥

### श्रीसुबोधिनी–सारः

शुकोक्तिः। इत्थमेवं कृष्णेनानुगृहीतः स इक्ष्वाकुनंदनो मुचुकुंदस्तं श्रीकृष्णं प्रदक्षिणीकृत्य संनम्य प्रणम्याष्टांगैर्गुहाया मुखान्निर्गतः ॥ १ ॥ क्षुल्लकानल्पप्रमाणान् अतितुच्छान् मनुष्यान् पशून् वृक्षान् वीक्ष्य दृष्ट्वा प्राप्तं कलियुगं मत्वोत्तरां दिशं स मुचुकुंदो ययौ ॥ २ ॥ तपसि श्रद्धया युतो धीरो निःसंग एकाकी निष्कामः त्यक्तसंदेहः कृष्णे मनः समाधाय समावेश्य गंधमादनं पर्वतं प्राविशत् ॥ ३ ॥ नरनारायणयोरालयं स्थानं बदर्याश्रममासाद्य प्राप्य सर्वाणि द्वंद्वानि शीतोष्णादीनि सहत इति तथा शांतस्तपसा हरिम् आराधयत् ॥ ४ ॥

### विवरणटिप्पणी

**तृतीयेऽध्याये। रूपत्रयेति।** रुक्मिणीजाम्बवतीसत्यभामेतिरूपत्रयेऽनुग्रहः साधनप्रकरणे निरूपित इत्यर्थः। **अनुग्रह** इति। मुचुकुन्दे कृतोऽनुग्रहः कालसापेक्षो, नतु कालमतिक्रम्य कृतस्ततो हेतोर्मुचुकुन्देन द्वादशश्लोकैः प्रार्थ्यत्वेनोदितः, त्रयोदशे

श्लोके तु शरणगमनकथनेन स्वरक्षा प्राथिता, नानुग्रहः प्राथित इति भावः। तत्रेति। स्त्रीष्वित्यर्थः। वेदेनेति। वाचेत्यर्थः। मानसे गान्धर्वविवाहे 'श्रुत्वा गुणा'नितिवाक्यकथने हेतुमाहुः दूरत्वादिति। लक्ष्म्याः शिवस्य चेत्यत्र क्रमो न विवक्षित इति ज्ञेयम्। राज्ञः। मुचुकुन्दस्येत्यर्थः। जरासन्धात्पलायनं शिववरदानात्। अतः शिवहितमेव पलायनमिति भावः।

### गोस्वामिश्रीगिरिधरलालकृतबालप्रबोधिनी

द्विपञ्चाशत्तमे कृष्णो रुक्मिण्या द्विजवर्णितम्। अन्वमोदत सन्देशमित्येतद्विनिरूप्यते॥ १॥

अथावशिष्टं मुचुकुन्दवृत्तान्तमाह—इत्थमिति। अङ्ग हे राजन्! स इक्ष्वाकुनन्दनो मुचुकुन्दः इत्थमुक्तप्रकारेण कृष्णेनानुगृहीतः तं कृष्णं प्रदक्षिणीकृत्य प्रणम्य च गुहाद्वाराद्बहिर्निश्चक्राम निर्गतवान्॥ १॥ ततश्च मुचुकुन्दः क्षुल्लकान् अल्पपरिमाणान् मर्त्यादीन् वीक्ष्य ततश्च कलियुगं प्राप्तं आसन्नत्वेन प्राप्तप्रायं मत्वा उत्तरां दिशं प्रति तपः कर्तुं जगाम 'एषा वै देवमनुष्याणां शान्ता दिक्' इति श्रुतेः तत्र कलिदोषप्रवृत्त्यभावात्तत्र गत इति ज्ञेयम्॥ २॥ 'तत्रापि कुत्र गतः कथंभूतश्च' इत्यत आह—तपसि श्रद्धायुक्तः, धीरो जितेन्द्रियः, देहतदनुबन्धिपुत्रादिषु निःसङ्गः आसक्तिरहितः, मुक्तसंशयः भगवद्वचनविश्वासात् स्वकृतार्थतायां संशयरहितः, स्वमनः कृष्णे समाधाय स्थिरीकृत्य गन्धमादनाख्यं पर्वतं प्राविशत्॥ ३॥ तत्रापि बदर्याश्रमं तत्रापि नरनारायणयोरालयं स्थानं प्राप्य सर्वाणि द्वन्द्वानि शीतोष्णादीनि सहते इति तत्र तथा शान्तः कामक्रोधादिभी रहितः हरिं भगवन्तं तपसा आराधयामास॥ ४॥

### अन्वितार्थप्रकाशिका

द्विपञ्चाशत्तमे कृष्णो द्वारकां प्राप रुक्मिणीम्। विवोढुं स्वीचकारात्र श्लोका जलधिवार्द्धयः ( ४४ )॥

उवाचपञ्चकं ( ५ ) साङ्घ्रिनववेदा ( ४९।) अनुष्टुभः॥ ५२॥

इत्थमिति। अङ्ग हे राजन्! स इक्ष्वाकुनन्दनो मुचुकुन्दः इत्थमुक्तप्रकारेण कृष्णेनानुगृहीतः तं कृष्णं परिक्रम्य प्रदक्षिणीकृत्य सन्नम्य प्रणम्य च गुहाया मुखात् द्वाराद्बहिर्निश्चक्राम। भगवन्निर्गमात्पूर्वमेव निर्गतवान्॥ १॥ स इति। स मुचुकुन्दः क्षुल्लकान् अल्पपरिमाणान् मर्त्यादीन् वीक्ष्य ततश्च कलियुगं प्राप्तम् आसन्नत्वेन प्राप्तप्रायं मत्वा उत्तरां दिशं प्रति तपः कर्तुं जगाम॥ २॥ तप इति। तपसि श्रद्धायुक्तः धीरो जितेन्द्रियः देहादिषु निःसङ्गः आसक्तिरहितः मुक्तसंशयः स्वकृतार्थतायां संशयरहितः स्वमनः कृष्णे समाधाय स्थिरीकृत्य गन्धमादनाख्यं पर्वतं प्राविशत्॥३॥ बदरीति बदर्याश्रमं तत्रापि नरनारायणयोरालयं स्थानमासाद्य प्राप्य सर्वाणि द्वन्द्वानि शीतोष्णादीनि सहत इति तथा शान्तः कामक्रोधादिभी रहितः हरिं भगवन्तं तपसाऽऽराधयामास॥ ४॥

### श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्

इदानीं द्विपंचाशत्तमेऽध्याये मुचुकुंदस्य बदरिकाश्रमगमनं श्रीकृष्णस्य पुनर्मथुरागमनं च वातितयवनसैन्यहननं च रामकृष्णयोर्जरासंधभयादिव पलायनं च हरिणा रुक्मिणीप्रेषितपत्रश्रवणं च वर्ण्यते। इत्थमिति॥ १॥ क्षुल्लकान् लघुप्रमाणान्॥ २॥ तपसि श्रद्धायुतः मानुष्यमूर्त्तौ हरौ मुक्तसंशयः॥ ३॥ गंधमादनं नरनारायणालयम्॥ ४॥

### भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

धावन् भयादिव पुरीं द्विपञ्चाशत्तमे गतः। अन्वमोदत रुक्मिण्याः संदेशं द्विजवर्णितम्॥ १॥

इत्थमिति॥ अङ्ग हे राजन्, कृष्णेन इत्थं अनुगृहीतः इक्ष्वाकुनन्दनः इक्ष्वाकुकुलजानन्दजनकः, स मुचुकुन्दः, तं कृष्णं परिक्रम्य प्रदक्षिणीकृत्य, संनम्य प्रणम्य च, गुहामुखात् गुहाद्वारात्, निश्चक्राम निर्गतवान्॥ १॥ स वीक्ष्येति॥ स मुचुकुन्दः, क्षुल्लकानल्पपरिमाणान्, मर्त्यान् मनुष्यान्, पशून् गवादींश्चतुष्पदान्, वीरुधः लताश्च वनस्पतयो वृक्षाश्च तान्, वीक्ष्यावलोक्य, कलियुगं प्राप्तं मत्वा विज्ञाय, उत्तरां दिशं, जगाम। तपस इति शेषः॥ २॥ तप इति॥ धीरो धृतिमान्, वीर इति पाठे जितेन्द्रियः, निःसङ्गः देहतदनुवन्ध्यादिष्वासक्तिरहितः, मुक्तास्त्यक्ताः संशया येन सः, तपसि या श्रद्धा तया युतः युक्तः सन्, कृष्णे मनः, समाधाय स्थिरीकृत्य, गन्धमादनाख्यं पर्वतं, प्राविशत्॥ ३॥ बदर्याश्रममिति॥ तत्रापि बदर्याश्रमं, तत्रापि नरनारायणालयं नरनारायणस्थानं, आसाद्य प्राप्य, सर्वाणि द्वन्द्वानि शीतोष्णादीनि सहते इति तथाभूतः, शान्तः जितमनाः सन्, हरिं संसृतिबन्धहरं भगवन्तं, तपसा आराधयत् आराधयामास॥ ४॥

### कृष्णप्रिया

द्वारकागमन, श्रीबलरामजी का विवाह तथा श्रीकृष्ण के पास रुक्मिणीजी का सन्देशा लेकर ब्राह्मण का आना।

श्रीशुकदेवजी कहते हैं—प्यारे परीक्षित्! भगवान् श्रीकृष्ण ने इस प्रकार इक्ष्वाकुनन्दन राजा मुचुकुन्द पर अनुग्रह किया। अब उन्होंने भगवान् की परिक्रमा की, उन्हें नमस्कार किया और गुफा से बाहर निकले॥ १॥ उन्होंने बाहर आकर

देखा कि सब-के-सब मनुष्य, पशु, लता और वृक्ष-वनस्पति पहले की अपेक्षा बहुत छोटे-छोटे आकार के हो गये हैं। इससे यह जानकर कि कलियुग आ गया, वे उत्तर दिशाकी ओर चल दिये ॥ २ ॥ महाराज मुचुकुन्द तपस्या, श्रद्धा, धैर्य तथा अनासक्ति से युक्त एवं संशय-सन्देह से मुक्त थे। वे अपना चित्त भगवान् श्रीकृष्ण में लगाकर गन्धमादन पर्वत पर जा पहुँचे ॥ ३ ॥ भगवान् नर-नारायण के नित्य निवास स्थान बदरिकाश्रम में जाकर बड़े शान्तभाव से गर्मी-सर्दी आदि द्वन्द्व सहते हुए वे तपस्या के द्वारा भगवान् की आराधना करने लगे ॥ ४ ॥

**भगवान् पुनराव्रज्य [1]पुरीं यवनवेष्टिताम्। हत्वा म्लेच्छबलं निन्ये तदीयं द्वारकां धनम् ॥ ५ ॥**
**नीयमाने धने गोभिर्नृभिश्चाच्युतचोदितैः। आजगाम जरासंधस्त्रयोविंशत्यनीकपः ॥ ६ ॥**
**[2]विलोक्य वेगरभसं रिपुसैन्यस्य माधवौ। [3]मनुष्यचेष्टामापन्नौ राजन् दुद्रुवतुर्द्रुतम् ॥ ७ ॥**
**विहाय वित्तं प्रचुरमभीतौ भीरुभीतवत्। पद्भ्यां पद्मपलाशाभ्यां चेरतुर्बहुयोजनम् ॥ ८ ॥**
**पलायमानौ तौ दृष्ट्वा मागधः प्रहसन् बली। अन्वधावद् रथानीकैरीशयोरप्रमाणवित् ॥ ९ ॥**

### कर्दमक्षमा

अन्वयः—भगवान्, यवनवेष्टिताम्, पुरीम्, पुनः, आव्रज्य, म्लेच्छबलम्, हत्वा, तदीयम् धनम्, द्वारकाम्, निन्ये ॥ ५ ॥ अच्युतचोदितैः, नृभिः, गोभिः, धने, नीयमाने, त्रयोविंशत्यनीकपः, जरासंधः, आजगाम ॥ ६ ॥ राजन्! माधवौ, रिपुसैन्यस्य, वेगरभसम्, विलोक्य, मनुष्यचेष्टाम्, आपन्नौ, द्रुतम्, दुद्रुवतुः ॥ ७ ॥ अभीतौ, भीरुभीतवत्, प्रचुरम्, वित्तम्, विहाय, पद्मपलाशाभ्याम्, पद्भ्याम् बहुयोजनम्, चेरतुः ॥ ८ ॥ बली, मागधः, तौ, पलायमानौ, दृष्ट्वा, ईशयोः, अप्रमाणवित्, प्रहसन्, रथानीकैः, अन्वधावत् ॥ ९ ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

निन्ये नयन्मार्गे चलति स्म ॥ ५-६ ॥ वेगरभसं वेगोद्रेकम् ॥ ७ ॥ भीरुभीतवद्भीरोरपि भीतवत् अतिभीतवदित्यर्थः। चेलतुः पलायेताम्। बहुयोजनं देशम् ॥ ८ ॥ अप्रमाणवित् प्रमाणमियत्ता तन्न वेत्तीति तथा ॥ ९ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

प्रकृतमनुसरति—भगवानिति। तदीयं यवनाहृतम्। निन्ये नेतुमुपचक्रमे ॥ ५ ॥ गोभिस्तद्युक्ताऽनोभिः। चादुष्ट्रादिभिश्च ॥ ६ ॥ वेगाधिक्यं, वेगरभसम्। यद्वा—नामैकदेशन्यायेन वे शब्देन वेदो ग्राह्यस्तं वयं गायन्तीति वेगा ब्राह्मणास्तेषां रभसं युद्धसंरंभं रिपुसैन्यस्य जरासन्धसैन्यस्य मध्ये विलोक्येत्यन्वयः। यद्वा—रपत्यनिष्टं शापादि दुष्टेषु, शुश्रूषुषु वरांश्चेति रिपवो विप्राः। "रपेरस्येत्"। 'रप-परिभाषणे'। तेषां सैन्यस्येति सप्तदशकृत्वः पराभूतेन जरासंधेन कथंचिन्मम जयो मदग्रतो युद्धं त्यक्त्वा रामकृष्णपलायनं वा यथा भवेत्तथा यूयं कुरुतेति पृष्टा ब्राह्मणास्तमूचुः—जयस्तु तव नो भावी परन्तु वयं तव

---

१. मधुरां यवनावृतां—वीर.; मधुरां यवनाहृतां—विज.; मथुरां यवने हृते—प्रा. पा.।

२. ततो राजा जरासन्धः कालान्तानलसंनिभः। विधाय मकरव्यूहं रथनागाश्वपत्तिमत् ॥ १ ॥
अन्तश्चकार गोविन्दं व्यूहस्य निमिषान्तरे।
ततो विलोक्य गोविन्दो वृक्षमुत्पाट्य रंहसा। गजात्रयान्हयान्युद्धे पोथयामास दुर्मदः ॥ २ ॥
कृष्णेन हन्यमानास्ते वृक्षेण रिपुकुञ्जराः। पेतुर्गतासवो भूमौ वज्रनुन्ना इवाद्रयः ॥ ३ ॥
रथाश्च रथिभिर्युक्ताः सतुरङ्गाः सचोदकाः। निष्पिष्टा इव न क्वापि दृश्यन्ते कुरुसत्तम ॥ ४ ॥
रामस्तु मुष्टिना चाजौ कुञ्जरान्मदशालिनः। जघान कुपितः शैलान्वज्रेणेव सुरेश्वरः ॥ ५ ॥
राममुष्टिप्रहारेण विकीर्णस्यन्दना नृप। न व्यदृश्यन्त भूपृष्ठे चूर्णिताः शीर्णपर्णवत् ॥ ६ ॥
यवनस्य धनं विश्वं गच्छन्तं द्वारकामनु।
निहत्य यादवान्विश्वांस्तद्गृहीत्वा जरासुतः। अभ्यवर्तत सङ्ग्रामे रामकृष्णौ कुरूद्वह ॥ ७ ॥ ]
विजयेऽधिकाः।

३. तं चापतन्तमालोक्य सहितं सबलैर्नृपैः।
कीर्यमाणौ शरौघेण वृष्ट्येव कीरपोतकौ। विरथौ विप्रहरणौ विवर्माणौ विसैनिकौ ॥ १ ॥
( १ ) विजयेऽधिकः।

सैनिका भूत्वा गच्छामः, स श्रीकृष्णोऽस्मानप्रहार्यान्मत्वा पलायिष्यते, एवं तयोः पलायनं भावि न केवलं त्वत्तस्तदपीति स्पष्टं संहितायाम्। यच्चोक्तम्—"आततायिनमायांतमपि वेदांतपारगम्। जिघांसंतं जिघांसीयान्न तेन ब्रह्महा भवेत्।" इति तदत्र न संगच्छते, तेषां भगवत्पलायनेच्छावत्त्वेन जिघांसाऽभावात्। माधवौ क्रीडाविशेषार्थं मधुकुले जातौ रामकृष्णौ। मथुरायां पुरा रक्षितेन रामेण संगतेः। आपन्नौ स्वीकृतवन्तौ। तथोक्तं वैष्णवे—"मनुष्यधर्मशीलस्य लीला सा जगतः पतेः। अस्त्राण्यनेकरूपाणि यदरातिषु मुंचति। मनसैव जगत्सृष्टिसंहारं च करोति यः। तस्यारिपक्षक्षपणे कियानुद्यमविस्तरः। तथापि ये मनुष्याणां धर्मास्त-दनुवर्तनम्। कुर्वन्बलवता सन्धिं हीनैर्युद्धं करोत्यसौ। साम चोपप्रदानं च तथा भेदं प्रदर्शयन्। करोति दण्डपातञ्च क्वचिदेव पलायनम्। मनुष्यदेहिनां चेष्टामित्येवमनुवर्तते। लीला जगत्पतेस्तस्य छन्दतस्संप्रवर्तते।" इति। हे राजन्निति—राजनीतिवित्त्वं सर्वं जानास्येवेति भावः॥ ७॥ इत्यर्थ इति—वतिर्भीभीतत्वाभावमाह। विहाय विशेषेण पुनर्लिप्साराहित्येन हित्वा। कुतः-प्रचुरं वित्तस्य प्राचुर्याच्छत्रोर्लोभनेन विलम्बनायेत्यर्थः। पद्मपलाशाभ्यामिति भये सत्यतिकोमलांगेऽपि पादत्राणादिरहितोऽपि पलायत इति द्योतनाय, तस्य तु भयराहित्यं वतिनैवोक्तामिति॥ ८॥ इयत्ताऽन्तः। अत्र प्रमाणं विभुत्वम्, बलादिभिरपरिच्छेद्य-त्वमिति यावत्। अन्वधावदित्यादिना तस्य तद्धनग्रहणं निरस्तमतस्तद्धनं श्रीद्वारकायामेवायातमिति ज्ञेयम्। तदुक्तं हरिवंशे—"निवेदयामास ततो नराधिपे तदुग्रसेने प्रतिपूर्णमानसः। जनार्दनो द्वारवतीं च तां पुरीमशोभयत्तेव धनेन भूरिणा।" इति॥ ९॥

**श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी**

मथुरां यवने हते इति पुरीं यवनवेष्टितामिति पाठद्वयम्॥ ५॥ चकारादुष्ट्रादिभिश्च तदीयैरेव प्रतिवारं त्रयोविंशति-सङ्ख्यानामक्षौहिणीनां न तु न्यूनाधिकानां सङ्ग्रहस्तस्य राजभ्यस्तावत्तावत्सैन्यादाननिर्णयात्॥ ६॥ माधवौ क्रीडाविशेषार्थं मधुकुले जातौ श्रीरामकृष्णौ मथुरायां पुरा रक्षितेन श्रीरामेण सङ्गतेः आपन्नौ स्वीकृतवन्तौ तथाच श्रीविष्णुपुराणे—

"मनुष्यधर्मशीलस्य लीला सा जगतः पतेः। अस्त्राण्यनेकरूपाणि यदरातिषु मुञ्चति॥
मनसैव जगत्सृष्टिं संहारं च करोति यः। तस्यारिपक्षक्षपणे कियानुद्यमविस्तरः॥
तथापि ये मनुष्याणां धर्मास्तदनुवर्त्तनम्। कुर्वन् बलवता सन्धिं हीनैर्युद्धङ्करोत्यसौ॥
सामं चोपप्रदानं च तथा भेदं प्रदर्शयन्। करोति दण्डपातं च क्वचिदेव पलायनम्॥
मनुष्यदेहिनां चेष्टामित्येवमनुवर्त्तते। लीला जगत्पतेस्तस्य छन्दतः सम्प्रवर्त्तते॥"

इति। हे राजन्निति महाकौतुकात्सम्बोधयति॥ ७॥ विशेषेण पुनर्लिप्साराहित्येनेव हित्वा कुतः? प्रचुरं वित्तस्य प्राचुर्य्यात् शत्रोर्लोभनेन विलम्बनायेत्यर्थः। यद्वा, प्रचुरमपि अभीतावपि भीरुभीतवदिति महाभीतो यथा पलायते तथैवेत्यर्थः। अत एव पद्मपलाशाभ्यामपीति दुःखोक्तिः॥ ८॥ अत्र प्रमाणं विभुत्वं बलादिभिरपरिच्छेद्यत्वमिति यावत् अनुपश्चादधावदि-त्यादिना तस्य तद्धनग्रहणं निरस्तम् अतस्तद्धनं श्रीद्वारकायामायातमेव ज्ञेयं तथा च श्रीहरिवंशे—

"निवेदयामास ततो नराधिपे। तदुग्रसेने परिपूर्णमानसः॥
जनार्द्दनो द्वारवतीं तदा ( च तां ) पुरीमशोभयत्तेन धनेन भूरिणा॥" इति॥ ९॥

**श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी**

भगवान् सर्वशक्तिमान् श्रीकृष्णः, 'यवने हते' इत्यनाथत्वादिना तदीयम्लेच्छसेनाहननस्य सुकरतया शीघ्रत्वमभिप्रेतम् निन्ये नेतुमादिशत्॥ ५॥ नृभिर्भारवाहिभिः, चकारादुष्ट्रादिभिश्च, तदीयैरेव। तत्र हेतुः—अच्युतेन आज्ञाच्युतिरहितेन भगवता चोदितैः, तदाज्ञाया अवश्यपाल्यत्वादित्यर्थः॥ ६॥ माधवौ क्रीडाविशेषार्थं मधुकुले जातौ श्रीरामकृष्णौ, श्रीमथुरायामागतस्य सतो भगवतः, पुरो तस्यां सम्मन्त्र्य रक्षितेन श्रीरामेण सह संगतेः, द्रुतं तत्क्षणमेव दुद्रुवतुः, वेगेन धावित्वा पलायेताम्। कुतः? मनुष्यचेष्टामापन्नौ स्वीकृतवन्तौ, मनुष्यक्रीडापरत्वादित्यर्थः। तथा च श्रीविष्णुपुराणे ( ५।२२।१४–१८ )—

'मनुष्यधर्म्मशीलस्य लीला सा जगतः पतेः। अस्त्राण्यनेकरूपाणि यदरातिषु मुञ्चति॥
मनसैव जगत्सृष्टिं संहारञ्च करोति यः। तस्यारिपक्षक्षपणे कियानुद्यम विस्तरः॥
तथापि यो मनुष्याणां धर्म्मस्तमनुवर्त्तते। कुर्वन् बलवता सन्धिं हीनैर्युद्धं करोत्यसौ॥
साम चोपप्रदानञ्च तथा भेदं प्रदर्शयन्। करोति दण्डपातञ्च क्वचिदेव पलायनम्॥
मनुष्यदेहिनां चेष्टामित्येवमनुवर्ततेः। लीला जगत्पतेस्तस्यच्छन्दतः संप्रवर्त्तते॥ इति॥

हे राजन्निति कदाचिज्जीयते, कदाचित् पलायते चेत्येवं नीति व्यवहारो भवता ज्ञायत एवेति भावः, किंवा महा-कौतुकात् सम्बोधयति॥ ७॥ विशेषेण पुनर्लिप्साराहित्येन हित्वा। कुतः? प्रचुरं वित्तस्य प्राचुर्य्यात् शत्रोर्लोभनेन विलम्बा-येत्यर्थः। यद्वा, प्रचुरमपि अभीतावपि भीरुभीतवदिति महाभीतो यथा पलायते, तथैवेत्यर्थः। अत एव पद्मपलाशरूपाभ्यामपीयं शोकोक्तिः। बहुयोजनमिति श्रीमधुरातोऽतिदूरे अर्बुदाचलत्वेन प्रवर्षणाद्रेः प्रसिद्धेः॥ ८॥ बलं त्रयोविंशत्यक्षौहिणीसंख्यं सैन्यं

शक्तिर्वा तद्वान्, अतः प्रहसन् उच्चैर्हसन्, किंवा अहो अद्भुतं वीरत्वं क्षत्रियत्वं चेत्यादिप्रकारेणोपहसन्, स्वैरनीकैश्चात्मसैन्यैः, यद्वा, स्वानामनीकैः समूहैः, अन्येषामनुधावनाशक्तेः। ईशयोः सर्वशक्ति युक्तयोस्तयोः प्रमाणमियत्ता तत्त्वमित्यर्थः। अनु पश्चादधावदित्यादिना तस्य तद्धनग्रहणं निरस्तम्, अतस्तद्धनं श्रीद्वारकायामायातमेवेति ज्ञेयम्। तथा च श्रीहरिवंशे ( विष्णु. प. ५७।७० )—'निवेदयामास ततो नराधिपे, तदुग्रसेने प्रतिपूर्णमानसः। जनार्द्दनो द्वारवतीञ्च तां पुरीमशोभयत्तेन धनेन भूरिणा' इति ॥ ९ ॥

### श्रीमद्वीरराघवाचार्यकृता भागवतचन्द्रचन्द्रिका

अथ मुचुकुन्दानुग्रहोत्तरं भगवच्चेष्टितमाह—भगवानित्यादिना यवनैरावृतां मथुरामागत्य म्लेच्छानां बलं हत्वा। तदीयं म्लेच्छसम्बन्धि सर्वं धनं द्वारकां प्रतिनिन्ये प्रापयामास ॥ ५ ॥ अच्युतेन चोदितैर्नृभिः कर्तृभिर्गोभिः साधनैर्धने नीयमाने सति पूर्ववत्त्रयं विंशत्यक्षौहिणीसेनाधिपतिर्जरासन्ध आजगाम ॥६॥ माधवौ रामकृष्णौ जरासन्धसैन्यस्य वेगरभसं वेगोद्रेकम् अवलोक्य मनुष्यचेष्टां प्राप्तौ चिकीर्षन्तौ हेतुगर्भं वा तत्त्वात् हे राजन्! द्रुतं त्वरितं यथा तथा दुद्रुवतुः पलायितवन्तौ ॥ ७ ॥ तदेवाह, विहायेति। प्रचुरं प्रभूतं यावनं वित्तं विहाय भीतादपि भीतवत् पद्मपत्रसदृशाभ्यां पद्भ्यां बहुयोजनं देशं चेरतुर्जग्मतुः ॥ ८ ॥ मागधो जरासन्धस्तौ दृष्ट्वा बली स्वबलोपेतः दैहिकबलोपेतो वा ईशयो रामकृष्णयोरप्रमाणवित् ईशयोः प्रमाणं स्वरूपरूपगुणानन्त्यरूपं तन्न वेत्तीति तथाभूतः रथानीकै रथिकसैन्यैः सहान्वधावदनुदुद्राव ॥ ९ ॥

### श्रीविजयध्वजतीर्थकृता पदरत्नावली

प्रकृतमनुसरति—भगवानिति। यवनेनाहृतमानीतम् ॥ ५ ॥ त्रयोविंशत्यनीकप; त्रयोविंशदक्षौहिणीपतिः ॥ ६ ॥ रथनागाश्वपत्तिमदिति क्रियाविशेषणं रथादिमन्तमिति व्यत्ययेन वा योज्यम् ( क ) दुर्मदो यथा जन्तून्हन्ति तथा लुप्तोपमम् ( ख ) अद्रयो गिरयः "अद्रयोऽर्कगिरिद्रुमाः" इति ( ग ) सतुरङ्गाः सचोदकाः ससादिनः निष्पिष्टाः हताः ( घ–च ) यादवैर्द्वारकां गच्छन्तं नीयमानं यवनस्य विश्वं धनं दृष्ट्वा अनुद्रुत्य यादवान्निहत्य निर्जित्य ( छ ) वेगरभसं योगसम्भ्रमम् ॥ ७–८ ॥ प्रमाणं ज्ञानबलेयत्तां न वेत्तीति अप्रमाणवित् ॥ ९–क ॥ गोमन्तं पर्वतमारुह्य ॥ ख ॥ प्रवर्षणाख्यं तस्य शृङ्गमापतुरिति शेषः। तत्र शृङ्गे आसतुः उपविविशतुः ॥ ग–१० ॥

### श्रीनाथचक्रवर्तिपादविरचिता चैतन्यमतमञ्जूषा

मनुष्यचेष्टामापन्नौ नतु मनुष्यत्वम्, यद्वा, मनुष्यवद् या चेष्टा या मा श्रीस्तामापन्नौ समासोऽत्र विकल्पितः ॥ ८–१५ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

निन्ये नेतुमुपचक्रमे ॥५–६॥ वेगरभसं वेगोद्रेकम् ॥७॥ मनुष्यचेष्टामापन्नाविति तस्य स्वभाव एवोक्तः नतु पलायनेऽप्यमेव सिद्धान्तः मनुष्यचेष्टामापन्नत्वेऽपि बहुशः सर्वज्ञत्वसर्वशक्तित्वदर्शनात् तत्र प्रियजनस्य कस्याप्यभावान्नापि प्रेममौग्ध्यं च व्याख्यातुं शक्यं नापि भयस्यानुकरणमेवैतदिति व्याख्येयं खिद्यति धीर्विदामपीत्युद्धवोक्तेः तस्माद् दुर्गाश्रयोऽथारिभयात् पलायनमित्युद्धव एव तमेव दृष्ट्वास्य सिद्धान्तं ज्ञास्यतीति ज्ञेयम् अभीताविति भयाभावः प्राप्तः भीरू भयशीलावन्यी जनौ भीतौ यथा स्यातां तथा भीताविति भयं च प्राप्तमिति विरोध एवोक्तः ॥ ८ ॥ अप्रमाणवित् प्रमाणमियत्ता तन्न वेत्तीति तथा ॥ ९–११ ॥

### गूढार्थदीपिनी

बलं सैन्यम्। तदीयं यवनाहृतम् धनं निन्ये नेतुमुपचक्रमे ॥ ५ ॥ गोभिर्वृषयुक्तशकटैः ॥६॥ वेगरभसं वेगाधिक्यम् ॥७॥ भीरुशब्दोऽत्यर्थकः ॥ ८ ॥ रथानीकैः रथिकसैन्यैः। प्रमाणं बलप्रमाणम् ॥ ९ ॥

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः

निन्ये नृभिर्गोभिश्च नेतुमुपचक्रमे ॥ ५–६ ॥ वेगरभसं वेगोद्रेकम् जरासन्धविमोहनार्थं मनुष्यचेष्टाम् आपन्नौ अनुकुर्वन्तौ द्रुतं त्वरितं यथा तथा दुद्रुवतुः पलायितवन्तौ ॥ ७ ॥ तदेव प्रपञ्चयति—विहायेति। भीरुभीतवत् भीरोरपि भीतो यथा कश्चित्तद्वत् बहुयोजनं देशं चेरतुः जग्मतुः ॥ ८ ॥ जरासन्धविमोहमाह—पलायमानौ दृष्ट्वा प्रहसन् अन्वधावत् इयं लीला स्वात्सृष्टजरासन्धवधकर्तॄणां स्वभक्तानां पाण्डवानां शौर्य्यख्यापनार्था तत्समानीतसैन्यस्य भूभारस्य तु संहृतत्वात् ॥ ९ ॥

### श्रीसत्यधर्मकृता श्रीभागवतटिप्पणी

यवनाहृतं तेनानीतं म्लेच्छबलं सर्वं हित्वा तदीयं धनं द्वारकां निन्ये ॥ ५ ॥ बलस्य जाते निधने च नृभिरच्युतचोदितैर्गोभिर्वृषभैर्नीयमाने सति त्रयोविंशत्यनीकं त्रयोविंशत्यक्षौहिणीसेनां पातीति स तथा। जरासन्ध आजगाम ॥ ६ ॥ कालान्ताग्निः

प्रलयानलो रथनागाश्वपत्तिमत् बलमित्यनुपज्यते। मकरव्यूहवद्व्यूहो यस्य तद्विधाय गोविन्दं व्यूहस्यान्तर्निमिषान्तरे चकार। रंहसा वेगेन दुर्मदो युद्धे ॥ ८॥ वज्रनुन्ना अद्रयः पर्वता इव ॥ ९॥ तुरङ्गसहिताः सचोदकाः सूतसहिताः ॥ १०॥ मदेन शालन्त इति मदशालिनः॥ शीर्णपर्णवद्विचूर्णिता भूपृष्ठे विकीर्णाः सन्तो न व्यदृश्यन्त ॥ १२॥ द्वारकामनुगच्छन्तं गच्छत् ॥१३॥ अभि सान्मुख्येनावर्तत रिपुसैन्यस्य वेगरभसं वेगाटोपम् ॥ १४॥ सबलैः ससैनैः करिपोतकौ गजशिशू ॥ १५॥ राजन् दुद्रुवतुः। एततात्पर्यं स्वयं मूलकृदाह। मनुष्याणां चेष्टामापन्नौ प्राप्ताविति। नावापातप्राप्तेति द्रुतं दुद्रुवतुरित्यन्वयः॥ १६॥ प्रचुरं वित्तं विहाय यादवान्हत्वा नीतं तद्विहाय तदाशां त्यक्त्वेति यावत्। स्वभावतोऽभीतौ भीरुभीताविव भयवद्भ्योऽपि भयवन्ताविवातिशयेन भीतावित्यर्थः॥ १७॥ प्रहसन्नुपहसन्सन् रथानीकैः सहान्वधावत्। तन्मौख्ये मुखयति। ईशयोः प्रमाणं बलादीयत्तां वेत्तीति सः। स न भवतीति तथा ॥ १८॥

## श्रीमद्वल्लभाचार्य्यकृता सुबोधिनी

एवं तस्य व्यवस्थामुक्त्वा भगवतोऽपि द्वारकायां गमनमाह भगवानिति दशभिः। मध्ये तामसस्य शिवस्य ब्राह्मणानां वाक्यं कृतवानिति निरूप्यते। यवनवधानन्तरं भगवान् पुनर्मथुरामाव्रज्य, यवनैर्वेष्टितां दृष्ट्वा, मथुरानिमित्तं म्लेच्छबलं हत्वा, तदीयं धनं हृतानां मुकुटादिरूपं द्वारकां निन्ये ॥ ५॥ नीयमाने इति। वृथैव धनं न परित्याज्यमिति, राज्ञे देयमिति. यवनधनं च न ग्राह्यमित्युभयं साधयितुं किञ्चिद्दूरं गृहीत्वा गतवानित्यर्थः। तत्शकटस्था एव वाहकाः पदातयो बलीवर्दाश्च। ते सर्वे भगवता प्रेरिताः जरासन्धस्य सुखार्थम्। जये हि किञ्चित्प्राप्यत इति तस्मै दानार्थं नीतवन्तः। एतस्मिन्समये भगवदिच्छयैव समागतो जरासन्धः त्रयोविंशत्यक्षौहिणीयुतः। अधिकानयने सर्वोऽपि प्राकृतः क्षीणो भवेदिति। प्रकृतिं परित्यज्य प्राकृतं सर्वमेव गृहीत्वा समायातीति ख्यापनार्थं सर्वत्र त्रयोविंशत्यक्षौहिण्य उच्यन्ते ॥ ६॥ ते च सर्वे लब्धवराः, पूर्वपिक्षयापि वेगवन्त इति। 'देवानां वाक्यं परिपालनीयं मनुष्यैरिति मनुष्यचेष्टामापन्नौ, मनुष्यभावस्वीकारे हि ब्राह्मणवाक्यं शिववाक्यं च माननीयं भवति। भागवते चास्याकथनं लोकव्यामोहनार्थम्। राजन्निति स्नेहेन संबोधनं भ्रमानुत्पादनार्थम्। द्रुतं यथा भवति, तथा दुद्रुवतुः पलायितवन्तौ ॥ ७॥ विहायेति। भारवाहकास्तु गन्तुमसमर्था इति तान्विहायैव, प्रचुरमपि वित्तं विहाय, अभीतावप्येतौ भीतेभ्योऽपि भीताविव रथाश्वादिकमपि यवनवधात्प्राप्तं विसृज्य, पद्भ्यामेव भूमिसुखार्थं पद्मपलाशतुल्याभ्यां बहुयोजनं चेरतुः चित्रकूटमार्गेण गतौ ॥ ८॥ ततो मागधोऽपि भगवल्लीलामज्ञात्वा वरेण दृप्तः पृष्ठतोन्वगमदित्याह पलायमानाविति। तौ रामकृष्णौ। ननु बहुवारं धृत्वा मुक्तः, तयोर्बलं जानन्नपि कथं तत्सङ्गे गत इति चेत्, तत्राह मागध इति। देशदोषेण नष्टमतिरित्यर्थः। ततः प्रहसन् बलसहितः सेनासहितः अन्वधावत्, रथानीकैः सहेति ये शीघ्रगामिनो रथास्तानारुह्य तादृशैः सह गत इत्यर्थः। अनेन रथानां सेनायाश्च महान् क्लेशो निरूपितः। स क्लेशः सार्थको भविष्यतीत्याशङ्क्याह ईशयोरप्रमाणविदिति। कृष्णरामयोः प्रमाणं सामर्थ्यमादरणीयत्वं वा। तौ हि ब्राह्मणादिवाक्यं प्रमाणीकृत्य भगवान् गच्छति, न त्वशक्तः सन् इति भगवत्प्रमाणं न ज्ञातवान्। ईशयोरिति पूर्णा शक्तिर्विभक्तेति एकस्याप्यनङ्गीकारे विप्रादीनां वाक्यमप्रमाणं भवेदिति उभाभ्यां तत्प्रमाणीकृतमित्यर्थ॥.९॥

## श्रीसुबोधिनीसारः

प्रकृतमाह। यवनैर्वेष्टितां रुद्धां पुरीं मथुरां पुनराव्रज्यागत्य म्लेच्छानां बलं सैन्यं त्रिकोटिरूपं हत्वा तदीयं तेषामिदं धनं द्वारकां निन्ये भगवान् प्रैषयत् ॥ ५॥ गोभिर्वृषभैर्नृभिः मनुष्यैः चाच्छकटादिभिः अच्युतेन कृष्णेन चोदितैः प्रेरितैर्धने नीयमाने द्वारकां प्राप्यमाने सति त्रयोविंशत्यनीकपः विकृत्यक्षौहिणीसर्वसेनास्वामी तेन प्रत्यागमनं त्रयोविंशत्यक्षौहिणीसहित इत्यपास्तम्। अक्षौहिणीभिर्विंशत्या तिसृभिरिति प्रथमागमने उक्तं तत्सर्वबलसंख्यासूचनार्थमिति गुरुचरणाः। जरासंध आजगाम ॥ ६॥ रिपोः शत्रोः सैन्यस्य वेगरभसं त्वरागमनं विलोक्य दृष्ट्वा मनुष्यलीलां प्राप्तौ माधवौ रामकृष्णौ द्रुतं शीघ्रं पलायांचक्रतुः। तत्र ब्रह्मणो वरदानं हेतुरिति पुराणांतरं हे राजन् ॥ ७॥ प्रचुरं भूरि वित्तं धनं विहाय त्यक्त्वा मार्गेऽभीतौ निर्भयौ अपि भीरोः कातरादपि भीतवत् पद्मपत्राभ्यां पद्भ्यां बहुयोजनं चेलतुः परिबभ्रमतुः ॥ ८॥ पलायमानौ तौ रामकृष्णौ दृष्ट्वा बली मागधो जरासंधः प्रहसन् ईशयोरीश्वरयोरप्रमाणवित् बलानभिज्ञो रथसैन्यैरन्वयात् ॥ ९॥

## गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

'मुचुकुन्दानुग्रहानन्तरं भगवान् किं कृतवान्' इत्यपेक्षायामाह– भगवानिति। भगवान् यवनैरावेष्टितां पुरीं मथुरां पुनरागत्य म्लेच्छानां बलं सैन्यं हत्वा तदीयं धनं भूषणादिकं द्वारकां प्रति निन्ये नेतुमुद्युक्तो बभूव ॥ ५॥ अच्युतेन कृष्णेन चोदितैर्नृभिः कर्तृभिः गोभिः साधनैर्धने नीयमाने सति त्रयोविंशत्यक्षौहिणीसैन्याधिपतिर्जरासन्ध आजगाम ॥ ६॥ त्वरितं यथा भवति तथा दुद्रुवतुः पलायितवन्तावित्यन्वयः। ननु 'समर्थौ कथं पलायितवन्तौ' तत्राह—मनुष्यचेष्टामापन्नौ स्वीकृतवन्ताविति ॥ ७॥ पलायनप्रकारमाह—विहायेति। नीयमानं यावनं प्रचुरं बहु वित्तं विहाय भीरोरपि भीतवत् पद्मपत्रसदृशाभ्यां

पद्भ्यां बहुयोजनं चेलतुः ॥ ८ ॥ मागधो जरासन्धः तौ पलायमानौ दृष्ट्वा प्रहसन् रथानीकैः रथिकसैन्यैः सह अन्वधावत् । प्रहासे हेतुमाह—बलीति । अनुधावने हेतुमाह—ईशयोरिति । रामकृष्णयोः प्रमाणं प्रभावं न वेत्तीति तथा सः ॥ ९ ॥

### अन्वितार्थप्रकाशिका

भगवानिति । भगवान् यवनैरावेष्टितां पुरीं मथुरां पुनरागत्य म्लेच्छानां बलं सैन्यं हत्वा तदीयं धनं भूषणादिकं द्वारकां प्रति निन्ये नेतुमुद्युक्तो बभूव ॥ ५ ॥ नीयमान इति । अच्युतेन कृष्णेन चोदितैर्नृभिः कर्तृभिः गोभिः साधनैर्धने नीयमाने सति त्रयोविंशत्यक्षौहिणीसैन्यातिधिपतिर्जरासन्ध आजगाम । विलोक्येति । हे राजन् ! रिपुसैन्यस्य वेगरभसं वेगोद्रेकम् अवलोक्य मनुष्ययोग्यां चेष्टां चातुर्यक्रियामापन्नौ माधवौ रामकृष्णौ द्रुतं त्वरितं यथा भवति तथा दुद्रुवतुः पलायितवन्तौ । मनुष्यचेष्टामित्यादेर्वस्तुतोऽयं भगवतोऽभिप्रायः येषां रक्षार्थं मया योद्धव्यं ते ज्ञातिसंबन्धिप्रमुखा द्वारकां प्रापिता एव । अधुना केवलाभ्यां मागधबलनाशने कृते हतोत्साहो जरासन्धो रुक्मिणीविवाहे मां योधयितुं नागमिष्यत्येव । अधुना पराजयाभासे प्रदर्शिते तु उत्साहवशाद् रुक्मिणीविवाहेऽपि आगमिष्यत्येव । एवं सति तत्र सर्वेषां प्रतिपक्षभूपानां युगपदेव सम्मेलने एकदैव सर्वान् जेष्यामीति व्यापारलाघवं वीरेषु कीर्तिः मत्पराक्रमदर्शनेव रुक्मिणीहर्षो बैरिणां युगपदुत्साहभङ्गश्चेति कार्यचतुष्कसम्पत्तिः ॥ ६-७ ॥ विहायेति । नीयमानं यावनं प्रचुरं बहुवित्तं विहाय भीरोरपि भीतवत् अतिभीतवदित्यर्थः । पद्मपलाशसदृशाभ्यां पद्भ्यां बहुयोजनं देशं चेलतुः पलायेताम् ॥ ८ ॥ पलायमानाविति । बली ईशयो रामकृष्णयोः प्रमाणमियत्तां प्रभावं वा न वेत्ति तादृशो मागधः जरासन्धः तौ पलायमानौ दृष्ट्वा प्रहसन् रथानीकैः रथिकसैन्यैः सहान्वधावत् । अस्यानीकैः सह पृष्ठतो धावनात्तद्धनं निर्विघ्नं द्वारकां नीतमिति ज्ञेयम् ॥ ९ ॥

### श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्

पुरीं मथुराम् ॥ ५ ॥ अच्युतेन नोदितैः प्रेरितः ॥ ६ ॥ श्रीहरिकृष्णाय नमोनमः । वेगरभसं वेगाधिक्यं मनुष्यचेष्टां आपन्नौ स्वीकृतवंतौ । तथा विष्णुपुराणे ॥ मनसैव जगत्सृष्टिं संहारं च करोति यः । तस्यारिपक्षक्षपणे कियानुद्यमविस्तरः ॥ कुर्वन् बलवता संधिं हीनैर्युद्धं करोत्यसौ साम चोपप्रदानं च तथा भेदं प्रदर्शयन् । करोति दण्डपातं च क्वचिदेव पलायनम् ॥ मनुष्यदेहिनां चेष्टामित्येवमनुवर्त्तते इति ॥ हे राजन् द्रुतं शीघ्रम् ॥७॥ प्रचुरं बहुलं भीरोर्भयशीलादपि भीतवत् ॥ भीरुनरवत् ॥ चेलतुः पलायतः स्म ॥ ८ ॥ प्रमाणं सामर्थ्यप्रमाणं वेत्तीति प्रमाणवित् ॥ तथा भूतो न भवति अप्रमाणवित् ॥ ९ ॥

### भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

अथ मुचुकुन्दानुग्रहोत्तरवर्त्ति भगवच्चेष्टितमाह ॥ भगवानिति ॥ अथ भगवान्, पुनः यवनवेष्टितां पुरीं मथुरां, आव्रज्यागत्य, म्लेच्छबलं हत्वा, तदीयं म्लेच्छसैन्यसंबन्धि, धनं द्वारिकां, निन्ये प्रापयामास ॥ ५ ॥ नीयमान इति ॥ अच्युतचोदितैभगवता संप्रेरितैः, नृभिः कर्तृभिः, गोभिः करणैः, धने नीयमाने द्वारिकां प्रापितप्राये सति, त्रयोविंशत्यनीकपः त्रयोविंशत्यक्षौहिणी सेनाधिपः जरासंधः, आजगाम ॥ ६ ॥ विलोक्येति ॥ हे राजन्, माधवौ रामकृष्णौ, रिपुसैन्यस्य जरासंधसैन्यस्य, वेगरभसं वेगोद्रेकं, विलोक्यावलोक्य, मनुष्यचेष्टां आपन्नौ प्राप्तौ सन्तौ, द्रुतं त्वरितं यथा तथेत्यर्थः । दुद्रुवतुः पलायितवन्तौ । नृणां चेष्टां चिकीर्षन्ताविति पाठे, चिकीर्षन्ताविति हेतुगर्भम् । तत्त्वात्, द्रुतं दुद्रुवतुः ॥ ७ ॥ तदेवाह ॥ विहायेति ॥ प्रचुरं प्रभूतं, वित्तं म्लेच्छसैनीयस्वापतेयं, विहाय नीतावशिष्टं परित्यज्य, अभीतौ सन्तावपि, भीरुभीतवत् भीरोरपि भीतवत् अतिभीतदित्यर्थः । पद्मपलाशाभ्यां पद्मपत्रसमानाभ्यां पद्भ्यां, बहुयोजनं अपरिमितयोजनान्वितदेशं चेलतुर्जग्मतुः ॥ ८ ॥ पलायमानाविति ॥ बली स्वसैन्योपेतः दैहिकबलोपेतो वा मागधो जरासंधः, तौ रामकृष्णौ, पलायमानौ दृष्ट्वा, ईशयोरीश्वरयोः रामकृष्णयोः, यतः अप्रमाणवित् स्वरूपगुणचारित्र्यानन्तताऽनभिज्ञः । अत एव, प्रहसन् सन्, रथानीकैः रथिकसैन्यैः सह, अन्वधावदनुदुद्राव ॥ ९ ॥

### कृष्णप्रिया

इधर भगवान् श्रीकृष्ण मथुरापुरी में लौट आये। अब तक कालयवन की सेना ने उसे घेर रक्खा था। अब उन्होंने म्लेच्छों की सेना का संहार किया और उसका सारा धन छीनकर द्वारका को ले चले ॥ ५ ॥ जिस समय भगवान् श्रीकृष्ण के आज्ञानुसार मनुष्यों और बैलों पर वह धन ले जाया जाने लगा, उसी समय मगधराज जरासन्ध फिर ( अठारहवीं बार ) तेईस अक्षौहिणी सेना लेकर आ धमका ॥ ६ ॥ परीक्षित् ! शत्रु-सेना का प्रबल वेग देखकर भगवान् श्रीकृष्ण और बलराम मनुष्यों की-सी लीला करते हुए उसके सामने से बड़ी फुर्ती के साथ भाग निकले ॥ ७ ॥ उनके मनमें तनिक भी भय न था। फिर भी मानो अत्यन्त भयभीत हो गये हों—इस प्रकार का नाट्य करते हुए, वह सब-का-सब धन वहीं छोड़कर अनेक योजनों तक वे अपने कमलदल के समान सुकोमल चरणों से ही—पैदल भागते चले गये ॥ ८ ॥ जब महाबली मगधराज जरासन्ध ने देखा कि श्रीकृष्ण और बलराम तो भाग रहे हैं, तब वह हँसने लगा और अपनी रथ-सेना के साथ उनका पीछा करने लगा। उसे भगवान् श्रीकृष्ण और बलरामजी के ऐश्वर्य, प्रभाव आदि का ज्ञान न था ॥ ९ ॥

प्रद्रुत्य[1] दूरं संश्रान्तौ तुङ्गमारुहतां गिरिम् । प्रवर्षणाख्यं भगवान् नित्यदा यत्र वर्षति ॥ १० ॥
गिरौ निलीनावाज्ञाय नाधिगम्य पदं नृप । ददाह गिरिमेधोभिः समन्तादग्निमुत्सृजन् ॥ ११ ॥
[2]तत [3]उत्पत्य तरसा दह्यमानतटादुभौ । दशैकयोजनोत्तुङ्गान्निपेततुरधो भुवि ॥ १२ ॥
अलक्ष्यमाणौ रिपुणा सानुगेन यदूत्तमौ । [4]स्वपुरं पुनरायातौ समुद्रपरिखां नृप ॥ १३ ॥

**कर्दमक्षमा**

अन्वयः—दूरम्, प्रद्रुत्य, संश्रान्तौ, यत्र, भगवान्, ( पर्जन्यः ) नित्यदा, वर्षति, प्रवर्षणाख्यम्, तुङ्गम्, गिरिम्, आरुहताम् ॥ १० ॥ हे नृप ! गिरौ, निलीनौ आज्ञाय, पदम्, नाधिगम्य, समन्तात्, अग्निम्, उत्सृजन्, एधोभिः, गिरिम्, ददाह ॥ ११ ॥ ततः, उभौ, दह्यमानतटात् दशैकयोजनोत्तुङ्गात्, तरसा, उत्पत्य, भुवि, अधः, निपेततुः ॥ १२ ॥ नृप ? सानुगेन, रिपुणा, अलक्ष्यमाणौ, यदूत्तमौ, समुद्रपरिखाम्, स्वपुरम्, पुनः, आयातौ ॥ १३ ॥

**श्रीधरस्वामिविरचिता भावार्थदीपिका**

तुंगमेकादशयोजनोन्नतम् । प्रकर्षेण वर्षत्यस्मिन्निति प्रवर्षण इत्याख्या यस्य तम् । तदाह । भगवानिति । भगवानिन्द्रः ॥ १० ॥ तत्र विचिन्वन्नपि तयोः पदं निलयस्थानमनधिगम्य ॥११॥ ततो गिरेः दश चैकं च योजनानि तावदुत्तुंगान्मागधसंरोधदेशमतिक्रम्य परतोऽधो निपेततुः ॥ १२–१४ ॥

**श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः**

गिरिं गोमन्तम् "तावारुरुहतुर्वीरौ गोमंतमुदिते रवौ" इति हरिवंशोक्तेः । प्रवर्षणाख्यमिति गिरेरग्निदाहशंका निरस्ता ॥ १० ॥ निलीनौ गुप्तौ । पदं पादचिह्नम् । ततोऽग्रेऽनधिगम्य । एधोभिः काष्ठैः 'काष्ठं दार्विन्धनं त्वेधः' इत्यमरः ॥ निलीनौ तृणगुल्मादिषु तिरोहितौ । तयोः पादचिह्नमन्यत्राऽप्राप्येति हेतुः । ददाह दग्धुमारेभे । नृप इति बहुजनाधीशत्वेन सामर्थ्यं तत्र दर्शितम् ॥ ११ ॥ उभौ रामकृष्णौ ॥ दह्यमानः तटः प्रान्तभागो यस्य तस्मात् । अधो गिरेस्तत्रापि भुवि न तु कण्टकजलादौ । अनेन निःशब्दत्वेन च सुदूरे तयोः सुखपतनं पक्षिवदभिप्रेतम् ॥ १२ ॥ रिपुणा जरासंधेन । स्वपुरं द्वारकाम् । समुद्रः परिखा खातनदी यस्यास्ताम् । "खेयं तु परिखाधारस्त्वंभसां यत्र धारणम्" इत्यमरः ॥ अलक्ष्यमाणाविति धूमावृतसर्वदिक्त्वात् । रिपुणेति । रिपुत्वात्सावधानेनापीत्यर्थः । सानुगेन महासैन्येनापि सह । यदूत्तमाविति यादवानन्दयन्ताविति भावः । नृपेति नृपाणां क्रूरस्वभावादिति भावः ॥ १३ ॥

---

१. द्वौ–विजये न स्तः । २. एते षोडश विजयेऽधिकाः ।

प्रहृत्य वीरौ विश्रान्तौ करवीरपुरे निशि । तावारुहतुर्वीरौ गोमन्तमुदिते रवौ ॥ १ ॥
सिद्धचारणगन्धर्वविद्याधरनिषेवितम् । आरुह्य शैवं गोमन्तं रामकृष्णौ त्वरान्वितौ ॥ २ ॥
प्रवर्षणाख्यं तच्छृङ्गं यत्राब्दा नित्यवर्षिणः । तत्र तावासतू राजन् फलमूलाशनौ सुखम् ॥ ३ ॥
जरासन्धस्तु दुष्टात्मा तावनुद्रुत्य माधवौ । रुरोध शैलं गोमन्तं महत्या सेनया वृतः ॥ ४ ॥
स भूपालान्समाहूय स्वानुगान्युद्धदुर्मदान् । कलिङ्गं कुञ्जरपतिं सुराष्ट्राधिपतिं तथा ॥ ५ ॥
जयद्रथं सिन्धुपतिं सोमदत्तं च कौरवम् । गान्धारराजं शकुनिं वैदर्भं रुक्मिमेव च ॥ ६ ॥
सुदक्षिणं च कांभोजं विराटं मत्स्यभूपतिम् । एतानाज्ञापयामास पूर्वस्यां दिशि भूपतीन् ॥ ७ ॥
पाञ्चालराजं द्रुपदं दमघोषं च चेदिपम् । ब्रह्मदत्तं च साल्वेशमेकलव्यं निषादपम् ॥ ८ ॥
वाह्लीकं च कुरुश्रेष्ठं युधामन्युं च दुर्जयम् । विन्दानुविन्दावावन्त्यौ काशिराजं च पौण्ड्रकम् ॥ ९ ॥
आज्ञापयामास नृपानेतान्वीरो जरासुतः । गिरिं गोमन्तमारोढुं दक्षिणस्यां दिशि प्रभो ॥ १० ॥
द्रुमं किंपुरुषाधीशं दन्तवक्त्रं सहानुजम् । वीरं विदेहराजानं भूरिश्रवसमेव च ॥ ११ ॥
करूशेशं बृहच्चापं दाशार्णं च शतध्वजम् । शैव्यं सुवीरराजानं दरदं च महारथम् ॥ १२ ॥
एतान्महीपतीन्राजन् जरासन्धोऽमितद्युतिः । प्राह गोमन्तमारोढुं पश्चिमस्यां दिशि द्रुतम् ॥ १३ ॥
त्रिगर्तं च सुशर्माणं बलिनं वेणुदारिणम् । कुलिन्दं च महासत्वं केकयानपि भूपतीन् ॥ १४ ॥
शिशुपालं च भूपालं भीष्मकं चापि दुर्जयम् । पुरस्कृत्यारुरोहाशु कौबेर्यां मागधो दिशि ॥ १५ ॥
एवं गोमन्तमारुह्य सर्वर्तुफलपादपम् ।
विचित्य तत्र सर्वत्राप्यधः शृङ्गात्प्रवर्षणात् । चिच्छिदुः सकलान्वृक्षान्नापश्यन्राममाधवौ ॥ १६ ॥

३. उत्प्लुत्य–वीर. विज. । ४. मानात्तु तावुभौ–विज. । ५. पुरीं–विज. ।

**श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी**

प्रवर्षणाख्यमिति तद्गिरेरग्निदाहशङ्कापि निरस्ता ॥ १० ॥ नाधिगम्येति तैर्व्याख्यातम् । यद्वा, आज्ञायेत्यत्र हेतुः तयोः पदं पादचिह्नमन्यत्राप्राप्येति ददाह दग्धुमारेभे नृप इति तत्र शक्त्यतिशयः सूचितः ॥ ११ ॥ दह्यमानं तटं प्रान्तभागमात्रं यस्य तस्मात् अधो गिरेः तत्रापि भूप्रदेशे न तु कण्टकजलादौ अनेन निःशब्देन च सुदूरे तयोः सुखपतनमभिप्रेतम् ॥ १२ ॥ अलक्ष्यमाणाविति धूमावृतसर्वदिक्त्वात् रिपुणेति। रिपुत्वात्सावधानेनापीत्यर्थः। तत्रापि सानुगेन महासैन्येनापि सह यदूंत्तमाविति यादवान्नन्दयन्ताविति भावः ॥ १३ ॥

**श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी**

प्रकर्षेण सुकोमलतरपादगत्यैव, द्रुत्वा वेगतो धावनेन गत्वा, अतः सुष्ठु श्रान्तौ सन्तौ, सु-शब्देन श्रान्तत्वस्यापि लीलाविशेषकृतत्वाच्छोभनत्वमेव सूच्यते। गिर्य्यारोहणे हेतुः—तुंगमिति। किञ्च, प्रवर्षणाख्यमित्यादि। एवं तद्गिरेरग्निदाहशंकापि निरस्ता ॥ १० ॥ गिरौ तस्मिन्नेव नितरां परमादृश्यत्वेन लीनौ, आ सम्यक् ज्ञात्वा तस्मात्तयोर्निष्क्रमचिह्नादर्शनात्, मृगखयादिहर्षकोलाहलादिना तत्र प्रवेशलक्षणाच्च, नाधिगम्येति तैर्व्याख्यातम्। यद्वा, आज्ञायेत्यत्र हेतुः—तयोः पदं कुत्राप्यप्राप्येति, समन्तादष्टदिक्षु उत्सृजन् दूरतः क्षिपन् ददाह दग्धुमारेभे। नृप इति बहुतरात्ममनुष्यैराज्ञाप्य तत्राग्निं प्रक्षिप्तवानिति भावः ॥ ११ ॥ तरसा वेगेन, उत्प्लुत्य उच्चैः कुर्द्दित्वा, दह्यमानं तटं प्रान्तभागमात्रं यस्य तस्मात्, अधो गिरेः, तत्रापि भूप्रदेशे। अनेन निःशब्देन च सुदूरे तयोः सुखपतनमभिप्रेतम्। तच्च तैर्व्यञ्जितमेव ॥ १२ ॥ रिपुणेति—वैरेण सदा तयोरन्वेषणपरत्वमभिप्रेतम्। तथाप्यलक्ष्यमाणौ केनचिदपि लक्षणेनाज्ञायमानौ, सानुगेस्त्वयं निजानुगैरपीत्यर्थः। वस्तुतस्तु रिपुत्वेनालक्ष्यत्वं युक्तमेवेति भावः। यदुत्तमाविति यादवानां सुखाद्यर्थमिति भावः। स्वपुरीं स्वयं निर्म्मितां पुरीं द्वारकां समुद्रपरिखमिति जरासन्धाद्यगम्यत्वमुक्तम्। हे नृपेति प्रहर्षोदयात् ॥ १३ ॥

**श्रीमद्वीरराघवाचार्यकृता भागवतचन्द्रचन्द्रिका**

तौ रामकृष्णौ प्रद्रुत्य पलायित्वा श्रान्तौ तुङ्गमुन्नतं प्रवर्षणाख्यं गिरिमारूढवन्तौ। आख्याया अन्वर्थमाह, भगवान्पर्जन्यो यत्र गिरौ नित्यदा वर्षति प्रकृष्टं नित्यमस्मिन्वर्षतीति प्रवर्षणः अधिकरणे ल्युट् ॥ १० ॥ स जरासन्धः हे नृप ! पदं रामकृष्णयोः पादाङ्कितं तत्र तत्र भूप्रदेशमधिगम्यावलोक्य तेन लिङ्गेन गिरौ विलीनावन्तर्हिताववाज्ञाय अनुमाय नाधिगम्येति पाठे तत्र विचिन्वन्नपि तयोः पदं नियतस्थानमज्ञात्वा केवलं तत्र विलीनौ ज्ञात्वा तं गिरिसर्वतो दशयोजनम् एधोभिः काष्ठैश्चितिं कारयित्वेति शेषः, तत्राग्निमुत्सृजत् ददाह ॥ ११ ॥ तदा दह्यमानानि तटानि यस्य तस्माद्गिरेरुत्प्लुत्य दशैकं च योजनानि यानि तावत्तुङ्गाद्गिरेर्मागधसंरोधदेशमतिक्रम्य परतोऽधो निपेततुः ॥ १२ ॥ ततो रिपुणा मागधेनाऽदृश्यमाणौ रामकृष्णौ समुद्र एव परिखा यस्यास्तां पुरीं द्वारकां प्रति पुनराजग्मतुः ॥ १३ ॥

**श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली**

एधोभिः काष्ठैः ॥ ११–१२ ॥ समुद्र एव परिखा खातं नदी यस्याः सा तथा ॥ १३–१४ ॥

**श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी**

ततो गिरेः दश च एकं च यानि तावत्तुङ्गात् अधः मागधसैन्यसंरोधदेशमतिक्रम्य परतो निपेततुः ॥ १२–१४ ॥

**गूढार्थदीपिनी**

आरुहतां बाहुलकाच्च्लेरङ्। भगवान् इन्द्रः ॥ १० ॥ निलीनौ तिरोहितौ। पदं निलयस्थानम्। एधोभिः काष्ठैः गिरिं वेष्टयित्वा। उत्सृजन् प्रक्षिपन् ॥ ११ ॥ ततो गिरेः सकाशात्। तटः प्रान्तभागः ॥ १२ ॥ स्वपुरं द्वारकाम् ॥ १३–१४ ॥

**श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः**

भगवानिन्द्रः ॥ १० ॥ पदं प्रवेशस्थानम् ॥ ११ ॥ दश चैकञ्च यानि योजनानि तावदुत्तुङ्गात् ॥ १२–१४ ॥

**श्रीसत्यधर्मकृता श्रीभागवतटिप्पणी**

वीरौ दूरमित्यपि पाठौ। निशि करवीरपुरे विश्रान्तौ विश्रामं प्राप्तौ रवावुदिते सति ॥ १९ ॥ त्वरान्वितौ गोमन्तं शैलमारुह्य ॥ २० ॥ तस्य शृङ्गं तत्र सुखमासतुः ॥ २१ ॥ तौ माधवापनुद्रुत्य स्वयं महत्या सेनया वृतः स रुरोध ॥ २२ ॥ स्वमनुगच्छन्तीति स्वानुगास्तान् कुञ्जरपतिं नरकम् ॥ २३ ॥ सिन्धुपतिर्जयद्रथमित्येकाधिकरण्यम्। तथैव कौरवं सोमदत्तमिति। एवमुत्तरत्रापि योग्यस्थले ॥ २४ ॥ एतान्भूपतीन्पूर्वस्यां दिशि आज्ञापयामास ॥ २५ ॥ निषादस्वामिनम् ॥ २६ ॥ दुर्जयानिति

यथायोग्यान्वयि ॥ २७ ॥ आरोढुमित्येतदत्रैव पूर्वत्राप्यन्वेति ॥ २८ ॥ सहानुजं सविडूरथं विदेहराजानम् । समासान्तो विधिरनित्य इति न टच् ॥ २९ ॥ दरदं नाम्ना ॥ ३० ॥ अमितद्युतिः पराक्रमभ्रमसमय इति ॥ ३१ ॥ वेणुदारिणं राजानम् ॥ ३२ ॥ मागधः स्वयम् ॥ ३३ ॥ सर्वर्तुफलपादपम् । एकस्मिन्नृतावपि । विचिन्त्य मृगयित्वा ॥ ३४ ॥ नापश्यत् । गिरावेव यत्र कुत्रचिद्विलीनौ । आज्ञाय ज्ञात्वा पदं तत्स्थलं नाधिगम्याज्ञात्वा ॥ ३५ ॥ एधोभिः काष्ठैः । मुख्यकर्तृविवक्षयोत्सृजन् ददाहेत्येकवचनम् ॥ ३६ ॥ दशैकयोजनोत्तुङ्गादेकादशयोजनोच्छ्रिताच्छृङ्गात्सानुगेन भृत्येन सानुस्थेनेति वा । लक्ष्यमाणावधोभुवि निपेततुः ॥ ३७ ॥ समुद्र एव परिखा यस्याः सा तां स्वेषां पूस्तां स्वपूराम् । समुद्रपरिखमिति पाठे पुरशब्द इति ज्ञेयम् ॥ ३८ ॥

## श्रीमद्वल्लभाचार्यकृता सुबोधिनी

ततो रामकृष्णौ पर्वतेन प्रार्थितवरौ तत्प्रियार्थं तुङ्गं गिरिमारुहताम् । स हि पर्वतः सर्वदा शीतेन व्याप्तः, भगवन्तं शीतनिवृत्त्यर्थं विज्ञापयामास । तत्र हि न कदाचिदपि सूर्याग्निसम्बन्धः । मेघानां तत्प्रियं स्थानम् । अतो मेघाच्छन्न एव तिष्ठतीति न सूर्यसम्बन्धः । **वर्षतीति** नाग्निसम्बन्धः । ततो भगवान् पूर्वं तस्मै वरं दत्तवान्, अहमागत्य ते शीतं निवारयिष्यामीति । ततो भगवतः अद्भुतकर्मत्वं प्रतिपादयितुं श्रान्तिमुक्त्वा पर्वतारोहणं वदति **प्रद्रुत्येति** । न हि कश्चिद्दूरं प्रद्रुत्य तुङ्गं गिरिमारोहति । उच्चारोहणं ह्यश्रान्तमपि श्रमयति, भगवतः सहस्रोपायानां विद्यमानत्वात् निलीय स्थित्यर्थं किं पर्वतारोहणमुच्चस्थानमपेक्षते, प्रत्युत उच्चस्थितं सर्वोऽपि पश्यति, अतोऽत्र भगवतः अद्भुतलीलां कथयन् विरोधप्रकारेण कथयति । दूरं प्रद्रुत्य धावनं कृत्वा सम्यक् श्रान्तौ जातौ । नहीशयोः शीघ्रगमनं श्रमो वा सम्भवति । तत्रापि तुङ्गमत्युच्चं गिरिम् आरुहतां गुप्ततया । तत्रारोहणप्रयोजनमाह **प्रवर्षणाख्यमिति** । प्रकर्षेण वर्षणं यत्रेति । रूढिभ्रमव्युदासाय स्वयमेव योगं प्रदर्शयति भगवान् नित्यदा यत्र वर्षतीति । तत्र हि सर्वदा भगवान् वर्षति । मेघा हि कदाचित् क्वचिद्वर्षन्ति, तेषामधिष्ठातृरूपो भगवान् विष्णुः । 'पर्वतानामधिपति'रिति श्रुतेः । स्वयमेव तत्र वर्षति, अन्यथा लोके वृष्टिप्रवृत्तिर्न स्यात् ॥ १० ॥ ततो भ्रान्तस्य जरासन्धस्य कृत्यमाह गिराविति । पर्वतारोहणे कैश्चित् दृष्ट एव, तत्रापि अग्रे न गत इत्यत्र विचारमपि कृतवानित्याह **नाधिगम्येति** । ततः पर्वतादग्रे **पदं** गमनचिह्नं **नाधिगम्य** अप्राप्य । दाहे भगवता हेतुः सम्पादितः स सत्य एव जात इति वक्तुं तस्य निलीनाविति ज्ञानमुत्पादितम् । ततो दाहार्थमेव तथा प्रयत्नः कृत इति सत्यसङ्कल्पस्य भगवतः इच्छया गिरिमेधोभिर्ददाह । सर्वत्र वृक्षान् छित्त्वा परितस्तृणादिना दाहं कारितवान् ॥ ११ ॥ ततो भगवान् पर्वतप्रार्थितं विधाय ततोऽग्रे गत इत्याह **तत उत्पत्येति** । **तरसा** शीघ्रमेव यावदग्निः प्रज्वलति, भगवति विद्यमाने अग्निः पर्वतं न दहेदिति । न तु दाहभयात् । दह्यमानाः तटाः यस्य । सर्वत्र दाहे उद्भूते उभौ पूर्णशक्तिर्भगवान् **दशैकयोजनोत्तुङ्गादिति** । एकादशयोजनं स उत्तुङ्गः, तत उभावपि अधः पर्वतस्य प्रस्तरभागमपि परित्यज्य भूभागे निपेततुः । केचित्तु अतिदाहे पुनः पर्वतप्रार्थनायां तं भूमौ नेतुम् उपर्युत्थाय पादपीडनेन तं भूमौ प्रवेशयन्नेव स्वयं दूरे गत इत्याहुः ॥ १२ ॥ ततः पुनरपि तस्य प्रवृत्तिः स्यादिति पूर्वमपि स्वेच्छयैव स प्रवृत्त इति ज्ञापयन् तेनालक्ष्यमाणावेव द्वारकां गतौ । तत्र न भगवता कश्चनाधिकः प्रयत्नः कृतः । स मा पश्यत्विति । किन्तु स्वदोषेणैव स न दृष्टवानिति ख्यापयितुमाह **रिपुणेति** । दुष्टबुद्ध्यैव न दृष्टवान्, तत्सम्बन्धादन्यैरपि न दृष्टमिति **सानुगेने**त्युक्तम् । ननु कार्यस्य सर्वस्यापि कृतत्वात् श्वेतद्वीपादावेव कुतो न गतौ, द्वारकागमने को हेतुरिति चेत्, तत्राह **यदूत्तमा**विति । अन्यथा यदुकुले अवतारं न कुर्यात् अतो यादवहितार्थं स्वपुरं यातौ । **पुनरायातावि**त्यनेन पूर्वमुभावपि स्वयं गत्वा तान् स्थापितवन्ताविति विज्ञायते । तस्य भिन्नद्वीपत्वं कलिप्रवेशाभावाय निरूपयन्नाह **समुद्रपरिखामिति** । समुद्र एव परिखा यस्येति । विस्तारोऽप्यनेन सूचितः **नृपे**त्यप्रतारणाय संबोधनम् ॥१३॥

## श्रीसुबोधिनी–सारः

दूरं प्रद्रुत्य पलाय्य संश्रांतौ खेदयुक्तौ तुंगम् एकादशयोजनोत्सेधं गिरिं पर्वतं प्रवर्षणनामानमारुहताम् आरोहणं कृतवंतौ गिरेर्निरुक्तिमाह । भगवान्मेघो नित्यदा सदा यत्र वर्षति ॥ १० ॥ पदे चरणचिह्ने नाधिगम्याऽप्राप्यालक्ष्यगिरौ निलीनौ इति ज्ञात्वा समंताच्चतुर्दिशं संततमग्निमुद्दीपयन् एधोभिः काष्ठैर्गिरिं पर्वतं ददाह हे नृप ॥ ११ ॥ तत एकादशयोजनोत्तुंगात् दह्यमानं तटं यस्य तस्माद्गिरेः उत्पत्य तरसा वेगेनाधो भुवि तौ निपेततुः ॥१२॥ सानुगेन सभृत्येन रिपुणा जरासंधेनालक्ष्यमाणौ न ज्ञायमानौ यदूत्तमौ तौ समुद्रः परिखा यस्यास्तां स्वपुरं द्वारकां पुनरागतौ हे नृप ॥ १३ ॥

## गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

दूरं प्रद्रुत्य पलायित्वा सुश्रान्तौ रामकृष्णौ तुङ्गमत्युन्नतं प्रवर्षणाख्यं गिरिमारुहताम् । प्रवर्षणाख्याया अन्वर्थमाह— भगवान् पर्जन्यो यत्र गिरौ नित्यदा वर्षतीति ॥ १० ॥ हे नृप ! जरासन्धस्तौ गिरौ निलीनावाज्ञाय तत्र विचिन्वन्नपि तयोः पदं निलयस्थानमनधिगम्य अज्ञात्वा तद्दाहार्थं एधोभिः काष्ठैर्गिरिं समन्ताद्वेष्टयित्वा अग्निमुत्सृजन् काष्ठेषु प्रक्षिपन् ददाहेत्यन्वयः ॥११॥ दह्यमानानि तटानि यस्य तस्मात् दश चैकं च यानि योजनानि तावदुत्तुङ्गात्ततो गिरेः सकाशात् उभौ तरसा वेगेन उत्प्लुत्य

मागधसंरोधमतिक्रम्य परतोऽधो भुवि भूमौ निपेततुः ॥ १२ ॥ 'भगवतो राजकार्यमप्यद्भुतम्' इति सूचयन् सम्बोधयति—नृपेति सानुगेन अनुगैः सैन्यैः सहितेन रिपुणा जरासन्धेन अलक्ष्यमाणौ यदूत्तमौ रामकृष्णौ समुद्र एव परिखा यस्यास्तां पुरीं द्वारकां प्रति पुनरायातावित्यन्वयः ॥ १३ ॥

### अन्वितार्थप्रकाशिका

प्रद्रुत्येति । दूरं प्रद्रुत्य पलाय्य सुश्रान्तौ रामकृष्णौ तुङ्गमत्युन्नतं प्रकर्षेण वर्षत्यस्मिन्निति प्रवर्षणाख्यम् अग्निदाहशङ्काशून्यं गिरिमारुरुहताम् । छान्दसश्च्लेरङ् । भगवान् पर्जन्यो यत्र गिरौ नित्यदा वर्षति ॥ १० ॥ गिराविति । हे नृप ! जरासन्धस्तौ रामकृष्णौ गिरौ निलीनावाज्ञाय तत्र विचिन्वन्नपि तयोः पदं निलयस्थानमनधिगम्य अज्ञात्वा । यद्वा । गिरेरन्यत्र तयोः पदचिह्नं नाधिगम्य अतः गिरावेव क्वचिन्निलीनावन्तर्हितावाज्ञायेति तद्वाहार्थम् एधोभिः काष्ठैर्गिरिं समन्ताद्वेष्टयित्वा अग्निमुत्सृजन् काष्ठेषु प्रक्षिपन् ददाह ॥ ११ ॥ तत इति । दह्यमानं तटं प्रान्तभागमात्रं यस्य तस्मात् दश चैकं च यानि योजनानि तावदुत्तुङ्गात्ततो गिरेः सकाशात्तरसा वेगेन उत्प्लुत्य मागधसंरोधदेशमतिक्रम्य परतोऽधो भुवि भूमौ निपेततुः ॥ १२ ॥ अलक्ष्यमाणाविति ॥ हे नृप ! सानुगेन अनुगैः सैन्यैः सहितेन रिपुणा जरासन्धेनालक्ष्यमाणौ यदूत्तमौ रामकृष्णौ समुद्र एव परिखा यस्यास्तां पुरीं द्वारकां प्रति पुनरायातौ ॥ १३ ॥

### श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्

प्रकर्षेण वर्षत्यस्मिन्निति प्रवर्षण इत्याख्यायस्य तम् । भगवान् इंद्रः ॥ १० ॥ आज्ञाय ज्ञात्वा । पदं तयोर्गुप्तस्थितिस्थानं नाधिगम्याप्राप्य । एधोभिः काष्ठैः ॥ ११ ॥ दह्यमानास्तटाः सर्वतः । प्रांतभागा यस्य तस्मात् । दश चैकं च यानि योजनानि तावत्प्रमाणोत्तुंगादुच्चात् ततः पर्वतादुभौ रामकृष्णौ सैन्यरुद्धदेशात्परतोऽधोभुवि निपेततुः ॥ १२ ॥ सानुगेन सानीकेन स्वपुरं द्वारिकाम् ॥ १३-१४ ॥

### भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

प्रद्रुत्येति ॥ ताविति शेषः । रामकृष्णावित्यर्थः । दूरं, प्रद्रुत्य पलायित्वा, संश्रान्तौ, सन्तौ, तुङ्गमत्युच्चं, गिरिं गोमन्तपर्वतं, आरुहतां, ततोऽपि, प्रवर्षणाख्यं तच्छिखरमिति शेषः आरुहताम् । कथंभूतं तदित्यत्राह । यत्र प्रवर्षणाख्ये गोमन्तशिखरे, भगवान् पर्जन्यः, नित्यदा वर्षति ॥ १० ॥ गिराविति ॥ हे राजन्, नृपो जरासंधः, गिरौ पर्वते निलीनौ आज्ञाय, तत्रापि पदं तयोर्निलयनस्थानं, न अधिगम्य, समन्तात्पर्वतस्य सर्वतः अग्निं उत्सृजन्, गिरिं एधोभिः काष्ठैः, ददाह । गिरेः परितो दशदशयोजनकाष्ठचितिं कारयित्वा तत्राग्निं प्रदीप्य गिरिं ददाहेत्यर्थ ॥ ११ ॥ तत इति ॥ ततस्तदा, दह्यमानात् दशैकयोजनोत्तुङ्गात् तटात् गिरेः प्रदेशविशेषात्, उभावपि, तरसा उत्पत्य मागधसंरुद्धप्रदेशमतिक्रम्येति शेषः । भुवि अधः, निपेततुः ॥ १२ ॥ अलक्ष्यमाणाविति ॥ हे नृप, ततः यदूत्तमौ रामकृष्णौ, सानुगेनानुगैः सहितेन, रिपुणा मागधेन, अलक्ष्यमाणौ अदृश्यमानौ सन्तौ, समुद्रपरिखां परिखीभूतसागरां, स्वपुरीं द्वारिकां, पुनः भूयः, आयातौ संप्राप्तौ ॥ १३ ॥

### कृष्णप्रिया

बहुत दूरतक दौड़ने के कारण दोनों भाई कुछ थक से गये । अब वे बहुत ऊँचे प्रवर्षण पर्वत पर चढ़ गये । उस पर्वत का 'प्रवर्षण' नाम इसलिये पड़ा था । कि वहाँ सदा ही मेघ वर्षा किया करते थे ।। १० ॥ परीक्षित् जब जरासन्ध ने देखा कि वे दोनों पहाड़ में छिप गये और बहुत ढूंढने पर भी पता न चला, तब उसने ईंधन से भरे हुए प्रवर्षण पर्वत के चारों ओर आग लगवाकर उसे जला दिया ॥ ११ ॥ जब भगवान् ने देखा कि पर्वत के छोर जलने लगे हैं, तब दोनों भाई जरासन्ध की सेना के घेरे को लाँघते हुए बड़े वेग से उस ग्यारह योजन ( चौवालीस कोस ) ऊँचे पर्वत से एकदम नीचे धरती पर कूद आये ॥ १२ ॥ राजन् ! उन्हें जरासन्ध ने अथवा उसके किसी सैनिक ने देखा नहीं और वे दोनों भाई वहाँ से चलकर फिर अपनी समुद्र से घिरी हुई द्वारिका पुरी में चले आये ॥ १३ ॥

सोऽपि दग्धाविति मृषा मन्वानौ बलकेशवौ । बलमाकृष्य सुमहन्मगधान् मागधो ययौ ॥ १४ ॥
[1]आनर्ताधिपतिः श्रीमान् रैवतो रेवतीं सुताम् । ब्रह्मणा चोदितः प्रादाद् बलायेति पुरोदितम् ॥ १५ ॥
[2]भगवानपि गोविन्द उपयेमे कुरूद्वह । वैदर्भीं भीष्मकसुतां [3]श्रियो मात्रां स्वयंवरे ॥ १६ ॥
प्रमथ्य तरसा राज्ञः शाल्वादींश्चैद्यपक्षगान् । पश्यतां [4]सर्वलोकानां तार्क्ष्यपुत्रः सुधामिव ॥ १७ ॥

राजोवाच

भगवान् भीष्मकसुतां रुक्मिणीं रुचिराननाम् । राक्षसेन [5]विधानेन उपयेम इति श्रुतम् ॥ १८ ॥
भगवञ्छ्रोतुमिच्छामि कृष्णस्यामिततेजसः । यथा मागधशाल्वादीन् [6]जित्वा कन्यामुपाहरत् ॥ १९ ॥
ब्रह्मन्[7] कृष्णकथाः[8] पुण्या माध्वीर्लोकमलापहाः । को नु तृप्येत शृण्वानः श्रुतज्ञो नित्यनूतनाः ॥ २० ॥

---

१. एतेऽधिकाः विजये—अष्टादशे तु ।

अष्टादशे तु संग्रामे जित्वा यादवसत्तमौ ।
दृप्तः स्वराष्ट्रे न्यवसज्जितदिङ्मंडलो नृप । माधवौ तु महात्मानौ प्रविश्य द्वारकां पुरीम् ॥ १ ॥
स्तूयमानौ दिवारात्रं सूतमागधवंदिभिः । वृत्तावानंदबहुलैर्बंधुभिः सुखमूषतुः ॥ २ ॥

इति पञ्चपञ्चाशत्तमोऽध्यायः ॥ ५५ ॥

**श्रीशुक उवाच—**

कदाचिद्देवकीपुत्रो रामशैनेयसंयुतः । सेव्यमानः सभायां वै नानादेशेश्वरैर्नृपैः ॥ १ ॥
पांचालराजं द्रुपदं बालैः कुंतीसुतैर्मृधे । बद्धं शुश्राव कौरव्य ब्राह्मणैः सत्रयाजिभिः ॥ २ ॥
तच्छ्रुत्वाहृष्टहृदयः कृतवर्माणमच्युतः । नगरं हस्तिनपुरं प्रेषयामास वेदितुम् ॥ ३ ॥
स गत्वा हस्तिनपुरं वृद्धं कुरुपितामहम् । ददर्श द्रोणविदुरधृतराष्ट्रकृपैर्वृतम् ॥ ४ ॥
युधिष्ठिरं च राजानं चतुर्भिर्भ्रातृभिर्वृतम् । सभाजयामास भृशं कुंतीं च हृदिकात्मजः ॥ ५ ॥
युधिष्ठिरोऽपि पप्रच्छ सानुगं कंसमर्दनम् । हतं च कालयवनं जरासंधं च निर्जितम् ॥ ६ ॥
वासुदेवं च निहतं करवीरपुरेश्वरम् । द्वारवत्याश्च करणं नगर्या वरुणालये ॥ ७ ॥
हतौ च हंसडिभकौ ब्रह्मदत्तं च दुर्जयम् । श्रुत्वा हार्दिक्यवचनाद्यथार्थेन युधिष्ठिरः ॥ ८ ॥
मेने त्रैलोक्यसाम्राज्यं स्वहस्तगतमक्षयम् । सभाजितश्च हार्दिक्यः सुखसंभाषणादिभिः ॥ ९ ॥
पांडुपुत्रैस्तथा कुंत्या सौहार्दस्नुतबाष्पया । हार्दिक्यस्ताननुज्ञाप्य बांधवान् पृथया सह ॥ १० ॥
मातृष्वसेयान्धर्मज्ञानभिवाद्य यथावयः । गांगेयेनाभ्यनुज्ञातो धृतराष्ट्रेण चानघ ॥ ११ ॥
विदूरेणांगराजेन द्रोणेन च कृपेण च । प्राज्ञेनाचार्यपुत्रेण तथा दुर्योधनेन च ॥ १२ ॥
कृतवर्माभ्यनुज्ञातो निर्गत्य गजसाह्वयात् । द्वारकां वृष्णिनिलयामाजगाम दिनात्यये ॥ १३ ॥
स प्रविश्य सभां दिव्यामनेकनृपसेविताम् । दृष्ट्वा गोविंदमासीनं कांचने परमासने ॥ १४ ॥
बीजच्चामरसंघातसहितं वनमालिनम् । आचचष्टेऽखिलं तस्य यथादृष्टं यथाश्रुतम् ॥ १५ ॥
वृत्तांतं कौरवेयाणां नगरे गजसाह्वये । तदाकर्ण्य हरिः सर्वं वृत्तांतं जगदीश्वरः ॥ १६ ॥
पौरुषं पांडुपुत्राणां बभूवानंदनिर्भरः ॥ १७ ॥

इति षट्पञ्चाशत्तमोऽध्यायः ॥ ५६ ॥

२. एतेऽधिका विजये—

**राजोवाच—**

रेवतो नाम राजासौ ब्रह्मणा चोदितः कथम् । तदहं श्रोतुमिच्छामि विस्तरेण महामुने ॥ १ ॥

**श्रीशुक उवाच—**

रेवतो नाम राजाऽऽसीत्पुरा धर्मार्थतत्त्ववित् । रेवती नाम तस्यैका जज्ञे कन्या यशस्विनी ॥ २ ॥
स ब्रह्माणं ययौ प्रष्टुं कस्मै दास्यामि तामिति । अदत्वा याच्यमानोऽपि नानाजनपदेश्वरैः ॥ ३ ॥

## कर्दमक्षमा

अन्वयः—सः, मागधः, बलकेशवौ, मृषा, दग्धौ, इति, मन्वानः, सुमहत्, बलम्, आकृष्य, मगधान्, ययौ ॥ १४ ॥ आनर्ताऽधिपतिः, श्रीमान्, रैवतः, ब्रह्मणा, चोदितः, रेवतीम्, सुताम्, बलाय, प्रादात्, इति, पुरा, उदितम् ॥ १५ ॥ हे, कुरूद्वह ? भगवान्, गोविन्दः, अपि, स्वयंवरे श्रियः, मात्राम्, भीष्मकसुताम्, वैदर्भीम्, उपयेमे ॥ १६ ॥ ताक्ष्यपुत्र, सुधाम्, इव, चैद्यपक्षगान् शाल्यादीन्, राज्ञः तरसा, प्रमथ्य, सर्वलोकानाम्, पश्यताम्, उपयेमे ॥१७॥ राजा उवाच—भगवान्, रुचिराननाम्, भीष्मकसुताम् रुक्मिणीम्, राक्षसेन, विधिना, उपयेमे, इति श्रुतम् ॥ १८ ॥ भगवन्, अमिततेजसः, कृष्णस्य, यथा, मागधशाल्यादीन्, जित्वा, कन्याम्, उपाहरत्, तत्, श्रोतुम्, इच्छामि ॥१९॥ ब्रह्मन्, श्रुतज्ञः, कः, नु, नित्यनूतना, माध्वीः, लोकमलापहाः, पुण्याः,कृष्णकथाः शृण्वानः, तृप्येत ॥ २० ॥

## श्रीधरस्वामिविरचिता भावार्थदीपिका

श्रीकृष्णस्य विवाहान्निरूपयितुं बलदेवविवाहं नवमस्कन्धोक्तमनुस्मारयति । आनर्तेति ॥ १५ ॥ मात्रां कलाम् ॥ १६ ॥ गरुडो यथा देवान्प्रमथ्य सुधामहरत्तथेति ॥ १७ ॥ 'राक्षसो युद्धहरणाद्' इति स्मृतेः राज्ञः प्रमथ्येति च त्वदुक्त्या राक्षसेन विधानेनोपयेमे परिणीतवानिति श्रुतं पूर्वमेव वा ॥ १८ ॥ सामान्यत एव श्रुतम् । विशेषं तु श्रोतुमिच्छामि ॥ १९ ॥ श्रवणौत्सुक्यमाविष्करोति । ब्रह्मन्निति । पुण्या महाफला माध्वीः श्रुतिसुखाः लोकस्य मलापहाश्च शृण्वानः शृण्वन्नित्यर्थः । श्रुतज्ञः श्रुतसारवित् । नित्यनूतनाः प्रतिक्षणमाश्चर्यवत्प्रतीयमानाः ॥ २०-२४ ॥

## श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

सोऽपि जरासंधोऽपि । बलकेशवाविति सामर्थ्यमुक्तम् । सुमहदिति तदा सर्वस्यापि भगवदुपेक्षितत्वात् । उपेक्षा च रुक्मिणीहरणपराक्रमकौतुकपोषणार्थं तत्साक्षादरिवर्गनिर्जयेन तस्याः प्रहर्षार्थञ्च ज्ञेयम् । ननु कथं महापावनान्माथुरानेव स्वराज्यत्वेन गृहीत्वा नोवास तत्राह—मागधः नीचदेश्यानां तत्रैवाभिरुचेरिति भावः । तदेवं पलायनेऽपि जयो दर्शितः, अनेकमहारथादिभिरनुगन्तुमशक्यत्वात्सर्वानतिक्रम्योत्प्लुतत्वाच्च ॥ १४ ॥ कथांतरमाह । यद्यपि "सोदर्ये तिष्ठति ज्येष्ठे न कुर्याद्दारसंग्रहम्" इति गार्ग्योक्तेः परिवेत्त्रादिशंका रौहिणेयत्वाद्बलस्य दैविकेयत्वाच्च कृष्णस्य सोदर्यत्वाभावान्नास्ति तथापि योगमायाकृष्टदेवकीगर्भत एव बलस्य रोहिणीगर्भविशात्सोदर्यत्वमप्यायातीत्यतस्तद्वारणाय पूर्वोक्तं स्मारयति—आनर्तेति । पुरा नवमस्कन्धे । श्रीमान् ब्रह्मलोकगमनेन सप्तविंशतिचतुर्युगेष्वतीतेष्वपि सर्वसंपत्तिमानिति योगादिबलं सूचयति । अतः प्रकर्षेणाऽदात् । रैवतो रेवतसुतः ककुद्मी ॥ १५ ॥ अपिना यथा बल उपयेमे तथा भगवानित्युपमा द्योत्यते । 'मात्रांशे वित्तमानयोः' इति कोशात् । भगवानिति युग्मकम् । भगवान् स्वयंभगवान् । तथातथा नित्यविहारी श्रीकृष्णः । तदानीञ्च गोविंदः गां पृथ्वीं विन्दतीति क्रीडाविशेषार्थं तस्यामवतीर्ण इत्यर्थः । अतः श्रियो मात्रां माति प्रविशत्यस्यां सर्वमिति परिपूर्णां मूर्ति भगवद्वदेवाऽवतरितुमर्हत्वात् । तथा च श्रीविष्णुपुराणे—"एवं यथा जगत्स्वामी देवदेवो जनार्दनः । अवतारं करोत्येषा तथा श्रीस्तु सहायिनी ।" इति । अत एव वक्ष्यते—सदृशीमिति । उपयेमे विवाहलीलया निकटं नियाय । अपिः पूर्वोक्तसमुच्चये । यद्वा—गोविंदो गोकुलेन्द्रो गोकुलवर्तिगोपीविरहेणान्तःखिन्न इत्यर्थः । यथैवोद्धवं प्रति निजकरुणाबाष्पमुद्गिरति—'गच्छोद्धव व्रजम्' इत्यादिभिः, यथैवोद्गिरिष्यति

---

सभायां ब्रह्मणस्तत्र गन्धर्वौ द्वौ हाहाहूहू । तस्मिन्नगायतां काले ग्राममूर्च्छाविचक्षणौ ॥ ४ ॥
राजाऽतिष्ठद्बहिः किंचित्तद्विरामप्रतीक्षया । गीतावसाने पप्रच्छ प्रणिपत्य पितामहम् ॥ ५ ॥
एषा मे भगवन्कन्या कस्मै दास्य इमामिति । तं प्राह पद्मभूः कस्ते राजपुत्रो विरोचते ॥ ६ ॥
तत्रान्यांश्च महीपालानाचक्ष्वेति कुरूद्वह । ततस्तात्रेवतः प्राह भूपालान्विषयेश्वरान् ॥ ७ ॥
स तानाकर्ण्य नृपतीन्प्रहस्योवाच रेवतम् । युगानि तु बहून्यत्र गतानि तव भूपते ॥ ८ ॥
क्षणमात्रमिवाश्राव्यं शृण्वतो गीतमेतयोः । क्वेदानीं तव ते भूपाः सुतायाः सदृशा वराः ॥ ९ ॥
इदानीं राजशार्दूल यदुवंशविवर्धनी । वसुदेवगृहे जातौ रामकृष्णाह्वयौ प्रभू ॥ १० ॥
तत्र सङ्कर्षणायेमां कन्यां यच्छस्व भूपते ।
इत्युक्तस्तेन भूपालस्तं प्रणम्य पुरं गतः । रामाय प्रददौ कन्यां रूपिणीं बाहुशालिने ॥ ११ ॥
तामादियुगसंभूतां दीर्घदेहां महाभुजः । आकृष्य लाङ्गलेनांसे समां चक्रे हलायुधः ॥ १२ ॥

३. इन्दिरांशां–विज. । ४. भूतानां–विज. । ५. विवाहेन–वीर. विज. । ६. जित्वैकः पुनरागमत्–वीर. ; जित्वात्पारमागमत्–विज. । ७. रुक्मिण्याः ग्रहणं पाणेः प्रमथ्याऽन्यान्स्वयंवरे–म. पु. टि. । ८. विष्णु–विज. ।

सर्वप्रकटलीलान्तेऽपि—'तास्ताः क्षपाः प्रेष्ठतमेन नीताः' इत्यादिभिः, तादृशः सन्नुपयेमे । कुतः—श्रियो मात्रामंशं मूर्तिभेदमिति यावत् । ततश्च 'श्रियः कान्ताः कान्तः' इत्याद्यनुसारेण गोपीनामपि श्रीत्वात् । 'नायं श्रियोंग उ नितान्तरतेः प्रसादः' इत्याद्यनुसारेण प्रसिद्धश्रीतोप्युत्कृष्टतमत्वेनैव कुरुषु पांडुशब्दवच्छ्रीषु गोपीति नामांतरप्राप्तत्वात्तदेकतत्त्वादित्यर्थः । तास्वपि मुख्यायाः श्रीराधाया एव मात्रमिति वा । "ज्ञातीन्वो द्रष्टुमेष्यायो विधाय सुहृदां सुखम्" इति भगवदुक्त्यनुसारेण यादवादिनिजगणविशेषसुखार्थमपि तादृशीमेव स्वीचकारेति भावः । एवमेवोक्तं पाद्मकार्तिकमाहात्म्ये—"कैशोरे गोपकन्यास्ता यौवने राजकन्यकाः" इति । स्कान्दादौ च—"रुक्मिणी द्वारवत्यां तु राधा वृन्दावने वने" इति । तथा शक्तिवैचित्रबोधनार्थमाह—भगवानिति । यद्वा—यो गोविन्दः "मां केशवो गदया प्रातरव्याद्गोविन्द आसंगवमात्तवेणुः" इति नारायणवर्माद्यनुसारेण तथा नित्यविहारी सोऽपि वैदर्भीमुपयेमे, तत्कथं तत्राह—भगवान्, अचिंत्यशक्त्या तत्र चात्र च प्रकाशवान् । यथैव सांत्विता उद्धवद्वारा व्रजदेव्य इति भावः । स्वयंवर इति हरिवंशोक्तं तद्वृत्तं स्मारयति । ततश्च स्वयंवरे निवृत्ते भगवदुक्त्या शिशुपालाय दातुं निश्चितायास्तस्या महार्तिवैयग्र्येण संदेशादिना हरणादिकं वृत्तमिति । यद्वा—स्वयमेव वैदर्भ्या पुरोहितपुत्रप्रेषणेन वरः पतित्वेन श्रीकृष्णवरणं तस्मिन् ॥ १६ ॥ तरसा बलेन 'तरो बले च रोगे च' इति मेदिनी । तरसा सद्यः । प्रमथ्य निर्जित्य । जरासंधस्य मुख्यत्वेऽपि शाल्वादित्वं शाल्वस्यैव प्रथमं युद्धप्रवृत्त्येति ज्ञेयम् । तच्च हरिवंशे व्यक्तम् । पक्षगान् सहायान् । 'तार्क्ष्यौ कश्यपसौपर्णौ' इति कोशात् ॥ १७ ॥ पूर्वमेव तृतीयस्कन्धे । वा अथवा । राक्षसेनेति वीरप्रशस्यत्वेन योग्यतैव विवक्षिता । रुचिराननां श्रीकृष्णस्यापि मनोहरमुखीमिति महासौन्दर्यमुक्तम् ॥ १८ ॥ सामान्यत आपाततः । विशेषं विस्तारम् । प्रकारांतरेण प्राप्तुं शक्याया अपि हरणलीला कौतुकार्थैवेति तत्त्वम् ॥१९॥ माध्वीर्मधुराः 'माध्वी मधुरमद्ययोः' इति निरुक्तिः । शृण्वानः आर्षत्वाच्छानच् । कथारूपे सुखसाध्या अपि पुण्याः सर्वधर्ममूलरूपाः । को धर्मार्थी तावच्छृण्वंस्तृप्येत । तथा माध्वीः परममधुररसरूपाः कोऽर्थार्थी शृण्वंस्तृप्येत । तथा लोकमात्रस्य मलस्य पापाद्यविद्यातद्दोषस्य हंत्रीः को मोक्षार्थी शृण्वंस्तृप्येत । तथा नित्यनूतनाः 'सतामयं सारभृताम्' इत्यादिन्यायेन प्रतिपदं प्रोन्मीलत्प्रेमानन्ददाः को वा भक्त्यर्थी शृण्वंस्तृप्येत । शृणुवान् श्रवणमात्रं लभमानः श्रुतज्ञः यदि तत्तत्तात्पर्यवेत्तेत्यर्थः । अवधिरमात्रो वा ॥ २० ॥

### श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी

वलकेशवाविति सामर्थ्यसूचकं सुमहदिति तदा सर्वस्यापि श्रीभगवदुपेक्षितत्वात् उपेक्षा च रुक्मिणीहरणपराक्रमकौतुकपोषणार्थं तत्साक्षादरिवर्गनिर्जयेन तस्याः प्रहर्षार्थञ्चेति ज्ञेयम् । ननु, कथं महापावनान् माथुरानेवं स्वराज्यत्वेन गृहीत्वा नोवास तत्राह—मागधः नीचदेश्यानां तत्रैवाभिरुचेरिति भावः । तदेवं पलायनेऽपि जयो दर्शितः अनेकसहस्रैर्महारथादिभिरनुगन्तुमशक्यत्वात् सर्वांस्तानतिक्रम्योत्प्लुतत्वाच्च ॥ १४ ॥ श्रीमान् ब्रह्मलोकगमनेन सप्तविंशतिचतुर्युगेष्वतीतेष्वपि सर्वसम्पत्तिमान् इति योगादिबलं सूचयति, अतः प्रकर्षेणादात् रैवतो रेवतसुतः ककुद्मी ॥ १५ ॥ भगेति युग्मकं भगवान् स्वयं भगवान् तथा तथा नित्यविहारी श्रीकृष्णः तदानीं च गोविन्दः गां पृथिवीं विन्दतीति क्रीडाविशेषार्थं तस्यामवतीर्ण इत्यर्थः । अतः श्रियो मात्रां माति प्रविशत्यस्यां सर्वमिति परिपूर्णां मूर्त्तिं भगवद्वदेवावतरीतुमर्हत्वात् तथा च श्रीविष्णुपुराणे "एवं यथा जगत्स्वामी देवदेवो जनार्द्दनः अवतारं करोत्येषा तथा श्रीस्तत्सहायिनी" इनि । अत एव वक्ष्यते सदृशीमिति उपयेमे विवाहलीलया निकटे निनाय, अपिः पूर्वोक्तसमुच्चये । यद्वा, गोविन्दो गोकुलेन्द्रः गोकुलचक्रवर्त्तिगोपीजनविरहेणान्तःखिन्न इत्यर्थः । यथैव श्रीमदुद्धवं प्रति निजकरुणावाष्पमुद्गिरति स्म गच्छोद्धव व्रजमित्यादिभिः यथैवोद्गिरिष्यति सर्वप्रकटलीलान्तेऽपि "तास्ताः प्रेष्ठतमेन नीताः" इत्यादिभिः तादृशः सन्नप्युपयेमे कुतः ? श्रियो मात्राम् अंशं मूर्त्तिभेदम् इति यावत् । ततश्च "श्रियः कान्ताः कान्तः" इत्याद्यनुसारेण गोपीनामपि श्रीत्वात् "नायं श्रियोऽङ्ग उ नितान्तरतेः प्रसादः" इत्याद्यनुसारेण प्रसिद्धश्रीतोप्युत्कृष्टतमत्वेनैव कुरुषु पाण्डवशब्दवच्छ्रीषु गोपीति नामान्तरप्राप्तत्वात् तदेकतत्त्वादित्यर्थः, तास्वपि मुख्याया श्रीराधाया एव मात्रामिति वा "ज्ञातीन् वो द्रष्टुमेष्यामो विधाय सुहृदां सुखम्" इति श्रीभगवदुक्त्यनुसारेण यादवादिनिजगणविशेषसुखार्थमपि तादृशीमेव स्वीचकारेति भावः । एवमेवोक्तं पाद्मकार्तिकमाहात्म्ये "कैशोरे गोपकन्यास्ता यौवने राजकन्यकाः" इति । स्कान्दादौ च "रुक्मिणी द्वारवत्यां तु राधा वृन्दावने वने" इति तथा शक्तिवैचित्रीवोधनार्थमाह-भगवानिति । यद्वा, यो गोविन्दः "मां केशवो गदया प्रातरव्याद्गोविन्दः आसङ्गवमात्तवेणुः" इति नारायणवर्माद्यनुसारेण तथा नित्यविहारी सोऽपि वैदर्भीमुपयेमे तत्कथं ? तत्राह—भगवानचिन्त्यशक्त्या तत्र चात्र च युगपत्प्रकाशवान् यथैव सान्त्विता उद्धवद्वारा व्रजदेव्य इति भावः । स्वयंवर इति श्रीहरिवंशोक्तं तद्वृत्तं स्मारयति—ततश्च श्रीभगवदुक्त्या स्वयम्वरे निवृत्ते शिशुपालाय दातुं निश्चिताया तस्या महार्त्तिवैयग्र्येण सन्देशादिना हरणादिकं वृत्तमिति । यद्वा, स्वयमेव वैदर्भ्या पुरोहितपुत्रप्रेषणेन वरः पतित्वेन श्रीकृष्णवरणं तस्मिन् ॥ १६ ॥ तरसा सद्यः प्रमथ्य निर्जित्य जरासन्धस्य मुख्यत्वेपि शाल्वादित्वं सर्वै राजभिः श्रीकृष्णप्रपत्तौ सम्मतायामपि शाल्वस्यैव वाचा युद्धप्रवृत्त्या तत्र तस्यैव मुख्यत्वात् तच्च श्रीहरिवंशे व्यक्तं चैद्यस्य पक्षगान् सहायान् सर्वलोकानामन्येषां पश्यतामित्यनादरे षष्ठी इति राज्ञामतिलज्जादिकं बाधयति तार्क्ष्यः कश्यपः ॥ १७ ॥ राक्षसेनेति वीरैः प्रशस्यत्वाद्योग्यैनैवेति विवक्षितं रुचिराननाम् अर्थात् श्रीकृष्णवदेवेति । यद्वा, श्रीकृष्णस्यापि

मनोहरमुखीमिति महासौन्दर्य्यमुपलक्षयति—ततः श्रीकृष्णेन विवाहसौष्ठवं च सम्मतम् ॥ १८ ॥ यथा पाहरत् तथा तत्प्रकारं श्रोतुमिच्छामः, अत एव निर्गलितार्थस्तैर्व्याख्यातो विशेषतस्त्विति। अमिततेजसोऽपि इति सद्यः संहर्त्तुं शक्तावपि कौतुकेन मधुरलीलाभिप्रेता ॥ १९ ॥ कथारूपत्वेन सुखसाध्या अपि पुण्याः सर्वधर्ममूलरूपाः को धर्मार्थी तावच्छृण्वंस्तृप्येत् यथा माध्वीः परममधुररसार्थरूपाः कोऽर्थार्थी कामार्थी वा शृण्वंस्तृप्येत् तथा लोकमात्राणां मलस्य पापाद्यविद्यान्तदोषस्यापहन्त्रीः को मोक्षार्थी शृण्वंस्तृप्येत् तथा नित्यनूतनाः "सतामयं सारभृतां निसर्गः" इत्यादिन्यायेन प्रतिपदं प्रोन्मीलत्प्रेमानन्दः को वा भक्त्यर्थी शृण्वंस्तृप्येत् शृण्वन्निति श्रवणमात्रेण लभमान इत्यर्थः। श्रुतज्ञ इति यदि तत्तत्तात्पर्य्यं वेदेत्यर्थः अबधिरमात्र इति वा ॥ २० ॥

### श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी

बलकेशवाविति ( भा० १०।८।१२ ) 'बलाधिक्याद्बलं विदुः' इत्यनेन। तथा कश्च ईशश्च वयते स्वमहिम्ना छन्दयतीति केशव इति। तस्य साक्षात्परमेश्वरत्वेनादाद्यत्वमभिप्रेतम्। अत एव मृषेति सुमहदिति तदानीं सर्वस्यापि श्रीभगवदुपेक्षितत्वात्। उपेक्षा च श्रीरुक्मिण्या विवाहकौतुके तत्साक्षाद्दारवर्गनिर्ज्जयेन तस्याः प्रहर्षणार्थमिति दिक् ॥ १४ ॥ श्रीमान् श्रीब्रह्मलोक-गमनादिसर्वसम्पत्तियुक्तः, यद्वा, तत्र गमनेन सप्तविंशतिचतुर्युगेष्वतीतेष्वपि जराद्यभावेन सर्व्वशोभावान्, रैवतो रेवतसुतः ककुद्मी, तथा च नवमस्कन्धे (९।३।२९)—'ककुद्मी रेवतीं कन्यां स्वामादाय विभुं गतः' इत्यादि। प्रकर्षेण परमभक्त्यादिना अदात् ॥१५॥ भगवान् साक्षाच्छ्रीनारायणः, पुनश्च गोविन्दो गां पृथ्वीं विन्दतीति क्रीड़ाविशेषार्थं मनुष्यरूपेण तस्यामवतीर्ण इत्यर्थः। अयं तद्वद-वतीर्णायास्तस्या विवाहे हेतुः। अपि पूर्वोक्त-समुच्चये, यद्वा, गोविन्दो गोकुलेन्द्रोऽपि गोकुलवर्त्ति-श्रीगोपीजनविरहेण खिन्नोऽ-पीत्यर्थः। तथाप्युपयेमे, कुतः ? भगवान् भक्तजनविषयक-कारुण्याद्यशेषगुणयुक्तः, तेन ( भा० १०।५२।४३ ) 'यर्ह्यम्बुजाक्ष न लभेय भवत्प्रसादं, जह्यामसून्' इति वैदर्भ्या दुःखश्रवणेन तत्र कारुण्यात्तद्भक्तियन्त्रितत्वादिति भावः। तच्च भवत्पितामहेषु कुरु-कुलश्रेष्ठेषु पाण्डवेषु तस्य दौत्य-सारथ्य-वीरासनादिकं सुप्रसिद्धम्। तच्च कुरुकुलोद्भवेन भवता ज्ञायत एवेति सम्बोधयति—कुरूद्वहेति। तस्या भक्तिहेतुं दर्शयति–वैदर्भीमित्यादिना। तत्र विदर्भदेशजामिति पाण्डित्यादिसद्गुणयुक्तत्वम्, भीष्मकः सत्क्षत्रियः स देशस्य राजा महासाधुस्तस्य सुतेति सत्कुलजन्माद्युक्तम्, किञ्च, श्रियो लक्ष्म्या मात्रां मूर्त्तिमित्यर्थः। यद्वा, अकारप्रश्लेषेण—न मीयते कथञ्चिदपि परिमातुं न शक्यत इत्यमात्रा ताम्, सौन्दर्य्यादिना लक्ष्मीतोऽप्यपरिमेयामित्यर्थः। श्रीभगवतोऽत्र निजा-शेषैश्वर्य्यप्रकटनेन तयापि तदनुसारेण निजाशेषरूपगुणादिप्रकटनात्, स्वयम्वरे सतीति तल्लक्षणेऽत्रानुक्तेऽपि श्रीहरिवंशोक्तं तद्वृत्तं स्मारयति। तच्च तत्रैव सुव्यक्तमित्यत्र न विस्तारितम्। ततश्च श्रीभगवदुक्त्या स्वयम्बरे निवृत्ते शिशुपालाय दातुं निश्चितायास्तस्या महार्त्तिवैयग्र्येण सन्देशादिना हरणादिकं वृत्तमिति सर्वं सुसंगतमेवेति दिक्। यद्वा, स्वयमेव वैदर्भ्याः पुरोहित-पुत्रादिप्रेषणेन वरः पतित्वेन श्रीकृष्णवरणं तस्मिन्, इति भक्तिलक्षणञ्चोक्तम्। वस्तुतस्तु श्रीवादरायणेः प्रणयकोपतः शोकाभि-व्यञ्जिका हृद्वृत्तिरियम्। तथा हि गोविन्द इति गोकुललोकापेक्षया, तथा (भा० १०।४१।१७) 'आयास्ये' इति, (भा० १०।२२।२५) 'मयानुमोदितः सोऽसौ सत्यो भवितुमर्हति' इत्यादि-स्वोक्तापेक्षया चान्यपरिग्रहायोऽयतोक्तैव, तथाप्युपयेमे। कुतः ? भगवान् परमस्वतन्त्रः, अकुतोऽपि को नाम तस्य नियन्तास्त्विति भावः। तरसा सद्यः, प्रमथ्य बलहननादिना निर्ज्जित्य, साल्वादीनिति जरासन्धस्य मुख्यत्वेऽपि साल्वादित्वम्—सर्व्वै राजभिः श्रीकृष्णप्रपत्तौ सम्मतायामपि साल्वस्यैव वाक्याद् युद्धप्रवृत्त्या, तत्र तस्यैव मुख्यत्वात्। तच्च श्रीहरिवंशे व्यक्तमेव। बाहुल्यभयादत्र न विस्तार्य्यते। चैद्यस्य शिशुपालस्य पक्षकान् सहायान्—स्वार्थे कः, पाठान्तरेऽपि स एवार्थः। सर्वलोकानामन्येषां पश्यतामित्यनादरे षष्ठी। यद्वा, सप्तम्यर्थे सर्वलोकेषु पश्यत्सु सात्स्वित्यर्थः। एवं राजकुलमध्यतः साक्षाद्धरणेन परमशौर्य्यप्रागलभ्यादिकमुक्तम्। यद्वा, राज्ञां प्रमथनं च सर्वलोकसाक्षादेवेति तेषामतिलज्जादिकं बोधयति—पश्यतामिति। तार्क्ष्यः कश्यपः ॥१६-१७। एवं सामान्यतोऽतिसङ्क्षेपेण श्रुत्वा भक्त्या विशेषेण विस्तरशः श्रोतुमिच्छन् पृच्छति भगवानिति सर्वशक्तिमान्, अत एव राक्षसेन विधानेन प्रकारेण, वीराणां तादृशविवाहस्यैव प्रशस्यत्वात्। रुचिरान-नामिति सर्वसौन्दर्य्यमुपलक्षयति ॥१८॥ यथाहरत्तथा तत्प्रकारं श्रोतुमिच्छामः, बहुत्वं विनयेन, सर्वेषां संगिनां संग्रहात्। श्रवणे-च्छायां हेतुः कृष्णस्य, तच्च त्वया ज्ञायत एवेत्याह—भगवन् सर्वज्ञेति निजेष्टदेवस्य परमानन्दघनस्य वा, किञ्च, अमिततेजसोऽनन्त-प्रभावस्य, अतस्तेन नूनं तत्र मधुरमधुरपराक्रमो दर्शित इति भावः। यद्वा, अमिततेजसोऽपि कृष्णस्य परमकौतुकशीलस्येति सद्यः संहर्त्तुं शक्तावपि कौतुकेन मधुरलीलाभिप्रेता ॥१९॥ कृष्णस्य सर्वचित्ताकर्षकस्य कथा इति तत्कथानामपि तादृशत्वमभि-प्रेतम्, तदेव दर्शयति विशेषणैश्चतुर्भिः। तत्र पुण्याः पुण्यजनिका मनोरमा वा, तथा च विश्वः—'पुण्यं मनोज्ञेऽभिहितम्' इति। लोकानां सर्वजीवानां चतुर्द्दशभुवनानां वा, मलं सवासनपापम्, अप दूरतो घ्नन्तीति तथा ताः, अतः कस्तृप्येत्, अपि तु न कोऽपी-त्यर्थः। नु वितर्के, मुहुः श्रवणेनापि न कदाचित् तृप्तिः स्यादित्याह—नित्येति। तथापि श्रोतुः पशुवद्विवेकाभावेन सम्भवेदित्या-शंक्याह–श्रुतज्ञः शास्त्रार्थतत्त्ववित् आकर्णितार्थरसवेत्ता वा, तथा चोक्तं प्रथमस्कन्धे ( १।१।१९ )—'यच्छृण्वतां रसज्ञानां स्वादु स्वादु पदे पदे' इति तत्र च मच्चित्तवृत्तिस्त्वया ज्ञायत एवेति सम्बोधयति—ब्रह्मन्निति ॥ २० ॥

**श्रीसुदर्शनसूरिकृतशुकपक्षीम्**

मात्राम् अंशम् ॥ १६ ॥

**श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका**

सोऽपि मागधोऽपि रामकृष्णौ दग्धाविति मृषा यथा तथा मन्वानो बलं सैन्यमाकृष्यादाय मागधान्देशान्प्रत्याजगाम ॥१४॥ अथ श्रीकृष्णस्य विवाहान्निरूपयितुकामस्तावद्बलभद्रविवाहं नवमस्कन्धोक्तमनुस्मरति—आनर्तेति । स्पष्टोऽर्थः ॥ १५ ॥ अथ भगवद्विवाहान्निरूपयितुकामस्तावद्रुक्मिणीकल्याणं तद्विस्तरबुभुत्सामुत्थापयन्सङ्ग्रहेणाह—भगवानपीति द्वाभ्याम् । हे कुरूद्वह ! श्रियो लक्ष्म्या मात्रामंशभूतां भीष्मकस्य राज्ञः सुतां वैदर्भीं यथा तार्क्ष्यपुत्रो गरुडः सुधामाजहार तद्वत् स्वयंवरे सर्वभूतानां पश्यतां सतां चैद्यपक्षपातिनः सर्वाञ्छाल्वादीन् राज्ञः क्षत्रियान्तरसा बलेन प्रमथ्यालोड्याभिभूयेति यावत् आहृतामिति शेषः उपयेम इत्यन्वयः ॥ १६-१७ ॥ तत्र तद्विस्तरबुभुत्सया पृच्छति राजा भगवानिति, रुचिरं सुन्दरमाननं यस्यास्ताम् उपयेमे विवाहितवानिति श्रुतं मयेति शेषः । त्वन्मुखादधुना श्रुतम् इति भावः । नियुध्यानीताया विवाहो राक्षसविवाहः "राक्षसो युद्धहरणात्" इति स्मृतेः । यद्वा, युद्धे हरणमेव राक्षसो विवाहः तथापि च राक्षसेन विवाहेन हेतुभूतेन पश्चाद्यथावदुपयेमे इत्यर्थः ॥ १८ ॥ भगवानिति यथा येन प्रकारेण मागधादीनेक एव सन् जित्वा पुनरागमत् वैदर्भीमादायेति शेषः । तममिततेजसः कृष्णस्य जयागमनादिप्रकारं श्रोतुम् इच्छामि ॥ १९ ॥ आत्मनः श्रवणौत्सुक्यम् आविष्करोति—ब्रह्मन्निति । हे ब्रह्मन् ! श्रीकृष्णस्य कथाः पुण्याः शृण्वतां वदतां च पुण्यावहाः माध्वीः श्रुतिसुखावहाः न केवलं पुण्या एव अपि तु शृण्वतो गदतश्च जनस्य मलापहाः पापघ्नीश्चाऽतस्ताः श्रुतज्ञः श्रोत्रेन्द्रियविषयसुखसारासारविवेकी चेत्को वा पुमान् शृण्वान् उपधादीर्घश्चार्षः न सेवेत तच्छ्रुतश्चेत्सर्वोऽपि सेवेतेत्यर्थः सत्यं सेवेतेति सकृच्छ्रुत्वा पुनर्न सेवेतेत्यतस्ता विशिनष्टि–नित्यनूतना इति ॥ २० ॥

**श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली**

"परापूर्वेषां सङ्ख्यां वृणक्ति वितर्तुराणो अपरेभिरेति" इत्यादिश्रुत्यर्थं दीपकन्यायेन । दर्शयत्यस्मिन्नध्याये तत्र श्रीकृष्णो युद्धे कुन्तीसुतैर्वद्धं पाञ्चालभूपतिं श्रुत्वा हृष्टस्तद्वृत्तान्तविवित्सयातत्समीपे कृतवर्माणं प्रेषयामासेति कथयति, कदाचिदिति ॥ क ॥ ब्राह्मणैरुक्तम् ॥ ख ॥ वासुदेवं शृगालनामानं वरुणालये समुद्रे ॥ छ ॥ आनन्दनिर्भरः आनन्दपूर्णो बभूवेत्यनेन पूर्णानन्दत्वं सदातनं न कादाचित्कमिति सूचयति "भू सत्तायाम्" इति धातोः सत्तायाः सदातनत्वादिति ॥ त ॥

इति श्रीभागवते महापुराणे दशमस्कन्धे विजध्वजतीर्थकृतपदरत्नावल्याम् षट्पञ्चाशत्तमोऽध्यायः ॥ ५६ ॥

अनित्यत्वात्संसारो हेयस्तदर्थं कामक्रोधादिनिलयाद्देहात्सम्विदेवाहर्तव्येति दर्शनायोत्तराध्यायत्रयस्य प्रारम्भः आनर्तविषयाधिपतिः ॥ १५-१८ ॥ धर्मार्थौ धर्मविषयो विष्णुस्तस्य तत्त्वं वेत्तीति धर्मस्य अर्थस्य च तत्त्वं वेत्तीति धर्मस्यार्थस्य तत्त्वं हरिविषयत्वलक्षणं वेत्तीति वा ॥ ख ॥ येयं मम कन्या तां प्रति याचकत्वसम्भवात् कुतो न दत्तेत्यत्राह—अदत्त्वेति । ब्रह्मणः सर्वस्य गुरुत्वात् गुर्वनुज्ञापूर्वकं क्रियमाणं सत्रं फलवदित्यभिसन्धाय याचकेभ्यो न दत्तेति भावः ॥ ग ॥ तत्र तस्मिन्नवसरे ग्राममूर्च्छाविचक्षणौ सप्तस्वरगानविशेषविदग्धौ स्वराणां मण्डलं ग्रामः आरोहावरोहः मूर्च्छा सप्तस्वरास्त्रयो ग्रामा एकविंशतिमूर्च्छना इति भरतः ॥ घ ॥ अल्पार्थे किञ्चिदित्यव्ययम् अल्पकालमित्यर्थः ॥ ङ ॥ त्वदभीष्टवरो नास्ति तदानींतनकालीयानामतीतत्वादिति ब्रह्मा वक्ति, तं प्राहेति ॥ च ॥ तव ते तुभ्यं मनुष्यस्य सुबहूनि युगानि क्षणमात्रमिव गतानीति तत्र निमित्तमाह—आश्राव्यमिति ॥ ज-झ ॥ तर्हि किं कर्त्तव्यमिति तत्राह—इदानीमिति ॥ ञ ॥ आदियुगं कृतं नाम ॥ ठ ॥ तेषां पारं यथा तस्य हरेर्विवाहलक्षणं चरितं श्रोतुमिच्छामि ॥ १९ ॥ माध्वीः मधुराः ॥ २० ॥

**श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः**

मात्रामिति माति प्रविशत्यस्यां सर्वमिति भगवद्वदेवावतरीतुमर्हत्वेन परिपूर्णाम्मूर्त्तिं यद्वा, गोविन्दो गोकुलेन्द्रः गोकुलवर्त्तिगोपीविरहेणान्तःखिन्न इत्यर्थः । तादृशः सन्नुपयेमे कुतः श्रियो मात्रामंशं मूर्त्तिभेदमिति यावत् ततश्च "श्रियः कान्ताकान्तः परम पुरुषः" इत्याद्यनुसारेण गोपीनामपि श्रीत्वात् तदेकतत्त्वादित्यर्थः । तास्वपि मुख्यायाः श्रीराधाया एव मात्रामिति वा "ज्ञातीन् वो द्रष्टुमेष्यामो विधाय सुहृदां सुखम्" इति भगवदुक्तेर्यादवादिनिजगणसुखार्थमपि तादृशीमेव स्वीचकारेति भावः। एवमेवोक्तं पाद्मे कार्त्तिकमाहात्म्ये "कैशोरे गोपकन्यास्ता यौवने राजकन्यकाः" इति । स्कान्दादौ च "रुक्मिणी द्वारवत्यान्तु राधा वृन्दावने वने" इति । यद्वा, यः गोविन्दः गोकुलेन्द्रत्वेन नित्यविहारी सोऽपि वैदर्भीमुपयेमे तत्कथं तत्राह ॥ १६-१७ ॥ भगवान् अचिन्त्यशक्त्या तत्र चात्र च युगपत् प्रकाशवान् यथैव सान्त्विता उद्धवद्वारा व्रजदेव्य इति भावः । स्वयं द्विजप्रेषणेन वरणं वरः तस्मिन् सदृशीं स्वरूपशक्तित्वात् अत एव मनो दधे । यद्वा, सदृशीं तादृशबुद्ध्यादिभिर्लक्षणै राधाद्येकात्मकत्वादिति भावः ॥ १८-२४ ॥

**श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः**

वैदर्भीं भीष्मकसुतामित्यादि । श्रियो मात्रां श्रियो लक्ष्म्याः पूरणीम् ॥ १७–२३ ॥

**श्रीनाथचक्रवर्तिपादविरचिता चैतन्यमतमञ्जूषा**

श्रियो मात्रां पूरणीम् ॥ १७–२३ ॥

**श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी**

श्रीकृष्णस्य विवाहान् वक्तुं प्रथमं बलदेवविवाहं नवमस्कन्धोक्तमनुस्मारयति—आनर्तेति । रैवतः रेवतसुतः ककुद्मी ॥ १५ ॥ मात्रां मूलभूतं सूक्ष्मस्वरूपं तस्य मात्रा गुणः शब्दः इति वत् कृष्णस्य स्वयं भगवत्त्वे तस्या अपि स्वयं लक्ष्मीत्वौचित्यात् ॥ १६–१७ ॥ राक्षसेन "राक्षसो युद्धहरणात्" इति स्मृतेः ॥१८–१९॥ माध्वीर्मधुराः शृणुवान् शृण्वन्नित्यर्थः ॥२०–२५ ॥

**गूढार्थदीपिनी**

रैवतो रेवतपुत्रः ककुद्मी । पुरा नवमस्कन्धे ॥ १५ ॥ भगवानिति युग्मम् । माति प्रविशति सर्वं विश्वमस्यामिति मात्रां परिपूर्णां मूर्तिम् । 'रुक्मिणी कृष्णजन्मनि' इति विष्णुपुराणाच्च । तरसा बलेन । तरो बले च वेगे च इति मेदिनी । तार्क्ष्यपुत्रः कश्यपपुत्रो गरुडः । 'तार्क्ष्यौ गरुडकश्यपौ' इत्यमरः । प्रमथ्य निर्जित्य ॥ १६–१७ ॥ राक्षसो 'युद्धहरणात्' इति स्मृतेः । उपयेमे परिणीतवान् ॥ १८–१९ ॥ माध्वीः अतीवमधुराः ॥ २०–२१ ॥

**श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः**

प्रथमं ज्येष्ठत्वाद्बलस्य विवाहमाह—आनर्त्ताधिपतिरिरिति । रैवतो रेवतपुत्रः ककुद्मी ॥ १५ ॥

श्रियो मात्रामिति

"एते चांशकलाः पुंसः कृष्णस्तु भगवान्स्वयम्" "स वै किलायं पुरुषः पुरातनो य एक आसीत्"

"एष वै भगवान्साक्षादाद्यो नारायणः पुमान्"

इत्याद्युक्तेः श्रीकृष्णः स्वयं भगवान् तस्य "एष प्रपन्नवरदो रमयात्मशक्त्या" इत्युक्तेः । शक्तिभूता स्वयं लक्ष्मीरेवाविर्भवितुं योग्या अतः श्रियः रुक्मिण्याः स्वयं लक्ष्म्याः स्वयंवरे "मात्रा कर्णविभूषायां वित्तमाने परिच्छदे" इति कोशान्यात्रान्निजवित्तभूतां भीष्मकगृहेऽवतीर्णां स्वयं लक्ष्मीमित्यर्थः । तथा च श्रुतिः "कृष्णात्मिका जगत्कर्त्री मूलप्रकृतिरुक्मिणी" इति । कृष्णात्मिका शक्तितद्वतोरभेदात् जगत्कर्त्री जगद्धेतुभूतश्रीकृष्णान्तर्गतत्वात् मूलप्रकृतिः मूले जगत्कारणे कृष्णे प्रकृतिः स्वभावो निष्ठा यस्याः सा ऐश्वर्याभिष्ठात्री स्वयं लक्ष्मी रुक्मिणीत्यर्थः । रूकारात्पूर्वस्यैवर्णस्य ह्रस्वत्वं छान्दसमिति श्रुत्यर्थः—

"सोपश्रुत्य मुकुन्दस्य रूपवीर्यगुणश्रियः गृहागतैर्गीयमानास्तं मेने सदृशं पतिम् ।
तां बुद्धिलक्षणौदार्यरूपशीलगुणाश्रयां कृष्णश्च सदृशीं भार्यां समुद्वोढुं मनो दधे" ॥ इति ।

परस्परसादृश्यस्य वक्ष्यमाणत्वात् एवं भूतां स्वयं लक्ष्मीं ज्येष्ठभ्रातृविवाहानन्तरं भगवानपि स्वयं भगवानप्युपयेमे इति सिद्धान्तः ॥ १६ ॥ तार्क्ष्यपुत्रो गरुडो यथा देवान् प्रमथ्य सुधामहरत्तद्वत् सुधाहरणप्रकारः आदिपर्वणि द्रष्टव्यः ॥ १७ ॥ प्रमथ्य तरसा राज्ञः इति त्वदुक्त्या भगवान् राक्षसेन विधानेन क्षत्रियधर्मप्रधानेन रुक्मिणीमुपयेमे परिणीतवान् इति श्रुतम् ॥१८॥ माध्वीः श्रुतिसुखाः ॥ २०–२३ ॥

**श्रीसत्यधर्मकृता श्रीभागवतटिप्पणी**

मृषा मन्वानो जानन् ॥३९॥ जित्वेव भ्रमतो दृप्तोऽहङ्कृतः ॥४०॥ आनन्दो बहुलो येषां ते तैर्वृतौ सुखं यथा तथोषतुः । अत्रालक्ष्यमाणावित्युक्तिश्च दग्धा इति मृषा मन्वान इति च करवीरराजहननस्य पूर्वमुक्तिर्हरिवंशे तौ नगादाप्लुतौ दृष्ट्वेत्यारभ्य करवीरपुरं वीर गच्छामः सबलानुगा इति गर्भीकृत्य नगरीं मधुरापुरीं प्राप्तावित्यन्तेनोक्तिश्च कल्पभेदतः प्रवृत्ता इति न विरोधः । आचार्या भारततात्पर्यनिर्णये भारतमनुसृत्योचुः ॥ ४१ ॥

इति श्रीभागवतटिप्पण्यां सत्यधर्मकृतायां दशम उत्तरार्धे पञ्चपञ्चाशोऽध्यायः ॥ १०–५५ ॥

॥ हरिः ॐ ॥ भक्तवत्सलः श्रीदेव इति वेदयितुं पाण्डवकृतं विजयताण्डवं द्रुपदनृपविषये श्रुत्वा तन्मर्म ज्ञापयितुमाज्ञापयामास कृतवर्माणमत्रस्थतत्र गन्तुमित्यर्थो निरूप्यतेऽस्मिन्नध्याये । नानादेशानामीश्वरास्तैर्नानाप्रकारा आदेशा आज्ञाविशेषास्तेषामीश्वरैस्तदधिकृतैरिति वा ॥ १ ॥ सत्रयाजिभिः सत्रे याजयितुं शीलं येषां तैर्ब्राह्मणैस्तन्मुखतः ॥ २ ॥ हृष्टं हृदयमन्तःकरणं यस्य स नगरमनामयं यथा विदितुं च प्रेषयामास । गरो व्याधावेति विश्वः ॥ ३ ॥ कुरुपितामहं भीष्मम् ॥ ४ ॥ राजानं भाविनं तथा ॥ ५ ॥ सानुगं गोमन्तसानुगं सभृत्यं वा हतं घातितम् ॥ ६ ॥ वासुदेवं शृगालं वरुणालये समुद्रे ॥ ७ ॥ हंसडिभिकौ हतौ

तथा ब्रह्मदत्तं च हतम् । यथार्थेन यथार्थतया हतौ हतमित्यनुवादेन वादः कथं देवेन विप्रर्षे तौ हंसडिभिकौ हतावित्यारभ्य गदेन चापि सहितो वासुदेवः पुरीं ययावित्यन्तेन बहुना ग्रन्थेन हरिवंशे । तथा जनार्दनः स नामतो रमेशपादसंश्रय इत्यारभ्यासप्तदशाध्यायावशानं महाभारततात्पर्यनिर्णये च शंसितरीत्या ज्ञेयः । त्रैलोक्यसाम्राजमक्षयं स्वहस्तगतं मेने । तत्र निमित्तमप्यनेनैवाह । मेने लक्ष्मीनाथे त्रैलोक्यसाम्राजमक्षय्यं स्वहस्तगतं कुर्वति सतीति । तदायत्तं चेन्मदायत्तमेवेति भाव इति । सुखसम्भाषणादिभिः कुशलालापादिभिः ॥ ९ ॥ सौहार्दश्रुतवाष्पया कुन्त्या सभाजित इत्यन्वयः । मातृष्वसुः पुत्रास्तान् गतम् ॥ १० ॥ गाङ्गेयेन भीष्मेण गतम् ॥ ११ ॥ अङ्गराजः कर्ण आचार्यपुत्रोऽश्वत्थामा ॥ १२ ॥ दिनात्यये सायंसमये ॥ १३ ॥ सभां सुधर्माम् ॥ १४ ॥ बीजप्वामराणां सङ्घातः सङ्घस्तेन सहितं गजसाह्वये गतम् ॥ १५ ॥ आनन्दनिर्भरो बभूव बभूवेवालोकनतस्तथा दर्शयामासेति यावत् ॥ १६ ॥

इति श्रीभागवतटिप्पण्यां सत्यधर्मकृतायां दशम उत्तरार्धे षट्पञ्चाशोऽध्यायः ॥ १०-५६ ॥

॥ हरिः ॐ ॥ आनर्तादेशाः पुरा नवमे मयोदितमिति विशेषविवक्षावान्बीजावापं चकार कारुणिको बादरायणिरिति सूचयति ॥ १ ॥ ब्रह्मण एतस्य क्व दर्शनं कथं चाज्ञा राज्ञस्तस्य दानं कथमिति राजा पृच्छतीत्याह ॥ राजेति । अर्थादुक्तप्रायं शब्दतो वदेति विस्तरेणेत्यनेन द्योतयति ॥ २ ॥ यशस्विनी तथा भाविनी । धर्मश्चार्थश्च धर्मार्थौ ताभ्यां सह काममोक्षौ तौ वेत्तीति धर्मार्थतत्त्ववित् । चतुर्विधपुरुषार्थज्ञानीत्यर्थः ॥ ३ ॥ नानाजनपदेश्वरैर्याच्यमानोऽप्यदत्वा तां कस्मै दास्यामीति प्रष्टुं ब्रह्माणं ययावित्यन्वयः ॥ ४ ॥ हाहाहूहू द्वौ गन्धर्वौ तत्र सभायां तस्मिन्काले स्वराणां मण्डलं ग्रामो मूर्छना मूर्छा आरोहावरोहरूपा सप्तस्वरास्तयो ग्रामा एकविंशतिमूर्छना इति भरतः ॥ ५ ॥ किञ्चिदल्पकालं तस्य गीतस्य विरामोऽवसानं तत्प्रतीक्षया बहिरतिष्ठत् ॥ ६ ॥ ते तुभ्यं मां प्रत्येव कुतः प्रश्न इत्यत आह । दास्यं इति । तव दास्ये स्थितोऽहं दास्ये दासीत्वे कस्मै दास्यामीति वा । यो विरोचते तमेकं तथा दृष्टान् श्रुतांश्चावनीशान्वदेति तं पद्मभूः प्राह । तान्विषयेश्वरान्देशाधीशान् ॥ ७ ॥ स धाता तान्तैवतोक्तानाकर्ण्य प्रहस्य । हासस्तु तेषां कुलस्य कालव्याकुलतया । भूपतेरिति भूपत इति च युक्तौ पाठौ । सुबहूनि युगानि गतानि ॥ ८ ॥ अश्राव्यं मानुषैरेतयोर्गीतं शृण्वतः क्षणमात्रमिव गतानि । सुतायाः सदृशा वरास्ते भूपा इदानीं क्व न सन्ति त इत्यर्थः ॥९॥ तर्हि गुणाहितायाः कन्यायाः का गतिः कमलोद्भवेत्यत आह । इदानीमिति । यदुवंशाभिवृद्धिकरो गृहं महिषी ॥१०॥ तत्र तयोर्मध्ये सङ्कर्षणायेमां कन्यां यच्छस्व तेन धात्रा तं प्रणम्य । यत्र तत्स्थानम् । बहुशालिन इत्युत्तरकार्योपयोगिशक्ततां व्यक्तीकर्तुम् ॥ ११ ॥ आदियुगसम्भूतामिति दहोन्नाहहेतुकथनम् । कृतयुगजां समां स्वकारस्य यावत्तावत्तावत्तरुण्याकारेण भाव्यं तथा चक्र इत्यर्थः । लाङ्गलेन हलेन नियतपतिपत्नीव्यतिरिक्तस्थल एव कन्या कनीयस्त्वसमयप्रचार इति ज्ञेयम् ॥ १२ ॥ अपिना न परवित्तता भगवत इत्यवगमयति । पत्नी नियता रेवतीति हरिवंशशंसितान्नीला विवादादपि न सेति ज्ञेयम् । इत्युक्त इत्यनेन ब्रह्मानुकूल्ये तु कन्याघटना भवतीत्याभाणकं तदारभ्य प्रवर्ततेति ध्वन्यते । इन्दिरांशां रमाम् ॥ १३ ॥ सर्वभूतानां पश्यतामनादृत्य तानीत्यर्थः ॥ १४ ॥ भगवान्ज्ञानादिमान् राक्षसेन विवाहेन । ननु तृतीये गान्धर्ववृत्त्या मिषतां स्वभागमित्युक्ते राक्षसेनेत्यत्रोक्तिः कथमिति चेन्न । आदिपर्वणि शाकुन्तलीये । अष्टावेव समासेन विवाहा धर्मतः स्मृताः । ब्राह्मो दैवस्तथैवार्षः प्राजापत्यस्तथासुरः । गान्धर्वो राक्षसश्चैव पैशाचश्चाष्टमः स्मृतः । तेषां धर्मान्यथापूर्वं मनुः स्वायम्भुवोऽब्रवीत् । प्रशस्ताश्चतुरः पूर्वान्ब्राह्मणस्योपधारय । षडानुपूर्व्याः क्षत्रस्य विद्धि धर्म्यानिनिन्दिते । राज्ञां तु राक्षसो युक्तो विट्शूद्रेष्वासुरः स्मृतः । पञ्चानां तु त्रयो धर्म्यात्द्वावधर्म्यौ स्मृताविह । पैशाचश्चासुरश्चैव न कर्तव्यौ कदाचन । अनेन विधिना कार्यो धर्मस्यैषा गतिः स्मृता । गन्धर्वराक्षसौ क्षत्रधर्मौ तौ मा विशङ्किथाः । पृथग्वा यदि वा मिश्रौ कर्तव्यौ नात्र संशयः । सा त्वं मम सकामस्य सकामा वरवर्णिनी । गान्धर्वेण विवाहेन भार्या भवितुमर्हसि । कण्वः । क्षत्रियस्य हि गान्धर्वो विवाहः श्रेष्ठ उच्यते । सकामायाः सकामेन निर्मन्त्रा रहसि स्मृत इत्युक्तेः । समसम्मतिगान्धिर्वे राक्षसे च राक्षसो युद्धहरणादित्युक्तेः । पृथग्वा यदि वा मिश्रावित्युक्तेः क्वचिद्राक्षसेत्युक्तिः क्वचिच्च गान्धर्वेत्युक्तिश्च सम्भवत इति मन्तव्यम् । विवाह्यतेऽनेनेति विवाहो विधिस्तेनोपयेमे परिणीतवान् विवाहेनोपयेमे स्वीचकारेत्यर्थः । इति श्रुतं त्वन्मुखतः । तत्पारं तत्कृतान्ततुलसेनाप्रान्तमागमदाप । तत्पाते मागधाद्याः पालका यस्याः सा रमाऽगमद्बहिरित्यप्यान्तरङ्गिको भावो ज्ञेयो राज्ञः ॥ १५ ॥ श्रुतमिति त्वयैवोक्तमलमित्यतो वक्ति । ब्रह्मन्निति । माध्वीर्मधुरा लोकमलापहाः पुण्यास्तत्प्रापिका विष्णुकथाः श्रुतज्ञः शृण्वानः । ताच्छील्ये चानश् कः । तृप्येत तृप्तो भूयात् । नित्यनूतना नित्यं नवीना विशेषफलप्रदत्वात् । नवा एव नवस्य नूआदेशो तनप्प्रत्ययः वक्तव्य इति वार्तिकेन तनप् । नवीनो नूतनो नव इत्यमरः ॥ १६ ॥

**श्रीमद्वल्लभाचार्य्यकृता सुबोधिनी**

तस्य च दुर्बुद्धिमाह सोऽपीति । शब्ददोषपरिहाराय दग्धिशब्दः सप्तम्यन्तो ग्राह्यः । जरासन्धोऽपि दग्धिमध्ये प्रविष्टः । यथा भगवान् द्वारकायां प्रविष्टः, तथा सोऽपि दग्धि प्रविष्टः, परमसन्तापे । सन्तप्त इत्यर्थः । एतदपि ज्ञानकृतमेव तस्य, न क्रियया दाहो जात इति । अन्यथाग्रे पाण्डवानां यशो न स्यात् । इति **मृषा मन्वानः बलकेशवावालक्ष्य** । बलत्वात् ब्रह्मेशयोरप्यधिपतित्वाच्च तादृशौ न तथाभूताविति मृषा मन्वानो वा । अथवा । स तु दग्ध एव । अतः परं पाण्डवकीर्त्यर्थं मृषाभूतः सङ्कलितः,

सीतावत् । ततो मृपा जरासन्धः बलत्वं केशवत्वं च मन्वानः सर्वांशेनापि नाशो भविष्यतीति विज्ञाय स्वस्य बलं सेनामाकृष्य मगधानेव ययौ । ननु स्वयं किल दग्धः, किं बलदाहेनेत्य आह सुमहदिति । सत्त्वेन महत्त्वेन च । तद्भगवदधिष्ठानमिति तत्स्थापनार्थं, ततो भगवतः, अपगमनार्थं च, मगधानेव देशान् ययौ, यतः सोऽपि मागधः. देशदोषमात्रेणावशिष्टः । **मत्वा तौ बलकेशवा-** विति पाठे स एवार्थः ॥ १४ ॥ एवं तामसस्य रुद्रादेः वाक्यपरिपालनं निग्रहं वा विधाय स्त्रीणामुद्धारार्थे कृपया विवाहादिकं कृतवानिति वक्तुं ज्येष्ठस्य बलभद्रस्य विवाहमाह **आनर्ताधिपतिरि**ति । आनर्तदेशः द्वारकानिकटदेशः । तस्याधिपतिः रैवतः । श्रीमानिति । अमृत एव । रेवती नाम तस्य कन्या, स हि पूर्वं ब्रह्माणं प्रष्टुं गतः । ततो ब्रह्मवाक्यात् कनिष्ठायापि रामाय दत्तवान् इति पुरा **नवमस्कन्धे निरूपितम् । अस्य विचारस्तत्रैव कृतः** ॥ १५ ॥ भगवतो विवाहमाह **भगवान**पीति । ननु स्वतःसिद्धलक्ष्मीकस्य निरिन्द्रियस्य प्रयोजनाभावात्किं विवाहेनेत्याशङ्क्य परिहरति । यद्यपि **भगवान्**, तथापि **गोविन्द** इति इन्द्रादिभिरिन्द्रत्वेनाभिषिक्त इति तेषां वाक्यसिद्ध्यर्थ**मुपयेमे,** विवाहं कृतवान्, न तु गोपिकावत्परिग्रहमात्रम् । **कुल्द्वहे**ति संबोधनं भगवत्स्वरूपज्ञानाय ननु तथापि कर्मणा उत्पादिता कर्मफलरूपा तादृशकर्मकर्त्रैव विवाह्येति कथं भगवता विवाहः कृत इति चेत्, तत्राह **वैदर्भी**मिति । विदर्भदेशे सोत्पन्ना । अतो न कर्मजनिता । किञ्च । भीष्मकस्य सुता, भीष्मं भयानकं कं सुखं यस्येति । प्रलयकर्ता महादेव एवावतीर्णः, तस्य च सुता सीता पूर्वजन्मन्यपि महादेवकन्यैव, सैवेदानीं भीष्मकाज्जाता । अतो विवाहः कर्तव्य एव । किञ्च **श्रियो मात्रा**मिति । सा हि लक्ष्म्याः मात्रा भवति अंशः, नहि तामन्यो ग्रहीतुं शक्तः । सा ह्यवतरति यथा, यथा भगवानवतरति । 'राघवत्वेऽभवत्सीता रुक्मिणी कृष्णजन्मनी'त्यादि वाक्यात् । तत्रापि स्वयंवरे यदा सर्व एव राजान आहूताः, तदा भगवानप्याहूतः । यदा तया भगवान् वृतः, ततस्तदिच्छया विवाहं कृतवान् ॥ १६ ॥ किञ्च, **प्रमथ्य तरसा राज्ञ** इति । सर्वानेव शिशुपालादीन् **प्रमथ्य** मारयित्वा जयप्राप्तामिव तां नीतवान् । शाल्वादयोऽतिविरोधिनो बलिष्ठाश्च । तैः सह युद्धे विशेषहेतुमाह **चैद्यपक्षगा**निति । 'स्वयंवरेऽपि शिशुपालः समागतः । अतस्तद्धितार्थमपि शाल्वादयः प्रवृत्ताः । मुख्यो भगवद्विरोधी शिशुपालः । अन्येऽपि विरोधिनः यथाकथञ्चिद्भगवद्विरोधं सम्पादयितुं तत्पक्षपातिनो जाता इति । किञ्च । प्रद्युम्नादयोऽप्युत्पाद्याः । अतः कामः सङ्कटे वर्तत इति तदुत्पत्त्यर्थमप्युपयेम इत्याह **पश्यतां सर्वलोकाना**मिति । यथा मातुरापन्निवृत्त्यर्थं **गरुडः** अयुक्तेभ्योऽप्यमृतं दातुं प्रवृत्तः, तथा भगवानपि कामस्य दुःखनिवारणार्थं वैदर्भीम् अयुक्तामपि स्वयं गृहीतवान्, मारितवांश्चान्यान् । यद्ययुक्तमेतद्भवेत् तदा लोकाः साक्षिण इति तान् प्रमाणीकरोति । एवं सर्वप्रकारेण भगवतो विवाहो निरूपितः ॥ १७ ॥ तत्र राजा विवाहे पौरुषं श्रोतुं विशेषं पृच्छति **भगवान् भीष्मकसुता**मिति । भगवतो विवाहः बहुधा पुराणेषु श्रुतः । ततो राजा स्वयंवरविवाहात्प्रकारान्तरेण श्रुतवान्, तत्र च पौरुषमधिकमिति, तद्भवति वा नवेति सन्देहनिवृत्त्यर्थं पृच्छति । भगवत्त्वान्नाज्ञानम् । **भीष्मकसुता**मिति पितुरपि बलिष्ठता । **रुक्मिणी**मिति भगवतो मुख्यभार्येति प्रसिद्धा । ततश्च 'गान्धर्वो राक्षसश्चैव धर्म्यौ क्षत्रस्य तौ स्मृता'विति प्रथमो विवाहो धर्म्यः कर्तव्यः । अतो धर्मित्वार्थं राक्षस एव विवाहः भगवता कृत इति स एव त्वया वक्तव्य इत्याह **राक्षसेन विधानेने**ति । **रुचिरानना**मिति तस्या मुग्धभावो निरूपितः ततश्च राक्षसे विवाहे सा कथमनुगुणा अभीतागतेत्यपि सन्देहः । 'प्रसह्य कन्याहरणं राक्षसो विधिरुच्यत' इति विधिशब्दः परस्वहरणलक्षणदोषव्यावृत्त्यर्थः । यथा विवाहः दाने अदुष्टः, एवं हरणेऽपि क्षत्रियस्येतिज्ञापनार्थः श्रुतमिति प्रमाणमुपन्यस्तम् ॥ १८ ॥ अतस्तत्र प्रकारं पृच्छति **भगवन् श्रोतुमिच्छामी**ति । अनेनाग्रे वक्ष्यमाणा कथा अध्यायत्रयात्मिका न समाधिभाषेति सूचितम् । अन्यत्र श्रुतमेव कल्पान्तरीयमपि योगानुभावेन वक्तव्यमिति प्रश्नात्, अन्यथा स्वतन्त्रवक्तुः किं पूर्वश्रुतप्रकारकथनेनेति । अतः श्रोतुरनुरोधात्कल्पान्तरीयमपि गान्धर्वराक्षसवैधभेदेन त्रिधा त्रिभिरध्यायैर्वक्ष्यति । तेनात्र प्राप्तं दूषणत्रयं परिहृतं भविष्यति । भगवान् कपटेन गत्वा अहृतां हृतवानिति, तस्या भ्रातुर्मुण्डनं कृतवानिति, बलभद्रेण बोधित इति, रुक्मिण्याश्च लज्जाभावेनापरिचितभगवत्प्रार्थनेति । एवं सति रसात्मको विवाहो न भवेत् । भक्तिरसो हि शृङ्गारादीनामुपमर्दकः । अतः समाधिभाषाविवाहः स्वयंवर एव । अन्यस्तु मतान्तरीय इति निश्चयः । ननु अप्रस्तुतं किमिति वक्ष्यतीति चेत्, तत्राह **श्रोतुमिच्छामी**ति । इच्छा पूरणीयेति तदर्थं वक्ष्यति । किञ्च, इयमपि कथा कृष्णस्य । अमितं तेजो यस्येति । पराक्रमाधिक्याच्च तद्वक्तव्यम् । क्षत्रियाणां हि क्षात्रप्रकारेण निरूपितं भगवच्चरित्रं मनोहारि भवति । तदाह । **यथा मागधशाल्वादी**निति । मागधोऽपि जयं प्राप्त इति स निरूप्यते । साल्वः सात्त्विको महाँश्च । एवं जयेन स्वभावेन च महान्तौ आदिभूतौ येषामिति जयशीलवीरजयो भगवत्कृतः श्रोतव्य इति निरूपितम् । तत्राप्येक एव स्वयं तान् जित्वा स्वयं कुशलेन पुरं द्वारकामभ्यगादिति । तदप्येकस्मिन्कल्पे, तत्सर्वथा विरुद्धं मन्वानः शुको नोक्तवान्, तदा तु भगवानपि समाहूतो गतः । वरणात्पूर्वमेव बलात्तां हृत्वा सर्वान् विनिर्जित्य एकाकी स्वयं गृहं गत इति कथा भवति । तत्र यद्यपि पौरुषं महत्, तथाप्यत्यन्तं क्लिष्टकर्मत्वं भवतीति तन्नोक्तवान् । तामसकल्पे हि तथा कथा । अत एव शिशुपालो वक्ष्यति 'समुद्रं दुर्गमाश्रित्य बाधन्त' इति अक्लिष्टकर्मत्वं च वक्तव्यम् । अतो यावता तदुपयुज्यते, तावद्वक्तव्यमिति राक्षसो विवाह उक्तः, नत्वेकाकिहरणम् । **अनेनैवं ख्यापितम्** । पृष्टमयुक्तं चेत् , न वक्तव्यमिति ॥ १९ ॥ ननु कथा भगवतो महती वक्तव्या, ततश्च अत्यावश्यककथैव श्रोतव्येति चेत् तत्राह **ब्रह्मन् कृष्णकथा** इति **ब्रह्म**न्निति ज्ञानमुक्तम् । कृष्णकथात्वात् कीर्तने श्रवणेऽपि वैराग्याभाव उक्तः । किञ्च । प्राणिनो हि धर्मार्थकाममोक्षेप्सवः । तत्र कृष्णकथाश्चतुर्णां प्रतिरूपा इत्याह । **पुण्या** इति धर्मरूपाः । **माध्वी**रिति कामरूपाः । लोकानां मलं

दारिद्र्यवत् कश्मलरूपं हरन्तीति **लोकमलापहाः**। एवं त्रिवर्गरूपा इति तदभीप्सुः को नु तृप्येत। **नु** इति वितर्के। न कोऽप्य विरक्त इति भावः। तर्हि कथं सर्वे न प्रवर्तन्त इति चेत्, तत्राह **शृण्वान** इति। सकृच्छ्रुत्वापि निवर्तन्त इति चेत्। **श्रुतज्ञ इति** वर्तमानप्रयोगेण निरन्तरश्रवणे प्राप्तेऽपि श्रवणरसिकोऽत्र मुख्य इति श्रुतं जानाति। रसिकत्वेनेति श्रुतज्ञ उक्तः। **रसज्ञ** इति पाठे तु स्पष्ट एव। किञ्च। **नित्यनूतनाः** अयातयामाः कालग्रासरहिताः। तेन मोक्षरूपा अपीत्युक्तम्॥ २०॥

### श्रीसुबोधिनी–सारः

बलकेशवौ रामकृष्णौ दग्धाविति मृषा मिथ्या मन्यमानः सोऽपि जरासंधः सुमहद्बलं आकृष्य निवर्त्त्य संहृत्य मगधान् जगाम॥ १४॥ आनर्त्तदेशपतिः श्रीमान् रैवतो रेवतसुतः ककुद्मी ब्रह्मणा नोदित आदिष्टो रेवतीं सुतां कन्यां बलाय प्रादादिति पुरा नवमस्कंधे उदितमुक्तम्॥ १५॥ "रुक्मिणी मंगलं नाम श्रूयतां बहुमंगल सर्वमंगलदं पुण्यं महापातकनाशनम्।" हे कुरूद्वह श्रियो मात्रां लक्ष्म्याः कलां धाम भीष्मकस्य सुतां वैदर्भीं रुक्मिणीं गोविंदो भगवानपि उपयेमे परिणिन्ये॥ १६॥ तरसा वेगेन स्वयंवरे चैद्यपक्षगान् शिशुपालपक्षगतान् शाल्वादीन् राज्ञः प्रमथ्य जित्वा सर्वलोकानां पश्यतां सतां गरुडोऽमृतमिव॥ १७॥ राजप्रश्नः। सुंदरमुखीं भीष्मकस्य सुतां रुक्मिणीं भगवान्कृष्ण उपयेमे राक्षसेन विधानेन "राक्षसो युद्धहरणात्" इति धर्मशास्त्रात्। इत्यस्माभिः श्रुतम्॥१८॥ अतुलवीर्यस्य कृष्णस्य चरितं श्रोतुमिच्छामः जरासंधशाल्वादीन् जित्वा यथा कन्यामाहृतवान् हे भगवन्॥ १९॥ हे ब्रह्मन् पुण्या माध्वीर्मिष्टा लोकपापघ्नीः कृष्णस्य कथाः शृण्वानः शृण्वन् श्रुतज्ञः सारवित्को नु तृप्येतालं-बुद्धिं कुर्यात्। नित्यं नूतना आश्चर्यवत्प्रतीयमानाः॥ २०॥

### विवरणटिप्पणी

**प्रमथ्येत्यस्याभासे किञ्चेति**। गान्धर्वत्वं स्वयं वरणादुक्तम्। राक्षसत्वमप्यस्तीति समुच्चयः। **भगवन्नित्यत्र। तेनात्रेति**। एतस्य मतान्तरत्वकथनेनात्र समाधिभाषायामिदं दूषणत्रयं नास्तीत्यर्थः।

### गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

स मागधोऽपि 'रामकृष्णौ दग्धौ' इति मृषैव मन्वानः सुमहत् बलं सैन्यमाकृष्य आदाय मगधान् देशान् प्रतिययावित्यन्वयः॥१४॥ अथ श्रीकृष्णस्य विवाहान्निरूपयितुकामो नवमस्कन्धोक्तं बलभद्रविवाहमनुस्मारयति—आनर्तेति। स्पष्टार्थः॥१५॥ अथ भगवद्विवाहं सङ्ग्रहेणाह—भगवानपीति द्वाभ्याम्। सावधानतार्थं सम्बोधयति—कुरूद्वहेति। भगवान् गुणैः वैराग्यादिगुणैः पूर्णोऽपि गोविन्दः सर्वेषां लोकानां जनानां पश्यतामेव सतां शाल्वादीन् राज्ञः प्रमथ्य अभिभूय वैदर्भीं विदर्भदेशोत्पन्नां भीष्मकस्य राज्ञः सुतां रुक्मिणीं स्वयंवरे आहृत्य उपयेमे विवाहितवानिति द्वयोरन्वयः। एवंविवाहे हेतुमाह–श्रियो लक्ष्म्या मात्रामवतारभूतामित्यर्थः राज्ञामभिभवे हेतुमाह—चैद्यस्य शिशुपालस्य वैरिणः पक्षगानिति। अभिभूय हरणे दृष्टान्तमाह—तार्क्ष्यपुत्र इति। गरुडो यथा देवानभिभूय सुधां आहृतवांस्तथेत्यर्थः॥ १६–१७॥ एवं सङ्क्षेपतः रुक्मिणीविवाहं श्रुत्वा तद्विस्तरबुभुत्सयाऽनुवादपूर्वकं तत्प्रकारं पृच्छति—भगवानिति। रुचिरं सुन्दरमाननं यस्यास्तां भीष्मकसुतां रुक्मिणीं भगवान् राक्षसेन विधानेन 'राक्षसो युद्धहरणात्' इति स्मृतेः, हरणप्रकारेण उपयेमे विवाहितवानिति तु श्रुतम्॥ १८॥ सर्वज्ञत्वं सूचयन् सम्बोधयति—भगवन्निति। यथा येन प्रकारेण कृष्णो मागधादीन् जित्वा रुक्मिणीं कन्यामुपाहरत् तत् अमिततेजसः महाप्रभावस्य कृष्णस्य चरितं श्रोतुमिच्छामीत्यन्वयः। तद्वदेति शेषः॥ १९॥ ननु 'सङ्क्षेपतः श्रुतवतोऽपि पुनः प्रश्नेन किम्' इत्याशङ्क्याह—ब्रह्मन्निति। 'ब्रह्मनिष्ठस्यापि तव ततस्तृप्तिर्न दृश्यते' इति सूचयन् सम्बोधयति—ब्रह्मन्निति। कृष्णकथाः शृण्वानः शृण्वन् को नु तृप्येतेत्यन्वयः। ननु 'बहवोपि ततो विरक्ता दृश्यन्ते' इत्याशङ्क्याह—श्रुतज्ञ इति। श्रुतसारवित् विवेकी। कथाश्रवणादौ ये विमुखाः ते स्वदुष्कृतेन तत्सुखानभिज्ञाः पशुतुल्या इत्याशयः। अतृप्तौ हेतून् दर्शयन् विशिनष्टि—शृण्वतां वदतां च पुण्याः परमफलहेतुपुण्यावहाः, माध्वीः श्रुतिसुखावहाः, श्रवणादिपराणां लोकानां मलापहाः पापघ्नीः नित्यनूतनाः प्रतिक्षणमाश्चर्यवत् प्रतीयमाना॥२०॥

### अन्वितार्थप्रकाशिका

स इति। स मागधोऽपि बलकेशवौ रामकृष्णौ दग्धाविति मृषैव मन्वानः सुमहत् बलं सैन्यमाकृष्य आदाय मागधान् देशान् प्रति ययौ॥ १४॥ श्रीकृष्णविवाहान् वक्तुं नवमस्कन्धोक्तं रामविवाहं स्मारयति–आनर्त्तेति। आनर्तदेशाधिपतिः श्रीमान् रैवतः रेवतसुतः ककुद्मी ब्रह्मणा चोदितः सन् स्वसुतां रेवतीं बलाय प्रादात्। इति पुरा नवमस्कन्धे उदितम्॥ १५॥ भगवानिति द्वयम्। हे कुरूद्वह! भगवान् गोविन्दोऽपि सर्वेषां लोकानां जनानां पश्यतामेव सतां चैद्यपक्षगान् शाल्वादीन् राज्ञः तरसा बलेन प्रमथ्य अभिभूय जरासन्धस्य मुख्यत्वेऽपि शाल्वादित्वोक्तिः रुक्मिणीहरणोत्तरं शाल्वेनैव सर्वेषां युद्धे प्रवर्तनमिति हरिवंशोक्तेः। वैदर्भीं विदर्भदेशोत्पन्नां श्रियो लक्ष्म्याः मात्रामवतारभूतां भीष्मकस्य राज्ञः सुतां रुक्मिणीं स्वयंवरे आहृत्य उपयेमे परिणीतवान्। विवाहलीलया नीतवान् इत्यर्थः। तार्क्ष्यस्य कश्यपस्य पुत्रो गरुडो यथा देवानभिभूय सुधाम् आहृतवांस्तथा॥१६-१७

भगवानिति। रुचिरं सुन्दरमाननं यस्यास्तां भीष्मकसुतां रुक्मिणीं भगवान् राक्षसेन विधानेन "राक्षसो युद्धहरणात्" इति स्मृतेः। वीरयोग्येन हरणप्रकारेण उपयेमे इति श्रुतम्। त्वत्तः पूर्वमेव वा सामान्यतः श्रुतम् ॥ १८ ॥ भगवन्निति। यथा येन प्रकारेण कृष्णो मागधशाल्वादीन् जित्वा रुक्मिणीं कन्यामुपाहरत् तदमिततेजसो महाप्रभावस्य कृष्णस्य चरितं विशेषतः श्रोतुमिच्छामः ॥ १९ ॥ ब्रह्मन्निति। हे ब्रह्मन्! शृण्वतां वदतां च पुण्याः महाफलाः माध्वी श्रुतिसुखावहाः छान्दसो निपातः। लोकानां मलापहाः पापघ्नीः नित्यनूतनाः प्रतिक्षणमाश्चर्यवत्प्रतीयमानाः कृष्णकथाः शृण्वानः शृण्वन्। शानजार्षः चानश् वा। श्रुतज्ञो विवेकी को नाम तृप्येत। तद्भावः ॥ २० ॥

### श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्

श्रीकृष्णोद्वाहान् वक्तुं नवमस्कंधगदितं रामोद्वाहं पुनर्दर्शयति। आनर्त्तेति ॥१५॥ श्रियो मात्रां लक्ष्म्याः पूर्णमूर्त्तिम् ॥१६॥ तार्क्ष्यस्य कश्यपस्य पुत्रः सुपर्णः सुरान् प्रमथ्य यथा सुधामहरत् तथा वैदर्भीम् ॥१७॥ राक्षसो युद्धहरणादिति स्मरणात्। विधानेन विधिना ॥ १८ ॥ पुनरधिकं श्रोतुमिच्छामि ॥१९॥ माध्वीः मधुररसाः शृण्वानः शृण्वन्। नित्यनूतनाः सदा नवीनाः ॥२०–२२॥

### भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

अथ श्रीकृष्णस्य विवाहान्निरूपयितुकामस्तावद्बलभद्रविवाहं नवमस्कन्धोक्तमनुस्मारयति। आनर्त्ताधिपतिरिति। आनर्त्ताधिपतिः। आनर्त्तदेशस्याधिपतिः, श्रीमान् रैवतः, रेवती सुतां, ब्रह्मणा चोदितः सन्, बलाय बलभद्राय, प्रादात् इति, पुरा नवमस्कन्धे, उदितमुक्तमस्ति ॥ १५ ॥ अथ रुक्मिणीविवाहस्य विस्तरतो बुभुत्सां समुत्थापमन् तं संग्रहेणाह। भगवानपीति। प्रमथ्येति च। हे कुरूद्वह, भगवान् गोविन्दः, श्रीकृष्णोऽपि, भीष्मकसुतां भीष्मकनृपस्य तनयां, श्रियो लक्ष्म्याः, मात्रामंशभूतां, वैदर्भीं रुक्मिणीमित्यर्थः। तार्क्ष्यपुत्रो गरुडः, सुधाममृतं इव, स्वयंवरे चैद्यपक्षगान् शिशुपालपक्षपातिनः, शाल्वादीन् राज्ञः तरसा वलेन, प्रमथ्याभिभूयेत्यर्थः। सर्वलोकानां पश्यतां सतां, पश्यत नृपतिलोकाननादृत्येत्यर्थः। षष्ठी चानादरे' इति अनादरे षष्ठी। आहृत्येति शेषः। उपयेमे परिणिनायेत्यर्थः। इति द्वयोरेकान्वयः ॥ १६–१७ ॥ विस्तरत एतद्बुभुत्सया पृच्छति राजा। भगवानिति। भगवान् श्रीकृष्णः, रुचिरं सुन्दरमाननं यस्यास्तां, रुक्मिणीं रुक्मिणीसंज्ञां, भीष्मकसुतां, राक्षसेन विधानेन, नियुद्ध्यानीताया विवाहो राक्षसविवाहविधिः। 'राक्षसो युद्धहरणात्' इति स्मृतेः। उपयेमे इति, श्रुतम्। अधुना त्वन्मुखादिति भावः ॥ १८ ॥ भगवन्निति। हे भगवन्, यथा येन प्रकारेण, मागधश्च शाल्वश्च तावादी येषां तान्, एकः एव सन्, जित्वा, पुनः आगमत्। वैदर्भीमादायेति शेषः। अमिततेजसः कृष्णस्य, तं जयागमनप्रकारमिति शेषः। श्रोतुं, इच्छामि ॥ १९ ॥ आत्मनः श्रवणौत्सुक्यमाविष्करोति। ब्रह्मन्निति। हे ब्रह्मन्, पुण्याः शृण्वतां वदतां च पुण्यावहाः, माध्वीः श्रुतिसुखावहाः, लोकस्य शृण्वतो गदतश्च, जनस्य मलापहाः पापघ्नीश्च, कृष्णकथाः, यतः नित्यनूतनाः, अतः शृण्वानः, श्रुतज्ञः श्रोत्रेन्द्रियसुखसारासारविवेको स्याच्चेत्, कः पुमान् न सेवेत, अपि तु सेवेतैवेत्यर्थः ॥ २० ॥

### कृष्णप्रिया

यह बात मैं तुमसे पहले ही ( नवम स्कन्ध में ) कह चुका हूँ कि आनर्तदेश के राजा श्रीमान् रैवत जी ने अपनी रेवती नाम की कन्या ब्रह्मा जी की प्रेरणा से बलराम जी के साथ व्याह दी ॥१५॥ परीक्षित्! भगवान् श्रीकृष्ण भी स्वयंवर में आये हुए शिशुपाल और उसके पक्षपाती शाल्य आदि नरपतियों को बलपूर्वक हराकर सबके देखते-देखते, जैसे गरुड़ ने अमृत हरण किया था, वैसे ही विदर्भ देश की राजकुमारी रुक्मिणी को हर लाये और उनसे विवाह कर लिया। रुक्मिणी जी राजा भीष्मक की कन्या और स्वयं भगवती लक्ष्मी जी का अवतार थी ॥ १६–१७ ॥ राजा परीक्षित् ने पूछा—भगवन्! हमने सुना है कि भगवान् श्रीकृष्ण ने भीष्मकनन्दिनी परमसुन्दरी रुक्मिणी देवी को बलपूर्वक हरण करके राक्षस विधि से उनके साथ विवाह किया था ॥ १८ ॥ महाराज! अब मैं यह सुनना चाहता हूँ कि परम तेजस्वी भगवान् श्रीकृष्ण ने जरासन्ध, शाल्य आदि नरपतियों को जीतकर किस प्रकार रुक्मिणी हरण किया? ॥ १९ ॥ ब्रह्मर्षे! भगवन् श्रीकृष्ण की लीलाओं के सम्बन्ध में क्या कहना है? वे स्वयं तो पवित्र हैं ही, सारे जगत् का मल धो–वहाकर उसे भी पवित्र कर देने वाली हैं। उनमें ऐसी लोकोत्तर माधुरी है, जिसे दिन-रात सेवन करते रहने पर भी नित्य नया-नया रस मिलता रहता है। भला ऐसा कौन रसिक, कौन मर्मज्ञ है जो उन्हें सुनकर तृप्त न हो जाय ॥ २० ॥

श्रीशुक[1] उवाच

राजाऽऽसीद् भीष्मको नाम विदर्भाधिपतिर्महान् । तस्य पञ्चाभवन् पुत्राः कन्यैका च वरानना ॥ २१ ॥
रुक्म्यग्रजो रुक्मरथो रुक्मबाहुरनन्तरः । रुक्मकेशो रुक्ममाली रुक्मिण्येषां स्वसा सती ॥ २२ ॥
[2]सोपश्रुत्य मुकुन्दस्य रूपवीर्यगुणश्रियः । [3]गृहागतैर्गीयमानास्तं मेने सदृशं पतिम् ॥ २३ ॥
तां [4]बुद्धिलक्षणौदार्यरूपशीलगुणान्विताम् । कृष्णश्च सदृशीं भार्यां समुद्वोढुं मनो दधे ॥ २४ ॥
बन्धूनामिच्छतां दातुं कृष्णाय भगिनीं नृप । [5]ततो निवार्य कृष्णद्विड् रुक्मी चैद्यममन्यत ॥ २५ ॥

### कर्दमक्षमा

अन्वयः—श्रीशुक उवाच—विदर्भाधिपतिः, भीष्मकः, नाम, महान्, राजा, आसीत्, तस्य, पञ्च, पुत्राः, अभवन्, च, एका, वरानना, कन्यका, आसीत् ॥ २१ ॥ अग्रजः, रुक्मी, रुक्मरथः, रुक्मबाहुः, अनन्तरः, रुक्मकेशः, रुक्ममाली, एषाम्, सती, स्वसा, रुक्मिणी, आसीत् ॥ २२ ॥ सा, गृहागतैः, गीयमानाः, मुकुन्दस्य, रूपवीर्यगुणश्रियः, उपश्रुत्य, तम्, सदृशम्, पतिम्, मेने ॥ २३ ॥ च कृष्णः, बुद्धिलक्षणौदार्यरूपशीलगुणान्विताम्, सदृशीम्, भार्याम्, ताम्, सम् उद्वोढुम्, मनः, दधे ॥ २४ ॥ नृप ? कृष्णद्विड्, रुक्मी, बन्धूनाम्, कृष्णाय, दातुम्, इच्छताम्, ततः, निवार्य, भगिनीम्, चैद्यम्, अमन्यत ॥ २५ ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

चैद्यममन्यत—तस्या वरमित्यर्थः ॥ २५ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

तस्य भीष्मकस्य । 'कन्यका तु वरानना' इति पाठेऽपि तदेव तात्पर्यम् ॥ २१ ॥ तन्नामतो निर्दिशति—रुक्मीति । अग्रजो ज्येष्ठः । एषां रुक्म्यादीनाम् । अनन्तर इति सर्वत्रान्वेति क्रमजातत्वविवक्षया । सती रूपादिगुणैरुत्तमा ॥ २२ ॥ सा रुक्मिणी । रूपं स्वरूपम्, वीर्यं प्रभावः, गुणा भक्तवात्सल्यादयः, श्रियोऽलौकिकसंपदः । तं श्रीकृष्णम् । गृहागतैर्नारदादिभिः । श्रीः सम्पत् । वीर्यस्य गुणांतर्गतत्वेऽपि पृथगुक्तिः क्षत्रियत्वेन परमानन्दप्रदत्वात् । रूपादीनां पूर्वपूर्वाधिक्यमूह्यम् । उप समीप एव श्रुत्वा । कथम्—पितुर्गृहमागतैः सर्वैरेव गीयमानाः कविभिर्गीततया निबद्धत्वात्प्रीत्या मधुरस्वरेणोच्चैः कीर्त्यमानत्वात् । सदृशं योग्यम्, आत्मनस्तादृशत्वात् ॥ २३ ॥ तां रुक्मिणीम् । लक्षणानि सौभाग्यचिह्नानि । तदुक्तमनंगरंगे—"नीलांभोरुहपत्रकांतिरथ वा स्वर्णप्रभा भास्वरा भृङ्गीनीलशिरोरुहा शशिमुखी सारंगशावेक्षणा । स्याद्यस्यास्तिलजप्रसूनसदृशी नासा सुदन्तावली सुश्रोत्रा पिकभाषिणी च जलजग्रीवाथ बिम्बाधरा । चक्राद्यंकितशोणपाणिचरणा क्षामोदरी स्वल्पभुग्रंभास्तम्भमनोरमोरुयुगला श्रोण्या बृहत्यान्विता । नाभ्या चातिगभीरया गजगतिः शांताल्पनिद्रालसा शीलाढ्या सुकुमारिका नरवरैः कन्या विवाह्या शुभा।' इति । बुद्धिः परमार्थविचारः, लक्षणं स्वीयभगवल्लक्ष्मवल्लक्ष्म औदार्यं वदान्यत्वं कुलीनत्वादिमहत्त्वं वा, शीलं सुस्वभावः, गुणाः सौकुमार्यसौरभ्यादयो लज्जादयश्च, तैराश्रियत इत्याश्रयः आश्रयणं यस्यामिति वा । च अपि । कृष्णः सर्वचित्ताकर्षकगुणो भगवानपि । बुद्ध्यादेर्गुणांतर्गतत्वेऽपि पृथगुक्तिस्तत्तद्विशेषाभिप्रायेण । अत एव सदृशीम् । अत्र च चरणचिह्नादिलक्षणानां सादृश्यं दक्षिणवामविपर्ययेणेति गम्यते, स्त्रीपुरुषाणां सामुद्रिकादौ तथा प्रशस्तत्वात् । बुद्ध्यादीनां पूर्वोत्तरानुक्रमाभावः सादृश्ये सर्वेषामेव प्राधान्यापेक्षया सम्यग्युद्धहरणादिनोद्वोढुं मनो दधे निश्चिकाय, सदार्चितयद्वा । अथ वा—सदृशीं तादृशबुद्ध्यादिभिर्लक्षणै राधाद्यैकात्मत्वादिति भावः । अत एव मनोदधे एतावन्तं कालं मनोऽपिदध इति भावः ॥ २४ ॥ बन्धूनां पित्रादीनाम् । ततः कृष्णात् । कृष्णद्विट् जन्मांतरीयसंस्कारवशेन कृष्णविरोधी । इत्यर्थ इति—किममन्यतेति साकांक्षत्वाद्वरमिति शेषः कार्य इत्याशयः । बन्धूनां पित्रादीनाम्, अनादरे षष्ठी । एवं मुनींद्रेण भीष्मकस्य साधुत्वमेव दर्शितम् । ततस्तस्मात्कृष्णात्, भगिनीदानं बंधून्वा निवार्य । हे नृपेति—नृपत्वाभिमानेन तमनृपं मत्वेति भावः ॥ २५ ॥

### श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी

गुणैर्महान् कन्यैका रुचिरानना इति कन्यका तु वराननेति पाठे पूर्ववदेव तात्पर्यम् ॥ २१ ॥ अनन्तर इति रुक्मरथादौ सर्वत्रान्वयः । क्रमजातत्वविवक्षया सा च रुक्मिण्याः सर्वकनिष्ठात्वेन पित्रोः प्रेमपात्रत्वविवक्षया च सती रूपगुणैरुत्तमा ॥ २२ ॥

---

१. श्रीबादरायणि–प्रा. पा. । २. सा पश्यन्ती–वीर. । ३. मान तं–प्रा. पा. । ४. श्रयाम्–श्रीधर. वंशी. जीव. वीर. विज. ।
५. रुक्मी निवार्य कृष्णद्विट् चैद्याय समकल्पयत्–विज. ।

श्रीः सम्पत् वीर्य्यस्य गुणान्तर्गतत्वेपि पृथगुक्तिः क्षत्रियात्वेन तस्य विशेषापेक्षया परमानन्दप्रदत्वे रूपादीनां पूर्वपूर्वाधिक्यमूह्यं ता उप समीप एव श्रुत्वा कथं पितुर्गृहमागतैः सर्वैरेव गीयमानाः कविभिर्गीततया निवद्धत्वात् प्रीत्या मधुरस्वरेणोच्चैर्वर्ण्यमानत्वाच्च सदृशं योग्यम् आत्मनस्तादृशत्वात् ॥ २३ ॥ लक्षणं स्वीयभगवल्लक्ष्मवल्लक्ष्मीलक्ष्म औदार्य्यं वदान्यत्वं कुलीनत्वादि महत्त्वं वा शीलं सुस्वभावः गुणाः सौकुमार्य्यसौरभ्यादयो लज्जादयश्च तैराश्रीयत इत्याश्रयं स्त्रीत्वमार्षं तेषामाश्रय आश्रयणं यस्यामिति ( वा ) च अपि कृष्णः सर्वचित्ताकर्षकगुणो भगवानपि बुद्ध्यादेर्गुणान्तर्गतत्वेऽपि पृथगुक्तिः पूर्ववत्तत्तद्विशेषाभिप्रायेण अत एव सदृशीम् अत्र चरणचिह्नादिलक्षणानां सादृश्यं दक्षिणवामविपर्य्ययेणेति गम्यते स्त्रीपुरुषयोः सामुद्रकादौ तथा प्रशस्तत्वात् बुद्ध्यादीनां पूर्वोत्तरानुक्रमाभावः सादृश्ये सर्वेषामेवाऽप्राधान्याऽपेक्षया सम्यक् युद्धहरणादिनापि उद्वोढुं मनो दधे निश्चिकाय सदाऽचिन्तयद्वा अथवा सदृशीं तादृशबुद्ध्यादिभिर्लक्षणैं राधाचैकात्मकत्वादिति भावः । अत एव मनो दधे । एतावन्तं कालं मनोऽपि न दध इति भावः ॥ २४ ॥ तथाप्यञ्जसा विवाहे हेतुमाह—वन्धूनामिति । पित्रादीनां सर्वेषाम् अनादरे षष्ठी एवं मुनीन्द्रेण भीष्मकस्य साधुत्वमेव दर्शितं तथाग्रे पुत्रस्नेहवशानुग इत्यत्र महामतिरित्यत्र च तैरपि व्याख्यास्यते ततस्तस्मात् कृष्णात् भगिनीदानं तान् बन्धून् वा निवार्य्य हे नृपेति परमाश्चर्यत्वात् ॥ २५ ॥

### श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी

गुणैर्महान्, 'वरानना' इति पाठेऽपि परमसौन्दर्य्य एव तात्पर्य्यम् ॥ २१ ॥ अग्रज इति तस्य सर्वमान्यतोक्ता । अनन्तर इति तत्तन्मध्ये अन्वयेन श्रीरुक्मिण्याः सर्वकनिष्ठत्वं बोधयति । स्वसा सहोदरभगिनीं, सतीं रूपगुणैरुत्तमा ॥ २२ ॥ मुकुन्दस्य परमानन्दप्रदस्य भगवत इति तद्रूपादीनामपि तादृशत्वमभिप्रेतम् । रूपं सौन्दर्य्यम्, वीर्य्यं पराक्रमः, गुणा विविधवैदग्ध्यादयः, श्रीः सम्पत्, वीर्य्यस्य गुणान्तर्गतत्वेऽपि पृथगुक्तिः क्षत्रियत्वेन, तस्य विशेषापेक्षया परमानन्दप्रदत्वे रूपादीनामुत्तरोत्तरस्मात् पूर्व्वपूर्व्वस्याधिक्यमूह्यम् । ता उप समीप एव श्रुत्वा । कुतः ? गृहं तस्या पितुर्वा, आगतैः सर्व्वैरेव जनैर्गीयमानाः, कविभिर्गीततया निबद्धत्वात्, यद्वा, प्रीत्या मधुरस्वरेणोच्चैर्वर्ण्यमानाः, सदृशं स्वतुल्यम्, आत्मनस्तादृशत्वात् ॥ २३ ॥ लक्षणं सामुद्राद्युक्त-सत्स्त्रीलक्षणम्, औदार्य्यं वदान्यत्वम्, कुलीनत्वादिमहत्त्वं वा, शीलं सुस्वभावः, गुणाः सौकुमार्य्यसौरभ्यादयो लज्जादयश्च, तैराश्रियते इत्याश्रयाम्, च अपि, कृष्णः सर्व्वचित्ताकर्षकरूपगुणो भगवानपि बुद्ध्यादेर्गुणान्तर्गतत्वेऽपि पृथगुक्तिः पूर्व्ववत्तत्तद्विशेषाभिप्रायेण, अत एव सदृशीं बुद्ध्यादीनां पूर्व्वपूर्व्वस्मादुत्तरोत्तरस्य सादृश्येऽपेक्षाधिक्येन तत्तत्क्रमेण निर्द्देशः । सम्यग् युद्धहरणादिनोद्वोढुं मनो दधे निश्चिकाय सदाचिन्तयदिति वा ॥ २४ ॥ तथाप्यविवाहे हेतुमाह—बन्धूनामिति । पित्रादीनां सर्व्वेषाम्, अनादरे षष्ठी, एवमत्र श्रीबादरायणिना श्रीभीष्मकस्य साधुत्वमेव बोधितम्, तथाग्रे तत् ( भा० १०।५३।७ ) 'पुत्रस्नेहवशानुगः इत्यत्र ( भा० १०।५३।३४ ) 'महामतिः' इत्यादौ च तैरपि व्याख्यातम् । ततस्तस्मात् कृष्णाद् भगिनीं तान् बन्धून् वा निवार्य्य हे नृपेति परमाश्चर्य्यात् ॥ २५ ॥

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका

इत्थमापृष्टो विस्तरतो वर्णयति—राजाऽऽसीदिति । विदर्भाणां देशानामधिपति महान् गुणैरिति शेषः । तस्य भीष्मकस्य सुताः पञ्च कन्यका त्वेकैव सा च वरानना आननग्रहणं सर्वावयवनामुपलक्षणं सर्वावयवसौन्दर्यशालिनीत्यर्थः ॥ २१ ॥ पुत्रान् क्रमेण निर्दिशन्कन्यकाख्यानमाह—रुक्मीति । अग्रजो रुक्मी ततः क्रमेण रुक्मरथादयः एषां रुक्म्यादीनां स्वसा भगिनी रुक्मिणी सा सती सुशीला ॥ २२ ॥ सा रुक्मिगी स्वगृहान्प्रत्यागतैर्ज्जनैर्गीयमानाः श्रीकृष्णस्य रूपसौन्दर्यवीर्यगुणा अन्ये गाम्भीर्यौदार्यादयः श्रीर्भोग्यभोगोपकरणादिसम्पत्तिः एताः पश्यन्ती शृण्वन्ती तं मुकुन्दमेवात्मनः सदृशमनुरूपं पतिं मेने ॥ २३ ॥ तथा कृष्णोऽपि गृहागतजनमुखाद् बुद्ध्यादिगुणैकतानां रुक्मिणीं श्रुत्वा आत्मनोऽनुरूपां भार्यां समुद्वोढुमुपयन्तुं मनश्चक्रे ॥ २४ ॥ एवं स्थिते रुक्मी बन्धूनां रुक्मीतरेषाम् इति शेषः । कृष्णायैव भगिनीं दातुमिच्छतां सतां हे नृप ! ततस्तां निवार्य्य कृष्णं द्वेष्टीति तथाभूतः सन् चैद्यं शिशुपालमेव भगिन्याः पतिममन्यत चैद्यायैव दातुं निश्चिकायेत्यर्थः ॥ २५ ॥

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली

वरं मनोहरम् आननं यस्याः सा तथा ॥ २१–२३ ॥ गृहागतैर्जनैः ॥ २४–२५ ॥

### श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः

कृष्णश्चेत्यादि । सदृशीं भार्यामिति । यथा श्रीकृष्णः स्वयं भगवान्, तथा सापि स्वयं भगवतीत्यर्थः ॥ २४–२५ ॥

### श्रीनाथचक्रवर्तिपादविरचिता चैतन्यमतमञ्जूषा

कृष्णश्च सदृशीं भार्यामित्यत्र-च-कारेण पूर्वोक्तं सर्वमेवाक्षिप्यते, तच्च गृहागतैर्गीयमानत्वादि ॥ २४–३५ ॥

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी

भगिनीं कृष्णाय दातुमिच्छतो बन्धून् पित्रादीन् अनादृत्य स्वबलादेव ततः कृष्णात्तान्निवार्य्य रुक्मी तां दातुं वरं चैद्यम् अमन्यतेत्यन्वयः ॥ २५ ॥

### गूढार्थदीपिनी

अग्रजो ज्येष्ठः । तदनन्तरोऽनुज । इति सर्वत्रान्वेति ॥ २२ ॥ सा रुक्मिणी गृहागतैर्नारदादिभिः गीयमानाः ॥ २३ ॥ समुद्वोढुम् उपयन्तुम् दधे चकार ॥ २४ ॥ बन्धूनां पित्रादीनाम् ।ताननादृत्य । ततः कृष्णाय दानात् बन्धून् निवार्य । द्विट् जन्मान्तरीयसंस्कारवशेन ॥ २५ ॥

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः

कृष्णः स्वयं भगवान् सदृशीं स्वयं लक्ष्मीम् ॥ २४ ॥ ततः कृष्णात् बन्धून् निवार्य चैद्यं शिशुपालं वरममन्यत ॥ २५ ॥

### श्रीसत्यधर्मकृता श्रीभागवतटिप्पणी

नाम प्रसिद्धः ॥ २१ ॥ रुक्मी अग्रजः प्राथमिको येषां पञ्चानां स्वसा भगिनी ॥ २२ ॥ गृहागतैर्नारदादिभिर्गीयमाना रूपवीर्यगुणश्रियो रूपवीर्ययोरितरेषां गुणानां च श्रियः सम्पदः उपसृत्य तं सदृशं पतिं मेने ॥ २३ ॥ गृहागतैर्वर्णितां लोकदृष्ट्या बुद्धिश्च लक्षणानि चौदार्यं च रूपं च शीलं सदाचारश्चान्ये गुणाश्च तेषामाश्रयो यस्यां तां तादृशीं भार्यां प्रकाशघनामुद्वोढुं परिणेतुं कृष्णश्च मनो दधे । सकामायाः सकामेनेत्युक्तलक्षणसम्पत्ती राक्षसस्य गान्धर्वस्य विवाहस्य स्फोरिता भवत्यनेनेति ज्ञेयम् । मनो दधे ॥ २२ ॥ बन्धूनां पित्रादीनां रुक्मी निवार्य । अनेन तत्सर्वापेक्षया बलिष्ठता रुक्मिणो द्योत्यते । निवारणे कारणमीरयति । कृष्णं द्वेष्टीति कृष्णद्विडिति । तां भगिनीं बन्धूनामिति द्वितीयान्तं सत् भगिनीपदेनाप्यावृत्तमन्वेति । बन्धुभिः पित्रादिभिः । ऊनां तत्कार्याननुमतिमत्तत्कामिति बन्धुभिरूनेति तां चैद्याय शिशुपालाय समकल्पयत् तां दातुं मनश्चकारेति यावत् । अनेन स किं चकारेत्येतदप्युत्तरयति । चैद्या चैद्यस्यायसमायासं गुढोत्मा मरुतो मारुतत्वत इत्यादिवत् यकारोत्तरदीर्घलोपः । अकल्पयत्कल्पयामासेति । तथोक्तं प्राक् । यद्वा । चैद्यस्यायसं अयःसम्बन्धि शकलं चणकादिकम् । अत एवामाणकं लोहचणकानोपादातुं नापहातुं योग्या इति । तदजीर्यत्कल्पयामास । तद्भ्रातृनिर्वारणमवेत्य ज्ञात्वाऽसितापाङ्गी असितः कालोपाङ्गश्च कटाक्षश्च स यस्याः सा । अन्तरङ्गिको भावश्चासिते कृष्णेऽपाङ्गो यस्याः सेति । ततोऽप्यसितात्कृष्णादेवापाङ्गोऽनङ्गो यस्याः सेति ज्ञेयः । अङ्गगात्रकण्ठेभ्यो वक्तव्यमिति वृत्तिकृन्मतेन ङीप् । अथवा नासिकोदरेति चशब्दादनुक्तसमुच्चायकासंयोगोपधादपि क्वचिद्भवतीत्युक्तेः । ङीष् । आप्तमिति स्वालोचितप्रमेयावहिः प्रकाशतां विप्रस्य प्रकटयितुम् । प्रायेण तदारभ्य वैदिकैरेव कन्याघटना इति मन्तव्यम् ॥ २५ ॥

### श्रीमद्वल्लभाचार्य्यकृता सुबोधिनी

एवं राज्ञः श्रवणौत्सुक्यं दृष्ट्वा स्वयोगबलेनैव दृष्टमिति अन्यतः श्रुतत्वमनुक्त्वापि कथामेवारमते राजासीदिति । आसीदित्येषा पुरावृत्तकथेति निरूपितम् । **भीष्मक** इति नाम प्रसिद्धेऽर्थे । तस्यान्यत्र स्थित्यभावाय तुल्यधर्माः सर्वे त एवेति निर्दिशति **विदर्भाधिपतिरि**ति । महानिति महत्त्वेन सत्वादयो गुणाः एकचत्वारिंशदतिदिष्टाः । अयमर्थः पूर्वस्माद्विशिष्टः । 'अभ्रातृमती न विवाह्ये'ति तदर्थं भगवतः पञ्चपर्वाविद्यायाः पञ्च देवाः मायाकार्यरूपाः लक्ष्म्या अप्यग्रे उत्पन्ना इति तान् निरूपयति **तस्य पञ्च** भवन्पुत्रा इति । 'मायया मे विनिर्मिता' इति । 'रमापि रूपं वव्रे द्वितीयमिव यत्प्रवदन्ति माया'मिति लक्ष्म्या मायारूपत्वात् मायाकार्यत्वाच्चाविद्यायाः तत्सहिता माया तत्र प्रादुर्भूता । अत एव सा जीवमेव व्याप्नोतीति मायामपि जीवपरां कर्तुं रुक्मी विचारितवान् । अत एव रुक्मिण्या रुक्मिप्रभृतिषु पक्षपातः, भगवत्कृते अपरितोषश्च । स्वरूपाज्ञाने निराकृते पञ्चाग्निरोधः फलिष्यतीति । भगवदीयेषु तस्य प्रतिष्ठाभावाय मुण्डितवान् । तस्य भीष्मकस्य पञ्च पुत्रा अभवन्, एका च कन्या । **वराननेति** । लोके सौन्दर्यं प्रशस्तमिति सौन्दर्यं मुग्धभावं च निरूपयन्नाह । दया च मुग्धभावे निरूपिता ॥ २१ ॥ तान् नामतो निर्दिशति **रुक्म्यग्रज** इति । कलेः स्थानं पञ्चात्मकं सुवर्णमिति तन्नामानः सर्व एव । अत एवाग्रे भगवान् वक्ष्यति 'तस्मात्प्रायेण न ह्याढ्या मां भजन्ती'ति । अग्रजो ज्येष्ठः रुक्मी सुवर्णसदृशः, वस्तुतो नाम तथा योगं नापेक्षते । **रुक्मरथ** इति द्वितीयः । **रुक्मबाहुस्तृतीयः** । अनन्तर इति त्रयाणामेकप्रकृतिकत्वम्, अन्येषां रुक्मिणांसहितानां भिन्नप्रकृतिकत्वमिति त्रयाणां निरूपणानन्तरमुक्तम् । अनन्तरमिति सर्वत्र सम्बध्यते । **रुक्मकेशश्चतुर्थः** । **रुक्ममाली पञ्चमः** । एतेषां यागानुसारेणाप्यर्थः स्वयमूह्यः । एषां स्वसा एकमातृका प्रिय- भगिनी च रुक्मिणी । यथैते दुष्टाः, तथा सापि भविष्यतीत्याशङ्क्याह सतीति ॥ २२ ॥ एवं तस्या उत्पत्तिमुक्त्वा, तस्यां भगवतः, भगवति तस्याश्च, गान्धर्वं विवाहं वक्तुं स्नेहं निरूपयति द्वाभ्याम् । **सोपश्रुत्येति** सा रुक्मिणी **मुकुन्दस्य** मोक्षदातुः स्वस्यापि पुनर्जन्मनिवृत्त्यर्थं भगवद्गुणानेव शृणोति । कन्याया अपेक्षितं रूपम्, वीर्यं क्षत्रियाणाम् । विद्यास्थानीयं यशः । कुलस्थानीयां श्रीः

लक्ष्मीः शोभा च । तेन धनसमृद्धिः सर्वसमृद्धिश्च सूचिता । एवं वरे योग्यानि पञ्च रूपाण्यप्युक्तानि । अन्तःपुरस्थायाः कन्यायाः कुत एतावच्छ्रवणमित्याशङ्क्याह **गृहागतैर्गीयमाना** इति । य एव ब्राह्मणाः विद्ययोपजीविनो वा साधवो वृद्धाः सर्वत्राप्रतिहतगतयः तैः गीयमानाः श्रुत्वा, तमेव भगवन्तं आत्मनः सदृशं पतिं मेने ॥ २३ ॥ भगवानपि तां सदृशीं भार्यां मेने । तत उद्वोढुमपि मनो दधे । तस्या अपि पञ्च गुणाः । एकविकलापि न ग्राह्या भवति । आदौ बुद्धिमती अपेक्ष्यते । अन्यथा गृहं विनश्येत् । स्त्रीलक्षणरहिता तु सामुद्रशास्त्रविरोधिनी भाग्यरहितैव भवति । औदार्याभावे लुब्धा सर्वमेव पुरुषार्थं नाशयेत् । रूपाभावे व्यर्थो विवाहः । शीलाभावे अधर्मं जनयेत् । अतः एते पञ्चापि गुणाः लोके प्रसिद्धिमापन्नाः यस्यां भवन्ति, सा विवाह्या । अन्वयः अव्यभिचारिसम्बन्धः । कृष्णश्चेति चकारः सादृश्यार्थं भगवानपि तादृश इत्याह । अत एव सदृशी । सम्यगुद्वाहः आहूय कन्यादानरूपः । स हि शोभाकरो भवति ॥ २४ ॥ तन्न जातमित्याह **बन्धूनामिच्छतां दातुमिति** । बान्धवाः पित्रादयः कुलसम्बन्धिनः दातुमिच्छतां सताम्, यतः कृष्णः सदानन्दः, अन्ये गुणाः फलसाधकाः, अयं तु साक्षादेव फलरूप इति । तत्र रुक्मी वरत्वेन भगवन्तं निवार्य, चैद्यं शिशुपालमेवामन्यत । स्वरूपाज्ञानेन हि स्वकार्यं साधनीयम् । तत्र पूर्वजन्मनि सीतार्थमेव रावणो हतः तस्यामभिनिविष्टचित्त एव प्राणान् जहौ । अतो लोकविचारेण तस्मै देयेति भवति । भगिनीत्वादस्य प्राबल्यम् । नृपेति सम्बोधनं राज्ञे राजकन्या देयेति तस्याभिप्रायस्त्वया ज्ञायत एवेत्येतदर्थम् । ततो हेतोः कृष्णाद्वा निवार्य, यतः **कृष्णद्विट्** । न हि तस्य स्वरूपनाशको भगवान् हितो भवति । अतः शत्रूणां मध्ये मुख्य इति चैद्य एव वरत्वेन स्वीकृतः । अनेन सर्वेषामेव तत्र सम्मतिरपि जातेति सूचितम् । राजा कुलीनः, सोऽपि महानिति ॥ २५ ॥

## विवरणटिप्पणी

**राजासीदि**त्यत्र । **तस्यान्यत्रे**ति । भीष्मकस्य महादेवावतारत्वेन कर्मासम्बन्धित्वादन्यत्र स्थितिमाशङ्क्य तदभावाय तत्संसर्गिणः सर्वेऽपि तुल्यधर्मा विदर्भदेशीयत्वात्कर्मासम्बन्धिन इति विदर्भाधिपतिपदेनोक्तमित्यर्थः । **अयमर्थ** इति । पूर्वं समाधिभाषा विवाहेऽपि वैदर्भीपदेन कर्मासम्बन्धस्तत्पितुरुक्त एव । महत्त्वरूपं ऽर्थोऽत्र तस्माद्विशिष्ट उक्त इत्यर्थः । अग्रे । **दया चेति** । 'दयाया भगिनी मूर्ति'रिति वाक्याद्भ्रातृनिरूपणे तद्भगिनीत्वेन दयारूपत्वं च निरूपितमित्यर्थः ।

## श्रीसुबोधिनी-सारः

शुकोक्तिः । विदर्भस्य देशस्याधिपतिः स्वामी महान् भीष्मको राजाऽभूत् नामेति पादसमाप्तौ तस्य राज्ञः पंच पुत्रा अभवन् । सुमुखी एका पुत्री चाभूत् ॥ २१ ॥ अग्रजो ज्येष्ठो रुक्मी रुक्मरथो रुक्मबाहुः अनन्तरोऽव्यवहितो रुक्मकेशो रुक्ममाली । एषां स्वसा भगिनी सती श्रेष्ठा रुक्मिणी ॥ २२ ॥ गृहमागतैर्नारदादिभिर्गीयमानाः कीर्त्यमाना मुकुन्दस्य श्रीकृष्णस्य रूपबलगुणशोभाः सम्पदो वोपश्रुत्याकर्ण्य सा रुक्मिणी तं श्रीकृष्णमेव सदृशमात्मनः तुल्यं पतिं मेने प्रतिजज्ञे ॥ २३ ॥ बुद्ध्यादिगुणांताकरां तां रुक्मिणीं सदृशीं भार्यां स्त्रीं कृष्णश्चापि समुद्वोढुं परिणेतुं चित्तं चकार ॥ २४ ॥ कृष्णाय भगिनीं दातुम् इच्छतां बन्धूनां सतां कृष्णद्विट् कृष्णशत्रुः रुक्मी ततः कृष्णान्निवार्य परिवर्ज्य चैद्यं शिशुपालममन्यत तस्या वरं प्रत्यजानीत ॥ २५ ॥

## गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

एवं पृष्टस्तद्विस्तरतो वर्णयति—राजासीदिति । विदर्भदेशाधिपतिर्गुणैश्च महान् भीष्मको नाम राजाऽऽसीत् । तस्यैका कन्या, पञ्च पुत्राश्चाभवन्नित्यर्थः । 'वरानना' इति उपलक्षणम्, सर्वावयवसौन्दर्ययुक्तेत्यर्थः ॥ २१ ॥ पुत्रनामान्याह—रुक्मीति । सती सद्गुणसम्पन्ना रुक्मिणी एषां रुक्म्यादीनां स्वसा भगिनी ॥२२॥ सा रुक्मिणी स्वगृहान्प्रति आगतजनैः गीयमानाः मुकुन्दस्य रूपं सौन्दर्यम्, वीर्यं प्रभावः, गुणाः अन्ये गाम्भीर्यौदार्यादयः, श्रीर्भोग्यभोगोपकरणादिसम्पत्तिः, ता एता उपश्रुत्य तमेव मुकुन्दमात्मनः सदृशमनुरूपं पतिं मेने ॥ २३ ॥ तथा कृष्णोऽपि तां रुक्मिणीं गृहागतजनमुखात् बुद्ध्यादिगुणाश्रयभूतां श्रुत्वा आत्मनः सदृशीं भार्यां मत्वा समुद्वोढुं उपयन्तुं मनो दधे ॥ २४ ॥ एवं स्थिते अन्येषां बन्धूनां पित्रादीनां भगिनीं रुक्मिणीं कृष्णाय दातुमिच्छतां सतां हे नृप ! तान् ततो दानात् निवार्य रुक्मी चैद्यममन्यत, शिशुपालाय दातुं निश्चयं कृतवानित्यर्थः । तत्र हेतुमाह—कृष्णद्विडिति ॥ २५ ॥

## अन्वितार्थप्रकाशिका

राजासीदिति । विदर्भदेशानामधिपतिर्गुणैश्च महान् भीष्मको नाम राजाऽऽसीत् । तस्य वरानना उपलक्षणतया सर्वावयवसुन्दरी एका पञ्च पुत्राश्चाभवन् ॥ २१ ॥ रुक्मीति । रुक्मी अग्रजः ज्येष्ठः तदनन्तरोऽनुजः रुक्मरथः अनन्तरशब्दोऽग्रेऽप्यन्वेति । तस्यानन्तरः अनुजः रुक्मबाहुः तदनुजौ रुक्मकेशो रुक्ममालीति च सती सद्गुणसंपन्ना रुक्मिणी एषां रुक्म्यादीनां स्वसा भगिनी ॥ २२ ॥ सेति । सा रुक्मिणी स्वगृहान् प्रत्यागतैर्जनैः गीयमानाः मुकुन्दस्य रूपं सौन्दर्यं प्रभावः गुणाः अन्ये गाम्भीर्यौदार्यादयः श्रीर्भोग्यभोगोपकरणादिसम्पत्तिः ता एता उपश्रुत्य तमेव मुकुन्दमात्मनः सदृशमनुरूपं पतिं मेने ॥ २३ ॥ तामिति ।

कृष्णोऽपि तां रुक्मिणीं गृहागतजनमुखात् बुद्धिलक्षणौदार्यरूपशीलगुणानामाश्रयभूताम् । स्त्रीत्वमार्षम् । तेषामाश्रयो यस्यामिति वा श्रुत्वा आत्मनः सदृशीं भार्यां मत्वा समुद्वोढुम् उपयन्तुं मनो दधे ॥ २४ ॥ बन्धूनामिति । हे नृप ! बन्धूनां पित्रादीनां कृष्णाय दातुमिच्छतां सतामपिताननादृत्य कृष्णद्विट् रुक्मी ततो दानात् तान्निवार्य भगिनीं रुक्मिणीं दातुं चैद्यं शिशुपालं तस्या वरममन्यत ॥ २५ ॥

### श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्

सा रुक्मिणीं ॥ २३ ॥ कृष्णश्च कृष्णोऽपीति पाठौ ॥ २४ ॥ तस्याः वरं चैद्यममन्यत ॥ २५ ॥

### भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

इत्थं राज्ञा पृष्टो मुनिर्विस्तरतो वर्णयति । राजाऽऽसीदिति । विदर्भाणां देशानामधिपतिः, महान्, गुणैरिति शेषः । भीष्मकः नाम, नाम्ना भीष्मक इति प्रसिद्ध इत्यर्थः । राजा नृपतिः, आसीत् । तस्य भीष्मकनृपस्य, पञ्च पुत्राः, अभवन् । वरमाननं मुखं यस्याः सा वरानना । आननग्रहणं सर्वावयवानामप्युपलक्षणम् । सर्वावयवसौन्दर्यशालिनीत्यर्थः । एकाऽन्या, कन्या च, अभवत् ॥ २१ ॥ तत्पुत्रान् क्रमेण निर्दिशन् कन्यकाख्यानमाह । रुक्मीति । तत्पुत्रेषु मध्ये, रुक्मी, अग्रजो ज्येष्ठः, रुक्मरथो द्वितीयः, रुक्मबाहुस्तृतीयः, अनन्तरस्तदव्यवहितश्चतुर्थः, रुक्मकेशः, रुक्ममाली पञ्चमः । एषां पञ्चानां, स्वसा भगिनी, सती साध्वी, रुक्मिणी षष्ठी, अभवत् ॥ २२ ॥ सेति । सा रुक्मिणी, गृहागतैः स्वगृहान् प्रत्यायातैर्जनैः, गीयमानाः मुकुन्दस्य श्रीकृष्णस्य, रूपं सौन्दर्यं च वीर्यं बलं च गुणा गाम्भीर्यौदार्यादयश्च श्रीर्भोग्यभोगोपकरणादिसंपत्तिश्च ताः, उपश्रुत्य, तं मुकुन्दं, सदृशं स्वानुरूपं, पतिं मेने ॥ २३ ॥ तामिति । कृष्णश्च स्वयं श्रीकृष्णोऽपि, तां रुक्मिणीं, स्वगृहागतजनमुखादिति शेषः । बुद्धिश्च लक्षणानि च औदार्यं च रूपं च शीलं च गुणाश्च तेषामाश्रयां स्थानभूतां, तां रुक्मिणीं, श्रुत्वेति शेषः । सदृशीमात्मनोऽनुरूपां, भार्यां, समुद्वोढुमुपयन्तुं, मनः दधे चक्रे ॥ २४ ॥ बन्धूनामिति । हे नृप, बन्धूनां रुक्मीतरेषामिति शेषः । रुक्मीतरसकलबन्धूनामित्यर्थः । श्रीकृष्णायैव, भगिनीं दातुम् इच्छतां सतां, ताननादृत्येत्यर्थः । कृष्णद्विट् रुक्मी, ततः श्रीकृष्णात्, तान् निवार्य, चैद्यं अमन्यत । चैद्यायैव दातुं निश्चिकायेत्यर्थः ॥ २५ ॥

### कृष्णप्रिया

श्रीशुकदेवजी कहते हैं—परीक्षित् ! महाराज भीष्मक विदर्भदेश के अधिपति थे । उनके पाँच पुत्र और एक सुन्दरी कन्या थी ॥ २१ ॥ सबसे बड़े पुत्र का नाम था रुक्मी और चार छोटे थे—जिनके नाम थे क्रमशः रुक्मरथ, रुक्मबाहु, रुक्मकेश और रुक्ममाली । इनकी बहिन थी सती रुक्मिणी ॥ २२ ॥ जब उसने भगवान् श्रीकृष्ण के सौन्दर्य, पराक्रम, गुण और वैभव की प्रशंसा सुनी—जो उसके महल में आनेवाले अतिथि प्रायः गाया ही करते थे—तब उसने यही निश्चय किया कि भगवान् श्रीकृष्ण ही मेरे अनुरूप पति हैं ॥ २३ ॥ भगवान् श्रीकृष्ण भी समझते थे कि 'रुक्मिणी में बड़े सुन्दर-सुन्दर लक्षण हैं, वह परम बुद्धिमती है; उदारता, सौन्दर्य, शीलस्वभाव और गुणों में भी अद्वितीय है । इसलिये रुक्मिणी ही मेरे अनुरूप पत्नी है । अतः भगवान् ने रुक्मिणी जी से विवाह करने का निश्चय किया ॥ २४ ॥ रुक्मिणीजी के भाई-बन्धु भी चाहते थे कि हमारी बहिन का विवाह श्रीकृष्ण से ही हो । परन्तु रुक्मी श्रीकृष्ण से बड़ा द्वेष रखता था, उसने उन्हें विवाह करने से रोक दिया और शिशुपाल को ही अपनी बहिन के योग्य वर समझा ॥ २५ ॥

**तदवेत्यासितापाङ्गी वैदर्भी दुर्मना भृशम् । विचिन्त्याप्तं द्विजं कञ्चित् कृष्णाय प्राहिणोद् द्रुतम् ॥ २६ ॥**
**द्वारकां स समभ्येत्य प्रतीहारैः प्रवेशितः । अपश्यदाद्यं पुरुषमासीनं काञ्चनासने ॥ २७ ॥**
**दृष्ट्वा ब्रह्मण्यदेवस्तमवरुह्य निजासनात् । उपवेश्यार्हयाञ्चक्रे यथाऽऽत्मानं दिवौकसः ॥ २८ ॥**
**तं भुक्तवन्तं विश्रान्तमुपगम्य सतां गतिः । पाणिनाभिमृशन् पादावव्यग्रस्तमपृच्छत ॥ २९ ॥**
**[1]कच्चिद् द्विजवरश्रेष्ठ धर्मस्ते वृद्धसम्मतः । वर्तते नातिकृच्छ्रेण संतुष्टमनसः सदा ॥ ३० ॥**
**संतुष्टो यर्हि वर्तेत ब्राह्मणो येन केनचित् । अहीयमानः स्वाद्धर्मात् स [2]ह्यस्याखिलकामधुक् ॥ ३१ ॥**
**असंतुष्टोऽसकृल्लोकानाप्नोत्यपि सुरेश्वरः । अकिञ्चनोऽपि संतुष्टः शेते सर्वाङ्गविज्वरः ॥ ३२ ॥**

---

१. श्रीकृष्ण उवाच—च. पु. टि. । २. कर्मकृत्—प्रा. पा. । असंतुष्टः सुखं विप्र नाप्नोत्यपि—विज. ; असंतुष्टोसकृल्लोकान्—श्रीधर. वंशी. जीव. वीर. विश्व. शुक. ।

**कर्दमक्षमा**

अन्वयः—असितापाङ्गी, वैदर्भी, तद्, अवेत्य, भृशम्, दुर्मना, विचिन्त्य, कश्चित्, आप्तम्, द्विजम्, कृष्णाय, द्रुतम्, प्राहिणोत् ॥ २६ ॥ सः, द्वारिकाम्, सम्, अभ्येत्य, प्रतीहारैः, प्रवेशितः, काञ्चनासने, आसीनम्, आद्यम्, पुरुषम्, अपश्यत् ॥ २७ ॥ तम्, दृष्ट्वा, ब्रह्मण्यदेवः, निजासनात्, अवरुह्य, दिवौकसः यथा, आत्मानम्, तथा, उपवेश्य, अर्हयाञ्चक्रे ॥ २८ ॥ अव्यग्रः, सताम्, गतिः, भुक्तवन्तम्, विश्रान्तम्, उपगम्य, पाणिना, पादौ, अभिमृशन्, तम्, अपृच्छत ॥ २९ ॥ द्विजवरश्रेष्ठ, सन्तुष्टमनसः, ते, वृद्धसम्मतः, धर्मः, न, अतिकृच्छ्रेण, कच्चित्, सदा, वर्तते ? ॥ ३० ॥ स्वात्, धर्माद्, अहीयमानः, ब्राह्मणः, येन, केनचित्, यर्हि, संतुष्टः, वर्तेत, सः ( धर्मः ) हि, अस्य, अखिलकामधुक् ॥३१॥ असंतुष्टः, सुरेश्वरः, अपि, असकृत्, क्लेशान्, आप्नोति, अकिञ्चनः, अपि, संतुष्टः, सर्वाङ्गविज्वरः, शेते ॥ ३२ ॥

**श्रीधरस्वामिविरचिता भावार्थदीपिका**

अवेत्य ज्ञात्वा । असितापांगी सुनीलकटाक्षा । कृष्णाय कृष्णमानेतुं प्रेषयामास ॥ २६ ॥ प्रतीहारैर्द्वारपालैः ॥ २७ ॥ आत्मानं श्रीकृष्णम् ॥ २८ ॥ अभिमृशन् शनैः संमर्दयन् ॥ २९-३० ॥ स धर्मोऽस्य ब्राह्मणस्याखिलकामदोग्धा भवति । यद्वा स ब्राह्मणोऽस्य विश्वस्याखिलकामधुगिति ॥३१॥ लोकानाप्नोति लोकाल्लोकांतरं पर्यटति । नैकत्र निर्वृतस्तिष्ठतीत्यर्थः । नाप्नोतीति पाठे सुरेश्वरोऽपि भूत्वा लोकान्नाप्नोत्युत्तमलोकान्प्राप्तोऽप्यप्राप्त इव क्लिश्यतीत्यर्थः । शेते सुखमास्ते इत्यर्थः । तदेवाह—सर्वेष्वंगेषु वाक्पाण्यादिषु विज्वरस्तापरहितः ॥ ३२ ॥

**श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः**

तत् रुक्मिहार्दम् । आप्तं विश्वस्तम् "आप्तः प्राप्ते सत्यवाचि विश्वस्ते चान्यलिंगकः" इति निरुक्तिः । कृष्णायेति चतुर्थी "क्रियार्थोपपदस्य च कर्मणि स्थानिनः" इति सूत्रात् ॥ असितापांगीति कातर्येण तन्मालिन्यातिशयस्मरणात् । यद्वा—असिते श्रीकृष्णे तद्वर्त्मनि अपांगं यस्याः सा । अत एव विचिन्त्य लज्जादिपरित्यागेन स्वयमेव कर्तव्यं तत्सहायं च निश्चित्य । यद्वा—झटित्येव भ्रात्रादिभिर्मम दुर्विवाहे निश्चयः कृतस्तत्राद्यपर्यंतं तेन तु योगिनाऽपि सर्वं ज्ञात्वापि यदनुसंधानं न कृतं तत्कुत्राप्यन्यत्र तस्य परमासक्तिर्भवेत्, श्रूयते च गोकुले तस्य परमप्रेयस्यः, अतो निजजनन्यादिपु तदेकवरणं विना निजमरणादिकं श्रावितमप्यकिंचित्करम्, किन्तु तस्मिन्नेव तच्छ्रावितं कथंचित्सिद्धिकरम्, यतस्तेन गुणिशेखरेण प्रपन्नजनमात्रदुःखाऽसहिष्णुतया स्वदुःखमपि संव्रियत इति च श्रूयते यथा सैरंध्रीप्रसंगे । तस्मान्मया लज्जादिकं परित्यज्य दूतः संदेशश्च विधेय एव, यदि च तथापि तेन नाङ्गीक्रियेय तदा प्रथममेव प्राणाञ्जह्यामिति विचार्य ॥ २६ ॥ स रुक्मिणीप्रेषितविप्रः ॥ स दूतः । अभि आभिमुख्येनैव न तु भ्रांतिवक्रगत्या, एत्य प्राप्येति दैवानुकूल्यं दर्शितम् । प्रतीहारैरिति बहुत्वमेकैकशः । क्रमेण प्रवेशनेन द्वाराणां बाहुल्येन तेषामपि बाहुल्यात् । प्रकर्षेण स्तुत्यादिना । मार्गदर्शनेनांतः प्रवेशितः सन् । आद्यं सर्वांशिनम् । पुरुषं श्रीकृष्णमित्यर्थः काञ्चनासन इति श्यामसुन्दरस्याधिकशोभा सूचिता ॥ २७ ॥ तं विप्रम् । अवरुह्योत्तीर्य । देवा यथा श्रीकृष्णं पूजयन्ति तथा तं कृष्ण इत्यर्थः ॥ दृष्ट्वा दूरादेवावलोक्य । अर्हणे हेतुः—ब्रह्मण्यदेवः सर्वाराध्योऽपि ब्राह्मणभक्तः, सौशील्यात्तादृश इत्यर्थः । यथेति दृष्टान्तेन परमभक्तिं बोधयति ॥ २८ ॥ तं विप्रम् । अव्यग्र एकचित्तः "व्यग्रोऽनेकमनोवृत्तौ सक्तेग्ररहितेऽन्यवत्" इति धरणिः ॥ अव्यग्रः स्वस्थचित्तः सन्नपृच्छत् । यतः सतां सद्धर्माणां गतिः प्रथमाश्रयः ॥ २९ ॥ नातिकृच्छ्रेण सुखेन ॥ द्विजवरेषु तच्छ्रेष्ठेष्वपि श्रेष्ठः । तादृशत्वे कारणान्येवं पादोन चतुर्भिर्दर्शयंस्तेषां मूलमादौ सदयप्रश्नपूर्वकं स्थापयति—धर्म इति, यज्ञादिः । वृद्धानां प्राचीनद्वादशस्वयं भ्वादिभक्तानामाधुनिकानां स्वगुरुप्रभृतीनां संमत इति धर्मस्य तावच्छुद्धता वर्तत एव, किन्तु कृच्छ्रेण नातिकृच्छ्रेणानतिदुःसंपादत्वेन वर्तत इत्येव पृच्छ्यत इत्यर्थः । दुःखं विना धर्माऽसिद्धया सुखेनेत्यनुक्तिः, अतिदुःखस्य चानभीष्टत्वादति शब्दः, स च वृत्त्यादेः संतताऽप्राप्यत्वादिकं बोधयति । ननूद्यमे कृते कथं तत्स्यात्तत्राह—सदा प्राप्त्यभावेऽपि संतुष्टमनस इति ॥ ३० ॥ न हि धर्मो ब्राह्मणस्यैव कामधुग्भवत्यपि तु स्वानुष्ठातृमात्रस्येत्यरुच्याह—यद्वेति । "यदृच्छालाभसंतुष्टविप्रार्चाऽखिलकामधुक्" इत्यादि पुराणात् । तत्स्तुत्यर्थं संतोषमेव स्तौति—संतुष्ट इति । यर्हि तर्ह्येवाहीयमानऽभ्रश्यत् । हि एव । स एव । न त्वन्यः ॥३१॥ निर्वृतो सुखी । इत्यर्थ इति—लोकान्मनुष्याल्लोकांतरं मनुष्यांतरम्, इतः किञ्चित्प्राप्स्यामीतः किंचिदितीच्छयेति भावः । 'लोको जनेऽपि भुवने' इति मेदिनी । सुरेश्वर इन्द्रः । इत्यर्थ इति—"इच्छति शती सहस्रं सहस्रापो लक्षमीहते कर्तुम् । लक्षाधिपश्च राज्यं राज्येशश्चक्रवर्तित्वम् ॥ चक्रधरोऽपि सुरत्वं सुरत्वलाभे तु सुरपतित्वं हि । सुरपतिरूर्ध्वगतित्वं तथापि न निवर्तते तृष्णा ॥" इति गरुडोक्तेरिति भावः । इत्यर्थ इति—दुःखितस्य निद्रानुपलब्धेरिति भावः । तदेव सुखम् ॥ अन्वय व्यतिरेकाभ्यां तदेव दर्शयति—असंतुष्ट इति । असकृदिति पुनःपुनरभीष्टसिद्धावपि संतोषानुदयात् ॥ ३२ ॥

**श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी**

असितापाङ्गीति कातर्य्येण तन्मालिन्यातिशयस्मरणात् । यद्वा, असिते श्रीकृष्णे तद्वर्त्मनि अपाङ्गं यस्याः सा अत एव विचिन्त्य लज्जादिपरित्यागेन स्वयमेव कर्त्तव्यं तत्सहायं च निश्चित्य । यद्वा, हन्त झटित्येव भ्रात्रादिभिर्मम दुर्विवाहे निश्चयः कृतः तत्राद्यपर्यन्तं तेन तु योग्येनापि सर्वं ज्ञात्वापि यदनुसन्धानं न कृतं तत् कुत्रापि अन्यत्र तस्य परमासक्तिर्भवेत् श्रूयन्ते च गोकुले परमप्रेयस्यः, अतो निजजनन्यादिषु तदेकवरणं विना निजमरणादिकं श्रावितमप्यकिञ्चित्करं किन्तु तस्मिन्नेव तत् श्रावितं कथञ्चित्सिद्धिकरं यतस्तेन गुणिशेखरेण प्रपन्नजनमात्रदुःखासहिष्णुतया स्वदुःखमपि संव्रियत इति च श्रूयते यथा सैरिन्ध्रीप्रसङ्गे तस्मान्मया लज्जादिपरित्यागेन योग्योऽसौ दूतः सन्देशश्च विधेय एव यदि च तथापि तेन नाङ्गीक्रियेय तदा प्रथममेव प्राणान् जह्यामिति विचार्य्य ॥ २६ ॥ स द्विजः अभि आभिमुख्येनैव नतु भ्रान्तिर्वक्रगतया एत्य प्राप्येति दैवानुकूल्यं दर्शितं प्रतिहारैरिति । बहुत्वमेकैकशः क्रमेण प्रवेशनेऽपि द्वाराणां बाहुल्येन तेषामपि बाहुल्यात् प्रकर्षेण स्तुत्यादिना मार्गदर्शनेनान्तर्वेशितः सन् आद्यं सर्वांशिनं पुरुषं श्रीकृष्णमित्यर्थः । काञ्चनासन इति श्यामसुन्दरस्याधिकशोभा सूचिता ॥ २७ ॥ दृष्ट्वा दूरादेवालोक्य अर्हणे हेतुः ब्रह्मण्यदेवः सर्वाराध्योऽपि ब्रह्मण्यो ब्राह्मणभक्तः सौशील्यात्तादृश इत्यर्थः । यथेति दृष्टान्तेन परमभक्तिं बोधयति ॥ २८ ॥ अव्यग्रः आतिथ्यसिद्ध्याऽन्यपरित्यागेन वा स्वस्थचित्तः सन् अपृच्छत् यतः सतां सद्धर्माणां गतिः प्रथमाश्रयः ॥२९॥ द्विजवरेषु तच्छ्रेष्ठेष्वपि श्रेष्ठः तादृशत्वे कारणान्येव पादोनचतुर्भिर्दर्शयन् तेषां मूलमादौ सदयप्रश्नपूर्वकं स्थापयति, धर्म इति यज्ञादिः वृद्धानां प्राचीन-द्वादशभागवतानामाधुनिकस्वगुरुप्रभृतीनां च सम्मत इति धर्मस्य तावत् शुद्धता वर्त्तत एव किन्तु कच्चित् नातिकृच्छ्रेण अनति-दुःसम्पादत्वेन वर्त्तत इत्येव पृच्छ्यत इत्यर्थः । दुःखं विना धर्मासिद्ध्या सुखेनेत्यनुक्तिः अतिदुःखस्य चानभीष्टत्वादतिशब्दः स च वृत्त्यादेः सन्ततप्राप्यत्वादिकं बोधयति, ननूद्यमे कृते कथं तत्स्यात्तत्राह, सदाप्राप्यभावेऽपि सन्तुष्टमनस इति ॥ ३० ॥ तत्स्तुत्यर्थं सन्तोषमेव स्तौति–सन्तुष्ट इति । यर्हि तर्ह्येवाहीयमान अभ्रश्यन् यदीति पाठेऽपि स एवार्थः हि एव स एव न त्वन्यः ॥ ३१ ॥ अन्वयव्यतिरेकाभ्यां तदेव दर्शयति–असन्तुष्ट इति । असकृदिति पुनःपुनरभीष्टसिद्धावपि सन्तोषानुदयात् ज्वरश्चिन्तासन्तापः ॥३२॥

**श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी**

तदवेत्य भृशमत्यर्थं दुर्म्मना दुःखितचित्ता सती, असितापांगीति परमवैदग्धी सूचिता, अत एव कञ्चिद्द्विजं पुरोहित-कनिष्ठपुत्रमाप्तं विचिन्त्य विचार्य्य, यद्वा, स्वाक्षरैरीदृशः पत्रं लिखित्वेमं प्रस्थापयानीति कृत्यं निश्चित्य ॥ २६ ॥ स द्विजः, सम्यङ्निर्विघ्नतयाऽभितः सर्व्वतो यादववर्गगृहप्राप्तिक्रमेण एत्य प्राप्य, प्रतिहारैरिति बहुत्वमेकैकशः क्रमेण प्रवेशनेऽपि द्वाराणां वाहुल्यात्तेषामपि बाहुल्यात् प्रकर्षेण स्तुत्यादिना मार्गदर्शनेनान्तः प्रवेशितः सन्, आद्यं श्रेष्ठं पुरुष श्रीविष्णुम्, किंवा पुरुषोत्तमं निःशेषमहापुरुषलक्षणैर्युक्तं श्रीकृष्णमित्यर्थः । काञ्चनासन इति श्यामसुन्दरस्याधिकशोभा सूचिता ॥२७॥ दृष्ट्वा दूरादालोक्यैव, अवरुह्य आसनादवतीर्य्य, अर्हयाञ्चक्रे पादप्रक्षालन-मधुपर्काद्यर्पणादिना अपूजयत्, यतो ब्रह्मण्यदेवः; यथेति दृष्टान्तेनार्हणे परम-भक्तिं बोधयते ॥ २८ ॥ उपगम्य समीपे गत्वा, अव्यग्र आतिथ्यसिद्ध्यान्यकृत्यत्यागेन वा, स्वस्थचित्तः सन् सम्यग्विनयपूर्व्वक-मधुरवचनादिनाच्छत्, यतः सतां साधूनां गतिराश्रयः ॥ २९ ॥ हे द्विजवरेषु विप्रेषु श्रेष्ठ, श्रेष्ठ्यकारणमेव चतुर्भिर्दर्शयन् तस्यापि मूलमादौ पृच्छति—धर्म्म इति । वृद्धानां सम्मत इति, धर्म्मस्यावश्यकृत्यता श्रीभगवत्समर्पणादिगुणाश्चोक्ताः । नातिकृच्छ्रेण अनतिकष्टेन वर्त्तते सिध्यति, दुःखं विना धर्म्मासिद्ध्या सुखेनेत्यनुक्तिर्दुःखस्य चानभीष्टत्वादति-शब्दः । तच्च सन्तुष्ट्यैव स्यादि-त्याशयेनाह—सदा दुःखकालेऽपि सन्तुष्टमनस इति ॥ ३० ॥ यर्हि तर्ह्येवाहीयमानोऽभ्रश्यन्निति सन्तुष्टेरेवावश्यकतोक्ता । 'यदि' इति पाठेऽपि स एवार्थः, हिं एव स एव, न त्वयः ॥ ३१ ॥ असकृदित्यनेन कादाचित्कं सन्तुष्ट्यापि क्षेमं स्यादिति बाध्यते, किंवा, अस्य परेणान्वयः । अकिञ्चनो दरिद्रः, यतः सन्तुष्ट्यैव सर्वैरंगैर्ज्वरस्य कम्पादिभिरिव मनोवैकल्यादिलक्षणसर्व्वांशैर्विज्वरः—'चिन्ता ज्वरो मनुष्याणाम्' इत्यादि-न्यायेन चिन्तारहितः ॥ ३२ ॥

**श्रीसुदर्शनसूरिकृतशुकपक्षीम्**

प्रतीहारैः द्वाःस्थैः ॥ २७–३० ॥ स हि धर्मलोकान्नाप्नोति परधर्मांत् क्लिश्यतीत्यर्थः ॥ ३१–३३ ॥

**श्रीमद्वीरराघवाचार्यकृता भागवतचन्द्रचन्द्रिका**

तद्भ्रातुर्निश्चितमालक्ष्यासितावपाङ्गौ यस्याः सा वैदर्भी दुःखितचित्ता ततो विचिन्त्यालोच्याऽऽप्तं कञ्चिद्द्विजश्रेष्ठं द्रुतं त्वरितं यथा तथा श्रीकृष्णाय प्राहिणोत् कृष्णमानेतुं प्रेषयामासेत्यर्थः । क्रियार्थोपपदस्य'' ( २।३।१४ ) इति चतुर्थी ॥ २६ ॥ स द्विजः द्वारकां प्रति गत्वा तत्र द्वारपालैरन्तःप्रवेशितः काञ्चनमये सिंहासने स्थितं जगत्कारणं पुरुषं श्रीकृष्णं ददर्श ॥ २७॥ किञ्च, दृष्ट्वेति । तं दृष्टवन्तं द्विजमवलोक्य ब्रह्मणि कुले साधवो ब्रह्मण्यास्तेषां मध्ये देवः दीप्यमानः श्रेष्ठ इत्यर्थः । स भगवान् निजासनात्स्वकीयसिंहासनादवरुह्याऽवतीर्य्य द्विजमुपवेश्यार्हयाञ्चक्रे पूजयामास, तत्र दृष्टान्तः यथा दिवौकस इन्द्रादय आत्मानं

श्रीकृष्णरूपिणं पूजयन्ति तद्वदित्यर्थः ॥ २८ ॥ तमिति विश्रान्तं विगताध्वश्रमं तं द्विजम् उपगम्य स्वयं सताङ्गतिः श्रेयःप्राप्त्युपायस्तत्त्वात् सद्भिरेवमनुष्ठेयम् इति प्रदर्शयन् इवेति भावः। अभिमृशन् शनैः सम्मर्दयन्नव्यग्रः अवहितचित्तः तं द्विजश्रेष्ठमपृच्छत् ॥ २९ ॥ प्रश्नमेव वर्णयति—कच्चिदिति षड्भिः। हे द्विजवरश्रेष्ठ ! द्विजश्रेष्ठानामपि श्रेष्ठ ! ते तव धर्म आर्यसम्मतो वर्तते कच्चित् मदिष्ट इति भावः। कोऽसावार्य्यसम्मतः त्वदिष्टश्चेत्यतो विशिनष्टि—नातिकृच्छ्रेणानतिक्लेशेनायत्नलब्धेन सदा सन्तुष्टं मनो यस्य तस्य तव धर्म्म इति पूर्वेण सम्बन्धः। सन्तोष एव ब्राह्मणस्य परमो धर्म आर्यसम्मतो मदिष्टश्चेति भावः ॥ ३० ॥ एतदेवोपपादयति–सन्तुष्ट इति। यर्हि यदा येन केनचिदयत्नलब्धेनैव देहधारणोपयुक्तेन सन्तुष्टः सन् स्वस्माद्धर्माद्वर्णाश्रमोचिताद्धर्मादहीयमानो वर्तेत, स हि नित्यसन्तोषरूपो धर्मः अस्य नित्यसन्तुष्टस्य स्वधर्मादनपेतस्य च पुंसः अखिलान्कामानिष्टार्थान् दोग्धीति तथा स्यादित्यत्र "पूर्वादिभ्यो नवभ्यो वा" ( ७।१।१६ ) इति विकल्पात्स्मादेशाभावः। अखिलकामधुगित्यनेन वृद्धसम्मतत्वं फलितं शिष्टसम्मतस्यैव धर्मस्य फलसाधनत्वाव्यभिचारात् फलसाधनत्वाध्यवसायिनामेव शिष्टत्वात् ॥ ३१ ॥ एवं सन्तोषस्य पारलौकिकसुखसाधनत्वमुक्तमथेह लोकेऽपि सुखहेतुत्वं वक्तुमसन्तोषस्योभयत्र दुःखहेतुतामाह–असन्तुष्ट इत्यर्द्धेन। सुरेश्वरोऽप्यसन्तुष्टश्चेल्लोकाननुकूलतया लोक्यन्त इति लोका आनन्दाः सुखानीति यावत् तानैहिकामुष्मिकांश्च न प्राप्नोति अकिञ्चनोऽपि यदि सन्तुष्टश्चेत्सर्वाङ्गविज्वरः कस्मिंश्चिदङ्गेऽपि तापरहितः शेते ॥ ३२ ॥

### श्रीविजयध्वजतीर्थकृता पदरत्नावली

असितापाङ्गी नीलकटाक्षस्थला आप्तं विश्वस्तम् ॥ २६–२८ ॥ अव्यग्रः असम्भ्रान्तः ॥ २९–३० ॥ यः स्वाद्धर्मादहीयमानः स्वधर्मत्यागी न स्यात् ॥ ३१ ॥ सुरेश्वरोऽप्यसन्तुष्टः सुखं नाप्नोति अकिञ्चनो दरिद्रोऽपि सन्तुष्टः अलम्बुद्धिः ॥ ३२ ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

सर्वाङ्गविज्वर इव निर्वृतस्तिष्ठतीत्यर्थः ॥ ३२–४३ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

कृष्णाय कृष्णमानेतुम् ॥ २६ ॥ प्रतिहारैर्द्वारपालैः ॥ २७ ॥ आत्मानं स्वं यथा देवा अर्हयन्ति ॥ २८ ॥ अभिमृशन् संवाहयन् अभ्यग्रः तद्विवाहार्थमन्तर्वैयग्रे सत्यपीति भावः ॥ २९–३० ॥ स्वीयधर्मात् अहीयमानश्च्युतिरहितः स धर्म एव ॥ ३१ ॥ लोकान् आप्नोति लोकाल्लोकान्तरं पर्य्यटति न तु निर्वृणोतीत्यर्थः। सुरेश्वर इन्द्रोऽपि भूत्वा नाप्नोतीति पाठे तृष्णाज्वरार्त्तिवशात् लोकान् प्राप्तोपि न प्राप्नोतीत्यर्थः ॥ ३२ ॥

### गूढार्थदीपिनी

तत् भ्रातुर्हृतम् अवेत्य ज्ञात्वा। आप्तं विश्वस्तम्। कृष्णाय कृष्णमानेतुम्। प्राहिणोत् प्रेषयामास ॥ २६ ॥ प्रतीहारै द्वारपालैः ॥ २७ ॥ ब्रह्मण्यो ब्राह्मणभक्तः अवरुह्य अवतीर्य। देवा यथा आत्मानं परमात्मानं श्रीकृष्णं पूजयन्ति ॥ २८ ॥ अभिमृशन् शनैः शनैः संमर्दयन् ॥ २९ ॥ नातिकृच्छ्रेण सुखेन ॥ ३० ॥ अहीयमानोऽच्यवमानः। हि एवार्थे ॥ ३१ ॥ असकृत् पुनः पुनः आप्नोति तेषु भ्रमति। नैकत्र सुखितः सन् तिष्ठतीत्यर्थः। विज्वरस्तापरहितः शेते सुखमास्ते ॥ ३२–३३ ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

तद्भ्रातुर्मतमवेत्य ज्ञात्वा असितापाङ्गी सुनीलकटाक्षी कृष्णाय कृष्णमानेतुं द्विजं प्राहिणोत् प्रेषयामास ॥ २६ ॥ प्रतीहारैः द्वारपालैः आद्यं विश्वहेतुम् ॥ २७ ॥ आत्मानं श्रीकृष्णं यथा देवाः निजासनेभ्यः अवरुह्य तदुचित आसने उपवेश्य अर्हयन्ति तद्वत् ॥ २८ ॥ अभिमृशन् संवाहयन् ॥ २९ ॥ नातिकृच्छ्रेण यदृच्छालाभेन सन्तुष्टमनसः तव वृद्धसम्मतः वर्णाश्रमोचितः धर्मः वर्तते कच्चित् ॥ ३० ॥ स्वात्स्वकीयात् धर्मात् अहीयमानः स धर्मः अस्य ब्राह्मणस्य स ब्राह्मणो वा अस्य लोकस्य अखिलकामधुक् ॥ ३१ ॥ सुरेश्वरोऽपि असन्तुष्ट असकृत् लोकान् आप्नोति लोकात् लोकान्तरमटति, सन्तुष्टस्तु अकिञ्चनो निर्धनोपि सर्वाङ्गविज्वरः शेते ॥ ३२ ॥

### श्रीसत्यधर्मकृता श्रीभागवतटिप्पणी

प्रतीहारैर्दौवारिकैः। गतम् ॥ २६ ॥ दिवौकसा देवा आत्मानं स्वं यथा तथाऽर्हयाञ्चक्रेऽपूजयत् ॥ २७ ॥ यद्यपि कन्यानिश्चयनायायातैर्वरगृहे न भोक्तव्यमिति किंवदन्ती तथाऽपि नित्याविय गिनो रुक्मिणीकृष्णयोरयं विहार इति ध्वनयितुं भुक्तवन्तमित्युक्तिरिति ज्ञेयम्। विश्रान्तं विध्वस्ताध्वश्रमं पादौ पाणिनाऽभिमृशन् अव्यग्रोऽव्याकुलचेतास्तं विप्रमपृच्छतापृच्छत् ॥ २८ ॥ हे द्विजवरश्रेष्ठ। वृद्धसम्मतस्ते धर्मो नातिकृच्छ्रेणानायासेन वर्तते कच्चित् ॥ २९ ॥ स हि तादृशो द्विजः स्वाद्धर्मादहीयमानो यद्देशे वर्तते राज्ञः सर्वान्कामान्दोग्धीति स तथा ॥ ३० ॥ सुरेश्वरोऽप्यसन्तुष्टश्चेत्सुखं नाप्नोति। अकिञ्चनो दरिद्रः कियतावदेवलब्धेन

सन्तुष्टः सर्वाङ्गविज्वरः सर्वाङ्गीणोपतापरहितः शेते ॥ ३१ ॥ उक्तं यदर्थमियत्तत्पर्यवसाययति ॥ विप्रानिति । भूतसुहृन्द्वेद्वाद्भूतं विष्णुः सुहृत्तमो येपामिति वा । यथोक्तमेकादशतात्पर्ये । सृष्टिस्थित्यादिहेतुत्वाद्भूतानि हरिरुच्यते । न तु वस्तुस्वरूपत्वात्स हि सर्वेश्वरेश्वर इति वस्तुतत्वत इति । शान्तानक्रोधान् असकृद् भूयो भूयः शिरसा नमस्ये ॥ ३२ ॥

## श्रीमद्वल्लभाचार्य्यकृता सुबोधिनी

तद्रुक्मिण्या अनभिप्रेतमिति स्वात्मानं भगवद्गामिनं कर्तुमियेपेत्याह **तदवेत्येति** । आदौ तन्निश्चित्य भृशं दुर्मना जाता । नन्वग्रे भगवत्प्रापकाणि कर्माणि कृत्वा भगवन्तं प्राप्स्यति, किमित्युद्वेग इति चेत् । तत्राह **वैदर्भीति** । नास्यां कर्माण्युत्पद्यन्त इति । किञ्च । **असितापाङ्गी** परमसुन्दरी, परमसुन्दर एव युक्ता भवति, न तु जीवे कुरूपे । अतः आदौ दुर्मना भूत्वा पश्चादुपायचिन्तायां मित्रेणैवैतत्कार्यं कर्तव्यमिति विचार्य, सर्वस्य मित्रं गौर्ब्राह्मणो देवश्चेति, तत्रापि गौरज्ञा साधारणी च नात्यन्तं भगवत्पक्षपातिनी, अतो ब्राह्मण एवास्मिन् कार्ये भवतीति विचिन्त्य, कञ्चिदाप्तं द्विजं गूढार्थसाधकं द्रुतं शीघ्रमेन कृष्णाय प्राहिणोत् । अर्थात् सन्देशानुक्त्वा पत्रिकां वा दत्वा ॥ २६ ॥ तस्य वहिःकार्यमाह द्वारकां स समभ्येत्येत्यादिद्वयभिः स हि निर्गुणं सगुणं च कार्यं कृतवानिति शीघ्रमेव द्वारकां समभ्येत्य, पूर्वमेव भगवदुक्तैः प्रतीहारैरन्तः कृष्णसन्निधौ प्रवेशितः, कार्यं साधयितुमागतः, मध्ये स्वपुरुषार्थमपि साधितवानित्याह **अपश्यदिति** । ननु दर्शनमवान्तरकार्यमेव कुतो न भवेत्, तत्राह **आद्यं पुरुषमिति** । सर्वस्यापि पतिदर्शनं पुरुषार्थः, तत्रापि परमः पतिः भगवान्, सर्वे प्रकृतिरूपा इति पूर्वमवोचाम । तादृशो भगवान् कार्यार्थं समागतः व्यग्र एव भविष्यतीति कथं कार्यद्वयमपिसिध्येदित्याशङ्क्याह **काञ्चनासने आसीनमिति** । उपविष्टत्वादव्यग्रता । सुवर्णासने चोपविष्ट इति विषयपरिग्रहः । तेन कार्यद्वयसिद्धिरिति भावः ॥ २७ ॥ ततस्तस्य सन्माननामाह **दृष्ट्वा ब्रह्मण्यदेव इति** । प्रश्ननान्तरं सन्माननायां स्त्री निमित्तं भवेत् । आर्षज्ञानेन पूजायामपि कृत्रिमत्वसम्भावना स्यात् । ततश्च तद्दोषनिवृत्तिधर्मान्तरमेवाह **ब्रह्मण्यदेव इति** । ब्रह्मण्यश्चासौ देवश्चेति ब्राह्मणानां हितः समर्थश्च । अतो ब्राह्मणस्य अवरुह्य देवस्येव पूजां कृतवान् । तं प्रकारमाह । निजासनादवरुह्य, तत्र ब्राह्मणमुपवेश्य, अर्हयामास । प्रकारविशेपजिज्ञासायां स्वधर्ममतिदिशति । **दिवौकसो देवा यथा भगवन्तमिति** । भगवति गृहमागते इन्द्रः स्वासने भगवन्तमुपवेश्य यावती स्वसमृद्धिः तया सर्वयैव पूजयति । एवं भगवानपि सर्वसमृद्धया पूजितवान् ॥ २८ ॥ ततस्तस्य राज्ये प्रायेण धर्मो नास्तीति स्वदर्शनफलं तस्य ज्ञानमुपदिशतीत्याह **तं भुक्तवन्तमिति** । भोजनपर्यन्तं सर्वे उपचाराः कृताः । ब्राह्मणो हि मुख्यो भोजनप्रियः । ततो भोजनश्रमापनोदनादनन्तरं उपगम्य निकटे गत्वा । नन्वेवं ब्राह्मणमात्रे किमिति करोतीत्याशङ्क्याह **सतां गतिरिति** । लोकशिक्षार्थमेवं करोतीत्यर्थः । ततः पाणिना पादावभिमृशन् रुक्मिण्यामासक्तिरस्ति ततो व्यग्रः प्रश्नं करिष्यतीत्याशङ्क्य अव्यग्रस्तमपृच्छतेत्याह ॥२९॥ ज्ञानमुपदिशति **कच्चिद्द्विजवरेति पञ्चभिः** । चतुर्भिस्तस्य, एकेन तद्राज्ञः । चत्वारः पुरुषार्था ब्राह्मणस्य, राज्ञः अर्थकामौ नियतौ, मोक्षो नास्त्येव, धर्मः संदिग्धः । अतः स एव पृच्छयते । आदौ तस्य धर्मं पृच्छति **कच्चिद्द्विजवरश्रेष्ठ इति** । द्विजवराणां मध्ये श्रोत्रियाणां मैत्री क्रियत इति श्रेष्ठत्वम् । अतः सर्वेषां मित्रभूतत्वात् तथा सम्बोधनम् । यद्यप्ययं धर्मो वर्तत एव, तथापि वृद्धसम्मतोऽपि परम्परया समागतः श्रौतः स्मार्तः वर्तते कच्चित् । किञ्च । स्वपरपीडया क्रियमाणः शुद्धो धर्मो न भवतीति उत्तरकाण्डानुरोधमप्यङ्गीकृत्याह **नातिकृच्छ्रेणेति** । अतिकृच्छ्रेणधर्मोऽपि धर्मो न भवतीति । तत्रापि शुद्धमनस एव धर्मो भवति, ब्राह्मणानां मनःशुद्धिः संतोष एवेति तं पृच्छति **सदा संतुष्टमनस इति** । सदा संतुष्टं मनो यस्य ॥ अर्थं पृच्छति **संतुष्टो यर्हि वर्तेतेति** । संतोष एव ब्राह्मणानां धनं कामधेनु, नतु लं.कप्रसिद्धं धनम् । **येन केनचिदिति** । कर्मवशादवश्यं जीवनार्थं प्राप्यत एव । किञ्च । तावता चेत् संतुष्टः, कर्मफलदाता संतुष्टो भवतीति । असन्तोषेऽपि क्रियमाणे नाधिकं प्रयच्छति । असन्तुष्टश्च भवतीति तत्सन्तोपार्थं **स्वधर्मादहीयमानः** सर्वमेव स्वधर्मं कुर्वन् यर्हि वर्तेत । अनेनेयं स्थितिर्दुर्लभेति सूचितम् । स एव सन्तोषः, अस्य अखिलानेव कामान् दोग्धि ॥ ३१ ॥ कामं पृच्छति **असंतुष्ट इति** । कामो हि ब्राह्मणानां बाधकः, तदभावकाम एव पुरुषार्थरूपः । एवं भावे हेतुमाह **असंतुष्टः** असकृदेव क्लेशान्प्राप्नोति । विषयाभावादि चेत् । तत्राह **सुरेश्वरोऽपीति** । इन्द्रो हि परमैश्वर्यं प्राप्तवान् । कामे परमा काष्ठा । तादृशोऽपि यद्यसन्तुष्टः, क्लेशानेव प्राप्नोति । अत्रानुभवः प्रमाणम् । श्रुतिश्च 'प्रजापत आशया वै श्राम्यसी'ति । अन्वयव्यतिरेकाभ्यां व्यभिचारं वदन् व्यतिरेके अनुभवमाह **अकिञ्चनोऽपीति** । किमपि माऽस्तु । सन्तुष्टश्चेत्, अत्यन्तं सुखी । कथमित्याकाङ्क्षायां हेतुमाह **शेत इति** । सुखात्मिका हि निद्रा । उभयवादिसिद्धो हेतुर्वक्तव्यः । तत्र संतुष्टः शेते, नासन्तुष्टः, प्राप्यापि राज्यम् । जागरणेऽपि हेतुमाह । **सर्वाङ्गे** विगतो ज्वरो यस्येति । असन्तोषे चिन्ता भवति । चिन्तायां सर्वाङ्गे तापः प्रसिद्धः ॥ ३२ ॥

## श्रीसुबोधिनी-सारः

तदवेत्य ज्ञात्वाऽसितौ कृष्णावपांगौ कटाक्षौ यस्याः सा वैदर्भी रुक्मिणी भृशमत्यर्थं दुर्मना विमनस्काऽऽप्तं प्राप्तं यथार्थ वक्तारं वा द्विजं ब्राह्मणं कंचित् कृष्णाय कृष्णमानेतुं द्रुतं शीघ्रं प्रैपयत् ॥ २६ ॥ द्वारकां समभ्येत्य प्राप्य प्रतीहारैर्द्वारपालैरंतः प्रवेशितः स विप्रः सुवर्णस्यासनोपरि आसीनमाद्यं पुरुषं श्रीकृष्णमैक्षत ॥ २७ ॥ तं ब्राह्मणं दृष्ट्वा स्वासनादवरुह्यावतीर्य ब्रह्मण्य-

देवः श्रीकृष्ण आसने तमुपावेश्य पूजयाञ्चकार। दिवौकसो देवा आत्मानं स्वं विष्णुमिव ॥ २८ ॥ भुक्तवंतं कृतभोजनं विश्रांतं विखेदं तं विप्रमुपगम्य प्राप्य हस्तेन तत्पादौ संस्पृशन् सतां गतिः श्रीकृष्णो अव्यग्रः स्वस्थमनाः तमपृच्छत् ॥ २९ ॥ हे द्विजवर-श्रेष्ठ सदा संतुष्टचित्तस्य ते तव वृद्धानां संमतो धर्मो नातिकृच्छ्रेण सुखेन वर्तते कच्चित्किम् ॥ ३० ॥ स्वाद्धर्मादहीयमानोऽच्युतो ब्राह्मणो येन केनचित्प्राप्तेन संतुष्टो यर्हि वर्तेत अस्य विप्रस्य स हि धर्मः सर्वकामनापूरकः ॥ ३१ ॥ इन्द्रोऽप्यसंतुष्टोऽसकृन्मुहु-र्मुहुर्लोकानाप्नोति परिभ्रमते भ्रश्यति वा निष्किंचनोऽपि संतुष्टः सर्वेष्वंगेषु विज्वरस्तापरहितः शेते सुखमास्ते ॥ ३२ ॥

## गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

तत् भ्रातुर्निश्चयमवेत्य ज्ञात्वा असितौ अपाङ्गौ नेत्रप्रान्तौ यस्याः सा वैदर्भी रुक्मिणी भृशं दुर्मनाः सुदुःखितचित्ता सती विचिन्त्य श्रीकृष्णप्राप्त्युपायं विचार्य आप्तं तत्र प्राप्तं सद्वक्तारं वा कञ्चिद्द्विजं द्रुतं त्वरितं यथा स्यात्तथा कृष्णाय कृष्णमानेतुं प्राहिणोत् प्रेषयामासेत्यर्थः ॥ २५ ॥ ततश्च स द्विजः द्वारकां समभ्येत्य सम्यगागत्य तत्रत्यैः प्रतीहारैः द्वारपालैरन्तःप्रवेशितः सन् काञ्चनमये सिंहासने आसीनम् आद्यं जगत्कारणभूतं पुरुषं श्रीकृष्णं अपश्यत् ॥ २७ ॥ ब्रह्मणि ब्राह्मणकुले साधवो भक्ता ब्रह्मण्या-स्तेषां मध्ये देवः दीव्यमानः श्रेष्ठः कृष्णस्तं द्विजं निजासनादवरुह्य अवतीर्य तं तत्रासने उपवेश्य अर्हयाञ्चक्रे। तत्र दृष्टान्तमाह— यथेति। दिवौकसो देवा यथा आत्मानं श्रीकृष्णं पूजयन्ति तद्वदित्यर्थः ॥ २८ ॥ विश्रान्तं विगताध्वश्रमं भुक्तवन्तं तं द्विजं सतां सदाचारनिष्ठानां गतिः फलभूतः भगवानुपगम्य निकटमागत्य स्वपाणिना तत्पादावभिमृशन् शनैः सम्मर्दयन् अव्यग्रः सावधानः सन्नपृच्छत ॥ २९ ॥ तत्प्रश्नमेव दर्शयति—कच्चिदिति। हे द्विजवरश्रेष्ठ! नातिकृच्छ्रेण अनायाससिद्धेन सदा सन्तुष्टं मनो यस्य तस्य ते तव वृद्धानां सम्मतो धर्मः कच्चिद्वर्तते? तन्मदिष्टमित्यर्थः ॥ ३० ॥ उक्तमेव स्पष्टयन् सन्तोषफलमाह—सन्तुष्ट इति। यर्हि यदा येन केनाप्ययत्नलब्धेनैव देहधारणोपयुक्तेन सन्तुष्टः स्वात् स्ववर्णाश्रमोचिताद्धर्मात् अहीयमानश्च ब्राह्मणो वर्तेत तदा स एव सन्तोषपूर्वकमनुष्ठीयमानः स्वधर्म एवास्य पुरुषस्य अखिलान् कामान् इष्टार्थान् दोग्धीति तथाभूतो भवति। हि शब्दो एवका-रार्थे ॥ ३१ ॥ सन्तोषासन्तोषयोः फलमाह—सुरेश्वरः इन्द्रोऽपि असन्तुष्टश्चेदसकृल्लोकानाप्नोति लोकाल्लोकान्तरं सुखलाभार्थं पर्यटति, नैकत्र निर्वृतस्तिष्ठतीत्यर्थः। 'लोकान्नाप्नोति' इति पाठे तु उत्तमलोकान् प्राप्तोऽपि अप्राप्त इव क्लिश्यतीत्यर्थः। सन्तुष्ट-श्चेदकिञ्चनो भोजनाच्छादनोपयुक्तधनादिहीन ऽपि सर्वेष्वङ्गेषु विज्वरस्तापरहितः शेते सुखमास्त इत्यर्थः ॥ ३२ ॥

## अन्वितार्थप्रकाशिका

तदिति ॥ तत् भ्रातुर्दुराग्रहमनिवार्यमवेत्य ज्ञात्वा असितौ अपाङ्गौ नेत्रप्रान्तौ यस्याः सा वैदर्भी रुक्मिणी भृशं दुर्मनाः सुदुःखितचित्ता सती विचिन्त्य श्रीकृष्णप्राप्त्युपायं विचार्य आप्तं तत्र प्राप्तं सत्यवक्तारं वा कंचिद् द्विजं द्रुत त्वरितं यथा स्यात्तथा कृष्णाय कृष्णमानेतुं प्राहिणोत् प्रेषयामास ॥ २६ ॥ द्वारकामिति ॥ स द्विजः द्वारकां समभ्येत्य सम्यगागत्य तत्रत्यैः प्रतिहारैः द्वारपालैरन्तः प्रवेशितः सन् काञ्चनमये सिंहासने आसीनम् आद्यं पुरुषं श्रीकृष्णम् अपश्यत् ॥ २७ ॥ दृष्ट्वेति ॥ ब्रह्मणि ब्राह्मण-कुले साधवो भक्ता ब्रह्मण्यास्तेषां मध्ये देवः श्रेष्ठः कृष्णस्तं द्विजं दृष्ट्वा निजासनादवरुह्य अवतीर्य तं तत्रासने उपवेश्य अर्हयांचक्रे। दिवौकसो देवा यथात्मानं श्रीकृष्णं पूजयन्ति तद्वत् ॥ २८ ॥ तमिति ॥ विश्रान्तं विगताध्वश्रमं भुक्तवन्तं तं द्विजं सतां सदाचार-निष्ठानां गतिः फलभूता भगवानुपगम्य निकटमागत्य स्वपाणिना तत्पादावभिमृशन् शनैः संमर्दयन् अव्यग्रः विवाहार्थं वैयग्र्य-संभावनायामपि व्यग्रतारहितः सन्नपृच्छत। तदर्थः ॥ २९ ॥ कच्चिदिति ॥ हे द्विजवरश्रेष्ठ! नातिकृच्छ्रेण अनायाससिद्धेन सदा संतुष्टं मनो यस्य तस्य ते तव वृद्धानां संमतो धर्मः कच्चिद्वर्तते तन्मदिष्टमित्यर्थः ॥ ३० ॥ सन्तुष्ट इति ॥ यर्हि यदा येन केनाप्य-यत्नलब्धेनैव देहधारणोपयुक्तेन सन्तुष्टः स्वात् स्ववर्णाश्रमोचितात् धर्मादहीयमानः अप्रच्यवमानश्च ब्राह्मणो वर्तेत। तदा स एव सन्तोषपूर्वकमनुष्ठीयमानः स्वधर्म एवास्य पुरुषस्य अखिलान् कामान् इष्टार्थान् दोग्धीति तथाभूतो भवति। हिरेवार्थे। यद्वा। स ब्राह्मणः अस्य विश्वस्याखिलकामधुक् ॥ ३१ ॥ असन्तुष्ट इति ॥ सुरेश्वरः इन्द्रोऽप्यसंतुष्टश्चेदसकृल्लोकान् आप्नोति लोकाल्लो-कान्तरं सुखलाभार्थं पर्यटति। नैकत्र निर्वृतस्तिष्ठतीत्यर्थः। लोकान्नाप्नोतीति पाठे तूत्तमलोकान् प्राप्तोऽप्यप्राप्त इव क्लिश्यतीत्यर्थः। संतुष्टश्चेदकिञ्चनो भोजनाच्छादनोपयुक्तधनादिहीनोऽपि सर्वेष्वङ्गेषु विज्वरस्तापरहितः शेते सुखमास्ते ॥ ३२ ॥

## श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्

तदवेत्य बुद्ध्वा। असितापांगी श्यामकटाक्षी। आप्तं स्वहितजनकम्। कृष्णाय कृष्णमानेतुम् ॥ प्राहिणोत् प्रेषयति स्म ॥ २६ ॥ प्रतीहारैर्द्वाररक्षकैः ॥ २७ ॥ आत्मानं स्वमूर्तिं देवा यथा अर्च्चयन्ति स्म ॥२८॥ अभिमृशन् शनैः संवाहयन् ॥ २९ ॥ ते तव धर्मः ॥ अतिकृच्छ्रेण न वर्त्तते वा वर्त्तते ॥ ३० ॥ अहीयमानः अपतितः ॥ धर्मे स्थित इत्यर्थः। स विप्रः अस्य लोकस्य अखिलकामधुक् ॥ यद्वा स धर्मः अस्य विप्रस्य सर्वकामप्रदः ॥ ३१ ॥ सुरेश्वरोऽपि ॥ असंतुष्टः लोकानुत्तमलोकान्न आप्नोति तान् ॥ प्राप्तोऽपि असकृत् मुहुर्मुहुः क्लिश्यतीत्यर्थः। लोकानाप्नोतीति पाठे तु असकृत् लोकान् प्राप्नोति लोकं लोकं भ्रमति नैकत्र तिष्ठतीत्यर्थः। संतुष्टः सर्वेष्वंङ्गेष्विन्द्रियान्तःकरणेषु विज्वरो विगतक्लेशः शेते सुखमास्ते ॥ ३२ ॥

**भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी**

तदिति । असितावपाङ्गौ यस्याः सा, कृष्णवर्णनेत्रप्रान्तेत्यर्थः । वैदर्भी रुक्मिणी, तत् भ्रातुर्निश्चितं, अवेत्यालक्ष्य भृशमतिशयेन, दुर्मना दुःखितचित्ता सती, आप्तं स्निग्धं प्रामाणिकमित्यर्थः । कंचित्, द्विजं विप्रं, विचिन्त्य निश्चित्य, द्रुतं त्वरितं यथा तथा, कृष्णाय कृष्णमानेतुं, प्राहिणोत् । 'क्रियार्थोपपदस्य'—इत्यादिना चतुर्थी ॥ २६ ॥ द्वारिकामिति । स द्विजः द्वारिकां, समभ्येत्य, प्रतीहारैः प्रवेशितः सन्, काञ्चनासने काञ्चनमये सिंहासने, आसीनम् आद्यं जगत्कारणभूतं, पुरुषं श्रीकृष्णं अपश्यत् ददर्श । अत्र केचिदस्मात् श्लोकात् पूर्ववर्त्तिनं 'स दूरगमनात् खिन्नो विप्रो वृद्धोऽपि वाटिकाम् । समेत्य सुप्तः कृष्णेन द्वारिकां प्रापितः क्षणात्' इति श्लोकं पठन्ति तस्य प्रायोऽदर्शनान्न व्याख्यातः ॥ २७ ॥ दृष्ट्वेति । तं स्वं दृष्टवन्तं द्विजं, दृष्ट्वा अवलोक्य, ब्रह्मणि ब्राह्मणकुले साधवो ब्रह्मण्यास्तेषां मध्ये देवो दीप्यमानः श्रेष्ठ इत्यर्थः । एवंभूतो भगवान्, निजासनात् स्वकीय-सिंहासनात्, अवरुह्योत्तीर्य, तत्र द्विजं उपावेश्य, यथा दिवौकस इन्द्रादयः, आत्मानं स्वं पूजयन्ति, तथा अर्हयाञ्चक्रे पूजयामास ॥ २८ ॥ तमिति । सतां गतिः साधूनामपि श्रेयःप्राप्त्युपायभूतः, हेतुगर्भमिदम् । तत्त्वात्, सद्भिरेवमनुष्ठेयमिति दर्शयन्निर्वेति भावः । भगवान्, भुक्तवन्तं सम्यग्विहितभोजनं, विश्रान्तं विगताध्वश्रमं, तं द्विजं, उपगम्य पाणिना स्वहस्तेन, पादौ विप्रचरणौ अभिमृशन् शनैः संमर्द्दयन्, अव्यग्रोऽव्यवहितचित्तः सन्, तं द्विजं, अपृच्छत पृष्टवान् ॥ २९ ॥ कच्चिदिति षड्भिः श्लोकैः प्रश्नमेव वर्णयति । कच्चिदिति । हे द्विजवरश्रेष्ठ द्विजश्रेष्ठानामपि श्रेष्ठ, नातिकृच्छ्रेण अयत्नलब्धेनेत्यर्थः । सदा, संतुष्टमनसः, ते तव, धर्मः वृद्धसंमतः आर्यसंमतः, वर्त्तते कच्चित् । यतः संतोष एव ब्राह्मणस्य परमो धर्मः, आर्यसंमतः मदिष्टश्चेति भावः ॥ ३० ॥ एतदेवोपपादयति । संतुष्ट इति । ब्राह्मणः, यर्हि यदा, येन केनचित्, देहधारणोपयुक्तेनायत्नलब्धेन येन केनचित्पदार्थेनेत्यर्थः । संतुष्टः सन्, स्वात्स्वकीयात् स्ववर्णाश्रमोचितात्, धर्मात्, अहीयमानः वर्त्तेत, तर्हि स हि नित्यं संतुष्टतया वर्त्तनरूपो धर्म एव. अस्य संतुष्टस्य स्वधर्मादनपेतस्य ब्राह्मणस्य, यद्वा स ब्राह्मणः, अस्य विश्वस्य, अखिलान् समग्रान्, कामानभीष्टार्थान् दोग्धीति तथाभूतः, स्यात् । स्वादित्यत्र 'पूर्वादिभ्यो नवभ्यो वा' इति विकल्पात्स्मादेशाभावः ॥ ३१ ॥ एवं संतोषस्य पारलौकिकसुख-साधनत्वमुक्तमथेह लोकेऽपि सुखहेतुत्वं वक्तुमसंतोषस्योभयत्र दुःखहेतुतामाह । असंतुष्ट इति । सुरेश्वरः इन्द्रः भूत्वापि, असंतुष्टः स्यात् चेत्, लोकान् अपि असकृत् आप्नोति । लोकात् लोकान्तरं पर्यटति नैकत्र निर्वृतस्तिष्ठतीत्यर्थः । पाठान्तरे सुरेश्वरः भूत्वाऽपि असंतुष्टश्चेत्, लोकानुत्तमलोकान्, न प्राप्नोति । उत्तमलोकान् प्राप्तोऽपि अप्राप्त इव क्लिश्यतीत्यर्थः । यद्वा, अनुकूलतया लोक्यन्ते इति लोका आनन्दाः सुखानीति यावत् । तान् लोकान्, ऐहिकामुष्मिकांश्चानन्दान्नाप्नोतीत्यर्थः । अकिंचनः सन् अपि, यदि संतुष्टश्चेत्, सर्वाङ्गविज्वरः सर्वेष्वप्यङ्गेषु तापरहितः, शेते । सुखमास्ते इत्यर्थः ॥ ३२ ॥

**कृष्णप्रिया**

जब परमसुन्दरी रुक्मिणी को यह मालूम हुआ कि मेरा बड़ा भाई रुक्मी शिशुपाल के साथ मेरा विवाह करना चाहता है, तब वे बहुत उदास हो गयी । उन्होंने बहुत सोच-विचार कर एक विश्वासपात्र ब्राह्मण को तुरंत श्रीकृष्ण के पास भेजा ॥ २६ ॥ जब वे ब्राह्मण देवता द्वारकापुरी में पहुँचे, तब द्वारपाल उन्हें राजमहल के भीतर ले गये । वहाँ जाकर ब्राह्मण-देवता ने देखा कि आदि पुरुष भगवान् श्रीकृष्ण सोने के सिंहासन पर विराजमान हैं ॥ २७ ॥ ब्राह्मणों के परम भक्त भगवान् श्रीकृष्ण उन ब्राह्मण देवता को देखते ही अपने आसन से नीचे उतर गये और उन्हें अपने आसन पर बैठाकर वैसी ही पूजा की, जैसे देवता लोग उनकी ( भगवान् की ) किया करते हैं ॥ २८ ॥ आदर-सत्कार, कुशल-प्रश्न के अनन्तर जब ब्राह्मण देवता खा-पी चुके, आराम-विश्राम कर चुके तब संतों के परम आश्रय भगवान् श्रीकृष्ण उनके पास गये और अपने कोमल हाथों से उनके पैर सहलाते हुए बड़े शान्त भाव से पूछने लगे ॥ २९ ॥ ब्राह्मणशिरोमणे ! आपका चित्त तो सदा सर्वदा सन्तुष्ट रहता है न ? आपको अपने पूर्वपुरुषों द्वारा स्वीकृत धर्म का पालन करने में कोई कठिनाई तो नहीं होती ॥ ३० ॥ ब्राह्मण यदि जो कुछ मिल जाय, उसी में सन्तुष्ट रहे और अपने धर्म का पालन करे, उससे च्युत न हो, तो सन्तोष ही उनकी सारी कामनाएँ पूर्ण कर देता है ॥ ३१ ॥ यदि इन्द्र का पद पाकर भी किसी को सन्तोष न हो तो उसे सुख के लिये एक लोक से दूसरे लोक में बार-बार भटकना पड़ेगा, वह कहीं भी शान्ति से बैठ नहीं सकेगा । परन्तु जिसके पास तनिक भी संग्रह-परिग्रह नहीं है, और जो उसी अवस्था में सन्तुष्ट है, वह सब प्रकार से सन्ताप रहित होकर सुख की नींद सोता है ॥ ३२ ॥

**विप्रान् स्वलाभसंतुष्टान् साधून् भूतसुहृत्तमान् । निरहंकारिणः शान्तान् नमस्ये शिरसासकृत् ॥ ३३ ॥**
**कच्चिद् वः कुशलं ब्रह्मन् राजतो यस्य हि प्रजाः । सुखं वसन्ति विषये पाल्यमानाः स मे प्रियः ॥ ३४ ॥**
**यतस्त्वमागतो दुर्गं निस्तीर्येह यदिच्छया[1] । सर्वं[2] नो ब्रूह्यगुह्यं चेत् किं कार्यं करवाम ते[3] ॥ ३५ ॥**
**एवं सम्पृष्टसम्प्रश्नो ब्राह्मणः परमेष्ठिना । लीलागृहीतदेहेन तस्मै सर्वमवर्णयत्[4] ॥ ३६ ॥**

**कर्दमक्षमा**

अन्वयः—स्वलाभसंतुष्टान्, साधून्, भूतसुहृत्तमान्, निरहंकारिणः, शान्तान्, विप्रान्, असकृत्, शिरसा, नमस्ये ॥३३॥ ब्रह्मन्, वः, कुशलम्, कच्चित् ? हि, यस्य, राजतः, विषये, पाल्यमानाः, प्रजाः, सुखम्, वसन्ति, सः, मे, प्रियः ॥ ३४ ॥ यः, त्वम्, दुर्गम्, निस्तीर्य, यदिच्छया, इह, आगतः, अगुह्यम्, चेत्, सर्वम्, नः, ब्रूहि ? ते, किम्, कार्यम्, करवाम ! ॥ ३५ ॥ लीलागृहीत-देहेन, परमेष्ठिना, एवम्, सम्पृष्टसंप्रश्नः, ब्राह्मणः, तस्मै, सर्वम्, अवर्णयत् ॥ ३६ ॥

**श्रीधरस्वामिविरचिता भावार्थदीपिका**

स्वलाभः स्वत एव प्राप्तो लाभ आत्मलाभो वा तेन संतुष्टान्पूर्णान्साधून् स्वधर्मनिष्ठान् ॥ ३३ ॥ यस्य राज्ञो विषये देशे ॥ ३४ ॥ यतः स्थानात् । यदिच्छया यत्कार्येच्छया । दुर्गं समुद्रम् ॥ ३५ ॥ संपृष्टः संप्रश्नः प्रष्टव्योऽर्थो यं सः । परमेष्ठिना परमेश्वरेण । बंधूनामनभिप्रेतं रुक्मिणश्चेष्टितमित्यादि सर्वम् ॥ ३६ ॥

**श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः**

स्वत इति तस्यार्थाश्रयणगौरवादर्थांतरमाह—आत्मेति । तेनात्मलाभेन । पूर्णांस्तृप्तान् ॥ एवं संतुष्टिमात्रेण स्वयं सुखी स्यात्तदनुगतैश्चान्यैर्गुणैः सर्वान्सुखयन्परमपूज्यः स्यादित्याह—विप्रानिति । बहुत्वं प्रत्येकनमस्कारविवक्षया । शान्तान् रागद्वेषादि-रहिताँस्तत्त्वनिष्ठान्वा । एषामुत्तरोत्तरस्मिन्कैमुत्यं श्रैष्ठ्यं चोह्यम् । शिरसा न तु वाङ्मात्रेण, तच्चासकृत् । यद्वा—स्वस्य मम लाभेन संतुष्टान् । तथा चैकादशे—'मया संतुष्टमनसः' इत्यादि । यतः साधून् मद्भक्तान् 'साधवो हृदयं मह्यम्' इत्यादि नवमे । इत्येवं विशेषणानां व्यतिक्रमेण हेतुत्वादिकं ज्ञेयम् । अयं भावः—भवानीदृश एव काप्यपेक्षा नास्त्येव तथाप्यागमनेन यन्मामनुजग्राह तेनाहं वशीकृतस्त्वदाज्ञां यत्नतः संपादयिष्यामीति ॥ ३३ ॥ "नीवृज्जनपदो देशो विषयस्तूपवर्तनम्" इत्यमरः । स राजा ॥ एवमतिकृच्छ्रसाध्यत्वेऽपि संतोषात्तस्य धर्मसिद्धिं मत्वापि तद्विषेऽव्यतिकृच्छ्रस्यानभीष्टतया तदुपगमहेतुं राजानुग्रहं पृच्छति—कच्चिदिति । कुशलम् उपद्रवो न स्यात्साहाय्यञ्च भवेदित्यर्थः । ब्रह्मन्निति वेदवित्त्वेन राज्ञां सर्वथा पूज्यस्त्वमिति भावः ॥ ३४ ॥ दुर्गं दुःखेन गम्यम् "दुर्गं दुःखाब्धिराज्यांगकठिनेषु गिरौ तथा" इति निरुक्तिः ॥ अगुह्यं चेत्सर्वं ब्रूहीति विनयात् । किं करवाम, तदाज्ञापयेति शेषः ॥ ३५ ॥ तस्मै परमेष्ठिने । "परमेष्ठी ब्रह्मविष्णुशिवस्वामिधुवेषु च । द्विजोत्तमे स्वयम्भूश्च तथैव परिकीर्तितः ॥" इति कोशसारे ॥ परमेष्ठिनेति सर्वज्ञत्वमुक्तम् । तथापि प्रश्ने हेतुः—लीलेति । क्रीडार्थं प्रकटितमनुष्यदेहेन तादृश्या एव मनुष्य-क्रीडाया योग्यत्वादित्यर्थः । यद्वा—लीलाभिर्गृहीतः सेवितो देहो यस्य, स्वेच्छया लीलावेशादिति भावः । सर्वमागमनकारणं धर्मनिष्पत्त्यादिकं चावर्णयत् ॥ ३६ ॥

**श्रीमज्जीवगोस्वामिकृता वैष्णवतोषणी**

एवं सन्तुष्टिमात्रेण स्वयं सुखी स्यात् तदनुगतैर्गुणैश्चान्यैः सर्वान् सुखयन् परमपूज्यः स्यादित्याह—विप्रानिति । बहुत्वं प्रत्येकनमस्कारविवक्षया शान्तान् रागद्वेषादिरहितान् तत्त्वनिष्ठान् वा एषामुत्तरोत्तरस्मिन् कैमुत्यं श्रैष्ठ्यं चोह्यं शिरसा नतु वाङ्मात्रेण तच्चासकृत् अन्यत्तैः । यद्वा, स्वस्य मम लाभेन सन्तुष्टान् तथा चैकादशे "मया सन्तुष्टमनसः" इत्यादि यतः साधून् सद्भक्तान् "साधवो हृदयं मह्यम्" इत्यादि नवमे इत्येवं विशेषणानां व्यतिक्रमेण हेतुत्वादिकं ज्ञेयम् । अयं भावः भवानीदृश एवेति काप्यपेक्षा नास्त्येव तथाप्यागमनेन यन्मामनुजग्राह तेनाहं वशीकृतस्तवाज्ञां यत्नतः सम्पादयिष्यामीति ॥ ३३ ॥ एवमति-

---

१. यदृच्छया—विज. । २. सर्वं मे—वीर. विज. । ३. हे—वीर । ४. अयमर्धः विजये नास्ति ।

५. विदर्भाधिपतेः पुत्रो रुक्मिणी तव किंकरी । विज्ञापयति ते किञ्चित्प्रस्तुतोद्वाहमंगलम् ॥ १ ॥
तथा सम्प्रेषितोऽहं ते सकाशं भीष्मकन्यया । तस्याः सन्देशमाकर्ण्य क्रियतां तदनन्तरम् ॥ २ ॥—म. पु. टि. ।
रुक्मिण्या प्रेषितस्तेहं सकाशं पुरुषोत्तम । तस्याः सन्देशमाकर्ण्य क्रियतां तदनन्तरम् ॥ १ ॥
निधाय लिखितं पत्रं पादयोः प्रणनाम तम् । तदादाय जगन्नाथः स्मितसुन्दरलोचनः ॥ २ ॥
वाचयामास धर्मात्मा सादरं स्पृहयन्निव ।

कृच्छ्रसाध्यत्वेपि सन्तोषात्तस्य धर्मसिद्धिमेव मत्वापि तद्विषेष्वतिकृच्छ्रस्य स्वानभीष्टतया तदुपागमहेतुं राजानुग्रहं पृच्छति कच्चिदिति। कुशलं कश्चिदुपद्रवो न स्यात् साहाय्यं च भवेदित्यर्थः ॥ ३४ ॥ अगुह्यं चेत्सर्वं ब्रूहीति विनयात् किङ्करवाम तदाज्ञापयेति शेषः। यद्वा, करवाम किमिति प्रीतिभरेण मनोरथः ॥ ३५ ॥ परमेष्ठिनेति सर्वज्ञत्वमुक्तं तथापि प्रश्ने हेतुः लीलेति क्रीडार्थं प्रकटितमनुष्यदेहेन तादृश्या एव मनुष्यक्रीडाया योग्यत्वादित्यर्थः। यद्वा, लीलाभिर्गृहीतः सेवितो देहो यस्य स्वेच्छया लीलावेशादित्यर्थः। अत एव तादृशलीलाया उपादेयत्वात्संशब्दौ च सर्वं स्वधर्मनिष्पत्त्यादिकमागमनकारणं चावर्णयत् साक्षादेव तत्र श्रीरुक्मिण्युवाचेदमित्यप्याहेत्यर्थः। पत्रिकाद्वारेति तु स्वाम्यभिप्रायः स च तस्य ब्राह्मणस्य "इत्येते गुह्यसन्देशाः" इति वक्ष्यमाणाऽनुसारेण केवलसन्देशहरत्वात् रसशास्त्रोक्तेष्वमितार्थनिसृष्टार्थपत्रहारकाख्येषु स्वेच्छया मिथुनैकतरदत्तभावतया तत्सन्देशमात्रवाहितया लब्धतत्तदाख्याक्रमेषु दूतभेदेष्वन्तिमलक्षणप्राप्ते व्याख्यानुसारेण तस्य पत्रहरण एव मुख्यत्वाच्च ॥ ३६ ॥

## श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी

एवं सन्तुष्टिमात्रेण स्वयं सुखी स्यात्, गुणैश्चान्यैः सर्व्वान् सुखयन् परमपूज्यः स्यादित्याह—विप्रानिति; बहुत्वं तादृशानां सर्व्वेषामपि नमस्यत्वात्; शान्तान् रागद्वेषादि रहितान् तत्त्वनिष्ठान् वा, शिरसा, न च वाङ्मात्रेण, तच्चासकृत् कथञ्चिदपराधेऽपि तदग्रहणात्। विशेषणानामेषां पूर्व्वपूर्व्वस्योत्तरोत्तरस्मिन् हेतुत्वं यथोत्तरं श्रेष्ठ्यञ्चोह्यम्, अन्यत्तैर्व्याख्यातम्। यद्वा, स्वस्य मम लाभेन सन्तुष्टान्; तथा चैकादशस्कन्धेऽयमेव वक्ष्यति (भा० ११।१४।१३)—'मया सन्तुष्टमनसः' इत्यादि। यतः साधून् मद्भक्तानित्येवं विशेषणानां व्यतिक्रमेण हेतुत्वादिकं ज्ञेयम्। अयं भावः—भवानीदृश एव, द्विजवरश्रेष्ठत्वात्, अतः कुत्रापि भवतः काप्यपेक्षा नास्त्येव, तथाप्यत्रागमनेन यन्मामनुजग्राह, तेन भक्त्याहं वशीकृतस्तवाज्ञां यत्नतोऽवश्यमाशु सम्पादयिष्यामीति। अतः किं वक्तव्यमीदृशा विप्रा मे प्रिया इति ॥ ३३ ॥ तत्परिपालको राजापि प्रिय इति, किंवा राजभिः पाल्यमानानामेव विप्राणां धर्म्मः सिध्येदित्याशयेन पृच्छति—कच्चिदिति। राजतो राज्ञः सकाशात् कुशलं कश्चिदुपद्रवो न स्यात्, साहाय्यञ्च भवेदित्यर्थः। 'वः' इति ज्ञात्याद्यपेक्षया। हे ब्रह्मन्निति साक्षाद्वेदरूपाणां युष्माकं कुशलेनैव वेदानामपि कुशलमिति भावः। हि एव, स एव, निश्चितमिति वा ॥ ३४ ॥ 'नः' इति करवामेति च बहुत्वं विनयेन श्रीबलरामाद्यपेक्षया। अगुह्यञ्चेदिति परमविनयादेव, किं करवाम तदप्याज्ञापयेत्यर्थः, यद्वा, किं करवाम करिष्यामः, किमिति प्रीतिभरेण मनोरथः ॥ ३५ ॥ परमेष्ठिनेति सर्व्वज्ञत्वमुक्तम्। तथापि प्रश्ने हेतुः—लीलेति। क्रीड़ार्थं प्रकटितमनुष्यदेहेन, तादृश्या एव मनुष्यक्रीड़ाया योग्यत्वादित्यर्थः। यद्वा, लीलाभिर्गृहीतः सेवितो देहो यस्य, अनेन तस्य क्रीड़ाविशेषार्थे श्रीरुक्मिण्यपेक्षा सूचिता। अत एव सं-शब्दो च। एवमत्र श्रीब्राह्मण उवाचेति भक्तव्ये श्रीरुक्मिण्युवाचेत्युक्त्या ब्राह्मण एवासौ श्रीरुक्मिण्युक्तं सन्देशं पत्रपाठेन न्यवेदयदिति स्वत एव सिध्यतीति तट्टीकायां लिखितम् ॥ ३६ ॥

## श्रीसुदर्शनसूरिकृतशुकपक्षीयम्

यस्य राज्ञः ॥ ३४-३६ ॥

## श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका

अथ सन्तोषस्य स्वाभिमतत्वमाह—विप्रानिति। स्वलाभेन स्वसत्तालाभेन "स्वोज्जीवनेच्छा यदि ते स्वसत्तायां स्पृहा यदि। आत्मदास्यं हरेः स्वाम्यं स्वभावं च सदा स्मरे"त्युक्तहरिदास्याद्यनुसन्धानप्रयुक्तात्मलाभेनेत्यर्थः। तेन सन्तुष्टान् साधून्परोपकारिणः देहात्माभिमानरहितान् शान्तान् जितेन्द्रियान् द्विजानहमसकृच्छिरसा नमस्ये नमस्करोमि, अतीव मदिष्टं कुर्वद्भ्यस्तेभ्यः प्रत्युपकर्त्तुमशक्तः केवलं नमस्करोमीत्यभिप्रायः ॥ ३३ ॥ हे ब्रह्मन्! वो युष्माकं राजतः राज्ञः सकाशात्कुशलं कच्चित् यस्य राज्ञो विषये देशे प्रजाः पाल्यमानाः सुखं यथा तथा वसन्ति स राजा मम प्रियः ॥ ३४ ॥ यतो यस्माद्देशादिह दुर्गं सामुद्रजलात्मकं निस्तीर्य यदिच्छया यत्प्रयोजनेच्छया हेतुभूतया आगतः तत्सर्वमगुह्यं चेन्नोऽस्मभ्यं ब्रूहि वयं किङ्करवामहे किंकरा वयमित्यर्थः ॥३५॥ एवमिति। लीलया हेतुभूतया गृहीतो देहो येन परो मा यस्मात् तस्मिन् महिम्नि तिष्ठतीति तथाभूते "स्वे महिम्नि प्रतिष्ठित" इति श्रुतेः तेन भगवता इत्थं संपृष्टः संप्रश्नविषयो यस्य स ब्राह्मणः तस्मै श्रीकृष्णाय सर्वं पृष्टं वर्णयामास ॥ ३६ ॥

## श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली

स्वतो लाभो यस्य धनस्य तत्तथा तेन ॥ ३३ ॥ तस्य विषये राष्ट्रे स राजा मे प्रियः ॥ ३४ ॥ आगमनकारणं पृच्छति—यत इति। यतः कारणात्तत्सर्वं कारणम् ॥ ३५ ॥ परमेष्ठिना सर्वोत्तमेन ॥ ३६ ॥

## श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः

लीलागृहीतदेहेनेति। लीला-नाम्न्या देव्या गृहीत आलिङ्गितो देहो यस्य, तस्मै सर्वमवर्णयत्। इति कृष्णाज्ञया ब्राह्मणः स्वयमेव पत्रिकां पपाठेत्यर्थः। अयं भावः—श्रीकृष्णोऽपि तां प्रत्युत्सुक-चेताश्चिरत एव, तेन पत्रीवाचने आनन्दाश्रुणाक्षरदर्शनं न स्यादिति तस्मै वाचयेत्युक्तवान् श्रीभगवान् ॥ ३६ ॥

### श्रीनाथचक्रवर्तिपादविरचिता चैतन्यमतमञ्जूषा

लीलागृहीतदेहेन—लीलया लीलानाम्न्या देव्या गृहीतः परिष्वक्तो देहो यस्य। तस्मै सर्वमवर्णयदिति कृष्णाज्ञया ब्राह्मणः स्वयमेव पत्रिकां पपाठेत्यर्थः। अस्यायं भावः—श्रीकृष्णोऽपि तां प्रत्युत्सुकचेताश्चिरत एव पत्री-वाचने आनन्दाश्रु कदाचिद्भवति, कदाक्षरसन्दर्शनं भवति, कदाचिद् भवति न वा, ब्राह्मणस्तारल्यं ज्ञास्यति, अतस्तस्मै वाचयेत्युक्तवान्॥ ३६॥

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी

स्वेनैव शिलोञ्छनादितो यो लाभस्तेनैव तुष्टान् नतु परतो लोभार्थिनः॥ ३३॥ विषये देशे॥ ३४–३५॥ संपृष्टः संप्रश्नो यस्य स मयि कोऽपि प्रश्नश्चेदस्ति पृच्छ्यतामित्युक्त इत्यर्थः। लीलयैव देव्या गृहीतः स्वीयत्वेनाङ्गीकृतो देहो यस्य तेन॥ ३६॥

### गूढार्थदीपिनी

राजतो राज्ञः सकाशात् वो युष्माकम्। यस्य राज्ञो विषये देशे॥ ३४॥ दुर्गं दुर्गमं समुद्रमुल्लङ्घ्य अगुह्यं गोप्यं न चेत्तर्हि नोऽस्मभ्यम्॥ ३५॥ सम्पृष्टः सम्प्रश्नः प्रष्टव्योऽर्थो यं सः॥ ३६॥

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः

स्वलाभः स्वजिज्ञास्यलाभः "अत्र ब्रह्म समश्नुते" इति ध्यानेन ब्रह्मप्राप्तिलक्षणस्तेन सन्तुष्टान् मद्ध्यानानन्दयुक्ततया सर्वत्र निरपेक्षान् नमस्ये अन्यथा तेभ्यः प्रत्युपकारासम्भवात् केवलं नमस्करोमि॥ ३३॥ यस्य राज्ञो विषये देशे सुखं यथा तथा वसन्ति स राजा मे प्रियः॥ ३४॥ यतो विषयात् यदिच्छया यस्य प्रयोजनस्येच्छया दुर्गं समुद्रं निस्तीर्य इहास्मत्समीपमागतोऽसि तत्सर्वं नोऽस्मभ्यं ब्रूहि॥ ३५॥ यद्यपि "श्रीश्च ते लक्ष्मीश्च पत्न्या" वितिश्रुतेः नित्यपत्नी लक्ष्मीस्तथापि लीलया गृहीतः रुक्मिणीं पत्नीं करिष्यामीति मनसैव स्वीकृतो देहो निजपत्नीदेहो येन स तथा तेन "स्वे महिम्नि प्रतिष्ठित" इति श्रुतेः परमे सर्वोत्कृष्टे स्वे महिम्नि यद्वा "योऽस्याध्यक्षः स परमे व्योम्नि" इति श्रुतेः परमपदे निजलोके तिष्ठतीति तथा तेन सम्पृष्टसम्प्रश्नः सम्पृष्टः सम्प्रश्नः प्रष्टव्योऽर्थो यं सः तस्मै श्रीकृष्णाय सर्वं श्रीरुक्मिणीवाक्यमवर्णयत्॥ ३६॥

### श्रीसत्यधर्मकृता श्रीभागवतटिप्पणी

हे ब्रह्मन्। वो राजतः कुशलं कच्चिदिति प्रश्नमात्रं यत्र यत्र कुशलाद्यन्यतमं पदं वर्तते तत्र तत्रेति मन्तव्यम्। तथा नास्ति तत्पदम्। तत्र कुशलप्रश्न इति। यस्य विषये देशे स राजा मे प्रिय इष्टः॥ ३३॥ कुत आगतिस्तदवगमयतामिति पृच्छति यत इति। यतश्चोदेति सूर्य इत्यादेर्यत इति कुत इत्यर्थे। दुर्गं निस्तीर्योल्लिङ्घ्य यदृच्छया हरीच्छया यतः कुत आगतस्तत्सर्वम-गुह्यं गोप्यं न चेत्तत्ते किं करवाम ब्रूहि। करणीयत्याद्यनुक्त्वोक्त्वा चैवं करे स्वहस्ते न्यस्ता वामा स्त्री यस्य तत्सम्बुद्धिः। वधू-सन्धानार्थमायात इति स्वज्ञानं ध्वनयामासेति ज्ञेयम्। पयोधरे हरे कामे विद्याद्वामामपि स्त्रियमिति विश्वः॥ ३४॥ लिखितं पत्रं पादयोर्निधाय प्रणनाम स्वयमेव परिनिधाय रुक्मिणीस्थाने पादयोः प्रणतस्यापि नयनमिति सन्तोष्टव्यम्। लिखितमिति लेखित-मित्यर्थकम्। तस्या राजप्रजात्वाच्छिक्षाक्षरेष्वपि सम्भावितेति लिखितमित्युक्तमिति वा॥ ३५॥ धर्मात्मा धारकत्वाद्धरिर्धर्मस्त-दात्मा तत्स्वरूपभूतः सादरमादरप्रदर्शकशब्दसहितमिति विशेषणम्। स्वयमपि स्पृहयन्निव वाचकहस्तेन राजधर्मत्वात्। सादरं यथा भवति सनिर्भयं यथा तथेति वा॥ ३६॥

### श्रीमद्वल्लभाचार्यकृता सुबोधिनी

अनेनैव ब्राह्मणानां सहजमोक्षो भवतीति कैमुत्यन्यायेनाह **विप्रान्स्वलाभसंतुष्टा**निति। मोक्षे आत्मलाभो ज्ञानात्मको विशेषः। **साधून्** सदाचारान्। **भूतसुहृत्तमा**निति। ब्राह्मणानां सहज आन्तरो धर्मः सर्वसौहार्दम्, अहङ्काराभावश्चाधिकः। शान्तिर्बुद्धेः। एवं पञ्चधर्मयुक्तानहं शिरसा नमस्ये, गुरुत्वेन मानयामि व्यवहारे। किञ्चित्पठित्वा तथा करोतीति पक्षं वारयति **असकृ**दिति। सर्वदैवमित्यर्थः। यत्र मोक्षदाता एवं मन्यते, तत्र मोक्षे कः सन्देह इत्यर्थः। विशेषेण पूरका इति। षड्गुणा वा भगवत्तुल्यत्वाय निरूपिताः। ऐश्वर्ये तु न नियमेन विशेषपूरकत्वं सर्वत्र, वीर्ये न स्वलाभः, यशसि न समा दृक्, श्रिया न सर्वथा भूतसौहृदम्, ज्ञाने क्वचिदहङ्कारोऽपि वैराग्ये विक्षेपोऽपि क्वचित्सम्भवतीति षण्णामप्युक्तत्वात् स्वत एव भगवत्त्वं च सिद्धमिति नमस्य इत्यविरुद्धम्॥ ३३॥ तद्राज्ञः कुशलं पृच्छति **कच्चिद्वः कुशलमिति**। **वो** युष्माकं राजतः कुशलं कच्चित्। **ब्रह्मन्नि**ति अपकारेऽपि स्वतस्तूष्णींभावाय। अतिक्रमे नाशाय वा। करोति चेद्राजा सुखं किं तस्य स्यादित्याशङ्क्य, तादृशस्य फलमाह, यस्य हि प्रजाः सुखं वसन्ति, तेन परिपाल्यमानाः, स मम प्रियो भवति। अनेन सर्वमेव तस्य हितं सिध्यतीत्युक्तं भवति॥ ३४॥ एवं कुशलं पृष्ट्वा प्रस्तुते त्वदुक्तं करिष्यामीत्यभिप्रायेण तत्सान्त्वनमाह **यतस्त्वमागत** इति। दुर्गं सर्वमेवातिक्रम्य यस्माद्धेतोः

त्वमागतः, तच्चेदगुह्यं तदा सर्वं ब्रूहि। किञ्चित्कार्यं साधनीयमिति चेत्, तत्किं कार्यमिति प्रश्नः। सर्वस्यापि जगतो मोक्षो देय इति चेत्। तत्राह ते कार्यं करवामेति। तव सर्वं कार्यं करिष्यामः, नान्यस्येति॥ ३५॥ एवं पृष्टः स्वाभिप्रायं निवेदयति एवं संपृष्टेति। एवं संपृष्टः संप्रश्नाः यस्मै। ब्राह्मण इति निष्कपटः। परमेष्ठिना च। ब्रह्मणोऽपि पिता। तादृशः कथमत्रागत इत्याशङ्‍क्याह लीलागृहीतदेहेनेति। लीलया गृहीतः प्रदर्शितो देहाकारो येन। अतो ज्ञाततत्त्वायैव तस्मै सर्वमेव वृतान्तमवर्णयत्। बन्धूनामिच्छतां दातुमित्यादि॥ ३६॥

### श्रीसुबोधिनीसारः

स्वलाभेन स्वतः प्राप्तेन संतुष्टान् आत्मलाभेन कृतकृत्यान् भूतानां सुहृत्तमान् परममित्रान् महदुपकारकर्तॄन् वा निर्गर्वान् साधून् विप्राञ्छांतान् असकृन्मुहुर्मुहुरहं शिरसा प्रणमामि॥ ३३॥ हे ब्रह्मन् राजतो भूपात् वो युष्माकं कुशलं मंगलं कच्चित्किम् यस्य राज्ञो विषये देशे पाल्यमानाः प्रजाः सुखं यथा स्यात्तथा वर्सन्ति स राजा मे मम प्रियः॥ ३४॥ यतो देशान्नगराद्वा यस्य कार्यस्येच्छया दुर्गं समुद्रं निस्तीर्य इह त्वमागतोऽसि तत्सर्वमगुह्यं न गोपनीयं चेत्तर्हि नोऽस्मान् चतुर्थी वा त्वं ब्रूहि ते तव किं कार्यं वयं करवाम साधयाम॥ ३५॥ एवं संपृष्टः संप्रश्नः प्रष्टव्योर्थो यं स ब्राह्मणः तस्मै श्रीकृष्णाय सर्वमकथयत्। लीलया गृहीतो देहो येन तेन परमेष्ठिना परमेश्वरेण कर्त्रा॥ ३६॥

### गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

सन्तोषादीनां स्वाभिमतत्वमाह—विप्रानिति। स्वलाभेन स्वतःप्राप्तेन अन्नवस्त्रादिना सन्तुष्टान्, साधून् सदाचारनिष्ठान्, भूतसुहृत्तमान् सर्वोपकारिणः, शान्तान् रागलोभादिरहितान्, तत्र हेतुः—निरहङ्कारिणः देहाद्यात्माभिमानरहितान्, एवंभूतान् विप्रानहमसकृत् पुनःपुनः शिरसा नमस्ये नमस्करोमि। अतीव मदिष्टं कुर्वद्भ्यस्तेभ्यः प्रत्युपकर्त्तुमशक्त इव केवलं नमस्करोमीत्यभिप्रायः॥ ३३॥ हे ब्रह्मन्! वो युष्माकं राजतः सकाशात् कच्चित् कुशलमस्ति? यस्य राज्ञो विषये देशे पाल्यमानाः प्रजाः सुखं यथा तथा वसन्ति स राजा मम प्रियो भवति॥ ३४॥ यतः स्थानात् यस्य प्रयोजनस्येच्छया दुर्गं समुद्रं निस्तीर्य उल्लङ्घ्य इह द्वारकायां त्वमागतोऽसि, तदगुह्यं चेत् सर्वं नोऽस्मभ्यं ब्रूहि, वयं ते किं कार्यं करवाम इत्यन्वयः॥ ३५॥ लीलया हेतुभूतया गृहीतो देहो येन तेन परमेष्ठिना परमेश्वरेण एवं सम्पृष्टः सम्प्रश्नः प्रष्टव्योऽर्थो यस्य स ब्राह्मणः तस्मै कृष्णाय सर्वबन्धूनाम् अभिप्रेतं कन्यादानं रुक्मिणा तन्निवारितमित्यादि सर्वमवर्णयत्॥ ३६॥

### अन्वितार्थप्रकाशिका

विप्रानिति॥ स्वलाभेन स्वतः प्राप्तेन अन्नवस्त्रादिना आत्मरूपलाभेन वा स्वस्य मम लाभेन वा सन्तुष्टान् साधून् सदाचारनिष्ठान् भूतसुहृत्तमान् सर्वोपकारिणः शान्तान् रागलोभादिरहितान् तत्र हेतुः निरहङ्कारिणः देहाद्यात्माभिमानरहितान् एवंभूतान् विप्रानहमसकृत् पुनः पुनः शिरसा नमस्ये नमस्करोमि। तङ्कार्षः॥ ३३॥ कच्चिददिति॥ हे ब्रह्मन्! वो युष्माकं राजतः सकाशात् कच्चित्कुशलमस्ति। यस्य राज्ञो विषये देशे पाल्यमानाः प्रजाः सुखं यथा तथा वसंति स राजा मम प्रियो भवति॥३४॥ यत इति। यतः स्थानात् यस्य प्रयोजनस्येच्छया दुर्गं समुद्रं निस्तीर्य उल्लंघ्येह द्वारकायां त्वमागतोऽसि तद् अगुह्यं चेत् तदा सर्वं नोऽस्मभ्यं ब्रूहि वयं ते किं कार्यं करवाम॥ ३५॥ एवमिति। लीलया हेतुभूतया गृहीतो देहो येन तेन परमेष्ठिना परमेश्वरेण एवं संपृष्टः संप्रश्नः प्रष्टव्योऽर्थो यं सः ब्राह्मणः तस्मै कृष्णाय सर्वं बन्धूनाम् अभिप्रेतं कन्यादानं रुक्मिणा तन्निवारितमित्यादि सर्वमवर्णयत्॥ ३६॥

### श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्

स्वलाभेन आत्मस्वरूपप्राप्त्या संतुष्टान् परिपूर्णान् साधून् साधुलक्षणसंपन्नान् पुरुषान्॥ ३३॥ राजतो राज्यं कुर्वतः यस्य राजन्यस्य विषये देशे॥ ३३॥ यतो ग्रामात्। यदिच्छया यत्कार्यं कर्तुमिच्छयेत्यर्थः दुर्गं सागरम्॥ निस्तीर्य तीर्त्वा॥ ३५॥ परमेष्ठिनः सर्वेश्वरेण॥ संपृष्टः संप्रश्नः प्रष्टव्योऽर्थो यस्य सः सर्वं रुक्मिणीमनोरथादिसमग्रं वर्णयामास॥ ३६॥

### भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

अथ संतोषस्य स्वाभिमतत्वमाह। विप्रानिति। स्वलाभेन स्वस्य हरिदासत्वानुसंधानप्रयुक्तात्मलाभेन संतुष्टास्तान्, साधून् परोपकारिणः, भूतसुहृत्तमान् सुहृद्वत् सर्वभूतहितचिन्तकान्, निरहंकारिणः देहात्माभिमानरहितान्, शान्तान् जितेन्द्रियान् विप्रान् द्विजान्, अहं असकृद्वारं वारं, शिरसा नमस्ये नमस्करोमि। अतीव मदिष्टं कुर्वद्भ्यस्तेभ्यः प्रत्युपकर्त्तुमशक्तः केवलं नमस्करोमीत्यभिप्रायः॥ ३३॥ कच्चिदिति। हे ब्रह्मन्, वो युष्माकं, राजतो राज्ञः सकाशात्, कुशलं कच्चित्। यस्य राज्ञः, विषये देशे, प्रजाः पाल्यमानाः राजभिः कृतपालनाः सत्यः, सुखं यथा तथा, वसन्ति, स राजा, मे मम, प्रियः हि॥ ३४॥ यत

इति। हे ब्रह्मन्, यतो यस्माद्देशात्, इह दुर्गं सामुद्रजलात्मकं कोट्टं, निस्तीर्य, यदिच्छया यत्प्रयोजनेच्छया, आगतः त्वं, तत् सर्वं अगुह्यं चेत्, नोऽस्मभ्यं, ब्रूहि। वयं ते तव, किं कार्यं, करवाम ॥ ३५ ॥ एवमिति। लीलया हेतुभूतया गृहीतो देहो येन तेन, परमेष्ठिना स्वमहिमावस्थितेन भगवता, एवमित्थं, संपृष्टः संप्रश्नो यस्य सः, ब्राह्मणः तस्मै श्रीकृष्णाय, सर्वं अवर्णयत् बन्धूनामनभिप्रेतं रुक्मिणश्चेष्टितं वर्णयामासेत्यर्थः। 'लिखित्वा रहसि स्थित्वा स्वस्मै दत्तां स पत्रिकाम्। रुक्मिण्योन्मुद्रितां कृत्वा कृष्णायादाच्छुभाक्षराम् ॥ १ ॥ प्रेमचिह्नान्वितां कृष्णो वीक्ष्य तां करुणो द्विजम्। वाचितुं प्रेरयत् सोऽपि तदाज्ञातो ह्यवाचयत्' ॥ २ ॥ ३६ ॥

### कृष्णप्रिया

जो स्वयं प्राप्त हुई वस्तु से सन्तोष कर लेते हैं, जिनका स्वभाव बड़ा ही मधुर है और जो समस्त प्राणियों के परम हितैषी, अहङ्काररहित और शान्त हैं—उन ब्राह्मणों को मैं सदा सिर झुकाकर नमस्कार करता हूँ ॥ ३३ ॥ ब्राह्मण देवता! राजा की ओर से तो आपलोगों को सब प्रकार की सुविधा है न? जिसके राज्य में प्रजा की अच्छी तरह पालन होता है और वह आनन्द से रहती है, वह राजा मुझे बहुत ही प्रिय है ॥ ३४ ॥ ब्राह्मण देवता! आप कहाँ से, किस हेतु से और किस अभिलाषा से इतना कठिन मार्ग तय करके यहाँ पधारे हैं? यदि कोई बात विशेष गोपनीय न हो तो हमसे कहिये। हम आपकी क्या सेवा करें?' ॥ ३५ ॥ परीक्षित्! लीला से ही मनुष्यरूप धारण करनेवाले भगवान् श्रीकृष्ण ने जब इस प्रकार ब्राह्मण देवता से पूछा, तब उन्होंने सारी बात कह सुनायी। इसके बाद वे भगवान् से रुक्मिणीजी का सन्देश कहने लगे ॥ ३६ ॥

**श्रुत्वा गुणान् भुवनसुन्दर [1]शृण्वतां ते निर्विश्य कर्णविवरै[2]र्हरतोऽङ्गतापम्।**
**रूपं [3]दृशां दृशिमतामखिलार्थलाभं त्वय्यच्युताविशति चित्तमपत्रपं मे ॥ ३७ ॥**
**का त्वा मुकुन्द महती कुलशीलरूपविद्यावयोद्रविणधामभिरात्मतुल्यम्।**
**धीरा पतिं [4]कुलवती न वृणीत कन्या काले नृसिंह नरलोकमनोऽभिरामम् ॥ ३८ ॥[5]**
**तन्मे भवान् खलु वृतः पतिरङ्ग जायामात्मार्पितश्च भवतोऽत्र विभो विधेहि।**
**मा वीरभागमभिमर्शतु चैद्य आराद् गोमायुवन्मृगपतेर्बलिमम्बुजाक्ष ॥ ३९ ॥**
**पूर्तेष्टदत्तनियमव्रतदेवविप्रगुर्वर्चनादिभिरलं भगवान् परेशः।**
**आराधितो यदि गदाग्रज एत्य पाणिं गृह्णातु मे न दमघोषसुतादयोऽन्ये ॥ ४० ॥**

### कर्दमक्षमा

अन्वयः—रुक्मिणी उवाच—हे भुवनसुन्दर! शृण्वताम्, कर्णविवरैः, निर्विश्य, अङ्गतापम्, हरतः, ते गुणान्, श्रुत्वा, (एवम्) दृशिमताम्, दृशाम्, अखिलार्थलाभम्, रूपम्, श्रुत्वा, हे, अच्युत! मे, अपत्रपम्, चित्तम्, त्वयि, आविशति ॥ ३७ ॥ हे, मुकुन्द, कुलशीलरूपविद्यावयोद्रविणधामभिः, आत्मतुल्यम्, त्वा, श्रुत्वा, धीरा, महती, कुलवती, कन्या, का? हे, नृसिंह! नरलोकमनोभिरामम्, काले, पतिं, न, वृणीत ॥ ३८ ॥ हे अङ्ग! तत् भवान्, मे, पतिः, वृतः, च, आत्मा, अर्पितः, हे विभो! अत्र, भवतः, आरात्, जायाम्, विधेहि! हे! अम्बुजाक्ष? मृगपतेः, बलिम्, गोमायुवत्, चैद्यः, वीरभागम्, मा, अभिमर्शतु ॥ ३९ ॥ पूर्तेष्टदत्तनियमव्रतदेवविप्रगुर्वर्चनादिभिः, यदि, परेशः, भगवान्, अलम्, आराधितः, (चेत्) गदाग्रजः, एत्य, मे, पाणिम्, गृह्णातु, अन्ये, दमघोषसुतादयः, न, गृह्णन्तु ॥ ४० ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

रुक्मिण्या स्वयमेकान्ते लिखित्वा दत्तपत्रिकाम्। मुद्रामुन्मुच्य कृष्णाय प्रेमचिह्नामदर्शयत् ॥ ब्राह्मणः श्रीकृष्णानुज्ञया वाचयति। श्रुत्वेति। अयमर्थः। हे अच्युत। हे भुवनसुंदरेत्यौत्सुक्यं द्योतयति। क्व तव महिमा। क्व चाहं रूपकुलशीलादियुक्तापि। तथाऽप्यपगता त्रपा यस्मात्तन्मे चित्तं त्वय्याविशत्यासज्जते। तत्कुतस्तत्राह। शृण्वतां कर्णविवरैरंतःप्रविश्यांगतापम्। अंगेति

---

१. सङ्गमास्ते–विज.। २. विवरं–विज.। ३. रूपं परं भुवनमङ्गल मङ्गलं ते–विज.। ४. व्रीडावती–विज.।

५. स त्वं मयाप्यभिवृतः पतिरिन्दिरायाः भक्तप्रियः कृपणलोकशरण्य ईशः।
मत्वैतदङ्ग तव पादसरोजदास्याः कामं कुरु प्रियतमं प्रणतास्मि तेऽङ्घ्रिम् ॥ १ ॥–विज.।

पृथक् संबोधनं वा। हरतस्तव गुणान् श्रुत्वा तथा दृशिमतां चक्षुष्मतां दृशामखिलार्थलाभात्मकं रूपं च श्रुत्वेति ॥ ३७ ॥ अहो कुलकन्यानामिदमतिधाष्ट्यमिति मा शंकीरित्याह। का त्वेति। हे मुकुन्द हे नृसिंह नरश्रेष्ठ का नाम कन्या कुलवती तथा महती पुरुगुणोदारा तथा धीरा धृतिमती त्वां पतिं न वृणीत। मय्येव केयं दोषशंकेति भावः। कथं भूतम्। कुलशीलादिभिरात्मनैव तुल्यं निरुपममित्यर्थः। द्रविणं द्रव्यसंपत्। धाम प्रभावः। तथा नरलोकस्य मनसामभिरामोऽभिरमणं यस्मात्तम्। किं च काले विवाहावसरे ॥ ३८ ॥ हे विभो तत्तस्मान्मे मया भवान्खलु पतिर्वृतः आत्मा च भवतोऽर्पितः अतस्त्वमत्रागत्य मां भवतो जायां विधेहि। विपक्षे बाधकं द्योतयंत्याह। वीरभागमिति। वीरस्य तव भागं मामाराच्छीघ्रमेत्यागत्य चैद्यो माभिमर्शतु मा स्पृशतु। मृगपतेर्वलिं गोमायुवत्। गोमायुः सृगाल इवेति ॥ ३९ ॥ अनेकजन्मकृतैः सुकृतैरिदमेव भूयादिति प्रार्थयते पूर्तेति। पूर्तं कूपादि। इष्टमग्निहोत्रादि। दत्तं हिरण्यादिदानम्। नियमस्तीर्थाटनादिः। व्रतं कृच्छ्रादि ॥ ४० ॥

## श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

मुद्रां लाक्षादिना योगम्। उन्मुच्यापाकृत्य। स्वाशयं प्रकाशयति—अयमर्थ इति। यस्माच्चेतसः। तत् चित्तावेशनम्। केवलमंगतापहरमेव किन्त्वन्तस्तापहरमपि हरिगुणाऽनुश्रवणमित्यस्वारस्यादाह—अंगेति ॥ रुक्मिण्युवाचेत्यप्याह पत्रद्वारेति स्वामिचरणाः, परन्तु तस्य 'इत्येते गुह्यसंदेशाः' इत्युक्तेः केवलं संदेशहरत्वमेव प्रतीयते ॥ ३७ ॥ स्वयमाशंक्य समाधत्ते–अहो इत्यादिना। इदं स्वयमेव वरान्वेषणादिकम्। अतिधाष्ट्यमत्यकार्यम्। कुलवती सुकुलोत्पन्ना। पुरुगुणैर्बहुगुणैः 'नीलांभोरुहपत्रकांति' इत्याद्युक्तैरुदाराऽधिका। धीरा "धीरो धैर्यान्विते स्वैरे धीरः स्यात्त्रिषु पंडिते" इति मेदिन्युक्तेर्धीमती धृतिमती च। इति भाव इति—संसृति मुक्तिदातारं निखिलगुणैर्नरश्रेष्ठं निजजनोक्तिपालनायातिक्लिष्टकारिणं वा का त्रिलोक्यन्तर्गता स्त्री या न वृणुत इति तात्पर्यम्। इत्यर्थ इति–ईश्वरांतरासंभवादिति भावः। अन्यदाह—तथेति। अभिरामो वह्वानंदः। "अत्वानंदे स्त्रीवृते चाभिरामस्त्वतिसुन्दरे', इति निरुक्तिः। समये सुभगप्रासिद्धुर्लभेत्याह—किञ्चेति ॥ नन्वस्तु मल्लक्षणः पुरुष एव त्रिजगत्यस्मिन्निरुपमः किं कन्यापि श्रोत्रनेत्रवती जगत्यस्मिंस्त्वमेवैकासि यत एवमन्या निर्लज्जा नेति तत्राह—केति। हे मुकुन्द मुखे कुन्दवद्धासो यस्येति मामेव हसितुं प्राप्तावसरेत्यर्थः। का महती गुणरूपवती धीरा बुद्धिमती कुलवती त्वां पतिं न वृणीत। तेन कुरूपा दुःशीला दुर्बुद्धिरनभिजातैव, अश्रुण्वती वा त्वां न वृणीतेति भावः। कीदृशम्—कुलादिभिरात्मनैव तुल्यम्। काले स्वसमय इत्यन्या अपि वह्वय एव कन्याः स्वसमय एव त्वां वरिष्यन्ति, न त्वधुनैवमत्समय इति भावः। हे नृसिंह नरश्रेष्ठ, हे सिंहवद्दुर्वशेति न मे त्वद्वशीकारे कापीच्छास्तीति भावः। तदपि नरलोकमात्रस्यैव मनोऽभिरमयसीति मन्मनसः कोऽपराध इति भावः ॥ ३८ ॥ स्वाभिमतज्ञापने सामर्थ्यं द्योतयन्त्याह—हे विभो अन्तर्यामिन्नित्यर्थः। यतोऽखिलगुणैर्वरीतुमर्होऽसि तस्माद्धेतोः। भवतोऽत्रेति व्यवहितानन्तरयोरपि छंदसि संबंधाभ्युपगतत्वेनेहात्र भवत इति वैपरीत्येन योज्यम्। अत्र भवतस्सर्वपूज्यस्येत्यर्थः। अत्र भवत इत्यपि विपरिणमय्य तुभ्यमित्यर्थः। अर्पितो दत्त इति। "अयोग्यं दातुमुद्युक्ते पित्रादौ कन्यका स्वयम्। योग्यं पतिं प्रवृण्वीत न च सा दोषभागिनी" ॥ इति वारतांतवः। यतस्तुभ्यमर्पितोऽतः हेतोः। अत्र भवतः पूज्यस्यात्मनः। इत्थमकरणेऽयोग्यतामाह—विपक्ष इति। वीरस्य प्रसिद्धशौर्यस्य। भागमर्द्धांगम् "अर्द्धो वा एषः यत्पत्नी" इति श्रुतेः। मृग्यन्ते व्याधैरिति मृगाः शशशृगालादयस्तान्मृगान्पातयति भक्षणार्थं मारयतीति मृगपतिः सिंहः। गां विकृतां वाचं मिनोति क्षिपतीति गोमायुः 'भूरिमायगोमायुमृगधूर्तकाः' इत्यमरः ॥ एवमन्यगतेरपि स्त्रियाश्चेन्मम त्वनन्यगतेर्महानिवोभवलोकनाश आपततिः, कदाचिदीश्वरोऽसौ नाप्यवधानं कुर्यादिति किं वा—लज्जयेति व्याकुला सत्युत्तरोत्तरं क्रियात्रयेण स्पष्टमेवाह—तदिति। हे अंग, हे विभो इति मुहुः संबोधनं दैन्येन। आत्मा देहस्वाम्येव किमुत देह इत्यर्थः। भवत इति सम्प्रदानताप्राप्तावपि शेषे षष्ठी। नित्यत दयितत्वाभिमानेनात्यंतदानाऽसंभवात्। अत्र सति भवतो जायां मां विधेहि यथेच्छसि तथा कुर्विति। न च किञ्चिदशक्यमित्याह—हे विभो सर्वसामर्थ्ययुक्तेति। वीरेति—अन्यथा तव वीर्यहानिप्रसक्तिरिति भावः। अत्र टीकायाम् 'एत्यागत्य' इत्युत्तरश्लोकगतस्य टीका प्रथमलेखकभ्रमाल्लिखितेति लक्ष्यते मूलाभावात्। अत आरात् समीपे वर्तमानश्चैद्य इत्यागमनशैघ्र्याय। अन्यथा ते लज्जापि स्यादिति दृष्टान्तेनाह—गोमायुवदिति। हे अम्बुजाक्षेति सततततसौन्दर्यस्फुरणस्वाभाव्यात्स्वदृष्ट्या मम तापं शमयेति विवक्षा तत्र ॥ ३९ ॥ स्वाभिमतमाह—अनेकेत्यादिना। आदिना सत्संगग्रहः। अग्रे जयतीत्यग्रजा, गदा अग्रजा यस्य स तथेत्यनेन सायुधागमनमुक्तम्। आदिना जरासंधादिग्रहः ॥ अये महादुर्लभपुरुष त्वं नैकजन्मसुकृतलभ्यस्तस्मात्सामान्यतस्त्वत्प्राप्तिकामनया निष्कामया वा पूर्वपूर्वजन्मसु यदि मया बहूनि सुकृतानि कृतानि तदा तेषामेव फलविशेष एव भूयादिति प्रार्थयते—पूर्तेति। पूर्तेष्टदत्तैर्भगवत्संप्रदानकैः नियमैस्तीर्थस्नानादिभिः, व्रतैरेकादश्यादिभिः, देवविप्रगुर्वर्चनैर्भगवदर्चनांगैर्यदा मया भगवानलमतिशयेनाराधितस्तदा मानुष्या मे मानुष एव भगवान्गदाग्रज आगत्य पाणिं गृह्णातु, न त्वन्ये नारायणादयोपि देवा मानुषा वेत्यर्थः। दमघोषस्य तत्रादित्वनोल्लेखस्तु तद्विवाहस्य प्रस्तुतत्वादेव ॥ ४० ॥

**श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी**

नौमि श्रीरुक्मिणीवाणीं स्ववाणीवृद्धिसिद्धये । सर्वाकर्षकनामापि चक्रुषे सद्गुतं यया ॥

श्रुत्वेति । तैर्व्याख्यातम् । तत्राच्युतेत्यस्य भुवनसुन्दरेत्यस्य च भावः क्वेत्यादिः एवं तु पदद्वयमिदं यद्यपि दैन्यप्रतिपादकं तथापि दैन्यस्याप्यौत्सुक्यगर्भत्वादौत्सुक्यमित्युक्तम् अङ्गतापमिति । मनः प्रवेशेऽप्यङ्गोद्भवमपि तापं हरन्ति किमुत मनउद्भवमिति भावः । लाभात्मकमिति । लाभलभ्ययोरभेदाभिप्रायेण स च लाभस्यावश्यकताविवक्षयेति । यद्वा । परमकुलीनकन्यादित्वात्प्रथमतः स्वयं तादृशसन्देशे प्राप्तां लज्जां सर्वेषामेव तद्गुणरूपसमाकृष्टतासामान्येनावृण्वती दुर्वारं भावं व्यञ्जयति श्रुत्वेति । हे भुवनसुन्दर ! भुवनेषु परमवैकुण्ठपर्य्यन्तेषु प्राकृतलोकेषु प्रकृत्या चाकृत्या च शोभमान सर्वाकर्षकमाधुर्य्येत्यर्थः । तत्रापि हे अच्युत नित्यमेव तादृश तव प्रकृतिशोभाभूतानां गुणानामाकृतिशोभाभूतानां रूपाणां च स्वरूपाभिन्नत्वादिति भावः । एतद्विबोधयिषयैव श्रुत्वा गुणानिति रूपमिति च गुणरूपे एवोक्ते नतु स्वरूपमपि तद्वत्पृथगिति तदेवं भुवनसुन्दरादित्वमुत्पत्तित एव तस्याः स्फुरतीत्युन्नेयं लक्ष्मीत्वेन प्राचीनसंस्कारसम्भवात् श्रवणादिविशिष्टत्वेनानुक्तत्वात् श्रुत्वा गुणानित्यादिना श्रवणविशिष्टत्वेन तूक्त्यन्तरात् तेन पौनरुक्त्यात् आविशतीत्याशब्दस्वारस्याच्च ततः प्राचीनसंस्कारतोऽश्रुतेऽपि त्वयि मम चित्तं विशत्येव श्रुते तु विशेषत इत्याह—ते तव गुणान् सर्वसुखदत्वादीन् तेष्वेकमेकमपीत्यर्थः । रूपं कान्त्यवयवसौष्ठवञ्च श्रुत्वा श्रवणपथप्राप्तिमात्रेण विशेषतोऽनुभूय मम चित्तं त्रपारहितं सत् त्वयि आ सम्यक् अनुसन्धानान्तरराहित्येन विशति मग्नं भवति कुलीनकन्यायास्तावदसङ्गतं पुरुषं मनसापि प्रवेष्टुं त्रपा जायते तत्र तु सा त्यक्तैव सम्प्रति साक्षादपि प्रार्थनं क्रियते अहो सोऽयं सर्वाकर्षणस्वभाव एवेति मम को वा दोष इति भावः । ननु स्वमनः संयम्यतां तत्राप्याह—अच्युतेति । त्वमपि तस्मात् च्युतो न भवसि कथमपि त्यक्तुमशक्यत्वादिति भावः । तदेवं त्वय्येव निवेदयितुं युक्तमिति च सर्वाकर्षकताव्यञ्जकसर्वसुखदत्वपुरस्कृतान् गुणानेव विशिंषती तदेकरतेः स्वस्याकर्षणादौ कैमुत्यमापादयति—शृण्वतामिति । श्रवणेन्द्रिययुक्तमात्राणां तत्रापि श्रोतुं प्रवृत्तमात्राणामित्यर्थः—कर्णविवरैर्निर्विश्य तेषां विवरात्मकत्वात् गुणानां च शब्दवाहनत्वात् पुरुषप्रयत्नाभावेऽपि तद्द्वारा स्वत एव निःशेषेण प्रविश्य अन्तरमवगाह्य तापमात्रं हरतः तच्छीलानित्यर्थः । तान् श्रुत्वा वर्त्तमानाया मम चित्तं त्वय्याविशति अहो योऽसावेक एव तादृशानामनन्तानां गुणानामाश्रयः स एव साक्षादेवाश्रयितुं योग्य इत्यौत्सुक्येन सदा चिन्तयति तथा मादृशे त्वनन्यरतावत्यन्तायुक्तत्वात् कथंचिज्जातमपि तापं शीघ्रमेव ते हरिष्यन्तीत्याशां च वर्द्धयतीति सविशेषोऽर्थः । एवं गुणानिति प्रकृत्या शोभमानता व्यञ्जिता आकृत्या रूपमिति पूर्ववत्तदपि विशिनष्टि–दृशामिति । दृगिन्द्रियमात्रयुक्तानां यादृशस्तादृशस्तासामखिलार्थस्य लाभः सर्वमाधुर्य्यस्यानुभवो यस्मिन् यदन्तर्भूत इत्यर्थः । अतस्तद्विनाभूतानामान्ध्यनिर्विशेषतैवेति भावः । तच्च श्रुत्वा तिष्ठन्त्या मम चित्तं त्वय्याविशति सदैव साक्षात् अनुभवितुं वाञ्छतीति सविशेषोऽर्थः । रूपस्य पश्चादुक्तिस्तदहो चक्षुर्मात्रगम्यमपि साक्षादिवानुभवामीति क्रमेण निजभावोत्कर्षज्ञापनाय तथा रूपस्य चक्षुषाप्यनुभवः स्यादित्याधिक्यज्ञापनाय च अत एव गुणानां तापहरणत्वमेवोक्तं रूपस्य तु अखिलार्थलाभत्वमिति श्रुत्वा गुणानित्येतावदुक्त्वा वाक्यमसमाप्यैव भुवनसुन्दरेति सम्बोधनमत्यन्तवैवश्येन एवमच्युतेति च अत्र पत्युर्नामग्रहणमेतादृशनाम्नो महिमनामत्वान्न दोषायेति ॥ ३७ ॥ नन्वेतच्छ्रवणेनान्या हसिष्यन्तीत्याशङ्क्य ताः प्रतिसेर्ष्यं तं प्रति सदैन्यमाह—का त्वेति । हे मुकुन्द ! सर्वेषां सर्वदुःखमुक्तिपूर्वकपरमसुखद हे नृसिंह ! सर्वोर्ध्वानन्तगुणरूपत्वात्प्राकृतसर्वपुरुषश्रेष्ठ हे स्वभावेनैव तत्तद्रूपेत्यर्थः । तादृशत्वं दुर्ज्ञेयमिति चेत् प्रकटलीलया च कुलादिभिरात्मतुल्यमसमोर्ध्वं तथा नरलोकमनोभिरामं सर्वजीवमनःसुखदं च का स्त्री स्त्रीजातिः पुरुषमात्रे लुब्धस्वभावा पतित्वेन न वृणीत तत्र कन्या कुलवती महतीत्युत्तरोत्तरत्वाभावे सति क्रमान्नितरां न वृणीतां नाम स्वायोग्यत्वमननात् तत्तद्भावेऽपि धीरा का नं वृणीत अपि तु दैवदग्धबुद्धिरेव न वृणीतेत्यर्थः । तत्र विवाहावसरेऽपीति धीरात्वाभावस्यातिशायिता लज्जायाश्चात्ययोग्यता व्यञ्जिता सर्वनाशापत्तेः अथवा महती धीरा कुलवती वा का कन्या न वृणीत तत्तदभिमानेन या या न वृणीत सा सा महत्यादिरेव न भवतीत्यर्थः । विवाहावसरेऽपीति तादृशगौणकाल्यमालम्ब्यापीत्यर्थः । तत्र कुलं सद्वंशावतीर्णत्वं शीलं दयालुत्ववदान्यत्वादि वयो नित्यनवयौवनशोभोद्भेदः कुलस्य सर्वाधिक्यमत्र सर्वाधिकस्य तव तत्रोदयादवगतमेव "अहो अलं श्लाघ्यतमं यदोः कुलमिति वदिति भावः । सप्तानां कुलादिमात्राणामुक्तिः प्रेयसीभावयोग्यत्वात् एवमन्येऽप्येषामन्तर्भावेण ज्ञेयाः ॥ ३८ ॥ एवमन्यगतैरपि स्त्रियाश्चेन्मम त्वनन्यगतेर्महानेवोभयलोकनाशं आपतितः कदाचिदीश्वरोऽसौ नाप्यवधानं कुर्य्यादिति किम्वा लज्जयेति व्याकुला सत्युत्तरोत्तरं क्रियात्रयेण स्पष्टमेवाह—तदिति । अङ्ग हे विभो ! इति मुहुः सम्बोधनं दैत्येन आत्मा देहस्वाम्येव किमुत देह इत्यर्थः । भवत इति सम्प्रदानताप्राप्तावपि शेषे षष्ठी नित्यतदीयत्वाभिप्रायेणात्यन्तदानासम्भवात् अत्र सति भवतो जाया मां विधेहि यथेच्छसि तथा कुर्विति नच किञ्चिदशक्यमित्याह—हे विभो ! सर्वसामर्थ्ययुक्तेति वीरेति अन्यथा तव वीर्य्यहानिप्रसक्तिरिति भावः । टीकायाम्–आरादिति यस्मान्निकटं निकटमागच्छन्नास्ते तस्माच्छीघ्रमागत्येत्यर्थः । इत्यागमने शैघ्र्याय अन्यथा ते लज्जापि स्यादिति दृष्टान्तेनाह—गोमायुवदिति । हे अम्बुजाक्षेति सन्ततततसौन्दर्य्यस्फुरणस्वाभाव्यात् स्वदृष्ट्या मम तापं शमयेति विवक्षातश्च ॥ ३९ ॥ नन्वेतन्महत्पुण्येनैव लभ्यत इत्याशङ्क्यानादिजन्मपरम्परापुण्यानि च तदर्थमेव सङ्कल्पयन्ती

सन्देशमध्ये तदपि वैयग्र्येण निक्षिपति—पूर्त्तेति। पूर्तादिभिरर्पितैः आदिशब्दात्साक्षाच्छ्रवणादिभिश्च पूर्त्तादीनां यथोत्तरमाराधने श्रैष्ठ्यं भगवान् श्रीनारायणः, अलमत्यर्थं यद्याराधितस्तर्हि। ननु परमदुर्घटमिदं कथं सिद्ध्यतु तत्राह—परेशः कर्त्तुमकर्त्तुमन्यथाकर्त्तुं च समर्थः त्वत्तोऽन्ये ये केचिन्मनुष्या देवास्त्वदंशा वा ननु दमघोषसुतस्यादित्वं तद्विवाहस्य प्रस्तुतत्वात् यदीति निश्चये एव ॥४०॥

## श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी

हे भुवनसुन्दरेति आकृत्या प्रकृत्या च सौन्दर्य्यमुक्तम्, तत्रादौ प्रकृतिसुन्दरत्वमाह—गुणानिति भक्तवश्यतादीन् शृण्वतामिति वर्त्तमाननिर्द्देशेन श्रवणे प्रवृत्तिमात्रेणैव सद्यस्तापहरणम्, कर्णविवरैरिति च कर्णच्छिद्राणामाकाशत्वात् स्वत एव निरन्तरसम्पूर्णसुखप्रवेशः, तेन च श्रोत्रसुखकृत्त्वं मनोव्यापकत्वञ्च, तापं संसारमहाज्वालां निजाभीष्टासिद्धिशोकं वा हरतः वर्त्तमाननिर्द्देशेन तेषां तापहरणशीलत्वं तथा पश्चात् कदाचित् कथञ्चिज्जातस्यापि तापस्य हरणं बोध्यते। अंगेति प्रेमसम्बोधने आकृतिसुन्दरत्वमाह—रूपमिति, दृशिमतामिति त्वद्रूपदर्शनेनैव चक्षुष्मत्वम्, अन्यथा त्वान्ध्यमेवेति भावः। अखिलस्यार्थस्य विविधाश्चर्य्यरूपदर्शनस्य लाभात्मकमिति दृशां सर्व्वरूपदर्शनस्य तदेकविषयतयात्यन्तिकत्वेनाभेदोपचारतस्तादात्म्यमुक्तम्; यद्वा, अखिलार्थानां लाभो यस्मात्तत्। सर्व्वाश्चर्य्यमयतद्रूपदर्शनेनैव सर्व्वाश्चर्य्यदर्शनसिद्धेः। संप्लुतोदके क्षुद्राणां जलाशयानां सर्व्वेषामप्यर्थसिद्धिवत्। तच्च गीतायाम् ( २।४६ )—'यावानर्थ उदपाने सर्व्वतः संप्लुतोदके' इत्यत्र श्रीस्वामिपादादिभिर्विवृतमेव, रूपस्य पश्चादुक्तिः स्तुतिरीत्यपेक्षया, चित्तावेशे तस्य प्राधान्याभिप्रायेण। अत एव च-काराप्रयोगः, प्राधान्यञ्च व्यक्तमेव, रूपस्य साक्षाद्दृष्ट्या स्वत एव सामीप्यसुसिद्धेः; गुणैर्दूरतोऽपि नातिविरुध्येत्। किञ्च, श्रीमदधराद्यंगानां प्रत्येकं तत्तद्रसभोगार्थं गुणतोऽपि केषाञ्चित् प्रियतमजनानामपेक्षाविशेषादिति। ननु गुणरूपोपाधिना चित्तावेशः प्रेमलक्षणहान्या न किल सम्यक्, कदाचित्तत्तदुपाध्यभावे चित्तावेशहानिदोषप्रसक्तेः, तत्राह—हे अच्युतेति। कथञ्चित् कदाचिदपि गुणरूपाभ्यां च्युतिरहितः, अत एव श्रीव्रजदेवीभिरप्युक्तम् ( भा० १०।२९।३९ ) 'वीक्ष्यालकावृतमुखम्' इत्यादि। अन्यतैर्व्याख्यातम्। यद्वा, प्रेमोद्रेकेण परमदैन्यादाह—सर्व्वथा तद्योग्या न भवाम्येव, तथाप्यपत्रपं सुदुर्लभवस्तु-लाभे लज्जाहीनं सन्मे चित्तं त्वय्याविशति; अन्यत् समानम्। किञ्च, गूढोऽयमर्थः—श्रीरघुनाथावतारे श्रीसीतारूपाहं त्वया त्यक्तैव, तत् स्मरन्त्या अपि लज्जारहितं सत्। तत्र हेतुः—गुणान् रूपञ्च श्रुत्वेति, अधुना ततोऽप्यधिक-तत्तत्प्रकटनादित्यर्थः ॥ ३७ ॥ शीलं दयालुत्वं-वदान्यत्वादि, विद्याः—'अंगानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः। धर्म्मशास्त्रं पुराणञ्च विद्या ह्येताश्चतुर्द्दश ॥' इति श्रीविष्णुपुराणोक्ताः; चतुःषष्टिकलाश्च तद्वित्तमित्यर्थः। वयो नित्यनवयौवनोद्भेदः, महत्त्वादिति विशेषणानामुत्तरोत्तरस्य पूर्व्व-पूर्व्वस्मिन् हेतुत्वम्। तथा आत्मतुल्यत्वादेव नृसिंहेति, अत एव नरलोकेति यथोत्तरमेषां हेतुमत्त्वमुह्यम्। तत्र सर्व्वत्र हेतुः—मुकुन्देति। तत्र च महतीत्वेनैवात्मतुल्यस्य पतित्वेन वरणं धीरात्वेनैव, नृसिंहस्य कुलवतीत्वेन च नरलोकमनोऽभिरामस्येति यथाक्रममूह्यम्। यद्वा, तेषां व्याख्यानुसारेण कुलवतीत्वेन कुलादिभिरात्मतुल्यस्य वरणमित्येवमुत्क्रमेण किंवा त्रयाणामपि तस्या विशेषेण त्रय एव सङ्घशो हेतुत्वम्। नृसिंहत्वेन तत्रापि क्षत्त्रियत्वेन कुलादीनां यथोत्तरमवश्यापेक्ष्यतया तत्क्रमेण निर्द्देशः। अत एव श्रीभगवतोऽसंख्येषु गुणेषु तत्र च प्रथमस्कन्धोक्त-श्रीधरणी-विलाप-विख्यातसत्यादीनामेकोनचत्वारिंशत्तमे सत्यपि कुलादीनां सप्तानामेवात्रोक्तिः। अलंकारोक्तानां नायकस्य त्रयोदशगुणानामभिप्रायेण; तथा च शृंगारतिलके—'त्यागी कुलीनः कुशलो रतेषु, कल्यः कलावित्तरुणो धनाढ्यः। भव्यः क्षमी स्थिररुचिः सुभगोऽभिमानी, स्त्रीणामतः सुभगवागिह नायकः स्यात् ॥' इति; भव्यः सुवेशः, सुभगः सुन्दर इत्यर्थः। स्थिररुचिः स्थिरप्रेमा। अत्र च शीलेनैव त्यागित्वं क्षमित्वं स्थिररुचित्वञ्च; विद्यया रतिकुशलत्वं कलावित्त्वञ्च; रूपेण भव्यत्वं सुभगत्वञ्च; धाम्ना कल्पत्वमभिमानित्वञ्च संगृहीतम्। अन्यत् स्पष्टमेव ॥ ३८ ॥ खलु निश्चितम्, अनन्यगतित्वात्, पुनरप्यंगेति वैयग्र्यात्, न चान्यदेहसम्बन्धमात्रेण, किन्तु परमार्थतश्चेत्याह—आत्मेति देही; भवत इति चतुर्थ्यां षष्ठी नित्यतदीयत्वाभिप्रायेण; यद्वा, भवत एवात्मायमर्पितश्च मयार्थात् तुभ्यमेव। न च तव किञ्चिदशक्यमित्याह—विभो, हे सर्व्वसामर्थ्ययुक्तेति। वीरेति—अन्यथा तव वीर्य्यहानिप्रसक्तिरिति भावः। अन्यत्तैर्व्याख्यातम्। यद्वा, हे वीर, भवत इत्यनुवर्त्तत एव; यद्वा, तस्यात्रैव सम्बन्धः। भवतो भागम्। आरादिति तैर्व्याख्यातम्। तत्र एत्येत्यधिकं लेखकभ्रमादिति। यद्वा, समीपे वर्त्तमानश्चैद्य इति जाया-विधाने शैघ्र्यमभिप्रेतम्। अन्यथा तेन लज्जापि स्यादिति दृष्टान्तेनाह—गोमायुवदिति। अस्य च भागस्य भवानेव योग्यः ॥ ३९ ॥ आदि-शब्दाद् द्वादशयमादयः, पूर्त्ताद्यर्पणेनेत्यर्थः। यद्वा, पूर्त्तादिभिरर्पितैः, आदि-शब्दात् साक्षात्तच्छ्रवणादिभिश्च, पूर्त्तादीनां यथोत्तरमाराधने श्रैष्ठ्यम्। भगवान् श्रीनारायणः, अलमत्यर्थं यद्याराधितस्तर्हि। ननु परमदुर्घटमिदं कथं सिध्यतु ? तत्राह—परेशः, कर्त्तुमकर्त्तुमन्यथाकर्त्तुञ्च समर्थ इत्यर्थः। गदाग्रज इति पतित्वेन साक्षान्नामग्रहणायोग्यत्वात्, अग्रजत्वेन गौरवसिद्ध्या लोके तथैव व्यवहाराच्च, इति बहिर्दृष्ट्या किंवा प्रेमविशेषेण परमेश्वरतानपेक्षया भगवद्गदाग्रजयोर्भेदोक्तिः। यद्वा, भवानित्यनुवर्त्तत एव, गदाग्रजो भवान् किंवा गदाग्रजतया यद्याराधितस्तर्हि पाणिं गृह्णातु भवान्, तत्र च लक्ष्मीरूपाया मम पाणिग्रहणं तव योग्यमेवेति सूचयति। परा लक्ष्मीस्तदीश इति विशेषतश्चाधुनावश्यमेवार्हसीत्यभिप्रायेणाह—भगवान् सर्व्वैश्वर्य्यप्रकटनपर इति। त्वत्तोऽन्ये ये केचिन्मनुष्या देवास्त्वदंशा वा, तत्र दमघोषसुतस्यादित्वं तद्विवाहस्य प्रस्तुतत्वात्। तत्र च दमं निजदान्तत्वं घोषयतीति दमघोष इति

कापट्यादिकं सूचितम् । तच्च गोमन्ते जरासन्धनिर्जयानन्तरं रथानयनादिना श्रीहरिवंशे सुव्यक्तमेव । तत्सुतत्वेनास्यापि तादृशत्वमभिप्रेतम् । अन्यत्तैर्व्याख्यातम्; यद्वा, निजाशेषसत्कर्म्मवर्गफलं त्वद्भार्य्यात्वमिवेच्छामि, न च त्वय्यन्यत् किमपीत्याह—पूर्त्तेति । इष्टं होमादि, नियमस्तीर्थस्नानादिनिष्ठा, अन्यत् समानम् ॥ ४० ॥

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम्

शृण्वतां कर्णविवरैर्निविश्य तापं हरतस्तव रूपमित्यन्वयः ॥ ३७—४२ ॥

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका

वर्णनमेवाह—रुक्मिण्येति । तव सकाशं समीपं प्रतिप्रेषितोऽहं हे कृष्ण ! हे माधव तस्याः संदेशं वाचिकमाकर्ण्य अनन्तरं रुक्मिण्युक्तं क्रियतां यद्वा तदनन्तरं श्रवणानन्तरं क्रियतां यथोचितमिति शेषः । एवमुक्त्वा लिखितं रुक्मिण्येति शेषः । पत्रं पादयोः भगवत इति शेषः । निधाय तं श्रीकृष्णं प्रणनाम नमस्कृतवान् ब्राह्मण इति शेषः । तत्पत्रमादाय सादरं यथा तथा वाचयामास ब्राह्मणमुखेनेति शेषः । कथंभूतो भगवान् स्मिते सुन्दरे लोचने यस्य स धर्मात्मा याचितार्थप्रदानरूपधर्मप्रवणबुद्धिमान् इत्यर्थः । स्पृहयन्निव वाचनेनैव लिङ्गेन तद्विषयकस्पृहां व्यञ्जयन्निवेत्यर्थः । अथ ब्राह्मणः श्रीकृष्णानुज्ञया वाचिकं वक्ति—श्रुत्वेति । हे भुवनसुन्दर ! अनेनौत्सुक्यं द्योतयति त्वद्गुणानेव शृण्वतां जनानां कर्णरन्ध्रै रन्तः प्रविश्याङ्गतापमाध्यात्मिकं तापं हरतस्ते तव गुणान् तथा दृशिमतां चक्षुष्मतां दृशामखिलार्थानामनुकूलविषयाणां लाभो यस्मात्तथाभूतं तव रूपं च श्रुत्वा हे अच्युत ! मम चित्तं निर्लज्जं यथा तथा चित्तविशेषणं वा त्वय्येवाविशति आसज्जते क च तव महिमा क चाहं रूपशीलादियुक्तापि तथाप्यपत्रपं निर्विशति इत्यभिप्रायेणापत्रपमित्युक्तम् ॥३७॥ अहो कुलकन्यानामिदमतिधाष्टर्यमिति मा शङ्किष्ठा इत्याह—केति । हे मुकुन्द ! हे नृसिह ! नरश्रेष्ठ का नाम कन्या कुलवती तथा महती गुणोदारा तथा धीरा स्थिरचित्ता चेत्त्वा त्वां पतिं न वृणीत तेन न मय्येव केवलं दोषशङ्केति भावः । कथंभूतं गुणशीलादिभिरात्मनैव तुल्यं निरुपममित्यर्थः । द्रव्यं संपद्धाम तेजः प्रभावः इति यावत् तथा नरलोकस्य मनस अभिराममतीवानुकूलविषयभूतं किंच काले विवाहावसरे ॥ ३८ ॥ तन्मे इति । हे विभो ! तस्मान्मे मया भवान्खलु पतिः वृतः आत्मा च भवते तुभ्यमर्पितः अतोऽङ्ग हे कृष्ण जायां भार्यां विधेहि त्वमागत्य मामिति शेषः विपक्षे बाधकं द्योतयति अभिमर्शतु मा स्पृशतु ॥ ३९ ॥ अनेकजन्मार्जितैः सुकृतैरिदमेव मे भूयादिति प्रार्थयति पूर्तेति । पूर्त्तं स्मार्त्तं कर्म वापीकूपतटाकादिनिर्माणम् इष्टं वैदिकं यज्ञादिकर्म दत्तादयः प्रदर्शनार्थाः तत्र दत्तं दानं सत्पात्रे द्रव्यत्यागात्मकं नियमस्तीर्थस्नानादिः व्रतं कृच्छ्रादिः देवादीनां द्वन्द्वः तेषामर्चनम् आदिशब्देन भूतहितत्वदयादिसंग्रहः एभिर्यदि नूनं भगवान् आराधितः स्यात्तर्हि गदाग्रजः श्रीकृष्ण एवागत्य मम पाणिं गृह्णातु नत्वन्ये दमघोषसुतादयः गृह्णन्तु इत्यर्थः ॥ ४० ॥

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली

धर्मः आत्मा स्वरूपं यस्य स तथा सुकृतविषयो वा स्पृहयन्निव कामयमान इव । हे भुवनसुन्दर ! श्रोतॄणां कर्णविवरं निर्विश्याङ्गतापं शरीरसन्तापं हरतः सम्यग्गमो व्याप्तिर्येषां ते तथा तान् स्वरूपाभिन्नान्वा ते तव गुणात् श्रुत्वा ते तव भुवनमङ्गलमङ्गलं परमुत्कृष्टं रूपं च श्रुत्वा मे चित्तं त्वय्यपत्रपमाविशति ॥ ३७ ॥ महती विशाला मनो गुणेनेति शेषः धाम तेजः कुलवती शुद्धवंशा नरलोको मुक्तामुक्तप्रपञ्चस्तस्य मनोभिरामं मनांस्यभिरमयतीति ॥ ३८ ॥ अभिवृतः आभिमुख्येन वृतः एतद्भक्तप्रियत्वादिकं पादसरोजदास्या मप यतोऽङ्घ्रि प्रणतास्मि । तत्तस्मात् हे अङ्ग ! हे अम्बुजाक्ष ! मां जायां विधेहि चशब्द एवार्थे अस्याः मे ममात्मा देहः भवतोऽर्पित एव वीरस्य तव भागमात्मानम् आरात् दूरात् स्थातु योग्यश्चैद्यो माऽभिमर्शतु मा स्पृशतु तत्र दृष्टान्तमाह—गोमायुवदिति । गोमायवः शृगालाः मृगपतेः सिंहस्य बलिमुपहारम् ॥ ३९-४० ॥

### श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः

सोऽपि स्वयमेव वाचयामासेत्याह—श्रुत्वेत्यादि । हे अङ्ग ! अङ्गतापमित्येकमेव पदं वा, अपत्रपं चेतस्त्वयि विशति, तदनुमत्यनपेक्षया विशतीत्यत्रपत्वम् । किं कृत्वा ? शृण्वतां कर्णविवरैर्निविश्य तापं हरतस्ते तव गुणान् श्रुत्वा, हरत इति गुणविशेषयं वा । आविशतीत्ययं भावः—ते गुणाः सर्वेषां तापं हरन्ति, मम तु वर्द्धयत्येव, अतस्तव तत्वं वेत्तुं त्वयि विशतीति । तेनैवापत्रपञ्च, स्वयं प्रवेशेऽपत्रपत्वं प्रसिद्धमेव । यद्वा, त्वत्प्रवेशे सति तापो या—स्यतीति कृत्वा विशति । अतो मां प्रति स्वयंदूतीत्यवज्ञां मा कार्षीः । चेतस एवमेव स्वातन्त्र्यमिदम्, न तु ममेत्यर्थः । न केवलं गुणान् श्रुत्वा रूपञ्चेत्याह—रूपमित्यादि सुगमम् ॥ ३७ ॥ ननु महाकुल कुमारी भूत्वा कथमिदं स्वयंदूतीभावेन धाष्टर्य्यमाचरतीत्याशङ्क्याह—का त्वामित्यादि । हे मुकुन्द ! का वा कुलवती कन्या त्वां पतिं न वृणीते ? अपि तु सर्वैव, तेन मेऽयं न दोषः । ननु क्षुद्रैव तथा करोति, नैव महती च । ननु चञ्चलैव सा नाप्येवं धीरा । कीदृशं त्वाम् ? कुलशीलादिभिरात्मतुल्यं स्वसदृशं स्वोपमम् । अथवा, कन्यासम्बन्धिभिरेव कुलादिभिः स्वसदृशं कन्यासदृशम् । काले कालं प्राप्य यथासमयम् अधुना मे तथैव समयो जातः, यत्र स्वयं दौत्यमेव शोभत इति

भावः । हे नृसिंह ! पुरुषसिंह ! नरलोकमनोऽभिरामं नरलोकानां मनोऽभिरामं यस्मात् ॥ ३८ ॥ ननु योग्यास्तावन्मां स्वयं दौत्येन वृणन्तु नाम, कथमयोग्या भवती तथा करोतीत्याशङ्क्याह—तन्मे वृत इत्यादि । हे अम्बुजाक्ष ! श्रीकृष्ण ! मे मया त्वं पतिर्वृत एव । अद्य व्रियसे इति न, भवतो भवते आत्मा चार्पित एव अद्यार्पित इति न । ननु कुत इदं निगद्यते ? इत्याशङ्क्याह—जाया तव पत्नी मा लक्ष्मीरहमिति भावः । अहमित्यध्याहार्यम् । हे विभो ! अत्र वचसि तद् विधेहि तदुचितं यद् भवति तदित्यर्थः । स्वजाया केनोपेक्ष्यते ? तस्माद् यदुचितम्, तद् विधेहीत्यर्थः । किं तदुचितमित्यपेक्षयामाह—मा वीरभागेत्यादि । वीरस्य तव भागरूपां मां चैद्य आरान्निकटे माभिमर्शतु, मा स्पृशतु । मृगपतेर्बलिं गोमायुवदिति । यद्यप्यसम्भाव्यमिदम्, तथापि श्रुतिकटुत्वेनासह्यमिति कृत्वा मम वैयग्र्यम्, तेन स्वयमेव दूतः प्रेषित इत्यर्थः ॥३९॥ अतः लक्ष्मीत्वेनात्मानं प्रतिपाद्य पुनर्विचारितम्—अहो असौ स्वजनगर्वासहनः तदिदं न समीचीनं लिखितमिति तद्दोष-परिहारार्थं पुनः सविनयं यल्लिखितम् तद्-वाचयति—पूर्त्तेष्टदत्तेत्यादि । पूर्त्तं खातादि, इष्टं यज्ञं दत्तं दानम् तदादिभिर्यद्यलमत्यर्थं परेशो भगवानाराधितस्तदा गदाग्रजः श्रीकृष्णः एत्य मे मम पाणिं गृह्णातु । यद्वा, पूर्त्तेष्टादिभिरलं पर्याप्तमेतेषां नेदं फलम्, यदि परेशो भगवान् गदाग्रजः श्रीकृष्ण आराधितः श्रीरूपया समाराधितः, तदा एत्य पाणिं गृह्णातु; अन्यथा पूर्त्तादीनां किमीदृशं सामर्थ्यम् यदेवंविधं फलं जनयिष्यति ? नैवेत्यर्थः । अतो न दमघोषसुतादयोऽन्ये; ते तुच्छाः; किं मृगपतेर्बलिं गोमायुवत् हरन्तीति पूर्वोक्तिस्वरसः ॥ ४० ॥

## श्रीनाथचक्रवर्तिपादविरचिता चैतन्यमतमञ्जूषा

सोऽपि वाचयाञ्चकारेत्याह—श्रुत्वेति । हे अङ्ग ! अङ्गतापमिति वा, अपत्रपं चेतस्त्वयि आविशति त्वदनुमत्यनपेक्षया विशतीत्यपत्रपत्वम् । शृण्वतां कर्णविवरैर्निर्विश्य तापं हरतेस्ते तव गुणान् श्रुत्वा हरत इति गुणविशेषणं वा । आविशतीत्यस्यायं भावः—ते गुणाः सर्वेषां तापं हरन्ति, मम तु वर्द्धयन्त्येव । अतस्तव तत्त्वं वेत्तुं त्वयि विशति, अतोऽपत्रपं निर्लज्जम्, स्वयं प्रवेशे तथैव योग्यम् । अथवा त्वत्प्रवेशे वा शीतलं भवतीति प्रवेशो भवतु, अतो मां प्रति स्वयंदूतीत्वस्यावज्ञां मा कार्षीः ॥ ३७ ॥ अथवा स्वयंदूतीभावोऽपि नानुचित इत्याह—का त्वेत्यादि । हे मुकुन्द ! का महती महाकुलप्रसूता धीरा धैर्यशालिनी सती त्वां न वृणीत ? अपि-तु सर्वैव धीरापि स्वयं-दूत्यं करोति, योग्या भवतु, न भवतु वा, भवद्विधा योग्यैव किम् ? न हि न हीत्याह—कुलशीलादिभिरात्मना स्वेनैव तुल्यं त्वां प्रति का योग्या कुलादिभिरात्मनः सदृशमिति चेत्तथा न कापि; यदि कापि भवति, तदा लक्ष्मीरेव सा; सैव स्वयमेव वरीतुं योग्येति गूढो गर्वाभिव्यञ्जकोऽर्थः । तत्रापि काले एतावत्त्वं कालं नैव स्वयं दूत्यमकरवम्, अधुना कालः संप्राप्तः मद्भ्राता चैद्याय दातुमिच्छति, तस्यानुरोधेन पिता च माता च भवदन्तिकं कमपि न प्रहिणोति । अतो मयैव लिखितमिति धाष्ट्यं न चिन्त्यम् । एवञ्चेद् भवद्भ्रातृपक्षीयाः सर्वे राजानः, तत् कथममीभिः सह वैराय समर्थो भविष्यामि ? तत्राह—हे नृसिंह ! नृसिंह-नाम्नैव सर्वे दैत्या नङ्क्ष्यन्तीति भावः । नृसिंहत्वेन चेदुग्ररूपोऽस्मि, तदा कथं मां मृगयसे ? तत्राह—नरलोक-मनोभिरामं नरादयो ये लोकास्तेषां मनोहरम् ॥३८॥ योग्यास्तावत् पतित्वेन मां वृणन्तु नाम, कथमयोग्या भवद्विधाः ? तत्राह—तन्मे भवानित्यादि । हे अम्बुजाक्ष श्रीकृष्ण ! मे मया भवान् खलु पतिर्वृतो व्रियसे इति न, भूत एव भवतो भवते आत्मा च अर्पितः, अद्यार्प्यत इति न, कुत इदं निगद्यते ? तत्राह—अहं जाया तव पत्नी मा लक्ष्मीः, हे विभो ! अत्र तद् विधेहि तदिति लक्ष्म्या जायाया यदुचितम् । ननु लक्ष्मीश्चेद्भवती, तदा कथमिदं वैयग्रयम् ? तत्राह—मा वीरेत्यादि । एष मद्भ्राता तथा न जानाति, स त्वन्यथैव चिकीर्षति, तन्माभूदिति वैयग्रयम्; यद्यपि तन्नैव संभावि, तथापि श्रुतिकटुत्वादसह्यमिति भावः । एवं लक्ष्मीत्वेन स्वगर्वमुक्त्वा पश्चाद्विचारितम्—असौ स्वजनगर्वासहिष्णुस्तत् कथमिदं लिखितम् ? इत्याशङ्क्य तद्दोषपरिहाराय पुनर्लिखितं वाचयति—पूर्त्ते इत्यादि । पूर्वत्रौत्सुक्यम्, ततो गर्वः, ततो दैन्यम्—एते पूर्वरागस्य व्यभिचारिभावाः ॥ ३९–४० ॥

## श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

रुक्मिण्या स्वयमेकान्ते लिखित्वा दत्तपत्रिकाम् । मुद्रामुत्मुच्य कृष्णाय प्रेमचिह्नामदर्शयत् ! ब्राह्मणः श्रीकृष्णाज्ञया वाचयतीति श्रीस्वामिचरणाः । नन्वदृष्टाश्रुतचरीं नृपकन्यां त्वां मह्यं वराय पत्रिकां स्वविवाहार्थं लिखन्तीं निर्लज्जां कथमङ्गीकरोमीति चेत् सत्यमहमपि स्वदुर्वंशस्य स्वचित्तस्य स्वभावमेवावेदयामि तत् श्रुत्वा अपेक्षस्व उपेक्षस्व वा अनुगृहाण निगृहाण वा तत्र खलु दुर्लभस्य तव लाभालाभाभ्यां सदा सुखं जीविष्यन्त्या अद्य श्वो वा मरिष्यन्त्या मम न भयलज्जे इत्याह—श्रुत्वेति सप्तभिः । हे अच्युत ! तव गुणान् रूपं च श्रुत्वा मम चित्तमपत्रपं विगतलज्जं सत् त्वयि आविशतीति मच्चित्तस्य निस्त्रपीकरणे तव गुणरूपे हेतू मम च कर्णावित्यावयोरुभयोरेव दोष इति न त्वयाहमुपालम्भनीया नापि मया त्वमुपालम्भनीय इति भावः । हे अच्युतेति मच्चित्तं निस्त्रपीभूयापि त्वय्याविशति तस्मात्त्वं च्युतो न भवसि न जाने किमपरं चिकीर्षतीति भावः । नन्वन्यस्यापि पुरुषस्य गुणरूपे प्रकृष्टे भवत एवेति स किं न दूष्यते तत्र मैवं वाच्यमिति वदन्ती प्रथमं गुणान् विशिनष्टि—शृण्वतां श्रवणवतां कन्याजनानां कर्णविवरैर्निर्विश्याङ्गतापम् अङ्गयोः स्थूलसूक्ष्मयोरुभयोरेव तापं समस्तमेव हरतो नाशयत इत्येवं भूताः गुणाः कस्यान्यस्य पुंसो वर्त्तन्ते त्वं वदेति भावः । रूपं विशिनष्टि—दृशिमतां चक्षुष्मतां जनानां दृशां दृगिन्द्रियाणाम् अखिला

अन्यूनाः श्रेष्ठा ये अर्थाः विषयाः नीलमणिनीलोत्पलादीनां कनककुङ्कुमादीनां पद्मरागबन्धूकादीनां चन्द्रकान्तचन्द्रादीनां च ये वर्णा नीलपीतरक्तशुक्लास्तेभ्यः सकाशादपि महामाधुर्यसम्बन्धी लाभो यत्र तत् रूपं त्वदीयगात्ररसनाधरनखादिसौन्दर्य्यं तस्मादेवं भूतं रूपं कस्यान्यस्य वर्तते इति भावः। अत एवानुरूपं सम्बोधयति हे भुवनसुन्दर ! भुवनेपूर्ध्वाधोवर्तिषु प्राकृताप्राकृतेषु लोकेषु सुन्दर प्रकृत्या चाकृत्या च शोभमान !॥३७॥ नन्वस्तु मल्लक्षणः पुरुष एव त्रिजगत्यस्मिन्निरुपमः किं कन्यापि श्रोत्रनेत्रवती जगत्यस्मिंस्त्वमेवैका वर्त्तसे यत एवमन्या न निर्लज्जावतीति तत्राह—का त्वेति। हे मुकुन्द ! मुखे कुन्दवद्धासो यस्येति मामेव हसितुं प्राप्तावसरेत्यर्थः। का महती रूपगुणवती धीरा बुद्धिमती कुलवती त्वां पतिं न वृणीत। तेन कुरूपा दुःशीला कुबुद्धिरनभिजातैव अशृण्वती वा त्वां व वृणीते इति भावः। कीदृशं कुलादिभिरात्मनैव तुल्यं निरुपममित्यर्थः। काले स्वसमये इति अन्या अपि मत्तुल्याः बह्वय एव कन्याः स्वसमय एव त्वां वरिष्यन्ति नत्वधुनैव मत्समय इति भावः। हे नृसिंह। नरश्रेष्ठ हे सिंहवद्दुर्वशेति न मे त्वद्वशीकारे कापीच्छास्तीति भावः। तदपि नरलोकमात्रस्यैव त्वं मनोऽभिरमयसीति मन्मनसः कोऽपराध इति भावः॥ ३८॥ यस्मादेवं तत्तस्मात् मया भवान् पतिर्वृतः प्रथममेव नत्वधुना व्रियसे आत्मा जीवो देहश्चार्पितः। पत्रीप्रेषणं तु भवन्मनो निर्द्धारज्ञापनार्थमेव भवतोऽङ्गीकारे सतीमं पालयामि अनङ्गीकारे तु ज्वालयामि ननु कस्मैचिदपि ददामि यदि स्वयं ब्रह्माप्यागत्य स्वयं वदेदिति भावः। किन्त्वात्मानवेदनमिदं मे वलिराजवन्न निर्भावमेव किन्तु सभावमेवेत्याह—हे विभो ! भवतो जायां विधेहि। यथा कश्चित् कस्मैचित् किमपि भोज्यं दत्वा इदं त्वया स्वयं भोक्तव्यमेवेति ब्रूते इत्यतो निर्भावात् स्वभावमात्मनिवेदनं प्रेमस्पर्शित्वाच्छ्रेष्ठमिति ज्ञेयम्। किञ्च स्वस्याङ्गीकारमनङ्गीकारं वा ब्राह्मणं शीघ्रं प्रेष्याहं ज्ञापनीयेत्याह—मेति। वीरस्य तव भागमिमं चैद्यो माभिमर्शतु। मयि त्वदाशया देहमिममदहन्त्यामकस्मात् चैद्य आगत्य यदि स्पृशेत् तत्क्षण एव त्वदाशायां निवृत्तायां त्वद्विरहाग्निरेवाति प्रज्वलितं एनं भस्मीभूतं कुर्यादेव। किन्तु तवाप्रतिष्ठा भाविनीति मे भयमिति भावः। अप्रतिष्ठामेवाह—मृगपतेर्बलिं गोमायुः शृगाल इवेति। अम्बुजाक्षेति तदानीं त्वन्नयनकमलं ध्यायन्त्या मम तु देहे दह्यमानेऽपि न तापो भावीति भावः॥ ३९॥ अये महादुर्लभपुरुष ! त्वं नैकजन्मसुकृतलभ्यस्तस्मात् सामान्यतस्त्वत्प्राप्तिकामया निष्कामया वा यदि मया पूर्वपूर्वजन्मसु बहूनि सुकृतानि कृतानि तदा तेषामेष एव फलविशेषो भूयादिति प्रार्थयते। पूर्त्तेति। पूर्त्तैर्दत्तैर्भगवत्सम्प्रदानकैर्नियमैस्तीर्थस्नानादिभिः व्रतैरेकादश्यादिभिः देवविप्रगुर्व्वर्च्चनैर्भगवदर्च्चनाङ्गैः यदि मया भगवान् अलमतिशयेनाराधितस्तदा मानुष्या मे मानुष एव भगवान् गदाग्रजः आगत्य पाणिं गृह्णातु नत्वन्ये नारायणादयोऽपि देवा मानुषा वेत्यर्थः। दमघोषसुतस्य तत्रादित्वेनोल्लेखस्तु तद्विवाहस्य प्रस्तुतत्वादेव॥ ४०॥

### गूढार्थदीपिनी

हे अच्युत ते गुणान् रूपं च श्रुत्वा मे चित्तमपत्रपं लज्जारहितं सत् त्वयि आविशति आसक्तं भवतीत्यन्वयः। कथंभूतान् गुणान्। शृण्वतां पुंसां कर्णरन्ध्रैरन्तःप्रविश्य अङ्गतापं हरतः। अङ्गेति सम्बोधनं वा। कथंभूतं रूपम् दृशिमतां चक्षुष्मताम् अभीष्टपदार्थानां लाभो यस्मात्तथाभूतम्॥ ३७॥ हे मुकुन्द का नाम कुलवती कन्या त्वां पतिं न वृणीत। कथंभूतम्। कुलादिभिरात्मनैव तुल्यं निरुपमम्। पुनश्च नरलोकमात्रस्य मनोऽभिरमयतीति तथा। महती गुणवती। सिंहः श्रेष्ठः॥ ३८॥ अङ्ग हे। तत् तस्मात् मे मया वृतः आत्मा देहश्च भवतः भवतेऽर्पितः। शेषे षष्ठी। अतोऽत्रागत्य मां जायां विधेहि। वीरस्य तव भागं शिशुपालः मां दूरादपि मा स्पृशतु। यथा शृगालः सिंहस्य बलिं न स्पृशति तद्वत्॥ ३९॥ पूर्तादिभिर्यदि भगवान् अलमत्यर्थमाराधितस्तर्हि स एव मे पाणिं गृह्णातु नान्ये शिशुपालादयः। पूर्तं वापीकूपादि। इष्टं यागादि। दत्तं दानम्। नियमो गङ्गास्नानादिः। व्रतमेकादश्यादि॥ ३०॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

श्रीरुक्मिण्युवाचेति। हे भुवनसुन्दर ! निरतिशयसौन्दर्यालय हे अच्युत ! नित्यैश्वर्यं सम्बोधनाभ्यां भगवत्याः अनावृत्तज्ञानवत्ता द्योतिता हे अङ्ग भर्तः अनेन सम्बोधनेन भगवत्याः भगवता भर्त्रा सह नित्यसम्बन्धो द्योतितः। अपगता त्रपा यस्मात्तन्मे चित्तं त्वय्याविशति श्रीमत्पुरुषोत्तमस्य स्वभर्तुः प्रार्थनायां मम का त्रपेत्यर्थः। एवं स्वभावत एव देव्याः ज्ञानातिशयः तद्वाक्येन सूच्यते। अथवावतारलीलानुरूपेण तद्वाक्येन तस्याः ज्ञानातिशयः सूच्यते गुणानुरूपं च श्रुत्वा त्वयि चित्तमाविशतीति। अनेन अन्तःपुरगताया देव्याः यस्मात्कस्माचिदपि जनात् यथा कथञ्चिदपि श्रवणेन यथावद्भगवद्गुणरूपधारणशक्तिर्द्योत्यते कथम्भूतान् गुणान् शृण्वतां ब्रह्मादिश्वपचपर्य्यन्तानां कर्णविवरैरन्तः प्रविश्य तापं संसारतापं हरतः। अनेन श्रीकृष्णगुणश्रवणं ब्रह्मादिश्वपचान्तजीवसंसारनिवर्तकमिति द्योत्यते। कथम्भूतं रूपं दृशिमतां सर्वेषां ब्रह्मादिश्वपचान्तानां दृशामखिलानामर्थानां लाभो यस्मात्॥ ३७॥ ननु महाकुलप्रसूतायास्तवैवं लोकविरुद्धमनुचितमत आह केति। कुलवती तत्रापि धीरा धैर्य्यवती किं बहुना कुलं परिवारः शीलं सुस्वभावः रूपं सौन्दर्य्यं विद्या यथार्थज्ञानं वयोऽवस्था द्रविणं वित्तं धाम पुण्यार्जितं लोकद्वयं च तैर्महती। एवम्भूता का नाम कन्या आत्मतुल्यमनुपमम्। अतः लोकमनोऽभिरामं सर्वलोकानां मनांसि अभिरमयतीति तथा सर्वबुद्धिप्रेरकं वेदमात्रार्थ-

भूतं हे मुकुन्द ! मुक्तिप्रद हे नृसिंह ! भक्तमनोरथपूरणार्थं नृसिंपादिरूपेण कृतावतार त्वा त्वां पतिं न वृणीतेत्यन्वयः ॥ ३८ ॥ हे विभो ! सर्वव्यापक सर्वसाक्षिन् तत्तस्मान्मे मया भवान् खलु पतिर्वृतः आत्मा च भवतोऽर्पितः अतः हे अङ्ग ! त्वमत्रागत्य मां भवतो जायां विधेहि अम्बुजाक्ष ! मृगपतेः सिंहस्य बलिं गोमायुवत् वीरस्य तव भागं माम् आरात् शीघ्रमागत्य मा अभिमर्शतु मा स्पृशतु ॥ ३९ ॥ यदि पूर्तादिभिरलमाराधितः भगवान् परेशो गदाग्रजः तर्हि मे पाणिं गृह्णातु अन्ये जीवा दमघोषसुतादयो न गृह्णन्तु तत्र कूपादिनिर्माणं स्मार्तं कर्म पूर्तं, यज्ञादि वैदिकं कर्म इष्टम् दत्तं विविधं दानम् अन्यत्स्पष्टम् ॥ ४० ॥

## श्रीसत्यधर्मकृता श्रीभागवतटिप्पणी

अङ्ग हे भुवनसुन्दर । शृण्वतां त इति संगतांस्त इति च सङ्गतौ पाठौ । शृण्वतां जनानां सङ्गतांस्त्वयि सदा विद्यमानान्कर्णविवरं प्रविश्य तापं हरतस्ते गुणान् श्रुत्वा भुवनमङ्गल ते मङ्गलं रूपं च श्रुत्वा स्थितायां मे चित्तमपत्रपं निर्लज्जं त्वयि विशति । न प्रत्यावर्तयितुं शक्यमित्याह । परं यथा तथा विशतीति । भुवनमङ्गलानां मङ्गलं तन्मङ्गलत्वप्रदमिति पदमेकं वा । परन्तापमितराशक्यपरिहारं तापमिति वा । अङ्गतापमिति पदं वा । शरीरतापमित्यर्थः । भुवनमङ्गलमङ्गलमिति छेदः । भुवनस्य मं ज्ञं यद्दानं वा यस्मात्तद्गलस्य मे मङ्गलसूत्रं वा येन तदित्यान्तरङ्गिको भावो रुक्मिण्याः । अवरोपो हरतो रुद्रादङ्गतापं य आविशत्याविशत् । क्रियासम्बन्धे लट् । तेन मन्मथेनापत्रपं विशतीति वा ॥ ३७ ॥ अहो रहोगतानां कन्यानामेवमपत्रपाप्रवृत्तिः कथमिति न कथय मधुनाथ तव गुणा एवैवं त्रपापनोदं कुर्वन्ति कामगामिति विज्ञापयति । केति । हे नृसिंह मुकुन्द । नृसिंहेत्यनेन मिलितानां जरासुतादीनां गोपायुतामभिप्रेत्य न तेभ्यस्तव भयमिति ध्वनयति । कुलवती सत्कुलप्रसूता व्रीडावती साऽपि महती गुणतः कन्या का । गुणाश्च शीलं च रूपं च विद्या च वयश्च द्रविणं द्रव्यं च धाम तेजश्च तैरात्मतुल्यं स्वसमानं नान्य एतद्वानस्तीति भावः । नरलोकमनोभिरामं नरा अविनाशित्वान्मुक्ता लोका अमुक्ताश्च तेषां मनोऽभिरामयतीति तं त्वा त्वां न वृणीत न काङ्क्षेत् । किन्त्वेतन्मात्रमपेक्षितमित्याह । काल इति । अनुढायाः प्रौढायाः काले विवाहकाले । आत्मतुल्यत्वं तव प्रामाणिकमित्यप्याह । महतीगुणशीलो नारदो महत्या वीणाया गुणो ध्वनिर्येन स नारदः । महती नारदस्येत्यादेः । शीलं सदाचारस्तद्वन्तः सनकाद्या रूपवान्मारो विद्या सरस्वती आवया ब्रह्मा । एष ब्रह्माऽतिवृद्ध इत्यादेः । द्रविणधामा कुबेरो द्रविणवान्कुबेरो धामभिः प्रकाशात्मकैश्चन्द्रसूर्याग्न्यादिभिरात्मतुली आत्मनैव तुलाऽस्यास्तीति स तथा । शिखादिः । इति यः कथित इति शेषः । तं भगवन्तं त्वमिति वा । इन्दिरायाः पतिमित्यनेन स्वस्यास्तदात्मकतां ध्वनयन्ती गुणादिधामान्तैरात्मनः स्वस्यास्तुल्यमित्यर्थमपि सूचयामासेत्यवसेयम् ॥ ३८ ॥ स तादृशस्त्वं मयाऽप्यभिवृतः । वरणे कारणमीरयति । इन्दिरायाः पतिर्भक्तप्रियः कृपणलोकशरण्य ईश इत्येतन्मत्वेति । अङ्ग कृष्ण प्रियतम । तव पादसरोजदास्या मम कामं कुरु । किञ्चिद्विनैतत्प्रत्यर्पणेन तव तर्पणं कर्तुं क्षमाऽहमित्याह । तेऽङ्घ्रि प्रणताऽस्मीति । अस्मीत्युत्तमपुरुषप्रयोगादहमिति लभ्यते । यद्वाऽस्मीत्येकदा तिङन्तमेकदावर्तितमहमित्यर्थेऽव्ययम् । तथा हि भारवौ । आसंसृतेरस्मि जगत्सुजातस्त्वया गतेयद्बहुमानपात्रमिति । न च तत्रापि जातोऽस्मीत्यन्वयसम्भवेन निर्धारणमिति तु । दासे कृतागसि भवत्युचितप्रभूणां पादप्रहार इति सुन्दरि नास्मि दूये । उद्यत्कठोरपुलकाङ्कुरकंकटकाग्र्यैर्यत्खिद्यते तव पदं ननु सा व्यथा म इति गणव्याख्याने दूय इत्यस्य सत्त्वादस्मीत्यस्य निराबाधमहमित्यर्थकता स्वीकार्याऽन्यथा वैय्यर्थ्यादित्यभिधानादपास्तम् । खल्वितरान्प्रतिषिध्य भगवान् पतिर्वृतस्तत्त्वेन वृतोऽङ्ग विभोजायां धेहि । कुर्वित्यनुक्त्वा विधेहीत्युदीरयन्ती हे विधे त्वमपि साहितीं विधेहीति कटाक्षितो धातेति सूचयति । न मे धातेति वक्ष्यमाणानुकूल्यात् । अयमात्मा देहो भवतोऽर्पितश्च । लग्नादिना समीपलग्नानीति न विलम्बमवलम्ब स्वान्तराया अन्तरा यास्यन्तीत्याह । मेति । चैद्य आरात्समीपे वीरभागं माऽभिमर्शतु मायम् । तव निदर्शनमाह । मृगपतेर्बलिं गोमायुरिवेति । वीरो गरुडप्रेरकस्तत्तुरगो हरिस्तस्य भागः । मा चासौ वीरभागश्च तमिति वा । रमारूपं त्वद्भागं न मृशत्वित्यन्वयः ॥ ३९ ॥ परोक्षप्रिया इव हि देवा इत्यादेः पारोक्ष्येण विज्ञापयति । पूर्तेति । एवं कूपारादि इष्टं यजनं दत्तं दानं नियमो वाङ्नियमनं व्रतं कृच्छ्रचान्द्रायणादि देवार्चनं विप्रार्चनं गुर्वर्चनमादिर्येषां तैः । भगवान्परेशो यर्ह्यलमाराधितो मया तर्हि गदाग्रज एत्य पाणिं गृह्णातु । दमघोषसुतादयोऽन्ये न गृह्णन्तु ॥ ४० ॥

## श्रीमद्वल्लभाचार्यकृता सुबोधिनी

शिष्टं सर्वमुक्त्वा रुक्मिणीवाक्यानि स्वतः पत्रिकातो वा निरूपयति **श्रुत्वा गुणानिति** सप्तभिः । षड्गुणाः भगवांश्च । एते चेत्प्रार्थ्यन्ते, तदा निष्प्रत्यूहं कार्यं भवतीति सप्तभिर्विज्ञापना । आदौ भगवन्तं धर्मिणं विज्ञापयति **श्रुत्वा गुणानिति** । त्वयि चित्तं विशतीति मनोवृत्तिं निरूपयति । आत्मा तु त्वदीय एव । इन्द्रियाणि चेदन्यपराणि भवेयुः, अन्तःकरणं शरीरं वा, तदा सर्वनाश इति विनिश्चित्येन्द्रियाणां त्वत्परत्वे मनोऽपि त्वत्परं जातमिति, शरीरमपि त्वत्परं कर्तव्यमिति समोद्योग इति प्रघट्टकार्थः क्रमेण गुणा निरूप्यन्ते । भगवदैश्वर्यं चैतदिति सूचितम् । गुणद्वारा स्वतोऽपि चित्तवशीकरणमैश्वर्यादप्यैश्वर्यं भगवदीयानां कान्तिगुणस्वरूपाणां माहात्म्यं निरूप्यते । हे **भुवनसुन्दर** भुवनेष्वेक एव सुन्दरः । अनेन कान्त्याधिक्येन स्त्रीणां स्वतश्चित्तवृत्ति-

रुक्ता। **ते गुणान् शृण्वतां कर्णविवरैरन्तर्निविश्य अङ्गतापं** हरतां सताम्। रूपं च दृशिमतामखिलार्थलाभं यतः। अतस्त्वयि मे चित्तमाविशति। वहिरिन्द्रियद्वयमेव नियामकम्, अन्तरिन्द्रियस्य श्रोत्रं चक्षुश्च। श्रुतावपि 'अक्षण्वन्तः कर्णवन्त' इत्यत्र तथैव निरूपितम्। उभयेषामुपकारं त्वद्गुणाः त्वद्रूपं च करोति। तत्रैकमान्तरं तापं हरति। एकं च बहिः सर्वपुरुषार्थान् प्रयच्छति। श्रवणमात्रेऽपि क्रियमाणे प्रयत्नं विनापि त्वद्गुणाः स्वत एवान्तर्निविष्टाः। तेषामपि निवेशने प्रतिबन्धाभावायाह **कर्णविवरैरि**ति। अपावृतानि कर्णरन्ध्राण्यपेक्ष्यन्ते, अन्यथा न प्रविशन्तीत्येतावत्पुरुषकर्तव्यमुपदिष्टम्। अतः **कर्णविवरैः** पातालविवरवत्प्रसिद्धैः अन्तर्निविश्य अङ्गानां तापं हरन्ति गुणाः। **अङ्गे**ति सम्बोधनं वा आत्मत्वेन। रूपं च ये दृशिमन्तः दर्शनयुक्ता येषां चक्षुःकार्यमस्ति। रूपभेदविद इति प्रथमा कक्षा। सर्वात्मना दृश्यगुणपरिज्ञानम् अन्तिमा, तेषां दृशां चक्षुषां अखिलार्थानां लाभो यस्मात्। चतुर्विधपुरुषार्थाः चक्षुषां सिध्यन्ति। चक्षुषः सूर्यभावो मोक्षः। रूपपानं कामः। रूपग्रहणमर्थः। तत्रावगाहनं धर्म इति। फलवतामेषां फलान्यप्यूह्यानि। तत्रापि पुरुषार्था न सम्पादनीयाः, किन्त्वकस्मादुपलब्धा निधय इव प्राप्यन्ते। यत्रैवं इन्द्रियाणामुपकारं त्वद्धर्माः कुर्वन्ति, तत्र चित्तमपि ममापि तथा भविष्यतीति त्वयि निर्विशति। चित्तस्य हि द्वयं प्रतिबन्धकम्, लोको वेदश्च। तत्र लोकमतिक्रम्य प्रवर्तत इत्याह **अपत्रप**मिति। अपगता त्रपा यस्मात्। लज्जा हि लोके नियामिका॥ ३७॥ वैदिकं दोषं परिहरति **का त्वे**ति। वेदोऽपि लोकानुसारी भवतीति हि विज्ञायते। अतो लोके यदविरुद्धं सर्वथा व्यवहारे अविगीतम्, तद्वेदेऽप्यविरुद्धमिति। एतादृशोऽर्थः मयैव कृत इति चेत्, तदा विरुद्धो भवेत्, किन्तु सर्वैरेव क्रियत इतीममर्थं व्यतिरेकेण साधयते। का वा कन्या त्वां न वृणीत। सर्वस्यापि यद्यपि मोक्षोऽभिप्रेतः, तथापि स्त्रीयोनिरतिदुष्टेति तत्परित्यागार्थं स्त्रिया अत्यर्थमपेक्षितः। नन्वस्ति लोके मोक्षसाधनमिति चेत्। तत्राह **महती**ति। महत्त्वं प्राप्ता न सर्वं परित्यक्तुं शक्नोति। यथातिवृद्धा। अतस्तस्या गृह एव चेन्मोक्षदाता भवति, तदैव मोक्षः सिध्येत्। किञ्च। धर्मार्थकामार्थमपि त्वमेव भजनीय इत्याह **कुले**ति। सप्तधर्माः समा ययोः तयोरेव विवाहः विवादश्चेति। कुलं तुल्यमपेक्ष्यते। तत्सोमवंशितवादावयोस्तुल्यम्। तथा रूपमपि। मदर्थमेव रूपं गृहीतमिति मद्योग्यमेव भवितुमर्हति तव रूपम्। अहमपि त्वदर्थमेव रूपं गृह्णामीति ममापि तथा। वयश्च योग्यमेव। गृहमत्र पितृगृहम्। प्रसिद्धस्य पुत्रः, प्रसिद्धस्य कन्येति चतुष्टयं निर्विवादम्। लोकप्रतीत्या द्रविणमपि तुल्यम्। विद्या मातेति चिद्रूपेति वा विद्यायामपि तुल्यता। महती श्रद्धा भगवति वर्तत इति 'यो यच्छ्रद्धः स एव स' इति ऐक्यादनुरोधाद्वा। शीलमपि तुल्यम्। शीलं स्वभावः शान्तोग्रादिः, आचारो वा। उभयमप्यत्र बाह्याभ्यन्तरं ग्राह्यम्। ननु भगवान् शान्तः विलम्बेन च कार्यं करोति, माया तु सत्वरेति वैधर्म्यस्य विद्यमानत्वात् कथं तुल्यतेति चेत्। तत्राह **धीरे**ति। मयापि धैर्यमवलम्बनीयम्, भगवत्कार्यानुरोधेनेति। ननु भगवति भजने न तुल्या गुणा अपेक्ष्यन्ते, किन्तु भगवदुत्कर्षं ज्ञात्वैव प्रवर्तत इति किमिति तुल्यत्वं निरूप्यत इति चेत्। तत्राह **पति**मिति। पतित्वेन स्वीकारे तुल्यता वक्तव्या। अन्यथा दासीत्वं भवेत्। नन्वस्तु को दोष इति चेत्। तत्राह **कुलवती**ति। कुलस्थास्तथा सति खेदं प्राप्नुयुरिति भावः। किञ्च। **कन्ये**ति। अवश्यं कन्यया वरणीयः कश्चित्पतित्वेन, अवरणे स्वयं न गृह्णीयात्। मुख्यविनियोगार्थमन्याधीनां वा कुर्यात्। किञ्च। उपपत्तौ सत्यां तत्परित्यागे कारणाभाव इत्याह **काले नृसिंहे**ति। अवसरे तत्परित्यज्य अन्योच्छिष्टा भूत्वा पश्चाद्भगवदर्थं यत्ने क्रियमाणे असमञ्जसं स्यात्। अयोग्यत्वाशक्यत्वे तु न स्त इत्याह **नृसिंहे**ति। नरत्वाद्योग्यत्वम्, सिंहत्वात्समर्थत्वमिति। किञ्च। नरलोके मनसोऽयमेवाभिरामः। अतो वरणे अभिराम एव वरणीय इति योग्यत्वाद्यविचारेणापि त्वमेव वरणीय इत्यर्थः॥ ३८॥ एवं योग्यतां निरूप्य विज्ञापनामाह **तन्मे भवान्खलु वृत** इति। अत्रापि गृहे सर्वदा मयोच्यते, कृष्ण एव पतिर्मम, नान्य इति। एतत्सर्वेऽपि जानन्ति, तथापि बलात्प्रवर्तन्त इति खलुपदार्थः। किञ्च। पूर्वमपि लक्ष्मीस्वयंवरे अमृतमथने मया भवानेव वृतः सैवाहमिति भावः। उपाध्यन्तरं निवारयन्त्याह **पति**रिति। एवं स्वकृतमुक्त्वा भगवन्तं प्रार्थयते **जायां विधेही**ति। अङ्गेति स्नेहसम्बोधनम्। अन्यथा धार्ष्ट्यमनुचितं स्यात्। अङ्गस्य वा जायां विधेहि। अन्यथा भगवान् सर्वपतिरिति प्रकारान्तरेण वा जायात्वं स्यात्। जायापदेन यावानर्थः स सर्वोऽपि विधेयः। ननु भगवान् भगवच्छास्त्रविरुद्धमर्थं न गृह्णातीति कथं त्वां ग्रहीष्यतीति चेत्। तत्राह **आत्मार्पितश्चे**ति। आत्मा मदीयः संघातः तुभ्यं समर्पितः। अतो यथेष्टविनियोगे न कापि चिन्ता। चकारात्सर्वमेवास्मत्सम्बन्धि समर्पितमिति सर्वत्रैव तव कामचारः। अतस्तदपेक्षा तत्प्रतिबन्धो वा न घटत इत्युक्तं भवति। भवत एवात्मा, अतो भवते समर्पित इति नालौकिकं किञ्चित्। अङ्गीकृते शीघ्रमागमनार्थं बाधकमाह **मा वीरभाग**मिति। वीरस्यैव भागोऽहम्। शौर्येणैव लक्ष्मीः प्राप्यत इति नैव दत्ता अन्यस्य भवति। अत एव य एव शूरः, स एव राज्यमुपभुङ्क्ते। तथा सति चैद्यस्य अशूरत्वात् भोगाभावेऽपि केवलं काकवत्स्पर्शो भवेत्, तदा महतोऽपि भोगाभावाज्जन्मवैयर्थ्यम्। अनेन महती आपदा उपस्थितेति न क्वापि वाक्ये दूषणं मन्तव्यमिति भावः। आराद् दूरादपि अभिमानेनापीत्यर्थः। दानानन्तरं हरणे अभिमानोऽपि भवेत्। वाग्दानं तु 'अनृतं वै वाचा वदती'ति श्रुतेरप्रमाणमेव। अन्यथा पुण्यपापव्यवस्थायां वाङ्मनसस्य अप्रामाण्यं न स्यात्। एतदर्थमेव **श्रुतिः** प्राह 'वाङ्मनसयोरनृतत्व'मिति। ननु स जानाति मदीया त्वमिति, त्वया वा वक्तव्यः, ततः कथं स्प्रक्ष्यतीत्याशङ्क्याह **गोमायुव**दिति। त्वदनागमने मृतप्रायां मृतां वा दैवकल्पितं स्वभागं ज्ञात्वा स्प्रक्ष्यतीति भावः। नन्वेवमस्तु, को दोष इति चेत्। तत्राह **मृगपतेरि**ति। मरणे यद्यपि नानुपपत्तिः, तथापि तदनन्तरं

स्पर्शे महदनौचित्यम्। न हि सिंहाय तद्भक्तैः निवेदितं शृगालो भक्षयितुमर्हति। अम्बुजाक्षेति। दृष्ट्वैव तापनाशकत्वमुक्तम्। तेन वरणमप्ययुक्तमिति भावः ॥ ३९ ॥ एवं दृष्टसामग्र्या भगवत्प्रार्थनामुक्त्वा स्वस्य सर्वेणापि धर्मेण शपथमपि वदन्ती प्रार्थयते पूर्तेति। बाल्ये खातादिकं कर्तुं शक्यत इति इष्टात् पूर्वं निर्देशः। पूर्तं खातादि, इष्टं यागादि, दत्तं तुलापुरुषदानादि, नियमाः परित्यागरूपाः, व्रतानि ग्रहणरूपाणि, देवानां विप्राणां गुरूणां वार्चनानि। एवमष्टविधान्युद्दिश्य काण्डत्रयमपि संगृह्य स्मार्तपौराणिकान् धर्मानादिशब्देन संगृह्णाति। एवं सर्वैरेव धर्मैः भगवानेव चेदाराधितः, न तु कामनार्थं किञ्चिदपि विनियुक्तम्, तदा भगवान् स्वयमेत्य पाणिं गृह्णातु, केवल एव आराधित इति न दमघोषसुतादयः स्पर्शमप्यर्हन्ति। गदाग्रज इति विषयप्रियत्वमुक्तम्। तस्मिन् समागते कंसे हते पश्चाद्गद उत्पन्न इति भगवदाविर्भावानन्तरमपि तेन पित्रादेर्वंशः कारित इति वंशकरणे तस्येच्छा सूचिता। अत एव एत्य स्वयमागत्य पाणिं गृह्णातु इति स्वकृतधर्मेषु भारारोपः। ननु 'मद्भक्तपूजाभ्यधिके'ति भगवद्भक्तानां वा ग्रहणे को दोष इति चेत्, तत्राह अन्य इति। ते भगवत्प्रतिपक्षाः। अन्यथा तु दासीदासभावेनापि भजनं भवतीति नात्यन्तमाग्रहो भवेत्। अन्यथा अपघातमरणे यमादयो वा मा गृह्णन्त्विति अन्यनिषेधः ॥ ४० ॥

### श्रीसुबोधिनी-सारः

मंगलं मंगलार्थं च वाचयामास ब्राह्मणः। पत्रमेकांततो दत्तं रुक्मिण्या परमंगलम् ॥ १ ॥

तत्र तद्वाक्यम्। भुवनसुन्दर हे अच्युत शृण्वतां पुंसां कर्णच्छिद्रैरंतः प्रविश्यांगतापं हरतस्ते तव गुणान् श्रुत्वा दृशिमतां चक्षुष्मतां दृशां नेत्राणां सर्वार्थप्रदं रूपं च श्रुत्वाऽपत्रपं निर्लज्जं मे मम चित्तं त्वयि प्रविशति ॥ ३७ ॥ हे मुकुन्द हे नृसिंह कुलादिभिः स्वात्मयोग्यं नरलोकस्य मनसामभिरामो यस्मिंस्तं पतिं त्वा त्वां कुलवती महती पूज्या धीरा का कन्या न वृणीत काले समये ॥ ३८ ॥ हे विभो तत्तस्मान्मे मया भवान् पतिर्वृतः खलु एवात्मा च भवतोऽर्पितः अतो मां जायां पत्नीं त्वं कुरु हे अंग हे अंबुजाक्ष वीरस्य तव भागं मामत्र पुरे चैद्यः शिशुपालो मा स्पृशतु आराच्छीघ्रमागत्य समीपे वा मृगपतेः सिंहस्य बलिं गोमायुवत्सृगाल इव ॥ ३९ ॥ इदमेव भूयादिति प्रार्थयते। पूर्तेष्टदत्तानां लक्षणमुक्तं प्राक् नियमो भक्ष्यादेः व्रतं चांद्रायणादि देवब्राह्मणगुरुपूजनादि भजनश्रवणादि तैः यदि परेशो विष्णुर्भगवानाराधितः सर्मचितोऽलं भृशं तर्हि एत्याऽऽगत्य गदाग्रजः श्रीकृष्णो मे मम पाणिं हस्तं गृह्णातु। येऽन्ये दमघोषपुत्रादयस्ते न गृह्णन्तु ॥ ४० ॥

### गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

रुक्मिण्याः सन्देशं च पृथक्तया वर्णयति—श्रुत्वेति। तत्र तावत् स्वमोहं सूचयन्ती सम्बोधयति—भुवनसुन्दरेति। 'न च्यवन्ति भक्ता यस्य सोऽच्युतस्तथाविधस्य ममाङ्गीकारो युक्त एव' इति सूचयन्ती पुनः सम्बोधयति—अच्युतेति। स्वगुणान् शृण्वतां जनानां कर्णरन्ध्रैरन्तः प्रविश्य अङ्गतापं अध्यात्मिकादि दुःखं हरतः ते तव गुणान् तथा दृशिमतां चक्षुष्मतां च दृशां चक्षुणां च अखिलार्थानाम् अनुकूलविषयाणां लाभो यस्मात्तथाभूतं तव रूपं च श्रुत्वा अपत्रपं निर्लज्जं सत् मे चित्तं त्वय्येवाविशति आसज्जते ॥ ३७ ॥ 'अहो कुलकन्यायास्तवैवं धाष्ट्र्यं न युक्तम्' इति शङ्कीरित्याह—केति। हे मुकुन्द मुक्तिप्रद ! हे नृसिंह नरश्रेष्ठ ! का नाम कन्या कुलवती महती गुणोदारा तथा धीरा वशीकृतचित्ता गुणशीलादिभिरात्मनैव तुल्यं निरुपमं तथा नरलोकस्य मनसामभिरामोऽभिरमणं यस्मात्तमतीव प्रियं त्वा त्वां काले विवाहयोग्यसमये पतिं न वृणीत ? । अतो न केवलं मय्येवेयं दोषाशङ्केत्याशयः। कुलं महति कुले जन्म। शीलं सुस्वभावः। रूपं सौन्दर्यम्। विद्या वैदिकी, लौकिकी च। वयस्तारुण्यम्। द्रविणं धनसञ्चयः। धाम तेजः ॥ ३८ ॥ स्नेहं सूचयन्ती सम्बोधयति-अङ्गेति। 'भयशङ्का तु त्वयि नास्त्येव' इत्याशयेन पुनः सम्बोधयति—अजितेति। यस्मात् कुलशीलादिभिस्त्वं निरुपमस्तस्मात् मे मया भवान् खलु निश्चयेन पतिर्वृतः, आत्मा स्वदेहादिसङ्घातश्च भवतेऽर्पितः। अतस्त्वमत्रागत्य मां भवतो जायां भार्यां विधेहि सम्पादय। विपक्षे विलम्बे च बाधकमाह-मेति। स्वमोहे तत्सौन्दर्यं हेतुं सूचयन्ती सम्बोधयति—अम्बुजाक्षेति। वीरस्य तव भागं मां आरात् शीघ्रमागत्य चैद्यः शिशुपालो माऽभिमर्शतु मा स्पृशतु। तत्स्पर्शस्यायुक्तत्वे दृष्टान्तमाह—मृगपतेः सिंहस्य बलिं भागं गोमायुः शृगालो यथा स्पृशेत्तथेति ॥ ३९ ॥ 'अनेकजन्मार्जितसुकृतैरिदमेव फलं भवतु' इति प्रार्थयते—पूर्तेति। पूर्तं "वापीकूपतटाकादि देवतायतनानि च। अन्नप्रदानमारामः पूर्तमित्यभिधीयते" इति स्मार्तं कर्म, इष्टम् अग्निहोत्रादि वैदिकं कर्म, दत्तं सत्पात्रे हिरण्यादिदानम्, नियमस्तीर्थस्नानादिनियमः, व्रतं कृच्छ्रादिनियमः, व्रतं कृच्छ्रादि, देवादीनामर्चनम्, आदिशब्देन प्राणिदयादिसङ्ग्रहः। एभिर्यदि परेशः ब्रह्मादिनियन्ता भगवान् अलं मयाऽऽराधितस्तदा तेन प्रसन्नो गदाग्रजः कृष्ण एव एत्य आगत्य मम पाणिं गृह्णातु, न त्वन्ये दमघोषसुतादयो शिशुपालादयः ॥ ४० ॥

### अन्वितार्थप्रकाशिका

अनया मे सप्तपद्या जातः सप्तपदीविधिः ध्रुवं भर्तेति बोधाय सप्तश्लोक्याऽध्यते। हरिः रुक्मिण्या स्वयमेकान्ते लिखित्वा दत्तपत्रिकां प्रदर्श्य तां वाचयति विप्रो भगवदाज्ञया रुक्मिण्युवाचेति द्विजोक्तिः। श्रुत्वेति। हे भुवनसुन्दर ! हे अच्युत ! शृण्वतां

जनानां कर्णविवरैः कर्णरन्ध्रैरन्तः निविश्य प्रविश्याङ्गानां तापं दुःखम् अङ्गेति सम्बोधने वा हरतः ते तव गुणान् तथा दृशिमतां चक्षुष्मतां दृशां चक्षुषां च अखिलार्थानाम् अनुकूलविषयाणां लाभो यस्मात्तथाभूतं तव रूपं च श्रुत्वा क तव गुणाः काहमयोग्या तथापि अपत्रपं निर्लज्जं सन्मे चित्तं त्वय्येवाविशति आसज्जते ॥ ३७ ॥ कन्याया मम धार्ष्ट्यं मा शङ्कीत्याह—केति । हे मुकुन्द ! हे नृसिंह नरश्रेष्ठ ! का नाम कन्या कुलवती महती गुणोदारा तथा धीरा वशीकृतचित्ता कुलं महति कुले जन्म शीलं सुस्वभावः रूपं सौन्दर्यं विद्या वैदिकी लौकिकी च वयस्तारुण्यं द्रविणं धनसञ्चयः धाम तेजः तैः आत्मनैव तुल्यं नान्येन निरुपममित्यर्थः । तथा नरलोकस्य मनसामभिरामोऽभिरमणं यस्मात्तमतीव प्रियं त्वा त्वां काले विवाहयोग्यसमये पतिं न वृणीत अपि तु सर्वापि वृणीत । अतो मय्येव केयं दोषशङ्केति भावः । या तु त्वां न वृणीत सा नूनं कुरूपा दुःशीला कुबुद्धिरनभिजातैवेति भावः ॥ ३८ ॥ तदिति । अङ्ग हे विभो ! हे अम्बुजाक्ष ! तत्तस्मान्मे मया भवान् खलु निश्चयेन पतिर्वृतः आत्मा स्वदेहादिसंघातश्च भवतः भवतेर्पितः । शेषे षष्ठी । अतस्त्वमत्रागत्य मां भवतो जायां भार्यां विधेहि सम्पादय । वीरस्य तव भागं माम् आरात् शीघ्रमागत्य निकटमागतो वा चैद्यः शिशुपालो माऽभिमर्शतु मा स्पृशतु । अन्यथा ते लज्जा स्यादिति भावः । गुण आर्षः । तत्र दृष्टान्तः । मृगपते सिंहस्य बलिं भागं गोमायुः सृगालो यथा स्पृशेत्तथेति ॥ ३९ ॥ पूर्तेति । पूर्तं "वापीकूपतटाकादि देवतायतनानि च । अन्नप्रदानमारामः पूर्तमित्यभिधीयते ।" इति स्मार्त्तकर्म इष्टम् अग्निहोत्रादि वैदिकं कर्म दत्तं सत्पात्रे हिरण्यादिदानं नियमस्तीर्थस्नानादि व्रतं कृच्छ्रादि देवादीनामर्चनम् आदिशब्देन प्राणिदयादिसंग्रहः एभिर्यदि परेशो गदाग्रजः भगवान् अलमत्यर्थं मयाऽऽराधितस्तदा तेन प्रसन्नो गदाग्रजो भवानेवेत्युभयान्वयः, एत्य आगत्य मम पाणिं गृह्णातु । अन्ये दमघोषसुतादयः शिशुपालादयस्तु न गृह्णन्तु ॥ ४० ॥

### श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्

स्वयं लिखित्वारह । सिक्निण्यार्पितकाकुदम् । प्रदृश्य तं वाचयति ब्राह्मणस्त्वाज्ञया हरेः ॥ १ ॥

तदाह सप्तभिः श्रुत्वेति । हे भुवनसुंदर स्वरूपस्वभावगुणैः सर्वचित्ताकर्षकलोकोत्तरसौंदर्ययुक्त । शृण्वतां जनानां कर्णविवरैः अंतःकरणैर्निविश्य तापं हरतः, अतः अंग हे हरे । ते गुणान् सत्यशौचैश्वर्यादीन् श्रुत्वा दृशिमतां दृशां नेत्राणां अखिलार्थलाभं । तत् रूपं च श्रुत्वा । हे अच्युत अक्षयमूर्त्ते । अपत्रपं लज्जारहितं सत् । मे चित्तं स्वाभिमतानुरूपैकरूपाचिंत्यनित्याद्भुतनिरवद्यनिरतिशयौज्ज्वल्यसौंदर्यसौगंध्यसौकुमार्यलावण्ययौवनाद्यनंतस्वरूपगुणनिधौ त्वयि । आविशति सम्यक् प्रविशति ॥ ३७ ॥ अहो एतत्कुलीनकन्यानामनुचितमित्याशंक्य तन्निराकरोति केति कुलशीलेति गुणशीलेति च पाठः । कुलस्वभावादिभिः आत्मतुल्यं स्वसमानं लोकमनोभिरामं त्वां पतिं हे मुकुंद हे नृसिंह । धीरा कुलवती महती का कन्या काले विवाहकाले न वृणीत ॥ ३८ ॥ अथ व्याकुला सती क्रियात्रयेणोत्तरोत्तरं स्पष्टमेवाह तदिति तत् तस्मात् । अंग हे विभो मे मया भवान् पतिः वृतः खलु निश्चितं भवतस्तुभ्यं आत्मा देहश्चार्पितः । अतोऽत्र त्वमागत्य तव जायां पत्नीं मां विधेहि कुरु । तदन्यथाकरणमयोग्यमित्याह हे अंबुजाक्ष मृगपतेर्बलिं सिंहभागं गोमायुवत् शृगाल इव । वीरभागं वीरस्य समर्थस्य तव भागं त्वदीयां मां चैद्यः । शिशुपालः । आरात् तूर्णं समेत्य माभिमर्शतु मा स्पृशतु न गृह्णात्वित्यर्थः ॥ ३९ ॥ नन्वेतत्पुण्यैर्विना कथं स्यादित्याशंक्यानेकजन्मसुकृतान्यर्पयंती प्रार्थयते । पूर्तेति । पूर्तं वापीकूपतडागादि । इष्टं यज्ञकर्म । दत्तं कांचनाभ यदानादि, नियमः स्वधर्मपालनम् । व्रतं एकादशी चांद्रायणादि । दमघोषसुतः । शिशुपालस्तदादयः ॥ ४० ॥

### भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

श्रुत्वेति ॥ अङ्गति सर्वशरीरिणोऽन्तरात्मतया प्राप्नोतीति तत् संबोधने हे अङ्ग सर्वान्तरात्मन्, हे अच्युत, हे भुवनसुन्दर, शृण्वतां कर्णविवरैः निविश्य प्रविश्य अन्तरिति शेषः । तापं त्रिविधपरितापं, हरतो निवर्त्तयतः, ते तव, गुणान् निष्कारणापारकारुण्यादीन्, दृशिमतां चक्षुष्मतां, दृशां चक्षुषाम्, अखिलानामर्थानामनुकूलविषयाणां लाभो यस्मात्तथाविधं, रूपं त्वत्सौन्दर्यं श्रुत्वा, मे मम, चित्तं, अपत्रपं निर्लज्जं सत्, त्वयि आविशति प्रसज्जते । अत्राङ्गेति मैत्रीद्योतकं संबोधनम् । भुवनसुन्दरेत्यौत्सुक्यताद्योतकं चित्तक्षोभद्योतकं वा । यद्वा । अङ्गेति संबुद्ध्यादौ मम सर्वान्तरात्मता त्वयोक्ता स च दृश्यो न भवतीत्याशङ्कानिवृत्तये भुवनसुन्दरेति संबुद्धिरुक्ता । तया त्वं सर्वान्तरात्मा सन्नपि भुवनसुन्दरताभागसि, तथाविधं तवैश्वर्यमस्तीति द्योतितम् । नन्वेवं विधसुन्दरताभागवपुष्मतां च्युतीक्षणान्ममापि मत् संबन्धवत्यास्तेऽखण्डसौभाग्यताभाक्त्वनिवृत्तिः स्यादित्याशङ्कानिवृत्तये हे अच्युतेति संबुद्धिः कृता, तया चाखिलसौन्दर्यभाजस्त्वदाकृतेश्च्यवनधर्मरहितत्वादहमखण्डसौभाग्यवत्येव भविष्यामीत्यपि सूचितम् । ननु मामेवं जानासि चेल्लौकिकरूपकुलशीलादियुक्ता त्वं क, त्वदभिहितमहिमाभागहं क्वेत्यावयोरननुरूपत्वात् कथं मयि चित्तं योजयसीत्याशङ्कानिवृत्तयेऽपत्रपमिति चित्तविशेषणं कृतं तेनापत्रपाणां चेतः कस्मिन् मनोरथे न प्रवर्त्तते, अपि तु सर्वत्र प्रवर्त्तते अतो न बाधः ॥ ३७ ॥ अहो कुलजानां कन्यानामिदमतिधार्ष्ट्यमिति मा शङ्किष्ठा इत्याह ॥ का त्वेति ॥ हे मुकुन्द मुक्तिदायिन्, हे नृसिंह नरश्रेष्ठ, गुणाश्च शीलं, च रूपं च विद्या च वयश्च द्रविणं च धाम च तैः, तत्र गुणाः कारुण्यवात्सल्यौदार्यादयः, शीलं सुस्वभावत्वं, रूपं सौन्दर्यं, विद्याः कलासहिता अष्टादशापि विद्याः, वयस्तारुण्यं द्रविणं संपत्, धाम तेजः प्रभाव इति यावत् । आत्मतुल्यं आत्मनैव तुल्यं निरुपममित्यर्थः । तथा नरलोकस्य मनसोऽभिराममतीवानुकूलविषयभूतं त्वा त्वां, कुलवत्युत्कृष्टकुलोत्पन्ना, महती गुणोदारा, धीरा स्थिरचित्ता, का कन्या काले विवाहावसरे, पतिं पतिभावेनेत्यर्थः । न वृणीत । तेन न

मय्येव केवलं दोषशङ्केति भावः ॥ ३८ ॥ तदिति ॥ हे विभो तत्तस्मात्, मे मया, भवान् पतिः वृतः खलु । आत्मा च, भवते तुभ्यम्, अर्पितः । अतः, अङ्ग हे कृष्ण, जायां, विधेहि । त्वमत्रागत्य मां हृत्वा भवतो जायां कुर्वित्यर्थः । विपक्षे बाधकं द्योतयन्त्याह । हे अम्बुजाक्ष, मृगपतेः सिंहस्य, बलिं गोमायुवत् शृगाल इव, वीरभागं वीरस्य तव भागभूतां मां, चैद्यः शिशुपालः आराच्छीघ्रमागत्येत्यर्थः । मा अभिमर्शतु । न स्पृशत्वित्यर्थ ॥ ३९ ॥ अनेकजन्मार्जितसुकृतैरिदमेव मे भूयादिति प्रार्थयति पूर्त्तेति ॥ पूर्तं च इष्टं च दत्तं च नियमश्च व्रतानि च देवविप्रगुर्वर्चनानि च तान्यादयो येषां तैः, तत्र पूर्त्तं वापीकूपतडागादिनिर्माणात्मकं स्मार्त्तकर्म, इष्टं वैदिकं यागादिकर्म, दत्तं दानं सत्पात्रे हिरण्यादिद्रव्यत्यागात्मकं नियमस्तीर्थाटनादिसमाचरणं, व्रतानि कृच्छ्राचरणादीनि, देवादीनां द्वन्द्वः । तेषामनर्चनं यथाविधि पूजनम्, आदिशब्देन भूतहितत्वादिकसंग्रहः । एभिः यदि, परेशः परमेश्वरः भगवान् अलमतिशयेन, आराधितः स्यात् तर्हि गदाग्रजः श्रीकृष्णः एत्य तूर्णमागत्य, मे मम, पाणिं गृह्णातु । अन्ये, दमघोषप्रसुतादयः, न नैव गृह्णन्त्वित्यर्थः ॥ ४० ॥

**कृष्णप्रिया**

श्रीरुक्मिणी सात श्लोकों से नाथ को आत्मसमर्पण कर रही है । अथवा तो सदापदी की प्रतिज्ञा कर रहीं है । भगवान के षड् ऐश्वर्य एवं स्वयं धर्मी भगवान् के श्रीचरणों में समर्पण निष्ठा से सात श्लोकों में निवेदन है—हे त्रिलोकसुन्दर आपके लोकोत्तर गुणों का एवं सौन्दर्य का मुनिवरों के मुख कमलों से श्रवण किया । उन गुणों की यह महिमा है कि श्रोताजन के श्रवण पथ से हृदय देश में प्रविष्ट होकर सर्वाङ्ग सन्ताप-जन्मजन्मातर की जलन बुझा देते हैं और आपके रूप-सौन्दर्य नेत्रवाले आत्माओं के नेत्रों के लिये धर्म अर्थ काम मोक्ष चारों पुरुषार्थों को देनेवाला है, इन दोनों का श्रवण किया तब से हे अच्युत ! मेरा चित्त लज्जा संकोच आदि को छोड़कर आप में ही प्रविष्ट हो गया है ॥ ३७ ॥ हे मुकुन्द ! हे आनन्दमय भगवन् ! कुल-शील रूप-विद्या-अवस्था धन एवं धाम आदि दिव्य तत्व आप के आप के ही समान है अलौकिक है और अनुपम है । सारे ब्रह्माण्ड में आप ही सर्वाङ्ग सुन्दर है । ऐसी कौन विवेक शालिनी धैर्यमयी कुलवती कन्या होगी जो विवाह योग्य वय में आप को ही पति के स्वरूप में वरण करेगी ॥ ३८ ॥ हे विभो ! हे कृपानिधान ! यह समझकर आपको ही मैंने पति रूप में वरण किया है आत्म समर्पण भी मैंने आपके श्रीचरणों में किया है । आप तो मेरे हृदय में विराजमान हैं और अन्तर्यामी हैं । हे कमललोचन हे प्राणनाथ हे अङ्ग ! मैं आपकी पत्नी बन चुकी हूँ अब तो जाया बनने का मनोरथ को सफल कीजिये । अब तो यह अनुग्रह कीजिये कि जैसे सिंह का सियार छू जाय वैसे शिशुपाल कहीं मुझे दूर से भी न छू जाय । मैं तो नृसिंहजी की ही पत्नी हूँ ॥३९॥ यदि जन्म जन्मान्तर में अथवा बाल्यकाल के खेल कूद में भी आठ प्रकार के सुकृतों में "पूर्व-कूआँ वापिका आदि जल सेवा, "इष्ट" यज्ञ याग आदि, "दत्त" तुलादि रत्न सुवर्णादि दान "नियम" किसी पदार्थ का या आम्रादि अभीष्ट फलादि पदार्थ का त्याग "व्रत" पुंसवन पयोव्रत नक्त भोजन चातुर्मास आदि व्रत, देवार्चन विप्रार्चन और गुरुपूजन आदि सुकृतों से पुरुषोत्तम प्रभु का आदर भक्ति से यदि समर्चन किया हो और स्वयं प्रसन्न हो तब गद कुमार के ज्येष्ठ बन्धु भगवान् श्रीकृष्ण यहाँ पधार कर मेरा पाणिग्रहण करें लेकिन शिशुपाल आदि कोई अन्य पुरुष स्वप्न में भी मेरा स्पर्श न करें ॥ ४० ॥

श्वोभाविनि त्वमजितोद्वहने विदर्भान् [1]गुप्तः समेत्य [2]पृतनापतिभिः परीतः ।
निर्मथ्य चैद्यमगधेशबलं [3]प्रसह्य मां राक्षसेन विधिनोद्वह वीर्यशुल्काम् ॥ ४१ ॥
अन्तःपुरान्तर[4]चरीमनिहत्य बन्धूं[5]स्त्वामुद्वहे कथमिति प्रवदाम्युपायम् ।
पूर्वेद्युरस्ति महती [6]कुलदेवियात्रा यस्यां बहिर्नववधूर्गिरिशा[7]मुपेयात्[8] ॥ ४२ ॥
[9]यस्याङ्घ्रिपङ्कजरजःस्नपनं महान्तो वाञ्छन्त्युमापतिरिवात्मतमोऽपहत्यै ।
यर्ह्यम्बुजाक्ष न लभेय भवत्प्रसादं जह्यामसून् व्रतकृशा[10] शतजन्मभिः स्यात् ॥ ४३ ॥

[11]ब्राह्मण उवाच

इत्येते गुह्यसंदेशा यदुदेव मयाऽऽहृताः । विमृश्य [12]कर्तुं यच्चात्र क्रियतां तदनन्तरम् ॥ ४४ ॥

इति श्रीमद्भागवते महापुराणे[13] दशमस्कन्धे[14] रुक्मिण्युद्वाहप्रस्तावे [15]द्विपञ्चाशत्तमोऽध्यायः ॥ ५२ ॥

---

१. गुप्तान्–विज. । २. समेतैः । ३. मगधेन्द्र–श्रीधर. वंशी. जीव. वीर. विज. विश्व. शुक. । ४. चरान्तवि–विज. । ५. देव–विज. । ६. गिरिजा–श्रीधर. वंशी. जीव. वीर. विज. विश्व. शुक. । ७. मुपेयां–वीर. । ८. निहत्यै–विज. ।

९. तत्रैत्य मां रथपदातिगजाश्वयुक्तः संमथ्य शाल्वमगधान्सहचेदिभूपान् ।
आदाय मां सहचरीभिरथो रमेशो गृह्णातु पाणिमुपनीय पुरीं स्वकीयाम् ॥–अधिक. विज. ।

१०. शान्छ–श्रीधर. वंशी. जीव. वीर. विश्व. शुक. सु. ; कृशा–विज. ।

११. श्रीशुक उवाच—इति पत्रगतं विश्वं विमृश्य मधुसूदनः । संदेशं राजकन्यायाः तं ब्राह्मणमवैक्षत ॥ अधिकः विज० ।

१२. कृत्यं–वीर० ; युक्तं–विज. । १३. पारमहंस्यां संहितायां–प्रा. पा. । १४. उत्तरार्द्धे–प्रा. पा. । १५. सप्तपञ्चाशत्तमो–विज. ।

### कर्दमक्षमा

अन्वयः—हे अजित ! श्वोभाविनि, उद्वहने, त्वम्, पृतनापतिभिः, परीतः, गुप्तः, विदर्भान्, समेत्य, चैद्यमगधेन्द्रबलम्, प्रसह्य; निर्मथ्य, वीर्यशुल्काम्, माम्, राक्षसेन, विधिना, उद्वह ॥ ४१ ॥ अन्तःपुरान्तरचरीम्, त्वाम्, बन्धून्, अनिहत्य कथम्, उद्वहे ! इति चेत् ? उपायम्, प्रवदामि, पूर्वेद्युः, महती, कुलदेवियात्रा, अस्ति, यस्याम्, नववधूः, बहिः, गिरिजाम्, उपेयात् ॥ ४२ ॥ हे अम्बुजाक्ष ! उमापतिः, इव, महान्तः, आत्मतमोऽपहत्यै, यस्य, अङ्घ्रिपंकजरजः स्वपनम्, वाञ्छन्ति, यर्हि, भवत्प्रसादम्, न लभेय, स्यात्, शतजन्मर्हिः, व्रतकृशान् असून्, जह्याम् ॥ ४३ ॥ ब्राह्मण उवाच, यदुदेव ? इति, इत्येते गुह्यसंदेशा, मया, आहृताः, अत्र विमृश्य, यत्, च कर्तुम्, तत्, अनन्तरम्, क्रियताम् ॥ ४४ ॥

इति द्विपञ्चाशत्तमाध्यायस्यान्वयाः समाप्ताः ॥ ५२ ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

ननु चैद्याय बंधुभिरर्पितायां त्वयि किमधुना करणीयमित्यपेक्षायामाह । श्वोभाविनीति । हे अजित श्वोभाविनि उद्वहने विवाहे प्रथमं गुप्तोऽलक्षित एवागत्य पश्चात्पृतनापतिभिः परिवृतः संश्चैद्यादिबलं निर्मथ्य प्रसह्य बलाद्वीर्यं प्रभावदर्शनमेव शुल्कं वैवाहिकं देयं यस्यास्तां माम् । अनेन राक्षसविधिनोद्वहेत्युपदेशरहस्यम् ॥ ४१ ॥ ननु भवतु शिशुपालादिबलप्रमथनमंतःपुरमध्यगतायास्तव हरणे त्वद्बंधुवधोऽपि प्रसज्येतेत्यत आह । अंतःपुरेति । पुराद्बहिर्वर्तमानां गिरिजामंबिकाम् । अंबिकागृहादेव मम हरणं सुकरमिति भावः ॥ ४२ ॥ ननु किमनेनानर्थकारिणा निर्बंधेन चैद्योऽपि तावत्प्रख्यातगुणकर्मा योग्य एव वर इति तत्राह । यस्येति । हे अम्बुजाक्ष यस्य भवतोंघ्रिपंकजरजःस्नपनमात्मनस्तमसोऽपहत्यै उमापतिरिव महांतो वांछंति । तस्य भवतः प्रसादं यर्ह्यहं न लभेय न प्राप्नुयां तर्हि व्रतैरुपवासादिभिः कृशानसून्प्राणान् जह्यां त्यजेयम् । ततः किमित्यत आह । शतजन्मभिरिति । एवमेव वारंवारं जह्यां यावच्छतजन्मभिरपि तव प्रसादः स्यादिति ॥ ४३ ॥ अत्र यत्कर्तुं करणीयं तद्विमृश्य क्रियतामिति ॥४४॥

इति श्रीमद्भा० म० दशमस्कंधे उत्तरार्धे श्री० टीकायां द्विपंचाशत्तमोऽध्यायः ॥ ५२ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

विवाहार्थमागतबहुराजसु पाणिग्रहाऽसंभवसंदेहापनोदार्थमाह—चैद्यायेत्यादिना । श्वोभाविनीति—श्वः प्रभाते विवाहो भविष्यतीति विचार्य ततोऽग्र एवागत्येत्यर्थः । विवाहार्थं देयं वैवाहिकदेयम् । अनेन मदुक्तेन । निजाऽतिवैयग्र्येण स्वयमेवोपायमप्युपदिशति द्वाभ्याम्—श्व इति । गुप्तः ख्यापितैर्नामदेशभाषांतरैः केनाप्यनुपलक्षितः । सम्यगेत्यांतः प्रविश्येत्यर्थः । पृतनानां पतिभिरिति सैन्यस्य तत्पतीनां च बाहुल्यमभिप्रेतं, तच्च स्नेहस्वाभाव्येन । तत्र तु हे अजितेति एतादृशप्रेरणसाहसे हेतुरुक्तः । तत्र मगधेशबलस्यापि निर्मथनं चैद्यसहायत्वात् । निर्मथ्येति बलस्य समुद्रत्वं ध्वन्यते । तेन च यथा पूर्वं समुद्रमुन्मथ्य मामुद्धृतवानसि तथाऽद्यापि चैद्यादिबलार्णवमुन्मथ्य मामुद्धरेति । वीर्यशुल्कामिति राक्षसविवाहस्यैव योग्यता, प्रार्थनादिनिरपेक्षता चोक्ता । कार्यसिद्धिस्त्वजितत्वादेव भविष्यतीति ॥ ४१ ॥ पुनराशंक्य समाधत्ते—नन्विति । पूर्वेद्युर्विवाहात्पूर्वस्मिन्दिने । कुलदेवानां कुलपूज्यानां पितृणां देवानां च यात्रा । नववधूरुपस्थितविवाहा कन्या । "वधूः स्त्री सारिवौषधौ । स्नुषाशटीनवोढासु भार्यापृक्कांगतासु च ।" इति मेदिनी । अतोऽप्यतिव्यग्रा श्वोभाविनीत्यत्र कारणं विवृण्वती पुनर्विशेषतोप्युपदिशति—अंतःपुरस्यापि मध्यप्रकोष्ठान्तश्चरीम् । पूर्वेद्युर्विवाहदिनात्पूर्वस्मिन्दिने । कुलदेवयात्रेति तस्या आवश्यकत्वमुक्तम् । ननु पूर्वेद्युरपि कस्मिन्क्षणे भवेदिति कथं ज्ञेयं तत्राह—महती महावाद्याद्युत्सवेन सा सुव्यक्तैवेत्यर्थः । उपेयात् पूजार्थमंतिके गच्छतीति विधिरस्तीत्यर्थः ॥ ४२ ॥ पुनराशंक्य समाधत्ते—नन्वित्यादिना । निर्बंधेन हठेन 'निर्बंधो हठमुक्तयोः' इति धरणिः । तत्राक्षेपे । महान्तो ब्रह्मेन्द्रादयः । अहो अयं महादेवोऽपि भगवत्पदरजो यस्मिँस्तत्र प्रवाहे गंगारूपे स्नपनं सदा करोति, वयं देवाः कथं न तत्कुर्म इतीच्छन्ति । तस्योमापत्याद्याराध्यस्य आत्मनस्तमसोऽज्ञानस्यापहत्यै नाशाय महान्त एव न तूमा पतिरपि, तस्य तु 'ज्ञानं महेश्वरादिच्छेत्' इति स्मृतेरन्येषां ज्ञानदातृत्वेन परमज्ञानित्वम् । तत्पक्षे तु किंभूत उमापतिः—आत्मतमः साक्षाच्छ्रीकृष्णरूपः—प्रकर्षेणात्मा श्रीकृष्णरूप आत्मतमः 'आत्मा सर्वेश्वरः साक्षी' इति कृष्णसहस्रनामस्वात्मशब्दस्य पठितत्वात् । तर्हि स किमर्थं सेवते तत्राह—अपगता हतिर्नाशो यस्याः साऽपहतिर्मर्यादा तस्यै । सा च द्विधा—लौकिकी वैदिकी च । उभयविधैवाऽत्याज्या "श्रुतिस्मृतिपुराणोक्तं लंघयेन्न कदाचन । लंघनात्प्रत्यवायी स्यात्ततोंते नरकं व्रजेत् ।" इत्युक्तेः । किञ्च—"यद्यपि स्यात्स्वयं ब्रह्मा त्रैलोक्याऽऽकर्षणक्षमः । तथापि लौकिकाचारं मनसापि न लंघयेत् ।" इति स्मृतिसारोक्तेः । सा चेत्थं बोध्या—यद्यहं श्रीहरिं न सेविष्ये तर्हि मद्भक्ता अपि तं न सेविष्यन्ते, तेन तेऽधोगामिनः स्युः "हरिभक्तिपरित्यागादन्ते नरकमाप्नुयात्" इत्युक्तेः यद्वा—तमः प्रवर्तकमपि मामल्पज्ञास्तामसं वदंति तन्निरासायाहमपि हरिभक्तिं सेवे, तेन सर्वे मां शुद्धसत्त्वमेव ज्ञास्यंति । न हि तामसः कदापि हरिं सेवते, हरो न तामस इति ज्ञापनायेत्यर्थः । ततः प्राणत्यागेन । यावत्तव प्रसादः स्यात्तावदेवमेव कुर्यां, यदा कदाचित्तवैव भार्या स्यां, नान्यस्य देवस्यापि । किमु शिशुपालस्येति भावः । स्नपनशब्देन रजसां गंगाप्रभवत्वादिना सर्वतीर्थममत्वं ध्वन्यते । यद्वा—

रजसः स्नपनं क्षालनोदकमित्यर्थः। महान्तः श्रीब्रह्माद्याः। आत्मनस्तमस्तमो गुणाधिष्ठातृत्वं तस्यापहत्यै। उमायाः पतिरिति-यथात्मारामेणापि श्रीशिवेन तद्भक्तिवशतया यत्नेनोढ्वोढा सा तथा त्वयाप्यहमुद्वोढव्येति भावः। अतः परममहत्त्वेन त्वमेव योग्यः पतिर्न त्वन्यः कश्चिदिति भावः। तथा परमसौंदर्येणापीत्याह-हे अम्बुजाक्षेति। तस्येति यच्छब्दापेक्षत्वात्। भवदिति छांदस एव पष्ठ्या लुक्। यदि भवतः प्रसादं पत्नीत्वेनाङ्गीकारलक्षणं न लभेय तदा जह्यामिति "हेतुहेतुमतोर्लिङ्"। तत्र जह्यामिति कामप्रवेदने, प्रौढ्या संभावने च स्यात्। त्यागप्रकारमाह-व्रतकृशान्। शतेति-एवं कृपार्थं दुःखमरणं वोध्यते। यद्वा-स्वत एव त्वदर्थं व्रतैः कृशान्, अधुना त्वत्प्रसादाऽलब्ध्या निर्गच्छतोऽनायासेनैव जह्यामित्यर्थः। इति मरणस्य सुकरत्वमुक्तम्। ततश्चैवं शतजन्मभिरपि स्यात्। व्रतकृशेति पाठे स एवार्थः। शतशब्दोऽयमनिर्णयसंख्यात्वे। अन्यत्तैः। किन्तु स्वस्या नरकन्यालीलामाविश्योक्तिरियम्। यथा-ननु त्वं मे न पत्नी योग्यासीति कथमुद्वहेयमिति चेत्सत्यमेव, यतः श्रीब्रह्मादीनामपि सुदुर्लभ्योऽसि, क्वाहं क्षत्रियकन्या, तथापि बहुजन्मसु प्राणपरित्यागेनापि त्वदर्थं यतिष्य इत्याह-यस्येति। वांछन्त्येव न त्वद्यापि लभते। अतः स्यादिति संभावनायामेव लिङ्। शतजन्मभिरसूञ्जह्याम्, शतजन्मभिर्वा प्रसादः स्यादित्येतदर्थः। कुतः-तत्राह-हे अम्बुजाक्षेति। परममाधुर्येण मनोव्याकुलताविधानादेवेति भावः। यद्वा-नन्वहमंतर्गोपिकाविरहद्रूनो न करिष्याम्येव विवाहं तस्मादन्यमेव गुण-रूपाभ्यां महान्तं कंचिद्वृण्वित्याशंक्योपायान्तरमपश्यन्ती दुरंतां मरणपर्यन्तां निजकृच्छ्रपरंपरामुद्दिश्य करुणयाऽधर्मभयेन च तं प्रत्यावर्तयति-यस्येति ॥ ४३ ॥ गुह्यत्वेन संदेशानां गौरवं, बहुवचनेन नानाप्रकारत्वाद्युक्तिमत्त्वं च, स्वस्य च परमविश्वसनीयत्वं निःशेषवक्तृत्वं च व्यंजितम्। तथा त्वयापि गोपनीया एवेति। अन्यथा तस्या बंधुषु लज्जाद्युत्पत्तेः। मया आहूता आनीता इति, मम तु कृत्यमेतदेवेति भावः। विमृश्येति विनयभरेण, स च सम्यक्प्रवर्तनार्थम्। वयं ब्राह्मणा ऋजव एव, सर्वोपरि बुद्धिस्त-वैवेतिः भावः। तत्र गुह्यत्वे सति यदुभिर्मंत्रणं विना न स्वयं कर्तुमुत्सह इति न वाच्यं, यतः हे यदुवर तव बुद्धिबलाधीना एव तेपीति भावः। तस्माद्युत्कर्तव्यं तत्त्वनंतरमेव क्रियतां, प्राप्तावसरत्वान्मंत्रणादिविलंवं न सहत इति भावः ॥ ४४ ॥

इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे दशमस्कन्धे उत्तरार्द्धे द्विपञ्चाशत्तमोऽध्यायः ॥ ५२ ॥

### श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी

निजातिवैयग्रचेण स्वयमेवोपायमप्युपदिशति द्वाभ्याम् श्व इति। गुप्तः ख्यापितैर्नामदेशभाषान्तरैः केनाप्यनुपलक्षितः सम्यक् एत्य अन्तः प्रविश्येत्यर्थः। पृतनानां पतिभिरिति। सैन्यस्य तत्पतीनां च बाहुल्यमभिप्रेतं तच्च स्नेहस्वाभाव्येन तत्र तु हे अजितेति एतादृशप्रेरणासाहसे हेतुरुक्तः तत्र मगधेशबलस्यापि निर्मथनं चैद्यसहायत्वात् निर्मथ्येति बलस्य समुद्रत्वं ध्वन्यते तेन च पूर्वं यथा समुद्रं निर्मथ्य मामुद्धृतवानसि तथाधुनापि चैद्यादिबलार्णवं निर्मथ्य समुद्धरेति। वीर्य्यशुल्कामिति। राक्षस-विवाहस्यैव योग्यता प्रार्थनादिनिरपेक्षता चोक्ता कार्य्यसिद्धिस्त्वजितत्वादेव भविष्यतीति ॥४१॥ ततोऽप्यतिव्यग्रा श्वो भाविनीत्यत्र कारणं विवृण्वती पुनर्विशेषतोऽप्युपदिशति। अन्तःपुरस्यापि मध्यप्रकोष्ठं यत्तच्चरीमितीति अत्रेत्यर्थः। पूर्वेद्युः विवाहपूर्वदिवसे कुलदेवयात्रेति तस्या आवश्यकत्वमुक्तम्। ननु पूर्वेद्युरपि कस्मिंश्च क्षणे भवेदिति कथं ज्ञेयं तत्राह—महतीति। महावाद्याद्युत्सवेन सा सुव्यक्तैवेत्यर्थः। उपेयात् पूजार्थमन्तिके आगच्छतीति विधिरस्तीत्यर्थः ॥ ४२ ॥ स्नपनशब्देन रजसां गङ्गाप्रभत्वादिना सर्वतीर्थमयत्वं ध्वन्यते। यद्वा रजसः स्नपनं क्षालनोदकमित्यर्थः। महान्तः श्रीब्रह्मादयः आत्मनस्तमः, अज्ञानं तस्य हत्यै मूलतो विनाशाय उमापतिरिवेति दृष्टान्तः तस्य गङ्गाधरत्वेन रजःस्नपनवाञ्छायाः सुप्रसिद्धत्वात् तस्य च तमस्तमोगुणाधिष्ठातृत्वं तस्यापहत्यै उमायाः पतिरिति यथात्मारामेणापि श्रीशिवेन तद्भक्तिवशतया जन्मान्तरेऽप्युमा यत्नेनोढ्वोढा तथा त्वयाप्यहमुद्वोढ-व्येति भावः। एवं परममहत्त्वेन त्वमेव पतिर्योग्यो नत्वन्यः कश्चिदिति भावः। तथा परमसौन्दर्य्येणापीत्याह—हे अम्बुजाक्षेति। तस्येति यच्छब्दाक्षेपात् भवदिति छान्दस एव पष्ठ्या लुक् यदि भवतः प्रसादं पत्नीत्वेन स्वीकारलक्षणं न लभेय तदा जह्यामिति हेतुहेतुमतोर्लिङ् तत्र जह्यामिति कामप्रवेदने प्रौढ्या सम्भावने च स्यात् त्यागप्रकारमाह—व्रतकृशान् शतेति एवं कृपार्थं दुःखमरणं वोध्यते। यद्वा स्वत एव त्वदर्थे व्रतैः कृशान् अधुना त्वत्प्रसादालब्ध्या स्वयमेव निर्गच्छतोऽनायासेनैव जह्यामित्यर्थः। इति मरणस्य सुकरत्वमुक्तं ततश्चैवं शतजन्मभिरपि स्यादिति व्रतकृशेति पाठे स एवार्थः शतशब्दोऽयमनिर्णेयसङ्ख्यत्वे अन्यत्तैः किन्तु स्वस्या नरकन्यालीलामाविश्योक्तिरियम्। यद्वा ननु त्वमेव न पत्नीयोग्यासीति कथमुद्वहेयमिति चेत् सत्यमेव यतः श्रीब्रह्मादी-नामपि दुर्लभोऽसि क्वाहं क्षत्रियकन्या तथापि बहुलजन्मसु प्राणपरित्यागेनापि त्वदर्थं यतिष्य इत्याह—यस्येति। वाञ्छन्त्येव न त्वद्यापि लभन्ते अतः सम्भावनायामेव लिङ् शतजन्मभिर्वा प्रसादः स्यादित्येतदर्थमित्यर्थः। कुतस्तदाह—हे अम्बुजाक्षेति। परममाधुर्य्येण मनोव्याकुलताविधानादेवेति भावः। अथवा। नन्वहमन्तर्गोपिकाविरहद्रूनो न करिष्याम्येव विवाहं तस्मादन्यमेव गुणरूपाभ्यां महान्तं कञ्चिद्वृणु इत्याशङ्क्य उपायान्तरमपश्यन्ती दुरन्तां मरणपर्य्यन्तां निजकृच्छ्रपरम्परामुद्दिश्य करुणया धर्मभयेन च तं प्रत्यावर्त्तयति—यस्येति ॥ ४३ ॥ गुह्यत्वेन सन्देशानां गौरवं बहुवचनेन नानाप्रकारत्वाद्युक्तिमत्त्वं स्वस्य च परमविश्वसनीयत्वं निःशेषवक्तृत्वं च व्यक्तं तथा त्वयापि गोपनीया एवेति। अन्यथा बन्धुषु तस्या लज्जाद्युत्पत्तेः मया आहूता

आनीता इति मम तु कृत्यमेतावदेवेति भावः। विमृश्येति। विनयभरेण स च सम्यक् प्रवर्त्तनार्थः वयं ब्राह्मणा ऋजवः सर्वोपरि बुद्धिस्तु तवैवेति भावः। तत्र गुह्यत्वे सति यदुभिर्मन्त्रणं विना न स्वयं कर्त्तुमुत्सहे इति न वाच्यं यतः हे यदुदेव ! तव बुद्धिवलाधीना एव तेऽपीति भावः। तस्माद्यत्कर्त्तव्यं तत्त्वनन्तरमेव क्रियतां प्राप्तावसरत्वान्मन्त्रणादिविलम्बं न सहत इति भावः॥ ४४॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिण्यां द्विपञ्चाशत्तमोऽध्यायः॥ ५२॥

## श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी

सम्यक् एत्य अन्तः प्रविश्येत्यर्थः। पृतनापतिभिः श्रीवलदेवगदादिभिरिति सैन्यस्य तत्पतीनाञ्च बाहुल्यमभिप्रेतम्। हे अजित तवाजितत्वेऽपि 'अनिष्टाशंकीनि बन्धुहृदयानि भवन्ति इत्यादि न्यायेन भयोत्पत्तेरित्यर्थः। निःशेषेण मथित्वा विलोड्य क्षोभयित्वेत्यर्थः। किंवा निर्म्मथ्य सर्वथा संहृत्येत्यर्थः। तत्र मगधेश-बलस्यापि निर्म्मथनं चैद्यसहायत्वात्, निर्मथ्येत्यनेन बलस्यानन्ततया समुद्ररूपत्वं ध्वन्यते, किञ्च, पूर्वं यथा समुद्रं निर्मथ्य मामुद्धृतवानसि, तथा अधुनापि चैद्यादिवलार्णवान्तःस्थामुद्धरेति, वीर्य्यशुल्कामिति राक्षविधानस्यैव योग्यताप्रार्थनादिनिरपेक्षता चोक्ता। यद्वा, नन्वेवं महायुद्धसंकटे कथं मां प्रवर्त्तयसि ? सदा सर्वत्रैव तव विजयप्रसिद्धेरित्याह—हे अजितेति॥ ४१॥ अन्तःपुरं पुरस्य मध्यम्, तस्याप्यन्तरं मध्यम्, तत्रचरीमिति पितृभ्रात्रादिबन्धुवर्गपरिवेष्टिताया हरणेऽवश्यं तैः सह युद्धे तेषां वधस्त्वत्साक्षादेव स्यादिति कथं तान् नितरां शिरश्छेदादिनाहत्वेत्यर्थ इति, अत्र प्रकर्षेण निःसंशयत्वादिना वदामि। पूर्वेद्युर्विवाहपूर्व्वदिने कुलदेवयात्रेति तस्या आवश्यकत्वमुक्तम्। ननु पूर्वेद्युरपि कस्मिन् क्षणे भवेदिति कथं ज्ञेयम् ? तत्राह—महतीति महावाद्याद्युत्सवेन सा सुव्यक्तैवेत्यर्थः। उपेयात् पूजार्थमन्तिके गच्छेत्॥ ४२॥ स्नपन-शब्देन रजसां गंगाप्रभवत्वादिना सर्व्वतीर्थमयत्वं ध्वन्यते, यद्वा, रजसः स्नपनं क्षालनोदकमित्यर्थः। महान्तः श्रीब्रह्मादयः, आत्मनस्तमोऽज्ञानं तस्यापहत्यै मूलतो विनाशाय, उमापतिरिवेति दृष्टान्तः—तस्य गंगाधरत्वेन रजःस्नपनवाञ्छायाः सुप्रसिद्धत्वात्, तस्य च तमस्तमोगुणस्तदधिष्ठातृत्वात्, तस्यापहत्यै तमसो निन्द्यत्वेन तदधिष्ठातृत्व-परित्यागार्थमित्यर्थः, यद्वा, लोकशिक्षार्थं ब्रह्महत्यादिपापापहत्यै। उमायाः पतिरिति यथा योगेश्वरत्वादिना पत्न्यनपेक्षकत्वेऽपि श्रीशिवेन सती जन्मान्तरेऽप्युमानाम्नी यत्नेनोद्वोढ़ा, तथा त्वमपि मामुद्वोढुमर्हसीति भावः। किञ्च, निजकुलदेवताया उमाया अपि परमपूज्यत्वं सूचितम्। एवं परमेश्वरत्वेन त्वमेव पतिर्योग्यः, त त्वन्यः कश्चिदिति भावः। तथा परमसौन्दर्य्येणापीत्याह—हे अम्बुजाक्षेति। अतो यदि भवतः प्रसादं पत्नीत्वेन स्वीकारलक्षणं न लभेय, सम्भावनायां सप्तमी, जह्यामिति च भविष्यति। त्यागप्रकारमाह—व्रतकृशान् शतेति। अनेन कृपार्थं दुःखमरणं बोध्यते। यद्वा, स्वत एव त्वदर्थव्रतैः कृशात्, अधुना च त्वत्प्रसादालब्ध्या स्वयमेव निर्गच्छतोऽनायासेनैव जह्यामित्यर्थः। इति मरणस्य सुकरत्वमुक्तम्। व्रतकृतइति पाठे स एवार्थः। शत-शब्दोऽसंख्यत्वे। अन्यत्तैर्व्याख्यातम्। यद्वा, ननु त्वं मे न पत्नीत्वयोग्यासि, कथमुद्वहेयमिति चेत्, सत्यमेव यतः श्रीब्रह्मादीनामपि सुदुर्लभोऽसि, क्वाहं क्षत्रियकन्या, तथापि बहुजन्मसु प्राणपरित्यागेनापि तदर्थं यतिष्य इत्याह—यस्येति। वाञ्छन्त्येव, न त्वद्यापि लभन्ते, इति परमदुर्लभत्वमुक्तम्। अतो यदि न लभेय, स्यादित्यपि सम्भावनायाम्। शतजन्मभिरसून् जह्याम्, शतजन्मभिर्वा प्रसादः स्यादित्येतदर्थमित्यर्थः। कुतस्तदाह—हे अम्बुजाक्षेति, परमसुन्दरात्वादित्यर्थः। अन्यत् समानम्॥ ४३॥ इत्येवं पत्रिकाद्वारा गुह्यत्वेन सन्देशानां गौरवं स्वस्य च परमविश्वसनीयत्वमुक्तम्। तथा त्वयापि गोपनीया एवेति, अन्य [illegible] बन्धुषु तस्या लज्जाद्युत्पत्तेरिति। आहृता आनीता समर्पिता वा, न चात्मशक्त्याहृता, किन्तु त्वत्प्रभावादेवेत्याशयेन सम्बोधयति—यदुदेव ! हे निजाशेषैश्वर्य्यप्रकटनार्थं यदुकुलातीर्ण ! यादवेन्द्रेति विमृश्येति विनयभरेण, स च सम्यक् सद्यः प्रवर्तनार्थः, यद्वा, कथं कदा तत्राशु गन्तासि तद्विचार्य्येत्यर्थः। अनन्तरं शीघ्रमेव। ननु तद्विवाहकालोऽयमतिसन्निहितः, दूरदेशे च तस्मिन् शीघ्रं कथं गमनं सम्भवेत् ? यदुभिर्वा कथं गन्तुं शक्यतामित्याशंकापि यदुदेवेत्यनेनैव निरस्ता तव साक्षाद् भगवत्त्वात्त्वद्भक्तानाञ्च यदूनां सर्व्वशक्तिमत्त्वात्, न च त्वत्कृत्ये तैरसम्मतिः काचित् कार्य्या, नापि तैः सहात्र मन्त्रणापेक्षापि, यदुदेवत्वादेव। एतदर्थमेव विदर्भान्मेऽत्रागमनं तस्या मनोरथेऽस्मिन् सुसिद्धे सत्येव त्वत्पृष्टं धर्म्मादिकं सर्व्वं मे सम्पद्येतेति भावः। एवं श्रीभगवत्पृष्टानामप्युत्तरं ज्ञेयम्, किंवा सन्देशैकापेक्षया तत्तदुत्तराप्रदानमेव श्रेय इति नोत्तरितम्॥ ४४॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे उत्तरार्द्धे श्री श्रील-सनातन-गोस्वामिपाद-कृतायां श्रीबृहद्वैष्णवतोषण्यां श्रीदशम-टिप्पण्याद्विपञ्चाशत्तमोऽध्यायः॥ ५२॥

## श्रीसुदर्शनसूरिकृतशुकपक्षीयम्

कथमुद्वहे इति चिन्तयन्तमुपायं वदामीत्यर्थः। शतजन्मभिः स्यां तस्य तव स्यामित्यर्थः॥ ४३-४४॥

इति श्रीमद्भागवतव्याख्याने दशमस्कन्धे श्रीसुदर्शनसूरिकृतशुकपक्षीये द्विपञ्चाशत्तमोऽध्यायः॥ ५२॥

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका

ननु वन्धुभिश्चैद्यायार्पितायां त्वयि किमधुना मया विधेयमित्यत्राह—श्वो भाविनीति। हे अजित ! श्वो भाविन्युद्वहने विवाहे त्वं तावद्गुप्तः अलक्षित एवागत्य ततः सेनापतिभिः परिवृतः सन् चैद्यादिवलं निर्मथ्य पराभूय प्रसह्य हठाद्वीर्यं प्रभावदर्शनमेव शुल्कं वैवाहिकं देयं यस्यास्तां मां राक्षसेन विधिनोद्वहेत्युपदेशरहस्यम् ॥ ४१ ॥ ननु भवतु शिशुपालादिवलप्रमथनमन्तःपुरगतायास्तव हरणे त्वद्वन्धुवधोऽपि प्रसज्येतेत्यत आह—अन्तरिति। अन्तःपुरमध्यचरीं त्वां वन्धूनहत्वा कथमुद्वहे इति चेत्तत्रोपायं वदामि पूर्वेद्युः विवाहदिनादिति शेषः। महती कुलदेवयात्रास्ति यस्यां यात्रायां बहिः पुरादिति शेषः नववधूरहं गिरिजामम्बिकामुपेयां गच्छेयं दर्शनार्थमिति शेषः। अम्बिकागृहादेव मम हरणं सुकरमिति भावः ॥ ४२ ॥ ननु किमनेनानर्थकारिणा निर्बन्धेन चैद्योऽपि तावत्प्रख्यातगुणकर्मा योग्य एव वर इत्यत आह—यस्येति। हे अम्वुजाक्ष ! यस्य तव भवतोऽङ्घ्रिरजोभिः स्नपनमात्मनस्तमसोऽपहत्यै उमापतिरिवान्येऽपि महान्तो वाञ्छन्ति तस्य भगवतः प्रसादं यद्यहं न लभेय न प्राप्नुयां तर्हि व्रतैरुपवासादिभिः कृशानसून् प्राणान् जह्यां त्यजेयं ततः किमित्यत आह—शतजन्मभिरपि स्यां तवाहं भार्या स्यामित्यर्थः ॥ ४३ ॥ इत्थं वाचिकं पठित्वाथ स्ववचनमप्याह—इतीति। हे यदुदेव ! इत्येवं विधाः गुह्यतमाः संदेशा मया आहृताः यदत्र कर्त्तव्यं तद्विमृश्य क्रियतां तच्च समनन्तरमेव क्रियतामिति ॥ ४४ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायां द्विपञ्चाशत्तमोऽध्यायः ॥ ५२ ॥

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली

उद्वहने विवाहे श्वो भाविनि श्वः प्रभाते भविष्यति सति समेतैः पृतनापतिभिः गुप्तान् विदर्भान्समेत्य राक्षसेन विधिना बलात्कन्याहरणलक्षणेन वीर्यं शुल्कं मौल्यं यस्या सा तथा तां माम् ॥ ४१ ॥ नववधूर्दर्शनाय ॥ ४२ ॥ यथोमापतिः श्रीहरिचरणसरसिजस्तुतिं करोति तस्य तव यदि भवत्प्रसादं पूज्यानुग्रहं न लभेय तर्हि असून्प्राणान् जह्यां त्यक्ष्यामि किञ्च शतजन्मभिः व्रतकृशा तव भार्यैव स्यामित्यर्थः ॥ ४३-४४ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्यां द्विपञ्चाशत्तमोऽध्यायः ॥ ५२ ॥

### श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः

नन्वेवमेवानुग्रहीष्यसि, मान्यथा शङ्किष्ठा इति चेच्छीघ्रमेवागन्तव्यम्। नैकाकिना च वलयुक्तेनैवेति पुनः सोत्कण्ठमाह—श्वोभाविनीत्यादि। पृतनापतिभिः परीतः एव, तत्रापि गुप्त एवालक्षित एव। लक्षिते सति राजानः सावधाना भविष्यन्ति। तत्रापि श्वोभाविनि उद्वहने उद्वाहदिनस्य पूर्वेऽह्नि अन्यथात्रागत्य बहुकालावस्थानमप्यनुचितम् अकस्मादेवागत्य मां हरेत्यर्थः वीर्यमेव शुल्कं यस्यास्ताम्। एतेनात्र युक्त्यन्तरमपि नास्तीत्याह—राक्षसेन विधिना। हठाहरणरूपो हि रक्षोविधिः ॥ ४१ ॥ ननु चैद्यमगधेशबलं निर्मथ्येति यदुक्तम्, तत्र भवद्भ्रातापि तेषां सपक्षः सोऽप्युत्थास्यते, तदा सोऽपि मे वध्यः स्यात्। भ्रातृहनने तत्रापि दुःखं भविष्यतीत्याशङ्क्याह—अन्तःपुरान्तरचरीमित्यादि। बन्धून् त्वद्भ्रात्रादीननिहत्य त्वां कथमुद्वहे इति चाशङ्कसे, तदोपायं वदामीत्यर्थः। पूर्वेद्युर्विवाहदिनस्य पूर्वेऽह्नि देवयात्रास्तीति नः कुलाचारः, यस्यां नववधूः नववधूत्वेन भाविनी कन्येत्यर्थः। गिरिजां पुरः बहिः स्थितां दुर्गां पूजयितुमुपेति, तेन तं समयमासाद्यैव बन्धुहननं विनैव मां हरेत्युपदेशः ॥ ४२ ॥ ननु जातं तव भ्रातरं प्रति महती दया, स तु मे महान् विपक्षः ! कथमेवं स्वजनादिसापेक्षस्य जनस्य मल्लाभो भवेदित्याशङ्क्याह—यस्याङ्घ्रीत्यादि। यस्य तवाङ्घ्रिपङ्कजरजः स्नपनं महान्तो वाञ्छन्ति उमापतिरिव श्रीमहेश इव, हे अम्वुजाक्ष ! तस्य भवतः प्रसादं यदि न लभेयम्, तदा व्रतकृशानसून् जह्यां त्यजेयम्। अतः प्राणेभ्योऽधिको नहि स्वजनः। स चेद्भवद्विपक्षः, तदा सोऽपि हेय एव। ननु प्राणत्यागे किं भविष्यति ? तत्राह—शतजन्मभिः। जन्मानां शतेनापि स्त्री स्याम्, एव परिगृहीता भविष्यामीत्यर्थः इति ( ३७ श श्लो० ) "श्रुत्वा" इत्यादिनाभिलाषः (३८ श-श्लो०) "का त्वा मुकुन्द" इत्यादिना मतिः (३९ श० श्लो०) "तन्मे भवान्" इत्यादिना गर्वः ( ४० श० श्लो० ) "पूर्त्त" इत्यादिना वितर्कः ( ४१-श० श्लो० ) "भाविनि इत्यादिना विवेकः ( ४२ श० श्लो० ) "अन्तः पुरान्तरचरीम्" इत्यादिना पुनर्मतिः, ( ४३ श० श्लो० ) "यस्याङ्घ्रि" इत्यादिना औत्सुक्ये विश्रान्तिः ॥ ४४ ॥

इति श्रीदशमे श्रीबृहत्क्रमसन्दर्भे द्विपञ्चाशत्तमोऽध्यायः ॥ ५२ ॥

### श्रीनाथचक्रवर्तिपादविरचिता चैतन्यमतमञ्जूषा

ननु त्वदाहरणे त्वद्भ्रातरो विरोधं करिष्यन्ति, मया तेऽवश्यं घातितव्याः, तदा तव दुःखं भविष्यतीत्यादिनाशङ्कनीयम् ? तत्राह—अन्तःपुरान्तरचरीत्यादि। यद्येवमनुगृह्णासि, तदा नैकाकिनागन्तव्यम्, न च विलम्बोऽपि कार्य इत्याह—श्वो

भाविनीत्यादि। पृतनापतिभिः परीत एव सन् गुप्तः सन् प्रचारे सति एतेऽपि बहुसैन्यं करिष्यन्ति, निर्मथ्य चैद्यमगधेश-बलम्, न तु मत् पितृभ्रातृबलमिति। एतद्धि पश्चाद् भवदीयमेव भविष्यतीति स्वपक्षे ममकारं व्यनक्ति॥ ४१-४२॥ ननु मद्विपक्षो भवद्भ्राता तं प्रति तव स्नेहातिरेको दृष्टः, तत्कथमेकान्तभक्तासि (इति) वदसि चेत् नैव तत् भ्राता तु न दुस्त्यजः, दुस्त्यजास्तु प्राणाः, तेऽपि त्वदुपेक्षिताश्चेत्तदा त्यक्ष्यन्ते, किं पुन भ्रातेत्याह—यस्माङ्घ्रिपङ्कजेत्यादि—हेत्यौत्कण्ठ्यो विश्रान्तिः॥ (४४)

इति द्विपञ्चाशोऽध्यायः॥ ५२॥

## श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

सत्यं कृतैः पूर्व्वसुकृतैस्त्वमङ्गीकार्य्यैव मया किन्तु चैद्याय बन्धुभिः दास्यमानायां त्वयि किमधुना करणीयमित्यपेक्षायां स्वयमेवोपायमुपदिशति—श्व इति। हे अजित! त्वं कैरपि जेतुमशक्य इत्यर्थः। अतो निर्भयत्वात् श्वोभाविनि उद्वहने विवाहे प्रथमं स्वसैन्यरहित एव गुप्तोऽलक्षित एवागत्य कुण्डिनपुरीं प्रविश्य पश्चादेव स्वशोभाख्यापनार्थं पृतनापतिभिः परीतो भव। अन्यथैतत्पुरप्रवेशो झटिति दुष्करः। अत्रत्यैर्वीरैर्दूरादेव त्वया सह योद्धुं प्रयास्यतेऽवश्यमिति भावः। पुरप्रवेशे तु सति मया विवाहशोभा प्रेक्षणार्थमेवागतमिति वदता त्वया सह यदि वीरा योद्धुं कारणाभावादेव न प्रक्रंस्यन्ते तदा त्वया सुखेनैवाह हरणीया। यदि चानिष्टाशङ्किनो योत्स्यन्त एव तदा स्वशौर्य्यमाविष्कार्यमेवेत्याह—निर्मथ्येति। समुद्रं निर्मथ्य यथा लक्ष्मीर्गृहीता तथैवेति भावः। प्रसह्य हठादेव वीर्य्यं प्रभावदर्शनमेव शुल्कं वैवाहिकदेयं यस्यास्तां माम्॥ ४१॥ ननु चैवं भवतु शिशुपालादि-बलप्रमथनमन्तःपुरस्थायास्तव हरणे त्वद्बन्धुवधोऽपि प्रसज्येतेत्यत आह—अन्तःपुरेति। कथमितीत्यनन्तरं ब्रूषे चेदिति शेषः। पुराद्बहिर्वर्त्तमानां गिरिजामम्बिकामम्बिकागृहादेव मम हरणं सुकरमिति भावः॥ ४२॥ यदि चैवं ब्रूषे भो राजपुत्रि! मत्प्रापक-प्राचीनसुकृतानि न ते सन्ति कथं मत्प्रसादं लप्स्यसे इति तर्हि भाविनि जन्मनि त्वत्प्राप्त्यर्थमेतज्जन्मनि ब्रह्मचारिणी सती तपः करिष्ये यदि चैकजन्मतपसा न पर्य्याप्तिस्तर्हि कोटिजन्मपर्य्यन्तमपि तपः करिष्ये। मम त्वत्प्राप्त्याग्रहस्तु मया दुर्वार एव यदि च वक्ष्यसे मत्प्राप्तिप्रतिबन्धकानि बहूनि ते दुरितानि सन्तीति तर्हि तपसैव लभ्याभिस्त्वच्चरणधूलिभिस्तान्यपि ध्वंसयिष्याम्येवेत्याह—यस्य भवतोऽङ्घ्रिपङ्कजरजोभिः स्नपनम् आत्मनस्तमसोऽपहत्यै उमापतिरिव महान्तो वाञ्छन्तीत्यहमपि तपोलब्धैस्तैरेव स्नात्वा स्वदुष्कृतानि नाशयिष्यामीति भावः। भवदिति षष्ठ्या लुगार्षः। तस्य भवतो यर्हि यदि प्रसादं न लभेय तदा व्रतैरुपवासादिभिः कृशान् प्राणान् जह्यां त्यजेयं ततः किमित्यत आह—शतजन्मभिरिति। एवमेवं वारं वारं जह्यां यावच्छतजन्मभिरपि तव प्रसादः स्यादिति हे अम्बुजाक्षेति तव सुन्दरनयनावलोकलिप्सैव ममैतादृशक्रूच्छ्रकरणे हेतुरिति भावः॥ ४३॥ गुह्यसन्देशा इति। भगवन्मम शपथो न काप्येते प्रकाश्यास्तर्हि तस्या लज्जा भविष्यतीति भावः। यदुदेव इत्यत्रार्थे यदुभिरपि सह मन्त्रणा न कार्य्या। यतस्तेषामपि त्वमेव देव इति स्वयमेव स्वबुद्ध्या विमृश्य यत् कर्त्तुं कर्त्तव्यं तत्क्रियताम् अनन्तरमिति कार्य्यमिदं विलम्वं न सहत इति भावः॥ ४४॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम्। द्विपञ्चाशत्तमोऽध्यायो दशमेऽजनि सङ्गतः॥ ५२॥

## गूढार्थदीपिनी

हे अजित श्वो भाविनि विवाहे प्रथमं गुप्त एव विदर्भानागत्य पश्चात्सेनापतिभिः परिवृतः सन् चैद्यादीनां सैन्यं पराभूय मामुद्वह॥४१॥ कथमुद्वहे इति शङ्कसे चेत्तर्हि। पूर्वेद्युः विवाहात्पूर्वदिने। महती महत्त्वपूर्णा। यस्यां वधूः वहिर्गिरिजामित्यन्वयः। उपेयात् गच्छेत्॥ ४२॥ महान्त इन्द्रादय आत्मनोपहत्यै स्वाज्ञाननिवृत्तये यस्याङ्घ्रिरजसा स्नानं वाञ्छन्ति तस्य भवतः प्रसाद-मित्यन्वयः भवच्छब्दे षष्ठ्या लुक्। अत्र दृष्टान्तः—उमापतिरिव। नतूमापतिरात्मतमोपहत्यै इति व्याख्येयमन्यथा 'ज्ञानं महेश्व-रादिच्छेदिति स्मृतेर्विरोधापत्तेः। अत अपहत्यै इति पृथक् पदं कार्यम्। तथा च अपगता हृतिर्नाशो यस्याः सा अपहतिर्मर्यादा तद्रक्षणाय स रजःस्नपनं प्रक्षालनोदकं श्रीगङ्गारूपं न केवलं वाञ्छति अपि तु शिरसा धारयतीत्यर्थः। एतेन मद्भक्ताः अपि एवमेव हरिं सेवेरन् अन्यथा तेषां पातः स्यादिति मर्यादा व्यञ्जितेति। कथंभूतः, उमापतिः, आत्मतमः, आत्मा श्रीकृष्णः। अतिशयेन आत्मेत्यात्मतमः। श्रीकृष्णरूपः। यदि न लभेय तदा जह्यामित्यत्र 'हेतुहेतुमतोर्लिङ्। एवं कृत्वा कदापि पतिः स्यादित्यतः पूर्वपद्ये धीरेत्युक्तम् इति वंशीधरी॥ ४३॥ आहुताः आनीताः, अत्र यत्कर्त्तुं युक्तं तत् अनन्तरं शीघ्रमेव क्रियताम्॥ ४४॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां दशमस्कन्धोत्तरार्द्धे गूढार्थदीपिन्यां द्विपञ्चाशत्तमोऽध्यायः॥ ५२॥

## श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

विवाहोऽनेकप्रकारः वराद्गोमिथुनग्रहणेनार्षः बहुवित्तग्रहणे नासुरः कन्यावरयोरन्योन्यसंमत्या गान्धर्वः यथाशक्तिः धनालङ्कारसहितकन्यादानं ब्राह्मः प्रमत्तेषु कन्याबन्धुषु चौर्य्येण कन्याग्रहणं पैशाचः यज्ञे कन्यादानं दैवः बहुषु वरेषु सत्सु कन्येच्छयैकस्मै तद्दानं स्वयंवरः प्रबलान्प्रमथ्य कन्याहरणं राक्षसः तत्रान्तिमौ विशेषतः क्षत्रियविषयौ तत्रापि बलात्प्रमथ्य कन्या-हरणलक्षः राक्षसो विवाहः क्षत्रियस्यातिधर्म्यः तथाह भीष्मः।

स्वयंवरं तु राजन्याः प्रशंसन्त्युपयान्ति च । प्रमथ्य तु हृतामाहुर्ज्यायसीं धर्मवादिनः ॥ इति ।

तत्र लोकहिताय क्षत्रियकुलाविर्भूतयोः स्वयं देवीदेवयोरनुरूपं चरमं विवाहं प्रार्थयते—श्वो भाविनीति । हे अजित ! श्वोभाविन्युद्वहने विवाहे प्रथमं त्वं गुप्तः, अलक्षितो विदर्भान् देशान् एत्य पश्चात्पृतनापतिभिः परीतः सन् चैद्यमगधेशबलं निर्मथ्य प्रसह्य हठात् वीर्यशुल्कां वीर्यं प्रभावदर्शनमेव शुल्कं वैवाहिकं देयं यस्यास्तां मामेवं रूपेण राक्षसेन विधिनोद्वहेति प्रार्थना-रहस्यम् ॥ ४१ ॥ पूर्वेद्युः विवाहादिति शेषः । यस्यां कुलदेवयात्रायां बहिरन्तःपुरादिति शेषः, गिरिजागृहान्मम हरणं कुर्विति भावः ॥ ४२ ॥ यस्याङ्घ्रिपङ्कजरजोभिः स्नपनं स्नानमुमापतिरिव उमापतिर्यथा करोति तद्वत् महान्तो वाञ्छन्ति किमर्थम् आत्मतमसः स्वसंसारस्यापहत्यै तस्य भवतः प्रसादं यदि न लभेय न प्राप्नुयां तर्हि यावच्छतजन्मभिरपि भवत्प्रसादः स्यात्तावत् व्रतैरुपवासादिभिः कृशान् मन्दीभूतान् असून् नित्यविग्रहवत्याः जन्ममरणासंभवाच्छरीराणि जह्यामिति नोक्तं किन्तु बहुभिः प्रादुर्भावतिरोभावैः प्राणान् प्राणायामप्रकारेण गृहीत्वा त्यजेयमित्यर्थः ॥ ४३ ॥ एवं स्वयं भगवत्या वाक्यं स्वयं भगवति निवेद्य स्वेच्छया किञ्चित्प्रार्थयते-इतीति । इतिशब्दः हेतुवाचकः, एते गुह्यसन्देशाः, अतो हेतोः केवलं मयाहृताः न त्वन्यत्र प्रकाशिताः हे यदुदेव ! त्वयापि यादवेष्वपि न प्रकाशनीया इति सम्बोधनाभिप्रायः । अत्र यत्कर्तुं युक्तमिति शेषस्तत्स्वयं विमृश्य अनन्तरं शीघ्रमेव क्रियताम् ॥ ४४ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धीये श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे द्विपञ्चाशत्तमाध्यायार्थप्रकाशः ॥ ५२ ॥

## श्रीसत्यधर्मकृता श्रीभागवतटिप्पणी

लोकरीत्या परोक्षत उक्त्वा नित्यापरोक्षीकृततत्केत्यपरोक्षतोऽपि वदति । श्व इत्यव्ययम् । ततः सप्तम्या लोपः । उपसि भाविन्यजितस्त्वं विदर्भान्देशान्पृतनापतिभिः समेतैर्गुप्तान्समेत्य चैद्यमगधेन्द्रबलं निर्मथ्य प्रसह्य बलात्कृत्य राक्षसेन विधिना वीर्यमेव शुल्कं यस्याः साः तामुद्वह । ब्राह्मे विवाहे बन्धुशीलश्रुतारोग्याणि बुद्ध्वा प्रजा सहकर्मभ्यः प्रतिपादयेत् । शक्तिविपयेणा-लङ्कृत्वा । आर्षे दुहितृमते मिथुनौ गावौ देयौ । दैवे यज्ञतन्त्रऋत्विजे प्रतिपादयेत् । सहधर्मं चरत इति । प्राजापत्यो मिथः कामान्संवर्वते स गान्धर्वः । शक्तिविषयेण द्रव्याणि दत्वा वहेरन्नासुरः । दुहितृमतः पोथयित्वा वहेत्स राक्षसः । सुप्तानां प्रमत्तानां वाऽपहरेत्स पैशाचः । तेषां त्रय आद्याः प्रशस्ताः । पूर्वः पूर्वः श्रेयानित्यापस्तम्बसूत्रेषूक्ते राक्षसं समं सम्मतिरिति च गान्धर्व-परिणयनमिदमिति ज्ञेयम् । सूत्रे त्रय आद्याः प्रशस्ता इत्युक्तिश्चतुर्थोपलक्षणपरेति ज्ञेयम् । प्रशस्ताश्चतुरः पूर्वानिति मनूक्तेः । मां रमारूपिणीं शुल्कं चावलामौल्यम् ॥ ४१ ॥ ननु सेना साऽपि सेना महती त्वं त्वन्तश्चरी कथं कथं घटनेति न वदावद वद न तव दुश्शकं किञ्चित्तथाऽप्ययमुपायो न प्रातश्चिन्तितः कान्त तमवधारयेति वक्ति । अन्तरिति । अन्तःपुरे तत्राप्यन्तरे चरतीति साऽन्तः पुरान्तरचरी । बन्धूस्तवाविहत्याहत्वा । एतेन वादोऽनुपादानुकूलो मामुद्वहेत्यत्र बन्धुवधमविधायेति प्रपूर्थ प्राग्व्याख्येय इति सूचितं भवति । त्वा कथं केन प्रकारेणोद्वह इति शङ्कसे चेदिति शेषः । उपायमनायासेन मन्नयनसाधनं प्रवदामि । यद्दिने लग्नं तत्पूर्वेद्युः पूर्वदिने परम्परागतैका कुलदेवयात्रा कुलदेवतालयगमनमस्ति । चेत्किमित्यत आह । यस्यां यात्रायां नववधूर्नूतनकन्या । गिरिजां द्रष्टुं बहिरुपेयादागच्छेदिति । नादः कार्यं कर्तुं शक्यमित्याह । महतीति ॥ ४२ ॥ तत्र तत्समये पदातिगजाश्वयुक्तैः सह चेदिभूपान्साल्वमागधान्सम्मथ्य रमेशः सहचरीभिः परिवृतां मामादाय संहभावमात्रं सहचरीणां नानयने स्वसुतैः सार्धं भारं वहति गर्दभीत्यादिवदिति ज्ञेयम् । स्वपुरीमुपनीय च मम पाणिं गृह्णातु । आदाय समुदायो यौतकादिधनं तद्रूपिणी चासावहं च तां मामिति पदमेकं वा । तद्रूपिणी चासौ मां रमा चेति वा यौतकादिषु यद्देयं सुदायो हरणं च तत् । दायो दाने यौतकादिधने सोल्लुण्ठभाषितेति विभक्ते रस्यादिद्रव्ये दायमहर्मनीषिण इत्यमरविश्वौ । वश्यं सोपभोगयोग्यामित्यर्थः । अत आद आदायोपनीय मध्ये नान्यतरवैय्यर्थ्यशङ्केति ध्येयम् । स्वकीयामिति मामित्यस्य पुरीमित्यस्य च प्राचीनपक्षे विशेषणमिति मन्तव्यम् ॥ ४३ ॥ स्वादरकारणमनागमने करणीयं च स्वेन विज्ञापयति । यस्येति । यस्य तवाङ्घ्रिपङ्कजयोर्ज्ञानानन्ददयोः स्तवनं स्तुतिमुमापती रुद्र इव यथाऽऽत्मतमोपहत्यै स्वाज्ञानहानाय स्तवनं करोति । निदर्शनं धातारमविधाय विधाय हरं न मम त्र्यम्बकाम्बिकायात्रा शर्वादिसर्वनियन्तुस्तव भार्याया आवश्यकीति बहिरुपयानं किन्तु कान्त तव सङ्गत्या इति ध्वनयामासेति ज्ञेयम् । महान्तो वाञ्छन्ति तस्य तव भवत्प्रसादं भवन्मद्विषय इदानीं सत्तां लभमानश्चासौ प्रसादोऽनुग्रहश्च तम् । मन्नयनरूपमहं न लभेय नाप्नुयां तर्ह्यम्बुजाक्षासूञ्जह्याम् । अनेन स्त्रीवधदोषस्तवायास्यतीति द्योतयति । यमुद्दिश्य त्यजेत्प्राणांस्तमाहुर्ब्रह्मघातमित्यादेः । मम दोषो वा दोषो वा रमणिमरणे तव को लाभ इत्यत आह । व्रतकृशा शतजन्मभिर्वा स्याम् । तव भार्येति शेषः । भार्येत्याद्यनुक्त्वा कण्ठतो वैकुण्ठतवोरःस्थिता स्यामिति स्वोत्कण्ठां ध्वनयतीति ध्येयम् । व्रतकृशासूञ्जह्याम् । व्रतकृशा शतजन्मभिरित्यन्वयः । यस्य भवत इत्येकदेशान्वय इत्यन्ये ॥ ४४ ॥ विश्वं समस्तं सन्देशं विमृश्य तमागतम् ॥ ४५ ॥ गुह्या अन्यस्यानाख्येयाः । अत्रैतत्समय एतन्मध्ये वा । यदुक्तमनन्तरं क्रियताम् ॥ ४६ ॥

इति श्रीभागवतटिप्पण्यां सत्यधर्मकृतायां दशम उत्तरार्धे सप्तपञ्चाशोऽध्यायः ॥ १०-५७ ॥

**श्रीमद्वल्लभाचार्य्यकृता सुबोधिनी**

उद्वाहमात्रं प्रार्थयित्वा प्रकारमपि प्रार्थयते **श्वो भाविनीति** स्पष्टतया समागमने कदाचित्ते गोपनं कुर्युः, लग्नात्पूर्वमेव वा शिशुपालाय प्रेषयेयुः, अविधानेन वा दद्युरिति। अतो यथा तेषु परिज्ञानं न भवति, तथैवागत्य नेया। अन्यथा उपक्रमावधि फलपर्यन्तं मध्ये कालविलम्बे शरीरपातोऽपि भवेदिति तथा प्रार्थना। देशेऽपि न पूर्वमागन्तव्यमित्याह। **श्वो भाविनि उद्वाहे।** प्रथमतस्त्वमेकाकी गुप्तः समागत्य, पृतनाश्च भिन्नतया समानीय, तत्रापि पृतना यादवरूपैव, न तु विजातीया आनेयाः, अन्यथा मन्त्रभेदः स्यात्। पश्चात्पुरप्रवेशे तैः परीतः। अन्यथा स्वस्य चिन्ता स्यादिति। यद्यपि त्वमजितः, अथवा अजितत्वादेव पक्षान्तराभावात् चैद्यमगधेशयोर्बलं निर्मथ्य, मध्ये प्रतिबन्धकत्वेन स्थितमपसार्य, तदर्थं प्रसह्य, बलात्कारमपि कृत्वा मामुद्वह! नन्वेवं सति कामार्थं भक्त्यर्थं वा विवाहो भवेत्, न धर्मार्थमित्याशङ्क्याह **राक्षसेन विधिनेति**। क्षत्रियस्य स एव धर्मः। गान्धर्वस्तु पूर्वमुक्त एव 'तन्मे भवान्खलु वृत' इत्यनेन। अतो मद्विवाहे उभयं भविष्यतीति भावः। ननु एवं हरणे परस्वादानं भवेदित्याशङ्क्याह **वीर्यशुल्कामिति**। न हि मूल्ये दत्ते परस्वादानमस्ति। क्षत्रियाणां वीर्यमेव सर्वत्र शुल्कम्। पराक्रमं कृत्वा मारयित्वा य एव हरति, तस्यैव तदिति क्षत्रियधर्मानुसारेण हरणे न परस्वादानमित्यर्थः। बाधशङ्कया प्रकारमुपदिश्य तत्रापि स्फुरितं बाधकमनूद्य परिहरति **अन्तःपुरान्तरचरी**मिति। बन्धूननिहत्य अन्तःपुरमध्ये चरणयोग्यां त्वां कथमुद्वह इति चेत् (शङ्कसे), तदापि सन्ति बहव उपायाः। तथाप्यविरुद्ध उच्यत इत्याह। प्रकर्षेण उपायं वदामीति। केनचिद्व्याजेन स्वयं बहिरागच्छेत्, भगवान्वा वेशं कृत्वा गच्छेत्, आकर्षणं वा कुर्यात्, बुद्धि वा प्रेरयेत्, अन्यथा सर्वेषाम्, सर्वेष्वपि पक्षेषु क्लिष्टं भवेत्, पराक्रमश्च न भवेत्, तस्मादन्यदकृत्वा गौरीपूजनार्थमेव गताया हरणं कर्तव्यमिति प्रार्थना। तत्र गमनमावश्यकमित्याह। **पूर्वेद्युः** विवाहात्पूर्वदिवसे महती यात्रा वर्तते। सा अनुल्लङ्घनीया ततः। कुलदेवतायाः महतीत्यनेन दूरे गमनमुक्तम्। किमतो यद्येवमिति चेत्, तत्राह **यस्यां बहिर्नववधूरि**ति। नववधूः नूतना वधूः संरक्ष्यापि लोकप्रसिद्ध्यर्थं भोगात्पूर्वं भोगयोग्या नववधूर्भवति, सा गिरिशां पार्वतीं द्रष्टुमुपेयादिति विधिः। स्वयमपि गिरीणामीशभूतेति अकारान्तात् टाप्। नित्यं संज्ञाछन्दसोरिति वा ङाप्। ततो बहिः स्थिता तत एव नेयेति भावः। अतो विवाहदिवस एव द्वारकायां विवाहो भविष्यतीति न ज्योतिःशास्त्रस्याप्यप्रामाण्यम्॥ ४२॥ एवं स्वरूपप्रकारप्रार्थनां कृत्वा तदकरणे बाधकमाह **यस्याङ्घ्रिपङ्कजेति**। यहि प्रसादं न लभेय, तर्हि जह्यामसून्, ननु कोऽयं निर्बन्ध इति चेत्, उत्तमफलत्वादित्याह। यस्य भगवतः अङ्घ्रिपङ्कजस्य रजसा स्नानं महान्तोऽपि, वाञ्छन्ति। तत्र निदर्शनमुमापतिः। स हि केवलं रजसा स्नानमलभमानः रजोयुक्तचरणोदकेन स्नानं करोतीति। उमापतिपदेन उमयापि वृतः शिवः। तस्यापि स एवाभिप्रेत इति तदेवोत्तमं फलम्। किञ्च। आत्मतमोपहत्यै आत्मनस्तमोगुणो गच्छत्विति। अहमपि माया त्रिगुणात्मिका, तत्रापि रुक्मिप्रभृतिभिः सह अवतीर्णेति तमःप्रधानैव। ततश्चेत्तत्तमश्चेन्न दूरीक्रियते, तदा पुनर्निकृष्टजन्म भविष्यतीति तदर्थं प्रयत्नोऽवश्यं कर्तव्यः तत्रायमुपायः सुगम उत्तमश्च। एतदभावे तु शरीरं वा त्यक्ष्यामि। अयं संसर्गो गच्छतीति। किञ्च। व्रतेन कृशा सती उत्तरोत्तरजन्मसु शतजन्मभिः अयमर्थः कदाचित् स्यात्। 'स्वधर्मनिष्ठः शतजन्मभि'रिति वाक्यात् **अम्बुजाक्षेति** सम्बोधनं दृष्ट्यैव तापहारकः कथमेवं करिष्यतीति बोधनार्थम्॥ ४३॥ एवं रुक्मिणीवाक्यान्युक्त्वा उपसंहरति **इत्येत** इति। गोप्या एते सन्देशाः। यदुदेवेति सम्बोधनात् विवाहः कर्तव्य इति सूचितम्। ममैवाहूता इति सुतरां गोप्यत्वम्। कदाचिदेतत्पत्रम् अन्यस्य कापट्यात् भवेदिति शङ्का स्यात्, तदर्थमाह। एतद्विमृश्य कर्तुं यच्चात्र सिध्यति, तत्क्रियताम्। चकाराद्यद्वक्तव्यम्, तदुच्यतामिति। विमर्शानन्तरं कर्तव्यम्। अथवा। तदनन्तरमेव कर्तव्यं 'किं कार्यं करवामे'त्यस्यैतदेवोत्तरमित्यर्थः॥ ४४॥

इति श्रीभागवतसुबोधिन्यां श्रीलक्ष्मणभट्टात्मजश्रीमद्वल्लभदीक्षितविरचितायां दशमस्कन्धविवरणे उत्तरार्धे तृतीयोऽध्याय॥ ३॥

**श्रीसुबोधिनीसारः**

कर्त्तव्यमुपदिशति। हे अजित श्वोभाविनि अद्यदिनात्तृतीयेह्नि भाव्ये उद्वाहे विदर्भान् गुप्तोऽलक्षित एवेत्यागत्य पृष्टतः सेनापतिभिः परीतो व्याप्तः शिशुपालजरासंधबलं निर्मथ्य प्रसह्य बलात् वीर्यमेव शुल्कं देयं यस्यास्तां मां त्वमुद्वह गृहाणेति संकेतः। राक्षसेनापि विधिना॥ ४१॥ दुर्गमध्यगतायास्तव हरणं कथमित्यत आह। तथात्वे त्वद्बंधुवधप्रसक्तेः। अंतःपुरमध्यवर्त्तिनीं त्वां बंधून् अनिहत्य नो हत्वा कथमहमुद्वहे परिणयामीति हेतोरुपायं ब्रवीमि। पूर्वेद्युर्विवाहदिनात्प्रथमदिने महती कुलदेवयात्रास्ति यस्यां यात्रायां नववधूर्बहिः पुराद् गिरिजामम्बिकां देवीमुपगच्छेत्॥ ४२॥ नायं पणः स्त्रीस्वभावात् किंतु महाफललाभादित्याह। हे अंबुजाक्ष यस्य तव पादपद्मरेणुस्नानं महांतो जना देवाद्या वा वांछंति। आत्म स्तमसो मूलाज्ञानस्याऽपहत्यै निवृत्त्यर्थम् उमापतिः शिव इव त्वदलाभे मर्त्तव्यमित्याह। यदि भवतस्तव प्रसादं कृपां न लभेयं न प्राप्नुयामहं तर्हि व्रतैः कृशान् दुर्बलान् असून् प्राणान् जह्यां त्यजेयं दृढप्रत्ययमाविष्करोति। शतजन्मभिः भवत्प्रसादः स्यात्॥ ४३॥ उपसंहरति। हे यदुदेव इत्येते गोप्याः संदेशा मया नीताः, अत्र कर्त्तुं कार्यं विमृश्य विचार्य यत् युक्तं तदनन्तरं क्रियतां त्वया॥ ४४॥

इति श्रीमद्भा० दशमस्कन्धे उ० सुबोधिन्यां टीकायां द्विपंचाशत्तमोऽध्यायः॥ ५२॥

### गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

ननु 'बन्धुभिश्चैद्यायार्पितायां त्वयि मयाधुना किं करणीयम्' इत्यपेक्षायामाह—श्वोभाविनीति । 'भयं तु तव नास्त्येव' इति सूचयन्ती सम्बोधयति—अजितेति । 'उद्वहने विवाहे श्वोभाविनि सति त्वं प्रथमं गुप्तः, अलक्षित एव विदर्भान् देशान् समेत्य आगत्य पश्चात् पृतनापतिभिः सेनापतिभिः परीतः परिवृतः सन् चैद्यादिबलं निर्मथ्य पराभूय प्रसह्य बलात् राक्षसेन विधिना मामुद्वह, हृत्वा गृहमानीयोद्वहेत्यर्थः । 'एवं त्वत्प्राप्त्यतिरिक्तं न वैवाहिकमपेक्षितम्' इति सूचयन्त्याह—वीर्यशुल्कामिति । वीर्यं प्रभावदर्शनमेव शुल्कं वैवाहिकं देयं यस्यास्तामित्यर्थः ॥ ४१ ॥ ननु 'भवत्वेवं शिशुपालादिबलप्रमथनम्, तथापि अन्तःपुरगतायास्तव हरणे त्वद्बन्धूनां वधोपि प्रसज्येत, तदकृत्वा त्वां कथमुद्वहे' इति चेत्तत्रोपायं प्रवदामि—विवाहदिनात् पूर्वेद्युः महती कुलदेवीदर्शनार्था यात्रा अस्ति भवति, यस्यां यात्रायां नववधूः पुराद्वहिः स्थितां गिरिजां पार्वतीं द्रष्टुमुपेयात् गच्छेत् । अतः पार्वतीगृहादेव मम हरणं सुकरम्, बन्धुवधाद्यप्रसक्तेरिति भावः ॥ ४२ ॥ एवमात्मनः स्वीकारार्थं भगवन्तं सम्प्रार्थ्य तदकरणे बाधकमाह—यस्येति । 'त्वत्कृपादृष्ट्येव सन्तापनिवृत्तिः, नान्यथा' इति सूचयन्ती सम्बोधयति—अम्बुजाक्षेति । यर्हि भवतः प्रसादमहं न लभेय न प्राप्नुयां तर्हि व्रतैरुपवासादिभिः कृशान् असून् प्राणान् जह्यां त्यजेयम् । 'ततः किं स्यात्' अत आह—शतजन्मभिः स्यात् इति । यावत्तव प्रसादो न स्यात्तावदेवमेव वारं वारं प्राणान् जह्याम्, तदा शतजन्मभिरपि तु तव प्रसादः स्यादेव । ननु 'चैद्योपि तावत्प्रख्यातगुणकर्मा योग्य एव वरः, किमनेनानर्थकारिणा निर्बन्धेन' इत्याशङ्क्य तस्योत्तमफलत्वमाह—यस्य भवतोऽङ्घ्रिपङ्कजरजोभिः स्नपनं आत्मनस्तमस अज्ञानस्य अपहत्यै निवृत्त्यर्थमुमापतिरिवान्येपि महान्तो ब्रह्मादयो वाञ्छन्ति तस्येति ॥ ४३ ॥ एवं रुक्मिण्याः सन्देशानुक्त्वा स्वयमाह—इतीति । 'अत्र न यादवैः सह विचारणीयमस्ति तव स्वतन्त्रत्वात्' इति सूचयन् सम्बोधयति—यदुदेवेति । इत्येते रुक्मिण्या गुह्यसन्देशा मया आहृता आनीताः, अत्र यत् कर्तुं योग्यं तद्विमृश्य विचार्य अनन्तरं त्वरितमेव क्रियताम् ॥ ४४ ॥

इति श्रीवल्लभाचार्य-वंश्यगोपालसूनुना । श्रीमन्मुकुन्दरायाणां पादसेवाधिकारिणा ॥ १ ॥
श्रीमद्गिरिधराख्येन भजनानन्दसिद्धये । श्रीमद्भागवतस्येयं टीकाबालप्रबोधिनी ॥ २ ॥
रचिता दशमे तत्र राजसानां निरोधने । द्विपञ्चाशत्तमो यातो भैष्मीयाञ्चानिरूपकः ॥ ३ ॥

### अन्वितार्थप्रकाशिका

श्व इति ॥ हे अजित ! उद्वहने विवाहे श्वो भाविनि सति त्वं प्रथमं सैन्यरहित एव गुप्तः, अलक्षित एव विदर्भान् देशान् तद्राजधानीं कुण्डिनपुरं समेत्य आगत्य पश्चादेव स्वशोभाख्यापनार्थं पृतनापतिभिः सेनापतिभिः परीतः परिवृतो भव । अन्यथैतत्पुरप्रवेशोऽतिदुष्करः अत्रत्यैर्वीरैस्त्वया सह योद्धुं चावश्यं प्रक्रंस्यते । ततश्च मम हरणमन्तरितं स्यात् । सैन्यं विना पुरप्रवेशे तु विवाहप्रेक्षणार्थमागतं त्वां मत्वा वीरैर्न योत्स्यते । ततश्च हरणं सुकरं स्यात् । यदि तु हरणसमये प्रतिपक्षाः चैद्यादिवीरा योद्धुमुद्यता भवेयुस्तदा तु चैद्यमगधेन्द्रादिबलं निर्मथ्य पराभूय यथा समुद्रं निर्मथ्य लक्ष्मीर्गृहीता तथा प्रसह्य बलात् वीर्यं प्रभाव एव शुल्कं विवाहे देयं यस्यास्तां मां राक्षसेन विधिना उद्वह हृत्वा गृहमानीयोद्वह ॥ ४१ ॥ अन्तरिति ॥ ननु अन्तःपुरस्य अन्तश्चरीं त्वां बन्धून् पितृभ्रात्रादीन् अनिहत्य कथमुद्वहे तैर्मत्कार्यविघ्ने कृते तद्वधं विना कार्यसिद्ध्यसंभवात् इति शङ्कसे चेत् तत्रोपायं प्रवदामि । विवाहदिनात् पूर्वेद्युः महती कुलदेवदर्शनार्था यात्राऽस्ति भवति । यस्यां यात्रायां नववधूः, पुराद्बहिःस्थितां गिरिजामम्बिकां द्रष्टुमुपेयात् गच्छेत् । अतः अम्बिकागृहादेव हरणे बन्धुवधप्रसक्तिर्नास्ति ॥ ४२ ॥ यस्येति ॥ हे अम्बुजाक्ष ! यस्य भवतोऽङ्घ्रिपङ्कजरजोभिः स्नपनम् आत्मनस्तमसः अज्ञानस्य अपहत्यै निवृत्त्यर्थमुमापतिरिवान्येऽपि महान्तो ब्रह्मादयो वाञ्छन्ति । इत्यहमपि तपोलब्धैस्तैरेवं स्नात्वा दुष्कृतानि नाशयिष्यामीति भावः । तस्य भवतः । षष्ठीलुगार्षः । प्रसादं यर्हि न लभेय न प्राप्नुयां तर्हि व्रतैरुपवासादिभिः कृशानसून् प्राणान् जह्यां त्यजेयम् । एवं मुहुः प्राणत्यागे शतजन्मभिरपि तु तव प्रसादः स्यादेवेति ॥ ४३ ॥ इतीति ॥ हे यदुदेव ! इत्येते रुक्मिण्या गुह्यसंदेशा मया आहृता आनीताः । अत्र यत्कर्तुं योग्यं तद्विमृश्य स्वयमेव विचार्यानन्तरं त्वरितमेव क्रियताम् । न तु अस्मिन् कार्ये यदुभिरपि मन्त्रणं कार्यम् अतिगुप्तत्वात् ॥ ४४ ॥

इति श्रीभागवते महापुराणे दशमस्कन्धेऽन्वितार्थप्रकाशिकायां द्विपञ्चाशत्तमोऽध्यायः ॥ ५२ ॥

### श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्

अतिव्यग्रतया स्वयमेवोपायमप्याह द्वाभ्यां श्व इति । श्वोभाविनि आगामिदिवसभाविनि उद्वहने मत्पाणिग्रहणे । गुप्तः रुक्मिणीपाणिग्रहणायाऽऽगत इति प्रथमं सर्वैरविज्ञातः सन् । त्वं विदर्भान् समेत्य । पश्चात्पृतनापतिभिः सैन्यपैः परीतः वृतः सन् चैद्यमगधेंद्रबलं शिशुपालजरासंधसैन्यम् । निर्मथ्य हत्वा । राक्षसेन विधिनाहरणोपायेन वीर्यशुल्काम् वीर्यं सामर्थ्यमेव शुल्कं पाणिग्रहणनिमित्तं देयं धनं यस्यास्तां माम् । प्रसह्य बलादुद्वह मम पाणिग्रहणं कुर्वित्यतिरहस्यवचनं ॥ ४१ ॥ अंतःपुरस्थायास्तदहरणे त्वद्बंधुवधो भवेदिति शंकां निराकुर्वन्त्याह अंतरिति । बंधून् रुक्मीप्रमुखान् त्वद्भ्रात्रादीन् अनिहत्य । अंतःपुरांतरचरीं अगम्य राजगृहांतरस्थां त्वां कथमुद्वहे इत्युच्यते चेत्तत्राहमुपायं प्रवदामि । पूर्वेद्युः विवाहात् प्रथमदिवसे महतीकुलदेवयात्रास्ति यस्यां यात्रायां नववधूः पुराद्बहिःस्थितां गिरिशां शिवाम् । उपेयात् उपगच्छेत् । तत एव मम हरणं सुलभमिति भावः ॥४२॥ ननु त्वं मे न

योग्या पत्नीति चेत्सत्यमेवं यतोऽक्षरपुरुषादिमहामुक्तोपास्यस्त्वं क अत्यल्पा क्षत्रियसुताहं क तथापि असंख्यजन्मसु व्रताद्यैरसु-परित्यागेनापि त्वदर्थं यत्नं करिष्यामीत्याह । यस्येति हे अंबुजाक्ष हे मुक्तमनोहरकमलनयन यस्य तवांघ्रिशतपत्ररजोभिः स्नपनं स्नानं । महांतः । आत्मारामा महामुक्तानिष्कामा अपि वांछंति क इव आत्मनि स्थितं यत्तमस्तमोगुणस्तस्य अपहत्यै नाशाय । उमापतिरिव उमापति दृष्टांतः शिवस्य गंगाधरत्वेन तद्वांछायाः प्रसिद्धत्वात् । अतो भवत्प्रसादं तव पत्नीत्वेनांगीकरणं यहि न लभेय तर्हि व्रतकृशान् व्रतैश्चांद्रायणादिभिर्यमनियमासन प्राणायामादिभिश्च कृशान् । दुर्वलान् प्राणान् जह्यां । शतजन्मभिरेवं कृते सति तव प्रसादः स्यात् ॥ ४३ ॥ अत्र यत् कर्त्तुं कर्त्तव्यं तद्विमृश्य विचार्य । अनंतरं क्रियतां वयं ब्राह्मणा रुजवः सर्वोपरि बुद्धिस्तवेति भावः ॥ ४४ ॥

इति श्रीशुद्धैकांतधर्मप्रवर्त्तकगुरुराजेन्द्रश्रीसहजानंदस्वामिशिष्यगोपालानंदमुनिविरचिते निगूढार्थप्रकाशके श्रीमद्भागवतस्य दशमस्कंध व्याख्याने रुक्मिणीपत्रिकाप्रेषणंनाम द्विपंचाशत्तमोऽध्यायः ॥ ५२ ॥

### भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

ननु तव बन्धुभिश्चैद्यायार्पितायां त्वयि किमधुना मया विधेयमित्यपेक्षायामाह । श्वो भाविनीति । हे अजित, श्वो भाविनि परश्वो भाविनीत्यर्थः । अग्रिमाध्याये चतुर्थश्लोकटीकायां श्रीधरस्वामिचरणैर्व्याख्यातत्वात् । उद्वहने विवाहे, त्वं, प्रथमं, गुप्तः, अलक्षितः, एव, विदर्भान् समेत्य आगत्य, पश्चात् पृतनापतिभिः सेनापतिभिः, परीतः परिवृतः सन्, चैद्यश्च मगधेन्द्रश्च तयोर्बलं सैन्यं, निर्मथ्य पराभूय, प्रसह्य हठात्, वीर्यं प्रभावदर्शनमेव शुल्कं वैवाहिकं देयं यस्यास्तां, मां राक्षसेन विधिना, उद्वह इत्युपदेशरहस्यम् ॥ ४१ ॥ ननु भवतु शिशुपालादिबलप्रमथनमन्तःपुरगतायास्तव हरणे त्वद्बन्धुवधोऽपि प्रसज्येतेत्यत आह । अन्तःपुरेति । अन्तःपुरचरीमन्तःपुरमध्यचारिणीं, त्वां बन्धून्, अनिहत्य अहत्वा, कथम् उद्वहे, इति चेत्, उपायं प्रवदामि । पूर्वेद्युः विवाहदिनात्प्रथमदिवसे, महती कुलदेवियात्रा, अस्ति । यस्यां यात्रायां, बहिः पुरादिति शेषः । नववधूः, गिरिजामम्बिकां, उपेयात् । दर्शनार्थमिति शेषः । एवं च नववधूरहं यदाऽम्बिकादर्शनं कर्त्तुमुपेयां तदाम्बिकागृहादेव मम ग्रहणं सुकरमेवास्तीति भावः ॥ ४२ ॥ ननु किमनेनानर्थकारिणा निर्बन्धेन चैद्योऽपि तावत् प्रख्यातगुणकर्मा योग्य एव वर इत्यत आह । यस्येति । हे अम्बुजाक्ष, यस्य तव अङ्घ्रिपङ्कजरजोभिः स्नपनं, आत्मनस्तमसोऽपहतिस्तस्यै, उमापतिः शिवः, इव, अन्ये महान्तोऽपि, वाञ्छन्ति । इत्थंभूतं, भवत्प्रसादं, यर्हि यदि अहं न लभेय न प्राप्नुयां, तर्हि व्रतैरुपवासादिभिः कृशास्तान्, असून् प्राणान्, जह्याम् । ततः किमित्यत आह । शतजन्मभिरपि, स्यां तव भार्याहं भवेयमित्यर्थः ॥ ४३ ॥ इत्थं तत्पत्त्रं वाचयित्वा स्ववचनमप्याह इतीति । हे यदुदेव, इत्येवंविधाः, एते गुह्यसंदेशाः, मया आहृता आनीताः, अत्र यत्, कर्त्तुं, करणीयमित्यर्थः । तत् विमृश्य, क्रियताम् । तच्च अनन्तरं शीघ्रमेव, क्रियताम् । नात्र विलम्बो युक्त इति भावः ॥ ४४ ॥

इति श्रीधर्मधुरंधरश्रीधर्मात्मजप्रत्यक्षपुरुषोत्तमश्रीसहजानन्दस्वामिसुतश्रीरघुवीराचार्यसूनुभगवत्प्रसादाचार्यविरचितायामन्वयार्थावबोधिन्यां भक्तमनोरञ्जन्याख्यायां श्रीमद्भागवतटीकायां दशमस्कन्धे उत्तरार्द्धे द्विपञ्चाशत्तमोऽध्यायः ॥ ५२ ॥

### कृष्णप्रिया

श्रीरुक्मिणी जी लग्न समय को सूचित करते निवेदन किया कि आप तो सदा विजयी ही हो और अजेय भी हैं हे नाथ हे अजित ? एक हि दिन के व्यवधान में मेरा लग्न होने वाला है अतः आप इस प्रकार से पधारिये कि आप लग्न के पूर्व मुझे अनायास ले जाय। आप गुप्त रीति से पधारिये फिर अकेले भी न पधारे आप स्वयं समर्थ एवं अजेय है फिर भी सेनापतियों संकलित चतुरङ्गिणी सेना को साथ लाइए। शिशुपाल एवं मागधजरासन्ध की सेनाओं को कुचल डालिये नष्ट भ्रष्ट कर दीजिये और मैं क्षत्रिय कन्या हूँ वीर्यशुल्का हूँ मुझे किसी का अधिकार नहीं है मैंने आपका वरण किया है इससे गान्धर्व विवाह तो हो गया है अमित पराक्रम से प्रतिलिप्सुओं की जड़ उखाड़कर आपके शरण में मेरा पाणिग्रहण कीजिये ॥ ४१ ॥ नाथ ? यदि आप यही सोचते हो कि राजकुमारियाँ तो राजभवन में अन्तःपुर के भीतर जनाने में ही रहती हैं उनके अपहरण के अवसर पर वन्धुजनों का वध करना लग्न मङ्गल में समुचित नहीं उससे व्याह न होना उचित है ऐसा करुणमय स्वभाव से न पधारे तब नाथ मैं निवेदन करती हूँ कि हमारे कुलका ऐसा विधान है कि लग्न के अगले दिन कुलदेवीजी का दर्शन करने के लिये बड़े पैमाने पर यात्रा निकलती है। उस यात्रा में कन्या को दुलहिन को नगर के बाहर गिरिजादेवी के मन्दिर में पैदल प्रस्थान करना पड़ता है ॥ ४२ ॥ हे कमललोचन श्रीकृष्ण ! उमापति भगवान् नीलकण्ठ की तरह उत्तम पुरुष भी आत्म शुद्धि के लिये आपके श्रीचरणों की धूली से स्नान करना चाहते हैं। ऐसे समर्थ एव करुणानिधान के श्रीचरणों का प्रसाद चरणों की धूली न प्राप्त कर सकी तब व्रतकृश प्राणों का त्याग करूंगी। नाथ इस कृपा को पाने के लिये अनन्त जन्म क्यों न लेने पड़े। मुझे विश्वास है कि कृपासिंधु आपका कृपा प्रसाद कभी न कभी एक दिन अवश्य मिलेगा ॥ ४३ ॥ श्री सुदेव विप्रर्षि ने कहा– हे नाथ यदुदेव ? श्रीरुक्मिणीजी के आपके श्रीचरणों में यही संगोपनीय संदेश है। आपकी सेवा में यही सन्देश लेकर आया हूँ। आप इस पर अवश्य विचार करें और यथाशीघ्र सन्देश के अनुरूप निर्णय करने की कृपा करें ॥ ४४ ॥

श्रीमद्भागवत दशमस्कन्ध निरोध लीला उत्तरार्द्ध श्रीरुक्मिणी विवाह प्रस्ताव में ५२ वाँ अध्याय सम्पूर्ण।

# अथ त्रिपञ्चाशत्तमोऽध्यायः

| श्लोकाः | अनु. | वंश. | मि. उ. | वसं. | उ. | श्लो. अ. | उ. अ. | अ. अ. | सं. श्लो. अ. | सं. श्लो. | अक्ष. |
|---|---|---|---|---|---|---|---|---|---|---|---|
| ५७ | ५० | १ | ४ | २ | ३ | १९८४ | १९ | ४४ | २०४७ | ६३॥ | ७ |

**श्रीशुक उवाच**

**वैदर्भ्याः स तु सन्देशं निशम्य यदुनन्दनः । प्रगृह्य पाणिना[1] पाणिं प्रहसन्निदमब्रवीत् ॥ १ ॥**

**श्रीभगवानुवाच**

**[2]तथाहमपि तच्चित्तो निद्रां च [3]न लभे निशि । वेदाहं रुक्मिणा द्वेषान्ममोद्वाहो निवारितः ॥ २ ॥**

**तामानयिष्य उन्मथ्य राजन्यापसदान् मृधे । मत्परामनवद्याङ्गीमेधसो[4]ऽग्निशिखामिव ॥ ३ ॥**

**श्रीशुक उवाच**

**उद्वाहर्क्षं च विज्ञाय रुक्मिण्या मधुसूदनः । रथः संयुज्यतामाशु दारुकेत्याह सारथिम् ॥ ४ ॥**

**कर्दमक्षमा**

अन्वय.—श्रीशुक उवाच, सः, यदुनन्दनः, तु, वैदर्भ्याः, सन्देशं, श्रुत्वा, पाणिना, पाणिम्, प्रगृह्य, प्रहसन्, इदम्, अब्रवीत् ॥ १ ॥ श्रीभगवान् उवाच—रुक्मिणा, द्वेषात्, मम, उद्वाहः, निवारितः, अहम्, वेद अहम्, अपि, तच्चित्तः, निशि च, निद्राम्, न, लभे ॥२॥ राजन्यापसदान्, मृधे, उन्मथ्य, एधसः, अग्निशिखाम्, इव, अनवद्याङ्गीम्, मत्पराम्, ताम्, आनयिष्ये ॥३॥ श्रीशुक उवाच—मधुसूदनः, रुक्मिण्याः, उद्वाहर्क्षम्, विज्ञाय, च, हे दारुक ? आशुः, रथः, संयुज्यताम्, इति सारथिम्, आह ॥४॥

**श्रीधरस्वामिविरचिता भावार्थदीपिका**

त्रिपंचाशत्तमे गत्वा विदर्भानद्भुतेहितः । रुक्मिणीमहरत्कृष्णो मिषतां द्विषतां बलात् ॥ १–१ ॥

निद्राया अलाभे कारणांतरम् । वेदेति । तया अकथितमप्यहं जानामीति ॥ २ ॥ आनयिष्यामि । राजन्यापसदान्राजसुहीनान् । उन्मथ्यानयने दृष्टांतः । एधस इति ॥ ३ ॥ उद्वाहर्क्षमिति । परश्वो रात्रौ विवाहनक्षत्रमिति विज्ञाय तस्यां रात्र्यां प्रस्थाय प्रातर्विदर्भदेशानगमत् । "श्वोभाविनि त्वमजितोद्वहने विदर्भान् गुप्तः समेत्य" इति रुक्मिणीसंदेशात् ॥ ४ ॥

**श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः**

अद्भुतेहित आश्चर्यलीलः । मिषतां पश्यताम् ( १ ) । स कृष्णः । वैदर्भ्या विदर्भराजपुत्र्याः । तुशब्दः क्रमप्राप्तश्रीकृष्णभाववर्णनरूपे प्रकरणभेदे । तथैवाभिव्यंजयति–प्रगृह्येति । प्रकर्षेण पुलकादिप्रेमविकारेण गृहीत्वा, पाणिना चेदं पाणिग्रहणं सख्यसम्पादनाय । तच्च हार्दमपि व्यंजयितुमीषद्व्रीडासहितेन प्रहर्षेण भावविशेषेण च प्रकृष्टं हसन् । यदुनन्दन इति रुक्मिणीपरिग्रहाद्यदुकुलस्यानंदनाभिप्रायेण ॥ १ ॥ यथा रुक्मिणी मच्चित्ता तथाहमपि तस्यां चित्तं मनो यस्य स तथा । प्रथमं कारणं तच्चित्तत्वं द्वितीयं ममेत्यादि । सा यथा मच्चिता तथाहमपि । तल्लक्षणमाह–निद्राञ्चेति । निद्रामपि कुतोऽन्यदुपभोगादिसुखमित्यर्थः । अत्र विघटननिदानस्यापि मम ज्ञातत्वान्मया स्वत एव तत्समाधानं कार्यमित्याह–वेदेति सार्धेन ॥ २ ॥ तां रुक्मिणीम् । "स्यादपसदः प्रोषितेपि नीचे पीडाकरे तथा" इति निरुक्तिः । एधसः काष्ठात् । तामानयिष्य इति–एतावन्तं कालं तस्या एवाभिप्रायं प्रतीक्ष इति भावः । तर्हि ममानागमने भवांस्तामुपेक्षेतैव—न, तदीयमहागुणाकृष्टत्वान्ममेत्यभिप्रायेण तां विशिनष्टि—मत्परामिति पदद्वयेन । तत्परत्वे सर्वसद्गुणवत्ता सिद्धैव 'यस्यास्ति भक्तिर्भगवत्यकिंचना' इत्यादेः । 'एवं श्रुत्वा गुणान्' इत्यादिना तदुक्तनिजगुणरूपवत्तस्या अपि गुणरूपे बोधिते । उच्चैर्मथित्वेति–'निर्मथ्य,–इति तदुक्तानुसारेण तदुक्तप्रतिपालनपरता बोधिता । राजन्यापसदानिति–मुहुर्निर्जयादिनापमानेनापि लज्जाद्यभावाद्दुर्बुद्धितानपगमाच्च । मृधे इति—युद्धमध्ये साक्षादेव न तु मायांतर्द्धानादिनेत्यर्थ इति निजपराक्रमः सूचितः । एधस इति दृष्टान्तेन यज्ञियाग्निशिखावद्दारुणाच्छन्नत्वेपि

---

१. पाणौ–वीर. । २. द्विज–वीर. विज. । ३. यथा सा रुक्मिणी नित्यं मच्चिताऽऽस्ते सुशोभना । . ४. नाध्यगमं–विज. ।

५. मेधसोग्नेः–विज. ।

परिश्रमेणावश्योद्धार्य्यत्वं ध्वनितम् । यथैधसि वर्तमानाग्निशिखा प्रकटीभूता एध एव ज्वालयति तथैव रुक्मिप्रभृतिदुष्टराजन्यकुलेनावृता सैव तत्सर्वं ज्वालयिष्यति । अहं तु निमित्तमात्रं भविष्यामीति भावः । एवं तदशेषसंदेशोत्तरमप्यूह्यम् ॥ ३ ॥ परश्व आगामिदिनात्परदिने । यद्यपि पृतनापतिभिः परीत इति तया स्नेहस्वभावेन संदिष्टं, तथापि प्रतिवीरेष्ववज्ञया 'गुप्तः समेत्य' इति तस्या युक्तमुक्तं रक्षितुमिच्छया तस्याः स्वस्य च लोकतो लज्जया च स पुनरेकाक्येव प्रस्थित इति वक्तुमाह—उद्वाहर्क्षमित्यादित्रयस्यैकत्रैव वाक्यार्थस्तैर्दर्शितः । किञ्च—विशेषेण ज्ञात्वा बहिस्तस्माद्विप्राज्ज्योतिःशास्त्राच्च, अन्तस्तु सर्वज्ञत्वान्निश्चित्य । मधुसूदनः मूर्तिभेदैस्तत्तदुपलक्षणसर्वदैत्यकुलहर्तेत्युत्साहसाम्राज्यं दर्शितम्, भाविजयश्च सूचितः । श्लेषेण—भ्रमरो यथा पद्मिन्याः परिमले लब्धे धैर्यं कर्तुं नेष्टे, तद्वदिति द्योतितम् । सम्यगस्त्रादिपूर्णतया युज्यताम् ॥ ४ ॥

### श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी

तुशब्दः क्रमप्राप्तश्रीकृष्णभाववर्णनरूपे प्रकरणभेदे तथैवाऽभिव्यञ्जयति—प्रगृह्येति । प्रकर्षेण पुलकादिप्रेमविकारेण गृहीत्वा पाणिना चेदं पाणिग्रहणं सख्यसम्पादनाय तच्च हार्द्दमभिव्यञ्जयितुम् ईषद्व्रीडासहितेन प्रहर्षेण भावविशेषेण च प्रकृष्टं हसन् यदुनन्दन इति रुक्मिणीपरिग्रहात् यदुकुलस्यानन्दनवैशिष्ट्याऽभिप्रायेण ॥ १ ॥ सा यथा मच्चिता तथा तल्लक्षणमाह—निद्रां च निद्रामपि कुतोन्यदुपभोगादिसुखमित्यर्थः । अत्र विघटननिदानस्यापि मम ज्ञातत्वात् मया स्वत एव तत्समाधानं कर्त्तव्यमित्याह—वेदेति सार्द्धेन ॥ २ ॥ तामानयिष्य इति एतावन्तं कालं तस्या एवाभिप्रायं प्रतीक्षे इति भावः । तर्हि ममाऽनागमने भवांस्तामुपेक्षेतैव ? न तदीयमहागुणाकृष्टत्वान्नमेत्यभिप्रायेण तां विशिनष्टि—मत्परामिति, पदद्वयेन । मत्परत्वे सर्वसद्गुणवत्तासिद्धैव "यस्यास्ति भक्तिर्भगवत्यकिञ्चना" इत्यादेः । एवं "श्रुत्वा गुणान्" इत्यादिना तदुक्तनिजगुणरूपवत्तस्या अपि गुणरूपे बोधिते उच्चैर्मथित्वेति निर्मथ्येति तदुक्तानुसारेण तदुक्तप्रतिपालनपरताबोधिता, राजन्यापसदानिति मुहुर्निर्जयादिनाऽपमानेनापि लज्जाद्यभावात् दुर्बुद्धितानपगमाच्च मृधे इति युद्धमध्ये साक्षादेव न तु मायान्तर्धानादिनेत्यर्थ इति निजपराक्रमः सूचितः । एधस इति दृष्टान्तेन यज्ञीयाग्निशिखावद्दारुणा छन्नत्वेऽपि परश्रमेणावश्योद्धार्य्यत्वन्ध्वनितम्, एवं तदशेषसन्देशप्रत्युत्तरमप्यूह्यम् ॥ ३ ॥ यद्यपि पृतनापतिभिः परीत इति तया स्नेहस्वभावेन सन्दिष्टं तथापि प्रतिवीरेष्ववज्ञया गुप्तः समेत्येति तस्या युक्तमुक्तं रक्षितुमिच्छया तस्याः स्वस्य च लोकतो लज्जया स पुनरेकाक्येव प्रस्थित इति वक्तुमाह—उद्वाहर्क्षमिति । इत्यादित्रयस्यैकत्रैव वाक्यार्थस्तैर्दर्शितः । किञ्च, विशेषेण ज्ञात्वा बहिस्तस्माद्विप्रात् ज्योतिःशास्त्राच्च अन्तस्तु सर्वज्ञत्वान्निश्चित्य मधुसूदनः मूर्त्तिभेदैस्तदुपलक्षणसर्वदैत्यकुलहर्त्तेत्युत्साहसाम्राज्यं दर्शितम् भाविजयश्च सूचितः । श्लेषेण भ्रमरो यथा पद्मिन्याः परिमले लब्धे धैर्यं न कर्त्तुमीष्टे तद्वदिति द्योतितम् । सम्यक् अस्त्रादिपूर्णतया युज्यताम् ॥ ४ ॥

### श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी

तु-शब्देन श्रीरुक्मिणीतोऽपि भावाधिक्यं बोधयति । तदेवाभिव्यञ्जयति—प्रगृह्येति । प्रकर्षेण सकम्पपुलकादिप्रेमविकाराकुलत्वादिना गृहीत्वा, प्रहर्षेण भावविशेषेणैव वा प्रकृष्टं हसन् । यदुनन्दन इति श्रीरुक्मिणीपरिग्रहेच्छया यदुकुलस्यानन्दनाभिप्रायेण ॥ १ ॥ सा यथा मच्चित्ता तथा, तल्लक्षणमाह—निद्रामिति । 'च' अपि निद्रामपि, कुतोऽन्यदुपभोगादिसुखमित्यर्थः । यथा अहमपि तथा तादृशः किम् ? काक्वा, नैव, किन्तु अधिक इत्यर्थः । कुतः ? तदाह—निद्राश्चेति, निद्राया अलाभे हेत्वन्तरमाह—वेदेति, नितरां वारितः शिशुपालेन सह विवाहनिर्णयनात् ॥२॥ तदानयनं तस्या गुणरूपाभ्यामेवाकर्षणादित्यभिप्रायेण तां विशिनष्टि—मत्परामिति पदद्वयेन । तत्परत्वेन सर्वसद्गुणवर्गसत्तासिद्धेव । एवं ( भा० १०।५२।३७ ) 'श्रुत्वा गुणान्' इत्यादिना तदुक्तनिजगुणरूपवत् तस्या अपि गुणरूपे बोधिते । उच्चैर्मथित्वेति निर्म्मथ्येति तदुक्तानुसारेण तदुक्तप्रतिपालतपरता च बोधिता । राजन्यापसदानिति मुहुर्निर्ज्जयादिना अपमानेनापि लज्जाद्यभावाद्दुर्बुद्ध्यनपगमाच्च । 'मृधे' इति युद्धमध्ये साक्षादेव, न तु मायान्तर्द्धानादिनेत्यर्थः । इति निजपराक्रमः सूचितः । एधस इति दृष्टान्तेन दुष्टराजकुलाच्छन्नत्वं परिश्रमेणाप्यवश्यानेयत्वादिकञ्च ध्वनितम् । एवं तदशेषसन्देशप्रत्युत्तरमप्यूह्यम्, तच्च स्पष्टमेव ॥ ३ ॥ विशेषेण ज्ञात्वा ज्योतिः शास्त्रतस्ततो विप्राद्वा, सर्वज्ञत्वाद्वा निश्चित्य, यतो मधुसूदनः साक्षात् श्रीनारायणः, किंवा महादिदैत्यस्य मधोर्वधेन महावीर्य्यादिकं सूचितम् । अतो दुष्टराजवर्गमध्ये एकाकीतया गन्तव्येऽपि शंका कापि न कार्य्येति श्रीपरीक्षितमाश्वासयति—सम्यगस्त्रादिपूर्णतया महावेगगामित्वादिना च युज्यताम् । हे दारुकेति, ( भा० १०।५२।४१ ) 'गुप्तः समेत्य' इति श्रीरुक्मिणीसन्देशात्, तदेकमात्रसारथ्येन गन्तुं निभृतं तेनैव रथयोजनार्थम् ॥ ४ ॥

### श्रीमद्वीरराघवाचार्यकृता भागवतचन्द्रचन्द्रिका

वैदर्भ्या इति ततः स भगवान् यदुनन्दनस्तु वैदर्भ्याः सन्देशमाकर्ण्य स्वपाणिना द्विजं पाणौ गृहीत्वोवाच ॥ १ ॥ उक्तिमेवाह—यथेति माच्च तेति निद्राया अलाभे हेतुः तथा तच्चित्तम् इत्यपि हेत्वन्तरं चाह, वेदेति मयि द्वेषाद्धेतोः रुक्मिणा ममोद्वाहो निवारित इत्यहं वेद्मि अतश्चाहं निद्रां न लभ इत्यर्थः ॥ २ ॥ अधुना तु राजन्याधमान्युद्ध उन्मथ्यानवद्यानि निर्दुष्टानि

शोभनान्यङ्गानि यस्याः अहमेव परो यस्यास्तां मच्चित्तां वा तां रुक्मिणीमानयिष्यामि उन्मथ्यानयने दृष्टान्तः एधसो दारुणोऽग्नि-शिखामिवेति ॥ ३ ॥ इति ब्राह्मणमुक्त्वाथ सूतमाहेत्याह—उद्वाहेति । मधुसूदनो रुक्मिण्या उद्वाहर्क्षं परश्वो रात्रौ विवाहनक्षत्रमिति विज्ञाय सारथिमाह—दारुकेति । हे दारुक ! रथः संयुज्यतामश्वैः संयुक्तः क्रियताम् इति ॥ ४ ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

मम द्वेषाद्रुक्मिणा विवाहो निवारित इतीममर्थम् अहं वेद वेद्मि ॥ १–२ ॥ एधसः काष्ठादग्नेः शिखां ज्वालाम् ॥ ३ ॥ उद्वाहर्क्षं विवाहनक्षत्रम् ॥ ४ ॥

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः

कालविलम्बासहिष्णुतया न्यमीलयत् निमील्यैव स्थिता ॥ १–३० ॥

### श्रीमज्जीवगोस्वामिकृतः बृहत्क्रमसन्दर्भः

तथाहमपीत्यादि । निद्राञ्च न लभे निशीत्यस्यायं भावः निश्युपगतां निद्रारूपां नायिकां न लभे न स्वीकरोमि। रुक्मिण्युद्वाहो यावन्न भवति, तावत्त्वमपि न मे भोग्येति निद्रामपि निरस्यामीति भावः ॥ ३–२४ ॥

### श्रीनाथचक्रवर्तिपादविरचिता चैतन्यमतमञ्जूषा

निद्राञ्च न लभे निशीत्यस्यायमर्थः—निशि उपसन्नां निद्रामुपभोग्यत्वेन न स्वीकरोमि, रुक्मिण्युद्वाहो यावन्न भवति, तावन्नान्या स्वीकार्येति निद्रारूपा नायिकापि न स्वीक्रियते ॥ १–२४ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

त्रिपञ्चाशत्तमे कृष्णो गत्वा कुण्डिनमर्चितः । भीष्मकेणाहरद्भैष्मीं देव्यर्चार्थे विनिर्गताम् ॥

रुक्मिणी कृष्णैकचित्ता बहिरन्तर्व्याकुलेवास्ति स्म स कृष्णस्तु रुक्मिण्येकचित्तत्वादन्तर्व्याकुलोपि प्रहसन् प्रहासेन स्वहर्षमाविष्कुर्वन् ॥ १ ॥ वेद वेद्मि ॥२॥ एधसोऽग्निशिखामिवेति एधसि वर्त्तमानाऽग्निशिखाप्रकटीभूता यथा एध एव ज्वालयति तथैव रुक्मिणीप्रभृतिदुष्टराजन्यकुलेनावृता सैव तत् सर्वं ज्वालयिष्यति अहं तु निमित्तमात्र भविष्यामीति भावः ॥३॥ उद्वाहर्क्षमिति परश्वो रात्रौ विवाहनक्षत्रमिति विप्रमुखाद्विज्ञाय ॥ ४ ॥

### गूढार्थदीपिनी

त्रिपञ्चाशत्तमे गत्वा कुण्डिनं स्वप्रियोक्तितः । पश्यतां द्विषतां कृष्णो रुक्मिणीमहरद् बलात् ॥ १ ॥

वैदर्भ्या रुक्मिण्याः ॥ १ ॥ यथा सा मच्चित्ता तथाऽहमपि तच्चित्तः ॥ २ ॥ मृधे संग्रामे राजन्येषु अपसदान् नीचान् शिशुपालादीन् उन्मथ्य निर्जित्य तामानयिष्ये । एधसः काष्ठात् ॥ ३ ॥ उद्वाहर्क्षं विवाहनक्षत्रं परश्वो रात्रौ ॥ ४ ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

त्रिपञ्चाशत्तमे श्रीरुक्मिणीहरणात्मिकां श्रीकृष्णलीलां वर्णयति—तत्र श्रीरुक्मिणीसन्देशश्रवणानन्तरं भगवान् किं कृतवानित्यत्राह—वैदर्भ्या इति ॥ १ ॥ वेद वेद्मि ॥२॥ आनयिष्ये आनेष्यामि काष्ठेभ्यो यथाऽग्निशिखास्वरूपादिभिरत्यन्तविलक्षणा तथा प्राकृतशरीरेभ्यो जीवेभ्यः स्वरूपविग्रहगुणादिभिः भगवती नित्याऽद्भुतविग्रहवती भगवदात्मिकाऽत्यन्तविलक्षणेत्याह—एधसोऽग्निशिखामिवेति ॥ ३ ॥ स दारुकः । अश्वानां वर्णाः पाद्मे उक्ताः—

"शैव्यस्तु शुकपत्राभः सुग्रीवो हेमपिङ्गलः । मेघपुष्पस्तु मेघाभः पाण्डुरो हि बलाहकः" ॥ इति ॥ ४–६ ॥

### श्रीसत्यधर्मकृता श्रीभागवतटिप्पणी

हरिः ॐ । स तु कृष्णोऽपि । तं त्विति पठन्ति । पाणिना स्वस्य पाणिं द्विजस्य पाणिं द्विजस्य तं तत्त्वेन विभाव्य पाणिं गृहीत्वैवं तत्पाणिं गृह्णामीत्यसूचयच्चतुरतर इति ज्ञेयम् ॥ १ ॥ अहमपि तच्चित्तस्तन्मनस्को निशि निद्रां नाध्यगमम् । रुक्मिणा द्वेषान्ममोद्वाहो निवारित इत्यहं वेद ॥ २ ॥ राजन्यापसदांस्तान्नीचान् । उन्मथ्येत्युक्त्यनुरूपं निदर्शनमाह । एधसः काष्ठान्मथितादग्नेः शिखां यथा याज्ञिका निष्कासयन्ति तथानयिष्ये ॥ ३ ॥ उद्वाहर्क्ष्यं विवाहनक्षत्रम् ॥ ४ ॥

### श्रीमद्वल्लभाचार्य्यकृता सुबोधिनी

शतार्धे वा चतुर्थे वा भगवान् भार्ययार्थितम् । विप्रार्थितं च कृतवानिति सम्यङ् निरूप्यते ॥ १ ॥
प्रसह्य कन्याहरणमुद्योगावधि वर्ण्यते । कायवाङ्मनसामत्र ह्यैकमत्वं निरूप्यते ॥ २ ॥

पूर्वाध्यायान्ते यत्कर्तव्यम्, यद्वा वक्तव्यम्, तदुच्यतां क्रियतामिति ब्राह्मणविज्ञापना निरूपिता । ततो भगवान् तत्सन्तोषार्थं स्वमानसं वाक्यं च निरूपयितुमारम्भं कृतवानित्या वैदर्भ्या इति । सा ह्यत्यन्तं कुलीना भक्तिप्रधाना । यदुरपि भक्तिप्रधानः

तुशब्दः शङ्कानिवृत्त्यर्थः। नात्र शङ्का सम्भवति। यतोऽहमपि जात इति वक्ष्यति। संदेशश्चावश्यं श्रोतव्यः। इदं श्रवणं विचारपूर्वकं सादरं च। ततो ब्राह्मणः गुह्यकर्तेति तेन सह मैत्रीमिव कर्तुं पाणिना पाणिं प्रगृह्य भार्यासम्बन्ध्ययमिति औदासीन्यं परित्यज्य प्रहसन्निदं वक्ष्यमाणमब्रवीत् ॥ १ ॥ आदौ स्वमनोवार्तामाह **तथाहमपि तच्चित्त** इति। यथा सा मच्चित्ता, एवमहमपि तच्चित्तः। अनेन सर्वाणि तस्या वाक्यानि मद्वाक्यसदृशानीति निरूपितम्। विशेषमप्याह **निद्रां चे**ति। रात्रावावश्यकी निद्रा। सापि चिन्तया न जातेति। भार्येच्छया वा। नन्वेवं चिन्तायां किं कारणमित्याकाङ्क्षायामाह **वेदाहमि**ति। नात्र किञ्चित्सन्दिग्धम्। यतोऽहं वेद। सर्वगुणसम्पत्तावपि केवलं द्वेषात् रुक्मिणा एकेन ममोद्वाहः आहूय कन्यादानलक्षणः प्रयत्नेन निवारितः ॥ २ ॥ निवारितः ॥ २ ॥ एवं प्रामाण्यं मानसं चोक्त्वा प्रतिजानीते तामानयिष्य इति। भार्येति निश्चित्य न नाम गृह्णाति। प्रतिबन्धकानामल्पत्वायाह। **राजन्यापसदान्** राजन्येषु अधमान् अपगता सद् सभा येभ्य इति। क्षत्रियगोष्ठ्यां परिगणनारहिताः अधमाः। ते ह्यतिक्षुद्रा इति मारणमपेक्ष्यते, किन्तु उन्मथनमेव कर्तव्यम्। अलौकिकद्वारा निवारयति **मृध** इति। युद्धे एव तानुन्मथ्य आनयिष्यामीति भावः। एवं करणे हेतूनाह **मत्परामि**ति। 'अहं भक्तपराधीन' इति भक्तिमार्गानुसारेणापि तामानयिष्ये। **अनवद्याङ्गीमि**ति निर्दुष्टत्वादपि। निर्दुष्टं हि भगवान् गृह्णातीति। अङ्गपदेन वाक्येन दोषो निरूपितः। यतः सा दत्ता। इयं धर्मोपयोगिनी भविष्यतीति राक्षसविवाहं करिष्यामीत्याह **एधसोऽग्निशिखामिवे**ति। दारुणि ज्वलन्ती अग्निशिखा नात्यतं प्रकाशमेति। सैव चेत् वर्तिसहिता भवेत्, तदा दीपरूपा अतिप्रकाशते, तथा तां प्रकाशयुक्तां करिष्यामीत्यर्थः ॥ ३ ॥ एवं वाचनिकमुक्त्वा कायिकार्थं प्रयत्नमाह **उद्वाहर्क्षमि**ति। विवाहे नक्षत्रमेव मुख्यमिति, भार्याप्रधानमिति, चन्द्रं ग्रहांश्चानुगुणान् परित्यज्यनक्षत्राणां मुख्यता निरूपिता। विवाहनक्षत्रं ब्राह्मणमुखादेव विज्ञाय रथः संयुज्यतामित्याह। सम्यक् योगो युद्धार्थः। तत्र हेतुः **रुक्मिण्या** इति। रुक्मिणो भगिनीति। सेनासङ्ग्रहाभावे स्वत एव सामर्थ्यमाह **मधुसूदन** इति। आशु संयुज्यताम्, अनेन समयः सन्निहित इति ज्ञापितम्। **दारुके**ति सम्बोधनं वैकुण्ठादागतस्य चातुर्यं भयाभावश्च प्रदर्शितः ॥ ४ ॥

## विवरणटिप्पणी

**तामानयिष्य** इत्यस्याभासे। **प्रामाण्यमि**ति। भगवद्वाक्यसादृश्यनिरूपणेन रुक्मिणीवाक्यानां प्रामाण्यमुक्तमित्यर्थः। **मानसमि**ति। मनोवार्तामित्यर्थः।

## श्रीसुबोधिनी–सारः

शुकोक्तिः। यदुनंदनः स कृष्णो वैदर्भ्या रुक्मिण्याः संदेशं निशम्य श्रुत्वा पाणिना स्वकरेण विप्रस्य पाणिं प्रगृह्य प्रहसन्निदमब्रवीत्। तु सर्वाभिज्ञानं सूचनार्थम् ॥ १ ॥ यथा सा मच्चित्ता तथाहमपि तच्चित्तो निशि रात्रौ निद्रां न लभे नैमि। ममोद्वाहः परिणयो रुक्मिणा तद्भ्रात्रा निवारितो यजितो द्वेषाद्धेतोरित्यहं वेद ॥ २ ॥ मृधे संग्रामे राजन्यपसदान् राजाधमान् उन्मथ्य तां रुक्मिणीमानेष्यामि। स्वार्थे णिच्। अनवद्यं निर्दोषमङ्गं मूर्त्तिर्यस्यास्तां तत्र हेतुर्मत्परराम् "राघवत्वेऽभवत्सीता रुक्मिणी सान्यजन्मनि" इत्युक्तेः। एधसः काष्टराशेरग्निशिखां ज्वालामिव ॥ ३ ॥ शुकोक्तिः। रुक्मिण्या उद्वाहस्य ऋक्षं नक्षत्रं विज्ञाय ज्ञात्वा मधुसूदनः श्रीकृष्णः सारथिमित्याह। हे दारुक रथः संयुज्यतां त्वयेति ॥ ४ ॥

## गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

त्रिपञ्चाशत्तमे गत्वा कुण्डिनं रामसंयुतः। रुक्मिणीमहरत् कृष्ण इत्येतद्विनिरूप्यते ॥ १ ॥

स तु यदुनन्दनः कृष्णो वैदर्भ्या रुक्मिण्याः सन्देशं निशम्य स्वपाणिना द्विजस्य पाणिं प्रगृह्य प्रहसन् द्विजं प्रतीदमब्रवीदित्यन्वयः। तदुक्तिमेवाह—तथेति ॥ १ ॥ यथा सा वैदर्भी व्याकुलचित्ता तथाहमपि निशि व्याकुलतया निद्रामपि न लभे। तत्र हेतुमाह—तच्चित्त इति। निद्राया अलाभे हेत्वन्तरमप्याह—वेदेति। मद्विषयकद्वेषादेव रुक्मिणा ममोद्वाहो निवारित इति त्वया अकथितमप्यहं वेद्मि, अतोपि निद्रां न लभे इत्यर्थः ॥ २ ॥ 'अतो राजन्येष्वपसदान् अधमान् शिशुपालादीन् मृधे युद्धे उन्मथ्य अभिभूय तां रुक्मिणीमानयिष्ये। तदानयने हेतुमाह—मत्परामिति। अहमेव परो भर्तृतया सम्मतो यस्या स्ताम्। अनवद्यानि निर्दुष्टानि शोभनान्यङ्गानि यस्यास्ताम्। आनयने दृष्टान्तमाह—एधसः इति। एधसः काष्ठात् सकाशात् यथा निर्विघ्नतयाऽग्निशिखां यथा वायुर्हरति तथा एतेभ्यस्तद्धरणेऽपि प्रतिबन्धो नैव भविष्यतीत्यर्थः ॥ ३ ॥ ततश्च स मधुसुसूदनः रुक्मिण्या उद्वाहर्क्षं परश्वो रात्रौ विवाहनक्षत्रमिति विज्ञाय 'हे दारुक! आशु रथः संयुज्यतां अश्वैः संयुक्तः क्रियताम्' इति सारथिं प्रत्याह ॥४॥

## अन्वितार्थप्रकाशिका

त्रिपञ्चाशत्तमे गत्वा विदर्भान् रुक्मिणी बलात्। जहार भगवांस्तत्र श्लोका (५८) अष्टशरोन्मिताः ॥
उवाचेतित्रयं (३) द्वाभ्यां युक्ता (६२) षष्टिरनुष्टुभाम् ॥ ५३ ॥

वैदर्भ्या इति ॥ स तु यदुनन्दनः कृष्णो वैदर्भ्या रुक्मिण्याः संदेशं निशम्य स्वपाणिना द्विजस्य पाणिं प्रगृह्य प्रहसन् द्विजं प्रतीदमब्रवीत् ॥ १ ॥ तथेति ॥ यथा वैदर्भी व्याकुलचित्ता तथाऽहमपि तच्चित्तः सन् व्याकुलतया निशि निद्रां न लभे। मद्विषयक-

द्वेषादेव रुक्मिणा ममोद्वाहो निवारित इति त्वया अकथितमप्यहं वेद जानामि ॥ २ ॥ तामिति ॥ राजन्येष्वधमान् शिशुपालादीन् मृधे युद्धे उन्मथ्य अभिभूय अहमेव परो भर्तृतया सम्मतो यस्यास्ताम् । अनवद्यानि शोभनान्यङ्गानि यस्यास्तां रुक्मिणीम् एधसः काष्ठात् अग्निशिखां वायुरिव आनयिष्ये आनेष्ये । इडार्थः । एधसि वर्त्तमानाऽग्निशिखा प्रकटीभूता यथा एध एव ज्वालयति तथा रुक्मिप्रभृतिभिर्दुष्टैरावृता सैव सर्वान् ज्वालयिष्यत्यहं तु निमित्तमात्रं भविष्यामीति भावः ॥ ३ ॥ पूतनापतिभिः परीत इति तया संदिष्टेऽपि गुप्तः समेत्येवानुसर्तुं तस्या लज्जावहसंदेशगोपनाय चाग्रजादीन् प्रत्यनुक्त्वैव एकाक्येव प्रस्थित इति वक्तुमाह—उद्वाहेति ॥ मधुसूदनः रुक्मिण्या उद्वाहार्थं परश्वो रात्रौ विवाहनक्षत्रमिति द्विजमुखात् विज्ञाय । हे दारुक ! आशु रथः संयुज्यताम् अश्वैः संयुक्तः क्रियतामिति सारथिं प्रत्याह स्म ॥ ४ ॥

### श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्

इदानीं त्रिपंचाशत्तमेऽध्याये श्रीकृष्णस्य कुंडिनपुरगमनं रुक्मिणीहरणं चोच्यते ॥ १ ॥ रुक्मिणारुक्मिणीजेष्ठभ्रात्रा । मयि द्वेषाद्धेतोः ॥ २ ॥ राजन्येषु अपसदान्निकृष्टान् । उन्मथ्यनिर्जित्य । अनवद्यांगीं निर्दोषां । एधसो मंथितकाष्ठात् अग्निशिखामिव । यद्वा एधसः काष्ठस्य मंथनेनाग्निशिखामिव । यद्वा । एधस एधांसि इंधनानि उन्मथ्याग्निशिखामिव । अत्र पुंस्त्वमार्षं । तद्वच्छुद्धामित्यर्थः ॥ ३ ॥ उद्वाहर्क्षं परश्वो रजन्यां । विवाहनक्षत्रं विज्ञाय ॥ ४-६ ॥

### भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

गत्वा विदर्भान् श्रीकृष्णो द्विषतां मिषतां बलात् । रुक्मिणीमहरत्पञ्चाशत्तमे त्र्यधिके विभुः ॥ १ ॥

वैदर्भ्या इति । ततः यदुनन्दनः, स भगवान् तु वैदर्भ्याः सन्देशं, निशम्य आकर्ण्य, पाणिना स्वहस्तेन, पाणिं विप्रहस्तं प्रगृह्य, प्रहसन् सन्, इदं अब्रवीत् ॥ १ ॥ उक्तिमेवाह । तथेति । हे द्विज, तथा रुक्मिणीवदेव, तस्यां रुक्मिण्यां चित्तं यस्य तथाभूतः, अहं अपि, निशि निद्रां, न लभे । रुक्मिणा, द्वेषात् मम उद्वाहः, निवारितः, इति च, अहं वेद । निद्राया अलाभे तच्चित्तत्वं हेतुः । अन्यदपि वेदेति हेत्वन्तरम् ॥ २ ॥ तामिति । अधुना तु राजन्यापसदान् राजसु हीनान्, मृधे युद्धे, उन्मथ्य अनवद्यानि निर्दोषाण्यङ्गानि यस्याः तां, अहमेव परो यस्यास्तां, तां रुक्मिणीं, उन्मथ्यानयने दृष्टान्तः । एधसो दारुणः सकाशात्, अग्निशिखां वह्निज्वालां इव, आनयिष्ये ॥ ३ ॥ इति ब्राह्मणमुक्त्वा सूतमाहेत्याह । उद्वाहर्क्षमिति । मधुसूदनः सः श्रीकृष्णः, रुक्मिण्याः, उद्वाहर्क्षं परश्वो रात्रौ विवाहनक्षत्रं, इति विज्ञाय, हे दारुक, रथः आशु संयुज्यतामश्वैः संयुक्तः क्रियताम् । इति, सारथिं आह ॥ ४ ॥

### कृष्णप्रिया

### रुक्मिणीहरण

श्रीशुकदेव जी कहते हैं—परीक्षित् ! भगवान् श्रीकृष्ण ने विदर्भराजकुमारी रुक्मिणी जी का यह सन्देश सुनकर अपने हाथ से ब्राह्मण देवता का हाथ पकड़ लिया और हँसते हुए यों बोले ॥ १ ॥ भगवान् श्रीकृष्ण ने कहा—ब्राह्मण देवता ! जैसे विदर्भराजकुमारी मुझे चाहती है, वैसे ही मैं भी उन्हें चाहता हूँ । मेरा चित्त उन्हीं में लगा रहता है । कहाँ तक कहूँ, मुझे रात के समय नींद तक नहीं आती । मैं जानता हूँ कि रुक्मी ने द्वेषवश मेरा विवाह रोक दिया है ॥ २ ॥ परन्तु ब्राह्मण देवता ! आप देखियेगा, जैसे लकड़ियों को मथकर—एक दूसरे से रगड़कर मनुष्य उनमें से आग निकाल लेता है, वैसे ही युद्ध में उन नामधारी क्षत्रियकुलकलङ्कों को तहस-नहस करके अपने से प्रेम करने वाली परमसुन्दरी राजकुमारी को मैं निकाल लाऊँगा ॥ ३ ॥ श्रीशुकदेव जी कहते हैं—परीक्षित् ! मधुसूदन श्रीकृष्ण ने यह जानकर कि रुक्मिणी के विवाह की लग्न परसों रात्रि में ही है, सारथी को आज्ञा दी कि 'दारुक ! तनिक भी विलम्ब न करके रथ जोत लाओ' ॥ ४ ॥

स चाश्वैः [1]सैन्यसुग्रीवमेघपुष्पवलाहकैः । युक्तं रथमुपानीय तस्थौ प्राञ्जलिरग्रतः ॥ ५ ॥

आरुह्य स्यन्दनं शौरिर्द्विजमारोप्य तूर्णगैः । आनर्त्तादेकरात्रेण विदर्भानगमद्धयैः ॥ ६ ॥

राजा स कुण्डिनपतिः पुत्रस्नेहवशं गतः । शिशुपालाय स्वां कन्यां दास्यन् [2]कर्माण्यकारयत् ॥ ७ ॥

पुरं सम्मृष्टसंसिक्तमार्गरथ्याचतुष्पथम् । चित्रध्वजपताकाभिस्तोरणैः समलङ्कृतम् ॥ ८ ॥

---

१. शैब्य-श्रीधर. वंशी. जीव. वीर. विज. विश्व. शुक. । २. कार्याण्य-विज. ।

**कर्दमक्षमा**

अन्वयः—सः, च, सैन्यसुग्रीवमेघपुष्पबलाहकैः, अश्वैः, युक्तम्, रथम्, उपानीय, प्राञ्जलिः, अग्रतः, तस्थौ ॥ ५ ॥ शौरिः, द्विजम्, आरोप्य, स्यन्दनम्, आरुह्य, तूर्णगैः, अश्वैः, एकरात्रेण, आनर्तात्, विदर्भान्, अगमत् ॥ ६ ॥ पुत्रस्नेहवशम्, गतः, कुण्डिनपतिः, सः, राजा, शिशुपालाय, स्वाम्, कन्याम्, दास्यन्, कर्माणि, अकारयत् ॥७॥ संमृष्टसंसिक्त, मार्ग, रथ्या, चतुष्पथम्, चित्रध्वजपताकाभिः, तोरणैः, समलङ्कृत ॥ ८ ॥

**श्रीधरस्वामिविरचिता भावार्थदीपिका**

शैव्येत्यादीनि चत्वार्यश्वनामानि ॥ ५–६ ॥ पुत्रस्य रुक्मिणः स्नेहेन तद्वशमनुगच्छतीति तथा। अनेन शिशुपालेऽनभिरुचिं द्योतयति। कर्माणि पुरालंकारपितृदेवार्चनादीनि ॥ ७ ॥ तान्येवाह। पुरमित्यादिचतुर्भिः। संमृष्टाः संसिक्ताश्च मार्गादयो यस्मिंस्तत्। चित्रा ध्वजेषु पताकास्ताभिः समलंकृतमकारयत् ॥ ८ ॥

**श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः**

स च दारुकः स चेति चेन तात्कालिकत्वं बोध्यते। सैब्येत्यत्र शैव्येति पाठः सत्संमतः। एषां वर्णो यथा पाद्मे—शैव्यश्च शुकपत्राभः सुग्रीवो हेमपिंगलः। मेघपुष्पस्तु मेघाभः पांडुरो हि बलाहकः।" इति। युक्तं संतं सुग्रीवपुष्पकं नाम रथमुप समीपे आनीय भक्त्या शिरसि बद्धत्वात्प्रकृष्टोऽञ्जलिर्यस्य सः ॥ ५ ॥ स्यंदनं रथम्। द्विजं रुक्मिणीप्रहितमारोप्य तस्य सुखगमनाय, तस्याः प्राणरक्षणार्थं तदंतिके प्रेषणाय च। शौरिरिति साक्षाद्भगवत्त्वेपि मनुष्यलीलत्वात्तथैव यानमुचितमिति भावः। एका चासौ रात्रिश्चेत्येक रात्रस्तेन। सन्ध्यायां रुक्मिणीसंदेशाच्छ्रुत्वा तदानीमेव रथमारुह्य गच्छन्प्रातः कुंडिनं प्रापेत्यर्थः ॥ ६ ॥ स भीष्मकः। अनेन पुत्रस्नेहेत्यादिवचनेन। अनभिरुचिं रुच्यभावम्। स परमसाधुत्वेन प्रसिद्धोऽपि स्वां स्वाधीनामपि। अकारयत् स्वभृत्यपुरोहितादिभिः। तत्र वश इच्छा 'वशः कांतौ' इत्यमरः। तच्च मूलत एव स्पष्टम् 'बन्धूनामिच्छताम्' इत्यादे, 'वेदाहम्' इत्यादेश्च। स्नेहशब्दात् तेन मरणवनवासाद्युद्यमः कृत इति गम्यते ॥ ७ ॥ तानि पुरालंकारादीनि। संमृष्टास्त्यक्तावस्कराः प्राक्, तदनु संसिक्ता गोमयोदकादिप्रोक्षिताः। पुरमिति युग्मकम्। मार्गः साधारणं वर्त्म। रथ्या पण्यवीथिका ॥ ८ ॥

**श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी**

स चेति च शब्देन तात्कालिकत्वं बोध्यते सैव्येत्यत्र शैव्येति पाठः सत्सम्मतः एषां वर्णो यथा पाद्मे—

"शैव्यस्तु शुकपत्राभः सुग्रीवो हेमपिङ्गलः। मेघपुष्पस्तु मेघाभः पाण्डुरो हि बलाहकः॥" इति।

युक्तं सन्तं सुग्रीवपुष्पकं नाम रथम् उप समीपे आनीय भक्त्या शिरसि बद्धत्वात्प्रकृष्टोऽञ्जलिर्यस्य सः ॥ ५ ॥ द्विजं रुक्मिण्या प्रहितमारोप्येति तस्य सुखगमनाय तस्याः प्राणरक्षार्थं शीघ्रं तदन्तिके प्रेपणाय च शौरिरिति, साक्षाद्भगवत्त्वेऽपि मनुष्यलीलत्वात्तथैव यानमुचितमिति भावः ॥ ६ ॥ स परमसाधुत्वेन प्रसिद्धोऽपि स्वां स्वाधीनामपि अकारयत् स्वभृत्यपुरोहितादिभिः पुत्रेति तैर्व्याख्यातम्। तत्र "वश इच्छा वशः कान्तौ" इत्यमरः। तच्च मूलत एव स्पष्टम् बन्धूनामिच्छतामित्यादेः वेदाहमित्यादेश्च स्नेहशब्दात् तेन मरणवनवासाद्युद्यमः कृत इति गम्यते ॥ ७ ॥ पुरमिति युग्मकम्। "मार्गः साधारणं वर्त्मरथ्या पण्यवीथिका" विरजाम्बरेति रजशब्दोऽकारान्तोऽपीति स्त्रीपुरुषैः प्राचीनैः विवाहोत्सवार्थमागन्तुकैश्च तथा श्रीमद्भिर्वितानादिशोभावद्भिर्गृहैश्च तादृशैर्जुष्टमकारयदिति शेषः ॥ ८ ॥

**श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी**

अश्वानां नामानि शीघ्रसुखगतये तेषां तत्तत्संज्ञाप्रसिद्धया नित्य-भगवदीयत्वबोधनार्थम्। तत्र शैव्येति पाठः प्रायो गौड़पुस्तकेषु, अन्यत्र च सैन्येत्येव। एषां वर्णो यथा पाद्मे 'शैव्यस्तु शुकपत्राभः सुग्रीवो हेर्मपिगलः। मेघपुष्पस्तु मेघाभः पाण्डरो हि बलाहकः॥ इति, युक्तं सन्तं सुग्रीवपुष्पकं नाम रथम्, उप समीपे, उपांशुत्वेन वानीय भक्त्या शिरसि बद्धत्वात् प्रकृष्टोऽञ्जलिर्यस्य सः ॥ ५ ॥ द्विजं श्रीरुक्मिण्या प्रहितमारोप्य, तस्याः प्राणरक्षार्थं शीघ्रं तदन्तिके तस्य प्रेपणाय, शौरिरिति निजशेषैश्वर्य्यविस्तारणार्थं शूरवंशेऽवतीर्णत्वात्। तथा श्लेषेण शूरवंशभवत्वाच्च स्वत एव सर्व्वशक्तिमत्त्वमभिप्रेतम्। तथापि हयैरेवागमत्, कुतः ? तूर्णगैः, तेषामपि तादृशशक्तिमत्वादिति भावः। यद्वा, शौरिरिति साक्षाद्भगवत्त्वेऽपि मनुष्यलीलापरत्वमुक्तम्, क्षत्रियवंशेऽवतीर्णत्वात्, अतो हयैरेव ॥ ६ ॥ स परमसाधुत्वेन प्रसिद्धोऽपि, स्वां स्वाधीनामपि शिशुपालाय दास्यन्। तत्र हेतुः—पुत्रेति। कुण्डिनस्य साधुवर्गव्याप्तविदर्भदेशीयराजपुरस्य पतिरिति कर्म्मनैपुण्यमुक्तम्। तदेव दर्शयति—कर्म्माणीति। अकारयत् स्वभृत्यपुरोहितादिभिः ॥ ७ ॥ संशब्दाभ्यां रेण्वाद्यपनरणेन शोधनस्य, तथा गन्धजलादिना सेकस्य सम्यक्त्वं बोध्यते। मार्ग–रथ्ययोर्वृहत्वक्षुद्रत्वादिना भेदः। तोरणैश्च सम्यगलंकृतमिति सदालंकृतमेव, तदानीन्तु सम्यक्तयेत्यर्थः ॥ ८ ॥

**श्रीमद्वीरराघवाचार्यकृता भागवतचन्द्रचन्द्रिका**

ततो दारुकः सैन्याद्याख्यैश्चतुर्भिः श्रेष्ठैरश्वैर्युक्तं र.म् उपसमीपमानीयाऽग्रतः पुरतः बद्धाञ्जलिस्तस्थौ ॥ ५ ॥ आरुह्येति तावत् द्विजमारोप्य ततः स्वयमपि स्यन्दनं रथमारुह्यानर्त्तात् स्वदेशाद्विदर्भान् देशान् हयैस्तुरङ्गैरेकरात्रेणाऽगमत् तस्यां रात्र्यां प्रस्थाय प्रातविदर्भदेशानगमदित्यर्थः। "श्वोभाविनि त्वमजितोद्वहने" इत्यादिरुक्मिणीसन्देशात् ॥ ६ ॥ राजेति कुण्डिनपति-र्भीष्मकः पुत्रस्य रुक्मिणः स्नेहवशं गतः पुत्रस्नेहेन तत्परतन्त्रीभूत इत्यर्थः। दास्यन् लक्षणहेत्वोरिति शत्रादेशः दातुमित्यर्थः। कर्माणि पुरालङ्कारपितृदेवार्चनादीनि कारयामास ॥ ७ ॥ कर्माण्येवाह—पुरमिति चतुर्भिः। संमृष्टाः संसिक्ताश्च मार्गादयो यस्मिंस्तच्चित्रध्वजेषु पताकाभिस्तोरणैश्च सम्यगलङ्कृतमकारयत् ॥ ८ ॥

**श्रीविजयध्वजतीर्थकृता पदरत्नावली**

हयैर्युक्तम् ॥ ५–६ ॥ कार्याणि विवाहयोगकार्याणि अकारयत् ॥७॥ उक्तमेव स्पष्टयति—पुरमिति । प्राक्सम्मृष्टास्त्यक्ता-वस्कराः पश्चात्संसिक्ताः गोमयोदकादिप्रोक्षिता मार्गादयो यस्मिंस्तत्तथा ॥ ८–१० ॥

**श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी**

शैव्यादीनां वर्णो यथा पाद्मे—

"शैव्यस्तु शुकपत्राभः सुग्रीवो हेमपिङ्गलः। मेघपुष्पस्तु मेघाभः पाण्डुरो हि वलाहकः ॥" इति ॥ ५ ॥

एका चासौ रात्रिश्चेत्येकरात्रस्तेन सन्ध्यायां रुक्मिणीसन्देशान् श्रुत्वा तदानीमेव रथमारुह्य गच्छन् प्रातः कुण्डिनं प्रापेत्यर्थः ॥ ६ ॥ पुत्रस्य स्नेहेन वशः अत एवानुगश्च कर्माणि पुरालङ्करणादीनि ॥ ७–८ ॥

**गूढार्थदीपिनी**

तूर्णमैशीघ्र्यमिभिाहृवैः। एका चासौ रात्रिश्चेत्येकरात्रः ॥ ६ ॥ स भीष्मकः। दास्यम् दातुम् ॥ ७ ॥ पुरमिति युग्मम् रथ्या पण्यवीथिका। सेमृष्टाः संमृष्टाः संशोधिताः संसिक्ताश्च मार्गादयो यस्मिन्। तोरणं वन्दनमालिकाः! स्रगादीनि आबिभ्रतीति तैः स्त्रीपुरुषैः जुष्टंसुसज्जितमकारणदिति क्रियाशेषः ॥ ८–९ ॥

**श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः**

स भीष्मकः पुत्रस्य रुक्मिणः स्नेहेन वशः अत एवानुगः कर्माणि पुरालङ्कारपितृदेवार्चनादीनि अकारयत् कारया-मास ॥ ७ ॥ कर्माण्येवाह, पुरमिति चतुर्भिः ॥ ८–१० ॥

**श्रीसत्यधर्मकृता श्रीभागवतटिप्पणी**

प्राञ्जलिः स दारुकोऽग्रतस्तस्थौ। आरोप्य च द्विजवरमनन्तरं स्वयमारुह्य हयैर्युक्तंस्यन्दनम् ॥ ६ ॥ स्वां कन्यामिति पाठे न स्वलाघवम्। शिशुपालाय स्वामिति पठञ्छिशुपाललाघवं यल्लक्ष्युपठनीयतयाऽसूचयदिति मन्तव्यम्। कार्याणि स्वस्ति-वाचनहरिद्रालेपनादीनि। तान्येव विशदयति ॥ पुरमिति ॥ ७ ॥ सम्मृष्टा अवकारादिना मार्जिता अनन्तरं संसिक्ता मलयज-जलसिक्ता रथ्या महावाप्याश्चतुष्पथा मार्गचतुष्टयसङ्गमस्थानानि। चतुष्पथश्चतुर्मार्गसङ्गम इति विश्वः। यस्मिंस्तच्चित्रध्वज-पताकाभिरेकजिह्वाद्विजिह्वाभिः ॥ ८ ॥

**श्रीमद्वल्लभाचार्य्यकृता सुबोधिनी**

शीघ्रमेव दारुककृतिमाह स चाश्वैरिति। यद्यपि भगवतो बहवश्चाश्वाः, रथाश्च बहवः, तथापि सारथिपदप्रयोगात् गरुडध्वज एव रथो गृहीतः तादृशोऽपि सैन्यादीनेव चतुरोऽश्वान् योजितवान् तेषामन्वर्थानि नामानि तत्राद्यः सैन्यरूप एव असङ्ख्यातसैन्येन यावत्कार्यम्, तावदनेनैव भवतीति। द्वितीयः सुग्रीवः, यथा वानराधिपतिः सीतासमानयने रामकार्यसाधकः, तादृशोऽयमिति, सुग्रीव इति। शोभना ग्रीवा यस्येति नास्य कदाचिदपि परावृत्तिः सूचिता। मेघपुष्पस्तृतीयः। वृष्टिवत् सर्वानेव व्याप्य पततीति। बलाहकश्चतुर्थः। स मेघवत्पक्षिवद्वा क्षणमध्ये समायात्यपगच्छति च एवं तैर्युक्तं सम्यग्योजित रथमुपानीय यावद्विनियोगं कृत्वा, स्वकृतं ज्ञापयन्निव अग्रतः प्राञ्जलिस्तस्थौ ॥ ५ ॥ एवं ब्राह्मणाय स्ववाक्यसामर्थ्यं दर्शितम्, ततः कुण्डिनपुरं गत इत्याह आरुह्येति। स्यन्दनमतिवेगगामि। शौरिरिति पितामहनाम्ना व्यपदेशः अलौकिकसामर्थ्यप्रकाशना-भावार्थः तमपि द्विजं तत्रैवारोप्य एकरात्रेणैव स्वदेशात्तं देशं प्रविष्टः, यथा मध्यदेशेषु न परिज्ञानं भवति अन्यथा तत्रत्यैर्ज्ञापने रुक्मी ब्राह्मणाय भगिन्ये वा अपकारं कुर्यात्, तथैव च रुक्मिण्या प्रार्थितः ॥ ६ ॥ भगवतो नगरप्रवेशं वक्तुं नगरवर्णनार्थं अमा-द्राज्ञः प्रवृत्तिं निमित्तत्वेनाह—राजाथकुण्डिनपतिरिति। राजत्वाद्भीष्मकत्वात् कुण्डिनमिति अल्पवत् नगरनाम निरूपितम्

तत्पतित्वाच्च पुत्रस्नेहवशत्वाच्च शिशुपालाय शिशुं बालबुद्धिमेव पालयतीति दुर्बुद्धये कन्या दातुं कर्माणि पुरसंस्काररूपाणि सेवकैरकारयत् अनेन देशे भगवद्गमनेऽपि न तेषां विपरीतशङ्का कापि जातेति निरूपितम् ॥७॥ भगवत्प्रवेशार्थं पुरीं वर्णयति—द्वाभ्याम् पुरमिति । प्रथमतः सम्यक् मृष्टं रजोनिवारणेनोज्ज्वलीकृतम् ततः संशिक्तं चन्दनादिभिः मार्गाः रथ्या हट्टस्थिता चतुष्पथं सर्वतो मार्गाः तेषु संसिक्तमित्यर्थः । एवमधः शोभा निरूपिता उपरिशोभामाह—चित्रध्वजेति । त्रिविधैरपि सम्यगलङ्कृतम् ॥ ८ ॥

**श्रीसुबोधिनी—सारः**

शैव्यादिनामकैश्चतुर्भिरश्वैर्वाजिभिर्युक्तं रथमुपानीय प्रांजलिः स दारुकोग्रतः तस्थौ ॥ ५ ॥ शौरिः श्रीकृष्णः स्यंदनं रथमारुह्य द्विजं ब्राह्मणमप्यारोप्य तूर्णगैः शीघ्रगामिभिर्हयैरश्वैरेकरात्रेणानर्त्ताद्द्वारकातो विदर्भानगमत् ॥६॥ कुंडिनपुरकृत्यमाह । कुंडिनस्य नगरस्य पतिः पुत्रस्य रुक्मिणः स्नेहवशं प्रेमाधीनं गतः प्राप्तः स भीष्मको राजा शिशुपालाय स्वां कन्यां रुक्मिणीं दास्यन् दातुं कर्माणि पुरालंकारपितृदेवार्चनादीनि अकारयत् ॥७॥ संमृष्टानि उज्ज्वलीकृतानि संसिक्तानि मार्गा रथ्याचतुष्पथानि यस्मिन् तत् चित्रैः ध्वजैः पताकाभिः तोरणैः समलंकृतं पुरमस्ति ॥ ८ ॥

**विवरण टिप्पणी**

आरुह्येत्यत्र । ब्राह्मणायेति । ब्राह्मणस्य तत्राभावेपि तद्गृहे उपद्रवं कुर्यादित्यर्थः ।

**गोस्वामिश्रीगिरिधरलालकृताबालप्रबोधिनी**

स च दारुकः शैव्याद्याख्यैश्चतुर्भिः श्रेष्ठैरश्वैर्युक्तं रथमानीय बद्धाञ्जलिः सन् अग्रतः तस्थौ । शैव्यादीनां वर्णश्च पाद्मे उक्तः—"शैव्यश्च शुकपत्राभः सुग्रीवो हेमपिङ्गलः । मेघपुष्पस्तु मेघाभः पाण्डुरो हि बलाहक" इति ॥ ५ ॥ शौरिः श्रीकृष्णो द्विजं स्यन्दनमारोप्य स्वयं चारुह्य तूर्णगैः शीघ्रगामिभिर्हयैस्तैः रथे योजितैरश्वैरेकरात्रेण विदर्भान् देशानगमत्, तस्यां रात्र्यां प्रस्थाय प्रातर्विदर्भानगमदित्यर्थः । 'श्वोभाविनि त्वमजितोद्वहने' इत्यादिरुक्मिणीसन्देशात् ॥ ६ ॥ स कुण्डिनदेशाधिपतिः राजा भीष्मकः स्वां कन्यां रुक्मिणीं शिशुपालाय दास्यन् दातुं कर्माणि पुरालङ्कारपितृदेवार्चनादीनि कारयामास । 'शिशुपालाय कन्यादानं तस्य नाभिप्रेतम्, अभिप्रेतं तु कृष्णाय कन्यादानम्, तथा रुक्मिवशतया शिशुपालाय ददाति' इति सूचयन्नाह—पुत्रस्नेहवशं गत इति ॥ ७ ॥ कर्माण्येवाह—पुरमिति चतुर्भिः । सम्मृष्टाः संसिक्ताश्च मार्गादयो यस्मिंस्तत् । चित्रध्वजेषु याः पताकास्ताभिस्तोरणैश्च सम्यगलङ्कृतमकारयत् ॥ ८ ॥

**अन्वितार्थप्रकाशिका**

स इति । स दारुकः शैव्यादिनामकैश्चतुर्भिरश्वैर्युक्तं रथमानीय बद्धाञ्जलिरग्रतस्तस्थौ । शैव्यादीनां वर्णाः पाद्मे । "शैव्यस्तु शुकपत्राभः सुग्रीवो हेमपिङ्गलः । मेघपुष्पस्तु मेघाभः पाण्डुरो हि बलाहकः ॥" इति ॥ ५ ॥ आरुह्येति । सन्ध्यायां रुक्मिणीसंदेशान् श्रुत्वा शौरिः श्रीकृष्णस्तदानीमेव द्विजं स्यन्दनमारोप्य स्वयं चारुह्य तूर्णगैः शीघ्रगामिभिर्हयैस्तै रथयोजितैरश्वैरेकरात्रेण विदर्भान्देशानगमत् । तस्यामेव रात्र्यां प्रस्थाय प्रातर्विदर्भानगमदित्यर्थः । "श्वो भाविनि त्वमजितोद्वहन" इत्यादिरुक्मिणीसंदेशात् ॥ ६ ॥ राजेति । स कुण्डिनपुराधिपतिः राजा भीष्मकः कृष्णाय रुक्मिणीं दातुमिच्छन्नपि पुत्रस्नेहेन वशं तदिच्छामनुगतः मरणाय वनवासाय वा तदुद्यमं दृष्ट्वेति भावः । तेन पितुः शिशुपालेऽनभिरुचिं दर्शयति । स्वां कन्यां शिशुपालाय दास्यन् दातुं कर्माणि पुरालङ्कारपितृदेवार्चनादीनि अकारयत् ॥ ७ ॥ पुरमिति द्वयम् । पुरं संमृष्टानि संसिक्तानि च मार्गरथ्याचतुष्पथानि यत्र तत् चित्रध्वजेषु याः पताकास्ताभिस्तोरणैश्च सम्यगलंकृतम् अकारयत् ॥ ८ ॥

**श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्**

पुत्रे रुक्मि संज्ञेस्नेहात्तद्वशमनुगच्छतीति तथाभूतः । कुंडिनपतिः भीष्मकः कर्माणि विनायकपूजनपुरालंकरणादीनि ॥७॥ तामेव पुरशोभामाह चतुर्भिः संमृष्टाः संसिक्ताश्चमार्गा राजमार्गाः रथ्यास्तद्वा मदक्षोपमार्गाश्च चतुष्पथानि च यस्मिन् तत् । चित्रध्वजदंडेषु पताकाभिः समलंकृतं चाकारयदिति पूर्वेणान्वयः ॥ ८ ॥

**भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी**

स चेति ॥ ततः स च स दारुकोऽपि, सैन्यसुग्रीवमेघपुष्पबलाहकैः सैन्यादिसंज्ञैः अश्वैः, युक्तं रथं उपानीय, अग्रतः प्राञ्जलिः सन्, तस्थौ ॥ ५ ॥ आरुह्येति ॥ शौरिः श्रीकृष्णः, तावत् द्विजं स्यन्दनं, आरोप्य, ततः स्वयमपि स्यन्दनं, आरुह्य, तूर्णगैः हयैः साधनैः, आनर्त्ताद्देशात्, एकरात्रेण विदर्भान् देशान्, अगमत् ॥ ६ ॥ राजेति ॥ कुण्डिनपतिः राजा, स भीष्मकः,

पुत्रस्य रुक्मिणः स्नेहवशं, गतः पुत्रस्नेहेन तत्परतन्त्रतां प्राप्तः सन्, स्वामात्मीयां, कन्यां, शिशुपालाय, दास्यन्, 'लक्षणहेत्वोः'– इति शत्रादेशः। दातुमित्यर्थः। कर्माणि पुरालंकारपितृदेवार्चनादीनि, अकारयत् ॥ ७ ॥ कर्माण्येवाह चतुर्भिः ॥ पुरमिति ॥ संमृष्टा मार्जिताः संसिक्ता जलोक्षिताश्च मार्गाः रथ्याः चतुष्पथाश्च यस्मिंस्तत्, चित्राः ध्वजेषु पताकास्ताभिः, तोरणैश्च, समलंकृतं, पुरं कुण्डिननगरं, अकारयदिति पूर्वेण संबन्धः ॥ ८ ॥

### कृष्णप्रिया

दारुक भगवान् के रथ में शैब्य, सुग्रीव, मेघपुष्प और बलाहक नाम के चार घोड़े जोतकर उसे ले आया और हाथ जोड़कर भगवान् के सामने खड़ा हो गया ॥ ५ ॥ शूरनन्दन श्रीकृष्ण ब्राह्मणदेवता को पहले रथपर चढ़ाकर फिर आप भी सवार हुए और उन शीघ्रगामी घोड़ों के द्वारा एक ही रात में आनर्तदेश से विदर्भदेश में जा पहुँचे ॥ ६ ॥ कुण्डिननरेश महाराज भीष्मक अपने बड़े लड़के रुक्मी के स्नेहवश अपनी कन्या शिशुपाल को देने के लिये विवाहोत्सव की तैयारी करा रहे थे ॥ ७ ॥ नगर के राजपथ, चौराहे तथा गली-कूचे झाड़-बुहार दिये गये थे, उनपर छिड़काव किया जा चुका था। चित्र-विचित्र, रंग-बिरंगी, छोटी-बड़ी झंडियाँ और पताकाएँ लगा दी गयी थीं। तोरन बाँध दिये गये थे ॥ ८ ॥

**स्रग्गन्धमाल्याभरणैर्विरजोऽम्बरभूषितैः । जुष्टं स्त्रीपुरुषैः श्रीमद्गृहैरगुरुधूपितैः ॥ ९ ॥**
**पितॄन् देवान् समभ्यर्च्य विप्रांश्च विधिवन्नृप । भोजयित्वा यथान्यायं वाचयामास मङ्गलम् ॥१०॥**
**सुस्नातां सुदतीं कन्यां कृतकौतुकमङ्गलाम् । अहतांशुकयुग्मेन भूषितां भूषणोत्तमैः ॥११॥**
**चक्रुः सामर्ग्यजुर्मन्त्रैर्वध्वा रक्षां द्विजोत्तमाः । पुरोहितोऽथर्वविद् वै जुहाव ग्रहशान्तये ॥१२॥**

### कर्दमक्षमा

अन्वयः—स्रग्गन्धमाल्याभरणैः, विरजोम्बरभूषितैः, स्त्री-पुरुषैः, अगुरुधूपितैः, गृहैः, जुष्टम्, पुरम्, आसीत् ॥ ९ ॥ नृपः, पितॄन्, देवान्, विप्रान्, समभ्यर्च्य, च ( विप्रान् ) यथान्यायम्, भोजयित्वा, मङ्गलम्, वाचयामास ॥ १० ॥ सुदतीम्, सुस्नाताम्, कृतकौतुकमङ्गलाम्, कन्याम्, अहतांशुक, युग्मेन, भूषणोत्तमैः, भूषिताम्, चक्रुः ॥ ११ ॥ द्विजोत्तमाः, सामऋग्यजुमन्त्रैः, वध्वाः, रक्षां, चक्रुः, अथर्वविद्पुरोहितः, वै, गृहशान्तये, जुहाव ॥ १२ ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

स्रग्गंधमाल्याभरणैरित्यत्र मत्वर्थो द्रष्टव्यः। यद्वा स्रग्गंधमाल्यान्याबिभ्रतीति तथा तैः। तथा विरजोंबरैर्भूषितैश्च स्त्रीपुरुषैर्जुष्टम्। तथा श्रीमद्भिर्गृहैश्च जुष्टम् ॥ ९ ॥ यथान्यायमन्यांश्च कन्यां प्रति मंगलं वाचयामास ॥ १० ॥ कृतं कौतुकेन विवाहसूत्रेण मंगलं यस्यास्ताम्। अहतं नवीनम्। भूषणोत्तमैश्च भूषिताम् ॥ ११ ॥ वध्वास्तस्याः कन्यायाः। अथर्वविदथर्वणमंत्रवित् ॥ १२-१३ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

मत्वर्थो द्रष्टव्य इति—स्रग्गंधमाल्याभरणवद्भिरित्यर्थो विधेय इत्यर्थः। 'ऋजुमार्गेण सिध्यतः–' इति न्यायमाश्रित्याह-यद्वेति। विरजांबरेति-रजःशब्दोदंतोपि द्विरूपकोशे—"रजश्च रजसा सार्द्धं मनश्च मनसा सह। सर्वे सांताः स्युरदंता राद्धां तितमिदं बुधैः॥" इति। स्त्रीपुरुषैः प्राचीनैर्विवाहोत्सवार्थमागन्तुकैश्च, श्रीमद्भिर्वितानादिशोभावद्भिर्गृहैश्च जुष्टम्, अकारयदिति शेषः ॥ ९ ॥ अन्यानतिथ्यादीन्। यथान्यायं यथोचितम्। विवाहे कन्यां प्रति यन्मंगलं वाचयितुं युज्यते तदित्यर्थः। कन्यां प्रतीत्युत्तरेणान्वयः। अत्रानन्यगत्या द्वितीया। बलात्प्रतीत्यध्याह्रियते, तृतीयाबलात्सहशब्दवत् ॥ १० ॥ सुदतीं कृतदंतधावनाम्। "कौतुकं विषयाभोगे हस्तसूत्रे कुतूहले। कामे ख्याते मंगले च" इति यादवः। "आवध्नाति करे सूत्रं मंगलार्थं द्वयोर्गुरुः" इति ग्रंथान्तराच्च। 'अहतं नवशुद्धयोः' इति। "अंशुकं केवले वस्त्रे सूक्ष्मवस्त्रोत्तरीययोः" इति यादवः। "पूर्वं मर्दनचीरहारतिलकं नेत्राञ्जनं कुण्डलं नासामौक्तिकपुष्पमाल्यकरणं झंकारकृन्नुपुरम्। अंके चंदनलेपनं कुचमणिक्षुद्रावलीघंटिकास्तांबूलं करकंकणं चतुरता शृंगारकाः षोडश॥" इति कन्याया विवाहोत्सवे कार्याः। प्रसंगाद्वरस्याप्याह—"क्षौरं मर्दनशीर्षवस्त्रतिलकं गात्रेषु चित्रार्चनं कर्णे कुंडलमुद्रिका च मुकुटं पादौ च चर्मावृतौ। हस्ते शस्त्रपटाम्बरं कटिछुरीविद्याविनीतं मुखं तांबूलं सुरशीलवत्त्वगुणिताः पुंसस्त्वमी षोडश॥" इति कौतुकरत्नाकरोक्तेः। कृतकौतुकशब्देनैतेप्युपलक्षणोया इति॥ सुदतीं तांबूलरागापसारणेन

१. जांबरः भूषणैः-विज.। २. ता-विज.। ३. तो-विज.। ४. न्या-विज.। ५. ला-विज.। ६. ता-विज.। ७. आ-श्रीधरः टि.। ८. विद्भिर्ज-विज.।

सहजप्रकाशाच्छोभमानरदाम्। "आहतं गुणितेपि स्यात्ताडिते च मृषार्थके। स्यात्पुरातनवस्त्रेऽपि नववस्त्रे वितानके॥" इति विश्वोक्तेराहतं सद्यो यंत्रमुक्तमंशुकं ज्ञेयम्। 'अहतां-' इति पाठेपि स एवार्थः, तस्यैव मांगलिकत्वात्। "अहतं यन्त्रनिर्मुक्तमुक्तं वासः स्वयंभुवा। शस्तं तन्मांगलिक्येषु तावन्मात्रे न सर्वदा॥" इति। यद्वा—सुस्नातामित्यादिपद्यस्य चक्रुरित्यनेनोत्तरेणैवान्वयः काकाक्षिन्यायेन॥ ११॥ रक्षां चक्रुरित्यन्वयः। वै प्रसिद्धौ, अथर्ववित्त्वेन प्रसिद्धः। अथर्वमंत्राणां ग्रहशान्तौ प्राचुर्यात्॥ १२॥

**श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी**

पितृदेवानिति युग्मकम्। विप्रांश्च समभ्यर्च्य भोजयित्वा च विधि वत् विधियुक्तं यथा स्यात् यथान्यायं विवाहे कन्यां प्रतियन्मङ्गलं वाचयितुं युज्यते तदित्यर्थः। कन्यां प्रतीत्युत्तरेणान्वयः अत्रानन्यगत्या द्वितीयाबलात् प्रतीत्यध्याह्रियते तृतीया-बलात् सहशब्दवत् सुदतीं ताम्बूलरागापसारणेन सहजलावण्यप्रकाशाच्छोभमानरदाम् "आहतं गुणितेऽपि स्यात्ताडित्ते च नवेऽपि च। स्यात्पुरातनवस्त्रे च" इति विश्वोक्तेः। आहतं सद्यो यन्त्रनिर्मुक्तमंशुकं ज्ञेयम् अहतेत्यपि पाठे स एवार्थः तस्यैव माङ्गलिकत्वात् यथाचोक्तम् "अहतं यन्त्रनिर्मुक्तमुक्तं वासः स्वयं भुवा। शस्तं तन्माङ्गलिक्येषु तावन्मात्रेण सर्वदा" इति। यद्वा, सुस्नातामित्यादि पद्यस्य चक्रुरित्यनेनोत्तरेणैव वान्वयः काकाक्षिन्यायेन॥ १०-११॥ वै प्रसिद्धौ अथर्ववित्त्वेन प्रसिद्धः आथर्वणमन्त्राणां ग्रहशान्तौ प्राच्युर्य्यात्॥ १२॥

**श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी**

विरजाम्बरेति—रज-शब्दस्याकारान्तत्वादपि; श्रीमद्भिः वितान-चामरादर्शबन्धनादिना महाशोभावद्भिर्गृहैश्च जुष्टम-कारयत्। उभयत्र विशेषणे तात्पर्य्यम्, किंवा विवाहोत्सवे निमन्त्र्यानीतैः स्त्र्यादिभिर्नूतननिर्म्मितैश्च श्रीमद्गृहैरिति; यद्वा, गृहैः श्रीमत् शोभायुक्तमकारयत्॥ ९॥ देवांश्च सम्यगभितोऽर्च्चयित्वा नान्दीमुखश्राद्धादिना विप्रांश्च समभ्यर्च्च्य भोजयित्वा च विधिवद्विधिर्यथा स्यात्, अस्य यथान्यायं सर्व्वैरेवान्वयः, यतो नृपो धनादिसर्व्वसम्पत्तिमानित्यर्थः। यथान्यायमिति तैर्व्या-ख्यातम्। यद्वा, विवाहे कन्यां प्रति यन्मंगलं वाचयितुं युज्यते, तदित्यर्थः। इति तस्य सांगत्वादिना सम्यक्त्वमुक्तम्॥ १०॥ सुष्ठु उद्वर्त्तनाभ्यञ्जनादिना स्नाताम्, सुदतीं दन्तशोधनादिना शोभनरदां 'आहतं गुणितेऽपि स्यात्ताडिते च नवेऽपि च। स्यात् पुरातनवस्त्रे च' इति विश्वोक्तेराहतं सद्यो यन्त्रनिर्म्मुक्तमंशुकं ज्ञेयम्। अहतेति पाठेऽपि स एवार्थः, तस्यैव मांगलिकत्वात्; तथा चोक्तम्—'अहतं यन्त्रनिर्म्मुक्तं वासः प्रोक्तं स्वयम्भुवा। शस्तं तन्मांगलिक्येषु तावन्मात्रेण सर्व्वदा॥' इति॥ ११॥ द्विजोत्तमाः विप्राः पुरोहितादन्ये, वै तु, पुरोहितस्तु इत्यथर्व्वणमन्त्रवित्वादिना पूर्व्वतोऽस्य विशेष उक्तः॥ १२॥

**श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका**

स्रग्गन्धमाल्याभरणैरित्यत्र मत्वर्थीय अर्श आद्यच्द्रष्टव्यः स्रगादिमद्भिः तथा विरजोऽम्बरैश्च भूषितै स्त्रीपुरुषैर्जुष्टं तथा श्रीमद्भिरगुरुणा धूपितैश्च गृहैर्जुष्टम्॥ ९॥ पितॄन् देवांश्च सम्यगभ्यर्च्य हे नृप! सविसर्गपाठे भीष्मकः विप्रान्यथाविधि भोज-यित्वा विधिवत्समभ्यर्च्येति वा यथान्यायं भोजयित्वा रुक्मिणीं प्रति मङ्गलं वाचयामास यथान्यायमन्यांश्च कन्याः प्रति मङ्गलं वाचयामासेति वाऽर्थः॥ १०॥ कथम्भूतां सुस्नातामिति कृतं कौतुकेन विवाहसूत्रेण मङ्गलं यस्यास्ताम् अहतयोर्नवानियोरंशुक-योर्युग्मेन भूषणोत्तमैश्चालङ्कृतां चक्रुरिति॥ ११॥ वध्वास्तस्याः कन्याया सामादिभिर्मन्त्रैः रक्षाञ्चक्रुः अथर्वमन्त्रैःरक्षाञ्चक्रुरथर्व-वित्पुरोहितः प्रतिकूलग्रहशान्त्यर्थं जुहाव॥ १२॥

**श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली**

सुस्नाताऽभूदिति शेषः कृतं कौतुके कुतूहले महोत्सवे मङ्गलं यस्याः सा तथा। यद्वा कृतं कौतुकं हस्तसूत्रलक्षणं मङ्गलं यस्याः सा तथा "आवध्नन्ति करे सूत्रं माङ्गल्यार्थं नवस्त्रियः" इति "कौतुकं विषयाभोगे हस्तसूत्रे कुतूहले। कामे ख्याते मङ्गले च" इति यादवः। अहतांशुकयुग्मेन नूतनवस्त्रयुगलेन "अंशुकं केवले वस्त्रे सूक्ष्मवस्त्रोत्तरीययोः" इति च॥ ११॥ गृहानेतान् रक्षया विवृणोमीत्याद्यथर्ववेदोक्तवित्॥ १२॥

**श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी**

स्रग्गन्धमाल्यानि आविभ्रतीति तैः॥ ९॥ अहतं सद्यो यन्त्रनिर्मुक्तं यदंशुकयुग्मंतेन "अहतं यन्त्रनिर्मुक्तं मुक्तवासः स्वयम्भुवा। शस्तं तन्माङ्गलिक्येषु तावन्मात्रेण सर्वदा इति स्मृतेः। आहतेति पाठे स एवार्थः "आहतं गुणितेऽपि स्यात्ताडितेऽपि नवेऽपि च" इति विश्वप्रकाशात्। भूषितां चक्रुः रक्षां चक्रुरित्यावृत्त्या उभयत्राप्यन्वितम्॥ १०॥ अथर्ववित् आथर्वणमन्त्रवित् आथर्वणमन्त्राणां ग्रहशान्त्यादिप्राचुर्य्यात्॥ ११-१२॥

**गूढार्थदीपिनी**

मङ्गलं स्वस्तिपाठं वाचयामास कन्यां प्रतीत्युत्तरेणान्वेति॥ १०॥ कौतुकेन विवाहसूत्रेण मङ्गलं यस्याः अहतं नवीनम् वस्त्रयुग्मं तेन॥ ११॥ वै प्रसिद्धार्थे अथर्ववित् अवर्वमन्त्राणां ग्रहशान्त्यर्थमुपयोगात्॥ १२॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

कृतं कौतुकेन विवाहसूत्रेण मङ्गलं यस्यास्तां कन्याम्। अहतांशुकयुग्मेन भूषणोत्तमैश्च भूषितां चक्रुरित्यग्रिमेणान्वयः अहतलक्षणं स्मृतौ "अहतं यन्त्रनिर्मुक्तमुक्तं वासः स्वयं भुवा। शस्तं तन्माङ्गलिक्येषु तावन्मात्रेण सर्वदा" इति ॥ ११ ॥ वध्वाः कन्यायाः रक्षां चापि चक्रुः अथर्ववित् आथर्वणमन्त्रवित् ॥ १२-१४ ॥

### श्रीसत्यधर्मकृता श्रीभागवतटिप्पणी

माल्यानीह पुष्पाण्येव संगिति पृथमुक्तेः। अथवा स्रजो मुक्तामण्यादिमालाः। विरेजेति गतम्। अगरुधूपितैः श्रीमद्गृहैर्जुष्टमित्यन्वयः ॥ ९ ॥ विप्रान्समभ्यर्च्य भोजयित्वा चेत्यन्वयः मङ्गलं स्वस्तिवाचनम् ॥ १० ॥ कृतं कौतुकबन्धनोपयुक्तं मङ्गलं यस्याः सा। कौतुकं विवाहसूत्रं कङ्कणदोरमिति याज्ञिकाः। अथवाऽऽबध्नन्ति करें सूत्रं माङ्गल्यार्थं नवं स्त्रियः। कौतुकं विषयाभोगे हस्तसूत्रे कुतूहले। कामे ख्याते मङ्गले चेति विश्वयादवौ। अहतां शुकेति नूतनताऽभिधायिनी शब्दौ ॥ ११ ॥ सामर्ग्यजुमन्त्रैर्द्विजोत्तमा वध्वा रक्षाश्चक्रुः। ग्रहशान्तये पुरोहितोऽथर्ववित् ग्रहमारकमन्त्राणां तत्रैव सत्त्वात् ॥ १२ ॥

### श्रीमद्वल्लभाचार्यकृता सुबोधिनी

अलङ्करणमाह—स्रग्गन्धेति। स्त्रीपुरुषैः गृहैश्च जुष्टमिति अनेन तस्मिन् नगरे केवला व्यावर्तिताः ये सुतराममङ्गलरूपाः, तेऽपि भूपिता इत्याह—स्रग्गन्धमाल्याभरणैर्युक्ताः स्रग्गन्धमाल्यानामेवाभरणानि येष्विति विरजानि अम्बराणि भूषणानि च येष्विति श्रीमद्गृहेष्विति गृहे सर्वसम्पत्तिनिरूपिता अगरुधूपितैरिति विशेषसम्पत्तिः विवाहोत्सवप्रयुक्तिश्च निरूपिता ॥ ९ ॥ एवं लौकिकसमृद्धिमुक्त्वा वैदिकार्थसमृद्धिमाह—पितृन्देवान्समभ्यर्च्येति। पितरो देवाश्च नान्दीमुखदेवताः सम्यक् पूजिताः, अन्यथा प्रथमत एव कन्याहरणे विवाहो विगुणः स्यात्, अतः कर्तव्यं कृतमिति वक्तव्यम्। विप्रांश्च सम्यगभ्यर्च्य पुण्याहवाचने विधिवदिति तेभ्यो वस्त्रालङ्करणादिदानेन नृप इति सामर्थ्यम् तेषां सन्तोषः भोजनप्रधान इति भोजयित्वा यथान्यायमित्युक्तम्। नान्दीमुखे विधानपूर्वकं भोजयित्वा सुमङ्गलं पुण्याहवाचनम् ॥ १० ॥ यदर्थं भगवानागतः तां देयत्वेन भूषितां चक्रुरित्याह—सुस्नातामिति। मङ्गलस्नानं कारितवन्तः, ततो दन्तसंस्कारमपि शुभ्रदन्ता न द्रष्टव्येति केषाञ्चिद्देशाचारः कन्यामित्यदत्ताम् प्रायेण सूचित एव शिशुपालः वाङ्निश्चयोऽप्यग्र एव भविष्यति दाक्षिणात्यास्त इति विवाहपूर्वक्षण एव कन्यावरणम् कृतं कौतुकरूपं मङ्गलं यस्याम् हरिद्रया कपोलयोः रेखादिनिर्माणम् तद्विवाह एव भवति, नान्यदा वस्त्रमपि तादृशमेव परिधापितवन्त इत्याह—अहतांशुकयुग्मेन भूषितामिति। अहतं तन्तूत्तारितं अच्छिन्नम्। नूतनमिति केचित् तेषां मते पाषाणे प्रहारः न हतत्वं सम्पादयतीति अनुपभुक्तमित्यन्ये अंशुकं पट्टवस्त्रम् एकं परिधापितम्, अपरं प्रावृतमिति भूषणैरपि भूषितं सत्कृत्यालङ्कृतां कन्यां यो ददाति स कूकुद इति कूकुत्वार्थमलङ्करणमुक्तम् कूद्यावापृथिव्यौ कुकुत्सिते यस्याः रोदसीदानापेक्षयापि तादृक् कन्यादानं विशिष्टमिति द्योतितम् ॥ ११ ॥ तस्यां विवाहदेवतासान्निध्यमाह—चक्रुरिति। वेदत्रयमन्त्रैः रक्षासूत्रं बद्ध्वा द्विजोत्तमा मन्त्रद्रष्टारः ऋषयः भगवदर्थमेव यथा कोऽपि न स्पृशति दृष्टादृष्टप्रकारेण, तथा रक्षां चक्रुः। देवा हि द्विविधाः, केचन हुताद:, अन्ये अहुतादः, तत्र वाचनादिना ये अहुतादः ते प्रीणिताः होमेनान्येषां प्रीतिमाह—पुरोहितोऽथर्वविदिति। होमे पुरोहितो मुख्यः स हि हितमेव विचारयति। अथर्वणवेदे नक्षत्रकल्पः शान्तिकल्पश्चोक्तः। अतोऽथर्ववित् शान्तिं जानाति। ये कन्यायाः भगवन्तं त्याजयित्वा नीचसम्बन्धं कारयितुमुद्युक्ताः, तेषां ग्रहाणां शान्त्यर्थं जुहाव अन्यथा ग्रहैर्वा प्रतिबन्धो भवेत् भगवांश्च नालौकिकं प्रकटीकरोति ॥ १२ ॥

### श्रीसुबोधिनीसारः

स्रग् माला गंधः कुंकुमचंदनादिजः माल्यानि पुष्पाणि आभरणानि संति येषु तैर्नूतनवस्त्रालंकृतैः स्त्रीपुरुषैर्जुष्टं सेवितम् अगरुधूपितैः श्रीमद्भिः श्रीमतां वा गृहैर्जुष्टम् इति पुरविशेषणम् ॥ ९ ॥ पाठक्रमादर्थक्रमो ज्यायानिति न्यायात् विप्रान् देवान् पितॄन् समभ्यर्च्य विधानेन यथान्यायं भोजयित्वा मंगलं वाचयामास ॥ १० ॥ सुस्नातां सुष्ठु दंता यस्याः सा सुदती तां कृतं कौतुकेन कंकणबंधादिना मंगलं यस्यास्ताम् "अहतं यंत्र निर्मुक्तं वासः प्रोक्तं स्वयंभुवा" इत्युक्तर्नूतनवस्त्रद्वयेन भूषणोत्तमैश्च भूषितां कन्यां प्रति ॥ ११ ॥ द्विजोत्तमाः विप्रश्रेष्ठास्सामर्ग्यजुषां मंत्रैर्वध्वा मंगलार्हायाः कन्याया रक्षां चक्रुः। अथर्वणमंत्रज्ञो राजपुरोहितोऽथ ब्रह्मणां शांत्यर्थं जुहाव वै एव होमं चकार ॥ १२ ॥

### विवरणटिप्पणी

सुस्नातामित्यत्र। दन्तसंस्कारमिति। ताम्बूलादिभक्षमित्यर्थः।

### गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

स्रगन्धमाल्यानि आविभ्रतीति तथा तैः तथा विरजोम्बरैर्भूषितैश्च स्त्रीपुरुषैर्जुष्टम्। तथा श्रीमद्भिः अगुरुणा धूपितैर्गृहैर्जुष्टम् ॥ ९ ॥ हे नृप! पितृदेवान् विधिवत् समभ्यर्च्य तथा यथान्यायं यथायोग्यं विप्रान् भोजयित्वा च रुक्मिणीं प्रति मङ्गलं वाचयामास ॥ १० ॥ तथा कृतं कौतुकेन विवाहसूत्रेण मङ्गलं यस्यास्तां सुस्नातां सुदतीं कन्यां अहतयोर्नवीनयोरंशुकयोर्वस्त्रयोर्युग्मेन भूषणोत्तमैश्च भूषितां चक्रे। "अहतं वस्त्रनिर्मुक्तं वासः प्रोक्तं स्वयंभुवा। शस्तं तन्माङ्गलिकेषु तावन्मात्रेण सर्वदा" इति स्मृत्युक्तमहत्वं बोध्यम् ॥ ११ ॥ तदा च द्विजोत्तमाः सामादिभिर्मन्त्रैश्च वध्वास्तस्याः कन्यायाः रक्षां चक्रुः। अथर्वणवेदे हि नक्षत्रकल्पः शान्तिकल्पश्चोक्तः, अतः अथर्ववित् पुरोहितः प्रतिकूलग्रहशान्त्यर्थं जुहाव ॥ १२ ॥

### अन्वितार्थप्रकाशिका

स्रगन्धमाल्यानि आविभ्रतीति तथा तैः तथा विरजोम्बरैर्भूषितैश्च स्त्रीपुरुषैः जुष्टं तथा श्रीमद्भिः अगुरुणा धूपितैर्गृहैर्जुष्टमकारयत् ॥ ९ ॥ पितॄनिति। हे नृप! पितॄन् नान्दीमुखान् देवांश्च विधिवत्समभ्यर्च्य तथा यथान्यायं विप्रान् भोजयित्वा च रुक्मिणीं प्रति मङ्गलं वाचयामास ॥ १० ॥ सुस्नातामिति। कृतं कौतुकेन विवाहसूत्रेण मङ्गलं यस्यास्तां सुस्नातां सुदतीं कन्याम् अहतयोर्नवीनयोरंशुकयोर्वस्त्रयोर्युग्मेन भूषणोत्तमैश्च भूषिताम् अकारयत्। "अहतं यन्त्रनिर्मुक्तमुक्तं वासः स्वयम्भुवा। शस्तं तन्माङ्गलिक्येषु तावन्मात्रं न सर्वदा॥" इति स्मृतिः। आहतेति पाठेऽपि स एवार्थः। "आहतं गणितेऽपि स्यात्ताडितेऽपि नवेऽपि च।" इति विश्वप्रकाशः ॥ ११ ॥ चक्रुरिति। तदा च द्विजोत्तमाः सामऋग्यजुर्मन्त्रैः वध्वा रुक्मिण्याः रक्षां चक्रुः। अथर्वमन्त्रवित् पुरोहितः प्रतिकूलग्रहशान्तये जुहाव ॥ १२ ॥

### श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्

स्रक्गंधश्च माल्यानि च आभरणानि च स्रग्गंधमाल्याभरणानि तानि संति येषां तैः अत्रमत्वर्थीयोच्प्रत्ययोज्ञातव्यः। यद्वा। स्रग्गंधमाल्यानि आविभ्रतीति तथोक्तैः विरजोंबरैर्भूषिताः शोभितास्तैः स्त्रीपुंसैर्जुष्टं सेवितं। तथा श्रीमद्भिर्गृहैश्च सेवितं ॥९॥ यथान्यायं लोकव्यवहारमनतिक्रम्य अन्यमनुष्यानपि भोजयित्वा कन्यां प्रति मंगलं वाचयामास स्वस्तिवाचनं कारयामासः ॥१०॥ कृतं कौतुकं विवाहसूत्रवंधाख्यं मंगलं यस्यास्तां अहतेन नवीनेन वस्त्रयुग्मेन भूषणोत्तमैश्च भूषितां। अलंकृतां ॥ ११ ॥ वध्वाः तस्याः कन्यायाः अथर्ववित्। अथर्वमंत्रवेत्ता ॥ १२-१३ ॥

### भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

तद्वर्णयति ॥ स्रगिति ॥ स्रगन्धमाल्याभरणैः, अत्र मत्वर्थीयोऽर्श आद्यच् द्रष्टव्यः। ततः स्रगादिमद्भिरिति तदर्थः। विरजाम्बरैर्भूषितैः, स्त्री पुरुषैः, जुष्टं, तथा अगुरुणा धूपितानि तैः, श्रीमद्गृहैश्च, जुष्टं अकारयदिति संबन्धः ॥ ९ ॥ पितॄनिति ॥ नृपो भीष्मकः पितॄन् देवांश्च, विधिवत् यथाविधि, समभ्यर्च्य विप्रांश्च विधिवत् समभ्यर्च्य, यथान्यायं मङ्गले मङ्गलार्हान्नेन यथा योग्यं भोजनविधापनं न्यायस्तमनतिक्रम्येत्यर्थः। भोजयित्वा च, कन्यां प्रति, मङ्गलं च, वाचयामास ॥ १० ॥ कथंभूतां कन्यामित्यत आह ॥ सुस्नातामिति ॥ सुस्नातां सम्यक् कृतस्नानां, सुदतीं शोभनदन्तां, कृतं कौतुकेन विवाहसूत्रेण मङ्गलं यस्याः तां, अहतयोर्नवीनयोरंशुकयोर्युग्मेन, भूषणोत्तमैश्च, भूषितां अलंकृतां इति द्वयोरेकान्वयः ॥ ११ ॥ चक्रुरिति ॥ ततः द्विजोत्तमाः, वध्वास्तस्याः कन्यायाः, रक्षां, साम च ऋक् च यजुश्च तेषां संवन्धिनो ये मन्त्रास्तैः, चक्रुः। अथर्ववित् अथर्वमन्त्राभिज्ञः, पुरोहितः, ग्रहशान्तये प्रतिकूलग्रहशान्त्यर्थं, जुहावाग्नौ समिदाज्यादिना होमं चकार वै ॥ १२ ॥

### कृष्णप्रिया

वहाँ के स्त्री-पुरुष पुष्पमाला, हार, इत्र-फुलेल, चन्दन, गहने और निर्मल वस्त्रों से सजे हुए थे। वहाँ के सुन्दर-सुन्दर घरों में अगर के धूप की सुगन्ध फैल रही थी ॥ ९ ॥ परीक्षित्! राजा भीष्मक ने पितर और देवताओं का विधिपूर्वक पूजन करके ब्राह्मणों को भोजन कराया और नियमानुसार स्वस्तिवाचन भी ॥ १० ॥ सुशोभित दाँतों वाली परमसुन्दरी राजकुमारी रुक्मिणीजी को स्नान कराया गया, उनके हाथों में मङ्गलसूत्र कङ्कण पहनाये गये, कोहवर बनाया गया, दो नये-नये वस्त्र उन्हें पहनाये गये और वे उत्तम-उत्तम आभूषणों से विभूषित की गयी ॥ ११ ॥ श्रेष्ठ ब्राह्मणों ने साम, ऋक् और यजुर्वेद के मन्त्रों से उनकी रक्षा की और अथर्ववेद के विद्वान् पुरोहित ने ग्रहशान्ति के लिये हवन किया ॥ १२ ॥

**हिरण्यरूप्यवासांसि तिलांश्च गुडमिश्रितान्। प्रादाद् धेनूश्च विप्रेभ्यो राजा विधिविदां वरः ॥ १३ ॥**

**एवं चेदिपती राजा दमघोषः सुताय वै। कारयामास मन्त्रज्ञैः सर्वमभ्युदयोचितम् ॥ १४ ॥**

**मदच्युद्भिर्गजानीकैः स्यन्दनैर्हेममालिभिः। पत्त्यश्वसङ्कुलैः सैन्यैः परीतः कुण्डिनं ययौ ॥ १५ ॥**

**तं वै विदर्भाधिपतिः समभ्येत्याभिपूज्य च। निवेशयामास मुदा [1]कल्पितावाधिवेशने ॥ १६ ॥**

---

१. तान्य-श्रीधर. वंशी. जीव. वीर. विश्व.।

### कर्दमक्षमा

अन्वयः—विधिविदाम्, वरः, राजा, विप्रेभ्यः, हिरण्यरूप्यवासांसि, गुडमिश्रि तिलान्, च, तिलान्, धेनूः, च, वत्सान्, प्रादात् ॥ १३ ॥ एवम्, चेदिपतिः, राजा, दमघोषः, सुताय, वै, मन्त्रज्ञैः, अभ्युदयोचितम्, सर्वम्, कारयामास ॥१४॥ मदच्युद्भिः, गजानीकैः, सुवर्णमालिभिः, स्यन्दनैः, पत्यश्वसंकुलैः सैन्यैः, परीतः, कुण्डिनम्, ययौ ॥ १५ ॥ विदर्भाधिपति, वै, ( स्वयम् ) तम्, समभ्येत्य, अभिपूज्य, च (मधुरोक्तया) मुदा, कल्पिते, आधिविशने, वै, अथवा (अकल्पिते, वाटिकायाम् वा) निवेशयामास ॥१६॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

अभ्युदये उचितम् ॥ १४ ॥ ततश्चतुरंगसैन्यैः परीतः कुण्डिनं भीष्मकस्य पुरं ययौ। मदं च्यवंते इति मदच्युतस्तैः स्यंदनैः रथैः हेमरचिता माला विद्यते येषु तैः ॥ १५ ॥ कल्पितं निर्मितं यदन्यनिवेशनं तस्मिन् ॥ १६-१७ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

रूप्यं रजतम्। चात्ताम्रपात्रस्थान् "पात्रे ताम्र मये स्थाप्य तिलान्हेमगुडान्वितान्। यो ददाति वेदविदे ग्रहार्तिस्तस्य नो भवेत्।" इति दानग्रन्थोक्तेः। प्रकर्षेणाऽऽदरादिनाऽदात्। राजव्यवहारतो नात्यादृतयोरपि गुडतिलयोर्दान विधिवलादेव, सुवर्णरत्नाद्युपकरणसहितं तिलपर्वतादिकं वा। तद्दानविधिर्दानग्रंथेभ्योवसेयः ॥ १३ ॥ एवं भीष्मकवत्। मंत्रज्ञैर्विप्रैः। अभ्युदये कर्मणि उचितं नांदीश्राद्धादि "विवाहादिषु सर्वेषु संस्कारेषु च वास्तुषु। मोक्षे चाऽभ्युदयस्तीर्थयाने संपदि मंगले" इति शाश्वतः। सोपहासमाह—एवमिति। भीष्मकवदेवेत्यर्थः। अस्येदं कर्म कुण्डिनपुरादनतिदूरे स्थित्वेति ज्ञेयम्, पूर्वदिनकृत्यत्वात्। तथापि तस्य स्वतो भगवत्समर्पणोत्सुकत्वात्सार्थकं बभूव। तस्य तु तत्प्रातिकूल्यात्प्रतिकूलमेवेति भावः। सुताय सुतमुद्वाहयितुम् ॥ १४ ॥ ततोऽभ्युदयकर्मकरणोत्तरम् ॥ १५ ॥ तं दमघोषम्। समभ्येत्य संमुखं गत्वा। निवेशनं गृहं वस्त्रादिरचितम्। मुदा सह यथा मुदितो भवति तथेति लौकिकता दर्शिता ॥ १६ ॥

### श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी

प्रकर्षेणाऽऽदरादिना अदात् राजव्यवहारतो नात्यादृतयोरपि तिलगुडयोर्दानं विधिवित्त्वादेव सुवर्णरत्नाद्युपकरणसहित-तिलपर्वतादिकं वा ॥ १३ ॥ सोपहासमाह—एवमिति भीष्मकवदेवेत्यर्थः। अस्येदं कर्म कुण्डिन पुरादनतिदूरे स्थित्वेति ज्ञेयम्। पूर्वदिनकृत्यत्वात् तथापि तस्य स्वतोभगवत्समर्पणोत्सुकत्वात्सार्थकं बभूव अस्य तु तत्प्रातिकूल्यात् प्रतिकूलमेवेति भावः ॥ १४ ॥ तस्य वरपितृत्वेनान्यतः सत्यप्यारम्भवैशिष्ट्ये तस्यापि वैयर्थ्यज्ञापनायाह—मदेति दमघोष इति पूर्वेणान्वयः ॥ १५ ॥ विदर्भाधि-पतिर्भीष्मकः मुदा सह यथा समुदितो भवति तथा तं निवेशयामासेति लौकिकता दर्शिता। यद्वा, रुक्मी तस्यैव प्राधान्यात् मुदो विवक्षिताः ॥ १६ ॥

### श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी

प्रकर्षेण श्रद्धया पादप्रक्षालनपूर्वकयोग्यदक्षिणासाहित्यादिना अदात्, यतो विधिविदां मध्ये वरः श्रेष्ठः ॥ १३ ॥ एव-मिति यथा भीष्मकस्तथैवेत्यर्थः। यतश्चेदिपतिः वै प्रसिद्धौ, इति द्वयोरपि साम्यं सूचितम् ॥ १४ ॥ तस्य वरपितृत्वेन कश्चिद्-विशेषमाह—मदेति। गजानामनीकैः समूहैः ॥ १५ ॥ विदर्भस्याधिपतिर्भीष्मको रुक्मी वा, सम्यग् वाद्यादिना दूरादग्रेऽभिमुख-मेत्य अभितः पूजयित्वा च, पुनरपि वै-शब्दात् तत्तत्प्रसिद्धया तयोर्विवाहनिश्चयः सूचितः। अत एव तत्प्रकारो विस्तार्य्यवर्णितश्च। तादृशेऽपि महारम्भे तयोः श्रीभगवताग्रे वञ्चनात्, तस्य महाप्रागल्भ्यादि-माहात्म्याविशेषबोधनार्थमिति ॥ १६ ॥

### श्रीमद्वीरराघवाचार्यकृता भागवतचन्द्रचन्द्रिका

हिरण्येति विधिविदां विधिज्ञानां वरो राजा भीष्मकः हिरण्यादीन् धेनूंश्च विप्रेभ्यः प्रादात् ॥ १३ ॥ एवं यथा रुक्मिण्यै तथा दमघोषःसुताय शिशुपालाय सर्वमभ्युदयोचितं कर्म मन्त्रज्ञैर्द्विजैः कारयामास ॥ १४ ॥ ततो मदजलानि स्रवद्भिर्गजानामनी-कैर्हेम्नो माला एषां संतीति तथा तरथैः पदातिभिरश्वैश्च सङ्कुलैर्व्याप्तैः सैन्यैश्च परिवृतश्चैद्य इति शेषः। कुण्डिनं पुरं ययौ तं चैद्यं समभ्येत्याभिपूज्य च कल्पितं निर्मितं यदन्यन्निवेशनं तस्मिन्मुदा निवेशयामास ॥ १५-१६ ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

रूप्यं रजतम् ॥ १३ ॥ सुताय शिशुपालाय ॥ १४ ॥ पूर्वोक्तयात्राशेषं कथयति—मदच्युद्भिरिति। मदच्युद्भिः मद-जलस्राविभिः ॥ १५ ॥ तदर्थं कल्पिते ऽन्यस्मिन् निवेशने गृहे ॥ १६ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

सुताय सुतविवाहार्थम् ॥ १४ ॥ मदानां च्युत् क्षरणं येषु तैः ॥ १५-१७ ॥

### गूढार्थदीपिनी

रूप्यं रजतम्। राजा भीष्मकः ॥ १३ ॥ सुताय शिशुपालाय अभ्युदयोचितं विवाहोचितं कर्म नान्दीश्राद्धादि-कारयामास ॥ १४-१५ ॥ तं दमघोषम्। समभ्येत्यसंमुखं गत्वा। अन्यद् वरयोग्यम् निवेशनं तस्मिन् ॥ १६ ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

मदं च्यवन्ते इति मयच्युतस्तैः ॥ १५-१७ ॥

### श्रीसत्यधर्मकृता श्रीभागवतटिप्पणी

गुडमिश्रितांस्तिलान् विधिविदां वरः स्वयम् ॥ १३ ॥ चेदिपतिर्दमघोषो राजा। अभ्युदयोचितं बहिरन्तरर्थस्तु। अभ्यवज्ञात उदयोऽनभ्युदयस्तदुचितमिति। मत्तृष्वज्ञा मन्त्रज्ञास्तैरिति च ॥ १४ ॥ स्वग्रामे कारयित्वा कुण्डिनं ययौ ॥ १५ ॥ समेत्य सम्मुखं गत्वा प्रपूज्य च कल्पितं तदर्थमन्यन्निवेशनं तस्मिन् ॥ १६ ॥

### श्रीमद्वल्लभाचार्यकृता सुबोधिनी

दानेन सर्वदोषनिर्वृत्तिरिति दानान्यपि कृतवानित्याह—**हिरण्येति**। हिरण्यं सुवर्णं तत्सार्वकामिकमग्निदेवत्यम् रूप्यं सोमदैवत्यम् वासश्च सर्वदैवतमिति गन्धर्वदैवतं वा तेन त्रयो भागिनः कन्याया व्यावर्तिताः तिलमोदकदानं तु सर्वदोषहरमिति गुडमिश्रितान् तिलांश्च ददौ चकारात्केवलानपि कन्यायाः सर्वसमृद्ध्यर्थं धेनूश्च प्रादात् विप्रेभ्यश्च त एव हि विशेषेण पूरकाः राजा समृद्धः विधानेन दत्तं फलपर्यवसायि भवतीति तदर्थमाह—विधिविदां श्रेष्ठ इति ॥ १३ ॥ एवं पुरं कन्यां च निर्दुष्टतया निरूप्य मध्ये निराकार्याणां वृत्तान्तमाह—**षड्भिः**। भगवद्धर्मैरेव तेषां निराकरणार्थम् प्रथमं विवाहः संस्कार इति पित्रैव तस्य संस्काराः क्रियन्त इति निरूपयति—यथा रुक्मिण्याः तत्पित्रा कृतम् एवं चेदिपतिरपि दमघोषः सुताय शिशुपालाय विवाहो भविष्यतीति विनिश्चयेन कारयामास तस्यापि सामर्थ्यं राजेति **दमघोष** इति दमस्य शान्तेः घोष एव, नतु तस्य दमः न हि अदान्तेन कृतं सफलं भवति। अक्षरव्यत्यासो वा, मदघोष इत्यर्थः। सिंहवत् अत उन्मादात् भगवन्तमविचार्य तथा कृतवान् अभ्युदये उचितमेव, नत्वभ्युदयम् ॥ १४ ॥ एतादृशस्य उन्मत्तसेनायुक्तस्य पुरं प्रतिगमनमाह—**मदच्युद्भिरिति**। **षाष्ठिहायनैः** मत्तगजैः सह गजानामनीकरूपत्वार्थं तथोक्तम्। सुवर्णमालायुक्तानि च स्यन्दनानिभटाः अश्वाश्च एवं चतुरङ्ग-सेनायुक्तः युद्धार्थमेव कुण्डिनपुरं ययौ न तु विवाहार्थम्, अन्यथा विवाहसामग्रीमपि नयेत् ॥ १५ ॥ तस्याग्रे निराकरणार्थमादौ सन्माननामाह—तं वै **विदर्भाधिपतिरिति**। विदर्भदेशस्याधिपतिः विशेषानभिज्ञः, तं निश्चयेन, समभ्येत्याग्रे गत्वा, अभिपूज्य, गृहागताय यथा पूजा विधेया चकारात् विशेषाभावं च कृत्वा, मुदाहर्षेण कल्पिते अधिवेशने, नतु सहजे उत्कृष्टे आ ईषत्कल्पिते वा अकल्पिते वा वाटिकादौ स्थापितवान् ॥ १६ ॥

### विवरणटिप्पणी

**हिरण्य**मित्यत्र। **अग्निदैवत्य**मिति। ब्राह्मणादेराकृतिगणत्वाद्दैवत्यमितिष्यत्र्। तथाचाग्नौ दैवत्यं यस्येति विग्रहः। **सर्वदैवत**मिति। दैवतानि पुंसि वेत्यनुशासनाद्दैवतशब्दो देवतापर्यायः। तथा च सर्वाणि दैवतानि यस्येति विग्रहः।

### श्रीसुबोधिनीसारः

विधिविदां वरः श्रेष्ठो राजा भीष्मको विप्रेभ्यो हिरण्यादीनि गुडेन मिश्रितान् तिलांश्च धेनूर्गाः प्रादात् ॥ १३ ॥ एवं कुण्डिनपुरमहोत्सवमुक्त्वा चेदिपुरवृत्तं वर्णयंस्तदागमन माह द्वाभ्याम्। एवंप्रकारेण चेद्याः पतिः दमघोषो राजा सुताय पुत्रार्थं मन्त्रज्ञैर्ब्राह्मणोत्तमैः अभ्युदये विवाहे उचितं सर्वं कार्यवर्गं कारयामास वै एव ॥ १४ ॥ मदं च्यवंतीति तैर्गजानीकैर्हस्तिसेनाभिः स्वर्णमालिभिः स्यंदनै रथैः पदातितुरंगव्याप्तैः सैन्यैः परीतः आवृतः कुण्डिनं पुरं जगाम दमघोषः ॥ १५ ॥ विदर्भस्याधिपति-र्भीष्मकः समभ्येत्य सम्मुखमागत्याभिपूज्य सत्कृत्य मुदा हर्षेण कल्पितेऽन्यस्मिन् निवेशने स्थाने उत्तारयामास ॥ १६ ॥

### गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

विधिविदां शास्त्रोक्तप्रकारज्ञानां मध्ये वरः श्रेष्ठो राजा भीष्मकः हिरण्यादीन् धेनूश्च विप्रेभ्यः प्रादात् ॥ १३ ॥ यथा रुक्मिण्यै भीष्मको मङ्गलादि कारयामास एवं चेदिपतिः राजा दमघोषोऽपि सुताय शिशुपालाय यदभ्युदये विवाहे उचितं कर्म तत्सर्वं मन्त्रज्ञैर्द्विजैः कारयामास ॥ १४ ॥ हेम्नो माला येषां सन्तीति तथा तैरिति गजादिसर्वेषां विशेषणम्। मदं च्यवन्ते इति मदच्युतस्तैर्गजानामनीकैः, रथैः, पदातिभिः, अश्वैश्च सङ्कुलैर्व्याप्तैः सैन्यैः परीतः परिवृतः शिशुपालः कुण्डिनं पुरं ययौ ॥ १५ ॥ वैदर्भाधिपतिर्भीष्मको मुदा युक्तः तं शिशुपालं सम्यगभ्येत्य अग्रतो मिलित्वाऽभिपूज्य च यदन्यद्वरयोग्यं निवेशनं वासस्थानं तस्मिन्निवेशयामास ॥ १६ ॥

### अन्वितार्थप्रकाशिका

हिरण्येति ॥ विधिविदां वरः राजा भीष्मकः विप्रेभ्यः हिरण्यादीनि प्रादात् । स्फुटमन्यत् ॥ १३ ॥ एवमिति । एवं भीष्मकवत् चेदिपतिः राजा दमघोषोऽपि सुताय शिशुपालविवाहार्थं यदभ्युदये विवाहे उचितं कर्म तत्सर्वं मन्त्रज्ञैर्द्विजैः कारयामास ॥ १४ ॥ मदेति ॥ हेम्नो माला येषां सन्तीति तथा तैरिति गजादिसर्वेषां विशेषणम् । मदं च्यवन्त इति मदच्युतस्तैर्गजानामनीकैः रथैः पदातिभिरश्वैश्च सङ्कुलैर्व्याप्तैः सैन्यैः परीतः परिवृतः शिशुपालः कुण्डिनं पुरं ययौ ॥ १५ ॥ तमिति । विदर्भाधिपतिर्भीष्मको मुदा युक्तः तं शिशुपालं सम्यगभ्येत्य अग्रतो मिलित्वाऽभिपूज्य च कल्पितं यदन्यद् वरयोग्यम् अन्येभ्य उत्तमं निवेशनं वासस्थानं तस्मिन्निवेशयामास ॥ १६ ॥

### श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्

अभ्युदयस्य स्वसमृद्धे रुचितं योग्यं ॥ १४ ॥ मदच्युद्भिर्मदस्रवद्भिः । हेमरचितामालाः संति येषु तथाभूतैः स्यंदनैः रथैः एवं चतुरंगसेनाभिः आवृतः शिशुपालः कुंडिनं तत्संज्ञं नगरं ययौ ॥ १५ ॥ कल्पितं तदर्थं निर्मितं यदन्यन्निवेशनं निवासस्थानं तस्मिन् ॥ १६–१७ ॥

### भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

हिरण्येति । ततः विधिविदां विधिज्ञानां मध्ये वरः श्रेष्ठः, राजा भीष्मकः विप्रेभ्यः द्विजेभ्यः, हिरण्यं च रूप्यं च वासांसि च तानि, गुडमिश्रितान् तिलांश्च, धेनूश्च, प्रादात् ॥१३॥ एवमिति ॥ एवं यथा रुक्मिण्यै तथेत्यर्थः । चेदिपतिः चेदिदेशाधिपतिः, दमघोषः राजा, सुताय शिशुपालाय, सर्वं अभ्युदयोचितं कर्म, मन्त्रज्ञैः द्विजैः, कारयामास वै ॥ १४ ॥ मदेति ॥ ततः, मदच्युद्भिः मदजलानि स्रवद्भिः, गजानीकैः तथा, हेम्नो माला एषां सन्तीति तैः, स्यन्दनै रथैः, पत्तयः पदातयश्च अश्वा घोटकाश्च तैः संकुलानि तैः, सैन्यैः, परीतः परिवृतः, चैद्य इति शेषः । कुण्डिनं ययौ । कुण्डिनपुरं प्राप ॥ १५ ॥ तमिति ॥ विदर्भाधिपतिः, तं चैद्यं समभ्येत्य अभिमुखं गत्वा, अभिपूज्य अभिमान्य च, कल्पितं निर्मितं यदन्यन्निवेशनं तस्मिन्; केचित्तु स्वमनसि श्रीकृष्णागमननिश्चयात् श्रीकृष्णार्थं ग्रामाद्बहिः कल्पितान्निवेशनाद्यदन्यन्निवेशनाद्यदन्यन्निवेशनं तत्रेत्याहुः । मुदा, निवेशयामास वै ॥१६॥

### कृष्णप्रिया

राजा भीष्मक कुल परम्परा और शास्त्रीय विधियों के बड़े जानकार थे । उन्होंने सोना, चाँदी, वस्त्र, गुड़ मिले हुए तिल और गौएँ ब्राह्मणों को दीं ॥ १३ ॥ इसी प्रकार चेदिनरेश राजा दमघोष ने भी अपने पुत्र शिशुपाल के लिये मन्त्रज्ञ ब्राह्मणों से अपने पुत्र के विवाह-सम्बन्धी मङ्गलकृत्य कराये ॥ १४ ॥ इसके बाद वे मद चुआते हुए हाथियों, सोने की मालाओं से सजाये हुए रथों, पैदलों तथा घुड़सवारों की चतुरङ्गिणी सेना साथ लेकर कुण्डिनपुर जा पहुँचे ॥ १५ ॥ विदर्भराज भीष्मक ने आगे आकर उनका स्वागत-सत्कार और प्रथा के अनुसार अर्चन-पूजन किया । इसके बाद उन लोगों को पहले से ही निश्चित किये हुए जनवासों में आनन्दपूर्वक ठहरा दिया ॥ १६ ॥

**तत्र शाल्वो जरासन्धो दन्तवक्त्रो विदूरथः । आजग्मुश्चैद्यपक्षीयाः पौण्ड्रकाद्याः सहस्रशः ॥ १७ ॥**
**कृष्णरामद्विषो यत्ताः कन्यां चैद्याय साधितुम् । यद्यागत्य हरेत् कृष्णो [1]रामाद्यैर्यदुभिर्वृतः ॥ १८ ॥**
**योत्स्यामः [2]संहतास्तेन इति निश्चितमानसाः । आजग्मुर्भूभुजः [3] सर्वे समग्रबलवाहनाः ॥ १९ ॥**
**श्रुत्वैतद् [4]भगवान् रामो [5]विपक्षीयबलोद्यमम् । कृष्णं चैकं गतं हर्तुं कन्यां कलहशङ्कितः ॥ २० ॥**

### कर्दमक्षमा

अन्वयः—तत्र, चैद्यपक्षीयाः, कृष्णरामद्विषः, शाल्वः, जरासंधः, दन्तवक्रः, विदूरथः, पौण्ड्रकाद्याः, सहस्रशः, यत्ताः, यदि, रामाद्यैः, यदुभिः, वृतः, कृष्णः, यदि, आगत्य, कन्यां, हरेत्, तदा, चैद्याय, कन्याम्, साधयितुम्, तेन, संहताः, योत्स्यामः, इति निश्चितमानसाः, समग्रबलवाहनाः, सर्वे, भूभुजः, आजग्मुः ॥ १७–१९ ॥ एतत्, विपक्षीयबलोद्यमम्, श्रुत्वा, च, कन्याम्, हर्तुम्, एकम्, कृष्णम्, गतम्, ज्ञात्वा, कलहशङ्कितः ॥ २० ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

यदि श्रीकृष्णो हरेदिति शंकिताः । कन्यां साधयितुमित्यर्थः ॥ १८–२१ ॥

---

१. भिः सह–प्रा. पा. । २. सहिताः सर्वे–विज. । ३. उल–वीर. । ४. नृपो–विज. ।

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

तत्र कुण्डिनपुरे ॥ १७ ॥ यदि कदाचित् । इत्यर्थ इति–अंतर्भाविताणिजर्थोत्र ज्ञेयः । साधयितुं दापयितुमिति भावः । यत्ता उद्युक्ताः ॥ १८ ॥ संहता मिलिताः । तेन कृष्णेन । समग्रेति पाठे समग्रं सर्वांगपूर्णम् ॥ १९ ॥ एतत् वयं संहताः कृष्णेन योत्स्याम इत्येतत् । श्रुत्वेति युग्मकम् । जनपरंपरयैतत्पूर्वोक्तं श्रुत्वा । एतत्किं, तत्राह–विपक्षीयेति । तत्र पूर्वं तद्देशादागतया जन-परंपरया, उत्तरत्र तदनुमिमेऽनयातः पुरगामिन्येति ज्ञेयम् । ततः कलहे शंकितः सन् । कर्तरि क्तः, तारकादित्वादितज्वा ॥ २० ॥

### श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी

तत्रेत्यादियुग्मकम् । यत्ता उद्युक्ताः ॥ १७–१८ ॥ योत्स्याम इत्यादि पद्यन्तेषामसम्मतं हरेदिति शङ्किता इति पूर्व-वाक्येनैव सम्बध्य वाक्यसमापनात् तथापि समस्तपुस्तकेषु दृश्यमानत्वाद्याख्यायते तत्र यदीत्यादिसार्द्धमन्वितं समग्रं सर्वाङ्गैः पूर्णं बलं सैन्यं वाहनं च येषान्ते वाहनस्य बलान्तर्गतत्वेऽपि पृथगुक्तिः सर्वेषामेव योधानां बाहुल्ये न सवाहतत्वाभिप्रायेण समर्थ-बलेति क्वचित्पाठः ॥ १९ ॥ श्रुत्वेति युग्मकम् । जनपरम्परयैतत्पूर्वोक्तं श्रुत्वा एतत्किन्तमाह—विपक्षीयेत्यादि तत्र पूर्वं तद्देशा-दागततया जनपरम्परया उत्तरं तु तदनुमिम अनया अन्तःपुरगामिन्येति ज्ञेयम् । अतः कलहे शङ्कितः सन् कर्त्तरि क्तः तारकादि-त्वादितज्वा शङ्काया निदानमाह—भ्रातृस्नेहपरिप्लुतः तदीयतादृशसम्बन्धमाधुर्य्यमयप्रेमसिन्धौ मग्नोऽन्यानुसन्धानाऽसमर्थ इत्यर्थः । कथम्भूतोऽपि भगवान् सर्वज्ञानक्रियाशक्तियुक्तोऽपि अत एव गजादिभिश्चतुर्भिरङ्गैरुपलक्षितं यत् तेन महता बलेन सैन्येन सार्द्धं परितः प्रायः प्रहरार्द्धानन्तरं चलितोऽपि श्रीकृष्णेन सहैव विदर्भनगरे ससैन्यप्रवेशादिति शीघ्रः सन् प्रागात् इति तेन स्नेहे-नेतरशक्तेरावरणेऽपि स्वानुकूलशक्तेः प्रकाशनन्दर्शितम् ऐश्वर्यज्ञानतो बन्धुभावस्याऽऽधिक्यं च अत एव भ्रातृशब्दप्रयोगः ॥२०–२१॥

### श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी

तत्र कुण्डिने, पौण्ड्रकाद्या अन्ये च, आद्य-शब्दात् काशिराजादयः ॥ १७ ॥ चैद्यपक्षीयत्वे हेतुः—कृष्णरामौ द्विषन्तीति तथा ते, यत्ता उद्युक्ताः ॥ १८ ॥ योत्स्याम इत्येतत् पद्यं तेषामसम्मतं लक्ष्यते । हरेदिति शंकिता इति पूर्ववाक्येनैव सम्बध्य तै-र्वाक्यसमापनात् । तथापि बहुलपुस्तके दृश्यमानत्वाद्व्याख्यायते । संहता अन्योन्यं सर्व्वे सम्भूयेत्यर्थः—पार्थक्येन युद्धासक्तेः, मात्सर्य्यादिना सर्व्वेषां युगपन्मुमूर्षणाद्वा, तेन कृष्णेन सह, इत्येतन्निश्चितं येन तथाभूतं मानसं येषां ते, अविवक्षितत्वादसन्धिः । समग्रं सर्व्वांगैः पूर्णं बलं सैन्यं वाहनञ्च येषां ते, वाहनस्य बलान्तर्गतत्वेऽपि पृथगुक्तिः सर्व्वेषामेव योधानां सवाहनत्वाभि-प्रायेण ॥ १९ ॥ भगवान् सर्व्वशक्तियुक्तः, अतो महता बलेन सार्द्धमेव प्रकर्षेण महाद्यमादिनायात् गतः । कुतः ? कलहो विपक्षीय-नृपैः सह श्रीकृष्णस्य युद्धं शंकित आशंकितो येन सः; विशेषणस्य परनिपात आर्षः; यद्वा, कलहाच्छंकितो भीतः । ननु सदा स्वयं निर्भयोऽसौ विशेषतश्च श्रीकृष्णमाहात्म्यवेत्ता कुतः शंकितः ? तत्राह—भ्रातुः स्नेहे परितः प्लुतो मग्नः, इति स्नेहस्यानन्त्येन समुद्रत्वं ध्वनितम् । अतएवेश्वज्ञानान्तर्द्धानेन केवलभ्रातृज्ञानाद्भ्रातृशब्दप्रयोगः । बलेनेत्युक्तेऽपि गजादीनां पृथगुक्तिर्बलस्य चतुरंग-सम्पूर्णत्वविवक्षया । त्वरित इति प्रातरग्रे गतेनापि प्रायः श्रीकृष्णेन सहैव गमनं बोधयति । अतएवाग्रे भीष्मकेण द्वयोरेव युगपत् प्राप्तिश्रवणातिथ्यादिविधानं वक्ष्यते ॥ २०–२१ ॥

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम्

यद्यागत्य हरेत् तदा चैद्याय साधितुं यत्ता इत्यन्वयः ॥ १८–२१ ॥

### श्रीमद्वीरराघवाचार्यकृता भागवतचन्द्रचन्द्रिका

तत्रेति कृष्णरामौ द्विषन्तीति तथाते चैद्यपक्षानुवर्तिनः शाल्वादयः पौण्ड्रकाद्याश्च सहस्रशः ॥ १७ ॥ यत्ताः सन्तः चैद्याय कन्यां साधयितुमाजग्मुः कथम्भूताः रामाद्यैर्यदुभिः परिवृतः श्रीकृष्ण आगत्य यदि कन्यां हरेत् तर्हि सर्वे वयं सङ्घीभूताः तेन श्रीकृष्णेन सह योत्स्यामः चैद्याय कन्यां साधयिष्याम इतीत्थं कृतो निश्चयो यैस्तथाभूताः तया अन्ये च भूभुजो राजानः समग्राणि बलानि वाहनानि येषां तथाभूता आजग्मुरित्यर्थः ॥ १८–१९ ॥ बलवान्प्रशस्तबलसम्पन्नः रामः विपक्षीयाणां शत्रु-पक्षीयाणां राज्ञां समुद्यमं प्रयत्नं श्रुत्वा कन्यामाहर्तुं गतमेकमसाहायं श्रीकृष्णं च ज्ञात्वा नूनं तत्र कलहो भविष्यतीति शङ्का सञ्जाताऽस्येति तथाभूतः ॥ २० ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

तत्र कुण्डिनपुरे ॥ १७–२१ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

साधितुं गांधयितुम् ॥ १८–१९ ॥ जनपरम्परयैव श्रुत्वा भगवान् सर्वज्ञत्वसर्वशक्तित्वादियुक्तोपि कलहशंकितः अवश्य-भाविनि कलहे प्राप्ताशङ्कः तत्र हेतुः भ्रातृस्नेहाब्धौ सर्वतो भावेन मग्नः "अनिष्टाशङ्कीनि बन्धुजनहृदयानि भवन्ति" इति न्यायेन प्रवलितस्य स्नेहस्य सर्वज्ञत्वाद्यावरणसामर्थ्यात् ॥ २०–२२ ॥

### गूढार्थदीपिनी

तत्रेति सार्द्धम् कुण्डिनपुरे। यत्ता उद्युक्ताः। साधितुं साधयितुं दापयितुम् अन्तर्भावितण्यर्थं ॥ १७ ॥ यदीति सार्द्धम् संहता मिलिताः सन्तः। समग्रं सर्वाङ्गपूर्णम् ॥ १८ ॥ श्रुत्वेति युग्मम्। शङ्कितः कर्तरि क्तः। तारकादित्वादितज्वा ॥१९–२०॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

साधितुं साधयितुम् ॥ १८–२१ ॥

### श्रीसत्यधर्मकृता श्रीभागवतटिप्पणी

तत्र मण्डिते कुण्डिने ॥ १७ ॥ यदि रामाद्यैर्यदुभिर्वृत आगत्य कृष्णो हरेदुद्योगं कुर्यात्तर्हि चैद्याय तां साधितुं साधयितुं स्वभावतः कृष्णरामद्विषो यत्ताः ॥ १८ ॥ सर्वे सहिता मिलिता योत्स्याम इति निश्चितं मानसं येषां ते समग्रेति बलवाहनद्वय-विशेषणम् ॥ १९ ॥ एतेन सन्निहितेनैव भगवानैश्वर्यादिमान्यथेदानीं तथा नित्यं तस्मादेष भविष्यति। अत एतदिति प्रोक्त इति सर्वसन्निहितत्वादेतदिति वृहच्छान्दोग्यभाष्योक्तेः। विपक्षीयनृपोद्यमं श्रुत्वा विपक्षीयाश्च ते नृपाश्च तेषामुद्यमो यस्मिस्तदेत-द्वृत्तमिति वा कलहो भवेदिति शङ्कावान ॥ २० ॥

### श्रीमद्वल्लभाचार्य्यकृता सुबोधनी

तत्रैव सर्वे दुरात्मान एकीभूता इत्याह—तत्र शाल्व इति। विदूरथः दन्तवक्त्रभ्राता चत्वारो मुख्याः गणिता अन्ये चैद्यपक्षीयाः आययुः पौण्ड्रकाद्याश्च मिथ्यावासुदेवादयोऽपि तत्रैव निविष्टाः। तेषामेकत्र स्थितौ एकं धर्ममाह – कृष्ण-रामद्विष इति। नहि तेषामागमने किञ्चिदन्यत्कृत्यमस्ति। एकाकिनो वयमसमर्थाः, केनचिन्मिषेण भगवान् जेतव्य इति चैद्ये स्वोपकारं च ख्यापयितुमरिमित्रन्यायेन समागता इत्याह। यत्ताः सन्तः कन्यां चैद्याय साधितुं समागताः। नन्वाहूय कन्या दीयते, कः सन्देह इति चेत्, तत्राह यद्यागत्येति। तेषां हृदये भगवान् तथैव ज्ञापितवान्। कृष्णो हि स्त्रीणां हितकर्तेति। रामा-द्यैर्यदुभिः सहागतः यदि हरेत्, तदा योत्स्याम एव, नत्वन्यत् सामर्थ्यमस्तीति भावः इत्येवं निश्चितं मानसं येषाम् अत एव सर्वे समर्थबलवाहनाः सन्तः आजग्मुः भूभुज इति तेषां सा सम्पत्तिः सहजा ॥ १७–१९ ॥ एषा वार्ता सर्वजनीना जातेति ज्ञापयितुं बलभद्रादयो भगवता अनुक्ता अपि समागता इत्याह–श्रुत्वैतदिति द्वाभ्याम्। श्रुतस्य सत्यत्वाय भगवानिति राम इति साधनरूपः विपक्षियाः विपक्षस्य शिशुपालस्य सम्बन्धिनः तेषां बलस्योद्यमं श्रुत्वा एक एव च भगवान् कन्यां हर्तुं गत इति कलहे शङ्कां प्राप्तः। कलहो भविष्यतीति निश्चित्य महता बलेन सार्धं त्वरितः कुण्डिनं ययौ। ननु भगवति कः सन्देहो भवेत्, किमिति गत इत्याशङ्कयाह भ्रातृस्नेहेन परिप्लुत इति। लौकिकदृष्ट्या स्नेहेन च गत इत्यर्थः ॥ २०–२१ ॥

### श्रीसुबोधिनी–सारः

तत्र याने शाल्वो दैत्यो जरासंधः पितृव्यो वरस्य दंतवक्रो विदूरथो भ्रातरो चैद्यस्य शिशुपालस्य पक्षीयाः पक्षगाः पौंड्रकाद्या मिथ्यावासुदेवप्रधानाः सहस्रशोऽसंख्याताश्चाययुः ॥ १७ ॥ तदागमने हेतुमाह। कृष्णरामाभ्यां द्विषन्तीति तथा चैद्याय शिशुपालाय कन्यां साधयितुं रुक्मिणीं परिणाययितुं यत्ताः सावधानाः रामाद्यैर्बलदेवमुख्यैर्यदुभिर्वृतो युक्तः कृष्णो यदि आगत्य कन्यां हरेत्तर्हि ॥ १८ ॥ संहताः संमिलिता वयं तेन कृष्णेन योत्स्यामो युद्धं करिष्याम एकैकस्य सामर्थ्याभावात्। इति निश्चित-चित्ताः समग्राणि बलानि वाहनानि येषां ते सर्वे भूभुजो भूपाला आजग्मुः ॥ १९ ॥ एतत् विपक्षीयानां शत्रुपक्षं गतानां नृपाणा-मुद्यमं नारदतः श्रुत्वा कन्यां हर्तुं गतमेकम् एकाकिनं कृष्णं च श्रुत्वा कलहात् शंकितो भगवान् रामो भ्रातुः स्नेहेन परिप्लुतो व्याप्तः त्वरितः सत्वरो महता बलेन सार्द्धं चतुरंगेण कुण्डिनं प्रागात् प्रायात् ॥ २०–२१ ॥

### गोस्वामिश्रीगिरिधरलालकृताबालप्रबोधिनी

कृष्णरामौ द्विषन्तीति तथा ते चैद्यपक्षानुवर्तिनः "रामाद्यैर्यदुभिर्वृतः कृष्णो यद्यागत्य कन्यां हरेत्तदा सर्वे वयं संहता मिलिताः सन्तस्तेन सह योत्स्याम" इति निश्चितं मानसं येषां ते यत्ताः सावधानतया युद्धप्रयत्नवन्तः, अत एव समग्रबलवाहन-युक्ताः शाल्वाद्याः सहस्रशो भूभुजो राजानश्चैद्याय कन्यां साधितुं तत्र कुण्डिनपुरे आजग्मुरिति त्रयाणामन्वयः ॥ १७–१९ ॥

ततश्च भगवान् रामो विपक्षीयाणां शत्रुपक्षपातिनां नृपाणामेतदुद्यमं प्रयत्नं श्रुत्वा तथा एकमसहाय्यमेव कृष्णं कन्यां हर्तुं गतं च श्रुत्वा 'तत्र कलहो भविष्यति' इति शङ्कितचित्तः भ्रातरि कृष्णे यः स्नेहस्तेन परिप्लुतो व्याप्तः, अतो गजाश्वरथपत्तिभिर्महता बलेन सैन्येन सह कुण्डिनं पुरं प्रागादिति द्वयोरन्वयः ॥ २०-२१ ॥

**अन्वितार्थप्रकाशिका**

तत्रेति सार्द्धम् । कृष्णरामौ द्विषन्तीति तथा ते चैद्यपक्षीयाः शिशुपालानुवर्त्तिनः यत्ताः युद्धे प्रयत्नवन्तः शाल्वजरासन्धादयः पौण्ड्रकाद्याश्च सहस्रशो राजानश्चैद्याय कन्यां साधितुं साधयितुम् । णिलोप आर्षः । तत्र कुण्डिनपुरे आजग्मुः ॥ १७ ॥ यदीति रामाद्यैर्यदुभिर्वृतः कृष्णो यद्यागत्य कन्यां हरेत्तदा सर्वे वयं संहता मिलिताः सन्तस्तेन सह योत्स्यामः । तङ्भाव आर्षः । इति निश्चितं मानसं येषां ते समग्रबलवाहनयुक्ताः सर्वे भूभुजो राजानः आजग्मुः । योत्स्याम इति पद्यं स्वामिपादानां न सम्मतम् । हरेदिति शङ्किताः कन्यां साधितुमिति पूर्वान्वयप्रदर्शनात् युक्तं चैतत् ॥ १८-१९ ॥ श्रुत्वेति द्वयम् । भगवान् रामो विपक्षीयाणां शत्रुपक्षपातिनां नृपाणामेतदुद्यमं प्रयत्नं जनेभ्यः श्रुत्वा तथा एकमसहायमेव कृष्णं कन्यां हर्तुं गतं च तदनुमातुरन्तःपुरजनाच्च श्रुत्वा तत्र कलहो भविष्यतीति शङ्कितचित्तः भ्रातरि कृष्णे यः स्नेहस्तेन परिप्लुतो व्याप्तोऽतो गजाश्वरथिपत्तिभिर्महता बलेन सैन्येन सह कुण्डिनं पुरं त्वरितः प्रागात् । पश्चात्प्रस्थितोऽपि कुण्डिनपुरे श्रीकृष्णेन सहैव प्राविशदिति भावः ॥ २०-२१ ॥

**श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्**

यत्ताः सावधानाः कृष्णो यदि आगत्य कन्यां हरेदिति जातसंहेहाः संतः तां चैद्याय साधितुं साधयितुं आजग्मुरिति पूर्वेण वा संबंधः ॥ १८ ॥ तेन श्रीकृष्णेन सह संहताः संगताश्चेत् वयं योत्स्याम इति निश्चितमानसाः ॥ १९ ॥ विपक्षीयाः शत्रुपक्षीया ये नृपास्तेषां उद्यमं ॥ २०-२१ ॥

**भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी**

तत्रेति । कृष्णेति । योत्स्याम इति च ॥ तत्र कुण्डिनपुरे, कृष्णरामद्विषः, चैद्यपक्षीयाः शिशुपालपक्षस्थाः, शाल्वः, जरासंधः, दन्तवक्रः, विदूरथः, पौण्ड्रकाद्याः, सहस्रशः नृपाः, चैद्याय शिशुपालाय, कन्यां साधितुं स्वाधीनां कर्त्तुं, यत्ताः सावधानाः सन्तः, आजग्मुः । यदि कृष्णः, रामाद्यैः यदुभिः वृतः सन्, आगत्य हरेत्, कन्यामिति शेषः । तर्हि, सहिताः एकीभूताः सन्तः, तेन कृष्णेन सह, योत्स्यामः युद्धं करिष्यामः । इति निश्चितानि निश्चययुक्तानि मानसानि येषां तथाभूताः, समग्राणि बलानि वाहनानि च येषां तथाविधाः, अन्येऽपीति शेषः । सर्वे भूभुजो राजानश्च, आजग्मुः । इति त्रयाणामेकान्वयः ॥ १७-१९ ॥ श्रुत्वेति ॥ बलवान् प्रशस्तबलसंपन्नः रामः. एतदुक्तविधं सकलनृपवृत्तं श्रुत्वा, विपक्षीयाः शत्रवश्च ते नृपा राजानस्तेषामुद्यमः प्रयत्नस्तं च श्रुत्वा, कन्यां हर्त्तुं, गतं एकमसहायं, कृष्णं च ज्ञात्वा, नूनं तत्र कलहो भविष्यतीति शङ्का संजाताऽस्येति तथाभूतः ॥ २० ॥

**कृष्णप्रिया**

उस बारात में शाल्व, जरासन्ध, दन्तवक्त्र, विदूरथ और पौण्ड्रक आदि शिशुपाल के सहस्रों मित्र नरपति आये थे ॥ १७ ॥ वे सब राजा श्रीकृष्ण और बलरामजी के विरोधी थे और राजकुमारी रुक्मिणी शिशुपाल को ही मिले, इस विचार से आये थे । उन्होंने अपने-अपने मन में यह पहले से ही निश्चय कर रक्खा था कि यदि श्रीकृष्ण बलराम आदि यदुवंशियों के साथ आकर कन्या को हरने की चेष्टा करेगा तो हम सब मिलकर उससे लड़ेंगे । यही कारण था कि उन राजाओं ने अपनी-अपनी पूरी सेना और रथ, घोड़े हाथी आदि भी अपने साथ ले लिये थे ॥ १८-१९ ॥ विपक्षी राजाओं की इस तैयारी का पता भगवान् बलरामजी को लग गया और जब उन्होंने यह सुना कि भैया श्रीकृष्ण अकेले ही राजकुमारी का हरण करने के लिये चले गये हैं, तब उन्हें वहाँ लड़ाई-झगड़े की बड़ी आशङ्का हुई ॥ २० ॥

**बलेन महता सार्धं भ्रातृस्नेहपरिप्लुतः । त्वरितः कुण्डिनं प्रागाद् गजाश्वरथपत्तिभिः ॥ २१ ॥**
**भीष्मकन्या वरारोहा काङ्क्षन्त्यागमनं हरेः । प्रत्यापत्तिमपश्यन्ती द्विजस्याचिन्तयत्तदा ॥ २२ ॥**
**अहो त्रियामान्तरित उद्वाहो मेऽल्पराधसः ।**
**नागच्छत्यरविन्दाक्षो नाहं वेद्म्यत्र कारणम् । सोऽपि नावर्ततेऽद्यापि मत्संदेशहरो द्विजः ॥ २३ ॥**
**अपि मय्यनवद्यात्मा दृष्ट्वा किञ्चिज्जुगुप्सितम् । मत्पाणिग्रहणे नूनं नायाति हि कृतोद्यमः ॥ २४ ॥**

**कर्दमक्षमा**

अन्वयः—भ्रातृस्नेहपरिप्लुतः, गजाश्वरथपत्तिभिः, महता, बलेन, सार्धम्, त्वरितः, कुण्डिनम्, प्रागात् ॥ २१ ॥ हरेः, आगमनम्, काङ्क्षन्ती, वरारोहा, भीष्मकन्या, द्विजस्य, प्रत्यापत्तिम्, अपश्यन्ती, तदा, अचिन्तयत् ॥ २२ ॥ अहो, अल्प-

राधसः, मे उद्वाहः, त्रियामान्तरितः, अरविन्दाक्षः, न आगच्छति, अत्र, अहम्, कारणं, न वेद्मि, मत्सन्देशहरः सः, द्विजः, अपि, अद्यापि, न आवर्तते ॥ २३ ॥ अपि, अनवद्यात्मा, मत्पाणिग्रहणे, कृतोद्यमः, हि, मयि, किञ्चित्, जुगुप्सितम्, दृष्ट्वा, नूनम्, न, आयाति ॥ २४ ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

सूर्योदयात्पूर्वमेवौत्सुक्येन रुक्मिण्यचिंतयदित्याह । भीष्मकन्येति । प्रत्यापत्ति प्रत्यागमनम् ॥ २२ ॥ त्रियाम रात्रिस्तावन्मात्रेणांतरितः । अल्पराधसो मंदभाग्यायाः ॥ २३ ॥ जुगुप्सितं धार्ष्ट्यादि । अपीति शंकायाम् । नायाति हि कृतोद्यम इति । अयमर्थः । आदौ कृतोद्यमत्वात्तं न प्रस्थापितवान् । प्रस्थानावसरे च किंचिन्मयि जुगुप्सितं मत्वा प्रत्याचष्ट । अतः सोऽपि द्विजो नूनं नायातीति ॥ २४ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

परिप्लुतो व्याप्तः "मण्डूकव्याप्तयोः प्रोक्तः परिप्लुतध्वनिर्नते" इति निरुक्तिः । शंकाहेतुमाह–भ्रातृस्नेहेत्यादि । तदीयतादृशसम्बन्धमाधुर्यमयप्रेमसिन्धौ मग्नोन्यानुसंधानासमर्थ इत्यर्थः । कथंभूतः–भगवान् सर्वज्ञानक्रियाशक्तियुक्तोपि, अत एव गजादिभिश्चतुर्भिरंगैरुपलक्षितं यत्तेन महता बलेन सैन्येन सार्द्धं त्वरितः प्रायः प्रहरार्धानन्तरं चलितोपि श्रीकृष्णेन सहैव विदर्भनगरे ससैन्यप्रवेशादतिशीघ्रः सन्प्रागादिति । तेन स्नेहेनेतरशक्तेरावरणेऽपि स्वानुकूलशक्तेः प्रकाशनं दर्शितम् । ऐश्वर्यज्ञानतोऽपि वन्धुभावस्याधिक्यं च । अत एव भ्रातृपदप्रयोगः ॥ २१ ॥ रुक्मिण्युत्कंठामाह–सूर्योदयेत्यादिना । वरो वरणीय आरोहो जघनप्रदेशो यस्याः सा तथा "आरोहो जघने दीर्घे उच्चारोहणयोरपि" इति धरणिः । नवसंगमरसोल्लासं दर्शयितुं पुनः श्रीरुक्मिण्याः पूर्वरागविशेषोदयं वर्णयति–भीष्मेति सार्धपंचभिः । तस्यापि भाग्यं सूचयित्वा तदुचितान्तःसंस्कारोऽप्यस्तीति दर्शयति । वरः श्रेष्ठ आरोहः कांतत्वेन श्रीकृष्णस्य यो लाभस्तल्लक्षणा सर्वोर्द्ध्वभूमिकाप्राप्तिर्यस्याः सेत्येवं श्रीमन्मुनेर्विवक्षितम् । यद्वा—वरः श्रेष्ठ आरोहो नितम्वो यस्या इति वयःप्रकाशव्यंजनया भावस्यातिशयैर्योग्यतां व्यंजयति । अत एव हरेः निजमनोहरता आत्मानमपि हरिष्यतो भगवत आगमनमाकांक्षन्ती नित्यमेव वांछन्ती, संप्रति च द्विजस्य प्रत्यापत्ति तद्वृत्तिज्ञापिकामपश्यन्त्यचिन्तयच्चिन्तां प्राप ॥२२॥ "राधः स्यात्कार्यसंसिद्धौ भाग्येऽदंतोऽपि हिंसने" इति निरुक्तिः । तावन्मात्रेणरात्रिमात्रेणांतरितो व्यवहितः । अत्राऽनागमने । अहो खेदे । त्रियामाशब्दप्रयोगोल्पकालत्वविवक्षया । अल्पराधस्त्वे हेतुः—नागच्छतीति । अधुनापि न प्राप्त इत्यर्थः । "राधो राधाभाग्यसिद्धिर्हिंसाराधनकर्मसु" इति निरुक्तेः । तत्राल्पराधस्त्वं विना कारणान्तरं न पश्यामि तस्य सर्वशक्तिमत्त्वात्प्रपन्नपालकत्वाच्च । विप्रस्य च प्रत्यागमनाभावे तदेव कारणम् ॥ २३ ॥ धार्ष्ट्यमविनयः । आदिना कौटल्यादिग्रहः । स्वाशयमाह—अयमर्थ इति । तं विप्रम् । अतो भगवतोऽनागमनात् । सोऽपि विप्रोपि लज्जया नायातीत्यर्थः । तदेवाह—सोपीति–मय्यतिकृपालुरपि । यदि द्विजस्याप्यागमनमभविष्यत्तदा प्राणत्यागाऽत्यागयोरेकतरं निरोद्धव्यमिति भावः । जुगुप्सितं शरीरबुद्ध्यादिगतं दृष्ट्वा प्रत्याचष्ट आगमनोद्यमं त्यक्तवान् । यतोऽनवद्यो निर्दोष आत्मा देहान्तःकरणादिर्यस्य सः । मम सदोषायास्तद्भार्यानर्हत्वर्मिति । अतो द्विजोप्यकृतार्थो मत्प्राणत्यागभयान्नायातीति भावः ॥ २४ ॥

### श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी

नव सङ्गमरसोल्लासन्दर्शयितुं पुनः श्रीरुक्मिण्याः पूर्वरागविशेषोदयं वर्णयति—भीष्मेति सार्द्धपञ्चभिः । भीष्मकन्येति तस्यापि भाग्यं सूचयित्वा तदुचितान्तःसंस्कारोऽप्यस्तीति दर्शयति—वरः श्रेष्ठ आरोहः कान्तत्वेन श्रीकृष्णस्य यो लोभस्तल्लक्षणा सर्वोर्द्ध्वभूमिकाप्राप्तिर्यस्याः सेत्येव श्रीमन्मुनेर्विवक्षितम् । यद्वा, वरः श्रेष्ठ आरोहः नितम्वो यस्या इति वयःप्रकाशव्यञ्जनया भावस्यातिशयैर्योग्यतां व्यञ्जयति—अत एव हरेर्निज मनो हरतः आत्मानमपि हरिष्यतो भगवत आगमनमाकाङ्क्षन्ती नित्यमेव वाञ्छन्ती सम्प्रति च द्विजस्य प्रत्यापत्ति तद्वृत्तिज्ञापिकामपश्यन्ती अचिन्तयत् चिन्तां प्राप ॥ २२ ॥ अहो खेदे त्रियामाशब्दप्रयोगोऽल्पकालत्वविवक्षया अल्पराधस्त्वे हेतुः नागच्छति अधुनापि न प्राप्त इत्यर्थः । तत्राल्पराधस्त्वं विना तु कारणान्तरं न पश्यामि तस्य सर्वशक्तिमत्त्वात् प्रपन्नपालकत्वाच्च विप्रस्य च प्रत्यागमनाभावे तदेककारणमित्याह—सोऽपीति । मय्यतिकृपालुरपि यदि द्विजस्याऽप्याऽऽगमनमभविष्यत् तदा प्राण ( रक्षण ) त्यागाऽत्यागयोरेकतरं निरवोध्यमिति भावः ॥ २३ ॥ महार्त्तिस्वभावेन श्रीभगवतो द्विजस्य वाऽनागमने कारणान्तरमुद्भावयति—अपीति । हि यतः अनवद्यात्मा काठिन्यादिदोषरहितचित्तोऽपि नायाति तस्मात्तदनागमनं नूनं वितर्क्को मम किञ्चिज्जुगुप्सितमेव दृष्ट्वेत्यर्थः । ( दयालुत्वादापाततः कृतोद्यमोऽपि नायातीत्यर्थः ) । यद्वा, कृतोद्यम इति हरिवंशोक्तं तस्याः स्वयंवरोद्यमं श्रुत्वा श्रीकृष्णस्य मथुरातः परावृत्तं कुण्डिनपुरागमनं भावयति—यत्रेन्द्रकृते तस्य राजेन्द्राभिषेके जाते जरासन्धशिशुपालादयः सर्वे पलायिताः अतो विप्रोऽपि तत्कृत्यविलम्वादेतावत्कालं नायादिति भावः ॥ २४ ॥

### श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी

श्रीकृष्णस्य श्रीरुक्मिणीहरणमवश्यकृत्यमेवेति बोधयन् तस्या भावविशेषमाह—भीष्मेति सार्द्धपञ्चभिः। वरः श्रेष्ठ आरोहो नितम्बो यस्याः सा परमसुन्दरीत्यर्थः। अत एव हरेर्निजमनोहरस्य आत्मानं हरिष्यतो वा, भगवत आगमनमाकाङ्क्षन्ती प्रत्यापत्तिञ्च श्रीभगवदागमनज्ञापिकामपश्यन्ती साक्षादलभमाना, तदा तस्मिन् प्रातःकालेऽचिन्तयत्। भीष्मकस्य कन्येति तस्यापि कन्याहरणार्थं श्रीकृष्णागमनाकाङ्क्षां सूचयति ।।२२।। अहो खेदे, अल्पराधस इति श्रीभगवद्विलम्बमननात्, अधुनापि नागच्छति। अतीते वर्त्तमानः, तस्यागमनं चावश्यमपेक्ष्यमित्यभिप्रायेणाह—अरविन्दाक्ष इति सर्वसन्तापहर इत्यर्थः। अत्रानागमने कारणं न वेद्मि नावगच्छामि, तस्य सर्वशक्तिमत्वाद्भक्तवात्सल्यादिगुणवत्वाच्च। अहो परमस्वतन्त्रत्वाद्वासौ नागच्छेत्, ततश्च विप्रस्याप्रत्यागमने किं कारणमिति चिन्तयति—सोऽपीति ॥ २३ ॥ महार्त्या स्वयमेव कारणमुद्भावयति—अपीति। अनवद्यात्मा परमसुन्दरशरीरो निर्द्दोषस्वभावो वा, नूनं निश्चये, हि अपि, कृतोद्यमं ऽपि, अन्यत्तैर्व्याख्यातम्, यद्वा, अनवद्यात्मा काठिन्यादिदोषरहितचित्तोऽपि, नूनं वितर्के, हि यतो नायाति, अतोऽसौ द्विजः कृतमरणोद्यम इत्यर्थः। अमंगलत्वादव्यक्ततयानुक्तिः ॥ २४ ॥

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम्

प्रत्यापत्तिं पुनरागमनम् ॥ २२ ॥ अल्पराधसः मन्दभाग्यायाः ॥ २३ ॥ जुगुप्सितम् अपराधम् ॥ २४-२९ ॥

### श्रीमद्वीरराघवाचार्यकृता भागवतचन्द्रचन्द्रिका

भ्रातरि कृष्णे स्नेहेन व्याप्तः महता विपुलेन बलेन सैन्येन सह, बलमेव प्रपञ्चयति—गजाश्वरथपत्तिभिरिति। त्वरितः सञ्जातत्वरः कुण्डिनं पुरं प्रति प्रागात् ॥ २१ ॥ ततः पूर्वमेव रुक्मिण्यौत्सुक्यादचिन्तयदित्याह—भीष्मकन्येति। हरेरामनमाकाङ्क्षमाणा द्विजस्य प्रेषितस्य प्रत्यापत्तिं प्रत्यागमनमपश्यन्ती चाऽचिन्तयत् ॥ २२ ॥ चिन्तामेवाह—अहो इति चतुर्भिः। त्रियामा रात्रिस्तावन्मात्रान्तरितो मन्दभाग्याया मम विवाहः अरविन्दाक्षो भगवानधुनापि नागच्छति अत्रानागमने कारणमहं न वेद्मि यश्च मत्सन्देशहरः द्विजः सोऽप्यद्यापि नावर्त्तते नागच्छति ॥ २३ ॥ अपि किम्वा ऽनवद्यात्मा मुकुन्दः किञ्चिन्मयि जुगुप्सितं धाष्टर्यादिकमपि दृष्ट्वा मत्पाणिग्रहणे निमित्ते कृत उद्यमः प्रयत्नो येन तथाभूतोऽपि नूनं नायाति नाऽऽगच्छत्येव किमित्यर्थः ॥ २४ ॥

### श्रीविजयध्वजतीर्थकृता पदरत्नावली

वरो वरणीय आरोहो जघनप्रदेशो यस्याः सा तथा प्रत्यापत्तिं पुनरागमनम् ॥२२॥ त्रियामान्तरितः रात्रिमात्रव्यवहितः अल्पराधसः मन्दीभूतकार्यसिद्धेः ॥ २३-२५ ॥

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी

सूर्योदयात् पूर्वमेवौत्सुक्यभयादिति रुक्मिण्यचिन्तयदित्याह—त्रियामा अद्यतनी रात्रिस्तयैवान्तरितः श्वस्तन्यां रात्रौ तु विवाहलग्नमेवेति भावः। अल्पराधसः मन्दभाग्यायाः ॥ २३ ॥ अपीति शङ्कायां नायाति हि कृतोद्यमः इति प्रथममत्रागन्तुमुद्यमः कृत एव अत एव विप्रमपि स्वसङ्ग एवाऽऽनेतुं न प्रथमं प्रस्थापिवान् प्रस्थानावसरे तु मयि किञ्चित् जुगुप्सितं शरीरबुद्ध्यादिगतं दृष्ट्वा प्रत्याचष्ट यतोऽनवद्यात्मा निर्दोषदेहान्तःकरणादिः मम सदोषायास्तद्भार्यात्वानर्हत्वमिति भावः। अतः सोऽपि द्विजो नूनमकृतार्थो मत्तनुत्यागभयान्नायातीति ॥ २४ ॥

### गूढार्थदीपिनी

द्विजस्य प्रत्यापत्तिं प्रत्यागमनम् ॥ २१ ॥ अहो खेदे त्रियामा रात्रिस्तयैव अन्तरितो व्यवहितः अल्पराधसो मन्दभाग्यायाः। अत्रानागमने ॥ २२ ॥ सोऽपीत्यर्द्धम् ॥ २३ ॥ अपि किम् अनवद्यः निर्दोषस्वरूपः ॥ २४ ॥

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः

प्रत्यापत्तिं प्रत्यागमनम् ॥ २२ ॥ अल्पराधसः अल्पभाग्यायाः ॥ २३-२५ ॥

### श्रीसत्यधर्मकृता श्रीभागवतटिप्पणी

स्वयं महता बलेन युतो गजाश्वरथपत्तिभिश्च सार्धमित्यन्वयः ॥ २१ ॥ प्रत्यापत्तिं प्रत्यागमनम् ॥ २२ ॥ अल्पराधसोऽल्पसिद्धिमत्याः पुण्यहीनाया इति तात्पर्यम्। उद्वाहस्त्रियामा रात्रिस्तन्मात्रव्यवहितः। त्रियामान्तरिता यस्य सः। त्रियामा क्षणदा क्षपेत्यमरः। अरविन्दाक्षो नागच्छति। अत्र तदनागमनकारणं न वेद्मि ॥ २३ ॥ सन्देशं गृहीत्वा तं देशं गतो विप्रोऽप्यद्यापि

नावर्ततेऽत्र किं कारणं न वेद्मीत्यन्वयः। आदरातिशयादालस्याच्चाहो वध्वां धार्ष्ट्यं देशान्तरपुरुषान्तरमपरिचितचरं प्रति पत्रप्रेषणं कृतवतीति जुगुप्सितं दृष्ट्वा नागातिकमगधर इत्युत्प्रेक्ष्य वक्ति। अपीति। मय्यनवद्यात्मा स्वयमिति किञ्चिज्जुगुप्सितं दृष्ट्वा मत्पाणिग्रहणे कृतोद्यमः सन्नायाति ह शोके॥ २४॥

**श्रीमद्वल्लभाचार्य्यकृता सुबोधिनी**

एवं सर्वसंविधानमुक्त्वा अत्यन्ताकाङ्क्षायामेव भगवान् समायातीति रुक्मिण्याः आकाङ्क्षां निरूपयति भीष्मकन्येति सप्तभिः सार्धैः। भीष्मकन्येति न स्वातन्त्र्येण स्थातुं शक्नोति। स हि पिता भयानकः, कन्या चास्वतन्त्रा, कन्यात्वादेव लोकाविगानम्। वरारोहेति भोगयोग्यावस्था निरूपिता। तेन दानसमनन्तरमेव सर्वनाशः सूचितः। अतोऽतिदुःखिता उपायान्तरमलभमाना हरेरेव सर्वदुःखहर्तुः आगमनं काङ्क्षन्ती जाता। ततः स्वस्य प्रत्यापत्तिमपश्यन्ती तदा द्विजस्य, द्विजमचिन्तयत्। द्विजस्य वा प्रत्यापत्तिम्। प्रत्यापत्तिर्नाम स्थानात्प्रच्युतस्य पुनः स्वस्थानागमनम्। स्वयमपि भगवतः सकाशात् प्रच्युता, पुनर्भगवत्प्राप्तिमलभमाना, प्रापकं द्विजमेवाचिन्तयत्॥ २२॥ तस्याश्चिन्तामाह अहो इति सार्धैस्त्रिभिः गुणेभ्योऽप्यधिकेति ख्यापयितुम्। त्रियामा रात्रिः, तयैवान्तरित उद्वाहः, एकैव रात्रिर्मध्ये वर्तत इत्यर्थः। त्रियामात्वेनाल्पकालता सूचिता। अतोऽग्रिमदिवसे महाप्रलय एवेति चिन्ता। अल्पराधस इति अल्पसिद्धियुक्तायाः। भाग्यसिद्धिश्चेत् महती भवेद्, तदा शीघ्रमेवेष्टसिद्धिः। सन्देहादल्पवचनम्। चिन्तायां द्वितीयां कोटिमाह नागच्छत्यरविन्दाक्ष इति। दृष्ट्यैव तापनाशकः। अत्र कारणमहं न वेद्मि। नन्वागमनसमयो न जातः, किमिति चिन्त्यत इति चेत्, तत्राह सोऽपि नावर्तत इति। आगच्छतीति ज्ञाते चिन्ता न भवेत्। आगमनकालश्च सन्निहितः। तत एकतरनिश्चये अस्वास्थ्यं वा उत्पाद्यं भवति। येन श्वो विवाहो न भवेत्। अपिशब्दादन्यो वा भगवता प्रेषितः स्यात्तेनापि वा। अद्यापीति सन्निहितः समयः। ननु ब्राह्मणाः क्वचित्तपः करिष्यन्ति, को नियमस्तेषामागमन इति चेत्, तत्राह मत्सन्देशहर इति। सन्देशं यो नयति, तत्रापि द्विजः सत्यवादी। द्वितीयं जन्म सत्यार्थमेवेति। तत्र स्वयमेव हेतुं कल्पयति। अपीति सम्भायनायाम्। भगवाननवद्यात्मा किञ्चिद्भ्रातृपक्षपातलक्षणं जुगुप्सितं दृष्ट्वा, तत्कारणभूतं पूर्वजन्मस्थितं वा मत्पाणिग्रहणे प्रथमत उद्यमं कृत्वापि, ब्राह्मणमपि स्थापयित्वा सङ्गे नेष्यामीति पश्चान्नागतः। ततो ब्राह्मणोऽपि शीघ्रमागन्तुमसमर्थः नागत इति तदाह। मत्पाणिग्रहणे कृतोद्यमोऽपि नूनं नायाति॥ २३-२४॥

**श्रीसुबोधिनीसारः**

वरः श्रेष्ठ आरोहो यस्याः सा भीष्मस्य कन्या हरेरागमनं कांक्षंती द्विजस्य प्रेषितविप्रस्य प्रत्यापत्तिं प्रत्यागमनमपश्यंती सती तदाऽशुचत्॥ २२॥ त्रियामया रात्र्यांतरितो व्यवहितः प्रभाते विवाहनियमात् अल्पराधसो मंदभाग्याया मे ममोद्वाहो विवाहोस्ति। पूर्वेद्युरस्ति महती कुलदेवयात्रेति संकेतितोपि अरविंदाक्षः पद्मलोचनः श्रीकृष्णो नायाति। अत्रानागमने कारणं न वेद्म्यहं न जानामि॥ २३॥ मम संदेशप्रापको विप्रः सोपि अद्यापि नायाति। अपीति संभावनायाम्। अनवद्यो निर्दोष आत्मा मूर्त्तिर्यस्य स भगवान् किंचिन्मयि जुगुप्सितं निंद्यं धार्ष्ट्यादि दृष्ट्वा मम पाणिग्रहणे कृतोद्यमो नूनं नायाति हि युक्तम्॥ २४॥

**गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी**

'ततः पूर्वमेव रुक्मिण्यौत्सुक्यादचिन्तयत्' इत्याह—'भीष्मेति। वरारोहा भीष्मककन्या हरेरागमनमाकाङ्क्षान्ती तथा प्रेषितस्य द्विजस्य प्रत्यापत्तिं प्रत्यागमनं चापश्यन्ती तदा अचिन्तयत्॥ २२॥ चिन्तामेवाह—अहो इति चतुर्भिः। अल्पराधसो मन्दभाग्यायाः मे उद्वाहः त्रियामा रात्रिः तावन्मात्रान्तरितः अरविन्दाक्षः कृष्णोऽधुनापि नागच्छति, अत्रानागमने कारणमहं न वेद्मि॥ २३॥ स च मत्सन्देशहरो द्विजः सोप्यद्यापि नावर्तते। अपीति सम्भावनायाम्, नूनं निश्चितमेतत्, प्रथममागमनार्थं कृतोद्यमः अतो द्विजं न प्रस्थापितवान् प्रस्थापनावसरे तु मयि किञ्चित् जुगुप्सितं धार्ष्ट्यादि निदिन्तं दोषं दृष्ट्वा विचिन्त्य मत्पाणिग्रहणे मत्पाणिग्रहणार्थं कृष्णो नायाति। हि यस्मात् सः अनवद्यात्मा निर्दोषपूर्णगुणस्वरूपः। अतः प्रस्थानावसरे प्रत्याख्यातत्वाद्द्विजस्याप्यागमनविलम्बो जात इत्याशयः॥ २४॥

**अन्वितार्थप्रकाशिका**

भीष्मेति॥ वरौ आरोहौ ऊरू यस्याः सा भीष्मककन्या हरेरागमनं काङ्क्षन्ती तथा प्रेषितस्य द्विजस्य प्रत्यापत्तिं प्रत्यागमनं चापश्यन्ती सती तदा सूर्योदयात् पूर्वमेव औत्सुक्यवशात् अचिन्तयद्॥ २२॥ अहो इति चतुर्भिः। अल्पराधसो मन्दभाग्यायाः मे उद्वाहः त्रियामा अद्यतनी रात्रिः तावन्मात्रान्तरितः श्वस्तन्यां रात्रौ तु विवाहलग्नमेवेति भावः। अरविन्दाक्षः कृष्णोऽधुनापि नागच्छति अत्रानागमने कारणमहं न वेद्मि॥ २३॥ सोऽपीति अर्द्धम्॥ यश्च मत्सन्देशहरो द्विजः सोऽप्यद्यापि नावर्तते। यदि द्विज आगच्छेत्तदा प्राणरक्षणत्यागयोरेकं निश्चेष्यामीति भावः। अपीति संभावनायाम्। नूनं निश्चितम्। अनवद्यात्मा निर्दोषस्वरूपः प्रथममागमनार्थं कृतोद्यमः। अतो द्विजं सहैवानेतुं न प्रस्थापितवान्। प्रस्थानावसरे तु मयि किञ्चित्

जुगुप्सितं धाष्टर्यादिकं दोषं दृष्ट्वा विचिन्त्य प्रत्याचष्ट । मत्पाणिग्रहणे मत्पाणिग्रहणार्थं कृष्णो नायाति । यद्वा । अतः स द्विजोऽपि नूनमकृतार्थो मम तनुत्यागभयान्नायातीति ॥ २४ ॥

**श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्**

रुक्मिण्याः पूर्वोक्तां प्रीतिं पुनर्वर्णयति सार्द्धपंचभिः । भीष्मेत्यादिनावरारोहावरः । श्रेष्ठः । आरोहः । श्रीकृष्णप्राप्तिरूपं ऊर्ध्वभूम्यारोहणं यस्याः सा । प्रत्यापत्तिं प्रत्यागमनं ॥ २२ ॥ त्रियामारजनीतावन्मात्रः संजातोंतरोंऽतरायो यस्य सः अल्पराधसः अल्पभाग्यायाः मे ॥ २३ ॥ जुगुप्सितं निंदितं अपीति संदेहे ॥ २४ ॥

**भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी**

बलेनेति । भ्रातृस्नेहपरिप्लुतः श्रीकृष्णे स्नेहेन व्याप्तः, अत एव महता गजाश्वरथपत्तिभिः गजादिरूपेणेत्यर्थः । बलेन सैन्येन, सार्द्धं सह, त्वरित एव, कुण्डिनं प्रागात् । इति द्वयोरेकसम्बन्धः ॥ २१ ॥ पूर्वोक्तं रुक्मिण्यौत्सुक्यं वर्णयति सार्द्धपञ्चभिः । भीष्मेति । वरः श्रेष्ठ आरोहो नितम्बो यस्याः सा वरारोहा । भीष्मकन्या रुक्मिणी, हरेः आगमनं काङ्क्षन्ती आकाङ्क्षमाणा, द्विजस्य स्वप्रेषितस्य विप्रस्य, प्रत्यापत्तिं प्रत्यागमनं अपश्यन्ती सती, तदा अचिन्तयत् चिन्तयायास ॥ २२ ॥ अहो इति । अहो अल्पराधसो मन्दभाग्यायाः, मे मम उद्वाहो विवाहः, त्रियामा रात्रिस्तदन्तरितस्तावन्मात्रान्तरायः, वर्त्तते । अरविन्दाक्षः कमलनयनो भगवान्, अधुनापि, न आगच्छति । अत्र तदनागमने, कारणं हेतुं, अहं न वेद्मि हि ॥ २३ ॥ सोऽपीति । मत्पाणिग्रहणे निमित्ते, कृत उद्यम उद्योगो येन तथाभूतः कृष्णः, आवां सहैव प्रस्थाव इति द्विजमुक्त्वा तं रक्षितवान् । अतः यः मत्संदेशहरः मम संदेशं गृहीत्वा गतः सः द्विजः अपि, अद्यापि एतावत्कालपर्यन्तमपि, न आवर्त्तते नागच्छति । ततः प्रस्थानावसरे, अनवद्यात्मा निर्दोषस्वरूपः श्रीकृष्णः अपि, मयि, किंचित् जुगुप्सितं पत्रलेखनादि धाष्टर्यं, दृष्ट्वा विचार्य, इह नूनं नायाति । कथमन्यथोभावपि नायायातामिति भावः ॥ २४ ॥

**कृष्णप्रिया**

यद्यपि वे श्रीकृष्ण का बल-विक्रम जानते थे, फिर भी भ्रातृस्नेह से उनका हृदय भर आया; वे तुरंत ही हाथी, घोड़े, रथ और पैदलों की बड़ी भारी चतुरङ्गिणी सेना साथ लेकर कुण्डिनपुर के लिये चल पड़े ॥ २१ ॥ इधर, परमसुन्दरी रुक्मिणीजी भगवान् श्रीकृष्ण के शुभागमन की प्रतीक्षा कर रही थी । उन्होंने देखा श्रीकृष्ण की तो कौन कहे, अभी ब्राह्मणदेवता भी नहीं लौटे ! वे बड़ी चिन्ता में पड़ गयीं; सोचने लगीं ॥ २२ ॥ 'अहो ! अब मुझ अभागिनी के विवाह में केवल एक रात की देरी है । परन्तु मेरे जीवन सर्वस्व कमलनयन भगवान् अब भी नहीं पधारे ! इसका क्या कारण हो सकता है, कुछ निश्चय नहीं मालूम पड़ता । यही नहीं, मेरे सन्देश ले जाने वाले ब्राह्मणदेवता भी तो अभीतक नहीं लौटे ॥ २३ ॥ इसमें सन्देह नहीं कि भगवान् श्रीकृष्ण का स्वरूप परम शुद्ध है और विशुद्ध पुरुष ही उनसे प्रेम कर सकते हैं । उन्होंने मुझमें कुछ न कुछ बुराई देखी होगी, तभी तो मेरा हाथ पकड़ने के लिये—मुझे स्वीकार करने के लिये उद्यत होकर वे यहाँ नहीं पधार रहे हैं ? ॥ २४ ॥

**दुर्भगाया न मे धाता नानुकूलो महेश्वरः । देवीवा [1]विमुखा गौरी रुद्राणी[2]गिरिशा सती ॥ २५ ॥**
**एवं चिन्तयती बाला गोविन्दहृतमानसा । न्यमीलयत कालज्ञा नेत्रे चाश्रुकलाकुले ॥ २६ ॥**
**एवं वध्वाः प्रतीक्षन्त्या गोविन्दागमनं नृप । वाम ऊरुर्भुजो नेत्रमस्फुरन् [3]प्रियभाषिणः ॥ २७ ॥**
**अथ कृष्णविनिर्दिष्टः स एव द्विजसत्तमः । [4]अन्तःपुरचरीं देवीं राजपुत्रीं ददर्श ह ॥ २८ ॥**

**कर्दमक्षमा**

अन्वयः—दुर्भगायाः, मे, धाता, न, अनुकूलः, महेश्वरः, न, अनुकूलः, वा, देवी, गौरी, रुद्राणी, गिरिशा, सती, विमुखा किम् ? ॥ २५ ॥ एवम्, चिन्तयती, गोविन्दहृतमानसा, कालज्ञा, बाला, अश्रुकलाकुले, नेत्रे, न्यमीलयत् ॥ २६ ॥ हे नृप ? एवम्, गोविन्दागमनम्, प्रतीक्षन्त्याः, वध्वाः, प्रियभाषिणः, वाम, ऊरुः, वामः, भुजः, वामम्, नेत्रम्, अस्फुरन् ॥ २७ ॥ अथ, कृष्णविनिर्दिष्टः, स, एव, द्विजसत्तमः, अन्तःपुरचरीम्, देवीं, राजपुत्रीम्, ददर्श, ह ॥ २८ ॥

**श्रीधरस्वामिविरचिता भावार्थदीपिका**

यद्वा । ततो निर्गतोऽपि श्रीकृष्णो मद्दैववैमुख्यात्क्वचित्प्रतिबद्धो भवेदित्याह—दुर्भगाया इति ॥ २५ ॥ कालज्ञा नाऽद्यनापि गोविंदाऽऽगमनकाल इति मन्वाना किंचिदाश्वस्तचित्ता सती चिंतास्तब्धे लोचने निमीलितवतीत्यर्थः ॥ २६ ॥ प्रियभाषिणः प्रियसूचकाः ॥ २७ ॥ पुरोपवनं प्राप्तेन श्रीकृष्णेन विनिर्दिष्टः प्राप्तं मां कथयेत्यादिष्टः ॥ २८ ॥

---

१. विमुखी—वीर. । २. गिरिजा—श्रीधर. वंशी. जीव. वीर. विज. विश्व. । ३. शंसिनः—वीर. । ४. वरा—विज. ।

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

पक्षान्तरमाह—यद्वेति। कचित् स्थानांतरे। प्रतिबद्धः किंचित्कार्यप्रतिबन्धरुद्धः। दुर्भगाया मन्दभाग्यायाः। धाता ब्रह्मा कृष्णो वा "धाता हिरण्यगर्भे ना पालके धारकेऽपि च" इति धरणिः। महेश्वरो रुद्रः, कृष्णो वा। पुनः कथनं विषादवशात्। देवीति—देव्यस्त्वनंतास्तासां केत्यनिर्णयादाह—गौरीति। 'गौरोरुणे सिते पीते' इत्यनेकार्थात्तत्राप्यनिश्चय एवेति चेदाह—रुद्राणीति। सामान्यविवक्षायां गंगाया अपि तत्पत्नीत्वेन संशयाऽनिस्तार एवात आह—गिरिजेति। पुनरपि नद्या अपि गिरिजात्वेन तथात्वमेवाह—सतीति। पुनरपि 'सती साध्वी पतिव्रता' इति कोशात्संशयतादवस्थ्यं ग्रंथान्तरमानेनापनेयम्। तथाहि—"सती सती योगविसृष्टदेहा तां जन्मने शैलवधूं प्रपेदे" इति। शैलवधूर्मेनका 'गिरिजा मेनकात्मजा' इति, कोशात्। एतादृशविशेषणविशिष्टांविकेत्यर्थः। विमुखा पराङ्मुखा जातेत्यर्थः। पुनस्तस्यानवद्यात्मत्वेन दोषदर्शनमप्राप्य निजाल्पराधस्त्वमेव कारणं स्थापयति—दुर्भगाया इति। धाता मे नानुकूल इति—मत्प्रतिकूलत्वेन विधात्रैव कचिद्वर्त्मनि प्रतिग्रंथितः। तत्प्रातिकूल्ये हेतुर्न दृश्यते इत्यत आह—महेश्वरो वेति। कदाचिन्मत्पूजामप्राप्य कुपितः स्यादित्यर्थः। महेश्वर्यत्वात्तस्य मयि बालिकायामज्ञायां कोपो न युज्यत इति अनेन ब्रह्मरुद्रावपि तदर्थमनयोपास्यामानौ स्त इति गम्यते। अहो प्रत्यहमाराध्यमानाऽस्मत्कुलदेव्यपि गौरी विमुखा, हंतहंत कमपराधं मे सा प्राप्ता यन्मयि वैमुख्यं गता, तस्याः सांसर्गिकोयं वा दोष इत्याह—रुद्राणीति। तत्पतिः सर्वजनान्रोदयति, सा तु मां रोदयतु नाम। हन्त ममैतावद्वैक्लव्यं प्राणजिहासापर्यंतमपि दृष्ट्वा कथं न द्रवति, तत्र पैतृकं दोषं संभावयंत्याह—गिरिजा पापाणपुत्री कथं द्रवेदतः सा मद्देहं त्याजयिष्यत्येवेति निश्चिनोमि। यतः सती पूर्वजन्मनि स्वमपि देहं या त्यक्तवती तस्या अन्यदेहत्याजनं नाश्चर्यमिति भावः। 'गिरिशा' इति पाठे पर्वते शयाना मत्प्रार्थनां निद्राकुलत्वाद्वा न शृणोतीत्यर्थः॥ २५॥ एवमुक्तरीत्या। बालाऽस्वतंत्रा। आस्वस्थचित्ता स्थिरमानसा। स्तव्ये निष्ठुरे। गोविंदः गवामिन्द्रः श्रीमति गोकुले तादृशमाधुर्यतया वर्णितो यस्तेन हृतं मानसं यस्याः सा। अत एव बालाप्येतच्चिंतयंती अश्रूणां कला त्रिंदवस्तैराकुले व्याप्ते विवशे वाऽक्षिणी न्यमीलयत॥ २६॥ "वामांगस्फुरणं स्त्रीणामन्यथातो नृणां शुभम्" इति शाकुनिकाः। सूत्रशाटिकान्यायेन वध्वाः सन्निहितविवाहायाः कन्यायास्तस्याः प्रतीक्षंत्याः प्रतीक्षमाणाया ऊर्वादीनां यथोत्तरमूर्ध्वतापेक्षया प्रियभाषित्वे श्रेष्ठ्यम्। अस्फुरन्निति बहुत्वमेकदैव सर्वस्फुरणाभिप्रायेण। प्रियभाषिण इहैकशेषत्वेन क्लीवत्वे प्राप्तेऽपि पुंस्त्वमार्षम्॥ २७॥ अथांगस्फूर्त्युत्तरक्षणे। यो रुक्मिण्या प्रेषितः स एवेत्यर्थः। स एव योग्यत्वेन श्रीकृष्णेन निर्दिष्टो न त्वन्यः। संदेशस्तु—मां प्राप्तं कथय तामद्यैवान्वेष्यामीति प्रकारको ज्ञेयः। प्रथमं स एव द्विजसत्तमस्तां रुक्मिणीं ददर्श, न तु तं सेत्यर्थः। तत्र हेतुः—अंतःपुरचरीं विप्रवर्त्मनिरीक्षणाय तस्मिन्नितस्ततो भ्रमंतीम्, व्यग्रचित्तामित्यर्थः। कीदृशीम्—देवीं वैवाहिकालंकारमगलकर्मादिना द्योतमानाम्। हृ हर्षे। विप्रकर्तृकदर्शनस्य यत्प्रथमत्वं तदुल्लेखोसौ रुक्मिकौटिल्येन संप्रति स्वस्य तद्दर्शनं भवेन्न वेति पथि तांस्तान्सूचयति तदुल्लाससूचकत्वात्॥ २८॥

### श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी

पुनस्तस्याऽनवद्यात्मत्वेन दोषदर्शनमप्यमत्वा निजाल्पराधस्त्वमेव कारणं स्थापयति—दुर्भगाया इत्यर्द्धेन। अनेन ब्रह्मरुद्रावपि तदर्थमनयोपास्यमानौ स्त इति गम्यते धातृत्वान्महेश्वरत्वात् तदुपासनेन सुभगत्वमपि जायेतेत्याशङ्क्य पक्षान्तरमाह—देवी वेति। अस्मत्कुलदेव्यपि गौरी विमुखा तदुचितभजनाभावेनेति भावः। अतस्तस्याः परमापेक्ष्याया वैमुख्येनैव तावपि नानुकुलौ जाताविति गमितं तत्र तस्या धात्राप्यपेक्ष्यत्वे कारणमाह—रुद्राणीति। महेश्वरापेक्ष्यत्वे गिरिजा सतीति सती पूर्वं दक्षजा भूत्वा पुनर्गिरिजाऽभवत् सेत्यर्थः। पूर्वं तन्निन्दाश्रवणेन प्राणव्ययात् पश्चात्तदप्राप्त्या प्राणव्ययव्यवसायात्तदुचितमेवेति भावः गिरिशेति पाठे गिरौ शयनात्तादृशतप एव लक्ष्यते एवं बहुशो रुरोदेति ज्ञेयम्। अश्रुकलाकुले इति वक्ष्यमाणात्॥ २५॥ गोविन्दो गवामिन्द्रः श्रीमति गोकुले तादृशमाधुर्य्यतया वर्णितो यः तेन हृतं मानसं यस्याः सा अत एव बालाहि—एवमोदृशं चिन्तयन्ती एवमिति शोकभरेण तादृशमन्यदपि चिन्तयदिति द्योतयति—अश्रूणां कला विन्दवः तैराकुले व्याप्तं विवशे वा जलाकुलेति पाठेऽपि स एवार्थः। अन्यत्तैः तत्र नाधुनापीत्यादिकं देवयात्रायामेव कृतावसरत्वात्॥ २६॥ वध्वाः सन्निहितविवाहाया कन्यायास्तस्याः प्रतीक्षन्त्याः प्रतीक्षमाणायाः उर्वादीनां यथोत्तरमूर्ध्वतापेक्षया प्रियभाषित्वे श्रैष्ठ्यम् अस्फुरन्निति बहुत्वेनैकदैव सर्वैरन्वयः। सचैकदैव स्फुरणाभिप्रायेण प्रियभाषिण इत्येकशेषत्वेन क्लीबत्वे प्राप्तेऽपि पुंस्त्वमार्षम्॥ २७॥ स एव योगत्वान्निर्दिष्टः श्रीकृष्णेन नत्वन्यः निर्देशस्तु मां प्राप्तं कथय तामद्यैव नेष्यामीतिप्रकारको ज्ञेयः। प्रथमं स एव द्विजसत्तमस्तां रुक्मिणीं ददर्श नतु सा तमित्यर्थः। तत्र हेतुः। अन्तः पुरचरीं विप्रवर्त्मनिरीक्षणाय तस्मिन्नितस्ततो भ्रमन्तीं व्यग्रचित्तामित्यर्थः। कीदृशीं ददर्श? देवीं वैवाहिकालङ्कारमङ्गलकर्मादिना द्योतमानां ददर्श हृ हर्षेविप्रकर्तृकदर्शनस्य यत् प्रथमत्वं तदुल्लेखोऽसौ रुक्मिकौटिल्येन स्वस्य तद्दर्शनं सम्प्रति भवेन्नवेति पथि तान् तान् सूचयति तदुल्लाससूचकत्वात्॥ २८॥

**श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी**

दुर्भगाया दुष्टादृष्टायाः; अयं सर्व्वत्रैव हेतुः—धातेति महेश्वर इति च। तयोः सर्व्वविघ्नविनाशनशक्तिरभिप्रेता। देवी अस्मत्कुलेष्टदेवता गौरी, पूर्व्वं श्यामापि महातपसा गौरीत्वं प्राप्तेति श्रीशिवैकप्रीतिपरतोक्ता, किंवा काठिन्यादिदोपराहित्येन विशुद्धापि रुद्राणी पतिप्राप्त्यर्थकन्यार्त्तिभराद्यभिज्ञापि। तच्च तज्जन्मद्वयेऽपीत्याशयेनाह—गिरिजेत्यादि। 'गिरिशा' इति पाठे श्रीशिवसनामकत्वेन तद्भक्तवात्सल्यादिकमभिप्रेतम्; अतः सती सर्व्वगुणैरुत्तमापीति। एवं वहुशो रुरोदेति ज्ञेयम्, 'अश्रुकलाकुले' इति वक्ष्यमाणत्वात्॥ २५॥ गोविन्दो निजाशेषैश्वर्य्यविस्तारणार्थं पृथ्व्यामवतीर्णो भगवान्, अतएव तस्मिन् गतं मानसं यस्याः सा। हृतेति पाठेऽपि स एवार्थः। अतएव बालापि एवमीदृशं चिन्तयन्ती, एवमिति शोकभरेण तादृशमन्यदप्यचिन्तयदिति द्योतयति। अश्रूणां कला विन्दवो धारापाता वा, तैराकुले व्याप्ते विवशे वा; 'कुलाकुले' इति पाठेऽपि स एवार्थः। अन्यत्तैर्व्याख्यातम्। यद्वा, परमार्त्त्या स्वयमेव पतन्तीनामश्रुकलानां निरोधार्थं न्यमीलयत्। अन्यत् समानम्। यद्वा, कालज्ञापि परमार्त्त्या नेत्रे न्यमीलयत्, मूर्च्छितेवाभूदित्यर्थः। किंवा नेत्रे निमीलयितुमैच्छत् मुमुर्षुरभवदित्यर्थः। तथा चाग्रे षष्टितमाध्याये श्रीभगवानेव वक्ष्यति ( भा० १०।६०।५७ )—'दूतस्त्वयार्थलभने सुविविक्तमन्त्रः, प्रस्थापितो मयि चिरायति शून्यमेतत्। मत्वा जिहास इदमंग-मनन्ययोग्यम्' इति॥ २६॥ वध्वाः सन्निहितविवाहायाः कन्यायास्तस्याः, प्रतीक्षन्त्या अपेक्षमाणायाः, ऊर्व्वादीनां यथोत्तर-मूर्द्ध्वतापेक्षया प्रियभायित्वे श्रैष्ठ्यम्। अस्फुरन्निति वहुत्वं सद्योऽभीष्टसिद्धिसूचनार्थमेषामेकदैव स्फुरणात्; अतएव चकारा-प्रयोगश्च। हे नृपेति प्रहर्षोदयात्। पक्षान्तरे—एवं प्रतीक्षन्त्या मरणमिच्छन्त्या इत्यर्थः। स्पष्टतयात्र पूर्व्ववदनुक्तिरमंगलत्वात्, महार्त्तिप्रदत्वाच्च। गोविन्दागमनं प्रति प्रियभाषिणः॥ २७॥ अथ अनन्तरं सद्य एवेत्यर्थः। विशेषेण तामचैवानेष्यामीत्यादि-प्रतिज्ञापूर्व्वक-मधुरवचनाश्वासनादिना निर्द्दिष्टः सन्, द्विजेषु सन् उत्तमः, सर्व्वशास्त्राभिज्ञः, सत्तरः श्रीभगवद्भक्तः, सत्तमस्तत्प्रि-यतमजनस्नेहविषयः; अन्तःपुरं प्रविष्टोददर्शेति ज्ञेयम्। अन्तःपुरचरीं विप्रवर्त्मनिरीक्षणादिवैयग्र्येणेतस्ततो भ्रमन्तीं देवीं वैवाहिकालंकार-मंगलकर्म्मादिना द्योतमानाम्, यतो राजपुत्रीम्। ह हर्षे॥ २८॥

**श्रीमद्वीरराघवाचार्यकृता भागवतचन्द्रचन्द्रिका**

किंवा धाता तु विश्वक्रन्महेश्वरो दुर्भगाया मम नानूकूल एव किंवा रुद्रस्य स्त्री मम विमुखी प्रतिकूला एव॥ २५॥ एवमितीत्थं चिन्तयती बाला रुक्मिणी गोविन्देन हृतं मानसं यस्याः सा कालज्ञा नाधुनापि गोविन्दागमनकाल इति मन्वानाऽश्रु-विन्दुभिराकुले स्तब्धे लोचने न्यमीलयत निमीलितवती॥ २६॥ हे नृप! इत्थं गोविन्दागमनं गोविन्दागमनवार्त्ताहरं द्विजं तदागमनद्वारं च प्रतीक्षन्त्याः रुक्मिण्याः वामा उर्वादयः प्रियशंसिनः कृष्णागमनरूपप्रियसूचकाः अस्फुरन्सञ्चलितवन्त॥ २७॥ अथ ततः पूर्वमात्मना प्रेषितः स एव द्विजः श्रीकृष्णेनाऽऽदिष्टोऽन्तः पुरचरीं रुक्मिणीं ददर्श ह॥ २८॥

**श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली**

"गौरो ऽरुणे सिते पीते" इति गौरीशब्दस्याऽदन्तस्यानेकार्थवाचित्वेनानिश्चय इत्यतो रुद्राणीति सामान्यविवक्षायां गङ्गाया अपि तत्पत्नीत्वेन संशयानिस्तार इत्यतो गिरिजेति गिरिजा मेनकात्मजेत्यभिधानं नन्वभिधानस्य योगबलानुसारित्वेन प्रवृत्तर्नद्या अपि गिरिजात्वादित्यतः सतीति सती सती योगविसृष्टदेहा "तां जन्मना शैलवधूं प्रपेदे" इति ध्यानकालज्ञा॥ २६॥ वाम ऊरुरस्फुरत् नेत्रभुजावस्फुरतां प्रियभाषिणः अभीष्ट कार्यशंसिनः॥ २७–२८॥

**श्रीमज्जीवगोस्वामिकृतः बृहत्क्रमसन्दर्भः**

देवी वा विमुखीत्यादि देवी वा विमुखी यतः प्रेपितो विप्रोऽद्यापि नायात इति काऽसौ देवी? तत्राह—गौरी तस्याः कथं वैमुख्यं यतो रुद्रानुतोषत्वात् सापि तथा अस्ति वैमुख्ये कारणं गिरिजत्वमित्याह—गिरिजा गिरेः कठिनत्वात् नेत्याह, सतीति। सा प्रसिद्धा कोमलैव पत्यवमानदृष्ट्या सद्यः प्राणत्यागकारित्वात् सा परस्या अपि पतिलाभाय सम्मुखी, निजनाम्नामा-वृत्तौ समाधानम्॥ २५॥ एवञ्चिन्तयन्तीत्यादि, कालज्ञा त्रिकालज्ञा श्रीत्वात् श्रीगोविन्द आयास्यति नवेति जानामीति नेत्रे निमील्य चेतसि चिन्तयामासेत्यर्थः। अश्रुकलाकुले इति अद्यापि नायात इति पूर्वदुःखेनैवाश्रुजातं कालज्ञेति तदागमनं जानन्त्या-स्तदेवानन्दजमभूदिति अश्रुकलाभ्यां दुःखजानन्दजाभ्याम् आकुले नेत्रे न्यमीलयतेत्यर्थः॥ २६॥ एवमित्यादि एवं गोविन्दागमनं प्रतीक्षन्त्या प्रतीक्षमाणायाः वाम ऊरुर्वामभुजो वामनेत्रम् अस्फुरन् प्रियं श्रीकृष्णं तदागमनं वा भाषितुं शीलं येषाम्॥ २७॥ अथेत्यादि। राजपुत्रीं ददर्शेति ब्राह्मण एवाग्रे तां ददर्श तस्या निमीलितनयनत्वात्। कृतकृत्यतया परमानन्देनाविज्ञाप्यैवान्तःपुर-प्रवेशेन सर्वैरलक्षित इति ज्ञेयम्। तेन न केनापि विप्रोऽयमागत इति कथितपूर्वः सः॥ २८–४४॥

**श्रीनाथचक्रवर्तिपादविरचिता चैतन्यमतमञ्जूषा**

देवी वा विमुखीत्यादि। देवी वा विमुखी कासौ गौरी, तस्या वैमुख्यं संदिग्धम्, यतो रुद्राणी रुद्रभार्या तस्याशुतोष-त्वात्तद्भार्याया अपि तथात्वम्। नन्वसन्दिग्धमेव वैमुख्यं तस्या यतो गिरिजा गिरेः काठिन्यात् तदुद्भवाया अपि काठिन्यमुचितं

भवति ? तत्राह—सती पूर्वं सतीति विख्याता परमकोमलैव सा, यतः पत्यपमानदृष्ट्या स्वदेहमुत्सृष्टवती सा परस्या अपि पतिलाभाय सम्मुखी-भविष्यति प्रत्युत् गुरुरपि भवित्री ॥ २५ ॥ कालज्ञा—स्वयंलक्ष्मीत्वादायास्यति न वेति जानामीति चेतसि पर्यालोचयन्ती नेत्रे न्यमीलयत्, यद्यायाति, तदा देहो रक्षणीय एव, न तु वा सती शिष्यैव भविष्यामि । अश्रुकलाकुले इत्यधुनापि नायात इति दुःखेन पूर्वमश्रुजातम, कालज्ञेत्यायास्यतीत्यवेत्य ज्ञात्वा तदेवानन्दजमेवाभूत् ॥ २६ ॥ वाममुर्वादि च स्फुरत् साक्षित्वमदात् ॥ २७ ॥ अथेत्यादि । श्रीकृष्णो मयानीत इत्यानन्दवाहुल्येन तस्य वहुमानेन चान्यादृशो जातः, पश्चादवाधमन्तः पुरप्रवेशेन निलीयमानः । आदौ स एव तां ददर्श, पश्चात् सा तं ददर्श ॥ २८-४४ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

पुनरपि वहुतरं संशयानेवाह—दुर्भगाया इति । धातामे नानुकूल इति मत्प्रतिकूलेन विधात्रैव वा वर्त्मन्येव क्वचित् स प्रतिबन्धितः तत्प्रातिकूल्ये हेतुर्न दृश्यते इति महेश्वरो वा कदाचिन्मत्पूजामप्राप्य कुपितः महैश्वर्य्यात्तस्य मयि बालिकायां निकृष्टायामज्ञायां कोपो न युज्यत इत्यहो प्रत्यहमाराध्यमानापि गौरी देवी वा विमुखा हन्त हन्त कमपराधं मे सा प्राप्ता यन्मयि वैमुख्यं गता तस्याः सांसर्गिकोऽयं वा दोष इत्याह—रुद्राणीति । तत्पतिः सर्वजनान् रोदयेत् सा तु मामिति रोदयतु नाम हन्त ममैतावद्वैक्लव्यं प्राणजिहासापर्य्यन्तमपि दृष्ट्वा कथं न द्रवति ? तत्र पैत्रिकं दोषं सम्भावयन्त्याह—गिरिजा पाषाणपुत्री कथं द्रवेत् अतः सा मद्देहं त्याजयिष्यत्येवेति निश्चिनोमि यतः सती पूर्वजन्मनि स्वयमेव देहं तत्याजेति ॥ २५ ॥ कालज्ञेति भोश्चञ्चलचित्त ! सम्प्रति तनुत्यागोपायं मा कुरु यतो नाऽधुनापि तस्याऽऽगमनकालो व्यतीतस्तस्मात्तनुत्यागात् पूर्वं मधुना ध्यानेनैव तन्मुखमेकवारमवलोकयानि नाऽत्र त्वं मे प्रतिवधानेति नेत्रे न्यमीलयत मुद्रितवती ॥ २६ ॥ उ र्वादयंऽस्फुरन् प्रियभाषिणः शुभसूचकाः । एकशेषे सति पुंस्त्वमार्षम् ॥ २७ ॥ कृष्णेन विनिर्दिष्टः पुरोपवने प्राप्तं मां शीघ्रं कथयेत्यादिष्टः देवीं ध्यानप्राप्तकृष्णदर्शनानन्देन द्योतमानां ध्यानावेशोद्रेकादेव कृष्णापार्श्वम् गन्तुम् अन्तःपुराच्चरतीति तथा ताम् ॥ २८ ॥

### गूढार्थदीपनी

देवीनामनन्तत्वात् गौरीति तत्रापि गौरवर्णत्वेनानिश्चयात् रुद्राणीति तत्रापि गङ्गाप्रसक्तिरत आह गिरिजेति पुनरपि नद्याः प्रसक्तिरत आह सती नाम्नीति ॥ २५ ॥ कलाभिर्विन्दुभिः व्याप्ते । कालः आगमनकालं ॥ २६ ॥ वध्वा इति सन्निहित विवाहत्वात् । प्रियभाषिणः शुभसूचका कृष्णागमन सूचका । एतानि एकदैवाऽस्फुरन् ॥ २७ ॥ हेति हर्षे ॥ २८ ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

ननु, "अहो त्रियामान्तरितः" इत्यादिसार्द्धैस्त्रिभिः श्लोकैरनुवर्णिता चिन्ता सर्वेश्वरपत्न्यां सर्वज्ञायां सर्वदेवपूज्यायां कथं युज्येत ? इत्यत आह—एवमिति । गोविन्दहृतमानसा बाला भगवदिच्छयैव बालचेष्टां गता एवं चिन्तयती सती नेत्रे न्यमीलयत निमीलितवती ॥ २६ ॥ प्रियभाषिणः मनोरथसिद्धिसूचका ॥ २७ ॥ कृष्णविनिर्दिष्टः मां प्राप्तं कथयेत्येवं तेन विनिर्दिष्टः आदिष्टः ॥ २८ ॥

### श्रीसत्यधर्मकृता श्रीभागवतटिप्पणी

दुर्भगाया दुर्दैवाया धाता नानुकूलस्तथा महेश्वरोऽपि नानुकूलो देवी देवता रुद्राणी रुद्रभार्या । इन्द्रेत्याद्यानुक् । गिरिजा पार्वती दत्तोत्पत्तिमत्यस्यास्मादित्यनुवन्धद्वयबोधनार्थं विशेषणद्वयम् । विमुखा एवं चिन्तवती गौरी रुक्मवर्णेति चम्पकदाम-गौरीतिवच्चम्पकवर्णा गौरीस्यात्प्रसूता स्त्री गौरी शुद्धोभयान्वयेत्यनेकार्थध्वनिपदमञ्जर्यामुक्तोऽर्थो ज्ञेयः । बाला गोविन्दहृतमानसा सती अश्रुकलाकुले नेत्रे कालज्ञा उत्सवलवे कस्मात्किन्नयनयोनीरानयनमिति लोकाः शङ्केरन्निति कालज्ञा न्यमीलयत । गिरिजा स्वयं रुद्राणी सती मां स्ववत्पत्या योजयतीत्याक्रोशमपि विमुखेत्यनेनोङ्खयामासेति वा ॥२५-२६॥ वाम इति सद्विपरिणतं नेत्रपदे-नान्वेति । वामं नेत्रं वाम ऊरुर्वामो भुजश्चास्फुरन् अचलन् प्रियभाषिण इव तत्सूचका इत्यर्थः । प्रतीक्षन्त्याः प्रतीक्षमाणायाः ॥२७॥ अथैवं शकुनानन्तरं स एव स्वप्रेषित एवं कृष्णविनिर्दिष्टश्च द्विजसत्तमोऽन्तःपुरचरीं देवीं ददर्श । राजपुत्री शार्ङ्गवादिनोऽनन्तो । राज्ञो दुहिता राजपुत्री पुत्रवन्तो वा ॥ २८ ॥

### श्रीमद्वल्लभाचार्य्यकृता सुबोधिनी

ननु सदुष्टा अपि केचन परिगृह्णन्ते, न हि सर्वथा निर्दुष्टा भवन्ति । तथा सति कस्यापि परिग्रहो न स्यात्, इति चेत् । सत्यम् । तत्र अदृष्टादिकं प्रेरकं सम्पद्यते । मम तु तस्याप्यभाव इत्याह दुर्भगाया इति । पतिस्तु कृष्ण एव । अनागमने यथा-कथञ्चित् भ्रान्तापि भूत्वा तत्र गमिष्यामि, यतो ब्रह्मा, पतित्वेन भगवन्तमेव विचारितवान्, परं दुर्भगा भविष्यामि । अतो दुर्भगात्वसम्पादकभाग्यस्य विद्यमानत्वात् धातापि नानुकूलो जातः । आनुकूल्ये तु इदानीमेव भगवानागच्छेत् । अतो दुर्भगात्वमपि

न भवेत् । ननु सौभाग्यं शिवाधीनं पार्वत्यधीनं वा, तत्राह **नानुकूलो महेश्वर** इति । देवतारूपा दुर्गा वा विमुखा । अनाराधनात् । सा हि गौरी गुरोः पत्नी, गुरुरुपदिशति, तच्छक्तिर्भाग्यं सम्पादयतीति. तमेव सम्बन्धं प्रकयटति **रुद्राणी**ति । रुद्रो हि गुरुः, स्वयमपि गिरिशा **सती**ति पातिव्रत्यबलमपि तस्याः सूचितम् ॥ २५ ॥ एवं चिन्तया कियति काले अतीते चिन्ताधिक्ये उत्पत्स्यमाने मध्ये तद्विघातकं शकुनं जातमित्याह **एवं चिन्तयती**ति । बाला मुग्धा तत्रापि गोविन्देन हृतमानसा विह्वला सती, रोदने प्रादुर्भूते कृतमङ्गलायाः नदनुचितमिति अश्रुकलाकुले नेत्रे अमीलयत् । नन्वेतादृशेऽर्थे रोदनमुचितं तत्कथं निमीलनमिति चेत्तत्राह, **कालज्ञे**ति । सा ह्ययं शुभकाल इति जानाति, ग्रहानुगुण्यात् । अतो भगवानेवाऽऽयास्यतीति निश्चित्य तथा कृतवतीत्यर्थः ॥ २६ ॥ किञ्च, न केवलं कालज्ञानेनैव तूष्णीं स्थिता, किन्त्ववयवस्फुरणेन शकुनमपि प्राप्तवतीत्याह **एवं वध्वा** इति । वधूर्विवाहसमयस्था, सर्वतो रक्षायुक्ता वा गोविन्दागमनं प्रतीक्षन्त्याः । **वाम ऊरुर्भुज** इति । वामे ऊरुः भुजः नेत्रं चास्फुरन् । वामे अङ्गे ऊर्वादित्रयस्फुरणं स्त्रीणां शुभसूचकम् । **प्रियभाषिण** इति त्रयाणां विशेषणम् । शुभसूचका इत्यर्थः । अन्यतरस्यामिति नपुंस (के) कशेपो न भवति । अथवा प्रियभाषिणः सम्बन्धीनि एतानीति प्रियं श्रोष्यामीति भावः ॥ २७ ॥ ततस्तदनन्तरमेव ब्राह्मणः समागत इत्याह **अथे**ति । तस्य तत्समय एव समागमनं काकतालीयं चेत्, तदा भगवदर्थमेव तस्या आकाङ्क्षा निरूपितेति न स्यात्, अतस्तद्व्यावृत्त्यर्थं भगवानेव तस्मिन्समये 'ये त्यक्तलोकधर्माश्च मदर्थे' इति वाक्यात् प्रेषितवानित्याह **कृष्णविनिर्दिष्ट** इति । तद्विनिश्चयादुभयविधादपि विशेषेण समागत इति भिन्नप्रक्रमोऽप्यथशब्दः भगवतैव तथा कृत इति ज्ञापनार्थः । **द्विजसत्तम** इति अत्यन्तमन्तरङ्गो भगवद्भक्तः । अतस्तेन सर्वतापनिवृत्तिर्युक्तैव । द्विज एव मित्रम्, तथापि सन्देशहारी विशिष्टः, तथापि तत्र गतो भगवत्सख्यं प्राप्तः सत्तमो भवति । अत एवान्तःपुरचरीमपि राजपुत्रीमपि स्वयमेव ददर्श भगवच्चिन्तनाद्देवतैव तदावेशनाज्जाता यथा ब्राह्मणे धर्मत्रयम्, तथा तस्यामपि आध्यात्मिकादिधर्मत्रयं वक्तुं विशेषणत्रयम् हेत्याश्चर्ये ॥ २८ ॥

### श्रीसुबोधिनी-सारः

रुष्टो धाताथ वा देवीत्याह । दुर्दुष्टो भगो भाग्यं यस्यास्तस्या मे ममोपरि धाता विधिर्नानुकूलः पराङ्मुखोऽस्ति । महेश्वरो महादेवो वा नानुकूलः गिरिजा तुषाराचलपुत्री रुद्राणी गौरी सती देवी वा विमुखा रुष्टा ॥ २५ ॥ एवं चिंतयती ध्यायती गोविंदेन हृतं मानसं चित्तं यस्याः सा बाला कालज्ञा इदानीमपि समय इति मन्वाना अश्रूणां कलाभिराकुले व्याप्ते नेत्रे न्यमीलयत ध्याननिष्ठाभूत् ॥ २६ ॥ हे नृप एवं गोविंदस्यागमनं प्रतीक्षमाणाया वध्वाः रुक्मिण्या वाम ऊरुर्वामो भुजो वामं नेत्रम् इति प्रियभाषिणः हितसूचका अस्फुरन् ॥ २७ ॥ ततः किमित्यत आह । अथ मंगले कृष्णेन विनिर्दिष्टः प्रेषितः स एव ब्राह्मणवरोंतःपुरे चरतीति तथा तां देवीं राज्ञः पुत्रीं ददर्श ह स्फुटम् ॥ २८ ॥

### गोस्वामिश्रीगिरिधरलालकृताबालप्रबोधिनी

श्रीकृष्णस्यानागमने कारणान्तरं तर्कयति—दुर्भगाया इति । ब्रह्मादिप्रसादादेव निर्विघ्नं कार्यं भवति, अन्यथा तु विघ्नैः प्रतिहन्यते इति नियमः । तथा च कार्याभावेनेत्यनुमीयते । धाता ब्रह्मा, महेश्वरः महादेवश्च मे ममानुकूलः कार्यसाधको न भवति । वाकारश्चकारार्थे । तथा गौरी च मे विमुखा । तत्र हेतुमाह—दुर्भगाया इति । भाग्यहीनत्वात् इत्यर्थः ।। 'का सा गौरी' इत्यपेक्षायामाह—रुद्राणीति । 'तद्वैमुख्येऽपि किम्' इत्याशङ्क्याह—देवीति । 'दाम्पत्यार्थमुमां सतीम्' इत्युक्त्या पत्यर्थमाराध्यामित्यर्थः । तत्र हेतुमाह—सतीति । पतिव्रतेत्यर्थः । तत्पितृनाम सूचयन्त्याह—गिरिजेति । हिमवत्कन्येत्यर्थः ॥ २५ ॥ सा बाला रुक्मिणी एवं चिन्तयती कालज्ञा 'नाधुनापि कृष्णागमनकाल' इति मन्वाना अश्रूणां कलाभिर्बिन्दुभिराकुले लोचने न्यमीलयत् । चिन्ताया हेतुमाह—गोविन्दन हृतं मानसं यस्याः सेति ॥ २६ ॥ हे नृप! एवं गोविन्दस्यागमनं प्रतीक्षन्त्या वध्वा रुक्मिण्याः प्रियभाषिण्यः कृष्णागमनरूपप्रियसूचका वामा ऊर्वादयः अस्फुरन् ॥ २७ ॥ अथ कृष्णेन विनिर्दिष्टः प्रस्थापितः स एव सन्देशहरो द्विजसत्तमः अन्तःपुरचरीं देवीं दीप्यमानां राजपुत्रीं रुक्मिणीं ददर्श, हेति हर्षेण ॥ २८ ॥

### अन्वितार्थप्रकाशिका

यद्वा तत आगच्छन्नपि मद्भाग्यवैमुख्यात्प्रतिबद्धो भवेदित्याह—दुर्भगाया इति ॥ दुर्भगाया भाग्यहीनाया मे धाता ब्रह्मा महेश्वरः अनुकूलो नास्ति । देवी दाम्पत्यार्थमाराध्या रुद्राणी गिरिजा सती साध्वी गौरी पार्वती वा । इति चार्थे विमुखा । यद्वा । गिरिजा पाषाणपुत्री कथं दयां कुर्यात् इत्यादिदोषसम्भावना ॥ २५ ॥ एवमिति ॥ एवं चिन्तयती । नुमभावः आर्षः । गोविन्देनापहृतं मानसं यस्याः सा बाला रुक्मिणी कालज्ञानाधुनापि कृष्णागमनकाल इति मन्वाना किञ्चिदाश्वस्ता सती चिन्तास्तब्धे अश्रूणां कलाभिर्बिन्दुभिराकुले लोचने न्यमीलयत् ॥ २६ ॥ एवमिति । हे नृप ! एवं गोविन्दस्यागमनं प्रतीक्षन्त्या । शता आर्षः । वध्वाः आसन्नविवाहायाः रुक्मिण्याः प्रियभाषिणः कृष्णागमरूपप्रियसूचकाः । पुंशेष आर्षः । वामा ऊरुः भुजो नेत्रं चैतानि अस्फुरन् ॥ २७ ॥ अथेति ॥ अथ कृष्णेन विनिर्दिष्टः पुरोपवने प्राप्तं मां कथयेति सन्दिश्य प्रस्थापितः स एव सुनन्दनामा संदेशहरो द्विजसत्तमोऽन्तःपुरचरीं देवीं ध्यानप्राप्तश्रीकृष्णानन्देन दीप्यमानां राजपुत्रीं रुक्मिणीं ददर्श । हेति हर्षे ॥ २८ ॥

### श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्

धाता ब्रह्मा। अनुकूलो न भवति। तथा महेश्वरः शिवोपि ॥ २५ ॥ गिरिशा गिरिजेति पाठांतरे हिमाचलपुत्री। कालज्ञा गोविंदागमनकालज्ञानवती। अश्रुकलया व्याप्ते नेत्रे ॥ २६ ॥ प्रियभाषिणः प्रियसूचकाः ॥ २७ ॥ श्रीकृष्णेन विनिर्दिष्टः आगतं मां वदेत्याज्ञप्तः ॥ २८ ॥

### भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

दुर्भगाया इति। किं वा धाता विश्वकृत्, दुर्भगायाः मे मम, न अनुकूलः। किं वा महेश्वरः शिवः, नानुकूलः अथ वा; सती साध्वी, गिरिजा गौरी देवी, रुद्राणी, विमुखा प्रतिकूलास्ति। तदहं न वेद्मीति भावः ॥ २५ ॥ एवमिति। एवमित्थं, चिन्तयती, बाला षोडशाब्दवयाः रुक्मिणी, गोविन्देन हृतं, मानसं यस्याः सा, कालज्ञा नाऽधुनापि गोविन्दागमनकाल इति मन्वाना सती, अश्रूणां कलाभिर्बिन्दुभिराकुले स्तब्धे, नेत्रे च, न्यमीलयत निमीलितवती ॥ २६ ॥ एवमिति। हे नृप, एवमित्थं, गोविन्दागमनं तदागमनद्वारभूतं गोविन्दवार्त्ताहरं द्विजं च, प्रतीक्षन्त्या ईक्षमाणायाः, वध्वा रुक्मिण्याः, वामः ऊरुः, भुजः, नेत्रं, इत्येते प्रियभाषिणः प्रियभाषिणः प्रियशंसिनः श्रीकृष्णागमनरूपप्रियसूचकाः सन्त इत्यर्थः। अस्फुरन् संचरितवन्तः ॥ २७ ॥ अथेति। अथ ततः पूर्वं, सः एव यः पूर्वमात्मना प्रेषितः स एव, द्विजसत्तम उत्तमो ब्राह्मणः, कृष्णविनिर्दिष्टः प्राप्तं मां कथयेति श्रीकृष्णेनादिष्टः सन्, अन्तःपुरचरीं देवीं राजपुत्रीं, ह स्फुटं यथा तथा, ददर्श रुक्मिणीं विलोकयामासेत्यर्थः ॥ २८ ॥

### कृष्णप्रिया

ठीक है, मेरे भाग्य ही मन्द हैं! विधाता और भगवान् शङ्कर भी मेरे अनुकूल नहीं जान पड़ते। यह भी सम्भव है कि रुद्रपत्नी गिरिराजकुमारी सती पार्वतीजी मुझसे अप्रसन्न हों'' ॥ २५ ॥ परीक्षित्! रुक्मिणीजी इसी उधेड़-बुन में पड़ी हुई थीं। उनका सम्पूर्ण मन और उनके सारे मनोभाव भक्तमनचोर भगवान् ने चुरा लिये थे। उन्होंने उन्हीं को सोचते-सोचते 'अभी समय है' ऐसा समझकर अपने आँसूभरे नेत्र बन्द कर लिये ॥ २६ ॥ परीक्षित्! इस प्रकार रुक्मिणीजी भगवान् श्रीकृष्ण के शुभागमन की प्रतीक्षा कर रही थीं! उसी समय उनकी बायीं जाँघ, भुजा और नेत्र फड़कने लगे, जो प्रियतम के आगमन का प्रिय संवाद सूचित कर रहे थे ॥ २७ ॥ इतने में ही भगवान् श्रीकृष्ण के भेजे हुए वे ब्राह्मणदेवता आ गये और उन्होंने अन्तःपुर में राजकुमारी रुक्मिणी को इस प्रकार देखा, मानो कोई ध्यानमग्न देवी हो ॥ २८ ॥

**सा तं प्रहृष्टवदनमव्यग्रात्मगतिं सती। आलक्ष्य लक्षणाभिज्ञा [१]समपृच्छच्छुचिस्मिता ॥ २९ ॥**
**[२]तस्या आवेदयत् प्राप्तं [३]सरामं यदुनन्दनम्। उक्तं च सत्यवचनमात्मोपनयनं प्रति ॥ ३० ॥**
**तमागतं समाज्ञाय वैदर्भी हृष्टमानसा। न पश्यन्ती ब्राह्मणाय प्रियमन्यन्ननाम सा ॥ ३१ ॥**
**प्राप्तौ श्रुत्वा स्वदुहितुरुद्वाहप्रेक्षणोत्सुकौ। अभ्ययात्तूर्यघोषेण रामकृष्णौ समर्हणैः ॥ ३२ ॥**

### कर्दमक्षमा

अन्वयः—सा, लक्षणाभिज्ञा, सती, प्रहृष्टवदनम्, अव्यग्रात्मगतिम्, तम्, आलक्ष्य, शुचिस्मिता, समपृच्छत् ॥ २९ ॥ तस्यै, सरामम्, यदुनन्दनम्, प्राप्तम्, आवेदयत्, च, आत्मोपनयनम्, प्रति, उक्तम्, सत्यवचनम्, आवेदयत् ॥ ३० ॥ आगतम्, तम्, समाज्ञाय, हृष्टमानसा, सा, वैदर्भी, ब्राह्मणाय, अन्यत् प्रियम्, न पश्यन्ती, ननाम ॥ ३१ ॥ स्वदुहितुः, उद्वाहप्रेक्षणोत्सुकौ, रामकृष्णौ, प्राप्तौ, श्रुत्वा, तूर्यघोषेण, समर्हणैः, अभ्ययात् ॥ ३२ ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

न व्यग्रा आत्मनो देहस्य गतिर्यस्य तं लक्षणाभिज्ञा दूतस्य लक्षणं तत्तत्कार्यसूचकमभिजानातीति तथा ॥ २९ ॥ तस्यै प्राप्तं यदुनन्दनमावेदितवान्। तं च शशंस। आत्मोपनयनं प्रति आत्मना स्वयं श्रीकृष्णस्यानयनं प्रति तेन द्विजेन सत्यवचनं प्रोक्तमिति। आत्मनः प्राणेश्वरस्येति वा। यद्वा आत्मनस्तस्या उपनयनं प्रति श्रीकृष्णेन यदुक्तं सत्यवचनं तामानयिष्य इत्यादि तच्च शशंसावर्णयदित्यर्थः ॥ ३० ॥ तं श्रीकृष्णम्। अस्मिन्कार्ये सर्वस्वार्पणमप्यपर्याप्तमिति तदुचितं प्रियमपश्यन्ती तदा केवलं ननाम पश्चाद्बहु ददावित्यर्थः। यद्वा मां श्रियं ये नमन्ति ते तावत्सर्वसम्पदामास्पदं भवन्ति किं पुनर्मयि प्रणतायामिति ततोऽधिकमन्यत्प्रियमपश्यन्ती ननामेति ॥ ३१-३३ ॥

---

१. तम-विज. । २. आवेदयामास तस्यै सम्प्राप्तं-विज. । ३. शशंस-श्रीधर. वंशी. जीव. वीर. विश्व. शुक. ; सरामं-विज. ।

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

सा रुक्मिणी। तं स्वादिष्टं विप्रम्। व्यग्रा विगलिता। सती सदाचारा। सुनन्दविप्रोहं त्वत्प्रियपार्श्वादायातो मां पश्येत्युच्चैरुक्तवन्तं प्राप्तध्यानभंगा सापि तं ददर्शेत्याह—सेति। न व्यग्रा आत्मनो मनसो गतिर्यस्मात्तम्। विप्रस्य वदनहर्षदर्शनेन तस्या मनसो वैयाग्र्यं शांतमभूदित्यर्थः। यतो लक्षणं कार्यसिद्धिसूचकं दूतहर्षं स्ववामनेत्रादिस्फुरणं चाभिजानातीति सा। शुचि शुद्धं हर्षद्योतकं स्मितं यस्याः सा। पूर्वं तु दुःखेपि भावगोपनार्थं कपटस्मितवासीदिति भावः। सती सर्वगुणैरुत्कृष्टा। सम्यक्सर्वतः क्षेममित्यादरादिनापृच्छत्। यद्वा–आत्मनां जीवानां गतिं प्राप्यं श्रीकृष्णमपृच्छत्–स कुत्रास्ते किं वाऽवददित्येवं बहुशोवदत्। 'मैत्रेयादात्मनो गतिम्' इत्यादौ श्रीकृष्णस्यैवात्मगतिपदवाच्यत्वश्रवणात्। गतिमाश्रयं वा ''गतिः प्राप्ये दशायाञ्चाधारे गमनवेदने'' इति कोशात् ॥ २९ ॥ तस्यै रुक्मिण्यै। आवेदितवान्कथयामास। तत् श्रीकृष्णानयनम्। शशंसः कथितवान्। परात्मवाचकत्वमेवात्मपदस्य मुख्योर्थ इत्याश्रित्याह—प्राणेश्वरस्येति। कृष्णागमनं श्रुत्वाप्युद्विग्नां वीक्ष्याह–यद्वेति। इत्यर्थ इति—तद्धृद्गतं निखिलं संशयं नुनोदेति भावः। शशंस—यदुनन्दनं विप्रस्तुष्टाव, तस्य ब्रह्मण्यत्वसौशील्यभक्तजनपालकत्वादिदर्शनादित्यर्थः ॥ ३० ॥ अपर्याप्तमप्रतिक्रियम्। तदुचितं ब्राह्मणयोग्यम्। इत्यर्थ इति–पितृगृहस्थकन्यायाः स्वातन्त्र्याभावेनाधुना मम पार्श्वे किंचित्तव योग्य देयं नास्ति, स्वतन्त्रा दास्यामीति क्षमापनार्थं ननामेति भावः। ननु तस्याः साक्षाल्लक्ष्म्यवतारत्वात्कथं स्वातंत्र्याभाव इति चेदाह–यद्वेति। ततो मत्प्रणमतेः। सा रुक्मिणी। किमस्मै पारितोषिकं ददामीति विमृशन्ती केवलं ननाम, प्रणामादन्यत्समुचितमपश्यंती, प्रणत्या तु स्वस्य ऋणित्वमेव व्यंजयामास। ततश्च तदैव विप्रगृहं सार्वकालिकसर्वसम्पत्तिपूर्णं बभूव, महालक्ष्म्या अपि ऋणित्वादिति ज्ञेयम् ॥ ३१ ॥ अभ्ययादग्रे जगाम, आनयनायेत्यर्थः। स्वदुहितुरिह स्वशब्देन तस्य परमहर्षं द्योतयति। अयोग्यस्यापि स्वस्य कन्याविवाहप्रेक्षणे तयोरुत्सुकतयात्मनः परमधन्यत्वमननात्, एतां श्रीकृष्णोऽवश्यं हरिष्यतीत्येवंनिगूढभावाद्वासमर्हणैरुत्तमोद्वाहीयद्रव्यैः सहाभ्ययात्। भीष्मक इति शेषः ॥ ३२ ॥

### श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी

शुचिस्मिता हर्षोदयात् यतो लक्षणाभिज्ञा यतः सती सर्वगुणैरुत्तमा सम्यक् सर्वतः क्षेमं किमित्यादरादिना अपृच्छन् अन्यत्तैः। यद्वा, अव्यग्रा सती आत्मनो गतिं श्रीकृष्णमपृच्छत् स कुत्रास्ते किं वाऽवददित्येवंऽबहुशोऽपृच्छदित्यर्थः ॥२९॥ यदून्नन्दयतीति तथा तमिति अन्यत्तैः। तत्र तच्च शशंस तुष्टाव रुक्मिणीति शेषः। ब्राह्मण इति वा अत्र तेनेति स्वयमित्यर्थः। पक्षान्तरेत्ववर्णयद्ब्राह्मण इति शेषः। यद्वा, आवेदयदित्यस्यैव विवरणं प्राप्तमित्यादि उक्तञ्चेत्यादि च ॥ ३० ॥ समाज्ञाय दृढतया ज्ञात्वा सा तथा व्यग्रा न पश्यन्तीति नञो लोपाभावः आर्षः अन्यत्तैः। तत्र पश्चाद्बहुददावित्यर्थः। द्वारकायामनन्तविभववती सत्यनन्तमेव ददत्यासीदित्यर्थः। अत्र पूर्वं यन्न ननाम तत्त्वानन्देनैव विस्मृतमिति ज्ञेयम्। यद्वा, तदीयतादृगुपकारस्य प्रत्युपकारहेतुं प्रियं स्वाभिरुचितं वस्त्वन्यदपश्यन्ती स्वपराजयं मत्वा ननामैव केवलमित्यर्थः ॥ ३१ ॥ उद्वाहेति ताभ्याँ तथैव ख्यापितत्वात् तत्तु तेनापि तदुद्वाहप्रेक्षणाय सर्वेषामाकारितत्वात् एवं गुप्तत्वं पृतनापरीतत्वं च सिद्धयेदिति तादृशः श्रीरुक्मिणीसन्देशश्चानुगमितः स्वशब्देन तस्य परमहर्षं द्योतयति—अयोग्यस्यापि स्वस्य कन्याविवाहप्रेक्षणे तयोरुत्सुकतयात्मनः परमधन्यत्वमननात् एतां श्रीकृष्णोऽवश्यं हरिष्यत्येवेतिनिगूढभावाद्वा, समर्हणैरुत्तमपूजाद्रव्यैः सहाऽभ्ययात् भीष्मक इति शेषः ॥ ३२ ॥

### श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी

आलक्ष्य सम्यग् दृष्ट्वा, शुचिस्मिता हर्षोदयात्, यतो लक्षणाभिज्ञा, यतः सती सर्व्वगुणैरुत्तमा, सम्यक् सर्व्वतः क्षेमं किमित्यादरादिनाऽपृच्छत्, अन्यतैर्व्याख्यातम्। यद्वा, अव्यग्रा सती आत्मनो गतिं श्रीकृष्णम्, कुत्रास्ते किंवा अवददित्येवं बहुशोऽपृच्छत् ॥ २९ ॥ यदून् नन्दयतीति तथा तमिति यदवोऽपि सर्व्वे समागतप्राया इति भावः। सत्यवचनमित्यनेन सशपथप्रतिज्ञापूर्व्वकमुक्तमिति द्योतयति। अन्यत्तैर्व्याख्यातम्। यद्वा, यदुनन्दनमेव प्रति यत् स्वयमुक्तं तथात्मनस्तस्य उप समीपे तस्यानयनं प्रति सत्यवचनञ्च शशंस ॥ ३० ॥ समाज्ञाय विविधलक्षणैर्दृढतया ज्ञात्वा सा श्रीकृष्णैकपरा साक्षाल्लक्ष्मीः, स्वजन्मयोग्य विदर्भदेशे जाता शास्त्रादिभिर्विदर्भराजकन्यायाः श्रीकृष्णपत्नीत्वप्रतिपादनात्, अन्यत्तैर्व्याख्यातम्। यद्वा, नमनादन्यत् प्रियमपश्यन्ती, तस्य पूर्व्वोक्तया स्वलाभसन्तुष्ट्याऽन्यत्र नैरपेक्ष्यात्। यद्वा, अन्यत् प्रसिद्धार्थवर्गाद्भिन्नमनिर्व्वचनीयं किञ्चित्तस्य प्रियं पश्यन्ती न ननाम, श्रीकृष्णप्रेमपरमार्थाभीप्सोस्तस्य नतिमात्रेण प्रीत्यसिद्धेः, किन्तु श्रीकृष्णप्रेमैव ददावित्यर्थः, यतः सा श्रीभगवद्भक्त्यादिप्रदानसमर्था श्रीहरिप्रियेति ख्याता। तत्रापि श्रीकृष्णवन्निजाशेषविभूतिप्रकटनार्थं विदर्भेऽवतीर्णेत्यर्थः ॥ ३१ ॥ प्राप्तौ स्वपुरान्तिकमागतौ। किमर्थम्? तदाह—स्वेति। उद्वाहस्य प्रेक्षणे साक्षाद्दर्शने उत्सुकौ सन्तौ, शिशुपालेन सह विवाह निश्चयेन तन्मातुलेयत्वेन च तथैव लोकप्रतीतेः, अत एव श्रीकृष्णस्यैकाकितया निभृतं प्रागागमनम्, अन्यथा युद्धोद्यतेन यदुकुलेन सहागते सति हरणशंकासम्भवः, हरणाशंकायाञ्च सत्यां कन्यारक्षार्थं सन्नद्धरहितरुक्म्यादिवीरवर्गमध्यतः, किंवा बर्हिर्देव्यालयगमननिवारणे-

नान्तःपुरमध्यात्तद्बन्धुवधादिकं विना सुखेन हरणं न स्यात्, अत एव तस्याः सन्देशोऽपि (भा० १०।५२।४१) 'गुप्तः समेत्य' इति। विवाहप्रेक्षणार्थागमनाप्रतीतौ तु स्नेहभराकुलतयातिवेगेनागतेन प्राय एकदैव श्रीरामेण महागमनेन द्वयोरेकदैव श्रीभीष्मकेणाभिगमनादिना च श्रीकृष्णस्य तत्सन्देशानुसारेण गुप्ततया प्रागागमने वैयर्थ्यापत्तिरिति स्वशब्देन तस्य परमहर्षं द्योतयति। अयोग्यस्यापि स्वस्य कन्याविवाहप्रेक्षणे तयोरुत्सुकतया आत्मनः परमधन्यत्वममननात्, एतौ श्रीकृष्णो हरिष्यत्येवेति निगूढभावाच्च। श्रीकृष्णे प्रागागतेऽपि रामस्यादौ निर्देशः। संगतयोस्तयोर्युगपदभिगमनादौ तस्याग्रजत्वापेक्षया समर्हणैरुत्तमपूजाद्रव्यैः सहाभ्ययाद्-भीष्मक इति शेषः ॥ ३२ ॥

**श्रीसुदर्शनसूरिकृतशुकपक्षीयम्**

आवेदयत् वाक्यसम्प्राप्तं कथमित्यपेक्षायां यदुनन्दनं प्राप्तं शशंसेत्याह ॥३०॥ श्रुत्वेति भीष्मकं इत्यध्याहारः ॥३३-३५॥

**श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका**

सा रुक्मिणी न व्यग्रा आत्मनो देहस्य गतिर्यस्य प्रहृष्टं वदनं यस्य तं द्विजमालक्ष्य लक्षणाभिज्ञा दूतलक्षणतत्कार्याभिज्ञात्र एव शुचिस्मिता सती सम्यगपृच्छत् ॥ २९ ॥ तस्यै पृच्छन्त्यै रुक्मिण्यै रामेण सहितं कृष्णं प्राप्तमागतमावेदयत् शशंस आत्मोपयनं प्रति आत्मनो रुक्मिण्याः उपनयनं स्वसमीपप्रापणं प्रति भगवता यत्सत्यवचनमुक्तम्।

"तामानयिष्य उन्मथ्य राजन्यापसदान्मृधे। मत्परामनवद्याङ्गीमेधसोऽग्निशिखामिव" ॥

इत्युक्तं सत्यवचनं शशंसेत्यर्थः ॥ ३० ॥ ततस्तं श्रीकृष्णमागतं ज्ञात्वा हृष्टं मानसं यस्याः सा रुक्मिणी ब्राह्मणाय प्रत्युपकर्तुं प्रियं योग्यं वस्त्वपश्यन्ती केवलं ननाम ॥ ३१ ॥ प्राप्ताविति स्वदुहितुरुद्वाहप्रेक्षणे निमित्ते उत्सुकौ प्राप्तौ उद्वाहदिदृक्षया आगतावित्यर्थः। श्रुत्वा तूर्यघोषेण समर्हणैः पूजासाधनैश्च सह अभ्याजगाम ॥ ३२ ॥

**श्रीविजयध्वजतीर्थकृता पदरत्नावली**

अव्यग्रात्मगतिमसम्भ्रान्तनिजगमनम् ॥ २९-३४ ॥

**श्रीमज्जवगोस्वामिकृतः क्रमसन्दर्भः**

नमनादन्यत् प्रियमपश्यन्ती तस्य स्वयं भगवता पूर्ववर्णितया स्वलाभसन्तुष्ट्या नैरपेक्ष्यात् किन्तु स्वसाहाय्यमात्रापेक्षत्वात् ननाम तेन तद्वशोभावमेव स्वस्य द्योतयामासेत्यर्थः ॥ ३१-५० ॥

**श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी**

सुनन्दविप्रोऽहं त्वत् प्रियपार्श्वादायातो मां पश्येत्युच्चैरुक्तवन्तं प्राप्तध्यानभङ्गा सापि तं ददर्शेत्याह—सेति। न व्यग्रा आत्मनो मनसो गतिर्यस्मात्तं विप्रस्य वदनहर्षदर्शनेन तस्या मनसो वैयग्र्यं शान्तमभूदित्यर्थः। यतो लक्षणाभिज्ञा लक्षणं कार्य्यसिद्धिसूचकं दूतहर्षं स्ववामनेत्रादिस्पन्दनम् अभिजानातीति सा शुचि शुद्धं हर्षद्योतकं स्मितं यस्याः सा पूर्वं तु दुःखेऽपि भावगोपनार्थं कपटस्मितैवासीदिति भावः ॥ २९ ॥ प्राप्तं यदुनन्दनं तस्यै आवेदयत् आत्मनः स्वस्य उपनयनं समीपप्रापणं प्रति यत् सत्यवचनमुक्तं कृष्णेन "तामानयिष्य उन्मथ्य" इत्यादि शशंस ॥ ३० ॥ किमस्मै पारितोषिकं ददामीति विमृशन्ती केवलं ननाम यतः प्रणामादन्यत् सर्वस्वार्पणमपि प्रियमस्मिन्नर्थे समुचितं न पश्यन्ती प्रणत्या तु स्वस्य ऋणित्वमेव व्यञ्जयामास ततश्च तदैवविप्रस्य गृहं सार्वकालिकसर्वसम्पत्तिपूर्णं बभूव महालक्ष्म्या अपि ऋणित्वादिति ज्ञेयम् ॥ ३१-३३ ॥

**गूढार्थदीपिनी**

सा रुक्मिणी। अव्यग्रा स्वस्था आत्मनो देहस्य मनसो वा गतिर्यस्य। यद्वा। अव्यग्रा सती आत्मनो गतिं श्रीकृष्णम् आलक्ष्य ॥ २९ ॥ प्राप्तं कृष्णं तस्यै आवेदयत्। तथा आत्मनो रुक्मिण्या आनयनं प्रति यदुक्तं तच्च शशंसेत्यन्वयः ॥ ३० ॥ तं श्रीकृष्णम् प्रियम् एतत्कार्योचित्तं प्रियं वस्तु पारितोपिकम् अपश्यन्ती सती केवलं ननाम। तेन विप्रगृहं तु तदैव सम्पत्तिपूर्णमभूत् प्रणत्या च तस्या ऋणित्वमेव जातमिति व्यञ्जितम् ॥ ३१ ॥ समर्हणैः पूजनद्रव्यैः सह अभ्ययात् संमुखमाजगाम ॥ ३२ ॥

**श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः**

न व्यग्रा आत्मगतिर्यस्य तं लक्षणं साधितार्थस्य दूतस्य प्रहृष्टत्वादि अभिजानातीति तथा ॥ २९ ॥ तस्यै प्राप्तं यदुनन्दनम् आवेदयत् आत्मनः श्रीरुक्मिण्याः उपनयनं प्रति समीपानयनं प्रति यदुनन्दनेन यदुक्तं सत्यवचनम् "तामानयिष्ये उन्मथ्य" इत्यादि तच्च शशंस ॥ ३० ॥ तं श्रीकृष्णं समाज्ञाय हृष्टं मानसं यस्याः सा अन्यत् प्रियं न पश्यन्ती केवलं ननाम "यस्याः स्ववीक्षणकृतेऽन्यसुरप्रयासः" सा यदा यं प्रति प्रणता भवेत्तस्य किं वर्ण्यते भाग्यमिति भावः ॥३१॥ तूर्यघोषेण समर्हणैः पूजासाधनैश्च सहाऽभ्ययात् ॥ ३२-३३ ॥

### श्रीसत्यधर्मकृता श्रीभागवतटिप्पणी

विप्रमुखमुखनिरीक्षण एव स्वसुखमाप्तमिति मन्वाना तन्वाङ्गी तमप्राक्षीद्विप्रमिति प्राह । सेति । प्रहृष्टवदनमव्यग्रं यथा तथाऽऽत्मगतिरात्मानं प्रतिगतिर्यस्य तमालक्ष्य लक्षणानि जानातीति शुचिस्मिता तमपृच्छत् ॥ २९ ॥ का वार्तेति पृष्टः स तस्यै सम्प्राप्तं यदुनन्दनमावेदयामास । न ह्यागमनमात्रेण प्रयोजनं जातमित्यत आह । आत्मोपनयनं प्रत्यात्मनस्तवोपनयनं प्रति सत्यवचनं शपथः सत्यं तत्पूर्वकं वचनम् । उक्तं चावेदयामास । सत्यं च शपथे तथ्य इति विश्वः ॥ ३० ॥ तं कृष्णं समाज्ञाय ज्ञात्वा प्रियं ब्राह्मणायान्यद्दातुमेतदुपकृतिप्रत्युपकृतिरूपमपश्यन्ती सा ननाम ॥ ३१ ॥ स्वदुहितुर्लोकदृष्ट्या । वस्तुतस्तु सु अदुहितुरिति तदर्थः । उद्वाहप्रेक्षणौत्सुकौ तत्रैकः कन्योद्वहनोत्सुको रथोपर्यारोप्य नेतुं समग्रममालोकनोत्सुक एकस्तद्दर्शनोत्सुक इति विवेकः । समर्हणैरर्ह्यं ते एभिरिति तत्साधनैस्तूर्यघोषेण सहाभ्ययात् ॥ ३२ ॥

### श्रीमद्वल्लभाचार्यकृता सुबोधिनी

ततो यज्जातं तदाह—**सा तमि**ति । कुत्र मानसचिन्तनं, कुत्र पदार्थोपस्थितिरिति तादृशं दुर्लभमिव सा तं दृष्ट्वा समपृच्छत् नन्विङ्गितज्ञानेनैव कथं न निश्चयः ? तत्राह—**प्रहृष्टवदन**मिति । ब्राह्मणे धर्मद्वयं दृष्ट्वा विवाहस्वीकारः समागमनं च लक्षितवती मुखहर्षात्स्वीकारः, शनैरागमनात्कर्तव्यान्तराभावसूचकं समागमनमिति तस्या अपि लक्षणज्ञाने हेतुद्वयमाह—**सती लक्षणाभिज्ञे**ति । पातिव्रत्यधर्मे शास्त्रानुसारेणापि ज्ञानम् तर्कितमेतन्न प्रमितमिति प्रमानिरूपणार्थे आलक्ष्यापि समपृच्छत् शुद्धं स्मितमिति हर्षात् मन्दहासः । स च ब्राह्मणं प्रति शुद्ध एव । अथवा इष्टपूरणात् लौकिकवत् स्मितं भविष्यतीति तद्व्यावृत्त्यर्थं शुद्धता निरूपिता ॥ २९ ॥ ततो ब्राह्मणस्य वचनद्वयमाह—**तस्या आवेदय**दिति । प्राप्तं भगवन्तमावेदयत् अन्यार्थमप्यागमनं सम्भवतीति तन्निवृत्त्यर्थं उक्तं च आवेदयत् **सराम**मिति कलहेऽपि शङ्काभावाय तन्मनोरथपूर्त्यै व **यदुनन्दन**मिति, तथा करणे भक्तकृपालुत्वं हेतुरुक्तः यो हि पितुराज्ञोल्लङ्घनकर्तारं भक्तत्वाद्यदुमानन्दयति, तेनैव भावेन त्वामप्यानन्दयति 'स्त्रीषु नर्मविवाहे चे'ति वाक्यात् कदाचिदसत्यमपि वदेत् तद्व्यावृत्त्यर्थमाह—**सत्यवचन**मिति । चकारात्स्वाभिप्रायनिवेदनमपि यद्भगवता कृतं तदप्युक्तत्वात्, न केवलमुद्वाहार्थम्, किन्तु उपनयनं प्रति समीपे नेष्यामीति यथाभिलषितसिद्धिः उपगमनपदेऽपि स एवार्थः ॥ ३० ॥ ततः पूर्णमनोरथा तस्मै वरं दत्तवतीत्याह—**तमागत**मिति । भगवति समागते स्वयं भगवदीयैवेति सर्वं भगवति समर्पितमिति वैदर्भीत्वादेव न कर्म ब्राह्मणस्य सफलं करिष्यति **हृष्टमानसे**ति स्वार्थं न किञ्चित्प्रार्थितवती, येन किञ्चिद्दत्वापि तुष्टो भवेत् मोक्षदातारमपि यो दत्तवान्, तस्मै किं देयमिति वैभवमपि न देयमित्याह—**ब्राह्मणाये**ति । अत एवान्यत्प्रियं नास्तीति सा ननाम नमोनम इत्येतावत्सदुपशिक्षितनीति यत्र न कोऽपि प्रतीकारः, तत्र नमस्कार इति भगवांश्च ब्रह्मण्यदेव इति ब्राह्मणनमस्कारो भगवद्भार्याया युक्त एव अनेन देयाभावे सर्वत्रैवमेव कर्तव्यमिति साधनं निरूपितम् ॥ ३१ ॥ भगवान् नगरमध्ये समागतः, ब्राह्मणोऽन्तःपुरे ततस्समागतयोः विवाहात्पूर्वकर्तव्यं वक्तव्यमिति, पितुरदाने हरणं चायुक्तमिति, प्रसह्य हरणेऽपि मातापित्रोर्दानमावश्यकमिति. अन्यथा न धर्म्यः स्यादिति पितुर्दानार्थं गोप्यार्थं च तादृशीं कथामाह—**प्राप्तौ श्रुत्वे**ति त्रिभिः । स्वदुहितुरुद्वाहप्रेक्षणे सम्बन्धित्वादुत्सुकौ समागताविति लोके भ्रममुत्पाद्य त्वयं दातुमेवागतः स्वदुहितुः एतौ प्राप्तौ प्रकर्षेणाप्तौ, एकः पतिरपरो भावुक इति एकस्तूद्वाहोत्सुकः, अपरः प्रेक्षणोत्सुक इति । अत एव अनाकारितावप्यागतौ लोकेऽप्युत्सुकानां नाकारणम् तथाप्यग्रिमकृत्यं कर्तव्यमिति **तूर्यघोषेण** समर्हणैः सह आभिमुख्येन गतः । शिशुपाले तु 'तं वै विदर्भाधिपति'रिति अग्रे गमनम् । ततः आभिमुख्येन सम्मुखमागतस्य यादृशी पूजा, यथाकथञ्चिरस्थापनमिति, तथा अग्रे सर्वेषामेव वक्ष्यति । मध्ये तु भगवतो विशेषाकारेण यथा वराय क्रियते । गमन एव वाद्यसततिः वरतूजार्थं सम्पादितद्रव्यैः सह ॥ ३२ ॥

### श्रीसुबोधिनी—सारः

न व्यग्रा सुस्थाऽऽत्मनो देहस्य गतिर्यस्य तं विकसितमुखं तं विप्रमालक्ष्य मंदस्मिता लक्षणमभिजानातीति साऽपृच्छत् ॥ २९ ॥ तस्यै रुक्मिण्यै प्राप्तं यदुनंदनं श्रीकृष्णं निवेदितवान् । आत्मनस्तस्या अर्द्धाग्यास्तवोपनयनं विवाहं प्रति उक्तं तामानयिष्य इति सत्यवचनं च शशंसोवाच ॥ ३० ॥ आगतं तं श्रीकृष्णं संबुध्य हृष्टचित्ता वैदर्भी सा रुक्मिणी ब्राह्मणाय दातुमन्यद्वस्तुजातं न पश्यंती सती स्वयं ननाम । तदधीनतानेन सूचिता ॥ ३१ ॥ स्वस्य दुहितुः पुत्र्या विवाहस्य प्रेक्षणे दर्शने उत्सुको ययोस्तौ रामकृष्णौ प्राप्तौ श्रुत्वार्ह्णैः पूजोपकरणैस्सह तूर्यनादेन सन्मुखमागमत् ॥ ३२ ॥

### विवरणटिप्पणी

**तमागत**मित्यत्र । **वैदर्भीत्वादेवेति** । ब्राह्मणस्य कर्म तत्फलंपश्चादिदानेन सफलं करिष्यतीति । न वैदर्भीत्वात्कर्मसम्बन्धाभावेन कर्मफलत्वेन पश्चादिकं न दास्यतीत्यर्थः । **स्वार्थ**मिति । हृष्टमानसत्वेनान्यापेक्षाभावात्स्वार्थमभ्युदयादिकं किञ्चिन्न प्रार्थितवती । येन तदल्पं किञ्चिदाशीर्वादेन दत्वा तद्दक्षिणात्वेन द्रव्यप्राप्तिनिश्चयाद्ब्राह्मणस्तुष्टो भवेत् । भगवदानयनपक्षे तु तादृशदातुर्दक्षिणात्वेन किं देयं भवेदित्यर्थः । **वैभवमपी**ति । ग्रामाद्याधिपत्यं वैभवम् । **तत्** 'नराणां च नराधिप'मितिवाक्याद्भगवद्विभूतित्वेन कथञ्चिद्देयं भवेत्, परं ब्राह्मणत्वात्तदपि नापेक्षत इत्यर्थः ।

### गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

सा रुक्मिणी तं द्विजमालक्ष्य शुचिस्मिता सती पर्यपृच्छत्। शुचिस्मितत्वे हेतुमाह—लक्षणाभिज्ञेति। कार्यं कृतवतोऽकृतवतश्च दूतस्य लक्षणाभिज्ञा, 'अतस्तेन कार्यं कृतम्' इतिं ज्ञात्वा हर्षेण प्रहसितमुखी जातेत्यर्थः। तल्लक्षणमाह—प्रहृष्टं वदनं यस्य तमि। न व्यग्रा न विकृता आत्मनो देहस्य गतिश्चेष्टा यस्य तम्। कार्यासिद्धावेतद्वैपरीत्यं स्यादित्याशयः। तल्लक्षणज्ञाने हेतुमाह—'सतीति'। सत्यप्रतिज्ञावती भगवदेकपरतेत्यर्थः॥ २९॥ तस्यै रुक्मिण्यै सरामं रामेण सहितं यदुनन्दनं कृष्णं प्राप्तमागतमावेदयत् शशंस, तथाऽऽत्मनः रुक्मिण्या उपनयनं प्रति ''तामानयिष्ये उन्मथ्य राजन्यापसदान् मृधे'' इति यद्भगवता उक्तं सत्यंवचनं तच्चावेदयत्। 'सरामस्' इत्यत्र 'शशंस' इति पाठान्तरम्॥ ३०॥ तं श्रीकृष्णमागतं समाज्ञाय हृष्टं मानसं यस्याः सा वैदर्भी रुक्मिणी 'परमफलभूतं परमानन्दविग्रहं कृष्णमानीय समर्पितवतेऽस्मै ब्राह्मणाय किं पारितोषिकं ददामि' इति विमृशती प्रणामादन्यत्सर्वं स्वार्पणमपि तस्य प्रियमपश्यन्ती केवलं ननाम प्रणत्यात्मनस्तद्दृणित्वमेव व्यञ्जयामास। तस्य प्रियमपश्यन्तीत्यनेन तस्यापि सर्वतो वैराग्यं भगवदेकपरत्वं च सूचितम्। धनादिसम्पत्तिस्तु तस्य तत्प्रणामेन भविष्यत्येव, तस्या लक्ष्म्यवतारत्वात्॥ ३१॥ स्वदुहितुरुद्वाहप्रेक्षणे उत्सुकौ रामकृष्णौ प्राप्तौ आगतौ श्रुत्वा भीष्मकः तूर्यघोषेण समर्हणैः पूजासाधनैश्च सह अभ्ययात् तत्सम्मुखमाजगाम॥ ३२॥

### अन्वितार्थप्रकाशिका

सेति॥ सती लक्षणाभिज्ञा कार्यं कृतवतोऽकृतवतश्च दूतस्य लक्षणानामभिज्ञा सा रुक्मिणी प्रहृष्टं वदनं यस्येति न व्यग्रा न विकृता आत्मनो देहस्य गतिश्चेष्टा यस्य तं कार्यासिद्धावेतद्वैपरीत्यं स्यादित्याशयः। ब्राह्मणमालक्ष्य शुचिस्मिता सती समपृच्छत्। यद्वा। दूतलक्षणज्ञत्वात् अव्यग्रा सती आत्मनो गतिं कृष्णमपृच्छत्। स क्वास्ते किं वाऽवददित्याद्यपृच्छत्॥ २९॥ तस्यै इति॥ तस्यै रुक्मिण्यै यदुनन्दनं कृष्णं प्राप्तमागतमावेदयत्। तथात्मनः रुक्मिण्या उपनयनं समीपप्रापणं प्रति ''तामानयिष्ये उन्मथ्य राजन्यापसदान्मृधे'' इति यद्भगवता उक्तं सत्यवचनं तच्च शशंस। शशंसेत्यत्र सराममिति पाठान्तरम्॥३०॥ तमिति। तं श्रीकृष्णमागतं समाज्ञाय हृष्टं मानसं यस्याः सा वैदर्भी रुक्मिणी परमफलभूतं परमानन्दविग्रहं कृष्णमानीय समर्पितवतेऽस्मै ब्राह्मणाय किं पारितोषिकं ददामीति विमृशती प्राणेभ्योऽन्यत्सर्वस्वार्पणमपि तस्य प्रियमपश्यन्ती ये मां नमन्ति ते सर्वसम्पद्भाजो भवन्ति किं पुनर्मयि प्रणतायामिति विचार्य च केवलं ननाम प्रणत्यात्मनस्तद्दृणित्वं तदुपकारभाराक्रान्तत्वं च व्यञ्जयामास। ब्राह्मणोऽपि सन्तोषशीलः किमपि नाकाङ्क्षत्। लक्ष्म्यवतारभूतरुक्मिणीप्रणामेन तस्य सम्पत्तिरवश्यं बभूव। लक्ष्म्या अपि तद्दृणित्वादिति सूचितमेव॥ ३१॥ प्राप्ताविति। स्वदुहितुरुद्वाहप्रेक्षणे उत्सुकौ रामकृष्णौ प्राप्तौ आगतौ श्रुत्वा भीष्मकः तूर्यघोषेण समर्हणैः पूजासाधनैश्च सह अभ्ययात् तत्संमुखमाजगाम॥ ३२॥

### श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्

अव्यग्रा अव्याकुला आत्मनः शरीरस्य गतिर्गमनं। यस्य तं दूतलक्षणाभिज्ञासा अपृच्छत्। स अत्रायास्यति वानायास्यति किं वाऽवददित्य प्राक्षीत्॥ २९॥ तस्यै रुक्मिण्यै प्राप्तं यदुनंदनं आवेदयत्। आत्मनो रुक्मिण्याः उपयनं पाणिग्रहणाय स्वपुरे आनयनं प्रति श्रीकृष्णेन यत् सत्यं वचनमुक्तं तामानयिष्ये इत्यादित। तच्च शशंस॥ ३०॥ ब्राह्मणाय बहुलं धनं दत्त्वाऽपि श्रीकृष्णादन्यत् प्रियमभीष्टं वस्तुसानपश्यंती सती ननाम॥ ३१॥ समर्ह्णैः पूजासामग्रीभिः सह तूर्यघोषेण च सह रामकृष्णयोः सन्मुखमभ्ययादगच्छत् भीष्मक इति शेषः॥ ३२-३३॥

### भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

सेति। सा रुक्मिणी, न व्यग्रा आत्मनो देहस्य गतिर्यस्य तं प्रहृष्टं वदनं मुखं यस्य तं, तं द्विजं, आलक्ष्य निरीक्ष्य, लक्षणाभिज्ञा दूतलक्षणतत्कार्याभिज्ञा, अत एव, शुचिस्मिता सती, समपृच्छत्॥ २९॥ तस्या इति। तस्यै स्वं भगवदागमनमनागमनादिकं पृच्छन्त्यै रुक्मिण्यै, स द्विजः, प्राप्तं, यदुनन्दनं श्रीकृष्णं, आवेदयत्। आत्मनः स्वस्याः उपनयनं परिणयनं प्रति, भगवता 'तामानयिष्य उन्मथ्य राजन्यापसदान् मृधे' इति यत् सत्यवचनं उक्तं तच्च, शशंसावर्णयत्॥ ३०॥ तमिति। ततः, सा वैदर्भी रुक्मिणी, तं श्रीकृष्णं आगतं, समाज्ञाय सम्यक् ज्ञात्वा, हृष्टं मानसं यस्या सा तथाभूता ब्राह्मणाय ब्राह्मणं प्रत्युपकर्तुं, अन्यत् प्रणामविधानत इतरत्, प्रियं न पश्यन्ती अस्मिन् कार्ये सर्वस्वार्पणमपि अपर्याप्तमिति तदुचितं प्रणामतोऽन्यदनिरीक्षमाणा सतीत्यर्थः। ननाम। पश्चाद्बहु ददावित्यर्थः। यद्वा, मां श्रियं ये नमन्ति, ते तावत् सर्वसंपदामास्पदं भवन्ति, किं पुनर्मयि प्रणतायामिति ज्ञात्वा स्वयं ननामेति॥ ३१॥ प्राप्ताविति। भीष्मकः, रामकृष्णौ, स्वदुहितुः स्वपुत्र्याः, उद्वाहस्य प्रेक्षणं तस्मिन्निमित्ते उत्सुकौ सन्तौ प्राप्तौ। उद्वाहदिदृक्षया समायातावित्यर्थः। श्रुत्वा, तूर्यघोषेण वादित्रध्वनिना, समर्हणैः पूजासाधनैश्च सह, अभ्ययात्तौ प्रत्यभ्याजगाम॥ ३२॥

### कृष्णप्रिया

सती रुक्मिणीजी ने देखा ब्राह्मणदेवता का मुख प्रफुल्लित है। उनके मन और चेहरे पर किसी प्रकार की घबड़ाहट नहीं है। वे उन्हें देखकर लक्षणों से ही समझ गयीं कि भगवान् श्रीकृष्ण आ गये। फिर प्रसन्नता से पूछा॥ २९॥ तब ब्राह्मण-देवता ने निवेदन किया कि 'भगवान् श्रीकृष्ण यहाँ पधार गये हैं।' और उनकी भूरि-भूरि प्रशंसा की। यह बतलाया कि 'राजकुमारीजी! आपको ले जाने की उन्होंने सत्य प्रतिज्ञा की है'॥ ३०॥ भगवान् के शुभ-आगमन का समाचार सुनकर रुक्मिणीजी का हृदय आनन्दातिरेक से भर गया। उन्होंने इसके बदले में ब्राह्मण के लिये भगवान् के अतिरिक्त और कुछ प्रिय न देखकर उन्होंने केवल नमस्कार कर लिया। अर्थात् जगत् की समग्र लक्ष्मी ब्राह्मणदेवता को सौंप दी।। ३१॥ राजा भीष्मक ने सुना कि भगवान् श्रीकृष्ण और बलरामजी मेरी कन्या का विवाह देखने के लिये उत्सुकतावश यहाँ पधारे हैं। तब तुरही, भेरी आदि बाजे बजवाते हुए पूजाकी सामग्री लेकर उन्होंने उनकी अगवानी की॥ ३२॥

**मधुपर्कमुपानीय वासांसि [1]विरजानि सः। उपायनान्यभीष्टानि विधिवत् समपूजयत्॥ ३३॥**
**[2]ततोनिवेशनं श्रीमदुपकल्प्य महामतिः। [3]ससैन्ययोः सानुगयोरातिथ्यं विदधे यथा॥ ३४॥**
**एवं राजा[4] समेतानां यथावीर्यं यथावयः। यथाबलं [5]यथावित्तं सर्वैः कामैः समर्हयत्॥ ३५॥**
**कृष्णमागतमाकर्ण्य विदर्भपुरवासिनः। आगत्य नेत्राञ्जलिभिः पपुस्तन्मुखपङ्कजम्॥ ३६॥**

### कर्दमक्षमा

अन्वयः—सः, मधुपर्कम्, विरजानि, वासांसि, अभीष्टानि, उपायनानि, उपानीय, विधिवत्, समपूजयत्॥ ३३॥ ततः, महामतिः, श्रीमत्, निवेशनम्, उपकल्प्य, ससैन्ययोः, सानुगयोः, यथायोग्यम्, आतिथ्यम्, विदधे॥३४॥ एवम्, समेतानाम्, राज्ञाम्, यथावीर्यम्, यथावयः, यथाबलम्, यथावित्तम्, सर्वैः, कामैः, समर्हयत्॥ ३५॥ कृष्णम्, आगतम्, आकर्ण्य, विदर्भपुर-वासिनः, आगत्य, नेत्राञ्जलिभिः, तन्मुखपङ्कजम्, पपुः॥ ३६॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

महामतिरित्यनेन श्रीकृष्णो बाढं कन्यामुद्वोढुमेवागतः स्यादिति वरोचितेन विधिना समपूजयदिति सूचितम् यथा यथावत्॥ ३४॥ समेतानां राज्ञां मध्ये वीर्याद्यनतिक्रम्य तं तं समर्हितवानित्यर्थः॥ ३५॥ श्रीकृष्णे भाविकर्मसूचकं जनानुरागं दर्शयति। कृष्णमागतमिति त्रिभिः॥ ३६॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

वैवाह्यवरे करणीयमाह—मधुपर्कमिति। स भीष्मकः। वासोदानमपि वरायैव "परिधास्यै यशोधास्यै" इत्यादिमन्त्रैर्वेदे प्रतिपादितम्। विधिवद्विष्टरपाद्यार्घ्याचमनीयदानादिविधिमनतिक्रम्येत्यर्थः। तान्यभिव्यञ्जयति—मध्विति॥ ३३॥ तयोः राम-कृष्णयोः। निवेशनं निवेशस्थानम्। श्रीमत्त्वं तस्य गृहोचितभोगसाधनादिना ज्ञेयम्॥ ३४॥ एवमित्थम्। इत्यर्थ इति—महतो महन्मध्यस्थस्य मध्यममल्पस्याल्पं चार्चनादि चकारेत्यर्थः वीर्यं प्रभावः। बलं सैन्यम्। कामैरुपभोगैः॥ ३५॥ भाविकर्म विवाहः। तन्मुखपंकजं कृष्णमुखारविन्दम्। तन्मुखपंकजं पपुरिति—तस्मादुच्छलितसौन्दर्यमाध्वीकमास्वादितवन्त इत्यर्थः। पेयतदाधारयोरभेदनिर्देशश्च पेयप्राचुर्यविवक्षया। किञ्च—नेत्रस्यांजलितारूपकं तत्राप्यतिशयमविच्छेदञ्च द्योतयति, तथैव पिबतां तृष्णायाश्च। तस्मादहो किन्नाम तदपूर्वं पंकजमिति भावः॥ ३६॥

### श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी

तान्येवाभिव्यञ्जयंस्तत्प्रयोजनमाह—मध्विति॥ ३३॥ श्रीमद्गृहपरिष्कारेणोपभोगसाधनेन च निवेशनं प्रासादादि उपकल्प्य भक्त्या समर्प्य॥ ३४॥ वीर्य्यं प्रभावः बलं सैन्यं कामैरुपभोगैः॥३५॥ तन्मुखपङ्कजं पपुरिति तस्मादुच्छलितं सौन्दर्य्य-माध्वीकमास्वादितवन्त इत्यर्थः। पेयतदाधारयोरभेदनिर्द्देशश्च पेयप्राचुर्य्यविवक्षया। किञ्च, नेत्रस्याञ्जलितारूपकं तत्राप्यति-शयमविच्छेदं च द्योतयति—तथैव पिबतां तृष्णायाश्च तस्मादहो कि नाम तदपूर्वं पङ्कजमिति भावः॥ ३६॥

---

१. विरजांसि—श्रीधर. वंशी. जीव. शुक.; रुचिराणि—वीर. विज.। २. तयो—श्रीधर. वंशी. जीव. वीर. विज. विश्व.।

३. बाह्योद्याने कुण्डिनस्य यथायोगं सुविस्तृतम्। आवेद्यपूर्णं नगरं जरासन्धादिभिर्नृपैः॥ अधिकः विजये।

४. ज्ञां—श्रीधर. वंशी. जीव. वीर. विज. विश्व. शुक.। ५. वृत्तं—वीर.।

### श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी

तान्यभिव्यञ्जयंस्तत्प्रयोजनमाह—मध्विति। उपसमीपे आनीय, दास्येनोपायनतया वा समर्प्य, उपायनानि चान्यानि गजाश्वगजरत्नादीनि अभीष्टानि तयोरात्मनो वा त्रियाणि, संशब्दाभ्यामन्तर्जामातृभावेन पूजाविशेषं बोधयति ॥ ३३ ॥ श्रीमत्-भोज्य-पेय-वस्त्रालंकारादिसर्व्वसम्पत्तिमत्, स्फाटिकस्तम्भादिनाशेषशोभायुक्तं वा; निवेशनं प्रासादमुपकल्प्य दासभावेनैव समर्प्य, भक्त्या तयोः सर्व्वस्वामित्वमननात्तथैवातिथ्यसम्यक्त्वाद्वा; अनुगाः श्रीगद-सात्यक्युद्धवादयः, सैन्यमन्यच्चतुरंगवलम्, यथा य त्वदिति परमभक्त्या नवनीतादिगोरसप्रधानोत्तमान्नपान-शय्यादि-समर्पणेनेत्यर्थः ॥ ३४ ॥ एवमनेनोद्वाहप्रेक्षणौत्सुक्यप्रकारेण समेतानां मिलितानां समग्रवलसाहित्यादिना सम्यक्त्वेनागतानां वा, वीर्य्यं प्रभावः, वलं सैन्यम्, कामैरुपभोगैः, यस्याधिकं वीर्य्यादि तस्याधिकैः कामैरधिकार्हणम्, यस्य च न्यूनं तस्य न्यूनैरेव न्यूनार्हणमित्यर्थः। इति सर्व्वेषामेव मनःपूर्त्या सम्यगर्हयत्; वीर्य्यादीनां यथापूर्व्वं समर्हणहेतुत्वे श्रेष्ठ्यम् ॥ ३५ ॥ कृष्णं सर्व्वचित्ताकर्षकं परमानन्दघनमूर्त्तिं वा भगवन्तम्, विदर्भपुरवासिनः स्त्रीपुरुषादयः सर्व्वे जनाः, आगत्य समेत्य श्रीकृष्णान्तिकमेत्य वा, पपुरिति मुखपंकजस्य सौन्दर्य्यामृतमयत्व ध्वनितम्। अतः साक्षादेव पानं सम्भावितम्। यथा हि मधुपाः पंकजरसमासक्त्या पिवन्ति, तद्वत्, पीत्वा चिरं चित्ताभिनिवेशेन ददृशुरित्यर्थः ॥३६॥

### श्रीमद्वीरराघवाचार्यकृता भागवतचन्द्रचन्द्रिका

ततः स भीष्मको मधुपर्कादीनि समर्प्य यथाविधि सम्यगपूजयत् तत्रोपायनानि श्रेष्ठवस्तूनि ॥३३॥ महामतिर्भीष्मकः तयो रामकृष्णयोः श्रीमत्भोग्यभोगोपकरणादिसमृद्धिमत् निवेशनं गृहमुपकल्प्य सभृत्योस्ससैन्ययोश्च तयोर्यथावदातिथ्यं चक्रे ॥ ३४ ॥ इत्थमन्येषामपि सर्वेषां समुदितानां राज्ञां तत्तद्वीर्य्यवयःप्रभृत्यनुरूपं सर्वैः कामैरपूजयत् ॥ ३५ ॥ कृष्णमिति विदर्भपुरवासिनः कुण्डिनपुरवासिनो जनाः कृष्णमागतं श्रुत्वा इतस्ततः स्थित्वेति शेषः। तस्य कृष्णस्य मुखपङ्कजं मुखपङ्कजस्थलावण्यसुधां नेत्ररूपैरञ्जलिभिः पपुः पीतवन्तः ॥ ३६ ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

किमिति नगरप्रवेशाप्रदानं कृष्णरामयोरिति तत्राह—आवेद्येति। जरासन्धादिराजभिर्नगरं पूर्णं निविडमनवकाशमित्यावेद्य विज्ञाप्य ॥ ३५-४० ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

महामतिरित्यनेन कृष्णो वाढं कन्यामुद्वोढुमेवागतः स्यादिति स्वचेतःप्राप्ताश्वासो वरोचितेन विधिनैव समपूजयदिति सूचितम् ॥ ३४-३५ ॥ मुखपङ्कजं पपुस्तत्रत्यमपारं माधुर्य्यमेव पपुर्लक्षणया पेयप्राचुर्य्यं तथा अनेककर्त्तृकपानादेकस्यैव पङ्कजस्याऽपरिमितमधुत्वाददद्भुतत्वं च व्यञ्जितम् ॥ ३६ ॥

### गूढार्थदीपिनी

उपानीय समर्प्य। मधुपर्कं दधिमधुमिश्रितम् द्रव्यम् ॥ ३३ ॥ यथा यथावत् ॥३४॥ समेतानामागतानाम् ॥३५-३६॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

महामतिरयमेव रुक्मिण्या वर इति ज्ञानवान् अतो यथा यथावदातिथ्यं विदधे ॥ ३४ ॥ एवमन्येषां समेतानां राज्ञां मध्ये वीर्याद्यनतिक्रम्य तं तं समर्हयत् ॥ ३५-४३ ॥

### श्रीसत्यधर्मकृता श्रीभागवतटिप्पणी

मधुपर्कमुपनीय गतम्। रुचिराणि वासांसि चोपनीयेत्यन्वयः। अभीष्टान्युपनयनानि विधिवत्समपूजयत् विधिवत्सा यस्य तं विरिञ्चिता तमित्यप्यान्तरङ्गिको भावः ॥ ३३ ॥ श्रीमन्निवेशनं गृहं कुण्डिनस्य वाह्योद्यान उपकल्प्य यथायोगं सुविस्तृतं विशालम् ॥ ३४ ॥ किमन्तर्निवेशोऽनन्तस्येत्यत आह। आवेद्येति। जरासन्धादिभिर्नृपैर्नगरं पूर्णमावेद्य निरूपयित्वा यथा सम्यक् गतम् ॥ ३५ ॥ समर्हयत्समार्हयत् ॥ ३६ ॥

### श्रीमद्वल्लभाचार्यकृता सुबोधिनी

ततो मधुपर्कानयनम् ततो विरजानि वासांसि विरजानीति शोभार्थं दानव्यतिरेक उक्तः। अन्येभ्यस्तु स्वख्यापनार्थं राजसगुणाद्दीयते इति वस्त्राण्यविरजान्येव भवन्ति। नूतनानि तु प्रक्षालितानि सर्वेभ्य एव दीयन्त इति विशेषणं व्यर्थं स्यात्। अथवा कन्यां दातुं आदौ अखण्डानि शुद्धान्येव वस्त्राणि दत्तवान् यदप्यग्रे देयम्, तदपि दत्तवानित्याह उपायनानीति। अभीष्टानि वरवध्वोः विधिवदिति यथाविवाहविधि ॥ ३३ ॥ ततो निवेशनमपि यथा जामातुर्दीयते तादृशं श्रीमदिति उप

समीप एव कल्पयित्वा यथा भगवान् निकट एव रुक्मिणीसहितो भवति। ननु कथमेवं ज्ञातवान्, तत्राह **महामति**रिति। ततो वरयात्रिकाणां भोजनमपि दत्तवानित्याह **ससैन्ययो**रिति। सैन्यमसहभोजि, अनुगास्तु सहभोजिन इति आतिथ्यं प्रत्येकं धर्मबुद्ध्या आवश्यकबुद्ध्या वा ॥ ३४ ॥ तदनन्तरं तदर्थमन्येषामपि पूजां कृतवानित्याह **एवं राजे**ति। यादृशे रूपे यादृशानि वस्त्राणि यादृशं वयः तादृग्वेशसम्पादकं यावच्च बलं सेना तावत्संभृत्याधिक्यम् यावच्च स्वय चित्तम् एवं यथायोग्यं चतुर्धा पूजयामास ॥ ३५ ॥ राजपत्न्या अभिरुचिरस्ति नवेति सन्देहे, तन्निराकरणार्थं सामान्यतः स्त्रीणामभीष्टता निरूप्यते कृष्णमागतमिति त्रिभिः, कायिकवाचिकमानसिकानुवृत्तिभेदात्। तत्र कायिकमाह—**कृष्णं** स्वभावत एव स्त्रीप्रियम् तद्गृहेऽपि गत्वा द्रष्टव्यम्। स्वगृहे समागतं कथं न पश्येदिति विदर्भपुरवासिनः सर्व एव समागत्य नेत्राञ्जलिभिस्तन्मुखपङ्कजं पपुः ॥ ३६ ॥

### श्रीसुबोधिनी—सारः

मधुपर्कं दधिमधुघृतमित्येवंरूपमुपानीय समर्प्य "मधुपर्के गवालंभः" इति लोकविद्विष्टत्वान्नादरणीयः विरजांसि शुद्धानि नवानि वासांसि अभीष्टानि वांछितानि उपायनानि उपानीय निवेद्य भीष्मको विधिवत् समर्चयत् ॥ ३३ ॥ तयो रामकृष्णयोः ससैन्ययोः सभृत्ययोरातिथ्यं पाद्यार्घ्यादि यथावच्चक्रे महामतिरित्यनेन तन्मनोरथं बुद्ध्वा तथापूजयदित्युक्तं भवति श्रीमत् उपवेशनं विश्रामस्थानं कल्पयित्वा ॥ ३४ ॥ एवं सभागतानां राज्ञामातिथ्यं विदधे वीर्यादीननतिक्रम्य सर्वैः कामैरिष्टदानैः समार्चयत् ॥ ३५ ॥ आगतं कृष्णमाकर्ण्य श्रुत्वा कुंडिनपुरजना आगत्य द्रष्टुं तस्य श्रीकृष्णस्य मुखकमलं नेत्रांजलिभिः पपुः ॥३६॥

### विवरण टिप्पणी

**मधुपर्कमुपानीये**त्यत्र। **शोभार्थ**मिति। विरजत्वेन रजःसम्बन्धाभावात्सात्त्विकभावेन शोभार्थं भगवते समर्पितानीत्यर्थः।

### गोस्वामिश्रीगिरिधरलालकृताबालप्रबोधिनी

ततश्च स भीष्मको मधुपर्कादीनि उपानीय ताभ्यां समर्प्य विधिवत् समपूजयत्। उपायनानि उत्तमवस्तूनि ॥ ३३ ॥ महामतिः परमभागवतो भीष्मकः ससैन्ययोः सेनासहितयोः सानुगयोः भृत्यादिसहितयोस्तयो रामकृष्णयोः श्रीमत् भोगोपकरणादिसमृद्धिमत् निवेशनं विश्रामस्थानमुपकल्प्य निवेद्य यथावदातिथ्यं विदधे चक्रे ॥ ३४ ॥ एवमन्येषामपि सर्वेषां समेतानां आगतानां राज्ञां तद्वीर्यवयआदियोग्यं यथा भवति तथा सर्वैः कामैस्तान् समर्हयत् ॥ ३५ ॥ विदर्भपुरवासिनो जनाः कृष्णमागत-माकर्ण्य श्रुत्वा इतस्ततः आगत्य नेत्ररूपैरञ्जलिभिस्तस्य मुखपङ्कजं मुखपङ्कजस्थलावण्यसुधां पपुः, तल्लावण्यं ददृशुरित्यर्थः।३६।

### अन्वितार्थप्रकाशिका

मधुपर्कमिति ॥ स भीष्मकः मधुपर्कं विरजांसि उज्ज्वलानि वासांसि अभीष्टानि उपायनानि उत्तमवस्तूनि उपानीय समर्प्य विधिवत् समपूजयत्। एवं वरोचितमधुपर्कादिना पूजनेन भीष्मकस्यापि अभिप्रायः सूच्यते ॥ ३३ ॥ तयोरिति ॥ महामतिः नूनं श्रीकृष्ण उद्वोढुमेवागत इति विचारवान् भीष्मकः ससैन्ययोः सानुगयोश्च तयो रामकृष्णयोः श्रीमत् भोगोपकरणादिसमृद्धि-मन्निवेशनं विश्रामस्थानमुपकल्प्य निवेद्य यथा यथावदातिथ्यं विदधे चक्रे ॥ ३४ ॥ एवमिति ॥ एवमन्येषां समेतानामागतानां राज्ञाम्। कर्मणि शेषे षष्ठी। यथावीर्यं यथावयः यथाबलं यथावित्तं राज्ञां वीर्यवयोबलवित्तयोग्यं यथा स्यात्तथा सर्वैः कामैः समार्हयत्। आड्रहितः पाठः प्रायो दृश्यते स त्वार्षः ॥ ३५ ॥ कृष्णमिति ॥ विदर्भपुरवासिनो जनाः कृष्णमागतमाकर्ण्य श्रुत्वा इतस्ततः आगत्य नेत्ररूपैरञ्जलिभिस्तस्य मुखपङ्कजं मुखपङ्कजलावण्यसुधां पपुः तल्लावण्यं ददृशुः ॥ ३६ ॥

### श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्

श्रीमत् शोभमाने निवेशनं वासस्थानं ॥ वस्त्रदानेन श्रीकृष्णस्य वरोचिता पूजाकृतेति सूचितं यथा यथायोग्यं ॥३४॥ समेतानां राज्ञां ॥ अत्र संगतान् ॥ राजन्यान् ॥ तेषां वीर्याद्यनतिक्रम्य पूजितवान् ॥ ३५ ॥ पुराद्बहिरागत्य ॥ ३६ ॥

### भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

मधुपर्कमिति ॥ ततः, स भीष्मकः, मधुपर्कं कांस्यपात्रे दधिमधुघृतानि भृत्वा अपरेण कांस्यपात्रेणाच्छादितं तत्पात्रं मधुपर्कसंज्ञं तदित्यर्थः। विरजांसि वासांसि, अभीष्टानि उपायनानि च, उपानीय समर्प्य, विधिवत् यथाविधि, समपूजयत्। तत्र उपायनानि श्रेष्ठवस्तूनि ॥३३॥ तयोरिति ॥ महामतिर्भीष्मकः, श्रीमत् भोग्यभोगोपकरणादिसमृद्धिमत्, निवेशनं गृहं, उपकल्प्य निवासार्थं समर्प्य, सानुगयोः सभृत्ययोः सभृत्ययोः, ससैन्ययोः सैन्यसहितयोश्च, तयोः रामकृष्णयोः, यथा यथावत्, आतिथ्यं, विदधे चक्रे। केचित्त्वत्र 'तयोर्निवेशनं श्रीमदुपकल्प्य महामतिः। बाह्योद्याने कुण्डिनस्य यथायोग्यं सुविस्तृतम्' इति पाठं पठन्ति। महामतिरित्यनेन श्रीकृष्णो बाढं कन्यामुद्वोढुमेवागतः स्यादिति वरोचितेन विधिना समपूजयदिति सूचितम् ॥ ३४ ॥ एवमिति ॥

एवमित्थं, समेतानां तत्र समागतानामन्येषामपि, राज्ञां, यथावीर्यं तद्वीर्यानुसारेण, यथावयस्तद्वयसोऽनुसारेण, यथावलं तद्बलानतिक्रमेण, तत्र वीर्यं प्रभावः, बलं शारीरमोजः, यथावित्तं स्वकीयवित्तानतिक्रमेण, भीष्मकः आतिथ्यं विदधे इति शेषः। सर्वैः कामैः, समर्हयत् अपूजयच्च ॥ ३५ ॥ श्रीकृष्णे भाविकर्मसूचकं जनानुरागं दर्शयति त्रिभिः ॥ कृष्णमिति ॥ विदर्भपुरवासिनः कुण्डिनपुरवासिनो जनाः, कृष्णं आगतं, आकर्ण्य श्रुत्वा, इतस्तत इति शेषः। आगत्य, तस्य श्रीकृष्णस्य, मुखपङ्कजं श्रीकृष्णमुखपङ्कजगतलावण्यसुधामित्यर्थः। नेत्राञ्जलिभिः नेत्ररूपैरञ्जलिभिः, पपुः पीतवन्तः ॥ ३६ ॥

### कृष्णप्रिया

और मधुपर्क, निर्मल वस्त्र तथा उत्तम उत्तम भेंट देकर विधिपूर्वक उनकी पूजा की ॥ ३३ ॥ भीष्मकजी बड़े बुद्धिमान् थे। भगवान् के प्रति उनकी बड़ी भक्ति थी। उन्होंने भगवान् को सेना और साथियों के सहित समस्त सामग्रियों से युक्त निवासस्थान में ठहराया और उनका यथावत् आतिथ्य-सत्कार किया ॥ ३४ ॥ विदर्भराज भीष्मकजी के यहाँ निमन्त्रण में जितने राजा आये थे, उन्होंने उनके पराक्रम, अवस्था, बल और धन के अनुसार सारी इच्छित वस्तुएँ देकर सबका खूब सत्कार किया ॥ ३५ ॥ विदर्भदेश के नागरिकों ने जब सुना कि भगवान् कृष्ण यहाँ पधारे हैं, तब वे लोग भगवान् के निवास स्थान पर आये और अपने नयनों की अंजलि में भर-भरकर उनके वदनारविन्दका मधुर मकरन्द-रस पान करने लगे ॥ ३६ ॥

**अस्यैव भार्या भवितुं रुक्मिण्यर्हति नापरा। असावप्यनवद्यात्मा भैष्म्याः समुचितः पतिः ॥ ३७ ॥**
**किंचित्सुचरितं यन्नस्तेन तुष्टस्त्रिलोककृत्। अनुगृह्णातु [1]गृह्णातु वैदर्भ्याः पाणिमच्युतः ॥ ३८ ॥**
**एवं प्रेमकलाबद्धा वदन्ति स्म पुरौकसः। कन्या चान्तःपुरात् प्रागाद् भटैर्गुप्ताम्बिकालयम् ॥ ३९ ॥**
**पद्भ्यां विनिर्ययौ द्रष्टुं भवान्याः पादपल्लवम्[3]। [2]सा चानुध्यायती सम्यङ्मुकुन्दचरणाम्बुजम् ॥ ४० ॥**

### कर्दमक्षमा

अन्वयः—रुक्मिणी, अस्य, एव, भार्या, भवितुम्, अर्हति, न, अपरा, अनवद्यात्मा, असौ, अपि, भैष्म्याः, समुचितः पतिः ॥ ३७ ॥ नः, यत्, किञ्चित्, सुचरितम्, तेन, त्रिलोककृत्, अच्युतः, तुष्टः, अनुगृह्णातु, वैदर्भ्याः, पाणिम्, गृह्णातु ॥ ३८॥ प्रेमकलाबद्धाः, पुरौकसः, एवम्, वदन्ति, स्मः, च, भटैः गुप्ता, कन्या, अन्तःपुरात्, आम्बिकालयम्, प्रागात् ॥ ३९ ॥ सा मुकुन्द चरणाम्बुजम्, सम्यक्, अनुध्यायती, च, भवान्याः, पादपल्लवम् द्रष्टुम् ॥ ४० ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

अस्यैव रुक्मिण्येवार्हत्येव असावेव भैष्म्या एव समुचित एवेति षडवधारणानि। तत्रैकस्मिन्व्यतिरेकप्रदर्शनमुपलक्षणार्थम् नापरेति। न च वाक्यभेददोषः अनूद्यविधेयभेदेन विभिन्नानामेव वाक्यानां सह प्रयोगात् ग्रहं संमार्ष्टीत्यादिवदिति ॥ ३७ ॥ अयमेवानुग्रह इति निर्दिशंति—गृह्णात्विति ॥ ३८ ॥ प्रेम्णः कला लेशस्तेन बद्धा वदन्ति स्म सम्पूर्णं प्रेम तेषां हृद्येवाऽवर्ततेत्यर्थः ॥ ३९ ॥ गमनं विशिनष्टि द्वयेन। पद्भ्यामिति ॥ ४० ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

अवधारणान्यवधारणवाक्यानि। तत्र तेषु षट्स्ववधारणेष्वेकस्मिन्वाक्ये व्यतिरेकस्यैवकाराभावस्य प्रदर्शनमुपलक्षणार्थसर्वेषामिति। "संभवत्येकवाक्यत्वे वाक्यभेदो हि नेष्यते" इत्युक्तेर्वाक्यभेददोषः स्यादित्यत्राह-न चेति। तत्र हेतुमाह-अनुवाद्येति। तथाहि—अस्यैवेत्यनुवादः, नापरस्येति विधिः १। नापरेत्यनुवादः, रुक्मिण्येति विधिः २। अनर्हा नेत्यनुवादः, अर्हतीति विधिः ३। नैवापर इत्यनुवादः, असाविति विधिः ४। नैवा परस्या इत्यनुवादः, भैष्म्या इति विधिः ५। नैवानुचित इत्यनुवादः, उचित इति विधिः ६। इत्थमुद्देश्यविधेयभेदान्न वाक्यभेदोऽत्र। "ग्रहं संमार्ष्टि" इत्यत्र यद्यपि मार्जनरूपविधेयभेदो नास्ति तथापि 'उद्देश्यानां ग्रहाणां द्वादश ग्रहा भवन्ति' इत्युक्तेर्भेदान्न वाक्यभेदः। अत्र विशेषमाह—ग्रहं संमार्ष्टीत्यत्र द्वितीयया ग्रहस्येप्सिततमत्वेनोद्देश्यत्वात्प्रयोजनवत्त्वाच्च प्राधान्यं गम्यते। संमार्गस्तु ग्रहं प्रति गुणीभूतः 'प्रतिप्रधानं गुण आवर्तनीयः' इति न्यायात्। यावन्तो ग्रहास्तेषां सर्वेषां संमार्ग इति निश्चये सति कति ग्रहाः संमार्जनीया इति बुभुत्साया अभावात्। उद्देश्यगतमेकत्वं श्रूयमाणमप्यविवक्षितं यद्युच्यते, नेदमुद्देश्यगतं—किन्तु स्वयं विधेयं ग्रहं संमृज्यात्, यं संमृज्यात्तं चैकमिति तथा सति वाक्यभेदः स्यात्। तथा बुभुत्साया अभावाद्विधिना योगाच्चोद्देश्यगता संख्या न विवक्षिता। उद्देश्यगतमपि किञ्चिद्विशेषणं विवक्षितम्। यस्य विशेषणस्य विवक्षां विनोद्देश्यप्रतीतिर्न पर्यवस्यति, अतो ग्रहत्व विवक्षितं तद्विवक्षां विनोद्देश्यग्रहस्वरूपस्य ज्ञातुमशक्यत्वात्।

---

१. वैदर्भ्यां विधिवत्-प्रा. पा.। २. पंकजम्-वीर.। ३. परिवारैः कतिपयैर्युक्तो यादवनन्दन-विज. ब।

तेन ग्रहजातीयसाधनसोमयागापूर्वार्थत्वाच्च सर्वेषु संमार्ग इति स्थितं, निरूपितं चैतन्मीमांसापरिभाषायाम्। ततश्च तयोः सर्वोत्तमयोः परस्परयोग्यतासौष्ठवदर्शनेन सर्वेषामपि चित्तमाक्रान्तम्। अत एवं वदन्ति स्मेति त्रिकेणाह—अस्यैवेति। तत्र तत्रेत्याद्यनुसारेणैव योज्यम्। अस्यैव नापरस्य, रुक्मिण्येव नापरा, अर्हत्येव न तु नार्हति, असावेव नापरः, भैष्म्या एव नापरस्याः, सम्यगेवोचितो न त्वीषदप्यनुचितमिति। वाक्यभेदः खल्वेकस्यैव वाक्यस्य भेदाय नानात्वकल्पनम्। तस्य च दोषत्वं कल्पनागौरवात्, अर्थमात्रस्यैव भेदेप्येकवाक्यस्य नानाप्रतिपाद्यत्वेन तात्पर्यनिर्णयासिद्धेः, 'शब्दबुद्धिकर्मणां विरम्य व्यापाराभावः' इति न्यायविरोधाच्च। सिद्धान्तमाह—अनूद्येति। अयमर्थः—न तावदत्रैकमेकवाक्यं कुत्रापि किमनूद्य विधीयते कुत्रापि किमपीति विभिन्नानामेव वाक्यानां वाग्मितया सह प्रयोगात्। तथाहि—अस्यैव भार्या भवितुं रुक्मिण्यर्हति नापरा इति प्रथमवाक्यं, रुक्मिण्येवास्य भार्याभवितुमर्हतीत्यादिद्वितीयमित्याद्येवकारात्। वृत्तिभेदेन वाक्यभेदे दोषं परिहरति—ग्रहमिति। 'दशापवित्रेण ग्रहं संमार्ष्टि' इति तु पूर्ववाक्यम्। दशापवित्रं वासःखण्डः, ग्रहो यज्ञीयपात्रविशेषस्तेन संमृज्यादित्यर्थः। तत्र हि ग्रहमिति द्वितीयया ग्रहस्योद्देशतया प्रयोजनवत्तया च प्राधान्यं गम्यते। ग्रहं प्रति गुणः संमार्जनम् 'प्रतिप्रधानं च गुण आवर्तनीयः' इति न्यायेन तत्रोपयुक्तं सर्वं ग्रहं प्रति संमार्जनक्रियावृत्तिः कार्या, तत्रैकत्वञ्चाविवक्षितं ग्रहशब्दो ह्यत्र जातिद्वारा द्रव्यलक्षक इति सर्वोऽपि गृह्यते। किं तूक्तादन्यत्र वैयर्थ्यमिति तत्रत्येष्वेवावर्त्यत आवृत्तौ च वाक्यभेदः स्यादेव। किन्तु तत्र दोषस्यानभ्युपगमो वाक्यद्वैविध्यस्यैव न्यायसिद्धत्वात्। एवमत्रोद्देश्यतया प्रयोजनवत्तया च यद्यद्विवक्ष्यते तत्तदेव गुणभूतेन तन्निर्द्धारवाचकेनैवकारेण सम्बध्यते। यथा—प्रथमवाक्ये इदं मदीयत्वमुद्देश्यं प्रयोजनवच्च तदेवानूद्य भार्यात्वं विधीयते। द्वितीयवाक्ये रुक्मिणीत्वमुद्देश्यमित्यादि। ततो ग्रहवाक्यवदत्रापि न वाक्यभेददोष इति। सर्वत्रैवैवशब्दान्वयेन व्यञ्जितायामन्योन्ययोग्यतायां हेतुः—अनवद्यात्मेति। इदं हि द्वयोरेव विशेषणमिति ॥ ३७ ॥ पौरा ऊचुः—किञ्चिदिति। सुचरितं तपोदानादिरूपम्। तेन सुचरितेन। अयमेव पाणिग्रहणरूप एव। ततश्च रागातिशयादेयवाक्यम्–किञ्चिदिति। इह पूर्वेषु च जन्मसु यत्किञ्चिदित्यर्थः। त्रिलोककृदिति परमसामर्थ्यमुक्तम्, जीवार्थं तत्सृष्टेर्दयालुत्वञ्च। अच्युत इति समरूपगुणवत्त्वम्। वैदर्भ्या इति संबंधोल्लेखः। त्रिलोमकृदच्युतयोर्भेदेनोक्तिर्नरलीलामाधुर्याक्रान्तचित्तत्वेन। ततो वैलक्षण्यस्मरणात्। वदन्ति स्म परस्परमविच्छेदेन कथयामासुरित्यर्थः ॥३८॥ इत्यर्थ इति—संपूर्णप्रेमाविर्भावे न जाने ते किं कुर्युरिति भावः। ननु रुक्म्यादिभ्यो भयं कथमत्यजंस्तत्राह–प्रेम्णः कला कलना 'कलनाकालयोः कला' इति नानार्थात्। कलना चात्र भावना 'कलिबली कवीनां कामधेनू' इत्यभ्युपगमात्। यद्वा–प्रेमकलया रुक्मिणीविषयकप्रेमवृद्धया। 'कला मूले प्रवृद्धौ स्याच्छिल्पादावंशमात्रके' इति मेदिनी। यद्वा–कलालेशः प्रेमा चायमनुमोदनात्मकः। स पुनरिह वरे सखीभावयोग्यः परममहानेव। तया वद्धा इति तस्याः शृङ्खलात्वं दृढत्वं च ध्वनितम्। एवं तल्लेशप्राप्त्यापि तेषामेषाऽवस्था, किमुत तासामित्यर्थः। कन्या चेति चकारात्समकालताप्रतीतिः तादृशप्रेमोत्कण्ठायोग्यमेवेदमिति सूचयति। किञ्च—पुरौकसां तादृशोक्तिश्रवणात्तस्या महाप्रीतिस्तदुक्तेर्मंगलोपश्रुतित्वादभीष्टसिद्धिञ्च द्योतयति। अत एव प्रकर्षेण चित्तप्रसादादिनाऽगात् ॥ ३९ ॥ तस्या रुक्मिण्याः। सा सम्यक्पु मुकुन्दांघ्रिमेव दध्याविति भावः। तदेव विस्तरेणाभिव्यञ्जयति–पद्भ्यामिति सार्धं चतुर्भिः। तत्राद्यद्वयं युग्मकं च। सापि तादृशमाहात्म्यापि। पद्भ्यामेव ययावत्र भवानीभक्तिरेव हेतुरित्याह—द्रष्टुमिति ॥ ४० ॥

## श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी

ततश्च तयोः सर्वोत्तमयोः परस्परयोग्यतासौष्ठवदर्शनेन सर्वेषामपि चित्तमाक्रान्तम् अत एवं वदन्ति स्मेति त्रिकेणाह—अस्यैवेति तैर्व्याख्यातं। तत्र तत्रेत्याद्यनुसारेणैवं योज्यम्, अस्यैव नापरस्य रुक्मिण्येव नापरा अर्हत्येव न तु नार्हति असावेव नापरः भैष्म्या एव नापरस्याः सम्यगेवोचितः नत्वीषदप्यनुचित इति वाक्यभेदः खल्वेकस्यैव वाक्यस्यार्थभेदाय नानात्वकल्पनं तस्य च दोषत्वं कल्पनागौरवात् अर्थमात्रस्यैव भेदेऽप्येकवाक्यस्य नानाप्रतिपाद्यत्वेन तात्पर्य्यनिर्णयासिद्धेः 'शब्दबुद्धिकर्मणां विरम्य व्यापाराभावः' इति नयविरोधाच्च। सिद्धान्तमाह—अनूद्येति। अयमर्थः न तावदत्रैकमेव वाक्यं कुत्रापि किमप्यनूद्य विधीयते कुत्रापि किमपीति विभिन्नानामेव वाक्यानां वाग्मितया सह प्रयोगात्। तथा हि अस्यैव भार्य्या भवितुं रुक्मिण्यर्हति नापरस्येति प्रथमं वाक्यं रुक्मिण्येवास्य भार्य्या भवितुमर्हतीत्यादि द्वितीयमित्यादि, एवकारावृत्तिभेदेन वाक्यभेदे दोषं परिहरति—ग्रहमिति। दशापवित्रेण ग्रहं सम्मार्ष्टीति तु पूर्णं ( पूर्वं ) वाक्यं दशावित्रं वासःखण्डः ग्रहो यज्ञीयपात्रविशेषः येन तं सम्मृज्यादित्यर्थः। तत्र हि ग्रहमिति द्वितीयया ग्रहस्यौद्देश्यतया प्रयोजनवत्तयां च प्राधान्यं गम्यते ग्रहं प्रति गुणः सम्मार्जनं प्रति प्रधानं च गुण आवर्त्तनीय इति न्यायेन तत्रोपयुक्तं सर्वं ग्रहं प्रति मार्जनक्रियावृत्तिः कर्त्तव्या, तत्र एकत्वं चाविवक्षितं ग्रहशब्दो ह्यत्र जातिद्वारा द्रव्यलक्षक इति सर्वोऽपि गृह्येत किन्तूपयुक्तादन्यत्र वैयर्थ्यमिति तत्रत्येष्वेवावर्त्त्यते आवृतौ च वाक्यभेदः स्यादेव किन्तु तत्र दोषस्यानभ्युपगमः वाक्य द्वै वैविध्यस्यैव न्यायसिद्धत्वात् एवमत्रोद्देश्वतया प्रयोजनवत्तया च यद्यत् प्रधानं विवक्ष्यते, तत्तदेव गुणभूतेन तन्निर्द्धारणवाचकेनैवकारेण सम्बन्ध्यते, यथा प्रथमवाक्ये इदमीयत्वमुद्देश्यं प्रयोजनवञ्च तदेवानूद्य भार्य्यात्वं विधीयते

द्वितीयवाक्ये च रुक्मिणीत्वमुद्देश्यमित्यादि, ततो ग्रहवाक्यवदत्रापि न वाक्यभेददोष इति सर्वत्रैवैवशब्दान्वयेन व्यञ्जितताया-मन्योन्यमनन्ययोग्यतायां हेतुः अनवद्यात्मेति इदं हि द्वयोरेव विशेषणमिति ततश्च रागातिशयोदयवाक्यम् ॥ ३७ ॥ किञ्चिदिति इह पूर्वेषु च जन्मसु यत्किञ्चिदित्यर्थः । त्रिलोककृदिति तस्य परमसामर्थ्यं द्योतितं जीवार्थं तत्सृष्टेर्दयालुत्वं च अच्युत इति समग्र-रूपगुणवत्त्वं वैदर्भ्या इति स्वसम्बन्धोल्लेखः त्रिलोककृदच्युतयोर्भेदेनोक्तिः नरलीलामाधुर्य्याक्रान्तचित्तत्वेन ततो वैलक्षण्य ( स्य ) स्फुरणात् वदन्ति स्म परस्परमविच्छेदेन कथयामासुरित्यर्थः ॥ ३८ ॥ ननु, रुक्म्यादिभ्यो भयं कथमत्यजम् ? तत्राह—प्रेम्णः कला कलना 'कलनाकालयोः कला' इति नानार्थात् । कलना चात्र भावना 'कलिवली कवीनां कामधेनू' इत्यभ्युपगमात् । यद्वा, कलालेशः प्रेमा चायमनुमोदनात्मकः स पुनरिह वरे ( रसे ) सखीभावयोग्यः परममहानेव च सः तया बद्धा इति तस्या श्रृङ्खलात्वे तेन दार्ढ्यं च ध्वनितम् एवं तल्लेशसामान्यप्राप्त्यापि तेषामेषावस्था किमुत तासामित्यर्थः । कन्या चेति चकारात् समकालता प्रतीतिस्तादृशप्रेमोत्कण्ठायोग्यमेवेदमिति सूचयति । किञ्च, पुरौकसां तादृशोक्तिश्रवणात्तस्या महाप्रीतिं तदुक्तेर्मङ्ग-लोपश्रुतित्वादभीष्टासाद्धं च द्योतयति, अत एव प्रकर्षेण चित्तप्रसादादिना अगात् ॥ ३९ ॥ तदेव विस्तरेणाभिव्यञ्जयति—पद्भ्या-मिति, सार्द्धचतुर्भिः । तत्राद्यद्वयं युग्मकञ्चापि सापि तादृशमाहात्म्यापि पद्भ्या मेव विनिर्ययौ तत्र भवानीभक्तिरेव हेतुरित्याह-द्रष्टुमिति । पादपल्लवमित्यपि तद्भक्त्यनुसारेणेवोक्तम् । ननु साक्षाल्लक्ष्म्यास्तस्यां कथमेतादृशी भक्तिर्युज्यते तत्राह—मुकुन्द-चरणमेवाम्बुजं परमकौमल्यादिगुणतया स्फुरितं सम्यक् तन्माधुर्योपरक्तत्वेनैव अनु निरन्तरं ध्यायती ध्यावन्ती सोत्कण्ठं स्मरन्तीति नात्मनस्तस्य वा महिमांशोऽस्फुरदिति भावः ॥ ४० ॥

### श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी

सर्व्वत्रैव एव-शब्दान्वयेन तयोरन्योन्यमनन्ययोग्यतोक्ता । तत्र हेतुः—अनवद्यात्मेति । इदं द्वयो रपि विशेषणम्, भक्ति-विशेषतो निजाशेषसुकृतार्पणेन तयोर्विवाहमिच्छन्ति ॥ ३७ ॥ किञ्चिदिति, सत्किञ्चिदिति पूर्व्वजन्मस्वपि कृतं सर्व्वमेव प्याप्नुवन्ति, तेन तुष्टः सन् त्रिलोककृत् श्रीनारायण इति तस्य परमसामर्थ्यमभिप्रेतम् । अच्युत इति समग्रगुणरूपवत्त्वम्, वैदर्भ्या इति च पूर्व्वोक्त-न्यायेन तादृशत्वमेव, त्रिलोककृदच्युतयोर्भेदेनोक्तिः, लोकानां तत्त्वाज्ञानात्, प्रेमभरोदयेनाननुसन्धानाद्वा; यद्वा, त्रिलोक-कृदच्युतोऽयमनुगृह्णातु । कथम् ? गृह्णातु स एवेति । ततश्च त्रिलोककृदिति दयालुत्वमभिप्रेतम् । जीवानां हितार्थमेव त्रिलोकी-सृष्टेः ॥ ३८ ॥ ननु राजपुत्रवरात् रुक्मिणो जरासन्धादिभ्यश्च भयं कुतोऽत्यजन् ? तत्राह—प्रेम्णः कला वृद्धिस्तया बद्धा वशी-कृताः, बद्ध-शब्देन प्रेम्णः श्रृङ्खलात्वं तेन च दार्ढ्यं ध्वनितम् । अतीतार्थपरोऽपि स्म-शब्दो वादेऽविच्छेदं बोधयति । च अपि, कन्यापीति पुरौकसां तादृशोक्तिश्रवणात्तस्या महाप्रीतिं मंगलवाक्यैरभीष्टसिद्धिञ्च द्योतयति, अतएव प्रकर्षेण चित्तप्रसादादि-नागात् ॥ ३९ ॥ तदेव विस्तरेणाभिव्यञ्जयति–पद्भ्यामिति सार्द्धचतुर्भिः । विशेषेण निर्ययौ अन्तःपुरात्; विशब्दार्थमेव दर्शयति–सा चेति । त्वर्थे चकारः, भवानीपादपल्लवदर्शनात् मुकुन्दानुध्यानस्य विशेषं बोधयति—मुकुन्दस्य परमानन्दप्रदस्य भगवतश्च-रणाम्बुजं सम्यग् यथा स्यात्, प्रेम्णा तत्सौन्दर्य्यादौ चित्ताभिनिवेशेनेत्यर्थः; यद्वा, सम्यग् गुणरूपादिनोत्तमम्, अतोऽनु निरन्तरं ध्यायन्ती ॥ ४० ॥

### श्रीमद्वीरराघवाचार्यकृता भागवतचन्द्रचन्द्रिका

किंचैव मित्थं प्रेमाश्रुगद्गदस्वराः सन्तः पुरौकसःपुरवासिनो जनाः ऊचुः किमिति असौ कृष्णः अनवद्यात्मा सुन्दर-तरतनुः अपिशब्दो मेधवा अप्यनवद्यात्मत्वसमुच्चयार्थः समुचितोऽनुरूपः पतिः अत्राऽस्यैव रुक्मिण्येवाऽर्हत्येव असावेवमेषमा एव समुचित एवेति षडवधारणानि ॥ ३७ ॥ नोऽस्माभिः किञ्चित्सुचरितं स्वनुष्ठितं यद्यस्माकं प्राचीनं पुण्यमस्तीत्यर्थः । तेन सुचरितेन तुष्टः प्रीताखिलोककृत् ब्रह्मा वैदर्भ्याः पाणिमच्युतो गृह्णात्वित्यनुगृह्णात्विति ॥ ३८ ॥ एवं स्थिते तदा भैष्मी कन्या भटैर्गुणां सती अन्तःपुरादम्बिकागृहं प्रति भवान्याः पादपङ्कजं द्रष्टुं पद्भ्यामेव निर्जगाम कथम्भूता सा रुक्मिणी ? मुकुन्द-पदाम्बुजं सम्यग् ध्यायन्ती ॥ ३९–४० ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

अस्यैव नापरस्य भार्य्यैव नतु भोग्या दासी रुक्मिण्येव नापरा भवितुमर्हत्येव नतु नार्हति । असावेवनान्यः भैष्म्या एव नापरस्याः सम्यगेवोचितः नत्वीषदप्यनुचित इति सप्तावधारणानि तत्रैकस्मिन् व्यतिरेकप्रदर्शनमुपलक्षणार्थं नापरेति अत्र वक्तृ-बाहुल्याद्वाक्यबाहुल्यमतः सप्तानामेव वाक्यनामेकत्र योजनमिदं ज्ञेयम् अत्र चास्यैव भार्य्याभवितुं रुक्मिण्यर्हति नापरस्येत्येके वदन्ति स्म अस्य भार्य्यैव भवितुं रुक्मिण्यर्हतीत्यन्ये अस्य भार्या भवितुं रुक्मिण्येवार्हति नापरेत्यपरेः एवमन्यान्यपि चत्वारि वाक्यान्यत एव वाक्यत्वस्याऽसम्भवान्न वाक्यभेददोषो ज्ञेयः । यदुक्तं 'सम्भवत्येकवाक्यत्वे वाक्यभेदो हि गौरवम्' इति ॥ ३७ ॥ यत् किञ्चित् सूचरित्तं सुकृतं चेदस्माकमस्ति तेन तुष्ट इति तत्तत् स्वस्य सुकृतमस्माभिरस्यै रुक्मिण्यै दत्तमिति भावः ॥ ३८ ॥

अत एव च एवं प्रेमकलया रुक्मिणीविषयकप्रेमप्रवृद्धया वद्धावशीभूता इत्यर्थः। 'कलामूले प्रवृद्धौ स्याच्छिल्पादवंशमात्रके' इति मेदिनी 'कलिवली कामधेनू च' इति कवयः ॥ ३९ ॥ स्वपुराद्भवान्या आलयपर्य्यन्तं नरम्रानेन सुखपालेनागत्य आलयाभ्यन्तरगतांश्चतुःपञ्चप्रकोष्ठात् पद्भ्यामेव ययौ राजभटैर्भवान्यालयाद्वहिः सर्वदिक्षुः स्थितैः। जघ्निरे आहता वादिता इत्यर्थः ॥ ४०-४१ ॥

## गूढार्थदीपिनी

अत्र पद्ये षडवधारणानि। अस्यैव रुक्मिण्येव अर्हत्येव असावेव भैष्म्या एव समुचित एवेति ॥ ३७ ॥ नोऽस्माकं यत् किञ्चित्सुकृतमस्ति तेन तुष्टः पाणिं गृह्णातु इत्येव नोऽस्माकम् उपर्यनुग्रहः ॥ ३८ ॥ कला भावना। गुप्ता सती ॥३९॥ पद्भ्यामिति युग्मम्। यतवाक् धृतमौना। मातृभिस्तत्तुल्याभिः। सन्नद्धैर्बद्धकवचैः ॥ ४०-४१ ॥

## श्रीसत्यधर्मकृता श्रीभागवतटिप्पणी

विदर्भपुरवासिन्यश्च वासिनश्च ते ॥ ३७ ॥ भैष्म्याः पतित्वं न परीक्षणीयं कृष्णस्य राज्ञो लवयापनेनेति स्वयं कर्णेष्वजपनित्याह। अस्यैवेति। अस्यैव कृष्णस्यैव रुक्मिणी भार्या भवितुमर्हति। अपरैतदितरा रमेतरेति यावत्। असावप्यनवद्यात्मा देहो यस्य सः। भैष्म्याः समुचितः पतिस्तत्प्रभृति जनवाक्ये जनार्दन इत्याभाणकं प्रसमार लोक इति ज्ञेयम् ॥ ३८ ॥ यत्किञ्चित्सुचरितं ज्ञानपूर्वकमाचरितं सत्कर्म न। किमप्यस्ति चेत्तेन त्रिलोकक्कृत्पाणिमच्युत एतत्पाणिग्रहणार्थं सिद्धपाणिः पाणिमान् शिशुपालमच्युता येन स इति त्रिलोकक्कृदित्यनेनान्वयः। तुष्टोऽनुगृह्णात्वनुग्रहं करोतु। किं तदनुग्रहणमिति प्रश्न उत्तरं वैदर्भ्याः पाणिं हस्तमच्युतो गृह्णातु। अपारसुकृतलभ्यं दर्शनमिति किञ्चिदिति न सरसमस्मदुत्तमापेक्षया किञ्चिदिति वचनं वा ॥ ३९ ॥ वदन्ति स्म स्मातीते। इत्यवदन् गुप्ता रक्षिता ॥ ४० ॥

## श्रीमद्वल्लभाचार्यकृता सुवोधिनी

तेषां वाक्यमाह **अस्यैवेति**। कोऽपि कस्मैचित्प्रयच्छतु, भार्या त्वस्यैव भवितुमर्हति। अनेन स्वरूपयोग्यता निरूपिता। योग्यं योग्येन सम्बध्यत इति तेषामभिप्रायः। ननु दत्तेयमन्यस्मै, अन्या भगवते तथा सति देयेत्याशङ्क्याह **नापरेति**। अन्या तु न योग्यैव। न हि लक्ष्मीव्यतिरिक्ता भगवद्योग्या भवति। लोकश्च प्रमाणमिति। यथा दैवी वाक्, तथा वदति। अयमपि रुक्मिण्या एवार्हति। यतः **अनवद्यात्मा**। पुरुषोत्तमत्वात् निरवद्यरूपः। सा हि निर्दुष्टमेव पतिं मन्यते। भगवानीश्वरत्वेन सर्वेषामेवोचितः, पतित्वेन त्वस्या एवोचितः। यत इयं भक्तिप्रधाना ॥ ३७ ॥ एवं वाचनिकमुक्त्वा वाधकमत्र प्रवृत्तमित्याशङ्क्य तन्निवारणार्थं भगवन्तं प्रार्थयन्ति **किञ्चिदिति**। यद्यस्माकं किञ्चित्सुचरितमस्ति, तेनादौ भगवान् तुष्टो भवतु। ततस्त्रिलोककर्ता स एवेति। अन्येषामपेक्षाभावात् स्वयमेवानुगृह्णात्वस्मान्। अनुग्रहानन्तरं यत्कर्तव्यं तदाहुः **गृह्णातु वैदर्भ्याः पाणिमिति**। अत्र एवमेवेति निर्वन्धहेतुमाह **अच्युत** इति। आदौ भर्ता स्वरूपती धर्मतश्च्युतिरहितौ मृग्यते, तथा भोगेऽपि। एवं तेषां प्रेमातिशयमुक्त्वा सर्वसम्मतौ मातुरपि सम्मतिर्जातेत्यभिप्रायेणोपसंहरति। **एवं प्रेमकलाबद्धाः** नानाविधस्नेहप्रकारैर्वशीकृताः वदन्ति। **स्मेति** प्रसिद्धिः प्रमाणत्वेनोक्ता। पुरवासित्वान्न मुखमुद्रणं केनापि शक्यम्। एवं सर्वमिव हरणे संभृतिमुक्त्वा पूजार्थं तस्या बहिर्निर्गमनमाह **कन्या चेति**। यथा पुरवासिभिः स्वसर्वकर्मसमर्पणेन रुक्मिणीविवाहार्थं भगवान् प्रार्थितः, एवं रुक्मिण्यपि भगवान् गृह्णात्विति महादेवं प्रार्थयितुं निर्गतेति चकारार्थः। **अन्तःपुरादिति**। गुप्तस्थानात् प्रकटस्थाने निर्गता, यथा वन्धुपीडामकृत्वा भगवान् विश्रामतया गृह्णाति। प्रकर्षेणागादिति मनः सन्तोषः प्रदर्शितः। **भटैर्गुप्तेति**। यथा तावदन्यो न स्पृशति। **अम्बिकालयमिति**। स्त्री देवता, गृहे स्त्रिय एवाध्यक्षा इति, तत्र पुरुषसम्बन्धाभावो निरूपितः। अम्बिकापदेन मातृत्वं चोक्तम् ॥३९॥ रथस्थाया ग्रहणं रथान्तरे स्थितस्य दुष्करं भवतीति पद्भ्यामेव निर्गतेत्याह **पद्भ्यामिति**। **भवान्याः पादपल्लवमिति**। लोके तद्भक्तत्वं स्वस्य ख्यापयति। अभिप्रैतार्थस्त्वन्य एव। तमेवान्तर्गतमाह **सा चानुध्यायतीति**। तत्सम्बन्धिन्यः **स्त्रियः**। सा च मुकुन्दचरणाम्बुजमेव अनुध्यायती जाता। मुकुन्दस्य मोक्षदातुरेव चरणाम्बुजम्। अनेन विशेषतो भगवदाकाङ्क्षायां हेतुरुक्तः। पितृगृहेऽपि बन्धनम्, अन्यत्रापि अवरोध एव स्थितिरिति मुकुन्दावरोधस्य मोक्षरूपत्वात्तन्न हेयम् ॥ ४० ॥

## श्रीसुबोधिनी-सारः

सर्वेषामेकमत्यात् गूढा चेयं सरस्वतीतिवत् तथा भाव्यमित्याह। अस्यैवेत्येकस्मिन् निर्द्धारणमन्यत्रापि योज्यं सर्वं वाक्यं सावधारणमित्युक्तेः। तथा चायमर्थः। अस्य श्रीकृष्णस्यैव भार्या भवितुमर्हति रुक्मिण्येव नाऽपरा अर्हत्येव नानर्हा अनवद्यात्मा शुद्धसत्त्वमूर्त्तिरसौ एव नान्यः भैष्म्या एव नान्यस्याः समुचितो योग्यः पतिरेव नानुचितः ॥ ३७ ॥ नोऽस्माभिः किंचित्सुचरितं सुकृतादि कृतं तेन पुण्यादिना त्रिलोककृत् ब्रह्मा यदि तुष्टः प्रसन्नस्तदा वैदर्भ्या रुक्मिण्याः पाणिं हस्तमच्युतो

गृह्णातु इत्यनुगृह्णातु कृपां कुरुताम् ॥ ३८ ॥ एवं प्रेम्णः कला लेशस्तेन संबद्धाः पुरवासिनो वदंति स्म ऊचुः । भटैः शूरैर्गुप्ताऽऽवृता कन्या रुक्मिणी अंतःपुरादवरोधात् अंबिकास्थानं प्रागात् प्रचलति स्म ॥ ३९ ॥ पद्भ्यां पादाभ्यां श्रीकृष्णचरणारविंदं सम्यगनुध्यायती संचितयंती सती भवान्याः पादपल्लवं द्रष्टुं विनिर्ययौ निर्जगाम ॥ ४० ॥

## विवरणटिप्पणी

अस्यैवेत्यत्र । इयं भक्तिप्रधानेति । भीष्मकस्य महादेवत्वेन भक्तिप्रधानत्वाद्भैष्म्या अपि तथात्व मित्यर्थः । पद्भ्यां वितिर्ययावित्यत्र । अन्य एवेति । मुकुन्दचरणाम्बुजदर्शनमेवेत्यर्थः । आहेति । ध्यानकथनेनेति शेषः । तद्ध्यानकथनेन तदर्शनस्यान्तरभिप्रेतत्वमुक्तमित्यर्थः ।

## गोस्वामिश्रीगिरिधरलालकृताबालप्रबोधिनी

एवं दृष्ट्वा यदूचुस्तदाह–अस्यैवेति । रुक्मिण्येवास्य कृष्णस्य भार्या भवितुमर्हति, सौन्दर्यसौशील्यादिगुणपूर्णत्वात् । अपरा कन्या त्वस्य भार्या भवितुं नार्हति, एवं विधगुणहीनत्वात् । असौ श्रीकृष्णोऽपि भैष्म्याः रुक्मिण्याः समुचितो योग्य एव पतिः । तत्र हेतुमाह—अनवद्यात्मेति । अनवद्यः कामक्रोधादिदोषरहितः आत्मा यस्य ॥ ३७ ॥ प्रेमवशात् स्वसुकृतसमर्पणेन भगवत्सम्बन्धं प्रार्थयन्ते—किञ्चिदिति । नोऽस्माकं यत्किञ्चित् सुचरितं पुण्यमस्ति तेन तुष्टः प्रीतः त्रिलोककृत् भगवाननुगृह्णातु । 'कोसौ अनुग्रहोऽपेक्षितः ?' तत्राहुः—वैदर्भ्याः पाणिमच्युतः श्रीकृष्ण एव गृह्णात्विति ॥ ३८ ॥ एवमिति स्पष्टम् ॥ ३९ ॥ तस्या गमनप्रकारमाह—पद्भ्यामिति ॥ ४० ॥

## अन्वितार्थप्रकाशिका

तद्वचांस्याह—अस्यैवेति । रुक्मिण्येवास्य कृष्णस्य भार्या भवितुमर्हति । सौन्दर्यसौशील्यादिगुणपूर्णत्वात् । अपरा कन्या त्वस्य भार्या भवितुं नार्हति । एवंविधगुणहीनत्वात् । अनवद्यात्मा निर्दूषणगुणपूर्णः इदं रुक्मिण्या अपि विशेषणम् । अपिरेवार्थे । असौ श्रीकृष्ण एव भैष्म्याः समुचितो योग्यः पतिः । वस्तुतोऽत्र षडवधारणघटितानां षण्णां वाक्यानां तन्त्रेण द्विरुच्चारणम् । नापरेत्येवमेकत्रैवान्यव्यावृत्तिप्रदर्शनमुपलक्षणार्थम् । तथा च रुक्मिणी चेद्भार्या भवितुमर्हति तदाऽस्यैव नान्यस्य । अस्य भार्या भवितुमर्हा रुक्मिण्येव नापरा । अस्य सा भार्या भवितुमर्हत्येव न नार्हति । अपिरेवार्थे । भैष्म्याः समुचितः पतिरसावेव नापरः असौ समुचितः पतिर्भैष्म्या एव नापरस्याः । भैष्म्या असौ पतिरुचित एव न नोचितः इति षड्वाक्यानि । तत्र प्रथमे वाक्ये रुक्मिणीनिष्ठं भार्याभवनार्हत्वमुद्दिश्य अस्यैवेतीदमीयत्वं विधीयते । एवमन्येष्वप्युद्देश्यविधेयभेदो बोध्यः । न चैवं वाक्यभेदो दोषः ग्रहं सम्मार्ष्टीतिवददोषात् । तत्र हि ग्रहं प्रधानमुद्दिश्य गुणभूतः सन्मार्गसंस्कारो विधीयते । अतः प्रतिप्रधानं गुणावृत्तिरिति न्यायेन सर्वग्रहान् प्रति सन्मार्ग आवृत्त्याऽनुष्ठेयः इत्येकत्वमविवक्षितं सम्पद्यते । ततश्च प्रतिग्रहं सन्मार्गमनुष्ठापयद्वाक्यमावर्तते । एवमत्रोद्देश्यानां भेदात्तत्र तत्र नियमविधानाय एवादिपदानामावृत्तिर्न दोषाय । चक्रवर्ती त्वत्र वक्तृबाहुल्याद्वाक्यबाहुल्यमत एकवाक्यत्वासंभवादेव वाक्यभेदो न दोषायेत्याह । किञ्चिदिति ॥ नोऽस्माकं यत्किञ्चित्सुचरितं पुण्यमस्ति तेन तुष्टः प्रीतः त्रिलोककृत् भगवाननुगृह्णातु प्रसीदतु । तेन च वैदर्भ्याः पाणिमच्युतः श्रीकृष्ण एव गृह्णातु । स्वसुकृतमस्माभी रुक्मिण्यै दत्तमिति भावः ॥ ३७–३८ ॥ एवमिति ॥ प्रेम्णः कलया उत्कर्षेण 'कला मूले प्रवृद्धौ स्यात्' इति मेदिनी । वृद्धाः पुरौकसः एवं वदन्ति स्म । कन्या च भटैर्गुप्ता सती अन्तःपुरान्निर्गत्य अम्बिकालयं प्रागात् ॥ ३९ ॥ पद्भ्यामिति द्वयम् ॥ हे राजन् । यतवाक् गृहीतमौना मातृभिः मात्रा तत्तुल्याभिः सखीभिश्च परिवारिता उद्यतानि आयुधानि यैस्तैः सन्नद्धैः बद्धकवचैरायतैः शूरैः राजभटैः कृष्णभिया रुक्मिनियुक्तैः गुप्ता सा मुकुन्दचरणाम्बुजं सम्यक् ध्यायती । नुमभाव आर्षः । भवान्याः पादपल्लवं द्रष्टुं पद्भ्यां विनिर्ययौ । स्वपुराद्भवान्यालयपर्यन्तं नरयानेन गत्वा आलयाभ्यन्तरगतांश्चतुष्पञ्चप्रकोष्ठान् पद्भ्यां ययौ ॥ ४०–११ ॥

## श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्

अपरानयोग्या अनवद्यात्मानिर्दोषमूर्त्तिः ॥ ३७ ॥ नोऽस्माकं कुंदनपुरवासिनां ॥३८॥ प्रेम्णः कलया अंशेनबद्धाः ॥३९॥ भवान्याः शिवायाः ॥ ४० ॥

## भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

अस्यैवेति ॥ अस्य श्रीकृष्णस्य, रुक्मिणी एव, भार्या भवितुं, अर्हति । अपरा न । भैष्म्या रुक्मिण्याः अपि, अनवद्यात्मा निर्दोषतनुः, असौ कृष्णः, समुचितो योग्यः, पतिः भवितं, अर्हति । अपरः न । अत्र अस्यैव रुक्मिण्येव अर्हत्येव असावेव भैष्म्या एव समुचित एव इति षडवधारणानि । तत्रैकस्मिन् व्यतिरेकप्रदर्शनमुपलक्षणार्थम् । तच्च नापरेति । न चैवं वाक्यभेददोषः । अनूद्यविधेयभेदेन विभिन्नानामेव वाक्यानां सहप्रयोगात् गृहं संमार्ष्टीत्यादिवत् ॥ ३७ ॥ किंचिदिति ॥ नोऽस्माभिः,

किंचित् सुचरितं सुकृतं, यद्यदि, स्वनुष्ठितं स्यादिति शेषः। आस्माकीनं प्राचीनं सुकृतं किंचिद्भवेद्यदि तर्हीत्यर्थः। तेन सुचरितेन, तुष्टः प्रीतः, त्रिलोककृत् ब्रह्मा, वैदर्म्या रुक्मिण्याः, पाणिं, अच्युतः श्रीकृष्णः, गृह्णातु इति अनुगृह्णात्वनुग्रहं करोतु ॥ ३८ ॥ एवमिति ॥ एवमित्थं प्रेमकलावद्धाः प्रेमाश्रुगद्गदस्वराः सन्तः, पुरौकसः पुरवासिनो जनाः, वदन्ति स्म ऊचुः। एवं जनोक्ति वर्णयित्वा मुनिः प्रकृतं वदति। तदा, कन्या च रुक्मिण्यपि, अन्तःपुरात् सकाशात् भटैर्योधैः, गुप्ता सती, अम्बिकालयं प्रागात् ॥ ३९ ॥ तस्या आगमनं विशिनष्टि द्वाभ्याम् ॥ पद्भ्यामिति ॥ किं च, सा रुक्मिणी, मुकुन्दचरणाम्बुजं, सम्यक् अनुध्यायती सती, भवान्या अम्बिकायाः, पादपङ्कजं, द्रष्टुं पद्भ्यां, विनिर्ययौ ॥ ४० ॥

### कृष्णप्रिया

वे आपस में इस प्रकार वातचीत करते थे—रुक्मिणी इन्हीं की अर्द्धाङ्गीनी होने के योग्य है, और ये परम पवित्र मूर्ति श्यामसुन्दर रुक्मिणी के ही योग्य पति हैं। दूसरी कोई इनकी पत्नी होने के योग्य नहीं है ॥ ३७ ॥ यदि हमने अपने पूर्वजन्म या इस जन्म में कुछ भी सत्कर्म किया हो, तो त्रिलोक विधाता भगवान् हम पर प्रसन्न हो और ऐसी कृपा करें कि श्यामसुन्दर श्रीकृष्ण ही विदर्भराजकुमारी रुक्मिणीजी का पाणिग्रहण करें ॥ ३८ ॥ परीक्षित्! जिस समय प्रेम-परवश होकर पुरवासी लोग परस्पर इस प्रकार वातचीत कर रहे थे, उसी समय रुक्मिणी जी अन्तःपुर से निकलकर देवी जी के मन्दिर के लिए चली। बहुत से सैनिक उनकी रक्षा में नियुक्त थे ॥ ३९ ॥ वे प्रेममूर्ति श्रीकृष्णचन्द्र के चरणकमलो का चिन्तन करती हुई भगवती भवानी के पादपल्लवों का दर्शन करने के लिये पैदल ही चली ॥ ४० ॥

**यतवाङ्मातृभिः सार्धं सखीभिः परिवारिता।**
**[1]गुप्ता राजभटैः शूरैः सन्नद्धैरुद्यतायुधैः। मृदङ्गशङ्खपणवास्तूर्यभेर्यश्च जघ्निरे ॥ ४१ ॥**
**नानोपहारबलिभिर्वारमुख्याः सहस्रशः। स्रग्गन्धवस्त्राभरणैर्द्विजपत्न्यः स्वलंकृताः ॥ ४२ ॥**
**गायन्तश्च स्तुवन्तश्च गायका वाद्यवादकाः। परिवार्य वधूं जग्मुः सूतमागधवन्दिनः ॥ ४३ ॥**
**आसाद्य [2]देवीसदनं धौतपादकराम्बुजा। उपस्पृश्य शुचिः शान्ता प्रविवेशाम्बिकान्तिकम् ॥४४॥**

### कर्दमक्षमा

अन्वयः—यत वाक्, सखीभिः, परिवारिता, शूरैः, सन्नद्धैः, उद्यतायुधैः, राजभटैः, गुप्ता, मातृभिः, सार्धम्, पद्भ्याम्, विनिर्ययौ ॥ ४१ ॥ मृदङ्गशंखपणवाः च तूर्य भेर्यः, जघ्निरे, नानोपहारबलिभिः, सहस्रशः, वारमुख्याः, स्रग्गन्धवस्याभरणैः, स्वलंकृताः, वारपत्न्यः, गायन्तः, च, स्तुवन्तः, च, गायकाः, वाद्यवादकाः, सूतमागधबन्दिनः, वधूम्, परिवार्य, जग्मुः ॥४२-४३॥ देवीसदनम्, आसाद्य, धौतपादकराम्बुजा, उपस्पृश्य, शुचिः, शान्ता, अम्बिकालयम्, प्रविवेश ॥ ४४ ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

अपि च। मृदंगेत्यादि। जघ्निरे आहताः। वादिता इत्यर्थः ॥ ४१ ॥ वारमुख्या गणिकोत्तमाः ॥ ४२-४३ ॥ उपस्पृश्याचम्य ॥ ४४ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

यतवाग्धृतमौना। यात्रोत्सवमाह—अपि चेति। इत्यर्थ इति–आहता वादिताः, वादनमेव तेषां हननं, विना ताडनं वादनाऽसंभवादिति भावः। भक्तावनुध्याने च लक्षणम्–यतवागिति। इयमेव निर्याणे विशब्दस्यार्थव्यक्तिः। तस्यास्तादृशावरणे माहात्म्येन दुर्लभतामुत्कंठिताञ्च विशेषतो व्यञ्जयन् वर्णयिष्यमाणमाकीस्मर्कश्रीकृष्णलाभं रसयितुं बीजं वपति–मातृभिरित्यादिभिः। मातृभिर्मात्रा तुल्याभिः। राजभटैः श्रीकृष्णभिया रुक्मिनियुक्तैः। अत एव शूरैः। किञ्च–सन्नद्धैर्गृहीतकवचादिभिस्तथोद्यतायुधैः। विशेषणानामेतेषां यथोत्तरं गोपनप्रकारे श्रैष्ठ्यम्। मृदंगेत्यर्द्धकम्। मृदंगा मुरजाः, पणवा अन्तस्तन्त्रीकाः, तूर्याः, 'तुर' इति प्रसिद्धाः। एते आनद्धभेदाः। भेर्यश्च सुषिरभेदा आनद्धभेदाश्चेति द्विविधाः ॥ ४१ ॥ नानेति युग्मकम्। नानाविधैरुपहारैरुपढौकनैर्बलिभिश्च नियतपूजाद्रव्यैः सह गायका गायन्तः, सूतादयश्च स्तुवंत इति विवेकः। वाद्यानां वादकाः वाद्यानि वादयन्त इति शेषः ॥ ४२ ॥ स्तुवंतो देवीम् ॥ ४३ ॥ धौतपादकरांबुजा प्रक्षालितहस्तपादा। पूर्ववद्भवानीभक्ति विवृणोति—आसाद्येति षड्भिः। देवसदनं देव्याः प्रासादम्। महदालयांतर्गतमणिमण्डपमिति विश्वनाथः। "कुक्कुट्यादीनामण्डादिषु" इति पुंवद्भावात्, भवादीनामपि तत्र स्थितत्वेनैकशेषत्वाद्वा। शांता समाहितचित्ता ॥ ४४ ॥

---

१. वेत्र झर्झरहस्तैश्च वृद्धैः कन्चुकिभिस्तथा। २. देव–वीर. विज.।

### श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी

भक्तावनुध्याने च लक्षणं यतवागिति, इयमेव च मिर्श्चणे विशब्दस्यार्थव्यक्ति। तस्यास्तादृशावरणमाहात्म्येन दुर्लभता-मुत्कण्ठिताञ्च विशेषतो व्यञ्जयन् वर्णयिष्यमाणमाकस्मिकश्रीकृष्णलाभं रसयितुं बीजं वपति—मातृभिरित्यादिभिर्मातृभिरिति। मात्रा तुल्याभिः राजभटैः श्रीकृष्णश्रिया रुक्मिनियुक्तैः अत एव शूरैः किञ्च, सन्नद्धै र्गृहीतकवचादिभिस्तथैव उद्यतायुधैः विशेषणा-नामेतेषां यथोत्तरं गोपनप्रकारे श्रैष्ठ्यम्। मृतङ्गेत्यर्द्धकं मृदङ्गाः मुरजाः पणवा अन्तस्तन्त्रीकाः तूर्य्याः तूर इति प्रसिद्धाः एते आनद्धभेदाः भेर्य्यश्च सुषिरभेदा आनद्धभेदाश्चेति द्विविधाः ॥ ४१ ॥ नानेति युग्मकम्। नानाविधैरुपहारैरुपढौकनैः बलिभिश्च नियतपूजाद्रव्यैः सह गायकाः गायन्तः सूतादयश्च स्तुवन्तः इति विवेचनीयं वाद्यानां वादका वाद्यानि वादयन्त इति शेषः॥४२-४३॥ पूर्ववद्भवातीभक्तिं विवृणोति—आसाद्येत्यादिपङ्भिः। देवसदनं देव्याः प्रासादं कुकुत्स्यादीनामण्डादिषु पुम्वद्भावात् भवादीनामपि तत्र स्थितत्त्वेनैकशेषत्वाद्वा शान्ता समाहितचित्ता ॥ ४४ ॥

### श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी

यतवाग् गृहीतमौना, मातृभिरिति बहुत्वं भीष्मकस्य बहुलपत्नीकृत्वात्, किंवा मातृष्वसृपितुः स्वस्रादीनां तन्मातृ-तुल्यानां संग्रहात्, राजभटै राज्ञो भीष्मकस्य भटैर्योधैः, राज-शब्देन राज्ञामयमेव स्वभाव इति बोध्यते; यद्वा, श्रीकृष्णभीत्या राजपुत्रेण रुक्मिणा नियुक्तैरिति ज्ञेयम्। अतएव शूरैर्युद्धसमर्थैः; किञ्च, सन्नद्धै र्गृहीतकवचादियुद्धपरिकरैः। किञ्च, उद्यतायुधैः; विशेषणानामेषां यथोत्तरं गोपनप्रकारे श्रेष्ठ्यम्। मृदंगा मुरजाः, पणवा अन्तस्तन्त्रिकाः, तूर्य्याः 'तूर' इति प्रसिद्धाः; एते आनद्धभेदाः, भेर्य्यश्च शुषिरभेदा आनद्धभेदाश्चेति द्विविधाः ॥ ४१ ॥ नानाविधैरुपहारैः फलादिभिर्बलिभिश्च गन्धपुष्पादिनियत-पूजाद्रव्यैः सह, जगमुरिति परेण सर्व्वेषामन्वयः। स्रगादिभिः सुष्ठु अलंकृताः, स्रगादीनामलंकरणे यथोत्तरं श्रेष्ठ्यम् ॥ ४२ ॥ गायका गायन्तः, सूतादयश्च स्तुवन्त इति विवेचनीयम्, वाद्यानां वादकाश्च वाद्यानि वादयन्त इत्यर्थः। यद्वा, गायकादयः सर्व्वेऽपि गायन्तः स्तुवन्तश्च, तत्र वाद्येत्यनेन वादकानां वाद्यमपि सूचितम् ॥ ४३ ॥ देवसदनं देव्याः प्रासादम्; 'देव्याः' इति पाठः स्पष्टः। शान्ता समाहितचित्ता ॥ ४४ ॥

### श्रीमद्वीरराघवाचार्यकृता भागवतचन्द्रचन्द्रिका

उद्यतान्युद्धृतानि आयुधानि यैस्तैः सन्नद्धै रायतैः शूरैः राजभटैर्गुप्ता तदा मृदङ्गादयो जघ्निरे ताडिता ( वादिता ) इत्यर्थः ॥ ४१ ॥ नानाविधैरुपहारैर्नैवेद्यैर्बलिभिः पूजासाधनैश्च सह सुष्ठ्वलङ्कृताः द्विजपत्न्यः गणिकोत्तमाश्च ॥ ४२ ॥ तथा गायका गायन्तः स्तुवन्तः सूतादयः वाद्यादीनां तूर्य्यादीनां वादका वादयन्तश्चेति शेषः। वधूं कन्यां परिवार्य्य परिवेष्ट्य जग्मुः॥४३॥ आसाद्येति देवसदनमम्बिकापतिगृहमुपगम्य तत्र धौते प्रक्षालिते पादाम्बुजे कराम्बुजे च यस्याः सा उपस्पृश्याऽऽचम्याऽत एव शुचिः शान्ता समाहिताचित्ता चाम्बिकागृहं प्रविवेश ॥ ४४ ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

वेत्राणि झर्झराश्च राजाज्ञासूचकयष्ट्यश्च हस्तेषु येषां ते तथा तैः कञ्चुकिभिः दौवारिकै छन्नलिङ्गैः। धौतपादकराम्बुजा प्रक्षालितपादहस्तपद्मा ॥ ४२-४४ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

देवसदनं देव्या मन्दिरं बृहदालयान्तर्गतं मणिमण्डपं कुक्कुत्स्यादीनामण्डादिषु पुंवद्भाव इति पुंवत्त्वम् उपस्पृश्य आचम्य ॥ ४४ ॥

### गूढार्थदीपिनी

मृदङ्गेत्यदर्धम् ॥ ४२ ॥ नानेति युगमम्। वारमुख्या गणिकोत्तमाः। उपस्पृश्य आचम्य ॥ ४३-४४ ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

उपस्पृश्याऽऽचम्य ॥ ४४ ॥

### श्रीसत्यधर्मकृता श्रीभागवतटिप्पणी

भवानी हरतरुणी द्रष्टुमित्युक्त्या बहिरेवं नटनमिति सूचयति। मुकुन्दचरणाम्बुजं ध्यायती यतवाक् वाङ्नियमवती मातृभिः सार्ध मातृभिरिति बहुवचनेन प्रसविञ्यपि पामरदृष्ट्या न सावित्रीति ध्वन्यत इति मन्तव्यम्। सखीभिश्च परिवारिता परिपूर्णवाः कलशादौ यासां तास्ताभिरिता युक्तेति वा। यद्वक्ष्यति धौतपाणिकराम्बुजेति। तदुपयुक्तमिति युक्तमेव

व्याकरणम् ॥४१-४२॥ वेत्राणि वेतसविशेषाः झर्झराश्च वाद्यभाण्डानि च पाणिषु येषां ते तैः। स झर्झरो वाद्यभाण्डे नदान्तर इति विश्वः। कञ्चुकिभिः सोविदल्लैर्मृदङ्गशङ्खपणवा येषां ते तांस्तांश्च जघ्निरेऽताडयन्। मृदङ्गाद्या भेर्यश्च जघ्निरेऽवाद्यन्तेति केचित् ॥ ४३ ॥ वारमुख्या वेश्याश्रेष्ठाः ॥ ४४ ॥

### श्रीमद्वल्लभाचार्य्यकृता सुबोधिनी

एवं कायमनोव्यापारौ निरूप्य वाचि व्यापाराभावमाह **यतवागिति**। **मातृभिः सार्धमिति**। भगवतो मनसि यथा अनौचित्यं न भवति, तदर्थमेवं कृतवती। सखीभिश्च परिवारिता। अनुमत्यर्थं हरणे पश्चात्तापाभावार्थं शोभार्थं च। बहिर्भटैर्गुप्ता। शूरैरित्यन्तःसामर्थ्यम्। **सन्नद्धैरुद्यतायुधैरिति**। स्वरक्षापरपीडार्थं साधनसम्पत्तिः। एवमावरणचतुष्टयं तस्या निरूपितम्। सर्वतो दोषाभावाय ॥ ४१ ॥ ततो मङ्गलवाद्यानामपि वादनम्, शुभनिमित्तं शकुनमपि जातमित्याह। **नानोपहारबलिभिरिति**। वारमुख्याश्च परिवार्य वधूं जग्मुरिति सम्बन्धः। नानोपहाराः भवान्यर्थे फलादयः, बलिः पूजासाधनानि, एतानि सङ्गे गतानीति पृथक् सहार्थतृतीयया ज्ञातव्यम्। वारमुख्यास्तु भिन्नाः, वराणां समूहो वारम्, वारं मुख्यं यासामिति। प्रत्यहं बहवो वराः वेश्यानामेव भवन्तीति। **सहस्रश** इति तासामुत्सवो निरूपितः। नित्यनूतनो भगवान् द्रष्टव्य इति। ब्राह्मणस्त्रियोऽप्याचारादाशीर्दानार्थं भगवदिच्छया सहैव गताः। विशेषतः पूजा तासां कर्तव्येति पूर्वमेव तासां पूजां निरूपयति **स्रगन्धवस्त्राभरणैरिति**। चतुर्विधैरप्यलङ्कृताः। अन्योऽपि महानुत्सवो जात इत्याह **वधूं परिवार्येति**। दर्शनार्थं लाभार्थं च गमनमुक्तम्। सूतादयो विद्योपजीविन उक्ताः ॥ ४३ ॥ ततो भगवान्मर्यादां स्थापयितुं पूजनन्तरमेव नेष्यामीति तूष्णीं स्थितः, तदा सा देवसदनमासाद्य निकटे गत्वा, प्रक्षालितपाणिपादा आचम्य, अन्तर्बहिः शुद्धियुक्ता सती। उद्वेगादीनां सम्भावितत्वात् तन्निषेधार्थमाह **शान्तेति**। अन्तःशान्तियुक्ता फलं प्राप्नोतीति अम्बिकान्तिकं प्रविवेश पूजार्थम्। अत एव भागवते लौकिकसौन्दर्यकथनार्थं भाषाभेदा निरूपिताः ॥ ४४ ॥

### विवरण टिप्पणी

**यतवागित्यत्र। आवरणचतुष्टयमिति**। भटत्वं शूरत्वं सन्नद्धत्वमुद्यतायुधत्वं तेषां निरूपितम्। तथाच चतुर्विधैः कृतान्यावरणानि चत्वारीत्यर्थः। **उपस्पृश्येत्यत्र। अत एवेति**। यतः समाधिभाषायां फलमन्तःशान्त्यैव, नतु लौकिकसौन्दर्यादिना। अत एव तत्कथनार्थं तत्र तत्र भिन्नैव भाषा निरूपितेत्यर्थः।

### श्रीसुबोधिनीसारः

यतवाङ् मौनव्रता मातृभिः सार्धं सह सखीभिः परिवेष्टिता शूरै राजपुरुषैर्गुप्ता रक्षिता सन्नद्धैः कवचितैर्धृतशस्त्रैः मृदंगादयो ववादिरे ॥ ४१ ॥ नानाप्रकारैरुपहारैर्बलिभिः स्रग्भिर्मालाभिर्गंधैर्वस्त्रैराभरणैस्सह द्विजपत्न्यो विप्रस्त्रियः सुष्ठु अलंकृता मंडिताः वधूं रुक्मिणीं परिवार्य जग्मुः गायका गायंतो वाद्यवादकाः स्तुवंतः सूतादयो जग्मुः ॥ ४२-४३ ॥ देव्याः सदनं स्थानमासाद्य धौतपादहस्तपद्मा उपस्पृश्याचम्य शुचिः पवित्रा शांता अंबिकाया अंतिकं समीपं प्रविवेश जगाम ॥ ४४ ॥

### गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

यतवाक् गृहीतमौना, मातृभिः सखीभिश्च परिवारिता, उद्यतानि उद्धृतानि आयुधानि यैस्तैः सन्नद्धैः बद्धकवचैरायत्तैः शूरैः राजभटैर्गुप्ता ॥ ४१ ॥ तदा मृदङ्गादयो जघ्निरे वादिता जाताः, नानाविधैरुपहारैर्नैवेद्यैर्बलिभिरन्यैश्च पूजासाधनैः सह तानि गृहीत्वा वधूं कन्यां परिवार्य आवृत्य भृत्यादयो जग्मुरिति सार्द्धद्वयोरन्वयः। एवमेव प्रथमान्तानां सर्वेषां पदानामन्वयो बोध्यः। स्वलङ्कृता वारमुख्याः वराणां समूहो वारं तदेव मुख्यं जीविकासाधनं यासां ताः गणिकोत्तमाः सहस्रशः ॥ ४२ ॥ स्रगादिभिः स्वलङ्कृता द्विजपत्न्यः, गायकाः गायन्तः, वाद्यानां तूर्यादीनां वादकास्तान् वादयन्तश्चेति शेषः, सूतादयः स्तुवन्तश्च ॥ ४३ ॥ देवस्य महादेवस्य सदनं मन्दिरमासाद्य आगत्य तत्र धौते प्रक्षालिते पादाम्बुजे कराम्बुजे च यस्याः सा उपस्पृश्य आचम्य अत एव शुचिः शान्ता समाहितचित्ता चाम्बिकागृहं प्रविवेश ॥ ४४ ॥

### अन्वितार्थप्रकाशिका

मृदङ्गेत्यर्द्धम् ॥ मृदङ्गादयो जघ्निरे वादिताः। नानेति द्वयम् ॥ नानाविधैरुपहारैर्नैवेद्यैर्बलिभिरन्यैश्च पूजासाधनैः सह तानि गृहीत्वेत्यर्थः। सहस्रशो वारमुख्याः सत्कृता वेश्याः तथा स्रगन्धवस्त्राभरणैः स्वलङ्कृता द्विजपत्न्यः गायकाः गायन्तः वाद्यानां तूर्यादीनां वादकास्तान् वादयन्तश्चेति शेषः। सूतमागधवन्दिनः स्तुवन्तश्च वधूं कन्यां परिवार्य आवृत्य जग्मुः ॥४२-४३॥ आसाद्येति ॥ देव्याः सदनं मन्दिरम्। देवसदनमिति पाठे कुक्कुटाण्डवत् पुंवद्भावः। यद्वा। 'भवपत्नीं भवान्तिकाम्' इत्युक्तेः। देव्याः देवानां च सदनवासाद्य आगत्य तत्र धौते प्रक्षालिते पादाम्वुजे कराम्वुजे च यस्याः सा उपस्पृश्याचम्य अत एव शुचिः शान्ता समाहितचित्ता चाम्बिकान्तिकं प्रविवेश ॥ ४४ ॥

**श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्**

मातृभिरुपमातृभिः सन्नद्धैर्धृतवर्मभिः जघ्निरे वादिता इत्यर्थः ॥ ४१ ॥ वारमुख्या गणिकोत्तमाः । नानोपहारबलिभिरुपलक्षिता द्विजपत्न्यः ॥ ४२ ॥ परिवार्य आवृत्य ॥ ४३ ॥ उपस्पृश्य आचमनं कृत्वा ॥ ४४ ॥

**भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी**

यतेति । यतवाक् मौनिनी रुक्मिणी, मातृभिः सार्द्धं सहवर्त्तमाना, सखीभिः परिवारिता, उद्यतान्युद्धृतान्यायुधानि यैस्तैः, संनद्धैः रायत्तैः, शूरैः, राजभटैः, गुप्ता सती, च, विनिर्ययौ, तदा मृदङ्गाश्च शङ्खाश्च पणवाश्च तूर्याणि च भेर्यश्च ताः, जघ्निरे । ताडिता इत्यर्थः ॥ ४१ ॥ नानेति । नाना ये उपहारा नैवेद्यानि च वलयः पूजासाधनानि च तैः, सहिताः सहस्रशः, वारमुख्याः वेश्याः, स्रजश्च गन्धाश्च वस्त्राणि च आभरणानि च तैः, स्वलंकृताः द्विजपत्न्यश्च ॥ ४२ ॥ गायन्त इति । गायन्तः गायकाः, स्तुवन्तः स्तावकाश्च, वाद्यवादनं कुर्वन्तः वाद्यवादकाश्च, सूतमागधवन्दिनः, वधूं कन्यां, परिवार्य परिवेष्ट्य, जग्मुः । 'सूताः पौराणिकाः प्रोक्ता मागधा वंशशंसकाः । वन्दिनस्त्वमलप्रज्ञाः प्रस्तावसदृशोक्तयः' इति द्वयोरेकसम्बन्धः ॥ ४३ ॥ आसाद्येति । रुक्मिणी, देवीसदनं देव्यालयं, आसाद्योपगम्य, तत्र धौतपादकराम्बुजा प्रक्षालितपादहस्तपद्मा सती, उपस्पृश्याचम्य, शुचिः, शुद्धा, शान्ता, समाहितचित्ता सती च, अम्बिकान्तिकमम्बिकागृहं, प्रविवेश ॥ ४४ ॥

**कृष्णप्रिया**

वे स्वयं मौन थीं और माताएँ तथा सखी-सहेलियाँ सब ओर से उन्हें घेरे हुए थीं। शूरवीर राजसैनिक हाथों में अस्त्र-शस्त्र उठाये, कवच पहने उनकी रक्षा कर रहे थे। उस समय मृदङ्ग, शङ्ख, ढोल, तुरही और भेरी आदि बाजे बज रहे थे ॥ ४१ ॥ बहुत-सी ब्राह्मणपत्नियाँ पुष्पमाला, चन्दन आदि सुगन्ध-द्रव्य और गहने-कपड़ों से सज-धजकर साथ-साथ चल रही थीं और अनेकों प्रकार के उपहार तथा पूजन आदि की सामग्री लेकर सहस्रों श्रेष्ठ वाराङ्गनाएँ भी साथ थीं ॥ ४२ ॥ गवैये गाते जाते थे, बाजेवाले बाजे बजाते चलते थे और सूत, मागध तथा वंदीजन दुलहिन के चारों ओर जय-जयकार करते—विरद बखानते जा रहे थे ॥ ४३ ॥ देवीजी के मन्दिर में पहुँचकर रुक्मिणीजी ने अपने कमल के सदृश्य सुकोमल हाथ-पैर धोये, आचमन किया; इसके बाद बाहर-भीतर से पवित्र एवं शान्तभाव से युक्त होकर अम्बिकादेवी के मन्दिर में प्रवेश किया ॥ ४४ ॥

**तां वै प्रवयसो बालां विधिज्ञा विप्रयोषितः । भवानीं वन्दयाञ्चक्रुर्भवपत्नीं भवान्विताम् ॥ ४५ ॥**
**नमस्ये त्वाम्बिकेऽभीक्ष्णं स्वसन्तानयुतां शिवाम् । भूयात् पतिर्मे भगवान् कृष्णस्तदनुमोदताम् ॥ ४६ ॥**
**'अद्भिर्गन्धाक्षतैर्धूपैर्वासः' स्रङ्माल्यभूषणैः । नानोपहारबलिभिः प्रदीपावलिभिः पृथक् ॥ ४७ ॥**
**विप्रस्त्रियः पतिमतीस्तथा तैः समपूजयत् । लवणापूपताम्बूलकण्ठसूत्रफलेक्षुभिः ॥ ४८ ॥**

**कर्दमक्षमा**

अन्वयः—विधिज्ञाः, प्रवयसः, विप्रयोषितः, ताम्, बालाम्, वै, भवान्विताम्, भवपत्नीम्, भवानीम्, वन्दयाञ्चक्रुः ॥४५॥ अम्बिके ? स्वसन्तानयुताम्, शिवाम्, अभीक्ष्णम्, नमस्ये, भगवान्, कृष्णः, मे, पतिः, भूयात्, तद्, अनुमोदनम् ॥ ४६ ॥ अद्भिः, गन्धाक्षतैः, धूपैः, वासः, स्रक्-माल्य-भूषणैः, नानोपहारबलिभिः, प्रदीपावलिभिः, भवान्विताम्, भवानीम्, समपूजयत्, तथा, पतिमतीः, विप्रस्त्रियः, तैः, वस्तुभिः, तथा, लवणापूपताम्बूलकण्ठसूत्रफलेक्षुभिः, समपूजयत् ॥ ४७–४८ ॥

**श्रीधरस्वामिविरचिता भावार्थदीपिका**

प्रवयसो वृद्धाः भवान्वितामिति भवस्योपसर्जनत्वं स्त्रीकर्मोचितमुक्तम् ॥ ४५ ॥ नमस्य इति । रुक्मिण्या तदैव दृष्टोऽयं मंत्रः । स्वसंतानयुतां गणेशादिसहिताम् । आत्मारामोऽसौ कथं त्वत्पतिर्भवेदिति चेदत आह । तदनुमोदतामिति । भवती श्रीकृष्ण एव वा ॥ ४६ ॥ वाशःस्त्रगंधादिभिरंबिकां समपूजयत् ॥ ४७ ॥ तथा विप्रस्त्रियोऽपि तैर्द्रव्यैर्लवणादिभिश्च समपूजयदिति ॥४८॥

**श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः**

तां रुक्मिणीम् । उपसर्जनत्वं गौणत्वम् । स्त्रीकर्मसु स्त्रीणामेव प्राधान्यमिति द्योतनायेति भावः विधिज्ञाः स्त्रीशास्त्रकुशलाः ॥ भवानी, भवपत्नीम्, भवस्य कामसहचरीम्, धर्मसहचरीमित्यर्थः । आद्ये पुंयोगे, द्वितीये यज्ञसंयोगे ङीब्विधानात् ।

१. इति सम्प्रार्थयन्ती सा देवीं देवमुमां शिवाम् । पूजयामास विधिवत् द्विजपत्नी पुरस्कृता ॥

२. दीपैः–प्रा. पा. । ३. वस्त्र–विज. ।

विप्रयोषितः पुरोहितस्त्रियः। विधिज्ञाश्शास्त्रविधिज्ञाः। पौराणिकप्रणवोज्झितैर्मूलमंत्रैः श्रीभवान्यै पाद्यादीनि समर्पयामि नम इत्यादि पूजाविधिज्ञा रुक्मिण्यंतर्गताभिप्रायज्ञा वा। भवान्विताममिति-हे भवानि त्वं यथा भवपत्नी भवान्वितासि तथैव मामपि कृष्णपत्नीं कृष्णान्वितां कुर्विति ताभिः कृष्णमालोक्य 'किञ्चित्सुचरितं यन्नः' इति प्राक्प्रार्थितत्वादिति भावः ॥ ४५ ॥ तदेव पूजनावसर एव। दृष्टो ज्ञातः, न पूर्वं पठित इत्यर्थः। आदिना कार्तिकेयग्रहः। यद्वा—संतानपदं विस्तारपरम्, तेन नन्दिभृंग्यादिग्रहः। अत्राशंकते—आत्मारामेति। तत् मत्पतिभवनम्। भवती त्वम्। अनुमोदत्तामंगीकुरुताम्। तवानुमोदनेन त्वया सह तदभेदाच्छ्रीकृष्णोऽवश्यं मे पतिर्भविष्यतीति भावः। तदुक्तं कौर्मे-'न मे नारायणाद्भेदो विद्यते हि विचारतः। तन्मायाहं परं ब्रह्म स विष्णुः परमेश्वरः॥' इति। त्वदभिन्नत्वाद्वा कृष्ण एवानुमोदतामित्यर्थः। वंदनमंत्रस्तु—नमस्य इति। आम्बिके जगन्मातः। शिवामिति-शिवेन सह समाननामगुणत्वादिना भेदाभावात्तन्नाम्ना सोऽपि लभ्यत इति व्यक्तम्। ततस्तेन सहितामित्यर्थः। एवं योग्यतां निर्दिश्य प्रार्थयते—भूयादिति। भगवान् परमोद्र्ध्वपरमैश्वर्यमाधुर्यवान्। अत एव कृष्णः सर्वचित्ताकर्षकः। किमुत तन्निष्ठाया ममेत्यर्थः। स्वसंतानयुतामिति-गणेशोऽत्र मम विघ्नं खंडयत्विति भावः। तत्तत्र। भवतीत्यनुमोदतां स एव मत्पतिर्भवत्विति संमतिमात्रमत्र दत्ताम्। सिद्धप्रायत्वान्मनोरथस्येति भावः। यद्वा—त्वदर्चनप्रभावेण कृष्ण एवेत्यौत्कंठ्यविह्वलायास्तत्स्वीकारस्यापि नातिप्रतीतेः॥ अद्भिर्जलैः॥ अद्भिरिति युग्मकम्। अवादीनामक्रमोक्तिः श्रीकृष्णाविष्टत्वेन तस्या मुनेर्वा पूजाक्रमविस्मृतेः। स्रक् पौष्पी, माला रत्नमयी॥ ४७॥ पतिमतीर्भर्तृमत्यः। लवणपदेन सलवणपाको ग्राह्यः, केवलस्य देवार्चनोपचारेष्वप्रसिद्धेः। अपूपो बहुच्छिद्रः पाकः। कंठसूत्रमुपवीतम्, हारः कंदविशेषो वा। तदुक्तम्—"पुष्पहारे रत्नहारे ह्युपवीतेऽथ भूषणे। स्त्रीणां कंठस्य शास्त्रज्ञे पाकभेदेऽथ कुंकुमे॥ कंठसूत्रो नाटकज्ञे फले शार्करकंदके।" इति निरुक्तिः। केचित्तु—"कण्ठसूत्रं नागरङ्गे स्त्रीणां सौभाग्यभूषणे" इत्याहुः। लवणापूपाः कचोरिका इति केचित्। पृथगिति रुक्मिणीदेव्या विप्रस्त्रीणां च पूजाद्रव्याणां पार्थक्यं बोधयति। विप्रस्त्रीणां पृथक्त्वं च तदिष्टसिद्धये स्वयमपि पृथक्पूजनात् 'किंचित्सुचरितत्' इत्यादिवम्। अतः सम्यगपूजयत्। प्रदीपावलिभिरित्यंते महानीराजनात्। पतिमतीरित्येवंलक्षणकर्मणि पतिपुत्रवतीनामेवाधिकार इति बोधयति॥ ४८॥

### श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी

भवानीं भवपत्नीमिति भवस्य कामसहचरीं धर्मसहचरीमपीत्यर्थः। आद्ये पुंयोगमात्रे द्वितीये यज्ञसंयोगे ङीपो विधानात् इति तस्या भवस्य महाभागवतस्य परमान्तरङ्गत्वं दर्शितम् अत एव भवान्वितामेव सतीं भवान्वितामेव वन्दयाञ्चक्रुरित्यर्थः। अनेन तु वक्ष्यमाणस्य मन्त्रस्य ताभिरुपदेश्यत्वमायातीति तासामेव तद्द्रष्टृत्वं लभ्यते॥ ४५॥ वन्दनमन्त्रमाह—नमस्य इति। अम्बिके, हे जगन्मातः! शिवामिति श्रीशिवेन सह समाननामगुणत्वादिना भेदाभावात्तन्नाम्ना सोऽपि लभ्यत इति व्यक्तं ततस्तेन सहितामित्यर्थः। एवं योग्यतां निर्द्दिश्य प्रार्थयते—भूयादिति। भगवान् सर्वोद्र्ध्वपरममाधुर्य्यैश्वर्य्यवान् अत एव कृष्णः सर्वस्यैव चिताकर्षकः किमुत तदेकनिष्ठाया ममेत्यर्थः। अन्यत्तैः तत्र भवतीति भवती तु अनुमोदनमात्रं कुरुतां सिद्धप्रायत्वान्मनोरथस्येति भावः। कृष्ण एवेति उत्कण्ठया तदङ्गीकारस्यापि नातिप्रतीतेः॥ ४६॥ अद्भिरिति युग्मकम्। अवादीनामक्रमेणोक्तिः श्रीकृष्णाविष्टत्वेन तस्या मुनेर्वा पूजाक्रमविस्मृतेः स्रग्माल्ययोः साधारणासाधारणत्वेन भेदो ज्ञेयः। स्रज्यते स्रक् माल्यते धार्य्यते माला मालेव माल्यमिति निरुक्तेः पृथगिति रुक्मिणी देव्या विप्रस्त्रीणाञ्च पूजाद्रव्यादीनां पार्थक्यं बोधयति विप्रस्त्रीणां पृथक्त्वञ्च तदिष्टसिद्धयर्थं स्वयमपि पृथक् पूजनात् किञ्चित् सुचरितमित्यादिवत् अतः सम्यगपूजयत्। प्रदीपावलिभिरित्यन्ते महानीराजनात् पतिमतीरिति लवणेति च तथाविधैः॥ ४७-४८॥

### श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी

भवानी-शब्दोऽत्र पार्व्वतीमात्रवाचकः, भवस्य पत्नीमिति तस्या वन्दनेन तस्यापि वन्दने सिद्धे भक्त्या भवान्वितामेव वन्दयाञ्चक्रुः; यद्वा तस्याः प्रसिद्धं परमं पातिव्रत्यं सौभाग्यञ्च तादृशत्वसिद्धयेऽभिप्रेतमिति दिक्॥ ४५॥ अम्बिके हे जगन्मातः! शिवामिति—श्रीशिवेन सह सनामत्वादिना भेदाभावात्तेन सहितामित्यर्थः। यद्वा, सर्व्वमंगलकारिणीं मंगलमेवोद्दिशन्ती प्रार्थयति—भूयादिति। भगवान् परमस्वतन्त्रोऽपि, कृष्ण इति सर्व्वथा सर्व्वचित्ताकर्षक इत्यर्थः। अयं पतित्वे हेतुः। अन्यत्तैर्व्याख्यातम्। यद्वा, तत्पतित्वमनु पश्चात् मे मोदतां मयि प्रीयताम्. विवाहानन्तरं सदा सुभगा भवेयमित्यर्थः। तत् सम्भावयति—भगवान्, यतो भक्तवश्यताद्यशेषगुणप्रकटनपर इत्यर्थः॥ ४६॥ अद्भिरित्यादिक्रमेणोक्तिः श्रीकृष्णाविष्टचित्ततया पूजाक्रमविस्मृतेः, स्रजः पुष्पादिमालाः, माल्यान्यन्यान्यग्रथितपुष्पाणि, पृथगिति—देव्या विप्रस्त्रीणां च पूजाद्रव्यादीनां पार्थक्यं बोधयति। अतः सम्यगपूजयत्। उपहारा नैवेद्यादयः, वलयोऽष्टदिक्षु बलिदानानि, प्रदीपावलिभिश्चान्ते महानीराजनम्। एवं पृथगसंकीर्णतयार्पणेनेत्यर्थः। पतिमतीरिति तासामेव तदनीमपेक्ष्यत्वात्, लवणेति दम्पत्योः सदा रससिद्धयर्थं विवाहकाले लवणादिभिर्मंगलद्रव्यैः पूजाया विधेयत्वात्॥ ४७-४८॥

### श्रीमद्वीरराघवाचार्यकृता भागवतचन्द्रचन्द्रिका

ततः प्रवयसो वृद्धा विधिज्ञाश्च विप्रयोषितः भवस्य पत्नीं भवेनान्वितां भवानीं प्रति तां कन्यां वन्दयाञ्चक्रुः यद्यपि भवानीमिति पुंयोगलक्षणङीपैव भवसम्बन्धलाभः, तथापि साहित्यलाभार्थं तत्रापि भवस्याप्राधान्यसूचनार्थं भवान्वितामित्युक्तं पुंयोगश्चात्र भर्तृभार्यसम्बन्धविशेषरूप इति द्योतयितुं भवपत्नीमिति ॥ ४५ ॥ तदा रुक्मिणी नमस्य इत्यादि मन्त्रमपूर्वमेव स्वयं पश्यन्ती तन्मुखेन स्वमनीषितं च प्रार्थयन्ती यथावत्पूजयामासेत्याह—नमस्य इति त्रिभिः । हे अम्बिके स्वसन्तानयुतां गणेशादिसहितां शिवां मङ्गलरूपां त्वाम् अभीक्ष्णं पुनः पुनः नमस्ये नमस्करोमि भगवान् कृष्णो मम पतिर्भूयादिति यत्तदनुमोदताम् अनुगृह्णातु भवतीति कर्त्तृपदाध्याहारः । यद्वा, कृष्णो मम पतिर्भूयात् कृष्ण एव तदनुमोदतामिति त्वमनुगृह्णीष्वेत्यर्थः इत्थं प्रार्थयन्ती सा रुक्मिणी द्विजपत्नीभिः पुरस्कृता पुरोऽवस्थापिता अवादिभिर्यथाविधि देवीं शिवामुमां देवं शिवं च पूजयामासेति सम्बन्धः ॥४६॥ अद्भिः शुद्धोदकैः गन्धैश्चन्दनैरक्षतैश्च वासोभिर्दिव्याम्बरैः स्रग्भिर्माल्यैर्भूषणैश्च नानाविधैरुपहारैर्नैवेद्यैर्बलिभिश्च यद्यपि "वैदर्भी भीष्मकसुतां श्रियो मात्राम्" इति लक्ष्म्यवतारत्वेन प्रोक्ता या भगवन्नित्यानपायिन्याः सर्वोत्तमाया रुक्मिण्याः केवलप्राकृतस्त्रिय इवाम्बिकावन्दनादिकमनुचितं तथापि भगवत इव तमनुव्रतय अस्या मानव्यवतारत्वाद्यद्यदाचरति श्रेष्ठ इति न्यायेन लोकानुग्रहशीलत्वाच्च तथा कृतमित्यवगन्तव्यम् ॥ ४७ ॥ ततस्तथा लवणापूपादिभिस्तैरवादिभिश्च पतिमतीर्जीवद्भर्तृकाः विप्रस्त्रीश्च सम्यगपूजयत् ॥ ४८ ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

प्रवयसो वृद्धाः विधिज्ञाः स्त्रीशास्त्रकुशलाः ॥ ४५-४७ ॥ पतिमतीः भर्तृमत्यः ॥ ४८ ॥

### श्रीमज्जीवगोस्वामिकृतः बृहत्क्रमसन्दर्भः

भवानीमित्यादि प्रवयसः स्थविरा विप्रयोषितोऽहं पूर्विकया कयाचिदुक्तं भवानी वन्द्यताम्, कयाचिदुक्तं पत्नी वन्द्यताम्, कयाचिदुक्तं भवान्वितामिति नामद्वयम् । अन्यथा भवान्वितां भवानीमित्येव सिध्यति, भवपत्नीमिति पुनरुक्तं स्यात् । यद्वा, भवपत्नींवन्दयाञ्चक्रुः कीदृशीम् भवान्वितां सभर्तृकाम् । पुनः कीदृशीम् भवानीम्, भवो वृद्धिस्तमानयतीति भवानी तथाभूता सा ईर्लक्ष्मीश्चेति भवानीं ताम् 'लक्ष्मीर्वृद्धिप्रदागृहे' इति मार्कण्डेयोक्तेः ॥ ४६-५० ॥

### श्रीनाथचक्रवर्तिपादविरचिता चैतन्यमतमञ्जूषा

भवानीं वन्दयाञ्चक्रुरित्यादि । प्रवयसः स्थविरा विप्रयोषितः अहंपूर्विकया क्याचिदुक्तं 'भवनी वन्द्यताम्', क्याचिदुक्तं 'भवपत्नी वन्द्यताम्', क्याचिदुक्तं भवान्वितामिति । अथवा 'भवपत्नीं वन्दयाञ्चक्रुः । कीदृशीम् ? भवान्वितां समर्तृकाम्; पुनः कीदृशीम् ? भवानीम्; भव उद्भवो वृद्धिरिति यावत्, तमानयतीति भवानी तथाभूता ईर्लक्ष्मीर्यस्यास्तां 'लक्ष्मीर्वृद्धिप्रदागृहे' इति मार्कण्डेयः । अन्यथा भव पत्नीत्वेनैव भवानीति गम्यते ॥ ४६-५० ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

प्रवयसो वृद्धा विप्रयोषितः पुरोहितस्त्रियः विधिज्ञाः शास्त्रविधिज्ञाः रुक्मिण्या मनोगतप्रकारज्ञाश्च भवपत्नींभवान्वितामिति हे भवानि ! त्वं यथा भवपत्नीं भवान्विता च विराजसे तथैवेमामपि कृष्णपत्नीं कृष्णन्वितां कुर्विति ताभिरपि कृष्णमालोक्य किञ्चित्सुचरितं यन्न इति प्राक्प्रार्थितत्वादिति भावः । वन्दनमन्त्रमपि ता एव तां वाचयामासुः स यथा नमस्ये इति स्वसन्तानयुतामिति त गणेशो ममात्रविघ्नं खण्डयत्विति भावः तत्तत्रभवती अनुमोदतां भवतु ते स एव पतिरिति स्वसम्मतिं दत्तमित्यर्थः ॥ ४६॥ स्रक् पौष्पी माला रत्नमयी ॥ ४७ ॥ लवणापूपः कचोरिका इति केचित् ॥ ४८ ॥

### गूढार्थदीपिनी

प्रवयसो वृद्धाः पुरोहित स्त्रियः ॥ ४५ ॥ स्वसन्तानो गणेशादिः ॥ ४६ ॥ अद्भिरिति युग्मम् । अद्भिर्जलादिभिः अम्बिकां तथा तैरेव द्रव्यैर्लवणादिभिश्च विप्रस्त्रीरपि समपूजयदित्यन्वयः । लवण पूपः कचोरिकाः । कण्ठसूत्रमुपवीतम् । उपहारो नैवेद्यम् । बलिर्नारिकेलादिर्नतु छागादिः ॥ ४७-४८ ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

प्रवयसो वृद्धाः ॥ ४५ ॥ भगवान् मे पतिर्भूयादिति यत्तद्भवती अनुमोदतामनुगृह्णातु ॥ ४६-४७ ॥ तथा विप्रस्त्रियो यामपूजयन् ॥ ४८ ॥

### श्रीसत्यधर्मकृता श्रीभागवतटिप्पणी

गायका गतम् । गायन्तः स्तुवन्तश्च वाद्यवादकाश्च ॥ ४५ ॥ देवसदनं देवालयमासाद्य प्राप्य धौतपादकराम्बुजा प्रक्षालितचरणकरसरसिजोपस्पृश्याचम्योपस्पर्शः स्पर्शमात्रे स्नानाचमनयोरपीति विश्वः । अम्बिकान्तिकं सतीसमीपम् ॥ ४६ ॥

प्रवयसो वृद्धा विधिज्ञाः स्त्रीमर्यादाज्ञास्तां बालां भवानीं गतम् । वन्दयाञ्चक्रुः कृतनतिञ्चक्रुर्नमस्कारयामासुः । नमस्कारकारणमीरयति । भवेति । भवान्वितां मङ्गलान्वितामेतां पत्नीं शिशुपालस्य पशुपालस्य वेति विविच्यावचनाद्येनकेन वाऽनुष्ठितेष्टफलभोक्त्री भव भावयेति । एतेन भवानीमित्युक्त्यैव भवभामिनीत्ववोधाद्भवपत्नीत्यतिरिक्तं तथा विरुद्धमतिकृतत्वादप्रयोज्यत्वाद्यालङ्कारिकमर्यादाविपर्यासश्चेति परास्तं वेदितव्यम् ॥ ४७ ॥ आन्तरङ्गिकं रुक्मिणीभावं ग्रन्थकृद्ग्रथयति । नमस्य इति । शिवां मङ्गलरूपिणीं स्वसन्तानयुतां गणेशगुहादियुताम् ॥ ४८ ॥

### श्रीमद्वल्लभाचार्य्यकृता सुबोधिनी

ततो या विधिज्ञा ब्राह्मणस्त्रियो वृद्धाः भवानीं वन्दयाञ्चक्रुः । भवानीशब्दः प्राप्तपुरुषसम्बन्धायाः संज्ञामात्रम् । तेन विशेषं ख्यापयितुं **भवपत्नीमित्युक्तम्** । अथवा । इयं न महादेवस्य भोगस्त्री, तथा सति वरदातृत्वं न स्यादिति **भवपत्नीमित्युक्तम्** । यज्ञसंयोग एव पत्युर्नो भवतीति । तत्रापि भवान्विता । उद्भवात्मको हि सः सम्पूर्णो भवति । स्त्रिया सहितस्यैव सम्पूर्णत्वात् ॥ ४५ ॥ तदानीमेव भवानीनमस्कारे भगवदिच्छया मन्त्रः स्फुरित इति तं निरूपयति **नमस्ये त्वेति** । स्वसन्तानयुतां गणपत्यादिसहिताम्, शिवमपि नमस्ये । मन्त्र एव प्रार्थनामाह **भूयात्पतिर्मे भगवान्कृष्ण इति** । तदेतदनुमोदतां शिवः भवानी च । अथवा । कृष्णो वा अनुमोदताम्, न तु कोपं करोतु, अन्यदेवतानमस्कारं वा अनौचित्येन न स्वीकरोतु । लोकप्रतीतिस्तु भूयान्मे पतिरिति भिन्नम् । तत्कृष्णः अनुमोदतामिति च भिन्नम् । अन्यथा महादेवः स्वसदृशमेव कुर्यात् । तच्चान्येषामफलम् । अतः कृष्णानुमोदनं सर्वत्र वक्तव्यम् ॥ ४६ ॥ न केवलमयं नमस्कार एव मन्त्रः, किन्त्वनेन मन्त्रेण सर्वमेव पूजां कृतवतीत्याह **अद्भिरिति** । पाद्यार्घ्याचमनस्नानैः, ततः गन्धाक्षतैर्धूपैः, ततः पूर्वं वासःस्रङ्माल्यभूषणैः । पश्चान्निरूपणमार्द्रे देहे परिधापितानां पश्चात्त्यागार्थम् । 'अनलङ्कृता क्षणमपि न तिष्ठे'दिति अक्षतानामलङ्करणं पश्चात् । पुनः **प्रदीपावलिभिरिति** नानाविधारात्रिकाणि निरूपितानि । **पृथगिति** अग्रे पूर्वत्रापि सम्बध्यते । महादेवे भवान्यां च । तथा प्रत्येकं ब्राह्मणस्त्रीषु । अन्यथा **विष्णवे** दास्यति शिवः पूजितः सपरिकरः । ब्रह्मा त्ववशिष्येतेति । अतस्तत्प्रीत्यर्थं विप्रस्त्रियोऽपि पृथक् पृथक् वस्त्रादिभिः पूजिताः । किञ्च । विवाहे विशेषप्रकारमाह **लवणेति** । मङ्गलद्रव्याण्येतानि षट्, रसात्मकानि च । **कण्ठसूत्रं** नालसूत्रम्, फलानि नानाविधानि, इक्षवश्च खण्डशः कृताः । एकत्रैव षण्णां दानम् ॥ ४७-४८ ॥

### श्रीसुबोधिनी-सारः

प्रवयसो वृद्धा विधिज्ञाः पूजनादिप्रकारं जानंत्यो विप्रस्त्रियः तां बालां राजपुत्रीं भवस्य शिवस्य पत्नीं भवेनान्वितां युक्तां तत्र स्थाने भवानीमंबिकां वंदयांचक्रुः प्रणामं कारयामासुः ॥ ४५ ॥ तत्र मंत्र उक्तो रुक्मिण्याः हे अम्बिके स्वसंतानैर्गणेशादिभिः युतां सहितां शिवां मंगलरूपां त्वा त्वामभीक्ष्णं मुहुर्मुहुरहं नमस्यामि । भगवान् कृष्णो मे पतिर्भूयात् तदनुमोदतां सम्पादयतु ॥ ४६ ॥ ततः पूजामाह । अद्भिर्जलैर्गन्धादिभिः समपूजयत् देवीम् पतिमतीः सौभाग्यवत्यो विप्रस्त्रियोपि तैर्द्रव्यैस्तथापूजयन् । लवणं प्रसिद्धं न तु स्वादुपर्यायः पाद्मे तथोक्तत्वात् । अपूपाः ताम्बूलम् इति प्रसिद्धम् । कण्ठसूत्रं मांगल्यदोरकम् । फलानि इक्षुदण्डः तैः ॥ ४७-४८ ॥

### विवरणटिप्पणी

अद्भिरित्यत्र । ततः पूर्वमिति । गन्धाक्षतेभ्यः पूर्वमित्यर्थः । पश्चादिति । आर्द्रे देहे सम्बद्धानि वासांस्यार्द्राणि भवन्ति । अतो धूपादिना आर्द्रतां दूरीकृत्य पश्चात्तान्युत्तार्य पुनरन्यानि परिधापितानीत्यर्थः । अक्षतानामिति । संबन्धविवक्षया करणे षष्ठी, अक्षतानां साधकतमत्वाभावज्ञापनाय । स्नानानन्तरमार्द्रतां दूरीकृत्याभरणपरिधापनं यावद्भवति, तावदक्षतैरेवालंकरणं कृतमित्यर्थः ।

### गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

ततश्च प्रवयसो वृद्धाः विधिज्ञाः पूजाप्रकारज्ञा विप्रयोषितः पुरोहितस्त्रियः भवानीं प्रति तां बालां रुक्मिणीं वन्दयाञ्चक्रुरित्यन्वयः । 'यद्यपि भवानीपदेनैव भवसम्बन्धलाभस्तथापि सम्बन्धविशेषोऽत्र भर्तृभार्याभावात्मक'' इति द्योतयन्नाह—भवपत्नीमिति । 'भवस्यापि गौणतया तया सह नमस्कारादिपूजा कृता' इति सूचयन्नाह—भवान्वितामिति ॥ ४५ ॥ तदेव स्फुरितं मन्त्रमाह—नमस्य इति । अम्बिके ! स्वसन्तानयुतां गणेशादिसहितां शिवां मङ्गलरूपां त्वामभीक्ष्णं पुनःपुनर्नमस्ये नमस्करोमि । ''किमर्थं नमस्करोषि' तत्राह—भगवान् कृष्णो मे पतिर्भूयात् इति यत्तद्भवत्यनुमोदतामनुगृह्णातु इति ॥ ४६ ॥ एवं नमस्कारपूर्वकं वरं सम्प्रार्थ्य जलादिभिः पृथक् भवानीं भयं गणेशादीन् देवांश्चापूजयदिति सम्बन्धः । अद्भिः शुद्धोदकैः, गन्धैश्चन्दनैश्च, अक्षतैः, धूपैः, वासोभिः वस्त्रैः, स्रग्भिः, माल्यैः पुष्पैः, भूषणैः, नानाविधैरुपहारैर्नैवेद्यैः; बलिभिः अन्यैश्च नारिकेलादिभिश्च पूजा-

साधनैः, प्रदीपावलिभिः आरार्तिकादिभिः। न च "भीष्मकसुतां 'श्रियो मात्राम्' इति लक्ष्म्यवतारत्वेनोक्ताया भगवदाराधनैकनिष्ठायाः रुक्मिण्याः प्राकृत स्त्रिय इव अम्बिकाराधनं कथं सङ्गच्छत" इति शङ्क्यम्, भगवत इव मनुष्यनाट्याङ्गीकारात्तस्य गुरुकुलवासतत्सेवाविद्याग्रहणादिवदस्या अपि स्वकुलोचितव्यवहारप्राप्तस्याम्बिकाराधनस्य सङ्गतत्वात्। "अर्चिष्यन्ति मनुष्यास्त्वां सर्वकामवरेश्वरीम्" इति स्वोक्तसत्यतासिद्ध्यर्थं भगवत्प्रेरणयापि तदाराधनसम्भवाच्च ॥ ४७ ॥ तथा तैर्लवणादिभिश्च पतिमतीर्जीवद्भर्तृका विप्रस्त्रीश्च सम्यगपूजयत् ॥ ४८ ॥

### अन्वितार्थप्रकाशिका

तामिति। प्रवयसो वृद्धाः विधिज्ञाः पूजाप्रकारज्ञा विप्रयोषितः पुरोहितस्त्रियः भवेन शिवेन नित्यमन्वितां भवस्योपसर्जनत्वं श्रीकर्मोचितमुक्तं भवस्य पत्नीं भवानीं पार्वतीं भवपत्नीं भवानीमित्यनयोरैकार्थ्येऽपि पार्वत्याः पतिव्रताशिरोमणित्वप्रदर्शनाय पुनरुक्तिः। तां बालां रुक्मिणीं प्रयोज्यकर्त्री वन्दयांचक्रुः। तामिति अणिकर्त्तुः कर्मत्वमार्षम् ॥ ४५ ॥ तदेव स्फुरितं मन्त्रमाह—नमस्य इति ॥ हे अम्बिके! स्वसंतानयुतां स्वः स्वार्द्धाङ्गभूतः शिवः सन्तानो गणेशादिस्तद्युतामिति वा देवीप्राधान्यं प्राग्वत्। शिवां मङ्गलरूपां त्वामभीक्ष्णं पुनः पुनर्नमस्ये नमस्करोमि। तदर्थः। भगवान् कृष्णो मे पतिर्भूयात् इति यत्तद् भवती कृष्ण एव वानुनोदतामनुगृह्णातु ॥ ४६ ॥ अद्भिरिति। अद्भिर्जलैर्गन्धादिभूषणान्तैः स्रक् पौष्पी माला रत्नमयी नानोपहारैर्वेद्यैः बलिभिश्च प्रदीपावलिभिर्महानीराजनैश्च पृथक् भवानीं भवं गणेशादींश्चापूजयत् इति शेषः ॥ ४७ ॥ विप्रेति। तथा पतिमतीः जीवद्भर्तृका प्रियस्त्रियः कर्माणि तैः अबादिभिः लवणापूपादिभिश्च रुक्मिणी समपूजयत्। लवणापूपः कचोरिका इति केचित् ॥ ४८ ॥

### श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्

प्रवयसः स्थविराः भवानीं पार्वतीं ॥ ४५ ॥ स्वसंतानयुतां स्वपुत्रगणयादियुक्तां। तन्ममयाचनमनुमोदतां सफलं कुरुतामित्यर्थः। नमस्ये इति रुक्मिण्युक्तोमंत्रः ॥ ४६ ॥ मालायां ग्रथितुमर्हाणि पुष्पाणि मालानि। नानाविधैरुपहारादिभिः सा अंबिकां समपूजयदित्युत्तरेणान्वयः। तत्र उपहारा अग्ने धर्तुं योग्याः फलादयश्च बलयो भक्षितुं योग्यानि अन्नानि च ॥ ४७ ॥ तथा सा तैर्द्रव्यैर्लवणादिभिश्च। विप्रपत्नीः समपूजयत्तया विप्रस्त्रियः पूजिता इत्यर्थः। कंठसूत्रं श्यामाल्यमणिग्रथितं मध्यखचितसुवर्णमणिकं योषितां कंठे धार्यं सौभाग्यसूत्रं ॥ ४८ ॥

### भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

तामिति ॥ ततः, प्रवयसो वृद्धाः, विधिज्ञाश्च, विप्रयोषितः, भवान्वितां शिवेनान्वितां, भवपत्नीं शिवपत्नीं, भवानीमम्बिकां, बालां रुक्मिणीं, वन्दयांचक्रुः वै। यद्यपि भवानीमिति पुंयोगलक्षणङीपैव भवसंबन्धलाभस्तथापि साहित्यलाभार्थं तत्रापि भवस्य प्राधान्यसूचनार्थं भवान्वितामित्युक्तम्। पुंयोगश्चात्र भर्तृभार्यासंबन्धविशेषरूप इति द्योतयितुं भवपत्नीमिति ज्ञातव्यम् ॥ ४५ ॥ नमस्य इति ॥ हे अम्बिके, स्वसंतानयुतां गणेशादिस्वसंतानसहितां, शिवां मङ्गलरूपां, त्वां अभीक्ष्णं, नमस्ये नमस्करोमि। भगवान्, कृष्णः, मे मम, पतिः भूयात्, इति यत्, तत् अनुमोदतामनुगृह्णातु। भवतीति कर्तृपदाध्याहारः। रुक्मिण्या तदैव दृष्टोऽयं मन्त्रः ॥ ४६ ॥ अद्भिरिति ॥ ततः, रुक्मिणी, अद्भिः शुद्धोदकैः, गन्धाक्षतैर्गन्धयुक्तैरक्षतैः, धूपैः वासःस्रङ्माल्यभूषणैः, नानोपहारबलिभिः, पृथक् प्रदीपावलिभिश्च, अम्बिकां समपूजयत् ॥ ४७ ॥ विप्रस्त्रिय इति ॥ ततः, रुक्मिणी, पतिमतीः, विप्रस्त्रियः ब्राह्मणीः, तवा अम्बिकावदेव, तैरवाद्युक्तद्रव्यैः, लवणापूपताम्बूलकण्ठसूत्रफलेक्षुभिश्च, समपूजयत्। यद्वा पतिमतीः राभर्तृकाः, विप्रस्त्रियो ब्राह्मण्यः, तैर्द्रव्यैः लवणादिभिश्च, अम्बिकां, अपूजयन् ॥ ४८ ॥

### कृष्णप्रिया

बहुत-सी विधि-विधान जाननेवाली बड़ी-बूढ़ी ब्राह्मणियाँ उनके साथ थीं। उन्होंने भगवान् शङ्कर की अर्द्धाङ्गिनी भवानी को और भगवान् शङ्करजी को भी रुक्मिणीजी से प्रणाम करवाया ॥ ४५ ॥ रुक्मिणीजी ने भगवती से प्रार्थना की—'अम्बिका माता! आपकी गोद में बैठे हुए आपके प्रिय पुत्र गणेशजी को तथा आपको मैं बार-बार नमस्कार करती हूँ। आप ऐसा आशीर्वाद दीजिये कि मेरी अभिलाषा पूर्ण हो। भगवान् श्रीकृष्ण ही मेरे पति हों' ॥ ४६ ॥ इसके बाद रुक्मिणीजी ने जल, गन्ध, अक्षत, धूप, वस्त्र, पुष्पमाला, हार, आभूषण, अनेकों प्रकार के नैवेद्य, भेंट और आरती आदि सामग्रियों से अम्बिका देवी की पूजा की ॥ ४७ ॥ तदनन्तर उक्त सामग्रियों से तथा नमक, पूआ, पान, कण्ठसूत्र, फल और ईख से सुहागिन ब्राह्मणियों की भी पूजा की ॥ ४८ ॥

तस्यै स्त्रियस्ताः प्रददुः [1]शेषां युयुजुराशिषः । ताभ्यो देव्यै नमश्चक्रे [2]शेषां च जगृहे वधूः ॥ ४९ ॥
[3]मुनिव्रतमथ त्यक्त्वा निश्चक्रामाम्बिकागृहात् । [4]प्रगृह्य पाणिना [5]भृत्यां रत्नमुद्रोपशोभिना[6] ॥५०॥
[7]तां देवमायामिव [8]वीरमोहिनीं सुमध्यमां कुण्डलमण्डिताननाम् ।
श्यामां नितम्बार्पितरत्नमेखलां व्यञ्जत्स्तनीं [9]कुन्तलशङ्कितेक्षणाम् ॥ ५१ ॥
शुचिस्मितां बिम्बफलाधरद्युति[10]शोणायमानद्विजकुन्दकुड्मलाम् ।
पदा चलन्तीं कलहंसगामिनीं शिञ्जत्कलानूपुरधामशोभिना[11] ।
विलोक्य वीरा मुमुहुः समागता यशस्विनस्तत्कृतहृच्छयार्दिताः ॥ ५२ ॥

**कर्दमक्षमा**

अन्वयः—ताः, स्त्रियः, तस्यै, शेषाः प्रपदुः, च, आशिषः, युयुजुः वधूः, तस्यै, ताभ्यः, नमश्चक्रे, च, शेषाम्, जगृहे ।४९। अथ, मुनि व्रतम्, त्यक्त्वा, रत्नमुद्रोपशोभिना, पाणिना, भृत्याम्, प्रगृह्य, अम्बिकागृहात्, निश्चक्राम ॥ ५० ॥ देवमायाम्, इव, वीरमोहिनीम्, सुमध्यमाम्, कुण्डलमण्डिताननाम्, श्यामाम्, नितम्बार्पितरत्नमेखलाम्, व्यञ्जत्स्तनीम्, कुन्तलशङ्कितााननाम्, शुचिस्मिताम्, बिम्बफलाधर द्युति शोणायमान, द्विजकुन्द, कुण्डलाम्, कलहंसगामिनीम्, सिञ्जत् कला नूपुर धाम शोभिना, पदा चलनीम्, विलोक्य, तत्, कृतहृच्छयार्दिताः, रामागताः, वीराः, मुमुहुः ॥ ५१-५२ ॥

**श्रीधरस्वामिविरचिता भावार्थदीपिका**

शेषां निर्माल्यम् ॥ ४९ ॥ मुनिव्रतं मौनम् । भृत्यां सखीम् ॥ ५० ॥ तां विलोक्य वीरा मुमुहुरिति तृतीयेनान्वयः । श्यामामजातरजस्काम् । कुन्तलेभ्यः शंकिते इव चपले ईक्षणे यस्यास्ताम् ॥ ५१ ॥ द्विजा एव कुंदानां कुड्मलानि बिम्बफलवद्योऽधरस्तस्य द्युतिभिः शोणायमानानि तानि यस्यास्ताम् । कला शोभा तद्युक्तं नूपुरं शिंजच्च तत्कलानूपुरं च तस्य धाम दीप्तिस्तेन शोभितुं शीलमस्य तेन पदा चलंतीम् ॥ ५२-५३ ॥

**श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः**

तस्यै रुक्मिण्यै । ता विप्रपत्न्यः । शेषां पुष्पमालाम् "देवार्पितार्चकप्रत्ता शेषा स्यात्पुष्प मालिका" इति संहितोक्तेः । विश्वकोशे तु-"प्रसादान्निजनिर्माल्यदाने शेषाऽनुकीर्तिता" इत्युक्तम् । ताभ्यो ब्राह्मणीभ्यो दैव्यै च । वधू रुक्मिणी ॥ ४९ ॥ अथ शेषाग्रहणोत्तरम् । 'भृत्या दासी सखी भृत्या भृत्या भृतिरिहोदिता" इति बह्वर्थवाग्विलासे । रत्नमुद्रा रत्नांगुलीयकम् ॥५०॥ तां रुक्मिणीम् । अथावसरं प्राप्य विरोधिपरिभवाय तस्याः प्रभावोऽप्याविर्बभूवेत्याह—तामिति ॥ ५१ ॥ शिंजत् शब्दं कुर्वत् 'भूषणानां तु शिञ्जितम्' इत्यमरः । बिम्बफलाधरस्य द्युतिभिः शोभायमाना द्विजा दंता एव कुन्दकुड्मलानि यस्यातास् । शिंजच्च तत्कलानूपुरमतिशिल्पनिर्मितनूपुरं तस्य धामभिः शोभिना पदा चलन्तीम् ॥ ५२ ॥

**श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी**

देव्यै च दुर्गायै ॥ ४९ ॥ प्रगृह्येति बहुसम्मर्देन मूलतस्तु श्रीकृष्णागमनसमये सम्भ्रम वैवश्येन रत्नमुद्रां रत्नाङ्गुलीयकम् उप अधिकं शोभयितुं शीलं यस्येति शोभाविशेषवर्णनात्तत्सर्वं "यात्राछलेन हरयेऽर्पयतीं स्वशोभाम्" इत्यनुसारेण तदर्पणपरिकरत्वमेव प्राप्तमिति द्योतितं टीकायां भृत्यां सखीमिति योग्यत्वाल्लक्षणया ॥ ५० ॥ अथावसरं प्राप्य विरोधिपराभवाय तस्याः प्रभावोऽप्याविर्बभूवेत्याह—तां देवमायामिति, सार्द्धैस्त्रिभिः । तत्र तामिति सार्द्धद्वयकम् "यात्राछलेन हरयेऽर्पयती स्वशोभाम्" इति वक्ष्यमाणानुसारेणान्येभ्यस्तु स्वशोभामनर्पयन्तीं तां देवमायामिव 'मल्लानामशनिः' इत्यादिदिशा देवस्य भक्तेषु स्वरूपवैचित्र्याद्दीव्यतः श्रीकृष्णस्य मल्लादिषु त्वशनित्वादिप्रत्यायिकां मायामिव वीरमोहनीं वीराणां प्रतिपक्षाणां पाठान्तरे धैर्य्यभाजामपि तेषां स्वस्मिन् रूपान्तरकल्पनया तान् मोहयन्तीम् वीक्ष्य ते वीरा मुमुहुः वीरमोहनीरूपमेव वर्णयति—सुमध्यमामित्यादिना । मोहनीरूपत्वेनैव तेषां मोहो जनिष्यत इति स्पष्टयति यशस्विनो वीरत्व धीरत्वादिना ख्याता अपि तया कृतेन मोहनीरूपेण यो हृच्छयस्तेनार्द्दिता इत्यस्य वैयर्थ्यं स्यात् इत्ययमेवार्थो विवक्षितः ॥ ५१-५३ ॥

---

१. शेषाः-विज. । २. शेषाश्च । ३. सती व्रत-श्रीधर. टि. ; मौनव्रत-वीर. ।
४. उपकण्ठे सुरेशस्य पौलोम्याश्च निकेतनम् । तौ विदर्भप्रसूतानां नृपाणां कुलदेवते ॥ १ ॥
तदन्तिकमुपागम्य शचीं सुरपतिप्रियाम् । चिराराधितपादाब्जां सा प्रणम्य विनिर्ययौ ॥ २ ॥ विजये द्वौ स्तः ।
५. धात्रीं-विज. । ६. शोभितां-वीर. विज. । ७. धृतानेकातपत्राभ्यां वीजच्चामरसंकुलाम् ॥-विजयेऽधिकः । ८. धीर-श्रीधर. टि. । ९. कुण्डल-प्रा. पा. । १०. द्युभिः-वीर. । ११. कलं नूपुरपादशोभितां-विज. ।

### श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी

प्रकर्षेण सादरत्वादिना ददुः, देव्यै च दुर्गायै, वधूरिति श्रीविष्णुव्यतिरिक्तदेवतानिर्माल्यग्रहणे निपिद्धेऽपि कन्यात्वेना दोषादिति भावः ॥ ४९ ॥ प्रकर्षेण स्नेहभरेण दृढतया गृहीत्वेति तया श्रीकृष्णप्रदर्शनार्थम्; यद्वा, भावि-श्रीकृष्णदर्शनवैवश्येन पतनशंकया, वस्तुतस्तु शोभाविशेषार्थमेव, तथा च वक्ष्यति ( भा० १०।५३।५४ ) 'यात्राच्छलेन हरयेऽर्पयतीं स्वशोभाम्' इति रत्नमुद्रया रत्नाँगुलीयकेन विवाहे परिधार्य्येण उप सर्व्वोपरितनत्वेन शोभितुं शीलमस्येति, तथा तेनेति पाणेः परमशोभैवोक्ता।५०। देवस्य श्रीविष्णोर्मायामिव। कुतः ? मोहिनीं परमसुन्दरीं मोहिनीतुल्यां वा, हे वीर ! 'धीर' इति च पाठस्तद्धेतुत्वेन। तस्याः सौन्दर्य्यं वर्णयन् तां विशिनष्टि—सुमध्यमामित्यादि दशविशेषणैः। तत्र सुमध्यमामित्युपलक्षणं सर्व्वांग सौष्ठवस्य, तच्च विस्तारितं श्रीहरिवंशे ( विष्णु० ५९।३८.४१ )—

श्यामावदाता स ह्यासीत् पृथुचार्व्वायतेक्षणा। ताम्रौष्ठनयनापांगी पीनोरूजघनस्तनी ॥
बृहती चारुसर्वांगी तन्वी शशिनिभानना। ताम्रतुंगनखी सुभ्रूर्नीलकुञ्चितमूर्द्धजा ॥
अत्यर्थं रूपतः कान्ता पीनश्रोणिपयोधरा। तीक्ष्ण-शुक्लैः समैर्दन्तैः प्रभासद्भिरलंकृता ॥
अनन्या प्रमदा लोके रूपेण यशसा श्रिया। रूपिणी रुक्मिणी देवी पाण्डुरक्षौमवासिनी ॥' इति।

कुण्डलेति नितम्बेति चाशेष-भूषणानाम्, श्यामामिति वयः सन्धिः सूचितः। अत एव व्यनत्स्तनीम्। एवमंगसौष्ठव-वयोभूषणानि संक्षेपेणोद्दिश्य माधुरीं वर्णयति—कुन्तलेत्यादिना शोभितेत्यन्तेन। तत्र कुन्तलेति—लोललोचनतयावलोकमाधुरी, शुचिस्मितामितिहासमाधुरी व्यक्तैव। तदनन्तरञ्च दन्तानां वर्णनं शुचिस्मितत्वेनैव तेषामीपत्प्रकाशानात्। गतिमाधुरीमाह—पदेति नूपुरसिञ्चितसादृश्यार्थं कलशब्दप्रयोगः। विलोक्य साक्षाद्दृष्ट्वा ये समागतास्ते सर्व्व एव, वैरिनिर्जयादिना यशस्विनोऽपि श्रीरुक्मिण्यां निराशत्वाद्दुःखेन मुमुहुः। कुतः ? तेन कृष्णेन कृतो यो रुक्मिण्यां हृच्छयः कामस्तेनार्द्दिता वित्रस्ता इत्यर्थः। ते महाशौर्य्यादियुक्ता अपि, सर्व्वे गजाद्यारूढा अपि, विशेषेण मूढा सन्तो भूमौ पेतुः। कथम् ? उज्झितास्त्राः सन्तः। कुतः ? तस्य कृष्णस्य रुक्मिणीविषयकेनोदारेण सभावत्वादिना श्रेष्ठेन हासेन व्रीडायुक्तावलोकनेन च हृतं नाशितं चेतो येषां ते, अनेन कृष्ण-कर्त्तृकहरणनिश्चयेन क्षोभात् प्रलयः सूचितः ॥ ५१–५३ ॥

### श्रीमद्वीरराघवाचार्यकृता भागवतचन्द्रचन्द्रिका

ततस्ताः स्त्रियः द्विजपत्न्यः शेषां स्वपूजोपयुक्तावशिष्टां सामग्रीम्। यद्वा, शेषाशब्दस्त्रिलिङ्गो देवतोपभुक्तस्रगादिनिर्माल्यवाची तदा शेषां गौर्युपभुक्तनिर्माल्यमित्यर्थः। तस्यै रुक्मिण्यै प्रददुः अलङ्काराद्यर्थमिति शेषः। तथाऽऽशिषः युयुजुः पेठुः तदा बधू रुक्मिणी ताभ्यो द्विजपत्नीभ्यो देव्यै च नमश्चक्रे शेषां जगृहे च ॥ ४९ ॥ ततो मौनव्रतं विहाय रत्नमुद्रिकाभिरुपशोभितां भृत्यां सखीं गृहीत्वा रत्नमुद्रोपशोभितं सखीपाणिं स्वपाणिना गृहीत्वेत्यर्थः! अम्बिकागृहान्निर्गतवती ॥ ५० ॥ तदा तां विलोक्य समागताः सर्वे प्रसिद्धाः वीरास्तद्दर्शनोदितकामातुरा मुमुहुरिति तृतीयश्लोकेनान्वयः। कथम्भूतां ? देवमायामिव सर्वाश्चर्य्यकरीं मूर्त्तिभूतां देवमायामिव स्थितामित्यर्थः। वीरान्मोहयतीति तथा तां शोभनः कृशो मध्यप्रदेशो यस्याः कुण्डलाभ्यां मण्डितमाननं यस्यास्तां श्यामामजातरजस्कां नितम्बयोः श्रोण्योरर्पिता निबद्धा रत्नमयी मेखला यस्याः व्यञ्जन्तौ यौवनप्रादुर्भावसूचकौ स्तनौ यस्याः कुन्तलेभ्यः शङ्किते इव चपले ईक्षणे यस्याः ॥ ५१ ॥ शुचिस्मितं यस्याः बिम्बफलमिव योऽधरोष्ठस्तस्य द्युभिः कान्तिभिः शोणायमाना द्विजा दन्ता एव कुन्दानां कुड्मलानि मुकुलानि यस्यास्तां कलहंसवद्गच्छति तच्छीला तथा तां कला शोभा तद्वती नूपुरैः शिञ्जिन्ती कूजन्ती च ते कलनूपुरे च तयोर्धाम दीप्तिस्तेन शोभत इति तथोक्तेन पदा पादेन पद्भ्यामित्यर्थः चलन्तीम् ॥५२॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

शेषाः अक्षताः अविशिष्टा राजस्त्रियो वा ॥ ४९ ॥ मुनिव्रतं मौनव्रतम् ॥ ५० ॥ उपकण्ठे समीपे पौलोम्याः शच्याः। दैवमायां लक्ष्मीं श्यामां द्व्यष्टवर्षां कुन्तलैरावरकैः शङ्कितमिव ईक्षणं यस्याः सा तथा ताम् ॥ ५१–५५ ॥

### श्रीमज्जवगोस्वामिकृतः क्रमसन्दर्भः

देवस्य विष्णोर्मायामिव नतु मायां किन्तु स्वरूपशक्तिमेवेत्यर्थः। तर्हि कथं तस्य सादृश्यमपि ? तत्राह—मोहनीं श्रीविष्णुमिव "मल्लानामशनिः" इत्यादिवत् क्वचित् स्वरूपेण क्वचिदन्यथाभावेन च सर्वमोहनशीलाम् अत्र श्रीकृष्ण एव तु स्वरूपेण मोहनीति भावः। अथ सामान्यं वर्णयति—सुमध्यमामित्यादिना, शोभितेत्यन्तेन। कुन्तलेभ्योऽलभ्यश्रीकृष्णदर्शनवि-च्छेदिभ्यः शङ्किते ईक्षणे यस्यास्ताम् ॥ ५१–५३ ॥

### श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः

अथास्याः कृष्णदर्शनं वर्णयति—तामित्यादि द्वाभ्याम्। श्यामां पद्मिनीम्, तथा च 'पद्मगन्धिमुखं यस्याः सततं नव यौवनम्। रक्ताशोकं पदाघातादकालेऽपि प्रफुल्लति। मुखमाध्वीकगण्डूषैरकाले वकुलोऽपि च। कुसुमानि समावत्ते सा श्यामा परिकीर्तिता॥ व्यञ्जत् स्तनीं नवोद्यत् कुचाम् कुन्तलेन चूर्णकुन्तलेन, शङ्किते इक्षणे यस्याः॥ ५१-५२॥

### श्रीनाथचक्रवर्तिपादविरचिता चैतन्यमतमञ्जूषा

श्यामां पद्मिनीम्। ''पद्मगन्धि वपुर्यस्या स्तनौ यस्याः सदोन्नती। ग्रीष्मकाले शिशिरता शीतकाले कदुष्णता। अकाले वञ्जुलो यस्याः पादाघातेन पुष्पेति। मुखासवैश्च वकुलः सा श्यामा परिकीर्त्यते॥ ५२॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

शेषां निर्माल्यम्॥ ४९॥ मुनिव्रतं मौनम्॥ ५०॥ ततश्च तां चिदानन्दमयीं भगवच्छक्तिं श्रीरुक्मिणीं भगवद्द्विपोऽसुरा मायामेव प्रतियन्ति स्मेत्याह—तामिति सार्द्धैः पादोनत्रिभिः। तां श्रीरुक्मिणीं देवमायामिव विलोक्य वीरा मुमुहुरिति तृतीयेनान्वयः। इवेत्येवार्थे मल्लानामशनिरित्यत्रायमशनिरेव नतु सुकुमारो बाल इति मल्लाः कृष्णं यथा अमंसत अशनित्वञ्च न तस्य स्वरूपमतो मल्लाद्याः स्वस्वदृग्भिस्तस्य स्वरूपमेव जगृहुः कृष्णनिष्ठं स्वरूपं स्याद्दृत्यैः सुगमं जनैरित्युक्तेः तथैव देवानामपीयं माया परममोहिनी कापि सुन्दरी नरवियं मानुषीति तां मत्वेत्यर्थः देवमायामेव विशिनष्टि, वीरेत्यादिभिः श्यामाम्। ''शीतकाले भवेदुष्णा उष्णकाले तु शीतला। स्तनौ सुकठिनौ यस्याः सा श्यामा परिकीर्त्तिता''। इत्युक्तलक्षणां व्यञ्जयन्तौ व्यक्तीभवन्तावेव स्तनौ यस्यास्तां कुन्तलेभ्यः शङ्किते इव चपले इव ईक्षणे यस्यास्ताम्॥ ५१॥ बिम्बफलाधरस्य द्युतिभिः शोणायमाना द्विजा दन्ता एव कुन्दकुड्मलानि यस्यास्तां शिञ्जच्च तत्कलानुपुरमतिशिल्पनिर्मितनुपुरञ्च तस्य धामभिर्दीप्तिभिः शोभिना पदा चलन्तीम्॥ ५२॥

### गूढार्थदीपिनी

तस्यै रुक्मिण्यै। शेषां सप्रसादमालाम् आशीर्वादांश्च ददुः॥ ४९॥ मुनिव्रत मौनम्। भूल्यां सखीम्। रत्नमुद्रा रत्नाङ्गुलीयकम्॥ ५०॥ तामिति सार्द्धद्वयम्। तां रुक्मिणीं देवमामिव विलोक्य समागता वीरा मुमुहुर्मूर्च्छिता बभूवुरिति तृतीयेनान्वयः। इव एवार्थे। मध्यमः कटिभागः। श्यामां षोडशवार्षिकीम्। व्यञ्जन्तौ प्रकटयन्तौ स्तनौ यस्याः। कुन्तलैरलकैः। शुचि मोहकम्। बिम्बफलवत् योऽधरस्तस्य द्युतिभिः शोणायमाना अरुणायमाना ये द्विजा दन्ता त एव कुन्दकुड्मलानि कुन्दकुसुमकलिकाः इव यस्यास्तात् शिञ्जन्त्यः शब्दं कुर्वत्य या कलाः क्षुद्रघण्टिकास्तद्युक्तं नूपुरं तस्य धाम दीप्तिस्तेन शोभितुं शीलमस्येति तेन॥ ५२॥

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः

शेषां निर्माल्यम्॥ ४९॥ मुनिव्रतं मौनम्॥ ५०॥ तां विलोक्य वीरा मुमुहुरिति सार्द्धद्वयोरन्वयः। देवमायामिव देवस्य विष्णोः मायां सर्वाश्चर्य्यकरीं शक्तिमिव कुन्तलेभ्य शङ्किते इव चपले ईक्षणे यस्यास्ताम्॥ ५१॥ बिम्बफलतुल्याऽधरस्य द्युतिभिः शोणायमाना द्विजा दन्ता एव कुन्दानां कुड्मलानि मुकुलानि यस्यास्ताम् शिञ्जच्च तत्कलानूपुरं शोभायुक्तं नूपुरं तस्य धाम दीप्तिस्तेन शोभितुं शीलं यस्य तेन पदा॥ ५२॥

### श्रीसत्यधर्मकृता श्रीभागवतटिप्पणी

गन्धाश्चाक्षताश्च तैर्माल्यानि मालाः पुष्पाणि च तैः। पृथक् पङ्क्तिशः॥ ४९॥ मतिमतीः सुवासिनीस्तैरक्षतगन्धादिभिः समपूजयत्॥ ५०॥ शेषा अवशिष्टा योषित आशिषो युयुजुस्ताभ्यो देव्यै च नमश्चक्रे शेषा नमनायोग्या जगृहे आलिलिङ्ग इति यावत्। वधूः शेषामिति पाठे निर्माल्यमालां जगृह इत्यर्थः। अशिष इत्यत्राक्षता इति पाठश्चालिङ्गनानुकूलः। अक्षता अरजोदर्शना इत्यर्थः॥ ५१॥ मुनिव्रतं मौनमुपकण्ठे समीपे। उपकण्ठान्तिकाभ्यर्णाभ्यग्रा इत्यमरः। उपगतः कण्ठमत्यादय इत्यतिसमासः। सुरेशस्येन्द्रस्य तथा पौलोम्याः शच्याश्च निकेतनमालयः॥ ५२॥

### श्रीमद्वल्लभाचार्य्यकृता सुबोधिनी

ताश्च स्त्रियः तस्यै ददुः ( दधुः )। सभर्तृकायै एव दीयते। अत एवैतल्लोके विवाहानन्तरं दानं प्रसिद्धम्। तदत्र न भविष्यतीति मातृकर्तव्यत्वाच्च मन्त्रवदेतदपि स्फुरितमिति प्रथमत एव दत्तवत्यः। अथवा। गुप्त एव भगवान् समागतः, भवानीशिवाभ्यां भगवते रुक्मिणी दत्ता, प्रार्थनायाः सफलत्वाय। एतत् अग्रिमदानकथनात् निरूप्यते। तया ताभ्यो दत्ताः। तस्यै च

ताः प्रददुः, शेषा अपि ददुः। आशिषोऽपि युयुजुः। शेषा अपि ये लवणादयो दत्ताः, तेषामंशाः प्रतिदीयन्ते। एवं विधानमुक्त्वा कर्मपूर्त्यर्थं नमस्कारमाह ताभ्यो देव्यै नमश्चक्र इति। शेषां ताभिर्दत्तां जगृहे, स्वग्रन्थौ स्थापितवती। एवं सर्वोऽपि विवाहोत्सवो वैधो निरूपितः। अत्र दिनत्रयं व्रतं तदपि जातमिति मन्तव्यम्॥ ४९॥ अथ मौनं त्यक्त्वा सखीभिः सह यद्वक्तव्यं तदुक्त्वा अम्बिकालयान्निश्चक्राम। नितरां गमनं शीघ्रं भगवत्प्राप्त्यर्थम्। सख्यः अन्याश्च स्त्रियः व्यावर्त्तिताः। एका या भृत्या अन्तरङ्गा तां प्रगृह्य भगवद्भावेन विकला भविष्यामीति, वाह्ये तु भूमिं न पश्यतीत्यवश्यं तदीया ग्राह्या प्रदर्शिका। रत्नसहितमुद्रोपशोभितत्वं भगवता स्वमुद्रा दत्तेति ख्यापयितुम्। पूर्वावतारमुद्रां वा सूचयति॥ ५०॥ यद्यहं न गमिष्यामि पूर्ववदेव गतिर्भविष्यतीति, ततोऽग्रे कस्यापि दर्शनं न भविष्यतीति विवाहसमये दर्शनं न दूषणमिति सर्वे दृष्टवन्त इत्याह तामिति। यथा भगवान् रङ्गप्रवेशे बहुभिर्बहुधा दृष्टः, एवमियमपि देवमायेव वीरैर्दृष्टेत्याह देवमायामिवेति। देवस्य भगवतो मायाया व्यामोहिकैषा शक्तिरागतेति सर्वैरेव निश्चितेति। तत्रापि वीरान् व्यामोहयति। अन्यथा स्वयं गत्वा न म्रियेरन्। तां वर्णयति षोडशलक्षणाम्। द्वात्रिंशल्लक्षणो भगवान्, षोडशलक्षणा सेति प्रसिद्धिः। एकं सम्बन्धादसाधारणसामर्थ्यम्, अपरं शौर्यादिनिराकरणम्, तृतीयं व्यामोहकत्वम्, चतुर्थं सुष्ठु मध्यं यस्या इति, लम्बिकावत् अमृतसम्बन्धार्थं अल्पमध्यत्वं निरूपणीयम्। अत एव न कस्यापि रससम्बन्धः। स हि रसः पुरुषेण भोक्तव्यः जिह्वयैव। तदभावात् स्वस्थितोऽपि मक्षिकासम्बन्ध इव रसोऽपगच्छतीति दुःखमेव लोके फलति। कुण्डलाभ्यां मण्डितमाननं यस्यामिति उपरि रसोपभोगस्थानस्य शोभा प्रदर्शिता। रसप्रदर्शके कुण्डले इति। वयोऽप्याह श्यामामिति। षोडशवार्षिकी। नितम्बे अर्पिता रत्नमेखला यस्या इति रसाविर्भावकप्रस्तावे मुख्यस्थानेऽपि रसप्रकाशो निरूपितः। मध्ये रसाभिव्यक्तिमाह व्यञ्जत्स्तनीमिति। एवं पञ्चधर्मा रसात्मका निरूपिताः। पोषकान् सप्तधर्मानाह। कुन्तलैः शङ्किते यस्या इति। लक्षणद्वयमत्र निरूपितम्। कुन्तलानि चपला च दृष्टिरिति। मन्दहासोऽपि दोषाभावाय शुचिरूपः। श्वेतदन्तत्वं न रसाविर्भावकमिति विवाहानन्तरं च दन्तसंस्कार इति कृत्रिमसंस्काराभावेऽपि सहजैरेव धर्मैस्त। जातमित्याह। विम्बफलवत् यत् लोहितमधरोष्ठं तस्य द्युतिभिः कान्तिभिः शोणायमाना ये द्विजाः त एव कुन्दकुड्मलानि यस्याः। रञ्जकद्रव्यसम्बन्धापेक्षया कान्त्या राग उत्तमः। पदा चलन्तीमिति। एकविधं लक्षणम्, पद्भ्यां चलनं पुरुषस्य, एकेन पदा चलनं स्त्रिया इति। तत्रापि गतिः फलरूपा अफला चेति द्विधा। अयं विवेकः स्फुटलक्षणेनैव भवतीति तस्या गमनं निरूपयति। कलहंसवद्गच्छतीति। सिञ्जन्त्यः कला अन्तःस्थिताः सूक्ष्माः कणिकाः तद्युक्ते नूपुरे तयोर्धाम तेजः तेन शोभायमाना शोभिना वा॥ ५२॥

## श्रीसुबोधिनी–सारः

ताः स्त्रियः तस्यै रुक्मिण्यै शेषां निर्माल्यं प्रददुः आशिषो ददुः। वधू रुक्मिणी देव्यै ताभ्यः स्त्रीभ्यो नमश्चक्रे नतिं चकार शेषां च जग्राह॥ ४९॥ मुनिव्रतं मौनं त्यक्त्वाथांविकामंदिरान्निश्चक्राम वहिरायया रत्नमुद्रयोपशोभिना पाणिना हस्तेन भृत्यां सखीं दासीं प्रगृह्य॥ ५०॥ देवस्य मायामिव वीराणां मोहनीं सुष्ठु मध्यमं यस्यास्तां कुण्डलाभ्यां मण्डितमलंकृतमाननं यस्यास्ताम् "अप्राप्ते रजसि श्यामा संप्राप्ते वरवर्णिनी" इत्युक्तेरजातरजस्कां नितम्बेऽर्पिता न्यस्ता रत्नमयी मेखला यया तां व्यंजंतौ उद्गमं कुर्वाणौ स्तनौ यस्यास्तां कुन्तलेभ्यः केशेभ्य शंकिते इव चपले ईक्षिणे यस्यास्ताम्॥ ५१॥ मंदहास्यां बिंबफलवत् योऽधरस्तस्य द्युतिभिः शोणायमानानि द्विजा दंतां एव कुंदानां कुड्मलानि पुष्पाणि यस्यास्तां पादेन गच्छंतीं राजहंसगतिं सिंजत् शब्दं कुर्वत् कलया शोभया युक्तं नूपुरं तस्य धाम्ना दीप्त्या शोभिना॥ ५२॥

## विवरण टिप्पणी

तां देवमायामित्यत्र। लम्बिकावदिति। सप्तम्यर्थे वतिः। लम्बिकायोगे सूक्ष्मां जिह्वां विधाय ब्रह्मरन्ध्रस्थममृतं योगिभिर्भुज्यते, यथा सूक्ष्मजिह्वाभावे तदमृतं भोक्तुं न शक्यते, तथा सूक्ष्ममध्याभावे एवंप्रकारकभगवद्रसोऽपि भोक्तुं न शक्यते। तत्र जिह्वाया इवात्र मध्यस्य करणतेति भावः। अत एवेति। सूक्ष्ममध्याभावादेव भगवद्रससम्बन्धो योग्यतारहितस्य न जायते इत्यर्थः। दृष्टान्तं विशदयन्ति सहीति। हि यतः स ब्रह्मरन्ध्रस्थो रसः पुरुषेण सूक्ष्मजिह्वयैव भोक्तव्यः। तादृशरसभोगे सूक्ष्मजिह्वैव करणमित्येवकारः, तथात्रापि सूक्ष्ममध्यमेव करणमिति भावः। तदभावात्तादृशजिह्वाभावात्स्वस्य ब्रह्मरन्ध्रे स्थितोपि रसो देहनाशेऽपगच्छति, नतु कदापि भोक्तुं शक्यते। यथा मक्षिकासम्बन्धात्पूर्वं भुक्तमप्यन्नं वान्तं भवति, तथा मर्त्यदेहसम्बन्धात्स रसोप्यपगच्छतीत्यपगमनमात्रे दृष्टान्तः। तथाच यथा तादृशजिह्वाभावात्सर्वैः स रसो भोक्तुं न शक्यते, अतो दुःखमेव फलति, तथा तादृशमध्याभावात्सर्वैर्भगवद्रसोपि भोक्तुं न शक्यते, अतो दुःखमेव लोके फलतीति सम्पूर्णार्थः।

## गोस्वामिश्रीगिरिधरलालकृतबालप्रबोधिनी

ततस्ताः स्त्रियः तस्यै रुक्मिण्यै शेषां पूजोपयुक्तावशिष्टां सामग्रीं निर्माल्यसहितामलङ्काराद्यर्थं प्रददुः, सा च वधूः रुक्मिणी ताभ्यो देव्यै च नमश्चक्रे शेषां च जगृहे॥ ४९॥ अथ अनन्तरं मुनिव्रतं मौनं त्यक्त्वा रत्नमुद्रिकाभिरुपशोभिना पाणिना भृत्यां सखीं प्रगृह्याम्बिकागृहान्निश्चक्राम॥ ५०॥ तदा तां विलोक्य समागताः यशस्विनः प्रसिद्धास्तत्कृतेन तद्दर्शनोद्भूतेन

हृच्छयेन कामेनार्दिताः पीड़िताः वीरा मुमुहुरिति तृतीयश्लोकेनान्वयः। तां वर्णयति—देवस्य भगवतो मायामिव वीरान् मोहयतीति तथा ताम्। सुमध्यमां शोभनः कृशो मध्यप्रदेशो यस्यास्ताम्। कुण्डलाभ्यां मण्डितमाननं यस्यास्ताम्। श्यामां "शीतकाले भवेदुष्णा उष्णकाले सुशीतला। स्तनौ सुकठिनौ यस्याः सा श्यामा परिकीर्तिता" इति लक्षणम्। नितम्बयोः श्रोण्योरर्पिता निबद्धा रत्नमेखला यस्यास्ताम्। व्यञ्जन्तौ व्यक्तीभवन्तौ यौवनप्रादुर्भावसूचकौ स्तनौ यस्यास्ताम्। कुन्तलेभ्यः शङ्किते इव चपले ईक्षणे यस्यास्ताम्॥ ५१॥ शुचि शुद्धं कामादिविकाररहितं स्वभावसिद्धं स्मितं यस्यास्ताम्। बिम्बफलमिव योऽधरोष्ठस्तस्य द्युतिभिः कान्तिभिः शोणायमाना द्विजा दन्ता एव कुन्दानां कुड्मलानि मुकुलानि यस्यास्ताम्। कलहंसवद्गच्छतीति कलहंसगामिनी ताम्। कला शोभा तद्युक्तं नूपुरं कलनूपुरं सिञ्जत् कूजच्च तत्कलनूपुरं च तस्य धाम दीप्तिस्तेन शोभितं शीलमस्य तेन पदा ईदृग्भ्यां पद्भ्यां चलन्तीं विलोक्य तत्र समागता जरासन्धादयो यशस्विनोऽपि वीरा तद्दर्शनजन्यकामेन पीडिताः सन्तो मुमुहुः॥ ५२॥

## अन्वितार्थप्रकाशिका

तस्यै इति। ततस्ताः स्त्रियः तस्यै रुक्मिण्यै शेषां पूजोपयुक्तावशिष्टां सामग्रीं निर्माल्यसहितामलङ्कारार्द्यर्थं प्रददुः आशिषश्च युयुजुः। सा च वधूः रुक्मिणी ताभ्यो देव्यै च नमश्चक्रे शेषां निर्माल्यादिरूपां च जगृहे॥ ४९॥ मुनीति। अथानन्तरं मुनिव्रतं मौनं त्यक्त्वा रत्नमुद्रिकाभिरुपशोभिना पाणिना भृत्यां सखीं प्रगृह्याम्बिकागृहान्निश्चक्राम॥ ५०॥ तामिति सार्द्धद्वयम्। देवस्य भगवतो मायामिव वीरान्मोहयतीति तथा तां सुमध्यमां शोभनः कृशो मध्यप्रदेशो यस्यास्तां कुण्डलाभ्यां मण्डितमाननं यस्यास्तां श्यामां "शीतकाले भवेदुष्णा उष्णकाले सुशीतला। स्तनौ सुकठिनौ यस्याः सा श्यामा परिकीर्तिता।" इति लक्षणां नितम्बयोः श्रोण्योरर्पिता निबद्धा रत्नमेखला यस्यास्तां व्यञ्जन्तौ यौवनागमं प्रकटयन्तौ प्रकटीभवन्तौ वा स्तनौ यस्यास्तां कुन्तलेभ्यः शंकिते इव चपले ईक्षणे यस्यास्तां शुचि स्मितं यस्यास्तां बिम्बफलमिव योऽधरोष्ठस्तस्य द्युतिभिः कान्तिभिः शोणायमाना द्विजा दन्ता एव कुन्दानां कुड्मलानि मुकुलानि यस्यास्तां कलहंसवद्गच्छतीति कलहंसगामिनी तां कला शोभा तद्युक्तं कला शिल्पं तन्निर्मितं वा नूपुरं कलानूपुरं सिञ्जत् कूजच्च तत्कलानूपुरं च तस्य धाम दीप्तिस्तेन शोभितुं शीलमस्य तेन पदा ईदृग्भ्यां पद्भ्यां चलन्तीं तां विलोक्य समागताः यशस्विनः प्रसिद्धास्तत्कृतेन तद्दर्शनोद्भूतेन हृच्छयेन कामेनार्दिताः पीडिताः वीरा मुमुहुः। यद्वा। तत्कृतो मायाप्रतीतिजनितो यो हृच्छयस्तेनार्दिताः यथा गन्धर्वदत्तागिनस्थालीमुर्वशीं मत्वा पुरूरवाः कामार्दितोऽभूत् तथा वीराणां हृच्छयो मायाप्रतीतिजन्य एवेति एवमग्रश्लोकेऽपि तां रुक्मिणीं देवमायामेव वीक्ष्येति ज्ञेयम्॥ ५१-५२॥

## श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्

ताः तस्यैशेषां अंबिकानिर्माल्यं प्रददुःसात्व वधूः शेषां प्रसादं जगृहेततः साउभयेभीनमश्चक्रे॥ ४९॥ भृत्योसखीम् ५० अथ शत्रुपराभवाय वैदर्भ्याः प्रभावातिशय आविर्बभूवेति सार्द्धत्रयेणनिगदतितमिति॥ देवस्य श्रीकृष्णस्यमायां साक्षान्मोहनशक्तिमिववर्त्तमानां वीराणां धीराणामपि मोहनीया वैदर्भीविलोक्य वीराः शूरामुमुहुरिति तृतीय श्लोकस्थ पदेनान्वयः श्यामामनुप पन्नस्तुधर्मो॥ कुंतलैर्मुखोपर्यागतैः केशैः शंकिते इव चंचले ईक्षणे यस्यास्तां॥ ५१॥ बिंबफलवद्योऽधरस्तस्यद्युतिभिः शोणायमानाद्विजादंता एव कुंदलतानां कुड्मलानि कलिकायस्यास्तां॥ कलाशोभातत्सतिते यन्नूपुरेसिजंच्चतत्कलानूपुरं च तस्य धामकांतिस्तेन शोभा अस्ति अस्येति तथाभूतेन पदाचलंतीं॥ ५२॥

## भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

तस्या इसि॥ ततः, ताः, स्त्रियो ब्राह्मण्यः, तस्यै रुक्मिण्यै, शेषां निर्माल्यं, प्रददुः। ततः, आशिषश्च, युयुजुः। तदा, वधूः रुक्मिणी, ताभ्यो विप्रपत्नीभ्यः, देव्यै च, नमश्चक्रे। शेषां च, जगृहे॥ ४९॥ मुनिव्रतमिति॥ अथ, रुक्मिणी, मुनिव्रतं त्यक्त्वा विहाय, रत्नमुद्रोपशोभिना निचितरत्नोर्मिकाशोभिना, पाणिना करेण, भृत्यां स्वसखीं प्रगृह्य, अम्बिकागृहात् निश्चक्राम। स्वपाणिना सखीपाणिमादायाम्बिकामन्दिरान्निर्गतवतीत्यर्थः॥ ५०॥ तामिति॥ देवमायामिव, सर्वाश्चर्यकरीं मूर्त्तिमतीं भगवन् मायामिव स्थितामित्यर्थः। वीरान् मोहयतीति तथाभूतां, सु शोभनः मध्यमो मध्यभागो यस्यास्तां कृशमध्यप्रदेशामित्यर्थः। कुण्डलाभ्यां मण्डितमाननं यस्यास्तां, श्यामामजातरजस्कां, नितम्बयोः श्रोण्योः अर्पिता निबद्धा रत्नमेखला रत्ननिचितकटिमेखला यस्यास्तां, व्यञ्जितौ यौवनप्रादुर्भावसूचकौ स्तनौ यस्यास्तां, कुन्तलेभ्यः शिरोरुहेभ्यः शङ्किते इव चञ्चले ईक्षणे यस्यास्ताम्॥ ५१॥ शुचीति॥ शुचि स्मितं यस्यास्तां, बिम्बफलमिव योऽधरोऽधरोष्ठस्तस्य द्युतिभिः शोणायमाना द्विजा दन्ता एव खुन्दानां कुड्मलानि मुकुलानि यस्यास्तां, कलहंसवद्गच्छतीति तच्छीला तां, कला शोभा तद्वत् यन्नूपुरं तस्य धाम दीप्तिस्तेन शोभते इति तेन, पदा पादेन, पद्भ्यामित्यर्थः। चलन्ती, तां विलोक्य, समायाताः यशस्विनो महाकीर्त्तिमन्तः, वीराः, तत् कृतहृच्छयार्द्दिताः, तद्दर्शनोदितकामातुराः सन्तः, मुमुहुः। इति सार्द्धयस्यैकः संबन्धः॥ ५२॥

### कृष्णप्रिया

तब ब्राह्मणियों ने उन्हें प्रसाद देकर आशीर्वाद दिये और दुलहिन ने ब्राह्मणियों और माता अम्बिकाको नमस्कार करके प्रसाद ग्रहण किया ॥ ४९ ॥ पूजा-अर्चाकी विधि समाप्त हो जाने पर उन्होंने मौनव्रत तोड़ दिया और रत्नजटित अँगूठी से जगमगाते हुए करकमल के द्वारा एक सहेली का हाथ पकड़कर वे गिरिजामन्दिर से बाहर निकलीं ॥ ५० ॥ परीक्षित् ! रुक्मिणीजी भगवान् की माया के समान ही बड़े-बड़े धीर वीरों को भी मोहित कर लेने वाली थी। उनका कटिभाग बहुत ही सुन्दर और पतला था। मुखमण्डल पर कुण्डलों की शोभा जगमगा रही थी। वे किशोर और तरुण अवस्था की सन्धि में स्थित थी। नितम्ब पर जड़ाऊ करधनी शोभायमान हो रही थी, वक्षःस्थल कुछ उभरे हुए थे और उनकी दृष्टि लटकती हुई अलकों के कारण कुछ चञ्चल हो रही थी ॥ ५१ ॥ उनके होठों पर मनोहर मुसकान थी। उनके दाँतों की पाँत थी तो कुन्दकली के समान परम उज्जवल, परन्तु पके हुए कुंदरू के समान लाल-लाल होठों की चमक से उस पर भी लालिमा आ गयी थी। उनके पाँवों के पायजेव चमक रहे थे और उनमें लगे हुए छोटे-छोटे घुंघरू रुनझुन-रुनझुन कर रहे थे। वे अपने सुकुमार चरण-कमलों से पैदल ही राजहंस की गति से चल रही थीं। उनकी वह अपूर्व छवि देखकर वहाँ आये हुए बड़े-बड़े यशस्वी वीर सब मोहित हो गये। कामदेव ने ही भगवान् का कार्य सिद्ध करने के लिये अपने बाणों से उनका हृदय जर्जर कर दिणा ॥ ५२ ॥

यां वीक्ष्य ते नृपतयस्तदुदारहासव्रीडावलोकहृतचेतस उज्झितास्त्राः ।
पेतुः क्षितौ गजरथाश्वगता विमूढा यात्राच्छलेन हरयेऽर्पयतीं स्वशोभाम् ॥ ५३ ॥
[1]सैवं शनैश्चलयती [2]पदपद्मकोशौ प्राप्तिं तदा भगवतः प्रसमीक्षमाणा ।
उत्सार्य वामकरजैरलकानपाङ्गैः प्राप्तान् [3]स्मैक्षत नृपान् ददृशेऽच्युतं सा[4] ॥ ५४ ॥
तां राजकन्यां रथमारुरुक्षतीं जहार कृष्णो द्विषतां समीक्षताम् ।
रथं समारोप्य सुपर्णलक्षणं राजन्यचक्रं परिभूय माधवः ॥ ५५ ॥
ततो ययौ रामपुरोगमैः शनैः शृगालमध्यादिव [5]भागहृद्धरिः ॥ ५६ ॥
तं मानिनः स्वाभिभवं यशःक्षयं [6]परे जरासंधवशा[7] न सेहिरे ।
अहो धिगस्मद्[8] यश आत्तधन्वनां गोपैर्हृतं केसरिणां मृगैरिव ॥ ५७ ॥

इति श्रीमद्भागवते महापुराणे[9] दशमस्कन्धे[10] रुक्मिणीहरणं[11] नाम [12]त्रिपञ्चाशत्तमोऽध्यायः ॥ ५३ ॥

### कर्दमक्षमा

अन्वयः—यात्राच्छलेन, हरये, स्वशोभाम्, अर्पयतीम्, याम्, वीक्ष्य, तद्उदारहासव्रीडावलोकहृतचेतसः, उज्झितास्त्राः, विमूढाः, ते, नृपतयः, क्षितौ, पेतुः, तदा, भगवतः, प्राप्तिम्, प्रसमीक्षमाणा, सा, एवम्, पदपद्मकोशौ, शनैः, चलयती, सा, वामकरजैः, अलकान्, उत्सार्य, प्राप्तान्, नृपान्, अपाङ्गैः समैक्षत, सा, अच्युतं, ददृशे ॥ ५३–५४ ॥ रथम् आरुरुक्षतीम्, ताम्, राजकन्याम्, कृष्णः, द्विषताम्, समीक्षताम्, सुपर्णलक्षणम्, रथम्, समारोप्यः राजन्यचक्रम्, परिभूय, भागहृत्, हरिः, शृगालमध्यात्, इव, जहार, रामपुरोगमैः माधवः, ततः, शनैः, ययौ ॥ ५५ ॥ जरासन्धवशाः, परे, मानिनः, तम्, स्वयशःक्षयम्, च स्वाभिभवम्, न सेहिरे अहो, केसरिणाम्, यशः, मृगैः, इव आत्तधन्वनाम्, यशः, गोपैः, हृतम्, धिक्, अस्मत्, तत्, यशः ॥ ५७ ॥

श्रीमद्भागवत दशमस्कन्ध उत्तरार्द्ध निरोध लीलाया राजसप्रकरणस्य साधन लोला प्रकरणे श्रीरुक्मिणी हरणे अन्वय निरूपणे ५३ वाँ अध्याय सम्पूर्ण ।

---

१. एवं–कश्चिद् । २. चल–श्रीधर. वंशी. वीर. विज. विश्व. । चरणाब्ज–श्रीधर. टि. च. पु. टि. । ३. हियैं–श्रीधर. वंशी. जीव. वीर. विज. विश्व. शुक. । ४. च–वीर. । ५. नाग–विज. । ६. अयं श्लोकः अग्रिमाध्यायेऽत्राध्यायसमाप्तिः–विज. । ७. परैः–श्रीधर. टि.; मुखा–श्रीधर. टि. । ८. अस्मात्–श्रींधरादय. । ९. पारमहंस्यां संहितायां–प्रा. पा. । १०. उत्तरार्द्धे–प्रा. पा. । ११. नास्ति–प्रा. पा. । १२. अष्टपञ्चा–विज. ।

## श्रीधरस्वामिविरचिता भावार्थदीपिका

न केवलं मुमुहुः पेतुश्चेत्याह । यामिति । यात्रामिषेण हरये स्वलावण्यं समर्पयंतीं यां वीक्ष्य क्षितौ पेतुः सा तान्प्राप्तान् ह्लिया ऐक्षत तदैवाच्युतं च ददर्शेत्युत्तरेणान्वयः ॥ ५४ ॥ चलत्पद्मकोशतुल्यौ चरणौ चालयंतीम् ॥ ५५ ॥ सुपर्णलक्षणं गरुडध्वजम् । हरिः सिंहः ॥ ५६ ॥ असहमानां तेषामाक्रोशमाह । अहो धिगस्मान् । यतोऽस्माकं यशो गोपैर्हृतमिति ॥ ५७ ॥

इति श्रीमद्भा० म० दशमस्कंधे उत्तरार्धे श्री० टीकायां त्रिपंचाशत्तमोऽध्यायः ॥ ५३ ॥

## श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

तत्कृतो मायाप्रतीतिजनितो यो हृच्छयः कामस्तेनार्दिताः, यथा गंधर्वदत्ताग्निस्थालीमुर्वशीमेव विलोक्य पुरूरवाः कामार्दितोभूद्यथैव तस्य काम उर्वशीज्ञानजन्य एव न तु स्थालीप्रतीतिजन्यस्तथैव वीराणां हृच्छयो मायाप्रतीतिजन्य एव न तु रुक्मिणीप्रतीतिजन्य एवेत्ययमेवार्थस्सत्संमतः, अन्यथा वीरत्वयशस्वित्वव्याघातः स्यादिति । यथाऽसुरमोहनार्थं श्रीभगवता मोहिनीरूपं दर्शितं तथात्रापि मोहिनीरूपमेव श्रीरुक्मिण्या दर्शितमिति ज्ञेयम् ॥ ५३ ॥ यां रुक्मिणीम् । यां मोहिनीरूपतया भातां वीक्ष्य नृपतयः क्षितौ पेतुः । स्वरूपतया सर्वतो विलक्षणां स्वीयां हरयेऽर्पयन्तीं, न त्वसुरेभ्य इवान्येभ्यो भातामित्यर्थः ॥ ५४ ॥ सेति सार्द्धद्वयोरन्वयः । वामकरजैः सव्यहस्तनखैः । तदा नृपेक्षणसमये । सेति भिन्नवाक्यत्वान्न पौनरुक्त्यम् । सा कृष्णं दिदृक्षमाणै प्राप्तांस्तत्राऽगतान् ह्लिया ऐक्षत । एतेऽन्ये पुरुषा इति तद्दर्शनेन लज्जाजनिष्टेति भावः । तन्मध्य एवाच्युतं स्वोक्तच्युतिवर्जितम् 'तामानयिष्ये' इत्याद्युक्तेः । किं कुर्वती–चरणावेवाब्जकोशौ तौ तस्य प्रत्यासत्तिकामनया शनैश्चालयन्ती 'चलत्पद्मकोशौ' इति पाठः स्वामिसंमतः । अत्र रूपकबलेनैव रूप्यं लभ्यत इति चरणावध्याहृतौ । अतिशयोक्तिनामालंकारस्य प्रथमभेदोयम् । यथोक्तम्–"सिद्धत्वेऽध्यवसायस्यातिशयोक्तिर्निगद्यते । भेदेप्यभेदः सम्बन्धेऽसम्बन्धस्तद्विपर्ययौ । पौर्वापर्य्यात्ययः कार्यहेत्वोः सा पञ्चधा मता ।" इति । विषयनिगरणेनाभेदप्रतिपत्तिर्विषयिनोध्यवसाय इति । 'अच्युतं च' इति प्रायः स्वामिसंमतः पाठः । 'अच्युतं सा' इति पाठः सर्वत्र दृश्यते । अत्र पूर्वत्र सा तादृशी यत्तदोरन्वयबलात्, उत्तरत्र सा रुक्मिणी प्रकरणबलात् । अच्युतमिति–निजचित्ताच्च्युतिराहित्याभिप्रायेण । अतस्तत्परिचायनापेक्षा नास्तीति भावः ॥ ५५ ॥ तां रुक्मिणीम् । ततो राजसमूहात् । 'हरिः सिंहे कपौ हरे' इति कोशात् । रथमारुरुक्षतीं कालविलम्बाय तथा तदारोहणार्थमितस्ततश्चेष्टामात्रं कुर्वतीं न तु सहसारोहन्तीमित्यर्थः । पूर्वं तदनारोहणं देवयात्रागौरवेणेति ज्ञेयम् । समीक्षतामित्यनादरे षष्ठी । एवं परमप्रागल्भ्यं विक्रमवत्वं क्षिप्रकारित्वं च दर्शितम् । सुपर्णमिति–रथांतराऽऽशंकानिरासः, शोभातिशयश्चोक्तः । शनैर्ययाविति निर्भयत्वात् ॥ ५६ ॥ तं रुक्मिणीहरणरूपम् । तेषां जरासंधादीनाम् । आक्रोशं स्वपरनिंदनरूपम् । केसराः सन्ति येषां ते "केसरं हिंगुनि क्लीवं किंजल्के न स्त्रियां पुमान् । सिंहच्छटायां पुन्नागे बकुले नागकेसरे ।" इति मेदिनी । यशसः क्षयो यस्मात्तम् । परे शत्रवः, तत्रापि मानिनः । 'परैः' इति पाठः क्वचित् । 'जरासन्धवशाः' इति च । आत्तं यद्धनुस्तत्प्रशस्तत्वेन विद्यते येषामारोपितधनुष्पाणीनां राज्ञामपि । गोपैरिति बहुत्वं श्रीकृष्णानुवर्तित्वेन यदूनामपि गोपत्वध्वननात् । 'अस्मद्यशः' इति पाठश्चिन्त्यः ॥५७॥

इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे दशमस्कन्धे उत्तरार्द्धे त्रिपञ्चाशत्तमोऽध्यायः ॥ ५३ ॥

## श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी

यामिति युग्मकम् । मोहिनीरूपतयामातां वीक्ष्य नृपतयस्तु क्षितौ पेतुः स्वरूपतया सर्वतो विलक्षणां स्वीयां शोभां तु हरयेर्पयन्तीं तत्वसुरेभ्य इवान्यतो मातामित्यर्थः ॥ ५४ ॥ एवमनेन स्वशोभार्पणप्रकारेण वामकरजैर्वामकराङ्गुलिभिरलकानुत्सार्य्यं भगवतस्तस्य प्राप्तिं ह्लियापाङ्गैर्मुहुरपाङ्गविक्षेपैरेव नतु साक्षान्नेत्राभ्यां प्रसमीक्षमाणा निकटे पतितान् नृपान् ऐक्षत । तदनन्तरं तु अच्युतं ददर्श किं कुर्वती चरणावेवाब्जकोशौ तौ तस्य प्रत्यासत्तिकामनया शनैश्चालयन्ती चलत्पद्मकोशाविति पाठन्तु श्रीस्वामिसम्मतः अत्र रूपकबलेनैव रूप्यं लभ्यत इति चरणावध्याहृतौ अतिशयोक्तिनाम्नोऽलङ्कारस्तु प्रथमस्तु भेदोऽयं यथोक्तम्—

"सिद्धित्वे ध्यवसायस्यातिशयोक्तिर्निगद्यते ।
भेदेप्यभेदः सम्बन्धेऽसम्बन्धस्तद्विपय्ययौ । पौर्वापर्य्यात्ययः कार्य्यहेत्वोः सा पञ्चधा मता" ॥

विषयनिगरणेनाभेदप्रतिपत्तिर्विषयिणोध्यवसाय इति अच्युतं चेति प्रायः स्वामिसम्मतोयं पाठः अच्युतं सेति पाठस्तु सर्वत्र दृश्यते अत्र पूर्वत्र सा तादृशी यत्तदोरन्वयबलात् उत्तरत्र सा रुक्मिणी प्रकरणबलात् अच्युतमिति निजप्रतिज्ञातोच्युतेस्तथा तच्चिता च्युतिरोहित्याभिप्रायेण इत्यनेन तत्परिचायनापेक्षा निरस्ता ॥ ५५ ॥ रथमारुरुक्षन्तीं कालविलम्बाय तथा तदारोहणार्थमितस्तश्चेष्टामात्रं कुर्वन्तीं नतु सहसाऽऽरोहन्तीमित्यर्थः । पूर्वं तु तदनारोहणं देवयात्रागौरवेणेति ज्ञेयं समीक्षतां सम्यगीक्षमाणानामिति मोहापगमं सूचयति अनादरे षष्ठी । एवं परमं प्रागल्भ्यं विक्रमवत्त्वं क्षिप्रकारकत्वादिकं च दर्शितं सुपर्णलक्षणमिति

तदीयत्वप्रसिद्धया भयेन सर्वेषामापातत: स्तब्धता दर्शिता रथस्य शोभाविशेषश्च शनैरेव ययौ निर्भयत्वात् ॥ ५६ ॥ यशस: क्षयो यस्मात्तम् अर्थात्स्वस्य । यद्वा, यशस: क्षयं च परे शत्रव: तत्रापि मानिन: परैरिति पाठ: क्वचित् मुखा इत्यत्र वशा इति च आत्तं यद्धनुस्तत्प्रशस्तत्वेन विद्यते येषां तेषाम् आत्तधन्विनाम् आरोपितधनुष्पाणीनां राज्ञामपि गोपैरिति च बहुत्वं श्रीकृष्णानुवर्त्तित्वेन यदूनामपि गोपत्वध्वननात् अस्मद्यश इति पाठश्चिन्त्य: ॥ ५७ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिण्यां त्रिपञ्चाशत्तमोऽध्याय: ॥ ५३ ॥

## श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी

यात्रा देव्यालय गमनम्, तस्याश्छलेनेति वस्तुतो यात्राया अन्त:पुराद्वहि: श्रीभगवता हरणार्थकत्वात् स्वकीयामसाधारण शोभाम्, हरय एव, न तु तेभ्योऽर्पयन्तीं दर्शयन्तीमित्यर्थ: । एवमनेन स्वशोभार्पणप्रकारेण चरणावेव सुकोमलत्वादिनाब्जकोशौ शनैश्चालयन्ती; पाठान्तरे च पद्मकोशाविति पाठे रूपकवलेन रूप्यौ चरणौ बुध्येत एव । अर्थ: स एव, शनैश्चालने एवमित्येको हेतु: । अब्जकोषरूपकत्वेन मृदुत्वमन्यो हेतु:, किञ्च, भगवत: सर्व्वैश्वर्य्ययुक्तस्य श्रीकृष्णस्य प्राप्तिमिमागमनम्, किंवा अशेषगुणरूपवतस्यात्मना प्राप्तिं चक्षुरादिभि: साक्षाल्लब्धिं प्रकर्षेण परमौत्सुक्यादिना समीक्षमाणा अपेक्षमाणा, हेतुनामेषां यथोत्तरं श्रैष्ठ्यम् ॥ ५४ ॥ अलकानुत्सार्य्येति–सम्यक् श्रीभगवद्दर्शनार्थम्, तेन वैदग्ध्यपि सूचिता । प्राप्तान् शिशुपालसाहाय्यार्थमागतान् सर्व्वान् नृपानैक्षत, कृष्णदिदृक्षया सर्व्वतो ह्रिया अपांगक्षेपेण तानपश्यदित्यर्थ: । सर्व्वतश्चालनेनैवापांगस्य बहुत्वम्; यद्वा, ह्रिया प्राप्तान् लज्जया अपमानजन्यया गृहीतान् नृपान्; यद्वा, अपांगै: सह वर्त्तमानान् तदुपरि पतितानलकानुत्सार्य्य, भगवत: प्राप्तिं कुत: कथमायातीत्येवमागमनं प्रकर्षेण नैश्च्यादिना सम्यगितस्ततो दृष्टिप्रसारणेनेक्षमाणा सती नृपानितस्ततोऽग्रे पतितानैक्षत । अच्युतं च नृपवर्गवञ्चनार्थं दूरे स्थितं पश्चाद्ददर्श । ततश्च क्रियाया अपांगैरित्यस्याप्यत्रैव चान्वय:,—भावविशेषेण तथैव दृश्यत्वात् । अच्युतमिति निजधैर्य्याच्च्युते:, तथा तच्चित्तात् कदाचित् कथञ्चिदपि रूपगुणादिच्युतिराहित्याभिप्रायेण । इत्यनेन तत्परिचायनापेक्षा निरस्ता । रथारुरुक्षणे हेतु:—राजकन्यामिति पदभ्यां गृहगमनायोग्यत्वात्, किंवा सुकोमलपदत्वेन पुन: पादव्रजनाशक्तेरिति भाव: । जहारेति—स्वयं रथादवतीर्य्य पाणिना तत्पाणिं गृहीत्वा अंके कृत्वा वेति ज्ञेयम् । सम्यगीक्षमाणानामिति मोहापगमं सूचयति; अनादरे षष्ठी । एवं परमं प्रागल्भ्यं विक्रमवत्त्वं क्षिप्रकारित्वादिकञ्च दर्शितम् । तच्च सम्भवेदेवेत्यभिप्रायेणाह—कृष्ण इति; यत: साक्षाद्भगवानित्यर्थ:, यद्वा, परमाकर्षक: साक्षादेव हरणे महादक्ष इत्यर्थ: ॥ ५५ ॥ सम्यगारोप्य शीघ्रं सुखं नीडान्तर्निवेश्येत्यर्थ: । सुपर्णलक्षणमिति तदीयत्वप्रसिद्धया परममर्द्दन-शीघ्रगमनादिमाहात्म्यं सूचितम् । माधव इति लक्ष्मीरूपाया: श्रीरुक्मिण्या: प्राप्त्यभिप्रायेण; यद्वा, निजाशेषैश्वर्य्यप्रकटनार्थं यदुवंशे जात:, अत: परिभूय ततस्तत्स्थानात् राम: पुरोगमोऽग्रगो येषां यादवानां तै: सह शनैरेव निर्ययौ, निर्भयत्वात् । तत्रानुरूपो दृष्टान्त:—शृगालेति । शृगालावृतं स्वस्य भागं भोग्यं मांसं हरति बलादाच्छिद्य नयतीति तथा स: ॥ ५६ ॥ स्वेषामभिभवं तिरस्कारं साक्षादेव हरणात्, स्व० शब्दस्य अग्रेऽप्यन्वय: स्वयशस: क्षयो यस्मात्तं किञ्चित् कर्त्तुमशक्तया शौर्य्यादिप्रसिद्धिहाने:, यद्वा, स्वयशस: क्षयञ्च, शिशुपालाय कन्यासाधनोद्यमादिवैयर्थ्यात् । परे यादवेतरे सर्व्वे क्षत्रिया न सेहिरे सोढुं नाशकन्, यतो मानिनो वीराद्यभिमानवन्त:, यद्वा, परे शत्रव:, तत्रापि मानिन:, अहो खेदे, आत्तधन्वनां धनुष्पाणीनां राज्ञामपि यशोऽस्माकं गोपैर्गोरक्षार्थयष्टिमात्रग्रहणपरैर्वन्यै: करदैर्हृतम् । तच्चात्ययुक्तमेवेति दृष्टान्तमाहु:—केशरिणामिति भाग इति शेष: । यद्वा, भागहरणान्महाबलपराक्रमादियश एव हृतम् । गोपैरिति बहुत्वं श्रीकृष्णानुवर्त्तित्वेन यदुनामपि गोपत्वमननात् । अस्मद्यश इति पाठान्तरं चिन्त्यम्, समासान्तर्गतस्यास्मच्छब्दस्यातधन्वनामित्यनेन सम्बन्धासिद्धे:, अस्माकमिति च यत्तैर्व्याख्यातं तत् प्रकरणबलादेवेति दिक् ॥ ५७ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे उत्तरार्द्धे श्री श्रील-सनातन-गोस्वामिपाद-कृतायां श्रीबृहद्वैष्णवतोषण्यां श्रीदशम-टिप्पण्यात्रिपञ्चाशत्तमोऽध्याय: ॥ ५३ ॥

## श्रीसुदर्शनसूरिकृतशुकपक्षीयम्

हरि: सिंह: ॥ ५६–५७ ॥

इति श्रीमद्भागवतव्याख्याने दशमस्कन्धे श्रीसुदर्शनसूरिकृतशुकपक्षीये त्रिपञ्चाशत्तमोऽध्याय: ॥ ५३ ॥

## श्रीमद्वीरराघवाचार्यकृता भागवतचन्द्रचन्द्रिका

न केवलं मुमुहुरपितु पेतुश्चेत्याह—यामिति । रथाद्यारूढास्ते नृपतयो यात्रामिषेण हरये स्वलावण्यमर्पयन्तीं यां वीक्ष्य तस्या उदारहासेन व्रीडावलोकेन च हृतानि चेतांसि येषां तेऽत एव विमूढा: अत एव च उज्झितानि त्यक्तान्यस्त्राणि यैस्ते भूमौ पेतु: ॥ ५४ ॥ सैवमिति सा रुक्मिणीत्थं पद्मकोशतुल्यौ चरणौ शनै: शनैश्चलयन्ती तत्र हेतुर्भगवत: श्रीकृष्णस्य प्राप्तिं प्रसमीक्ष-

माणावामकरनखैरलकानुत्सार्य अपाकृत्य अपाङ्गैस्तान्प्राप्तान्नृपान् ह्रिया अवैक्षत तदैवाच्युतं च ददर्श ॥ ५५ ॥ तामिति तदा कृष्णः रथमारोढुमिच्छन्तीं तां राजपुत्रीं द्विषतां चैद्यानां समीक्षतां सतां जहार ततो माधवः सुपर्णलक्षणं गरुडध्वजं रथमारोप्य रथोपस्थे आरोप्येत्यर्थः राजन्यमण्डलं परिभूय तुच्छीकृत्य रामः पुरोगमः अग्रयायी यस्य तथाभूतः शनैर्ययौ शनैरित्यनेन निर्भयत्वं सूच्यते । हरिः सिंहः सृगालमध्याद्यथा स्वभागहृत्कच्छनैर्याति ॥ ५६ ॥ तदिति मानिनः केवलं दुरहङ्कारिणः शत्रवो जरासन्ध्यादयस्तत्कन्याहरणं स्वाभिभवं यशःक्षयं च न सेहिरे असहमानानां तेपामाक्रोशमाह—अहो इति । अस्मत्कीर्ति धिक् कुतः यतः आत्तधन्विनां धनुर्धराणाम् अस्माकं स्वमिति शेषः । गोपैरपहृतं केसरिणां सिंहानां भागो वृकैरिवेति ॥ ५७ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायां त्रिपञ्चाशत्तमोऽध्यायः ॥ ५३ ॥

### श्रीविजयध्वजतीर्थकृता पदरत्नावली

नागहृद्गजहरो हरिः सिंहः ॥ ५६ ॥ यः अरिभिः कृतः तम्, के के परे ? इति तत्राह, जरासन्ध इति ॥ ५७ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्यां त्रिपञ्चाशत्तमोऽध्यायः ॥ ५३ ॥

( विजयध्वजतीर्थरीत्याऽष्टपञ्चाशत्तमः ) ॥ ५८ ॥

### श्रीमज्जवगोस्वामिकृतः क्रमसन्दर्भः

यां वीक्ष्य इति स्वरूपेण वर्णयति—हरय इति ॥ ५४ ॥ सैवं भगवतः प्राप्तिं प्रसमीक्षमाणा समीक्षितुमारभमाणा तत्स्फूर्त्तिमयभावेन स्खलितान् सावरणातलकान् वामकरजैरुत्सार्य्य प्राप्तान् व्यवहितान् नृपानवैक्षत् ततश्च भीता सती तत्राच्युतञ्च ददृशे तच्च दर्शनं ह्रियायुक्तमित्यर्थः ॥ ५५ ॥ आरुरुक्षतीमिवेत्यर्थः ॥ ५६-५७ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धीये श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे त्रिपञ्चाशत्तमोऽध्यायः ॥ ५३ ॥

### श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः

विलोक्येत्यादि । जगज्जनन्यां तस्यां कृतहृच्छयत्वेन मोहं प्राप्ताः, तेनैव पापेन नष्टप्राया इत्यर्थः ॥ ५३ ॥ सैवं शनैरित्यादि । चरणाब्जकोशौ अस्फुटकमलाकारौ चरणौ सुदृश्यत्वात् । वामकरजैरलकानुत्सार्य ह्रया प्राप्तान् नृपानपाङ्गैरुत्सार्य अविलोक्येति यावत् । अच्युतमैक्षत श्रीकृष्णं ददर्श । पश्चात् सा ददृशे अर्थात्तेन, क्रिययैव कर्त्ताक्षिप्यते । आदौ सा तं ददर्श, पश्चात् स तामित्यन्योन्यमेवं दर्शनं जातमिति भावः ॥ ५६-५७ ॥

इति श्रीदशमे श्रीबृहत्क्रमसन्दर्भे त्रिपञ्चाशत्तमोऽध्यायः ॥ ५३ ॥

### श्रीनाथचक्रवर्तिपादविरचिता चैतन्यमतमञ्जूषा

विलोक्य वीरा मुमुहुरित्यादि । जगज्जनन्यां कृतहृच्छयत्वरूपपापेनार्दिता मोहं बुद्धिनाशं प्रापूरित्यर्थः ॥ ५३ ॥ सैवमित्यादि । चरणाब्जकोषो अस्फुटकमलाकारो चरणौ सुदृश्यत्वात् श्यामालक्षणाच्च वा ॥ ५४ ॥ वामकरजैरलकानुत्सार्य ह्रिया प्राप्तान् नृपानपाङ्गैरुत्सार्य अदृष्ट्वेत्यादियावदच्युतमैक्षत, श्रीकृष्णं ददर्श, पश्चात् सा ददृशे, अर्थादच्युतेनेत्यर्थः । क्रियतामिति कर्त्ता कुर्विति कर्म आक्षिप्यत इत्यभियुक्ताः । अन्योन्य-दर्शनं जातमित्यर्थः ॥ ५६-५७ ॥

इति त्रिपञ्चाशत्तमाध्यायस्यान्वयाः समाप्ताः ॥ ५३ ॥

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी

तत् कृतो मायाप्रतीति जनितो योहृच्छयः कामस्तेनार्दिताः यथागन्धर्वदत्ताग्निस्थालीमुर्वशीमेव विलोक्य पुरूरवाः कामार्दितोऽभूत् यथैव तस्य काम उर्वशीज्ञानजन्य एव नतु स्थालीप्रतीतिजन्यस्तथैव वीराणां हृच्छयो मायाप्रतीतिजन्य एव नतु रुक्मिणीप्रतीतिजन्य एवेत्यतोऽन्योक्त विरुद्धोऽर्थः पराहतः ॥ ५३ ॥ न केवलं मुमुहुः पेतुश्चेत्याह—यामिति । अत्रापि श्लोके देवमायामिति पदमनुवर्त्तनीयं यां श्रीरुक्मिणी देवमायामिव वीक्ष्य ते नृपतयो मूढाः सन्तः पेतुः यां रुक्मिणी कीदृशी हरये स्वशोभामर्पयन्ती न त्वन्येभ्यः ॥ ५४ ॥ सा रुक्मिणी श्रीकृष्णं दिदृक्षमाणैव प्राप्तान् तत्रागतान् ह्रिया ऐक्षत ह्रियेत्येतेऽन्ये पुरुषा इति तद्दर्शनेन लज्जाऽजनिष्टेति भावः तन्मध्य एवाच्युतं ददृशे ददर्श यः खलु हृदयात् च्युतो न भवतीति भावः ॥ ५५-५६ ॥ असहतेषामाक्रोशमाह—अहो इति यतोऽस्माकं यशो गोपैर्हृतम् ॥ ५७ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् । त्रिपञ्चाशत्तमोऽध्यायो दशमेऽजनि सङ्गतः ॥ ५३ ॥

### गूढार्थदीपिनी

यां वीक्ष्य ते भुवि पेतुः सा रुक्मीणित्युत्तरेणान्वयः । उदार आकर्षकः हासः व्रीडावलोकश्च तेन हृतानि आकृष्टानि चेतांसि येषां ते । उज्झितानि त्यक्तानि ॥ ५३ ॥ चलदब्जकोशाविव कोमलौ चरणौ चालयन्ती । करजैर्नखैर्विकीर्णान् अलकान्

अपसार्य ह्रिया नृपानैक्षत तदैवाच्युतं च ददृशे इति चकारस्यान्वयः। अत्रान्ते सेति पाठोऽसम्बन्धः श्रीधरासम्मतश्च ॥ ५४॥ तामिति सार्द्धम्। तां कन्यां जहार ततश्च शनैर्ययावित्युत्तरेणान्वयः। शनैरिति निर्भयत्वद्योतनाय। द्विषतांसमीक्षतामित्यनादरे षष्ठी। रामः पुरोगम अग्रणीर्येषां तैर्यदुभिः सह। हरिः सिंहः। सुपर्णलक्षणं गरुडध्वजम् ॥ ५५॥ तं रुक्मिणीहरणरूपम् स्वपराभवं परे शत्रवः न सेहिरे अहो खेदे। अस्मान् धिक् यतोऽस्माकं यशो गोपराजैर्हृतमित्यन्वयः। वयं मृगास्ते सिंहाः क्वसाम्यमित्यर्थः इति। स्तुतिः ॥ ५६॥

इति श्रीभागवते महापुराणे पारमहंस्यां संहितायां दशमस्कन्धोत्तरार्द्धे त्रिपञ्चाशत्तमोऽध्यायः ॥ ५३॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

यां वीक्ष्यते क्षितौ पेतुः सा तानैक्षत अच्युतं च ददर्शेत्युत्तरेणान्वयः यात्राछलेन यात्रामिषेण ॥ ५३-५४॥ चलपद्मकोशतुल्यौ चरणौ चलयन्ती चालयन्ती ॥ ५५॥ तां सुपर्णलक्षणं गरुडध्वजं रथं समारोप्य माया रमा तस्या धवः पतिः ययावित्यन्वयः ॥ ५६-५७॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धीये श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे त्रिपञ्चाशत्तमोऽध्यायः ॥ ५३॥

### श्रीसत्यधर्मकृता श्रीभागवतटिप्पणी

तौ सा च स च ते विदर्भप्रसूतानां नृपाणां कुलदेवते तयोरन्तिकं समीपम् ॥ ५३॥ चिरमाराधिते पदाब्जे यस्याः सा ताम्। प्रणम्य निर्ययौ रत्नमुदोपशोभितेति विशेष्ये वैय्यर्थ्यं भजत्पाणिनाऽन्वेति। रत्नमुद्रोपशोभितपाणिना धात्री प्रगृह्य गृहीत्वेत्यर्थः। दीप्तानलर्काद्युतिमप्रमेयमिति प्रमेयदीपिकाद्युदाहरणपूर्वकं प्रकाशितमस्माभिरनुसन्धेयम्। विभक्तिविपरिणामेनान्वयो वा। शोभितामिति द्वितीयान्तपाठे धात्र्या विशेषणम्। अनेन तस्या एतत्स्पृश्यत्वयोग्यसौभाग्यं ध्वन्यते ॥ ५४॥ धृतान्यनेकानि च तान्यातपत्राणि च तैराढ्या धृतानेकान्यातपत्राणि यस्याः साऽऽढ्या श्रीमतीति वा वीजद्भिश्चामरैः सङ्कुला व्याप्ता कुण्डलाभ्यां सङ्कुलं वाच्यवदव्याप्त इति विश्वः ॥ ५५॥ देवमायां भगवज्जगद्बन्धकशक्तिमिव वीरमोहिनीं सुमध्यमां शोभतकटिप्रदेशां रुक्मिणीमिति च गतम्। मण्डितमाननं यस्याः सा श्यामां षोडशवार्षिकी व्यञ्जन्तौ स्तनौ यस्याः साः तां कुन्तलैः शङ्किते ईक्षणे यस्याः सा तां। चूर्णकुन्तलानां प्रसरणे नेत्रयोः शङ्किततता कुन्तान् लन्तीति कुन्तला भटास्तैः शङ्कितमीक्षणं कृष्णस्य दर्शनं यस्याः सा द्विजा दन्ता एव कुन्दलकुड्मलानि बिम्बफलवद्विद्यमानो योऽधरस्तस्य द्युतिस्तया चोणायमानानि तानि यस्याः सा तां। पादान्तवर्णत्वात्ते गुरुत्वं भवतीति न लाघवलाघवमुक्तेरिति ज्ञेयम् ॥ ५६॥ पदा चलन्तीम्। यद्यपि कुलदेवयात्रा निवृत्तेति यानमारुह्य गन्तुं शक्यं तथापि मानसिकरसिकयात्रामुद्दिश्य नेतुः कमितुः सौलभ्यार्थं पदा गमनमिति ज्ञेयम्। कलहंसगामिनीं सिञ्जत्क्वणन्नूपुरपादशोभितां सिञ्जन्तौ ध्वनन्तौ कनन्तौ काशमानौ नूपुरौ गतम्। तद्युक्ताभ्यां पादाभ्यां शोभितां पादयोः शोभिता नूपुराभ्यां पादशोभितेति केचित्। वीरा अपि समागता यशस्विनो जितेन्द्रिया इति तत्कृते तन्निमित्तमुत्थितौ यो हृच्छयो मदनस्तेनार्दिताः सन्तो मुमुहुः ॥ ५७॥ प्राक्चये विमूढाः कथञ्चन मौढ्यरहिताः सोऽपि सुप्रसिद्धश्चासावुदारहासश्च व्रीडावलोकश्च ताभ्यां हृतं चेतो येषां ते उज्झितानि त्यक्तान्यस्त्राणि येषां ते तथा गजरथाश्वगतास्तदारूढाः क्षितौ पेतुः। यात्राछलेन यात्रापदेशेन हरये कृष्णाय स्वशोभामपर्यन्ती ॥ ५८॥ सैवं पदपद्मकोशौ शनैश्चलयती चलनयुक्तौ करोति। अतो न कम्पने चलिरिति मित्त्वह्रस्व इति छान्दसो ह्रस्वः। चालयति। कुत इत्यत आह। प्राप्तिमिति। भगवतः प्राप्ति प्रसमीक्षमाणा वामकरजैः। करजस्तु करञ्जे स्यान्नख इति विश्वः। वामनखैर्दक्षिणकरस्य सखीकरस्थापनाद्वामेत्युक्तिः। सुन्दरनखैरिति वा। अपाङ्गैः कटाक्षैर्ह्रिया नृपान्ददृशे ऐक्षत साऽच्युतमैक्षत ददृशे ॥ ५९॥ समीक्षतां द्विषतांताननादृत्य रथमारुरुक्षतीं राजकन्यां कृष्णो जहार। सुपर्णो लक्षणं ध्वजरूपं चिन्हं यस्य स तं राजन्यचक्रं तत्सङ्घं परिभूय तिरस्कृत्य ततो हरणानन्तरं रामपुरोगमैः सह शनैः शृगालमध्यान्नागह्रदस्तिहर्ता हारैः सिंह इव ययौ। त्वरातो गमने पलायित इत्यपयशः स्यात्। किं चरणरणरणिकातश्च मन्दं नन्दननन्दनोऽगादिति भावः ॥ ६०॥

इति श्रीभागवतटिप्पण्यां सत्यधर्मकृतायां दशम उत्तरार्धेऽष्टपञ्चाशोऽध्यायः ॥ १०-५८॥

### श्रीमद्वल्लभाचार्य्यकृता सुबोधिनी

नन्वेतादृश्या दर्शने यदि वीराणां रस उत्पद्यते, तदा दोषः स्यात्, अनुत्पत्तौ विषयस्योत्तमता न स्यादित्युभयतःपाशा रज्जुः, तत्परिहारार्थं वीराणां द्वेधा विनियोगमाह विलोक्येति। आदौ तां विलोक्य वीरा मुमुहुः, माहं प्राप्ताः समागता इति समागमनफलमुक्तम्। मूर्च्छायामपि सुषुप्ताविव किञ्चित्सुखमिति। 'मुग्धेऽर्धसम्पत्ति'रिति न्यायाच्च। यशस्विनः इति। तेषां पुन्यमपि सूचितम्। अभिलाषामप्याह। तत्कृतेन हृच्छयेन अर्दिता इति। एवं चतुर्भिर्धर्मैः तावत्फलं प्राप्तवन्त इति विषयोत्कर्षो

निरूपितः। दोषाभावायाह **यां वीक्ष्येति**। यावत्तेषां रसदृष्टिर्भवेत्, तन्मध्ये निपतिता एव ते। तत्रापि हेतवः। ते हि भगवद्विमुखाः। तत्रापि नृपतयः अभिमानिनः जरासन्धादयः। तेषां बलमुत्साहशक्तिश्च रसानुभवार्थे हेतुभूतं तस्या भावैर्हृतमित्याह। तस्या उदारो यो हासः, सर्वरसदानसमर्थश्च व्रीडावलोकश्च, व्रीडा च अवलोकश्चेति वा, त्रिविधैरपि भावैः हृतचेतसो जाताः। त्रिविधं हि चित्तमिति। तदभावे युद्धाभावात्, उज्झितास्त्रा जाताः॥ ५३॥ ततः क्षितौ पेतुः। पतितानां पुनरुत्थानाभावायोच्चानि स्थानान्याह **गजरथाश्वगता** इति। यद्भगवता कर्तव्यम्, तदनयैव कृतमिति निरूपणार्थमेतदुक्तम्। **विमूढा** इति पातज्ञानाभावोऽपि। नन्वेषा दुर्गेव प्रचण्डेति चेत्, तत्राह **यात्राच्छलेनेति**। हरये स्वशोभामर्पयन्तीम्। प्रसङ्गादेतज्जातम्। सा तु स्वदुःखहरणार्थं स्वशोभाभाविर्भाव्य भगवते प्रयच्छति। तत्र प्रसङ्गात् सा शोभा स्वयं ग्राह्येति अयोग्यमिच्छन्तः पतिताः न तु रुक्मिण्या पातिताः। नन्वेषा यात्रां कृत्वैव गच्छति, कथं भगवते शोभां प्रयच्छतीति चेत्, तत्राह। यतः शोभा स्वकीया, स्वयं त्वन्यदीया, अतः स्वदाने स्वापेक्षाभावेऽपि स्वकीयं देयमेवेति। अत एव तस्या भगवदन्वेषणमाह **सैवमिति**। शीघ्रगमने रथारोहणं भविष्यतीति शनैः पदपद्मकोशौ चलयती जाता, चालयती। कोशत्वान्मुकुलितत्वमुक्तम्। अनेन कियद्दूरचलनेन पादयोर्व्यथा जातेति ज्ञापयन्तीव मुकुलितपादौ स्थापयतीति गम्यते। तथा व्याजकरणे हेतुः, तदैव तस्मिन् क्षण एव भगवतः प्राप्तिं प्रसमीक्षमाणा॥ ५४॥ कन्याया राजदर्शनमपि कर्तव्यं वैलक्षण्यज्ञापनायेति तद्भगवदर्थं जातमित्याह। उत्सार्य वामहस्तनखैरलकान् अपाङ्गैः प्राप्तान् नृपान् समैक्षत। ततः यदर्थं तान् दृष्टवती तमच्युतं ददर्श। नन्वपूर्वदर्शने कथं परिज्ञानमिति चेत्, तत्राह **अच्युतं** सेति। उभयोर्ज्ञापकमेकैको धर्मः। सा हि चित्रे भगवन्तं दृष्टवती, स्वप्नभ्रमेषु च। अतो रूपं दृष्टपूर्वम्। भगवान्प्यच्युतः सर्वत्रानुस्यूतः, ननु चित्रादिष्वन्यः, अत्रान्य इति। सर्वत्रैव भगवतः अच्युतत्वात्। अच्युतत्वात्। ततोऽग्रे दृष्टिर्न गतेति तमेव विलोकयन्ती यदा स्थिता, तदा सर्वैः रथारोहार्थं नियुज्यमाना जाता। तन्मध्ये भगवान् जहारेत्याह **तां राजकन्यामिति**। तामिति कृतात्मनिवेदनाम्, राजकन्याया हरणं च युक्तमिति, रथारोहे पुनः सारथ्यादेः मारणं कर्तव्यमिति, यदैव रथारोहणेच्छुर्जाता, तदैव जहार। तदा हि सर्वसमूहः अपगतो भवति। तत्र प्रतिबन्धकानां साक्षित्वं जातमित्याह **द्विषतां समीक्षतामिति**। कृष्णस्य हि स्त्रियः। हरणं हस्तेन ग्रहणमुत्तोलनमिति यावत्॥ ५५॥ ततो रथं समारोप्य यथाविल्यग्रेण सम्बन्धः। उपस्थितरथपरित्यागाय **सुपर्णलक्षणमिति**। तत्र वेष्टका राजन्याः सन्ति, परितश्चक्ररूपेण स्थिताः। तत्सर्वं परिभूय पराभवं प्रापयित्वा। दृष्टबलयस्त्येव, अदृष्टमपि बलं तस्यैवेति ज्ञापयेन्नाह **माधव** इति। लक्ष्मीपतिर्भगवान्; इयं च लक्ष्मीः। अतो भार्येत्यस्याः परिपालने भगवतो धर्मो जातः। ते त्वनधिकारिणस्तदभिलाषिण इति तेषां पापमेव सिद्धम्। अतः पराभवो युक्त इत्यर्थः। तेषां पराभवे रक्षकाणामपि युद्धं सम्भवतीति, तेषां वधे अमङ्गलं च भवतीति, तद्दोषं परिहरन्नाह **ततो ययाविति**। **तत** इत्यव्ययनिर्देशः। तस्य स्थानस्याविकृतत्वाय न कोऽपि तत्र हत इत्यर्थः। तर्हि पुरमध्ये कियद्दूरे हननं भविष्यतीत्याशङ्क्याह **यया** विति। **या** प्रापण इति कुशलेनेष्टदेशपर्यन्तं गत इत्यर्थः। तदीयानां वा रामादीनामुपद्रवमाशङ्क्य तन्निषेधार्थमाह **रामपुरोगमैरिति**। रामो हि साधनशक्तिः पुरोगमो येषामिति सर्वेषां साधनवत्त्वं रमणात्मकत्वादमारकत्वं च सूचितम्। सम्मर्देनापि तथात्वशङ्क्याह **शनैरिति**। लोका हि नगरस्थाः त्रिचतुरान्विहाय समागता अपि लोकवदन्त्या कृष्णाय दत्ता रुक्मिणी, अतो भगवान् नयतीति सादरं प्रेक्षका एव जाता इति शनैरित्यनेन सूचितम्। ननु तत्रैव कथं सर्वसन्देहनिवृत्त्यर्थं भगवान् न स्थितः, श्वशुरादिभिः पश्चादभ्यनुज्ञातो गच्छेत्, किमिति निर्गत इत्याशङ्क्याह **श्रृगालमध्यादिति**। भवेदेवं यदि तत्र सन्तो भवेयुः। ते हि श्रृगाला दुष्टचित्ताः तन्मध्ये च स्वभागो न स्थापनीय। अतिरिक्तभाग एव श्रृगालानामिति। तत्रापि यदक्रूरमतिरिक्तं तत्साध्यानाम्, यत् क्रूरं तत् श्रृगालानामिति। यथाताग्निः चषालादूर्ध्वं यूपश्च साध्यानाम्, यतयश्च श्रृगालानामिति श्रौतो निर्णयः। न तु स्वभागस्य। किञ्च। लोकेऽपि तत् श्रृगालमध्ये न रक्षणीयमिति श्रौतो निर्णयः। न तु स्वभागस्य। किञ्च। लोकेऽपि तत् श्रृगालमध्ये न रक्षणीयमिति सिंहं दृष्टान्तीकरोति **हरिरिति**। यथा सिंहः स्वभागं हरति, तथा भगवानपि भागहृज्जातः। **भागभृदिति** पाठे भागं बिभर्तीति। गृहीतस्य शुद्ध एव स्थाने स्थानपनमिति तत्र न स्थापितवान्, अन्यथा असुरगामि तद्भवेदिति॥ ५६॥ ततो यज्जातं तदाह **तं मानिन** इति। अभिमानरक्षार्थमेव समागताः। तदुक्तम्। 'यद्यागत्य हरेत्कृष्ण' इति। तज्जातमिति स्वस्य अभिभवं तिरस्कारं यशसश्च क्षयं दृष्ट्वा। तत्रापि परैः कृतम्। नहि शत्रुकृतं सोढुं शक्यमिति। ते यदि विवाहेनापि नयेयुः, तथापि सोढुमशक्याः, किमुत बलादिति। तत्रापि जरासन्धवशाः, यैः पूर्वं जयोनुभूतः, अतो न सेहिरे, असहमाना जाताः। जरासन्धवशत्वेन यशःक्षयासहनम्, मानित्वेन स्वाभिभवासहनमिति। तत्रोभयविधं स्वनिन्दाप्रतिपादकं वाक्यमाह **अहो धिगिति**। आत्तधन्वनामस्माकं यशो धिगिति। यदि यशो भवेत् तदा यशसा भीताः नेतारो भवेयुः इति मानिनां वचनम्। जरासन्धप्रमुखाना वचनमाह **गोपैर्हृतमिति**। गोपाला हि गां हरन्ति। यस्य कस्यचित्। तत्रापि केसरिणां हृतमिति महदाश्चर्यम्। केसरी हि गां भक्षयति। गोपालाः पालयन्ति। अतः कृतं युक्तमेव, परमत्याश्चर्यमिति तेषां प्रशंसा स्वपौरुषख्यापनं च। अनेनातःपरं प्रयत्नो न कर्तव्य इत्यपि सूचितम्। कर्तव्योऽपीति अत्र हेतुमाहुः **केसरिणां मृगैरिवेति**। मृगा हि साधारणाः, केसरी मृगेन्द्रः, तत्रापि बहूनां भागोऽयमिति दृष्टान्तोऽत्र वर्तत इति नात्यन्तमाश्चर्यमिति स्वमनःसमाधानमाहुः॥ ५७॥

इति श्रीभागवतसुबोधिन्यां श्रीमलक्ष्मणभट्टात्मजश्रीमद्वल्लभदीक्षितविरचितायां दशमस्कन्धविवरणे उत्तरार्धे चतुर्थोऽध्याय॥ ४॥

## विवरण टिप्पणी

अच्युतं सेत्यत्र। उभयोरिति। अच्युतं भगवति, सेति पदोक्तं चित्रदर्शनं च तस्यामित्यर्थः। तं मानिन इत्यत्र। पदार्थः पदार्थेनैवान्वेति नियमस्य प्रायिकत्वादात्तधन्वनामिति पदं समासान्तर्गतेनास्मच्छब्देनान्वेति।

चतुर्थाध्यायव्याख्या समाप्ता।

## श्रीसुबोधिनी–सारः

तां रुक्मिणीं विलोक्य दृष्ट्वा तया कृतेन तत्कृते तदर्थं वा हृच्छयः कामस्तेनार्दिताः पीडिता यशस्विनः कीर्त्तिमंतो ये वीराः समागतास्ते मुमुहुर्मोहं प्रापुः ॥ ५३ ॥ किं च यां वीक्ष्य तस्या ऊदारेण हासेन व्रीडावलोकेन लज्जाप्रेक्षणेन हृतं चेतो येषां ते त्यक्तास्त्रा नृपतयो राजानो हस्तिस्थाश्वारूढास्ते क्षितौ भूमौ पेतुः। यात्रायाः छलेन मिषेण हरये श्रीकृष्णाय स्वशोभां स्वचातुर्यम् अर्पयंतीं दर्शयन्तीम् ॥ ५४ ॥ एवं शनैर्मंदंमंदं चलपद्मकोशतुल्यौ पादौ चालयती सती सा वधूः तदा समये तस्मिन् भगवतः प्राप्तिमागमनं प्रतीक्षमाणा वामहस्तनखैरल कान् केशान् उत्सार्य दूरीकृत्य अपांगैः कटाक्षैः प्राप्तान् नृपान् ह्रिया लज्जया ऐक्षतापश्यत्। साऽच्युतं प्राप्तं ददर्श ॥ ५५ ॥ रथमारोढुमिच्छन्तीं तां राजकन्यां कृष्णो जहार। द्विषतां शत्रूणां समीक्षतां पश्यतां सतां सुपर्णस्य गरुडस्य लक्षणं चिह्नं यस्य यस्मिन् वा तं रथं समारोप्य राजन्यानां भूपानां चक्रं मंडलं परिभूय तिरस्कृत्य माधवः श्रीकृष्णो रामः पुरोगमोऽग्रेचरो येषां तैः सह शनैर्जगाम भागहृत् हरिः सिंहः शृगालमध्यात् इव ॥ ५६ ॥ वैरिणामाक्रोशमाह। यशसां कीर्त्तीनां क्षयो यस्मात्तं स्वाभिभवं स्वावज्ञां मानिनः परे शत्रव जरासंधस्य वशा अधीना नृपा न चक्षमिरे। "अहो दैवबलं बलम्" इत्युक्तेः। अस्मान् धिक् यतो हि आत्तं गृहीतं धनुर्येस्तेषां यशो गोपैर्हृतमिति अहो चित्रमेतत् केसरिणां सिंहानां यशो मृगैरिव ॥ ५७ ॥

इति श्रीमद्भा० दशमस्कन्धे उत्तरार्द्धे सुबोधिन्यां टीकायां त्रिपंचाशत्तमोऽध्यायः ॥ ५३ ॥

## गोस्वामिश्रीगिरिधरलालकृताबालप्रबोधिनी

न केवलं मुमुहुः, अपि तु गजाद्यारूढास्ते जरासन्धादयो नृपतयो यां वीक्ष्य मूढाः सन्तः क्षितौ पेतुरित्यन्वयः। तेषां मूढत्वमेव स्पष्टयति—उज्झितानि त्यक्तान्यस्त्राणि यैस्ते। तत्र हेतुमाह—तस्या उदारेण सुखदेन हासेन व्रीडापूर्वकावलोकेन च हृतानि चेतांसि येषां ते। तत्र हेतुत्वेन तच्छोभातिशयमाह—यात्राच्छलेनेति। 'हरिरत्रागतश्चेत् मम शोभां पश्यतु' इत्याशयेन गमनमिषेण स्वशोभां दर्शयन्तीमित्यर्थः ॥ ५३ ॥ सा रुक्मिणी तदैवं भगवतः प्राप्तिं प्रसमीक्षमाणा अत एव पद्मकोशतुल्यौ चरणौ शनैश्चलयती वामकरजैर्नखैरलकानुत्सार्य अपाकृत्य ह्रियैव प्राप्तान्नृपान् ऐक्षत, तदा च सा अच्युतं कृष्णं च ददर्श ॥ ५४ ॥ तदा श्रीकृष्णो रथमारोढुमिच्छन्तीं तां राजन्यां द्विषतां शत्रूणां चैद्यादीनां समीक्षतां समीक्षमाणानां सतां जहार। ततश्च सुपर्णलक्षणं गरुडध्वजं रथं समारोप्य राजकन्यां राजन्यानां चक्रं मण्डलं परिभूय तुच्छीकृत्य रामः पुरोगमः अग्रणीर्येषां तैर्यदुभिः सह शनैर्यावितिति सार्धान्वयः। तत्र दृष्टान्तमाह—शृगालेति। स्वभागं हृत्वा हरिः सिंहो यथा सृगालमध्यान्निर्भयः शनैर्याति तथेत्यर्थः। रुक्मिण्या अपि तद्भागत्वं सूचयन्नाह—माधव इति ॥ ५५ ॥ मानिनो दुरहङ्कारिणो जरासन्धवशाः शत्रवस्तं कन्याहरणेन स्वाभिभवं स्वयशःक्षयं च न सेहिरे। असहमानानां तेषामाक्रोशमाह—अहो इति। अहो आश्चर्यं अस्मान् धिक् यशोऽस्मत्कीर्तिं च धिक्। तत्र हेतुमाह—आत्तधन्वनां धनुर्धराणामप्यस्माकं स्वं गोपैर्हृतमिति। तत्र दृष्टान्तमाह—केसरिणामिति। सिंहानां भागो यथा तुच्छैर्मृगैर्ह्रियते तथेत्यर्थः ॥ ५६ ॥

इति श्रीवल्लभाचार्य–वंश्यगोपालसूनुना। श्रीमन्मुकुन्दरायाणां पादसेवाधिकारिणा ॥ १ ॥
श्रीमद्गिरिधराख्येन भजनानन्दसिद्धये। श्रीमद्भागवतस्येयं टीकाबालप्रबोधिनी ॥ २ ॥
रचिता दशमे तत्र राजसानां निरोधने। त्रिपञ्चाशत्तमो रुक्मिण्या हरणनिरूपकः ॥ ३ ॥

## अन्वितार्थप्रकाशिका

यामिति ॥ यात्राच्छलेन हरये स्वशोभाम् अर्पयतीम्। नुमभाव आर्षः। हरिरत्रागतश्चेत् मम शोभां पश्यत्विति दर्शयन्तीं राजभ्यः अदर्शयन्तीमपि यां वीक्ष्य गजरथाश्वगतास्ते जरासन्धाद्या दैत्यांशा नृपतयः तस्या उदारेण सुखदेन हासेन व्रीडापूर्वकावलोकेन च हृतानि चेतांसि येषां ते अत उज्झितास्त्रास्त्यक्तशस्त्राः विमूढाः सन्तः क्षितौ पेतुः। यामिति अग्रिमश्लोकोक्तसेत्यपेक्षया ॥ ५३ ॥ सेति ॥ सा रुक्मिणी तदैवं भगवतः प्राप्तिं प्रसमाक्षमाणा अत एव पद्मकोशतुल्यौ चरणौ शनैश्चलयती। नुमभाव आर्षः। वामहस्तस्य करजैर्नखैरलकानुत्सार्य अपाकृत्य ह्रियैव प्राप्तान्नृपान भुवि पतितान् अपाङ्गैः कटाक्षैः ऐक्षत। तदा च सा अच्युतं कृष्णं च ददर्श ॥५४॥ तामिति सार्द्धम् ॥ तदा माधवो लक्ष्मीपतिः श्रीकृष्णो रथमारोढुमिच्छतीं तां राजकन्यां

द्विषतां शत्रूणां समीक्षतां समीक्षमाणानां सतां जहार। शता आर्षः। ततश्च सुपर्णलक्षणं गरुडध्वजं रथं समारोप्य राजन्यानां चक्रं मण्डलं परिभूय तुच्छीकृत्य रामः पुरोगमः अग्रणीर्येषां तैर्यदुभिः सह शनैर्ययौ। तत्र दृष्टान्तः। स्वभागं हृत्वा हरिः सिंहो यथा शृगालमध्यान्निर्भयः शनैर्याति तथा ययौ ॥ ५५ ॥ तमिति ॥ मानिनी दुरहङ्कारिणो जरासन्धवशाः परे शत्रवस्तं कन्याहरणेन स्वाभिभवं स्वयशःक्षयं च न सेहिरे। अहो अस्मान् धिक् यतः केसरिणां सिंहानां यशो मृगैरिव आत्तधन्वनां धनुर्द्धराणामस्माकं यशः गोपैर्हृतम्। गोपै राजभिः मृगैः शरभैरिति वास्तवोऽर्थः ॥ ५६ ॥

इति श्रीकृष्णसेवार्थमन्वितार्थप्रकाशिकाम् गङ्गासहायो दशमत्रिपञ्चाशत्तमे व्यधात् ॥

इति श्रीभागवते दशमस्कन्धेऽन्वितार्थप्रकाशिकायां त्रिपञ्चाशत्तमोऽध्यायः ॥ ५३ ॥

## श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्

तया कृतो हृच्छयः कामस्तेनार्दिताः पीडिताः ते नृपतयः यां वैदर्भी वीक्ष्य। तस्या रुक्मिण्या उदारहासादिभिः हृतज्ञानाः अतएव उज्झितास्त्राः पतितशस्त्रा संतः क्षितौ पेतुः ॥ ५३ ॥ चलपद्मकोशसदृशौ पादौ चलयती सा वामकरांगुलिभिः अलकान् उत्सार्यमुखाद्दूरीकृत्य प्राप्तान् नृपान् ह्रियैक्षत भगवतः प्राप्तिं समीक्षमाणा सती सा तदैवाच्युतं ददृशे ददर्श ॥ ५४ ॥ रथमारुरुक्षतीं तां कृष्णः समीक्षतां, समीक्षमाणानां द्विषतां सतां, जहार सुपर्णलक्षणं रथं समारोप्य। राजन्यचक्रं परिभूय च माधवः शृगालमध्यात्स्वभागहृत् हरिः सिंह इव। ततो ययौ रामपुरोगमैर्यदुवीरैश्च शनैरनुगम्य तेस्म ॥ ५५ ॥ तेषां स रोषत्वं दर्शयति तमिति। आत्तधन्वनामस्माकं यशोगोपैर्हृतं। अतोस्मान्धिक् अहो महत् कष्टं ॥ ५६ ॥

इति श्रीशुद्धैकांतधर्मप्रवर्त्तकगुरुराजेन्द्रश्रीसहजानंदस्वामिशिष्यगोपालानंदमुनिविरचिते निगूढार्थप्रकाशके श्रीमद्भागवतस्य दशमस्कंध व्याख्याने रुक्मिणीहरणनामा त्रिपंचाशत्तमोऽध्यायः ॥ ५३ ॥

## भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

न केवलं मुमुहुरपि तु भूमौ पेतुश्चेत्याह। यामिति। गजरथाश्वगताः हस्तिरथाश्वारूढाः, तस्या उदारो यो हासस्तेन व्रीडावलोकेन च हृतानि चेतांसि येषां ते, अत एव, विमूढाः ते नृपतयः, यात्राच्छलेन यात्रामिषेण, हरये श्रीकृष्णाय, स्वशोभां स्वलावण्यं, अर्पयन्तीं, यां वीक्ष्य, उज्झितानि त्यक्तानि अस्त्राणि यैस्तथाभूताः सन्तः, क्षितौ भूमौ, पेतुः ॥ ५३ ॥ सैवेयमिति। एवमुक्तविधशोभायुक्ता, चलपद्मकोशौ चलायमानपद्मकोशतुल्यौ स्वचरणौ, शनैः मन्दं मन्दं, चलयती। तत्र हेतुः। तदा भगवतः श्रीकृष्णस्य, प्राप्तिं, प्रसमीक्षमाणा सा सर्वशास्त्रेषु लक्ष्मीत्वेन प्रसिद्धा, सा रुक्मिणी, वामकरजैः अलकान् किंचिन्नेत्रकोणान्तिकागतशिरोरुहान्, उत्सार्यापाकृत्य, ह्रिया, युता, सती, अपाङ्गैः, प्राप्तान् नृपान्, ऐक्षत तदेव, अच्युतं श्रीकृष्णं च, ददृशे ॥ ५४ ॥ तामिति। तदा, माधवः मधोर्गोत्रापत्यं रमापतिर्वा, कृष्णः, रथं आरुरुक्षतीमारोढुमिच्छन्तीं, राजकन्यां राजपुत्रीं, तां रुक्मिणीं, द्विषतां समीक्षतां समीक्षमाणान् द्विषतोऽनादृत्येत्यर्थः। राजन्यचक्रं राजमण्डलं, परिभूय अगणयित्वा, सुपर्णलक्षणं गरुडध्वजं, रथं समारोप्य रथोपस्थे आस्थाप्येत्यर्थः। जहार। ततः रामः पुरोगमोऽग्रयायी यस्य तथाभूतः सन्, शृगालमध्यात्, भागहृत् स्वभागहरः, हरिः सिंहः इव, शनैः ययौ। शनैरित्यनेन निर्भयत्वं सूच्यते ॥ ५५ ॥ तदिति ॥ मानिनः केवलं दुरहंकारिणः जरासंधमुखाः, परे द्विषन्त, ते नृपाः, तत् कन्याहरणं, स्वाभिभवं स्वपराभवरूपं, यशःक्षयं स्वयशःक्षयरूपं च, मत्वा, न सेहिरे। असहमानानां तेषां क्रोधमाहाहो इति। अहो अस्मान्, यशः नः कीर्त्तिं च धिक्। कुतः। केसरिणां सिंहानां, स्वमिति शेषः। मृगैः इव, आत्तधन्विनामुद्यतायुधानामस्माकं, स्वं गोपैः हृतम्। कंसं छलेन व्यापाद्य क्षत्रिपतां मन्यमानं जातितो गोपं कृष्णमाश्रितैः क्षत्रियापसदैर्यादवैरपहृतमित्यर्थः ॥ ५६ ॥

इति श्रीधर्मधुरंधरश्रीधर्मात्मजप्रत्यक्षपुरुषोत्तमश्रीसहजानन्दस्वामिसुतश्रीरघुवीराचार्यसूनुभगवत्प्रसादाचार्यविरचितायामन्वयार्थावबोधिन्यां भक्तमनोरञ्जन्याख्यायां श्रीमद्भागवतटीकायां दशमस्कन्धे उत्तरार्द्धे त्रिपञ्चाशत्तमोऽध्यायः ॥ ५३ ॥

**कृष्णप्रिया**

रुक्मिणी जी इस प्रकार इस उत्सव यात्रा के बहाने मन्द-मन्द गति से चलकर भगवान् श्रीकृष्ण को अपना राशि-राशि सौन्दर्य निछावर कर रही थी। उन्हें देखकर और उनकी खुली मुस्कान तथा लजीली चितवन पर अपना चित्त लुटाकर वे बड़े-बड़े नरपति एवं वीर इतने मोहित और बेहोश हो गये कि उनके हाथों से अस्त्र-शस्त्र छूटकर गिर पड़े और वे स्वयं भी रथ, हाथी तथा घोड़ों से धरती पर आ गिरे ॥ ५३ ॥ इस प्रकार रुक्मिणी जी भगवान् श्रीकृष्ण के शुभागमन की प्रतीक्षा करती हुई अपने कमल की कली के समान सुकुमार चरणों को बहुत ही धीरे-धीरे आगे बढ़ा रही है। उन्होंने अपने बायें हाथ की अँगुलियों से मुख की ओर लटकती हुई अलकें हटायी और वहाँ आये हुए नरपतियों की ओर लजीली चितवन से देखा उसी समय उन्हें श्यामसुन्दर भगवान् श्रीकृष्ण के दर्शन हुए ॥ ५४ ॥ राजकुमारी रुक्मिणीजी रथ पर चढ़ना ही चाहती थी कि भगवान् श्रीकृष्ण ने समस्त शत्रुओं के देखते देखते उनकी भीड़ में से रुक्मिणी जी को उठा लिया और उन सैकड़ों राजाओं के सिर पर पांव रखकर उन्हें अपने उस रथ पर बैठा लिया जिसकी ध्वजा पर गरुड का चिह्न लगा हुआ था ॥ ५५ ॥ इसके बाद जैसे सिंह सियारों के बीच में से अपना भाग ले जाय, वैसे ही रुक्मिणी जी को लेकर भगवान् श्रीकृष्ण बलराम जी आदि यदुवंशियों के साथ वहाँ से चल पड़े ॥ ५६ ॥ उस समय जरासन्ध के वशवर्ती अभिमानी राजाओं को अपना यह बड़ा भारी तिरस्कार और यश कीर्ति का नाश सहन न हुआ। वे सब-के-सब चिढ़कर कहने लगे—अहो, हमें धिक्कार है। आज हम लोग धनुष धारण करके खड़े ही रहे और ये ग्वाले, जैसे सिंह के भाग को हरिन ले जाँय, उसी प्रकार हमारा सारा यश छीन ले गये ॥ ५७ ॥

श्रीमद्भागवत दशमस्कन्ध उत्तरार्द्ध श्रीरुक्मिणीहरण ५३ वाँ अध्याय समाप्त।

# अथ चतुःपञ्चाशत्तमोऽध्यायः

| श्लोकाः | अनु. | मि. उ. | उ. | श्लो. अ. | उ. अ. | अ. अ. | सं. श्लो. अ. | सं. श्लो. | अक्ष. |
|---|---|---|---|---|---|---|---|---|---|
| ६० | ५७ | ३ | ३ | १९८४ | १८ | ४३ | २०४५ | ६३।। | ५ |

### श्रीशुक उवाच

इति सर्वे सुसंरब्धा वाहानारुह्य दंशिताः । स्वैः स्वैर्बलैः परिक्रान्ता अन्वीयुर्धृतकार्मुकाः ॥ १ ॥
तानापतत आलोक्य यादवानीकयूथपाः । [1]तस्थुस्तत्संमुखा राजन्विस्फूर्ज्य[2] स्वधनूंषि ते ॥ २ ॥
अश्वपृष्ठे गजस्कन्धे [3]रथोपस्थे च कोविदाः । मुमुचुः शरवर्षाणि [4]मेघा अद्रिष्वपो यथा ॥ ३ ॥
पत्युर्बलं शरासारैश्छन्नं वीक्ष्य सुमध्यमा । सव्रीडमैक्षत्तद्वक्त्रं [5]भयविह्वललोचना ॥ ४ ॥

### कर्दमक्षमा

अन्वयः—श्रीशुक उवाच इति, सर्वे, संरब्धाः, दंशिताः, धृतकार्मुकाः, स्वैः, स्वैः, बलैः, परिक्रान्ताः, वाहान्, आरुह्य, अन्वीयुः ॥ १ ॥ राजन् ! आपततः, तान्, आलोक्य, ते, यादवानीकयूथपाः, स्वधनूंषि, विस्फूर्ज्य, तत्, संमुखाः, तस्थुः ॥ २ ॥ यथा, मेघाः, अद्रिषु, आपः, तथा, कोविदाः, अश्वपृष्ठे, गजस्कन्धे, रथोपस्थे, शरवर्षाणि, मुमुचुः ॥ ३ ॥ सुमध्यमा, पत्युः, बलम्, शरासारैः, छन्नम्, वीक्ष्य, भयविह्वललोचना, सव्रीडम्, तत्, वक्त्रम्, ऐक्षत् ॥ ४ ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

चतुष्पंचाशत्तमे तु जित्वा राज्ञोऽरिपक्षगान् । रुक्मिणं च विरूप्याथ भैष्म्याः पाणिं पुरेऽग्रहीत् ॥ १ ॥

इतीति । अहो धिगस्मानित्येवं वदंतः । सुसंरब्धाः क्रोधाविष्टाः । दंशिताः कृतसन्नाहाः । परिक्रांताः परिवृताः । अन्वीयुरन्वधावन् ॥ १ ॥ विस्फूर्ज्य टंकारयित्वा ॥ २ ॥ परेषां शराणां बाहुल्ये यादवानामचलत्वे दृष्टांतः । मेघा इति ॥ ३ ॥ ऐक्षदेक्षत ॥ ४ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

अरिपक्षगान् शिशुपालपक्षीयान् । विरूप्य मुंडयित्वा ( १ ) । सर्वे जरासंधादयः । वाहान् गजादीन् । धृतकार्मुका इति पूर्वं विमूढत्वेनोज्झितास्त्रतया गजादिभ्यो भूमौ पतनात् ॥ १ ॥ तान् राज्ञः । यादवानीकानां यूथानि पांति ये तथा ते बलदेवादयस्तत्संमुखा राजाभिमुखाः । त इति श्रीरामेण सहतदर्थमेव य आगता इत्यर्थः ॥ २ ॥ रथोपस्थे रथमध्ये "उपस्थः शेफसि क्रोडे तथा मदनमंदिरे" इति मेदिनी । क्रोडे मध्ये । रथोपस्थे तदुपरिस्थितनीडे । कोविदा युद्धाऽभिज्ञा जरासंधाद्याः ॥ ३ ॥ तद्वक्त्रं श्रीकृष्णमुखम् । सुमध्यमेति–लज्जयावनतमध्यत्वेन तत्र भंगुरत्वव्यक्तेः ॥ ४ ॥

### श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी

वाहान् गजादीनारुह्येति धृतकार्मुका इति च पुरा विमूढत्वेनोज्झितास्त्रतया गजादिभ्यो भूमौ पतनात् ॥ १ ॥ इति । पूर्वमेतदर्थमेव श्रीरामेण सहागताः प्रसिद्धाश्च य इत्यर्थः स्वान्यसाधारणानि धनूंषि ॥ २ ॥ रथोपस्थे तदुपरि स्थितनीडे कोविदा युद्धाभिज्ञा जरासन्धमुखाः ॥ ३ ॥ सुमध्यमेति । लज्जया नम्रत्वेन भङ्गुरमध्यात्वव्यक्तेः ॥ ४ ॥

### श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी

वाहान् गजादीनारुह्येति, धृतकार्म्मुका इति च, पुरा विमूढत्वेनोज्झितास्त्रतया गजादिभ्यो भूमौ पतनात् ॥ १ ॥ ते पूर्वमेव तदर्थमेव श्रीबलदेवेन सहागता ये, किंवा, महाबलपराक्रमादिना प्रसिद्धाः, किंवा, श्रीकृष्णैकप्रिया यादवालामनीकानि सैन्यानि, तेषां यूथपाः श्रीबलदेवादयः, स्वकीयान्यसाधारणानि धनूंषि । हे राजन्निति प्रहर्षात् ॥ २ ॥ रथस्योपस्थे उपरि च, अश्वपृष्ठादौ शरवर्षाणां मोचनं तेषामत्यन्तबाहुल्येन । तत्र तत्रावस्थितयोधैः सह तत्तद्व्यापनात्, अश्वादीनां यथोत्तरं बृहतया

---

१. तस्थुर्वै–विज. । २. विस्फार्य–वीर. । ३. स्थेऽस्य–श्रीधर. टि. । ४. मेघास्तोयं यथाद्रिषु–प्रा. पा. । ५. भाव–विज. ।

तेषु शरवर्षणाधिक्येन तत्तत्क्रमेण निर्देशः, मुमुचुर्नृपाः यतोऽस्त्रेषु कोविदा इति मेघसादृश्यमुपपादितम् ॥ ३ ॥ पत्युरित्यागारमनोवलस्य च रक्षणाभिप्रायेण, वीक्ष्य साक्षाद्दृष्ट्वा मयेन विह्वले अश्रुमोचनादिना आकुले चञ्चले वा लोचने यस्यास्तथाभूता सती, यतः सुमध्यमा परमोत्तमा, तादृशीनां सदा भीरुत्वात्, तत्रापि शरासारैश्छन्नं वीक्ष्य स व्रीडं यथा स्यादिति सुमध्यमात्वादेव नववीक्षणाद्वा ॥ ४ ॥

### श्रीमद्वीरराघवाचार्यकृता भागवतचन्द्रचन्द्रिका

अथासहमानानां यदुभिः सह सङ्ग्रामं पराजयं चानुवर्णयति चतुष्पञ्चाशत्तमेन–इतीति । इत्यहो धिगित्येवं ब्रुवाणाः सर्वे सुतरां क्रोधाविष्टाः दंशिताः कवचिताश्च वाहानश्वादीनारुह्य स्वस्वबलैः परिक्रान्ताः परिवृताः धृतानि कार्मुकानि धनूंषि यैस्ते अन्वीयुरन्वधावन् ॥ १ ॥ तानापततः शत्रूनवलोक्य ते यादवसैन्याधिपतयो हे राजन् ! स्वधनूंषि विस्फूर्ज्य टङ्कारयित्वा सम्मुखा उत्तस्थुः ॥ २ ॥ परेषां शराणां बाहुल्ये यादवानामल्पत्वे च दृष्टान्तः–मेघा इत्यादि मेघा यथा अद्रिषु अपो जलधारा मुञ्चन्ति तद्वदश्वपृष्ठादिषु कोविदाश्शत्रवो यादवसैन्ये शरवर्षाणि मुमुचुः ॥ ३ ॥ तदा सुमध्यमा रुक्मिणी शरैश्छन्नं भर्त्तुर्बलमवलोक्य भयेन कातरे लोचने यस्याः सा सव्रीड यथा तथा तस्य पत्युर्वक्त्रं मुखमैक्षत ॥ ४ ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

यादवानामनीकानां यूथानि समूहास्तान्पान्ति रक्षन्तीति यादवानीकयूथपाः ॥ २ ॥ अश्वपृष्ठादिषु स्थित्वा ॥ ३ ॥ आसारो वेगवान् वर्ष इति सुमध्यमा रुक्मिणी ऐक्षदृष्टवती ॥ ४ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

चतुष्पञ्चाशत्तमेऽरिजयो रुक्मिविरूपता । भैष्म्याः प्रबोध उद्वाहो द्वारकायामितीर्यते ॥

विस्फूर्य टङ्कारयित्वा ॥ १–२ ॥ अद्रिष्विति । ते शरा यदूनामकिञ्चित्करा अभूवन्निति भावः ॥ ३ ॥ ऐक्षत् ऐक्षत ॥४॥

### गूढार्थदीपिनी

शत्रून् जित्वा चतुष्पञ्चाशत्तमे रुक्मिमुण्डनम् । भैष्म्याः प्रसान्त्वनं पुर्यां तद्विवाहश्च वर्ण्यते ॥ १ ॥

सुसंरब्धा अतीवक्रुद्धाः । दंशिता धृतकवचाः वाहान् आरुह्य । अन्वीयुः कृष्णमन्वधावन् ॥ १ ॥ यूथपाः सेनापतयः विस्फूर्ज्य टङ्कारयित्वा तस्थुः ॥२॥ रथोपस्थे रथमध्ये ॥३॥ बलं सैन्यम् । शरासारैः शरवर्षैः छन्नं वीक्ष्य मध्यमः कटिभागः ॥४॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

चतुष्पञ्चाशत्तमे श्रीरुक्मिणीहरणमसहमानानां राज्ञां पराजयं रुक्मिणो वैरूप्यकरणम् श्रीरुक्मिणीसान्त्वनार्थं श्रीबलवाक्यं श्रीरुक्मिणीविवाहोत्सवं च वर्णयति । इतीति । अहो धिगस्मानित्येवं वदन्तः सुसंरब्धाः क्रोधाविष्टाः दंशिताः संनद्धाः स्वैःस्वैर्बलैः सैन्यैः परिक्रान्ताः परिवृताः अन्वीयुः अनुजग्मुः ॥ १ ॥ विस्फूर्य टङ्कारयित्वा तेषां सन्मुखा उत्तस्थुः ॥ २–३ ॥ तद्वक्त्रं पतिमुखम् ऐक्षत् ऐक्षत ॥ ४ ॥

### श्रीसत्यधर्मकृता श्रीभागवतटिप्पणी

॥ हरिः ॐ ॥ मानिनो निन्दिताहन्तावतो जरासन्धवशाः परे वैरिणो न स्वाभिभवं तथा यशःक्षयं च न सेहिरे । अहोऽस्मान्धिक् निन्द्यतामस्माकमित्यर्थः । केसरिणां सिंहानां मृगैरिवात्तधन्विनां नो यशो गोपैर्हृतमतो धिगिति ॥ १ ॥ दंशिताः कवचोपेताः परिक्रान्ताः परिवृताः ॥ २ ॥ यादवानीकयूथनाथाः स्वधनूंषि विस्फूर्त्य सटङ्काराणि कृत्वा ॥ ३ ॥ कोविदास्तदुपदेशकुशलाः ॥ ४ ॥

### श्रीमद्वल्लभाचार्य्यकृता सुबोधिनी

यावन्निवर्तते चित्तं तदीयानां स्वभावतः । तावदन्यस्य विषयो भगवांस्तं न मन्यते ॥ १ ॥
अतो विधिविवाहार्थं तन्निराकरणं पुरा । त्रिविधानां निरूप्यं हि युद्धमुण्डनबोधनैः ॥ २ ॥
उदासीनाः स्वकीयाश्च स्वयं चेत्यत्र शत्रवः । मध्यमं भगवत्कार्यमनुकल्पो यतस्तथा ॥ ३ ॥
उत्तरार्धे पञ्चमे तु विवाहो वर्ण्यते हरेः । रुक्मिण्या सर्वभावेन तद्दोषान् विनिवर्त्य हि ॥ ४ ॥

पूर्वाध्यायान्ते स्वयशोनिन्दां कृतवन्त इत्युक्तम् । ततो यावच्छक्यं स्वपौरुषं सात्त्विकास्ते कृतवन्त इत्याह इतीति । सर्वे एव मिलिताः सुसंरब्धाः अल्पीयांसो भगवदीया इति स्वोद्यमः । भगवांश्च स्त्रीरक्षायां व्यापृत इति । अन्यथा सात्त्विकानां

विचारपूर्वकं प्रवृत्तिर्न स्यात् । सुष्ठु संरब्धाः क्रोधेन परस्परवाक्यैर्वा । ततो वाहान् रथादीन् दंशिताः बद्धकवचाः सम्भूय । युद्धे एकस्यापि भङ्गे सर्वेषां भवेदिति स्वैः स्वैर्बलैः पृथगेव परितः आक्रान्ताः, दूरादेव मारणार्थं धृतकार्मुकाः जाताः ॥ १ ॥ एवं शत्रूणामुद्योगमुक्त्वा तत्प्रतीकारार्थं भगवदीयानामप्युद्योगमाह **तानापततं** इति । **आ सर्वतः पततः** । अत्र विद्यमानाः सर्वे यादवानीकानां यूथपा एव, न तु कश्चित्सेनारूपः । साधारणो वा । अतस्तत्सम्मुखा एव तस्थुः आत्मीयाश्चेन्महान्तः अल्पीयांसोऽपि भवन्ति, तदापि जय इति बहूनामपि सम्मुखा जाताः । तानाकारयन्त इव स्वधनूंषि विस्फूर्ज्य जयनिनादं कृत्वा स्थिताः, यतस्ते रामादयः प्रसिद्धाः ॥ २ ॥ ततः प्रथमतः युद्धार्थं प्रवृत्ता इत्याह **अश्वपृष्ठ** इति । यत्रैव प्रहारे न कस्यापि व्यथा, तत्रैव तेषां शरपातो भवतीति ज्ञापनार्थं अश्वपृष्ठ इति । चर्मादि व्यवधायकमस्तीति । तथा गजस्कन्धेऽपि, तथा रथोपस्थे अनुपविष्टभागे । कोविदा अपि । अथ वा यत्रैव पोडा सम्भवति, तत्रैव शरवृष्टिं कृतवन्तः । यतः कोविदाः । चकारात् सारथिस्थानेऽपि । प्रतीकाराकरणेऽपि न कश्चित्तेषामपकारो जात इत्यत्र दृष्टान्तमाह **मेघा अद्रिष्विति** । न दीर्यत इत्यद्रिः । अन्यथा विदारे तदीयानामपकारात् विशेषणं व्यर्थं स्यात् । तत्रापि मेघाः साधारणाः, न तु नीलाः । तत्राप्यपः, न तु धाराः ॥ ३ ॥ ततो रुक्मिण्या भयं जातम्, तद्भगवता निवारितमिति निरूप्यते । भगवान् भक्तार्थमेव सर्वं करोतीति ज्ञापनार्थम् । केवलं तेषां वधे रुक्मिण्या अप्यसम्मतौ स्वार्थमेव तत् कृतवानिति क्लिष्टकर्मता स्यात् । ततो युद्धात्पूर्वं तदाह पत्युर्बलमिति **द्वाभ्याम्** । शराणामासारैः धारासम्पातैः सम्यक् छन्नम् । पत्युर्भगवतो बलं छन्नं वीक्ष्य तद्वक्त्रं सव्रीडमैक्षत । **सुमध्यमेति** विनियोगोऽन्यथा भविष्यतीति शङ्कया, शुद्धान्तःकरणा वा । राजसगुणे हि सति शौर्यादिकं भवतीति । एतदर्थमेव भगवदीयानां सहनम् । अपूर्वदर्शनमिति सव्रीडमैक्षत । वस्तुतः सभयं द्रष्टव्यम्, तथापि तावदयं पलायनमपि कर्तुं शक्त इति । लज्जैव परं भवेदिति । उभयथापि सव्रीडमैक्षत । ततः क्षणानन्तरं भयेन विह्वले लोचने यस्याः तादृश्यपि जाता । तस्य भगवतो वक्त्रमैक्षत ॥ ४ ॥

### श्रीसुबोधिनी–सारः

शुकोक्तिः । इत्येवं सर्वे सुसंरब्धाः अतिक्रुद्धा दंशिता बद्धकवचा वाहानारुह्य गृहीतधनुष्काः स्वैःस्वैर्बलैः सैन्यैः परिक्रांताः परिवृता अन्वीयुः पृष्ठतो जग्मुः ॥ १ ॥ आपतत आयातांस्तानालक्ष्य दृष्ट्वा यादवसैन्ययूथपतयस्ते स्वेषां धनूंषि विस्फूर्याकृष्य तेषां संमुखाः तस्थुः हे राजन् ॥ २ ॥ तद्यथा । वाजिपृष्ठे हस्तिपृष्ठे रथमंचे चेति कोविदा निपुणाः शराणां वर्षाणि मुमुचुः । मेघा अद्रिषु पर्वतेष्वपो जलानीव ॥ ३ ॥ शरासारैर्बाण धारापातैः छन्नमावृतं पत्युः श्रीकृष्णस्य बलं सैन्यं वीक्ष्य दृष्ट्वा सुमध्यमा रुक्मिणी भयेन विह्वले लोचने यस्याः सा सव्रीडं सुलज्जं यथा भवति तथा तस्य हरेर्वक्त्रं मुखमैक्षताऽपश्यत् ॥ ४ ॥

### विवरण टिप्पणी

**पञ्चमेऽध्याये** । **कारिकायाम्** । युद्धेति । **युद्धेन** जरासन्धादीनां मुण्डनेन रुक्मिणः बोधनेन रुक्मिण्यज्ञानस्य च निवारणमित्यर्थः । **स्वयं चेति** । भगवत्कृतिमननुमोदमानः स्वात्मापि शत्रुरिति भावः । **इति सर्वे** इत्यस्याभासे । **सात्त्विका इति** । 'भो भो पुरुषशार्दूले'त्यनेन ज्ञानोपदेशस्य वक्ष्यमाणत्वा 'त्सत्त्वात्संजायते ज्ञान'मिति तावदंशमादाय सात्त्विकत्वमिति भावः ।

### गोस्वामिश्रीगिरिधरलालकृताबालप्रबोधिनी

चतुःपञ्चाशत्तमे तु रुक्मिणोऽथ विरूपणम् । रुक्मिण्या सह चोद्वाहः कृष्णस्य विनिरूप्यते ॥ १ ॥

'तदनन्तरं किं जातम्' इत्यपेक्षायामाह—इतीति । 'अहो धिगस्मान्' इत्येवं ब्रुवाणाः सुसंरब्धाः सुतरां क्रोधिष्ठाः, दंशिताः बद्धकवचाः, धृतकार्मुकाः, स्वैस्वैर्बलैः सैन्यैः परिक्रान्ताः परिवृताः, सर्वे जरासन्धादयः वाहनारुह्य अन्वीयुः कृष्णमन्वधावन् ॥ १ ॥ ततश्च हे राजन् ! तान् शत्रून् आपततः आगच्छतः आलोक्य ते यादवसैन्याधिपतयः स्वधनूंषि विस्फूर्ज्य टङ्कारयित्वा तेषां सम्मुखाः तस्थुः ॥ २ ॥ ते जरासन्धादयः कोविदा युद्धेऽतिनिपुणा अपि यत्र शरनिपाते न कस्यापि कश्चिदपकारस्तेष्वेवाश्वपृष्ठादिषु शरवर्षाणि मुमुचुः । तत्र दृष्टान्तमाह—मेघा इति । मेघा यथा अद्रिषु अपो जलधारा मुञ्चन्ति, न तेन तेषां कश्चिदपकारस्तथा तेषां शरवर्षेणापि न कश्चिद्यादवानामपकार इत्यर्थः ॥ ३ ॥ तदा सुमध्यमा कोमलचित्ता पत्युर्बलं शरासारैः शरवर्षैराच्छन्नं वीक्ष्य भयेन विह्वले लोचने यस्याः सा रुक्मिणी सव्रीडं यथा स्यात्तथा तस्य पत्युर्वक्त्रमैक्षत ॥ ४ ॥

### अन्वितार्थप्रकाशिका

चतुष्पञ्चाशत्तमेऽरोज्झित्वा श्यालं विरूप्य च । रुक्मिणीमूढवांस्तत्र श्लोकानां षष्टिरद्धर्यक् ( ६० ) ॥
उवाचेति त्रयं ( ३ ) द्वाभ्यां युक्ता षष्टिरनुष्टुभाम् ( ६२ ) ॥ ५४ ॥

इतीति ॥ अहो धिगस्मान् इत्येवं ब्रुवाणाः सुसंरब्धाः सुतरां क्रोधाविष्टाः गजादिभ्यः पूर्वं पतितास्ते वाहानारुह्य दंशिताः बद्धकवचाः पूर्वमुज्झितास्त्रत्वात् इदानीं धृतकार्मुकाः स्वैः स्वैर्बलैः सैन्यैः परिक्रान्ता परिवृताः सर्वे जरासन्धादयः

अन्वीयुः कृष्णमन्वधावन् ॥ १ ॥ तानिति ॥ हे राजन् ! तान् शत्रून् आपततः आगच्छतः आलोक्य ते यादवानीकयूथपाः यादवसैन्याधिपतयः स्वधनूंषि विस्फूर्ज्य टङ्कारयित्वा तेषां सम्मुखाः तस्थुः ॥ २ ॥ अश्वेति । कोविदाः युद्धनिपुणाः जरासन्धादयः अश्वपृष्ठे गजस्कन्धे रथोपस्थे च स्थितेषु यादवेषु शरवर्षाणि मुमुचुः । यथा मेघा अद्रिषु अपो जलानि वर्षन्ति तथेत्यर्थः । तेन यादवानां हानेरभावः सूचितः ॥ ३ ॥ पत्युरिति । तदा सुमध्या रुक्मिणी पत्युर्बलं शरासारैः शरवर्षैराच्छन्नं वीक्ष्य भयेन विह्वले लोचने यस्याः तादृशी सती सव्रीडं यथा स्यात्तथा तस्य पत्युर्वक्त्रमैक्षत् ऐक्षत । तङभाव आर्षः ॥ ४ ॥

### श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्

अथ चतुःपंचाशत्तमेऽध्याये चैद्य पक्षीय राजन्य पराजयो रुक्मि वैरूप्यकरणं च द्वारकायां रुक्मिणीं पाणिग्रहणं च निगद्यते इतीति ॥ सुसंरब्धाः कोपयुक्ताः वाहान् वाहनानि ॥ दंशिताधृतवर्माणः ॥ बलैः परिक्रांता आवृताः अन्वीयुः अनुजग्मुः ॥ १ ॥ विस्फूर्ज्य उद्यम्य ॥ २ ॥ कोविदावाण निक्षेपणे निपुणाः यादवानां निश्चलत्वे निदर्शनं मेघा इति ॥ ३ ॥ ऐक्षत् ऐक्षत ॥ ४ ॥

### भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

चतुःपञ्चाशत्तमेऽथ राज्ञो जित्वाऽरिपक्षगान् । विरूप्य रुक्मिणं चापि पाणिं भैष्म्याः पुरेऽग्रहीत् ॥ १ ॥

अथैतदसहमानानां राज्ञां यदुभिः सह संग्रामं यादवकृतं तत्पराजयं चानुवर्णयति ॥ इतीति ॥ इति अहो धिगस्मानेवं ब्रुवाणाः, सुसंरब्धाः सुतरां क्रोधाविष्टाः, दंशिताः कृतसंनाहाः, वाहान् स्वस्वाश्वान्, वाहा उपलक्षणम् । स्वस्ववाहनानीत्यर्थः । आरुह्य, स्वैः स्वैः, बलैः सैन्यैः, परिक्रान्ताः परिवृताः,धृतानि कार्मुकाणि यैस्ते, कार्मुकमुपलक्षणं सर्वायुधानाम् । एवंभूताः सन्तः, अन्वीयुरन्वधावन् ॥ १ ॥ तानिति ॥ आपततः अभ्यागच्छतः, तान् शत्रून्, आलोक्य ते यादवानीकयूथपा यादवसैन्याधिपतयः, स्वधनूंषि, विस्फूर्ज्य टंकारयित्वा, हे राजन्, तत्सन्मुखाः, तस्थुः ॥ २ ॥ अश्वपृष्ठ इति ॥ कोविदा युद्धकुशलाः, सर्वे नृपाः, अश्वपृष्ठे, गजस्कन्धे, रथोपस्थे च, अश्वाद्यारूढेष्वित्यर्थः । मेघाः, अद्रिषु पर्वतेषु, अपो जलानि, यथा तथा, शरवर्षाणि, मुमुचुः । मेघा इति परेषां शराणां बाहुल्ये यादवानामल्पत्वे च दृष्टान्तः ॥ ३ ॥ पत्युरिति ॥ सुमध्यमा रुक्मिणी, पत्युः स्वस्वामिनः, श्रीकृष्णस्य, बलं सैन्यं, शरासारैः शत्रुकृतबाणवृष्टिभिः, छन्नमपवारितं वीक्ष्य, भयेन कातरे दीने, विह्वलेत्यपि पाठः । लोचने यस्यास्तथाभूता सती, तद्वक्त्रं श्रीकृष्णमुखं, सव्रीडं लज्जया सहितं यथा तथा, ऐक्षत् विलोकयामास ॥ ४ ॥

### कृष्णप्रिया

श्रीशुकदेवजी महाराज ने कहा—राजन् परीक्षित् ? श्रीरुक्मिणीजी का अपहरण सुनकर सब के सब राजा अत्यन्त क्रोध से आग बबूला हो उठे, और अङ्गत्राण-अच्छुरिका पहनकर अपने-अपने वाहनों पर सवार हो गये। भगवान् की सेना परिमित थी इसलिये भगवान् श्रीरुक्मिणीजी के संरक्षण में लगे थे। शिशुपाल के पक्ष के सर्व राजा अपनी-अपनी सेना को लेकर पृथक्-पृथक् चारों ओर से भगवान श्रीकृष्ण के पीछे दौड़े ॥ १ ॥ राजन् परीक्षित् ! भगवान् यदुवर श्रीकृष्ण के सेनाधिपतियों ने देखा कि विपुल संख्या में शत्रु सैन्य हम पर चढ़ा आ रहा है यह जानकर सब राजा और सेनापतियों ने भी अपने-अपने धनुषों का टङ्कार किया और दौड़कर उन सेनापतियों के सामने डट गये ॥ २ ॥ शिशुपाल के पक्षपाती राजा जरासन्ध के सैनिक कितने अश्वों पर कितने हाथियों पर तो कई लोग रथों पर चढ़े हुए थे। वे वीर पुरुष धनुर्विद्या में निपुण थे। उन लोगों ने यदुवीरों पर इस प्रकार शर वृष्टि कर रहे थे, मान लीजिये कि सैन्य के दल, के दल जैसे मेघदल पर्वतों पर मुसलधार जल वर्षा रहे हैं ॥ ३ ॥ सुमध्यमा सौन्दर्यमयी श्रीरुक्मिणी देवी ने निरीक्षण किया कि निजनाथ यदुनाथ श्रीकृष्ण प्रभु की सेना शरवृष्टि से आच्छादित हो गयी है। तब सलज्ज नयना देवी रुक्मिणीजी ने भयाकुल नजरों से भगवान् श्रीकृष्णचन्द्र के मुखारविन्द की ओर देखा ॥ ४ ॥

**प्रहस्य भगवानाह मा स्म भैर्वामलोचने[1] । विनङ्क्ष्यत्यधुनैवैतत् तावकैः शात्रवं बलम् ॥ ५ ॥**

**तेषां तद्विक्रमं वीरा गदसंकर्षणादयः । अमृष्यमाणा नाराचैर्जघ्नुर्हयगजान् रथान् ॥ ६ ॥**

**पेतुः शिरांसि रथिनामश्विनां गजिनां भुवि । सकुण्डलकिरीटानि सोष्णीषाणि च कोटिशः ॥ ७ ॥**

**हस्ताः सासिगदेष्वासाः करभा ऊरवोऽङ्घ्रयः । अश्वाश्वतरनागोष्ट्रखरमर्त्यशिरांसि च ॥ ८ ॥**

---

१. भैस्त्वं-श्रीधर. टि. ।

## कर्दमक्षमा

अन्वयः—भगवान्, प्रहस्य, आह ?, हे वामलोचने !, मा, स्म, भैः, एतत्, शात्रवम्, बलम्, तावकैः, अधुना, एव, विनङ्क्ष्यति ॥ ५ ॥ गदसङ्कर्षणादयः, वीराः, तेषाम्, तत्, विक्रमम्, अमृष्यमाणाः, नाराचैः, हय गजान्, रथान्, जघ्नुः ॥ ६ ॥ कोटिशः, रथिनाम्, अश्विनाम्, गजिनाम्, सकुण्डलकिरीटानि, सोष्णीषानि, शिरांसि, भुवि, निपेतुः ॥ सासिगदेष्वासाः, हस्ताः, करभाः, उरवः, अङ्घ्रयः, च, अश्वअश्वतर, नागोष्ट्र, खरमर्त्यशिरांसि, भुवि, निपेतुः ॥ ७-८ ॥

## श्रीधरस्वामिविरचिता भावार्थदीपिका

मा स्म भैः मा भयं कुरु । हे वामलोचने वराक्षि तावकैस्त्वदीयैः ॥ ५ ॥ स चासौ विक्रमश्च तम् ॥ ६ ॥ उष्णीषाणि शिरोऽवतंसवस्त्राणि तत्सहितानि शिरांसि ॥ ७ ॥ करभाः प्रकोष्ठा ऊरुविशेषणं वा ॥ ८-९ ॥

## श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

एतद्दृश्यमानम् । प्रहस्येति स्वस्य निर्भयत्वं सूचयंस्तामाश्वासयति—हे वामलोचन इति । स्त्रीस्वभावं भीरुत्वं मा स्वीकुरु, त्वं वामे शोकाश्रुराहित्यान्मनोहरे एव लोचने भविष्यतो यस्यास्तादृश्येव भविष्यसि, न त्वस्मत्पराजयेन विक्लवनेत्रा भविष्यसीति भावः । तावकैरस्माभिः । स्वेषां तदीयत्वनिर्देशस्तस्यां परमप्रणयव्यंजकः ॥ ५ ॥ तेषां राज्ञाम् । तद्विक्रममिति—कर्मधारयेण नीलोत्पलमितिवद्विक्रमस्य स्वाभाविकत्वमसूचि । गदस्याग्रोक्तिर्भक्तिविशेषेणाग्रे भवनात् । हयानामतिचंचलत्वात्प्रथमम्, ततो गजानां स्थूलशरीरत्वात्, सर्वांते पराजयपूर्णतेच्छया सर्वतोमुखानां रथानामिति क्रमनिर्देशाभिप्रायः ॥ ६ ॥ 'उष्णीषं तु शिरोवेष्टे' इति मेदिनी । शिरोवतंसवस्त्राणि शिरःशोभाकरवस्त्राणि । पेतुरिति युग्मकम् ॥ ७ ॥ ऊरुविशेषणे तु करभतुल्या इति ज्ञेयम् । हस्ता इत्युक्तेरेव करग्रहणाद्विकल्पः । अश्वतरो गर्दभादश्वायां जातः । "मणिबंधादाकनिष्ठं करस्य करभो बहिः" इत्यमरानुसारेण करैकदेशो लक्ष्यते ॥ ८-९ ॥

## श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी

प्रहस्येति । निर्भयेऽपि तस्याभयदर्शनात् तन्निरसनेच्छातश्च हे वामलोचने ! इति सम्बोधनं तदानीमात्मनि प्रथमार्पिततत्सौन्दर्यविशेषानुभवेन सुखाभिव्यक्तेः तावकैर्हेतुभिर्विनक्ष्यति स्वयमेव मरिष्यति तावकत्वनिर्द्देशस्तस्यां परमप्रणयव्यञ्जकः बहुत्वं स्वसैन्यस्य बाहुल्यव्यञ्जकं शत्रुबलस्यैकत्वं च स्वल्पप्रायत्वव्यञ्जकं तच्च सर्वं तस्या एवाश्वासनार्थम् ॥ ५ ॥ तद्विक्रममिति । समासेन विक्रमस्य तादृशत्वं स्वाभाविकं दर्शयति नीलोत्पलमिति अमृष्यमाणा असहमाना; गदस्यादावुक्तिविशेषेणाग्रे भवनात् । हयानामतिचञ्चलत्वात् प्रथमं हननं ततो गजानां स्थूलस्थूलत्वात् सर्वान्ते पराजयपूर्णतेच्छया सर्वतो मुख्यानां रथानामिति निर्द्देशक्रमाभिप्रायः ॥ ६ ॥ पेतुरिति युग्मकम् । रथ्यादीनां च यथा पूर्वं युद्धश्रैष्ठ्यात्तत्तत्क्रमेण शिरः पतनं कुण्डलादीनां यथा सम्भवं समुच्चयः पार्थक्यं च इति तेषामाधिक्यसूचनेन वीरेषु महत्त्वं सूचितं कोटिश इत्यस्य परत्रापि सर्वैरन्वयः । करभा इति । तैर्व्याख्यातं तत्र "मणिवन्धादाकनिष्ठं करस्य करभो वहि"रित्यनुसारेण लक्षणयैव प्रकोष्ठावचनं प्रकोष्ठस्तदुपरिभागः पक्षे क्रमनिम्नत्वात् करभा इव करभा इति ॥ ७-८ ॥

## श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी

प्रहस्य उच्चैर्हसित्वेति तस्या भयनिरासार्थम्; तथा चोक्तं तृतीयस्कन्धे श्रीकपिलदेवेन ( ३।२८।३२ )—'हासं हरेरवनताखिललोकतीव्र,—शोकाश्रुसागरविशोषणमत्युदारम्' इति; यतो भगवान् साक्षात् परमेश्वरः । हे वामलोचने इति भयविह्वलत्वेन नेत्रयोस्तदानीं सौन्दर्य्याधिक्यात्, तावकैस्त्वत्सम्वन्धिभिर्यादवसैन्यैर्हेतुभिर्विनङ्क्ष्यति स्वयमेव मरिष्यति, बहुत्वेन तस्याः समाश्वासनार्थं स्वसैन्यस्य बाहुल्यम्, बलमित्येकत्वेन च शत्रुसैन्यस्याल्पत्वमुक्तम् ॥ ५ ॥ तद्विक्रममुक्तं पराक्रममामृष्यमाणा असहमानाः, यतो वीराः, आदि-शब्दात् सात्यक्यक्रूर-कृतवर्म्मादयः, गदस्यादावुक्तिर्भक्तिविशेषेणाग्रे भवनात्; संकर्षणेति सर्व्वेषामेव तेषामेकत्राकर्षणात्, हयादीनां यथोत्तरं श्रैष्ठ्येन कनिष्ठानामेवाग्रे गमनात्तत्तत्क्रमेण हननम् ॥ ६ ॥ रथ्यादीनाञ्च यथापूर्व्वं युद्धे श्रेष्ठ्यात् तत्तत्क्रमेण, शिरःपतनं तत्र केषाञ्चित् सकुण्डलादीनि केषाञ्चिच्च सोष्णीयाणीति ज्ञेयम् । यद्वा, उष्णीषोपरि किरीटधारणेन सर्व्वेषामेव तानि तानीति, एवमग्रेऽपि; हस्ता इत्यादावपि; इति वीराणामलंकारादियुद्धसामग्र्यामहोत्साहादिकं सूचितम् । कोटिश इत्यस्य परत्रापि सर्व्वैरन्वयः । एवं खण्डशः पतनेन यादववीराणां युद्धनैपुण्यादिकं सूचितम् । तत्रास्यादियुक्तहस्तानां यथापूर्व्वं युद्धे नैकट्याधिक्येन तथा हस्तादीनां चोर्द्ध्वतया युद्धे तत्तत्क्रमेण पातः, अश्वादयस्त्रयो वाहनरूपाः, उष्ट्रादयो युद्धसाधनायुधवाहकाः ॥ ८ ॥

**श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका**

तदा भगवान् प्रहस्य तामाह उक्तिमेवाह–मास्मेति । हे वामलोचने ! त्वं मास्म भैः भयं मा कृथाः अधुनैव त्वदीयैः सैन्यैः शात्रवं बलं विनक्ष्यति नाशमेष्यतीति ॥ ५ ॥ इति तेषां चैद्यादीनां तथा विधं विक्रममसहमाना वीरा गदादयो यादवा नाराचैर्हयादीन् जघ्नुः ॥ ६ ॥ तदा अश्विनाम् अश्वाः येषां सन्तीति ते तेषामश्वारूढानां रथिनां गजानां च कोटिशः शिरांसि कुण्डलकिरीटसहितानि उष्णीषसहितानि च भुवि निपेतुः ॥ ७ ॥ तथा खड्गगदाधनुर्भिः सहिता हस्ताश्च करभाश्च प्रकोष्टाश्च ऊरवश्चाङ्घ्रयश्च निपेतुः करभास्तत्सदृशा ऊरव इत्यूरुविशेषणं वा तथा अश्वादीनां शिरांसि च निपेतुः तत्र नागा गजाः ॥ ८ ॥

**श्रीविजयध्वजतीर्थकृता पदरत्नावली**

करभाः कनिष्ठिकाया मूलप्रदेशाः गर्दभादश्वायां जातोऽश्वतरः ॥ ८ ॥

**श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः**

प्रहस्येत्यादि । तावकैरिति स्वजनान् प्रति तदीयत्वमुद्भाव्य तस्यां सर्वसमर्पणमिव व्यञ्जयति ॥ ( ५–३२ )

**श्रीनाथचक्रवर्तिपादविरचिता चैतन्यमतमञ्जूषा**

तावकैः शात्रवं बलमिति तावकैरिति ममतोद्भावनम् ॥ ५–३२ ॥

**श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी**

मास्म भैः माभैषीः तावकैरस्माभिः स्वेषां तदीयत्वनिर्देशसस्यां परमप्रणयव्यञ्जकः ॥ ५ ॥ तत्तदा सचासौ विक्रमश्च तमिति वा ॥ ६–७ ॥ करभाः "मणिबन्धादाकनिष्ठं करस्य करभो बहिः"रित्यमरः ॥ ८–१० ॥

**गूढार्थदीपिनी**

मा स्म भैः भयं मा कृथाः । 'बाहुलकात्' सिचः परस्य ईडभावः हल्ङ्याप् इति लोपश्च । तावकैस्त्वदीयैः सैन्यैः ॥ ५ ॥ तेषां राज्ञाम् । स चासौ विक्रमस्तम् । अमृष्यमाणाः असहमानाः । नाराचैर्बाणैः जघ्नुः ॥ ६ ॥ पेतुरिति युग्मम् । उष्णीष शिरोवेष्टनम् । इष्वासो धनुः । इषवो बाणा अस्यन्ते प्रक्षिप्यन्तेऽनेनेति । करभाः करस्याधस्ना भागाः करैकदेशाः । यद्वा हस्तिशुण्डादण्डादण्डतुल्या ऊरवः । अश्वतरः खच्चरेति प्रसिद्धः ॥ ७–८ ॥

**श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः**

हे वामलोचने ! सुन्दराक्षि ! मा स्म भैः भयं मा कुरु तावकैर्गदसङ्कर्षणादिभिः कृत्वा ॥ ५ ॥ सचासौ विक्रमस्तममृष्यमाणा असहमानाः ॥ ६ ॥ सकुण्डलकिरीटानि कुण्डलकिरीटसहितानि उष्णीषाणि शिरोऽवतंसवस्त्राणि तैः सहितानि च शिरांसि पेतुः ॥ ७ ॥ करभाः मणिबन्धादिकनिष्ठामूलान्ता हस्तावयवा; तदुपलक्षिता मणिबन्धादुपरि हस्तभागा इत्यर्थः ।८–१०।

**श्रीसत्यधर्मकृता श्रीभागवतटिप्पणी**

सव्रीडं सलज्जं तद्वक्त्रमैक्षदैक्षत शरासारैः शरधारासम्पातैर्भयविह्वललोचने यस्याः सा ॥ ५ ॥ मा भैर्भीता न भवत तावकैः शात्रवं बलमधुनैव विनङ्क्ष्यति ॥ ६ ॥ स चासौ विक्रमश्च तममृष्यमाणा असहिष्णवः ॥ ७ ॥ किरीटानि रत्नखचितानि स्वर्णात्मकानि चित्स्वोष्णोपाणि वासः शिरोवेष्टनानि । उष्णीषं तु शिरोवेष्ट इति विश्वः ॥ ८ ॥

**श्रीमद्वल्लभाचार्यकृता सुबोधिनी**

ततः सान्त्वनमाह प्रहस्येति । एवं हि कामः स्वयं स्वकीयवधं कामयत इति हासेनैव मोहने तस्या भयादिकमपि निवारितम् । मनो देहश्च भगवते सन्देशार्थं प्रेषितवती, न तु वाणीम् । अन्यथा सैव रमेत । भगवानपि तथा वाणीमेवोक्तवान् यथा योग्यम् । भगवत्त्वादेव नाविश्वासः तथैव हृदये वा सम्पादितवान् । मा स्म भैरित्याह । प्रसिद्धिरेव सर्वत्र वर्तते भगवदीयानां भयं नास्तीति । वामलोचन इति । वक्रा दृष्टिर्न कर्तव्या, आहोस्वित् पुरुषमपि या जयति, तस्याः किं भयमिति । मनोहरदृष्टित्वादेव शुभं भविष्यति, त्वद्दृष्ट्या वा हता भविष्यन्तीति सम्बोधनम् । अधुनैवेति । निःसन्देहः । तामात्मत्वेन गृहीत्वाह त्यक्त्वा गमनाभावाय । तावकैरिति । सर्वात्मकत्वविचारेऽपि उपपत्तिमाह शात्रवं बलमिति । शत्रवो हन्तव्या एवेति ॥ ५ ॥ एवं भगवद्वाक्येनैव ते आज्ञप्ता एव सामर्थ्ययुक्ता एव शत्रुबलं दूरीकृतवन्त इत्याह तेषामिति । तादृशं पराक्रमं अमृष्यमाणाः सन्तः जघ्नुः. तादृशं पराक्रमं को वा शत्रुरुपेक्षेत । गदः सङ्कर्षणश्च आदिभूतौ येषाम् । एकः प्रविश्य मारयति, अपरस्त्वाकृष्य । इतो हीनः

कोऽपि नास्तीति तयोरादित्वम् । **नाराचैर्बाणविशेषैः । हयगजान् रथानिति** । त्रिविधा हता इति गणिताः । न हि महद्भिः क्षुद्रा हन्यन्ते । अतो न पत्तयः परिगणिताः ॥ ६ ॥ हननं फलपर्यवसायीति फलमाह त्रिभिः **पेतुरिति** । वधो द्विविधः, अवयविनः अवयवानां च । ततः पलायनमिति रथिनां शिरांसि निकृत्तानि रथस्थानं परित्यज्य भुवि पेतुः । तथा अश्विनां अश्वसहितानां गजसहितानां वा । खड्गयुद्धे नैतदाश्चर्यम्, बाणयुद्धे तु भवतीति निरूपितम् । तेषामप्रयोजकत्वं निवारयति **सकुण्डलकिरीटानीति** । उष्णीषकुण्डलकिरीटानि त्रिविधानि । प्रायिकत्वं व्यावर्तयितुं कोटिश इत्युक्तम् । अवयवानाह **हस्ता इति** । असियुक्ता गदायुक्ताः दक्षिणाः, इष्वासयुक्ताः वामाः, करभाः शुण्डादण्डाः, ऊरवः अङ्घ्रयश्च । सर्वेषामश्वादीनां शिरांसि च भुवि पेतुरिति सम्बन्धः । नागा हस्तिनः । षड्विधा अपि हता इत्यर्थः । चकारात् ध्वजादीनामपि भूमिपातः ॥ ८ ॥

### श्रीसुबोधिनीसारः

प्रहस्येति भयाभावं सूचयन्नाह । हे वामलोचने ! मास्म भैस्त्वं भयं मा कार्षीः । एतत् शात्रवं शत्रूणां सम्बन्धि बलं तावकैः त्वदीयैरधुनाद्यैव नाशं प्राप्स्यति ॥ ५ ॥ तथा हि । येषां जरासंधादीनां तद्विक्रमं बलममृष्यमाणा असहमाना वीरा गदरामादयो नाराचैर्बाणैर्हयान् गजान् रथान् जघ्नुः ॥ ६ ॥ रथिनाम् अश्विनां गजिनां तद्वतां नृणां कोटिशोऽसंख्यातानि कुंडलमुकुटसहितानि सोष्णीषाणि शिरोवेष्टनसहितानि शिरांसि भुवि पृथिव्यां पेतुः ॥ ७ ॥ असिगदेष्वासैः खड्गगदाधनुर्भिः सहिता हस्ताः करभाः तद्बहिर्भागाः ऊरवोंघ्रयः प्रसिद्धाः । अश्वा घोटका अश्वतराः सूक्ष्माश्वाः नागा गजाः उष्ट्राः क्रमेलकाः खरा रासभा मर्त्यानां शिरांसि च पेतुः ॥ ८ ॥

### गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

तदा भगवान् प्रहस्य तामाह । तदुक्तिमेवाह—हे वामलोचने ! त्वं मास्मभैर्भयं मा कृथाः । तत्र हेतुमाह—तावकैः त्वदीयैः सैनिकैः शात्रवं बलं अधुनैव विनङ्क्ष्यति नाशमेष्यतीति । तावकैरिति तत्स्वीकारदार्ढ्यं सूचयति ॥ ५ ॥ तेषां जरासन्धादीनां तत् तथाविधं विक्रममसहमाना गदादयो वीरा नाराचैर्बाणैर्हयादीन् जघ्नुः ॥ ६ ॥ तथा रथाद्यारूढानां सकुण्डलकिरीटानि तत्सहितानि, उष्णीषाणि शिरोवतंसवस्त्राणि सोष्णीषाणि उष्णीषसहितानि बाणादिभिश्छिन्नानि कोटिशः शिरांसि च पेतुः ॥७॥ खड्गगदाधनुर्भिः सहिता हस्ताश्च, करभाः प्रकोष्ठाश्च, उरवश्च अङ्घ्रयश्च पेतुः तथाऽश्वादीनां शिरांसि च पेतुः ॥८॥

### अन्वितार्थप्रकाशिका

प्रहस्येति । तदा प्रहस्य भगवान् तामाह स्म । हे वामलोचने ! त्वं मा स्म भैर्भयं मा कृथाः । "बहुलं छन्दसि" इति सिचः परस्य ईडभावः । "हल्ङ्याप्०" इति लोपः । तावकैः त्वदीयैः सैनिकैः शात्रवं बलम् अधुनैव विनङ्क्ष्यति नाशमेष्यति । स्वेषां तदीयत्वनिर्देशस्तस्यां परमप्रणयव्यञ्जकः ॥ ५ ॥ तेषामिति । तेषां जरासन्धादीनां तत् तदा स चासौ विक्रमश्चेति वा तं विक्रमम् अमृष्यमाणा गदसङ्कर्षणादयो वीराः नाराचैर्बाणैर्हयगजान् रथान् तत्रस्थान् शत्रून् जघ्नुः ॥ ६ ॥ पेतुरिति । रथिनाम् अश्विनां गजिनां रथाद्यारूढानां सकुण्डलकिरीटानि तत्सहितानि उष्णीषाणि शिरोऽवतंसवस्त्राणि तत्सहितानि सोष्णीषाणि बाणादिभिः छिन्नानि कोटिशः शिरांसि च भुवि पेतुः ॥ ७ ॥ हस्ता इति । सासिगदेष्वासैः खड्गगदाधनुभिः सहिताः हस्ताश्च करभाः प्रकोष्ठाश्च विस्तृताः कराः ऊरुविशेषणं वा । ऊरवश्चाङ्घ्रयश्च तथा पेतुः अश्वाश्वतरादीनां शिरांसि च पेतुः ॥ ८ ॥

### श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्

हे वामलोचने चारुनयने मास्मभैः भयं मा प्राप्नुहि एतत् बलं तावकैः कृत्वा अद्यैव विनंक्ष्यति नाशं गमिष्यति ॥ ५ ॥ स प्रसिद्धश्चासौ विक्रमश्च तम् । अमृष्यमाणा असहमानाः नाराचैः शरैः ॥ ६ ॥ सोष्णीषाणि उष्णीषैः शिरोवतंसवस्त्रैः सहितानि शिरांसि पेतुः ॥ ७ ॥ इषवो बाणा अस्यैते क्षिप्यंते यैस्ते इष्वासाः । करभाः मणिबंधप्रभृत्यधोभागाः गर्दभेन अश्वायामुत्पादितः अश्वतरः ॥ ८-९ ॥

### भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

प्रहस्येति ॥ भगवान् प्रहस्य हासं कृत्वा, हे वामलोचने अतिसुन्दरनेत्रकमले, मा स्म भैः भयं मा कृथाः । अधुना एव, तावकैः त्वदीयैः सैन्यैः, शात्रवं शत्रुसंबन्धि, एतत्, बलं सैन्यं, विनङ्क्ष्यति नाशमेष्यति इति, आह ॥ ५ ॥ तेषामिति ॥ तेषां चैद्यादीनां, स चासौ विक्रमश्च तम्, अमृष्यमाणा असहमानाः, गदश्च संकर्षणश्च तावादी येषां ते, वीराः नाराचैः स्नुहिपत्रसमाकृतिबाणैः, हयाश्च गजाश्च तान्, रथान् जघ्नुः ॥ ६ ॥ पेतुरिति ॥ तदा अश्वाः सन्त्येषामित्यश्विनस्तेषामश्वारूढानां, रथिनां,

गजिनां च, कोटिशः शिरांसि सकुण्डलकिरीटानि कुण्डलैः किरीटैश्च सहितानि, सोष्णीपाण्युष्णीपाणि शिरोवतंसवस्त्राणि तत् सहितानि, भुवि पेतुः ॥ ७ ॥ हस्ता इति ॥ तथा सासिगदेष्वासाः असिभिः गदाभिः इष्वासैर्धनुर्भिश्च सहिताः, हस्ताः पाणयः, करभाः प्रकोष्ठाः, ऊरवः सक्थीनि, अङ्घ्रयः पादाः, करभा इत्यूरुविशेषणं वा। करभसदृशा इत्यर्थः। अश्वाश्वतरनागोष्ट्रखरमर्त्यशिरांसि च अश्वादीनां मस्तकान्यपीत्यर्थः। पेतुः। तत्र गर्दभेनाश्वायामुत्पादितोऽश्वतरः, नागो गजः ॥ ८ ॥

**कृष्णप्रिया**

कृपानिधान श्रीकृष्ण ने स्मितहास्य पुरःसर कहा कि ? हे वामलोचने ? हे प्यारीजी ? भय का कोई कारण नहीं। आपकी वीर सेना क्षण में ही हमारे शत्रुओं के सैन्य को खत्म कर डालेगी ॥ ५ ॥ इधर भगवदाज्ञा प्राप्तकर गद संकर्षण आदि यदु प्रवीर अपने शत्रुओं का पराक्रम को सह न सके श्रीगद शत्रुओं के सैन्य के भीतर घुसकर और श्रीसंकर्षणजी सैन्य में से शत्रुओं को खीचकर मारने लगे। पुनः गदादि यदु प्रवीरों अपने वाणों से शत्रुओं के हाथी, घोड़े और हाथियों पर बैठे विपक्षी एवं रथों को नष्ट भ्रष्ट करने लगे ॥ ६ ॥ यदुप्रवीरों की शर वर्षा से रथों में घोड़े पर एवं हाथियों पर बैठे शत्रु वीरों के किरीट-कुण्डल-एवं शिरस्त्राणों से देदीप्यमान करोड़ों की संख्या में मस्तक-खड्ग-गदा-एवं-धनुष्य युक्त हाथ पहुँचे जाँघें और पैर कटकर जमीन दोस्त होने लगे ॥ ७-८ ॥

**हन्यमानबलानीका वृष्णिभिर्जयकाङ्क्षिभिः[1]। राजानो विमुखा जग्मुर्जरासन्धपुरःसराः ॥ ९ ॥**
**शिशुपालं [2]समभ्येत्य हृतदारमिवातुरम्। नष्टत्विषं गतोत्साहं शुष्यद्वदनमब्रुवन् ॥ १० ॥**
**भो भोः पुरुषशार्दूल दौर्मनस्यमिदं त्यज। न प्रियाप्रिययो राजन् निष्ठा देहिषु दृश्यते ॥ ११ ॥**
**यथा दारुमयी योषिन्नृत्यते कुहकेच्छया। एवमीश्वरतन्त्रोऽयमीहते सुखदुःखयोः ॥ १२ ॥**

**कर्दमक्षमा**

अन्वयः—जयकाङ्क्षिभिः, वृष्णिभिः, हन्यमानबलानीकाः, जरासन्धपुरःसराः, राजानः, विमुखाः, जग्मुः ॥ ९ ॥ हृतदारम्, इव, आतुरम्, नष्टत्विषम्, गतोत्साहम्, शुष्यद्वदनम्, शिशुपालम्, समभ्येत्य, अब्रुवन् ॥ १० ॥ भोः, भोः, पुरुषशार्दूल ! इदम्, दौर्मनस्यम्, त्यज, राजन् ? देहिषु, प्रिय-अप्रिययोः, निष्ठा, न, दृश्यते ॥ ११ ॥ यथा दारुमयी, योषित्, कुहकेच्छया, नृत्यते, एवम्, ईश्वरतन्त्रः, अपि, अयम्, ( जनः ) सुखदुःखयोः, ईहते ॥ १२ ॥

**श्रीधरस्वामिविरचिता भावार्थदीपिका**

अप्राप्तदारमेव तं हृतदारमिवातुरम् ॥ १० ॥ निष्ठा स्थैर्यम् ॥ ११ ॥ कुहको नर्तयिता तस्येच्छया दुःखेऽपीह्मानत्वेन पारवश्यं व्यक्तं दर्शितम् ॥ १२ ॥

**श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः**

नष्टत्विषं गतकांतिम्। नष्टत्विषमित्यादिना कायमनोवाचां क्रमेण शक्त्यपक्रम ऊह्यः ॥ १० ॥ दौर्मनस्यं वैमनस्यम्। निष्ठा नियतत्वम् "निष्ठोत्कर्षे व्यवस्थायां नियते नाशयाच्ञयोः" इति हलायुधः। श्रीमुनींद्रस्तेषां वाक्येनैव तानुपहसति-भोभोः इत्यादिना। वीप्सा त्वरयार्तस्याभिमुख्यार्था। हे पुरुषशार्दूलेति-तत्पुंसो हि दौर्मनस्यं नोचितमिति भावः। देहिषु नानादेहं प्राप्तवत्सु जीवेषु। हे राजन्निति-राज्ञां पारंपर्यगतमेवेदं वृत्तं काशीराजप्रभृतिकन्यासु भीष्मादिभिस्तथाकरणादिति न शोक उचित इति भावः ॥ ११ ॥ दृष्टांतेन बोधयंत आहुः—यथेति। ईहमानत्वेन वर्तमानत्वेन। व्यक्तं प्रसिद्धम्। तच्च कुतस्तत्राह—यथेति। अयं सर्वोपि जनः। ईहते प्रवर्तते। ईश्वरः "अपाणिपादो जवनो ग्रहीता" इत्युक्तलक्षणः, "सहस्रशीर्षाः" इत्युक्तलक्षणो वेति राज्ञां भावः, एवमीश्वरमात्रज्ञाने पूर्णतदाविर्भावपरब्रह्मश्रीकृष्णवैमुख्यात्सर्वं तद्विधानं भस्मनि हुतमिति तु श्रीमुनींद्रस्य ॥ १२ ॥

**श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी**

जयकाशिभिः जितकाशिभिः जितकाशी जिताहव इति क्षीरस्वामिवचनात् जयकाङ्क्षिभिरिति पाठः स्पष्टः ॥ ९ ॥ नष्टत्विषमित्यादिना त्विण्नाशादिना कायमनोवाचां क्रमेण शक्त्यपक्रम ऊह्यः ॥ १० ॥ श्रीमुनीन्द्रस्तेषां वाक्येनैव तमुपहसति। भोभो इत्यादिना। वीप्सा महार्त्तस्य तस्य बलादाभिमुख्यार्थं हे पुरुषशार्दूलेति सत्पुंसो दौर्मनस्यं हि न योग्यमिति भावः। देहिषु नानादेहं प्राप्तवत्सु जीवेषु तच्च त्वया बुध्यत एवेत्याहुः हे राजन्निति ॥११॥ तच्च कुतस्तत्राहुः। यथेति। योषिदिति तत्प्रतिमाया

---

१. काशिभि?-श्रीधर. टि. । २. समेत्याथ-वीर. विज. ।

एव रुचिकरत्वेन विषयिप्रवृत्तेस्तथाहि तद्व्यवहारः नृत्यते नृत्यति अयं सर्वोऽपि जनः ईहते प्रवर्त्तते दुःखस्य पश्चादुक्तिः सुखे स्वत एव प्रवर्त्तत इति चेन्न दुःखेऽपि तद्दर्शनादिति बोधयति। ईश्वरः "अपाणिपादो जवनो ग्रहीते"त्याद्युक्तलक्षणः "सहस्रशीर्षा पुरुष" इत्यादिलक्षणो वेति राज्ञां भावः। एवमीश्वरमात्रज्ञानेऽपि पूर्णातदाविर्भावनराकृति परब्रह्म श्रीकृष्णवैमुख्यात् सर्वं तद्विधानां भस्मनि हुतमिति तु मुनीन्द्रस्य ॥ १२ ॥

**श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी**

जयं काशयितुं प्रकटयितुं शीलमेषामिति तथा ते, यद्वा, जयः श्रीकृष्णस्तत्प्रकाशनशीलैस्तद्भक्तवरैरित्यर्थः ॥ ९ ॥ अथ वृष्णिजयानन्तरं समेत्य सर्वेऽन्योन्यमेकीभूय, यद्वा, शिशुपालेन सह संगत्य तमब्रुवन्, यत आतुरं परमार्तम्। कमिव ? हृतदारमिव, यथा हृतदारः कश्चिदातुरो भवति, तथाभूतमित्यर्थः। अत एव नष्टा त्विट् कान्तिर्यस्य तम्। एवं कायमनोवाचां क्रमेण शक्त्यपगम उक्तः। तत्र शुष्यदित्यनेन वाचः सिद्ध एव, नष्टत्विषमित्यादौ कैमुतिकन्यायावतारणेन यथोत्तरमातुरत्व-हेतुकतायामाधिक्यं ज्ञेयम् ॥ १० ॥ वीप्सा महार्त्तस्य तस्य बलाद्वक्ष्यमाणश्रवणाभिमुख्यार्थम्, दौर्मनस्यं मनोदुःखं त्यज। हे पुरुषशार्दूलेति सत्पुंसां दौर्मनस्यायोग्यत्वादिति भावः। कुतः ? तत्कारणस्यानित्यत्वादित्याहुः—नेति। देहिषु नानादेहं प्राप्नुवत्सु जीवेषु कदाचिदनिष्टस्य कदानिच्चेष्टस्य प्राप्तिर्भवतीत्यर्थः। तत्रेष्टप्राप्ते पश्चादुक्तिस्तदाश्वासनार्थम्, तच्च त्वया बुध्यत एवेति सान्त्वनार्थमाहुः—हे राजन्निति ॥ ११ ॥ तच्च कुतः ? जगदीशस्येच्छात इति वक्तुं जगतस्तदधीनत्वं सदृष्टान्तमाहुः—यथेति। योषिदिति स्त्रीणामेव नृत्ये प्राधान्यात्, नृत्यते नृत्यति, अयं सर्वोऽपि जन ईहते प्रवर्त्तते, सुखदित्सायां तस्य सत्यां सुखेहा, दुःख-दित्सायाश्च दुःखेहा, ततश्च सुखेहया प्रियस्य प्राप्तिः, दुःखेहया चाप्रियस्येत्यर्थः। दुःखस्य पश्चादुक्तिरत्यस्वातन्त्र्यबोधनार्थम्, अतः पूर्वोक्तक्रमो नापेक्षितः, ईश्वरेच्छायाश्च कारणानुसन्धानमीश्वरत्वादेव निरस्तम्, अन्यथा स्वातन्त्र्यहान्यानीश्वरताप्रसक्तिः ॥१२॥

**श्रीसुदर्शनसूरिकृतशुकपक्षीयम्**

कुहकेक्षया ॥ १२–१४ ॥

**श्रीमद्वीरराघवाचार्यकृता भागवतचन्द्रचन्द्रिका**

इत्थं जयकाङ्क्षिभिर्यदुभिर्हन्यमानानि बलानीकानि सैन्यसमुदाया येषां ते जरासन्धादयो राजानो विमुखाः पराङ्मुखाः सन्तो जग्मुः ॥ ९ ॥ ततस्ते सर्वे शिशुपालमभ्येत्याब्रुवन् कथम्भूतम् अप्राप्तदारमेव हृतदारमिवातुरं नष्टत्विषं निस्तेजस्कं गत उत्साहो यस्मात् शुष्यद्वदनं यस्य तम् ॥ १० ॥ उक्तिमेवाह। भो भो इति। हे पुरुषश्रेष्ठ ! दौर्मनस्यं विषादं त्यज नहि सुखदुःख-योर्देहिषु स्थैर्यं दृश्यते किन्तु ते क्षणिके आगमापायिनी इति भावः ॥ ११ ॥ नन्वप्रतिहतपौरुषाणामस्माकमयं पराभवोऽविसह्य इत्यत आहुः। यथेति। कुहको नर्त्तकस्तस्येच्छया इच्छानुसारमित्यर्थः दारुमयी योषित्प्रतिमा नृत्यते तथायं देहिवर्गोऽपीश्वर-परतन्त्रः सुखदुःखयोरीहते सुखदुःखयोर्निमित्तभूयोश्चेष्टते सुखदुःखार्थकर्माणि करोतीत्यर्थः। नहि सुखदुःखप्रापणे स्वात्मनः स्वात-न्त्र्यमस्ति अपितु सुखायैवेहमानोऽयं जनः स्वस्वकर्मानुगुणेश्वरेच्छया सुखदुःखे प्राप्नोत्यतः किं विधेयमित्यर्थः ॥ १२ ॥

**श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली**

आत्मनो जयकाङ्क्षिभिः जयप्रकाशकैः जयेच्छुभिर्वा ॥ ९ ॥ हृतदारं बलादपहृतभार्यं पुरुषम् ॥ १० ॥ प्रियाप्रिययोः सुखदुःखयोर्निष्ठा व्यवस्था नियतत्वं "निष्ठोत्कर्षे व्यवस्थाया"मिति ॥ ११ ॥ कुहकेच्छया मायिकेच्छया ॥ १२ ॥

**श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी**

निष्ठा स्थैर्यम् ॥ ११ ॥ कुहको नर्त्तयिता तस्येच्छया एवमयं जीवलोकः कदाचित् सुखे कदाचित् दुःखेऽपि ईहते चेष्टते प्रवर्त्तत इति यावत् ईश्वराधीन इतीश्वरं मानितवतामपि तेषां कृष्णवैमुख्यादेवासुरत्वम् ॥ १२ ॥

**गूढार्थदीपिनी**

हन्यमानं बलं यस्य तथाभूतमनीकं सैन्यं येषाम् ॥ ९–१० ॥ दौर्मनस्यं विषादम्। देहिषु जीवेषु। निष्ठा स्थैर्यं न दृश्यते ॥ ११ ॥ योषित् ( कठपुतली )। इति। कुहको नर्तकः। तन्त्रोऽधीनः। अयं जीवलोकः। ईहते यतते प्रवर्तते वा ॥१२॥

**श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः**

देहिषु प्राकृतदेहयुक्तेषु प्रियाप्रिययोरिष्टानिष्टयोर्निष्ठा स्थैर्यम् ॥ ११ ॥ कुहको नर्त्तयिता अयं प्रसिद्धो जनः ॥ १२ ॥

**श्रीसत्यधर्मकृता श्रीभागवतटिप्पणी**

करभाः कनिष्ठिकामूलभागोऽश्वा अश्वतरा गर्दभेन बडवायां जाताः ॥ ९ ॥ हन्यमानबलानीका बलवन्त्यनीकानि सेना हन्यमानानि बलानीकानि येषां ते जयकाङ्क्षिभिस्तदिच्छुभिः ॥ १० ॥ हृता दारा यस्य स तमिवातुरं नष्टत्विषं वातोत्साहं

शुष्यद्वदनं शिशुपालं समेत्याब्रुवन् ॥ ११ ॥ भो भो पुरुषशार्दूल । इदं दौर्मनस्यं पूर्वोक्तैर्हेतुभिरीहितं त्यज तां तुभ्यं दापयाम इति समाधिनाऽऽधि शमयन्ति किमित्यतो न किन्तु तत्त्वमुपदिश्येत्याह ॥ नेति । हे राजन् प्रियाप्रिययोर्देहिषु निष्ठा व्यवस्था नियतिर्न दृश्यते ॥ १२ ॥

### श्रीमद्वल्लभाचार्य्यकृता सुबोधिनी

ततः पलायनमाह हन्यमानेति । सर्वमेव बलमनीकरूपं हन्यमानं येषाम् । एते तु वृष्टिमेव कृतवन्तः, नतु मारयन्ति, ते तु मारयन्ति । तत्र हेतुः जयकाङ्क्षिभिरिति । कन्या तु प्राप्तैव, केवलं जय एवापेक्षित इति तेषामुद्योगः । ततो राजानः स्वदेशभोगेप्सवः किं वृथा मरणेनेति सर्व एव विमुखाः कुण्डिनपुरं जग्मुः । जरासन्धः पुरःसरो येषाम् । स हि पलायने कृताभ्यासः ॥ ९ ॥ भीष्मोऽत्र न वक्तव्य इति तस्यापकाराभावाच्च शिशुपालं समभ्येत्य अविवाहेऽपि जातविवाह इव खिद्यमानो जातः । ततो मर्तुकामं विषादिना आतुरं विचाररहितं हृतदारं सम्यगभ्येत्य निकटे सान्त्वनार्थं गत्वा, शुष्यद्वदनं म्रियमाणमिव शीघ्रं सान्त्वनमब्रुवन् । शिशुपालपरिज्ञाने मरणसाधनमेव ज्ञापकम्, नत्वन्यदित्याह नष्टत्विषमिति । बहिः कान्त्यभावः, अन्तरुत्साहाभावः । जरासन्धो हि अत्यन्तमभ्यस्तबोधनः ॥ १० ॥ सान्त्वनवाक्यान्याह भो भो इति षड्भिः । भगवद्गुणैरेव सान्त्वनं भवतीति । अनेन तस्यापि रुक्मिण्याममभिमानो निवर्तिष्यते इति निरूपितम् । आदौ स्वास्थ्यं सम्पादयति । भो भो इति मूर्च्छितप्रबोधनम् । स्तुत्या माहात्म्यं हृदये समायातीति पुरुषशार्दूलेति सम्बोधनम् । इदं विवाहाभावलक्षणम् । न हि त्वदीयं किञ्चिद्गतमस्ति । अप्राप्तत्वात् । जाते विवाहे प्रियं भवेदिति यदि, तत्राह न प्रियाप्रिययोरिति । देहिषु सर्वदा प्रियं वा कस्यचिदप्रियं वेति निष्ठा निर्धारो नास्ति । तत्र देहित्वमेव हेतुः । 'दिह उपचय' इति । यदोपचयः तदा प्रियम्, अन्यदाऽप्रियमिति ॥ ११ ॥ हेत्वन्तराण्याह यथा दारुमयीति । अलौकिको बोधनहेतुरयम् । दारुमयी योषित् विवृताङ्ग्यपि सभायां विरुद्धरसापि । कुहकस्य वञ्चकस्य । कस्याश्चिद्देवताया रूपं कृत्वा तां नर्तयित्वा स्वोदरभरणं करोति । एवमीश्वरेण सर्वोऽपि नर्त्यते स्वक्रीडार्थम् । अत ईश्वराधीन एवायं लोकः भ्रमात्सुखदुःखयोरीहते । सुखं भवतु, दुःखं मा भवत्विति । यथाकथञ्चित् प्रवृत्त्यर्थं भगवति दोषज्ञानाभावाय तथा बुद्धिमुत्पादयति ॥ १२ ॥

### श्रीसुबोधिनी–सारः

जयमिच्छद्भिर्वृष्णिभिर्यादवैर्हन्यमानानि बलानि अनीकानि येषां ते जरासंधप्रधाना राजानो विमुखा युद्धात् पराङ्मुखाः पराजिता निवृत्ता इति यावत् जग्मुः ॥ ९ ॥ हृता दारा स्त्रीर्यस्य तम् आतुरमिव नष्टत्विषं मलिनं गत उत्साहो विवाहहर्षो यस्य 'शिशुपालंसमभ्येत्य संप्राप्य शुष्यद्वदनं शुष्कमुखं धृते वैवाहिकेपि तदसंप्रत्या अब्रुवन् ऊचुः ॥ १० ॥ हे पुरुषशार्दूल इदं दौर्मनस्यं मनोग्लानिं त्वं त्यज । कथमित्यतो लोकवृत्तमाह । राजन् । देहिषु प्राणिषु प्रियाप्रिययोः सुखदुःखयोर्निष्ठा स्थितिर्नालोक्यते ॥ ११ ॥ तथाहि । कुहकस्येच्छया काष्ठमयी योषित् स्त्री यथा नृत्यते एवम् ईश्वराधीनोयं लोकः सुखदुःखयोरीहते चेष्टते प्रवर्त्तते ॥ १२ ॥

### गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

जयकाङ्क्षिभिर्वृष्णिभिर्हन्यमानानि बलानीकानि सैन्यसमुदाया येषां ते जरासन्धादयो राजानो विमुखाः पराङ्मुखाः सन्तो जग्मुः ॥ ९ ॥ ततश्च सर्वे शिशुपालमभ्येत्याब्रुवन् । तद्व्याकुलतां सूचयंस्तं विशिनष्टि—अप्राप्तदारत्वेपि तत्रात्यभिनिवेशाद् हृतदारमिवातुरं व्याकुलम्, नष्टत्विषं निस्तेजस्कम्, गत उत्साहो यस्मात्तम्, शुष्यद्वदनं यस्य तम् ॥ १० ॥ उक्तिमेवाह—भो भोः पुरुषशार्दूल हे पुरुषश्रेष्ठ ! इदं दौर्मनस्यं विवाहनिवृत्तिजनितविषादं त्यज, यतो हे राजन् ! प्रियाप्रिययोः सुखदुःखयोर्निष्ठा स्थैर्यं देहिषु न दृश्यते ॥ ११ ॥ तत्र सदृष्टान्तं पारवश्यं हेतुमाह—यथेति । कुहको नर्त्तकः तस्येच्छया इच्छानुसारं दारुमयी योषिद् प्रतिमा यथा नृत्यते इतस्ततो गच्छति एवमीश्वरतन्त्रः परमेश्वराधीनत्वादयं जीवोऽप्यात्मनः सुखदुःखयोः, ईहते यतते ॥ १२ ॥

### अन्वितार्थप्रकाशिका

हन्यमानेति । जयकाङ्क्षिभिर्वृष्णिभिर्हन्यमानानि बलानीकानि सैन्यसमुदाया येषां ते जरासन्धपुरःसराः राजानो विमुखाः पराङ्मुखाः सन्तो जग्मुः ॥ ९ ॥ शिशुपालमिति ॥ अप्राप्तदारत्वेऽपि तत्रात्यभिनिवेशात् हृतदारमिवातुरं व्याकुलं नष्टत्विषं निस्तेजस्कं गत उत्साहो यस्मात्तं शुष्यद्वदनं यस्य तं शिशुपालं समभ्येत्य तेऽब्रुवन् ॥ १० ॥ भो भो इति ॥ भो भोः पुरुषशार्दूल ! हे पुरुषश्रेष्ठ ! इदं दौर्मनस्यं विवाहनिवृत्तिजनितविषादं त्यज । यतो हे राजन् ! प्रियाप्रिययोः सुखदुःखयोर्निष्ठा स्थैर्यं देहिषु न दृश्यते ॥ ११ ॥ कुहको नर्तकः तस्येच्छया इच्छानुसारेण दारुमयी योषित्प्रतिमा यथा नृत्यते । तत्कार्यः । इतस्ततो गच्छति एवमीश्वरतन्त्रः परमेश्वराधीनत्वादयं जीवोऽप्यात्मनः सुखदुःखयोः, ईहते यतते ॥ १२ ॥

**श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्**

अप्राप्तदारत्वात् हृतदारमिवातुरम् ॥१०॥ प्रियाप्रिययोः निष्ठा स्थिरा स्थितिः ॥११॥ कुहको नृत्यकारयिता तस्येच्छया ईश्वर तंत्र ईश्वराधीनः ॥ १२ ॥

**भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी**

हन्यमानेति । इत्थं जयकाङ्क्षिभिः वृष्णिभिर्यदुभिः, हन्यमानानि बलानीकानि सैन्यसमुदाया येषां ते, जरासन्धपुरःसराः जरासन्धादयः राजानः, विमुखाः पराङ्मुखाः सन्तः, जग्मुः ॥ ९ ॥ शिशुपालमिति । ततः जरासंधादयो राजानः, हृता दारा यस्य तमिव । अप्राप्तदारमपि हृतदारमिव स्थितमित्यर्थः । आतुरं नष्टा त्विट् दीप्तिर्यस्य तं, गत उत्साहो यस्य तं, शुष्यद्वदनं यस्य तं, शिशुपालं, समभ्येत्य, अब्रुवन् ॥ १० ॥ तदुक्तिमेवाह भो भो इति षड्भिः । भो भो इति । भो भो इति संबोधने । हे पुरुषशार्दूल पुरुषश्रेष्ठ, इदं दौर्मनस्यं विषादं, त्यज । हे राजन् देहिषु प्रियाप्रिययोः सुखदुःखयोः, निष्ठा स्थैर्यं, न दृश्यते । किं त्वेते क्षणिके आगमापायिनी चेति भावः ॥ ११ ॥ नन्वप्रतिपौरुषाणामस्माकमयं पराभवोऽविषह्य इत्यत आह । यथेति । कुहकेच्छया कुहको नर्त्तकस्तदिच्छानुसारमित्यर्थः । दारुमयी योषित्, नृत्यते, एवं ईश्वरपरतन्त्रः ईश्वराधीनः, अयं जनः, सुखदुःखयोः ईहते सुखदुःखनिमित्तभूतयोश्चेष्टते । सुखदुःखार्थं कर्माणि करोतीत्यर्थः । न हि सुखदुःखप्रापणे स्वात्मनः स्वातन्त्र्यमस्त्यपि तु सुखायैवेहमानोऽयं जनः स्वस्वकर्मानुगुणेश्वरेच्छया सुखदुःखे प्राप्नोत्यतः किं विधेयमित्यर्थः ॥ १२ ॥

**कृष्णप्रिया**

विजयाभिलाषी यदुप्रवीरों ने शत्रुओं की सेनाओं को नष्ट भ्रष्ट कर डाली। वीरवर माने गये जरासन्ध आदि सभी वीर राजा पीठ दिखाकर भाग खड़े हुए ॥ ९ ॥ पागल सा शिशुपाल जिसका वाग्दान या व्याह न होने पर भी अपनी पत्नी के छिन जाने के कारण मृतप्राय ही दीख पड़ता था। शिशुपाल के चित्त में चैन न था, न उर में उत्साह था न तो काया में कान्ति थी। शिशुपाल का मुख भी सूख गया था। उसके समीप पहुँच कर उपदेश करने लगा ॥१०॥ हे पुरुषवर्य शिशुपालजी! आप चित की उदासीनता का त्याग करें। आप साधारण व्यक्ति नहीं है। इस सिद्धान्त को ध्यान में रखिये कि, कोई भी कार्य-वस्तु सर्वदा अपने मन्तव्य के या अपनी इच्छा के सानुकूल हो हो या प्रतिकूल भी हो यह मनुष्य के लिये निश्चित नहीं है। विवेकशील मनुष्य को सानुकूलता या तो प्रतिकूलता में स्वस्थ रहना चाहिये ॥ ११ ॥ राजन् जैसे काष्ठ की पुतली नर्तक की इच्छा के अनुकूल ही नृत्य करती है वैसे ही मनुष्य-प्राणी मात्र भगवदिच्छा के अनुकूल रहकर सुख या दुःख के सम्बन्ध में चेष्टा करता है ॥ १२ ॥

**शौरेः सप्तदशाहं वै संयुगानि पराजितः। त्रयोविंशतिभिः सैन्यैर्जिग्ये एकमहं परम् ॥ १३ ॥**
**तथाप्यहं न शोचामि न प्रहृष्यामि कर्हिचित्। कालेन [1]द्रव्ययुक्तेन जानन् विद्रावितं जगत् ॥ १४ ॥**
**अधुनापि वयं सर्वे वीरयूथपयूथपाः। पराजिताः फल्गुतन्त्रैर्यदुभिः कृष्णपालितैः ॥ १५ ॥**
**रिपवो जिग्युरधुना काल आत्मानुसारिणि। तदा वयं विजेष्यामो यदा [2]कालः प्रदक्षिणः ॥ १६ ॥[3]**

**कर्दमक्षमा**

अन्वयः—त्रयोविंशतिभिः, सैन्यैः, अहम्, शौरेः, सप्तदश, संयुगानि, पराजितः, एकम्, परम्, अहम्, जिग्ये ॥ १३ ॥ तथा, अपि, ( अहम् ) द्रव्ययुक्तेन, कालेन, जगत्, विद्रावितम्, ( भवति इति ) जानन्, अहम्, कर्हिचित्, न शोचामि, न प्रहृष्यामि ॥ १४ ॥ अधुना, अपि, वीरयूथपयूथपाः, वयम्, सर्वे, कृष्णपालितैः, फल्गुतन्त्रैः, यदुभिः, पराजिताः ॥ १५ ॥ अधुना, काले, आत्मानुसारिणि, रिपवः, जिग्युः, किन्तु, यदा, कालः, प्रदक्षिणः, तदा, वयम्, विजेष्यामः ॥ १६ ॥

**श्रीधरस्वामिविरचिता भावार्थदीपिका**

अत्र चाहमेव दृष्टांत इत्याह जरासन्धः। शौरेरिति। कृष्णात्सकाशात्। एकं संयुगम्। परं केवलमंतिमं वा जितवाहनम् ॥ १३ ॥ दैवमदृष्टं तद्युक्तेन ॥ १४ ॥ फल्गुतंत्रैः स्वल्पसेन्यैः ॥ १५ ॥ प्रदक्षिणोऽनुकूलः स्यात् ॥ १६-२१ ॥

**श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः**

अत्र च पारवश्ये च। संयुगानि संयुगेषु सप्तदशसु। सैन्यैरक्षौहिणीभिः "एव सप्तदशकृत्वस्तावत्यक्षौहिणीबलः" इत्युक्तेः। कंमेकमित्याकांक्षाशमनायाह–अतिमं वेति। एवं सहृत्योक्तेपि तस्य दौर्मनस्याऽत्याग दृष्ट्वा स्वयं जरासंध एवं स्वानु-

१. दैव–श्रीधर. बंशी. जीव. वीर. विश्व. शुक. ; दैवयोगेन–विज. । २. दैवं प्रदक्षिणम्–श्रीधर. टि. । ३. शुक उवाच–विज. ।

भवदर्शनेन सान्त्वयति-शौरेरिति। कर्तरिषष्ठी छांदसी। शौरिणाहं त्रयोविंशाक्षौहिणीभिस्सहितोऽपि पराजितः। शूरनन्दनत्वेनेश्वरतामपह्नुवानो निंदयते। प्रौढित्वं चाह निजमानरक्षणार्थम्—एकमिति ॥ १३ ॥ यद्यपि पराजितस्तथापीत्यर्थः। तथापि पराजये न शोचामि, जये न हृष्यामि। विद्रावितं संक्षोभितम्। ननु कालस्य सर्वत्र साम्येन ततो न प्रियाऽप्रियप्राप्तिसंभवस्तत्राह-देवेति। स्वकर्मणां वैचित्र्यादित्यर्थः। पूर्वमीश्वरेच्छेव कारणमुक्तमधुना तु दैवयुक्तः काल इति। अस्यायं भावः-जीवस्य दैवमनन्तमस्त्यनीदत्वात्, तत्रेश्वरचेष्टात्मककालविशेषो दैवविशेषमुपादत्त इति ॥ १४ ॥ 'तंत्रं परिच्छदे' इति कोशात्फल्गुतंत्रैः स्वल्पसेनापरिच्छदैः। 'फल्गवसारेऽभिधेयवत्' इति मेदिनी। प्रकृतलज्जादुःखापलापे तत्सर्वं योजयति-अधुनापीति। संप्रति पश्येत्यर्थः। वयमिति सर्वापेक्षया। कृष्णेति मूलनामग्रहणमवज्ञासूचनार्थम् ॥ १५ ॥ "प्रदक्षिणोऽनुकूले परिक्रामेऽतिदक्षिणे ज्ञेयः" इति निरुक्तिः। आत्मनोऽनुसारिणि अनुकूले सति ॥ १६ ॥

### श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी

एवं सर्वैः संहृत्योक्तेऽपि तस्य दौर्मनस्यत्यागमदृष्ट्वा स्वयं जरासन्ध एव स्वानुभवप्रदर्शनेन सान्त्वयति। शौरेरिति। त्रयोविंशत्यक्षौहिणीसंख्यैः सैन्यैः सहाहं शौरितः पराजितोऽभवं वै प्रसिद्धौ यद्वा आर्षी कर्त्तरि षष्ठी शौरिणेत्यर्थः। शूरनप्तृत्वेनेश्वरत्वं निन्दयते प्रौढत्वं च तत्रापि निजमानरक्षाय कत्थते जिग्य इति ॥ १३ ॥ तथैवाह—तथापीति। पराजयेनापि न शोचामि जयेनापि न प्रहृष्यामीत्यर्थः। कर्हिचिदित्यस्योभयत्राप्यन्वयः विद्रावितं सङ्क्षोभितम् ननु कालस्य सर्वत्र साम्येन तस्मात् प्रियाप्रियप्राप्तिः कुतः स्यात् तत्राह—देवेति। स्वकर्मणां वैचित्र्यादित्यर्थः पूर्वमीश्वरेच्छेव कारणमुक्तम् अधुना तु दैवसंयुक्तः काल इत्यस्यायम्भावः जीवस्य दैवमनादिसिद्धत्वादनन्तमेव वर्त्तते तत्रेश्वरचेष्टात्मककालविशेषो दैवविशेषमुपादत्त इति ॥ १४ ॥ प्रकृतलज्जादुःखापलापे तत्सर्वं योजयति-अधुनापीति। सम्प्रत्यपि पश्येत्यर्थः। वयमिति। सर्वापेक्षया पुनः सर्वेषामेवैतानि वचनानीति वा कृष्णेति मूलनामग्रहणमप्यवज्ञासूचनार्थम् ॥ १५ ॥ पुनस्तत्सर्वमाश्वासने योजयति—रिपव इति। आत्मनः अनुसारिणि अनुकूले सति तज्जपादपि विशेषेण जेष्यामः वयं चेति पाठे वयमपि ॥ १६ ॥

### श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी

एवं सर्व्वैः संहृत्योक्तेऽपि तस्य दौर्मनस्यात्यागं दृष्ट्वा सर्व्वश्रेष्ठः पितृतुल्यत्वेन तस्य परमादरणीयः स्वयं जरासन्ध एव स्वानुभवप्रदर्शनेन सान्त्वयति—शौरेरिति। त्रयोविंशत्यक्षौहिणीसंख्यैः सैन्यैः सहाहं शौरितः पराजितोऽभवम्, वै प्रसिद्धौ; यद्वा, आर्षी कर्त्तरि षष्ठी, शौरिणेत्यर्थः। शूरनप्तृत्वेनेश्वरत्वं निह्नुते ॥ १३ ॥ तथापीति पराजयेनापि न शोचामि, जयेनापि न प्रहृष्यामीत्यर्थः। कर्हिचिदित्यस्योभयत्राप्यन्वयः; कर्हिचिदपि; तत्र हेतुमाह—कालेनेति। विद्रावितं संक्षोभितं जानन् सन्। ननु कालस्य सर्व्वत्र साम्येन तस्मात् प्रियाप्रियप्राप्तिः कुतः स्यादित्यपेक्षायामाह—देवेति; स्वकर्म्मणां वैचित्र्यादित्यर्थः। तत्र देवस्येदं देवमिति कर्म्मणामीश्वरेच्छारूपतातूचनेन पूर्व्ववतत्कारणानुसन्धानमपि निरस्तम्। यद्वा, देवः सर्व्वदेवोपास्य ईश्वरस्तेन युक्तेनेति कालस्यापि तदधीनत्वमुक्तम् ॥ १४ ॥ वयमिति—सर्व्वेषामेव नृपाणां संग्रहात्; यद्वा, समाश्वासनार्थं पुनः सर्व्वे सम्भूयाहुरिति ज्ञेयम्। मित्रैरित्यग्रे वक्ष्यमाणत्वात्, वीराणां यूथपास्तेषां यूथपा अपि, इति महावीरवरत्वमुक्तम्, तत्रापि कृष्णेन श्रीनन्दगोपपुत्रेण पालितैरिति स्वेभ्यो न्यूनत्वमेव बोधयन्ति ॥ १५ ॥ न च तथापि निराशैर्भाव्यम्, कालक्रमेण जयस्यापि सम्भवादित्याश्वासयन्ति—रिपव इति। आत्मनामनुसारिणि अनुकूले सति विशेषेण तेषां जयादप्युत्कृष्टतया जेष्यामः। 'हि' इति पाठे निश्चितम्, 'वयञ्च' इति पाठे 'च' अपि, वयमपि ॥ १६ ॥

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम्

फल्गुतन्त्रैः अल्पबलैः ॥ १५ ॥ प्रदक्षिणः अनुकूलः ॥ १६–२२ ॥

### श्रीमद्वीरराघवाचार्यकृता भागवतचन्द्रचन्द्रिका

एवमीश्वरपारतन्त्र्यमुक्तं तत्र चाहमेव दृष्टान्त इत्याह जरासन्धः। शौरेरिति सप्तदशसंयुगानि युद्धानि कृत्वेति शेषः। त्रयोविंत्यक्षौहिणीकैः सैन्यैः सहितोऽप्यहं शौरेः श्रीकृष्णात्सकाशात् पराजितः सप्तदशकृत्व इति शेषः। एकं संयुगं त्वहं परं केवलं जिग्ये जितवानस्मि ॥ १३ ॥ तथापि सप्तदशकृत्वः पराजयकालेऽपि अहं कर्हिचिन्न शोचामिनापि जयकाले हृष्यामि च किं कुर्वन् दैवमदृष्टं तद्युक्तेन कालेन कालशरीरकेणेश्वरेण देवमीश्वरस्तद्युक्तेन तदात्मकेन कालेनेति वा कृत्स्नं जगद्विद्रावितम् उपद्रुतं जानन् ॥ १४ ॥ अतोऽधुनापि वयं सर्वे वीरयूथपा अपि फल्गुतन्त्रैरपि अल्पबलैरपि पराजिताः ॥ १५ ॥ रिपवस्तु आत्मानुसारिणि स्वानुकूलेकाले प्राप्ते सति जिग्युः यदा च प्रदक्षिणोऽस्मदनुकूलः कालो भावी तदा वयमपि जेष्याम एव ॥ १६ ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

योऽहं त्रयोविशतिभिः सैन्यैरक्षौहिणीभिः शौरेः सप्तदशसंयुगानि सप्तदशसंयुगेषु पराजितः परं पश्चात्सोऽहं तावतीभिः सम्भूयैकं सेनादिविकलं कृष्ण जिग्ये तथाप्युभयथापि एकमष्टादशमं संग्रामं वा ।।१३-१४।। फल्गुतन्त्रै-अल्पसेनादिपरिच्छदैः ।।१५।। प्रदक्षिणः अनुकूलः ।। १६-१७ ।।

### श्रीमज्जवगोस्वामिकृतः क्रमसन्दर्भः

पूर्वनीश्वरेच्छैव कारणमित्युक्त्वा पश्चात्कालेन दैवयुक्तेनेति कारणान्तरनिर्देश इदमभिप्रेति जीवस्य दैवमनादित्वात् अनन्तमेव वर्त्तते तत्र चेश्वरचेष्टात्मकः कालविशेषो दैवैर्विशेषमुपादत्त इति ।। १४-२१ ।।

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी

शौरेः सकाशात् संयुगानि व्याप्य संयुगेषु वा पराजितः पराभूतः त्रयोविंशत्यक्षौहिणीसङ्ख्यैः एकं परं एकस्मिन् नन्तिम एव संयुगे जिग्ये जितवानस्मि ।। १३ ।। दैवमदृष्टं तद्युक्तेन विद्रावितं सङ्क्षोभितम् ।। १४ ।। फल्गुतन्त्रैः तुच्छपरिच्छदैः ।। १५ ।। प्रदक्षिणः अनुकूलः यदा स्यात् ।। १६-१८ ।।

### गूढार्थदीपिनी

संयुगानि संग्रामान् कृत्वेति शेषः । शौरेः कृष्णात् । सैन्यैः सह पराजितः परं केवलम् एकमन्तिमम् ।। १३ ।। दैवयुक्तेन अदृष्टप्रेरितेन कालेन विद्रावितं विचालितम् ।। १४ ।। फल्गुतन्त्रैः स्वल्पसैन्यैः । यूथपा महासेनापतयः ।। १५ ।। अनुसारिणि अनुकूले सति प्रदक्षिणोऽनुकूलः ।। १६ ।।

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः

त्रयोविंशतिभिः सैन्यैरक्षौहिणीभिः सहितोऽहं शौरेः कृष्णात् सप्तदशसंयुगानि युद्धानि कृत्वेति शेषः पराजितः पराभूतः एकमष्टादशमं संयुगं परं केवलं जिग्ये जितवानस्मि ।। १३ ।। दैवं प्राक्कर्म यद्वा दैवमीश्वरस्तद्युक्तेन ।। १४ ।। फल्गुतन्त्रैरल्पसैन्यैः ।। १५ ।। जिग्युर्जितवन्तः प्रदक्षिणोऽनुकूलः ।। १६-२२ ।।

### श्रीसत्यधर्मकृता श्रीभागवतटिप्पणी

यथा दारूमयी योषा कुहकेच्छया नटयितुः कपटिन इच्छया नृत्यते एवमीश्वरतन्त्र ईश्वराधीनः पुमान्सुखदुःखयोस्तात्साधनयोर्विषय ईहते चेष्टते । यद्यपि यथा पुमान्दारुमय इति शक्यं वक्तुं तथाऽपि न स्त्री स्वातन्त्र्यमर्हतीत्यादेः सर्वावस्थास्वप्यन्याधीनता वनिताया नियतेति बोधनार्थं योषेत्युक्तिरिति ज्ञेयम् ।। १३ ।। अहं सप्तदशसंयुगानि शौरेः सकाशात्पराजितस्त्रयोविंशतिभिस्तत्सङ्ख्याक्षौहिणीभिरेकमेकवारमेकलं वा परं तत उत्तरे जिग्ये ।। १४ ।। विचित्रा दैवीगतिरिति न शोकेन कृत्यं सहस्व मां निदर्शनीकृत्येति शंसति । तथाऽपीति । दैवयुक्तेन कालेन हरिणा जगद्द्रावितं जानन्न शोचामि कर्हिचिदपि न प्रहृष्यामि यो दैवयुक् सुदैवस्तं तेन कालेन कालयवनेन जगज्जगत्यां भूमौ विद्रावितं जानन्नपि न प्रहृष्यामीत्यप्यर्थ आन्तरङ्गिको ज्ञेयः ।।१५।। फल्गुतन्त्रैः फल्गुतन्त्रं परिच्छदः सेनादिः । तन्त्रं परिच्छद इति विश्वः । येषां ते तैर्यदुभिः पराजिताः ।। १६ ।।

### श्रीमद्वल्लभाचार्य्यकृता सुबोधिनी

एवं शास्त्रीयमुक्त्वा लौकिकं स्वकीयमाह **शौरेः सप्तदशाहमिति** । सप्तदशदिवसेषु वै निश्चयेन शौरेः सम्बन्धिसंयुगानि पराजितः । द्विकर्मकोऽयं जिधातुः, अत्र । संयुगेषु वा । त्रयोविंशतिभिः सैन्यैरक्षौहिणीभिः सहित इति साधनसहितोऽपि सकृज्जयं मन्यते । तेन द्वयमपि मयानुभूतमिति निष्ठाभावः प्रत्यक्षः ।। १३ ।। अत एव मम शोको नास्तीत्याह **तथापीति** । कर्हिचित् तत्स्मरणेऽपि दुहित्रादिदर्शनेऽपि । सर्वदा हर्षविषादाभावे एकमनुसन्धेयमिति । तत्स्वनिर्धारितं तस्मा उपदिशति **कालेनेति** । यदि स्वसमानैः पराजयो जयो वा भवेत्, तदा हर्षो विषादो वा कर्तव्यो भवेत् । कालस्तु तत्कर्ता, स सर्वेषामधिपतिः । किञ्च । सोऽपि द्रव्ययुक्त एव शरीरादिसहितः । विद्रावणं शरीरद्वारैव करोति । नत्वात्मना स्वतः । तेन च जगद्विद्रावितं जानन् च शोचामीति सम्बन्धः **दैवयुक्तेनेति** पाठे कर्मवशात् सोऽपि तथा करोति । न तु तस्यापि कश्चन दोषोऽस्तीति भावः ।।१४।। अस्तु कालान्तरवार्ता, इदानीमेव वयं सर्वे जिताः अतः पञ्चभिः सह दुःखं दुःखं न भवतीति न शोकः कर्तव्य इत्यभिप्रायेणाह **अधुनापीति** । **वयमिति** श्लाघायाम् । सर्व एवेति सम्मतयर्थम् । तर्ह्य प्रयोजका भविष्यन्तीति न मन्तव्यम् । वीरयूथपानामपि यूथरक्षका वयम् । सर्वदैव वयमेवंभूताः । अधुना परं पराजिताः । तेषां च न महद्बलम्, किन्तु फल्गुतन्त्रैरेव यदुभिः पराजिताः। तर्हि तेऽपि हता भविष्यन्तीत्याशङ्क्य तं मनोरथं दूरीकरोति **कृष्णपालितैरिति** । कृष्णेन पालिताः, न मारयितुं

शक्या इत्यर्थः। अनेन कृष्णात् कन्याकरणसम्भावनापि निवारिता ॥ १५ ॥ ननु किमेतदाश्चर्यमिति चेत्, तत्र हेतुमाह **रिपवो जिग्युरिति**। अधुना आत्मानुसारिणि काले देवानां हितकर्तरि रिपवो वैष्णवा जिग्युः। अस्माकं च हितकारी यदा तामसः कालो भविष्यति, राजसो वा, तदा वयं दैत्याः, चकाराद्राक्षसा अपि विजेष्यन्ति। दैत्यानां सिद्धान्ते कालः परमः, तदतिरिक्तानङ्गीकारात्तत्र प्रतिष्ठिताः ॥ १६ ॥

## श्रीसुबोधिनी-सारः

स्वदृष्टांतेन शोकमपनुदति तत्पितृव्यः शौरेः कृष्णात्सकाशात्सप्तदशसंयुगान्यहं पराजितं स्मि। त्रयोविंशत्यक्षौहिणीभिः सैन्यैः सह। परमष्टादशममेकं संग्रामं जिग्ये जितवान् ॥ १३ ॥ तथाऽपि जये पराजये च कर्हिचित्कदापि नाहं शोचामि न प्रहृष्यामि। "पूर्वजन्मजनितं पुराविदः कर्मदैवमिति संप्रजक्षते" इति वचनाद्दैवं प्राक्तनमदृष्टं तद्युक्तेन कालेन विद्रावितं विचालितं जगज्जानन् सन् ॥ १४ ॥ अधुनाद्यापि वीरयूथपानामपि यूथपाः सर्वे वयं कृष्णरक्षितैः फल्गुतन्त्रैर्लघुसैन्यैर्यदुभिः पराजिताः स्मः ॥ १५ ॥ आत्मनः स्वस्यानुसारिणि अनुकूले काले सत्यधुना रिपवः शत्रवः कृष्णाद्या जिग्युर्जितवंतः। तथापि न शोको युक्तः यदा कालः प्रदक्षिणः सानुकूलस्तदा वयं विजेष्यामः पुनरेतान् ॥ १६ ॥

## गोस्वामिश्रीगिरिधरलालकृताबालप्रबोधिनी

'अत्राहमेव दृष्टान्त' इत्याह जरासन्धः—शौरेरिति। सप्तदशसंयुगानि युद्धानि कृत्वा त्रयोविंशत्यक्षौहिणिकैः सैन्यैः सहितोऽप्यहं शौरेः श्रीकृष्णात् पराजितः सप्तदशकृत्व इति शेषः। परं अन्तिमम् एकं संयुगं अहं जिग्ये जितवानस्मि ॥ १३ ॥ तथापि पराजये जाते विजये वा जातेऽपि अहं कर्हिचित् पराजयकाले न शोचामि, जयकाले च न हृष्यामि। तत्र हेतुमाह—दवयुक्तेन परमेश्वरप्रयुक्तेन कालेन कृत्स्नं जगद्विद्रावितं उपद्रुतं जानन् ॥ १४ ॥ फल्गुतन्त्रैः स्वल्पसैन्ययुक्तैरपि कृष्णपालितैर्यदुभिः वीरयूथपयूथपाः अपि वयं सर्वे अधुना प्रतिकूले काले पराजिताः ॥ १५ ॥ आत्मानुसारिणि स्वानुकूले काले प्राप्ते सति अधुना रिपवो यदवो जिग्युः। यदा चास्माकं प्रदक्षिणः कालः, अनुकूलः कालो भावी तदा वयमपि सर्वे विजेष्याम इत्यन्वयः ॥ १६ ॥

## अन्वितार्थप्रकाशिका

शौरेरिति ॥ सप्तदश संयुगानि युद्धानि कृत्वा त्रयोविंशत्यक्षौहिणीकैः सैन्यैः सहितोऽप्यहं शौरेः श्रीकृष्णात्पराजितः सप्तदशकृत्व इति शेषः। परं केवलमत्युग्रं वा अन्तिमं वा एकं संयुगम् अहं जिग्ये जितवानस्मि। तङ्गार्षः ॥ १३ ॥ तथापीति। तथापि दैवमदृष्टं तेन युक्तेन प्रयुक्तेन कालेन कृत्स्नं जगद्विद्रावितम् उपद्रुतं जानन् अहं कर्हिचित् पराजयकाले न शोचामि जयकाले च न हृष्यामि ॥ १४ ॥ अधुनेति। फल्गुतन्त्रैः स्वल्पसैन्ययुक्तैरपि कृष्णपालितैर्यदुभिः वीरयूथपयूथपाः अपि वयं सर्वे अधुना पराजिताः ॥ १५ ॥ रिपव इति ॥ आत्मानुसारिणि यदूनामनुकूले काले प्राप्ते सत्यधुना रिपवो यदवो जिग्युः, उत्कर्षं प्रापुः। यदा चास्माकं प्रदक्षिणः कालः, अनुकूलः भावी तदा वयमपि सर्वे विजेष्यामः। तङभाव आर्षः ॥ १६ ॥

## श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्

अत्र जरासंधः स्वदृष्टांतेनाह शौरेरिति शौरेः कृष्णात् पराजितः पराभवं प्राप्तोऽहं परमंतिमं एकं संग्रामं जितवान् ॥१३॥ स्वधैर्यमाह तथापीति दैवं स्वप्रारब्धं तद्युक्तेन विद्रावितं संक्षोभितं ॥ १४ ॥ फल्गुतंत्रैरत्यानीकैः ॥ १५ ॥ प्रदक्षिणः सहायः स्यात् ॥ १६-१८ ॥

## भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

एवं तवेश्वरपारतन्त्र्यमुक्तं, तथा चात्राहमेव दृष्टान्त इत्याह जरासन्धः। शौरेरिति। सप्तदश, संयुगानि, युद्धानि, कृत्वेति शेषः। त्रयोविंशतिभिः सैन्यैः त्रयोविंशत्यक्षौहिणीकैः सैन्यैः सहितः अपि, अहं शौरेः श्रीकृष्णात् सकाशात्, पराजितः पराजयं प्राप्तः, सप्तदशकृत्व इति शेषः। परं केवलं, एकं संयुगं तु अहं जिग्ये जितनानस्मि वै ॥१३॥ तथापीति। तथापि सप्तदशकृत्वः पराजयकालेऽपि, दैवमदृष्टं तद्युक्तेन, कालेन कालशरीरकेणेश्वरेणेत्यर्थः। यद्वा दैवमीश्वरस्तद्युक्ते तदात्मकेन कालेन, कृत्स्नमिति शेषः जगत् विद्रावितमुपद्रुतं, जानन्, अहं कर्हिचित्, न शोचामि। जयकालेऽपि, न प्रहृष्यामि ॥ १४ ॥ अधुनापीति। अधुना सांप्रतमपि, वीरयूथपयूथपाः सर्वे वयं फल्गुतन्त्रैः स्वल्पसैन्यैः कृष्णपालितैः यदुभिः, पराजिताः ॥ १५ ॥ रिपव इति। आत्मानुसारिणि स्वानुकूले, काले प्राप्ते सतीति शेषः। रिपवोऽस्मच्छत्रवो यदवः, अधुना जिग्युः। यदा कालः प्रदक्षिणः, यदाऽस्मदनुकूलः कालो भावीत्यर्थः। तदा वयमपि, विजेष्यामः एव ॥ १६ ॥

**कृष्णप्रिया**

शिशुपाल जी आप से यह प्रसङ्ग आप को यह बात सुनिश्चित है कि तेईस-तेईस अक्षौहिणी सेनाओं के साथ सत्रह वार श्रीकृष्ण से पराजित हुआ परन्तु अन्तिम एक समर में मैंने श्रीकृष्ण पर विजय प्राप्त की ॥ १३ ॥ फिर भी इस प्रसङ्ग को लेकर मैं कभी न पराजय का शोक करता हूँ या विजय के विषय में हर्ष करता हूँ। क्योंकि विजय एवं पराजय पाञ्चभौतिक द्रव्यों से निर्मित शरीर का ही है आत्मा का नहीं। काल भगवान ही इस सचराचर जगत को झक-झोरते हिलाते चलाते रहते हैं ॥ १४ ॥ राजन् ! सुनिये वर्तमान संग्राम में हम सब बड़े बड़े वीर सेनापतियों के नायक थे इसमें कोई भी सन्देह नहीं था। फिर भी श्रीकृष्ण से सुरक्षित यदुवीरों की अल्पसंख्या वाली सेना ने हमें हरा दिया है यह शोक का कारण नहीं है ॥ १५ ॥ अधुना हमारे शत्रुओं की ही विजय हुई कारण यह है कि साम्प्रतकाल में 'भगवान काल' उन्हीं के सानुकूल था। जब वही भगवान काल हमारे सानुकूल होगा तब हम भी उन्हें जीत लेंगे ॥ १६ ॥

**एवं प्रबोधितो मित्रैश्चैद्योऽगात् सानुगः पुरम् । हतशेषाः पुनस्तेऽपि ययुः स्वं स्वं पुरं नृपाः ॥ १७ ॥**
**रुक्मी तु राक्षसोद्वाहं कृष्णद्विडसहन् स्वसुः । पृष्ठतोऽन्वगमत् कृष्णमक्षौहिण्या वृतो बली ॥ १८ ॥**
**रुक्म्यमर्षी सुसंरब्धः शृण्वतां सर्वभूभुजाम् । प्रतिजज्ञे महाबाहुर्दंशितः सशरासनः ॥ १९ ॥**
**अहत्वा समरे कृष्णमप्रत्यूह्य[19] च रुक्मिणीम् । कुण्डिनं न प्रवेक्ष्यामि सत्यमेतद् ब्रवीमि वः ॥ २० ॥**

**कर्दमक्षमा**

अन्वयः—एवम्, प्रबोधितः, चैद्यः, मित्रैः, सानुगः, पुरम्, अगात्, पुनः, हतशेषाः, ते, नृपाः, अपि, स्वम्, स्वम्, पुरम्, ययुः ॥ १७ ॥ कृष्णद्विट्, बली, रुक्मी, तु स्वसुः, राक्षसोद्वाहम्, असहन्, अक्षौहिण्या, वृतः कृष्णम्, पृष्ठतः, अन्वगमत् ॥ १८ । सुसंरब्धः, अमर्षी, महाबाहुः, दंशितः, सशरासनः, रुक्मी सर्वभूभुजाम्, शृण्वताम्, प्रतिजज्ञे ॥ १९ ॥ श्रीकृष्णम्, समरे, अहत्वा, च, रुक्मिणीम्, अप्रत्यूह्य, कुण्डिनम्, न, प्रवेक्ष्यामि, वः, एतत्, सत्यम्, ब्रवीमि ॥ २० ॥

**श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः**

एवमुक्तरीत्या । हतेभ्यः शेषाः, बहवो हता इति द्योतनायैव ॥ १७ ॥ असहन्नसहमानः । आर्षत्वाच्छताऽत्र । पूर्वोक्ते युद्धारम्भे रुक्मिणो वृत्तमाह—पृष्ठतः पश्चादिति । श्रीवलदेवादिषु युद्धभारं विन्यस्य श्रीकृष्णस्य द्वारकां प्रति प्रस्थानात् । तदुक्तं हरिवंशे—"आदाय रुक्मिणीं कृष्णो जगामाशु पुरं प्रति । रामे भारं समासज्य युयुधाने च वीर्यवान् । अक्रूरे विपृथौ चापि गदे च कृतवर्मणि ! चक्रदेवे सुदेवे च सारणे च महाबले । निवृत्तशत्रो विक्रान्ते भंगकारे विदूरथे । उग्रसेनात्मजे कंके शतद्युम्ने च केशवः । राजाधिदेवे मृदुरे प्रासने चित्रके तथा । अरिदान्ते वृहद्दुर्गे श्वफल्के सत्यके पृथौ । वृष्ण्यंधकेषु चान्येषु मुख्येषु मधुसूदनः ।" इति । सर्वान्वित्मनि स्थितांस्तान्वंचयित्वेति ज्ञेयम् ॥ १८ ॥ दंशितो बद्धकवचः । अमर्षी असहनः । सुसंरब्धोऽतिक्रोधी । महाबाहुरिति बाहूत्थापनाभिप्रायेण ॥ १९ ॥ अप्रत्यूह्य अन्यस्मै अदत्त्वाऽनानाय्य वा । संगरे न तु माया-दिना । अप्रत्यूह्यानिवर्त्य । न प्रवेक्ष्यामीति पौरजनेषु निजमुखदर्शनायोग्यत्वात्, इयं च दैवी गीर्भाविवात् ॥ २० ॥

**श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी**

हतेभ्यः शेषा इति बहवो हता इति द्योत्यते ॥ १७ ॥ पूर्वोक्तयुद्धारम्भे रुक्मिणो वृत्तिमाह—रुक्मी त्विति । पृष्ठतः पश्चात् पृष्ठरक्षान् विन्यस्य द्वारकां प्रति श्रीकृष्णस्य प्रस्थानात् तथाच हरिवंशे—आदाय रुक्मिणीं कृष्णो जगामाशु पुरीं प्रति । रामे भारं समासज्य युयुधाने च वीर्यवान् अक्रूरे विपृथौ चापि गदे च कृतवर्मणि । चक्रदेवे सुदेवे च सारणे च महाबले । निर्वृत्त-शत्रौ विक्रान्ते भङ्गकारे विदूरथे । उग्रसेनात्मजे कङ्के शतद्युम्ने च केशवः । राजाधिदेवे मृदुरे प्रासने चित्रके तथा । अरिदान्ते बृहद्दुर्गे स्वफल्के सत्यके पृथौ । वृष्ण्यन्धकेषु चान्येषु मुख्येषु मधुसूदन इति । स्ववर्त्मनि स्थितांस्तान् वञ्चयित्वेति ज्ञेयम् ॥ १८ ॥ अमर्षी असहनः, अत एव सुसंरब्धः अतिशयेन क्रुद्धः, अत एव शृण्वतां शृण्वत्सु सर्वभूभुजां सर्वभूभृत्सु तस्य प्रतिज्ञायोग्यत्वं बोधयन् महाशूरत्वं लक्षयति—महाबाहुरिति । अनेन तदानीं बाहूत्थापनमपि ज्ञेयम्, अतः पूर्वमेव दंशित इत्यादि ॥ १९ ॥ सङ्गरे नतु मायादिना अप्रत्यूह्य अनिवर्त्य कुण्डिनं न प्रवेक्ष्यामीति पौरजनेषु निजमुखदर्शनाय अयोग्यत्वात् इयं च दैवीगीः भावित्वात् ॥ २० ॥

---

१९. अप्रमुच्य–च. पु. टि. ।

## श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी

प्रकर्षेण सन्यायाश्वासनादिना बोधितः सन् मित्रैर्हितकारिभिरिति तेषां वाक्यस्यावश्यपाल्यतोक्ता। अनुगा दमघोषादयस्तत्सहिताः, पुरं स्वम्; हतेभ्यः शेषा अवशिष्टाः, अनेन बहवो हता इति द्योत्यते ॥ १७ ॥ तु-शब्दः पूर्व्वतो विशेषे, तमेव दर्शयति—स्वसुः राक्षसोद्वाहमसहमानः, यतः कृष्णं साक्षाद्भगवन्तं द्वेष्टीति तथा सः। एवमग्रेऽपि, इति तस्य परमाबुधत्वदुष्टत्वादिकं सूचितम्। पृष्ठतः पश्चादिति श्रीबलदेवादिषु युद्धभावं विन्यस्य द्वारकां प्रति श्रीकृष्णस्य प्रस्थानात्। तथा च श्रीहरिवंशे ( विष्णु० प० ५९।४७–५१ )—

आदाय रुक्मिणीं कृष्णो जगामाशु पुरीं प्रति। रामे चासज्य तं भारं युयुधाने च वीर्य्यवान् ॥
अक्रूरे विपृथौ चैव गदे च कृतवर्म्मणि। चक्रदेवे सुदेवे च सारणे च महाबले ॥
निवृत्तशत्रौ विक्रान्ते भंगकारे विदूरथे। उग्रसेनात्मजे कंके शतद्युम्ने च केशवः ॥
राजाधिदेवे मृदुरे प्रसेने चित्रके तथा। अतिदान्ते बृहद्दुर्गे स्वफल्के सत्यके पृथौ ॥
वृष्ण्यन्धकेषु चान्येषु मुख्येषु मधुसूदनः ॥ इति।

अक्षौहिण्यैकया वृतः परिवृतः यद्वा, अक्षौहिणीभिर्बह्वीभिरावृतः, स्वयमपि बली युद्धसमर्थः ॥ १८ ॥ अमर्षी असहनशीलः, अत एव सुसंरब्ध इति विचाररराहित्यं सूचितम्। अत एव शृण्वतां शृण्वत्सु, इति तेषां स्वस्वपुरगमनात् प्रागिति ज्ञेयम्। तस्य प्रतिज्ञायोग्यतां बोधयन् महाशूरत्वमाह; किंवा बाहुमुत्थाप्य धनुरादिस्पर्शेन शपथपूर्व्वकं प्रतिजज्ञ इति सूचयति—महेत्यादिना। संगरे युद्धमध्ये, न तु मायादिनेत्यात्ममौर्य्यं ख्यापयति ॥ १९ ॥ कृष्णं श्याममित्यसूयया, किंवा बलाद्धरणाभिप्रायेण, एवमग्रेऽपि। अप्रत्यूह्य अनानीय, इदञ्च भावित्वात् सत्यमेव तन्मुखान्निःसृतम्; कुण्डिनं पुरं न प्रवेक्ष्यामीति प्रतिज्ञाहान्यात्यन्तलज्जया पौरजनेषु निजमुखदर्शनायोग्यत्वात् ॥ २० ॥

## श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका

इत्थं मित्रैर्जरासंधादिभिः बोधितः सांत्वितश्चैद्यस्स्वपुरं प्रति जगाम ततो हतशेषास्ते जरासंधादयोऽपि नृपाः स्वस्वगृहं प्रति जग्मुः ॥ १७ ॥ ततः कृष्णद्विट् रुक्मी तु स्वसुर्भगिन्या राक्षसोद्वाहमसहमानः अक्षौहिण्या सैन्येन परिवृतः कृष्णं पृष्ठतोऽन्वधावत् ॥ १८ ॥ अनुधावनात्पूर्वं तस्य संरम्भमाह—रुक्मीति। अमर्षी क्रुद्धः सुसंरब्धः सन्नद्धः तदेव प्रपञ्चयति—दंशितः कवचितः शरासनेन धनुषा सहितः सर्वभूभुजां शृण्वतां सतां प्रतिजज्ञे ॥ १९ ॥ प्रतिज्ञामेवाह—अहत्वेति। अप्रत्यूह्य अनाहृत्य ॥ २० ॥

## श्रीविजयध्वजतीर्थकृता पदरत्नावली

असहन्नसहमानः ॥ १८–१९ ॥ अप्रत्यूह्य अनावृत्य अन्यस्यादत्वेति वा ॥ २०–२३ ॥

## श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी

अमर्षी असहिष्णुः सुसंरब्धः अतिक्रोधः ॥ १९ ॥ अहत्वेति। भारतीपक्षे अज्ञात्वा अप्रत्यूह्य अनिवर्त्य अनिर्मोच्येति वा ॥ २०–२१ ॥

## गूढार्थदीपिनी

हतेभ्यः ये शेषाः तेऽपि ॥ १७–१८ ॥ अमर्षी तद्धरणमसहमानः। सुसंरब्धः संक्रुद्धः। प्रतिजज्ञे प्रतिज्ञामकरोत् ॥ १९ ॥ अप्रत्यूह्य अनिवर्त्य। अहत्वा न किन्तु हत्वा प्राप्यैवेति वास्तवोऽर्थः ॥ २० ॥

## श्रीसत्यधर्मकृता श्रीभागवतटिप्पणी

अधुनाऽऽत्मानुसारिणि काले सति रिपवो यदवोऽस्माञ्जिग्युः। यदा तु कालः प्रदक्षिणोऽस्मदनुकूलस्तदा वयं जेष्यामः ॥१७॥ मित्रैराप्तैः ॥ १८ ॥ स्वसुर्भगिन्या राक्षसोद्वाहमसहन् गतम्। अक्षौहिण्या सेनया वृतः ॥ १९ ॥ सर्वभूभुजां गतोर्वरितानां शृण्वतां सताम्। सशराशन इति शपथपूर्वकतामावेदयति ॥ २० ॥

## श्रीमद्वल्लभाचार्य्यकृता सुबोधिनी

एवं स्वसिद्धान्तनिरूपणेन प्रबोधितः। मित्रैरवञ्चकैः समानव्यसनैः सह चैद्यः ससेवकः स्वपुरमगात्। तेऽपि हतशेषाः तद्गृहपर्यन्तं तत्सङ्गे गत्वा पुनः स्वं स्वं पुरं ययुः ॥१७॥ एवं सप्तदशभिः एकमुपाख्यानं साधारणानां ममताभावाय निरूपितम्। अधुना सार्धैः सप्तदशभिः रुक्मिप्रभृतीनां ममताभावाय रुक्मिण्याश्च तेषु ममताभावाय सार्धैरेव सप्तदशभिर्निरूप्यते। मध्यमं

तामसम्। अन्तिमं राजसमिति। ततो दोषत्रयापगमने भगवानष्टैश्वर्यरूपां रुक्मिणीं स्वीकरिष्यत्यष्टभिः। तत्र प्रथमं तामसस्योद्योगमाह **रुक्मी** त्विति। यद्यपि तत्त्वोपदेशे रुक्मी स्थितः, तत्त्वेन च सर्वे निवृत्तव्यापारा जाताः, रुक्मी तु न जात इति तु शब्दार्थः। ननु कोऽपराधः, य एव क्षत्रियः बलवान्नयति तस्यैव भार्या भवतीति क्षत्रियाणां स्थितिः। तत्राह **स्वसुः राक्षसोद्वाहमसहन्निति**। ये हि कुलीनाः सन्तो दुर्बलः, तत्कन्या राक्षसविधिना नीयते। स्वयं तु शूरः, अतो राक्षसविवाहोऽनुचितः। किञ्च। कृष्णद्विडयम्। अन्यश्चेन्नयेत्, न वदेदपि। द्विष्टेन नीतं न क्वाप्युपकाराय भविष्यति। स्थापनीयं च शत्रुत्वम्। तत्सम्बन्धे सत्यशक्यमिति सम्बन्धदूरीकरणार्थं तस्य प्रवृत्तिः। कन्याहविषोस्तुल्यत्वात्। 'द्विषता हि हविर्भुक्तं नेह नान्यत्र तद्भवे'दिति वाक्यात् कन्यापि द्विषता भुक्ता न लोकद्वयोपकारिणीति तस्या भोगं वा निवारयितुं तत्प्रवृत्तिः। अत एव पृष्ठतोन्वगमत्। येनैव मार्गेण कृष्णो गतः, तेनैव मार्गेण स्वयमपि गतः। अथवा। अयं यदैव भगवान् निर्गतः, तदैव प्रचलितः, परमन्ये निवृत्ताः, अयं तु न निवृत्त इति वैलक्षण्यम्। एकयाक्षौहिण्या परिवृतः सन् गतः। ननु बहव एव गता हतोद्यमा जाताः, कथमयमेकाकी गच्छतीत्याशङ्क्याह बलीति। अयमत्यन्तं बलिष्ठः ॥ १८ ॥ अत एव महतीं प्रतिज्ञां चक्रे इत्याह **रुक्मी**ति। **अमर्षी** अप्रतीकारक्रोधवान्। सुष्ठु संरब्धः युद्धार्थं कृतोद्यमः। सर्वभूभुजां शृण्वतां मध्ये प्रतिजज्ञे, प्रतिज्ञां कृतवान्। क्रोधसंरम्भान्न ज्ञातवान्। सामग्री गृहीतेति निर्भयः, निवारकाश्च न जाताः सर्वे। सहायापेक्षा तु नास्तीत्याह **महाबाहुरि**ति। महती क्रियाशक्तिः यस्येत्यर्थः। ततो दंशितः बद्धकवचः सशरासनश्च ॥ १९ ॥ प्रतिज्ञामाह **अहत्वे**ति। **अप्रत्यूह्ये**ति। रुक्मिणीमग्नितुल्यां मन्यते। यथा आयतनादग्निः बहिश्चेन्निर्गच्छति। तत्पुनरायतने व्यूह्यते, ततः **कुलादपगता पुनः कुले व्यूह्ये**ति भावः, नन्वेतदशक्यमिति चेत्, तत्राह **कुण्डिनं न प्रवेक्ष्यामी**ति। अयमेव नियमः, यदुभयमकृत्वा कुण्डिनाप्रवेश इति। अतः कुण्डिनाप्रवेश एव तस्य फलिष्यति। अत एव विगानाभावात् निर्धारितस्यानुक्तत्वात् न पदानामन्यथार्थो वक्तव्यः। एतदहं सत्यं ब्रवीमीति शपथः ॥ २० ॥

**श्रीसुबोधिनी-सारः**

एवं मित्रैः सुहृद्भिः प्रबोधितो विश्वासितः सानुगः सभृत्यः चैद्यः शिशुपालः पुरं चेदीमगात्। हतेभ्यो मृतेभ्यः शेषा उर्वरिता नृपाः स्वं स्वं पुरं जग्मुः पुनस्तेपीत्यनेन जीविताशाया बलीयस्त्वं द्योतितम् ॥ १७ ॥ कृष्णद्विट् रुक्मी तु पक्षांतरे स्वसुर्भगिन्या राक्षसश्चासावुद्वाहश्चेति तमसहमानोऽक्षौहिण्या सेनया वृतो बली कृष्णं पृष्ठतोन्वगमत् ॥ १८ ॥ तत्प्रतिज्ञामाह। महाबाहुः दंशितो बद्धकवचः सधनुः सुसंरब्धोऽतिक्रुद्धोऽमर्षी असहिष्णू रुक्मी सर्वेषां भूभुजां राज्ञां शृण्वतां सतां प्रतिज्ञां चकार ॥ १९ ॥ समरे युधि कृष्णं न हत्वा रुक्मिणीमप्रत्यूह्य न मोचयित्वा कुंडिनं पुरं न प्रवेक्ष्यामि एतत्सत्यमहं ब्रवीमि वो युष्मान् प्रति ॥ २० ॥

**गोस्वामिश्रीगिरिधरलालकृताबालप्रबोधिनी**

एवं मित्रैर्जरासन्धादिभिः प्रबोधितः सान्त्वितश्चैद्यः शिशुपालः सानुगः हतावशिष्टैर्भृत्यादिभिः सहितः स्वपुरं प्रति अगात् गतवान्। हतशेषास्ते जरासन्धादयो नृपा अपि पुनः स्वं स्वं पुरं प्रतिययुः ॥१७॥ ततो रुक्मी तु स्वसुर्भगिन्या राक्षसोद्वाहं हरणमसहमानः, अक्षौहिण्या एकाक्षौहिणीपरिमितसङ्ख्यया सेनया आवृतः पृष्ठतः कृष्णमन्वगमत् अन्वधावत्। तत्र हेतुमाह—बलीति। असहने हेतुमाह—कृष्णद्विडिति ॥ १८ ॥ अनुधावनात्पूर्वं तद्वृत्तमाह—रुक्मीति। महाबाहुर्महाबली, अमर्षी तद्धरणमसहमानः, सुसंरब्धः सङ्क्रुद्धः, दंशितः बद्धकवचः, सशरासनः धनुर्धरः, रुक्मी सर्वेषां भूभुजां राज्ञां शृण्वतां सतां प्रतिजज्ञे प्रतिज्ञामकरोत् ॥ १९ ॥ प्रतिज्ञामेवाह—अहत्वेति। समरे युद्धे रुक्मिणीमप्रत्यूह्य अनिवर्त्य। स्पष्टमन्यत् ॥ २० ॥

**अन्वितार्थप्रकाशिका**

एवमिति। एवं मित्रैर्जरासन्धादिभिः प्रबोधितः सान्त्वितश्चैद्यः शिशुपालः सानुगः हतावशिष्टैर्भृत्यादिभिः सहितः स्वपुरं प्रति अगात्। हतशेषास्ते जरासन्धादयो नृपा अपि पुनः स्वं स्वं पुरं प्रति ययुः ॥ १७ ॥ रुक्मीति। बली कृष्णद्विट् च रुक्मी तु स्वसुर्भगिन्या राक्षसोद्वाहं हरणमसहन् असहमान अक्षौहिण्या सेनया वृतः पृष्ठतः कृष्णमन्वगमत् अनुधावितुमैच्छत् ॥ १८ ॥ रुक्मीति। तत्र पूर्वं महाबाहुर्बली अमर्षी तद्धरणमसहमानः सुसंरब्धः संक्रुद्धः दंशितः बद्धकवचः सशरासनः धनुर्धरः रुक्मी सर्वेषां भूभुजां राज्ञां शृण्वतां सतां प्रतिजज्ञे प्रतिज्ञामकरोत् ॥ १९ ॥ अहत्वेति। समरे कृष्णमहत्वा अप्राप्य ज्ञात्वा वेति वास्तवोऽर्थः। रुक्मिणीं च अप्रत्यूह्य अनिवर्त्य कुण्डिनं न प्रवेक्ष्यामि। एतदहं वो युष्यान् प्रति सत्यं ब्रवीमि ॥ २० ॥

**श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्**

प्रतिजज्ञे प्रतिज्ञामकरोत्। दंशितः कवचयुक्तः ॥ १९ ॥ अप्रत्यूह्य नानीत्वा ॥ २० ॥

**भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी**

एवमिति । एवं मित्त्रैः मित्त्रताभाग्भिर्जरासंधादिभिः, प्रबोधितः सान्त्वितः, चैद्यः शिशुपालः, सानुगः स्वानुगैः सहितः, पुनः पुरं स्वनगरं, अगात् । ततः हतशेषाः, ते जरासंधादयोऽपि नृपाः, स्वं स्वं, पुरं प्रति, ययुर्जग्मुः ॥ १७ ॥ रुक्मीति । ततः बली प्रशस्तबलः, कृष्णद्विट् रुक्मी तु, स्वसुः स्वभगिन्याः, राक्षसोद्वाहं, असहन्नसहमानः, अत एव अक्षौहिण्या सेनया, वृतः परिवेष्टितः सन्, कृष्णं पृष्ठतः, अन्वगमदधावत् ॥ १८ ॥ अनुधावनात् पूर्वं तस्य संरम्भमाह । रुक्मीति । अमर्षी क्रुद्धः, सुसंरब्धः संनद्धः, योद्धुं सज्ज इत्यर्थः । तदेव प्रपञ्चयति । दंशितः कवचितः, शरासनेन धनुषा सहितः, सशरासनः, महाबाहुः, रुक्मी सर्वभूभुजां सर्वनृपाणां शृण्वतां सतां, प्रतिजज्ञे प्रतिज्ञामकरोत् ॥ १९ ॥ प्रतिज्ञामेवाह । अहत्वेति । समरे संग्रामे, कृष्णम् अहत्वा, रुक्मिणीं च, अप्रत्यूह्य अनाहृत्य च, कुण्डिनं, न प्रवेक्ष्यामि । कुण्डिनपुरे प्रवेशं न करिष्यामीत्यर्थः । एतत् वो युष्मान् प्रति, सत्यं, ब्रवीमि ॥ २० ॥

**कृष्णप्रिया**

राजन् परीक्षित् ! जब सब स्वजनों ने चेदिराज शिशुपाल को इस प्रकार समझाया तब वह अपने अनुयायियों के साथ निज राजधानी को लौट गया और संग्राम में जो लोग मरण से बचे थे वे वीर मित्र लोग भी अपने-अपने राजधानीओं की ओर लौट गये ॥ १७ ॥ रुक्मिणीजी का ज्येष्ठ भ्राता रुक्मी भगवान् श्रीकृष्ण का असाधारण द्वेषी था। उससे यह बात जरा भी सहन न हुई कि मेरी बहिन रुक्मिणीजी को श्रीकृष्ण हर ले जायँ एवं राक्षस विधान से बल पूर्वक उसके साथ लग्न करें। इसलिये बलवान् रुक्मी ने अपने साथ एक अक्षौहिणी सेना लेकर भगवान् श्रीकृष्ण का पीछा किया ॥ १८ ॥ महाबाहु रुक्मी रुक्मिणी हरण से क्रोध तमतमा रहा था। उसने बख्तर धारण किया और समस्त राजाओं के सामने धनुष उठाकर यह प्रतिज्ञा की और आक्रमण के लिये सज्ज हुआ ॥ १९ ॥ आक्रमण के अवसर सबके सुनते प्रण किया कि आप सर्वके समक्ष यह प्रतिज्ञा करता हूँ कि समराङ्गण में मैं श्रीकृष्णको यदि न मार सका और मेरी बहिन रुक्मिणी को न लौटा सका तब अपनी राजधानी कौण्डिनपुरी में प्रवेश नहीं करूँगा ॥ २० ॥

**इत्युक्त्वा रथमारुह्य सारथिं प्राह [1]सत्वरम् । चोदयाश्वान् यतः कृष्णस्तस्य [2] मे संयुगं भवेत् ॥ २१ ॥**
**अद्याहं निशितैर्बाणैर्गोपालस्य सुदुर्मतेः । नेष्ये वीर्यमदं येन स्वसा मे प्रसभं हृता ॥ २२ ॥**
**विकत्थमानः कुमतिरीश्वरस्याप्रमाणवित् । रथेनैकेन गोविन्दं तिष्ठ [3]तिष्ठेत्यथाह्वयत् ॥ २३ ॥**
**[4]धनुर्विकृष्य सुदृढं जघ्ने कृष्णं त्रिभिः शरैः । [5]आह चोर क्षणं तिष्ठ यदूनां कुलपांसन ॥ २४ ॥**

**कर्दमक्षमा**

अन्वयः—इति, उक्त्वा, रथम्, आरुह्य, सारथिम्, प्राह, यतः, कृष्णः, सत्वरम्, अश्वान्, चोदय, तस्य, मे, संयुगम्, भवेत् ॥२१॥ अद्य, अहम्, सुदुर्मतेः, गोपालस्य, निशितैः, बाणैः, वीर्यमदम्, नेष्ये, येन, मे, स्वसा, प्रसभम्, हृता ॥२२॥ ईश्वरस्य, अप्रमाणवित्, कुमतिः, विकत्थमानः, एकेन, रथेन, गतः, च, गोविन्दम्, तिष्ठ, तिष्ठ, इति, अथ, आह्वयत ॥ २३ ॥ धनुः, विकृष्य, त्रिभिः, शरैः, कृष्णं, सुदृढम्, जघ्ने, च, आह, अरे यदूनाम्; कुलपांसन, क्षणम्, तिष्ठ ॥ २४ ॥

**श्रीधरस्वामिविरचिता भावार्थदीपिका**

गोपालस्य वेदपालकस्येति वास्तवोऽर्थः । तथा सुदुर्मतेरिति शोभनानुग्रहवती दुष्टेष्वपि मतिर्यस्य तस्येति ॥ २२-२३ ॥ यदूनां कुलपांसन कुलदूषण वस्तुतस्तु यदूनां कुलस्य पते हे अंसन स्वयं च रिपुहननचतुर । 'अंस समाघाते' इत्यस्माद्धातोः कर्तरि ल्युट् प्रत्ययो नंद्यादिविहितः ॥ २४ ॥

**श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः**

यतो यत्र । तस्य तेन । यतो यत्र द्वारकायां परमदुर्गेपि कुतस्तस्य मे मया सह संयुगं भवेत् । कामप्रवेदने लिङ् । ममेच्छेत्यर्थः । हेतौ वा, तद्भवनहेतोरित्यर्थः ॥ २१ ॥ प्रसभं हठात् । तच्च किमर्थं, तत्राह—अद्येति । नेष्ये गमयिष्यामि,

---

१. सत्वरः-श्रीधर वंशी. जीव. वीर. विज. विश्व. शुक. । २. स्तेन मे संयुगो-वीर. । ३. तिष्ठेति च ब्रुवन्-प्रा. पा.; अन्वधावत रंहसा-विज. ; त्युपाह्वयत्-वीर. ।

४. स गत्वा नर्मदां देवीं तरन्त मधुसूदनम् । आसाद्य युद्धसन्नद्धः तिष्ठ तिष्ठेति चाब्रवीत् ॥ विज. ।

५. चात्र-श्रीधर वंशी. जीव ; चारेक्षणं-विश्व. ; चोरे क्षणं-विज. ; चोर-वीर. ।

हरिष्यामीत्यर्थः। तत्त्वार्थश्चायम्—गोपालस्य तद्रूपलीलत्वेनैव प्रकाशितापूर्वसर्वैश्वर्यमाधुर्यस्यानाद्यनंतकालसिद्धवेदसिद्धसर्वमंत्र-श्रेष्ठयोरष्टादशदशाक्षरयोरधिदेवस्य स्वयं भगवत इत्यर्थः। तर्हि कथं बहूनामन्यत्र प्रवृत्तिस्तत्राह—सु सुष्ठु दुरतिक्रच्छ्रेण मतिर्ज्ञानं यस्य तस्य निशितैर्बाणैर्निजमेव वीर्यमदं नेष्ये गमयिष्यामि, क्षपयिष्यामीत्यर्थः। तर्हि कथं तत्र तस्य सामर्थ्यं, दर्शयति—येनेति। प्रसभं सर्वानपि राज्ञः पराभूयेत्यर्थः। म इति वीर्यमदमित्यनेनाप्यन्वितं वा॥ २२॥ विकत्थमान आत्मानं श्लाघमानः। विरूपं कत्थमान आत्मानं श्लाघमानः, अतः कुमतिः, अतोऽप्रमाणवित् माहात्म्यानभिज्ञः, अत एव श्रीबलदेवं वर्त्मांतरेण वंचयित्वा एकेन रथेन सह वर्तमान एकाकिना भगवता स्वयमेवैकाकितया योद्धुं महामदेन दूरतः सर्वसैन्यपरित्यागात्। तथा च हरिवंशे—"अवस्थाप्य च तत्सैन्यं रुक्मी मदबलान्वितः। चिकीर्षुर्द्वैरथं युद्धमभ्ययान्मधुसूदनम्।" इति। गोविंदं पृथ्व्यामवतीर्णं साक्षाद्भगवन्तमपीत्यर्थः। एवमग्रे कृष्णमित्यादिकं ज्ञेयं। तदेवं मुहुरुक्तिस्तस्यात्यंताऽबुधत्वादिबोधनार्थम्॥ २३॥ अत्र संग्रामे, मत्सं-मुखे वा। अवज्ञया तं भृशमुत्साहयितुमिच्छया च तदाह्वानमनादृत्य प्रयांतमेव पृष्ठतो जघ्ने। यद्वा—तदाह्वानादभिमुखतया स्थितं जघ्ने। तथापि क्षणं तिष्ठेति वीरदर्पस्वभावादेवाह। अरे हे शत्रो। यद्वा—अव्ययमिदं संबोधने। वास्तवार्थेऽरे क्षणं शीघ्रदर्शनं यथा स्यात्तथा तिष्ठ "लघुक्षिप्रमरं द्रुतम्" इत्यमरः॥ २४॥

## श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी

चोदयेति। नोदयेत्यर्थः। कुत्र यतो यत्र तत्रैव परमदुर्गद्वारकायामपीत्यर्थः॥ २१॥ तच्च किमर्थं तदाह—अद्येति। नेष्ये गमयिष्यामि हरिष्यामीत्यर्थः। ननु श्रीकृष्णनिन्दामयं वाक्यं श्रीमद्भगवद्भक्तवृन्दवन्द्यश्रीचरणकमलरजःकणेन तत्र भवता वादरायणिना कथमनूदितमिति चेत्तत्राहुष्टीकाकृतो गोपालस्येत्यादि तस्येतीत्यन्तं तत्र तस्यैकदेशेऽपि यथाकथञ्चिदपि तत्स्तुति-रूपार्थसत्त्वेऽनुचितोऽत्रानुवाद इत्याशयः तत्त्वार्थश्चायं गोपालस्य तद्रूपलीलत्वेनैव प्रकाशितापूर्वसर्वैश्वर्य्यमाधुर्य्यस्य अनाद्यनन्त-कालसिद्धवेदसिद्धसर्वमन्त्रश्रेष्ठयोरष्टादशदशाक्षरयोरधिदेवस्य स्वयं भगवत इत्यर्थः। तर्हि कथं बहूनामन्यत्र प्रवृत्तिस्तत्राह—सुष्ठुदुः अतिकृच्छ्रेण मतिर्ज्ञानं यस्य तस्य निशितैर्बाणैर्निजमेव वीर्य्यमदं नेष्ये गमयिष्यामि क्षपयिष्यामीत्यर्थः तत्र तस्य सामर्थ्यं दर्शयति। येनेति प्रसभं सर्वानपि राज्ञः पराभूयेत्यर्थः। मे इति वीर्य्यमदमित्यनेनाप्यन्वितं वा॥ २२॥ विरूपं कत्थमानः आत्मानं श्लाघमानः अतः कुमतिः अतोऽप्रमाणवित् माहात्म्यानभिज्ञ इत्यर्थः। अत एव श्रीबलदेवं वर्त्मान्तरेण वञ्चयित्वा एकेन रथेन सह वर्त्तमानः एकाकिना श्रीभगवता स्वयमप्येकाकितया योद्धुं महामदेन दूरतः सर्वसैन्यपरित्यागात् तथाच श्रीहरिवंशे—

अवस्थाप्य च तत्सैन्यां रुक्मी मदबलान्वितः। चिकीर्षुर्द्वैरथं युद्धमभ्ययान्मधुसूदनमिति॥

गोविन्दं पृथ्व्यामवतीर्णं साक्षाद्भगवन्तमपीत्यर्थः। एवमग्रे कृष्णमित्यादिकमपि ज्ञेयं तथैव मुहुरुक्तिस्तस्यात्यन्तावुध-त्वादिवोधनार्थम्॥ २३॥ अवज्ञया तं भृशमुत्साहयितुमिच्छया च तदाह्वानमनादृत्य प्रयान्तमेव शरैः पृष्ठतो जघ्ने तथापि तथैव प्रयान्तं पुनराह यद्वा तदाह्वानादभिमुखतया स्थितं जघ्ने तथापि क्षणं तिष्ठेति वीरदर्पस्वभावादेवाह अरे हे शत्रो! यद्वा अव्यय-मिदमनादरसंबोधने वास्तवोऽर्थः अरे क्षणं शीघ्रदर्शनं यथा स्यात्तथा तिष्ठेति "लघु क्षिप्रमरं द्रुतमिति पर्य्यायात्॥ २४॥

## श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी

प्राह प्रवापेनाह, सत्वरः, सन् चोदय प्रेरय; कुत्र? यतो यत्र तत्रैव परमदुर्गद्वारकादावपीत्यर्थः। कथम्? तस्य मे मया सह रम च वा संयुगं भवेद्यथा तथैव, न त्वनुव्रजनादिप्रकारेणेत्यर्थः, यद्वा, किमर्थम्? तदाह—तस्येति, भवेत् भवत्वित्येतदर्थ-मित्यर्थः॥ २१॥ तच्च किमर्थम्? तदाह—अद्येति। नेष्ये गमयिष्यामि हरिष्यामीत्यर्थः। तत्रार्थश्चायम्—गोपालस्य तत्तन्महा-मन्त्राधिदेवत्वेन प्रसिद्धस्य भगवतः, कर्म्मणि षष्ठी, तं प्रति बाणैः सह वीर्य्यमदं निजं नेष्ये प्रापयिष्यामि, भक्त्यार्पयिष्यामीत्यर्थः। यतो बलादप्याहो सम्बन्धेन मामनुजग्राहेत्याह—येनेति॥ २२॥ विरूपं कत्थमान आत्मानं श्लाघमानः, यतः कुमतिः, अतोऽ-प्रमाणवित् माहात्म्यानभिज्ञ इत्यर्थः। अत एवैकेन रथेन सह वर्त्तमानः, एकाकिना श्रीभगवता सह स्वयमप्येकाकितया योद्धुं महामदेन दूरतः सर्व्वसैन्यपरित्यागात्। तथा च तत्रैव हरिवंशे (विष्णु. प० ६०।७)—'अवस्थाप्य च तत्सैन्यं रुक्मी मद-बलान्वितः चिकीर्षुर्द्वैरथं युद्धमभ्ययान्मधुसूदनम्॥' इति। गोविन्दं पृथ्व्यामवतीर्णं साक्षाद्भगवन्तमपीत्यर्थः। एवमग्रे कृष्ण-मित्यादिकमपि ज्ञेयम्, तथैव मुहुरुक्तिस्तस्यात्यन्ताबुधत्वादिबोधनार्थम्॥ २३॥ अवज्ञया तदाह्वानमनादृत्य प्रयान्तमेव पृष्ठतो जघ्ने, तथाप्यवज्ञया पुनरपि प्रयाणादाह; यद्वा, तदाह्वानादभिमुखतया स्थितं जघ्ने, तथापि क्षणं तिष्ठेति वीरदर्पस्वभावादेव, अरे हे शत्रो; यद्वा, अव्ययमनादरसम्बोधने॥ २४॥

## श्रीसुदर्शनसूरिकृतशुकपक्षीयम्

अप्रमाणवित्। अनन्तपरिमाणवत्त्वमजानन् वेदान्तानभिज्ञ इत्यर्थः॥ २३-३४॥

## श्रीमद्वीरराघवाचार्यकृता भागवतचन्द्रचन्द्रिका

इतीति। सत्वरः त्वरया सहितः उक्तिमेवाह—चोदयेति सार्द्धेन। यतो यत्र कृष्णस्तत्राश्वानाशु चोदय गमयेत्यर्थः। तेन कृष्णेन सह मम संयुगं संग्रामो भवेत् भवितव्यः ॥ २१ ॥ सुतरां दुर्बुद्धेर्गोपालस्य वीरमदं वीरोऽहमेवेत्येवंविधं मदं नेष्ये ततो नयामि त्याजयामीत्यर्थः। तत्र हेतुं वदन् विशिनष्टि। येन कृष्णेन मम भगिनी प्रसह्य नीता अपहृता ॥ २२ ॥ विकत्थमान इति। ईश्वरस्य श्रीकृष्णस्य प्रमाणम्—ज्ञानशक्तिबलादीनामनन्तपरिमाणत्वमजानन्, अत एव कुमतिरत एव चैवं विकत्थमानः प्रगल्भं भाषमाणः तिष्ठ तिष्ठेति वदन्निति शेषः उपाद्रवत् अन्वधावत् ॥ २३ ॥ धनुरिति। दृढं धनुर्विकृष्य शरान् सन्धायेति शेषः। कृष्णमुरो वक्षस्थलं जघ्ने आह च उक्तिमेवाह—क्षणमित्यादिना स्मयन्नित्यतः प्राक्तनेन। हे यदुकूलदूषक ! क्षणं तिष्ठ ममाग्रत इति शेषः, ध्वांक्षः काकः यथा हविः हृत्वा याति तथा मम स्वसारं मुषित्वा क्व यास्यसि नैल्यमयोग्यत्वं च दृष्टान्ताभिप्रेतम् ॥२४॥

## श्रीविजयध्वजतीर्थकृता पदरत्नावली

अरे नीचसम्बोधनं तदेव व्यनक्ति। यदूनामिति ॥ २४-२५ ॥

## श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

नेष्ये। गमयिष्यामि हरिष्यामीत्यर्थः। भारतीपक्षे शोभना कृपावती दुष्टेष्वपि मतिर्यस्य तस्य निशितैर्बाणैर्वीर्यं मदं स्वपराक्रमं गर्वमदं नेष्ये यापयिष्यामि दूरीकरिष्यामीत्यर्थः ॥ २२-२३ ॥ कुलस्य पांसुकरणात् कुलपांसन ! पक्षे हे यदुकुल-पालक ! हे अंसन ! रिपुघातिन् अंससमाघाते अरे क्षणं भारतीपक्षे अरे शीघ्रमीक्षणं यत्र तत् यथा स्यात्तथा तिष्ठ ॥ २४ ॥

## गूढार्थदीपिनी

चोदय प्रापय। यतः यत्र कृष्णः तस्य तेन ॥ २१ ॥ गोपालस्य पशुपालकस्य नेष्ये दूरीकरिष्यामि। इति निन्दा। स्तुतिस्तु वेदपालकस्य सुष्ठु शोभना दृष्टेष्वपि मतिर्यस्य तस्य कृष्णस्य तीक्ष्णैर्बाणैर्वीर्यमदं स्वपराक्रमगर्वमहं नेष्ये क्षपयिष्यामि। प्रसभं हठात् ॥ २२ ॥ विकत्थमान आत्मानं श्लाघमानः। प्रमाणं बलस्येयत्ताम्। आह्वयत् स्पर्धाया अविवक्षणान्न तङ् ॥ २३ ॥ कुलस्य पांसुं धूलिं करोतीति कुलपांसन कुलदूषण। पांसुशब्दात्तत्करोतीति णिच्। वस्तुतस्तु हे कुलपते। हे अंसन ! शत्रुघातिन्। अंस समाघाते धातुः, इत्यस्मात् नन्दिगणत्वात्कर्तरि ल्युः। दर्शनं यथा स्यात्तथा क्षणं तिष्ठति योज्यम् ॥ २४ ॥

## श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

श्रीकृष्णानादरे हेतुमाह—कुमतिरिति। अत एवेश्वरस्य साक्षाद्भगवतः श्रीकृष्णस्य अप्राणवित् ॥ २३ ॥ कुलपांसन ! कुलदूषण ॥ २४-३३ ॥

## श्रीसत्यधर्मकृता श्रीभागवतटिप्पणी

राज्ञां पुरतः कृतप्रतिज्ञेवंरूपाणीति निरूपयति। अहत्वेति। रुक्मिणीमप्रत्यूह्याप्रत्यावर्त्यविवाह्येति वा कुण्डिनं न प्रवेक्ष्यामि वः प्रति सत्यं ब्रवीमि। इति प्रतिजज्ञ इत्यन्वयः ॥ २१ ॥ सत्वरो रुक्मी सत्वरस्त्वं यतो यत्र कृष्णस्तत्राश्वांश्चो-दयेति प्राह तस्य मे च संयुगं भवेत् ॥ २२ ॥ गोपालस्य पशुपालस्य वेदपालकस्येत्यन्तरर्थः। येन वीर्यमदेन तं मदं मे स्वसा प्रसभं बलाद्धृता येन कृष्णेन प्रसभं हृता तस्य मदमिति वा ॥ २३ ॥ अप्रमाणविदनियत्ताज्ञः ॥ २४ ॥

## श्रीमद्वल्लभाचार्यकृता सुबोधिनी

ततः पित्राद्यभ्यनुज्ञाव्यतिरेकेणैव एवमुक्त्वा रथमारुह्य स्वसारथिं प्रति प्राह। अन्यथा स न तथा कुर्यात्। सहजद्वेषा-भावात्। सत्वरमित्युभयत्र। अश्वान् प्रेरय। यतस्तस्य मे च संयुगो भवेत्। प्रार्थनायां लिङ्। यथा मम तस्य संयुगो भवति, तथा च.दयेति भवेदिति विध्यर्थो वा। अपूर्वत्वात्। यतोऽयं कृष्णः स्त्रीप्रियः, अतः स्त्रियं हृतवानिति ॥ २१ ॥ गत्वा यत्कर्तव्यं तदाह अद्याहमिति। निशितैरिति। सहार्थे तृतीया। सुदुष्टेष्वपि मतिर्यस्येति। गोपालत्वं शब्दतो न दोषः, अभिप्रायतस्तथा भवति, तत्प्रकृतेनाङ्गीक्रियत इति, नान्यथा वक्तव्यम्। वीर्यजनितो यो मदः तमहं नेष्ये ग्रहीष्यामि, येन भगवता कृत्वा मदं प्राप्स्यामीत्यर्थः। पूर्वं नास्माकं गर्वः स्थितः, अधुना भगवत्सम्बन्धात् नास्मत्सदृशा वीराः सन्तीति गर्वो भविष्यति। क्षत्रियाणां वीर्यमेव महत्त्वसूचकमिति न मदमात्रं निरूपितम्। ननु भगवतो हेतुत्वं कथमित्याह येन मे स्वसा प्रसभं हृतेति। बलात्कारेण हरन् वीर्यं शिक्षां चोपदिष्टवान्। बाणानपि प्राप्स्यामि वीर्यमपीति। ससाधनबलप्राप्तिर्भगवदाभिमुख्यगमने फलमित्यर्थः। तत्सम्मुखमेव गन्तव्यमिति नियोगः ॥ २२ ॥ विशेषेण कत्थमानः असम्बद्धमिव भाषमाणः। भगवान् हि महत्या प्रार्थनया तां

हृतवान्, न तु बलादिति असम्बद्धता। नन्वचिन्त्यैश्वर्यं भगवतः श्रुत्वा दृष्ट्वा च कथमेवं वदतीत्याशङ्क्याह कुमतिरिति। ऊहादौ न तस्य सामर्थ्यम्। स हि सर्वमेव यथाकथञ्चिज्ज्ञातमिति भगवच्चरितं मन्यते। तत्र प्रमाणमाह **ईश्वरस्याप्रमाणविदिति**। ईश्वरस्य प्रमाणं सामर्थ्यं न जानाति। प्रमाणशब्दः आदरणीयपरोऽपि क्वचित्परिमाणवाच्यपि, प्रमाणं परिमाणमिति। यथा अत्रैव। 'विदुः प्रमाणं बलवीर्ययोर्वे'त्यत्र च। उपसर्गस्य अन्योपसर्गार्थत्वात् न नानार्थत्वं समुदायस्य। एवं दुर्बुद्धिरेकेनैव रथेन भगवत्समीपं गत्वा गोविन्दं भक्तकृपालुं सन्मात्रस्यैवेन्द्रम्, अत एव रुक्मिणीं हृत्वा गच्छन्तं तिष्ठ तिष्ठेत्यब्रवीत्। द्विरुक्तिः आदरे अधिक्षेपे वा। चकारात् स्तुतिवाक्यान्यन्यानि वा॥ २३॥ तथोक्ते भगवान् स्थितः तदा यत्कृतवांस्तदाह **धनुर्विकृष्येति**। स्तुतिपक्षे मदुद्धारमकृत्वैव केवलं रुक्मिणीहरणमयुक्तमिति वाक्यानामर्थः। नन्वनधिकारी कथं कृतार्थीकर्तव्य इत्याशङ्क्य स्वाधिकारनिरूपणार्थं युद्धं प्रदर्शयतीति **धनुर्विकृष्येति**। **सुदृढमिति** सुष्ठु प्रतिज्ञायां दृढम्। भगवन्तमालक्ष्य स्वशौर्यं प्रदर्शयन्। त्रिभिः शरैः अर्थाल्लोकत्रयं जघ्ने। शरो ह्यपर्यावरणभूतो रसानाम्, तत्र जलस्य पृथिवी शरो भवति, अन्तरिक्षमपि वायोः, स्वरपि ब्रह्माण्डस्य, सर्वं भगवते निवेदितवानिति वा। हस्तो हि हन्तीति हस्तेन दत्तवानित्यर्थः। न केवलं सर्वस्वनिवेदनमेव कृतवान्, किन्तु वाक्यमप्युक्तवान्, अन्यथा वाचनिकं न दत्तवानिति स्यात्। आह **चार** इति। भगवन्तं प्रति विज्ञापनार्थमाह। **चारे** चरणयोग्ये हृदये सात्त्विके क्षणं तिष्ठ। ननु किं स्यात् स्थित इत्याशङ्क्याह **यदूनामिति**। यदूनां कुलं पान्तीति कुलपाः, कुलपा वा माया, तान् तां वा अंसेन क्रियाशक्त्या नयतीति तथा। ये केचन यादवानां रक्षकाः, तान् सर्वानेव वैकुण्ठं प्रापयति। अत एवं भक्तवत्सलः अस्मद्धृदयेऽपि क्षणं स्थितः, अस्मदीयान् अस्मदुपकारिणश्च वैकुण्ठं नेष्यनीति तदर्थं' प्रार्थना॥ २४॥

### श्रीसुबोधिनीसारः

इत्येवमुक्त्वा रथमारुह्य सत्वरः सारथिं प्राह यतो यत्र कृष्णस्तत्राश्वान् नोदय प्रेरय। किमर्थमित्यत आह। तस्य कृष्णस्य मे मम संयुगं भवेदिति। तेन मे इत्येके तस्य मे मयेत्यपरे॥ २१॥ येन प्रसभं बलात् मे मम स्वसा भगिनी हृता तस्य दुष्टबुद्धे र्गोपालस्य वीर्यमदं बलगर्वमद्येदानीमेव निशितैः तीक्ष्णैर्बाणैरहं नेष्ये नाशयिष्यामि॥ २२॥ कुमतिः कुबुद्धिरीश्वरस्य न प्रमाणं वेत्तीति तथा। विकत्थमान आत्मानं श्लाघमानो रुक्मी एकेन रथेन तिष्ठ तिष्ठेति गोविंदमाह्वयत् आहूतवान्॥२३॥ सुदृढं धनुर्विकृष्य त्रिभिः शरैः कृष्णं जघ्ने विव्याध आह च हे यदूनां कुलपांसन कुलाधम अत्र क्षणं तिष्ठ॥ २४॥

### विवरणटिप्पणी

**विकत्थमान** इत्यत्र। **प्रमाणमाहेति**। कुमतिरनुमितिकरणमीश्वरप्रमाणाज्ञानमित्यर्थः।

### गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

सत्वरः त्वरया सहितः। तदुक्तिमेवाह—चोदयेति सार्द्धेन। यतो यत्र कृष्णोऽस्ति तत्राश्वानाशु चोदय गमय। 'तत्र गमने किं प्रयोजनं' तत्राह— तेन कृष्णेन सह मे मम संयुगः सङ्ग्रामो भवेत्॥ २१॥ 'युद्धेनापि किं फलम्' इत्याकाङ्क्षायामाह—अद्येति। अद्याहं गोपालस्य वनचरस्य निकृष्टस्य कृष्णस्य वीर्यप्रयुक्तं मदं निशितैस्तीक्ष्णैर्बाणैर्नेष्ये दूरीकरिष्यामि। 'तस्य कोऽपराध' इत्याकाङ्क्षायामाह—येन कृष्णेन मम स्वसा भगिनी प्रसह्य बलात् हृतेति। 'कुतः स्वयं गोपालोऽपि भूत्वा राज्ञस्तवैवमपराधं कृतवान्' इत्यपेक्षायां 'दुर्मतित्वात्' इत्याह—सुदुर्मतेरिति॥ २२॥ एवं विकत्थमानः रुक्मी अथ अनन्तरमेवैकेनैव रथेनानुधावन् तिष्ठ तिष्ठेति गोविन्दमाह्वयत्। 'ततः कुतो न बिभेति स्म' तत्राह—ईश्वरस्य तस्य बलवीर्ययोः प्रमाणमियत्तां न वेत्तीति तथा **स** इति। तत्र हेतुमाह—कुमतिरिति। मन्दबुद्धिरित्यर्थः॥ २३॥ सुदृढं धनुर्विकृष्य तत्र शरान् सन्धाय त्रिभिः शरैः कृष्णं जघ्ने, आह च। उक्तिमेवाह—हे यदूनां कुलपांसन कुलदूषण! क्षणं ममाग्रे तिष्ठेति॥ २४॥

### अन्वितार्थप्रकाशिका

इतीति। इत्युक्त्वा रथमारुह्य सत्वरः स सारथिमाह स्म। यतो यत्र कृष्णोऽस्ति तत्राश्वानाशु चोदय गमय। तेन कृष्णेन सह मे मम संयुगं संग्रामो भवेत्। तेनेत्यत्र तस्येत्यपि पाठः॥ २१॥ अद्येति। अद्याहं सुदुर्मतेः गोपालस्य वनचरस्य कृष्णस्य वीर्यप्रयुक्तं मदं निशितैस्तीक्ष्णैर्नेष्ये दूरीकरिष्यामि। येन कृष्णेन मम स्वसा भगिनी प्रसभं बलात् हृतेति वस्तुतो गोपालस्य भूम्यादिपालकस्य सुतरां दुःखेन मतिर्ज्ञानं यस्य तस्य बाणैर्मदीयवीर्यं नेष्ये हारयिष्ये॥ २२॥ विकत्थमान इति। विकत्थमानः स्वं श्लाघमानः कुमतिः ईश्वरस्य हरेः प्रमाणं बलस्येयत्तां न वेत्तीति तथा सः रुक्मी अथानन्तरमेवैकेनैव रथेनानुधावन् तिष्ठ तिष्ठेति गोविन्दमाह्वयत्। स्पर्द्धया अविवक्षणान्न तङ्॥ २३॥ धनुरिति। सुदृढं धनुर्विकृष्य तत्र शरान् सन्धाय अवज्ञयाऽऽत्मानमनादृत्य यान्तं कृष्णं पृष्ठतः त्रिभिः शरैः जघ्ने आह स्म च। हे अरे शत्रो! यदूनां कुलपांसन कूलदूषण। कुलं पांसुकरोति पांसुशब्दात्तत्करोति णिच्। क्षणं शीघ्रदर्शनं यथा स्यात्तथा तिष्ठ। "अरं द्रुतम्" इत्यमरः। हे यदूनां कुलपते अंसन

शत्रुहननचतुर ! अंस समाघाते नन्द्यादेर्ल्युः । कुत्रेति । हे मन्द ! ध्वाङ्क्षकाकः स यथा यज्ञे हविर्हृत्वा याति तथा मम स्वसारं मुषित्वा त्वं कुत्र यासि । मायिनः कूटयोधिनः कपटेन युद्धकर्तुः ते मदमद्याहं हरिष्ये । वस्तुतो ध्वाङ्क्षस्तद्विपरीतो नैकाक्षस्तद्विपरीतो नेकाक्षत्वपर्यवसानभूतः इन्द्र इव मुषित्वा स्वभागत्वान्न्यायेनैव लब्ध्वा कुत्र यासि भयाभावान्न क्वापि । किं च । हे मन्द स्थिर महामायाशक्ते ! कूटान् खलानस्मान् योधयसि पलायनेनास्मत्प्रोत्साहनात् तस्य तव त्वां प्रति मदं हर्षं स्वपराजयेन प्रापयिष्यामि । यद्वा । हविरिव शुद्धां मे स्वसारममुषित्वेति ध्वाङ्क्षवत्क्षुद्रोऽहमिति मदं हरिष्ये इति चान्वयः ॥ २४-२५ ॥

**श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्**

यतो यत्र कृष्णस्तत्रैव मे युद्धं भवेत् ॥ २१ ॥ निशितैस्तीक्ष्णैः वीर्यमदं नेष्ये हरिष्ये ॥ २२ ॥ विकत्थमान आत्मस्तुतिं कुर्वाणः, अप्रमाणवित् श्रीकृष्णस्य महत्त्वमजानन् ॥२३॥ हे यदूनां कुलं पांसन कुलदूषण । हे अरे शत्रो । क्षणं तिष्ठेत्यब्रवीत् ॥२४॥

**भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी**

इतीति । इतीत्थं, उक्त्वा सर्वेषां पुरतः प्रोच्य, रथम् आरुह्य, सत्वरः सन्, सारथिं प्राह । उक्तिमेवाह नोदयेति सार्द्धेन । हे सूत, यतः यत्र, कृष्णः तत्र, अश्वान् नोदय गमयेत्यर्थः । मे मम, तेन कृष्णेन सह संयुगः भवेत् । भवितव्य इत्यर्थः ॥ २१ ॥ ननु स कः कृष्ण इत्यत आह । अद्येति । येन कृष्णेन, मे मम, स्वसा भगिनी, प्रसभं हठात्, हृता नीता तेन सहेति संबन्धः । ननु वीरेण तेन त्वं कथं पर्याप्तः स्यास्तत्राह । गोपालस्य न जात्याऽयं क्षत्त्रिय इति भावः । सुदुर्मतेर्गोपालत्वाद्दुर्बुद्धिमनः कृष्णस्य, वीर्यमदं, अहं अद्यैव, निशितैरतितीक्ष्णैः, बाणैः, नेष्ये अपनेष्यामि । काऽस्य मदग्रे वीरत्वाभिमानितेति भावः ॥ २२ ॥ विकत्थमान इति । ईश्वरस्य श्रीकृष्णस्य, अप्रमाणवित् ज्ञानशक्तिबलानामनन्तपरिमाणत्वमजानन्, अत एव, कुमतिः अत एव, विकत्थमानः प्रगल्भं भाषमाणः रुक्मी, तिष्ठ तिष्ठ, इति वदन्निति शेषः । एकेन रथेन, गोविन्दं, उपाद्रवदन्वधावत् ॥ २३ ॥ धनुरिति । धनुः सुदृढं यथा तथा, विकृष्य, शरान् संधायेति शेषः । त्रिभिः शरैर्बाणैः, कृष्णं जघ्ने आह च । उक्तिमेवाह क्षणमित्यादिना स्मयन्नित्यतः प्राक्तनेन ग्रन्थेन । हे यदूनां कुलपांसन यदुकुलदूषणभूत कृष्ण, अत्र ममाग्रतः, क्षणं, तिष्ठ ॥ २४ ॥

**कृष्णप्रिया**

महाराज परीक्षित् ! सबके सन्मुख अपना प्रण सुनाकर रुक्मी रथ पर सवार हो गया, और अपने सारथी को कहा कि जहाँ कृष्ण हो वहाँ जल्दी से जल्दी मेरा रथ ले चलो आज मेरा और कृष्ण का भीषण संग्राम होगा ॥ २१ ॥ आज मैं अपने तीक्ष्ण बाणों से दुर्मति गोपाल कृष्ण के वीर्य का बल का अहंकार को चूर्ण कर डालूंगा । उस गोपाल का साहस को तो जरा देखो कि हमारी बहिन को बलात्कार से हर ले गया है ॥ २२ ॥ राजन् परीक्षित् ? रुक्मी की मति विकृत हो गई थी । उसको भगवान का सामर्थ्य और तेजस् की जानकारी नहीं थी इसलिये तो पागल की तरह या प्रमत्त की तरह बकवाद करता था । फिर एक ही रथ से श्रीकृष्ण समीप पहुँचकर श्रीगोविन्द कृष्ण को फटकार करने लगा कि ? खड़े रहो खड़े रहो कहाँ जा रहे हो ॥ २३ ॥ पुनः रुक्मी ने अपने धनुष्य को खींचकर बलपूर्वक भगवान श्रीकृष्ण को तीन तीक्ष्ण बाण मारे और कहने लगा कि मेरे सामने एक ही क्षण खड़े रहो ॥ २४ ॥

**कुत्र यासि स्वसारं मे मुषित्वा ध्वाङ्क्षवद्धविः । हरिष्येऽद्य मदं मन्द मायिनः कूटयोधिनः ॥ २५ ॥**
**यावन्न मे हतो बाणैः शयीथा मुञ्च दारिकाम् । [1]स्मयन् कृष्णो धनुश्छित्त्वा षड्भिर्विव्याध रुक्मिणम् ॥२६॥**
**अष्टभिश्चतुरो वाहान् द्वाभ्यां सूतं ध्वजं त्रिभिः । स चान्यद् धनुरादाय कृष्णं विव्याध पञ्चभिः ॥ २७ ॥**
**तैस्ताडितः [2]शरौघैस्तु चिच्छेद धनुरच्युतः । स चान्यद् धनुरादत्त[3] तदप्यच्छिनदच्युतः[4] ॥ २८ ॥**

**कर्दमक्षमा**

अन्वयः—ध्वाङ्क्षवत्, हविः मुषित्वा, मे, स्वसारम्, मुषित्वा, कुत्र, यासि ! हे मन्द ! मायिनः, कूटयोधिनः, अद्य, मदम्, हरिष्ये ॥ २५ ॥ मे बाणैः, यावत्, यी, हतः, न, शथाः, तावत्, दारिकाम्, मुञ्च, कृष्णः, स्मयन्, तस्य, धनुः, छित्वा, षड्भिः, रुक्मिणम्, विव्याध ॥ २६ ॥ अष्टभिः, चतुरः, वाहान्, द्वाभ्याम्, सूतम्, त्रिभिः, ध्वजम्, विव्याध, च, सः, अन्यद्, धनुः, आदाय, पञ्चभिः, बाणैः, कृष्णम्, विव्याध ॥ २७ ॥ तैः, शरोघैः, ताडितः, अच्युतः, तु, धनुः, चिच्छेद, सः, अन्यत्, धनुः, आदत्त, च अच्युतः, तद्, अपि, अच्छिनत्, ॥ २८ ॥

१. धनुर्विकृष्य सशरं जघ्ने कृष्णं त्रिभिः शरैः—विज. । २. शराग्रैस्तत्—वीर. । ३. पुनरन्यदुपादत्त—श्रीधर. वंशी. जीव. वीर. विज. विश्व. शुक. । ४. दच्यय:—श्रीधर. वंशी. जीव. वीर. विज. विश्व. ; दच्युतः—प्रा. पा. ।

### श्रीधरस्वामिविरचिता भावार्थदीपिका

ध्वांक्षः काकः स यथा हविर्मृष्णाति तद्वत् वस्तुतस्तु अध्वांक्षवदितिच्छेदः। सहस्राक्षवदित्यर्थः हे मंद ! स्थिरेत्यर्थः ॥ २५–३३ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

'ध्वांक्षः काके बकेऽर्थिनि' इति कोशान्न ध्वांक्षोऽर्थी याचकोऽध्वांक्षः। इंद्रस्यापि वाचकत्वे इन्द्रनामानन्वर्थता स्यादिति भाव इत्यभिप्रेत्यैव स्वामिचरणैः सहस्राक्षवदित्युक्तम्। यद्वा—अध्वेव विस्तृतान्यर्थाद्बहून्यक्षीणि यस्य स तथा। पृषोदरादित्वान्नुमार्षो वा। अर्थपदमुभयत्र व्याख्यापरम्। कूटयोधिनः छलप्रहर्तुः॥ क इव, किं मुषित्वा, तत्राह—ध्वांक्ष इव, हविर्मुषित्वेति। तत्र ध्वांक्षवदिति "हविर्होतव्यमात्रे च सर्पिष्यपि नपुंसकम्" इति मेदिनी। तत्त्वार्थस्तैर्व्याख्यातः। तत्र ध्वांक्षस्तावदेकाक्षः, नञा तद्विपरीतोऽनेकाक्षः। अनेकाक्षत्वं परमकाष्ठापन्नं सहस्राक्ष एवेति तत्र पर्यवसायितम्। एवममुषित्वा लक्ष्म्यास्त्वद्भागत्वान्न्यायेनैव लब्ध्वा कुत्र यासि न कुत्रापि गन्तुमर्हसि। भयाभावादित्यर्थः। मायिनो महामायाशक्तेः पलायनं चेदमस्माभिर्युद्धयोग्यमेवेत्याह—कूटयोधिनः। कूटानवलानस्मान्साधु योधयतीति। अन्यथा वयमाभिमुख्येन न योत्स्यामह इति भावः। तादृशस्य तव मदं हर्वं हरिष्ये, मद्विधखलनिर्जयलीलया त्वां प्रति प्रापयिष्यामीत्यर्थः। भारं ग्रामं हरतीतिवद्द्विकर्मकत्वेपि तवेति षष्ठी संबंधविवक्षया। यद्वा–हविः यज्ञसिद्धं स्वभागमिव मे स्वसारमुषित्वेति, ध्वांक्षवत्क्षुद्रोहमिति च योज्यम्॥ २५॥ दारिकां कन्याम्। पूर्वमेव मुंचेत्यर्थः। यावदित्यर्धकम्। अत्र च मे मम वाणैर्हतः प्राप्तः सन् यावन्न शयीथास्तेषां तुच्छतां दर्शयित्वा हृतायां रुक्मिण्यां सुस्थो न भवेस्तावद्दारिकां मुंच तत्सांत्वनां त्यज, तत्सांत्वनां मुक्त्वा युद्धमेव कुर्वित्यर्थः॥ २६॥ स च रुक्मी॥ अष्टभिरिति प्रत्येकं द्वाभ्यामग्रिमपादद्वयवेधनार्थं, तत्साहचर्यात्सूतमपि द्वाभ्यां हस्तद्वयवेधनार्थम्। त्रिभिरिति—लक्षणपताकादंडानां पृथक्छेदनार्थम्। एतच्च रुक्मिण्यपेक्षया तद्वेधनमात्रं ज्ञेयम्॥ २७॥ तैः पंचबाणैः। तत् तदपि॥ अत एव ताडितोऽपि शराणामोघैः समूहैरेव धनुरेव चिच्छेद। पुनरित्यर्द्धकम्। अन्यत्ततोपि दृढतरम्। 'अव्ययम्' इत्यपि पाठः॥ २८॥

### श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी

क इव किं मुषित्वा तत्राह—ध्वाङ्क्ष इव हविर्मुषित्वेति। तत्र ध्वाङ्क्षवदिति तत्त्वार्थस्तैर्व्याख्यातः तत्र ध्वांक्षस्तावदेकाक्षः नञा तद्विपरीतोऽनेकाक्षः अनेकाक्षत्वं पराकाष्ठापन्नं सहस्राक्ष एवेति तत्र पर्य्यवसायितम् एवममुषित्वा लक्ष्म्यास्त्वद्भागत्वात् न्यायेनैव लब्धा कुत्र यासि न कुत्रापि गन्तुमर्हसि भयाभावादित्यर्थः किञ्च मायिनो महामायाशक्तेः पलायनं चेदस्माभिर्युद्धयोग्यमेवेत्याह–कूटयोधिनः कूटान् खलान् अस्मान् साधु योधयतीति अन्यथा वयमाभिमुख्येन न योत्स्याम इति भावः। तादृशस्य च तव मदं हर्वं हरिष्ये मद्विधखलनिर्जयलीलया त्वां प्रति प्रापयिष्यामीत्यर्थ;। भारं ग्रामं हरतीतिवद्द्विकर्मकत्वेऽपि तवेति सम्बन्धविवक्षया षष्ठी यद्वा हविर्यज्ञसिद्धं स्वभागमिव मे स्वसारममुषित्वेति ध्वाङ्क्षवत् क्षुद्रोऽहमिति च योज्यम्॥ २५॥ यावदित्यर्द्धकम्। अत्र च मे मम वाणैर्हतः प्राप्तः सन् यावन्न शयीथाः तेषां तुच्छतां दर्शयित्वा हृतायां सान्त्वितायां रुक्मिण्यां स्वस्थो न भवेः तावद्दारिकां मुञ्च तत्सान्त्वनां त्यज तत्सान्त्वनां मुक्त्वा युद्धमेव कुरुष्वेत्यर्थः। स्मयन् स्मयमानः पक्षद्वयेऽपि तस्य तादृशोक्तेरसंगतत्वात् मस्तकहस्तद्वयपादद्वयमध्यभागाख्यमुख्यषडङ्गवधनार्थं षड्भिः॥ २६॥ अष्टभिरिति प्रत्येकं द्वाभ्यामग्रिमपादद्वयवेधनार्थं तत्साहचर्यात् सूतमपि द्वाभ्यां हस्तद्वयवेधनार्थं त्रिभिरिति लक्षणदण्डपताकानां पृथक् छेदनार्थम्। एतच्च श्रीरुक्मिण्यपेक्षया तत्तद्वेधनमात्रं ज्ञेयम्॥ २७॥ अत एव ताडितोऽपि शराणामोघैः समूहैः तु एव धनुरेव चिच्छेद पुनरित्यर्द्धकम् अन्यत्ततोऽपि दृढतरम्। अच्युत इति अव्यय इति वा पाठः॥ २८॥

### श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी

मत्स्वसृमोषणं परमायोग्यमिति दृष्टान्तेनाह—ध्वाङ्क्षवदिति। तत्त्वार्थस्तैर्व्याख्यात एव। मायित्वादेव कूटं शाठ्यं तेन वोद्धुं शीलमस्येति तथा तस्य, तत्त्वार्थोऽयम्—मदं निजयर्वं हरिष्ये त्वय्यर्पयिष्यामि। कुतः? मन्देषु दुष्टेष्वपि मायिनो दयावतः, अत एव कूटयोधिनो निश्चलयोधिनः॥ २५॥ अतो मम वाणैरहतो यावन्न शयीथाः, तावत् दास्यतीति दारिकां कर्त्तरीं मयि मुञ्च, मद्बाणाक्षततया शयनार्थमगत्वा मयि प्रहारं कुर्वित्यर्थः। यद्वा, तव वाणैर्हतो मे मदं यावद्धरिष्येऽपनेष्ये तावन्न शयीथा निश्चिन्तो न वर्त्तथाः, दारिकाञ्च न मुञ्च, युद्धनैश्चिन्त्यस्य तत्साधनत्यागस्य चा योग्यत्वात्। 'मे' इत्यस्यैव विशेषणं मन्देत्यादिपदद्वयम्। मन्दश्चासौ मायी चेति तथा तस्य मदेन हेतुना आत्मनः निन्दनमिदम्। स्मयम् स्मयमानः, पक्षद्वयेऽपि तस्य तादृशोक्तेरसंगतत्वात्, षड्भिरिति मस्तकादिमुख्यषडंगवेधनार्थम्॥ २६॥ अष्टभिविति—प्रत्येकं द्वाभ्यां वेधनात्, त्रिभिरिति–

लक्षणपताका दण्डानां पृथक्त्वेन छेदनार्थं प्रत्येकमेकैकेन वेधनात् एतच्च श्रीरुक्मिण्यपेक्षया तत्तद्वेधनमात्रं ज्ञेयम् ॥ २७ ॥ अत एव ताडितोऽपि शरणामोघैः समूहैः, तु एव, धनुरेव चिच्छेद, अच्युत इति स्वस्थानादविचलनस्य, किं वा स्वप्रियतरसम्बन्धिजनेषु स्नेहात् च्युतेरभिप्रायेण । एवमग्रेऽपि ॥ २८ ॥

### श्रीमद्वीरराघवाचार्यकृता भागवतचन्द्रचन्द्रिका

हे मन्द ! कूटयोधिनः कूटः समुदितो युध्यते तच्छीलस्तथा तस्य एकाकितया योद्धुमसमर्थस्येत्यर्थः । तव मदं हरिष्ये ॥ २५ ॥ मम बाणैर्याबद्धतो न शयीत भवान् ततः पूर्वमेव दारिकां कन्यां मुञ्च स्मयन्निति षड्भिर्वाणैरिति शेषः तथोत्तरत्रापि ॥ २६ ॥ स चेति । स रुक्मी ॥ २७ ॥ तैः रुक्मिणा प्रयुक्तैः शराग्रैस्ताडितः कृष्णः तदपि धनुश्चिच्छेद एवं पुनः पुनर्यद्यद्धनुराददे तदप्यव्ययो भगवान् चिच्छेद ॥ २८ ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

ततः पूर्वमेव मुञ्च ॥ २६–२८ ॥

### श्रीमज्जवगोस्वामिकृतः क्रमसन्दर्भः

गोपालस्येति । तत्त्वार्थे तद्रूपत्वं व्यञ्जितमहैश्वर्यमिति तदादरो व्यञ्जितः ॥ ३१ ॥

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी

ध्वाङ्क्ष काकः स यथा हविर्मुष्णाति तद्वत् पक्षे मे स्वसारं महालक्ष्मीत्वात् त्वदीयामपि त्वं मुषित्वा वा कुत्र यासि अहं स्वसारं स्वभगिनीं हरिष्ये त्वत्त्वो मोचयित्वा स्वगृहं प्रति नेष्यामि काक इव हविर्यज्ञियकाष्ठिकां ध्वङ्क्षवत् काक इव हविर्होतव्यमात्रे च सर्पिष्यपि नपुंसक"मिति मेदिनी । तस्मात् मन्दश्चासौ मायी चेति तस्य मम कपटयोधिनः मदं गर्वं द्य खण्डय ॥ २५ ॥ यावन्मे वाणैर्हतः सन् सङ्ग्रामे न शयीथास्तावद्दारिकां मुञ्च पक्षे यावदित्येवार्थे मे वाणैस्त्वमहत एव अतो दारिकां न मुञ्च "यावत्तावच्च साकल्येऽवधौ मानेऽवधारण" "इत्यमरः यावत् कात्स्न्येऽवधारण" इति मेदिनी । ननु दारिकया मम किं प्रयोजनं तत्राह—शयीथाः अनया सह पुष्पशय्यायामिति शेषो लज्जया नोक्तः ॥ २६–३१ ॥

### गूढार्थदीपिनी

निन्दा तु स्पष्टैव । हविः यज्ञसिद्धं स्वभागमिव मे स्वसारम् अमुषित्वा न्यायेनैव लब्ध्वा कुत्र यासि न कुत्रापि भयाभावादित्यर्थः । किन्तु ध्वांक्ष काकस्तद्वत्क्षुद्रोऽहं त्वत्त एनां हरिष्ये इति मे मदं गर्वं द्य खण्डय । मन्दो मूर्खश्चासो मायी च कपटयोधी च तस्य मे इति योज्यमिति स्तुतिः । द्येति 'दीऽवखण्डने' इत्यस्मात् लोट् मध्यमपुरुषैकवचनम् ॥ २५ ॥ निन्दा स्पष्टैव । यावत् एवार्थे मे वाणैस्त्वमहत एव दारिकां न मुञ्च किन्तु अनया शयीथा पुष्पशय्यायामिति शेषः ॥ २६ ॥ स च रुक्मी ॥ २७–२८ ॥

### श्रीसत्यधर्मकृता श्रीभागवतटिप्पणी

स रुक्मीतरं तं मधुसूदनमासाद्य प्राप्य तिष्ठ तिष्ठेति चाब्रवीत् ॥ २५ ॥ अरे नीच यदूनां कुलपांसन कुलधुलीकर । अस्मन्नगरीं यदूनां यया रुक्मिण्यो नोज्झिता तां विकृष्याकृष्य कुलं चास्मत्कुलं तत्पांसनेत्यप्यन्वयः । क्षणं तिष्ठ ॥ २६ ॥ मे स्वसारं भगिनीं ध्वाङ्क्षः काको हविरिव मुषित्वा चोरयित्वा कुत्र यासि तद्धविर्मुषित्वा स्वसारमत्यसारमनुपयुक्तं कृत्वा याति तथा स्वसारं मुषित्वा सबलचौरं कृत्वा । एतेनाशक्तदुर्जनता जनार्दनस्य ध्वनयतीति वा । मायिन इव कूटयोधिनः कपटयुद्धस्य ॥ २७ ॥ यावद्यन्मध्ये मे वाणैर्हतो न शयीथा न शेषे तावद्दारिकां कन्यां मुञ्चेत्युपचा धनुर्विकृष्य ॥ २८ ॥

### श्रीमद्वल्लभाचार्य्यकृता सुबोधिनी

किञ्च, **कुत्र यासीति** । जीवानां स्वसा ब्रह्मानन्दो भवति । सम्बन्धमात्रं स्वांशिन आनन्द इति । ननु कदाचिदप्यनुभवः, अतः स्वसेव भवति । तां गृहीत्वा अस्मदुद्धारमकृत्वा उद्धृतानेव यादवान् उद्धर्तुं किमर्थं गच्छसीत्यर्थः । **मुषित्वेति** । परोक्षं हृत्वा । जीवानां निकटेऽपि ब्रह्मानन्दः स्थितः जीवैर्न दृश्यते, अनुभवति भगवानेव । **ध्वाङ्क्षवदिति** । यथा ध्वाङ्क्षं विहाय हविर्नीयते । ध्वाङ्क्षो हविर्न भवति । अन्यत्सर्वं जगत्युत्पन्नं हविर्भवति, भगवान् सर्वयज्ञभ.क्ता, तत्र सर्वे पशवः, काकं विहाय । तथा सर्वजगदुद्धारार्थमागतः मामेव विहाय कथं गच्छसीत्यात्मनो धिक्कारः । हविरपि परोक्षमेव गृह्यते । 'परोक्षप्रिया

( इव हि ) देवाः प्रत्यक्षद्विष'इति । तर्हि त्वयैव काकदृष्टान्त उक्त इति त्वमग्राह्य एवेति चेत्, तत्राह **हनिष्येऽद्य मदं मन्देति**। मन्द मदं स्वस्मिन् दोषात्मकं यद्वशात् त्वया कृपा न विधीयते । मन्दमायिनो वा मन्दा अस्यास्तीति । अनेन माया मन्दैव क्रियते, न कार्यक्षमा भवति, कूटयोधिनो मायिनो भगवतः स कपटेनैव युद्धं करोति, वस्तुतो मुक्तिं प्रयच्छति । एतादृशे भगवति स्थिते प्रतिबन्धकत्वेन समागतं स्वधर्मं दूरीकरिष्यामीति वचनं युक्तमेव ॥ २५ ॥ तर्हि कथं त्वमुद्धर्तव्य इत्याकाङ्क्षायां ब्रह्मानन्द-मस्मभ्यं प्रयच्छेत्याह **यावन्न मे हतो बाणैरिति**। मे बाणाः मन्मारकत्वेन समागतानीन्द्रियाणि तैर्यावन्न हतः, यदीन्द्रियाणि त्वद्रसं प्राप्स्यन्ति, तदा ब्रह्मानन्दं नापेक्षन्ते, तदा भक्तिमेव ग्रहीष्यन्ति, तावत्पर्यन्तं ब्रह्मानन्दो देय इत्यर्थः । यतः सा दारिका मुक्तिः संसारं विदारयिष्यति । भक्तेः पूर्वं मुक्तिप्रार्थना युक्तैव । ननु कोऽयमाग्रह इदानीमेव फलं देयमिति, तत्राह **शयीथा** इति । यावत्प्रलये सर्वं संहृत्य शयनं करिष्यसि, ततः पूर्वं मोचयेत्यर्थः । एवमुक्तो भगवान् हास्येन तं व्यामोहयन् दुरात्मायं मर्तुकामः समायातीति, स्वयं भगवान् स्त्रीणां हितकर्ता रुक्मिणी न त्याज्येति, तस्य धनुः छित्त्वा येन शरान् प्रक्षिप्तवान् तत् दूरीकृत्य, षड्भिः शरैः रुक्मिणं विव्याध । षोढा विहितो हि पुरुषः । ततः सर्वाङ्गेषु ताडितवान् ॥ २६ ॥ ततः अष्टभिः द्वाभ्यां एकैकं चतुरो वाहान् अश्वान् विव्याध । द्वाभ्यां च सूतम् । एते त्रिधा छिन्नाः पञ्चापि । ध्वजश्चतुर्धा छिन्नः । एवं साक्षात्परंपराङ्गानि सर्वाण्येव भिन्नानि । तच्छेदनार्थं प्रवृत्तेनैव बाणेन धनुश्छिन्नमिति न धनुषो भेदे पृथक् शरा उक्ताः । तदा सोऽप्यन्यत् धनुरादत्त । भगवानपि प्राणिघातकं धनुर्विहाय अन्यद्धनुर्गृहीतवानिति चकारेण ज्ञायते । तदपि आच्छिनत् ग्रहणमात्रेणैव, तत्र हेतुः **अच्युत** इति । स्वयमच्युतः, देववरप्राप्तं च धनुः । अतस्तच्छरस्य वैयर्थ्यसम्पादनात् पूर्वमेव तच्छिन्नम्, ततोऽन्यदपि गृहीतवानित्याह **पुनरन्यदुपादत्तेति** । 'त्रिसत्या हि देवा' इति धनुषः त्रिर्ग्रहणम् ॥ २७-२८ ॥

### श्रीसुबोधिनी-सारः

मे मम स्वसारं भगिनीं मुषित्वा चोरयित्वा हृत्वा वा त्वं कुत्र यासि गच्छसि हविः ध्वांक्षः काक इव हे मंद मायावतः कपटयोधिनस्ते मदं गर्वमद्याहं हरिष्यामि ॥ २५ ॥ मे मम बाणैर्हतस्त्वं यावन्न शयीथास्तावद्दारिकां कन्यां त्वं मुंच परित्यजेति कृष्णः स्मयन् ईषद्धसन् रुक्मिणो धनुः छित्त्वा रुक्मिणं षड्भिर्बाणैर्विव्याध ॥ २६ ॥ अष्टभिः चतुरोऽश्वान् द्वाभ्यां सूतं सारथिं त्रिभिर्ध्वजं विव्याध । स च रुक्मी अन्यद्दितोयं धनुरादाय गृहीत्वा पंचभिर्बाणैः कृष्णं विव्याध ॥ २७ ॥ तैः शराणामोघैः पूरैस्ताडितोऽच्युतो हरिः धनुः चिच्छेद । स च पुनरन्यदुपादत्ताग्रहीत् । तदप्यव्ययो भगवानच्छिनत् ॥ २८ ॥

### गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

हे मन्द ! ध्वाङ्क्षः काकः स यथा यज्ञे हविर्हृत्वा याति तथा मम स्वसारं मुषित्वा त्वं कुत्र यासि ? । 'स्थितो किं करिष्यसे' तत्राह—कूटयोधिनः कूटं कपटं युद्धं कर्तुः । तत्र हेतुः—मायिनस्ते मदमद्य हरिष्ये गर्वं निराकरिष्ये ॥ २५ ॥ यावत् मम बाणैर्हतो न शयीथास्ततः पूर्वमेव दारिकां कन्यां रुक्मिणी त्वं विमुञ्च त्यज । तदा कृष्णोऽपि स्मयन् उपहसन् तस्य धनु-श्छित्वा षड्भिर्बाणै रुक्मिणं विव्याध ॥ २६ ॥ अष्टभिः शरैश्चतुरो वाहान् विव्याध ताडयामास, द्वाभ्यां शराभ्यां सूतं विव्याध, त्रिभिः शरैः ध्वजं विव्याध । स रुक्मी ॥ २७ ॥ तैः रुक्मिप्रयुक्तैः शरसमूहैस्ताडितोऽच्युतः कृष्णस्तदपि धनुश्चिच्छेद । ततः पुनरन्यद्धनुः रुक्म्यु, पादत्त, तदप्यव्ययः कृष्णः अच्छिनत् ॥ २८ ॥

### अन्वितार्थप्रकाशिका

यावदिति । यावत् मम बाणैर्हतो न शयीथास्ततः पूर्वमेव दारिकां कन्यां रुक्मिणीं त्वं मुञ्च त्यज । वस्तुतो मे बाणैर्न हतो न प्राप्तो यावच्छयीथाः स्वस्थो वर्तेथास्तावद्दारिकां बाणैर्मद्विदारणम् । धात्वर्थनिर्देशे ण्वुल् । मुञ्च त्यज मा कुरु मद्बाण-प्राप्त्या तव व्याकुलीभावश्चासम्भवीति मां जहीति भावः । तदा कृष्णोऽपि स्मयन् उपहसन् । शता आर्षः । तस्य धनुश्छित्त्वा षड्भिर्बाणै रुक्मिणं विव्याध हस्तद्वयपादद्वयभालहृदयेषु विव्याध ॥ २६ ॥ अष्टभिरिति । कृष्णः अष्टभिः शरैश्चतुरो वाहान् विव्याध ताडयामास । द्वाभ्यां शराभ्यां सूतं विव्याध । त्रिभिः शरैः ध्वजं विव्याध । स रुक्मी च अन्यद्धनुरादाय पञ्चभिः शरैः कृष्णं विव्याध ॥ २७ ॥ तैरिति । तै रुक्मिप्रयुक्तैः शरसमूहैस्ताडितोऽच्युतः कृष्णस्तदपि धनुश्चिच्छेद । ततः पुनरन्यद्धनुः रुक्म्युपादत्त । तदप्यव्ययः कृष्ण अच्छिनत् ॥ २८ ॥

### श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्

ध्वांक्षः काको यथा हविर्हुतद्रव्यं मुष्णाति । तथा मे स्वसारं भगनीमुषित्वा चोरयित्वा । कूटयोधिनः कपटयुद्धकर्त्तु-स्तवमदम् ॥ २५ ॥ मे बाणैर्हतो यावन्नशयीथाः स्वस्थो वर्त्तेथास्तावत् बालां मुंच ॥ २६ ॥ वाहानश्वान् ॥ २७-२८ ॥

**भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी**

कुत्रेति ।। हविः, ध्वाङ्क्षवत्, काकः यथा हविः हृत्वा याति तथेत्यर्थः । मे मम, स्वसारं भगिनीं, मुषित्वा चोरयित्वा, कुत्र यासि । क यास्यसीत्यर्थः । हे मन्द, कूटः समूहिता भूत्वा युध्यतीति तच्छीलस्तस्य, एकाकितया योद्धुमसमर्थस्येत्यर्थः । मायिनस्तव, मदं अहं अद्य हरिष्ये ।। २५ ।। यावदिति ।। मे मम, बाणैः हतः सन्, यावत् त्वं, न शयीथाः । रणभूमाविति शेषः । ततः, पूर्वमेव, दारिकां कन्यां मुञ्च । एवं विधं तद्वचनं श्रुत्वेति शेषः । स्मयन् हासं कुर्वन्, कृष्णः, तावदेव, धनुः तच्छरासनं, छित्वा, षड्भिः बाणैरिति शेषः । रुक्मिणं विव्याध ।। २६ ।। अष्टभिरिति ।। ततः अष्टभिः बाणैः, चतुरः वाहान् चतुरोऽप्यश्वान् द्वाभ्यां द्वाभ्यां बाणाभ्यामित्यर्थः । द्वाभ्यां बाणाभ्यां सूतं, त्रिभिर्बाणैः, ध्वजं, विव्याध, स च स रुक्म्यपि, अन्यत् धनुः, आदाय, पञ्चभिर्बाणैः, कृष्णं, विव्याध ।। २७ ।। तैरिति ।। तैः पञ्चबाणात्मकैः शरौघैः, ताडितः अच्युतः कृष्णः तु, धनुः पुनरुपात्तं तच्छरासनं चिच्छेद, रुक्मी पुनः अन्यद्धनुः, उपादत्तागृह्णात् । अव्ययः श्रीकृष्णः, तदपि अच्छिनत् ।। २८ ।।

**कृष्णप्रिया**

अरे यदुकुल कलङ्क ! हे यदुकुल कीर्ति को कलङ्कित करने वाले कौवा जैसे यज्ञ का हविष्य को चुराकर उड़ जाय वैसे ही हे कृष्ण ! मेरी बहिन रुक्मिणी को उठाकर कहाँ भाग जा रहा है । अरे मन्द ! महामूढ़ ! मुझे पता है कि तू बड़ा मायावी और कपट समर में परम कुशल हैं, लेकिन मैं तेरा सर्व गर्व का चूरा कर डालता हूँ ।। २५ ।। यादकर ? कृष्ण ! जब तक मेरे तीखे बाण तुमको पृथ्वी पर सुला नहीं देते उसके पहले ही, मेरी छोटी सी बहिन को धरणी पर रखकर भाग जा । भगवान् श्रीकृष्णजी ने रुक्मी के इस बकवास पर मुस्करान किया और प्रत्युत्तर में भगवान् ने उसका धनुष्य तोड़ डाला और रुक्मी पर भगवान् ने और छ बाण छोड़े ।। २६ ।। पुनः पुरुषोत्तम श्रीकृष्ण ने रुक्मी के चार अश्वों पर आठ बाण, दो बाण सारथी पर छोड़े पुनः तीन बाणों से उसकी ध्वजा को तोड़ दिया । पुनः रुक्मी ने दूसरा धनुष्य हाथ में लिया और भगवान श्रीकृष्ण को पाँच बाण मारे ।। २७ ।। रुक्मी के बाणों के लगने पर भगवान कृष्ण ने रुक्मी का दूसरा धनुष को भी काट दिया । पुनः रुक्मी ने और एक धनुष्य हाथ में लिया । लेकिन लेते ही भगवान श्रीकृष्ण ने अविनाशी प्रभुजी ने अच्युत ने उस धनुष्य को भी तोड़ दिया ।। २८ ।।

**परिघं पट्टिशं शूलं चर्मासी[1] शक्तितोमरम् । यद्‌ यदायुधमादत्त[2] तत् सर्वं सोऽच्छिनद्धरिः[3] ।। २९ ।।**
**ततो रथादवप्लुत्य [4]खड्गपाणिर्जिघांसया । कृष्णमभ्यद्रवत् क्रुद्धः पतङ्ग इव पावकम् ।। ३० ।।**
**तस्य चापततः खड्गं तिलशश्चर्म चेषुभिः । छित्वासिमाददे[5] तिग्मं[6] रुक्मिणं हन्तुमुद्यतः ।। ३१ ।।**
**दृष्ट्वा भ्रातृवधोद्योग रुक्मिणी भयविह्वला । पतित्वा पादयोर्भर्तु[7]रुवाच करुणं सती ।। ३२ ।।**

**कर्दमक्षमा**

अन्वयः—परिघम्, पट्टिशम्, शूलम्, चर्मअसीशक्तितोमरान्, यद्, यद्, आयुधम्, आदत्त, तत्, सर्वम्, सः, विभुः, अच्छिनत् ।। २९ ।। ततः, क्रुद्धः, खड्गपाणिः, पतङ्गः, पावकम्, इव, रथात्, अवप्लुत्य, जिघांसया, कृष्णम्, अभ्यद्रवत् ।। ३० ।। आपततः, तस्य, खड्गम्, च, चर्म, इषुभिः, तिलशः, छित्वा, रुक्मिणम्, हन्तुम्, उद्यतः, तिग्मम्, असिम्, आददे ।। ३१ ।। भ्रातृवधोद्योगम्, दृष्ट्वा, भयविह्वला, रुक्मिणी, भर्तुः, पादयोः, पतित्वा, सती, करुणम्, उवाच ।। ३२ ।।

**श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः**

शक्तितोमरैः सह परिघादीनि चिच्छेदेत्यर्थः । तदनु परिघादीन्याच्छिनत् । आत्तानीति शेषः । पट्टिशास्योः शूलशक्त्योश्चेषदाकारभेदः । तोमरः शल्यभेदः । आदद्यात् आदातुं समर्थ आसीदित्यर्थः । हरिर्दुष्टसंहारी ।। २९ ।। ततः शस्त्रच्छेदानन्तरम् । अभ्यद्रवदाभिमुख्येनाधावत् ।। ३० ।। तस्य रुक्मिणः । तिग्मं तीक्ष्णम् ।। ३१ ।। करुणं दीनं यथा स्यात्तथा । भ्रातुः केनापि दैवेन भ्रातृत्वं प्राप्तस्य वधोद्यमं दृष्ट्वा भयं लोकापवादात्कारुण्याद्वा तेन विह्वला । ननु तादृशदुष्टकर्मणो वधो युक्त एव, तत्राह—सती पण्डिता । अयमतिक्षुद्रः श्रीभगवति न किंचिदनिष्टं विधातुं शक्नोति, केवलमज्ञानेनैव चातकीवद्दीनोऽयं विचेष्टते, ततो ममानन्यशरणाया देहसम्बन्धधारिण्यस्मिन्नस्य दयैव युक्तेति विचारसमर्थेत्यर्थः । श्रीकृष्णस्य त्वयमभिप्रायः—मयि किमपि

---

१. चर्मासिशक्तितोमरान्–प्रा. पा. ; तोमरौ–श्रीधर. वंशी. जीव. वीर. विज. विश्व । २. दद्यात् तत्तदच्छिनदच्युतः–प्रा. पा. । ३. विभुः–विज. । ४. गृहीत्वाखड्गचर्मणी–वीर. विज. । ५. माददे–श्रीधर. वंशी. जीव. वीर. विज. विश्व. । ६. तीक्ष्णं–वीर. । ७. योः पत्युः–विज. ।

कर्तुं न समर्थोऽसाविति सत्यमेव, किन्त्वस्यां तादृशविपत्संपादकेच्छां कथमस्य सोढुं शक्नुयामित्यस्याः प्रार्थनया रक्षितप्राणस्यापि तादृशदुश्चेष्टामर्दनी परमा मनोरमा मानावहानिस्तु सदानुवर्तनी येति ॥ ३२ ॥

**श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी**

तदनन्तरं परिघादीनि चाच्छिनत् आत्तानीति शेषः तत्र शक्तितोमरानिति बाहुल्यापेक्षया शक्तितोमराविति पाठः क्वचित् पट्टिशास्योः शूलशक्त्योश्चेपदाकारादिभेदः तोमरः शल्यभेदः अन्यच्च वहुलं यद्यदादद्यात् आदातुं समर्थ असीदित्यर्थः। हरिर्दुष्टसंहारी तत्सर्वमच्छिनदित्येव पाठः छन्दोभङ्गोऽत्रार्षः वहुसम्प्रदायसिद्धश्चायं सम्प्रदायान्तरेषु पाठान्तराणि तु मिथो विप्रतिपिद्धानि ॥ २९ ॥ अभ्यद्रवत् आभिमुख्येनाधावत् ॥ ३० ॥ तिग्ममर्मसि यद्वा तेजसा तीक्ष्णमपि रुक्मिणम् ॥ ३१ ॥ भ्रातुः केनापि दैवेन साक्षाद्भ्रातृतां प्राप्तस्य वधोद्यमं दृष्ट्वा भयं लोकापवादात् कारुण्यादेव वा तेन विह्वला। ननु तादृशदुष्टकर्मणो वधो युक्त एव तत्राह–सती पण्डिता सर्वज्ञेत्यर्थः। अयमति क्षुद्रः श्रीभगवति न किञ्चिदनिष्टं विधातुं शक्नोति केवलमज्ञानेनैव वातकीव दीनोऽयं विचेष्टते ततो ममानन्यशरणाया देहसम्वन्धधारिण्यस्मिन्नस्य दयैव युक्तेति विचारसमर्थेत्यर्थः। श्रीकृष्णस्य त्वयमभिप्रायः मयि किमपि न कर्त्तुं शक्नोत्यसाविति सत्यमेव किन्त्वस्यां तादृशविपत्सम्पादकेच्छां कथमस्य सोढुं शक्नुयामित्यस्याः प्रार्थनया रक्षितप्राणस्यापि तादृशदुश्चेच्छामर्दनी परमा मनोग्लानिस्तु सदानुवर्त्तनीयेति ॥ ३२ ॥

**श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी**

शक्तितोमरमिति द्वन्द्वैक्यात्, पाठान्तरं स्पष्टम्, पट्टिशास्योः शूल-शक्त्योश्चेपदाकारादिभेदः, तोमरः शरविशेषः, एषां यथोत्तरं लघुत्वं ज्ञेयम्, क्रमेण वलहान्योत्तरोत्तरग्रहणात्। यद्यदिति वहुलमन्यदप्यादत्तेति द्योतयति; स प्रियजनपरवशो विभुर-स्मत्प्रभुः, यद्वा, विभुस्तं सद्यो हन्तुं समर्थोऽप्यायुधमेवाच्छिनत् ॥ २९ ॥ ततस्तस्मादायुधच्छेदनाद्धेतोः। क्रुद्धः सन् अवप्लुत्य प्लुतगत्यावतीर्य, अभ्यद्रवदभिमुखे धावित्वागात्; तच्चात्मनाशार्थमेवेति सूचयंस्तादृशाभिद्रवणे दृष्टान्तमाह—पतंग इति ॥ ३० ॥ तिग्मनसिम्; यद्वा, तेजसा तीक्ष्णमपि रुक्मिणम् ॥ ३१ ॥ भयं लोकापवादभ्रातृवधोद्योगादेव, वा, तेन विह्वला सती। भर्तुरिति पादपतनयोग्यतोक्ता। करुणं यथा स्यात्, इदञ्च कृपाजननार्थं भयवैकल्यादेव वा। ननु तादृश दुष्टकर्मणो वधो युक्त एव, तत्राह—सती सहजदयार्द्रहृदयत्वादिसद्गुणवतीत्यर्थः। अतएव भ्रातृशब्दप्रयोगेण तस्मिंस्तस्याः स्नेहोऽपि सूचितः ॥ ३२ ॥

**श्रीमद्वीरराघवाचार्यकृता भागवतचन्द्रचन्द्रिका**

ततः परिघादिकमपि यद्यदाददे तत्सर्वमप्यच्छिनत् ॥ २९ ॥ तत इति। खड्गः पाणौ यस्य स रुक्मी रथादवप्लुत्य हन्तुमिच्छया पतङ्गः शलभः पावकमिव कृष्णमभ्यपतत् ॥ ३० ॥ आपततस्तस्य रुक्मिणः खड्गं चर्म खेटं चेषुभिस्तिलप्रमाण-शश्चिच्छेद एवं छित्वा रुक्मिणं हन्तुं निशितं खड्गमादत्त ॥ ३१ ॥ तदा भ्रातृवधार्थमुद्योगं प्रयत्नं दृष्ट्वा भयकम्पिता सती रुक्मिणी भर्तुः पादयोः पतित्वा करुणं यथा तथोवाच ॥ ३२ ॥

**श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली**

पारिघं परिघातनं पट्टिशं लोहदण्डं शक्तितोमरैः सह चिच्छेद द्विमुखस्तोमरः ॥ २९-३३ ॥

**श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः**

दृष्ट्वेत्यादि। एतदनन्तरं द्रष्टव्यम् एवमेव सतीति पण्डिता सर्वज्ञेत्यर्थः ॥ ३२-४३ ॥

**श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी**

भगिन्याः पुरत एव भ्रातुर्वधोऽभूदिति श्रुत्वा लोका मां किं वदिष्यन्तीति भयविह्वला ननु स्नेहविह्वलेत्यत आसां पुर-सुभ्रुवां लोकधर्मापेक्षासहित एव समञ्जसः प्रेमा ननु गोष्ठसुभ्रुवामिव लोकधर्मापेक्षा रहितः समर्थः प्रेमा अतिप्रवल इति ज्ञेयाः "अनन्यममता विष्णौ ममता प्रेमसङ्गते"ति प्रेमसामान्यलक्षणस्याव्याप्तिरप्यासु नाशङ्क्या रुक्मिप्रभृतिष्वासामन्तःस्नेहाभावा-दित्युपरिष्टादपि यथा स्थानं व्याख्येयम् ॥ ३२ ॥

**गूढार्थदीपिनी**

परिघो लोहवद्धो लगुडः। पट्टिशो लोहदण्डः। चर्म ( ढालेति ) तोमरः ( गड़ासा ) इति ॥ २९-३० ॥ तिग्मं तीक्ष्णम् ॥ ३१-३२ ॥

### श्रीसत्यधर्मकृता श्रीभागवतटिप्पणी

अष्टाभिः । अष्टन इत्यात्वम् । चतुरः कुशल इत्यप्यर्थः ॥ २९ ॥ पञ्चभिः शरैस्तैः शरोर्यैरिव विद्यमानैः । अन्यथा पञ्चभिरिति कृतमिदं मुद्रणं वाधितं स्यादिति भावः । पञ्चभिस्तैरेवास्त्रशक्तितः शरौघत्वेन जातैः । यथोक्तं हरिवंशे । अथान्यद्धनुराधाय रुक्मी कृष्णजिघांसया । प्रादुश्चकार शतशो दिव्यान्यस्त्राणि वीर्यवानित्यादि ॥ ३० ॥ शक्तितोमरैः शक्तिश्च तोमराश्च गतम् । शक्तितोमरैः सह यद्यदादत्तेत्यन्वयः । शक्तितोऽमरैः सह यः समसमरमुपादत्त स इति वा तदर्थः ॥ ३१ ॥ खड्गचर्मणी गृहीत्वा ॥ ३२ ॥

### श्रीमद्वल्लभाचार्यकृता सुबोधिनी

ततः परिघादीन् गृहीतवान् । **चर्मासी** इति दीर्घः छान्दसः । चर्मादिपदमेकं तामरान्तम् । किं वहुना । यद्यदायुधमादधात्, देवतादिप्रेरणया, स्वतो वा, तत्सर्वमेवाच्छिनत् । एवं करणे सामर्थ्यं **विभुरिति** ॥ २९ ॥ ततोऽतियत्नेन सर्वभावेनागत इत्याह **रथादवप्लुत्येति** । केवलं खड्गपाणिः, न तु चर्मापि । जिघांसयेति जीवननिरपेक्षः आत्मानमेव भगवद्द्वारा मारयितुं कृष्णं परमानन्दमभ्यद्रवत् । युक्तमेव हि प्राकृतं परित्यज्य परमानन्दो ग्राह्य इति । तथापि शरीरं प्रियं सर्वस्यापीति कथं तथा समागत इति चेत्, तत्राह **पतङ्ग इव पावकमिति** । ते हि सूक्ष्माः अग्नावात्मानं पातयित्वा परमार्थदृष्ट्या कृतार्था भविष्यन्ति, बहिर्दृष्ट्या तु अग्निं मारयिष्याम इति बुद्धया प्रवृत्ताः स्वयं म्रियन्ते । तथायमपि प्रवृत्त इत्यर्थः ॥ ३० ॥ ततो भगवानक्लिष्टकर्मा तस्याभिलषितं कुर्वन्, 'ये यथा मां प्रपद्यन्त' इति च वाक्यं सत्यं कुर्वन्, तन्मारणार्थं प्रवृत्त इत्याह **तस्य चापतत** इति । तादृशस्यापि खड्गं चर्म च इषुभिः चिच्छेद । चर्मापि गृहीतं खड्गकोशो वा । तिलशश्छेदनं स्वशौर्यख्यापनार्थम् । तद्रुधिरमेव वा तत्र प्रवहज्जलात्मकं सत् तस्य परलोक उपतिष्ठेतेति तत्सतिलं कृतवानित्यर्थः । एवं धनुरघातकमिति निर्जीवान् छित्वा तद्वधार्थं खड्गं गृहीतवानित्याह **असिमादध** इति । एतस्मिन् हते जगति स्वरूपाज्ञानं निवर्तेतैव । यतोऽयं रुक्मी मुख्यो भगवद्द्विट् । अतो भगवान् तं हन्तुमुद्यतो जातः, न तु मारितवान् ॥ ३१ ॥ एवं स्वरूपाज्ञाननाशो मायाया हितकारी न भवतीति रुक्मिणी तन्निषेधार्थं प्रवृत्तेत्याह **दृष्ट्वेति** । रुक्मिणी प्रार्थयितुमुवाच । यद्यपि दुष्टो भवति, तथापि स्वार्थं तावत्करोतीति । यदर्थं यो यतते, तेन प्रतिकर्तव्यमिति तस्या उद्योगः । तत्रापि भ्राता, तस्यापि वधोद्योगः, तत्रापि वधात्पूर्वं स्वयं दृष्टः, स्वयं च रुक्मिणी तत्सम्बन्धिनी । पश्चाद्भयेन विह्वला जाता । क्रोधे कदाचिदात्मानमपि मारयेत्, लोके चापकीर्तिर्भवेत्, बलाद्भगवन्तमाहूय भ्रातरं मारितवतीति बहव एव पक्षाः भयहेतवो वर्तन्ते । अतो भयैः कृत्वा विह्वला स्वयमपि शुष्कानना जाता । अत्यन्तं विज्ञा उपायान्तरमलभमाना मत्पतिरयमिति भर्तुः पादयोः पतित्वा उक्तवती । चरणपातेन देहेन निवारणम् । विह्वलतया मनसा निवारणम् । वाचा च निवारयति । नन्वीश्वरो भगवान्, कथमेतन्निवारितो निवर्तेति चेत्, तत्राह **करुणमिति** । करुणं यथा भवति, तथा उवाच, ननु प्रौढया । किञ्च । पतिव्रताया न ह्यन्य उपायोऽस्ति सर्वत्र भर्तृप्रार्थनाव्यतिरेकेण, तदाह **सतीति** ॥ ३२ ॥

### श्रीसुबोधिनी–सारः

परिघादि यत् यदायुधमादत्त स रुक्मी तत्सर्वं हरिराच्छिनत् ॥ २९ ॥ ततोऽनन्तरं रथादवप्लुत्याध आगत्य क्रुद्धः खड्गपाणिर्जिघांसया हंतुमिच्छया कृष्णमभ्यद्रवत् । पतंगो जन्तुः पाव कमग्निमिव ॥ ३० ॥ आपततः तस्य खड्गं चर्म च इषुभिर्बाणैस्तिलशः छित्वा रुक्मिणं हंतुमुद्यतः प्रवृत्तस्तिग्मं तीक्ष्णमसिं खड्गमाददे जग्राह ॥ ३१ ॥ भ्रातुर्वधस्य हननस्योद्योगं दृष्ट्वा भयेन विह्वला सती रुक्मिणी भर्तुः श्रीकृष्णस्य पादयोः पतित्वा करुणं यथा भवति तथोवाच ॥ ३२ ॥

### विवरणटिप्पणी

**तस्य चापतत** इत्यत्र । **सलिलमिति** । खड्गचर्मणोस्तिलत्वसंपादनकथनेन रुधिरस्य सलिलत्वं सूचितम् । तथा च पितृत्वे तर्पणार्थं तिलोदकं संपन्नमिति भावः ।

### गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

ततः परिघादिकं यद्यदायुधं स रुक्म्यादत्त तत्सर्वं विभुः कृष्णः अच्छिनत् ॥ २९ ॥ ततस्तदनन्तरं खड्गः पाणौ यस्य स क्रुद्धो रुक्मी रथादवप्लुत्य जिघांसया हन्तुमिच्छया कृष्णमभ्यद्रवदित्यन्वयः । तत्र दृष्टान्तमाह—पतङ्ग इवेति । शलभो यथा पावकं नाशयितुमभिद्रवति तत्र च पतितः स्वयमेव नश्यति, तथाऽयमपि न भगवति कञ्चिदपकारं कर्तुं शक्तः, स्वयमेव विनङ्क्ष्यतीत्यर्थः ॥ ३० ॥ आपततः आगच्छतस्तस्य रुक्मिणः खड्गं चर्म खेटं च भगवान् इषुभिस्तिलप्रमाणशः छित्वा रुक्मिणं हन्तुमुद्यतः सन् तिग्मं तीक्ष्णमसिमाददे इत्यन्वयः ॥ ३१ ॥ तदा च भ्रातृवधार्थमुद्योगं प्रयत्नं दृष्ट्वा भयेन विह्वला सती रुक्मिणी भर्तुः पादयोः पतित्वा करुणं यथा भवति तथोवाचेत्यन्वयः ॥ ३२ ॥

### अन्वितार्थप्रकाशिका

परिघमिति । ततः परिघं पट्टिशं शूलं चर्म असिं शक्ति तोमरं चेति यद्यदायुधं स रुक्म्यादत्त तत्सर्वं विभुः कृष्णोऽच्छिनत् । हरिरित्यपि पाठः ॥ २९ ॥ तत इति । ततः खड्गपाणिः क्रुद्धो रुक्मी रथादवप्लुत्य जिघांसया हन्तुमिच्छया पतङ्गः पावकमिव कृष्णमभ्यद्रवत् ॥ तस्येति । आपततः आगच्छतस्तस्य रुक्मिणः खड्गं चर्म खेटं च भगवान् इषुभिस्तिलप्रमाणशः छित्त्वा रुक्मिणं हन्तुमुद्यतः सन् तिग्मं तीक्ष्णमसिमादत्त ॥ ३१ ॥ दृष्ट्वेति । भ्रातृवधार्थमुद्योगं प्रयत्नं दृष्ट्वा भयेन विह्वला सती रुक्मिणी भर्तुः पादयोः पतित्वा करुणं यथा भवति तथोवाच ॥ ३२ ॥

### श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्

अच्छिनत् चिच्छेद ॥ २९–३० ॥ उद्यतस्तत्परः अच्युत इत्यपिपाठः तिग्मं तीक्ष्णं असिं खड्गं ॥ ३१ ॥ करुणं यथा तथा ॥ ३२–३३ ॥

### भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

परिघमिति । ततः रुक्मी परिघं परिघातनं लोहबद्धहस्तप्रमाणलगुडमित्यर्थः । पट्टिशं लोहदण्डं, शूलं प्रसिद्धं, चर्मासी फलकसहितं खड्गं, शक्तिश्च तोमरश्च तौ, एवं परिघादीनां मध्ये, यत् यत् आयुधं आदत्त अगृह्णात्, हरिः श्रीकृष्णः, सर्वं सकलमपि, तत्तदायुधं, अच्छिनत् ॥ २९ ॥ ततः खड्गः पाणौ यस्य सः, अत्र खड्गश्चर्मण उपलक्षणम् । रुक्मी, रथात् अवप्लुत्य, जिघांसया हन्तुमिच्छया, पतङ्गः शलभः, पावकमग्निं प्रति इव, क्रुद्धः सन्, कृष्णं अभ्यद्रवत् ॥ ३० ॥ तस्येति । कृष्णः आपततः अभ्यागच्छतः, तस्य च रुक्मिणोऽपि, खड्गमसिं, चर्म च, इषुभिः तिलशः, छित्त्वा, रुक्मिणं, हन्तुं, उद्यतः सन्, तिग्मं असिं, आददे ॥३१॥ दृष्ट्वेति । तदा रुक्मिणी, भ्रातृवधोद्योगं स्वभ्रातृवधप्रयत्नं दृष्ट्वा, भयविह्वला भयकम्पिता सती, भर्तुः श्रीकृष्णस्य, पादयोः पतित्वा, करुणं यथा तथा, उवाच ॥ ३२ ॥

### कृष्णप्रिया

इस प्रकार रुक्मी ने, परिघ, पट्टिश, शूल, ढाल, तलवार, शक्ति, तोमर, आदि जितने अस्त्र-शस्त्र हाथ में उठाये उन सबको भगवान कृष्ण ने प्रहार करने के पूर्व में तोड़ दिये ॥ २९ ॥ तब निष्फल बना हुआ रुक्मी क्रुद्ध होकर हाथ में तलवार लेकर भगवान श्रीकृष्ण का वध करने की इच्छा से रथ से कूद पड़ा और इस प्रकार भगवान की ओर झपटा कि जैसे पतङ्गा अग्नि की ज्वाला की ओर लपकता हो ॥ ३० ॥ यहाँ भगवान् श्रीष्ण ने देखा कि रुक्मी मुझ पर आक्रमण करना चाहता है तब नाथ ने अपने तीव्र बाणों से रुक्मी की ढाल और तलवार को तिल-तिल करके टुकड़े करके काट दिया और रुक्मी को मार देने के लिये प्रभु ने कर कमलों में तीक्ष्ण तलवार उठायी ॥ ३१ ॥ भगवती रुक्मिणीजी ने देखा कि नाथ हाथ मे करवाल लेकर मेरे भाई रुक्मी को मारने के लिये जा रहे हैं तब स्वयं भयभीत होकर अपने निजनाथ श्रीकृष्णचन्द्रजी के श्रीचरणों में गिरकर आर्त्तनाद से निवेदन करती करुणस्वर में बोली ॥ ३२ ॥

**योगेश्वराप्रमेयात्मन् देवदेव जगत्पते । हन्तुं नार्हसि कल्याण भ्रातरं मे महाभुज ॥ ३३ ॥**

**श्रीशुक[1] उवाच**

**[2]तया परित्रासविकम्पिताङ्गया [3]शुचाविशुष्यन्मुखरुद्धकण्ठया ।**
**कातर्यविस्रंसितके[4]शमालया गृहीतपादः करुणो न्यवर्तत ॥ ३४ ॥**
**चैलेन बद्ध्वा तमसाधुकारिणं सश्मश्रुकेशं प्रवपन् व्यरूपयत् ।**
**तावन्ममर्दुः[5] परसैन्यमुद्धतं[6] यदुप्रवीरा नलिनीं यथा गजाः ॥ ३५ ॥**

**कृष्णान्तिकमुपव्रज्य ददृशुस्तत्र रुक्मिणम् ।**
**तथाभूतं हतप्रायं दृष्ट्वा संकर्षणो विभुः । विमुच्य [7]बद्धं करुणो भगवान् कृष्णमब्रवीत्[8] ॥३६॥**

---

१. बादरायणि–प्रा. पा. ।

२. इत्युक्त्वा जगृहे पादौ कृपया दीनभाषिणी । भ्रातरं त्रातुकामा सा कृष्णस्य जगतीपतेः ॥ विज. ।

३. शुचा च–विज. । ४. हेम–श्रीधर. वंशी. जीव. वीर. विज. । ५. तावत्समोर्युजितशत्रुसैन्या–विज. । ६. मद्भुतं–श्रीधर. वंशी. जीव. विज. विश्व. ; मुदधुतम्–वीर. । ७. बन्धं–वीर । ८. बलभद्र उवाच–वीर ।

### कर्दमक्षमा

अन्वयः—हे योगेश्वर ! हे अप्रमेयात्मन् ! हे देवदेव ! हे जगत्पते ! हे कल्याण ! हे महाभुज ! मे, भ्रातरम्, हन्तुम्, न, अर्हसि ॥ ३३ ॥ श्रीशुक उवाच, परित्रासविकम्पिताङ्गया, शुचा, अवशुष्यत्, मुखरुद्धकण्ठया, कातर्य,विस्रंसितकेशमालया, तया, गृहीतपादः, करुणः, न्यवर्तत ॥ ३४ ॥ असाधुकारिणम्, तम्, चैलेन, बध्वा, सश्मश्रुकेशम्, प्रवपन्, व्यरूपयत्, यदुप्रवीराः, गजाः, नलिनीम् यथा, तथा ( यदुप्रवीराः ) उद्धतम्, शरसैन्यम्, तावन्, मर्मदुः ॥ ३५ ॥ करुणः, विभुः, भगवान्, संकर्षणः, कृष्णान्तिकम्, उपव्रज्य, तथाभूतम्, हतप्रायम्, बद्धम्, रुक्मिणम्, दृष्ट्वा, विमुच्य, कृष्णम्, अब्रवीत् ॥ ३६ ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

परित्रासेन विकम्पितान्यङ्गानि यस्यास्तया शुचा शोकेनावशुष्यन्मुखं यस्याः रुद्धः कण्ठो यस्याः सा च सा च । तथा कातर्येण वैक्लव्येन विस्रंसिता हेममयी माला यस्यास्तया गृहीतौ पादौ यस्य सः ॥ ३४ ॥ सश्मश्रुकेशं सहितानि स्थाने स्थानेऽवशिष्टानि श्मश्रूणि केशाश्च यथा भवन्ति तथा तेनैवासिना प्रवपन्मुंडयन्व्यरूपयद्विरूपमकरोत् ॥ ३५ ॥ तथाभूतं हतप्रायमित्युत्तर वाक्येऽप्यनुषङ्गः ॥ ३६–३७ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

संबुद्धिषट्केन भगवत ऐश्वर्यं द्योतयन्ती निजभ्रातृवधानौचित्यमेवाह । योगेश्वर त्वमतर्क्यमहामहैश्वर्यः, असावीशितव्येष्वपि निकृष्टः । हे अप्रमेयात्मन्—त्वमप्रमेयस्वरूपोसि, अयं परिच्छिन्नेष्वप्येककीटतुल्यः । देवदेव—त्वं देवानामपि देवः, अयं त्वद्विमुख्यान्नरेष्वप्यधमः । जगत्पते—त्वं सर्वजगत्पालकोऽतो दुष्टोऽप्ययं जगद्वर्तित्वाद्रक्षितव्य एवेति भावः । तस्मात् हे कल्याण मंगलस्वरूप, हे महाभुज प्रबलमर्दकभुज इममममंगलं भुजबलरहितं हन्तुं नार्हस्येव । मे भ्रातरमिति—अनन्यगतिकाया मे भ्रातृधर्मरहितत्वेपि तद्वल्लोकदृष्ट्या प्रतीयमानमिति भावः ॥ ३३ ॥ तया रुक्मिण्या । करुणो दयालुः । न्यवर्तत—वधादिति शेषः । करुणः स्वप्रतिकूलेऽतिदुष्टे स्वतनुत्यागनिमित्तीभूतेऽपि भ्रातरि 'दयाया भगिनी मूर्तिः' इति लोकधर्मोक्तिभयादेव दयावत्यां रुक्मिण्यां सदयः स्वभावत एव करुणो विशेषतस्तया तथाभूतया गृहीतचरणत्वाच्च ॥ ३४ ॥ तं रुक्मिणम् । विरूपं सौंदर्यहीनम्, विलक्षणमुण्डनादित्यर्थः । यावत्कृष्णस्तं मुमुण्ड तावदित्यर्थः । नलिनीः सरसीः । 'नलिन्यब्जे सारसे च' इति । पुनरपि रुक्मिणीप्रातिकूल्यं मा कार्षीदिति तद्दुर्मदनिवर्तकेन पराभवस्मारकेण दुर्लक्षणेन केनचिदंकयित्वैव तमुपेक्षांचक्रे इत्याह—चैलेनेति । तदीयेनैव शिरोवेष्टनवस्त्रेण ग्रीवायां बद्ध्वा वामहस्तेन तच्चेलाग्रद्वयं विधृत्य दक्षिणहस्तधृतेनासिनोष्णीषं दूरीकृत्य सश्मश्रुकेशं यथा स्यात् स्थानेस्थाने केशगुच्छाः श्मश्रुगुच्छाश्च यथा तिष्ठेयुस्तथा प्रकर्षेण समूलकर्तनेन रुधिरमुद्गमय्य वपन्मुंडयन् व्यरूपयत् विरूपं कृतवान् ॥ ३५ ॥ तत्र कृष्णांतिके । तथाभूतं मुण्डितम् । उत्तरवाक्ये 'विमुच्य बद्धम्' इत्यत्रेत्यर्थः । विमुच्य स्वयमेव स्वहस्तेन कृष्णवामहस्ताच्चेलखण्डमपसार्येत्यर्थः । तथाभूतं प्राप्तवैरूप्यादिकम् । अत एव हतप्रायम् । ननु तादृशम्महापराधिनो विमोको न युक्तस्तत्राह—भगवान् सर्वज्ञः । रुक्मिणीवत्तज्जानाति तथा रुक्मिण्या दुःखं श्रीकृष्णस्य भाविलीलां चेत्यर्थः । अत एव करुणः श्रीकृष्णस्य प्रथमवैवाहिकसंबन्धाच्चेति भावः । कृष्णमित्युपलक्षणं रुक्मिणीं चेति ज्ञेयम् । लज्जाहेतो रुक्मिण्यां च कृष्णमेवाब्रवीदिति तस्यैव प्राधान्यात् ॥ ३६ ॥

### श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी

तथैवाह—योगेश्वर ! हे अतर्क्यैश्वर्य अप्रमेयात्मन् हे अपरिच्छिन्नमूर्त्ते ! अत एव हे देवदेव ! ब्रह्मादीनामप्याराध्य किञ्च जगत्पते सर्वेषामपि पालक अतः सर्वेषामपि त्वत्तस्तुच्छज्ञानबलमाहात्म्यत्वात्त्वया पालनीयत्वाच्च हन्तुं हननमात्राय नार्हस्येव तत्रापि हे कल्याणेति सर्वमङ्गलत्वात्सुतरां नार्हसि तत्रापि मे मम त्वदनन्यनाथाया भ्रातरं सुतरामेवेत्यर्थः । लीलाव्यवहारतश्च परमवीरस्त्वं नैतद्विधं क्षुद्रं हन्तुमर्हसीत्याह—महाभुजेति ॥ ३३ ॥ करुणस्तस्यां कृपावानित्यर्थः । यद्वा स्वभावतः करुणः विशेषतश्च तया तथाभूतया गृहीतपादः ॥ ३४ ॥ चैलेन तदीयेनैव शिरोवेष्टनवस्त्रेण प्रवपन् तेनैवासिनेति शेषः तच्चास्युचितक्षेपलाघवेनैव ज्ञेयम् । सश्मश्रुकेशमिति । श्मश्रुकेशाभ्यां सह वर्त्तमानं यथा स्यादित्येव विग्रहपूर्वकोऽर्थः बहुव्रीहिणैव क्रियाविशेषणत्वसिद्धेः टीकायां तु निर्गलितार्थ एव दर्शितः अत्र स इत्यध्याहार्यम् । यद्वा स श्रीकृष्णः श्मश्रुकेशमिति द्वन्द्वैक्यं व्यरूपयदिति तादृशविरूपतापि सम्भवतीति तथाच व्याख्येयं तावदिति । रुक्मिपराजयं यावदित्यर्थः । उद्धतं महासाहसादियुक्तमपि ॥ ३५ ॥ कृष्णान्तिकमित्यर्द्धकम् । ददृशुर्यदुप्रवीरा इत्येव ज्ञेयम् एवमत्रापि तथाभूतं हतप्रायमिति रुक्मिविशेषणत्वेन योज्यम् तथाभूतं प्राप्तवैरूप्यादिकम् अत एव हतप्रायं ननु तादृशमहापराधिनो विमोको नहि युज्यते तत्राह । भगवान् सर्वज्ञः रुक्मिणीवत् तत्तज्जानाति तथा रुक्मिण्याः दुःखं श्रीकृष्णस्य भाविलीलां चेत्यर्थः । अत एव करुणः श्रीकृष्णस्य प्रथमवैवाहिकसम्बन्धाच्चेति भावः । कृष्णमित्युपलक्षणं रुक्मिणीं चेति ज्ञेयं लज्जाहेतो रुक्मिणीं च कृष्णमेव दृष्ट्वाब्रवीदिति तस्यैव प्राधान्यात् ॥ ३६ ॥

**श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी**

योगेश्वर ! हे अतर्क्यैश्वर्य्य ! अप्रमेयात्मन् ! हे अपरिच्छिन्नमूर्त्ते, अतएव हे देवदेव ! श्रीब्रह्मादीनामप्याराध्य ! एवमैश्वर्य्येण स्वरूपेण पूज्यतमत्वेन च परमेश्वरत्वमुक्तम् । किञ्च, भुङ्क्ते जगत् संहरतीति भुजः, महांश्चासौ भुजश्चेति महाप्रलयकर्त्तेत्यर्थः, अतस्तुच्छातितुच्छमेनं हन्तुं नार्हस्येव । किञ्च, जगत्पालकत्वादपि नैवार्हसीत्याह—हे जगत्पते इति । नन्वत एव दुष्टोऽयं वध्यः, तत्राह—हे धर्म्मज्ञेति । बन्धुवधो न कार्य्य इति सतां धर्म्मं त्वं जानास्येवेत्यर्थः । बन्धुत्वमेव दर्शयति—मे भ्रातरमिति । 'कल्याण' इति पाठे जगन्मंगलत्वान्नार्हस्येवेत्यर्थः । अथवा आद्यसम्बोधनाभ्यामैश्वर्य्येण स्वरूपेण च दुर्ज्ञेयत्वमुक्तम्, अत एव देवादिभिरपि ज्ञातुमशक्यैः केवलं त्वं तप आदिना आराध्यस इत्याह – हे देवदेवेति । अतस्त्वां ज्ञातुमसमर्थेनानेन कृतमपराधं सर्वं क्षन्तुमर्हसीति भावः । किञ्च, महाबलत्वादतितुच्छबलमेनं हन्तुं नार्हस्येवेत्याह—महाभुजेति । अन्यत् समानम् ॥ ३३ ॥ परीत्यादिविशेषणत्रयेण महाभयशोकवैकल्यैः परमं दैन्यमुक्तम्, तत्र च यथोत्तरमेषां श्रैष्ठ्यम्, करुणस्तस्यां कृपावानित्यर्थः । यद्वा, स्वभावतः करुणो विशेषतश्च तथाभूतया तरा गृहीतपादः, अत एव न्यावर्त्तत तद्वधात् ॥ ३४ ॥ चैलेन खण्डशो विदारितेन तदीयवस्त्रेण, पाठान्तरं तेषां सम्मतम्, असिनेति व्याख्याने पर्य्याप्तेऽपि तेनेति व्याख्यानात् प्रसह्य वपन्, यतोऽसाधुकारिणं दुष्टकर्म्माचरणशीलम्, यावद्रुक्मिणो युद्धादिकं तावत्, इति तेषां परसैन्यमर्द्दनस्य श्रीकृष्णेन रुक्मि-निर्ज्जयादेश्चैककदैव समाप्त्या तेषां तेन संगति-समावेशः सिद्धः । परस्य रुक्मिणः सैन्यं तेन पुरा दूरतोऽवस्थापितमुद्धतममर्य्यादमनन्तमित्यर्थः, यद्वा, गर्वितं महासाहसादियुक्तमपि यदुपु प्रवीरा वीरोत्तमाः श्रीबलदेवादयो ममर्दुश्चूर्णयामासुः । तच्चानायासेनैवेति दृष्टान्तेन सूचयति—नलिनीमिति ॥ ३५ ॥ तथाभूतं प्रवपनादिना प्राप्तवैरूप्यादिकम्, संकर्षण इति स्नेहभरादिना श्रीकृष्णेन सहापृथग्भावाभिप्रायेण किञ्च, विसेषेणाग्रजतया भवतीति विभुः अतो विशेषेण सस्नेह वाक्यादिनामुक्त्वा । ननु तादृशमहापराधिनो विमोको न खलु युज्यते, तत्राह—करुण इति, भगवान् सर्व्वज्ञ इति, श्रीकृष्णं प्रतीदृशे परुषवाक्ये गदिते सत्येव रुक्मिणं प्रति स्नेहाभित्यक्तया बध्वाः शोकशान्तिः स्यादित्यादिकं जानन्नित्यर्थः ॥ ३६ ॥

**श्रीसुदर्शनसूरिकृतशुकपक्षीयम्**

करुणः । कृपावान् व्यरूपयत् वैरूप्यमायादयन् प्रावयत् श्मश्रुकेशशून्यमकरोत् वैरूप्यं हि वपतस्तस्मादभूदित्यर्थः ॥ ३५-३७ ॥

**श्रीमद्वीरराघवाचार्यकृता भागवतचन्द्रचन्द्रिका**

उक्तिमेवाह—योगेश्वरेति । हे योगेश्वर ! योगनिर्ग्राहक योगीश्वरेति पाठे योगिहृत्कमलाभिव्यक्त तन्नियन्तश्चेत्यर्थः । योगपरिशुद्धमनोग्राह्यस्य तव स्वरूपस्वभावादिकं कथमयं देहाभिमानी विन्द्यादतोऽयं मूढः केवलमनुग्राह्य एवेति तत्सम्बोधनाभिप्रायः नन्वसाधुलोकदमनार्थमवतीर्णोऽहमेनं निगृह्णाम्येवेत्यतः सम्बोधयति हे जगत्पते ! शरणागतजगत्पालक नायं शरणागतोऽपि तु कृतापराध एवेत्यत आह मे शरणागताया मम भ्रातरं हन्तुं नार्हसीति शरण्यत्वोपयुक्तं परत्ववात्सल्यसौशील्यादिकमपि सम्बोधनेनैवाह देवानां ब्रह्मादीनामपि देव ! अप्रमेयात्मन् ! अपारवात्सल्यसौशील्यादिस्वभावस्वरूप ! लोकदृष्ट्याधुना तवैतद्वधो नोचित इति सम्बोधयति कल्याणेति । आरब्धे विवाहरूपे कल्याणेऽपरिसमाप्त एवान्तरा मद्भ्रातृवधोऽनुचित इत्यर्थः । अहो दृष्टं सखड्गस्य त्वद्भुजस्य सौन्दर्य्यमिति साक्षेपं सम्बोधयति महाभुजेति ॥ ३३ ॥ तयेति । परित्रासेन परितो भयेन विशेषतः कम्पितान्यङ्गानि यस्याः शुचा शोकेनावशुष्यन् मुखं यस्याः रुद्धः कण्ठो यस्याः सा च सा कातर्य्येण वैक्लव्येन विभ्रंसिता हेममयी माला यस्याः तया रुक्मिण्या गृहीतौ पादौ यस्य सः करुणः करुणावान् न्यवर्त्तत रुक्मिवधादिति शेषः ॥ ३४ ॥ चैलेनेति । ततस्तमसाधुकारिणं रुक्मिणं चैलेन तद्वस्त्रेण वद्ध्वा सश्मश्रुकेशं सहितानि स्थाने स्थानेऽवशिष्टानि श्मश्रूणि केशाश्च यथा भवन्ति तथा तेनैवासिना प्रवपन् मुण्डयन् विरूपमकरोत् नलिनीं यथा गजा इति दृष्टान्तेनानायासो खेलनमात्रं चाभिप्रेतम् ॥ ३५ ॥ कृष्णान्तिकमिति । ददृशुर्यदुप्रवीरा इति कर्तृपदानुषङ्गः भगवान् सङ्कर्षणस्तथाभूतं विरूपतामापन्नं हतप्रायं हततुल्यं रुक्मिणं दृष्ट्वा स करुणो बन्धं विमुच्य कृष्णमब्रवीत् ॥ ३६ ॥

**श्रीविजयध्वजतीर्थकृता पदरत्नावली**

परित्रासेन परितो भयेन कम्पितमङ्गं यस्याः सा तथा तया शुष्यन् मुखा च रुद्धकण्ठा च तया करुणः करुणाकरः।३४। प्रवपन्वपनं मुण्डनं कुर्वन् व्यरूपयत् सौन्दर्यहीनमकरोत् ॥ ३५-३६ ॥

**श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः**

योगेश्वरेत्यादि । हन्तुं नार्हसि मे भ्रातरम्, मद्भ्रातृत्वमेवास्यावधे कारणम् नान्यत् किमपीति भावः । लक्ष्मीभ्रातरं कौस्तुभं वक्षसि विभर्षि कथमयं हन्तव्य इति गूढोऽभिप्रायः यतस्त्वं योगेश्वरः तेन तवैतत् कृतद्वेषेण किम् द्वेषेण योगेश्वर-

स्यापि क्षोभो भवतीत्याशङ्क्याह—हे अप्रमेयात्मन्! अप्रमेयविग्रह यादवत्वात् प्रमेय एवाहमित्याह—देवदेव! देवानां श्रीनारायणदीनामपि देव तथाभूतश्चेदहम् तत् कथं नरलोकवर्तीत्याह—जगत्पते! जगन्नाथ जगत् पतित्वात् जगत एव हितार्थमवतीर्णोऽसीत्यर्थः ॥ ३३ ॥ श्रीशुकदेवस्तत्कालीनां तस्याः कातर्यमुद्रां स्मृत्वा सामोदमाह—तया परित्रासेत्यादि। भगवानपि तस्यास्तथाविधकातर्यावलोकनकौतुकाय तद्वाक्श्रवणाय च तथाध्यवसितम्। भ्रातुर्विरूपकरणञ्च तस्याश्चितः परीक्षणार्थमेव ॥ ३५–५२ ॥

### श्रीनाथचक्रवर्तिपादविरचिता चैतन्यमतमञ्जूषा

हन्तुं नार्हसि मे भ्रातरं मद्भ्रातृत्वादस्य वधो न युक्तः, लक्ष्मीभ्रातरं कौस्तुभं वक्षसि बिभर्ति, अयं कथं हन्यते? ॥३३॥ श्रीशुकस्तस्यास्तत्कालीनां कातर्यमुद्राशोभां स्मृत्वा सामोदमाह—तयेत्यादि ॥ ३४–५१ ॥

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी

योगेति। त्वमतर्क्यमहामहैश्वर्यः असावीशितव्येष्वपि मध्ये निकृष्टः त्वमप्रमेयस्वरूपः अयं परिच्छिन्नेष्वपि मध्ये एककीटतुल्यः त्वं देवानामपि देवः अयं मनुष्येष्वप्यधमस्त्वद्वैमुख्यात् त्वं सर्वजगत्पालकः अयं जगद्वर्त्तित्वाददुष्टोऽप्ययं पालनीय एवेति भावः। तस्मात् हे कल्याण! अकल्याणं हे महाभुज! भुजवलरहितमिमं न हन्तुमर्हसि ॥ ३३ ॥ करुणः स्वप्रतिकूलेऽतिदुष्टे स्वतनुत्यागनिमित्तीभूतेऽपि भ्रातरि दयाया भगिनी मूर्त्तिरिति लोकधर्मोक्तिभयादेव दयावत्यां रुक्मिण्यां सदयः ॥ ३४ ॥ पुनरपि रुक्मी प्रातिकूल्यं माकार्षीदिति तद्दुर्मदनिवर्त्तकेन पराभवस्मारकेण दुर्लक्षणेन केनचिदङ्कयित्वैव तमुपेक्षां चक्रे इत्याह—चैलेन ग्रीवायां बद्ध्वा वामहस्तेन तच्चैलाग्रद्वयं विधृत्य दक्षिणहस्तधृतेनासिना उष्णीषं दूरीकृत्य सश्मश्रुकेशं च यथा स्यात् स्थाने स्थाने केशगुच्छाः श्मश्रुगुच्छाश्च यथा तिष्ठेयुस्तथा प्रकर्षेण समूलकर्त्तनेन रुधिरमुद्गमय्य वपन् मुण्डयन् व्यरूपयत् विरूपमकरोत् ॥ ३५ ॥ विमुच्य स्वयमेव हस्तेन कृष्णवामहस्ताच्चैलखण्डमपसार्य्येत्यर्थः ॥ ३६ ॥

### गूढार्थदीपिनी

सम्बुद्धिषट्केन भगवत ऐश्वर्यं प्रदर्श्य स्वभ्रातृवधानर्हत्वं सूचयति ॥ ३३ ॥ तया रुक्मिण्या गृहीतपादो भगवान् न्यवर्तत रुक्मिणो वधादिति शेषः। शुचा शोकेन अवशुष्यता मुखेन रुद्धः कण्ठो यस्यास्तया कातर्येण वैक्लव्येन विगलिता हेममाला यस्याः ॥ ३४ ॥ सश्मश्रुकेशं यथा स्यात्तथा प्रवपन् मुण्डयन्। यावत्कृष्णो मुमुण्ड तावदिति योज्यम् ॥ ३५ ॥ कृष्णेति सार्द्धम्। तथाभूतं मुण्डितम् ॥ ३६ ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

शुचा शोकेन शुष्यन्मुखं यस्याः रुद्धः कण्ठो यस्याः सा च सा च तया कातर्य्यं वैक्लव्यन्तेन विस्रंसिता हेममाला यस्यास्तया ॥ ३४ ॥ तमसाधुकारिणं रुक्मिणं चैलेन बद्ध्वा सश्मश्रुकेशं सहितानि स्थाने स्थानेऽवशिष्टानि श्मश्रूणि केशाश्च यथा भवन्ति तथा तेनैवासिना प्रवपन् व्यरूपयत् विरूपमकरोत् ॥ ३५–३७ ॥

### श्रीसत्यधर्मकृता श्रीभागवतटिप्पणी

पतङ्गः शलभः पावकमग्निमिव। अनेन कदाचित्किञ्चिद्दग्धपक्षोऽजीवन्पतङ्गो दार्ष्टान्तिकानुरोधेन दृष्टान्त इति ज्ञेयम्। पतङ्गः शलभे शालिप्रभेद इति विश्वः। खड्गं चर्म च शरैस्तिलशः ॥ ३३ ॥ छित्वाऽसि नन्दकं रुक्मिणं हन्तुमुद्यतः पत्युः पादयोः पतित्वा करुणं यथा स्यात्तयोवाच ॥ ३४ ॥ कल्याण मङ्गलमूर्ते ॥ ३५ ॥ इत्युक्त्वा कृपणा कृपाणपाणेः पादौ जगृहे। अनेन पूर्वं पतित्वा वचनकाले त्यक्त्वा पुनरपि जगृह इति द्योत्यते। भ्रातरं प्रातुकामा। तुंकामेति मलोपः ॥ ३६ ॥

### श्रीमद्वल्लभाचार्य्यकृता सुबोधिनी

ननु मारणार्थं समागतः, कथं निवार्यत इति चेत्, तत्राह **योगेश्वरेति**। भगवान् योगस्य नियन्ता अनेकानेवोपायान् जानाति, किं वधेनेति भावः। अनेनैव वाक्येन भगवता वधानुकल्पो मुण्डनं कृतम्। तच्च रुक्मिण्या मदुक्तमेव कृतमिति ज्ञात्वा, मुण्डनमनिवार्य, वाचाप्यनुक्त्वा, अन्तरेव तापं कृतवती। तदर्थं बलभद्रस्य सान्त्वनमित्यनवद्यम्। अनेन मारयितुं समागतः भ्राता तव मारयेच्चेत्, तदा तव सुखं भवेदित्युपालम्भोऽपि निवारितः। किञ्च। **अप्रमेयात्मन्निति**। प्रमातुमप्ययोग्य आत्मा स्वरूपं यस्य, किं पुनः क्रियाविषयो भविष्यतीति शङ्कापि निवारिता। क्रिययैवानिष्टशङ्केति। किञ्च। देवानामपि देवस्त्वम्, देवा एवामराः, तत्र तव समागतस्यापि का चिन्ता भवेत्। किञ्च। **जगत्पत** इति। तस्यापि त्वं पतिः रक्षकः, अतः शिक्षैव कर्तव्या। अत एव हन्तुं नार्हसि, सुतरामिदानीम्। **कल्याण** अद्यैव कृतविवाहः, तत्रापि मे भ्रातरम्। शालको हि विवाहदिवसे

मान्य इति। पश्चादपकारं करिष्यतीति चेत्, तत्राह **महाभुजेति**। महान् भुजः क्रियाशक्तिर्यस्येति सम्बोधनेन समाधानार्थं सामर्थ्यं स्मारितम् ॥ ३३ ॥ एवं विज्ञापितः वधान्निवृत्तो वधानुकल्पं कृतवानित्याह **तया परित्रासेति**। परित्रासेन विकम्पितमङ्गं यस्याः। शोकेन च शुष्यन्मुखं रुद्धश्च कण्ठो यस्याः। कातरतया विस्रंसिताः केशाः मालाश्च यस्याः। गुणत्रयकार्यं तस्यां पूर्णं जातमित्युक्तं भवति। परित्रासः सत्त्वस्य, शोकस्तमसः, कातरता रजस इति। एवं विद्यमानानां गुणानामपगमात् केवलं सा दीनेति तादृश्या गृहीतपादः करुणावानेवं न्यवर्तत ॥ ३४ ॥ वधानुकल्पो हि वपनं मुख्यम्। द्रविणादानं च। स्थानान्निर्यापणं तु तेनैव प्रतिज्ञातम्। अतस्तस्यैव चैलेन चोरवत्तं बद्ध्वा। स हि रुक्मिणीं नेतुमागत इति चोरदण्डः। तं प्रसिद्धम्। प्रसिद्धस्य तावतैव महती पीडा भवतीति। ततः असाधुकारिणं घातकं सश्मश्रुकेशं श्मश्रुकेशसहितं तं प्रकर्षेण वपन्, सेवकेन प्रेरणया विकृतरूपं कृतवान्। क्वचित्केशाः श्मश्रूणि च रक्षिताः, क्वचिन्मुण्डिताः, यथैव विकृतो भवति। प्रायेण एवंरूपः स सर्वदेव स्थितो यावन्मरणम्। अन्यथा भगवानेवं न कुर्यात्। यावद्भगवान् विरूपं करोति, तावत्तस्य परस्य शत्रोरद्भुतं सैन्यम्। न केवलमेतद्दोषेणैव सैन्यं हृतम्, किन्तु सैन्यमपि दुष्टमिति तथा कृतवन्तः। अत्रत्या अपि समर्था इत्याह **यदुप्रवीरा** इति। अनायासेन मारणे दृष्टान्तः **नलिनीं यथेति**। बहवो वीराः गदसङ्कर्षणादयः, एका चाक्षौहिणी, अतो नलिनीमित्येकवचनम् ॥ ३५ ॥ एवं भगवत्कृतं रुक्मिनिग्रहणं निरूप्य भगवतः सकाशात् ज्येष्ठस्य बलभद्रस्य कृतं सान्त्वनमाह, सार्धैरेव सप्तदशभिः, **कृष्णान्तिकमिति**। मुख्यात्र रुक्मिणी समाधेया। मध्यमो रुक्मी। प्राकृताः सहायराजानः। अतः सेनया भगवतोऽपि कनिष्ठया ते हताः, भगवता च मध्यमः, भगवज्ज्येष्ठेन च सान्त्वनमुक्तमिति युक्तमत्र प्रकरणत्रयम्। सर्व एव तद्बलं हत्वा समागताः कृष्णान्तिकमुपव्रज्य विकृतं रुक्मिणं ददृशुः। **तथाभूतमिति**। विशेषतो न वक्तव्यम्, सोऽपि मूर्च्छितप्रायस्तिष्ठतीति। वधानुकल्पं निरूपयितुमाह **हतप्रायमिति**। विशेषतो रामस्तं तथाभूतं दृष्ट्वा सम्यक कर्षणकार्यत्वात् सशिखवपनं च कर्मानधिकारं सम्पादयतीति, तत्रापि सङ्कर्षण एव कर्तेति, भगवतः तत् कर्तव्यं न भवतीति, स्वयं सङ्कर्षणः हन्तुमपि विभुः समर्थः। भगवता बद्धं विमुच्य कृष्णमब्रवीत्। ननु कथमेवं भगवत्कृतमन्यथा कृतवान् तत्राह **करुण** इति। करुणा हि भगवता दुःखं प्रापितेष्वेव पुरुषेषु कृपया प्रतीकारार्थं यतन्ते। ननु तथापि भगवन्तं पृष्ट्वा तथा विधेयम्, किमिति स्वयमेव मोचितवान्, तत्राह **भगवानिति**। बलभद्रे आविर्भूतो भगवानेव मोचितवानित्यर्थः। एतदन्ता मध्ये सङ्कर्षणकथा, विशिष्टा त्वग्रे वक्तव्या। अत एव **कृष्णमब्रवीत्**। अत्र कृष्णपदं 'कृष्णो द्वितीयः केशवः संबभूवे'ति कृष्णपरम्, अतो ज्येष्ठत्वान्नानौचित्यम् ॥ ३६ ॥

## श्रीसुबोधिनीसारः

हे योगेश्वर हे अप्रमेयात्मन् हे देवदेव हे जगद्गुरो हे कल्याण हे महाभुज मे मम भ्रातरं हंतुं त्वं नार्हसि ॥ ३३ ॥ शुकोक्तिः। परित्रासेन महाभयेन विकंपितान्यंगानि यस्यास्तथा शुचा शोकेनावशुष्यन्मुखं यस्या रुद्धः कण्ठो यस्याः सा च सा च तथा कातर्येण वैक्लव्येन विस्रंसिताऽधः पतिता हेम्नः सुवर्णस्य माला यस्यास्तथाभूतया तया गृहीतौ पादौ यस्य स करुणो दयालुः कृष्णो न्यवर्त्तत निवृत्तोऽभूत् ॥ ३४ ॥ असाधुकारिणं सारविघ्नं न चाचरेदिति शांतिपर्वोक्तेर्विवाहभंगकर्त्तारं तं रुक्मिणं सश्मश्रुकेशं श्मश्रुकेशैः सहितं प्रवपन् मुंडयन् विरूपमकरोत् चैलेन वस्त्रेण बद्धा तावत् अद्भुतं परसैन्यं यदुप्रवीरा ममर्दुः चूर्णीचक्रुः नलिनीं गजा हस्तिन इव ॥ ३५ ॥ कृष्णस्यांतिकं समीपमागत्य तत्र स्थाने रुक्मिणं यादवा ददृशुः। तथाभूतं मुंडितविरूपं मृतप्रायं दृष्ट्वा विभुः समर्थो भगवान् रामः करुणो बद्धं रुक्मिणं विमुच्य कृष्णमाह ॥ ३६ ॥

## गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

उक्तिमेवाह—योगेश्वरेति। 'कल्याणगुणपूर्णत्वात्' इति हेतुं सूचयन्ती सम्बोधयति—हे कल्याणेति। मे भ्रातरं स्वश्यालं हन्तुं नार्हसि। 'जगत्पालकस्य तव जगदन्तर्गतस्यैतस्यापि पालनमेवोचितम्' इत्याशयेन सम्बोधयति—जगत्पत इति। पालने सामर्थ्यं सूचयन्ती सम्बोधयति—महाभुजेति। ननु 'अस्य पालने कृतेऽयं मामेव हन्यात्' इत्याशङ्क्य 'ब्रह्मादयो देवा अप्यमरा भवन्ति, तेषामपि पूज्ये त्वयि का तच्छङ्का' इत्याशयेन सम्बोधयति—देवदेवेति। 'यो हि ज्ञानाविषयः तत्र का हननक्रियाविषयत्वशङ्का' इत्याशयेन सम्बोधयति—अप्रमेयात्मन्निति। 'यद्दत्तसामर्थ्येन योगिनोपि स्वच्छन्दमृत्यवो भवन्ति तत्र का मृत्युशङ्का' इत्याशयेन सम्बोधयति—योगेश्वरेति ॥ ३३ ॥ परित्रासेन परितो भयेन विकम्पितान्यङ्गानि यस्यास्तया, शुचा शोकेनावशुष्यत् मुखं यस्याः रुद्धः कंठो यस्याः सा च तया, कातर्येण वैक्लव्येन विस्रंसिता हेममयी माला यस्यास्तया रुक्मिण्या गृहीतौ पादौ यस्य सः यतः करुणः कृपापूर्णः अतः रुक्मिवधान्न्यवर्तत ॥ ३४ ॥ ततस्तं रुक्मिणं चैलेन तद्वस्त्रेण बध्वा सश्मश्रुकेशं सहितानि स्थाने स्थाने अवशिष्टानि श्मश्रूणि केशाश्च यथा भवन्ति तथा तेनैवासिना प्रवपन् मुण्डयन् व्यरूपयत् विकृतरूपमकरोत्। तावत् हस्त्यश्वादिभिरद्भुतं परस्य शत्रोस्तस्य सैन्यं यदुप्रवीरा ममर्दुः। मर्दने अनायासत्वं द्योतयन् दृष्टान्तमाह—नलिनीं यथा गजा इति। ते च कृष्णसमीपमागत्य तत्र तथाभूतं विकृतरूपं, अत एव हतप्रायं रुक्मिणं ददृशुः। सङ्कर्षणश्च तं बद्धं दृष्ट्वा बन्धनाद्विमुच्य श्रीकृष्णमब्रवीत्। बन्धविमोचने हेतुमाह—करुण इति। भगवदाज्ञापने ज्येष्ठत्वेन योग्यतां सूचयन्नाह—विभुरिति। 'ज्येष्ठत्वेपि भगवदाज्ञापने कथं योग्यता' इत्याशङ्क्य तदभेदमाह—भगवानिति ॥ ३५–३६ ॥

### अन्वितार्थप्रकाशिका

योगेति। हे योगेश्वरेत्याद्याः पट् सम्बुद्धयः। स्वभ्रातुर्निकृष्टत्वसूचनेन वधानर्हत्वपरा तथा च त्वं योगवतामीश्वरः अयमीशितव्येष्वपि निकृष्टः त्वमप्रमेयः अयं कीटतुल्यः त्वं देवदेवोऽयं मनुष्येष्वपि त्वद्वैमुख्यादधमः त्वं जगत्पतिः अयं जगत्यप्यधमः त्वं कल्याणोऽयमकल्याणः त्वं महाभुजोऽयमबलः अत इमं मे भ्रातरं हन्तुं नार्हसि ॥ ३३ ॥ तयेति। परित्रासेन परितो भयेन विकम्पितान्यङ्गानि यस्यास्तया शुचा शोकेनावशुष्यत् मुखं यस्याः रुद्धः कण्ठो यस्याः सा च तया कातर्येण वैक्लव्येन विस्रंसिता हेममयो माला यस्यास्तया रुक्मिण्या गृहीतौ पादौ यस्य सः यतः करुणः कृपापूर्णः अतः रुक्मिवधान्न्यवर्त्तत ॥ ३४ ॥ चैलेनेति। ततः असाधुकारिणमपराधिनं तं रुक्मिणं चैलेन तद्वस्त्रेण गले भुजयोश्च बद्ध्वा वामहस्तेन तच्चैलाग्रद्वयं धृत्वा दक्षिणहस्तधृतेन असिना उष्णीषं दूरीकृत्य सश्मश्रुकेशं सहितानि स्थाने-स्थाने अवशिष्टानि श्मश्रूणिः श्मश्रुगुच्छाः केशाश्च यथा भवन्ति तथा। यद्वा। सः कृष्णः श्मश्रुकेशमिति द्वन्द्वैक्यम्। तेनैवासिना प्रवपन् मुण्डयन् व्यरूपयत् विकृतरूपमकरोत्। तावत् हस्त्यश्वादिभिरद्भुतम्। उद्धतमिति पाठे साहसादियुतमपि परस्य शत्रोस्तस्य सैन्यं यथा नलिनीं गजास्तथा यदुप्रवीरा ममर्दुः। गुण आर्षः ॥ ३५ ॥ कृष्णेति अर्द्धम्। ते यदुप्रवीराः कृष्णान्तिकम् उपव्रज्य तत्र रुक्मिणं ददृशुः। तथाभूतं हतप्रायमित्यनयोरत्राप्यपकर्षः। तयेति। विभुः करुणः दयालुः भगवान् संकर्षणः तथाभूतं विकृतरूपम् अत एव हतप्रायं मारिततुल्यं रुक्मिणं बद्धं दृष्ट्वा विमुच्य च कृष्णमब्रवीत् ॥ ३६ ॥

### श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्

परित्रासेन विकंपितानि अङ्गानि यस्यास्तया। शुचा शोकेन अवशुष्यन् मुखं यस्याः। रुद्धः। कंठो यस्याः सा चासौ चान्वतया कातर्येण व्याकुलत्वेन विस्रंसिता विगलिता हेममयी माला यस्यास्तया गृहीतपादः ॥३४॥ चैलेन तद्वस्त्रेण। श्मश्रुकेशैः सहितं यथा तथा प्रपवन्मुंडयन्। व्यरूपयत विरूपमकरोत् नलिनीं पद्मवल्लीं ॥ ३५-३६ ॥

### भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

उक्तिमेवाह। योगेश्वरेति। हे योगेश्वर योगनिर्वाहक, योगीश्वरेति पाठे योगिहृत्कमलाभिव्यक्त, गोगपरिशुद्धमनोग्राह्यस्य तव स्वरूपस्वभावादिकं कथमयं देहाभिमानी विद्यादतो मूढोऽयं केवलमनुग्राह्य एवेति तत्संबोधनाभिप्रायः। नन्वसाधुलोकदमनार्थमवतीर्णोऽहमेनं निगृह्णाम्येवेत्यतः सम्बोधयति। हे जगत्पते शरणागतजगत्पालक, नायं शरणागतोऽपि तु कृतापराध एवेत्यत आह। मे मम, भ्रातरं, हन्तुं, न अर्हसि। अयं शरणागतो न भवत्यथापि शरणागताया मम भ्रातृत्वान्नैनं हन्तुं त्वं योग्य इति भावः। सांप्रतं भगवतः परत्वसौशील्यादिकमपि सम्बोधनेनैवाह। हे देवदेव देवानां ब्रह्मादीनामपि देव, हे अप्रमेयात्मन्, अपारवात्सल्यसौशील्यादिस्वभावस्वरूप, लोकदृष्ट्याऽपि अधुना तवैतद्वधो नोचित इति सम्बोधयति। हे कल्याण आरब्धे विवाहरूपेऽस्मिन् कल्याणकर्मण्यपरिसमाप्त एवान्तरा मद्भ्रातृवधो नोचित इत्यर्थः। अहो सखङ्गस्य त्वद्भुजस्य सौन्दर्यं दृष्टमिति सम्बोधयति हे महाभुजेति ॥ ३३ ॥ तयेति। परित्रासेन परितो भयेन विकम्पितान्यङ्गानि यस्यास्तया, शुचा शोकेन अवशुष्यत् मुखं यस्याः रुद्धः कण्ठो यस्याः सा चासौ सा तया, कातर्येण वैक्लव्येन विस्रंसिता हेममाला सुवर्णमयी स्रग्यस्यास्तया, तया रुक्मिण्या, गृहीतौ पादौ यस्य सः, करुणः करुणावान् कृष्णः, न्यवर्त्तत। रुक्मिवधान्निवृत्तोऽभवत् ॥ ३४ ॥ चैलेनेति। ततः असाधुकारिणं स्वहननप्रवृत्तिरूपासाधुकर्मकारिणं, तं रुक्मिणं, चैलेन पट्टकाख्यतदीयवसनेनैव, बद्ध्वा, सहितानि स्थाने-स्थाने अवशिष्टानि श्मश्रूणि केशाश्च यथा भवन्ति तथेति सश्मश्रुकेशं, प्रवपन् तेनैवासिना मुण्डयन्, व्यरूपयद्विरूपमकरोत्। तावत्, यदुप्रवीरा गदसंकर्षणादयो यादवश्रेष्ठाः, गजाः, नलिनीं यथा तथा, अद्भुतं परसैन्यं, ममर्दुः। नलिनीं यथा गजा इति दृष्टान्तेनानायासः खेलनमात्रं चाभिप्रेतम् ॥ ३५ ॥ कृष्णेति। यदुवीरा इति कर्तृपदस्यानुषङ्गः। कृष्णान्तिकं उपव्रज्य, तत्र तथाभूतं चैलबद्धं विरूपितं चेत्यर्थः। अत एव, हतप्रायं रुक्मिणं, ददृशुः। ततः विभुर्महासमर्थः, संकर्षणो बलभद्रः, दृष्ट्वा तं तथाविधं कृतं विलोक्य, यतः स्वयं भगवान्, अतः, करुणः बद्धं विमुच्य, पट्टककृतं तद्बन्धनं निवर्त्य, कृष्णं अब्रवीत् ॥ ३६ ॥

### कृष्णप्रिया

श्रीरुक्मिणीजी ने प्रभु के चरण कमलों को ग्रहण करके कहा, हे योगेश्वर! हे देवाधिदेव! हे जगत्पते! हे अकल स्वरूप आप की इच्छाओं को कोई भी जान सकता नहीं है। हे महाभुज! हे अप्रमेय बल नाथ! हे परम कल्याण! मेरे भैया को मारना आपके लिये योग्य नहीं है ॥ ३३ ॥ श्रीशुकदेवजी ने कहा राजन् परीक्षित! श्रीरुक्मिणीजी के प्रत्येक अङ्ग भय के मारे थर-थर काँप रहा था। उत्कट शोक से मुखाम्बुज सुख गया था, कण्ठावरोध भी हो रहा था। विह्वलता वश एवं कातरता परवश केश विखर गये और भयविह्वलता वश कण्ठ की माला-सुवर्णमाला रत्नमाला भी सरक गई थी श्रीठाकुरजी के श्रीचरणों को पकड़ लिये थे। भगवान तो करुणानिधान हैं इसलिये दया से द्रवित हो गये और रुक्मी का वध करने का विचार

बदल दिया ॥ ३४ ॥ लेकिन रुक्मी तो अपने दुष्ट निर्णय से नहीं टला, उसने भगवान का बध करने का निर्णय नहीं बदला तब परवश होकर परम दयालु भगवान ने अनुचित कार्य तत्पर रुक्मी को उसी के दुपट्टे से बाँध दिया और उसकी दाढ़ी-मूंछ और मस्तक के कितने भाग के केशों को मूंड़कर उसे कुरूप बना दिया। इधर यदुवंशी वीरों ने उसी काल में शत्रु की सबल एवं अद्भुत सेना को नष्ट भ्रष्ट कर डाला-जैसे मदोन्मत्त हाथी कमल वन को कुचल देते हैं ॥ ३५ ॥ जब वीरवृन्द एवं श्रीसंकर्षण भगवान सैन्य नाश करके जहाँ श्रीकृष्ण विराजते थे वहाँ आ पहुँचे तब सबने दुपट्टे से बाँधे और कुरूप बनाये हुए रुक्मी को देखा। सबको अर्धमृत अवस्था सा रुक्मी दिख पड़ता था। मृतप्राय अवस्थागत रुक्मी को देखकर सर्वशक्तिमान् भगवान् संकर्षणजी को बड़ी दया आयी और उन्होंने उसके बन्धन खोलकर रुक्मी को मुक्त किया और भगवान् श्रीकृष्ण को कहने लगे ॥ ३६ ॥

**असाध्विदं त्वया कृष्ण [१]कृतमस्मज्जुगुप्सितम् । वपनं श्मश्रुकेशानां वैरूप्यं सुहृदो वधः ॥ ३७ ॥**
**मैवास्मान् साध्व्यसूयेथा भ्रातुर्वैरूप्यचिन्तया । सुखदुःखदो न [२]चान्योऽस्ति यतः स्वकृतभुक् पुमान् ॥ ३८ ॥**
**बन्धुर्वधार्हदोषोऽपि न [३]बन्धोर्वधमर्हति । त्याज्यः स्वेनैव दोषेण हतः किं हन्यते पुनः ॥ ३९ ॥**
**क्षत्रियाणामयं धर्मः प्रजापतिविनिर्मितः । भ्रातापि भ्रातरं हन्याद् येन [४]घोरं तमस्ततः ॥ ४० ॥**

### कर्दमक्षमा

अन्वयः—हे कृष्ण ! इदम्, असाधु, कृतम्, इदम्, कृतम्, अस्मत्, जुगुप्सितम्, श्मश्रुकेशानाम्, वपनम्, वैरूप्यम्, सुहृदः, वधः ( उच्यते ) ॥ ३७ ॥ हे साध्वि ! भ्रातृवैरूप्यचिन्तया, अस्मान्, मैव, असूयेथाः, सुखदुःखदः, न, अन्यः, अस्ति, च, यतः, पुमान्, स्वकृतभुक् ॥ ३८ ॥ बन्धुः, वधार्हदोषः, अपि, बन्धोः, न, वधम्, अर्हति, स्वेन, एव, दोषेण, हतः, किम्, पुनः, हन्यते ? ( सः तु केवलम् ) त्याज्यः ॥ ३९ ॥ भ्राता, अपि, भ्रातरम्, हन्यात्, अयम्, प्रजापतिविनिर्मित, क्षत्रियाणाम्, धर्मः, ततः, तेन, घोरम्, तमः, ( भवति ) ॥ ४० ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

रुक्मिणी सांत्वयति मैवास्मानिति ॥ ३८ ॥ पुनः कृष्णमाक्षिपति बंधुरिति ॥ ३९ ॥ पुनर्देवीं प्रत्याह । क्षत्रियाणामिति । येन धर्मेण भ्रातापि भ्रातरं हन्यात् । ततस्तस्माद्घोरतरोऽतिदारुणो धर्मश्च । अतः कोऽस्माकमपराध इति भावः ॥ ४० ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

अस्य रुक्मिणः । इदं वपनम् । जुगुप्सितं वपनस्य नापितकर्मत्वान्नेदं क्षत्रो चित्तमिति भावः । किमर्थमाक्रोशसि मां नायं मारितवानिति चेदाह—वैरूप्यमिति । कृष्णेति केवलेन मूलनाम्ना संबोधनमग्रजोचितशुद्धवात्सल्योदयेन । तथैवास्माकं कुलतिलकीभूतभवत्कानां परमप्रतिष्ठावतां वृष्णीनां संबंधे जुगुप्सितं निंदितं कर्तुमयोग्यमित्यर्थः । किं तदित्यपेक्षायां लज्जादिना प्रागप्रकाशितमपि नीचैरिवाह—वपनमिति । न चैतदल्पं दण्डनमित्याह—वैरूप्यमिति, विरूपतापादनम् । एवं तु श्रीकृष्णोपालंभेन रुक्मिण्या एव सांत्वनमुद्देश्यं मन्स्वंबंधेनैवैष संप्रत्युपालंभविषयो भवतीति तस्या लज्जोत्पत्तेः । तथा रुक्मिणं प्रत्यपि भर्त्सनमायाति साक्षात्तस्य तिरस्कारानुवादात् । तच्च तस्य शिक्षार्थमेव संपद्यत इति कारुण्य एव पर्यवस्यति । एवमग्रेपि ॥ ३७ ॥ अन्यः स्वेतरः । अत्र हेतुः—यत इति । एतादृशे तं प्रत्युक्तेऽपि तस्याः शोकाऽत्यागात्तामेव साक्षात्सांत्वयन्नाह—मैवेति । अस्माञ्छ्रीकृष्णादीन्मासूयेथा दोषारोपेण मा पश्य । एवेति साक्षात्तत्कारणे सत्यप्यसूयां निवारयति । चेति पक्षान्तरे । नञ् तन्निषेधे, अन्यो नास्ति किन्तु स्वयमेवेत्यर्थः । पुमान् जीवः । स्वकृतभुगिति-अस्मिन्नतिदुष्टे स्वस्य स्वभर्तुश्च प्रतिकूले कोऽयं ते वृथा स्नेह इति तां प्रत्युपालंभो ध्वनितः ॥ ३८ ॥ वधार्हो दोषो यस्य स तथापि । द्वितीयबंधुशब्दो हेत्वर्थः । यतो बंधुरतो बधं नार्हतीत्यर्थः । तर्हि किं कर्तव्यं, तत्राह—त्याज्य इति । त्यागो देशनिर्यातनादिरूपः "बंधूनां मरणं त्यागोऽनादरोऽपि तथाविधः" इति ग्रन्थांतरोक्तेः ॥ देव्याः प्रीणनार्थं श्रीकृष्णं नोति शिक्षयन्निवाह—बंधुः श्यालः । बंधोर्भगिनीपतेः सकाशात् । त्याज्य इत्यत्यवज्ञेयत्वं दर्शयित्वा किञ्चित्कर्तुमसामर्थ्यमेव दर्शितम् । नन्ववध्यस्य वधे यावांस्तावान्वध्यस्य रक्षणे दोषः स्मर्यते, तत्राह—स्वेनैव दोषेण हतः सल्लोकबहिष्कृततासाम्येन एवं यो हतः स किं पुनर्हन्यते नैवेत्यर्थः । सोऽयमपि रुक्मिण्या अन्यत्र दानेन तद्बहिष्कृतो जात इति भावः । वैकृत्यकरणमिदं हननमेव, मरणादपि दुःखदत्वादिति भावः ॥ ३९ ॥ देवीं रुक्मिणीम् । ईदृशं कर्म किमिति क्रियत इत्यत आह—क्षत्रियाणामिति । अयं कस्तत्राह—भ्रातेति । तस्माद्भ्रात्रादिहननरूपत्वात् । इति भाव इति-"श्रेयान्स्वधर्मो विगुणः परधर्मात्स्वनुष्ठितात्" इति स्मृतेः स्वधर्माचरणं न दोषायेति तात्पर्यम् ॥ नीतिमिमां त्वदनुजो न वेत्तीति मनसा वदन्ती प्रत्याह—क्षत्रियाणामिति । भ्रातरमपि हन्यादिति शास्त्रविधिः, तत्र श्यालः खलु को वराक इति भावः ॥ ४० ॥

---

१. मत्स्य-श्रीधर. टि. । २. प्रदो नान्यो-वीर. । ३. बन्धो-वीर. ; बन्धु-विज. । ४. घोरतर-श्रीधरादयः ।

**श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी**

कृष्णेति केवलेन मूलनाम्ना सम्बोधनमग्रजोचितशुद्धवात्सल्योदयेन तथैवाह अस्माकं कुलतिलकीभूतभावत्कानां परमप्रतिष्ठावतां वृष्णीनां सम्बन्धे जुगुप्सितं निन्दितं कर्त्तुमयोग्यमित्यर्थः। किन्तदित्यपेक्षायां लज्जादिना प्रागप्रकाशितमपि नीचैरिवाह—वपनमिति। नचैतदल्पं दण्डनमित्याह। वैरूप्यमिति। विरूपतापादनम् एवं तु श्रीकृष्णोपालम्भने रुक्मिण्या एव सान्त्वनमुद्देश्यं मत्सम्बन्धेनैवैष सम्प्रत्युपालम्भविषयो भवतीति तस्या लज्जोत्पत्तेः तथा रुक्मिणं प्रत्यपि भर्त्सनमायाति साक्षात्तस्य तिरस्कारानुवादात् तच्च तस्य शिक्षार्थमेव सम्पद्यत इति कारुण्य एव पर्य्यवस्यति एवमग्रेऽपि ॥ ३७ ॥ एतादृशे तम्प्रत्युक्तेऽपि तस्याः शोकात्यगात्तामेव साक्षात्सान्त्वयन्नाह—मैवेति। अस्मान् श्रीकृष्णादीन् मासूयेथाः दोषारोपेण मापश्य एवेति साक्षात्तत्कारणे सत्यपि असूयां निवारयति चेति पक्षान्तरे नञ् तन्निषेधे अन्यो नास्ति किन्तु स्वयमेवेत्यर्थः। पुमान् जीवः ॥ ३८ ॥ तथापि देव्याः शोकं दृष्ट्वा तन्निरासार्थं श्रीकृष्णमाक्षिपति। बन्धुरिति। बन्धोः सकाशात् किन्तु स त्याज्यः इति तस्यात्यवज्ञेयत्वं दर्शयित्वा किञ्चित्कर्तुमसामर्थ्यमपि दर्शितं नन्ववध्यस्य वधे यावांस्तावान् वध्यस्य रक्षणे दोषः स्मर्य्यते तत्राह। स्वेनैव दोषेण हतः। सल्लोकवहिष्कृततासाम्येन एवं यो हतः स किं पुनर्हन्यते नैवेत्यर्थः। सोऽयमपि रुक्मिण्या अन्यत्र दानेन तद्वहिष्कृतो जात इति भावः। वैकृत्यकरणं त्विदं हननमेव मरणादपि दुःखदत्वादिति भावः ॥ ३९ ॥ तथापि शोकानपगमात् पुनर्देवीं स्वधर्मप्रदर्शनेन प्रबोधयति। क्षत्रियाणामिति। अयं क्षत्रियाणां धर्मः सदादृष्टजनककर्त्तव्यविशेषः येन धर्मेण न्याययुद्धलक्षणेन भ्रातापि भ्रातरं हन्यात् धर्मत्वे हेतुः प्रजापतिना विनिर्मितः वेददृष्ट्या निर्दिष्ट इत्यर्थः। ततस्तस्माद्भ्रातृहननाद्धेतोर्घोरतरो धर्मश्चेति एवमेवाह—टीकायां घोरतरो धर्मश्चेति ॥ ४० ॥

**श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी**

कृष्ण ! हे सर्व्वसुखप्रद, अस्माकं जुगुप्सितं निन्दितं कर्त्तुमयोग्यमित्यर्थः। अस्मदिति बहुत्वेन श्रीवसुदेवादीन् संगृह्णाति। किञ्च, अन्ये कुर्व्वन्तु नाम, वयन्तु नार्हाम इति भावः; यद्वा, अस्माकं जुगुप्सितं निन्दा यस्मात्तत्; किं तदित्यपेक्षायां लज्जादिना प्रागप्रकाश्य पश्चादाह—वपनमिति। न चैतदल्पं दण्डनं किन्तु वध एवेत्याह—वैरूप्यमिति विरूपतापादनम् ॥ ३७ ॥ एतादृशे तं प्रत्युक्तेऽपि तस्याः शोकात्यागात्तामेव साक्षात् सान्त्वयन्नाह—मैवेति। अस्मानिति श्रीकृष्णादिसंग्रहात्, भ्रातुर्वैरूप्येण या चिन्ता शोकस्तया हेतुना मा सूयेथा दोषारोपणं न कुरु। एवेति साक्षात्तत्कारणे सत्यप्यसूयां निवारयति। तत्र च मा शब्देन तस्य च सर्व्वादौ निर्द्देशेनात्यन्तदार्ढ्यमापादयति च। हि यतोऽन्यो नास्ति, न भवति, किन्तु स्वयमेवेत्यर्थः। यतश्च स्वस्य कृतमेव भुङ्क्त इति तथा सः। पुमानिति पुंस एव प्राधान्यात्; यद्वा, जीवः सर्व्वोऽपीत्यर्थः ॥ ३८ ॥ तथापि देव्याः शोकं दृष्ट्वा तन्निरासार्थं पुनः श्रीकृष्णमाक्षिपति—बन्धुरिति। बन्धोः सकाशात्, किन्तु त्याज्यः स बन्धुभिः। ननु जीवन् पुनरपि महादपान्तरं कुर्य्यादित्यतो वध्य एव, तत्राह—स्वेनेति। एव-शब्देन सर्व्वथा दोषस्यान्यहेतुकत्वादिकं निरस्तम्। जीवन्मृतोऽसौ न किञ्चित् कर्त्तुं कदापि शक्नुयादिति भावः। यद्वा, हतप्रायः—अद्य श्वो वा स्वयमेव मरिष्यतीत्यर्थः। तस्मादस्मदवध्योऽयं वैरूप्यापादनेन यद्वतस्तदसाध्वेव कृतमिति भावः ॥ ३९ ॥ तथापि शोकानपगमात् पुनर्देवीं स्वधर्म्मप्रदर्शनेन प्रबोधयति—क्षत्रियाणामिति। प्रजापतिना श्रीब्रह्मणा ईश्वरेण वा विशेषेण अन्यस्मादाधिक्येन निर्म्मित इति तस्य परमपाल्यतोक्ता ॥ ४० ॥

**श्रीसुदर्शनसूरिकृतशुकपक्षीयम्**

रुक्मिणीं प्रत्याह—मैवेति ॥ ३८ ॥ बन्धोरिति पञ्चमी ॥ ३९–४० ॥

**श्रीमद्वीरराघवाचार्यकृता भागवतचन्द्रचन्द्रिका**

उक्तिमेवाह—असाध्विति। हे कृष्ण ! असाध्वसमञ्जसं निन्दितं चेदं कर्म कृतं ननु बन्धुवध एवासाधुर्जुगुप्सितश्चेत्यतः आह—वपनमिति। सुहृदो बन्धो नाम श्मश्रुकेशवपनं वैरूप्यकरणं चेत्येष एव ॥ ३७ ॥ अथ रुक्मिणीं सान्त्वयति। मैवास्मानिति। हे साध्वि ! भ्रातृवैरूप्यप्रयुक्तया चिन्तयाऽस्मान्मासूयेथाः ननु दुःखप्रदा यूयमसूयितव्या एवेत्यत आह—सुखेति। सुखदुःखप्रदः अन्यो नास्ति कुतः यतः पुमान् स्वकृतभुक् स्वकृतकुशलाकुशलकर्मापादितसुखदुःखभुक् सुखग्रहणं दृष्टान्तार्थम् ॥ ३८। पुनः कृष्णमाक्षिपति। बन्धुरिति। वधायार्ह उचितः दोषो यस्य सोऽपि बन्धुर्वधं नार्हति किन्तु त्याज्य एव सहि तेन वधार्हेण दोषेण हत एव हतप्राय एव हतोऽपि पुनर्हन्यते किमिति ॥ ३९ ॥ भूयो रुक्मिणीं प्रत्याह। क्षत्रियाणामिति। प्रजापतिना ब्रह्मणा विनिर्मितोऽयं वधो धर्मः कोऽसौ येन धर्मेण भ्रातापि भ्रातरं हन्यात् यतश्च घोरतरः अतिदारुणः अतः कोऽस्माकमपराध इति भावः ॥ ४० ॥

**श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली**

श्मश्रुकेशानां वपनलक्षणं वैरूप्यं सुहृदो बन्धोर्वधङ्कृतवान् ॥ ३७ ॥ इदानीं रुक्मिणीं सान्त्वयति। मैवेति। हे साध्वि ! रुक्मिणि अस्मान् प्रति स्वस्मादन्यः अत्र हेतुर्यत इति ॥ ३८ ॥ नन्वस्तु सुखादेः स्वयं हेतुरथापि बन्धोर्देहवियोगकरण-

वधो लोकाचारो न भवति जुगुप्सितत्वादिति तत्सत्यमित्याह। बन्धुरिति। वधार्हो दोषो यस्य स तथा द्वितीयबन्धुशब्दो हेत्वर्थः तत्र किङ्कर्तव्यमित्यत्राह। त्याज्य इति। त्यागो देशनिर्यातनादिलक्षणः किं त्याज्य इत्यतो मृतमारणदोषापत्तेरिति भावेनाह। हत इति॥ ३९॥ तर्ह्येतदीदृशं कर्म किमिति क्रियत इति अतोऽयं न्यायः क्षत्रियेभ्योऽन्यत्र न क्षत्रियाणामित्याह। क्षत्रियाणामिति। कोऽसौ धर्म इत्यत्राह। भ्रातापीति। ततस्तस्माद्राजा येन कर्मणा घोरतर इत्युच्यते धर्मविषयो वाऽघोरतरो धर्म इति॥ ४०॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

वरं वधोऽप्यस्य साधुरभविष्यदिदं खड्गेन मुण्डनं त्वतिवीभत्सितमभूदिति शोचन्त्या रुक्मिण्याः सान्त्वनार्थं बहिः कृष्णं किंचिदुपालभमानः अन्तस्तु भो भ्रातः! समुचितकृत्यचतुरेण त्वया साध्वेव कृतमिति प्रसीदन्नेवाह। असाध्विति। सुहृदः श्यालकस्य पक्षे दुर्हृदोऽपि तस्य सुहृच्छब्दवाच्यत्वेन विपरीतव्यङ्ग्या लक्षणा॥ ३७॥ तस्याः शोकापनोदार्थं विवेकमुत्पादयति। मैवेति। स्वकृतभुगिति अस्मिन्नतिदुष्टे स्वस्य भर्तुश्च प्रतिकूले कोऽयं ते वृथा स्नेह इति तां प्रत्युपालम्भश्च ध्वनितः॥ ३८॥ देव्याः प्रीणनार्थं कृष्णं नीतिं शिक्षयन्निवाह। बन्धुः श्यालः बन्धोर्भगिनीपतेः सकाशात्॥ ३९॥ नीतिमिमां त्वदनुजो न वेत्तीति मनसा वदन्ती देवीं प्रत्याह। क्षत्रियाणामिति। भ्रातरमपि हन्यादिति शास्त्रविधिस्तत्र श्यालः खलु को वराक इति भावः॥४०॥

### गूढार्थदीपिनी

अस्मत् अस्माकं जुगुप्सितं नापितकर्मत्वात्। सुहृदः श्यालस्य। अत्र विपरीतलक्षणया दुर्हृद इत्यर्थः॥ ३७॥ हे साध्वि। मा असूयेथा दोषदृष्ट्या न पश्य। अन्यो नास्ति किन्तु स्वयमेव॥ ३८॥ बन्धोः सकाशात्॥ ३९॥ येन धर्मेण भ्राताऽपि॥ ४०॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

देवीं सान्त्वयति। मैवेति॥ ३८॥ पुनः कृष्णं प्रत्याह—बन्धुरिति॥ ३९॥ पुनर्देवीं प्रत्याह—क्षत्रियाणामिति। येन धर्मेण ततो हेतोर्घोरतरः धर्मः॥ ४०॥

### श्रीसत्यधर्मकृता श्रीभागवतटिप्पणी

परित्रासविकम्पिताङ्ग्या परित्रासया विकम्पितान्यङ्गानि यस्यास्तया शुचा शुष्यन्मुखं यस्याः सा च सा रुद्धो कण्ठो यस्याः सा तया कातर्येण विस्रंसिता हेममाला यस्याः सा तया। गृहीतपादः करुणाऽस्यास्तीति करुणयतीति करुण इति वा न्यवर्तत हननतो निवृत्तोऽभूत्। अनेन हन्तुं गत इव दर्शयामास न मनःपूर्वकं गत इति द्योत्यते। अन्यथा वन्ध्यसङ्कल्पतापत्प्राप्तिः स्यात्॥ ३७॥ चैलेनांशुकेनासाधुकारिणं तं वद्ध्वा सश्मश्रुकेशं यया तथा प्रवपन्पञ्चशिखं कृत्वेति यावत्। कृत्वा पञ्चशिखं तथेति हरिवंशे शंशनात्। मुण्डनं कुर्वन् व्यरूरुपद्विरूपमकरोत्। एतदारभ्य प्रससारामाणकं कार्यमसाधु कृतं चेच्छिरः श्मश्रूणि मुण्डयेति यावत्। नलिनी गजा यथा तथा जितशत्रुसैन्या यदुप्रवीराः समीयुः॥ ३८॥ कृष्णान्तिकमुपाव्रज्य तत्र तत्समीपे रुक्मिणं ददृशुः। विभुः सङ्कर्षणस्तथाभूतमिति हतप्रायं दृष्ट्वा॥ ३९॥ विमुच्य स्वयं विमोच्यान्यैः। तन्मोचनरोचनमत इत्याह। करुण इति। कृष्णमब्रवीत्॥ ४०॥

### श्रीमद्वल्लभाचार्य्यकृता सुबोधिनी

भगवन्तं प्रति कृतस्याननुमोदनमाह **असाध्विदमिति**। यत् कृतं तदग्रे वक्तव्यम्। तदसाध्वेव। मरणानन्तरमेव हि सर्वक्षौरं विधीयते। किञ्च। यत्कृतं तदस्मत्कृतम्, अस्मत्तः कृतम्, वयमेव हेतवः सङ्कर्षणरूपाः। न तु स्वामिनस्तव कार्यम्, यतो जुगुप्सितमेतत्। परमार्थतोऽयमर्थः व्यवहारेऽपि यद्यप्यस्य वपनं कर्तुं युक्तम्, अयमेतदर्ह एव, तथाप्यस्मज्जुगुप्सितमस्माकं तु नोचितमित्यर्थः। अधमभक्षकायाप्युत्तमैर्नाधमं भक्ष्यं दीयते, तदेवाह **वपनं श्मश्रुकेशाना**मिति। श्मश्रूणां केशानां च सुहृदः सकाशात् वैरूप्यं वध एव। अतः सुहृत्त्वात् वधोऽनुचितः। एतदपि रुक्मिणीसान्त्वनार्थमेवेति ज्ञायते। उपसंहारबलीयस्त्वात्। उभयस्याप्रकरणित्वात्॥ ३७॥ अतस्तामेव साक्षात् सान्त्वयति मैवास्मानिति। हे साध्वि। पतिव्रताया भर्तृकृतं मन्तव्यमिति धर्मः। अत एव अस्मान्सर्वानेव मासूयेथाः, दोषारोपेण मा विचारय। यद्यपि भावकचित्तमपि समीचीनम्, भाव्ये च न दोषः कोऽपि तथापि भ्रातुर्वैरूप्यचिन्तया तद्धर्मारोपात् कदाचिदसूया भवेत्, तां निवारयति। ननु लौकिकदृष्ट्या कर्तव्यैवासूया कथं जरासन्धो मुक्तः. केवलः कथमयं मुण्डित इति चेत्, तत्राह **सुखदुःखद** इति। स्वकर्मवशादेव सुखदुःखानुभवः। सङ्कर्षणो हि ज्ञानप्रधानः। अन्यथा सर्वान् ( न ) मारयेत्। 'नायं हन्ति न हन्यत' इति तत्र सिद्धान्तः। तथा अत्रापि कर्मणैव सर्वमिति तदनुसारेणात्रापि वोधनम्। अतोऽयं साधारण इति, सोऽपि श्रृणोतीति कर्ममार्ग एव बोधितः। अत एव स्वयं स्वस्य सुखदुःखदः, अन्यो न भवति

तत्र हेतुमाह **स्वकृतभुगिति**। कर्मणि स्वस्य स्वातन्त्र्यात् तत् फलमपि कर्तृगाम्येव भवति। अन्यथा कृतहानाकृताभ्यागमप्रसङ्गः ॥ ३८ ॥ एवं प्रतिबोधिते केवलमस्मदपराधमेव स्थापयति बलभद्रो, न स्वापराधमिति अतुल्यता प्रतिभाता, अतः पुनस्तां बोधयितुं भगवन्तमाह बन्धुरिति। वधमर्हति येन दोषेण तादृशो दोषो यस्य स वधार्हदोषः पुरुषः। तादृशः बन्धोः साक्षाद्वधं नार्हति। अन्यथा बन्धुत्वं न स्यात्। शत्रुरेव वधकर्ता। अयोग्यं कुर्वन् अयुक्त एव भवति। ननु यथा स्वधर्मः, स न मारणीय इति तस्यापि धर्मः, अतिक्रमो न कर्तव्य इति। स चेत् स्वधर्मं न कुर्यात्, कथमन्यः कुर्यादिति चेत्, तत्राह त्याज्य इति। वस्तुतस्तु तेन स्वधर्मस्त्यक्त इति न स्वेनापि स्वधर्मस्त्यक्तव्यः, तथा सत्युभयोरेव तुल्यता स्यात्। अथ तत्कर्म सार्थकं कर्तव्यमिति स्वोद्यमः, तत्राप्युच्यते। स्वेनैव दोषेण हतः। पुनः किमर्थं हन्यत इति। न हि तत्कर्मणा प्रेरितत्वं स्वस्य युक्तम्। तत्कर्म स्वयमेव अन्यं प्रेरयेत्। अतः कर्मणैव हतः, तदङ्गत्वे स्वस्य हानिरिति। भिन्नतया स्वयं चेन्मारयेत्, तदा पिष्टपेषणमेव भवेदिति, किं हन्यत इति प्रश्नार्थं आक्षेपार्थो वा। पिष्टापि वेदे प्रैष उक्तः। अणूनि कुरुतादिति, तस्य प्रयोजनं मेध्यत्वायेति श्रुतावेवोक्तम्। तथा अयमपि पवित्रो भवतु, मोक्षं वा प्राप्नोत्विति प्रश्नार्थो भवति। एवमेवेति चेत्, तत्राह **किं हन्यत** इति। न हन्तव्य एव, किन्तु त्याज्यः। दुष्टं हि न संस्क्रियते, अयं तु दुष्ट एवेति न संस्कारमर्हतीति भावः ॥ ३९ ॥ एवं शास्त्रार्थतः स न वध्यो भवतीति निरूप्य, लोकन्यायेनापि न वध्यत इति निरूपयति **क्षत्रियाणामयं धर्म** इति **द्वाभ्याम्**। ननु यो मारयितुमायाति, स मार्यत इति, 'जिघांसन्तं जिघांसीया'दिति लोकवेदाभ्यां हननं तस्य युक्तम्, तत्कथं निषिध्यत इति चेत्, तत्रोच्यते, किं हत इति हन्यते, अयुक्तं करोतीति वा। तत्र नाद्यः। अभावात्। प्रकृते असम्भवाच्च। अयुक्तता तु नास्तीत्याह। क्षत्रियाणामयं घोरात्मको धर्मः प्रजापतिनैव विनिर्मितः। त्रिविधा हि धर्माः, शान्तो घोरो विमूढश्चेति। तत्र शान्तो ब्राह्मणेषु स्थापितः। घोरः क्षत्रियेषु। विमूढो वैश्यशूद्रयोः। अतः अयं परिदृश्यमानः तीक्ष्णशस्त्राणि गृहीत्वा स्वप्रवृत्तिं प्रदर्शयन्निवाह। तत्र न सम्बन्धापेक्षेत्याह **भ्रातापि भ्रातरं हन्यादिति**। नन्वेवं सत्ययं धर्म एव चेत्, तर्हि कथं घोरः स्यात्, तत्राह **येन घोरं तम** इति। ततो घोरमेव तमो भवति। अज्ञानमत्र तमः, तदपि भयानकम्। एवं कर्मणा दैत्यत्वं भवतीत्यर्थः ॥ ४० ॥

## विवरण टिप्पणी

**वपनं श्मश्रूकेशानामित्यत्र**। **उभयस्येति**। रुक्मिणीसान्त्वनस्य भगवद्बोधनस्य च प्रकरणित्वे वाक्यभेद इति भावः। **अत इति**। अतः परमित्यर्थः। **मैवास्मानित्यत्र**। **अतोयमिति**। अयं पक्षः साधारण इत्यर्थः।

## श्रीसुबोधिनी–सारः

हे कृष्ण त्वया इदमसाधु निंद्यं कृतम्। अस्माकं जुगुप्सितमेतत्। श्मश्रूणां केशानां वपनं खण्डनं वैरूप्यं विरूपकरणं च सुहृदो वधो मृत्युरेव ॥ ३७ ॥ रुक्मिणीं प्रत्याह। हे साध्वि भ्रातुर्वैरूप्यस्य चिंतयास्मान् मासूयथा मानिदय यतः पुमान् जन्तुमात्रं स्वकृतं शुभाशुभं भुनक्तीति तथाऽतः सुखदुःखदोऽन्यो द्वितीयः कश्चन नास्ति ॥ ३८ ॥ पुनः कृष्णमाक्षिपति वधार्हो मरणयोग्यो दोषो यस्य स बन्धुरपि बन्धोः सकाशाद्वधं मृत्युं नार्हति। किं तु त्याज्यः स्वेन दोषेण पापेन हतः पुनः किं हन्यते ॥ ३९ ॥ पुनस्तां प्रत्याह। क्षत्रियाणामयं धर्मो ब्रह्मणा रचितः कोऽसौ तत्राह। भ्रातापि भ्रातरं हन्यात् येन धर्मेण ततो हेतोर्घोरतरोऽतिक्रूरः ॥ ४० ॥

## गोस्वामिश्रीगिरिधरलालकृताबालप्रबोधिनी

तदुक्तिमेवाह—असाध्विति। हे कृष्ण! रुक्मिश्मश्रुकेशानां वपनमिदं त्वया असाधु कर्म कृतम्। तत्र हेतुमाह—अस्माकं जुगुप्सितं निन्दितमेतत्। तत्रापि हेतुमाह—सुहृदः सम्बन्धिनो वैरूप्यकरणं वध एवेति ॥ ३७ ॥ अथ रुक्मिणीं सान्त्वयति—मेति। हे साध्वि! भ्रातृवैरूप्यप्रयुक्तया चिन्तयाऽस्मान् मैवासूयेथा दोषारोपेण मा पश्य। ननु 'दुःखप्रदा यूयं कुतो नासूयितव्या' इत्यत आह—सुखेति। सुखदुःखप्रदः अन्यो नास्ति, यतः पुमान् प्राणिमात्रं स्वकृतभुक् स्वकृतकुशलाकुशलकर्मापादितसुखदुःखभोक्ता। अतः स्वयमेव स्वसुखदुःखहेतुरित्यर्थः ॥ ३८ ॥ पुनः कृष्णमाक्षिपति—बन्धुरिति। वधार्हः वधमर्हति येन तथाविधो दोषो यस्य तथाविधोऽपि बन्धुर्बन्धोः सकाशाद्वधं नार्हति, किंतु त्याज्य एव सः। यस्मात् स स्वेन दोषेण हत एव। अतः पुनः किं हन्यते ? स्वदोषेणापकीर्तेर्जातत्वात् हतप्रायस्य पुनर्हनने हन्तुरप्यपकीर्तिः स्यादित्यर्थः ॥ ३९ ॥ पुनरपि रुक्मिणीं प्रत्याह—क्षत्रियाणामिति। येन हेतुना भ्रातापि युद्धे भ्रातरं हन्यादित्ययं घोरतरः अति दारुणः क्षत्रियाणां धर्मः प्रजापतिनैव विनिर्मितस्ततो रुक्मिवधप्रवृत्तौ अस्माकं कोऽपराध इति शेषः ॥ ४० ॥

## अन्वितार्थप्रकाशिका

वरं वधोऽप्यस्य साधुरभविष्यदिदं खड्गेन मुण्डनं त्वतिबीभत्सितमभूदिति शोचन्त्या रुक्मिण्याः सान्त्वनार्थं बहिः कृष्णं किंचिदुपालभमानः अन्तस्तु समुचितं स्मृत्वा प्रसीदन्नेवाह—असाध्विति ॥ हे कृष्ण! इदं वैरूप्यकर्म त्वया असाधु कृतम् अस्माकं जुगुप्सितं चैतत्। यतः सुहृदः श्मश्रुकेशानां वपनं तज्जन्यं वैरूप्यं च सुहृदो वध एव ॥ ३७ ॥ रुक्मिणीं प्रत्याह—

मैवेति ॥ हे साध्वि ! भ्रातृवैरूप्यप्रयुक्तया चिन्तयाऽस्मान्मैवासूयेथाः दोषारोपेण मा पश्य । सुखदुःखप्रदः अन्यः नास्ति । यतः पुमान् प्राणिमात्रं स्वकृतकर्मफलभुक् । अतः स्वयमेव सुखदुःखहेतुः ॥ ३८ ॥ पुनः कृष्णमाह—बन्धुरिति ॥ वधार्हः वधमर्हति येन तथाविधो दोषो यस्य तथाविधोऽपि बन्धुः श्यालः बन्धोः भगिनीपतेः सकाशाद्वधं नार्हति किंतु त्याज्य एव सः । यस्मात्स स्वेन दोषेण हत एव अतः पुनः किं हन्यते । अतोऽस्माकमपि अनेनाकीर्तिरिति ॥ ३९ ॥ पुनर्देवीमाह—क्षत्रियाणामिति ॥ येन धर्मेण हेतुना भ्राताऽपि युद्धे भ्रातरं हन्यात् घोरतमः अतिदारुणः क्षत्रियाणां धर्मः प्रजापतिनैव विनिर्मितः ततो हेतोर्घोरतरोऽपि स धर्म एवेति वाऽन्वयः । ततो रुक्मिवधप्रवृत्तौ अस्माकं कोऽपराध इति भावः ॥ ४० ॥

**श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्**

किं तत् श्मश्रुकेशानां वपनं मुंडनं सुहृदः संबंधिनो वैरूप्यं वधः ॥ ३७ ॥ अथ वैदर्भीमाश्वासयति मैवेति । साध्वी वैदर्भी ॥ ३८ ॥ पुनरपि रामः कृष्णस्य शिक्षां करोति बंधुरिति वधस्य अर्हो यंग्यो दोषोऽपराधो यस्य एवंभूतोऽपि बंधुः स्वसंबंधीवधं नार्हत्ति स तु त्याज्यः स्वकीयेनैव दोषेणे हतः अतोऽस्माभिः किं हन्यते हतस्य पुनः किं हननमित्यर्थः ॥ ३९ ॥ पुनरपि रुक्मिणीं प्रत्याह क्षत्रियाणामिति येन धर्मेण भ्राताऽपि भ्रातरं । ततो हेतोः घोरतमः अतिदारुणो धर्मः घोरतर इत्यपि पाठः अतोऽस्माकं को दोष इति भावः ॥ ४० ॥

**भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी**

उक्तिमेवाह । असाध्विति त्रयोदशभिः । असाध्विति । हे कृष्ण, त्वया इदं कर्म, असाधु असमञ्जसं, अस्मज्जुगुप्सितमस्माकं निन्दितं च, कृतम् । ननु बन्धुवध एवासाधुर्जुगुप्सितश्च स तु मया न कृतः अत आह वपनमिति । बन्धूनां, श्मश्रुकेशानां, वपनं तत्रापि वैरूप्यं च, एष एव सुहृदः वधः, न तु शिरश्छेदनादिरेव वधो यतस्तेन तु तस्य क्षात्त्रधर्मसिद्धया यशःशरीरानाशादिति भावः ॥ ३७ ॥ अथ रुक्मिणीं सान्त्वयति । मैवेति । हे साध्वि, भ्रातुः वैरूप्यचिन्तया, अस्मान् मैव असूयेथाः, ननु मद्बन्धोर्दुःखप्रदा यूयमसूयितव्या एवेत्यत आह । सुखदुःखप्रदः, अन्यः, न अस्ति । कुतः यतः पुमान् स्वकृतभुक् स्वकृतकुशलाकुशलकर्मापादितसुखदुःखभुग्भवति । सुखग्रहणं दृष्टान्तार्थम् ॥ ३८ ॥ पुनः श्रीकृष्णमाक्षिपति । बन्धुरिति । वधार्हो दोषो यस्य तथाभूतोऽपि, बन्धुः, बन्धोः सकाशात्, वधं, न अर्हति । अतः त्याज्य एव । यतः, सः स्वेन वधार्हेण, दोषेण, हतो हतप्राय एव । एवं हतः सः, पुनः किं किमिति हन्यते । वीराणां मृतमारणस्य जुगुप्सिततत्वस्मरणात् ॥ ३९ ॥ भूयो रुक्मिणीं प्रत्याह । क्षत्त्रियाणामिति । क्षत्त्रियाणां प्रजापतिविनिर्मितः ब्रह्मणा समुत्पादितः, अयं वधात्मकः, धर्मः । येनैवंविधेन, धर्मेण, भ्रातापि, भ्रातरं हन्यात् । ततः अयं धर्मस्तु, घोरतमोऽतिदारुणः, अस्ति । अतोऽत्र कोऽस्माकमपराध इति भावः ॥ ४० ॥

**कृष्णप्रिया**

हे कृपालु कृष्ण ! आपने यह योग्य नहीं किया। ऐसा अमङ्गल कार्य मङ्गल निधान आपके लिये एवं यदुवंशियों के लिये समुचित नहीं। अपने सम्बन्धी की दाढ़ी-मूंछ मूंडकर उसे कुरूप बनाना यह तो एक प्रकार का वध ही है ॥ ३७ ॥ पुनः परम कृपालु संकर्षणजी, श्रीरुक्मिणीजी को सात्वना देते हुए कह रहें है कि हे साध्वी ! रुक्मिणीजी ! आपके बड़े भाई रुक्मी का रूप कुरूप बनाया यह सोचकर हम सब पर नाराज न होना और हम लोगों से बुरा न मानना। क्योंकि देवी आप तो जानती हैं कि जीव मात्र को सुख दुःख देने वाला कोई दूसरा नहीं हैं। उसे तो अपने ही कर्म का फल भोगना पड़ता है ॥ ३८ ॥ श्रीरुक्मिणीजी को आश्वासन देकर बड़े भैयाजू श्रीश्यामसुन्दरजी को शिखावन देते कह रहे हैं कि हे कृष्ण ! यदि अपना सगा सम्बन्धी वध करने योग्य अपराध करे फिर भी अपने निजी स्वजनों से उसका मारा जाना योग्य नहीं माना गया है। सम्बन्धी को छोड़ देना चाहिये। वह तो अपने दोषों एवं अपराधों से ही मर चुका है। भैया मरे हुए को क्या मारना ॥ ३९ ॥ श्रीबलभद्रजी अब श्रीरुक्मिणीजी का मनःसमाधान करते हुए तत्वनिर्देश करते हैं कि हे साध्वी ! हे देवी ! कृपया मेरे विनय को सुनिये, ब्रह्माजीने प्रजापतिजी ने क्षत्रियों का धर्म ही ऐसा बनाया है कि सोदर भाई अपने सोदर भाई को मार देता है इससे यह क्षात्रधर्म अत्यन्त कठोर एवं घोरतम है ॥ ४० ॥

**राज्यस्य भूमेर्वित्तस्य [1]स्त्रियो मानस्य तेजसः । मानिनोऽन्यस्य वा हेतोः श्रीमदान्धाः क्षिपन्ति हि ॥ ४१ ॥**
**[2]तवेयं विषमा बुद्धिः सर्वभूतेषु दुर्हृदाम् । यन्मन्यसे सदाभद्रं [3]सुहृदां भद्रमक्षयम् ॥ ४२ ॥**
**आत्ममोहो नृणामेष कल्प्यते देवमायया । सुहृद् [4]दुर्हृदुदासीन इति देहात्ममानिनाम् ॥ ४३ ॥**
**एक एव परो ह्यात्मा सर्वेषामपि देहिनाम् । नानेव गृह्यते मूढैर्यथा ज्योतिर्यथा नभः ॥ ४४ ॥**

---

१. श्रियो-प्रा. । २. अयं श्लोको नास्ति-विजये । ३. यज्ञवत्-श्रीधर. वंशी. वीर. विज. । ४. शत्रुर-विज. ।

**कर्दमक्षमा**

अन्वयः—राज्यस्य, भूमेः, वित्तस्य, स्त्रियः, मानस्य, तेजसः, मानिनः, वा, अन्यस्य, हेतोः, श्रीमदान्धाः, हि, क्षिपन्ति ॥ ४१ ॥ सर्वभूतेषु, दुर्हृदाम्, सदा, अभद्रम्, मन्यसे, तव, इयम्, विषमा, बुद्धिः, सुहृदाम्, अक्षयम्, भद्रम्, तवइयं-विषमाबुद्धिः ॥ ४२ ॥ "सुहृद्, दुहृद्, उदासीनः" इति देहात्ममानिनाम्, नृणाम्, एषः, आत्ममोहः, देवमायया, कल्प्यते ॥ ४३ ॥ सर्वेषाम्, एव, देहिनाम्, परः, हि, एक, एव, आत्मा, किन्तु, मूढैः, नाना, इव, गृह्यते, यथा, ज्योतिः, यथा, नभः, ( एकम्, एव, भिन्नं, गृह्यते, तथा, आत्मापि, भिन्नो, गृह्यते ) ॥ ४४ ॥

**श्रीधरस्वामिविरचिता भावार्थदीपिका**

पुनः श्रीकृष्णं प्रत्याह । राज्यस्येति । तथाऽप्यस्माकमेतदनुचितमिति भावः ॥ ४१ ॥ पुनर्देवीं प्रत्याह । तवेयमिति । सर्वभूतेषु दुर्हृदामहितानां भ्रातृणामज्ञवद्यद्भद्रं मन्यसे इच्छसि इयं तव विषमा असमीचीना बुद्धिः ! कुतः । यतस्तदेव सुहृदाम-भद्रमिति । यद्वा सर्वभूतेषु दुर्हृदामपि स्वसुहृदां भद्रमेव दंडरूपं मुंडनमभद्रं यन्मन्यसे तवेयं विषमा बुद्धिरिति । अथवा सर्वभूतेषु मध्ये दुर्हृदां शिशुपालादीनामभद्रं सुहृदां भद्रं च यन्मन्यसे तवेयं विषमा बुद्धिः समा न भवति अज्ञवदज्ञानामिव ॥ ४२ ॥ कुत इत्यत आह । आत्ममोह इति ॥ ४३ ॥ परमार्थमाह । एक एवेति । परः शुद्धः ज्योतिश्चंद्रादिर्यथोदकेषु । नभो यथा घटादिष्विति ॥ ४४ ॥

**श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः**

यद्यपि राज्याद्यर्थमग्नस्यैश्वन्यतमस्यार्थमपि क्षिपन्ति निघ्नंति, तिरस्कुर्वन्ति वा परांस्तथापीति । एतत् संबंधिव-धादि । इति भाव इति—वधस्योचितत्वेऽपि वपनस्याऽनुचितत्वादित्याशयः ॥ ननु क्षत्रियो वंधुं हन्तुं वरं किन्तु वीभत्सितवैरूप्य-वन्तं कर्तुं नार्हतीति देव्याः स्वगतोक्तिमालक्ष्य तां प्रसादयितुं कृष्णमाह—राज्यादेर्हेतोर्मानिनोऽहंकारवंतस्तत्रापि श्रीमदेनांधाः क्षिपंति, तत्तद्वधर्धातकानिति शेषः । अत्रादिना मानस्य पूजायास्तेजसः कांतेर्वलस्य वान्यस्यान्नपानादेर्ग्रहः । अस्माकं त्वेतदनु-चितमनहंकारित्वेन मदांधत्वाऽभावादिति भावः ॥ ४१ ॥ भ्रातॄणां रुक्मिप्रभृतीनाम् । हेतुमाशंकते—कुत इति । सुहृदामस्माकम् । तज्जयेस्माकमभद्रमेवेति भावः । तर्हि तवापि वुद्धिर्विषमैवेति रुक्मिण्योक्षेपोत्थानादाह—यद्वेति । "परमोऽनुग्रहो दंडो भृत्येषु प्रभुणार्पितः" इति न्यायेन, 'न्याय्यो हि दंडः कृतकिल्बिषे नरे' इत्युक्तेश्च । भद्रस्याभद्रमननमपि विषममेवेति भावः । "स्नेहाऽनु-बंधो बन्धूनां मुनेरपि सुदुस्त्यजः" इत्युक्त्याश्रयणमप्यज्ञानां धर्म इत्याह–अथ वेति ॥ पूर्वं धर्मद्वारा देव्यां वोधितायामपि तथेदृशे श्रीकृष्णं प्रत्यवक्तव्येपि देव्याः सांत्वनार्थमुक्तम् । तस्याः शोकाऽत्यागात्तं हित्वा तामेव विवक्षितरहस्यांतगंतेन ज्ञानोपदेशेन बोध-यन्नादौ सक्रोधमाह—तवेति । सर्वभूतेषु मध्ये दुर्हृत्त्वेन प्रतीतानां केषांचिद्यदभद्रमिच्छसि तथा दुर्हृदां सुहृत्त्वेन प्रतीतानां रुक्म्या-दीनां यद्भद्रमिच्छसि तथाविशेषादन्येषु तु यदौदासीन्यं कुरुषे सेयं तवाज्ञानामिव विषमा बुद्धिरिति । अर्थांतरे सुहृदामित्यपि सुहृदामित्यनेन विशेषयितव्यं, सर्वभूतेषु दुर्हृदां शत्रुत्वेन प्रतीयमानानां शिशुपालादीनां तत्साहाय्येन तु तादृशामेव सुहृदां रुक्म्या-दीनामपीति । यदि तेष्वभद्रं मन्तव्यं तदेतद्विधेष्वपि तदेव मंतव्यमिति भावः । दुर्हृदां सर्वभूतेषु दुष्टमनसां शिशुपालादीनां, सुहृदां स्ववंधूनां रुक्म्यादीनां भद्रमेव कृष्णकृतं दंडनं यत्सदाऽभद्रं मन्यसे इयं तव सर्वथाविज्ञाया विषमा बुद्धिर्नोचितेति भावः ॥४२॥ अत्र हेतुमाशंकते—कुत इति । सुहृद् निरपेक्षत्वेनोपकर्ता, दुर्हृद् स्वसुखविघाती, तदुभयहीन उदासीन इति ॥ जानाम्येवेदं यदयं भ्राता मे दुष्ट एव तदप्यय वंधुभावो नापयाति किं करोमीति चेत्—सत्यम्, अप्राकृतताया भवत्या एवायमविवेकोऽनुचित इत्याह । सांसारिकलोकानां त्वयं स्वाभाविको धर्म इत्याह—कश्चित्सुहृदिव कश्चित्सुहृंदिव कश्चिद्दुर्हृदिवेत्यादि । एक एव वा कदाचित्सु-हृदिवेत्यादि । अर्थान्तरे श्रीकृष्णप्रेमाऽऽस्वादमजानतामेवान्यत्र दौर्हृदादिस्फूर्तिः स्यादित्यत आह—आत्मेति द्वाभ्याम् । आत्मेति देह एवात्मेति मन्यमानानां नृणां न तु ज्ञानिनाम् ॥ ४३ ॥ याथार्थ्यमाह—एक एवेति । मूढैरनात्मज्ञैः ॥ ४४ ॥

**श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी**

देवीसान्त्वनार्थमेव पुनरपि श्रीकृष्णं प्रत्यपि परुषमाह—राज्यस्येति । मानस्य पूजायाः तेजसः कान्तेर्वलस्य वा अन्यस्य अन्नपानादेः मानिनः अभिमानवन्तः तत्रापि श्रीमदेनान्धाः अतः क्षिपन्ति तत्तद्व्याघातकानिति शेषः हि यस्माच्छ्री-मन्दान्धा एव क्षिपन्ति तस्मादस्मद्विधानां तादृशत्वाभावादेतदयुक्तमित्यर्थः ॥ ४१ ॥ पूर्वं धर्मद्वारा देव्यां वोधितायामपि तथा ईदृशे श्रीकृष्णं प्रत्यवक्तव्येऽपि देव्याः सान्त्वनार्थमुक्तेः तस्याः शोकात्यागात्तन्त्यक्त्वा तामेव विवक्षितरहस्यार्थान्तरगर्भेण ज्ञानो-पदेशेन प्रवोधयन्नादौ सक्रोधमाह—। तवेति । सर्वभूतेषु मध्ये दुर्हृत्त्वेन प्रतीतानां केषाञ्चिद्यदभद्रमिच्छसि तथा सुहृत्त्वेन प्रतीतानां केषांचिद्यद्भद्रमिच्छसि तत्पारिशेष्यादन्येषु तु यदौदासीन्यं कुरुष इत्यर्थः । सेयं तवाज्ञानामिव विषमा बुद्धिरिति अर्थान्तरे सुहृदामित्यपि दुर्हृदामित्यनेन विशेषयितव्यं सर्वभूतेषु मध्ये दुर्हृदां शत्रुत्वेन सम्मतानां शिशुपालादीनां तत्साहाय्येन तु तादृशामेव स्वसुहृदां रुक्म्यादीनामिति यदि तेष्वभद्रं मन्तव्यं तदेतद्विधेष्वपि तदेव मन्तव्यमिति भावः ॥ ४२ ॥ कश्चित्सुहृदिव कश्चिद्दुर्हृदि-वेत्यादि एक एव वा कदाचित्सुहृदिवेत्यादि अर्थान्तरे श्रीकृष्णप्रेमास्वादमजानतामेवान्यत्र सौहृद्यादिस्फूर्त्तिः स्यादित्याह—

आत्मेति द्वाभ्याम् ॥ ४३ ॥ ननु जगतो वैचित्री साक्षादेव दृश्यते तया च सुहृदादिर्घटत एव कथमुच्यते आत्ममोह इति उच्यते चिन्मात्रत्वेनैकरूपाणां जीवानां वस्तुतस्तु तद्भेदो न सम्भवतीत्याह—एक इति। एकः परमात्मांशत्वेन मिथस्तुल्यस्वरूप इत्यर्थः। भानुस्थानीयस्याचिन्त्यशक्तिमयपरमात्मनस्तटस्थांशत्वेन रश्मिपरमाणुस्थानीयत्वात्तस्य तत्र चाचिन्त्यशक्तिमयत्वादेवोभयत्रापि न कस्यापि पूर्वपक्षस्यावकाश इति ज्ञेयम् हि यतः परो देहाद्भिन्नः अतो देहस्यैव वैचित्री न त्वात्मन इति भावः। तर्हि शान्तत्वादिना विविधोऽसौ कुतः प्रतीयते अधिष्ठानस्यैव वैचित्र्यादिति सदृष्टान्तमाह। नानेति। प्रथमदृष्टान्ते विम्बप्रतिबिम्बयोर्भेदप्रतीतेरुत्तरो दृष्टान्तः अर्थान्तरे हि यस्मात् "आततत्वाच्च मातृत्वादात्मा हि परमो हरि"रित्युक्तेर्यः खलु सर्वेषामपि देहिनां देहाभिमानिनामेक आत्मा हरिः स एव वस्तुतस्तेषां परः श्रेष्ठः परमप्रेमयोग्य इत्यर्थः। यस्तु नाना पृथक् पृथगात्मा देहाभिमानिवर्गस्तन्मध्ये मूढैरेव पर इव स गृह्यते केपुचित् कैश्चिन्मोहविवर्त्ते प्रेमाभासमयैरेव यथास्वं तत्तद्योग्यतया प्रतीयते मात्रं तत्र दृष्टान्ता यथा रवेरेवालाभे दीपो मर्त्यैः परतया गृह्यते यथा विस्तृतेर्नभस एवालाभे उदुम्बरमशकैस्तदन्तर्गतनभस्तत्तया गृह्यते इति ॥ ४४ ॥

### श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी

देवीसान्त्वनार्थमेव पुनरपि श्रीकृष्णं प्रत्यतिपरुषमाह—राज्यस्येति। मानस्य पूजायाः, तेजसः कान्तेर्वलस्य वा, अन्यस्य अन्नपानादेः, राज्यादीनामुत्तरोत्तरस्य न्यूनत्वम्; ततश्च किं वक्तव्यम्, राज्यस्य हेतोरिति भूमेर्हेतोरपोत्येवं कैमुतिकन्यायमवतार्य्य व्याख्येयम्। मानिनोऽभिमानवन्तः, तत्रापि श्रीमदेनान्धाः, अतः क्षिपन्ति बन्धुनाक्षिपन्ति हि, यस्मात् श्रीमदान्धा एव क्षिपन्ति, मद्विधानान्तु तादृशत्वाभावादेतदयुक्तमिति भावः। एवं श्रीकृष्णं प्रत्युक्तानां यथोत्तरं पारुष्याधिक्यम्। किञ्च, वध्वाः शोकानपगमेन महाव्यग्रः सन् क्रमेण द्वावेव प्रति पुनः पुनराहेति ज्ञेयम् ॥ ४१ ॥ ईदृशे देव्याः सान्त्वनार्थमवाच्येऽपि श्रीकृष्णं प्रत्युक्ते तस्याः शोकात्यागात्तं त्यक्त्वा तामेव तत्त्वोपदेशेन प्रबोधयन्नादौ सक्रोधमाह—तवेति। तैर्व्याख्यातमेव। यद्वा, भद्रं साधु यथा स्यात्तथा, यत् सुहृदां भद्रं क्षेमर्मिच्छसि। अन्यत् समानम् ॥ ४२ ॥ कश्चित् सुहृत्, कश्चन दुर्हृत् शत्रुः, कोऽप्युदासीन इत्येय आत्मनो मनसः स्वस्य वा मोहः, देवस्येश्वरस्य माययैव कल्पते प्रभवति। कुतः ? देहमेवात्मानं मन्तुं शीलमेषामिति। देवमाययेति महामिथ्यात्मम्, तथापि दुर्लङ्घ्यत्वादिकञ्च मोहस्य सूचयति। यद्वा, एप साक्षाद्दृश्यमानो देवमाययात्ममोह एव सुहृदादिरित्येतत् कल्पते रचयति; अन्यत् समानम्। स्वपक्षे दुर्हृदुदासीनयोरुक्तिः प्रसंगात् दृष्टान्ततया वा ॥ ४३ ॥ ननु जगतो वैचित्री साक्षादेव दृश्यते, तया च सुहृदादिर्घटत एव, कथमुच्यते आत्ममोह एव कल्पत इति ? सत्यम्, तत्त्वतो जीवानां परमेश्वरांशतया सच्चिदानन्दस्वरूपत्वेनाभिन्नत्वादित्याह—एक इति। सर्व्वेषामेव जरायुजादिभेदेन चतुर्विधानामपि देहिनां विचित्रानन्तदेहं लभमानानाम्, हि यतः, परो देहाद्भिन्नः, अतः देहस्यैव वैचित्री, न त्वात्मन इति भावः। ननु तर्हि शान्तत्वादिना विविधोऽसौ कुतः प्रतीयते ? अधिष्ठानस्योपाधेर्देहस्यैव वैचित्र्यादिति सदृष्टान्तमाह—नानेति। इवेति तत्त्वत ऐक्यात्, मूढैस्तत्त्वानभिज्ञैर्देहात्ममानिभिर्वा, ज्योतिष उदकाद्युपाधीनां प्रायोपलसाध्यत्वेन स्वयमेव सदा वर्त्तमानदेहस्यासादृश्याद्दृष्टान्तान्तरम्, यथा नभ इति ॥ ४४ ॥

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम्

क्षिपन्ति निरस्यन्ति ॥ ४१ ॥ सुहृदामाशास्यं भद्रम् असुहृदामपकारिणामपि त्वं मन्यसे आकाङ्क्षसे अतो भूतेषु बुद्धिर्विषमा नैकरूपा मन्यत इति पाठे लोके सुहृदां भद्रं च यन्मन्यते अतो विषमा बुद्धिरित्यर्थः ॥ ३२-४३ ॥ सुहृच्छत्रूदासीनविभागस्याज्ञानकल्पितत्वमुपपादयति। एक एवेति। सर्वेषामपि देहिनां जीवात्मनाम् अन्तरात्मा एक एव परः गूढतयावस्थाने दृष्टान्तमाह। यथा ज्योतिः काष्ठेष्वग्नरिवेत्यर्थः तद्गतदोषास्पर्शे दृष्टान्तमाह—यथा नभ इति। एकस्य परमात्मनो जगच्छरीरभूतमिति एकशरीरभूतपाणिपादादिषु शत्रुमित्रादिविभागोऽनुपपन्नः तथा विमूढैः परमात्मशरीरत्वानभिज्ञैः नानेव शत्रुमित्रादिविभागयुक्तमिव जगद्विज्ञायत इत्यर्थः ॥ ४४ ॥

### श्रीमद्वीरराघवाचार्यकृता भागवतचन्द्रचन्द्रिका

पुनः कृष्णं प्रत्याह—राज्यस्येति। श्रीमदेनैश्वर्य्यमदेनान्धाः विवेकरहिताः मानिनो दुरहङ्कारिणो जनाः राज्यादेरन्यस्य वा हेतोः कारणान् राज्याद्यर्थं तेभ्योऽन्यार्थं वेत्यर्थः। क्षिपन्ति हि क्षिपन्ति निरस्यन्ति बन्धूनिति शेषः। अस्माकं त्वेतदनुचितमिति भावः। तत्र मानस्य वयमेव वीरा इत्यभिमानस्य तेजसः पराभिभवनसामर्थ्यस्य ॥ ४१ ॥ सान्त्वितामपि विषण्णामेव तामालक्ष्यान्तरेण तत्त्वोपदेशमस्या विषादो न शाम्यतीति मत्वा तत्त्वमुपदिदिक्षुस्तावद्देहानुबन्धिषु सौहार्दस्य तदभद्रत्वप्रयुक्तचित्तविकारस्य चाज्ञानप्रयुक्तत्वमाह—तवेति द्वाभ्याम्। अज्ञवत् देहात्मस्वतन्त्राभिमानिवत् सदा सुहृदां भद्रं दुर्हृदामहितानामभद्रं च मन्यस इति यत् तवेयं बुद्धिः सर्वेषु भूतेषु विषयभूतेषु विषमा समा एकरूपा न भवतीत्यर्थः ॥ ४२ ॥ कुत इत्यत आह—

आत्ममोह इति। नृणामेष आत्ममोहो बुद्धिमोहो भगवन्मायया अनात्मन्यात्मबुद्धिमस्वतन्त्रे स्वातन्त्र्यबुद्धिं च कल्पयन्त्या कल्पितः कोऽसौ यो देहात्मवादिनां सुहृदित्यादिरूपः ॥ ४३ ॥ सुहृदादिविभागस्याज्ञानकल्पितत्वमेवोपपादयति । एक एवेति । सर्वेषामपि देहिनां जीवात्मनामात्मान्तरात्मा एक एव परः गूढतया अवस्थाने दृष्टान्तमाह—यथा ज्योतिरिति । यथा ज्योतिरग्निः काष्ठे मूढतयावतिष्ठते तथा परमात्मापीत्यर्थः । अवस्थितस्यापि परस्य तत्तद्वस्तुगतदोषास्पर्शे दृष्टान्तमाह—यथा नभ इति । यथा सर्वत्र व्याप्नुवत आकाशस्य न व्याप्यगतदोषस्पर्शस्तथेत्यर्थः एवं स्थिते एकस्य परमात्मनः कृत्स्नं जगच्छरीरभूतमित्येक-शरीरभूतपाणिपादादिषु शत्रुमित्रादिविभागोऽनुपपन्नः मूढैः परमात्मशरीरत्वानभिज्ञैस्तु नानेव शत्रुमित्रादिविभागयुक्तमिव जगद्वि-ज्ञायत इत्यर्थः ॥ ४४ ॥

### श्रीविजयध्वजतीर्थकृता पदरत्नावली

ननु तर्हि सर्वः सर्वं हन्यादित्यतिप्रसङ्ग इत्यत्राह—राज्यस्येति । मानिनः देहाभिमानवन्तः अन्यस्य स्वजनस्य वा क्षिपन्ति घ्नन्ति राज्यादेः सर्वस्य हेतोरिति सम्बन्धः ॥ ४१-४२ ॥ किमत इत्यतः स्वस्य श्रीहर्यधीनत्वकल्पनामन्तरेण स्वक-पोलकल्पनाबुद्धिर्भ्रम एवेत्याह—आत्मेति । देह एवात्मेति मानं ज्ञानं येषां ते तथा तेषां नृणां निरपेक्षत्वेनोपकर्त्ता सुहृत् स्वसुख-नाशकर्त्ता शत्रुस्तदुभयकर्तृत्वशून्य उदासीन इत्येष आत्ममोहो मनोभ्रमः देवस्य हरेर्मायया बन्धकशक्त्या कल्प्यते ततः सुहृच्छ-त्रूभयोरितर उदासीन इति स्वकपोलकल्पना इत्याद्येति भावः ॥ ४३ ॥ देवः कीदृश इति तत्स्वरूपमाह—एक एवेति । आत्मा परः परमात्मा नियामक इति शेषः । नन्वेकत्वे "सच्च त्यच्चाभव"दिति नानाभावः कथमिति तत्राह । नानेति ॥ ४४ ॥

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः

देहिनां जीवानां एकः मिथस्तुल्यस्वरूपः चिद्रूपत्वात् असतामात्मनीत्यर्थात् तत्स्पर्शासमर्थेनेत्यर्थः तत्र हेतुः तस्या-न्यस्य प्रसिद्धेः शक्तेस्तद्धेतुत्वात् चिद्रूपात्मकहेतुत्वात् ॥ ४४-४५ ॥

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी

ननु क्षत्रियो वन्धुः हन्तुं वरं किन्तु तं वीभत्सितवैरूप्यवन्तं कर्तुं नार्हतीति देव्याः स्वगतोक्तिमालक्ष्य तां प्रसादयितुं कृष्णमाह । राज्यस्येति । राज्यादेर्हेतोर्मानिनोऽहङ्कारवन्त एवान्यानाक्षिपन्ति अस्माकं त्वेतदनुचितमिति भावः ॥४१॥ नीतिरियं युद्धादन्यत्रैव युद्धे तु वैरी पराजित्य तिरस्क्रियत एवेतीयमपि नीतिरिति कृष्णस्य स्वगतोक्तिमालक्ष्य देवीं प्रत्याह तवेयमिति । सुहृदां स्वबन्धूनां रुक्मिप्रभृतीनां भद्रमेव कृष्णकृतं मुण्डनं यत् सद अभद्रं मन्यसे इयं तव विषमा बुद्धिः अज्ञवत् अज्ञानामिव तव विज्ञाया अपीत्यर्थः । कीदृशानां सर्वभूतेषु दुर्हृदां दुष्टमनसाम् ॥ ४२ ॥ जानाम्येवेदं यदयं भ्राता मे दुष्ट एव तदप्यत्र बन्धुभावो नापयाति किङ्करोमीति चेत् सत्यमप्राकृत्या भवत्या एवायमविवेकोऽनुचित इत्युच्यते सांसारिकलोकानां त्वयं स्वाभाविक एव धर्म इत्याह । आत्मेति । देहात्ममानिनां देह एवात्मेति मन्यमानानां देहात्ममानिनामेव नृणां नतु ज्ञानिनाम् ॥ ४३ ॥ देहात्म-मानिनां मतं द्वाभ्यां खण्डयन् प्रथमं देहः परमात्मा न भवतीत्याह । एक इति । पर आत्मा देहिनां देहवतां जीवानां हि निश्चितमेक एव प्रेरको भवति एकस्यैवाधिष्ठानबाहुल्ये सति नानात्वे दृष्टान्तौ ज्योतिरग्निर्दारुषु नभ आकाशं घटेषु यदुक्तम् प्रथमे—

यथा ह्यवहितो वन्हिर्दारुष्वेकः स्वयोनिषु । नानेव भाति विश्वात्मा भूतेषु च तथा पुमान् ॥ इति ॥ ४४ ॥

### गूढार्थदीपिनी

मानिनोऽहङ्कारिणः जना राज्यादिहेतोरन्यस्य हेतोर्निमितात् क्षिपन्ति तिरस्कुर्वन्ति बन्धूनिति शेषः । वयं तु न तथा अतोऽनुचितमेतत् ॥ ४१ ॥ सर्वभूतेषु दुर्हृदः शिशुपालादयस्तेषाभद्रं यत् रुक्मिप्रभृतयः सुहृदस्तेषां भद्रं च अज्ञवत् यन्मन्यसे इच्छसि इयं तव बुद्धिर्विषमा प्रातिकूला ॥ ४२ ॥ आत्मनो बुद्धेः मोहः । देह एवात्मेत्यभिमानवताम् ॥ ४३ ॥ ज्योतिश्चन्द्रादिकं यथा जलादिषु । अग्नि यथा काष्ठेषु । नभो यथा घटादिषु तद्वत् ॥ ४४ ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

पुनः श्रीकृष्णं प्रत्याह । राज्यस्येति । मानिनोऽहङ्कारिणः श्रीमदेनान्धाः लुप्तविवेकाः राज्यादेर्हेतोः राज्यार्थं तथा भूम्यर्थं तथा वित्तार्थं तथा स्त्र्यर्थं मानार्थं तेजः क्रोधस्तच्छान्त्यर्थम् अन्यः शरणागतादिस्तदर्थं च क्षिपन्ति निरस्यन्ति वयन्तु न मानिनः न श्रीमदान्धाः किन्तु स्वभक्तमनोरथसाधका इति भावः ॥ ४१ ॥ सर्वभूतेषु चेतनाचेतनेषु एकात्मकेषु मध्ये शिशु-पालादयो दुर्हृदस्तेषामभद्रं भवतु इत्येवं दुर्हृदामभद्रं रुक्मिप्रभृतयः सुहृदस्तेषां भद्रं भवतु इत्येवं सुहृदां भद्रं च यदज्ञवत् मन्यसे इच्छसि इतीयं बुद्धिः सुज्ञायाः भगवत्याः तव विषमा अननुरूपेत्यर्थः ॥ ४२ ॥ सुहृदुर्हृदुदासीन इति आत्ममोहो बुद्धिमोहो देह

एवात्मा इत्येवं मानिनामज्ञानां देवस्य तव भर्तुर्मायया प्रकृत्या कल्प्यते योग्यो भवति नतु तवेति भावः ॥ ४३ ॥ कीदृशो देवः कीदृशी च तस्य माया कीदृशो देहो यत्र जीवानामात्मबुद्धिः कीदृशा जीवाः कश्च जीवदेहयोः संयोगवियोगहेतुरित्याकाङ्क्षायां देवादिकं वर्णयति । एक इत्यादित्रिभिः । सर्वेषां देहिनां जीवानामात्मा अन्तर्यामी नियन्ता तत्कर्मादिसाक्षी कर्मादिफलदः एक एव नानेव गृह्यते जीवानां मध्ये कश्चिच्छ्रेष्ठो जीव एव स किं नेत्याह-परः सर्वजीवविलक्षणः तथा च श्रुतिः "नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामा" निति तत्तदन्तर्यामित्वेनैकस्यैव नानात्वमिव दर्शयन् सर्वप्रकाशकत्वं सर्वदोषास्पृष्टत्वं च दृष्टान्ताभ्यामुपपादयति । यथा ज्योतिरग्निः काष्ठादिषु यथा च नभो घटमठादिषु नानेव गृह्यते तद्वदित्यन्वयः ॥४४॥

**श्रीसत्यधर्मकृता श्रीभागवतटिप्पणी**

हे कृष्ण । त्वयेदं कृतमसाधु । तत्किमित्यत आह । श्मश्रुकेशानां वपनमितीदमस्मज्जुगुप्सितमस्माकं निन्दितमिदं वैरूप्यम् । सुहृद इत्यावृत्तषष्ठ्यन्तं प्रथमाबहुवचनं च ! सुहृदः स्वकीयस्य वधं सुहृदो वदन्तीति शेषः । कृष्णस्तु लोके लोकाः । इदं मया नानुष्ठितं चेन्नेयानि श्मश्रूणि किन्तु त्वत्प्रदर्शनीयस्थानान्तरसन्निवेशकेशास्तथा मदुक्तं न सम्पन्नं चेच्छिरो मुण्डयेति वदन्तीत्ययमपि सम्प्रति प्रतिश्रवेणायातो नोपायतस्तत्पारमिति तल्लोमतुलतां दर्शयेस्तेषां स्वयं मुण्डयन्नर्म कर्म च प्राहूणिके विहितं विश्वकर्तुर्नेदं दूषणमिति ततानानया धाट्येति नाचतुर इति । बलोऽप्यग्रज इत्येवमन्वशासदिति च ज्ञेयम् । सुहृदो वध इति पाठः सरसः ॥ ४१ ॥ हे साध्वि । भ्रातुर्वैरूप्यचिन्तयाऽस्मानेवं कृतवतोऽसूयेथाः । यतः पुमान्स्वकृते भुङ्क्त इति स तथा । ततः सुखदुःखदोऽन्यो न चास्ति । सु अकृतं नित्यमानन्दादिकं स्वकृतं स्वनिर्मितमेव भुङ्क्त इति स तथा । पुमान्पूर्णपुरुषो यस्मात्सुखदुःखदोऽन्यो न चास्ति स्वतन्त्रस्तस्य न कश्चित्प्रतिभेद इति भावः ॥ ४२ ॥ अय्यनार्य न कार्यः किल बन्धुवध इत्यतः सामान्यन्यायं क्षत्रियाणामिति विशेष्य वक्ति कैश्चिच्छ्लोकैः । वधार्हो वधयोग्यो दोषो यस्य स तादृशोऽपि बन्धुर्वधं नार्हति । तर्हि कार्यं तद्विषय इत्यत आह । त्याज्यः । कुतो धातो न कर्तव्य इत्यत आह ॥ स्वेनैवेति । स्वदोषेणैव स हतश्चेदपि किमित्यत इत इत्याह । हतः किं पुनर्हन्यते मृतमारणप्रसक्तेरिति भाव इति । न बन्धुर्वन्धुरेव न भवति । हे स्वे । नैव वधमर्हति । दोषेण हत इत्यन्वयसूचनार्थं पुनर्वन्धुरित्युक्तिः । अत एव बन्धुर्मम भ्राता कृष्णो हतः किं पुनर्हन्यत इति त्याज्यत्वमेव निरीक्ष्य तव भ्रातरमातुरं त्यक्तवानिति सूचनार्थं वा । बन्धुबन्धूकपुष्पे स्याद्बन्धुभ्रातरि बान्धव इति विश्वः ॥ ४३ ॥ प्रजापतिना ब्रह्मणा विनिर्मितः क्षत्रियाणां धर्मा व्यंसक इत्यत आह ॥ भ्राताऽपीति । भ्रातरं एवं हन्याद्येनैतादृशकर्मणा घोरतरः क्षत्रियस्तत इति येन धर्मेण स धर्मस्ततो घोरतर इति वा । ततो ये घोरतरतमास्तेन सन्तीत्यन्वयो वा । घोरं यत्तरो बलं तेन ततः स इत्येकपद्यं वा । तरो बले च वेगे चेति विश्वः ॥ ४४ ॥

**श्रीमद्वल्लभाचार्य्यकृता सुबोधिनी**

ननु सत्यं यदि युद्धमेव कुर्यात्, तदा अशस्त्रं विरथं कृत्वा तं शत्रुस्त्यजेत्, अयं त्वसभ्यं बहु वदतीति मुखरत्वान्मारणीय एवेति चेत्, तत्राह **राज्यस्येति** । तेषामसभ्यवचनमपि प्रजापतिविनिर्मितमेव । तत्र साधारण्येन षट् हेतून् निर्दिशति । राज्यं चेत्कस्यचित्केनचिद्धृतं तदा स क्षत्रियः । अन्यथायं न मारयिष्यतीति । राज्ये च गते केवलं जीवनमयुक्तमिति मरणार्थं शत्रून् क्षिपन्ति । श्रीमदान्धा अपि क्षिपन्ति । पूर्वं श्रिया जातो यो मदः तेन अन्धाः विवेकरहिताः, अतः क्षेपो युक्त एव । एवं भूमेः राज्यैकदेशस्य वा । वित्तस्य धनस्य । स्त्रियोर्थे मानस्य वार्थे तेजसो वार्थे । एवं षण्णामर्थे क्षिपन्ति । तत्रापि ये मानिनः । अनुक्तसर्वहेतुसमुच्चयार्थमाह **अन्यस्य वा हेतोरिति** । युक्तश्चायमर्थः । अतोऽस्य क्षेपोऽपि युक्त एवेति न हननमुचितमिति भावः ॥४१॥ ननु न हत एव मयाप्ययम्, किमित्युपालम्भः क्रियत इति चेत्, तत्राह **तवेयं विषमा बुद्धिरिति** । अयं न हत इति या बुद्धिः, सा तव विषमा, न समा । यदि नापकृतः स्यात्, तदा समा स्यात् । यदि वा वधं कुर्याः, तथापि लोकन्यायेन समा स्यात् । यत्तु सुहृदां भद्रमभद्रं मन्यसे, तत्राप्यक्षयं तदभद्रं न दिनमात्रेणापगच्छति, किन्तु यावज्जीवं तिष्ठति । नन्वस्त्येव लोके विषमा बुद्धिः, का दोष इति चेत्, तत्राह । सर्वभूतेषु दुर्हृदामेव विषमा बुद्धिर्भवति, न तु तव, न वा सुहृदाम् । येषां हि चित्ते कापट्यम्, तेषामेते प्रकाराः, नतु शुद्धचित्तानामित्यर्थः । सर्वभूतेषु वा मध्ये दुर्हृदामभद्रं मन्यस इति । असुरद्विडिति वाक्यात् । दुर्हृदां वा सर्वभूतेषु लोमादिष्ववयवेषु अभद्रं मन्यस इति । भद्रं क्षौरं वा विपरीतलक्षणया अभद्रमेव । भूतानां मध्ये दुर्हृदां भद्रम्, सुहृदामभद्रम्, एतादृशमपि मुण्डनम्, तत्राप्यक्षयं त्वं मन्यस इति तव विषमा बुद्धिः । अथवा । दुर्हृदामभद्रं सुहृदां भद्रं सदा मन्यस इति । एतत्तव ब्रह्मणः अयुक्तम्, विषमा बुद्धिरित्यर्थः ॥४२॥ एवं चतुर्भिः तत्सन्तोषार्थं भगवदुपालम्भनमुक्त्वा, तावताप्यपरितुष्यमाणां ज्ञानेन बोधयति **आत्ममोह** इति सप्तभिः । भगवान् सधर्मोऽस्या बोधं कर्तुं शक्त इति ।

स्वरूपाज्ञाननानात्वे देहादीनां च शत्रुता । दोषत्रयं निरूप्यादो आत्मधर्मनिरूपणम् ॥ १ ॥<br>
स्वप्रकाशोऽयमात्मा हि असङ्गश्च निरूप्यते । जन्मादिदोषास्त्वन्यस्य अतस्तैर्नैव दुष्यति ॥ २ ॥<br>
असंसर्गाग्रहो भ्रान्तः दृष्टान्तैर्विनिरूप्यते । ततोपसंहृतिर्युक्ता ज्ञानेनाज्ञाननुत्तये ॥ ३ ॥

'तरति शोकमात्मवि'दिति श्रुतेः शोकतरणं ज्ञानेनैव भवतीति ज्ञानमुपदिशति। अत्र ज्ञानं देहाद्व्यतिरिक्तात्मज्ञानम्, तावतैव देहाद्यध्यासे जातो मोहः अपगच्छति। ततस्तन्निराकरणार्थं तत्सामग्री प्रतिपादयति **आत्ममोह** इति। आत्मनोऽयं मोहः। अज्ञानानन्तरं दोषे आविर्भूते या मूर्च्छा स मोह इति व्यवह्रियते। तथात्रापि आत्मनः अज्ञाने शरीराहंभावे च प्रादुर्भूते सुहृद्दुर्हृदित्यादिबुद्धिर्बोधमपि न विषयीकरोतीति मोहो भवति। स च पश्वादिषु तथा नास्तीति **नृणामित्युक्तम्**। देवादीनां तथात्वेऽपि व्यवहाराभावान्नोक्तम्। **एष** इति प्रदर्शनम्। देवस्य भगवतो माययेति मोहकारणं माया निरूपिता। अन्यथा प्रत्यक्षादिषु श्रुत्यादिषु च प्रमाणेषु विद्यमानेषु प्रत्यहमेतस्य वृद्धिर्न स्यात्। देवानां माया नृणां दुस्तरा भवतीति, यथा नृणां माया पशूनाम्। अतो देवपदम्। सुतरामेव पुरुषोत्तममाया सर्वेषामेव दुस्तरा। मायायास्त्रिगुणत्वात् मोहेऽपि त्रिगुणतामाह **सुहृद्दुर्हृदु-दासीन** इति। उदासीनः सात्त्विकः, सुहृद्राजसः। मायया यदा मोहः, तदा सर्वत्र चेन्निर्निमित्तं व्यर्थमेव ज्ञानं स्यादिति निमित्त एवैतदित्याह इति **देहात्ममानिनामिति**। अमुना प्रकारेण देहमेवात्मानं मन्यन्ते, यदा मायया अन्येन वा देहात्मबुद्धिर्दृढा भवति, तदैते दोषाः सम्भवन्ति। ततस्तेषामुपकारापकाराभ्यां इदानीमनुभूयमानो मोहः प्रादुर्भवतीति देहात्मभावो मुख्यतया निवार्य इत्यर्थः॥ ४३॥ ननु देहात्मभावाभावेऽपि कथमेतद्घटते। यावता परिच्छिन्न आत्मेति करणत्वेनापि स्वीक्रियमाणे देहे उदासी-नादिभेदा भवन्त्येव। अतो देहव्यतिरिक्तात्मज्ञानं व्यर्थमिति चेत्, तत्राह **एक एवेति**। सर्वेषु देहेषु आत्मा एक एव, यतः परो नियन्ता, अन्यथा देहेन परिच्छिन्नः देहाधीनः स्यात्। अनुभूयते च देहे स्वातन्त्र्यम्, देहान्तरे स्वातन्त्र्याभावस्तु तत्रानुसन्धाना-भावात्। एवमखण्डाद्वैतमाने सर्वत्रात्मबुद्धिः। अथवा। आत्मशब्देन भगवानुच्यते। तदाभासा एव जीवा इति पर एक एव। एतद्भगवति विद्यमाने विरूपणमसमञ्जसमिति विरम्यते। युक्तश्चायमर्थः। सर्वदेहेष्वेक एवात्मेति। यतोऽयमात्मा। अतति व्याप्नोतीति। अन्यथा आत्मत्वं भज्येत। अणुपरिमाणत्वे देहमपि न व्याप्येत। प्रकाशवत् गुणव्याप्तावपि चैतन्यलक्षणस्य गुणस्य सङ्कोचविकासावङ्गीकर्तव्यौ। तत्रापि नियामको देह एवेति धर्मिण एव नियामकोऽस्तु, किं धर्मनियामकत्वस्वीकारेण। यथेदं जगत् ब्रह्माण्डैनैकतामापद्यते, अन्यथा तस्यैकत्वनिर्देशो न स्यात्, तथा आत्मनिर्देशोऽपि। यथैकमेव सुवर्णं मृद्वा नानाप्रकारेण कृतिसमवेतं सद्भासते, एवमात्मापि देहादिवैलक्षण्यात् देवतिर्यङ्मनुष्यादिभावमापद्यत इति न कोऽपि दोषः। **सर्वेषामपि देहिना-मिति**। यतः सर्वेऽपि देहिनः, 'दिह उपचय' इति उपचयादिमन्तः। अतो वृद्धिह्रासावात्मनः परिच्छेदेनोपपद्येत इति व्यापकत्वे अङ्गीक्रियमाणे एकेनैव चरितार्थतेति नानात्वं व्यर्थम्। 'नानात्मानो व्यवस्थात' इति स्मृतिस्तु धर्ममर्यादार्थं नानात्मत्वं स्वीकर्त-व्यमिति दोषगुणव्यवस्थया इव व्यवस्थानिरूपिका। यथा पञ्चमहाभूतानि। एकश्चात्मा सर्वसङ्घातेषु तुल्यः, तथापि कश्चि-च्चाण्डालः, कश्चिद्ब्राह्मण इति धर्मव्यवहारार्थमेव विभागः कल्पितः। सामग्र्यामधर्मो धर्मो वा प्रविष्टः तथा सम्पादयतीत्यपि पक्षे धर्माधर्मयोरेव नियामकं वाक्यादतिरिक्तं विषये नास्तीति व्यवस्थार्थमेव तत्कल्पना वक्तुं युक्ता। उत्क्रमादयस्तु न्यायमतेऽपि न सन्ति। भगवन्मते तु भगवत इव तस्यापि गमनागमने संभविष्यतः। तत्रापीश्वरपदप्रयोगात्। 'शरीरं यदवाप्नोति यच्चाप्यु-त्क्रामतीश्वर' इति वाक्याद्ब्रह्मवादेऽप्ययमेव सिद्धान्तः। तस्मात्सर्वत्रैक एवात्मेति युक्तम्। तर्हि कथं भेदप्रतीतिरिति चेत्, तत्राह **नानेव गृह्यते मूढैरिति**। अत्यन्ताकुशलैर्नाना गृह्यते। तैरपि क्वचिन्नानात्वं नानुभूयते, पुत्रादिषु अवयवेषु च वैलक्षण्ये भास-मानेऽपि। अन्यथैको देह इति न स्यात्। अत उक्तमिवेति। तत्र स्पष्टप्रतीत्यर्थं साकारनिराकारौ दृष्टान्तयति। **यथा ज्योतिरिति** साकारे। **यथा नभ** इति निराकारे। तार्णः पार्णः। घटाकाशो मठाकाश इति॥ ४४॥

## श्रीसुबोधिनी–सारः

कृष्णं प्रत्याह। राज्यभूमिधनस्त्रीमानतेजसोऽन्यस्य वा हेतोर्मानिनो धनमदांधाः क्षिपंति घातयन्ति परान् घ्नंति स्वान् प्राणानिति पामराः हि युक्तम्॥ ४१॥ सर्वभूतेषु तव इयं बुद्धिर्विषमा न समीचीनाऽस्ति। केत्यत आह। सुहृदां मित्राणां बन्धूनां च भद्रं कल्याणं दुर्हृदां शत्रूणां सदाऽभद्रं दुःखमित्यज्ञवत् त्वं मन्यसे इति यत्॥ ४२॥ एष आत्म-मोहश्चित्ताज्ञानं देवस्य मायया देहात्ममानिनां नृणां कल्पते कोऽसौ इत्यत आह। सुहृदयं दुर्हृदयमुदासीनोऽयमिति॥ ४३॥ सर्वेषामपि प्राणिनामेक एव परः शुद्ध आत्मा हि मूढैर्नाना इव गृह्यते। ज्योतिः सूर्यादिरिव जलपात्रेषु नभः खं घटमठादिषु इव॥ ४४॥

## विवरण टिप्पणी

**आत्ममोह** इत्यत्र। **बोधमपीति**। बोधयतीति बोधः। कर्तरि पचाद्यच्। बोधकं वाक्यमित्यर्थः। **एक एवेत्यत्र**। व्यापकजीववादः स्मार्तः सोऽत्रोक्तः। औपनिषदोऽणुजीववादोऽसुरस्य रुक्मिणः शृण्वतो वक्तुमनुचितः। अत एव कर्ममार्गो बोधित इति पूर्वमुक्तम्। अतः पूर्वमीमांसासिद्धो व्यापकजीववादो बोध्यते। अविरोधस्तु चित्समष्टिरूपो जीवो व्यापक एक एव। व्यष्टि-रूपास्त्वनेकेऽणवश्चेति। **ब्रह्मवादेऽप्ययमेवेति**। स्मार्तब्रह्मवादे इत्यर्थः। **पुत्रादिष्विति**। यथा पुत्रादिषु, तथाऽवयवेष्वपि दीर्घ-ह्रस्वादिवैलक्षण्यमस्तीत्यर्थः। **अन्यथेति**। अवयवेष्वात्मभेदे इत्यर्थः।

### गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

पुनः कृष्णं प्रत्याह—राज्यस्येति । हि यस्मात् श्रीमदेनान्धाः विवेकरहिता अत एव देहाद्यात्माभिमानिनो जना एव राज्यादीनामन्यस्य वा हेतोः निमित्तात् बन्धून् क्षिपन्ति तिरस्कुर्वन्ति । तस्मादस्माकमेतदनुचितमेवेति शेषः । मानस्य लोककर्तृकसन्मानस्य तेजसः स्वप्रभावख्यापनार्थम् ॥ ४१ ॥ पुनः श्रीकृष्णमेवाक्षिपति—तवेति । सर्वभूतेषु दुर्हृदां दुरभिप्रायाणां स्वसुहृदां स्वसम्बन्धिनां रुक्म्यादीनां अभद्रं मुण्डनादिना वैरूप्यं अज्ञानामिव यत्त्वं सदा भद्रं इष्टं मन्यसे, इयं तव बुद्धिर्विषमेत्यन्वयः ॥ ४२ ॥ एवं श्रीकृष्णे उपालब्धेऽपि रुक्मिण्याः शोकनिवृत्तिमदृष्ट्वा 'तरति शोकमात्मवित्तत्त्वं' इति श्रुतेस्तच्छोकनिवृत्त्यर्थमात्मतत्त्वं निरूपयति—आममोह इति । देहात्ममानिनां देह एव आत्मेत्यभिमानवतां नृणां प्राणिनां सुहृत् दुर्हृत् उदासीन इत्येष आत्मनो बुद्धेर्मोह एव देवस्य भगवतो मायया कल्प्यते इत्यन्वयः ॥ ४३ ॥ उक्तं मोहमेव स्पष्टयति—एक एवेति । सर्वेषामपि देहिनामेक एवात्मा मूढैर्जनैर्नानेव गृह्यते । देहादभिन्नत्वात् तदभेदं प्रकल्प्यात्मापि शत्रुमित्रोदासीनतया व्यवह्रियते इत्यर्थः । हि यस्मात् आत्मा परो देहादेर्भिन्न एव । एकस्यैव नानाव्यवहारे दृष्टान्तद्वयमाह—ज्योतिः चन्द्रादि यथोदकभेदेन, नभो यथा घटमठादिभेदेन भिन्नतया व्यवह्रियते तथेति ॥ ४४ ॥

### अन्वितार्थप्रकाशिका

पुनः कृष्णमाह—राज्यस्येति । हि यस्मात् श्रीमदेनान्धा विवेकरहिताः अभिमानिनो जना एव राज्यादीनामन्यस्य वा हेतोः निमित्तात् बन्धून् क्षिपन्ति तिरस्कुर्वन्ति तस्मादस्माकमेतदनुचितमेव ॥ ४१ ॥ पुनर्देवीमाह—तवेति । सर्वभूतेषु दुर्हृदामहितानामपि स्वसुहृदां भद्रमेव दण्डनरूपं मुण्डनमभद्रं यन्मन्यसे तवेयं बुद्धिः विषमा असमीचीना । यद्वा । सर्वभूतेषु दुर्हृदामपि भ्रातॄणामज्ञवद्यद्भद्रं मन्यसे इच्छसि इयं तव विषमा बुद्धिः । यतस्तदेव सुहृदामभद्रमिति । यद्वा । यत् सर्वभूतेषु मध्ये दुर्हृदां शत्रूणां सदा अभद्रं मन्यसे इच्छसि सुहृदां च भद्रमिच्छसि सेयम् अज्ञवत् अज्ञानामिव तव विषमा बुद्धिः । यद्वा । सर्वभूतेषु मध्ये दुर्हृत्त्वेन प्रतीतानां केषांचिद्यदभद्रमिच्छति सुहृत्त्वेन प्रतीतानां च भद्रमिच्छसि परिशेषादन्येष्वौदासीन्यं कुरुषे सेयं तव विषमा बुद्धिः ॥ ४२ ॥ तत्र हेतुः—आत्मेति । देह एवात्मेति अभिमानवतां नृणां प्राणिनां सुहृत् उदासीन इत्येव आत्मनो बुद्धेर्मोह एव । देवस्य भगवतो मायया कल्प्यते ॥ ४३ ॥ एक इति । हि निश्चितं परो देहादेर्भिन्नः शुद्धो वा सर्वेषामपि देहिनामेक एवात्मा मूढैर्देहादिभेदेन नानेव गृह्यते । यथा ज्योतिश्चन्द्रादिरुदकपात्रभेदेन यदा वा नभो घटमठादिभेदेन भिन्नतया व्यवह्रियते तथा प्रतिबिम्बावच्छेदपक्षद्वयानुरोधेन दृष्टान्तद्वयम् ॥ ४४ ॥

### श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्

हरिं प्रति पुनराह राज्यस्येति राज्यादेर्हेतोर्मानिनोजनाः अन्यान् क्षिपन्ति एतदस्माकमघटितमिति भावः ॥ ४१ ॥ पुनरपि वैदर्भी प्रत्याह तवेति । अज्ञवत्तव सर्वभूतेषु चेतनजात्याकारस्वरूपस्वभावैः समेषु सर्वक्षेत्रज्ञेषु इयं विषमा बुद्धिः यया विषमबुद्ध्यादुर्हृदां देहशत्रूणामभद्रं सुहृदां देहसंबंधिनां भद्रं मन्यसे इच्छसि एतत् हरिजनेत्वप्यघटितमिति भावः ॥ ४२ ॥ आत्मनिमोहः सुहृदादिरूपः देहे आत्मा स्वयमितिमानः अस्ति येषान्तेषां ॥ ४३ ॥ एवं देहाभिमाने दोषमुक्त्वा सांप्रतं देहं संसारहेतुतया निरूपयति देह इति ॥ द्रव्यं पंचभूतसंघातः प्राणाः इंद्रियं कलापः गुणाः शब्दादि विषयाः ॥ सत्वादयोवातदात्मको देहः अविद्यया अविद्याजनितप्रारब्धादि कर्मणा आत्मनि जीवात्मनि क्लृप्तः कृतः सन् ॥ ४४ ॥

### भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

पुनश्च श्रीकृष्णं प्रत्याह । राज्यस्येति । श्रीमदेनैश्वर्यमदेनान्धा विवेकरहिताः, मानिनो दुरहंकारिणो जनाः, राज्यस्य राज्यप्राप्तेर्हेतोः, भूमेर्भूमिप्राप्तेर्हेतोः, वित्तस्य धनप्राप्तेः हेतोः, स्त्रियोऽङ्गनाप्राप्तेर्हेतोः, मानस्य मानप्राप्तेर्हेतोः, तेजसस्तेजःप्राप्तेर्वा हेतोः, अन्यस्य हेतोर्वा, क्षिपन्ति निरस्यन्ति तिरस्कुर्वन्तीत्यर्थः । बन्धूनिति शेषः । हि अस्माकमेतदनुचितमिति भावः । तत्र मानस्य वयमेव वीरा इत्यभिमानस्य, तेजसः पराभिभवनसामर्थ्यस्य ॥ ४१ ॥ सान्त्विताम‌पि विषण्णामेव तामालक्ष्य तत्त्वोपदेशमन्तरेणास्या विषादो न शाम्यतीति मत्वा तत्त्वमुपदिदिक्षुस्तावद्देहानुबन्धिषु सौहार्दस्य तदभद्रप्रयुक्तचित्तविकारस्य च अज्ञानप्रयुक्तत्वमाह तवेति द्वाभ्याम् । तवेति । अज्ञवत् देहाभिमानिस्वतन्त्रताभिमानिवदित्यर्थः । सदा, सुहृदां, भद्रं दुर्हृदां अभद्रं, च मन्यसे इति यत्, एवंविधेयं तव, बुद्धिः सर्वभूतेषु विषयभूतेषु, विषमा असमा एकरूपा न भवतीत्यर्थः । त्वादृशीनां सर्वभूतेषु विषमबुद्धिकर्तृत्वस्यायुक्तत्वादिति भावः । यद्वा, सर्वभूतेषु, दुर्हृदां सर्वभूतशत्रुतोपेतानां भ्रातॄणां, अज्ञवत् यत्, भद्रं मङ्गलं, मन्यसे इच्छसि, इयं तव बुद्धिः, विषमा असमीचीना, कुतः । यतः, तदेव सुहृदां अभद्रम् ॥ ४२ ॥ कुत इत्यत आह । आत्ममोह इति । देहात्ममानिनां, नृणां अयं, मम सुहृत्, अयं मम, दुर्हृद्, अयं उदासीनः, इत्येवंरूपः एषः, आत्ममोहो बुद्धिमोहः, देवमायया भगवन्मायया, कल्प्यते । भगवन्मायाऽनात्मन्यात्मबुद्धिं अस्वातन्त्र्ये स्वातन्त्र्यबुद्धिं च कल्पयतीत्यर्थः ॥ ४३ ॥

सुहृदादिविभागस्याज्ञानकल्पितत्वमेवोपपादयति । एक एवेति । सर्वेषां अपि, देहिनां जीवात्मनां, आत्माऽन्तरात्मा, एकः एव, परो गूढतया तेष्ववस्थितश्च भवति हि । गूढतयाऽवस्थाने दृष्टान्तमाह । ज्योतिरग्निः, यथा काष्ठेष्वग्निर्यथा गूढतयाऽवतिष्ठते तथा परमात्मापीत्यर्थः । एवं जीवेष्वन्तरात्मतयाऽवस्थितस्यापि परस्य तत्त्वतस्तद्गतदोषास्पर्शे दृष्टान्तमाह । यथा नभः आकाशः, यथा सर्वत्र व्याप्नुवत आकाशस्य व्याप्यगतदोषास्पर्शस्तथा परमात्मनोऽपि व्याप्यगतदोषास्पर्शित्वमित्यर्थः । एवं स्थिते एकस्य परमात्मनः कृत्स्नं जगच्छरीरभूतमित्येकशरीरभूतेषु पाणिपादादिषु शत्रुमित्रादिविभागोऽनुपपन्न इत्यर्थः । मूढैः जगतः परमात्मशरीरत्वानभिज्ञैस्तु, नाना इव, गृह्यते । शत्रुमित्रादिविभागयुक्तमिव जगद्विज्ञायते इत्यर्थ ॥ ४४ ॥

### कृष्णप्रिया

अब श्री दाऊजी श्रीकृष्णजी को कह रहे हैं—भैयाजू कृष्ण ! यह तो सर्व साधारण बात है कि जो लोग ऐश्वर्य-सता आदि के नशे में अंधे बन गये हैं—वैसे अभिमानी क्षुद्रजन राज्य-भूमि-द्रव्य-द्वारा स्वमान-तेजस-और अन्य भी वस्तुओं के कारण से अपने बन्धुओं का भी तिरस्कार कर दिया करते हैं लेकिन आप तो सर्व से पर हैं और नियामक होते हुए दयालु हैं ॥ ४१ ॥ पुनः भगवान् श्रीकृष्ण को कहते हैं कि—आप तो सम दृष्टि हो कृष्ण ! सर्वभूतों में आपकी तो समदृष्टि ही है । दण्ड जो किया जाता है वह भी उनके मङ्गल के लिये ही है । अपराधियों के लिये जो दण्ड विधान है वह उन पर द्वेष और वैर भाव से नहीं होता लेकिन उनकी शुद्धि के लिये औषध की तरह होते हैं । सुहृदयों के लिये भद्र किया जाता है वह पक्षपात नहीं लेकिन उनके संरक्षण के लिये ही है ॥ ४२ ॥ हे साध्वी रुक्मिणी जी ! जो अविद्याधीन है और भगवान की माया से मोहित हैं वह देह को ही आत्मा मान रहें हैं । उन्हीं अज्ञानियों को ऐसा आत्ममोह होता है कि यह स्वजन और यह शत्रुजन है और यह तटस्थ उदासीन है । आप स्वयं पराशक्ति एवं पराविद्या है इसलिये आप को यह भ्रम नहीं होगा ॥ ४३ ॥ देवीजी ! समस्त शरीर धारियों की आत्मा एक ही है और कार्य-कारण से एवं माया से कोई सम्बन्ध नहीं है । जल एवं घटादि की उपाधियों के भेद से जैसे सूर्य-चन्द्र प्रकाशयुक्त पदार्थ भिन्न-भिन्न दिख पड़ते हैं किन्तु है एक ही तेज प्रकाश तत्व है । उसी तरह अज्ञजन शरीर के भेद से आत्मा को भिन्न मानते हैं परन्तु सबकी आत्मा एक ही है ॥ ४४ ॥

**देह आद्यन्तवानेष द्रव्यप्राणगुणात्मकः । आत्मन्यविद्यया [1]क्लृप्तः संसारयति देहिनम् ॥ ४५ ॥**

**[2]नात्मनोऽन्येन संयोगो [3]वियोगो वासता सति । तद्धेतुत्वात्तत्प्रसिद्धेर्दृग्रूपाभ्यां यथा रवेः ॥ ४६ ॥**

**जन्मादयस्तु देहस्य विक्रिया नात्मनः क्वचित् । कलानामिव [4]नैवेन्दोर्मृतिर्ह्यस्य कुहूरिव ॥ ४७ ॥**

**यथा शयान आत्मानं विषयान् फलमेव च । अनुभुङ्क्तेऽप्यसत्यर्थे [5]तथाऽऽप्नोत्यबुधो भवम् ॥ ४८ ॥**

### कर्दमक्षमा

अन्वयः—द्रव्यप्राणगुणात्मवान्, एषः, देहः, एव, आद्यन्तवान्; अविद्यया, आत्मनि, क्लृप्तः, देहिनम्, संसारयति ॥४५॥ हे सति ! यथादृक् , रूपाभ्याम्, यथा, रवेः, संयोगः, वा, वियोगः, न वर्तते, तथा, आत्मनः, असता, अन्येन ( पदार्थेन ) संयोगः, वा, वियोगः, न, वर्तते, तत्, प्रसिद्धेः, तत् हेतुत्वात्, व्यवह्रियते ॥ ४६ ॥ जन्मादयः, तु, विक्रियाः, यथा, कलानाम्, न, एव, इन्दोः, तथा ( विकाराः ) देहस्य, हि, न, क्वचित्, आत्मनः, सन्ति; यतः, अस्य, मृत्युः, कुहूः, इव ॥ ४७ ॥ यथा, शयानः, ( पुरुषः ) असति, अपि, अर्थे, आत्मानम्, विषयाम्, च, एव, फलम्, अनुभुङ्क्ते, तथा, अबुधः (अज्ञानां) भवम्, आप्नोति ॥४८॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

कुतस्तर्हि न चंद्रादिवदात्मानमेकं शुद्धं प्रतीमस्तत्राह । देह इति । द्रव्यमधिभूतम् । प्राणा इन्द्रियाण्यध्यात्मम् । गुणशब्देनाधिदैवं तत्त्रितयात्मकः । देहोपाधिना शुद्धो न प्रतीयत इत्यर्थः ॥ ४५ ॥ ननु देहसंबंधेनापि संसारे सति शुद्धत्वं गतमेव तत्राह । नात्मन इति । हे सति ! अन्येनाधिभूतादिनाऽऽत्मनः संयोगवियोगौ न स्तः । कुतः । असतः असत्त्वादन्यस्येत्यर्थः । कुतोऽसत्त्वं तत्राह । तद्धेतुत्वादिति । तस्यान्यस्य भूतेन्द्रियादेः प्रसिद्धेः प्रकाशस्य तद्धेतुत्वादात्महेतुत्वात् । ननु देवैरधिष्ठितेभ्य इंद्रियेभ्यो भूतानां प्रतीतिः प्रसिद्धा । भूतप्रतीत्या च तत्प्रसिद्धिर्नात्मन इत्यत आह । दृग्रूपाभ्यां यथा रवेः यथा प्रकाश्यप्रकाशकत्वेन वर्तमानयोरपि चक्षूरूपयोः रवेः सकाशात्प्रसिद्धिर्द्वयोरपि तैजसत्वात्तदभेदश्च तथा भूतेंद्रियादीनां परस्परं सिद्धानामपि चैतन्याधीन एव प्रकाशस्तत्कार्यत्वाच्च तद्व्यतिरेकेणासत्त्वं चेत्यर्थः । तथा च द्वादशे वक्ष्यति । "दीपश्चक्षुश्च रूपं च ज्योतिषो न

---

१. क्षिप्तः—विज । २. ४७—४८ श्लोकौ न स्तः—विजये । ३. गश्चासतः—श्रीधर वंशी जीव. विश्व.; श्चा सता—वीर. ४. मेव—वीर । ५. तथात्मापि ध्रुवो भुवान्—विज. ।

पृथग्भवेत्। एवं धीः खानि मात्राश्च न स्युरन्यतमादृतात् ॥" इति। यद्वा रवेः प्रसिद्धाभ्यामेव दृग्रूपाभ्यां परस्परं प्रसिद्धिर्यथा भवति तद्वदिति ॥ ४६ ॥ देहसंबंधाभावादेव नात्मनो जन्मादयोऽपीति वक्तुं जन्मादीनां देहधर्मत्वमाह। जन्मादयस्त्विति। कथं तर्हि जातोऽहं बालोऽहं वृद्धोऽहमित्यात्मनि जन्मादिप्रतीतिः, देहजन्मादिनैवेति सदृष्टांतमाह। कलानामिवेति। इंदोः कलानामेव जन्मादयो नैवेदोर्यथा तद्वत् यथा च कलानाशादेव कुहूरमावास्या इंदुक्षय उच्यते तद्वदस्यात्मनो देहनाशादेव मृतिव्यवहार इत्यर्थः ॥ ४७ ॥ नन्वात्मनो देहादिसंबंधाभावे कथं भोक्तृभोग्यभोगप्रतीतिरित्याशंक्य स्वप्नदृष्टांतेन समर्थयति। यथा शयान इति। आत्मानं भोक्तारं विषयान् भोग्यान्फलं भोगमसत्यप्यर्थेऽनुभुंक्ते तथाऽबुधः संसारं प्राप्नोति ॥ ४८ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

पुनर्हेत्वाक्षेपः—कुत इति। गुणकार्यत्वाद्देवानाम् 'सत्त्वेन सुरतां याति' इत्युक्तेः। तत्त्रितयात्मकोऽधिभूताध्यात्माधिदैवात्मकः। इत्यर्थ इति–न हि मालिन्याऽनपनयने मुकुरनैर्मल्यं प्रतीयत इति भावः। आत्मनि अधिष्ठाने रज्जुसर्पवदज्ञानकल्पितः स्वाध्यासेनात्मानं शुद्धमपि संसारयति संसारे क्षिपतीत्यर्थः। देहो जीवात्मापि न भवतीत्याह—यः सुहृद्बुद्ध्या पाल्यः, दुर्हृद्बुद्ध्या वध्यः स एष देह आद्यन्तवान्। द्रव्यमधिभूतम्, प्राणा इन्द्रियाण्यध्यात्मम्, गुणशब्देनाधिदैवम्, तत्त्रियात्मकः आत्मनि जीवेऽविद्ययैव कल्पितः रागद्वेषादिविषयीभूतः सन् देहिनं संसारवन्तं करोति ॥ ४५ ॥ पुनराक्षिपति—नन्विति। हेतुमाशंकते—इत्यर्थ इति। अन्यस्येत्यध्याहार्यमिति भावः। असत्त्वे हेतुमाक्षिपति—कुत इति। तत्राक्षेपे। पुनराक्षिपति—नन्विति। तत्प्रसिद्धिरिन्द्रियप्रसिद्धिः। तदभेदश्चक्षूरूपयोरभेदः। तत्कार्यत्वाच्चैतन्यकार्यत्वात्। तद्व्यतिरेकेण चैतन्यं विना तेषामसत्त्वम्। इत्यर्थ इति—विवर्तस्याधिष्ठानमन्तरेण सत्त्वानुपलब्धेः प्रसिद्धत्वात्। एतदग्रे स्फुटीभविष्यतीत्याह—तथा चेति। आत्मन एव पुनर्मुख्यं प्रकाशकत्वं न त्विन्द्रियादेरित्याह—परस्परं सिद्धिरविप्रकाशितमेव चक्षूरूपं प्रकाशयति, रविप्रकाशितमेव रूपं चक्षुः प्रकाशयतीत्यर्थः। तद्वदात्मप्रकाशिता एव देवादयो विश्वं प्रकाशयन्ति "तस्य तेजसेद्धः सूर्यस्तपति, न तत्र सूर्यो भाति, न चन्द्रो न तारकाः, नेमा विद्युतो भांति कुतोऽयमग्निः, तमेव भांतमनुभाति, सर्वं तस्य भासा सर्वमिदं विभाति" इति श्रुतेः, "येन स्वरोचिषा विश्वं रोचितं रोचयाम्यहम्। यथार्कोऽग्निर्यथा सोमो यथर्क्षग्रहतारकाः ॥" इति स्मृतेश्च ॥ संयोगो नास्ति संयोगापेक्षत्वाद्वियोगोपि नास्ति। संयोगाभावे हेतुः—असत इति। आत्मनीत्यर्थात् त्रिकालमप्यात्मनि तस्य स्पर्शाभावादित्यर्थः। तत्र हेतुः–तस्यान्यस्य प्रसिद्धेः शक्तेः। तद्धेतुत्वाच्चिद्रूपात्मकहेतुत्वात्। एवं सति तं कथं स्पृशेदित्यर्थः। रवेः राजमानदेवविशेषस्य सूर्यस्य दिवानक्तमप्यच्यवमानस्य दृग्रूपाभ्यां तल्लब्धप्रकाशाप्रकाशशक्तिभ्यां यथा स्पृश्यत्वाभावात्संयोगवियोगौ न स्तस्तद्वत्। हे सति विचक्षणे। अर्थांतरे, तदप्यस्तु नाम भवतु श्रीकृष्णनित्यलक्ष्मीरूपायां रुक्मिण्यादिना संबंध एव नास्तीत्याह—नेति। आत्मनस्तव। नन्वेतद्विधस्तन्माहात्म्यप्रसिद्धः कथमसौ न स्यात्तत्राह—सा परमलक्ष्मीरूपा त्वमेव हेतुर्यत्र तद्रूपत्वात्तस्याः प्रसिद्धिरिति। अवतरिष्यंत्यास्तव दृष्टिप्रभावोदयादेव सैषामेषा प्रसिद्धिरित्यर्थः। तर्हि मम संबंधे सति कथं संयोगवियोगौ न स्तस्तत्राह—दृग्रूपाभ्यामिति प्राञ्च; ॥ ४६ ॥ अन्यदाह–देहसंबंधेत्यादिना ॥ नन्वेतत्कुलजाताया मम कथमेतौस्तो न स्तस्तत्राह—जन्मादय इति। यद्यात्मनो जीवस्यापि संति तदा सच्चिदानंदरूपविग्रहाया भगवत्स्वरूपशक्तेस्तव तु किमुतेति भावः। इत्यर्थ इति—"मा स्वस्य कर्मबीजेन जायते सोप्ययं पुमान्। म्रियते चामरो भ्रांत्या यथाग्निर्दारुसंयुतः ॥" इत्युक्तेरिति भावः ॥ ४७ ॥ जन्मादीनामात्मधर्मत्वाभावे पुनराशंकते—नन्विति अबुधोऽनात्मज्ञः ॥ एवमात्मनो वस्तुतो देहलेपाभावेऽप्यतर्क्यशक्त्याऽविद्ययैत्र देहसंबंधमननात्संसार इति सदृष्टान्तमाह—यथेति। असत्यर्थे कस्मिंश्चिदपि वस्तुन्यवर्तमानेऽपि शयानः। आत्मानं च तुरगसेनादियुक्तम्। विषयान् जेतव्यदेशान्। फलं तज्जयात्स्रक्चन्दनवनितादिभोगसुखं, कदाचित्तदजयात्संबंधनताडनतिरस्कारादि चानुभुंक्तेऽनुभवति। जागरणसादृश्येन राजादिरूपेण पश्यतीत्यर्थः। तथैवाविवेकी असत्यपि देहसंबंधे देहसंबंधोत्थं सुखदुःखात्मकं संसारम्। तथा चोक्तम्–"अर्थे ह्यविद्यमानेऽपि संसृतिर्न निवर्तते। ध्यायतो विषयानस्य स्वप्ने जागरणं यथा ॥" इति। अर्थांतरे, ननु एवं चेत्तत्त्वं तर्ह्ययं कथं श्रुत्वापि स्वभावाविष्ट एव लक्ष्यते, तत्राह—यथेति। अबुधो रुक्मी ॥ ४८ ॥

### श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी

देह इति। तैर्व्याख्यातं यद्वा प्राणेन क्रिया लक्ष्यन्ते गुणा रूपरसादयः अर्थान्तरे चावस्थावेशे हेतुमाह। देह इति। एष इति रुक्मिदेहं दर्शयति एतद्विध इत्यर्थः ॥ ४५ ॥ संयोगो नास्ति संयोगापेक्षित्वाद्वियोगोऽपि नास्ति संयोगाभावे हेतुः असत इति आत्मनीत्यर्थात्। त्रिकालमप्यात्मनि तस्य स्पर्शाभावादित्यर्थः। तव हेतुः तस्यान्यस्य प्रसिद्धेः शक्तेस्तद्धेतुत्वात् चिद्रूपात्मैकहेतुत्वात् एवं सति तं कथं स्पृशेदित्यर्थः। तत्र दृष्टान्तः रवेराजानजदेवविशेषस्य सूर्यस्य दिवानक्तमप्यच्यवमानस्य दृग्रूपाभ्यां तल्लब्धप्रकाशनप्रकाशशक्तिभ्यां यथा स्पृश्यत्वाभावात् संयोगवियोगौ न स्तः तद्वत् हे सति! विचक्षणे अर्थान्तरे च तदप्यस्तु नाम तव तु श्रीकृष्णनित्यलक्ष्मीरूपाया रुक्म्यादिना सम्बन्ध एव नास्तीत्याह। नेति। आत्मनस्तव नन्वेतद्विधस्तत्त-

न्माहात्म्यप्रसिद्धः कथमसन् स्यात् तत्राह—सा परमलक्ष्मीरूपा त्वमेव हेतुर्यत्र तद्रूपत्वात्तस्याः प्रसिद्धेरिति अवतरिष्यन्त्यास्तव दृष्टिप्रभावोदयादेव सैषामेषा प्रसिद्धिरित्यर्थः। तर्हि मम सम्बन्धे सति कथं संयोगवियोगौ न स्तस्तत्राह। दृग्रूपाभ्यामिति प्राग्वत् ॥ ४६ ॥ एकदेशे कलानां क्रमवृद्धिह्रासधर्मकसूर्य्यच्छाया रूपत्वं इन्द्रोस्तु स्वतो जलमण्डलरूपत्वं व्याख्यास्यते अर्थान्तरे। नन्वेतत्कुले जाताया मम कथमेतैस्तौ न स्तः तत्राह। जन्मादय इति। यद्यात्मनो जीवस्यापि न सन्ति तदा सच्चिदानन्दविग्रहाया भगवत्स्वरूपशक्तेस्तव तु किमुतेति भावः ॥४७॥ अनु जागरणसादृश्येन भुङ्क्ते अनुभवति तत्रात्मानमनुभङ्क्ते इति राजादिरूपेण पश्यतीत्यर्थः। अर्थान्तरे न चेत्तत्वं तर्ह्ययं कथं श्रुत्वापि स्वभावाविष्ट एव लक्ष्यते तत्राह। यथेति। अवुधोऽयं रुक्मी ॥ ४८ ॥

### श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी

ननु देहस्याचेतनत्वाच्छान्तादिस्वभावः कथम्, कथं वा परमेश्वरांशानां जीवानां विचित्रदेहप्राप्त्या संसारः ? तत्राह—देह इति। एष विविधविकारवत्त्वादिना दृश्यमानः, किंवा पाञ्चभौतिकः, इति पार्षदादि-सच्चिदानन्ददेहो व्यावर्त्तितः। चेतनेन्द्रियादिमयत्वादस्य शान्तत्वादिकमपि घटेतेति भावः। नन्विन्द्रियादीनामेव कथं चेतनत्वम् ? तत्राह—आत्मनीति, अधिष्ठानस्य चेतनस्यात्मनः सम्बन्धादित्यर्थः। अतएव आद्यन्तवान् जन्ममृत्यू लभमानः; देहाभिमानिनं जीवं संसारयति जन्मादिलक्षणसंसारं प्रापयति। अविद्ययेति तस्यापि मिथ्यात्वं सूचितम् ॥ ४५ ॥ तदेवाद्यौ सहेतुकं सदृष्टान्तञ्चाभिव्यञ्जयति—नेति। अन्येन देहेन इन्द्रियादिनापि वा, वियोगेऽपि नास्ति,—वियोगस्य संयोगापेक्षया संयोगस्य चासत्त्वेन स्वत एव तस्याप्यसत्त्वसिद्धेः। 'आत्मन्यविद्यया क्लृप्तः' इत्यनेनैव देहस्यासत्त्वमुक्तमेव। हे सतीति यथा साध्व्या असाध्व्या सह सम्बन्धो नास्तीति भावः। तत्र दृष्टान्तः—यथा रवेर्दृग्रूपाभ्यां सह संयोग-वियोगौ न स्तः। कुतः ? तयोर्दृग्रूपयोः प्रकृष्टसिद्धे रविहेतुकत्वादेव, एतच्चात्महेतुकदेहप्रसिद्धेः सादृश्यार्थमुक्तम्। एवं तत्कार्य्यत्वेन तयोस्तद्व्यतिरेकेणासत्त्वमभिप्रेतम्। अतोऽसत्त्वादेवेत्यर्थः। आद्यन्तवानिति सूचितम् ॥ ४६ ॥ देहस्यैव जन्मादिकं सदृष्टान्तमभिव्यञ्जयति—जन्मेति, विक्रिया विकाराः—जायते, अस्ति, वर्द्धते, परिणमते, क्षीयते, नश्यतीति षट्, क्वचित् कदाचिदपि सिद्धानां लीलया जन्मादावपीत्यर्थः। ननु जन्मादौ बाल्याद्यवस्थायामिन्द्रियादिप्रवर्त्तनेन पितृत्वादिनाभिन्नत्वाद्देहस्यैव जन्मादयः सन्तु नाम, मरणे तु चैतन्याभावेनात्मैव मृत इति प्रतीयतेतराम्, तत्राह—मृतिरिति, हि अपि, मृतिरपि; यथा अमावास्यायामिन्दोर्बिम्बादर्शनादिन्दुक्षयः प्रतीयते, अन्यदा च प्रायो बिम्बदर्शनात् कलानामेव जन्मादयः प्रतीयन्ते, तथा मरणे देहाचेतनत्वेनापि देहस्यैव मृतिर्न त्वात्मन इत्यर्थः। अन्यत्तैर्व्याख्यातम्। यद्वा, ननु अमावस्यामिन्दोरसद्भावेन मरणं लक्ष्यत एवेत्यसदृशो दृष्टान्तः, तत्राह—अस्येन्दोः कुहूः कलानां क्षय एव मृतिरिव; इवेति तत्त्वतो मृत्यभावात् ॥ ४७ ॥ अविद्ययेति सूचितमात्मना देहाभिमानेन संसारस्यापि मिथ्यात्वञ्च सदृष्टान्तमभिव्यञ्जयति—यथेति। शयानः स्वप्नं पश्यन् सर्व्वोऽपि जनः विषयांश्च, एव अपि, फलं सुखदुःखादिकमपि, अनु जागरणसादृश्येन भुङ्क्ते अनुभवति, तत्रात्मानमनुभुङ्क्त इति राजादिरूपेण पश्यतीत्यर्थः। नन्वेवञ्चेत्तर्हि तदपि सर्व्वं सत्यमस्तु ? न, तेषामसत्त्वादित्याह—अर्थे तत्तद्द्रव्ये सत्यपीति। अवुध आत्मतत्त्वानभिज्ञो जनो भवं संसारं प्राप्नोति अनुभवति। एवमज्ञानादेव जन्ममरणादिकं सर्व्वम्, न तु तत्त्वत इति तात्पर्य्यम् ॥ ४८ ॥

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम्

द्रव्यप्राणगुणात्मकः पञ्चभूतज्ञानेन्द्रियगुणत्रयकार्यतत्त्वान्तरसमुदायः अविद्यया प्रकृत्या क्लृप्तः देहः संसारयति जन्मजरामरणादिदुःखं जयति देहिनां जीवात्मनामिति ॥ ४५ ॥ परमात्मनो देहसम्बन्धाधीनदुःखाद्यन्वयो नास्तीत्याह—नान्मन इति। सतीति संबुद्धिः आत्मनः परमात्मनः असता देहेन जीवस्येव संयोगवियोगौ न भवतः तत्प्रसिद्धेः देहोत्पत्तेस्तद्धेतुत्वात् परमात्मसङ्कल्पहेतुत्वात् परमात्माधारत्वात् देहः परमात्मनो न बन्धक इत्यर्थः। तदधीनेन तस्य बन्धाभावे दृष्टान्तमाह। दृग्रूपाभ्यां यथा रवेरिति। आदित्येनानुग्राह्यं चक्षुस्तेन प्रकाश्यं रूपम् उभाभ्यामादित्यस्य न संसर्गः दूरस्थत्वात् एव परमात्माधीनेन देहेन अन्तिकस्थितस्यापि दूरस्थत्वेन न तत्कृतदोषान्वय इत्यर्थः ॥ ४६ ॥ जन्मादय इति। कलानामेव जन्मादयः न चन्द्रस्य एवं पृथिव्यादितत्त्वानामेव जन्मादयः न जीवस्य मृतिरस्य कुहूरिव अस्य जीवस्य मरणं चन्द्रस्य कुहूरिवेत्यन्वयः। सा नष्टेन्दुकला पञ्चदशी कुहूश्चन्द्रस्य कलानाश इव जीवस्य देहस्य मृतिरित्यर्थः ॥ ४७ ॥ अर्थेऽसत्यपि अस्थिरेऽपि स्थिरत्वबुद्धया स्वप्नार्थाननुभवति जाग्रद्दशायामपि तद्वत्ध्रुवं विषयध्रुवबुद्धयानुभवतीत्यर्थः ॥ ४८-५२ ॥

### श्रीमद्वीरराघवाचार्यकृता भागवतचन्द्रचन्द्रिका

कोऽसौ देहातिरिक्तो जीवो नाम कीदृशश्च देहश्च कीदृशः कथं च देहातिरिक्तस्यात्मनः सुखदुःखादिभोक्तृत्वमित्यत देह इति। देहस्तावद्द्रव्यप्राणगुणात्मकः। द्रव्यं पृथिव्यादिभूतपञ्चकं प्राण इन्द्रियाणि गुणाः पृथिव्यादिभूतपञ्चकगुणाः गन्धादय सत्त्वादिप्रकृतिगुणारब्धद्रव्यादितत्त्वान्तरसमुदायरूपाः आत्मा तु ज्ञानात्मक इति भावः। स च आद्यन्तवानपीत्यर्थः ॥ ४५ ॥

ननु यदि देहः स्वसम्बन्धमात्रेण जीवात्मानं संसारयेत्तर्हि परमात्मानमपि स्वसम्बन्धादेव संसारयत्विरयत आह—नात्मन इति । हे सति ! आत्मनः परमात्मनः असता देहेन जीवपराभ्यामन्येन सह जीवस्येव संयोगवियोगाद्युत्पत्तिमरणात्मकौ न भवतः अनेन जीवस्योत्पत्तिविनाशौ नाम देहसंयोगवियोगात्मकाववेत्युक्तं कुतस्तत्प्रसिद्धेर्देहोत्पत्तेः संयोगवियोगोत्पत्तेर्वा तद्धेतुत्वात्परमात्मसङ्कल्पहेतुकत्वात्परमात्माधीनत्वाद्देहः परमात्मनो न बन्धक इत्यर्थः । तदधीनेन तस्यबन्धाभावे दृष्टान्तमाह । दृग्रूपाभ्यां यथा रवेरिति । आदित्येनानुग्राह्यं चक्षुस्तेन प्रकाश्यश्यामादिरूपं चेत्युभाभ्यामादित्यस्य न संसर्गः दूरस्थत्वात् एवं परमात्माधीनेन देहेनान्तःस्थितस्यापि परमात्मनो दूरस्थस्येव न तत् कृतदोषाश्रयत्वमित्यर्थः ॥ ४६ ॥ आद्यन्तवानित्यनेन सूचितमात्मनो जन्माद्यभावमुपपादयति । जन्मादयस्त्विति । जन्मादयो विक्रिया विकारा देहस्यैव क्वचिदपि शरीरे स्थितस्याप्यात्मनो न सन्ति यथा कलानामेव जन्मादयो न चन्द्रस्य तद्वत् द्रव्यादिसङ्घातात्मकदेहानामेव न जीवस्येत्यर्थः । जन्मादय इत्यादिशब्देन बाल्यादिविकारसंग्रहः तर्हि "विज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यति" इति जीवविनाशवादिनी श्रुतिर्विरुध्येतेत्यत आह—मृतिर्ह्यस्य कुहूरिवेति अस्य जीवस्य मरणं चन्द्रस्य कुहूरिवेत्यन्वयः । नष्टेन्दुकलापञ्चदशी कुहूः यथा चन्द्रस्य कलानाशादेवामावास्या कुहूरिन्दुक्षय इति व्यपदिश्यते तद्वदस्यात्मनो देहनाशादेव मृतिरिति व्यवहार इत्यर्थः ॥ ४७ ॥ देहो देहिनं संसारयतीत्युक्तं तत्र यावदयं संसरति किम्वा तत्र कारणं देहसम्बन्ध एवेति चेन्न परमात्मनोऽपि तदविशेषात्संसारापत्तेरित्यतः सदृष्टान्तमाह । यथेति । अर्थे स्वाप्नेसत्यपि अस्थिरेऽपि शयानः पुरुषः स्थिरबुद्ध्या यावदात्मानं भोक्तारं विषयान्स्वाप्नान् विषयान् फलं तद्भोगं चानुभुङ्क्ते नतु जागर्ति सद्वद्विपयध्रुवबुद्ध्या विषयान् यावदनुभवति तथा तावदयमबुधोऽज्ञः सन् भवं संसारं प्राप्नोति नतु ततो मुच्यते प्रबुद्धस्तु मुच्यते इति भावः । स्वरूपेणात्मनो नित्यत्वेऽपि स्वप्नावस्थावैशिष्ट्यस्यानित्यत्वात्तन्नित्यत्वबुद्धिस्तदनुभवनिमित्तेत्यभिप्रायेणात्मानमित्युक्तम् ॥ ४८ ॥

### श्रीविजयध्वजतीर्थकृता पदरत्नावली

देहात्मत्वं भ्रमनिमित्तिमित्यत्र हेतुमाह । देह इति । द्रव्याणि पञ्चभूतानि पञ्च प्राणास्त्रयो गुणाः देहे आत्मा न भौतिकत्वाद्धटवदिति आत्मनि जीवे अविद्यया हरीच्छया अज्ञानेन वा देहिनं देहात्मकदर्शनं संसारयति संसारिणं करोति तत् करोतीत्युपसंख्यानमिति णिच् ॥ ४५ ॥ देहः स्वेतरवृत्तिनित्यनिष्ठाधिकरणं मेयत्वाद्घटवदिति तत्राह । यथेति शयानः स्वप्नं पश्यन्नात्मानं विषयान्फलं दुःखादिलक्षणं यथाऽनुभुङ्क्ते वासनानुगुणं भवति अर्थे विषये तदानीमसत्यप्यविद्यमानेऽपि तथात्मा जीवो ध्रुवोऽध्रुवाननित्यान् देहादीननुभुङ्क्ते इत्यन्वयः देहः स्वस्वेतरवृत्त्यनित्यनिष्ठाधिकरणमिति प्रत्यनुमानपराहतं तदनुमानमिति सन्तोष्टव्यम् ॥ ४८ ॥

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः

एवं सति कथं स्पृशेदित्यर्थः । तत्र दृष्टान्तः । रवेः आजानजदेवविशेषस्य दिवानक्तमप्याच्यवमानस्य दृग्रूपाभ्यां लब्धतत्प्रकाशनप्रकाशशक्तिभ्यां यथा स्पृश्यत्वाभावात् संयोगवियोगौ न स्तः तद्वत् हे सति ! विचक्षणे हे सुचिस्मिते हे प्रसन्नहृदये इत्यर्थः । तव साक्षाल्लक्ष्मीत्वान्नेषदपि तत्तत् स्पर्शः किन्तु लीलयैव त्वमित्थं व्यवहरसि मयापि तथोपदिश्यसे इति भावः।४६-६०।

इति श्रीमद्भागवते महापुराणे दशमस्कन्धीये श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे चतुष्पञ्चाशत्तमोऽध्यायः ॥ ५४ ॥

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी

देहो जीवात्मापि न भवतीत्याह । देह इति । यः सुहृद्बुद्ध्या पाल्यः दुर्हृद्बुद्ध्या वध्यः स एष देह आद्यान्तवान् द्रव्यमधिभूतं प्राणा इन्द्रियाण्यध्यात्मं गुणशब्देनाधिदैवतं त्रितयात्मकः आत्मनि जीवे अविद्ययैव कल्पितः रागद्वेषादिविषयीभूतः सन् देहिनं संसारवन्तं करोति ॥ ४५ ॥ किन्तु जीवात्मनो देहलिप्तत्वादेव देह एव आत्मेति प्रतीतिर्भवति वस्ततस्तु देहेन लेपस्तस्य जीवात्मनो नैवास्ति परमात्मनस्तु जीवात्मनापि लेपो नास्तीत्याह । नेति । प्रथमं जीवात्मपक्षो व्याख्यायते हे सति ! आत्मनो जीवस्य अन्येन जडेन देहेन असता आद्यन्तवत्त्वादसर्वकालस्थायिना संयोगो लेपो नास्ति संयोगाभावादेव वियोगोऽपि नास्ति कुतः तत्प्रसिद्धेः देहप्रकाशस्य तद्धेतुत्वात् जीवात्महेतुकत्वात् अतः अध्यात्मादिमयदेहस्य जीवात्मप्रकाश्यत्वात्तेन सह जीवात्मनो न लेपः नहि प्रकाशकः प्रकाश्येन क्वापि लिप्यते अथ परमात्मपक्षः आत्मनः परमात्मनः अन्येन जीवेन असता अचिरस्थायिना देहेन च न संयोगो न वियोगश्च तत्प्रसिद्धेः तयोर्जीवदेहयोः प्रकाशस्य तद्धेतुत्वात् परमात्महेतुकत्वादतः परमात्मनः स्वप्रकाशाभ्यां जीवदेहाभ्यां नैव लेपः नहि प्रकाशकः प्रकाश्यलिप्तः क्वापि भवति उभयपक्ष एव दृष्टान्तः रवेः आकाशस्थसूर्यस्य स्वेन प्रकाशिताभ्यां दृग्रूपाभ्यां दृशा चक्षुषा तत्प्रकाश्येन रूपेण च न लेपः अत एव रविस्थानीयः परमात्मा दृक्स्थानीयो जीवः रूपस्थानीयो देहः ॥ ४६ ॥ जन्मादिभिरपि संयोगाभावं वक्तुं तेषां देहधर्मत्वमाह । जन्मादय इति । कथं तर्हि जातोऽहं बालोऽहं वृद्धोऽहमित्यात्मनि जन्मादिप्रतीतिः देहजन्मादिनैवेति सदृष्टान्तमाह—इन्दोः कलानामेव जन्मादयो नैवेन्दोरसङ्ख्य-

कलात्मकस्य यथा तद्वत् यथा चास्येन्दोः कुहूः कलाक्षय एव मृतिरुच्यते सा नष्टेन्दुकला कुहूरित्यमरः तद्वदस्यात्मनो देहनाशादेव मृतिव्यवहारः ॥ ४७ ॥ एवम "सङ्गोह्ययं पुरुष" इति श्रुतेरात्मनो वस्तुतो देहलेपाभावेऽप्यतर्क्यशक्त्या अविद्ययैव देहसम्बन्धमननात् संसार इति सदृष्टान्तमाह । यथेति । असत्यर्थे कस्मिंश्चिदपि वस्तुनि वर्त्तमानेऽपि शयानः आत्मानं चतुरङ्गसेनायुक्तं विषयान् जेतव्यदेशान् फलं तज्जयान् स्रक्चन्दनवनितादिभोगसुखं कदाचिदजयात् स्ववन्धनताडनतिरस्कारादिकञ्च अनुभुङ्क्ते अनुभवति तथैवावुधोऽविवेकी भवम् असत्यपि देहसम्बन्धेऽर्थे सुखदुःखात्मकं संसारं यथाचोक्तम् अर्थेह्यविद्यमानेऽपि संसृतिर्न निवर्त्तते ध्यायतो विषयानस्य स्वप्नेऽनर्थागमो यथेति ॥ ४८ ॥

## गूढार्थदीपिनी

आद्यन्तवान् जन्ममरणवान् अधिभूतादिरूपो देहो देहिनं जीवं संसारयति संसारे क्षिपति । क्लृप्तः कल्पितः ॥ ४५ ॥ हे सति । अन्येन देहादिना अस्यात्मनः संयोगो वियोगश्च नास्ति । कुतः । असत जन्यस्य देहादेरसत्त्वादित्यर्थः । कुतोऽसत्त्वं तत्राह-तत्प्रसिद्धेः देहादिप्रतीतेस्तद्धेतुत्वात् आत्महेतुत्वात् अत आत्मतिरिक्तं देहादि नास्तीत्यर्थः । अत्र दृष्टान्तः–यथा दृग्रूपाभ्यां भिन्नादपि रवेः सकाशादेव तयोः प्रतीतिर्भवति नान्यथेति । अत्र रविस्थानीयः परमात्मा, दृक्स्थानीयो जीवः, रूपस्थानीयो देह इति विवेचनीयम् ॥४६॥ विक्रिया षड् विकाराः । यथा इन्दोः कलानामेव जन्मादयो नैवेन्दोस्तद्वत् । यथा च अस्य इन्दोर्मृति कलानाश एव इन्दुक्षयः कुहूरमावास्योच्यते तथा देहनाशादेवात्मनो नाशव्यवहार उच्यते इत्यर्थः ॥ ४७ ॥ अर्थे देहादिरूपे असत्यपि आत्मानं देहादिरूपं भोक्तारं विषयान् भोग्यान् शब्दादीन् फलं भोगं च अबुधोऽनात्मज्ञः । भवं संसारम् ॥ ४८ ॥

## श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

माया तु अविद्या अचेतना नित्या तया आत्मा जीवः चेतनो नित्यः तस्मि "न्नघटत उद्भवः प्रकृतिपुरुषयोरजयो"रिति वक्ष्यमाणात् द्रव्यमधिभूतं प्राण इन्द्रियाण्यध्यात्मं गुणशब्देनाधिदैवं तत्त्रयात्मकः एष प्रसिद्धो देहः क्लृप्तः आत्मस्थाने आत्मत्वेन प्रवर्तित इत्यर्थः । आद्यन्तवाननित्य इत्यर्थः । स च देहिनात्मत्वेन स्वीकृतः देहिनं संसारयति संसारवन्तं करोति जातोऽस्मि मरिष्यामीत्येवं विमोहयतीत्यर्थः ॥ ४५ ॥ अविद्ययात्मनि क्लृप्त इत्यनेन मायायाः भगवन्निरपेक्षाया जीवदेहसंयोगहेतुतां प्रतीतां निराकुर्वन् सर्वेषां सूर्यादीनामपि स्वस्वप्रकाश्येन सह सम्बन्धे भगवानेव मुख्यो हेतुरित्याह–नेति । असत्कारणम् "असदेवाग्र आसीत् ततः सदजायते"ति श्रुतेः तस्मादसतः परमकारणात् अनेन यथा रवेः दृग्रूपाभ्यां सह संयोगो वियोगश्च न भवति तत्प्रसिद्धेः संयोगवियोगयोः प्रसिद्धेः तद्धेतुत्वात् कारणहेतुकत्वात् "भीषास्माद्वातः पवते भीषोदेति सूर्य" इत्यादिश्रुतेः हे सति ! एवमात्मनः जीवस्य संयोगो देहसंयोगस्तथा तद्वियोगस्तस्मादन्येन हेतुना न भवति प्रकृत्यादीनां स्वातन्त्र्येण तद्धेतुत्वं नास्ति स्वतन्त्रहेतुः सर्वत्र भगवानेवेति राद्धान्तः ॥ ४६ ॥ देह आद्यन्तवानित्युक्तं देहस्याद्यन्तवत्त्वं प्रपञ्चयन् नित्यस्यापि जीवस्य देहसंयोगे जातोऽयं देहवियोगे मृतोऽयमिति जन्ममरणव्यवहारं दर्शयति । जन्मादय इति । यथा कलानामेव जन्मादयो न चेन्दोः तद्वत् जन्मादयो विक्रियाः देहस्यैव नत्वात्मनः देहजन्मादिनैव जीवजन्मादय उपचर्यन्ते इत्यर्थः । यथा च कलानां मृतिरेव कुहूरमावास्या इन्दुक्षय उच्यते तद्वत् देहस्य मृतिरेवास्यात्मनः मृतिरुच्यते इत्यर्थः ॥ ४७ ॥ आत्मत्वेन स्वीकृतो देहो देहिनं संसारयतीत्युक्तमेवार्थं स्वप्नदृष्टान्तेनोपपादयति । यथेति । अर्थ "न तत्र रथा न रथयोगा" इत्यादि श्रुतेर्जाग्रद्रथाद्यर्थे तत्राविद्यमानेऽपि आत्मानं स्वप्नेऽपि कर्मविशेषफलभोगार्थं भगवता दत्तं देवादिदेहमात्मतया जीव इति गृहीतं भोक्तारं विषयान् तेनैव दत्तान् फलं भोगं यथा शयानः अनुभुङ्क्ते अनुभवति तथा अबुधो देहात्ममानी भवं संसारमाप्नोतीत्यर्थः । जाग्रत् पदार्थाः स्थूलरूपा बाह्येन्द्रियग्राह्याः स्वाप्नाः सूक्ष्मरूपा अन्तरिन्द्रियग्राह्याः इति विवेकः स्वप्नपदार्थानामपीश्वरनिर्मितत्वं वेदान्तकौस्तुभे द्रष्टव्यम् ॥ ४८ ॥

## श्रीसत्यधर्मकृता श्रीभागवतटिप्पणी

इयत्सु कार्येष्वापतितेष्वेवं कुर्वन्तीति नातिप्रसक्तिरिति वक्ति । राज्यस्येति । समुदितमेतदिति न निर्वन्धः । एकैकेनापि कारणेन मारणमभिप्रति । हेतोरिति सर्वान्वयि । राज्यस्यापरो राज्ययोग्यो भ्राता भूमेरभूयस्या वित्तस्य काचाद्यात्मकस्य श्रियो महासम्पदो मानस्य सम्माननहानिप्रसक्तौ तस्य तेजसः सामर्थ्यप्रदर्शनस्यान्यस्य वा सुन्दोपसुन्दवत्सुन्दरीजतस्य वा हेतोर्मानिनः श्रीमदान्धा दुरभिमानवन्तो मानिनस्तान्क्षिपन्ति नाशयन्ति हि सर्वानुभवसिद्धमिदमित्यर्थः ॥ ४५ ॥ सर्व सर्वेश्वरतन्त्रं स चैतत्कर्मनिमित्तीकृत्य कारयतीति मतिमतां न मोहमहिमाहतिरन्येषां तदवरुन्दनमिति ज्ञातरहस्यामपि स्वयं लोकरीतिमनुसरन्तीमाह । आत्ममोह इति । देहात्ममानिनां देहाभिमानवतां नृणामधिकारिणामित्यर्थः । एषः अयं सुहृदयं च शत्रुरयमुदासीनोऽनुभयरूप इत्यात्ममोहो मानसभ्रमो देवमायया देवस्यैवं क्रीडतो माययेच्छया कल्पते । एतत्कर्मानुसारेणाभिमतिं दत्वा सुहृदादित्वं भासयति देव इति भावः ॥ ४६ ॥ नानेके देवि देवाः किन्तु वासुदेव एक एवेत्याह । एक एवेति । सर्वेषामपि देहिनां पर आत्मान्तर्नियामक

एक एव । न स्थानतोऽपीत्यादेः । तर्हि बहु स्यां प्रजायेय सच्च त्यच्चाभवदित्यादिवद्बहुभाववादः कथमित्यतः पातनिकः श्रुत्यभिप्रायः । व्याप्तः स किन्तु भिन्नजगद्बहुविधतैकता चान्तर्गतस्य तस्येति सनिदर्शनमाह । यथा ज्योतिः सूर्यादिः प्रतिदृशमिव नैकधार्कमेकं समधिगतोऽस्मि विधूतभेदमोह इत्यादेः । ऊह्यात्तर्क्यात्परः परोह्यः स चासावात्मा चेति वा । अतर्क्य इत्यर्थः । एक एव सविता यथा द्रष्टृभेदभिन्न इव तथा । यथा नभश्च घटाद्युपाधिनिबन्धनभेदवदिति तथा नानेनात्मा गृह्यते । ते च न बुधा इत्याह । मूलैरिति । यथा ज्योतिश्चन्द्रादिः क्वचिद्यथा सम्यक् क्वचिन्नभः । न विद्यते भा यस्य तत् । एकस्यैव क्वचित्प्रकाशता विप्रकाशता च क्वचिदिति भेदः प्रतीयते तथा नानेव गृह्यत इति वा ॥ ४७ ॥ नात्मतदात्मा देह इत्यत्र युक्तिं वक्ति । देह इति । द्रव्यप्राणगुणान्वितो द्रव्याणि मूलद्रव्यं प्रकृतिरवान्तराणि च भूतानि प्राणाः प्राणादयः पञ्च गुणाश्च सत्त्वाद्यास्तदन्वितो देह आद्यन्तवानुत्पत्तिमृतिसहित आत्मनि जीवेऽविद्यया भागवत्त्येच्छयाऽज्ञानेन वाऽऽक्षिप्तः संयोजितो देहिनमभिमानितया तद्वन्तं संसारयति संसारयुक्तं करोति । विमतो देहो न देही तदात्मा भौतिकत्वाद्घटादिवत् । न देही वा देहात्माऽभौतिकत्वात् । न देहो ह्यात्माऽऽद्यन्तवत्त्वात् । न वा देही तदात्मा नित्यत्वात् । जीवो नित्यो धातुरस्य त्वनित्य इत्यादेः । यन्नैवं तन्नैवमित्यादियुक्तयो ज्ञेयाः ॥ ४८ ॥

### श्रीमद्वल्लभाचार्य्यकृता सुबोधिनी

ननु तर्हि देहात्मबुद्धिः कथं गच्छतीत्याशङ्क्य वैलक्षण्यानुसन्धानेनेति आत्मवैलक्षण्यं देहस्य वदन् अपकारित्वमाह **देह आद्यन्तवानेष** इति । आत्मा नित्यः । यो हि देशायरिच्छिन्नः, स सुतरां कालापरिच्छिन्नः, देशापरिच्छिन्नस्य व्यापकत्वात् । अत आत्मत्वादेव कालापरिच्छेदः सिद्धः । देहस्तु आद्यन्तवानुभयावधियुक्तः, प्रागभावप्रध्वंसाविव व्यावर्तितो । **एष** इतिति परिदृश्यमानः, मृतानामन्तः मुण्डस्योत्पत्तिरिति प्रदर्शनस्य सार्थकता अथवा विद्यमानस्य देहस्य जन्ममरणयोरदृष्टत्वात् स्वव्यतिरिक्तस्यैव प्रत्यक्षसंवादात् श्रुतेः प्रामाण्यं मन्यते यस्तं प्रत्याह **एष** इति । एवं सदातनत्वासदातनत्वाभ्यां वैलक्षण्यमुक्त्वा गुणातीतत्वसगुणत्वाभ्यां वैलक्षण्यमाह **द्रव्येति** । द्रव्यमधिभूतं, प्राणा आध्यात्मिकाः गुणा आधिदैविका इति । एत एव देहेन्द्रियदेवतारूपाः, आत्मा स्वरूपं यस्य । किञ्च । **आत्मन्यविद्यया क्लृप्त** इति । वैलक्षण्यत्रयम् । आत्मा आधारः । आधेयो देहः, सिद्ध आत्मा, स्वतः क्लृप्तो देहः, ( विद्यया ) अविद्यया चात्मस्थाने कृतः । आत्मा तु स्वत एव प्रवृत्त इति । अनिष्टेष्टजनकत्ववैलक्षण्यमप्याह **संसारयति देहिन**मिति । स्वस्मिन्नभिमानमात्रे आत्मानं देहः संसारे पातयति । आत्मा तु देहस्य हितमेव वाञ्छतीति । एवं पोढा वैलक्षण्यं निरूपितम् ॥ ४५ ॥ किञ्च । 'असङ्गो ह्ययं पुरुष' इति श्रुत्या आत्मनः सङ्गाभावो निरूप्यते । देहस्तु सर्वसङ्गयुक्त इति वैलक्षण्यं निरूपयितुं आत्मन एव धर्मानाह **नात्मन** इति । अस्यात्मनः अन्येन देहेन संयोगो वा वियोगो वा नास्ति । वियोगो हि संयोगपूर्वक इति संयोगे निषिद्धे अवयवभेदेन संयोगाभावः । संयोगोऽपि तिष्ठत इति सिद्धसाधनतामाशङ्क्य उभयं निषेधति, संयोगोऽपि नास्ति, वियोगोऽपि नास्ति । कदाचित्संयोगोऽपि निषिद्धो वियोगेन । ननु संयोगवियोगयोः भावाभावरूपत्वे कथमुभयाभावः, प्राप्तस्यैव नानिषेध इति न नियमः, सम्भावितस्यापि निषेधात्, तत्राह **असतेति** । असता देहेन आत्मनो न संयोगवियोगौ, यथा रज्जुसर्पयोः । न हि सर्पस्य कोऽप्यंशो रज्जौ भवति । ननु प्रत्यक्षश्रुतिभ्यां देहस्य परिदृष्टत्वात् अनुमानप्रत्यक्षश्रुतिभिः आत्मनोऽपि प्रतीतेः वैलक्षण्यस्य चोक्तत्वात् वियोग एवास्तु, कथमुभयाभाव इति चेत् । ननूक्तमसत्वादिति तदेव प्रमाणसिद्धत्वान्न भविष्यतीत्याशङ्का, तत्र हेतुमाह **तद्धेतुत्वात्तत्प्रसिद्धेरिति** । तस्य देहस्य प्रसिद्धेः उत्पत्तेर्ज्ञप्तेर्वा । आत्महेतुत्वादात्ममात्रैव देहो भासत इति पृथक् स्थित्यभावात् संयोगवियोगौ न भवतः । पृथक्लब्धसत्ताकावेव संयुक्तौ वियुक्तौ वा भवत इति लोकस्थितिः । अत एवोत्पत्तौ यद्यदधीनम्, तत्र न संयोगः सम्बन्धः । यथा द्रव्यगुणयोः यथा वा ज्ञप्तौ ज्ञानविषययोः, तथापि उभयोः सत्त्वात्समवायः स्वरूपं वा सम्बन्धोऽङ्गीकृतः । अत्र देहस्यासत्त्वात् अन्यतरस्य निःस्वभावत्वात् रज्जुसर्पवत् न स्वरूपसम्बन्धः । समवायोऽपि निराकरिष्यते । सर्वथापि संयोगवियोगौ तु न भवतः । प्रकाश्यप्रकाशकयोः सम्बन्धाभावाय दृष्टान्तमाह **दृग्रूपाभ्यामिति** । नेत्राधिष्ठात्री देवता यः सूर्यः तेन लब्धसत्ताकं चक्षुः विषयं गृह्णाति । न हि तेनापि तयोः संयोगवियोगौ भवतः । एतस्यार्थस्य परिज्ञानमधिकारिण एव भवतीति । न हि प्रतिबिम्बेन सह दर्पणेन वा मुखस्य कोऽपि सम्बन्धोऽस्ति । **सतीति** सम्बोधनं उक्तविश्वासाय । अनेन देहादिष्वनासक्त्यर्थं वैराग्यमपि सूचितम् । स्वासक्त्यैव तत्सिद्धिः, अन्यथा तदभाव इति ॥ ४६ ॥ ननु जननादयो हि प्रत्यक्षानुमानश्रुतिभिर्जीवस्य प्रतीयन्ते, ततश्च सङ्घातस्यैव तथात्वात् देहस्यासत्यत्वे आत्मन एव भविष्यन्तीति संयोगे निराक्रियमाणे असत्त्वहेतुना विपरीतमापतितम्, सर्वे दोषा आत्मन्येव समागता इति चेत्, तत्राह **जन्मादयस्त्वि**ति । तुशब्दः पक्षं व्यावर्तयति । जननादयः देहस्यैव । येन प्रकारेण देहस्य सिद्धिः, तेनैव प्रकारेण जन्मादीनाम् । तेषां च देहसम्बन्धित्वस्य च तत एव सिद्धेः । अत उभयोरसत्त्वात् जन्मादयोऽपि देहस्यैव । योग्यं योग्येन संबध्यत इति । सर्पश्चलतीति समायाति भक्षयतीति च यथा सर्पधर्मा एव, एवं जन्मादयोऽपि देहधर्माः, यतो विक्रियाः । नह्यात्मनः सर्वविक्रियारहितस्य विक्रियाः सन्ति । **क्वचिदिति** । ज्ञानानन्तरं न सन्तीति इष्टमेवेति पक्षं व्यावर्तयति । न हि नायं सर्प इति बोधानन्तरमेव सर्पाभावः । किन्तु प्रतीतदशायामपि । तत्र ज्योतिःशास्त्रसिद्धं दृष्टान्तमाह **कलानामिवेति** । इन्दोः

कलानां पञ्चदशसङ्ख्याकानां एकेन दिनेन एकस्या नाशः, ननु चन्द्रस्य। स हि अम्मयः, सूर्यकिरणास्तत्र प्रतिबिम्बन्ते, अपगच्छन्ति चेति कालविदः। ननु सर्वोऽपि चन्द्रः अमावास्यायां क्षीयत इति नवो नवो भवति जायमान इति च कथं कलानां क्षय इति चेत्, तत्राह। अस्य जीवस्य चन्द्रस्य च कुहूरेव मृतिः। ननु कुह्वां तस्यादर्शनकृतमपि मरणम्, तथास्य काल एव मृतिः। सच कालः कदाचित्तं प्रकाशयति देहसम्बन्धेनोच्चावचेनापि, कदाचिन्नेति तस्योत्क्रान्त्यादयो निरूप्यन्ते। ननु वस्तुतस्तस्य मरणम्। मरणे उभयोर्वियोगाद्देहस्य च पृथक् स्थितत्वात् पृथङ्निराकरणप्रयासः॥ ४७॥ ननु मिथ्याभूतेन सह कदाचित्सम्बन्धो भवति। यथा रज्जुसर्पेण, देहेन तु सम्बन्धः आभूतसंप्लवमिति दृष्टान्तवैषम्यात् देहस्य सत्यत्वं आत्मनो वा सम्बन्धित्वं भवत्विति चेत्, तत्राह **यथा शयान** इति। न हि कदाचिदेव भवति यत्तदेव मिथ्या भवतीति नियमोऽस्ति कश्चित्, अपि तु सर्वदेव दृश्यमानमप्यसद्भवति। यथा यदैव शेते, तदैव असत्यप्यर्थे आत्मानं देहं विषयान् स्रक्चन्दनादीन् फलं सुखं चानुभवति। न चैतावता तेषां सत्यता भवति। 'मायामात्र'मिति सूत्रे तथा निर्णयात्। तथैव **अबुधः** शयान इव भवं संसारं प्राप्नोति, निद्रावदज्ञानमित्यर्थः॥ ४८॥

## श्रीसुबोधिनीसारः

द्रव्यमधिभूतं प्राणा इंद्रियाण्यध्यात्मं गुणोऽधिदैवं तदात्मकस्तद्रूप एष देह आद्यंतवान् उत्पत्तिविनाशभाक् आत्मनि अविद्ययाऽज्ञानेन क्लृप्तो रचितो देहिनं जीवं संसारयति संसृतिबंधेन बध्नाति॥ ४५॥ हे सति! आत्मनोऽन्येनाधिभूतादिना संयोगो वियोगश्च न कुतोऽसतोऽसत्त्वादन्यस्य तस्यान्यस्य भूतेंद्रियादेः प्रसिद्धेः प्रवृत्तेः तद्धेतुत्वादात्मतंत्रत्वात्। वस्तुतः दृग्रूपाभ्यां रवेः सकाशादिव॥ ४६॥ जन्मादयो विक्रिया विकारा देहस्यैव आत्मनः क्वचिन्न कलानामिव इंदोश्चंद्रस्य न विक्रियाः वृद्धिह्रासजन्माद्याः अस्यात्मनो मृतिस्तु कुहूरिवामावास्या यथा इंदुक्षय उच्यते तद्वत् हि युक्तम्॥ ४७॥ नन्वसंगस्यैकस्यात्मनः कथमन्यथा भानमित्यत आह। शयानः पुरुषो यथाऽऽत्मानं भोक्तारं विषयान् भोग्यान् फलं भोगं वा सत्यप्यर्थेऽनुभुंक्ते कल्पयति। तथाऽबुधोऽज्ञो भवं संसारम् आप्नोति॥ ४८॥

## विवरण टिप्पणी

**देह आद्यन्ते**त्यत्र। **देशापरिच्छेदस्ये**ति। कालापरिच्छेदो देशापरिच्छेदव्यापको भवतीत्यर्थः। **प्रागभावे**ति। **अभावः** कारणं चात्रे‌त्यत्र वस्तुत एतयोः कारणावस्थात्वस्य व्यवस्थापनादत्रेवशब्दः। मृतानां देहानामन्तो दृश्यते। मुण्डस्यावयवादिरहितस्य देहस्य गर्भपाते उत्पत्तिर्दृश्यते। अतो न देहः सर्वदैव सावयव इति भावः॥ ४५॥ **नात्मनोऽन्येने**त्यत्र। अस्योपदेशस्य वैराग्यार्थकत्वादसुरस्य च रुक्मिणः सन्निधानमायावादो रामेणोक्तः। 'मायिकत्वं पुराणेषु वैराग्यार्थमुदीर्यते' इति सिद्धान्तादिति भावः। **स्वासक्त्यैवे**ति। आत्मासक्त्यैव देहादिष्वनासक्तिः सिध्यति, तदभावे न सिध्यति। अत आत्मासक्त्यार्थमात्मनो देहव्यतिरेको बोध्यत इति भावः॥ ४६॥ **यथा शयान** इत्यत्र। **निद्रावदज्ञान**मिति। यथा निद्रया स्वप्नः, तथाऽज्ञानेन भवः, तथाच निद्रास्थानीयमज्ञानमबुधपदेनोक्तमिति भावः॥ ४८॥

## गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

देहात्मनोर्वैलक्षण्येन भेदं स्पष्टयति—आद्यन्तवानेष देही जन्मादिसंसाररहितमपि देहिनं संसारयति। देहस्य जन्मादिमत्त्वे हेतुमाह—द्रव्याणि पृथ्व्यादि पञ्चमहाभूतानि, प्राणा इन्द्रियाणि मुख्यप्राणश्च, गुणाः शब्दादयः, तदात्मकस्तदारब्ध इति। जन्मादिसंसारहेतुत्वे हेतुमाह—अविद्यया शक्त्यात्मनि क्लृप्तः आत्मस्वरूपावरणेन तत्स्थाने प्रकाशित इति॥ ४५॥ 'एवं तर्हि देहात्मसंयोगस्य सत्त्वात् तद्विवेकेनापि कथं शोकनिवृत्तिर्मुक्तिर्वा' इत्याशङ्क्य अध्यासातिरिक्तसम्बन्धाभावमाह—नेति। असताऽऽत्मतिरिक्तसत्तारहितेनान्येन देहादिनाऽऽत्मनः संयोगो नास्ति। "असङ्गो ह्ययं पुरुष" इति श्रुतेस्तस्यासङ्गत्वस्वभावत्वात् वियोगस्य संयोगपूर्वकत्वात्संयोगाभावाद्वियोगोपि नास्ति। 'शुद्धचित्तानामेवात्मतत्त्वबोधो भवति' इति सूचयन् सम्बोधयति—सतीति। ननु 'कथमात्मव्यतिरेकेण देहादेरसत्त्वम्' इत्यपेक्षायामाह—तद्धेतुत्वात्तत्प्रतिसिद्धेरिति। तस्य देहादेः प्रसिद्धेः उत्पत्तेः प्रकाशस्य च तद्धेतुत्वात् स आत्मा हेतुर्यस्याः सा तथात्वात्। तत्र दृष्टान्तमाह—दृग्रूपाभ्यां यथा रवेरिति। यथा प्रकाश्यप्रकाशकत्वेन वर्तमानयोरपि चक्षूरूपयोः रवेः सकाशात्प्रसिद्धिः द्वयोरपि तैजसत्वात्तदभेदश्च, तथा देहेन्द्रियादीनां परस्परं प्रकाश्यप्रकाशकभावेन सिद्धानामप्यात्मचैतन्याधीन एव प्रकाशस्तत्कार्यत्वात्। तद्व्यतिरेकेणासत्त्वं चेत्यर्थः। तथा च वक्ष्यति द्वादशे—"दीपश्चक्षुश्च रूपं च ज्योतिषो न पृथक् भवेत्॥ एवं धीः खानि मात्राश्च स्फुरन्त्यन्यतमादिति"॥ ४६॥ 'देहो आद्यन्तवान्" इति यदुक्तं तदेव दृष्टान्तेन स्पष्टयति—जन्मादय इति। जन्मादयो विक्रिया विकारा देहस्यैव भवन्ति। क्वचिद्देहे स्थितस्यापि जीवात्मनस्तेनैव भवन्ति। आदिपदेन अस्तित्ववृद्धिविपरिणामादिग्रहणम्। तत्र दृष्टान्तमाह—कलानामिति। यथा कलानां जन्मवृद्ध्यादिभिरिन्दोश्चन्द्रस्यापि जन्मादिव्यवहारः, चन्द्रस्य तु पृथक् जन्मादयो नैव भवन्ति, तथा देहजन्मादिभि-

रेवात्मनोऽपि जन्मादिव्यवहारः, न स्वतस्ते भवन्तीत्यर्थः। तथास्य जीवस्य मृतिर्मरणमपि चन्द्रस्य कुहूरिवेत्यन्वयः। नष्टेन्दुकलापञ्चदशी कुहूः। यथा चन्द्रकलानाशादेव अमावास्या कूहूरिन्दुक्षय इति व्यपदिश्यते, तद्वदात्मनो देहनाशादेव मृतिरिति व्यवहार इत्यर्थः॥ ४७॥ ननु 'आत्मनो देहादिसम्बन्धाभावे कथं भोक्तृभोग्यभोगप्रतीतिः?' इत्याशङ्क्य स्वप्नदृष्टान्तेन समर्थयति—यथेति। देहादिसम्बन्धरूपेऽर्थे असति अविद्यमानेऽपि शयानः पुरुषः आत्मानं देहादिविशिष्टं भोक्तारं, विषयान् शब्दादीन् भोग्यान्, फलं तद्भोगं च यथा अनुभुङ्क्ते अनुभवति, तथाऽबुधः अज्ञो भवं जन्मादिसंसारं आप्नोति अनुभवति॥ ४८॥

## अन्वितार्थप्रकाशिका

देह इति। द्रव्यमधिभूतं प्राणा इन्द्रियाण्यध्यात्मं गुणशब्देनाधिदेवं तत्त्रितयात्मकः अविद्यया शक्त्याऽऽत्मनि क्लृप्तः आत्मस्वरूपावरणेन तत्स्थाने प्रकाशितः आद्यन्तवानेष देहो जन्मादिसंसाररहितमपि देहिनं संसारयति। देहोपाधिना शुद्धो न प्रतीयते इति भावः॥४५॥ वस्तुतः शुद्ध एवेत्याह—नेति। हे सति! असदात्मातिरिक्तसत्तारहितेनान्येन देहादिनाऽऽत्मनः संयोगो नास्ति। "असङ्गो ह्ययं पुरुष" इति श्रुतेः वियोगस्य संयोगपूर्वकत्वात् संयोगाभावे वियोगोऽपि नास्ति। असत इति पाठे आत्मव्यतिरेकेण देहादेरसत्त्वात् इत्यर्थः। कुतोऽसत्त्वं तत्राह। तस्य देहादेः प्रसिद्धेः उत्पत्तेः प्रकाशस्य च तद्धेतुत्वात्स आत्मा हेतुर्यस्याः सा तथात्वात्। ननु देवैरधिष्ठितेभ्यः इन्द्रियभूतानां प्रतीतिः प्रसिद्धा भूतप्रतीत्या च तत्र सिद्धिर्नान्यथेत्यत आह। यथा दृग्रूपाभ्यां प्रकाशकप्रकाश्यतया प्रसिद्धाभ्यां भिन्नादपि रवेः सकाशादेव दृग्रूपयोः प्रसिद्धिः। द्वयोरपि तैजसत्वात्तदभेदश्च। तथा देहेन्द्रियादीनां परस्परं प्रकाश्यप्रकाशकभावेन सिद्धानामप्यात्मचैतन्याधीन एव प्रकाशस्तत्कार्यत्वात् तद्व्यतिरेकेणासत्त्वं चेत्यर्थः। तथा च वक्ष्यति द्वादशे। "दीपश्चक्षुश्च रूपं च ज्योतिषो न पृथक् भवेत्। एवं धीः खानि मात्राश्च न स्युरन्यतमादृतात्।' इति। यद्वा। रवेः प्रसिद्धाभ्यामेव दृग्रूपाभ्यां परस्परं प्रसिद्धिर्यथा भवति तद्वदिति॥ ४६॥ जन्मेति। जन्मादयो विक्रिया देहस्यैव भवन्ति आत्मनस्तु क्वचिदपि न भवन्ति। देहजन्मादिभिरेवात्मनो जातोऽहं बालोऽहम् इत्यादिर्जन्मादिव्यवहारः। यथा कलानां जन्मवृद्ध्यादयो भवन्ति अस्य जलगोलविशेषस्य इन्दोस्तु न भवन्ति। कलाजन्मवृद्ध्यादिभिरेवेन्दोर्जन्मवृद्ध्यादि व्यवह्रियते एवं कलानामेव भयलक्षणा कुहूरमावास्या चन्द्रस्य मृतिः इन्दुक्षय इति व्यपदिश्यते॥ ४७॥ यथेति। देहादिसम्बन्धरूपेऽर्थे असति अविद्यमानेऽपि शयानः पुरुषः आत्मानं देहादिविशिष्टं भोक्तारं विषयान् शब्दादीन् भोग्यान् फलं तद्भोगं च यथाऽनुभुङ्क्ते अनुभवति तथाऽबुधः अज्ञो भवं जन्मादिसंसारं प्राप्नोति अनुभवति॥ ४८॥

## श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्

संसरणेपि जीवस्य शुद्धत्वमाह नेति। हे सति। अन्येन जीवाद्विलक्षणेन। असता अनित्येन स्थूलदेहेन। आत्मनो जीवस्य। संयोगो नित्यसंबंधो नास्ति। देहस्य विनाशिस्वभावात्। वियोगो नित्यसंबंधाभावश्चापि नास्ति पुनः पुनः प्राप्यत्वात्। जीवस्य तु तद्धेतुत्वात् तस्य देहस्य हेतुत्वात् कारणत्वात् जीवस्य निर्विकारित्वं शुद्धत्वं चास्तीति भावः तत्र दृष्टांतः यथा रवेः दृग्रूपाभ्यां सह नित्यसंयोगो नास्ति। रात्रावस्तगतत्वात्। नित्यवियोगोपि नास्ति पुनः पुनरुदयगतत्वात्। रवेस्तु तत्प्रसिद्धेः तयोर्दृग्रूपयोः प्रसिद्धेः प्रकाशस्य तद्धेतुत्वात् तयोर्दृग्रूपयोश्च हेतुत्वात्कारणत्वात् दृग्रूपसंयोगवियोगाभ्यां रवेरशुद्धत्वं परिणामित्वं च न भवति एवं जीवस्यापि देहयोगवियोगाभ्यां मलिनत्वं न भवतीति भावः॥ ४५॥ जीवस्य देहोत्पत्तिनाशयोर्विषयेऽविनाशित्वं सदृष्टांतमाह जन्मेति। देहस्य जन्मादयः उत्पत्तिवृद्धिक्षयादयो भावाः संति। तत्रात्मनो जीवस्य विक्रिया क्वचित्। कदाचिन्नास्ति। तत्र दृष्टांतः इंदोः कलानामेव जन्मादयो भावा यथा संति तद्वदिंदोर्नैव तथा सत्यपि कुहूः इंदुकलानाशरूपा अमावास्या। अस्य चंद्रस्य मृतिर्मृत्युरित्यज्ञा वदंति एवं देहनाशे जीवनाशं वदन्ति॥ ४६॥ वैदर्भीशोकनाशाय संसृतेरनित्यत्वं वदति यथेति। शयानो जनः आत्मानं स्वप्नदेहं विषयान् भोग्यार्थान्। फलंभोगं च असत्य नित्येप्यर्थे सति यथानुभुंक्ते तथा अबुधः मोक्षसाधनसहितेन। जीवात्मपरमात्मज्ञानेन हीनोऽज्ञः भवं संसारं प्राप्नोति॥ ४७॥ आत्मनः शोषणं विमोहनं च यस्मित्तमज्ञानजं देहात्मनोरविवेकादुत्पन्नं शोकं तत्वज्ञानेन देहात्मविवेकेन निर्हृत्य त्यक्त्वा हे शुचिस्मिते। स्वस्थास्वस्थचित्ताभव॥ ४८॥

## भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

ननु सर्वेषामपि देहिनामित्युक्तेः कोऽसौ देहातिरिक्तो जीवो नाम कीदृशश्च तद्देहः कथं च देहातिरिक्तस्यात्मनः सुखदुःखादिभोक्तृत्वमित्यत आह। देह इति। एषः देहः, द्रव्यप्राणगुणात्मकः, तत्र द्रव्यं पृथिव्यादिभूतपञ्चकं, प्राणा इन्द्रियाणि, गुणाः तन्मात्रासंज्ञिकाः, पृथिव्यादिभूतपञ्चकीया गन्धादयो गुणाः, सत्त्वादिप्रकृतिगुणारब्धद्रव्यादितत्त्वान्तरसमुदायरूप इत्यर्थः। आद्यन्तवांश्च, आत्मा तु ज्ञानात्मक इति भावः। अविद्यया अनादिकालतः, स्वस्थाज्ञानात्मकाविद्ययेत्यर्थः। आत्मनि, क्लृप्तः। एवंविधोऽयं देहः, देहिनं स्वमेवात्मत्वेन मन्यमानं जीवं, संसारयति संसरणविषयं करोति॥ ४५॥ ननु देहः स्वसंबन्धमात्रेण

जीवात्मानं संसारयेत्तर्हि जीवद्वारा जीवशरीरकं परमात्मानमपि स संसारयतु इत्यत आह । नेति । हे सति, आत्मनः परमात्मनः, असता असदात्मकेन, अन्येन अन्तरा जीवसत्त्वात् स्वतो दूरवर्त्तिना पृथग्भूतेन च देहेनेत्यर्थः । संयोगः, वियोगश्च, न भवति । कुतः । तत्प्रसिद्धेः जीवानां देहोत्पत्तेः देहसंयोगवियोगोत्पत्तेर्वा, तद्धेतुत्वात् 'देहेन्द्रियमनः प्राणान् जनानामसृजत् प्रभुः' इत्युक्तेः परमात्माधीनत्वात् । परमात्माधीनत्वाद्देहो न परमात्मनो बन्धक इत्यर्थः । तदधीनत्वेन तस्य बन्धाभावे दृष्टान्तमाह दृग्रूपाभ्यां यथा रवेरिति । दृक् आदित्येनानुग्राह्यं चक्षुः चक्षुषा समीक्ष्यं रूपं च ताभ्यां दृग्रूपाभ्यां, रवेः आदित्यस्य, यथा न संसर्गः, दृग्रूपप्रकाशस्य रव्याधीनत्वात् । तद्वत् देहजीवाभ्यां परमात्मनोऽन्तस्थत्वेन संसर्गः वस्तुतः पृथग्वर्त्तित्वान्न देहकृतदोषाश्रयत्व-मित्यर्थः ॥ ४६ ॥ 'देह आद्यन्तवानेष' इत्यनेनाद्यन्तवत्त्वस्य देहविपकत्वसूचनादात्मनो जन्माद्यभावमुत्पादयति । जन्मादय इति । जन्मादयः, विक्रिया विकाराः तु, देहस्य ह्येव । क्वचित् कदाचिदपि, आत्मनः न । तदन्तः स्थितवतोऽप्यात्मनः कदाचिदपि न सन्तीत्यर्थः । जन्ममरणभाक्त्वं देहस्यैव नात्मनः इत्येतदृष्टान्तप्रदर्शनेन दर्शयति । इन्दोः, कलानां उदय इति शेषः । इव, चन्द्रस्य कलोदय एव तज्जन्मस्थानीय इति भावः । अस्य चन्द्रस्य कुहूः कलानाशरूपाऽमावास्या, मृतिर्मृत्युः इव, कुहूशब्दबोधितस्तत्-कलाक्षयोऽस्य मरणस्थानीय इति भावः । नैव परमार्थौ न स्त एव । एवमात्मनो देहोपलब्धिविनाशावेव जन्ममृतिव्यवहारभूतौ वस्तुतो नास्य जन्ममृत्यू इत्यर्थः ॥ ४७ ॥ देहो देहिनं संसारयतीति यदुक्तं तद्विशदयन् देहस्यासत्त्वेऽपि अज्ञानतः यावत्तत्-सम्बन्धभाक्त्वं तावत् संसरणानिवृत्ति सदृष्टान्तमाह । यथा शयान इति । यथा अर्थे स्वाप्ने पदार्थे, असत्यस्थिरेऽपि, शयानः पुमान्, स्थिरबुद्ध्या, आत्मानं भोक्तारं, विषयान् स्वप्नभोग्यान्विषयान्, फलं तद्भोगं च, अनुभुङ्क्ते यावत् स्वप्न तावज्जा-ग्रद्भाव इवानुभवति । तथा, अबुधोऽयमज्ञजीवः, भवं आप्नोत्येव यावदज्ञानं तावत्संसार प्राप्नोतीत्यर्थः ॥ ४८ ॥

**कृष्णप्रिया**

यह देह आदि और अन्त युक्त है । और वह शरीर पञ्च महाभूत, पञ्च प्राण, पञ्च तन्मात्रा, और त्रिगुणात्मक है । आत्मा में उसके अज्ञान से ही इसकी कल्पना हुई है । और वह कल्पित शरीर ही, जो उसे "मैं" समझता है उसको ही जन्म-मृत्यु के चक्कर में ले जाता है ॥ ४५ ॥ देवी रुक्मिणी जी ! नेत्र और रूप दोनों ही सूर्य के तेज से प्रकाशित होते हैं । भगवान् सूर्य ही उनका कारण है । इसलिये सूर्य के साथ नेत्र और रूप का न तो कभी वियोग होता है और न संयोग होता है । इसी प्रकार समस्त संसार की सत्ता आत्म-सत्ता के कारण जान पड़ती है इस समस्त जगत् का प्रकाशक आत्मा ही है । फिर आत्मा के साथ दूसरे असत् पदार्थों का संयोग एवं वियोग हो ही कैसे सकता है ॥ ४६ ॥ जन्म लेना, रहना, बैठना, बदलना, घटना और मरना ये सारे विकार के ही होते है आत्मा के नहीं । जैसे कृष्णपक्ष में कलाओं का क्षय होता है चन्द्र का नहीं परंतु अमावास्या के दिन लोग व्यवहार में चन्द्रमा का ही क्षय हुआ कहते-सुनते है वैसे ही जन्म-मृत्यु आदि सर्व विकार शरीर के ही होते है आत्मा के नहीं, परन्तु लोग उसे भ्रम-वश अपना अपने आत्मा का मान लेते हैं ॥ ४७ ॥ जैसे निद्रा में रहा हुआ पुरुष किसी पदार्थ के न होने पर भी स्वप्न में भोक्ता भोग्य और भोगरूप फलों का अनुभव करता है उसी प्रकार अज्ञान लोग झूठ मूठ संसार चक्र का अनुभव करते हैं ॥ ४८ ॥

**तस्मादज्ञानजं [1]शोकमात्मशोषविमोहनम् । तत्त्वज्ञानेन निर्हृत्य स्वस्था भव शुचिस्मिते ॥ ४९ ॥**

**श्रीशुक उवाच**

**एवं भगवता तन्वी रामेण प्रतिबोधिता । वैमनस्यं परित्यज्य मनो बुद्ध्या समादधे ॥ ५० ॥**
**प्राणावशेष उत्सृष्टो [2]द्विड्भिर्हतबलप्रभः । स्मरन् विरूपकरणं वितथात्ममनोरथः ॥ ५१ ॥**
**[3]चक्रे भोजकटं नाम निवासाय महत् पुरम् ।**
**अहत्वा [4]दुर्मतिः कृष्णमप्रत्यूह्य यवीयसीम् । कुण्डिनं न प्रवेक्ष्यामीत्युक्त्वा तत्रावसद् रुषा ॥ ५२ ॥**

**कर्दमक्षमा**

अन्वयः—हे शुचिस्मिते ! तस्मात्, अज्ञानजम्, आत्मशोष विमोहनम्, शोकम्, तत्वज्ञानेन, निहृत्य, स्वस्था भव॥४९॥ एवम्, भगवता, रामेण, प्रतिबोधिता, तन्वी, वैमनस्यम्, परित्यज्य, बुद्ध्या, मनः, समादधे ॥ ५० ॥ प्राणावशेषः द्विड्भिः, हृतबलप्रभः, विरूपकरणम्, स्मरन्, वितथात्ममनोरथः शत्रुभिः, उत्सृष्टः, कृष्णम्, अहत्वा, यवीयसीम्, अप्रत्यूह्य, कुण्डिनम्, न प्रवेक्ष्यामि, इति उक्त्वा, दुर्मतिः निवासाय, भोजकटम्, नाम, महत्, पुरम्, चक्रे, तत्र, रुषा, अवसत् ॥ ५१-५२ ॥

---

१. बोध-विज. । २. रुक्मी-च. पु. टि. । ३. इदमधिकं-विज. । ४. दुर्मतिः-वीर. ; दुर्मति-श्रीधर वंशी. जीव. विज. विश्व. शुक. सु. ।

**श्रीधरस्वामिविरचिता भावार्थदीपिका**

आत्मानं शोषयति विमोहयति चेति तथा तम् निर्हृत्यापाकृत्य ॥ ४९ ॥ समादधे समाहितमकरोत् ॥ ५० ॥ रुक्मिणस्त्वेवं श्रुतवतो नाज्ञानं निवृत्तमिति दर्शयन्नाह—प्राणावशेष इति ॥ ५१ ॥ अहत्वा अजत्वाऽदुर्मतिमिति च सत्योऽर्थः अप्रत्यूह्यानावर्त्य । अप्रतिबुध्येति तु सत्यम् । यवीयसीं स्वसारम् । यत्र विरूपितस्तत्रैवावसत् तत्र च भोजकटं नाम पुरमभवत् ॥ ५२-५४ ॥

**श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः**

स्वस्था तत्त्वज्ञा शुचिस्मित इति प्रोत्साहनार्था संबुद्धिः । अर्थद्वयमुपसंहरति-तस्मादात्मनः शोकः नीरसतापादनम् । हे शुचिस्मिते हे प्रसन्नहृदये इत्यर्थः । तव साक्षाल्लक्ष्मीत्वान्नेषदप्यज्ञानस्पर्शः किन्तु लौकिकलीलयैव त्वमित्थं व्यवहरसि मयापि तथोपदिश्यस इति भावः ॥ ४९ ॥ बुद्ध्या निश्चयात्मिकया । तथैव साप्यनुकृतवतीत्याह—एवमिति । प्रतिबोधितेत्यत्र सा तावत्स्वयमेव चिच्छक्तिरूपत्वान्नित्यं बुधैव प्रत्युत तदंशसम्बन्धादेव श्रीसंकर्षणादीनामपि बोधादिकं ततस्तेन तस्याः प्रतिबोधनं प्रतिदानरूपमेवेति प्रतिशब्दस्यार्थः ॥ ५० ॥ चित्तशुद्धिं विनोपदिष्टमपि तत्त्वं न प्रकाशत इत्याह—रुक्मिणस्त्विति । हते बलप्रभे वीर्यतेजसी यस्य स तथा । वितथो व्यर्थ आत्मनो मनोरथः "अहत्वा समरे कृष्णमप्रत्यूह्य यवीयसीम्" इत्येवंरूपोऽभिलाषो यस्य स तथा । प्राणेति युग्मकम् । पूर्वं द्विड्भिर्हृतबलप्रभः, ततो वितथात्ममनोरथः, ततो वैरूप्यपर्यन्तकरणात्प्राणमात्रावशिष्टीकृतः, तत उत्सृष्टः, पश्चाद्विरूपकरणं स्मरन्निति क्रमो ज्ञेयः । व्युत्क्रमोक्तिस्तद्वर्णनेनादरं सूचयित्वा तस्याप्यनादृतत्वं बोधयति । बलं सैन्यं वीर्यञ्च एकशेषत्वात् ॥ ५१ ॥ प्रतिज्ञाऽनिष्पत्तेस्तत्रान्यदेवपुरं रचयामास । लज्जितः पितृनगरं न जगामेत्यर्थः । उपभुंक्त इति भोजो युवराजः । यद्वा-भोजो विदर्भराजवंश्यः "तत्रेश्वरेण क्रथकैशिकानां भोजेन दूतो रघवे विसृष्टः" इति रघुकाव्यात् । तस्य कटः शपथो यत्र तत् "कटः कलिंजे शपथे गजतुंडे कटावपि" इति कोशात् । सरस्वतीमते तु-भोजस्य तस्य कटः श्मशानमिव कटधूमस्य सौरभ्यमिव तद्वाचित्वात् । द्विड्भिरिति बहुवचनेन कृष्णपार्श्ववर्तितः पद्भ्यां चलन्यदुसैन्यैरपि तिरस्कारभर्त्सनताडनादिभिर्विडंबित इति बोध्यते ॥ ५२ ॥

**श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी**

अर्थद्वयमुपसंहरति । तस्मादात्मनः शोषः नीरसतापादनं हे शुचिस्मिते ! हे प्रसन्नहृदये इत्यर्थः । तव साक्षाल्लक्ष्मीत्वान्नेषदप्यज्ञानस्पर्शः किन्तु लौकिकलीलयैव त्वमित्थं व्यवहरसि मयापि तथोपदिश्यस इति भावः ॥ ४९ ॥ तथैव साप्यनुकृतवतीत्याह । एवमिति । प्रतिबोधितेत्यत्र सा तावत्स्वयमेव महाचिच्छक्तिरूपत्वान्नित्यम्बुधैव प्रत्युत तदंशसम्बन्धादेव श्रीसङ्कर्षणादीनामपि बोधादिकं ततस्तेन तस्या बोधनं प्रतिदानरूपमेवेति प्रतिशब्दार्थः ॥ ५० ॥ प्राणेति सार्द्धकम् । पूर्वं द्विड्भिर्हृतबलप्रभः ततो वितथात्ममनोरथः ततो वैरूप्यपर्य्यन्तकरणात् प्राणमात्रावशिष्टीकृतः तत उत्सृष्टः पश्चाद्विरूपकरणं स्मरन्निति क्रमो ज्ञेयः व्युत्क्रमोक्तिभिस्तद्वर्जनेऽनादरं सूचयित्वा तस्याप्यनावृतत्वं बोधयति बलं सैन्यं वीर्य्यं च एकशेषत्वात् उपभुङ्क्ते इति भोजो युवराजः यद्वा भोजो विदर्भराजवंश्यः "तत्रेश्वरेण क्रथकैशिकानां भोजेन दूतो रघवे विसृष्ट" इति रघुवंशकाव्यात् तस्य कटः शपथो यत्र तत् "कटः कलिङ्गे शपथे गजगण्डे कटाव"पीति नानार्थत्वात् सरस्वतीमते तु भोजस्य तस्य कटः श्मशानमिव "कटधूमस्य सौरभ्य"मिति तद्वाचित्वात् ॥ ५१ ॥ पुरा कृतं शपथमेव दर्शयति । अहत्वेति । अप्रत्यूह्येति दीर्घमध्यत्वमार्षम् ॥५२॥

**श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी**

आत्मनः शोषो नीरसतापादनम्, न चेदं केवलम्, किन्तु विशेषतो मोहनञ्च, बुद्ध्यादि-सर्व्वविनाशकमित्यर्थः । तत्त्वज्ञानेन उक्तेन किंवा स्वतस्त्वयि विराजमानेनैव, शुचि शुद्धं स्मितं यस्यास्तत्सम्बोधनम् । शुचिस्मितत्वात् त्वं सदा प्रसन्नहृदयैवेति तत्त्वतस्तव शोको नास्तीति बुध्यत एव, तथापि मया यदोद्धत्यं कृतं तत् क्षन्तव्यमिति भावः । यद्वा, सदा निर्म्मलचित्तत्वाच्छुचिस्मिते ! श्रीकृष्णे स्वस्था अभिनिविष्टचित्ता भव, साक्षात्तथानुक्तिर्धार्ष्ट्यपरिहारार्थम् ॥ ४९ ॥ तन्वीति शोकेन कार्श्यात् किंवा कृशमध्यत्वादिना परमसौन्दर्य्यात्, अयं प्रयिबोधने हेतुः, अन्यथा शोकेन सौन्दर्य्यक्षयात् । प्रति प्रत्यक्षं वोधिता शिक्षिता, यतो भगवता सर्व्वज्ञेन श्रीकृष्णाभिप्रायादिकं जानतेत्यर्थः । रामेणेति प्रतिबोधनेन तस्याः सुखजननाभिप्रायेण । समादधे प्रेम्णा श्रीकृष्णे नितरामपितवतीत्यर्थः ॥ ५० ॥ प्राण एवावशेषोऽवशिष्टो यस्य सः, यतो हतं बलं सैन्यं सामर्थ्यं वा प्रभावस्तेजो यस्य सः, वितथो मिथ्याभूत आत्मनो मनोरथः श्रीकृष्णजिगीषादिर्यस्य सः, विशेषणानामेषां यथोत्तरं पुरनिर्म्माणहेतुत्वे श्रेष्ठ्यम् । महत् श्रीभीष्मकपुरतो वृहत्तरम्, भोजेभ्यो यादवेभ्यः कटः शपथो यत्र, यदूनां जयाय शपथकरणात्;—'कटः किलिञ्जे शपथे गजगण्डे करावपि' इति कोषः । वस्तुतस्तु भोजनां यादवानामक्रूरादीनां भक्तवराणां कटः, अतितुच्छत्वात् तृणासनप्रायमित्यर्थः ॥ ५१ ॥ यवीयसीं कनिष्ठभगिनीमिति तस्यां स्नेहविशेषं सूचयति । स च श्रीप्रद्युम्न-रुक्मवती-विवाहादिनाग्रे व्यक्तो भावी । तादृशदुरवस्थाप्राप्तस्यापि तादृशोक्तौ हेतुः—रुषेति; क्रोधेन पूर्व्वापरसर्व्वविचारानुदयादित्यर्थः ॥ ५२ ॥

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम्

अप्रत्यूह्य पुनरानयनमकृत्वा ।। ५२-५३ ।।

### श्रीमद्वीरराघवाचार्यकृता भागवतचन्द्रचन्द्रिका

उपसंहरति । तस्मादिति । तस्मात्तत्त्वदृशेरीदृशत्वात् आत्मानं मानसं शोषयत्वभास्वरयति विमोहयति चेति तथा तमज्ञानप्रभवं मोहं सुहृद्दुर्हृदुदासीन इत्येवं विधं मोहं तत्त्वज्ञानेन कृत्स्नस्य जगतः परमात्मशरीरकत्वज्ञानेन निर्हृत्यापाकृत्य हे शुचिस्मिते ! स्वस्था स्वस्मिन्स्थिता ज्ञानानन्दस्वरूपात्मविमर्शनपरा भव सुस्थेति पाठे निर्विषादा भवेत्यर्थः ।। ४९ ।। एवमिति तन्वी रुक्मिण्येवं प्रतिबोधिता वैमनस्यं दुःखं त्यक्त्वा बुद्धया तत्त्वनिर्णयात्मिकया मनः सङ्कल्पविकल्पात्मकं समाहितवती ।।५०।। रुक्मिणस्त्वेवं श्रुतवतोऽपि नाज्ञानं निवृत्तमिति सूचयन्नाह । प्राणेति । रुक्मी तु द्विड्भिः शत्रुभिर्हृतं बलं प्रभा तेजश्च यस्य सः अत एव प्राणमात्रावशिष्टस्त्यक्तश्च वितथो व्यर्थः स्वमनोरथो यस्य सः आत्मनः स्वस्य विरूपकरणं कृष्णकर्तृकमिति शेषः स्मरन् भोजकटाख्यं विपुलं पुरं चक्रे ।। ५१ ।। तत्रेत्थं सङ्कल्पयामसेत्याह । अहत्वेति । दुर्म्मतिः रुक्मी यवीयसीं कनीयसीं कन्यां रुक्मिणीमप्रत्यूह्यानावर्त्य कुण्डिनपुरं न प्रवेक्ष्यामीति प्रतिज्ञाय रुषा क्रोधेन तत्र भोजकटेन्यवसत् ।। ५२ ।।

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

उपसंहरति । तस्मादिति ।। ४९ ।। बुद्धया कदाप्यतिरोहितज्ञानेन ।। ५० ।। रुक्मी तत्र किञ्चकारेति तत्राह । प्राणेति ।। ५१ ।। अप्रत्यूह्य अनिवर्तयित्वा यवीयसीमनुजाम् ।। ५२-५३ ।।

### श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः

अहत्वा दुर्मतिमित्यादि । दुर्मतिं दुरवगाह्यमतिम्, अदुर्मतिं वा ।। ५२-५९ ।।

### श्रीनाथचक्रवर्तिपादविरचिता चैतन्यमतमञ्जूषा

अहत्वा दुर्मतिं दुरवगाह्यमतिम् ।। ५२-५९ ।।

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

यस्मादेवं तस्मात् स्वस्था स्वभावस्था भव हे शुचिस्मिते ! मुखस्य स्वाभाविकीं प्रफुल्लतां प्रकाशय न त्वं प्राकृती सांसारिकी वधूरिति भावः ।। ४९ ।। लोका मां किं वदिष्यन्तीति वैमनस्यं चिन्तां समादधे समाहितमकरोत् ।। ५० ।। द्विड्भिरित्यनेन कृष्णपार्श्वात्ततः पद्भ्यां चलन् यदुसैन्यैरपि तिरस्कारभर्त्सनताडनादिभिः सविडम्बित इति बुध्यते ।। ५१ ।। दुःखं भुङ्क्ते इति भोजो रुक्मी तस्य कटः शपथो यत्र तत् "कटे कलिङ्गे शपथे गजदण्डे कटावपि" इति नानार्थात् तत्र स्वविरूपीकरणप्रदेशे ।। ५२-५३ ।।

### गूढार्थदीपिनी

आत्मानं शोषयति कृशीकरोति विमोहयतीति । निर्हृत्य दूरीकृत्य ।। ४९ ।। तन्वी रुक्मिणी । विमनसो भावः वैमनस्य शोकम् । समादधे सुस्थिरमकरोत् ।। ५० ।। प्राणेति सार्द्धम् । उत्सृष्टः त्यक्तः । वितथो व्यर्थः ।। ५१ ।। यवीयसीं कनिष्ठाम् । अप्रत्यूह्य अनिवर्त्य ।। ५२ ।।

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

हे शुचिस्मिते ! आत्मानं शोषयति विमोहयति चेति तथा तम् लीलासौष्ठवार्थं विडम्बितं निर्हृत्य अपाकृत्य ।।४९-५४।।

### श्रीसत्यधर्मकृता श्रीभागवतटिप्पणी

जाग्रद्दशापन्नो जीवः कर्तोपलभ्यते भोक्ता चेति कथं कथय स्वातन्त्र्यं न जीवस्येति । यदि तस्य स्वातन्त्र्यं कथमेक एव परो ह्यात्मेत्युक्तिरित्यतोऽनुगुणनिदर्शनं दर्शयित्वा तद्विषयास्थिरतां व्युत्पाद्यैक एवेत्युक्तं निर्धारयितुमाह ।। यथेति । शयानः सुप्त आत्मानमनुभुङ्क्ते जानाति विषयाञ्छन्दादीननुभुङ्क्ते फलं सुखदुःखादिकं चानुभुङ्क्ते वासनात्मकं सर्वमनुभुङ्क्ते । तदा जाग्रत्कालिकेऽर्थेऽसत्यविद्यमानेऽपि । न तत्र रथा इत्यादेः । तथा जाग्रदात्माऽप्यध्रुवानर्थास्त्वयं ध्रुवः सन्ननुभुङ्क्ते । तत्र यथा तथाऽत्रापि भोजयितैको विषयाश्च यथा प्रागग्रे नोपलभ्यन्ते तथैतेऽप्यस्थिरा इति भावः । तदविद्याक्षेपस्त्रैवर्णिकानां कथञ्चिद्वैदिकमार्गप्रवर्तनाद्भगवदनुग्रहेण भवेच्छूद्रादीनां कथं तत्क्षेप उपायाभावादित्यतोऽप्याह ।। यथेति । यो ध्रुवो नित्यो वेदादिस्तद्रूपेऽर्थे सत्यपि तत्राधिकाराभावेऽपीति यावत् । आत्मा । ए भगवत्यात्मा मनो यस्य सोऽधिकारी त्रैवर्णिको यथाऽऽमानं स्वामिनं ध्रुवान्विषयान्फलं मोक्षरूपमनुभुङ्क्ते तथा शयानः शूद्रोऽप्यात्मा भगवन्मानसः । उपलक्षणमेतत् । त्रिवर्णपरिचर्यावान्ध्रुवान्विष-

यादनिनुभुङ्क्त इति । त्रैवर्णिकाःसञ्चरन्तो वेदमार्गप्रवर्तनात् । शयानः शूद्र उद्दिष्टो वेदकर्माप्रवर्तनादित्येकादशतात्पर्योक्तेः । ध्रुवो विष्णुर्ध्रुवाननुभुङ्क्ते भोजयतीति योजयन्ति ॥ ४९ ॥ उपसंहरति ॥ तस्मादिति । जीवस्य स्वातन्त्र्याभावादभावाच्च विषयस्थैर्यस्याज्ञानाज्जायत इत्यज्ञानजं शोकम् । तत्कार्यमप्याह ॥ आत्मेति । आत्मनो बोधो ज्ञानं तद्विमोहयति तस्य विमोहनं यस्मादिति वा । स्वार्थमविपर्यीकुर्वन्तमिति यावत् । तत्त्वज्ञानेन मदुपदेशोज्जृम्भितेन निर्हृत्य परिहृत्य शुचिस्मिते स्वस्था भ्रातृवैरूप्यचिन्तादिरहिता भव ॥ ५० ॥ भगवता रामेणैवं प्रतिबोधिता तन्वी बुद्ध्या वैमनस्थं दुर्मनस्कतां परित्यज्य मनः स्वोचितकार्योचितं त्यात्तथा समाददे गृहीतवती स्वाधीनं चक्र इति यावत् । समादध इति पाठे समाहितमतनोदित्यर्थः ॥ ५१ ॥ रुक्मिण्या सह रुक्मवर्णे गते रुक्मी किमकरोदित्यत आह ॥ प्राणावशेष इति । अवशिष्यन्त इत्यवशेषाः प्राणा एवावशेषा यस्य स सन् द्विड्भिर्ये भैष्म्याः परिरम्भणं चकमिरे तेषां भुजांश्छिच्छेदुर्ये वा तन्मुखचन्द्रचुम्बनरुचिं तेषां शिरांसि द्विषां ये तल्पे शयनं तया सह खला लोका अम्बया सङ्गरे प्रेतैः सार्धमशीशपन्हरिभटा इति कर्मकृद्भिर्जीवेत्युत्सृष्टस्त्यक्तः । हृते गते बलप्रभे यस्य स विरूपकरणं स्मरन्वितथो व्यर्थीभूत आत्मा मनोरथो यस्य स तथा भोजकरं नाम महत्पुरं । द्वे पदे । निवासाय चक्रे ॥ ५२ ॥

## श्रीमद्वल्लभाचार्य्यकृता सुबोधिनी

अतो अज्ञानेनैव देहप्रतीतेः देहस्य च मिथ्यात्वात् देहसम्बन्ध एव आत्मनः परिच्छेदप्रतीतिः, परिच्छेदे एव च शत्रुमित्रादिप्रतीतिरिति, परम्पराया अज्ञानमेव मूलमिति तत्त्वज्ञानेन तन्निराकरणं कर्त्तव्यमित्याह **तस्मादिति** । शोकस्तु विषमबुद्धिजन्य इति अज्ञानकृत एव । शोकस्य परित्यागाय दोषद्वयमाह । आत्मनोऽन्तःकरणस्य शोषो विमोहनं च यस्मादिति । ततः अत्यपकारित्वात्तदज्ञानं तत्त्वज्ञानेन निर्हृत्य स्वस्था भवेत्युपदेशः, प्रार्थना वा । **शुचिस्मित** इति । सहज एव तव प्रसाद इति कृत्रिमनिराकरणं नात्यन्तं क्लेशेन कर्तव्यमिति सूचितम् ॥ ४९ ॥ एवमुपदिष्टज्ञानं भगवत्सान्निध्यात्फलितमित्याह **एवं भगवतेति** । ननु भगवत्सिद्धान्तं परित्यज्य ज्ञानसिद्धान्तः किमिति बोधितः, तत्राह **तन्वीति** । **भगवानिति** च । न हि भगवान् विरुद्धं स्वसिद्धान्तं कथयति । मुक्तानामेव तत्राधिकारात् । इयं च तन्वी विषयपरा । रामश्च साधनपरः । अतो हेतुत्रयस्यापि तथात्वात् ज्ञानेनैव प्रतिबोधिता । ज्ञानस्य च प्रयोजनं तस्यां वैमनस्यपरित्यागमात्रं जातम्, भगवति या दोषबुद्धिः स्थिता, सा गता । ततः विक्षिप्तं मनः बुद्ध्या समाहितमपि कृतवती । एको भगवद्विषयको दोषः । अपरो विक्षेपेण तस्या एव दुःखदः । उभयनिवृत्तिर्ज्ञानफलम् ।५०। एवं रुक्मिण्याः समाधानमुक्त्वा रुक्मिणः परित्याग एव उभयेषां सुखदो भवतीति तत्परित्यागमाह **प्राणावशेष** इति । बलभद्रेण मोचनेऽप्यसहायात् अन्येन मारणं संभवतीति द्विड्भिरुत्सृष्ट उक्तः । हृतं बलं प्रभा च यस्य । द्विड्भिरेव । तस्यान्यद्विस्मृतम्, विरूपकरणं तु स्मरति । जातेऽपि विरूपे यदि स्वाभिलषितः कश्चित्सिध्येत्, तदा न तथा खिन्नो भवेत् । किन्तु वितथः आत्मनो मनोरथो यस्य । तथापि स्वप्रतिज्ञां नान्यथा कृतवान् । भगवता हि तस्य भगिनी परिगृहीतेति ॥ ५१ ॥ अत एव कुण्डिनपुरं परित्यज्य अन्यत्रैव स्थित इत्याह **अहत्वेति** । यतोऽयं दुर्मतिः, अतस्तत्रैवावसत्, यत्र मुण्डितः । भोजा हि मृतकर्पटग्राहकाः । जात्यपकर्षे भोजाद्यवन इति यवनात्पूर्वं निरूपितः । तस्य कट इति मरणपर्यन्तं तत्रैव स्थास्यामीति तस्य ग्रामस्य नाम भोजकटमिति कृतवान् । यद्यपि न कोऽपि पुरुषार्थः, नह्यसत्प्रतिज्ञाया अपालने कश्चन दोषोऽस्ति, तथापि भ्रातृत्वाद्रोषेण तत्रैव स्थितः ॥ ५२ ॥

## श्रीसुबोधिनी–सारः

तस्माद्धेतोरात्मानं शोषयति विमोहयतीति तथा तमज्ञानाज्जातं शोकं तत्त्वज्ञानेन निर्हृत्य दूरीकृत्य स्वस्था भव हे शुचिस्मिते ॥ ४९ ॥ शुकोक्तिः । तन्वी रुक्मिणी भगवता रामेणैवं प्रतिबोधिता वैमनस्यं मनोव्यथां परित्यज्य बुद्ध्या मनः सुस्थं चकार ॥ ५० ॥ प्राण एवावशेषो यस्य स उत्सृष्टस्त्यक्तः द्विड्भिः शत्रुभिर्हृते बलप्रभे यस्य स वितथो मिथ्यात्मनो मनोरथो यस्य स विरूपकरणं मुंडनं स्मरन् चिंतयन् सन् भोजकटं नाम पुरं चक्रे दुर्मतिं कुबुद्धि कृष्णमहत्वा यवीयसीं कनिष्ठां भगिनीम् अप्रत्यूह्य न मोचयित्वा कुंडिनं न प्रवेक्ष्यामीत्युक्त्वा रुषा क्रोधेन तत्रावसत् । भोजकटे पुरे निवासमकरोत् ॥ ५१–५२ ॥

## विवरणटिप्पणी

**एवं भगवतेत्यस्याभासे** । **भगवत्सान्निध्यादिति** । इदमपि ज्ञानमसुरसंनिधाने न फलति । तेषां देहात्मवादित्वस्य छान्दोग्ये व्यवस्थापनात् । तथापि भगवत्सान्निध्यात्फलितमित्यर्थः । **व्याख्याने** । **भगवत्सिद्धान्तमिति** । 'अखण्डं कृष्णवत्सर्व'मिति सिद्धान्तमित्यर्थः । **ज्ञानसिद्धान्त इति** । 'असत्यमप्रतिष्ठं ते' इति वाक्योक्तं सर्वस्यासत्त्वेन ज्ञानं तत्सिद्धान्त इत्यर्थः । **व्याख्याने एक इति** । वैमनस्यमित्यर्थः । **अपर इति** । मनोविक्षेप इत्यर्थः ।

**इति पञ्चमाध्यायव्याख्या समाप्ता ।**

### गोस्वामिश्रीगिरिधरलालकृताबालप्रबोधिनी

उपदेशमुपसंहरति—तस्मादिति। 'तव शान्तिरेव युक्ता' इत्याशयेन सम्बोधयति—हे शुचिस्मितेति। यस्मादज्ञानमूलकमेव शोकादि तस्मादात्मज्ञानेन अज्ञानजं शोकं निर्हृत्य अपाकृत्य स्वस्था शान्तचित्ता भवेत्यन्वयः। 'शान्त्यभावे सुखं न स्यात्' इत्याशयेन शोकं विशिनष्टि—आत्मानमन्तःकरणं शोपयति कृशीकरोति, तथा विमोहयति शत्रुमित्रादिभ्रान्तिमुत्पादयति चेति तथा तमिति ॥ ४९ ॥ तन्वी सुकुमाराङ्गी रुक्मिणी एवं रामेण प्रतिबोधिता सती रुक्मिवैरूप्यनिमित्तं वैमनस्यं शोकं परित्यज्य बुद्धया विवेकात्मिकया मनःसङ्कल्पविकल्पात्मकं समादधे समाहितवती। श्रीरामोपदेशस्य साफल्ये हेतुमाह—भगवतेति ॥ ५० ॥ रुक्मिणस्तु आत्मतत्त्वं श्रुतवतोप्यज्ञानं न निवृत्तम्, अतो यत्कृतवांस्तदाह—प्राणेति। द्विड्भिः शत्रुभिः कृष्णादियदुभिः हतं बलं प्रभा तेजश्च यस्य सः, अत एव प्राणमात्रमवशेषो यस्य सः, तैरेव उत्सृष्टः वशीकृत्य त्यक्तः, अत एव वितथः अपूर्ण आत्मनो मनोरथो यस्य सः, स्वविरूपकरणं स्मरन्, अत एव रुषा क्रोधेन 'दुर्मतिं कृष्णमहत्वा यवीयसीं कनिष्ठां रुक्मिणीमप्रत्यूह्य अनावर्त्य कुण्डिनं पुरं न प्रवेक्ष्यामि' इत्युक्त्वा प्रतिज्ञाय यत्र विरूपितः तत्रैव भोजकटं नाम महत् विपुलं स्वनिवासाय पुरं चक्रे तत्रैवावसत् इति सार्धद्वयान्वयः ॥ ५१–५२ ॥

### अन्वितार्थप्रकाशिका

तस्मादिति। हे शुचिस्मिते! यस्मादज्ञानमूलकमेव शोकादि तस्मात् आत्मानमन्तःकरणं शोषयति कृशीकरोति तथा विमोहयति तम् अज्ञानजं शोकम् आत्मतत्त्वं ज्ञानेन निर्हृत्य अपाकृत्य स्वस्था शान्तचित्ता भव ॥ ४९ ॥ एवमिति। तन्वी सुकुमाराङ्गी रुक्मिणी भगवता रामेण प्रतिबोधिता सती रुक्मिवैरूप्यनिमित्तं वैमनस्यं शोकं परित्यज्य बुद्धया विवेकात्मिकया मनः संकल्पविकल्पात्मकं समादधे समाहितवती ॥ ५० ॥ रुक्मिणस्तु एवं श्रुतवतोऽपि नाज्ञानं निवृत्तमित्याह—प्राणेति सार्द्धम्। द्विड्भिः शत्रुभिः कृष्णादियदुभिः हतं बलं प्रभा तेजश्च यस्य सः अत एव प्राणमात्रमवशेषो यस्य सः तैरेव उत्सृष्टः वशीकृत्य त्यक्तः अत एव वितथः अपूर्णः आत्मनो मनोरथो यस्य सः स्वविरूपकरणं स्मरन् तत्रैव विरूपीकरणप्रदेशे भोजकटं नाम महत् विपुलं पुरं स्वनिवासाय चक्रे। भोजस्य विदर्भराजस्य दुःखभोक्तुर्वा कटः शपथो यत्रेति व्युत्पत्तेः। "कटः किलिञ्जे शपथे" इति नानार्थात् ॥ ५१ ॥ शपथमाह–अहत्वेति। दुर्मतिं कृष्णमहत्वा यवीयसीं कनिष्ठां रुक्मिणीमप्रत्यूह्य अप्रत्यावर्त्य कुण्डिनं पुरं न प्रवेक्ष्यामीति रुषा उक्त्वा प्रतिज्ञाय वस्तुतः अहत्वा अज्ञात्वा अदुर्मतिमिति च्छेदः। अप्रत्यूह्य विघ्नितामकृत्वा इत्युक्त्वा तत्रैवावसत् ॥ ५२ ॥

### श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्

तन्वी रुक्मिणी वैमनस्य हृदासिन्यं। समादधे समाहितं चकार ॥४९॥ उत्सृष्टस्त्यक्तः वितथः मिथ्याजातः स्वमनोरथो यस्य सः ॥ ५० ॥ अप्रत्यूह्य न आनीय। तत्र भोजकटं पुरं कृत्वा अवसत् ॥ ५१ ॥ पुरं द्वारकां ॥ ५२–५३ ॥

### भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

उपसंहरति। तस्मादिति। तस्मात् ज्ञानदृशा सांसारिकसंबन्धादेरसत्यत्वाद्धेतोः, आत्मानं मानसं शोषयत्यभास्वरयति मोहयति चेति आत्मशोषविमोहनस्तं अज्ञानजं शोकं, तत्त्वज्ञानेन कृत्स्नस्य जगतः परमात्मशरीकत्वज्ञानेन, निर्हृत्यापाकृत्य, हे शुचिस्मिते, स्वस्था स्वस्मिन् स्थितज्ञानानन्दस्वरूपात्मविमर्शनपरा भव। पाठान्तरे निर्विषादा भवेत्यर्थः ॥ ४९ ॥ एवमिति। तन्वी रुक्मिणी, एवं भगवता रामेण, प्रतिबोधिता सती, वैमनस्यं दुःखं, परित्यज्य त्यक्त्वा, बुद्धया तत्त्वनिर्णयात्मिकया मत्या, मनः संकल्पविकल्पात्मकं मानसं, समादधे समाहितवती ॥ ५० ॥ प्राणावशेष इति। द्विड्भिः शत्रुभिः हते बलप्रभे बलतेजसी यस्य सः, प्राणावशेषः, उत्सृष्टः। वितथो व्यर्थः आत्ममनोरथः स्वमनोरथो यस्य सः, रुक्मी, विरूपकरणं श्रीकृष्णकर्तृकस्वकीयश्मश्रुवपनादिकं स्मरन् सन्, निवासाय स्वनिवासार्थं, महत् भोजकटं नाम पुरं, चक्रे ॥ ५१ ॥ अहत्वेति। दुर्मतिः रुक्मी, कृष्णं अहत्वा, यवीयसीं मत्कनिष्ठभगिनीं रुक्मिणीं, अप्रत्यूह्य अनावर्त्य, कुण्डिनं न प्रवेक्ष्यामि, इति, उक्त्वा, पुरान्निःसृतत्वात्तदसिद्धेर्हेतोः, रुषा तत्र भोजकटे, अवसत् ॥ ५२ ॥

### कृष्णप्रिया

इसलिये हे साध्वी रुक्मिणी जी! अज्ञान के कारण होने वाले इस शोक का त्याग कीजिये। यह शोक अन्तःकरण को मूर्च्छित कर देता है। मोहित कर देता है। इसलिये इसे छोड़कर आप अपने स्वरूप में स्थित हो जाईए ॥ ४९ ॥ श्रीशुकाचार्यजी ने कहा राजन् परीक्षित्! जब परमज्ञानी बलभद्रजी ने इस प्रकार तत्त्वज्ञान से आत्म-रहस्य समझाया तब कोमलाङ्गी देवी रुक्मिणी जी ने मन में प्रकट हुआ वैमनस्य-भाव निश्चयात्मिका स्थित-प्रज्ञा से हटा दिया ॥ ५० ॥ राजन् रुक्मी का

नाश हो गया था, केवल प्राण ही अवशिष्ट थे। केवल श्वास ही ले रहा था। मन की समस्त कामनाओं का ध्वंस हो गया था। पुनः शत्रुओं ने अपमानित करके जीवन दान दिया था और विकृत स्वरूप बनाने की व्यथा को विसर नहीं सकता था तब रुक्मी ने अपने पण को सत्य करने का मार्ग निकाता ॥ ५१ ॥ उसकी दो प्रतिज्ञायें था, 'कुमति कृष्ण को मारे विना और अपनी छोटी वहिन को लौटाये विना मैं कुण्डिनपुर में प्रवेश नहीं करूंगा" इन वचनों की रक्षा के लिये और अपने निवास के लिये भोजकट नाम का एक वड़ा नगर वसाया। और क्रोध-युक्त उसी पुरी में रहने लगा ॥ ५२ ॥

**[1]भगवान् भीष्मकसुतामेवं निर्जित्य भूमिपान्। पुरमानीय विधिवदुपयेमे [2]कुरूद्वह ॥ ५३ ॥**
**तदा महोत्सवो [3]नृणां यदुपुर्यां गृहे गृहे। अभूदनन्यभावानां कृष्णे यदुपतौ नृप ॥ ५४ ॥**
**नरा [4]नार्यः प्रमुदिताः प्रमृष्टमणिकुण्डलाः। पारिवर्हमुपाजह्रु [5]र्वरयोश्चित्रवाससोः[6] ॥ ५५ ॥**

**सा वृष्णिपुर्युत्तभितेन्द्रकेतुभिर्विचित्रमाल्याम्वररत्नतोरणैः।**
**वभौ [7]प्रतिद्वार्युपक्लृप्तमङ्गलैरापूर्णकुम्भागुरुधूपदीपकैः ॥ ५६ ॥**

### कर्दमक्षमा

अन्वयः—हे कुरूद्वह ? भूमिपान्, निर्जित्य, भगवान्, भीष्मक, सुताम्, पुरम्, आनीय, एवम्, विधिवत्, उपयेमे ॥५३॥ हे नृप ! तदा यदुपुर्याम्, गृहे, गृहे, यदुपतौ, श्रीकृष्णे, अनन्य, भावानाम्, महोत्सवः, अभूत् ॥ ५४ ॥ प्रमुदिताः, प्रमृष्टमणि कुण्डलाः, वरयोः, चित्र, वाससोः, पारिवर्हम् उपाजह्रुः ॥ ५५ ॥ उत्तभितेन्द्रकेतुभिः, विचित्रमाल्याम्वररत्नतोरणैः, प्रतिद्वारि उपक्लृप्तमङ्गलैः, आपूर्णकुम्भागुरुधूपदीपकैः, सा, वृष्णिपुरी, वभौ ॥ ५६ ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

वरयोर्वरवध्वोः। पारिवर्हं देयमुपस्करम् ॥ ५५ ॥ उत्तभितैरिंद्रकेतुभिर्ध्वजविशेषैः। उपक्लृप्तानि मंगलानि लाजांकुर-पुष्पप्रकरादीनि तैः ॥ ५६ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

पुरं द्वारकाम्। जयतेर्द्विकर्मकत्वात्कर्मद्वयम्। तान्पराभवंस्तामाच्छिद्येत्यर्थः ॥ ५३ ॥ तदा विवाहावसरे। कृष्णे अन्यः शत्रुरिति भावरहितानां निरतिशयभक्तियुक्तानां वा ॥ ५४ ॥ वरयोरिति—"पुमान् स्त्रिया" इत्येकशेषः ॥ ५५ ॥ सा द्वारका। उत्तभितैरुत्क्षिप्तैः। "पञ्चवर्णा वैजयन्ती इन्द्रध्वज इतीरितः। पीतो नीलः सितो रक्तो हरितः पञ्चवर्णकाः॥" इत्युक्तलक्षणैरिंद्र-ध्वजैः। यद्वा—"चतुरस्रं ध्वजाकारं राजद्वारे प्रतिष्ठितम्। शक्रध्वजमिति प्राहुः पौरलोकसुखावहम्॥" इत्युक्तलक्षणो ध्वज उत्तभितो येषु तैः—"एवं यः कुरुते यात्रामिंद्रकेतोर्युधिष्ठिर। पर्जन्यः कालवर्षी स्यात्तस्य राज्ये न संशयः॥" इति भविष्योत्तरोक्तेः ॥ ५६ ॥

### श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी

जयतेर्द्विकर्मकत्वात्कर्मद्वयं तान् पराभवन् तामाच्छिद्येत्यर्थः तत्रानीयोपयेम इत्यनेन भीष्मकसुतामित्वस्य मुख्यस्यैवा-न्वयः।।५३।। गृहे गृह इति अत्र हेतुः न विद्यते श्रीकृष्णादन्यस्मिन् भावः प्रेमा येषाम् ।।५४।। वरयोर्वरवध्वोरिति स्वस्रोरितिवत् चित्रं नानावर्णं वासो ययोरिति विवाहे शोभाविशेष उक्तः ।।५५।। सेति युग्मकम् मालादीनां तोरणानि तैः उप आधिक्येन शोभिता ।। ५६ ।।

### श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी

भगवानिति दुष्टनृपवर्गनिर्जयादिना निजैश्वर्य्यप्रकटनाभिप्रायेण, भीष्मकस्य सुतामिति स्नेहादिना पश्चाद्विवाहसामग्री-सहितस्य तस्यागमनं सूचयति। अतोऽग्रे विदर्भाणामपि द्वारकामध्ये मोदो वक्ष्यते। अत एव विधिविवाहे यः प्रकारस्तदनुसारेण। ननु कथमुपयेमे, तद्विस्तार्य्य कथ्यतामित्यपेक्षायामाह—हे कुरुद्वहेति, महाक्षत्रिय कुलोद्भवत्वात्तत् त्वं जानास्येवेति भावः।।५३।। महान् वैकुण्ठादप्यधिक उत्सवो गीतवाद्याद्यानन्दकर्मविशेषः, नृणां सर्वेषामेव मनुष्याणाम्, यदुपुर्य्यामिति तत्र यदुनां प्राधान्यात्

१. यत्र भोजकटं नाम निवासायाभवन् पुरम्–विज. च. पु. टि.। २. यदू–विज.। ३. राजन्–प्रा. पा.। ४. नार्यश्च–श्रीधर. वंशी. जीव. वीर. विज. विश्व. शुक.। ५. निन्यु–वीर.। ६. वेपयोः। ७. युक्त–विज.।

'गृहे गृहे' इति प्रत्येकं सर्वेष्वपि गृहेष्वित्यर्थः। यतः कृष्णे साक्षाद्भगवति सर्वचित्ताकर्षके वा, न विद्यतेऽन्यत् फलापेक्षादिकं यस्मिंस्तादृशो भावो भक्तिर्येषां तेषाम्। कुतः? यदुपतौ यदुकुलपालनद्वारा निजाशेषैश्वर्यप्रकटनादित्यर्थः। यद्वा, यदुपुर्यां महोत्सवेऽयं हेतुः, यद्वा, यादवेन्द्रत्वेन ज्ञानान्न चेश्वरत्वादिनेत्यर्थः, यद्वा, न विद्यते श्रीकृष्णादन्यस्मिन् भावः प्रेमा येषाम्, एकान्तिनामित्यर्थः। हे नृपेति प्रहर्षोदयात्, यद्वा, निजप्रभु-नवविवाहे तेषां तादृगुत्सवो युक्त एव, तच्च त्वया नृपत्वेन बुध्यत एवेति भावः॥ ५४॥ प्र-शब्दाभ्यामन्यकालतस्तत्र तत्रोत्कर्षं बोधयति। पाठान्तरे वरयोरिति तथा चित्रं तैल-हरिद्रादिना मनोहरं वासो ययोरिति विवाहलक्षणमुक्तम्। अत उप समीप एव, किंवा उपायनत्वेनाजह्रुरर्पयामासुः, यद्वा, वरयोः सर्वथा सर्वश्रेष्ठयोरिति तद्योग्यत्वेन पारिबर्हस्यापि श्रैष्ठ्यं सूचितम्। किञ्च, चित्रमद्भुतं वासो ययोरिति तत्रापि बहुलचित्रवासांसीति भावः॥ ५५॥ सा सर्वसम्पत्तिमयी तन्महोत्सवमण्डिता वा, अनिर्वचनीयमाहात्म्या वा विचित्रैः स्थाने स्थाने विन्यस्तैर्माल्यादिभिः, यद्वा, विचित्राणि माल्यादीनां तोरणानि, तैर्बभौ अशोभत॥ ५६॥

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम्

उत्तभितैः स्थापितैः उपक्लृप्तमङ्गलैः क्लृप्तमङ्गलद्रव्यर्दीपैश्च॥ ५६–६०॥

इति श्रीमद्भागवतव्याख्याने दशमस्कन्धे श्रीसुदर्शनसूरिकृतशुकपक्षीये चतुष्पञ्चाशत्तमोऽध्यायः॥ ५४॥

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका

भगवानिति। पुरं प्रति प्रापय्य यदूद्वहो भगवान् यथाविधि विवाहितवान्॥ ५३॥ तदेति। तदा उद्वाहदिनेष्वित्यर्थः। उत्सवो बभूव कथंभूतानां यदुपतौ कृष्णे अनन्यभावानाम् एकान्तस्नेहानाम्॥ ५४॥ नरा इति। प्रमृष्टानि निर्मलीकृतानि मणिमयकुण्डलानि येषां यासां च ते ताश्च वरयोर्वरवध्वोः देयं पारिबर्हमुपस्करमानिन्युः॥ ५५॥ तत्कालिकीं पुरीमालक्षयति—सेति। उत्तभितैरुद्धृत्य प्रतिबद्धै रिन्द्रकेतुभिः ध्वजकेतुविशेषैर्विचित्रैर्माल्यादिभिश्च गृहाणां द्वारे द्वारे उपक्लृप्तानि मङ्गलानि लाजाङ्कुरपुष्पकुटकादीनि तैश्च समन्तात् पूर्णैः कुम्भैरगुरुधूपैश्च वृष्णीनां सा पुरी द्वारका बभौ॥ ५६॥

### श्रीविजयध्वजतीर्थकृता पदरत्नावली

यदुत कृष्णे अनन्यभावानाम् अन्यः शत्रुरिति भावरहितानां निरतिशयभक्तियुक्तानामित्यर्थः॥ ५४–५५॥ उत्तभितेन्द्रकेतुभिः उत्क्षिप्तेन्द्रध्वजैः॥ ५६–५७॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

अनन्यो एकान्तभावस्तद्वताम्॥ ५४॥ वरयोर्वरवध्वोः॥ ५५॥ उत्तम्भितैरत्युच्चैस्तम्भैरिवोन्नमितैरिन्द्रकेतुभिरिन्द्रपुरस्पर्शिपताकायुक्तैः॥ ५६॥

### गूढार्थदीपिनी

निर्जित्य। जयतेः द्विकर्मकत्वात्कर्मद्वयम्। भीष्मकसुतामानीयेति योज्यं वा। उपयेमे विवाहितवान्॥ ५३॥ तदा विवाहावसरे। कृष्णे अनन्येति योज्यम्॥ ५४॥ प्रमृष्टानि परिष्कृतानि मणिमयानि कुण्डलानि येषां ते। पारिबर्हं कन्यादेयद्रव्यम् समर्पयामासु। वरयोर्वरवध्वोः। 'पुमान् स्त्रिया' इत्येकशेषः॥ ५५॥ सा वृष्णिपुरी द्वारका बभौ। कैः। उत्तभितैरत्युच्चैः इन्द्रकेतुभिरिव ध्वजै इन्द्रदेवताकैर्वा। विचित्रैर्माल्यादिभिश्च। उपक्लृप्तैः स्थापितैर्माङ्गलिकैर्जलपूर्णघटादिभिश्च। माल्यानि पुष्पाणि तोरणानि वन्दनमालिकाः॥ ५६॥

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः

वरयोर्वरवध्वोर्देयं पारिबर्हमुपस्करम् उपानिन्युः॥ ५५॥ तदा उत्तभितैरिन्द्रकेतुभिः ध्वजविशेषैः विचित्रैर्माल्यादिभिश्च प्रतिद्वारि उपक्लृप्तानि मङ्गलानि लाजाङ्कुरपुष्पपुटकादीति तैः आपूर्णकुम्भागुरुधूपदीपकैश्च बभौ॥ ५६॥

### श्रीसत्यधर्मकृता श्रीभागवतटिप्पणी

कुत इत्यत इत इत्याह। अहत्येति। तत्र रुषाऽवसत्॥ ५३॥ एवं भूमिपतीन्निर्जित्य रुक्मिणीं पुरीं द्वारकामानीय विधिवदुपयेमे॥ ५४॥ गृहे-गृहे प्रतिग्रहं यादृशी मयि भक्तिः स्यात्तादृश्यन्यत्र नैव चेत्। अनन्यभक्तिर्विज्ञेयेत्युक्तेर्यदुपतावन्यसदृशो भावो भक्तिः स नास्ति येषां तेऽनन्यभावास्तेषां महानुत्सवो यदुपुर्यभिभूत्॥ ५५॥ वरा च वरश्चैवमेव सुवाससी च सुवासाश्च तयोः पारिबर्हं विवाहानेहसि प्राहुणिकैर्देयं तत्रैव प्राक्तनप्राहुणिका रुक्मिणीसम्बन्धिन इति तद्दत्तस्य पारिबर्हता। सामान्यतो राज्ञो देयवस्तुनोऽपि नाम। पारिबर्हं तु राजार्हवस्तुन्यपि परिच्छद इति विश्वः॥ ५६॥

**श्रीमद्वल्लभाचार्य्यकृता सुबोधिनी**

ततो भगवतः कृत्यमाह **भगवानिति** । यदा सर्वथा निर्दुष्टा सर्वैस्त्यक्तममत्वा, तदापि भगवान् वीर्यशुल्केन विवाहं कर्तुम्, एवं प्रकारेण भूमिपान् निर्जित्य, गान्धर्वन्यायेन तामगृहीत्वा, उपनयनवत् विवाहस्यापि संस्कारत्वात् सर्वसम्मत्यर्थं स्वपुरीमानीय **उपयेमे**, विधानपूर्वकं विवाहं कृतवान् । क्षत्रियाः प्रायेणैवं न कुर्वन्तीति भगवानपि न कृतवानेव । किन्तु सद्बुद्ध्यर्थं वदतीति शङ्का स्यात्, तत्परिहरति संबोधनेन **कुरूद्वहे**ति ॥ ५३ ॥ सर्वेषां सम्मत्या विवाहः कृत इत्यत्र निदर्शनार्थं महोत्सवमाह **तदा महोत्सव** इति । नृणामिति न केवलं बन्धूनाम्, अपि तु सर्वेषामेवेत्याह । यदुपुर्यां द्वारकायाम्, तत्र न कोऽपि विसम्मत इत्यर्थः । यादवानामपि वैमनस्यं परस्परं संभवतीति तदर्थमाह **अनन्यभावानामिति** । ननु यादवा उद्धताः स्वभावतः, कथमनन्यभावा जाता इत्याशङ्क्याह **कृष्णे यदुपताविति** । यदा यादवानां भगवान्पतिर्जातः, तदा ते तथा जाता इत्यर्थः । **नृपेति** सम्बोधनं विश्वासार्थम् । यथा भवान् जात इति ॥ ५४ ॥ भगवता पारिबर्हमस्मिन्विवाहे न प्राप्तमिति, तदभावे विवाहशोभा च न तथेति तदर्थमाह **नरा नार्यः प्रमुदिता** इति । स्वयमलङ्कृताः पूर्णाः वरयोश्चित्रवाससोः अलङ्कृतयोरपि पारिबर्हमुपाजह्रुः । ननु नियमाभावत् किमिति तथा कृतवन्त इति चेत्, तत्राह **वरयोरिति** । वरयोस्तथा कर्तव्यमेवेति । यथैव दाक्षिणात्याचारः ।५५। विवाह एव प्रथममुपस्थित इति, अकस्माच्च भगवानागत इति विशेषतस्तदर्थमलङ्करणाभावेऽपि स्वभावत एवालङ्कृतेत्याह **सा वृष्णिपुरीति** । सा द्वारका उत्तभितैः ऊर्ध्वं स्थापितैरिन्द्राद्प्युच्चैः स्वर्गपर्यन्तं गतैः केतुभिः ध्वजचिह्नै रन्यैश्च बभौ । अथवा । इन्द्रकेतुः पारिजातः, सुधर्मादिश्च, अन्ये च कल्पवृक्षाः । विचित्राणि माल्यानि अम्बराणि रत्नमयानि तोरणानि च स्वभावत एव । विशेषतोऽपि प्रतिद्वारि उपक्लृप्तानि मङ्गलानि । आपूर्णाः कुम्भाः अगुरुधूपाः दीपाश्च । एवमुपरि मध्ये अधश्च निवासस्थानानां शोभा निरूपिता ॥ ५६ ॥

**श्रीसुबोधिनी–सारः**

एवं भूमिपान् राज्ञो निर्जित्य भीष्मकस्य सुतां रुक्मिणीं पुरं द्वारकामानीय विधिवत् उपयेमे परिणिन्ये भगवान् हे कुरूद्वह ॥ ५३ ॥ तदा विवाह समये यदुपुर्यां द्वारकायां गृहेगृहे प्रतिगृहं महोत्सवोऽभूत् । नान्यस्मिन् भावो येषां तेषां नृणां यदुपतौ कृष्णे सति हे नृप ॥ ५४ ॥ प्रमृष्टानि उज्ज्वलानि मणिमयानि कुण्डलानि येषां ते नरा नार्यः स्त्रियश्च मुदिता हर्षिताश्चित्रवाससोर्वरवध्वोः षष्ठी चतुर्थ्यर्थे पारिबर्हं देयं कुंडिनभोजकटाभ्यामुपानिन्युः ॥ ५५ ॥ उत्तभितैरत्युच्चैरिंद्रकेतुभिर्ध्वजविशेषैः विचित्रैर्माल्यादिभिः प्रतिद्वारि उपक्लृप्तैर्न्यस्तैर्मंगलैरापूर्णकलशादिभिः सा वृष्णिपुरी बभौ शुशुभे ॥ ५६ ॥

**गोस्वामिश्रीगिरिधरलालकृताबालप्रबोधिनी**

कुरूद्वह हे परीक्षित् ! भगवान् कृष्ण एवं युधि भूमिपान् निर्जित्य भीष्मकसुतां रुक्मिणीं स्वपुरमानीय विधिवद्यथाविधानं उपयेमे विवाहितवान् ॥ ५३ ॥ तदा विवाहदिने कृष्णे अनन्यभावानां निरुपाधिस्नेहवतां नृणां यदुपुर्यां द्वारकायां गृहे गृहे महानुत्सवोऽभूदित्यन्वयः । 'तत्र तथास्नेहः कथम्' इत्यपेक्षायां 'पालकत्वात्' इति हेतुं सूचयन्नाह—यदुपताविति । 'राजगृहोत्सवे प्रजागृहेऽप्युत्सवो भवतीति तवानुभवसिद्धम्' इति सूचयन् सम्बोधयति—नृपेति ॥ ५४ ॥ प्रमृष्टानि निर्मलीकृतानि मणिमयानि कुण्डलानि येषां यासां च ताश्च प्रमुदिता नरा नार्यश्च चित्रे वाससी ययोस्तयोर्वरयोर्वरवध्वोः पारिबर्हं विवाहे देयमुपस्करमुपाजह्रुः समर्पयामासुः ॥ ५५ ॥ तात्कालिकीं पुरीं वर्णयति—सेति । उत्तम्भितैरुद्धृत्य प्रतिबद्धैः इन्द्रकेतुभिर्ध्वजविशेषैर्विचित्रैर्मालादिभिश्च प्रतिद्वारि गृहाणां द्वारे द्वारे उपक्लृप्तानि स्थापितानि यानि मङ्गलानि लाजाङ्कुरपुष्पपुटकादीनि तैश्च आ समन्तात् पूर्णैः कुम्भैरगुरुधूपैश्च दीपैश्च सा वृष्णीनां पुरी द्वारका बभावित्यन्वयः ॥ ५६ ॥

**अन्वितार्थप्रकाशिका**

भगवानिति । हे कुरूद्वह परीक्षित् ! भगवान् कृष्ण एवं युधि भूमिपान् निर्जित्य भीष्मकसुतां रुक्मिणीं स्वपुरमानीय विधिवद्यथाविधानं विवाहहोमादिना उपयेमे विवाहितवान् । यद्वा । भूमिपान् भीष्मकसुतां निर्जित्येति जयतेर्द्विकर्मकत्वात्कर्मद्वयम् ॥ ५३ ॥ तदेति । हे नृप ! तदा विवाहदिने यदुपतौ कृष्णे अनन्यभावानां निरुपाधिस्नेहवतां नृणां यदुपुर्यां द्वारकायां गृहे गृहे महानुत्सवोऽभूत् ॥ ५४ ॥ नरा इति । प्रमृष्टानि निर्मलीकृतानि मणिमयानि कुण्डलानि येषां यासां च ते च ताश्च प्रमुदिता नरा नार्यश्च चित्रे वाससी ययोस्तयोर्वरयोर्वरवध्वोः स्वश्रोरितिवत् पारिबर्हं देयमुपस्करमुपाजह्रुः समर्पयामासुः । सेति । उत्तभितैरुद्धृत्य प्रतिबद्धैः अत्युच्चस्तम्भैरिवोन्नमितैर्वा इन्द्रकेतुभिर्ध्वजविशेषैः इन्द्रपुरस्पर्शिपताकायुक्तैरित्यन्ये । विचित्रैर्माल्यादिभिश्च प्रतिद्वारि गृहाणां द्वारे-द्वारे उपक्लृप्तानि स्थापितानि यानि मङ्गलानि लाजाङ्कुरपुष्पपुटकादीनि तैश्च तथा आसमंतात्पूर्णैः कुम्भैरगुरुधूपैश्च दीपैश्च सा वृष्णीनां पुरी द्वारका बभौ ॥ ५५-५६ ॥

### श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्

स्वस्रोरितिवत् वरयोरिति द्विवचनेन वरवध्वोर्ग्रहणं। पारिवर्हं देयमुपस्करं ॥ ५४ ॥ उत्तभितैरुच्छ्रितैः इंद्रकेतुभिर्ध्वजविशेषैः उपक्लृप्तानि च तानि मंगलानि लाजांकुरसुमनोविकरादीनि च तैः सा बभौ ॥ ५५ ॥ आहूताः प्रेष्ठाः प्रियाये भूभुजो राजानस्तेषां गजैः सिक्तमार्गपरामृष्टा उच्छ्रिताः रंभाश्च पूगाश्च तैरुपशोभिता ॥ ५६ ॥

### भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

भगवानिति ॥ भगवान् श्रीकृष्णः, युधि भूमिपान्, निर्जित्य, भीष्मकसुतां रुक्मिणीं, पुरं द्वारिकां, आनीय, हे कुरूद्वह, विधिवत् उपयेमे ॥ ५३ ॥ तदेति ॥ तदा, हे नृप, यदुपतौ कृष्णे, अनन्यभावानामेकान्तस्नेहानां नृणां यदुपुर्यां, गृहे गृहे, महोत्सवः, अभूत् ॥ ५४ ॥ नरा इति ॥ प्रमृष्टानि निर्मलीकृतानि मणिमयकुण्डलानि येषां यासां च ते ताश्च, नराः नार्यश्च, चित्रवाससोः परिधृतविचित्रवसनयोः, वरयोर्वधूवरयोः, मुदिताः सन्तः सत्यश्च, पारिवर्हमुपस्करं, उपाजह्रुरानिन्युः ॥ ५५ ॥ तात्कालिकीं पुरशोभां वर्णयति ॥ सेति ॥ उत्तभिता उद्धृत्य प्रतिवद्धा ये इन्द्रकेतवो ध्वजविशेषास्तैः, विचित्राणां माल्यानामम्वराणां रत्नानां च यानि तोरणानि तैः, प्रतिद्वारि गृहाणां द्वारि द्वारीत्यर्थः। उपक्लृप्तानि यानि मङ्गलानि तैः, आपूर्णकुम्भाश्च अगुरुधूपाश्च दीपकाश्च तैश्च, सा वृष्णिपुरी द्वारिका, बभौ। विचित्रमाल्याम्बररत्नतोरणैरिति पाठे विचित्रमाल्येति पुरी विशेषणम् विकीर्णविचित्रमाल्येति तदर्थः ॥ ५६ ॥

### कृष्णप्रिया

महाराज परीक्षित्! भगवान् द्वारकानाथ श्रीकृष्ण ने समस्त राजाओं को परास्त करके भीष्मक-राजकुमारी श्रीरुक्मिणीजी को द्वारिका में पधराकर उनका शास्त्रोक्त विधि से पाणिग्रहण किया ॥ ५३ ॥ राजन् परीक्षित्! पाणिग्रहण मङ्गल पर्व के अवसर पर द्वारिका नगर में घर-घर उत्साह, आनन्द, उल्लास से महान् महोत्सव मनाया। ऐसा क्यों न हो? द्वारिका पुरी के समस्त लोगों का यदुराज भगवान् श्रीकृष्ण के प्रति अनन्य प्रेम था ॥५४॥ श्रीकृष्ण प्रभु के पाणिग्रहण प्रसङ्ग पर द्वारिका के नरनारी जनों ने मणिरत्नों के जाज्वल्यमान कर्णपूर धारण किये हुए थे। आनन्द-प्रमोद से भरे नरनारियों ने विविध प्रकार के वस्त्रों से समलङ्कृत दूल्हा एव दुलहिनको पुष्कल प्रमाण में भेंट की सामग्रियों को उपायन में समर्पित की ॥५५॥ उस मङ्गल अवसर पर श्रीद्वारिकापुरी की अपूर्व शोभा बनी थी। भुवनों पर, देवालयों पर बड़ी-बड़ी ध्वजाएँ बहुत ऊँचे तक फहरा रही थी। स्थान-स्थान पर चित्र-विचित्र मालाएँ, वस्त्र एवं मणिरत्न के तोरण वँधे हुए थे। द्वारिका नगरी के द्वार-द्वार पर दूर्वा-खील आदि मङ्गलमय सामग्रियाँ सजायी गयी थी। जल भरे मङ्गल कलश, अरगजा और धूप की सुगन्ध एवं दीपमालाओं से अलौकिक शोभा हो रही थी ॥ ५६ ॥

**सिक्तमार्गा मदच्युद्भिराहूतप्रेष्ठभूभुजाम्। गजैर्द्वास्सु [1]परामृष्टरम्भापूगोपशोभिता ॥ ५७ ॥**

**कुरुसृञ्जयकैकेयविदर्भयदुकुन्तयः। मिथो मुमुदिरे [2]तस्मिन् संभ्रमात् परिधावताम्[3] ॥ ५८ ॥**

**रुक्मिण्या हरणं श्रुत्वा गीयमानं ततस्ततः। राजानो राजकन्याश्च बभूवु[4]र्भृशं विस्मिताः ॥ ५९ ॥**

**द्वारकायामभूद् राजन् महामोदः पुरौकसाम्। रुक्मिण्या[5]रमयोपेतं [6]दृष्ट्वा कृष्णं श्रियः पतिम् ॥ ६० ॥**

**इति श्रीमद्भागवते महापुराणे[7] दशमस्कन्धे[8] रुक्मिण्युद्वाहे[9] [10]चतुःपञ्चाशत्तमोऽध्यायः ॥ ५४ ॥**

### कर्दमक्षमा

अन्वयः—आहूतप्रेष्ठभूभुजाम्, मदच्युद्भिः, गजैः, सिक्तमार्गा, द्वास्सु, परामृष्टरम्भापूगोपशोभिता, सा, पुरी, बभौ ॥ ५७ ॥ कुरुसृञ्जयकैकेयविदर्भयदुकुन्तयः, तस्मिन् (उत्सवे) परिधावताम्, सम्भ्रमात्, मिथः, मुमुदिरे ॥ ५८ ॥ ततः ततः, गीयमानम्, रुक्मिण्याः, हरणम्, श्रुत्वा, राजानः, च, राजकन्याः, भृशम्, विस्मिताः, बभूवुः ॥ ५९ ॥ हे राजन्! श्रियः, पतिम्, कृष्णम्, रुक्मिण्या, रमया, उपेतम्, दृष्ट्वा, द्वारिकायाम्, पुरौकसाम्, महामोदः, अभूत् ॥ ६० ॥

श्रीमद्भागवते दशमस्कन्धे उत्तरार्द्धे ५४ अध्यायस्यान्वयाः समाप्ताः।

---

१. वास्तुपरामृष्टा–विज.; द्वार्पु–वीर। २. मध्ये–वीर। ३. धावतः–विज.। ४. भृशविस्मिताः–श्रीधर. वंशी. जीव. वीर विज. विश्व. शुक.। ५. णीं–विज.। ६–तां–विज.। ७. पारमहंस्यां संहितायां–प्रा. पा.। ८. उत्तरार्द्धे–प्रा. पा.। ९. रुक्मिण्युद्वाहोत्सवोनाम। १०. एकोनषष्टि–विज.।

### श्रीधरस्वामिविरचिता भावार्थदीपिका

आहूताः प्रेष्ठा भूभुजस्तेषां गजैः परामृष्टाः उच्छ्रिता रंभाश्च पूगाश्च तैरुपशोभिता यद्वा तैरेव गजैः परामृष्टाः संस्पृष्टा रंभाश्च पूगाश्च तैरुपशोभिता ।। ५७ ।। संभ्रमादौत्सुक्यात्परिधावतां बन्धूनां मध्ये मिथः समेत्य मुदं प्रापुः ॥ ५८-६० ॥

इति श्रीमद्भा० म० दशमस्कन्धे उत्तरार्धे श्री० टीकायां चतुष्पञ्चाशत्तमोऽध्यायः ॥ ५४ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

"परामृष्टो विचारे च स्पर्शनोच्छ्रितयोरपि" इति निरुक्तिः । सिक्तमार्गेति पृथग्विशेषणम् । हस्तिकर्तृकसर्वतस्सेकासंभवं मत्वाह-यद्वेति ।। ५७ ।। परिधावतामितस्तत आनन्दोद्रेकात्परिभ्रमताम् । प्रेष्ठभूभुज एवाह-कुरवो भीष्मधृतराष्ट्रपांडवादयः, सृंजया द्रुपदाद्याः, कैकेयाः संतर्दनादयः, विदर्भा इति कन्यास्नेहात्, क्षत्रियेषु तादृशहरणस्य प्रशस्यत्वेन पूर्वमेव च श्रीकृष्णस्य स्वाभिरुचितत्वेन योग्यवरलाभात्प्रायः श्रीबलदेवादिभिर्मुनिजनादिद्वारा बोधयित्वा तेषामानीतत्वेनासंकोचाच्च श्रीभीष्मकादीनामप्यागमनं बोध्यते । ते च भीष्मकक्रथकैशिकादयः, यदव उग्रसेनादयस्तदभेदान्नन्दादयोपि । तथोक्तं पाद्मोत्तरखण्डे—"नन्दगोपोथ गोपालैर्गोपवृद्धैः समागतः । स्वलंकृताभिर्योषिद्भिर्यशोदापि समागता ।" इति । तत्र ते रुक्मिणीहरणतः प्रागेव भगवता सम्प्रार्थ्य नीता इति बोध्यम् ॥ ५८ ॥ ततस्ततस्तत्रतत्र । राज्ञां विस्मयस्तु बहुष्वेककर्तृककन्याहरणात् । राजकन्यानां त्वहो मातापित्रनुमतिं विना कथं मेलनसंकेतः कृत इत्यर्थः ॥ ५९ ॥ रमया लक्ष्मीरूपया । श्रियः सर्वाश्रयभूतायाः परमलक्ष्म्याः पतिम् ॥ ६० ॥

इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे दशमस्कन्धे उत्तरार्द्धे चतुष्पञ्चाशत्तमोऽध्यायः ॥ ५४ ॥

### श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी

सिक्तेति । तैर्व्याख्यातं तत्र प्रथमपक्षे मदच्युद्भिर्गजैः सिक्तमार्गा स्थाने स्थाने गजानां मदक्षरणात् उच्छ्रिता उदर्ध्वतया स्थापिता रोपिता लोकैरित्यर्थः । तैरेवेति यैरेव सिक्तमार्गास्तैरेव संस्पृष्टा इत्यनेनामुपघातद्योतनादगजानां मत्तत्वेऽपि सुवशत्वं तले विलसद्भिस्तैरम्भादीनामत्युच्छ्रितत्वं शोभमानत्वं च व्यञ्जितम् ॥ ५७ ॥ प्रेष्ठभूभुज एव प्रायो निर्दिशंस्तेषामन्योऽन्यसङ्गत्या प्रहर्षोदयमाह—कुर्विति । कुरवः श्रीभीष्मधृतराष्ट्रपाण्डवादयः सृञ्जयाः द्रुपदाद्याः कैकेयाः सन्तर्दनादयः विदर्भा इति कन्यास्नेहात् क्षत्रियेषु तादृशहरणस्य प्रशस्यत्वेन पूर्वमेव च श्रीकृष्णस्य स्वाभिरुचितत्वेन योग्यवरलाभात् प्रायः श्रीबलदेवादिभिर्मुनिजनादिद्वारा बोधयित्वा तेषामानीतत्वेनासङ्कोचाच्च श्रीभीष्मकादीनामप्यागमनं बोध्यते ते च भीष्मकक्रथकैशिकादयः यदव उग्रसेनादयः तदभेदाच्छ्रीनन्दादयोऽपीत्येके तथा पाद्मोत्तरखण्डे ।

नन्दगोपोऽथ गोपालैर्गोपवृद्धैः समागतः । स्वलङ्कृताभिर्योषिद्भिर्यशोदापि समागतेति ॥

अत्राभिप्रायविशेषेण पूर्वमेव श्रीव्रजेश्वरस्य सम्मतिप्रार्थना कंसवधानन्तरं "ज्ञातीन् वो द्रष्टुमेष्यामो विधाय सुहृदां सुख"मित्यत्रैव सूचिता कुन्तयः कुन्तिभोजाद्याः परितः तद्विवाहयोग्यस्वस्वप्रयोजनार्थमितस्ततो धावताम् ॥ ५८ ॥ ततस्ततः स्वस्वदेशे भृशमत्यर्थं विस्मिताः तेन प्रकारेण हरणात् तत्र सतामाकाङ्क्षाजनिष्ट असतां तु भयमिति विशेषो ज्ञेयः ॥ ५९ ॥ विवाहानन्तरं च द्वयोः सुखसङ्गतिदर्शनात् द्वारकावासिनः सर्वे परमानन्दतुन्दिलाः बभूवुरित्याह । द्वारकायामिति । कृष्णं स्वयं भगवन्तम् अतः श्रियः सर्वाश्रयभूतायाः परमलक्ष्म्याः पतिमिति तस्मै तादृशी श्रीरवश्यमपेक्षत इति भावः । सा चाधुना मिलितैवेत्याह । रमयेति । तस्यापि रमणहेतुत्वेन तन्नाम्न्या अतो महान् मोदः सर्वोत्कृष्टान्दोऽभूत् ॥ ६० ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिण्यां चतुष्पञ्चाशत्तमोऽध्यायः ॥ ५४ ॥

### श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी

परामृष्टास्तत्तत्फलभक्षणाद्यर्थं संस्पृष्टा धृता वा, स्थाने स्थाने रोपिता रम्भादयस्तैरुप चतुर्दिक्षु किंवा स्वतः शोभमानामपि तैराधिक्येन शोभितामित्यर्थः । अनेन गजानामप्युत्तमाहारसिद्धिः, रम्भादीनामपि तैरमर्द्यत्वादिना बृहत्त्वदृढत्वादिकं मंगलसूचकत्वञ्च बोधितम् । अन्यत्तैर्व्याख्यातम् । तत्र प्रथमपक्षे मदच्युद्भिर्गजैः सिक्तमार्गाः,—स्थाने स्थाने गजानां मदक्षरणात् । पक्षान्तरे च गन्धजलादिभिः सिक्तमार्गा इति; यद्वा, गजैरित्यस्योभयतोऽप्यनुषंगः ।। ५७ ।। प्रेष्ठभूततयैव प्रायो निर्दिशन् तेषामन्योन्यसंगतया प्रहर्षोदयमाहुः—कुर्विति । कुरवः श्रीभीष्म-धृतराष्ट्र-पाण्डवादयः, सृञ्जया द्रुपदाद्याः, कैकेयाः सन्तर्द्दनादयः, विदर्भाः श्रीभीष्मकक्रथकैशिकादयः, यदव उग्रसेनादयः, तदभेदाच्छ्रीनन्दादयश्च, तथा च पाद्मोत्तरखण्डे—'नन्दगोपोऽथ गोपालैर्गोपवृद्धैः समागतः । स्वलंकृताभिर्योषिद्भिर्यशोदापि समागता ।।' इति । कुन्तयः कुन्तिभोजाद्याः, परितः स्वस्वप्रयोजनार्थमित-

स्ततो धावतां श्रीवसुदेव-बलदेवादीनाम् । एवं विवाहविधेः परिपूर्णतोद्दिष्टा ॥ ५८ ॥ ततस्ततः स्थाने स्थाने सर्व्वत्रैवेत्यर्थः । किंवा स्वस्वदेश इति तृशमत्यर्थः विस्मिताः, तेन प्रकारेण हरणात्; अतोऽस्माभिः कन्याः स्वयमेव श्रीकृष्णाय दातव्या इति राज्ञां स एव अतिर्वरणीय इति तत्कन्यानां चेच्छा अभूदिति ज्ञेयम् ॥ ५९ ॥ विवाहानन्तरञ्च द्वयोः सुखसंगतिदर्शनाद्द्वारकावासिनः परमानन्दिता बभूवुरित्याह—द्वारकायामिति । पुरौकसामिति तेषां तत्र सदा निवासेन नित्यनिकटावस्थित्या सन्दर्शनप्राप्त्या, किंवा भक्तिविशेषेण मोदविशेषाभिप्रायेण कृष्णं साक्षाद्भगवन्तम्, अतः श्रियः लक्ष्म्याः पतिमिति तस्मै श्रीरवश्यमपेक्ष्यत इति भावः । सा चाधुना मिलितैवेत्याह—रमयेति । अतो महान् सर्व्वोत्कृष्टो मोदोऽभूत्, श्रीकृष्णस्य योग्यपत्नीसंयोगसुखसिद्धेः, हे राजन्निति तद्वार्त्ताश्रवणोदितप्रहर्षेण राजमानस्य तस्य तथैव सम्बोधनात्; यद्वा, राजमानो महामोदः ॥ ६० ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे उत्तरार्द्धे श्री श्रील-सनातन-गोस्वामिपाद-कृतायां श्रीबृहद्वैष्णवतोषण्यां श्रीदशम-टिप्पण्यां चतुःपञ्चाशत्तमोऽध्यायः ॥ ५४ ॥

## श्रीमद्वीरराघवाचार्यकृता भागवतचन्द्रचन्द्रिका

सिक्तेति । आहूता ये ये प्रेष्ठा भूभुजो नृपास्तेषां तेषां सम्बन्धिभिर्मदोदकं स्रवद्भिः गजैः सिक्ता गजमदोदकैः सिक्ता इत्यर्थः । ते मार्गा वीथयो यस्यां सा तथा द्वार्षु परामृष्टा उच्छ्रिता रम्भाः कदल्यः ताभिः पूगैश्चोपशोभिता अलङ्कृता च बभौ॥५७॥ कुर्विति । सम्भ्रमादौत्सुक्यात् परितो वीर्थाषु धावतां सञ्चरतां बन्धूनां मध्ये कुर्वादयो मिथः समेत्य मुदं प्राप्ताः ॥ ५८ ॥ रुक्मिण्या हरणमिति । ततस्ततस्तत्र तत्र देशेषु गीयमानं रुक्मिण्यानयनात्मकं भगवच्चेष्टितं श्रुत्वा नितरां विस्मिता बभूवुः ॥ ५९ ॥ द्वारकायामिति । हे राजन् ! रमया लक्ष्म्यवताररूपया रुक्मिण्या सहितं श्रियः पतिं श्रीकृष्णं दृष्ट्वा पुरवासिनां महान्मोदो बभूव ॥६०॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायां चतुष्पञ्चाशत्तमोऽध्यायः ॥ ५४ ॥

## श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

आहूतप्रेष्ठभूभुजाङ्गजैर्जुष्टेति शेषः वास्तुपरामृष्टा गृहदेवतासंयुक्ता यद्वा वास्तुपरामृष्टा त्यक्तरजोगृहा ॥ ५७ ॥ तस्मिन्नगरे परिधावत इतस्ततो धावन्तः ॥ ५८–६० ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्यां चतुष्पञ्चाशत्तमोऽध्यायः ॥ ५४ ॥
( विजयध्वजतीर्थरीत्या एकोनषष्टितमः ) ॥ ५८ ॥

## श्रीमज्जीवगोस्वामिकृतः बृहत्क्रमसन्दर्भः

दृष्ट्वा कृष्णमित्यादि । श्रियः पतिमिति । श्रीपतित्वं प्रकटयति—रुक्मिण्या रमयोपेतमिति ॥ ६० ॥

इति श्रीदशमे श्रीबृहत्क्रमसन्दर्भे चतुःपञ्चाशोऽध्यायः ॥ ५४ ॥

## श्रीनाथचक्रवर्तिपादविरचिता चैतन्यमतमञ्जूषा

दृष्ट्वा कृष्णं श्रियः पतिमिति-श्रीपतित्वं प्रकटयति रुक्मिण्या रमयोपेतमिति ॥ ६० ॥

इति चतुःपञ्चाशोऽध्यायः ॥ ५४ ॥

## श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी

मदच्युद्भिराहूतप्रेष्ठभूभुजां गजैर्द्वार्षु परामृष्टरम्भापूगोपशोभिता ॥ ५७ ॥ परिधावतां बन्धूनां मध्ये मिथः समेत्य ॥ ५८–६० ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् । चतुष्पञ्चाशत्तमोऽध्यायो दशमेऽजनि सङ्गतः ॥ ५४ ॥

## गूढार्थदीपिनी

प्रमृष्टानि परिष्कृतानि मणिमयानि कुण्डलानि येषां ते । पारिबर्हं कन्यादेयद्रव्यम् समर्पयामासु । वरयोर्वरवध्वोः । 'पुमान् स्त्रिया' इत्येकशेषः ॥ ५५ ॥ सा वृष्णपुरी द्वारका बभौ । कैः उत्तभितैरत्युच्चैः इन्द्रकेतुभिरिव ध्वजै इन्द्रदेवताकैर्वा । विचित्रैर्माल्यादिभिश्च । उपक्लृप्तैः स्थापितैर्माङ्गलिकैर्जलपूर्णघटादिभिश्च । माल्यानि पुष्पाणि तोरणानि बन्दनमालिकाः ॥५६॥ सिक्तमार्गा पुरी । यद्वा तैरेव गजै परामृष्टैर्गृहीतै रम्भादिभिः शोभिता ॥५७॥ तस्मिन् महोत्सवे । सम्भ्रमादौत्सुक्यात्परिधानतां मध्ये कुर्वादयः ॥ ५८ ॥ ततस्ततः तत्र तत्र ॥ ५९ ॥ रमया लक्ष्मीरूपया ॥ ६० ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां दशमस्कन्धोत्तरार्द्धे गूढार्थदीपिन्यां चतुष्पञ्चाशत्तमोऽध्यायः ॥ ५४ ॥

**श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः**

आहूताः प्रेष्ठा ये भूभुजस्तेषां मदच्युद्भिर्गजैः संसिक्तमार्गा द्वार्षु परामृष्टा उच्छ्रिता रम्भाश्च पूगाश्च तैरुपशोभिता॥५७॥ तस्मिन्महोत्सवे सम्भ्रमादौत्सुक्यात् परितो धावतां बन्धूनां मध्ये कुर्वादयो मिथः समेत्य मुमुदिरे मुदं प्रापुः ॥ ५८-६० ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धीये श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे चतुष्पञ्चाशत्तमोऽध्यायः ॥ ५४ ॥

**श्रीसत्यधर्मकृता श्रीभागवतटिप्पणी**

उत्तभिता उपरि स्थापिताश्च ते ध्वजाः केतवः तैः । उतभितेति गतम् । अम्बरतोरणै रत्नतोरणैश्च प्रतिद्वारि सर्वद्वारेषूपयुक्तानि मङ्गलान्यङ्कुरलाजादीनि तैरापूर्णकुम्भैरगुरुधूपैर्दीपैश्च सा पुरी बभौ शुशुभे ॥ ५७ ॥ आहूतप्रेष्ठभूभुजां मदच्युद्भिर्दानोदकस्नाविभिर्गजैः सिक्तो मार्गो यस्याः सा दानोदसिक्तमार्गेति यावत् । मदच्युतपदस्वारस्यात् । वास्तूनि परामृष्टानि पराभिः कर्मकर्त्रीभिरामृष्टान्यलं शोभितानि यस्यां सा रम्भापूगस्तत्सङ्घास्तैरुपशोभिता रम्भापूगाः क्रमुकास्तैरुपशोभितेति वा ॥ ५८ ॥ परिधावतोऽन्तर्द्रुवं भ्रमतः सम्भ्रमादादरात् । अन्तर्णीतप्यर्थो वा धावच्छब्दः । धावयतः सम्भ्रमात्परस्परं मुमुदिरे । तस्मिन्समये वा पुर इति वा ॥ ५९ ॥ राजानः सामर्थ्यमसमं कृष्णस्येति तत्कन्याश्च वयं धन्याः स पतिश्चेदिति विस्मिताः ॥ ६० ॥ श्रियः पतिमित्युक्त्या रुक्मिण्याः श्रीत्वं निरणायि ॥ ६१ ॥

इति श्रीभागवतटिप्पण्यां सत्यधर्मकृतायां दशम उत्तरार्धे एकोनषष्टितमोऽध्यायः ॥ १०-५९ ॥

**श्रीमद्वल्लभाचार्यकृता सुबोधिनी**

मार्गाणामाह **सिक्तमार्गा** इति । आहूता ये प्रेष्ठाः प्रियतमा राजानः तेषां मदच्युद्भिः गजगण्डनिःसृतमदैरेव सिक्तमार्गा जाता । अतो विशेषतः सम्मार्जनादौ नावकाशो जात इत्यर्थः । द्वारि तु कृतमित्याह **द्वाःस्विति** । परामृष्टाः परितः स्थापिताः ये रम्भादयः तैरुपशोभिता । जाते ( ति ) विवाहे पश्चादानीय कृतमिति परामर्शः । षड्विधा अपि क्षत्रिया अन्योन्यवैरं विहाय स्वभावतो द्वेषयुक्ता अपि रुक्मिण्या सहिते भगवति मिथो मुमुदिरे । कौरवा दुर्योधनादयः, सृञ्जयाः पाण्डवाः, पाञ्चाला वा धृष्टद्युम्नादयः । ते ह्युभये अन्योन्यवैरिणः । कैकेया विदर्भाश्च । तथा यादवाः कुन्तयश्च । ते त्रिविधा अपि परस्परविरोधिनः परस्परमेव मुमुदिरे । किञ्च । संभ्रमात्परिधावतां सम्बन्धिनोऽपि जाताः । उत्सवसंभृतिकरणार्थं तदीयाः सर्व एव व्यापृता जाता इत्यर्थः ॥ ५८ ॥ न केवलं यदुपुर्यामेव सम्भ्रमः, किन्तु सर्वत्रैव लोके संभ्रमो जात इत्याह **रुक्मिण्याहरणं श्रुत्वेति** । आश्चर्यहरणं भगवत्कृतं श्रुत्वा इतस्ततो गीयमानम्, सर्वत्र श्रुतत्वात् असम्भावनारहितम् । राजानो विस्मिता जाताः, कथमेवं हृतमिति । राजकन्याश्च विस्मिताः । अस्मानपि नेष्यतीति ॥ ५९ ॥ एवं विशिष्टानां परमोत्सवमुक्त्वा साधारणानामपि परमोत्सवमाह **द्वारकायामिति** । पुरौकसः साधारणाः नगरवासिनः नगरव्यापार एव निमग्नाः । तेषामपि महान्मोदो जातः । यद्यपि तेषां विवेको नास्ति, तथापि वस्तुसामर्थ्यादेव ते तथा जाताः । तदाह । रुक्मिण्या रमया लक्ष्म्या उपेतं सहितं कृष्णम्, स्त्रीणामेव हितार्थे अवतीर्णम्, श्रियः पतिं दृष्ट्वेति । नित्यं हरिः श्रीसहितः । आविर्भावस्तु केवलस्यैवेति पुरवासिनां नित्यं स्त्रीप्रधानानां तथा मोदो न भवेत् । अधुना तु पूर्णशक्तिरेकत्रैव जातेति महानेव मोदः संतोषो जातः ॥ ६० ॥

इति श्रीभागवतसुबोधिन्यां श्रीमल्लक्ष्मणभट्टात्मजश्रीमद्वल्लभदीक्षितविरचितायां दशमस्कन्धविवरणे उत्तरार्धे पञ्चमोऽध्यायः ॥ ५ ॥

**श्रीसुबोधिनीसारः**

आहूता विवाहोत्सवार्थं ये प्रेष्ठा भूभुजो नृपास्तेषां मदच्युद्भिर्मदस्रवद्भिर्गजैः सिक्ता मार्गा यस्याः सा द्वाःसु परामृष्टैरबद्धै रंभापूगैरुपशोभिता ॥ ५७ ॥ तस्मिन्मंगले संभ्रमात् परिधावतां बंधूनां मध्ये कुर्वादिदेशीया मिथो मुमुदिरे परस्परं जहृषुः ॥ ५८ ॥ ततस्ततः स्थाने गीयमानं रुक्मिण्याहरणं श्रुत्वा राजानः तत्कन्याश्च भृशमत्यर्थं विस्मिता बभूवुः ॥ ५९ ॥ हे राजन् ! रमया लक्ष्मीरूपया रुक्मिण्योपेतं युक्तं श्रियः पतिं कृष्णं दृष्ट्वा पुरौकसां पुरवासिनां जनानां द्वारकायां महामोदोऽभूत् ॥ ६० ॥

इति श्रीमद्भा० दशमस्कन्धे उत्तरार्द्धे सुबोधिन्यां टीकायां चतुःपंचाशत्तमोऽध्यायः ॥ ५४ ॥

**गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी**

आहूता आहूता ये प्रेष्ठा भूभुजो राजानस्तेषां सम्बन्धिभिर्मदच्युद्भिर्मदादेकं स्रवद्भिर्गजैः सिक्ता मार्गा यस्यां सा, तथा द्वास्सु परामृष्टा उच्छ्रिता रम्भाः कदल्यस्ताभिः पूगैश्चोपशोभिता अलङ्कृता च बभावित्यन्वयः ॥ ५७ ॥ सम्भ्रमात् औत्सुक्यात् परितो मार्गे धावतां बन्धूनां मध्ये तस्मिन् पुरे कुर्वादयो मिथः समेत्य मुमुदिरे मुदं प्रापुः ॥ ५८ ॥ ततस्ततस्तत्रतत्र देशेषु सूतादिभिर्गीयमानं रुक्मिण्या हरणात्मकं भगवच्चेष्टितं श्रुत्वा राजादयोऽतिविस्मिता बभूवुः ॥५९॥ 'राजवृत्तमेमिव' इति सूचयन्

सम्वोधयति—हे राजन्निति । रमया लक्ष्म्या अवताररूपया रुक्मिण्या उपेतं सहितं श्रियः पतिं श्रीकृष्णं दृष्ट्वा पुरौकसां पुरवासिनां महान् मोदो बभूव ॥ ६० ॥

इति श्रीवल्लभाचार्य-वंश्यगोपालसूनुना । श्रीमन्मुकुन्दरायाणां पादसेवाधिकारिणा ॥ १ ॥
श्रीमद्गिरिधराख्येन भजनानन्दसिद्धये । श्रीमद्भागवतस्येयं टीकाबालप्रबोधिनी ॥ २ ॥
रचिता दशमे तत्र राजसानां निरोधने । चतुःपञ्चाशत्तमोऽगाद्रुक्मिवैरूप्यबोधकः ॥ ३ ॥

## अन्वितार्थप्रकाशिका

सिक्तेति ॥ आहूता आहुता ये श्रेष्ठाः भूभुजो राजानस्तेषां संबन्धिभिर्मदच्युद्भिर्मदोदकं स्रवद्भिर्गजैः सिक्ता मार्गा यस्यां सा तथा । द्वाःसु परामृष्टा उच्छ्रिताः । यद्वा । तैरेव गजैः परामृष्टाः स्पृष्टा शुण्डाग्रेण धृता वा रम्भाः कदल्यस्ताभिः पूगैश्चोपशोभिता अलंकृता च बभौ । एतेन गजानां मदेऽपि सौम्यता उक्ता ॥ ५७ ॥ कुर्विति । संभ्रमात् औत्सुक्यात् परितो मार्गे धावतां बन्धूनां मध्ये तस्मिन्पुरे कुरुसृञ्जयाद्या बन्धुविशेषाः मिथः समेत्य मुमुदिरे मुदं प्रापुः । अत्र कुरवः भीष्मपाण्डवाद्याः विदर्भा इति रामाद्यैर्मुनिजनादिद्वारा विबोध्यानीताः भीष्मकक्रथकैशिकादयः यदवो नन्दादयोऽपीत्येके । "नन्दगोपोऽथ गोपालैर्गोपवृद्धैः समागतः ॥ स्वलंकृताभिर्गोपीभिर्यशोदाऽपि समागता ॥" इति पाद्मात् ॥ ५८ ॥ रुक्मिण्या इति ॥ ततस्ततस्तत्र तत्र देशेषु सूतादिभिर्गीयमानं रुक्मिण्याहरणात्मकं भगवच्चेष्टितं श्रुत्वा राजानः राजकन्याश्च भृशं विस्मिता बभूवुः ॥ ५९ ॥ द्वारकायामिति । हे राजन् ! रमया लक्ष्म्यवताररूपया रुक्मिण्योपेतं सहितं श्रियः पतिं श्रीकृष्णं दृष्ट्वा द्वारकायां पुरौकसां पुरवासिनां महान्मोदो बभूव ॥ ६० ॥

इति श्रीभागवते महापुराणे दशमस्कन्धेऽन्वितार्थप्रकाशिकायां चतुःपञ्चाशत्तमोऽध्यायः ॥ ५४ ॥

## श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्

संभ्रमात् अतिस्नेहभरात् परिधावतां संबंधिनां मध्ये कुर्वादयः मिथः परस्परं संगत्य । मुमुदिरे हृष्टे प्राप्ताः ॥५७–५८॥

इति श्रीशुद्धैकांतधर्मप्रवर्त्तकगुरुराजेन्द्रश्रीसहजानंदस्वामिशिष्यगोपालानंदमुनिविरचिते निगूढार्थप्रकाशके श्रीमद्भागवतस्य दशमस्कंधव्याख्याने रुक्मिणीपाणिग्रहणनाम चतुःपंचाशत्तमोऽध्यायः ॥ ५४ ॥

## भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

सिक्तमार्गेति । आहूता ये प्रेष्ठा भूभुजो नृपास्तेषां सम्बन्धिभिः, मदच्युद्भिः मदोदकं स्रवद्भिः गजैः सिक्ताः मदोदकैः संसिक्ताः, मार्गा यस्यां सा, तथा द्वाःसु, परामृष्टा उच्छ्रिता रम्भाः कदल्यस्ताभिः पूगैश्च उपशोभिता सती, बभौ ॥ ५७ ॥ कुर्विति । संभ्रमादौत्सुक्यात्, तस्मिन् पुरे, परिधावतां वीथीषु संचरतां, बन्धूनां मध्ये इति शेषः । कुरवश्च सृञ्जयाश्च कैकेयाश्च विदर्भाश्च यदवः कुन्तयश्च ते, मिथः परस्परं, समेत्येति शेषः । मुमुदिरे मुदं प्रापुः ॥ ५८ ॥ रुक्मिण्या इति । ततस्ततः, तेषु तेषु देशेष्वित्यर्थः । गीयमानं वन्दिजनगीयमानं, रुक्मिण्याः हरणं, रुक्मिण्यानयनात्मकं भगवच्चेष्टितमित्यर्थः । श्रुत्वा, राजानः, राजकन्याश्च, भृशविस्मिताः नितरां विस्मययुताः, बभूवुः ॥ ५९ ॥ द्वारकायामिति । हे राजन्, रमया लक्ष्म्यवताररूपया, रुक्मिण्या, उपेयं सहितं, श्रियो लक्ष्म्याः, पतिं कृष्णं दृष्ट्वा, द्वारकायां वर्त्तमानानां पुरौकसां पुरवासिनां, महामोदः, महानानन्दः अभूत् बभूव ॥ ६० ॥

इति श्रीधर्मधुरंधरश्रीधर्मात्मजप्रत्यक्षपुरुषोत्तमश्रीसहजानन्दस्वामिसुतश्रीरघुवीराचार्यसूनुभगवत्प्रसादाचार्यविरचितायामन्वयार्थविवोधिन्यां भक्तमनोरञ्जन्याख्यायां श्रीमद्भागवतटीकायां दशमस्कन्धे उत्तरार्द्धे चतुःपञ्चाशत्तमोऽध्यायः ॥ ५४ ॥

## कृष्णप्रिया

अपने सुहृन्मित्र नरपति वृन्द निमन्त्रित किया गया था । पधारे हुए राजाओं के मतवाले हाथियों के मद गन्ध से द्वारिका के राजमार्ग एवं गलियों का छिड़काव हो रहा था । प्रत्येक द्वार पर कदली के खंभे और सुपारी के वृक्ष रोपे थे । उनसे विलक्षण शोभा बनी थी ॥ ५७ ॥ इस मङ्गल महोत्सव पर पधारे हुए आप्तजनों की कुतूहल वश इधर-उधर धूम-धाम करते हुए बन्धुजनों में कुरु-सृञ्जय-कैकेय-विदर्भ-यदु-और कुन्ति आदि वंशो के आप्तजन आपस में आनन्द मना रहे थे ॥ ५८ ॥ जहाँ तहाँ श्रीरुक्मिणी हरण की गाथा गायी जा रही थी । उस अद्भुत गाथा को सुनकर राजा एवं राजकन्याएँ अत्यन्त आश्चर्य-चकित हो रहे थे ॥ ५९ ॥ महाराज परीक्षित ! साक्षात् श्रीमयी श्रीदेवीजी को श्रीरुक्मिणीजी के स्वरूप में साक्षात् श्रीपति भगवान श्रीकृष्ण के साथ देखकर द्वारिकावासी नर-नारियों को परमानन्द हुआ ॥ ६० ॥

श्रीमद्भागवत निरोधलीला दशमस्कन्ध उत्तरार्द्ध में श्रीरुक्मिणी विवाह में ५४ वाँ अध्याय का भाषान्तर समाप्त ।

# अथ पञ्चपञ्चाशत्तमोऽध्यायः

| श्लोकाः | अनु. | मि. उ. | व. उ. | | श्लो. अ. | उ. अ. | अ. अ. | सं. श्लो. अ. | सं. श्लो. | अक्ष. |
|---|---|---|---|---|---|---|---|---|---|---|
| ४० | ३८ | १ | १ | २ | १३३६ | ११ | १९ | १३६६ | ४१।।। | |

[1]श्रीशुक उवाच

[2]कामस्तु वासुदेवांशो दग्धः प्राग् रुद्रमन्युना। देहोपपत्तये भूयस्तमेव प्रत्यपद्यत ॥ १ ॥
स एव जातो वैदर्भ्यां कृष्णवीर्यसमुद्भवः। प्रद्युम्न इति विख्यातः सर्वतोऽनवमः पितुः ॥ २ ॥
तं शम्बरः कामरूपी हृत्वा तोकमनिर्दशम्। स विदित्वाऽऽत्मनः शत्रुं प्रास्योदन्वत्यगाद् गृहम् ॥ ३ ॥
तं निर्जगार बलवान् मीनः [3]सोऽप्यपरैः सह। वृतो जालेन महता गृहीतो मत्स्यजीविभिः ॥ ४ ॥

**कर्दमक्षमा**

अन्वयः—श्रीशुक उवाच—प्राक्, रुद्रमन्युना, दग्धः, वासुदेवांशः, कामः, तु, देहोपपत्तये, तमेव, प्रत्यपद्यत ॥ १ ॥ कृष्णवीर्यसमुद्भवः–स एव–वैदर्भ्याम्, जातः, पितुः–सर्वथा, अनवमः, प्रद्युम्नः, इति, विख्यातः ॥ २ ॥ कामरूपी, सः, शम्बरः, तम्, आत्मनः, शत्रुम्, विदित्वा अनिर्दशम्, तोकम्, हृत्वा, उदन्वति, प्रास्य, गृहम्, अगात् ॥ ३ ॥ तम्, बलवान्, मीनः, निर्जगार, ततः, सः, अपि, अपरैः, सह मत्स्यजीविभिः, महता, जालेन, गृहीतः ॥ ४ ॥

**श्रीधरस्वामिविरचिता भावार्थदीपिका**

पंचपंचाशत्तमे तु प्रद्युम्नोऽजनि कृष्णतः। शंबरेण हृतः सोऽथ हत्वा तं कान्तयाऽऽगमत् ॥ १ ॥
प्रद्युम्नहानिलाभाद्यैः शंबराहरणादिना। कुटुम्बिनामपत्यादिसुखदुःखमसूसुचत् ॥ २ ॥

जाम्बवत्यादिविवाहेभ्यः प्रागेव प्रद्युम्नजन्म ततो विवाहास्ततः शंबरागारात्प्रद्युम्नप्रत्यागमनम्। अतः पुत्रकथनप्रस्तावेऽपि प्रथमं प्रद्युम्नस्य जातमात्रस्य शंबरेण हरणं निरूप्यते। प्रत्यागमनं तूत्तरकालीनमपि कथापर्यवसानायात्रोक्तमिति वासुदेवाधिष्ठितचित्तप्रभवत्वाद्वासुदेवांशः सृष्टिहेतुत्वाच्च देहोपपत्तये देहप्राप्तये ॥ १ ॥ अनवमोऽन्यूनः ॥ २ ॥ स प्रसिद्धः कामशत्रुः शंबरस्तमात्मनः शत्रुं विदित्वा हृत्वा समुद्रे प्रास्य प्रक्षिप्य गृहमगादिति ॥ ३ ॥ निर्जगार गिलितवान् ॥ ४ ॥

**श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः**

अजनि उद्भूतः। स प्रद्युम्नः। शम्बरेण तन्नामकाऽसुरेण (१)। अपत्यादिप्राप्त्या सुखं, तद्धान्या च दुःखम् (२)। ततः प्रद्युम्नजन्मोत्तरम्। ततो विवाहेभ्योऽनन्तरम्। यतोऽन्यविवाहेभ्यः प्राक् जन्मातो हेतोः। पुत्रोक्तिप्रसंगे प्राप्ते सति उत्तरकालिकं जांबवत्यादिविवाहेभ्यः पाश्चात्यमपि। पर्यवसानं समाप्तिः। "आत्मा वै पुत्रनामासि" इति श्रुतेः, "स एष भगवान्द्रोणः प्रजारूपेण वर्तते" इत्यादिश्रवणाच्च। तत्रांशत्वारोप उपचार एव। चित्ताधिष्ठितवासुदेवप्रभवात्सर्वेपि वासुदेवास्स्युः सर्वचित्तेपु तस्याधिष्ठितत्वादित्यरुच्याऽऽह। वासुदेवस्यैव कंजोद्भावनादिद्वारा सृष्टिहेतुत्वादिति भावः। प्राक्तारकतापितेन्द्रार्थितकामेन तपस्स्थितरुद्रसेवनार्थाऽऽगतहिमालयात्मजांगस्पर्शनप्रेरितरुद्रस्य वीर्यं पातितं, तेन क्रुद्धरुद्रेण स्वतृतीयनेत्राग्निना कामो दग्धः, पुनस्तद्भार्यया रत्या स्तुतो रुद्रस्तस्यै वरं ददौ—तव पतिः पुनः कृष्णवीर्येण रुक्मिण्यामाविर्भविष्यति स च त्वामेव

---

१. बादरायणि–प्रा. पा.।

२. शुक उवाच—

आराध्य देवदेवेशं शंकरं लोकशंकरम्। तपसा तोषयित्वा तं कैलासगिरिवासिनम् ॥ १ ॥
रुक्मिण्यां तनयं लेभे दग्धं कामं पुनर्हरिः। वीरं प्रद्युम्ननामानं रूपौदार्यगुणान्वितम् ॥ २ ॥

राजोवाच—

पुत्रार्थमीश्वरं दृष्ट्वा स्वयं लब्धवरो हरिः। अवाप कीदृशं पुत्रं किं नामानं वदस्व मे ॥ ३ ॥ विजये।

३. मत्स्यः–प्रा. पा.।

पुनः प्राप्स्यतीति पुराणान्तरे स्पष्टम् । कामस्त्वित्यादावेवं विवेचनीयम्—श्रुतिपञ्चरात्रादौ खलु वासुदेवसंकर्षणानिरुद्धाः, ते चेश्वराविर्भावा नित्याः, प्राकृतकामस्त्विन्द्रभृत्यत्वेनैकादशादौ प्रसिद्धः । वासुदेवादयोऽपि द्विविधाः—देवलीलाः, मनुष्यलीलाश्च । तत्र पूर्वे—नारायणव्यूहस्तवादौ बहुविधाः, अपरे च श्रीकृष्णाद्याख्याः । तत्र पुराणादावुपासनायां तेभ्यो भेदेनोक्तास्ते च नित्याः । यथा श्रीगोपालतापन्यां श्रीमथुराप्रसंगे—"यत्रासौ संस्थितः कृष्णस्त्रिभिशशक्त्या समाहितः । रामाऽनिरुद्धप्रद्युम्नै रुक्मिण्या सहितो विभुः ।" इति । तस्मात्प्राकृतकामस्य भगवद्व्यूहत्वाऽसंभवादयमर्थः । तुशब्दो भिन्नोपक्रमे । वासुदेवस्य श्रीकृष्णादिलक्षणांशः रौक्मिणेयादिलक्षणः प्रद्युम्नरूपो यत्रेति तस्मिन्नसावंशेन कलयाविष्ट इत्यर्थः । प्रद्युम्नविभूतिरूप इत्यर्थः स कामो रुद्रमन्युना पूर्वं दग्धोऽतो देहोपपत्तये तमेव प्रद्युम्नमेव प्रत्यपद्यत । देहस्योपपत्तिर्नाम रुद्रेणानंगताविधानेन स्वतः प्राप्त्यसंभवात् । सामीप्ये-नान्यप्रसंगतोऽपि तत्प्राप्तिस्तदर्थं तमुपास्य तत्सायुज्यं प्राप्तवानित्यर्थः । भूयःशब्देन स कामाख्यो जीवस्तस्मादेवाविर्भूत इति गमितम् । अर्थांतरन्तु न संगच्छते वासुदेवांशो दग्ध इति श्रीभागवतमतविरोधात् । संकल्पविकल्पकात्मकान्मनस एव कामप्रभवात्, न तु धारणमात्रात्मकाच्चित्तात् । तथा स च कामो मनोविकार रूप एव, स तु तद्देवतारूप इति विचारणासिद्धेः कष्टतापत्तेश्च ॥ १ ॥ स एव यो रुद्रेण दग्धः । 'न्यूने नीचेऽवमो मतः' इति निरुक्तिः । स एव काम एव । प्रद्युम्न इति विख्यातो लोके प्रथामेव प्राप्तः, वस्तुतस्तु सच्चिदानन्दविग्रहः प्रद्युम्नः प्रद्युम्न एव तृतीयो व्यूहः, न तु कामो नाम केवलं जीवविशेष एव । तदुक्तं श्रीगोपालतापिन्याम्—"यत्रासौ०" इति । प्रथमे नारदोपास्यमन्त्रोऽपि । यथा—"नमस्तस्मै भगवते कृष्णायाऽकुण्ठमेधसे । प्रद्युम्नायाऽनिरुद्धाय नमः संकर्षणाय च ।" इति । अत्रापि श्लोके पितुः श्रीकृष्णात्सर्वतः सर्वप्रकारेणैवाऽन्यूनः न हीन्द्रभृत्यः प्राकृतः काम एवं व्याख्यातुमुचितस्तस्मात्तस्मिन्प्रद्युम्ने तदिच्छया संप्रविश्य स्थिते । भगवति जगदिवेत्येव श्रीनन्दादिष्वपि श्रीद्रोणादीनां स्थितिर्व्याख्येया ॥ २ ॥ तं प्रद्युम्नम् । तोकम् "सद्योजातशिशौ तोकोऽपत्ये तुच्छे तथा ध्वनौ" इति धरणिः । उदन्वति समुद्रे । अत्र श्रीकृष्णस्य लीलाकौतुकं वर्णयति—तमित्यादिना यावदध्यायसमाप्ति । कामरूपीति—मायया धात्र्यादिरूपेणेत्यर्थः । अनिर्दशमिति—षष्ठेह्नीत्यर्थः । तदुक्तं वैष्णवे—"षष्ठेऽह्नि जातमात्रं तु प्रद्युम्नं सूतिकागृहात् । ममैष हन्तेति मुने हृतवान्कालशम्बरः ।" इति विदित्वा दुष्टशम्बरवधेच्छोर्नारदच्छत्रुं हनिष्यन्तम् । अत्रायमभिसन्धिर्हरिवंशे—"विदितं तच्च कृष्णस्य देवमायानुवर्तिनः । ततो न निगृहीतः स दानवो युद्धदुर्मदः ।" इति ॥ ३ ॥ तं प्रद्युम्नम् । स येन निर्गरितः । जालेन सिचा वृतः संस्यूतः । मत्स्यजीविभिर्दाशैः । विचित्रलीलाचिकीर्षोर्भगवत इच्छयैव गिलितवान्न तु प्रद्युम्नान्मीनो वलवानिति ॥ ४ ॥

## श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी

कामस्त्वित्यादावेवं विवेचनीयं श्रुतिपञ्चरात्रादौ खलु वासुदेवसङ्कर्षणप्रद्युम्नानिरुद्धाः प्रसिद्धाः ते चेश्वराविर्भावा नित्याः प्राकृतकामस्त्विन्द्रभृत्यत्वेनैकादशादौ प्रसिद्धः वासुदेवादयस्तु द्विविधाः देवलीलामनुष्यलीलाश्च तत्र पूर्वे नारायणव्यूहस्तवादौ बहुविधाः अपरे च श्रीकृष्णाद्याख्याः तत्रपुराणादावुपासनायां तेभ्यो भेदेनोक्ताः ते च नित्याः यथा श्रीगोपालतापन्यां श्रीमथुराप्रसङ्गे—

यत्रासौ संस्थितः कृष्णस्त्रिभिः शक्त्या समाहितः । रामानिरुद्धप्रद्युम्नैरुक्मिण्या सहितो विभुरिति ॥

तस्मात्प्राकृतकामस्य भगवद्व्यूहत्वासम्भवादयमर्थः । तुशब्दोभिन्नोपक्रमे वासुदेवस्य श्रीकृष्णादिलक्षणस्यांशः रौक्मिणेयादिलक्षणः प्रद्युम्नरूपो यत्रेति तस्मिन्नसावंशेन कलया विष्ट इत्यर्थः प्रद्युम्नविभूतिरूपः स कामो रुद्रमन्युना पूर्वंदग्धः अतो देहोपपत्तये तं श्रीवासुदेवांशं श्रीप्रद्युम्नमेव प्रत्यपद्यत देहस्य उपपत्तिर्नाम रुद्रेणानङ्गताविधानेन स्वतः प्राप्त्यसम्भवात् सामीप्ये-नान्यप्रसङ्गतोऽपि तत्प्राप्तिः तदर्थं तमुपास्य तत्सायुज्यं प्राप्तवानित्यर्थः । भूयःशब्देन स कामाख्यो जीवस्तस्मादाविर्भूत इति गमितम् अर्थान्तरं तु न सङ्गच्छते वासुदेवांशो दग्ध इति श्रीभागवतमतविरोधात् सङ्कल्पविकल्पात्मकान्मनस एव कामस्य प्रभवो न तु धारणमात्रात्मकात् चित्तात् तथा च कामो मनोविकाररूप एव स तु तद्देवतारूप इति विचारणासिद्धेः कष्टतापत्तेश्च ॥ १ ॥ तदेवं यः कृष्णवीर्यसमुद्भवः प्रतिकल्पं श्रीकृष्णांशाविर्भावी प्रद्युम्न इति बिख्यातश्चतुर्व्यूहे प्रसिद्धः स एव वैदर्भ्यां जातः प्रादुर्भूतः प्राकृतकामस्य तु तत्र सायुज्यमेवेति भावः । तत्र हेतुः । सर्वत इति ॥ २ ॥ अत्र श्रीकृष्णलीलाकौतुकं वर्णयति । तमित्यादिना यावत्समाप्ति । कामरूपीति । मायया धात्र्यादिरूपेणेत्यर्थः । अनिर्दशमिति षष्ठेऽह्नीत्यर्थः । तथा च श्रीविष्णुपुराणे—

षष्ठेऽह्नि जातमात्रं तु प्रद्युम्नं सूतिकागृहात् । ममैष हन्तेति मुने ! हृतवान् कालशम्बरः ॥ इति ।

विदित्वेति । दुष्टशम्बरवधेच्छोः श्रीनारदात्कस्माच्चिदादेशिनो वा शत्रुं हनिष्यन्तम् अत्रायमभिसन्धिः श्रीहरिवंशे—

विदितं तच्च कृष्णस्य देवमायानुवर्तिनः । ततो न निगृहीतः स दानवो युद्धदुर्मदः ॥ इति ॥ ३ ॥

बलवानिति । श्रीभगवदिच्छयैव तदानीं प्रकाशिताल्पशक्ति श्रीप्रद्युम्नमतिक्रम्यापि शक्त्यतिशयोदयादित्यर्थः । एवमग्रे महतेति च स मीनः अपिशब्देन तादृशबलवानपि ॥ ४ ॥

### श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी

तु शब्दो भिन्नोपक्रमे, श्रीभगवत्पुत्रेत्यादिना रसभेदात्, यद्वा, विशेषेऽनंगस्याप्यंगोत्पादनेन श्रीभगवतो माहात्म्यविशेषात्, वासुदेवस्य चतुर्व्यूहादिभूतस्यावेशावतारत्वाद्वासुदेवांशः कामः। प्रद्युम्नांश इति वक्तव्ये वासुदेवांश इति तयोरभेदाभिप्रायेण। रुद्रस्य मन्युना काम एव प्राग् दग्धः, तमंशिनं तृतीयव्यूहं प्रद्युम्नमेव भूयः पुनः प्रत्यपद्यत, तस्मिन् लयं प्राप्त इत्यर्थः। किमर्थम् ? स्वदेहोत्तमोत्पत्तये। स एव प्रद्युम्न एव कामस्य लयस्थानभूतो वैदर्भ्यां जात इत्यग्रे वक्ष्यते। अन्यस्तैर्व्याख्यातम्। यद्वा, श्रीवसुदेवनन्दनस्यांशो रूपगुणादिना परममहामादकस्य तस्य तच्छक्तिमहार्णवैकबिन्दुमात्रावेशेन कामस्य जगन्मादकतासिद्धेः, अतो वस्तुतः श्रीभगवानेवायं महामदनः, अत एव 'ध्यायेन्मदनगोपालम्' इत्यादिना त्रैलोक्यसम्मोहन-तन्त्रादौ श्रीभगवानयं मदनगोपाल उच्यते। अन्यत् समानम् ॥ १ ॥ स एव साक्षात्, न त्वंशेनेत्यर्थः। यतः कृष्णस्य साक्षाद्भगवतो वीर्य्यात् सम्यगुद्भवो यस्य सः, औरसः पुत्र इत्यर्थः। यद्वा, वीर्य्यं शक्तिविशेषः, अयं श्रीरुद्रमन्युदग्धस्यापि तथा वासुदेवे लीनस्यापि पुनः प्रादुर्भावे हेतुः। एवं तस्यापि पूर्व्वतोऽत्र माहात्म्यभरः सूचितः। अत एव सर्वतः सर्वथाऽनवमः तत्त्वतस्तु चतुर्व्यूहैकतमोऽयं भगवान् श्रीप्रद्युम्नः। कामदेवेऽस्यैव शक्त्यत्यावेशो लीलाविशेषार्थम्। श्रीभगवतस्तस्य पृथक् प्रादुर्भवतस्तद्वन्निजांशेन कामदेवेन सह सम्पूर्णतयावतरणात्तेन च तस्य दग्धस्यापि देहोत्पत्त्या स एव जात इत्युक्तम्। अतः श्रीप्रद्युम्नस्यैव तस्य मुख्यतया तन्नाम्नैव विशेषतः प्रसिद्धत्वादुक्तम्, विशेषेण ख्यात इति सिद्धान्तश्चायं श्रीभागवतामृतोत्तरखण्डे विवृतोऽस्त्येव ॥ २ ॥ तन्माहात्म्यमेव दर्शयति—तमित्यादिना यावत्समाप्ति। शं स्मरणमंगलं स्वयमेव वृणोतीति शम्बरः, अत एव तं प्रद्युम्नं हृत्वा, कामरूपीति मायया धात्र्यादिरूपेणेत्यर्थः, हरणसामर्थ्यमुक्तम्, अनिर्द्दशमनिर्गतदशदिनम्, अत एव लोकमतिबालकम्, तथा च श्रीविष्णुपुराणे ( ५।२७।२ )—'षष्ठेऽह्नि जातमात्रन्तु प्रद्युम्नं सूतिकागृहात्। ममैव हन्तेति मुने हृतवान् कालशम्बरः ॥' इति, विदित्वेति दुष्टसम्बरवधेच्छोः श्रीनारदात् कस्माच्चिदादेशिनो वा, प्रास्य दूरतोऽतिगभीरे यत्नतो बलात् क्षिप्त्वा, इत्यादिकं सर्वं श्रीप्रद्युम्नमाहात्म्यार्थं श्रीभगवदिच्छयैवेति ज्ञेयम्। अन्यथा कथमपि तदसम्भवः, अत एवोक्तं श्रीहरिवंशे ( विष्णु० प० १०४।४ )—'विदितं तच्च कृष्णस्य देवमायानुवर्तिनः। ततो न निगृहीतः स दानवो युद्धदुर्मदः ॥' इति ॥ ३ ॥ बलवानिति श्रीभगवदिच्छयैव, शक्त्यतिशयोदयादित्यर्थः। एवमग्रे महतेति च। स च मीनः, न च मीनगर्भेऽपि स्थित इत्यभिप्रायेणापि-शब्दः, उक्तसमुच्चये वा, किंवा तादृशबलवानपि अपरैर्मीनैः सहेति तस्य शम्बरोपायनार्थत्वमुक्तम् अन्यथैकलत्वे मीनाहारैर्धीवरैस्तैः स एव भक्षितः स्यात्। अत एवोक्तं मत्स्यजीविभिरिति ॥ ४ ॥

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम्

कामस्तु वासुदेवांश इति विशेषणं भाविजन्मप्रभृतिसम्बन्धादिनोक्तमतः चतुर्व्यूहेषु तृतीयव्यूहत्वमुच्यते कामसाम्यञ्च तद्विभूतित्वनिबन्धनम् ॥ १-२ ॥ अनिर्दशम्। दशाहानतीतम् ॥ ३-३९ ॥

### श्रीमद्वीरराघवाचार्यकृता भागवतचन्द्रचन्द्रिका

इत्थं भगवतो रुक्मिणीविवाहः सविस्तरमनुवर्णितः अथ जाम्बवत्यादिविवाहान् विवक्षुस्तेभ्यः प्रागेव प्रद्युम्नजन्मेति तदनुवर्णयति पञ्चपञ्चाशत्तमेन। काम इत्यादिना। यद्यपि शम्बरात्प्रत्यागमनादिकन्तु विवाहेभ्यः पाश्चात्यं तथापि कथापर्यवसानायात्रोक्तमिति द्रष्टव्यम्। कामस्त्विवति। कामो मन्मथः तस्य वासुदेवांश इति विशेषणेन भाविजन्मप्रभृतिसम्बन्धः कीर्तितः वासुदेवविभूतित्वाद्वासुदेवांशः अत एव पुनर्देहोपपत्तये देहसंयोगाय तमेव वासुदेवमेव प्रत्यपद्यतेत्युक्तं प्रत्यपद्यत भगवत्तनुमाश्रित्यावत्तस्थे इत्यर्थः। अनेन चतुर्व्यूहेषु तृतीयव्यूहविभूतित्वमुच्यते नामसाम्यं च तद्विभूतित्वनिबन्धनमेव ॥ १ ॥ स एव। काम एव कृष्णस्य भगवतो वीर्यात्सङ्कल्परूपज्ञानात्मकात्समुद्भवो यस्य सः वैदर्भ्यां रुक्मिण्यां जातः प्रद्युम्न इति विख्यातोऽभिहितः सर्वतः सर्वप्रकारेण पितुरनवमोऽन्यूनः तुल्य इत्यर्थः ॥ २ ॥ तमिति। स प्रसिद्धः कामशत्रुः शम्बरः तं प्रद्युम्नमात्मनः स्वस्य शत्रुं विदित्वा नारदमुखादिति शेषः। अनिर्दशमनतीतदशाहं तोकं शिशुं कामरूपी सन् हृत्वा उदन्वति समुद्रे प्रास्य क्षिप्त्वा गृहं प्रत्यगात् ॥ ३ ॥ तं शिशुं कश्चिद्बलवान्मीनो मत्स्यो निर्जगार निगीर्णवान् ततः कदाचिन्मत्स्यजीविभिर्दाशैः सोऽपि मीनोऽप्यपरैर्मीनैः सह महता जालेन वृतः आवृतो गृहीतश्च ॥ ४ ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

कामस्त्विवति द्वयम् ॥ १-२६ ॥

### श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः

कृष्णवीर्यसमुद्भव इत्यादि। कृष्णस्य वीर्य्यमिव वीर्य्यं यस्य मध्यपदलोपी समासः। समुद्भवः सम्यक् प्रादुर्भावो यस्य स तथा, पुनः कर्मधारयः। अतएव पितुरनवमः अन्यथा चिदानन्दविग्रहस्य वीर्य्यमनुचितमिति ॥ २-२६ ॥

### श्रीनाथचक्रवर्तिपादविरचिता चैतन्यमतमञ्जूषा

कृष्णवीर्य समुद्भवः; कृष्णवीर्यमिव वीर्यं यस्य मध्यपदलोपी समासः। कृष्णवीर्यः समुद्भवः प्रादुर्भावो यस्य, अतएव पितुरनवमः, अन्यथा चिदानन्द-विग्रहस्य वीर्यमनुचितमिति ।। ३–२६ ।।

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

पञ्चपञ्चाशत्तमे तु प्रद्युम्नो रुक्मिणीसुतः। शम्बरेण हृतस्तं स हत्वागात् सप्रियः पितॄन् ।।

जाम्बवत्यादिविवाहेभ्यः प्रागेव प्रद्युम्नजन्म ततो विवाहाः ततः शम्बरागारात् प्रद्युम्नप्रत्यागमनमिति क्रमो ज्ञेयः अत्र तु प्रद्युम्नस्य जन्मनि कथिते तच्चरितमपि सर्वं कथनीयमिति कथितम् अत्र स्वयं भगवतो नित्यलीलापरिकराणां प्रपञ्चे प्राकट्यं खलु भगवदिच्छया स्वस्मिन् प्रविष्टानां स्वस्वविभूतीनामेव प्रथामाश्रित्य दृश्यते नतु साक्षात् स्वस्वप्रथया बहिर्मुखानां नानावादानामुत्थानाभावार्थं भक्तियोगसिद्धान्तस्य रहस्यत्वरक्षणार्थं च "परोक्षवादा ऋषयः परोक्षं च मम प्रिय"मिति भगवदुक्तेः यथा द्रोण एव नन्दोऽभूत् धरैव यशोदा वसुदेव उद्धवः इन्द्र एवार्जुनः यम एव विदुरः गुह एव शाम्ब इत्येवं किं बहुना स्वयं भगवतोऽपि स्वप्रविष्टस्वांशप्रथयैव जन्म यथा वैकुण्ठनाथ एवागत्य वसुदेवगृहे जातः क्वचिद्वामनः एव क्वचिदृषिर्नारायण एव क्षीरोदनाथ एवेत्येवं तस्य तृतीयो व्यूहो यः प्रद्युम्नस्तस्यापि स्वप्रविष्टप्राकृतकन्दर्पाख्यस्वविभूतिप्रथयैवाभिर्भावमाह। कामस्त्विति। वासुदेवांशः "प्रजनश्चास्मि कन्दर्प" इति गीतोक्तेर्वासुदेवविभूतिरित्यर्थः। देहस्य उपपत्तिः स्वाश्रयश्रीप्रद्युम्नदेहप्रविष्टत्वेनैव या प्राप्तिस्तस्यै तमेव विचित्रलीलानिधेस्तस्यैवेच्छया तं प्रत्यपद्यत नतु स्वशक्त्यैव तं प्रापेत्यर्थः ।। १ ।। स एव। काम एव प्रद्युम्न इति विख्यातः लोके प्रथममेव प्राप्तः वस्तुतस्तु सच्चिदानन्दविग्रहः प्रद्युम्न एव तृतीयो व्यूहः नतु कामो नाम केवलजीवविशेष एव यदुक्तं श्रीगोपालतापनीश्रुतौ—

यत्रासौ संस्थितः कृष्णस्त्रिभिः शक्त्या समाहितः। रामानिरुद्धप्रद्युम्न रुक्मिण्या सहितो विभुरिति ।।

प्रथमे च नारदोपास्यमन्त्रो यथा --

नमस्तस्मै भगवते कृष्णायाकुण्ठमेधसे। प्रद्युम्नायानिरुद्धाय नमः सङ्कर्षणाय चेति ।।

अत्रापि श्लोके पितुः कृष्णात् सर्वतः सर्वप्रकारेणैव अनवमः अन्यूनः नहीन्द्रभृत्यः प्राकृतः काम एवं व्याख्यातुमुचितस्तस्मात्तस्मिन् प्रद्युम्ने तदिच्छया स प्रविश्य स्थितो भगवति जगदिवेत्येवं श्रीनन्दादिष्वपि श्रीद्रोणादीनां स्थितिर्व्याख्येया ।। २ ।। अनिर्दशमिति। विष्णुपुराणदृष्ट्या षष्ठेऽह्नीत्यर्थः। विदित्वेति। तद्वधेच्छोः श्रीनारदात् ।। ३ ।। निर्जगार। गिलितवानिति विचित्रलीलाचिकीर्षोर्भगवत एवेच्छया नतु प्रद्युम्नादपि मीनो बलवानिति ।। ४ ।।

### गूढार्थदीपिनी

पञ्चापञ्चाशत्तमे तु प्रद्युम्नः कृष्णतोऽभवत्। शम्बरेण हृतः सोऽयं तं हत्वा स्वपुरीमगात् ।। १ ।।

वासुदेवाधिष्ठितचित्तप्रभवत्वात् वासुदेवांशः। तमेव वासुदेवांशं प्रद्युम्नमेव। देहस्य उपपत्तये प्राप्तये ।। १ ।। स काम एव। अनवमोऽन्यूनः। 'न्यूने नीचेऽवमो मतः इति निरुक्तिः ।। २ ।। तोकं शिशुम् अनिर्दशं षष्ठेऽह्नि। उदन्वति समुद्रे प्रास्य प्रक्षिप्य ।। ३ ।। निर्जगार निगिलितवान्। वृतो बद्धः ।। ४ ।।

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

रुक्मिण्याः सर्वासु मुख्यत्वात्ताभ्यः तस्याः प्रथमं विवाह उक्तः इदानीं तस्यां पञ्चपञ्चाशत्तमे प्रद्युम्नस्य जन्म शम्बरवधादिकर्म च निरूप्यते। वासुदेवस्यांशो विभूतिः अत एव भूयो देहोपपत्तये तमेव प्रत्यपद्यत तृतीयव्यूहे—

नमस्ते वासुदेवाय नमः सङ्कर्षणाय च। प्रद्युम्नायानिरुद्धाय सात्वतां पतये नमः ।।

इत्याद्युक्तेः सर्वोपास्ये वासुदेवान्तर्गते प्रद्युम्ने प्रविष्ट इत्यर्थः ।। १ ।। स च प्रद्युम्नाश्रितत्वात्प्रद्युम्न इति विख्यातोऽत एव अनवमः अन्यूनः ।। २ ।। प्रास्य। प्रक्षिप्य ।। ३ ।। निर्जगार। गिलितवान् ।। ४–५ ।।

### श्रीसत्यधर्मकृता श्रीभागवतटिप्पणी

।। हरिः ॐ ।। लोके लोकानामपयशश्च्युतिं श्रवणादितः कुर्वदच्युतापयशश्शामकं चरितं विवक्षुः परीक्षित्प्रश्नबीजमेकेन श्लोकेन समस्य समग्रं वदन्ननुवदति। सत्राजिदिति। कृतं किल्बिषं येन स कृतापराध इति यावत्। स्यमन्तकेन मणिना द्युरत्नसम्पादिततन्नामकरत्नेन। सत्रेति विश्लिष्टं शब्दानुशासनपदसमस्तशब्दशब्दवदनुवर्तते। सत्रा सह गतम्। उद्यम्योद्धृत्य

दत्तवान् ॥ १ ॥ अकारान्तस्तकारान्तश्चेति पर्यायशब्दौ तद्वाचकौ। किं किल्बिषमकरोत् स्यमन्तको मणिश्च कुतः कस्मादायातः कस्मात्किं कारणं हरेः सुता दत्तेति। मम किल्बिषं सन्देहहेतुभूतं मनोमलं ब्रह्मंस्त्वं हेरेरेवापहरेः पूर्णत्वाद्योग्यतामनुसृत्येति वाऽन्वयः ॥ २ ॥ सूर्यभक्तस्य सूर्यो ह्योषधिविशेषः स एव भक्तमन्नं यस्य स तस्य। सूर्यः स्यादोषधावपीति विश्वः। भक्तं गतं। एतेन स्वभक्तस्येति वक्तव्यं सूर्यभक्तस्येत्युक्तं कथमिति किञ्चिच्छङ्कनं परिहृतं तदशनं चोक्तमिति मन्तव्यम्। सत्राजितः परमः सखा सूर्यः प्रीतः स्यमन्तकमणिं तस्मै प्रादात्। तुष्टः स सत्राजिदित्युत्तरेणान्वयः। अतो न प्रीतातिरेकः ॥ ३ ॥ तेजसा सत्राजिदिति नोपलक्षितोऽपरिचितैरप्यज्ञात इत्यर्थः ॥ ४ ॥

**श्रीमद्वल्लभाचार्य्यकृता सुबोधिनी**

निरूपितो भगवतो भार्यामास्तु परिग्रहः। षष्ठाध्याये तु पुत्रस्य स्वीकारोऽत्र निरूप्यते ॥ १ ॥
लोके हि पुत्रभार्याणां सम्बन्धे स्याद्धि संसृतिः। दुष्टभावेषु संसृष्टास्त्वत्र कृष्णेन मोचिताः ॥ २ ॥
न चापि भगवान् कृष्णः कमप्यत्र निवारयेत्। भागिनं यत्र यो भागी निवृत्ते हरिसाद्भवेत् ॥ ३ ॥
अतः शम्बरनिर्मुक्तः पुत्रो जात इतीर्यते। पुत्रत्वं च न कालादेः किन्तु स्वेच्छात एव हि ॥ ४ ॥
तादृशस्य हि जीवस्य ततः कामकथोच्यते।

पूर्वाध्यायैः भार्येच्छया भगवता भार्या कृता। अत्रापि पुत्रेच्छया भगवता कामः पुत्रः कृत इत्याह **कामस्त्विति**। कामस्योत्पत्तिर्न घटते, कामेन हि भार्यायां प्रवृत्तिः। तत आत्मानं प्रति स्वस्याकारणत्वात्कामोत्पत्तिरसङ्गतेत्याशङ्क्य तुशब्देन निराकरोति। तत्र हेतुमाह **वासुदेवांश** इति। स हि न जीवः, किन्तु वासुदेवस्यैव मोक्षदातुः। प्रपत्तिविघटनाय कामो माया च अंशद्वयं विनिर्गतम्, पुरुषे स्त्रियां च प्रतिष्ठितं जगद्व्यामोहयति, यथैव न प्रपन्नो भवति। स तु सर्वान् व्यामोहयन् मुख्याधिकारिणं महादेवमपि व्यामोहयितुं प्रवृत्तः। ततो रुत् रोगान् सर्वेषामेव द्रावयतीति सर्वरोगनिवारकः काममपि रोगं मत्वा क्रोधेन ददाह। ततः प्रभृति नोद्गतः कामो लोके प्रवृत्तः अधिष्ठाता शक्तिरहितो जात इति। नापि मोक्षदाता भगवानवतीर्णः। यत्रायं विघ्नं वा कुर्यात्। यदा पुनः कृष्ण आविर्भूतः, तदा अक्षयं देहं सम्पादयितुं यथा रुद्रो न दहेत्, तदर्थं तं भगवन्तमेव देहोपपत्तये प्रत्यपद्यत, सदेह एव ततो निर्गमिष्यामीति, पुनस्तत्र प्रविष्टः। स हि गोपिकाद्वारा कृष्णे समागतः। ते हि प्रथमं पुरुषरूपाः स्थिताः, पश्चात् स्त्रीत्वे जाते तत्र प्रवेशमलभमानः तद्द्वारा भगवति प्रविष्टः, तासां स्वभावतः पुरुषत्वात् तत उत्पत्तिमलभमानः। यदैव रुक्मिणी संवद्धा, तदैव तस्यां जात इत्याह **स एव जात** इति। वैदर्भी भक्तिप्रधानेति। भगवतो वीर्यमत्र क्रियाशक्तिः, नत्वन्नमयम्। क्रिया हि सतो भवति। चिद्रूपः स्वयम्। सदंशमेवापेक्षते। सदंशे निर्गलितं रूपं क्रियाशक्तिरिति क्रियाशक्तौ आविर्भूतः। तदुक्तम्। कृष्णवीर्ये समुद्भवो यस्येति। एवकारो जीवान्तरप्रवेशाभावाय। अत एव लोके प्रद्युम्न इति विख्यातः। प्रकर्षेण द्युम्नं यस्मादिति। रुक्मिण्यंशसम्बन्धात् आनन्दांशोऽपि तत्र सिद्धः। उत्पादकश्च प्रद्युम्न इति तस्याभिलषितमेव नाम जातमित्युक्तम्। एवमपि भगवदिच्छया चेन्नानुगता स्यात्, तदा अक्षयदेहो न भविष्यतीति भगवत्सारूप्यं प्राप्तवानित्याह **पितुः सर्वतोऽनवम** इति। अवमः क्षयः, केनाप्यंशेन अन्यून इत्यर्थः ॥ २ ॥ एतन्मध्ये नारदेन शम्बरो बोधितः। यावदयं निर्दशो न भवति, तावन्मारणीयः। अन्यथा भगवद्धस्तस्पर्शे अवध्यो भविष्यतीति। स हि कामस्य शत्रुः। यदा सर्वेषामेव भागो निर्मुक्तो भवति, तदैव भगवान् पुत्रत्वेन ग्रहीष्यतीति। एवमुक्तस्य शम्बरस्य वृत्तान्तमाह। कामरूपी स्त्रीरूपेणान्तः प्रविष्टः। कामरूपमस्मिन्वर्तत इति सजातीयेन सजातीयो हृत इति न रक्षकैर्दैवैः स रक्षितः। अत एवानिर्दशं दशाहात्पूर्वमेव तोकं बालकं हृत्वा। न निर्गतानि दशाहानि यस्येति। अहः शब्दस्य लोपः। हरणे हेतुमाह **आत्मनः शत्रुं विदित्वेति**। वाक्यान्तरान्नारदादित्यध्यवसेयम्। उदन्वति समुद्रे प्रास्य गृहमगात्, गृहं गतः। बालो हि न मारणीय इति। कालेनानुपभुक्तः सर्वस्याप्यादरणीयो भवतीति प्राकृतं तं मत्वा समुद्रे क्षिप्तः, स्वयमेव समुद्रो भक्षयिष्यतीति समुद्रे प्रक्षिप्तवान् ॥ ३ ॥ ततः समुद्रो विपरीतं कर्तुं मत्स्यग्रासं कारयित्वा तस्यैव गृहं प्रेषयामासेति निरूपयति **तं निर्जगार बलवानिति**। स हि सचेतनो बालकः। गिलने प्रतिबन्धं करोतीति तदर्थमाह **बलवानिति**। सोऽपि मीनैरपरैर्दुर्बलैर्मीनैः सह तदीयैः महता जालेन गृहीतः। ततोऽपि जालस्य महत्त्वं बलवत्त्वं च। मत्स्यजीविभिरिति तेषां तदुद्यमः सहजः। अतो नात्र अधिकः प्रयासो निरूपणीयः ॥ ४ ॥

**विवरणटिप्पणी**

**षष्ठेऽध्याये। कारिकासु**। पुत्रत्वं चेति। हि यतस्तादृशस्य प्रद्युम्नसदृशस्य जीवस्य पुत्रत्वं कालादेर्हेतोर्न संभवति, किन्तु **स्वेच्छातः** प्रद्युम्नेच्छात एवेत्यर्थः। **कामस्त्वत्यत्र। सदेह एवेति**। दग्धदेहः कामो भगवतः सकाशात्सदेहो भूत्वा ततो निर्गमिष्यामीति पुनर्भगवति प्रविष्टः। अत एव तद्देहे भगवत्सारूप्यमिति भावः। वासुदेवांशत्वात्पूर्वमपि तत्रैव स्थितः। ततो निर्गतो दग्धः पुनस्तत्र प्रविष्ट इति पुनःपदम्। प्रवेशप्रकारमाहुः **गोपिकाद्वारेति**। विवृण्वन्ति। ते हीति। अग्निकुमाराणां पुरुष-

त्वात्तेषु कामः स्थितः। कामः पुरुषेषु, माया स्त्रीष्विति व्यवस्थापनात्तेषां स्त्रीत्वे जाते तत्र स्थितिमलभमानस्तद्द्वारा भगवति प्रविष्टः। तत्र यदा रुक्मिणी संबद्धा, तदा तद्द्वारा निर्गतः। श्रुतिरूपप्रभृतिषु च रमणेपि पतित्वसंबन्धपुरःसरं प्रथमं रुक्मिण्या एव स्वीकार इत्याशयेनाहुः **संबद्धेति**। 'पतिं मे कुर्वि'ति प्रार्थनादग्निकुमारेषु पतित्वसंबन्धं संभाव्य तेषां पुरुषत्वान्न ततो निर्गमनमित्युक्तमिति भावः। **स एव जात** इत्यत्र। **सतो भवतीति**। शक्तिरिति शेषः। सदंशस्य शक्तिः क्रियेत्यर्थः। **स्वयमिति**। कामः स्वयं चिद्रूपो, देहस्य सदंशत्वात्सदंशसंबन्धे सदेहो भवति। अतः सदंशमपेक्षते। तथा चैतद्देहो भगवत्सदंशः। अतोऽत्र भगवद्भ्रमं वक्ष्यति 'कृष्णं मत्वे'त्यनेन।

## श्रीसुबोधिनी–सारः

शुकोक्तिः। वासुदेवस्यांशो विभूतिः "प्रजनश्चास्मि कंदर्पः" इत्युक्तेः। कामस्तु प्राक् पूर्वं रुद्रस्य शिवस्य मन्युना क्रोधेन दग्ध इति वाल्मीकीयादिकांडे कथा देहोपपत्तये शरीरप्राप्तये तमेव वासुदेवं भूयः पुनः प्राप्तोऽभूत्॥ १॥ स एव कामो वैदर्भ्यां रुक्मिण्यां जातः कृष्णस्य वीर्यात्समुद्भवो यस्य स प्रद्युम्न इति विख्यातः सर्वप्रकारेण पितुः श्रीकृष्णादनवमोऽन्यूनस्तुल्यः॥ २॥ न निर्गतो दशभ्यो दिनेभ्य इत्यनिर्दशस्तं कामम् आत्मनः शत्रुं वैरिणं विदित्वा ज्ञात्वा तोकं बालं हृत्वा कामरूपी स्वेच्छामूर्त्तिः स प्रसिद्धः शंबरोऽसुर उदन्वति समुद्रे प्रास्य क्षिप्त्वा गृहमगात्॥ ३॥ तं बालं बलवान् मीनो निर्जगार सोपि मीनोऽपरैरन्यैर्मत्स्यैः सह महता जालेन वृतो मत्स्यजीविभिः कैवर्त्तैर्गृहीतः॥ ४॥

## गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

पञ्चपञ्चाशत्तमे तु रुक्मिण्यां कामरूपिणः। श्रीकृष्णतः समुत्पत्तिः प्रद्युम्नस्य निरूप्यते॥ १॥

जाम्बवत्यादिविवाहेभ्यः प्रागेव प्रद्युम्नो जात इति तत्पूर्ववृत्तान्तकथनपूर्वकजन्मादि निरूपयति—कामस्त्विति। तुशब्देन जीवसाम्यं वारयति। वासुदेवाधिष्ठितचित्तप्रभवात् सृष्टिहेतुत्वाच्च वासुदेवांशः प्राक् पूर्वजन्मनि रुद्रस्य मन्युना क्रोधेन दग्धः कामो भूयः पुनः देहोपपत्तये देहलाभाय तं वासुदेवं कृष्णमेव प्रत्यपद्यत प्रविश्यावतस्थे॥ १॥ स काम एव कृष्णस्य वीर्यात्सम्यगुद्भवो यस्य सः वैदर्भ्यां रुक्मिण्यां जातः प्रद्युम्न इति विख्यातः कथितः। सर्वतः सौन्दर्याकृत्यालापादिभिः सर्वैर्गुणैः पितुरनवमः अन्यूनः, तुल्य इत्यर्थः॥ २॥ स कामशत्रुतया प्रसिद्धः शम्बरस्तं प्रद्युम्नं आत्मनः शत्रुं कामं नारदमुखात् विदित्वा अनिर्दशं अनतीतदशाहं तोकं शिशुमेव हृत्वा उदन्वति समुद्रे प्रास्य क्षिप्त्वा गृहं प्रत्यगात्। ननु 'अन्तःपुरात्तस्य हरणं कथं सम्भवति ?' इत्याशङ्क्याह—कामरूपीति। अलक्षितरूपान्तरेणेत्याशयः॥ तं च शिशुं कश्चिद्बलवान् मीनो मत्स्यो निर्जगार निगीर्णवान्। ततो मत्स्यजीविभिर्मत्स्यान् धृत्वा विक्रीय जीवद्भिः दाशैः अपरैः मत्स्यैः सह महता जालेन सोपि मत्स्यो वृतो गृहीतश्च॥ ३–४॥

## अन्वितार्थप्रकाशिका

पञ्चपञ्चाशत्तमेऽह्नप्रद्युम्नः शम्बरासुरम्। द्वारकां रत्या सहागाच्छ्लोकाः सार्द्धाः खसिन्धवः ( ४० )।
द्वे ( २ ) उवाचेति पादोना हस्तवेदा ( ४१॥। ) मनुष्टुभः॥ ५५॥

जाम्बवत्यादिविवाहेभ्यः पूर्वमेव प्रद्युम्नजन्म ततो विवाहः ततः शम्बरागारात्प्रद्युम्नप्रत्यागमनम्। अत्र पुत्रकथनप्रस्तावेऽपि जातमात्रस्य प्रद्युम्नस्य शम्बरेण हरणं निरूप्यते। प्रत्यागमनं तु उत्तरकालिकमपि। कथापर्यवसानायात्रोक्तम्—काम इति। वासुदेवाधिष्ठितचित्तप्रभवत्वात् सृष्टिहेतुत्वाच्च वासुदेवांशः। यद्वा। वासुदेवस्यांशः प्रद्युम्नरूपो विद्यते यत्र सः प्रद्युम्नविभूतिरूपः कामः इन्द्रभृत्यत्वेन एकादशादिषु प्रसिद्धः प्राकृतकामः प्राक् पूर्वजन्मनि रुद्रस्य मन्युना क्रोधेन दग्धः अनङ्गतां विधाय स्वतो देहप्राप्तावसमर्थः कृतः। अतो भूयः पुनर्देहोपपत्तयेऽन्यप्रसङ्गतो देहलाभाय तं वासुदेवं कृष्णमेवतं वासुदेवांशं प्रद्युम्नमेव वा प्रत्यपद्यत प्रविश्यावतस्थे। तमुपास्य तत्र सायुज्यं प्रापेति वा। अत्र स्वयं भगवतो। नित्यलीलापरिकराणां प्रपञ्चे प्राकट्यं खलु भगवदिच्छया स्वस्मिन् प्रविष्टानां स्वविभूतीनामेव प्रथामाश्रित्य दृश्यते। ननु साक्षात् स्वस्वप्रथया बहिर्मुखानां नानावादानामुत्खाताभावार्थं भक्तियोगसिद्धान्तस्य रहस्यत्वरक्षणार्थं च परोक्षवादा ऋषयः। "परोक्षं च मम प्रियम्" इति भगवदुक्तेः। द्रोण एव नन्दोऽभूत्। धरैव यशोदा वसुदेवोद्धवः इन्द्र एवार्जुनः यम एव विदुरः गुह एव साम्ब इत्येवम्। किं बहुना स्वयं भगवतोऽपि स्वप्रविष्टस्वांशप्रथयैव जन्म। यथा वैकुण्ठनाथ एवागत्य वसुदेवगृहे जातः इत्यादि एवं तस्य तृतीयो व्यूहो यः प्रद्युम्नस्तस्यापि स्वप्रविष्टप्राकृतकन्दर्पाख्यविभूतिप्रथयैवायमाविर्भाव उक्तः नत्वसौ कन्दर्पाख्यः॥ १॥ स इति। य एव कृष्णस्य वीर्यात्सम्यगुद्भवो यस्य सः प्रद्युम्न इति व्यूहेषु विख्यातः कथितः। स एव वैदर्भ्यां रुक्मिण्यां जातः। प्राकृतकामस्तु सायुज्यादेव जात इति भावः। तत्र हेतुः सर्वतः सौन्दर्याकृत्यालापादिभिः सर्वैर्गुणैः पितुरनवमः अन्यूनः तुल्यः॥ २॥

तमिति। सः कामशत्रुतया प्रसिद्धः शम्बरः कामरूपी अलक्षितरूपान्तरधारी सन् तं प्रद्युम्नम् आत्मनः शत्रुं कामं शम्बरवधेच्छोर्नारदस्य मुखात् विदित्वा अनिर्दशम् अनतीतदशाहं तोकं शिशुमेव विष्णुपुराणरीत्या जन्मतः षष्ठेऽह्नि हृत्वा उदन्वति समुद्रे प्रास्य क्षिप्त्वा गृहं प्रत्यागात् ॥ ३ ॥ तं च शिशुं कश्चिद् बलवान् मीनो मत्स्यो निर्जगार निगीर्णवान्। इदमपि विचित्रलीलाचिकीर्षोर्भगवत एवेच्छया ननु मीनोऽपि कामाद्बली ततो मत्स्यजीविभिर्धीवरैः अपरैः मत्स्यैः सह महता जालेन स मत्स्योऽपि वृतो गृहीतश्च ॥ ४ ॥

### श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्

इदानीं पंचपंचाशत्तमेऽध्याये प्रद्युम्नोत्पत्तिं तस्य शंबरासुरकृतहरणं च प्रद्युम्नकृतशंबरहननं च रतिप्रद्युम्नयोर्द्वारिकागमनं च निरूपयति ॥ वासुदेस्य अंशः प्रद्युम्नरूपोऽस्त्यस्मिन्निति तथाभूतः प्रद्युम्नस्य विभूतिरूप इत्यर्थः स च प्रद्युम्नस्योपासकः कामदेवः एकादशस्कंधे इन्द्रभृत्यः प्रद्युम्नस्योपासकश्चोक्तः रुद्रमन्युना प्राग्दग्धः सकामः प्रद्युम्नसायुज्यतां प्राप्तः सन् ॥ भूयो देहोत्पत्तये प्रद्युम्नेन स हतं श्रीकृष्णमेव प्रत्यपद्यत ॥ अनंतकोटिब्रह्मांडपालकस्य पुरुषोत्तमसगुणावतारस्य प्रद्युम्नस्येंद्रभृत्यरुद्रदग्धत्वसंभावादयमेवार्थो निःशंकतया बोध्यः ॥ १ ॥ पितुरनवमः श्रीकृष्णस्य सदृशः ॥ २ ॥ सः कामरिपुतया विख्यातः शंबरः आत्मनः स्वस्य शत्रुं तं प्रद्युम्नं विदित्वा कामरूपीयथेष्टरूपधारकः हृत्वा अनिर्दशं निर्गतानि जन्मतो दशदिनानि यस्य तथा[illegible]तो न भवतीति तं ॥ षष्ठे क्रीत्यर्थो विष्णुपुराणप्रसिद्धेः ॥ उदन्वति जलधौ प्रास्य क्षिप्त्वा ॥ ३ ॥ तं निर्जगार गिलितवात् ॥ सोपि बलवानपि अपरैर्मीनैः सह जालेन वृतः ॥ सन् गृहीतः ॥ ४ ॥

### भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

प्रद्युम्नः कृष्णतो जातः शम्बरेण हृतः स तु। पञ्चपञ्चाशत्तमेऽसौ तं हत्वा कान्तयाऽगमत् ॥ १ ॥

इत्थं भगवतो रुक्मिणीविवाहः सविस्तरमनुवर्णितोऽथ जाम्बवत्यादिविवाहान्विवक्षुस्तेभ्यः प्रागेव प्रद्युम्नजन्मेति तदनुवर्णयति ॥ काम इति ॥ यद्यपि जाम्बवत्यादिविवाहेभ्यः प्रागेव प्रद्युम्नजन्म ततोऽन्ये विवाहाः ततः शम्बरागारात् प्रद्युम्नप्रत्यागमनमतः पुत्रकथाप्रस्तावेऽपि प्रथमं प्रद्युम्नस्य जन्मोक्तमस्ति, ततः जातमात्रस्य तस्य शम्बरेण हरणमत्र निरूप्यते प्रत्यागमनं तूत्तरकालिकमपि कथापर्यवसानायात्रोक्तमिति बोध्यम्। वासुदेवांशः वासुदेवविभूतिरूपः, कामो मन्मथः, प्राक्, रुद्रमन्युना, दग्धः अभवत्। स च, भूयः पुनः देहोपपत्तये देहसंयोगाय, तं वासुदेवं एव, प्रत्यपद्यत। भगवत्तनुमाश्रित्यास्थादित्यर्थः ॥ १ ॥ स एवेति ॥ स कामः एव कृष्णस्य भगवतो वीर्यात् समुद्भवो यस्य सः, एवंभूतः सन्, वैदर्भ्यां रुक्मिण्यां जातः एव। प्रद्युम्नः इति विख्यातश्च, सर्वतः सर्वप्रकारेण, पितुः अनवमः। अन्यूनः तुल्य आसीदित्यर्थः ॥ २ ॥ तमिति ॥ सः कामशत्रुतया प्रसिद्धः, शम्बरः शम्बरनामाऽसुरः, कामरूपी सन्, तं प्रद्युम्नं आत्मनः स्वस्य, शत्रुं विदित्वा, नारदमुखादिति शेषः। अनिर्दशमनतीतदशाहं, तोकं शिशुं, हृत्वा, उदन्वति समुद्रे, प्रास्य क्षिप्त्वा, गृहं प्रति, अगात् ॥ ३ ॥ तमिति ॥ तं शिशुं कश्चित् बलवान्, मीनो मत्स्यः, निर्जगार निगीर्णवान्। ततः, कदाचित् मत्स्यजीविभिर्दाशैः, स शिशुगिलो मीनः अपि, अपरैः, मीनैः सह, महता जालेन, वृतः गृहीतश्च ॥ ४ ॥

### कृष्णप्रिया

श्रीशुकदेवजी ने वचन वर्षा की—राजन् परीक्षित्! भगवान् कामदेव श्रीवासुदेवजी के ही अंश हैं। पूर्व में भगवान् महारुद्र की नेत्राग्नि से भस्म हो गये थे। वे पुनः देह प्राप्ति के लिये अपने अंशी भगवान् श्रीकृष्णजी के आश्रित बने ॥ १ ॥ वे ही कामदेव पुनः भगवान् श्रीकृष्ण के द्वारा श्रीरुक्मिणीजी के गर्भ से उत्पन्न हुए और प्रद्युम्न नाम से विश्व में प्रसिद्ध हुए। सौन्दर्य-वीर्य-सौशील्य-आदि श्रेष्ठ गुणों में भगवान् श्रीकृष्ण के समान थे ॥ २ ॥ प्रद्युम्नजी अभी दस दिन के भी न थे कि कामरूपी शम्बरासुर वेष बदल कर सूतिका गृह से उन्हें ले गया और महासागर में फेंककर अपने घर लौट गया ॥ ३ ॥ शम्बर को श्रीनारदजी से जानकारी मिली थी कि यह मेरा भावी शत्रु है। समुद्र में बालक प्रद्युम्नजी को एक बड़ा मच्छ निगल गया। पुनः मछुओं ने अपने बड़े जाल में फँसाकर दूसरी मछलियों के साथ उस मच्छ को पकड़ लिया ॥ ४ ॥

**तं शम्बराय कैवर्ता उपाजह्रुरुपायनम्। सूदा महानसं नीत्वावद्यन्[1] स्वधितिनाद्भुतम् ॥ ५ ॥**
**दृष्ट्वा तदुदरे बालं मायावत्यै न्यवेदयन्।**
**नारदोऽकथयत् सर्वं तस्याः शङ्कितचेतसः। बालस्य तत्त्वमुत्पत्तिं मत्स्योदरनिवेशनम् ॥ ६ ॥**
**सा च कामस्य वै पत्नी रतिर्नाम यशस्विनी। पत्युर्निर्दग्धदेहस्य देहोत्पत्तिं प्रतीक्षती ॥ ७ ॥**
**निरूपिता शम्बरेण सा [2]सूपौदनसाधने। [3]कामदेवं शिशुं बुद्ध्वा चक्रे स्नेहं [4]सदार्भके ॥ ८ ॥**

---

१. वध्यन्—च. पु. टि.। २. सूदौ—वीर.। ३. सा च तं सुन्दरवरं विलोकय मुदितानना—च. पु. टि.। ४. तदा—श्रीधर. वंशी. जीव. वीर. विश्व. शुक. सु.।

**कर्दमक्षमा**

अन्वयः—कैवर्त्ताः, शम्बराय, तम्, उपायनम्, उपाजह्रुः, सूदाः, महानसम्, नीत्वा, स्वधितिना, अवधन्, तद्, उदरे, अद्भुतम्, बालम्, दृष्ट्वा, मायावत्यै, न्यवेदयन् ॥ ५ ॥ नारदः, शङ्कितचेतसः, तस्याः, बालस्य, तत्वम्, उत्पत्तिम्, मत्स्योदर-निवेशनम्, सर्वम्, अकथयत् ॥ ६ ॥ सा, वै, कामस्य, पत्नी, रतिः, नाम, यशस्विनी, निर्दग्धदेहस्य, देहोत्पत्तिम्, प्रतीक्षती, आसीत् ॥ ७ ॥ शम्बरेण, सूपौदनसाधने, सा, निरूपिता, आसीत्, शिशुम्, कामदेवम्, बुद्ध्वा, तदा, अर्भके, स्नेहम् चक्रे ॥ ८ ॥

**श्रीधरस्वामिविरचिता भावार्थदीपिका**

स्वधितिना शस्त्रिकया अवद्यन्नवाद्यन् खंडितवन्तः ॥ ५ ॥ तत्वं कामोऽयं तव भर्त्ता ते । उत्पत्तिं श्रीकृष्णाद्रुक्मिण्या-मुत्पन्न इति ॥ ६ ॥ यशस्विनी पतिव्रता भर्तृदेहप्राप्तिं प्रतीक्षमाणा ॥ ७ ॥ तं शिशुं कामदेवं बुद्ध्वा विज्ञाय ॥ ८ ॥

**श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः**

तं मत्स्यम् । कैवर्ता धीवराः 'कैवर्ते दाशधीवरौ' इति कोशात् । उपायनभूतं ददुः । सूदा आंधसिकाः "सूदस्तु कथितः सूपकारे च व्यञ्जनान्तरे" इति मेदिनी । "बहुशर्करके ग्रामे गेहे पाकस्थले पुमान् । महानस इति प्रोक्ते" इति निरुक्तिः । "कुठारे छुरिकायां च स्वधितिः परिकीर्तिता" इति कोशांतरात् । द्रुतं शीघ्रम् । अवपूर्वात् 'दो-अवखण्डने' अतो लङ्, अडभाव-स्त्वार्षः । तमित्यर्धकम् । उपजह्रुरित्युक्तेऽप्युपायनमिति पौनरुक्त्यं तद्वैशिष्ट्यापेक्षया । अद्भुतत्वं बृहत्त्वादि । तस्यैवोपायनत्वे हेतुरयमेव । तत्र तन्निजविद्याप्रकाशनेन तन्नाम्नैव ख्यातायै रत्यै अर्पयामासुः तस्याः सूदाधिपत्वात् ॥ ५ ॥ मायावत्यै महादेव-प्रसादावाप्तानेकमायाज्ञानवत्यै रत्यपरपर्यायायै । तस्या रत्याः । तत्त्वं याथार्थ्यम् । शंकितचेतसः बालोऽयमतिसुन्दरो मत्पति-तुल्यरूपः कथं मत्स्यगर्भे जातः, अन्य एवोत्पन्नश्चेत्कथमत्र न मृतः, अतो देववरोऽयं कश्चिन्मद्भर्त्तैव वा स्यादित्याद्याशंकायुक्तं चेतो यस्यास्तस्याः । सर्वमित्येव विवृणोति—बालस्येति, मत्स्योदरनिवेशनं च प्रवेशकारणम् । अत्र तस्या भर्तुः कामस्य तृतीयव्यूहेनाभेदोक्तिः, किरणस्य सूर्येणेव । सा च मायावत्याः शोकापनोदाय मेलनाय च । सापि निजपत्यभेदेन श्रीप्रद्युम्नमु-पासितवत्यस्ति 'गोपीनां तत्पतीनां च' इत्यादिरीत्या । न च तस्या व्रतभंगः, अयश्च स्पर्शमणिन्यायेन तामात्मयोग्यां चकार स्वीचकार च । श्रीमदनिरुद्धमातैव तु तस्य साक्षाच्छक्तिरिति ज्ञेयम् ॥ ६ ॥ सा चेति युग्मकम् । अत्रेयमाख्यायिका मात्स्ये—शिवेन भस्मीकृते कामे रतिस्तद्देहोत्पादनाय चिरं तमुपासितवती । शंबरोऽपि तमुपासीन आसीत् । तत्र दृष्टायां तस्यां शम्बरेण मुहुः शिवात्सैव वव्रे । ततश्चोपासनावशेन तेन रतिरूचे—याह्यस्य सदनं तत्रैव तवेष्टसिद्धिर्भविष्यति, मद्दत्तमहाविद्याप्रभावेण तव व्रतभंगोपि न भविष्यतीति । तथा विष्णुपुराणे रुक्मिणीं प्रति नारदः—"इयं मायावती भार्या तनयस्यास्य ते सती । शम्बरस्य न भार्येयं श्रूयतामत्र कारणम् । मन्मथे तु गते नाशं तदुद्भवपरायणा । शंबरं मोहयामास मायारूपेण मोहिनी । व्यवा-याद्युपभोगेषु रूपं मायामयं शुभम् । दर्शयामास दैत्यस्य तस्येयं मदिरेक्षणा ।" इति । इत्थं हरिवंशेपि ॥ ७ ॥ सूपौदनस्य साधने संस्कारे, आधिपत्ये वा "संस्कारे ह्याधिपत्येपि साधनं परिकीर्तितम्" 'रूपो व्यञ्जनसूदयोः' इति मेदिनी । तदा नारदकथना-वसरादारभ्य । सूपौदनसाधने तदाधिपत्ये । तदुक्तं वैष्णवे—"कारयामास सूदानामाधिपत्यमनिंदिता" इति । स्नेहं प्रेम-विलासम् । स्नेहाऽऽचरणप्रकारश्च हरिवंशे—'धात्र्यास्तं सा समर्पयत्' इति, "रसायनोपयोगैश्च शीघ्रमेव व्यवर्धयत्" इति । एवं तस्या एव मायया शंबरोपि तं बालं न परिचितवानिति ज्ञेयम् । तदा 'सदा' इति वा पाठः ॥ ८ ॥

**श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी**

तमित्यर्द्धकम् उपाजह्रुरित्युक्तेऽपि उपायनमिति पौनरुक्त्यं तद्वैशिष्ट्यापेक्षया अद्भुतत्वं बृहत्त्वादिना तस्यैवोपायनत्वे च हेतुरयमेव मायावत्यै तत्र तन्निजविद्याप्रकाशनेन तन्नाम्नैव ख्यातायै रत्यै अर्पयामासुः तस्याः सूदाधिपत्यात् ॥ ५ ॥ शङ्कित-चेतसः । बालोऽयमतिसुन्दरः मत्पतितुल्यरूपः कथं मत्स्यगर्भे जातः अन्यत्र वोत्पन्नश्चेत् कथमत्र न मृतः अतो देववरोऽयं कश्चि-न्मद्भर्त्तैव वा स्यादित्याशङ्कायुक्तं चेतो यस्यास्तस्याः सर्वमित्येव विवृणोति । बालस्येति । मत्स्योदरे निवेशनं प्रवेशकारण-मन्यत्तैः । अत्र तस्या भर्त्तुः कामस्य तृतीयव्यूहेनाभेदोक्तिः किरणस्य सूर्य्येणेव सा च मायावत्याः शोकापनुत्तये मेलनाय च अतः साऽपि निजपत्यभेदेन श्रीप्रद्युम्नमुपासितवत्यस्ति "गोपीनां तत्पतीनां चे"त्यादिरीत्या न च तस्या व्रतभङ्गः अयं च स्पर्शमणि-न्यायेन तामात्मयोग्यां चकार स्वीचकार च श्रीमदनिरुद्धमातैव तु तस्य साक्षाच्छक्तिरिति ज्ञेयम् ॥ ६ ॥ सा चेति युग्मकम् । अत्रेयमाख्यायिका मात्स्ये श्रीशिवेन भस्मीकृते कामे रतिस्तद्देहोत्पादनाय चिरं तमुपासितवती शम्बरश्च वरान्तराय तमुपासीन आसीत् तत्र दृष्टायां तस्यां तेन श्रीशिवान्मुहुः सैव वव्रे ततश्चोपासनावशेन तेन रतिरूचे याह्यस्य सङ्गे तत्रैव तव सिद्धिर्भवि-ष्यतीति यशस्विनीति पुनस्तथा निजपतिप्राप्तिशम्बरवञ्चनादिना तथा च विष्णुपुराणे श्रीरुक्मिणीदेवीं प्रति श्रीनारदोक्तौ—

इयं मायावती भार्य्या तनयस्यास्य ते सति ! । शम्बरस्य न भार्य्येयं श्रूयतामत्र कारणम् ॥
मन्मथे तु गते नाशं तदुद्भवपरायणा । शम्बरं मोहयामास मायारूपेण मोहिनी ॥
व्यवायाद्युपभोगेषु रूपं मायामयं शुभम् । दर्शयामास दैत्यस्य तस्येयं मदिरेक्षणेति ॥

ईदृशं हरिवंशेऽपि ॥७॥ सूपौदनसाधने तदाधिपत्ये तथाच श्रीविष्णुपुराणे "कारयामास सूदानामाधिपत्यमनिन्दिते"ति स्नेहं प्रेमविलासं स्नेहाचरणप्रकारश्चोक्तः श्रीहरिवंशे धात्र्यास्तं सा समर्पयदिति "रसायनोपयोगैश्च शीघ्रमेव व्यवर्धयदि"ति एवं तस्या एव मायया शम्बरोऽपि तं बालं न परिचितवानिति ज्ञेयं तदा सदेति वा पाठः ॥ ८ ॥

### श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी

द्रुतमिति सद्यः शम्बरभोगसुखार्थम्, पाठान्तरे बृहत्त्वबलवत्त्वादिनाऽन्यमीनतो विलक्षणम् ॥ ५ ॥ मायावत्यै मायया शम्बरमोहनाद्विविधाद्भुतमायावित्त्वाद्वा तन्नाम्नैव ख्यातायै रत्यै न्यवेदयन् अर्पयामासुः तस्याः सूदाधिपत्यात् । शंकितम्—बालोऽयमतिसुन्दरो मत्पतितुल्यरूपः कथं मत्स्यगर्भे जातः, अन्यत्र वोत्पन्नश्चेत् कथमत्र न मृतः, अतो देववरोऽयं कश्चिन्मद्भर्त्तैव वा स्यादित्याद्याशंकायुक्तं चेतो यस्यास्तस्याः, सर्व्वमित्येव विवृणोति—बालस्येति । मत्स्योदरे निवेशनं च प्रवेशकारणम् ॥ ६ ॥ त्वर्थे च, शब्दः, शम्बरतो भेदात्, वै प्रसिद्धौ, यशस्विनीति शम्बरपत्नीत्वादिकं निरस्तम् । निःशेषेण भस्मसात्तया दग्धदेहस्यापि देहस्योत्पत्तिमात्मनो दाहाभावात्, कामदेवत्वेन सदा सर्व्वेषां हृद्यनंगरूपेण वर्त्तमानत्वाच्च; प्रतीक्षमाणा शम्बरगृहेऽवसदिति शेषः । तच्च श्रीनारदस्य श्रीरुद्रस्य वा प्रसादात्, देवतात्वेन स्वज्ञान-प्रभावादेव वेति ज्ञेयम् । यशस्विनीत्वादेव केवलसूपस्य ओदनस्य च भक्तसाधने पाचन एव निरूपिता नियुक्ता,—तयोः सदा परमोत्तमतयापेक्ष्यत्वात्, किंवा उपलक्षणमेतत्, सर्व्वपाकाधिकार एव निरूपिता, तथा च श्रीविष्णुपुराणे ( ५।२७।६ )—'कारयामास सूदानामाधिपत्यमनिन्दिता' इति श्रीपराशरादि-मते च शम्बरस्य भार्य्यात्वेन स्थितापि तत्संगरहितैवासीत् । तथा च श्रीविष्णुपुराणे ( ५।२७।२६-२८ ) श्रीरुक्मिणीदेवीं प्रति श्रीनारदोक्तौ—

'इयं मायावती भार्य्या तनयस्यास्य ते सती । शम्बरस्य न भार्य्येयं श्रूयतामत्र कारणम् ॥
मन्मथे तु गते नाशं तदुद्भवपरायणा । शम्बरं मोहयामास मायारूपेण रूपिणी ॥
व्यवायाद्युपभोगेषु रूपं मायामयं शुभम् । दर्शयामास दैत्यस्य तस्येयं मदिरेक्षणा ॥' इति;

ईदृशं श्रीहरिवंशेऽपि । स्नेहं प्रेमविलासम्, स्नेहाचरणप्रकारश्चोक्तः श्रीहरिवंशे ( विष्णु० प० १०४।१३ )—'धात्र्यास्तं सा समर्पयत् । रसायनप्रयोगैश्च शीघ्रमेव व्यवर्द्धयत्' इति ॥ ८ ॥

### श्रीमद्वीरराघवाचार्यकृता भागवतचन्द्रचन्द्रिका

कैवर्त्ताः । दाशास्तं महामीनं शम्बरायोपायनमुपाजह्रुः समर्पयामासुः ततः सूदाः पाचकाः छेत्तारो वा महानसं पाकगृहं प्रति तं मीनं प्राप्य स्वधितिना शस्त्रविशेषेणावद्यन् खण्डितवन्तः ॥ ५ ॥ तदा तस्य मत्स्यस्योदरेऽद्भुतं बालं दृष्ट्वा तं मायावत्यै रत्यै मन्मथपत्न्यै रत्याख्यायै शम्बरेण प्रसह्याहृत्य महानसेस्थापितायै न्यवेदयन् कोऽसावयं बाल इति मम भर्तेव स्थितः किं वा स एवायमित्येवं शङ्कितं चेतो यस्यास्तस्या मायावत्याः नारदः तत्सर्वं कथयामास किं तत्सर्वं यदकथयत्तत्राह । बालस्येति । तत्त्वम् याथात्म्यं काम एवायमित्येवं विधं मत्स्योदरनिवेशनादिकं चेति सर्वमकथयत् ॥ ६ ॥ सा चेति । सा शम्बरेण सूदैः सहोदनसाधने पाकगृहे निरूपिता सूदानां परिचारकतया स्थापिता मायावती पत्युः कामस्य देहोत्पत्तिं प्रतीक्षमाणा स्थिता सती तं शिशुं नारदमुखात्कामदेवं ज्ञात्वा तस्मिन्नर्भके सदाविच्छिन्नं स्नेहं चक्रे ॥ ७-८ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

अवद्यन् अवाद्यन् खण्डितवन्तः ॥ ५ ॥ सर्वं कामोऽयं तव भर्त्तेति ॥ ६ ॥ देहोपपत्तिमिति । मात्स्ये कथा भस्मीभूते देहे सति रतिस्तद्देहप्राप्त्यर्थं शिवमाराधयामास शम्बरश्चागतो वरान्तराय शिवस्तुष्टः प्रथमं वरं वृण्विति शम्बरं प्रत्याह स्म स च रतिं दृष्ट्वा कामार्त्तस्तामेव वव्रे ततः शिवो रुदतीं रतिं साश्वासमाह याह्यस्य सङ्गे तत्रैव ते वाञ्छितसिद्धिर्भाविनीति ततो रतिर्माययैव शम्बरं मोहयित्वा स्पर्शरहितैव तद्गृहे मायावत्यभिधाना तस्थौ ॥ ७-९ ॥

### गूढार्थदीपिनी

तं मत्स्यम् । कैवर्ता धीवराः । उपायनभूतं समर्पयामासुः । स्वधितिना छुरिकया । अवद्यन् खण्डितवन्तः ॥ ५ ॥ दृष्ट्वेति सार्द्धम् । मायावती कामपत्नी रतिः तत्त्वं रहस्यं तव भर्ताऽयमिति ॥ ६ ॥ सा चेति युग्मम् । सूपौदनस्य साधने आधिपत्ये ॥ ७-८ ॥

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः

अवद्यन् । अवांचयन् खण्डितवन्तः स्वधितिना शस्त्रिकया ॥ ५-९ ॥

### श्रीसत्यधर्मकृता श्रीभागवतटिप्पणी

मुष्टाऽपहृता दृष्टिर्येषां ते तथा जनाः सूर्य आयातः किमिति संशयग्रस्ता अक्षैर्दुरोदरैर्दीव्यते क्रीडते ॥ ५ ॥ अरविन्दाक्ष कमलनयन । अरविन्दौ विधुरवी अक्षिणी यस्य स इत्यागमानुवन्धसूचनं वा ॥ ६ ॥ गभस्तिचक्रेण करनिकुरुम्बेन तिग्मरुक् तीक्ष्णप्रकाशः ॥ ७ ॥ स कुत आगच्छेदित्यतस्तव माहात्म्यमीदृगित्याहुः । नन्विति । विवुधर्षभा अपि ते मार्गं त्रिलोक्या-मिच्छन्ति ननु निश्चयो यदुषु गूढं त्वामज्ञात्वा दिदृक्षुरजः सूर्योऽजाय लोकत्रयभावनायेति वचनात् । योऽजस्तं त्वां द्रष्टुमिति वाऽन्वयः ॥ ८ ॥

### श्रीमद्वल्लभाचार्य्यकृता सुबोधिनी

ततः शम्बरः कैवर्तानामधिपतिः प्राप्तमहामत्स्यैः कैवर्तैः स मत्स्यः तस्मै दत्त इत्याह **तं शम्बरायेति**। उपायन-मुत्कृष्टोपहारम् । सोऽप्यविचार्यैव सूदेभ्यः पाचकेभ्यो घातकेभ्यो वा दत्तवान् । सूदाः पुनः महानसं स्थानं नीत्वा अवद्यन् । ततः अद्भुतं वालकं तस्य **उदरे** दृष्ट्वा मायावत्यै न्यवेदयन् । सा हि रतिः कामस्य भार्या आसीत् । ततो दग्धे कामे तद्भार्या यदा शम्बरेण नीयते, तदा माया तस्यां प्रविष्टा । तदा मायावतीति नाम प्राप्तवती । सा च तेन प्रतिक्षणं मायया मोहितेन पाकाध्यक्षा निरूपिता । ततो बालकः मायावत्या दृष्टः । कोऽप्ययं कपटेन मां ग्रहीष्यतीति भयाच्छङ्कितचित्ता जाता, ततो नारदः पुनरागत्य तां बोधितवानित्याह **नारदोऽकथयदिति** । बालस्य तत्त्वं कामत्वं उत्पत्ति कृष्णान्नारदप्रेरणया शम्बरद्वारा मत्स्योदरनिवेशनम् । ततोऽत्रागमनं तु स्पष्टमेवेति त्रयमुक्तम् । सात्त्विकं राजसं तामसं च । यद्ययं मत्स्योदरे न निविष्टः स्यात्, तदाग्रे भगवतः कामात् स्त्रीविवाहा अयुक्ताः स्युः ॥ ६ ॥ ततस्तया ज्ञात्वा स गृहीत इति वक्तुं तस्याः स्वरूपमाह **सा चेति** । तस्याः आकाङ्क्षित एवायं स्थितः । चकारस्त्वर्थसमुच्चयार्थः । नारदः अकथयत् । साप्याकाङ्क्षायुक्तेति । कामस्यैव पत्नी, न तु कामेन यस्य कस्यचित् । **रतिरिति** तस्या नामेति प्रसिद्धिः । अनेन लोकेऽपि तस्या निन्दाभाव उक्तः । यथा कामः पुरुषेषु, तथा रतिः स्त्रीषु प्रतिष्ठितेति प्रसिद्धिः । किञ्च । **यशस्विनी** प्राप्तयशाः । अतो यशःसम्बन्धात् नापकीर्तिसम्भावना । नन्वेतादृशी भर्तृमरणे वैधव्यधर्मपरि-पालनाय योग्या कथं रूपान्तरस्थपतिं गृहीतवती, तत्राह **पत्युर्निर्दग्धदेहस्येति** । न हि पतिर्मृतोऽस्ति । अन्यथा जगदुत्पत्तिरेव न स्यात् । किन्तु देह एव दग्धः, तस्योत्पत्तिमेव प्रतीक्षते ॥ ७ ॥ तस्यास्तत्रागमने हेतुमाह **निरूपितेति** । सूपौदनानां पाचने । सा हि मायां जानाति सूपकाराणाम् । तन्माया प्राणहारिणी भवतीति तद्रक्षार्थं पाकस्थाने नियुक्ता । अनेन भक्ष्यभोज्यादिसम्पत्तिः तस्याः सिद्धा । लोकाः तस्याः पुत्रत्वेन तं जानन्ति । सा तु न पुत्रत्वेन तं प्रति पालितवती, अपि तु काममेव बुद्ध्वा, तत्रापि देवं पतिं शिशुत्वेन समागतम्, अर्भके स्नेहं चक्रे ॥ ८ ॥

### श्रीसुबोधिनीसारः

कैवर्तास्ते शंबरार्थं तं मत्स्यमुपायनं बलिं समर्पयामासुः सूदाः पाचका महानसं भोजनागारं नीत्वा स्वधितिना शस्त्रेणा-द्भुतं मीनमवद्यन् चिच्छिदुः अडभाव आर्षः ॥ ५ ॥ तस्य मत्स्यस्योदरे बालं दृष्ट्वा मायावत्यै तद्गृहाधिष्ठात्र्यै न्यवेदयन् समर्पयां-चक्रुः कोयमिति शंकितचित्तायै तस्यै नारदः सर्वम् अकथयत् किमित्यत आह । तत्त्वं कामोयं तव भर्ता इति उत्पत्तिं श्रीकृष्णा-द्रुक्मिण्यां जन्म शंबरेण समुद्रप्रक्षेपान्मत्स्यस्योदरे निवेशनमिति ॥ ६ ॥ का सेत्यत आह । सा च यशस्विनी कामस्य रतिर्नाम पत्नी वै एव निर्दग्धो देहो यस्य तस्य पत्युः देहोत्पत्तिं पुनर्जन्म प्रतीक्षमाणा ॥ ७ ॥ शंबरेण सूपोदनयोः साधने निरूपिता सा रतिः शिशुं बालं कामदेवं बुद्धा ज्ञात्वा तदाऽर्भके बाले स्नेहं चक्रे ॥ ८ ॥

### विवरण टिप्पणी

**पत्युरित्यत्र** । **देह एवेति** । एवकारस्य दग्धपदेनान्वयः । दग्ध एव ज्वलन्नेव तिष्ठति, न तु भस्मीभूत इतीतर-वैलक्षण्यम् । अतो न मृत इत्यर्थः ।

### गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

कैवर्तास्ते दानास्तं महामत्स्यं शम्बराय उपायनमुपाजह्रुः समर्पयामासुः । ततश्च सूदाः छेत्तारः पाचकास्तमद्भुतं मत्स्यं महानसं पाकगृहं प्रति नीत्वा स्वधितिना शस्त्रविशेषेण अवद्यन् खण्डितवन्तः ॥ ५ ॥ तदा तस्य मत्स्यस्योदरेऽद्भुतं बालं दृष्ट्वा प्रगृह्य मायावत्यै न्यवेदयन् समर्पयामासुः । 'कोसौ अयं बाल' इति शङ्कितं चेतो यस्यास्तस्या मायावत्या नारदो बालस्य

तत्त्वं कामदेवस्वरूपत्वं कृष्णाद्रुक्मिण्यामुत्पत्तिं शम्बराहरणादि मत्स्योदरप्रवेशप्रकारं च सर्वमकथयदित्यन्वयः ॥ ६ ॥ सा च मायावती वै निश्चयेन कामस्य पत्नी रतिर्नाम प्रसिद्धा रुद्रक्रोधेन निर्दग्धदेहस्य पत्युर्देहोत्पत्तिं प्रतीक्ष्यमाणा। तत्र हेतुः— यशस्विनी पतिव्रता ॥ ७ ॥ सा च शम्बरेण सूपादिसाधने निरूपिता तं शिशुं नारदमुखात् कामदेवं बुद्धा तदा तस्मिन्नर्भके स्नेहं चक्रे ॥ ८ ॥

### अन्वितार्थप्रकाशिका

तमिति ॥ कैवर्तास्ते दाशास्तं महामत्स्यं शम्बराय उपायनमुपाजह्रुः समर्पयामासुः। ततश्च सूदाः पाचकास्तमद्भुतं मत्स्यं महानसं पाकगृहं प्रति नीत्वा स्वधितिना शस्त्रिकयाऽवद्यन् खण्डितवन्तः। अडभाव आर्षः। अवाद्यन्निति क्वचित्कः पाठस्तु साधुरेव ॥ ५ ॥ दृष्ट्वेति ॥ तदा तस्य मत्स्यस्योदरेऽद्भुतं बालं दृष्ट्वा प्रगृह्य मायावत्यै न्यवेदयन् समर्पयामासुः। कोऽसावयं बाल इति शङ्कितं चेतो यस्यास्तस्याः। मायावत्या नारदो बालस्य तत्त्वं कामदेवस्वरूपत्वं कृष्णाद्रुक्मिण्यामुत्पत्तिं शम्बराहरणादिकं मत्स्योदरप्रवेशप्रकारं च सर्वमकथयत्। कामोऽयं तव भर्तेति प्रद्युम्नमेव तद्भर्त्रभेदेनाकथयत् सापि स्वपत्यभेदेनैव तमुपासांचक्रे ॥ ६ ॥ सा चेति ॥ सा च यशस्विनी पतिव्रता मायावती वै निश्चयेन कामस्य पत्नी रतिर्नाम प्रसिद्धा। रुद्रक्रोधेन निर्दग्धदेहस्य पत्युर्देहोत्पत्तिं प्रतीक्षती प्रतीक्षमाणा आसीत्। शता नुमभावश्चार्षः। एवं हि मात्स्ये कथा। कामस्य देहे भस्मीभूते सति रतिस्तद्देहप्राप्त्यर्थं शिवमाराधयामास। शम्बरश्च गतो वरान्तराय शिवस्तुष्टः प्रथमं वरं वृणु इति शम्बरं प्रत्याह स्म। स च रतिं दृष्ट्वा कामार्तस्तामेव वव्रे। ततः शिवो रुदतीं रतिं साश्वासमाह। या ह्यस्य सङ्गेन तत्रैव ते वाञ्छितसिद्धिर्भविष्यतीति। ततो रतिर्माययैव शम्बरं मोहयित्वा स्पर्शरहितैव तद्गृहे मायावत्यभिधानात्तस्थौ ॥ ७ ॥ निरूपितेति ॥ सा च शम्बरेण सूपौदनसाधने निरूपिता। तं शिशुं नारदमुखात्कामदेवं बुद्ध्वा तदा तस्मिन्नर्भके स्नेहं चक्रे ॥ ८ ॥

### श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्

तं मीनं सूदाः पाककारकाः महानसंपाकस्थानं नीत्वा स्वधितिना असिपुत्रिकया। अवद्यन्। अवाद्यन् विदारितवंतः ॥५॥ मायावत्यै रत्यै शंकितचेतसः कोयमतिसुंदरो नूनं मत्पतिरेव स्यादिति शंकयुक्तं चेतो यस्यास्तस्याः बालस्य तत्त्वमुत्पत्तिं च अयं तव पतिः प्रद्युम्नाभेदेन कामः कृष्णाद्वैदर्भ्यामुत्पन्नश्चेति सर्वमकथयत् ॥ ६ ॥ यशस्विनी पातिव्रत्यधर्मयशोयुक्ता ॥ ७-८ ॥

### भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

तमिति ॥ कैवर्त्ता दाशाः, तं महामीनं, शम्बराय, उपायनं, उपाजह्रुः समर्पयामासुः। ततः, सूदास्तत्पाचकाश्छेत्तारो वा, महानसं पाकगृहं प्रति, नीत्वा तं मीनं पाकगृहं प्रापय्येत्यर्थः। स्वधितिना कुठाराख्यशस्त्रविशेषेण, 'द्वयोः कुठारः स्वधितिः' इत्यमरः। अवद्यन् खण्डितवन्तः। तदा, तदुदरे मत्स्यस्य जठरे, अद्भुतं बालं, दृष्ट्वा तं बालं, मायावत्यै मन्मथपत्न्यै रत्यै, न्यवेदयन्। मायावती शम्बरस्य महानसाध्यक्षस्त्रीत्यन्ये ॥ ५ ॥ नारद इति ॥ शङ्कितं चेतो यस्यास्तस्याः, मम भर्त्तेव स्थितोऽयं बालः कः स्यात्, स एव किं वाऽसाविति शङ्कितचित्ताया इत्यर्थः। तस्याः, पुरः नारदः, सर्वं अकथयत्। सर्वं किं तदकथयत्तत्राह। बालस्य, तत्त्वं याथात्म्यं, काम एवायमित्येवंविधं याथार्थ्यमित्यर्थः। उत्पत्तिं श्रीकृष्णतो रुक्मिण्यां रूद्धमुद्भवं, मत्स्योदरनिवेशनं, एतस्य जन्मदिनात् षष्ठेऽह्नि शम्बरकृतमाहरणं, तत् कृतं समुद्रे प्रक्षेपणं, तस्य मत्स्यकृतं गिलनं, मत्स्यस्य कैवर्त्तजालपतनं तस्य शम्बरायोपायनत्वेन प्रदानादिकमित्यर्थः ॥ ६ ॥ सा चेति ॥ सा च मायावत्यपि, यशस्विनी प्रशस्तयशोयुक्ता, कामस्य वै कामस्यैवेत्यर्थः। पत्नी भार्या, रतिः नाम, रतिनाम्ना प्रसिद्धेत्यर्थः। निर्दग्धदेहस्य क्रोधाग्निना शिवेन निर्दग्धशरीरस्य, पत्युः स्वस्वामिनः कामस्य, देहोत्पत्तिं, स्वप्रार्थितशिववचनविश्वासादिति शेषः। प्रतीक्षती, अभूत् ॥ ७ ॥ निरूपितेति ॥ सोक्तविधा रतिः, शम्बरेण सूपौदनसाधने पाकगृहे, निरूपिता सूदैः सह स्थापिता। सूदानामाधिपत्यतयाऽऽस्थापिता सतीत्यर्थः। 'कारयामास' सूदानामाधिपत्यमनिन्दिता' इति विष्णुपुराणोक्तेः। कामदेवं स्वीकृतदेहं स्वपतिं काममित्यर्थः। शिशुं बालं बुद्ध्वा, तदर्भके अर्भकतावति तस्मिन् कामे इत्यर्थः। स्नेहं प्रीतिं चक्रे। तदार्भके इत्यपि पाठः। सदा इत्यपि पाठः। एकत्र तस्मिन् कालेऽन्यत्र सर्वस्मिन् काले इति तदर्थः ॥ ८ ॥

### कृष्णप्रिया

पुनः मच्छुओं ने उसे ले जाकर शम्बरासुर को भेंट रूप में दिया। शम्बरासुर के सूद लोग उस अद्भुत मच्छको उड़ाकर पाक घर में ले आये और छुरिका से सावधान होकर काटने लगे ॥ ६ ॥ सूदों ने मत्स्य के उदर में अद्भुत बालक देखकर शम्बरासुर की रसोई दासी मायावती को समर्पित किया। मायावती के मन में बड़ा संशय हुआ। तब देवर्षि नारदजी ने पधारकर बालक का वृत्तान्त बताते हुए कहा कि बालक कामदेव है। श्रीकृष्ण भगवान की पत्नी श्रीरुक्मिणी देवीजी के गर्भ से जन्म लिया है। मत्स्य के उदर से जन्म लिया है और तुम्हारे पतिदेव हैं यह सब वृत्तान्त बताकर श्रीनारजी पधार

गये ॥ ६ ॥ महाराज ! शम्बरासुर के पाकालय की अध्यक्षा मायावती कामदेव की यशस्विनी पत्नी स्वयं रतिदेवी ही थी। भगवान शङ्करजी के तृतीय नेत्राग्नि से जिस दिन कामदेव की काया भस्म बन गयी थी उसी दिन से रति देवी कामदेव पति की प्रतीक्षा करती थी। काम का कभी नाश होता ही नहीं यदि काम का नाश हो जाय तब सृष्टि ही नहीं हो सकती थी। वही यशस्विनी पतिव्रता सती रति, पति की प्रतीक्षा करती शम्बरासुर के पाक गृह नियामिका बनकर रही थी। भगवान शङ्कर के वचन से कामदेव को पुनः देह प्राप्ति की प्रतीक्षा में रही थी ॥ ७ ॥ जब श्रीनारदजी के वचनामृत से जब से ज्ञान हुआ कि यह प्रद्युम्न श्रीकामदेव ही है और श्रीकृष्ण भगवान के पुत्र बनकर पधार गये है तब प्रसन्न चित्त से रतिदेवी पतिभाव से प्रद्युम्नजी में प्रेम कर रही थी ॥ ८ ॥

**नातिदीर्घेण कालेन स कार्ष्णी रूढयौवनः। जनयामास नारीणां वीक्षन्तीनां च विभ्रमम् ॥ ९ ॥**

**सा तं पतिं पद्मदलायतेक्षणं प्रलम्बबाहुं नरलोकसुन्दरम्।**
**सव्रीडहासोत्तभित[1] भ्रुवेक्षती प्रीत्योपतस्थे रतिरङ्ग[2] सौरतैः ॥ १० ॥**

**तामाह भगवान् कार्ष्णिर्मातस्ते मतिरन्यथा। मातृभावमतिक्रम्य वर्तते कामिनी[3] यथा ॥ ११ ॥**

**रतिरुवाच**

**भवान् नारायणसुतः शम्बरेणाहृतो गृहात्। अहं ते दयिता[4] पत्नी रतिः कामो भवान् प्रभो ॥१२॥**

**कर्दमक्षमा**

अन्वयः—न, अतिदीर्घेण, कालेन, रूढयौवनः, सः, कार्ष्णी, वीक्षन्तीनाम्, नारीणाम्, च (रत्यै) विभ्रमम्, जनयामास ॥ ९ ॥ हे अङ्ग ! सा, रतिः, पद्मपलायतेक्षणम्, प्रलम्बबाहुम्, नरलोकसुन्दरम्, प्रीत्या, सव्रीडहासोत्तभितभ्रुवा, ईक्षती, सौरतैः, उपतस्थे ॥ १० ॥ ताम्, भगवान्, कार्ष्णिः, आह, हे मातः ! ते, मतिः, अन्यथा भाति, यतः, हि, मातृभावम्, अतिक्रम्य, यथा, कामिनी, वर्तसे ॥ ११ ॥ रतिः, उवाच, भवान्, नारायणसुतः, प्रभो ! नारायणगृहात्, भवान्, शम्बरेण, हृतः, अहम्, ते, दयिता, पत्नी, रतिः, भवान्, कामः ॥ १२ ॥

**श्रीधरस्वामिविरचिता भावार्थदीपिका**

विभ्रमं सम्मोहम् ॥ ९ ॥ अङ्ग हे राजन्। सौरतैर्भावैरुपतस्थेऽभजत् ॥ १०-११ ॥ अधिकृता पत्नीत्यत्र हेतुः रतिरहं भवान्काम इति ॥ १२-१३ ॥

**श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः**

स प्रद्युम्नः। कृष्णस्यापत्यं कार्ष्णिः। रूढं प्रादुर्भूतं यौवनं यस्य स तथा। विभ्रमं मनोधिकारम्, देवाद्यन्यतमोयमिति विशिष्टभ्रमं वा। नातिदीर्घेणेति—पौगंड एवेत्यर्थः। रूढमुद्भिन्नं यौवनं यस्य सः, यतः कार्ष्णिः श्रीकृष्णस्यैव पुत्रः। तस्यापि तथैव तारुण्यादिति भावः। च अपि वीक्ष्यमाणानामपि किम्पुनः संभाषणादि कुर्वतीनामित्यर्थः। विभ्रमं भावविशेषम्। किं वा-विशिष्टं भ्रममुन्मादमित्यर्थः ॥ ९ ॥ सा मायावती। तं प्रद्युम्नम्। सौरतैः सुरतोद्दीपकैरात्मसर्वस्वैः सेवयामास। कानि तत्सर्वस्वानीत्यत आह—सव्रीडेति। पूर्वतो विशिष्टताभिप्रायेण तं पदत्रयेण वर्णयति। तत्र पद्मेति सर्वसौंदर्योपलक्षणम्। प्रलंबेति महाबलिष्ठत्वसूचकम्। इत्युभयथा नरलोके भूलोके, जीवलोके वा सुन्दरमत एव प्रीत्योपतस्थे। कैः—सव्रीडहासेनोत्तभिता नर्तिता या भ्रूस्तयोपलक्षितैः सौरतैर्भावैः। अत्रेदं तत्त्वम्—अद्य वा श्वो वा सर्वं तत्त्वमस्मै ज्ञापयित्वैव सौरतान्भावान्प्रकाशयिष्यामीति विचारवतया एव तस्या दैवाद्रहसि विज्ञापनात्पूर्वमेव कामवैवश्यात्ते भावाः स्वयमेवोद्भूता इति ॥ १० ॥ तां मायावतीम्। यतो मातृभावमतिक्रम्य कामिनीव पत्नीव त्वं वर्तसेऽतस्ते मतिरन्यथा मा नेत्यर्थः श्रेयान्। उत्तानार्थस्वीकारे तु भगवानिति पदमनर्थकं स्यात्, त्रिकालज्ञेष्वेव भगवत्प्रयोगदर्शनादिति भावः। भगवान् सर्वज्ञानादिसंपन्नोऽपि तद्विपरीतवदाह ऊचे। यतः कार्ष्णिः कृष्णपुत्रत्वात्तदभिरुचितनरलीला इत्यर्थः। मातरिति मातृत्वबुद्धेः। तथा च हरिवंशे—"धात्र्याः सकाशात्स च तां शृण्वन्रूक्मिणिनंदनः। मायावतीमविज्ञानान्मेने तामेव मातरम् ॥" इति। एवं धात्र्या एव तादृशं मतं न तु तस्या इत्येकांत एव धात्र्या जातबुद्धये तस्मै तत्कथितम्। ततो बाल्याभासं विना पूर्वन्तु मातरिति संबोधनं तेन नाचरितं, ततः संप्रति क्रोधादेवाचरितमिति

१. हासोत्तमविभ्रमेक्षितै.—विज.। २. रात्मनो धनैः—विज.। ३. जीव मे—विज.। ४. धिकृता—श्रीधर. वंशी. जीव. विज. विश्व. शुक. सु.; दयिता—वीर.।

ज्ञेयम् । वास्तवार्थस्तु—अतो भावात्तेऽन्यथा मतिर्मा भवत्विति शेषः । यतस्त्वं मातृभावमतिक्रम्यैव वर्तसे यथा यथावदेव कामिनी मत्कान्तैवेति ॥ ११ ॥ तदेवाह—भवानिति । अधिकृता पूर्वदेहे स्वीकृता वधूत्तमेत्यर्थः । तत्स्फुटयति—रतिरहमिति । नारायणेति तस्य सर्वाश्रयत्वं व्यनक्ति । गृहात् सूतिकाऽऽगारात् । अधिकृता त्वदधिकारतुल्या, इत्यात्मनस्तन्नित्यपत्नीत्वं द्योतितम् ॥ १२ ॥

### श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी

नातिदीर्घेणेति । पौगण्ड एवेत्यर्थः । रूढमुद्भिन्नं यौवनं यस्य सः यतः कार्ष्णिः श्रीकृष्णस्य पुत्रः तस्यापि तथैव तारुण्यादिति भावः । च अपि वीक्षमाणानामपि किं पुनः सम्भाषणादिकुर्वतीनामित्यर्थः । विभ्रमं भावविशेषं किं वा विशिष्टभ्रम-मुन्मादमित्यर्थः ॥ ९ ॥ पूर्वतो विशिष्टताभिप्रायेण तं वर्णयति पदत्रयेण । तत्र पद्मेति सर्वसौन्दर्य्योपलक्षणं प्रलम्वेति महा-वलिष्ठत्वसूचकमित्युभयथा नरलोके भूर्लोके जीवलोके वा सुन्दरम् अत एव प्रीत्योपतस्थे कैः सव्रीडेन हासेन उत्तम्भिता नर्त्तिता या भ्रूः तयोपलक्षितैः सौरतैः अत्र सव्रीडेत्यनेन हासस्य मन्दत्वमप्युक्तम् ॥ १० ॥ भगवान् । सर्वज्ञानादिसम्पन्नोऽपि तद्विपरीतव-दाह ऊचे इत्यर्थः । यतः कार्ष्णिः कृष्णपुत्रत्वात्तद्वदेवाभिरुचितनरलील इत्यर्थः । मातरिति मातृत्वबुद्धेः तथा च हरिवंशे—धात्र्याः सकाशात्स च तां श्रृण्वन् रुक्मिणिनन्दनः । मायावतीमविज्ञानान्मेने स्वामेव मातरमिति । एवं धात्र्या एव तादृशं मतं नतु तस्या इत्येकान्त एव धात्र्या जातवुद्धये तस्मै तत्कथितं ततो वाल्याभ्यासं विना पूर्वं तु मातरिति सम्वोधनं तेन नाचरितं ततः सम्प्रति क्रोधादेवाचरितमिति ज्ञेयम् । अन्यथा अन्यप्रकारेण वर्त्तते लज्जयादौ तां मतिमनभिव्यज्य पश्चाद्विवृणोति । मात्रिति । वास्तवार्थस्तु अतो भावात्ते तवान्यथा मतिर्मा भवत्विति शेषः । यतः कामिनी मत्कान्तैव त्वं मातृभावमतिक्रम्य यद्वर्तसे तद्यथा-वदेवेति ॥ ११ ॥ नारायणेति । तस्य सर्वाश्रयत्वं व्यनक्ति गृहात् सूतिकागारात् अधिकृता त्वदधिकारतुल्या इत्यात्मनस्तन्नित्य-पत्नीत्वं द्योतितम् ॥ १२ ॥

### श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी

नातिदीर्घेण बाल्य एवेत्यर्थः । रूढमुद्भिन्नं यौवनं यस्य सः, यतः कार्ष्णिः श्रीकृष्णस्य पुत्रः; तस्यापि बाल्य एव तारुण्यात्; च अपि, वीक्षमाणानामपि, किं पुनः सम्भाषणादि कुर्व्वतीनामित्यर्थः । विभ्रमं भावविशेषम्, किंवा विशिष्टभ्रम-मुन्मादमित्यर्थः ॥ ९ ॥ पतिं पतिभावेनेक्षमाणा, पूर्व्वतो विशिष्टताभिप्रायेण तं विशिनष्टि पदत्रयेण । तत्र पद्मेति सर्व्वसौन्दर्य्योप-लक्षणार्थम्; प्रलम्वेति च महावलिष्ठत्वं सूचितम् । इत्युभयथा नरलोके मर्त्त्ये जीवलोके वा सुन्दरम्; अतएव प्रीत्या हर्षेण प्रेम्णा वोपतस्थे । कैः ? सव्रीडेन हासेन उत्तम्भिता नर्त्तिता या भ्रूस्तया सह सौरतैः, यतो रतिः कामदेवपत्नी परमविदग्धा साक्षाद्-रतिरूपा; अन्यतैर्व्याख्यातम् । यद्वा, रतौ कामक्रीडायां रंगो रागो येभ्यस्तैः सौरतैः सुरतानुगुणव्यापारैः ॥ १० ॥ भगवान् परमाभिज्ञ इति, तस्या भावविशेषं लक्षयन्नित्यर्थः । कार्ष्णिरिति तादृशभाववत्यामपि तस्यां कामो न जातं, पितृवत् सद्धर्म्म-परत्वादिति भावः । यद्वा, भगवान् तस्यास्तादृग्भावेऽपि धैर्य्ययुक्तः, यतः कार्ष्णिः, मातरिति स्नेहपालनादिना तस्यामेव तस्य मातृत्वबुद्धेः । तथा च श्रीहरिवंशे ( विष्णु० प० १०४।१४ )—'धात्र्याः सकाशात् स च तां श्रृण्वन् रुक्मिणीनन्दनः । मायावती-मविज्ञानान्मेने स्वामिव मातरम् ॥' इति । अन्यथा अन्यप्रकाश दृश्यते, लज्जयादौ तामनभिव्यज्य पश्चाद्विवृणोति—मात्रिति । कामिनी पत्नी, कामेन भजमाना स्त्री वा ॥ ११ ॥ नारायणेति श्रीकृष्णस्य साक्षाद्भगवत्त्वं बोधयति, गृहात् सूतिकागारात्, अधिकृता कामाधिकारप्राप्ता, इत्यात्मनस्तन्नित्यपत्नीत्वं द्योतितम्, अतएव सम्वोधयति—प्रभो हे स्वामिन्निति ॥ १२ ॥

### श्रीमद्वीरराघवाचार्यकृता भागवतचन्द्रचन्द्रिका

स कार्ष्णिः कृष्णस्यापत्यं प्रद्युम्नः नातिदीर्घेणाल्पेनैव कालेन रूढं प्राप्तं यौवनं यस्य सः विभ्रमं सम्मोहं जनया-मास ॥ ९ ॥ सेति । अङ्ग हे राजन् ! सा मायावती तं प्रद्युम्नं रूढयौवनं प्रीत्या सौरतैर्भावैरुपतस्थे अभजत्कथंभूता व्रीडया सहितो यो हास्तेन उत्तम्भिते भ्रुवौ यस्यास्तया दृशेति विशेष्यस्याध्याहारः ईक्षतीक्षमाणा ॥ १० ॥ तथा भगवान् कार्ष्णिस्तां मायावतीमाह उक्तिमेवाह हे मातरिति-तव मतिरन्यथा विपरीता वभूव अन्यथात्वमेव दर्शयति । मातृभावमिति । कामिनी पुंश्चली यथा तद्वत् ॥ ११ ॥ एवमुक्ता प्राह रतिः । भवानिति चतुर्भिः । नारायणस्य श्रीकृष्णस्य सुतः एवं चेत्तद्गृह एव किं न वसामि इत्यत आह । शम्वरेणेति । गृहान्नारायणस्य गृहात्तवाहं दयिता प्रियतमा पत्नी ॥ १२ ॥

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी

उत्तम्भिता नर्त्तिता या भ्रूस्तया उपलक्षितैः सौरतैर्भावैः अत्रेदं तत्त्वं अद्य वा श्वो वा सर्वं तत्त्वमस्मै ज्ञापयित्वैव सौरतान् प्रभावान् प्रकाशयिष्यामीति विचारितवत्या एव तस्या देवाद्रहसि विज्ञापनात् पूर्वमेव कामवैवश्यात् ते भावाः स्वयमेवोद्भूता इति ॥ १० ॥ भगवानिति । सार्वज्ञ्यादिगुणयुक्तोऽपि लीलानिधेः कृष्णस्यैवेच्छया सार्वज्ञ्याद्यावरणात्तथोवाचेत्यर्थः । वास्तवार्थस्तु

अतो भावात्तेऽन्यथा मतिर्मा भवत्विति शेषः यतस्त्वं मातृभावमतिक्रम्यैव वर्त्तसे यथा यथावत् कामिनी मत्कान्तेवेति ॥ ११ ॥ अहं पत्नी तं कामदेवमेव मत्वोक्तिस्तेन प्रद्युम्नेनापि स्पर्शमणिन्यायेनैव स्वस्पर्शेन सा स्वकान्ता कृता वस्तुतस्तु अनिरुद्धमातेव तस्य स्वशक्तिरिति श्रीवैष्णवतोषणी ॥ १२–१८ ॥

### गूढार्थदीपिनी

रूढं प्रकटितम् । विभ्रमं सम्मोहम् उन्मादं वा ॥ ९ ॥ अङ्ग हे राजन् सा रतिः सौरतैः सुरतसम्बन्धिभावैस्तमुपतस्थेऽभजदित्यन्वयः । कीदृशी । व्रीडासहितहासेन उत्तभिते नर्तिते भ्रुवौ यस्यास्तया दृशा तमीक्षती ॥ १० ॥ कार्ष्णिः कृष्णपुत्रः । अन्यथा विपरीता । यथा पुंश्चली तथा वर्तसे व्यवहरसि ॥ ११ ॥ अधिकृता अधिकारप्राप्ता ॥ १२ ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

विभ्रमं संमोहम् ॥ १० ॥ अङ्ग हे राजन् ! उपतस्थे अभजत् ॥ ११–१२ ॥

### श्रीसत्यधर्मकृता श्रीभागवतटिप्पणी

असूर्यं सूर्यत्वेन वदन्तीति बाला मूर्खास्तेषां । न चेद्रविरयमरविन्दाक्षेयती द्युतिः कथमन्यस्येत्यतः कथयति ॥ मणिना ज्वलन्निति ॥ ९ ॥ कृतं कौतुकं मङ्गलं येन तद्गृहं विप्रैः ॥ १० ॥ दिने दिने प्रतिदिनं पञ्चविंशतितुलात्मक एको भारस्तदष्टकमष्टौ भारान्सृजति । यद्वा विंशतितुलात्मक एको भारश्चतुर्भिर्व्रीहिभिर्गुञ्जा गुञ्जान्पञ्च पणं पणान् । अष्टौ धरणमष्टौ च कर्षतश्च चतुरं पलं । तुलापञ्चशते प्राहुर्भारः स्याद्विंशतिस्तुला इत्युक्तः । भारस्तु विविधे स्वर्णपलानामयुतद्वय इति विश्वः । दुःसाध्या भिक्षा येषां ते दुर्भिक्षा विशेषणाभावाद्विशिष्टाभावः । मारीकिण्याद्यरिष्टानि भाव्यशुभसूचकानि सर्वेऽपि व्याधयो रोगाः ॥ ११ ॥ मायिनः कपटिनो यद्राष्ट्रे यस्मिन्देशे मणिरभ्यर्चितस्तस्मिन्देशे एते न सन्ति न प्रादुष्ष्येयुः क्वापि कदाचित् शौरिणा कृष्णेन यदुराजायोग्रसेनार्थं याचितः ॥ १२ ॥

### श्रीमद्वल्लभाचार्य्यकृता सुबोधिनी

ततोऽल्पेनैव कालेन मत्स्योदरसम्बन्धात् भगवत्सम्बन्धाच्च सप्तम एव वर्षे यौवनं प्रादुर्भूतमित्याह **नातिदीर्घेण कालेनेति** । षोडशे वर्षे यौवनप्रादुर्भावः, कस्यचित् द्वादशे, कस्यचिदष्टम एव । अयं नातिदीर्घः कालः । यतः कार्ष्णिः पितुः पुत्रः । रूढं यौवनं यस्य । तदा वीक्षन्तीनां विभ्रमं जनयामास । युवतीनां यदा मनोवृत्तिः, तदा सर्वजनीनं यौवनम् । अन्यथा अलौकिकमेव यौवनं स्यात् । किंबहुना वीक्षन्तीनां देवस्त्रीणामपि जनयामास ॥ ९ ॥ ततः पतित्वात् चिरमभिलषितत्वात् यौवनविलम्बाच्च प्राप्ते यौवने तमुपतस्थे । एतदग्रिमकार्यार्थं निरूप्यते **पद्मदलायतेक्षणमिति** । कामोद्बोधकत्वात् कामत्वाच्च । तस्याः सङ्गाभावेन स्थातुमशक्तिमाह **प्रलम्बबाहुमिति** । उपगूहनसामर्थ्यं सर्वाङ्गसुखत्वाय । **नरलोकसुन्दरमिति** । तादृशे मोह उचित एवेति हेतुरुक्तः स्वभावोद्गिरणार्थम् । प्रथमतो व्रीडा नवसङ्गमं भावयति । ततो जाते रसे हासः । उभाभ्यामुत्तम्भिता या भ्रूः । सङ्गेच्छां पातिव्रत्यं च कटाक्षदर्शनेन सूचयन्ती प्रीत्या उपतस्थे । इदमुपस्थानं न देवताराधनमिव, किन्तु सौरतैः सुरतभावैः, यत इयं रतिः । ततः प्रद्युम्नः क्रियाशक्त्यैवाविर्भूत इति ज्ञानाभावस्तस्य प्रकाश्यते भगवद्वैलक्षण्याय । अन्यथा तुल्यतैव स्यात् । यदि ज्ञानशक्तिरपि भवेत् ॥ १० ॥ **तामाहेति** । भगवान् धर्मपरः, यतः कार्ष्णिः । मर्यादार्थमवतीर्णः । सदानन्दाङ्कुरोऽपि सदानन्द एवेति अपेक्षाभावाद्वा तथोक्तवान् । **मातरिति** सम्बोधनात् अज्ञानम् । व्यवहारे तथात्वात् । अनेन कामस्य धर्मविरोधित्वं सहजं निरूपितम् । अन्यथा मातृपदमुच्चार्य पश्चात्तस्यां सङ्गं न कुर्यात् । लौकिकी भाषेयमिति न पारमार्थिको विरोधः । माता हि मानं पालयति स्वस्य अन्यस्य च । न हि विवृतेष्वङ्गेषु मानं तिष्ठति । अतः सर्वप्राणिनामेव माता संरक्ष्या । अतो मातृभावं परित्यज्य गुप्तं कामं दूरीकृत्य यथा कामिनी प्रकटकामा तद्वद्वर्तस इति ॥ ११ ॥ तदा तिरोहितज्ञानमेनं मत्वा अज्ञानादुक्तमनुक्तमिति बोधयति **भवान्नारायणसुत** इति । स हि शम्बरं पितरं तां च मातरं मन्यते । तन्निषेधार्थमाह **नारायणसुत** इति । एकनिषेधेनैव इतरस्य सिद्धत्वात् । स्वरूपं चाग्रे वक्तव्यमिति निरूपयति । नारायणपुत्रः कथमत्रागत इत्यत्रोपपत्तिमाह **गृहाच्छम्बरेण हृत** इति । साधारण्यपि धात्री मातृवदेव परिपालयेति चेत्, तत्राह **अहं ते दयिता पत्नीति** । दयितात्वाल्लोकतस्त्यागं नार्हति । पत्नीत्वान्न वेदतः । तथापि लोके प्रसिद्ध्यभावात् कथमेवमिति चेत्, तत्राह **रतिरिति** । **भवांश्च काम इति** ॥ १२ ॥

### श्रीसुबोधिनी–सारः

नातिदीर्घेणाल्पेन कालेन प्राप्तयौवनः सः कार्ष्णिः कृष्णपुत्रः वीक्षंतीनां पश्यंतीनां नारीणां विभ्रमं संमोहं जनयामास ॥ ९ ॥ पद्मस्य दलवत् पत्रवदायते विशाले ईक्षणे नेत्रे यस्य तं प्रलंबौ बाहू यस्य तं नरलोके सुंदरं तं पतिं सव्रीडेन सलज्जेन हासेन उत्तभितोज्जृंभिता या भ्रूस्तया ईक्षती प्रेक्षमाणा सती रतिः सौरतैर्भावैः कामकेलिभिः प्रीत्योपतस्थे सिषेवे हे अंग ॥ १० ॥

भगवान् कार्ष्णिः प्रद्युम्नः तां स्त्रीमाह हे मातः "यौ पोषकौ तौ पितरौ प्रदिष्टौ" इत्युक्तेः। ते तव मतिर्बुद्धिरन्यथा विपरीताऽस्ति। कथमित्यत आह। मातुर्भावमतिक्रम्योल्लंघ्य कामिनी भार्या यथा वर्त्तते तथा त्वं वर्त्तसे यद्वाऽतस्ते मतिरन्यथा इति योजना।११। रति वाक्यम्। नारायणस्य श्रीकृष्णस्य सुतः पुत्रो भवान् सूतिगृहाच्छंवरेणाऽऽहृतः आनीतः। हे प्रभो अहं ते तवाऽधिकृता पत्नी रतिरस्मि भवान् कामदेवोस्ति॥ १२॥

## गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

नातिदीर्घेण अल्पेनैव कालेन रूढं प्राप्तं यौवनं यस्य सः कार्ष्णिः कृष्णस्यापत्यं प्रद्युम्नः स्वसौन्दर्यादिगुणैः पश्यन्तीनां नारीणां विभ्रमं सम्मोहं जनयामास॥ ९॥ 'परमविवेकित्वेन अस्मदादितुल्यत्वात्तव चित्तविकाराशङ्काभावादेतद्रहस्यं कथयामि' इति सूचयन् सम्बोधयति—अङ्गेति। पद्मदलवदायते ईक्षणे यस्य तम्, प्रलम्बौ बाहू यस्य तम्, नरलोकेषु सुन्दरं तं रूढयौवनं पतिं प्रद्युम्नं व्रीडया सहितो यो हासस्तेन उत्तम्भिते भ्रुवौ यस्याः तया दृशा ईक्षती ईक्षमाणा सा मायावत्याख्या रतिः प्रीत्या सौरतैर्भावैरुपतस्थे अभजत्॥ १०॥ तदा च भगवान्, कार्ष्णिः प्रद्युम्नस्तां मायावतीमाह। तदुक्तिमाह—हे मातः! तव मतिरन्यथा विपरीता दृश्यते। वैपरीत्यमेव दर्शयति—मातृभावमतिक्रम्य परित्यज्य कामिनी पुंश्चली यथा तथा वर्तसे इति॥११॥ एवमुक्ता रतिराह-भवान्नारायणस्य कृष्णस्य सुतः शम्बराख्येनासुरेण तद्गृहादाहृतः, हे प्रभो! अहं च ते तवाधिकृता अधिकार-प्राप्ता पत्नी। तत्र हेतुमाह—रतिर्नाम्न्यहम्, भवान् कामश्चेति॥ १२॥

## अन्वितार्थप्रकाशिका

नेति॥ नातिदीर्घेण अल्पेनैव कालेन पौगण्ड एवेत्यर्थः। रूढं प्राप्तं यौवनं यस्य सः कार्ष्णिः कृष्णस्यापत्यं प्रद्युम्नः स्वसौन्दर्यादिगुणैः पश्यन्तीनां नारीणां विभ्रमं संमोहं जनयामास॥ ९॥ सेति॥ अङ्ग हे राजन्! पद्मदलवदायते ईक्षणे यस्य तं प्रलम्बौ बाहू यस्य तं नरलोकेषु सुन्दरं तं रूढयौवनं पतिं प्रद्युम्नं व्रीडया सहितो यो हासस्तेन उत्तभिते भ्रुवौ यस्याः तया दृशा ईक्षती ईक्षमाणा। प्राग्वदार्थः। सा मायावत्याख्या रतिः प्रोत्या सौरतैर्भावैरुपतस्थे अभजत्॥ १०॥ तामिति। भगवान् सर्वज्ञोऽपि कार्ष्णिः प्रद्युम्नस्तां मायावतीमाह स्म। हे मातःतव मतिरन्यथा विपरीता दृश्यते। मातृभावमतिक्रम्य परित्यज्य कामिनी पुंश्चली यथा तथा वर्तसे। इदं वचश्च लीलानिधेः कृष्णस्येच्छया प्रद्युम्नस्य सर्वज्ञत्वावरणात्। वस्तुतः अतः भावात्ते मतिरन्यथा मा भवतु। यतस्त्वं यथा यथावत् कामिन्येव अतः मातृभावमतिक्रम्यैव वर्तसे॥ ११॥ भवानिति। भवान्नारायणस्य कृष्णस्य सुतः शम्बराख्येनासुरेण तद्गृहादाहृतः। हे प्रभो! अहं च ते तवाधिकृताधिकारप्राप्ता पत्नी रतिर्नाम भवान्कामश्च। अहं पत्नीति तं कामदेवं मत्वोक्तिः। प्रद्युम्नेनापि स्पर्शमणिन्यायेनैव स्वस्पर्शेन सा स्वकान्ता कृता। वस्तुतोऽनिरुद्धमाता तस्य शक्तिरिति तोषिणी॥ १२॥

## श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्

कार्ष्णिः कृष्णपुत्रः। विभ्रमं मोहं॥ ९॥ सव्रीडहासेन उत्तभिता उन्नताया भ्रूस्तया। अंग हे राजन्। सौरतैः। कामाविर्भावचेष्टाभिः उपतस्थे सिषेवे॥ १०॥ अतिक्रम्योल्लंघ्य॥ ११॥ अधिकृता त्वदधिकारतुल्यायतो रतिरहं भवान् काम इति॥ १२॥

## भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

नातीति। कार्ष्णिः कृष्णस्यापत्यं स प्रद्युम्नः, नातिदीर्घेण कालेन, रूढं प्राप्तं यौवनं यस्य तथाभूतः सन्, वीक्षन्तीनां स्वं निरीक्षमाणानां, नारीणां, विभ्रमं च संमोहमपि, जनयामास॥ ९॥ सेति। अङ्ग हे राजन्, सा रतिर्मायावती, पद्मदले इवायते दीर्घे ईक्षणे नयने यस्य तं, प्रलम्बावाजानुलम्बिनौ बाहू यस्य तं, नरलोकेषु सुन्दरस्तं, पतिं स्वासाधारणस्वामिनं, तं प्रद्युम्नं, व्रीडया सहितो यो हासस्तेनोत्तभिते भ्रुवौ यस्यास्तया, दृशेति विशेष्यस्याध्याहारः। प्रीत्या, ईक्षतीक्षमाणा सती, सौरतैः सुरतसंबन्धिभिर्भावैः, उपतस्थेऽभजत्॥ १०॥ तामिति। भगवान् कार्ष्णिः कृष्णसूनुः, तां मायावतीं, आह। हे मातः, ते तव मतिः अन्यथा विपरीता, कथं बभूवेति शेषः। अन्यथात्वमेव दर्शयति। मातृभावं मातुः स्वभावं, अतिक्रम्य कामिनी यथा तथा, वर्त्तसे। पत्नीं प्रति मातरिति संबुद्ध्योच्चारणं लोकेऽशोभनमिति केचिदेवं व्याख्यां कुर्वन्ति। त्वं सौरतैः, उपस्थिताऽसि। अतः ते तव, मतिः अन्यथा मा भवतु। इति, भगवान् तां मायावतीं, आह। ननु किं मन्मतेरन्यथात्वं तत्राह। त्वं मम पोषिकाहं तव पोष्य इत्येवंरूपं मातृभावं, अतिक्रम्योल्लङ्घ्य, कामिनी पुंश्चली, यथा तद्वत्, वर्त्तसे। इदं त्वन्मतेरन्यथात्व-मिति सम्बन्धः॥ ११॥ एवमुक्ता रतिः प्राह भवानिति चतुर्भिः। भवानिति। भवान् नारायणसुतः श्रीकृष्णपुत्रः, एवं चेद्गृह एव किं न वसामीत्यत आह। गृहात्तद्भवनात्, शम्बरेण, आहृतः। हे प्रभो, अहं ते तव, दयितातिप्रिया, पत्नी, भवामि। भवान् कामः, भवति॥ १२॥

**कृष्णप्रिया**

श्रीकृष्ण भगवान के कुमार श्री प्रद्युम्न जी अल्प दिनों में ही युवावस्था में आ पहुँचे और श्री प्रद्युम्न जी का रूप-लावण्य-सौन्दर्य भगवान श्रीकृष्ण के सदृश होने से जो ललनाएँ इनकी नजर करती उतने में उनके हृदय में शृङ्गार-रस का प्रादुर्भाव हो जाता था ॥ ९ ॥ श्री प्रद्युम्न जी के रूप-लावण्य के लिये क्या कहा जाय ! पद्मदल के सदृश कोमल विशाल एवं रसाल नेत्र थे, घूटनों पर्यन्त लम्बी-लम्बी भुजाएँ और नरलोक सुन्दर श्री विग्रह-अङ्ग था। सौन्दर्यमयी रति देवी, लज्जा-मधुर हास्य भरी नजरों से प्रद्युम्न कुमार की ओर देखती थी एवं रससभर दाम्पत्य भाव को अभिव्यक्त करती सेवा शुश्रूषा कर रही थी। तब श्री वासुदेव नन्दन भगवान श्रीप्रद्युम्न कुमार जी ने श्रीरति के भावों में परिवर्तन देखकर कहा कि हे दवी आप तो मेरी मां के समान हो और आपका भाव व्यवहार मति आदि मुझे उलटे मालूम लगते हैं। आपकी मति में यह परिवर्तन कैसे आया ! मैं दिन-प्रतिदिन देख रहा हूँ कि आप मातृ-वात्सल्य को छोड़कर पत्नी के समान शृङ्गार भय हाव-भाव दिखा रही हो। स्पष्ट कीजिये क्या है ॥ ११ ॥ श्रीरति देवी ने पति देव को निवेदन किया कि ! हे नाथ ! आप साक्षात् श्रीनारायण स्वरूप भगवान श्रीकृष्ण के सुकुमार सुपूत हो। यह शम्बरासुर आपको श्रीरुक्मिणीजी के सूतिका घर से चुरा लाया और आपको सागर में पटक दिये थे। आप स्वयं साक्षात् कामदेव हो और मैं आपकी नित्य को धर्माङ्गिनी पत्नी रति हूँ ॥ १२ ॥

**एष त्वानिर्दशं सिन्धावक्षिपच्छम्बरोऽसुरः । मत्स्योऽग्रसीत्तदुदरादिह प्राप्तो भवान् प्रभो ॥ १३ ॥**
**तमिमं जहि दुर्धर्षं दुर्जयं शत्रुमात्मनः । मायाशतविदं त्वं च मायाभिर्मोहनादिभिः ॥ १४ ॥**
**परिशोचति ते माता कुररीव[1] गतप्रजा । पुत्रस्नेहाकुला दीना विवत्सा गौरिवातुरा ॥ १५ ॥**
**प्रभाष्यैवं ददौ विद्यां प्रद्युम्नाय महात्मने । मायवती महामायां सर्वमायाविनाशिनीम् ॥ १६ ॥**

**कर्दमक्षमा**

अन्वयः—हे प्रभो ! अनिर्दशम्, त्वा, एषः, शम्बरः, असुरः, सिन्धौ, अक्षिपत्, ( ततः त्वाम् ) मत्स्यः, अग्रसीत्, हे प्रभो ! तद्, उदरात्, भवान्, इह, प्राप्तः ॥ १३ ॥ मायाशतविदम्, दुर्मर्षम्, दुर्जयम्, तम्, इमम्, आत्मनः, शत्रुम्, त्वम्, मोहनादिभिः, मायाभिः, जय. च, जहि ॥ १४ ॥ गतप्रजा, पुत्रस्नेहाकुला, दीना, विवत्सा, गौः, इव, आतुरा, ते, माता, कुररी, इव, परिशोचति ॥ १५ ॥ एवम्, प्रभाष्य, मायावती, महात्मने, प्रद्युम्नाय, सर्वमायाविनाशिनीम्, महामायाम्, विधाम्, ददौ ॥ १६ ॥

**श्रीधरस्वामिविरचिता भावार्थदीपिका**

दुर्जयत्वे हेतुः मायाशतविदमिति। कथं तर्हि हंतव्यस्तत्राह—मायाभिरिति ॥ १४ ॥ नचात्र विलम्बः कार्य इत्याह—परिशोचति रोदितीत्यर्थः ॥ १५–१८ ॥

**श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः**

एष यद्गृहेऽहमधुना तिष्ठामीत्येषपदार्थः। तदुदरान्मत्स्योदरात्। कथं हृत इत्यपेक्षायां तं प्रकारं कथयन्ती कोपं जनयति–एष इति ॥ १३ ॥ तं शंबरम्। इमं साक्षादत्रैव वर्तमानम्। दुर्धर्षं कृच्छ्रेणैव व्यप्रयितु शक्यम्, अतः सुतरां दुर्जयम्। हननञ्च योग्यमेव शत्रुत्वादित्याह–आत्मनः स्वस्य शत्रुं क्लेष्टारम्। आदिना शोषणादय आग्नेयादयो वा ॥ १४ ॥ 'उत्क्रोश-कुररौ समौ' इत्यमरः। इत्यर्थ इति–पर्युपसर्गवशाच्छोचते रोदनार्थत्वं परस्मैपदित्वं चेति भावः। पुत्रस्नेहोत्थो मातुः प्रसिद्धो यश्चित्तद्रवविशेषस्तेनाकुला—किं कर्तव्यं कथं मे पुत्रदर्शनं स्यादित्येवं मूढा, अत एवातुरा व्याधितैव शोकरोगग्रस्ता तत एव दीना परिक्षीणा तत एव परितः सर्वत्रैव शोचति सरोदनं विलपतीत्यर्थः। तत्र हताशत्वांशे दृष्टान्तः–गतप्रजा कुररीवेति, कुररी पक्षिविशेषभार्या। धृताशत्वांशे गौरिवेति। पूर्वा हि स्वबालकनाशे पूर्ववत्तदाहारं नाहरति किन्तु रोदित्येव, उत्तरा तु मृतमपि स्तनं पाययितुमुद्यच्छतीति ॥ १५ ॥ एवमुक्तविधया। महामायामतिप्रबलां विद्याम्, तदर्थमेव तत्पार्श्वे रुद्रेण न्यस्ता, न तु ततो विद्यास्वीकारेण तत्र गुरुत्वं संभावनीयं निजन्यासाऽऽदानेपि तत्स्वीकारेऽतिप्रसंगात्। प्रकर्षेण सोत्साहोत्तेजनादिना भाषित्वा। तस्यास्तद्दित्सायां हेतुः—महात्मने, अल्पवयस्त्वेपि प्रकाशितबलबुद्धित्वेन तद्योग्यायेत्यर्थः। यद्वा—गंभीराय प्रकाशितनिज-प्रभावाय। विनाशिनीमिति णिन्यंतः पाठः, क्वचिल्ल्युडंतोपि ॥ १६ ॥

---

१. कुरङ्गीव मृत–विज।

**श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी**

कथं हृत इत्यपेक्षायां तत्प्रकारं कथयन्ती कोपं जनयति। एष इति ॥ १३ ॥ इमं साक्षादत्रैव वर्त्तमानं दुर्धर्षं कृच्छ्रेणैव व्यग्रयितुं शक्यम् अतः सुतरां दुर्जयं हननं च योग्यमेवेत्याह। आत्मनः शत्रुमिति। आदिशब्दाच्छोषणादयः आग्नेयादयो वा ॥ १४ ॥ पुत्रस्नेहाख्यो मातुः प्रसिद्धो यश्चित्तद्रवविशेषस्तेनाकुला किं कर्त्तव्यमिति मूढा तत एवातुरा व्याधितेव तत एव दीना अति दुःखिता तत एव परित सर्वत्रैव शोचति सरोदनं विलपतीत्यर्थः। तत्र हृताशत्वांशे दृष्टान्तः गजप्रजा कुररीवेति धृताशत्वांशे गौरिवेति पूर्वा हि स्वबालकनाशे पूर्ववत्तदाहारं नाहरति किन्तु रोदित्येव उत्तरा तु मृतं गतमपि स्तनं पाययितुमुद्यच्छतीति॥१५॥ प्रकर्षेणोत्साहोत्तेजनादिना भाषित्वा तस्यास्तद्दित्सायां हेतुः महात्मने अल्पवयस्त्वेऽपि प्रकाशितबलबुद्धित्वेन तद्योग्यायेत्यर्थः यद्वा गम्भीराय अप्रकाशितनिजप्रभावायेत्यर्थः। विनाशिनीमिति णिजन्तः पाठः क्वचिल्युडन्तोऽपि ॥ १६ ॥

**श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी**

कथं हृत इत्यपेक्षायां तत्प्रकारं कथयन्ती कोपं जनयति—एष इति। ननु कुतोऽक्षिपत्? तत्राह—असुरः स्वभावतो देवशत्रुत्वादित्यर्थः। तत्र च शम्बरो महामायित्वेन दैत्येषु श्रेष्ठः, किंवा कामशत्रुतया प्रसिद्ध इत्यर्थः। इह महानसे अन्तःपुरे वा; 'प्रभो' इति पुनरपि सम्बोधनं स्वामित्व-दार्ढ्यार्थम्, किंवा प्रार्थ्यशम्बरवधसामर्थ्यमुद्भावयति ॥ १३ ॥ इमं साक्षादत्रैव वर्त्तमानं दुर्द्धर्षमभिभवितुमशक्यम्, यतो दुर्ज्जयम्; हननञ्च योग्यमेवेत्याह—आत्मनः शत्रुमिति। आदि-शब्दात् शोषणादय आग्नेयादयो वा ॥ १४ ॥ गता नष्टा त्रपा लोकलज्जा यस्याः सा, पाठान्तरेऽपगतपुत्रा। ननु तादृशे भर्त्तरि विराजमाने तादृशशोचनमयुक्तम्, तत्राह—पुत्रेति। अतएव दीना त्यक्तभोगसुखा, आतुरा च विचारादिरहिता। तत्र दृष्टान्तः—नष्टवत्सा सौरिवेति, कुररीवेति च परिशोचने। अन्यत्तैर्व्याख्यातम्। यद्वा, परितः सदा सर्व्वत्र महार्त्त्या करुणस्वरेण शोचति विलपति, न केवलं परिशोचति परमदुरवस्थाञ्च प्राप्तेत्याह—पुत्रेति। आतुरा रोदनपरवशाभूदित्येवं वाक्यद्वये दृष्टान्तद्वयम्, इत्यत्यन्तमुत्तेजितः ॥ १५ ॥ एवमीदृशं प्रकर्षेण सभावोत्तेजनादिना भाषित्वा, महात्मने महाबुद्धय इति तद्विद्यायोग्यतोक्ता। मायावतीति शम्बरतोऽप्यधिक-मायावित्वाभिप्रायेण, अतएव महामायाख्यामतएव सर्व्वासां शम्बरादिज्ञातानां मायानां विनाशनशीलामिति। पाठान्तरेऽपि स एवार्थः। यद्वा, महात्मनेऽपरिच्छिन्नशक्तये, माया मोहस्तद्वती, सर्व्वविद्यावतेऽपि केवलं प्रेममोहेन ददावित्यर्थः। अन्यत् समानम् ॥ १६ ॥

**श्रीमद्वीरराघवाचार्यकृता भागवतचन्द्रचन्द्रिका**

एषः। शम्बरोऽसुरोऽनतीतदशाहमेव त्वां समुद्रे पातयामास हे प्रभो! समर्थ ॥ १३ ॥ तमात्मनः शत्रुं शम्बरं जहि दुर्जयत्वे हेतुः मायाशतविदमिति। कथं तर्हि हन्तव्यस्तत्राह। मायाभिरिति। मोहनमादिर्यासां ताभिर्मायाभिर्मयोपदेक्ष्यमाणा-भिरिति शेषः ॥ .४ ॥ न चात्र विलम्बः कार्य्य इत्याह। परिशोचतीति। तव माता रुक्मिणी हृता विनष्टा अदृष्टेति यावत् प्रजा पुत्रो यस्या सा कुरङ्गीव हरिणीव शोचति किंच पुत्रस्नेहेनातुरा विवत्सा विनष्टवत्सा अत एवातुरा गौर्यथा तद्वत् ॥ १५ ॥ प्रभाष्येति सर्वाः शत्रोः सम्बधिनीर्मायाः विनाशयतीति तथा तां मायां मोहनादिमायात्मिकां विद्यां ददौ ॥ १६ ॥

**गूढार्थदीपिनी**

त्वा त्वाम् अनिर्दशम् अनतीतदशदिनमेव ॥ १३ ॥ दूर्धर्षं दूरतिक्रमणीयम्। अत एव मायाभिः ॥ १४ ॥ कुररी पक्षिणीव। परीत्युपसर्गवशात् शोचते रोदनार्थं परस्मैपदित्वं च लक्ष्यते ॥ १५ ॥ मायां मन्त्रात्मिकां विद्याम् ॥ १६ ॥

**श्रीसत्यधर्मकृता श्रीभागवतटिप्पणी**

अर्थकामुको निरन्तरं तदतिसृज्य सुवर्णकामुकः प्राग्या कर्तव्यत्वेनातर्कयदिदमेव कर्तव्यमित्यूहितवानन्तरं नैव प्रादात्प्रतिमुच्याबाध्य ॥ १३ ॥ प्रसेनो नाम्ना तद्भ्राता व्यचरच्चचार मृगयां गतमाच्छिद्यापहृत्य केसरी सिंहः ॥ १४ ॥ बिलं स्वावासं सोऽपि जाम्बवानपि क्रीडनं क्रीडासाधनम् ॥ १५ ॥ पर्यतप्यत सन्तप्तोऽभूत्। ततश्चैवमूहितवानित्याह ॥ प्राय इति॥१६॥

**श्रीमद्वल्लभाचार्य्यकृता सुबोधिनी**

कामस्य कथमत्र शत्रुगृहे स्थितिरिति, तत्राह एष त्वेति। एष त्वामिति। असुरत्वात्तथाकरणम्। मत्स्यो हि स्वज्ञाति-घाती। तदुदरादिह प्राप्त इत्यनेन सोऽपि हतो निरूपितः ॥ १३ ॥ शम्बरः परमवशिष्यते, अतस्तं जहीत्याह तमिममिति। सावधानत्वाय तस्य गुणानाह **दुर्धर्षं दुर्जयं शत्रुं मायाशतविदमिति**। दुर्धर्षत्वात् न लौकिककोपायेन मारयितुं शक्यः। अनेन विषदानादिप्रकारा अपि व्यावर्तिताः। दुर्जयत्वात् क्षत्रियधर्मेणापि मारयितुमशक्यः। शत्रुत्वान्नोपेक्षणीयः। **आत्मन इति**।

घातादेव निवर्तते, नान्यथेति सूचितम्। तर्हि अलौकिकयुद्धेन मारणीय इति पक्षं निवारयति **मायाशतविदमिति**। तर्ह्यवध्यः कथं मारणीय इति चेत्, तत्रोपायमाह। **त्वं च मायाभिर्मोहनादिभिः** सहितः **इमं जहि**। आदौ मोहय, ततस्तन्मायाः प्रतियोगिमायाभिर्दूरीकुरु। असुराणां हि माया भगवानिति, 'तस्मादेवं वित् सर्वैरेव प्रकारैः उपासीते'ति उपासनायास्तुल्यत्वात्। अनेकधोपासकस्य विशिष्टत्वाच्च मोहनादिभिर्मायाभिस्तन्मायादूरीकरणं युक्तमेव ॥ १४ ॥ ननु यथा ममाज्ञानम्, एवं तस्यापीति ज्ञाने सत्येव अपकारित्वात्, न मारणीय इति चेत्, तत्राह परिशोचतीति माता हि दयापात्रम्, अतस्तद्दुःखदूरीकरणार्थं मारणीय एवेति भावः। **ते मातेति** सम्भावनया वदति। तस्या रुक्मिणीत्वं वा वैदर्भीत्वं वा न शोकनिवारकमिति तन्नोक्तम्। **कुररी** विवेकरहिता, सा रात्रौ शोचति। अनेन निद्राभावोऽपि सूचितः। गतप्रजेति शोकहेतुः। गता केनचिदपहृता प्रजा यस्याः। नष्टायां पुनरावृत्तिशङ्काभावात्तथा न शोकः। सापि प्रजा पुत्ररूपेति नान्तःशोकमात्रं जनयति, किन्तु सर्वदेहेन्द्रियाणां सर्वक्रियाराहित्यमपि करोतीत्याह पुत्रस्नेहाकुलेति। पुत्रस्नेहोऽत्यन्तं व्याकुलतां सम्पादयतीति लोकप्रसिद्धिः। किञ्च। पितृभ्रात्रादिभिः विरोधात् परित्यक्ता। एवं बन्धुविरोधेन मातृपक्षसहायाभावात् दीना पुत्रेणैव समाहिता भवति। अतस्तदर्थमपि गन्तव्यमित्यर्थः। किञ्च। विवाहप्रभृतिमनः परितोषाभावात् जाते पुत्रे पित्रादयः मानयेरन्। तस्मिन्नपि गते चिन्तया आतुरा अपि भविष्यतीत्याह **आतुरेति**। आतुरो ज्वरी। विवेकेन सर्वसमाधानं भविष्यतीति चेत्। तत्र दृष्टान्तमाह **गौरिवेति**। वत्साभावे यथा गौः। तस्या हि न क्वापि ममता, सर्वा ममता वत्स एव भवति। अन्येषां तु विभक्ता ममता भवति। अतो गौर्दृष्टान्तीक्रियते सर्वत्र। इयं च सर्वतो ममतामाकृष्य त्वय्येव स्थापितवतीति गोतुल्या भवति। एवं निरूपणमात्रेण कार्यं न सिध्यतीति। एवं प्रभाष्य विद्यामपि ददौ। स्त्रीदत्ताया विद्यायाः तदैव सिद्धिः। प्रद्युम्नो हि विद्याग्रहणयोग्यः, नाम्नैव प्रसिद्धत्वात्। महात्मन इति विद्या फलिष्यतीति सूचितम्। सा विद्या स्वस्मिन्नागता मायैवेति ज्ञापयितुं मायावतीत्युक्तम्। दैत्यादीनामिव माया साधारणी भविष्यतीति तद्व्यावृत्त्यर्थमाह महामायामिति। इयं हि सर्वानेव भगवदंशान् व्यामोहयितुं प्रवृत्ता महामाया। ननु दैत्यानां भगवानेव माया भवतीति कथमस्या महामायात्वम्, तत्राह **सर्वमायाविनाशिनीमिति**। तत्र हि स्वल्पाभिव्यक्तिः स्वधेत्यादाविव, परव्यामोहार्थं तद्रूपो भूत्वा पालयति। न तु तेषां मोक्षं प्रयच्छति। अतो बाधकेषु जीवचैतन्यमिव तदपि तिरोभूतमिति सर्वमायाविनाशित्वम् ॥ १६ ॥

### श्रीसुबोधिनी—सारः

अनिर्दशं त्वा त्वाम् शंबरोऽसुरः सिंधौ समुद्रेऽक्षिपत् मत्स्यस्त्वामग्रसीत् तस्योदरादिहात्र भवान् प्राप्तः हे प्रभो ॥ १३ ॥ दुर्जयं दुर्धर्षमसह्यं मायाशतज्ञातारं तम् इमं शंबरमात्मनस्तव शत्रुं त्वं जहि मारय मोहनादिभिर्मायाभिः ॥ १४ ॥ गता प्रजा यस्याः सा ते तव माता रुक्मिणी कुररीव शोचति पुत्रस्य स्नेहेनाकुला व्याप्ता दीना विवत्सा वत्सहीना गौरिवातुरा दुःखिता ॥ १५ ॥ एवं प्रभाष्य संबोध्य मायावती महात्मने प्रद्युम्नाय सर्वमायानां विनाशिनीं महामायां विद्यां ददौ ॥ १६ ॥

### विवरणटिप्पणी

परिशोचतीत्यस्यभासे। **एवं तस्यापि**। इति हेतोर्न मारणीय इति संबन्धः। तत्र हेतुः **ज्ञाने** सत्येवापकारित्वादिति। व्याख्याने। **तस्या** इति। मातुः रुक्मिणीत्वे उक्ते रुक्मसंबन्धेन सर्वसंपत्तियुक्तत्वात्तथाशोको न संभाव्येत। वैदर्भीत्वे वा उक्ते भक्तिप्रधानत्वाच्छोको न संभाव्येत। अतो मातेत्येव सामान्यत उक्तम्, न तु विशेषः कश्चनोक्त इत्यर्थः। प्रभाष्यैवमित्यत्र। **स्त्रीदत्ताया** इति। स्त्री हि सुहृत्तमा आत्मनोऽर्धं च भवति। अतस्तद्दत्ताया विद्याया दानसमये एव सिद्धिर्भवतीत्यर्थः। अतः स्त्रिया कथितं शीघ्रमेव हृदयारूढं भवतीति लोकेऽपि प्रसिद्धिः। अनेकधोपासकस्य विशिष्टत्वमनुपदमुक्तम्। तादृशोपासनासिद्धेयं मायेत्याशयेनाहुः **इयं हीति**। **भगवदंशान्**। मायारूपस्य भगवतः अंशानित्यर्थः। **स्वधेत्यादाविवेति**। यथा स्वधाकारेण कव्ये दत्ते भगवान् पितृरूपो भूत्वा तं पुत्रं पालयति, न तु भगवान् प्रकट इति तावता तेषां पुत्राणां मोक्षं प्रयच्छति, संघातात्मबुद्धिं वा नाशयति। तथा फट्जहीत्यादिशब्दैरुपासने कृते अन्यव्यामोहार्थं मायारूपो भूत्वा भक्तं पालयति, न तु मायान्तरं नाशयति, तावत्कार्यार्थमेव प्राकट्यादित्यर्थ। **अत** इति। यथा बाधकेषु दैत्येषु विद्यमानमपि जीवनिष्ठं भगवदंशत्वरूपं चैतन्यं तिरोभूतं जीवनातिरिक्तकर्मज्ञानादिकार्यासंपादकम्, अतो जीवत्वस्य तुल्यत्वेऽपि तेषामधर्मे एव रुचिः। देवेषु तु भगवदंशत्वस्य प्रकटत्वात्सर्वकार्यसिद्धिः। तथा शम्बरमायायां विद्यमानमपि भगवत्त्वं तिरोभूतं पालनातिरिक्तमायान्तरविनाशादिकार्यासंपादकम्, अतो मायात्वस्य तुल्यत्वेऽपि पालनमात्रमेव संपादयति। प्रद्युम्नमायायां तु भगवत्त्वस्य प्रकटत्वात्सर्वकार्यसिद्धिः। अतोऽस्य जयः। प्रद्युम्ने तथा प्राकट्ये हेतुस्त्वनेकधोपासकत्वं पूर्वमुक्तम्। शम्बरमायायाः पालनमात्रकर्तृत्वेऽपि प्रद्युम्नमायया तस्या एव नाशान्न पालनमपि संपन्नमिति भावः।

### गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

'तर्हि इह कथं प्राप्त' इत्यपेक्षायामाह—एष इति। एष शम्बराख्योऽसुरः अनिर्दशं अनतीतदशदिनमेव त्वामाहृत्य समुद्रे अक्षिपत् प्रक्षिप्तवान्। तत्र च त्वां मत्स्योऽग्रसीत्। स मत्स्यो मत्स्यजीविभिरत्रानीतः, तस्योदरात् भवानिह प्राप्तः।

'हे प्रभो' इति संबोधनेन तस्य तद्धनने सामर्थ्यं सूचयति ॥ १३ ॥ मोहनादिभिर्मायाभिर्मोहयित्वा तमिममात्मशत्रुं शम्बरं त्वं जहीत्यन्वयः। 'तदुपेक्षा च न युक्ता' इत्याशयेनाह—दुर्धर्षमिति। अभिभवितुमशक्यमित्यर्थः। तत्र हेतुमाह—दुर्जयमिति। तत्रापि हेतुमाह—मायाशतविदमिति ॥ १४ ॥ 'न चात्र विलम्बः कार्य' इत्याशयेनाह—परिशोचतीति। ते तव माता परिशोचति रोदिति। तत्र हेतुमाह—दीनेति। तत्र हेतुमाह—पुत्रस्नेहेनाकुलेति। तत्रापि हेतुमाह—गतेति। गता हृता प्रजा पुत्रो यस्याः सा ॥ स्वरपूर्वकरोदने दृष्टान्तमाह—कुररी पक्षिणी इवेति। पुत्रवियोगेन व्याकुलतायां दृष्टान्तमाह—विवत्सेति। विवत्सा आतुरा गौर्यथेति तद्वदिति ॥ १५ ॥ मायावती एवं प्रभाष्य महात्मने महाप्रभाववतेऽपि प्रद्युम्नाय विद्यां ददावित्यन्वयः। 'कासौ विद्या' इत्यपेक्षायामाह—सर्वाः शत्रोर्माया विनाशयतीति तथा तां मायामिति ॥ १६ ॥

## अन्वितार्थप्रकाशिका

एष इति ॥ हे प्रभो ! एष शम्बराख्योऽसुरः अनिर्दशम् अनतीतदशदिनमेव त्वामाहृत्य समुद्रे प्रक्षिप्तवान्। तत्र च त्वां मत्स्योऽग्रसीत्। तङ्भाव आर्षः। स मत्स्यो मत्स्यजीविभिरत्रानीतस्तस्योदरात् भवानिह प्राप्तः ॥ १३ ॥ तमिति ॥ दुर्द्धर्षं दुर्जयं मायाशतविदं च तमिममात्मनः शत्रुं शम्बरं मोहनादिभिर्मायाभिर्मोहयित्वा त्वं जहि ॥ १४ ॥ परिशोचतीति ॥ दीना पुत्रस्नेहेन आकुला गता प्रजा पुत्रो यस्या सा ते तव माता कुररी पक्षिणी इव विवत्सा आतुरा गौरिव च त्वां परिशोचति ॥ १५ ॥ प्रभाष्येति ॥ मायावती एवं प्रभाष्य महात्मने महाप्रभाववतेऽपि प्रद्युम्नाय सर्वासां शत्रोर्मायानां विनाशिनीं महामायारूपां विद्यां ददौ ॥ १६ ॥

## श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्

अनिर्दशं दशदिनात्पूर्वकालिकं त्वा त्वां ॥ १३ ॥ दुर्द्धर्षं कृच्छ्रेणाकुलीकर्त्तुं शक्यं। यतो मायाशतविदं अतो दुर्जयं। हननोपायमाह मायाभिरिति ॥ १४ ॥ कुररी टिटिभा ॥ १५ ॥ दैवीं विद्यां। तां च कीदृशीं सर्वेषामासुरराक्षसभैरवादीनां मायाविनाशिनीं ॥ १६ ॥

## भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

एष इति। एषः शम्बरः, असुरः, त्वा त्वां, अनिर्दशमनतीतदशाहं जन्मतोऽतीतपञ्चदिनमित्यर्थः। तथा विष्णुपुराणे पञ्चमेंऽशे 'षष्ठेऽह्नि जातमात्रं तु प्रद्युम्नं सूतिकागृहात्। ममैष हन्तेति मुने हृतवान् कालशम्बरः' इति। एतट्टीकायां 'कालशम्बरः कृष्णवर्णो मृत्युतुल्यो वा शम्बरः' इति। सिन्धौ समुद्रे, अक्षिपत्। तत्र मत्स्यः, अग्रहीत्। हे प्रभो, भवान् तदुदरात् मत्स्यजठरात्, इह प्राप्तः ॥ १३ ॥ तमिति ॥ आत्मनस्तव, दुर्जयं, दुर्धर्षं, शत्रुं, मायाशतविदं, तं, इमं शम्बरं, मयोपदेक्ष्यमाणाभिः इति शेषः। मोहनादिभिः, मायाभिः, त्वं च त्वमपि, जहि ॥ १४ ॥ न चात्र विलम्बः कार्य इत्याह। परिशोचतीति। ते तव, माता रुक्मिणी, गतप्रजा, कुरङ्गी हरिणी इव, परिशोचति। किं च पुत्रस्नेहाकुला पुत्रस्नेहेनातुरा, अत एव दीना, सा विवत्सा, अत एव, आतुरा गौः इव, वर्त्तते ॥ १५ ॥ प्रभाष्येति। मायावती एवं, प्रभाष्य प्रद्युम्नं प्रत्युक्त्वा, महात्मने प्रद्युम्नाय, सर्वाः शत्रोः संबन्धिन्यः सकला अपि मायाः, विनाशयतीति तां, महामायां मोहनशोषणद्रावणहेतुं महामायात्मिकां, विद्यां, ददौ ॥१६॥

## कृष्णप्रिया

प्राणनाथ ! आप दस दिन के भी न थे तब इस शम्बरासुर ने आपको आया के वेष धारण कर सूतिका गृह में प्रवेश कर वहाँ से चुराकर सागर में पटक कर अपने निवास में आ गया। सागर में एक विशालकाय मत्स्य आपको निगल गया और धीमरों ने जाल में फसे मत्य को लाकर यहाँ पाक-शाला में दिया पुनः मुझे आप प्राप्त हुये यह सम्पूर्ण जो नारदजी से अवगत किया वह मैंने आपको बताया ॥ १३ ॥ नाथ ! यह शम्बासुर विविध प्रकार की माया का जानकार है। इस शम्बरासुर को जीतना या तो अपने वश करना अधिक तर कठिन है। अब आप अपने शत्रु शम्बरासुर को विशिष्ट प्रकार की मोहन संमोहन नाम की मायाओं से नष्ट कर दीजिए ॥ १४ ॥ प्रियतम ! निज संतान आपके खो जाने से आपकी वात्सल्यमयी जननी श्रीरुक्मिणीजी सुत-स्नेह से अत्यन्त आकुल-व्याकुल हो रही हैं। नाथ ! दीन-दुःखिनी जननी, बछड़ा खो जाने पर बेचारी गाय की तरह और बच्चा गुमाने पर कुररी पक्षिणी की तरह रो रही हैं ॥ १५ ॥ मायावती रति देवी ने इस प्रकार सर्व इतिहास सुनाकर परमशक्ति सम्पन्न श्री प्रद्युम्नजी को महामाया नाम की दिव्य माया विद्या सिखायी। यह विद्या ऐसी थी जो असुरों की सर्वविधमायाओं का नाश कर देती है ॥ १६ ॥

स च शम्बरमभ्येत्य संयुगाय समाह्वयत् । [1]अविषह्यैस्तमाक्षेपैः क्षिपन् सञ्जनयन् कलिम् ॥ १७ ॥

[2]सोऽधिक्षिप्तो दुर्वचोभिः पादाहत इवोरगः । निश्चक्राम गदापणिरमर्षात्ताम्रलोचनः ॥ १८ ॥

गदामाविध्य तरसा प्रद्युम्नाय महात्मने । प्रक्षिप्य व्यनदन्नादं वज्रनिर्घो[3]षनिष्ठुरम् ॥ १९ ॥

तामापतन्तीं भगवान् प्रद्युम्नो गदया गदाम् । अपास्य शत्रवे क्रुद्धः प्राहिणोत् स्वगदां [4]नदन् ॥ २० ॥

### कर्दमक्षमा

अन्वयः—सः, च, शम्बरम्, अभ्येत्य, अविषह्यैः, आक्षेपैः, तम्, क्षिपन्, कलिम्, संजनयन्, संयुगायसमाह्वयत् ॥ १७ ॥ पादाहतः, उरगः, इव, दुर्वचोभिः, अधिक्षिप्तः, सः, अमर्षात्, ताम्रलोचनः गदापाणिः निश्चक्राम ॥ १७ ॥ गदाम्, आविध्य, तरसा, महात्मने, प्रद्युम्नाय, प्रक्षिप्य, वज्रनिर्घोषनिष्ठुरम्, नादम्, व्युनदत् ॥ १९ ॥ भगवान्, प्रद्युम्नः, आपतन्तीम्, ताम्, गदाम्, गदया, अपास्य, क्रुद्धः नदन्, स्वगदाम्, शत्रवे, प्राहिणोत् ॥ २० ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

वज्रस्य निष्पेषनिर्घाते यथा निष्ठुरस्तीव्रो नादो भवति तथाभूतं नादं व्यनदत् सामान्यविशेषतया व्याप्यव्यापकत्वभावेन पाकं पचतीतिवत् अतिनिष्ठुरं नादमकरोदित्यर्थः ॥ १९–२० ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

स च ज्ञातविद्यः प्रद्युम्नः । तं शंबरम् । आक्षेपैर्भर्त्सनावाक्यैः । "आक्षेपो भर्त्सनाकृष्टिकाव्यालंकृतिषु स्मृतः" इति मेदिनी । क्षिपंस्तिरस्कुर्वन् । सम्यगुच्चत्वादिनाह्वयत् । आक्षेपैर्निदावाक्यैः । सम्यक् तन्मरणपर्यंततया । जनयन् जनयितुम् ॥१७॥ स शंबरः ॥ १८ ॥ 'स्फूर्जथुर्वज्रनिष्पेषः' इति हलायुधः । इत्यर्थ इति–सामान्यं पाको बहुव्यापकत्वात्, विशेष ओदनमल्पव्यापकत्वात् । तत्र यथौदनस्य व्याप्यत्वं पाकस्य व्यापकत्वमेवमत्राप्यतिनिष्ठुरस्य व्याप्यत्वं, नादस्य व्यापकत्वमिति भावः। वज्रनिष्पेषस्य नादमिव निष्ठुरं वज्रनिष्पेषनिष्ठुरम् । मध्यमपदलोपी समासः । व्यापकत्वं क्रियाया व्याप्यत्वं तु कर्मणः। अकरोदिति—सर्वेषां धातूनामंतर्भूतकृञर्थत्वात् 'उक्तार्थानामप्रयोगः' इति न्यायेन कृञर्थमात्रपर्यवसानाच्च ॥ १९ ॥ तां गदाम् । अपास्य निवर्त्य । अपास्य प्रत्यक् क्षिप्त्वा । नृपेति–यथा त्वं नृपालनार्थं दुष्टान् गदापातैर्हंसि तथायमपि । तस्माद्दुष्टदैत्याँल्लोकरक्षार्थमेव वस्तुतस्तस्मै गदां प्राहिणोदिति भावः ॥ २० ॥

### श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी

सम्यगुच्चत्वादिना आह्वयत् आक्षेपैर्निन्दावाक्यैः क्षिपन् तिरस्कुर्वन् सम्यक् तन्मरणपर्य्यन्ततया जनयन् जनयितुम् ।१७। सोऽधीतिस्पष्टं सोऽभीति पाठः क्वचित् ॥ १८ ॥ आविध्य भ्रामयित्वा महानात्मा धृतिर्यस्य तस्मै विशेषेण नदनमेव व्यञ्जयति वज्रेति अन्यत्तैः तत्र वज्रनिष्पेषनिष्ठुरमिति मध्यपदलोपी समासः वज्रनिष्पेषस्य नादमिव निष्ठुरमिति तथा व्यापकत्वं क्रियाया व्याप्यत्वं तु कर्मणः तथा अकरोदिति सर्वेषां धातूनामन्तर्भूतकृञर्थत्वात् उक्तार्थानामप्रयोग इति न्यायेन कृञर्थमात्रपर्य्यवसानाच्चेति ज्ञेयं निष्पेषशब्देन कथं चिन्निर्घोषो वा वाच्यते ॥ १९ ॥ अपास्य प्रत्यक् क्षिप्त्वा अत्र नदन्नित्यत्र नृपेति क्वचित्पाठः ॥ २० ॥

### श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी

'च' अपि, सोऽपि, अभिमुखमेत्य सम्यगुच्चतीक्ष्णस्वरादिना आह्वयत् । अविषह्यैः परमासह्यैरित्यर्थः, क्षिपन् दुर्वाक्यैर्गालिं ददत् । किमर्थम् ? कलिं कलहम्, सम्यङ्मरणपर्य्यवसानतया जनयन् जनयितुम् ॥ १७ ॥ पदेन हतः प्रहृत उरग इव, अमर्षात् क्रोधात् ताम्रे संरक्ते लोचने यस्य सः, यद्वा, पदा हतोऽहिर्यथा क्रोधादुन्नमितफणो रक्ताक्षो विलान्निष्क्रामति, तथा गृहान्निश्चक्रामेत्यर्थः ॥ १८ ॥ आविध्य भ्रामयित्वा, प्रकर्षेण बलादिना क्षिप्त्वा, महानात्मा धृतिर्यस्य तस्मा इति निर्भयत्वादिकं सूचितम् । विशेषणानदत्, वि-शब्दार्थमेव व्यञ्जयति–वज्रेति । अन्यत्तैर्व्याख्यातम् । यद्वा, वज्रस्य निष्पेषादपि निष्ठुरम् ॥१९॥ भगवान् सर्वशक्तिमान्, अपास्य पश्चात् क्षिप्त्वा ॥ २० ॥

---

१. अवष्टभ्योष्टमा–विज. । २. सोपि सोभि पाठौ श्रीधर. टि. । ३. निष्पेष–श्रीधर. वंशी. जीव. वीर. विज. विश्व. शुक. । ४. नृप–श्रीधर. वंशी. जीव. शुक. सु.; स्वगदां नदन्–वीर.; स गदां नदन्–विज. ।

**श्रीमद्वीरराघवाचार्यकृता भागवतचन्द्रचन्द्रिका**

ततः स च प्रद्युम्नः संयुगाय युद्धार्थं समाहूतवान् किं कुर्वन्सोढुमशक्यैरधिक्षेपैस्तं शम्बरं क्षिपन् परिभवन् कलिं कलहं जनयंश्च ॥ १७ ॥ स इति । स शम्बरः पादेन ताडितः सर्प इव दुर्वचोभिरधिक्षेपैरधितप्तः अत एव क्रोधात्ताम्रे लोचने यस्य गदा पाणौ यस्य सः निश्चक्राम ॥ १८ ॥ तरसा बलेन गदामाविध्य भ्रामयित्वा प्रक्षिप्य प्रयुज्य वज्रस्याशनेर्निष्पेषे निर्घाते यथा निष्ठुरस्तीव्रो नादो भवति तथाभूतं नादं व्यनदच्चकार पाकं पचतीति वदयं निर्देशः ॥ १९ ॥ तामिति । प्रद्युम्नः स्वगदया तां शम्बरप्रयुक्तामाकाशे आपतन्तीं गदामपास्य निरस्य स इव स्वयमपि नदन् शत्रवे शम्बराय स्वगदां प्रायुङ्क्त ॥ २० ॥

**श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी**

निष्पेषो निर्घातः । वचनमवोचदितिवन्नादमनददितिसिद्धम् ॥ १९–२० ॥

**गूढार्थदीपिनी**

स च प्रद्युम्नः । संयुगाय युद्धार्थम् । आक्षेपैर्भर्त्सनावाक्यैः । क्षिपन् तिरस्कुर्वन् । कलिं कलहं जनयन् जनयितुम् ॥१७–१८॥ आविध्य भ्रामयित्वा । तरसा वेगेन । वज्रनिष्पेषो वज्रपातस्तद्वत् कठोरम् । व्यनदत् चकार । पाकं पचतीतिवदयं निर्देशः ॥१९॥ गदाम् अपास्य प्रत्यक् क्षिप्त्वा । प्राहिणोत् चिक्षेप ॥ २० ॥

**श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः**

आविध्य भ्रामयित्वा वज्रस्य निष्पेषे निर्घाते यथा निष्ठुरस्तीव्रो नादो भवति तथा भूतं नादं व्यनदत् वचनमवोचदितिवदयं निर्देशः ॥ १९–२० ॥

**श्रीसत्यधर्मकृता श्रीभागवतटिप्पणी**

कृष्णेन मणितृष्णेन वनं गतो मम भ्राता हत इत्युक्तवानिति शेषः । तच्छ्रुत्वा जनाः कर्णे कर्णे प्रतिकर्णमजयन् । ननु दुर्भिक्षमारीत्यादिमहामहिमवति रत्ने सति कण्ठे सति कथं सिंहो हिंसितवांस्तमिति चेत् । सत्यं । हरिद्रोहाभावे तथैव यात्राभङ्गो भगवतोऽनेनाचरित इति विशेषशक्तिशक्त्युपपत्तेः । शुचिष्मता सदा धार्यं रत्नमेतन्महोत्तमं । सत्राजित्तत्क्षणेनैतदशुचिं हन्ति मानवं । अश्वारूढो शुचिश्चासौ हतः सिंहेन तत्क्षणादिति व्रतार्कोक्तेरशुचित्वादनुपपन्नं तद्धनतं सति तस्मिन्नपीति वा ज्ञेयम् । आत्मनि लिप्तं दुर्यशो माभूद् नागरैः सहानीय रत्नं स्थापितवानित्यपवादान्तरप्रच्यावनार्थं नागरैः सह गमनमिति गन्तव्यम् ॥ १७–१८ ॥ तं सिंहं । अन्धयति स्वप्रविष्टमित्यन्धस्तमसाऽन्धकारेणावृत्तं प्रथा बहिरवस्थाप्यैक एव विवेश ॥१९॥ अर्भकान्तिके जाम्बवतोऽन्तिकेऽवस्थे गतम् ॥ २० ॥

**श्रीमद्वल्लभाचार्य्यकृता सुबोधिनी**

ततः प्राप्तविद्यः अक्लिष्टकर्मा ज्ञापयित्वैव मारयिष्यामीति विद्याप्राबल्यं वक्तुमाह्वानमाह **स च शम्बरमिति**। चकारात्तद्गतो भगवान् । पूर्वक्रियया समुच्चयं वा आह । तथा सति विद्याग्रहणं तन्मारणार्थमेवेति फलिष्यति । **अभ्येत्य** निकटे गत्वा । शङ्काभावो निरूपितः । व्याजेन प्रवर्तनं वारयति **संयुगाय समाह्वयदिति** । बालवाक्यं मत्वा न प्रवर्तेतेति अधिक्षेपमप्याह **अविषह्यै**रिति ! तं प्रसिद्धम् । प्रसिद्धो ह्यल्पमप्याक्षेपं न सहते । तत्रापि नान्यदीयमनुवदति, किन्तु स्वयमेव क्षिपति । स्नेहात्पुत्रादयोऽपि कदाचिदेवं कुर्वन्तीति तद्व्यावृत्त्यर्थमाह **संजनयन्कलिमिति** । कलहमुत्पादयन् । अहं प्रद्युम्नः कामः, त्वं शत्रुः, त्वां मारयिष्यामीत्यादिवाक्यान्युक्तवानित्यर्थः ॥ १७ ॥ ततो युद्धार्थं प्रवृत्त इत्याह **सोऽधिक्षिप्त** इति । यथा तस्मिन् स्नेहः, एवं द्वेषोऽपीति कथं प्रवृत्तिरित्याशङ्क्य आक्षेपस्य दुष्टत्वमाह **दुर्वचोभिरिति** । दुर्वचोभिराक्षिप्तः पितापि पुत्रं मारयतीति कृत्रिमत्वे जाते कथं न प्रवर्ततेत्यर्थः । ननु मृत्युरयमिति विशेषेण समागत इति भयात् कथं न निवृत्तः, तत्राह **पादाहत इवोरग** इति । दीर्घरोषः सर्पः मरणमप्यङ्गीकरोति, न तु निवर्तत इति । तस्य हि क्रोध एव परिपाल्यः, नत्वन्ये । तत एकेन सह एकेनैव युद्धं कर्तव्यमिति गदापाणिरेव निर्गतः । नापि बद्धकवचः, नापि ससहायः । तथा निर्गमने हेतु**रमर्षात्ताम्रलोचन** इति । क्रोधवशान्न किञ्चिज्ज्ञातवान् । दृष्टिरपि ताम्रेति दृष्ट्वापि न ज्ञातवान् ॥ १८ ॥ ततः प्रथमत एव स्वयं मारणार्थं प्रवृत्त इत्याह **गदामाविध्येति** क्रोधवशान्महतीमपि गदामुत्तोल्य भ्रामयित्वा वा । तरसा यावन्न सावधानो भवति । अनेन अपराधादपि तस्य पराजय एवेति सूचितम् । **महात्मन** इति । तस्य पलायनाद्यभावः सूचितः । प्रक्षेपमात्रेणैव मारित इति मत्वा व्यनदत् । मूर्च्छितस्य तेन नादेन सुतरां मरणं भवतीति ज्ञापयितुं विशिनष्टि **वज्रनिर्घोषनिष्ठुरमिति** । वज्रस्य नितरां घोषः पातसमय-

शब्दः । ततोऽपि निष्ठुरमिति ॥ १९ ॥ एतादृशोऽप्युद्यमः व्यर्थो जातः ( इति ) प्रद्युम्नस्य पराक्रमेणेत्याह तामापतन्तीमिति । स्वगदया तां गदामपास्य आगच्छन्तीं दूरादेव मारयित्वा ततः क्रुद्धः सन् तद्वत्स्वयमपि नदन् । शत्रुर्मारणीय एवेति, अन्यथा मारयिष्यती वा स्वगदां प्राहिणोत् । भगवानित्येतत्सामर्थ्यहेतुः । भगवत्कार्यत्वादावेशित्वाद्वा भगवान् ॥ २० ॥

### श्रीसुबोधिनी–सारः

स च प्रद्युम्नः शंबरमभ्येत्य प्राप्य संयुगाय संग्रामाय समाह्वयत् समाह्वानमकरोत् अविषह्यैः सोढुमशक्यैराक्षेपैर्दुर्वचोभिस्तं क्षिपन् पराभवन् कलिं कलहं संजनयन्समुत्पादयन् सन् ॥ १७ ॥ दुर्वचोभिः कुवाक्यैरधिक्षिप्तो धिक्कृतः पदाहृत उरगः सर्प इवाऽमर्षात्क्रोधात्ताम्रवल्लोचनं यस्य स शंबरो गदापाणिर्योद्धुं निश्चक्राम निर्गतोऽभूत् ॥ १८ ॥ गदामाविध्य भ्रामयित्वा तरसा वेगेन महात्मने प्रद्युम्नाय प्रक्षिप्य प्रयुज्य वज्रस्य निष्पेषः पतनं तद्वन्निष्ठुरं तीव्रं नादं व्यनदत् ॥ १९ ॥ आपतंतीं तां गदां भगवान् प्रद्युम्नः स्वगदयाऽपास्य निवर्त्य क्रुद्धः शत्रवे शत्रुं हंतुं स्वगदां प्राहिणोत् प्राक्षिपत् हे नृप ॥ २० ॥

### विवरण टिप्पणी

**सोऽधिक्षिप्त** इत्यत्र । **यथा तस्मिन्निति** । तथाच स्नेहसम एव द्वेषो वर्तते, नत्वधिकः । अत उभयोः समत्वात्स्नेहं बाधित्वा द्वेषकार्यमेव कथं जातमित्यर्थः ।

### गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

स च प्रद्युम्नस्तं शम्बरमभ्येत्य अविषह्यैः सोढुमशक्यैराक्षेपैस्तिरस्कारवचनैः क्षिपन् अभिभवन् कलिं कलहं च जनयन् संयुगाय युद्धार्थं समाह्वयदित्यन्वयः ॥ १७ ॥ दुर्वचोभिरधिक्षिप्तस्तिरस्कृतः, अमर्षेण तिरस्कारासहनेन क्रोधेन ताम्रे रक्ते लोचने यस्य सः, गदा पाणौ यस्य सः, शम्बरो युद्धार्थं गृहान्निश्चक्रामेत्यन्वयः । क्रोधाविष्टत्वे दृष्टान्तमाह—पदाहत उरग इवेति ॥१८॥ तरसा वेगेन गदामाविध्य भ्रामयित्वा प्रद्युम्नं हन्तुं प्रक्षिप्य वज्रस्याशनेर्निष्पेषे निर्घाते यथा निष्ठुरस्तीव्रो नादो भवति तथाभूतं नादं व्यनदच्चकार । पाकं पचतीतिवत् सामान्यविशेषतयाऽयं निर्देशः । 'तया प्रद्युम्नस्यापकारो भयं च नास्ति' इति सूचयन्नाह—महात्मन इति ॥ १९ ॥ भगवान् प्रद्युम्नोऽपि आपतन्तीं आगच्छन्ती तां शम्बरप्रयुक्तां गदां स्वगदया अपास्य निरस्य हे नृप ! क्रुद्धः सन् शत्रवे शम्बराय स्वगदां प्राहिणोत् प्रायुङ्क्त ॥ २० ॥

### अन्वितार्थप्रकाशिका

स चेति ॥ स च प्रद्युम्नः तं शम्बरमभ्येत्य अविषह्यैः सोढुमशक्यैराक्षेपैस्तिरस्कारवचनैः क्षिपन् अभिभवन् कलिं कलहं च संजनयन् संयुगाय युद्धार्थं समाह्वयत् । स्पर्द्धाया अविवक्षणान्न तङ् ॥ १७ ॥ स इति ॥ दुर्वचोभिरधिक्षिप्तस्तिरस्कृतः अमर्षेण तिरस्कारासहनेन क्रोधेन ताम्रे रक्ते लोचने यस्य सः गदा पाणौ यस्य सः शम्बरः पदाहत उरग इव युद्धार्थं गृहान्निश्चक्राम ।१८। गदामिति ॥ महात्मने प्रद्युम्नाय तरसा वेगेन गदामाविध्य भ्रामयित्वा प्रक्षिप्य वज्रस्याशनेर्निष्पेषे निर्घाते यथा निष्ठुरस्तीव्रो नादो भवति तथाभूतं नादं व्यनदत् । ओदनपाकं पचतीतिवत् वचनमवोचदितिवच्च सामान्यविशेषतयाऽयं निर्देशः । अतः अकरोदित्यर्थः । उक्तार्थानामप्रयोग इति न्यायेन नदतेः कृञर्थमात्रे पर्यवसानात् ॥ १९ ॥ तामिति ॥ भगवान् प्रद्युम्नोऽपि आपतन्तीम् आगच्छन्तीं तां शम्बरप्रयुक्तां गदां स्वगदया अपास्य निरस्य हे नृप ! क्रुद्धः सन् शत्रवे शम्बराय स्वगदां प्राहिणोत् प्रायुङ्क्त ॥ २० ॥

### श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्

आक्षेपैस्तिरस्कारैः ॥ १७ ॥ ताम्रलोचनो रक्तनेत्रः ॥ १८ ॥ आविध्य भ्रामयित्वा वज्रस्य निष्पेषः पतनशब्दस्तद्वन्निष्ठुरं कठोरं नादं व्यनदत् शब्दं चकारेत्यर्थः । पाकं पचतीतिवत् । करणार्थौ नदति धातुरस्ति ॥ १९ ॥ अपास्य दूरीकृत्य ॥ २० ॥

### भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

स चेति ॥ ततः, स च प्रद्युम्नोऽपि, शम्बरं, अभ्येत्य, तं शम्बरं, अविषह्यैः सोढुमशक्यैः, आक्षेपैस्तिरस्कारवचनैः, क्षिपंस्तिरस्कुर्वन्, कलिं कलहं, संजनयन् संश्च, संयुगाय संग्रामं कर्त्तुं, समाह्वयत् ॥ १७ ॥ स इति ॥ दुर्वचोभिः अधिक्षिप्तः अत एव, पदा पादेन, आहतस्ताडितः, उरगः सर्पः इव, क्रुद्धः स शम्बरः, अमर्षात् संजातात् क्रोधात्ताम्रे रक्तवर्णे लोचने यस्य सः, गदा पाणौ यस्य तथाभूतः संश्च, निश्चक्राम युद्धं कर्त्तुं स्वगृहान्निष्क्रान्तवान् ॥ १८ ॥ गदामिति ॥ सः गदां, तरसा आविध्य भ्रामयित्वा, महात्मने प्रद्युम्नाय, महात्मानं प्रद्युम्नं हन्तुमित्यर्थः । प्रक्षिप्य बलात् क्षिप्त्वा, वज्रस्याशनेर्निष्पेषे निर्घाते यथा

निष्ठुरस्तीव्रो नादो भवति तथाभूतं, नादं, व्यनदत्। सामान्यविशेषतया व्याप्यव्यापकत्वं पाकं पचतीतिवत्। अतिनिष्ठुरं नादमकरोदित्यर्थः ॥ १९ ॥ तामिति ॥ भगवान्, प्रद्युम्नः, आपतन्तीमाकाशमार्गेण आगच्छन्तीं, तां शम्बरप्रयुक्तां, गदां गदया स्वकीयया गदया अपास्य निरस्य, क्रुद्धः स इव स्वयमपि नदन्निवेति शेषः। शत्रवे शम्बराय, हे नृप, स्वगदां प्राहिणोत् प्रायुङ्क्त ॥ २० ॥

**कृष्णप्रिया**

श्रीरति देवी जी से परामर्श करने के बाद श्रीप्रद्युम्न जी शम्बरासुर के समीप पहुँचे और कटुशब्दों से तिरस्कार करने लगे। आशय यह था कि आविष्ट शम्बरासुर किसी भी प्रकार से संघर्ष में आ जाय। इतने से भी प्रद्युम्न जी को संतोष नहीं था पुनः संग्राम के लिये भी शम्बर को आह्वान किया ॥ १७ ॥ श्री प्रद्युम्नजी के तिरस्कार को नही सहता और पडकार को स्वीकारता शम्बरासुर तिल-मिला उठा। जैसे किसी ने विषैले नाग को पैरों से कोई ठुकरा दे और साँप जैसे तिल-मिला उठे। शम्बरासुर की आँखे क्रोध से आरक्त बन गई और हाथ में गदा उठाकर घर से मैदान में आ गया ॥ १८ ॥ पुनः शम्बरासुर ने गदा को गोल गोल आकाश में घुमायी और जोर से वीर प्रद्युम्नजी के उपर चला दी। गदा को चलाते समय शम्बर ने अत्यन्त कर्कश सिंहगर्जना की, मानो वज्रपात हो रहा हो ॥ १९ ॥ महाराज परीक्षित! सर्व समर्थ भगवान् श्रीप्रद्युम्न जी ने देखा कि शम्बर की गदा अत्यन्त वेग से अपनी ओर आ रही है, तब प्रद्युम्न जी ने अपनी गदा के प्रहार से उसकी गदा जमीन पर गिरा दी और अत्यन्त रुष्ट होकर अपनी गदा शम्बरासुर पर वेग से चलायी ॥ २० ॥

**स च मायां समाश्रित्य दैतेयीं मयदर्शिताम्। मुमुचेऽस्त्र[1]मयं वर्षं कार्ष्णौ वैहायसोऽसुरः ॥ २१ ॥**
**बाध्यमानोऽस्त्रवर्षेण रौक्मिणेयो महारथः[2]। सत्त्वात्मिकां महाविद्यां सर्वमायोपमर्दिनीम् ॥ २२ ॥**
**ततो [3]गौह्यकगान्धर्वपैशाचोरगराक्षसीः। प्रायुङ्क्त शतशो दैत्यः कार्ष्णिर्व्यधमयत् स ताः ॥ २३ ॥**
**निशातमसिमुद्यम्य सकिरीटं सकुण्डलम्। शम्बरस्य शिरः कायात् [5]ताम्रश्मश्र्वोजसाहरत् ॥ २४ ॥**

**कर्दमक्षमा**

अन्वयः—सः, च, असुरः, मयदर्शिताम्, दैतेयीम्, मायाम्, समाश्रित्य, वैहायसः, (शम्बरः) कार्ष्णौ, अस्ममयम्, वर्षम्, मुमुचे ॥ २१ ॥ अस्मवर्षेण, बाध्यमानः, महारथः, रौक्मिणेयः, सर्वमायोपमर्दिनीम्, सत्त्वात्मिकाम्, महाविद्याम्, मुमोच ॥ २२ ॥ ततः, सः, दैत्यः, गौह्यक, गान्धर्व, पैशाचोरग राक्षसीः, शतशः, (मायाः) प्रायुङ्क्त, सः, कार्ष्णिः, ताः, व्यधमत् ॥ २३ ॥ ततः भगवान्, कार्ष्णिः, निशातम्, असिम्, उद्यम्य, शम्बरस्य, कायात्, सकिरीटम्, सकुण्डलम्, च ताम्रश्मश्रु, शिरः, ओजसा, अहरत् ॥ २४ ॥

**श्रीधरस्वामिविरचिता भावार्थदीपिका**

वैहायस आकाशे स्थितः ॥ २१ ॥ सत्त्वात्मिकां सत्त्वगुणमयीं प्रायुंक्तेत्युत्तरस्यानुषंगः ॥२२॥ ता मायाः व्यधमयद्व्यनाशयत् ॥ २३ ॥ ताम्राणि श्मश्रूणि यस्मिंस्तत्। ओजसा बलेन ॥ २४–२५ ॥

**श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः**

स च शंबरः। दैतेयीं दैत्यकुलदेवतामिव वर्तमानाम् ॥ मायां परोक्षत्वादिमाश्रित्य वैहायसः सन्नेव प्रद्युम्नगदामवञ्चयदिति सूचितम्। अश्ममयं शिलाप्रचुरम्। तदुक्तं हरिवंशे—"भस्मीभूते वृक्षवर्गे शिलासंधानवर्षयत्" इति ॥ २१ ॥ सत्त्वगुणमयीं बलज्ञाननिधिं विष्णुदेवताकाम्। महाविद्यां विज्ञानास्त्रसंज्ञाम्। उत्तरस्याग्रिमश्लोकस्थक्रियापदस्य। अनुषङ्ग आनयनम्। बाध्येति युग्मकम्। महारथो वीरवर्गश्रेष्ठः ॥ २२ ॥ ततो रौक्मिणेयकर्तृकास्त्रसंधानोत्तरम्। स कार्ष्णिः। गौह्यकेत्यादौ प्रथमं सामान्यतो निर्दिष्टानां स्त्रीप्रत्ययं विनैव द्वंद्वः, पश्चान्मायाविशेषणत्वेन स्त्रीत्वे विवक्षिते समस्तात्स्त्रीप्रत्ययो ज्ञेयः। शतश इति गौह्यकादीनामेवावृत्तिर्व्यक्ता। यद्वा—अन्या अपि शतशो मायाः। ताश्च हरिवंशे—"ततो मायां परां चक्रे देवशत्रुः प्रतापवान्। सिंहान्व्याघ्रान्वराहांश्च तरक्षूनृक्षवानरान् ॥ वारणान्वारिदप्रख्याहृयानुष्ट्रान्विशां पते।" इत्यादिना गौह्यकादीनां यथोत्तरं हिंस्रत्वेन श्रैष्ठ्यम्। स्म प्रसिद्धौ। ताः सर्वाः, यतः कार्ष्णिः 'मायिमायिनि' इत्युक्तेर्मायाविव्यामोहकश्रीकृष्णात्मजे का प्राकृतमायागणनेति भावः। अस्याग्रेप्यनुवृत्तिर्ज्ञेया ॥ २३ ॥ श्मश्रूणि मुखरोमाणि ॥ आहरत् दूरीचकार ॥ २४ ॥

---

१. श्चेऽश्म–वीर. ; निर्ममेऽश्म–विज. । २. नोऽश्म–वीर. विज. । ३. बलः–वीर. । ४. मोहकरीं मायां पिशाचोरगरक्षसाम्। ५. श्मश्रोर्जहारतत्–वीर. ; ताम्रश्मश्रु जहार तत्–विज.।

**श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी**

त्वर्थे चशब्दः मयेन दर्शितां प्रवर्त्तितां सम्यक् परोक्षत्वादिना आश्रित्य अत एव वैहायसः सन् एवं श्रीप्रद्युम्नगदावञ्चनं सूचितम् अश्ममयं शिलाप्रचुरं तथा च श्रीहरिवंशे—

भस्मीभूते वृक्षवर्षे शिलासङ्घानवर्षयदिति। अतोऽश्ममयमिति पाठोऽसम्मतः॥ २१॥

वाध्येति युग्मकम् महारथः वीरवर्गश्रेष्ठः॥ २२॥ गौह्यकेत्यादौ प्रथमं सामान्यतो निर्दिष्टानां स्त्रीप्रत्ययं विनैव द्वन्द्वः पश्चान्मायाविशेषणत्वेन स्त्रीत्वे विवक्षिते समस्तात्स्त्रीप्रत्ययो ज्ञेयः "शतशः इति" गौह्यकादीनामेवावृत्तिर्व्यक्ता यद्वा अन्या अपि मायाः शतश इत्यर्थः। ताश्चोक्ताः श्रीहरिवंशे—

ततो मायां परां चक्रे देवशत्रुः प्रतापवान्। सिंहान् व्याघ्रान् वराहांश्च तरक्षूनृक्षवानरान्॥

वारणान् वारिदप्रख्यान् हयानुष्ट्रान् विशाम्पत इत्यादिना गौह्यकादीनां यथोत्तरं हिंसकत्वेन श्रैष्ठ्यस्य प्रसिद्धौ ताः सर्वाः यतः कार्ष्णिः अस्याग्रेऽप्यनुवृत्तिः॥ २३॥ कायादहरत् दूरीचकार ताम्रश्मश्विति घोरत्वादिकं सूचितम् किरीटादि-सहितमिति हरणे लाघवं कौतुकञ्च॥ २४॥

**श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी**

त्वर्थे च-शब्दः, श्रीप्रद्युम्नप्रहितगदावञ्चनं सूचयति—मयेन दर्शितां प्रकटितामिति माहात्म्यं तस्याः सूचितम्, सम्यक् परोक्षत्वादिना आश्रित्य, अतएव वैहायसः, सन् अश्ममयं वर्षं वृष्टिवदसंख्यं शिलाजातं मुमुचेऽक्षिपत्। तथा च श्रीहरिवंशे ( विष्णु० प० १०६।१४ )—'भस्मीभूते वृक्षवर्षे शिलासङ्घानवर्षयत्' इति। अतः पाठान्तरमसंगतमिव, शिलावर्षस्यैव मायिक-त्वात्॥ २१॥ महारथो वीरवर्गश्रेष्ठः, यतो रुक्मिणीगर्भजातः, इत्माश्मवर्षबाधा परिहृता, सर्व्वासामेव मायानामुपमर्द्दनीमिति तयाश्मवर्षमाया निरस्तेति बोधयति—शतश इति। गौह्यकादीनां प्रत्येकं बहुधा बहुशः प्रयोगश्च; यद्वा, अन्या अपि मायाः शतश इत्यर्थः; ताश्चोक्ताः श्रीहरिवंशे ( विष्णु-प० १०६।१५-१६ )—'ततो मायां परां चक्रे देवशत्रुः प्रतापवान्। सिंहान् व्याघ्रान् वराहांश्च तरक्षूनृक्षवानरान्। वारणान् वारिदप्रख्यान् हयानुष्ट्रान् विशारयते।' इत्यादिना गौह्यकादीनां यथोत्तरं हिंस्रत्वे श्रैष्ठ्यम्। स्म प्रसिद्धौ, ताः सर्व्वाः, यतः कार्ष्णिः; अस्याग्रेऽपि पद्यत्रयेऽनुवृत्तिः॥ २२-२३॥ कायादहरत्, दूरत उच्चैः पातयामासेत्यर्थः। ताम्रश्मश्विति महादैत्यत्वेन घोरत्वादिकं सूचितम्। किरीटादिसहितमिति हरणे महावेगादिकञ्च, अन्यथा तस्य तत्रैवादूरे पातसम्भवात्; यद्वा, शम्बरस्य महावीरत्वं युद्धोत्साहभरेणैव तत्तत्परिधानात्॥ २४॥

**श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका**

स च शम्बरः मयेन दैत्यदानवाचार्य्येण दर्शितामुपदिष्टां मायामन्तर्धानाद्यात्मिकामाश्रित्य वैहायसः आकाशे स्थितः कार्ष्णौ प्रद्युम्ने शिलामयं वर्षं मुमुचे॥ २१॥ तदा रौक्मिणेयः प्रद्युम्नः शिलावर्षेण वाध्यमानस्ताड्यमानः सत्त्वात्मिकां सत्त्व-गुणमयीं मायां महाविद्याख्यां सर्वासुरमायोपघातिनीं प्रायुङ्क्तेत्युत्तरस्यापकर्षः॥ २२॥ ततः पुनर्दैत्यः गुह्यकानां सम्बन्धिनीं तथा गन्धर्वादिसम्बन्धिनीं च मायां प्रायुङ्क्त कार्ष्णिस्तु ताः सर्वा मायाः व्यधमयत् व्यनाशयत्॥ २३॥ ततः निशितं खड्ग-मुद्धृत्य निर्माय ताम्राणि श्मश्रूणि यस्य तस्य शम्बरस्य कायात्सकिरीटं सकुण्डलं च शिरो जहार पातयामासेर्थः॥ २४॥

**श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी**

वैहायसः आकाशचारी॥ २१॥ सत्त्वात्मिकां विद्यां प्रायुङ्क्तेत्युत्तरस्यानुषङ्गः॥ २२-२७॥

**गूढार्थदीपिनी**

विहायसि आकाशे स्थितः सन्॥२१॥ वाध्यमानेति युग्मम्। मायां प्रायुङ्क्तेत्युत्तरेणान्वेति। ता मायाः रुक्मिणीपुत्रः। व्यधमयत् व्यनाशयत्। धमधातोः सौत्राण्णिच् अमन्तत्वान्मित्त्वम्॥ २२-२३॥ निशातं तीक्ष्णम्। कायात् शिरः अहरत् पृथक् कृतवान्। ओजसा बलेन॥ २४॥

**श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः**

वैहायसः खेचरः॥ २१॥ महाविद्यां प्रायुङ्क्त इत्युत्तरस्यानुषङ्गः॥ २२॥ व्यधमयद्व्यनाशयत्॥ २३॥ ओजसा बलेन॥ २४-२८॥

**श्रीसत्यधर्मकृता श्रीभागवतटिप्पणी**

धात्री उपमाता भीतवद्भीता गतं। मदनज्वरदाहार्ता दृष्ट्वा तं कमलेक्षणमुवाच ललिता बाला गम्यतां गम्यतामिति। रत्नं गृहीत्वा वेगेन यावच्छेते तु जाम्बवान् इत्याकर्ण्य हसञ्छौरिः शंखं दध्मौ प्रतापवान्। आकर्ण्य सहसोत्थायेति व्रतार्कोक्तिः

कृष्णकृष्णतोपायपरोपायान्तरमिदमिति न विरोधः। धात्र्या कुमारमित्यादिर्हरिवंशेऽपि समीकृतोऽनेवेति ज्ञेयम् ॥ २१ ॥ कुपित इति नानुभाववित् प्राकृतं कञ्चनपुरुषं मत्वा तेन कृष्णेन सह युयुधे ॥२२॥ अयुधाश्मद्रुमैः शिलाभिर्द्रुमैः। आयुधस्थानेऽस्मद्रुमैरिति वा। क्रव्यार्थे मांसार्थे ॥ २३ ॥ अविश्रमं विश्रामरहितं यथा निरन्तरमिति यावत् ॥ २४ ॥

**श्रीमद्वल्लभाचार्य्यकृता सुबोधिनी**

ततो लौकिकेन जयाभावमाशङ्क्य मायया भगवद्रूपया युद्धं करिष्यामीति प्रवृत्त इत्याह स च मायामिति। दैतेयीत्यनेन भगवत्त्वमुक्तम्। सम्यगाश्रयणं मनःपूर्वकं भक्त्या। **मयदर्शितामिति**। सिद्धादुपदेशः सफलो भवतीति ज्ञापनार्थः। ततः अदृश्यः सन् अस्त्रमयमाग्नेयाद्यस्त्रसमूहं कार्ष्णौ प्रद्युम्ने स्वयं विहायसि आकाश एव स्थितः वैहायसः। असुराणामन्तरिक्षेऽपि गतिरस्तीति सूचयितुं तथोक्तम् ॥ २१ ॥ ततो मायाया भगवत्त्वात् काचित्पीडा जातेत्याह **बाध्यमानोऽस्त्रवर्षणे**पि गतिरस्तीति सूचयितुं तथोक्तम् ॥ २१ ॥ ततो मायाया भगवत्त्वात् काचित्पीडा जातेत्याह **बाध्यमानोऽस्त्रवर्षणेति**। हीनत्वं सम्पादयितुं **रौक्मिणेय** इत्युक्तम्। नहि कृष्णपुत्रे बाधा सम्भवतीति। तथापि महारथः क्षत्रियजातित्वेन प्राप्तसामर्थ्यः सत्त्वात्मिकां प्रतिस्पर्धिनीं विद्यारूपां तया साक्षादुपदिष्टां समाश्रित्य स्वयमप्यस्त्रमयं वर्षं मुमुचे इति सम्बन्धः ॥ २२ ॥ ततस्तेनापि बह्व्यो मायाः प्रदर्शिता इत्याह तत इति। पश्चैता अङ्गमायाः तेन हि साङ्गो भगवान् सेवित इति विज्ञायते। गन्धर्वा अपि दैत्यपक्षपातिनः। तेषामवान्तरभेदाः सन्तीत्याह **प्रायुङ्क्त शतश इति**। सर्वासामपि सकृदेव निराकरणं कृतवानित्याह। कार्ष्णिः सः पूर्वप्राप्तमायः ता व्यधमयत् ॥ २३ ॥ ततः पौरुषद्वयेऽपि नष्टे तं मारितवानित्याह **निशातमिति**। यथा श्येने दृष्टे पक्षिणो लीयन्ते, तथा तस्मिन् दृष्टे शम्बरो लीनो जात इति। निष्प्रभं तं स्वेच्छया असिमुद्यम्य किरीटकुण्डलसहितं परित उपरि च शोभायुक्तमधोऽपि दुर्धर्षं ताम्रश्मश्रुः ओजसा अहरत्। छित्वा नीतवानित्यर्थः ॥ २४ ॥

**श्रीसुबोधिनी-सारः**

स च शंबरोऽसुरो वैहायसो विहायसे खे स्थितो मयेन दर्शितां दैतेयीं मायां समाश्रित्य कार्ष्णौ प्रद्युम्नोपरि अस्त्रमयं वर्षं मुमोच ॥ २१ ॥ अस्त्रवर्षेण बाध्यमानः पीड्यमानो रुक्मिण्याः पुत्रो महारथः सर्वमायानिवारिणीं सत्त्वात्मिकां महाविद्यां प्रायुंक्तेत्युत्तरेणान्वयः ॥ २२ ॥ ततोनंतरं गुह्यकगंधर्वपिशाचोरगराक्षसानां मायाः शतशो दैत्यः शंबरः प्रायुंक्त स कार्ष्णिः कृष्णस्यापत्यं ताः सर्वा माया व्यधमन्नाशयामास ॥ २३ ॥ निशातं तीक्ष्णमसिं खड्गम् उद्यम्योद्धृत्य सकिरीटं सकुंडलं ताम्रवत् श्मश्रूणि यस्मिंस्तत् शंबरस्य शिरः कायात् पृथक् कृतवान् ओजसा बलेन ॥ २४ ॥

**विवरणटिप्पणी**

**स च मायामित्यत्र**। **भगवत्त्वमुक्तमिति**। मायाया इति शेषः। दैत्यानां माया, 'मायेत्यसुरा' इति श्रुतेर्भगवद्रूपेति भावः। **बाध्यमान** इत्यत्र। मायोपदेशे सर्वमायाविनाशिनीमित्युक्तम्। अत्रापि तद्विशेषणकथनात्सैवेयं मायेत्याशयेनाहुः **तया साक्षादिति**। तस्या मायावतीत्वात्साक्षात्तदुपदेशे मायापि साक्षादेव समायाति, न तु मन्त्राद्यपेक्षेति भावः।

**गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी**

स च शम्बरोऽसुरो मयेन दैत्यदानवाचार्येण दर्शितामुपदिष्टां मायामन्तर्धानाद्यात्मिकामाश्रित्य वैहायसः आकाशे स्थितः सन् कार्ष्णौ प्रद्युम्नेऽश्ममयं शिलामयं वर्षं मुमुचे अकरोत् ॥ २१ ॥ तदा च रौक्मिणेयः प्रद्युम्नः शिलावर्षेण बाध्यमानस्ताड्यमानोऽपि सर्वासुरमायोपमर्दिनीं सत्त्वात्मिकां महाविद्यां प्रायुङ्क्तेत्युत्तरस्यानुषङ्गः। तदापि तस्य भयाभावं सूचयन्नाह—महारथ इति ॥ २२ ॥ ततश्च पुनर्दैत्यः शम्बरः गुह्यकादीनां सम्बन्धिनीः शतशो मायाः प्रायुंक्त, स कार्ष्णिः प्रद्युम्नश्च ताः सर्वा माया व्यधमयत् व्यनाशयत् ॥ २३ ॥ ततश्च निशातं तीक्ष्णमसिमुद्यम्य उद्धृत्य ताम्राणि रक्तानि श्मश्रूणि यस्मिंस्तत् सकिरीटं सकुण्डलं च शम्बरस्य शिरः कायादोजसा बलेन आहरत् छित्वा पातयामासेत्यर्थः ॥ २४ ॥

**अन्वितार्थप्रकाशिका**

स चेति ॥ स च शम्बरोऽसुरः दैतेयीम् आसुरीं मयेन दैत्यदानवाचार्येण दर्शितामुपदिष्टां मायामन्तर्धानाद्यात्मिकामाश्रित्य वैहायसः तिरोभूय आकाशे स्थितः सन् कार्ष्णौ प्रद्युम्नेऽश्ममयं शिलामयम्। अस्त्रमयमित्यपि पाठः। वर्षं मुमुचे अकरोत् ॥ २१ ॥ बाध्यमान इति ॥ महारथः रौक्मिणेयः प्रद्युम्नः अश्मवर्षेण शिलावर्षेण। अस्त्रेति च पाठः। बाध्यमानस्ताड्यमानोऽपि सर्वासुरमायोपमर्दिनीं सत्त्वात्मिकां महाविद्यां प्रायुङ्क्तेत्युत्तरस्यापकर्षः ॥ २२ ॥ तत इति ॥ पुनर्दैत्यः शम्बरः गौह्यकगान्धर्वपैशाचोरगराक्षसीः गुह्यकादिसम्बन्धिनीः आदौ गौह्यकादीनां सामान्यतो नपुंसकानां द्वन्द्वः। ततो मायाविशेषणत्वेन समस्तान्। ङीप् वस्तुतस्त्वार्षः पुंवद्भावः। शतशो मायाः प्रायुङ्क्त। स कार्ष्णिः प्रद्युम्नश्च ताः सर्वा माया व्यधमयत् व्यनाशयत्।

धमतेः सौत्राणिणच् अमन्तत्वान्मित्त्वम् ॥ २३ ॥ निशातमिति । निशातं तीक्ष्णमसिमुद्यम्य ताम्राणि रक्तानि श्मश्रूणि यस्मिंस्तत् सकिरीटं सकुण्डलं च शम्बरस्य शिरः कायादोजसा बलेन आहरत् छित्त्वा पातयामासेत्यर्थः ॥ २४ ॥

**श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्**

वैहायसो विहायसि गगने स्थितः ॥ २१-२२ ॥ सत्त्वात्मिकां सत्त्वगुणमयीं दैवी प्रायुंक्तेत्युत्तरेणान्वयः। गौह्यकी च गांधर्वी च पैशाची च ऊरगी च राक्षसी चेति द्वंद्वे कृते ऊरगां तेषु गौह्यकादिषु पुंवद्भाव आर्षः। ताः सर्वामायाः। कार्ष्णिः श्रीकृष्णसुतः व्यधमयत् नाशयामास ॥ २३ ॥ ताम्राणि श्मश्रूणि यस्मिन् तथाभूतं। शिरः उजसाबलेन ॥ २४ ॥

**भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी**

स इति। असुरः स च स शम्बरोऽपि, मयदर्शितां दैत्यदानवाचार्येण मयनाम्नाऽसुरेणोपदिष्टां, दैतेयीं दैत्यसंबन्धिनीं, मायामन्तर्धानाद्यात्मिकां, समाश्रित्य, वैहायस आकाशे स्थितः सन्, कार्ष्णौ कृष्णपुत्रे प्रद्युम्ने, अश्ममयं शिलामयं, वर्षं, मुमुचे ॥ २१ ॥ बाध्यमान इति। अश्मवर्षेण शिलावृष्ट्या, बाध्यमानस्ताड्यमानः, महारथः रौक्मिणेयो रुक्मिण्याः सूनुः, प्रद्युम्नः, सर्वमायोपमर्द्दिनीं सर्वासुरमायोपघातिनीं, सत्त्वात्मिकां सत्त्वमयीं, महाविद्यां महाविद्याख्यां मायां, प्रायुङ्क्तेत्युत्तरश्लोकस्थ-क्रियाया अनुषङ्गः ॥ २२ ॥ तत इति। ततः, सः दैत्यः, गौह्यकगान्धर्वपैशाचोरगराक्षसीः गौह्यकादिसम्बन्धिनीः, शतशः, मायाः, प्रायुङ्क्त। ताः, कार्ष्णिः प्रद्युम्नः, व्यधमयत् व्यनाशयत् ॥ २३ ॥ निशातमिति। ततः, प्रद्युम्नः, निशातं तीक्ष्णं, असि खड्गं, उद्यम्य, सकिरीटं, सकुण्डलं, ताम्राणि श्मश्रूणि यस्मिंस्तत्, शम्बरस्य शिरः, ओजसा, कायाद्देहात्, अहरत् पातयामासे-त्यर्थः ॥ २४ ॥

**कृष्णप्रिया**

श्री प्रद्युम्न जी ने जब गदा चलायी तब शम्बरासुर मायावी मयदानव ने बतलायी हुई आसुरी माया का आश्रय लिया और आकाश में चला गया और आकाश प्रदेश से ही श्री प्रद्युम्न जी पर अस्त्र शस्त्रों की भारी वर्षा करने लगा। महारथी प्रद्युम्न महान् वीर थे शम्बरासुर शस्त्रास्त्र वृष्टि से प्रद्युम्न जी को पीड़ा देने लगा तब परम गम्भीर कार्ष्णि ने आसुरी समस्त मायाओं को शान्त करने वाली एवं परास्त करने वाली सत्वमयी महामाया का प्रयोग किया ॥ २२ ॥ तब शम्बरासुर ने यक्ष-गन्धर्व-पिशाच-नाग-और राक्षसों की सैकड़ों मायाओं का प्रयोग किया तब भगवान् श्रीकृष्ण के वीर तनय श्री प्रद्युम्न कुमार जी ने अपनी महाविद्या से उन सब मायाओं का सम्पूर्ण नाश किया ॥ २३ ॥ पुनः वीरवर प्रद्युम्न जी ने अपने करकमलों में अतितीक्ष्ण तलवार उठायी और शम्बरासुर का किरीट कुण्डलों से सुशोभित मस्तक धड़ से काटकर अलग कर दिया जो रक्त वर्ण वाली दाढी एवं मूछों से भयंकर दीख पड़ता था ॥ २४ ॥

**आकीर्यमाणो [1]दिविजैः स्तुवद्भिः कुसुमोत्करैः। भार्ययाम्बरचारिण्या पुरं नीतो विहायसा ॥ २५ ॥**
**अन्तःपुरवरं राजन् ललनाशत[2]संकुलम्। विवेश पत्न्या गगनाद् विद्युतेव बलाहकः ॥ २६ ॥**
**तं दृष्ट्वा जलदश्यामं पीतकौशेयवाससम्। प्रलम्बबाहुं ताम्राक्षं सुस्मितं रुचिराननम् ॥ २७ ॥**
**[3]अलंकृतमुखाम्भोजं नीलवक्रालकालिभिः। कृष्णं मत्वा स्त्रियो [4]ह्रीता निलिल्युस्तत्र तत्र ह ॥ २८ ॥**

**कर्दमक्षमा**

अन्वयः—हे राजन्! स्तुवद्भिः, दिविजैः, कुसुमोत्करैः, आकीर्यमाणः, आकाशचारिण्या, भार्यया, विहायसा, पुरम्, नीतः, गगनात्, विद्युता, बलाहकः, इव, पत्न्या, सह, ललनाशतसंकुलम्, अन्तःपुरवरम्, विवेश ॥ २५-२६ ॥ जलदश्यामम्, पीतकौशेयवाससम्, प्रलम्बबाहुम्, ताम्राक्षम्, सुस्मितम्, नीलवक्रालकादिभिः, अलंकृतमुखाम्भोजम्, रुचिराननम्, तम्, दृष्ट्वा, कृष्णम्, मत्वा, स्त्रियः, ह्रीताः, तत्र, तत्र, ह, निलिल्युः ॥ २७-२८ ॥

**श्रीधरस्वामिविरचिता भावार्थदीपिका**

विद्युता सह बलाहको मेघ इव ॥ २६-२७ ॥ नीलाश्च वक्राश्च येऽलकास्त एवालयस्तैः ह्रीता लज्जिताः ॥ २८ ॥

**श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः**

दिविजैः देवैः। भार्यया रत्या निजमायाबलेन पुरं द्वारकां नीतः प्रापितः ॥ २५ ॥ अंतःपुरेषु वरं श्रेष्ठम्। अंतःपुरेषु वरं श्रीपट्टमहिषीप्रधानरुक्मिणीगृहम्। हे राजन्निति—यथा भवादृशराजगृहमतीवसुंदरस्त्रीशतसंकुलं भवति तद्वत्तदपीति

१. विबुधैः—वीर. । २. रत्न—वीर. । ३. स्वलं—श्रीधर. वंशी. जीव. विश्व. शु. क. सु.; अलं—वीर. विज. । ४. भीता—विज. ।

भावः ॥ २६ ॥ तं प्रद्युम्नम् । तमिति युग्मकम् । श्रीकृष्णमननाय तत्सादृश्यं जलदेत्यादिसप्तपदैराह । ताम्रे रक्तवर्णे अक्षिणो यस्य तम्, अब्जदलवत्प्रान्तरक्तनेत्रम् 'पद्मदलायतेक्षणम्' इति प्रागुक्तेः ॥ २७ ॥ तत्रतत्रेतस्ततः । निलिल्युरंर्तांहिता बभूवुः । निलिल्युर्निलीना बभूवुः, गृहकोणादिषु गुप्ता बभूवुरिति यावत् ॥ २८ ॥

### श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी

दिविजैर्देवैः कर्तृभिः पुष्पसमूहैः करणैः आकीर्य्यमाणः व्याप्यमानः भार्य्यया मायावत्या अम्बरचारिण्येति देवस्वभाव उक्तः अतो विहायसा आकाशमार्गेण पुरं द्वारकां नीतः ॥ २५ ॥ अन्तःपुरेषु वरं श्रेष्ठं भगवदीयत्वात् सर्वमहिषीवरश्रीरुक्मिणी-सम्बन्धात् तत्रापि विशिष्टं पत्न्या रत्या सह ॥ २६ ॥ तं दृष्ट्वेति युग्मकम् । श्रीकृष्णमननाय तत्सादृश्यमाह । जलदेत्यादि सप्तभिः पदैः ताम्रे रक्तवर्णे अक्षिणी यस्य तम् अब्जदलवत् प्रान्तरक्तनेत्रमित्यर्थः ॥ २७ ॥ पद्मदलायतेक्षणमिति प्रायुक्तेः ह विस्मये ॥ २८ ॥

### श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी

दिविजैः कर्त्तृभिः, पुष्पसमूहैः कृत्वा आ सम्यक् कीर्य्यमाणो व्याप्यमानः, भार्य्यया मायावत्या, अम्बरचारिण्येति देवस्वभाव उक्तः, अतो विहायसा आकाशमार्गेण पुरं द्वारकां नीतः ॥ २५ ॥ अन्तःपुरेषु वरं श्रेष्ठं श्रीभगवदीयत्वात्, किंवा सर्व्वमहिषीश्रेष्ठश्रीरुक्मिणीसम्बन्धात्, अतएव ललनानां परमसुन्दरांगनानां श्रीकृष्णमहिषीणामन्यासां वा श्रीरुक्मिणीसख्या-दीनां शतैः संकुलं व्याप्तम्, पत्न्या रत्या सह हे राजन्निति प्रहर्षोदयात्, किंवा राजमानः सन् श्यामगौरवर्णयोस्तयोराकाशतः सहसा प्रवेशे दृष्टान्तः—विद्युतेवेति ॥ २६ ॥ श्रीकृष्णमननाय तत्सादृश्यमाह—जलदेत्यादिसप्तपदैः । तत्र जलद-शब्देन सजल-नवमेघोऽभिप्रेतः, तेन सुश्यामतोक्ता; ताम्राक्षं प्रान्तरक्ताब्जपत्रतुल्याक्षमिति ज्ञेयम्, पद्मदलायतेक्षणमिति प्रागुक्तेः; रुचिराननमि-त्यनेन श्रीनासाद्यवयवानां सौन्दर्य्यं तथा सुकोमलगण्डत्वादिना पूर्व्वोक्तरूढयौवनानुसारेण नवयौवनोद्भेदश्च सूचित एव; तथा च श्रीविष्णुपुराणे ( ५।२७।२१ ) श्रीरुक्मिणीदेव्युक्तौ—'धन्यायाः खलु पुत्रोऽयं वर्त्तते नवयौवने' इति; ईदृशं श्रीहरिवंशेऽपि सुष्ठु कुण्डलादिभ्योऽपि विशेषेणालंकृतं मुखाम्भोजं यस्य तम्, अम्भोजालिरूपकाभ्यां भृंगव्याप्ताब्जवच्छोभा ध्वनिता, विशेषणानामेषां यथोत्तरं श्रीकृष्णमनेन श्रैष्ठ्यम् । श्रीकृष्णमननाय तादृशान्यसौन्दर्य्यादौ वर्णयितुमपेक्ष्येऽप्येतावदेव वर्णनं श्रीकृष्णेन तस्या-साधारणत्वात्, किंवा एतावतैव तन्मननपूर्त्तेः । यद्वा, जलदेति वर्णादेः शोभा व्यञ्जितैव; पीतेति सर्व्वस्यालंकारस्य, प्रलम्बेत्यव-यववर्गसौष्ठवस्य, ताम्रेति सौन्दर्य्यस्य. सुस्मितमिति माधुर्य्यस्य, रुचिरेति सांग-श्रीमुखसहजसौन्दर्य्यविशेषस्य वयसश्चोप-लक्षणम् ॥ २७ ॥ स्वलंकृतेति अलककुण्डलादिद्वारा श्रीमुखशोभाविशेषापेक्षयेति; स्त्रियः श्रीमहिष्याद्यास्तत्र तत्र स्थाने स्थाने नितरां लिल्युः । कुतः ? ह्रीता लज्जिताः, ह विस्मये, स्फुटमिति वा ॥ २८ ॥

### श्रीमद्वीरराघवाचार्यकृता भागवतचन्द्रचन्द्रिका

आकीर्य्यमाण इति । स्तुवद्भिर्विविधैर्देवैः कर्तृभिः कुसुमोत्करैः कुसुमाञ्जलिभिः कुसुमजालैर्वा आकीर्य्यमाणः प्रद्युम्नः अम्बरे स्वयं चरति अन्यांश्च चारयति तच्छीला तथा तया भार्यया कर्त्र्या विहायसा आकाशमार्गेण पुरीं द्वारकां प्रति नीतः ॥ २५ ॥ तत्र हे राजन् ! ललनाः स्त्रिय एव रत्नानि तैः सङ्कुलम् अन्तःपुरश्रेष्ठं पत्न्या सह प्रविवेश यथा विद्युता सह वलाहको नीलमेघस्तद्वत् ॥ २६ ॥ तमिति । तं प्रविष्टं प्रद्युम्नं दृष्ट्वा स्त्रियः कृष्णमेव मत्वा लज्जितास्तत्र तत्र निलिल्युः कृष्णं मत्वेत्यत्र हेतुं वदन् कृष्णासाधारणैर्धर्मैर्विशिनष्टि । जलदश्याममित्यादि । प्रलम्बौ दीर्घौ बाहू यस्य तं नीला वक्राश्च येऽलकास्त एवालयस्तैरलंकृतं मुखाम्भोजं यस्य तम् ॥ २७-२८ ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

ताम्रे रक्तवर्ण अक्षिणी यस्य तम् अब्जवत् प्रान्तरक्तवर्णाश्रमित्यर्थः ॥ २७-३९ ॥

### श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः

तं दृष्ट्वेत्यादि कृष्णाकारत्वात्, अतः श्रीकृष्णो द्वारकायामन्तःपुरे द्विभुज एवेति । कृष्णभानत्वे हेतुः—जलदश्याम-मित्यादि—विशेषणानि ॥ २७ ॥ अतः कृष्ण एष इति मत्वान्तःपुरस्थिताः स्त्रियो दासीप्रभृतयस्तत्र तत्र निलिल्युर्लीना बभूवुः । कुतः ? इत्याह—ह्रीता लज्जिताः । एतेन श्रीकृष्णस्य नित्यकिशोरत्वम् ॥ २९-३९ ॥

### श्रीनाथचक्रवर्तिपादविरचिता चैतन्यमतमञ्जूषा

तं दृष्ट्वा जलदश्याममित्यादि । कृष्णाकारं कृष्णसदृशम्, यतो जलदश्यामम्, अत एव तं कृष्ण एष इति मत्वा ह्रीता लज्जिताः सत्यः स्त्रियः श्रीरुक्मिणी-परिचारिकास्तु तत्रैव निलिल्युः । एतेन श्रीकृष्णस्य सदाकिशोरत्वं व्यज्यते ॥ २९-३९ ॥

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी

ह्रीताः लज्जिताः ॥ २८ ॥

### गूढार्थदीपिनी

दिविजैः देवैः। आकीर्यमाण आच्छाद्यमानः। उत्करैः समूहैः ॥ २५ ॥ बलाहको मेघः ॥ २६ ॥ तमिति युग्मम्। नीला वक्राश्च अलका एव अलयस्तैः। तत्र तत्र इतस्ततः। ह्रेति संकोचे। ह्रीता लज्जिताः ॥ २७-२८ ॥

### श्रीसत्यधर्मकृता श्रीभागवतटिप्पणी

ननु व्रतार्के एकविंशद्दिनं यावद्वाहुप्रहरणो विभुरित्येकविंशद्दिनोक्तिरत्र त्वष्टाविंशाहमित्युक्तिः कथमिति चेन्न। नागरगमनं सप्तमे दिने नैकविंशाहोक्तिस्तत्रात्र तु सह तत्सप्तकेनाष्टाविंशाहोक्तिरिति सङ्ख्यासाम्यसम्भवात्। द्वारकावासिनः सर्वे गतास्ते सप्तमे दिन इति तत्रैवोक्तेः। बाहुभ्यामेव गोविन्दो दिवसानेकविंशतिमित्यादिर्हरिवंशोऽपि व्याख्यातोऽनेनेति ज्ञेयम्। निष्पिष्टान्यङ्गस्योरूणि बन्धनानि शिरस्थानानि यस्य सः क्षीणं सत्त्वं बलं यस्य सः स्विन्नं गात्रं वपुर्यस्य सोऽतिविस्मितो मामेवं क्लिष्टं कुर्वन्न विष्ण्वन्यः स्यादिति ॥ २५ ॥ ज्ञातं प्रमेयं विज्ञापयति। जाने त्वामिति। सर्वभूतानां प्राण ओजोऽवष्टम्भः सहः सहनं बलं तत्प्रापकं पुराणपुरुषं प्रभविष्णुं जगदुत्पादशीलमधीश्वरं विष्णुं जाने ॥ २६ ॥ विश्वसृजां ब्रह्मादीनां सृष्टानामेषामधिपः पालयिता कलयतां संहर्तृत्वेन त्वया स्थापितानां कालः संहारक आत्मनां जीवानामात्मा पर उत्तमात्मा ॥ २७ ॥ स्वोपास्यदशस्यन्दननन्दनात्मतया नन्दनन्दनमभिनन्दयन्नाह। यस्येति। यस्य रामस्येषदुत्कलितोऽल्पमङ्कूरितो रोषः प्रदर्शनमात्रमभिप्रेतं तेनाविर्भूता ये कटाक्षमोक्षास्तैः क्षुभिताश्चलिता नक्रास्तिमिङ्गिलाश्च यस्मिन्सोऽब्धिरकूपारो वर्त्म मार्गमदिाद्दौ। स्वयशस्तद्रूपः सेतुः कृतः। सकारान्तानामकारान्ततेति पक्षे स्वयशसे तदर्थमिति वा। लङ्का चोत्कलिता हनुमद्द्वारा रात्रिसङ्ग्रामे कपिभिश्च रक्षश्शिरांसीषुक्षतानि भुवि पेतुः ॥ २८ ॥

### श्रीमद्वल्लभाचार्यकृता सुबोधिनी

एतत्कर्म न विगीतमिति विज्ञापयितुं देवानां सम्माननामाह आकीर्यमाण इति। आकीरणं सर्वत्र वृष्टिः। कायिके वाचनिके चोक्ते। अर्थान्मानसिकमुक्तमिति सर्वथा देवानामादर उक्तः। ततो मायावत्या अम्बरचारिण्या विहायसा आकाशमार्गेण प्रद्युम्नो द्वारकां नीतः। आदौ भगवद्गृहे पुत्रत्वे सिद्धे पश्चादन्यत्र पुत्रत्वं सिध्यत्विति। पुरशब्देन अन्तःपुरमप्युच्यते। कृष्णान्तःपुरं नीतवती प्रद्युम्नस्य परिज्ञापनार्थम् ॥ २५ ॥ अन्तःपुरेषु वरम्। ललनाशतैः संकुलम्। **विद्युतेव बलाहक** इति शोभा दोषाभावश्चोक्तः। आकाशमार्गेण प्रवेशे विचारोऽपि न जातः। आधिदैविकास्तु जानन्तीति न विरोधं कुर्वन्ति। पत्न्या सह प्रवेशात् लौकिकोऽपि न दोषः ॥ २६ ॥ ततोऽन्तःपुरं प्रविष्टस्य विचारमाह तं दृष्ट्वेत्यष्टभिः। सर्वासां त्रिभिर्विचारः, रुक्मिण्याः पञ्चभिः। साधारणीनां विचारे हेतुं वक्तुं प्रथमतो मोहमाह। अन्तःपुरे यावन्तो जनाः, सुतरां स्त्रियः, तं प्रद्युम्नं भगवत्सदृशं दृष्ट्वा, कृष्णं मत्वा, प्रथमतः ह्रीताः लज्जिताः सत्यः कृष्णस्य स्त्रियो निलिल्युः। ता हि स्वच्छन्दं क्रीडमानाः स्थिताः। अतो भगवान् दृष्टवानिति लज्जा। भगवत्समानतां वक्तुं विशेषणान्याह **जलदश्याम**मित्यादिना। भगवान् षड्गुणसहितः, स्वयमयमपि सप्तधा समान इति। श्रीवत्सकौस्तुभौ विना अन्यस्योपलक्षणं वर्णनम्। जलदश्याममिति रूपतुल्यता। आकृतिस्तु पुत्रत्वादेव समाना भवति। पीतपट्टाम्बरमिति परिच्छदतुल्यता। **प्रलम्बबाहु**मिति स्त्रीणां सम्यक् ज्ञातावयवतुल्यता। **ताम्राक्ष**मिति अनौचित्यात् क्रुद्ध इव स ज्ञातः। इदं वैलक्षण्यमग्रे वक्ष्यति। सुस्मितमिति। तासां भाव्यो धर्मः। रुचिराननमिति सर्वोत्कृष्टशोभा। अलङ्कृतं मुखाम्भोजं यस्य। नीलैर्वक्रैरलकादिभिः, आदिशब्देन कुण्डलकिरीटादिभिः, किं बहुना भगवदीया सर्वा सामग्री ग्राह्या। मुखं हि सर्वेषां भेदजनकम्। तदेव तुल्यं जातमिति भ्रमो युक्तः। यत्र क्वचिल्लीना इति निलीय दर्शनं सम्भवतीति निरूपितम् ॥२८॥

### श्रीसुबोधिनीसारः

स्तुवद्भिः स्तुतिं कुर्वद्भिर्दिविजैर्देवैः कुसुमानां पुष्पाणामुत्करैर्वृंदैराकीर्यमाण आच्छाद्यमानोंबरचारिण्या भार्यया स्त्रिया विहायसाऽऽकाशमार्गेण पुरीं द्वारकां नीतः ॥ २५ ॥ हे राजन् ललनानां स्त्रीणां शतैः संकुलं व्याप्तम् अंतःपुरोत्तमं पत्न्या भार्यया सह विवेश गगनादाकाशाद्विद्युता सह बलाहको मेघ इव ॥ २६ ॥ जलदो मेघस्तद्वत् श्यामं पीतांबरं सुदीर्घबाहुं शोणनेत्रं सुष्ठुस्मितयुक्तमर्शआदित्वादच् सुंदरमुखम् ॥ २७ ॥ नीला वक्राः कुटिला येऽलकादयस्तैः सुष्ठु अलंकृतं मुखांभोजं मुखपद्मं यस्य तं प्रद्युम्नं कृष्णं मत्वा स्त्रियो ह्रीता लज्जिताः तत्र तत्र निलिल्युः ह स्फुटम् ॥ २८ ॥

### गोस्वामिश्रीगिरिधरलालकृताबालप्रबोधिनी

स्तुवद्भिर्दिविजैर्देवैः कुसुमोत्करैः पुष्पाञ्जलिभिराकीर्यमाणः आच्छाद्यमानः प्रद्युम्नः अम्बरे आकाशे स्वयं चरति अन्यांश्च चारयतीति तच्छीलया भार्यया मायावत्या विहायसा आकाशमार्गेण पुरंप्रति नीतः प्रापित इत्यन्वयः ॥ २५ ॥ ततश्च

हे राजन् ! यथा विद्युता सह वलाहको नीलमेघो गगनादवतीर्य प्रविशेत्तथा पत्न्या सह ललनानामुत्तमस्त्रीणां शतैः शङ्कुलं व्याप्तं अन्तःपुरश्रेष्ठं विवेशेत्यन्वयः ॥ २६ ॥ तदा तं प्रद्युम्नं दृष्ट्वा कृष्णं मत्वा ह्रीता लज्जिताः स्त्रियस्तत्र तत्र निलिल्युरिति द्वयोरन्वयः । कृष्णाभिमाने कृष्णासाधारणगुणान् हेतुत्वेन दर्शयति—जलदो मेघस्तद्वत् श्यामम् । पीते कौशेये कीटविशेपरचितकोशजनिततन्तुनिर्मिते वाससी यस्य तम् । प्रलम्बौ बाहू यस्य तम् । ताम्राक्षं रक्तनेत्रम् । सुस्मितं मन्दहासयुक्तम् । रुचिरं स्वत एवातिसुन्दरमाननं यस्य तम् ॥ २७ ॥ नीला वक्राश्च ये अलकास्त एवालयः, तैः स्वलङ्कृतं मुखाम्भोजं यस्य तम् । 'एवं सर्वथा श्रीकृष्णसादृश्यमाश्चर्यमेव' इति द्योतयति—हेति ॥ २८ ॥

## अन्वितार्थप्रकाशिका

आकीर्यमाण इति ॥ स्तुवद्भिः दिविजैर्देवैः कुसुमोत्करैः पुष्पाञ्जलिभिराकीर्यमाणः आच्छाद्यमानः प्रद्युम्नः अम्बरे आकाशे स्वयं चरति अन्यांश्च चारयतीति तच्छीलया भार्यया मायावत्या विहायसा आकाशमार्गेण पुरं प्रति नीतः प्रापितः ॥२५॥ अन्तरिति । हे राजन् ! यथा विद्युता सह बलाहको नीलमेघो गगनादवतीर्य प्रविशेत्तथा पत्न्या सह ललनानामुत्तमस्त्रीणां शतैः सङ्कुलं व्याप्तं श्रीकृष्णस्य अन्तःपुरेषु वरं श्रेष्ठं रुक्मिणीगृहं विवेश ॥ २६ ॥ तमिति द्वयम् ॥ जलदो मेघः तम् इव श्यामं पीते कौशेये कीटविशेषरचितकोशजनिततन्तुनिर्मिते वाससी यस्य तं प्रलम्बौ बाहू यस्य तं ताम्राक्षं रक्तनेत्रं सुस्मितं मन्दहासयुक्तं रुचिरं स्वत एवातिसुन्दरमाननं यस्य तं नीला वक्राश्च ये अलकास्त एवालयास्तैः स्वलंकृतं मुखाम्भोजं यस्य तं प्रद्युम्नं दृष्ट्वा कृष्णं मत्वा ह्रीता लज्जिताः स्त्रियस्तत्र तत्र निलिल्युरिति ॥ २७–२८ ॥

## श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्

दिविजैः देवैः कुसुमोत्करैः पुष्पसमूहैः विहायसा आकाशमार्गेण पुरं द्वारावतीं ॥ २५ ॥ विद्युता सह बलाहकः । वारिवाहकः पयोद इव ॥२६–२७॥ नीलाः श्यामाश्च वक्राश्च ये अलकास्त एवालयो भ्रंगास्तैः कृष्णं मत्वा ह्रीताः लज्जां प्राप्ताः ॥२८॥

## भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

आकीर्यमाण इति । ततः स्तुवद्भिः, दिविजैर्देवैः कर्तृभिः कुसुमोत्करैः कुसुमाञ्जलिभिः कुसुमजालैर्वा करणैः आकीर्यमाणः प्रद्युम्नः, अम्बरे स्वयं चरत्यन्यांश्च चारयति तच्छीला तया, भार्यया रत्या कर्त्र्या, विहायसाऽऽकाशमार्गेण, पुरीं द्वारिकां, नीतः प्रापितः ॥ २५ ॥ अन्तःपुरेति । हे राजन्, तत्र ललनाः स्त्रिय एव रत्नानि तैः संकुलं, ललनाशतसंकुलमित्यपि पाठः । अन्तःपुरं, विद्युता सह वर्त्तमानः, बलाहको मेघः इव, प्रद्युम्नः गगनात्, सकाशात्, पत्न्या सह, विवेश ॥ २६ ॥ तमिति स्वलंकृतमिति च । जलदश्यामं, पीतकौशेयवाससं, प्रलम्बबाहुं, ताम्राक्षं रक्तनयनं, सुस्मितं मन्दहाससहितं, रुचिराननं सुन्दरवदनं, नीला वक्राश्च ये अलकास्त एवालयस्तैः स्वलंकृतमुखाम्भोजं, तं प्रविष्टं प्रद्युम्नं, दृष्ट्वा, श्रीकृष्णं, मत्वा च ह्रीता लज्जिताः, स्त्रियो भगवदङ्गनाः, ह स्फुटमेव, तत्र तत्र, निलिल्युः । इति द्वयोरेकसम्बन्धः ॥ २७–२८ ॥

## कृष्णप्रिया

विजयी वीर प्रद्युम्न जी पर देव लोगों ने प्रसन्नता प्रकट करते हुए पुष्प वर्षा की, एवं प्रद्युम्नजी का यशोगान करने लगे और आकाश मार्ग से विमान द्वारा अथवा दिव्य गति द्वारा निजाङ्गना श्रीरति देवी के साथ श्री प्रद्युम्न जी को द्वारिकानाथ की दिव्य पुरी में ले गयी ॥ २५. ॥ महाराज परीक्षित् ! आकाश मार्ग से मेघश्याम सांवरे वर प्रद्युम्न जी के साथ गौर वर्णिनी रतिदेवी प्रस्थान कर रहे थे तब तो ऐसा रमणीय दृश्य बना कि मान लीजिये बिजली के साथ मेघ का युगल जा रहा हो। श्यामसुन्दर द्वारिकाधीश भगवान् श्रीकृष्ण के अन्तःपुर में प्रवेश किया जहाँ वर वर्णिनी सैकड़ों रमणियाँ निवास करती थी।२६। अन्तःपुर वासिनी नारियों ने देखा कि इस पुरुष का श्रीअङ्ग वर्षा कालीन मेघ के समान साँवरा था और पीतवर्ण का कौशेय धारण किया था, दो भुजाएँ घुटनों तक लंबी थी, रतनारे नेत्र युगल थे और मुख सरोज पर घुंघराली एवं नीली अलकावली इस प्रकार सुशोभित हो रही हैं मानो भौंरे खेल रहें हो और मुख पर मन्द मन्द मुसकान की अनूठी छटा चित्त चुरा लेती थी। श्रीकृष्णचन्द्र की सर्व अर्धाङ्गनाएँ प्रद्युम्न जी को श्रीकृष्ण मानकर सकुचा गयीं और घरों में लुक-छिप गयीं ॥ २७–२८ ॥

**[1]अवधार्य शनैरीषद्[2]लक्ष्यणेन योषितः । उपजग्मुः प्रमुदिताः सस्त्रीरत्नं [3]शुचिस्मिताः ॥ २९ ॥**

**अथ तत्रासितापाङ्गी वैदर्भी वल्गुभाषिणी । अस्मरत् स्वसुतं नष्टं स्नेहस्नुतपयोधरा ॥ ३० ॥**

**को न्वयं नरवैदूर्यः कस्य वा कमलेक्षणः । धृतः कया वा जठरे केयं [4]लब्धा त्वनेन वा ॥ ३१ ॥**

**मम [4]चाप्यात्मजो नष्टो नीतो यः सूतीका [5]गृहात् । एततुल्य [6]वयोरूपो यदि जीवति कुत्रचित् ॥ ३२ ॥**

---

१. उप–विज. । २. सुवि–श्रीधर. वंशी. जीव. शुक. सु. ; शुचि–वीर. विज. । ३. क्वेयं–वीर. ; कया लब्धोऽयक्तेन वा–विज. । ४. ममासावा–वीर. । ५. लयात्–प्रा. पा. । ६. सम–विज. ।

### कर्दमक्षमा

अन्वयः--शनैः, शनैः, इषत्, वैलक्षण्येन, अवधार्य, शुचिस्मिताः, प्रमुदिताः, योषितः, सस्त्रीरत्नम्, प्रद्युम्नम्, उप-जग्मुः ॥ २९ ॥ अथ, तत्र, असितापाङ्गी, वल्गुभाषिणी, वैदर्भी, नष्टम्, स्वसुतम्, अस्मरत्, ततः, स्नेहस्नुतपयोधरा, जाता ॥ ३० ॥ अयम्, नरवैडूर्यः, कः, नुः ? वा, कमलेक्षणः, कस्य ? कया, वा, जठरे, धृतः ? वा, अनेन, तु, लब्धा, इयम्, का वा ॥ ३१ ॥ मम, अपि, आत्मजः, यः, सूतिकागृहात्, नीतः, च, नष्टः, यदि, कुत्रचित्, जीवति, चेत्, एतत्, तुल्य-वयोरूपः, भवेत् ॥ ३२ ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

श्रीकृष्णो न भवतीत्यवधार्य स्त्रीपु रत्नं श्रेष्ठा रतिस्तत्सहितम् ॥ २९-३० ॥ सुतं स्मरन्त्याह । कोन्वयमिति नर-वैडूर्यः पुरुषश्रेष्ठः ॥ ३१ ॥ एतेन तुल्यं वयो रूपं च यस्य स भवेदिति ॥ ३२ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

वैलक्षण्येन कृष्णलक्षणविपरीत लक्षणेन । ईषद्वैलक्षण्यं वर्णादिशोभातः किंचिन्न्यूनत्वम्, वयसश्च तादृशभावनिरीक्ष-णादिराहित्यैर्विनयिदृष्टत्वादिकञ्च, तेनावधार्य उप समीप आजग्मुः । प्रकर्षेण मुदिताः श्रीकृष्णस्वरूपस्वाभाव्यात् । सुवि-स्मिताश्चान्यत्र तदसंभवात् । स्त्रीति सामान्यनिर्देशस्तत्पत्नीत्वज्ञानरहितानां तासामभिप्रायेणः । रत्नत्वनिर्देशस्तत्स्पर्शेन तादृशी-त्वप्राप्तेः ॥ २९ ॥ अथ स्त्रीसमागमोत्तरम् । तत्र स्त्रीषु । असितापांगी नीलरुचिनेत्रांता । अथ समागमोत्तरमेव । तत्र तासु पश्यंतीषु मध्ये । असितापांगीति विलोकनसौंदर्यस्य, वल्गुभाषिणीति भाषणसौंदर्यस्याभिप्रायेण । अस्मरत्सारूप्यदर्शनेनानुसंदधे । स्वशब्देन स्नेहाधिक्यमुक्तम् । तदेवाह—स्नेहेति । चिरातीतत्वेऽपि स्नुतपयोधराऽभूत् ॥ ३० ॥ अनेन नरश्रेष्ठेन, नराकारवैडूर्य-मणिवद्दीप्यमानेन वा ॥ ३१ ॥ प्रकारांतरेण शंकते—ममेति । नष्टोऽदर्शनं गतः । अपि संभावनायाम् । यदि कुत्रापि जीवेत्तदेत-त्तुल्यवयोरूपो भवेदित्यर्थः ॥ ३२ ॥

### श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी

ईषद्वैलक्षण्यं वर्णादिशोभातः किञ्चिन्न्यूनत्वं वयश्च तथा तादृशभावनिरीक्षणादिराहित्ये विनयिदृष्टित्वादिकं च तेनाव-धार्य्य उपसमीपे जग्मुः प्रकर्षेण मुदिताः श्रीकृष्णसारूप्यस्वाभाव्यात् शुचिस्मिताश्च अन्यत्र तदसम्भवात् स्त्रीति सामान्यनिर्देश-स्तत्पत्नीत्वज्ञानोदयरहितानां तासामभिप्रायेण रत्नत्वनिर्द्देशः तत्स्पर्शेन तादृशीत्वप्राप्तेः ॥ २९ ॥ अथ समागमादनन्तरमेव तत्र तासु पश्यन्तीषु मध्ये असितापाङ्गीति विलोकनसौन्दर्य्यस्य वल्गुभाषिणीति भाषणसौन्दर्य्यस्याभिप्रायेण अस्मरत् सारूप्यदर्शने-नानुसन्दधे स्वशब्देनात्यन्तस्नेहविषयतोक्ता अत एव चिरकालेऽतीतेऽपि स्नेहस्नुतपयोधरा सती ॥ ३० ॥ नरवैडूर्यः नरेषु स इव श्रेष्ठः कस्य पुत्रो वा ॥ ३१ ॥ नष्टः अदर्शनं गतः अपि सम्भावनायां यदि कुत्रापि जीवेत् तदेतत्तुल्यवयो भवेदित्यर्थः ॥ ३२ ॥

### श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी

ईषद्वैलक्षण्यं श्रीभगवतो वर्णादिशोभायाः सकाशात् किञ्चिन्न्यूनत्वम्; पुत्रत्वेऽपि प्रतिबिम्बरूपत्वात् । यद्वा, तद्वत् सभावनिरीक्षणादिराहित्यं विशेषतस्तासु विनयादिदृष्ट्या नम्रमुखत्वादिकञ्च तेनावधार्य्य, शनैरिति प्रायो द्वयोः समरूपतया धैर्य्यादिना शीघ्रतदीयभावानभिव्यक्त्या वा, किंवा तासामेव सहजवात्सल्य-लज्जादिना सुबुद्धयस्फूर्त्या सद्यो निश्चयाशक्तेः, उप समीपे जग्मुः, प्रकर्षेण मुदिताः—वात्सल्यभावविशेषोदयात् श्रीकृष्णसारूप्यदर्शनाद्वा, सुविस्मिताश्च, अकस्मात्तत्रागमनात्, स्वप्रभुसारूप्याच्च, स्त्रीरत्नमिति तदानीं तासु तस्यास्तत्पत्नीत्वाज्ञानाभिप्रायेण ॥ २९ ॥ अथ समीपगमनानन्तरमेव, तत्र तासु मध्ये, तस्मिन् वा स्थाने, असितापांगीति स्नेहेनेयदीक्षणस्य, वल्गुभाषिणीति च सुन्दरभाषणस्याभिप्रायेण, तच्च को न्वयमित्या-दिना व्यक्तं भावि । स्व-शब्देनात्यन्तस्नेहविषयतोक्ता, अत एव चिरकालेऽतीतेऽपि स्नेहेन स्नुतपयोधरा सती स्मरणेनैव स्नुत-पयोधरत्वे जातेऽपि तथाभूतास्मरदिति स्मरणक्षरणयोरेककालता स्नेहभरविवक्षयाभिप्रेता । यद्वा, दर्शनमात्रेणैव स्नेहस्नुत-पयोधरा सती, यद्वा, ततश्च स्नेहस्नुतपयोधराभूदिति पृथग् वाक्यम् ॥ ३० ॥ नु वितर्के, नरवैडूर्य्यत्वमेवोद्दिशति--कमलेक्षण इति । एतच्चाशेषमहापुरुषलक्षणस्योपलक्षणम्, कस्य पुत्रो वा जठरे धृत इति पितुः सकाशान्मातुः स्नेहाधिक्येन विशेषं सूचयति ॥ ३१ ॥ तुल्यतया स्वपुत्रस्य स्मारणेन स्नेहाकृष्टचित्तोद्भावयति—ममेति । नष्टोऽदर्शनं गतः, यतो नीतः; केनचित् नेतुरज्ञानात्तदनिर्द्देशः । अपि सम्भावनायाम्, स यदि कुत्रापि जीवेत्, तदेव तुल्यवयोरूपो भवेदित्यर्थः ॥ ३२ ॥

### श्रीमद्वीरराघवाचार्यकृता भागवतचन्द्रचन्द्रिका

ततस्ता योषितः शनैरीषद्वैलक्षण्येन श्रीवत्साद्यभावरूपेणेति भावः अवधार्य्य कृष्णो न भवत्ययमिति निश्चित्य स्त्रीरत्नेन सहितं प्रद्युम्नमुपजग्मुः समीपमाजग्मुः ॥ २९ ॥ अथ तत्रेति वल्गु सुन्दरं यथा तथा भाषते इति तथा सा वैदर्भी रुक्मिणी नष्टं

सुतमस्मरत् स्नेहेन स्नुतौ तरलौ पयोधरौ यस्याः इत्थं प्राहेति शेषः ॥ ३० ॥ उक्तिमेवाह । कोन्विति पञ्चभिः । अयं नर एव वैडूर्यः पुरुषरत्नमित्यर्थः कोनु को वा कस्य वा सम्बन्धी पुत्र इति यावत् कया स्त्रिया जठरे धृतः कस्याः पुत्र इत्यर्थः । अनेनेयं स्त्री क लब्धा ॥ ३१ ॥ योऽसौ ममात्मनः सूतिकागृहान्नीतो नष्टोऽदृष्टश्च स एवायं किम्वेत्यर्थः । एतेन तुल्यं वयो रूपं च यस्य सोऽस्मत्पुत्रः कच्चिद्यदि जीवति ॥ ३२ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

कृष्णो न भवतीत्यवधार्य तमिति पूर्वस्याऽनुषङ्गः ॥ २९-३० ॥ नरवैडूर्य्यः पुरुषश्रेष्ठः कस्य पुत्रः ॥ ३१ ॥ नीतो बालग्रहेण ॥ ३२-३९ ॥

### गूढार्थदीपिनी

अवधार्य नायं कृष्ण इति निश्चित्य । स्त्रीरत्नं रतिः ॥ २९ ॥ वल्गु मधुरम् ॥ ३० ॥ वैदूर्यः नीलमणिद्दीप्यमानः । कस्य पुत्र इति शेषः ॥ ३१ ॥ एतेन तुल्यं वयो रूपं च यस्य सः तथा भवेत् ॥ ३२ ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

स्त्रीषु रत्नं श्रेष्ठा रतिस्तत्सहितम् ॥ २९-३० ॥ नरेषु वैडूर्यः श्रेष्ठः ॥ ३१ ॥ एतेन तुल्ये वयोरूपे यस्य सः यदि जीवति तर्हि कच्चिद्भवति ॥ ३२-३९ ॥

### श्रीसत्यधर्मकृता श्रीभागवतटिप्पणी

इति विज्ञातं विज्ञानं ज्ञानात्मकं ब्रह्म येन स तमृक्षराजानं । समासान्तविधेरनित्यत्वान्न टच् । तं प्रति अच्युतो व्याजहार ॥ २९ ॥ शंकरेण करेण तमभिमृश्य मेघगम्भीरया गिरा व्याजहार ॥ ३० ॥ वयं हे ऋक्षपते ऋक्षपत इति वा आत्मनो मिथ्याभिशापं प्रमृजन् । किं प्रयुक्तस्त्वमभिशापयुक्त इत्यत आह । अमुना मणिनेति । वयमिति बहुवचनं रामादिरूपाणां संङ्ग्रहार्थम् । मृजन्नित्येकवचनं च तेषामैक्यसूचनार्थमिति बोध्यम् । यद्वा नागरैः सहागमनाद्वयमित्युक्तिस्तथाऽन्तश्चैक एव विवेशापयशश्चैकमाग्रस्येत्येकवचनेन च सम्भवति ॥ ३१ ॥ स्वां दुहितरं जाम्ववतीं नाम्ना कन्यां दीप्तिमतीं कन्यामविवाहितां सहमणिमिति कन्याविशेषणं स जाम्बवान्कृष्णायोपजहार ॥ ३२ ॥

### श्रीमद्वल्लभाचार्य्यकृता सुबोधिनी

ततो जिज्ञासायां भगवतः किञ्चिदाधिक्यं श्रीवत्सादिकं च दृष्ट्वा ईषद्वैलक्षण्येन साक्षाद्भगवानयं न भवतीति निश्चित्य, तत्तुल्यत्वेन तदीयत्वं च निश्चित्य, पुत्र एवायं भविष्यतीति प्रमुदिताः सत्यः स्त्रीरत्नसहितं तं द्रष्टुं सर्वा एव योषितः समागताः । शुचि स्मितं यासामिति तासां भावान्तरं निवारितम् ॥ २९ ॥ तत्र रुक्मिण्यपि समागता, तासां तस्याश्च पूर्वोक्ता धर्मास्तुल्याः । विशेषं वक्तुं प्रक्रियान्तरमारभते अथेति । भगवत्पुत्रो भवतीति सम्भावनया सिद्धम् । तासां त्वस्मत्पुत्रो न भवतीति निश्चयः । अस्यास्तु सन्देह इति भिन्नः प्रक्रमः । ननु पुत्रत्वे निर्धारिते पश्चात्स्वस्याः अन्यस्या वेति विचारो युक्त इत्याशङ्क्य, भगवत्पुत्रत्वं निर्धारयितुं एकहेलया स्वस्या अपि प्रथमतः सादृश्यं ज्ञातवतीत्याह । तत्र स्त्रीसमूहे, असितापाङ्गी शोभनदर्शना, असिते कृष्णे वा अपाङ्गौ यस्या इति, तेन ज्ञानदृष्टिरस्याः अन्यापेक्षया विलक्षणेति इयमेव सादृश्येन पुत्रं स्मृतवती, यतो वैदर्भी अत्यन्तं भक्ता । अन्तःकरणदेहयोः उत्तमत्वमुक्त्वा मध्ये वाचोऽप्युत्तमतामाह । अन्यथा कायवाङ्मनसां एकमतुल्यं स्यादिति । वल्गु भाषत इति वल्गुभाषिणी । सादृश्येन संस्कार उद्बुद्ध इति स्वसुतं नष्टमस्मरत् । यद्यप्यत्यन्तशिशोः स्थूलस्यापि नावयवादिसाधारण्यम्, तथापि तस्याः त्रिविधोऽप्युत्कर्ष उक्त इति तादृशस्यैव वृद्धावयं भावो भवतीति निश्चित्य स्वसुतं नष्टमस्मरत् । स्नेहेन स्नुतौ पयोधरौ यस्या इति । आधिभौतिकस्य देहस्य आधिदैविकस्यापि तत्सम्पादकस्य संवादो निरूपितः ॥ ३० ॥ एतदीयाश्चत्वारो धर्मा निरूप्यन्ते । आन्तर एको, बाह्यास्त्रयः । आदौ परिदृश्यमानं सम्भावयति को न्वयमिति । नु इति वितर्के । अयं कः, देवादिषु मध्ये क इत्यर्थः । वैडूर्यमणिः श्यामपीतो भवति । अयं नीलमेघश्यामोऽपि तया सहितस्तत्कान्त्या वैडूर्यतुल्यो जातः । वैडूर्यमणिश्चेत्, नराकारः सहज एवोत्पन्नो भवेत् । सोऽपि चेतनो भवेत्, तदा प्रद्युम्नतुल्यः स्यादिति मत्वाह नरवैडूर्य इति । ननु कस्यचिद्वंशे एतादृशा एवोत्पद्यन्ते, यथा देशविशेषे पाषाणा हीरकरूपा भवन्ति, तस्मान्नाश्चर्यमिति चेत्, तत्राह कस्य वेति । को वा एतादृशः यस्यायं पुत्रो भवेत् । कमलेक्षणत्वान्न स्थावरस्य । स्त्रिया अपि भावोऽस्मिन् दृश्यत इति न स्थावराज्जातः । नापि मानसः, नापि केवलात् पुरुषात् । अतः का वा तादृशपुरुषयोग्येति तां भावयति कया वा जठरे धृत इति । अस्तु वा इयं भार्या एतद्योग्या, कथमनेनोपलब्धेत्याह केयं लब्धेति । अनेनापि इयं का लब्धा ।

**वैत्यनादरे** । रुक्मिणीहृदये सा न सम्यग्भातीति । पूर्वजन्मसम्बन्धिनीति ॥ ३१ ॥ एतद्दर्शनेन स्वपुत्रस्मरणात् सादृश्यमेव स्मारकमिति सादृश्यमुपपादयति । **मम चापीति** । यथा कस्याश्चिदयं पुत्रः, एवं ममापि पुत्रः एतादृशो भवतीति । **आत्मज** इति गर्भाज्जातः । भिन्नतया विद्यमानं चारुदेष्णमन्यं वा तुल्यतया निरूपयतीत्याशङ्क्य व्यावर्तयति **नष्ट** इति । तर्हि मृतस्य कथं तुल्यतेत्याशङ्क्याह **नीत** इति । अयं नाशः अदर्शनार्थः । सूतिकागृहादित्यनिर्देश एव केनचिन्नीतः । तर्हि कथं रक्षसा घातकेनान्येन वा नीतः । तुल्यो भविष्यतीति चेत्, तत्राह **यदि जीवति कुत्रचिदिति** । तदा एतत्तुल्यं वयो रूपं च यस्य तादृशो **भवेत्** । एतावता स्वपुत्रस्य सम्भावनजीवितस्य एतत्तुल्यता निरूपिता ॥ ३२ ॥

### श्रीसुबोधिनीसारः

शनैः ईषत्किंचिद्वैलक्षण्येन श्रीवत्साद्यभावेन योषितः स्त्रियोवधार्य निश्चित्य प्रहर्षिता अतिविस्मिताः स्त्रीरत्नेन सहितमुपजग्मुः आययुः ॥ २९ ॥ अथेति मंगले असितापांगी कृष्णकटाक्षी वल्गुभाषिणी मधुरवाणी वैदर्भी रुक्मिणी स्नेहेन प्रेम्णा स्नुतौ क्षरंतौ पयोधरौ स्तनौ यस्याः सा नष्टं स्वपुत्रं तत्रास्मरत् ॥ ३० ॥ नरवैदूर्यः पुरुषरत्नोयं कः कमलेक्षणः कस्यायं कया वा जठरे उदरे धृतः अनेन पुंसा इयं का वा उपलब्धा प्राप्ता ॥ ३१ ॥ ममाप्यात्मजः पुत्रो नष्टो यः सूतिकाभवनात्केनचिन्नीतः कुत्रचित् स च यदि जीवति तर्हि एतस्य तुल्यं वयो रूपं यस्य स तथा ॥ ३२ ॥

### विवरणटिप्पणी

**अथ तत्रेत्यत्र** । आधिदैविकस्यापीति । पयोधरावाधिभौतिको देहः । स्नेहः स्तन्यसंपादक आधिदैविकः, तस्यापीत्यर्थः ।

इति षष्ठाध्यायव्याख्या ।

### गोस्वामिश्रीगिरिधरलालकृताबालप्रबोधिनी

ततश्च ता योषितः शनैरीषद्वैलक्षण्येन श्रीवत्सकौस्तुभाद्यभावरूपेणावधार्य कृष्णो न भवतीति निश्चित्य प्रमुदिताः सुविस्मिताश्च सत्यः स्त्रीरत्नसहितं प्रद्युम्नमुपजग्मुः समीपमाजग्मुः ॥ २९ ॥ अथ तद्दर्शनानन्तरं तत्रान्तःपुरे रुक्मिणी वैदर्भी नष्टं स्वसुतमस्मरत्, सादृश्यस्य स्मारकत्वात् । स्पष्टमन्यत् ॥ ३० ॥ ततश्चाह—को न्विति पञ्चभिः । नरवैडूर्यः पुरुषश्रेष्ठः कस्य वा पुत्रः ? अनेन लब्धेयं स्त्री च का ? ॥ ३१ ॥ ममापि यः आत्मजः सूतिकागृहात् केनापि नीतः अपहृतः, अत एव नष्टः अदर्शनं गतः यदि कुत्रचिज्जीवति तदेतेन तुल्यं वयो रूपं च यस्य तथाभूतः स्यादित्यन्वयः ॥ ३२ ॥

### अन्वितार्थप्रकाशिका

अवधार्येति ॥ ता योषितः शनैरीषद्वैलक्षण्येन श्रीवत्सकौस्तुभाद्यभावरूपेणावधार्य कृष्णो न भवतीति निश्चित्य प्रमुदिताश्च सत्यः स्त्रीषु रत्नं श्रेष्ठा रतिस्तत्सहितं प्रद्युम्नमुपजग्मुः समीपमाजग्मुः ॥ २९ ॥ अथेति ॥ अथ तत्रान्तःपुरे असितापाङ्गी वल्गुभाषिणी स्नेहस्नुतपयोधरा वैदर्भी नष्टं स्वसुतमस्मरत् सादृश्यस्य स्मारकत्वात् ॥ ३० ॥ को न्विति ॥ अयं कमलेक्षणो नरवैदूर्यः पुरुषश्रेष्ठः को नु कस्य वा पुत्रः कया वा जठरे धृतः अनेन लब्धा इयं स्त्री च का वा ॥ ३१ ॥ ममेति ॥ ममापि यः आत्मजः सूतिकागृहात् केनापि बालग्रहेण नीतः अपहृतः अत एव नष्टः अदर्शनं गतः यदि कुत्रचिज्जीवति तदेतेन तुल्यं वयो रूपं च यस्य तथाभूतः स्यात् ॥ ३२ ॥

### श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्

नायं कृष्ण इत्यवधार्य निश्चित्य सस्त्रीरत्नं स्त्रीषु रत्नवत् शोभमाना रतिस्तत्सहितं ॥ २९-३० ॥ स्मृत स्वसुता रुक्मिण्याह कोन्विति अयं नरवैदूर्यो नरवरः । कस्य पुत्रः ॥ ३१ ॥ सूतिकागृहात् योनितः यदि कुत्रचित् जीवति तर्हि एतेन तुल्यं वयोरूपं च यस्य तथाभूतः स्यात् ॥ ३२ ॥

### भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

अवधार्येति । शुचिस्मिताः, ता योषितः, सस्त्रीरत्नं स्त्रीरत्नसहितं, तं, ईषद्वैलक्षण्येन, श्रीवत्साद्यभावरूपेणेति भावः । अवधार्य श्रीकृष्णो न भवत्ययमिति निश्चित्य, प्रमुदिताः सत्यः, शनैः उपजग्मुः तत्समीपं ययुः ॥ २९ ॥ अथेति ॥ अथ, तत्र वल्गुभाषिणी असितापाङ्गी वैदर्भी रुक्मिणी, स्नेहस्नुतपयोधरा सती, नष्टं, सूतिकागृहादिति शेषः । स्वसुतं, अस्मरत् ॥ ३० ॥ सुतं स्मरन्ती रुक्मिण्याह । को न्वयमिति पञ्चभिः । क इति । नरवैदूर्यः नराकारवैदूर्यरत्नमिव शोभमानः, अयं कः नु स्यात् । कमलेक्षणः कमलनयनः, अयं कस्य वा पुत्रः स्यात् । अयं जठरे उदरे, कया स्त्रिया, वा धृतः स्यात् । कस्याः पुत्र इत्यर्थः । अनेन. इयं स्त्री तु, क वा लब्धा भवेत् ॥ ३१ ॥ ममेति । किं च सूतिकागृहात्, नीतः गृहीतः, केनचिदिति शेषः । अत एव, नष्टः सः, मम आत्मजः पुत्रः अपि, यदि कुत्रचित् जीवति वा, तर्हि, एतेन तुल्यं बयो रूपं च यस्य तथाभूतः, भवेत् ॥ ३२ ॥

### कृष्णप्रिया

पुनः कुछ समय के वाद स्त्रियों को यह मालूम हो गया कि ये श्रीकृष्ण नहीं हैं क्योंकि भगवान कृष्ण की अपेक्षा इनमें कुछ विलक्षणता है। तव अन्तःपुर नारियाँ अत्यन्त आश्चर्य एवं आनन्द से भरकर इस दिव्य दम्पती के समीप आ गयी ॥२९॥ अब राजन् परीक्षित ! यहाँ श्यामलोचना वामनयना मधुर-भाषिणी भगवती रुक्मिणी जी आ पहुँची। इस दिव्य नवीन युगल को देखते ही उन्हें अपने दस दिन के खोये हुए पुत्र की याद आयो वात्सल्य स्नेह उमड़ पड़ा और स्तनों से दूध झरने लगा॥ ३० ॥ श्री रुक्मिणीजी मन में सोचने लगी कि यह नररत्न कौन है। यह कमल लोचन किसका सुपुत्र है ? किस भाग्य-शालिनी अम्मा ने अपने गर्भ में धारण किया होगा ? और इस पुण्य पुरुष की पत्नी होने का परम सौभाग्य प्राप्त करने वाली पुण्यमयी नारी कौन होगी ?॥ ३१ ॥ रुक्मिणीजी सोच रही थी कि मेरा भी एक केवल दस दिन का नन्हा सा शिशु खो गया था। न जाने कौन उसे प्रसूतिका गृह से चुरा के ले गया होगा। यदि बालक कहीं भी जीवित होगा तो उसका वय स्वरूप इसी के समान हुआ होगा ॥ ३२ ॥

**कथं त्वनेन संप्राप्तं सारूप्यं शार्ङ्गधन्वनः। आकृत्यावयवैर्गत्या स्वरहासावलोकनैः ॥ ३३ ॥**
**स एव वा[1] भवेन्नूनं यो मे गर्भे [2]धृतोऽर्भकः। अमुष्मिन् प्रीतिरधिका वामः स्फुरति मे भुजः ॥ ३४ ॥**
**एवं मीमांसमानायां वैदर्भ्यां देवकीसुतः। [3]देवक्यानकदुन्दुभ्यामुत्तमश्लोक आगमत् ॥ ३५ ॥**
**[4]विज्ञातार्थोऽपि भगवांस्तूष्णीमास जनार्दनः। नारदोऽकथयत् सर्वं शम्बराहरणादिकम् ॥ ३६ ॥**

### कर्दमक्षमा

अन्वयः—अनेन, आकृत्या, अवयवैः, गत्या, स्वर, हासावलोकनैः, शार्ङ्गधन्वनः, सारूप्यम्, कथम्, सम्प्राप्तम् ? वा, यः, मे गर्भे, धृतः, अर्भकः सः, एव नूनम्, भवेत्, अमुष्मिन्, अधिका, प्रीतिः, भवति, मे, वामः भुजः, स्फुरति ॥ ३३-३४ ॥ एवम् वैदर्भ्याम्, मीमांसमानायाम्, देवक्यानकदुन्दुभ्याम्, सह, उत्तमश्लोकः, देवकीसुतः, आगमत् ॥ ३५ ॥ भगवान्, जनार्दनः, विज्ञातार्थः, अपि, तूष्णीम्, आस, तदा, नारदः, शम्बराहरणादिकम्, सर्वम्, अकथयत् ॥ ३६ ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

तस्य स्वपुत्रत्वं संभावयंत्याह—कथं त्विति ॥ ३३ ॥ तदेवाधिकं संभावयति, स एवेति ॥ ३४ ॥ देवक्यानकदुंदुभ्यां देवक्यानकदुंदुभिभ्यामित्यर्थः ॥ ३५-३६ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

तस्य समागतनरश्रेष्ठस्य। भावयंती चिंतयंती। सारूप्यं सादृश्यम्। स्वरोऽत्र शब्दः। आकृत्याऽनुरूपपुष्टिशोभिताखिल-देहाकारविशेषेण, अवयवैस्तदनुरूपैरेव चरणाद्यंगैः, गत्याऽऽकाशादुत्तीर्य्य कियत्पदन्यासात्, स्वरैर्गंभीरशब्दैः, हासावलोकने प्रसिद्धे एव। समीपागतान्मात्रादीन्प्रति प्रश्नादिभिः स्वरादयोप्यवगता इत्यूह्यम् ॥ ३३ ॥ तदेव स्वपुत्रत्वम्। नूनं निश्चयः। निश्चयद्योतकं शकुनमाह—वाम इति। अधिकेति—स्वस्य जगन्मातृत्वेन सर्वेष्वप्यर्भकेषु सामान्यतः प्रीतिं द्योतयति ॥ ३४ ॥ एवमित्थम्। मीमांसमानायां विचारयंत्याम्। श्रीदेवक्यादिभ्यां सहागमनं प्रायस्तदानीं तद्गृहगमनात्। उद्गतं तमोऽज्ञानं यस्मात्तादृशः श्लोको यशो यस्य। श्रीरुक्मिण्यादीनां तद्विषयकाऽज्ञाननिरासार्थमिति भावः ॥ ३५ ॥ विज्ञातार्थः ज्ञातसर्वतत्त्वः। मातापितृसमक्षं स्वयं लज्जया नाऽकथयदिति भावः। आदिना कथांतरग्रहः। तथाहि—रुद्रेण कामे दग्धे तत्प्राप्त्यर्थं रतिस्तपसा रुद्रमाराधयामास। शंबरोऽपि कामं दग्धमाकर्ण्य रतिलिप्सया रुद्रमाराधयामास। युगपत्तयोस्तपस्समाप्तौ रुद्रो वरं दातुमुभयत्र जगाम। रत्या तु मत्पतिर्मां प्राप्नोत्विति प्रार्थितो महादेवस्तस्यै कृष्णपुत्रो भूत्वा त्वत्पतिस्त्वां प्राप्स्यतीत्युवाच। शंबरस्तु रतिर्मां प्राप्नोत्विति प्रार्थितवान्, तस्मै तथास्त्वित्युक्त्वा गन्तुकामं रुद्रं रतिरुवाच—भगवन्कथं वैपरीत्यं कृतमेवं मास्त्वित्युक्तः पुनस्तस्यै नानाविद्या मोहवतीरुपदिदेश। त्वमाभिर्मायाभिरेनं मोहयिष्यसि, न त्वनेन तव संयोगो भविष्यति, त्वत्पतिरेव त्वां प्राप्स्यतीति न तु मदुक्तिर्व्यर्थेति पुराणांतरादवसेयम्। एतां च विद्यां प्राप्ताय निजपतये उपदेक्ष्यत्यनयैव विद्यया स एनं मारयिष्यतीति। इतः परं सार्द्धश्लोकत्रयं—'नारद उवाच। एष ते तनयः' इत्यारभ्य 'स्नुषेयं तव शोभन' इत्यन्तं प्रक्षिप्तमप्यस्ति

---

१. भगवान्नूनं—वीर.। २. गर्भगतो—वीर.।

३. देवकी वसुदेवाभ्यां नारदेन महात्मना। अन्यैश्च यादवश्रेष्ठैरुत्तमश्लोक आविशत् ॥

४. विदि—विज.।

क्वचित्पुस्तकेषु । विज्ञातार्थत्वेऽपि तूष्णीमासने हेतुः—जनानर्दयति याचयति लीलावैचित्र्येण सर्वेषां सुखप्रदः लज्जया मातृपितृसंनिधौ स्वयन्न किंचिदूचे नरलीलत्वादिति भावः । अन्यथा चिरं शोचंत्याः श्रीरुक्मिणीदेव्यास्तस्मिन्नसूयापि संभवेत् । अकस्मान्नारदागमनं श्रीकृष्णेच्छयैव ज्ञेयम् ॥ ३६ ॥

**श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी**

तु विस्मये सम्यक् प्राप्तिमेव दर्शयति—आकृत्येति । प्रांशुतानुरूपपुष्टिशोभिताखिलदेहाकारविशेषेण अवयवैस्तदनुरूपैरेव श्रीचरणाद्यङ्गैः गत्येति आकाशादुत्तीर्य्य कियत् पदन्यासात् स्वरेति समीपगतान् प्रतिमात्रादितत्त्वप्रश्नादित्यूह्यम् ॥३३॥ अधिकेति । स्वस्य जगन्मातृत्त्वेन सर्वेष्वप्यर्भकेषु सामान्यतः प्रीतिं द्योतयति ॥ ३४ ॥ श्रीदेवक्यादिभ्यां सहागमनं प्रायस्तदानीं तद्गृहगमनात् उद्गतं तमः अज्ञानं यस्मात्तादृशः श्लोको यस्य श्रीरुक्मिण्यादीनामज्ञाननिरासार्थमिति भावः ॥ ३५ ॥ विज्ञातार्थत्वेऽपि तूष्णीमासने हेतुःजनानर्द्दयति याचयतीति लीलावैचित्र्येण सर्वेषां सुखप्रद इत्यर्थः । अन्यथा चिरं शोचन्त्याः श्रीरुक्मिणीदेव्यास्तस्मिन्नसूयापि सम्भवेत् अकस्मान्नारदस्यागमनं श्रीकृष्णेच्छयैव ज्ञेयम् ॥ ३६ ॥

**श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी**

तु विस्मये; पाठान्तरे—नु वितर्के, सम्यक् प्राप्तम्, सम्यक्त्वमेव दर्शयति—आकृत्येति । प्रांशुतानुरूपपुष्टिशोभिताकारेण अवयवैस्तदनुरूपैरेव श्रीचरणाद्यंगैः; गत्येति शनैरीषदग्रेऽभिसरणात्, किंवा अत्राकाशादागमने लीलया भूमौ कियत्पादन्यासात्, स्वरेति च पत्नीं प्रति मात्रादितत्त्वप्रश्नादित्यूह्यम्, शार्ङ्गधन्वन इति तस्यापि शार्ङ्गपाणित्वमभिप्रैति; यद्वा, महावीरत्वं तेन च तस्यापि महाबलिष्ठत्वादिकम् ॥ ३३ ॥ वा वितर्के, नूनं निश्चयेनेत्यर्थः । प्रीतिर्वात्सल्यम्, अधिकेति जगन्मातृत्वेन सर्व्वेष्वप्यर्भकेषु सामान्यतः प्रीतिं द्योतयति; किञ्च, वाम इति । एतत् सर्व्वं हृद्येवाभाषतेति ज्ञेयम्, अन्यथा तच्छ्रवणात्तेनाभिगम्य स्वपरिचयं दत्त्वा मातृपादवन्दनादिकं कृतं स्यात्; यद्वा, व्यक्तमुक्तेऽपि सहसागन्तुकत्वेन शंकादिना सद्यः किमपि वक्तुं कर्त्तुञ्च न शक्तमिति वोद्धव्यम् ॥ ३४ ॥ एवमीदृशं मीमांसमानायां विचारयन्त्यां देवकीसुतत्वादेव देवक्यानकदुन्दुभिभ्यां सह तयोः प्रहर्षार्थम्, यत उत्तमः श्लोको बन्धुवात्सल्यादियशो यस्य सः; यद्वा, उद्गतं तमोऽज्ञानं यस्मात्तादृशः श्लोको यस्य; श्रीरुक्मिण्यादीनामज्ञाननिरासार्थमिति भावः ॥ ३५ ॥ विशेषेणापरोक्षत्वादिना ज्ञातोऽर्थस्तत्तत्त्वं येन सः, वर्त्तमानेऽप्यतीतत्वं तत्पूर्व्वकालस्य तन्निर्द्धारस्य वापेक्षया, यतो भगवान्; किञ्च, जनान् दुष्टदैत्यादीनर्द्दयति हिनस्तीति तथा सः शम्वरवधार्थं तेनैव तथा कृतत्वादिति भावः । तथापि तूष्णीमास, स्वस्य तत्तत्त्वाज्ञानबोधनार्थम्, अन्यथा चिरं शोचन्त्याः श्रीरुक्मिणीदेव्यास्तस्मिन्नसूयासम्भवात्, प्रागनुक्तागमनोऽपि नारदः सर्व्वज्ञत्वेन श्रीकृष्णप्रियत्वेन च काले स्वयमेवाकाशमार्गेणागत इति ज्ञेयम्; किंवा ( भा० ११।२।१ ) 'गोविन्दभुजगुप्तायां द्वारकायां कुरूद्वह । अवात्सीन्नारदोऽभीक्ष्णं कृष्णोपासनलालसः ।' इत्युक्त्या सदैव तस्य श्रीकृष्णसाहित्यप्रसिद्धया पृथगागमनं नोक्तम् । शम्वरेणाहरणं नयनम्; यद्वा, आ सम्यक् समुद्रान्तः प्रक्षेपणादिना हरणम्, आदि-शब्दात् तद्वधं मायावतीतत्त्ववृत्तादिकञ्च ॥ ३६ ॥

**श्रीमद्वीरराघवाचार्यकृता भागवतचन्द्रचन्द्रिका**

तस्य स्वपुत्रत्वं सम्भावयन्त्या—कथमिति ॥ ३३ ॥ निश्चिनोति—स एवेति । यो भगवान् कृष्णांशभूतो मम गर्भगतः स एवायं नूनं ध्रुवं स एवायं भवेदिति पाठान्तरं तत्र हेतुः अमुष्मिन्नस्मिन्मम प्रीतिरधिका भवति मम वामो भुजश्च स्फुरति सञ्चलति अन्यथैतत् न घटेतेति भावः ॥ ३४ ॥ इत्थं वैदर्भ्यां मीमासमानायां तर्कयन्त्यां सत्यामुत्तमश्लोको भगवान् देवकीवसुदेवाभ्यां सह तत्राऽऽजगाम ॥ ३५ ॥ विज्ञातोऽध्यवसितः अर्थः इतरसंशयविषयीभूतोऽर्थो येन तथाभूतोऽपि तूष्णीमास तदा नारदः शम्वराहरणादिकं सर्वमकथयत् ॥ ३६ ॥

**गूढार्थदीपिनी**

भगवतः सारूप्यं समानरूपत्वम् । स्वरः शब्दः ॥ ३३-३४ ॥ मीमांसमानायां तर्कयन्त्याम् दुन्दुभिभ्यां मिलोप आर्षः ॥ ३५-३६ ॥

**श्रीसत्यधर्मकृता श्रीभागवतटिप्पणी**

जनाः द्वारकाप्रजाः शौरेर्निर्गमनदृष्ट्वा द्वादशाहानि प्रतीक्ष्य साप्तदिन्या एव द्वादशाह तया भानं शोकतो मासशब्देनाहान्युच्यन्ते । तथा हि भारत इत्यादि प्रथमस्कन्धोक्तरीत्या ज्ञेयम् । अत एवाचार्यैर्बहून्यहानीत्युदीरणं कृतं । दुःखितास्ते जनाः पुरं द्वारकां विभुदुःखिताः सन्तो द्वादशहानि तेपुः कृष्णदृष्टिमुद्दिश्य तपश्चक्रुरिति वा । अं भगवन्तं शरणं ययुरिति वा ॥३३॥ निशम्यागतनागरजनैः श्रुत्वा बिलादनिर्गतं कृष्णमुद्दिश्याशोचन् शुशुचुः ॥ ३४ ॥ उपतस्थुः सकर्मकत्वेऽपि देवदेवविषये देव्या न देवी

त्वमिति उपाद्देवपूजेति न तङ्। वा लिप्सायामित्युक्तेः परस्मैपदं वा। अर्चयाञ्चक्रुः ॥ ३५ ॥ तेषां द्वारकागाराणां देव्या उपस्थानं सेवा तस्मात्प्रत्यादिष्टा देवीदत्ताश्च ता आशिषोऽभवन्। तत्फलं लपति। प्रादुर्बभूवेति। सिद्धार्थोऽपयशसः श्यामकश्यमन्तकाप्ति-रूपसम्पन्नप्रयोजनः सदारो दारैः सहितश्च हर्षयन्द्वारकौकसः प्रादुर्बभूव ॥ ३६ ॥

## श्रीमद्वल्लभाचार्य्यकृता सुबोधिनी

अतः परं भेदं निराकृत्य स एवायं भवितुं युक्त इति विशेषं निरूपयति द्वाभ्याम्। **कथं त्वनेनेति**। अस्तु वा अय-मुत्तमः। तथापि शार्ङ्गधन्वनः सारूप्यं तदपुत्रत्वे कथमनेन संप्राप्तम्। शार्ङ्गधन्वन इत्यनेन ज्याघाताः भगवतो निरूपिताः। ते अस्मिन्नपि दृश्यन्त इति कायवाङ्मनोभिस्तुल्य इति। समानान् षड्धर्मानाह **आकृत्या अवयवैः** गत्येति। अवयवावयवि-कार्याणि तुल्यानि निरूपितानि। स्वरो वाचिकः, हासावलोकनं मानसं भावसूचकमिति। एतत्तु भेदे न घटत इति स एवायं वा भविष्यतीति संभावयति। **नूनं** निश्चयेन। यो भगवत्पुत्रः, तत्रापि यो मया गर्भे धृतः। ननु भगवाननेकपत्नीक इति द्वीपान्तरे देशान्तरे वा भगवतः सकाशात्कस्यांचिज्जातो भवतु, ततः सर्वमुपपद्यत इति, कथं त्वया जठरे धृतो भविष्यतीत्याशङ्क्याह **वाम स्फुरति मे भुज** इति। वामभुजस्फुरणमत्यन्तप्रियस्य समालिङ्गनं सूचयति। येन परमानन्दो भवति, तादृशः पुत्र एव ॥ ३३-३४ ॥ एवं तस्मिन् स्वपुत्रत्वं निश्चित्यापि सम्यक् लोकतोऽपरिज्ञाने तथा व्यवहारः कर्तुं न शक्यत इति संदिहाना इव स्थिता। ततो भगवान् निश्चयार्थं सर्वैः सह समागत इति वदति **एवमिति**। यतोऽयं देवकीसुतः भक्तहितकारी, सुतरां स्त्रीणाम्, रुक्मिणी च भक्ता, सा च मीमांसमाना क्लेशेनैवं स्थिता। अतस्तद्दुःखनिराकरणार्थं पुत्रत्वेन स्वीकारे पित्रादयः प्रयोजका इति देवक्या आनकदुन्दुभिना च सहितः समागतः। यतोऽयमुत्तमश्लोकः। अन्यथा वाच्यता भवेदिति। अत्र भीतिपतितं अक्षरच्युतकालङ्कारं बोधयति। यथा राक्षो रक्ताक्ष इति। अयं च पुत्रः च्युत एव स्थानात्पुनः प्राप्त इति सूचयितुं **आ सर्वैः** सह अगमत् ॥ ३५ ॥ आगत्यापि स्वयं कथने बहिर्मुखाः लोभं सम्पादयेयुरिति तूष्णीं स्थित इत्याह **विज्ञातार्थोऽपीति**। ज्ञाने **भगवा**निति हेतुः। तूष्णींभावे **जनार्दन** इति। सहि जनानामविद्यामर्दयतीति। निन्दायां तु तेषामविद्या न गमिष्यतीति। तदा भगवदिच्छया नारदः समागत्योक्तवानित्याह **नारदोऽकथयत्सर्वमिति**। स्वकृतमेवेति दोषपरिहारोऽप्यनेन कृतः। शम्बरस्य आहरणमारभ्य समागमनपर्यन्तं सर्वमुक्तवान् ॥ ३६ ॥

## श्रीसुबोधिनी-सारः

मीमांसते आकृत्याकारेणावयवैरंगैः गत्या स्वरेण हासेनावलोकनेन शार्ङ्गधन्वनः श्रीकृष्णस्य सारूप्यमनेन कथं प्राप्तम् ॥ ३३ ॥ संभावयति। योर्भको बालो मे मया गर्भे धृतः स एवायं नूनं भवेत् वा तत्र हेतुः। अमुष्मिन् नरे मेऽधिका प्रीतिः वामो भुजः स्फुरतीति ॥ ३४ ॥ एवंप्रकारेण वैदर्भ्यां रुक्मिण्यां विचारयंत्यां सत्यां देवकीवसुदेवाभ्यां सहोत्तमश्लोकः पुण्यकीर्ति-र्देवक्याः सुतः श्रीकृष्ण आयात्। देवक्यानकदुंदुभिभ्यामिति वक्तव्ये वर्णलोप आर्षः शिक्षायां तथोक्तेः ॥ ३५ ॥ विज्ञातोर्थो येन सोपि जनार्दनो भगवान् तूष्णीमासीत् तदैव तत्रागत्य नारदः शंबराहरणादिकं सर्वं वृत्तांतमकथयत् ॥ ३६ ॥

## गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

तस्य स्वपुत्रत्वमेव सम्भावयति—कथमिति द्वयेन। योऽर्भको मया गर्भे धृतः स एवावायं भवेत् नूनं निश्चितमेतत्, नात्र संशयः। तत्र हेतुमाह—अन्यथा आकृत्यादिभिः शार्ङ्गधन्वनः श्रीकृष्णस्य सारूप्यमनेन कथं सम्प्राप्तमित्यन्वयः। तुशब्दो-न्यथार्थे। तत्रैवान्यमपि हेतुद्वयमाह—अस्मिन्निति। अस्मिन् मम प्रीतिरधिका भवति, तथा मम वामो भुजश्च स्फुरति सञ्चलति। अन्यथैतन्न स्यादित्याशयः ॥ ३३-३४ ॥ वैदर्भ्यां रुक्मिण्यामेवं मीमांसमानायां तर्कयन्त्यां सत्यां देवक्यानकदुन्दुभ्यां देवक्यानक-दुन्दुभिभ्यां सह उत्तमश्लोकः पुण्यकीर्तिर्देवकीसुतः श्रीकृष्णस्तत्रागमत् ॥ ३५ ॥ ननु 'सर्वज्ञत्वात् भगवान् प्रद्युम्नहरणादिकं कथं न ज्ञातवान् ?' तत्राह—विज्ञातेति। विज्ञातः अर्थः प्रद्युम्नहरणादिरूपो येन तथाभूतोऽपि भगवान् शम्बरं हत्वा तमानेतुं समर्थोऽपि कृष्णस्तूष्णीमासीत्। तत्र हेतुमाह—जनार्दन इति। जनानां दुःखमर्दयतीति तथा। स्वदृष्टान्तेन कुटुम्बिजनानां पुत्रवियोगादौ सन्तोषार्थम्, अन्यथा तन्न स्यादित्याशयः। तत्समये आगतो नारदः सर्वमकथयत् ॥ ३६ ॥

## अन्वितार्थप्रकाशिका

कथमिति ॥ आकृत्या प्रांशुत्वादिकया अवयवैः आजानुबाहुत्वाद्यैः गत्यादिभिश्च शार्ङ्गधन्वनः श्रीकृष्णस्य सारूप्यं समानरूपत्वमनेन कथं संप्राप्तम् ॥ ३३ ॥ स इति ॥ योऽर्भको मया गर्भे धृतः स एव वायं नूनं निश्चितं भवेत्। यतः अमुष्मिन्मम प्रीतिरधिका भवति तथा मम वामो भुजश्च स्फुरति सञ्चलति ॥ ३४ ॥ एवमिति ॥ वैदर्भ्याम् एवं मीमांसमानायां तर्कयन्त्यां सत्यां देवक्यानकदुन्दुभ्यां देवक्यानकदुन्दुभिभ्याम्। भिलोप आर्षः। स उत्तमश्लोकः पुण्यकीर्तिर्देवकीसुतः श्रीकृष्णस्तत्रा गमत् ॥ ३५ ॥ विज्ञातेति ॥ विज्ञातोऽर्थः प्रद्युम्नहरणादिरूपो येन तथाभूतोऽपि जनार्दनः भगवान् शम्बरं हत्वा तमानेतुं समर्थोऽपि पूर्वं तूष्णीमास अन्यदेव्यादीनामसूयादिभयात् ततः तत्समये आगतो नारदः शम्बराहरणादिकं सर्वमकथयत् ॥ ३६ ॥

**श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्**

तस्मिन् स्वपुत्रत्वं शंकयंती सत्याह द्वाभ्यां कथमिति ॥ ३३ ॥ स एवेति ॥ ३४ ॥ मीमांसमानायां विचार्यमाणायां सत्यां देवकीवसुदेवाभ्यां सह । आनकदुंदुभ्यामित्यत्र भिलोप आर्षः ॥३५॥ विज्ञातार्थ इति जनैर्भक्तजनैरद्यते याच्यते स्वसुखायेति जनार्द्दनः ॥ ३६ ॥

**भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी**

तस्य स्वपुत्रत्वं संभावयन्त्याह ।। कथमिति ॥ आकृतया अवयवैः गत्या, स्वरश्च हासश्च अवलोकनानि च तैः, शार्ङ्ग-धन्वनः श्रीकृष्णस्य, सारूप्यं तु, अनेन कथं संप्राप्तं स्यात् !! ३३ ॥ निश्चिनोति ॥ स एवेति ॥ यः अर्भकः, मे मया, गर्भे धृतः सः, अयं एव, नूनं भवेत् । तत्र हेतुमाह । अमुष्मिन् प्रीतिः मे मम, अधिका जायते । वामः मम भुजः अपि, स्फुरति संचलति । अन्यथैतन्न घटेतेति भावः ॥ ३४ ।। एवमिति ।। एवमित्थं, वैदर्भ्यां रुक्मिण्यां, मीमांसमानायां तर्कयन्त्यां सत्यां, उत्तमश्लोक उत्तमकीर्त्तिः, देवकीसुतः श्रीकृष्णः, देवक्यानकदुन्दुभ्यां देवक्यानकदुन्दुभिभ्यामित्यर्थः । सह, आगमत् तत्रागच्छत् । आनक-दुन्दुभिभ्यामिति वक्तव्ये 'विनापि प्रत्ययं पूर्वोत्तरयोर्वा लोपः, इति वार्त्तिकालम्बाद्भि इत्यस्य लोपः । अहश्च रात्रिश्चेत्यहोरात्र-मिति वक्तव्येहो रेतिवत् । तथा च निरुक्तिः । 'होरेत्यहोरात्रपदस्य विज्ञा वदन्ति पूर्वापरवर्णलोपात्' इति । आर्षो वा भिलोपः।३५। विज्ञातेति ।। विज्ञातोऽध्यवसितोऽर्थ इतरसंशयविषयीभूतोऽर्थो येन तथाभूतः अपि, जनार्द्दनः भगवान् श्रीकृष्णः, तूर्ष्णी आस । तदा नारदः शम्वराहरणादिकं सर्वं, अकथयत् ।। ३६ ॥

**कृष्णप्रिया**

मुझे परमआश्चर्य हो रहा है और मैं हैरान हूँ कि इसे भगवान् श्यामसुन्दर श्रीकृष्ण के समान रूप-रेखा अङ्ग-प्रत्यङ्गो की गठन, चाल-ढाल, मुसकान, चितवन, और बोल-चाल कहाँ से मिली होगी ? ॥ ३३ ॥ मानो न मानो मेरा मन तो यह मान रहा है कि यह वही बालक है, मैंने जिसे अपने गर्भ में धारण किया था। क्योंकि स्वभाव से ही मेरा वात्सल्य इसके प्रति ढल रहा है उछल रहा है फिर मेरी वायीं बाँह और वायीं भौंह फड़क रही है ॥ ३४ ॥ भगवती श्रीरुक्मिणीजी जव इस प्रकार सोच रही थी और संशय झूले में झूल रही थी, उसी अवसर पर उत्तमश्लोक भगवान श्रीकृष्ण अपने मातृचरण और पितृचरण श्रीदेवकीजी एवं आनक दुन्दुभिजी के साथ वहाँ पधारे ।! ३५ ॥ भगवान तो सर्वज्ञ हैं और सब कुछ जानते भी हैं लेकिन कुछ नहीं बोले चुप-चाप देखते ही रहे। इतने में ही श्रीनारजी वहाँ आ पहुँचे और उन्होंने ही शम्बरासुर का सारा वृत्तान्त सुनाया ॥ ३६ ॥

**तच्छ्रुत्वा महदाश्चर्यं कृष्णान्तःपुरयोषितः । [1]अभ्यनन्दन् बहूनब्दान् नष्टं [2]मृतमिवागतम् ॥ ३७ ॥**
**देवकी वसुदेवश्च कृष्णरामौ तथा स्त्रियः । दम्पती तौ परिष्वज्य रुक्मिणी च ययुर्मुदम् ॥ ३८ ॥**
**नष्टं प्रद्युम्नमायातमाकर्ण्य द्वारकौकसः । अहो मृत [3]इवायातो बालो दिष्ट्येति हाब्रुवन् ॥ ३९ ॥**

**यं वै मुहुः [4]पितृसरूपनिजेशभावास्तन्मातरो यदभजन् रहरूढभावाः ।**
**चित्रं न तत् खलु रमास्पदविम्बविम्बे[5] कामे [6]स्मरेऽक्षिविषये किमुतान्यनार्यः ॥ ४० ॥**

**इति श्रीमद्भागवते महापुराणे[7] दशमस्कन्धे[8] [9]प्रद्युम्नोत्पत्तिनिरूपणं नाम [10]पञ्चपञ्चाशत्तमोऽध्यायः ॥ ५५ ॥**

**कर्दमक्षमा**

अन्वयः—तत्, महद्, आश्चर्यम्, श्रुत्वा, अन्तःपुरयोषितः, बहून्, अब्दान्, नष्टम्, मृतम्, आगतम्, इव, अभ्य-नन्दन् ॥ ३७ ॥ देवकी, च, वसुदेवः, कृष्णरामौ, तथा, स्त्रियः, च, रुक्मिणी, तौ, परिष्वज्य, मुदम्, ययुः ॥ ३८ ॥ अहो ! नष्टम्, प्रद्युम्नम्, आयातम्, आकर्ण्य, द्वारकौकसः, अहो, बालः, मृतः, इव, आयातः, इति, दिष्ट्या, ह, अब्रुवन् ॥ ३९ ॥ यम्, वै, मातरः, पितृसरूपनिजेशभावाः, मुहुः, रहरूढभावाः, यद्, अभजन्, तत्, स्मरे, अक्षिविषये, कामे, रमास्पदविम्बविम्बे, जाते, चित्रम्, न, यदि, कृष्णार्धनाङ्गनानामेषास्थितिः, तर्हि, अन्यनार्यः, मुग्धा, भवेयुस्तत्र, किमुत, आश्चर्यम् ॥ ४० ॥

श्रीमद्भागवते दशमस्कन्धे उत्तरार्द्धे पञ्चपञ्चाशत्तमाध्यायस्यान्वयः समाप्तः ॥ ५५ ॥

---

१. विजये नास्ति । २. पुनरिवा । ३. इहा-वीर. । ४. मनसिजाद्रूढोरुभावः-विज. ; रह ऊढ-श्रीधर. टि. । ५. भूते-विज. । ६. अक्ष-श्रीधर. टि. । ७. पारमहंस्यां संहितायां-प्रा. पा. । ८. न्वैशम्बरवधः । ९. उत्तरार्द्धे-प्रा. पा. । १०. अथ षष्ठितमो-विज. ।

### श्रीधरस्वामिविरचिता भावार्थदीपिका

अतिसौंदर्येण प्रद्युम्नं वर्णयति—यमिति। पिता श्रीकृष्णस्तत्सदृशे प्रद्युम्ने निज आत्मीय ईशो भर्तेति भावो भावना यासां तास्तन्मातरः कृष्णपत्न्योऽपि रहसि निरूढभावाः सत्यो यमभजन्निति यत्तन्न खलु चित्रं कथं सति ? स्मरे स्मर्यमाणत्वेनैव क्षोभके कामेऽक्षिविषये सति किंच रमास्पदं श्रीकृष्णस्तस्य बिंबं श्रीर्मूतिस्तस्य बिंबे प्रतिबिंबे पुत्रे तदा किन्नु वक्तव्यमन्यनाय भेजुरिति ॥ ४० ॥

इति श्रीमद्भागवते दशमस्कन्ध उत्तरार्धे श्री० टीकायां पञ्चपञ्चाशत्तमोऽध्यायः ॥ ५५ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

न्नतारदोक्तम्। बहूनब्दानिति "कालाध्वनोरत्यन्तसंयोगे" इति द्वितीया। अभ्यनंदन्प्रीणयामासुः। महदाश्चर्यं महाश्चर्यम्। अभ्यनन्दन् वक्ष्यमाणरीत्या सच्चक्रुः, प्रद्युम्नमिति शेषः ॥ ३७ ॥ तौ दम्पती रतिप्रद्युम्नौ। देवक्याः प्रागुक्तिः पितामहीत्वेन स्नेहविशेषात्। रामस्य पश्चादुक्तिः पश्चादेवागमनात्। स्त्रियः श्रीमहिष्यः। श्रीरुक्मिण्याः, सर्वान्ते निर्देशश्चिरपरिष्वंगार्थं पश्चात्स्थितत्वात्। किं वा—स्नेहविवशत्वेन किंचिद्विलम्बात् ॥ ३८ ॥ इति ह इत्थम्। अहो आनन्दे। हेति पुरातनकथापरामर्शकम् ॥३९॥ तत्सरूपे तत्समानरूपे। भर्ता श्रीकृष्ण इति। तन्मातरः, प्रद्युम्नमातरः बहुत्वं समात्रपेक्ष्यम्। रहसि एकान्ते। निरूढो जातो भावः सात्त्विकसंज्ञः 'स्तम्भः स्वेदोथ रोमाञ्चः' इत्याद्युक्तलक्षणो यासां तास्तथा। अन्यच्चित्राभावकारणमाह—किञ्चेति। "बिंबोऽस्त्री मंडलसमप्रतिमामुखलक्ष्मसु। प्रतिरूपे प्रतिकृतौ तथा स्याद्बिंबिकाफले।" इति यादवः। मम त्वित्थं प्रति भाति—तन्मातरो रुक्मिण्याद्या यं वीक्ष्य यच्चित्रमाश्चर्यमभजंस्तन्मुहूर्तं किं त्वेकवारं तद्दर्शनक्षण एव। क्व सति—स्मरे स्मर्यमाणशरीरेऽक्षविषये सति। अहो स्मरणशरीरोऽयं कामः कथमस्मद्दृग्विषयो जात इत्याश्चर्यं प्रापुरित्यर्थः। किम्भूताः—रहस्त्यक्तो रूढो भावः कृष्णोऽयमित्येवंरूपोऽभिप्रायो याभिस्तारहरूढभावाः। यद्वा—यं वीक्ष्य रूढभावा जातप्रीतयस्सत्यो रह ऐकान्त्यमभजन्निलीना बभूवुः। रह इह सलोप आर्षः। यथाश्रुतार्थस्तु विगीत इव प्रतिभातीति। प्रद्युम्नसौंदर्यं वर्णयति—यं मुहुर्विलोक्य पितृसरूपात् पितुः श्रीकृष्णस्य समानसौंदर्याद्धेतोर्निजेशस्य श्रीकृष्णस्य भावो भावना "कथं त्वनेन सम्प्राप्तं सारूप्यं शार्ङ्गधन्वनः। आकृत्यावयवैः" इत्यादि चिन्तनं यासां ताः। तन्मातरः श्रीरुक्मिण्येव, गौरवेण बहुत्वम्, तदंतःपुरे कृष्णपत्नीनामन्यासामागमनायोग्यत्वात्। रहे रहसि तत्परिचयात्पूर्वमेव रूढ उद्भूतो भावो वात्सल्यमयी प्रीतिर्यासां ताः, 'अमुष्मिन्प्रीतिरधिका' इत्युक्तेः। "स एव वा भवेन्नूनं वामः स्फुरति मे भुजः" इति निश्चयान्ते सति सन्देहे यत् अभजन् गात्रावलोकनमस्तकाघ्राणपाणितलकरणकगात्रमार्जनादिनाऽनुवृत्तिमकुर्वंस्तह्यासां मातॄणां तस्मिन्प्रद्युम्ने न चित्रम्। कीदृशे—रमास्पदं सर्वशोभानिकेतनं यद्बिम्बं श्रीकृष्णगात्रं तस्य बिम्बे प्रतिबिम्बरूपे, तथाभूतस्यान्यस्य त्रिभुवनेप्यभावादेव तस्य कृष्णपुत्रत्वनिश्चयात्तथाभूतस्वानुभवाच्चेति भावः। किञ्च—तन्मातॄणामेव तस्मिंस्तादृशो भावो न त्वन्यासामित्याह—कामे स्मरे स्मरत्यस्मादिति स्मरस्तस्मिन्। कांतस्मरणहेतोर्यस्य परोक्षत्वेऽपि कामोद्भावकत्वं तस्मिन्नक्षिविषये तु सति, उत तथार्थेऽन्यनार्यस्तथा किं भवितुं शक्नुवन्ति अपि नैव, यतः क्षोभमेव प्राप्नुवन्तीत्यर्थः ॥ ४० ॥

इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे दशमस्कन्धे उत्तरार्द्धे पञ्चपञ्चाशत्तमोऽध्यायः ॥ ५५ ॥

### श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी

महदाश्चर्यं महाश्चर्य्यमित्यर्थः। अभ्यनन्दन् वक्ष्यमाणरीत्या सच्चक्रुः प्रद्युम्नमिति शेषः। तं च मृतमिव नष्टमदर्शनं प्राप्तं सन्तं पुनरागतं मत्वेत्यर्थः। कृष्णेति तत्सम्बन्धित्वेन तासां महिमानं दर्शयित्वा तदभिनन्दनं चमत्कारितम् ॥ ३७ ॥ देवक्याः प्रागुक्तिः पितामहित्वेन स्नेहविशेषात् रामस्य पश्चादुक्तिः पश्चादेवागमनात् स्त्रियः श्रीमहिष्यः श्रीरुक्मिण्याः सर्वान्ते निर्देशश्चिरपरिष्वङ्गार्थं पश्चात्स्थितत्वात् किम्वा स्नेहविवशत्वेनाशक्त्या किञ्चिद्विलम्बनात् किम्वा तौ प्रति पुरतः सर्वेषां प्रसादनेच्छयेति ॥३८॥ द्वारकावासिनश्च सर्वे एव परमहृष्टा बभूवुरित्याह—नष्टमितीति हेत्यव्ययम्पुरातनकथापरामर्षकम् ॥३९॥ यमिति तैर्व्याख्यातं तत्र रहो भजनं नाम भ्रान्त्या तन्निकटगमनमात्रं विवक्षितं श्रीसङ्कर्षणस्य पुनः श्रीवृन्दावनगतस्य विहारे गोपीनामन्यासामेव स्वीकरिष्यमाणत्वात् श्रीप्रद्युम्नस्य भ्रमाद्यभावान्मातृभ्रान्त्या मायावत्या अपि परित्यागाच्च तत्श्चायमेवार्थः यं प्रद्युम्नं विरहेण श्रीकृष्णविरहेण रूढो विवृद्धोभावस्तत्प्रेमा यासां तथाभूताः सत्यस्तन्मातरः तस्य सपत्नीमातरो मुहुरभजन् द्रष्टुमागच्छन् मातृशब्देन तावन्मात्रपर्य्यवसानात् तदेवं यदभजन् तन्न चित्रं कथं पितुः श्रीकृष्णस्य सारूप्येण निजेशस्य श्रीकृष्णस्यैव भावःस्फूर्त्तिर्यासां तास्तथा तत्साक्षात्कारसादृश्यलालसयेत्यर्थः। अत्र कान्तादिशब्दमदत्वा ईशशब्दप्रदानं तेन हेतुना स्फुरत्यपि श्रीकृष्णे ईशभाव एवास्फुरत् नतु कान्तभावः तदुद्दीपनतायामयोग्यत्वात्पुत्रस्येति द्योतयति तदेवमन्या नार्य्यो

यदभजन् तत्किमुत सुष्ठ्वेव कान्तभावेनैवेत्यर्थः। "बलवत्सुष्ठकिमुत" इत्यमरः। अत्र हेतवो रामेत्यादीनि पदानीति अथवा कृष्णं मत्वा स्त्रियो ह्रीता निलिल्युस्तत्र तत्र हेत्येव योजयति यमिति नवमस्य चतुर्थे यविष्ठं व्यभजन् दायमिति वद्द्वितीयया प्रतीत्यध्याहार्य्यं प्राप्येति वा पितृसरूपनिजेशभावाः सत्यस्तन्मातरो रहोऽभजन् ह्रिया निलिल्युरित्यर्थः। रहेत्यार्षं पदं रह ऊढभावा इत्यपि क्वचित् ईशशब्दः पूर्ववत् ननु, कथं कान्तभावो न जातः तत्राह रूढभावाः अव्यभिचारिश्रीकृष्णरतयः तदेवं यद्रहोऽभजन् तन्न चित्रं यद्येवं तदप्येकांशेन सवलितमतयो जातास्तदा रामेत्यादिलक्षणे अक्षविषये सति उत अपि अन्यनार्य्यः तद्भावरहितस्त्रियोऽपि किं किरहोऽभजन् किन्तु तमेवाभजन् भावहावादिभिरसेवन्तेति अक्षेति अक्षीति वा पाठः ॥ ४० ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिण्यां पञ्चपञ्चाशत्तमोऽध्यायः ॥ ५५ ॥

## श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी

कृष्णस्य साक्षात्परमेश्वरस्यान्तःपुरे या योषितस्ताः सर्व्वा इति सखी-दास्यादीनामानन्त्यमुक्तम्, अभ्यनन्दन्प्रद्युम्नं साधु साध्वित्यादिना प्रशशंसुः, यद्वा, प्राप्येति शेषः। अभितोऽनन्दन् अहृष्यन् ॥ ३७ ॥ देवक्याः प्रागुक्तिः पितामहीत्वेन वसुदेवतोऽपि स्नेहे विशेषात्, रामस्य पश्चादुक्तिः पश्चादेव तेभ्यस्तदागमनात् स्त्रियः श्रीमहिष्यः, रुक्मिण्याः सर्वान्ते निर्द्देशश्चिरपरिष्वंगार्थं पश्चात् स्थितत्वात्, किंवा स्नेहविवशत्वेनाशक्त्या किञ्चिद्विलम्बात्, किंवा स्नेहभरस्वभावादेवेति ॥ ३८ ॥ द्वारकावासिनश्च सर्व्व एव लोकाः परमहृष्टा वभूवुरित्याह—नष्टमिति। अहो आश्चर्य्ये, ह हर्षे, दिष्ट्या अहो भाग्यमस्माकमित्यर्थः। वाल इति नवतरुणेऽपि तस्मिन् तेषां स्नेहभरेण शिशुतादृष्टेः, यद्वा, बाल्ये नष्टत्वाभिप्रायेण ॥ ३९ ॥ यमित्यस्य तं प्रद्युम्नमिति पूर्वेण, किंवा तमन्यनार्य्यो भजेयुरिति किमुतेत्यन्वयः, वै प्रसिद्धौ, मुहुरिति संशयादिना पुनः पुनश्चित्ते निर्वर्त्तितेऽपि निजभर्तृसारूप्यदर्शनेन पुनः पुनस्तत्प्रवृत्तेः, रहेत्यदन्तत्वमार्षम्, अभजन् कामयामासुः, प्रागनुक्तमपीदं ह्रीता इति पूर्वोक्तलज्जया कामसूचनात्, किंवा प्रमुदिततयोपगमनादूह्यम्, किंवा अत्रोक्तिप्रामाण्येन तन्मन्तव्यमिति दिक्। खलु निश्चये, अक्ष-विषये चक्षुरिन्द्रियगोचरे सति, अक्ष-शब्देन दर्शनेऽभिनिवेशः सूचितः। अक्षीति पाठो वा। एवमपि तासां पातिव्रत्याहानिम्, पित्रिति रमेति च बोधयत्येव, इति तासां परममाहात्म्यमुक्तम्, तथा श्रीभगवतश्च तत्सारूप्येणापि तासामपि भावोत्पादनात्। तथा श्रीप्रद्युम्नस्यापि, तच्च स्पष्टमेव, तत्र च मुख्ये। हेतुः—रमेत्येव, अत एव तैरपि किञ्चेत्यादिना तत्पश्चाद्व्याख्यातम् अन्यत्तैर्व्याञ्जितमेव। यद्वा, अकारप्रश्लेषेण कामरहितेऽपि स्मरे, अथवा श्रीप्रद्युम्नमाहात्म्य-द्वारा श्रीमहिषीणामेव धैर्य्यादि—माहात्म्यमन्तेऽनुवर्णयति—यमिति। अकारप्रश्लेषेण न तिष्ठति स्मरः स्मरणं भद्राभद्रानुसन्धानं यस्मात्तादृशे कामे, तत्रापि रमास्पदविम्वविम्बे श्रीकृष्णसदृशरूपे अक्षविषये दृष्टे सति पितृसरूपनिजेशभावा अपि, यद्वा, तादृशकामेऽक्षविषये सत्यपि, तथा तत एव पितृसरूपनिजेशभावा अपि रहसि रुढ़भावाः सत्यो नाभजन्निति यत्तत् किं खलु चित्रम्, अपि तु नैव, यतस्तन्मातरः, उत अपि, अन्यनार्य्योऽपि यन्न भेजुस्तदपि किं चित्रम्, अपि तु नैव, मातॄणां सखीत्वादिना मातृतुल्यत्वादित्यर्थः। अन्यत् समानम् ॥ ४० ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे उत्तरार्द्धे श्री श्रील-सनातन-गोस्वामिपाद-कृतायां श्रीबृहद्वैष्णवतोषण्यां श्रीदशम-टिप्पण्यां पञ्चपञ्चाशत्तमोऽध्यायः ॥ ५५ ॥

## श्रीसुदर्शनसूरिकृतशुकपक्षीयम्

पितृस्वरूपनिजेशभावाः पितृसाम्यानिजभर्तृबुद्धिसहिताः तन्मातरः कृष्णस्य पत्न्यः मसृणितदृशः कामवशात् स्निग्धदृष्टय अभवन्नित्यर्थः। रमास्पदविम्बविम्बे भगवद्विग्रहसदृशे ॥ ४० ॥

इति श्रीमद्भागवतव्याख्याने दशमस्कन्धे श्रीसुदर्शनसूरिकृतशुकपक्षीये पञ्चपञ्चाशत्तमोऽध्यायः ॥ ५५ ॥

## श्रीमद्वीरराघवाचार्यकृता भागवतचन्द्रचन्द्रिका

तन्नारदकथितं महदाश्चर्य्यं श्रुत्वा कृष्णान्तःपुरस्त्रियो देवक्यादयश्च मृतं प्रेतं पुनरागतमिव बहूनब्दान् वत्सरान् नष्टमदृष्टं सम्प्रति दृष्टं दृष्ट्वेति शेषः अभ्यनन्दन् ॥ ३७ ॥ तौ दम्पती देवकीवसुदेवौ रुक्मिणी च परिष्वज्य प्रद्युम्नमिति शेषः। नष्टं प्रद्युम्नमायातमित्यस्यापकर्षो वा मुदं ययुः ॥ ३८ ॥ नष्टमिति द्वारकौकसो द्वारकावस्थायिनो जना इत्थमब्रुवन् किमिति अहो मृतो बालः पुनरिहायातः दिष्ट्या अयमानन्द इति ॥ ३९ ॥ सौन्दर्यातिशयेन प्रद्युम्नं वर्णयति—यमिति। पिता श्रीकृष्णः तत्सरूपतया निज आत्मीय ईशः भर्त्तेति भावो भावना यासां ताः पितृसारूप्यान्निजभर्त्तृबुद्धिसहिता इत्यर्थः। तन्मातरः कृष्णपत्न्यः रहसि निरूढभावाः सत्यः यमभजन्निति यत्तन्न खलु चित्रं 'तन्मातरो मनसिजार्द्रदृशोवभूवुः इतिपाठे ताः कृष्णपत्न्यः यं प्रद्युम्नं दृष्ट्वेति शेषः। कामवशात् स्निग्धदृष्ट्योऽभवन्निति यन्नैतच्चित्रमिति सम्बन्धः। स्मरे स्मर्यमाणत्वेनैव क्षोभके कामेऽक्षिविषये सति किञ्च रमायाः आस्पदं श्रीकृष्णस्तस्य बिम्बं मूर्त्तिः तस्य बिम्बे प्रतिबिम्बे भगवद्विग्रहसदृशे पुत्रे सतीत्यर्थः। तत् किमुवक्तव्यं यदन्या नार्य्यो भजेयुरिति ॥ ४० ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायां पञ्चपञ्चाशत्तमोऽध्यायः ॥ ५५ ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

यं वै इत्यादि ॥ ४० ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धीये श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे पञ्चपञ्चाशत्तमोऽध्यायः ॥ ५५ ॥

### श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः

यं वै इत्यादि। यं प्रद्युम्नं वीक्ष्येत्यध्याहार्यम्। दास्योऽपि यं दृष्ट्वा कृष्णं मत्वा तत्र तत्र निलिल्युस्तं दृष्ट्वा तन्मातरस्तद्विमातरो यद्रहो निर्जनस्थलमभजन्, आत्मानं गोपयामासुः। रूढभावां कृष्णोऽयमागत इति जातव्रीडादिभावाः। कुतः? इत्याह पितृस्वरूपनिजेशभावाः पितुः श्रीकृष्णस्य समानं रूपं तेन या निजेश इति भा भानं तामवन्तीति तथा, 'अव रक्षणपालने' कर्मण्यण्। कृष्णोऽयमागत इति वा यत्र यथास्थिता आसन् तास्तथास्थिता एव ततः सकाशाद्व्रीडया रहसि लीना इत्यर्थः। तन्न चित्रम्। कुतः? इत्याह—रमास्पदविम्बेत्यादि। रमास्पदं रमाचिह्नं विम्बं यस्य स तथा, लक्ष्मीरक्षा इत्यर्थः। तस्य श्रीकृष्णस्य बिम्बे प्रतिबिम्बे किमुतान्यनार्यः पूर्वोक्ताः स्त्रियो दासीप्रभृतयो यं दृष्ट्वा तद्विमातरोऽपि कृष्णबुद्ध्या सङ्कोचेनाभ्यन्तरं गत्वा लीना अभूवन्, तं दृष्ट्वा दास्यादयो यत्तत्र तत्र निलिन्युः तत् किमुतेति पूर्वश्लोकार्थसमावेशः। रह इति विसर्गलोपश्छान्दसः। यद्वा, पितुस्त्ररूपनिजेशभावाः पितृसदृशाः श्रीकृष्णसदृशा निजा आत्मीया ये ईशभावा ऐश्वर्याणि यं प्रद्युम्नमभजन्, तन्मा चित्रम्। तन्मातरः तन्मा उल्लङ्घ्य तत्राप्रतीतिं मा गा इति परीक्षितं प्रति श्रीशुकदेवोक्तिः। 'तॄ प्लवनतरणयोः' इति सिपि रूपम्, मा योगेऽडागमाभावः। कीदृशाः? रहरूढभावाः रहस्त्यागः 'रह त्यागे' इति पचाद्यच्। रहेण अनङ्गत्वत्यागेन रूढाः पुनः प्ररूढा या भा शोभा तामवन्तीति तथा। यद्वा, हे पितृस्वरूप! अभिमन्युसदृश! हे परीक्षित्! निजेशभावा उच्चाटनादि-पञ्चेषुत्वादीन्यैश्वर्यादीनि। तत्र निदर्शनमाह—स्मरेऽक्षिविषये अक्षिगोचरेऽन्यना अन्यपुरुषः किमुतार्य आदरणीयः नैवादरणीय इत्यर्थः। कामे कमनीये; अथवा, काम इति विशेष्यं पदम्, स्मर इति विशेषणम्; स्मृतिविषये सतीत्यर्थः॥ ४० ॥

इति श्रीदशमे श्रीबृहत्क्रमसन्दर्भे पञ्चपञ्चाशोऽध्यायः॥ ५५ ॥

### श्रीनाथचक्रवर्तिपादविरचिता चैतन्यमतमञ्जूषा

यं वै मुहुरित्यादि। यं प्रद्युम्नं वीक्ष्येत्यध्याहार्यम्। तन्मातरः कृष्णोऽयमिति मत्वा यद्रहः रहस्थलमभजन्, तन्न चित्रम्; (२८ श-श्लो०) "निलिल्युस्तत्र तत्र ह" इत्यादि यदुक्तम्, तस्यायं प्रपञ्चः। रूढभावा जात-व्रीडादि-व्यभिचारिभावाः। कुतः? इत्याह—पितृ-सरूप निजेशभावाः, पितुः श्रीकृष्णस्य समानं रूपं सरूपं तेन निजेशः श्रीकृष्ण एष इति भावो यासाम्। 'रह' इति विसर्गलोपश्छान्दसः। तन्न चित्रम्। कुतः? तत्राह—रमास्पदविम्वविम्बे रमाया आश्रयभूतं बिम्वं प्रतिबिम्बो लक्ष्म यत्र तस्य श्रीकृष्णस्य बिम्ब इव छायेव यस्तस्मिन्। अन्यनार्यो रहसि यद्विलीयन्ति तत् किमिति। यद्वा, यं प्रद्युम्नं निरीक्ष्य तन्मातरः सत्यभामाद्या यद्व्रीडादि अभजन्, तन्नचित्रमिति रहरूढभावाः—रहो विरहः, 'रह त्यागे' इत्यस्मात् सिद्धेः, तेन रूढभावा यासां कृष्णादर्शनेन तं प्रद्युम्नं दृष्ट्वा अनिभालनेन कृष्ण एवागतोऽयमिति कृत्वा या यथास्थितास्ता एव सङ्कोचेन व्रीडादि अभजन्। यदिति व्रीडया सङ्कोचेन चानिर्वाच्यं यत् किमपि। यद्वा, यं प्रद्युम्नं पितृसरूपनिजेशभावा निजैश्वर्याणि यदभजन्, तन्मातरः तन्मा तल्लङ्घ्येः, 'तॄ प्लवन तरणयोः' इति सौ रूपम्, तत्राप्रतीतिं मा गा इति परीक्षितं प्रति शुकोक्तिः। हे पितृसरूप! अभिमन्युसदृश इति परीक्षित्-सम्बोधनं वा। निजेशभावा उच्चाटनादि पञ्चेषु न तादृशान्यैश्वर्याणि। कीदृशाः? रहस्त्यागो रहे अनङ्गत्वत्यागे रूढा या भाः कान्तयस्ता अवन्तीति तथा तस्मिन् कामे तन्न चित्रम्। तत्र निदर्शनामाह—स्मरे अक्षिविषये अन्य-ना अन्यपुरुषः किमुत आश्चर्य आदरणीयो भवति, नैवेत्यर्थः। स्मरे स्मर्यमाणे अनङ्गत्वेन प्रतीयमाने अक्षिविषये साक्षाद्भूते सतीति वा॥ ४० ॥

इति पञ्चपञ्चाशोऽध्यायः॥ ५५ ॥

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी

प्रद्युम्नस्य सौदर्य्यं वर्णयति—यं मुहुर्विलोक्य पितृसरूपात् पितुः श्रीकृष्णस्य समानसौन्दर्य्याद्धेतोर्निजेशस्य श्रीकृष्णस्य भावो भावना "कथं त्वनेन सम्प्राप्तं सारूप्यं शार्ङ्गधन्वनः। आकृत्यावयवैः" इत्यादि चिन्तनं यासां ताः तन्मातरः श्रीरुक्मिण्येव गौरवेण बहुत्वं तदन्तःपुरे कृष्णा पत्नीनामन्यासामागमनाऽयोगात् रहो रहसि तत्परिचयात् पूर्वमेव रूढ उद्भूतो भावो वात्सल्यमयी प्रीतिर्यासां ताः यदुक्तं "अमुष्मिन् प्रीतिरधिका" इति तदा च "स एव वा भवेन्नूनं वामः स्फुरति मे भुजः" इति निश्चयान्ते सन्देहे सति यत् अभजन् गात्रावलोकनमस्तकाघ्राणपाणितलकरणकगात्रमार्जनादित्यनुवृत्तिमकुर्वन् तत् तासां मातृणां तस्मिन् प्रद्युम्ने न चित्रं कीदृशे रमास्पदं सर्वशोभानिकेतनं यद्बिम्वं श्रीकृष्णगात्रं तस्य विम्बे प्रतिबिम्बरूपे

तथाभूतस्यान्यस्य त्रिभुवनेऽप्यभावादेव तस्य कृष्णपुत्रत्वनिश्चयात्तथाभूतस्वानुभवाच्चेति भावः। किञ्च, तन्मातॄणामेव तस्मिंस्तादृशो भावो नत्वन्यासामित्याह—कामे स्मरे स्मरत्यस्मादिति स्मरस्तस्मिन् कान्तस्मरणहेतोर्यस्य परोक्षत्वेपि कामोद्भावकत्वं तस्मिन्नक्षिविषये तु सति उतेति तथेत्यर्थे अन्यनार्य्यः किं तथा भवितुं शक्नुवन्ति अपितु नैव यतः क्षोभमेव प्राप्नुवन्तीत्यर्थः॥ ४०॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम्। पञ्चपञ्चाशत्तमोऽयं दशमेऽजनि सङ्गतः॥ ५५॥

## गूढार्थदीपिनी

नारदोऽकस्मादागत्य अब्दात् 'अत्यन्तसंयोगे द्वितीया'। नष्टमदृष्टं तमागतं प्रद्युम्नमभ्यनन्दन् सच्चक्रुः॥ ३७॥ दम्पती रतिप्रद्युम्नौ॥ ३८॥ दिष्ट्या भद्रं जातम्। इति ह इत्थम्॥ ३९॥ वै एवार्थे। यं प्रद्युम्नं तन्मातरो यत्पतित्वेन अभजन् तत्खलु चित्रमाश्चर्यं नास्ति। कुतः। पितृसरूपे सदृशे प्रद्युम्ने निजेशभावः पतिभावो यासान्ताः। अत एव रह एकान्ते रूढो दृढः भावः कामवासना यासाम्। कुत एतत्। कामेऽक्षिविषये सति। स्मरे स्मरणमात्रतः क्षोभके। कथंभूते। रमास्पदं श्रीकृष्णस्तस्य बिम्बं विग्रहस्तस्य प्रतिबिम्बे पुत्रे। अन्यनार्यः भेजुरिति किमुत वक्तव्यम्। यद्वा रहस्त्यक्तो रूढो भावः कृष्णोऽयमिति याभिस्ताः। रह त्यागे धातुः॥ ४०॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्ध पारमहंस्यो संहितायाम् उत्तरार्द्धे गूढार्थदीपिन्यां पञ्चपञ्चाशत्तमोऽध्यायः॥ ५५॥

## श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

पितृसरूपे श्रीकृष्णसमसौन्दर्ये प्रद्युम्ने निजेश एव पुत्रात्मना जात इति भावोभक्तिर्यासां ताः "आत्मा वै पुत्रनामासीति" श्रुतेः। तन्मातरो रुक्मिण्याद्या अपि रहसि एकान्ते रूढो निरूढो भावो भक्तिर्यासां ता यं मुहुरभजन् दध्युरिति यत्तन्न चित्रम्, तदा किन्नु वक्तव्यं रमाया आस्पदं श्रीकृष्णगात्रं तस्य बिम्बे रूपान्तरे स्मरे स्मरणार्हे कामे काम्यते उपासकैरिति कामः तुतीयव्यूहस्तस्मिन् अक्षिविषये सति अन्यनार्य्यो भेजुरिति॥ ४१॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धीये श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे पञ्चपन्चाशत्तमोऽध्यायः॥ ५५॥

## श्रीसत्यधर्मकृता श्रीभागवतटिप्पणी

मृतं तमिव पत्न्या सह मणिग्रीवं मणिग्रीवायां यस्य तं चक्रपाणि मणिना युक्ता ग्रीवा यस्य तं वा॥ ३७॥ राजा उग्रसेन आख्यायोक्त्वा तस्मै सत्राजिते॥ ३८॥ स्वेन पाप्मना हर्य्युपर्यपवादस्थापनजेनानुतप्यन्पश्चात्तापं भजन्स्वभवनमगमत्॥ ३९॥ ते देवदेवविषयेऽनुष्ठितं स्वाघमनुध्यायन् बलवता कृष्णेन सह विग्रहेणाकुल आत्मरजः स्वदोषं कथं मृजामि। अच्युतः कथं वा प्रसीदेत्॥ ४०॥ मह्यं मम साधु मङ्गलं जनो मां न शपेत्। अदीर्घदर्शनं जाल्मं द्रविणलोलुपं रत्नदेयस्वापतेयलोलुपम्॥ ४१॥ दुहितरं तस्मै दास्ये। इयमपि तद्योग्येत्याह। स्त्रीरत्नमिति। यदर्थमियाननर्थस्तदपि दास्य इत्याह। रत्नमेव चेति। अयमुपायः समीचीनोऽन्यथैतदिना॥ ४२॥ एवं बुद्ध्या व्यवसितो व्यवसायं निश्चयं प्राप्तः सत्राजित्स्वसुतां स्वपुत्रीं। भ्रान्तरङ्गिको भावस्तु सु असुताऽयोनिजेति। तां मणिं च स्वयमनितरबोधितः स्वयमतिशुभदेवं निमित्तीकृत्येति वा। कृष्णाय तामुपाजहारार्पयत्॥ ४३॥ शीलरूपौदार्यगुणान्वितामिति बहुबाहुजयाचनाहेतूक्तिः॥ ४४॥ मणिं न साक्षान्न प्रतीच्छामो वयं हि वयं तु फलभागिनो भाराष्टकाष्टापदमात्रयोग्यः॥ ४५॥

इति श्रीभागवतटिप्पण्यां सत्यधर्मकृतायां दशम उत्तरार्धे षष्टितमोऽध्यायः॥ १०-६०॥

## श्रीमद्वल्लभाचार्य्यकृता सुबोधिनी

नारदवाक्यं हि सर्वेषामेव संमतम्, ततः सर्वैरङ्गीकर्तव्यमिति सापत्न्यात् कृष्णस्त्रियो रुक्मिणीव्यतिरिक्ताः प्रथममङ्गीकृतवत्य इत्याह **तच्छ्रुत्वेति**। राजस्य एताः। **महदाश्चर्यं श्रुत्वेति**। कथं मत्स्यभक्षितस्य जीवनम्, सम्पूर्णावयवत्वं च, कथं वा विशसने अक्षतत्वम्, समुद्रप्रक्षेपे वा अमरणमिति। तासामनङ्गीकारे बाधकमाह **कृष्णान्तःपुरयोषित** इति। स्वरयाप्येवं पुत्रस्य नयने अन्या अप्यङ्गीकारं न कुर्युरिति भावः। अभ्यनन्दन्। अयं पुत्रो भवति अस्माकमिति। सापत्न्यभावेन दोषदर्शिन्यो न जाताः। किञ्च। परमस्नेहेन अभितः आनन्दयुक्ता अपि जाताः। तत्र हेतुः। बहूनब्दान् बहुवर्षपर्यन्तं नष्टमदृष्टमिति। अत्यन्तसंयोगे द्वितीया। न केवलं चिरकालदर्शनमेव तत्र हेतुः, किन्तु मृतश्चेदायाति शीघ्रमेव, तदापि महानानन्दो भवतीति, मृतं पश्चात्स्वस्थमागतं यथा सादरं लोका अभिनन्दनं कुर्वन्ति। देहे विद्यमान एव जीवने अभिनन्दनम्॥ ३७॥ सात्त्विकानामभिनन्दनमाह **देवकीति**। तथा **स्त्रियः** सात्त्विक्यः तौ दम्पती मायावती प्रद्युम्नश्च परिष्वज्य पुत्रत्वात् पुत्रवधूत्वाच्च मुदं ययुः। **रुक्मिणी चेति** भिन्नतया निरूपणं सर्वेषां यावत्सुखं तावदेकस्या एव जातमिति ज्ञापनार्थम्॥ ३८॥ साधारणानां तामसानां

सम्मतिमाह **नष्टं प्रद्युम्नमायातमिति**। तेषां विपरीतभावनाभावाय वचनमाह **अहो मृत इवायात** इति। लौकिकभाषाया-मश्लीलवचनं न दोषाय। हेत्याश्चर्ये। अहो इति च। गमनागमनयोरुभयत्राश्चर्यमाह॥ ३९॥ कामस्य महता प्रयासेन देह-ग्रहणे फलं जातं नवेति सन्देहं निराकर्तुमाह **यं वै मुहुरिति**। पितृसरूपतया पितुः समानं यद्रूपं **तेन** कृत्वा निजेशभावाः, कृष्ण एवायमिति बुद्धियुक्ताः। निजेशः कृष्णः। तस्य मातरोऽपि ऊढभावाः सत्यः तद्दर्शनेन उद्गतकामाः रहः एकान्तमभजन्। निलीना जाताः। एतच्चित्रं न। रमाया आस्पदरूपं यद्बिम्बं भगवान् श्रीनिवासः तस्य बिम्बं कार्यं प्रतिबिम्ब इति यावत्। बिम्बवदेव प्रतिबिम्बेऽपि बुद्धिर्भवतीति न कोऽपि दोषः। रमास्पदपदं लक्ष्म्या अपि तत्र प्रदर्शनार्थम्। तेन लक्ष्मीश्चेत्तत्र, वयं कथं नेति तासां भ्रमे हेतुर्मुख्यो निरूपितः। **किञ्च, कामे** कामात् सर्वं सम्भवति। किञ्च। स्मरे अक्षविषये सति स्मृत एवानर्थं करोति, किमुत प्रत्यक्षविषयः। यत्र भगवत्स्त्रीणामेवैषा व्यवस्था, तत्रान्यनारीणां कामोद्बोधः कि वक्तव्य इत्यर्थः। एवं कामस्य सर्वलोकेषु प्रतिष्ठितत्वमुक्तम्। स्त्रीषु प्रतिष्ठितः सुखहेतुर्भवति, न तु पुरुषेष्विति तथोक्तम्॥ ४०॥

इति श्रीभागवतसुबोधिन्यां श्रीमल्लक्ष्मणभट्टात्मजश्रीमद्वल्लभदीक्षितविरचितायां दशमस्कन्धविवरणे उत्तरार्धे षष्ठोऽध्यायः॥ ६॥

## श्रीसुबोधिनीसारः

तन्महदाश्चर्यं श्रुत्वा कृष्णस्यांतःपुरस्त्रियो बहूनब्दान् नष्टं मृतमागतमिवाभ्यनंदन् प्राशंसन्॥ ३७॥ देवकी वसुदेवः कृष्णरामौ रुक्मिणी च तथा स्त्रियोऽन्याः तौ दंपती स्त्रीपुरुषौ परिष्वज्यालिंग्य मुदं हर्षं ययुः प्रापुः॥ ३८॥ नष्टमायातं प्रद्युम्नम् आकर्ण्य श्रुत्वा द्वारकावासिनो जना मृत इव बाल आयातोऽहो आश्चर्यं दिष्ट्या मंगलमित्यब्रुवन् ह स्फुटम्॥ ३९॥ तल्लावण्य-माह। पिता श्रीकृष्णस्तस्य सरूपे तुल्यरूपे प्रद्युम्ने निजः स्वीय ईशः भर्ता श्रीकृष्णोयमिति भावो भावना यासां ताः तस्य मातरो रुक्मिण्याद्या रहसि एकांते रूढो दृढो भावः प्रीतिर्यासां ता यत् यदा यं प्रद्युम्नं मुहुरभजन् वै एव तत् खलु न चित्रं नाश्चर्यं रमास्पदो विष्णुस्तस्य बिम्बं श्रीमूर्त्तिस्तस्य बिम्बे पुत्रे स्मरे स्मरणमात्रेणैव क्षोभके कामेऽक्षिविषये नेत्रगोचरे अन्यनार्य परस्त्रियो यमभजन्निति किमुत वक्तव्यम्॥ ४०॥

इति श्रीमद्भा० दशमस्कन्धे उत्तरार्द्धे सुबोधिन्यां टीकायां पंचपंचाशत्तमोऽध्यायः॥ ५५॥

## गोस्वामिश्रीगिरिधरलालकृताबालप्रबोधिनी

तन्नारदकथितं महदाश्चर्यं मत्स्यभक्षितस्यापि जीवनं सम्पूर्णवयवत्वं च विशसनेऽप्यक्षतत्वं शम्बरहननादिकं श्रुत्वा बहूनब्दान् बहुवर्षपर्यन्तं नष्टमदृष्टं पुनर्मृतमागतमिव प्रद्युम्नं दृष्ट्वा कृष्णान्तःपुरयोषितोऽभ्यनन्दन्नित्यन्वयः॥ ३७॥ देवक्यादयस्तौ दम्पती यथोचितं परिष्वज्य मुदं हर्षं ययुः॥ ३८॥ द्वारकौकसो द्वारकावासिनो जना नष्टं प्रद्युम्नमायातमाकर्ण्य श्रुत्वा अहो आश्चर्यम्, अयं बालो यथा कश्चिन्मृतः पुनरागच्छेत्तथा आयातः दिष्ट्या तेन महानानन्दो जातः इति ह स्पष्टमब्रुवन्॥३९॥ सौन्दर्यातिशयेन प्रद्युम्नं वर्णयति—यमिति। पिता श्रीकृष्णस्तत्सरूपे प्रद्युम्नेऽपि निजः आत्मीयः ईशो भर्तेति भावो भावना यासां ताः ता मातरः कृष्णपत्न्योऽपि रूढभावा उद्भूतकामाः सत्यो रहसि यं मुहुरभजन्निति यत् तत् तस्मिन्न खलु चित्रं आश्चर्यं नैव भवति। तत्र हेतुद्वयमाह—स्मरे स्मर्यमाणत्वेनैव क्षोभके कामे अक्षविषये अक्षाणामिन्द्रियाणां विषये सति किञ्च रमास्पदं श्रीकृष्णः तस्य बिम्बं श्रीमूर्तिः तस्य बिम्बे प्रतिबिम्बे पुत्रे इति यदि मातर एवं मुमुहुस्तदाऽन्यनार्यो मुमुहुरिति किं वक्तव्यम्॥ ४०॥

इति श्रीवल्लभाचार्य-वंश्यगोपालसूनुना। श्रीमन्मुकुन्दरायाणां पादसेवाधिकारिणा॥ १॥
श्रीमद्गिरिधराख्येन भजनानन्दसिद्धये। श्रीमद्भागवतस्येयं टीकाबालप्रबोधिनी॥ २॥
रचिता दशमे तत्र राजसानां निरोधने। पञ्चपञ्चाशत्तमोगात् प्रद्युम्नोत्पत्तिबोधकः॥ ३॥

## अन्वितार्थप्रकाशिका

तदिति॥ तन्नारदकथितं महदाश्चर्यं मत्स्यभक्षितस्यापि जीवनं सम्पूर्णावयवत्वं च विशसनेऽप्यक्षतत्वं शम्बरहन-नादिकं च श्रुत्वा बहूनब्दान्बहुवर्षपर्यन्तं नष्टमदृष्टं पुनर्मृतमागतमिव प्रद्युम्नं दृष्ट्वा कृष्णान्तःपुरयोषितोऽभ्यनन्दन्॥ ३७॥ देवकीति॥ देवकी वसुदेवश्चेत्याद्याः तथा अन्याः स्त्रियः तौ दम्पती यथोचितं परिष्वज्य मुदं ययुः॥ ३८॥ नष्टमिति॥ द्वारकौ-कसो द्वारकावासिनो जना नष्टं प्रद्युम्नमायातमाकर्ण्य श्रुत्वा अहो आश्चर्यमयं बालो यथा कश्चिन्मृतः पुनरागच्छेत्तथा आयातः। दिष्ट्या तेन महानानन्दो जातः इति ह स्पष्टमब्रुवन्॥ ३९॥ यमिति। यं मुहुर्विलोक्य पिता श्रीकृष्णस्तत्सरूपात् समान-सौन्दर्याद्धेतोः निजेशो भगवान् तस्य भावो भावना कथं त्वनेन संप्राप्तं सारूप्यं शार्ङ्गधन्वन इत्यादिचिन्तनं यासां तास्ताः तन्मातरः प्रद्युम्नमातरः रुक्मिण्याद्या कृष्णपत्न्योऽपि रहः रहसि निलीनाः तत्परिचयात्पूर्वमेव च तस्य रूढो भावो वात्सल्यम्

अमुष्मिन् प्रीतिरधिकेत्यादिर्यासां ताः तत्तश्च "स एव वा भवेन्नूनं वामः स्फुरति मे भुजः।" इति निश्चये सति यम् अभजन् सास्त्रावलोकमस्तकघ्राणादिजनन्युचितमकुर्वन्निति यत् तत् तासां मातृणां तस्मिन् खलु चित्रमाश्चर्यं नैव भवति। एवं सति रमास्पदं श्रीकृष्णः तस्य बिम्बं शरीरं तस्य बिम्बभूते पुत्रे प्रद्युम्ने चित्रन्न भवति तथाभूतस्यान्यस्य त्रिभुवनेऽप्यभावादेव तस्य कृष्णपुत्रत्वनिश्चयात् मातृभिन्नानां स्त्रीणां तु तादृशो भावो न सम्भवतीत्याह। स्मरे स्मर्यमाणत्वेनैव क्षोभके कामे अक्षविषये अक्षाणामिन्द्रियाणां विषये सति उत तथेत्यर्थे अन्यनार्यः किं तथाभवितुं शक्नुवन्ति अपि तु नैव। यतः क्षोभमेव प्राप्नुवन्ति। ईदृशः एवार्थः समञ्जसः। अर्थान्तरं तु वैरस्यावहत्वात्त्याज्यम्। रहरूढेत्यत्र रेफलोपाद्यार्यं रह ऊढेति च पाठः॥ ४०॥

इति श्रीभागवते महापुराणे दशमस्कन्धेऽन्वितार्थप्रकाशिकायां पञ्चपञ्चाशत्तमोऽध्यायः॥ ५५॥

### श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्

बहूनब्दान् बहूनि वर्षाणि तत्पर्यंतं नष्टं पुत्रं मृतं पुनरागतमिव ज्ञात्वा अभ्यनंदन् प्राप्तानंदा बभूवुः॥ ३७॥ देवकीति दंपती रति प्रद्युम्नौ॥ ३८॥ नष्टमिति दिष्ट्या भाग्येनेति॥ ३९॥

इति श्रीशुद्धैकांतधर्मप्रवर्त्तकगुरुराजेन्द्रश्रीसहजानंदस्वामिशिष्यगोपालानंदमुनिविरचिते निगूढार्थप्रकाशके श्रीमद्भागवतस्य दशमस्कंधव्याख्याने प्रद्युम्नाहरणागमननामा पञ्चपञ्चाशत्तमोऽध्यायः॥ ५५॥

### भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

तदिति। तन्नारदकथितं, महत् आश्चर्यं श्रुत्वा, कृष्णान्तःपुरयोषितः देवक्यादयः सर्वा अन्तःपुरस्थाः स्त्रिय इत्यर्थः। बहून् अब्दान् नष्टमदृष्टं, संप्रति दृष्ट्वे ति शेषः। मृतं पुनः आगतं इव, अभ्यनन्दन्॥ ३७॥ देवकीति। देवकी, वसुदेवः, कृष्णरामौ च, तथा स्त्रियः, रुक्मिणी च, तौ दम्पती, परिष्वज्य यथायथं परिरभ्य, मुदं ययुः॥ ३८॥ नष्टमिति। द्वारकौकसः द्वारकावासिनो जनाः, नष्टं प्रद्युम्नं, आयातं, आकर्ण्य, अहो अयं बालः मृतः इव, आयातः। दिष्ट्या आनन्दस्तेन नो जातः इति ह एवमेव अब्रुवन्॥ ३९॥ सौन्दर्यातिशयेन प्रद्युम्नं वर्णयति। यमिति। पिता श्रीकृष्णस्तस्य सरूपं समानरूपता तेन निज आत्मीय ईशो भर्त्ता इति भावो भावना यासां ताः, पितृसारूप्येक्षया निजभर्तृबुद्धिसहिता इत्यर्थः। तन्मातरः श्रीकृष्णपत्न्यः यं मुहुः निरीक्ष्येति शेषः। भूयो दृष्ट्वापीत्यर्थः। वै। रूढभावाः श्रीकृष्णोऽयमिति स्फुटाशयाः सत्यः, रहः अभजन्। निलिल्युरित्यर्थः। इति यत् तत्, रमास्पदं श्रीकृष्णस्तस्य बिम्बं श्रीमूर्त्तिस्तस्य बिम्बे प्रतिनिधीभूते, स्मरे स्मर्यमाणत्वेनैव क्षोभजनके, कामे, अक्षविषये सति, चित्रं न खलु। यदा तन्मातरस्तत्र रूढभावा जातास्तदति शेषः। अन्यनार्योऽन्या अङ्गनाः, तत्र रूढभावाः स्युः, तत्र किमुत किं वक्तव्यमित्यर्थः। अत्र द्वयोर्बिम्बशब्दयोरुपादानान्न प्रतिबिम्बार्थः सादृश्यताबोधकः प्रतिकृतिरूपार्थस्यैव वक्तव्यत्वात्। शम्बराहरणोक्त्यात्र प्रद्युम्नहानिलाभतः। आपत्ये सुखदुःखे हि सूचिते स्तः कुटुम्बिनाम्॥ ४०॥

इति श्रीधर्मधुरंधरश्रीधर्मात्मजप्रत्यक्षपुरुषोत्तमश्रीसहजानन्दस्वामिसुतश्रीरघुवीराचार्यसूनुभगवत्प्रसादाचार्यविरचितायामन्वयार्थावबोधिन्यां भक्तमनोरञ्जन्याख्यायां श्रीमद्भागवतटीकायां दशमस्कन्धे उत्तरार्द्धे पञ्चपञ्चाशत्तमोऽध्यायः॥ ५५॥

### कृष्णप्रिया

श्रीनारदजीके मुखारविन्द से सारा इतिवृत्त-आश्चर्यमयी घटना सुनकर श्रीकृष्ण भगवान् के अन्तःपुर की स्त्रियाँ चकित हो गयीं और सुदीर्घकाल पर्यन्त खोये रहने के बाद लौटे हुए श्रीप्रद्युम्नजी से इस प्रकार प्यार करने लगीं कि मृतोपलब्ध या अभिनव प्रसूत पुत्र से प्यार कर रही हो॥ ३७॥ देवकीजी, वसुदेवजी, भगवान् श्रीकृष्ण, बलभद्रजी रुक्मिणीजी और सर्व गृहिणियाँ उस नव-दम्पति को हृदय से लगाकर बहुत ही आनन्दित हुए॥३८॥ अब द्वारिकावासी नर-नारियों को यह ज्ञात हुआ कि खोये हुए प्रद्युम्नजी लौट आये हैं। तब वे आपस में वार्ता करने लगे कि–अहो कैसे सौभाग्य की बात है कि यह बालक मर कर पुनः लौट आया॥ ३९॥ राजन् परीक्षित्! श्रीप्रद्युम्नजी का स्वरूप-वर्ण आदि भगवान श्रीकृष्ण से इतना मिलता-जुलता था कि प्रद्युम्नजी को देखकर उनकी माताएँ भी उन्हें अपना पतिदेव श्रीकृष्ण समझकर मधुर भाव में मग्न हो जाती थी और उनके सामने से हटकर एकान्त में चली जाती थी श्रीकृष्ण भगवान् प्रतिबिम्ब स्वरूप कामावतार भगवान् प्रद्युम्न को देखकर ऐसा होना कोई आश्चर्य की बात नहीं है। फिर उन्हें देखकर दूसरी स्त्रियों की विचित्रदशा हो जाती थी इसमें कहना ही क्या है॥ ४०॥

श्रीमद्भागवत दशमस्कन्ध उत्तरार्ध निरोधलीला के भाषान्तर में ५५ वाँ अध्याय समाप्त।

# अथ [1]षट्पञ्चाशत्तमोऽध्यायः

| श्लोकाः | अनु. | व. | उ. | श्लो. अ. | उ. अ. | अ. अ. | सं. श्लो. अ. | सं. श्लो. | अ. |
|---|---|---|---|---|---|---|---|---|---|
| ४५ | ४४ | १ | ४ | १४८० | २२ | ४३ | १५४५ | ४८। | १ |

श्रीशुक उवाच

सत्राजितः[2] स्वतनयां कृष्णाय कृतकिल्बिषः। स्यमन्तकेन मणिना स्वयमुद्यम्य दत्तवान् ॥ १ ॥

राजोवाच

सत्राजितः किमकरोद् ब्रह्मन् कृष्णस्य किल्बिषम्। स्यमन्तकः कुतस्तस्य कस्माद् दत्ता सुता हरेः ॥ २ ॥

श्रीशुक उवाच

आसीत् सत्राजितः सूर्यो भक्तस्य[3] परमः सखा[4]। प्रीतस्तस्मै मणिं प्रादात्[5] सूर्यस्तुष्टः स्यमन्तकम् ॥ ३ ॥

स तं बिभ्रन् मणिं कण्ठे भ्राजमानो यथा रविः। प्रविष्टो द्वारकां राजंस्तेजसा नोपलक्षितः ॥ ४ ॥

१. विजयमते अयं षष्टितमोऽध्यायः। २. सत्राजित्तनयां तन्वीं–विज.। ३. क्तश्च–वीर.। ४. दा–वीर.। ५. स च तुष्टः–श्रीधर.।

### कर्दमक्षमा

अन्वयः—श्रीशुक उवाच—कृतकिल्बिषः, सत्राजितः, कृष्णाय, स्वतनयाम्, स्वयम्, उद्यम्य, स्यमन्तकेन, मणिना सह, दत्तवान् ॥ १ ॥ राजोवाच—हे ब्रह्मन्! सत्राजितः, कृष्णस्य, किम्, किल्बिषम्, अकरोत्?, तस्य, स्यमन्तकः, मणिः, कुतः, हरेः, सुता, कस्माद् दत्ता? ॥ २ ॥ श्रीशुक उवाच—सत्राजितः (सूर्यस्य) परमः, भक्तः, आसीत्, तस्य, सूर्यः, परमः, सखा, आसीत्, प्रीतः, सूर्यः, प्रीतः, सन्, तुष्टः, सन्, तस्मै, स्यमन्तकम्, मणिम्, अदात् ॥ ३ ॥ राजन्! सः, तम्, मणिम्, कण्ठे, बिभ्रत्, यथा, रविः, इव, भ्राजमानः, द्वारिकाम्, प्रविष्टः, तेजसा, नोपलक्षितः ॥ ४ ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

षट्पञ्चाशत्तमे मिथ्याऽभियोगे मणिमाहरत्। कन्यां जाम्बवतः प्राप कृष्णः सत्राजितस्ततः ॥ १ ॥

पुत्रादिकामसौख्यस्य निष्ठामुक्त्वाऽतिचञ्चलाम्। अर्थस्यानर्थतामाह स्यमन्तहरणादिना ॥ २ ॥

सत्यभामाजाम्बवत्योर्विवाहप्रस्तावाय स्यमन्तकाख्यानमाह—सत्राजित इति। सत्राजित इत्यकारान्तः क्वचिच्च तकारान्तोऽप्यन्वयानुसारेण द्रष्टव्यः कृतापराधस्तच्छान्तये स्वयमेवोद्यमं कृत्वा मणिना सह प्रादादिति ॥ १–२ ॥ भक्तस्य सत्राजितः सूर्यः स्वाम्यपि सखेवाऽऽसीदित्यर्थः। स च तुष्टस्तस्मै स्यमन्तकन्नाम मणिं प्रादात् प्रीतः स्निग्धः ॥ ३ ॥ नोपलक्षितः सत्राजितोऽसावित्यविज्ञातः ॥ ४ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

मिथ्याभियोगे मिथ्याभिशापे (१)। निष्ठां सुस्थितिम्। स्यमन्तो मणिविशेषः (२)। 'प्रस्तावः स्तवने प्रोक्तं प्रकृते वस्तुनि' इति निरुक्तिः। सत्रेण हिरण्यादिदानलक्षणतपसा सूर्ये स्थितं मणिमाजितवानतः सत्राजिदिति नाम। अकारान्तपक्षे तु सत्रे सदादाने न केनापि जित इत्यर्थः। "यज्ञभेदे सदादाने शत्रमाच्छादने वने" इति यादवः। तच्छान्तयेऽपराधनिवृत्त्यर्थं स्वयमुद्यमं कृत्वा याचनादिपरप्रेरणामन्तरेण। कृष्णाय सर्वचित्ताकर्षकाय इति तस्याः पूर्वरागोऽसूचि ॥ १ ॥ तस्य सत्राजितः। कुतः, प्राप्त इति शेषः। हरेरिति चतुर्थीविषये षष्ठी, नातीच्छया दानात् ॥ २ ॥ इत्यर्थ इति–परमभक्त्या वशीकृतः सूर्यस्तेन सख्यं कृतवानित्याशयः। स च सूर्यः। तस्मै सत्राजिते। सखा उपासनासातत्येन सदा हितकारी। तत्रापि प्रीतः उपासनाविशेषेण तदा प्रीतिविशेषवान्सन्। प्रदानप्रकारस्तु श्रीहरिवंशे—'तस्योपतिष्ठतः सूर्यं विवस्वानग्रतः स्थितः। अस्पष्टमूर्तिर्भगवांस्तेजोमण्डलवान्प्रभुः। अथ राजा विवस्वन्तमुवाच स्थितमग्रतः। यथैव व्योम्नि पश्यामि सदा त्वां ज्योतिषां पते। तेजोमण्डलिनं देवं तथैव पुरतः स्थितम्। को विशेषो मे त्वत्तः सख्येनोपगतस्य वै। एतच्छ्रुत्वा स भगवान्मणिरत्नं स्यमन्तकम्। स्वकण्ठादवमुच्यैनमेकांते न्यस्तवान्विभुः। ततो विग्रहवन्तं तं ददर्श नृपतिस्तदा। प्रीतिमानथ तं दृष्ट्वा मुहूर्तं कृतवान्कथाम्। तमाह प्रश्रितो

भूयो विवस्वंतं स सत्रजित् । लोकानुद्भासयस्येतान्येन त्वं सततं प्रभो। तदेतन्मणिरत्नं मे भगवान्दातुमर्हसि। ततः स्यमन्त कर्माणि दत्तवांस्तस्य भास्करः।" इति। 'लोकानुद्भासयस्येतान्येन' इति सत्राजितोऽज्ञानमयोक्तिरेव, तस्य स्वासाधारणतेजसैव प्रकाशकत्वं न तु मणितेजसेति, अन्यथा तद्दानोत्तरं जगदांध्यप्रसंगः स्यादिति भावः। किञ्च—मणिदानमपि—"हरिः सुदर्शनं चक्रं समुत्पाद्य स्वचक्रतः" इति मार्कण्डेयोक्तन्यायेनैव, न हि स्वासाधारणं देवालंकरणं मनुष्येण धर्तुं शक्यत इति ज्ञेयम् ॥ ३ ॥ स सत्राजित्। तं मणिम् ॥ ४ ॥

**श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी**

टीकायां पुत्रादीति शम्बरविषयकमुन्नेयं श्रीप्रद्युम्ने तस्य पुत्रत्वमननात् वस्तुतस्त्वेवमाभाष्यं तन्मातर इत्युक्तम् कथं ताः परिणीता इत्यपेक्षायामादौ प्रियतमायाः श्रीसत्यभामाया विवाहमाह—सत्राजित इति। स्वतनयामिति स्वशब्देनान्यापेक्षा निरस्ता स्वतः स्वयमेव उद्यम्य कृष्णाय सर्वचित्ताकर्षकायेति तस्यास्तु सुतरामाकर्षणमिति पूर्वरागोपि सूचितः श्रीजाम्बवत्या विवाहः पूर्वोऽप्येतत्प्रसङ्गेनैव जातत्वेन प्रेमगौणत्वेन च पूर्वं प्रस्तुतः ॥१॥ कुतः सकाशाद्बभूव ? इत्याह—हरेरिति। चतुर्थीविषये षष्ठीनातीच्छयादानात् ॥ २ ॥ सखा उपासनासातत्येन सदा हितकारी तत्रापि प्रीतः सन् उपासनाविशेषेण तदा प्रीतिविशेषवानित्यर्थः। प्रदानप्राकारः श्रीहरिवंशे—

"तस्योपतिष्ठतः सूर्य्यं विवस्वानग्रतः स्थितः। अस्पष्टमूर्त्तिभगवान् तेजोमण्डलवान् प्रभुः ॥
अथ राजा बिवस्वन्तमुवाच स्थितमग्रतः। यथैव व्योम्नि पश्यामि सदा त्वां ज्योतिषाम्पते ! ॥
तेजोमण्डलिनं देवं तथैव पुरतः स्थितम्। को विशेषोऽस्ति मे त्वत्तः सख्येनोपगतस्य वै ॥
एतच्छ्रुत्वा स भगवान् मणिरत्नं स्यमन्तकम्। स्वकण्ठादवमुच्यैनमेकान्ते न्यस्तवान् विभुः ॥
ततो विग्रहवन्तं तं ददर्श नृपतिस्तदा। प्रीतिमानथ तं दृष्ट्वा मुहूर्त्तं कृतवान् कथाम् ॥
तमाह प्रश्रितो भूयो विवस्वन्तं स सत्रजित्। लोकानुद्भासयस्येतान् येन त्वं सततं प्रभो ! ॥
तदेतन्मणिरत्नं मे भगवन् ! दातुमर्हसि। ततः स्यमन्तकर्माणि दत्तवांस्तस्य भास्करः" ॥ इति।

अत्र लोकानुद्भासयस्येतान् येनेति सत्राजितस्याज्ञानमयमेव वचनमिति च ज्ञेयम् ॥ ३ ॥ अपरिचितः सन् प्रविष्टः। यद्वा, प्रविष्टोऽपि न परिचितः ॥ ४ ॥

**श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी**

तन्मातर इत्युक्तम्, कथं ताः परिणीता इत्यपेक्षायामादौ प्रियतमायाः श्रीसत्यभामाया विवाहमाह—सत्राजित इति। स्व—शब्देन अन्यापेक्षा निरस्ता, अतः स्वयमेवोद्यम्य, यद्वा, निजधनरूपां तनयां तदेकापत्यत्वात्। कृष्णाय सर्व्वचिताकर्षकायेति तस्या अपि तत्पतित्वेच्छा सूचिता। आदौ ज्येष्ठायाः श्रीजाम्बवत्या विवाहे वक्तुं योग्येऽप्यस्या विवाहोक्तिरेतद्विवाहकारणमपि प्रसंगादेव तद्विवाहसिद्धेः तच्चाग्रे व्यक्तं भावि। यद्वा, अस्यां श्रीभगवतः प्रेमविशेषात् ॥ १ ॥ कृष्णस्य साक्षाद्भगवतोऽपि कस्माद्धेतोः। ननु कृतकिल्विष इति हेतुरुक्त एव, तत्राह—हरेरिति, पूर्वदोषहरत्वेन तस्मिन्न कोऽप्यपराधस्तिष्ठत्, तत् कस्माद्दत्तेति भावः। तच्च सर्व्वं भवता ज्ञायत एवेत्यभिप्रायेण सम्बोधयति—ब्रह्मन्निति ॥ २ ॥ सखा हितकारी सख्यमेव दर्शयति—प्रीत इति। स्वभावादेव तस्मिन् स्निग्धः पुनश्चोपस्थानादिना तुष्टः सन् प्रकर्षेण स्वयं तत्कण्ठार्पणादिनादात्। तद्विशेषः श्रीहरिवंशे ( विष्णु० प० ३८।१६-२२ )—

'तस्योपतिष्ठतः सूर्य्यं विवस्वानग्रतः स्थितः। अस्पष्टमूर्त्तिर्भगवांस्तेजोमण्डलवान् प्रभुः ॥
अथ राजा विवस्वन्तमुवाच स्थितमग्रतः। यथैवं व्योम्नि पश्यामि सदा त्वां ज्योतिषां पते ॥
तेजोमण्डलिनं देवं तथैव पुरतः स्थितम्। को विशेषोऽस्ति मे त्वत्तः सख्येनोपागतस्य वै ॥
एतच्छ्रुत्वा स भगवान् मणिरत्नं स्यमन्तकम्। स्वकण्ठादवमुच्यैनमेकान्ते न्यस्तवान् विभुः ॥
ततो विग्रहवन्तं तं ददर्श नृपतिस्तदा। प्रीतिमानथ तं दृष्ट्वा मुहूर्तं कृतवान् कथाम् ॥
तमाह प्रश्रितो भूयो विवस्वन्तं स सत्रजित्। लोकानुद्भासयस्येतान् येन त्वं सततं प्रभो ॥
तदेतन्मणिरत्नं मे भगवन् दातुमर्हसि। ततः स्यामन्तकर्माणि दत्तवांस्तस्य भास्करः ॥' इति ॥

नोपलक्षितोऽनुपलक्ष्यमाण इत्यर्थः। अतीतत्वं श्रीशुकपरीक्षित्-संवादतः प्राक्तनत्वात्, किंवा तन्निर्द्धाराभिप्रायेण, राजन्निति विस्मयात् ॥ ४ ॥

**श्रीमद्वीरराघवाचार्यकृता भागवतचन्द्रचन्द्रिका**

अथ सत्यभामाजाम्बवत्योर्विवाहं वर्णयितुकामस्तद्विस्तरं पिपृच्छिषामुत्पादयितुमाह—सत्राजित इति। सत्राजित इत्यकारान्तः क्वचित्तकारान्तोपि अन्वयानुसारेण दृष्टव्यः तत्राकारान्तः कर्त्तरिक्तान्तः सत्रेणासम्मताज्जितः जितवान् सर्वोत्कर्षेण

वर्त्तितवानिति तथा सच तावत्कृतं किल्विषमपराधो येन तथाभूतस्यमन्तकाख्येन मणिना सह स्वतनयां सत्यभामां कृष्णायोद्यम्योद्धृत्य ददौ ॥ १ ॥ तत्र लब्धप्रश्नोऽवसरः पृच्छति राजा—सत्राजित इति । हे ब्रह्मन्! तावत्सत्राजित्किं किल्विषमपराधमकरोत् तस्य सत्राजितस्य स्यमन्तकः कुतः कस्माल्लब्धः कस्माद्धेतोः सुता च हरेर्हरये दत्तेति पृष्टः ॥ २ ॥ सविस्तरमनुवर्णयितुं तावदुपोद्घातमाह—आसीदिति । सत्राजिताख्यः कश्चिद्राजा सदा परमः सूर्यभक्तः आसीत् सूर्यस्तुष्टः भक्त्येति शेषः । तस्मै सत्राजिताय स्यमन्तकाख्यं मणिं ददौ ॥ ३ ॥ स सत्राजितस्तं मणिं कण्ठे बिभ्राणः रविरिव भ्राजमानः हे राजन्! मणितेजसा अनुपलक्षितशरीरो द्वारकां प्रविष्टः ॥ ४ ॥

## श्रीविजयध्वजतीर्थकृता पदरत्नावली

त्रिविक्रमावतारस्य निरपेक्षभक्तानुकम्पिनो यदुनन्दनस्य एतज्जन्मानुष्ठितकर्मनिमित्तदुर्यशः शमनहेतुविक्रममनुक्रामति—अस्मिन्नध्याये तत्र परीक्षितः प्रश्नबीजमुत्थापयति—सत्राजिदिति । सत्रेण हिरण्यादिदानलक्षणतपसा सूर्यस्थितं हरिं जितवान्वशीकृतवानित्यतः सत्राजिदिति नाम लब्धवान् "यज्ञभेदे सदादाने सत्रमाच्छादने वने" इति कृतकिल्विषः कृतापराधः मणिना सह स्वयमुद्यम्य याचनादिपरप्रेरणामन्तरेण मत्कन्यां तुभ्यं दास्यामीति वचनादिप्रयत्नं विधाय सत्राजितोऽन्तरात्मा सत्रविषये अजित इति वा ॥ १-२ ॥ भक्तस्य सत्राजितः सखा ॥ ३ ॥ तेजसार्चिषा नोपलक्षितो न दृष्टः ॥ ४ ॥

## श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

षट्पञ्चाशत्तमे लब्धकलङ्कोऽगान्मणीहया । लभे जाम्बवतः कन्यां कृष्णः सत्राजितस्ततः ॥

सत्राजित इत्यकारान्तः क्वचित्तकारान्तश्च द्रष्टव्यः ॥ १ ॥ हरेः हरये ॥ २ ॥ भक्तस्य सत्राजितः सूर्यः स्वाम्यपि प्रीतः सखा प्रियसख आसीदित्यर्थः ॥ ३ ॥ नोपलक्षितः सत्राजितोऽसावित्यविज्ञातः ॥ ४-५ ॥

## गूढार्थदीपिनी

षट्पञ्चाशत्तमे नेतुं मणिं मिथ्याकलङ्कतः । गतो जाम्बवतीं लेभे सत्यभामां च माधवः ॥ १ ॥

सत्राजित इत्यकारान्तः क्वचित्तकारान्तश्च । सत्रे दाने न केनापि जित इत्यकारान्तः । सत्रेण दानलक्षणतपसा मणिमाजितवानिति तकारान्तश्च । उद्यम्य परप्रेरणां विनैव ॥ १ ॥ कुतः प्राप्तः । हरेः हरये ॥ २ ॥ भक्तस्य सत्राजितः सखेवासीदिति व्याख्येयम् ॥ ३ ॥ नोपलक्षितो न ज्ञातः सत्राजितोऽयमिति ॥ ४ ॥

## श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

षट्पञ्चाशत्तमे श्रीभूदेव्या विवाहमुपक्रम्य स्यमन्तकमणिकथां जाम्बवत्याः प्रसङ्गात् विवाहमुक्त्वा श्रीभूदेव्या विवाहमाह—सत्राजित इति । सत्रैः आसमन्ताज्जितः लब्धजयः सत्राजितोऽकारान्तः क्तान्तत्वात् क्वचिदन्वयानुसारेण तकारान्तोऽपि ॥ १ ॥ हरेः हरये ॥ २ ॥ भक्तस्य सत्राजितः सूर्यः परमः स्वाम्यपि प्रीतः प्रसन्नः सन्सखा आसीत् स च तुष्टस्तस्मै स्यमन्तकं नाम मणिं प्रादादित्यन्वयः ॥ ३ ॥ नोपलक्षितः सत्राजितत्वेन नैव विज्ञातः ॥ ४ ॥

## श्रीमद्वल्लभाचार्यकृता सुबोधिनी

सप्तमे कामतः प्रोक्तो विवाहस्तामसः परः । सात्त्विकश्च प्रसङ्गेन क्लेशेनोभे निवारिते ॥ १ ॥
क्लेशापनोदनार्थाय चौर्यमत्र निरूप्यते । वाचिकं कायिकं चैव कायेन वचनेन च ॥ २ ॥
सम्बन्धी च तथा भक्तः स्वापराधापनुत्तये । सत्यभामा जाम्बवती ताभ्यां सम्यक् निरूपिते ॥ ३ ॥
गुणा एतास्ततोऽग्रे तु विद्यारूपा निरूपिताः । एवमष्टौ महिष्यो हि सात्त्विक्यस्तु ततः पराः ॥ ४ ॥
विवाहाः सप्त कामेन कृपया तु सहस्रशः । विधितस्त्वेक एवोक्तो द्वयोरत्र निरूप्यते ॥ ५ ॥

रुक्मिण्या विवाहं पुत्रसम्पत्तिं चोक्त्वा, निमित्तवशात् सत्यभामाया विवाहमाह **सत्राजित** इति । सत्राजित्शब्दः तकारान्तः । अकारान्तोऽपि । सत्रान् रक्षकसहितानपि जयतीत्यर्थे क्विप् । सत्राणां जितं यस्मादिति क्तान्तेन बहुव्रीहौ अदन्तता भवति । एतदधीन एव महतामपि जय इति द्वितीयोर्थः । स्वतनयां स्वयमुद्यम्य दत्तवानिति । अप्रार्थितः अनभिप्रेतश्च । तथापि दाने हेतुः **कृतकिल्बिष** इति । कृतापराधः । तदपराधदूरीकरणार्थं स्यमन्तकेन मणिना सह । यत्कृते अपराधः तदपराधनिमित्तं दण्डार्थं कन्यां च दत्तवान् । संक्षेपकथेयमिति केचित् । वस्तुतस्तु न समाधिभाषा । नह्युदारलीलावतः अपकीर्त्यादिकं समाधिकार्यं भवति । भक्तिसाधकानामेव चरित्राणां वक्तव्यत्वात् । **कृतकिल्बिष** इति । यथाकथञ्चिदपराधोऽपि सम्भवति । अतोऽनभि-

प्रेतत्वेन कल्पान्तरत्वेन वा अवचनम् । वस्तुतः सत्यभामा सरस्वत्यंशा भूम्यंशा वेति तस्या विवाहार्थं तथोद्योगः भगवतैव कृतः । स्वीकारोऽत्र वक्तव्यो राजसानाम्, तदर्थं स्त्रीप्रकरणे सत्यभामादीनां परिग्रहमात्रमत्र वक्तव्यम् ॥ १ ॥ नन्वाकाङ्क्षापूरणाभावात् संक्षेपपरत्वमेव कुतो न भवतीति चेत् । मैवम् । मित्रविन्दाविवाहवद्यावदुक्तेनैव आकाङ्क्षानिवृत्तिसम्भवात् । विशेषं पृच्छति । **सत्राजित इति** । **ब्रह्मन्निति** ज्ञानार्थम् । कृष्णस्य सदानन्दस्य कथं वा कोऽप्यपराधं कुर्यात् । तत्रापि पालकस्य । अपराधनिमित्तः स्यमन्तको वा भगवद्भक्तानां कुतः । देवतान्तरभजनात् तथात्वे कथं वा तस्य निरोधे सम्बन्ध इति प्रश्नाभिप्रायः । विरुद्धानामपकारकरणं युक्तम् । तथा सति तेषां सर्वस्वेन सह कन्यादानं चायुक्तम्, तस्मात् कथमयमुभयात्मक इति । **कस्माद्धेतोः** सुतां दत्तवान् । कन्यापि सूर्यादेव प्राप्ता वरलब्धा, न तु तस्य औरसी, भगवान् नन्दपुत्र इव तस्यापि कन्येति पुराणान्तरव्यवस्था । अत एव यादवानां विवाहदोषो न शङ्कनीयः । अत्रापि 'स्त्रीरत्नं रत्नमेव चे'ति वाक्यात् देवादेव प्राप्तमिति लक्ष्यते । भगवानपि अक्लिष्टकर्मा सगोत्रापक्षे विवाहं न कुर्यात् ॥ २ ॥ विस्तरेण वक्तुं कथामारभते **आसीदिति** । स्वतन्त्रकथेयमित्यप्यासीदित्यनेन सूचितम् । सत्राजित आसीदिति भिन्नं वाक्यम् । तस्य महत्त्वं ख्यापयितुमाह । सूर्योऽपि भक्तस्य परमः सखा आसीदिति । भक्तस्य सख्यं शीघ्रं प्रयच्छतीति सूर्यस्य स्वभावो वर्णितः । अनेन सूर्यः परमदयालुः, अल्पेऽपि भजने बहु प्रयच्छतीति निरूपितम् । ततो यज्जातं तदाह **प्रीतस्तस्मै मणिं प्रादादिति** । मणिः स्यमन्तकः । कुत्रत्यो मणिरित्याकाङ्क्षायामाह **सूर्य** इति । स हि मणिं सूते । सर्वमेव सूर्यात्प्रभूतमिति तस्य मणिमात्रप्रसवे न दूषणम् । तदर्थमेव मणिरुत्पादित इति लक्ष्यते । यतः **प्रीतः**, तस्य भक्त्या संतुष्टः, स्यमन्तकमुत्पादितवान् । उत्पाद्यापि ततोऽपि प्रीतः प्रकर्षेणादात् । तस्मिन् सामर्थ्यं स्थापयित्वा अदात् । प्रकर्षेणैव दानात् भोगार्थं भोगसाधनसम्पादनार्थं च तज्जातमिति लक्ष्यते ॥ ३ ॥ अतस्तस्य प्रथमतो भोगमाह **स तं बिभ्रदिति** । स्वतेजस्तस्मिंस्थापितमिति तद्धारणेन सूर्य एव धृतः । अत एव तत्प्रभावाद्यथा रविः, तथा भ्राजमानो जातः । स चेदन्यत्र तिष्ठेत्, न काप्यनुपपत्तिर्भवेत् । सूर्यश्च रक्षको भवेत् । स पुनस्तद्गृहीत्वा द्वारकास्थितान् भक्तान् वञ्चयन्निव समागतः । ततः सूर्येण उपेक्षित इत्यभिप्रायं वक्तुं तस्य द्वारकाप्रवेशमाह **प्रविष्टो द्वारकामिति** । **राजन्निति** सम्बोधनमन्यविषये अन्यो रक्षां न करोतीति ज्ञापयितुम् । तस्य मनोरथः सिद्ध इत्याह **तेजसा नोपलक्षित** इति ॥ ४ ॥

### श्रीसुबोधिनी–सारः

तन्मातर इत्युक्तत्वादन्यविवाहानाह श्रीशुकः । कृतं किल्बिषं पापं येन स सत्राजितः तांतोऽदंतश्च । स्वतनयामात्मपुत्रीं स्यमंतकेन मणिना सह स्वयमुद्यम्य उद्यमं कृत्वा कृष्णाय दत्तवान् ॥ १ ॥ राजप्रश्नः । हे ब्रह्मन् सत्राजितः कृष्णस्य किं किल्विषमपराधमकरोत् तस्य स्यमंतको मणिः कुत आगतः हरेर्हरये सुता कन्या कस्माद्धेतोर्दत्ता ॥ २ ॥ शुकोक्तिः । भक्तस्य सत्राजितः सूर्यः परमः सखासीत् प्रीतः स्निग्धः अच् । सूर्यः तुष्टः प्रसन्नस्तस्मै सत्राजिते स्यमंतकं मणिं प्रादात् ॥ ३ ॥ तं मणिं कंठे बिभ्रत् दधत् सन् यथा रविस्तथा भ्राजमानः स सत्राजित् द्वारकायां प्रविष्टः तेजसा न ज्ञातः केनापि हे राजन् ॥ ४ ॥

### विवरणटिप्पणी

सप्तमेऽध्याये । **कारिकायाम्** । **सप्तमे** इति । जाम्बवतीविवाहस्तामसः । **परः** सत्यभामाविवाहः सात्त्विकः । सच चौर्यप्रसङ्गेन प्रोक्त इत्यर्थः । तथाच रुक्मिणीविवाहस्य परिशेषादेव राजसत्वं सिद्धमिति भावः । रुक्मिणीजाम्बवतीविवाहयोरपि भगवत्परिग्रहत्वेन सात्त्विकत्वे संभवति तथात्वाभावे हेतुमाहुः **क्लेशेनेति** । **उभे** रुक्मिणीजाम्बवत्यौ क्लेशेन पितृगृहान्निवारिते, क्लेशं कृत्वा पितृगृहात्स्वगृहमानीते । अतो न तद्विवाहयोः सात्त्विकत्वम्, किन्तु सत्यभामायामाहूय दानेन क्लेशाभावात्तद्विवाहस्यैव सात्त्विकत्वमित्यर्थः । **चौर्यमत्रेति** । सत्यभामाविवाहप्रकरणे क्लेशापनोदनार्थाय चौर्यं निरूप्यते । अतः क्लेशाभावात्सात्त्विकत्वमित्यर्थः । **वाचिकमिति** । सत्राजितोक्तं वाचिकं मिथ्याभिशापं, कायेन स्वयं बिले गत्वा युद्धं कृत्वा कायिकं च, शतधनोः सकाशात् मणिग्रहणरूपं मिथ्याभिशापं अक्रूरमानीय तद्बोधकेन वचनेन निवारितवानिति शेषः । क्रमेणाध्यायद्वयेन द्वयमपि निवारितवानित्यर्थः । **सम्बन्धी चेति** । 'एतादृशः सत्राजित्स्वापराधापनुत्तये सत्यभामां दत्तवानितिशेषः । **सत्यभामेति** । इयं जाम्बवती च एते उभे भार्ये । ताभ्यां वाचिककायिकमिथ्याभिशापाभ्यां हेतुभूताभ्यां विवाहिते निरूपिते इत्यर्थः ।' **गुणा एता** इति । एता रुक्मिणीजाम्बवतीसत्यभामाः **गुणरूपा** रजस्तमःसत्त्वरूपा इत्यर्थः । **द्वयोरत्रेति** । द्वयोर्विवाहः अत्र चौर्यप्रकरणे निरूप्यत इत्यर्थः । **सत्राजित** इत्यत्र । **त्रायन्तीतित्राः** । त्रैधातुः कर्तरि क्विप् । आदेच इत्यनेन आत्वम् । पुल्लिङ्ग आकारान्तः **शब्दः** । त्राभिः सहिताः सत्राः स्त्रीत्वाभावाद्गोरिति ह्रस्वो न । तान् जयतीति सत्राजिदिति व्युत्पत्तिमभिप्रेत्याहुः **सत्रानिति** । अव्युत्पत्तिपक्षे धातुत्वाभावात् आतो धातोरित्यालोपो नेत्यभिप्रेत्य सत्रानित्युक्तम् । एतत्पक्षाश्रयणं सिद्धान्तकौमुद्यां 'पुमः खय्यम्परे' इति सूत्रे स्फुटम् । **न समाधिभाषेति** । विस्तर इति शेषः । प्रथमश्लोकमात्रं समाधिभाषा । विस्तरस्तु लौकिकीभाषा । तयोरपि समाधिपोषकत्वात्कथनमित्यादिकं निबन्धे व्युत्पादितमेव । **परिग्रहमात्रमिति** । मात्रपदेन विस्तरव्यावृत्तिः । अत एव रुक्मिणीविवाहविस्तरोपि न समाधिभाषेति पूर्वमुक्तम् । **प्रश्नश्लोके** । **तत्रापि पालकस्येति** । कृष्णो द्वारिकां निर्माय सर्वान्पालितवांस्तादृशस्य, नत्वन्ययादवसदृशस्येत्यर्थः । **अत्रापीति** । भागवतेऽपीत्यर्थः ।

### गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

षड्युक्पञ्चाशत्तमे च अध्याये सत्यभामया । जाम्बवत्या च कृष्णस्य विवाहो विनिरूप्यते ॥ १ ॥

जाम्बवत्यादिविवाहेभ्यः प्रागेव प्रद्युम्नजन्म, ततो विवाहाः, ततः शम्बरागारात् प्रद्युम्नस्यागमनमिति क्रमः । तथा-चोत्तरकालीनमपि प्रद्युम्नागमनं कथापर्यवसानाय पूर्वमेव निरूप्य जाम्बवत्यादिविवाहप्रस्तावाय स्यमन्तकाख्यानमाह—सत्राजित इति । सत्राजितशब्दः क्वचिदकारान्तः, क्वचित्तकारान्तश्चान्वयानुसारेण द्रष्टव्यः । सत्राजितः स्यमन्तकाख्येन मणिना सह स्वतनयां सत्यभामां स्वयमयाचित एव उद्यम्य उद्यमं कृत्वा कृष्णाय दत्तवान् । एवं दाने हेतुमाह—कृतकिल्बिष इति ॥ १ ॥ एवं सङ्क्षेपतः सत्यभामाविवाहं श्रुत्वा तद्विस्तारं पृच्छति—सत्राजित इति । 'तव नाज्ञातं किञ्चित्, अतो वक्तव्यम्' इत्याशयेन सम्बोधयति—हे ब्रह्मन् ! सत्राजितः कृष्णस्य किं किल्बिषमपराधं कृतवान् अकरोत् ? तस्य सत्राजितस्य स्यमन्तको मणिः कुतः प्राप्तः ? तेन हरेः हरये कस्माद्धेतोः सुता दत्ता ? कन्यादाने स्वकृतापराधशान्तिरेव हेतुर्वाऽन्योऽपि कश्चिद्धेतुरस्तीत्यर्थः ॥ २ ॥ एवं पृष्टः शुक उत्तरमाह—आसीदिति । भक्तस्य सत्राजितः परमः पूज्यः स्वाम्यपि सूर्यः सखा आसीत् । स च सूर्यस्तद्भक्त्या सन्तुष्टः, अत एव प्रीतस्तस्मै सत्राजिताय स्यमन्तकाख्यं मणिं प्रादात् ॥ ३ ॥ स च सत्राजितस्तं मणिं कण्ठे बिभ्राणस्तत्तेजसा रविरिव भ्राजमानः प्रकाशमानः अत एव नोपलक्षितः सत्राजित इत्यज्ञात एव द्वारकां प्रविष्टः । 'मणिप्रभावाद्राजतोऽपि तस्य तेजोतिशयो जात' इति सूचयन् सम्बोधयति—राजन्निति ॥ ४ ॥

### अन्वितार्थप्रकाशिका

षट्पञ्चाशत्तमे प्राप हरिर्मण्यभियोगतः । ऋक्षसत्राजितोः पुत्र्यौ श्लोकाः सार्द्धाः शराब्धयः ( ४५॥ ) ॥

चत्वार्युवाचेति ( ४ ) साङ्घ्रितर्कवेदा ( ४६। ) अनुष्टुभः ॥ ५६ ॥

अथ प्रकृतमनुसरन् प्रद्युम्नजन्मानन्तरभाविजाम्बवत्यादिविवाहप्रस्तावाय स्यमन्तकाख्यानमाह—सत्राजित इति ॥ सत्रा सहैव सर्वेषु जित उत्कर्षं प्राप्त इति अकर्मकात्कर्तरि क्तः । सत्रविषये अन्यैरजित इति वा सत्राजितशब्दः क्वचिदकारान्तः । क्वचित् सत्रा सहैव युगपच्छत्रून् जयतीति क्विपा तकारान्तः । कृतकिल्बिषः कृतापराधः सत्राजितः स्यमन्तकाख्येन मणिना सह स्वतनयां सत्यभामां स्वयमयाचत । एवं उद्यम्य उद्यमं कृत्वा कृष्णाय दत्तवान् ॥ १ ॥ सत्राजित इति ॥ हे ब्रह्मन् ! सत्राजितः कृष्णस्य किं किल्बिषमपराधं कृतवानकरोत् । तस्य सत्राजितस्य स्यमन्तको मणिः कुतः प्राप्तः । तेन हरेः हरये कस्माद्धेतोः सुता दत्ता ॥ २ ॥ आसीदिति ॥ भक्तस्य सत्राजितः परमः पूज्यः स्वाम्यपि सूर्यः प्रीतः प्रियः स्निग्धः सखा इव आसीत् । स च सूर्यस्तद्भक्त्या सन्तुष्टस्तस्मै सत्राजिताय स्यमन्तकाख्यं मणिं प्रादात् ॥ ३ ॥ स इति ॥ हे राजन् ! स च सत्राजितः तं मणिं कण्ठे बिभ्रत् तत्तेजसा रविरिव भ्राजमानः प्रकाशमान अत एव नोपलक्षितः सत्राजित इत्यज्ञात एव द्वारकां प्रविष्टः ॥ ४ ॥

### श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्

इदानीं षट्पञ्चाशत्तमोऽध्याये सत्यभामापाणिग्रहणप्रकारं कृष्णे मणिग्रहणोद्देशप्राप्तापकीर्त्तिदूरीकरणं च जाम्बवती पाणिग्रहणप्रकारं च विवृणोति ॥ सत्राजित इति अयं च शब्दः क्वचिदकारान्तः क्वचिच्चतकारान्तोपि ज्ञेयः स कृष्णे कृतकिल्बिषः कृतापराधः सन् ॥ स्वयमुद्यम्य विवाहोद्योगं कृत्वा स्वापराधनिवृत्तये मन्तकेन मणिना सह स्वतनयां सत्यभामां कृष्णाय दत्त-वान् सत्यभामादीनां विवाहचरित्रं प्रद्युम्नागमनात्प्राग्ज्ञेयं ॥ १ ॥ किल्बिषमपराधं कुतः सकाशात्तस्य स्यमन्तको बभूव हरे-र्हरये ॥ २ ॥ सत्राजित्संज्ञस्य प्रीतः सन् सखामित्रतुल्य आसीत् ॥ भक्त्यातुष्टः सूर्यः ॥ ३ ॥ नोपलक्षितः ॥ अयं सत्राजिदिति न ज्ञातो जनैरिति शेषः ॥ ४ ॥

### भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

मिथ्याभियोगे षट्पञ्चाशत्तमे मणिमाहरन् । कृष्णो जाम्बवतः कन्यां प्राप सत्राजितस्य च ॥ १ ॥

उक्त्वातिचञ्चलां निष्ठां पुत्रादिकामसौख्यजाम् । आहार्यस्याप्यनर्थत्वं हरणेन मणेरिह ॥ २ ॥

सत्यभामाजाम्बवत्योर्विवाहौ वर्णयितुकामस्तद्विस्तरपिपृच्छिषामुत्पादयितुमाह । सत्राजित इति । सत्राजित इत्यकारान्तः क्वचित्तकारान्तोऽप्यन्वयानुसारेण द्रष्टव्यः । तत्राकारान्तः कर्त्तरिक्तप्रत्यये सत्येव । सत्रेणासमन्ताज्जितवानिति सत्राजिदिति क्विपि तान्तः । कृतं किल्बिषमपराधो येन तथाभूतः । सत्राजितः स्यमन्तकेन मणिना सह, स्वयं उद्यम्य, स्वत एवोद्यमं कृत्वेत्यर्थः । स्वतनयां सत्यभामां, कृष्णाय दत्तवान् ॥ १ ॥ तत्र लब्धावसरो राजा पृच्छति । सत्राजित इति । हे ब्रह्मन्, सत्राजितः कृष्णस्य, किं किल्बिषं अकरोत् । तस्य सत्राजितस्य, स्यमन्तकः मणिः कुतः । मणिरनेन कस्माल्लब्ध इत्यर्थः । कस्माद्धेतोः, हरेः श्रीकृष्णस्य, सुता पुत्री, दत्ता । कुतो हेतोर्हरयेऽनेन सुतार्पणं कृतमित्यर्थः ॥ २ ॥ इति पृष्टः

सविस्तरमनुवर्णयितुं तावदुपोद्घातमाह । आसीदिति । भक्तस्य सत्राजितः, सूर्यः स्वामी सन्नपि, प्रीतः स्निग्धः, परमः सखा, आसीत् । स च सूर्यः, तुष्टस्तस्यातिशयितां स्वभक्ति निरीक्ष्य प्रसन्नतां प्राप्तः, तस्मै, स्यमन्तकं मणि, प्रादात् ॥ ३ ॥ स इति । स सत्राजितः, तं सूर्यदत्तं, मणि स्यमन्तकं, कण्ठे बिभ्रद्बिभ्राणः, अत एव रविः यथा, सूर्य इवेत्यर्थः । भ्राजमानः अत एव, तेजसा न उपलक्षितः तेजसोऽधिकत्वतोऽनुपलक्षितशरीरः सन्, हे राजन्, द्वारकां प्रविष्टः ॥ ४ ॥

**कृष्णप्रिया**

श्रीशुकदेव जी महाराज ने कहा ! महाराज परीक्षित ! भगवान पर मिथ्या कलङ्क लगाने वाले सत्राजित ने अपने दोष एवं अपराध का संमार्जन करने के लिये अपनी सुशील तनया श्री सत्यभामा जी का भगवान श्रीकृष्ण से पाणि ग्रहण कराया ॥१॥ श्री परीक्षित राजा ने प्रश्न किया महाराज शुकाचार्य जी ! सत्राजित् ने भगवान श्रीकृष्ण का कौन अपराध किया था ? और स्यमन्तक मणि कहां से प्राप्त की ! और अपनी पुत्री सत्यभामा श्रीहरि को क्यों दी ? यह प्रसङ्ग कृपया कहिये ॥ २ ॥ श्रीशुकदेव जी महाराज ने कहा राजन् ! श्री सत्राजित यादव श्री सूर्यनारायण का अनन्य भक्त था । एवं सत्राजित की परा-भक्ति से सूर्य भगवान् सत्राजित के उत्तम सखा बन गये थे । भगवान् सूर्य ने प्रसन्न होकर सत्राजित यादव को स्यमन्तक मणि सर्मपित की ॥ ३ ॥ सत्राजित तेजोमय मणि को कण्ठ में धारण कर द्वारिका पुरी में आ रहा था । मणि की कान्ति से वह सूर्य समान दीख पड़ता था । राजन् मणि पहनकर सत्राजित ने द्वारिका में प्रवेश किया तब मणि के दिव्य तेज से नगर जन पहिचान न सके ॥ ४ ॥

**तं विलोक्य जना दूरात्तेजसा मुष्टदृष्टयः । दीव्यतेऽक्षैर्भगवते शशंसुः सूर्यशङ्किताः ॥ ५ ॥**
**नारायण नमस्तेऽस्तु शङ्खचक्रगदाधर । दामोदरारविन्दाक्ष गोविन्द यदुनन्दन ॥ ६ ॥**
**एष आयाति सविता त्वां दिदृक्षुर्जगत्पते । मुष्णन् गभस्तिचक्रेण नृणां चक्षूंषि तिग्मगुः[६] ॥ ७ ॥**
**[७]नन्वन्विच्छन्ति ते मार्गं त्रिलोक्यां विबुधर्षभाः । ज्ञात्वाद्य गूढं यदुषु द्रष्टुं त्वां यात्यजः प्रभो ॥ ८ ॥**

**कर्दमक्षमा**

अन्वयः—जनाः, तम्, दूरात्, विलोक्य, तेजसा, मृष्टदृष्टयः, सूर्यशङ्किताः, अक्षैः, दीव्यते, कृष्णाय, शशंसुः ॥ ५ ॥ नारायण ! शङ्खचक्रगदाधर ! दामोदर, अरविन्दाक्ष गोविन्द यदुनन्दन ! ते, नमः, अस्तु ॥ ६ ॥ हे जगत्पते ! एष तिग्मांशुः, सविता, गभस्तिचक्रेण, नृणाम्, चक्षूंषि, मुष्णन्, त्वाम्, दिदृक्षुः, आयाति ॥ ७ ॥ हे प्रभो ! विबुधर्षभा-त्रिलोक्याम्, ते, मार्गम् इच्छन्ति, ननु यदुषु, अद्य गूढम्, त्वाम्, ज्ञात्वा, अजः, सूर्यः, ब्रह्मा, त्वाम्, दृष्टुम्, याति ॥ ८ ॥

**श्रीधरस्वामिविरचिता भावार्थदीपिका**

दीव्यते क्रीडते । सूर्योऽयमिति शङ्किताः सन्तः कथयामासुरिति ॥ ५ ॥ सूर्यं नमस्कारार्थमागतं कल्पियत्वोद्रिक्तभक्तीनां सम्बोधनानि नारायणेत्यादीनि ॥ ६ ॥ गभस्तिचक्रेण रश्मिजालेन मुष्णन्प्रतिघ्नन् तिग्मास्तीक्ष्णा गावो रश्मयो यस्य सः ॥७॥ न चेदमघटमानमित्याहुः—नन्विति । अन्विच्छन्ति मृगयन्ते अजः सूर्यः ॥ ८ ॥

**श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः**

तं मणिग्रीवं सत्राजितम् । मुष्टदृष्टयो हतदृष्टयः ॥ अक्षक्रीडा हि नरविडम्बनमेव लोकचमत्कारायेति ध्येयम् ॥ ५ ॥ देवा अप्येतद्दर्शनार्थं भूमावायांत्यतोऽयमेव सर्वेश्वर इति हेतोरत्यन्तसंजातभक्तीनां द्वारकावासिनामित्यर्थः । नारायण सर्वादि-कारण । दामोदरेति भक्ताभीष्टदानार्थमकार्यमपि करोतीत्याशयवती संबुद्धिः ॥ सामान्यतस्ता कत्वरूपैश्वर्यलीलाभिः स्तुवन्ति पदद्वयेन । नारायण हे सर्वजीवाश्रयत्वात्सर्वपरमस्वरूपैश्वर्य, तादृशत्वादेव लीलयापि दुष्टशिक्षयैव शंखादिधर । अथ विशेषतो गोकुलप्रकाशितप्रेमवश्यत्वलीलाभिः स्तुवन्ति-पदत्रयेण । दामोदर स्वजनवश्यतयोदरेंगीकृतदामबन्धन । हे अरविन्दाक्ष परम-सुन्दरेत्यर्थः । हे गोविंद गोचारणोपलक्षिततत्तन्महालीलाप्रकाशक । एवं तत्रतत्र प्रायो निगूढ एव त्वं संप्रति तु कृपाभरस्तव किं वर्ण्य इत्याशयेनाहुः—हे यदुनंदनेति । यदूनानन्दयन्सभामध्ये साक्षाद्भासीति भावः ॥ ६ ॥ 'दृग्दृष्टिदीधिती' इत्यादिना गोपदं रश्मिवाचकमप्युक्तम् ॥ अतो हे जगत्पते त्वां दिदृक्षुरायाति । अल्पदर्शनेऽस्य दूरतोपि स्वतः सिद्धत्वेन नाति सुखदत्वेन चास्पृहणीयत्वात् । त्वद्दर्शनस्य तु त्वदुपासनयैव साध्यत्वेन सर्वोर्दूर्ध्वसुखदत्वेन च परमस्पृहणीयत्वादिति भावः । ननु नैष सूर्य इत्याशंक्य तल्लक्षणमाहुः—मुष्णन्निति, यतस्तिग्मगुः ॥ ७ ॥ एतन्न संगच्छत इति चेदत्राहुः—न चेति । 'अजाय लोमत्रयभावनाय' इति

६. दृक्-विज. । ७. अन्विच्छन्ति हि-वीर. ।

भविष्योत्तरोक्तेरजशब्दः सूर्येऽपि प्रयुज्यते ॥ त्रिलोक्यां ये विबुधर्षभा ब्रह्मादयस्ते सर्वे मार्गं प्राप्त्युपायमेवान्विच्छन्ति, प्राप्तिस्तु दूरे। ननु निश्चये। एवं गूढमपि त्वामद्याधुना यदुषु साक्षाद्वर्तमानं ज्ञात्वा कुतोऽपि भाग्यान्निश्चित्य। ननु ब्रह्मादयश्चेदन्विच्छंति सूर्यः कस्तत्राहुः—अजः द्वादशात्मत्वेन विश्वैकात्मा, तदधिष्ठानत्वेन तदभेदेनोपास्यो वा, अयमनादित्वान्न जायत इत्यजो वेदो वा, त्रयीमय इत्यर्थः। अतोऽसौ तु विशेषत इति भावः। प्रभोऽस्मदीश्वर। अहो भाग्यं त्वदीयानामस्माकमिति भावः ॥ ८ ॥

**श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी**

अक्षैः क्रीडत इति नरलीलाकौतुकित्वमुत्कण्ठया स्मृतं नरलीलत्वादेव प्राकृतजानानां तथा चमत्कारोपि युज्यत इति भावः ॥ ५ ॥ समान्यतस्तावत् स्वरूपैश्वर्य्यलीलाभिः स्तुवन्ति पदद्वयेन नारायण हे सर्वजीवाश्रयत्वात्सर्वपरमस्वरूपैश्वर्य ! तादृशत्वादेव लीलयापि दुष्टशिक्षायै शङ्खादिधर ! अथ विशेषतो गोकुलप्रकाशितप्रेमवश्यत्वसौन्दर्यलीलाभिः स्तुवन्ति पदत्रयेण दामोदर स्वजनवश्यतयोदरेऽङ्गीकृतदामबन्धन ! हे अरविन्दाक्ष ! परमसुन्दरेत्यर्थः हे गोविन्द ! गोचारणोपलक्षित ! तत्तन्महालीलाप्रकाशक ! एवं तत्र तत्र प्रायोनिगूढ एव त्वं सम्प्रति तु कृपाभरस्तवकिम्वर्ण्य इत्याशयेनाहुः—हे यदुनन्दनेति। यदूनानन्दयन् सभामध्ये साक्षाद्भासीति भावः ॥ ६ ॥ अतो हे जगत्पते ! त्वां दिदृक्षुरायाति अन्यदर्शनस्य दूरतोपि स्वतः सिद्धत्वेन नातिसुखदत्वेन चास्पृहणीयत्वात् त्वद्दर्शनस्य तु त्वदुपासनयैव साध्यत्वेन सर्वोर्द्ध्वसुखदत्वेन च परमस्पृहणीयत्वादिति भावः। ननु, नैष सूर्य्य इत्याशङ्क्य तल्लक्षणमाहुः मुष्णन्निति यतस्तिग्मगुः ॥ ७ ॥ त्रिलोक्यां ये विबुधर्षभा ब्रह्मादयस्ते सर्वे मार्गं प्राप्त्युपायमेवान्विच्छन्ति प्राप्तिस्तु दूरे। ननु निश्चये एवं गूढमपि त्वां अद्याधुना यदुषु सक्षाद्वर्त्तमानं ज्ञात्वा कुतोऽपि भाग्यान्निश्चित्य। ननु, ब्रह्मादयश्चेदन्विच्छन्ति सूर्य्यः कस्तत्राहुः अजः द्वादशात्मत्वेन विश्वैकात्मा तदधिष्ठानत्वेन तदभेदेनोपास्यो वायम् अनादित्वान्न जायत इत्यजो वेदो वा त्रयीमय इत्यर्थः अतोऽसौ तु विशेषज्ञ इति भावः। प्रभो ! अस्मदीश्वर ! अहो भाग्यं त्वदीयानामस्माकमिति भावः ॥ ८ ॥

**श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी**

अक्षैः कृत्वा भगवत्त्वात् परम-नैश्चिन्त्येन महाकौतुकित्वेन वा, सभामध्ये प्रियजनैः सह क्रीड़तेऽपि भगवते सर्व्वज्ञायापि शशंसुः। तत्र हेतुः—सूर्य्येति ॥ ५ ॥ नारायण ! हे सर्व्वजीवाश्रय, तथापि दैत्यादिदुष्टशास्तये शङ्खादिधर ! किञ्च, दामोदर ! भक्तवश्यतयोदरेऽङ्गीकृतदामबन्धनेति। एवं गुणमुद्दिश्य रूपमाहुः—अरविन्दाक्ष ! हे परमसुन्दरेत्यर्थः। एवं परमदुर्लभोऽपि त्वमधुना कृपाभरेण सुलभोऽसीत्यभिप्रायेणाहुः—गोविन्द ! हे पृथ्व्यामवतीर्णेत्यर्थः। तत्रापि हे यदुनन्दनेति यदुनानन्दयन् सभामध्ये सदा साक्षाद्भासीति भावः। यद्वा, गोकुलेन्द्रेति परमदुर्लभतैवोक्ता, तत्र कस्याप्यन्यस्य स्थित्यशक्तेः। अधुना च सुलभोऽसीत्याहुः—यदुनन्दनेति ॥ ६ ॥ अतस्त्वां दिदृक्षुः। ननु स्वप्रयोजनं विहायागन्तुं नार्हति ? तत्राहुः—हे 'जगत्पते' इति। वस्तुतः प्रकाशनादिना जगत्त्वयैव रक्ष्यते, तत् किं तेनेति भावः। यद्वा, निजप्रभुदर्शनमेव मुख्यप्रयोजनमिति, किंवा प्रभुप्रसादादेव स्वार्थसिद्धेरिति। ननु नैष सूर्य्य इत्याशंक्य तल्लक्षणमाहुः—मुष्णन्निति; यतस्तिग्मगुः ॥ ७ ॥ त्रिलोक्यां ये विबुधर्षभा देवश्रेष्ठाः श्रीब्रह्मादयस्ते सर्व्वे मार्गं प्राप्त्युपायमेवान्विच्छन्ति। ननु निश्चये; यद्वा, त्रिलोकीमध्येऽन्विच्छन्ति, तत्रत्य-सुखभोगानादरेण निरन्तरं वाञ्छन्तीत्यर्थः, इति महादौर्लभ्यमेवोद्दिष्टम्। एवं गूढ़मपि त्वामद्याधुना यदुषु साक्षाद्वर्त्तमानं ज्ञात्वा। आगमने योग्यतामाह—स्वयमेव नित्यमाविर्भवतीत्यजो नित्यत्वादिना सर्व्वदेवश्रेष्ठत्वादिति भावः। प्रभो हे अस्मदीश्वर ! अहो भाग्यं त्वदीयानामस्माकमिति भावः ॥ ८ ॥

**श्रीमद्वीरराघवाचार्यकृता भागवतचन्द्रचन्द्रिका**

तं प्रविष्टमवलोक्य जना दूरादेव तस्य तेजसा मुष्टाः अपहृता अभिभूताः दृष्टयो येषां ते सूर्योऽयमिति शङ्किताः सन्तः अक्षैर्दीव्यते क्रीडां कुर्वाणाय भगवते श्रीकृष्णाय शशंसुः कथयामासुः ॥ ५ ॥ नमस्कर्त्तुमागतं सूर्य्यं सम्भाव्य भक्त्युद्रेकेण भगवन्तं सम्बोधयन्ति, नारायणेति ॥ ६ ॥ एष इति एष इत्यागच्छतो रूपप्रदर्शनपरं सविता सूर्य्यस्त्वां द्रष्टमिच्छुः हे जगत्पते ! आयाति कथम्भूतः तिग्मास्तीव्रा गावो रश्मयो यस्य सः गभस्तिचक्रेण रश्मिजालेन नृणां चक्षूंषि मुष्णन् प्रतिघ्नन् न चैतदघटमानमित्याहुः ॥ ७ ॥ अन्विच्छन्ति हीति विबुधर्षभा देवश्रेष्ठास्त्रिलोक्यां तव मार्गमन्विच्छन्ति अन्वेषयन्ति त्वं यद्रूपगुणकर्मकः तथाभूतं त्वां द्रष्टुमिच्छन्तीत्यर्थः। अतोऽधुना यदुषु गूढं गृहीतयदुवेषं त्वां ज्ञात्वा हे प्रभो ! अयं सूर्यः आयाति ॥ ८ ॥

**श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली**

अक्षैर्देवनाङ्गैर्दीव्यते द्यूतक्रीडां कुर्वते ॥ ५-६ ॥ गभस्तिचक्रेण रश्मिमण्डलेन तिग्मरुक् सूर्यः ॥ ७ ॥ विबुधर्षभाः देवश्रेष्ठाः त्रिलोक्यान्ते मार्गमन्विच्छन्ति मृगयन्ते। ननु, तेष्वजः सूर्यः अद्य यदुषु गुह्यं ज्ञात्वा दृष्टुं यात्या याति अजाय लोकत्रयभावनायेति वचनात् ॥ ८-९ ॥

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः

त्रयीमयत्वादजः ॥ ८ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

द्यूतक्रीडाविष्टं भगवन्तं नामकीर्त्तनैरवधारयन्ति नारायणेति ॥ ६ ॥ गभस्तिचक्रेण किरणजालेन ॥ ७ ॥ मनुष्यं मां सूर्य्यो देवः किं दिदृक्षते ? इति मावादीरित्याह—ननु निश्चितम् अन्वेषयन्ति अजः सूर्य्यः ॥ ८-१० ॥

### गूढार्थदीपिनी

मुष्टा पिहिता । दीव्यते क्रीडते । सूर्योऽयमिति ॥ ५-६ ॥ गभस्तिचक्रेण किरणसमूहेन । तिग्मगुः तिग्माः तीक्ष्णा गावः किरणाः यस्य सः ॥ ७ ॥ अन्विच्छन्ति अन्वेषयन्ति । अजः सूर्यः । अकारो वासुदेवस्तस्माज्जातत्वात् ॥ ८ ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

सूर्यशङ्किताः प्रसिद्धः सूर्य एवायाति स किमपि प्रयोजनं कृष्णे निवेदयितुमाहोस्वित् श्रीकृष्णचरणस्पर्शमात्रं कर्तुमित्येवं सूय जातशङ्काः शशंसुः कथयामासुः ॥ ५-६ ॥ तिग्मगुः तिग्मास्तीक्ष्णाः गावो गभस्तयो यस्य सः ॥ ७ ॥ अन्विच्छन्ति अन्वेषयन्ति अजः सूर्यः ॥ ८ ॥

### श्रीमद्वल्लभाचार्य्यकृता सुबोधिनी

तस्य प्रभावः सर्वजनीनो जात इति वक्तुं लोकानां भ्रममाह तं विलोक्येति । निकटे ज्ञायेतापि । दूरादेव तत्रापि तेजसा **मुष्टदृष्टयः**। स्वस्वामिनः स्थाने महान्तोऽपि समायान्तीति संतोषात् भगवत्स्थाने समागताः । भगवानपि अन्यासक्तः नास्य सन्माननं करिष्यति, ततोऽयं अस्मान् विलम्बितः तेजसा पीडयिष्यतीति, सूर्यात् शङ्किताः लौकिकव्यसनरूपे द्यूते अक्षैर्दीव्यते भगवते शशंसुः । शतमक्षान् विजानातीति मध्येऽधिदेवन एव सभ्ये अक्षक्रीडेति विमर्शः । अन्यथा धर्मस्थापनार्थमवतीर्णः कथमक्षक्रीडां कुर्यात् । मुख्यं हि तदधर्मस्थानमिति । सूर्यस्य समागमनं बाधितं मत्वाह **भगवत** इति ॥ ५ ॥ सूर्यागमनेन स्वतोपि ज्ञातमहत्त्वाः स्तुत्वा भगवन्तं विज्ञापयन्ति **नारायणे**तित्रिभिः । नारायणपदं सूर्यान्तर्यामी नारायण इति तस्मिन्नागते अन्तर्यामिप्रेरणव्यतिरेकेण कार्यं न सिद्ध्यतीति विज्ञापनार्थं सूर्यागमनं सम्भवतीति हेतुरुक्तः । अतस्ते नमः । नमस्कारमात्रं वा अस्मत्साध्यमिति । **शङ्खचक्रगदाधरे**ति । शेषशायिनं नारायणं व्यावर्तयति । नारायणत्वं वा स्थापयन्ति । **दामोदरे**ति भक्तकृपालुत्वम्, तादृशस्यात्रागमने हेतुरुक्तः । **अरविन्दाक्षे**ति । समागतस्य तापापनोदनं कार्यमुक्तम् । गोविन्देति तथाकरणे आवश्यकत्वम् । यतोऽयमिन्द्रो जातः । किञ्च, **यदुनन्दने**ति तदर्थमेवावतीर्णः । अत एवात्र वहु कार्यं तवास्तीति स्वत आगमनाभावात् स्वयमागत इत्याहुः **एष आयाती**ति । आगतस्य विज्ञाप्यमस्तीत्याहुः सवितेति । प्रसवितायम् । सांप्रतं च भगवान् लीलया च तिष्ठतीति तदनुगुणप्रसवार्थं प्रष्टुमागत इत्यर्थ । प्रश्नस्तु दूतद्वारापि सम्भवतीति विशेषमाहुः **त्वां दिदृक्षुरि**ति । स्नेहाभावेऽपि दर्शनमावश्यकमित्यत्र हेतुमाहुः **जगत्पत** इति । स्वस्य निवेदने हेतुं वदन्त आहुः **मुष्णन्गभस्तिचक्रेणे**ति । दूरे स्थितस्य गभस्तयोऽल्पीयांसः समायान्ति, निकटे तु गभस्तिचक्रेण पीडयति । नृणामित्यल्पसत्त्वता । तर्ह्ययं दोषो निवारणीय इत्याशङ्क्य तस्य स्वाभाविकोऽयमित्याह **नृणां चक्षूंषि तिग्मगुरि**ति । ज्ञानप्रदो भगवान् अत्र समागतः । ज्ञानसाधनमेव दूरीकरोतीति प्रतिविधेयः । ननु तथापि भवन्तोन्तरङ्गाः, तान्निवारयतेति चेत्, तत्राह **नन्वन्विच्छन्ती**ति । देवाः समागच्छन्तः कथं वारणीयाः, तत्रापि स्वप्रभुं द्रष्टुम्, तत्रापि विबुधर्षभाः । किञ्च । अद्य यदुषु गूढं ज्ञात्वा समागताः । तत्र यदि कश्चिन्निवारणं कुर्यात्, तदा अनेनैव प्रतार्यत इति तमेव मारयेयुः । ननु तथापि सूर्यो नायास्यति, स हि सर्वदा व्यापृतः, तत्राह **द्रष्टुं वायात्यज** इति । ब्रह्मा वा द्रष्टुमायाति । अवतीर्णस्य रूपान्तरस्वीकरणेनान्यथात्वे पूर्वव्यवहारोऽनुचित इत्याशङ्क्याह **प्रभो** इति । हे सर्वसमर्थ ॥ ८ ॥

### श्रीसुबोधिनीसारः

तं सत्राजितं दूराद्विलोक्य तेजसा मुष्टा दृष्टयो येषां ते जनाः सूर्योयमिति शंकिताः अक्षैः पाशकैर्दीव्यते क्रीडते रममाणाय भगवते विजिज्ञपुः ॥ ५ ॥ हे नारायण ते तुभ्यं नमोस्तु शेषं स्पष्टम् ॥ ६ ॥ हे जगत्पते गभस्तिचक्रेण किरणमंडलेन नृणां चक्षूंषि मुष्णन् नेत्राण्यावृण्वान एष तिग्मगुः सवितार्कः त्वां दिदृक्षुर्द्रष्टुमिच्छुरागच्छति ॥ ७ ॥ युक्तमित्यूचुः । ननु निश्चयेन त्रिलोक्यां विबुधर्षभा देवोत्तमास्ते तव मार्गमन्विच्छन्ति मृगयन्ते यदुषु गूढम् त्वाम् अद्य इदानीं ज्ञात्वा द्रष्टुमजः सूर्यो याति एति हे प्रभो ॥ ८ ॥

### विवरणटिप्पणी

**तं विलोक्येत्यत्र । शतमक्षानिति** । शतमध्ये सभायोग्येऽधिदेवनेऽक्षक्रीडा निषिद्धा नेति विमर्श इत्यर्थः ।

## गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

तं प्रविष्टं सत्राजितं द्वारकावासिनो जना दूरादेव विलोक्य तस्य तेजसा मुष्टा अभिभूता दृष्टयो येषां ते 'सूर्योऽयम्' इति शङ्किताः सन्तः अक्षैर्दीव्यते क्रीडां कुर्वाणाय भगवते श्रीकृष्णाय शशंसुः कथयामासुः ॥ ५ ॥ तद्विज्ञापनप्रकारमाह—नारायणेति त्रिभिः। सर्वकारणत्वेन सर्वाराध्यत्वं सूचयन्त आहुः—हे नारायण ! तुभ्यं नमोऽस्तु। 'रक्षकत्वेनापि सर्वाराध्यस्त्वम्' इत्याशयेनाहुः—हे शङ्खचक्रगदाधर ! तुभ्यं नमोऽस्तु। 'भक्तवत्सलतयापि त्वं सर्वाराध्य' इत्याहुः—हे दामोदर ! तुभ्यं नमोऽस्तु। 'त्वत्कृपादृष्टयैव सन्तापनिवृत्तिः, नान्यथा' इत्याशयेनाहुः—हे अरविन्दाक्ष ! तुभ्यं नमोऽस्तु। 'अचिन्त्यैश्वर्यत्वेनापि त्वं संसेव्य' इत्याहुः—हे गोविन्द ! तुभ्यं नमोऽस्तु। 'अस्माकं यादवानां तु त्वमेवावलम्ब' इत्याशयेनाहुः—हे यदुनन्दन ! तुभ्यं नमोऽस्तु ॥६॥ 'त्वद्दर्शनादिकमेवोचितम्, पालकत्वात्' इत्याशयेन सम्बोधयति—हे जगत्पते ! त्वां दिदृक्षुः द्रष्टुमिच्छुः एष सविता सूर्यः आयाति। तदागमनेन स्वाभिभवं दर्शयन्ति—गभस्तिचक्रेण रश्मिसमूहेन नृणां चक्षूंषि मूष्णन् प्रतिघ्नन्। तत्र हेतुमाहुः—तिग्मगुरिति। तिग्मास्तीक्ष्णाः दुःसहा गावो रश्मयो यस्य सः ॥ ७ ॥ 'न चैतदघटमानम्' इत्याशयेनाहुः—नन्विति। निश्चितमेवैतत्, विबुधर्षभाः देवश्रेष्ठाः ब्रह्मादयस्त्रिलोक्यां तव मार्गं पदवीमन्विच्छन्ति अन्वेषयन्ति। अतोऽधुना यदुषु गूढं गृहीतयदुवेषं ज्ञात्वा हे प्रभो ! अजः सूर्यस्त्वां द्रष्टुमायाति ॥ ८ ॥

## अन्वितार्थप्रकाशिका

तमिति। तं प्रविष्टं सत्राजितं द्वारकावासिनो जना दूरादेव विलोक्य तस्य तेजसा मुष्टा अभिभूता दृष्टयो येषां ते सूर्योऽयमिति शङ्किताः सन्तः अक्षैर्दीव्यते क्रीडते भगवते श्रीकृष्णाय शशंसुः कथयामासुः ॥ ५ ॥ नारायणेति। सूर्यं नमस्कारार्थमागतं मत्वोद्रिक्तभक्तीनां सम्बोधनानि हे नारायणेत्यादीनि ते तुभ्यं नमोऽस्तु ॥ ६ ॥ एष इति। हे जगत्पते ! गभस्तिचक्रेण रश्मिसमूहेन नृणां चक्षूंषि मुष्णन् प्रतिघ्नन् तिग्मास्तीक्ष्णाः दुःसहा गावो रश्मयो यस्य स त्वां दिदृक्षुः द्रष्टुमिच्छुः एष सविता सूर्यः आयाति ॥ ७ ॥ नन्विति। ननु निश्चितम् विबुधर्षभाः देवश्रेष्ठाः ब्रह्मादयस्त्रिलोक्यां तव मार्गं पदवीमन्विच्छन्ति अन्वेषयन्ति। अतोऽधुना यदुषु गूढं गृहीतयदुवेषं ज्ञात्वा हे प्रभो ! अजः सूर्यस्त्वां द्रष्टुमायाति ॥ ८ ॥

## श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्

मुष्टदृष्टयोहृतनेत्रप्रसाराः सूर्यशंकिताः सूर्योऽयमिति संजातशंकाः संतः अक्षैः पाशैः दीव्यते रममाणापहरये ॥ ५-६ ॥ तिग्मगुः तीक्ष्णरश्मिः गभस्तिचक्रेण किरणनिकरेण मुष्णन् चोरयन् ॥ ७ ॥ न चेदमसंभावितमित्याहुः मार्गमन्विच्छंति अन्वेषयंति। त्वां दृष्टुं अजो भानुरायाति ॥ ८ ॥

## भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

तमिति। जनाः, दूरात् तं विलोक्य, तेजसा मुष्टा अपहृता अभिभूता इत्यर्थः। दृष्टयो येषां ते, अतएव सूर्यशङ्किताः सूर्योऽयमिति संजातशङ्काः सन्तः, अक्षैः पाशकैः, दीव्यते क्रीडां कुर्वाणाय, भगवते श्रीकृष्णाय, शशंसुः कथयामासुः ॥ ५ ॥ नमस्कर्तुमागतं सूर्यं संभाव्य भक्त्युद्रेकेण भगवन्तं सम्बोधयन्तो जनाः सम्बोधयन्ति। नारायणेति। हे नारायण, हे शङ्खचक्रगदाधर, हे दामोदर, हे अरविन्दाक्ष, हे गोविन्द, हे यदुनन्दन, ते तुभ्यं नमः अस्तु ॥ ६ ॥ एष इति। एष इत्यागच्छतो रूपादर्शनपरं, हे जगत्पते, यतः, तिग्मास्तीक्ष्णा गावो रश्मयो यस्य सः, अतः, गभस्तिचक्रेण रश्मिजालेन, नृणां चक्षूंषि, मुष्णन् प्रतिघ्नन्, सविता स्वयं सूर्यः, त्वां दिदृक्षुः सन्, आयाति ॥ ७ ॥ न चैतदप्रमाणमित्याहुः। नन्विति। हे प्रभो, विबुधर्षभा देवश्रेष्ठाः, त्रिलोक्यां ते तव, मार्गं, अन्विच्छन्ति अन्वेषयन्ति। त्वं यद्रूपगुणकर्मस्तथाभूतं त्वां द्रष्टुमिच्छन्तीत्यर्थः। अतः, अद्य अधुना, यदुषु गूढं गृहीतयदुवेषं, त्वा त्वां, ज्ञात्वा, अयं सूर्यः, द्रष्टुं आयाति ननु। अयमित्यत्राज इति पाठे 'अजाय लोकत्रयभावनाय' इति सूर्यवर्णनदर्शनादजः सूर्य इत्यर्थो बोद्धव्यः ॥ ८ ॥

## कृष्णप्रिया

नागरिकजनों के नेत्र दूर से ही देखकर चौंधिया गये। उन लोगों ने माना कि सूर्य भगवान् भगवान् श्रीकृष्ण के दर्शन के लिये आ रहे हैं। भगवान् अपने मित्रों से चौसर खेल रहे थे। वे लोग नाथ के समीप जाकर निवेदन करने लगे। उन सबके चित्त में ऐसा लगा कि सूर्य ही आ रहे हैं ॥ ५ ॥ द्वारिकाजन निवेदन कर रहे हैं—शङ्ख चक्र गदाधारी हे श्रीकृष्ण ! हे नारायण ! हे दामोदर ! हे कमलनेत्र ! हे गोविन्द ! हे यदुनन्दन ! ॥ ६ ॥ यह भगवान् सूर्यनारायण आप जगन्नाथ के दर्शन के लिये पधार रहे हैं। वह अपनी तेजोमय किरणों से नागरिक जनों के नेत्रों को चौंधियाते पधारते हैं। मालूम होता है कि प्रचण्ड रश्मि भगवान् सूर्य नारायण ही आपके दर्शनार्थ यहाँ पधारते हैं ॥ ७ ॥ भगवन् ! देवाधिदेव लोक त्रय लोक में आप

कहाँ विराजमान हैं इसकी खोज कर रहे हैं। आपके दर्शन के लिये आतुर हैं किन्तु पाते नहीं है। आप यदुवंश में गुप्त स्वरूप से विराजमान हैं यह मानकर भगवान् सूर्य स्वयं दर्शन के लिये आ रहे हैं॥ ८॥

### श्रीशुक उवाच

निशम्य बालवचनं प्रहस्याम्बुजलोचनः। प्राह नासौ रविर्देवः सत्राजिन्मणिना ज्वलन्॥ ९॥

सत्राजित् स्वगृहं श्रीमत् कृतकौतुकमङ्गलम्। प्रविश्य देवसदने मणिं विप्रैर्न्यवेशयत्॥ १०॥

दिने दिने स्वर्णभारानष्टौ स सृजति प्रभो।

दुर्भिक्षमार्यरिष्टानि [1]सर्पाधिव्याधयोऽशुभाः। न सन्ति मायिनस्तत्र [2]यत्रास्तेऽभ्यर्चितो मणिः॥ ११॥

स याचितो [3]मणिं क्वापि यदुराजाय शौरिणा। नैवार्थकामुकः प्रादाद् याच्ञाभङ्गमतर्कयन्॥ १२॥

#### कर्दमक्षमा

अन्वयः—श्रीशुक उवाच—राजन्! अम्बुजलोचनः, बालवचनम् ( निर्दोषवचनम् ) निशम्य, प्रहस्य, प्राह, असौ, रविः देवः, न, किन्तु, मणिना, ज्वलन्, सत्राजित्, समायाति॥ ९॥ सत्राजित्, कृतकौतुक तोरणम्, श्रीमत्, स्वगृहम्, प्रविश्य, विप्रैः, देवसदने, मणिम्, न्यवेशयत्॥ १०॥ हे प्रभो! यत्र, मणिः, आस्ते, अर्चितः, स मणिः, दिने, दिने, अष्टौ, स्वर्णभारान्, सः, सृजति, पुनः, यत्र, आस्ते, तत्र, दुर्भिक्षमार्यरिष्टानि, सर्पाधिव्याधयः, अशुभाः, तत्र, न, सन्ति; तत्र मायिनः, न, सन्ति॥ ११॥ क्वापि, शौरिणा, सः मणिः, यदुराजाय याचितः, किन्तु, अर्थकामुकः सः, सत्राजित्, मणिम्, नैव, प्रादात्, पुनः याच्ञा भङ्गम्, अतर्कयत्॥ १२॥

#### श्रीधरस्वामिविरचिता भावार्थदीपिका

बालानामज्ञानां वचनम् ज्वलन् विद्योतमानः॥ ९॥ कृतानि कौतुकेनोत्सवेन मंगलानि यस्मिंस्तत् विप्रैः कृत्वा॥ १०॥ भारप्रमाणं च। "चतुर्भिर्व्रीहिभिर्गुञ्जं गुञ्जान्पञ्च पणं पणान्। अष्टौ धरणमष्टौ च कर्षन्तश्चतुरः पलम्॥ तुलां पलशतं प्राहुर्भारः स्याद्विंशतिस्तुलाः" इति। मारीनामाकालमृत्युः अरिष्टमभद्रम् अशुभा दुःखहेतवः॥ ११॥ क्वापि कदाचित् अनेन भगवत्यसमर्प्य स्वयमग्रभोजिनः सर्वानिष्टनिर्वतकमप्यनिष्टहेतुरेव भवतीति सूचितम्॥ १२॥

#### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

'बालोऽज्ञे दुर्बले शिशौ' इति कोशात्॥ प्रहस्य स्मित्वा। प्रेति प्रारंभे। तत एवेषद्दृष्टिप्रसारणाभिप्रायेणोक्तम्—अम्बुजलोचन इति। अतः प्रकर्षेण स्मितावलोकनादिनाह—देव इति। देवोपि कश्चिन्न भवति किन्तु मनुष्य एव, तत्रापि सत्राजिदिति। अत्र श्रीमत्कौस्तुभे विद्यमानेऽपि श्रीभगवत्तत्तदिच्छानुसारेण प्रकाशादिति ज्ञेयम्। बालानामिति असूर्ये सूर्यबुद्धेः श्रीकृष्णे चैतावन्तं कालमीश्वरत्वानवगमात्, सूर्यागमनमात्रसंभावनया कोलाहलाच्च॥ ९॥ गृहांतर्गते देवागारे न्यवेशयत्प्रतिष्ठापयामास। श्रीमत् श्रीद्वारकांतर्वर्तित्वेन स्वत एव संपद्युक्तम्। देवसदने निजेष्टदेवसूर्यार्चास्थाने। विप्रैः प्रयोज्यकर्तृभिः। न्यवेशयदुत्तमपीठे पूजार्थं स्थापयामास॥ १०॥ स मणिः। अकालमृत्युः—योगवासिष्ठोत्पत्तिप्रकरणेकोनसप्ततितमाध्याये उक्तः। तथाहि—"विषूचिकाभिधाना सा नाम्नाप्यन्यायबाधिका" इति। अस्या मन्त्रो हि-ॐ ह्रीं ह्रां रीं रां विष्णुशक्तये नमः, ॐ नमो भगवति विष्णुशक्ति एनाम् ॐ हरहर नयनय पचपच मथमथ उत्सादय दूरे कुरु स्वाहा हिमवन्तं गच्छ जीव सः सः सः चन्द्रमण्डलं गतोसि स्वाहा" इति मन्त्री मंत्रं न्यस्य वामकरोदरे "मार्जयेदातुराकारं तेन हस्तेन संयतः। हिमशैलाभिमुख्येन विद्रुतां तां विचिन्तयेत्। कर्कटीकर्कशाक्रन्दां मन्त्रमुद्गरमर्दिताम्। आतुरं चिन्तयेच्चन्द्रे रसायनहृदिस्थितम्॥ अजरामरणं युक्तं मुक्तं सर्वाधिविभ्रमैः। साधको हि शुचिर्भूत्वा स्वाचांतः सुसमाहितः॥ क्रमेणानेन सकलां प्रोच्छिनत्ति विषूचिकाम्।" इति। कालं विना मृत्योरसंभवादेतन्न संभवतीत्यत आह—सत्यपि वर्तितैले वायुना दीपनिर्वापणवदकालमृत्युरस्ति, दीपावशिष्टवर्तितैलयो रागामिदिनोपयोगवदकालमृत्युमृतस्यायुरवशिष्टमागामिजन्मांतरे पुनस्तेनैव भुज्यतेऽन्यथा "अकालमृत्युहरणं सर्वव्याधिविनाशनम्" इत्यादिविष्णुचरणामृतपानमंत्रादेरनासोक्तिता स्यादिति। तत्र स्थाने॥ दिन इत्यर्धकम्। हे प्रभो भगवद्भक्तिसम्पदां भवादृशां तु न तदादिसंपदादरो यदृच्छया तदुपपत्तौ पूर्ववद्भगवत्येव समर्प्यत इति भावः। मारी नाम नगरग्रामादिषु प्रचुरलोकानां दिनं दिनं मृत्युकारो ग्रहविशेषः। मायिनः कपटिनः। अभितोर्चितः सन्नन्यथा तु नैव, अन्यथानिष्टं करोतीत्यर्थः।

१. सर्वाधि-वीर.; सर्वेऽपि-विज.। २. यद्राष्ट्रे-विज.। ३. मणिः विज.।

तच्चाग्रे व्यक्तं भावि ॥ ११ ॥ स सत्राजित् । मणिं प्रति । यदुराजायोग्रसेनाय दातुम् । शौरिणा कृष्णेन । अतर्कयत् प्राकाशयत् । 'तर्क-प्रकाशपृच्छकारणभाषासु' चौरादिकः ॥ यदुराजायोग्रसेनार्थं राजैकयोग्यत्वात्, न त्वात्मार्थं तत्र निरपेक्षत्वात् । कुत्रापि याचित एव न तु भेदादिना जिघृक्षितः । शौरिणेति शूरयशोविस्तारकस्य तस्य तद्योग्यमेवेति भावः । अर्थे धन एव न तु धर्मादौ कामुकः । अत एव श्रीभगवदाज्ञाभंगेन दोषमविचारयन् । अयम्भावः—उत्तमद्रव्यत्वेन प्राक् स्वयमेवोद्यम्य दातुं योग्यं, तत्रापि तेन साक्षाद्याचितमपि नादात्, अतो महाऽनर्थः फलिष्यति, तच्चापश्यन् । एवशब्देन वारंवारमपि याचनायामदानं द्योत्यते । प्रशब्देन यदा याच्यते तदा तेनाप्युपयुज्यतामिति किञ्चित्स्वीकारमिषेण वंचना च ज्ञाप्यते ॥ १२ ॥

### श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी

प्रहस्य स्मित्वा प्रेति प्रारम्भे नत एवेषद्दृष्टिप्रसारणाभिप्रायेणोऽक्तम् अम्बुजलोचन इति अत एव प्रकर्षेण स्मितावलोकनादिनाह—देव इति । देवोऽपि कश्चिन्न भवति किन्तु मनुष्य एव तत्रापि सत्राजिदित्यर्थः । अथ श्रीमति कौस्तुभे विद्यमानेऽपि चमत्काराय श्रीभगवद्वन्तस्य तदिच्छानुरूपप्रकाशादिति ज्ञेयम्, अन्यत्तैः; तत्र बालानामज्ञानामिति असूर्ये सूर्यबुद्धेः श्रीकृष्णे चैतावन्तं कालमीश्वरत्वानऽवगमात् सूर्यागमनमात्रसम्भावनया कोलाहलाच्च ॥ ९ ॥ श्रीमत्स्वत एव सम्पत्तियुक्तं द्वारकान्तर्वर्त्तित्वात् देवसदने निजेष्टदेवसूर्यार्च्चागृहे विप्रैः प्रयोज्यकर्तृभिः न्यवेशयत् उत्तमपीठे पूजार्थं स्थापयामास ॥ १० ॥ दिन इत्यर्द्धकं हे प्रभो ! इति भगवद्भक्तिसम्पदां भवादृशांतु न तदादिसम्पदादरः यदृच्छया वा तदुपसत्तौ पूर्ववत् भगवत्त्वेव समर्प्यत इति भावः मारीनाम नगरग्रामादिषु प्रचुरलोकानां दिनं दिनम्मृत्युकरो ग्रहविशेषः । मायिनः सर्वे कपटिनः अभितोऽर्चितः सन्निति अन्यथा तु नैव अथचानिष्टङ्करोतीत्यर्थः तच्चाग्रे व्यक्तं भावि ॥ ११ ॥ यदुराजाय उग्रसेनार्थं राजैकयोग्यत्वात् नत्वात्मार्थं तत्र निरपेक्षत्वात् त(कु)त्रापि याचित एव नतु भेदादिना जिघृक्षितः शौरिणेति शूरयशोविस्तारकस्य तस्य तद्योग्यमेवेति भावः अर्थे धन एव नतु धर्मादौ कामुकः अत एव श्रीभगवद्याच्ञाभङ्गेन दोषमविचारयन् अयं भावः उत्तमद्रव्यत्वेन प्राक् स्वयमेवोद्यम्य दातुं योग्यं तत्रापि तेन साक्षादेव याचितमपिनादात् अतो महाननर्थः फलिष्यति तं चापश्यन्निति एवशब्देन वारं वारमपियाचनायामदानं बोध्यते प्रशब्देन यदा याच्यते तदा तेनाप्युपयुज्यतामिति किञ्चित्स्वीकारमिषेण वञ्चना च ज्ञाप्यते ॥ १२ ॥

### श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी

प्रहस्य स्मित्वा, तत एवेषद्दृष्टिप्रसारणाभिप्रायेणोक्तम्-अम्बुजलोचन इति । अतएव प्रकर्षेण स्मितावलोकादिनाह—असौ युष्माभिरुक्तोऽयं देव इति । देवोऽपि कश्चिन्न भवति, किन्तु मनुष्य एव, तत्रापि सत्राजिदित्यर्थः । ननु सत्राजिदीदृशः कथं वृत्तः ? तत्राह—मणिनेति; सूर्य्यदत्तेनेति शेषः । अन्यत्तैर्व्याख्यातम् । यद्वा, बालानां शिशूनां वचनमिति पूर्व्वोक्ता जना बाला एव ज्ञेयाः, अन्येषां द्वारकावासिनां तेषामज्ञवत्तादृशोक्त्यसम्भवात् ॥ ९ ॥ श्रीमान् मणिनाधिकं शोभमान इत्यर्थः । श्रीमदिति पाठान्तरे स्वत एव सर्व्वसम्पत्तियुक्तम्; द्वारकान्तर्वर्त्तित्वाद्देव सदने निजेष्टदेव-सूर्य्यार्च्चागृहे न्यवेशयत्, उत्तमपीठादौ सम्यक् स्थापयामास ॥ १० ॥ हे प्रभो ! इति श्रीभगवद्भक्तानां भवादृशामपि तादृक् सामर्थ्यं भात्येवेति भावः । मायिनो राक्षसादयो दुष्टजना वा, अभितोऽर्च्चितः सन्निति, अन्यथा तु नैव, अथवा अनिष्टं करोतीत्यर्थः । तच्चाग्रे व्यक्तं भावि ॥ ११ ॥ यदुराजाय उग्रसेनार्थं राजैकयोग्यत्वात्; किञ्च, शौरिणा मातामहत्वात् स्नेहाच्चेति भावः । श्लेषेण बलान्नेतुं शक्तेनापीत्यर्थः । अर्थे धन एव, न तु धर्म्मादौ कामुकः, अतएव श्रीभगवद्याच्ञाभङ्गेन दोषमविचारयन् । अयं भावः—उत्तमद्रव्यत्वेन प्राक् स्वयमेवोद्यम्य दातुं योग्यम्, तत्रापि तेन साक्षादेव याचितमपि नादात्, अतो महाननर्थः फलिष्यति; तच्चापश्यन्निति एव-प्र-शब्दाभ्यामदानस्य दार्ढ्यं बोध्यते, तेन च श्रीभगवद्वञ्चनार्थं प्रसेनाय ददाविति ज्ञेयम् । तथा च श्रीविष्णुपुराणे (४।१३।१७)—'सत्राजितोऽप्यच्युतो मां याचिष्यतीत्यवगम्य रत्नलोभात् स्वभ्रात्रे प्रसेनाय तद्रत्नमदात्' इति ॥ १२ ॥

### श्रीमद्वीरराघवाचार्यकृता भागवतचन्द्रचन्द्रिका

निशम्येति बालानामागच्छतो याथात्म्याऽनभिज्ञानां वचनमाकर्ण्य प्रहस्याह । उक्तिमाह—नासाविति । असावागच्छन्न देवो रविः सूर्य्यः किन्तु सत्राजित् कुतस्तस्येदृशं तेज इत्यतो विशिनष्टि—मणिना स्यमन्तकेन ज्वलन् विद्योतमान आयाति ॥९॥ कीदृशस्तस्य मणेः प्रभाव इति जिज्ञासुं राजानं प्रत्याह मुनिः-सत्राजिदिति । अस्य "सूर्याल्लब्धमणिः" इत्यादिः श्रीमान् भाग्यवान्सत्राजित्कृतानि कौतुकेनोत्सवेन मङ्गलानि यस्मिन् तत्स्वगृहं प्रविश्य देवतागृहे विप्रैः प्रयोज्यकर्त्तृभिर्मणिं न्यवेशयत् ॥ १० ॥ सच मणिर्हे प्रभो, राजन् ! प्रतिदिनमष्टौ स्वर्णभारान्सृजतिअसूत भारः प्रमाणविशेषस्तथाहि—"चतुर्भिर्व्रीहिभिर्गुञ्जं गुञ्जान् पञ्च पणं पणान् । अष्टौ धरणमष्टौ तान्कर्षं तांश्चतुरः पलम् । तुलां पलशतं प्राहुर्भारः स्याद्विंशतिस्तुलाः" इति । किञ्च,

दुर्भिक्षेति । मारीनामालमृत्युः अरिष्टमभद्रं दुःखहेतवः आत्मनः पीडा व्याध्यादयो रोगाः मायिनो वञ्चकाश्चोरा इति यावत् यस्मिन् राज्ये स मणिरर्च्चितः स्यात्तत्र कदाचिदपि दुर्भिक्षादयो न सन्ति ॥ ११ ॥ क्वापि कदाचित् यदुराजायोग्रसेनार्थं शौरिणा मणिं प्रति याचितो अपि स सत्राजित् अर्थकामुकः हेतुगर्भमिदं तत्त्वात् याच्ञाभङ्गं याच्ञावैय्यर्थ्यं अविचारयन्नेव नैव ददौ ॥ १२ ॥

**श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली**

गृहे देवसदने देवस्थाने न्यवेशयत् प्रतिष्ठितवान् ॥ १० ॥ पञ्चविंशतितुलात्मको भारः तानष्टौ भारान्सृजति ददाति मारी अकालमृत्यु अरिष्टं मृत्युचिह्नम् ॥ ११ ॥ क्वापि कदाचित् अतर्कयत् अनिरूपयत् ॥ १२ ॥

**श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः**

प्रहस्य प्र इति प्रारम्भेस्मित्वेत्यर्थः ॥ ९ ॥ सत्रमिति कौस्तुभस्य श्रीभगवत्तदिच्छानुरूपा मर्यादा प्रकाशादतिशयो योज्यम् ॥ १०-४५ ॥

**श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी**

भारप्रमाणं यथा—"चतुर्भिर्व्रीहिभिर्गुञ्जं गुञ्जान् पञ्च पणं पणान् । अष्टौ धरणमष्टौ च कर्षं तांश्चतुरः पलम् । तुलां पलशतं प्राहुर्भारः स्याद्विंशतिस्तुलाः" इति । मारी अकालमृत्युः ॥ ११ ॥ यदुराज उग्रसेनस्तदर्थं याच्ञाभङ्गम् अतर्कयन् भगवद्याच्ञाभङ्गेन दोषमविचारयन् भगवत्यसमर्प्य स्वयमग्रभोजिनः सर्वानिष्टनिवर्त्तकमपि वस्तु सर्वानिष्टहेतुर्भवति किम्पुनः स्वयं प्रार्थयमानेपि तस्मिन्नसमर्प्येति सूचितम् ॥ १२ ॥

**गूढार्थदीपिनी**

बालानामज्ञानम् । 'बालोऽज्ञे' इति हैमः ॥ ९ ॥ श्रीमत् प्रशंसायां मतुम् । कृतं कौतुकेनोत्सवेन मङ्गलं स्वस्तिवाचनं यस्मिन् । न्यवेशयत् प्रतिष्ठापयामास । विप्रैः कृत्वा ॥ १० ॥ दिने इति सार्द्धम् । अष्टौ स्वर्णभारान् 'भारः स्याद्विंशतिस्तुलाः' तस्याश्चाष्टगुणितत्वे षष्ट्यधिकैकशततुला १६० तुलाः इत्यायाति । मारी विषूचिका ॥ ११ ॥ यदुराजाय उग्रसेनाय । भङ्गं भङ्ग-जन्यदोषमविचारयन् ॥ १२ ॥

**श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः**

ज्वलन् विद्योतमानः ॥ ९ ॥ विप्रैः कृत्वा ॥ १० ॥ भारप्रमाणम्—चतुर्भिर्व्रीहिभिर्गुञ्जं गुञ्जान् पञ्च पणं पणान् । अष्टौ धरणमष्टौ तान् कर्षं तांश्चतुरः पलम् । तुलां पलशतं प्राहुर्भारः स्याद्विंशतिस्तुलाः" इति ॥११॥ मारी अकालमृत्युः ॥ १२-१३ ॥

**श्रीमद्वल्लभाचार्य्यकृता सुबोधिनी**

तदा भगवान् कर्म न परित्याज्यमिति स्वयं तथैव स्थितः प्रजानां मोहं दूरीकृतवानित्याह **निशम्येति** । बालानां अज्ञानां वचनम् । ते हि स्वोत्कर्षमेव विचारयन्ति । नतु निमित्तम् । तथैतेऽपि स्वोत्कर्षत्वेन मदुत्कर्षमेव भावयन्ति । ततो यं कञ्चन समागच्छन्तं महत्त्वेन मत्सम्बन्धित्वेन च कल्पयन्ति । तस्मात् स्वोत्कर्षपरान् अज्ञान् दृष्ट्वा प्रहस्य दृष्ट्वैव तेभ्यः सुखं दत्तवानित्याह **अम्बुजलोचन** इति । असौ देवरूपो रविर्न भवति, किन्तु स्वेस्तेजो । रविभक्तश्चायं भवति, तेन देवपदं संगच्छते, किन्नु सत्राजिदयम् । कथमेवं जात इति चेत्, तत्राह **मणिना ज्वलन्निति** ॥ ९ ॥ मणिना तस्य भोगमुक्त्वा अर्थसम्पत्तिमाह **सत्राजित्स्वगृहमिति** । भगवत्कृपया पूर्वमेव श्रीमत्कृतानि कौतुकानि मङ्गलानि च यत्र । अनेन धर्मकामौ निरूपितौ । एवं स्वतः-सिद्धत्रिवर्गं गृहं प्रविश्य तत्र भक्त्यतिशयात् देवसदने देवपूजागृहे दैत्यानां प्रवेशाभावाय विप्रैः सह मन्त्रपूर्वकं मणिं न्यवेशयत् । नितरां स्थापितवान् ॥ १० ॥ स्थापितस्य फलमाह **दिने दिने** इति । पञ्चमणमात्रं भारः, चत्वारिंशद्धरणानि मण उच्यते मान-विशेषः । ते चाष्टौ । चत्वारिंशन्मणान् सुवर्णस्य प्रत्यहं सृजति । सविता हि तस्य मूलम् । अतोऽयमपि प्रसविता । **प्रभो** इति सम्बोधनं तदाकाङ्क्षाभावाय । न केवलमिष्टसाधकत्वम्, किन्त्वनिष्टनिवारकत्वमपीत्याह **दुर्भिक्षेति** । अनावृष्टिकृतं दुर्भिक्षम् । **मारी** शीतलादिदेवाधिष्ठितव्याधिमरणम् । अरिष्टान्यन्यानि आधिव्याधिहेतुभूतानि । आधिव्याधयश्च । अशुभाः स्वप्नादयोऽपि । मायिनो राक्षसाः पूतनादयः । यत्रायमभ्यर्चितो मणिस्तिष्ठति, तत्र नैते भवन्तीति मणेर्दृष्टादृष्टसामर्थ्यं निरूपितम् ॥ ११ ॥ अयोग्ये महान् धर्मो न युक्त इति विचार्य भगवान् अनेन मणिना सत्राजितो नाशो भविष्यतीति, स्वपुरे च नाशो न युक्त इति, देवान्तराणामत्र सामर्थ्याभावात् तत्प्रसादोऽपि व्यर्थ इति, तस्य लोकद्वयेष्टसिद्ध्यर्थं यावद्द्रव्यं तत उत्पद्यते, तावद्ग्रामादिद्वारा तस्मै दापयित्वा, उग्रसेनाय मणिं दापयितुं सत्राजितं प्रति किञ्चिदुक्तवानित्याह **स याचित** इति । **क्वापीति** । कियत्कालं प्रयच्छ ।

यावता मृत्युरपगच्छति। ततः स्वयमेव ग्राह्यमिति भगवदभिप्रायो बोधितः। ननु तस्यैव मृत्युर्भविष्यतीत्याशङ्क्याह यदुराजायेति। शौरिणेति सामर्थ्यं दापने निरूपितम्। लौकिकपक्षपातश्च। तथापि न दत्तवानित्याह नैवार्थकामुक इति। स ह्यर्थमेव कामयते सिद्धम्, न तु मृत्युनिराकरणमपि, अतो न प्रादात्। यथैवायं न याचते, तथोपायं च विचारितवान्। सूर्यो वक्तव्यः, तद्द्वारा उपद्रवश्च कारणीयः, ततो न याचिष्यतीति याञ्चाभङ्गं तर्कितवान्॥ १२॥

### श्रीसुबोधिनी-सारः

शुकोक्तिः। बालानामज्ञानां वचनं निशम्य श्रुत्वा प्रहस्य अंबुजलोचनः पद्मनेत्रो हरिः प्राह असौ रविर्वोर्दे न किंतु मणिना ज्वलन्सत्राजित् अस्ति॥ ९॥ कृतानि कौतुकेन मंगलानि यस्मिंस्तत् श्रीमत् स्वस्य गृहं सत्राजित्प्रविश्य देवस्य सदने मंदिरे विप्रैर्मणिं स्थापितवान्॥ १०॥ मणिगुणानाह। हे प्रभो दिनेदिने प्रतिदिनं स मणिरष्टौ स्वर्णभारान्सृजति। तन्मानमुक्तं चरके "सिद्धार्थैरष्टसंख्यैर्यव इह गदितस्तैश्चतुर्भिश्च गुंजा षड्भिस्ताभिश्च माषो जलधिभिरभितष्टंककस्तौ च कोलः। कर्षः शुक्तिः पलं च प्रसृतिकुडवकौ माणिका प्रस्थकश्च प्राग्भ्यां द्वाभ्यां क्रमेण स्युरथ हरिकरैः प्रस्थकैराढकः स्यात्। द्रोणः स्यात्तैश्चतुर्भिर्युगलमथ तयोस्तर्पकस्तौ वहस्तद्वेदैः खारी तुला स्यात्पलशतमथ तद्विशतिर्भार एकः"॥ १॥ यत्र स्थाने देशे च पूजितो मणिरास्ते तत्र दुर्भिक्षं मारी अकालमृत्युः अरिष्टानि न संति सर्पा आधयो व्याधयोऽशुभा दुःखदा न संति मायिनो न संति क्वापि प्रसंगे शौरिणा श्रीकृष्णेन याचितोऽर्थलुब्धः स सत्राजिन्मणिं यदुराजायोग्रसेनार्थं न प्रादात् सूक्तस्य हरेः याञ्चाया भंगं नाशमचिंतयन् सन्॥ ११-१२॥

### गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

कृतं कौतुकेन मङ्गलं यस्मिन् अत एव श्रीमत् स्वगृहं सत्राजित् प्रविश्य विप्रैः प्रयोज्य कर्तृभिः कृत्वा देवसदने मणिं न्यवेशयत्॥ १०॥ मणिप्रभावमाह—दिने दिने इति। भारप्रमाणं तु—"चतुर्भिर्व्रीहिभिर्गुञ्जं गुञ्जान् पञ्च पणं पणान्। अष्टौ धरणमष्टौ तान् कर्षं तांश्चतुरः पलम्। तुलां पलशतं प्राहुर्भारः स्याद्विंशतिस्तुलाः" इति। पञ्चपणमात्रः भार इति सुबोधिन्यामुक्तम्। अभ्यर्चितो मणिर्यत्रास्ते तत्र दुर्भिक्षादयो न सन्ति न भवन्ति। दुर्भिक्षोऽनावृष्टिप्रयुक्तोऽन्नाद्यलाभः। मारीनाम्नी कालमृत्युहेतुभूता देवता। अरिष्टं गृहादिपीडा। सर्पाः। आधिर्मनःपीडा। व्याधयो रोगाः। अशुभाश्चान्येऽपि दुःखहेतवः। मायिनो दैत्यादयश्चोराश्च॥ ११॥ स सत्राजित् क्वापि कदाचित् शौरिणा श्रीकृष्णेन यदुराजाय ईदृक्प्रभावस्य मणे राजनिकटस्थितिरेव युक्तेति मत्वा उग्रसेनार्थं मणिप्रति याचितोऽपि भगवतो याच्ञाभङ्गमतर्कयन् आज्ञोल्लङ्घनानर्थमननुसन्दधानो मणिं नैव प्रादात् इत्यन्वयः। तत्र हेतुमाह—अर्थकामुक इति। तज्जनितसुवर्णाद्यभिलाषित्वादित्यर्थः॥ १२॥

### अन्वितार्थप्रकाशिका

निशम्येति। बालानामागच्छतस्तत्त्वजानतां वचनं निशम्य श्रुत्वाऽम्बुजलोचनः श्रीकृष्णः प्रहस्य प्राह स्म। असौ रविर्देवो न भवति किं तु स्यमन्तकेन मणिना ज्वलन् विद्योतमानः सत्राजित् अस्ति। तदा भगवदिच्छया भगवत्कण्ठकौस्तुभप्रकाशसंवरणमभूत्॥ ९॥ सत्राजिदिति। कृतं कौतुकेन मङ्गलं यस्मिन् अत एव श्रीमत्स्वगृहं सत्राजित् प्रविश्य विप्रैः प्रयोज्यकर्तृभिः कृत्वा देवसदने स्वेष्टदेवसूर्यमन्दिरे मणिं न्यवेशयत् पीठे स्थापितवान्॥ १०॥ दिने इत्यर्द्धम्॥ हे प्रभो राजन्! स मणिः दिने दिने अष्टौ स्वर्णभारान् सृजति। "चतुर्भिर्व्रीहिभिर्गुञ्जा गुञ्जाः पञ्च पणं पणान्॥ अष्टौ धरणमष्टौ तान् कर्षं तांश्चतुरः पलम्॥ तुलां पलशतं प्राहुर्भारः स्याद्विंशतिस्तुलाः।" अत्राष्टगुञ्जो माषो द्वादशमाषस्तोलश्चतुर्विंशतितोलः शेटकश्चत्वारिंशच्छेटको मणक इति महाराष्ट्रादिदेशीयप्राकृतमानरीत्याऽमरसिंहमतेन षण्मणकः सप्तत्रिंशच्छेटकाः अष्टादश तोलका अष्टौ माषाश्चेति भारप्रमाणम्। स्वामिमते तु सप्तविंशतिर्मणका एकत्रिंशच्छेटकास्तोलद्वयमष्टौ माषाश्चेति। काशीनाथः एवमशीतितोलकात्मकशेटकेन साम्प्रतिकाङ्ग्रेजादिरीतिः कल्प्या। दुर्भिक्षेति। अभ्यर्चितो मणिर्यत्रास्ते तत्र दुर्भिक्षोऽनावृष्टिप्रयुक्तोऽन्नाद्यलाभः मारा बहूनां जनानां नित्यमकालमृत्युः अरिष्टं ग्रहादिपीडा सर्पाः आधिर्मनःपीडा व्याधयो रोगा अशुभाश्चान्येऽपि दुःखहेतोः मायिनो दैत्यादयश्चोराश्च न सन्ति न भवन्ति। स इति। स सत्राजित् क्वापि कदाचित् शौरिणा श्रीकृष्णेन यदुराजाय ईदृक्प्रभावस्य मणे राजनिकटस्थितिरेव युक्तेति मत्वा उग्रसेनार्थं मणिं प्रतियाचितोऽपि अर्थकामुकः लोभी भगवता याच्ञाभङ्गमतर्कयन् आज्ञाल्लङ्घनानर्थमननुसंदधानो मणिं नैव प्रादात् एतेन भगवत्यसमर्प्य स्वयमग्रभोजिनः सर्वानिष्टनिवर्तकमपि अनिष्टहेतुरेव भवतीति सूचितम्॥ ११-१२॥

### श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्

बालानामबुधानां वचनं ज्वलन् सूर्यवत्प्रकाशमानः॥ ९॥ कृतं कौतुकेन उत्साहेन मंगलं चित्रादिशोभा यस्मिन् तत् स्वगृहं प्रविश्य देवस्थाने विप्रैः प्रयोज्य कर्तृभिः॥ १०॥ हे प्रभो ईश्वरभक्त्या समर्थ। भारप्रमाणे श्लोकः चतुर्भिर्व्रीहिभिर्गुञ्जं

गुंजान्पंचपणंपणान् । अष्टौ धरणमष्टौ च कर्षतांश्चतुरः पलम् । तुलांपलशतं प्राहुर्भारः स्याद्विंशतिस्तुला इति गुंजां त्रयेणैकवल्लः द्वात्रिंशद्वल्लैश्च । एकतोलः एकोनत्रिंशद्वल्लैश्च ॥ २९ ॥ एकरूप्यसंज्ञः एकचत्वारिंशद्रूप्यसंज्ञैश्च ॥ ४१ ॥ एकशेटकः एवं चत्वारिंशच्छेठकैश्च ॥ ४० ॥ एकमणकोबोध्यः अनेन गुंजादिमानेन भारः कथ्यते । स त्रिपादसप्तदशमणकाः सद्विपादसप्तशेटकाश्च सप्ततोलश्च सार्द्धैकवल्लश्च एकगुंजश्च इत्येतावत् गुर्ज्जरीयरीत्या भारप्रमाणं भारस्यांकाः ।।१७।। ७ ।। ७ ।। १ ।। १ ।। इत्येकभारः मारीनामाऽकालमरणं । अरिष्टमभद्रं । सर्व्वाः नागाः अशुभाः दुःखजनकाः ॥ ११ ॥ एतदादयो मायिनस्तत्र न संति । अभ्यचितः पूजितः याच्त्रा भंगं भगवद्याचनाभंगदोषं अतर्कयन् अविचारयन् भगवत्यसमर्पणेन शुभदोप्यशुभदो भविष्यतीति भावः ॥ १२ ॥

**भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी**

निशम्येति । बालानामागच्छतो याथात्म्यानभिज्ञानां वचनं बालवचनं, निशम्याकर्ण्य:, प्रहस्य हासं कृत्वा, अम्बुजलोचनः कमलनयनः भगवान्, हे जनाः, असौ रविः देवः, न । मणिना स्यमन्तकारव्येन सूर्यभक्तत्वात् सूर्यदत्तेन मणिना ज्वलन् सत्त्राजिदयं भवति इति, प्राह ॥ ९ ॥ कीदृशस्तस्य मणेः प्रभाव इति जिज्ञासुं राजानं प्रत्याह मुनिः । सत्त्राजिदिति । श्रीमान् भाग्यवान्, सत्त्राजित्, कृतानि कौतुकेनोत्सवेन मङ्गलानि यस्मितत्, स्वगृहं प्रविश्य, देवसदने स्वगृहवर्त्तिनि देवतागृहे, विप्रैः प्रयोज्यकर्त्तृभिः, मणिं न्यवेशयत् । हे प्रभो हे राजन्, स मणिः, दिने दिने प्रतिदिनं, अष्टौ स्वर्णभारान्, सृजति । भारः प्रमाणविशेषः । तथा हि 'चतुर्भिर्व्रीहिभिर्गुञ्जा गुञ्जाः पञ्च पणं पणान् । अष्टौ धरणमष्टौ तान् कर्षं तांश्चतुरः पलम् । तुलां पलशतं प्राहुर्भारः स्याद्विंशतिस्तुलाः' इति ॥ १० ॥ दुर्भिक्षेति । किं च यत्र मणिरयं स्यमन्तकः, अर्भ्यचितः सम्यक् कृतपूजनः, आस्ते तिष्ठति, तत्र दुर्भिक्षमन्नादेर्महर्घता, मारीनामाऽकालमृत्युः, अरिष्टमभद्रं, एतेषां द्वन्द्वः । सर्पाधिव्याधयः सर्पदंशः आधिर्मनःपीडा, व्याधयो रोगाः, मायिनो वञ्चकाश्चोरा इति यावत् । इत्यादयः, अशुभाः, दुःखहेतवः, न सन्ति । नैव भवेयुरित्यर्थः ।। ११ ।। स इति । यदुराजायोग्रसेनार्थं, मणिं प्रति, क्वापि कदाचित्, शौरिणा श्रीकृष्णेन, स सत्त्राजित्, याचितः तथापि, अर्थकामुकः । हेतुगर्भमिदं, तत्त्वात्, याञ्चाभङ्गं, अतर्कयन् अनिरूपयन् अविचारयन्नित्यर्थः । नैव, प्रादात् । अनेन भगवत्यसमर्प्य स्वयमग्रभोजिनः सर्वानिष्टनिवर्त्तकमपि अनिष्टहेतुरेव भवतीति सूचितम् ॥ १२ ॥

**कृष्णप्रिया**

श्रीशुकाचार्य जी ने कहा—राजन् ! कमलनयन भगवान् श्रीकृष्ण ने बालकों जैसी निर्दोष वाणी सुनकर मन्दस्मित करके कहा कि हे यादववृन्द श्रवण कीजिये यह भगवान् सूर्य नहीं है लेकिन यह तो सूर्य भक्त सत्राजित् है । सूर्य भगवान् के अनुग्रह से समर्पण की स्यमन्तक मणि की यह तेजस्विनी कान्तिके कारण सूर्य समान दीख रहा है । वह मणि उसके कण्ठ में हैं ।। ९ ।। श्रीसत्राजित् स्यमन्तक मणि को लेकर अपने समृद्ध भवन में गये । आप्त वृन्द में सूर्योपासन कर और मणि लेकर भुवन में पधारे हुए सत्राजित के पधारने के निमित्त महान् महोत्सव मनाया । श्रीसत्राजित ने विप्रवर्यों को निमन्त्रित करके अपने देवमन्दिर में मणि को प्रतिष्ठित की राजन् परीक्षित् यह स्यमन्तक मणि प्रतिदिन आठ भार सुवर्ण दिया करती थी । जहाँ यह मणि विराजती थी वहाँ पर दुष्काल-अनावृष्टि-महामारी-ग्रहपीडा-सर्पभय-मानसिक-एवं कायिक तनाव बिमारियों-एवं मायावियों के मन्त्र प्रभाव-और उनके उपद्रव आदि किसी भी प्रकार का अमङ्गल नहीं होता था ॥ १० ॥ चर्तुभिर्व्रीहिभिर्गुञ्जं गुञ्जान् पञ्चपणं पणान् । अष्टौ धरणमष्टौ च कर्षं तांश्चतुरः पलम् ॥ तुलां पलशतं प्राहुर्भारः स्याद् विंशतिस्तुलाः ॥ चार व्रीहि-धानकी एक भुजा बनती है । और पांच गुञ्जा का एक पण होता है । आठ पण का एक धरण और आठ धरण का एक कर्ष होता है । चार कर्ष का एक पल और दो पल की एक तुला और वीस तुला का एक भार होता है ॥ ११ ॥ राजन् एक कृपानिधान श्रीकृष्ण ने प्रसङ्ग वश सत्राजित को सद्भाव से जताया कि भैया सत्राजित् ! आपकी यह मणि महाराज उग्रसेन को समर्पण करें तो अच्छा । लेकिन अर्थलालसु सत्राजित ने भगवान् श्रीकृष्ण की आज्ञा का पालन नहीं किया । उसने कम से कम यह नहीं सोचा कि भगवान के मार्गदर्शन में कुछ रहस्य होगा ॥ १२ ॥

**तमेकदा मणिं कण्ठे प्रतिमुच्य महाप्रभम् । प्रसेनो हयमारुह्य मृगयां व्यचरद् वने ॥ १३ ॥**

**प्रसेनं सहयं हत्वा मणिमाच्छिद्य केसरी । [१]गिरिं विशञ्जाम्बवता निहतो मणिमिच्छता ॥ १४ ॥**

**सोऽपि चक्रे कुमारस्य मणिं क्रीडनकं बिले । अपश्यन् भ्रातरं भ्राता सत्राजित् पर्यतप्यत ॥ १५ ॥**

**प्रायः कृष्णेन निहतो मणिग्रीवो वनं गतः । भ्राता ममेति तच्छ्रुत्वा कर्णे कर्णेऽजपञ्जनाः ॥ १६ ॥**

१. बिलं—बिजं ।

**कर्दमक्षमा**

अन्वयः –एकदा, प्रसेनः ( सत्राजिद्भ्राता ) महाप्रभम्, तम्, मणिम्, कण्ठे, प्रतिमुच्य, हयम्, आरुह्य, वने, मृगयाम्, व्यचरत् ॥१३॥ केसरी, सहयम्, प्रसेनम्, हत्वा, मणिम्, आच्छिद्य, गिरिम्, विशन्, मणिम्, इच्छता, जाम्बवता, निहतः ॥१४॥ सः (जाम्बवान्) अपि, बिले, मणिम्, कुमारस्य, क्रीडनकम्, चक्रे, भ्राता, सत्राजित्, भ्रातरम्, प्रसेनम्, अपश्यन्, पर्यतप्यत ॥१५॥ मम, भ्राता, मणिग्रीवः, वनम्, गतः, प्रायः, कृष्णेन, निहतः, तत्, श्रुत्वा, जनः, कर्णे, कर्णे, अजपत् ॥ १६ ॥

**श्रीधरस्वामिविरचिता भावार्थदीपिका**

तदेव दर्शयितुमाह । तमेकदेति । प्रतिमुच्य बद्ध्वा । प्रसेनः सत्राजिद्भ्राता ॥ १३ ॥ आच्छिद्य आकृष्य गृहीत्वा ॥१४–१५ ॥ अजपन्नुपांशु अवोचन् ॥ १६–२२ ॥

**श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः**

तदेवाऽनिष्टहेतुत्वम् । प्रतिमुच्य प्रतिपूर्वो मुचिर्वंधने । स च श्रीभगवद्वंचनार्थमेव प्रसेनाय ददाविति । तदुक्तं वैष्णवे–सत्राजितोऽप्यच्युतो मां याचिष्यतीत्यवगम्य रत्नलोभात्स्वभ्रात्रे प्रसेनाय तद्रत्नमदादिति । अत एव प्रसेनः सर्वतोऽप्रतीत्या स्वरक्षणार्थं च तं स्वर्णसंपुटाद्याच्छन्नं कंठ एव प्रतिमुच्य तत्प्रभावज्ञ एकाक्यपि वनादौ गच्छतीति भावः ॥ १३ ॥ जांबवता ऋक्षराजेन । हत्वेति हिंस्रस्वभावत्वात् । महामणिमाच्छिद्येति महाधनस्वभावत्वात्, मूषिकादौ दृश्यते ॥ १४ ॥ सोऽपि जांववानपि क्रीडनकं क्रीडासाधनम् । सोपीत्यर्द्धकम् । कुमारस्य बिले गुहांतर्वर्तमानस्य सुकुमाराख्यस्य स्वपुत्रस्य क्रीडनकं बालक्रीडासाधनं चक्रे । अपश्यन्निति सार्धकम् । प्रायो वितर्के । तेन प्रभुत्वेपि या प्रार्थना कृता तस्या भंगादेव पर्यतप्यतेति भावः ॥ १५ ॥ तत् सत्राजिद्वचनम् । उपांशु नीचैः यथा कथनसमयेऽन्यो न शृणुयादित्यर्थः । जनास्तदनुवर्तिन एव नागरिका न तु सर्वे, प्रथमस्कन्धे तेषां परमभक्तिवर्णनात् 'नताः स्म ते नाथ पदारविंदम्' इत्यादिभिः ॥ १६ ॥

**श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी**

सच श्रीभगवद्वंचनार्थमेव प्रसेनाय ददाविति ज्ञेयं तथा च श्रीविष्णुपुराणे सत्राजितोऽप्यच्युतो मां याचिष्यतीत्यवगम्य रत्नलोभात् स्वभ्रात्रे प्रसेनाय तद्रत्नमदादिति अत एव प्रसेनः सर्वतोऽप्रतीत्या स्वरिरक्षिषया च तं स्वर्णसम्पुटाद्यच्छन्नं कण्ठ एव प्रतिमुच्य एकदा मृगयायां विशेषेण परमाशक्तित एकाकित्वादिनाऽप्यचरत् ॥ १३ ॥ हत्वेति हिंस्रस्वभावत्वात् मणिमाच्छिद्येति महाधनस्वभावत्वात् मूषकादौ हि तथा दृश्यते ॥ १४ ॥ सोऽपीत्यर्द्धकम् बिले गिरिगुहान्तर्वर्त्तमानस्य कुमारस्य स्वपुत्रस्य सुकुमाराख्यस्य क्रीडनकं बाल्यक्रीडासाधनम् पश्यन्निति सार्द्धकम् ॥ १५ ॥ प्रायो वितर्के तेन प्रभुत्वेऽपि या प्रार्थना कृता तस्या भङ्गादिति भावः । जनास्तदनुवर्तिन एव नागरिकाः न तु सर्वे प्रथमस्कन्धे तेषां परमभक्तिवर्णनात् ॥ १६ ॥

**श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी**

अतएव प्रसेनस्तं कण्ठे प्रतिमुच्य, एकदा मृगयां विशेषेण परमासक्त्या एकाकित्वादिनाचरत् ॥ १३ ॥ महाप्रभावत्वेनैवाश्चर्य्येण हत्वा नितरां नखैः खण्डशो विदारणादिना हतः ॥ १४ ॥ बिले गिरिगुहान्तर्वर्त्तमानस्य कुमारस्य स्वपुत्रस्य सुकुमाराख्यस्य क्रीडनकं बाल्यक्रीड़ासाधनम् ॥ १५ ॥ भ्रातरम्, भ्रातेत्यन्योन्यं स्नेहः सूचितः, अतोऽपश्यन्नेव परितोऽतप्यत अशोचत्; प्राय इति प्रभुत्वान्मणिप्रार्थनाच्च नितरां शिरश्छेदादिना हतः; जनास्तदनुवर्त्तिनो नागरिकाः ॥ १६ ॥

**श्रीमद्वीरराघवाचार्यकृता भागवतचन्द्रचन्द्रिका**

एवं स्थिते महती प्रभा दीप्तिर्यस्य तं मणिमेकदा प्रसेनः सत्राजिद्भ्राता कण्ठे प्रतिमुच्य बद्ध्वा अश्वमारुह्य वने मृगयां व्यचरत् ॥ १३ ॥ तदा कश्चित्केसरी सिंहः साश्वं प्रसेनं हत्वा मणिमाच्छिद्याऽऽकृष्य गृहीत्वा गिरिं प्रविशन् आत्मानं दृष्टवता मणिमिच्छता जाम्वता ऋक्षराजेन हतः ॥ १४ ॥ सोऽपि जाम्ववानपि बिले स्वनिवासभूते गिरिबिले तं मणिं स्वकुमारस्य क्रीडनकं क्रीडासाधनं चक्रे । भ्राता सत्राजित् भ्रातरं प्रसेनं मणिं चापश्यन् पर्यतप्यत परितप्याऽऽहेत्यर्थः ॥ १५ ॥ उक्तिमेवाह–प्राय इति । मणिः ग्रीवायां यस्य स मम भ्राता वनं प्रति गतस्तत्र प्रायो बहुधा ध्रुवमिति यावत् कृष्णेनैव हत इत्येतद्वचो जनः श्रुत्वा कर्णे कर्णेऽजपदुपांश्ववोचत् ॥ १६ ॥

**श्रीविजयध्वजतीर्थकृता पदरत्नावली**

प्रतिमुच्य बद्ध्वा ॥ १३ ॥ आच्छिद्य स्वीकृत्य ॥ १४ ॥ क्रीडनकं लीलासाधनम् ॥ १५ ॥ शौरेर्याञ्चाभङ्गदोषादिदमनर्थजातमभूत् अन्यथा मणिमाहात्म्यस्तवनं व्यर्थमिति तात्पर्यमवगन्तव्यं मणिः ग्रीवायां यस्य स तथा मम भ्राता कृष्णेन निहत इति यत्तच्छ्रुत्वा ॥ १६–१७ ॥

### श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शिनी

प्रतिमुच्य बद्ध्वा ॥१३॥ आच्छिद्य आकृष्य ॥१४-१५॥ जनास्तत्तत्सवासनादुष्टा एव अजपन् उपांश्ववोचन् ॥ १६-१९॥

### गूढार्थदीपिनी

प्रतिमुच्य बद्ध्वा । प्रसेनः सत्राजिद्भ्राता । मृगयामुद्दिश्य ॥ १३ ॥ आच्छिद्य बलाद् गृहीत्वा ॥ १४ ॥ सोऽपीत्यर्द्धम् । क्रीडनकं क्रडासाधनम् । विले गुहायाम् । १५ ॥ अपश्यन्निति सार्द्धम् । प्रायो वितर्के । कर्णे कर्णेऽजपन् शनैः शनैरवोचन् ॥१६॥

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः

प्रसेनः सत्राजिद्भ्राता प्रतिमुच्य बद्ध्वा ॥ १३ ॥ आच्छिद्य आकृष्य ॥ १४-१५ ॥ जनाः दुष्टाः अजपन् उपांश्ववोचन् ॥ १६-२२ ॥

### श्रीमद्वल्लभाचार्य्यकृता सुबोधिनी

एवं दोषद्वयं तस्य निरूपितम् । आज्ञोल्लङ्घनमपकारचिन्तनं चेति । तत्र स्वस्यैवापकारो जातः । आज्ञाभङ्गफलं मृत्युरपि जात इत्यध्यायद्वयेन निरूप्यते । एतादृशोऽपि मणिः भगवद्भावरहितः अनर्थपर्यवसायी जात इति निरूपयन् भगवदाज्ञोल्लङ्घनात् तदीयानां बुद्धिरेव दुष्टा जातेति, पूज्यमपि मणिं सत्राजिन्मात्रपरिधेयं च, भक्तस्यैव भगवद्धर्मा उपकारिण इति सामान्यं तं मणिं ज्ञात्वा प्रसेनोऽपि तत्प्रतिष्ठार्थं तद्भ्राता कण्ठे उन्मुच्य गतवानित्याह **तमेकदेति** । कण्ठे मणिं प्रतिमुच्य एतत्प्रभया मृगा अन्धा भविष्यन्ति, ततो धर्तव्या इति, महाप्रभं सूर्यवत्प्रकाशमानम्, **प्रसेनः** प्रकृष्टसेनायुक्तोऽपि एकाकी हयमारुह्य मृगयां कर्तुं व्यचरत् । मृगा यान्त्यस्यामिति मृगनाशिका राजलोला मृगया, तामुद्दिश्य वने व्यचरत् ॥ १३ ॥ महाप्रभत्वात् असहिष्णुः सिंहः तं हत्वा मणिं नीतवानित्याह **प्रसेनमिति** । अलौकिकेनोपायेन न मृगा हन्तव्याः, भगवांस्तेषु नालौकिकं दत्तवानिति, मृगयैव तदर्थं निर्मिता । तेषां वधं मणिना चिन्तयन् तेनैव स्वमृत्युं प्राप्तवान् । स मणिर्देवरूप इति क्रुद्धो मणिर्यत्रैव स्थितः, तमेव घातयतीति परम्परया बहूनां वध उच्यते । हयसहितं प्रसेनं हत्वा मणिः केसरिणा गृहीतः । सोऽपि निकृष्टस्थाने मणिं नयन् गिरिं विविक्षन् कन्दरां प्रविशन् जाम्बवता निहतः । ननु महान् सः, किमिति सिंहं हतवान्, तत्राह **मणिमिच्छतेति** । अहतः सिंहो मणिं न मुञ्चतीति ॥ १४ ॥ तस्य मणेः प्रयोजनमाह **सोऽपि चक्र** इति । विले स्वस्थानविवरे कुमारस्यातिबालकस्य ( स्थाने ) क्रीडनकं क्रीडासाधनं चक्रे । एतावदेकेनैव दिनेन निर्वृत्तम् । ततो भ्रातुरन्वेषणार्थं सत्राजिता मनुष्याः प्रस्थापिताः । ततो न काप्युपलब्धः । ततो भ्रातृस्नेहात् भ्रातरमपश्यन् सत्राजित्पर्यतप्यत । मणिरपि गतो, भ्रातापि गत इति ॥ १५ ॥ ततः किं जातमिति विचारे भ्रातुरिवास्यापि दुर्बुद्धिरुत्पन्नेत्याह **प्रायः कृष्णेनेति** । अयमपि गतः । भगवान् स्वतोऽन्येन वा स्वयमपि मृगयां गतो मारितवानिति । **प्राय** इत्युत्कटा कोटिः । कृष्ण एव समर्थो मणिगुणान् दूरीकर्तुम् । हेतुश्चाप्यस्ति । मणिः पूर्वं याचित इति, वने च मारणे न कोऽपि ज्ञास्यतीति । एवं निश्चित्य भगवति क्लिष्टमारोपितवान् । ननु केनापि नोच्यते, कथं त्वं कल्पयसीत्याशङ्क्याह **भ्राता ममेति** । मम तु प्रिय इत्यहं ब्रवीमि, अन्यः किमर्थं वक्ष्यतीति भावः । तद्गृहे उक्तं भार्यादिस्थाने, पश्चात्कर्णे कर्णे समागतमजपत् । मन्त्रवत् शनैः भगवत्कीर्तिमुक्तवान् । यतो जनः, नह्यल्पेन दोषेण जन्ममरणादिकं प्राप्नोति ॥ १६ ॥

### श्रीसुबोधिनीसारः

महदतिक्रमः सद्यः फलत्यहो इति दर्शयति । एकस्मिन्काले महाप्रभं तं मणिं कंठे प्रतिमुच्य निक्षिप्य बद्ध्वा प्रसेनः सत्राजिद्भ्राता हयमश्वमारुह्य वने मृगयां व्यचरत् ॥ १३ ॥ सहयं साश्वं प्रसेनं हत्वा मणिमाच्छिद्याकृष्य गिरिं पर्वतं विशन् केसरी सिंहो मणिमिच्छता जांबवता निहतः तत्र बीजं सूर्येणोक्तं देवीभागवते । ''शुचिष्मता सदा धार्यं रत्नमेतन्महोत्तमम् । सत्राजित्तत्क्षणेनैतदशुचि हंति मानवम्'' इति सिंहोपि न पशुरिति । इति हरिवंशे ॥ १४ ॥ सोपि जांबवान् विले विवरे मणिं कुमारस्य बालकस्य क्रीडनकं विंदुकं चक्रे भ्रातरं प्रसेनमपश्यन् भ्राता सत्राजित् परितप्तोऽभूत् ॥ १५ ॥ मणिर्ग्रीवायां यस्य स मम भ्राता वनं गतः प्रायो बाहुल्येन कृष्णेन निहतः तच्छ्रुत्वा जनाः कर्णे कर्णे प्रतिकर्णमजपन् ''षट्कर्णो भ्रश्यते मंत्रः'' इत्युक्तेः ॥ १६ ॥

### गोस्वामिश्रीगिरिधरलालकृताबालप्रबोधिनी

'भगवत्यसमर्प्य स्वयमग्रतोभोजिनस्तद्विमुखस्य सर्वानिष्टनिवर्तकमप्यनिष्टहेतुरेव भवति' इति सूचयन् भगवदाज्ञोल्लङ्घनफलमाह—तमित्यादिना । महती प्रभा दीप्तिर्यस्य तं मणिमेकदा प्रसेनः सत्राजिद्भ्राता कण्ठे प्रतिमुच्य बद्ध्वा हयमारुह्य

वने मृगयां व्यचरत् ॥ १३ ॥ तदा कश्चन केसरी सिंहः सहयं प्रसेनं हत्वा मणिमाच्छिद्य आकृष्य गृहीत्वा गिरिं प्रविशन् मणिमिच्छता जाम्बवता ऋक्षराजेन निहत इत्यन्वयः ॥ १४ ॥ स जाम्बवताऽपि बिले स्वनिवासस्थाने गिरिकन्दरायां तं मणिं स्वकुमारस्य क्रीडनकं क्रीडासाधनं चक्रे । तदा भ्राता सत्राजित् भ्रातरं समणिं प्रसेनमपश्यन् पर्यतप्यत ॥ १५ ॥ परितप्तश्चाह—प्राय इति । मम भ्राता प्रायः ध्रुवं कृष्णेन निहतः । तत्र हेतुमाह—मणिग्रीव इति । पूर्वं कृष्णेन मणिर्याचितः, मया च न दत्तः । इदानीं मणिर्ग्रीवायां यस्य तथाभूत एव वनं गतः, अतो मणिलोभेन कृष्णेनैव निहत इत्यर्थः । इत्येवंभूतं तद्वचः श्रुत्वा द्वारकावासिजनाः कर्णे कर्णे अजपन् उपांश्ववोचन् ॥ १६ ॥

### अन्वितार्थप्रकाशिका

तदेव दर्शयितुमाह—तमिति । महती प्रभा दीप्तिर्यस्य तं मणिमेकदा प्रसेनः सत्राजिद्भ्राता कण्ठे प्रतिमुच्य बद्ध्वा हयमारुह्य वने मृगयां व्यचरत् ॥ १३ ॥ प्रसेनमिति । कश्चन केसरी सिंह सहयं प्रसेनं हत्वा मणिमाच्छिद्य आकृष्य गृहीत्वा गिरिं प्रविशन् मणिमिच्छता जाम्बवता ऋक्षराजेन निहतः । सिंहेन मणिग्रहणं चोत्तमद्रव्यस्वाभाव्यात् मूषकादौ स्वर्णादिहरणदर्शनात् ॥ १४ ॥ स इति । स जाम्बवानपि बिले स्वनिवासस्थाने गिरिकन्दरायां तं मणिं कुमारस्य कुमाराख्यस्येति तोषिणी । क्रीडनकं क्रीडासाधनं चक्रे । तदा भ्राता सत्राजित् भ्रातरं समणिं प्रसेनमपश्यन् पर्यतप्यत ॥ १५ ॥ प्राय इति । पूर्वं कृष्णेन मणिर्याचितः मया च न दत्तः । इदानीं मणिर्ग्रीवायां यस्य तथाभूत एव मम भ्राता वनं गतः । अतो मणिलोभेन प्रायः ध्रुवं कृष्णेनैव निहतः । इत्येवंभूतं तस्य सत्राजितो वचः श्रुत्वा द्वारकावासिनो दुर्वासनावन्तः केचित् जनाः कर्णे कर्णे अजपन् उपांश्ववोचन् ॥ १६ ॥

### श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्

कंठे प्रतिमुच्य आवध्यप्रसेनः सत्राजितसहोदरः ॥ १३ ॥ आच्छिद्य गृहीत्वा ॥ १४–१५ ॥ अजपन्नवोचन् ॥ १६ ॥

### भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

तदेव दर्शयितुमाह ॥ तमिति ॥ एकदा कदाचित्, प्रसेनः सत्राजिद्भ्राता. महती प्रभा दीप्तिर्यस्य तं, तं मणिं कण्ठे, प्रतिबद्ध्य, हयमश्वं, आरुह्य वने, मृगयां व्यचरत् । मृगयां विधातुमगच्छदित्यर्थः ॥ १३ ॥ प्रसेनमिति ॥ तदा, कश्चित् केसरी सिंहः, सहयं साश्वं, प्रसेन, हत्वा, मणिं, आच्छिद्याकृष्य गृहीत्वेत्यर्थः । गिरिं, विशन् प्रविशन् सन्, मणिं, इच्छता जाम्बवता ऋक्षराजेन, हतः ॥१४॥ सोऽपीति ॥ स जाम्बवान् अपि, बिले स्वनिवासभूते गिरिबिले. मणिं कुमारस्य स्वपुत्रस्य, क्रीडनकं क्रीडासाधनं, चक्रे । भ्राता प्रसेनबन्धुः सत्राजित्, भ्रातरं प्रसेनं, अपश्यन् मणिं चेति शेषः । पर्यतप्यत परितप्तः सन्नाहेत्यर्थः ॥ १५ ॥ प्राय इति ॥ मणिर्ग्रीवायां यस्य सः, वनं गतः, मम भ्राता प्रसेनः प्रायः बहुधा ध्रुवमिति यावत् । कृष्णेन, निहतः । इति तद्वचः, जनाः, श्रुत्वा, कर्णे कर्णे, अजपन् उपांश्ववोचन् ॥ १६ ॥

### कृष्णप्रिया

यह मणि सामान्य मनुष्यको धारण करने योग्य न था । और सत्राजित की मृत्यु निवारण के लिये जब तक अमङ्गल काल दूर न हो जाय तब तक राजा उग्रसेन को देने के लिये कहा था । आज उसी मणि को अपने गले में बांध कर भाई प्रसेन ने अश्वारोहण किया और मृगया करने के लिये वन में प्रस्थान किया ॥ १३ ॥ उस वन में अश्वसहित प्रसेन को सिंह ने मार दिया और मणि लेकर चल पड़ा । वह केसरी मणि लेकर गुहा में प्रवेश करता तब ही मणि की लालसा से श्रीजाम्बवान ने सिंह का शिकार किया ॥ १४ ॥ जाम्बवान्‌जी अपनी गुफा में गये वहाँ जाकर जाम्बवान ने अपने बच्चे को खेलने के लिये दे दी । यहाँ द्वारिका में प्रसेन के न लौटने से सत्राजिन को अत्यन्त दुःख हुआ ॥ १५ ॥ सत्राजित सबको कहने लगा अधिकतर सम्भावना है कि श्रीकृष्ण ने ही मेरे भाई प्रसेन को मार दिया होगा । क्योंकि प्रसेन मणिको कण्ठ में पहनकर वन में गया था । सत्राजित की इस वार्ता को सुनकर द्वारिका निवासी लोग परस्पर काना-फूंसी करने लगे ॥ १६ ॥

**भगवांस्तदुपश्रुत्य दुर्यशो लिप्तमात्मनः[1] । मार्ष्टुं प्रसेनपदवीमन्वपद्यत नागरैः ॥ १७ ॥**
**हतं प्रसेनमश्वं च वीक्ष्य केसरिणा वने । तं चाद्रिपृष्ठे निहतमृक्षेण ददृशुर्जनाः ॥ १८ ॥**
**ऋक्षराजबिलं भीममन्धेन तमसाऽऽवृतम् । एको विवेश भगवानवस्थाप्य बहिः प्रजाः ॥ १९ ॥**
**तत्र दृष्ट्वा मणिश्रेष्ठं बालक्रीडनकं कृतम् । हर्तुं कृतमतिस्तस्मिन्नवतस्थेऽर्भकान्तिके ॥ २० ॥**

---

१. मात्मनि–श्रीधर. वंशी. जीव. वीर. विज. विश्व शुक. सु. ।

## कर्दमक्षमा

अन्वयः—भगवान्, आत्मनि, लिप्तम्, तद्, दुर्यशः, मार्ष्टुम्, नागरैः, सह, प्रसेनपदवीम्, अन्वपद्यत ।। १७ ।। जनाः, प्रसेनम्, अश्वम्, च, केसरिणा, हतम्, वीक्ष्य, च, तम्, केसरिणम्, आदिपृष्ठे, ऋक्षेण, निहतम्, ददृशुः ।। १८ ।। अन्धेन, तमसा आवृतम्, भीमम्, ऋक्षराजविलम्, भगवान्, प्रजाः, वहिः स्थाप्य, एकः, विवेश ।। १९ ।। तम्, मणिश्रेष्ठम्, बालक्रीडनकम्, दृष्ट्वा, हर्तुम्, कृतमति, तस्मिन्, अर्भकान्तिके, अवतस्थे ।। २० ।।

## श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

लिप्तं लग्नम् । मार्ष्टुं शोधयितुं, द्रष्टुमिति यावत् । भगवान सर्वसद्यशोयुक्तः । लोकपरम्परया उद्धवमुखेन श्रुत्वा । नागरैस्तैरेवानुव्रजत् ।। १७ ।। तं केसरिणम् । अद्रेर्ऋक्षवतः । पृष्ट उपरि । जनास्त एव ददृशुरित्यपवादतो विशुद्धिस्ततोऽभूदिति भावः ।। बिलं वासस्थानं गुहाम् "बिलं छिद्रे गुहायां च पुमानुच्चैःश्रवोहये" इति मेदिनी । तथापि सत्राजितल्लेपणाद्यर्थं रत्नमादातुमृक्षपदान्यनुगच्छंस्तं बिलं प्राप्त इति प्राह—ऋक्षेति । अन्धेनांधीकारकेण तत ऋक्षसम्बन्धित्वाच्च भयानकमत एव बहिर्बिलद्वारे प्रजा नागरजनानवस्थाप्य, यतो भगवान् परमदयादिगुणसागर इत्यर्थः ।। १९ ।। तत्र बिले । बालस्य क्रीडनकं कृतम् । तदुक्तं हरिवंशे—"सिंह प्रसेनमवधीत्सिंहो जांबवता हतः । सुकुमारक मा रोदीस्तव ह्येष स्यमंतकः ।" इत्येवं वदन्ती धात्री बालं क्रीडयतीति । अयमेव श्लोको धर्मशास्त्रतिथिनिर्णये भाद्रसितचतुर्थीचंद्रदर्शनदोषशांतये एकविंशत्यावृत्त्या पठनीयत्वेनोक्तः । तस्मिन्बिले । अर्भकांतिके बालसमीपे । तत्र बिले । हर्तुं छलेन ग्रहीतुम् । अवतस्थेऽवसरप्रतीक्षां चक्रे ।। २० ।।

## श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी

भगवान् सकलसद्यशोयुक्तः उपश्रुत्य लोकपरम्परया श्रीमदुद्धवादिमुखेन श्रुत्वा नागरैस्तैरेवाऽन्वव्रजत् ।।१७।। विशेषेण साक्षात्तल्लक्षणनिर्द्धारणेनेक्षित्वा तं केसरिणं अद्रेर्ऋक्षवतः पृष्ठे उपरि जनास्त एव ददृशुरित्यपवादतो विशुद्धिस्ततोऽभूदिति भावः ।। १८ ।। तथाऽपि विशेषतः सत्राजितह्रेपनाद्यर्थं रत्नमादातुमृक्षपदान्यनुगच्छंस्तं बिलं प्राप्त इत्याह—ऋक्षेति । अन्धेन अन्धीकारकेण तत ऋक्षसम्बन्धित्वाच्च भयानकम् अत एव बहिर्बिलद्वारे प्रजाः नागरजनानावस्थाप्य यतो भगवान् परमदयादिगुणसागर इत्यर्थः ।। १९ ।। तत्र बिलं तं मणिश्रेष्ठं बालक्रीडनकं यथा स्यात्तथा कृतं दृष्ट्वा हर्त्तुं छलेन गृहीतुं तस्मिन्नेवार्भकान्तिके स्थानविशेषेऽवतस्थे अन्वेषणाद्विरम्याऽवसरप्रतीक्षां चक्र इत्यर्थः ।। २० ।।

## श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी

भगवान् सर्व्वसद्यशोयुक्तः, उप श्रीमदुद्धवादिमुखेन समीपे श्रुत्वा नागरैरन्वपद्यत अन्वव्रजत् ।। १७ ।। विशेषेण साक्षात्तल्लक्षणादिनिर्द्धारेणेक्षित्वा तं केशरिणमद्रेः ऋक्षवतः पृष्ठे उपरि; जना ददृशुरिति जनापवादतो विशुद्धिस्ततोऽभूदिति भावः ।। १८ ।। तथापि रत्नार्थमृक्षपदान्यनुगच्छंस्तद्बिलं प्राप्त इत्याह—ऋक्षेति । अन्धेन दृष्टिलोपकेन निविडेन व्याप्तम्, अतो भीमम्, अतएव बहिर्बिलद्वारे प्रजा नागरजनानवस्थाप्य, यतो भगवान् परमदयालुरित्यर्थः ।। १९ ।। तत्र बिले दृष्ट्वा, हर्तुं बलादाच्छेत्तुम्, तस्मिन् बिल एवावतस्थे । अन्वयभेदादपौनरुक्त्यम् । यद्वा, तस्मिन् विचित्रक्रीड़नकादिनानिर्वचनीयेऽर्भकान्तिके ।।२०।।

## श्रीमद्वीरराघवाचार्यकृता भागवतचन्द्रचन्द्रिका

क्रमेण भगवानपि तद्वच आकर्ण्य आत्मनि स्वस्मिन् दुर्यशो लिप्तं भावे क्तः दुर्यशोलेपं प्रमार्ष्टुम् अपोहितुं नागरैर्जनैः सह प्रसेनपदवीम् अन्वपद्यत अन्वगच्छत् ।।१७।। हतमिति केसरिणं चाद्रिपृष्ठे ऋक्षेन जाम्बवता निहतं ददृशुः ।।१८।। ऋक्षराजबिलमिति, ततस्तत्र बिलद्वारे प्रजाःनागरान् जनानवस्थाप्य भगवानेकोऽसहाय एव तद्बिलम्प्रति विवेश ।। १९ ।। तत्रेति, तत्र बिले क्रीडनकं क्रीडासाधनं यथा तथा कृतं मणिश्रेष्ठं दृष्ट्वा हर्त्तुं कृता निश्चिता मतिर्येन स तस्मिन् अर्भकसमीपे उपतस्थे ।। २० ।।

## श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

ऋक्षेण जाम्बवता ।। १८–२३ ।।

## श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शिनी

बालस्य क्रीडनः यतः तथाभूतं ज्ञात्वा ।। २० ।।

## गूढार्थदीपिनी

दुर्यशो मार्ष्टुं शाधयितुम् । लिप्तं लग्नम् ।। १७ ।। तं केसरिणम् ।। १८ ।। अन्धेन गाढेन ।। १९ ।। तत्र बिले । अवतस्थेऽवसरप्रतीक्षां चक्रे ।। २० ।।

## श्रीमद्वल्लभाचार्य्यकृता सुबोधिनी

पूर्वं भगवान् विदितवृत्तान्तोऽपि लोकन्यायेनैव व्यवहरन् स्वयमपि श्रुत्वा आप्तमुखात् तत्प्रतीकारार्थं यत्नं कृतवानित्याह भगवानिति। तद्वृत्तान्तं श्रुत्वा आप्तमुखात् अकस्माद्वा उपश्रुत्य। उपश्रुतिः सर्वानेव ज्ञापयति। ततस्तत्प्रतीकारार्थं प्रवृत्त इति वक्तुं निराकरणीयत्वे हेतुमाह **दुर्यशो लिप्तमिति**। दुर्यशस आलिप्तमालेपनं लेपवदुपर्यपि प्रतिभासनम्। **आत्मन** इति। यदि भगवान् न दूरीकुर्यात्, सर्वेषामात्मा स्वयमिति तद्दोषे कस्यापि मुक्तिर्न भवेत्। अतो युक्तमेव तन्निराकरणम्। तल्लोकन्यायेनैव कर्तव्यमिति प्रसेनपदवीं नागरैः पदमार्गाभिज्ञैः तद्गतमार्गमन्वपद्यत। तेनैव मार्गेण स्वयं नागरैः सह गतः। अन्यथा लोकः कृत्रिमं जानीयात्॥ १७॥ ततस्तं दृष्टवानित्याह **हतं प्रसेन**मिति। केसरिनखानां चिह्नदर्शनात् केसरिणैव हतं ज्ञातवन्तः। ततो मणिरप्यस्मै देय इति, यादवः स्वगोत्रजो मारित इति, पदाभिज्ञैरेव केसरिमार्गमन्वगमत्। तं चापि अद्रिपृष्ठे पर्वतोपरि निहतं ददृशुः सर्व एव जनाः। तत्रापि ऋक्षेण ऋक्षपदचिह्नैस्तज्ज्ञानम्॥ १८॥ ऋक्षान्वेषणार्थं भगवान् प्रवृत्त इत्याह ऋक्षराजबिलमिति। यद्यपि भगवान् भक्तार्थमेव तत्र प्रविष्टः, तथापि लोके मण्यर्थं कष्टमपि कृतवानिति ज्ञापयितुं तस्मिन्बिले प्रविष्टः। ननु ऋक्षः प्राकृतः पशुः, भगवांस्तत्र किमर्थं गत इत्याशङ्क्याह **रा**जेति। ऋक्षाणां राजा महानेव भवति। तत्रान्यस्य प्रवेशाभावाय विशिनष्टि **भीममन्धेन तमसावृत**मिति। अन्तःकरणस्य इन्द्रियाणां च प्रवृत्त्यभावाय विशेषणद्वयम्। अन्धतमः कदापि सूर्यतेजोरहितम्। अनेन मणिनापि तत्र प्रकाशो न कृत इति सूचितम्। अतो भगवान् अन्यान् स्थापयित्वा दयावन्तमिवात्मानं ज्ञापयित्वा। साधारणत्वादसमर्थत्वादनियामकत्वाच्च ताभिर्भगवन्निवारणं न कृतमिति ज्ञापयितुं प्रजापदम्। साधारणास्तु ततो निवृत्ता इति ज्ञापयितुं प्रजानामेवावस्थापनमाह। प्रायश्चित्तमेकेनैव कर्तव्यमिति मर्यादां पालयन्निव भगवानेक एव प्रविष्टः। यादवा अपि भगवदिच्छया अकीर्त्यापि शङ्किता न सङ्गे गताः॥ १९॥ तत्र प्रविष्टस्य मणिदर्शनमाह **तत्र दृष्ट्वेति**। यद्यपि तत्र नागलोकमणयः अन्येऽपि दिव्याः सन्ति, ततः स्यमन्तकपरिज्ञानं कठिनम्, तथापि स्वत एवोत्तममिति लौकिकेनापि प्रकारेण ज्ञातुं शक्यमिति ज्ञापयितुं **मणिश्रेष्ठ**मित्युक्तम्। तथापि मणिः गुप्त एव स्थाने स्थाप्यत इति भगवान् लौकिकप्रकारेण कथं दृष्टवान्, तत्राह **बालक्रीडनक**मिति। बालस्य क्रीडार्थमुपरि निबद्धमित्यर्थः। पुराणान्तरे तु स्यमन्तकमणिज्ञापकं वाक्यमपि श्रुतवानित्युक्तम्। तत्र धात्री बालं लालयन्ती आह। 'सिंहः प्रसेनमवधीत् सिंहो जाम्बवता हतः। सुकुमारक मा रोदीस्तव ह्येष स्यमन्तक' इति। अतो लौकिकेनापि प्रकारेण ज्ञात्वा अपकीर्तिनिराकरणार्थमिदं हर्तव्यमिति स्वाभाविकं चैतस्य न भवतीति, उपयोगश्च तथा नास्तीति, बालप्रबोधो वर्णमात्रेणापि भवतीति, पूजाभावात् धनप्रसवो नास्तीति, सुवर्णेनाप्युपयोगाभाव इति, अक्लिष्टकर्मापि पामरा न प्रष्टव्या इति स्वयमेव हर्तुं कृतमतिर्जातः। ततो मत्यैव सर्वा सामग्री अक्लिष्टत्वाय सम्पादितेत्याह। आदौ भगवान् अर्भकान्तिके तूष्णीं कियत्कालमवतस्थे, न तु गृहीत्वा ततो निर्गतः। चौर्यादिना जीवन् अपथप्रवृत्तः महानपि भक्तोऽपि विषयासङ्गात् प्राकृतो जातः। अतस्तत्सम्बन्धात् तदीया अपि प्राकृता एव जाताः॥ २०॥

## श्रीसुबोधिनी–सारः

आत्मनि स्वस्मिन् लिप्तं तद्दुर्यशो मिथ्याकलंकं श्रुत्वा मार्ष्टुं शुद्ध्यर्थं प्रसेनस्य पदवीं मार्गं नागरैर्नगरीस्थजनैः सह भगवानन्वगमत्॥ १७॥ वने केसरिणा लेयेन हतं प्रसेनमश्वं च वीक्ष्य दृष्ट्वा ऋक्षेण भल्लूकेनाद्रेः पृष्ठे निहतं तं सिंहं जना ददृशुः॥ १८॥ अंधेन तमसा गाढेनांधकारेणावृतं व्याप्तम् ऋक्षराजस्य जांबवतो बिलं भीमं शतयोजनविस्तृतत्वात् प्रजा बहिरवस्थाप्य एको भगवान् विवेश। एतेन "सुखे सर्वे न वै कस्यापदि के स्वार्थतत्पराः" इति लोके व्यवहारः सूचितः॥ १९॥ तत्र बिले बालस्य क्रीडनकं कृतं मणिश्रेष्ठं स्यमंतकं दृष्ट्वा हर्तुं कृतबुद्धिः तस्मिन् मणौ अर्भकस्य बालकस्यांतिके समीपेऽवतस्थे॥ २०॥

## गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

क्रमेण भगवानपि तद्वच उपश्रुत्य आत्मनि स्वस्मिन् लिप्तं दुर्यशो मार्ष्टुं अपोहितुं नागरैर्जनैः सह प्रसेनस्य पदवीमन्वपद्यत अन्वेषणार्थमन्वगमत्॥ १७॥ हतमिति स्पष्टम्। तं केसरिणं चाद्रिपृष्ठे ऋक्षेण जाम्बवता निहतं जना ददृशुः॥ १८॥ ततो बहिर्बिलद्वारे प्रजाः नागरान् जनानवस्थाप्य भगवानेक एव ऋक्षराजबिलं विवेश। अन्यप्रवेशाशक्यत्वं तत्र हेतुं द्योतयन्नाह—भीममिति। तत्र हेतुमाह—अन्धेन गाढेन तमसा वृतमिति॥ १९॥ तत्र बिले बालस्य क्रीडनकं क्रीडासाधनं कृतं मणिश्रेष्ठं दृष्ट्वा हर्तुं कृता निश्चिता मतिर्येन स भगवान् तस्मिन् बिले अर्भकस्यान्तिके समीपेऽवतस्थे॥ २०॥

## अन्वितार्थप्रकाशिका

भगवानिति॥ क्रमेण भगवानपि तद्वच उपश्रुत्य आत्मनि स्वस्मिन् लिप्तं दुर्यशो मार्ष्टुम् अपोहितुं नागरैर्नगरभवैर्जनैः सह प्रसेनस्य पदवीमन्वपद्यत अन्वेषणार्थमन्वगमत्॥ १७॥ हतमिति॥ वने केसरिणा हतं प्रसेनमश्वं च दृष्ट्वा तं केसरिणं

चाद्रिपृष्ठे ऋक्षवन्नाम्नोऽद्रेरुपरि ऋक्षेण जाम्बवता निहतं जना ददृशुः। जनास्तत्रेत्यपवादशुद्धिः ॥ १८ ॥ ऋक्षेति ॥ ततो बहिर्बिलद्वारे प्रजाः नागरान् जनानवस्थाप्य भगवानेक एव अन्धेन गाढेन तमसा वृतमतो भीमम् ऋक्षराजबिलं विवेश ॥ १९ ॥ तत्रेति ॥ तत्र बिले बालस्य क्रीडनकं क्रीडासाधनं कृतं मणिश्रेष्ठं दृष्ट्वा हर्तुं कृता निश्चिता मतिर्येन स भगवान् तस्मिन् बिले अर्भकस्यान्तिके समीपेऽवतस्थे ॥ २० ॥

**श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्**

लिप्तं प्राप्तं प्रसेनस्य सत्राजिद्भ्रातुः पदवीं मार्गं ॥ १७–२७ ॥

**भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी**

भगवानिति ॥ भगवान् श्रीकृष्णः, तद्वचः उपश्रुत्याकर्ण्य, आत्मनि स्वस्मिन्, लिप्तं, भावे क्तः। दुर्यशः, मार्ष्टुमपोहितुं, नागरैः नगरस्थजनैः सह, प्रसेनपदवीं, अन्वपद्यत अन्वगच्छत् ॥ १७ ॥ हतमिति ॥ वने केसरिणा सिंहेन, हतं प्रसेनं, अश्वं च वीक्ष्य, तं प्रसेनाश्वयोर्हन्तारं केसरिणं च, अद्रिपृष्ठे अद्रेः पृष्ठप्रदेशे, ऋक्षेण जाम्बवता, निहत प्रजाः, ददृशुः ॥ १८ ॥ ऋक्षेति ॥ भगवान् श्रीकृष्णः, प्रजाः, बहिः अवस्थाप्य, भीममतिभयंकरं, अन्धेन तमसा, गाढध्वान्तेनेत्यर्थः। आवृतं ऋक्षराजबिलं, एकः स्वयमेकाक्येव, विवेश ॥ १९ ॥ तत्रेति ॥ तत्र बिले बालक्रीडनकं कृतं, मणिश्रेष्ठं, दृष्ट्वा, हर्तुं, मण्याहरणं कर्तुं कृतमतिः भगवान्, तस्मिन् बिले अर्भकान्तिके, अवतस्थे ॥ २० ॥

**कृष्णप्रिया**

यह काना-फूंसी भगवान् श्रीकृष्ण ने सुना कि यह प्रसेन वध का कलङ्क टीका मेरे ही सर पर लगाया है, तब इस अपवाद के संशोधन के ही निमित्त नगर के सभ्यजनों को साथ में लेकर प्रसेन की पद्वी को ढूंढने के लिये वन में पधारे ।।१७।। वन में खोजते-खोजते सर्व सभ्यजनों ने अपने नेत्रों से देखा कि इस घोर जंगल में किसी केसरी ने प्रसेन यादव का और अश्व का वध कर दिया है। अब वे सब सभ्य जन सिंह की पद्वी को देखते हुए वन में आगे बढ़े तब इन सब सभ्यजनों ने देखा की पर्वत पर किसी एक रींछ ने सिंह का शिकार कर दिया है ॥ १८ ॥ भगवान श्रीकृष्ण सभ्यों के साथ ऋक्षराज की तलास में चले। वहाँ अन्धकार से परिपूर्ण ऋक्षराज जाम्बवानजी की भयङ्कर गुफा देखी। प्रभु ने सब सभ्यों को बाहर ठहराये और इस भयानक बिल में भगवान अकेले ही गये ॥ १९ ॥ जाम्बवानजी की गुफा में भगवान पहुँचे तब वहाँ देखा कि यह स्यमन्तक मणि तो बच्चों का खिलौना बन गयी थी। बच्चों के खिलौना स्वरूप मणि को लेने भगवान मणि के समीप पहुँचे ॥ २० ॥

**तमपूर्वं नरं दृष्ट्वा धात्री चुक्रोश भीतवत्। तच्छ्रुत्वाभ्यद्रवत् क्रुद्धो जाम्बवान् बलिनां वरः ॥ २१ ॥**
**स वै भगवता तेन युयुधे स्वामिनाऽऽत्मनः। पुरुषं प्राकृतं मत्वा कुपितो नानुभाववित् ॥ २२ ॥**
**द्वन्द्वयुद्धं सुतुमुलमुभयोर्विजिगीषतोः। आयुधाश्मद्रुमैर्दोर्भिः क्रव्यार्थे श्येनयोरिव ॥ २३ ॥**
**आसीत्तदष्टाविंशाहमितरेतरमुष्टिभिः। वज्रनिष्पेषपरुषैरविश्रममहर्निशम् ॥ २४ ॥**

**कर्दमक्षमा**

अन्वयः—तम्, अपूर्वम्, नरम्, दृष्ट्वा, भीतवत्, धात्री, चुक्रोश, तत्, श्रुत्वा, बलिनाम्, वरः, क्रुद्धः, जाम्बवान्, अभ्यद्रवत् ॥ २१ ॥ कुपितः, न, अनुभाववित्, कुपितः, सः, "सत्राजित्", प्राकृतं, पुरुषम्, मत्वा, सः, आत्मनः, स्वामिना, भगवता, सह, युयुधे ॥ २२ ॥ क्रव्यार्थे, विजिगीषतोः, श्येनयोः, इव, आयुधाश्मद्रुमैः, दोर्भिः, विजिगीषतोः, उभयोः, वज्रनिष्पेषपरुषैः, इतरेतर, मुष्टिभिः, अष्टविंशाहम्, अविश्रमम्, अहर्निशम्, सुतुमुलम्, द्वन्द्वयुद्धम्, आसीत् ॥ २३–२४ ॥

**श्रीधरस्वामिविरचिता भावार्थदीपिका**

क्रव्यार्थे आमिषार्थं ॥ २३ ॥ अष्टाविंशाहम् अष्ट च विंशतिश्चाहानि दिनानि यस्मिंस्तदष्टाविंशाहम्। विंशतिशब्दे तिलोप आर्षः। वज्रस्य निष्पेषो निर्घातस्तद्वत्परुषैर्निष्ठुरैः ॥ २४ ॥

**श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः**

तं श्रीकृष्णम्। अपूर्वमदृष्टपूर्वम्। यद्वा–ओऽकारः पूर्वो यस्य नाम्नस्तमच्युतमनंतं वेत्यर्थः। धात्र्युपमाता माता वा "धात्री जनन्यामलकी वसुमत्युपमातृषु" इति मेदिनी। तद् धात्र्याक्रोशवचः। बलिनां वरो रामरावणयुद्धेऽपि युद्धे तृप्तत्वात्। नरं तत्राप्यपूर्वं वीर्यशोभादिभिरद्भुतम्। वतिप्रयोग आगंतुकतया शंकास्पदत्वेऽपि सौम्यदर्शनत्वेनातिभयानुत्थानात्। अभ्यद्रवद्वेगेनागतः। वस्तुतस्तु न भीता तद्दर्शनस्वाभावेनैवोनंदोदयादिति विश्वनाथः ॥ २१ ॥ स जांबवान्। तेन श्रीकृष्णेन। स्वामिनेति

पूर्वावताराभिप्रायेण। प्राकृतं मत्वा कुपित इति। केशिचाणूरकंसजरासंधादिभिरल्पबलैर्भगवतो युद्धसुखं क्वापि नाभूदतः समबलेन स्वभृत्येन तेन सह युयुत्सोर्भगवतो युद्धसुखसिद्ध्यर्थमेव तद्भक्ताय जांबवते पूर्वं रावणसेनाभिरपि सम्यग्वीररससुखमप्राप्तवते तत्सुखपूर्तिदानार्थं लीलाशक्त्या योगमायाद्वारा भक्तमपि जांबवन्तं प्रति तन्माधुर्यावरणं ज्ञेयम् ॥ २२ ॥ 'क्रव्यं मांसपिशाचयोः' इति कोशात्। द्वंद्वेति युग्मकम्। तद्द्वंद्वयुद्धमष्टाविंशाहमासीदित्यन्वयः। सुतुमुलमत्यंतसंकुलं, हननविरामरहितमित्यर्थः। यतो विशेषतो जिगीषतोः। अत्र भगवतो लीलाकौतुकाज्जिगीषा, जांबवतश्च महाबलिष्ठत्वाभिमानादिति ज्ञेयम्। दोर्भिरिति प्रत्येकभुजद्वयात् ॥ २३ ॥ तत् द्वंद्वयुद्धम्। अविश्रमं निरंतरम्। इतरेतरमुष्टिभिश्चेति च शब्द अध्याहार्यः। बहुदिनयुद्धेनायुधानां क्षयाज्जयाऽसिद्ध्या तेष्वनादराद्वा ॥ २४ ॥

### श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी

नरं तत्राप्यपूर्वं वीर्य्यसौन्दर्य्या ( शोभा ) दिभिरद्भुतं रतिप्रयोग आगन्तुकतया शङ्कास्पदत्वेऽपि सौम्यदर्शनत्वे ज्ञातिभयानुत्थानात् आभिमुख्येनाद्रवत् वेगेनागतः ॥ २१ ॥ तेनांशतः श्रीरामादिरूपेण पुरुषं नराकारब्रह्मरूपं तं प्राकृतं मायिकं मत्वा यतो नानुभाववित् तत्प्रभावानुसन्धानरहितः कुतः कुपितः क्रोधेन विचारलोपात् ॥ २२ ॥ द्वन्द्वेति युग्मकम् तद्द्वन्द्वयुद्धमष्टाविंशाहमासीदित्यन्वयः सुतुमुलमत्यन्तसङ्कुलं हननविरामरहितमित्यर्थः। यतो विशेषेण जिगीषतोः तत्र श्रीभगवतो लीलाकौतुकाज्जिगीषा जाम्बवतश्च महाबलिष्ठताभिमानादिति ज्ञेयं दोर्भिरिति प्रत्येकभुजद्वयात् इतरेतरमुष्टिभिश्चेति च शब्द आहार्य्यः बहुदिनयुद्धेनायुधादीनां क्षयात् जयाऽसिद्ध्या तेष्वनादराद्वा अहर्निशं तत्राप्यविश्रमम् अविरतम् ॥ २३-२४ ॥

### श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी

अपूर्वमदृष्टपूर्वमद्भुतं वा, सर्वथा सर्वतो वैलक्षण्यात्। भीतवदिति जाम्बवत्प्रभावेण वस्तुतो भयाभावात्, यद्वा, लौकिकोक्तिरीत्यानधिकार्थता, भीता सती, क्रुद्धः सन् अभिमुखेऽद्रवत्, वेगेनागतः, यतो बलिनां मध्ये वरः ॥ २१ ॥ तेन श्रीकृष्णेन, अनेनेति पाठेऽपि स एवार्थः। वै अपि, भगवता सर्व्वैश्वर्य्ययुक्तेनापि आत्मनः स्वामिनापि, स्वभावतो वैष्णवत्वाद्विशेषतश्च श्रीरघुनाथावतारे बहुसेवनात् प्राकृतं लौकिकं मत्वा, यतः कुपितः, यतो नानुभाववित् तत्प्रभावानभिज्ञः, यद्वा, यतस्तत्प्रभावानुसन्धानरहितः ! कुतः ? कुपितः क्रोधेन विचारलोपात् ॥ २२ ॥ सुतुमुलमत्यन्तसंकुलम्, यतो विशेषेण जिगीषतोः, तत्र श्रीभगवतो लीलाकौतुकात्, जिगीषा जाम्बवतश्च महाबलिष्ठाभिमानादिति ज्ञेयम्। दोर्भिरित्युभयोः प्रत्येकं भुजद्वयात्, आयुधादीनां पूर्व पूर्वस्य क्षयेणोत्तरोत्तरत्र प्रवृत्त्या तत्तत्क्रमेण निर्द्देशः, तत् द्वन्द्वयुद्धम्, मुष्टिभिरिति बहुदिनयुद्धेनायुधादीनां क्षयात् जयासिद्ध्या तेष्वनादराद्वा, किंवा युद्धावेशेनान्योन्यमतिसंलग्नत्वात्। अहर्निशं तत्राप्यविश्रममविरतं तेन भोजनपानादि-राहित्यं सूचितम् ॥ २३-२४ ॥

### श्रीमद्वीरराघवाचार्यकृता भागवतचन्द्रचन्द्रिका

तमिति तमुपस्थितमदृष्टपूर्वं नरं दृष्ट्वा भीतवद्धात्री उपमाता चुक्रोश तच्छ्रुत्वेति तदाक्रोशनम् अभ्यद्रवत् अभ्यधावत् ॥ २१ ॥ स वै जाम्बवान् नानुभावविद् भगवत्प्रभावमजानन् अत एव तं केवलं प्राकृतं लौकिकं पुरुषमेव मत्वा आत्मनः स्वस्य स्वामिनापि तेन भगवता सह युयुधे अयुध्यत ॥ २२ ॥ द्वन्द्वयुद्धमिति। विजिगीषतोर्जेतुमिच्छतोर्दोर्भिर्भुजैर्यथाक्रव्यार्थे आमिषार्थं श्येनयोर्युद्धं भवति तद्वत् ॥ २३ ॥ आसीदिति इतरेतरयोरन्योन्ययोर्मुष्टिभिर्वज्रनिष्पेषो वज्रनिर्घातस्तद्वत्निष्ठुरैस्तद्द्वन्द्वयुद्धम्, न विद्यते बिश्रमो यस्मिन् तद्यथा तथा अहर्निशमष्टाविंशतिदिनान्यासीत् ॥ २४ ॥

### श्रीविजयध्वजतीर्थकृता पदरत्नावली

अविश्रमं निरन्तरम् ॥ २४-२५ ॥

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः

तमपूर्वं नरं दृष्ट्वेत्यादि। अपूर्वं नरं नराकारत्वेऽपि अनरमित्यर्थः ॥ २१-३५ ॥

### श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः

तमपूर्वं नरं दृष्ट्वेत्यादि। अपूर्वनरं नराकारत्वेऽप्यनरमित्यर्थः ॥ २१-३५ ॥

### श्रीनाथचक्रवर्तिपादविरचिता चैतन्यमतमञ्जूषा

तमपूर्वं नरं नरमीश्वरमिति यावद् ॥ २१-३५ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

भीतवच्चुक्रोशेति हरेर्जिहीर्षामिवालक्ष्येत्यर्थः। वस्तुतस्तु न भीता तद्दर्शनस्वभावेनैवानन्दोदयात् ॥ २१ ॥ प्राकृतं मत्वा कुपित इति। केशिचाणूरकंसजरासन्धादिभिरल्पबलैर्भगवतो युद्धसुखं क्वापि नाभूदतः समबलेन स्वभृत्येन तेन सह युयुत्सोर्भगवतो युद्धसुखसिद्ध्यर्थमेव तद्भक्ताय जाम्बवतेऽपि पूर्वं रावणसेनाभिरपि सम्यग्वीररससुखमप्राप्तवते तत्सुखपूर्त्तिदानार्थं लीलाशक्त्या योगमायाद्वारा भक्तमपि जाम्बवन्तं प्रति तन्माधुर्यावरणं ज्ञेयम् ॥ २२ ॥ क्रव्यार्थे आमिषार्थे ॥ २३ ॥ अष्टविंशाहमित्यार्षम् अष्टविंशतिदिनानि व्याप्य रात्रिष्वपि युद्धप्राप्त्यर्थमाह—अहर्निशमिति। तत्रापि क्षणमात्रस्यापि विश्रामस्याभावार्थमाह— अविश्रममिति। निष्पेषो निर्घातः ॥ २४ ॥

### गूढार्थदीपिनी

धात्री उपमाता ॥ २१-२२ ॥ द्वन्द्वेति युग्मम्। क्रव्यार्थे मांसार्थे। श्येनो बाजाख्यः पक्षी। अविश्रमं निरन्तरम्। वज्रनिष्पेषो वज्रपातस्तद्वत् कठोरैः ॥ २३-२४ ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

क्रव्यार्थे आमिषार्थे श्येनयोर्यथा भवति तथा तयोः ॥ २३ ॥ अष्टविंशाहं अष्ट च विंशतिश्च अहानि दिनानि यस्मिंस्तत् विंशतिशब्दे तिलोप आर्षः न विद्यते विश्रमो यस्मिन् तत् वज्रस्य निष्पेषो निर्घातस्तद्वत् परुषैर्निष्ठुरै ॥ २४ ॥

### श्रीमद्वल्लभाचार्य्यकृता सुबोधिनी

अतो भगवन्तं दृष्ट्वा सद्बुद्ध्यभावात् विषयाभिनिवेशाच्च विचारमकृत्वापि आक्रोशं कृतवतीत्याह **तमपूर्व**मिति। देवादीनामन्यतरश्चेद्वाक्स्तम्भनादिकमपि कुर्यादिति। तदभावात् भगवतो विलष्टकर्मत्वं ज्ञात्वा नरोऽयमिति ज्ञातवती। आकृतिवचनो वा नरशब्दः। स्वस्थस्याप्याक्रोशो भवतीति तद्व्यावृत्त्यर्थं पुत्रं वा मारयिष्यतीति बुद्ध्या जाम्बवानपि महानिति तथा भयाभावात् भीतवत् चुक्रोश। यतो धात्री बालकरक्षापरा। ततोऽन्तःकार्यान्तरव्यापृतोऽपि तद्वाक्यं श्रुत्वा समागत इत्याह **तच्छ्रुत्वे**ति। मदायतनेऽपि मण्यर्थं कः समागत इति क्रोधः। **जाम्बवा**निति नाम्ना प्रसिद्धो रामायणे बुद्धिविशेषे, तादृशोऽप्यविचार्य समागतः। तत्र हेतुर्बलाभिमान इति अभिप्रायेणाह **बलिनां वर** इति। बलिभिरपि वरणीय इत्यर्थः ॥ २१ ॥ एतादृशोऽपि कालादिवशादज्ञो भूत्वा भगवता सह युद्धं कृतवानित्याह **स वा** इति। स्वयमपि प्रसिद्धः, तथा कुर्वन् लोके अपकीर्तिमपि प्राप्स्यतीति सूचितम्। तत्रापि वै निश्चयेन। शारीरेण जीवस्याराध्यो भगवान्। तत्राप्यात्मनः स्वामिना स्वस्यैवोपास्यरूपेण। तत्कथमित्याकाङ्क्षायामाह **तेने**ति। रघुनाथेन। कृष्ण एव रघुनाथः, तामेव सर्वां सामग्रीं गृहीत्वा समागत इति। स एव लक्ष्मणो बलः। सैव सीता रुक्मिणी। ते वानरा यादवाः, सैवायोध्या द्वारका, सैव सरयूर्गोमतीति। तर्हि कथं युयुधे तत्राह **पुरुष**मिति। प्राकृतं पुरुषं मत्वा प्रकृत्यधिष्ठातारम्, न तु पुरुषोत्तमम्। ननु महतः कथमेतादृशमज्ञानमिति चेत्, तत्राह **कुपितो नानुभावविदि**ति। दृष्ट्वा क्रोधवशात् अलौकिकत्वं न ज्ञातवान्। पूर्वं तु कृतो गोवर्धनादेरनुभावो न श्रुतः। सत्सङ्गाभावात् बिलशयत्वाच्च। अतोऽनुभावानभिज्ञत्वात् कोपावेशाच्च स्वामित्वेनाज्ञात्वा युयुधे। अक्लिष्टकर्मा च भगवान्। अनुक्त्वैव स्वयं युद्धं कृतवान्। भगवत उत्तरार्धलीलायां प्रकृतिः कालादयश्चासहमाना जाताः। तेषां पीडार्थं, पुरुषं परित्यज्य सर्वे विशति तत्त्वानि, यथा काठिन्यं जहति, तथा मुष्टिप्रहारैः सेवककृतैः चलने पादाविव कोमलानि कृतानीत्येके। चिरकालं मल्लयुद्धाकाङ्क्षया तथा कृतमित्यन्ये। रामावतारे हि तस्मै वरो दत्तो रामेण 'त्वदाराधनं ग्रहीष्यामो'ति। पुनस्तेन विज्ञापनायां कृतायां बलं मदीयं व्यर्थं जायत इति। ततो भगवान् बुद्धिमिदानीं प्रकटीकुरु, बलं पश्चात्प्रकटीकरिष्यसीत्याह। न हि कश्चिज्जीवस्त्वत्पराक्रमं सोढुं शक्त इति। अतस्तत्र स्थापितां ज्ञानशक्तिं पूर्वावतारे गृहीत्वा इदानीं बलशक्तिमपि गृह्णन् पूजां गृहीत्वा तं मुक्तं करिष्यतीति तथा भगवदुद्योगः ॥ २२ ॥ ग्रहादिवशाज्जयो न जायत इति कदाचित्तस्य शङ्का स्यात्, अतस्तन्निराकरणार्थं सर्वेष्वेव नक्षत्रेषु युद्धं निरन्तरं कृतवानित्याह **द्वन्द्वयुद्ध**मिति। उभयोरेव युद्धं द्वन्द्वयुद्धं सम्यक् प्रकारेण, न तु नटवदभिनयमात्रेण। तुमुलमाधिकम्। प्रहारे सर्वबलविनियोगस्तुमुलता। **उभयोर्विजिगीषतो**रिति तथा करणे हेतुः। शीघ्रमेव प्रहारेण व्यथितः। युद्धं त्यजत्विति जतुमिच्छा अज्ञानाज्जाम्बवतः। जित एव जानातीति ज्ञापनार्थं भगवतः। तत्र युद्धसाधनान्यनेकान्याह **आयुधे**ति। आदौ नानाविधान्यायुधानि। महाशूरत्वात् भगवतेऽपि दत्वा युद्धं करोतीत्येके। यदेवायुधं जाम्बवान् गृह्णाति, तज्जातीयमेव भगवानाविर्भावयतीत्यपरे। यदेव प्रक्षिपति, तदेव गृहीत्वा तेन प्रहरतीति वस्तुस्थितिः। अश्मानस्तु सुलभाः, द्रुमाश्च। सर्वेष्वेव भग्नेषु पश्चाद्दोर्भिः। नन्वस्य युद्धस्य को विधिरिति चेत्, तत्र दृष्टान्तमाह **क्रव्यार्थे श्येनयोरिवे**ति। क्रव्यस्थानीयः स्यमन्तको मणिः, श्येनो वै वयसां बलिष्ठो भवति। यावत्स्यमन्तकप्राप्तिः, तावद्युद्धमित्यर्थः। अत्यावश्यकमाग्रहं च जनयतीति क्रव्यतुल्यता। क्रव्यमुत्कृष्टमपक्वं मांसं सर्वथा जीवनार्थमपेक्षितम्, तथा लोकापवादनिराकरणार्थं भगवतोऽपेक्षितम्।

तस्यापि भास्वरं जयेन प्राप्तमिति मोहादपेक्षितम्। क्षुत्पीडा च श्येनजातीयस्य गोमायोश्च नास्तीति बहूनर्थान् तुल्यान् दृष्ट्वा श्येनौ दृष्टान्तीकृतौ ॥ २३ ॥ एवं युद्धस्य कालमाह **आसीत्तदष्टाविंशाहमिति**। अष्टाविंशे दिवसे ज्ञानं जातमिति तदपि दिनं फलरूपं युद्धमध्ये गृहीतम्। इतरेतरमुष्टिभिः वज्रनिष्पेषादपि परुषैस्तद्युद्धं मध्ये विश्रामरहितम्। अहर्निशमिति ऐहिकावश्यककालकृतोऽपि विश्रामो नास्तीति सूचयति। भगवांस्तावत् प्रहारं करोति, यावत्स करोति, सोऽपि बलरूपो भवतीति वज्रनिष्पेषादपि तत्प्रहारः परुषः। अतस्तुल्यत्वात् न विरमणम्, नाप्येकस्य पराजयः। भक्तत्वाद्भगवतो न मारणीयः। भगवांस्त्ववशक्य एव। अत्र काचिद्विरुद्धा कथा। महामायोपस्थानस्याग्रे निरूपितत्वात् तेन विरोधादुपेक्षणीया। कल्पान्तरीयेत्यन्ये समादधुः ततः कालकृतं तस्य बलमिति सप्तविंशात्मके काले अतीते। प्राकृतबलपक्षेऽपि अष्टाविंशतिप्रकारं तद्बलमिति ॥ २४ ॥

## श्रीसुबोधिनी-सारः

अपूर्वं नूतनं तं नरं दृष्ट्वा धात्री बालपोषिकोपमाता भीतेव चुक्रोशाक्रोशं कृतवती। तदा क्रोशं श्रुत्वा बलिनां वरः श्रेष्ठः क्रुद्धो जांबवान् अभ्यागमत् ॥ २१ ॥ आत्मनः स्वामिना तेन भगवता स जांबवान् युयोध प्राकृतं पुरुषं मत्वा कुपितो न तस्यानुभाववित् ॥ २२ ॥ विजेतुमिच्छतोरुभयोः कृष्णजांबवतोर्द्वयोः सुतुमुलं संकीर्णं द्वंद्वयुद्धम् आसीत्। क्रव्यार्थे मांसार्थे श्येनयोः पक्षिणोरिव आयुधैः शस्त्रैरश्मभिः पाषाणैः द्रुमैर्वृक्षैर्दोर्भिर्हस्तैः ॥ २३ ॥ तदवधिमाह वज्रस्य निष्पेषो निर्घातस्तद्वत् परुषैर्निष्ठुरैरितरेतरमुष्टिभिरहर्निशं रात्रिदिनम् अविश्रमं निरंतरम् अष्टाविंशाहं यावत् तत् युद्धमासीत् ॥ २४ ॥

## विवरणटिप्पणी

**स वै भगवतेत्यत्र**। **उत्तरार्धलीलायामिति**। लोकधर्मपुरस्कारेणात्र लीलायां क्रियमाणायां लोकधर्मानुसरणं प्रकृतिः। सप्तविंशतिनक्षत्रात्मकः कालः, आदिपदेन कर्मस्वभावौ च। एते असहमाना जाता इत्यर्थः। **तेषामिति**। भगवता सेवके कृतैः सप्तविंशतितत्त्वकाठिन्यत्यागहेतुभिर्मुष्टिप्रहारैस्तत्त्वानां पीडार्थं युद्धं कृतवानिति पूर्वेण सम्बन्धः। **अतस्तत्रेति**। तत्रावतारे जाम्बवता ज्ञापितां शक्तिं सातामित्यर्थः। जनकानां ज्ञानप्रधानत्वात्सीतायाश्च तदन्वयस्थत्वाज्ज्ञानशक्तित्वमिति भावः। ग्रहादिवशादिति श्लोकद्वयस्याभास इति ज्ञेयम्। **द्वन्द्वेत्यत्र**। **जित एवेति**। मया जितो मदीय एव मत्स्वरूपं जानातीत्यर्थः।

## गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

अपूर्वं अदृष्टपूर्वं नरं तं कृष्णं दृष्ट्वा भीतवत् धात्रीं तन्माता चुक्रोश ॥ 'स्वस्वामिनि जाम्बवति महाबलिस्वाभिमानाद्वस्तुतस्तस्यापि भयं नास्तिः' इति सूचयितुं वतिप्रयोगः। तत्तस्या आक्रोशनं श्रुत्वा क्रुद्धो जाम्बवान् अभ्यद्रवत् अभ्याजगाम। क्रोधे आगमने च हेतुमाह—बलिनां वरः अतिबलवान् इति ॥ २१ ॥ स वै महाबलवत्तया प्रसिद्धो जाम्बवान् क्रुद्धः सन् तेन भगवता सह युयुधे। 'तेन सह युद्धं तस्यात्यन्तमनुचितम्' इत्याशयेनाह—आत्मनः स्वस्य स्वामिनेति। श्रीरामावतारे तस्य तत्सेवकत्वादित्याशयः। 'तर्हि किमिति युयुधे' तत्राह—प्राकृतं लौकिकं पुरुषं च मत्वा इति। 'तथाऽभिमानोऽपि कथम् ? गोवर्धनोद्धरणादितत्प्रभावस्य प्रसिद्धत्वात्' इत्याशङ्क्याह—नानुभावविदिति। तत्प्रभावमजानन्नित्यर्थः ॥ २२ ॥ उभयोस्तयोः सुतुमुलं असङ्कुचितं घोरं द्वन्द्वयुद्धं आसीदित्यन्वयः। 'विजिगीषतोर्जेतुमिच्छतोः' इति तुमुलत्वे हेतुरुक्तः। तत्र साधनान्याह—आयुधैर्गदादिभिः। अश्मभिः पाषाणैः। द्रुमैः। दोर्भिः भुजैः। वज्रस्य निष्पेषो निर्घातस्तद्वत्परुषैर्निष्ठुरैः इतरेतरयोर्मुष्टिभिश्चेति। तदवध्यपेक्षायां तद्दर्शयंस्तुमुलत्वं स्पष्टयति—अविश्रमं न विद्यते विश्रामो यस्मिंस्तत् अहर्निशं अष्टाविंशाहं अष्टाविंशतिदिनपर्यन्तमिति। तत्र दृष्टान्तमाह-क्रव्यार्थे इति। मांसार्थं यथा श्येनयोर्युद्धं भवति तथाऽनयोरपि मण्यर्थे युद्धमभूदित्यर्थः ॥२३-२४॥

## अन्वितार्थप्रकाशिका

तमिति ॥ अपूर्वं अदृष्टपूर्वं नरं तं कृष्णं दृष्ट्वा भीतवत् धात्री तन्माता हरेर्मणिजिहीर्षामालक्ष्य चुक्रोश। तत्तस्या आक्रोशवचनं श्रुत्वा क्रुद्धो बलिनां वरः जाम्बवान् अभ्यद्रवत् अभ्याजगाम ॥ २१ ॥ स इति ॥ स वै प्रसिद्धो जाम्बवान् कुपितः सन् नानुभाववित् तत्प्रभावमजानन् प्राकृतं लौकिकं पुरुषं मत्वा आत्मनः स्वामिना तेन भगवता सह युयुधे। जरासन्धादिभिरल्पबलैर्युद्धं सुखं क्वापि नाभूदतः समबलेन स्वभृत्येन युयुत्सोर्भगवतो लीलयैवेदं युद्धम् ॥ २२ ॥ द्वन्द्वेति युग्मम् ॥ विजिगीषतोः विजेतुमिच्छतोः। आर्षः शता। उभयोस्तयोः आयुधैर्गदादिभिः अश्मभिः पाषाणैः द्रुमैः दोर्भिर्भुजैः वज्रस्य निष्पेषो निर्घातस्तद्वत्परुषैर्निष्ठुरैः इतरेतरयोर्मुष्टिभिश्चेति अविश्रमं न विद्यते विश्रामो यस्मिंस्तत् अहर्निशम् अष्टाविंशाहम् अष्टाविंशतिदिनपर्यन्तम्। तिशब्दलोप आर्षः। सुतुमुलम् असङ्कुचितं घोरं द्वन्द्वयुद्धम् आसीत्। क्रव्यार्थे मांसार्थं यथा श्येनयोर्युद्धं भवति तथाऽनयोरपि मण्यर्थे युद्धमभूत् ॥ २३-२४ ॥

**श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्**

क्रव्यार्थे मांसार्थे ॥ २३ ॥ वज्रस्य निष्पेषः पातस्तद्वत् पुरुषैः कठोरैः अष्टौ च विंशतिश्चाहानिदिवसा यस्मिंस्तत् ॥ अष्टविंशत्यहं अत्र तिलोप आर्षः तत् युद्धं आसीत् ॥ २४ ॥

**भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी**

तमिति । धात्री कुमारस्योपमाता, तं तत्रावस्थितं, अपूर्वमदृष्टपूर्वं, नरं दृष्ट्वा, भीतवत्, चुक्रोश । तत्तद्धात्र्याः आक्रोशनं श्रुत्वा, क्रुद्धः, बलिनां वरः, जाम्बवान्, अभ्यद्रवदभ्यधावत् ॥ २१ ॥ स वा इति । स जाम्बवान्, यतोऽस्य नानुभाववित् प्रभावमजानन्, अत एव, कुपितः, प्राकृतं पुरुषं मत्वा, आत्मनः स्वस्य, स्वामिना तेन, भगवता, युयुधे वै ॥ २२ ॥ द्वन्द्वयुद्धमिति । विजिगीषतोर्जेतुमिच्छतोः, उभयोः, द्वन्द्वयुद्धं, क्रव्यार्थे आमिषार्थं, श्येनयोः पक्षिविशेषयोः इव, आयुधाश्मद्रुमैः दोर्भिर्भुजैश्च, सुतुमुलं, अभूत् ॥ २३ ॥ आसीदिति । वज्रनिष्पेषो वज्रनिर्घातस्तद्वत् परुषैर्निष्ठुरैः, इतरेतरयोरन्योन्ययोर्मुष्टिभिः, तत् द्वन्द्वयुद्धं, न विद्यते विश्रमो विश्रामो यस्मिंस्तद्यथा तथा, अहर्निशं रात्रिदिवं, अष्टाविंशाहमष्टाविंशतिदिनानि, अत्यन्तसंयोगे द्वितीया । आसीत् ॥ २४ ॥

**कृष्णप्रिया**

अपरिचित एवं अपूर्व पुरुष को देख गुफा में रहने वाली और बच्चों को संभालने वाली आया भय-चकित होकर चौंक उठी । उसका चित्कार सुनकर बलिष्ठ ऋक्षराजजाम्बवान अत्यन्त क्रुद्ध बनकर जहाँ श्रीकृष्ण थे वहाँ आ गये ॥ २१ ॥ राजन् ! क्रोध से जाम्बवान की विवेक मति नष्ट हो गयी । भगवान की महिमा का परिचय न था । भगवान अपने स्वामी है, यदि यह ज्ञान होता तब तो दण्डवत् करता लेकिन सामान्य मनुष्य मानकर भगवान से युद्ध करने लगा ॥ २२ ॥ राजन् ! किसी मांस के छोटे टुकड़े के लिये दो बाज पक्षी परस्पर संग्राम खेले उसी तरह परस्पर जीतने की कामना से जाम्बवान् और भगवान् श्रीकृष्ण युद्ध करने लगे । प्रथम शस्त्रास्त्रों से युद्ध किया पुनः जमीन से वृक्षों को उखाड़कर फेंकने लगे और अन्त में द्वन्द्व युद्ध करने लगे ॥ २३ ॥ परीक्षित्—महाराज ! क्या कहें ! वज्र प्रहार से भी अतिशय कठोर घूंसों से भगवान् और जाम्बवान अट्ठाईस दिन पर्यन्त बिना विश्राम के अहोरात्र युद्ध करते रहे ॥

**कृष्णमुष्टिविनिष्पातनिष्पिष्टाङ्गोरुबन्धनः । क्षीणसत्त्वः स्विन्नगात्रस्तमाहातीव विस्मितः ॥ २५ ॥**
**जाने त्वां सर्वभूतानां प्राण ओजः सहो बलम् । विष्णुं पुराणपुरुषं प्रभविष्णुमधीश्वरम् ॥ २६ ॥**
**त्वं हि विश्वसृजां स्रष्टा [१]सृज्यानामपि यच्च सत् । कालः कलयतामीशः पर आत्मा तथाऽऽत्मनाम् ॥ २७ ॥**
**यस्येषदुत्कलितरोषकटाक्षमोक्षैर्वर्त्मादिशत् क्षुभितनक्रतिमिङ्गिलोऽब्धिः ।**
**सेतुः कृतः स्वयश [२]उज्ज्वलिता च लङ्का रक्षःशिरांसि भुवि पेतुरिषुक्षतानि ॥ २८ ॥**

**कर्दमक्षमा**

अन्वयः—कृष्ण, मुष्टि, विनिष्पात, निष्पिष्टाङ्गोरु, बन्धनः, क्षीणसत्वः, स्विन्नगात्रः, अतीव, विस्मितः, तम्, आह॥२५॥ अहम्, त्वाम्, सर्वभूतानाम्, प्राणः, ओजः, सहः, बलम्, अधीश्वरम्, प्रभविष्णुम्, पुराणपुरुषम्, विष्णुम्, जाने ॥ २६ ॥ त्वम्, हि, विश्वसृजाम्, स्रष्टा, च, सृज्यानाम्, अपि, यत्, च सत्, कल्यताम्, ईशः, कालः, तथा, आत्मनाम्, परमात्मा ॥ २७ ॥ यस्य, इषत्, उत्कलितरोष कटाक्षमोक्षे, क्षुभितनक्रतिमिङ्गलः, अब्धिः, वर्म, आदिशत्, सेतुः, कृतः, स्वयशसा, लङ्का, उज्ज्वलिता, च, इषुक्षतानि, रक्षः शिरांसि, भुवि पेतुः ॥ २८ ॥

**श्रीधरस्वामिविरचिता भावार्थदीपिका**

श्रीकृष्णस्य मुष्टीनां विनिष्पातैराघातैर्निष्पिष्टानि श्लथान्यंगानामुरूणि बन्धनानि सन्धिस्थानानि यस्य सः ॥ २५ ॥ लोके को वाऽयं मत्तो बलीयानिति विस्मितः सन्विमृश्याह—जान इति । सर्वभूतानां यः प्राणस्तत्र यदोजः सहो बलं च इन्द्रियहृदयदेहबलानि तत्सर्वं त्वमित्यहं जाने कथं तथात्वमत आह, विष्णुमित्यादि ॥ २६ ॥ पुराणत्वे हेतुः त्वं हीति स्रष्टा निमित्तम् यच्च सदुपादानम् अतः पुराणम् प्रभविष्णुत्वे हेतुः काल इति अधीश्वरस्त्वमप्यत एवेत्याह—ईशः पर इति । न च तटस्थ इत्याह आत्मनामात्मेति ॥ २७ ॥ यत एवंभूतोऽतो ममेष्टदेवतं रघुनाथ एव त्वमित्याह, यस्येति । ईषदुत्कलित

१. सृष्टामपि यो वसन्–विज. । २. यशसो वीर. ।

उद्दीपितो यो रोषस्तेन ये कटाक्षमोक्षास्तैः क्षुभिता नक्रा ग्राहास्तिमिंगिला महामत्स्याश्च यस्मिन् सोऽब्धिर्वर्त्म मार्गमादिशद्दत्तवां-स्तथाऽपि तस्मिन् येन त्वया स्वयश एव सेतुः कृतः उज्ज्वलिता च दग्धा यस्येषुभिः क्षतानि छिन्नानि रक्षसो दशग्रीवस्य शिरांसि भुवि पेतुः स एव त्वमिति जाने ॥ २८ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

तं श्रीकृष्णम् । मत्तोऽधिकबलः कोऽयमिति हेतोरतीव विस्मितः । विशब्दनिःशब्दाभ्यामुरुशब्देन च मर्मप्रहारो-ऽद्योति । अतोवेति रघुनाथेऽपि प्रकटतादृशशक्त्यदृष्टेः ॥ २५ ॥ विमृश्य विचार्य । तत्र च प्राणे प्राणकार्यत्वात्सहादीनाम् । तथात्वं प्राणादिरूपत्वम् । विष्णुत्वमाकाशादेरपि तत्राह—पुराणेति । तथात्वं शेषस्यास्तीत्यत्र आह—प्रभविष्णुमिति । तथात्वं ब्रह्मणोऽस्तीत्यत आह—अधीश्वरमिति । "यो ब्रह्माणं विदधाति पूर्वम्" इत्यादिश्रुतेः । प्रभविष्णुमचिन्त्यशक्तिम् । अधीश्वरं सर्वनियन्तारम् । यद्वा—महाबलिष्ठतामनुभूयादौ परमशक्तिकत्वेनैव स्तौति– जान इति । ज्ञानगोचरीकुर्वन्नस्मि । कथं तदाह—सर्वेति । प्राणादीनां तच्छक्त्येकविभवत्वादभेदोपचार इति व्यष्ट्यन्तर्यामिपुरुषत्वं दर्शितम्, विष्णुं तत्तत्सर्वव्यापकमिति समष्टौ, पुराणपुरुषमिति प्रकृतौ च, प्रभविष्णुं ततोऽपि महाप्रभावमिति परमव्योमाधिपत्यम्, अधीश्वरं सर्वोपरीशनशीलमिति स्वयं भगवत्त्वमिति ॥ २६ ॥ तदेवाह—त्वं हीति । अतो भिन्ननिमित्तोपादानरूपत्वात् । अतएव कालरूपत्वादेव । तच्च परेशत्वादि न तटस्थ । पृथग्नेत्याह—आत्मेति । आत्मनां चेतना नामात्मा स्वरूपभूतः "एको देवः सर्वभूतेषु गूढः" इत्यादिश्रुतेः । विश्वसृजां ब्रह्मादीनामपि स्रष्टाऽहं तु ब्रह्मसृष्टः, तैः सृष्टानां विश्वेषां यत्सत्कारणं तत्त्वमेव न तु ते विश्वस्रष्टारोऽपि ब्रह्मादयोऽपि विश्वस्य कारणमतः पिष्टपेषणन्यायेनैव ते विश्वस्रष्टार इति भावः । अत एवोक्तं ब्रह्मणा—'सृजां सृजामि सृष्टोऽहम्' इत्यादि । कलयतां संहर्तॄणामन्तकादीनामपि कालः संहर्ता । ईशस्तत्र समर्थः । अहं त्वंतकसंहार्यस्तथात्मनां जीवानां पर आत्माऽहं त्वेको जीव एव ॥ २७ ॥ एवम्भूतः पूर्वोक्तविशिष्टोऽतो हेतोः कटाक्षमोक्षा नेत्रांतपाताः । तिमिः शतयोजनो मत्स्यस्तं गिलतीति तथा । तथापि मार्गप्रदाने कृतेपि । येन रामेण । तस्मिन्नब्धौ । स्वयशः तद्धेतुभूतस्तद्रूपो वा । उद्देश्यगतत्वाल्लिंगमविवक्षितमजहल्लिं-गत्वात्समासेऽपि लिंगविपर्ययाभावः । रक्षसो रावणस्यान्येषां वा ॥ २८ ॥

### श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी

विशब्देन निःशब्दाभ्यामुरुशब्देन च मर्मप्रहारो द्योतितः अतीवेति श्रीरघुनाथेऽपि प्रकटतादृशशक्त्याद्यदृष्टेः ॥ २५ ॥ प्रभविष्णुमचिन्त्यशक्तिम् अधीश्वरं सर्वनियन्तारम् अन्यत्तैः । यद्वा, महाबलिष्ठतामनुभूयादौ परमशक्तिकत्वेनैव स्तौति, जान इति । ज्ञानगोचरीकुर्वन्नस्मि कथं तदाह—सर्वेति । प्राणादीनां तच्छक्त्येकविभावत्वादभेदोपचारः इति व्यष्ट्यन्तर्यामिपुरुषत्वं दर्शितं विष्णुं तत्तत्सर्व ( शक्ति ) व्यापकमिति समष्टौ पुराणपुरुषमिति प्रकृतौ च प्रभविष्णुं ततोऽपि महाप्रभावमिति परमव्यो-माधिपतित्वम् अधीश्वरं सर्वोपरीशनशीलमिति स्वयं भगवत्वमिति ॥ २६ ॥ त्वं हीति तैर्व्याख्यातम् । यद्वा, सर्वेत्यत्र हेतुः सृष्टानामिति विष्णुमित्यत्र तच्च आत्मेति च पुराणेत्यत्र सर्वमेव प्रभविष्णुमित्यत्र च अधीश्वरमित्यत्र काल इत्यादि पर आत्मा मूलस्वरूपः अथ वा पूर्वपद्यस्य द्वितीयपक्षे तत्पञ्चविधत्वं क्रमेणोपपादयति, हि यस्मात् त्वं विश्वसृजां सूत्रादीनां जडत्वेन मृत-प्रायाणां स्रष्टा उद्बोधक इत्यर्थः । तथा सृष्टानां ब्रह्मादीनां यच्चोपादानं समष्ट्यन्तर्यामी पद्मनाभः स त्वं तथा कलयताम् एकैक-ब्रह्माण्डप्रवर्त्तकानां सर्वेषामपि तेषां यः कालः प्रवर्त्तकः स त्वं तथा तादृशप्रभविष्णुत्वात्पर ईशः तथा आत्मनां जीवेश्वररूपाणाम् आत्मा परमांशी स्वयं भगवान् ॥ २७ ॥ उज्ज्वलिता दग्धा इति श्रीहनुमत्कृतत्वेऽपि तस्यैव प्रभावात् । यद्वा, दाहिता अन्यत्तैः । यद्वा, अतो मद्विधदुर्विधदयालुः श्रीरघुनाथोऽपि त्वमेवेत्याह—यस्येषदिति । रक्षसां रावणादीनां शिरांसि ॥ २८ ॥

### श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी

वि-शब्देन निः-शब्दाभ्यामुरु-शब्देन च मर्म्मप्रहारो द्योतितः । अतः क्षीणं सत्त्वं बलं यस्य सः; किञ्च, स्विन्नानि गात्राणि यस्य सः, अत्यन्तश्रमाद्भक्त्या सात्त्विकभावोदयाद्वा । अतीवेति श्रीरघुनाथेऽपि प्रकट-तादृश-शक्त्यदृष्टेः ॥ २५ ॥ महाबलिष्ठतामनुभूयादौ परमशक्तिमत्त्वेनैव स्तौति—जान इति, सदा जानन्नेवास्मीत्यर्थः । यद्वा, ज्ञातवान्, अतीते वर्त्तमाना, सदा ज्ञानानुवृत्तिविवक्षया । कथम् ? तदाह—सर्व्वेति । सर्व्वेषां भूतानां जीवानां प्राणः देहधारकोऽन्तर्वायुः, जीवनं वा, ओजआदिकञ्च तेषां तच्छक्त्येकाद्भवत्वादभेदोपचारः । विष्णुमिति उक्त-न्यायेन निजशक्त्या सर्व्वव्यापनाभिप्रायेण, अतः पुराण-पुरुषं श्रीब्रह्मादीनामप्यादौ वर्त्तमानमित्यर्थः, इति विष्णुत्वेन प्रसिद्धः श्रीवामनो व्यावर्त्तितः । अतएव प्रभविष्णुं सदा नवनवमहा-प्रभावयुक्तमित्यर्थः । अतएवाधीश्वरं श्रीब्रह्मादीनामपि नियन्तारम्; विशेषणानामेषां यथोत्तरं महाशक्तिमत्त्वे श्रैष्ठ्यमूह्यम् ॥२६॥ एवमग्रेऽपि, हि एव, त्वमेव यत इति वा, विश्वसृजां श्रीब्रह्मादीनां महदादीनां वा, सत् कारणम्, ब्रह्म कलयतां वशीकुर्व्वतां मध्ये कालः, अतएव पर ईशः परमेश्वरः, तथेति समुच्चये, यत आत्मनां जीवानां पर आत्मा अन्तर्य्यामीत्यर्थः ॥ २७ ॥ उज्ज्वलितेति

श्रीहनूमत्कृतत्वेऽपि तस्यैव प्रभावात्; यद्वा, दाहिता किंवा दग्धवह्निनाशितेत्यर्थः। यद्यपि श्रीरघुनाथस्य परमपि चरितमस्ति, तथापि श्रीभगवद्वीर्यातिशयानुभवेन विक्रमविशेषापेक्षयैतदेवोक्तमिति। अन्यत्तैर्व्याख्यातम्। यद्वा, रक्षसां रावणकुम्भकर्णादीनां शिरांसीति ॥ २८ ॥

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम्

ओजः प्रवृत्तिसामर्थ्यं सहो वेगः बलन्धारणसामर्थ्यम् प्राणादीनां निर्वाहकमित्यर्थः ॥ २६ ॥ (अवधिः अन्तः आशिषाम् आज्ञाष्टसिद्धीनाम्) फलभागिनः दुर्भिक्षादिशन्तिफलभागिनः ॥ २७-४५ ॥

इति श्रीमद्भागवतव्याख्याने दशमस्कन्धे श्रीसुदर्शनसूरिकृतशुकपक्षीये पञ्चपञ्चाशत्तमोऽध्यायः ॥ ५६ ॥

### श्रीमद्वीरराघवाचार्यकृता भागवतचन्द्रचन्द्रिका

श्रीकृष्णेति श्रीकृष्णस्य मुष्टीनां निर्घातैर्निष्पातैर्निष्पिष्टानि विश्लथान्यङ्गान्यूरूणिबन्धनानि सन्धिस्थानानि यस्यः सः अत एव क्षीणबलः अत एव स्विन्नं प्रस्वेदयुक्तं गात्रं यस्य सः कदापि मद्बलविनाशो न दृष्टः अहोऽधुना मृतप्रायोऽभवमित्येवमतीव विस्मितः ॥२५॥ ततो विमृशंस्तङ्कृष्णमाह—उक्तिमेवाह—जाने इति त्रिभिः। त्वां जाने कथम्भूतम् ओजः प्रवृत्तिसामर्थ्यं सहो वेगः बलं धारणसामर्थ्यं प्राणादीनान्निर्वाहकमित्यर्थः। पुराणपुरुषं जगत्कारणपुरुषं प्रभविष्णुं जगद्रूपेण प्रभवनशीलं समर्थीभवनशीलं वा कारणत्वोपयुक्तसार्वज्ञसार्वशक्त्यादियुक्तमित्यर्थः। अधीश्वरं सर्वान्तरात्मानं तत्र देवताविशेषनिर्धारणाय विष्णुमिति॥२६॥ पुराणपुरुषत्वे हेतुं वदन् विशिनष्टि—त्वं हीति। विश्वसृजां महदादिपृथिव्यन्तानां तत्त्वानां स्रष्टा अनेन निमित्तकारणत्वमुक्तम् उपादानत्वमाह—सृज्यानां महदादीनां यत्सदुपादानकारणं तदपि त्वमेव उपादानत्वप्रयुक्तं सार्वात्म्यमाह-काल इति। कालयतां परिच्छिन्दतां सर्वं स्ववशीकुर्वतामिति यावत् तेषां य ईशः प्रभुः कालः सोऽपि त्वमेव तच्छरीरक इत्यर्थः। तथा आत्मनां जीवानां परमात्मा अन्तः प्रविश्य प्रशासनेन धर्त्ता व्याप्यगतदोषैरस्पृष्टश्च जीवशरीरकश्चेत्यर्थ ॥ २७ ॥ यत एवम्भूतस्ततो ममेष्टदेवतं श्रीरघुनाथ एव त्वमित्याह—यस्येति। यस्य रघुपतेरीषदुकलित उद्दीपितः यो रोषस्तेन ये कटाक्षमोक्षास्तैः क्षुभिताः नक्रा ग्रहाः तिमिङ्गिला महामत्स्याश्च यस्मिन्सोऽब्धिः वर्त्म मार्गमदिशत् दत्तवान् येन स्वयशसा अध्ययनेन वसतीतिवद्धेत्वर्थे तृतीया स्वकीर्त्यर्थं सेतुः कृतो निर्मितः येन च लङ्कोज्ज्वलिता दग्धा यस्य चेषुभिः क्षतानि छिन्नानि रक्षसो दशकण्ठस्य शिरांसि भुवि पेतुः स त्वमिति जान इत्यन्वयः ॥ २८ ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

सर्वभूतानां प्राणादिप्रदं प्राणः प्राणनं चेष्टाशक्तिः ओजः अवष्टम्भशक्तिः सहः शरीरसामर्थ्यं बलं स्थौल्यम् ॥ २६ ॥ सृष्टानामधिपः सृष्टेषु वसन्कालः संहर्त्ता आत्मनां चेतनानां परः आत्मा परमचेतनः "नित्यो नित्यानाम्" इति श्रुतिः ॥ २७ ॥ उत्कलितेन उन्नतेन रोषेण जातैः कटाक्षमोक्षैर्नेत्रान्तपातैः क्षोभिता नक्रास्तिमिङ्गिलाश्च यस्मिन्स तथा स्वयशोरूपः उज्ज्वलिता दग्धा इषुक्षतानि शरच्छिन्नानि ॥ २८-२९ ॥

### श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शिनी

निष्पिष्टानि अङ्गानां उरूणि बन्धनानि सन्धिस्थानानि यस्य सः मत्तोऽधिकबलो मत्प्रभुं श्रीरामं विना नान्य इति प्राचीननिर्द्धारादयं किं स एवेत्यतिविस्मितः सन् विमृश्य निश्चित्याऽऽह ॥ २५ ॥ सर्वभूतानामनन्तकोटिब्रह्माण्डवर्त्तिनां यः प्राण एकत्रैव पुञ्जीभूतो यदि स्यात् तद्विशेषश्च ओजः सहो बलं पृथक् पृथगिन्द्रियमनोदेहसामर्थ्यञ्च यद्येकीकृतं भवेत् तदपि तद्विभूतित्वात्त्वामेवाहं जान इत्यत एकस्य भूतस्य मम बलेन तद्बलम् पतङ्गेन गरुड इव कथं वार्यतामिति भावः। विष्णुं सर्वव्यापकम् अहन्तु व्याप्यः एकः पुराणपुरुषम् अहमर्वाचीनपुरुषः प्रभविष्णुमहं प्रभावहीनः अधीश्वरम् अहमीशितव्यः ॥ २६ ॥ विश्वसृजां ब्रह्मादीनामपि स्रष्टा अहन्तु ब्रह्मसृष्टः तैः सृष्टानामपि विश्वेषां यत् सत् कारणं तत् त्वमेव नतु ते विश्वस्रष्टारोऽपि ब्रह्मादयोपि विश्वस्य कारणमतः पिष्टपेषन्यायेनैव ते विश्वस्रष्टार इति भावः। कलयतां संहर्त्तॄणामन्तकादीनामपि कालः संहर्त्ता ईशस्तत्र समर्थः अहं त्वन्तकसंहार्यः तथा आत्मनां जीवानां पर आत्मा अहन्त्वेको जीव एव ॥ २७ ॥ ईषदुत्कलित उद्दीपितो यो रोषस्तेन ये कटाक्षमोक्षस्तैः क्षुभिता नक्रास्तिमिङ्गिलाश्च यस्मिन् सोऽब्धिः वर्त्म अदिशत् ददौ तथापि तस्मिन् येन स्वयश एव सेतुः कृतः उत्कर्षेण ज्वलिता दग्धा येन इषुभिः क्षतानि स एव मत्प्रभुस्त्वमिति जाने ॥ २८ ॥

### गूढार्थदीपिनी

उरुबन्धनानि सन्धिस्थानानि यस्य। सत्त्वं बलम्। स्विन्नं स्वेदयुक्तम् ॥२५॥ प्राणे यत् ओज आदि तत्सर्वं त्वमित्यहं त्वाम् जाने। इन्द्रियमनोदेहशक्तय इति क्रमेणार्थाः। प्रभविष्णुं सर्वसमर्थम् ॥ २६ ॥ विश्वसृजां महदादीनां स्रष्टा निमित्तम्।

सृज्यानां कार्याणां यत् सत् उपादानम् तच्च त्वम् । कलयतां संहर्तृणाम् कालः त्वम् । आत्मनां जीवानाम् आत्मा च त्वम् ॥२७॥ अब्धिः समुद्रः यस्य यस्मै रामाय वर्त्म मार्गमदिशत् दत्तवान् लङ्कां गन्तुम् । किञ्च येन स्वयशोरूपः सेतुः कृतः । इषुभिः वाणैः क्षतानि छिन्नानि शिरांसि भुवि पेतुः स एव त्वमित्यहं जाने इत्यन्वयः । कथंभूतोऽब्धिः । यस्य ईषदुद्दीपितरोषेण ये कटाक्षमोक्षास्तैः क्षुभिताः नक्रादयो यस्मिन् ॥ २८ ॥

**श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः**

तदा श्रीकृष्णमुष्टीनां निर्घातैर्निष्पिष्टानि अङ्गानामुरूणि बन्धनानि यस्य सः क्षीणं सत्त्वं बलं यस्य सः अहो तद्भक्तोप्यहं साक्षाद्भगवन्तमागतं ज्ञातवान् किन्तु अज्ञानात्स्वामिनं हन्तुं प्रवृत्तोस्मि अतो मुष्ट्याघातैः शनैः प्रबोधितोस्मि इति विस्मितः तम्भगवन्तमाह ॥ २५ ॥ "सकृदेव प्रपन्नाय तवास्मीति च याचते । अभयं सर्वभूतेभ्यो ददाम्येतद्व्रतं मम" ॥ इत्येवं प्रकर्षेण क्षणिति शब्दं करोतीति प्राणः तस्य सम्बोधने हेभक्तवत्सल ! अविवक्षिततत्त्वात्सन्ध्यभावः त्वामहं विष्णुं निजस्वामिनं जाने कथम्भूतं पुराणपुरुषं विश्वहेतुम् अत एव सर्वभूतानाम् ओजःसहोबलम् इन्द्रियहृदयदेहसामर्थ्यम् सर्वकार्यकारण ! त्वया सह योद्धुमहं कियान् यथा महोदधिना तद्विप्रुडिति भावः ॥ २६ ॥ विश्वहेतुत्वमुपपादयति—त्वंहीति । विश्वसृजां विश्वकारणानामपि महदादीनां स्रष्टा निर्माता त्वमसि अनेन निमित्तकारणत्वमुक्तम् । उपादानकारणत्वमाह—सृज्यानां महदादीनां यत्सत् उपादानकारणं तत्त्वमेवासीति कलयत कालानां कालस्त्वमसि बहुवचनं परमाण्वादिरूपाणां कालभेदानामभिप्रायेण "ज्ञः कालकालः" इतिश्रुतेः ॥ २७ ॥ यस्य ईषदुत्कलितेन किञ्चिदुद्दीपितेन रोषेण ये कटाक्ष मोक्षास्तैः क्षुभिता नक्रा ग्रहास्तिमिङ्गिलाः महागतस्याश्च यस्मिन्सोऽब्धिर्वर्त्मादिशत् दत्तवान् तथापि येन तस्मिन् सेतुः कृतः स्वयशश्च कृतमिति लिङ्गव्यत्ययेनान्वयः लङ्का चोज्ज्वलिता दग्धा यस्येषुभिः क्षतानि छिन्नानि रक्षसो रावणस्य शिरांसि निपेतुः तं त्वां जाने इत्यन्वयः ॥ २८ ॥

**श्रीमद्वल्लभाचार्य्यकृता सुबोधिनी**

यदैव पुरुषप्रकारः समागतः, तदैव तस्य विवेक उत्पन्न इत्याह **कृष्णमुष्टीति** । तस्य क्षीणेऽपि बले भगवतो बलं न क्षीणमिति । पश्चादल्पप्रहारैरपि निष्पिष्टाङ्गः । अङ्गानां चोरुबन्धनानि यस्य । विशीर्णसर्वावयवो जात इत्यर्थः । हस्तपादादयो भग्नाः । ततः अशक्तः जिज्ञासायां प्रवृत्त इति वक्तुं बाह्याभ्यन्तराशक्तिमाह **क्षीणसत्त्वः स्विन्नगात्र** इति । अन्तःकरणे विवेकधैर्ये क्षीणे, गात्रेषु प्रस्वेदेन शरीरमपि क्षीणम्, निष्पीडितमिवाभूत् । ततो विस्मितो जातः । विचारे क्रियमाणे समागमनादिभिः प्राकृतधर्मैर्जीवत्वे ज्ञाते स्वसमानवलतैव कस्यापि नास्ति । ततोऽधिकबलः कथं जात इत्याश्चर्यम् । भगवत्त्वे वा कथमेवंरूपेणागत इति उभयत्र विरोधादतीव विस्मितो जातः ॥ २५ ॥ ततो विरोधपरिहारे विचार्यमाणे लीलयापि प्राकृतवच्चेष्टा भवतीति निश्चित्य बलस्य प्रत्यक्षसिद्धत्वाच्च भगवानेवायमिति ज्ञात्वा स्वस्य पराजयः नातीव मनःपीडां करोतीति ज्ञापयन् भगवन्तं स्तौति **जान इति त्रिभिः** ।

राजसैः सात्त्विकैश्चैव तामसैस्तन्निभैर्गुणैः । सम्पूर्णैः सहितो विष्णुर्भगवानेव नान्यथा ॥ १ ॥

कथं निवृत्त इत्याकाङ्क्षायां ज्ञात्वा निवृत्त इत्याह **जान** इति । ज्ञानमार्गानुसारेणापि ज्ञानं सम्भवतीत्यत आह **त्वामिति** । त्वामहं जाने । तत्र प्रकारानाह **सर्वभूतानां प्राण ओजः सहो बलमिति** । प्राण आसन्यः, तस्य कार्यमोजः इन्द्रियशक्तिः । सहोन्तःकरणस्य । **बलं** शरीरस्य । एवं सर्वप्राणिषु बलात्मा कार्यकारणभेदेन विभक्तवीर्य आसन्यस्त्वमेव । एवं नरोत्तमत्वमुक्त्वा पुरुषोत्तमत्वमाह **विष्णुमिति** । विष्णुरधिकार्यपि भवतीति तावन्मात्रतां निराकर्तुं विशेषमाह **पुराणपुरुषमिति** । पुरुषोत्तमम् । किञ्च । तादृशोऽपि प्रभविष्णुः । लोकमुद्भावयति । प्रकर्षेण भावयति वा । किञ्च । **अधीश्वरं** सर्वनियन्तारं कालरूपम् । पूर्वं क्रियाशक्तिर्निरूपिता चतुर्धा रूपभेदेन । इदानीं ज्ञानशक्तिर्निरूप्यते चतुर्धा, ज्ञानं च चतुर्विधम् । नियामकमेकम्, इष्टसाधनतां ज्ञापयित्वा प्रवर्तकं द्वितीयम्, ततः फलदातृत्वेन स्थितं तृतीयम्, ततो निर्वाहकसर्वरूपं चतुर्थम् । तद्विष्णुपदेन प्रत्यवरोहक्रमेण अन्यैः पदैश्च निरूपितम् ॥ २६ ॥ एवं पूर्णक्रियाज्ञानशक्तिमत्त्वेन भगवन्तं निरूप्य तस्य जगज्जन्मादिमोक्षान्तकार्याणि चत्वारि निरूपयति **त्वं हीति** । श्रुतयः सम्मत्यर्थं गृहीताः । विश्वसृजां तत्त्वानामपि त्वं स्रष्टा । सृज्यानामपि घटादीनां सत्स्वरूपं भवानेव । अनेन स्थितिरुक्ता । कलयतां कालमहादेवयमादीनामपि त्वं काल उपसंहारकर्ता । एवं सृष्टिस्थितिप्रलयानुक्त्वा मोक्षदातृत्वमाह **परमात्मेति** । आत्मनां सर्वेषामेव जीवानां परमात्मा फलरूपः । सायुज्यस्थानमिति यावत् । तथात्मनां वा परमात्मत्वेन सेवमानानां परमात्मा मोक्षदाता । अथवा । भगवतः सर्वत्वं वक्तुं सदंशस्योत्पत्त्यादिजनकत्वेन स्वरूपं भगवानित्युक्त्वा, चिदंशमपि भगवानेवात्मेति वदन्, आत्मत्वेनैव स्वरूपता सिद्धेति तन्नियामकान्तर्यामिरूपत्वेन भगवन्तं निरूपयति **परेति** ॥ २७ ॥ एवं मूलकार्यरूपे निरूप्य य एव रामो मम स्वामी, स एव भवानिति वक्तुं रामावतारपौरुषमाह **यस्येषदिति** । **ईषदुत्कलितः** पुष्पप्रायः क्रोधः, तत्रापि ऊर्ध्वं कलिकामात्रं जातः, सोऽपि मनस्येवेत्याह **कटाक्षमोक्षैरिति** । अल्पीयसि क्रोधे

मनसि जाते दृष्टिस्तादृशी जाता। सापि न संपूर्णा, किन्तु कटाक्षरूपा, ते च पुनः दृष्टयवयवाः मोक्षरूपा इति ज्ञापयितुं कटाक्षाणां मोक्षा निरूपिताः। अल्पजीवाश्चेतनाः तैर्भीता भविष्यन्तीति किं वक्तव्यम्। ततः अब्धिरपि वर्त्म आदिशत्। मदुपरि मार्गं कृत्वा गच्छन्त्वित्युक्तवान्। ननु देय एव मार्गः, कथमुपायमुपदिष्टवानित्याह क्षुभितनक्रतिमिङ्गिल इति। नक्राणां तिमिङ्गिलानां च क्षोभं दृष्ट्वा तथोक्तवानित्यर्थः। अब्धिश्च आपो धीयन्ते अस्मिन्निति तासां निरन्तरमुत्पत्तिर्बाधिता स्यात्। अतो मर्यादा-रक्षार्थमपि तथोक्तवान्। अप्स्वभावः भगवत्कृतः। तेनान्यथाकर्तुं न शक्यत इति मार्ग एव कर्तव्य इति भगवानेव प्रार्थितः। अन्तरिक्षेणापि गमनेन गत्वा मारयितुं शक्यम्, तथा सति राक्षसैस्तुल्यता भविष्यतीति अलौकिके कर्तव्ये प्रस्तराणामेव समुद्रे प्लवनं निरूपितम्, न वानराणामिति भगवता सेतुः कृत इत्याह। क्रमेण चरित्रत्रयं निरूप्यते। सेतुबन्धो राजसः, दाहः सात्त्विकः, रक्षसां वधश्च शिष्ट इति। जलाग्न्यासन्यानां निमित्तत्वात् सत्त्वादिक्रमो वा। स्वयशसा लङ्का उज्ज्वलितेति। ऊर्ध्वं ज्वलिता ज्वालिता उज्ज्वलीकृता वा। अनेनैतत् ज्ञापितम्, रघुनाथेनैव लङ्का प्रकाशितेति। अन्यथा लङ्कां को जानीयात्। नह्यन्यानि राक्षसस्थानानि लोके प्रसिद्धानि। इषुभिः क्षतानि स्वयमेव भूमौ पेतुः। क्षतमात्रेणैव भगवत्सामर्थ्यादेव पतितानि॥ २८॥

### श्रीसुबोधिनीसारः

कृष्णस्य मुष्टीनां विनिष्पातैः प्रहारैर्निष्पिष्टानि चूर्णीकृतानि अंगानामुरूणि बहूनि बन्धनानि संधिस्थानानि यस्य स क्षीणबलः स्विन्नगात्रः स्वेदव्याप्तशरीरो जांबवानतीव विस्मितस्तं श्रीकृष्णमाह॥ २५॥ सर्वप्राणिनां प्राण ओजः सहो बलम् इन्द्रियमनोदेहबलरूपं त्वां पुराणपुरुषं प्रभविष्णुम् उत्पादकमधीश्वरं सर्वनियंतारं विष्णुं जाने वेद्म्यहम्॥ २६॥ विश्व-सृजां महदादीनां प्रजापतीनां च स्रष्टा त्वं हि निमित्तमेव सृज्यानामपि मध्ये यच्च सत् तत्त्वं कलयतामीशः कालस्त्वं तथात्मनां पर आत्मा त्वमसि॥ २७॥ यस्येषत्किंचिदुत्कलित उद्दीपितो यो रोषस्तेन कटाक्षस्य मोक्षास्तैः क्षुभिता नक्रा ग्राहास्तिमिंगिला महामत्स्याश्च यस्मिन् सोऽब्धिः समुद्रः सेतुः कृतः स्वयशः कीर्तिरूपः वर्त्म मार्गमदिशत् अदात् लंका च उज्ज्वलिता दग्धा ईषुभिर्बाणैः क्षतानि छिन्नानि रक्षसां शिरांसि भुवि पेतुः॥ २८॥

### विवरणटिप्पणी

जाने त्वामित्यत्र। नरोत्तमत्वमिति। देहोत्तमत्वमित्यर्थः। पुरुषोत्तमत्वमिति। आत्मोत्तमत्वमित्यर्थः। तज्ज्ञानानु-सारेणात्र देहदेहिनोर्भेद उक्तः। प्रत्यवरोहेति। विपरीतक्रमेणेत्यर्थः।

### गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

कृष्णमुष्टीनां निष्पातैर्निष्पिष्टानि अङ्गानि उरूणि बन्धनानि सन्धिबन्धनानि च यस्य सः, अत एव क्षीणं सत्त्वं बलं धैर्यं च यस्य सः, अत एव स्विन्नं प्रस्वेदयुक्तं गात्रं यस्य सः, अत एव कदापि मम बलक्षयो न दृष्टः स इदानीं कथं जात इत्यतीव विस्मितः आश्चर्यं प्राप्तश्च तं कृष्णमाह॥ २५॥ जाने इति त्रिभिः। 'मा कथंभूतं जानासि' इत्यपेक्षायामाह—सर्वभूतानां यः प्राणः, ओजः इन्द्रियशक्तिः, सहः अन्तःकरणशक्तिः, बलं शरीरसामर्थ्यम्, एतत्सर्वं त्वमिति जाने इति। 'किञ्च विष्ण्वादिरूपं त्वां जाने' इत्याह—विष्णुं व्यापकं सर्वपालकं च। पुराणपुरुषमिति। सर्वस्रष्टारं निमित्तकारणमित्यर्थः। प्रभविष्णुं प्रभवनशीलं उपादानं अधीश्वरं सर्वनियन्तारं सर्वोपसंहारकर्तारं च॥ २६॥ उक्तमेव स्पष्टयति—त्वमिति। 'हि' इत्यनेन शास्त्रप्रसिद्धिं सूच-यति। विश्वसृजां महदादीनां ब्रह्मादीनां च स्रष्टा निमित्तम्, सृज्यानां महदादीनां यत् सत् परमार्थभूत उपादानं तच्च त्वम्। कल-यतां नियामकानां नाशकानामपि ईशो नियन्त्रादिरूपः कालः त्वम्। 'एवं महदादीनां भगवदुपादानकत्वेपि जीवानामन्योपादान-कत्वं स्यात्, शङ्कां वारयति—तथा महदादिवदात्मनां जीवानामप्यात्मा उपादानमिति। 'एवं सर्वोपादानत्वे विकारित्वं स्यात्' इत्याशङ्क्याह—पर इति। 'असंगो ह्ययं पुरुष' इति श्रुतेः॥ २७॥ किञ्च—यस्येति। यस्येषदुत्कलित उद्दीपितो यो रोषस्तेन ये कटाक्षमोक्षास्तैः क्षुभिता नक्रा ग्राहास्तिमिङ्गिला महामत्स्याश्च यस्मिन् सोऽब्धिः समुद्रो यस्मै वर्त्म मार्गमादिशत् दत्तवान्, तथापि स्वयशोविस्ताराय तस्मिन्येन सेतुः कृतः, येन च लङ्का उज्ज्वलिता दग्धा, दग्धा, यस्य चेषुभिः क्षतानि छिन्नानि रक्षसां रावणादीनां शिरांसि भुवि पेतुः स मम स्वामी श्रीरघुनाथ एव त्वमिति जाने इत्यन्वयः। तथा च दासस्य ममावज्ञा-लक्षणमपराधं क्षमस्व कर्तव्यां सेवां चादिशेत्यन्वयः॥ २८॥

### अन्वितार्थप्रकाशिका

कृष्णेति। कृष्णस्य मुष्टीनां विनिष्पातैः आघातैर्निष्पिष्टानि श्लथानि अङ्गानाम् उरूणि बन्धनानि सन्धिस्थानानि यस्य सः अत एव क्षीणं सत्त्वं बलं धैर्यं च यस्य सः अत एव स्विन्नं प्रस्वेदयुक्तं गात्रं यस्य सः अत एव कदापि मम बलक्षयो न दृष्टः। स इदानीं कथं जात इत्यतीव विस्मितः आश्चर्यं प्राप्तश्च तं कृष्णमाह स्म॥ २५॥ जाने इति। त्वां सर्वभूतानां यः

प्राण: ओज इन्द्रियशक्ति: सह: अन्त:करणशक्ति: बलं शरीरसामर्थ्यं तत्सर्वं त्वमित्यहं जाने। अत: विष्णुं व्यापकं सर्वपालकं च पुराणपुरुषमिति सर्वस्रष्टारं निमित्तकारणमित्यर्थ:। प्रभविष्णुं प्रभवनशीलम्। उपादानम् अधीश्वरं सर्वनियन्तारं सर्वोपसंहारकर्तारं च त्वां जाने ॥ २६ ॥ त्वमिति। त्वं हि विश्वसृजां महदादीनां ब्रह्मादीनां च स्रष्टा निमित्तं सृज्यानां महदादीनां यत् सत् परमार्थभूतम् उपादानं तच्च त्वं कलयतां नियामकानां नाशकानामपि ईशो नियन्त्रादिरूप: काल: त्वं तथा आत्मनां जीवानामपि आत्मा उपादानं पर: असङ्गश्च ॥ २७ ॥ यस्येति। यस्य तव ईषदुत्कलित उद्दीपितो यो रोषस्तेन ये कटाक्षमोक्षास्तै: क्षुभिता नक्रा ग्राहास्तिमिङ्गिला महामत्स्याश्च यस्मिन्सोऽब्धि: समुद्रो यस्मै तुभ्यं वर्त्म मार्गमादिशत् दत्तवान्। तथापि स्वयशोरूप: तस्मिन्समुद्रे येन त्वया सेतु: कृत:। येन च लङ्का उज्ज्वलिता दाहिता यस्य चेषुभि: क्षतानि छिन्नानि रक्षसां रावणादीनां शिरांसि भुवि पेतु: स मम स्वामी श्रीरघुनाथ एव त्वम्। अतो ममापराधं क्षमस्व कर्तव्यां सेवां चादिश ॥ २८ ॥

### श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्

कृष्णस्य मुष्टीनां विनिष्पातै: ॥ अतितरां पातनै: विनिष्पिष्टानि शिथिलानि अंगानां उरूणि बंधनानि संधिस्थानानि यस्य स: ॥ २५ ॥ जान इति ॥ सर्वभूतानां प्राणे स्थितं प्राणाधीनं ऊर्ज: स हो बलं इंद्रियांत: करणदेह सामर्थ्यरूपं त्वां जाने कथं भूतं प्रभविष्णुं प्रभवति जनकल्याणाय देवमनुष्यादिष्ववतारै: प्रादुर्भवतीत्येवंशीलं स्तं ॥ २६ ॥ विश्वस्रजां ब्रह्मादीनां स्रष्टा-सृज्यानां स्रष्टुं योग्यानाम ॥ पियत्सत् सन् सप्त उत्पादकस्त्वमसि। कलयतां प्रवर्त्तकानां सर्वेषामपीशो नियामक: कालस्त्वमसि आत्मनां चेतनवृंदानां पर: श्रेष्ठ आत्मा परमात्मा त्वमेवासि ॥ २७ ॥ अतो ममेष्टदेवो रामचंद्र एव त्वमित्याह यस्येति ॥ यस्य तव ईषदुत्कलितेनोत्पन्नेन ऐषेण ये कटाक्षमोस्तै: क्षुभिता नक्राग्नाहास्तिमिगिला महामस्याश्च यस्मिन्सोब्धि: समुद्र: तुभ्यं मार्गं अदिशद्ददौ य: सेतुस्त्वया कृत: अधुनापित देवस्वयंशोऽस्ति येन त्वया लंका च उज्ज्वलिता सम्यग्दग्ध्वा भस्मीकृता ॥ तवेषुणाकृतानि छिन्नानि रावणादीनां शिरांसि भुवि पेतु: सत्वमेवेत्यहं जाने इति पूर्वेण संबंध: ॥ २८ ॥

### भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

कृष्णेति ॥ कृष्णस्य मुष्टीनां ये विनिर्घाता निष्पातास्तैर्निष्पिष्टानि श्लथानि अङ्गानामुरूणि बन्धनानि संधिस्थानानि यस्य स:, अत एव, क्षीणं सत्त्वं बलं यस्य स:, अत एव, स्विन्नं प्रस्वेदयुक्तं गात्रं यस्य स:, अतीवविस्मित: कदापि मद्बलनाशो न दृष्टोऽहो अधुनाहं मृतप्रायोऽभवमित्येवमतीवविस्मययुक्त इत्यर्थ:। तं श्रीकृष्णं, आह ॥ २५ ॥ ततो विमृशंस्तं श्रीकृष्णमाह जाने इति त्रिभि: ॥ जाने इति ॥ त्वां सर्वभूतानां, प्राण:, ओज:, सह:, बलं, सर्वभूतप्राणादिनिर्वाहकमित्यर्थ:। तत्र प्राण: प्रसिद्ध:, ओज:सहोबलानि इन्द्रियहृदयदेहबलानि। पुराणपुरुषं जगत् कारणं पुरुषं, प्रभविष्णुं समर्थीभवनशीलं, कारणत्वोपयुक्त-सार्वज्ञसर्वशक्त्यादियुक्तमित्यर्थ:। अधीश्वरं सर्वान्तिरात्मानं, अत एव विष्णुं जाने ॥ २६ ॥ पुराणपुरुषत्वे हेतुं वदन् विशिनष्टि ॥ त्वं हीति ॥ त्वं हि त्वमेव, विश्वसृजां महदादिपृथिव्यन्तानां तत्त्वानां, स्रष्टा, अनेन निमित्तकारणत्वमुक्तम्। उपादानकारणत्व-माह ॥ सृज्यानां महदादीनां मध्येऽपि, यत् सदुपादानकारणं, तदपि, त्वमेव। कलयतां परिच्छिन्दतां, सर्वं स्ववशीकुर्वता-मिति यावत्। य: ईश: प्रभु:, काल: च, सोऽपि त्वमेव, कालोऽपि त्वच्छरीरक इत्यर्थ:। तथा, आत्मनां, जीवानां पर: आत्मा अन्त: प्रविश्य प्रशासनेन धर्त्ता, व्याप्यगतदोषैरस्पृष्टो जीवशरीरकश्चेत्यर्थ:। त्वमेव ॥ २७ ॥ यत एवंभूतस्ततो ममेष्टदैवतं श्रीरघुनाथ एव त्वमित्याह ॥ यस्येति ॥ यस्य रघुपते:, ईषदुत्कलित ईषदुद्दीपितो यो रोषस्तेन ये कटाक्षमोक्षास्तै:, क्षुभिता नक्रा ग्राहास्तिमिङ्गिला महामत्स्याश्च यस्मिन् स:, अब्धि: समुद्र:, वर्त्म मार्गं, अदिशद्दत्तवान्। तथापि, येन स्वयशसा स्वकी-र्त्यर्थं, अध्ययनेन वसतीतिवद्धेत्वर्थे तृतीया। सेतु: कृत: निर्मित:। येन लङ्का च, उज्वलिता दग्धा, यस्य इषुभि: क्षतानि छिन्नानि रक्षसो दशकण्ठस्य शिरांसि, भुवि पेतु:। स त्वमेव जात इति शेष: ॥ २८ ॥

### कृष्णप्रिया

अन्ततोगत्वा भगवान श्रीकृष्ण के जोरदार घूंसों की चोट से जाम्बवान के शरीर की प्रत्येक गाँठ टूट-फूट गई नष्ट भ्रष्ट हो गई। जाम्बवान निरुत्साह बन गया। उनकी काया पसीने से लथ-पथ बन गयी। पुन: अत्यन्त आश्चर्य चकित होकर भगवान् श्रीकृष्ण की स्तुति करने लगा ॥ २५ ॥ जाम्बवान जी को श्री ठाकुरजी के श्रीअङ्गों के स्पर्श होने से स्वरूप जाना और स्तुति करने लगे! नाथ आपकी कृपा से मैंने आपको पहिचाने, आप प्रत्यक्ष विष्णु है, आप पुराण पुरुष है, समस्त ब्रह्माण्ड के आप ही कारण है एवं सर्व समर्थ ईश्वर है। आप सर्व प्राणियों के स्वामी सबके प्राण मनोबल, इन्द्रियबल, शरीर-बल एवं सर्वस्व है ॥ २६ ॥ आप विश्व के रचयिता है एवं ब्रह्माजी आदि के भी विधाता है। बनाये हुए समस्त पदार्थों में आप ही सत्तास्वरूप से विराजमान है। विश्व के नियामक काल के भी आप नियन्ता है। प्रत्येक प्राणियों के भिन्न-भिन्न देहों

में विराजमान अन्तरात्माओं के परम आत्मा भी आप ही है ॥ २७ ॥ श्रीजाम्बवान जी ने निजनाथ श्रीरघुनाथ जी को पहिचान गये एवं रघुवर की अनुभूत महिमा का गान करने लगे कि हे नाथ मैंने निज नेत्रों से देखा था कि, आपने अपने नेत्रों में तनिक सा रोष भाव रखकर वक्र नजर से सागर की ओर देखा इतने से महासागर के भीतर रहने वाले बड़े-बड़े नक्र नाक-घड़ियाल एवं मगरमच्छ सब क्षुब्ध हो गये थे, और समुद्र ने प्रसन्न होकर आपका मार्ग दे दिया। तब आपने सागर पर सेतु बंधन किया, वह सेतुबंधन आपकी समुज्ज्वल कीर्ति पताका थी। सेतु बंधन के साथ ही आपने लङ्का का विध्वंस कर दिया। रणसंग्राम भयानक बना और आपके क्षीण वाणों से कटे हुए राक्षसों के सिर धरणी पर लुण्ठन करते थे। यही मेरे रघुनाथ आज यदुनाथ स्वरूप में दर्शन दे रहे हैं ॥ २८ ॥

**इति विज्ञातविज्ञानमृक्षराजानमच्युतः । व्याजहार महाराज भगवान् देवकीसुतः ॥ २९ ॥**
**अभिमृश्यारविन्दाक्षः पाणिना शंकरेण तम् । कृपया परया भक्तं प्रेमगम्भीरया गिरा ॥ ३० ॥**
**मणिहेतोरिह प्राप्ता वयमृक्षपते बिलम् । मिथ्याभिशापं प्रमृजन्नात्मनो मणिनामुना ॥ ३१ ॥**
**इत्युक्तः स्वां दुहितरं कन्यां जाम्बवतीं मुदा । अर्हणार्थं स मणिना कृष्णायोपजहार ह ॥ ३२ ॥**

**कर्दमक्षमा**

अन्वयः—अरविन्दाक्षः अच्युतः—भगवान्-देवकीसुतः, इति, विज्ञातविज्ञानम्, ऋक्षराजानम्, व्याजहार, महाराज! हे ऋक्षराज "इति, संबोध्य"—शङ्करेण, पाणिना, तम्, अभिमृश्य, तम्, भक्तम्, मेघगम्भीरया, गिरा, व्याजहार ॥ २९-३० ॥ हे ऋक्षपते! अमुना-मणिना, आत्मनः, प्राप्त, मिथ्याभिशापम्, प्रमृजन्, मणिहेतोः वयम् इह बिलम्, प्राप्ताः ॥ ३१ ॥ श्रीशुक उवाच—भगवता, इति, उक्तः सः जाम्बवान्, मुदा स्वाम्, दुहितरम्, जाम्बवतीम्, अर्हणार्थम्, मणिना, सह, ह, कृष्णाय उपजहार ॥ ३२ ॥

**श्रीधरस्वामिविरचिता भावार्थदीपिका**

इति विज्ञातं विज्ञानं येन तं विज्ञानशब्दः करणसाधनः कर्मसाधनो वा ऋक्षराजं प्रत्युक्तवान् ॥ २९-३० ॥ वयं बहवो बिलद्वारं प्राप्तास्तत्र मिथ्याभिशापममुना मणिना प्रमृजन् प्रमार्ष्टुमहमंतर्बिलमिह प्राप्त इत्यर्थः ॥ ३१ ॥ सहमणिना समर्पयामास ॥ ३२-३४ ॥

**श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः**

इतीत्थम्। करणे साधनेऽर्थे साध्यत इति तथा, तत्र विज्ञायतेऽनेनेति विज्ञानं शास्त्रश्रवणादि, विज्ञायते यत्तद्विज्ञानं ज्ञेयं वस्तु ब्रह्मस्वरूपमयं च कर्मसाधनः। अच्युत इति तादृशयुद्धादौ जातेऽपि तस्मिन्वात्सल्याव्यभिचाराभिप्रायेण। यतो देवकी सुतो भगवान् केवलस्वजनरक्षार्थमेव देवक्यामवतीर्ण इति भावः। महाराजेति भवादृशां तदनुभूतमेवेति भावः ॥ २९ ॥ तमृक्षराजम्। शंकरेण सुखकरेण। अरविंदाक्ष इति-प्रसन्नस्निग्धदृष्ट्याऽवलोकयन्निति भावः। तत्र विज्ञानमित्यत्र करणपक्षे पूर्ववरप्रदानादि ज्ञेयं, कर्मपक्षे विज्ञातं विशेषादनुभूतं विज्ञानं स्ववैभवं भगवत्तत्त्वं बा येन ॥ ३० ॥ बिलं बिलद्वारम्। तत्र तेषु। इत्यर्थ इति—ममैव मिथ्याभिशापो न सर्वेषां तेनाहमत्रागतो नान्ये इत्याशयः। भगवंस्तव मिथ्याभिशापः कथमिति जांबवदाक्षेपं स्कान्दवाक्येनोत्तारयति—"मया भाद्रपदे शुक्लचतुर्थ्यां चन्द्रदर्शनम्। गोष्पदांबुनि वै राजन्कृतं दिवमपश्यता।" इति। नारदोऽपि—"त्वया भाद्रपदे शुक्लचतुर्थ्यां चन्द्रदर्शनम्। कृतं येनेह भगवन्वृथा शापमवाप्तवान्।" इति। किञ्च—"येन भाद्रद्वितीयायां दृष्टश्चन्द्रो हरे सिते। तस्य दोषो न भवति चतुर्थीदर्शनोद्भवः।" इति। ननु स एव तद्दिने कथं चन्द्रो दर्शनार्हो नेति चेदाह—भाद्रसितचतुर्थ्यां पंकस्खलितं गणेशं दृष्ट्वा चंद्रो जहास। तं च गणेशो यस्त्वामद्य द्रक्ष्यति स मिथ्याभिशप्तो भविष्यतीति शशाप। अतस्तद्दिने दर्शनानर्हतां चंद्रोऽवापेति सति तद्दर्शने तद्दिन इष्टकाप्रक्षेपादिना कस्माच्चिद्गालीग्रहणादि कुर्यात्तेनापि तद्दोषशांति-रित्युक्तं पुराणांतर इत्यलमतिप्रसंगेन ॥३१॥ इतीत्थं भगवतोक्तः। अर्हणार्थं गृहागतभगवदर्चननिमित्तम्। यत्तु पाद्मे सृष्टिखण्डे जांबवत्कर्तृकप्रसेनवधादि, तथा श्रीकृष्णकर्तृकजांबवतश्चक्रेण बधादि, तत्सर्वं कल्पांतरविषयं, न त्वेतत्कल्पीयकृष्णावतार-विषयम्। यद्वा-शं कल्याणं करोतीति शंकरं सुदर्शनं चक्रम् "येये हताश्चक्रधरेण विष्णुना त्रैलोक्यनाथेन जनार्दनेन। तेते गता विष्णुपुरीम्" इत्याद्युक्तेः। शंकरमस्त्यस्मिन्निति शंकरस्तेन पाणिना हस्तेनाभिमृश्य मर्दयित्वेत्यर्थः। तस्मै तुष्टेन भगवता वरं वरयेत्युक्तम्, तेन चोक्तम्-चक्रेण मे मृत्युं कारयेति। ततश्च रत्नग्रहणकन्योद्वाहानंतरं तथैव कृतं भगवतेति, अन्यथाभिस्पृश्ये-त्येवं ब्रूयान्न त्वभिमृश्येति। स्वामिति—नरकन्यारूपत्वेऽपि तदीयत्वबोधनार्थम्, ऋक्षत्वेऽपि देवपुत्रतया नानारूपधृत्या तत्सं-

१. मेघ-वीर. विज. । २. सहर्माण-विज.।

भवात् । जांबवतीमिति तस्य स्नेहाधिक्यतया तन्नाम्नैव ख्याताम् । माथुरहरिवंशे चेदमाख्यानमस्तीति श्रूयते-पूर्वं श्रीरामावतार एव कन्येयं जातासीत्तस्मा एव जांबवान्दातुमैच्छत् । स चोचे-एकपत्नीव्रतधरेऽस्मिन्नवतारे ममैतन्न घटत इति श्रीकृष्णावतारे घटिष्यते, किन्तु बहुदिनं तपस्यां कुरु, ततः स श्रीगोवर्द्धने चिरं तपस्तप्त्वा तमभीष्टं प्रापेति ॥ ३२ ॥

**श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी**

इतीति युग्मकम् ऋक्षराजानमित्यार्षम् अच्युत इति तादृशयुद्धादौ जातेऽपि तस्मिन् वात्सल्याव्यभिचाराभिप्रायेण यतो देवकीसुतो भगवान् हे महाराजेति भवादृशान्तदनुभूतमेवेति भावः अतः कृपया परयाऽभिमृश्य सर्वाङ्गेषु स्पृष्ट्वा यतो भक्तं शङ्करणेति सद्य एव युद्धश्रमादिदुःखहरणपूर्वकं सुखं कृतमित्यर्थः अरविन्दाक्ष इति प्रसन्नस्निग्धदृष्ट्याऽवलोकयन्निति भावः । मेघेति श्रीमुनीन्द्रस्य तद्वचनस्वरमाधुर्य्यस्मरणोत्कण्ठा अन्यत्तैः तत्र विज्ञानमित्यस्य करणपक्षे पूर्वपूर्वतदनुगतिरुच्यते कर्मपक्षे विज्ञातं विशेषादनुभूतं विज्ञानं स्ववैभवं येन । यद्वा, ( स्वेन ) विज्ञातं स्वविषयविविधज्ञानं यस्य तमिति ॥ २९-३० ॥ इह बिल्द्वारदेशे प्रमृजन् सिंहहतप्रसेनादिदर्शनेन मृष्टमपि प्रकर्षेण मार्ष्टुमित्यर्थः । इदं च वाक्यं श्रीभगवता किञ्चिद्विचारितमपि पौनरुक्त्यभिया सङ्क्षेपेण प्रथितमत्रेति ज्ञेयम् ॥ ३१ ॥ स्वामिति नरकन्यारूपत्वेऽपि तदीयत्वबोधनार्थम् ऋक्षत्वेऽपि देवपुत्रतया नानारूपधृत्या तत्सम्भवात् कन्यामपरिणायितां जाम्बवतीमिति तस्य स्नेहभरविषयतया तन्नाम्नैव ख्यातं माथुरहरिवंशे चेदमाख्यानमस्तीति श्रूयते पूर्वं श्रीरामचन्द्रावतार एव कन्येयं जाताऽऽसीत् तस्मा एव जाम्बवान् दातुमैच्छत् स चोक्तवान् एकपत्नी व्रतधरे ममैतदवतारे न घटत इति श्रीकृष्णावतारे घटेत किन्तु बहुदिनं तपस्यां कुरु ततश्च तत्स्मृत्वा कालान्तरे चिरं श्रीगोवर्धने तपस्तप्त्वा तमभीष्टं प्रापेति ॥ ३२ ॥

**श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी**

अच्युत इति तादृशयुद्धादिनापि तस्मिन् वात्सल्याच्युत्यभिप्रायेण, यतो भगवान् भक्तवात्सल्याद्यशेषगुणप्रकटनपर इत्यर्थः । यतो देवकीसुतः । हे महाराजेति भवादृशां महतां तदनुभूतमेवेति भावः ॥ २९ ॥ अतः परया कृपया अभिमृश्य सर्वांगेषु स्पृष्ट्वा, यतो भक्तं शंकरेणेति सद्य एव युद्धश्रमादिदुःखहरणपूर्वकसुखं कृतमित्यर्थः । अरविन्दाक्ष इति प्रसन्नस्निग्धदृष्ट्यावलोकयन्निति भावः । मेघेति स्वभावादेव किंवा तत्प्रहर्षार्थं भगवत्त्वबोधनाथ, किंवा स्नेहभरेण गिरो गाम्भीर्य्यविशेषात् ॥ ३० ॥ इदं पर्वते देशे वा, अमुना अनेन मणिना प्रकर्षेण मृजन्नित्येनं नीत्वैतत्स्वामिने दातुमिच्छामीति भावः ॥ ३१ ॥ स्वामिति नारीरूपत्वेऽपि तदीयत्वबोधनार्थं ऋक्षत्वेऽपि देवपुत्रतया तत्सम्भवात्, कन्यामपरिणायितां जाम्बवतीमिति तस्य स्नेहभरविषयतया तन्नाम्नैव ख्याताम्, किंवा तेनैव तथाकृत-तत्संज्ञकामित्यर्थः । केचित्तु पुराणान्तरप्रसिद्धा गन्धर्वकन्येति वदन्ति, उपजहार दास्येन बलितया समर्पयामास ॥ ३२ ॥

**श्रीमद्वीरराघवाचार्यकृता भागवतचन्द्रचन्द्रिका**

इतीति इत्थं विज्ञातं विज्ञानं विज्ञेयं येन तमृक्षराजानं अनित्यत्वादार्षत्वाद्वा "राजाह" इति समासान्ताभावः । व्यजहारोवाच ॥ २९ ॥ कथमित्यत आह—अभिमृश्येति । शङ्करेण सुखकरेण पाणिना भक्तं तमृक्षराजमभितः संस्पृश्य परया निरतिशयया कृपयोपलक्षितः मेघध्वनिवद्गम्भीरया गिरा प्राह ॥ ३० ॥ उक्तिमेवाह—मणिहेतोरिति । हे ऋक्षपते ! मण्यर्थमिह बिलं प्रति वयमागताः अवाप्तसमस्तकामस्य तव किं मणिनेत्यत आह मिथ्येति अमुना मणिना हेतुना आत्मनो मम यो मिथ्याभिशापः मिथ्यापवादः प्रसक्तस्तममुना मणिनैव विमृजन् लक्षणहेत्वोरिति शत्रादेशः विमार्ष्टुमपनेतुमिति यावत् विमृजन्नहमागत इति शाब्दयोजना ॥ ३१ ॥ इतीति इत्थमुक्तः स जाम्बवान् समणिना मणिना सह स प्रसिद्धः जाम्बवान् मणिना सहेति वा जाम्बवतीमुपायनार्थं कृष्णाय समर्पयामास ॥ ३२ ॥

**श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली**

शङ्करेण सुखकरेण ॥ २९-३४ ॥

**श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शिनी**

विज्ञातं स्वयमेवाऽनुभूतं विशिष्टज्ञानं भगवत्तत्वं येन तम् ऋक्षराजं शङ्करेण पाणिना स्पृष्ट्वेति । भक्तस्य तस्य अङ्गव्यथा उपशमिता ॥२९॥ वयं बहव एव बिलं प्राप्तास्तत्राऽहमिह प्रविष्ट इति शेषः प्रमृजन् प्रमार्ष्टुम् ॥ ३० ॥ मणिना सह ॥ ३१-३५ ॥

**गूढार्थदीपिनी**

विज्ञायतेऽनेनेति विज्ञायते यत्तत् विज्ञानं ज्ञेयं वस्तु भगवत्स्वरूम् येन तम् । विज्ञानशब्दः करणसाधनः कर्मसाधनो वा ॥ २९ ॥ अभिमृश्य संस्पृश्य । शङ्करेण सुखकरेण ॥३०॥ बिलद्वारं तु वयं बहवः प्राप्तास्तत्र अभिशापं कलङ्कं प्रमृजन् प्रमार्ष्टुं-मन्तर्बिलमिह अहमेक एव प्राप्तः इत्यन्वयः ॥ ३१ ॥ मणिना सह उपजहार समर्पितवान् । हर्षेण ॥ ३२ ॥

**श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः**

विज्ञातं विज्ञानं विशिष्टं ज्ञानं भगवत्तत्त्वं येन तम् ऋक्षराजानम् "राजाहः सखीभ्यष्टच्" इति टजभावः समासान्तविधेरनित्यत्वात् व्याजहारोक्तवान् ॥ २९ ॥ हे ऋक्षपते ! वयं बहवो मणिहेतोर्बिलं प्राप्तास्तत्र मिथ्याभिशापममुना मणिना प्रमृजन् प्रमार्ष्टुमिह बिलमध्ये प्राप्तोऽहमिति शेषः ॥३०॥ स जाम्बवान् मणिना सह जाम्बवतीम् उपजहार समर्पयामास ॥३१-३५॥

**श्रीमद्वल्लभाचार्य्यकृता सुबोधिनी**

एवं कृते स्तोत्रे भगनसर्वाङ्गं यथापूर्वं कृत्वा भगवानुवाचेत्याह इतीति । विशेषेण ज्ञातं विशेषज्ञानं यस्य, स्वभावतोऽपि महान्तमृक्षराजानम् अच्युतः सर्वतः धर्मा अपि तस्य तथेति । एतत्प्रयोजनमुत्तरश्लोके वक्तव्यम् । तत्कृतपीडाभावाय वा । **व्याजहार** स्पष्टमुक्तवान् । निदितत्वात् कदाचित् व्याजेनापि वदेत् । अत एतदुक्तम् । **महाराजे**ति संबोधनं सेवकापराधापरिगणनज्ञापनार्थम् । ननु कथं स्पष्टं वचनं कथं वा नाज्ञापितवानित्याह **भगवान**निति । सर्वसमर्थः । तादृशोऽपि देवकीसुतो भक्तकृपालुः । अतो युक्तमेवास्य स्पष्टवचनमिति भावः ॥ २९ ॥ वचनात्पूर्वमेव तस्य हितं च कृतवानित्याह **अभिमृश्ये**ति । तस्याभिमर्शोऽपि सकृत् कृतो नित्यं तिष्ठति । सामान्यस्यैव वाभिमर्शः सुखकरो भवति तत्क्षणम्, किं वक्तव्यमानन्दमयस्य । तत्रापि यस्मिन् क्षणे स निष्पादितः, ततःप्रभृति तथैवानुवर्तत इति पूर्वावस्थां ततोऽप्यधिकां वा प्राप्तवान् । मानसीं व्यथां दूरीकर्तुमाह **अरविन्दाक्ष** इति । दृष्ट्यैव सर्वसुखदायी । **शंकरेण पाणिने**ति । तस्मिन्नतिशयाधानमप्युक्तम् । येनाग्रे सद्बुद्धिरप्युत्पद्यत इति । एवं कायेन मनसा च सान्त्वनं कृत्वा वचसापि सान्त्वनमाह **मेघगम्भीरये**ति । मेघा हि शब्दत एव भाविवृष्टिं सूचयन्तः चिन्तादिसर्वतापहारका भवन्ति । तथाप्यनुचितं कथमुक्तवानित्याशङ्क्याह **कृपया परये**ति । अनेन वा मानसं सान्त्वनम् । तमिति तथा स्तोत्रकर्तारं सान्त्वनोचितम् । त्रिविधसान्त्वनेऽपि हेतुर्भक्तमिति ॥ ३० ॥ वाक्यमाह मणिहेतोरिति । अत्रागमने मणिरेव हेतुः । **मणिं** नेतुमागताः । बहुवचनं पूर्वदृष्टसर्वसाहित्यं सूचयति । हेतुशब्दो वा निमित्तवाची । मणिनिमित्तं वयं समागता इत्यर्थः । **ऋक्षपत** इति । ज्ञात्वैवागमनं निरूपितम् । अन्यथा बिले समागमनं न स्यात् । मणेरपि प्रयोजनमाह **मिथ्याभिशापं प्रमृज**न्निति । एतद्विस्तरेणोक्तमिति लक्ष्यते । **मिथ्याभिशापः** अकृतापकीर्तिकीर्तनम् । लोकाः अतत्त्वविद इति । दृष्टिमेव मन्यन्त इति । अमुना मणिना अभिशापं प्रमृजन् इहागत इति सम्बन्धः । यद्यपि अग्रे मिथ्याभिशापापगमः, तथापि क्रिया प्रारब्धेति वर्तमानप्रयोग एव युक्तः । एकवचनं तु मिथ्याभिशाप एकस्यैवेति । **आत्मन** इत्यवश्यकता । अन्यथा भक्तोद्धारो न सम्भवतीति भावः ॥ ३१ ॥ एवं स्वामिप्राये निरुक्ते कथं देयमिति विचार्य तावन्मात्रे दत्ते स्वस्य सेवकत्वं न सिध्यति, याचितं सर्व एव प्रयच्छतीति स्वकन्यां च दत्तवानित्याह इत्युक्त इति । जाम्बवतः अपत्यं जाम्बवती, अनेन पालिता कन्या न भवतीति सूचितम् । ऋक्षाणां विधानान्तराभावात् दानमेव कृतवान् । सापि ततः पूर्वं कन्या अदत्तैव स्थिता । **मुदे**ति भाग्यं जातमिति । भगवानपि पूजितः, कन्यायाः वरोऽपि प्राप्त इति । ततस्तस्या एव कन्यायाः दानसमये अर्हणार्थं मणिमपि दत्तवान् । एतद्द्वयमपि न कुशोदकपूर्वकं प्रादात्, किन्तु **उपजहार** समीपे आनीय स्थापितवानित्यर्थः ॥ ३२ ॥

**श्रीसुबोधिनी-सारः**

इत्येवं विज्ञातं विज्ञानं स्वरूपं येन तम् ऋक्षराजानं जांबवंतं भगवान् देवकीसुतो व्याजहारोवाच हे महाराज ॥ २९ ॥ **अरविंदाक्षः** पद्मनेत्रः शंकरेण पाणिना आनन्दकारिणा हस्तेन तं भक्तमभिमृश्य संस्पृश्य परया कृपया प्रेम्णा गम्भीरया सांद्रया **गिरा** वाचा ॥ ३० ॥ हे ऋक्षपते मणिहेतोरिह वयं प्राप्ताः तत्रापि आत्मनो मिथ्याभिशापम् अमुना मणिना प्रमृजन् प्रमार्ष्टुं हेतौ शतृ बिलमेकोऽहं प्रातः ॥ ३१ ॥ इत्युक्तः स जांबवान् स्वां दुहितरं पुत्रीं कन्यां जांबवतीं मणिना सहार्हणार्थं कृष्णाय निवेदयामास ह प्रसिद्धम् एतेन विवाहः सूचितः ॥ ३२ ॥

**विवरणटिप्पणी**

**अभिमृश्येत्यस्याभासे । वचनात्पूर्वमेवेति ।** पाठे एवं क्रमाभावेपि अभिमृश्येतिक्त्वाप्रत्ययेन पूर्वकालस्य बोधितत्वादिति भावः । **व्याख्याने तथाप्यनुचित**मिति । अपराधकर्तुः सान्त्वनमनुचितमित्यर्थः । **मणिहेतो**रित्यत्र । इति **लक्ष्यते** इति । विस्तरेण कथनं विनाकाङ्क्षा तिष्ठेदेवेति भावः ।

**गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी**

हे महाराज ! इत्येवं विज्ञातं विज्ञानं चिदानन्दरूपं स्वतत्त्वं येन तमृक्षराजानं देवकीसुतः कृष्णो व्याजहार उक्तवान् । तस्य युद्धप्रयुक्तश्रमादिराहित्यमाह—अच्युत इति । तत्र हेतुमाह—भगवानिति ॥ २९ ॥ स्वमुष्टिप्रहारेण निष्पिष्टाङ्गत्वात् प्रथमं तत्पीडानिवृत्त्यर्थं शङ्करेण सुखकरेण पाणिना तमभिमृश्य संस्पृश्य मेघध्वनिवद्गम्भीरया वाचा व्याजहारेत्यन्वयः।

'मेघगम्भीरया' इत्यनेन श्रवणद्वारा वाचाप्यानन्दं पूरितवानिति दर्शितम्। 'दृष्ट्यापि तत्सन्तापं हृत्वा सुखं दत्तवान्' इति सूचयन्नाह—अरविन्दाक्ष इति। एवं सर्वथा तस्मा आनन्ददाने हेतुमाह—परया कृपया पूर्ण इति शेषः। तत्र हेतुमाह—भक्तमिति ॥ ३० ॥ तदुक्तिं दर्शयति—हे ऋक्षपते! मण्यर्थमिह विलं वयं प्राप्ता आगताः। बहिष्ठजनाभिप्रायेण बहुवचनम्। 'भगवत्त्वेनावाप्तसमस्तकामस्य तव मणिना किम्' अत आह—मिथ्येति। अमुना मणिना हेतुना आत्मनो मम यो मिथ्याभिशापः मिथ्यापवादः प्रसक्तस्तममुनैव प्रमृजन् अपनेतुमिहागताः ॥ ३१ ॥ भगवता इत्येत्युक्तो मुदा युक्तः स जाम्बवानर्हणार्थं सेवार्थं मणिना सह स्वां दुहितरं सुतां कृष्णायोपजहार समर्पयामास। ननु 'ऋक्षस्य सुतापि तत्स्वरूपैव, कथं भगवद्विवाहयोग्या स्यात्' इत्याशङ्क्याह—कन्यां जाम्बवत्याख्यामिति। भगवत्कृपायास्तद्भक्तेश्चाश्चर्यं सूचयन्नाह—हेति ॥ ३२ ॥

### अन्वितार्थप्रकाशिका

इतीति युग्मम् ॥ हे महाराज! इत्येवं विज्ञातं विज्ञानं चिदानन्दरूपं स्वतत्त्वं येन तं भक्तमृक्षराजानम्। टजभाव आर्षः। अच्युतः अरविन्दाक्षो भगवान् देवकीसुतः परया कृपया तत्पीडानिवृत्त्यर्थं शङ्करेण सुखकरेण पाणिना तमभिमृश्य संस्पृश्य मेघध्वनिवद् गम्भीरया गिरा वाचा व्याजहार उक्तवान् ॥ २९-३० ॥ मणीति ॥ हे ऋक्षपते! वयं बहवः मणिहेतोः बिलं बिलद्वारं प्राप्ताः। तत्राहमेकः अमुना मणिना हेतुना आत्मनो मम यो मिथ्याभिशापः मिथ्यापवादः प्रसक्तस्तममुनैव प्रमृजन् प्रमार्ष्टुम् इहान्तर्बिलं प्राप्त इति शेषः ॥ ३१ ॥ इतीति ॥ इति ॥ भगवता उक्तः स जाम्बवान् अर्हणार्थं मणिना सह जाम्बवत्याख्यां कन्यां स्वां दुहितरं मुदा कृष्णयोपजहार ह समर्पयामास। जाम्बवती च श्रीरामावतार एव जाताऽऽसीत्। श्रीरामाय दित्सिताऽप्येकपत्नीव्रतेन तेनास्वीकृता चिरं तपस्तप्त्वेदानीं तं प्रापेति पुराणान्तरे ॥ ३२ ॥

### श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्

इति विज्ञातं बुद्धं विज्ञानं भगवत्स्वरूपस्य यथार्थबोधो येन तं ऋक्षराजं व्याजहार उवाच ॥ २९ ॥ अभिमृश्य स्पृष्ट्वा। अरविंदाक्षो भक्तप्रेक्षणाय प्रफुल्लनेत्रः ॥ ३० ॥ मणीति वयं बहवोजनाः हे ऋक्षपते ॥ आत्मनः स्वस्य अमुना मणिना मिथ्याभिशापं प्रमृजन् प्रमार्ष्टुं निवर्त्तयितुमहमेको विलमध्ये प्राप्त इत्यर्थः ॥ ३१ ॥ उपजहार ददौ ॥ ३२ ॥

### भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

इतीति ॥ इतीत्थं, विज्ञातं विज्ञानं विज्ञेयं येन तं, ऋक्षराजानं जाम्बवन्तं, अनित्यत्वादार्षत्वाद्वा 'राजाह'—इति समासान्ताभावः। देवकीसुतः, अच्युतः, भगवान् श्रीकृष्णः, हे महाराज, व्याजहार ॥ २९ ॥ अभिमृश्येति ॥ शंकरेण सुखकरेण, पाणिना हस्तेन, भक्तं, तं ऋक्षराजं, अरविन्दाक्षः कमलनयनो भगवान्, अभिमृश्याभितः संस्पृश्य, परया निरतिशयया, कृपया उपलक्षितः सन्, मेघगम्भीरया मेघध्वनिवद्गम्भीरया, गिरा, व्याजहारेति पूर्वेण संबन्धः ॥ ३० ॥ उक्तिमेवाह। मणिहेतोरिति। हे ऋक्षपते, वयं मणिहेतोर्मण्यर्थं, इह गिरौ, बिलं बिलद्वारं, बहवः प्राप्ताः। अवाप्तसमस्तकामस्य तव किं मणिनेत्यत आह मिथ्येति। अमुना, मणिना हेतुना, आत्मनो मम, मिथ्याभिशापं मणिना हेतुना संप्राप्तं मिथ्यापवादमित्यर्थः। विमृजन्नेतत्प्रदर्शनेन मार्ष्टुमिच्छन्, अहं तेषां मध्य एक एवेहागतोऽस्मीति योजनीयम् ॥३१॥ इतीत्थं इति। इतीत्थं, उक्तः श्रीकृष्णेनाभिहितः, स जाम्बवान्, मुदा जाम्बवतीं, कन्यामनूढां, स्वां, दुहितरं मणिना सह, अर्हणार्थमुपायनार्थं, कृष्णाय ह स्फुटं यथा तथा, उपजहार समर्पयामास ॥ ३२ ॥

### कृष्णप्रिया

महाराज परीक्षित! श्रीऋक्षराज श्रीजाम्बवानजी ने श्रीरघुनाथजी को अच्छी तरह से जब जान लिया तब कृपा लोचन देवकीनन्दन श्रीअच्युत भगवान ने अपने मङ्गलमय करकमल से श्रीजाम्बबानजी के श्री अङ्ग का स्पर्श किया, सारी तन-मन जीवन की वेदना विसरायी और अरविन्द लोचन भगवान् श्रीकृष्ण करुणा एवं अमीमयी प्रेमगम्भीर वाणी से निजदास जाम्बवानजी को कहने लगे ॥ २९-३० ॥ श्रीकृष्ण प्रभु ने कहा कि भैया जाम्बवानजी! स्यमन्तक मणि के कारण ही आप की गुफा में आप के समीप आये हैं। इस मणि के कारण मुझे लगे हुए जूड़े कलङ्क को मिटाना चाहता हूँ ॥ ३१ ॥ करुणा निधान भगवान् श्रीकृण के वचनामृतों का श्रवण करके परमानन्द से पूर्णानन्द श्रीकृष्णजी का समर्चन किया पुनः भपनी कुलवती श्रीजाम्बवती कुमारी के साथ स्यमन्तक मणि भगवान के श्रीचरणों में समर्पण किया ॥ ३२ ॥

[1]अदृष्ट्वा निर्गमं शौरेः प्रविष्टस्य बिलं जनाः । प्रतीक्ष्य द्वादशाहानि दुःखिताः स्वपुरं ययुः ॥ ३३ ॥
निशम्य देवकी देवी रुक्मिण्यानकदुन्दुभिः । सुहृदो ज्ञातयोऽशोचन् बिलात् कृष्णमनिर्गतम् ॥ ३४ ॥
सत्राजितं शपन्तस्ते दुःखिता द्वारकौकसः । उपतस्थुर्महामायां दुर्गां कृष्णोपलब्धये ॥ ३५ ॥
तेषां तु देव्युपस्थानात् प्रत्यादिष्टाशिषा[2] स च । प्रादुर्बभूव सिद्धार्थः सदारो हर्षयन् हरिः ॥ ३६ ॥

### कर्दमक्षमा

अन्वयः—जनाः, बिलम्, प्रविष्टस्य, शौरेः, निर्गमम्, अदृष्ट्वा, द्वादश, अहानि, प्रतीक्ष्य, दुःखिताः, स्वपुरम्, ययुः ॥३३॥ देवकी, देवीरुक्मिणी च, आनकदुन्दुभिः, सुहृदः, ज्ञातयः, कृष्णम्, अनिर्गतम्, निशम्य, अशोचन् ॥ ३४ ॥ दुःखिताः, ते, द्वारिकौकसः, सत्राजितम्, शपन्तः, कृष्णोपलब्धये, महामायाम्, दुर्गाम्, उपतस्थुः ॥ ३५ ॥ तेषाम्, तु, देव्युपस्थानात्, प्रत्यादिष्टाशिषा, सिद्धार्थः, सदारः, स च ( यज्ञरूपः ) हरिः, सदारः, प्रादुर्बभूव ॥ ३६ ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

श्रीकृष्णप्राप्तये चंद्रभागां नाम दुर्गामभजन् ॥ ३५ ॥ स च कृष्णस्तेषां प्रादूर्बभूव आसव इति पाठे असव इंद्रियाणि तेषां प्रेष्ठ इत्यर्थः । कदा देव्या उपस्थानात् तया तान्प्रति आदिष्टा दत्ता या आशीः कृष्णं द्रक्ष्यथेति तया सहैव ॥ ३६ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

प्रतीक्ष्य बिलद्वारे स्थित्वा ॥ शौरेरिति—वसुदेवादीनां मध्यत्र प्रविष्टे दुःखं स्यादतस्तत्र विलंबो न घटत इति भावः । जनाः सत्राजिन्नागरिकाः । कृष्णेऽत्यंतप्रेमाऽभावाद्‌बिलप्रवेशमकृत्वैव पुरं ययुः ॥ ३३ ॥ अशोचन् शोकसंतप्ता आसन् ॥ ३४ ॥ ते जनाः । शपंतो निन्दन्तः । चंद्रेण भज्यते सेव्यत इति तथा ताम् । "नृणां बंधं वधं घोरं पुत्रनाशं धनक्षयम् । व्याधिमृत्युभयं दुर्गा पूजिता शमयिष्यति ॥" इति हरिवंशोक्तेः, 'दुर्गे स्मृता हरसि भीतिमशेषजंतोः' इति मार्कण्डेयाच्च ॥ उपतस्थुरिति भगवद्वल्लीलावेशादेव । उपलब्धये शीघ्रं प्राप्तये ॥ ३५ ॥ तेषां देवीमुपतिष्ठतां मध्ये । 'आशिषाऽऽसवः इति पाठे । इत्यर्थ इति—यथा प्रियेण धनेनापींद्रियाणि रक्षंति तद्दानेन च न ददति 'लक्षं ते दास्यामि निजमेकनेत्रं देहि' इति श्रुत्वापि धनमगृहीत्वा तन्न ददति प्रेष्ठत्वात्, तद्वद्‌द्वारकावासिनां श्रीकृष्णोऽपीति भावः । कदा प्रादुर्बभूवेति चेदाह—देव्या इति । तया देव्या । तान् सेवमानान् । तयाऽऽशिषा । सहैव तत्क्षणमेव । सिद्धार्थः मणिसहितः ॥ देव्या प्रत्यक्षीभूय प्रत्यदिष्टा दत्ता या आशीः 'कृष्ण आगतप्रायः' इति । तया आशिषा सहैव । असव इति हरेर्विशेषणम् । असवः प्राणतुल्यः 'पुंसि भूम्न्यसवः प्राणाः' इत्यमरः । सिद्धोऽर्थो मण्यानयनजांववदनुग्रहश्रीजांबवतीपरिग्रहसत्राजितह्रेपणादिरूपो लीलाप्रयोजनं यस्य स तथा ॥ ३६ ॥

### श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी

शौरेरिति श्रीवसुदेवाद्यपेक्षया तत्र विलम्बो न सम्भवेत् इत्यभिप्रायेणेति भावः । जनास्ते सत्राजिन्नागराः अतो द्वारकावासिस्वाभाव्येन दुःखिता अपि सन्तो नात्यन्तरङ्गत्वात् स्वीयमेव पुरं ययुः न तु तद्बिलमित्यर्थः ॥ ३३ ॥ देवीत्युभयत्र सम्बन्धः परमपूज्येत्यर्थः । तच्च परमप्रेमाधिक्यात् परमशक्तिरूपत्वाच्च आनकेत्यादौ प्रेम्ण ऊनोनतयाऽनुक्रमः सुहृदः सम्बन्धिनः सखायो वा ॥ ३४ ॥ उपतस्थुरिति च भगवद्वल्लौकिकलीलावेशादेव उपलब्धये अचिरादेव प्राप्तये ॥ ३५ ॥ तुशब्दो विशेषे देव्युपस्थानादन्येषां न प्रादुर्भवति "देवान् देवयजो यान्ति" इत्यादेः तेषां पुनः देव्युपस्थानात् हरिः प्रादुर्बभूवेत्यर्थः । तेषु तदाद्याराधनस्य लौकिकलीलामयश्रीकृष्णप्रेमरसैकविलासत्वात् देव्या अपि तत्सम्बन्धेन योग्यतालब्धेरितिभावः । सहेति यदाशीर्दत्ता तदैवेत्यर्थः सिद्धोऽर्थः मण्यानयनजाम्बवदनुग्रहश्रीजाम्बवतीपरिग्रहसत्राजितह्रेपणादिरूपं तादृशलीलाप्रयोजनं यस्य सः अत एव सदारः प्रादुर्बभूवेति आविर्भाववच्छीघ्रागमनात् तच्च गरुडारोहणेनेति सम्भाव्यम् अन्यत्तैः तत्र हरिरित्यस्यैव व्याख्या स च श्रीकृष्ण इति ॥ ३६ ॥

### श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी

शौरेरिति श्रीवसुदेवाद्यपेक्षया । तत्र चिरावस्थितिर्न सम्भवतीति भावः । अतो दुःखिता दुःखभरेण विचारापगमादित्यर्थः, अतः स्वकीयामेव पुरम्, न तु तद्बिलमित्यर्थः ॥ ३३ ॥ देवी ईश्वरी महिषीत्यर्थः; सुहृदः सम्बन्धिनः सखायो वा,

---

१. ततोऽन्यैश्च मणिश्रेष्ठैः पूजितो भक्तवत्सलः । तस्मै ददौ परां मुक्तिं पुनरावृत्तिवर्जिताम् ॥ बिज. ।
अन्यैस्स मणिमुख्यैश्च पूजितो भक्तवत्सलः । ददौ तस्मै परां मुक्तिं प्रीत्या जाम्बवतो हरिः ॥ च. पु. दि. ।

२. शिषां वीर; विषां भवन्–बिज. ।

कृष्णं सर्व्वचित्ताकर्षकमिति महाशोकः सूचितः ॥ ३४ ॥ ते देवक्यादयः श्रीकृष्णैकजीवना वा, सर्व्वे जनाः कृष्णस्याखण्डानन्द-घनमूर्त्तेः, उप समीपे अचिरादेव लब्धये, महामायामिति तत्र तस्याः सामर्थ्यं सम्भावयति, भगवत एव शक्तिविशेषरूपत्वात् ॥३५॥ तु इव. उपस्थानादिव, वस्तुतस्तेषु स्नेहभरेणाशु स्वयमेव प्रादुर्भावात् सिद्धोऽर्थः। मण्यानयन-श्रीजाम्बवदनुग्रह-जाम्बवती-परिग्रहादिप्रयोजनं यस्य सः, अतएव सदारः। एवं श्रीजाम्बवतीपरिग्रहाद्यर्थमेव सत्राजिद्द्वारा निजापवादः स्वयमेवोत्थापित इति द्योतयति—प्रादुर्बभूवेति। वस्तुतः सदा द्वारकायां विद्यमानत्वात्, केवलं क्रीडाविशेषार्थमेव कदाचिदाच्छन्नत्वात्, किंवा आविर्भाववत् सहसा शीघ्रागमनात्, हरिरिति तेषां शोकहरणस्य किंवा सदारत्वादिना हर्षणेन मनोहरणस्याभिप्रायेण। अन्यत्तैर्व्याख्यातम्। तत्र हरिरित्यस्यैवं व्याख्या श्रीकृष्ण इति। यद्वा, तदनुसारेण हरिरित्यत्र पाठान्तरमनुसन्धेयम् ॥ ३६ ॥

### श्रीमद्वीरराघवाचार्यकृता भागवतचन्द्रचन्द्रिका

ततोऽन्यैश्च मणिश्रेष्ठैः पूजितो भक्तवत्सलो भगवान् तस्मै जाम्बवते परामुत्कृष्टां पुनरावृत्तिरहितां मुक्तिं ददौ दास्यामीति सङ्कल्पितवानित्यर्थः। तदेव ददाविति वा। अदृष्ट्वेति बिलं प्रविष्टस्य शौरेः पुनर्निर्गमनमदृष्ट्वा द्वारस्थाः जना द्वादशदिनानि प्रतीक्ष्य दुःखिताः पुरं द्वारकां जग्मुः ॥ ३३ ॥ निशम्येति देवक्यादयो बिलादनिर्गतं कृष्णं श्रुत्वा अशोचन् ते दुःखिताः सन्तः सत्राजितं शपन्तः कृष्णप्राप्तये महामायां दुर्गाम् उपतस्थुः अभजन् ॥ ३४-३५ ॥ तेषामिति स च कृष्णस्तेषां प्रादुर्बभूव कदा तस्या देव्या उपस्थानात् तया तान्प्रति आदिष्टा आशिषः श्रीकृष्णं द्रक्ष्यथेत्येवंविधाः येषां तेषां सतां कथम्भूतः सिद्धः साधितोर्थः मण्यानयनरूपं प्रयोजनं यस्य सः सदारः जाम्बवतीसहितः अत एव हर्षयन् ॥ ३६ ॥

### श्रीविजयध्वजतीर्थकृता पदरत्नावली

उपतस्थुः अभजन् ॥ ३५ ॥ ततः किमभूदत्राह–तेषामिति। हरिस्तेषां प्रादुर्बभूवेत्यन्वयः देव्या उपस्थानान्निषेवणा-त्प्रत्यादिष्टाशिषाम् अभ्यागताभ्युदयानां भवन्पूज्यः सिद्धार्थः नित्यलब्धप्रयोजनः प्रत्यादिष्टाशिषः इति पाठे ये प्रथमं नष्टकृष्णा-ख्याशिषोऽभवन् तेषां तुशब्दो हेत्वर्थः देव्युपस्थानाद्धेतोरित्यर्थः अनेनापदि प्राप्तायां देवताशरणं कर्त्तव्यमित्युक्तं भवति ।३६-३७।

### श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः

तेषामित्यादि, प्रत्यादिष्टाशिषा सह प्रादुर्बभूव यदेवाशीरभूत् तदेव प्रादुर्बभूवेत्यर्थः अतस्तदाशीरपेक्षानासी-दित्यर्थः ॥ ३६ ॥

### श्रीनाथचक्रवर्तिपादविरचिता चैतन्यमतमञ्जूषा

प्रत्यादिष्टाशिषा सह प्रादुर्बभूव, यदेवाशीरभूत्, तदेव प्रादुरभूदिति तुल्ययोगितायामाशिषः पूर्वभावित्वाभावान्न कारणत्वम् ॥ ३६ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

देव्या प्रत्यादिष्टा प्रत्यक्षीभूय दत्ता या आशीः कृष्ण आयातप्राय इति तया सहैव आशिषासव इति पाठे असव इति हरेर्विशेषणम् प्राणतुल्य इत्यर्थः ॥ ३६ ॥

### गूढार्थदीपिनी

शपन्तो निन्दन्तः। उपतस्थुः आराधयामासुः ॥ ३५ ॥ देव्या प्रत्यक्षीभूय तान् प्रति आदिष्टया दत्तया आशिषा आशी-र्वादेन सह सः हरिः प्रादुर्बभूव ॥ ३६-३७ ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

तेषां द्वारकौकसां देव्याः उपस्थानात् अर्चनस्थानात् प्रति आदिष्टा दत्ता या आशीः श्रीकृष्णं द्रक्ष्यथेति तयैव सह तत् क्षणमेव हरिः भक्तार्तिहरः तान् हर्षयन् प्रादुर्बभूव ॥ ३६-३८ ॥

### श्रीमद्वल्लभाचार्य्यकृता सुबोधिनी

एवमन्तःस्थितिमुक्त्वा बहिःस्थितिमाह अदृष्ट्वा निर्गममिति त्रिभिः। प्रविष्टो हि तस्मिन्नेव दिवसे समायास्यतीति तत्रत्या बहिःस्थिताः निरन्तराकाङ्क्षया भोजनादिरहिताः द्वादशदिवसपर्यन्तं स्थित्वा द्वादशाङ्गेष्वपि क्षीणेषु जना विवेक-रहिताः भगवानपि शौरिरिति विशेषतस्तत्प्रभावानभिज्ञाः दुःखिताः सन्तः द्वादशाहानि प्रतीक्ष्य स्वपुरं ययुः। 'संवत्सरप्रतिमा वै द्वादशरात्रय' इति। ततो येऽपि नागताः, तेऽपि द्वारकायां स्थिताः भवन्निर्गमाभावं श्रुत्वा दुःखिता जाता इत्याह निशम्येति।

स्त्रीणामविवेको भूयानिति । तत्रापि पुत्रस्नेहो महानिति देवक्यादिक्रम उक्तः । त्रयो मुख्याः । अन्येऽपि सुहृदः सम्बन्धिनः ज्ञातयो गोत्रिणश्च बिलादनिर्गतं कृष्णं श्रुत्वा अशोचन् । वस्तुतत्त्वानभिज्ञाः । कृष्णो हि भक्तहितार्थमेवावतीर्णः । कथं विलम्बं कृतवानिति । एवं सर्वेषां शोकं राजसं दुःखमुक्त्वा तामसं सात्त्विकं चाह **सत्राजितं शपन्तस्त** इति । दुरात्मायं सत्राजित्, प्रसेनवन्म्रियतामिति । एवं शापे हेतुः **दुःखिता** इति । दुःखेऽपि विशिष्टो हेतुः **द्वारकौकस** इति । मथुरां परित्यज्य देशप्रान्ते द्वारकायां स्थिताः कृष्णैकशरणाः भगवत्यनागते दुःखिता भवन्तीति युक्तमित्यर्थः । द्वारकावासित्वेन तेषां शापोऽपि सत्राजिति फलिष्यतीति सूचितम् । सात्त्विकं दुःखमाह **उपतस्थुर्महामायामिति** । माया हि भगवदुद्गमे प्रतिबन्धिका भवति । भगवांश्च तस्यै वरं दत्तवान् 'अर्चिष्यन्ती'ति । अतो भगवता दत्तो वरः अवश्यं तेनैव सत्यः कर्तव्य इति देवतान्तरभजनापेक्षया भगवदाविर्भावार्थं दुर्गैवानुसन्धेया ॥ ३५ ॥ एवं भक्तानां त्रिविधं दुःखं दृष्ट्वा स्वयमाविर्भावं कुर्वन्नेव कृतकार्यः अर्धमासव्रते कृत एव स्वयमाविर्भूतः, स्ववाक्यमपि सत्यं कृतवानित्याह **तेषां तु देव्युपस्थानादि**ति । प्रत्यादिष्टाः आशिषा सह असवो येन तादृशो भगवान् स्वयमेव समागतः । असुशब्दात् समासान्तः अच्प्रत्ययः । आशिषेत्यलुक् तृतीयायाः । प्रत्यादिष्टमुपदिष्टम् । प्रतिरानुगुण्ये । देव्युपस्थानात् या आशीः तया सह भगवान् प्राणानपि दत्तवानिति । अथवा । देव्युपस्थानात् प्रत्यादिष्टाशिषा कृत्वा दुर्गाया आशीर्वादेन सवो यज्ञरूपः प्रादुर्भूतः । **प्रत्यादिष्टाशिषां सवेति** पाठश्चिन्त्यः । राजानं प्रति वा । वो युष्माकं भक्तानां स कार्यकर्ता सिद्धार्थः सन् प्रादुर्भूत इति । दुर्गाया वा आशीर्निराकृत्य प्रत्यादिष्टाशिषा कृत्वा स्वयमेव सर्वकामपूरको यज्ञः प्रादुर्भूतः । सिद्धार्थः स्यमन्तकसहितः । सदारः स्त्रीसहितोऽपि । **हर्षयन् हरि**रिति । हृष्टः सर्वाभरणभूषितः । भोजनादिना च पुष्टो, नतु ग्लानियुक्तः । यतो हरिः सर्वदुःखहर्ता ॥ ३६ ॥

### श्रीसुबोधिनी–सारः

बिलं प्रविष्टस्य शौरेः श्रीकृष्णस्य निर्गमं प्रत्यावर्तनमदृष्ट्वा द्वादशाऽहानि दिनानि यावत् प्रतीक्ष्य दुःखिता जनाः स्वपुरं द्वारकामाजग्मुः ॥३३॥ बिलादनिर्गतं न निःसृतं कृष्णं निशम्य श्रुत्वा देवी देवकी रुक्मिणी वसुदेवोऽन्ये सुहृदोऽशोचन् चिन्ताग्रस्ता बभूवुः ॥ ३४ ॥ दुःखितास्ते द्वारकावासिनः सत्राजितं शपंतो धिक्कुर्वंतः कृष्णस्योपलब्धये प्राप्त्यर्थं दुर्गां चंद्रभागां देवीमुपतस्थुः आराधयांबभूवुः । महामायामित्यनेनेष्टदाने सामर्थ्यं सूचितम् ॥ ३५ ॥ देव्या उपस्थानात् प्रत्यादिष्टा दत्ता या आशीः कृष्णं द्रक्ष्यथेति तया सह स हरिः सदारः सस्त्रीकः सिद्धार्थः प्राप्तमनोरथः हर्षयन् तेषां प्रादुर्बभूव ॥ ३६ ॥

### गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

बहिष्ठजनानां वृत्तमाह—अदृष्ट्वेति । जना द्वादशाहानि प्रतीक्ष्यापि बिलं प्रविष्टस्य शौरेः कृष्णस्य निर्गममदृष्ट्वा दुखिताः सन्तः स्वपुरं द्वारकां ययुरित्यन्वयः ॥ ३३ ॥ तन्मुखात् कृष्णं बिलादनिर्गतं निशम्य श्रुत्वा देवक्यादयोऽशोचन्नित्यन्वयः ॥ ३४ ॥ किञ्च दुःखिता द्वारकावासिनः 'म्रियतामयं दुरात्मा' इति सत्राजितं शपन्तः कृष्णोपलब्धये महामायां भगवच्छक्तिं दुर्गामुतस्थुः स्तोत्रनमस्कारपूजादिभिराराधयामासुरित्यन्वयः ॥ ३५ ॥ तेषां द्वारकावासिनां देव्या उपस्थानात् आराधनात्तया तान्प्रति आदिष्टा दत्ता या आशीः कृष्णं द्रक्ष्यथेति तया सह झटित्येव सिद्धार्थो लब्धमणिः सदारो जाम्बवतीसहितो हर्षयन् हरिः प्रादुर्बभूवेत्यन्वयः । 'असव' इति पाठे असव इन्द्रियाणि तेषां प्रेष्ठ इत्यर्थः । स च इति च्छेदे यज्ञरूप इत्यर्थः । भवदाविर्भावार्थं देवतान्तराराधनापेक्षायां देव्याराधनमेव कर्तव्यम् । "अर्चिष्यन्ति मनुष्यास्त्वां सर्वकामवरेश्वरीम्" इति स्वदत्तवरस्य भगवतैव यथार्थत्वसम्पादनस्यावश्यकत्वात् । गोपकुमारिकाणां रुक्मिण्या द्वारकौकसां च तदाराधनेन भगवत्प्राप्तिलक्षणदुर्लभफलस्य जातत्वाच्चेति ध्येयम् । सुबोधिन्यामप्येतत् स्पष्टमुक्तम् ॥ ३६ ॥

### अन्वितार्थप्रकाशिका

अदृष्ट्वेति ॥ जना द्वादशाहानि प्रतीक्ष्यापि बिलं प्रविष्टस्य शौरेः कृष्णस्य निर्गममदृष्ट्वा दुःखिताः सन्तः स्वपुरं द्वारकां ययुः ॥ ३३ ॥ निशम्येति ॥ तेषां मुखात् कृष्णं बिलादनिर्गतं निशम्य देवी देवकी रुक्मिणी आनकदुन्दुभिः सुहृदः ज्ञातयश्च अशोचन् ॥ ३४ ॥ सत्राजितमिति ॥ दुःखिता द्वारकौकसः द्वारकावासिनो म्रियतामयं दुरात्मेति सत्राजितं शपन्तः कृष्णोपलब्धये महामायां भगवच्छक्तिं चन्द्रभागां नाम दुर्गामुपतस्थुः आराधयामासुः । तङभाव आर्षः । आशिषासव इति पाठे असव इति हरेर्विशेषणम् । प्राणतुल्य इत्यर्थः । स्वामिनस्तु आसव इति चिच्छिदुः । असव इन्द्रियाणि तेषां प्रेष्ठ इति ॥ ३५ ॥ तेषामिति ॥ तेषां द्वारकावासिनां देव्या उपस्थानात् आराधनात्तया तान्प्रत्यादिष्टा दत्ता या आशीः कृष्णं द्रक्ष्यथेति तया सह झटित्येव सिद्धार्थो लब्धमणिः सदारो जाम्बवतीसहितो हर्षयन् हरिः प्रादुर्बभूव ॥ ३६ ॥

### श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्

निर्गमं पुनरागमनं ॥ ३३–३५ ॥ तया दुर्गया प्रत्यादिष्टा दत्ताया आशीराशीर्वादस्तया सह हरिः प्रादुर्बभूव ॥३६–३८॥

**भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी**

तत इति ॥ ततः, अन्यैः, मणिश्रेष्ठैश्च, पूजितो जाम्ववता कृतार्हणः, भक्तवत्सलः श्रीकृष्णः, तस्मै जाम्बवते, पुनरावृत्ति-वर्जितां, परां मुक्तिं, ददौ ॥ ३३ ॥ अदृष्ट्वेति ॥ बिलं प्रविष्टस्य, शौरेः श्रीकृष्णस्य, निर्गमं बिलात् पुनर्निर्गमनं, द्वादशाहानि प्रतीक्ष्यापि, अदृष्ट्वा, जना द्वारिकावासिनो लोकाः, दुःखिताः सन्तः, स्वपुरं ययुः ॥ ३४ ॥ निशम्येति । देवी देबकी, रुक्मिणी, आनकदुन्दुभिर्वसुदेवः, सुहृदः, ज्ञातयः, बिलात् अनिर्गतमबहिर्यातं, कृष्णं निशम्य, श्रुत्वा, अशोचन् शोकं चक्रुः ॥ ३५ ॥ सत्राजितमिति । दुःखिताः बिलतः कृष्णानिर्गमजन्यदुःखार्त्ताः, ते द्वारकौकसो जनाः, सत्राजितं शपन्तः सन्तः, कृष्णोपलब्धये श्रीकृष्णप्राप्त्यर्थं, दुर्गां दुर्गाख्यां, महामायां, उपतस्थुरभजन् ॥ ३६ ॥

**कृष्णप्रिया**

राजन् इधर गुफा के बाहर श्रीकृष्ण भगवान् जिन सभ्यों को बैठाये थे उन स्वजनों ने बारह दिन पर्यन्त बाहर बैठकर प्रतीक्षा की लेकिन जब पुरुषोत्तम बाहर नहीं आये तब खिन्न होकर वे वहाँ से द्वारिकापुरी की ओर प्रस्थान कर गये ॥ ३३ ॥ द्वारिका में विराजमान माता देवकीजी एवं पितृचरण वसुदेवजी आनक दुदुंभि जी, एवं परिजन परिवारजन परिचरजन स्वजन श्रीरुक्मिणीजी देवी आदि सर्व प्रभु गुफा से बाहर नहीं आये यह व्यथित वृत्तान्त सुनकर अधिकतर व्यथित बन गये ॥ ३४ ॥ इस दुःखद समाचार से सर्व-द्वारिकाजन अत्यंत वेदनायुक्त होकर सत्राजित को भला-बुरा सुनाने लगे पुनः श्रीकृष्ण चन्द्र भगवान् की प्राप्ति के लिये जगदम्बिका भगवती जी की आराधना करने लगे ॥ ३५ ॥ द्वारिका के प्रजाजन की आराधना से भगवती अम्बा प्रसन्न हुईं और आशीर्वाद प्रदान किया। इधर भगवान् श्रीकृष्ण उसी अवसर सर्व समक्ष स्यमन्तकमणि एवं नववधू जाम्ववती के साथ सफल संकल्प होकर स्वजन वृन्द को संतुष्ट करते हुए प्रकट हो गये ॥ ३६ ॥

**उपलभ्य हृषीकेशं मृतं पुनरिवागतम् । सह पत्न्या मणिग्रीवं सर्वे जातमहोत्सवाः ॥ ३७ ॥**
**सत्राजितं समाहूय सभायां राजसंनिधौ । प्राप्तिं चाख्याय भगवान् मणिं तस्मै न्यवेदयत् ॥ ३८ ॥**
**स चातिव्रीडितो रत्नं गृहीत्वावाङ्मुखस्ततः । [1]अनुतप्यमानो भवनमगमत् स्वेन पाप्मना ॥ ३९ ॥**
**सोऽनुध्यायंस्तदेवाघं बलवद्विग्रहाकुलः । कथं मृजाम्यात्मरजः प्रसीदेद्[2] वाच्युतः कथम् ॥ ४० ॥**

**कर्दमक्षमा**

अन्वयः-मृतम्, पुन, आगतम्, इव, सहपत्न्या, हृषीकेशम्, मणिग्रीवम्, उपलभ्य. जातमहोत्सवाः, सर्वे, अभवन् ॥३७॥ सभायाम्, सत्राजितम्, समाहूय, सभायाम्, राजसन्निधौ, च, मणिप्राप्तिम्, आख्याय ( राजसन्निधौ ) भगवान्, तस्मै, मणिम्. न्यवेदयत् ॥ ३८ ॥ स, च, अतिव्रीडितः, रत्नम्, गृहीत्वा, स्वेन, एव, पाप्मना, अनुतप्यमानः, अवाङ्मुखः, स्वभवनम्. अगमत् ॥ ३९ ॥ बलवद्, विग्रहाकुलः, सः, तद्, एव, अघम्, अनुध्यायन्, आत्मरजः, कथम्, मृजामि, च, अच्युतः, कथम्. प्रसीदेत्, इति, चिन्तयामास ॥ ४० ॥

**श्रीधरस्वामिविरचिता भावार्थदीपिका**

लोके जनाः कथंचिन्मृतं बन्धुं पुनरागतमुपलभंते तद्वदुपलभ्य सर्वे जातमहोत्सवा आसन्निति ॥ ३७-३८ ॥ पाप्मनाऽ-पराधेनानुतप्यमानः ॥ ३९ ॥ अघं दोषम् आत्मनो रजोमलमपराधमिति ॥ ४० ॥

**श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः**

अत्र मृतमिवेति लुप्तोपमा बोध्या । यद्वा-मृतेर्मृतिस्थानादागतं मृतं तद्धिताणो वैकल्पिकणित्वाद्वृद्ध्यभाव इतो लोपे च रूपम् । हृषीकाणामीशं तमंतरेणाचेतनत्वप्रायाभिप्रायेण । मणिग्रीवमिति स्वभक्तेन जांबवता स्वकन्यादानसमये ग्रीवायां मणिधारणात् ॥ ३७ ॥ प्राप्तिं महायुद्धद्वारा । तस्मै सत्राजिते । पूर्वमुग्रसेनार्थं प्रार्थितेऽपि तस्मिंस्तस्य लिप्साराहित्यबोधनाय न्यवेदयदर्पयामास । यतो भगवान् सर्वैश्वर्यपूर्णतया तदादिषु नैरपेक्ष्यादिति भावः ॥३८॥ स च सत्राजित् । अवाङ्मुखोऽधोमुखः । ततः कृष्णात् । रत्नं मणिम् । अपराधेन मिथ्याभिशापकथनरूपेण । अनुतप्यमानः पश्चात्तापं कुर्वन् ॥ ३९ ॥ स सत्राजित् । तदेव मिथ्योक्तिलक्षणम् । बलवता श्रीभगवता तदीयैर्बलवद्भिर्वा विग्रहो मिथ्यापवादोत्थापनेन विरोधस्तेनाकुलश्चिन्तातों-ऽभूत् ॥ ४० ॥

---

१. अनुतप्यन् स्वभवने-विज.; सन्तप्य-प्रा. पा. । २. देदच्यु ।

### श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी

हृषीकाणामीशमिति तमन्तरेणाचेतनत्वप्रायताभिप्रायेण मणिग्रीवमित्यस्यान्ते निर्द्देशस्तद्ग्रीवत्वस्य सुष्ठुहर्षविषादादि-कारित्वेन सर्वपर्य्यायकत्वात् ॥ ३७ ॥ सम्यक् यत्नत आहूय सभामध्ये तत्र च राज्ञ उग्रसेनस्य राज्ञां वा सन्निधौ मिथ्यापवाद-मार्जनार्थं सर्वलोकप्रहर्षणार्थं च सर्वप्रजासु तद्वृत्तप्रख्यापनाय तथा स्वयं प्रागुग्रसेनार्थं प्रार्थितेऽपि तस्मिंस्तस्य लिप्साराहित्य-बोधनाय न्यवेदयत् अर्पयामास यतो भगवान् सर्वैश्वर्य्यपूर्णतया तदादिषु नैरपेक्ष्यादिति भावः ॥ ३८ ॥ त्वर्थे चकारः सर्वेष्वन्येषु प्रहृष्टेष्वपि तस्याऽनुतापेन भेदात् ततस्तस्याः सभातः स्वेन स्वीयेनैवेति श्रीभगवतस्तस्मिन्नवमानादिकम् निरस्तम् ॥ ३९ ॥ स इत्यर्द्धकम् । अनु निरन्तरं ध्यायन् एवशब्देन महार्घतया नितरां तदन्यचिन्ताराहित्यं बोध्यते बलवता श्रीभगवता किं वा बलवद्भिस्तदीयैर्विग्रहः मिथ्यापवादोत्थापनेन विरोधस्तेनाकुलश्चिन्ताव्याकुलोऽभूदिति ॥ ४० ॥

### श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी

हृषीकाणामीशमिति सर्वेन्द्रियोत्सवप्रवर्त्तनाभिप्रायेण, जातमहोत्सवा बभूवुः, मणिग्रीवमित्यस्यान्ते निर्द्देशः, मिथ्याप-वाद-मार्ज्जनादिना श्रीकृष्ण-प्रीत्युत्पादनेन महोत्सवाधिक्यात् ॥ ३७ ॥ सम्यगाप्तजनप्रेषणादिना आहूय, सभामध्ये तत्र च राज्ञ उग्रसेनस्य राज्ञां वा सन्निधाविति मिथ्यापवादमार्ज्जनार्थं सर्व्वलोकप्रहर्षणार्थञ्च सर्व्वप्रजासु तद्वृत्तप्रख्यापनाय । तथा स्वयं प्रागुग्रसेनार्थं प्रार्थितेऽपि तस्मिंस्तस्य लिप्साराहित्यबोधनार्थमिति न्यवेदयदर्पयामास, यतो भगवान् सर्व्वैश्वर्य्यपूर्णतया तस्मिन् नैरपेक्ष्यादिति भावः ॥ ३८ ॥ त्वर्थे चकारः, सर्वेष्वन्येषु प्रहृष्टेष्वपि तस्यानुतापेन भेदात्, ततस्तस्याः सभायाः सकाशात् स्वेन स्वकीये नैवेति श्रीभगवतस्तस्मिन्नवमानादिकं निरस्तम् ॥ ३९ ॥ अनु निरन्तरं ध्यायन्, एव-शब्देन महाघतया तदन्य-चिन्ताराहित्यं बोध्यते । बलवता श्रीभगवता, किंवा बलवद्भिस्तदीयैर्विग्रहो मिथ्यापवादोत्थापनेन विरोधस्तेनाकुलः सन् कथमित्यादिकञ्चानुध्यायन्, अच्युत इति सदा प्रसादाच्च्युतिरहितः सन्निति भावः ॥ ४० ॥

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका

उपलभ्येति यथा लोके जना मृतं बन्धुं पुनरागतमुपलभन्ते तद्वद्धृषीकेशं तत्रापि पत्न्या सहितं मणिर्ग्रीवायां यस्य तमुपलभ्य सर्वे जातमहोत्सवा आसन् ॥ ३७ ॥ सत्राजितमिति राज्ञ उग्रसेनस्य सन्निधौ प्राप्ति मणिलाभप्रकारमाख्याय तस्मै सत्राजिते मणिं न्यवेदयदर्पयामास ॥ ३८ ॥ सचेति स्वेन पाप्मना याच्ञावैफल्यकरणमिथ्यापवादापादनादिरूपेणानुतप्यमानः स्वगृहं जगाम ॥ ३९ ॥ स सत्राजित्तमेवार्थमपराधरूपमनुचिन्तयन् अघमिति च पाठः बलवता भगवता सह यो विग्रहो विरोध-स्तेनाकुलश्च चिन्तयामासेति शेषः । चिन्ताप्रकारमेवाह—कथमिति सार्द्धेन, आत्मरजः स्वापराधं मृजाम्यपनयामि कथं वा अच्युतः प्रसन्नो भवेत् ॥ ४० ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

आख्यायोक्त्वा ॥ ३८ ॥ स्वेन पाप्मनानुतप्यन्पश्चात्तापं कुर्वन् ॥ ३९–४० ॥

### श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः

उपलभ्येत्यादि । हृषीके इन्द्रिये जातित्वादेकवचनम् हृषीके मृते नष्टं शं कल्याणं पुनरागतमिव तम् पत्न्या सह जाम्बवत्या सह ॥ ३७–४५ ॥

इति श्रीदशमे श्रीबृहत्क्रमसन्दर्भे षट्पञ्चाशोऽध्यायः ॥ ५६ ॥

### श्रीनाथचक्रवर्तिपादविरचिता चैतन्यमतमञ्जूषा

उपलभ्य हृषीकेशमिति हृषीके इन्द्रिये जातावेकवचनम्, नष्टं शं कल्याणं पुनरागतमिवेत्यर्थः ॥ ३८–४५ ॥

इति षट्पञ्चाशोऽध्यायः ॥ ५६ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

मणिग्रीवमिति स्वभक्तेन जाम्बवता स्वकन्यासम्प्रदानसमये ग्रीवाय मणिधारणात् ॥ ३७–३८ ॥ अनुतप्यमानोऽनु-तपन् ॥ ३९ ॥ बलवद्भिर्भगवदीयैः सह विग्रहः विरोधस्तेनाकुलोऽभूत् । अनुध्यानमाह—कथमिति सार्द्धद्वयेन ॥ ४०–४४ ॥

### गूढार्थदीपिनी

न्यवेदयत् अर्पितवान् ॥ ३८ ॥ अवाङ्मुखोऽधोमुखः ततः राजसभातः पाप्मना अपराधेन ॥ ३९ ॥ स इत्यर्द्धम् । स सत्राजित् । तदेव मिथ्योक्तिलक्षणम् । अघं दोषम् ॥ ४० ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

पाप्मना अपराधेन अनुतप्यमानः अनुतपन् ॥ ३९ ॥ आत्मनो रजो मलमपराधम् ॥ ४०-४१ ॥

### श्रीमद्वल्लभाचार्य्यकृता सुबोधिनी

ततः परमानन्दो जात इत्याह **उपलभ्येति**। असभ्यो दृष्टान्तो लौकिकभाषायां न दोषाय। श्वशुरेणैव स मणिः कण्ठे निबद्धः। अतस्तदनुरोधेन मणिः स्वकीय एवेति ज्ञापयन् स्त्रीसहितो मणिग्रीवः स्वयमागतः। न केवलं समागमने अपकीर्त्यभावः, किन्तु निरोधोऽप्यनेन जात इत्याह **सर्वे जातमहोत्सवा** इति। हृषीकेशत्वात्तथैव तेषु प्रेरितवान् ॥ ३७ ॥ एवमपि प्राप्य उपक्रमबलीयस्त्वार्थं समानयनार्थं प्रक्रान्त इति सत्राजितायैव दत्तवानित्याह **सत्राजितमिति**। यदादौ भगवान् विचारयति, तदेव करोति। आदौ च तस्य स्यमन्तक इति प्रवृत्तः। न केनाप्युपायेन स्वकीयं मन्यते। अत एवाग्रेऽपि न ग्रहीष्यति। निबन्धे त्वन्योऽपि हेतुरुक्तः।

सर्वात्मनान्यहृदयं न गृह्णाति हरिः स्वयम्। सर्वात्मनाऽप्रपन्नं च नाशायेव सुयोधनम् ॥ १ ॥ इति।

सभायामाह्वानम्। पश्चाद्दुरात्मा अन्यथा वक्ष्यतीति, लज्जां च जनयितुम्, तत्रापि राजसन्निधौ निर्भयम्। यथा राजापि न ग्रहीष्यतीत्याज्ञापयितुं वा। प्राप्त्युपायं प्रकारं वा सम्यगुक्त्वा तत्सत्तां दूरीकृत्य मणिं तस्मै न्यवेदयत्। यतो भगवान् स्वेच्छो, मारयितुं वा, न कोऽपि ज्ञातवान् किमर्थं दत्तवानिति। निवेदनं 'तवेदमानीतं गृहाणे'ति। ततस्तस्य कृत्यमाह **स चातिव्रीडित** इति पञ्चभिः। लोभाद्दण्डभयाच्च गृहीत्वा लज्जितो जातः। लोके अपकीर्तिमुत्पादितवानिति अवाङ्मुखो जातः। **ततः** पूर्वोक्तादेव हेतोः अपकीर्तिजननात्। अनुतापोऽपि तत एव। अतोऽस्य प्रायश्चित्ते परलोकशुद्धिर्भविष्यतीति ज्ञापितम्। न कोऽपि तस्य बन्धुरिति कमप्यपृष्ट्वा स्वभवनमेवागमत्। ननु रत्नं प्राप्य संतोषे कर्तव्ये कथमनुताप इति चेत्, तत्राह **स्वेन पाप्मनेति**। **देवान्तरप्रसादापेक्षया भगवदपराधो महानिति** ॥ ३९ ॥ बलवता विग्रहे आकुलः सन् तमेवार्थमनुध्यायन् जात इत्याह **सोऽनुध्यायन्निति**। अयत्नेनापि स एवार्थः ध्यातो भवति। यद्यपि विग्रहः स्वयं न कृतः, नापि करिष्यति, भगवानपि न करोति, तथापि भगवदीयैः बलवद्भिः सह विग्रहः संभविष्यतीति व्याकुलता। अयं दोषस्तदापगच्छेत्, यदि भगवान् प्रसन्नो भवेत्। तदेव विचारयति **कथं मृजामीति**। स हि देवोपासक इति तस्य प्रायश्चित्ते मतिः। **रजः** पापम्। अच्युतस्य सर्वथा नित्यधर्मस्य अवश्यंभाविनरके हेतुभूतापराधस्य कृतत्वात् तत्प्रसाद एव तदपगम इति **प्रसीदेद्वाच्युतः कथमिति** विचारयति ॥ ४० ॥

### श्रीसुबोधिनीसारः

मृतमिव पुनरागतं पत्न्या स्त्रिया सह मणिकंठं हृषीकेशं श्रीकृष्णमुपलभ्य प्राप्य दृष्ट्वा इत्यन्ये सर्वे जातानंदा बभूवुः॥३७॥ सभायां सत्राजितं समाहूय राज्ञ उग्रसेनस्य संनिधौ प्राप्तिं मणेराख्यायोक्त्वा तस्मै सत्राजिते भगवान्मणिं न्यवेदयत् अदात् ॥३८॥ रत्नं मणिं गृहीत्वाऽवाङ्मुखोऽधोवक्त्रः स च सत्राजिदतिव्रीडितः सुलज्जितः स्वेन पाप्मना दोषेणानुतप्यमानो भवनं गृहमगात्तदा ॥ ३८ तदेवाघम् अपराधम् अनुध्यायन्संचिंतयन् बलवता श्रीकृष्णेन यो विग्रहो विरोधस्तेनाकुलो व्यग्रः सोहमात्मनो रजः पापकीर्तिं कथं मृजामि शोधयामि अच्युतो हरिः कथं प्रसीदेद्वा ॥ ४० ॥

### विवरणटिप्पणी

**सत्राजितमित्यत्र। सर्वात्मनेति**। अन्यस्य हृदयं यत्र तादृशं वस्तु सर्वात्मना सर्वांशेन न गृह्णाति। अतो मणिर्न गृहीतः। सत्राजिदपि स्वकीयत्वेन न गृहीतः, सर्वथा प्रपत्त्यभावादित्याहुः **सर्वात्मनेति**। सर्वात्मना अप्रपन्नं च न गृह्णाति यत इत्यर्थः। तत्र दृष्टान्तः **नाशायेवेति**। नाशाय इव इति च्छेदः। साहाय्ययाचनार्थमागतमपि सुयोधनं नाशाय अकल्पयदिति शेषः। नत्वर्जुनवत्स्वकीयत्वेनागृह्णात्तथेत्यर्थः। **नाशायैव कलिं यथे**ति पाठेऽपि दुर्योधनस्य कलिरूपत्वादेक एवार्थः। **प्राप्त्युपाय**मिति। विले गमनमित्यर्थः। **प्रकारं** युद्धमित्यर्थः। **सोऽनुध्यायन्नि**त्यत्र। **तमेवे**त्येवकारस्यार्थमाहुः **अयत्नेनापीति**।

इति सप्तमाध्यायव्याख्या।

### गोस्वामिश्रीगिरिधरलालकृतबालप्रबोधिनी

लोके यथा मृतं बन्धुं पुनरागतमुपलभ्य जना जातमहोत्सवा भवन्ति तथा पत्न्या सहागतं मणिग्रीवं हृषीकेशं सर्वेन्द्रियप्रवर्तकं श्रीकृष्णमुपलभ्य सर्वे द्वारकावासिनो जना जातमहोत्सवा आसन्निति शेषेणान्वयः ॥ ३७ ॥ भगवान् श्रीकृष्णः सभायां राज्ञ उग्रसेनस्य सन्निधौ सत्राजितं समाहूय प्राप्तिं मणिप्राप्तिप्रकारं चाख्याय तस्मै सत्राजिते मणिं न्यवेदयत् अर्पयामास ॥ ३८ ॥ स च सत्राजितः स्वेन पाप्मना भगवदाज्ञोल्लङ्घनमिथ्यापवादापादनरूपेण अतिव्रीडितः, अत एव अवाङ्मुखः अनुतप्यमानः

ततः राजसभान्तः स्वभवनमभ्यगमदित्यन्वयः ।। ३९ ।। बलवता भगवता सह यो विग्रहो विरोधस्तेनाकुलः स सत्राजित् तदेवाघं स्वकृतापराधं अनुध्यायन् तथा आत्मरजः स्वापराधं कथं मृजामि कथमपनयामि ? अच्युतः कृष्णः कथं वा प्रसीदेत् प्रसन्नो भवेत् ? ।। ४० ।।

**अन्वितार्थप्रकाशिका**

उपलभ्येति । लोके यथा मृतं बन्धुं पुनरागतमुपलभ्य जना जातमहोत्सवा भवन्ति तथा पत्न्या सहागतं मणिग्रीवं हृषीकेशं श्रीकृष्णमुपलभ्य सर्वे द्वारकावासिनो जना जातमहोत्सवा आसन् ।। २७ ।। सत्राजितमिति । भगवान् श्रीकृष्णः सभायां राज्ञ उग्रसेनस्य सन्निधौ सत्राजितं समाहूय प्राप्तिं मणिप्राप्तिप्रकारं चाख्याय तस्मै सत्राजिते मणिं न्यवेदयत् अर्पयामास ।। ३८ ।। स चेति । स च सत्राजितः स्वेन पाप्मना भगवदाज्ञोल्लङ्घनमिथ्यापवादापादनरूपेणातिव्रीडितः अतः एवावाङ्मुखः अनुतप्यमानः रत्नं गृहीत्वा ततः राजसभातः स्वभवनमभ्यगमत् ।। ३९ ।। स इति अर्द्धम् । स सत्राजित् तदेवाघं स्वकृतापराधम् अनुध्यायन् बलवता बलवद्भिर्भवत्पक्षगैर्वा सह यो विग्रहो विरोधस्तेनाकुलोऽभूदिति शेषः ।। ४० ।।

**श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्**

अवाङ्मुखोऽधोमुखः स्वकीयेन पाप्मना । कृष्णे मिथ्याभिशापदानरूपेण दोषेण ।। ३९ ।। अघं अपराधं । आत्मनः स्वस्य रजोदोषं ।। ४० ।।

**भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी**

तेषामिति । सिद्धः साधितः अर्थो मण्यानयनरूपं प्रयोजनं येन सः, सदारोऽङ्गनासहितः, हरिः श्रीकृष्णः, देव्युपस्थानाद्धेतोः, प्रत्यादिष्टा तया आदिष्टा दत्ता या आशीः, कृष्णं द्रक्ष्यथेत्येवंरूपा तया सह, तेषां तु तेषां जनानां पुरत एवेत्यर्थः । हर्षयंस्तानानन्दयन् सन्नेव, प्रादुर्बभूव ।। ३७ ।। उपलभ्येति । मृत्वा पुनः इह आगतं तत्रापि, पत्न्या सह आगतं, मणिः ग्रीवायां यस्य तं हृषीकेशं श्रीकृष्णं, उपलभ्य सर्वे जनाः, जातमहोत्सवाः, आसन् । लोके यथा जनाः मृतं बन्धुं पुनरागतं सन्तमुपलभ्य संजातमहोत्सवा भवन्ति तद्वत् एतेऽभवन्नित्यर्थः ।। ३८ ।। सत्राजितमिति । भगवान् श्रीकृष्णः, सभायां राजसंनिधौ, सत्राजितं समाहूय, प्राप्तिं मणिलाभप्रकारं, आख्याय च, तस्मै सत्राजिताय, मणिं न्यवेदयत् समर्पयामास ।। ३९ ।। स चेति । स्वेनात्मीयेन, पाप्मना मिथ्यापवादारोपणरूपाघेन, अनुतप्यमानः, स च सत्राजिदपि, व्रीडितः संजातलज्जः, अत एव, अवाङ्मुखो न्यग्वदनः सन्, ततो राजसदसः सकाशात्, भवनं स्वगृहं, अगमत् ।। ४० ।।

**कृष्णप्रिया**

श्रीजाम्बवती देवी एवं स्यमन्तकमणि के साथ प्रकट हुए भगवान् श्रीकृष्ण का दर्शन पाकर सर्व स्वजन परमानन्द की अनुभूति करने लगे और महोत्सव मनाने लगे ।। ३७ ।। पुन पूर्ण-कृपालु पूर्ण-पुरुषोत्तम श्रीकृष्ण ने राजसभा में जहाँ उग्रसेनजी विराजमान थे वहाँ श्रीसत्राजितजी को बुलाया । सर्व समक्ष भगवान श्रीकृष्ण ने मणि का साङ्गोपाङ्ग सुनाया और स्यमन्तक मणि उनके करकमलों में पधराया ।। ३८ ।। श्रीसत्राजित लज्जित हो गये । स्यमन्तक मणि ले ली किन्तु उनका मुख नीचे की ओर हो गया । अपने अपराध पर पूर्णतया परिताप करने लगा । शिथिल-चित्त एवं दीन-चित्त परिश्रम से अपने निवास पहुँचे ।। ३९ ।। अपनी नजरों के सामने निरन्तर अपना अपराध दीख पड़ता था भगवान् के सामने या बलवान के साथ अपराध करने के कारण सतत् भयभीत रहता था । अपराध समार्जन करे इसके लिये दिन रात उपाय खोजता रहा था । भगवान श्रीकृष्ण कैसे प्रसन्न हो यह चिन्तन था ।। ४० ।।

**किं कृत्वा साधु मह्यं[1] स्यान्न शपेद् वा जनो यथा । अदीर्घदर्शनं क्षुद्रं मूढं द्रविणलोलुपम् ।। ४१ ।।**

**दास्ये दुहितरं तस्मै[2] स्त्रीरत्नं रत्नमेव च । उपायोऽयं समीचीनस्तस्य शान्तिर्न चान्यथा ।। ४२ ।।**

**एवं व्यवसितो बुद्ध्या सत्राजित् स्वसुतां शुभाम् । मणिं च स्वयमुद्यम्य कृष्णायोपजहार ह ।। ४३ ।।**

**तां सत्यभामां भगवानुपयेमे यथाविधि । बहुभिर्याचितां शीलरूपौदार्यगुणान्विताम् ।। ४४ ।।**

**भगवानाह न मणिं प्रतीच्छामो वयं[3] नृप । [4]तवास्तां देवभक्तस्य[5] वयं च फलभागिनः ।। ४५ ।।**

**इति श्रीमद्भागवते महापुराणे[6] दशमस्कन्धे[7] स्यमन्तकोपाख्याने [8]षट्पञ्चाशत्तमोऽध्यायः ।। ५६ ।।**

---

१. मूढं मांधिग्—वीर. ; धिङ्मां मूढं—विज. । २. तां—विज.; सः—श्रीधर. टि. । ३. तव—प्रा. पा. । ४. भवांस्तु—प्रा. पा. ; तवास्तु—विज. । ५. श्च—प्रा. पा. । ६. पारमहंस्यां संहितायां—प्रा. पा. । ७. न्धे स्यमन्तकाहरणं—प्रा. पा. ; न्धे उत्तरार्द्धे स्य—प्रा. पा. । ८. षष्ठितमोऽध्यायः—विज. ।

### कर्दमक्षमा

अन्वयः—किम्, कृत्वा, मह्यम्, साधु, स्यात्, जनः, यथा, अदीर्घदर्शनम्, अर्थलोलुपम्, मूढम्, क्षुद्रम्, मह्यम्, कथम्, न, शपेत्, इति चिन्तयामास ॥ ४१ ॥ तस्मै, स्त्रीरत्नम्, दुहितरम्, च, रत्नम्, एव, दास्ये, अयम्, उपायः, समीचीनः, तस्य, अन्यथा, शान्तिः, न, भविष्यति ॥ ४२ ॥ एवम्, बुद्ध्या, व्यवसितः, सत्राजित्, शुभाम्, स्वसुताम्, च, मणिम्, स्वयम्, उद्यम्य, कृष्णाय, उपजहार, ह ॥ ४३ ॥ भगवान्, बहुभिः, याचिताम्, शीलरूपौदार्यगुणान्विताम्, ताम्, सत्यभामाम्, यथाविधि, उपयेमे ॥ ४४ ॥ नृप ! भगवान्, आह—सत्राजित् ! वयम्, मणिम्, न, प्रतीच्छामः, अयम्, मणिः, देवभक्तस्य, तव, अस्तु, च, वयम्, फलभागिनः, भविष्यामः ॥ ४५ ॥

इति श्रीभागवते दशमस्कन्धे निरोधलीलायामुत्तरार्द्धे सत्यभामापरिणये षट्पञ्चाशत्तमोऽध्याये अन्वयाः समाप्ताः ॥ ५६ ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

किं कृत्वा कस्मिन्कृते इत्यर्थः । साधु भद्रम् । अदीर्घदर्शनमविचारकं माम् । क्षुद्रं कृपणं मूढं मंदमतिम् ॥ ४१ ॥ एवं ध्यायन्नुपायं निश्चिनोति—दास्य इति । स्त्रीरत्नं दुहितरं तावद्दास्यामि तदनन्तरं पारिबर्हत्वेन रत्नमपीति ॥ ४२-४३ ॥ बहुभिः कृतवर्मादिभिः ॥ ४४ ॥ मणिं न प्रतीच्छामो न स्वीकुर्मः देवः सूर्यस्तद्भक्तस्येति कटाक्षः फलभागिन इति तवापुत्रत्वात्त्वदीयं धनमस्माकमेवेति गूढोऽभिप्रायः ॥ ४५ ॥

इति श्रीमद्भागवते दशमस्कन्धे उत्तरार्धे श्री० टीकायां षट्पञ्चाशत्तमोऽध्यायः ॥ ५६ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

इत्यर्थ इति—उभयोरव्ययत्वाद्यथेच्छमर्थ इति भावः । मह्यं मम । अविचारकं भविष्यज्ज्ञानहीनम् । अनुध्यानमाह—सार्धद्वयेन ॥ ४१ ॥ एवमुक्तरीत्या । तावदादौ । तस्य अपराधस्य, कृष्णस्य, वा । ननु त्वद्दुहित्रा कथं तस्य प्रसादस्स्याद्येन शांतिर्भवेदित्यत आह—स्त्रीरत्नमिति । रत्नञ्च स्यमंतकम् । तस्याच्युतस्य । शांतिश्च दुःखोपशमः । किं वा–मदपराधस्य शांति-रुपशमः, अन्यथा मरणादिनापि प्रकारेण नैव शांतिः ॥ ४२ ॥ एवम् इति । स्वसुतां सत्यभामाम् । एतावल्लीलापरिपाटीफलं मुख्यमेतदेवेत्याह—एवं कथमित्यादिप्रकारेण । वसितः कृतनिश्चयः । शुभां सर्वोत्तमाम् । श्रीवसुदेवादिषु प्रार्थनयोद्यमं कृत्वा उपजहार ददौ ॥ ४३ ॥ उपयेमे विवाहितवान् । सत्यभामाख्यां यथाविध्युपयेम इति जांबवतीमपि गृहमानीयोपयेमे, किन्तु तद्वत्पितृकुलाभावान्न तदीयोचित क्रियेति भावः । तस्या वैशिष्ट्यमाह—बहुभिरिति । तत्र हेतुः—शीलं सुस्वभावः, शीलरूपयो-रौदार्यं महत्त्वं, तेन तदनुगतैरन्यैर्विनयादिगुणैश्चान्विताम् । बहुभिरिति वक्ष्यमाणस्य कृतबर्मादिभिर्वैरस्य कारणं ध्वनितम् ॥४४॥ कटाक्ष इति—न हि देवभक्ता असत्यवादिनोऽतिलुब्धाश्च सन्तीति भावः । हरिवंशे तु तस्य पुत्रा ये उक्तास्तदन्तसूचनायोक्तम्—वयं च फलभागिन इति, कल्पांतरापेक्षा हरिवंशोक्तिः । वयमिति—बलदेवाद्यपेक्षयास्माकं कोऽपि न गृह्णीयादित्यर्थः । हे नृपेति—तेनैव निजजनान्पालयेति कटाक्षः । फलभागिन इति भवतो मणिना यत्फलं दृष्टमदृष्टं वा श्रेयो भवेत्तत्परमांतरंगत्वाद-स्मास्वपि पर्यवस्येदिति वाक्यार्थः ॥ ४५ ॥

इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे दशमस्कन्धे उत्तरार्द्धे षट्पञ्चाशत्तमोऽध्यायः ॥ ५६ ॥

### श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी

अनुध्यानमेवाह—कथमित्यादिसार्द्धद्वयेन । तत्र प्रथमं सार्द्धकम् अच्युतः स्वभावादच्युतत्वेन तत्संज्ञः जनः सर्वलोकः शापयोग्यतामनुध्यायति—अदीर्घेति । मामिति शेषः । तत्र तावदेतादृशं रत्नं मर्त्यैरस्माभिर्ग्राह्यमेव नेत्याह—अदीर्घेति, लब्धं च श्रीभगवत्येव समर्पयितुं योग्यमित्याह—क्षुद्रमिति । हन्त तेन स्वयं प्रार्थितेऽपि तस्मिन् विमुखोऽभवं आपतिते चानर्थे तमेवा-दूषयमित्याह—मूढमिति । सर्वत्र हेतुः द्रविणलोलुपमिति ॥ ४१ ॥ ननु, त्वद्दुहित्रा कथं तस्य प्रसादः स्याद्येन शान्तिर्भवेदित्यत आह—स्त्रीरत्नमिति । रत्नं च स्यमन्तकं तस्याच्युतस्य शान्तिश्च दुःखोपशमः किं वा तस्य मदपराधस्य शान्तिरुपशमः अन्यथाऽन्येन मरणादिनाऽपि प्रकारेण नैव शान्तिः ॥ ४२ ॥ एतावल्लीलापरिपाटीफलम् मुख्यमेतदेवेत्याह—एवमिति एवं कथमित्यादिप्रकारेण व्यवसितः कृतनिश्चयः शुभां सर्वथोत्तमां श्रीवसुदेवादिषु प्रार्थनयोद्यमं कृत्वा उपजहार स इत्यत्रोपजहार हेति पाठः क्वचित् ॥ ४३ ॥ सत्यभामाख्यां यथा विध्युपयेम इति जाम्बवतीमपि गृहमानीयोपयेमे किं तु तद्वत् पितृकुलाभावान्न तदीयोचितक्रियेति भावः । तस्य वैशिष्ट्यमप्याह—बहुभिरिति । तत्र हेतुः शीलं सुस्वभावः शीलरूपयोरौदार्यं महत्त्वं तेन तदनुगतैर्गुणैश्चान्यैरन्वितां बहुभिर्याचितामिति वक्ष्यमाणस्य कृतवर्मादिभिः सह वैरस्य कारणमपि ध्वनितम् ॥ ४४ ॥ वयमिति बलदेवाद्यपेक्षया अस्माकं कोऽपि न गृह्णीयादित्यर्थः । हे नृपेति एतेनैव निजजनान् पालयेति कटाक्षः फलभागिन इति भवतो मणिना यत्फलं दृष्टमदृष्टं वा श्रेयो भवेत् तत्परमान्तरङ्गत्वात् अस्मास्वपि पर्यवस्येदिति वाच्योऽर्थः व्यङ्ग्यस्तु तैरुद्दिष्ट एव ॥४५॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिण्यां षट्पञ्चाशत्तमोऽध्यायः ॥ ५६ ॥

### श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी

जनः सर्व्वलोकः शापयोग्यतामनुध्यायति—अदीर्घेति। विशेषणानामेषां यथोत्तरं शापहेतुत्वे श्रैष्ठ्यम्, यद्वा, पूर्वपूर्वस्मिन्नुत्तरोत्तरस्य हेतुत्वमूह्यम् ॥ ४१ ॥ ननु त्वद्दुहित्रा कथं तस्य प्रसादः स्यात्, येन शान्तिर्भवेदित्यत आह—स्त्रीरत्नमिति। रत्नञ्च स्यमन्तकम्, तस्याच्युतस्य शान्तिः सुखम्, किंवा तस्य मदपराधस्य शान्तिरुपशमः, अन्यथा अन्येन मरणादिनापि प्रकारेण नैव शान्तिः ॥ ४२ ॥ व्यवसितः कृतनिश्चयः, शुभां सर्व्वथोत्तमाम्, स्वयमेवोद्यम्य श्रीवसुदेवादिषु बहुधा काकुप्रार्थनयोद्यमं कृत्वा ज्ञातित्वेन मणिसम्बन्धादिना वा तस्यां श्रीभगवत्प्रार्थनाद्यभावात् स महापराधी ॥ ४३ ॥ सत्यभामाख्याम्, भगवानशेषैश्वर्य्ययुक्तः, अत एव तां यथाविध्युपयेमे, अनेन श्रीजाम्बवत्या विवाहः, त्वरया द्वारकागमनात्, यद्वा, तत्प्रीतये तद्विलान्तरेव शीघ्रविवाहेन श्रीदेवक्याद्यभावाद्यथाविधि न सम्पन्न इति सूच्यते। तस्यां श्रीभगवद्योग्यतां प्रदर्शयन्माहात्म्यमाह—बहुभिरिति। तत्र हेतुः—शीलेति, औदार्य्यं वदान्यत्वम्, यद्वा, शीलरूपयोरौदार्य्यं महत्त्वम्, तेन गुणैश्चान्यैरन्विताम्, बहुभिर्याचितामिति वक्ष्यमाणस्य कृतवर्म्मादिभिः सह वैरस्य कारणमपि ध्वनितम् ॥ ४४ ॥ वयमिति श्रीबलदेवाद्यपेक्षया, अस्माकं कोऽपि न गृह्णीयादित्यर्थः, यद्वा, मण्यनपेक्षायां निजगौरवात्, अग्रे च सर्वफलभागितायाम्, हे नृपेति एतेनैव निजजनान् पालयेति कटाक्षः ॥ ४५ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे उत्तरार्द्धे श्री श्रील-सनातन-गोस्वामिपाद-कृतायां श्रीबृहद्वैष्णवतोषण्यां श्रीदशम-टिप्पण्यां षट्पञ्चाशत्तमोऽध्यायः ॥ ५६ ॥

### श्रीमद्वीरराघवाचार्यकृता भागवतचन्द्रचन्द्रिका

किं कृत्वा कस्मिन्कर्मणि कृत इत्यर्थः। साधु भद्रं स्यात् कथं च मां जनो न शपेत् मां धिक् अहं निन्द्य इत्यर्थः। तत्र हेतुं वदन्नात्मानं विशिनष्टि, अदीर्घदर्शनं दूरविचारानभिज्ञं मूढं मन्दमतिं वित्तैकासक्तम् ॥ ४१ ॥ इत्थं विचार्य निश्चिनोति—दास्य इति। स्त्रीरत्नं दुहितरं रत्नं स्यमन्तकं च कृष्णाय दास्ये दास्यामि अन्यथा यदि न दास्ये इत्यर्थः तस्य कृष्णस्य शान्तिश्चित्तसमाधिर्न भवेत् ॥ ४२ ॥ एवमिति बुद्ध्या व्यवसितः निश्चिन्वन् शुभां शुभलक्षण स्वसुतां सत्यभामां मणिं स्यमन्तकं च उद्यम्योद्धृत्यादाय वा कृष्णाय समर्पयामास ॥ ४३ ॥ तामिति उपयेमे विवाहितवान् कथम्भूतां बहुभिः कृतवर्मशतधन्वादिभिर्याचितां रूपादिभिरन्वितां च तत्र रूपं सौष्ठवं शीलं सुस्वभावः गुणा अदिमकरुणादयः ॥ ४४ ॥ भगवानिति—उक्तिमेवाह नमणिमिति। हे नृप! सत्राजित! मणिं न प्रतीच्छामः न प्रतिगृह्णीमः किं तु स्त्रीरत्नमेव प्रतीच्छामः देवभक्तस्य सवितृभक्तस्य तवैव मणिरास्तां तिष्ठतु वयं तु केवलं फलभागिनः दुर्भिक्षादिशान्तिरूपफलभागिनः यद्वा, तवापुत्रत्वात्त्वदीयन्धनमस्माकमेवेत्यन्ततः फलभागिन इत्यर्थः ॥ ४५ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायां षट्पञ्चाशत्तमोऽध्यायः ॥ ५६ ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

मह्यं मम अदीर्घदर्शनं भविष्यज्ञानहोनम् ॥ ४१ ॥ तस्य पापस्य ॥ ४२-४४ ॥ फलभागिनः प्रयोजनांशमेव स्वीकुर्मः ॥ ४५ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्यां षट्पञ्चाशत्तमोऽध्यायः ॥ ५६ ॥

( विजयध्वजतीर्थरीत्या षष्टितमः ) ॥ ६० ॥

### श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शिनी

देवः सूर्यस्तद्भक्तस्य। फलभागिन इति तवापुत्रत्वात्त्वदीयं धनमस्माकमेवेति न्यायो ध्वनितः ॥ ४५ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम्। षट्पञ्चाशत्तमोऽध्यायो दशमेऽजनि सङ्गतः ॥ ५६ ॥

### गूढार्थदीपिनी

कथमिति सार्द्धम्। आत्मरजः स्वापराधम्। मह्यं मम। साधु भद्रम्। अदीर्घदर्शनं परिणामाविदम् ॥ ४१ ॥ पारिबर्हत्वेन रत्नं स्यमन्तकमपि ॥ ४२ ॥ व्यवसितः कृतनिश्चयः। उपजहार समर्पयामास ॥ ४३ ॥ बहुभिः कृतवर्मादिभिः। उपयेमे विवाहितवान् ॥ ४० ॥ न प्रतीच्छामो न गृह्णीमः। फलभागिन इति। तवापुत्रत्वात्त्वदीयं धनमस्माकमेवेति गूढाभिसन्धिः ॥४५॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां दशमस्कन्धोत्तरार्द्धे गूढार्थदीपिन्यां षट्पञ्चाशत्तमोऽध्यायः ॥ ५६ ॥

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः

तस्याऽपराधस्य ।। ४२ ।। उपजहार समर्पयामास ।। ४३ ।। बहुभिः कृतवर्मादिभिः ।।४४।। न प्रतीच्छामः न स्वीकुर्मः देवभक्तस्य सूर्यभक्तस्य तवास्ताम् फलभागिनश्च वयमेव त्वदीयत्वादेवेति भावः ।। ४५ ।।

इति श्रीमद्भागवते महापुराणे दशमस्कन्धीये श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे षट्पञ्चाशत्तमोऽध्यायः ।। ५६ ।।

### श्रीमद्वल्लभाचार्य्यकृता सुबोधिनी

यथा वाक्येन अपकीर्तिर्जाता। अधुना क्रियया कथं कीर्तिर्भविष्यतीति तदाह **किं कृत्वेति**। मास्तु वा कीर्तिः, जनो लोकः यथा न शपेत्। शापे हेतुर्वाग्दोष एव मम, न त्वन्यदिति। स्वदोषाननुवदति **अदीर्घदर्शन**मिति। स्यमन्तकेन वचनेन वा इष्टमनिष्टं वा भविष्यतीति दीर्घदर्शनं कर्तव्यम्, तन्न कृतमिति सात्त्विको दोषः। तत्रापि हेतुः **क्षुद्र**मिति। अल्पोऽहं राजसः। महान्तो हि गम्भीरा भवन्ति। किञ्च। प्रथमवाक्योल्लङ्घनमेव मम दोषः पतितः। तत्र हेतुः **द्रविणलोलुप**मिति ।। ४१ ।। एवं दोषत्रये कः प्रतीकार इति चिन्तायां क्रियमाणायां निमित्तभूतो मणिरेव देय इति स्वस्य स्फुरितः। तदा सूर्यः। न मणिर्देयः, अपि तु देयत्वात् कन्यैव देयेति। तर्ह्युभयं देयम्, तथा सति भगवानपि संतुष्टो, लोका अपि न वाच्यं वदिष्यन्ति इति निश्चित्य, स्वाध्यवसायमाह **दास्ये दुहितर**मिति। **तस्मै** प्रसिद्धाय। सर्वथा ग्रहीष्यतीत्यत्र हेतुः **स्त्रीरत्न**मिति। यथा जाम्बवान् कायिकमपराधं कृत्वापि मणिं दुहितरं च दत्वा कृतार्थो जातः, एवमहमपि भविष्यामीत्यभिप्रायेणाह **रत्नमेव चेति**। नन्वन्यः भक्तिमार्गानुसारी उपायः कथं न क्रियते, तत्राह **उपायोऽयं समीचीन** इति। व्यवहारे अस्मिन्नर्थे अयमेवोपायः समीचीनः, अन्यथा तस्य शान्तिर्न भविष्यतीति। स्वस्यार्थदुर्बुद्धिः, भवेदेवं यदि भगवान् ( न ) मणिं गृह्णीयात्, सर्वथा प्रपन्नता च न कृतेति ।।४२।। न केवलमेवं विचारितवान्, किन्तु कृतवानित्याह **एवं व्यवसित** इति। बुद्ध्यैव, न तु कश्चित्पृष्टः। **शुभां** शोभनरूपाम्। विवाहे समलङ्कृतां स्वयं गृहे नीत्वा दोषपरिहाराय कृष्णाय सदानन्दरूपाय उपजहार। हेत्याश्चर्यं, कथमेवं कृतवानिति ।। ४३ ।। ततो भगवानेकं गृहीतवान्, एकं नेत्याह द्वाभ्याम्। **तां सत्यभामा**मिति। सत्येनैव भासत इति सत्यरूपा कान्तिरूपा च। यद्यपि तेन निवेदनमेव कृतम्, तथापि स्वयं यथाविधि उपयेमे। अन्यथा अन्यस्मै देया पतिष्यतीति। तत्र हेतुः **बहुभिर्याचिता**मिति। सा हि पूर्वमन्यस्मै सन्दिग्धा प्रतिश्रुता। अतो विवादास्पदेति यथाविध्येव विवाहः कर्तुमुचितः। किञ्च। गुणा अपि तस्यां सन्तीत्याह **शीलेति**। शीलमन्तःकरणधर्म इन्द्रियाणां वा क्रियारूपम्। रूपं शरीरस्य। औदार्यमन्तःकरणस्य। एवमुत्कृष्टैर्गुणैरन्वितताम् ।। ४४ ।। एकं गृहीत्वा द्वितीयं प्रत्याचष्टे **भगवानाहेति**। ईश्वरत्वान्नात्र संनियोगशिष्टन्यायो वक्तुं शक्यः। **न मणिं प्रतीच्छाम** इति। विवाहे तु अहमेव प्रयोजकः। मणौ तु सर्वसम्मतिरपेक्ष्यत इति। अत एव **वय**मिति बहुवचनम्। **नृपेति** परीक्षित्संबोधनं **भगवानाहेति** वाक्ये संबध्यते, न तु भगवदुक्ते। राजानो हि तथा वदन्तीति ज्ञापनाय। किञ्च। द्वयं समर्पितम्। तत्रैकं ममास्तु, एकं च तवास्त्वित्याह **तवास्त्विति**। तत्र हेतुः **देवभक्तस्येति**। अन्यथा सूर्यः क्रोधं करिष्यतीति भावः। तथापि निवेदितं कथं त्यज्यत इत्याशङ्क्याह **वयं च फलभागिन** इति। मणिफलमस्माकमपि भविष्यति। श्वशुरस्य धनसम्पत्तौ जामातैव भोक्ता भवतीति। चकारात् कश्चित्समुच्चितः। सत्राजितस्तु स्वात्मानं समुच्चिनोतीति प्रत्ययः। भगवदभिप्रायस्त्वक्रूरः। तस्मै पूर्वं तेन कन्या प्रतिश्रुता। उभयग्रहणे तस्य दुःखं भविष्यतीति भक्तहितं भक्तिमार्गं च सत्यं कर्तुं तथोक्तवानित्यर्थः ।। ४५ ।।

इति श्रीभागवतसुबोधिन्यां श्रीमल्लक्ष्मणभट्टात्मजश्रीमद्वल्लभदीक्षितविरचितायां दशमस्कन्धविवरणे उत्तरार्धे सप्तमोऽध्यायः ।। ७ ।।

### श्रीसुबोधिनी-सारः

किं कृत्वा मह्यं मम साधु भद्रं स्यात् अदीर्घम् अल्पं दर्शनं ज्ञानं यस्य तं क्षुद्रं कृपणं द्रविणे धने लोलुपं लुब्धं मूढं मां यथा जनो न निंदेत् ।। ४१ ।। उपायं निश्चित्याह। तस्मै श्रीकृष्णाय स्त्रीरत्नं दुहितरं पुत्रीं रत्नं मणिं चाहं दास्यामि अयमुपायः समीचीनः साधुः तस्य दोषस्यान्यथा प्रकारांतरेण शांतिर्न च ।। ४२ ।। एवं व्यवसितः कृतनिश्चयो बुद्ध्या सत्राजित शुभां कल्याणीं स्वसुतां स्वकन्यां मणिं च स्वयमुद्यम्य पुरुषार्थं कृत्वा कृष्णाय समर्पयामास ह स्फुटम् ।। ४३ ।। शीलादिसंपन्नां बहुभिर्याचितां संप्रार्थितां तां सत्यभामां भगवान् यथाविधि उपयेमे परिणिन्ये ।। ४४ ।। हे नृप मणिं वयं न प्रतीच्छामो नेच्छामः देवस्यार्कस्य भक्तस्य तव स मणिरास्तां वयं फलभोक्तारः स्म इत्यनेन सत्राजितोनपत्यत्वं सूचितम् ।। ४५ ।।

इति श्रीमद्भा० दशमस्कन्धे उत्तरार्द्धे सुबोधिन्यां टीकायां षट्पंचाशत्तमोऽध्यायः ।। ५६ ।।

### गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

किं कृत्वा मह्यं मम साधु भद्रं स्यात् ? अदीर्घदर्शिनं अग्रिमफलानभिज्ञं क्षुद्रं कृपणं मूढं मन्दमतिं द्रविणलोलुपं वित्तासक्तं मां जनो वा यथा न शपेत् न निन्देत् स उपायः क इति च ध्यायन् ।। ४१ ।। तस्मै कृष्णाय स्त्रीरत्नं स्वदुहितरं रत्नं

स्यमन्तकं च दास्ये दास्यामि । अवमेव समीचीनो विरोधशान्त्युपायः, अन्यथा एतद्दानं विना तस्य विरोधस्य शान्तिर्न भविष्यति ॥ ४२ ॥ बुद्धया एवं व्यवसितः कृतनिश्चयः सन् शुभां शुभलक्षणसम्पन्नां स्वसुतां सत्यभामां मणिं च स्वयमेव उद्यम्य उद्यमं कृत्वा कृष्णाय उपजहार समर्पयमास । भगवल्लीलाया आश्चर्यं सूचयति—हेति ॥ ४३ ॥ बहुभिः कृतवर्मशतधन्वादिभिर्याचितामपि तां सत्यभामां भगवान् यथाविधि विवाहविधानरीत्या उपयेमे विवाहितवान् । याचने विवाहे च हेतुमाह—शीलादिगुणैरन्वितामिति । शीलं सुस्वभावः, रूपं सौन्दर्यम्, औदार्यं मुक्तहस्तता ॥ ४४ ॥ परिक्षितं सम्बोधयति—हे नृपेति । वयं मणिं न प्रतीच्छामः न स्वीकुर्मः, देवः सूर्यस्तद्भक्तस्य तवैव मणिरास्तां तिष्ठतु, तव च अपुत्रत्वात् तत्फलधनभागिनस्तु वयमेवेति सत्राजितं प्रति भगवान् आहेत्यन्वयः ॥ ४५ ॥

इति श्रीवल्लभाचार्य-वंश्यगोपालसूनुना । श्रीमन्मुकुन्दरायाणां पादसेवाधिकारिणा ॥ १ ॥
श्रीमद्गिरिधराख्येन भजनानन्दसिद्धये । श्रीमद्भागवतस्येयं टीकाबालप्रबोधिनी ॥ २ ॥
रचिता दशमे तत्र राजसानां निरोधने । षट्पञ्चाशत्तमोऽगादवृत्तिं च सत्यभामया ॥
कृष्णस्य जाम्बवत्या च विवाहस्य निरूपकः ॥ ३ ॥

## अन्वितार्थप्रकाशिका

कथमिति सार्द्धम् । अहम् आत्मरजः स्वापराधं कथं मृजामि कथमपनयामि । श आर्षः । अच्युतः कृष्णः कथं वा प्रसीदेत् प्रसन्नो भवेत् । किं कृत्वा कस्मिन् कृते मह्यं मम साधु भद्रं स्यात् । समानकर्तृकताभावः सोढव्यः । अदीर्घदर्शनम् अग्रिमफलानभिज्ञं क्षुद्रं कृपणं मूढं मन्दमतिं द्रविणलोलुपं वित्तसक्तं मां जनो वा यथा न शपेत् न निन्देत् तथा किं कार्यम् ॥ ४१ ॥ दास्य इति । तस्मै कृष्णाय स्त्रीरत्नं स्वदुहितरं तत्पारिबर्हत्वेन रत्नं स्यमन्तकं च दास्ये दास्यामि । अयमेव समीचीनो विरोधशान्त्युपायः । अन्यथा एतद्दानं विना तस्य विरोधस्य शान्तिर्न भविष्यति ॥ ४२ ॥ एवमिति । बुद्धया एवं व्यवसितः कृतनिश्चयः सन् शुभां शुभलक्षणसम्पन्नां स्वसुतां सत्यभामां मणिं च स्वयमेव उद्यम्य उद्यमं कृत्वा कृष्णाय उपजहार समर्पयामास ॥ ४३ ॥ तामिति । बहुभिः कृतवर्मशतधन्वादिभिर्याचितामपि शीलरूपौदार्यगुणान्वितां सत्यभामां भगवान् यथाविधि विवाहविधानरीत्या उपयेमे विवाहितवान् । एवं जाम्बवतीमपि गृहमानीयोपयेमे इति ज्ञेयम् ॥ ४४ ॥ भगवानिति । हे नृप ! भगवान् सत्राजितमाह स्म वयं मणिं न प्रतीच्छामः न स्वीकुर्मः । देवः सूर्यस्तद्भक्तस्येति कटाक्षः । तवैव मणिरास्तां तिष्ठतु । तव चापुत्रत्वात् तत्फलभागिनस्तु वयमेवेति ॥ ४५ ॥

इति श्रीभागवते महापुराणे दशमस्कन्धेऽन्वितार्थप्रकाशिकायां षट्पञ्चाशत्तमोऽध्यायः ॥ ५६ ॥

## श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्

क्षुद्रमल्पमतिं ॥ मूढं मूर्खं ॥ ४१ ॥ इत्थं चिंतयित्वा तच्छमनोपायं निश्चिनोति दास्ये इति स्त्रीरत्नं सत्यभामां स्वकन्यां पारिबर्हत्वेन रत्नं स्यमंतकमपि तस्यापराधस्य ॥४२॥ उद्यम्य विवाहोद्यमं कृत्वा उपजहार ददौ ॥४३॥ बहुभिः कृतवर्माद्यैः ॥४४॥ मणिं न प्रतीछामो नांगीकुर्मः देवभक्तस्य सूर्योपासकस्य तवगेहे ॥ आस्तां वयं च फलभागिनः । तववसुताभावात् तावकस्य मणिजन्यधनरूपफलस्य भागिनो भोक्तारः ॥ ४५ ॥

इति श्रीशुद्धैकांतधर्मप्रवर्त्तकगुरुराजेन्द्रश्रीसहजानंदस्वामिशिष्यगोपालानंदमुनिविरचिते निगूढार्थप्रकाशके श्रीमद्भागवतस्य दशमस्कंधव्याख्याने स्यमंतकोपाख्याने सत्यभामोद्वाहनामा षट्पञ्चाशत्तमोऽध्यायः ॥ ५६ ॥

## भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

स इति ॥ बलवद्विग्रहाकुलः, स सत्राजित्, तत् स्वकृतं, अघं पापमेव तमेवार्थमित्यपि पाठः । अनुध्यायन्, आत्मरजः स्वापराधं, कथं मृजामि । अच्युतो वा श्रीकृष्णोऽपि, कथं प्रसीदेत्, इति चिन्तयामासेति शेषः ॥ ४१ ॥ किं कृत्वेति ॥ किं कृत्वा कस्मिन् कर्मणि कृते सतीत्यर्थः । मह्यं मम, साधु भद्रं स्यात् । अदीर्घदर्शनं दूरविचारानभिज्ञं, मूढं मन्दमतिं, द्रविणलोलुपं वित्तोपार्जनैकासक्तं, अत एव, क्षुद्रमतिक्षुद्रव्रतोपेतं, मां जनः, यथा वा, न शपेत् । तत् कथं स्यादिति शेषः ॥ ४२ ॥ इत्थं विचार्य निश्चिनोति ॥ दास्य इति ॥ तस्मै श्रीकृष्णाय, स्त्रीरत्नं स्त्रीजातिषु रत्नरूपां, दुहितरं पुत्रीं, रत्नं मणिं च, दास्ये एव । अयं उपायः, समीचीनः । अन्यथा प्रकारान्तरेण, तस्य मत्कृताघस्य, शान्तिः, न च न भवेदेव ॥ ४३ ॥ एवमिति ॥ एवमित्थं, बुद्धया व्यवसितः कृतनिश्चयः, सत्राजित्, शुभां शुभलक्षणान्वितां, स्वसुतां सत्यभामां, मणिं स्यमन्तकं च, स्वयं उद्यम्य प्रदातुमुद्योगं कृत्वा, कृष्णाय, ह स्फुटं यथा तथैव, उपजहार अर्पयामास ॥४४॥ तामिति ॥ भगवान् श्रीकृष्णः, बहुभिः कृतवर्मशतधन्वप्रभृतिभिः, याचितां शीलरूपौदार्यगुणान्वितां, तत्र शीलं सुस्वभावः, रूपं सौष्ठवं, औदार्यं महामनस्त्वं, गुणा आर्जवकरुणादयः ।

तां सत्यभामां, यथाविधि, उपयेमे विवाहितवान् ॥ ४५ ॥ तदानीं सत्राजिति मणिमर्पयितुमुद्युक्ते सति, भगवान् यदाह तदाह ॥ भगवानिति ॥ हे नृप सत्राजित, सोपहासमिदम् । वयं मणिं न प्रतीच्छामः । अयं देवभक्तस्य सूर्यभक्तस्य, एतत् कटाक्षवचनम् । तव, आस्ताम् । वयं च वयं तु, फलभागिनः । तवापुत्रत्वात्त्वदीयं धनमस्माकमेवेति गूढोऽभिप्रायः इति, भगवान् कृष्णः, आह ॥ ४६ ॥

इति श्रीधर्मधुरंधरश्रीधर्मात्मजप्रत्यक्षपुरुषोत्तमश्रीसहजानन्दस्वामिसुतश्रीरघुवीराचार्यसूनुभगवत्प्रसादाचार्यविरचितायामन्वयार्थविवोधिन्यां भक्तमनोरञ्जन्याख्यायां श्रीमद्भागवतटीकायां दशमस्कन्धे उत्तरार्द्धे षट्पञ्चाशत्तमोऽध्यायः ॥ ५६ ॥

### कृष्णप्रिया

सत्राजित इस निर्णय पर आ गया कि मेरी सर्वाङ्गसुन्दर एवं कन्यारत्न कन्या सत्यभामा एवं स्यमन्तक दो दिव्यरत्न नररत्न देवाधिदेव श्रीवासुदेव श्रीकृष्ण के श्रीचरणों में समर्पित कर दूं। यह ही सर्वश्रेष्ठ उपाय है और अपराध-सम्मार्जन इससे हो सकता है और कोई उत्तम उपाय नहीं है ॥४२॥ विवेकशील सत्राजित ने ऐसा सुदृढ निश्चय किया, स्वयं ही प्रयत्न किया और अपने दिव्यकन्या और मणिरत्न अपने साथ लिये और सानुनय सदैन्य सानुराग श्रीकृष्ण भगवान को समर्पित कर दिये ॥ ४३ ॥ श्री सत्यभामाजी सुशील अत्यन्त सुन्दर, परमोदार, सद्गुणसम्पन्न एवं मधुर स्वभाववाली श्रेष्ठ कन्या थी। बहुत लोग सत्यभामा को पाने के लिये लालायित थे एवं अभ्यर्थना भी कर चुके थे। लेकिन सत्यभामा भूमि का अवतार थी श्रीः भूः एवं लीला भगवान की पत्नियाँ थी। इस लिये यह व्याह हो तो सकता था। भगवान ने विधि पुरःसर पाणिग्रहण किया ॥ ४४ ॥ राजन् परीक्षित् भगवान् श्रीकृष्ण ने सत्राजित से कहा कि सत्राजित जी हम मणि ग्रहण नहीं करेंगे। आप सूर्य भगवान के परम भक्त हैं इसलिये यह मणि आप के ही समीप रहे। मणि से उत्पन्न होने वाले सुवर्ण को जनमङ्गल के लिये देते रहे आप आनन्द से रहिये एवं आप का नित्य मङ्गल हो। आप हमारे हैं ॥ ४५ ॥

श्रीमद्भागवत दशमस्कन्ध उत्तरार्द्ध निरोधलीला के भाषान्तर में ५६ वाँ अध्याय समाप्त।

# अथ[1] सप्तपञ्चाशत्तमोऽध्यायः

| श्लोकाः | अनु. | प्रह्. | उ. | श्लो. अ. | उ. अ. | अ. अ. | सं. श्लो. अ. | सं. श्लो. | अ. |
|---|---|---|---|---|---|---|---|---|---|
| ४२ | ४१ | १ | १ | १३८० | ६ | ४५ | १४३१ | ४४॥ | ७ |

**श्रीशुक उवाच**

**विज्ञातार्थोऽपि गोविन्दो दग्धानाकर्ण्य पाण्डवान् । कुन्तीं च कुल्यकरणे सहरामो ययौ कुरून् ॥ १ ॥**
**भीष्मं कृपं सविदुरं गान्धारीं द्रोणमेव च । तुल्यदुःखौ च संगम्य हा कष्टमिति होचतुः ॥ २ ॥**
**[3]लब्ध्वैतदन्तरं राजन् शतधन्वानमूचतुः । अक्रूरकृतवर्माणौ मणिः कस्मान्न गृह्यते ॥ ३ ॥**
**योऽस्मभ्यं संप्रतिश्रुत्य कन्यारत्नं विगर्ह्य नः । कृष्णायादान्न सत्राजित् कस्माद् भ्रातरमन्वियात् ॥ ४ ॥**

**कर्दमक्षमा**

अन्वयः—श्रीशुक उवाच—विज्ञातार्थः अपि गोविन्दः, कुन्तीम्, च पाण्डवान्, दग्धान्, आकर्ण्य, कुल्यकरणे, सहरामम्, कुरून् ययौ ॥ १ ॥ सविदुरम्, भीष्मम्, कृपम्, गान्धारीम्, च, एव, द्रोणम्, तुल्यदुःखौ, सगम्य, हा, कष्टम्, इति, ह, ऊचतुः ॥ २ ॥ हे राजन्! एतद्, अन्तरम्, लब्ध्वा, अक्रूरकृतवर्माणौ, शतधन्वानम्, ऊचतुः, कस्मात्, मणिः, न, गृह्यते ॥ ३ ॥ यः,सत्राजित्, अस्मभ्यम्, कन्यारत्नम्, संप्रतिश्रुत्य, नः, विगर्ह्य, कृष्णाय, अदात्, सः कस्मात्, भ्रातरम्, न, अन्वियात् ॥ ४ ॥

**श्रीधरस्वामिविरचिता भावार्थदीपिका**

सप्तपंचाशत्तमे तु पुनः शतधनोर्वधे । प्राप्तं स्म दुर्यशो मार्ष्टि कृष्णोऽक्रूराहृतान्मणेः ॥ १ ॥

अक्रूरमुररीकृत्य मणेः पात्रमथाच्युतः । उपामंत्र्य तमेकांते सरामोऽगाद्व्रजाह्वयम् ॥ २ ॥

सत्राजितः श्रीकृष्णाज्ञाभंगफलं व्यक्तीकर्तुमाह—विज्ञातार्थोऽपीति । पांडवा बिलद्वारेण जतुगृहान्निर्गता इत्येवं विज्ञातोऽर्थो येन सः कुंतीं च दग्धामाकर्ण्य कुल्यकरणे कुलोचितसंव्यवहारार्थम् ॥ १ ॥ अन्येषां तद्दाहदुःखाभावाद्भीष्मादीन्संगम्येत्युक्तम् ॥ २–३ ॥ ननु जीवन्सत्राजित्कथं मणिं दास्यति तत्रोचतुः योऽस्मभ्यमिति । भ्रातरं प्रसेनं मृतं कस्मान्नान्वियान्नानुगच्छेत् म्रियतामित्यर्थः ॥ ४–५ ॥

**श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः**

अक्रूरादाहृत आनीतोऽक्रूराहृतस्तस्मात् ( १ ) उररीकृत्यांगीकृत्य । अथ मणिसमर्पणोत्तरम् । तमक्रूरम् । उपामन्त्र्य कथयित्वा—मणिस्त्वया ग्रहीतव्यः शतधन्वन इति तेन संविदं कृत्येत्यर्थः ( २ ) । कुल्यं शवदाहोत्तरं तद्दुःखजिहासया तद्गृहगमनं, तस्य करणे तन्निमित्तमित्यर्थः । "कुल्यं स्यात्कीकसे मांसे मृतगेहगतौ तथा" इति कोशात् ॥ अध्यायार्थे स्वामिभिरुक्तमक्रूरमुररीकृत्येति । तस्यायमर्थः—उररीकृत्य मनसांगीकृत्य । अथैकांते । सराम उपामन्त्र्य हस्तिनापुरवृत्तांतमन्त्रेण निश्चित्येति । अन्यथार्थत्वे तद्दुर्यशोमार्जनतात्पर्यस्यास्य प्रकरणस्य प्रत्युत तदाधिक्यप्रतिपादनप्रतिपत्तेः । गा इंद्रियाणि ईशत्वेन विन्दतीति गोविन्दशब्दो विज्ञापने हेतुः । कुल्यकरण इति तादृशक्रीडार्थमिति सिद्धान्तः ॥ १ ॥ अन्येषां दुर्योधनादीनाम् । तेषां पाण्डवानां दाहे दुःखाभावात् । संबंधित्वात्तुल्यदुःखौ रामकृष्णौ । सविदुरं भीष्मं सव्यसनत्वादेकत्र स्थितेः । भीष्मस्य सर्वात्मीयत्वेन प्रथमोक्तिः । भीष्मादिभिः सह तुल्यं दुःखं दुःखानुकरणं ययोस्तौ, यथा विदुरस्य ॥२॥ एतत् कृष्णगमनलक्षणम् । अन्तरमवकाशम् ॥ एतदन्तरमिति—संप्रति रामकृष्णौ द्वारकायां नस्त इत्यधुनैव सत्राजितं हत्वा मणिर्ग्रहीतुं शक्यः, तत्रावाभ्यां त्वमेव शूरोऽतस्त्वयैव हन्यताम्, तस्य दुःशीलत्वात्कस्मान्मणिर्न गृह्यत इति ॥ ३ ॥ एतादृशं रत्नं जीवता दातुमशक्यमित्याशंकते—नन्विति । तत्राक्षेपे । इत्यर्थ इति—तं मारयित्वा मणिर्ग्रहीतव्य इत्यर्थः । प्रतिश्रुत्य दातुमंगीकृत्य । यतः कन्यारत्नं कन्याश्रेष्ठत्वेनास्य तदभिलाषास्पदत्वादिति भावः । विशेषेण गर्हयित्वा दोषारोपेण तिरस्कृत्य । कृष्णायेति मूलनामग्रहणमवज्ञयः । कन्या-

---

१. एक षष्टितमो–बिज. । २. कष्टान्–वीरः, समदुःखौ समापम्य–विज. । ३. ज्ञात्वा वीर. ।

रत्नमिति तदप्राप्त्या महाधिश्च सूच्यते । कस्माद्भ्रातरमित्यादिशापव्याजवचनस्यायं भावः—अपुत्रस्यास्य भ्राता मृतोऽतोऽसहायस्यास्य हनने, हते चास्मिन्कस्मादपि भयं नास्त्येव । दायदाभावेन च मणिस्तदीय एव तस्माद्धन्यतामिति । श्रीभगवद्भक्तवरस्याऽक्रूरस्येदृशोक्तिर्नूनं श्रीगाकुलजनकोपात्, कृतवर्मणश्च भोजत्वेन तत्संगाभिदोषात् । अन्ये तु मन्यन्ते—श्रीभगवन्मिथ्यापवादोत्थापके सत्राजिति महाक्रोधेनैव भागवतवराभ्यामक्रूरकृतवर्मभ्यां शतधन्वप्रवर्तनार्थं तादृशमुक्तमिति ॥ ४ ॥

### श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी

अध्यायार्थस्तैरेव व्याख्यातः तत्राक्रूरमुररीकृत्येत्यस्यायमेवार्थः तमक्रूरमुररीकृत्य मनस्यङ्गीकृत्य अथानन्तरं स राम एकान्ते उपमन्त्र्य हस्तिनापुरवृत्तं मन्त्रेण निश्चित्येति अन्यथार्थत्वे तद्दुर्यशोमार्जनतात्पर्यस्याऽस्य प्रकरणस्य प्रत्युत तदाधिक्यप्रतिपादनप्रतिपत्तेः गा इन्द्रियाणि ईशत्वेन विन्दतीति गोविन्दशब्दो विज्ञाने हेतुः कुल्यकरण इति तादृशक्रीडार्थमिति सिद्धान्तः एवं स्वजनरमणाभिप्रायेणैवोक्तं राम इति ॥ १ ॥ सविदुरं भीष्मं सवासनत्वादेकत्र स्थितेः कृष्णाय वा तद्दिने दैवात्सङ्गतेः भीष्मादिक्रमोऽयं श्रीभीष्मस्य सर्वादरणीयत्वेन प्रथमं मिलितत्वात् अन्येषां तद्वत्तत्क्रमप्राप्तत्वादुन्नेयः भीष्मादिभिः सह तुल्यं दुःखं तदनुकरणं ययोस्तौ यथा विदुरस्य अतस्तान् समागम्य हस्पष्टम् उच्चैरित्यर्थः ॥ २ ॥ अन्तरमवकाशं शतधन्वानमिति तस्याऽतिदुःशीलत्वात् न गृह्यते त्वया ॥ ३ ॥ बहुभिर्याचितामिति पूर्वमुक्तमधुना तु योऽस्मभ्यं सम्प्रतिश्रुत्येत्युच्यते तस्मात्पूर्वमेभिर्याचिताऽपि नादायि सम्प्रति तु शरणार्थिना दीयमानाऽपि सा नामीभिर्यद्यपि स्वीकृता तथाऽपीर्ष्यया प्राहतुर्योऽस्मभ्यमिति । अस्मभ्यमिति शतधन्वापेक्षया बहुत्वं सम्यक् वारं वारं प्रतिश्रुत्य दातुमङ्गीकृत्य यतः कन्यारत्नं कन्याश्रेष्ठत्वेनास्मदभिलाषास्पदत्वादिति भावः । तथापि नोऽस्मान् विशेषेण गर्हयित्वा दोषारोपेण तिरस्कृत्य कृष्णायेति मूलनामग्रहणमवज्ञया बहुत्वेन प्रत्येकं सम्प्रतिश्रवणे शाठ्यं सूचितम् । तथा कन्यारत्नमिति तदप्राप्त्या महाधिश्च सूच्यते कस्माद्भ्रातरं नान्वियादिति शापव्याजवचनस्यायं भावः अपुत्रस्यास्य भ्राता मृतोऽस्त्येव अतोऽसहायस्यास्य हनने हते चाऽस्मिन् कस्मादपि दायादाभावेन च मणिस्त्वदीय एव भवेत् तस्माद्धन्यतामिति श्रीभगवद्भक्तवरस्यास्याक्रूरस्येदृश्युक्तिर्नूनं श्रीगोकुलजनकोपात् कृतवर्मणश्च भोजत्वेन तत्सङ्गादिदोषात् अन्ये तु मन्यन्ते श्रीभगवन्मिथ्यापवादोत्थापके सत्राजिति महाक्रोधेनैव भागवतवराभ्यामप्यक्रूरकृतवर्मभ्यां शतधन्वप्रवर्त्तनार्थं तादृशमुक्तमित्यर्थः ॥ ४ ॥

### श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी

विज्ञातार्थत्वे हेतुः—गोविन्दो गा इन्द्रियाणि ईशत्वेन विन्दतीति तथा स इति सर्वान्तर्य्यामित्वादित्यर्थः । एवं स्वजनरमणाभिप्रायेणोक्तम्—राम इति । कुल्यकरणार्थं यानेऽप्ययमेव हेतुर्द्रष्टव्यः । गवामिन्द्रो गोविन्द इति गो-पालनादिना भक्तवात्सल्यात् । एवं पाण्डवानां हितार्थमपि यानं ज्ञेयम् ॥ १ ॥ दाहदाढर्यख्यापनेन महाहिंस्रेषु दुर्य्योधनादिषु तेषां जीवनवार्त्तानुसन्धानयत्नशैथिल्यसिद्धेः; एव अपि, उक्तसमुच्चये चकाराद् धृतराष्ट्रादिकञ्च सविदुरमिति भीष्म-कृपयोः सान्त्वनाद्यर्थं ताभ्यां तस्य साहित्यात्, भक्तत्वेन समागमे गौणत्वाद्वा; भीष्मादिभिः सह तुल्यं दुःखं ययोस्तौ, अतस्तान् समागम्य, ह स्पष्टम्, उच्चैरित्यर्थः । भीष्मादीनां यथापूर्व्वं वयआदिना श्रेष्ठतया तत्तत्क्रमेण समागमः, तत्र द्रोणादपि गान्धार्य्याः श्रैष्ठ्यम्, तस्य कृपात् पश्चादागत्य नवीनतयागन्तुकत्वेन न्यूनत्वात् ॥ २ ॥ अन्तरमवकाशम्, शतधन्वानमिति तस्य दुःशीलत्वात् । किंवा सत्राजिता प्रतिश्रुतपुत्र्यदानेन तस्य द्वयोत्पत्तेः । न गृह्यते त्वया ॥ ४ ॥ अस्मभ्यमिति शतधन्वापेक्षया बहुत्वम्, सम्यग् वाङ्निबन्धादिना प्रतिश्रुत्य दातुमंगीकृत्य, यतः कन्यारत्नं कन्याश्रेष्ठत्वेनास्मद्योग्यत्वादिति भावः । तथापि नोऽस्मान् विशेषेण गर्हयित्वा अदानावमानतः, किंवा श्रीकृष्णे विराजति सति किमन्यैरित्येवं वाक्यैः कृष्णाय श्यामकान्तये इति भावः । बहुत्वेन प्रत्येकं सम्प्रतिश्रवेण शाठ्यमपि, तथा कन्यारत्नमिति तदप्राप्त्या महाधिश्च सूच्यते । कस्मात् भ्रातरं नान्वियादित्यस्यायं भावः—अपुत्रस्यास्य भ्राता च मृतोऽस्त्येव, अतोऽसहायस्यस्य हनने हते चास्मिन् कस्मादपि भयं नास्त्येव; दायादाभावेन च मणिस्त्वदीय एवाभूदिति श्रीभगवद्भक्तवरस्याप्यक्रूरस्येदृश्युक्तिः, गोकुलजनानाश्वासनेन सहसा त्वरया ततः श्रीकृष्ण-नयनेन तस्मिन् श्रीभगवदेकजीवनानां श्रीगोपीनामीषदवज्ञास्पर्शात्, कृतवर्म्मणश्च भोजत्वेन तत्संगादिदोषात् । यद्वा, भगवतः पितृव्ये भक्तवरे गोकुलाधिकरणतद्दर्शनैकार्थसेवितदुष्टकंसे कृतसिद्ध-तत्तन्मनोरथकुले तथा ( भा० १०।३८।८ ) 'यद्गोपिकानां कुचकुंकुमाङ्कितम्' इति, ( भा० १०।३८।१७ ) 'यद्वा विहारे व्रजयोषितां श्रमं, स्पर्शेन सौगन्धिकगन्ध्यपानुदत्' इत्यादिभावनया सुव्यक्त-श्रीगोपीविषयक-भक्तिविशेषे कंसवधादिना स्वभक्त-यदुकुलहितार्थं स्वेच्छया श्रीभगवतो गमने गौणनिमित्तमात्रत्वेन भगवतीनां तासामवज्ञा न किल सम्भवेत् । अतो ज्ञेयमिदं श्रीभगवन्मिथ्यापवादोत्थापके सत्राजिति महाक्रोधेन भागवतवराभ्यामक्रूरकृतवर्म्माभ्यां तद्वधे कन्यावाप्त्याद्यर्थसत्राजित्प्रियंकर-तदपवादानुमोदक-दुर्बुद्धिशतधन्वप्रवर्त्तनार्थं शतधन्वनोऽपि वधार्थमिति दिक् । मव्यभीप्सा त्वक्रूरस्य नास्तीत्यग्रे व्यक्तं भाव्येव ॥ ४ ॥

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम्

कस्मात् भ्रातरं नान्वियात् कस्मान्न म्रियेत् ॥ ४-११ ॥

## श्रीमद्वीरराघवाचार्यकृता भागवतचन्द्रचन्द्रिका

फलभागिन इत्युक्तं तदेव दर्शयितुं मणिकथाशेषमाह—सप्तपञ्चाशत्तमेन, विज्ञातार्थ इत्यादिना। विज्ञातः विदितोऽर्थः पाण्डवा बिलद्वारेण जतुगृहान्निर्गता इत्येवंविधोऽर्थो येन तथाभूतोऽपि केवलं प्राकृतलोक इव पाण्डवान् कुन्तीं च दग्धान् जतुगृहेष्विति शेषः। आकर्ण्य कुल्यकरणे कुलोचितसम्व्यवहारार्थं रामेण सहितः कुरून् देशान् ययौ ॥ १ ॥ भीष्मं कृपमिति पाण्डवेतरेषां जतुगृहदुःखाभावात् भीष्मादीन् समागम्येत्युक्तं तुल्यकष्टानात्मना तुल्यदुःखान् हा कष्टं दुःखं प्राप्तमित्येवं तान्प्रत्यूचतुः सान्त्वयामासतुः ॥ २ ॥ ज्ञात्वेति तदाऽक्रूरकृतवर्माणौ भगवानधुनाऽत्र नास्ति अयमेवावसर इत्येवमन्तरं समयं ज्ञात्वा हे राजन्! शतधन्वानमूचतुः उक्तिमेवाह—मणिरित्यादिना सपादेन। न गृह्यते त्वयेति शेषः॥ ३ ॥ ग्राह्यत्वे हेतुः य इति यः सत्राजित्कन्यारत्नं सत्यभामामस्मभ्यं प्रतिश्रुत्यदास्यामीति प्रतिज्ञाय नोऽस्मान् विगर्ह्यानादृत्य कृष्णायादात् ददौ अतो मणिर्ग्राह्य इति भावः। ननु, जीवन्सत्राजित्कथं मणिं दास्यतीत्यत्रोचतुः नेत्यादि सत्राजित्कस्माद्धेतोर्भ्रातरं प्रसेनं नान्वियात् नानुगच्छेत् हन्तव्य एव स इत्यर्थः॥ ४ ॥

## श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

अज्ञानिनां तमः प्राप्तिसाधनं ज्ञानिनां भगवद्भक्त्युद्रेककारणं लोकविडम्बनार्थं भगवच्चरितविशेषं पूर्वाध्यायार्थबीजं निरूपयत्यस्मिन्नध्याये अपिना सन्देहं निवारयति—कुल्यं शवदहनान्तरं तद्दुःखजिहासया तद्गृहगमनं तस्य करणे तन्निमित्तीकृत्येत्यर्थः ॥ १-२ ॥ अन्तरमवकाशम् ॥ ३ ॥ भ्रातरं प्रसेनमन्वियात् अनुगतः स्यात् मृतोऽस्तु तं हन्मीत्यर्थः ॥ ४-५ ॥

## श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः

योऽस्मभ्यमिति परमभागवतस्याप्यक्रूरस्येदृश्युक्तिर्नूनं गोकुलजनकोपात् कृतवर्मणश्च भोजत्वेन कंससङ्गदोषात् ॥१-६॥

## श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शिनी

सप्तपञ्चाशत्तमे तु वधः शत्राजितो हतः। शतधन्वा तु कृष्णेनाऽक्रूरात् प्राप्तो मणिस्ततः॥<br>
स्वाधारकं पालकोऽपि हन्यात् कृष्णावमाननात्। इति विज्ञापयामास मणिः सत्राजितो वधात्॥

पाण्डवा बिलद्वारेण जतुगृहान्निर्गता इति विज्ञातोऽर्थो येन स कुन्तीं च दग्धामाकर्ण्य कुल्यकरणे कुलोचितव्यवहारार्थम् ॥ १-२ ॥ एतदन्तरमिति सम्प्रति रामकृष्णौ द्वारकायां नस्त इत्यधुनैव सत्राजितं हत्वा मणिर्ग्रहीतुं शक्यः तत्रावाभ्यां सकाशात् त्वमेव शूर इति त्वयैवायं हन्यताम् ॥ ३ ॥ तत्र सत्राजितोऽपराधमाहतुः—योऽस्मभ्यमिति। बहुभिर्याचितामिति पूर्वोक्तैरेभिः पूर्वं सा प्रत्येकं प्रार्थिता तेनाऽपि दातुं प्रतिश्रुता आसीदिति गम्यते भ्रातरं प्रसेनं मृतं कस्मान्नान्वियात् अपि त्वनुगच्छेदेव म्रियतामित्यर्थः। अत्र भगवन्मिथ्या एवादोत्थापके सत्राजिति महाक्रोधेनैव भक्तप्रवराभ्यामक्रूरकृतवर्मभ्यां तद्वधे शतधन्वप्रवर्त्तनार्थमेव तादृशमुक्तमिति प्राञ्चः ॥ ४ ॥

## गूढार्थदीपिनी

वधे शतधनोः सप्तपञ्चाशत्तम ईश्वरः। मार्ष्टि दोषं पुनर्जातमक्रूरानीतसन्मणेः ॥ १ ॥

लाक्षाभवने पाण्डवा न दग्धा इत्येवंरूपोऽर्थो विज्ञातो येन सः। कुन्तीं च दग्धामाकर्ण्य। कुल्यं मृतगेहगमनं तस्य करणे तन्निमितम् ॥ १-२ ॥ अन्तरभवसरम् ॥ ३ ॥ यः सत्राजित् संप्रतिश्रुत्य दातुं प्रातिज्ञाय नः विगर्ह्य अनादृत्य। भ्रातरं मृतं प्रसेनं कथं नानुगच्छेत् अपि तु म्रियेतैवेत्यर्थः॥ ४ ॥

## श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

एवं लोकैरारोपितं दुर्यशो भगवता सुनयेन निराकृतमित्युक्तमथ सप्तपञ्चाशत्तमे मणिकथाऽशेषं दर्शयन् भगवता पुनः प्राप्तं दुर्यशो निराकृतमित्याह—विज्ञातार्थोऽपीति। मातृसहिताः पाण्डवाः बिलद्वारेण जतुगृहान्निर्गताः इत्येवं विज्ञातोऽर्थो येन सः कुन्तीं च दग्धामाकर्ण्य कुलस्य कुलोचितव्यवहारस्य करणे ॥ १ ॥ धृतराष्ट्रादीनां तद्दाहदुःखाभावाद्भीष्मादीन् सङ्गम्य इत्युक्तम् ॥ २ ॥ दुष्टसङ्गः साधुमपि विमोहयतीति सूचयितुमाह—अक्रूरकृतवर्माणाविति। अकार्ये शतधनोः प्रयोजको मुख्यः कृतवर्मा इति भावः॥ ३ ॥ भ्रातरं प्रसेनं नान्वियात् नानुगच्छेत् ॥ ४-५ ॥

## श्रीसत्यधर्मकृता श्रीभागवतटिप्पणी

॥ हरिः ॐ ॥ अधिकारभेदेन तमोमुक्तिहेतुभूतं किञ्चिल्लोकमनुकुर्वतो लोके यस्य चरितं विवक्षुर्मन्दसन्देहसदलनाय तस्यावसरमर्पितरत्नादावेव वक्ष्यमाणतात्पर्यं सूचयन्ववतीति वक्ति। श्रीशुक इति। विज्ञातार्थो विज्ञातोऽर्थो येन स तथा सर्वज्ञः

पाण्डवान्दग्धानाकर्ण्य श्रुत्वा कुन्ती च दग्धामिति विपरिणतमन्वेति। कुल्यकरणे शवदाहानन्तरमुर्वरितहितार्थ तद्गेहं गत्वा दुःखहापनवचनं कुल्यः। कुलोद्भवे कुलस्यातिहितेऽपि चेति विश्वः। सहरामः कुरून्ययौ। अग्रजत्वेन वा तव विनेय एतादृशं इति दर्शयितुं वा हलिना सहानयनमिति ज्ञेयम् ॥ १ ॥ सविदुरं भीष्मं नृपं धार्तराष्ट्रं वा समदुःखो समं दुःखं ययोस्तौ। इदं नटनमिति सम्यगदुःखावित्यप्यन्तरर्थः। हा हा कष्टमित्यूचतुः ॥ २ ॥ एतदन्तरमेतदवकाशं लब्ध्वा रामकृष्णौ ग्रामान्तरगताविति लब्धावकाशावक्रूरकृतवर्माणौ सासुरावेशौ शतधन्वानं तन्नामानं कञ्चिद्यादवं मणिः स्यमंतकः कस्मान्न गृह्यते ग्रहाण ॥ ३ ॥ कोऽपराधस्तदनुष्ठित इत्युपरोधोऽनुष्ठेय इत्यत आहतुः। य इति। अस्मभ्यं प्रातिस्विकतया त्रिभ्यः कन्यारत्नं दास्य इति प्रतिज्ञाय नस्त्रीन्विगर्ह्य निन्दयित्वाऽनादृत्येति यावत्। यस्मात्कृष्णायादाद्ददौ तस्माद्भ्रातरं प्रसेनमन्विन्यान्मृतः स्यात्। घातनं कर्तव्यमित्यूचतुरित्यन्वयः ॥ ४ ॥

## श्रीमद्वल्लभाचार्य्यकृता सुबोधिनी

निरोधो मानरूपोऽत्र सप्तभिर्विनिरूपितः। मेयरूपश्च तावद्भिः प्रमेयबलमुच्यते ॥ १ ॥
अपकारिषु भक्तेषु तथा साधारणेषु च। फलप्रकरणं ह्येतत्तेन तादृङ् निरूप्यते ॥ २ ॥
कामः फलं यथा पूर्वं क्रोधस्त्वत्र तथा फलम्। राजसानां विशेषेण जयस्त्वत्र फलिष्यति ॥ ३ ॥
हरिधर्मैश्च हरिणा बलभद्रेण यादवैः। जयो निरूप्यते लोके निरोधात्मा हि राजसः ॥ ४ ॥
तत्राष्टमे तथाध्याये कृष्णेच्छाया जयस्त्रिधा। सत्राजिच्छतधन्वा च अक्रूरश्च जितास्तथा ॥ ५ ॥

पूर्वाध्यायान्ते भगवता मणिर्न गृहीत इत्युक्तम्। तस्य फलमत्र निरूप्यते। देवतान्तरे कृता वुद्धिः जीवन्तं निरोधयितुं न प्रयच्छतीति निरोधाधिकार्यपि सत्राजित् स्वदेहं परित्यज्य मणिद्वारा भक्ते स्थितः संसारे भगवत्पादरूपेषु वाराणस्यादिषु निरुद्ध इत्युच्यते। तत्र प्रथमं तस्य पूर्वदेहत्यागार्थं प्रस्तावनामाह **विज्ञातार्थोऽपी**ति द्वाभ्याम्। विद्यमाने भगवति भगवद्धर्माणां प्रयोजकता न स्यादिति, लोकाश्च दुष्टाः अन्यथा कल्पयिष्यन्तीति भगवान् द्वारकां परित्यज्य हस्तिनापुरं गतो बलभद्रश्चेतीर्यते। न हि पाण्डववैरिषु भगवान् भक्तानां विधिमुखेन हितं कुर्वाणः किं गच्छति। न हि मुख्येषु गतेषु तत्सम्बन्धिष्वदुःखितेषु गमनं कुलाचारो भवति। सर्वमज्ञात्वा गत इत्याशङ्क्याह **विज्ञातार्थोऽपी**ति। विशेषेण ज्ञातः लाक्षागृहात् यथा पाण्डवा निर्गताः, यथा वा एकचक्रे गताः, तत्र ब्राह्मणवेषेण भिक्षावृत्त्या च यथा तिष्ठन्ति, यथा वा पञ्चपुत्रा काचिच्छवरी लाक्षागृहे दग्धा, तद्भ्रमात् लोकाः पाण्डवाः कुन्ती च दग्धेति वदन्ति, इदं प्रमेयमर्थः। विज्ञातः अर्थो येनेति। अन्यथा कौरवेषु सन्देहः स्यात्, यदि भगवान् न गच्छेत्, भगवतैवान्यत्र स्थापिता इति। अतोऽज्ञाननाट्यं कर्तव्यम्, अन्यथा पाण्डवनाशार्थं पुनर्यत्नं कुर्युः। यतो भगवान् गोविन्दः, सतामिन्द्रो रक्षकः। अतः पाण्डवरक्षार्थं **दग्धानाकर्ण्य**। **अदग्धा**निति मुख्योर्थः। यतः पाण्डवाः पितुः पुत्राः। मातृपुत्रा एव दग्धा भवन्ति। कुन्तीं च दग्धां श्रुत्वा। कुल्यकरणे कुलधर्मसंरक्षार्थम्। बन्धुषु मृतेषु अवशिष्टानां तत्सम्बन्धिनां दर्शनार्थं दूरस्था गच्छन्तीति। अनेन तेषामपि निरोधार्थं भगवान् गत इति सूच्यते। कुरून् हस्तिनापुरम्। केवले भगवति कस्यचित्सन्देहोऽपि भवेत्। बलभद्रसहिते न भवतीति **सहराम** इत्युक्तम्। गतयोः सम्प्रश्नमाह **भीष्म**मिति। नृपो धृतराष्ट्रः। त्रयः सात्त्विकराजसतामसाः स्त्रीब्राह्मणाश्च जन्मोत्कर्षापकर्षौ। प्रत्येकमुपागम्य हा कष्टमित्यूचतुः। एतादृशं वचनमाश्चर्यमिति हेत्युक्तम् ॥ २ ॥ यदर्थमेतदुक्तं तदाह **लब्ध्वैतदन्तर**मिति चतुर्भिः। अक्रूरः द्वारकाया अवेक्षकः, दिवसे न्यायकर्ता धर्माधिकारी। कृतवर्मा तु रात्रावेवक्षकः, कोटिवारक इति प्रसिद्धः। शतधन्वा तु साहसी असाध्यसाधतः तयोराज्ञाकर्ता। स चौर्येण सर्वं कर्तुं समर्थः। त्रयोऽपि यादवाः भगवति विद्यमाने, बलभद्रे वा, अन्यायं कर्तुमसमर्थाः, भगवति ग्रामान्तरं गते, **एतदन्तरं छिद्रं लब्ध्वा। राजन्नि**ति तथा परिज्ञानात्सम्बोधनम्। शतधन्वानं वक्ष्यमाणमूचतुः। तयोर्वाक्यमाह **मणि कस्मान्न गृह्यत** इति सपादश्लोकेन ॥ ३ ॥ न केवलं मणिमात्रं ग्राह्यम्, मारणीयोऽपीत्याह **योऽस्मभ्य**मिति। भगवदपराधकरणात् मणिग्रहणे भगवतश्च मणिरिति न हेतुर्वक्तव्यः। भगवच्छ्वशुरोऽयमिति मारणे हेतुर्वक्तव्य एव। अवश्यं तेन कन्यारत्नं देयत्वेन प्रतिज्ञातम्, तदभावे रत्नरत्नं वा तस्माद् ग्राह्यम्। अस्मान् निन्दित्वा एते न वराः समीचीना इति भगवते दत्तवान्। तत्र निन्दायामवश्यं मारणीयः क्षत्रियधर्मपरैः। भगवते च दत्तवानिति गुप्ततया मारणीयः। यथा भगवता याचितं मणिं भगवते अदत्वा भ्रात्रे दत्तवान्। ततः समणिः भ्राता, हिनस्तीति सिंहेन विपाटितः। एवं कन्यादानप्रसङ्गेन स्वकीयोऽपि मणिः भगवता तस्मै दत्त इति समणिः सत्राजित् कस्माद्धेतोर्भ्रातरं नान्वियात्। अपित्वनुगमनमेवोचितम्। सत्यभामा मणिश्च तुल्यौ याचने। अस्माभिः सत्यभामा याचिता, भगवता मणिर्याचितः। उभयोरपि याचितं न दत्तवान्, निन्दां चोभयोः कृतवान्। ततो निन्दानन्तरं मणिर्यत्रैव तिष्ठति, स एव प्रसेनपदवीं गच्छतीति तस्य भ्रातृसहगमनं युक्तमित्यर्थः। ताभ्यां लौकिकभाषया निरूपितोऽप्यर्थः सरस्वत्या परमार्थ एव निरुक्तः। येन प्रसेनो हतः, सोऽप्यन्येन हत इति जानन्तावपि मूर्खं शतधन्वानं स्वस्याप्यसम्मतमूचतुः। अन्यथा स्वयमेव तथा कुर्याताम् ॥ ४ ॥

### श्रीविट्ठलरायात्मजश्रीवल्लभकृतलेखः

श्रीहरिः । अष्टमेऽध्याये । उत्तरार्धे लोकधर्मपुरस्कारेण लीलाकरणात् तत्रापि फलप्रकरणारम्भाध्यायस्य भावान्तरत्वात् पूर्वार्धोक्तप्रमाणप्रमेयप्रकरणाभ्यां सङ्गतिर्न भवेदित्याशङ्क्य तयोरपि भाषयोः समाधिपोषकत्वात् ताभ्यां सहैव प्रकरणविभाग इत्याशयेन पूर्वार्धोक्तप्रकरणद्वयमनुवदन्ति **निरोध** इति । साधनप्रकरणस्य तूत्तरार्धे एवोक्तत्वान्नासङ्गतिशङ्केति न तदनूदितमिति भावः। **प्रमेयेति** । अपकारिणो द्विविधाः । भक्ताः अक्रूरादयः। अन्ये साधारणाः । अतः परमुभयेषु प्रमेयबलमुच्यते **इत्यर्थः** । तत्र हेतुः **फलेति** । हि यतः एतत् फलप्रकरणम्, फलं त्वत्र स्वरूपबललभ्यम्, न साधनाधीनम्, तेन हेतुना तादृक् बलं निरूप्यत इत्यर्थः । **काम** इति । पूर्वं तामसप्रकरणे यथा कामलीला निरूपिता, तथात्र क्रोधलीला निरूप्यते इत्यर्थः । फलतीति **फलम्**, फलसम्पादकमित्यर्थः हरिधर्मैरिति । एकेन त्रिभिः एकेन द्वाभ्यां चेत्यध्यायविभागः । **भीष्मं** नृपमित्यत्र। **जन्मोत्कर्षापकर्षा**विति । नात्र क्रमो विवक्षितः । तथा च जन्मापकर्षः स्त्रियां गान्धार्याम् । जन्मोत्कर्षो ब्राह्मणे द्रोणे इत्यर्थः । **योऽस्मभ्य**मित्यत्र । ततः समणिरिति । हिनस्तीति सिंहपदनिरुक्तिः । शतधन्वापि हिंसकत्वात् तत्तुल्य इति ज्ञापनार्था ।

### श्रीसुबोधिनीसारः

शुकोक्तिः । सुरंगमार्गेण लाक्षाभवनात् मात्रा सह पांडवा निर्गता इति विज्ञातोऽर्थो येन सोपि गोविंदो लोकमुखाद्दग्धान् पांडवान्कुंतीं चाकर्ण्य श्रुत्वा कुल्याकरणे कुलोचितसंव्यवहारार्थं कुरून् ययौ जगाम सहरामः ॥ १ ॥ भीष्मादीन्संगम्य मिलित्वाऽन्येषां तद्दहनदुःखाभावान तुल्यं तत्समानं दुःखं ययोस्तौ रामकृष्णौ हा कष्टमिति ह ऊचतुः ॥ २ ॥ श्रीकृष्णाज्ञाभंगकर्तुः सत्राजितः फलं व्यक्तीकुर्वन्नाह एतत् । अंतरं छिद्रं लब्ध्वाऽक्रूरकृतवर्माणौ शतधन्वानं यादवविशेषमूचतुः मणिः स्यमंतकाख्यस्त्वया कस्माद्धेतोर्न गृह्यते सत्राजितः सकाशात् ॥ ३ ॥ यः सत्राजित् कन्यारत्नमस्मभ्यं संप्रतिश्रुत्य वाचा दत्त्वा नोऽस्मान् विगर्ह्य निंदित्वा तत्कन्यारत्नं सत्यभामां कृष्णायादात् स भ्रातरं मृतं प्रसेनं कस्मान्नान्वियात् नानुगच्छेत् म्रियतामित्यर्थः ॥ ४ ॥

### गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

सप्तपञ्चाशत्तमे तु लिप्समात्मनि दुर्यशः । दर्शयित्वा मणिं कृष्णो ममार्जेति निरूप्यते ॥ १ ॥

"यदि सत्राजितः सकाशात् भगवता मणिर्गृहीतः स्यात्तदा तदाज्ञोल्लङ्घनदोषो निवृत्तः स्यात्, तत्फलं च तस्य न स्यात्, अतो विषयासक्तानां भगवद्विमुखानामर्थोऽप्यनर्थकर एव भवतीति तत्फलं व्यक्तीकर्तुं भगवान् मणिं न गृहीतवान्" इति तत्फलं दर्शयन्नाह—विज्ञातार्थ इति । विज्ञातः ' पाण्डवा बिलद्वारेण जतुग्रहान्निर्गताः, न दग्धा' इत्येवंविधोऽर्थो येन तथाभूतोऽपि गोविन्दो कृष्णः लोकमुखात् पाण्डवान् कुन्तीं च जतुगृहे दग्धानाकर्ण्य श्रुत्वा कुल्यकरणे कुलोचितव्यवहारार्थं रामेण सहितः कुरून् देशान् तन्मध्यस्थं हस्तिनापुरं ययौ ॥ ३ ॥ भीष्मादिदुःखेन तुल्यं दुःखं ययोस्तथाभूतौ भूत्वा रामकृष्णौ दुर्योधनादीनां तद्दाहदुःखाभावात् भीष्मादीन् सङ्गम्य 'हा कष्टं महद्दुःखं जातम्' इत्यूचतुः ॥ २ ॥ राजवृत्तस्य कपटवहुलत्वात् अनर्थकारित्वं सूचयन् सम्बोधयति—राजन्निति । श्रीकृष्णोऽधुना नास्त्यतः सत्राजिद्वधः सुकर इत्येतदन्तरं समयं लब्ध्वाऽक्रूरकृतवर्माणौ शतधन्वानमूचतुः । तदुक्तिमेवाह—मणिरिति सपादेन । सत्राजितः सकाशात् त्वया मणिः कस्मान्न गृह्यते ?॥ ३ ॥ ननु 'जीवतस्ततो मणिग्रहणं कथं सम्भवति, इति चेत्तर्हि तस्य कोऽपराध' इत्यपेक्षायामाह—ये इति । यः सत्राजित् अस्मभ्यं सम्प्रतिश्रुत्य 'सत्यभामां दास्यामि' इति प्रतिज्ञाय नोऽस्मान् विगर्ह्य अनादृत्य तां कन्यारत्नं कृष्णायादात् स सत्राजित् कस्माद्धेतोर्भ्रातरं प्रसेनं नान्वियात् नानुगच्छेत् ? हन्तव्य एव स इत्यर्थः ॥ ४ ॥

### अन्वितार्थप्रकाशिका

सप्तपञ्चाशत्तमे तु कृत्वा शतधनोर्वधम् । मणिजं दुर्यशोऽमार्क्षीत् श्लोकाः सार्द्धा द्विवार्द्धयः ( ४२॥ ) ॥
उवाचेत्येकं ( १ ) सपादा गुणवेदाः ( ४३। ) अनुष्टुभः ॥ ५७ ॥

विज्ञातेति ॥ विज्ञातः पाण्डवा बिलद्वारेण जतुगृहान्निर्गता न दग्धा इत्येवंविधोऽर्थो येन तथाभूतोऽपि गोविन्दो लोकमुखात्पाण्डवान्कुन्तीं च जतुगृहे दग्धानाकर्ण्य श्रुत्वा कुल्यकरणे कुलोचितव्यवहारार्थं रामेण सहितः कुरून्देशान् तन्मध्यस्थहस्तिनापुरं ययौ ॥ १ ॥ भीष्मादिदुःखेन तुल्यं दुःखं ययोस्तथाभूतौ भूत्वा रामकृष्णौ दुर्योधनादीनां तद्दाहदुःखाभावात् भीष्मं सविदुरं कृपं गान्धारीं द्रोणं च सङ्गम्य हा कष्टं जातमित्यूचतुः ॥ २ ॥ लब्ध्वेति ॥ हे राजन् ! श्रीकृष्णोऽधुना नास्त्यतः सत्राजिद्वधः सुकर इत्येतदन्तरं समयं लब्ध्वा अक्रूरकृतवर्माणौ शतधन्वानमूचतुः । तस्य दैत्यांशत्वेन दुःशीलत्वात् सत्राजितः सकाशात् त्वया मणिः कस्मान्न गृह्यते ॥ ३ ॥ य इति ॥ यः सत्राजित् अस्मभ्यं प्रतिश्रुत्य सत्यभामां दास्यामीति प्रतिज्ञाय नोऽस्मान् विगर्ह्य अनादृत्य तम् कन्यारत्नं कृष्णायादात् । स सत्राजित्कस्माद्धेतोः भ्रातरं प्रसेनं नान्वियात् नानुगच्छेत् । हन्तव्य एव स

इत्यर्थः। तत्रास्मदपेक्षया त्वमेव शूर इति त्वयैवायं हन्यताम्। अत्र बहुभिर्याचितामिति पूर्वोक्तैरेभिः पूर्वं सा प्रत्येकं प्रार्थिता तेनापि दातुं प्रतिश्रुता आसीदिति गम्यते। अत्र भगवन्मिथ्यापवादके सत्राजिते क्रोधेनैव भक्तप्रवराभ्यामक्रूरकृतवर्मभ्यां तद्वध-प्रवर्त्तनार्थमेव तादृशमुक्तमिति प्राञ्चः॥ ४॥

### श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्

इदानीं सप्तपंचाशत्तमेऽध्याये हरेर्हस्तिनापुरगमनं शतधन्वनाकृतसत्राजितमरणं तन्निमित्तं तद्धननं च पुनर्मणिनिमित्त-प्राप्ताभिशापमार्ज्जनं च निगद्यते तत्रादौ श्रीकृष्णाज्ञाभंगफलं स्पष्टयितुमिदमाख्यानमाह विज्ञातार्थोपीति लाक्षागेहात् पांडवा-विलाध्वनानिर्गता इत्यर्थो विज्ञातो येन सः कुंतीं च दग्धां। कुल्यकरणे कुलघटितव्यवहारकरणनिमित्ते॥ १-२॥ एतदंतरं अवकाशं त्वया न गृह्यते॥ ३॥ पूर्वमेभिः कृतवर्मादिभिः सा कन्या याचितापि सत्राजितेन नादायि ततः श्रीकृष्णे मिथ्याभिशाप-दोषात्प्राप्तबलवद्वैरेण शरणार्थिना तेनैतेभ्यः सा कन्या प्रतिश्रुतेति ज्ञेयं तेन पूर्वत्र बहुभिः कन्यायाचनमात्रस्योक्तत्वेन न विरोधः नोऽस्मान् विगर्ह्य निंदयित्वा भ्रातरं मृतं प्रसेनं कस्मान्नान्वियात् नानुगच्छेत्। हन्यतामितिभावः॥ ४-५॥

### भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

सप्तपञ्चाशत्तमे तु वधे शतधनोः पुनः। दुर्यशो मार्ष्टि संप्राप्तं कृष्णोऽक्रूरहृतान्मणेः॥ १॥

सत्राजितः श्रीकृष्णाज्ञाभङ्गफलं व्यक्तीकुर्वन् वयं नु फलभागिन इति यदुक्तं तदेव दर्शयितुं मणिकथाशेषमाह विज्ञा-तार्थ इत्यादिना। विज्ञातेति। विज्ञातः विबुद्धः अर्थः पाण्डवा बिलद्वारेण जतुगृहान्निर्गता इत्येवंविधोऽर्थो येन तथाभूतोऽपि, गोविन्दः, भगवान् श्रीकृष्णः, पाण्डवान्, कुन्तीं च, दग्धान् जतुगृहेष्विति शेषः। आकर्ण्य, कुल्यकरणे कुलोचितसंव्यवहारार्थं, सहरामो रामसहितः, कुरून् देशान्, ययौ॥ १॥ भीष्ममिति। भीष्मं शान्तनवं, कृपं कृपाचार्यं, गान्धारीं, सविदुरं विदुरसहितं, द्रोणं द्रोणाचार्यं च, इत्येतान्, तुल्यदुःखानात्मना तुल्यकष्टान्, समागम्य एव, हा इति खेदे। कष्टं प्राप्तं इत्येवं, ह स्फुटं, ऊचतुः। अन्येषां तद्वाहदुःखाभावाद्भीष्मादीन् संगम्येत्युक्तम्॥ २॥ अत्रावसरे द्वारकायां यद्वृत्तं तदाह लब्ध्वेति। हे राजन्, एतत् अन्तरं, लब्ध्वा भगवानधुनाऽत्र नास्त्यतोऽयमेवावसर इत्येवंभूतं समयं ज्ञात्वेत्यर्थः। ज्ञात्वेत्यपि पाठः। अक्रूरकृतवर्माणो, शतधन्वानं, ऊचतुः। उक्तिमेवाह मणिरित्यादिना सपादेन। मणिः, कस्मात् त्वयेति शेषः। न गृह्यते॥ ३॥ ननु जीवन् सत्रा-जित् कथं मणिं दास्यति तत्रोचतुः। य इति। यः सत्राजित्, कन्यारत्नं सत्यभामां, अस्मभ्यं संप्रतिश्रुत्य दास्यामीति प्रतिज्ञाय, नोऽस्मान्, विगर्ह्य अनादृत्य, कृष्णाय, अदाद्दौ। ततः, स सत्राजित्, भ्रातरं मृतं प्रसेनं, कस्मात् न अन्वियात् नानुगच्छेत्। म्रियतामित्यर्थः। एनं हत्वा त्वया मणिर्ग्राह्य इति भावः॥ ४॥

### कृष्णप्रिया

स्यमन्तक मणि का हरण अक्रूरजी का काशी निवास एवं पुनरागमन—श्रीशुकदेव जी महर्षि कहते है—राजन् परीक्षित्! भगवान् श्रीकृष्ण यद्यपि अच्छी तरह से अभिज्ञ है कि लाक्षागृह में पाण्डव जले नहीं है फिर भी सहैतुक कुलरीति के व्यवहारों की रक्षा के लिये ज्येष्ठ बन्धु श्रीबलभद्र जी के साथ हस्तिनापुर गये॥ १॥ हस्तिनापुर में श्रीभीष्मपितामह जी श्रीकृपाचार्य जी विदुरजी के साथ गान्धारीजी को एवं अन्य बन्धुजनों को मिलकर समवेदना को व्यक्त करते हुए कहने लगे कि हाय हाय अरे अरे यह तो असह्य शिर पर आ पड़ी॥ २॥ जब बलभद्रजी के साथ लौकिक व्यवहार के लिये भगवान् हस्तिनापुर गये तव द्वारिकापुर में अक्रूरजी एवं कृतवर्मा को मौका मिला और उन दोनों ने शतधन्वा को बहलाया कि भला अब अवसर है बदला लेने का तब सत्राजित् से स्यमन्तकमणि क्यों नहीं छीन लेते हो॥ ३॥ याद होगा कि सत्राजित् अपनी स्त्रीरत्न कन्या सत्यभामा का विवाह हमसे करने का वचन दिया था लेकिन हमारा अनादर एवं तिरस्कार करके सत्यभामा का व्याह कृष्ण के साथ कर दिया तो सत्राजित् भी अपने भाई प्रसेन की तरह क्यों न यमपुरी में चला जाय॥ ४॥

**एवं भिन्नमतिस्ताभ्यां सत्राजितमसत्तमः। शयानमवधील्लोभात् स पापः क्षीणजीवितः॥ ५॥**
**स्त्रीणां विक्रोशमानानां क्रन्दन्तीनामनाथवत्। हत्वा पशून् सौनिकवन्मणिमादाय जग्मिवान्॥ ६॥**
**सत्यभामा च पितरं हतं वीक्ष्य शुचा[1]र्दिता। व्यलपत्तात तातेति हा हतास्मीति मुह्यती॥ ७॥**
**तैलद्रोण्यां मृतं प्रास्य जगाम गजसाह्वयम्। कृष्णाय विदितार्थाय [2]तमाऽऽचख्यौ पितुर्वधम्॥ ८॥**

१. पि-श्रीधर. वंशी. जीव. वीर. विज. शुक. सु.। २. तत्रा-वीर तप्ता-श्रीधर. वंशी. जीव. वीर. विज. विश्व. शुक. सु.।

### कर्दमक्षमा

अन्वयः—एवम्, ताभ्याम्, भिन्नमतिः, क्षीणजीवितः, सः पापः असत्तमः, लोभात्, शयानम्, अवधीत् ॥ ५ ॥ विक्रोशमानानाम्, अनाथवत्, स्त्रीणाम्, क्रन्दन्तीनाम्, सौनिकवत्, पशून्, हत्वा, मणिम्, आदाय, जग्मिवान् ॥ ६ ॥ पितरम्, हतम्, वीक्ष्य, शुचार्दिता, सत्यभामा, मुह्यती, हा तात ! हा तात हता अस्मि, इति व्यलपत् ॥ ७ ॥ मृतम्, पितरम्, तैलद्रोण्याम्, प्रास्य, गजसाह्वयम्, जगाम, विदितार्थाय कृष्णाय, तम्, पितुर्वधम्, आचख्यौ ॥ ८ ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

जग्मिवान् जगाम ॥ ६-११ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

एवमित्थम् । ताभ्यामक्रूरकृतवर्मभ्याम् । स शतधन्वा । भिन्ना सन्मार्गतः पृथक्कृता मतिर्यस्य सः यतोऽसत्तमः यदुवंशजोऽपि कंसवदसुरस्वभावः । पापः सत्संगान्निजस्वभावावरणेऽपि प्रबल पापवासनावशीभूतः । अतः क्षीणजीवितोऽपि । यद्वा—क्षीणजीवितत्वादेव 'प्रायः सत्पुरुषो विनाशसमये बुद्ध्या परित्यज्यते' इत्यभियुक्तोक्तेस्तस्य तद्वधे प्रवृत्तिरिति ज्ञेयम् ॥ ५ ॥ सौनिकवन्मारकवत्, राक्षसवदित्यर्थः । सूना हिंसास्थानं विद्यतेऽस्येति सौनिकः ॥ ६-७ ॥ "द्रोणी काष्ठांबुवाहिन्यां गवादिन्यां च नीवृति । कूपोपकंठपानार्थक्लृप्तयंत्रेपि च स्मृता ।" इति धरणिः । प्रास्य निक्षिप्य । तैलद्रोण्यामिति । दाहानंतरमवश्यकृत्यस्य तच्छ्राद्धादिकर्मणस्तदानीमशक्यत्वात् । किं वा-भगवता तस्य जिजीवयिषया । यद्वा—भगवतः शोकक्रोधजननाय तत्प्रदर्शनार्थम् । प्रास्य प्रक्षिप्य ॥ ८ ॥

### श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी

भिन्ना सन्मार्गतः पृथक् कृता मतिर्यस्य स यतोऽसत्तमः, यदुवंशजोऽपि कंसादिवदसुरस्वभावः तत्र च पापः तत्सङ्गान्निजस्वभावावरणेऽपि प्रवलपापवासनावशीभूतः अतः क्षीणजीवितोऽप जातः अतः शयानमपि मणिलोभादवधीत् ॥ ५ ॥ तदेव दर्शयति स्त्रीणामिति अनादरे षष्ठी ॥ ६ ॥ वीक्ष्येति तच्छ्रुत्वा तत्र गमनात् शुचा शोकेन अर्पिता व्याप्ता दिशाशव्दवच्छुचाशब्दो वा तस्यामर्पिता केनचिदिव दैवेन वा क्षिप्तेत्यर्थः मुह्यन्ती स्नेहेन पितृदोषादिकमविचारयन्तीत्यर्थः यद्वा अन्तरान्तरमूर्च्छां भजन्ती हेतुस्त्वत्र तत्तल्लीलारसवैचित्रीरचयित्री लीलाशक्तिरेव गम्या ॥ ७ ॥ तैलद्रोण्यां प्रास्येति दाहानन्तरमवश्यकृत्यस्य तच्छ्राद्धादिकर्मणस्तदानीमशक्यत्वात् किं वा श्रीभगवता तस्य जिजीविषया किं वा श्रीभगवतः शोकक्रोधजननाय तत्प्रदर्शनार्थं विदितोर्थः प्रसेनाद्यस्थानविनियुक्तमणित्वेनावश्यं भाविफलं येन तस्मै ॥ ८ ॥

### श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी

भिन्ना सन्मार्गतः पृथक्कृता मतिर्यस्य सः, यतोऽसत्तमो महादुष्टः, कुतः ? पापः क्रूरचित्तः पापरतो वा, यतः क्षीणजीवितो यदुकुलजातोऽपि सन्निहित-मृत्युत्वात्तादृशोऽभूदिति भावः । यद्वा, भिन्नमतित्वादसत्तमः पापश्च सन्, यद्वा, स्वभावत एवासत्तमः, यतः पापः, पुनश्च ताभ्यां भिन्नमतिः । किञ्च, क्षीणजीवितोऽतः शयानमपि मणिलोभादवधीत् ॥ ५ ॥ असत्तमत्वादिकमेव दर्शयति—स्त्रीणामिति, अनादरे षष्ठी, किंवा सप्तम्यर्थे, विक्रोशन्तीष्वपि अनाथवदिति वस्तुतो भगवत्सनाथत्वात्, पशून् व्याध इवेति पापत्वे दृष्टान्तः ॥ ६ ॥ वीक्ष्येति तदानीं तस्यास्तद्गृहेऽवस्थानात्, किंवा मृतस्य तस्य स्त्रीभिस्तत्साक्षान्नयनात्, शुचा शोकेनार्पिता व्याप्ता मुह्यन्ती स्नेहेन पितृदोषादिकमविचारयन्तीत्यर्थः । यद्वा, अन्तरान्तरा मूर्च्छां भजन्ती ॥ ७ ॥ तैलद्रोण्यां प्रास्येति दाहानन्तरमवश्यकृत्यस्य तच्छ्राद्धादिकर्म्मणस्तदानीमशक्यत्वात्, किंवा श्रीभगवता तस्य जिजीवयिषया, किंवा श्रीभगवतः शोक क्रोधजननाय तत्प्रदर्शनार्थं कृष्णाय साक्षाद्भगवते, अतो विदितोऽर्थः सर्वप्रयोजनं येन तस्मै, तदिच्छयैव तत्तदुद्भूतेः ॥ ८ ॥

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका

एवमिति इत्थं ताभ्यामक्रूरकृतवर्माभ्यां भिन्ना भेदिता मतिर्यस्य सोऽसत्तमः पापात्मा शतधन्वा क्षीणजीवितः हेतुगर्भमिदन्तत्त्वात् लोभान्मणिलोभाच्छयानं सत्राजितं हतवान् ॥ ५ ॥ स्त्रीणामिति यथा सौनिकः पशुहिंसकः पशुं हन्ति तद्वद्धत्वा अनाथवत् स्त्रीणां सत्राजिन्नारीणां विक्रोशन्तीनामाक्रोशन्तीनां रुदन्तीनां च सतीनामेव मणिमादाय जगाम ॥ ६ ॥ सत्यभामेति शुचा शोकेनार्पिता व्याप्ता मुह्यती मध्ये मध्ये मूर्च्छां प्राप्नुवन्ती व्यलपत् विलापनप्रकारमेवाह-तात तातेति । हा हतास्मीति ॥७॥ ततो मृतं पितरं तैलद्रोण्यां तैलकटाहे प्रास्य निधाय हस्तिनापुरं जगाम तत्रागत्य विज्ञातपितृमरणरूपार्थायाप्यजानत इव स्थिताय कृष्णाय पितुर्वधं शतधन्वकृतमाचख्यौ ॥ ८ ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

क्रन्दन्तीनां वैक्लव्यस्वरं कुर्वतीनां सौनिकवन्मारकवत् राक्षसवदित्यर्थः ॥ ६-७ ॥ प्रास्य निक्षिप्य ॥ ८ ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

वीक्ष्येति श्रीसत्यभामायाः शोकोऽयं लीलाशक्त्यैव स्वरसम्पादनोत्थापित इति ज्ञेयम्। एवमग्रे श्रीरामादीनां कोपादिकमपि ॥ ७-४२ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धीये श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे सप्तपञ्चाशत्तमोऽध्यायः ॥ ५७ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

भिन्नमतिः प्रतारितवुद्धिः असत्तम इति शतधन्वा मूलत एव कुवुद्धिः सत्राजिति बद्धवैरश्च ॥ ५-७ ॥ तैलद्रोण्यां प्रास्येति यस्या भर्ता परमेश्वरः सा तद्द्वारा स्वतातं कथं नाजीवयिष्यदिति लोकोक्त्यैव जगाम न तु कृष्णप्रातिकूल्ये सत्राजिति तस्या वस्तुतः स्नेहः कृष्णाय कृष्णमपि तापयुक्तोक्तुं तप्तेति यथाऽर्हं तप्ता तथा त्वमपि तापमेवाभिनयेति ज्ञापयन्तीति भावः ॥ ८ ॥

### गूढार्थदीपिनी

भिन्ना धर्माद्भ्रंशिता मतिर्यस्य ॥ ५ ॥ क्रन्दन्तीनां विलपन्तीनाम्। सौनिको हिंसकः सूना वधस्थानं विद्यतेऽस्येति विग्रहः। शुचा शोकेन व्याप्ता ॥ ६-७ ॥ तैलद्रोण्यां नौकाकारपात्रे। कटाहे वा। मृतं प्रास्य निक्षिप्य ॥ ८ ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

जग्मिवान् जगाम ॥ ६-१२ ॥

### श्रीसत्यधर्मकृता श्रीभागवतटिप्पणी

ताभ्यामक्रूरकृतवर्माभ्यां भिन्ना मतिर्बुद्धिर्यस्य स स्वभावत एतादृशत्वात्कार्यमेतद्गुरुच इत्याह। असत्तम इति। कुतोऽपत्तमः स इत्यत आह। स पाप इति। शयानं सत्राजितं सति मणौ रात्रौ सत्राजिन्मारणं कथमिति चेत्सत्यम्। प्रतिज्ञादानेः शक्तिसम्भवात्स्वस्वत्वाभावाद्वा। योऽस्मभ्यं सम्प्रतिश्रुत्य कृष्णायोपजहार सः। वयं तु फलभागिन इत्युक्तेः। पूर्वं लोभाद्रत्न-गार्ध्यादत्युत्कटैन्र्यायेन च सन्निहितं फलमिति लपति। क्षीणजीवित इति। क्षीणप्राण एषन्नजात् ॥ ५ ॥ विकोशमानानां शयानान्पुरुषानाकारयन्तीनां तयाऽऽक्रन्दतीनां रुदतीनामनाथवदिति कृष्णव्यधिकरणतया पशून्हत्वा सौनिकवत्सूनाकार इव पशूनां मांसादिकं गृह्णाति तथा मणिमादाय जग्मिवान् गतः ॥ ६ ॥ शुचा शोकेन शुचेति टाबन्तत पक्ष ऐकपद्यं वा। मुह्य-तीव ॥ ७ ॥ तैलयुक्तद्रौण्यां पात्रे काष्ठमये गतं। गजसाह्वयं गतं। तप्ता सती विदितार्थाय। एवं सुधन्वना श्वशुरासुहरणं कृतमिति विज्ञातवतेऽपि पितुर्वधमाचख्यौ ॥ ८ ॥

### श्रीमद्वल्लभाचार्य्यकृता सुबोधिनी

ननु शतधन्वापि विचक्षणः कथमेवं कृतवानित्याशङ्क्याह एवं भिन्नमतिरिति। ताभ्यां भिन्ना नाशिता मतिर्यस्य। मणिरेव ग्राह्य इति तत्प्ररोचनया बुद्धिरुत्पन्ना। ततोग्रे भाव्यर्थं बुद्धिस्तावता नष्टेति विचारसमर्था न जाता। उभौ तौ बहुधा च भ्रामयतः। भ्रामणमग्रिमार्थमेव। तौ हि जानीतः। मणिसम्बन्धेन मरणं भविष्यतीति। अतो न मण्यर्थिनौ। अयं तु मण्यर्थी। अतः असत्तमः। तावुभावसदसत्तरौ। अयमसत्तम इति। अन्यथा युद्धं कृत्वापि मारयेत्। किन्तु शयानमेवावधीत्। तत्रापि लोभात् न तु तेन सह वैरम्। ननु कथमेवं बुद्धिरुत्पन्ना, द्वारकावासिनो भगवदीयविषये स्थितस्य, तत्राह स पाप इति। स शतधन्वा पापः, देवानां मध्ये अधमोऽप्येकः, यथा कलिः। ततश्चायमधर्मरूप इति तथा कृतवान्। किञ्च। क्षीणजीवित इति। तस्य जीवितमल्पमेव। एतदर्थमेव तस्यावतार इति ॥ ५ ॥ यदि हननमात्रमेव कुर्यात्, तदाप्यन्यप्रेरितः, तथा कृतवानिति तथा नास्य दोषो भवेत्, किन्त्वधिकमपि कृतवानित्याह स्त्रीणामिति। विशेषेण क्रोशमानानां सतीनाम्। ता अपि नाथरहिता एव हत्वा ताडयित्वा वा मणिमादाय जग्मिवान् पलायितः। दयादाक्षिण्याद्यभावार्थं दृष्टान्तः सौनिकवदिति। निरन्तरं सूनाकर्ता सौनिकः, पशून् हत्वा तन्मांसविक्रेता। यथा काष्ठच्छेदकस्य न वृक्षेषु दया, तथा तस्यापि। अर्चितस्यापि मणेः अनिष्टहेतुत्वं प्रतिपादितम्। अत्र प्रकरणे प्रमेयबलमिति न पूर्वाध्यायवाक्यैर्विरोधः ॥ ६ ॥ तस्मिन् गते भगवद्गृहेऽपि स्थिता सत्यभामा उपश्रुतिमिव श्रुत्वा, पितृगृहे समागता, पितरं हतं वीक्ष्य शोकेन पीडिता, तात तातेति व्यलपत्। यथा स्त्रीभिराक्रोशः कृतः, एवं सत्यभामयापि कृत इति समुच्चयार्थश्चकारः। भर्तृवधे तासां यावद्दुःखम्, पितृवधेऽपि तावत्कृतमित्यर्थः। तासामुभयं स्वनाशो भर्तृनाशश्चेति

तुल्यत्वाभावात् कथं समुच्चय इत्याशङ्क्य, अत्रापि द्वयमाह **तात तातेति** । **हा हतास्मीति** च । ननु कथमेवं स्वयमहता तथोक्तवती, तत्राह **मुह्यतीति** । मोहं प्राप्ता मृतकल्पा सत्यमेव तथोक्तवतीत्यर्थः ॥७॥ भगवद्विरोधात् तस्य शीघ्रं पारलौकिकी क्रियापि न जातेति वक्तुं सत्यभामाया उद्योगमाह तैलद्रोण्यामिति । इयं देवदत्तपुत्रिकाप्रायेति पुरुषप्रकृतिर्भवति । यतोऽभ्रातृमती । अतो धर्मतः अविवाह्यापि स्त्रीरत्नत्वाद्गृहीता । अतः पुरुषवदेव तस्याश्चरित्रम् । द्रोणी कुसूलवत् कुतूवत् कटाहवद्वा आयसी ताम्रनिर्मिता वा । मरणपर्यन्तं विलापः । ततो मृतस्य तैलद्रोण्यां प्रक्षेपः । स्वयमपि गजसाह्वयं जगाम । तत्र गतो भगवान् मृतानामनुसन्धानं करोतीति । **गजसाह्वयमिति** प्रसिद्धस्थानत्वात् तत्र गमनं न सन्देहमावहति । तत्र भगवद्विज्ञापनार्थमेव गतेति तदाह **कृष्णायेति** । भ्रान्तेयमिति ज्ञापनार्थं **विदितार्थायेति** । तं तादृशप्रकारापन्नम् । **पितुर्वधमिति** । आवश्यकत्वान्न दोषायेत्यर्थः॥८॥

### श्रीविट्ठलरायात्मजश्रीवल्लभकृतलेखः

**स्त्रीणामित्यत्र** । **विरोध** इति । अर्चनं विहाय कण्ठे वन्धनात् प्रसेनस्यानिष्टम्, अत्र त्वर्चित एव तिष्ठतीति कथमनिष्टं जातमिति विरोध इत्यर्थः । **वाक्यैः** 'दुर्भिक्षमार्यरिष्टानी'ति वाक्यैरित्यर्थः ।

### श्रीसुबोधिनी–सारः

एवं ताभ्यामक्रूरकृतवर्मभ्यां भिन्ना मतिर्यस्य सोऽसत्तमो नीचः शतधनुः पापः क्षीणजीवितोऽल्पायुर्लोभाद्धेतोः शयानं सत्राजितमवधीत् अहन् ॥ ५ ॥ अनाथवत्स्त्रीणां विक्रोशमानानां क्रन्दंतीनां रुदन्तीनां सतीनां पशून्सौनिकवत् वधक इव हत्वा मणिं गृहीत्वा जगाम ॥ ६ ॥ हतं पितरं वीक्ष्य दृष्ट्वा शुचा शोकेनार्पिता व्याप्ता सत्यभामा हा हतास्मीति मुह्यती मोहं यांती हे ताततातेति विलापमकरोत् ॥ ७ ॥ मृतं तातं तैलस्य द्रोण्यां प्रास्य क्षिप्त्वा हस्तिनापुरं ययौ । विदितो ज्ञातोर्थो येन तस्मै कृष्णाय तप्ता दुःखिताः पितुर्वधं मृतिमाचख्यौ उवाच ॥ ८ ॥

### गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

एवं ताभ्यामक्रूरकृतवर्मभ्यां भिन्ना धर्मपथाद्भ्रंशिता मतिर्यस्य सः शतधन्वा लोभात् शयानमेव सत्राजितमवधीदित्यन्वयः । 'एवं ताभ्यां प्रेरितस्यापि कथं मतिभेद' इत्यपेक्षायां 'दुर्बुद्धित्वात्' इत्याह—असत्तम इति । तत्रापि पापाधिक्यं हेतुमाह—पाप इति । 'अयं च मतिभेदस्तस्य मरणपर्यवसायी' इत्याशयेनाह—क्षीणजीवित इति ॥ ५ ॥ यथा सौनिकः पशुहिंसकः पशून् हन्ति तद्वत्तं हत्वा अनाथवत् स्त्रीणां विक्रोशन्तीनां रुदन्तीनां च सतीनां मणिमादाय जग्मिवान् जगाम । नाथस्य भगवतो जामातृत्वेन वर्तमानत्वाद्वतिप्रयोगः ॥ ६ ॥ सत्यभामा च पितरं हतं वीक्ष्य शुचा शोकेन अर्दिता व्याप्ता मुह्यती मध्ये मध्ये मूर्च्छां प्राप्नुवती तात तातेति हा हस्तास्मीति च व्यलपदित्यन्वयः ॥ ७ ॥ ततो मृतं पितरं तैलद्रोण्यां तैलपूर्णकटाहे प्रास्य निधाय गजसाह्वयं गजेन सहितं आह्वयं नाम यस्य तत् हस्तिनापुरं जगाम । विदितार्थाय सर्वज्ञायापि कृष्णाय पितुर्वधमाचख्यौ कथितवती ॥ ८ ॥

### अन्वितार्थप्रकाशिका

एवमिति । एवं ताभ्यामक्रूरकृतवर्मभ्यां भिन्ना धर्मपथाद् भ्रंशिता मतिर्यस्य स असत्तमः मूलत एव कुबुद्धिः सत्राजिति बद्धवैरश्च क्षीणजीवितः शतधन्वा लोभात् शयानमेव सत्राजितमवधीत् ॥ ५ ॥ स्त्रीणामिति ॥ यथा सौनिकः पशुहिंसकः पशून्हन्ति तद्वत्तं हत्वा अनाथवत् स्त्रीणां विक्रोशमानानाम् । शानजार्षः चानश् वा । कर्मव्यतिहारविवक्षा वा । क्रन्दन्तीनां मणिमादाय जग्मिवान् जगाम ॥६॥ सत्यभामेति । सत्यभामा च पितरं हतं वीक्ष्य शुचा शोकेन अर्पिता व्याप्ता मुह्यती मध्ये मूर्छां प्राप्नुवती । नुमभाव आर्षः । तात तातेति हा हतास्मीति व्यलपत् ॥ ७ ॥ तैलेति ॥ ततस्तप्ता दुःखिता सत्यभामा मृतं पितरं तैलपूर्णकटाहे प्रास्य निधाय कृष्णो जीवयिष्यतीत्याशया गजसाह्वयं गजेन सहित आह्वयो नाम यस्य तत् हस्तिनापुरं जगाम । विदितार्थाय सर्वज्ञायापि कृष्णाय पितुर्वधमाचख्यौ कथितवती ॥ ८ ॥

### श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्

सौनिकवत् पशुघातिवत् जग्मिवान् गतवान् ॥ ६ ॥ शुचार्पिता शोकेन व्याप्ता ॥ ७ ॥ प्रास्य निक्षिप्य । गजसाह्वयं हस्तिनापुरं ॥ ८ ॥

### भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

एवमिति । एवं ताभ्यामक्रूरकृतवर्मभ्यां, भिन्नमतिः असत्तमः, स शतधन्वा, क्षीणजीवितः, अतः, पापः पापकर्मप्रसक्तः सन्, लोभात् मणेरिति शेषः । शयानं, सत्राजितं, अवधीत् ॥ ५ ॥ स्त्रीणामिति । पशून्, सौनिकवत्, सौनिकः यथा

पशून् हन्ति तद्वदित्यर्थः। हत्वा सत्राजितं व्यापाद्य, विक्रोशमानानां रोदनादिकुर्वाणानां, अनाथवत्, क्रन्दन्तीनां वैक्लव्यस्वरं कुर्वतीनां, स्त्रीणां, उक्तविधाः स्त्रीरनादृत्येत्यर्थः। मणिं आदाय, जग्मिवान् ॥ ६ ॥ सत्यभामेति। सत्यभामा च सत्यभामापि, पितरं हतं वीक्ष्य, शुचा शोकेन, अर्पिता व्याप्ता, इति हेतोः, मुह्यती, हा इति खेदे। हे तात, हता अस्मि इति, व्यलपत् ॥ ७ ॥ तैलद्रोण्यामिति। सत्यभामा, मृतं पितरं तैलद्रोण्यां प्रास्य तैलकटाहे निधायेत्यर्थः। गजसाह्वयं हस्तिनापुरं जगाम। तत्र तप्ता परितापयुता सती, विदितार्थाय विज्ञाततत्पितृमरणत्वेपि अज्ञातवत् स्थितायेत्यर्थः। कृष्णाय, पितुः स्वजनकस्य, वधं आचख्यौ शतधन्वना मत्पिता हत इति कथयामासेत्यर्थः ॥ ८ ॥

**कृष्णप्रिया**

शतधन्वा स्वयं खल एवं पापमति था उसकी मृत्यु भी शिर पर नाच रही थी पुनः अक्रूर एवं कृतवर्मा ने उसको बहकाया था इसलिये शतधन्वा अक्रूर और कृतवर्मा की वार्ता में फस गया और दुष्ट शतधन्वा ने स्यमन्तक मणि के लोभ में आकर सत्राजित के प्राण ले लिये ॥ ५ ॥ जब शतधन्वा यह अतिक्रूर कार्य कर रहा था तब अन्तःपुर नारियाँ अनाथ की नांई भरसक रोने लगी और चिल्लाने लगी परन्तु शतधन्वा ने उनके रुदन की ओर स्वल्प भी ध्यान न दिया और जैसे कसाई पशुओं का वध कर देता है वैसे शतधन्वा सत्राजित् को मारकर मणि लेकर वहाँ से भाग गया ॥ ६ ॥ सत्यभामा जी ने निज-पितृचरण सत्राजित का अपनी नजरों से क्रूर वध को देखा तब अत्यन्त शोकवश बनकर हे पिताजी, हे प्रिय पिताजी मैं ही मारी गयी—इस प्रकार बार बार पुकार कर विलाप करने लगी। विलाप करती पुत्री सत्यभामा जी बेहोश हो जाती थी और जब चेतना आती तब पुनः पुनः विलाप करती रहती थी ॥ ७ ॥ कुछ स्वस्थता पाकर पिता जी की काया को तैल के कड़ाहे में रखवाकर और स्वयं हस्तिनापुर गयीं। उन्होंने वहाँ जाकर भगवान् श्रीकृष्ण को दुःख के साथ अपने पिताजी की क्रूर हत्या का समाचार सुनाया ॥ ८ ॥

**तदाकर्ण्येश्वरौ राजन्ननुसृत्य नृलोकताम्। अहो नः परमं कष्टमित्यस्राक्षौ विलेपतुः ॥ ९ ॥**
**आगत्य भगवांस्तात[1] सभार्यः साग्रजः पुरम्। शतधन्वानमारेभे हन्तुं हर्तुं[2] मणिं ततः ॥ १० ॥**
**[3]सोऽपि कृष्णोद्यमं ज्ञात्वा भीतः प्राणपरीप्सया। [4]साहाय्ये कृतवर्माणमयाचत स चाब्रवीत् ॥ ११ ॥**
**नाहमीश्वरयोः कुर्यां हेलनं रामकृष्णयोः। को नु क्षेमाय [4]कल्प्येत तयोर्वृजिनमाचरन् ॥ १२ ॥**

**कर्दमक्षमा**

अन्वयः—राजन्! ईश्वरौ, तद्, आकर्ण्य, नृलोकताम्, अनुसृत्य, अहो, नः परमम्, कष्टम्, इति, अश्राक्षौ, विलेपतुः ॥ ९ ॥ तात! सभार्यः, साग्रजः, भगवान्, पुरम्, आगत्य, मणिम्, हर्तुम्, च शतधन्वानं हन्तुम्, आरेभे ॥ १० ॥ सः, अपि, कृष्णोद्यमं ज्ञात्वा, भीतः प्राणपरीप्सया, कृतवर्माणम्, साहाय्ये, अयाचत, सः च, अहम्, ईश्वरयोः, रामकृष्णयोः हेलनम्, न, कुर्याम्, इति अब्रवीत्। तयोः, वृजिनम्, आचरन्, कः, नु, क्षेमाय, कल्प्येत ॥ ११-१२ ॥

**श्रीधरस्वामिविरचिता भावार्थदीपिका**

हेलनं प्रतिकूलम्। वृजिनमपराधम् ॥ १२ ॥

**श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः**

तच्छ्वशुरमरणम्। ईश्वरौ लोकातीतावपि नृलोकतां बन्धुवियोगे रोदनादिमनुष्यधर्ममनुसृत्य तल्लीलत्वात्, अन्यथा त्वतोवानौचित्यमेव। विलापमाह—अहो खेदे। न इति वसुदेवाद्यपेक्षया। परममिति बन्धुवरस्य शयानस्य धनाद्यर्थं चौरेण वधात्, लोके लज्जाद्युद्भवाच्चेत्येतत्प्रकारेण। हे राजन्निति—तस्येदृशी नरलीलामाधुरी त्वया बुध्यत एव ज्ञानेन राजमानत्वादिति भावः ॥ ९ ॥ तस्माद्धस्तिनापुरतः। ततः शतधन्वनः आरेभे-शतधन्वनः कृतवर्मादिसाहाय्यम् 'वाससो व्यचिनो-

---

१. तस्मात्-श्रीधर. वंशी. जीव. वीर. विज. विश्व. शुक. सु.।

२. ततः पाञ्चालनगराद्याज्ञसेन्याः स्वयं वरम्। घुष्यता यज्ञसेनेन प्रेषितो दूत आगतः ॥
आहूतस्तेन गोविन्दो गत्वा पाञ्चालके पुरे। ददर्श साग्रजस्तत्र किशोरान् पाण्डुनन्दनान् ॥
अदृष्टपूर्वान्सुव्यक्तं ब्रह्मरूपधरान्नृप। तैर्विद्धलक्ष्यैः पौरुष्यप्रतिलब्धमनोरथैः ॥
कुंभकारस्य शालायां समागम्याभिवन्द्य च। पितृष्वसामनुज्ञाप्य राजानं च युधिष्ठिरम् ॥ विजये.

३. व्यं-वीर.। ४. ल्पे-श्रीधर. वंशी. वीर. विज. जीव. विश्व. शुक.।

न्मणिम्' इति वक्ष्यमाणाद्भगवानपि प्रियजनप्रेमवशनरलीलावेशेन गूढपुरुषादिद्वारा ज्ञात्वा साहाय्यार्थं बन्धुवर्गसमाहरणोद्यमं कृतवान्। तच्च शतधन्वानं विद्राव्य तमेकाकिनं हन्तुमित्यूह्यमित्यग्रे व्यक्तीभविष्यति ॥ १० ॥ सोपि शतधन्वापि। साहाय्ये सहायनिमित्तम्। स च कृतवर्मा। प्राणस्य जीवनस्यैव न तु यशोधर्मादेः, परितोक्षतदेहत्वादिना सर्वतोभावेनेप्सया गतप्रायस्य प्राप्तुमिच्छया। प्राक्कृतवर्मणो याचनं सेनाध्यक्षत्वात्, अक्रूरस्य परमभक्तत्वेन साहाय्ये संशयाच्च ॥ ११ ॥ तयो रामकृष्णयोः। अहमित्यन्यः करोतु नाम, अहं न कुर्यामिति भावः ॥ १२ ॥

### श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी

ईश्वरौ लोकातीतावपि नृलोकतां बन्धुवियोगे रोदनादिमनुष्यधर्ममनुसृत्य तल्लीलत्वात् अन्यथा त्वनौचित्यमतीवेति विलापमाह—अहो खेदे न इति वसुदेवाद्यपेक्षया परममिति बन्धुवरस्य शयानस्य धनार्थं चौरेण वधात् तेन लोके लज्जाद्युद्भवाच्च इत्येतत्प्रकारेण हे राजन्निति तस्येदृशी नरलीलामाधुरी त्वया बुध्यत एवेति भावः ॥ ९ ॥ आरेभे शतधन्वनः कृतवर्मादिसाहाय्यं वाससोर्व्यचिनोन्मणिमिति वक्ष्यमाणाद्भगवानपि प्रियजनप्रेमवशनरलीलावेशेन गूढपुरुषादिद्वारा ज्ञात्वा स्वसाहाय्यार्थं सबन्धुवर्गसमाहरणादिनोद्यमं कृतवान् तच्च शतधन्वानं विद्राव्य तमेकाकिनं हन्तुमित्यूह्यम् अग्रेऽपि व्यक्तीभावि ॥ १० ॥ प्राणस्य जीवनस्यैव न तु यशोधर्मादेः परितः अक्षतत्वादिना सर्वतोभावेनेप्यसा गतप्रायस्य प्राप्तुमिच्छया प्राक्कृतवर्मणो याचनं सेनाध्यक्षत्वात् अक्रूरस्य परमभक्तत्वेन साहाय्ये संशयाच्च ॥ ११ ॥ अहमिति अन्यः करोतु नाम अहं तु न कुर्य्यामिति भावः ॥ १२ ॥

### श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी

ईश्वरौ लोकातीतावपि नृलोकतां बन्धुवियोगे रोदनादिमनुष्यधर्म्ममनुसृत्य, यद्वा, साक्षादीश्वरत्वात् सर्वत्र समौ शोकादिरहितावपि कारुण्यादिनिजाशेषगुणविस्तरणाय मनुष्यलोकेऽवतीर्य्य, अत एव वात्सल्याद्विलेपतुः। कष्टम्, अहो खेदे, 'नः' इति श्रीवसुदेवाद्यपेक्षया, परममिति बन्धुवरस्य शयानस्य धनाद्यर्थं वैरिणा वधात् तेन लोके लज्जाद्युद्भवाच्च, इत्येतत्प्रकारेण, हे राजन्निति सुहृद्दुःखकातरयोस्तयोस्तादृशं सम्भवेदेवेति विस्मयो न कार्य्य इति। यद्वा, तत् सर्वं श्रीसत्यभामाप्रीत्यर्थमिति त्वया बुध्यत एवेति भावः ॥ ९ ॥ तस्माद् गजाह्वयात् पुरमागम्य भगवान् दुष्टदण्डार्थं साक्षादवतीर्णः परमेश्वरः, आरेभे शतधन्वनः कृतवर्म्मादिसाहाय्येन आत्मनोऽपि साहाय्यार्थं स्वबन्धुवर्ग-समाहरणादिनोद्यमं कृतवान्, वस्तुतस्तु क्रूरपक्षपातेन मणिवार्त्ताच्छादनार्थं दूरे रहसि शतधन्वनो वधाय निजोद्यमख्यापनेन तदपसारणार्थम्। अत एवाप्युक्तम्—भगवान् भक्तवात्सल्याद्यशेषगुणयुक्त इति। कृष्णस्य युद्धार्थं स्वजनाद्याकर्षकस्योद्यममिति साग्रजत्वेऽपि दुष्टदण्डार्थं तस्यैवोद्यमे प्राधान्यात्तथा तस्मादेव तस्य भयाच्च ॥ १० ॥ प्राणस्य जीवनस्यैव, न तु यशोधर्म्मादेः, परितोऽक्षतदेहत्वादिना सर्वतोभावेन, ईप्सया गतप्रायस्य प्राप्तुमिच्छया, तत्प्रवर्त्तनेऽक्रूरस्य मुख्यतायामपि प्राक् कृतवर्म्माणं प्रति याचनं सेनाध्यक्षत्वेन तस्य सामर्थ्यविशेषमननात्, किंवा अक्रूरस्य परमभक्तत्वेन साहाय्ये संशयात् ॥ ११ ॥ अहमिति—अन्यः करोतु नाम, अहन्तु न कुर्य्यामित्यर्थः। कुतः? ईश्वरयोः सर्वशक्तिमतोः, अत एव युद्धादिना रमत इति रामः, वैरिणां सद्योजीवनाद्याकर्षणाच्च कृष्णस्तयोरिति भावः। कोऽन्यः कल्पेत योग्यो भवेत् ॥ १२ ॥

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम्

हेलनमपराधम् ॥ १२ ॥

### श्रीमद्वीरराघवाचार्यकृता भागवतचन्द्रचन्द्रिका

तद्यथाऽऽख्यानं श्रुत्वा हे राजन्! ईश्वरौ रामकृष्णौ नृलोकतामनुसृत्य नरचेष्टामभिनयन्तावित्यर्थः। अस्राक्षौ अश्रुपूर्णनेत्रौ अहो नोऽस्माकं परममनवधिकं कष्टं दुःखं प्राप्तमित्येवं विलेपतुः विलपितवन्तौ ॥ ९ ॥ ततः ससत्यभामः साग्रजश्च भगवान् पुरं द्वारकामागत्य शतधन्वानं हन्तुं ततःशतधन्वनो मणिं हर्तुं चारेभे,उद्युक्तवान् ॥ १० ॥ सोपि शतधन्वापि कृष्णस्योद्यममुद्योगमाकर्ण्य प्राणपरीप्सया प्राणरिरक्षिषया कृतवर्माणं साहाय्यं सहायार्थमयाचत स च कृतवर्माऽब्रवीत् ॥ ११ ॥ उक्तिमेवाह—नाहमिति द्वाभ्याम्। हेलनं प्रातिकूल्यं न कुर्यां तत्र हेतुमाह कोन्विति तयोरामकृष्णयोर्वृजिनमपराधं कुर्वन् को नु पुमान् क्षेमाय कल्पेत क्षेमं प्राप्नुयादित्यर्थः। न कोपीति भावः ॥ १२ ॥

### श्रीविजयध्वजतीर्थकृता पदरत्नावली

अस्राक्षौ अश्रुजलकलिलेक्षणौ ॥ ९–११ ॥ याज्ञसेन्याः द्रौपद्याः ( क–ख ) ब्रह्मरूपधरान्ब्राह्मणवेषं विभ्राणान् पौरुषेण पराक्रमेण प्रतिलब्धो मनोरथो येषां ते तथा तैः ( ग ) पितृष्वसां पितृष्वसारं कुन्तीम् ( घ ) वृजिनमपराधम् ॥ १२ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

तत्तस्या वचनं श्रुत्वा अश्रुपातं विना विलापं चाभिनिन्यतुर्लोकसमाधानार्थमित्यर्थः ॥ ९ ॥ ततश्च सा आगत्य जीवयितुमशक्तावेव सास्रं विलेपतुरिति स्वबन्धूनवददिति ज्ञेयम् ॥ १०-११ ॥ नाहमित्ययं भावः मया सत्राजिद्वध एव भवान् प्रवर्त्तितो न तु भगवत्प्रातिकूल्ये त्वं तु त्वं यदि शरणं न यियाससि तर्हि त्वमिव किमहमपि तत्प्रतिकूलो बुभूषामीति ॥ १२ ॥

### गूढार्थदीपिनी

अस्राक्षौ अश्रुपूर्णनेत्रौ विलेपतुः ॥ ९ ॥ भार्या सत्यभामा ॥ १० ॥ परीप्सया रक्षणेच्छया ॥ ११ ॥ हेलनं प्रतिकूलम् । वृजिनमपराधम् ॥ १२ ॥

### श्रीसत्यधर्मकृता श्रीभागवतटिप्पणी

नृलोकतां नृलोकं । स्वार्थे तल् । नृलोकतानुकरणता स्थेम्ने । अस्राक्षता नटनज्ञाने चेश्वराविति हेतूक्तिः । आ ईषदस्रैर्युक्तान्यक्षीणि ययोस्तौ सन्तौ विलेपतुः । इत्यस्राक्षाविति च पठन्ति ॥ ९ ॥ भार्यया सह साग्रजः सबलः शतधन्वानं हन्तुं मणिं हर्तुं चारेभे ॥ १० ॥ यज्ञसेनेति द्रुपदनामान्तरम् । तत्पुत्र्या द्रौपद्याः स्वयंवरं घुष्यता यज्ञसेनेन प्रेषितो दूत आगतः ॥११॥ किशोरांस्तद्वयसः ॥ १२ ॥ ब्रह्मरूपधरान् अदृष्टरूपधरान् । यद्यपीत्यूचिवान्सह मरुत्तनयार्जुनाभ्यां प्रायात्पुरीं च सहदेवयुतः स्वकीयामित्यादिना त्रयाणां दृष्टत्वं कृष्णतो ज्ञानावाप्तिश्चाचार्यैरुक्ता तथाप्युर्वरिताभ्यां द्वाभ्यामदृष्टाभ्यां सह नृभाव इत्यादिशक्तिरिति वा । ब्रह्मरूपधरत्वे न दृष्टपूर्वत्वं वेत्यदृष्टरूपानित्युक्तिः सम्भवतीति मन्तव्यम् । यद्वाऽदृष्टौ पूर्वौ येषु पञ्च सूतान् । पूर्वत्वं च व्यूहद्विकस्य धर्मनकुलयोरिति ज्ञेयम् । यद्वानिमान इति भाष्योत्तराममितत्वेनेति व्याख्यानवन्नभः पूर्वेत्यनेनान्वयः । ततश्च दृष्टश्चापूर्वौ चादृष्टपूर्वाः । अपूर्वाविदृष्टाविति यावत् । नन्वेवं तर्हि मणिमञ्चर्यामित्युक्त्वा भीमपार्थाभ्याम् । पूजयन्तौ हरिं पार्थाविति द्वयोरेव ग्रहणं कथमिति चेत् । सत्यम् । तथा भगवदुपदेशविधत्वाद्द्वयोर्ग्रहणम् । सहदेवस्यातथात्वात्तदनुक्तिः । सुव्यक्तम् । नृपाद्विद्धं लक्ष्यं यैस्तैः । पौरुष्येण प्रतिलब्धो मनो यैस्तैः ॥ १३ ॥ कुम्भं करोतीति कुम्भकारस्तस्य शाला तस्यां समागम्य मिलित्वाऽभिवन्द्य च पितृष्वसां । आर्यष्टाबन्तशब्दः । राजानं युधिष्ठिरं चानुज्ञाप्य ॥ १४ ॥ प्राणपरीप्सया जीवनेच्छया ॥ १५ ॥ साहाय्ये तदर्थमीश्वरयो रामकृष्णयोः । हेलनमनादरम् ॥ १६ ॥

### श्रीमद्वल्लभाचार्य्यकृता सुबोधिनी

यथा ज्ञात्वा न किञ्चित्कृतवान्, एवं श्रुत्वापि न करिष्यतीत्याशङ्क्य, लौकिकं प्रतीकारं च कृतवानित्याह **तदाकर्ण्येति द्वाभ्याम्** । ईश्वरावपि लीलार्थं नृलोकमनुसृत्य श्वशुरमारणात् दुहितेव स्वयमपि विलापं कृतवन्तौ । यथा तस्याः कष्टं तथा कष्टमूचतुः । केवलं वाचनिकत्वव्युदासाय **अस्राक्षौ** । पूर्णा शक्तिः तथा करोतीति ज्ञापयितुं द्विवचनम् । उद्योगमाह **आगत्येति** । अन्यद्वारा कार्यकरणमौदासीन्यद्योतकमिति स्वयमेवागत्य कृतवान् । **भगवानिति** सामर्थ्यमुपायज्ञानं च । **तातेति** राज्ञः सम्बोधनं विश्वासाय । गुप्ततया समागतो भविष्यतीत्याशङ्क्याह **सभार्यः साग्रज** इति । **पुरं** द्वारकामेव । नतु मध्ये स्थित्वा उपायेन बन्धनं विचारितवात् । ततः शतधन्वानं हन्तुम् । हननस्य प्रयोजनं **मणिं हर्तुमिति** । स हि जीवन् न ददाति । अतो हत्वैव ग्राह्यः । अत्र द्वयं न प्रयोजनम्, हननं ग्रहणं च । किन्तु ग्रहणार्थमेव हननम् । अन्यप्रेरितो हतवानिति । भगवदिच्छापीति न वधमर्हति, नापि तद्वंश्यो भगवान्, येन हन्तारं हन्यात् । उभौ च तुल्यौ । कृतस्य करणं नास्तीति शतधनोर्हननेऽपि न सत्राजिज्जीवनम् । अत एवाग्रे भगवद्वाक्यं घटते । 'वृथा हतः शतधनु'रिति । शतधनुःशब्दः सकारान्तः, उकारान्तोऽपि । सत्राजिद्वत् । द्विःस्वभावेनैव द्विःस्वभावो मारित इति ज्ञापयितुं द्विविधः प्रयोगः । सत्राजितो द्विरवभावत्वं निन्दाकरणात् पश्चात्तापकरणाच्च निरूपितम् । अस्यापि हनने निर्भयत्वमग्रे पलायनेन सभयत्वं च निरूपयिष्यति । ततः शतधनुषः अयमारम्भः ध्रियतां बध्यतामिति स्पष्टमाज्ञापनरूपः ॥ १० ॥ ततो राजकीयाः तन्निग्रहार्थं प्रवृत्ताः, एवं सति शतधनुषः कृत्यमाह **सोऽपीति** । योऽयं राजद्वारा निग्रहः श्रूयते, स भगवत्कृत एवेति निश्चितवान् । अतः कृष्णोद्यमं ज्ञात्वा पूर्वं साधारणत्वेन ब्रह्मत्वेन वा सम्बन्धेन वा ज्ञात्वा निर्भयः । इदानीं पक्षपातिनं ज्ञात्वा भीतो जातः । चौरस्य चौर्यादेव स्वत्वमुत्पद्यते । तस्मिन् हते शत्रुजयन्यायेन यो हन्यात्, तस्य भवति । अन्यथा तस्मिन् विद्यमाने परस्वापहार एव भवति । अतो भगवान् हत्वैव ग्रहीष्यतीति निश्चित्य, **प्राणपरीप्सया** सर्वतः प्राणा रक्षणीया इति, अहत्वा दुष्टान् न ग्रहीष्यतीति, चौरवच्च मरणं न प्रशस्तमिति, स्वयमसहायः कृतवर्माणं यादवं सहायत्वेन प्रार्थितवानित्याह **साहाय्ये कृतवर्माणमयाचतेति** । अस्य याचनवाक्यानि स्पष्टानीति नोदाहृतानि । **स चाब्रवीदिति** चकारेण सूचितानि ॥ ११ ॥ स कृतवर्मा महान् यादवः, भारते युद्धे कौरवपक्षपाती, बहुकार्यं तस्यास्तीति, स्वाभिलषितं सिद्धमेवेति, मणिं चायं न प्रयच्छतीति, उदासीनः सन् भगवत्पक्षपातेन वाक्यान्याह **नाहमीश्वरयोरिति** । फलं तु न तव, नापि मम, किन्तु हेलनं कर्तुं शक्यम्, यथा त्वं करोषि, तदपि न कर्तव्यम् । यतः कृष्णरामौ न लौकिकौ, तत्रापीश्वरौ दृष्टादृष्टलौकिका-

लौकिकफलदानसमर्थौ । अहं चैकः स्वानुभवेन तुच्छश्च । रामकृष्णयोरिति नाम्नैव प्रसिद्धिरुक्ता । ननु भवानपि यादवः शूरो महारथश्च, तत्कथं बिभेपीत्याशङ्क्याह को नु क्षेमायेति । नु इति वितर्के । यावन्तो भगवदपराधकर्तारः, ते सर्व एव क्षेमात् प्रच्युता दृष्टाः । भविष्योतः परं को वा कल्प्येत, भूतवदेव भविष्यस्यापि निर्णयात् । नु इति निश्चये । तत्रापि तयोः पूर्णशक्तिमति भगवति आचरन्नेव भगवता अहतोऽपि चिन्तयैव म्लानो भवतीति साधनफलयोः समानकालत्वं निरूपयन् वर्तमानप्रयोगं कृतवान् ॥ १२ ॥

### श्रीसुबोधिनीसारः

तत् मरणमाकर्ण्य श्रुत्वा ईश्वरौ रामकृष्णौ नृलोकतां मनुष्यभावमनुसृत्याश्रित्यास्रोऽश्रुभिर्युक्ते अक्षिणी ययोस्तौ विलेपतुर्विलापं चक्रतुरहो नोऽस्माकं परमं कष्टं महद्दुःखमिति ॥ ९ ॥ साग्रजः सरामः सभार्यः सस्त्रीको भगवान् तस्माद्धस्तिनापुरात् पुरं द्वारकामागत्य शतधन्वानं हंतुमारेभे उद्यमं चक्रे ततः सकाशान्मणिं हर्तुमानेतुम् ॥ १० ॥ कृष्णस्योद्यमं मारणोपायं ज्ञात्वा बुद्धा प्राणपरीप्सया जीवनेच्छया भीतः सोपि शतधनुः साहाय्ये रक्षानिमित्तं कृतवर्माणमयाचत स च कृतवर्माह ॥ ११ ॥ ईश्वरयो रामकृष्णयोर्हेलनमपराधं नाहं कुर्यां तत्र हेतुः । तयोर्द्वयोर्वृजिनं दुःखमाचरन् कुर्वन् को नु क्षेमाय कल्याणाय कल्पते युज्यते ॥ १२ ॥

### गोस्वामिश्रीगिरिधरलालकृताबालप्रबोधिनी

हे राजन् । तत् सत्राजिन्मरणमाकर्ण्य ईश्वरावपि रामकृष्णौ नृलोकतामनुसृत्य नरलीलामभिनयन्तौ अस्राक्षौ अश्रुपूर्णनेत्रौ अहो नोऽस्माकं परमं कष्टं दुःखं प्राप्तमित्येवं विलेपतुरित्यन्वयः ॥ ९ ॥ सभार्यः सत्यभामासहितः साग्रजः बलभद्रसहितश्च भगवान् कृष्णस्तस्मात् हस्तिनापुरात् पुरं द्वारकामागत्य अतः शतधन्वनो मणिं हर्तुं तं शतधन्वानं, हन्तुमारेभे उद्युक्तो बभूव ॥ १० ॥ स शतधन्वापि कृष्णस्योद्यमं स्ववधोद्योगं ज्ञात्वा प्राणपरीप्सया प्राणरक्षणेच्छया कृतवर्माणं साहाय्ये अयाचत, स च कृतवर्मा अब्रवीत् ॥ ११ ॥ किमब्रवीत्तदाह—नाहमिति द्वाभ्याम् । अहं रामकृष्णयोर्हेलनं प्रतिकूलं न कुर्याम् । तत्र हेतुमाह—क इति । तयोर्वृजिनमपराधमाचरन् कुर्वन् को नु पुमान् क्षेमाय कल्पेत क्षेमं प्राप्नुयादित्यर्थः । तत्रापि हेतुमाह—ईश्वरयोरिति ॥ १२ ॥

### अन्वितार्थप्रकाशिका

तदेति ॥ हे राजन् ! तत्सत्राजिन्मरणमाकर्ण्य ईश्वरावपि रामकृष्णौ नृलोकतामनुसृत्य नरलीलामभिनयन्तौ अस्राक्षौ अश्रुपूर्णनेत्रौ अहो नोऽस्माकं परमं कष्टं दुःखं प्राप्तमित्येवं विलेपतुः ॥ ९ ॥ आगत्येति ॥ सभार्यः सत्यभामासहितः साग्रजः बलभद्रसहितश्च भगवान् कृष्णस्तस्मात् हस्तिनापुरात् पुरं द्वारकामागत्य ततः शतधन्वनो मणिं हर्तुं तं शतधन्वानं हन्तुं चारेभे उद्युक्तो बभूव ॥ १० ॥ सोऽपीति ॥ स शतधन्वाऽपि कृष्णस्योद्यमं स्ववधोद्योगं ज्ञात्वा प्राणपरीप्सया प्राणरक्षणेच्छया कृतवर्माणं साहाय्ये अयाचत स कृतवर्मा अब्रवीत् ॥ ११ ॥ नाहमिति ॥ अहम् ईश्वरयोः रामकृष्णयोः हेलनं प्रतिकूलं न कुर्यां तयोर्वृजिनमपराधमाचरन् कुर्वन्को नु पुमान् क्षेमाय कल्पेत क्षेमं प्राप्नुयात् । अयं भावः । मया सत्राजिद्वध एव भवान् प्रवर्तितो नतु भगवत्प्रातिकूल्ये । त्वं तु यदि तं शरणं न यियाससि तर्हि त्वमिव किमहमपि तत्प्रतिकूलो बुभूषेयम् इति ॥ १२ ॥

### श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्

अस्राक्षौ अश्रुव्याप्तनेत्रौ ॥ ९ ॥ तस्मात् गजाह्वयात् ॥ १० ॥ साहाय्ये रक्षणकर्तृत्वे ॥ ११ ॥ हेलनं अपराधं । वृजिनं प्रतिकूलाचरणं ॥ १२ ॥

### भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

तदिति ॥ हे राजन्, तत् आकर्ण्य यथाख्यातं श्रुत्वा, ईश्वरौ रामकृष्णौ, नृलोकतां अनुसृत्य, नरचेष्टामभिनयन्तौ सन्तावित्यर्थः । अस्राक्षावश्रुपूर्णनयनौ सन्तौ च, अहो नोऽस्माकं परममनवधिकं, कष्टं दुःखं, प्राप्तं इत्येवं विलेपतुः विलपितवन्तौ ॥ ९ ॥ आगत्येति ॥ भगवान् श्रीकृष्णः, सभार्यः सत्यभामासहितः, साग्रजो बलभद्रसहितः संश्च, तस्माद्गजाह्वयात् , पुरं द्वारकां आगत्य, शतधन्वानं हन्तुं, ततः मणिं हर्तुं च, आरेभे । उद्युक्तवानित्यर्थः ॥१०॥ सोऽपीति ॥ स शतधन्वापि, कृष्णोद्यमं श्रीकृष्णारब्धं स्ववधोद्योगं, ज्ञात्वा समाकर्ण्य, भीतः सन्, प्राणपरीप्सया प्राणरिरक्षया, कृतवर्माणं साहाय्ये, अयाचत । तदा स च स कृतवर्मापि, अब्रवीत्तं कथयामास ॥ ११ ॥ उक्तिमेवाह नाहमिति द्वाभ्याम् ॥ नाहमिति ॥ हे शतधन्वन्, अहं ईश्वरयोः, रामकृष्णयोः, हेलनं प्रातिकूल्यं, न कुर्याम् । कुतः । तयोः, वृजिनमपराधं, आचरन् कुर्वन्, को नु पुमान् , क्षेमाय कल्पेत क्षेमं प्राप्नुयादित्यर्थः । न कोऽपीति भावः ॥ १२ ॥

### कृष्णप्रिया

राजन् ! करुणानिधान सर्वसमर्थ श्रीकृष्ण भगवान् और श्रीबलभद्रजी ने सर्ववृत्तान्त श्रवण किया एवं साधारण मनुष्य के जैसी लीला करते हुए अश्रुभरे नेत्रों से रुदन करते हुए कहने लगे कि अरेरे यकायक हमलोगों पर अकल्प्य विपत्ति आ गयी ॥ ९ ॥ तदन्तर भगवान् श्रीकृष्ण श्रीसत्यभामाजी और बलभद्रजी के साथ हस्तिनापुर से द्वारिकाजी लौट आये पुनः शतधन्वा को मारने का और उससे मणि लौटाने का प्रयत्न करने लगे ॥ १० ॥ राजन् ! शतधन्वा को ख्याल आया कि भगवान् श्रीकृष्ण मुझे मारने का उद्योग कर रहे हैं तब वह अत्यंत भयभीत बना और अपने प्राणों की रक्षा की सहाय के लिये कृतवर्मा से निवेदन किया तब कृतवर्मा ने कहा ॥११॥ कृतवर्मा कहने लगा कि-भगवान् श्रीकृष्ण और बलभद्रजी सर्वशक्तिमान् ईश्वर हैं। मेरा सामर्थ्य उनका सामना करने का नहीं है। भला इस भूतल में ऐसा कौन व्यक्ति है जो व्यक्ति इन दोनों के साथ वैर बाँधकर इस लोक और परलोक में क्षेम कुशल से रह सके ॥ १२ ॥

**कंसः [1]सहानुगोऽपीतो यद्द्वेषात्त्याजितः श्रिया। जरासंधः सप्तदश संयुगान् विरथो गतः ॥ १३ ॥**
**प्रत्याख्यातः स चाक्रूरं पार्ष्णिग्राहमयाचत । सोऽप्याह को विरुध्येत [2]विद्वानीश्वरयोर्बलम् ॥ १४ ॥**
**य[3] इदं [4]मायया विश्वं सृजत्यवति हन्ति च । चेष्टां विश्वसृजो यस्य न विदुर्मोहिताजया ॥ १५ ॥**
**यः सप्तहायनः शैलमुत्पाट्यैकेन पाणिना । दधार लीलया बाल उच्छिलीन्ध्रमिवार्भकः ॥ १६ ॥**

### कर्दमक्षमा

अन्वयः—यत्, द्वेषात्, सहानुगः, कंसः, श्रिया, त्याजितः, अपि, इतः, जरासंधः, सप्तदश, संयुगान्, विरथः, गतः ॥ १३ ॥ प्रत्याख्यातः, सः, शतधन्वा, च, अक्रूरम्, पार्ष्णिग्राहम्, अयाचत, सः, अपि, आह, ईश्वरयोः, बलम्, विदित्वा, कः, विरुध्येत ॥ १४ ॥ यः, इदम्, विश्वम्, मायया, सृजति, अवति, च, हन्ति, यस्य, अजया, मोहिताः, विश्वसृजः, चेष्टाम्, न, विदुः ॥ १५ ॥ यः, सप्तहायनः, बालः, अर्भकः, उच्छिलीन्ध्रम्, इव, शैलम्, उत्पाट्य, एकेन, पाणिना, दधार ॥ १६ ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

अपीतो मृतः सप्तदशसंख्याकान् संयुगान् ॥ १३-१४ ॥ तौ रामकृष्णावेकमेव तत्त्वमित्यभिप्रेत्याऽऽह—य इदमिति । अजया मायया मोहिताजयेति संधिरार्षः ॥ १५-१७ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

"पानाभावे च मरणेऽपीतः पीतेतरे गते" इति निरुक्तिः । तद्द्वेषाद्धेतोः श्रिया संपत्त्या हेतुकर्त्र्या त्याजितः स्वयमेव स इत्यर्थः । तस्यास्तत्र तथैव स्थितिस्तस्यैव त्वपगतिरिति ॥ १३ ॥ प्रत्याख्यातो निराकृतः । स शतधन्वा, कृतवर्मणेति शेषः । पार्ष्णिग्रहं पृष्ठदेशे रक्षितारम् । सोऽक्रूरः । "पार्ष्णिः सैन्यस्य पृष्ठे स्यात्पश्चात्पदजिगीषयोः" इति विश्वः । पार्ष्णिग्राहम् सहायम् ॥ १४ ॥ यः कृष्णः । यस्य कृष्णस्य । तत्रेश्वरो नाम एक एव स्यादिति रामस्यापि कृष्णान्तर्भावविवक्षयैकत्वेनाह—य इति त्रिभिः । इदं विचित्रानताश्चर्यमयम् । लीलयाऽनायासेनेत्यर्थः । तच्च किमर्थमिति केपि ज्ञातुं नेशांचक्रिर इत्याह—चेष्टामिति । तत्र चेष्टामीहाम्, तत्तदभिप्रायमित्यर्थः । यस्येत्यस्याऽजयेत्यनेनाप्यन्वयः । अत एतामपि चेष्टां को जानीयादिति भावः ॥ १५ ॥ इहापि तादृशः प्रत्ययो दृश्यतामित्याह—य इति । लीलया सप्तहायनत्वादेव । बालः आविष्कृतबाल्यानुरूपाकारादिस्तथापि दधार तत्रापि शैलं शिलामयमिति मृदाद्यभावेन महागुरुत्वं शिलानां खण्डशः पृथक् कृत्वा धारणाशक्यत्वादिकं चाभिप्रेतम् । तथाप्युत्पाट्य मूलतो भूतलादुद्धृत्य तत्राप्येकेन वामेनैव पाणिना तत्रापि लीलयानायासेन । तत्र दृष्टान्तमनुरूपमाह-उच्छिलींध्रमिवार्भक इति ॥ १६ ॥

### श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी

तद्द्वेषाद्धेतोः श्रिया सम्पत्त्याहेतुकर्त्र्या जितः स्वयमेव स इत्यर्थः तस्यास्तत्र तथैव स्थितस्यैव त्वपगतिरिति ॥ १३ ॥ पार्ष्णिग्राहं साहाय्यमित्यर्थः ॥ १४ ॥ तत्रेश्वरो नामैक एव स्यादिति रामस्यापि श्रीकृष्णान्तर्भावविवक्षयैकत्वेनाह । य इति

---

१. गोयेतो-वीर.; तुगो वीरो-विज. । २. द्वानी॰ श्रीधर. वंशी. जीव. वीर. विज. ।
३. यं कैलासाश्रयः शंभुर्नंनाम शिरसा हरिम् । यो हंसडिभको युद्धे जितवान् वरदुर्मदौ ॥
आशीविषो महानागो येन निर्वासितो ह्रदात् । -विज. ।
४. यया-विज. ।

त्रिभिः। इदं विचित्रानन्ताश्चर्य्यमयं लीलया अनायासेनेत्यर्थः। तच्च किमर्थमिति केऽपि ज्ञातुं नेशाञ्चक्रिरे इत्याह। चेष्टामिति। तत्र चेष्टामीहामिच्छां तत्तदभिप्रायमिति यावत् यस्येत्यस्याजयेत्यनेनाप्यन्वयः अत एतामपि चेष्टां को जानीयादिति भावः ॥१५॥ इहापि तादृशः प्रभावो दृश्यतामित्याह—य इति। जन्मादिलीलया सप्तहायनत्वादेव बालः आविष्कृतबाल्यानुरूपाकारादिः तथापि दधार तत्रापि शैलं शिलामयं इति मृदाद्यभावेन महागुरुत्वं शिलानां खण्डशः पृथक्कृत्वा धरणाशक्यत्वादिकं चाभिप्रेतं तथाऽप्युत्पाट्य मूलतो भूतलादुद्धृत्य तत्राप्येकेन वामेनैव पाणिना तत्रापि लीलया अत्रानुरूपो दृष्टान्तः उच्छिलीन्ध्रमिवार्भक इति ॥ १६ ॥

### श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी

यस्मिन् ययोर्वा द्वेषाद्धेतोः, श्रिया धर्म्मादिसम्पत्त्या त्याजितस्त्यक्तः सन्, यद्वा कृष्णेन श्रिया त्याजितो हापितः, पादस्यास्य परेणाप्यनुषंगः ॥ १३ ॥ पार्ष्णिग्राहं साहाय्यमित्यर्थः; ईश्वरयोर्जगदीशयोः ॥ १४ ॥ ननु ईश्वर एक एव स्यादिति द्वित्वेनेश्वरत्वहानिरित्याशंकां परिहरन्नैश्वर्य्यमेव दर्शयति—य इति। द्वयोरप्यैक्योक्त्या ईश्वरत्वं साधितमेव, इदं विचित्रानन्ताश्चर्य्यमयम्, लीलया अनायासेन तच्च किमर्थमिति केऽपि ज्ञातुं नेशाञ्चक्रिरे इत्याह—चेष्टामिति। चरितमपि एतावदीदृशं चेति विश्वसृजः श्रीब्रह्मादयोऽपि न विदुः, किं पुनस्तत्प्रयोजनमित्यर्थः। यद्वा, इच्छां तत्तदभिप्रायमित्यर्थः। यस्येत्यस्याजयेत्यनेनाप्यन्वयः। न जायते नोत्पद्यते, किन्तु सदैव वर्त्तते इत्यजातयेति मोहरयापि सदातनत्वमभिप्रेतम्। किमर्थं त्वया सत्राजिद्घातितः, किमर्थं वा मणिं मयि स्थापयितुमिच्छसीत्यादिकां तल्लीलां कोऽपि ज्ञातुं न शक्नुयादिति भावः ॥ १५ ॥ अहो सृष्ट्यादिचेष्टां न विदुरिति किं वक्तव्यम्, तस्य सम्प्रति सर्व्वत्रसाक्षात् स्वयं श्रीगोवर्द्धनधारणप्रकारादिकमपि केनापि ज्ञातुं न शक्यत इति। यद्वा, ननु ईश्वरत्वे तथास्ताम्, अधुना तु यादवत्वांगीकारात्तेन सह यादवानामस्माकं विरोधो घटेतैव ? न, अत्रैवाशेषैश्वर्य्यप्रकटनादित्याह—य इति। सप्तहायनत्वादेवार्भक इति बाल्यानुरूपाकारादि सूचितम्, तथापि दधार, तत्रापि शैलं शिलामयमिति मृदाद्यभावेन महागुरुत्वं शिलानां खण्डशः पृथक्त्वाद्धारणाशक्यत्वादिकञ्चाभिप्रेतम्। तत्राप्युत्पाट्य मूलतो भूतलादुद्धृत्य, तत्राप्येकेन वामेनैव पाणिना, तत्रापि लीलया अत्रानुरूपो दृष्टान्तः—बाल इति ॥ १६ ॥

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम्

शिलीन्ध्रं कोटरोत्थच्छत्राकम् ॥ १६–२८ ॥

### श्रीमद्वीरराघवाचार्यकृता भागवतचन्द्रचन्द्रिका

किन्त्वयेत्थं दृष्टमित्यत्रोदाहरणमात्रमाह—कंस इति। यत्र श्रीकृष्णे द्वेषाद्धेतोः श्रिया राज्यश्रिया प्राणैश्चेति शेषः त्याजितः तथा जरासन्धोऽपि सप्तदशसङ्ख्याकात्सङ्ग्रामात् विरथः शरीरमात्रावशिष्टो गतः ॥ १३ ॥ इत्थं तेन प्रत्याख्यातस्ततोऽक्रूरसाहायमयाचत सोऽपीति। सोऽप्यक्रूरोऽपि उक्तिमेवाह—क इत्यादिना आत्मने नम इत्यन्तेन ईश्वरयोरामकृष्णयोर्बलं जानको वा पुमान् विरुध्येत ईश्वराभ्यामिति शेषः ॥ १४ ॥ भगवतो बलं वक्तुं तावत्तस्य कृत्स्नजगदुदयविभवलयलीलत्वमाह—य इति। अवति रक्षति अजः सृज्यगतजन्मादिस्पर्शरहितः एवं विधेन को वा विरुध्येतेति भावः सर्वेऽप्येवं किं न विदुरित्यत आह—चेष्टामिति। यस्य भगवतोऽजया मायया मोहितास्तस्य चेष्टां विश्वसृष्ट्यादिरूपां न विदुः मोहिता जयेत्यत्र सन्धिरार्षः ॥ १५ ॥ बलं प्रपञ्चयति—य इति। यो भगवान् बालस्तत्रापि सप्तवर्षवयाः सन्नेव शैलं गोवर्द्धनमेकेन पाणिनोत्पाट्य लीलया दधार यथार्भकः शिलीन्ध्रमुत्पाट्य धरति तद्वत् शिलीन्ध्रं भूतालकुसुमम् ॥ १६ ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

अपराधकार्यत्वे निमित्तानि कथयति। कंस इति ॥ १३ ॥ प्रत्याख्यातो निराकृतः कृतवर्मणेति शेषः पार्ष्णिग्राहं पृष्ठबलम् ॥ १४–१५ ॥ उच्छिलीन्ध्रं छत्राकम् ॥ १६–१७ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

अपीतो मृतः अप्ययशब्दस्यामरणार्थकत्वात् श्रिया त्याजितः त्यक्तः यद्वा हत इह यत् द्वेषात् स्वविषयकाद्धेतोः कंसः श्रिया त्याजितः सप्तदशानां संयुगानां समाहारस्तस्मात् ॥ १३ ॥ एवं कृतवर्मणा प्रत्याख्यातः ॥ १४ ॥ रामकृष्णावेकमेव तत्त्वमित्यभिप्रेत्याह—य इति मोहिता अजया इति सन्धिरार्षः ॥ १५–१७ ॥

### गूढार्थदीपिनी

अपीतो मृतः। 'मरणेऽपीतः' इति निरुक्तेः। सप्तदशानां संयुगानां समाहारस्तस्मात् इति पञ्चम्यन्तपाठ एव सुकरः॥१३॥ प्रत्याख्यातो निराकृतः स शतधन्वा। पार्ष्णिग्राहं पृष्ठरक्षकम् साहाय्यमित्यर्थः अयाचत। बलं विद्वान् जानन् ॥ १४ ॥ चेष्टामभिप्रायम्। विश्वसृजो ब्रह्मादयः ॥ १५ ॥ यो बालः कृष्णः दधार। उच्छिलीन्ध्रं छत्राकम् ॥ १६–१७ ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

अपीतो मृतः ॥ १३-१४ ॥ मोहिताजयेति सन्धिरार्षः ॥ १५-१८ ॥

### श्रीसत्यधर्मकृता श्रीभागवतटिप्पणी

तयोर्वृजिनं तोदनम्। आचरन्कुर्वन् को नु पुमान्क्षेमाय कल्पेत्। न कोऽपीति। कोपिनि तस्मिन्न क्षेमो स्यामिति भावः। मृतपराजितनिदर्शनप्रदर्शनेन साहाय्यानाचरणमुपोद्बलयति। कंस इति। द्वेषायस्मिन्द्वेषाद्यस्य द्वेषाद्वा श्रिया त्याजितः श्रीरत्र यथासम्भवं प्राणसम्पच्च। सप्तदशसंख्यसंख्यतः। तद्विधाय विरथः सन्मतः। एमं कृतवर्मणा प्रत्याख्यातो नाहं तव साहाय्यं कुर्यामिति निराकृतः। अक्रूरं पार्ष्णिग्राहं सहकारिणमयाचत ॥ १७-१८ ॥ ईश्वरयोर्बलं विद्वान् कः पुमांस्ताभ्यां सह विरुद्धयेत विरोधं कुर्यात्। ईश्वरयोरिति वचनेन प्रतीतं साम्यं पराकर्तुं विविच्याच्युतस्य स्वोपास्यशेषात्मकबलस्य च महात्म्यमाह। यमिति। ननु सती सत्यलोकाधिक एतदधिके विधौ हरपरिग्रहः किमर्थमिति चेत्सत्यम्। दुरुद्धरा तव शङ्का चेदपि गुरुकरुणायाः किमसुसाधम्! कैलासं प्रति सतीसहितो गत्वा तपश्च कृत्वा हरवरतः प्रद्युम्नमापेति वृत्तं लोकनटनं घटिते न वास्तविकमिति बोधयितुं यद्विषये प्रथा तन्नमस्यतास्योक्ता चेत्सा शाम्यतीति त्रिनेत्रग्रहः। कैलासाश्रयः शम्भुर्हरो यं हरिं शिरसा ननाम। यं बलं कैलासाश्रयः शम्भुरिति नाम्ना सहितं शिरश्च तेन तन्मात्रेण तद्विनेति यावत्। अर्हरिं हारेभिन्नं वदन्तीति शेषः। स अर्हेत्यनुवृत्तिर्वा। स तद्योजन इत्यतो रुद्र एव भावी शेषो रुद्रतादशायां तन्नाम शिरश्च तावन्नेति शेषः ॥ १९ ॥ वरदुर्मदौ हरवरदुर्मदौ। य आगः कृतवान्यश्च महानाशीविषः कालियो यश्चासहान इति। बलपक्षे हृदासिर्वासितः। अन्यथाऽन्यतरवैय्यर्थ्यं स्फुटप्रतिभासं यथाकथञ्चित्समाधिस्त्वगतिकागतिः ॥ २० ॥ यः कृष्णो लीलया विश्वं सृजत्यवति हन्ति च यस्य चेष्टया मोहिता विश्वसृजः प्रजापतयोऽपि तां चेष्टां न विदुरिति। य इदं विश्वं समग्रं जगल्लीलया धरतीति शेषः ॥ २१ ॥ यः सप्तहायनः शैलं गोवर्धनमुत्पाट्याभर्क उच्छिलीन्ध्रं गतम्। एकेन पाणिना दधार एकेन शीर्ष्णाऽभर्क उच्छिलीन्ध्रमिव दधारेत्यपरत्र। सहस्रमूर्ध्नोऽस्य वतैकमूर्धनीत्याचार्योक्तेः ॥ २२ ॥

### श्रीमद्वल्लभाचार्य्यकृता सुबोधिनी

तत्र निदर्शनमाह कंस इति। महान् स राजा, तादृशोऽपि तयोर्वृजिनमाचरन्, सहानुगो भ्रातृसहितोऽपि, अपीतः अप्ययं प्राप्तः। अपीति प्रलयार्थे। अप्युपसर्गपूर्वक इण् धातुः। कर्तरि क्तः। अपिरप्ययः तमित इति। श्रिया वा अपीतः अपगतः अपसारितः भगवतैव च, द्वेषाद्वा। एकमुदाहरणं नार्थं निश्चाययतीति व्याजरहितां क्रियाशक्तिं भगवतो निरूपयति जरासन्ध इति। सप्तदश युद्धानि कृत्वा आलक्ष्य, यद्द्वेषात्त्याजित इति वा अनुवर्तते। संयुगान् त्याजितः विरथो भूत्वा गतः स्वगृहम्। सप्तम्यर्थे वा द्वितीया ॥ १३ ॥ कृतवर्मा भगवत्प्रतिकूलस्वभाव इति प्रथमं स याचितः। स चेदुत्तरं दत्तवान्, तदा तमुदासीनं मत्वा, सत्राजिद्वधः अक्रूरस्यैव सर्वथाभीष्ट इति उपकारकर्तारमात्मानं मत्वा, भगवद्भक्तमपि अक्रूरं युद्धे क्रियमाणे भङ्गे पश्चात्पृष्ठपूरकत्वेन याचनं कृतवानित्याह प्रत्याख्यात इति। चकारात्तत्पक्षपातिनोऽन्येऽपि तेन प्रत्याख्याताः। स पूर्वोक्तः कृतोपकारः। अक्रूरं भक्तं नाम्ना हितकारित्वमपि बोधितम्। पार्ष्णिग्राहः पृष्ठपूरकः। पूर्ववदेव याचनवचनानि नोक्तानि। सोऽपि स्वकार्यस्य सिद्धत्वात् भगवदसम्मतिं ज्ञात्वा प्रत्याचष्ट इत्याह सोऽप्याहेति सार्धैस्त्रिभिः। अपिशब्दात् पूर्वः कृतवर्मा गृहीतः। तेन प्रत्याख्यानं सिद्धम्। तद्वदेवाहेति। अग्रे त्वयापि विरोधो न कर्तव्य इति युद्धान्निवर्तयितुं भगवन्माहात्म्यमाह को विरुध्येतेति। को वा विरोधमाचरेत्। अज्ञः करोतु नाम, ईश्वरयोर्बलं विदित्वा प्रत्यक्षशब्दाभ्यामवगत्य, पूर्णशक्तेर्भगवतः विरोधं कोऽपि न करोतीत्युपदेशः ॥ १४ ॥ आदौ श्रुतं माहात्म्यमाह य इदमिति। भगवतः सामर्थ्यं तस्यानन्यत्वं च प्रतिपाद्यते। माया सर्वभवनसामर्थ्यम्, शक्तिर्वा काचित्, अप्रयोजिका, तामपि करणत्वेन स्वीकृत्य इदं सर्वमेव जगत् उत्पादयति पालयति नाशयति च। एवमन्योऽपि करिष्यतीत्याशङ्क्य कैमुतिकन्यायेन परिहरति चेष्टामिति। भगवांस्त्वेतल्लीलयैव करोति, अन्यैः कर्तव्यमिति दूरापास्तम्। भगवत्क्रियामात्रमपि न जानन्ति, किं करोति कथं करोतीति। क्रियाशक्तिर्वा निष्पन्नापि सर्वं निष्पादयन्त्यपि किमात्मिकैवेति न विदुः। तत्र हेतुः अजया प्रकृत्या मोहिता इति। यदि ते जानीयुः, तदा कथमात्मवञ्चनामङ्गीकुर्युः। ये अजयापि मोहिता भवन्ति, ते अजा एव, सर्वैरेव हन्यमानाः स्वरक्षायामेवाशक्ताः कथं सृष्टिं करिष्यन्तीति भावः ॥ १५ ॥ एवं श्रुतिसिद्धमुक्त्वा प्रत्यक्षसिद्धमाह यः सप्तहायन इति। जरासन्धादिजयस्त्वतिदेशेनैव प्राप्तः। अलौकिकस्तु वक्तव्यः। तत्र पर्वतोद्धरणं लोके अत्याश्चर्यमिति, वयःप्रकारादीनां सुतरामत्याश्चर्यहेतुत्वमुच्यते। सप्तहायनः सप्तवार्षिकः, तत्रापि शैलं गोवर्धनमेकेन पाणिना उत्पाट्य दधारेति। मन्दरधारणादप्यधिकः प्रयत्न उक्तः। एकेनैव पाणिना दधार, तत्र तु पृष्ठेनेति विशेषान्तरम्। लीलया अङ्गुल्यादिषु वेणुनादानुगुणतया स्थापयन् दधारेति तृतीयो विशेषः। एतदपि धारणं न गोकुलसंरक्षार्थम्, अन्यथा साधनपरतन्त्रः स्यात्, इन्द्रभयाद्वा तथा कृतवानित्यपि शङ्केत, किन्तु लीलयैव कृतवानिति वक्तुं दृष्टान्तमाह उच्छिलीन्ध्रमिवेति। छत्राकमिव अर्भको बालकः ॥ १६ ॥

**श्रीसुबोधिनी–सारः**

तद्यथा सहानुगः पूतनादिसहितः कंसो ययोर्द्वेषात् विरोधात् श्रिया राजलक्ष्म्या त्याजितोऽपीतो मृतश्च सप्तदश-संयुगान् यावज्जरासंधो विरथो गतः पद्भ्यां यातः ॥ १३ ॥ प्रत्याख्यातः कृतवर्मणा दत्तोत्तरः स च शतधनुरक्रूरं पार्ष्णिग्राहं रक्षकमयाचत सोऽक्रूरोप्याह ईश्वरयोर्बलं विद्वान् जानन् को विरोधं कुर्यात् ॥ १४ ॥ यो लीलया विश्वमिदं सृजति रक्षति हंति च अजया मायया मोहिताः संधिरार्षः। विश्वसृजो जगत्कर्त्तारोपि यस्य चेष्टां न विदुः ॥ १५ ॥ सप्तवर्षो यो बाल एकेन हस्तेन शैलं गोवर्द्धनम् उत्पाट्य लीलया दधार अर्भको बाल उच्छिलींध्रं छत्राकारमुद्भिदमिव ॥ १६ ॥

**गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी**

तत्प्रतिकूलफलं दर्शयति—कंस इति। यस्य कृष्णस्य द्वेषात् अनुगैर्भ्रातृभिश्च सहितः कंसः राज्यश्रिया त्याजितः सन् पीतः अप्ययं नाशं प्राप्तः। तथा जरासन्धोऽपि सप्तदशसङ्ख्याकात् सङ्ग्रामात् विरथः शरीरमात्रावशिष्टो गतः ॥ १३ ॥ एवं कृतवर्मणा प्रत्याख्यातः शतधन्वा अक्रूरं पार्ष्णिग्राहं साहाय्यमयाचत, तदा सोऽक्रूरोपि ईश्वरयो रामकृष्णयोर्बलं विद्वान् जानन् को वा पुमान् ताभ्यां विरुध्येतेत्याहेत्यन्वयः ॥ १४ ॥ तस्य बलं प्रदर्शयंस्तावज्जगज्जननादिलीलामाह—य इति। यो लीलया अनायासेन सङ्कल्पमात्रेणैव इदं विश्वं सृजति, अवति रक्षति, हन्ति च। यस्य च चेष्टां विश्वसृजो ब्रह्मादयोऽपि न विदुः। तत्र हेतुमाह—अजया तन्मायया मोहिता इति। अत्र सन्धिरार्षः ॥ १५ ॥ यश्च सप्तहायनः सप्तवर्षीयो बालः एकेनैव पाणिना शैलं गोवर्धनमुत्पाट्य लीलया अनायासेनैव दधारेत्यन्वयः। तत्र दृष्टान्तमाह—यथाऽर्भको बाल उच्छिलीन्ध्रं छत्राकं धरति तथेति ॥ १६ ॥

**अन्वितार्थप्रकाशिका**

कंस इति ॥ यस्य कृष्णस्य द्वेषात् अनुगैर्भ्रातृभिश्च सहितः कंसः राज्यश्रिया त्याजितः सन्नपीतः अप्ययं नाशं प्राप्तः तथा जरासन्धोऽपि सप्तदशसंख्याकान्संयुगान्सङ्ग्रामान् कृत्वा विरथः शरीरमात्रावशिष्टो गतः। अत्र सप्तदशानां संयुगानां समाहारस्तस्मादिति विवृण्वतश्चक्रवर्तिनः पञ्चम्यन्तपाठः सम्मतः ॥ १३ ॥ प्रतीति ॥ एवं कृतवर्मणा प्रत्याख्यातः शतधन्वाऽक्रूरं पार्ष्णिग्राहं साहाय्यमयाचत। तदा सोऽक्रूरोऽपि ईश्वरयो रामकृष्णयोर्बलं विद्वान् जानन् को वा पुमांस्ताभ्यां विरुध्येतेत्याह स्म ॥ १४ ॥ य इति ॥ यो लीलया एवेदं विश्वं सृजत्यवति हन्ति च यस्य च चेष्टाम् अजया तन्मायया मोहिताः विश्वसृजो ब्रह्मादयोऽपि न विदुः। सन्धिरार्षः ॥ १५ ॥ य इति ॥ यश्च सप्तहायनः बाल एव एकेनैव पाणिना शैलं गोवर्धनमुत्पाट्य लीलया एव यथार्भको बाल उच्छिलीन्ध्रं छत्राकं धरति तथा दधार ॥ १६ ॥

**श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्**

अपीतो मृतः सप्तदशसंयुगात् सप्तदशसंख्याकसंग्रामात् ॥१३॥ श्रीकृष्णे प्रत्याख्यातः अहं न रक्षामीति कृतवर्मणोक्तः सन्। स च शतधन्वा। पार्ष्णिग्राहं सहायं ॥ १४ ॥ विश्वसृजो ब्रह्मादयः मोहिता जयेति संधिरार्षः ॥ १५ ॥ उच्छिलींध्रं छत्राकं ॥ १६ ॥

**भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी**

किं त्वयेत्थं दृष्टमित्यत्रोदाहरणमात्रमाह। कंस इति। यद्द्वेषाद्यस्मिन् श्रीकृष्णे द्वेषाचरणाद्धेतोः कंसः, सहानुगोऽनुगैः सहितः, सहानुज इत्यपि पाठस्तत्पक्षेऽनुजैर्भ्रातृभिः सहितः, अपीतो मृतः। जरासंधः, श्रिया अजेयया लक्ष्म्या, त्याजितः सन्, सप्तदशसंयुगान्, विरथः, शरीरमात्रावशिष्टः, गतः स्वदेशान् प्रति यातः। तदपराधमहं न करिष्यामीति भावः ॥ १३ ॥ प्रत्याख्यात इति। इत्थं, प्रत्याख्यातः निराकृतः, कृतवर्मणेति शेषः। स च स शतधन्वापि, अक्रूरं पार्ष्णिग्राहं, अयाचत। सोऽक्रूरोऽपि, ईश्वरयोः बलं, विद्वान् जानन्, कः विरुद्ध्येत ईश्वराभ्यामिति शेषः। इति, आह ॥ १४ ॥ भगवतो बलं वक्तुं तावत्तस्य कृत्स्नजगदुदयविभवलयलीलत्वमाह। य इति। यो भगवान् लीलया, इदं विश्वं, सृजति, अवति, हन्ति च। एवंविधस्य यस्य भगवतः, चेष्टां विश्वसृष्ट्यादिरूपां, अजयाऽस्यैव मायया, मोहिताः, विश्वसृजोऽपि, न विदुर्नैव जानन्ति। मोहिताजयेति सन्धिरार्षः ॥ १५ ॥ सांप्रतं भगवद्बलं प्रपञ्चयति। य इति। यो भगवान्, बालः तत्रापि, सप्तहायनः सप्तवर्षवयाः सन्नेव, शैलं गोवर्द्धनाचलं, एकेन पाणिना, उत्पाट्य, अर्भकः उच्छिलीन्ध्रं इव, लीलया, दधार। शिलीन्ध्रश्छत्राकारोऽल्प उद्भिज्जविशेषः ॥ १६ ॥

**कृष्णप्रिया**

भैया आप अच्छी तरह से जानते हो कि भगवान् श्रीकृष्ण से द्वेष करने से कंस राजलक्ष्मी को खो बैठा और अपने परिवार के साथ मारा गया। जरासन्ध परम वीर था फिर भी भगवान् श्रीकृष्ण के सामने ठहर न सका वह सत्रह बार संग्राम

में परास्त होकर रथ रहित बनकर अपनी राजधानी को लौट गया ॥ १३ ॥ जब शतधन्वा को कृतवर्मा ने इस प्रकार स्पष्ट ना कही तब शतधन्वा ने अक्रूरजी से सहायता की याचना किया श्री अक्रूरजी भी कहा सुनो सखा ? ऐसा कौन मन्दमति होगा कि जो सर्वसमर्थ भगवान् श्रीकृष्ण और बलभद्रजी के बल एवं ऐश्वर्य को जानकर भी उनसे साथ विग्रह करे ॥ १४॥ भाई शतधन्वा ! जो भगवान् श्रीकृष्ण रमत मात्र में, पलक मात्र में इस ब्रह्मान्ड का निर्माण-सर्जन-संरक्षण-एवं संहार करते है पुनः यह पूर्णपुरुषोत्तम कब और क्या करना चाहते है इस विषय को भगवन्माया से मोहित ब्रह्मादि देव भी जान नहीं सकते है । राजन् ! आप तो जानते हो कि सप्तवर्षीय बालक श्रीकृष्ण ने एक हस्त से गिरिराज गोवर्द्धन जी को भूमि से उखाड़ लिया छोटे छोटे बालक बरसाती छत्ते को उखाड़कर अपने कर में रख लेते हैं वैसे ही रमत रमत में सात दिन पर्यन्त अपने कर-सरोज में उठाये रखा ॥ १६ ॥

**नमस्तस्मै भगवते कृष्णायाद्भुतकर्मणे । अनन्तायादिभूताय कूटस्थायात्मने नमः ॥ १७ ॥**
**प्रत्याख्यातः स तेनापि शतधन्वा महामणिम् । तस्मिन् न्यस्याश्वमारुह्य शतयोजनगं ययौ ॥ १८ ॥**
**गरुडध्वजमारुह्य रथं रामजनार्दनौ । अन्वयातां महावेगैरश्वैः राजन् गुरुद्रुहम् ॥ १९ ॥**
**मिथिलाया [1]उपवने विसृज्य पतितं हयम् । पद्भ्यामधावत्[2] संत्रस्तः कृष्णोऽप्यन्वद्रवद् रुषा ॥ २० ॥**

**कर्दमक्षमा**

अन्वयः—तस्मै, अनन्ताय, आदिभूताय, कूटस्थाय, आत्मने, अद्भुतकर्मणे, कृष्णाय, भगवते नमः ॥ १७ ॥ सः शतधन्वा, तेन, अपि, प्रत्याख्यातः, तस्मिन्, महामणिम् न्यस्य, शतयोजनगम्, अश्वम्, आरुह्य, ययौ ॥ १८ ॥ राजन् ! रामजनार्दनौ, गरुडध्वजम्, रथम्, आरुह्य, गुरुद्रुहम्, महावेगैः अश्वैः, अन्वयाताम् ॥ २० ॥ मिथिलायाः, उपवने, पतितम्, हयम्, विसृज्य, संत्रस्तः शतधन्वा, पद्भ्याम् अन्वद्रवत्, कृष्ण अपि रूषा अन्वद्रवत् ॥ २० ॥

**श्रीधरस्वामिविरचिता भावार्थदीपिका**

अन्तर्यामिकृष्णनियुक्तस्तस्मिन्नक्रूरे मणिं न्यस्य ययावपलायत ॥ १८ ॥ गुरुः श्वशुरस्तद्धन्तारम् ॥ १९ ॥ शतयोजनमात्रगामित्वात्ततः परं गंतुमशक्तस्तत्र पतितः तं हयं विसृज्य ॥ २० ॥

**श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः**

अत एवाद्भुत कर्मणे तस्मै नमः । अद्भुतत्वे हेतुः-कृष्णाय नराकृतिपरब्रह्मणे । अतो भगवते सर्वैश्वर्यपूर्णाय । अत एवानन्तायांतरहिताय सदा वर्तमानायानादय इत्यर्थः । किञ्च—मध्ये सृष्ट्यादावपि विकाररहितत्वाकूटस्थाय । यत आत्मने सर्वांतर्यामिणे । एवं भक्त्युद्रेकेण साष्टांगं प्रणमन्पुरप्याह—नम इति ॥ १७ ॥ स शतधन्वा । तेनाक्रूरेण । महामणिमिति तेनाधार्यत्वं, सत्तमेनैव धार्यत्वं च सूचयति । अतोऽक्रूरं सत्तमं मत्वा तस्मिन्नेव न्यस्य न्यासरूपेण स्थापयित्वेति स्वात्मनोऽपि स्वधने ममत्वाधिक्यं दर्शितम् । विष्णुपुराणे तु–'वडवामाह्य' इत्युक्तम्, अत्राश्वमिति सामान्यनिर्देशो ज्ञेयः । शतयोजनगामित्वं तस्य स्वभावत एव, विपत्तौ तु बहुशतयोजनसामर्थ्यमपि ज्ञेयम् । अतो द्वारकातो मिथिलोपवनपर्यंतमतिकृष्टेन गत्वा तत्रैव मृत इति वक्ष्यते ॥ १८ ॥ अष्टादशसु गुरुषु श्वशुरस्य गणितत्वाच्छ्वशुरोपि गुरुरेवेति बृहन्नारदीये । गरुडध्वजमिति—साक्षाद्गरुड एवोड्डीन इति लोकोत्प्रेक्षितमित्यर्थः ॥ १९ ॥ मिथिलाया नगर्याः । अन्वद्रवत् रथं हित्वा पश्चादधावत्, वीराणां तथैव न्यायात् । ननु पलायमानानुद्रवणमन्याय्यं तत्राह—रुषा, गुरुद्रुहि न्याय्यत्वादित्यर्थः ॥ २० ॥

**श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी**

अत एवाद्भुतकर्मणे तस्मै नमः अद्भुतकर्मत्वे हेतुः कृष्णाय नराकृतिपरब्रह्मणे अतो भगवते सर्वैश्वर्य्यपूर्णाय अत एवानन्ताय अन्तरहिताय किं च सर्वेषामादौ भूताय सदा वर्त्तमानाय अनादय इत्यर्थः । किं च कूटस्थाय मध्ये सृष्ट्यादावपि विकाररहिताय यत आत्मने सर्वान्तर्यामिणे एवम्भक्त्युद्रेकेण साष्टाङ्गं प्रणमन् पुनरप्याह—नम इति ॥ १७ ॥ महामणिमिति तेनाधार्य्यत्वं सत्तमेनैव धार्य्यत्वं सूचयति अतोऽक्रूरं सत्तमं मत्वा तस्मिन्नेव न्यस्य न्यासरूपेण धृत्वा श्रीविष्णुपुराणे वडवामारुह्येत्युक्तत्वादत्राश्वमिति सामान्यनिर्द्देशो ज्ञेयः ॥१८॥ गरुडध्वजमिति साक्षाद्गरुड एवायमुड्डीन इति लोकोत्प्रेक्षितमित्यर्थः ॥१९॥ अन्वद्रवत् रथमुत्सृज्य पश्चादधावत् वीराणां तथैव न्यायात् ननु पलायमानानुद्रवणमप्यन्याय्यं तत्राह—रुषा गुरुद्रुहि तादृशरोषस्य न्याय्यत्वादित्यर्थः ॥ २० ॥

---

१. मुप–श्रीधर. वंशी. जीव. वीर. विज. विश्व. शुक. मु. । २. धावत–वीर. विज. ।

### श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी

अत एवाद्भुतकर्म्मणे तस्मै नमः, अद्भुतकर्म्मत्वे हेतुः—कृष्णाय नराकृति-परब्रह्मणे, अतो भगवते सर्वैश्वर्य्य-पूर्णाय, अत एवानन्ताय अन्तरहिताय। किञ्च, सर्व्वेषामादौ भूताय सदा वर्त्तमानाय अनादय इत्यर्थः। किञ्च, कूटस्थाय मध्ये सृष्ट्यादावपि विकाररहिताय, यत आत्मने सर्व्वान्तर्य्यामिणे। एवं भक्त्युद्रेकेण साष्टांगं प्रणमन् पुनरप्याह—नम इति ॥ १७॥ सोऽक्रूरादिप्रेरणया मणिलोभेन वा पापे प्रवृत्तोऽपि यः, महामणिमिति—तेनाधार्य्यत्वं सत्तमेनैव धार्य्यत्वं सूचयति अतोऽक्रूरस्य भगवति भक्त्यतिरेकं श्रुत्वा तं सत्तमं मत्वा तस्मिन्नेव न्यस्य न्यासरूपेण धृत्वा। अक्रूरेण तत्स्वीकारस्तु श्रीभगवदाज्ञयैवेति श्रीस्वामिपादैर्व्याख्यातमेव। सा च साधुवरेण भक्त्या तस्मिन् धृते सफलं स्यादन्यथा तु विपरीतमेवेति लोकहितार्थं ज्ञेया ॥१८॥ गरुड़ध्वजमिति—रथस्य गरुडवद्वेगः सूचितः। राम इति—दुष्टवधोद्यमेन सुहृदां रमणात्। जनार्द्दन इति—दुष्टजनस्यार्द्दने प्रवृत्तेः, किंवा तदर्थं निजजनैः प्रार्थनादिति भावः। गुरुद्रुहमिति—तद्वधार्थं तथानुयानं युक्तमेवेत्यर्थः। तच्छ्रवणेन प्रहर्षाद्राजमानं श्रीपरीक्षितं दृष्ट्वा तथैव सम्बोधयति—राजन्निति ॥ १९॥ हयपतनात् सम्यक् त्रस्तः सन्नधावत्, अपि-शब्दात् पद्भ्यामेवान्वद्रवत्, पश्चादधावदिति ज्ञेयम्। पदातेः पदतिनैवानुद्रवणस्य वीरवरेषु योग्यत्वात्। ननु सन्त्रस्तस्य जवेन पलायमानस्योपेक्षैवोचिता, न त्वनुद्रवणम्, तत्राह—रुषा बन्धुवधादिना रोषोदयादित्यर्थः ॥ २०॥

### श्रीमद्वीरराघवाचार्यकृता भागवतचन्द्रचन्द्रिका

अतः स केवलं नमस्कार्य एवेत्यभिप्रयन्नमस्करोति—नम इति। भगवते षाड्गुण्यपूर्णाय अतएवाद्भुतममानुषमदैवं च कर्म यस्य तस्मै अनन्तायापरिच्छेद्यस्वरूपस्वभावायादिभूताय जगत्कारणभूताय कूटस्थाय स्वरूपतः स्वभावतश्च निर्विकाराय आत्मने सर्वान्तरात्मने कृष्णाय तस्मै नमो नमः ॥ १७॥ प्रत्याख्यात इति। तेनाक्रूरेणाप्येवं प्रत्याख्यातः स शतधन्वा महामणिं तस्मिन्नक्रूरे न्यस्य निधायाक्रूराधीनं कृत्वेत्यर्थः शतयोजनगं शतयोजनगन्तव्यदेशं ययौ ॥ १८॥ तदा गरुडो ध्वजे यस्मिन् तं रथमारुह्य हे राजन्महावेगैरश्वैर्गमनसाधनैः गुरुद्रुहं श्वसुरहन्तारं शतधन्वानमन्वयातामन्वगच्छताम् ॥ १९॥ मिथिलायामिति शतयोजनमात्रगामित्वात्ततः परं गन्तुमशक्तं पतितं हयमश्वं विसृज्य सन्त्रस्तः पद्भ्यामधावदेवं धावन्तं शतधन्वानं रुषा भगवानप्यन्वधावत् ॥ २०॥

### श्रीविजयध्वजतीर्थकृता पदरत्नावली

शतयोजनगं शतयोजनगमनसमर्थम् ॥ १८॥ गरुडो ध्वजे यस्य स तथा तं रथम् ॥ १९॥ मिथिलानगर्याः ॥ २०॥

### श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शिनी

न्यस्य न्यासरूपेण स्थापयित्वेति स्वात्मनोऽपि स्वधने ममत्वाधिक्यं दर्शितं शतयोजनगामित्वं तस्य स्वभाव एव विपत्प्राप्तत्वे तु बहुशतयोजनगमनसामर्थ्यमपि ज्ञेयम् अतो द्वारकातो मिथिलोपवनपर्य्यन्तमतिकष्टेन गत्वा तत्रैवाश्वो मृत इति वक्ष्यते ॥ १८॥ गुरुद्रुहं श्वसुरहन्तारम् ॥ १९-२०॥

### गूढार्थदीपिनी

तस्मिन् अक्रूरे ॥ १८॥ गुरुः श्वशुरः सत्राजित् तद्धन्तारं शतधन्वानम् ॥ १९-२०॥

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः

गुरुद्रुहं श्वसुरहन्तारम् ॥ १९॥ पतितमिति स्वभावतः शतयोजनगोऽपि आपदि ततोऽप्यधिकवलात्सम्वाहितोऽश्वो मिथिलाया उपवने पतितस्तं विसृज्य पद्भ्यामधावत् ॥ २०॥

### श्रीसत्यधर्मकृता श्रीभागवतटिप्पणी

तस्मै अद्भुतकर्मणे कृष्णाय नमः। अनन्तायानिर्मुक्तायादिभूताय कारणभूताय कूटस्थाय निर्विकारायात्मने सर्वान्तर्यामिणे नमो नमः। अनन्ताय शेषाय च नमः। अत एव विशकलय्य नमोद्विर्वचनं सम्भवदिति मन्तव्यम् ॥ २३॥ शतधन्वा तेनाप्यक्रूरेणापि महामणिं तस्मिन्नक्रूरे न्यस्य शतयोजनमेकस्मिन्नह्नि। अश्वमारुह्य ययौ। वृताके आरुह्य वडवां वेणान्ममार वडबा तदेति। तथा महाभारततात्पर्यनिर्णये। आरुह्य चाश्वमित्युक्तेश्च। अत्राश्वमित्युक्तिः पुंवच्छक्त्युक्त्येति मन्तव्यम्। पुल्लिङ्गेनोच्यते स्त्री च पुंवच्छक्तिमती यत इत्यादेः ॥ २४॥ गरुडो ध्वजे यस्य तम्। गुरुः श्वशुरः पञ्चमो गुरुरित्युक्तेः। श्वसुरद्रोहवन्तम् ॥ २५॥ पतितं मत्वा। व्रताकमहाभारतनिर्णययोः शतयोजनमात्रेण ममार बडबा तदा शतयोजनानां दिनेन गत्वा मृतायां बडबायां तदेवेत्यादि। सन्त्रस्तो भीतः पदातिधर्मज्ञत्वात्। तिग्मनेमिना तीक्ष्णधारेण वाससोः परीधानोत्तरीययोर्मणिं स्यमन्तकं व्यचिनोन्मार्गयामास ॥ २६-२७॥

## श्रीमद्वल्लभाचार्य्यकृता सुबोधिनी

एवं माहात्म्यमुक्त्वा कृतं स्वापराधं दूरीकर्तुं भगवन्तं नमस्यति **नमस्तस्मै भगवत** इति। अचिन्त्यैश्वर्यत्वात् अन्यथा-ज्ञात्वा कृतोपराधः, अतः क्षन्तव्य इति। **कृष्णायेति**। भक्तहितार्थमेवावतीर्णत्वमुक्तम्। किञ्च। भगवदिच्छा एतादृशीति हतः सत्राजित्, तदधुना विपरीतमापतितम्, अनुग्रहं कुर्वन् निग्रहं करोति। एतद्वा विपरीतम्। तदाह **अद्भुतकर्मणे** इति। अशक्यः प्रतीकार इति वक्तुमाह **आदिभूतायेति**। न कस्याप्यपराधोऽपीति सूचितम्। **कूटस्थायेति** दोषाभावः। न केनाप्यपराधः कर्तुं शक्य इत्यपि सूचितम्। परमामुपपत्तिमाह सर्वदोषपरिहाराय **आत्मने नम** इति। एवं तेनापि सर्वथा युद्धं निवारयितुं प्रत्याख्यातः पलायनप्रेप्सुः स मणिर्यत्र क्वापि वधं प्राप्स्यतीति मणिं तस्मिन् स्थापयित्वा शतयोजनगं सैन्धवमश्वमारुह्य **ययौ** ॥ १८॥ ग्रामाद्रात्रावेव निर्गतः। न्यासो न देय इति ज्ञापितम्। तस्मिन् मृते तदीयाः प्राप्स्यन्तीति नान्यो भगवते मणिं प्रयच्छति, महामणित्वात् दातुमपि न शक्यः। अद्भुतकर्मत्वान्न ग्रहीष्यतीत्यपि सूचितम्। अतः स्थापयित्वैव पलायनमेवोचितम्। ततो लोके पलायितः शतधन्वा एकेन दिनेन शतयोजनानि गत इति द्वितीयदिवसे लोकवार्ता निर्गता, तदा भगवान् यत् कृतवांस्त-दाह **गरुडध्वजमारुह्ये**ति। तस्मिन्नेव दिवसे चेद्गच्छेत्, तदा निकट एवोपलम्भः स्यात्। द्वितीये दिवसे मध्याह्ने निर्गतः। तावता स योजनानां शतद्वयमतिक्रम्य गतः। भगवान् पुनः रथान्तरं शीघ्रगामि न भवतीति, अलौकिकं च न कर्तव्यमिति, गरुडध्वजमेव रथमारुह्य एकस्मिन्नेव सर्वसामग्रीं गृहीत्वा, प्रमाणाद्यपेक्षां परित्यज्य, रामजनार्दनौ सत्साधनपूर्णप्रयत्नौ महावेगैः अश्वैः सैन्यादिभिः कृत्वा अन्वयाताम्, पृष्ठतो मारणार्थमनुगतौ। अवश्यं तथागमने हेतुः **गुरुद्रुहमिति**। गुरुः श्वशुरः पञ्चानां मध्ये गणितः। तस्मै द्रोहं कृतवानिति। **राजन्नि**त्यालस्याभावाय शौर्यं कथयन् सम्बोधयति। गुरुद्रोहकथनेनान्यदपि सूचितम्। 'प्रपन्नं विरथं भीतं न रिपुं हन्ति धर्मवि'दिति पक्षः परिहृतः॥ १९॥ तावता सः मिथिलानगरपर्यन्तं गत इति तत्र मारित इति वक्तुं तस्योपलम्भमाह **मिथिलाया** इति। अतिदूरगमनात् हयस्य श्रमात् पातः। ततः पद्भ्यां धावनम्। ततो भगवानपि रथेनानुगमनं निषिद्धमिति स्वयमपि पदातिरेव भूत्वानुगत इत्याह **कृष्णोऽपीति**॥ २०॥

## श्रीसुबोधिनीसारः

आश्चर्यकर्मणे भगवते कृष्णाय तस्मै नमः अनंताय सर्वकारणाय निर्विकारायात्मने नमः॥ १७॥ तेनाक्रूरेणापि प्रत्याख्यातः स शतधन्वा महामणिं स्यमंतकं तस्मिन्नक्रूरे न्यस्य संस्थाप्य "धनस्य ग्राहिणः सर्वे नात्मानं घ्नंति केवलम्" इति नीतेः। शतयोजनगामिनमश्वमारुह्य ययौ द्वारकातो जगाम॥ १८॥ गरुडो ध्वजे यस्य तं रथं रामकृष्णावारुह्य महावेगै-र्मनोजवैरश्वैर्गुरुद्रुहं श्वशुरघातिनमन्वगच्छताम् हे राजन्॥ १९॥ मिथिलाया उपवने पतितं मृतं हयमश्वं विसृज्य त्यक्त्वा संत्रस्तोतिभीतः पद्भ्यामधावत् कृष्णोपि पद्भ्यामेव रुषा क्रोधेनान्वद्रवत् अन्वयात्॥ २०॥

## गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

"अतः स केवलं नमस्कार्य एव' इत्यभिप्रायेण नमस्करोति—नम इति। भगवते ऐश्वर्यादिषड्गुणपूर्णाय, अत एव अद्भुतं देवमनुष्यादिष्वसम्भावितं कर्म यस्य तस्मै, अनन्तायापरिच्छिन्नाय, आदिभूताय सर्वकारणाय, कूटस्थाय स्वरूपतः स्वभावतश्च निर्विकाराय, आत्मने सर्वान्तरात्मने, तस्मै पूर्वोक्ताय कृष्णाय नमो नम इति त्रयाणामन्वयः॥ १७॥ तेनाक्रूरेणा-प्येवं प्रत्याख्यातः स शतधन्वा महामणिं तस्मिन्नक्रूरे न्यस्य अक्रूराधीनं कृत्वा शतयोजनं गच्छतीति तथाभूतमश्वमारुह्य ययौ अपलायत्॥ १८॥ तदाह—हे राजन्! गरुडो ध्वजे यस्य तं रथमारुह्य रामकृष्णौ महावेगैरश्वैर्गुरुद्रुहं श्वशुरहन्तारं शतधन्वानं अन्वयातां अन्वगच्छताम्॥ १९॥ शतयोजनमात्रगामित्वात्ततः परं गन्तुमशक्तं मिथिलाया उपवने पतितं हयं विसृज्य सन्त्रस्तः शतधन्वा पद्भ्यामधावत्। कृष्णोऽपि रुषा क्रोधेन तमन्वद्रवत्॥ २०॥

## अन्वितार्थप्रकाशिका

नम इति॥ स्पष्टम्॥ १७॥ प्रतीति॥ तेनाक्रूरेणाप्येवं प्रत्याख्यातः स शतधन्वा महामणिं तस्मिन्नक्रूरे न्यस्य अक्राधीनं कृत्वा शतयोजनं गच्छतीति तथाभूतमश्वमारुह्य ययौ अपलायत। शतयोजनगामित्वं तदश्वस्य स्वभाव एव। विपदि तु बहुयोजनगमनसामर्थ्यमपि ज्ञेयम्। अतो द्वारकातो मिथिलोपवनपर्यन्तमतिकष्टेन गत्वाऽश्वो मृत इति वक्ष्यते॥ १८॥ गरुडेति॥ हे राजन्! गरुडो ध्वजे यस्य तं रथमारुह्य रामजनार्दनौ महावेगैरश्वैर्गुरुद्रुहं श्वशुरहन्तारं शतधन्वानम् अन्वयाताम् अन्वगच्छताम्॥ १९॥ मिथिलाया इति॥ शतयोजनमात्रगामित्वात्। ततः परं गन्तुमशक्तं मिथिलाया उपवने पतितं हयं विसृज्य सन्त्रस्तः शतधन्वा पद्भ्यामधावत्। कृष्णोऽपि रुषा क्रोधेन तमन्वद्रवत्॥ २०॥

### श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्

कूटस्थाय कूटं पर्वतशिखरं तद्वत् तिष्ठति सांसारिकसुखदुःखेष्वचलतया स्थितो भवतीति तथाभूताय केनाप्यपराभूतायेत्यर्थः। आत्मने परमात्माने ॥ १७ ॥ तस्मिन्नक्रूरे न्यस्य न्यासरूपेण धृत्वा ॥१८॥ गुरुद्रुहं श्वशुरहंतारं ॥१९॥ मिथिलाया जनकपुरस्य ॥ २० ॥

### भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

ततः स केवलं नमस्कार्य एवेत्यभिप्रायेण नमस्करोति। नम इति। भगवते षाड्गुण्यपूर्णाय, अद्भुतममानुषमदैवं च कर्म यस्य तस्मै, अनन्ताय अपरिच्छेद्यस्वरूपस्वभावादिकाय, आदिभूताय जगत् कारणभूताय, कूटस्थाय स्वरूपस्वभावतश्च निर्विकाराय, आत्मने सर्वान्तरात्मने, तस्मै, कृष्णाय नमः नमः ॥ १७ ॥ प्रत्याख्यात इति ॥ तेनाक्रूरेणापि, प्रत्याख्यातः सः, शतधन्वा, महामणिं तस्मिन्नक्रूरे, न्यस्य निधायाक्रूराधीनं कृत्वेत्यर्थः। शतयोजनगं अश्वं आरुह्य, ययौ। केचित्त्वत्रान्तर्यामिकृष्णनियुक्तस्तस्मिन्नक्रूरे मणिं न्यस्यापलायतेत्यूचुः ॥ १८ ॥ गरुडध्वजमिति ॥ तदा, गरुडो ध्वजे यस्य तं, महावेगैः, अश्वैः, योजितमिति शेषः। रथं, आरुह्य, रामजनार्दनौ, हे राजन्, गुरुद्रुहं श्वशुरहन्तारं शतधन्वानं, अन्वयातां तत्पश्चादगच्छताम्॥१९॥ मिथिलाया इति ॥ शतयोजनमात्रगामित्वात् ततः परं गन्तुमशक्तत्वात्, मिथिलायाः उपवने, पतितं हयमश्वं, विसृज्य, संत्रस्तः सन्, पद्भ्यां स्वपादाभ्यां, अधावत्। एवं धावन्तं शतधन्वान, रुषा हेतुना, कृष्णः स्वयं श्रीकृष्णोऽपि, अन्वद्रवत्तत्पश्चादधावदित्यर्थः ॥ २० ॥

### कृष्णप्रिया

भैया मैं तो उन पूर्णपुरुषोत्तम भगवान के श्रीचरणों को नित्य नमस्कार करता हूँ। श्रीकृष्ण चरित्र अत्यंत अद्भुत है, वे तो अनादि अनन्त एकरस एवं आत्मस्वरूप है। केवल उनको नमस्कार ही करते रहें ॥ १७ ॥ शतधन्वा को जब श्रीअक्रूर जी ने भी स्पष्ट उत्तर दिया तब निराश शतधन्वा ने निरुपाय वनकर स्यमन्तकमणि को श्री अक्रूरजी के समीप कर स्वयं चार सौ कोस पर्यन्त अविश्रान्त दौड़ने वाले अश्वपर सवार होकर वेगीली गति से दौड़ पड़ा ॥ १८ ॥ राजन् परीक्षित्! भगवान् श्रीकृष्ण एवं श्रीवलरामजी भी अपने वेगीले गरुडध्वज पर सवार हुए और अतिशीघ्र गतिवाले अश्वों से जुड़े हुए रथपर चढ़कर और ध्वजा फहराकर अपने पितृतुल्य श्वसुर सत्राजित का वध करने वाले शतधन्वा के पीछे दौड़ गए ॥ १९ ॥ शतधन्वा का अश्व थक पड़ा और मर गया। मिथिलापुर पर्यन्त तो दौड़ आया था। शतधन्वा भी भयभीत बना था। मरे अश्व को वहीं मिथिला के उद्यान के निकट छोड़ दिया। रोषान्विष्ट श्रीकृष्ण भी शतधन्वा के पीछे दौड़े ॥ २० ॥

**पदातेर्भगवांस्तस्य पदातिस्तिग्मनेमिना। चक्रेण शिर उत्कृत्य वाससोर्व्यचिनोन्मणिम्[1] ॥ २१ ॥**
**अलब्धमणिरागत्य कृष्ण आहाग्रजान्तिकम्। वृथा हतः शतधनुर्मणिस्तत्र न विद्यते ॥ २२ ॥**
**तत आह बलो नूनं स मणिः शतधन्वना। कस्मिंश्चित् पुरुषे न्यस्तस्तमन्वेष पुरं व्रज ॥ २३ ॥**
**अहं विदेहमिच्छामि द्रष्टुं प्रियतमं मम। इत्युक्त्वा मिथिलां राजन् विवेश यदुनन्दनः ॥ २४ ॥**

### कर्दमक्षमा

अन्वयः—पदातेः, तस्य, पदातिः, भगवान्, तिग्मनेमिना, चक्रेण, तस्य, शिरः, उत्कृत्य, वाससोः, मणिम्, व्यचिनोत् ॥ २१ ॥ अलब्धमणिः, कृष्णः, अग्रजान्तिकम्, आगत्य, आह, शतधनुः, वृथा, हतः, तत्र, मणिः, न, विद्यते ॥ २२ ॥ बलः, तत, आह, नूनम्, शतधन्वना, सः, मणिः, नूनम्, कस्मिंश्चित्, पुरुषे, न्यस्तः, पुरम्, व्रज, तम्, अन्वेष ॥ २३ ॥ राजन्! मम, प्रियतमम्, विदेहम्, द्रष्टुम्, इच्छामि, इति, उक्त्वा, यदुनन्दनः, मिथिलाम्, विवेश ॥ २४ ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

व्यचिनोन्मृगया मास। अक्रूरे मणिरस्तीति सर्वज्ञतया विदित्वाऽपि रामवंचनाय तथा कृतवानिति भावः ॥२१-२२॥ अन्वेषान्विच्छ ॥ २३ ॥ सर्वज्ञस्यैवं विचेष्टितं मद्वंचनायेति मत्वा गूढमन्युराह। अहमिति ॥ २४ ॥

---

१. व्येष्टुं-वीरं; व्येषत्-बिज.

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

पद्भ्यामातिर्गमनं यस्य स पदातिः। तस्य शतधन्वनः। तिग्मनेमिना चण्डधारेण। इति भाव इति–जानन्नेवायमेतन्मारणार्थमेवात्रागत इति रामो मदुपरि क्रुद्धो मा भवेदतोऽजानन्निववर्पस्त्रयोर्मणेरन्वेषणं चकारेति तात्पर्यम्॥ अतो धावतोऽपि 'भगवान्' इति पाठे सर्वज्ञोऽपि अक्रूरे मणिरस्तीति सर्वज्ञतया ज्ञात्वापि दूरात्पश्यतो रामस्यैव मोहनाय व्यचिनोत्। तन्मोहनं च—स्वस्माद्वियुक्तस्य तस्य स्वप्रिये बहुलाश्वे नृपे कृपाभरप्रापणार्थमिति ज्ञेयम्॥२१॥ तत्र शतधन्वनि॥ अग्रजस्यांतिकमागत्य वृथा हत इति गूढपुरुषाणामन्यथात्वं व्यञ्जितम्॥ २२॥ उदासीनो बलस्तदाऽऽचरणेन किञ्चित्कुपित इत्याह तत इति। ततः शतधनुषो वधानन्तरम्। तं मणिम्, पुरुषं वा। अन्विच्छ मार्गय॥ नूनमित्यादि प्रणयकोपवाक्यम्। कस्मिंश्चिदिति–योग्यत्वादक्रूर एव तर्कित इति॥ २३॥ अधुना त्वया सार्द्धं न गच्छामीत्याह—सर्वज्ञस्येति॥ यस्य मणेः संबंधेन तादृशं कलंकं लब्ध्वा बिलप्रवेशाद्यनेन कृतं तस्मै मणये तादृशमपि व्यवहारवन्तमक्रूरमयं। ज्ञात्वापि तत्पक्षपातं न त्यक्ष्यति तत्सम्बन्धेन च पुनर्लोकापत्रादश्च प्राप्स्यत्यसाविति मया दुःखसन्दग्धेन सन्निधानं न शक्यत इत्यभिप्रेत्य प्रणयकोपं व्यनक्ति—अहमिति। यदुनंदन इति—यादवानन्दनार्थं द्वारकां गन्तुमर्होऽपीत्यर्थः। विदेहमिति—अहं त्वदीयद्वारकामपि न यास्यामि, त्वं स्वप्रियायै मणिं स्वच्छन्देनैव देहीति भावः। हे राजन्निति श्रीभगवल्लीलाश्रवणेन राजमानत्वात्॥ २४॥

### श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी

अतो धावतोऽपि भगवानिति पाठे सर्वज्ञोऽपि व्यचिनोत् दूरतः पश्यतः श्रीरामस्य वञ्चनाय इति भावः। प्रियजनप्रेममयनरलीलाकौतुकेच्छावेशमयरुषा श्रीरामाग्रतो नानीय मणिवृत्तान्तमपृष्ट्वैव चोत्कर्त्तनं ज्ञेयं शतधन्वनि स्वरोषातिशयव्यञ्जनार्थम् अत्रायमभिसन्धिः अक्रूरे स्वभक्तेऽपि दुःसङ्गदुरनुसन्धानदर्शनात् किञ्चित्कालपरित्यागातङ्कनादिलक्षणशासनेच्छा भगवत आसीत् सङ्कोचतः सा च न साक्षादात्मकर्तृका अत एवाऽऽत्मनो भक्तमनोरथपरिपूरणस्वभावत्वाच्च तस्यैव च मणियोग्यत्वात्तस्मै मणिदित्साऽप्यवर्त्तत अत एव चेममभिप्रायम् रहसि मणिं लब्ध्वा स्वयमेवासौ पलायतां पश्चाद्विचारयितव्यम् आपाततः श्रुते तद्वृत्तान्ते मदग्रजेनान्येन च तस्मिन् दुःखं प्राप्स्यते ततः सर्वं विश्रृङ्खलं भविष्यतोति॥ २१॥ अग्रजस्यान्तिकमागत्य वृथा हत इति गूढरुषा दीनमन्यथात्वं व्यञ्जितम्॥ २२॥ नूनमित्यादिकं प्रणयकोपवाक्यं कस्मिंश्चिदिति योग्यत्वादक्रूर एव तर्कितः अन्वेष अन्विच्छ॥ २३॥ यस्य मणेः सम्बन्धेन तादृशं कलङ्कं लब्ध्वा बिलप्रवेशाद्यनेन कृतं तस्मै मणये तादृशमपि व्यवहरन्तमक्रूरं मद्वज्ज्ञात्वाऽपि नूनं तत्पक्षपातं न त्यक्ष्यति तत्सम्बन्धेन पुनर्लोकापवादं च प्राप्स्यत्यसाविति मया दुःखदग्धेन सन्निधातुन्न शक्यत इत्यभिप्रेत्य प्रणयकोपं व्यनक्ति। अहमिति। यदुनन्दन इति यादवानन्दनार्थं द्वारकायाङ्गन्तुमर्होऽपीत्यर्थः॥ २४॥

### श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी

अतो धावतोऽपि पाठान्तरे सर्व्वज्ञोऽपि व्यचिनोत्, उत्कृत्य दूरादेवोच्चैश्छित्वा, रुषैव किंवा अक्रूरपक्षपातेनाग्रजवञ्चनाय शतधन्वमुखतो मणिवृत्तान्तश्रवणादिबोधनार्थम्॥ २१॥ अग्रजस्यान्तिकमागत्य आहेत्यस्य कर्म्मपदाप्रयोगः साक्षादग्रज-वञ्चनायोग्यतया स्वयमेव भाषणात्, अतएवाग्रजशब्दः तत्र तस्मिन्॥ २२॥ ततस्तत्पश्चादिति अक्रूरपक्षपातेन श्रीभगवता स्वस्य वञ्चनया महाधिना क्षणविलम्बात्, बल इति स्नेहबलाधिक्यादन्तः कुपितः सन्निति भावः। नूनं वितर्के, पुरुषे तवैव भक्तवर इत्यर्थः। इत्यादिकं सर्व्वं प्रणयकोपादेव॥ २३॥ मम प्रियतममिति त्वत्प्रियतमं त्वं गत्वा पश्येति भावः। किञ्च, प्रियास्त्वद्भक्ता यादवास्तेभ्योऽप्यधिकप्रियं वैदेहानां प्रायो ज्ञानपरत्वात् त्वत्कृतोपेक्षयाधुना भक्तान् विहाय ज्ञानिनामेव संगं करिष्य इति, यदुनन्दन इति यादवानन्दनार्थं द्वारकायामागन्तुमर्होऽपीति; हे राजन्निति च भक्तिमतां भगवति प्रणयकोपपारिपाटी त्वया बुध्यत एवेति भावः; यद्वा, अन्तःप्रणयकोपभरात्तेजसा राजमान॥ २४॥

### श्रीमद्वीरराघवाचार्यकृता भागवतचन्द्रचन्द्रिका

पदातिरिति तिग्मनेमिना तीक्ष्णधारेण चक्रधारेण तस्य शिर उत्कृत्य छित्वा तस्य वाससोरन्तरीयोत्तरीययोर्मणिं व्यचिनोत् मृगयामास अक्रूरे मणिरस्तीति सर्वज्ञतया विदित्वापि रामवञ्चनार्थं तथा कृतवानित्यर्थः॥ २१॥ तदाह— अलब्धमणिरिति तं लब्धो मणिर्येन तथाभूत अग्रजान्तिकमागत्योवाच उक्तिमेवाह—वृथेति। तत्र शतधन्वनि॥ २२॥ एवं वञ्चितोऽपि स बलो बलभद्रः सर्वज्ञत्वात् तं कृष्णमाह—नूनमिति। नूनं कस्मिंश्चित्पुरुषे स मणिर्न्यस्तः अतस्तमन्वेष्टुं स्वपुरं द्वारकां गच्छेति॥२३॥ ततः पुनः सर्वज्ञेनैवं चेष्टितं मद्वञ्चनायेति गूढमन्युराह—अहमिदि वैदेहं जनकम् इतीति। हे राजन्! यदुनन्दनो बलभद्रः॥ २४॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

पद्भ्यामातिः सततं गमनं यस्य स तथा तस्य तिग्मनेमिना चण्डधाराग्रेण व्यचिनोत् अन्वेषणं कृतवान् ॥ २१–२२ ॥ अन्वेषन् मार्गणं कुर्वन् ॥ २३–२४ ॥

### श्रीसत्यधर्मकृता श्रीभागवतटिप्पणी

ज्ञाताक्रूरस्थापिततत्कोऽपि बलप्रयुक्तापयशोऽपि स्वस्य मार्जयितुमार्जयामासेमां रीतिमिति ज्ञेयम् ॥ २७ ॥ अग्रजस्यान्तिमं समीपं वृथा हतोऽस्मिन्हते न हतः सत्राजिद्ध्रुवत्युज्जीवित इति रत्नालाभाच्च वृथेत्युक्तिः शतधनुशतधन्वाशब्दौ पर्यायावित्येवमुक्तम् ॥ २८ ॥ ततो नात्र रत्नमिति कृष्णवचनानन्तरम् । बल आह । अन्तर्वचनं कृतं कृष्णेनेत्यङ्कुरितरोषो बहिः किञ्चिद्विधाय सारथिं बोधयन्पथ्यन्तरं वक्ति । नूनमिति । स मणिः शतधन्वना कस्मिंश्चित्पुरुषे न्यस्तो नूनं निश्चयः तं पुरुषमन्वेषं कुर्वन्नुरं व्रज । तदाकर्ण्य महारोषादुवाच वचनं बलः । कपटी त्वं सदा कृष्ण लोभी पापी सुनिश्चितम् । अथापि स्वजनं हंसि कस्त्वा बन्धुः समाश्रयेत् । अनेकशपथैः कृष्णो बलदेवं प्रसादयन् । सोऽपि धिक्कष्टमित्युक्त्वा ययौ वैदर्भमण्डलमित्यादि व्रतार्के । श्यमन्तकार्थे रामोऽपि कृष्णस्य विमनाऽभवदिति च्छिन्नभक्तगणनाग्रस्ता श्रीमतामुक्तेश्च ॥ २९ ॥ इच्छानिमित्तमाह । मम प्रियतरमिति ॥ ३० ॥

### श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शिनी

अक्रूरे मणिरस्तीति सर्वज्ञतया ज्ञात्वाऽपि दूरात् पश्यतो रामस्यैव मोहनार्थं व्यचिनोत् तन्मोहनं च स्वस्माद्वियुक्तस्य तस्य स्वप्रिये बहुलाश्वे नृपे कृपाभरप्रापणार्थमिति ज्ञेयम् ॥ २१–२२ ॥ अन्वेष अन्वेषय ॥ २३ ॥ सर्वज्ञस्यैवं चेष्टितं मद्वञ्चनार्थमेवेति मत्वा तन्मोहितत्वादेव तं प्रति गूढमन्युराह—अहमिति । त्वदीयद्वारकामप्यहं न यास्यामि त्वं स्वप्रियायै मणिं स्वच्छन्दनैव दहीति भावः ॥ २४ ॥

### गूढार्थदीपिनी

तिग्मनेमिना तीक्ष्णधारेण शिरः उत्कृत्य छित्वा । व्यचिनोत् अन्वेषयामास ॥ २१–२२ ॥ अन्वेषय ॥ २३–२४ ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

तस्य गुरुद्रुहः शिरः उत्कृत्य च्छित्वा व्यचिनोत् मृगयामास सर्वज्ञस्यापि लीलावशात्तथैवोचितत्वात् ॥२१–२२॥ मणिस्तत्र विद्यते इति भगवतोक्तम् अक्रूर अस्तीति वक्तुं तु लीलायामनौचित्यत्वात् अथ बलोऽपि भगवदनुरूपमाह—कस्मिंश्चित्पुरुषे न्यस्तमन्वेष अन्विच्छेति ॥ २३–२५ ॥

### श्रीमद्वल्लभाचार्यकृता सुबोधिनी

स्वयमपि पदातिः तस्य पदातेः तिग्मनेमिना अप्रतिहतेन सुदर्शनेन शिरस्तस्योत्कृत्य, धावनसमय एव शरीरं धावमानमेव स्थितम् । शिरस्तु छिन्नमिति । **भगवानिति** मोक्षदानार्थं तथा कृतवानिति निरूपितम् । अत एव भगवानद्भुतकर्मा बलभद्रः पश्यतीति तत्र मण्यभावं ज्ञात्वापि वाससोः **व्यचिनोत्**, विवेचनेन अन्वेषणं कृतवान् ॥ २१ ॥ बलभद्रविचारेण स मारित इति ज्ञात्वापि भगवांस्तथा कृतवान् । मण्यर्थमेव मारणमिति बलभद्रविचारः । सर्वथा मारणीय इति भगवतः । लोकवद्बलभद्रः बहुविधानि वाक्यानि श्रुत्वा मणिसद्भाव एव तस्यापराधं जानीयात् । अन्यथा लोकोन्यथापि वदतीति विश्वासं न कुर्यादत आह भगवान् । अलब्धमणिरग्रजान्तिकमागत्य वृथा हतः शतधनुरिति । सर्वज्ञत्वे भगवतोऽपराधः स्यात् । ज्ञात्वैवान्यत्र गत इति । सर्वकर्तृत्वमपि सर्वज्ञत्वे भविष्यतीति सुतरामेवापराधः स्यात् । ततोऽज्ञानमाख्यं कर्तव्यम् । **अहतो वृथेत्यपि** वाक्यं भवति । गुरुद्रोहात् हत एव सार्थको भवतीति । अन्यथा अकृतनिर्वेशो भवेत् । मणिस्तु न विद्यत इत्युभयत्र समानम् ॥ २२ ॥ ततो बलभद्र एव युक्त्यभिज्ञः भगवन्तमाहेत्याह **तत आह बल** इति । नूनमिति तस्य वाक्यम् । अवश्यं मणिरन्वेष्टव्यः । यदि तत् स्थाने नास्ति, तदा नूनं स मणिः **शतधन्वना,** शतधन्वन्शब्दः कस्मिंश्चित्पुरुषे, न तु खाते, भार्यादौ वा । पुरुषपदेन महानेव कश्चित्सूचितः । **न्यस्तः** न्यासप्रकारेण स्थापितः । ततः किं विधेयमित्याकाङ्क्षायामाह **तमन्वेष्टुं पुरं व्रजेति** । ननु स्वगृहे गन्तव्यम्, कार्यं न जातमिति ॥२३॥ स्वस्यान्यथा विनियोगमाह **अहं विदेहमिच्छामीति** । भूभारहरणार्थमुभौ समागतौ । लोकाश्च द्विस्वभावाः । यद्युभावप्येकासक्तौ स्याताम्, तदा पक्षान्तरे बलातिशयं दृष्ट्वा अपरो निवर्तेत, तदनुगुणो वा भवेत् । ततो भूमिभारस्तदवस्थ इति फले उभौ विरुद्धस्वभावौ जातौ । अतो दुर्योधनशिक्षार्थं बलो विदेहनगरे गच्छन् भगवन्तं द्वारकां प्रेषितवान् । इतःप्रभृत्येवोभयोः शक्तिर्विभक्ता । असम्मतिलीलाप्यन्योन्यं प्रदर्श्यते । अत एवाग्रे भगवद्वाक्यम् । 'किन्तु मामग्रजः सम्यक् न प्रत्येति मणिं प्रती'ति । ईश्वरशक्त्योर्विभक्तत्वात् तद्भक्तानामपि बुद्धि-

विभक्तेति अक्रूरभीष्मादीनां भगवद्भिन्नशीलत्वं वर्णितम्। अन्यथोभयविधाः न निरुद्धा भवन्तीति। अतो बलभद्रप्रकारेण ये निरुद्धाः, ते भगवतो नानुगुणाः। भगवता निरुद्धाश्च न बलभद्रानुगुणा इति। अनयोर्विभागे शास्त्रमपि विभक्तमिति ज्ञापयितुं विदेहपदम्। ज्ञाननिष्ठाः प्रियाः बलपक्षे। भक्तिनिष्ठाश्चापरत्रेति। क्रियाज्ञानशक्ती एकत्र। भक्तिपरमानन्दावपरत्र। अत एव विदेहः प्रियतमः। ततस्तन्निकटे गत्वा तद्दर्शनार्थं समुत्सुको जातः। ज्ञानपक्षे वेदमार्गो नात्यन्तमादरणीय इति गरुडध्वजो रथः भगवतैव गृहीतः। बलस्तु रथान्तरं समारुह्य पद्भ्यां वा गत इति निश्चीयते। बलभद्रो नियोगकर्तेति तस्यैव चरित्रं प्रथममाह इत्युक्त्वेति त्रिभिः। मिथिला नाम मथनाज्जातेति, न निर्मितेति कर्मज्ञानोद्भवस्तस्यां सूचितः। यदुनन्दन इति तदर्थमेव भगवदवतार इति तथाकरणमुचितमिति ज्ञापितम्॥ २४॥

### श्रीसुबोधिनीसारः

पदातेस्तस्य शतधन्वनः शिरस्तीक्ष्णधारेण चक्रेण उत्कृत्य छित्वा पदातिर्भगवान् वाससोर्वस्त्रयोर्मणिं व्यचिनोत् अमार्गयत्॥ २१॥ अलब्धः अप्राप्तो मणिर्येन स कृष्ण आगत्याग्रजस्य रामस्यांतिकं समीपम् आह शतधनुर्वृथा निष्फलं हतः तत्र तस्मिन् शतधनुषि मणिर्नास्ति॥ २२॥ ततोनंतरं बलदेव आह स मणिः शतधन्वना कस्मिंश्चित् पुरुषे नूनं निश्चयेन न्यस्तः स्थापितः तं मणिं पुरुषं वा त्वमन्वेष मृगय पुरं व्रज द्वारकां याहि॥ २३॥ मम प्रियतमं विदेहं राजानं द्रष्टुमहमिच्छामि इत्युक्त्वा यदुनंदनो रामो मिथिलां विवेश हे राजन्॥ २४॥

### गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

पदातिः पद्भ्यां गच्छन्नेव भगवांस्तस्य पदातेः शतधन्वनस्तिग्मनेमिना तीक्ष्णधारेण चक्रेण शिर उत्कृत्य छित्वा तस्य वाससोरन्तरीययोर्मणिं व्यचिनोत् मृगयामास॥२१॥ न लब्धो मणिर्येन स कृष्णः अग्रजस्य बलभद्रस्य अन्तिकमागत्याह। तदुक्तिमेवाह—वृथेति॥ २२॥ ततश्च बलः कृष्णमाह। तदुक्तिमाह—नूनमिति। शतधन्वना कस्मिंश्चित् पुरुषे स मणिर्न्यस्त इति नूनं निश्चितम्, अतस्तं मणिमन्वेषपुरं व्रज अन्वेष्टुं द्वारकां गच्छ॥ २३॥ अहं तु वैदेहं जनकं द्रष्टुमिच्छामि। तत्र हेतुमाह—मम प्रियतरमिति। ततश्च हे राजन्! यदुनन्दनो बलभद्रः कृष्णं प्रतीत्युक्त्वा मिथिलां पुरीं विवेश॥ २४॥

### अन्वितार्थप्रकाशिका

पदातेरिति॥ पदातिः पद्भ्यां गच्छन्नेव भगवांस्तस्य पदातेः शतधन्वनस्तिग्मनेमिना तीक्ष्णधारेण चक्रेण शिर उत्कृत्य च्छित्वा तस्य वाससोरन्तरीययोर्मणिं व्यचिनोत् मृगयामास। एतच्च रामवञ्चनाय अयमाशयः। स्वभक्तेऽक्रूरे दुःसङ्गेन दुष्कर्मप्रेरणदर्शनात् कञ्चित्कालं त्यागरूपशासनेच्छास्वभक्तत्वान्मणिलिप्सा च भगवत आसीत्। तावन्मात्रशासनं विकर्मप्रेरकाय मणिदानं चाग्रजो नानुमन्येतेत्यतो माज्ञासीदेव अयमक्रूरश्च मणिं गृहीत्वा ततश्च सर्वं स्वसंकल्पितं भविष्यतीति॥ २१॥ अलब्धेति॥ न लब्धो मणिर्येन स कृष्णः अग्रजस्य बलभद्रस्यान्तिकमागत्याह स्म। शतधनुर्वृथैव हतः। चारैर्मृषैवोक्तमिति भावः। यतस्तत्र मणिर्न विद्यते॥ २२॥ तत इति॥ ततश्च बलः सर्वज्ञस्यैवं विचेष्टितं मद्वञ्चनायेति गूढमन्युः कृष्णमाह स्म। शतधन्वना कस्मिंश्चित्पुरुषे स मणिर्न्यस्त इति नूनं निश्चितम्। अतस्तं मणिमन्वेष पुरं व्रज अन्वेष्टुं द्वारकां गच्छ। अन्वेषत्यार्थम्॥ २३॥ अहमिति॥ अहं तु मम प्रियतरं विदेहं जनकं द्रष्टुमिच्छामि। ततश्च हे राजन्! यदुनन्दनो बलभद्रः कृष्णं प्रतीत्युक्त्वा मिथिलां पुरीं विवेश॥ २४॥

### श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्

पदातेः। पद्भ्यां गच्छतस्तस्य शतधन्वनः। तीक्ष्णधारेण उत्कृत्य छित्वा। वाससोर्वस्त्रयोः। व्यचिनोत् अन्वेषयामास सर्वज्ञस्य भगवत एतच्चरित्रं मनुष्यनाट्यदर्शनाय भवति॥ २१–२२॥ तं अन्वेषतस्यान्वेषणं कुरु॥ २३॥ यदुनंदनो रामः मणिरस्ति तथापि मम न दर्शित इति भ्रमेण रोषं व्यंजयन्मिथिलांग इति हरिवंशादौ प्रसिद्धिः अत्रापि न प्राप्तेति मणिं प्रतीत्यग्रे वक्ष्यते॥ २४–२५॥

### भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

पदातेरिति॥ पदातिः, भगवान्, वध्यं पदातिं विलोक्य धर्माश्रयः स्वयं कृष्णः पादाभ्यां गच्छन् सन्नित्यर्थः। पदातेः पादाभ्यां गच्छतः तस्य शतधन्वनः, शिरः, तिग्मनेमिना तीक्ष्णधारेण, चक्रेण, उत्कृत्य छित्वा, तस्य वाससोर्वस्त्रयोः, मणिं व्यचिनोन्मृगयामास। अत्र केचिदक्रूरे मणिरस्तीति सर्वज्ञतया विदित्वापि रामवञ्चनार्थं तथा कृतवानिति भाव इत्यर्थाभ्यामूचुस्तद्विचाराहमस्ति। सदा स्वहितंकररामवञ्चनस्यानर्हत्वात्। ततो नृनाट्यानुकरणमेतदित्येव वक्तुं युक्तमत्र॥२१॥ अलब्धेति।

कृष्णः, अलब्धमणिः सन्, अग्रजान्तिकं आगत्य, शतधनुः, वृथा हतः। तत्र शतधन्वनि, मणिः न विद्यते इति, आह ॥ २२ ॥ तत इति ॥ ततः, बलः, शतधन्वना, सः मणिः, कस्मिंश्चित्पुरुषे, न्यस्तः स्यात् नूनम्। ततः तं मणिं, अन्वेष पुरं व्रज, इति आह ॥ २३ ॥ गूढान्तर्मन्युः कृष्णं प्रति भूय आह। अहं मम, प्रियतरं विदेहं, द्रष्टुं इच्छामि। इति उक्त्वा, हे राजन्, यदुनन्दनो बलः, मिथिलां विवेश ॥ २४ ॥

**कृष्णप्रिया**

शतधन्वा जब पैदल ही भाग रहा था तब नीति जानने एवं मानने वाले भगवान् श्रीकृष्ण भी उसके पीछे पैदल ही दौड़े। प्रभु ने तेजीली धारवाले सुदर्शन चक्र से उसका मस्तक उतार लिया और उसके वस्त्रों में स्यमन्तक मणि ढूंढा ॥२१॥ वस्त्रों में ढूंढने पर जब मणि न मिली तब भगवान् ने अपने बड़े भाई बलभद्रजी के समीप आकर कहा कि भैयाजू शतधन्वा को व्यर्थ मारा स्यमन्तक मणि उसके समीप न थी ॥ २२ ॥ श्रीबलभद्रजी ने कहा कि निश्चित बात है कि शतधन्वा ने स्यमन्तकमणि को किसी न किसी के पास रखी होगी आप द्वारिका जाओ मणि का पता लगाओ ॥ २३ ॥ मैं अपने प्रिय सुहृद महाराज विदेहजी को देखना चाहता हूँ आप जानते हैं कि वे मेरे निकट के मित्र हैं। राजन् परीक्षित्! ऐसा कहकर यदुवंश शिरोमणि श्रीबलभद्रजी मिथिला नगरी में पधार गये ॥ २४ ॥

**तं दृष्ट्वा सहसोत्थाय मैथिलः प्रीतमानसः। अर्हयामास विधिवदर्हणीयं[1] समर्हणैः ॥ २५ ॥**
**उवास तस्यां कतिचिन्मिथिलायां समा विभुः।**
**[2]मानितः प्रीतियुक्तेन जनकेन महात्मना। ततोऽशिक्षद् गदां काले धार्तराष्ट्रः सुयोधनः ॥ २६ ॥**
**केशवो द्वारकामेत्य निधनं शतधन्वनः। अप्राप्तिं च मणेः प्राह प्रियायाः प्रियकृद् विभुः ॥ २७ ॥**
**ततः स कारयामास [3]क्रियां बन्धोर्हतस्य[4] वै। [5]साकं सुहृद्भिर्भगवान् या याः स्युः साम्परायिकाः ॥२८॥**

**कर्दमक्षमा**

अन्वयः—प्रीतमानसः, मैथिलः, तम्, दृष्ट्वा, सहसा, उत्थाय, अर्हणीयम्, समर्हणैः, विधिवत्, अर्हयामास ॥ २५ ॥ प्रीतियुक्तेन, महात्मना, जनकेन, मानितः, धार्तराष्ट्रः, सुयोधनः, ततः, गदाम्, काले, अशिक्षत् ॥ २६ ॥ प्रियायाः, प्रियकृत्, विभुः, केशवः, द्वारिकाम्, एत्य, शतधन्वनः, निधनम्, च, मणेः, अप्राप्तिम्, प्राह ॥ २७ ॥ ततः, सः, भगवान्, हतस्य, बन्धोः, याः, याः, साम्परायिकाः, क्रियाः, स्युः सुहृद्भिः, साकम्, कारयामास ॥ २८ ॥

**श्रीधरस्वामिविरचिता भावार्थदीपिका**

कतिचित्समाः संवत्सरान् प्रासंगिमाह। तत इति ॥ २६ ॥ सत्यभामामप्यवंचयदिति सूचयन्नाह केशव इति ॥२७॥ बन्धोः सत्राजितः। सांपरायिकाः पारलौकिक्यः ॥ २८ ॥

**श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः**

तं बलम्। अर्हणीयं पूजनीयम्। सहसेत्याकस्मिकैकाकितया गमनात्। 'अर्हण्यं वै' इति पाठेपि स एवार्थः। समर्हणैरुत्तमपूजाद्रव्यैः ॥ २५ ॥ प्रासंगिकं प्रसंगायातम्। ततो बलदेवात्। काले श्रीकृष्णतो रुष्टैकांतागतत्वान्निजावसरे। धार्तराष्ट्र इति-दुर्मंत्रदक्षस्य पितुः प्रेरणादित्यर्थः। मानित इत्यस्य विभुरित्यनेनैवान्वयः। योग्यत्वात्तदेवाह—महान् श्रीकृष्णे तत्प्रियगणे चैव गतत्वात्सर्वोत्कृष्ट आत्मा मनो यस्य तेन ॥ २६ ॥ मण्यप्राप्तिकथनेन तस्या अपि वंचनमेव। प्रियायाः प्रियकृदिति-आयुरभावादेव त्वत्पितरं जीवयितुमशक्यः किन्तु त्वत्पितृहंता मया स्वहस्तेन हत इति प्रियां प्रत्युक्तेः। केशव इति-तथा शीघ्रगतो वीर्यसूचनं, ब्रह्मेशवशकारित्वाद्धेलया हततादृशक्लेशत्वाद्वा। प्राह प्रकर्षेण दूरधावनाद्यभिव्यंजनेनाह। यतो विभुरपि प्रेमवशत्वात्प्रियायाः प्रियकृदिति तोषिणी ॥ २७ ॥ ततो द्वारकाप्राप्त्युत्तरम्। कारयामास श्रीसत्यभामयेति। वै प्रसिद्धौ। यायास्तास्ताः। हतस्य चौरेण। शस्त्रहतेरनुरूपास्तत्प्रायश्चित्तपूर्विका इत्यर्थः ॥ २८ ॥

**श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी**

सहसेत्यकस्मात् एकाकितयैवाऽऽगमनात् अर्हण्यम् अर्हणयोग्यं वै प्रसिद्धौ अर्हणीयमिति पाठे स एवार्थः समर्हणैः उत्तमपूजाद्रव्यैः ॥ २५ ॥ उवासेति सार्द्धकम्। तस्यां स्वभक्तपालितायां विभुरीश्वरः सन् काले तस्य श्रीकृष्णतो रुष्टैकान्ता-

१. र्हणं वै-च पु. टि.; र्हण्यं वै त-प्रा. पा। २. पूर्वार्द्धौ व्यत्यस्तौ-विज। ३. यां-विज. । ४. मृ-विज. । ५. सार्द्धं-प्रा. पा. ।

गतत्वान्निजावसरे धार्त्तराष्ट्र इति दुर्मन्त्रदक्षस्य पितुः प्रेरणादित्यर्थः। मानित इत्यस्य विभुरित्यनेनैवान्वयः। योग्यत्वात् तदेवाह—महात्मना महान् श्रीकृष्णे तत्प्रियगण एव च गतत्वात्सर्वोत्कृष्ट आत्मा यस्य तेनेति ॥ २६ ॥ केशव इति तथा शीघ्रगतौ वीर्य्यसूचनं ब्रह्मेशवशीकारित्वात् हेलया हततादृशकेशित्वाद्वा प्रकर्षेण दूरधावनाद्यभिव्यञ्जनेनाह—यतो विभुरपि प्रेमवशत्वात् प्रियायां प्रियकृत् ॥ २७ ॥ ततस्तदनन्तरमेव कारयामास श्रीसत्यभामयेति वै प्रसिद्धौ यायास्ताः सर्वा एव तत्र च हतस्येति चौरेण शस्त्रहतेरनुरूपा इत्यर्थः ॥ २८ ॥

### श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी

सहसेत्यकस्मादेवागमनादर्हण्यमर्हणयोग्यम्, वै प्रसिद्धौ, अर्हणीयमिति पाठेऽपि स एवार्थः। समर्हणैरुत्तमपूजाद्रव्यैः ॥ २५ ॥ तस्यां प्रायो भक्तिरहितायामपि विशेषेणाग्रजतया भवतीति विभुः श्रीकृष्णाग्रजोऽपि; यद्वा, तस्यां तादृशार्हणप्रापिकायां विभुस्तत्रत्येश्वरः सन्नित्यर्थः। ततस्तस्मादन्तः कोपेन तस्य मिथिलावासाद्धेतोस्तत्पश्चाद्वा शीघ्रं तत्तत्त्वं ज्ञातुमशक्तेः काले द्वयोर्भ्रात्रोर्भेदावसरं प्राप्येत्यर्थः। यद्वा, शिक्षायोग्यावसरे धार्त्तराष्ट्र इति दुर्मन्त्रदक्षस्य पितुः प्रेरणात्, सुयोधन इति च सुखेन योद्धुमिति भावः। महात्मना ज्ञानपरतया सर्व्वत्र समदृष्टिना, अतएव प्रीतियुक्तेन सता मानित आदृतः सन् अग्रे वक्ष्यमाणाच्छ्रीभगवद्गन्तव्यान्मैथिलादयं कश्चिदन्यः, किंवा श्रीबलदेवप्रसादबलात् कालेनाल्पेनैव भक्तिवृद्ध्यायमेव स इति ज्ञेयम् ॥ २६ ॥ केशवः साक्षात् परमेश्वरः, तत्र च विभुर्निजाशेषैश्वर्य्यविस्तारणेन सर्व्वव्यापकः, अतएव प्रियायाः श्रीरुक्मिणीजाम्बवतीभ्यामपि वल्लभायाः श्रीसत्यभामायाः प्रियं कुर्व्वन्, तां प्रति शतधन्वनो वधं प्रकर्षेण दूरधावनाद्यभिव्यञ्जनेनाह। यद्वा, प्रियकृदपि मणेरप्राप्तिमपि प्राह, यतो विशेषेण प्रियाभ्योऽप्याधिक्येन भक्तेषु भवतीति तथा सः, भक्तवात्सल्येनाक्रूरपक्षपातादिति भावः। यद्वा, मायया जगद्व्यापकः, प्रियाया अपि वञ्चनात्, इयं श्रीवादरायणेर्भावविशेषेणासूयोक्तिरिति ॥ २७ ॥ ततस्तदनन्तरमेव कारयामास श्रीसत्यभामया पुरोहितेन वा, वै प्रसिद्धौ, या यास्ताः सर्व्वा एव, तत्र च हतस्य चौरेण शस्त्रहतेरनुरूपा इत्यर्थः। यतो भगवान् परमदयालुः; यद्वा, सद्धर्म्मप्रवर्त्तनाद्यर्थमवतीर्णः, अतो लोकशिक्षार्थमिति भावः। यद्वा, भगवानपि कुतः? बन्धोर्बन्धुवात्सल्यादिति भावः ॥ २८ ॥

### श्रीमद्वीरराघवाचार्यकृता भागवतचन्द्रचन्द्रिका

मैथिलो जनकस्तं रामं दृष्ट्वा प्रीतमानससहसा उत्थाय पूजार्हं राममर्हणैः पूजासाधनैः यथाविधि पूजयामास ॥ २५ ॥ उवासेति विभू रामः कतिचित्समाः वत्सरानुषितवान् प्रासङ्गिकमाह—तत इति। धृतराष्ट्रस्यापत्यं सुयोधनस्तदा गृहीतवानित्यर्थः। सुयोधनं विशिनष्टि—मानित इति ॥ २६ ॥ सत्यभामामप्यवञ्च यदित्याह—केशव इति। एत्यागत्य शतधन्वनो निधनं वधं मणेरलाभं च प्रियायाः सत्यभामायाः प्राह—प्रियकृत्प्रियङ्कुर्वन्निव ॥ २७ ॥ तत इति सुहृद्भिः सहितो भगवान् हतस्य बन्धोः श्वशुरस्य सत्राजितस्य क्रिया उत्तरक्रियाः कारयामास कास्ताः याः कारयामासेत्यत्राह—या याः क्रियाः साम्परायिकाः परलोकहेतवः ता इत्यर्थः ॥ २८ ॥

### श्रीविजयध्वजतीर्थकृता पदरत्नावली

अर्हण्यं पूज्यम् ॥ २५ ॥ काले कृष्णवियोगसमये ॥ २६–२७ ॥ बन्धो सत्राजितः साम्परायिकाः प्रेतविषयाः ॥ २८ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

मानित इत्यस्य विभुरित्यनेनैवान्वयः ॥ २६ ॥ प्रियायाः प्रियकृदिति आयुरभावादेव त्वत्पिता जीवयितुमशक्यः किं तु त्वत्पितृहन्ता मया स्वहस्तेन हत इति प्रियां प्रत्युक्तेः ॥ २७ ॥ बन्धोः सत्राजितः ॥ २८ ॥

### गूढार्थदीपिनी

उवासेति सार्द्धम्। समाः संवत्सरान् ॥ २६–२७ ॥ बन्धोः सत्राजितः। वै प्रसिद्धार्थे। साम्परायिकाः पारलौकिक्यः यायास्तास्ताः सर्वाः इति योज्यम् ॥ २८ ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

समाः सम्वत्सरान् ॥ २६–२७ ॥ बन्धोः श्वशुरस्य साम्परायिकाः पारलौकिकाः ॥ २८ ॥

### श्रीसत्यधर्मकृता श्रीभागवतटिप्पणी

सहसा दृष्ट्वा। एकाकिनस्तत्रापि पदा गमनात्पुरावाप्तेरवार्तावितिरभूद्भूपतेरिति सहसेत्यनेन ध्वन्यते। अर्हणीयं समर्हणैः पूजासाधनैः ॥ ३१ ॥ तस्यां मिथिलायां समाः संवत्सरान्पञ्च। अविश्वासात्तु सक्रोध एव ययौ विदेहानवसत्पञ्चाब्दानिति श्रीमदुक्तेः। काले हरिविरसताविरहसमये ततो बलाद्गदां तद्विद्यां धार्तराष्ट्रः सुयोधनोऽशिक्षदशिक्षतोपादत्त ॥३२॥

प्रियायाः प्रियकृत् । शतधन्वमारणेन मृतस्य बन्धोर्वन्धुभिः साकं सार्धं साकं सदुःखं यथा तथा ॥ ३३ ॥ या या इति पदमेकम् । साम्परायिकाः साम्परायिक्यो मोक्षहेतवः क्रियास्तास्ताः कारयामास ॥ ३४ ॥

**श्रीमद्वल्लभाचार्य्यकृता सुबोधिनी**

ततो राजकर्तृकमभिनन्दनमाह **तं दृष्ट्वेति** । अतिप्रियत्वात् न ज्ञापयित्वा गतः । अतोऽन्तःप्रवेशानन्तरमेव दर्शनानन्तरमेव राजा ज्ञातवानिति **दृष्ट्वा सहसोत्थायेत्युक्तम्** । यतो **मैथिलः** । दर्शनेनैव प्रीतं मानसं यस्य । एवं देहेन्द्रियान्तःकरणस्थितिरुक्ता । ततस्तस्य कार्यमाह **अर्हयामासेति** । विधिप्रधान इति विधिवत्पूजां चक्रे । कस्मिन्नप्यंशे पुष्टिर्नास्तीति ज्ञापयितुं **अर्हणीयमित्युक्तम्** । रामः सर्वैरेव अर्हणीयः, साधनपुरःसरम्, ब्रह्मरूपत्वात् । **समर्हणैः** सम्यगर्हणयोग्यैः शुद्धैः द्रव्यादिभिः ॥२५॥ एवं पूजानन्तरं तस्य प्रत्यागमनं सम्भाव्य तन्निषेधार्थमाह **उवासेति** । राजगृहे स्थितिव्यावृत्त्यर्थं **तस्यामिति** । **कतिचित्समा** इति वर्षत्रयं किञ्चिदधिकं वा । मर्यादानगरी सेति स्थितौ न कोऽप्युद्वेगः । तत्र तावत्कालं स्थितौ परदेशवासादिक्लेशो भवेदित्याशङ्कयाह **विभुरिति** । स्थितेः प्रयोजनमाह **ततोऽशिक्षदिति** । **धार्तराष्ट्रः** पितुः पुत्रः समर्थः, दुर्योधनोऽपि भगवदिच्छया सुयोधनः, सुष्ठु योधनं यस्येति । दुर्योधनपदं यौगिकं मन्यमानः तन्निषेधार्थं विपरीतं प्रयुङ्क्ते । रूढं पदमिति लोके बोधयन् । अतो ज्ञानक्रियाशक्ती तस्य न पुष्टे इति बलभद्रात् गदामशिक्षत् । **काले** गदाशिक्षणयोग्ये समये । अत्यन्तं पुष्टस्तरुणः गदायां योग्यः । यस्मिन् काले प्रहारः शुष्को भवति, न पूयादिकं सम्पादयति, नाड्यश्च विशव लिता न भवन्ति, स शरदादिः षण्मासः । तस्मिन् काले गदामशिक्षत् । तस्यापि विदेशवासे उद्वेगाभावायाह **मानितः प्रीतियुक्तेनेति** । यतो जनकः जननात्, अत उत्कृष्टजन्मा, तं कुलीनं मर्यादावन्तमङ्गीकृतवान् । बलभद्रसम्बन्धादपि प्रीतिः । स्वभावतोऽपि महात्मा । य एव गृहमागतः, तमाराधयतीति । अतः प्रकारत्रयेण मानितः कायिकादिक्लेशाभावात् **अशिक्षत्** । शिक्षया गदां ज्ञातवानित्यर्थः ॥ २६ ॥ मर्यादारूपं भगवच्चरित्रमुक्त्वा, पुष्टिरूपमाह **केशव** इति । उत्पादकनाशकयोः तुल्यप्रकारेण फलं प्रयच्छतीति पुष्टिस्थो भवति । द्वारकां रथेनागत्य सत्यभामादीनां सुखार्थं शतधन्वनो निधनम् । तदीयानां सुखार्थं च मणेरप्राप्तिमाह । ननु सर्वेश्वरः विधिकर इव किमिति स्वकृतं निरूपितवानित्याशङ्कयाह **प्रियायाः प्रियकृदिति** । एतदप्ययुक्तमिति चेत् । तत्राह **विभुरिति** । सर्वं कर्तुं समर्थः । **नैतावता** काचित् क्षतिरिति भावः । उभयमपि प्रियायाः प्रियार्थमुक्तवान् । कथं मण्यप्राप्तिः प्रियमित्याशङ्क्य, सामर्थ्यं वा उक्तम् ॥ २७ ॥ **वैरानुबन्धः** आमृत्योरिति शतधनुर्वधानन्तरं प्रीतायां सत्यभामायां पश्चात्कारयामास यत्कर्तव्यमित्याह **तत** इति । **बन्धोः** श्वशुरस्य विप्रद्वारा कारणम् । **साकं सुहृद्भिरित्यादिलौकिककथनं** परलोकेऽपि तस्य नालौकिकं किञ्चित्करोतीति ज्ञापयितुम् । **भगवानिति** तत्र महती सम्भृतिः सूचिता । **सुहृद्भिरिति** । तत्करणे सर्वेषामावश्यकता च । **या याः स्युरिति** । **विधौ** आवश्यका अनावश्यकाश्च फलार्थाः सर्वा एव संगृहीताः ॥ २८ ॥

**श्रीविट्ठलरायात्मजश्रीवल्लभकृतलेखः**

**ततोऽशिक्षदित्यत्र** । **अतो ज्ञानेति** । **अत** इत्यस्याशिक्षदित्यनेनान्वयः । सुयोधनत्वाद्धेतोरशिक्षदित्यर्थः ।

**श्रीसुबोधिनी-सारः**

तं रामं दृष्ट्वा सहसा शीघ्रमुत्थाय प्रसन्नचित्तो मैथिलो जनकोऽर्हणीयं पूज्यं विधानतः समर्हणैः पाद्यादिभिरर्चयामास तस्यां मिथिलायां कतिचित्समाः त्रिवर्षं विभुर्वल उवास ॥ २५ ॥ ततोंतरे रामात्काले समये धृतराष्ट्रस्य पुत्रो दुर्योधनो महात्मना प्रीतियुक्तेन जनकेन मानितः सत्कृतो गदामशिक्षत् ॥ २६ ॥ प्रियायाः सत्यभामायाः प्रियकृत् विभुः प्रभुः केशवः श्रीकृष्णो द्वारकामेत्यागत्य शतधन्वनो निधनं मृत्युं मणेरप्राप्तिं च प्राह ॥ २७ ॥ ततोनन्तरं सांपरायिकाः पारलौकिका याः याः क्रियाः स्युः तां तां क्रियां स कृष्णो हतस्य बन्धोः सत्राजितः कारयामास सुहृद्भिः सार्द्धं सह ॥ २८ ॥

**गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी**

तं रामं दृष्ट्वा प्रीतमानसो मैथिलः सहसोत्थाय अर्हणीयं पूजार्हं तं रामं समर्हणैः पूजासाधनैः पाद्यार्घस्रक्चन्दनादिभिः यथाविधि पूजयामासेत्यन्वयः ॥ २५ ॥ विभुः स्वतन्त्रः सन्मानयोग्यश्च बलभद्रो जनकेन मानितः कतिचित्समाः दिवसान् मिथिलायामुवास । तत्र निवासप्रयोजनमाह—तत इति । रामात् धृतराष्ट्रपुत्रः सुयोधनः काले लब्धेऽवसरे गदां गदायुद्धमशिक्षत् ॥ २६ ॥ केशवः कृष्णो द्वारकामेत्य आगत्य शतधन्वनो निधनं मरणं मणेरप्राप्तिं च प्रियायाः सत्यभामायाः प्राह । ननु 'सर्वज्ञत्वादक्रूरे मणिरस्तीति जानन्नपि किमर्थं शतधन्वानं हतवान्, रामसत्यभामयोश्चान्यथैव कथितवान्' इत्याशङ्कयाह—प्रियकृदिति । स्वभक्तायाक्रूराय मणिदानस्येष्टत्वात्तथा कथने तयोर्वैमनस्यं स्यात्, अतस्तत्प्रीत्यर्थमेवं कृतवानित्याशयः । विभुः सर्वथा सर्वकरणे समर्थः ॥ २७ ॥ ततश्च या याः साम्परायिकाः परलोकहितकारिण्यः क्रियाः स्युर्भवन्ति ताः हतस्य बन्धोः श्वशुरस्य सत्राजितस्य सुहृद्भिर्भगवान् कारयामासेत्यन्वयः ॥ २८ ॥

**अन्वितार्थप्रकाशिका**

तमिति। तं दृष्ट्वा प्रीतमानसो मैथिलः सहसोत्थाय अर्हणीयं पूजार्हं तं रामं समर्हणैः पूजासाधनैः पाद्यार्घस्रक्चन्दनादिभिर्यथाविधि पूजयामास ॥ २५ ॥ उवासेति सार्द्धम्। विभुः स्वतन्त्रः सम्मानयोग्यश्च बलभद्रो महात्मना प्रीतियुक्तेन जनकेन मानितः कतिचित्समाः संवत्सरान् तस्यां मिथिलायामुवास। ततः रामात् धृतराष्ट्रपुत्रः सुयोधनः तस्मिन् काले लब्धेऽवसरे गदां गदायुद्धमशिक्षत्। तच्चभाव आर्षः ॥ २६ ॥ केशव इति। प्रियायाः प्रियकृत् तत्पितृहन्तुर्हन्ता केशवः कृष्णो द्वारकामेत्य आगत्य शतधन्वनो निधनं मरणं मणेरप्राप्तिं च प्रियायाः सत्यभामायाः प्राह स्म। आयुरभावादेव त्वत्पिता जीवयितुमशक्यः। किन्तु त्वत्पितृहन्ता मया स्वहस्तेन हत इति प्रियां प्रत्युक्तिः ॥ २७ ॥ तत इति। ततश्च याः याः साम्परायिकाः परलोकहितकारिण्यः क्रियाः स्युर्भवन्ति ता हतस्य बन्धोः श्वशुरस्य सत्राजितस्य सुहृद्भिर्भगवान् कारयामास ॥ २८ ॥

**श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्**

कतिचित्समावर्षाणि। ततो रामात् दुर्योधनः। गदां गदायुद्धप्रकारमशिक्षत् ॥ २६ ॥ प्रासंगिकमाह केशव इति ॥२७॥ हतस्य बंधोः श्वशुरस्य याः याः सांपरापिकाः क्रियाः ऊर्द्ध्वदैहिककर्माणि ॥ २८ ॥

**भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी**

तमिति ॥ तं बलभद्रं, दृष्ट्वा, प्रीतमानसः प्रसन्नमनाः, मैथिलो जनकः, सहसा उत्थाय, अर्हणीयं पूजार्हं रामं, समर्हणैः पूजासाधनैः, विधिवद्यथाविधि, अर्हयामास पूजयामास ॥ २५ ॥ उवासेति ॥ विभू रामः, प्रीतियुक्तेन महात्मना, जनकेन, मानितः सन्, तस्यां मिथिलायां, कतिचित् समाः वर्षत्रयपर्यन्तमित्यर्थः। उवास। तथा च विष्णुपुराणे 'वर्षत्रयान्ते च बभ्रूग्रसेनप्रभृतिभिर्यादवैर्न तद्रत्नं कृष्णेनापहृतमिति कृतावगतिभिर्विदेहपुरीं गत्वा बलदेवं संप्रत्याय्य द्वारकामानीत' इति। प्रासङ्गिकमाह तत इति। काले तस्मिन् काले, धार्त्तराष्ट्रो धृतराष्ट्रपुत्रः, सुयोधनो दुर्योधनः, ततो रामात्, गदां गदाधारणविद्यां, अशिक्षत्। गृहीतवानित्यर्थः ॥ २६ ॥ केशव इति ॥ विभुः, केशवः श्रीकृष्णः, द्वारकां एत्य, प्रियायाः सत्यभामायाः, प्रियकृत्सन्, शतधन्वनः निधनं, मणेः, अप्राप्तिं च, प्राह। प्रियायाः पुरतः, कथयामासेत्यर्थः ॥ २७ ॥ तत इति ॥ ततः, सः भगवान् श्रीकृष्णः, सुहृद्भिः साकं, हतस्य मृतस्य, बन्धोः श्वशुरस्य, याः याः, सांपरायिकाः, पारलौकिकाः क्रियाः उत्तरक्रिया इत्यर्थः। तास्ताः, कारयामास ॥ २८ ॥

**कृष्णप्रिया**

जब जनकनाथ को बधाई मिली कि समर्चनीय श्रीयदुकुल भूषण श्री बलराम जी महाराज निजभवन पधार रहे हैं तब वे आनन्द बिभोर हृदय हो गये। एकाएक अपने आसन से खड़े हो गये और विविध प्रकार की समर्चन सामग्रियों से समर्चन किया ॥ २५ ॥ राजन् परीक्षित्! इस तरह श्रीबलराम जी मिथिला जी पधारे और कई वर्षों तक मिथिलाजी में ही रहे। महामना महाराज मिथिलेश जी ने बड़े प्रेम एवं सम्मान से बलराम जी को रखा। इस अवसर पर धृतराष्ट्र पुत्र दुर्योधन ने बलभद्र जी से गदा युद्ध की शिक्षा का सम्पादन किया ॥ २६ ॥ प्रियतमा श्रीसत्यभामा जी का प्रिय कार्य करने वाले भगवान् श्रीकृष्ण शतधन्वा का वध करके द्वारिका जी लौट आये, देवी सत्यभामा जी को सारा वृत्तान्त सुनाया और स्यमन्तक मणि शतधन्वा के पास न निकली यह कथा सुनायी ॥ २७ ॥ पुनः भगवान ने सद्गत श्रीसत्राजित जी के सारे और्ध्व दैहिक श्राद्धादि संस्कार उनके गोत्रज बन्धुजनों के द्वारा करवाये, जिन संस्कारों से मृतात्मा का परलोक सुधरता है ॥ २८ ॥

**अक्रूरः कृतवर्मा च श्रुत्वा शतधनोर्वधम्। व्यूषतुर्भयवित्रस्तौ द्वारकायाः प्रयोजकौ ॥ २९ ॥**
**अक्रूरे प्रोषितेऽरिष्टान्यासन् वै द्वारकौकसाम्। शारीरा मानसास्तापा मुहुर्दैविकभौतिकाः ॥ ३० ॥[1]**

**कर्दमक्षमा**

अन्वयः—प्रयोजकौ, अक्रूरः, च, कृतवर्मा, शतधनोः, वधम्, श्रुत्वा, भयवित्रस्तौ, द्वारकायाः, व्यूषतुः ॥ २९ ॥ अक्रूरे, प्रोषिते, द्वारकौकसाम्, मुहुः, शारीराः, मानसाः, तापाः, दैविकभौतिकाः वै, अरिष्टानि, मुहुः, आसन् ॥ ३० ॥

**श्रीधरस्वामिविरचिता भावार्थदीपिका**

व्यूषतुर्द्वारकायाः सकाशात्क्वापि पलायितौ प्रयोजकौ मणिहरणे शतधन्वनः प्रवर्तकौ तत्राक्रूरः कृष्णानुमतेनैव गतः कृतवर्मा तु भक्तपक्षपातप्राकट्यभयादिवोपेक्षित इति गम्यते कथमन्यथा सर्वज्ञेश्वरवचनं तयोः संभवतीति ॥ २९ ॥ तदेवं

---

१. ततोऽपृच्छद्धरिर्वृद्धानुग्रसेनपुरोगमान्। कस्मादिहाऽरिष्टान्यासन्महता सुचिरेण नः ॥ विज.।

वाराणस्यां दानपतिसमाख्यया मणिहस्तेऽक्रूरे रुक्मवेदिकैर्महाध्वरैर्यजमाने निवसति पुनः श्रीकृष्णेनैव प्रस्थापितोऽक्रूर इति कर्णे कर्णे जपति जने सत्यभामारामादीनामप्यविश्वासे जनसंग्रहायाक्रूरं समाहूय साक्षेपं श्रीकृष्णः प्राह—इदं च भगवन्मतं संगोप्य केचन ऋषयोऽन्यत्कारणमक्रूरानयने वर्णयन्ति तद्यथाश्रुतं दूषयितुमनुवदति अक्रूरे प्रोषित इति ॥ ३० ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

तत्र तयोर्मध्ये । गम्यते ज्ञायते । तयोरक्रूरकृतवर्मणोः । शतधनुर्वधश्रवणेनातिभीताविति विशब्दार्थः ॥ २९ ॥ तदेवमित्थम् । वाराणस्यां काश्याम् । रुक्मवेदिकैर्हेमरचितवेदिकायुक्तैः । महाध्वरैर्महायज्ञैः । निवसति सति । तत् कारणम् । अरिष्टान्यरिष्टसूचकानि । तदेवं व्रजदेव्यपराधफलमिदमक्रूरस्य, यद्बहुवर्षपर्यंतं कृष्णविच्छेददुःखानुभवस्तद्विपक्षजनसंघट्टे काशीपुरे वासश्च, "उवास तस्यां कतिचिन्मिथिलायां समा विभुः" इत्युक्तेर्यावंत्येव वर्षाणि मिथिलायां बलदेवोऽवसत्तावंत्येवाक्रूरोऽपि वाराणस्याम्, तस्याञ्च तस्य रुक्मवेदिकनानायज्ञान् ब्राह्मणेभ्यो बहुदानख्यातिं च श्रुत्वा कृष्णेनैव प्रस्थापितोऽक्रूर इति कर्णेकर्णे जपति जने सति सत्यभामारामादीनामप्यविश्वासे सति पुनरप्युद्भूतं स्वस्मिन्कलंकं माष्टुं द्वारकास्थलोकद्वारैवाऽक्रूरानयनकारणानि भगवतैव सृष्टानि–नानारिष्टानीति । तत्वं तदबुद्ध्वा द्वारकाया अरिष्टदर्शनं कालवशादेवोद्भूतमिति वदतां मुनीनां मतमनूद्य दूषयति–अक्रूर इति द्वाभ्याम् ॥ ३० ॥

### श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी

पूर्वं यादवत्वेन ज्ञयं न हन्यादिति किञ्चिद्विश्वासयुक्तौ इदानीं तद्वधश्रवणेनाधिकभीताविति विशब्दार्थः ॥ २९ ॥ अक्रूर इति युग्मकम् । अरिष्टा भूकम्पादयः पुंस्त्वमार्षम् अरिष्टानीति पाठः सिद्ध एव तापाश्चासन् तत्र शारीरा मानसा इति द्विभेदा आध्यात्मिकाः दैविका भौतिकाश्चेति त्रिविधाः ॥ ३० ॥

### श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी

वधं श्रुत्वेति यादवत्वेन श्रीभगवांस्तं न हन्यादिति पूर्वं हृदि कृतवन्तौ स्तः, अधुना च श्रुत्वा मरणभयेन विशेषतस्त्रस्तौ सत्राजिद्वधे शतधन्वनः प्रेरणात् प्रागेव त्रस्तौ, इदानीं तद्वधश्रवणेनाधिकभीताविति वि-शब्दार्थः ॥ २९ ॥ अरिष्टा भूकम्पादयः, पुंस्त्वमार्षम्, अरिष्टानीति पाठः सिद्ध एव; वै च तापाश्च; यद्वा, अरिष्टा अशुभानि, तान्येवाह—शारीरा मानसा इत्याद्याध्यात्मिका उक्ताः । एवं त्रिविधाः, वै अपि, द्वारकौकसामपि ॥ ३० ॥

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम्

व्यूषतुः प्रोषितौ प्रयोजकौ वधकर्तुः प्रेरकौ ॥ २९ ॥ प्रागुदाहृतं स्यमन्तकमाहात्म्यम् ॥ ३० ॥

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका

अक्रूर इति प्रयोजकौ मणिहरणार्थं शतधन्वनः प्रवर्त्तकौ हेतुगर्भमिदं तत्त्वात् भयेन वित्रस्तौ कृतवेपथू द्वारकायां सकाशात् व्यूषतुः प्रोषितवन्तौ तत्राक्रूरः कृष्णानुमत एव गतः कृतवर्मा तु भक्तपक्षपातप्राकट्यभयादेवोपेक्षित इति गम्यते कथमन्यथा सर्वज्ञेश्वरवञ्चनं तयोः सम्भवति ॥ २९ ॥ तदेवं वाराणस्यां दानपतिसमाख्यया मणिहस्ते क्रूरे रुक्मवेदिकैर्महाध्वरैर्यजमाने निवसति सति कृष्णेनैव प्रस्थापितोऽक्रूर इति कर्णे कर्णे जपति सति जने सत्यभामादीनामप्यविश्वासे जनसङ्ग्रहायाक्रूरमाहूय साक्षेपं कृष्णः प्रार्थितवानिति इदञ्च भगवन्मतं सङ्गोप्य केचन ऋषयोऽक्रूरानयने कारणान्तरमनुवर्णयन्ति तद्दूषयितुमनुवदति मुनिः अक्रूरे प्रोषित इति प्रोषिते देशान्तरं गते सति द्वारकास्थानां जनानां शारीरा मानसा इत्याध्यात्मिकतापकीर्त्तनम् । तत्र शारीरा व्याधयः मानसा आधयः दैविका इत्याधिदैविकतापोक्तिः भौतिका इति त्वाधिभौतिकस्य ॥ ३० ॥

### श्रीमद्विजयध्वजतीर्थकृतापदरत्नावली

व्यूषतुः प्रयोजकौ शतधन्वनः प्रेरकौ ॥ २९-३० ॥

### श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शिनी

व्यूषतुः द्वारकायाः सकाशात् क्वाऽपि पलायितौ यतः प्रयोजकौ सत्राजिद्वधे शतधन्वनः प्रवर्त्तकौ ॥ २९ ॥ तदेवं व्रजदेव्यपराधफलमिदमक्रूरस्य यद्बहुवर्षपर्यन्तं कृष्णविच्छेददुःखानुभवः तद्विपक्षजनसङ्घट्टे काशीपुरे वासश्च "उवास तस्यां कतिचिन्मिथिलायां समाविभुः" इत्युक्तेर्यावन्त्येव वर्षाणि मिथिलायां बलदेवोऽसत्तावन्त्येवाक्रूरोऽपि वाराणस्यां तस्यां च तस्य रुक्मवेदिकनानायज्ञान् ब्राह्मणेभ्यो बहुदानख्यातिं च श्रुत्वा कृष्णेनैव प्रस्थापितोऽक्रूर इति कर्णे कर्णे जपति जने सत्यभामारामादीनामप्यविश्वासे सति पुनरप्युद्भूतं स्वस्मिन् कलङ्कं माष्टुं द्वारकास्थलोकद्वारैवाक्रूरानयनकारणानि भगवतैव

सृष्टानि नानाऽरिष्टानीति तत्त्वम् तद्बुद्ध्वा द्वारकायामरिष्टदर्शनं कालवशादेवोद्भूतमिति वदतां मुनीनां मतमनूद्य दूषयति—अक्रूरे इति द्वाभ्याम् । एके वैशम्पायनादयः प्राक् स्वयमुक्तमपि विस्मृत्याऽननुसन्धायेत्यर्थः । मुनेरेकस्यापि निवासे सति तत्प्रभावात् ग्रामेऽरिष्टदर्शनं न भवेत् मुनीनां सर्वेषामपि वासो यत्र तस्य श्रीकृष्णस्य निवासे सति किमरिष्टदर्शनमेकमपि घटेत ? नैव घटेतेत्यर्थः ॥ ३०-३१ ॥

### गूढार्थदीपिनी

प्रयोजकौ मणिहरणे प्रवर्तकौ । व्यूषतुः ततः पलायितौ ॥ २९ ॥ अक्रूर इति युग्मम् । प्रोषिते परदेशं गते शरीराः तापा व्याधयः । मानसा आधयश्च क्रमेण । दैविका अनावृष्ट्यादय । भौतिकाः सर्पादिजन्याः आसन् ॥ ३० ॥

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः

प्रयोजकौ प्रवर्त्तकौ शतधन्वन इति शेषः । द्वारकायाः सकाशात् व्यूषतुः ॥ २९ ॥ एवं मणिहरणशत्राजितवधरूपदोषयोगाच्छतधनुर्हतः बलाख्यस्वावतारद्वारा भूभारहरणे निमित्तभूतो दुर्योधनश्च प्रबलीकृतः तत्साहाय्यार्थं कृतवर्मा च प्रेषितः अक्रूरश्च परमभागवतोऽपि ताभ्यां मित्रतां नीतः उक्तप्रकारेण मणिं प्राप्य कृतापराधमात्मानं मत्वा भगवन्तं द्रष्टुमक्षमो भयात्काश्यां गत्वा कृष्णप्रीत्यर्थं यज्ञादिपरो जातस्तदा कृष्णप्रेषित समणिरक्रूरोऽन्यत्र वर्तते इति यत्र तत्र लोके प्रजल्पमाने भक्तवत्सलतया लोकापवादनिराकरणेच्छया वाऽक्रूरमाहूय मणिप्राकट्यं कृत्वा तस्मै दत्तवानिति मतमज्ञात्वा केचिदृषयः कारणान्तरमक्रूरानयने वर्णयन्ति बालभाषितवदुपहासास्पदं तद्वाक्यमनुवदति, अक्रूरे इति । प्रागुदाहृतं भगवन्माहात्म्यम् विस्मृत्य केचित् अक्रूरे प्रोषिते सति अरिष्टान्यासन्नित्युपदिशन्ति तन्मतं दूषयति, अहो मुनीनां वासो यस्मिन् तस्य श्रीकृष्णस्य निवासे सति अक्रूरापगममात्रेण अरिष्टदर्शनं किं घटेत ? नैव घटेतेत्यर्थः ॥ ३०-३१ ॥

### श्रीसत्यधर्मकृता श्रीभागवतटिप्पणी

शतधन्वतो माधवतो वधं श्रुत्वा प्रयोजको मणिः कस्मान्न गृह्यत इति मणिहरणाविति प्रयोजकौ । भयाच्छतधन्वभूतात्स्वयं वित्रस्तौ द्वारकाया व्यूषतुः प्रवासं चक्रतुः ॥ ३५ ॥ अक्रूरे प्रेषिते सति द्वारकौकसाम् । शारीराः शरीरसम्बन्धिन्यस्तापा ज्वराद्युद्भवा मनस्तापा दैविका अशन्युल्कापाता भौतिका भूभ्रान्त्यादय इत्यरिष्टान्यासन् वै प्रसिद्धौ । न यादृच्छिकानि तानीत्याह । मुहुरिति ॥ ३६ ॥ तत एवमनिष्टदर्शनानन्तरमुग्रसेनपुरोगमान्वृद्धान् । कृष्णः कस्माद्धेतोरिह द्वारकायां सुचिरेण कालेन महतां च आसन्नित्यपृच्छत् ॥ ३७ ॥

### श्रीमद्वल्लभाचार्य्यकृता सुबोधिनी

ततो बलभद्रवाक्यान्मण्यन्वेषणार्थं प्रवृत्तः, लोकतोऽपि अक्रूरकृतवर्मणोः कृत्यमेतदिति ज्ञात्वा, यदैव लोकानुरोधेन तयोर्निग्रहः प्राप्तः, तदैव भगवदिच्छया तयोर्बुद्धिः पलायनपरा जातेत्याह **अक्रूर** इति । शतधनोर्वधं श्रुत्वा स्वस्यापि तदन्तःपातित्वात् मणिमारणावेव प्रयोजकाविति भगवत्प्रयत्नात्पूर्वमेव भगवच्छक्तेर्विभक्तत्वात् भयविन्नस्तौ **व्यूषतुः** । मिषेण परदेशे निर्गतौ । तयोर्निर्गमनमात्रेणैव पलायनं सर्वजनीनं जातमिति तौ विशिनष्टि **द्वारकायाः प्रयोजकाविति** । एको लोकतः, अपरो वेदतश्चावेक्षकौ कोटिवारकधर्माध्यक्षौ ॥ २९ ॥ भगवानेवात्रार्थे निमित्तमिति साधनशक्तिः भगवतान्यत्र स्थापितेति प्रयोजकमणिबलभद्राणां दुष्टनिवारणतत्साधनसम्पादकानामाधिभौतिकादीनामन्यत्र गमने फलरूपस्यैव भगवतो विद्यमानत्वेऽपि सर्वेषां द्वारकावासिनां पीडा उत्पन्नेत्याह **अक्रूरे प्रोषिते** इति । अक्रूरमात्रस्य प्रयोजकत्वं लोकसिद्धम् । सर्वो हि लोकः आधिभौतिक एव व्यवस्थितः । तत्रापि विद्यमानेषु साधनेषु तापदर्शनाल्लौकिकं कृतवर्माणं परित्यज्य धर्माध्यक्षमक्रूरमेव प्रयोजकं सर्वोऽपि मन्यते । द्वारकौकसां निश्चयेन सर्वेषां **तापाः** पीडाः शारीरा मानसाः व्याध्याधिरूपाः **मुहुरासन्** । आध्यात्मिका एते गणिताः । आधिभौतिका आधिदैविकाश्च पुनस्तापा अभवन् । इयं लौकिकी भाषेति नात्र कोऽपि विरोधः शङ्कनीयः । सर्वमेवोत्तरार्धं न समाधिभाषेत्येके । **मुहुरिति** वारंवारम् । ज्ञानादिना प्रतीकारे कृतेऽपि पुनः पुनर्जायन्त इति । तेऽपि पुनः शरीरे मनस्येव च दुःखं जनयन्तीति तद्विशेषणत्वेनोक्ताः ॥ ३० ॥

### श्रीविट्ठलरायात्मजश्रीवल्लभकृतलेखः

**अक्रूर** इत्यत्र । **मणिमारणे एवेति** । मणिः सत्राजिन्मारणं च प्रयोजकम् । निग्रहे हेतुरित्यर्थः । **अक्रूरे प्रोषिते** इत्यत्र । **सर्वमेवेति** । उत्तरार्धे लोकधर्मपुरस्कारेण लीलाकरणात् सर्वमेव लौकिकी भाषेति तदाशयः । वस्तुतस्तु सर्वत्र लोक-

धर्मपुरस्कारो लोकवत् पुत्रभार्यादिसाहित्येन लीला। स्वरूपेण लौकिकत्वं तु क्वचिदेवेति तावत्येव लौकिकी भावेत्याशयेनाहुः एके इति।

### श्रीसुबोधिनीसारः

शतधन्वनो वधं मृत्युं श्रुत्वाऽक्रूरः कृतवर्मा च द्वौ भयाद्वित्रस्तौ कंपितौ द्वारकायाः प्रयोजकौ गुप्तिकारिणौ मणिहरणे शतधनुषः प्रवर्त्तकौ वा द्वारकातो व्यूषतुर्निर्जग्मुः॥ २९॥ अक्रूरे प्रोषिते परदेशं गते सति द्वारकावासिनां जनानाम् अरिष्टानि आसन् वै एव मुहुरसकृत् तद्यथा शारीरा दैहिका मानसाः चित्तजा दैविका भौतिकाश्च तापा दुःखानि॥ ३०॥

### गोस्वामिश्रीगिरिधरलालकृताबालप्रबोधिनी

अक्रूरः कृतवर्मा च द्वौ शतधनुर्वधं श्रुत्वा भयेन सन्त्रस्तौ द्वारकायाः सकाशात् व्यूषतुः देशान्तरं गतौ। भये हेतुमाह– प्रयोजकाविति। सत्राजितवधे मणिहरणार्थं शतधन्वनः प्रवर्तकावित्यर्थः॥ २९॥ अत्र परमतमुपन्यस्यति—अक्रूर इति। वैशब्दोऽवधारणे। अक्रूरे प्रोषिते निमित्ते एव द्वारकावासिनामरिष्टान्यासन्। तान्यरिष्टानि स्पष्टयति—शारीरा इति। शारीरास्तापा व्याधयः, मानसाः आधयः, दैविकाः देवकर्तृकाः अनावृष्ट्यादयः, भौतिकाः सर्पमनुष्यादिजन्याः॥ ३०॥

### अन्वितार्थप्रकाशिका

अक्रूर इति॥ प्रयोजकौ सत्राजितवधेन मणिहरणार्थं शतधन्वनः प्रवर्तकौ अक्रूरः कृतवर्मा च द्वौ शतधनुर्वधं श्रुत्वा भयेन संत्रस्तौ द्वारकायाः सकाशात् व्यूषतुः देशान्तरं गतौ। तत्राक्रूरः कृष्णानुमतेनैव गतः। कृतवर्मा तु भक्तपक्षपातप्राकट्यभयादिवोपेक्षितः इति गम्यते। कथमन्यथा सर्वज्ञेश्वरवञ्चनं तयोः सम्भवतीति॥ २९॥ तदेवं वाराणस्यां दानपतिसमाख्यया मणिहस्तेऽक्रूरे रुक्मवेदिकैर्महाध्वरैर्यजमाने निवसति पुनः श्रीकृष्णेनैव प्रस्थापितोऽक्रूर इति कर्णे कर्णे जपति जने सत्यभामारामादीनामप्यविश्वासे जनसंग्रहायाक्रूरं समाहूय साक्षेपं श्रीकृष्णः प्राह स्म। इदं च भगवन्मतं संगोप्य केचन ऋषयोऽन्यत्कारणमक्रूरानयने वदन्ति। तद्यथा श्रुतं दूषयितुमनुवदति—अक्रूर इति॥ वैशब्दोऽवधारणे अक्रूरे प्रोषिते निमित्ते एव द्वारकौकसां द्वारकावासिनामरिष्टानि दुर्निमित्तानि तथा तत्सूचिता शारीरास्तापा व्याधयः मानसाः आधयः दैविका देवकर्तृका अनावृष्ट्यादयः भौतिकाः सर्पमनुष्यादिजन्याश्च तापाः मुहुः आसन्॥ ३०॥

### श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्

प्रयोजकौ शतधन्वनः प्रेरकौ। द्वारकायाः सकाशात् व्युषतुः अन्यत्र वासं चक्रतुः॥ २९॥ अक्रूरे प्रोषिते देशांतरंगते सति अरिष्टानि कष्टानि॥ ३०॥

### भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

अक्रूर इति। ततः, प्रयोजकौ मणिहरणार्थं शतधन्वनः प्रवर्त्तकौ, हेतुगर्भमिदम्। तत्वात्, अक्रूरः, कृतवर्मा च, शतधनोर्वधं शतधन्वनो भगवत्कृतं वधं श्रुत्वा, भयसंत्रस्तौ मारणत्रासयुक्तौ सन्त, द्वारकायाः सकाशात्, व्यूषतुः प्रोषितवन्तौ॥२९॥ अत्र केचित्तत्राक्रूरः श्रीकृष्णानुमतत एव गतः, कृतवर्मा तु भक्तपक्षपातप्राकट्यभयादेवोपेक्षित इति मन्यन्ते। कथमन्यथा सर्वथेश्वरवञ्चनं तयोः संभवतीत्याहुस्तद्विष्णुपुराणेन सहासंगतत्वादनादरणीयमेव। तदेवं वाराणस्यां दानपतिसमाख्यया मणिहस्तेऽक्रूरे रुक्मवेदिकैर्महाध्वरैर्यजमाने निवसति सति, श्रीकृष्णेन प्रस्थापितोऽक्रूर इति कर्णे कर्णे जने जपति सति, सत्यभामादीनामप्यविश्वासे जनसंग्रहायाक्रूरमाहूय साक्षेपं श्रीकृष्णः प्राथितवानिदं परमार्थं भगवन्मतं संगोप्य, ये च ऋषयोऽक्रूरानयने कारणान्तरमनुवर्णयन्ति तद्दूषयितुमनुवदति मुनिः। अक्रूर इति। अक्रूरे, प्रोषिते सति देशान्तरं गते सति, द्वारकौकसां द्वारकावासिनां जनानां, अरिष्टानि अरिष्टकर्त्तारः, शारीराः मानसाश्च, तापाः, दैविकभौतिकाश्च तापाः, मुहुः आसन् वै। तत्र शारीरा मानसा इत्याध्यात्मिकतापानुकीर्त्तनम्। तत्र शारीरा व्याधयः, मानसा आधयः। दैविका इत्याधिदैविकतापोक्तिः। भौतिका इत्याधिभ तिकतापोक्तिः॥ ३०॥

### कृष्णप्रिया

अक्रूर एवं कृतवर्मा ने शतधन्वा को सत्राजित के वध के लिये उत्तेजित किया था इसलिये वे डरते थे। जब उन्होंने जाना कि भगवान ने शतधन्वा के प्राण ले लिये है तब अत्यन्त भयभीत हो गये और प्राण रक्षा के लिये द्वारिका से निकल पड़े॥ २९॥ राजन्! श्री अक्रूर जी के द्वारिका से चले जाने से द्वारिका में शारीरिक व्याधि मानसिक उपाधि चिन्ता एवं ग्रहपीड़ा आदि अनिष्ट एवं अरिष्ट हो रहे हैं ऐसा कुछ द्वारिका के प्रजाजन मानते थे लेकिन लोक मानस के लिये क्या कहना॥३०॥

इत्यङ्गोपदिशन्त्येके विस्मृत्य प्रागुपाहृतम। मुनिवासनिवासे किं घटेतारिष्टदर्शनम्॥ ३१ ॥
देवेऽवर्षति काशीशःश्वफल्कायागताय [1] वै। स्वसुतां गान्दिनीं प्रादात् ततोऽवर्षत् [2] स्म काशिषु॥ ३२ ॥
तत्सुतस्तत्प्रभावोऽसावक्रूरो यत्र [3] यत्र ह। देवोऽभिवर्षते तत्र नोपतापा न मारिकाः॥ ३३ ॥
इति वृद्धवचः श्रुत्वा नैतावदिह कारणम्। इति [4] मत्वा समानाय्य [5] प्राहाक्रूरं जनार्दनः॥ ३४ ॥
[6] पूजयित्वाभिभाष्यैनं कथयित्वाप्रियाः कथाः। विज्ञाताखिलचित्तज्ञः [7] स्मयमान उवाच ह॥ ३५ ॥
ननु दानपते न्यस्तस्त्वय्यास्ते [8] शतधन्वना। स्यमन्तको मणिः श्रीमान् विदितः पूर्वमेव नः॥ ३६ ॥

### कर्दमक्षमा

अन्वयः—अङ्ग! प्राग्, उदाहृतम्, विस्मृत्य, एके, इति, उपदिशन्ति, मुनिवासनिवासे, किम्, अरिष्टदर्शनम्, घटेत ?॥ ३१ ॥ देवे, अवर्षति, काशीशः, आगताय, श्वफल्काय, गान्दिनीम्, स्वसुताम्, अदात्, ततः, काशिषु, अवर्षत्, स्म ॥ ३२ ॥ तत्, सुतः, असौ, अक्रूरः, तत्प्रभावः, ह. यत्र यत्र, तत्र, देव, अभिवर्षते, तत्र, उपतापाः, न मारिकाः, न ॥ ३३ ॥ इति, वृद्धवचः, श्रुत्वा, इह, एतावद्, न, कारणम्, इति, मत्वा, अक्रूरम्, समाम्नाय्य, जनार्दनः, प्राह ॥ ३४ ॥ एनम्, पूजयित्वा, अभिभाष्य, प्रियाः, कथाः, कथयित्वा, विज्ञाताखिलचित्तज्ञ स्मयमानः, कृष्णः, ( एनम्, अक्रूरम् ) ह उवाच ॥ ३५ ॥ हे दानपते ! शतधन्वना, श्रीमान्, स्यमन्तकः, मणिः, ननु, त्वयि, न्यस्तः आस्ते, नः, पूर्वम्, एव, विदितः ॥ ३६ ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

दूषयति—इतीति। अंग हे राजन्। श्रीकृष्णमाहात्म्यं विस्मृत्येति तदेवाऽऽह—मुनिवासनिवास इति। मुनीनां वासो यस्मिन्स श्रीकृष्णस्तस्य निवासे सत्यक्रूरापगममात्रेणारिष्टदर्शनं किं घटेत ? तदिच्छां विना न घटेतेत्यर्थः॥ ३१ ॥ पुनस्तन्मतमेवानुवर्णयति—देव इति। काशिषु देशेषु देवेमघवत्यवर्षति सति ॥ ३२-३३ ॥ इत्येवंभूतमक्रूरमहिमप्रतिपादनपरं वृद्धानां वाक्यं श्रुत्वा सत्यमेवं तथाऽप्येतावदेव कारणं न भवति किंतु मणेरप्यपगम इति मत्वेत्येतद्रंतं परमतम् ॥ ३४ ॥ विज्ञातमखिलं येन स चासावत एव चित्तज्ञश्च। अयं भावः महाभागवतस्यास्य मया दत्तेऽपि मणावपेक्षा नास्त्येव यस्मादाहूतो मणिना सहैवागत इति ज्ञात्वेति ॥ ३५-३६ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

तदेव दूषणमेव। इत्यर्थ इति-न हि सूर्ये तपति तमोनिरासाय दीपः प्रज्वाल्यत इति न्यायेन भगवदिच्छैव प्रबला, यतः सत्यपि तस्मिन्कारणांतरकल्पनेति भावः। एके वैशंपायनादयः। प्राक्स्वयमुक्तमपि विस्मृत्याननुसंधायेत्यर्थः। मुनेरेकस्यापि निवासे सति तत्प्रभावाद्ग्रामेऽरिष्टदर्शनं न भवेत्, मुनीनां सर्वेषामपि वासो यत्र तस्य श्रीकृष्णस्य निवासे सति किमदर्शनमेकमपि घटेत, नैवेत्यर्थः ॥३१॥ तन्मतं मुन्यंतरमतम्। श्वफल्कायाक्रूरपित्रे। ततो गांदिनीदानेन श्वफल्कपूजया। काशिषु काशिदेशेषु। देव इत्यादित्रिकम्, तृतीयपद्यगेनेति शब्देनान्वयात्। तत्कन्यार्थमेव काश्यामागताय। तां नित्यगोदानेन चिरकालजन्मना प्रसिद्धम्। अतः स्वीयामसाधारणीं सुताम्। प्रकर्षेण बहुलोपस्कारादिनाऽदात्। अतो मातामहसंबंधेनैवाक्रूरस्तत्र गत इति ज्ञेयम् ॥ ३२ ॥ तत्सुतः श्वफल्कसुतः। तस्य श्वफल्कस्येव प्रभावो यस्य स तत्प्रभावः। उपतापः क्लेशः ॥ ३३ ॥ इति मत्वा तैस्सह विशेषतो विचार्येत्यर्थः। यद्वा —व्याजाय स्वयमुत्थापितारिष्टत्वाद्वृद्धोपदेशग्रहणमिदं न परमतम् 'इत्यंगोपदिशंत्येके' इत्यत्रैव तत्समाप्तिः स्पष्टा। ततश्च नैतावदिति-किन्तु तद्व्याजाय ममैवेच्छा कारणमिति स्वमनसि विचार्येत्यर्थः। सम्यक्परमादरेणानाय्य स्वयमुदासीनो भवन्सर्वयादवसमाह्वानद्वारैवागमय्येति णिजर्थः॥ ३४ ॥ अत एव विज्ञाताखिलत्वादेव। अत्राकूतमाह—अयं भाव इत्यादिना। पूर्वोक्तमेव विशिनष्टि-पूजयित्वेति। अभिभाष्य कुशलप्रश्नादिना संभाष्य। प्रियाः भक्तिभक्तादिमाहात्म्यपराः, तस्य श्रीवसुदेवाद्यानुकूल्यार्थकं सनिकटसशंकस्थितितद्वधांतः प्रयत्नतदाज्ञाव्याजव्रजगमनस्वदर्शनानन्यतद्वधार्थस्वनयनादिरूपा, तथापि सांप्रतं दैवविघटनानुशोचनरूपाश्च। ह हर्षे। स्मयमान इति मणिज्ञानबोधनार्थनिगूढभावात् ॥ ३५ ॥ ननु निश्चये। नोऽस्माकम्। अत्रार्थे त्वां किं पृच्छामि, जानाम्येवेत्याह—नन्विति। श्रीमान् सर्वसंपत्तियुक्तस्तत्प्रदत्वात्। यतो महादीप्तिमानतस्त्वया यत्नतश्चिरं निह्नोतुं न शक्य इति भावः। न चाधुनैव संभाव्यत एव, प्रागेव ज्ञातत्वादित्याह—विदित इति। शतधन्ववधात्पूर्वत एव त्वय्यस्तीति नोऽस्माकं सर्वेषामेव ज्ञातः॥ ३६ ॥

---

१. गां-विज.। २. स्स-वीर.। ३. तत्र स।-विज.। ४. इति दूतैस्तमानीय-वीर.; इति दूतैः समानीय-विज.। ५. रामाक्रूरौ-विज.। ६. अक्रूरं मानयत् कृष्णः-विज। ७. तत्वज्ञः-विज.। ८. त्वय्यसौ-विज.।

### श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी

एके वैशम्पायनादयः प्राक् स्वयमुक्तमपि विस्मृत्य पश्चादननुसन्धाय मुनीति मुनेः कस्यचिदेकस्यापि वासे न घटेत तत्रापि मुनीनां सर्वेषां वासस्याश्रयस्य भगवतो नितरां नित्यतया वासे इत्यर्थः। अरिष्टस्यैकस्य दर्शनमपि किं पुनर्बहूनां विविधानां प्राप्तिरित्यर्थः। अन्यत्तैः तत्र तदिच्छामित्यनेन किन्त्वक्रूरानयनव्याजाय स्वयमेवोत्थापितान्यरिष्टानीति ज्ञापितम् ॥ ३१ ॥ देव इत्यादित्रिकम्। तृतीयश्लोकादिस्थेनेति शब्देनान्वयात् तत्कन्यार्थमेव काश्यामागताय तां नित्यगोदानेन चिरकालजन्मना प्रसिद्धाम् अत एव स्वसुतां स्वीयाम् असाधारणीं सुतां प्रकर्षेण बहुलोपस्करदानादिनाऽदात् अतो मातामहसम्बन्धादेवाक्रूरस्तत्र गत इति ज्ञेयम्। इति मत्वा तैः समं विशेषतो विचार्य्येत्यर्थः। यद्वा, व्याजाय स्वयमुत्थापितारिष्टत्वाद्वृद्धोपदेशग्रहणमिदं न परमतम् इत्यङ्गोपदिशन्त्येक इत्यत्रैव तत्समाप्तिः स्पष्टा ततश्च नैतावदिति किं तु तद्व्याजाय ममेच्छैव कारणमिति स्वमनसि विभाव्येत्यर्थः। सम्यक् परमादरेण आनाय्य स्वयमुदासीनो भवन् सर्वयादवसमाह्वानद्वारैवागमय्येति णिच्प्रत्ययार्थः ॥ ३२-३४ ॥ पूर्वोक्तमेव विशिनष्टि—पूजयित्वेति। अभिभाष्य कुशलप्रश्नादिना सम्भाष्य प्रिया भक्तिभक्तादिमाहात्म्यपरा एतस्य श्रीवसुदेवाद्यानुकूल्यार्थकंसनिकटं सशङ्कस्थितितद्वधार्थान्तःप्रयत्नतदाज्ञाव्याजव्रजगमनस्वदर्शनानन्दतद्वधार्थस्वाऽऽनयनादिरूपास्तथाऽपि साम्प्रतं दैवविघटनानुशोचनरूपाश्च ह हर्षे स्मयमान इति स्वस्य मणिज्ञानबोधनार्थनिगूढभावात् ॥ ३५ ॥ श्रीमान् सर्वसम्पत्तियुक्तः तत्प्रदत्वात्। यद्वा, महादीप्तिमान् अतस्त्वया यत्नतश्चिरं निह्नोतुं न शक्यत इति भावः न चाधुनैव सम्भाव्यत एव प्रागेव ज्ञातत्वादित्याह—विदित इति। शतधन्ववधा ( नन्तरं ) त्प्रागपि त्वय्यस्तीति नोऽस्माकं सर्वेषामेव ज्ञातः ॥ ३६ ॥

### श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी

एके श्रीवैशम्पायनादयः, प्राक् स्वयमुक्तमपि विस्मृत्य पश्चादनुसन्धाय; मुनीति मुनेः कस्यचिदेकस्य वासेनापि न घटेत, तत्रापि मुनीनां सर्व्वेषां वासस्थानस्य भगवतो नितरां वास इत्यर्थः। अरिष्टस्यैकस्य दर्शनमपि, किं पुनर्विविधानां बहूनां तेषां प्राप्तिरित्यर्थः ॥ ३१ ॥ तत्कन्यार्थमेव काश्यामागताय तां नित्यगोदानेन चिरकालजन्मना प्रसिद्धाम्, अतएव स्वकीयामसाधारणां सुतां प्रकर्षेण बहुलोपस्करदानादिनादात्, अतो मातामहसम्बन्धादेवाक्रूरस्तत्र गत इति ज्ञेयम् ॥ ३२ ॥ तस्यैव प्रभावो यस्य सः, असौ सर्व्वलोकहिताचरणत्वादिना प्रसिद्धः, ह एव, यत्र यत्रैवास्ते, तत्र तत्र देशे अभितो वर्षति, इन्द्र इति शेषः। देव इति पाठः स्पष्टः ॥ ३३ ॥ दूतैरिति बहुत्वं पुनः पुनः किंवा विश्वासार्थमेकदैव बहूनां प्रेषणात्, परमाप्तत्वेन गौरवाद्वा, सम्यक् परमादरेण सभायामानाय्य, समाहूयेति पाठेऽपि स एवार्थः। जनैः स्वभक्तैरर्च्यते द्रष्टुं सदा याच्यत इति तद्दर्शनेऽक्रूरस्यापि चिरमुत्कण्ठता जातास्तीति, किंवा स्वजनानां प्रार्थनादिति भावः। अक्रूरमिति अन्तःकापट्याभावात्, तच्चाग्रे व्यक्तं भावि, अतः प्रकर्षेणाह ॥ ३४ ॥ तदेवोक्तपोषन्यायेन प्रपञ्चयति—पूजयित्वेति। अभिभाष्य कुशलप्रश्नादिना सम्भाष्य, प्रिया भक्ति-भक्तादिमाहात्म्यपरा इत्यर्थः। ह हर्षे, तत्सर्व्वप्रीत्या मणिप्रदानार्थमाश्वासनाय, किंवा भक्तवरसमागमप्रहर्षात्, स्मयमान इति स्वस्य मणिज्ञानबोधनार्थं निगूढ़भावात्, वस्तुतस्तु स्वयमेव कृतेऽपि तत्तदर्थे स्वस्य तादृशोक्त्या स्वयमेवोद्यतो हासस्य सम्वरणेनापीषदुदयात् ॥ ३५ ॥ ननु स्नेहसम्बोधने निश्चये वा, हे दानपते इत्यादरात्; यद्वा महामहादानपङ्क्त्या मणिस्त्वय्येवेति भावः। तच्चाग्रे व्यक्तीकरिष्यते, को नाम न्यस्त इत्यपेक्षायामादौ लज्जादिनानभिव्यज्यापि पश्चादाह—स्यमन्तकेति। मण्यन्तरं व्यावर्त्तितम्। पाठान्तरे—ननु स्यमन्तको नाम किं कश्चिज्जनः, नेत्याह—मणिरिति। श्रीमान् सर्व्वसम्पत्तियुक्त इति, तत्त्वतस्तस्मादेव तत्सिद्धया तदेकहेतुत्वेनाभेदोपचारः। यद्वा, महादीप्तिमान्, अतस्त्वया यत्नतश्चिरं निह्नोतुं न शक्य इति भावः। न चाधुनानुमानेन कल्प्यते प्रागेव ज्ञातत्वादित्याह—विदिति इति। शतधन्ववधात् प्रागपि त्वय्यस्तीति नोऽस्माकं सर्व्वेषामेव ज्ञातः, विदितमिति पाठो वा, एतच्चास्माभिर्ज्ञायत एवेत्यर्थः। इत्यादि—सर्व्वोक्तिः स्वस्याक्रूरविषयकपक्षपाताच्छादनचातुर्य्यात् ॥ ३६ ॥

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम्

इतिशब्दो वक्ष्यमाणप्रकानिरासः निकटे अक्रूरनिवाससमीपेऽपि ॥ ३१-३४ ॥ अखिलचित्तज्ञा सर्वाभिप्रायज्ञाः पुरुषा येन विज्ञाता स विज्ञाताऽखिलचित्तज्ञः बुद्धिमतां पुरुषाणां मार्गं जानाति इत्यर्थः ॥ ३५-३६ ॥

### श्रीमद्वीरराघवाचार्यकृता भागवतचन्द्रचन्द्रिका

इतीति अस्यातोऽक्रूरमानयामासेत्यादिः एवमन्ये ऋषय उपदिशन्तीत्यनुवादः अथ तद्दूषयति—अङ्गेति। अङ्ग हे राजन्! प्रागुदाहृतं श्रीकृष्णमाहात्म्यं यत्र यत्र भगवानवसन्न तत्र तापत्रयसम्भावनेत्येवम्विधं विस्मृत्येत्थमुपदिशन्तीत्यर्थः। तदेवाह, मुनिवासनिवास इति। मुनीनां स्वनिवासदेशेषु तापत्रयनिवर्त्तकानां वासस्याश्रयभूतस्य श्रीकृष्णस्य निवासे सत्यनिष्ट-

दर्शनं दुःखोत्प्रेक्षणं दुःखसम्भावनाऽपीति यावत् किं घटेत ? न घटत एवेत्यर्थः ॥ ३१ ॥ अथान्यदपि ऋषिमतं दूषयितुमनुवदति–देव इत्यादिना श्रुत्वेत्यन्तेन । श्रुत्वेत्यनन्तरमतोऽक्रूरमानयामासेति शेषः । वृद्धवचः प्रदर्शनमेव देव इत्यादिना इतीत्यन्तेन, पुरा किल काशिषु काशीदेशेषु देवे पर्जन्येऽवर्षति सति तद्देशाधिपतिस्तत्राऽऽगताय श्वफल्काय स्वसुतां गान्दिनीं ददौ ततः स पर्जन्यः तद्देशेष्ववर्षत् ॥ ३२ ॥ तत्सुतः श्वफल्कस्य सुतः तत्प्रभावः पितृतुल्यप्रभावोऽक्रूरो यत्र यत्र वसति तत्र तत्र देवोऽभिवर्षते न तत्रोपतापा मारिका अपमृत्युहेतवश्च सन्ति ॥३३॥ इत्येवंविधं वृद्धानां वचः आकर्ण्याक्रूरमानयामासेति तद्दूषयति–नैतावदिति । सत्यमेवं तथाऽपि एतावदेवाक्रूरावस्थानमात्रमेव तत्र वृष्टावुपतापाद्यभावे च न कारणं किं तु मण्यवस्थानं चेति इति दूतैरिति इत्येवं सति अक्रूरे देशान्तरस्थे सतीत्यर्थः । दूतैरक्रूरं सम्यगानीय प्राह स्वाभिमतमानयनकारणं तु वक्ष्यमाणेन "किं तु मामग्रजः सम्यक् न प्रत्येति मणिं प्रति" इति भगवद्वचनेनैव स्फुटीभविष्यतीति अत्र नोक्तम् । यद्वाऽऽह्वतचेष्टितो भगवान् अक्रूरानयनार्थं व्याजेन स्वनिवासभूतायामपि द्वारकायां, तापत्रयमुत्पाद्य अङ्ग हे आर्य्य ! हे सत्यभामे ! अहोऽक्रूरे प्रोषिते खति अत्र तापा उपस्थिताः तथा ह्यन्ये जनाः प्राङ्मयोदाहृतं मणिप्रभावमविस्मृत्यैवमुपदिशन्ति मुनिर्मननशीलोऽक्रूरस्तस्य मणियुक्तस्य निवासस्तन्निवासे तत्समीपनिवासदेशेऽपि मणियुक्ताक्रूरनिवाससमीपदेशेऽप्यरिष्टदर्शनं न घटत एवेत्युक्त्वा तथैव देव इत्यादिरूपं वृद्धवचनं श्रुत्वा अक्रूराऽवस्थानमेव न कारणं किं तु मणेरपीत्येवं रामादिविश्वासार्थं वृद्धवचश्च विमृश्य दूतैरक्रूरमानयामासेत्याह—अक्रूर इत्यादिभिः पञ्चभिः । अस्मिन् पक्षे अविस्मृत्येति छेदः । अरिष्टदर्शनमित्यस्यानन्तरमित्युक्त्वेति शेषः । देवोऽभिवर्षते तत्रेत्यस्य काशीदेशेष्वित्यर्थः ॥ ३४ ॥ कथमित्यत आह–पूजयित्वेति । एनमक्रूरमभिभाष्य सम्बोध्य विज्ञाताखिलचित्तज्ञः सर्वाभिप्रायज्ञा ये पुरुषाः ते येन विज्ञाताः स तथा बुद्धिमत् पुरुषान्तर्गतवेदी महाभागवतस्यास्य मया दत्तोऽपि मणावपेक्षा नास्त्येव तस्मादाहूतो मणिना सहैवागत इति जानन्नित्यर्थः ॥ ३५ ॥ उक्तिमेवाह—नन्विति चतुर्भिः । हे दानपते ! अक्रूरस्यैवेदं नामान्तरं स्यमन्तकमणिः शतधन्वना त्वयि निहितः अधुना आस्ते च नोऽस्माकं पूर्वमेव शतधन्वनो वधात्प्रागेव विदितः ॥ ३६ ॥

**श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली**

इतिशब्दः प्रकारवचनः अङ्गेति सम्बोधनम् एके केचित् पूर्वपुरुषैरुक्तं पुराणवचनमुपदिशन्ति प्रवदन्ति कथमिति तत्राह, गदा भृत इति । श्रीकृष्णस्य निवासनिकटे अरिष्टदर्शनमशुभदर्शनं घटेत ? किञ्च न घटेत ॥ ३१ ॥ स्वराष्ट्रे देवे पर्जन्येऽवर्षति काशीशः काशिराजः स्वराष्ट्रं प्रत्यागताय श्वफल्काय अक्रूरपित्रे गां स्वविषयभूमिं नाम्ना गान्दिनीं स्वसुतां च प्रादात्॥३२॥ किमनेनेति तत्राह—तत्सुत इति । तत्प्रभावः श्वफल्कप्रभावः अतोऽक्रूरो यत्र देशे तत्र देवोऽभिवर्षति तस्मिन्देशे उपतापादयो न भवन्ति ॥ ३३ ॥ अवर्षणादिसम्भवेऽन्यच्च निमित्तमस्तीति भावेनोच्यते नैतावदिति इह अवर्षणादावेतावदक्रूरप्रवासनमेव कारणं न भवति किन्तु स्यमन्तकगमनञ्च कारणमिति च वृद्धवचः श्रुत्वाऽक्रूरं च रामं च समानीयाऽऽनयित्वा ॥ ३४–३६ ॥

**श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः**

अक्रूरे प्रोषिते इत्यादि । अक्रूरे प्रोषिते यच्छारीरादयस्तापा आसन्निति केचिदनभियुक्ता उपदिशन्ति, तत् प्रागुदाहृतं पूर्वोक्तं श्रीकृष्ण-महिमानं विस्मृत्य अतएव तेऽनभियुक्ताः । तत्रोपपत्तिमाह—मुनिवासनिवास इत्यादि । मुनीनां वास आश्रयो यः श्रीकृष्णस्तस्य वासे किमरिष्टदर्शनं घटेत, नैवेत्यर्थः । मुनयः परमभागवता यत्र तिष्ठन्ति, तत्रैतन्न घटते । तेषां निवासस्य निवासे पुनः कथमिति भावः ॥ ३०–३५ ॥ स्यमन्तक इत्यादि । विदितः पूर्वमेव, न इति नोऽस्माभिः सर्वज्ञशिरोमणिभिरेव, न तु केनापि कथित इति भावः ॥ ३६–३७ ॥

**श्रीनाथचक्रवर्तिपादविरचिता चैतन्यमतमञ्जूषा**

अक्रूरे प्रोषिते यदवशिष्टमभूत्, तत् केचिदेवं वदन्तीत्युक्तम् वस्तुतस्तु न तत्, तत्राह—मुनिवास-निवास इत्यादि ॥ ३१–३५ ॥ 'विदितः पूर्वमेव नः' इति न केनापि कथितमिति न मम ज्ञाने सामर्थ्यादृभवानेव जानाति, पूर्वशब्दश्रुत्या पूर्वदर्शितं निजवैभवं स्मारयति ॥ ३६–३७ ॥

**श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी**

देवे इन्द्रे अवर्षति सति काशीषु तत्सुतोऽक्रूर इत्यतो मातामहसम्बन्धादेवाक्रूरः काशीं जगामेति ज्ञेयम् । इति अक्रूरागमने वृद्धानां वचनं श्रुत्वा इह एतावदेव न कारणम् किं तु ममेच्छैवेत्यन्तर्मत्वा काशीतः अक्रूरं समानाय्य ॥ ३२–३४ ॥ विज्ञाता विशः विज्ञत्वादेवाऽखिलचित्तज्ञः नतु केवलमन्तर्यामित्वादेवेति भावः । अन्तर्यामी हि अखिलचितानां ज्ञाता कृष्णस्त्वखिलान्तर्यामिणामपि ज्ञाता भवति तस्याक्रूरचित्तज्ञानं किं चित्रमिति भावः । अतः स्मयमान इति न त्वं सत्राजिति कृतवैरः नापि

**मणेश्चौरः** नापि धनलुब्धस्त्वं तु मत्परमभक्त एवेति त्वन्मनः किमहं न जानामि त्वदन्तर्यामिणमप्यहं जानामि कथं मत्तस्त्वं **विभेषीति** भावः ॥ ३५ ॥ अत्रार्थे त्वां किं पृच्छामि जानाम्येवेत्याह—नन्विति ॥ ३६ ॥

## गूढार्थदीपिनी

अङ्ग हे राजन् । एके वैशम्पायनादयः । प्रागुक्तं श्रीकृष्णमाहात्म्यम् । मुनीनां वासो यस्मिन् स श्रीकृष्णः तस्य निवासे ॥ ३१ ॥ अन्यदपि मुनिमतं दूषयितुमनुवदति—देव इति । श्वफल्काय अक्रूरपित्रे । ततो दानात् अनवर्षत् स्मेत्याश्चर्ये ॥ ३२–३३ ॥ एतावत् मणिसहिताक्रूरप्रवासनमेव न किन्तु ममेच्छैव ॥ ३४ ॥ अभिभाष्य संबोध्य हृ हर्षेण विज्ञाता विज्ञः ॥ ३५ ॥ ननु निश्चये । नोऽस्माकम् ॥ ३६ ॥

## श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

अक्रूरस्य तादृशप्रभावे हेतुं दर्शयितुं तन्मतमेवानुवदति, देव इति द्वाभ्याम् ॥ ३२–३३ ॥ इतीति जनार्दनः यथा एके उपदिशन्ति इतीत्थं तदानीन्तनानां केषाञ्चिद्वृद्धानामपि वचो वाक्यं श्रुत्वा इह अरिष्टागमे एतावत् अक्रूरापगममात्रं कारणं न भवति किं तु ममेच्छेति मत्वा काशीतः समानीय अक्रूरं प्राह ॥ ३४ ॥ प्राहाक्रूरमित्येतत्प्रपञ्चयति, पूजयित्वेति ॥ ३५–३६ ॥

## श्रीसत्यधर्मकृता श्रीभागवतटिप्पणी

कृष्णपृष्टानां मध्ये केचन विपश्चितः । पुराणवचनमेवमुपदिशन्तीत्याहुः । इतीति । अङ्ग कृष्ण । एके विस्मिताः । कथमिति तत्राह । गदाभृतस्तव निवासनिकटे निवाससमीपे किंवाऽरिष्टं घटेत न किमपीत्युपदिशन्ति । एक अङ्ग हे परीक्षित् । गदाभृतो निवासनिकटेऽरिष्टदर्शनं घटेत वा किन्न घटेतेति विस्मिता उपदिशन्तीति योजना वा ॥ ३८ ॥ तथाऽपि श्रुतं किञ्चित्पुरावृत्तं वक्ष्याम इति वदन्ति ॥ देव इति । इन्द्रेऽवर्षति सति काशीशः काशीराजो गां यादृच्छया स्वभूमिमागताय श्वफल्कायाक्रूरपित्रे स्वसुतां गान्दिनीनाम्नीं प्रादात् । ततः कन्याप्रदानानन्तरं काशिषु देशेष्ववर्षत् स्म स्मृतिसिद्धमिदम् ॥ ३९ ॥ ननु महिष्याः सर्पिर्विपुलं चेन्महिषस्य किमायातमिति न हि पितुः पाण्डित्येनेति नीत्या तत्तनयस्य किमायातमित्यत आहुः । तत्सुत इति । तस्य श्वफल्कस्य सुतोऽक्रूरस्तत्प्रभावस्तस्य प्रभाव इव प्रभावो यस्य सः । यत्राक्रूरस्तत्र स देवोऽभिवर्षते । तत्र नोपतापो न मारिका डाकिन्याद्या न भवन्ति ॥ ४० ॥ इति वृद्धानां वचः श्रुत्वा नैतावदेवारिष्टावासौ कारणं किन्तु मणिगमनं तथा मय्यवञ्चके वञ्चकतामतिमग्रजस्येत्यादिकं चेति । दूतैः रामाक्रूरौ समानीयाकारयित्वा पूर्वमक्रूराकारणं चेत्पुनः कृष्णो रहस्येवं बोधयामासेति बलः सन्दिह्येतेति रामाक्रूरावित्युक्ता प्राग्राम आजगाम ग्राममनन्तरमक्रूर इति चागततरतमता ध्वन्यते ॥४१॥ कृष्णोऽक्रूरं मानयन् प्रियाः कथाः कथयित्वा विज्ञाताखिलतत्त्वज्ञोऽखिलं तत्त्वं सुधन्वरहस्यं जानातीति सोऽखिलतत्त्वज्ञोऽक्रूरो विज्ञातो येन सः । अखिलाश्चयश्च ते तत्त्वज्ञाः कृतवर्माक्रूरशतधन्वानस्ते विज्ञाता येन स इति वा । अत एव स्मयमान उवाच ॥ ४२ ॥ हे दानपते । त्वयि शतधन्वनाऽसौ श्यमन्तको मणिः श्रीमान्न्यस्त इति पूर्वमेव नो विदितो ननु निश्चयः ॥ ४३ ॥

## श्रीमद्वल्लभाचार्य्यकृता सुबोधिनी

पूर्ववत्पुनर्लोके विपरीततया कीर्तिर्जातेत्याह **इत्यङ्गेति** । यो हि मणिं गृहीत्वा पलायते, तं स्तौति लोकः । यो न गृह्णाति निर्लेपः, तं निन्दतीति लोकः । अतो निन्दां पूर्वाध्याये निरूप्य, स्तुतिमत्र निरूपयति । **इति** एवं जाते । **अङ्ग** हे राजन् । **एके** अभिज्ञाभिमानिनः परमार्थदर्शिनोऽपि **प्रागुदाहृतं** भगवतो वीर्यविभागं मणिसामर्थ्यं वा **विस्मृत्य** स्वयं भ्रान्ताः सन्तः एकदेशे पर्यवसितमतयः अन्यानुपदिशन्ति । उभयत्रापि भगवदिच्छा प्रयोजिका, विस्मरणे उपदेशेऽपि । तेषामुपदेशमाह **मुनिवासेति सार्धाभ्याम्** । मुनिरयमक्रूरः, तस्य वासरूपे निवासे स्थितौ, कृत्वा चिदभिमानेन मुनिस्तिष्ठतीत्यर्थः । तत्र अरिष्टदर्शनं **न घटेत** । तस्य मुनित्वमुपपादयन्ति **देवेऽवर्षतीति** । पूर्वं काशिराजः अवर्षति देवे अनावृष्ट्या पीडितः श्वफल्काय प्रसङ्गादेवागताय स्वसुतां महादेवादिवाक्यात् गान्दिनीं प्रादात् । ततः काशिषु काशीप्रदेशेषु देवो वर्षति स्म । स्मेति प्रसिद्धे । अवर्षदिति । किमतो यद्येवम्, तत्राह **तत्सुत** इति । वर्षपर्यन्तं प्रत्यहं गोदाने क्रियमाणे अपुत्रस्य काशिराजस्य कन्या संजाता । ततो द्वादशवर्षपर्यन्तं पुनरेकैकां गां तस्या हस्ते दापितवान् । तादृशी गान्दिनी । तस्याः सुतः । श्वफल्कसुतो वा । तयोर्यावान् प्रभावः तावत्प्रभावयुक्तो भवितुमर्हति । **असाविति** । तथैव दृश्यते । आविर्भूतो वा । तत्राधिकभक्तौ भगवांस्तद्रूपेण भासत इति न काप्यनुपपत्तिः । यत्र **यत्राक्रूरः** अर्थात्तिष्ठतीति पूर्वोक्तन्यायेन तत्र देवोभिवर्षत इति पितृसामर्थ्यसम्बन्धः । **नोपपाता** इति मातृसामर्थ्यम् । भक्त्या उपलब्धत्वात् तस्याः साधारणोऽपि प्रभावः अतिरिक्तः, तमाह **न मारिका** इति । तामस्यः पूतनादिशक्तयो मारिकाः । सात्त्विके भगवद्भक्ते न सन्निहिता भवन्तीति युक्तमेव । **उपपाताः** पातकान्युत्पाता वा । गोदानस्य तथा प्रभावो निरूपित इति । हेत्याश्चर्ये । प्रभावोऽपि कथं कार्ये संजात इति, तत्राप्युभयोः, ततोऽपि विशिष्टश्चेति ॥ ३३ ॥ ननु

विद्यमाने भगवति अन्योत्कर्षवचनानि भ्रान्तानीति चेत्, तत्राह इति **वृद्धवचः श्रुत्वेति**। वृद्धा आदरणीयाः यथोपश्रुतिः पूर्वं पश्चाद्भगवता श्रुता, तथेदमपि श्रुत्वा तद्दोषनिराकरणार्थं प्रयत्नः कर्तव्यः। तत्र लोका अर्धं भ्रान्ता बलभद्रं मणिं च कारणत्वेन न जानन्तीति, भगवान् पुनः विमृश्यकारी तथैव कृतवानित्यङ्गीकारे दोषः स्यादिति, पूर्णमेव कारणं मत्वा समाधानं कृतवानिति वक्तुमाह **नैतावदिह कारणमिति**। इह आध्यात्मिकादितापेषु एतावदेव न कारणम्, किन्तु अन्यदप्यस्तीति तदनुक्त्वा इति निश्चित्य, सम्यक् चिन्तयित्वा दूतैः अक्रूरं समानाय्य, अमारणार्थमभयं दत्वा, **जनार्दनो** लोकानामविद्यादिसर्वदुःखनाशकः मणिं प्रकटयितुं तमाहेति सम्बन्धः। स ह्यक्रूरः काशिषु प्रयागे च मरणं निश्चित्य तीर्थमाश्रित्य स्थितः। यदि भगवान् शतधन्वानमिव मारयिष्यति, तदात्रैव प्रयागादौ मारयत्विति परलोकप्रेप्सुः। भगवांश्च क्लिष्टं न करोतीति, मणिमन्यथापि दास्यतीति, तथापि सत्यभामाप्रतिनिधित्वेन अक्रूरायैव मणिर्देय इति भगवान्निश्चित्य मौशलेनैव तं मारयितुं तथा कृतवान्। नह्यस्मत्स्वामी जीवैर्निश्चिते ज्ञाते वा प्राकृत इव तन्मन्तुं गृह्णाति। सात्यकिरिव प्रायोपविष्टं मारयति। तक्षक इव वा भक्षयति। मृत्युरिव वा हन्ति। तस्मादक्लिष्टकर्मा भगवान् समाहूयैव प्राह ॥ ३४ ॥ किञ्च। **पूजयित्वा** पितृव्यत्वेन। **अभिभाष्य** साधु समागतोऽसीति कुशलप्रश्नं कृत्वा। ततो यथा मनः परितुष्टं भवति, तथा प्रियाः कथाश्चोक्त्वा शरीरेन्द्रियान्तःकरणानां त्रिविधसत्कारेण सुखं दत्त्वा। याचिते प्रदर्शयिष्यतीति निश्चित्य। तत्र हेतुमाह **विज्ञाताखिलचित्तज्ञ** इति। एतज्ज्ञानमेवाक्रूरस्य प्रदर्शनाद्यङ्गीकारे हेतुरिति तन्निरूपितम्। भक्तो भूत्वा पूर्वं मार्गपांसुष्वपि विलुठन् इदानीं सङ्गवशादेवं जात इति **स्मयमानः**। हेत्याश्चर्ये। यस्माद्यो बिभेति, यो वा दण्ड्यः, स प्रसादपात्रमिव परिभाष्यत इति ॥ ३५ ॥ भगवद्वाक्यमाह **ननु दानपते** इति **चतुर्भिः। दानपतिर्दानाध्यक्षः सर्वधर्मसूक्ष्मज्ञः। अनेन गोपनमनङ्गीकारोऽन्यथा वदनं च व्यावर्तितम्। **न्यस्तः** त्वयि स्थापितः। आस्तेऽद्यापि तव स्थाने। शतधन्वनैव, न तु तदीयैः। **स्यमन्तको** मणिः प्रसिद्धः। तस्य नाशादिकं न सम्भवतीत्याह **श्रीमा**निति। सर्वदा श्रीमत्त्वात् नापद्रूपं नाशादिकं प्राप्नोति। पूर्वोक्तार्थेषु प्रमाणमाह **विदित** इति। इदानीं वेदकं भ्रान्तं भविष्यतीति तन्निवारणार्थमाह। **पूर्वमेव नोऽस्माभिः विदित** इति ॥ ३६ ॥

### श्रीसुबोधिनी–सारः

हे अंग एके श्रुतभाषापराः प्राक् पूर्वम् उदाहृतमुक्तं श्रीकृष्णप्रभावं विस्मृत्य इत्युपदिशंति एवमाहुः तद्दूषयति मुनीनां वासस्य निवासे परमाश्रयभूते श्रीकृष्णे सति अरिष्टानां दर्शनं घटेत किं संभवेत् किम् अपि तु न संभवेत् तदिच्छया सर्वं जातमिति भावः ॥ ३१ ॥ किं च देवे मेघेऽवर्षति सति काश्या ईशो राजा आगताय श्वफल्काय स्वसुतामात्मपुत्रीं "दिनेदिने गोदानादुगांदिनी" इति प्रसिद्धं हरिवंशे तां प्रादात्ततोनंतरं काशिषु देशेषु अवर्षत् स्म प्रसिद्धम् ॥ ३२ ॥ तस्य सुतोसौ अक्रूरः तत्प्रभावः स एव प्रभावो यस्येति यत्रयत्र देशेस्ति तत्र देवो मेघो वर्षति उपतापा अध्यात्मादयो न मारिका अकालमरणहेतवो न ॥ ३३ ॥ इति वृद्धानां वचः श्रुत्वा एतावदियदेव कारणं न किं तु मणिलाभो रामप्रसन्नता जनप्रतीतिरिति मत्वा विचार्याक्रूरं समानाय्य जनार्दनः प्राह ॥ ३४ ॥ पूजयित्वा सत्कृत्य प्रियाः कथाः कथयित्वा विज्ञातमखिलं सर्वं येन स चासौ चित्तज्ञश्चेति कृष्णः स्मयमान ईषद्धसन् अभिभाष्य संबोध्यैनमक्रूरमुवाच ह स्फुटम् ॥ ३५ ॥ हे दानपते ! इति संबोधनं गूढाभिप्रायार्थं श्रीमान् स्यमंतको मणिः शतधन्वा त्वयि न्यस्त आस्ते वर्त्तते नोस्माभिः पूर्वमेव विदितो ज्ञातः ॥ ३६ ॥

### गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

परमतं दूषयति—इतीति। 'त्वयाप्येतन्नाङ्गीकर्तव्यम्, अस्मत्पक्षपातित्वात्' इति सूचयन् सम्बोधयति—अङ्गेति। प्रागयन्मयोक्तं श्रीकृष्णमाहात्म्यं तद्विस्मृत्येत्येवमेके उपदिशन्ति तत् मुनीनां वासो यस्मिन् स मुनिवासः श्रीकृष्णस्तस्य विवासे सति अक्रूरापगमनमात्रेण अरिष्टदर्शनं किं घटेत ? तदिच्छां विना न घटेतेत्यर्थः ॥ ३१ ॥ पुनस्तन्मतमेव दर्शयति—देव इति। काशिषु काशिदेशेषु देवे पर्जन्ये अवर्षति सति काशीशस्तद्देशाधिपतिः तत्रागताय श्वफल्काय स्वसुतां गान्दिनीं प्रादात्, ततः कन्यादानात्तद्देशेषु पर्जन्योऽवर्षत्। वै प्रसिद्धौ। स्मेत्याश्चर्ये ॥ ३२ ॥ असौ तस्य श्वफल्कस्य सुतोऽक्रूरोपि तत्तुल्यप्रभावः, अतः स यत्र यत्र वसति तत्र देवोऽभिवर्षति। शारीराद्युपतापाः मारिका अकालमृत्युहेतवश्च न भवन्ति। अतस्तत्प्रवासेनैव एवमुत्पाता भवन्ति। हेत्यवधारणे ॥ ३३ ॥ परमतमुपन्यस्य स्वमतमाह—इतीति। यद्यपीह उत्पाते एतावत् अक्रूरापगममात्रं कारणं न भवति, तथापि इत्येवंभूतं अक्रूरमहिमाप्रतिपादकं वृद्धाभिमानिनां वचः श्रुत्वा 'सत्यमेवम्' इति मत्वा दूतैरक्रूरं समानाय्य जनार्दनः श्रीकृष्णः प्राहेत्यन्वयः ॥ ३४ ॥ प्रश्नप्रकारमाह—पूजयित्वेति। आगतमेनमक्रूरं प्रथमं पूजयित्वा तथाऽन्याः पियाः कथाः कथयित्वा अभिभाष्य सम्बोध्य स्मयमानः हसन्मुखो हर्षेण उवाचेत्यन्वयः। हर्षे हेतुमाह—विज्ञाताखिलचित्तज्ञ इति। विज्ञातमखिलं येन स विज्ञाताखिलः, अत एव चित्तगतमपि जानातीति चित्तज्ञः स चासौ स मणिं गृहीत्वा मणिदानार्थमागतस्य अक्रूरस्य स्वस्मिन् भक्त्यतिरेकं ज्ञात्वा सन्तोषेण हृष्ट इत्याशयः ॥ ३५ ॥ तदुक्तिमेवाह–नन्विति चतुर्भिः। 'मणिप्रदानं तव युक्तमेव' इत्याशयेन सम्बोधयति—दानपते इति। ननु निश्चितमेतत् शतधन्वना न्यस्तः स्यमन्तको मणिस्त्वय्यास्ते स च नोऽस्माकं पूर्वमेव बिदितः। तत्र हेतुः—श्रीमानिति। सुवर्णोत्पत्त्यादिप्रभाववानित्यर्थः ॥ ३६ ॥

## अन्वितार्थप्रकाशिका

तन्मतं दूषयति--इतीति ॥ अङ्ग हे राजन् ! प्रागुदाहृतं पूर्वं यन्मयोक्तं श्रीकृष्णमाहात्म्यं तद्विस्मृत्यैवमेके वैशम्पायनादयः उपदिशन्ति तत् मुनानां वासो यस्मिन्सः मुनिवासः श्रीकृष्णस्तस्य निवासे सति एकस्य मुनेर्निवासेऽप्यरिष्टदर्शनं न भवति किं पुनः सर्वनिवासस्य निवासे सतीत्यर्थः । अक्रूरापगमनमात्रेणारिष्टदर्शनं किं घटेत तदिच्छां विना न घटेत ॥ ३१ ॥ पुनस्तन्मतमेव दर्शयति—देव इति ॥ काशिषु काशिदेशेषु देवे पर्जन्ये अवर्षति सति काशीशस्तद्देशाधिपतिः तत्रागताय श्वफल्काय स्वसुतां गान्दिनीं प्रादात्ततः कन्यादानात्तद्देशेषु पर्जन्योऽवर्षत् ॥ ३२ ॥ तदिति ॥ असौ तस्य श्वफल्कस्य सुतोऽक्रूरोऽपि तत्तुल्यप्रभावः अतः स यत्र यत्र वसति तत्र देवोऽभिवर्षति । शारीराद्युपतापाः मारिका अकालमृत्युहेतवश्च न भवन्ति । अतस्तत्प्रवासेनैवैवमुत्पाता भवन्ति ॥ ३३ ॥ इतीति ॥ इत्येवंभूतम् अक्रूरमहिमप्रतिपादकं वृद्धाभिमानिनां वचः श्रुत्वा सत्यमेवं तथापीह उत्पाते एतावत् अक्रूरापगममात्रं कारणं न भवति । किन्तु मणेरप्यपगम इति मत्वेत्येतदन्तं परमतम् इति मत्वा दूतैरक्रूरं समानाय्य जनार्दनः श्रीकृष्णः प्राह स्म ॥ ३४ ॥ पूजयित्वेति ॥ विज्ञातमखिलं येन स विज्ञाताखिलः स चासौ चित्तज्ञः साक्षी चेति स भगवान् । अयं भावः । महाभागवतस्यास्य मया दत्तेऽपि मणावपेक्षा नास्त्येव । यत आहूतो मणिना सहैवागतः इति ज्ञात्वा आगतमेनमक्रूरं प्रथमं पूजयित्वा तथाऽन्याः प्रियाः कथाः कथयित्वा अभिभाष्य संबोध्य स्मयमानः हसन्मुखो हर्षेण उवाच ॥ ३५ ॥ नन्विति ॥ हे दानपते ! ननु निश्चितं शतधन्वना न्यस्तः श्रीमान् सुवर्णोत्पत्त्यादिप्रभाववान् स्यमन्तको मणिः त्वय्यास्ते । स च नोऽस्माकं पूर्वमेव विदितः ॥ ३६ ॥

## श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्

इतीति । अंग हे परीक्षित् प्रागुदाहृतं श्रीकृष्णमाहात्म्यं विस्मृत्यैके लोका इत्येवमुपदिशंति कथयंति । तथाहि मुनिनां वासो ध्यानेन निवसनं यस्मिन्स मुनिवासः श्रीकृष्णस्तस्य निवासे सति अन्यत्राक्रूरगमनमात्रेणरिष्टदर्शनं कि घटेत न घटेतेत्यर्थः एवमसंभवेप्यक्रूरस्य द्वारकायामानयनार्थं श्रीकृष्णेनैवैतत्सर्वं दर्शितमिति भावः ॥ ३१ ॥ काशीशः काशिपतिः देवे मेघे अवर्षति सति । काश्यामागताय श्वफल्काय अक्रूरपित्रे ततः प्रदानात् सः अवर्षत् ववृषे । काशिष्विति बहुवचनं देशाऽभिप्रायेण ॥३२-३३॥ इति इत्थमक्रूरमाहात्म्यपरं वृद्धवचः श्रुत्वापि एतावत् वृद्धवचनमेवेहाक्रूरानयने कारणं हेतुर्न भवति किंतु मदिच्छैव कारणमस्ति । इति स्वेच्छाऽनुकूलं वृद्धवचो मत्वा जनार्द्दनः । अक्रूरं समानाय्य दूतेन समाहूय प्राह ॥ ३४ ॥ प्राहेत्युक्तं यत्तत्प्रकर्षेण विवृणोति पूजयित्वेति अभिभाष्य भोदानपते इत्यादि श्रेष्ठत्ववचनैः संबोधनं कृत्वा । विज्ञातं बुद्धं अखिलं भूतभविष्यादिसर्वं येन स चासौ अतएव चित्तज्ञश्च ॥ ३५ ॥ न्यास्तो न्यासेन दत्तो मणिः । त्वयि तव समीपे आस्ते तेनाऽस्माभिः पूर्वमेव विदितो ज्ञातः ॥ ३६ ॥

## भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

इतीति ॥ अङ्ग हे राजन्, इतीत्थं, एके केचनः ऋषयः प्राक् उदाहृतं श्रीकृष्णमाहात्म्यमिति शेषः । विस्मृत्य, उपदिशन्ति, तर्त्कितं अरिष्टदर्शनं, मुनीनां स्वनिवासदेशेषु तापत्रयनिवर्त्तकानामृषीणां वास आश्रयभूतः, श्रीकृष्णस्तस्य निवासे सति, किं घटेत न घटेतैवेत्यर्थः ॥३१॥ अथान्यदपि ऋषिमतं दूषयति देव इत्यादिनैकश्लोकेन ॥ देव इति । पुरा, देवे पर्जन्ये, अवर्षति सति, काशीशः काशीपतिर्नृपः, तत्र स्वपुरे, आगताय, श्वफल्काय, गान्दिनीं स्वसुतां, प्रादात् । ततः, काशिषु पर्जन्य इति शेषः । अवर्षत् स्म वै ॥ ३२ ॥ तत्सुत इति ॥ तत्सुतः श्वफल्कस्य सुतः, तत्प्रभावः पितृतुल्यप्रभावः, असौ, अक्रूरः, यत्र यत्र वसति, तत्र तत्र, देवः अभिवर्षते हि । मारिकाः अपमृत्युहेतवः, उपतापाश्च, न । यत्र सः स्यात्तत्र न स्युरेवेत्यर्थः ॥३३॥ इतीति ॥ इत्येवंविधं, वृद्धवचः वृद्धानां वचनं, श्रुत्वा आकर्ण्य, भगवानक्रूरमानयामासेति शेषः । एतद्दूषयति । इहाक्रूरानयने, एतावत् मार्याद्युपद्रवप्रशमनादिकं, कारणं न, किं तु इति हेतोः, स्वमिथ्यापवादनिवृत्तः स्वपत्नीभ्रात्रोर्हृद्गतशङ्कानिवृत्तेर्हेतोश्चेत्यर्थः । जनार्द्दनः श्रीकृष्णः, दूतैः, अक्रूरं समानीय, प्राह ॥३४॥ एतदेव स्फुटमाह ॥ पूजयित्वेति ॥ विज्ञातमखिलं येन स चासौ चित्तज्ञश्च भगवान् एनमक्रूरं, अभिभाष्य हे अक्रूरेति संबोध्य, पूजयित्वा प्रथमतोऽतीव सत्कृत्य, प्रियाः कथाः, कथयित्वा, स्मयमानः, सन्, ह स्फुटं, उवाच ॥ ३५ ॥ उक्तिमेवाह नन्विति चतुर्भिः ॥ नन्विति ॥ हे दानपते, एतदक्रूरस्यैव नामान्तरम् । श्रीमान् स्यमन्तकः मणिः, शतधन्वना त्वयि, न्यस्तः आस्ते । सः, नोऽस्माकं पूर्वं शतधन्वनः वधात् प्रागेव, विदितः, अस्ति ननु ॥ ३६ ॥

## कृष्णप्रिया

इनको यह अनुसन्धान नहीं है कि भला भगवान् श्रीकृष्ण में समस्तदेव ऋषिमुनि तीर्थ ग्रह आदि मङ्गल तत्व विराजते हैं वैसे पुरुषोत्तम के रहने पर क्या द्वारिकाजी में उपद्रवों की सम्भावना होगी ? कि अक्रूरजी के चले जाने पर अनिष्ट हो रहे हैं यह समझा जाय ॥ ३१ ॥ महाराज परीक्षित् ! लोक वार्ता के लिये क्या कहा जाय ? इस अवसर पर द्वारिका जी में रहने वाले कई बुजुर्ग लोग परस्पर यह बात करते थे कि—एक बार काशी नृप के राज्य में दुष्काल पड़ा, वर्षा न हुई थी तब

अक्रूरजी के पितृचरण श्वफल्कजी काशी में पधारे थे उनको अपनी पुत्री गांदिनी व्याह दी तब सारे महामारी आदि उपद्रव शान्त हो गये एवं खूब वर्षा भी हो गयी और काशी में कुशलता हुई। उनके पुत्र अक्रूरजी भी जहाँ रहते हैं वहाँ अच्छी तरह से वर्षा होती है और कोई उपद्रव नहीं, कष्ट संभावित नही इस लोकचर्चा को सुनकर भगवान् हंसते रहे और भक्तवत्सलता के नाते भक्त की प्रतिष्ठा को बढ़ाने के लिये एवं अक्रूरजी के यशोवृद्धि के लिये एवं बड़े भाई श्रीबलभद्रजी को भी बड़प्पन देने के लिये दोनों को बुलाने के लिये मिथिलाजी और वाराणसी में बुलावा भेजा और इन दोनों के पधारने पर वर्षा भी करवाई ऐसे प्रभु भक्तवत्सल है ॥ ३२-३४ ॥ अक्रूरजी के काशी से द्वारिका में एवं मिथिलाजी से बलभद्रजी के पधारने पर दोनों का खूब स्वागत किया-सत्कार किया मधुर वार्तालाप स्नेहगोष्ठी करके सम्भाषण किया। भगवान् श्रीकृष्ण प्रत्येक भक्तजन के चित्त के प्रत्येक संकल्प जानते हैं। अक्रूर की उर गाथा जानकर मुसकराते हुए अक्रूरजी से कहा कि चाचाजी ! आप महादानी हैं धर्म के संरक्षक हैं मुझे यह भी जानकारी है कि शतधन्वा बड़ी तेजस्विनी प्रभावमयी स्यमन्तकमणि आप के करकमलों में रख गये हैं ॥ ३५-३६ ॥

**सत्राजितोऽनपत्यत्वाद् गृह्णीयुर्दुहितुः सुताः । [1]दायं निनीयापः पिण्डान् [2]विमुच्यर्णं च शेषितम् ॥ ३७ ॥**
**तथापि [3]दुर्धरस्त्वन्यैस्त्वय्यास्तां [4]सुव्रते मणिः। किंतु मामग्रजः सम्यङ् न प्रत्येति मणिं प्रति ॥ ३८ ॥**
**दर्शयस्व महाभाग बन्धूनां शान्तिमावह । अव्युच्छिन्ना मखास्तेऽद्य वर्तन्ते रुक्मवेदयः ॥ ३९ ॥**
**एवं सामभिरालब्धः [5]श्वफल्कतनयो मणिम् । आदाय वाससाच्छन्नं ददौ सूर्यसमप्रभम् ॥ ४० ॥**

### कर्दमक्षमा

अन्वयः—सत्राजितः, अनपत्यत्वात्, पिण्डान्, आपः, निनीय, च, ऋणम्, विमुच्य, दुहितुः, सुताः, शेषितम्, दायम्, निनीयुः ॥ ३७ ॥ तथापि, अन्यैः, दुर्धरः, तु, मणिः, त्वयि, सुव्रते, आस्ताम्, किन्तु, अग्रजः, मणिम्, प्रति, माम्, न, सम्यङ्, न, प्रत्येति ॥ ३८ ॥ हे महाभाग ! अतो, मणिं, दर्शयस्व, तेन, बन्धूनां, शान्तिं, आवह, यतः, रुक्मवेदयः, अव्युच्छिन्नाः, मखाः, ते, अद्य, वर्तन्ते ॥ ३९ ॥ एवम्, सामभिः, आलब्धः, श्वफल्कतनयः, वाससा, आच्छन्नं, सूर्यसमप्रभम्, मणिम्, आदाय, ( कृष्णाय ) ददौ ॥ ४० ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

ततः किमत आह—सत्राजित इति । अपः पिंडांश्च निनीय दत्त्वा ऋणं च विमुच्यापाकृत्य शेषितमवशिष्टं दायं दुहितुः सत्यभामायाः सुता गृह्णीयुरिति शास्त्रम् । तथा च स्मरति—"पत्नी दुहितरश्चैव पितरौ भ्रातरस्तथा । तत्सुता गोत्रजा बन्धुशिष्यसब्रह्मचारिणः" इति ॥ ३७ ॥ अग्रजोऽपि न प्रत्येति न विश्वसितीति ॥ ३८ ॥ नास्तीति न वक्तव्यम् यतोऽव्युच्छिन्नाः संतता मखा वर्तन्त इति ॥ ३९ ॥ आलब्ध उक्तो हृदि स्पृष्ट इति वा ॥ ४० ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

ततो विदितात् । दायं भागम् । शास्त्रं याज्ञवल्क्यः । तथा च स्मरन्ति-सामश्रवआदयः । पत्नी त्वव्यभिचारिणी । तदभावे दुहितरः, ता अप्यनूढा एव । तदभावे पितरौ यदि माता भवेत्तदा माता, तदभावे पिता । तयोरभावे भ्रातरः, तेऽपि सोदरा एव, एव, तदभावे भिन्नोदरा अपि । तदभावे भ्रातृपुत्राः । तदभावे गोत्रजाः, पितामही, सपिंडाः, समानोदकाश्च । पितामह्या अभावे सपिंडाः सप्तपुरुषावधयः । तदभावे समानोदकाश्च चतुर्दशपुरुषावधयः । ततः परे गोत्रजा इति विवेकः । गोत्रजाभावे बन्धवः, ते च त्रिधा—आत्मबन्धवः पितृबन्धवो मातृबन्धवश्च । तथाहि—"आत्मपितृष्वसुः पुत्रा आत्ममातृष्वसुः सुताः । आत्ममातुलपुत्राश्च विज्ञेया आत्मबन्धवः । पितुः पितृष्वसुः पुत्राः पितुर्मातृष्वसुस्सुताः । पितुर्मातुलपुत्राश्च विज्ञेयाः पितृबान्धवाः । मातुः पितृष्वसुः पुत्रा मातुर्मातृष्वसुः सुताः । मातुर्मातुलपुत्राश्च विज्ञेया मातृबांधवाः ।" इति । तत्र चांतरंगत्वात्प्रथममात्मबन्धवो धनभाजस्तदभावे पितृबन्धवस्तदभावे मातृबन्धव इति क्रमो ज्ञेयः । बन्धूनामभावे आचार्य इति, तदभावे शिष्याः । आचार्यः श्लोकानुक्तोपि "पुत्राभावे यः प्रत्यासन्नस्सपिंडस्तदभावे आचार्य आचार्याभोंवतेवासी" इत्यापस्तंबस्मरणात् । शिष्याभावे सब्रह्मचारी धनभाक्, येन सहैकस्मादाचार्यादुपनयनाध्ययनतदर्थज्ञानप्राप्तिः स सब्रह्मचारी । तदभावे ब्राह्मणद्रव्यं यः कश्चिच्छ्रोत्रियो गृह्णीयात् "श्रोत्रिया ब्राह्मणस्यानपत्यस्य रिक्थं भजेरन्" इति गौतमस्मरणात् । तदभावे

---

१. दानं-वीर. । २. च्यर्णमशेषतः-विज. । ३. रोऽह्यन्यै-विज. । ४. प्रापितो-विज. । ५. रारब्धः-विज. ।

ब्राह्मणमात्रम् "सर्वेषामप्यभावे तु ब्राह्मणा रिक्थभागिनः" इति मनूक्तेः। ब्राह्मणद्रव्यं राजा न कदापि गृह्णीयात्। "अहार्यं ब्राह्मणद्रव्यं राज्ञा नित्यमिति स्थितिः" इति मनूक्तेः। "ब्राह्मणार्थस्य तन्नाशे दायादश्चेति कश्चन। ब्राह्मणायैव दातव्य-मेनस्वी स्यान्नृपोऽन्यथा॥" इति नारदोक्तेश्च। क्षत्रियादिधनं सब्रह्मचारिपर्यंतानामभावे राजा हरेन्न ब्राह्मणः। "इतरेषां तु वर्णानां सर्वाभावे हरेन्नृपः" इत्येतत्सर्वं द्वादशविधपुत्राभावे ज्ञेयम्। शूद्रापुत्रं विनेत्यलमति प्रसंगेन। अक्रूरस्य सर्वेषामन्येषां च सम्प्रति विप्रतिपत्तिनिरसनार्थमाह—सत्रेति। अनपत्यत्वादिति कन्यांतरमपि निरस्तम्। सत्राजितः पत्नीनां तु सहमरणं ज्ञेयम्॥ ३७॥ यद्यपि शाश्वतोऽस्मानेवायाति तथापीति। अन्यैस्त्वदितरैः। दुर्धरः त्वत्तुल्यवदान्यत्वाभावाद्धर्तुमशक्यः। तदुक्तम्—"अदातुर्नचिरं लक्ष्मीस्तिष्ठतीति विदुर्बुधाः" इत्युक्तेः। यद्येवं तर्हि किमर्थं तमिच्छसीति चेदाह—किन्त्विति। तथापीत्यर्द्धकम्। हि एव। सुव्रते ब्रह्मचर्यादिनिष्ठत्वादधिकारिण्यपि त्वय्यास्तांमात्रम्, तेन सर्वेषामस्माकमरिष्टनाशादिना हिताय भविष्यतीति मणौ सर्वेषां साधारण्यं विज्ञाप्य श्रीसंकर्षणादितर्किताः स्वेन तस्मै दानेच्छाप्याच्छादिता। किन्त्विति सार्द्धकम्। किन्तु दर्शयस्व-मात्रं, यतो—मामिति। तदेवं सहसा मणिप्रकाशनार्थमेव तमुद्वेजितवान्, न तु संकर्षणस्यापि तथा भाव इति मनसि वितर्कित-वान्, "तत आह बलो नूनं स मणिः शतधन्वना। कस्मिंश्चित्पुरुषे न्यस्तः" इत्युक्तत्वात्। कस्मिंश्चिदित्यक्रूर एवेति गूढोभि-प्रायः। तन्नामग्रहणं यथा शतधन्वकर्तृकसत्राजिद्वधोऽवगतस्तथा तत्कृतं शतधन्वनि दुर्मंत्रदानमयम् 'योऽस्मभ्यं संप्रतिश्रुत्य कन्यारत्नम्' इति वचनं चावगतमिति तस्मै रोषात्, तथापि तत्पक्षपातमुंचतं स्वानुजं प्रति प्रणयरोषाच्च। तत्र मणिं प्रति मणिर्मयि नास्तीति न प्रत्येति सम्यगिति। यद्यपि दानयज्ञादिना त्वय्याशंकते तथापि स्वदूरे शतधन्वनो मारणाद्विनयाच्च मय्यपीत्यर्थो वचसि ज्ञेयः। सम्यक् न प्रत्येति मदिच्छां ज्ञात्वैव त्वं मणिमादाय पलायितवानिति मन्यते। इत्यर्थस्तु मनसि ज्ञेयः। तत्र पूर्वार्थस्तु—परार्थस्य नातिदुष्टताव्यञ्जनाय च निर्दिष्टः॥ ३८॥ शान्तिं प्रशमम्। महाभागेति—महान् भागो मद्भक्तिप्राप्यांशो वा यस्य तत्संबोधनमिति तव मरणापेक्षा नास्तीति भावः। यतो बहूनां बलदेवादीनामस्माकं शान्तिं मण्यर्थं-मन्योन्यकलहोपरतिम् आवह सम्यक्प्रापय। अद्याऽधुनापि श्रीबलदेवश्चायं मिथिलातः पूर्वमानीतः। तथा च श्रीहरिवंशे—"प्रत्याय्य तु ततो रामो वृष्ण्यंधकमहारथैः। आनीतो द्वारकामेव कृष्णेन च महात्मना।" इति॥ ३९॥ आलभेरुक्त्यर्थाऽ-प्रसिद्धिं मत्वाह—हृदीति। श्वफल्कतनय इति—महानुभावमुनिपुत्रत्वेन तत्र सलज्जत्वं तस्य सूचितम्। सूर्यसमप्रभमत एव वाससाच्छन्नमेव ददौ॥ ४०॥

### श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी

अक्रूरस्य सर्वेषामन्येषां च सम्प्रति विप्रतिपत्तिनिरसनार्थमाह—सत्रेति। अनपत्यत्वादिति कन्यान्तरमपि निरस्तं (यद्यपि स्मृतिवाक्येषु पुत्रपत्न्यभावे तद्भागिन्यो दुहितर एव न तु तत्पुत्रास्तथाऽपि तत्र श्रीसत्यभामाया निरपेक्षतया पुत्रा-णामेव तथा नियोजनं सम्भाव्य तत्सुता गृह्णीयुरित्युक्तम्) सत्राजितः पत्नीनां तु सह मरणं ज्ञेयम्॥ ३७॥ तथापीत्यर्द्धकं हि एव सुव्रते ब्रह्मचर्यादिनिष्ठत्वादधिकारिण्यपि त्वय्यास्ताम्मात्रं तेन सर्वेषामस्माकमरिष्टनाशादिना हिताय भविष्यतीति मणौ सर्वसाधारणत्वं विज्ञाप्य श्रीसङ्कर्षणादितर्किता स्वेन तस्मै दानेच्छाप्याच्छादिता। किन्त्विति सार्द्धकम्, किं तु दर्शयस्वमात्रं यतो मामिति तदेवं सहसा मणिप्रकाशनार्थमेव तमुद्योजितवान् न तु सङ्कर्षणस्यापि तथा भाव इति मनसि वितर्कितवान् "तत आह बलो नूनं स मणिः शतधन्वना, कस्मिंश्चित् पुरुषे न्यस्तः" इत्युक्तत्वात् कस्मिंश्चिदित्यक्रूर एव गूढोऽभिप्रायः तन्नामाग्रहणं तु यथा शतधन्वकर्तृकः सत्राजिद्वधोऽवगतस्तथा तत्कर्तृकं शतधन्वनि दुर्मन्त्रदानमयं "योऽस्मभ्यं सम्प्रतिश्रुत्य कन्यारत्नम्" इति वचनं चावगतमिति तस्मै रोषात् तथापि तत्पक्षपातममुञ्चन्तं स्वानुजं प्रति प्रणयरोषाच्च तत्र मणिं प्रति मणिर्मयि नास्तीति न प्रत्येति सम्यगिति। यद्यपि दानयज्ञादिना त्वय्याशङ्कते तथाऽपि स्वदूरे शतधन्वनो मारणाद्विचयनाच्च मय्यपीत्यर्थो वचसि ज्ञेयः। सम्यङ् न प्रत्येतीति मदिच्छां ज्ञात्वैव त्वं (१) मणिमादायापगतवानिति मन्यत इत्यर्थस्तु मनसि ज्ञेयः। तत्र पूर्वार्थस्तु परार्थस्य नातिदुष्टता व्यञ्जनाय च निर्दिष्टः महाभागेति महाभागो मद्भक्तिभाग्यं प्राप्यांशो वा यस्य तत्सम्बोधनम् इति तव मणावपेक्षा नास्तीति भावः। अतो (२) बन्धूनां बलदेवादीनामस्माकं शान्तिं मण्यर्थमन्योन्यकलहोपरतिम् आवह सम्यक् प्रापय अद्य अधुनापि श्रीबलदेवश्च मिथिलातः पूर्वं समानीतः तथा च श्रीहरिवंशे—

"प्रत्याय्य तु ततो रामो वृष्ण्यन्धकमहारथैः। आनीतो द्वारकामेव कृष्णेन च महात्मना॥" इति॥ ३८–३९॥

श्वफल्कतनय इति महानुभावमुनिपुत्रत्वेन सलज्जत्वं तस्य सूचितम् सूर्य्यसमप्रभम् अत एव वाससा छन्नमेव ददौ॥४०॥

### श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी

अनपत्यत्वादिति कन्यान्तरमपि निरस्तम्॥ ३७॥ हि एव, त्वय्येवास्ताम्, यतः सुव्रते ब्रह्मचर्य्यादिनिष्ठे निजनियम-पालनपरे वा, अत एव लोकहितार्थं तस्मिन्नेव तन्मणिधारणे श्रीभगवदिच्छा प्रागेव जातास्तीति व्याख्यातमेव, मणिं प्रति मणिर्मयि नास्तीति न प्रत्येति, सम्यगिति मद्भक्ते त्वयि मणेर्वृत्त्या मय्येव तन्मननात्, श्रीबलदेवस्य तादृशभावाभावेऽपि तादृगुक्तिः

केवलमक्रूरेण मणिप्रदर्शनार्थम्, अतः श्रीबलदेवस्तदानीं मिथिलातस्तत्रागतोऽस्तीति ज्ञेयम् । तथा च श्रीहरिवंशे ( विष्णु. प. ४०-२९ )—'प्रस्थाप्य तु ततो रामो वृष्ण्यन्धकमहारथैः । आनीतो द्वारकामेव कृष्णेन च महात्मना ॥' इति ॥ ३८ ॥ महान् भागो तद्भक्तिभाग्यं प्राप्यांशो वा यस्य तत्सम्बोधनमिति तव मणावपेक्षा नास्तीति भावः । अतो दर्शयस्व दर्शनमात्रं कारय, न तु दानम्, यतस्त्वय्येव स्थास्यतीति भावः । तर्हि किमर्थम् ? तदाह—बन्धूनामिति । शान्ति मण्यर्थमन्योन्यकलहोपरतिं सुखं वा, आवह सम्यक् प्रापय, अद्य अधुनापि ॥ ३९ ॥ स्वफल्कतनय इति मुनिपुत्रत्वेनापि मण्यनपेक्षत्वं तथा भगवदभिप्रायाभिज्ञत्वञ्च तस्य सूचितम् । अतो वाससा परिहितवस्त्राञ्चलेनान्येन वा केनचिदाच्छन्नमादाय वस्त्रमपनीय हस्ताभ्यां गृहीत्वा ददौ, श्रीकृष्णहस्तेऽर्पयामास । सूर्य्यसमप्रभमिति आच्छादनापगमेन सूर्य्यवद्देदीप्यमानमिति भावः ॥ ४० ॥

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम्

दायमित्यादि-अपो निनीयेति उदकक्रियादिशास्त्रार्थोपलक्षणम् अर्थानामृणापाकरणस्य यावदपेक्षितं रिक्तं सर्वं दायं गृह्णीयुरित्यर्थः ॥ ३७-३९ ॥ आलब्ध उपालब्धः ॥ ४० ॥

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका

ततः किमत आह—सत्राजित इति । अनपत्यत्वादपुत्रकत्वात् तस्य दुहितुः सुता दौहित्रास्तस्य अपस्तिलोदकानि पिण्डांश्च निनीय दत्त्वा ऋणं विमुच्याऽपाकृत्यावशेषितं सर्वं दायं रिक्थं गृह्णीयुः ऋणापाकरणे यावदपेक्षितं तदतिरिक्तं सर्वमपुत्रस्य धनं दौहित्रा गृह्णीयुरित्ययं शास्त्रार्थ इत्यर्थः ॥ ३७ ॥ तथापीति तथाऽपि एवं शास्त्रार्थेऽपि मणिस्त्वय्येवास्तां तवैव तिष्ठतु न तु तदौहित्रैर्गृह्यते इत्यर्थः । तत्र हेतुं वदन् मणिमक्रूरञ्च विशिनष्टि–अन्यैर्धर्त्तुमशक्यः सुव्रते शोभनं व्रतमाचारो यस्मिन्स्तस्मिन् त्वयि किन्त्वग्रजो रामः मणिं प्रतिसम्यङ् न प्रत्येति न विश्वसिति मणिमहं तिरोधापितवानित्याशङ्कते इति भावः ॥ ३८ ॥ अतो हे महाभाग्यवन् ! दर्शयस्व मणिमिति शेषः शान्तिं चित्तसमाधिमावह सम्पादय नास्तीति मा वोच इत्याह—अविच्छिन्ना इति । यतस्ते स्वर्णवेदयः सन्तता मखा यज्ञाश्च वर्त्तन्ते प्रवर्त्तन्तेऽतोऽस्त्येवेत्यनुमिनोमीत्यर्थः ॥ ३९ ॥ एवमिति इत्थं सामोक्तिभिरालब्धः हृदि स्पृष्टः ददौ कृष्णायेति शेषः ॥ ४० ॥

### श्रीविजयध्वजतीर्थकृता पदरत्नावली

किं कृत्वा स्वीकुर्युरिति तत्राह—निनीयेति । अपः पिण्डांश्च निनीय दत्त्वा अशेषतः पित्रादिविषयमृणं च विमुच्य गृह्णीयुरिति पूर्वेणान्वयः ॥ ३७ ॥ तर्हि तथास्त्विति नेत्याह—किन्त्विति । प्रत्येति विश्वासं करोति "प्रत्ययस्तु ख्यातिरन्ध्रविश्वासाधीनहेतुषु" इति ॥ ३८ ॥ शान्तिं "मङ्गलं शान्तिः प्रशममङ्गले" इति वर्तन्ते तथेति शेषः । रुक्मवेदयः सुवर्णमेखलाः ॥ ३९ ॥ आरब्धः उक्तः ॥ ४० ॥

### श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः

किन्तु मामग्रज इति सङ्कर्षणः स्वयमीश्वरोऽपि न प्रत्येतीति भगवत एव सर्वज्ञशिरोमणित्वं द्योत्यम् ॥ ३९-४२ ॥

इति श्रीदशमे श्रीबृहत्क्रमसन्दर्भे सप्तपञ्चाशोऽध्यायः ॥ ५७ ॥

### श्रीनाथचक्रवर्तिपादविरचिता चैतन्यमतमञ्जूषा

किन्तु ममाग्रजः सम्यङ् न प्रत्येति तस्यांशभूतस्याप्यसर्वज्ञत्वमिति ॥ ३८-४२ ॥

इति सप्तपञ्चाशोऽध्यायः ॥ ५७ ॥

### श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शिनी

सत्राजितोऽनपत्यत्वात् अपुत्रत्वात् स्त्रीणां च सहमरणात् दुहितुः सत्यभामाया मणिनिरपेक्षत्वात् तत्सुता एव दायं दायरूपं मणिं गृह्णीयुः अपः पिण्डांश्च निनीय मातामहाय दत्त्वा शेषितमवशिष्टं ऋणं च विमुच्य ( विमोच्य ) संशोध्य तथा च स्मरन्ति—

"पत्नी दुहितरश्चैव पितरौ भ्रातरस्तथा । तत्सुता गोत्रजा बन्धुः शिष्याः स ब्रह्मचारिणः" ॥ इति ॥ ३८ ॥

त्वयि मणिरस्तीत्यत्रत्याः सर्वे एव जानन्ति तत्र लिङ्गम् अव्युच्छिन्नाः सन्तता मखा वर्त्तन्त इति ॥ ३९ ॥ आलब्ध उपालब्धः स्वपाणिना स्पृष्टः ॥ ४०-४१ ॥

### गूढार्थदीपिनी

पिण्डांश्च निनीय दत्त्वा ऋणं च अपाकृत्य अवशेषितं सर्वं दायं धनं दौहित्रा गृह्णीयुरिति धर्मशास्त्रम् ॥ ३७ ॥ तथापीत्यर्द्धम् । सुव्रतेऽधिकारिणि त्वय्येव आस्ते ॥ ३८ ॥ किन्त्विति सार्द्धम् । मां प्रति न प्रत्येति न विश्वसिति किन्तु अनेनैव

तिरोधापित इति बलः शङ्कत इत्यर्थः। आवह प्रापय। रुक्मवेदयः सुवर्णरचितवेदियुक्ता॥ ३९॥ सामभिः सान्त्वनावाक्यै। आलब्धः प्रोत्साहितः। स्वपाणिना स्पृष्टो वा सूर्यसमेति अत एव वाससेति योज्यम्॥ ४०॥

**श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः**

मृतस्य सत्राजितोऽनपत्यत्वात्तत्कलत्राणां सह मरणाच्च अपः पिंडांश्च निनीय दत्वा ऋणं च विमुच्यापाकृत्य शेषितमवशिष्टं दायं दुहितुः सत्यभामायाः सुता गृह्णीयुः—

"पत्नी दुहितरश्चैव पितरो भ्रातरस्तथा। तत्सुता गोत्रजा बन्धुः शिष्याः स ब्रह्मचारिणः"॥

इति स्मृतेः॥ ३७॥ परमसुव्रतो बलो मणिं गृह्णीतु अत्राह—अग्रजोऽपि मणिं न प्रत्येति प्रत्ययादातुं नेच्छति अतस्त्वय्येवास्तामिति भावः किं तु केवलं मां प्रति सम्यक् दर्शयस्व बन्धुमध्ये मणिं दृष्ट्वा पुनर्दास्यामि तदा क्व गतो मणिरित्येवं शोचतां बन्धूनां शान्तिर्भविष्यतीत्याशयेनाह—बन्धूनां शान्तिमावहेति। त्वय्येव मणिरस्तीति हेतुरस्तीति हेतुना साधयति, अव्युच्छिन्ना इति॥ ३८–३९॥ आलब्ध उक्तः॥ ४०॥

**श्रीसत्यधर्मकृता श्रीभागवतटिप्पणी**

रामाशां त्याजयन्योजयंश्च रामाशां तामपि पर्यायतो विपर्यासयन्नाह॥ सत्राजित इति॥ अनपत्यादिति। न विद्यतेऽत्रापत्यं पुमपत्यमेव ग्राह्यम्। स्त्र्यपत्यभूतसत्यभामाया अध्यक्षसिद्धत्वात्। यस्य तस्य भावस्तत्तस्मात्। दुहितुः पुत्र्याः सुताः गृह्णीयुः ग्रहणेतिकर्तव्यतामाह॥ निनीयेति। अपस्तिलजलपिण्डांश्च निनीय दत्वा तदृणं विमुच्याशेषतो यावन्तो वर्तन्ते तावन्त इत्यशेषा अशेषतोऽशेषं देयं तद्वित्तं। तथा ह्युक्तम्। पत्नी दुहितरश्चैव पितरौ भ्रातरस्तथा। तत्सुता गोत्रजा बन्धुः शिष्याः सब्रह्मचारिण इति। सत्यभामायास्तत्पुत्राणां चैत इत्यत्र त इति मन्तव्यम्। तथाऽपि धर्मशास्त्राचारे च सत्यपि। अन्यैस्तदितरैर्दुर्धर इति प्रापितः। इदानीं सभां प्रत्यानीतोऽसौ मणिः। मया त्वामेव प्रापितः प्रत्यर्पितस्त्वय्येवास्ताम्। ननु हरिवंशे सत्राजितो दशत्वासन्भार्यास्तासां शतं सुताः। ख्यातिमन्तस्त्रयस्तेषां भङ्गकारास्तु पूर्वजाः। वीरो वामपतिश्चैव उवास्वावाश्च सप्रियः। कुमार्यश्चापि तिस्रो वै दिक्षु ख्याता नरर्षभ। सत्यभामा तमस्त्रीणां व्रतीनां च दृढव्रता। तथा पद्मवतो चैव भार्या कृष्णस्य ता ददौ। सभाक्षो भङ्गकारात्तु नादेयश्चेत्यादिना। सूतशतस्य तथा। तथा तत्पौत्रादीन्कन्याद्वयस्य सत्यभामेतरस्य कृष्णपत्नीत्वस्य चोक्तेः कथं सत्राजिदनपत्यता कथन्तरां षोडशसहस्राष्टोत्तरशततोदरिणादत्रान्यत्र मानासम्भव इति चेत्। अत्र केचित्कल्पभेदेन सापत्यत्वानपत्यत्वादिकं ग्रन्थद्वन्द्वानुरूप्येणेति न्यरूरुपन्। अपरे तु ते च पुत्रा जघन्यजा इति नैतद्दायमादाय जीवनार्हा न पिण्डावापयोग्या इति भागवतेऽनपत्यत्वाद्युक्तिरिति जगदुः। अन्ये मन्यन्ते भागवते भगवानायुक्तिरप्युपपन्यस्तेति प्रक्षिप्ताः श्लोका भारत इति। वस्तुतस्तु सन्तु सुताः सुते च द्वे। तथाऽपि यदा माधवोपर्यारोपितवान्स्वभ्रातृहतां तत्क्षण एव पुंसामिव वोढाहानन्तरं स्त्रीद्वयस्याकार्यकारितया मरणस्य स्वस्य च सत्यभामावितरणपुण्यवन्ततया मरणस्य च सम्भवादनपत्यता साम्भाविनीत्यशेषाविरोध इति दिक्॥४४॥ आनयनं पुनर्नयनं च कुत इत्यतो वक्ति॥ किन्त्विति। मामग्रजो मणिं प्रति तमुद्दिश्य सम्यङ्न प्रत्येति न विश्वसिति। प्रत्ययस्तु ख्यातिरन्ध्रविश्वासाधीनहेतुष्विति यादवः। हे महाभाग तं दर्शयस्व। तेन च बन्धूनां बलाबलपक्षपातीनां शान्ति प्रशमं मङ्गलं वां वह प्रापय॥ ४५॥ मयि सर्वज्ञातरि यज्ञपतावाज्ञापयति नेति न वक्तुं क्षमः स्याः किञ्च त्वं तु सदाध्वराऽध्वरतस्ततो नानृतं त्वया वक्तव्यम्। प्रथमपञ्चकषष्ठखण्डे ऋतं वाच दीक्षा सत्यं दीक्षा तस्माद्दीक्षितेन सत्यमेव वदितव्यमित्यारभ्य सत्योत्तरा हैवास्य वागुदिता भवतीत्यन्तेन दीक्षितेन सत्यमेव वदितव्यमित्युक्तेस्त्वया यथार्थमेव वक्तव्यमनृतवचने प्रत्यवेया इति शपथं स्थापयन्निव वक्ति॥ अव्युच्छिन्ना इति। रुक्मवेदयः सुवर्णवेदिकोपेतास्ते मखा आद्याद्यपि अव्युच्छिन्ना वर्तन्ते। एवं सामभिः समाधानवचनैरारब्ध उद्यमितः। आरम्भस्तु त्वरायां स्यादुद्यमे वधदर्पयोरिति विश्वः। सूर्यसमा प्रभा यस्य स तं ज्ञातिभ्यो दर्शयित्वा। आत्मनो रजोऽपवादात्मकं मलम्॥ ४७॥ मार्जयामासाशोधयत्। तदर्थं मणिनिमित्तं प्रोष्य प्रवासं कृत्वाऽऽगत इति। विवक्षाभावात्सन्ध्यभावः। अहं योग्य इति मन्वानस्तं चकमे कामयामास। स्वात्मना स्वमनसा पितृधनमुचितमिति मन्वाना॥ ४८–४९॥

**श्रीमद्वल्लभाचार्य्यकृता सुबोधिनी**

तर्हि तदेव कथं न याचित इति चेत्, तत्राह सत्राजितोऽनपत्यत्वादिति। याचनमधिकारिणो भवति। यः पिण्डदः स रिक्थहारीति। तत्रैतावत्कालं सत्यभामाया नापत्यान्युत्पन्नानि। स त्वनपत्यः अभ्राता च। मणिस्तु तस्य। तं पुनः दुहितुः सुताः गृह्णीयुः। तत्र साधारणं न्यायमाह दायं निनीयेति। अन्यथैतदपि स्वेच्छेति स्यात्। दायं धनं गृह्णीयुरिति पूर्वेणैव सम्बन्धः। आमरणं तस्यैव धनम्। मरणानन्तरमपि पुत्राद्यभावे अपः पिण्डान् निनीय ऋणं च विमुच्य शेषितमवशिष्टम्। शेषभागिति पाठे यो निनीय भवति, स शेषभाग्भवतीति। निःस्वामिकं तु द्रव्यं राजगामि भवति। चोरं हत्वापि यो वस्तुतो

न भागी, स न द्रव्यं प्राप्नोति परिज्ञातम्। उत्पन्न एव दायभाग्भवतीति न व्यवहितज्ञातेः दायभावत्वमिति केचित्। दायं वा साक्षात्स्वामिनि गते तत्स्वामिनमन्वेषमाणं परम्परया शाखामूलपर्यन्तं गत्वा तुल्यतया तच्छाखासु निविशति। यं कञ्चिद्वा सर्वानुमत्या पिन्डदातारम्। एवं श्लोकद्वयेन भेदो दण्डश्च उक्तः। भेदावेव वा॥ ३७॥ सामदाने आह **तथापीति द्वाभ्याम्।** अन्यैर्दुर्धरोऽयमिति त्वय्येवास्ताम्। स हि लौकिके अलौकिको न तिष्ठति। य एव कर्मादिमार्गे: अपवृत्तः लौकिकत्वं न सम्पद्यते। अपवृत्तकर्मा लौकिको भवतीति कादाचित्कव्रतोऽपि समयभेदेन लौकिक एव। तर्हि मयि कथं तिष्ठेदित्याशङ्क्याह **सुव्रत** इति। सुष्ठु व्रतं यस्य। त्वं हि सर्वदा नियतव्रतः। एवं दानमुक्त्वा सामाह **किन्त्विति।** परमेकदा दर्शयस्व। साम हि समता, उभयोरैक्यम्। तथा सति यथा स्वकार्ये मणेर्विनियोगः, एवमस्मत्कार्येऽपि विनियोगो युक्त इति। अप्रदर्शनपक्षे **अग्रजो** बलभद्रः **मणिं प्रति** मणिविषये **मां न** सम्यक् **प्रत्येति,** किन्तु सकपटं मन्यते॥ ३८॥ अतो यथा जाम्बवता अपकीर्तिनिराकरणार्थं मणिर्दत्तः, एवं त्वयापि प्रदर्शनीय इत्याह **दर्शयस्वेति। महाभागेति** भाग्ये विद्यमाने मणिर्न गच्छतीति। अस्मद्विश्वासाभावेऽपि भाग्यविश्वासो वा कर्तव्य इति भावः। अनेनान्योऽन्युपकारो भविष्यतीत्याह **बन्धूनां शान्तिमावहेति।** बन्धुषु मध्ये कलह उत्पन्नः। केचिन्मत्सङ्घट्टिनः, अपरे रामस्येति। प्रदर्शने तु सन्देहाभावात् न कलहः। **अव्युच्छिन्नेत्यर्थं** विगीतमाहुः। मणिरस्तीत्यत्र लौकिकं प्रमाणम्। काश्यादिषु **रुक्मवेदयः** सुवर्णेष्टकानिर्मिताग्निसहिताः **मखाः** द्वादशाहादयः **अव्युच्छिन्ना** निरन्तरं प्रवृत्ताः यतस्ते वर्तन्त इति॥ ३९॥ एकेनाप्युपायेन स इष्टं कुर्यात्, किमुत चतुर्भिरिति स भगवदुक्तं कृतवानित्याह **एवं सामभिरिति। साम**शब्देन भेददण्डदानान्यपि संगृह्यन्ते। पर्यवसितं सामैवेति तदेवोक्तम्। **आलब्धः** स्पृष्टः मारित इव लज्जितः वशीकृतश्च। **श्वफल्कतनयो** महतः पुत्रः। भगवते वाससा च्छन्नं सूर्यसमप्रभं ददौ। **आदायेत्य**नेन अन्यतो ग्रहणं लक्ष्यते। **अर्थात्** कृतवर्मणः स्थाने तत् स्थितमिति लक्ष्यते। प्रत्यक्षदाने लज्जा भवतीति वाससा च्छन्नं ददौ। तथैव स्थापितमिति ज्ञापयितुम्। अन्यथा तज्जनितं सुवर्णमपि निवेदनीयं स्यात्। तेन प्रदर्शनार्थं न दत्तम्, किन्तु सर्वथैव दत्तमिति दानप्रकारादवसीयते। **सूर्यसमप्रभमिति** दाने दातुर्ग्रहीतुश्च प्रत्यक्षतो दर्शनमपि न भवेदिति सूचितम्। अनुपहतशक्ति वा॥ ४०॥

### श्रीविट्ठलरायात्मजश्रीवल्लभकृतलेखः

**दायं निनीयेत्यत्र। उत्पन्न एवेति।** औरस एव पुत्रः सम्पूर्णदायभाक् भवति। व्यवहितो दौहित्रादिः। ज्ञातो ज्ञातिसम्बन्धी। एतादृशे तु सम्पूर्णदायभाक्त्वं नास्ति, किन्तु पिण्डदानादिक्रियानन्तरमृणमोकानन्तरं च यावदवशिष्यते, तावद्भाक्त्वमित्यर्थः। **तथापीत्यत्र। अपवृत्तैरिति।** अपकृष्टं वृत्तं स्थितिर्येषाम्। अपकृष्टैरित्यर्थः। **इत्यष्टमाध्यायव्याख्या।**

### श्रीसुबोधिनी-सारः

किं चाऽपोंजलीन् पिंडांश्च निनीय श्राद्धं दत्त्वा ऋणं पैतृकादि विमुच्यापाकृत्य शेषितं दायं दुहितुः सत्यभामायाः सुताः पुत्रा गृह्णीयुरिति शास्त्रीयः पंथाः। सत्राजितोऽनपत्यत्वादपुत्रत्वात् हरिवंशीयवाक्यैकताकरणे तु अल्पार्थो नञ् बोध्यः॥३७॥ तथाप्येवं सत्यपि अन्यैर्मलिनैर्लंपटैर्दुर्द्धरो धर्त्तुमशक्यो मणिः सुव्रते त्वयि आस्तां तिष्ठतु किं तु मामग्रजो रामोपि मणिं प्रति सम्यक् न प्रत्येति विश्वासं न करोति॥ ३८॥ हे महाभाग! इत्यनेन मणौ तवेच्छा नास्तीति सूचितम्। दर्शयस्व मणिं बंधूनां शांतिमावह कुरु नास्ति मणिरिति न वाच्यम्। काश्यां स्वर्णवेदयोऽव्युच्छिन्नाः संतता मखा यज्ञा अद्य ते वर्तंते तं विना तदनुपपत्तेः॥ ३९॥ सामभिरुपायैरालब्धो विश्वसितः श्वफल्कस्य तनयः पुत्रोऽक्रूरो वाससा वस्त्रेणाच्छन्नं सुगोपितं सूर्यतुल्यकांति मणिम् आदाय निष्कास्य कृष्णाय ददौ॥ ४०॥

### गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

'मणिरस्ति, ततः किं' तत्राह—सत्राजित इति। अनपत्यत्वात् अपुत्रकत्वात् सत्राजितो दुहितुः सत्यभामायाः सुताः अपस्तिलोदकानि पिण्डांश्च निनीय दत्त्वा ऋणं विमुच्य अपाकृत्य अवशेषितं दायं धनं गृह्णीयुः। तथा च **शास्त्रम्**—"पत्नी दुहितरश्चैव पितरौ भ्रातरस्तथा। तत्सुता गोत्रजा बन्धुः शिष्याः सब्रह्मचारिणः" इति॥ ३७॥ तथापि शास्त्रतो मत्पुत्रग्राह्यत्वेऽपि मणिस्त्वय्यास्ताम्। तत्र हेतुमाह—अन्यैर्दुर्धर इति। 'त्वं च तद्धारणयोग्य' इत्याह—सुव्रत इति। किं त्वग्रजो रामो मणिं प्रति मां सम्यक् न प्रत्येति न विश्वसिति 'अनेन मणिस्तिरोधायित' इति शङ्कत इत्यर्थः। शङ्कावचनं च ग्रन्थाद्बहिर्द्रष्टव्यम्॥ ३८॥ 'तवैतद्युक्तमेव' इत्याशयेन सम्बोधयति—महाभागेति। अतो मणिं दर्शय, तेन बन्धूनां शान्ति चित्तसमाधानमावह सम्पादय, मणिर्नास्तीति मा वोचः। यतः रुक्मवेदयः अव्युच्छिन्नाः सन्तता मखास्तेऽद्य वर्तन्ते, अतो मणिरिदानीमपि त्वय्यस्तीति अनुमिनोमीत्यर्थः॥ ३९॥ एवं सामभिः सामोक्तिभिः आलब्ध उक्तः श्वफल्कतनयोऽक्रूरो वाससाच्छन्नं मणिमादाय कृष्णाय ददौ। मणिप्रभावमाह—सूर्यसमप्रभमिति॥ ४०॥

### अन्वितार्थप्रकाशिका

सत्राजित इति। अनपत्यत्वात् अपुत्रकत्वात् सत्राजितो दुहितुः सत्यभामायाः सुताः अपस्तिलोदकानि **पिण्डांश्च** निनीय दत्त्वा ऋणं विमुच्य अपाकृत्यावशेषितं दायं धनं गृह्णीयुः। तथा च शास्त्रम्। "पत्नी दुहितरश्चैव पितरौ भ्रातरस्तथा।

तत्सुता गोत्रजा बन्धुशिष्याः सब्रह्मचारिणः'' इति ॥ ३७ ॥ तथापीति । तथापि शाश्वतो मत्पुत्रग्राह्यत्वेऽपि अन्यैर्दुर्धरः धारणायोग्यः स मणिः सुव्रतधारणया त्वय्येवास्तां किं त्वग्रजो रामो मणिं प्रति मां सम्यक् न प्रत्येति न विश्वसिति । अनेन मणिस्तिरोधापित इति शङ्कत इत्यर्थः । शङ्कावचनं च ग्रन्थद्वहिर्द्रष्टव्यम् ॥ ३८ ॥ दर्शयस्वेति । हे महाभाग ! अतो मणिं दर्शयस्व । तेन बन्धूनां शान्तिं चित्तसमाधानमावह सम्पादय । मणिर्नास्तीति मा वोचः । यतः रुक्मवेदयः स्वर्णरचितवेदियुक्ताः अव्युच्छिन्नाः सन्तता मखास्तेऽद्य वर्तन्ते । अतो मणिरिदानीमपि त्वय्यस्तीति रामश्चेतः पूर्वं मिथिलातः समानीत इति हरिवंशे ॥ ३९ ॥ एवमिति । एवं सामभिः सामोक्तिभिः आलब्ध उक्तः हृदि स्पृष्टो वा वशीकृतो वा श्वफल्कतनयोऽक्रूरो वाससाच्छन्नं सूर्यसमप्रभं मणिमादाय कृष्णाय ददौ ॥ ४० ॥

**श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्**

सत्राजितस्य अयः पिंडांश्च निनीय समर्प्य । ऋणं च विमुच्य शेषितं अवशिष्टं दायं मातामहधनं । अनपत्यत्वादित्यनेन अन्यापि सुता नास्तीति बोध्यं ॥ ३७ ॥ न प्रत्येति न विश्वसिति ॥ ३८ ॥ ननु मम समीपे नास्तीत्युच्यते चेत्तत्राह अव्युच्छिना इति । अव्युच्छिन्ना अखंडिता मखाः वर्त्तंते आलब्धो वशतां नीतः ॥ ३९ ॥ रजो मिथ्याभिशापं विमृज्य नाशयित्वा । तस्मै अक्रूराय भूयो मणिं प्रत्यर्पयत् ददौ ॥ ४० ॥

**भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी**

ततः किमत आह ॥ सत्राजित इति ॥ सत्राजितः, अनपत्यत्वात्, तस्य दुहितुः पुत्र्याः, सुताः, पुत्राः, तस्य अपस्तिलोदकानि, पिण्डांश्च निनीय दत्त्वा, ऋणं विमुच्यापकृत्य च, शेषितं दायं विभक्तव्यपितृद्रव्यं, गृह्णीयुः । ऋणापकरणे यादवपेक्षितं तदतिरिक्तं सर्वमपुत्रस्य धनं दौहित्रा गृह्णीयुरित्ययं शास्त्रार्थ इत्यर्थः ॥ ३७ ॥ तथापीति ॥ तथापि एवंभूतशास्त्रार्थे सत्यपि, अन्यैः दुर्धरः मणिः, सुव्रते त्वय्येव, आस्ताम् । न तु दौहित्रैर्गृह्यते इत्यर्थः । किं तु अग्रजो रामः, मणिं प्रति, मां सम्यक् न प्रत्येति विश्वसिति । मणिं कृष्णस्तिरोधापितवानिति शङ्कते इति भावः ॥ ३८ ॥ दर्शयस्वेति । अतः, हे महाभाग, दर्शयस्व । मणिमिति शेषः । बन्धूनां, शान्तिं चित्तसमाधिं च, आवह संपादय, नास्तीति मा वोचः । यतः, ते तव, रुक्मवेदयः स्वर्णवेदिकाः, मखा यज्ञाः, अद्याऽद्यापि, अव्युच्छिन्नाः संतताः, वर्त्तन्ते ॥ ३९ ॥ एवमिति ॥ एवमित्थं सामभिः सामोक्तिभिः, आलब्ध उक्तः हृदि स्पृष्ट इति वा । श्वफल्कतनयोऽक्रूरः, वाससा छन्नं मणिं, आदाय, सूर्यसमप्रभं तं मणिं, ददौ कृष्णायेति शेषः ॥ ४० ॥

**कृष्णप्रिया**

आप अच्छी तरह से जानते हैं कि सत्राजित्‌जी को पुत्र प्रजा नहीं है इसलिये सत्राजित् की पुत्री और पुत्री के पुत्र उनके नाती ही सत्राजितजी को तिलाञ्जलि एवं पिण्ड दान करेंगे और पितृऋण चुकायेंगे और जो कुछ अवशिष्ट रहेगा उस सम्पत्ति के उत्तराधिकारी बनेंगे ॥ ३७ ॥ इस प्रकार धार्मिक नियमानुसार उनका द्रव्यादि एव स्यमन्तक मणि भी सत्यभामा जो के पुत्रों को मिलनी चाहिये फिर भी वह स्यमन्तक मणि भले आपके पास ही रहे कारण आप परम पवित्र व्रतनिष्ठ एवं पुण्यात्मा हैं दूसरे जन के लिये इस स्यमन्तक मणिको यह घटना कठिन है फिर भी हमारे शिर पर एक कठिन समस्या आ पड़ी है कि श्रीबलभद्रजी भैया स्यमन्तक के विषय में मेरी बात पर पूर्ण विश्वस्त नहीं हैं ॥ ३८ ॥ हे महाभाग ! हे पूज्यवर ! हे अक्रूरजी ! मेरा आपसे विनम्र निवेदन है कि आप कृपया स्यमन्तक मणि सबको दिखाकर हमारे बड़े भाई ज्ञानिजन बन्धुजन स्वजन एवं कुटुम्बी जन का सन्देह दूर कीजिये एवं काशी में जो इस मणि के प्रताप से सुवर्णमयी वेदी वाले यज्ञ हो रहे हैं वे अखण्ड रहें ॥३९॥ राजन् परीक्षित् ! भगवान् श्रीकृष्ण ने इस प्रकार श्रीअक्रूरजी को स्नेह से सद्भाव से एवं समादर से बात समझायी तब श्री अक्रूरजी ने वसा में समाच्छित मणि निकाली और दैन्य से भगवान श्रीकृष्ण को समर्पित की ॥४०॥

**स्यमन्तकं दर्शयित्वा ज्ञातिभ्यो रज आत्मनः । [1]विमृज्य मणिना भूयस्तस्मै प्रत्यर्पयत् प्रभुः ॥ ४१ ॥**

**[2]यस्त्वेतद् भगवत ईश्वरस्य विष्णोर्वीर्याढ्य[3] वृजिनहरं सुमङ्गलं च ।**

**आख्यानं पठति शृणोत्यनुस्मरेद् वा दुष्कीर्तिं दुरितमपोह्य याति शान्तिम् ॥ ४२ ॥**

**इति श्रीमद्भागवते महापुराणे[4] दशमस्कन्धे[5] स्यमन्तकोपाख्याने [6]सप्तपञ्चाशत्तमोऽध्यायः ॥ ५७ ॥**

---

१. इदं नास्ति–विजये. ।

२. मार्जयामास लोकेशः अभिभाष्य हलायुधम् । दृष्ट्वामणिं हलधरस्तदर्थं प्रोच्य आगतः ॥
योग्योहमिति मन्वानश्चक्रमे कुरुपुङ्गव । सत्यभामा पितृधनं मन्वाना स्वात्मनोचितम् ॥
गृहीतुमैच्छद्विस्रब्धं हरेश्चित्तमजानती । जाम्बवत्यापिबाल्कार्थं पित्रा दत्तं ममेति ह ॥
स्पृहां चक्रे मणौ तस्मिन् सर्वं विज्ञाय माधवः । अक्रूरस्य करे भूयो मणिं प्रत्यर्पयद् विभुः ॥

३. रव्यं–विज. । ४. पारमहंस्यां संहितायां–प्रा. पा. । ५. न्धे सप्त–न्ध उत्तरार्द्धे–प्रा. पा. । ६. एकषष्ठितमो–विज. ।

## कर्दमक्षमा

अन्वयः—प्रभु, ( श्रीकृष्णः ) ज्ञातिभ्यः, स्यमन्तकं, दर्शयित्वा, मणिना, आत्मनः, रजः, विमृज्य, भूयः तस्मै, प्रत्यर्पयत् ॥ ४१ ॥ यस्तु, भगवतः, ईश्वरस्य, विष्णोः, वीर्याढ्यं, वृजिनहरं, सुमङ्गलं, च, एतत्, आख्यानम्, पठति, शृणोति, वा, अनुस्मरेत् ( सः आत्मनः ) दुष्कीर्ति, दरितं, च, अपोह्य, शान्ति, याति ॥ ४२ ॥

इति श्रीभागवते दशमस्कन्धे निरोधलीलायामुत्तरार्द्धे स्यमन्तकोपाख्याने सप्तपञ्चाशत्तमाऽध्याये अन्वयाः समाप्ताः ॥ ५७ ॥

## श्रीधरस्वामिविरचिता भावार्थदीपिका

रजो मिथ्याभिशापं संमृज्य अन्यैर्दुर्धर इत्यादिमिषेण प्रीत्या भूयस्तस्मै प्रत्यर्पितवानिति ॥ ४१ ॥ दुष्कीर्ति तन्मूलं दुरितं चेति ॥ ४२ ॥

इति श्रीमद्भागवते दशमस्कन्धे उत्तरार्धे श्री० टीकायां सप्तपञ्चाशत्तमोऽध्यायः ॥ ५७ ॥

## श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

ज्ञातिभ्यो बलदेवादिभ्यः। तस्मै अक्रूराय ॥ ज्ञातिभ्यो यादवान्प्रति मणिना हेतुना यद्रजः रजोमार्जनञ्चात्र सोऽयमक्रूरः स्वेच्छयैव मणिमपहृतवान्न तु ममेच्छया, तथाप्यधुना यदस्मै तत्समर्पणं तत्खल्वस्यैव योग्यत्वादिति व्यञ्जनया ज्ञेयम्। यतो विभुः, भक्तगणपरिपालनसमर्थः। यदुकुलहितार्थं तथाकरोदिति भावः। यद्वा—साक्षादीश्वरोपि इत्येतत्साधुभिः कार्यमिति लोकशिक्षणार्थमिति भावः। ततःप्रभृति तन्मणिमक्रूरो व्यक्तं कंठे निधाय बभ्रामेति श्रीहरिवंशे—"स कृष्णहस्तात्संप्राप्तं मणिरत्नं स्यमन्तकम्। आबध्य गांदिनोपुत्रो विचचारांशुमानिव ॥" इति ॥ ४१ ॥ दुष्कीर्ति मिथ्याभिशापादिरूपाम्। तन्मूलं दुष्कीर्तिं कारणम्। अपोह्य त्यक्त्वा। शान्ति क्लेशानां संसारस्य वा ॥ श्रीभगवतस्तदेवं सर्वं लीलाकौतुकमेव न तु पारवश्यमयम् यतः यस्त्वेतदिति। भगवतः पूर्णैश्वर्यप्राकट्यस्य श्रीकृष्णस्य। अत एवेश्वरस्य सर्वं कर्तुं समर्थस्य। अत एव विष्णोः, निजशक्त्या सर्वव्यापकस्य। अत एव वीर्येणाद्भुतचरितेन आढ्यमाख्यानं कथाम्। वृजिनहरं संसारदुःखनाशनम्। सुमंगलं भगवद्भक्तिवर्धनादिना महामंगलकरम्। अनुश्रवणानन्तरं तद्द्वयाभावे स्मरेद्वा। अपोह्य हित्वा। शान्ति चित्तप्रसादं सुखं वा प्राप्नोति ॥ ४२ ॥

इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे दशमस्कन्धे उत्तरार्द्धे सप्तपञ्चाशत्तमोऽध्यायः ॥ ५७ ॥

## श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी

ज्ञातिभ्यो यादवान् प्रति मणिना हेतुना यद्रजः रजो विमार्जनं चात्र सोऽयमक्रूरः स्वेच्छयैव मणिमपहनुतवान्नतु ममेच्छया तथाऽप्यधुना यदस्मै तत्समर्पणं तत् खल्वस्यैव योग्यत्वादिति व्यञ्जनया ज्ञेयम्। यतो विभुर्भक्तगणपरिपालनसमर्थः यदुकुलहितार्थं तथाऽकरोदिति भावः। यद्वा, साक्षादीश्वरोऽपि इत्येतत्साधुभिः कार्य्यमिति लोकशिक्षार्थमिति भावः। ततः-प्रभृति तन्मणिमक्रूरो व्यक्तं कण्ठे निधाय बभ्रामेति श्रीहरिवंशे—

"स कृष्णहस्तात् सम्प्राप्तं मणिरत्नं स्यमन्तकम्। आवध्य गान्दिनीपुत्रो विचचारांशुमानिव ॥" इति ॥ ४१ ॥

तदेवं श्रीभगवतः सर्वमिदं लीलाकौतुकमेव न तु पारवश्यमयं यतः यस्त्वेतदिति भगवतः पूर्णैश्वर्य्यप्राकट्यस्य श्रीकृष्णस्य अत एवेश्वरस्य सर्वं कर्त्तुं समर्थस्य अत एव विष्णोर्निजशक्त्या सर्वव्यापकस्य अत एव वीर्य्येणाद्भुतचरितेनाढ्यमाख्यानं कथां वृजिनहरं संसारदुःखनाशकं सुमङ्गलं श्रीभगवद्भक्तिवर्द्धनादिना महामङ्गलकरं च अनुश्रवणानन्तरं तद्द्वयाभावे स्मरेद्वा अपोह्य हित्वा शान्ति चित्तप्रसादं सुखं वा श्रीकृष्णनिष्ठवुद्धि वा प्राप्नोति ॥ ४२ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिण्यां सप्तपञ्चाशत्तमोऽध्यायः ॥ ५७ ॥

## श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी

ज्ञातिभ्यो यादवान् प्रति, मणिना हेतुना यद्रजः, यद्वा, साक्षादीश्वरोऽपि इत्येतत् साधुभिः कार्य्यमिति लोकशिक्षार्थमिति भावः। ततः प्रभृति तन्मणिमक्रूरो व्यक्तं कण्ठे निधाय बभ्रामेति ज्ञेयम्। तथा च श्रीहरिवंशे ( विष्णु० प० ३९।४० )—'स कृष्णहस्तात् सम्प्राप्तं मणिरत्नं स्यमन्तकम्। आबध्य गान्दिनीपुत्रो विचचारांशुमानिव।' इति। एवं श्रीभगवत इव तद्भक्तवराणामपि लोकहितार्थं प्रवृत्त्या धनानर्थतां दर्शयितुं सत्राजिदादयः सर्व्वे ते तथाऽचेष्टन्तेति ज्ञेयम्। अन्यथा भक्तवराणां यादवानां तेषां तत्तदसम्भवः। अतः सत्राजिद्वधादिकमपि मायिकमेवेति तत्त्वम्। सिद्धान्तोऽयं श्रीभागवतामृतोत्तरखण्डे विवृतोऽस्त्येव ॥ ४१ ॥ इयञ्च मिथ्यापवादमार्ज्जनार्थका श्रीभगवतो लीला कथमपि केनापि सेविता सर्व्वा-

शुभं हरति, मंगलञ्च करोतीत्याह—य इति। तु-शब्दो भिन्नोपक्रमे, वाक्यालंकारे वा; भगवतः सर्व्वैश्वर्य्ययुक्तस्य श्रीकृष्णस्य, अतएव ईश्वरस्य सर्व्वं कर्त्तुं समर्थस्य, अतएव विष्णोर्निजशक्त्या सर्व्वव्यापकस्य, अतएव वीर्य्येणाद्भुतचरितेनाढ्यमाख्यानं कथा, वृजिनहरं संसारदुःखनाशकं सुमंगलं श्रीभगवद्भक्ति-वर्द्धनादिना महामंगलकरञ्च; यद्वा, सुखकरं सुखरूपञ्चेत्यर्थः। अनुश्रवणानन्तरं गौणत्वेनापि वा स्मरेत्। पठनादीनां यथोत्तरमयत्नसाध्यतापेक्षया वा-शब्दः, अपोह्य हित्वा, शान्तिं चित्तप्रसादं सुखं वा प्राप्नोति॥ ४२॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे उत्तरार्द्धे श्री श्रील-सनातन-गोस्वामिपाद-कृतायां श्रीवृहद्वैष्णवतोषण्यां श्रीदशम-टिप्पण्यां सप्तपञ्चाशत्तमोऽध्यायः॥ ५७॥

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम्

रजः दोषम्॥ ४१-४२॥

इति श्रीमद्भागवतव्याख्याने दशमस्कन्धे श्रीसुदर्शनसूरिकृतशुकपक्षीये सप्तपञ्चाशत्तमोऽध्यायः॥ ५७॥

### श्रीमद्वीरराघवाचार्यकृता भागवतचन्द्रचन्द्रिका

स्यमन्तकमिति विभुः श्रीकृष्णो ज्ञातिभ्यो रामादिभ्यः आत्मनः स्वस्य रजः मिथ्याभिशापं प्रमृज्य अपास्य पाणिना स्वहस्तेनैव पुनस्तस्मै अक्रूराय मणिं प्रत्यर्पयत् ददौ॥ ४१॥ उक्ताख्यानकथनश्रवणस्मरणादिफलं वदन्निगमयति—यस्त्विति। विष्णोर्वीर्येण प्रभावप्रकाशनेनाढ्यं युक्तं वदताम् शृण्वतां स्मरतां च पापहरम् अनेनानिष्टनिवर्त्तकत्वमुक्तम् सुमङ्गलं मङ्गलावहं चेत्यनेनेष्टप्रापकत्वं यः पुमानेवम्विधमाख्यानम् वदेत् शृणुयादनुस्मरेद्वा स दुष्कीर्त्तिं दुरितं च निरस्य मनः शान्तिं मुक्तसाधनभूताम् याति प्राप्नोति॥ ४२॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायां सप्तपञ्चाशत्तमोऽध्यायः॥ ५७॥

### श्रीमद्विजयध्वजतीर्थकृतापदरत्नावली

रजो मिथ्यावादलक्षणां धूलिम्॥ ४१॥ तदर्थं मणिनिमित्तम् (क) स्वात्मना इति तृतीया षष्ठ्यर्थे (ख) स्नेहाद्विस्रब्धं विश्वस्तम् (ग-घ) फलमाह—य इति। शान्तिं मुक्तिम्॥ ४२॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्यां सप्तपञ्चाशत्तमोऽध्यायः॥ ५७॥

(श्रीविजयध्वजतीर्थरीत्या एकषष्ठितमः)॥ ६१॥

### श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शिनी

दुष्कीर्त्तिं तन्मूलं दुरितं च॥ ४२॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम्। सप्तपञ्चाशत्तमोऽयं दशमेऽजनि सङ्गतः॥ ५७॥

### गूढार्थदीपिनी

ज्ञातिभ्यो बलदेवादिभ्यः। रजो मिथ्यादोषं प्रमृज्य। तस्मै अक्रूराय॥४१॥ सुमङ्गलं परममङ्गलमयम् एतदाख्यानम् यस्तु पठति शृणोति अनुस्मरति वा स दुष्कीर्त्तिं तन्मूलं दुरितं पापं च त्यक्त्वा शान्तिं याति। वृजिनं दुःखम्॥ ४२॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां दशमस्कन्धोत्तरार्द्धे गूढार्थदीपिन्यां सप्तपञ्चाशत्तमोऽध्यायः॥ ५७॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

कृष्णानुमत्यैव मणिहरणादिकं जातमिति लोकारोपितं दुर्यशोरूपं रजः प्रमृज्य॥ ४१-४२॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धीये श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे सप्तपञ्चाशत्तमोऽध्यायः॥ ५७॥

### श्रीसत्यधर्मकृता श्रीभागवतटिप्पणी

हरेश्चित्तमजानती अजानतीव तं गृहीतुमैच्छत। जाम्बवत्यपि तस्मिन्मणौ स्पृहाञ्चक्र इत्यन्वयः। ननु न सत्या कृष्णावाञ्छितं किञ्चिदिच्छेत्तथाऽपि तस्यायोग्य इत्याह कृष्ण इति श्रीमदाचार्योक्तिस्तर्हि विरुद्धाऽऽसीदिति चेन्न। वस्तुस्थितिकथनपरा सेयं तु विडम्बनालम्बिनीति किञ्चित्समाधिसम्भवात्। यद्वा सत्यभामेत्यारभ्य स्पृहाञ्चक्रे मणाविति पर्यन्तं जाम्बवतीचर्योक्तेः।

तथा हि तदन्वयार्थौ। सत्यभामायाः पिता तस्य धनं परमार्थतः स्वात्मना स्वमनसा सा सत्यभामा गृहीतुमैच्छच्चेदुचितमिति विस्रब्धमन्तर्मन्वाना जाम्बवती हरेश्चित्तमजानती मम पिता शुल्कार्थं दत्तमिति तद्धनरूपे मणौ स्पृहाञ्चक्र इति विवक्षितत्वाऽऽचार्यास्तथोचुरिति मनस्यानेयम् ॥ ५० ॥ सर्वं रामादिहृदि स्थितं विज्ञाय कुलकलहाकुलो भूपः पुनरक्रूरस्य करे प्रत्यर्पयत्प्रत्यार्पयत् ॥ ५१ ॥ श्रवणादितः स्यात्फलमिति लपति। योऽधिकारीश्वरस्येशेभ्योऽपि वरस्य भगवतो विष्णोर्वृजिनहरं सुमङ्गलं वीर्याख्यं पराक्रमख्यापकमाख्यानं शृणोति पठत्यनुस्मरेद्वा स दुष्कीर्तिं दुरितं चापोह्य शान्तिं शान्तिर्मोक्षोऽथ निर्वाणमित्यभिधानान्मोक्षं याति। अत्र भक्तितस्तमभावेन शान्तौ तरतमभाव इति तत्त्रये समानाऽपि श्रवणपाठानुस्मरसम्मता चेति ध्येयम् ॥ ५२ ॥

इति श्रीभागवतटिप्पण्यां सत्यधर्मकृतायां दशम उत्तरार्धे एकषष्ठिरध्यायः ॥ १०-६१ ॥

## श्रीमद्वल्लभाचार्यकृता सुबोधिनी

भगवांस्तु प्रतिदानार्थमेव गृहीतवानिति कार्यं कृत्वा तस्मै दत्तवानित्याह स्यमन्तकमिति। ज्ञातिभ्यो गोत्रजेभ्यो विवदमानेभ्यः। आत्मनो रजोऽपकीर्तिं विमृज्य मार्जयित्वा। अनेनाग्रिमकार्ये लेपदानाविव पूर्वरङ्गः कृत इति लक्ष्यते। भगवति दोषारोपाभावे हि सर्वे उद्धर्तुं शक्या इति। अतः स्वकार्यं कृत्वा तस्मै प्रत्यर्पयत्। भूय इत्यनेन पूर्वमपि सत्यभामास्थानीयं मणिं दत्तवानिति लक्ष्यते। **विभुः** समर्थः। तस्मै दत्त्वापि तं दण्डयितुमिति। अपेक्षाभावाद्वा ॥ ४१ ॥ एवमध्यायद्वये लौकिकी भाषा निरूपितेति साक्षादुपयोगाभावात् श्रवणे फलमाह **यस्त्वेतदिति**। एतदाख्यानम्। अत्राख्याने त्रिविधा लीला वर्तत इति ज्ञापयितुं भगवतो नामत्रयम्। भगवत्त्वाच्छास्त्रार्थत्वम्, ईश्वरत्वादावश्यकत्वम्, विष्णुत्वात्पापनाशकत्वमिति। चरित्रेऽपि गुणत्रयमाह **वीर्याढ्यं वृजिनहरं सुमङ्गलं चेति**। भक्तिजनकं पापनाशकं पुण्यसम्पादकं च। चकाराज्ज्ञानप्रदम्। तत्र क्रियामपि त्रिविधामाह **पठति शृणोत्यनुस्मरेद्वेति**। श्रवणकीर्तनस्मरणानि विकल्पेन विधीयन्ते। समुच्चयेन च। चकारादन्येषु फलेषु विकल्पः, भक्तौ समुच्चय इति। पूर्वमुक्तं फलमपि त्रिविधमाह **दुष्कीर्तिं दुरितमपोह्य याति शान्तिमिति**। दुष्कीर्तिर्बाह्या। दुरितमान्तरम्। दोषद्वयं परिहृत्य लयविक्षेपजनकाभावात् **शान्तिं** मनसः समवस्थानं ज्ञानं वा यातीति भक्त्यङ्गत्वेनैतच्छ्रोतव्यमिति निरूपितम् ॥ ४२ ॥

इति श्रीभागवतसुबोधिन्यां श्रीमल्लक्ष्मणभट्टात्मजश्रीमद्वल्लभदीक्षितविरचितायां दशमस्कन्धविवरणे उत्तरार्धेऽष्टमोऽध्यायः ॥ ८ ॥

## श्रीसुबोधिनीसारः

स्यमंतकं मणिं ज्ञातिभ्यो दर्शयित्वात्मनो रजो मिथ्यादोषं मणिना विमृज्य निवर्त्य प्रभुर्भगवान् भूयः पुनः तस्मै अक्रूराय मणिं समर्पयत् एतेन रामागमनमपि सूचितम् ॥ ४१ ॥ भगवत ईश्वरस्य विष्णोर्वीर्यैराढ्यं युक्तं वृजिनहरं दुःखहरं सुमंगलमेतदाख्यानं यः पठति शृणोति अनुस्मरेद्वा स दुष्कीर्त्तिमपयशो दुरितं पापमपोह्य दूरीकृत्य शान्तिं शुद्धिमुपैति ॥ ४२ ॥

इति श्रीमद्भा० दशमस्कन्धे उत्तरार्द्धे सुबोधिन्यां टीकायां शतपंचाशत्तमोऽध्यायः ॥ ५७ ॥

## गोस्वामिश्रीगिरिधरलालकृताबालप्रबोधिनी

प्रभुः स्वतन्त्रः श्रीकृष्णः ज्ञातिभ्यो रामादिभ्यः स्यमन्तकं मणिं दर्शयित्वा तेन मणिनाऽऽत्मनो रजः मिथ्याभिशापं प्रमृज्य भूयस्तस्मै अक्रूराय मणिं प्रत्यर्पयत् ददौ ॥ ४१ ॥ उक्ताख्यानकीर्त्तनादेः फलं वदन्निगमयति—यस्त्विति। यस्तु पुमान् एतदाख्यानं पठति शृणोत्यनुस्मरेत् वा स आत्मनः दुष्कीर्तिं तन्मूलं दुरितं पापं चापोह्य निरस्य शान्तिं याति जीवन्मुक्तो भवतीत्यन्वयः। तत्र हेतुमाह—वृजिनहरमिति। दुष्कीर्त्याद्यनिष्टहेतुपापनिवारकमित्यर्थः। सुमङ्गलं चेन्निखिलेष्टहेतुपुण्यजनकमित्यर्थः। तत्रापि हेतुमाह—विष्णोर्वीर्येण प्रभावेणाढ्यं युक्तमित्यर्थः। विष्णोर्वीर्यस्याप्येवंप्रभावत्वे हेतुमाह—ईश्वरस्येति। ईश्वरत्वे हेतुमाह—भगवत इति ॥ ४२ ॥

इति श्रीवल्लभाचार्य-वंश्यगोपालसूनुना। श्रीमन्मुकुन्दरायाणां पादसेवाधिकारिणा ॥ १ ॥
श्रीमद्गिरिधराख्येन भजनानन्दसिद्धये। श्रीमद्भागवतस्येयं टीकाबालप्रबोधिनी ॥ २ ॥
रचिता दशमे तत्र राजसानां निरोधने। शतपञ्चाशत्तमोऽगाद्दुर्यशोमार्गशोधकः ॥ ३ ॥

## अन्वितार्थप्रकाशिका

स्यमन्तकमिति ॥ प्रभुः श्रीकृष्णः ज्ञातिभ्यो रामादिभ्यः स्यमन्तकमणिं दर्शयित्वा तेन मणिनाऽऽत्मनो रजः मिथ्याभिशापं प्रमृज्य भूयस्तस्मै अक्रूराय मणिं प्रत्यर्पयत् ददौ ॥ ४१ ॥ यस्त्विति ॥ यस्तु पुमान् भगवतः ईश्वरस्य विष्णोः वीर्येणाढ्यं

वृजिनहरं सुमङ्गलं च एतदाख्यानं पठति शृणोत्यनुस्मरेत् वा सः आत्मनः दुष्कीर्तिं तन्मूलं दुरितं पापं चापोह्य निरस्य शान्तिं याति ॥ ४२ ॥

इति श्रीभागवते महापुराणे दशमस्कन्धेऽन्वितार्थप्रकाशिकायां सप्तपञ्चाशोऽध्यायः ॥ ५७ ॥

### श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्

वीर्याढ्यं पराक्रमयुक्तं दुरितं पापं । अपोह्य त्यक्त्वा ॥ ४१ ॥

इति श्रीशुद्धैकांतधर्मप्रवर्त्तकगुरुराजेन्द्रश्रीसहजानंदस्वामिशिष्यगोपालानंदमुनिविरचिते निगूढार्थप्रकाशके श्रीमद्भागवतस्य दशमस्कंधव्याख्याने स्यमंतकोपाख्यानं नाम सप्तपञ्चाशत्तमोऽध्यायः ॥ ५७ ॥

### भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

स्यमन्तकमिति ॥ प्रभुः श्रीकृष्णः, ज्ञातिभ्यो रामादिभ्यः, स्यमन्तकं दर्शयित्वा, मणिना आत्मनः, रजो मिथ्याभिशापं, विमृज्य अपास्य, पाठान्तरे, आत्मनः रजः, विमृज्य, पाणिना स्वहस्तेनैव, भूयः, तस्मै अक्रूराय, प्रत्यर्पयत् ददौ ॥ ४१ ॥ उक्ताख्यानकथनश्रवणस्मरणादिफलं वदन्निगमयति । यस्त्विति ॥ भगवतः, ईश्वरस्य, विष्णोः वीर्याढ्यं प्रभावप्रकाशनेन शोभमानमित्यर्थः । वृजिनहरं वदतां स्मरतां च पापहरं अनेनानिष्टनिवर्त्तकत्वमुक्तम् । सुमङ्गलं तु मङ्गलावहं च, अनेनेष्टप्रापकत्वमुक्तम् । एवंविधं, एतत् आख्यानं, यः पठति, शृणोति, अनुस्मरेद्वा, सः, दुष्कीर्त्तिं दुरितं च, अपोह्य निरस्य शान्तिं मुक्तिसाधनभूतमुपशमं च, याति प्राप्नोति ॥ ४२ ॥

इति श्रीधर्मधुरंधरश्रीधर्मात्मजप्रत्यक्षपुरुषोत्तमश्रीसहजानन्दस्वामिसुतश्रीरघुवीराचार्यसूनुभगवत्प्रसादाचार्यविरचितायामन्वयार्थावबोधिन्यां भक्तमनोरञ्जन्याख्यायां श्रीमद्भागवतटीकायां दशमस्कन्धे उत्तरार्द्धे सप्तपञ्चाशत्तमोऽध्यायः ॥ ५७ ॥

### कृष्णप्रिया

भगवान् श्रीकृष्ण ने स्यमन्तक मणि ज्ञातिजन स्वजन एवं आप्तजन को दिखाई, अपवाद का निवारण किया फिर स्वयं समीप में रखने के लिये समर्थ होने पर भी भक्तवर अक्रूरजी के कर कमलो में समर्पण किया ॥ ४१ ॥ सर्व समर्थ एवं परम कारुणिक भगवान् श्रीकृष्ण के ऐश्वर्यो से सर्वथा परिपूर्ण पुण्यतम यह चरित्र समस्त पापों अपराधों और दुष्कलङ्कों का निवारण करने वाला और कल्याणमय मङ्गलमय है । भक्तिभाव से इस आख्यान का श्रवण-कीर्तन-स्मरण एवं पठन करने वाला सज्जन सर्वविध कलङ्कों से और अपयश से मुक्त होकर परमानन्द को प्राप्त करता है ॥ ४२ ॥

इति श्रीमद्भागवते महापुराणे निरोधलीलायां दशमस्कन्धे उत्तरार्द्धे अनुवादे ५७ सप्तपञ्चाशत्तमोऽध्यायः ।

## [1]अथाष्टपञ्चाशत्तमोऽध्यायः

| श्लोकाः | अनु. | मि. उ. | व. | उ. | श्लो. अ. | उ. अ. | अ. अ. | सं. श्लो. अ. | सं. श्लो. अ. |
|---|---|---|---|---|---|---|---|---|---|
| ५८ | ५४ | ३ | १ | ६ | १९२८ | ३५ | ४५ | २००८ | ६२॥ |

श्रीशुक[2] उवाच

**एकदा पाण्डवान् द्रष्टुं प्रतीतान् पुरुषोत्तमः। इन्द्रप्रस्थं गतः श्रीमान् युयुधानादिभिर्वृतः ॥ १ ॥**

**दृष्ट्वा तमागतं पार्था मुकुन्दमखिलेश्वरम्। उत्तस्थुर्युगपद् वीराः [3]प्राणा मुख्यमिवागतम् ॥ २ ॥**

**परिष्वज्याच्युतं वीरा अङ्गसङ्गहतैनसः। सानुरागस्मितं वक्त्रं वीक्ष्य तस्य मुदं ययुः ॥ ३ ॥**

**युधिष्ठिरस्य भीमस्य कृत्वा पादाभिवन्दनम्। फाल्गुनं परिरभ्याथ यमाभ्यां [4]चाभिवन्दितः ॥ ४ ॥**

### कर्दमक्षमा

अन्वयः—एकदा, प्रतीतान्, पाण्डवान्, द्रष्टुम्, युयुधानादिभिः वृत्तः श्रीमान् पुरुषोत्तमः इन्द्रप्रस्थं गतः ॥ १ ॥ वीराः, पार्थाः, अखिलेश्वरं, तं, आगतं, दृष्ट्वा, मुख्यं, आगतं, (विलोक्यः) प्राणा, इव, युगपत्, उत्तस्थुः। वीराः अच्युतं परिष्वज्य तस्य अङ्गसङ्गहतैनसः सानुरागं स्मितं, वक्त्रं वीक्ष्य मुदं ययुः ॥३॥ पुरुषोत्तमः, युधिष्ठिरस्य, भीमस्य, पादाभिवन्दनं कृत्वा, फाल्गुनं, परिरभ्य, अथ, यमाभ्यां, च, अभिवन्दितः बभूव ॥ ४ ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

अष्टपञ्चाशत्तमे तु कृष्णः पञ्चकरेऽग्रहीत्। कालिंदीं मित्रविंदां च सत्यां भद्रां च लक्ष्मणाम् ॥ १ ॥
कालिंदीं निजलाभाय तपः परमुपेयुषीम्। परिणेष्यन्प्रियावासमिंद्रप्रस्थमथागमत् ॥ २ ॥

प्रतीतान्नष्टानपि द्रुपदगृहे पुनः सर्वैर्दृष्टान्। युयुधानः सात्यकिः ॥ १ ॥ प्राणा इंद्रियाणि मुख्यं पंचवृत्ति प्राणमिव ॥ २–३ ॥ ज्येष्ठयोः प्रणामं कृत्वा समेनालिंगितः कनिष्ठाभ्यामभिवन्दितो बभूव ॥ ४ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

पञ्च–भार्या इति शेषः। ता नामतो निर्दिशति–कालिन्दीमित्यादिना (१) निजस्य श्रीकृष्णस्य लाभाय। प्रियाणामर्जुनादीनामावासो यस्मिंस्तम् (२)। "प्रतीतः सादरे ज्ञाते हृष्टप्रख्यातयोस्त्रिषु" इति मेदिनी। शौर्यादिगुणेन प्रख्यातान् कोविदान्। वा–भगवद्भक्त्याऽभरणेन भूषितान् "प्रतीतो भूषिते ख्याते ज्ञाते प्रत्यर्थिते बुधे" इति यादवः। एवं प्रासंगिकं समाप्य प्रागवक्तुमारब्धाञ्छ्रीभगवतो विवाहानेव पुनर्वक्ष्यन्नादौ कालिंदीविवाहं वक्तुमारभते–एकदेति। पुरुषोत्तम इति भक्तवात्सल्यवत्त्वात् ॥ तं कृष्णम्। अखिलेश्वरमपि स्वगृह आगतं शैघ्र्यात्, न तु पूर्वश्रुतागमनम्। मुकुन्दमिति दर्शनमात्रेण सर्वदुःखमोचनपूर्वकपरमानन्दप्रदानात्। अतो दृष्ट्वैव युगपदासनादुत्तस्थुः। यतः पितृष्वसृष्वपि परमस्निग्धायाः पृथायाः पुत्राः वीरा इति शीघ्रोत्थाने वैशिष्ट्यं दर्शितम्। इंद्रियाणि तद्गोलकानि। प्राणं महौषधादिप्रभावेणागतं, पुनर्देहे संचरितम् ॥ २ ॥ तस्य कृष्णस्य। अच्युतमिति चिरपरिष्वंगे परमानन्ददाने च च्युतिरहितम्। एनस्तदप्राप्तिजं दुःखम्। वक्त्रमेव वीक्ष्य मुदं प्राप्तास्तत्रापि सानुरागस्मितम् ॥ ३ ॥ ज्येष्ठयोर्युधिष्ठिरभीमयोः। समेनार्जुनेन। कनिष्ठाभ्यां नकुलसहदेवाभ्याम्। तदेवमुभयेष्यानन्दात्स्वस्वव्यवहारं विस्मृत्य पुनः सावधानतया तमकुर्वन्नित्याह–युधीति। पादयोरभिवन्दनं शिरसा पादस्पर्शनपूर्वकं प्रणामम्। श्रीकृष्णार्जुनयो रोहिणीफाल्गुनजिन्मत्वेन ज्येष्ठकनिष्ठयोरपि सख्यमेव समव्यवहारे हेतुरिति ध्येयम् ॥ ४ ॥

### श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी

एवं प्रासङ्गिकं समाप्य प्रागवक्तुमारब्धान् श्रीभगवतो विवाहानेव पुनर्वक्ष्यन्नादौ श्रीकालिन्दीविवाहं वक्तुमारभते एकदेति। प्रतीतान् सर्वत्र पुनरागतत्वेन विख्यातान् सतः श्रीमान् महासमृद्ध्या शोभमानः यतो युयुधानादिभिर्महासैन्यैः वृतः सन् पुरुषोत्तम इति तदुचितभक्तवात्सल्यादिकं सूचितम्। सात्यकेर्मुख्यत्वं पाण्डवप्रियत्वात् ॥ १ ॥ अखिलेश्वरमपि स्वगृहे

---

१. अथ द्विषष्टितमो–विज.। २. बादरायणि–प्रा. पा.। ३. प्राणं–बिज.। ४. बादि–श्रीधर. टि.।

आगतं शीघ्रमागमनान्न तु पूर्वं श्रुत्वा गमनं मुकुन्दमिति दर्शनमात्रेणैव सर्वदुःखमोचनपूर्वकपरमानन्दप्रदानात् अतो दृष्ट्वैव युगपदासनादुत्तस्थुः यतः पार्थाः पितृस्वसृष्वपि परमस्निग्धायाः पृथायाः पुत्राः वीरा इति शीघ्रोत्थाने वैशिष्ट्यं दर्शितम् प्राणा इन्द्रियाणि तद्गोलकानीत्यर्थः। प्राणम् महौषध्यादिप्रभावेणागतम् पुनर्देहे सञ्चरितम् ॥ २ ॥ वीरा इति पूर्ववत् अच्युतमिति चिरपरिष्वङ्गे परमानन्दप्रदाने च च्युतिराहित्याभिप्रायेण एनस्तदप्राप्तिजं दुःखं वक्त्रमेव वीक्ष्य मुदं प्राप्ताः तत्रापि साऽनुरागस्मितमित्यर्थः ॥ ३ ॥ तदेवमुभयेऽप्यानन्दात् स्वस्वव्यवहारं विस्मृत्य पुनः सावधानतया तमकुर्वन्नित्याह—युधीति। फाल्गुनम्परिरभ्य स्थितः सन् यमाभ्यामभिवन्दितो बभूवेत्यर्थः। अभिवादित इति पाठे स एवार्थः पादयोरभिवन्दनं शिरसा पादस्पर्शनपूर्वकं प्रणाममित्यर्थः। श्रीकृष्णार्ज्जुनयोरोहिणीफाल्गुनी—जन्मत्वेन ज्येष्ठकनिष्ठयोरपि, सख्यमेव समत्वव्यवहारे हेतुरिति ज्ञेयम् ॥ ४ ॥

### श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी

एवं प्रासंगिकं समाप्य प्राग्वक्तुमारब्धान् श्रीभगवतो विवाहानेव पुनर्वक्ष्यन्नादौ श्रीकालिन्दीविवाहं वक्तुमारभते—एकदेति। तदेवाभिव्यञ्जयति—प्रतीतानिति। यदा प्रतीतास्तदेत्यर्थः। पुरुषोत्तम इति—भक्तवात्सल्याद्यशेष-सत्पुरुषगुणवत्त्वं सूचयति, अतो द्रष्टुं गतः। इन्द्रप्रस्थमिति प्राक् हस्तिनापुरे सहैवावस्थानाद् दुष्टदुर्य्योधनादिभिर्हिंस्यमानानां तेषां द्रुपदगृहे श्रीद्रौपदीविवाहानन्तरं श्रीभीष्माज्ञया धृतराष्ट्रेणानाय्य राज्यार्द्धप्रदानेनेन्द्रप्रस्थ एव निवासात्, इत्याद्यशेषवृत्तमादिपर्व्वणि विस्तरशो व्यक्तमित्यत्र न विवृतम्। श्रीमान् महासमृद्ध्या शोभमानः सन् चिरमाप्तदुःखानां तेषां सर्व्वसमृद्धिं प्रदातुमिति भावः। सात्यकेर्मुख्यत्वं पाशुवप्रियत्वात्, श्रीवलदेवेनासाहित्यञ्च ज्ञेयम्। तस्य दुर्य्योधनगुरुत्वादिना पाण्डवेषु स्नेहविशेषाभावात्, श्रीकालिन्दीपरिग्रहादौ तत्संगानुपयोगाद्वा। अन्यत्तैर्व्याख्यातम्। यद्वा, इन्द्रप्रस्थं प्रति इतान् प्राप्तान्, ततस्ततो निवृत्यागतान् वा ॥ १ ॥ अखिलेश्वरमपि स्वगृहे आगतं मुकुन्दमिति दर्शनमात्रेणैव परमानन्दप्रदानात्, अतो दृष्ट्वैव युगपदासनादुत्तस्थुः; किंवा चिराप्राप्त्या मृता इवाधुनाऽजीवन्नित्यर्थः, यतः पार्थाः पैतृष्वसेयाः, तत्रापि वीरा भक्तौ महासमर्थाः, अप्राप्यावाप्त्या। युगपदुत्थाने दृष्टान्तः—प्राणा इति, उपघातादिना लीनतया गतप्रायं पुनरागतं प्राणं प्राप्य यथोत्तिष्ठन्ति चेष्टन्ते, तद्वदित्यर्थः ॥२॥ परिष्वज्यालिंग्य, यतो वीरा भक्तिशूराः; अच्युतमिति तेषामिव परिष्वंगे, किंवा परमानन्दप्रदाने; यद्वा, परिष्वंगेऽभिनिवेशेन तेषां वक्षःस्थलाच्च्युतिराहित्याभिप्रायेण, एनः सांसारिकं तदप्राप्तिजं वा दुःखम्, अनुरागेण यत् स्मितं तत्सहितमिति तेन स्वविषयक-कृपातिरेकमननात् सहजसौन्दर्य्यविशेषाद्वा मुदं प्रापुः। एवं सर्व्वदुःखहानिर्महासुखावाप्तिश्चोक्ता ॥ ३ ॥ एवं प्रेमसम्भ्रमेणालिंगनमात्रं कृतवतस्तानाशीर्व्वादापिव्यवहारेऽशक्तान् किंवा विनयादिना तत्राप्रवर्त्तमानान् विलोक्य स्वयमेव लोकशिक्षार्थं सदाचारमपालयदित्याह—युधिष्ठिरस्येति। पादयोरभिवन्दनं शिरसा पादस्पर्शनपूर्व्वक-प्रणाममित्यर्थः। अथ ज्येष्ठयोः पादाभिवन्दनात् पश्चादेव फाल्गुनं परिरभ्य, न तु तस्मिन् स्नेहविशेषेणादावित्यर्थः ॥ ४ ॥

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम्

प्राणा इन्द्रियाणि मुख्यम् पञ्चवृत्तिप्राणम् ॥ २-१२ ॥

### श्रीमद्वीरराघवाचार्यकृता भागवतचन्द्रचन्द्रिका

अथ भगवतः कालिन्दीमित्रविन्दानाग्नजितीभद्रालक्ष्मणानां विवाहं वर्णयत्यष्टपञ्चाशत्तमेन। तावत्कालिन्दीविवाहोपोद्घातमाह—एकदेत्यादिना। अथोपयेम इत्यतः प्राक्तनेन प्रतीतान्नष्टानिति श्रुतानपि पुनर्द्रुपदगृहे सर्वैर्दृष्टान् पाण्डवान् द्रष्टुं युयुधानः सात्यकिः आदिर्येषां तैर्यदुभिः परिवृतः इन्द्रप्रस्थं ययौ ॥ १ ॥ दृष्ट्वेति पृथायाः कुन्त्या अपत्यानि वीरा युधिष्ठिरादयस्तमागतं कृष्णं दृष्ट्वा युगपदुत्तस्थुः यथा प्राणा इन्द्रियाणि आगतं मुख्यं पञ्चवृत्तिप्राणमनूत्तिष्ठन्ति तद्वत् ॥ २ ॥ परिष्वज्येति—प्रीतास्तमच्युतमालिङ्ग्य अच्युतस्याङ्गसङ्गेन हतान्येनांसि पापानि येषान्ते पार्थाः तस्यानुरागेण सहितं स्मितं यस्मिंस्तन्मुखमवलोक्य मुदं हर्षं प्रापुः ॥ ३ ॥ युधिष्ठिरस्येति—पादाभिवन्दनं कृत्वा तयोरधिकवयस्कत्वादिति भावः। फाल्गुनमर्जुनं परिष्वज्याऽऽलिङ्ग्य तस्य तुल्यवयस्कत्वात् यमाभ्यां यमलाभ्यां नकुलसहदेवाभ्यामभिवादितः नमस्कृतः तयोर्न्यूनवयस्कत्वादिति भावः ॥ ४ ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

तत्तदधिकारिणां तत्तद्योग्यगुणोपसंहारार्थं भक्तवात्सल्यादिविशेषं कथयति कतिपयेष्वध्यायेषु तत्रादौ हरेर्भक्तवात्सल्यं दर्शयितुमाह—एकदेति। एकदा कस्मिंश्चिदवसरे प्रतीतान् शौर्यादिगुणेन प्रख्यातान् कोविदान्वा भगवद्भक्त्याभरणेन भूषितान्वा "प्रतीतोभूषिते ख्याते ज्ञाने प्रत्यर्थिते बुधे" इति यादवः "प्रतीताः प्रथितख्यातीवत्तविज्ञातकोविदाः" इत्यमरः ॥ १ ॥ मुकुन्दं मुक्तिप्रदं शरीरं प्रत्यागतं प्रविष्टं मुख्यप्राणं दृष्ट्वा चक्षुरादीन्द्रियाणि यथोत्तिष्ठन्ति ॥ २ ॥ अच्युतस्याङ्गसङ्गेन ॥ ३-४ ॥

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः

एनस्तदप्राप्तजं दुःखम् ॥ ३–६ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

अष्टपञ्चाशत्तमे तु पाण्डून् प्रेक्ष्यापपञ्चसः। कालिन्दीमित्रविन्दाश्रीसत्याभद्राः सलक्ष्मणाः॥

प्रतीतान्नष्टानपि द्रुपद्रुपदगेहे पुनः सर्वैर्दृष्टान् युयुधानः सात्यकिः॥ १॥ प्राणा इन्द्रियाणि मुख्यं पञ्चवृत्तिं प्राणमिव ॥ २–३ ॥ अभिवादितः कृष्णस्तस्थौ ॥ ४॥

### गूढार्थदीपिनी

अष्टपञ्चाशत्तमे तु कन्याः पञ्चाऽग्रहीद्धरिः। कालिन्दीं मित्रविन्दां च सत्यां भद्रां च लक्ष्मणाम् ॥ १॥

प्रतीतान् द्रुपदगेहे ज्ञातान्। प्रतीतः सादरे ज्ञाते इति मेदिनी। युयुधानः सात्यकिः॥ १॥ युगपत् एककालावच्छेदेन। मुख्यं प्राणम् आगतं यथा प्राणा इन्द्रियाणि सक्रियाणि भवन्ति॥ २॥ हतम् एनोऽत्र दुःखम् येषाम् ॥ ३॥ फाल्गुनमर्जुनम् फाल्गुनीनक्षत्रे जातत्वात् ॥ ४॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

अष्टपञ्चाशत्तमे कालिन्दीमित्रविन्दासत्याभद्रालक्ष्मणानां भगवानुद्वाहं कृतवानित्याह—एकदेति। प्रतीतान् जतुवेश्मनि नष्टाः इत्येवं श्रुतानपि द्रौपदीस्वयम्बरे पुनः सर्वैः दृष्टान् इन्द्रप्रस्थे लब्धराज्यान् युयुधानः सात्यकिः॥ १॥ प्राणा इन्द्रियाणि मुख्यं पञ्चवृत्तिम् ॥ २–४ ॥

### श्रीसत्यधर्मकृता श्रीभागवतटिप्पणी

॥ हरिः ॐ ॥ सर्वदा भक्तपरवान्हरिरिति प्रतिपाद्यतेऽत्र। तत्रादौ पाण्डवानां नष्टोज्जीवदृष्टितुष्टिमानिव द्रष्टुमगमदिन्द्रप्रस्थमिति वक्ति॥ एकदेति। प्रतीतान्प्राग्लाक्षागृहदाहतो हता इति मतान् इदानीं च प्रख्यातिमतः सन्तीति प्रमितानिति यावत्। प्रतीतः शारदे ज्ञाते प्रतीतः ख्यातदृष्टयोः। वाच्यवत्स्यात्प्रतीतं तु प्रोषितेऽपि मृतेऽपि चेति विश्वः। प्रतीतो भूषिते ज्ञाने ख्याते प्रत्यर्थिते वुध इति यादवः। प्रतीतः प्रथितः ख्याते वित्तविज्ञानकोविदा इत्यमरः। युयुधानः सात्यकिरादिर्येषां तैर्युतः॥१॥ पार्थाः पृथासम्बन्धिनस्तत्पुत्रा इति यावत्। तमागतं मुकुन्दमखिलेश्वरं दृष्ट्वा। तमागतमित्यखण्डं पदम्। तमाया गतं गतिर्येन स चन्द्रस्तद्वद्विद्यमानं युगपदेकदैव। प्राणा इन्द्रियाणि मुख्यप्राणमागतं शरीरान्तर्निविष्टं द्रष्ट्वा यथोत्तिष्ठन्ति तथोत्तस्थुः। वीरा इति क्वाचित्के पाठे चेन्द्रियाणीति शेषः। यद्वा वीरा इति पाठोऽपि स एवार्थः। विविधा ईरा वीराः पञ्चप्राणा इति ॥२॥ अङ्गसङ्गेन हतमेनः पापं येषां ते तथा वीराः पञ्चाप्यविशेषेणाच्युतं कृष्णं परिष्वज्यालिङ्ग्याच्युतं दृढं यथा तथेति वा। सानुरागस्मितमनुरागः स्नेहस्तद्धेतुकं यत्स्मितं तेन सहितं तद्वक्त्रं च वीक्ष्य मुदं ययुः॥ ३॥ बहुतिथं दर्शने सति परवशत आश्लेषमुक्त्वा क्रामिकमभिवन्दनमाह॥ युधिष्ठिरस्येति। युधिष्ठिरस्य धर्मस्य भीमस्य तथा प्रदर्शनमात्रं नाभिमर्शनं। शुद्धे भागवते धर्मे निरतो यद्वृकोदर इत्यादेः। लोके लोकैरेवमनुष्ठेयमिति शिक्षणार्थमेवमपि कृतिः। फाल्गुनमर्जुनं परिरभ्य। अथार्जुनाज्ज्येष्ठ्यात्स्नेहविशेषात्परिरभ्यास्थितो कृष्णोऽथानन्तरमभिवन्दितस्तेनार्जुनेनेति शेषः। यथोक्तं भारते वनपर्वणि। अर्जुनात्केशवो ज्येष्ठः षड्भिर्मासैर्महाभुज इति। यमाभ्याममभिवन्दितो नमस्कृतः॥ ४॥

### श्रीमद्वल्लभाचार्यकृता सुबोधिनी

नवमे पञ्चकन्यानां विद्यापर्वस्वरूपतः। विवाहः प्रोच्यते सम्यक् कृष्णेनाशेषमुक्तये ॥ १ ॥
मायासम्बन्धदोषेण क्रोधः कामस्तथापरः। निराकृतः सर्वमुक्त्यै विद्याफलमतः परम् ॥ २ ॥
त्रैलोक्यसुखदानं च मायादोषनिवारणम्। द्वाभ्यां तथैव सर्वेषां राजसे पूर्णता ततः ॥ ३ ॥
विद्यायाः सूर्यमुख्यत्वात्प्रथमा दुहिता रवेः। विपक्षनिग्रहात्मत्वात् द्वितीया सोमवंजा ॥ ४ ॥
मार्गद्वयं हितार्थाय द्वयं स्वीकृतवान् हरिः। भक्तानभक्तानालक्ष्य तृतीया सूर्यवंशजा ॥ ५ ॥
भक्तिरूपा प्रयत्नेन याचयित्वा स्वयं गतः। व्यसनानि निराकृत्य तदुद्वाहं चकार ह ॥ ६ ॥
अग्रे बाधास्तु भक्तेन ह्यर्जुनेन निराकृताः। ज्ञानभक्त्योरतो भूयान् पर्वणोरुद्यमः कृतः ॥ ७ ॥
धर्मस्नेहौ तयोरङ्गं मध्यमो लौकिकः स्मृतः। द्वयोः स्वतन्त्रतासिद्ध्यै जीवानां तु ततो द्विधा ॥ ८ ॥
भक्तिज्ञानफले कृष्णः पुंसां स्त्रीणां चकार ह। अतो दत्तां स्वयं दत्तामक्लेशक्लेशभावनात् ॥ ९ ॥
उपयेमे स्वयं कृष्णस्तासु सर्वं प्रतिष्ठितम्। ततः सर्वकलाभिस्तु हरिः पूर्णो निरूप्यते ॥ १० ॥
सषष्ठो भगवानेवं निःसन्दिग्धो निरूपितः।

तत्र प्रथमविवाहे तत्त्वानि भगवांश्च व्यापृत इति नवविंशतिश्लोकैर्विवाहो निरूप्यते। तत्र भक्तिकर्मणी ज्ञाने अङ्गभूते इति निरूपयितुं द्वादशभिर्भक्तिं पञ्चभिः कर्म च निरूपयति। ततो भक्तद्वारा दशभिस्तद्ग्रहणम्, प्रसङ्गाद्भक्तोपकारश्च। भक्तोद्धारार्थं यतमान एव ज्ञानशक्तिं गृह्णातीति वक्तुं पाण्डवानां स्थाने भगवान् गत इत्याह **एकदे**ति। प्रतीतान् निश्चितान् राधावेधे वा दृष्टान्। तथापि तत्र तदा न प्रकटीभूता इति पश्चाद्गतः। प्रतीतिस्तु सन्देहाभावायैव। लोके प्रज्ञातान्। **पुरुषोत्तम** इति तान् सर्वान् पुत्रत्वेन निरूपयति। तेनावेक्षार्थं गमनं युक्तमेव। इन्द्रप्रस्थे तावता तैः स्थानं लब्धम्, नारदोपदेशतः भीष्मादिभिरेव दत्तम्। ननु तदानीमेव तत्र गताः पाण्डवा असाधनाश्च स्वार्थमेव सामग्रीरहिताः किं भगवदर्थे सम्पादयिष्यन्तीत्याशङ्क्याह **श्रीमा**निति। स्वयमेव सर्वसाधनलक्ष्मीयुक्तः। तेषां साधनसम्पादनार्थमेव गतः। अतएव महाशूरैः सुबुद्धिभिर्युयुधानादिभिर्वृतः। **युयुधानः** सात्यकिः। स तत्रार्जुनशिष्यो भविष्यति। भगवांश्च विश्वकर्मादिभिर्गृहादिकं सम्पादयिष्यतीति। एतदर्थं **भगवद्गमनम्**। बहुपुरुषैः सम्पादितगृहतुल्यम्, अन्यथा तद्गृहं न भवेत्। उत्कर्षश्च सम्पादनीयः ॥ १ ॥ एवं भक्तार्थं भगवद्गमने भक्तानां कृत्यमाह **दृष्ट्वा तमागत**मिति द्वाभ्याम्। आगमनसम्भावनापि न स्थिता। अकस्मादागत एव पार्थाः स्वयं राजानः पृथायाः भक्तायाः पुत्राः। अत एवाग्रे तस्या भक्तिं वक्ष्यति त्रिभिः। भगवांश्च मुकुन्दः। अनेनेष्टदो निरूपितः। अखिलेश्वरत्वादावश्यकः। अतो युगपदेव सर्वे उत्तस्थुः। **वीरा** इति तेषां स्वधर्मो निरूपितः। अन्यस्तु भगवत्परो न भवतीति। स्वतः परम्परातश्च उत्तमाः भगवति परं स्नेहं प्राप्तवन्त इति दृष्टान्तेनाह **प्राणा मुख्यमिवागत**मिति। इन्द्रियाण्या सन्यमागतमिव। तेषां तन्मूलकमेव सर्वमिति। एवं सर्वात्मना तदीयत्वमुपपाद्य तादृशानकर्तव्यमाह **परिष्वज्ये**ति। भगवदालिङ्गनं निरन्तरमेव स्थास्यतीति **अच्युत**मिति। भगवतस्तथात्वज्ञानं स्वधर्मादिवेति वक्तुं पुनर्**वीरा** इति। अङ्गसङ्गेनैव हृतमेनो येषाम्। उत्तरार्थं पापक्षयः आनुषङ्गिको जात इति निरूपितम्। अतएव भगवतः सानुरागस्मितं वक्त्रं दृष्ट्वा तदेव पुरुषार्थत्वेन मन्यमानाः मुदं ययुः। एतावदेव भक्तकार्यम् ॥ ३ ॥ ततो लौकिकं भगवान् कृतवानित्याह **युधिष्ठिरस्ये**ति। अन्यथा शत्रुमारणादिकं न कुर्युः। तत उत्कर्षश्च न स्यात्। अतो व्यामोहार्थं स्वयमात्मानं लौकिकं प्रदर्शितवान्। युधिष्ठिरभीमौ ज्येष्ठौ। अर्जुनः समः। अन्यौ कनिष्ठौ। ज्येष्ठयोर्नमस्कारः। समस्यालिङ्गनं सम्भाषणं च। अन्ययोर्नमस्कारानन्तरमाशिषः। तदुक्तं क्रमेणैव। पादाभिवन्दनादाचारो निरूपितः सम्बन्धकृतः। **अथ यमाभ्या**मिति वा, समानकालेऽपि सम्भवतीति धर्मव्यवस्थां निरूपयितुमानन्तर्यमुक्तम्। आन्तरोऽयं सुहृदिति ज्ञापयितुम् ॥ ४ ॥

### श्रीविट्ठलरायात्मजश्रीवल्लभकृतलेखः

**नवमे। माये**ति। माया रुक्मिणी, तत्सम्बन्धरूपदोषेण भगवति कामः क्रोधस्तथापरो लोभश्च प्राप्तः, स निराकृतः। क्रमो न विवक्षितः। भगवति कामः पुत्राद्यभिलाषो नास्ति। तथा सति नारदादिसर्वसंमतिं विनैव प्रद्युम्नं गृह्णीयात्। तथा क्रोधोपि नास्ति। तथा सति जाम्बवति प्रसादं न कुर्यात्। लोभोपि नास्ति। तथासति मणिं स्वयमेव गृह्णीयात्। एवं त्रिभिरध्यायैर्दोषत्रयाभाव उक्तः। अतः परं विद्यारूपं फलं निरूप्यते। तथा सति निर्दोषगुणत्वं भगवति सेत्स्यतीति भावः। ततो दशमाध्याये त्रैलोक्ये यत्सुखं तद्दानम्। ततो द्वाभ्यां मायाया रुक्मिण्या दोषनिवारणम्। तत्रान्तरदोषनिवारणमाद्येन। द्वितीयेन बाह्यदोषस्य रुक्मिणो निवारणम्। ततः सर्वेषां दोषनिवारणं **तथैव** द्वाभ्यामेवेत्यर्थः। कालिन्दी ज्ञानरूपा। मित्रविन्दा तपोरूपेत्यादिनिबन्धाज्ज्ञेयम्। **भक्ता**निति। 'भक्त्या मामभिजानाती'तिवाक्याद्भक्तानालक्ष्य ज्ञानमार्गः। भक्तिरहितानालक्ष्य तपोमार्ग इत्यर्थः। **तृतीये**ति। इयं भक्तिरूपा। अतः स्वयं गतः सन् याचयित्वा व्यसनानि निराकृत्य तदुद्वाहं चकारेत्यर्थः। अत्रेयं भक्तिरूपेत्युक्तम्। निबन्धे लक्ष्मणा भक्तिरूपा। नाग्नजिती योगात्मिकेति निरूपितम्। तत्र विकल्पो ज्ञेयः। **अत** इति। यतोऽत्र भगवतो भूयान् पक्षः। अतो हेतोर्ज्ञानभक्तिरूपयोः पर्वणोः कालिन्दीनाग्नजितीविवाहयोर्भूयानुद्यमो विस्तारः कृतः। **धर्मे**ति। कालिन्दी विष्णुं वरेण्यं ज्ञात्वा धर्मबुद्ध्या वृतवती। नाग्नजिती स्नेहेन वृतवतीत्यर्थः। **मध्यम** इति। मित्रवृन्दाविवाहो लौकिकभावयुक्त इत्यर्थः। **द्वयो**रिति। द्वयोर्ज्ञानभक्त्योः सम्बन्धिजीवानां ज्ञानिनां भक्तानां च स्वतन्त्रतासिद्ध्यै मध्ये लौकिको विवाह उक्त इति पूर्वेण सम्बन्धः। मध्ये तत्कथनेनोभयोर्विच्छेदः कृतः। तेनोभयोः स्वतन्त्रता, नत्वङ्गाङ्गिभाव इति सूचितमित्यर्थः। ततस्तदनन्तरं कृष्णः भक्तिर्ज्ञानं च फलं ययोस्तादृशे योगसाङ्ख्ये पुंसां स्त्रीणां चोभयत्रोभयं चकार। अतो हेतोर्दत्तां पित्रेतिशेषः। पित्रा दत्तां साङ्ख्यरूपां भद्रां स्वयमेव स्वयंवरे दत्तां योगरूपां लक्ष्मणामुपयेम इत्यर्थः। **अक्लेशे**ति। ल्यब्लोपे पञ्चमीयम्। तथा च क्लेशभावनमक्लेशरूपक्रियां प्राप्य भद्रामुपयेमे। मध्ये युद्धकथनात् क्लेशभावनं प्राप्य लक्ष्मणामुपयेम इत्यर्थः। अत्र नाग्नजित्या भक्तिरूपत्वकथनाल्लक्ष्मणाया योगरूपत्वमिति ज्ञेयम्। **अत** इति। विद्यायाः पञ्चविद्याया अपि सिद्धत्वादित्यर्थः। **सषष्ठ** इति। इमाः पञ्च स्वयं षष्ठः। एवं सति षड्विधत्वात् निःसंदिग्धो भगवानेव निरूपितो जात इत्यर्थः। **दृष्ट्वे**त्यत्र। **परं स्नेह**मिति। आगतमात्रेण सहसोत्थानं स्नेहकार्यम्। तथा च स्नेहं स्नेहकार्यमित्यर्थः।

**श्रीसुबोधिनी–सारः**

शुकोक्तिः। एकस्मिन् काले प्रतीतान् द्रुपदस्वयंवरे विख्यातान् विख्यातान् मत्स्यवेधनद्रौपदीविवाहादिना पांडवान् द्रष्टुं श्रीमानित्यनेन तत्पुरनिर्माणसंपत्तिसंपादनं सूच्यते युयुधानः सात्यकिस्तदादिभिर्वृतः पुरुषोत्तमः श्रीकृष्ण इन्द्रप्रस्थं गतः ॥१॥ अखिलेश्वरं सर्वनियंतारम् आगतं मुकुंदं तं दृष्ट्वा वीराः पार्था युगपत्सहैवोत्तस्थुः आगतं मुख्यं प्राणं दृष्ट्वा प्राणा इन्द्रियाणीव ॥२॥ अच्युतं श्रीकृष्णं परिष्वज्य मिलित्वा अंगस्य तन्मूर्तेः संगादासर्वतो हतान्येनांसि पापानि येषां ते वीराः पांडवा अनुरागः प्रीतिः स्मितं मंदहासस्ताभ्यां सहितं तस्य कृष्णस्य मुखं वीक्ष्य दृष्ट्वा मुदं ययुर्हर्षं प्रापुः ॥ ३ ॥ युधिष्ठिरस्य पादयोरभिवंदनं प्रणामं कृत्वा ज्येष्ठत्वात् फाल्गुनमर्जुनं परिरभ्यालिंग्य सखित्वात् अथानंतरं यमाभ्यां नकुलसहदेवाभ्यां चाभिवंदितः कृतप्रणामः स्वयमासीत् कनिष्ठत्वात् ॥ ४ ॥

**गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी**

अष्टपञ्चाशत्तमे तु कृष्णस्योद्वाहपञ्चकम्। कालिन्दीमित्रविन्दादिभिः साकं विनिरूप्यते ॥ १ ॥

तत्र तावत् कालिन्दीविवाहोपोद्घातमाह—एकदेत्यादिना। प्रतीतान् नष्टानिति श्रुतानपि पुनर्द्रुपदगृहे सर्वैर्दृष्टान् पाण्डवान् द्रष्टुं युयुधानः सात्यकिः आदिर्येषां तैर्यदुभिः परिवृतः श्रीमान् शोभातिशययुक्तः पुरुषोत्तमः कृष्णः एकदा इन्द्रप्रस्थं गत इत्यन्वयः ॥ १ ॥ पार्थाः पृथापुत्राः वीरा युधिष्ठिरादयस्तं मुकुन्दं मुक्तिदातारं कृष्णमागतं दृष्ट्वा युगपदेकदैवोपतस्थुः। तत्र दृष्टान्तमाह—प्राणा इति। यथा मुख्यं पञ्चवृत्तिकं प्राणं विना प्राणा इन्द्रियाणि प्रथमं मूर्छितानि भवन्ति, तमागतं दृष्ट्वा च युगपत् सचेष्टानि भवन्ति, तद्वदित्यर्थः। मुक्तिप्रदत्वे हेतुमाह—अखिलानां सर्वेषां ब्रह्मादीनामपि ईश्वरं नियन्तारमिति ॥ २ ॥ उत्थिताः सन्तो यत् कृतवन्तस्तदाह—परिष्वज्येति। वीरा युधिष्ठिरादयः अच्युतं स्वरूपतो गुणतश्च च्युतिरहितं श्रीकृष्णं परिष्वज्य आलिङ्ग्य तस्य वक्त्रं मुखं च वीक्ष्य मुदं ययुः हर्षं पापुः। 'कीदृशस्य मुखस्य दर्शनं तेषां हर्षजनकं जातम्' इत्यपेक्षायामाह—अनुरागेण सहितं स्मितं मन्दहासो यस्मिंस्तदिति। 'पापिनां तद्दर्शनाद्यानन्दो न भवति' इत्याशयेनाह—तस्य अङ्गसङ्गेन हतान्येनांसि पापानि येषां त इति ॥ ३ ॥ युधिष्ठिरभीमयोरधिकवयस्कत्वात् पादाभिवन्दनं कृत्वा फाल्गुनस्य अर्जुनस्य तुल्यवयस्कत्वात्तं परिरभ्य आलिङ्ग्य अथ अनन्तरं नकुलसहदेवयोर्न्यूनवयस्कत्वात्ताभ्यां यमाभ्यां यमलाभ्यामभिवादितो बभूव ॥ ४ ॥

**अन्वितार्थप्रकाशिका**

अष्टपञ्चाशत्तमे तु कालिन्दीप्रमुखा हरिः। पञ्चोदुवाह तच्छ्लोकाः कथिता गजमार्गणाः ( ५८ )।
षडुवाचेत्यथो पादयुक्ता षष्टिरनुष्टुभः ( ६०। ) ॥ ५८ ॥

एकदेति ॥ प्रतीतान् लाक्षागृहे नष्टा इति श्रुतानपि पुनर्द्रुपदगृहे सर्वैर्दृष्टान् पाण्डवान् द्रष्टुं युयुधानः सात्यकिः आदिर्येषां तैर्यदुभिः परिवृतः श्रीमान् शोभातिशययुक्तः पुरुषोत्तमः कृष्णः एकदा इन्द्रप्रस्थं गतः ॥ १ ॥ दृष्ट्वेति ॥ वीराः पार्थाः तम् अखिलेश्वरं मुकुन्दमागतं दृष्ट्वा युगपदेव उत्तस्थुः। तत्र दृष्टान्तः। यथा मुख्यं पञ्चवृत्तिकं प्राणमागतं दृष्ट्वा प्राणा इन्द्रियाणि युगपत्सचेष्टानि भवन्ति तथा ॥ २ ॥ परिष्वज्येति ॥ वीराः पाण्डवाः अच्युतं परिष्वज्य तस्याङ्गस्य सङ्गेन हतान्येनांसि पापानि येषां तादृशाः सन्तः सानुरागं स्मितं यस्मिंस्तत् तस्य अच्युतस्य वक्त्रं वीक्ष्य मुदं ययुः ॥ ३ ॥ युधिष्ठिरस्येति ॥ युधिष्ठिरस्य भीमस्य च ज्येष्ठत्वात्पादाभिवन्दनं कृत्वा फाल्गुनस्यार्जुनस्य तुल्यवयस्कत्वात्तं परिरभ्य नकुलसहदेवयोः कनिष्ठत्वात् ताभ्यां यमाभ्यां यमलाभ्यामभिवादितो बभूव। रोहिण्यां श्रीकृष्णः "फल्गुन्यामर्जुनो जातः" इति अष्टभिर्दिनैः श्रीकृष्णस्य ज्यैष्ठ्येऽपि सख्यात्समत्वेन व्यवहारः ॥ ४ ॥

**श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्**

इदानीमष्टपंचाशत्तमेऽध्याये हरिकृतं पंचानां कालिंदीमित्रविंदानाग्नजिती भद्रालक्ष्मणानां पाणिग्रहणं निरूप्यते एकदेति प्रतीतान् सर्वत्रपुनरागतत्वेन प्रसिद्धान्। युयुधानः सात्यकिस्तत्प्रभृतिभिः सैन्यैः ॥ १ ॥ प्राणा इंद्रियाणि आगतं मुख्यं सजीवं प्राणं प्राप्येव ॥ २ ॥ अंगसंगेन हतानि एनांसिदर्शनविरोधिपापानि येषां ते तस्य श्रीकृष्णस्य ॥ ३ ॥ फाल्गुनमर्ज्जुनं यमाभ्यां कनिष्ठाभ्यां नकुलसहदेवाभ्यां ॥ ४ ॥

**भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी**

करे पञ्चाग्रहीत् कृष्णोऽष्टपञ्चाशत्तमे क्रमात्। कालिन्दीं मित्रविन्दां च सत्यां भद्रां च लक्ष्मणाम् ॥ १ ॥
कालिन्दीमात्मलाभाय तपन्तीं तप उत्तमम्। वरिष्यंस्तत्प्रियावासमिन्द्रप्रस्थमगाद्धरिः ॥ २ ॥

तत्रादौ कालिन्दीविवाहोपोद्घातमाह एकदेत्यादिनाऽथोपयेम इत्यतः प्राक्तनेन ग्रन्थेन। एकदेति। एकदा कदाचित्, श्रीमान् पुरुषोत्तमः श्रीकृष्णः, प्रतीतान् लाक्षागृहे नष्टान् श्रुतानपि, पुनर्द्रुपदगेहे सर्वैर्दृष्टानित्यर्थः। पाण्डवान् द्रष्टुं, युयुधानादिभिः

सात्यकिप्रभृतियदुभिः, वृतः परिवृतः सन्, इन्द्रप्रस्थं गतः ययावित्यर्थः ॥ १ ॥ दृष्ट्वेति ॥ पृथायाः कुन्त्या अपत्यानि पार्थाः, वीरा युधिष्ठिरादयो वीरपुरुषाः, अखिलेश्वरं मुकुन्दं, तं श्रीकृष्णं, आगतं दृष्ट्वा, प्राणा इन्द्रियाणि, आगतं, मुख्यं पञ्चवृत्तिप्राणं इव, इन्द्रियाण्यागतं मुख्यप्राणं दृष्ट्वा, यथाऽभ्युत्तिष्ठन्ति तद्वदित्यर्थः । युगपत्, उत्तस्थुः ॥ २ ॥ परिष्वज्येति । वीराः युधिष्ठिरादयः, अच्युतं श्रीकृष्णं, परिष्वज्यालिङ्ग्य, अङ्गसङ्गेन अच्युताङ्गसङ्गेन हतान्येनासि पापानि येषां तथाभूताः सन्तः, तस्याच्युतस्य, सानुरागमनुरागेण सहितं स्मितं यस्मिंस्तत्, वक्त्रं मुखं, वीक्ष्य अवलोक्य, मुदं हर्षं, ययुः प्रापुः ॥ ३ ॥ युधिष्ठिरस्येति ॥ अथ, अच्युतः युधिष्ठिरस्य, भीमस्य, पादाभिवन्दनं कृत्वा, तयोः स्ववयसोऽधिकवयस्कत्वादिति भावः । फाल्गुनमर्जुनं, परिरभ्य परिष्वज्य, तस्य तुल्यवयस्कत्वात् । यमाभ्यां यमलाभ्यां नकुलसहदेवाभ्यां, अभिवन्दितः नमस्कृतः । तयोर्न्यूनवयस्कत्वादिति भावः ॥ ४ ॥

### कृष्णप्रिया

श्रीशुकदेव जी कहते हैं—परीक्षित् ! अब पाण्डवों का पता चल गया था कि वे लाक्षाभवन में जले नहीं हैं । एक बार भगवान् श्रीकृष्ण उनसे मिलने के लिये इन्द्रप्रस्थ पधारे । उनके साथ सात्यकि आदि बहुत-से यदुवंशी भी थे ॥ १ ॥ जब वीर पाण्डवों ने देखा कि सर्वेश्वर भगवान् श्रीकृष्ण पधारे हैं तो जैसे प्राण का सञ्चार होने पर सभी इन्द्रियाँ सचेत हो जाती है, वैसे ही वे सब-के-सब एक साथ उठ खड़े हुए ॥ २ ॥ वीर पाण्डवों ने भगवान् श्रीकृष्ण का आलिङ्गन किया, उनके अङ्ग-सङ्ग से इनके सारे पाप-ताप धुल गये । भगवान् की प्रेमभरी मुसकराहट से सुशोभित मुख-सुषमा देखकर वे आनन्द में मग्न हो गये ॥ ३ ॥ भगवान् श्रीकृष्ण ने युधिष्ठिर और भीमसेन के चरणों में प्रणाम किया और अर्जुन को हृदय से लगाया । नकुल और सहदेव ने भगवान् के चरणों की वन्दना की ॥ ४ ॥

**परमासन [1]आसीनं कृष्णा कृष्णमनिन्दिता । नवोढा व्रीडिता किंचिच्छनैरेत्यभ्यवन्दत ॥ ५ ॥**
**तथैव सात्वकिः पार्थैः पूजितश्चाभिवन्दितः[2] । निषसादासनेऽन्ये[3] च पूजिताः पर्युपासत ॥ ६ ॥**
**पृथां समागत्य कृताभिवादनस्तयातिहार्दार्द्रदृशाभिरम्भितः[4] ।**
**आपृष्टवांस्तां[5] कुशलं सहस्नुषां पितृष्वसारं परिपृष्टबान्धवः ॥ ७ ॥**
**तमाह प्रेमवैक्लव्यरुद्ध[6]कण्ठाश्रुलोचना । स्मरन्तीतान् बहून् क्लेशान् क्लेशापायात्मदर्शनम् ॥ ८ ॥**

### कर्दमक्षमा

अन्वयः—परमासने, आसीनं, कृष्णम्, अनिन्दिता, नवोढा, व्रीडिता, कृष्णा, किञ्चिच्छनैः, एत्य, अभ्यवन्दत ॥ ५ ॥ यथा, कृष्णः, तथा, एव, सात्यकिः, पूजितः, अभिवन्दितः, च, आसने, निषसाद । अन्ये, च, पार्थैः, पूजिताः, कृष्णं, परि-उपासत ॥ ६ ॥ पृथां, समागत्य, तया, अतिहार्देन, आर्द्रदृशा, कृताभिवादनः, स, अभिरम्भितः, तया, परिपृष्टाः, बान्धवाः, यस्य, सः, ( कृष्णः ) सहस्नुषाम्, पितृस्वसारं, ताम्, अपृष्टवान् ॥ ७ ॥ प्रेम्णा, वैक्लव्येन, रुद्धः, कण्ठो, यस्याः, अश्रुलोचना, कुन्ती, तान्, बहुक्लेशान्, स्मरन्ती, क्लेशापायात्मदर्शनं, तं, आह ॥ ८ ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

कृष्णा द्रौपदी । बहुभार्या सत्यपि निन्दारहिता पार्थैर्नवमचिरमूढा परिणीता ॥ ५-६ ॥ अतिहार्देन स्नेहेनार्द्रे सजले दृशौ यस्यास्तया परिष्वक्तः । तया परिपृष्टा बांधवा यस्य सः ॥ ७ ॥ प्रेम्णा वैक्लव्यं तेन रुद्धः कंठो यस्याः क्लेशापाये आत्मनि दर्शनं यस्य तम् । भजतां क्लेशापायाय आत्मानं दर्शयतीति वा ॥ ८ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

कृष्णा द्रौपदी । नवोढा सद्यो विवाहिता । परमे राजासनतोपि श्रेष्ठे । कृष्णा कृष्णमिति सनामतयापि मैत्री दर्शिता ॥ ५ ॥ यथा कृष्णस्तथैवेत्यर्थः । पर्युपासत स्वस्वासन उपविष्टा बभूवुः । परितश्चतुर्दिक्षु, उप समीपे आसिता उपविष्टाः । पूजितैर्नमस्कृतैः ॥ ६ ॥ तया पृथया । तां पृथाम् । पतीनामेकस्मिन्नप्यन्तःपुरे लब्धांतरविभागे श्रीद्रौपदी निवसतीति तस्मिन्नेवाकस्मादागतस्य श्रीकृष्णस्य तेषां मेलनानन्तरमेव तया मेलनं वर्णितम् । अथ तत्संलग्नांतःपुरान्तरे गमनपूर्वकं तत्र

---

१. नमा-प्रा. पा. । २. नन्दितः-श्रीधर. टि. । ३. ने रम्ये-प्रा. पा. । ४. ते-विज. । ५. वीक्षितः-प्रा. पा. । ६. तत्कु-विज । ७. बद्ध-प्रा. पा. ।

स्थितया श्रीकुन्त्या मेलनमाह—पृथामिति । कृतमभिवादनममुकोऽहं नमस्करोमीत्येवंविधिना प्रणामो येन सः । आ सम्यक्पृष्टवान् परिपृष्टा बांधवा भ्रात्रादयो येन सः । यद्वा—परिपृष्टा बांधवा यस्माच्छ्रीकुन्त्या स तथा । सहस्नुषामिति नवोढात्वेन तामपृष्ट्वा तस्या एव प्रष्टुं योग्यत्वात् । तं कृष्णम् । तान्वुद्धिस्थान् जतुगृहादावनुभूतान् । पूर्वव्याख्याने हरेभक्तोपेक्षाप्रतीतेरर्थांतरमाह—भजतामिति । प्रेमवैक्लव्ये हेतुः—स्मरंतीति । तान् प्रसिद्धान् दुर्योधनकृतविपदानादीन् । बहून्क्लेशान्स्मरंती तमाहेत्यन्वयः। वस्तुतस्तु—तेषां यद्दुःखं जातं तद्दैन्यहर्षादिव्यभिचारिभावैः स्थायिभावं वर्धयितुं लीलाशक्त्यैव कृतमिति ॥ ८ ॥

## श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी

परमे राजासनतोऽपि श्रेष्ठे (श्रीकृष्णस्यैवोपवेशाय निर्माप्य स्थापिते) आसीनं सन्तम् एवं तेऽपि श्रीभगवदाज्ञया स्वस्वासने उपविविशुरिति ज्ञेयम् कृष्णा कृष्णमिति सनामतयाऽपि मैत्री दर्शिता किञ्चिदभिमुखमागत्य तत्रापि शनैः ॥ ५ ॥ यथा श्रीकृष्णः पूजितस्तथैव पूजित आतिथ्यविधिना अभिनन्दितः अनुमोदितागमनादिकः अभिवन्दितः इति क्वचित्पाठः परितश्चतुर्दिक्षु उप समीपे आसतोपविष्टाः ॥ ६ ॥ पत्नीनामेकस्मिन्नप्यन्तःपुरे लब्धाऽवान्तरविभागे श्रीद्रौपदी निवसतीति तस्मिन्नेवाकस्मादगतस्य श्रीभगवतस्तेषां मिलनानन्तरमेव तया मिलनं वर्णितम् । अथ तत्संल्लग्नान्तःपुरान्तरे गमनपूर्वकं तत्र स्थितया श्रीकुन्त्या मिलनमाह—पृथां समागत्येति । कृतम् अभिवादनं अमुकोऽहं नमस्करोमीत्येवंविधिना प्रणामो येन सः आ सम्यक् पृष्टवान् यतः पितृस्वसारम् अत एव परिपृष्टा निजवान्धवा भ्रात्रादयो यं सः सहस्नुषां द्रौपद्या सहितामिति नवोढात्वेन तामपृष्ट्वा तस्या एव प्रष्टुं योग्यत्वात् ॥ ७ ॥ प्रेमवैक्लव्ये हेतुः स्मरन्तीति तान् प्रसिद्धान् दुर्योधनकृतविपदानादीन् बहून् क्लेशान् स्मरन्ती तमाहेत्यन्वयः । क्लेशेति तैर्व्याख्यातम् तत्र प्रथमपक्षे आत्मनि चित्तेऽपीत्यर्थः । उभयत्रापि पक्षे मुनेस्तेषां तत्तद्दुःखजातं स्मृत्वा श्रीभगवन्तं प्रति प्रणयोपालम्भ इव वस्तुतस्तु यत्तेषां दुःखं जातम् उद्दैन्यहर्षादिव्यभिचारिभावैः स्थायिभावं वर्द्धयितुं विचित्रगत्या लीलाशक्त्यैव कृतमिति भावः ॥ ८ ॥ तान् दुर्य्योधनकृतविपदानादीन् बहून् क्लेशान् स्मरन्ती तत्र तत्र च क्लेशानामपायो यस्मात्तद्रूपमात्मनि मनसि दर्शनं यस्य तादृशं तं स्मरन्ती प्रेमवैक्लव्येत्यादिरूपा सती तमाहेत्यन्वयः ॥ ८ ॥

## श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी

परमे राजासनतोऽपि श्रेष्ठे आसीनं सन्तम्, एवं तेऽपि स्वस्वासने उपविविशुरिति ज्ञेयम् । कृष्णा कृष्णमिति सनामतया सख्यं सूचितम् । तथा भक्त्या तया श्रीकृष्णस्य तेन च प्रेम्णा तस्याचित्ताकर्षणञ्च नवोढात्वादेव साध्वीस्वभावाद्वा किञ्चिद्व्रीडिता, किञ्चिदिति कामभावाभावेन व्रीडाविशेषाभावात्, तद्दर्शनस्वभावेन वा धैर्य्यहान्या सम्यग् व्रीडारक्षणाशक्तेः । यद्वा, अस्य परेणान्वयः । व्रीडितत्वादेव शनैरभ्येत्य अग्रे गत्वा किञ्चित् पादस्पर्शनादिना अभितः सपद्मांगमवन्दत ॥ ५ ॥ तथैवेति यथा श्रीकृष्णः पूजितस्तेनैव प्रकारेणेति पूर्वानुक्तमपि तत्पूजनमेतस्मादेव ज्ञेयम् । यद्वा, यथा परिष्वक्तस्तथैव परिष्वज्येत्यर्थः । पूजित आतिथ्यविधिना अभिनन्दितश्च, स्वागतादिना अनुमोदितागमनादिक इत्यर्थः । यद्वा, स्तुत्यादिना अभित आनन्दितो हर्षितश्च पर्य्युपासितश्च । वीजनादिना सेविता निषेदुः, यद्वा, परितश्चतुर्दिक्षु उप समीपे आसिता उपवेशिताः ॥ ६ ॥ प्राग् वक्तुं योग्यमपि श्रीकुन्त्याः समागमादिकं स्नेहभरवैक्लव्येन आगन्तुमशक्तायास्तस्याः श्रीभगवतैव पश्चात् समागमनादिनान्त्यत्वात्, किंवा सूचीकटाहन्यायेन विस्तारापेक्षया आदावनुक्त्वा पश्चादाह—पृथामिति । कृतमभिवादनं 'अमुकोऽहं नमस्करोमि' इत्येवम्विधिना प्रणामो येन सः, आ सम्यक् पृष्टवान्, यतः पितृष्वसारम्, अत एव परितः पृष्टा वान्धवास्तेषां कुशलं यस्य, यद्वा परिपृष्टा निजबान्धवा भ्रात्रादयो यं सः । सहस्नुषां द्रौपद्या सहितामिति नवोढात्वेन लज्जादिना प्रागपृष्टायास्तस्याः पश्चाच्छ्रीकुन्त्या साहित्ये सत्येव प्रष्टुं योग्यत्वात् ॥ ७ ॥ प्रेमवैक्लव्ये हेतुः—स्मरन्तीति ।ताननिर्व्वचनीयान् श्रीभीमविषभक्षणादीन् तद्बन्धुनां तादृशक्लेशस्मरणेनातिदैन्यादयात् । किञ्च, क्लेशापाये सत्यधुना राज्यादिप्राप्तौ सत्यमेव, न तु क्लेशमध्ये आत्मानं दर्शितवन्तमित्यर्थः । यद्वा, क्लेशापायात्मनो दर्शनादधुना अन्ये क्लेशाः पुनर्न भविष्यन्तीति प्रहर्षोदयात् ॥ ८ ॥

## श्रीमद्वीरराघवाचार्यकृता भागवतचन्द्रचन्द्रिका

परमासनमिति कृष्णा द्रौपदी नवोढा नवमचिरमूढा विवाहिता अत एव किञ्चिद्व्रीडिता सती शनैरागत्यकृष्णमभ्यवन्दत ननाम ॥ ५ ॥ तथैवेति यथा कृष्णस्तथा सात्यकिश्च यथायोग्यं पूजितो बहुमतोऽभिवन्दितश्च निषसादोपविष्टवान् तथाऽन्ये च यादवः पार्थैः पूजिताः कृष्णं परित उपासत ॥ ६ ॥ ततश्च भगवान् पृथां कुन्तीं समभ्येत्य कृतमभिवन्दनम् येन सः अतिस्नेहेनार्द्रे सजले दृशौ यस्यास्तया पृथयाऽभिरम्भितः परिष्वक्तः पितृभगिन्या पृथया परिपृष्टाः कुशलप्रश्नविषया बान्धवा बसुदेवादयो यस्य सः सहस्नुषां पुत्रभार्यासहितां तां पृथामापृष्टवान् कुशलं पप्रच्छ ॥ ७ ॥ तमिति प्रेम्णा वैक्लव्यमधाष्ट्यं तेन रुद्धः कण्ठो यस्याः सा अश्रूणि लोचनयोर्यस्याः साः पृथा तान् भूतपूर्वान् क्लेशान् स्मरन्ती क्लेशापायायाऽऽत्मानन्दर्शयतीति तथा तं कृष्णमाह ॥ ८ ॥

### श्रीविजयध्वजतीर्थकृता पदरत्नावली

कृष्णा द्रौपदी ॥ ५-६ ॥ तस्यै कृताभिवन्दनः अभिरम्भितः आलिङ्गितः परिपृष्टवान्धवस्तयेति शेषः ॥ ७ ॥ क्लेशापायात्मदर्शनं क्लेशनाशकरस्वरूपदर्शनं जतुगृहादावनुभूतांस्तांश्च बहून् क्लेशान् स्मरन्ती तं कृष्णमाहेत्यन्वयः ॥ ८ ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

सहस्नुषामित्यतो मिलनमपि तयोरेकदेव ज्ञेयम् विस्तरापेक्षया तु श्रीकुन्त्या मिलनं पश्चाद्वर्णितमिति ॥ ७-२२ ॥

### श्रीनाथचक्रवर्तिपादविरचिता चैतन्यमतमञ्जूषा

कृष्णा द्रौपदी नाम्ना मित्रत्वं सूचितम् । व्रीडिता किञ्चिदौत्सुक्यस्य गरीयस्त्वमुक्तं भवति, औत्सुक्ये व्रीडा वाधिता भवति ॥ ६-२० ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

कृष्णा द्रौपदी ॥ ५ ॥ पूजितैर्नमस्कृतैः अन्ये च कृष्णसङ्गिनो निषेदुः ॥ ६ ॥ तत्रैवात्यौत्सुक्येन द्रष्टुमायान्तीमालक्ष्य स्वासनादुत्थाय द्रुतं तस्याः समीपमागत्य अभिवादनं चकार अति हार्द्देन अतिप्रेम्णा आर्द्रे दृशौ यस्यास्तया "प्रेमा ना प्रियता हार्द्दम्" इत्यमरः । अभिरम्भितः कोटिप्राणैस्त्वन्मुखच्छविं निर्मञ्छयामीत्युक्त्वा समस्तकाघ्राणमालिङ्गतः परिपृष्टा वान्धवा यस्य सः ॥ ७ ॥ क्लेशानाम् अपायो नाश आत्मदर्शनेनाङ्गदर्शनेनैव यस्य तम् ॥ ८ ॥

### गूढार्थदीपिनी

कृष्णा द्रौपदी शनैः कृष्णमेत्य । किञ्चित् व्रीडिता अनिन्दिता बह्वनां भार्याऽपि निन्दारहिता । नवोढा सद्यो विवाहिता ॥ ५ ॥ कृष्ण पर्युपासत परित उपविष्टाः ॥ ६ ॥ अतिहार्देन स्नेहेन आर्द्रे सजले दृशौ नेत्रे यस्यास्तया कुन्त्या अभिरम्भित आलिङ्गितः । परिपृष्टा वान्धवा भ्रातरः वसुदेवादयो यस्येति कृष्णविशेषणम् ॥ ७ ॥ वैक्लव्यं व्याकुलत्वम् । क्लेशापायाय नाशाय आत्मानं दर्शयतीति तथा ॥ ८ ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

कृष्णा द्रौपदी नवोढा नवमचिरमूढा परिणीता ॥ ५ ॥ अन्ये च यादवाः पार्थैः पूजिताः पर्य्युपासत कृष्णं परित उपासत ॥ ६ ॥ अतिहार्देन स्नेहोद्रेकेन आर्द्रे सजले दृशौ यस्यास्तया ॥ ७ ॥ क्लेशानामपायो यस्मात् तदात्मदर्शनमात्मनि ध्यानम् यस्य तं यद्ध्यानमात्रेण क्लेशनाशस्तं साक्षात्संस्थितमाह ॥ ८ ॥

### श्रीसत्यधर्मकृता श्रीभागवतटिप्पणी

परमासने आसीनं कृष्णम् । अनिन्दिता प्रपञ्चातीतपञ्चभर्तृमत्यप्यपरनारीवदनिन्दनार्हा । न केवलं किन्त्वहल्यादौ द्रौपदीत्यादिना स्वस्मरणपातकनिपातहेतुरिति चानुसन्धातव्यम् । व्रीडिता तत्र हेतुर्नवोढेति । किञ्चिच्छनैरतिमन्दमेत्य प्राप्याभ्यवन्दत ॥ ५ ॥ अभिवन्दितः कनिष्ठैरन्ये च सहागताः ॥ ६ ॥ कृतमभिवन्दनं येन सः । तया कुन्त्याऽतिहार्ददशाऽतिहार्देन बहुस्नेहेन । प्रेमाना प्रियसौहार्दप्रेमस्नेह इत्यमरः । हृदयस्य कर्म । युवाद्यण् । हृदयस्य हृल्लेखेति हृदादेशः । आर्द्रा क्लिन्ना च सा हृच्च तया करणेन । बहुव्रीहिणा सामानाधिकरण्यं वा । अभिरम्भितः । अत्र परिरम्भणमनुक्षणं ज्ञेयम् । द्वितीयपक्षे तयालिङ्गित इत्यर्थः परिपृष्टवान्धवो माधवस्तया स्वयं सहस्नुषां स्नुषयासहितां पितृष्वसारं वसुदेवभगिनीम् । तत्स्वज्ञातमेव कुशलं परिपृष्टवान् । पितृष्वसारं पितृषु धृतराष्ट्रभीष्मादिषु । असुरोऽन्याय्यं च परिपृष्टवानित्यप्यर्थः ॥ ७ ॥ प्रेम्णा दर्शनजेन निमित्तेन यद्वैक्लव्यं विह्वलता तेन रुद्धः सम्भाषणाद्यननुकूलः कण्ठो यस्याः सा च साश्रूणि लोचनयोर्यस्याः सा च तान् । जतुगेहदाहादिप्रसक्तिप्रसक्तान् क्लेशान्स्मरन्ती कुन्ती । क्लेशानामपायो नाशो येन तद्दर्शनं यस्य स तं कृष्णं प्रति प्राह ॥ ८ ॥

### श्रीमद्वल्लभाचार्य्यकृता सुबोधिनी

तदानीमर्जुनेनोढाया नमस्कारमाह परमासन आसीनमिति । अनेन सर्वपूजानन्तरं पश्चाद्दास्येनात्मनिवेदनं कुर्वाणेव समागतेति सूचितम् । आसीनमव्यग्रम् । तस्यां कृपादृष्ट्यर्थमुक्तम् । एतदर्थं तस्याः सनामत्वेन योग्यतामाह कृष्णेति । 'यो यच्छ्रद्धः स एव स' इति भगवान् कृष्णः पञ्चात्मकः, शब्दार्थशक्तिभक्तक्रीडाधारभूतः । अतो व्यासो भगवान् कालिन्दी अर्जुनो द्रौपदी चेति । नन्वेषा परिग्रहाधिक्याद्दुष्टा कथमेवं प्रपन्ना, तत्राह अनिन्दितेति । दोषो नास्त्येव । निन्दापि नास्तीति । सम्बन्धाभावाच्च तथेत्याह नवोढेति । विधिसम्बन्धाद्वा । अत एव किञ्चिद्व्रीडिता । स्त्रीस्वभावोऽपि शनैरागमनं धाष्टर्याभावं सूचयति ॥५॥ सहगतानां

पुरस्कारं वक्तुं सात्यकेराह तथैवेति । यथा भगवान् पूजितः, एवं भगवद्भक्ता अपि पूजिताः । यतस्ते पार्थाः । सम्बन्धश्च तुल्य इति, साधु समागतमित्यभिनन्दनम् । ज्ञानशक्तिरत्र प्रकटीकर्तव्येति सोऽप्यासन एवोपविष्टः । अन्ये च पूजिताः । आसनेपूपविष्टाः, परं भगवन्तं परित उपासत ॥ ६ ॥ पृथायाः स्तोत्रं वक्तुं प्रथममन्यान्यमनुवृत्तिमाह पृथामिति । भगवान् पृथां समागत्य पृथानिकटे गत्वा कृताभिवादनो जातः । तया च अतिहार्देन आर्द्रा दृष्टिर्यस्याः । करुणया भक्त्या च आर्द्रा भवति दृष्टिः । ततोऽपि अतिहार्दा लौकिकसम्बन्धेन स्नेहयुक्ता आर्द्रा भवति । ततस्तया परिरम्भितः । कुशलमापृष्टवान् । स्वयं च पृष्ट इति लौकिकी भाषा भगवत्कृता स्थिरा जातेति निरूपितम् ॥ ७ ॥ तस्याः स्तोत्रार्थं प्रवृत्तिमाह तमाहेति । प्रेम्णा वैक्लव्यम् । अन्तःकरणस्य तादृशं प्रेम । तेन रुद्धकण्ठता शरीरवैक्लव्यम् । अश्रूणि लोचने यस्या इतोन्द्रियवैक्लव्यम् । किञ्च । स्वस्थानामपि भवत्यैवं भवति । इयं तु बहुक्लेशापन्ना तांश्च स्मरतीत्याह **स्मरन्ती** तानिति । बहूनेव क्लेशान् स्मरन्ती । क्लेशनिवृत्त्यर्थं प्रार्थयिष्यतीत्याशङ्क्याह **क्लेशापायात्मदर्शन**मिति । क्लेशानामपायो नाशो यस्मात् तादृशं स्वरूपस्य दर्शनमेव यस्येति । दर्शनेनैव क्लेशनिवृत्तौ तदर्थं न प्रार्थना ॥ ८ ॥

## श्रीसुबोधिनी-सारः

परमासने सिंहासने आसीनं कृष्णं कृष्णा द्रौपदी नवोढा सद्यःपरिणीता अनिंदिता निर्दोषा पतिपंचकत्वेपि व्यासवरेण कन्यात्वात् किंचिद्व्रीडिता लज्जिता शनैरेत्यागत्यानमत् ॥ ५ ॥ यथा कृष्णस्तथा एव सात्यकिः पार्थैः पृथापुत्रैः पूजितोऽभिवंदितश्चासने निषसाद तस्थौ अन्ये च पूजिताः सर्वे पर्युपासिताः सर्वत उपविष्टाः ॥ ६ ॥ पृथां कुंतीं संप्राप्यातिहार्देन गाढप्रेम्णाऽऽर्द्रे सजले दृशौ नेत्रे यस्यास्तया कुंत्या परिपृष्टा बांधवा यस्य यस्मै यं वेत्यन्ये कृतमभिवादनं येन तस्यै स कृष्णोभिरंभितः परिष्वक्तः सहस्नुषां पुत्रवधूसहिताम् पितुः स्वसारं भगिनीं तां कुंतीं कुशलमपृच्छत् ॥ ७ ॥ प्रेम्णा वैक्लव्यं तेन रुद्धः कंठो यस्या अश्रूणि लोचनयोर्यस्याः सा कुंती तान् बहून् क्लेशान् दुःखानि स्मरंती सती क्लेशस्यापाये नाशे आत्मानं दर्शयतीति यद्वा क्लेशा अविद्यास्मिता रागद्वेषाभिनिवेशाः पंच तेषामपायो विनाशहेतुरात्मदर्शनं ज्ञानं यस्येति तं श्रीकृष्णमाह ॥ ८ ॥

## गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

अथ परमासने उत्तमसिंहासने आसीन कृष्णं शनैरेत्य आगत्य कृष्णा अभ्यवन्दत । शनैरागमने हेतुमाह—किञ्चित् व्रीडिता लज्जितेति । लज्जायां हेतुमाह—नवोढेति । अचिरं विवाहितेत्यर्थः । तथापि तस्याः पञ्चभर्तृकत्वं दोषमाशङ्क्याह—अनिन्दितेति ॥ ५ ॥ यथा कृष्णः पूजितस्तथैव सात्यकिः पार्थैः पूजितोऽभिवन्दितश्चासने निषसाद । तथाऽन्ये च यादवाः पार्थैः पूजिताः कृष्णं परित उपासत ॥ ६ ॥ पृथां कुन्तीं समागत्य कृतं अभिवन्दनं येन सः, अतिस्नेहेन आर्द्रे सजले दृशौ यस्यास्तया पृथया अभिरम्भितः परिष्वक्तः, तया परिपृष्टाः कुशलप्रश्नविषयीकृतां बान्धवा वसुदेवादयो यस्य सः कृष्णः सहस्नुषां पुत्रभार्यासहितां पितृष्वसारं तां कुन्तीं कुशलमापृष्टवानित्यन्वयः ॥ ७ ॥ प्रेम्णा वैक्लव्यं व्याकुलत्वं तेन रुद्धः कण्ठो यस्याः सा, अश्रूणि लोचनयोर्यस्याः सा तान् भूतपूर्वान् क्लेशान् स्मरन्ती क्लेशानामपायाय विनाशाय आत्मानं दर्शयतीति तथाभूतं तं कृष्णमाह ॥ ८ ॥

## अन्वितार्थप्रकाशिका

परमेति ॥ परमासने उत्तमसिंहासने आसीनं कृष्णं शनैरेत्यागत्य बहुभार्यापि अनिन्दिता नवोढा किञ्चिद् व्रीडिता कृष्णा द्रौपदी अभ्यवन्दत ॥ ५ ॥ तथेति ॥ यथा कृष्णः पूजितस्तथैव सात्यकिः पार्थैः पूजितोऽभिवन्दितश्चासने निषसाद । तथाऽन्ये च यदवः पार्थैः पूजिता कृष्णं परित उपासत ॥६॥ पृथामिति । पृथां कुन्तीं समागत्य कृतम् अभिवादनं येन सः अतिहार्देन स्नेहेन आर्द्रे सजले दृशौ यस्यास्तया पृथया अभिरम्भितः परिष्वक्तः तया परिपृष्टा कुशलप्रश्नविषयीकृताः बान्धवा वसुदेवादयो यस्य सः कृष्णः सहस्नुषां पुत्रभार्यासहितां पितृस्वसारं तां कुन्तीं कुशलमापृष्टवान् ॥ ७ ॥ तमिति ॥ प्रेम्णा वैक्लव्यं व्याकुलत्वं तेन रुद्धः कण्ठो यस्याः सा अश्रूणि लोचनयोः यस्याः सा कुन्ती तान् भूतपूर्वान् बहून् क्लेशान् स्मरन्ती क्लेशानामपाये विनाशे आत्मनि दर्शनं यस्य सः क्लेशानामपायो यस्मात्तादृशमात्मनि दर्शनं यस्येति वा भजतां क्लेशापाये क्लेशानामपायाय वा आत्मानं दर्शयतीति तथाभूतं वा तं कृष्णमाह स्म ॥ ८ ॥

## श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्

कृष्णा द्रौपदी । अनिंदिता पंचानां पत्नी सत्यपिनिर्दोषा नवोढा नवीनविवाहिता ॥ ५-६ ॥ पृथां कुंती अतिहार्देनातिप्रेम्णा आर्द्रे साश्रुणी दृशौ नेत्रे यस्यास्तयाऽभिरंभित आलिंगितः परिपृष्टाः सुखितया पृष्टाः बांधवा वसुदेवाद्या यस्य सः । श्रीकृष्णः सहस्नुषां द्रौपदीसहितां पितृभगिनीं तां पृथां प्रतिकुशलं आपृष्टवान् ॥ ७ ॥ प्रेमवैक्लव्येन स्नेहवैवश्येन रुद्धः कंठो यस्याः क्लेशानां अपायाय नाशाय आत्मानं स्वं दर्शयतीति तं श्रीकृष्णं ॥ ८ ॥

**भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी**

परमेति । अनिन्दिता सुलक्षणा, नवोढा नवमचिरमूढा विवाहिता, कृष्णा द्रौपदी, परमासने आसीनमुपविष्टं, कृष्णं, किंचित् व्रीडिता सती, शनैः, एत्यागत्य, अभ्यवन्दत ननाम ॥ तथैवेति । यथा श्रीकृष्णस्तथैव, सात्यकिश्च, पार्थैः, अभिवन्दितः पूजितः सन्, आसने निषसाद । अन्ये यदवश्च, पार्थैः पूजिताः सन्तः, कृष्णं परि परितः, उपासत ॥ ६ ॥ पृथामिति । ततः, भगवान् पृथां कुन्तीं, समागत्य समभ्येत्य, कृतमभिवादनं येन सः, अतिहार्द्राद्रे अतिस्नेहेन सजले दृशौ यस्यास्तया, तया पृथया, अभिरम्भितः परिष्वक्तः । परिपृष्टाः पितृष्वस्रा कुशलप्रश्नं पृष्टाः बान्धवा वसुदेवादयो यस्य तथाभूतः सन्, सहस्नुषां पुत्रभार्यासहितां, पितृष्वसारं, तां पृथां, कुशलं आपृष्टवान् ॥ ७ ॥ तमिति । प्रेम्णा वैक्लव्यमधाष्ट्र्यं तेन रुद्धः कण्ठो यस्याः सा, अश्रूणि लोचनयोर्यस्याः सा पृथा, तान् भूतपूर्वान्, बहून् क्लेशान्, स्मरन्ती सती, क्लेशापायात्मदर्शनं क्लेशनाशकरस्वरूपदर्शनं, तं श्रीकृष्णं आह ॥ ८ ॥

**कृष्णप्रिया**

जब भगवान् श्रीकृष्ण श्रेष्ठ सिंहासन पर विराजमान हो गये; तब परमसुन्दरी श्यामवर्णा, द्रौपदी, जो नवविवाहिता होने के कारण तनिक लजा रही थी, धीरे-धीरे भगवान् श्रीकृष्ण के पास आयी और उन्हें प्रणाम किया ॥ ५ ॥ पाण्डवों ने भगवान् श्रीकृष्ण के समान ही वीर सात्यकि का भी स्वागत-सत्कार और अभिवन्दन-नन्दन किया । वे एक आसन पर बैठ गये । दूसरे यदुवंशियों का भी यथा-योग्य सत्कार किया गया तथा वे भी श्रीकृष्ण के चारो ओर आसनों पर बैठ गये ॥ ६ ॥ इसके बाद भगवान् श्रीकृष्ण अपनी फुआ कुन्ती के पास गये और उनके चरणों में प्रणाम किया । कुन्तीजी ने अत्यन्त स्नेहवश उन्हें अपने हृदय से लगा लिया । उस समय उनके नेत्रों में प्रेम के आँसू छलक आये । कुन्तीजी ने श्रीकृस्ण से अपने भाई-बन्धुओं की कुशम-क्षेम पूछी और भगवान् ने भी उनका यथोचित उत्तर देकर उनसे उनकी पुत्रवधू द्रौपदी और स्वयं उनका कुशल-मङ्गल पूछा ॥ ७ ॥ उस समय प्रेम की विह्वलता से कुन्तीजी का गला रुँध गया था, नेत्रों से आँसू बह रहे थे । भगवान् के पूछने पर उन्हें अपने पहले के क्लेश-दर-क्लेश याद आने लगे और वे अपने को बहुत सम्हालकर, जिनका दर्शन समस्त क्लेशों का अन्त करने के लिये ही हुआ करता है, उन भगवान् श्रीकृष्ण से कहने लगी ॥ ८ ॥

**तदैव कुशलं नोऽभूत्[1] सनाथास्ते कृता वयम् । ज्ञातीन्[2] नः स्मरता कृष्ण भ्राता मे प्रेषितस्त्वया ॥ ९ ॥**

**[3]न तेऽस्ति [4]स्वपरभ्रान्तिर्विश्वस्य सुहृदात्मनः । तथापि स्मरतां [5]शश्वत् क्लेशान् हंसि हृदि स्थितः ॥ १० ॥**

**युधिष्ठिर[6] उवाच**

**किं न आचरितं श्रेयो न वेदाहमधीश्वर । योगेश्वराणां दुर्दर्शो यन्नो दृष्टः कुमेधसाम् ॥ ११ ॥**

**इति वै वार्षिकान् मासान् राज्ञा सोऽभ्यर्थितः सुखम् । जनयन् नयनानन्दमिन्द्रप्रस्थौकसां विभुः[7] ॥ १२ ॥**

**कर्दमक्षमा**

अन्वयः—तदा, ज्ञातीन्, नः, स्मरता, त्वया, एव, वयं, सनाथाः पक्षे हे कृष्ण, मे भ्राता, प्रेषितः, तदैव न कुशलं अभूत् ॥ ७ ॥ विश्वस्य, सुहृदात्मनः, ते, स्वपर, भ्रान्तिः न, अस्ति, तथापि, स्मरतां, हृदि शश्वत् स्थितः, क्लेशान्, हंसि ॥१०॥ हे अधीश्वरः नः, किं, श्रेयः, आचरितं, इति, अहं, न, वेद, यत्, योगेश्वराणां, दुर्दर्शः, त्वम्, कुमेधसाम्, दृष्ट, असि ॥ ११ ॥ इति, राज्ञा, अभ्यर्थितः, विभुः, इन्द्र, प्रस्थौकसां, नयनानन्दं, जनयन् वार्षिकान्, मासान्, सुखम् उवास इति यावत् ॥ १२ ॥

---

१. नोऽभूयत्सनाथाः–विज. । २. ज्ञातुं–विज. ।

३. पाञ्चालेषु स्थितानस्मान्स्वयंवरकृते तदा । अनुस्मृत्यागतो यस्त्व तेन स्मासं सुयोषिता ॥ १ ॥
इत्युक्तायां तदा कुन्त्यां प्राह योगेश्वरः स्वयम् । पाञ्चालेषु स्थितानेत्य सुतांस्ते छद्मरूपिणः ॥ २ ॥
कुंभकारस्य शालायामुषितान्सह भार्यया । दृष्ट्वा गतोऽहं द्विवसे तस्मिन्नेवाविलंवितः ॥ ३ ॥
निहन्तुं शतधन्वानं सत्यभामापितुर्द्रुहम् । शतधन्विनि दुर्बुद्धौ हते सीरधरोग्रजः ॥ ४ ॥
कुपितो मामनादृत्य विदेहान्विमना ययौ । एतावन्तं महाकालं तदागमनकाङ्क्षया ॥ ५ ॥
पुरएवावसं क्वापि नागच्छं कार्ययन्त्रितः । इत्येवंवादिनं कुन्ती प्राह स्नेहपरिप्लुता ॥ ६ ॥

४. स्वः पर इति–विज. । ५. सर्वान्–विज. । ६. विजये नास्ति । ७. प्रभुः प्रा. पा. ।

**श्रीधरस्वामिविरचिता भावार्थदीपिका**

ज्ञातीन् बंधून् नोऽस्मान् यदा भ्राताऽक्रूरः प्रेषितः ॥ ९ । ज्ञातीनिति वचनात्प्राप्तं मोहं वारयन्ती स्तौति । न तेऽस्तीति । तत्र हेतुः विश्वस्येति सुहृच्च आत्मा च तस्य हंसि नाशयसि ॥ १० ॥ कुमेधसां विषयासक्तचित्तानां दृष्टोऽसि ॥११॥ सुखमवसदिति शेषः । सुखमभ्यर्थित इति वा क्रियासमाप्तिः ॥ १२ ॥

**श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः**

भक्तानुपेक्षां हरेराह—तदैवेति । यदाऽक्रूरः प्रेषितस्तदैवेत्यन्वयः । त्वयैवाऽस्माकं कुशलं पूर्वं जातमित्याह—तदैवेति । तत्त्वया नोऽस्मान् ज्ञातीन्स्मरता पाल्यत्वेन लब्धान्यादवानिव भावयता मे मम भ्राता प्रेषितः । तच्च तव युक्तमेवेत्याह—हे कृष्णेति । भक्तवात्सल्यादशेषगुणप्रकटनपरत्वेन प्रसिद्ध इत्यर्थः ॥ ९ ॥ मोहमज्ञानम्, यद्यपि ते नास्ति तथापीति योज्यम् । तत्र स्वपरभ्रांत्यभावे । तदेवाभिव्यंजयंतीश्वरत्वेन सर्वत्र समस्याऽपि तस्य भक्तेष्वेवानुग्रहविशेषं दर्शयति—नेति । विश्वस्य यः सुहृत् स्वभावत एव ज्ञानक्रियाशक्तिदानेन हितकारी यत आत्मा परमात्मा तस्य यद्यपि स्वपरभ्रांतिः-अयं बंधुरयं शत्रुरिति भ्रमो नास्ति, स्मरतां कारुण्यादिगुणमयत्वेन भावयतां हृदि स्थितः प्रकटिततत्तद्गुणत्वात्तेषामेव प्रकटतया हृदि स्थितः ज्ञातः सन् शश्वन्मुहुः क्लेशान्हंसि, अंधेष्वपि तत्तदृष्ट्यादिप्रवर्तनया सूर्यस्य स्वभावत उपकारित्वेऽपि चक्षुष्मत्तमःखंडनवत् ॥ १० ॥ नोऽस्माभिः । "युष्मदस्मदोः षष्ठीचतुर्थी द्वितीयास्थयोः-" इति विपरीतनिर्देशादन्यासु विभक्तिष्वपि वान्नावादयस्स्युरिति तृतीयाबहुवचनस्य नसादेशः ॥ एवं मात्रोक्तं भक्तवात्सल्यं श्रुत्वा विनयादिना स्वस्य भक्तत्वममन्यमानो दैन्यमवलंब्य दीनवात्सल्यं वर्णयति-किमिति, कतरत् । नोऽस्माभिः पूर्वजन्मस्वाचरितं श्रेयस्तत् यद्यस्मान्नोऽस्माकमपि दृष्टस्त्वं, दृशेर्बुद्ध्यर्थत्वाद्वर्तमाने क्तः । अस्माभिर्दृश्यत इत्यर्थः । कीदृशानाम्—कुमेधसां, भक्तिमात्रहीनानामित्यर्थः । कीदृशोऽपि दृष्टः— भक्तियोगेश्वराणामपि चिरेण दृश्योपि । अतः केवलदीनवात्सल्येनैव दृष्ट इति भावः । तदेवाह—हे अधीश्वर परमस्वतंत्र । यद्वा—अधियां गाढ़दीनानामपि परिपालक ॥ ११ ॥ इति संल्लापे । वार्षिकान् वर्षाकालसंबंधिनः । स कृष्णः । "अक्के चेन्मधु विंदेत किमर्थं पर्वतं व्रजेत् । इष्टस्यार्थस्य संसिद्धौ को विद्वान्यत्नमाचरेत् ॥" इति न्यायेन क्रियाशेषीकरणयत्नं विनैवेष्टसिद्धेस्तन्न कार्यमित्याह—सुखमिति । राज्ञा स प्रभुः सुखं प्रतिवार्षिकान्मासानभ्यर्थितः प्रार्थितः । किं भूतं सुखम्—नयनयोरानंदो येन तत्तथा, यावद्वर्षाकालं दर्शनं प्रति प्रार्थित इति भावः ॥ टीकाद्वितीयपक्षे सुखमभ्यर्थित इह अर्थेयाच्यर्थत्वेन द्विकर्मकत्वं राजा धनं याचित इतिवत् । ततश्च वार्षिकान्मासान्व्याप्य तद्वासने सुखप्राप्तये निवेदित इत्यर्थः ॥ १२ ॥

**श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी**

त्वयैवास्माकं कुशलमिति पूर्वमेव ज्ञातमित्याह—तदैवेति ते त्वया नः अस्मान् ज्ञातीन् स्मरता पाल्यत्वेन लब्धान् यादवानिव भावयता मे मम भ्राता भ्रातृत्वेन परमस्निग्धः प्रेषितः तच्च तव युक्तमेवेत्याह—हेकृष्णेति । भक्तवात्सल्याद्यशेषगुणप्रकटनपरत्वेन प्रसिद्ध इत्यर्थः ॥ ९ तदेवाभिव्यञ्जयन्तीश्वरत्वेन सर्वत्र समस्यापि तस्य भक्तेष्वेवानुग्रहविशेषं दर्शयति—नेति । विश्वस्य यः सुहृत् स्वभावत एव ज्ञानक्रियाशक्तिदानेन हितकारी यत आत्मा परमात्मा तस्य यद्यपि स्वपरभ्रान्तिर्न सम्भवति तथापि स्मरतां कारुण्यादिगुणगणमयत्वेन भावयतां हृदिस्थितः प्रकटिततत्तद्गुणत्वात्तेषामेव प्रकटतया हृदि स्थितत्वेन मतः सन् शश्वन्मुहुः क्लेशान् हंसि अन्धेष्वपि तत्तद्दृष्टत्वादिप्रवर्त्तनया सूर्यस्य स्वभावत उपकारकत्वेऽपि चक्षुष्मत्सु तमःखडनवत् ॥ १० ॥ एवंमात्रोक्तं भक्तवात्सल्यं श्रुत्वा विनयादिना निजमभक्तत्वममन्यमानो दैन्यमवलम्ब्य दीनवात्सल्यं वर्णयन्नाह—किमिति । कतरत् नोऽस्माभिः पूर्वजन्मस्वाचरितं श्रेयस्तत् यद्यस्मान्नोऽस्माकमपि दृष्टस्त्वं दृशेर्बुद्ध्यर्थत्वाद्वर्त्तमाने क्तः अस्माभिर्दृश्य स इत्यर्थः । कीदृशानां कुमेधसां भक्तिमात्रहीनानामित्यर्थः । कीदृशोऽपि दृष्टः भक्तियोगेश्वराणामपि चिरेणैव दृश्योऽपि अतः केवलं त्वद्दीनवात्सल्येनैव दृष्ट इति भावः । तदेवाह—हे अधीश्वर ! परमस्वतन्त्र ! यद्वा, अधियां दीनानामप्यस्माकं परिपालक ! ॥ ११ ॥ विभुरपि प्रभुरिति क्वचित्पाठः टीकाया द्वितीयपक्षे सुखमभ्यर्थित इति याच्यार्थत्वादर्थेद्विकर्मकत्वं राजा धनं याचित इतिवत् ततश्च वार्षिकान् मासान् व्याप्य तद्वासेन सुखप्राप्तये निवेदित इत्यर्थः ॥ १२ ॥

**श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी**

ते ते क्लेशाश्च त्वदनुग्रहेणैवातिक्रान्ता इत्याशयेनाह—तदैवेति । ते त्वया, ज्ञातीनिति त्वद्बान्धवत्वायोग्यानपि बान्धवत्वेन स्मरतेत्यर्थः । भ्रातेति—परमस्निग्ध इति भावः । तच्च तव युक्तमेवेत्याह—हे कृष्णेति, भक्तवात्सल्याद्यशेषगुणप्रकटनात् ॥ ९ ॥ तदेवाभिव्यञ्जयन्तीश्वरत्वेन सर्व्वत्र समस्यापि भक्तेष्वेवानुग्रहमाह—नेति । आत्मा अन्तर्य्यामी ईश्वर इति यावत् । स्मरतां सकृत् स्मरणे प्रवर्त्तमानानामपि सदा हृदि स्थितोऽतिसन्निहितः सन्, अतएव शश्वत् पुनः पुनर्हंसि । शश्वदिति संसारक्लेशानां सदैवागमात् । अन्यत्तैर्व्याख्यातम् । यद्वा, विश्वस्य सुहृदात्मनोऽपि स्वो भक्तः, परोऽभक्त इति भ्रान्तिर्भ्रमणं

मुहुर्मनोगतिस्तव नास्ति किम् ?—काका, अपि तु अस्त्येवेत्यर्थः। यतोऽन्तर्य्यामितया सर्व्वेषां हृदि स्थितोऽपि, अपि एव, स्मरतामेव, न त्वभक्तानाम्, किंवा स्मरतामपि स्मरणमात्रलक्षणमपि किं पुनर्नवविधां भक्तिं कुर्व्वतामित्यर्थः। तथा तेनानिर्व्वचनीयप्रकारेण समूलोत्पाटनादिना, हंसीति भक्तिहीनानान्तु न हंस्येवेति सिद्धमेव ॥ १० ॥ एवं मात्रोक्तं भक्तवात्सल्यं श्रुत्वा विनयादिना निजभक्तत्वममन्यमानो दैन्यमवलम्ब्य दीनवात्सल्यं वर्णयन्नाह—किमिति। कतरत् नोऽस्माभिः पूर्व्वंजन्मस्वाचरितमहं धर्म्मपुत्रः सर्व्वज्येष्ठोऽपि न वेद। यद्वा, अन्यो जानातु नाम, अहन्तु न वेद्मीति ज्ञानाभिमानिनः प्रत्युपहासः। कुतः? अधीश्वर हे परमस्वतन्त्र! अतो योगः समाधिस्तस्मिन्, ईश्वराणां समर्थानामपि दुर्द्दर्शो हृद्यप्यदृश्यः; यद्वा, हे अधियां दीनानामप्यस्माकमीश्वर! परिपालक! किंवा हे अधिकनिजैश्वर्य्यप्रकटक! भक्तियोगेश्वराणामपि दुःखेनैव दृश्यः, अचिराप्राप्त्या महादैन्योत्पत्त्यैव दृश्यत्वात्, तथापि कुमेधसां भक्तिहीनानामपि नोऽस्माकं सर्व्वेषाम्, कर्त्तरि षष्ठी, अस्माभिर्यद्येन दुष्टस्तच्छ्रेयो न वेद्मि, भक्तियोगाधिकश्रेयोऽभावात्. अतः केवलं त्वद्दीनवात्सल्येनैव दृष्ट इति भावः ॥ ११ ॥ इति एवमभ्यर्थितः, वै अपि, वार्षिकानपि इन्द्रप्रस्थवासिनां सर्व्वेषामेव जनानां नयनयोरानन्दं साक्षात्तत्सौन्दर्य्यावलोकनात्, यतः प्रभुः—विश्वस्यानन्दने समर्थः, यद्वा, अभ्यर्थने हेतुः—निजेश्वर इति ॥ १२ ॥

**श्रीमद्वीरराघवाचार्यकृता भागवतचन्द्रचन्द्रिका**

उक्तिमेवाह—तदेवेति। नोऽस्माकं कुशलमभूत्तथा ते त्वया वयं सनाथाश्च कृताः कदा यदा ज्ञातीन् बन्धून्नोऽस्मान् स्मरता त्वया मम भ्राताऽक्रूरः प्रेषितः ॥ ९ ॥ ज्ञातीत्यनेन प्राप्तां ममतां वारयितुमाह—नेति। ते तव स्वः पर इति च भ्रान्तिर्नास्ति तत्र हेतुर्विश्वस्येति, जगतः सुहृच्चात्मान्तरात्मा च तस्य कथं तर्हि युष्मान्स्मरामीत्यत आह—तथाऽपीति। स्वपरभ्रान्त्यभावेऽपि स्मरतां भक्तानां हृदि स्थितस्त्वं शश्वत्सदा क्लेशान् हंसि नाशयति ॥ १० ॥ अथ युधिष्ठिरः प्राह–किमिति। हे अधीश्वर! नोऽस्माभिः किं पुण्यमाचरितं कृतम् इति न वेद्मि कृतं पुण्यमीदृशम् इति न वेद्मि किं तु सामान्यतो महत्पुण्यं कृतमेवेति तु वेद्मीति भावः। कुतः यद्यस्माद्योगीश्वराणामपि द्रष्टुमशक्यो भवान् कुमेधसां विषयासक्तचित्तानामस्माकं दृष्टः ॥ ११ ॥ इतीति, इतीत्थं राज्ञा युधिष्ठिरेणाभ्यर्थितो बहुमतः स भगवान् वार्षिकान्मासान् सुखं यथा तथा न्यवसदिति शेषः ॥ १२ ॥

**श्रीमद्विजयध्वजतीर्थकृतापदरत्नावली**

किमत्राह—तदेवेति। हे कृष्ण! यद्यदा स्मरतां नो वृत्तं ज्ञातुं त्वया यदा मे भ्राताऽक्रूरः प्रेषितः तदेवास्माकं कुशलमभूदित्यन्वयः। कथमेतदत्राह—यदिति। यदित्युत्तरत्रापि सम्बध्यते हेतुत्वेन अस्मत्कुशलं स्मरता त्वया सनाथाः स्वामिवन्तः कृता इति यत्पाण्डवानामुपद्रवो न कर्तव्यः यतस्ते कृष्णनाथा अस्मान् घ्नन्तीति ॥ ९ ॥ किञ्च यदा स्वयम्वरकृते पाञ्चालेषु स्थितानस्माननुस्मृत्य यस्त्वमागतः तदा तेन त्वया त्वद्गुणानुसंस्मृत्याहं सुखोषिता आसम् इत्यन्वयः ( क ) इदानीमागमनविलम्बः किमिति कृत इति कुन्त्या हार्दशङ्कां परिहरन्नाह—इतीति ( ख-ग ) सीरधरो हलधरः बलभद्र इत्यर्थः ( घ-ङ ) कार्यन्त्रितः कार्यवशः ईश्वरस्य तव इदं वचनं लोकचेष्टाऽनुसारि न तु तथ्यमिति भावेन प्रतिवक्ति इतीति ( च ) स्वः स्वकीयः परः परकीयः शत्रुपक्षभवः शत्रुमित्रविभागाभावे जनार्दनो मुरारिर्मधुसूदनः पार्थसारथिरित्यादीनि नामानि विक्रमनिमित्तानि कथमत्राह—तथापीति ॥ १० ॥ इति संलापे वार्षिकान्वर्षाकालसम्बन्धिनः राज्ञाऽभ्यर्चितः उवासेति शेषः ॥ ११–१३ ॥

**श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शिनी**

भ्राता अक्रूरः ॥ ९ ॥ परमेश्वरस्य का वाऽहं वराकीत्यैश्वर्यमनुसन्धायाह—नेति, विश्वस्य सुहृच्च आत्मा तस्य तव अयं बन्धुरयं शत्रुरिति स्वपरभ्रमो नास्ति यद्यपि तथापि स्मरतां स्वभक्तानाम् ॥ १०–११ ॥ सुखमवसदिति शेषः ॥ १२ ॥

**गूढार्थदीपिनी**

ते त्वया यदा भ्राता अक्रूरः ॥ ९ ॥ स्वकीयः परकीय इति भ्रान्तिर्भ्रमः ॥ १० ॥ नोऽस्माभिः किं श्रेयः पुण्यं कर्म। कुत्सितेषु विषयेषु मेधा येषाम्। कर्तरि षष्ठी ॥ ११ ॥ इति वै इत्येवम्। वार्षिकान् चतुर्मासान्। सुखमवसदिति शेषः। अभ्यर्थित इति वा ॥ १२ ॥

**श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः**

भ्राता अक्रूरः ॥ ९ ॥ परमेश्वरस्यास्य का वाऽहं वराकीत्यैश्वर्यमनुसन्धायाह—नेति। विश्वस्य सुहृच्च आत्मा उपादानहेतुश्च च तस्य तव अयं बन्धुरिति अयं शत्रुरिति स्वपरभेदो नास्ति यद्यपि तथापि स्मरतां स्वभक्तानाम् ॥ १०–११ ॥ सुखम् अवसदिति शेषः ॥ १२–१४ ॥

### श्रीसत्यधर्मकृता श्रीभागवतटिप्पणी

यदा त्वां स्मरतां नः कुशलं ज्ञातुं त्वया मे भ्राताऽक्रूरः प्रेषितस्तदैव कुशलमभूत्। यद्यतो विचारणात्सनाथा वयं कृताः। यद्यदा च वयं सनाथाः कृतास्तदैव कुशलमभूदित्यन्वयो वा॥ ९॥ किञ्च यदा स्वयंवरकृते तदर्थं पाञ्चालेषु तद्देशेषु स्थितानस्मान्यस्त्वमनुसृत्यागतस्तेनाहं तत्पश्चात् सुखोषिता आसं स्म। त्वदागमनं स्मृत्वेति वा। इत्येवं प्रकारेणोक्तम्। भावे क्तः। उक्तिर्यस्याः सा तस्यां कुन्त्यां सत्याम्। धातोरर्थान्तरे वृत्तेर्धात्वर्थेनोपसङ्ग्रहात्। प्रसिद्धेरविवक्षातः कर्मणोऽकर्मिका क्रियेत्युक्तेः कर्मणो वाक्यरूपस्य प्रसिद्धेरविवक्षणाद्वाऽकर्मकत्वाद्गत्यर्थेति कर्तरि क्तो वा। उक्तायामुक्तवत्यां योगेश्वरः स्वयं प्राह। इयान्विलम्बः कुतोऽवलम्बितो दीनबन्धुनेत्यम्ब न वद किञ्चिदत्यावश्यकं प्रयोजनमवतिष्ठ तन्निवृत्य तत्क्षण एव त्वन्निरीक्षणायायात इति किञ्चित्स्मारयन्ननुभूतानुवादेन समाधत्ते। पाञ्चालेष्विति। ते सुतान् छद्मना। रूपं विप्राणामेषामस्तीति ते तथा तान् भार्यया द्रौपद्या सह कुम्भकारस्य शालायामुषितान्दृष्ट्वा तस्मिन्नेव दिवसेऽविलम्बितस्त्वरावानहं गतः॥ ११-१२॥

### श्रीमद्वल्लभाचार्य्यकृता सुबोधिनी

भगवता वयं कृतार्था इति इदमेव भगवत्स्तोत्रम्। तत्कृतकरिष्यमाणभेदेन द्विविधं निरूपयति **तदैवेति** द्वाभ्याम्। यदैवास्मान् स्मृतवान्, तदैव नः कुशलमभूत्। चिन्ताभावायाह। सनाथा अपि त्वया वयं कृताः। नाथ एव काले स्मरतीति। वयमिति श्लाघायाम्। एतस्याभिज्ञापकमक्रूरप्रेषणमित्याह **ज्ञातीन्नः स्मरतेति**। 'येनोपशान्तिर्भूतानां'मित्यत्र तथा निरूपितम्। कृष्णेति तदर्थमेवावतार उक्तः। सर्वसंरक्षार्थं भ्राता प्रेषितः। अनेन भ्रात्रपेक्षयापि तवैव स्नेहाधिक्यात्। नेदं दैहिकन्यायेन कृतार्थकरणम्, सन्निहितो बन्धुरेव प्रेषणीय इति लौकिकरक्षापि सूचिता। एवं स्वरक्षकत्वेन प्राप्तं वैषम्यं परिहरति **न तेऽस्तीति**। **स्वः** स्वकीयः, **परः** शत्रुः। एतदभावे हेतुमाह **भ्रान्तिरिति**। इयं बुद्धिर्भ्रान्तेति नास्तीत्यर्थः। तत्र हेतुत्रयमाह **विश्वस्य सुहृदात्मन** इति। दैहिके विचार्यमाणे त्वमेव विश्वम्, अन्तःकरणे तु सुहृत् सर्वस्यापि भगवान्, वस्तुविचारे त्वात्मैव। अतो भावत्रयेऽपि भगवतो वैषम्यबुद्धिर्न सम्भवतीत्यर्थः। तर्हि कथं विषमकार्यमित्यत आह **तथापीति**। ये केचित्स्मरन्ति, तेषां हृदये स्थितः क्लेशसमानाधिकरणो न भवतीति। अग्निस्तृणमिव क्लेशान् हंसि। अतो भावनाकार्यमेव क्लेशहननम्। तदपि स्वाभाविकमेव॥ ९-१०॥ ततो राजापि स्तोत्रं कृतवानित्याह **किं न** इति। तस्यापि स्वाभिनन्दनेनैव स्तुतिः। स हि सर्वं कर्मफलमेव जानाति। अतो भगवद्दर्शनमपि महाफलमिति साधनं कल्पयति। नोऽस्माभिः अस्माकं वा श्रेयः आचरितमस्ति। एतत्परिज्ञाने निरन्तरदर्शनार्थं निरन्तरं तत्कर्तव्यमिति पृच्छन्निव स्वाज्ञानमाह **न वेदाहमिति**। अधीश्वरत्वात् अन्तःकरणस्वामित्वात् भगवानेव जानाति। दर्शनस्य महाफलत्वमाह **योगेश्वराणामपि दुर्दर्श** इति। स्वस्यातथात्वमाह **कुमेधसामिति**॥ ११॥ एवं सर्वैः स्तुतः तेषां हितार्थं कियत्कालं तत्रैव स्थित इत्याह **इतीति**। सर्वत्र विद्यमानोऽपि निश्चयेन तत्र स्थितः सर्वजनीनः। वार्षिका मासाश्चत्वारः। अनेन निद्रायामागतायां भक्तहृदये शयानः स्थित इति सूचितम्। लोकेऽपि वर्षायां गमनागमनौ न सुकरौ। तत्रापि युधिष्ठिरेणाभ्यर्थितः। तदर्थं इन्द्रप्रस्थौकसां च नयनानन्दं जनयन्। एकया क्रियया फलत्रयं साधयतीति विभुत्वं हेतुत्वेन प्रदर्शितम्। यतोऽयं लोको भ्रान्तः॥ १२॥

### श्रीसुबोधिनी-सारः

ज्ञातीन् बंधून्नोस्मान्स्मरता त्वया मे मह्यं यदा भ्राता अक्रूरः प्रेषितः हे कृष्ण! तदैव नोस्माकं कुशलम् अभूज्जातं ते त्वया वयं सनाथाः कृताः॥ ९॥ विश्वस्य सुहृदात्मनस्ते स्वपरेति भ्रांतिर्नास्ति तथापि स्मरतां भक्तानां हृदि स्थितस्त्वं शश्वन्निरंतरं क्लेशान् हंसि॥ १०॥ युधिष्ठिरोक्तिः। हे अधीश्वर नोस्माभिः किं श्रेयो मंगलमाचरितं कृतम् इत्यहं न वेद न जानामि योगेश्वराणां दुर्दर्शस्त्वं कुमेधसां दुर्बुद्धीनां नोस्माकं दृष्टोऽसि 'कर्त्तरि षष्ठी'॥ ११॥ इत्येवं राज्ञा युधिष्ठिरेणाभ्यर्थितः संयाचितः स विभुः श्रीकृष्ण इंद्रप्रस्थवासिनां नेत्रानदं कुर्वन् वार्षिकान्मासान्सुखमवसदिति शेषः॥ १२॥

### गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

तदुक्तिमेवाह—तदेति त्रिभिः। यदा ज्ञातीन् बन्धून् नोऽस्मान् स्मरता त्वया अस्मद्वृत्तज्ञानाय मम भ्राता अक्रूरः प्रेषितः तदेव नोऽस्माकं कुशलमभूत्, तथा ते त्वया वयं सनाथाः सस्वामिनश्च कृता इत्यन्वयः॥ ९॥ ननु 'ज्ञातीन्' इत्यनेन 'किं ममापि जीववन्मोहं वदसि' इत्याशङ्क्याह—नेति। ते तव 'स्वः पर' इति भ्रान्तिर्नास्ति। तत्र हेतुमाह-विश्वस्य जगतः सुहृच्चासावात्मा च यस्तस्येति। 'कथं तर्हि क्लेशापायात्मदर्शनत्वम्, कथं वा युष्मत्स्मरणम्' तत्राह—तथापीति। स्वपरभ्रान्त्यभावे विस्मरतां भक्तानां हृदीशश्च सर्वदा स्थितः सन् क्लेशान् हंसि नाशयसि॥ १०॥ नोऽस्माभिः किं श्रेय आचरितं पुण्यं कृतमित्यहं न वेद न जानामि। किं कृतमिति विशेषतो ज्ञानाभावेऽपि किञ्चिन्महत्पुण्यं कृतमिति सामान्यतस्तु जानाम्येव। एवं पुण्यानुमाने हेतुमाह—यत् यस्मात् योगेश्वराणामारूढयोगानामपि द्रष्टुमशक्यो भवान् कुमेधसां विषयासक्तचित्तानां

नोऽस्माकं दृष्टो दृष्टिगोचरो जातः। दुर्दर्शत्वेऽन्तर्यामित्वं हेतुं वदन् सम्बोधयति—अधीश्वरेति ॥ ११ ॥ इत्येवं राज्ञा युधिष्ठिरेण अभ्यर्थितः स्तुतिपूजादिपूर्वकं सम्प्रार्थितो विभुः स्वतन्त्रः स श्रीकृष्णः इन्द्रप्रस्थवासिनां नयनानन्दं जनयन् वार्षिकान् वर्षोपलक्षितान् चतुरो मासान् सुखं यथा भवति तथा तत्र वासेति शेषः ॥ १२ ॥

## अन्वितार्थप्रकाशिका

तदेति ॥ यदा ज्ञातीन् बन्धून् नोऽस्मान् स्मरता त्वयाऽस्मद्वृत्तज्ञानाय मम भ्राता अक्रूरः प्रेषितः। तदेव नोऽस्माकं कुशलमभूत् तथा ते त्वया वयं सनाथाः सस्वामिनश्च कृताः ॥ ९ ॥ नेति ॥ विश्वस्य जगतः सुहृच्चासावात्मा यस्तस्य ते तव स्वः पर इति भ्रान्तिर्नास्ति तथापि स्मरतां भक्तानां हृदि शश्वत् सर्वदा स्थितः सन् क्लेशान् हंसि नाशयसि ॥ १० ॥ किं न इति ॥ हे अधीश्वर ! नोऽस्माभिः किं श्रेय आचरितं पुण्यं कृतमित्यहं विशेषतो नो वेद न जानामि। किंतु सामान्यत एव जानामि। यत् यस्मात् योगेश्वराणामपि दुर्दर्शः त्वं कुमेधसां विषयासक्तचित्तानाम्। असिजार्षः। दृष्टोऽसि दृश्यस इत्यर्थः। बुद्ध्यर्थत्वाद्वर्त्तमाने क्तः। अत एव कर्त्तरि षष्ठी ॥ ११ ॥ इतीति। इत्येवं राज्ञा युधिष्ठिरेणाभ्यर्थितः सम्प्रार्थितो विभुः स श्रीकृष्णः इन्द्रप्रस्थौकसां तद्वासिनां नयनानन्दं जनयन् वार्षिकान्वर्षोपलक्षितान् चतुरो मासान् सुखं यथा भवति तथा तत्रोवासेति शेषः। सुखमभ्यर्थित इति वा क्रियासमाप्तिः ॥ १२ ॥

## श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्

नोऽस्माकं तदेव कुशलमभूत्। नोऽस्मान् बंधून् स्मरता त्वया यदा भ्राताऽक्रूरः प्रेषितः ॥ ९ ॥ स्वः स्वकीयः परः परकीयश्चेति भ्रांतिस्तव नास्ति तत्र हेतुगर्भं विशेषणं विश्वस्य सुहृत् मित्रवद्रक्षकश्चासावात्मा अंतर्यामी च तस्य तव तथापि स्मरतां हृदि स्थितस्त्वं ॥ १० ॥ यद्यस्मात् कुमेधसां राज्याद्यासक्तचितानां नोऽस्माकं दृष्टः त्वमस्माभिर्दृश्यसे इत्यर्थः ॥ ११ ॥ अभ्यर्थितः प्रार्थितः सुखमवसदिति शेषः ॥ १२ ॥

## भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

उक्तिमेवाह। तदैवेति। हे कृष्ण, यदा ज्ञातीन् बन्धून्, नोऽस्मान्, स्मरता त्वया, मे मम, भ्राताऽक्रूरः प्रेषितः। तदैव, ते त्वया, वयं सनाथाः कृताः। तथा, तत आरभ्येति शेषः। नोऽस्माकं, कुशलमपि, अभूत् ॥ ९ ॥ ज्ञातीत्यनेन प्राप्तां ममतां वारयितुमाह। नेति। हे कृष्ण, विश्वस्य जगतः, सुहृच्चासावात्मान्तरात्मा च तस्य, ते तव, स्वपरभ्रान्तिः अयं स्वः अयं च पर इत्येवंभूतो भ्रम इत्यर्थः। न अस्ति। तथापि स्वपरभ्रान्त्यभावेऽपि, स्मरतां भक्तानां, हृदि स्थितः, त्वं, शश्वत् सदा, क्लेशान्, हंसि नाशयसि ॥ १० ॥ अथ युधिष्ठिर आह। किमिति। हे अधीश्वर, नोऽस्माभिः, किं श्रेयः पुण्यं, आचरितं कृतम्। तत् अहं, न वेद। सामान्यतो महत्पुण्यं किंचित् कृतं भवेदेवेति तु वेद्मीति भावः। यद्यस्मात्, योगेश्वराणामपि, दुर्दर्शः सम्यक् द्रष्टुमशक्यः भवान्, कुमेधसां विषयासक्तचित्तानां, नोऽस्माकं, दृष्टः, त्वद्दर्शनमेव किंचिन्मदीयं प्राक्तनं सुकृतमावेदयतीति भावः ॥ ११ ॥ इतीति। इतीत्थं, राज्ञा युधिष्ठिरेण, अभ्यर्थितः बहुमतः विभुः, सः श्रीकृष्णः, वार्षिकान् वर्षाकालसंबन्धिनः मासान् इन्द्रप्रस्थौकसां नयनानन्दं जनयन् सन् सुखं यथा तथा, न्यवसदिति शेषः वै। अधिकरणतामिन्द्रप्रस्थौकसामितिपदमावेदयति ॥ १२ ॥

## कृष्णप्रिया

श्रीकृष्ण ! जिस समय तुमने हमलोगों को अपना कुटुम्बी, सम्बन्धी समझकर स्मरण किया और हमारा कुशल-मङ्गल जानने के लिये भाई अक्रूर को भेजा, उसी समय हमारा कल्याण हो गया, हम अनाथों को तुमने सनाथ कर दिया ॥९॥ मैं जानती हूँ कि तुम सम्पूर्ण जगत् के परम हितैषी सुहृद् और आत्मा हो। यह अपना है और यह पराया, इस प्रकार की भ्रान्ति तुम्हारे अंदर नहीं है। ऐसा होनेपर भी श्रीकृष्ण ! जो सदा तुम्हें स्मरण करते हैं, उनके हृदय में आकर तुम बैठ जाते हो और उनकी क्लेश-परम्परा को सदा के लिये मिटा देते हो ॥ १० ॥ युधिष्ठिरजी ने कहा—सर्वेश्वर श्रीकृष्ण ! हमें इस बात का पता नहीं है कि हमने अपने पूर्वजन्मों में या इस जन्म में कौन-सा कल्याण-साधन किया है ? आपका दर्शन बड़े-बड़े योगेश्वर भी बड़ी कठिनता से प्राप्त कर पाते हैं और हम कुटुम्बियों को घर बैठे ही आपके दर्शन हो रहे हैं ॥ ११ ॥ राजा युधिष्ठिर ने इस प्रकार भगवान् का खूब सम्मान किया और कुछ दिन वहीं रहने की प्रार्थना की। इसपर भगवान् श्रीकृष्ण इन्द्रप्रस्थ के नर-नारियों को अपनी रूपमाधुरी से नयनानन्द का दान करते हुए बरसात के चार महीनों तक सुखपूर्वक वहीं रहे ॥ १२ ॥

**एकदा रथमारुह्य विजयो वानरध्वजम् । गाण्डीवं धनुरादाय तूणौ चाक्षयसायकौ ॥ १३ ॥**
**साकं कृष्णेन संनद्धो विहर्तुं[1] विपिनं[2] महत् । बहुव्यालमृगाकीर्णं प्राविशत् परवीरहा ॥ १४ ॥**
**तत्राविध्यच्छरैर्व्याघ्रान् सूकरान् महिषान् रुरून् । शरभान् गवयान् खड्गान् हरिणाञ्छशशल्लकान् ॥ १५ ॥**
**तान् निन्युः किंकरा राज्ञे मेध्यान् पर्वण्युपागते । [3]तृट्परीतः परिश्रान्तो बीभत्सुर्यमुनामगात् ॥ १६ ॥**

### कर्दमक्षमा

अन्वयः—एकदा, विजयो, वानरध्वजं, रथं, आरुह्य, गाण्डीवं, धनुः, अक्षयसायकौ, तूणौ, च, आदाय, वनं, प्राविशत्, इति, परेण, अन्वयः ॥ १३ ॥ परवीरहा, सन्नद्धः, कृष्णेन, साकं, बहुव्यालमृगाकीर्णम्, गहनं, वनं, विहर्तुं, प्राविशत् ॥ १४ ॥ तत्र, व्याघ्रान्, सूकरान्, महिषान्, रुरून्, शरभान्, गवयान्, खड्गान्, हरिणान्, शशशल्लकान्, शरैः, अविध्यत् ॥ १५ ॥ तान्, मृगान्, पर्वणि, उपागते, राज्ञे, किङ्कराः, निन्युः । बीभत्सुः, तृट्परितः, परिश्रान्तः- यमुनाम्, अगात् ॥ १६ ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

कालिंदीदर्शनप्रसंगमाह । एकदेति । अक्षयाः सायका ययोस्तौ तूणौ इषुधी ॥ १३-१५ ॥ राज्ञे युधिष्ठिराय मेध्यान्कर्मार्हान्, बीभत्सुरर्जुनः ॥ १६-१७ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

एकदा कदाचित् । विजयोऽर्जुनः "विजयः स्याज्जये पार्थे स्त्रियां तिथ्यंतरे स्मृतः" इति मेदिनी । 'तूणी नील्यां निषङ्गे ना' इति च । एकदेति युग्मकम् । एकदा खांडवदाहानन्तरम् । तदानीमेवार्जुनस्य गांडीवादिलाभात् । तथाप्यत्रोक्तिः सुखविहारप्रसंगात् । वानरः श्रीहनुमान् ॥ १३ ॥ विपिनं गम्भीरमशब्दं वा "अशब्दे विपिनं प्रोक्तं वनगम्भीरयोरपि" इति धरणिः ॥ १४ ॥ तत्र वने । विशेषतो घ्राणनशीलान् व्याघ्रानिति सूकरविशेषणं तन्मांसस्याभक्ष्यत्वात् । यद्वा—हिंसकत्वात्तानविध्यन्न तूपयोगार्थम् । महिषान् वन्यानेव । रुरून् कृष्णमृगान् 'रुरुः कृष्णमृगे दैत्ये' इति धरणिः । शरभानष्टापदान् । खड्गान् गंडकान् । शल्लकान् शल्यान् "शरभोष्टा पदमृगे करभे वानरांतरे" इति मेदिन्यादौ । "खड्गो गण्डक शृङ्गासिबुद्धभेदेषु गंडके" इति मेदिनी । रुरवो मृगविशेषाः । शरभा अष्टापदाः । गवया गोसदृशाः । खड्गा गंडकाः ॥ १५ ॥ तान् व्याघ्रादीन् । पर्वणि श्राद्धोचिते यज्ञोचिते काले । "बीभत्सुर्नाऽर्जुने क्रूरघृणात्मविकृतौ त्रिषु" इति मेदिनी । तेषु मेध्याः कर्मार्हास्तान् राज्ञे राजानं याजयितुं निन्युः । राज्ञ इति—राज्ञि तस्य धर्मत्वादिति भावः । ये त्वमेध्या व्यालाद्यास्तेषां दुश्चेष्टानां मारणेनान्येषां कृतार्थता स्यादित्यभिप्रायेण ॥ १६ ॥

### श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी

एकदेति युग्मकम् एकदा खण्डवदाहाद्यनन्तरं तदानीमेवार्जुनस्य गाडीवादिलाभात् तथाप्यत्रोक्तिः सुखविहारप्रसङ्गात् ॥ १३—१४ ॥ रुरवः मृगविशेषाः शरभाः अष्टापदाः गवयः गोसदृशाः खड्गा गण्डकाः ॥ १५ ॥ मेध्यानिति तेषु ये मेध्यास्तान् राज्ञे राजानं याजयितुं निन्युः राज्ञ इति राज्ञि तस्य धर्मत्वादिति भावः । ये त्वमेध्या व्यालास्तेषां दुश्चेष्टानां मारणेनान्येषां दुर्मरणातिक्रमः स्वकृतेन तु तेन तेषामपि कृतार्थता स्यादित्यभिप्रायेण ॥ १६ ॥

### श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी

एकदेति खाण्डवदाहानन्तरं ज्ञेयम्, तदानीमेवार्ज्जुनस्य गाण्डीवादिलाभात् । तथाप्यत्रोक्तिः सुखविहारप्रसंगादिति दिक् । विशेषेण जयतीति विजय इत्यन्वर्थसंज्ञत्वमेव दर्शयन् रथादीनामपि जैत्रत्वं बोधयति—वानरध्वजमित्यादिविशेषणैः । वानरः श्रीहनूमान्, गां पृथ्वीं डीवयति नादयति शब्दयतीति गाण्डीवम्. सन्नद्धो बद्धकवचादिः, महद्विस्तीर्णं निविड़म् वेत्यर्थः । कृष्णेन सख्यादिना निजचित्ताकर्षकेण भगवता साकम्, अतएव प्रकर्षेणाविशत् । एवमेकमेव रथमारुह्य द्वयोरपि प्रवेशो ज्ञेयः । अतएव तस्य भयाभवं सामर्थ्यञ्च सूचयन्नाह—परेति । किंवा परवीरहननशक्तिं दर्शयन्निति भावः । एवं विजय-

---

१. विजनं–वीर । २. वनम्–श्रीधर. वंशी. जीव. वीर. विज. विश्व. शुक. सु ; महत्–बृहत्–श्रीधर. टि. । ३. ततः क्षुत्तृट्परिश्रान्तो–वीर. ।

त्वमेव साधितम्। रुरवः क्रूरमृगविशेषाः, शरभा अष्टापदाः, गवया गोसदृशाः, खड्गा गण्डकाः, अन्ये प्रसिद्धाः॥ १५॥ किंकरास्तस्य राज्ञो वा सेवकाः, मेध्यानिति व्याघ्रादि व्यवच्छेदार्थम्, न च स्वयं भक्षयितुं किन्तु पार्व्वणश्राद्धार्थमित्याह—पर्व्वणीति। राज्ञ इति राजधर्म्मत्वादिति भावः। तृपा परीतो व्याप्तः, यतः परितः श्रान्तः, बीभत्सुरिति दुष्टकर्मनिन्दनाभिप्रायेण, अतः श्रीकालिन्द्यां तस्य कामो निरस्तः॥ १६॥

**श्रीसुदर्शनसूरिकृतशुकपक्षीयम्**

गाण्डीवं धनुरादायेतीदं वक्ष्यमाणकथायाः पाश्चात्यं वृत्तं खाण्डवदाहात्पूर्वं गाण्डीवप्राप्त्यनुपपत्तेः॥ १३-१८॥

**श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका**

कालिन्दीदर्शनप्रसङ्गमाह—एकदा तदेकदा विजयोऽर्जुनः वानरो हनुमत्प्रतिकृतिर्ध्वजे यस्मिंस्तं रथमारुह्याक्षया अक्षीणास्सायका ययोस्तौ तूणाविषुधी चादाय॥१३॥ सन्नद्धः कवचितः कृष्णेन सहितो विहर्तुं निर्जनं वनं प्राविशत् व्यालाः सर्पा गजा वा इदं वक्ष्यमाणकथायाः "यदा च कृष्णः सन्दिष्टः" इत्यादिकायाः पाश्चात्यवृत्तान्तः खाण्डवदहनात् पूर्वङ्गाण्डीवप्राप्त्यनुपपत्तेः॥ १४॥ तत्रेति तत्र वने शरैर्व्याघ्रादीनविध्यज्जघान॥ १५॥ तानिति तत्र मेध्यान्कर्मार्हान्मृगान् राज्ञे युधिष्ठिराय किंकरा निन्युः प्रापयामासुः भक्षणार्थशङ्कां व्युदस्यति—पर्वण्युपागत इति। पर्वप्रयुक्तकर्मण्युपस्थिते सतीत्यर्थः। ततः क्षुत्तृड्भ्यामशनापिपासाभ्याम् परिश्रान्तो बीभत्सुरर्जुनः यमुनां जगाम॥ १६॥

**श्रीविजयध्वजतीर्थकृता पदरत्नावली**

विपिनं गम्भीरम्॥ १४॥ महिषान्वनमहिषान् रुरून्कृष्णमृगान् शरभानष्टपदान् खड्गान्मृगविशेषान् हरिणान्सामान्यमृगान् शल्यकान् शललान्॥ १५॥ राज्ञे युधिष्ठिराय पर्वणि श्राद्धोचिते यजनकाले वा॥ १६॥

**श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी**

एकदेति खाण्डवदाहाद्यनन्तरम् तदानीमेवार्जुनस्य गाण्डीवादिलाभात्॥ १३-१५॥ मेध्यांस्तेषु कर्मार्हान् राज्ञे राजानं याजयितुं निन्युः; बीभत्सुरर्जुनः॥ १६-१७॥

**गूढार्थदीपिनी**

एकदेति युग्मम्। विजयोऽर्जुनः। तूणी इषुधी। साकं सह। सन्नद्धो धृतकवचः। गहनं दुर्गमम्। विपिनमिति पाठे गम्भीरम्। व्यालो दुष्टगजः मृगसाहचर्यात्॥ १३-१४॥ तत्र वने। रुरुः कृष्णमृगे दैत्ये इति धरणिः। शरभोऽष्टापदः व्याघ्रहन्ता। गवया गोसदृशाः खड्गाः गेंडा इति॥ १५॥ तान् व्याघ्रादीन्। व्याघ्रमांसस्याभक्ष्यत्वात्परहिंसकत्वात्ते हता इत्यवधेयम्। बीभत्सुः अर्जुनः। मेध्यान् कर्मार्हान् राज्ञे राजानं याजयितुम्॥ १६॥

**श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः**

मेध्यान् कर्मार्हान्॥ १५॥ बीभत्सुरर्ज्जुनः॥ १६-२१॥

**श्रीसत्यधर्मकृता श्रीभागवतटिप्पणी**

इयत्त्वराकारणं किमित्यत आह। सत्यभामापितुस्तस्मै द्रुह्यतीति ध्रुक् तं शतधन्वानं निहन्तुं शतधन्वनि दुर्बुद्धौ हते सति। धरतीति धरः सीरस्य धरः सीरधरः! सीरस्तिग्मकरे हल इति विश्वः। हलधरोऽग्रजः कुपितो मामनादृत्य विमनाः सन्विदेहान्देशान्ययौ। कुतो विमनस्कतेत्यतोऽप्याह। बुद्धौ मयि मणिस्तेयविषयिण्यां विपरीतं मतौ प्रादुर्भूतायामिति। एतावन्तं महाकालं पञ्चसंवत्सरात्मकं तदागमनकाङ्क्षया। तस्य बलस्य॥ १३॥ पुर एव द्वारकायामेव। पुरः एव सर्वेषां पुरोऽग्र एवापवादतोदनार्थमवसमिति वा। कार्ययंत्रितः कार्याधीनः क्वापि नागच्छम्। एवं वादिनं स्नेहपरिप्लुता तद्रसार्द्रा कुन्तीति प्राह। इति वादिनमेवं प्राहेति वा॥ १४॥ शतधन्वनः परत्वं सत्यभामादीनां स्वकीयत्वं च तत्कर्मानुरोधेन न तु तव विषमसमत्वादितः। किञ्च जनानां स्मृतित उद्धर्तुमियं लीलेत्यालपति। न त इति। विश्वस्य जगतः सुहृदात्मनोऽनिमित्तोपकारिस्वामिनस्ते स्वः पर इति योग्यतां विना नास्ति विश्वस्य विश्वासं कृत्वा न ते नमस्कर्तरि सुहृच्छोभनमनस्कः स्वात्मनः स्वामिनस्ते स्वः स्वकीयस्तदाऽस्ति। अस्ति स्वं शाश्वतं धनं यस्य सोऽस्ति स्वः। यस्यासुहृदात्मनः सुहृद्भिन्नजीवस्य विश्वसिसि जगदात्मकवदाचारसि स पर इति वा योजना। तथाऽपि तव वैषम्याद्यभावेऽपि स्मरतां स्मरन्त्यश्च स्मरन्तश्च स्मरतां। मधुमथनकंसहिंसकेत्यादिनामानि हृदिस्थितः सर्वान्क्लेशान्हंसि॥ १५॥ वार्षिकान्मासांश्चतुरो राज्ञा धर्मेणाभ्यर्चितः सुसुखं यथा तथा इन्द्रप्रस्थौकसां नयनानन्दं जनयन् इति सङ्क्षयन्कथा उवासेति शेषः॥ १६॥

### श्रीमद्वल्लभाचार्यकृता सुबोधिनी

एवं भक्तिमुक्त्वा कर्माह **एकदेति**। मासचतुष्टयमध्य एव अश्वकार्यार्थं आखेटकार्थं गमनम्। वानरध्वजो रथोर्जुनस्य। एतत्प्राप्तिमप्यग्रे वक्ष्यति। इदानीमसाधन इति शङ्कया सहितस्तथा भवतीति विवाहानन्तरं परिग्रहानन्तरं वा तद्वक्ष्यति। वानरो हनूमान् ध्वजे यस्येति। तेषु भगवत्कृपा महती निरूपिता। गाण्डीवमप्यग्नेः सकाशादेव प्राप्तम्। तूणीरौ च अक्षयसायकौ। तत एव प्राप्तं त्रिविधमेतत्। कृष्णेन सह भावः सर्वेषामयातयामत्वाय। फलसाधनयुक्तता वा। **सन्नद्धो** बद्धकवचः। पुनरपि युद्धं संभविष्यतीति पूर्वयुद्धं जातमप्यग्रे निरूप्यते। अन्यथा विवाहस्य प्राधान्यं न स्यात्। भगवदैच्छिकोऽयं पदार्थक्रम इति न वैपरीत्यम्। प्रथमं खाण्डवदाहः, पश्चात्स्त्रीप्राप्तिरिति। विचारितं तु तथा, कृतं त्वत्रोच्यते **विहर्तुमिति**। तदेवाह **बहुव्यालमृगाकीर्णमिति**। व्याला दुष्टाः, मृगा अदुष्टाः, सावरणा निरावरणाश्चेति कर्मबन्धो निवारितः। **महद्विपिनमिति**। मृगयारूपा क्रीडा तत्रानन्ता भवतीति वा। उभयान्हन्तीत्युत्कर्षः। तेषां मारणे सामर्थ्यमाह **परवीरहेति**। शत्रूणां विवेकपूर्वकं युद्धं कुर्वतामपि यो वीरहा॥ १३-१४॥ अतस्तत्र गतः पञ्चविधान् द्विविधानपि मारितवानित्याह **तत्राविध्यदिति**। शरैर्न तु कपटैः। व्याघ्रा महिषा रुरवश्च त्रयो दुष्टत्वेन मारणीयाः। तेषां चर्मनखाद्युपयोगः। शल्यका अपि कठिना इति तैः सहोक्ताः। परं भक्ष्याः। शरभादयश्च षट्। तत्र शरभगवयावभक्ष्यौ। शूकरश्चेत्पूर्वमुक्तः, तदापि भक्ष्यः। पञ्च भक्ष्याः, पञ्चाभक्ष्याश्चेति दश निरूपिताः॥१५॥ तत्रोत्तमानां कर्मोपयागमाह **तान्निन्युरिति**। किङ्करा इति महिषगर्दभादिभिस्तन्नयनप्रतिषेधः। यतो मेध्याः। तत्रापि पर्वण्यष्टकादावुपस्थिते॥ १६॥

### श्रीविट्ठलरायात्मजश्रीवल्लभकृतलेखः

**कृतं त्विति** पूर्वं कालिन्दीप्राप्तिः, पश्चाद्गाण्डीवादिप्राप्तिः। अधुना तु गाण्डीवादिकं भगवदिच्छासिद्धं गुप्तं तादृग्जनवेद्यम्। इदमेव पश्चादग्निद्वारा प्रकटतया दापयिष्यति। 'निमित्तमात्रं भव सव्यसाचि'न्निति न्यायोऽनुसंधातव्यः।

### श्रीसुबोधिनी-सारः

एकदा वानरो हनूमान् ध्वजे यस्य तं रथम् आरुह्य गांडीवं धनुः अक्षया अनंताः सायका ययोस्तौ तूणौ इषुधी आदाय विजयोर्जुनः कृष्णेन साकं सह सनद्धः धृतकवचो विहर्त्तुं क्रीडितुं बहुभिर्व्यालैर्मृगैराकीर्णं गहनं वनं प्राविशत् यतः परवीरहा एतेन निर्भयत्वमुक्तम्॥ १३-१४॥ तत्र वने शरैर्व्याघ्रादीनविध्यत् अहन्॥ १५॥ पर्वणि उपागते प्राप्ते सति तान् हतान् मेध्यान् पशून् किंकरा भृत्या राज्ञे युधिष्ठिराय निन्युः प्रापयांबभूवुः तृषापरीतो व्यास्तः परिश्रांतः खिन्नो बीभत्सुरर्जुनो यमुनामगात्॥ १६॥

### गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

कालिन्दीदर्शनप्रसङ्गमाह—एकदेति। परवीरहा परशत्रुपक्षनाशकर्ता विजयोऽर्जुनः वानरो हनुमत्प्रतिकृतिर्ध्वजे यस्मिंस्तथाभूतं रथमारुह्य गाण्डीवाख्यं धनुः अक्षय्याः अक्षीणाः सायका ययोस्तौ तूणीरौ इषुधी चादाय सन्नद्धो बद्धकवचः कृष्णेन सहितो विहर्तुं मृगयां कर्तुं चरितुं बहुव्यालमृगाकीर्णं विपिनं वनं प्राविशदिति द्वयोरन्वयः॥ १३-१४॥ तत्र वने व्याघ्रादीन् शरैरविध्यत् जघान॥ १५॥ तत्र मेध्यान् कर्मार्हान् तान् मृगान् पर्वण्युपागते पर्वयुक्ताष्टकाश्राद्धादिकर्मण्युपस्थिते सति राज्ञे युधिष्ठिराय किङ्करा निन्युः प्रापयामासुः। ततः तृषा पिपासया परीतो व्याप्तः परिश्रान्तश्च बीभत्सुः अर्जुनो यमुनामगात्॥ १६॥

### अन्वितार्थप्रकाशिका

एकदेति युग्मम्। एकदा खाण्डवदाहानन्तरं तत्रैवार्जुनस्य गाण्डीवादिलाभात् परवीरहा परशत्रुपक्षनाशकर्त्ता विजयोऽर्जुनः वानरो हनुमत्प्रतिकृतिर्ध्वजे यस्य तथाभूतं रथमारुह्य गाण्डीवाख्यं धनुः अक्षयाः अक्षीणाः सायका ययोस्तौ तूणी इषुधी चादाय सन्नद्धो बद्धकवचः कृष्णेन सहितो विहर्तुं मृगयां कर्त्तुं बहुव्यालमृगाकीर्णं विपिनं वनं प्राविशत्॥ १३-१४॥ तत्रेति॥ तत्र वने व्याघ्रादीन् शरैरविध्यत् जघान। शरभा अष्टापदाः खड्गा गण्डकाः॥ १५॥ तानिति॥ तत्र मेध्यान् कर्मार्हान् तान्मृगान् पर्वण्युपागते पर्वयुक्ताष्टकाश्राद्धादिकर्मण्युपस्थिते सति राज्ञे युधिष्ठिराय किङ्करा निन्युः प्रापयामासुः। अमेध्या व्याघ्रादयः परहिंसकत्वाद्धता इति भावः। ततः तृषा पिपासया परीतो व्याप्तः परिश्रान्तश्च बीभत्सुः अर्जुनो यमुनामगात्॥ १६॥

### श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्

अक्षयसायकौ अक्षयबाणौ तूणौ निषंगौ॥ १३॥ सन्नद्धो धृतवर्मा। व्यालः सर्प्पः॥ १४॥ तत्र महावने। हिंस्रेभ्यो व्याघ्रादिभ्यः दुर्बलान् हरिणादीन्। अवन् रक्षन्सन्। सुचिरं क्रीडित्वा। तृट्परीतस्तृषाव्याकुलः बीभत्सुरर्ज्जुनः॥ १५॥ विशदं निर्मलं जलं उपस्पृश्य पादप्रक्षालनपूर्वकमाचम्य॥ १६॥

### भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

कालिन्दीदर्शनप्रसङ्गमाह। एकदेति। साकमिति च। एकदा कदाचित्, परवीरहा, विजयोऽर्जुनः, अक्षयसायकौ तूणौ गाण्डीवं धनुश्च, आदाय, वानरध्वजं हनुमत्केतुकं, रथं आरुह्य संनद्धः कवचितः सन्, कृष्णेन साकं, विहर्त्तुं, बहुव्यालमृगाकीर्णं; निर्जनं वनं, प्राविशत्। इति द्वयोरेकान्वयः॥ १३–१४॥ स्वस्य परवीरहत्वात् स्वीकृतवीरभावैर्व्याघ्रादिभिः कृतां वननिर्जनतां विलोक्य वने जनसंचरणकरणकामो विजयस्तत्र यदकरोत्तदाह। तत्रेति। तत्र वने, शरैः व्याघ्रान् जनान्मारयतः शार्दूलान्, सूकरानुद्धतवनवराहान्, महिषानुच्छृङ्खलवनसैरिभान् रुरूनत्युद्धतकृष्णमृगान् जनान्मारयतोऽष्टपदान्, गवयान् उक्तविधगोसदृशपशुविशेषान्, खड्गानुक्तविधमृगविशेषान्, हरिणान्, शशान् शल्लकांश्च, अविद्धयत्। तत्र व्याघ्रादिहननान्तरापतितत्वेन हरिणान् शशांश्च हतवान्। शल्लकांस्त्वौद्धत्येन शललैर्जनघ्नत्वेन हतवानित्यर्थः॥ १५॥ तानिति। पर्वणि, उपागते, किंकराः राजकिंकराः, मेध्यान् तद्‌गतदुर्बलाद्यनेक्षया हननार्हान् बुद्ध्वा हतानित्यर्थः। 'मेधृ संगमे च चाद्धिसायाम्' इति धातो रूपम्। तान् व्याघ्रादीन् , राज्ञे, निन्युः। न भक्षणार्थं किं तु पर्वोपागतराज्ञः राजानं च स्वकृतदुर्बलावनं दर्शयितुमर्जुनाज्ञया ते निन्युरिति भावः। ततः तृट्परीतः परिश्रान्तः, क्वचित्तु ततः क्षुत्तृट्परिश्रान्त इत्यपि पाठः। बीभत्सुरर्जुनः, यमुनां अगात्॥ १६॥

### कृष्णप्रिया

परीक्षित्! एक बार वीरशिरोमणि अर्जुन ने गाण्डीव धनुष और अक्षय बाणवाले दो तरकस लिये तथा भगवान् श्रीकृष्ण के साथ कवच पहनकर अपने उस रथ पर सवार हुए, जिस पर वानर-चिह्न से चिह्नित ध्वजा लगी हुई थी। इसके बाद विपक्षी वीरों का नाश करने वाले अर्जुन उस गहन वन में शिकार खेलने गये, जो बहुत से सिंह बाघ आदि भयङ्कर जानवरों से भरा हुआ था॥ १३–१४॥ वहाँ उन्होंने बहुत-से बाघ, सूअर, भैंसे, काले हरिन, शरभ, गवय ( नीलापन लिये हुए भूरे रंग का एक बड़ा हिरन ), गैंडे, हरिन, खरगोश और शल्लक ( साही ) आदि पशुओं पर अपने बाणों का निशाना लगाया॥ १५॥ उनमें से जो यज्ञ के योग्य थे, उन्हें सेवकगण पर्व का समय जानकर राजा युधिष्ठिर के पास ले गये। अर्जुन शिकार खेलते-खेलते थक गये थे। अब वे प्यास लगने पर यमुना जी के किनारे गये॥ १६॥

**तत्रोपस्पृश्य [1]विशदं पीत्वा वारि महारथौ। कृष्णौ ददृशतुः कन्यां चरन्तीं चारुदर्शनाम्॥ १७॥**

**तामासाद्य वरारोहां सुद्विजां रुचिराननाम्। पप्रच्छ प्रेषितः सख्या फाल्गुनः प्रमदोत्तमाम्॥ १८॥**

**का त्वं कस्यासि सुश्रोणि [3]कुतोऽवा किं चिकीर्षसि। मन्ये त्वां पतिमिच्छन्तीं [4] सर्वं कथय शोभने॥ १९॥**

### कालिन्द्युवाच

**अहं देवस्य सवितुर्दुहिता पतिमिच्छती। विष्णुं वरेण्यं वरदं तपः परममास्थिता॥ २०॥**

### कर्दमक्षमा

अन्वयः—महारथौ, कृष्णौ, तत्र, उपस्पृश्य, विशदं, वारि पीत्वा, चारुदर्शनां, चरन्तीं, कन्यां, ददृशतुः॥ १७॥ सख्या, प्रेषितः, फाल्गुनः, वरारोहां, सुद्विजां, रुचिराननां, प्रमदोत्तमां, आसाद्य, पप्रच्छ॥ १८॥ हे सुश्रोणि, त्वं, काऽसि, कस्याऽसि, कुतो, आगतासि, किंचिकीर्षसि, अहंतु, त्वां, पतिं, इच्छन्तीं, शोभने, अतः, सर्वं, कथय॥ १९॥ कालिन्दी उवाच, अहं, देवस्य, सवितुः, दुहिता, वरेण्यं, वरदं, विष्णुं, पतिमिच्छती, परमं, तपः, आस्थित, अस्मीतियावत्॥ २०॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

सख्या श्रीकृष्णेन॥ १८–२०॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

तत्र यमुनायाम्। कन्यां दीप्तामुत्पन्नरजसं पतिमिच्छन्तीम्। "अनवाप्तपतिः कन्या जातवीर्या वरार्थिनी" इत्युत्पलः। महान् रथो ययोस्तौ, तच्च रथारोहणे दूराद्ददृशुरिति भावः। चरंतीमिति—रथादिशब्दं श्रुत्वा स्वगोपनायेतस्ततो भ्रमंतीम्। यद्वा—तपश्चरन्तीम्, तप इति शेषः। तच्च श्रीकृष्णमनःप्रणिधानरूपं ज्ञेयम्, उभयथापि कन्याकर्तृकदर्शनं तद्द्वयेन जातमिति

---

१. सलिलं पीत्वा मृष्टमविभ्रमम्–विज.। २. सुदतीं–विज.। ३. तोऽसि किं–श्रीधर. वंशी. जीव. विश्व. शुक. सु; कुतो वा–वीर विज.। ४. कन्ये–वीर; कन्यां–विज.।

परस्परदर्शनं नोक्तम्। कृष्णाविति सनामत्वे नाप्यन्योन्यं सख्येन चित्ताकर्षणात्। दृश्यत इति दर्शनं रूपं, चारु तद्यस्यास्तां परमसुन्दरीमित्यर्थः ॥ १७ ॥ तां कालिंदीम्। तदेवाभिव्यंजयन्विशिनष्टि—वरेत्यादिना। अनुक्तमन्यदपि सौंदर्यमुद्दिशति—प्रमदासूत्तमामिति। सख्या प्रेषितः सन्नेव, न तु स्वयं तत्कामेनेत्यर्थः। तत्र सखिशब्दप्रयोगेण श्रीकृष्णस्याप्यसंकोचो दर्शितः। एवं रथादवरुह्य गत इति च ज्ञेयम्। तस्य प्रेषणञ्च स्वपत्नीत्वकामनया, अन्यथा स्वयमेवागमिष्यदिति भावः ॥ १८ ॥ कस्य पुत्र्यसि। का देवी मनुष्यादीनां मध्ये कतमा, किंनाम्नी चेत्यर्थः। कस्य वा पुत्र्यसि। अत्र कुतः स्थानादागतासीति कुत्र तिष्ठसीत्यर्थः। यद्वा—कस्माद्धेतोः किं कर्तुमिच्छसीत्यर्थः। कन्यामपरिणीतामत एव पतिमिच्छन्तीं मन्ये। सुश्रोणीत्यत्र हे परमसुन्दरीत्येव विवक्षितम्। भगिनीशब्दे स्वसृत्वमात्रस्यैव रूढ्या तत्र तावन्मात्रस्य प्रतीतेः। वरारोहाशब्दस्याप्येवमेव गतिः कार्या। शोभने हे परमगुणवति, इत्यतः स्वानुरूपपरमसौन्दर्यादियुक्तमेव पतिमिच्छसीति भावः। कथय तत्सर्वं मया पृष्टं प्रत्युत्तरय। कन्यामित्यत्र 'सर्वम्' इति पाठः क्वचित्। यद्वा—हे शोभने इति शोभनप्रकारेण कथयितुमर्हसीति भावः ॥ १९ ॥ वरेण्यं प्रार्थनीयम्। तत्र मदभीष्टादन्योऽयं पुरुष इत्याशंक्य सहसैव स्वाभिलषितं व्यनक्ति—अहमिति। देवस्येत्यादरे। तथापि देव्यस्मीति भावः। विष्णुं निजैश्वर्येण सर्वव्यापकम्, अतो वरेण्यं सर्वश्रेष्ठम्, अतो वरदं सर्वाभीष्टदम्, अतस्तमेव पतिमिच्छती ॥२०॥

### श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी

महान् रथो ययोस्तौ उच्चरथारोहणेन दूराद्दृशतुरिति भावः चरन्तीमिति रथादिशब्दं श्रुत्वा स्वगोपनाय तत इतो भ्रमन्तीं यद्वा चरतीं तप इति शेषः। तच्च श्रीकृष्णे मनःप्रणिधानरूपं ज्ञेयम् उभयथाऽपि कन्याकर्तृकं दर्शनं तद्वयेन जातमिति परस्परन्दर्शनं नोक्तं कृष्णाविति सनामत्वेनाप्यन्योन्यसख्येन चित्ताकर्षणात् दृश्यते इति दर्शनं रूपं चारु तद्यस्यास्तां परमसुन्दरीमित्यर्थः ॥ १७ ॥ तदेवाभिव्यञ्जयन् विशिनष्टि—वरेत्यादिना। अनुक्तमन्यदपि सौन्दर्यमुद्दिशति प्रमदासूत्तमामिति सख्या प्रेषितः सन्नेव न तु स्वयं तत्कामेनेत्यर्थः। तत्र सखिशब्दप्रयोगेण श्रीकृष्णस्याप्यसङ्कोचो दर्शितः एवं रथादवरुह्य गत इति तस्य प्रेषणं च स्वपत्नीत्वकामनया अन्यथा स्वयमेवाऽगमिष्यदिति भावः ॥ १८ ॥ का देवी मानुष्यादीनां मध्ये कतमा किं नाम्नी चेत्यर्थः कस्य वा पुत्र्यसि कुतः कस्मात्स्थानात् अत्रागताऽसीति कुत्र तिष्ठसीदित्यर्थः। यद्वा, कस्माद्धेतोः किं कर्त्तुमिच्छसीत्यर्थः कन्यामपरिणीताम् अत एव पतिमिच्छन्तीं मन्ये सुश्रोणीत्यत्रपरमसुन्दरीत्येव विवक्षितं भगिनीशब्दे स्वसृत्वमात्रस्यैव रूढ्या तत्र तावन्मात्रस्य प्रतीतेः वरारोहाशब्दस्याप्येवैव गतिः कर्तव्या शोभने, हे परमगुणवतीत्यतः स्वानुरूपपरमसौन्दर्य्यादियुक्तं पतिमिच्छतीति भावः। कथय तत्सर्वं मया पृष्टं प्रत्युत्तरय कन्यामित्यत्र सर्वमिति पाठः क्वचित्। यद्वा, हे शोभने ! इति शोभनप्रकारेण कथयितुमर्हसीति भावः ॥ १९ ॥ तत्र मदभीष्टादन्योऽयं पुरुष इत्याशङ्क्य सहसैव स्वाभिलषितं व्यनक्ति—अहमिति। देवस्येत्यादरे तथाऽपि देव्यस्मीति भावः। विष्णुं निजैश्वर्य्येण सर्वव्यापकम् अतो वरेण्यं सर्वश्रेष्ठम् अतो वरदं सर्वाभीष्टदम् अतस्तमेव पतिमिच्छती ॥ २० ॥

### श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी

महान् रथो ययोस्तौ उच्चरथारोहणेन दूराद्दृशतुरिति भावः। चरन्तीं तप इति शेषः। किंवा पुष्पाद्यर्थं तदा गमनापेक्षयैव वा, यमुनातीरे भ्रमन्तीम्। कृष्णाविति सनामत्वेनाप्यन्योन्यं सख्येन चित्ताकर्षणात्; दृश्यत इति दर्शनं रूपं चारु तद्यस्यास्तां परमसुन्दरीमित्यर्थः ॥ १७ ॥ तदेवाभिव्यञ्जयन् विशिनष्टि—वरेत्यादिना। तत्र च वरारोहत्वादेवोक्तिस्तद्विशेषापेक्षया; अनुक्तमन्यदपि सौन्दर्य्यादिकमुद्दिशति—प्रमदासुत्तमामिति। सख्या प्रेषितः सन्नेव, न तु स्वयं तत्कामेनेत्यर्थः। यतः फाल्गुनः फल्गु तुच्छकर्म्म न यस्मिन्नित्यर्थः। एवं रथादवरुह्य गत इति च ज्ञेयम् ॥ १८ ॥ का देवी, मनुष्यादीनां मध्ये कतमा, किं—नाम्नी चेत्यर्थः। कुतः कस्मात् स्थानादत्रागतासीति किंवा कुत्र तिष्ठसीत्यर्थः; यद्वा, कस्माद्धेतोः, किं कर्त्तुमिच्छसीति वा, कन्यामपरिणीतामतएव पतिमिच्छन्तीं मन्ये। सुश्रोणि ! हे परमसुन्दरीति, शोभने ! हे सर्व्वसद्गुणवतीत्यतः स्वानुरूपं परमसौन्दर्य्यादि-युक्तं पतिमिच्छसीति भावः। कथय तत् सर्व्वं मया पृष्टं प्रत्युत्तरय; यद्वा, हे शोभन इति शोभनप्रकारेण कथयितुमर्हसीति भावः ॥ १९ ॥ देवस्येति देव्यस्मीति भावः। विष्णुमिति च निजैश्वर्य्येण सर्व्वव्यापकमिति, अतो वरेण्यं सर्व्वश्रेष्ठम्, अतो वरदं सर्व्वाभीष्टदम्, अतस्तमेव पतिमिच्छन्ती ॥ २० ॥

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम्

सख्या कृष्णेन ॥ १९-५८ ॥

इति श्रीमद्भागवतव्याख्याने दशमस्कन्धे श्रीसुदर्शनसूरिकृतशुकपक्षीये अष्टपञ्चाशत्तमोऽध्यायः ॥ ५८ ॥

### श्रीमद्वीरराघवाचार्यकृता भागवतचन्द्रचन्द्रिका

उपस्पृश्य स्नात्वा महारथौ कृष्णार्जुनौ विशदं निर्मलं जलं पीत्वा चारु सुन्दरं दृश्यत इति तथा तां चरन्तीं काञ्चित्कन्यां ददृशतुः ॥ १७ ॥ तामिति सख्या कृष्णेन प्रेषितः फाल्गुनोऽर्जुनः शोभना द्विजा दन्ता यस्या रुचिरमाननं यस्यास्तां वर-

माकाङ्क्षमाणामिव स्थितां पप्रच्छ ॥ १८ ॥ प्रश्नमेवाह—कात्वमिति । त्वं कस्याऽसि कस्य सम्बन्धिन्यसि किं कर्त्तुमिच्छसि अहं तु पतिमिच्छन्तीं कन्यां त्वां मन्ये हे शोभने ! कथय ॥ १९ ॥ उत्तरमाह–अहमिति त्रिभिः सवितुरादित्यस्य दुहितेति कस्यासीत्यस्योत्तरं किं चिकीर्षसीत्यस्योत्तरमाह—वरेण्यं विष्णुं पतिं कामयमाना परमं तप आस्थिता ॥ २० ॥

**श्रीविजयध्वजतीर्थकृता पदरत्नावली**

कृष्णौ यादवेन्द्रार्जुनौ ॥ १७ ॥ सख्या कृष्णेन ॥ १८ ॥ कन्यां दीप्तामुत्पन्नरजसम् अत एव पतिं कामयमानां "कनदीप्तौ" इति धातुः "अनवाप्तपतिः कन्याजातवीर्यावरार्थिनी" इत्युत्पलमाला ॥ १९ ॥ वरेण्यं प्रार्थनीयम् ॥ २० ॥

**श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शिनी**

सख्या कृष्णेन प्रेषित इति कालिन्द्या स्वस्मिन्नेव निष्ठामर्जुनमावेदयितुम् ॥ १८–१९ ॥ वरेण्यमिति यो ह्यतिसुन्दरो विष्णुस्तमेव पतिं वरदं मदभीष्टसम्पादकम् ॥ २० ॥

**गूढार्थदीपिनी**

उपस्पृश्य आचम्य । विशदं स्वच्छम् । चरन्ती तपश्चरन्तीम् । दृश्यत इति दर्शनं रूपम् कृष्णौ कृष्णार्जुनौ ॥ १७ ॥ आरोहौ उरू । द्विधा दन्ताः । सख्या श्रीकृष्णेन ॥ १८ ॥ कस्य पुत्री ॥ १९ ॥ वरेण्यं वरणीयम् ॥ २० ॥

**श्रीसत्यधर्मकृता श्रीभागवतटिप्पणी**

विजयोऽर्जुनो वानरध्वजं हनुमत्केतुं रथमारुह्य गाण्डीवं धनुरादाय तथाऽक्षयसायकौ अक्षयाः सायका वाणा ययोस्ताविषुधी चादाय ॥१७॥ कृष्णेन साकं सह सन्नद्धो विहर्तुं बहुव्यालाः सर्पा मृगाश्च तैराकीर्णं व्याप्तमिति विपिनं कम्पनं कम्पकम् । वेट् । प्रयुपन इति वेः प्ररूपत्वपक्षे विपितुर्हि व्योर्ह्रस्वश्चेतीनन् । विशेषेण पियन्त्यत्रेति भानुः । वनमिति वनं सम्भजनीयं शूरैः । विपिनं काननमिति वा परवीरहां प्राविशत् ॥ १८ ॥ आविध्यद्विव्याध व्याघ्रादयोऽष्टमे स्पष्टाः । रुतून्सारङ्गान् सारङ्गः कुञ्जरः ख्यात इत्यनेकार्थध्वनिपदमञ्जरी । सारङ्गा वनगजा हरिणाः कृष्णसारा अतो न पुनरुक्तिः ॥ १९ ॥ मेध्यान्पवित्रान् पर्वणि श्रद्धादिकर्मोचिते कालविशेष उपगते इति । तृषापरीत इति श्रान्तो बीभत्सुरर्जुनो यमुनामगात् ॥ २० ॥

**श्रीमद्वल्लभाचार्य्यकृता सुबोधिनी**

तत्र सङ्गे मृगा इव कन्याप्युपलब्धेत्याह **तत्रोपस्पृश्येति**। उपस्पर्शनं स्नानम् । ततः पानम् । विशदत्वात् न जलानयनसङ्ग्रहः । **महारथाविति** स्त्रीदर्शने न शङ्का । उभावपि कृष्णाविति भगवत्तेज एव विभक्तमिति न दर्शने दूषणम्, कन्यात्वाच्च । तत्रापि **चरन्ती** यमुनातीरे परिभ्रमन्ती भगवन्तं द्रष्टुमागता । चारु दर्शनं यस्या इति सापि पश्यतीति निरूपितम् । तेन प्रश्नादिकं न विरुद्धमिति भावः ॥ १७ ॥ भोग्यरूपा सेति लौकिकन्यायेनैव ग्राह्येति स्वयं गते अर्जुनस्य वैमनस्यं स्यादिति शक्तिः समा स्थापितेति भगवतैव अर्जुनः प्रेषितः पप्रच्छ । वरारोहात्वात् कालो विलम्बं न सहते । **सुद्विजामिति** लक्षणानि निरूपितानि । **रुचिराननामिति** रसवत्त्वम् । सख्या प्रेषणान्न कपटकरणम् । फाल्गुनो जितेन्द्रियश्च । पञ्चाप्सरउद्धारे फाल्गुने अनन्तशयने पञ्चाप्सरसां तत्स्पर्शेन मुक्तिप्रतिपादनात्, तथात्रापि तत्सम्भाषणात् सा भगवन्तं प्राप्स्यतीति तद्वचनं न दूषणम् । न वदिष्यतीत्याशङ्क्याह **प्रमदोत्तमामिति**। प्रकृष्टेन मदो यासाम्, ता एव वदन्ति । तासामपीयमुत्तमा ॥ १८ ॥ **का त्वमिति** प्रश्नचतुष्टयम् । स्वरूपतः का देवनारी, अन्या वा काचिदिति । **कस्यासीति** सम्बन्धी पित्रादिः पृष्टः । **सुश्रोणीति** सम्बोधनम् । अत्र स्थितिरयुक्तेति सूचितम् । कुतो वात्र समागतेति । दैवगत्या समागमने दोषाभावार्थं **किं चिकीर्षसीति** स्थिरतया पृच्छ्यते । यतो नेयमुद्विग्ना, नाप्यन्यत्र गन्तुमिच्छती । अतस्तपस्यादिकं चिकीर्षितं पृष्टम् । तत्स्वस्य हितकारि न भवतीति स्वहितं सम्भावनया पृच्छति **मन्य** इति । पञ्चापि प्रश्ना वक्तव्याः । अन्यथा परिग्रहो न युक्त इति । **सर्वं कथय शोभने** इति तस्या भयाभावः, स्वस्य प्रीतिरपि सूचिता ॥१९॥ अतः कालिन्दी तन्निषेधार्थं भगवन्तमेव वरिष्यामीति पृष्टानर्थानाह **अहं देवस्येति**। देवतात्वाज्जातिरुक्ता । सवितृत्वात् तत्र नासम्भावना । दुहितृत्वाद्द्वयैव । अतो न कस्याप्यपराधः सम्भाषणे । त्वत्कल्पितमपि सत्यमेवेत्याह पतिमिच्छतीति । तद्वारणार्थमाह **विष्णुमिति**। तत्र हेतुः **वरेण्यमिति**। सर्वैरेव वरणीयो भगवान् । तत्रापि हेतुः **वरदमिति**। वरं ददातीति वरणीयो वरः । तेन आत्मदस्त्वर्थादुक्तम् । 'किमर्थमागते'त्यस्य 'किं चिकीर्षसी'त्यत्र च उत्तरमाह **तपः परममास्थितेति**। **परमं** शीघ्रफलपर्यवसायि । **आस्थितेति** फलप्राप्तेः पूर्वं न निवृत्तिः सूचिता ॥ २० ॥

**श्रीसुबोधिनी–सारः**

**तत्र यमुनायां विशदं** निर्मलं **वारि** जलमुपस्पृश्य पीत्वा **महारथौ कृष्णौ द्वौ चारु** सुन्दरं **दर्शनं** यस्यास्तां **चरन्तीं कन्यां ददर्शतुः** ॥ १७ ॥ वरः श्रेष्ठ आरोहो यस्याः सुष्ठु द्विजा दन्ता यस्याः रुचिरमाननं मुखं यस्यास्तां प्रमदोत्तमां स्त्रीरत्नं

तां सख्या श्रीकृष्णेन प्रेषितः फाल्गुनोऽर्जुन आसाद्य प्राप्य पप्रच्छ ॥ १८ ॥ हे सुश्रोणि त्वं कासि कस्यासि कुत आगतासि किं कर्त्तुमिच्छसि पतिमिच्छन्तीं त्वामहं मन्ये हे शोभने ! सर्वं त्वं कथय वर्णय ॥ १९ ॥ कालिंद्याह । देवस्य सवितुः सूर्यस्य दुहिता पुत्री वरदमिष्टदं वरेण्यं विष्णुं पतिमिच्छन्ती परमं तप आस्थितास्मि तपः सम्पादयामीत्यर्थः ॥ २० ॥

## गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

महारथौ कृष्णौ कृष्णार्जुनौ तत्र यमुनायामुपस्पृश्य स्नात्वा विशदं निर्मलं वारि जलं पीत्वा चारु सुन्दरं दृश्यते इति दर्शनं शरीरं यस्यास्तां तत्र तीरे विचरन्तीं कन्यां ददर्शतुरित्यन्वयः ॥ १७ ॥ सख्या श्रीकृष्णेन प्रेषितः फाल्गुनोऽर्जुनस्तां प्रमदोत्तमां स्त्रीश्रेष्ठामासाद्य पप्रच्छेत्यन्वयः । प्रमदोत्तमत्वमुपपादयंस्तां विशिनष्टि-वरौ श्रेष्ठौ आरोहौ उरू यस्यास्ताम् । शोभना द्विजा दन्ता यस्यास्ताम् । रुचिरं सुन्दरमाननं यस्यास्ताम् ॥ १८ ॥ प्रश्नमेवाह—का त्वमिति । तस्यां त्वप्रीतिं सूचयन् सम्बोधयति--हे सुश्रोणि । 'त्वं का' इति स्वरूपजातिनामादिप्रश्नः । 'कस्यासि' इति पित्रादिसम्बन्धिप्रश्नः । 'कुतो वाऽत्र समागता' इति निवासस्थानादिप्रश्नः । 'अत्रागता च त्वं किं चिकीर्षसि' इति प्रयोजनप्रश्नः । अहं तु त्वां पतिमिच्छन्तीं मन्ये, अतः त्वं सर्वं कथय । 'तव चात्र वने विचरणं न युक्तम्' इत्याशयेन सम्बोधयति—शोभने इति ॥ १९ ॥ एवं पृष्टा 'कस्य' इत्यस्योत्तरमाह--अहं देवस्य सवितुः सूर्यस्य दुहितेति । 'किं चिकीर्षसि' इत्यस्योत्तरमाह—विष्णुं पतिमिच्छती कामयमाना परमं तप आस्थिता इति । विष्णोरेव पतितया स्वीकारे हेतुमाह—वरेण्यमिति । वरेण्यं योग्यमित्यर्थः । तत्रापि हेतुमाह—वरदमिति । वरान् कामान् ददातीति तथा तम् ॥ २० ॥

## अन्वितार्थप्रकाशिका

तत्रेति ॥ महारथौ कृष्णौ कृष्णार्जुनौ तत्र यमुनायामुपस्पृश्य आचम्य स्नात्वा च विशदं निर्मलं वारि जलं पीत्वा चारु सुन्दरं दृश्यते इति दर्शनं शरीरं यस्यास्तां तत्र तीरे विचरन्तीं कन्यां ददर्शतुः । गुण आर्षः । ददृशतुरिति पाठो वा ॥ १७ ॥ तामिति ॥ सख्या श्रीकृष्णेन प्रेषितः फाल्गुनः अर्जुनः वरौ श्रेष्ठौ आरोहौ ऊरू यस्यास्तां शोभना द्विजा दन्ता यस्यास्तां रुचिरं सुन्दरमाननं यस्यास्तां प्रमदोत्तमामासाद्य पप्रच्छ ॥ १८ ॥ केति ॥ हे सुश्रोणि ! हे शोभने ! त्वं काऽसि कस्याऽसि कुतो वा आगताऽसि किंच चिकीर्षसि । अहं तु त्वां पतिमिच्छन्तीं मन्ये । अतः त्वं सर्वं कथय । अत्र वरारोहासुश्रोण्यादिशब्दे रूढ्या सौन्दर्यस्यैव प्रतीतिर्नतु योगेन भावविरुद्धावयवार्थस्य यथा भगिनीपदे स्वसृमात्रार्थस्य एवं सुभगादिशब्देपूह्यम् ॥ १९ ॥ मदभीष्टावन्योऽयमिति ज्ञात्वा सहसैव स्वेष्टमाह—अहमिति । अहं देवस्य सवितुः सूर्यस्य दुहिता वरेण्यं वरणीयं वरदं विष्णुं पतिमिच्छती कामयमाना परमं तप आस्थिता ॥ २० ॥

## श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्

सुद्विजां सुदतीं । सख्या श्रीकृष्णेन प्रेषितः फाल्गुनोऽर्जुनः ॥ १७ ॥ कस्यासि कस्य त्वं पुत्री । हे सुश्रोणि कमनीयनितंबं । कुतः वागता ॥ १८ ॥ सवितुः सूर्यस्य । वरेण्यं श्रेष्ठं । अतस्त्वं पतिमिच्छती ॥ १९ ॥ अनाथानां संश्रयः शरणं ॥ २० ॥

## भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

तत्रेति । तत्र, यमुनायां उपस्पृश्य स्नात्वा, महारथौ, कृष्णौ श्रीकृष्णार्जुनौ, विशदं निर्मलं वारि जलं पीत्वा, चरन्तीं तत्र विचरन्तीं, चारुदर्शनां, कन्यां ददृशतुः ॥ १७ ॥ तामिति । ततः, सख्या श्रीकृष्णेन, प्रेषितः फाल्गुनोऽर्जुनः, वरारोहां श्रेष्ठनितम्बां, सुद्विजां शोभनदन्तां, रुचिराननां सुन्दरवदनां, प्रमदोत्तमां, तां आसाद्य, पप्रच्छ ॥ १८ ॥ प्रश्नमेवाह । केति । हे सुश्रोणि, त्वं का असि । कस्य असि । कस्य संबन्धिनी भवसीत्यर्थः । कुतः वा कुतः स्थानादत्रागतासीत्यर्थः । किं चिकीर्षसि किं कर्त्तुमिच्छसि । शोभने हे शोभनगुणयुते, त्वां पतिं इच्छन्तीं, मन्ये । अतः, सर्वं कथय । यथार्थतया अस्मत्पुरो वदेत्यर्थः ॥ १९ ॥ सा तदुत्तरमाह त्रिभिः । अहमिति । अहं सवितुः देवस्य, दुहिता । इति कस्यासीत्यस्योत्तरम् । किं चिकीर्षसीत्यस्योत्तरमाह । वरेण्यं वरणीयं, वरदं स्वानां वरप्रदं, विष्णुं पतिं इच्छती सर्वथा कामयमाना सती, परमं तपः, आस्थिता अस्मीति शेषः ॥ २० ॥

## कृष्णप्रिया

भगवान् श्रीकृष्ण और अर्जुन दोनों महारथियों ने यमुनाजी में हाथ-पैर धोकर उनका निर्मल जल पीया और देखा कि एक परमसुन्दरी कन्या वहाँ तपस्या कर रही है ॥ १७ ॥ उस श्रेष्ठ सुन्दरी की जंघा, दाँत और मुख अत्यन्त सुन्दर थे । अपने प्रिय मित्र श्रीकृष्ण के भेजने पर अर्जुन ने उसके पास जाकर पूछा ॥ १८ ॥ 'सुन्दरी ! तुम कौन हो ? किसकी पुत्री हो ? कहाँ से आयी हो ? और क्या करना चाहती हो ? मैं ऐसा समझता हूँ कि तुम अपने योग्य पति चाह रही हो । हे कल्याणि ! तुम अपनी सारी बात बतलाओ' ॥ १९ ॥ कालिन्दी ने कहा—'मैं भगवान् सूर्यदेव की पुत्री हूँ । मैं सर्वश्रेष्ठ वरदानी भगवान् विष्णु को पति के रूप में प्राप्त करना चाहती हूँ और इसीलिये यह कठोर तपस्या कर रही हूँ ॥ २० ॥

नान्यं पतिं वृणे वीर [1]तमृते श्रीनिकेतनम् । तुष्यतां मे स भगवान् मुकुन्दोऽनाथसंश्रयः[2] ॥ २१ ॥
कालिन्दीति समाख्याता वसामि यमुनाजले । निर्मिते भवने पित्रा यावदच्युतदर्शनम् ॥ २२ ॥
तथावदद् गुडाकेशो वासुदेवाय सोऽपि ताम् । रथमारोप्य तद् विद्वान् धर्मराजमुपागमत् ॥ २३ ॥
यदैव[3] कृष्णः संदिष्टः पार्थानां परमाद्भुतम् । कारयामास नगरं विचित्रं विश्वकर्मणा ॥ २४ ॥

**कर्दमक्षमा**

अन्वयः—हे, वीर, तं, श्रीनिकेतनं, ऋते, अन्यं, पतिं, न, वृणे । सः, अनाथसंश्रयः, भगवान्, मुकुन्दः, मे, तुष्यताम् ॥ २१ ॥ कालिन्दी, इति, नाम्ना, समाख्याता, अच्युतदर्शनयावत्, यमुनाजले, पित्रा, निर्मित, भवने, वसामि ॥ २२ ॥ गुडाकेशः, वासुदेवाय, तथा, अवदत् । सः, अपि, तद्विद्वान्, ताम्, रथं, आरोप्य, धर्मराजं, उपागमत् ॥ २३ ॥ यदैव, सन्दिष्टः, कृष्णः, तदैव, विश्वकर्मणा, पार्थानां, परमाद्भुतं, विचित्रं, नगरं, कारयामास ॥ २४ ॥

**श्रीधरस्वामिविरचिता भावार्थदीपिका**

अयं मां कामयेदित्याशंकायामाह । नान्यमिति ॥ २१-२२ ॥ आदावेव तद्विद्वान् ॥२३॥ प्रसंगात्तत्तत्कालीनं चरित्रांतरमाह—यदैवेति । पार्थैर्यदैव संदिष्टो विज्ञापितः श्रीकृष्णस्तदैव तेषां विश्वकर्मणा देवशिल्पिना नगरं कारयामास ॥ २४ ॥

**श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः**

अनाथसंश्रयो दीनदयालुः । श्रीनिकेतनं प्रेमभरेण सदा लक्ष्मीं बिभ्रतमपीत्यर्थः । यद्वा—श्रिय आश्रयम्, सापि यमाश्रितवती तं वा का न वृणीतेति । यद्वा—श्रियः सर्वस्याः संपदो निकेतनमिति ब्रह्मरुद्रादयोऽपि व्यावर्तिताः । वीर हे धर्मशूरेति । अन्यकामां त्वं नैवेच्छसीति भावः । नन्वसौ दुर्लभः । सत्यम्, दीनवात्सल्यात्स्वीकरोत्वित्याह—तुष्यतामिति । स विष्णुर्यतो भगवान् कारुण्याद्यशेषगुणयुक्तः । अत एव मुकुन्दः सर्वदुःखविमोचकः । किञ्च—अनाथजनस्य नाथ्यांतरशून्यस्य संश्रयः शरणम् । यद्वा—भगवान् परमेश्वरोपि तुष्यतु यतोनाथसंश्रयः । ननु तस्मिन्नेव कुत ईदृशाग्रहस्तत्राह—मुकुंदः, अनन्यकामित्वात्तस्मादेव ममापि मोचनं भविष्यतीति भावः । यद्वा—भगवानशेषैश्वर्यप्रकटनपरः श्रीकृष्ण इत्यर्थः । य एवानाथसंश्रयो मुकुंदोऽसुराणामपि गतिप्रदत्वात्, श्रीवैकुंठनाथादयोपि व्यावर्तिताः । अनेन क्वचिदेत्तद्विरुद्धोयमयमिति संवादश्च परिहृतः । 'एवं वदंति राजर्षे' इत्यादिवत् । किञ्च—यमुनेयं खलु द्विविधया मूर्त्या वर्तते—भगवत्प्रेयसीत्वेन साक्षाद्रूपया, सागरपत्नीत्वेनाभासरूपया च । यथैव श्रीद्वारकायां वर्तमानापि श्रीबलदेवेनाकृष्यमाणापि तं तुष्टावेति वक्ष्यते । तत आभासांशेनापि यदि स्यात्तथा धर्मरक्षार्थमवतीर्णतया लोकान्तरविभीषिकार्थमेव तत्प्रपञ्चितमिति ज्ञेयम् ॥ २१ ॥ कलिं द्यति खंडयतीति कालिंदो विष्णुः । 'यशः कलिमलापहम्' इत्युक्तेः । तस्येयं प्रिया कालिंदी । 'कालिदमनकारकः' इति संमोहनोक्तेः कालिशब्दोपि कालियपरः, तं दयते पालयति गरुडादिति वा । कालिंदाद्गिरेरुद्भूता वा कालिंदी नदी, तस्यां वासाद्वा तन्नाम्नी । पित्रा सूर्येण । भवने गृहवदाधारे ॥ एवं जात्यादिकं तत्पृष्टं कथयित्वा नामाह—कालिंदीति । यमुनाहं सममेकपर्यायं यथा स्यात्तथा ख्याता सती जले निजप्रभावमये वसामि । ननु जले वासस्तव मत्स्यानामिव सर्वत्र चरंत्याः स्यात्तत्राह—निर्मित इति । जल एव कयापि विद्यया पित्रा श्रीरविदेवेन निर्मिते भवन इति । तस्य केनाप्यतर्क्यत्वं स्वेच्छया सर्वत्र संचारित्वं च व्यंजितम् । स्नेहेन भवनस्योत्तमत्वं च सूचितम् । तथापि तस्मिन्मम मोहो नास्तीत्याह—यावदिति । अच्युतस्य 'न मे भक्तः प्रणश्यति' इति स्वप्रतिज्ञातच्युतिरहितस्य भगवतो दर्शनं तत्कर्तृकांगीकारं यावत्तावंतमेव कालं व्याप्येत्यर्थः । अत एव दर्शने सति तपःफलसिद्ध्या नानेन मम प्रयोजनमिति भावः ॥ २२ ॥ यथा कालिंदी ऊचे तथा गुडाकेशो जितनिद्रो वक्रकेशो वाऽर्जुनः । सोऽपि वासुदेवोपि । तत् कालिंदीवृत्तम् ॥ रथमारोप्येति—अयि सुंदरि वरेण्ये विष्णुरहमेवेत्यतः स्वपित्रुपदिष्टमदीयध्यानस्य स्वीयशुद्धहृदयोत्थभावस्य च प्रामाण्यादेव त्वं मां परिचिन्वित्युक्त्वा तस्या रथारुरुक्षामुत्पाद्यैवेति भावः । तां गृहीत्वा रथमारुह्येत्यनुक्तेः । तद्विद्वानिति पूर्वमेव तदर्थं गत इति भावः । धर्मराजमिति-धर्मज्ञतया तेनापि सर्वमवुध्यतैवेति भावः ॥ २३ ॥ नगरमिंद्रप्रस्थावांतरमेव ॥ धर्मराजादीनां सर्वेषां प्रकारान्तरेण हितमाचरदिति पूर्वकथामाह—यदेति चतुर्भिः । तत्रायं क्रमः—पूर्वं नगररचनं, ततः खांडवदाहः, ततः सभाहरणं, ततः कालिंदीलाभः । एवशब्देन पार्थवाग्वश्यत्वं तस्य बोधयति । परमाद्भुतत्वे हेतुः—विचित्रम्, चतुर्दशभुवनवर्तिविविधशोभाढ्यमित्यर्थः ॥ २४ ॥

---

१. स्मृते पुरुषमीश्वरम्—प्रा. पा. । २. वत्सलः—विज. । ३. यथैव—प्रा. पा.; वसंस्तत्र हृषीकेशः शक्रप्रस्थे यथा सुखम्, विज. ।
विश्वकर्माणमाहूय शिल्पविद्या विशारदम् ॥ १ ॥
अद्भुतं कारयामास नगरं धर्मसूनवे । सप्रासाद पुरद्वारगोपुराट्टालतोरणम् ॥ २ ॥
पुरन्दरपुरप्रस्थयं स्वानां प्रियचिकीर्षया । अथपार्थैरनुज्ञातः सुहृद्भिः स्वजनान्वितः ॥ ३ ॥

### श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी

श्रीनिकेतनं प्रेमभरेण सदा वक्षसि लक्ष्मीं बिभ्रतमपीत्यर्थः यद्वा श्रिय आश्रयं साऽपि यमाश्रितवती तं वा का न वृणीतेति यद्वा, श्रियःसर्वस्याः सम्पदो निकेतनम् इति ब्रह्मरुद्रादयो व्यवर्त्तिताः वीर ! हे धर्मशूरेति अन्यकामा त्वं नैवेच्छसीति भावः नन्वसौ दुर्लभः सत्यं दीनवात्सल्यात् स्वीकरोत्वित्याह तुष्यतामिति, स विष्णुर्यतो भगवान् कारुण्याद्यशेषगुणयुक्तः अत एव मुकुन्दः सर्वदुःखविमोचकः किं च अनाथजनस्य नाथान्तरशून्यस्य जनस्य संश्रयः शरणं यद्वा, भगवान् परमेश्वरोऽपि तुष्यतु यतोऽनाथसंश्रयः । ननु, तस्मिन्नेव कुत ईदृशाग्रहस्तत्राह—मुकुन्दः अनन्यकामत्वात्तस्मादेव ममाधिमोचनं भविष्यतीति भावः । यद्वा, भगवान् अशेषैश्वर्य्यप्रकटनपरः श्रीकृष्ण इत्यर्थः । य एवानाथसंश्रयो मुकुन्दः असुराणामपि गतिप्रदत्वात् (इति) श्रीवैकुण्ठनाथादयोऽपि व्यावर्त्तिताः अनेन क्वचिदेतद्विरुद्धो यमयमीसम्वादश्च परिहृतः एवं वदन्ति राजर्षे इत्यादिवत् किं च श्रीयमुनेयं खलु द्विविधया मूर्त्या वर्त्तते भगवत्प्रेयसीत्वेन साक्षाद्रूपतया सागरपत्नीत्वेनाभासरूपतया च यथैव श्रीद्वारकायां वर्त्तमानापि श्रीबलदेवेनाकृष्यमाणा तं तुष्टावेति वक्ष्यते तत आभासांशेनापि यदि स्यात्तदा धर्मरक्षार्थमवतीर्णतया लोकान्तर-विभीषिकार्थमेव तत्प्रपञ्चितमिति ज्ञेयम् ॥ २१ ॥ एवं जात्यादिकं तत् पृष्टं कथयित्वा नामाह—कालिन्दीति । यमुनाहं सममेक-पर्यायं यथा स्यात्तथा ख्याता सती जले निजप्रभावमये वसामि । ननु, जले वासस्तव मत्स्या इव सर्वत्र सञ्चरन्त्याः स्यात्तत्राह—निर्मित इति । जल एव कयापि विद्यया पित्रा श्रीरविदेवेन निर्मिते भवने इति तस्य केनाप्यतर्क्यत्वं स्वेच्छया सर्वत्र सञ्चारित्वं च व्यञ्जितं स्नेहेन भवनस्योत्तमत्वं च सूचितं तथापि तस्मिन्मम मोहो नास्तीत्याह—यावदिति । अच्युतस्य न मे भक्तः प्रणश्यतीति स्वप्रतिज्ञातश्च्युतिरहितस्य भगवतो दर्शनं तत्कर्तृकाङ्गीकारं यावत्तावत्तमेव कालं व्याप्य इत्यर्थः । अत एव दर्शने सति तपः फलसिद्धयानानेन मे प्रयोजनमिति भावः ॥ २२ ॥ तद्विद्वानिति पूर्वमेव तदर्थं गत इति भावः । धर्मराजमिति धर्मज्ञतया तेनापि सर्वमबुद्ध्यतैवेति भावः ॥ २३ ॥ धर्मराजादीनां च तेषां सर्वेषां प्रकारान्तरेण हितमाचरदिति पूर्वकथामाह—यदेति चतुर्भिः । अत्रायं क्रमः पूर्वं नगररचनं ततः खाण्डवदाहः ततः सभाहरणं ततः कालिन्दीलाभ इति, एवशब्देन पार्थ-वाग्वश्यत्वं तस्य बाधयति परमाद्भुतत्वे हेतुः विचित्रं चतुर्द्दशभुवनवर्तिविविधशोभाढ्यमित्यर्थः ॥ २४ ॥

### श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी

श्रीनिकेतनं प्रेमभरेण सदा वक्षसि लक्ष्मीं बिभ्रतमपीत्यर्थः; यद्वा, वरणे हेतुः—श्रियः सर्व्वस्याः सम्पदः शोभाया वा निकेतनमिति श्रीब्रह्मरुद्रादयो व्यावर्त्तिताः । वीर ! हे धर्म्मशूरेति अन्यकामां त्वं नैवेच्छसीति भावः । नन्वसौ सुदुर्लभः, सत्यम्, दीनवात्सल्यात् स्वीकरोत्वित्याह—तुष्यतामिति । स विष्णुस्तुष्यतु, यतो भगवान् कारुण्याद्यशेषगुणयुक्तः, अतएव मुकुन्दः परमानन्ददाता; किञ्च, अनाथजनस्य संश्रयः शरणम्; यद्वा, भगवान् परमेश्वरोऽपि तुष्यतु, यतोऽनाथसंश्रयः, ननु तस्मिन्नेव कुत ईदृशाग्रहः ? तत्राह—मुकुन्द इति । यद्वा, सोऽवतारी मुकुन्दस्तुष्यतु, इत्यवतारा व्यावर्त्तिताः । कथम्भूतः ? भगवानशेषै-श्वर्य्यप्रकटनपरः श्रीकृष्ण इत्यर्थः, इति श्रीवैकुण्ठनाथोऽपि व्यावर्त्तितः । अतएवानाथसंश्रयः ॥ २१ ॥ एवं जात्यादिकं तत्पृष्टं कथयित्वा नामाह—कालिन्दीति । अनेन गिरिवरकलिन्दस्यापि वाक्पुत्रीत्वम्, तथा सम्यगाख्यातेति कृष्णादि-नामान्तरस्य गौणत्वञ्च सूचितम् । ननु सा हि श्रीयमुनाप्रवाहाधिष्ठातृदेवता, सत्यम् । सेवाहमित्याशयेनाह—वसामीति । ननु जलान्तर्वासः कथं घटेत ? तत्राह—निर्म्मित इति । कुत इत्यस्योत्तरमिदमपि ज्ञेयम् । पित्रेति देववरत्वेन जलेऽपि तन्निर्म्माणसामर्थ्यम्, तथा स्नेहेन भवनस्योत्तमत्वञ्च सूचितम्, तथापि तस्मिन् मम मोहो नास्तीत्याह—यावदिति । अच्युतस्य ( गी० ९।३१ ) 'न मे भक्त प्रणश्यति' इत्यादि स्वप्रतिज्ञातश्च्युतिरहितस्य भगवतः, अतएव दर्शने सति तपःफलसिद्धया नान्येन मे प्रयोजनमिति भावः ॥ २२ ॥ यथा तयोक्तं तथैवावदत् । कुतः ? गुड़ाका निद्रालक्षणा माया, तदीशो जितमाय इत्यर्थः, निष्कपटत्वादिति । किञ्च, वसुदेवनन्दनाय मातुलेयत्वेन स्नेहविशेषाच्चेति भावः । तद्विद्वानित्ययं भावः—मदेकनिष्ठेया सख्येऽर्ज्जुनायापि दातुं तथा बहुलवनितापरिग्रहेण लोके कामुकतादोषस्पर्शेऽप्युपेक्षितुं न योग्यैवेत्यादि सर्व्वमादावर्ज्जुनं प्रेष्य सर्व्वान् जनान् प्रतिबोध-येयमिति तत्प्रेषणे प्रागेव विचारणादिति, धर्म्मराजमिति धर्म्मज्ञतया तेनापि तत् सर्व्वं बुध्येतैवेति भावः ॥ २३ ॥ धर्म्मराजा-दीनाञ्च तेषां सर्व्वेषां प्रकारान्तरेण हितमाचरदित्याह—यदेति चतुर्भिः । एव-शब्देन पार्थवाग्वश्यत्वं तस्य बोधयति, कृष्णः साक्षाद्भगवान्, अतो विश्वकर्म्मणा कृत्वा कारयामास । परमाद्भुतमत्यनिर्व्वचनीयं सर्व्वलोकातीतं वा, यतो विचित्रं चतुर्द्दश-भुवनवर्त्ति-विविधशोभाढ्यमित्यर्थः । इतीन्द्रादिपुरीतोऽपि वैशिष्ट्यं द्योतितम् ॥ २४ ॥

### श्रीमद्वीरराघवाचार्यकृता भागवतचन्द्रचन्द्रिका

बहुषु सत्सु किं विशेषेण विष्णुमेव कामयस इत्यत आह—नान्यमिति । हे वीर ! तं विष्णुमृते विनाऽन्यं न वृणे तत्र हेतुं वदन्ती तं विशिनष्टि, श्रियो निकेतनमाश्रयं श्रीर्हि सर्वोत्तमं तमेवाश्रितवत्यतोऽहमपि तमेव वृण इति भावः । दुर्लभः स

कथं त्वदिच्छामात्रेण लभ्यत इत्यत आह—तुष्यतामिति। तत्र हेतुरनाथानामनन्यनाथानां संश्रयः ॥ २१ ॥ अथ का त्वम् इत्यस्योत्तरमाह—कालिन्दीति। पित्रा सवित्रा यावदच्युतस्य श्रीकृष्णस्य दर्शनं तावन्निवसामि ॥ २२ ॥ तथेति। गुडाकेशोऽर्जुनः वासुदेवार्थं तां कन्यां रथमारोप्य तद्भगवदभिप्रेतं जानन् ॥ २३ ॥ अथार्जुनाय गाण्डीवादिप्रदानात्मकं भगवच्चेष्टितमाह—यदेति। सन्दिष्ट आदिष्टः पार्थैरिति विभक्तिविपरिणामः कृष्णः प्रयोजककर्ता विश्वकर्मणा प्रयोज्य कर्त्रा विचित्रं नानाविधशिल्पोपेतमत्याश्चर्यं नगरं पार्थानामावासार्थं कारयामास ॥ २४ ॥

**श्रीमद्विजयध्वजतीर्थकृतापदरत्नावली**

अनाथवत्सलः ॥२१—२४॥ गुडाकेशः घनकेशः जितनिद्रो वा यथा कालिन्दी ऊचे तथा सोपि वासुदेवाय ॥२३-३०॥

**श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः**

यावदच्युतदर्शनमिति तत्कर्तृकाङ्गीकारपर्यन्तमित्यर्थः ॥ २३–२४ ॥

**श्रीनाथचक्रवर्तिपादविरचिता चैतन्यमतमञ्जूषा**

यदैवेति। लब्धकल्यः कदाचिदत्रैव कतिचिद्दिनानि तिष्ठतीति तद्वासयोग्यं न भवत्येतत् पुरम् तदिदं विज्ञापयामः—द्वारकातुल्यामत्रापि पुरं विश्वकर्मा सम्पादयत्विति तेनादिष्टो यदैव तदैव कारयामासेत्यर्थः ॥ २४ ॥

**श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शिनी**

तस्माच्छङ्कमाना स्वनिष्ठां व्यतिरेकेणापि ज्ञापयन्त्याह—नान्यमिति। अनाथसंश्रय इति स एव नाथः स्वभक्तजनरक्षक इति विश्वासादेवाहमबलापि निर्जने वसन्त्यपि पुरुषान्तरान्न बिभेमीति भावः ॥ २१ ॥ समाख्यातेति सूर्यस्य कन्यां मां को न जानातीति स्वप्रभावं च ज्ञापयति—पित्रा निर्मिते भवने इति। पितुः सूर्यस्याप्यहं—मतिवात्सल्यपात्रीति मत्प्रातिकूल्ये को नाम प्रभवेदिति भावः ॥ २२ ॥ रथमारोप्येति। अयि सुन्दरि! वरेण्यो विष्णुरहमेवेत्यतः स्वपित्रुपदिष्टमदीयध्यानस्य स्वीयशुद्धहृदयोत्थभावस्य च प्रमाण्यादेव त्वं मां परिचिन्वित्युक्त्या तस्या रथारुरुक्षामुत्पाद्यैवेति भावः। तां गृहीत्वा रथमारुह्येत्यनुक्तेः तद्विद्वानित्यादावेव तदर्थं गत इति भावः ॥ २३ ॥ यदैवेत्यत्रायं क्रमः पूर्वं नगररचना ततः खाण्डवदाहः ततः सभाहरणं ततः कालिन्दीलाभ इति सन्दिष्टः पार्थैर्यदेव विज्ञापितस्तदैवेत्यर्थः ॥ २४ ॥

**गूढार्थदीपिनी**

मे ममोपरि तुष्यताम् ॥ २१ ॥ कलिन्दगिरेरुद्भूतत्वात्-कालिन्दी यमुना तस्यां निवासात्सापि तन्नाम्नी ॥ २२ ॥ गुडाकेशो जितनिद्रोऽर्जुनः। तत् कालिन्दीवृत्तं जानन् ॥ २३ ॥ पार्थैर्यदैव सन्दिष्टः प्रार्थितस्तदेव ॥ २४ ॥

**श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः**

यमुनैव कालिन्दीति समाख्याता जले स्वाधिष्ठिते ॥ २२ तद्विद्वान् स्वप्राप्त्यर्थमादावेव तत्प्रवृत्तिज्ञः ॥ २३ ॥ सन्दिष्ट इति जतुवेश्मतो विनिर्मुक्तैः द्रौपदीस्वयम्वरे प्रतीतैः पाण्डवधार्तराष्ट्रविरोधनिवृत्तये धृतराष्ट्रेण राज्यभागं दत्वा इन्द्रप्रस्थे प्रेषितैः पाण्डवैः अस्मद्वासार्थं नगररचनां कुरु इत्येवं विज्ञापित इत्यर्थः ॥ २४ ॥

**श्रीसत्यधर्मकृता श्रीभागवतटिप्पणी**

उपस्पृश्यादावाचम्य मृष्टस्य मणेरिन्द्रनीलस्य प्रभेव प्रभा यस्य तज्जलमिति शेषः। विशदं यथेच्छं बहुलं पीत्वा विशदं क्षीरमधुरसमरसमिति तद्वद्विद्यमानं वा। विशदं क्षीरमाधुर्यमिति सुधाभिधानात्। यथेच्छादिपदम् विहायैतत्स्थापनं न स्वतन्त्रेच्छस्येति न्यायतः किन्त्वमुमप्यर्थं सूचयितुमिति मन्तव्यम्। कृष्णौ वासुदेवार्जुनौ चारुदर्शनात्तत्तीरे चरन्तीं कन्यां ददृशतुः ॥२१॥ वरारोहामुत्तुङ्गोत्सङ्गां सुदतीं शोभनरदनां सख्या कृष्णेन फल्गुनोऽर्जुनः फल्गु यथा तथा विचार्य नः कथयेति सख्या प्रेषित इत्यप्यन्वयः ॥ २२ ॥ कस्यासि सुता कुतः कारणादसि किं कर्तुमिच्छसि त्वां पतिमिच्छन्तीं कन्यां मन्ये। अनवाप्तपतिः कन्या जातवीर्या वरार्थिनीत्युत्पलमाला ॥ २३ ॥ आदावन्ववायो बोधनीय इति द्वितीयस्योत्तरमीरयति ॥ अहमिति। सवितुर्देवस्य। सूर्यादिपदमनिबन्धानो निबन्धानश्च सवितृपदं तस्याः पालकपितृत्वनिवारणमुखेन साक्षात्पितृत्वं बोधयामासेति ज्ञेयम्। अहं दुहिता पुत्री। कुलसमीचीनतां भाविकार्योपयुक्तामुक्त्वा मन्ये त्वामित्यर्जुन त्वन्मननं मम मनोनुकूलमित्यनुमत्या वक्ति। पतिमिच्छतीति। वरेण्यं वरणीयं विष्णुं पतिमिच्छन्ती परमं तप आस्थिता ॥ २४ ॥

**श्रीमद्वल्लभाचार्य्यकृता सुबोधिनी**

सर्वस्यापि विष्णुत्वात् तादृशसुखदानसमर्थः। लोकन्यायेन तद्विभूतिः वरणीयोऽपि भवतीति, अन्येषां ततो हीनानां वरदानसमर्थोऽपि कश्चिद्भविष्यति, कश्चिदात्मानं वा तथा मन्यत इत्याशङ्क्य निषेधति नान्यं पतिं वृण इति। भक्तिदातारं

भगवद्दातारं वा तत्त्वेन वृणे, ननु पतित्वेन। वीरेति धर्मसम्बोधनाद्बलात्पक्षो निवारितः। **अवीरेति** वा स निराकृतः। स चेत् स्वसायुज्यं प्रापयित्वा तथाभूताय प्रयच्छति, तदा परं न जान इत्यभिप्रायेणाह **तमृत** इति। तस्य परिज्ञाने नियमे च हेतुमाह **श्रीनिकेतन**मिति। लक्ष्म्या स एव वृत इति लक्ष्मीसहितो वा। श्रीवत्साङ्को भगवानिति तस्य परिज्ञानम्। ननु भगवान् 'नाहं वेदै'रिति वाक्यात् तपसा न सिद्धो भविष्यतीति चेत्, तत्राह **तुष्यता**मिति। स हि वरदो भवति। तत्रेदमेव प्रथमं याचे तुष्यतामिति। ततस्तुष्टे अन्यद्याच इत्यभिप्रायः। **मे** मह्यम् प्रति। यतः सः लक्ष्म्या अपि प्रसन्नः। ननु वाक्यं बाधकमिति चेत्, तत्राह भगवानिति। ईश्वरत्वान्न नियम्यः कस्यचित्। नन्वीश्वरस्यैवैतद्वाक्यमिति चेत्, तत्राह **मुकुन्द** इति। यदि निषिद्धानां साधनानां प्रयोजकता न स्यात् भगवत्प्रसादे, तदा कस्यापि मोक्षो न सिध्येत्। अतः स्वतन्त्रभक्तिविषयं तादृशरूपदर्शनविषयं वा तद्वाक्यमिति मन्तव्यम्। किञ्च। मास्त्वस्मत्साधनम्, स स्वधर्मविचारेणापि सन्तुष्टो भवत्वित्याह **अनाथसंश्रय** इति। येषां न कोऽपि नाथः, तेषां सम्यगाश्रयो भवति, दीनदयालुत्वात्। अन्यो मा तुष्यतामिति निषेधार्थं वा। नात्र संशय इति वा भवति॥ २१॥ नामस्थानादीन्याह **कालिन्दी**तीति। कलिन्दपर्वते तद्रूपेण समागतात् सूर्याज्जातेति पार्वत्या इव ममापि नियम इति सूचितम्। **वसामि यमुनाजल** इति दुर्गस्थितिरुक्ता। अनेन यमुनायास्तस्याश्च भेदः प्रदर्शितः। पर्वतभावापन्नादियमाधिदैविकी कालिन्दीत्येव नाम्ना विश्रुता उत्पन्ना। सा तु यममुत्पाद्य पश्चात्। तद्दोषपरिहारार्थं यमुनामुत्पादितवान्। उभयोरैक्यात् आधिदैविकाधिभौतिकवत् स्थितत्वात् लोके अभेदेन प्रयोगः। नापि तपतीवत् शापान्नदीत्वम्, पूर्वमेव नदीरूपस्य विद्यमानत्वात्। नाप्याध्यात्मिकं देवतारूपम्, तथा सति यमुनापरित्यागासम्भवात्। अनुग्रहनिग्रहयोरेव तदभिव्यक्तेश्च। सर्वथा च भेदकं सूर्यतनयात्वात् लोके प्रसिद्ध्यभावाच्च नास्तीत्याधिदैविकत्वं कल्प्यते। अत्रैव स्थितौ नियामकमाह **निर्मिते भवने** पित्रेति। सूर्येण यमुनाजले भवनं निर्माय भगवदर्थं स्थापिता। अतो यावदच्युतदर्शनं यत्र स्थास्यामि, ततो भगवद्गृहं गमिष्यामि, ननु भगवानत्र स्थाप्यः। अत्रैव स्थितायाः परिग्रहो वा न नियम्यते॥ २२॥ एवं तस्याः संवादेन रूपमवगत्य यथार्थमेवावददित्याह तथावददिति। तत्र हेतु **गुडाकेश** इति। गुडाकाया निद्रायाः व्यामोहिकायाः ईश इति। सोऽपि मोक्षदाता। वासुदेवः तस्यास्तं निर्बन्धं दूरीकुर्वन् तां रथमारोप्य तमर्थं यथार्थं विद्वान् निदर्शनरूपं धर्मनिर्णायकं वा धर्मराजमुपागमत्॥ २३॥ एवं साधनशक्तिसिद्ध्यर्थं तां गृहीत्वा पश्चात् भक्तार्थं विश्वकर्मादीनाज्ञापयदित्याह **यदैव कृष्ण** इति। नायं तस्य कृतिनिर्बन्धः। यदैव मनसा वा तत्कृत्वा समानीय वा स्थितः सन् पाण्डवैः संदिष्टः। भगवत्कर्तव्यमेव संदेशनियमेन ज्ञापितवान्। तदैव परमाद्भुतं नगरं विश्वकर्मणा कारयामास। भगवानपि मनसा सृजेत्, ततश्च तत्र दोषा न प्रभविष्यन्तीति, गर्वाद्यभावे दुर्योधनादीनां निराकरणं न भवतीति विश्वकर्मणैव कारयामास॥ २४॥

### श्रीविट्ठलरायात्मजश्रीवल्लभकृतलेखः

नान्यं पतिमित्यत्र। **स्वसायुज्य**मिति। 'नरः स्वावेशधारक' इति वाक्यान्नरे स्थितं स्वांशं स्वस्मिन् वानीयेत्यर्थः। **तथाभूताये**ति। भगवति प्रविष्टायांशायेत्यर्थः। पूर्वमर्जुनो निराकृतः। तत्स्थित एवांशो भगवति प्रविष्टश्चेत् तमंशं वृणेऽपि, न तु तमृते इति मूलार्थः। कालिन्दीत्यत्र। **कालिन्दपर्वते** इति। सूर्यः पर्वतरूपेण कलिन्दे समागतः। तथा च मातृस्थानीयः कलिन्दः पिता पर्वतभावापन्नः सूर्यः। पर्वतयोरचेतनत्वेपि हिमवतः पार्वत्युत्पत्तिरिव 'अभिमानिव्यपदेशस्त्वि'तिन्यायेन तदुत्पत्तिरप्युपपद्यते। **पर्वत**भावापन्नादिति। एतादृशात् सूर्यादुत्पन्नेत्यन्वयः। स त्विति। देवरूपः सूर्य इत्यर्थः। पर्वतरूपात् सूर्यात् कालिन्दी जातेति व्युदासार्थं तु शब्दः। आधिदैविकत्वं स्थापयन्ति **सर्वथा** चेति।

### श्रीसुबोधिनीसारः

श्रीनिकेतनं लक्ष्मीपतिं तं हरिमृते विनाऽन्यं पतिं न वृणे नांगीकरोमि अनाथं निराधारं संश्रयतीति भजतीति तथा मुकुंदो भगवान् मे ममोपरि तुष्यतां प्रसीदतु॥ २१॥ यमुनाहं कालिंदीति समाख्याता प्रसिद्धिं गता जले वसामि पित्रा सूर्येण निर्मिते रचिते भवने मंदिरेऽच्युतस्य दर्शनं यावत्॥ २२॥ गुडाकेशोऽर्जुनो वासुदेवाय तथावदत्। सोपि कृष्णः तद्विद्वान् तां वेत्तीति तथा रथं तामारोप्य धर्मराजं युधिष्ठिरमुपायात्॥ २३॥ यदैव पार्थैः संदिष्टो विज्ञापितः कृष्णस्तदैव पार्थानां युधिष्ठिरादीनां षष्ठी चतुर्थ्यर्थे तदर्थं विचित्रं नगरं विश्वकर्मणा निमित्तेन कारयामास॥ २४॥

### गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

'अन्योऽपि कश्चिद्वीरो वरदाने समर्थः स्यादेव, तर्हि स एव वरणीय' इत्याशङ्क्याह—नेति। 'वीरत्वं तु मम नापेक्षितम्' इति सूचयन्ती सम्बोधयति—वीरेति। तं विष्णुमृते नान्यं पतिमहं वृणे। एवं निर्बन्धे हेतुमाह—श्रियो लक्ष्म्या निकेतनं आश्रयमिति। स्त्रीपूत्तमा हि श्रीः सर्वोत्तमत्वेन पतितया तमेव वृतवती, अतोहमपि तमेव वृणे इत्याशयः। ननु 'स तु दुर्लभः' कथं तपसापि लभ्यते' इत्याशङ्क्याह—स मुकुन्दो भगवान् मे तुष्यतामिति। तत्र हेतुमाह—अनाथानामनाश्रयाणां संश्रय आश्रय इति॥ २१॥ 'का त्वम्' इत्यस्योत्तरमाह—कालिन्दीति समाख्यातेति। स्थानमाह—यावदच्युतस्य कृष्णस्य दर्शनं प्राप्तिस्तावद्यमुनाजले तत्रापि पित्रा निर्मिते भवने वसामीति॥ २२॥ गुडाका निद्रा तस्या ईशो निर्जितनिद्रः अर्जुनः आगत्य

यथा कालिन्द्या उक्तं तथा वासुदेवायावदत् । स वासुदेवः कृष्णोपि तद्विद्वान् स्वप्राप्त्यर्थं तप आचरणं जानन् तां रथमारोप्य धर्मराजं युधिष्ठिरं प्रति हस्तिनापुरमागमत् ॥२३॥ प्रसङ्गाद्भगवतो भक्तवश्यतां सूचयन्नन्यानि तच्चरितान्याह—यदैवेत्यादिना । पार्थैर्यदेव सन्दिष्टः 'नगरं नास्ति तत्संपादय' इति विज्ञापितः श्रीकृष्णः प्रयोजककर्ता तदैव विश्वकर्मणा प्रयोज्यकर्त्रा पार्थानामावासार्थं परमाद्भुतं अत्याश्चर्यजनकं विचित्रं नानाविधशिल्पोपशोभितं नगरं कारयामास ॥ २४ ॥

### अन्वितार्थप्रकाशिका

नेति ॥ हे वीर ! तं श्रीनिकेतनमृते विना अन्यं पतिं न वृणे । सः अनाथानां संश्रयः शरणभूतो भगवान्मुकुन्दो मे ममोपरि तुष्यताम् । तङ्गार्थः ॥ २१ ॥ कालिन्दीति ॥ कालिन्दीति नाम्ना समाख्याता यावदच्युतस्य कृष्णस्य दर्शनं प्राप्तिस्तावद्यमुनाजले तत्रापि पित्रा निर्मिते भवने वसामि ॥ २२ ॥ तथेति ॥ गुडाका निद्रा तस्या ईशो निर्जितनिद्रः अर्जुनः आगत्य यथा कालिन्द्योक्तं तथा वासुदेवायावदत् । स वासुदेवः कृष्णोऽपि आदावेव तद्विद्वान् स्वप्राप्त्यर्थं तप आचरणं जानन् वरेण्यो विष्णुरहमेव स्वपित्रुपदिष्टप्रत्यभिज्ञया ज्ञातुमर्हसीत्युक्तया तया परिचितः सन् तां रथमारोप्य धर्मराजं युधिष्ठिरं प्रति हस्तिनापुरमागमत् ॥ २३ ॥ प्रसङ्गात्तत्कालभवं चरित्रान्तरमाह—यदेति ॥ अत्रायं क्रमः पूर्वं नगररचनं ततः खाण्डवदाहः ततः सभाहरणं ततः कालिन्दीलाभः इति पार्थैः यदेव सन्दिष्टः नगरं नास्ति तत्सम्पादयेति विज्ञापितः श्रीकृष्णः प्रयोजककर्ता तदैव विश्वकर्मणा प्रयोज्यकर्त्रा पार्थानामावासार्थं परमाद्भुतं विचित्रं नानाविधशिल्पोपशोभितं नगरं कारयामास ॥ २४ ॥

### श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्

समाख्याता प्रसिद्धा । पित्रा सूर्येण निर्मिते यमुनाजले एव भवने गृहे ॥२१॥ स वासुदेवोऽपि तद्विद्वान् तत्कथितमादावेव जानन् ॥ २२ ॥ प्रसंगात्पूर्वकालिकमेतच्चरित्रमाह यदेति चतुर्भिः । अत्रायं क्रमः । पूर्वं इन्द्रप्रस्थानगररचना ततः खांडववनदाहस्ततः सुधर्मासभाकरणं ततः कालिंदीलाभ इति यदेवयार्थैः । संदिष्टो विज्ञापितो हरिस्तदैव विश्वकर्मणा सुरशिल्पिना तेषां नगरं कारयामास ॥ २३ ॥ तदेवाह भगवानिति खांडवं इंद्रवनं ॥ २४ ॥

### भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

नान्यमिति ॥ हे वीर, श्रीनिकेतनं श्रिय एकाश्रयं, तं विष्णुं ऋते, अन्यं पतिं, न वृणे । श्रीर्हि सर्वोत्तमं तमेवाश्रितवत्यतोऽहमपि तमेव वृणे इति भावः । दुर्लभः स कथं त्वदिच्छामात्रेण लभ्यतेऽत आह तुष्यतामिति । अनाथसंश्रयः अनाथनाथः, मुकुन्दः सः भगवान्, मे मम तुष्यताम् । अनाथसंश्रयत्वात् दुर्लभोऽपि स एव प्रीतो भविष्यतीत्यर्थः ॥ २१ ॥ अथ का त्वमित्यस्योत्तरमाह । कालिन्दी इति, समाख्याता अस्मि । यमुनाजले पित्रा निर्मिते भवने, यावदच्युतदर्शनं कृष्णदर्शनपर्यन्तं, वसामि ॥२२॥ तथेति गुडाकेशोऽर्जुनः, वासुदेवाय श्रीकृष्णाय, तथा तदुक्तप्रकारेण, अवदत् । तद्विद्वान् तज्जानन्, स कृष्णः अपि, तां रथं आरोप्य, धर्मराजं युधिष्ठिरं, उपागमत् ॥ २३ ॥ अथार्जुनाय गाण्डीवादिप्रदानात्मकं भगवच्चेष्टितमाह । तत्रायं क्रमः । पूर्वमिन्द्रप्रस्थनगररचना, ततः खाण्डववनदाहः, ततः सभाकरणं, ततः कालिन्दीलाभ इति ॥ यदेति ॥ यदैव, कृष्णः, पार्थैरिति विभक्तिविपरिणामः । संदिष्ट आदिष्टः, तदा पार्थानां निवासार्थमिति शेषः । विश्वकर्मणा प्रयोज्यकर्त्रा, विचित्रं नानाविधशिल्पोपेतं, परमाद्भुतमत्याश्चर्यजनकं नगरं, कारयामास विधापयामास ॥ २४ ॥

### कृष्णप्रिया

हे वीर अर्जुन ! मैं लक्ष्मी के परम आश्रय भगवान् को छोड़कर और किसी को अपना पति नहीं बना सकती । अनाथों के एकमात्र सहारे, प्रेम वितरण करने वाले भगवान् श्रीकृष्ण मुझपर प्रसन्न हों ॥ २१ ॥ मेरा नाम है कालिन्दी । यमुनाजल में मेरे पिता सूर्य ने मेरे लिये एक भवन भी बनवा दिया है । उसी में मैं रहती हूँ । जब तक भगवान् का दर्शन न होगा, मैं यहीं रहूँगी' ॥ २२ ॥ अर्जुन ने जाकर भगवान् श्रीकृष्ण से सारी बातें कहीं । वे तो पहले से ही यह सब कुछ जानते थे, अब उन्होंने कालिन्दी को अपने रथ पर बैठा लिया और धर्मराज युधिष्ठिर के पास ले आये ॥ २३ ॥ इसके बाद पाण्डवों की प्रार्थना से भगवान् श्रीकृष्ण ने पाण्डवों के रहने के लिये एक अत्यन्त अद्भुत और विचित्र नगर विश्वकर्मा के द्वारा बनवा दिया ॥ २४ ॥

**भगवांस्तत्र निवसन् स्वानां [1]प्रियचिकीर्षयन् । [2]अग्नये खाण्डवं दातुमर्जुनस्यास सारथिः ॥ २५ ॥**
**सोऽग्निस्तुष्टो धनुरदाद्धयाञ्छ्वेतान् रथं नृप । अर्जुनायाक्षयौ तूणौ वर्म चाभेद्यमस्त्रिभिः ॥ २६ ॥**
**मयश्च मोचितो वह्नेः सभां सख्य उपाहरत् । यस्मिन् दुर्योधनस्यासीज्जलस्थलदृशिभ्रमः[3] ॥ २७ ॥**
**[4]स तेन समनुज्ञातः सुहृद्भिश्चानुमोदितः । [5]आययौ द्वारकां भूयः सात्यकिप्रमुखैर्वृतः ॥ २८ ॥**

---

१. प्रियचिकीर्षया—श्रीधर. वंशी. जीव. । २. अग्रिमे सार्धपञ्च श्लोकाः न सन्ति विज. । ३. मति—वीरः । ४. अथ पार्थैरनुज्ञातः सुहृद्भिः स्वजनान्वितः—विज. । ५. प्र—प्रा पा. ।

### कर्दमक्षमा

अन्वयः—भगवान्, स्वानां, प्रियचिकीर्षया, तत्र, निवसन्, अग्नये, खाण्डवं, दातुं, अर्जुनस्य, सारथिः, आसः ॥ २५ ॥ हे, नृप, सः, अग्निः, तुष्टः, अर्जुनाय, धनुः, श्वेतान्, हयान्, रथं, अक्षयौ, तूणी, अस्त्रिभिः, अभेद्यं, वर्म, च, अदात् ॥२६॥ वह्नेः, मोचितः, मयश्च, सख्ये, सभां, उपाहरत्, यस्मिन्, दुर्योधनस्य, जलस्थलयोः, दृशेर्भ्रमः, आसीत् ॥ २७ ॥ तेन, समनुज्ञातः, सुहृद्भिश्च, अनुमोदितः, सः, सात्यकि, प्रमुखैः, वृतः, भूयः, द्वारकां, आययौ ॥ २८ ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

किञ्च भगवान्निरतिशयैश्वर्यगुणवानप्यर्जुनस्य धनुरादिलाभाय सारथिरास खांडवं नामेद्रस्य वनम् ॥२५॥ अक्षयावक्षयसायकौ ॥ २५ ॥ खांडवदाहकाद्वह्नेः सख्ये अर्जुनाय यस्मिन्निति सामान्यतो निर्देशः यस्यामित्यर्थः। जलस्थलयोर्दृशेर्दृष्टेर्भ्रमः। यद्वा जले स्थलवत् दृक् दृष्टिर्यस्मिंस्तज्जलस्थलदृक् तस्मिन् भ्रम आसीदिति ॥ २७–२८ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

न केवलं नगरमेव कारयामास, किन्तु बहुचित्रशस्त्रसभाद्यपि दापयामासेत्याह—किञ्चेति। तत्र नगरे ॥ २५ ॥ यस्मै खांडवं दत्तं स इत्यर्थः। धनुर्गांडीवम्। चर्माच्छूरिका ॥ स उपभुक्तखांडवः। हे नृपेति पितामहस्य तत्तल्लाभेन प्रहर्षात्। यद्वा—हे नृपेति तव नृपत्वमपि तत्प्रभावादेवेति भावः। अग्निरेव कृष्णाय चक्रमप्यादादित्यन्यत्र प्रसिद्धेरत्र नोक्तम् ॥ २६ ॥ सामान्यतः यत्रेत्यर्थः। प्रथमसमासेऽधिकरणं भ्रमस्य न ज्ञायतेऽत आह—यद्वेति। जलस्थलदृक् सभैकदेशस्तत्र भ्रम इत्यर्थः। मोचितो भगवता ॥ २७ ॥ स कृष्णः। तेन युधिष्ठिरेण ॥ एवं पूर्ववृत्तमुक्त्वा कालिंद्यानयनोत्तरं वृत्तमाह—स इति। तेन धर्मराजेन सम्यगनुज्ञातः बारंबारं जिगमिषन्नपि महास्निग्धस्य तस्यानुज्ञामनत्यंतां बुद्ध्वा पूर्वं न चचाल। अधुना श्रीकालिंदीविवाहापेक्षया तां प्राप्तः सन्निति स शब्दार्थः। सुहृद्भिरर्जुनादिभिः ॥ २८ ॥

### श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी

नितरां चिरं सुखं वसन् टीकायामर्जुनस्येत्यादिकमग्नये खाण्डवं दातुमित्यस्योपलक्षणत्वगमकम् ॥ २५ ॥ सोऽग्निरित्यनेन श्रीकृष्णाय चक्रमदादित्यन्यत्र च प्रसिद्धमप्यत्र नोक्तं स उपभुक्तखाण्डवः। नृपेति पितामहस्य तत्तल्लाभेन तस्य प्रहर्षात् ॥ २६ ॥ मोचितो भगवता ॥ २७ ॥ एवं पूर्ववृत्तमुक्त्वा पुनरावृत्य श्रीकालिन्द्यानयनानन्तरं वृत्तमाह—स इति। तेन धर्मराजेन सम्यगनुज्ञातः बारम्बारं जिगमिषन्नपि महास्निग्धस्य तस्यानुद्यामनत्यन्तां बुद्ध्वा पूर्वं न चचाल अधुना श्रीकालिन्दीविवाहापेक्षया तां प्राप्तः सन्निति संशब्दार्थः सुहृद्भिरर्जुनादिभिः ॥ २८ ॥

### श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी

तत्र नगरे, नितरां चिरं सुखं वसन् ॥ २५ ॥ स उपभुक्तखाण्डवः, रथञ्च श्वेतं श्वेतवर्णश्रीहनूमद्ध्वजबहुलमुक्तामालादिभूषितत्वात्, हे नृपेति पितामहस्य तत्तल्लाभेन प्रहर्षात् ॥ २६ ॥ मोचितो भगवता, अतोऽर्ज्जुनस्तस्यापि सखा तस्मै, किञ्च, भगवतः सख्ये, यद्वा, पाण्डवैः सह सख्ये निमित्ते उपाहरत् उपस्कृत्यार्पयामास, इति सुधर्मातोऽपि विशेषः सूचितः। तमेवाह—यस्मिन्निति ॥ २७ ॥ तेन धर्म्मराजेन सम्यगनुज्ञातो बारम्बारं जिगमिषन्नपि महास्निग्धस्य तस्य मनोदुःखेनैवानुज्ञां बुद्धानागत्याधुना सुखेन तां प्राप्तः सन्निति सं–शब्दार्थः। सुहृद्भिरर्ज्जुनादिभिः ॥ २८ ॥

### श्रीमद्वीरराघवाचार्यकृता भागवतचन्द्रचन्द्रिका

तदा स्वानां प्रियं कर्तुम् इच्छया तत्र नगरे निवसन्नग्नये खाण्डवं नाम वनं दातुमर्जुनस्य सारथिर्बभूव ॥ २५ ॥ स इति। स दग्धखाण्डवोऽग्निरत एव तुष्टः हे नृप! अर्जुनाय धनुरादीन् ददौ अस्त्रिभिरस्त्रधारिभिरभेद्यं वर्म कवचम् ॥ २६ ॥ मयश्चेति। मयः खाण्डववनवासी वह्नेः सकाशान्मोचितः सख्ये अर्जुनाय सभामुपाहरद्ददौ तां विशिनष्टि यस्यामिति यस्यां सभायां जलस्थलदृशि ( मति ) भ्रमः जले स्थलबुद्धिः स्थले जलबुद्धिरित्येवंविधो यो भ्रमः स बभूवेति ॥ २७ ॥ स इति। स कृष्णस्तेनार्जुनेन समनुज्ञातः सुहृद्भिर्युधिष्ठिरादिभिरनुमोदितश्च भूयः पुनः ॥ २८ ॥

### मज्जीवगोस्वामिकृतक्रमसंदर्भः

भगवानिति। अत्र तु क्रमोऽयं पूर्वं खाण्डवदाहस्तः कालिन्दीलाभः ततो नगरनिर्म्माणं ततः सभोपहार इति खाण्डवदाहानन्तरमेवाग्नेः सकाशात्तद्रथादिप्राप्तेः ॥ २५—३२ ॥

### श्रीनाथचक्रवर्तिपादविरचिता चैतन्यमतमञ्जूषा

ते तु निष्पन्ने पुरे तदैव आसन् इत्याह—भगवांस्तत्र निवसन्नित्यादि ॥ २५-४४ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

अर्जुनस्य धनुरादिलाभाय सारथिरास अभूत् खाण्डवं नामेन्द्रस्य वनम् ॥ २५-२६ ॥ सख्ये खाण्डवदाहकवह्नेर्मित्रायार्जुनाय यस्मिन् यस्याम् ॥ २७-२९ ॥

### गूढार्थदीपिनी

खाण्डवमिन्द्रवनम् । इन्द्रप्रस्थस्यावान्तरमेतत् ॥२५॥ वर्म कवचम् । अस्त्रिभिः अस्त्रधारिभिः ॥२५॥ सख्ये अर्जुनाय । यस्मिन् सभास्थले । जलस्थलयोर्दृशोर्दृष्टेर्भ्रमः ॥ २७ ॥ स कृष्णः । तेन युधिष्ठिरेण ॥ २८ ॥

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः

खाण्डवमिन्द्रवनम् ॥ २५ ॥ धनुरदादिति प्रथमं पाण्डवान् द्रष्टुमिन्द्रप्रस्थं भगवान् प्राप्तस्ततो नगरं कारयामास ततोऽर्जुनस्य धनुरादिलाभाय अग्नये खाण्डव दातुं सारथिरभूत् तदाऽग्निर्धनुर्गाण्डीवं रथं वानरध्वजम् अक्षयौ अक्षयसायकौ तूणौ चादात् तदनन्तरं कालिन्दीलाभः इति क्रमो ज्ञेयः अन्यथा "एकदा रथमास्थाय विजयो वानरध्वजम् । गाण्डीवं धनुरादाय" इत्याद्युक्तिरनुपपन्ना स्यात् ॥ २६ ॥ मयः खाण्डवदाहकाद्वन्हेः अर्जुनेन मोचित; सख्ये अर्जुनाय यस्मिन् सभारूपे स्थाने कथम्भूते जले स्थलवद्दृक् दृष्टिर्यस्मिन् दुर्योधनस्य राजसूये आगतस्य भ्रमोऽभूत् ॥ २७-२८ ॥

### श्रीसत्यधर्मकृता श्रीभागवतटिप्पणी

तं श्रीनिकेतनमृते हे वीर अन्यं पतिं न वृणे न कामये । अनाथवत्सलो भगवान्स मुकुन्दस्तुष्यताम् ॥ २५ ॥ का त्वमित्यस्य किन्नाम्नीत्यर्थ इति मत्वा तत्स्वनामाह । कालिन्दीतीति । पित्रा निर्मिते भवने यावद्यदाऽच्युतदर्शनं भवेदिति वसामि ॥ २६ ॥ यथा साऽवदत्तथैव गुडाकेशो विद्रावितनिद्रो गुडवत्सम्यक् स्निग्धकेश इति वाऽर्जुनो वासुदेवायावदत् । सोऽपि तां कालिन्दीं तद्विद्वान्स्वाप्तिहेतुतपश्चरणं जानन् रथमारोप्य धर्मराजमुपागमत् । पुरं कुन्तीमित्याद्यवदन्धर्मराजमिति शुकः कालिन्द्या यमात्यकधर्मराजस्य चानुबन्धं स्मारयामासेति तात्पर्यमवसेयम् । तद्भगिनी ह्येषेति ॥ २७ ॥ तत्र शक्रप्रस्थे ॥ २८ ॥

### श्रीमद्वल्लभाचार्यकृता सुबोधिनी

विश्वकर्मापि भगवदुपयोगाभावे ज्ञाते न सम्यङ्करोतीति भगवांस्तत्र निवसन्नेव कारयामासेति पूर्वार्धमुभयत्र संबध्यते । तर्हि स्थितिः स्वार्थापि भविष्यतीत्याशङ्क्याह **स्वानामेव प्रियं चिकीर्षयन्** । न केवलं स्थानमुत्कृष्टं दापितवान्, किन्तु साधनान्यपीत्याह **अग्नये खाण्डवं दातुमिति** । भगवांस्तत्र निवसन्नित्यनुवर्तते । अन्यथा अग्निरपि संतुष्टो न भवेत् । भगवान् भक्तानां हितार्थं गुणभावमपि प्राप्तवानिति वक्तुमर्जुनस्य **सारथिरासे**त्युक्तम् ॥ २५ ॥ गुप्ततयापि स्थित्वा अर्जुननाम्नैव इन्द्रादिजयं करिष्यामीति भगवदध्यवसायं ज्ञात्वा अग्निरप्यर्जुने संतुष्टो जात इत्याह **सोऽग्निस्तुष्ट** इति । अग्नेः पञ्चाङ्गानि पञ्चापि दत्तवान् । 'धनुर्यज्ञादुत्पन्नमिपवश्च यज्ञजन्मा ही'ति श्रुतेः । श्वेताः हयाः सात्त्विकाः मथनादुद्भूताः आग्नेया एव । अक्षयतूणीरावपि साहचर्यादाग्नेयौ । सर्वैरेवास्त्रिभिरभेद्यं वर्म दैवत्यमपि 'अग्निः सर्वा देवता' इत्याग्नेयमेव ॥ २६ ॥ अन्यदपि दापितवानित्याह **मयश्च मोचित** इति । अत्राशेषविशेषकथा भारतादनुसन्धेया । वह्नेर्मोचितो मयः सख्ये सभामुपाहरत् । भगवता मोचितः भगवते स्वकार्यं दातुमयुक्तम्, भगवति न प्रभवतीति च, उपकारश्च कर्तव्यः, अतः साक्षाद्दातुमशक्तः सख्ये अर्जुनायोपाहरत् । सख्ये दत्तं च भगवान् मन्यते । यद्यप्यर्जुनः सखा, तथापि तत्सम्बन्धात् राज्ञे दत्तमिति । तस्या उपयोगमाह यस्यामिति । जले स्थलभ्रमः, स्थले च जलभ्रम इति । वस्तुनि न भ्रमः, किन्तु दृश्यैव ॥ २७ ॥ एवं मुख्यशक्त्या ऐश्वर्यरूपया स्वरूपज्ञानरूपया वा यावत्कर्तव्यं तत्कृत्वा तावत्तमात्मसात्कृत्वा अन्यथा सर्वात्मना अन्योपकारो न भवतीति तस्या विवाहं कर्तुं भगवान् द्वारकां गत इत्याह **स तेनेति** । **सोऽर्जुनः** सखा राजा वा । **तेन** मयेनार्जुनेन वा सम्यगनुज्ञातः स्वस्य कृतकार्यत्वं ज्ञात्वा सर्वैरेव बन्धुभिर्गमनं कृतं चानुमोदितः, चकाराद्देवैरपि । स्वकृतं सर्वजनीनं जातमिति ज्ञापयितुमेतदुक्तम् । यैः सह गतः तैः सह पुनरागत इति । कृत्यैव ते कृतार्थाः कृता इति न सहायार्थं तेषामुपयोगः कर्तव्य इति सूचितम् । अतः सात्यकिप्रभृतयस्तत्र न विनियुक्ताः । नयनानयने तु विवाहस्य प्रामाणिकत्वज्ञापके ॥ २८ ॥

### श्रीसुबोधिनी-सारः

तत्र नगरे स्वानां भक्तानां पांडवानां प्रियकरणेच्छया भगवानवसत् श्वेतकियज्ञे भूरिघृतभक्षणादजीर्णगदग्रस्तायाग्नये खांडवमिंद्रस्य वनं दातुं भक्षयितुम् अर्जुनस्य सारथिरास बभूव ॥ २५ ॥ हे नृप सोग्निस्तुष्टोर्जुनाय धनुर्गांडीवं श्वेतान् हया

अश्वान् रथम् अक्षयौ तूणौ निषंगौ अस्त्रिभिरभेद्यमच्छेद्यं वर्म कवचं चादात् ॥ २६ ॥ वह्नेर्मोचितो मयो दैत्यः सख्येर्जुनाय सभामुपाहरन्निर्माय समार्पयत् यस्मिन् यस्यां तथा पाठो वैदिकत्वेनाधिकफलार्थः। जलस्थलयोर्दृशि दर्शने दुर्योधनस्य भ्रम आसीत् भ्रांतिरभवत्। इदं च कालिंदीगमनात्प्राक्तनमन्यथा "गांडीवं धनुरादाय" इत्यसंगतं स्यात् ॥ २७ ॥ तेन राज्ञा धर्मसुतेन समनुज्ञातो याहीति दत्ताज्ञः सुहृद्भिर्मित्रैरनुमोदितः स श्रीकृष्णसात्यकिप्रधानैर्वृतो भूयः पुनर्द्वारकामाययौ आजगाम ॥ २८ ॥

### गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

चरितान्तरमाह—भगवानिति। निरतिशयैश्वर्यादिगुणपूर्णोऽपि स्वानां स्वभक्तानां पाण्डवानां प्रियं कर्तुमिच्छया तत्र हस्तिनापुरे निवसन् अर्जुनस्य धनुरादिलाभाय अग्नये खाण्डवं वनं दातुमर्जुनस्य सारथिरास बभूव ॥ २५ ॥ स च दग्धखाण्डवोऽग्निः, अत एव तुष्टः सन् हे नृप! अर्जुनाय धनुरादीनदात्। धनुरादिलाभश्च कालिन्दीलाभात् पूर्वमेव बोध्यः, 'गाण्डीवं धनुरादाय' इत्युक्तत्वात्। अस्त्रिभिरस्त्रधारिभिरभेद्यं वर्म कवचम् ॥ २६ ॥ खाण्डववने स्थितो मयाख्यो दानवानां शिल्पाचार्यो वनदाहकाद्वह्नेः सकाशात् भगवता मोचितः रक्षितः, अतस्तत्सख्ये अर्जुनाय सभां कृत्वा उपाहरत् ददौ। तां विशिनष्टि—यस्मिन्निति। यस्मिन्निति सामान्यतो निर्देशः। यस्यां सभायां जलास्थलदृशि भ्रमः जले स्थलदृष्टिः, स्थले च जलदृष्टिः, इत्येवंविधो भ्रमः आसीत् ॥ २७ ॥ ततश्च तेनार्जुनेन समनुज्ञातः अन्यैश्च सुहृद्भिः युधिष्ठिरादिभिरनुमोदितः स कृष्णः सात्यक्यादिभिः सहितो भूयो द्वारकामाययौ इत्यन्वयः ॥ २८ ॥

### अन्वितार्थप्रकाशिका

भगवानिति ॥ भगवान् स्वानां स्वभक्तानां प्रियचिकीर्षया प्रियं कर्तुमिच्छया तत्र हस्तिनापुरे निवसन् अग्नये खाण्डवं तन्नामकमिन्द्रवनं दातुम् अर्जुनस्य सारथिः साहाय्यकृदास ॥ २५ ॥ स इति ॥ हे नृप! स चाग्निः खाण्डवदाहाङ्गीकारेण तुष्टः अर्जुनाय गाण्डीवं धनुः श्वेतान् हयान् रथम् अक्षयौ अक्षयसायकौ तूणौ अस्त्रिभिः अस्त्रधरैरभेद्यं वर्म कवचं चादात्। एतानि खाण्डवदाहात् पूर्वमेवाग्निना दत्तानि ॥ २६ ॥ मय इति ॥ खाण्डववने स्थितो मयाख्यो दानवानां शिल्पाचार्यो वनदाहकाद्वह्नेः सकाशात् मोचितः रक्षितः अतस्तत्र सख्ये खाण्डवदाहकवह्नेः सख्ये वा अर्जुनाय सभां कृत्वा उपाहरत् ददौ। यस्मिन्निति सामान्यतो निर्देशः। यस्यां सभायां दुर्योधनस्य जलस्थलयोर्दृशोर्दृष्टेभ्रमः। यद्वा। जले स्थलदृक् स्थलज्ञानं यत्र तत्र सभायां भ्रमः आसीत् ॥ २७ ॥ स इति ॥ तेनार्जुनेन समनुज्ञातः अन्यैः स्वसुहृद्भिः युधिष्ठिरादिभिरनुमोदितः स कृष्णः सात्यकिप्रमुखैर्वृतः सात्यक्यादिभिः सहितो भूयो द्वारकामाययौ। पूर्वं मुहुर्जिगमिषन्नपि क्लेशेनाननुज्ञातत्वान्न ययौ। अधुना कालिन्दीविवाहाद्यावश्यकमालोच्य सम्यगनुज्ञातो ययौ ॥ २८ ॥

### श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्

अक्षयौ सदा बाणपूर्णौ। तूणौ शरधी ॥ २५ ॥ वह्नेरिंद्रवनदाहकाग्नेर्मोचितः सख्ये अर्ज्जुनाय उपाहरत् दत्तवान्। यस्मिन् यस्यां सभायां। जलं च स्थलं का च भूमिश्चतयोः दृशोर्भ्रमः जले स्थलं भाति स्थले जलं च भातीति वैपरीत्य आसीत् ॥ २६ ॥ इत्थं पूर्ववृत्तांतमुक्त्वा सांप्रतं कालिद्यानयनोत्तरवृत्तांतमाह स इति तेन युधिष्ठरेण समनुज्ञात आज्ञप्तः सुहृद्भिरर्ज्जुनादिभिः ॥ २७ ॥ सुपुण्ये विवाहोक्ते ऋतुः कालः ऋक्षं नक्षत्रं च यस्मिंस्तथाभूते ऊर्ज्जितरव्यादिग्रहबलयुक्ते दिने ॥ २८ ॥

### भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

भगवानिति ॥ तदा, स्वानां प्रियचिकीर्षया निजजनानां प्रियं कर्त्तुमिच्छयेत्यर्थः। तत्र नगरे, निवसन् भगवान्, अग्नये खाण्डवं खान्डवं नाम वनं, दातुं अर्जुनस्य सारथिः, आस बभूव ॥ २५ ॥ स इति ॥ स दग्धखाण्डवः अग्निः, हे नृप, तुष्टः सन्, अर्जुनाय, धनुः गाण्डीवं नाम शरासनं, श्वेतान् हयान्, रथं, अक्षयौ वाणक्षयवर्जितौ, तूणाविषुधी, अस्त्रिभिरस्त्रधारिभिरपि, अभेद्यं वर्म कवचं च, अदात् ॥ २६ ॥ मयश्चेति ॥ मयः खाण्डववनवासी दानवः, वह्नेः सकाशात्, मोचितः। अत एव, सख्येऽर्ज्जुनाय, सभां उपाहरत् ददौ। यस्यां सभायां, दुर्योधनस्य, जलस्थलदृशि भ्रमः जले स्थलवद्बुद्धिः, स्थले जलवद्बुद्धिरित्येवंविधो दृग्गतो भ्रमः, आसीत् ॥ २७ ॥ स तेनेति ॥ स श्रीकृष्णः, तेन अर्जुननेन, समनुज्ञातः, सुहृद्भिर्युधिष्ठिरादिभिः, अनुमोदितः कृतानुमोदनः, सात्यकिप्रमुखैः, वृतः संश्च, भूयः पुनः, द्वारकां आययौ ॥ २८ ॥

### कृष्णप्रिया

भगवान् इस बार पाण्डवों को आनन्द देने और उनका हित करने के लिये वहाँ बहुत दिनों तक रहे। इसी बीच अग्निदेव को खाण्डव-वन दिलाने के लिये वे अर्जुन के सारथी भी बने ॥ २५ ॥ खाण्डव-वन का भोजन मिल जाने से अग्निदेव

बहुत प्रसन्न हुए। उन्होंने अर्जुन को गाण्डीव धनुष, चार श्वेत घोड़े, एक रथ, दो अटूट बाणों वाले तरकस और एक ऐसा कवच दिया, जिसे कोई अस्त्रशस्त्रधारी भेद न सके ॥ २६ ॥ खाण्डव-दाह के समय अर्जुन ने मय दानव को जलने से बचा लिया था। इसलिये उसने अर्जुन से मित्रता करके उनके लिये एक परम अद्भुत सभा बना दी। उसी सभा में दुर्योधन को जल में स्थल और स्थल में जल का भ्रम हो गया था ॥ २७ ॥ कुछ दिनों के बाद भगवान् श्रीकृष्ण अर्जुन की अनुमति एवं अन्य सम्बन्धियों का अनुमोदन प्राप्त करके सात्यकि आदि के साथ द्वारका लौट आये ॥ २८ ॥

**अथोपयेमे कालिन्दीं [1]सुपुण्यत्वृक्ष ऊर्जिते। [2]वितन्वन् परमानन्दं स्वानां परममङ्गलम् ॥ २९ ॥**
**विन्दानुविन्दावावन्त्यौ दुर्योधनवशानुगौ। स्वयंवरे स्वभगिनीं [3]कृष्णे सक्तां न्यषेधताम् ॥ ३० ॥**
**राजाधिदेव्यास्तनयां मित्रविन्दां पितृष्वसुः। प्रसह्य हृतवान् कृष्णो राजन् राज्ञां प्रपश्यताम् ॥ ३१ ॥**
**नग्नजिन्नाम कौरव्य [4]आसीद् राजातिधार्मिकः। तस्य सत्याभवत् कन्या [5] देवी नाग्नजिती नृप ॥ ३२ ॥**

### कर्दमक्षमा

**अन्वयः**—सुपुण्यः, अथ, ऋक्ष, उर्जिते, परममङ्गलं, स्वानां, परमानन्दं, वितन्वन्, कालिन्दीं, उपयेमे ॥ २९ ॥ आवन्त्यौ, विन्दानुविन्दौ, दुर्योधनवशानुगौ, स्वयंवरे, कृष्णे, सक्तां, स्वभगिनीं, न्यषेधताम् ॥३०॥ हे राजन्, कृष्णः, पितृष्वसुः, राजाधिदेव्याः, तनयां, मित्रविन्दां, राज्ञां, प्रपश्यतामेव, प्रसह्य, हृतवान् ॥ ३१ ॥ हे नृप, अतिधार्मिकः, कौशल्यः, नग्नजिन्नाम, राजा, आसीत्, तस्य, नाग्नजिती, इतिनाम्नी, देवी, कान्तिमती, सत्या, ( नामकन्या ) अभवत् ॥ ३२ ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

सुपुण्य ऋतुः ऋक्षं च यस्मिन् ॥ २९ ॥ पंचमं मित्रविंदाविवाहमाह—विंदाविति द्वाभ्याम्। आवंत्यावंत्या-राजानौ ॥ ३०-३१ ॥ षष्ठमाह। नग्नजिदिति। कौशल्योऽयोध्यापतिस्तस्य सत्या नाम कन्याऽभवदासीत् देवी कांतिमती नाग्न-जितीति पितृनाम्ना प्रसिद्धेत्यर्थः ॥ ३२ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

अथ द्वारकाप्राप्तेरनन्तरम्। ऊर्जितेऽतिबलवति, काले इत्यर्थः। सुपुण्ये विवाहादिप्रशस्ते, ऋतौ वसन्तादौ, ऋक्षे च रोहिण्यादौ च द्वंद्वैक्यम्। तत्राप्यूर्जिते ऋतौ, रविशुद्ध्यादियुक्ते, ऋक्षे तु संपदाद्येकतरे, शुभचन्द्रे शुभग्रहयुक्ते दृष्टे च विहित इत्यर्थः। स्वत एव परममंगलोपि इति लोकशिक्षार्थमेव तत्तदपेक्षेति भावः। यद्वा-परममंगलम्। तत्प्रभावेण स्वयमेव सर्व-मंगलोपसत्तेरित्यर्थः ॥ २९ ॥ दुर्योधनस्य वशानुगौ प्रियानुगौ। 'त्रिष्वायत्ते वशोऽभीष्टे' इति निरुक्तिः। स्वयंवरेपि कृष्णे सक्तां न्यषेधताम् ॥ ३० ॥ पितृष्वसुः वसुदेवभगिन्या राजाधिदेवीतिनामवत्याः। पितृष्वसुरिति-यदुवंशे स्वसम्बन्धिविवाहस्याचार-प्राप्तत्वान्न दोष इति भावः। यद्वा-हरिवंशोक्तरीत्या यदुवंशो द्विधा-सौरश्चांद्रश्च, तदग्रे वर्णयिष्यामः। किञ्च-कृष्ण "ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहम्" इति रीत्या कृष्यमाणचित्तत्वादपि तन्नामेत्यर्थः। शिविदेशोद्भवत्वादस्या एव शैब्येति नाम। अत एवाग्रे कुरुक्षेत्रे यात्रायां श्रीद्रौपदीप्रश्ने शैब्य इति सबोधनं, व्याख्यातश्च तैः-शैब्या मित्रविन्देति ॥ ३१ ॥ विवाहां-तरमाह—नग्नजिदिति। "वेदो हि सर्वलोकानां वस्त्रवद्रक्षकः स्मृतः। तद्धीनः प्रोच्यते नग्नस्तज्जेता नग्नजिन्मतः। इत्यन्वर्थ-नामा। तत्र हेतुः-अतिधार्मिक इति। इत्यर्थ इति-न तु तस्या इदं नामेति भावः। अतिधार्मिको भगवद्धर्मपर इत्यर्थः ॥ ३२ ॥

### श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी

सुपण्ये विवाहायातिप्रशस्ते ऋतौ ऋक्षे च द्वन्द्वैक्यं तत्रापि ऊर्जिते ऋतौ रविशुद्ध्यादियुक्ते ऋक्षे तु सम्पदाद्येकतरे शुभचन्द्रे शुभग्रहयुक्तदृष्टे च विहित इत्यर्थः। स्वत एव परममङ्गलोपि इति लोकशिक्षार्थमेव तत्तदपेक्षेति भावः। यद्वा, परम-मङ्गलः तत्प्रभावेन स्वयमेव सर्वमङ्गलोपसत्तेरित्यर्थः ॥ २९ ॥ स्वयंवरेऽपि कृष्णे सक्ताम् आसक्तां न्यषेधताम् ॥ ३० ॥ पितृष्व-सुरिति यदुवंशे स्वसम्वन्धिविवाहस्याचारप्राप्तत्वात् न दोष इति भावः। किञ्च कृष्णः "ये यथा मां प्रपद्यन्ते" इति रीत्या कृष्यमाणचित्तत्वादपि तन्नामेत्यर्थः। शिविदेशोद्भवत्वादस्या एव शैब्येति नाम अत एवाग्रे कुरुक्षेत्रयात्रायां श्रीद्रौपदीप्रश्ने शैब्येति सम्वोधनं व्याख्यातं च तैः शैब्ये मित्रविन्दे इति ॥ ३१ ॥ अतिधार्मिकः श्रीभगवद्धर्मपर इत्यर्थः ॥ ३२ ॥

---

१. पुण्ये नक्षत्रे-विज.। २. रूपयौवनसम्पन्नां मनोनयननन्दिनीम्-विजये। ३. कृष्णकामां-विज.। ४. कौसल्य-श्रीधर. वंशी. जीव. वीर. विज. विश्व. शुक. सु.। ५. राजन् नीलेति चाह्वया-विज.।

**श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी**

अथ आगमनानन्तरमेव, मांगल्ये वा, तदेवाभिव्यञ्जयति—सुपुण्येति। ऊर्जिते सुपुण्येऽपि विवाहानुकूले, यद्वा, सुपुण्यस्य ऋतोर्ऋक्षे ऊर्जिते बलवति, स्वत एव परममंगलोऽपि, इति लोकशिक्षार्थमुत्तरायणे माघाद्यपेक्षणम्, यद्वा, आग्रहायणे एव वार्षिक—चातुर्मास्यात्ययेन मार्गे मासि द्वारकागमनात्तदानीमेव तत्तत्सम्पत्तेः, यतः परममंगलः तत्प्रभावेण स्वयमेव सर्व्वमंगलोपसत्तेरित्यर्थः। स्वानां श्रीश्रीवसुदेवादीनां परममानन्दं विशेषेण तन्वन् विस्तारयन् सदानन्दं विस्तारयत्येव, अधुना तु श्रीकालिन्दीविवाहेन परमं विशेषेण तं विस्तारयन्नित्यर्थः ॥ २९ ॥ स्वयम्वरेऽपि कृष्णे सक्तामासक्तां न्यषेधतां श्रीकृष्णेन सह विवाहाद्वारयामासतुः, यद्वा, स्वयम्बर इत्यस्य हृतवानिति परेणान्वयः, यद्वा, स्वयंतया वरणे न्यषेधताम्, तां प्रति तन्निषिषिधतुरित्यर्थः। कुतः? दुर्य्योधनस्य वशानुगौ इच्छानुसारिणौ, अतएव पितृष्वसुरपि तनयां हृतवान्, यतः कृष्णः प्रियजनप्रेम्णाकृष्यमाणचित्त इत्यर्थः ॥ ३० ॥ हे राजन्निति स्वभक्तानुग्रहेण प्रहर्षोदयात्, किं वा राजमानः सन्, अतो राज्ञां सर्व्वेषां प्रकर्षेण पश्यतामेव, सप्तम्यां षष्ठी, पश्यत्सु सत्स्वेव, अनादरे षष्ठी वा, शिविदेशोद्भवत्वादस्या एव शैव्येत्यपि नाम, अतएवाग्रे कुरुक्षेत्रयात्रायां श्रीद्रौपदीप्रश्ने 'शैव्ये' इति सम्बोधनम्। व्याख्यातञ्च तैः—'शैव्ये मित्रविन्दे' इति। अतिधार्म्मिकः श्रीभगवद्धर्म्मपर इत्यर्थः। अत एव नग्नान् जैनानपि जयति स्ववशे करोतीति नग्नजिदित्यन्वर्थनामत्वम्। हे नृपेति राजकन्यायाः सौन्दर्य्यसौशील्यादिकं भवता ज्ञायत एवेति मया किं तद्वर्ण्यमिति भावः ॥ ३२ ॥

**श्रीमद्वीरराघवाचार्यकृता भागवतचन्द्रचन्द्रिका**

अथेति। ऊर्जिते ग्रहबलवति सुपुण्यमनुकूलमृक्षं नक्षत्रं यस्मिंस्तस्मिन् सुमुहूर्ते स्वानां द्वारकौकसां परममानन्दं विस्तारयन् परमं मङ्गलं यस्य सः विवाहितवान् ॥ २९ ॥ अथ पञ्चमं मित्रविन्दाविवाहं प्रस्तौति—विन्दानुविन्दाविति। आवन्त्याववन्तिराजौ दुर्योधनवशं दुर्योधनाधीनतामनुगच्छत इति तथा तौ न्यषेधताम् न्यवारयताम् ॥ ३० ॥ राजाधिदेव्या इति। तथा भगवान् पितृष्वसुः स्वपितृभगिन्याः राजाधिदेव्यास्तनयां राज्ञां पश्यतां सतामेव हे राजन्! प्रसह्य हृतवान् ॥ ३१ ॥ अथ षष्ठं नाग्नजितीविवाहमनुवर्णयति—नग्नजिन्नामेति। कौ (स) शल्यः कोसलदेशाधिपतिरयोध्याधिपतिरिति यावत् तस्य देवी कान्तिमती च सत्या नामकन्या अभूत् अन्वर्थकनामान्तरमप्याह—नाग्नजितीति। नग्नजितोऽपत्यं स्त्रीति तथा हे नृप! ॥ ३२ ॥

**श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली**

राजाधिदेव्याः राजाधिदेवीतिनामधेयायाः ॥ ३१ ॥ नीलेत्याह्वयो नाम यस्याः सा नीलेत्याह्वया "आ प्रसह्यः स्मृतौ वाक्येप्यास्तु सन्तापकोपयोः" इति यादवः ॥ ३२ ॥

**श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शिनी**

पञ्चमं मित्रविन्दाविवाहमाह—विन्देति द्वाभ्याम्। आवात्यौ अवन्तीभूपालौ ॥ ३०-३१ ॥ षष्ठमाह—नग्नजिदिति। कौशल्यः अयोध्याधिपतिः सत्येति संज्ञा ॥ ३२ ॥

**गूढार्थदीपिनी**

सुपुण्यो विवाहयोग्यो ऋतुः ऋक्षं नक्षत्रं रोहिण्यादि च यस्मिन्। ऊर्जिते ग्रहबलवति मुहूर्ते परम् मङ्गलं निर्विघ्नं यथा स्यात्तथा उपयेमे इत्यन्वयः ॥ २९ ॥ पञ्चमं विवाहमाह—विन्देति, आवन्त्यौ अवन्तिदेशराजानौ ॥ ३० ॥ पितृष्वसुर्वसुदेवभगिन्याः राजाधिदेवीनाम्न्याः शिविदेशोद्भवत्वादस्याः शैव्यापि नाम। यदुवंशे स्वसम्बन्धिविवाहस्य लोकाचारप्राप्तत्वान्न दोषः। यद्वा। हरिवंशे यदुवंशस्य चन्द्रवंशे सूर्यवंशे च वर्णनाद् परस्परं भिन्नवंशं स्वीकृत्य विवाहे न काप्यनुपपत्तिः ॥ ३१ ॥ षष्ठमाह—कौशल्योऽयोध्यापतिः ॥ ३२-३३ ॥

**श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः**

सुपुण्यः ऋतु ऋक्षं च यस्मिन् तस्मिन् ऊर्जिते बलवति मुहूर्ते ॥ २९ ॥ आवन्त्यौ अवन्तीराजानौ ॥ ३०-३२ ॥

**श्रीसत्यधर्मकृता श्रीभागवतटिप्पणी**

धर्मसूनवे तदर्थम् ॥ २९ ॥ पुरन्दरपूरस्यामरावत्याः प्रख्या शोभा यस्य तत्। स्वानां द्वारकागाराणाम् ॥ ३० ॥ सुहृद्भिः पार्थैरित्येकाधिकरण्यम्। स्वजनाश्च कालिन्द्याद्याः सात्यकिप्रमुखैरिति तत्पृथग्वचनात्। पुण्ये ऊर्जिते उच्चस्थाने

स्थितगुर्वादिग्रहे ऊर्जिते शुभनक्षत्रे उपयेमे परिणिनाय ॥ ३१ ॥ मनोनयननन्दिनीमित्यनेन स्वपितृत्वानत्वान्नयननन्दनं युक्ततरमिति ध्वन्यते। ध्वन्यते च स्वभर्तृमूलपुरुषस्थानत्वान्मनोनन्दनमिति। उभयकुलनन्दनीति परमार्थः। शशिसूर्यनेत्रम्। चन्द्रमा मनसो जात इत्यादेर्मनः सोम उदाहृत इत्यादिश्च। स्वानां परममङ्गलं तथा परमानन्दं च वितन्वन्विस्तारयन्नुपयेम इत्यन्वयः ॥ ३२ ॥

**श्रीमद्वल्लभाचार्य्यकृता सुबोधिनी**

अतः सर्वसम्मतां पश्चात्तामुपयेम इत्याह अथेति। सुष्टु पुण्ये नक्षत्रे। ऊर्जिते सर्वग्रहानुगणे। पुण्यनक्षत्रं वैदिकम्। ऊर्जितत्वं ज्योतिशास्त्रप्रशस्तत्वम्। वितन्वन् परमानन्दमिति सर्वेषां सम्मतिरुक्ता, रुक्मिणीप्रभृतीनामपि। किञ्च। विवाहमात्रेण न सुखं दत्तवान्, किन्तु स्वरूपतोऽपि परममङ्गलरूपः। अतो विशिष्टः फलदायी जात इत्यर्थः ॥२९॥ विवाहान्तरमाह द्वाभ्याम्, विन्दानुविन्दाविति। द्वितीयपक्षस्थेयम्। तानप्युद्धर्तुं भगवान् गृह्णाति। मित्रविन्दाया अवन्तिदेशे स्थितिः। तत्रैव स्वयंवरः। तत्र दुर्योधनादयोऽपि गताः। भगवांश्च। ततः स्वयंवरणप्रस्तावे दूराद्भगवन्तं दृष्ट्वा निकटे स्थितौ भ्रातरावाह 'मया कृष्णो वरणीय' इति। ततस्तौ तस्या आसक्तिं च ज्ञातवन्तौ। तयोर्विचारेण दुर्योधनो वरणीय इति। यतस्तस्यैव वशावनुगौ च। यथा रुक्मी। स्वभगिनी स्वोदरेति न तत्रान्यं प्रतिबन्धं कर्तुं शक्तः। **न्यषेधताम्**। भगवत्सम्मुखे विलम्बमानाम्। ततः अपसार्य दुर्योधनसमीपे नेतुं प्रवृत्तावित्यर्थः। ततो भगवानेतज्ज्ञात्वा तौ दूरीकृत्य रथवेगेन शीघ्रमागत्य तां जहारेत्याह **राजाधिदेव्या** इति। राजाधिदेवी वसुदेयभगिनी नवमे निरूपिता। सा तु लोकन्यायेन मातुलकन्यावत् भाग एव भवति। अतो न दानापेक्षा। कन्यायां परमन्यासक्तायां ग्राह्या नवेति विचारः। सापि राजस्वधिकं दीव्यतीति भगवन्तमेव मन्यते। कन्यापि मित्राण्येव विन्दतीति नानभिप्रेतं प्राप्नोति। **पितृष्वसुरिति** कुलद्वयेऽपि तस्या विवाहः सम्मत इति बोधितम्। प्रसह्येति भ्रातृभ्यामाच्छिद्य। यतः कृष्णः स्त्रीणां हितकर्ता। अन्ये च राजानः साक्षिणो जाताः तेनायं विवाहः सर्वसम्मतः सर्वसाक्षिकश्च। संबोधनं च तादृशम्। सम्मतमिति सम्मत्यर्थम् ॥ ३१ ॥ तृतीयं विवाहमाह भक्तिरूपम्, नग्नजिदिति चतुर्विंशतिभिः। ज्ञाने सर्वे विरोधिनः, भक्तौ प्रकृतिरेवेति व्यसनान्येवात्र बाधकानीति तान्येकेन रूपेण दूरीकर्तुमशक्यानीति सप्तविधा साधनशक्तिरुक्ता। अन्यथा त्रिभिरेव प्रेमसम्पत्तौ पादसेवनादीनां वैयर्थ्यमेव स्यात्। सख्यात्मनिवेदने च भगवता स्वधर्मस्थापनार्थं क्रियेते। तत्कृत्वा भगवत्तुल्यः पश्चाद्व्यसनानि समूलं दूरीकरोतीति ज्ञापयितुं स्वयं भगवानत्र सप्त रूपाणि करिष्यति। इयं च भक्तिः पाषण्डे न भवतीति ज्ञापयितुं नग्नजिद्राज्ञः कन्यात्वेन सा निरूप्यते। नग्नान् वेदरहितान् जयतीति। अत एव प्रसिद्धः। त्वमपि कौरव्यः। कौरववंशे उत्पन्नः विश्वासं करिष्यतीति। न केवलं विपक्षानेव दूरीकरोति, किन्तु श्रौतस्मार्तादिसर्वधर्मपरः। **अतिधार्मिकः**। स्वरूपतोऽपि महान् राजा। तस्य गुणत्रयमपि समीचीनमिति तत उत्पन्ना नाग्नजितीत्याह तस्येति। कौसल्येति पाठे कोसलदेशाधिपतिरयोध्याराजा। सत्येति नाम। स्वरूपतः फलतः साधनतश्चेयं भक्तिः सत्येति। अत एव वेदविरुद्धमतेषु अधमेषु कर्मविहीनेषु भक्तिः सत्या न भवतीति द्योतितम्। उत्कर्षवादा एवातोऽन्यथा। अन्यथा भक्तिशास्त्रं व्यर्थमेव स्यात्। सहस्रशो भगवदंशा दृष्टप्रत्ययान्यपि सम्पादयन्तीति शास्त्रे अनुक्ता भक्तिः न भक्तिरिति। भगवत्साक्षात्कारात्पूर्वमेवैषा व्यवस्था। सा च देवतारूपा अलौकिकी कन्या न कमपि भगवदंशं गृहीत्वा स्थिता। असाधारणी मूलभूतेनैव ग्राह्या, न केवलम्, यतो भक्तिः प्राप्यते, स एव वेदानुसारी। किन्तु यत्रापि तिष्ठति, तेनापि तथा भाव्यमिति नाग्नजितीत्युक्तम्। पितुरनुसारिणी, न मातुरिति ज्ञापयितुं च। 'धन्या पितृमुखी कन्या' इति वाक्यात्। नृपेति स्नेहार्थं सम्बोधनमनासक्त्यर्थं च ॥ ३२ ॥

**श्रीविट्ठलरायात्मजश्रीवल्लभकृतलेखः**

**विन्दानुविन्दावित्यत्र**। **द्वितीयेति**। अभक्तदुर्योधनादिपक्षस्थेत्यर्थः। **नग्नजिदित्यत्र ज्ञाने** सर्वे इति। प्रापञ्चिकाः सर्व एव पदार्था ज्ञाने विरोधिनः। भक्तौ तु प्रकृतिरेव विरोधिनी। अतोत्र गोवृषाः सप्तव्यसनात्मका बाधकत्वेनोक्ता इत्यर्थः। 'क्षुत्पिपासे तथा रोगाः कर्माणि द्विविधानि च। लोकोपद्रवरूपाणि चत्वार्यावश्यकानि हि। द्यूतं पानं स्त्रियश्चेति त्रीण्यनावश्यकानि ही'ति सप्तव्यसनानि। **अन्यथेति** सप्तव्यसनानां बाधकत्वाभावे इत्यर्थः। तथा च दास्यान्तैः सप्तभिर्व्यसननिराकृतौ सख्यात्मनिवेदने भगवता संपाद्येते इत्यर्थः। **उत्कर्षवादा** इति। अधमेषु भक्तिकथनमसत्यापि भक्तिरुद्धर्तुं शक्तेति भक्त्युत्कर्षसूचनार्थमित्यर्थः। **अन्यथेति**। अधमेष्वपि भक्तेः सत्यत्वे भक्तौ सदाचारशासनं व्यर्थं स्यात्। **सहस्रश** इति। दृष्टः प्रत्यक्षविषयः प्रत्ययोनुभावो येषां तादृशनि रूपाणि भगवदंशाः संपादयन्ति। नीचयोनिषु जाता अपि भक्तिप्राबल्यादनुभावं प्रदर्शयन्ति। परन्तु सा भक्तिः सत्या सदाचारसिद्ध न भवतीति पूर्वेणान्वयः।

**श्रीसुबोधिनीसारः**

ऊर्जिते गुणसमृद्धे सुपुण्य ऋतुर्ऋक्षं च यस्मिन् तस्मिन्काले कालिंदीमुपयेमे परिणीतवान्। स्वानां परमं मंगलं यस्मिंस्तं परमानन्दं वितन्वन् विस्तारयन् सन् ॥ २९ ॥ विंदोनुविंद इति द्वौ आवंत्यौ उज्जयिनीराजौ दुर्योधनस्य वशौ

अनुकूली अनुगी च वस्तुतस्तु विशेष्यपरत्वमूह्यम्। स्वयंवरे कृष्णे सक्तां धृतचित्तां स्वभगिनीं निवारितवन्तौ ॥ ३० ॥ पितुः स्वसुर्भगिन्या राजाधिदेव्याः तनयां पुत्रीं मित्रविंदां प्रसह्य बलात्कृष्णो हृतवान् राज्ञां प्रपश्यतां सतां हे राजन् ॥ ३१ ॥ कौसल्योऽयोध्याधिपो नग्नजिन्नाम राजातिधार्मिक आसीत् तस्य राज्ञो देवी नाग्नजिती कन्या पितृनामतः स्वतः सत्यानाम्न्यासीत् हे नृप तीक्ष्णानि शृंगाणि येषां तान् सुदुर्धर्षान् असह्यान् वीराणां गंधमपि न सहंत इति तथा तान् खलान् दुष्टान् सप्त गोवृषान् वृषभोत्तमान् अजित्वा तां कन्यां नृपा वोढुं परिणेतुं न शेकुः न समर्था बभूवुः ॥ ३२-३३ ॥

**गोस्वामिश्रीगिरिधरलालकृताबालप्रबोधिनी**

सुपुण्यो विवाहयोग्यः ऋतुः ऋक्षं नक्षत्रं च यस्मिन् तस्मिन्नूर्जिते ग्रहबलवति मुहूर्ते परममङ्गलरूपो भगवान् स्वानां स्वभक्तानां द्वारकौकसां परमानन्दं विस्तारयन् कालिन्दीमुपयेमे विवाहितवान् ॥ २९ ॥ अथ पञ्चमं मित्रविन्दाविवाहमाह—द्वाभ्याम्। आवन्त्यौ अवन्तीराजानौ विन्दानुविन्दौ स्वयंवरे कृष्णे सक्तां कृष्णं वरितुमुद्युक्तां स्वभगिनीं न्यषेधतामित्यन्वयः। निषेधे हेतुमाह—दुर्योधनवशानुगाविति। भगवद्द्वेषिणो दुर्योधनस्य वशवर्तित्वात्तदननुमतत्वात् कृष्णवरणं निषेधितवन्ताविंत्यर्थः ॥ ३० ॥ 'राज्ञामप्येवं राक्षसो विवाहो भवतीति तव प्रसिद्धमेव' इति सूचयन् सम्बोधयति—राजन्निति। ततश्च पितृष्वसुः स्वपितृभगिन्याः राजाधिदेव्यास्तनयां मित्रविन्दां राज्ञां प्रपश्यतामेव सतां प्रसह्य बलात् कृष्णो हृतवान् इत्यर्थः ॥३१॥ अथ षष्ठं नाग्नजितीविवाहमाह—नग्नजिदिति। हे नृप ! कौशल्यः कौशलदेशाधिपतिरयोध्यावासी नग्नजिन्नाम राजाऽऽसीत्। तस्य भगवत्सम्बन्धयोग्यतां सूचयन्नाह—अतिधार्मिक इति। तस्य नाग्नजिती पितृनाम्ना प्रसिद्धा देवी कान्तिमती सत्यानाम कन्याऽभवत् ॥ ३२ ॥

**अन्वितार्थप्रकाशिका**

अथेति। सुपुण्यो विवाहयोग्यः ऋतुः ऋक्षं नक्षत्रं च यस्मिन् तस्मिन्नूर्जिते ग्रहबलवति मुहूर्ते परममङ्गलरूपो भगवान् स्वानां स्वभक्तानां द्वारकौकसां परमानन्दं वितन्वन् विस्तारयन् कालिन्दीम् उपयेमे विवाहितवान् ॥ २९ ॥ पञ्चमं विवाहमाह—विन्देति। दुर्योधनस्य भगवद्द्वेषिणः वशानुगौ इच्छानुसारिणौ आवन्त्यौ अवन्तीस्वामिनौ विन्दानुविन्दौ स्वयंवरे कृष्णे सक्तां कृष्णं वरितुमुद्युक्ताँ स्वभगिनीं न्यषेधताम् ॥ ३० ॥ राजेति। हे राजन् ! भ्रातृभ्यां कृष्णाय स्वभगिनीदाननिषेधे कृते पितृष्वसुः स्वपितृभगिन्याः राजाधिदेव्यास्तनयां मित्रविन्दां राज्ञां प्रपश्यतामेव सतां प्रसह्य बलात्कृष्णो हृतवान् ॥३१॥ षष्ठं विवाहमाह—नग्नजिदिति। हे नृप ! अतिधार्मिकः कौसल्यः कोसलदेशाधिपतिरयोध्यावासी नग्नजिन्नाम राजाऽऽसीत्। तस्य नाग्नजितीति पितृनाम्ना प्रसिद्धा देवी कान्तिमती सत्यानाम कन्याऽभवत् ॥ ३२ ॥

**श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्**

अथ पंचमं मित्रविंदा पाणिग्रहणं प्रकारमाह द्वाभ्यां विंदेति। विंदानुविंदौ द्वौ आवंत्यौ अवंतिपुरस्य राजानौ ॥ २९ ॥ राजाधिदेव्यास्तत्संज्ञायाः पितृष्वसुः पुत्रीं ॥ ३० ॥ षष्ठं विवाहमाह नग्नजिदिति। कौसल्य अयोध्यास्वामी तस्य सत्यां संज्ञा कन्या अभवत्। कीदृशी देवी द्योतमाना। तत्पुत्रीत्वान्नाग्नजिती ॥ ३१ ॥ वीरस्य शूरस्य गंधमप्यसहमानान्। खलान् दुर्दांतान्। दुर्द्धर्षान् गृहीतुमयोग्यान् अजित्वा तां वोढुं परिणेतुं ॥ ३२ ॥

**भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी**

अथेति। अथानन्तरं, ऊर्जिते ग्रहबलवति, सुपुण्योऽनुकूलः ऋतुः ऋक्षं नक्षत्रं च यस्मिंस्तस्मिन् मुहूर्त्ते, स्वानां द्वारकौकसां, परं सर्वोत्तमं आनन्दं, वितन्वन् विस्तारयन्, परममङ्गलः भगवान्, कालिन्दीं, उपयेमे विवाहितवान् ॥ २९ ॥ अथ पञ्चमं मित्रविन्दाविवाहं प्रस्तौति। विन्दानुविन्दाविति। आवन्त्यावबन्तीराजानौ, विन्दानुविन्दौ, दुर्योधनवशं दुर्योधनाधीनत्वमनुगच्छत इति तथाभूतौ सन्तौ, स्वयंवरे कृष्णे सक्तामासक्तिं प्राप्तां, स्वभगिनीं, न्यषेधताम् ॥ ३० ॥ राजाधिदेव्या इति। हे राजन्, तदा कृष्णः भगवान्, पितृष्वसुः पितृभगिन्याः, राजाधिदेव्याः, तनयां पुत्रीं, मित्रविन्दां, राज्ञां प्रपश्यतां सतां प्रपश्यतो राज्ञोऽनादृत्यैवेत्यर्थः। प्रसह्य हठात्, हृतवान् ॥ ३१ ॥ अथ षष्ठं नाग्नजितीविवाहमनुवर्णयति। नग्नजिदिति। कौसल्यः कोसलदेशाधिपतिः, अयोध्याधिपतिरिति यावत्। अतिधार्मिकः, नग्नजिन्नाम नग्नजिदिति नाम्ना प्रसिद्धः, राजा आसीत्। हे नृप, तस्य राज्ञः, देवी कान्तिमती, नग्नजिन्नृपपुत्रीत्वान्नाग्नजितीति प्रसिद्धा, सत्या सत्याख्यया प्रसिद्धा, कन्या, अभवत् ॥ ३२ ॥

**कृष्णप्रिया**

वहाँ आकर उन्होंने विवाह के योग्य ऋतु और ज्योतिष शास्त्र के अनुसार प्रशंसित पवित्र लग्न में कालिन्दीजी का पाणिग्रहण किया। इससे उनके स्वजन-सम्बन्धियों को परम मङ्गल और परमानन्द की प्राप्ति हुई ॥ २९ ॥ अवन्ती ( उज्जैन )

देश के राजा थे विन्द और अनुविन्द। वे दुर्योधन के वशवर्ती तथा अनुयायी थे। उनकी बहिन मित्रविन्दा ने स्वयंबर में भगवान् श्रीकृष्ण को ही अपना पति बनाना चाहा। परन्तु विन्द और अनुविन्द ने अपनी बहिन को रोक दिया ॥ ३० ॥ परीक्षित्! मित्रविन्दा श्रीकृष्ण की फूआ राजाधि देवी की कन्या थी। भगवान् श्रीकृष्ण राजाओं की भरी सभा में उसे बलपूर्वक हर ले गये, सब लोग अपना-सा मुंह लिये देखते ही रह गये ॥ ३१ ॥ परीक्षित्! कोसल देश के राजा थे नग्नजित्। वे अत्यन्त धार्मिक थे। उनकी परम सुन्दरी कन्या का नाम था सत्या। नग्नजित् की पुत्रीहोने से वह नाग्नजिती भी कहलाती थी ॥ ३२ ॥

**न तां शेकुर्नृपा वोढुमजित्वा सप्त गोवृषान्। तीक्ष्णश्रृङ्गान् सुदुर्धर्षान् [१]वीरगन्धासहान् खलान् ॥ ३३ ॥**

**तां श्रुत्वा वृषजिल्लभ्यां भगवान् सात्वतां पतिः। जगाम [२]कौसल्यपुरं सैन्येन महता वृतः ॥ ३४ ॥**

**स कोसलपतिः प्रीतः प्रत्युत्थानासनादिभिः। अर्हणेनापि गुरुणा पूजयन् [३]प्रतिनन्दितः ॥ ३५ ॥**

**वरं [४]विलोक्याभिमतं [५]समागतं नरेन्द्रकन्या चकमे रमापतिम्।**

**भूयादयं मे [६]पतिराशिषोऽमलाः करोतु सत्या[७] यदि मे धृतो व्रतैः ॥ ३६ ॥**

**कर्दमक्षमा**

अन्वयः—नृपाः, तीक्ष्णश्रृङ्गान्, वीरगन्ध, असहान् खलान् सुदुर्धर्षान्, सप्तगोवृषान्, अजित्वा, तां, वढुं, न शेकुः ॥३३॥ भगवान्, सात्वतां, पतिः, वृषजिल्लभ्या, तां, श्रुत्वा, महता, सैन्येन, वृतः कौशल्यपुरं, जगाम ॥ ३४ ॥ सः, कोशलपतिः, प्रीतः, प्रत्युत्थान, आसनादिभिः, गुरुणा, अर्हणेन, तं, पूजयन्, प्रतिनन्दित, अपि ॥ ३५ ॥ तदा, सा, नरेन्द्रकन्या, तं समागतं, रमापतिं, अभिमतं, वरं विलोक्य, चकमे, यदि मे, व्रतैः धृतः, अयं, पतिः, सन्, अमलाः, आशिषः, सत्या, करोतु ॥ ३६ ॥

**श्रीधरस्वामिविरचिता भावार्थदीपिका**

वीरस्य गन्धमपि न सहंत इति तथा तान् खलान् दुर्वृत्तान् ॥ ३३ ॥ वृषान् जयति यस्तेन लभ्याम् ॥ ३४ ॥ प्रतिनन्दितस्तं प्रतिनन्दितवान्। श्रीकृष्णेन वा स प्रतिनन्दितः ॥ ३५-३९ ॥

**श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः**

तां सत्याम्। वीरान् शूरान् गंधयन्ति हिंसन्तीति वीरगन्धाः शूरोत्तमास्तैरपि न सह्यन्त इति। तथा वीरं राहुं गन्धयत्यल्पीकरोतीति वीरगन्धो विष्णुस्तदसहान् असुरावतारत्वात्तेषामिति। तन्त्रान्तरे विष्णुनैव सर्वागत्यागपूर्वं शिरोरूपत्वेन शेषणाद्राहुरल्पीकृत इत्युक्तमधस्तात्। "वीरो राहो हरो शक्रे भटे पुत्रे रसान्तरे। भ्रातरि शंकरगणे वीरा पतिसुतान्विता।" इति यादवः। 'गन्ध-हिंसालेशयोः' धातुः "घ्राणग्राह्यगुणे गन्धो लेशे ग्राहे च मारणे" इति च। स च तां श्रीभगवते दातुमिच्छन्नपि दुष्टजरासंधादिभ्यः बिभ्यदुपायमकरोदित्यभिप्रेत्याह—नेति। गोवृषानिति गोबलीवर्दवदधिकार्थम्। यद्वा—वृषश्रेष्ठान्। यद्वा-गोषु धेनुषु स्थितानदान्तान् वृषाञ्जित्वा बन्धनादिना वशान्कृत्वा। खलान् हिंस्रानसुरस्वभावत्वात्। तच्च द्वितीयस्कंधे 'ये च प्रलम्ब-' इत्यादौ सप्तोक्षणामपि गणनान्मुक्तिकथनाच्च। मुक्तिश्च भगवत्स्पर्शप्रभावेण देहान्ते ज्ञेया ॥ ३३ ॥ लभ्यां लब्धुं योग्याम्। भगवान्सर्वशक्तियुतः। सात्वतां भक्तानां पतिः, पलनशीलः। अतस्तत्रैव महता सैन्येनावृतः। सैन्येनेति राजांतरभयदानार्थमेव ॥ ३४ ॥ प्रतिनन्दितो जातश्लाघः। तं कृष्णम्। गुरुणाधिकतरेणार्हणेन पूजनसामग्र्याऽपूजयत्प्रतिनन्दितवान्। वृद्धत्वात्तं श्रीकृष्णोऽप्यादृतवानित्याह—श्रीकृष्णेनेति। गुरुणा सर्वश्रेष्ठेन। अर्हणेन सर्वपूज्येनापि स नग्नजित् प्रतिनन्दितो वाचाऽपूजीत्यर्थः। "गुरुस्तु गीष्पतौ श्रेष्ठे गुरुः पितरि दुर्भरे" इत्युज्ज्वलः। स च तस्मा एव कन्यां दातुं कृततादृशव्याजः। अत एव प्रीतः प्रथमस्तावल्लौकिकरीत्याऽऽसनादिभिः पूजयन् पुनरर्चनरीत्या तु अर्हणेनोद्वाहोचिततत्तद्द्रव्येणाप्यपूजयदिति ध्येयम् ॥ ३५ ॥ अभिमतमभीप्सितम्। वरं वरणयोग्यं जामातरम् "वरो ना रूपजामात्रोर्देवादेरीप्सितावृतौ" इति यादवः। चकमे इयेष। आशिषः अभिलाषान् "आशीराश्यहिदंष्ट्रायां शुभवाक्याभिलाषयोः" इति यादवः। यदि मे मया व्रतः व्रतसमूहोऽधृत। धरतेः कर्मणि लुङ्। चिणभावस्त्वार्षः। व्रतानां समूह इत्यस्मिन्नर्थेऽच्प्रत्ययः। यद्वा-मे आशिषः धृतं व्रतं मद्विवाहनियमो येन स कृष्णः सत्याः करोत्वित्यर्थः। एवं सदसि वृत्तमुक्तं, ततश्चात्मीयैः सहाभ्यंतरकक्षामानीते भगवति वृत्तमाह—वरमिति। विलोक्य चन्द्रशालागवाक्षत इति ज्ञेयम्। अभिमतमात्मनश्चिरादभीष्टम्, सर्वेषाञ्च संमतमित्यर्थः। यतः रमायाः

---

१. गन्धान्महाघनान्। २. कौशलपुरी-प्रा. पा.। ३. प्रत्यनन्दत-विज.। ४. त्रि-विज.। ५. धृतव्रतं-च. पु. टि. ६. राशिषां पति.—विज.; अनलः श्रीधर. टि.। ७. सत्या यदहं धृतव्रता-वीर; सत्यो यदि मे धृतव्रतः-विज.।

पूर्णलक्ष्मीरूपाया रुक्मिण्या अपि पतिं, तया पतित्वेन नित्यमाश्रितमिति सर्वोत्तमगुणमित्यर्थः। अतः सापत्नदुःखमपि न वितर्कितमिति भावः। सम्यग् वरौचित्येनांतःपुरपर्यंतमागतं विलोक्य साक्षाद्दृष्ट्वा चकमे, भावविशेषेण क्षुभ्यन्ती संकल्पयामासेत्यर्थः। नरेन्द्रस्य कन्येति कौशल्येन क्षोभाऽसहत्वं दर्शितम्। संकल्पमेवाह—भूयादिति। अनलश्चिरमिष्टदेवतात्वेनार्भ्यचितोऽग्निर्मे आशिषो वांछितानि सत्याः सफलाः करोतु। अत्रोत्कण्ठास्वाभाव्येन सम्यक्त्वेऽपि संदिहानेव साश्रगद्गदमाह—यदीति। यदि तत्पूजादिनियमो यत्नेन रक्षित इति। 'आशिषोऽमलाः' इति पाठेऽयं पतिरेव परमेश्वरत्वेन सत्याः करोत्वित्यन्वयः॥ ३६॥

### श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी

स च तां श्रीभगवते दातुमिच्छन्नपि भ्रातृव्यवृद्धवलाज्जरासन्धादिभ्यश्च बिभ्यदुपायमकरोदित्यभिप्रेत्याह—नेति। गोवृषानिति गोबलीवर्दबदनधिकार्थं, यद्वा; वृषश्रेष्ठान् यद्वा गोषु धेनुषु स्थितान् अदान्तान् वृषान् अजित्वा बन्धनादिना वशान् कृत्वा खलान् हिंस्रान् असुरस्वभावत्वात् तच्च द्वितीयस्कन्धे ये च प्रलम्बेत्यादौ सप्तोक्षस्यापि गणनात् मुक्तिकथनाच्च मुक्तिश्च भगवत्स्पर्शप्रभावेण देहान्ते ज्ञेया॥ ३३॥ भगवान् सर्वशक्तियुक्तः किञ्च सात्वतां भक्तानां पतिः पालनशीलः (सर्वराजकुलागमनविचारेण) अतस्तत्रैव महता सैन्येनावृतः सन् जगाम॥ ३४॥ स तस्मा एव कन्यां दातुं कृततादृशव्याजः अत एव प्रीतः प्रथमतस्तावल्लौकिकरीत्या आसनादिभिः पूजयन् पुनरर्चनशास्त्ररीत्या तु अर्हणेन तत्तत्पूजाद्रव्येणापि पूजयन्निति य ज्यम् आदिग्रहणात् पादप्रक्षालनव्यजनादिकं गृह्यते॥ ३४॥ एवं सदसि वृत्तमुक्तं ततश्चात्मीयैः सहाभ्यन्तरकक्षामानीते भगवति वृत्तमाह—वरमिति। विलोक्य चन्द्रशालागवाक्षत इति ज्ञेयम्। अभिमतम् आत्मनश्चिरादभीष्टं सर्वेषां च सम्मतमित्यर्थः। यतः रमायाः पूर्णलक्ष्मीरूपाया रुक्मिण्या अपि पतिं तया पतित्वेन नित्यमाश्रितमिति सर्वोत्तमगुणमित्यर्थः। अतः सापत्न्यदुःखमपि न वितर्कितमिति भावः। सम्यक् वरौचित्येनान्तःपुरपर्य्यन्तमागतं विलोक्य साक्षाद्दृष्ट्वा चकमे भावविशेषेण क्षुभ्यन्तो सङ्कल्पयामासेत्यर्थः। नरेन्द्रस्य कन्येति कौमल्येन क्षोभासहत्वं दर्शितम्, सङ्कल्पमेवाह—भूयादिति। अनलः चिरमिष्टदेवतात्वेनार्चितोऽग्निः मे आशिषः सत्याः सफलाः करोतु तत्रोत्कण्ठास्वाभाव्येन तदर्चनसम्यक्त्वेपि सन्दिहानेव साश्रगद्गदमाह यदीति यदि तत्पूजादिनियमो यत्नेन रक्षित इति आशिषोऽमला इति पाठे अयं पतिरेव सत्याः करोत्वित्यन्वयः॥ ३६॥

### श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी

स च तां श्रीभगवते दातुमिच्छन्नपि दुष्टजरासन्धादिभ्यो विभ्यदुपायमकरोदिति सूचयन्नाह—नेति। गोवृषान् गोषु श्रेष्ठान्; यद्वा, गोषु स्थितान् अवृद्धानभिनवान् वृषान्, अजित्वा बन्धनादिना वशे अकृत्वा, खलान् हिंस्रान्॥ ३३॥ भगवान् सर्व्वशक्तियुक्तः, किञ्च, सात्वतां भक्तानां पतिः पालकः, अतस्तत्रैव विवाहेच्छया महता सैन्येनावृतः सन् जगाम॥ ३४॥ सोऽतिधार्म्मिकत्वादिना प्रसिद्धः, किंवा तस्मै कन्यां दित्सुः, आदि-शब्दादर्घ्यपाद्यादीनि, गुरुणा श्रेष्ठेन अर्हणेन अन्येनापि भूषणादिपूजाद्रव्येण, अर्घ्यादि-शब्दान्तर्गतत्वसम्भवेऽपि पृथगुक्तिर्गुरुत्वस्य किंवा उपचारतः पृथक्त्वस्यापेक्षया॥ ३५॥ अभिमतमात्मनश्चिरादभीष्टम्, यतो रमापतिं लक्ष्मीनाथम्; यद्वा, श्रीरुक्मिणीस्वामिनमपि अभिमतं रूपगुणादिना आत्मनः सर्व्वेषां वा अभितः सम्मतम्, तत्र च सम्यक् स्वयमेव बन्धुभिः सहागतं विलोक्य साक्षाद्दृष्ट्वा चकमे कामयते स्म, यतो नरेन्द्रस्य कन्या सर्व्वरूपगुणाद्यलंकृतेत्यर्थः। कथं चकमे? तदाह—भूयादिति। अनलश्चिरमिष्टदेवतात्वेनार्च्चितोऽग्निर्मे आशिषो वाञ्छाः सत्याः सफलाः करोतु, बहुत्वं गौरवात्, तदर्थं निजसत्कर्म्माण्यर्पयति—यदीति। मे मया व्रत एकोऽप्युपवासादिधृतो नियमेन साधितः; यद्वा, तत्पूजादिनियमो यत्नेन रक्षितः॥ ३६॥

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका

नेति। खलान् दुर्वृत्तान् वीराणां गन्धमपि न सहन्त इति तथा तान् सोढुमशक्यान् गोवृषान् वृषभान् यो जयति तेन लभ्यां तां नाग्नजितीं तान् गोवृषानजित्वा गा अनुधावमानानिति गोशब्दाभिप्रायः वोढुमुद्वोढुं न शेकुः न प्रबभूवुः॥ ३३॥ तामिति। एवं स्थिते भगवान् तां वृषजितैव लभ्यां श्रुत्वा कौसल्यपुरमयोध्यां जगाम॥ ३४॥ स इति। स नग्नजित् प्रत्युत्थायासनादिभिर्महता अर्हणेन पूजासाधनेन पूजयन्ननुमोदितश्च भगवन्तमाह॥ ३५॥ उक्तिं विवक्षुस्तावत् नाग्नजित्युत्साहमनुवर्णयति—वरमिति। नरेन्द्रकन्या चकमे अकामयत किमित्ययमेव मे मम पतिर्भूयात्, कथम्? मदिच्छामात्रेण भूयादिति स्वयमेवाशङ्क्य कामयते मे ममाशिषः कामाः अमला निर्विघ्नाः सत्याः सतीश्च यथार्थाश्च करोतु भगवानिति शेषः। तत्र हेतुमुद्भावयति, यद्यहं धृतं व्रतं यया सा कृतपुण्या भवेयम् इत्यर्थः॥ ३६॥

### श्रीविजयध्वजतीर्थकृता पदरत्नावली

वीरान् शूरान् गन्धयन्ति, हिंसयन्तीति वीरगन्धाः तान् "गन्धो लेशे च हिंसायां घ्राणग्राहे प्रकीर्तितः" इति। वीरस्य राहोर्गन्ध इव गन्धो येषां तथा तान् "वीरो राहौ हरौ शक्रे इति वा महान्तो घना मेघा यथा नोलास्ते तथा तान् यद्वा महा-

कठिनान् महामुद्गरानिव स्थितान्वा "घनाः खलीनसम्पातमेघकाठिन्यमुद्गराः" इति ॥ ३३ ॥ वृषजिल्लभ्यां लब्धुं योग्यां सैन्येन सेनासमूहेन ॥ ३४ ॥ गुरुणा बहुमानेन महित्वेन ॥ ३५ ॥ अभिमतमभीष्टं वरं वरणयोग्यरूपं "वरो ना रूपजामात्रो-र्देवादेरीप्सितवृतौ" इति आशिषां भार्याभिलाषाणां पतिः साधकः "आशीरुरगदंष्ट्रायां शुभवाक्याभिलाषयोः" यदि मे मया व्रतः व्रतसमूहो धृतः अनुपयुक्तत्वेन निधिवत् भवत्कृतस्तर्हि स सत्यः सच्चिदानन्दात्मा श्रीकृष्णः करोतु मम पाणिग्रहणं करोत्विति शेषः । व्रतानां समूह इत्यस्मिन्नर्थे अच् प्रत्ययः यदि सत्यो धृतो व्रतोऽस्ति तर्हि स व्रतः स्वफलत्वेन कृष्णं नः पतिं करोत्विति वा ॥ ३६ ॥

**श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः**

खलान् हिंस्रान् असुरस्वभावत्वात् तच्च द्वितीयस्कन्धे ये च प्रलम्बखरदुर्दरेत्यादि सप्तोक्षाया गावो गणनात् मुक्ति-कथनाच्च । मुक्तिश्च श्रीभगवत्स्पर्शस्वभावेन देहान्ते ज्ञेया ॥ ३३-४३ ॥

**श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शिनी**

वोढुं विव्योढुम् ॥ ६३-३४ ॥ कृष्णं पूजयन् प्रतिनन्दितः कृष्णेनादृतोऽभूत् ॥३५॥ विलोक्य चन्द्रशालागवाक्षतः ॥३६॥

**गूढार्थदीपिनी**

वृषान् जयति यस्तेन लभ्याम् ॥ ३४ ॥ प्रीतः सन् अर्हणेन पूजनसामग्र्या तं कृष्णं पूजयन् स राजा तेनाऽपि कृष्णेनापि वृद्धत्वात् प्रतिनन्दितः वाचा सत्कृतः ॥ ३५ ॥ चकमे इयेष । यदि मे व्रतैर्नियमैः सह धृतो हृदि चिन्तितस्तर्हि स एव मे आशिषः कामनाः सत्याः पूर्णाः करोतु । काः । अयं मे पतिर्भूयादिति ॥ ३६ ॥

**श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः**

वीरस्य गन्धमपि न सहन्ते इति तथा तान् ॥ ३३ ॥ वृषान् जयतीति वृषजित्तेन लभ्याम् ॥ ३४ ॥ श्रीकृष्णेन प्रति-नन्दितः सः नग्नजित् श्रीकृष्णं पूजयन् प्रीतोऽभूत् ॥ ३५ ॥ नरेन्द्रकन्या सत्या रमापतिमभिमतं वरं विलोक्य अयं मे पति-र्भूयादिति चकमे कामयत मे आशिषः कामान् सत्याः सतीः अयं करोतु स्वप्राप्तौ स्वयं प्रापको भवत्विति भावः ॥ ३६ ॥

**श्रीसत्यधर्मकृता श्रीभागवतटिप्पणी**

आवन्त्यावचन्तिभवौ न्येषधतां निषिषिधतुः ॥३३॥ राजाधिदेव्या वसुदेवभगिन्यास्तन्नाम्न्या राज्ञां प्रपश्यतांताननादृत्य प्रसह्य हृतवान् । पञ्चमी मित्रविन्दा चेयम् ॥ ३४ ॥ नाम प्रसिद्धः । सत्या तस्या नीलेत्याह्वया नीलेत्याह्वयो यस्यः सा । विवक्षा-भावन्न सन्धिः । नीलेति विश्रुतेति पाठो ललितः ॥ ३५ ॥ वीरगन्धान् वीरगन्धयन्ति हिंसयन्ति ते तथा तान् । गन्धो लेशे च हिंसायां प्राणग्रहे प्रकीर्तित इति यादवः । महाघनानतिदृढान् । नैल्येन मेघसमान्वा ॥ ३६ ॥

**श्रीमद्वल्लभाचार्य्यकृता सुबोधिनी**

सा भगवन्निमित्तमेव कथं स्थितेति शङ्कां परिहर्तुं तत्प्राप्तौ व्यसनानीव प्रतिबन्धका वृषाः स्थिता इत्याह न तां शेकुरिति । यतो नृपा राजसाः । अत एव तां वोढुं सप्तगोवृषान् अवध्यान् रुधिरसम्बन्धमपि कारयितुमयुक्तान् स्वतः अजित्वा तां वोढुं न शक्ताः । सप्तभिर्मिलितैर्जये सप्तानां सा भवतीति वैदिके पक्षे स निषिद्ध इति नग्नजिता न क्रियते । 'तस्मात् नैका द्वौ पती विन्दत' इति श्रुतेः । वार्क्षीद्रौपदीप्रभृतिषु 'ते दश प्राणाः, एते चेन्द्राः, पञ्चमुखो वा महादेव' इति कालवशात्पुष्टिवशाद्वा प्रलयात्पूर्वमेवं भवतीति न मर्यादायामेवं कर्तुंयुक्तम् । तस्माद्भक्तिर्भगवतैव प्राप्तव्या, ज्ञानेन च भगवत्त्वमिति पूर्णबोधा एव भगवद्भक्ता भवन्ति । तान् वृषान् अजेयत्वार्थं वर्णयति तीक्ष्णशृङ्गानिति । शरीरेण दुष्टता निरूपिता । अजेयता च । सुदुर्मर्षा-निति । दुष्टो मर्षः क्रोधो येषामिति स्वभावदोषो निरूपितः । अन्तःकरणदोषो वा । इन्द्रियदोषानाह । वीरस्य गन्धमपि न सहन्त इति । खलानिति सहजो जीवदोषः । असुरास्ते जीवा इति । अतो दोषचतुष्टयादजेयाः ॥ ३३ ॥ अतः सर्वेषु निवृत्तेषु भगवान् प्रवृत्त इत्याह तां श्रुत्वेति । यो हि व्यसनापनुत्, स एव विषय इति लोके फलिष्यति ।

क्षुत्पिपासे तथा रोगाः कर्माणि द्विविधानि च । लोकोपद्रवरूपाणि चत्वार्यावश्यकानि हि ॥ १ ॥
द्यूतं पानं स्त्रियश्चेति त्रीण्यनावश्यकानि हि । मृगयादिर्न सर्वेषां तस्मान्न व्यसनानि हि ॥ २ ॥
विशेषेणासनं यत्र व्यसनं तत्प्रकीर्तितम् । ज्ञातेऽपि दोषे यस्यास्ति न निवृत्तिस्तदेव तत् ॥ ३ ॥

भगवानेव तानि दूरीकर्तुं शक्त इति वृषजिन्मात्रलभ्यां तां श्रुत्वा । समर्थो भगवान् । सात्त्वतां भक्तानां पतिः । अन्यथा भक्तोद्धारो न भवतीति स्वयं जगाम । कोसल्याः कोसलदेशराजानस्तेषां पुरमयोध्याम् । महता सैन्येन वृत इति । महत्त्वा-

काङ्क्षिणो राज्ञः संतोषार्थम्। 'देवानां पूरयोध्या' इत्यादिश्रुतौ नगर्या अपि दैत्यनिवारकत्वमुक्तम्॥ ३३॥ ततस्तस्याभिनन्दनमाह **स कौसलपतिरि**ति। महांश्चेन्नानुमन्येत, तदा बलादनभिप्रेतायां सम्बन्धिनी समीचीना न भवतीति तस्य पुरस्कार उच्यते। लौकिकन्यायेन स करिष्यतीति शङ्कां वारयितुमाह **प्रीत** इति। प्रत्युत्थानमासनं च आदिभूते येषाम् स्वयमुपविष्टः। **गुरुणा अर्हणेने**ति। अमूल्यद्रव्यैः पूजयामास। एवं कर्तुः कन्यादानमभिप्रेतं भवतीति। ततः **प्रत्यनन्दत** साधु समागतामिति प्रतिनन्दनं च कृतवान्। कदाचिद्भगवान् कृपां कुर्यात्, तदा कन्या कृतार्था भविष्यतीति। अनेन राजा सन्दिग्ध इत्युक्तम्। वृषजयाभावेऽपि॥ ३५॥ अन्ये तु निःसन्दिग्धा एव, प्रतिज्ञापूरणाभावेऽपि तन्मात्रादयः कन्या चेत्याह **वरं विलोक्ये**ति। कन्यया यो वरणीयः, सर्वैरपि, सोऽयं स्वयमागतो वरयितुम्, तत्रापि स्वस्याभिमतम्। **नरेन्द्रकन्या** स्वयमपि विचक्षणा। अप्रहतश्च भगवद्वरणमार्ग इति निरूपयितुं विशेषणमाह **रमापतिमि**ति। दृष्ट्वा दर्शनफलं प्रार्थयति **भूयादयं मे पति**रिति। ननु धर्मादीनां भगवति सामर्थ्याभावात् कथं भगवान् पतिर्भविष्यतीत्याशङ्क्याह **आशिषोऽमलाः सत्याः करोत्वि**ति। अयं भगवानेव एतत्सर्वं सम्पादयतु। स्वस्मिन् स्वयमेव शक्तः। नन्वयं फलरूपः कथं तत्कृते साधनतामापद्यत इति चेत्, तत्राह **यदि मे धृतो व्रतै**रिति। व्रतैर्भगवन्नियमैः यैर्भगवान् वशे भवति, तादृशैश्चेद्धृतः, तदा अस्मदधीन इति मे निर्दुष्टा आशिषः सत्याः करोतु। अनेन लोकप्रतीत्या गोपिकासु अन्यादृश्योऽप्याशिषः सत्याः करोतीति सूचितम्। अतो मम नास्त्येव सन्देह इति भावः। अनेन सर्वासां भगवानभिप्रेत इति निरूपितम्। अन्यथा व्रतकरण एव विरोधं कुर्युः॥ ३६॥

### श्रीविट्ठलरायात्मजश्रीवल्लभकृतलेखः

**न तां शेकुरि**त्यत्र। **ज्ञानेन** चेति। ज्ञानेन भगवत्त्वे सिद्धे तत्र स्थिता भक्तिः प्राप्यते इत्यर्थः। **तां श्रुत्वे**त्यत्र। **कर्माणि द्विविधानि** चेति। निषिद्धानि स्वर्णस्तेयादीनि, काम्यानि श्येनादीनि चेत्यर्थः।

### श्रीसुबोधिनी–सारः

वृषान् जयतीति तथा तेन लभ्यां प्राप्यां तां कन्यां श्रुत्वा सात्त्वतां पतिर्भगवान् महता सैन्येनावृतो युक्तः कौसल्यपुरमयोध्यां जगाम॥ ३४॥ **कौसलस्य** देशस्य पतिः स राजा प्रीतः प्रत्युत्थानं सम्मुखमागमनम् आसनं आदिना स्वागतादि तैः गुरुणा महताऽर्हणेन पूज्योपकरणेनापूजयत् कृष्णेन प्रतिनन्दितः श्लाघितः॥ ३५॥ अभिमतं स्वेप्सितं समागतं रमापतिं लक्ष्मीभर्तारं वरं विलोक्य दृष्ट्वा सभां गतं प्राप्तं वानरेन्द्रस्य राज्ञः कन्या चकमे उवास अयं मे मम पतिर्भूयात् यदि मे मया व्रतैः पूर्वं धृतः तदाऽमला आशिषः सत्या अयं श्रीकृष्णः करोतु॥ ३६॥

### गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

दुर्धर्षान् धर्षयितुं वशीकर्तुमशक्यान् सप्त गोवृषान् गा अनुधावमानान् मत्तान् वृषान् अजित्वा तां सत्यां वोढुमुद्वोढुं नृपा न शेकुरित्यन्वयः। दुर्धर्षत्वे हेतूनाह—तीक्ष्णशृङ्गानिति। वीराणां गन्धमपि न सहन्त इति तान्। तत्र हेतुमाह—खलानिति, दुर्वृत्तानित्यर्थः॥ ३३॥ एवं स्थिते वृषान् जयतीति वृषजित्, तेन लभ्यां तां श्रुत्वा सात्वतां यादवानां पतिः श्रीकृष्णो महता सैन्येन वृतः सन् कौशल्या कोशलदेशराजानस्तेषां पुरमयोध्यां जगामेत्यन्वयः। ननु 'वृषाणां दुर्जयत्वम्, तज्जयान्विना तस्या दुर्लभत्वं च श्रुत्वाऽपि कथं लल्लाभार्थं गत' इत्याशङ्क्याह—भगवत्त्वेन सामर्थ्यस्य विद्यमानत्वात् तान् जित्वा तद्ग्रहणनिश्चयेन गमनं युक्तमेवेत्याशयः॥ ३४॥ तदा स कोशलपतिर्नग्नजित् तमागतं दृष्ट्वा प्रीतः सन् प्रत्युत्थाय अग्रतो गत्वा समानीय आसनादिभिर्गुरुणा महता अर्हणेन पूजासाधनेन तं पूजयन् प्रतिनन्दितः स्वागतमिति वाचापि प्रतिनन्दनं कृतवान्, यद्वा भगवता प्रतिनन्दितः वाचा सत्कृतो जात इत्यर्थः॥ ३५॥ तदा च नरेन्द्रस्य नग्नजितः कन्या सत्या तं समागतं स्वाभिमतं वरं विलोक्य चकमे अकामयत। अभिमतवरत्वे हेतुमाह—रमापतिमिति। तत्कामनामेवाह—भूयादिति। यदि मे मया व्रतैरेतत्सन्तोषहेतुभिर्नियमैः सहायं भगवान् हृदि धृतः सर्वदा चिन्तितस्तदाऽयं मे पतिर्भूयात्। पतिश्च सन् अमला उत्कृष्टाः मम आशिषो मनोरथान् सत्याः सतीर्यथार्थाः करोतु॥ ३६॥

### अन्वितार्थप्रकाशिका

नेति। तीक्ष्णशृङ्गान् वीराणां गन्धमपि न सहन्त इति तान् खलान् दुर्वृत्तान् दुर्धर्षान् वशीकर्तुमशक्यान् सप्त गोवृषान् वृषश्रेष्ठान् वृषशब्द उत्तरपदे श्रेष्ठवचनः अजित्वा तां सत्यां वोढुं नृपा न शेकुः॥ ३३॥ तामिति। वृषान् जयतीति वृषजित् तेन लभ्यां तां श्रुत्वा भगवान् सात्वतां पतिः श्रीकृष्णो महता सैन्येन वृतः सन् कौसल्याः कोसलदेशराजानस्तेषां पुरमयोध्यां जगाम॥ ३४॥ स इति। तदा स कोसलपतिः नग्नजित् तमागतं दृष्ट्वा प्रीतः सन् प्रत्युत्थाय अग्रतो गत्वा समानीय आसनादिभिर्गुरुणा महता अर्हणेन पूजासाधनेन तं पूजयन् प्रतिनन्दितः वाचा सत्कृतो जात इत्यर्थः॥ ३५॥ वरमिति। तदा च नरेन्द्रस्य

नग्नजितः कन्या सत्या तं समागतं रमापतिं स्वाभिमतं वरं चन्द्रशालागवाक्षतो विलोक्य चकमे अकामयत। यदि मे मया व्रतैरेतत्सन्तोषहेतुभिर्नियमैः सहायं भगवान् हृदि धृतः सर्वदा चिन्तितस्तदाऽयं मे पतिर्भूयात्। पतिश्च सन् अमला उत्कृष्टाः ममाशिषो मनोरथान् सत्याः यथार्थाः करोतु ॥ ३६ ॥

**श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्**

यो वृषजित्तेन लभ्यां ॥ ३३ ॥ हरिणा प्रतिनंदितः प्रशंसितः कृष्णमपूजयत् ॥ ३४ ॥ व्रतैर्मे मया हरिर्धृतो हृदि ध्यातः मे धृतो वृत इति पाठे तु। मे मया धृतो ध्यानेन हृदि ध्यातः वरैर्वृत इत्यर्थः ॥ ३५ ॥ स्वकृतसेतोः परीप्सया रक्षया हेतुना याः लीलातनूः काले दधत् सः केनोपायेन मम तुष्येत् ॥ ३६–३७ ॥

**भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी**

न तामिति ॥ खलान् दुर्वृत्तान्, तीक्ष्णे शृङ्गे येषां तान्, सुदुर्द्धर्षान् सोढुमशक्यान्, वीराणां गन्धमपि न सहन्ते इति तथा तान्, सप्त सप्तसंख्याकान्, गोवृषान् वृषभान्, गामनु धावमानानिति गोशब्दाभिप्रायः। अजित्वा, नृपाः, तां वोढुं, न शेकुः ॥ ३३ ॥ तामिति ॥ सात्त्वतां पतिः भगवान् तां, वृषान् यो जयति तेन लभ्या तां श्रुत्वा, महता सैन्येन, वृतः सन्, कौसल्यपुरमयोध्यां, जगाम ॥ ३४ ॥ स इति ॥ कोसलपतिः, स नग्नजिन्नृपः, प्रीतः भगवन्तं दृष्ट्वा प्रसन्नतां प्राप्तः, प्रतिनन्दितः भगवता प्रशंसितः संश्च, प्रत्युत्थानासनादिभिः, महता अर्हणेनापि, अपूजयत् कृष्णं पूजयामास ॥ ३५ ॥ अथ तावन्नाग्नजित्युत्साहमनुवर्णयति ॥ वरमिति ॥ नरेन्द्रकन्या नाग्नजिती, समागतं स्वत एव समायातं, अभिमतं रमापतिं, वरं विलोक्य, चकमे अकामयत। किमित्यत आह। अयं श्रीकृष्णः, मे मम पतिः, भूयात्। कथं मदिच्छामात्रेण भूयादिति स्वयमेवाशङ्क्य कामयते। यद्यदि, अहं धृतं व्रतं यया सा, यद्यहं कृतपुण्या भवेयमित्यर्थः। तर्हि, भगवान् मे मम, आशिषः, कामान्, अमलाः निर्विघ्नाः, सत्याः सतीश्च, करोतु यथार्थतया संपादयत्वित्यर्थः ॥ ३६ ॥

**कृष्णप्रिया**

महाराज नग्नजित जी की प्रतिज्ञा थी जो सात दुर्दान्त बैलों को जीत कर बांध ले उसी राजा को कन्या समर्पित करें। लेकिन उन दुर्दान्त बैलों को बेधने के लिये या बांधने के लिये सफल न हुए। बैल के शींग बड़े एवं तीक्ष्ण थे और किसी वीर पुरुष की गंध भी नहीं सह सकते थे इसलिये नाग्नजिती का व्याह नहीं हुआ ॥ ३३ ॥ यदुकुल शिरोमणि श्रीद्वारिकाधीश भगवान् ने जब यह समाचार सुना कि जो वीर पुरुष इन बैलों को जोत लेगा उस वीर पुरुष को सत्या प्राप्त होगी तब पूर्ण-पुरुषोत्तम चतुरङ्गिणी विपुल सेना लेकर कोशलपुरी पधारे ॥ ३४ ॥ श्रीकोसलाधीश नग्नजित महाराज भगवान श्रीकृष्ण के सत्कार के लिये पहुँच गये। राजा ने अत्यंत प्रसन्नता से अर्घ प्रदान, दान, मान सत्कार किया। यदुनाथ भगवान ने भी राजा नग्नजित जी का आदर से अभिनन्दन किया ॥ ३५ ॥ नग्नजित महाराज की कुमारी श्री सत्या ने देखा कि मैं चिरकाल से जिनकी अभिलाषा कर रही हूँ वही रमानाथ द्वारिकाधीश श्रीकृष्ण भगवान् कृपा करके स्वयं यहाँ पधारे हैं; तब सत्याजी ने मन ही मन मनोरथ किया कि यदि मैंने तप व्रत जप नियम आदि का अनुष्ठान करके श्रीकृष्ण प्रभु का चिन्तन किया है तो ये ही रमानाथ मेरे नाथ हों और मेरी सर्व विशुद्ध कामनाओं को पूर्ण करें ॥ ३६ ॥

**[1]यत्पादपङ्कजरजः शिरसा बिभर्ति श्रीरब्जजः[2] सगिरिशः सहलोकपालैः।**
**लीलातनूः[3] स्वकृतसेतुपरीप्सयासौ[4] काले दधत् स भगवान् मम[5] केन तुष्येत् ॥ ३७ ॥**
**अर्चितं पुनरित्याह नारायण जगत्पते। आत्मानन्देन[6] पूर्णस्य करवाणि किमल्पकः ॥ ३८ ॥**

**श्रीशुक उवाच**

**तमाह भगवान्[7] हृष्टः कृतासनपरिग्रहः। मेघगम्भीरया वाचा सस्मितं कुरुनन्दन ॥ ३९ ॥[8]**

**श्रीभगवानुवाच**

**नरेन्द्र याच्ञा कविभिर्विगर्हिता राजन्यबन्धोर्निजधर्मवर्तिनः।**
**तथापि याचे तव सौहृदेच्छया कन्यां त्वदीयां न हि शुल्कदा वयम् ॥ ४० ॥**

---

१. अयं श्लोकः ३८ श्लोकस्य पश्चात्–विज.। २. श्च गि–विज.। ३. तनुः–विज.। ४. प्सया यः–वीर. विज.। ५. स्वकृतेन–विज.। ६. आत्मना देव–विज.। ७. अथ त्रिषष्टीतमी–विज.। ८. नीता यथा–विज.।

### कर्दमक्षमा

अन्वयः—यत्पादपङ्कजरजः, श्रीः, सहलोकपालैः, सगिरिशः, अब्जजः, शिरसा, बिभर्ति, असौ, स्वकृतसेतुपरीप्सया, काले, लीलातनूः, दधत्, सः, भगवान्, मम, केन, तुष्येत् ॥ ३७ ॥ राजन्! अर्चितम्, पुनः, इति, आह, हे नारायणः! हे जगत्पते! आत्मानन्देन, पूर्णस्य, अल्पकः, किम्, करवाणि ? ॥ ३८ ॥ श्रीशुक उवाच—कुरुनन्दन! कृतासनपरिग्रहः, भगवान्, हृष्टः, सस्मितम्, मेघगम्भीरया, वाचा, तम्, आह ॥ ३९ ॥ श्री भगवान् उवाच—नरेन्द्र, निजधर्मवर्तिनः, राजन्यबन्धोः, याञ्चा, कविभिः, विगर्हिता, तथा, अपि, तव, सौहृदेच्छया, त्वदीयाम्, कन्याम्, याचे, वयम्, शुल्कदाः, न, हि ॥ ४० ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

हे नरेन्द्र। राजन्यबंधोः क्षत्रियस्य। शुल्कदा द्रव्यादिप्रदाः ॥ ४० ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

स्वकृतसेतुपरीप्सया स्वकल्पितवर्णाश्रमधर्मलक्षणसेतुपालनेच्छया। मम केन स्वीयेन कर्मणा तुष्यत्वित्यर्थः। पुनस्तस्य माहात्म्यविशेषेण तदेवोपपादयति—यदिति। श्र्यादीनां यथापूर्वं श्रैष्ठ्यम्, तथा निर्देशश्च कनिष्ठकनिष्ठक्रमेण निजातितुच्छतां बोधयितुम्। तत्राब्जजादिगिरिशस्य कनिष्ठत्वं, पुत्रत्वेन शिष्यत्वव्यवहारात्। अब्जजस्य साक्षादेव श्रीकृष्णाष्टादशाक्षरोपासकत्वाच्च। योदधत् अदधादिति सर्वावतारित्वं सूचितम्। 'परीप्सयेशः' इति क्वचित्पाठः। परीप्सया परिपालनेच्छयेत्यर्थः। यः स्वयमधुना वर्तते स इति विश्वनाथः। 'कृष्णस्तु भगवान्स्वयम्' इत्यादौ प्रसिद्धो भगवान् केन हेतुना साधनेन वा ममाधमस्य भूयात्, तन्न संभावयामीत्यर्थः ॥ ३७ ॥ अल्पकः अतितुच्छः। अर्चितं पुनरिति—अर्चितं तु संतमित्यर्थः। नग्नजिदिति शेषः। नारायण हे सर्वजीवाश्रय। अतो जगत्पते सर्वद्रव्यस्वामिन्। विशेषतः स्वानंदपूर्णस्य तवेत्याद्यप्रयोगस्तथाग्रे प्रत्यक्षत्वेऽपि परोक्षवादः परमगौरवात्। अहं तव किं करवाणि, तत्राप्यल्पकः अल्पतोऽप्यल्पः ॥ ३८ ॥ तं नग्नजितम्। तमाहेत्यर्धेन तस्य भाग्यस्य सूचनम्। तत्रापि मेघेत्यर्द्धेन तन्माधुर्यकृपाभ्यां हृतमनस्त्वस्य। कृतः आसनस्य चिरमर्पितस्यापि परिग्रहः स्वीकारो येन स इति निजाभिलषितस्य परस्वीकारेण मुदा सम्यगुपवेशात्। सस्मितमिति स्वभावादेव, तत्रापि विशेषतः स्वाभिलषितलाभादेव किंचिल्लज्जातश्च। अत एव कौतुकात्संबोधयति—हे कुरुनंदनेति। श्रीकृष्णयशःश्रवणेन स्ववंशमूलकुरुरपि त्वया नंदितोस्ति। "नंदंति स्वकुलोद्भूतं दृष्ट्वा विष्णुपरायणम्। स्वर्गताः पितरोऽनेन वयं धन्यीकृता इति ॥" इति विष्णुधर्मोत्तरोक्तन्यायेनेति भावः ॥ ३९ ॥ यद्यपि गर्हिता तथापीत्यन्वयः। "शुल्कं घट्टादिदेये स्याद्वरादर्थग्रहेऽस्त्रियाम्" इति मेदिनी। तादृशोऽप्यहं स्वजनप्रेमानंदमयनरलीलामेवानुसरन्नस्मि, तत्रापि त्वद्विधप्रेम्णा क्वचित्तदुचितमर्यादामुल्लंघयन्नस्मीति सिद्धांतव्यंजिकया क्षत्रियोचितप्रार्थनाचातुर्याऽऽह—नरेन्द्रेति, श्वशुरोचितामंत्रणं संबंधस्य दृढीभावाय। वस्तुतस्तु याचकेनादावेव प्रभुः स्तोतव्यः, पश्चान्निजार्थप्रकाशनं कार्यमिति बोधनायैवेति। यद्वा—त्वं नरेषु इंद्र इवाभिलषितवर्षणादिति भावः। यद्वा—त्वं न केवलं नृपः किन्तु नरेन्द्रोऽसीति। षोडशयोजनमितभूशास्ता नृपः, ततः शतगुणाधिको नरेन्द्र इति विवृतं ब्रह्मवैवर्ते। अर्थाच्छतशो नृपा अपि त्वदाज्ञां धारयन्ति नराणान्तु का कथात्रेति भावः। व्यासाद्यैः क्षत्रियाधमस्य याच्ञा विशेषेण गर्हिता निन्दिता। तत्र निजधर्ममाश्रितस्य क्षत्रियस्य तु सर्वथैव सा निंद्या, मम तु सर्वक्षत्रियश्रेष्ठस्य का तत्र कथेति भावः। "वाल्मीकिव्यासवासिष्ठमुख्या हि कवयो मताः" इत्युक्तेर्व्यासादयः कवयो मुख्यधर्मप्रणेतारस्तदनुगता अन्येपीति ज्ञेयम्। हरणस्यैव क्षत्रियधर्मत्वात्। सौहृदेच्छया त्वया सह सुसम्बंधार्थम्। यद्वा—तव यत्सौहृदं मयि प्रेम तेन या मदिच्छा तया। क्षत्रियधर्ममेव कथयन्बलीवर्दबंधनरूपं तच्छुल्कं विचार्य निगूढमाह—न हीति। वयं क्षत्रियाः। शुल्कदा द्रव्यदायिन इत्यर्थः ॥ ४० ॥

### श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी

अर्चितं पुनरिति अर्चितं तु सन्तमित्यर्थः। नग्नजिदिति शेषः। नारायण हे सर्वजीवाश्रय! अतो जगत्पते सर्वद्रव्यस्वामिन्! विशेषतः स्वानन्दपूर्णस्य तवेत्याद्यप्रयोगस्तथाग्रे प्रत्यक्षत्वेपि परोक्षवादः परमगौरवात् अतोऽहं किं तव करवाणि तत्राप्यल्पकः अल्पतोप्यल्पः ॥ ३७ ॥ पुनस्तस्य माहात्म्यविशेषेण तदेवोपपादयति–यदिति श्र्यादीनां यथा पूर्वं श्रैष्ठ्यं तथा निर्देशश्च कनिष्ठकनिष्ठक्रमेण निजातितुच्छतां बोधयितुं तत्राब्जजादगिरिशस्य कनिष्ठत्वं पुत्रत्वेन शिष्यत्वव्यवहारात् अब्जजस्य साक्षादेव श्रीकृष्णाष्टादशाक्षरोपासकत्वाच्च योऽदधत् अदधात् इति सर्वावतारित्वं सूचितं परीप्सयेश इति क्वचित्पाठः परीप्सया परिपालनेच्छयेत्यर्थः। स कृष्णस्तु भगवान् स्वयमित्यादौ प्रसिद्धो भगवान् केन हेतुना साधनेन वा ममाधमस्य तुष्येत् तन्न सम्भावयामीत्यर्थः ॥ ३८ ॥ तमाहेत्यर्द्धेन तदीयस्य महाभाग्यस्य सूचनं तत्रापि मेघेत्यर्द्धेन तन्माधुर्य्यकृपाभ्यां हृतमनस्त्वस्य

कृत आसनस्य चिरमर्पितस्यापि परिग्रहः स्वीकारो येन स इति निजाभिलषितस्य परमभक्त्या स्वीकारदर्शनेन मुदा सम्यगुपवेशात् सस्मितमिति स्वभावादेव तत्रापि विशेषतः स्वाभिलषितलाभात् किञ्चल्लजातश्च अत एव कौतुकात् सम्बोधयति कुरुनन्दनेति ॥ ३९ ॥ तादृशोऽप्यहं स्वजनप्रेमानन्दमयनरलीलामेवानुसरन्नस्मि तत्रापि त्वद्विधप्रेम्णा क्वचित्तदुचितमर्य्यादामप्युल्लङ्घयन्नस्मीति सिद्धान्तव्यञ्जिकया क्षत्रियोचितप्रार्थनाचातुर्य्याह—नरेन्द्रेति। एतच्च श्वशुरोचितसम्बोधनं सम्बन्धस्य दृढीभावाय कविभिः श्रीव्यासादिभिः राजन्यबन्धोः क्षत्रियाधमस्यापि विशेषेण गर्हिता तत्र च निजधर्मानुवर्त्तिन इत्यर्थः। बलेन हरणस्यैव तत्र श्लाघ्यत्वात् तव सौहृदेच्छया त्वया सह सुख सम्बन्धार्थं यद्वा तव यत्सौहृदं मयि प्रेम तेन या मदिच्छा तया क्षत्रियधर्ममेव कथयन् बलीवर्दबन्धनरूपं तच्छुकं विचार्य्य निगूढनर्ममाह न हीति वयं क्षत्रियाः ॥ ४० ॥

### श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी

ननु तथापि भक्त्या तुष्यामीति चेत्तत्राह–यदिति। यस्य पादपंकजयोरेकस्य रज एकमेव, अब्जज इति साक्षान्नाभिपद्मजतया पुत्रत्वं सूचितम्। गिरिशेन सहित इति तस्य श्रीब्रह्मतः प्रादुर्भावेन तदृष्ट्यैव तद्धारणेन गौणत्वात्। एवं लोकपालैरिन्द्रादिभिरित्यपि ज्ञेयम्। श्र्यादीनां यथापूर्वं श्रैष्ठ्यम्। अत एवं ज्ञेयम्—अतिसामीप्येन प्राक् श्रीः, ततः पुत्रतया तत्स्नेहेनात्मजः, ततस्तत्स्नेहेन गिरिशः, ततो लोकपालनेन तत्कृपयेन्द्रादयो बिभ्रतीति; यद्वा, सोऽनिर्व्वचनीयप्रभावः सखित्वेन प्रसिद्धो गिरिशश्च, तस्य वेन्द्रादिभिः साहित्यं सुदुर्लभस्य भगवतः प्राप्त्यर्थम्, प्रायस्तैस्तस्यैव पूजनात्। तच्च श्रीहरिवंशे पारिजातहरणप्रसंगे व्यक्तमेव। श्र्यादयो यस्य तथा भक्तिं कुर्व्वन्ति, तद्भक्तौ कोऽहमिति भावः। किञ्च, अवतारेषु तेषां तद्धारणमपि दुर्लभमित्याशयेनाह—लीलेति। विचित्रक्रीडामयमूर्त्तीः स्वकृतस्य सेतोस्तत्तन्मर्य्यादायाः परीप्सया प्रतिपालनार्थं यथाकालं योऽदधत् अदधादिति तत्तदर्थं विचित्रक्रीड़ाभिनिविष्टे त्वयि तदानीं तेषां प्रवेशाभावादिति भावः। यद्वा, कृपया कृतेष्ववतारेषु मध्ये कस्यचित् कथञ्चिद्भक्त्या तोषो वा घटताम्, अवतारिणन्तु तव न सम्भवेदेवेत्याह—लीलेति। अर्थः स एव। इत्यस्माकं स्वधर्म्ममर्य्यादातिक्रमेण भक्त्याधिकारोऽपि नास्तीति भावः। तत्रापि भगवानधुना निजाशेषैश्वर्य्यप्रकटनपरः, अतः केन हेतुना साधनेन वा ममाधमस्य तुष्येत्, सम्भावनायां सप्तमी, अपि तु न तुष्येदेवेत्यर्थः ॥ ३७ ॥ विज्ञापनार्थं भक्तिभरेण वा पुनरर्च्चितं सन्तम्, नारायणः हे सर्व्वजीवाश्रय! अतो जगतः पते पालक! तच्च कराद्यपेक्षया मादृशां प्रजापालनमिव न स्यात्, अनन्यापेक्षकत्वादित्याह आत्मेति; स्वाभाविकसुखेनैव; यद्वा, नारायण! हे परमेश्वर! अतो जगत्पते! सर्व्वद्रव्यस्वामिन्। विशेषतः स्वानन्दपूर्णस्य तवेत्याद्यप्रयोगः, अग्रे च प्रत्यक्षत्वेऽपि परोक्षवद्वादः परमगौरवात्, अतोऽहं तव किं करवाणि, तत्राप्यल्पकः, अल्पार्थे कः, किञ्चिदपि कर्त्तुमसमर्थोऽतिदीन इत्यर्थः ॥ ३८ ॥ भगवान् भक्तवात्सल्याद्यशेषगुणयुक्तः, यतः कृष्णः, किंवा अतएव भक्तानां चित्ताकर्षकः, अतो वात्सल्येन तस्य चित्तमाकर्ष्टुमाहेति भावः। कृत आसनस्य चिरमर्पितस्यापि परिग्रहः स्वीकारो येन सः, तत्स्तुत्यपेक्षया क्षणं स्थित्वा पश्चादेवोपवेशात्, सस्मितमिति स्वभावादेव, किंवा तस्मिन् प्रसादात्, किंवा तस्य समयं भावञ्च ज्ञात्वापि कन्याप्रार्थनया स्वयमेवान्तः कौतुकोदयामिति दिक्। अतएव कौतुकात् सम्बोधयति—कुरुनन्दनेति ॥ ४९ ॥ कन्याप्रदानेनाधुनाहं तुष्येयमित्याशयेनाह—नरेन्द्रेति। कविभिः श्रीव्यासादिभिः; राजन्यबन्धोः क्षत्रियाधमस्यापि गर्हिता तत्र च निजधर्म्मानुवर्त्तिनो विशेषेण गर्हितेत्यर्थः,—स्वयम्वरादौ तेषां कन्याहरणादेरेव श्लाघ्यत्वात्; तच्च त्वया महाराजेन ज्ञायत एवेत्याह–हे नरेन्द्रेति। तव सौहृदेच्छया त्वया सह सुसम्बन्धार्थम्, यद्वा, तव यत् सौहृदं मयि प्रेम तेन या मदिच्छा तया, तथापि हि निश्चितं वयं शुल्कदा न भवामः, कुलपूजार्थं शुल्कं न दास्याम इत्यर्थः,–महाकुलीनेषु यदुषु जातत्वात्, अन्यथा न्यूनत्वप्रसक्तिरिति भावः। अतएव यदुवर्गापेक्षया किंवा तेषु जन्मना आत्मनो बहुमानाद्बहुत्वम् ॥ ४० ॥

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका

अथोक्तिमाह—अर्चितमिति। यद्यपि सः कोसलपतिः प्राहेत्यनेनैवास्य राजोक्तित्वलाभस्तथा वरमित्यादिना व्यवहितत्वादत्रार्चितमाहेत्युक्तं पुनःशब्दो वाक्यालङ्कारे हे नारायण! हे जगत्पते! स्वानन्देनैव पूर्णस्य तवाल्पकः क्षुद्रोऽहं किं करवाणि न किमपि प्रियं कर्तुं शक्त इत्यर्थः। यद्वा, किङ्करवाणि किङ्करोहमत आज्ञापयेत्यर्थः। आत्मनः स्वाभाविककिङ्करतां द्योतयितुं नारायणेत्यादिसम्बोधनम् आत्मानन्देन पूर्णस्येति विशेषणं चेत्यवगन्तव्यम् ॥ ३७ ॥ अथ परत्वं व्यनक्ति–यत्पादेति। अब्जभवो ब्रह्मा स रुद्रः लोकपालैश्च सहितः श्रीर्लक्ष्मीश्च शिरसा यस्य तव पादपङ्कजरजो बिभर्त्ति एकवचनं प्रत्येकाभिप्रापकं नाहं नारायणः किन्तु यदुष्वन्यतम इत्यत आह—लीलातनूरिति। स्वैव त्वया कृताः ये धर्मसेतवो धर्ममर्यादास्तेषां परित्राणेच्छया काले धर्मज्ञानहानिकाले लीलातनूः लीलाविग्रहान् अनेनाकर्मवश्यत्वमुक्तं दधद्बिभ्राणः अनेन नारायण एव सन् धर्मपरित्राणाय यदुषु त्वमवतीर्ण इति लब्धम् एवम्विधो भगवान् मम केन कैङ्कर्येण तुष्टो भवेत् ॥ ३८ ॥ तमिति। कृत आसनपरिग्रहो येन स कृष्णस्तं कौसल्यं हे कुरुनन्दन! सस्मितेन सहितं यथा तया प्राह ॥ ३९ ॥ उक्तिमेवाह—नरेन्द्रेति। हे नरेन्द्र! यद्यपि स्वधर्मनिरतस्य राजन्यबन्धोः क्षत्रियस्य याच्ञा विगर्हिता निन्दिता प्रतिषिद्धेति यावत् तथापि सौहृदेच्छया त्वद्बन्धुत्वेच्छया त्वदीयां कन्यां याचे वयं शुल्कदा इत्यादिप्रदाः न भवामः ॥ ४० ॥

**श्रीविजयध्वजतीर्थकृता पदरत्नावली**

आत्मना स्वलाभेन ॥ ३७ ॥ स्वकृतसेतुपरीप्सया स्वकल्पितवर्णाश्रमलक्षणसेतुपालनेच्छया मयि स्थितः स्वेनैव कृतेन कर्मणा ॥ ३८-३९ ॥ विदुषो विद्वांसः स्वयम्वरादन्यत्र काले अयाचितारं वरमुत्तममाहुः पुरुषार्थभागिनां प्रयोजनांशभाजां प्रभूणां मध्ये स अर्थार्थी तां वेलां कालं विनाह्वाययत्यात्मानमिति शेषः। आह्वानमिति पाठे सो याचितां स्वयम्वरकालं विनापि स्वहूतिं प्रभूणामाह्वानमर्हतीति शेषः। वेलेति पाठे प्रभूणामाह्वानं विनापि स एव वेलाकालः स्वयम्वराख्य इत्याहुरित्यर्थः ॥४०॥ सामान्यमुक्त्वा विशिनष्टि—नरेन्द्रेति। राजन्यबन्धोः राज्ञां वंशे जातस्य निजधर्मवर्तिनः क्षात्रधर्ममनुवर्तमानस्य शुल्कदा वेतनप्रदाः ॥ ४१ ॥

**श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी**

परीप्सया परिपालनेच्छया तत्तत्काले दधत् प्रपञ्चे प्राकट्यात् पुष्यन् यः स्वयमधुना वर्त्तते सः ॥ ३७-३९ ॥ राजन्यबन्धोरतिनिकृष्टक्षत्रियस्यापि अहं रान्यजश्रेष्ठोऽपि याचे किन्तु वयं न शुल्कदा न द्रव्यादिदायिनः ॥ ४०-४१ ॥

**गूढार्थदीपिनी**

श्रीः लक्ष्मीः अब्जजो ब्रह्मा लोकपालैः सह यस्य पादरजः बिभर्ति स्वसेतूनां धर्ममर्यादानां परीप्सया परिपालनेच्छया तनूर्मूर्तीर्दधत् स ईश मम केन पुण्येन तुष्येत् ॥ ३७ ॥ अल्पकोऽतितुच्छः ॥ ३८ ॥ तं नग्नजितम्। कृतः आसनपरिग्रह आसनस्वीकारो येन सः ॥ ३९ ॥ यद्यपि गर्हिता तथापीत्यन्वयः। राजन्यबन्धोः क्षत्रियाधनस्यापि किं पुनरुत्कृष्टस्य ममेत्यर्थः ॥ ४० ॥

**श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः**

स्वकृतसेतूनां परीप्सया पालनेच्छया लीलातनूः काले तत्पालने दधत् अस्ति स भगवानयं मम केन सुकृतेन तुष्येत् ॥ ३७-३९ ॥ स्वानन्यभक्तायां सत्यायां प्रीत्यतिशयं द्योतयितुमाह—नरेन्द्रेति। राजन्यबन्धोर्निकृष्टक्षत्रियस्यापि किं पुनरुत्कृष्टस्य ममेति भावः तर्हि उत्कृष्टो धनं दत्वा कन्यां गृह्णातु तत्राह—न हीति ॥ ४० ॥

**श्रीसत्यधर्मकृता श्रीभागवतटिप्पणी**

वृषाञ्जयतीति वृषजित्तेन लभ्यम् ॥ ३७ ॥ गुरुणा महताऽर्हणेन पूजासाधनेन गुरुणा पुरोधसा सहेति वा ॥ ३८ ॥ त्रिलोक्याऽभिमतं समागतं रमापतिं नरेन्द्रकन्या चकमे। यदि मे मया धृतव्रतः सत्यस्तर्हि स व्रत एव तथा करोतु। यथाऽऽशिषां पतिर्मे पतिर्भूयात् ॥ ३९ ॥ हे देव। आत्मना पूर्णस्याल्पकोऽहं किं करवाणि। अल्पकोऽतिनीचस्त्वयि मयीति दयां कलयति सत्यहमल्पकः किम्। न। पूर्णस्याप्यात्मना देहेन करवाणि नमनं वेति शेषः। अर्चितमिति वाऽन्वेति। आत्मानन्देन पूर्णस्येति पाठ आनन्ददः ॥ ४० ॥

**श्रीमद्वल्लभाचार्य्यकृता सुबोधिनी**

अग्रे यत्पादपङ्कजेति श्लोकः कन्याया एव प्रार्थनारूप इति केचित्। केचित्तु राज्ञ इत्यग्रे पठन्ति। तत्र प्रसादः कन्याया एव युक्तः। अतोऽत्रैव व्याख्यायते। पूर्वं स्वव्रतविश्वासेन भगवान् करिष्यतीत्युक्त्वा, ईश्वरस्य को वा नियामक इति, तस्य तोषार्थमाकाङ्क्षां प्रकटीकुर्वती प्रसादमेव प्रार्थयति यत्पादेति। भगवत्प्रसादे हि भगवानेव प्राप्स्यते, तथैव च काम्यते। तदतिदुर्लभम्। यत्र तस्य एव सर्वैः कामितमित्याह। यस्य पादपङ्कजरजः शिरसा बिभर्ति श्रीः। अब्जजो ब्रह्मा। गिरिशो महादेवः। तत्सहितः लोकपालैश्च सहितः। रजसा हि भगवदीयं शरीरं भवतीति पूर्वमुक्तम्। तदा भगवान् निःसन्दिग्धं प्राप्यते। स्वतन्त्रा भक्तिर्वा भवति। तत्रापि शिरसि बिभ्रति। एतच्छरीरवियोगे प्रथमं तत एव देहारम्भकाः परिष्वङ्गं कुर्वन्तीति। लक्ष्म्या अपि भगवदवतारेषु अवतारोऽपेक्षित इति, सर्वेष्वेव देहेषु यथा भगवत्सम्बन्धो भवति, तदर्थं मृग्यमेव। ब्रह्मादीनामपि स्वाधिकारसमाप्त्यनन्तरं यथा तथा भवति तदर्थं धारणं पुनरधिकारनिवृत्त्यर्थम्। नन्वितः पूर्वास्ते कथं बिभ्रतीत्याशङ्क्याह लीलातनूरिति। यो भगवान् स्वकृतानां धर्ममर्यादानां **परीप्सया** रक्षितुमिच्छया लीलातनूर्दधत् भवति। तेन चरणरजःसम्बन्धप्रार्थना च युक्तेति भावः। एवं सर्वप्रार्थ्योऽयमेवेत्याह असाविति। स पुरः स्फुरतीति साधनविलम्बः सोढुमशक्य इति, प्रसाद एव तत्कार्यं सिध्यतीति, केन वा उपायेन तुष्येदिति जिज्ञासा। गत्वा चरणयोः पतित्वा प्रार्थनीयः, आहोस्विदन्यो वा कश्चिदुपाय इति। भगवत्त्वादेव दानादिपक्षो निराकृतः ॥ ३७ ॥ अचिन्तितमपि कल्पयिष्यतीति संभावनया मनोरथः। अत एव भगवान् तमुपायं कल्पितवानित्याह **अर्चितमिति**। पुनः पूजयित्वा भगवत्प्रेरणया स्वयमेव राजा किञ्चित्प्रार्थितवान्। इति वक्ष्यमाणप्रकारम्, यथा कन्यामनोरथः सिध्यति। अन्तर्बहिःपूर्णस्य नियामकस्य किं वक्तव्यं किं कर्तव्यमित्यभिप्रायेणाह।

**नारायण** प्रेरक। **जगत्पते** बहिर्नियामक। अतो यथेच्छसि तथैव कारयसि। तस्मान्न किञ्चिद्वक्तव्यम्। किञ्च। अपूर्णं हि केनचित् क्रियया पूर्यते, अयं तु पूर्णानन्देनैव पूर्णः, आत्मैव आनन्दः। व्यापकत्वे विरलता स्यादिति बृंहणत्वलक्षणं पूर्णत्वमाह **पूर्णस्येति**। तत्राप्यहमल्पकः अत्यल्पः कुत्सितोऽल्पो वा, अनानन्दत्वात् ॥ ३८ ॥ प्रस्तावनार्थमेव भगवांस्तं प्रेरितवान्, यथा याचितोऽपि न प्रत्याख्याति, अतोऽवसरं प्राप्य भगवान् भक्तहितार्थी तं याचितवानित्याह तमाहेति। भगवानिति सर्वसमर्थः पूर्णः पूर्णस्य याचनं न विगीतम्, प्रत्युपकारसम्भवात्। **कृष्ण** इति स्त्रीणां हितः। **कृतासनपरिग्रह** इत्यव्यग्रः। तस्यासनं चेत्परिगृहीतम्, अन्यदपि परिग्राह्यमिति। न हि भोजनार्थमुपविष्टस्तृप्तेः पूर्वमुत्तिष्ठति। न वा तदा याचनं दोषाय। तस्य सर्वमेव दुःखं नाशयतीति **मेघगम्भीरयेति**। **सस्मितमिति** किञ्चिन्मोहयन् यावता प्रयच्छति कन्यामेव, नत्वात्मानम्। तथा सति कन्या अग्राह्या स्यात्। सम्बोधनं विश्वासाय ॥ ३९ ॥ भगवान् याचनदोषं परिहरन् याचते **नरेन्द्रेति**। स्त्रीणां हितार्थमवतीर्णस्य येन केनाप्युपायेन तद्धितं साधनीयमिति मम न दोषः। तथापि राजन्यनाट्यं कुर्वतस्तद्विरुद्धं न कर्तव्यमिति तदर्थं सामान्यन्यायमाह। **राजन्यबन्धोर्याञ्चा कविभिर्विगर्हिता**। ब्रह्मवृत्तिरेव सा। **नरेन्द्रेति** सम्बोधनेन संमतिः प्रदर्शिता। यागविचारे यागादाविन्द्रः प्रार्थ्यत इति नरनाट्ये प्रार्थना न विगीतेति सूचितम्। स्तुतिरप्यनेन कृता। कविभिरिति विचक्षणैः। ते ह्येवं मन्यन्ते। भगवता वीर्यं क्षत्रियेभ्यो दत्तम्। यत्किञ्चिदपेक्षितं तद्वीर्येणैव साधनीयमिति। अनेनादाने बलादपि नेष्यामीति सूचितम्। आपत्सु याचनं न दुष्यतीत्यत आह **निजधर्मवर्तिन** इति। निजधर्मो वीर्यम्। रागे उत्पन्ने राग एव निवारणीयः। अनिवृत्तौ वा स्वधर्मः कर्तव्यः। ततो मरणं प्राप्तिर्वा। मरणेऽपि परतः प्राप्नोति। तस्माद्वीर्यमेव कर्तव्यम्। तथापि याचे इत्याह **तथापीति**। एवं करणे हेतुः **सौहृदेच्छया**। यथा त्वदीया कन्या अभिलषिता, एवं सौहार्दमपि। ततो वीर्ये द्वयं न सिध्यति। ईश्वरत्वात्कापट्येन जयो जयो न भवतीति कदाचिद्दमनेऽपि न मन्येतेति याचनम्। धर्मपरीक्षार्थं च वचनम्। कन्या देयैवेति नातीव भारः। पूर्णो याचमानः प्रतिदास्यतीति शङ्कायामाह **न शुल्कदा** इति। मूल्ये दत्ते दासी भवतीति। तत्रापि वयं वीर्यमेव परं शुल्कं प्रयच्छामः। श्रोत्रियमत्या कदाचिच्छुल्कं याचेरन्, कन्यायाः कुशिका वयमिति नवमे तथा निरूपणात् ॥ ४० ॥

## श्रीविट्ठलरायात्मजश्रीवल्लभकृतलेखः

नरेन्द्रेत्यत्र। **योगविचारे** इति। त्वं नराणामिन्द्रः। इन्द्रप्रार्थना तूचितैवेति भावः। **रागे उत्पन्ने** इति। मुख्यतस्तु राग एव निवारणीयः। न निवर्तते चेत्, वीर्यं प्रकटनीयमित्यर्थः। **परत** इति। परलोके उत्तमस्त्रीप्राप्तिर्भवतीत्यर्थः।

## श्रीसुबोधिनीसारः

तत्प्रसादस्यात्मनि दुर्लभतां संभावयन्नाह राजा तत्पुत्री चेति गुरवः यस्य पादपंकजरजः चरणकमलरेणुं श्रीर्लक्ष्मीः शिरसा धारयति लोकपालैरिद्रादिभिः सह सगिरिशः सशिवोऽब्जजः पद्मजो ब्रह्मा बिभर्ति स्वकृतानां सेतूनां धर्ममर्यादानां परीप्सया सर्वतो रक्षणेच्छया काले समये लीलातनूः स्वेच्छामूर्तीर्दधत्स ईशो भगवान् ममोपरि केन कर्मणा तुष्येत्कथं प्रसीदेत् ॥ ३७ ॥ हे नारायण हे जगत्पते ! आत्मानन्देन पूर्णस्य तवाऽल्पकोऽतितुच्छो वराकोहं किं करवाणि इत्यर्चितं सुपूजितं श्रीकृष्णं पुनराह ॥ ३८ ॥ शुकोक्तिः। कृत आसनपरिग्रहो यस्य स भगवान् हृष्टः तं नग्नजिद्भूपं सस्मितं यथा भवति तथा मेघगंभीरया वाचाह हे कुरुनन्दन ! ॥ ३९ ॥ स्वधर्मचारिणो राजन्यबन्धोः क्षत्त्रियस्य याञ्चा याचना कविभिर्विगर्हिता निंदिता हे नरेन्द्र तथाप्येवं सत्यपि सौहृदेच्छया सम्बन्धकामनया तव त्वदीयां कन्यामहं याचे याचामि शुल्कदा मूल्यदा वयं न स्मः ॥ ४० ॥

## गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

स्वमनोरथस्य दुर्लभत्वं द्योतयन्नाह—यत्पादेति। श्रीर्लक्ष्मीः गिरिशेन रुद्रेण सहितः लोकपालैरिन्द्रादिभिश्च सहितः अब्जजो ब्रह्मा च यस्य पादपङ्कजरजः शिरसा बिभर्ति स स्वकृतानां सेतूनां धर्ममर्यादानां परीप्सया परित्राणेच्छया काले धर्मग्लानिकाले लीलातनूः दधत् बिभ्राणो भगवानीशो मम केनोपायेन तुष्येत्। आप्तकामत्वेन अन्यापेक्षारहितत्वात् कृपयैव मामङ्गीकरोत्वित्याशयः ॥ ३७ ॥ एवं नाग्नजित्युत्साहं निरूप्य राजप्रार्थनामाह—अर्चितमिति। पुनरिति वाक्यालङ्कारे। अर्चितं भगवन्तं राजाऽऽह-हे नारायण। हे जगत्पते। आत्मानन्देन स्वरूपानन्देनैव पूर्णस्य तवाल्पकः क्षुद्रोऽहं किं करवाणि, मत्कर्तृकेन केन कर्मणा तव प्रसन्नता स्यात् तदाज्ञापयेत्याहेत्यन्वयः ॥ ३८ ॥ कुरुनन्दन हे राजन्। कृत आसनपरिग्रहो येन स भगवान् ऐश्वर्यादिपूर्णोऽपि कृष्णः कृपया मेघनादवद्गम्भीरया हर्षजनिकया वाचा सस्मितं यथा भवति तथा तं राजानं प्रत्याह ॥ ३९ ॥ तदुक्तिमेवाह—नरेन्द्रेति। 'नरेन्द्र' इति सम्बोधनेन सौहृदेच्छायां हेतुः सूचितः। यद्यपि निजधर्मवर्तिनः राजन्यबन्धोः क्षत्रियस्य याञ्चा विगर्हिता निन्दिता लोकतः शास्त्रतश्च प्रतिषिद्धा, तथापि तव सौहृदेच्छया बन्धुत्वेन स्नेहेच्छया त्वदीयां कन्यां याचे शुल्कदा द्रव्यादिप्रदाश्च वयं नैव भवामः ॥ ४० ॥

**अन्वितार्थप्रकाशिका**

यदिति । श्रीर्लक्ष्मीः गिरिशेन रुद्रेण सहितः लोकपालैरिन्द्रादिभिश्च सहितः अब्जजो ब्रह्मा च यस्य पादपङ्कजरजः शिरसा बिभर्ति स स्वकृतानां सेतूनां धर्ममर्यादानां परीप्सया परित्राणेच्छया काले धर्मग्लानिकाले लीलातनूः दधत् बिभ्राणो भगवानीशो मम केनोपायेन तुष्येत् ॥ ३७ ॥ अर्चितमिति । पुनरिति वाक्यालङ्कारे । अर्चितं भगवन्तं राजा हे नारायण ! हे जगत्पते ! आत्मानन्देन स्वरूपानन्देनैव पूर्णस्य तवाल्पकः क्षुद्रोऽहं किं करवाणि । मत्कर्तृकेन केन कर्मणा तव प्रसन्नता स्यात् तदाज्ञापयेत्याह स्म ॥ ३८ ॥ तमिति । हे कुरुनन्दन ! हे परीक्षित् ! कृत आसनपरिग्रहो येन स भगवान् ऐश्वर्यादिपूर्णोऽपि कृष्णः कृपया मेघनादवद् गम्भीरया हर्षजनिकया वाचा सस्मितं यथा भवति तथा राजानं प्रत्याह स्म ॥ ३९ ॥ नरेन्द्रेति । हे नरेन्द्र ! यद्यपि निजधर्मवतिनः राजन्यबन्धोः निकृष्टक्षत्रियस्यापि याच्ञा विर्गाहिता लोके शास्त्रे च निन्दिता किं पुनर्ममोत्तमक्षत्रियस्य तस्य हि प्रसभहरणमेव धर्म इति भावः । तथापि तव सौहृदेच्छया बन्धुत्वेन स्नेहेच्छया त्वदीयां कन्यां याचे । शुल्कदा द्रव्यादि-प्रदाश्च वय नैव भवामः ॥ ४० ॥

**श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्**

तमाहेति ॥ ३८ ॥ हे नरेंद्र राजन्यबंधोः क्षत्रियस्य याच्ञा याचना कविभिर्विगर्हिता निंदिता । तथापि तव कन्यामहं याचे शुल्कदाः धनादिमूल्यदा वयं न भवामः ॥ ३९ ॥ कोन्य इति ॥ ४० ॥

**भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी**

अर्चितमिति । राजा, अर्चितं पूजितं भगवन्तं प्रति, हे नारायण, हे जगत्पते, आत्मानन्देन स्वानन्देनैव, पूर्णस्य तव, अल्पकः क्षुद्रोऽहं, किं करवाणि । न किमपि त्वद्योग्यं कर्त्तुं शक्त इत्यर्थः । इति पुनः भूयो भूयः, आह ॥ ३७ ॥ अथ भगवतः परत्वं व्यञ्जयन् कैंकर्येण तत्प्रसन्नतामाह । यदिति । श्रीः स्वयं लक्ष्मीः, अब्जजः कमलभूर्ब्रह्मा, स त्रिलोकप्रसिद्धः, गिरिशः शिवः, लोकपालैरिन्द्रादिभिः सह, यत्पादपङ्कजरजः यस्य तव चरणकमलरेणून्, शिरसा बिभर्त्ति । ईश ईश्वरः, यः स्वेन कृताः ये सेतवो धर्ममर्यादास्तेषां परीप्सया परित्राणेच्छया, काले धर्मग्लानिसमये, लीलातनूर्लीलाविग्रहान्, अनेनाव मेवंदयत्व-मुक्तम् । दधद्दधाति । अनेन धर्मपरित्राणाय त्वं परमेश्वर एवावतीर्णोऽसीति सूचितम् । एवंविधः भगवान्, स भवान्, मम केन तुष्येत् । केन कैंकर्येण तुष्टो भवेत् ॥ ३८ ॥ तमिति हे कुरुनन्दन, कृतासनपरिग्रहः भगवान्, कृष्णः, मेघगम्भीरया वाचा, सस्मितं यथा तथा, तं नग्नजिन्नृपं, आह ॥ ३९ ॥ उक्तिमेवाह । नरेन्द्रेति । हे नरेन्द्र, यद्यपि, निजधर्मवर्त्तिनः स्वधर्मनिरतस्य, राजन्यबन्धोः क्षत्रियस्य, याञ्चा कविभिः, विगर्हिता निन्दिता निषिद्धा इति यावत् । तथापि, तव सौहृदेच्छया त्वद्बन्धुत्वे-च्छया, त्वदीयां कन्यां, याचे । वयं शुल्कदा द्रव्यादिप्रदाः, न भवामः हि ॥ ४० ॥

**कृष्णप्रिया**

पुनः पुनः नाग्नजिती श्रीसत्या मन हो मन मनोरथ करने लगी कि—भगवती श्री देवी, पद्मज ब्रह्माजी, कैलासनाथ भगवान् शंकर एवं समर्थ सर्वलोकपाल जिन भगवान् पादपङ्कज पराग अपने मस्तकपर धारण करते हैं और दयानिधि विश्वरक्षा के लिये अपनी बनायी हुई धर्ममर्यादा का रक्षण करने के लिये ही बार-बार अनेकानेक लीलावतार धारण करते है; वे परमकृपालु प्रभु मेरे कौन से व्रत, जप, तप, यम, नियम आदि से प्रसन्न होंगे । ये तो केवल करुणानिधान नाथ अपनी अहैतुकी करुणा से प्रसन्न होते है ॥ ३७ ॥ राजन् परीक्षित् ! श्रीकोसलेश नग्नजित् राजा ने भगवान् श्रीकृष्ण को विधि-विधान पुरःसर अर्घविधान—अर्चन-पूजन करके यह निवेदन किया कि हे जगत्पते ! हे नारायण ! आप स्वयं आनन्दमय निजानन्द से परिपूर्ण हैं मैं तो केवल एक क्षुद्रजन जीव हूँ । कृपानाथ ! आप की क्या सेवा करूँ ? ॥ ३८ ॥ श्री शुकदेव जी महाराज ने कहा राजन् । राजा कोसलेश का समर्पित किया हुआ आसन अर्चनादि को अङ्गीकार करके भगवान् श्रीकृष्ण अत्यंत सन्तुष्ट हुए । स्मित हास्यपूर्वक मेघगम्भोर वचन वर्षा करते हुए प्रभुने कहा ॥ ३९ ॥ भगवान् श्रीकृष्ण ने कहा—राजन् ! अपने क्षात्रधर्म में रहने वाले क्षत्रिय पुरुष को कुछ भी याचना करना समुचित नहीं । धर्मनिष्ठ महापुरुषों ने क्षत्रिय जन की इस कर्म की निन्दा की है । यह जानते हुए भी मैं सूर्यकुल से सख्य सौहार्द एवं स्नेह-संवंध स्थापित करने की सद्वृत्ति से आप की कन्या सत्या की कामना करता हूँ । एक वात को स्पष्ट भी करता हूँ कि हमारे यहां इस के बदले में कुछ शुल्क देने की प्रथा नहीं है ॥ ४० ॥

## राजोवाच

**कोऽन्यस्तेऽभ्यधिको नाथ कन्यावर[1] इहेप्सितः। गुणैकधाम्नो यस्याङ्गे श्रीर्वसत्यनपायिनी ॥ ४१ ॥**
**किं त्वस्माभिः कृतः पूर्वं समयः सात्वतर्षभ। पुंसां वीर्यपरीक्षार्थं कन्यावरपरीक्षया[2] ॥ ४२ ॥**
**सप्तैते गोवृषा वीर दुर्दान्ता दुरवग्रहाः। एतैर्भग्नाः सुबहवो भिन्नगात्रा नृपात्मजाः ॥ ४३ ॥**
**[3]यदीमे निगृहीताः स्युस्त्वयैव यदुनन्दन। वरो भवानभिमतो दुहितुर्मे श्रियः[4] पते ॥ ४४ ॥**

### कर्दमक्षमा

अन्वयः—राजा उवाच—हे नाथ ! गुणैकधाम्नः, यस्य, अङ्गे, अनपायिनी, श्रीः, वसति, ते, अभ्यधिकः, इह, अन्यः, कः, कन्यावरः, ईप्सितः ॥ ४१ ॥ हे सात्वतर्षभ ! किन्तु, अस्माभिः, कन्यावरपरीक्षया, पुंसाम्, वीर्यपरीक्षया, पूर्वम्, समयः, कृतः ॥ ४२ ॥ हे वीर ! दुर्दान्ताः, दुरवग्रहाः, एते, सप्त, गोवृषाः, ( सन्ति ) एतैः, सुबह्वः, नृपात्मजाः, भिन्नगात्राः, भग्नाः। हे यदुनन्दन !, यदि, इमे, त्वया, एव, निगृहीताः, स्युः, हे श्रियः पते ! मे दुहितुः, भवान्, अभिमतः, वरः ॥ ४३-४४ ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

गुणानामेकमेव धाम स्थानं तथाभूतस्य यस्य तवांगे ॥ ४१-४२ ॥ दुर्दांता अशिक्षिताः। दुरवग्रहा अपरायत्ताः। कुतस्तदाह—एतैरिति। भग्ना भङ्गं प्रापिताः ॥ ४३ ॥ यद्यदीमे गोवृषा निगृहीता दमिता नाथिता इति यावत् ॥ ४४ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

एकमेव मुख्यमेव। श्रीः सर्वगुणाश्रयरूपापि। गुणैकधाम्न इति यद्गुणवशीकृतत्वादेवेत्यर्थः ॥ ४१ ॥ समयः संकेतः "समयः शपथाचारसिद्धान्तेषु तथा धियि। क्रियाकारे च निर्देशे संकेते कालभाषयोः ॥" इति मेदिनी। कन्याया वरपरीप्सया वरेच्छया। वयमपि न शुल्कग्राहिण इत्याह—किन्त्विति। अस्माभिरिति बहुत्वेन निजज्ञातिबांधवसंग्रहः। समयो नियमः। तं द्रढयति-कन्याया वरस्य धवतायोग्यस्य तव परीप्सया, पुंसां वीर्यस्य बलस्य च परीक्षार्थम्। पाठान्तरे कन्याया यो वरस्तस्य या परीक्षा तया हेतुना। स चास्माकं समयः पालयितव्य एवेति सम्बोधयति—हे सात्वतानां भक्तानामृषभ परिपालक ॥ ४२ ॥ अपरायत्ता अपराधीनाः 'अधीनो निघ्न आयत्तः' इत्यमरः। परानायत्तत्वे हेतुमाशंक्य समाधत्ते-कुत इति। तत् परानधीनत्वम्। एतैर्वृषैः। इत्थं स्वदोषं स्ववर्गदोषं च परिजहार। समयमेवाह—सप्तेति। तत इति तदंगीकारमुपलभ्य वृषवासं तेन गत्वांगुल्या निर्दिशति-एतैर्भिन्नगात्रा अतो भग्नाः, एतद्व्याजेन भवद्विरोधिनां तेषां शान्तिरेवास्माभिर्घटितेति भावः। हे वीरेति—तव वीर्येण तु निग्राह्या भविष्यन्तीति भावः ॥ ४३ ॥ अभिमत उचितः। यदीति निश्चये। 'धत्से पदं त्वमविता यदि विघ्नमूर्ध्नि' इतिवत्। यद्वा—यद्यस्मास्त्वयैव निगृहीता एव स्युः बलवत्त्वेनान्यैरशक्यत्वात् वृषत्वेनातिपीडयितुमयुक्तत्वाच्च तस्मादनेन प्रबंधेन भवानेव वरोऽभिमतः, पूर्वमेवावधारितः, तस्मादस्माकं प्रतिज्ञाया मनोरथस्य च पूरणार्थं भवतैतत्कार्यमेवेति भावः। हे यदुनंदनेति—यदुकुलनंदनार्थमपि त्वयैतत्कार्यं चेति भावः। यद्वा—यदुकुलनंदनस्त्वमस्मत्कुलमपि नंदयिष्यसि, कुलनन्दकस्वभावत्वादिति भावः। हे श्रियः पते इति—श्रीर्यथा सर्वान्देवासुरादींस्त्यक्त्वा त्वामेव वृतवती तथा मम कन्येयमपि श्र्यंशत्वेन त्वामेव वरिष्यतीति भावः। देवासुरनिग्रहं कृत्वा श्रियं प्राप्तवतस्तवैतन्निग्रहो न ह्यशक्योतस्त्वमेव वरो निर्णीतः। वृषास्त्विमे त्वद्विद्वेषिवधार्थमेव स्थापिता इति संबुद्ध्यभिप्रायः ॥ ४४ ॥

### श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी

श्रीः सर्वगुणाश्रयरूपापि गुणैकधाम्न इति यद्गुणवशीकृतत्वादेवेत्यर्थः ॥ ४१ ॥ अस्माभिरिति बहुत्वेन निजज्ञातिबान्धवादिसङ्ग्रहात् तथा पूर्वमेवेति च समयं दृढयति कन्याया वरस्य धव ( वर ) तायोग्यस्य तव परीप्सया पुंसां वीर्य्यस्य बलस्य च परीक्षा तदर्थं पाठान्तरे कन्याया यो वरस्तस्य या परोक्षा तया हेतुना पुंसां या वीर्य्यपरीक्षा तदर्थमित्यर्थः। स चास्माकं समयो भवता पालयितव्य एवेति सम्बोधयति सात्वतां भक्तानाम् ऋषभ ! परिपालकेति ॥ ४२ ॥ इत्थं स्वदोषं स्ववर्गदोषं च परिजहार, अथ समयमेव सूचयति—सप्तेति। एत इति तदङ्गीकारमुपलभ्य तेन सह वृषवासं गत्वाङ्गुल्या निर्दिशति एतैर्भिन्नगात्राः अतो भग्नाः एतद्व्याजेन भवद्विरोधिनां तेषां शान्तिरेव चास्माभिर्घटितेति भावः। हे वीरेति तव वीर्य्येण तु निग्राह्या

---

१. कन्याया ईप्सितो वरः–वीर। २. ०प्स–श्रीधर. वंशी. जीव. वीर. विज. विश्व.। ३. यदीमे–वीर. ; यदिमे–श्रीधर. वंशी. जीव. विज. विश्व.। ४. प्रियः पतिः–प्रा. पा.।

भविष्यन्तीति भावः। अन्यत्तैः। तत्र एतानित्यादिकमध्याहृत्य श्लोकद्वयं योजितम् ॥ ४३ ॥ यद्यदीति निश्चये "धत्से पदं त्वमविता यदि विघ्नमूर्द्धिन" इतिवत् यद्वा यद्यस्मात् त्वयैव निगृहीता एव स्युः बलवत्त्वेनान्यैरशक्यत्वात् वृषत्वेनातिपीडयितुमयुक्तत्वाच्चन तस्मादनेन प्रवन्धेन भवानेव वरोऽभिमतः पूर्वमेवावधारितः तस्मादस्माकं प्रतिज्ञाया मनोरथस्य च पूरणार्थं भवतैतत्कार्य्यमेवेति भावः। हे यदुनन्दनेति यदुकुलहर्षार्थमपि त्वयैतत्कार्य्यमिति च ॥ ४४ ॥

### श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी

नाथ्यते सर्व्वैः प्राप्तुमिष्यत इति नाथस्तत्सम्वोधनम्। अतः प्राप्तुमिष्ट आत्मनोऽभितोऽधिकस्ते त्वत्तोऽन्यः कोऽस्ति, अपि तु न कोऽप्यस्तीत्यर्थः। तत्र हेतुत्वेन नाथत्वमेवाभिव्यञ्जयन्नाह—गुणेति। अनपायिनी सदा सुस्थिरा सती अंगे श्रीविग्रहे वक्षसि वा वसति, यतो गुणानां सत्यशौचादीनामेकमद्वितीयमसाधारणं वा धाम तस्य ॥ ४१ ॥ अस्माभिरिति बहुत्वेन निजज्ञाति-बान्धवादिसंग्रहात्, तथा पूर्व्वमेवेति च समयं द्रढ़यति। कन्याया वरस्य परीप्सया पुंसां वीर्य्यस्य बलस्य परीक्षा तदर्थम्, हे सात्वतानां भक्तानामृषभ परिपालकेति भक्तानां मादृशां समयस्त्वया परिपाल्य एवेति। यद्वा, हे यादवश्रेष्ठेति यदुकुलावतीर्णस्य साक्षाद्भगवतस्तव प्राप्त्यर्थमेवेति भावः ॥ ४२ ॥ एत इति साक्षात्तत्रैव वर्त्तमानानंगुल्या निर्द्दिशति—एतैर्हेतुभिर्भग्नाः, यद्वा, एतैः कर्त्तृभिर्भग्नं प्रापिताः, यतो भिन्नगात्राः। नृपाणानात्मजा इति तारुण्यादिना बलिष्ठतादिकं सूचयति—हे वीरेति। तव वीर्य्येण निग्राह्या भविष्यन्तीति भावः। त्वयैवैकाकिना; हे यदुनन्दनेति यदुकुलह्र्षार्थमपि त्वयैतत् कार्य्यमिति भावः। हे श्रियः पते! इति लक्ष्मीनाथत्वान्मतः सम्मत एव, एषां निग्रहेण चाभितो मत इत्यर्थः। यद्वा, श्रीरुक्मिणीभर्त्तापि भवानेवाभिमतोऽभीष्टो वर इति ॥ ४३-४४ ॥

### श्रीमद्वीरराघवाचार्यकृता भागवतचन्द्रचन्द्रिका

इत्थमुक्तः प्राह नग्नजित्क इति। हे नाथ! ते त्वत्तः अभ्यधिकः कन्यायाः ईप्सितो वरः को वाऽस्ति ? समन्ति बहव इत्यतो भगवन्तं विशिनष्टि-गुणैक इति। गुणानां कल्याणगुणानामेकमेव धाम स्थानं तथाभूतात् यस्येत्यपेक्षया षष्ठ्यन्तं वा यस्य तवाङ्गे वक्षसि श्रीर्लक्ष्मीरनपायिनी निवसति ॥ ४१ ॥ किन्त्विति। हे सात्वतर्षभ! समयः भाषाबन्धनं किमर्थं पुंसां वरत्वेनागतानां (परीक्षार्थं) सापि किमर्थेत्यत्राह—कन्याया वरोऽनुरूपः तत्परीप्सया हेतुभूतया ॥ ४२ ॥ कोऽसौ समय इत्यत्र तं वक्तुं तावत्तत्रान्येषामसमर्थतामाह—सप्तेति। हे वीर! दुर्दान्ता अशिक्षिताः दुरवग्रहाः अपरायत्ताः तत्र निदर्शनमाह एतैर्गोवृषैर्भिन्नानि गात्राणि, येषां तथा बभूवुः एतान् यो गृह्णाति तस्येयं कन्येति भावः ॥ ४३ ॥ यदीति। अतो यदि इमे वृषास्त्वया निगृहीताः स्युर्स्तर्हि भवानेव मम दुहितुरभिमतो वरः ॥ ४८ ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

कन्यायाः वरपरीप्सया वरेच्छया ॥ ४२ ॥ दुर्दान्ताः अशक्यशिक्षाः दुरवग्रहा गृहीतुमशक्यः ॥ ४३-४४ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

वयमपि न शुल्कग्राहिण इत्याह—किन्त्विति। समयो नियमः कन्याया वरप्राप्तीच्छया या पुंसां वीर्य्यपरीक्षा तदर्थम् अन्यथा मत्कन्यायां सर्व एव नृपाः प्रार्थकास्ते मया कथं प्रत्याख्येया इति भावः। कन्याया वरः श्रुतरूपगुणस्त्वमेव वरणीयस्तस्य तव प्राप्त्यर्थमित्यर्थस्तु वास्तवः ॥ ४२-४३ ॥ यत् यदीति प्रकटोऽर्थः यत् यस्मादिति वास्तवः श्रियः पते इति सम्बोधनेन वृषनिग्रहो न त्वदशक्य इति त्वमेव वरो निर्णीतः वृषास्त्विमे त्वद्विद्वेषवधार्थमेव स्थापिता इति भावः ॥ ४४ ॥

### गूढार्थदीपिनी

ते त्वत्तः। अनपायिनी अवियोगिनी ॥ ४१ ॥ समयो नियमः। कन्या वरपरीप्सया योग्यवरप्राप्तीच्छया ॥ ४२ ॥ दुर्दान्ता अशिक्षिताः। दुरवग्रहा अपराधीनाः। अत एव भग्ना भङ्गं प्रापिताः ॥ ४३ ॥ यत् यदि निश्चये इमे ॥ ४४ ॥

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः

गुणानां स्वाभाविकानां सत्यत्वानन्दत्वसर्वज्ञत्वसर्वेश्वरत्वसर्वकर्तृत्वादीनामेकमेव धाम स्थानं तस्य अङ्गे देहे वक्षसि ॥ ४१ ॥ समयो नियमः ॥ ४२ ॥ दुर्दान्ताः अशिक्षिताः दुरवग्रहाः अपरायताः भिन्नानि गात्राणि येषां ते तथा भग्नाः भङ्गं प्राप्ताः एतान् यो निगृह्णाति स अस्याः वर इति भावः ॥ ४३ ॥ यत् यदि ॥ ४४ ॥

### श्रीसत्यधर्मकृता श्रीभागवतटिप्पणी

इति वैभववतो भवतोऽत्रागमनमनुग्रहत एव न तु वनिताकामनयेति नग्नाजिदानन्दमग्नः प्राह ॥ यदिति। यस्य पादपङ्कजे तयो रजः परागं श्रीः सिरसा विभर्ति। अब्जजो ब्रह्मा च गिरिशो लोकपालैः सह बिभर्ति। स्वकृतः सेतुर्मर्यादा

तस्योच्छेदे दैतेयैः कृते तत्परीप्सया तद्रिरक्षया लीलातनूरिदमाद्याः काले तत्तत्समयेऽदधाद्धृतवान्स भगवान्भवान्स्वकृतेन। नर्ते त्वत्क्रियते किञ्चनार इत्यादेः स्वस्यैव कृतेन कर्मणा स्वेनैव कारितेन वा तुष्येत्तुष्टः स्यात्॥ ४१॥ कृत आसनपरिग्रहो येन सः॥ ४२॥ रमयैवमाराधितस्य न मया कारणं कारितं किमागमनकारणमिति क्षितिप न वद मर्यादियमार्यदर्शितेत्याहेत्याह श्री भगवानिति। हे क्षितीश्वर विदुषो ज्ञानिनो राज्ञः सम्बन्धिनः स्वयंवरादन्यत्र तद्भिन्ने विवाहे वरमयाचितारमुत्तममाहुर्विद्वांस इति शेषः। जसः शसादेशो वा। विदुषो विद्वांसः। बहुवचनेन तथा विद्वद्वचनेन चैकस्य प्रतिभातं तु कृतकात्व विशिष्यत इत्युक्त-कृतकता व्यावर्तिता। एकोऽपि विद्वांश्चेन्न कृतकता यदा तदा किं वक्तव्यं ते च बहवो यत्र तत्र न सेति भावः। स हि तादृशो विसदृशो वरो हि। पुरुषरूपो योऽयमर्थस्तद्भागिनां वराभिलाषवतां प्रभूणां तत्सकाशात्। आव्हानमर्हतीति शेषः। अहं राजा राजान्तरं प्रति कथं तव सुताय मम सुतां दास्यामागच्छेति मया मर्यादा त्याज्येत्यत आह॥ वेलां मर्यादां विनेति। वेलेति पाठे स्वयंवरे तु विनाऽऽह्वानमायामेव वेला मर्यादेत्यर्थः॥ ४३॥ त्वयाऽऽरब्धस्तु स्वयंवर इति स्वयं वरेणागन्तव्यमित्यहमायात इतः परं तव स्नेहलाभलाभेन स्वयंवरे ज्ञानिवरैः प्रतिषिद्धमर्यादं पार्थिवं त्वामर्पय इत्याह॥ नरेन्द्रेति। हे नरेन्द्र। राजन्य-बन्धो। नायं बन्धुशब्दो ब्रह्मबन्धुः क्षत्रबन्धुरित्यत्रेवात्र राजन्याभास इति स्वयं व्याकरोति॥ निजधर्मवर्तिन इति। याच्ञा कविभिर्ज्ञानिभि विगर्हिता निन्दिता तथाऽपि तव सौहृदेच्छया त्वदीयां कन्यां याचे। तर्हि किं दिशति मूल्यमिति न वदेति वदति॥ न हि वयं शुल्कदा इति। यद्यप्यहं न शुल्कद इति वक्तव्यं तथाऽपि न भेतव्याः सहागता मदीया शुल्कदान विषय इति द्योतयितु-मियमुक्तिरिति मन्तव्यम्॥ ४४॥

### श्रीमद्वल्लभाचार्य्यकृता सुबोधिनी

राजा तु याचनात्पूर्वं देयत्वेन विचार्य प्रतिज्ञां च पूरयिष्यामीति कष्टे भगवांश्च न विनियोक्तव्य इति तूष्णीं स्थितः। रागे सति कष्टमपि करोति, नान्यथेति अधुना रागं ज्ञात्वा वृषदमनार्थं प्रार्थयते **कोऽन्य** इति। त्वत्तोऽप्यभ्यधिकः दाने कोऽपि नास्ति पात्रम्। कन्यायाश्चेप्सितो वरो नान्योऽस्ति। अतो दृष्टसम्पत्तिः सर्वापि सिद्धा। किञ्च। सर्वाः स्त्रियस्त्वदीया एव। यतो गुणानामेकं धाम भवानेव। अनन्ता गुणा नित्यास्त्वय्येव प्रतिष्ठिताः। अत एव श्रीरनपायिनी त्वयि। यत्र श्रीस्तत्र सर्वमिति। **वसतीत्यन्यत्र परिभ्रमणमात्रम्**॥ ४१॥ परमस्मदीयोऽपि धर्मः पालनीय इत्याह **किन्त्वस्माभिरिति**। अधुना करणे अपराधो भवेत्, किन्तु पूर्वमेव कृतः। **समयो** नियमः। तुशब्दो निर्भरदानं व्यावर्तयति। **सात्वतर्षभेति** प्रतिज्ञा पालनीयेत्यत्र सम्मतिरुक्ता। यादवश्रेष्ठास्तत् जानन्तीति। भक्तस्वामी भक्तप्रतिज्ञां पालयिष्यतीति। प्रतिज्ञाकरणे निमित्तमाह **पुंसामिति**। क्षत्रियेषु वीर्यवान् महान्। सप्ताङ्गानि क्षत्रियस्य। सर्वत्र तत्सामर्थ्ये महान् भवति। अतः सप्तवृषा दम्यत्वेन स्थापिताः। महत एव कन्या देया। जामातरं प्रति नम्रता बोधनीया। अधमे च सा निषिद्धा। अपरीक्षायां वीर्यं न ज्ञायत इति। एतदपि कन्यावरपरीक्षार्थमेव, न त्वस्यान्य उपयोगोऽस्ति। अतः कन्यादाने तदवश्यं कर्तव्यम्॥४२॥ तं समयमाह, यथा परीक्षा सम्पद्यते, **सप्तैत** इति। एकत्र गृहे सप्तवृषा निरुद्धाः, न कश्चित्तत्र परिपालकः। नापि तत्र गौः काचित्, भक्ष्यं च यथेष्टं मादकम्। ततोन्योन्य युध्यमानाः अतिमत्ताः नित्यं क्रुद्धास्तिष्ठन्ति। तत्रापि सप्त। विषमसंस्थापन्नाः, अन्यथा द्वन्द्वयोधिनो भवेयुः। **गोवृषा** इति न मारणीयाः। गोजातीयः वृषाः समस्थाः। **वीरेति** सम्बोधनमितरस्तुतिः श्रोतुर्निन्दार्थेति शङ्काव्युदासार्थम्। वीरस्याग्रे कथनं वीर्योद्बोधनार्थम्। बहूनेव वृषानेकश्चारयति इत्याशङ्क्य वैलक्षण्यमाह **दुर्दान्ता** इति। अदान्तापेक्षयापि कठिनाः। दुरुपसर्गो दमनविरोधिनं वदति। तत्र दमनसम्भावनापि नास्तीति ज्ञापयितुम्। वीरैरपि दुर्दान्ता इति वा। किञ्च। दुष्टः अवग्रहो येषाम्। तैः सह कलहो मरणपर्य-वसायी। आग्रहो वा दुष्टः। ते मारयितुमशक्याः, दृष्टादृष्टोपायैः। अन्यांश्च मारयन्तीति द्वयमुक्तम्। नापि तेषां वीर्यं सम्भावना-मात्रेण सिद्धम्, किन्तु बहुधा कृतकार्यमित्याह **एतैर्भग्ना** इति। काकतालीयव्युदासाय **सुबहवः**। भङ्गो न पराजयमात्रम्। तथा सति दृष्ट्वापि भीताः पलायिता भवन्ति। किन्तु भग्नगात्राणां करचरणादीनां भङ्गपर्यन्तं यतमानाः। ननु शिक्षाबीजयोरप्रयोजकत्वं तेषु भविष्यतीति चेत्, तत्राह **नृपात्मजा** इति। न तु क्षत्रियमात्रम्॥ ४३॥ वृषाणां दोषा उक्ता इति, तेषु चेत्तव कृपा, एता-दृशानप्युद्धरिष्यामीति, तदा भवानेव कन्याया वरः, तदा तां दुष्टामप्युद्धरति, तदीयांश्च। ते हि कन्यानिमित्तमेव निरुद्धा इति तदुद्धारव्यतिकेण कन्योद्धारो नोपपद्यते। अतस्त्वं चेत्तानुद्धरिष्यसि, तदा वर इत्याह **यदीमे निगृहीताः स्युरिति**। निग्रहे कृते उद्धारोऽवश्यंभावीति तदेवोक्तम्। **यदुनन्दनेति** लीलार्थमागतः कदाचिन्न कुर्यादिति सूचितम्। यादवास्तथा न कुर्वन्तीति। सन्देहश्च गोवर्धनादिना। तदा **अभिमतो वरो भवान्। मे दुहितुरिति** स्वस्य हीनतां बोधयति। योग्यता तु सर्वोत्तमैवेत्याह **श्रियः पत** इति॥ ४४॥

### श्रीविट्ठलरायात्मजश्रीवल्लभकृतलेखः

**किन्त्वस्माभिरित्यत्र। सप्ताङ्गानीति।** 'तस्यासते ऋषयः सप्ततीरे वागष्टमी ब्रह्मणा संविदाने'त्यत्रौक्ताः सप्त प्राणा इत्यर्थः। **सप्तैत** इत्यत्र। **समस्था** इति। विषमदेशस्था आरण्या महिषा नेत्यर्थः। **यदीमे** इत्यस्याभासमाहुः वृषाणामित्यादिना।

**श्रीसुबोधिनी–सारः**

राजोक्तिः । गुणानानेकधाम्न एकांतस्थानात्ते त्वत्तोऽभ्यधिकः कन्याया वर ईप्सितो वांछितोन्यः क इह न कोपि । हे नाथ तत्र हेतुः । यस्यांगे वक्षसि अनपायिनी निश्चला श्रीर्वसति ॥ ४१ ॥ किं च हे सात्त्वतर्षभ पुंसां बलपरीक्षणार्थं कन्याया वरेच्छयास्माभिः पूर्वं समयः पणः कृतः ॥ ४२ ॥ हे वीर दुर्दांता दमनरहिता दुर्दुःखेनावग्रहो धृतिर्येषां ते तथा एते सप्त गोवृषा एतैर्भिन्नानि गात्राणि येषां ते बहवो नृपात्मजा राजपुत्रा भग्नाः ॥ ४३ ॥ हे यदुनंदन यदि इमे वृषास्त्वया निगृहीता दमिता नसि प्रोताः स्युस्तदा मे मम दुहितुः पुत्र्या ईप्सितो वरो भवान् त्वमेव हे श्रियः पते ॥ ४४ ॥

**गोस्वामिश्रीगिरिधरलालकृतावालप्रबोधिनी**

'सर्वस्वामिनस्तवैवं याच्ञावचनं मर्यादासंरक्षणायमनुकरणमात्रम्' इति सूचयन् सम्बोधयति—नाथेति । ते त्वत्तः अभ्यधिकः उत्कृष्टः कन्याया ईप्सितो वरोऽन्यः को वाऽस्ति ? । सर्वोत्तमत्वमेवोपपादयति—यस्य तवाङ्गे वक्षसि अनपायिनी विश्लेषरहिता सती श्रीर्लक्ष्मीर्वसति । तत्रैश्वर्यादिगुणपूर्णत्वं हेतुमाह—गुणैकधाम्न इति ॥ ४१ ॥ 'प्रतिज्ञापालनं तवापि संमतम्' इत्याशयेन सम्बोधयति—सात्वतर्षभेति । 'निर्भरतया कन्यादानमशक्यम्' इति सूचयति—किं त्विति । तत्र हेतुमाह—महते कन्या देया अतस्तादृशस्य कन्यावरस्य परीप्सया प्राप्तीच्छया या पुंसां वीर्यस्य बलादिप्रभावस्य परीक्षा तदर्थमस्माभिरितः पूर्वमेव समयः कृतः प्रतिज्ञा कृतेत्यन्वयः ॥ ४२ ॥ 'कोऽसौ समय' इत्यपेक्षायां तत्रान्ये षामसामर्थ्यं दर्शयंस्तमाह—सप्तेति द्वयेन । हे वीर ! सप्तैते गोवृषाः दुर्दान्ताः अशिक्षिताः दुरवग्रहाः अपरायत्ताः । एतैस्तु सुबहवोः नृपात्मजा भग्नाः भग्नाभिमानाः तथा भिन्नानि गात्राणि येषां तथाभूताश्च जाताः ॥ ४३ ॥ अतो हे यदुनन्दन ! यदि इमे त्वया निगृहीता स्युस्तर्हि भवानेव मम दुहितुरभिमतो वरः । अभिमतवरत्वे लक्ष्मीपतित्वं हेतुं सूचयन् सम्बोधयति—श्रियःपते इति ॥ ४४ ॥

**अन्वितार्थप्रकाशिका**

क इति ॥ हे नाथ । ते त्वत्तः अभ्यधिकः उत्कृष्टः कन्याया ईप्सितो वरोऽन्यः को वाऽस्ति । गुणानामेकधाम्नः यस्य तवाङ्गे वक्षसि अनपायिनी विश्लेषरहिता सती श्रीः लक्ष्मीर्वसति ॥ ४१ ॥ वयमपि न शुल्कग्राहिण इत्याह–किमिति ॥ हे सात्वतर्षभ ! किंतु कन्या वरस्य परीप्सया प्राप्तीच्छया पुंसां वीर्यस्य बलादिप्रभावस्य या परीक्षा तदर्थमस्माभिरितः पूर्वमेव समयो नियमः कृतः । अन्यथा अत्युत्तमगुणायाः मत्कन्यायाः बहवो याचकाः स्युस्तत्र के के प्रत्याख्येया इति भावः ॥ ४२ ॥ सप्तेति ॥ हे वीर । सप्तैते गोवृषाः दुर्दान्ता अशिक्षिताः दुरवग्रहाः अपरायत्ताः एतैस्तु सुबहवो नृपात्मजा भग्ना भङ्गं प्रापिताः तथा भिन्नानि गात्राणि येषां तथाभूताश्च जाताः । एतान् यो निगृह्णाति तस्य कन्येति समयः कृतः ॥ ४३ ॥ यदिति ॥ हे यदुनन्दन ! हे श्रियःपते ! यत् यदि इमे त्वया निगृहीताः दमिताः स्युस्तर्हि भवानेव मम दुहितुरभिमतो वरः । यद्वा । यत् यतः त्वयैव निगृहीताः स्युरेव अतः भवानेवाभिमतो वरः ॥ ४४ ॥

**श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्**

कन्यायाः यो वरस्तस्य परीक्षया परीप्सयेति वा याठः ॥ ४१ ॥ दुर्दांताः शिक्षारहिताः दुरवग्रहाः गृहीतुमशक्याः । तदेव दुरवग्रहत्वमाह एतैरिति । एतैर्भग्नाः भंगं प्रापिताः ॥ ४२ ॥ यद्यतः । इमे त्वया निगृहीताः स्युः ॥४३॥ एवं समयं प्रतिज्ञां । परिकरं बध्वा आत्मानं श्रीमूर्त्ति ॥ ४४–४७ ॥

**भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी**

इत्थमुक्तो नग्नजित् प्राह । क इति । हे नाथ यस्य तव, अङ्गे श्रीः, अनपायिनी सती, वसति । इत्थंभूतात् गुणैकधाम्नः कल्याणगुणानामेकस्थानभूतात्, ते त्वत्तः, अभ्यधिकः अन्यः, ईप्सितः कन्यावरः, इह कः अस्ति । न काऽपीत्यर्थः ॥४१॥ किं त्विति । किं तु हे सात्त्वतर्षभ, पुंसां वीर्यपरीक्षार्थं, कन्यावरपरीक्षया हेतुभूतया च, अस्माभिः पूर्वं समयः भाषाबन्धनं, कृतः अस्ति ॥ ४२ ॥ कोऽसौ समय इत्यत्र तं वक्तुं तावत्तत्रान्येषामसमर्थतामाह । सप्तेति । हे वीर, दुर्दान्ताः अशिक्षिताः, दुरवग्रहाः अपरायत्ताः, एते सप्त गोवृषाः, सन्ति । एतैर्गोवृषैः, भग्नाः भङ्गं प्राप्ताः, भिन्नानि एतैरेव भङ्गं गमितानि गात्राणि येषां तथाभूताः, सुबहवः नृपात्मजाः, अभवन् । एतान् यो निगृह्णाति तस्येयं कन्येति समयः कृतो भवतीति भावः ॥ ४३ ॥ यदीति । हे यदुनन्दन, यदि इमे त्वया एव, निगृहीताः स्युः, तर्हि हे श्रियः पते कमलाकान्त, मे मम, दुहितुः भवान् अभिमतः एव, वरः अस्ति ॥ ४४ ॥

### कृष्णप्रिया

कोसलेश नाग्नजित ने निवेदन किया—हे नाथ! आप समस्त सद्गुणों के एक ही अधिष्ठान है। आपके श्रीवक्षः-स्थल में भगवती श्रीदेवी नित्य निरंतर निवास करती है। भगवन् आपसे अधिक मेरी पुत्री के लिये योग्य और अभीष्ट वर भला और कौन हो सकता है॥ ४१॥ लेकिन हे यदुकुल शिरोमणि! हे श्रीकृष्ण! मेरा नम्र निवेदन कृपा करके श्रवण करें। हमने पूर्व से ही व्याह-विषय में एक प्रण कर लिया है। सत्या के लिये कौन सा वर योग्य है और उपयुक्त है? इसलिये वर का बल, पौरुष, सामर्थ्य की पहचान के लिये ऐसा प्रण प्रारम्भ से किया गया है॥ ४२॥ हे वीरवर यदुवीर श्रीकृष्ण! हमारे ये सातों बैल दुर्दान्त है; किसी के वश में न आने वाले और विना सधाये हुए हैं। इन सात बैलों ने अनेकानेक युवराजों के अंगो को खण्डित कर दिया है और युवराज हतोत्साह हो गये हैं। हम भी सचिन्त है॥ ४३॥ हे श्री यदुनन्दन! हे श्रीकृष्ण! कृपा करके यदि आप ही इन सात बैलों को नाथ लें और अपने वश बना लें तब तो हे श्रीकान्त! हे श्रीपते! आप ही हमारी पुत्री सत्या के लिये सर्वाभीष्ट वर होंगे॥ ४४॥

**एवं समयमाकर्ण्य बद्ध्वा परिकरं प्रभुः[1]। आत्मानं सप्तधा कृत्वान्यगृह्णाल्लीलयैव तान्॥ ४५॥**
**बद्ध्वा तान् दामभिः शौरिर्भग्नदर्पान् हतौजसः।[2]व्यकर्षल्लीलया बद्धान् बालो दारुमयान् यथा॥ ४६॥**
**ततः प्रीतः सुतां राजा ददौ कृष्णाय विस्मितः। तां प्रत्यगृह्णाद् भगवान् विधिवत् सदृशीं प्रभुः॥ ४७॥**
**राजपत्न्यश्च[4] दुहितुः कृष्णं लब्ध्वा प्रियं पतिम्। लेभिरे परमानन्दं जातश्च परमोत्सवः॥ ४८॥**

### कर्दमक्षमा

अन्वयः—प्रभुः, एवम्, समयम्, आकर्ण्य, परिकरम्, बध्वा, आत्मानम्, सप्तधा, कृत्वा, लीलया, एव, तान्, न्यगृह्णात्॥ ४५॥ शौरिः, भग्नदर्पान्, हतौजसः, तान्, दामभिः, बध्वा, यथा, बालः, दारुमयान्, बद्धान्, "लीलया, व्यकर्षत" तथा, व्यकर्षयत्॥ ४६॥ ततः, विस्मितः, राजा, प्रीतः, सन्, कृष्णाय, सुताम्, ददौ, प्रभुः, भगवान्, सदृशीम्, ताम्, विधिवत्, प्रत्यगृह्णात्॥ ४७॥ राजपत्न्यः, च, "कुटुम्बिनः", दुहितुः, प्रियम्, कृष्णम्, पतिम्, लब्ध्वा, परमानन्दम्, लेभिरे, च, परमोत्सवः, जातः॥ ४८॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

एतान्यो निगृह्णाति तस्य कन्येति समयः कृतस्तम्। सप्तधा कृत्वेति बह्वीनां योषितां सम्पूर्ण एवाहं संभोगयोग्यः स्यामिति सत्यां प्रत्यसापत्न्यप्रदर्शनार्थमात्मनः सप्तधा करणम्॥ ४५-४९॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

परिकरं दृढगात्रिकाबन्धम्। एतान्वृषान् निगृह्णाति स्वायत्तीकरोति तं समयम्। सप्तधेति स्वामिचरणैर्व्याख्यातमेव। आकर्ण्याकर्णनानन्तरमेव स्मित्वेति ज्ञेयम्। परिकरं वस्त्रादिपरिच्छदं दृढं बद्ध्वा, यतः प्रभुः सर्वत्र समर्थः। यद्वा—गोपलीलाभ्यासादेव तत्र समर्थः। आत्मानं श्रीविग्रहं कृत्वा प्रकाश्य। एवशब्दोत्रेवार्थे। सप्तधा कृत्वेव क्षिप्रकारित्वादिति भावः॥ ४५॥ तान् वृषान्॥ ४६॥ ततो वृषबन्धनोत्तरम्। तां सत्याम्। विस्मितः अकस्मात्तादृशस्वभाग्यफलोदयात्। प्रत्यगृह्णात् उद्वहति स्म। अन्यत्स्पष्टम्॥ ४७॥ चाद्राजापि॥ ४८॥

### श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी

आकर्ण्य आकर्णनानन्तरमेवेत्यर्थः। स्मित्वेति ज्ञेयं परिकरं वस्त्रादिपरिच्छदं दृढं बद्ध्वा यतः प्रभुः सर्वत्र समर्थः यद्वा गोपलीलाभ्यासादिव तत्र समर्थ इत्यर्थः। आत्मानं श्रीविग्रहं कृत्वा प्रकाशयित्वा अन्यत्तैः यद्वा एवशब्द इवार्थे सप्तधा कृत्वेव क्षिप्रकारित्वादिति भावः॥ ४५॥ दारुमयान् तत्रापि दामभिर्बद्धान्॥ ४६॥ विस्मितः अकस्मात्तादृशस्वभाग्यफलोदयात् प्रत्यगृह्णात् उद्वहति स्म, उद्वाहसम्पदं दर्शयति, प्रभुः सर्वसामर्थ्ययुक्तः॥ ४७॥ दुहितुः प्रियमभीष्टं पतिं लब्ध्वा परमानन्दं प्राप्ताः अत एव उत्सवश्च परमो जातः॥ ४८॥

### श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी

परिकरं वस्त्रादिपरिच्छदं दृढं बद्ध्वा, यतो लीलया विकर्षणे दृष्टान्तः—दारुमयान्, तत्रापि दामभिर्बद्धान्, बालो यथेति॥ ४५-४६॥ विस्मितः साक्षात्तन्महाद्भुतानुभवात्; यद्वा, प्रीतत्वाद्विशिष्टं स्मितं यस्य सः, सदृशीं रूपगुणादिभिः

---

१. विभुः-वीर.। २ दन्तान्-वीर.। ३ व्याचकर्ष तथा बध्वा। ४. पत्न्यः स्व-वीर. विज.।

स्वतुल्यां तां विधिवत् प्रत्यगृह्णात्, यथाविध्युपयेमे, यतः प्रभुः प्रियजनमनोरथपरिपूरणसमर्थः यतो भगवान् सर्व्वैश्वर्य्यप्रकटनपरः, स्व-शब्देन तासां तस्यां स्नेहभरः सूच्यते ॥ ४७ ॥ अतस्तस्तस्याः प्रियमभीष्टं पतिं लब्ध्वा परमानन्दं प्राप्ताः, अतएव परम उत्सवश्च जातः ॥ ४८ ॥

**श्रीमद्वीरराघवाचार्यकृता भागवतचन्द्रचन्द्रिका**

एवमिति । परिकरमुत्तरीयादिकं लीलयैवेत्यनेन श्रमाभाव उक्तः तान् वृषान् न्यगृह्णात् ॥ ४५ ॥ बद्ध्वेति । दामभिः रज्जुभिर्भग्नाः दन्ता येषामत एव हतमोजो बलं येषां तान् वृषान् बद्ध्वा व्यचकर्षाऽऽकृष्टवान् यथा बालो बद्धान् दारु ( काष्ठ ) मयान् वृषान्, विकर्षति तद्वत् ॥ ४६ ॥ तत इति । ततो वृषग्रहणात् प्रीतः पूर्वमेव प्रीतः ततः सुतरां प्रीत इत्यर्थः । विस्मितश्च राजा नग्नजित् प्रभुः श्रीकृष्णः सदृशीमनुरूपां तां कन्यां यथाविधि प्रत्यगृह्णादुपयेम इत्यर्थः ॥ ४७ ॥ राजपत्न्य इति । दुहितुः प्रियं पतिं लब्ध्वा राजपत्न्यः परमानन्दं प्रापुः तदा महानुत्सवश्चासीत् ॥ ४८ ॥

**श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली**

परिकरं चैलोष्णीषादिलक्षणम् ॥ ४५-४८ ॥

**श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः**

विस्मितः अकस्मात्तादृशस्वभाग्यफलोदयात् ॥ ४७-५८ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धीये श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे अष्टपञ्चाशत्तमोऽध्यायः ॥ ५८ ॥

**श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः**

आत्मानं सप्तधा कृत्वेति । सप्तधा अकृत्वेति भावः । एकश्चेत् सप्तवृषान् बध्नोति तदातिचित्रम् । सप्तधा कृत्वेति ऐश्वर्यप्रकटनमेव । तच्च नाग्नजित्या बहुसपत्नीकत्वे भगवतो बहुतनुत्वमाश्वासजनकमिति न रसजनकम् ॥ ४५-५८ ॥

इति श्रीदशमे श्रीबृहत्क्रमसन्दर्भे अष्टपञ्चाशोऽध्यायः ॥ ५८ ॥

**श्रीनाथचक्रवर्तिपादविरचिता चैतन्यमतमञ्जूषा**

आत्मानं सप्तधा प्रकृत्वा एक एवेत्यर्थः ॥ ४६-५८ ॥

इत्यष्टपञ्चाशोऽध्यायः ॥ ५८ ॥

**श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शिनी**

सप्तधाकृत्वेति । सप्तधा कृत्वेत्येवमेव बह्वीरपि विलासिनीरहं सम्भुञ्जे इति मम बहुवल्लभत्वेपि न ते कापि क्षतिरिति सत्यां ज्ञापयामासेति श्रीस्वामिचरणाः ॥ ४५-५० ॥

**गूढार्थदीपिनी**

समयं प्रतिज्ञाम् । परिकरमत्र कटीयवस्त्रं बद्ध्वा दृढं कृत्वा । एवशब्द इवार्थे कृत्वेव ॥ ४५ ॥ दामभिः रज्जुभिः । ओजो बलम् । लीलया अनायासेन दारुः काष्ठम् ॥ ४६-४७ ॥ चात् राजापि ॥ ४८ ॥

**श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः**

एकेनैव रूपेण गोवृषनिग्रहो युक्तः तथापि सत्यायाः सापत्न्यभयनिवृत्तये आत्मानं सप्तधा कृत्वा न्यगृह्णात् ॥४५-४६॥ सदृशीं कुलरूपतः ॥ ४७-४९ ॥

**श्रीसत्यधर्मकृता श्रीभागवतटिप्पणी**

नन्दनन्दनो वर इत्यानन्दो दधौ मग्नो नग्नजित्प्रतिश्रवो मे प्रससार सारसाक्षीवितरणे प्रकारान्तरेण तन्निवर्त्य कन्या ग्राह्येत्थमनुग्राह्य इति वदति । क इति । हे नाथ । ते सकाशादभ्यधिकः कन्यावरोऽन्यः को न कोऽपीप्सितः सम्प्रतिपन्नोऽधिकस्तन्मात्रेणोनेत्यधिकोना कन्येति अधिको वर ईप्सित इति वा । तद्धेतुमाह । यस्य तव गुणैकधाम्नोऽङ्गेऽनपायिनी श्रीर्वसतीति ॥ ४५ ॥ किन्तु तयाऽप्यस्माभिः पूर्वं त्वदागमनतः समयः कृतः पुंसां राज्ञां वीर्यपरीप्सार्थं कः कस्माद्बलिष्ठ इति तत्तरतमभावज्ञानार्थम् । योऽधिको भवेत्स एव कन्यावर इति तदीप्सया ॥ ४६ ॥ तं समयप्रकारमाह । सप्तेति । हे वीर दुर्दान्ता अदम्या दुरवग्रहा गृहीतुमशक्या एतैर्वृषैर्भग्नाः स्विन्नगात्रा नृपात्मजा गता इति शेषः ॥ ४७ ॥ हे यदुनन्दन त्वयेमे यदि निगृहीताः स्युस्तर्हि श्रियःपते दुहितुर्भवानभिमतो वरः ॥ ४८ ॥

## श्रीमद्वल्लभाचार्य्यकृता सुबोधिनी

प्राप्तैव कन्या, समयः परं पूरणीय इति राज्ञो विश्वासार्थमलौकिकप्रकारं निराकुर्वन् कटिबन्धनादिकं कृत्वा तथा कृतवानित्याह एवमिति। विभुः सर्वप्रकारेण कर्तुं समर्थः। अन्त प्रविष्टः आत्मानं सप्तधा कृतवान्। सप्तापि भगवानेव भवति। अलौकिकं तु न कर्तव्यम्। रूपाणि त्वेकस्य बहून्यपि भवन्ति। पुत्राश्चित्राणि। कालभेदेन च तानि न तिष्ठन्तीत्येतावन्मात्रमुत्कर्षहेतुरेव। नत्वलौकिकं किञ्चित्। ततो लीलयैव न्यगृह्णात्। लीलैवोत्कर्षहेतुः। बन्धनं तु सुगममेव। निगृह्य बद्ध्वा समानीतवानित्याह—बद्ध्वेति॥ ४५॥ दामभिः पृथक् पृथक्। पूर्वं शृङ्खलाभिरपि न बद्धास्तिष्ठन्तीति। शौरिरिति लौकिकोत्कर्षः। गर्वो बलं च हतम्। ततो लीलया व्यकर्षत्। यथा मृतप्राया बलीवर्दा आकृष्यन्ते भारपीडिताः। बलीवर्दत्वमपि तेषां निवृत्तमिति दृष्टान्तेनाह बालो दारुमयानिति। ते हि विपरीता अपि पतिता बालेनाकृष्यन्ते, तथा विशीर्णवियवा आकृष्टा इति तेषां गर्वोऽपि निराकृतः, राज्ञश्च॥ ४६॥ ततो राजकन्यां दत्तवानित्याह विस्मित इति। आदौ विस्मितः, पश्चान्मुदितः, बन्धनवशीकरणनिःसत्त्वकरणान्यत्याश्चर्याणीति **विस्मयः**। एतदर्थमेव प्रतिज्ञेति कार्ये सम्पन्ने मुदितः। **राजेति** महता सम्भ्रमेण तस्मै दुहितरं ददौ याचनदानप्रतिग्रहाः तस्यां जाता इति वक्तुं भगवानपि तां प्रतिगृहीतवानित्याह **तां प्रत्यगृह्णादिति**। भक्तावेव भगवानेवं करोतीति **भगवानित्युक्तम्**। धर्मपरोऽयं भगवच्छब्दः। तदेव ज्ञापयति **विधिवदिति**। वैदिकधर्मास्तत्र योजितवान्। तदा लौकिका आसुरा वा धर्मास्तां न स्पृशन्तीति सर्वथा स्वाभिप्रेतं सम्पादयति। तस्यां तथाकरणे हेतुमाह **सदृशीमिति**। स्वभावतः सदृशी। आगन्तुकदोषाभावाय तथाकरणम्। तस्यां दोषदूरीकरणार्थं तथाकरणे लौकिकत्वं भगवति स्यात्, अत आह **प्रभुरिति**। स्वयं स्वत एव समर्थः॥ ४७॥ तद्द्वारा सर्वासामेव स्त्रीणां हितं कृतवानित्याह **राजपत्न्य** इति। आदौ राज्ञोपि ताः धर्मैकहेतवो जाताः। ततो दुहितरि सापत्न्याभावः। तद्द्वारा स्वस्य सम्बन्धः भगवत्युत्कर्षबुद्धिः स्नेहश्चेति कृष्णमुद्धारकं प्रियमान्तरमीप्सितम्, पतिं बाह्यम्। ऐहिके बाह्याभ्यन्तरसुखदाता। पश्चादपि सायुज्यदः। अतः स्वस्यापि तद्द्वारा तथा भविष्यतीति परमानन्दं लेभिरे। सन्तोष एव तासां निस्तारे नियामकः। आन्तरमुक्त्वा तासां बाह्यमाह **जातश्च परमोत्सव** इति। महानेव सम्भ्रमस्ताभिः कृत इत्यर्थः॥ ४८॥

## श्रीसुबोधिनी-सारः

शुकोक्तिः। एवं समयं तस्य पणमाकर्ण्य श्रुत्वा परिकरं कट्युपरि पीतांबरं बद्धात्मानं सप्तधा कृत्वा प्रभुः समर्थो लीलयैव तान् वृषभान् न्यगृह्णात्॥ ४५॥ हतो दर्पो गर्वो येषां हतमोजो वीर्यं शक्तिर्येषां तान् बद्धा दामभिः रज्जुभिर्बद्धान् तान् लीलया कर्षितवान् दारुमयान् काष्ठपुत्तिकान् बाल इव 'वत्सवृषासुरवदेतेषामप्यसुरांशत्वाद्धननं युक्तम्' इति भट्टाः॥ ४६॥ ततः कर्मणो विस्मितो राजा प्रीतः कृष्णाय सुतां पुत्रीं ददौ आत्मनः सदृशीं तां विधिवत् प्रभुर्भगवान् परिणिन्ये॥ ४७॥ दुहितुः पुत्र्याः प्रियं कृष्णं पतिं लब्ध्वा राज्ञः पत्न्यः स्त्रियः श्वश्र्वाश्च परमानंदं लेभिरे प्रापुः परमोत्सवो महान्महो जात॥ ४८॥

## श्रीविट्ठलरायात्मजश्रीवल्लभकृतलेखः

**व्याख्याने। स्वस्य हीनतामिति**। मे इत्येकवचनेन स्वस्य हीनता बोधितेत्यर्थः। एवमित्यत्र। **न तिष्ठन्तीति**। भगवत इति शेषः। यावत्तत्कार्यं स्थापयित्वा स्वस्मिन् उपसंहरति, अतो न तिष्ठन्ति। लोकानां तु पुत्रादयो जाताः स्वस्मिन्नुपसंहृता न भवन्तीत्यर्थः। **तां प्रत्यगृह्णादित्यत्र। धर्मपरोयमिति**। ऐश्वर्यादिगणनायां धर्मस्येत्यपि क्वचित्पाठः। तत्पर इत्यर्थः। तथाच धर्मप्रकारेण विधिवदुपयेमे इत्यर्थः। **राजपत्न्य** इत्यत्र। **ततो** दुहितरीति। यज्ञसंयोगे एव नकारङीष्विधानेन पत्नीशब्दसिद्धया धर्महेतुत्वाद्धेतोः सपत्नीदुहितरि सपत्नमातृणां सापत्न्याभाव इत्यर्थः। **स्नेहश्चेति**। एतावत्सर्वं चकारेण सूचितमित्यर्थः।

## गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

एवंभूतं समयं प्रतिज्ञामाकर्ण्य श्रुत्वा परिकरं उत्तरीयादिकं कट्यां बद्ध्वा प्रभुः सर्वथा सर्वं कर्तुं समर्थः श्रीकृष्णो लीलयैव सङ्कल्पमात्रेणैवात्मानं सप्तधा कृत्वा तान्यगृह्णात् वशीकृतवान् विद्धनासिकान् कृत्वा बबन्धेत्यर्थः॥ ४५॥ हतं ओजो बलं येषां तान् अत एव भग्नो दर्पो गर्वो येषां तान् शौरिः कृष्णो दामभिर्बद्ध्वा बद्धांस्तान् लीलया अनायासेनैव व्यकर्षत्। तत्र दृष्टान्तमाह—बाल इति॥ ४६॥ ततो वृषनिग्रहात् विस्मितः आश्चर्ययुक्तः प्रीतः प्रसन्नचित्तश्च राजा स्वसुतां कृष्णाय ददौ, तां च सदृशीं स्वानुरूपां सत्यां भगवान् विधिवत् प्रत्यगृह्णात् उपयेमे। ननु 'रुक्मिण्यादीनां सत्त्वे तां किमर्थं उपयेमे' तत्राह—प्रभुरिति। स्वतन्त्रस्याभिप्रायं को वेद?॥ ४७॥ राजपत्न्यश्च दुहितुः प्रियं पतिं लब्ध्वा परमानन्दं लेभिरे, तत्र तदा महानुत्सवश्च जातः॥ ४८॥

**अन्वितार्थप्रकाशिका**

एवमिति ॥ एवंभूतं समयं प्रतिज्ञामाकर्ण्य श्रुत्वा परिकरम् उत्तरीयादिकं कट्यां बद्ध्वा प्रभुः श्रीकृष्ण आत्मानं सप्तधा कृत्वा प्रकाश्य तान् लीलयाऽनायासेनैव न्यगृह्णात् वशीकृतवान् विद्धनासिकान्कृत्वा बबन्ध । बह्वीनां योषितां पूर्ण एवाहं संभोगयोग्यः स्यामिति सत्यां प्रत्यसापत्न्यदर्शनार्थमात्मनः सप्तधाकरणम् । सप्तधा प्रकाशनं च सत्यां प्रत्येवेति अकृत्वा इति च्छेदो वा सप्तधा अकृत्वाऽपीत्यर्थः ॥ ४५ ॥ बद्ध्वेति ॥ हृतम् ओजो बलं येषां तान् अत एव भग्नो दर्पो गर्वो येषां तान् शौरिः कृष्णो दामभिर्बद्ध्वा बालो दारुमयान् यथा बध्नाति तथा बद्धांस्तान् लीलया अनायासेनैव व्यकर्षत् । ये च प्रलम्बखरेत्यत्र सप्तोक्षमुक्तिरुक्ता सा त्वेतत्प्रभावाद्देहान्ते बोध्या ॥ ४६ ॥ तत इति ॥ ततो वृषनिग्रहात् विस्मितः प्रीतश्च राजा स्वसुतां कृष्णाय ददौ । तां च सदृशीं स्वानुरूपां सत्यां प्रभुर्भगवान् विधिवत् प्रत्यगृह्णात् उपयेमे ॥ ४७ ॥ राजेति ॥ राजपत्न्यश्च कृष्णं दुहितुः प्रियं पतिं लब्ध्वा परमानन्दं लेभिरे । तत्र तदा परमो महानुत्सवश्च जातः ॥ ४८ ॥

**श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्**

तमेव परमोत्सवमाह सखेति वासांसि च स्रजश्च शोभनाश्च ता वासः स्रजश्च ताभिरलंकृता बभूव ॥ ४८ ॥

**भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी**

एवमिति । प्रभुः श्रीकृष्णः, एवमेवंविधं, समयं नृपकृतं भाषाबन्धं आकर्ण्य, परिकरं प्रगाढगात्रिकाविधानं, बद्ध्वा आत्मानं सप्तधा कृत्वा, तान् वृषान्, लीलयैव, न्यगृह्णात् । बह्वीनां योषितां सम्पूर्ण एवाहं संभोगयोग्यः स्यामिति सत्यां प्रत्यसापत्न्यदर्शनार्थमात्मनः सप्तधारणं, तत् केवलं सत्ययेक्षितं, अन्यथाऽन्येषामद्भुतता न संभवेदिति भावः ॥ ४५ ॥ बद्ध्वेति । शौरिः श्रीकृष्णः, भग्नदर्पान् हतौजसः, तान् दामभिः बद्ध्वा, बालः बद्धान् दारुमयान्, यथा तथा, लीलया व्यकर्षत् ॥ ४६ ॥ तत इति । ततो वृषग्रहणात्, प्रीतः पूर्वं प्रीतः सन्नपि ततः सुतरां प्रीत इत्यर्थः । विस्मितः सप्तोक्षणां क्षणमात्रेणानायासतो बन्धनदर्शनेन विस्मयं प्राप्तश्च, राजा कृष्णाय, सुतां ददौ । प्रभुः श्रीकृष्णः भगवान् सदृशीं स्वानुरूपां तां राजकन्यां, विधिवद्यथाविधि, प्रत्यगृह्णात् उपयेमे इत्यर्थः ॥ ४७ ॥ राजपत्न्य इति । राजपत्न्यश्च नृपाङ्गना अपि, दुहितुः प्रियं पतिं कृष्णं लब्ध्वा, परं आनन्दं, लेभिरे प्रापुः । तदा, परमोत्सवश्च, जातः ॥ ४८ ॥

**कृष्णप्रिया**

यदुवीर भगवान श्रीकृष्ण ने महाराज कोसलेश का प्रण सुनकर अविलम्ब से कमर में फेंट कस ली और नाथ ने सात नर स्वरूप धारण कर लिया और रमत रमत में ही सातों बैलों को नाथ लिया ॥४५॥ भगवान के नाथने से बैलों का बल एवं गर्व चूर्ण हो गया और उनका बल-पौरुष भी नष्ट हो गया । पुनः पुरुषोत्तम श्रीकृष्ण बैलों का रस्सी से बांधकर इस प्रकार खींचने लगे, कि जैसे खेलते समय एक छोटा सा बालक काठ के बैलों को खींच रहा है ॥ ४६ ॥ कोसलेश नग्नजित राजा को अत्यन्त आश्चर्य हुआ । महाराजा ने प्रसन्नता पुरःसर यदुवर भगवान् श्रीकृष्ण को अपनी पुत्री सत्या का सम्प्रदान कर दिया पुनः पूर्णपुरुषोत्तम भगवान् श्रीकृष्ण ने भी अपने सर्वथा सानुरूप पत्नी सत्या जी का विधिपूर्वक पाणिग्रहण किया॥४७॥ महाराज कोसलेश की महारानियों ने देखा कि अपनी सुकन्या सत्या को उसके अतिशय प्रिय द्वारिकाधीश भगवान् श्रीकृष्ण ही पतिरूप प्राप्त हो गये हैं । सब रानियों को अत्यन्त हर्ष हुआ और कोसलपुरी में चारों ओर उत्साह से उत्सव मनाने लगे ॥ ४८ ॥

**शङ्खभेर्यानका नेदुर्गीतवाद्यद्विजाशिषः । नरा नार्यश्च[1] मुदिताः सुवासःस्रगलंकृताः ॥ ४९ ॥**
**[2]दशधेनुसहस्राणि पारिबर्हमदाद् विभुः । युवतीनां त्रिसाहस्रं निष्कग्रीवसुवाससाम् ॥ ५० ॥**
**नवनागसहस्राणि नागाच्छतगुणान् रथान् । रथाच्छतगुणानश्वानश्वाच्छतगुणान् नरान् ॥ ५१ ॥**
**दम्पती रथमारोप्य महत्या सेनया वृतौ । स्नेहप्रक्लिन्नहृदयो यापयामास कोसलः ॥ ५२ ॥**

**कर्दमक्षमा**

अन्वयः—शङ्खभेर्यानकाः, नेदुः, गीतवाद्यद्विजाशिषः, "जाताः", मुदिताः, नराः, च, नार्यः, सुवासःस्रगलंकृताः, जाताः ॥ ४९ ॥ विभुः, दशधेनुसहस्राणि, पारिबर्हम्, अदात्, निष्कग्रीवसुवाससाम्, त्रिसाहस्रम्, अदात् ॥५०॥ नवनागसहस्राणि, नागात्, शतगुणान्, रथान्, रथात्, शतगुणान्, अश्वान्, अश्वात्, शतगुणान्, नरान्, अदात् ॥५१॥ स्नेहप्रक्लिन्नहृदयः, कोसलः, महत्या, सेनया, वृतौ, दम्पती, रथम्, आरोप्य, यापयामास ॥ ५२ ॥

१. नार्यः प्र-श्रीधर. वंशी. जीव. वीर. विज. विश्व. शुक. । २. शतं धेनुसहस्राणां-च. पु. टि. ।

### श्रीधरस्वामिविरचिता भावार्थदीपिका

निष्कग्रीवाश्च ताः सुवाससश्च तासां युवतीनां च दासीनाम् ॥ ५० ॥ नागान्नागेभ्यः शतगुणान्नवलक्षाणि । रथाद्रथेभ्यः शतगुणान्नकोटीः । अश्वादश्वेभ्यः शतगुणान्नवपद्मानि ॥ ५१-५२ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

गीतादयः-अभूवन्निति शेषः ॥४९॥ युवतिपदमत्र दासीपरम् ॥५०॥ नागादित्यादित्रिक एकत्वं सामान्याभिप्रायम् ॥५१॥ रथमारोप्य रथे स्थापयित्वा ॥ ५२ ॥

### श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी

तमेवाह—शङ्खेति । शङ्खादीनां यथापूर्वं महोत्सवापेक्षया मङ्गलत्वे श्रैष्ठ्यं वाद्यं गीतानुसारि तालादिप्रमुदिता इति नृत्यमपि ज्ञेयं सुशोभनानि वासांसि स्रजश्च येषां ते च कुण्डलाद्यलङ्कृताश्च बभूवुः ॥ ४९ ॥ दशेति युग्मकम् । धेनवः नवप्रसूता गावः अतः सवत्सा ज्ञेयाः विभुस्तत्तद्दाने समर्थः धेनुदानस्यादावुक्तिः सर्वदानश्रैष्ठ्यात् श्रीकृष्णस्याधिकतोषहेतुत्वाद्वा नागादिभ्यो युवतीनां प्रागुक्तिर्दास्यादिना तासां तेभ्यः श्रैष्ठ्यात् ॥ ५० ॥ तथा नागादिभ्यो यथोत्तरमधिकेभ्यस्तासां नागतृतीयांशेनाल्पत्वाद् निष्काणामेवोक्तिः प्राधान्यात् नागादित्यादेर्जातावेकत्वं नरान् दासपदात्यादीन् ॥ ५१ ॥ आवृत्तौ कृत्वेत्यर्थः । यतः स्नेहेन प्रकर्षेण बहिरप्यश्रुधारापातनादिना क्लिन्नमार्द्रं हृदयं यस्य सः ॥ ५२ ॥

### श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी

तमेवाह—शङ्खेति । नेदुः स्वयमेव शङ्खादीनां यथापूर्व्वं महोत्सवापेक्षया मंगलत्वे श्रैष्ठ्यम्, वाद्यगीतानुसारि-तालादि-प्रकर्षेण मुदिता इति नृत्यमपि ज्ञेयम् । सुशोभनैर्वासोभिः स्रग्भिश्चालंकृताः, अन्येषां भूषणानामपेक्ष्यत्वेऽपि वासःस्रजामेवोक्तिः, महोत्सवे तत्तद्विशेषापेक्षया । यद्वा, सुशोभनानि वासांसि स्रजश्च येषां ते च ते कुण्डलाद्यलंकृताश्च ॥ ४९ ॥ धेनवो नवप्रसूता गावः, अतः सवत्सास्ता ज्ञेयाः । विभुस्तत्तद्दाने समर्थः । धेनुदानस्यादावुक्तिः सर्व्वदानतः श्रैष्ठ्यात्, कृष्णस्याधिकतोषहेतुत्वाद्वा । नागादिभ्यो युवतीनां प्रागुक्तिर्दास्यादिना तासां तेभ्यः श्रैष्ठ्यात्; तथा नागादिभ्यो यथोत्तरमधिकेभ्यस्तासां नागतृतीयांशत्वेनाल्पत्वाच्च । अन्याभरणानामपेक्ष्यत्वेऽपि केवलं निष्कस्योक्तिः स्त्रीभूषणेषु तस्य प्राधान्यात्; अतोऽन्यान्यपि ज्ञेयान्येव । नागादित्यादिर्जातावेकत्वम्, नरान् दासपदात्यादीन् । आवृत्तौ कृत्वेत्यर्थः; यतः स्नेहेन प्रकर्षेण बहिरप्यश्रुधारापातादिना क्लिन्नमार्द्रं हृदयं यस्य सः ॥ ५०-५२ ॥

### श्रीमद्वीरराघवाचार्यकृता भागवतचन्द्रचन्द्रिका

उत्सवमेव प्रपञ्चयति—शङ्खेति । नेदुर्दध्वनुः तथा गीतयुक्तानि वाद्यानि द्विजानामाशिषश्चाशीर्वादाः नेदुः शोभनैर्वासोभिः स्रग्भिश्चालङ्कृता आसन्निति शेषः ॥ ४९ ॥ विभुर्नग्नजित् दशधेनूनां सहस्राणि पारिबर्हमुपायनमदात् निष्कग्रीवाः सुवाससश्च तासां युवतीनां दासीनां त्रिसाहस्रमदादित्यनुषङ्गः ॥ ५० ॥ नागानां गजानां नवसहस्राणि नागात् नागेभ्यः शतगुणं शतगुणान्नवलक्षाणि रथान् रथात् रथेभ्यः शतगुणान्नवकोटिपरिमितानश्वान्नश्वेभ्यः शतगुणान्नवपद्मसंख्याकान् नरान् भृत्यांश्च प्रादादित्यनुषङ्गः ॥ ५१ ॥ दम्पतीति । दम्पती नग्नजिद्भार्ये तदा रथमारोप्य सभार्यं कृष्णमिति शेषः । स्नेहेन प्रक्लिन्नमार्द्रं हृदयं ययोस्तौ यापयामासतुः गमयामासतुः पुरं द्वारकां "यापयामास कोसलः" इति पाठे स्नेहप्रक्लिन्नहृदय इति पाठ्यं दम्पती नाग्नजितीश्रीकृष्णौ इति योज्यम् ॥ ५२ ॥

### श्रीमद्विजयध्वजतीर्थकृतापदरत्नावली

गीतवाद्यानि द्विजाशिषश्च तथा प्रमुदिता अभूवन्निति शेषः ॥ ४९ ॥ पारिबर्हं स्त्रीधननिकायम् ॥ ५०-५७ ॥

### श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शिनी

नागात् नागेभ्यः शतगुणान् नवलक्षाणि, रथात् रथेभ्यः शतगुणान् नवकोटीः, अश्वात् अश्वेभ्यः शतगुणान् नव पद्मानि ॥ ५१-५२ ॥

### गूढार्थदीपिनी

गीतादयः आशीर्वादाश्च अभूवन्निति क्रियाशेषः ॥ ४९ ॥ पारिबर्हं कन्यादेयद्रव्यम् दहेज इति । युवतीनां दासीनाम् । निष्कमुरोभूषणम् ॥ ५० ॥ शतगुणान् नवलक्षाणि । पुनः शतगुणान् नवकोटीः । पुनः नवपद्मानि । प्रक्लिन्नमार्द्रम् ॥ ५२ ॥

**श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः**

विभुरसङ्कुचितज्ञानः निष्कग्रीवाश्च ताः सुवाससश्च तासां त्रिसाहस्रं नागात् नागेभ्यः शतगुणान् नवलक्षाणि रथात् रथेभ्यः, शतगुणान् नवकोटीः अश्वात् अश्वेभ्यः शतगुणान् नवपद्मानि ॥ ४०-५३ ॥

**श्रीसत्यधर्मकृता श्रीभागवतटिप्पणी**

परिकरं बद्ध्वा दुकूलादिकमेतदनुकूलं यथा स्यात्तथा बद्ध्वा आत्मानं सप्तधा सप्ताकारं कृत्वा तान् लीलयैव न्यगृह्णात् । नन्वेक एव सप्तवृषान्बध्नीयादिति कृतवता प्रतिज्ञां राज्ञा सप्तधाऽऽत्मानं विधाय बद्धुं धावतो माधवस्य कथं न निषेधः कृत इति चेत् । न, शक्तिमात्रव्यक्त्यर्थे प्रतिश्रवं मम योगमहिमाऽपि महान्प्रदर्शितोऽयमेको महालाभ इति तूष्णीकोऽतितुष्टश्चात्मजामार्पयदित्युपपत्तेः । तत्क्षण एकस्यैवानेकीभवने तदेकतानयाच्च । अत्र लोकानां सप्तधाऽऽदर्शयदिति सप्तधेत्युक्तिर्हरिवंशे परमतत्वापेक्षया तदनुक्तिरेक एवेत्युक्तिरिति न विरोधः । तथा हि हरिवंशे । ततः कृष्णो रुषा मुष्टिं सन्निवर्त्य जघान च । क्रमेण मुष्ट्या तान्सर्वान्हत्वैको दैत्यगोपतीनिति । ते च कालनेमिसुताः । तदुक्तं तत्रैव बलं प्रति कृष्णवाक्ये । कालनेमिसुता आर्य मां हन्तुमिह सङ्गता इति । भागवते न कथाक्रमनियम इति नीलादिविवाहादेः कंसहिंसादिप्राक्तनतावेदकेन हरिवंशेन च न विरोध इति मन्तव्यम् । इयं नीला सुदक्षिणात्मजा चैकीभूते इति नाष्टकातिरेकः । उक्तं चाचार्यैः । ततो नीलां तस्य सुतां च लेभे पूर्वं नीला गोपकन्याऽपि याऽऽसीत् । सा देहस्याप्राविशत्पूर्वमेषा यस्मादेका द्विविधा सम्प्रजातेति ॥४९॥ केरष्यबद्धान्बद्ध्वा बालो दारुमयान्काष्ठमयान्यथा तथा लीलया व्यचकर्षच्चकर्ष ॥ ५० ॥ सदृशीं स्वपत्नीत्वयोग्याम् ॥ ५१ ॥ प्रियमिष्टं परमानन्दं लेभिरे । उलूखले परमोत्सवो गोधूमकणिकीमुहूर्तोत्सवो जातः । लभिरं स्यादुलूखमित्यभिधानम् । तत्कुट्टनस्य स्त्रीमात्रकार्यत्वाद्राजपत्न्य इति तन्मात्रग्रहो युक्तः ॥ ५२ ॥

**श्रीमद्वल्लभाचार्यकृता सुबोधिनी**

अन्येषामपि सर्वेषां तत्प्रसङ्गात् कृतार्थतामाह शङ्खेति । शङ्खादयो वाद्यानि त्रिविधानि, गीतादीनि शब्दात्मकानि त्रिविधानि । षडेते सत्त्वादिसत्त्वान्ताः । गीतानकयो राजसत्वम् । **नरा नार्यश्चेति** । चकारादनुक्तसर्व सङ्ग्रहः । **मुदिता** इत्यान्तरम् । वस्त्रादयो बाह्यास्त्रयः । अलङ्काराः सहजा इति चकाराज्ज्ञेयाः ॥ ४९ ॥ राज्ञः सन्तोषेण प्रायेण सर्वस्वदानमाह **दशधेन्विति द्वाभ्याम्** । धर्मकामसाधका एकेन । अर्थसाधकाश्चतुरङ्गसेनारूपा अपरेण । अनभिप्रेतत्वान्न ग्रहीष्यतीत्याशङ्क्याह **पारिबर्हमिति** । कन्याग्रहणे तद्ग्रहणमावश्यकम् । विभुरिति प्रतिष्ठार्थं यथाकथञ्चिद्दानं वारितम् । धर्मो हि सहस्रदक्षिणः प्राकृतवैकृतभेदेन दशविधो भवति । कामस्त्रिविध इति सहस्रशो युवतयो दत्ताः । नायिकाभेदेन गुणभेदेन च त्रैविध्यम् । नियतालङ्कृता रसालम्बना इति । सहस्रशो गजाः सर्वावान्तरजातियुक्ता दत्ताः । नवैव नागभेदा भद्रादयः । रथादयः उत्तरोत्तरं शतगुणाः । पूर्वबुद्धेस्तस्योत्तरा वृद्धिः शतगुणं गृह्णाति ॥ ५०-५१ ॥ ततः स्नेहात्तत्र स्थापनं वारयितुं प्रस्थापनमाह **दम्पती इति** । स्थापने धर्मपत्न्यौ कुण्ठिते भवतः । रथं स्वकीयम् । गमनेऽपि राजप्रयत्न एव सर्वोऽपि सूचितः । महत्या सेनया च । तेनैव **वृतौ स्वयं** गमनमनुचितमिति । स्नेहेन हृदयक्लेदोऽपि गमने प्रतिबन्धकः । अनेन भक्तकर्तव्यं सर्वं कृतवानित्युक्तम् । कोसलदेशाधिपतिरिति स्वयं तत्र भक्तिकरणार्थं स्वयं स्थित इत्यप्युक्तम् ॥ ५२ ॥

**श्रीसुबोधिनी-सारः**

तथाहि शंखादयो नेदुः गीतानि वाद्यानि द्विजानां ब्राह्मणानामाशिषो जयजयेत्याशीर्वादा जाताः सुष्ठु वासोभिः स्रग्भिरलंकृता मंडिता नरा नार्यः पुरुषाः स्त्रियः प्रमुदिता बभूवुः ॥ ४९ ॥ धेनूनां सहस्राणि दश अयुतं पारिबर्हं विवाहदेयमदात् विभुः समर्थो राजा निष्को मणिर्ग्रीवायां यासां ताः सुष्ठु वासांसि यासां ताश्च ताश्चेति तासां युवतीनां तरुणीनां दासीनां त्रिसाहस्रमदादिति सर्वत्र संबध्यते ॥ ५० ॥ नागानां हस्तिनां सहस्राणि नवोदात् हस्तितः शतगुणान् ९००००० नवलक्षं रथान् रथतो शतगुणान् ९००००००० नवकोटीनश्वान् अश्वतः शतगुणान् ९००००००००० वृंदसंख्यामितान्नरान् पत्तीनदात् ॥ ५१ ॥ महत्या सेनया वृतौ युक्तौ दंपती वरवधूरूपौ रथमारोप्य स्नेहेन प्रेम्णा प्रक्लिन्नं द्रवीभूतं हृदयं चित्तं यस्य स कोसलो राजा प्रेषयामास ॥ ५२ ॥

**गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी**

उत्सवमेव प्रपञ्चयति—शङ्खेति । शङ्खादयः, तथा गीतयुक्तानि वाद्यानि, द्विजानामाशिषः आशीर्वादाश्च नेदुर्दध्वनुः । तथा प्रमुदिता नरा नार्यश्च शोभनैर्वासोभिः स्रग्भिश्चालङ्कृता आसन्निति शेषः ॥ ४९ ॥ तदा च विभुः दाने समर्थः नग्नजिद्राजा पारिबर्हमुपायनं कृष्णायादात् । तद्दर्शयति-धेनूनां दशसहस्राणि । निष्कः ग्रीवायां यासां सुष्ठु वासो यासां तासां युवतीनां

दासीनां त्रिसाहस्रमिति । अदादिति सर्वत्र सम्बन्धः ॥५०॥ नागा गजानां नवसहस्राणि । नागात् नागेभ्यः शतगुणान् नवलक्षाणि रथान् । रथात् रथेभ्यः शतगुणान् नवकोटिअश्वान् । अश्वादश्वेभ्यः शतगुणान् नवपद्मानि नरान् भृत्यान् ॥ ५१ ॥ स्नेहेन प्रक्लिन्नं आर्द्रं हृदयं यस्य स कौशलो नग्नजित् महत्या सेनयावृतौ दम्पती सत्याकृष्णौ रथमारोप्य यापयामास गमयामास ॥ ५२ ॥

## अन्वितार्थप्रकाशिका

शङ्खेति ॥ शङ्खभेर्यानकाः नेदुर्दध्वनुः तथा गीतयुक्तानि वाद्यानि द्विजानामाशिषः आशीर्वादाश्च बभूवुः तथा प्रमुदिता नरा नार्यश्च शोभनैर्वासोभिः स्रग्भिश्चालंकृता आसन्निति शेषः ॥ ४९ ॥ दशेति ॥ विभुः नग्नजिद्राजा धेनूनां दश सहस्राणि तथा निष्कः ग्रीवायां यासां निष्कमात्रोक्तिः प्राधान्यात् उपलक्षणमिदं सर्वभूषणानाम् । सुष्ठु वासा यासां तासां युवतीनां दासीनां त्रिसाहस्रं पारिबर्हमदात् ॥ ५० ॥ नवेति ॥ नागानां गजानां नव सहस्राणि नागात् नागेभ्यः । जातावेकत्वम् एवमग्रेऽपि । शतगुणान् नव लक्षाणि रथान् रथात् रथेभ्यः शतगुणान् नवकोटिमितान् अश्वान् अश्वादश्वेभ्यः शतगुणान् नव पद्मानि नरान् भृत्यान् पारिबर्हमदादित्यनुषङ्गः ॥ ५१ ॥ दम्पती इति ॥ स्नेहेन प्रक्लिन्नम् आर्द्रं हृदयं यस्य स कौसलः नग्नजित् महत्या सेनया वृतौ दम्पती सत्याकृष्णौ रथमारोप्य यापयामास गमयामास ॥ ५२ ॥

## श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्

निष्कग्रीवाश्चताः सुवाससश्च तासां युवतीनां दासीनां त्रिसाहस्रं च अदात् ॥ ४९ ॥ नवसंख्याकानि नागानां सहस्राणि । नागाद्धस्तिसमूहात् शतगुणान् रथान् ददौ ॥ ५० ॥ स्नेहेन विक्लिन्नमार्द्रं हृदयं यस्य सः कौसलः कोसलदेशाधिपतिः ॥ ५१ ॥ पुरा यदुभिर्यादवैः सत्यभिर्गोवृषैश्च भग्नवीर्या अपि सुदुर्मर्षाः तदुत्कर्षमसहमानाः रुरुधुः ॥ ५२ ॥

## भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

उत्सवमेव प्रपञ्चयति ॥ शङ्खेति । तदा शङ्खभेर्यानकाः, गीतयुक्तानि वाद्यानि च द्विजानामाशिष आशीर्वादाश्च, नेदुर्दध्वनुः । स्त्रियो गीतान्यगायन्, वादका वाद्यान्यवादयन्, द्विजा आशीर्वादमन्त्रान्पेठुरित्यर्थः । सुवासःवेगलंकृताः, नराः नार्यश्च, प्रमुदिताः, आसन्निति शेषः ॥ ४९ ॥ दशेति ॥ विभुर्नग्नजिन्नृपः, दश धेनुसहस्राणि दशसहस्रधेन्वात्कमित्यर्थः । निष्कग्रीवसुवाससां युवतीनां दासीनां, त्रिसाहस्रं त्रिसहस्रात्मकं च, पारिलर्हं अदात् ॥५०॥ नवेति ॥ नव नागसहस्राणि, गजानां नव सहस्राणीत्यर्थः । नागात् नागेभ्य इत्यर्थः । शतगुणान् नव लक्षाणीत्यर्थः । रथान्, रथाद्रथेभ्य इत्यर्थः । शतगुणान् नवकोटीपरिमितानित्यर्थः । अश्वान्, अश्वादश्वेभ्य इत्यर्थः । शतगुणान् नवपद्मपरिमितानित्यर्थः । नरान् भृत्यांश्च, प्रादादिति शेषः ॥ ५१ ॥ दंपती इति ॥ कौसलो नग्नजिन्नृपः, स्नेहप्रक्लिन्नहृदयः सन्, महत्या सेनया, वृतौ दंपती, रथं आरोप्य, यापयामास ॥ ५२ ॥

## कृष्णप्रिया

कोसलपुरी में सर्वत्र शङ्ख भेरी दुन्दुभि नगाड़े बजने लगे । चारों ओर मङ्गलगीत गाने लगे फिर विविध प्रकार का गाना-बजाना होने लगा । विप्रवर आशीर्वाद प्रदान करने लगे । उत्तम प्रकार के वस्त्राभूषण, पुष्पमाला; शृङ्गार, हार आदि से समलङ्कृत होकर कोसल नगर के नर-नारी-वृन्द आनन्द मनाने लगे ॥ ४९ ॥ कन्यादान के पश्चात् करियावरे महाराज कोसलेश ने दश हजार गौएँ और वस्त्राभूषण, कण्ठाभूषण, रत्नालङ्कारादि से सुशोभित एवं विभूषित तीन हजार नव-युवती दासियाँ दहेज में दी । दासियों के साथ नव हजार हाथी, नव लक्ष रथ, नव कोटि अश्व, एवं नव अरब सेवक भी दहेज में दिये ॥ ५०-५१ ॥ पुनः महाराज नग्नजितजी ने पुत्री सत्या को और जामाता श्रीकृष्ण को रथ में बैठाकर महती सेना के साथ प्रस्थान मान दिया । महाराज कोसलेश का हृदय पुत्री वात्सल्य स्नेह के उद्रेक से अत्यंत आर्द्र हो रहा था ॥ ५२ ॥

**[1]श्रुत्वैतद्रुरुधुर्भूपा नयन्तं पथि कन्यकाम् । भग्नवीर्याः सुदुर्मर्षा यदुभिर्गोवृषैः पुरा ॥ ५३ ॥**

**तानस्यतः शरव्रातान्[2] बन्धुप्रियकृदर्जुनः । गाण्डीवी कालयामास सिंहः क्षुद्रमृगानिव ॥ ५४ ॥**

**पारिबर्हमुपागृह्य[3] द्वारकामेत्य सत्यया । रेमे यदूनामृषभो भगवान् देवकीसुतः ॥ ५५ ॥**

**श्रुतकीर्तेः सुतां भद्रामुपयेमे पितृष्वसुः । कैकेयीं भ्रातृभिर्दत्तां कृष्णः संतर्दनादिभिः ॥ ५६ ॥**

१. न स्तः–विज. । २. व्रातै–प्रा. पा. । ३. मुपानीय–वीर ; च संगृह्य–विज. ।

**कर्दमक्षमा**

अन्वयः—पुराः, यदुभिः, गोवृषैः, भग्नवीर्याः, सुदुर्मर्षाः, भूपाः, कन्यकाम्, नयन्तम्, एतत्, श्रुत्वा, पथि रुरुधुः॥५३॥ बन्धुप्रियकृत्, गाण्डीवी, अर्जुनः, शरव्रातान्, अस्यतः, तान्, सिंहः, क्षुद्रमृगान्, इव, कालयामास ॥ ५४ ॥ यदूनाम्, ऋषभः, भगवान् देवकीसुतः, पारिबर्हम्, उपागृह्य, द्वारिकाम्, एत्य, सत्यया, रेमे ॥ ५५ ॥ कृष्णः संतर्नादिभिः, भ्रातृभिः, दत्ताम्, पितृस्वसुः, श्रुतकीर्तेः, सुताम्, कैकेयीम्, भद्राम्, उपयेमे ॥ ५६ ॥

**श्रीधरस्वामिविरचिता भावार्थदीपिका**

यदुभिर्गोवृषैश्च भग्नवीर्या अपि सुदुर्मर्षा असहनशीला रुरुधुः ॥५३॥ अस्यतः क्षिपतः प्रयुंजानानिति यावत् ॥५४-५५॥ सप्तमं विवाहमाह—श्रुतकीर्तेरिति । श्रुतकीर्तिर्नाम या पितृष्वसा तस्याः सुतां भद्रां नाम कैकेयीं तद्देशजाम् ॥ ५६ ॥

**श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः**

एतद्वृषवंधनपुरःसरं सत्योद्वहनम् । कन्यकां नयंतं प्राप्नुवंतम् । 'यदेभिर्गोवृषैः' इति पाठे तु यत् ये एभिर्नग्नजिद्गृहस्थैः । सुदुर्मर्षा असहन्तः ॥ रुरुधुरिति—विधिवद्विवाहे विलंबत्वाद्देशांतरान्नृपा आगता इति ॥ ५३ ॥ तान् रुन्धानान्नृपान् । गाण्डीवीत्यनेनार्जुनसाहित्यं दर्शितं कौशलपुरगमने । तत्रार्जुनस्यागमनं विवाहदर्शनार्थं निगूढसमाह्वानेनैव ज्ञेयम् । स्पष्टम् ॥५४॥ उपागृह्य सर्वमविकलमानीय ॥ ५५ ॥ पितृष्वसा वसुदेवभगिनी । तद्देशजां केकयदेशोद्भूताम् ॥ ५६ ॥

**श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी**

श्रुत्वा स्वस्वदेशात् इति विधिवद्विवाहे युक्तनक्षत्राद्यपेक्षया श्रीभगवतस्तत्रेषद्विलम्बोऽभूदित्युक्तं पथि रुरुधुः यतः सुदुर्मर्षाः अत्यन्तासहिष्णवः वीर्यं दर्पः तदापि यदुभिर्भग्नवीर्य्या बभूवुः । ते के ? तत्राह—ये पुरा गोवृषैर्भग्नवीर्य्याः बभूवुरिति ॥ ५३ ॥ तथापि तानस्यत इत्यादि कालयामास लीलयैव व्यद्रावयत् तत्रार्जुनस्य वरयात्रागमनं विवाहदर्शनार्थं निगूढसमाह्वानेन स्वयमेव स्नेहेन वा मध्ये मध्ये द्वारकागमनात् ॥ ५४ ॥ उप सामीप्येन आ सम्यक् गृहीत्वा तेषां विद्रावणे तु स्वयं न प्रवृत्त इति ॥ ५५ ॥ श्रुत्वेति स्पष्टम् ॥ ५६ ॥

**श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी**

श्रुत्वा स्वस्वदेशे, इति विधिवद्विवाहे युक्तनक्षत्राद्यपेक्षया श्रीभगवतस्तत्रेषद्विलम्बोऽभूदिति ज्ञेयम् । पथि रुरुधुः, यतः सुदुर्म्मर्षा अत्यन्तासहिष्णवः, वीर्य्यं दर्पः, कालयामास लीलयैव व्यद्रावयत्, यतो गाण्डीवी महासुप्रसिद्धधनुष्मान् । किमर्थम् ? बन्धोः श्रीकृष्णस्य प्रियकृत् सन् प्रियं कर्त्तुमित्यर्थः । तदानीं तत्रार्ज्जुनस्यागमनं पथि रोधनार्थदुष्टभूपवर्गोद्यमश्रवणादिति ज्ञेयम् ५३-५४ ॥ उप दाक्षिण्येन आ सम्यग् गृहीत्वा, इति पारिबर्हस्यापि भूपेभ्यो निर्व्विघ्नता सूचिता । यदुनामृषभस्तैः सेव्यमानः, देवक्याः सुत इति च तया लाल्यमानः सन्निति भावः । यतो भगवान् विचित्रक्रीडार्थमवतीर्णः साक्षात्परमेश्वरः, यद्वा, सर्व्वैश्वर्य्यपूर्णः सन् रेमे ॥ ५५ ॥ कृष्ण इति तत्तच्चित्ताकर्षणाभिप्रायेण, अतएव दत्ताम् ॥ ५६ ॥

**श्रीमद्वीरराघवाचार्यकृता भागवतचन्द्रचन्द्रिका**

श्रुत्वेति । एतद्भगवतो यानं श्रुत्वा यदुभिर्गोवृषैश्च सप्तभिर्भग्नं वीर्यं येषां तथाभूता अपि दुर्मर्षाः कन्यकां नाग्नजितीं नयन्तं श्रीकृष्णं पथि रुरुधुः ॥ ५३ ॥ तानिति । शरसमूहानस्यतः क्षिपतः प्रयुञ्जानानिति यावत् तान् भूपान् बन्धूनां कृष्णादीनां प्रीतिकृदर्जुनः गाण्डीवी धृतगाण्डीवधनुष्कः कालयामास पलाययाञ्चक्रे यथा क्षुद्रमृगान् सिंहः कालयति तद्वत् ॥ ५४ ॥ पारिबर्हमिति । पारिबर्हं श्वशुरदत्तमिति शेषः । एत्यागत्य सत्यया नाग्नजित्या सह ॥ ५५ ॥ अथ सप्तमं विवाहमाह—श्रुतकीर्तेरिति । सन्तर्दन आदिर्येषां तैर्भ्रातृभिर्दत्तां कैकयस्यापत्यभूतां स्वपितृष्वसुः श्रुतकीर्तेः सुतां भद्रां नाम कन्याम् उपयेमे ॥ ५६ ॥

**श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शिनी**

तदा यदुभिर्भग्नवीर्य्याः बभूवुः पुरा तु गोवृषैरपि ॥ ५३ ॥ कालयामास व्यद्रावयत् ॥ ५४-५५ ॥ सप्तमं विवाहमाह-श्रुतकीर्तेरिति ॥ ५६-५७ ॥

**गूढार्थदीपिनी**

सुदुर्मर्षा असहमानाः ॥ ५३ ॥ वाणसमूहान् अस्यतः क्षिपतस्तान् गाण्डीवी अर्जुनः कालयामास पलायितान् चकार ॥ ५४-५५ ॥ सप्तममाह-कैकेयीं केकयदेशोद्भवाम् ॥ ५६ ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

अस्यतः क्षिपतः ॥ ५४-५५ ॥ श्रुतकीर्तेः पितृष्वसुः सुतां भद्रां नामतः कैकेयीं तद्देशजाम् ॥ ५६ ॥

### श्रीसत्यधर्मकृता श्रीभागवतटिप्पणी

शङ्खभेर्यानका नेदुः । आशिषो नराः नार्यश्च सुवाससः स्रगलङ्कृता बभूवुरिति शेषः ॥ ५३ ॥ धेनुसहस्राणि दशनिष्कग्रीवाश्च ताः सुवाससश्च तासां युवतीनां त्रिसाहस्रम् ॥ ५४ ॥ नांगानां गजानां सहस्राणि नव । नागान्नागसमूहात् । तस्य समूह इत्यण् । शताधिकगुणोपेतान् नवलक्षसङ्ख्यानिति यावत् । रथात्सङ्घाच्छतगुणान्नवकोटिसंख्यान् । अश्वाच्छतगुणान् नवपद्मसङ्ख्यान् नरान्पत्तिमिति यावत् । विभुरिति तद्धितरणसमर्थतां बोधयति । पारिबर्हमदाद्दत्तवान् ॥ ५५ ॥ महत्या स्वसेनामेलनात् ॥ ५६ ॥

### श्रीमद्वल्लभाचार्य्यकृता सुबोधिनी

भगवतः सामर्थ्यं प्रतिपादयितुं वृषभजये लोकप्रसिद्धिर्न जातेति तैर्भग्नावयवाः सम्भूय तं ग्रहीतुं यत्नं कृतवन्त इत्याह श्रुत्वैतदिति । एतद्भगवच्चरित्रम् । **भूपा** इति तेषां स्वदेश उक्तः । भगवतस्तु नापि स्वदेशः, नापि श्वशुरदेशः । सर्वतो रोधे वैयर्थ्यं भवतीति । कन्यकामेव नयतीत्यन्यथा श्रुत्वा किञ्चिद्धर्मबुद्धयोऽपि समागताः । अतो राजबाहुल्यं भवति । **पथी**ति विशकलितता सेनायाः । तेषामागमने हेतुं वैरमाह **यदुभिर्भग्नवीर्या** इति । कन्यार्थं क्लिष्टा अपीत्याह **गोवृषैः पुरा भग्नवीर्या** इति । तथाप्यागमने हेतुः **सुदुर्मर्षा** इति । सुष्ठु दुष्टो मर्षो येषामिति । दुरुपसर्गेण दुष्टः क्रोधो भवति ॥ ५३ ॥ न केवलं रोधनमात्रम्, किन्तु मारणार्थमपि प्रवृत्ता इत्याह **तानस्यत** इति । भक्तौ भगवदानुगुण्येऽपि भक्तानुगुण्यमप्यपेक्ष्यत इति वक्तुं भगवत्सेवकेनैव ते सर्वे हता इत्याह **अर्जुन** इति । अलौकिकं भगवता न कर्तव्यम्, ऐश्वर्यं च भक्तिमार्गे स्थापनीयम् । अर्जुनोऽपि न भगवत्प्रेरणया युद्धं कृतवान्, किन्तु बन्धूनां भगवद्भक्तानां वसुदेवादीनां प्रियकृत्, यथा भक्तौ भक्तापेक्षा भवति, बान्धवाश्च स्वोपकारं मन्येरन् । गाण्डीवादोनामुदासोनापकारोपकारौ निरूपितौ । बन्धुनामत्रोपकारो निरूप्यते । एतत्सूचयति **गाण्डीवी**ति । **कालयामासे**ति । कालवत् जग्रासेति सूचितम् । नात्यन्तं क्लेशोऽपि तस्य जात इति ज्ञापयितुं दृष्टान्तमाह **सिंहः क्षुद्रमृगा**निति ॥ ५४ ॥ उपसंहरति **पारिबर्ह**मिति । सोपस्करां तां गृहीत्वा विधितोऽपि समानीय परमां रतिं तस्यामुत्पादितवान् । भगवान् नान्यत्र रमते, यथा भक्तौ रमत इति सर्वाभ्यो विशेष उक्तः । द्वारकागमनमर्थादुक्तम् । **यदूनामृषभ** इति तया गार्हस्थ्यं सम्यक्सम्पादितमिति लक्ष्यते । तत्र सर्वोपपत्तिसिद्ध्यर्थं **भगवा**निति । एवं रमणे भक्तकृपैव हेतुरित्याह **देवकीसुत** इति ॥ ५५ ॥ कीर्तिं श्रियं च विधितो गृहीत्वा अष्टैश्वर्ययुक्तः सर्वा एव गृहीतवानित्याह **त्रिभिः श्रुतकीर्ते**रित्यादिभिः । श्रुतकीर्तिरपि पितृभगिनी । कैकयदेशाधिपतेः पुत्री । ज्ञानानन्तरशक्तिर्भ्रातृनिषिद्धेति भक्त्यनन्तरापि कीर्तिस्तथा भविष्यतीति तन्निषेधार्थमाह **भ्रातृभिर्दत्ता**मिति । कृष्ण इत्यसामग्रीमप्येनां गृहीतवान् । संतर्दनोऽतिप्रसिद्ध इति । श्रुतेन कीर्तिः श्रुता वा कीर्तिर्यस्या इति कीर्तिकारणता युक्ता । तर्दनं शब्द इति भवत्येव प्रसिद्धिः । कैकयदेशः पाश्चात्यः ॥ ५६ ॥

### श्रीसुबोधिनीसारः

एतत् वृत्तांतं श्रुत्वा पथि मार्गे कन्यकां नयंतं श्रीपुरीं प्रापयन्तं श्रीकृष्णं भूपा रुरुधुः सुदुर्मर्षा अतिक्रुद्धास्ते पूर्वं गोवृषैरिदानीं यदुभिर्भग्नवीर्या हतबला अभवन् ॥ ५३ ॥ शराणां व्रातान् समूहान् अस्यतः क्षिपतस्तान् राज्ञः बन्धोः सख्युः प्रियकृत् गांडीवी गांडीवधन्वार्जुनः परिद्रावयांबभूव सिंहः क्षुद्रान्मृगान् इव ॥ ५४ ॥ पारिबर्हं सर्वमुररीकृत्य द्वारकामेत्य यदूनामृषभो भगवान् देवकीपुत्रः सत्यया सह रेमे ॥ ५५ ॥ पितृष्वसुः श्रुतकीर्त्तेः सुतां भद्रां नाम्नीं कैकेयीं केककदेशजां तद्भ्रातृभिः सन्तर्दनादिभिर्दत्तां कृष्ण उपयेमे उवाह ॥ ५६ ॥

### श्रीविट्ठलरायात्मजश्रीवल्लभकृतलेखः

**तानस्यत** इत्यत्र । **उदासीनोपकारापकाराविति** । उदासीनस्य मयस्योपकारोऽग्नेश्चापकार इत्यर्थः । **श्रुतकीर्ते**रित्यस्याभासे । **कीर्तिं श्रियं चेति** । ज्ञानवैराग्यधर्मकीर्तिश्रीरूपा एताः क्रमेण । भौमाहृता ऐश्वर्यरूपा इत्याशयेनाहुः **अष्टैश्वर्ययुक्त** इति । रुक्मिण्यादयोऽष्टौ महिष्योऽष्टविधैश्वर्यरूपा इत्यप्यनेन सूचितम् । **व्याख्याने** । **ज्ञानानन्तरेति** । मित्रविन्दाभ्रातृभ्यां विन्दानुविन्दाभ्यां निषिद्धेत्यर्थः ।

### गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

एतत् कृष्णस्य प्रयाणं श्रुत्वा भूपाः कन्यकां सत्यां नयन्तं कृष्णं पथि मार्गे रुरुधुः । तेषां मूर्खत्वं सूचयन्नाह—यदुभिर्गोवृषैश्च पुरा भग्नवीर्याः पराजिता इति । तथापि तन्निरोधे हेतुमाह—सुदुर्मर्षा इति । पराजयं कन्यानयनं च असहमानाः

इत्यर्थः ॥ ५३ ॥ शरसमूहानस्यतः क्षिपतः प्रयुञ्जानान् तान् भूपान् बन्धोः कृष्णस्य प्रियं करोतीति तथा गाण्डीवी धृतगाण्डीवोऽर्जुनः कालयामास पलायितान् कृतवान् इत्यर्थः। तत्र दृष्टान्तमाह—क्षुद्रमृगान् सिंह इवेति ॥ ५४ ॥ अथ भगवान् कृष्णः श्वशुरदत्त पारिबर्हं उपागृह्य द्वारकामेत्य आगत्य सत्यया सह रेमे इत्यन्वयः। 'भगवान्' इत्यनेन सामर्थ्यम्, 'यदूनामृषभ' इत्यनेन यादवानाम्, 'देवकीसुत' इत्यनेन देवकीवसुदेवादीनाम्, तद्विवाहविहारादिभिः परमानन्दो जात सूचितम् ॥ ५५ ॥ अथ सप्तमविवाहमाह—श्रुतकीर्तेरिति। स्वपितृष्वसुः श्रुतकीर्तेः सुतां कैकेयीं कैकयदेशोद्भवां सन्तर्दन आदिर्येषां तैर्भ्रातृभिर्दत्तां भद्रां नाम कन्यां कृष्ण उपयेमे इत्यन्वयः ॥ ५६ ॥

## अन्वितार्थप्रकाशिका

श्रुत्वेति। यदुभिर्गोवृषैश्च पुरा भग्नवीर्या अपि सुदुर्मर्षाः पराजयं कन्यानयनं चासहमानाः भूपाः कृष्णस्य प्रयाणं श्रुत्वा कन्यकां सत्यां नयन्तं कृष्णं पथि मार्गे रुरुधुः ॥ ५३ ॥ तानिति। शरसमूहानस्यतः क्षिपतः प्रयुञ्जानान् तान् भूपान् बन्धोः कृष्णस्य प्रियं करोतीति तथा गाण्डीवी धृतगाण्डीवोऽर्जुनः क्षुद्रमृगान् सिंह इव कालयामास पलायितान् कृतवान् ॥ ५४ ॥ पारिबर्हमिति। अथ यदूनामृषभः देवकीसुतः भगवान् कृष्णः श्वशुरदत्तं पारिबर्हम् उपागृह्य द्वारकामेत्य आगत्य सत्यया सह रेमे ॥ ५५ ॥ सप्तमं विवाहमाह—श्रुतकीर्तेरिति। स्वपितृष्वसुः श्रुतकीर्तेः सुतां कैकेयीं केकयदेशोद्भवां सन्तर्दन आदिर्येषां तैर्भ्रातृभिर्दत्तां भद्रां नाम कन्यां कृष्ण उपयेमे ॥ ५६ ॥

## भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

श्रुत्वेति ॥ पुरा यदुभिः, गोवृषैश्च भग्नवीर्याः सुदुर्मर्षाः सुतरां दुष्टामर्षयुक्ताः, भूपाः नृपाः, एतदुक्तविधं कृष्णप्रयाणं श्रुत्वा, कन्यकां नयन्तं कृष्णं, पथि मार्गे, रुरुधुः ॥ ५३ ॥ तानिति ॥ बन्धुप्रियकृत् कृष्णादिबन्धुजनानां प्रियकारकः, गाण्डीवी गाण्डीवधनुर्धरः, अर्जुनः, शरव्रातान् बाणसमूहान्, अस्यतः क्षिपतः, तान् राज्ञः, सिंहः क्षुद्रमृगान् इव, कालयामास पलायां-चक्रे ॥ ५४ ॥ पारिबर्हेति ॥ यदूनां ऋषभः श्रेष्ठः, देवकीसुतः, भगवान् पारिबर्हं उपागृह्य, द्वारकां एत्य, सत्यया रेमे ॥ ५५ ॥ अथ सप्तमं विवाहमाह। श्रुतकीर्त्तेरिति ॥ कैकेयीं केकयस्यापत्यभूतां, श्रुतकीर्तेः श्रुतकीर्त्तिसंज्ञायाः पितृष्वसुः, भद्रां भद्राख्यां सुतां, संतर्द्दनादिभिः भ्रातृभिः, दत्तां सतीमेव, उपयेमे ॥ ५६ ॥

## श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्

शरव्रातान् अस्यतो निक्षिपतः राजन्यान्। कालयामास पलायितान् चकार ॥ ५३-५४ ॥ अथ सप्तममुद्वाहमाह श्रुतकीर्त्तेरिति। श्रुतकीर्त्तेस्तत्संज्ञायाः पितृश्वसुः सुतां केकयदेशोत्पन्नां शिविपुत्रीत्वात् शैब्यासंज्ञां संतर्द्दनादिभिर्भ्रातृभिः दत्तां भद्रां ॥ ५५ ॥ अथ हरेरष्टमविवाहमाह। सुतामिति मद्राधिपतेर्मद्रदेशाधिपस्य लक्षणैः पतिव्रताचिह्नैः ॥ ५६ ॥

## कृष्णप्रिया

राजन्! सत्या-स्वयंवर के काल में इन बैलों ने और रुक्मिणी आदि के स्वयंवर आदि प्रसङ्गों में यदुवंशियों ने पूर्व में अनेक वीर राजाओं का वीर्य-सामर्थ्य मिट्टी में मिला दिया था। जब पराजित एवं लज्जित उन राजाओं ने कृष्णविजय की सुनी तब उन राजाओं से भगवान् श्रीकृष्ण की यह विजय सहन न हुई। पराजित इन राजाओं ने अर्धाङ्गना सत्याजी को लेकर प्रस्थान-मार्ग में द्वारिकाधीश भगवान् को घेर लिया ॥ ५३ ॥ एकत्रित होकर सब नृपति लोग अत्यन्त त्वरा से भगवान्, सत्या एवं अर्जुन की साथ-सेना पर शरवृष्टि करने लगे। उस अवसर पर पाण्डवकुल विभूषण श्रीअर्जुनजी अपने प्रियतमनाथ एवं सुहृद् भगवान् श्रीकृष्ण का प्रिय करने के लिए गाण्डीव धनुष्य सजकर के जैसे वीर केसरी बड़े-छोटे पशुओं को भगा दे, वैसे ही उन नरपतियों को पीट-पीट कर सबको भगा दिया ॥५४॥ राजाओं को परास्त करने के पश्चात् यदुकुलनाथ देवकीनन्दन भगवान् श्रीकृष्ण विपुल प्रमाण में करियावर और नाग्नजिवी श्रीसत्याजी के साथ श्रीद्वारिकापुरी में पधारे पुनः श्रीद्वारिका में निवास कर गृहस्थाश्रम के धर्मों का सेवन करने लगे ॥ ५५ ॥ महाराज परीक्षित्! केकय देश के महाराज से भगवान की फुआ श्रीश्रुतकीर्तिजी व्याही गई थी। उनकी भद्रा नामकी कन्या थी। सन्तर्दन आदि भद्राजी के भाई थे। सबने मिलकर भद्राजी को स्वयं सन्मुख होकर भगवान् श्रीकृष्णको समर्पण किया और कृपासिन्धु भगवान् ने भद्रा का पाणिग्रहण किया ॥५६॥

**सुतां च मद्राधिपतेर्लक्ष्मणां लक्षणैर्युताम्। स्वयंवरे जहारैकः स सुपर्णः सुधामिव ॥ ५७ ॥**
**अन्याश्चैवंविधा भार्याः कृष्णस्यासन् सहस्रशः। भौमं हत्वा तन्निरोधादाहृताश्चारुदर्शनाः ॥ ५८ ॥**

**इति श्रीमद्भागवते महापुराणे[1] दशमस्कन्धे अष्टमहिष्युद्वाहो[2] 'नामाष्टपञ्चाशत्तमोऽध्यायः ॥ ५७ ॥**

---

१. पारमहंस्यां संहितायां-प्रा. पा.। २. उत्तरार्द्धे-प्रा. पा.। ३. द्विषष्टितमो।

## कर्दमक्षमा

अन्वयः—लक्षणैः, युताम्, च, मद्राधिपतेः, सुताम्, लक्ष्मणाम्, सुपर्णः, सुधाम्, इव, एकः, सः, स्वयंवरे, जहार॥५७॥ कृष्णस्य, एवंविधाः, भार्याः, भौमम्, हत्वा, च, तत्, निरोधात्, आहृताः, चारुदर्शनाः, सहस्रशः, भार्याः आसन् ॥ ५८ ॥

इति श्रीमद्भागवते दशमस्कन्धे निरोधलीलायामुत्तरार्द्धेऽष्टपञ्चाशत्तमोऽध्याये अन्वयः समाप्तः ॥ ५८ ॥

## श्रीधरस्वामिविरचिता भावार्थदीपिका

अष्टम विवाहमाह । सुतां चेति । एक एव स श्रीकृष्णो लक्ष्मणां जहार ॥ ५७ ॥ तस्य निरोधोंतःपुरं तस्मात् ॥ ५८ ॥

भैष्मी जांबवती भामा सत्या भद्रा च लक्ष्मणा ॥ कालिंदी मित्रविंदा चेत्यष्टौ पट्टमहास्त्रियः ॥ १ ॥

इति श्रीमद्भागवते दशमस्कंधे उत्तरार्द्धे श्रीध० टीकायामष्टपंचाशत्तमोऽध्यायः ॥ ५८ ॥

## श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

मद्रो विपाशैरावत्यंतर्गतो देशविशेषस्तदधिपतेर्बृहत्सेनस्य । लक्षणैः कन्योचितैश्चिह्नैर्युताम् । लक्षणानि रुक्मिण्युद्वाह उक्तानि ॥ ५७ निरोधाद् अदृश्यस्थानादंतः पुरस्थकारागारात् 'निरोधो नाशरोधयोः' इति मेदिनी भौमं भूम्याः सुतं श्रीवराहात्तस्यां जातम् । तदुक्तं भूम्यैव विष्णुं प्रति विष्णुपुराणे—"यदाहमुद्धृता नाथ त्वया सूकरमूर्तिना । त्वस्पर्शसंभवः पुत्रस्तदायं मय्यजायत ॥ इति महाप्रभावोऽसूचि तस्य ॥ ५८ ॥

इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे दशमस्कन्धोत्तरार्धेऽष्टपंचाशत्तमोऽध्यायः ॥ ५८ ॥

## श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी

मद्राधिपतेर्बृहत्सेनाख्यस्य लक्षणैः शुभोदयचिह्नैः स्वयम्वर इति मद्राधिपतिना स्वसुताया मतज्ञानेन श्रीकृष्णस्य प्राप्त्यर्थं दुर्भेद्यतममत्स्ययन्त्ररचनादिकं कृतं पश्चात्तस्मिन् श्रीकृष्णेनैव विज्ञापिते दुष्टा राजानस्तदिदमूचुः राजन् भवत एव मतमिदं न तु कन्याया इति ततश्च राज्ञा कन्याया दार्ष्ट्यं जानता स्वयम्वरोऽपि कारित इति कुरुक्षेत्रयात्राकथानुसारेण ज्ञेयम् ॥ ५७ ॥ भौमं श्रीवराहतो भूम्यां जातं तथा च श्रीविष्णुपुराणे श्रीभगवन्तं प्रति तस्या एवोक्तौ—

"यदाहमुद्धृता नाथ त्वया सूकरमूर्त्तिना । त्वत्स्पर्शसम्भवः पुत्रस्तदायं मय्यजायत ॥"

इति महाप्रभावः सूचितः ॥ ५८ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिण्यां अष्टपञ्चाशत्तमोऽध्यायः ॥ ५८ ॥

## श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी

मद्राधिपतेर्बृहत्सेनाख्यस्य सत्स्त्रीलक्षणैः स्वयम्वर इति मद्राधिपतिना राजव्यवहारानुसारेण प्राक् स्वयम्वरे कृते पश्चात् स्वसुताया मतज्ञानेन श्रीकृष्णस्य प्राप्तार्थं दुर्भेद्यतममत्स्ययन्त्रे रचिते तेन च तस्मिन् विद्ध्वा निपातितेऽथ तया वृते तस्मिन् स्पर्द्धया रोद्धुमागतान् नृपान् पथि जित्वा असावेक एव तां जहार, द्वारकामानयदित्यग्रे वक्ष्यमाणायां कुरुक्षेत्रयात्रायामस्या एवोक्त्यनुसारेण ज्ञेयम् । अन्यथा पूर्व्वापरविरोधापत्तिः । सुपर्ण इति दृष्टान्तश्च विपक्षवर्गजयेनैकाकितया हरणे ॥ ५७ ॥ एवम्विधाः श्रीलक्ष्मणासदृशसल्लक्षणैर्युताः, तदेवोद्दिशति—चार्विति । यद्वा, यथा श्रीरुक्मिण्याद्याः श्रीलक्ष्मणान्ता राजकन्यास्तादृश्यो देवादिकन्याश्चेत्यर्थः । तच्च निरन्तराध्यायान्ते तेषां व्याख्यातो व्यक्तं भावि । भौमं श्रीवराहतो भूम्यां जातम् । तथा च श्रीविष्णुपुराणे ( ५।३१।२३ ) श्रीभगवन्तं प्रति तस्या एवोक्तौ—'यदाहमुद्धृता नाथ त्वया शूकरमूर्त्तिना । त्वत्स्पर्शसम्भवः पुत्रस्तदायं मय्यजायत ॥' इति । इति महाप्रभावः सूचितः । स एवाग्रे व्यक्तो भावी ॥ ८८ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे उत्तरार्द्धे श्री श्रील-सनातन-गोस्वामिपाद-कृतायां श्रीबृहद्वैष्णवतोषण्यां श्रीदशम-टिप्पण्यामष्टपञ्चाशत्तमोऽध्यायः ॥ ५८ ॥

## श्रीमद्वीरराघवाचार्यकृता भागवतचन्द्रचन्द्रिका

अष्टमं विवाहमाह—सुतामिति । मद्रदेशाधिपतेः सुतां लक्षणैः युक्तां लक्ष्मणां नाम कन्यां स्वयम्वरे असहाय एव सन् जहार यथा सुपर्णो गरुत्मान् सुधां तद्वत् ॥ ५७ ॥ इत्थं प्रधानपत्नीरुक्त्वा अथान्या अप्याह—अन्याश्चेति ! कास्ता इत्यत आह— भौमं नरकासुरं हत्वा तन्निरोधादन्तःपुरादानीताः ॥ ५८ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायां अष्टपञ्चाशत्तमोऽध्यायः ॥ ५८ ॥

**श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली**

भीमं हत्वा तस्य भौमस्य निरोधात् तत्कारागृहादाहृता आनीताः ॥ ५८ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्यां अष्टपञ्चाशत्तमोऽध्यायः ॥ ५८ ॥

( श्रीविजयध्वजतीर्थरीत्या द्विषष्टितमः ) ॥ ६१ ॥

**श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी**

सहस्रशः सहस्राणि षोडशसहस्राणीत्यर्थः ॥ ५८ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् । अष्टपञ्चाशत्तमोऽयं दशमेऽजनि सङ्गतः ॥ ५८ ॥

**गूढार्थदीपिनी**

मद्राधिपतेर्बृहत्सेनस्य । मद्रो अवन्त्यन्तर्गतो देशविशेषः ॥ ५७ ॥ तस्य भौमस्य निरोधात् अन्तःपुरात् आहृता आनीताः ॥ ५८ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां दशमस्कन्धोत्तरार्द्धे गूढार्थदीपिन्यामष्टपञ्चाशत्तमोऽध्यायः ॥ ५८ ॥

**श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः**

सः श्रीकृष्णः ॥ ५७ ॥ तस्य भौमस्य निरोधात् पुरात् ॥ ५८ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धीये श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे अष्टपञ्चाशत्तमोऽध्यायः ॥ ५८ ॥

**श्रीसत्यधर्मकृता श्रीभागवतटिप्पणी**

सत्यया नग्नजित्या नीलया ॥ ५७ ॥ सप्तमं विवाहमाह ॥ श्रुतिकीर्तेरिति । पितृष्वसुः श्रुतिकीर्तेरित्येकाधिकरण्यम् । सुतां नाम्ना भद्रां कैकेयीं देशनाम तज्जां सन्तर्दनादिभ्रातृभिर्दत्तामुपयेमे परिणिनाय । भ्रातृभिर्दत्तामित्यनेन सन्नपि पिताऽजागलस्तनायित इति वा प्रकारान्तरं वा ध्वनयति ॥ ५८ ॥ अष्टमं विवाहमाह ॥ सुतां चेति । मद्राधिपतेः । अन्वर्थं च नामेत्याह ॥ लक्षणैर्युतामिति । ततश्चार्शाद्यजन्तत्वानन्तरं टाप्रत्यय इति सूचितं भवति । सुधामिवैक एव स्वयंवरे जहार । ससुपर्ण इत्यविश्लेषभाषणेन सुपर्णमात्रेण सहितः ससुपर्णो वाहनमात्रसहित इति ध्वनयति । एक इत्युक्तिस्तु सेनाद्यभावपरेति ज्ञेयम् ॥ ५९ ॥ सहस्रशो वक्ष्यमाणषोडशसङ्ख्याः । निरोधशब्दोऽवरोधपर्याय इति । राजाऽन्तःपुरादिति केचित् । तन्निरोधात् । निरुध्यन्ते जना अत्रेति निरोधः काराधाम तस्मान्निरोधात् । तन्निरोधं परिहृत्याहृता भार्या आसन् ॥ ६० ॥

इति श्रीभागवतटिप्पण्यां सत्यधर्मकृतायां दशम उत्तरार्धे द्विषष्टितमोऽध्यायः ॥ १०-६२ ॥

**श्रीमद्वल्लभाचार्यकृता सुबोधिनी**

श्रीरूपाया लक्ष्मणाया विवाहमाह सुतामिति । मद्रदेशोऽपि कैकयनिकटे । श्रीवत्सरूपेति लक्ष्मणा । अस्या विवाहे लक्षणवत्त्वं प्रयोजकमिति लक्षणैर्युतामित्युक्तम् । राधावेधसनिमित्तस्वयंवरे जहार । वरणानन्तरं अग्रिमवाक्यानुरोधेनावगम्यते । एक इति भगवत्प्रतापः । यतः स भगवान् कृष्णः । अप्रतिघातनयने दृष्टान्तः सुपर्णः सुधामिवेति । इन्द्रादिजये च । एतामग्रे विस्तरेण वक्ष्यति । सर्वा एकतो विस्तरोपाख्याना इयमेकत इति ज्ञापयितुं वार्चानिके विवाहे विस्तरेणोक्तम् ॥ ५७ ॥ साधनरूपा उक्त्वा साधनाधीनत्वात् साध्यस्य ताः संक्षेपेणाह अन्या इति । चकारादेताभ्य उत्कृष्टापकृष्टाश्च संगृहीताः । नरकासुरं हत्वा तदन्तःपुरात्संगृहीताः । तेनैवैकत्र मेलिता भगवता आहृता इति निदर्शनमात्रम् । तासामानयने चारुदर्शनं ज्ञानं सौन्दर्यं च यासामिति हेतुरुक्तः । विजातीया गोपिकादयः असमानाः । उत्कृष्टास्त्वप्सरसः स्वयमागताः । सर्वा एव भार्या आसन् । स्पष्टमेव सर्वासां मुक्तिर्दत्तेति निरूपितम् । एवं भगवतो निरोधः ॥ ५८ ॥

इति श्रीमद्भा० दशमस्कन्धे उत्तरार्द्धे सुबोधिन्यां श्रीमल्लक्ष्मणभट्टात्मजश्रीमद्वल्लभदीक्षितविरचितायां दशमस्कन्धविवरणे उत्तरार्धे नवमोऽध्यायः ॥ ९ ॥

**श्रीसुबोधिनीसारः**

भद्राधिपतेः सुतां पुत्रीं लक्षणैर्युतां लक्ष्मणां स्वयंवरे एकः स कृष्णो जहार सुपर्णो गरुडः सुधाममृतमिव ॥ ५७ ॥ इत्यष्टौ मुख्या विवाहा उक्ताः । एवं प्रकारा अन्या भार्याः सहस्रशोनंताः कृष्णस्यासन् भौमासुरं हत्वा तस्य निरोधादंतःपुरादाहृता आनीताः चारुदर्शनाः सुरूपाः ॥ ५८ ॥

इति श्रीमद्भा० दशमस्कन्धे उ० सुबोधिन्यां टीकायामष्टपंचाशत्तमोऽध्यायः ॥ ५८ ॥

### श्रीविट्ठलरायात्मजश्रीवल्लभकृतलेखः

अन्याश्चैवमित्यस्याभासे । साधनरूपा इति । विद्यारूपा इत्यर्थः । ता इति । साध्यरूपाः सर्वा एवेत्यर्थः ।

इति नवमाध्यायव्याख्या ।

### गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

अथाष्टमं विवाहमाह—सुतामिति । मद्रदेशाधिपतेः सुतां शुभलक्षणैर्युतां लक्ष्मणां स्वयंवरे एक असहायवान् स कृष्णः जहार । तत्र दृष्टान्तमाह—सुपर्ण इति । यथेन्द्रादींस्तिरस्कृत्य गरुडः सुधामनायासेन हृतवान् तथाऽन्यान् राज्ञस्तिरस्कृत्य तां हृतवानित्यर्थः ॥ ५७ ॥ एवं प्रधानपत्नीनां परिग्रहं निरूप्य अथ अन्यासामपि परिग्रहमाह–अन्याश्चेति । 'ताश्च कुतः प्राप्ता' इत्यपेक्षायामाह—भौममिति । नरकासुरं हत्वा तस्य निरोधादन्तःपुरात्तेनाहृता आनीताः । तत्र हेतुं परिग्रहयोग्यतां चाह–चारु सुन्दरं दर्शनं शरीरं यासां ता इति ॥ ५८ ॥

इति श्रीवल्लभाचार्य–वंश्यगोपालसूनुना । श्रीमन्मुकुन्दरायाणां पादसेवाधिकारिणा ॥ १ ॥
श्रीमद्गिरिधराख्येन भजनानन्दसिद्धये । श्रीमद्भागवतस्येयं टीका बालप्रबोधिनी ॥ २ ॥
रचिता दशमे तत्र राजसानां निरोधने । कालिन्दीमित्रविन्दादि-विवाहानां निरूपकः ॥
अष्टपञ्चाशत्तमो वा अध्यायो विवृतिं गतः ॥ ३ ॥

### अन्वितार्थप्रकाशिका

अष्टमं विवाहमाह—सुतामिति ॥ मद्रदेशाधिपतेः सुतां शुभलक्षणैर्युतां लक्ष्मणां स्वयंवरे एकः असहायः स कृष्णः सुपर्णः सुधामिव जहार । मत्स्ययन्त्रे श्रीकृष्णेन विद्धेऽपि दुष्टा राजानो मद्राधिपमूचुः–भवत एव मतमिदन्नतु कन्यायाः । ततो राज्ञा स्वयंवरोऽपि कारितः इति कल्प्यम् । तेन कुरुक्षेत्रकथाया न विरोधः ॥ ५७ ॥ अन्या इति ॥ एवंविधाः चारुदर्शनाः अन्याश्च कृष्णस्य सहस्रशः षोडशसहस्राणीत्यर्थः । भार्या आसन् ताश्च । भौमं हत्वा तस्य भौमस्य निरोधात् अन्तःपुरात् निरोधनस्थानाद्वा आहृताः भौमश्चायं श्रीवराहतो भूम्यां जातः । "यदाहमुद्धृता नाथ त्वया सूकरमूर्तिना । तत्स्पर्शसंभवः पुत्रस्तदाऽयं मय्यजायत ॥" इति विष्णुपुराणोक्तेः । भैष्मी जाम्बवती भामा सत्या भद्रा च लक्ष्मणा ॥ कालिन्दी मित्रविन्दा चेत्यष्टौ पट्टमहास्त्रियः ॥ ५८ ॥

इति श्रीकृष्णसेवार्थमन्वितार्थप्रकाशिकाम् । गङ्गासहायो दशमेऽष्टपञ्चाशत्तमे व्यधात् ॥
इति श्रीभागवते दशमस्कन्धे उत्तरार्द्धेऽन्वितार्थप्रकाशिकायामष्टपञ्चाशत्तमोऽध्यायः ॥ ५८ ॥

### श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्

तस्य भौमस्य निरोधो राजगृहं तस्मादाहृता आनीताः ॥ ५७ ॥

भैष्मी भामा जांबवती भद्रा सत्या च लक्ष्मणा । कालिंदी मित्रविंदा चेत्यष्टौ मुख्या हरेःस्त्रियः ॥ १ ॥

इति श्रीशुद्धैकांतधर्मप्रवर्त्तकगुरुराजेन्द्रश्रीसहजानंदस्वामिशिष्यगोपालानंदमुनिविरचिते निगूढार्थप्रकाशके श्रीमद्भागवतस्य दशमस्कंध-व्याख्याने महिष्युद्वाहो नामाष्टपञ्चाशत्तमोऽध्यायः ॥ ५८ ॥

### भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

अथाष्टमं विवाहमाह ॥ सुतामिति । एक एकाक्येव, स कृष्णः, लक्षणैः शोभनलक्ष्मभिः युतां मद्राधिपतेर्मद्रदेशाधिनाथस्य, सुतां पुत्रीं लक्ष्मणां, सुपर्णः गरुडः, सुधाममृतं इव, स्वयंवरे जहार स्वयंवरहेतुकमत्स्यवेधेक्षार्थागतप्रतिरोधकराजसमूहात् हृतवानित्यर्थः ॥ ५७ ॥ इत्थं प्रधानपत्नीरुक्त्वाऽथान्या अप्याह । अन्याश्चेति । भौमं नरकासुरं हत्वा, तन्निरोधात् तदीयान्तःपुरात्, आहृताः आनीताः, चारुदर्शनाः अन्याश्च, कृष्णस्य एवं विधाः सहस्रशः भार्याः, आसन् ॥ ५८ ॥

इति श्रीधर्मधुरंधरश्रीधर्मात्मजप्रत्यक्षपुरुषोत्तमश्रीसहजानन्दस्वामिसुतश्रीरघुवीराचार्यसूनुभगवत्प्रसादाचार्यविरचितायामन्वयार्थावबोधिन्यां भक्तमनोरञ्जन्याख्यायां श्रीमद्भागवतटीकायां दशमस्कन्धे उत्तरार्द्धे अष्टपञ्चाशत्तमोऽध्यायः ॥ ५८ ॥

### कृष्णप्रिया

राजन् ! श्रीलक्ष्मणा जी भद्रदेश के नरेश की कन्या थी । सन्नारियों के शुभलक्षणों से लक्ष्मणा सम्पन्न थी । श्रीपक्षीराज गरुड जी स्वयं लोक से अकेले ही जैसे अमृत सुधा का अपहरण कर लाये थे वैसे ही भगवान श्रीकृष्ण भी स्वयंवर में मत्स्यवेध करके अकेले ही लक्ष्मणा जी का हरण कर लाये थे ॥ ५७ ॥ राजन् परीक्षित् ! भगवान् श्रीकृष्णचन्द्रजी की इसी प्रकार षोडश सहस्र अर्धाङ्गनायें थीं । उन दिव्य देवियों को, कुमारिकाओं को भौमासुर का समर में वध करके कारागृह से मुक्त कर ले आये थे ॥ ५८ ॥

इति श्रीमद्भागवते दशमस्कन्धे उत्तरार्द्धे निरोधलीलायां विवाह प्रकरणेऽष्टपञ्चाशत्तमाध्यायस्य भाषान्तर निरूपणं संपूर्णम् ॥ ५८ ॥

# [1]अथैकोनषष्टितमोऽध्यायः

| श्लोकाः | अनु. | मि. उ. | व. | उ. | श्लो. अ. | उ. अ. | अ. अ. | सं. श्लो. अ. | सं. श्लो. | अ. |
|---|---|---|---|---|---|---|---|---|---|---|
| ४५ | २६ | १७ | २ | ४ | १८१४ | २१ | ५१ | १८८६ | ५८॥। | ६ |

राजोवाच

यथा हतो भगवता भौमो [2]येन च ताः स्त्रियः । निरुद्धा एतदाचक्ष्व विक्रमं शार्ङ्गधन्वनः ॥ १ ॥[3]

श्रीशुक उवाच

इन्द्रेण[4] हृतच्छत्रेण हृतकुण्डलबन्धुना ।
हृतामराद्रिस्थानेन ज्ञापितो भौमचेष्टितम् । [5]सभार्यो गरुडारूढः प्राग्ज्यौतिपपुरं ययौ ॥ २ ॥
[6]गिरिदुर्गैः शस्त्रदुर्गैर्जलाग्न्यनिलदुर्गमम्[7] । मुरपाशायुतैर्घोरैर्दृढैः सर्वत आवृतम् ॥ ३ ॥
गदया निर्बिभेदाद्रीन् शस्त्रदुर्गाणि सायकैः । चक्रेणाग्निं जलं वायुं मुरपाशांस्तथासिना ॥ ४ ॥

कर्दमक्षमा

अन्वयः—राजा उवाच—शुकाचार्य ! भगवता, यथा, भौमः, हतः, येन, च, यथा, ताः, स्त्रियः निरुद्धाः, च, भगवता, मोचिताः शार्ङ्गधन्वनः, एतत्, विक्रमम्, आचक्ष्व ॥ १ ॥ श्रीशुक उवाच—हृतामराद्रिस्थानेन हृतकुण्डलबन्धुना, हृतच्छत्रेण, इन्द्रेण, ज्ञापितः, सभार्यः, गरुडारूढः, "कृष्णः" प्राग्ज्योतिषपुरुपपु, ययौ ॥ २ ॥ गिरिदुर्गैः, शस्त्रदुर्ग जलाग्न्यनिलदुर्गमम्, दृढैः, घोरैः मुरपाशायुतः, सर्वतः, आवृतम्, प्राग्ज्योतिषपुरम्, ययौ ॥ ३ ॥ गदाधरः, "भगवान् कृष्णः" गदया, अद्रीन्, निर्बिभेद, सायकैः, शस्त्रदुर्गाणि, निर्बिभेद, चक्रेण, अग्निम्, जलम्, वायुम्, निर्बिभेद, तथा, असिना, मुरपाशान् ॥ ४ ॥

श्रीधरस्वामिविरचिता भावार्थदीपिका

ऊनषष्टितमे भौमं हत्वा तेनाहृता हरिः ॥ कन्याः सहस्रशः प्राप पारिजातं दिवोऽहरत् ॥ १ ॥
परिणीय ततस्ताभिस्तन्मनोरथपूरणैः ॥ आत्मारामोऽप्यसौ रेमे तद्गृहेसु गृहस्थवत् ॥ २ ॥

येन ताः स्त्रियो निरुद्धाः स भौमः चकाराद्येन कारणेन हतस्तदाचक्ष्वेति ॥ १ ॥ इंद्रेण भौमविचेष्टितं ज्ञापितः सन् प्राग्ज्योतिषपुरं भौमनगरं ययावित्यन्वयः । किंभूतेन । हृतं छत्रं यस्य तेन लोकपालप्रधानत्वादिंद्रस्य । वरुणच्छत्रहरणेऽपि तस्यैव मानभंग इति तथोक्तम् हृते कुंडले यस्याः सा अदितिर्वन्धुर्माता यस्य तेन हृतममराद्रौ स्थानं मणिपर्वतलक्षणं यस्य तेन सत्यभामाया गृहे भगवन्तामिंद्र आगत्य विज्ञापितवांस्तदा तस्याः कौतुकाय तया भार्यया सह ययाविति यद्वा त्वदनुज्ञयैव त्वत्पुत्रं हनिष्यामीति इतिहासोक्तं भूम्यै वरं दत्तं सत्यं कर्तुं सत्यभामाया भूम्यंशत्वात्तया सह ययौ । यद्वा नारदानीतपारिजातैककुसुमे रुक्मिण्यै दत्ते सति कुपितां सत्यभामां सांत्वयता तुभ्यं पारिजातमेव दास्यामीति श्रीकृष्णेन प्रतिश्रुतामिति हरिवंशे

---

१. अथ त्रिषष्ठीतमो–विज. । २. नीता यथा–विज. ।

३. द्वारवत्यां महाभागे निवसत्यच्युते नृप । दीनेनोद्विग्नचित्तेन समागम्य त्रिविष्टपम् ॥

४. हृतच्छत्रेण शक्रेण–विज. । ५. इन्द्रमाश्वास्य गोविन्दः सुसंपूज्य विसृज्य च ॥–विज. ।

६. हिमाद्रौ तुङ्गशिखरे जलान्यनिलदुर्गमम् । गिरिदुर्गैः शस्त्रदुर्गैः मुरपाशायुतैर्वृतम् ॥ १ ॥
ससम्प्राप्तभटैर्गुप्तं दानवेन्द्रपुरं महत् । गदया निर्बिभेदाद्रि प्राकारकारसंस्थितम् ॥ २ ॥
सनिर्भिद्य प्रविशान्तः शस्त्रदुर्गाणि सायकैः । चकर्त गौरवं पाशं चक्रेणामन्दमच्छिनत् ॥ ३ ॥
क्षुरमालां तथा घोरां निचकार्तासिना हरिः । वायव्यास्त्रेण सलिलं वारुणास्त्रेण पावकम् ॥ ४ ॥
हरिर्निमिषमात्रेण नाशयामास भारत । शङ्खनादेन तीव्रेण मनांसि च मनस्विनाम् ॥ ५ ॥

३–४–५ श्लोकस्थाने एते पञ्च–विज. ।

७. मैः–प्रा. पा. ।

प्रसिद्धं तदर्थं तां नीतवानिति ॥ २ ॥ गरुडेन याने कारणम् । गिरिदुर्गैरित्यादि । तैरुपलक्षितम् । जलाग्न्यनिलैश्च सर्वतो वर्तमानैर्दुर्गमम् ॥ ३-४५ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

ऊनषष्टितमे एकोनषष्टितमे । तेन भौमेन । पारिजातं देववृक्षम् ( १ ) । ततः परिणयनोत्तरम् । असौ कृष्णः । इह वतिना गृहासक्त्यभावो ध्वनितः ( २ ) । "यदाहमुद्धृता नाथ त्वया सूकरमूर्तिना । त्वत्स्पर्शसंभवः पुत्रस्तदाऽयं मय्यजायत ॥ सोऽयं त्वयैव दत्तोऽयं त्वयैव विनिपातितः ।" इति विष्णुपुराणोक्तेः स विष्णोरपि पुत्र एव, दैत्यत्वं तु तस्य निषिद्धचारमूर्तिसूकरोद्धृतत्वाद्धरेरिच्छयैव । कुकर्मकर्तृत्वात्तस्य हननं युक्तमेव, सुकर्मकर्तुः प्रह्लादस्यारिपुत्रत्वेपि रक्षणं च दंडदातुरुचितमेवेति द्योतनायास्याध्यायस्यारम्भ इति ध्येयम् । येन भौमेन ॥ शार्ङ्गधन्वन इति शार्ङ्गसंबन्धित्वादेतच्छ्रवणेऽतीव मे प्रीतिरिति सूचितम् ॥ १ ॥ अन्वयः सार्धद्वयेन संबंधः । अमराद्रौ मेरौ । तस्यैवेंद्रस्यैव । तस्याः सत्यभामायाः । कौतुकायाद्भुतं दर्शयितुम् । तया सत्यभामया स्त्रिया सह गमनं युद्धे सर्वथानुचितमित्यतः कारणांतरमाह-यद्वेति । इतिहासोक्तम् इतिहासग्रंथोक्तम् । तथाहि-पृथ्व्या निजभरावतारार्थमर्थितो भगवान्पृथ्वीं-तव भारावतारणे तव पुत्रमपि हनिष्यामीत्याह तच्छ्रुत्वा सा प्राह-मदाज्ञां विना मा मारयेति, त्वदाज्ञयैव तं हनिष्यामीति हरिः प्रत्युक्तवानिति । यद्यप्येवमस्ति तथापि स्त्रीणां युद्धभूमौ नयनमन्याय्यमेवातः कारणांतरमाह-यद्वेति । तदर्थं पारिजातानयनार्थम्, साऽविश्वस्ता सहैव यायादित्येतदर्थमित्यर्थः ॥ इन्द्रेण स्वयं द्वारकामागतेनेति ज्ञेयम् । तदुक्तं वैष्णवे-"द्वारवत्यां ततः शौरिं शक्रः सुरगणेश्वरः । आजगामाथ मैत्रेय मत्तैरावतपृष्ठतः ॥" इति । भौमचेष्टितमपि तत्रैव-"भौमोऽयं नरको नाम प्राग्ज्योतिषपुरेश्वरः करोति सर्वभूतानामुपघातमरिंदम ॥ देवसिद्धासुराणां च नृपाणां च जनार्दन । हृत्वा हि सोऽसुरः कन्या रुरोध निजमंदिरे ॥ छत्रं यत्सलिलस्रावि तज्जहार प्रचेतसः । मंदरस्य तथा शृंगं हृतवान्मणिपर्वतम् ॥ अमृतस्राविणो दिव्ये मन्मातुः कृष्ण कुंडले । जहार सोऽसुरोऽदित्या वाञ्छत्यैरावतं गजम् ॥" इति ज्ञापितो भक्त्याष्टांगप्रणामपूर्वकमिति ज्ञेयम् । "ययाच आनम्य किरीटकोटिभिः पादौ स्पृशन्नच्युतमर्थसाधनम्" इत्यग्रे वक्ष्यमाणत्वात् ॥ २ ॥ तैर्गिरिदुर्गादिभिः । मुरपाशानामयुतैरनेकैः, षट्सहस्रैरित्यर्थः । "षट्सहस्रैरथो पाशैर्मुरस्याच्छादितं पुरम्" इति पुराणांतरात् । "शताद्या द्विपरार्द्धांता संख्या स्वार्थपरा क्वचित् । प्रायोनेकार्थिका ज्ञेया इतिहासपुराणयोः ॥" इत्युक्तं नीलकंठेन । यद्वा-मुरपाशैरयुतैरसंयुतैः, पृथक्कृतैरित्यर्थः ॥ तत्रैव सभार्य इति सार्द्धकम् । गरुडं स्मृतिमात्रेणागतं सन्तं, किंवा-प्रायस्तत्रैव वर्तमानमारूढः । सभार्यगमनं साक्षात्तद्धरणकौतुकदर्शनादिपूर्वकं तस्या एव पारिजातदानार्थमवहेलासूचनार्थं च । तत्र पूर्वं मया सार्द्धं युद्धसंकटे गता पारिजातं स्वयमुद्यम्य मद्द्वारा नीतवतीति श्रीरुक्मिण्यादिषु व्यंजनात्, उत्तरं मम विनोद एवायं न तु युद्धोद्यम इति नरकादिषु व्यंजनात् । अथेंद्रोऽपि स्वपुरं ययाविति ज्ञेयम् "आरुह्यैरावतं नागं शक्रोपि त्रिदशालयम् । ततो जगाम मैत्रेय पश्यतां द्वारकौकसाम् ॥" इति वैष्णवोक्तेः । अनिलदुर्गः कुलालचक्रवद्भ्रमणमहाबलिष्ठदुष्टवायुः । गिरिदुर्गादीनां गणनमात्रमिदम्, क्रमस्तु भेदक्रमादग्रे ज्ञेयः । शस्त्रदुर्गाणि स्पर्शनमात्रेण शस्त्रादिच्छेदकनानास्त्रघटितदुर्गाणि । घोरैः क्षुरान्तत्वात् । "प्राग्जोतिषपुरस्यासीत्समंताच्छतयोजनम् । आचिता मौरवैः पाशैः क्षुरान्तैर्द्विजसत्तमः ॥ इति वैष्णवोक्ते । इह मुरुशब्द उकारान्तोपि । दृढैरच्छेद्यैः ॥ ३ ॥ अग्न्यादित्रयं चक्रेण ॥ गदया क्षिप्तया । एवं चक्रेणेत्यादिकमपि ज्ञेयम्, अतो दूरत एवेति च ॥ ४ ॥

### श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी

येन भौमेन कर्त्रा चकाराद्येन कारणेन ताः षोडशसहस्रसङ्ख्याः स्त्रियो निरुद्धाः स च भौमो यथा येन प्रकारेण हतः एतत्सर्वं शार्ङ्गधन्वनो विशेषेण कार्य्यकारणरूपत्वाद्विक्रमरूपमाचक्ष्व शार्ङ्गधन्वन इति तत्र शार्ङ्गसम्बन्धिश्रवणे सम्प्रति मम स्पृहेत्यर्थः ॥ १ ॥ इन्द्रेणेति सार्द्धद्वयकम् । इन्द्रेण स्वयं द्वारकामागतेनेति ज्ञेयं तथा च श्रीविष्णुपुराणे—"द्वारवत्यां ततः शौरिं शक्रस्त्रिभुवनेश्वरः । आजगामाथ मैत्रेय ! मत्तैरावतपृष्ठगः" इति ॥ हृतम् अमराद्रेर्देवाक्रीडस्य मन्दरस्य स्थानं शृङ्गलक्षणं मणिपर्वताख्यं येन तेन भौमचेष्टितं वारुणच्छत्रहरणादि तथा च तत्रैव—"भौमोऽयं नरको नाम प्राग्ज्योतिषपुरेश्वरः । करोति सर्वभूतानामुपघातमरिन्दम ! ॥ देवसिद्धासुरादीनां नृपाणाञ्च जनार्द्दन ! । हृत्वा हि सोऽसुरः कन्या रुरोध निजमन्दिरे ॥ छत्रं यत् सलिलस्रावि उज्जहार प्रचेतसः । मन्दरस्य तथा शृङ्गं हृतवान् मणिपर्वतम् । अमृतस्राविणी दिव्ये मन्मातुः कृष्ण ! कुण्डले । जहार सोऽसुरोऽदित्या वाञ्छत्यैरावतङ्गजम्" ॥ इति ज्ञापितो भक्त्याऽष्टाङ्गप्रणामपूर्वकमिति ज्ञेयं "ययाच आनम्य किरीटकोटिभिः पादौ स्पृशन्" इत्यग्रे वक्ष्यमाणात् तत्रैव सभार्य्य इति सार्द्धकम् गरुडं स्मृतिमात्रेणागतं सन्तं किम्वा प्रायस्तत्रैव वर्त्तमानमारूढः सभार्य्यगमनं साक्षात्तद्धरणकौतुकदर्शनपूर्वकं तस्या एव पारिजातदानार्थम् अवहेलासूचनार्थञ्च तत्र पूर्वं मया सार्द्धमियं युद्धसङ्कटे गता पारिजातं स्वयमुद्यम्य मद्द्वारा नीतवतीति श्रीरुक्मिण्यादिषु व्यञ्जनात् उत्तरं मम विनोद एवायं न तु युद्धोद्यम इति नरकादिषु व्यञ्जनात् अथेन्द्रोपि स्वपुरं ययाविति ज्ञेयं तथा च तत्रैव—"आरुह्यैरावतं नागं शक्रोपि

त्रिदशालयम्। ततो जगाम मैत्रेय! पश्यतां द्वारकौकसाम्॥ इति ॥ २ ॥ अनिलदुर्गः कुलालचक्रवद्भ्रमन् महाबलिष्ठदुष्टवायुः गिरिदुर्गादीनां गणनमात्रमिदं क्रमस्तु भेदक्रमादग्रे ज्ञेय; शस्त्रदुर्गाणि स्पर्शमात्रेण गात्रा [ शस्त्रा ] दिच्छेदकनानाशस्त्रघटित-दुर्गाणि घोरैः क्षुरान्तत्वात्। तथाच तत्रैव—''प्राग्ज्योतिषपुरस्यासीत् समन्ताच्छतयोजनम्। आचिता मौरवैः पाशैः क्षुरान्तै-द्विजसत्तम॥ इति ॥ एवं तस्य मते मुरुशब्द उकारान्तः ''तीर्थे सौकरवे मम'' इत्यादिवाराहवचनात् दृढैरच्छेद्यैः॥ ३ ॥ गदया क्षिप्तया एवं चक्रेणेत्यादिकमपि ज्ञेयम् अतो दूरत एवेति च निश्शेषेण विभेद सञ्जहार॥ ४ ॥

### श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी

भगवता दुष्टसंहाराद्यर्थमवतीर्णेन साक्षात् परमेश्वरेण निरुद्धा निजगृहान्तरावृत्य रक्षिताः, विक्रममद्भुतचरितं पराक्रमं वा, तच्च योग्यमित्यभिप्रायेणाह—शाङ्‍र्गेति। एतदिति नपुंसकत्वमार्षम्; यद्वा, सामान्यविशेष-न्यायेन योज्यम्॥ १ ॥ इन्द्रेण स्वयं द्वारकामागतेनेति ज्ञेयम्। तथा च श्रीविष्णुपुराणे ( ५।२९।१ )—'द्वारवत्यां ततः शौरिं शत्रुस्त्रिभुवनेश्वरः। आजगामाथ मैत्रेय मत्तैरावतपृष्ठगः॥' इति हृतममराद्रेर्देवाक्रीडस्य मन्दरस्य स्थानं शृंगलक्षणं मणिपर्व्वताख्यं येन तेन, भौमचेष्टितं वारुणच्छत्रहरणादि; तथा च तत्रैव ( वि० पु० ५।२९।८,९,११ )—

'भौमोऽयं नरको नाम प्राग्ज्योतिषपुरेश्वरः। करोति सर्व्वभूतानामुपघातमरिन्दम॥
देव-सिद्ध-सुरादीनां नृपाणाञ्च जनार्द्दन। अमृतस्राविणी दिव्ये मन्मातुः कृष्ण कुण्डले॥
जहार सोऽसुरोऽदित्या वाञ्छन्नैरावतं द्विपम्॥'

इति ज्ञापितो भक्त्याष्टांगप्रणामपूर्व्वकमिति ज्ञेयम्। ( भा० १०।५९।४१ )—'ययाच आनम्य किरीटकोटिभिः, पादौ स्पृशन्' इत्यग्रे वक्ष्यमाणत्वात्। गरुडं स्मृतिमात्रेणागतं सन्तम्, किंवा प्रायस्तत्रैव वर्त्तमानमारूढः। सभार्य्य इति तैर्व्या-ख्यातम्। यद्वा, सभार्य्यो ज्ञापितः, श्रीकृष्णस्य प्रियतमायाः श्रीसत्यभामायाः साहाय्येनैव मदर्थोऽयं किल सेत्स्यतीत्यादौ तां विज्ञाप्य तया सह गत्वा पश्चादयं ज्ञापित इत्यर्थः। अत इन्द्रार्थसाधिकायास्तस्याः साक्षादेव नरकवधादीन्द्रार्थसिद्ध्या सन्तो-षार्थम्, किंवाग्रे पारिजातानयने तस्य युद्धादिदुर्व्बुद्धि कौतुकेन तान् दर्शयितुं तयैव सह ययाविति ज्ञेयम्। अथेन्द्रोऽपि दिवं ययाविति च; तथा च तत्रैव ( वि० पु० ५।२९।१५ )—'आरुह्यैरावतं नागं शक्रोऽपि त्रिदशालयम्। ततो जगाम मैत्रेव पश्यतां द्वारकौकसाम्॥' इति ॥ २ ॥ जलादित्रयस्य यथोत्तरं कारणतायाः सूक्ष्मत्व-दुर्गमत्वाधिकताया वापेक्षया तत्तत्क्रमेण निर्द्देशः, घोरैर्दूरतोऽपि छेदकैरित्यर्थः, क्षुरान्तत्वात्। तथा च तत्रैव ( वि० पु० ५।२९।१६ )—'प्राग्ज्योतिषपुरस्यासीत् समन्ताच्छत-योजनम्। आचिता मौरवैः पाशैः क्षुरान्तैर्भूर्द्विजोत्तम॥' इति। एवं तस्य मते मुरु-शब्द उकारान्तः, दृढैरच्छेद्यैरिति गिरि-दुर्गादीनां यथोत्तरं श्रेष्ठ्यम्॥ ३ ॥ गदया क्षिप्तया। एवं चक्रेणेत्यादिकमपि ज्ञेयम्; अतो दूरत एवेत्यर्थः। निःशेषेण विभेद सञ्जहार, पूर्व्वोक्तक्रमातिक्रमेणादावग्नेरुक्तिः, तेजस्तप्ते चक्रे स्वत एवाग्नेः प्रवेशेन प्राक् तस्य सुखनिर्भेदनात्, तथेति समुच्चये; किंवा तादृशानपि॥ ४ ॥

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका

''भौमं हत्वा तन्निरोधादाहृताः'' इत्युक्तं तद्विस्तरबुभुत्सया पृच्छति राजा—यथेति। येन भौमेने ता। स्त्रियो निरुद्धाः स भौमः यथा येन प्रकारेण हतः चकाराद्येन कारणेनेत्यपि बोद्धव्यं तदाचक्ष्वाख्याहि॥१॥ आचष्टे। इन्द्रेणेति। इन्द्रेण भौमचेष्टितं प्रति ज्ञापितस्सन् प्राग्ज्योतिषपुरं ययौ इति सम्बन्धः कथम्भूतेन? हृतं भौमेन हृतं छत्रं यस्य तेन लोकपालप्रधानत्वादिन्द्रस्य वरुणच्छत्रहरणेपि तस्यैव मानभङ्ग इति तथोक्तं हृते कुण्डले यस्याः सा बन्धुर्माता अदितिर्यस्य तेन हृतममराद्रिस्थानं मणि-पर्वतात्मकं यस्य तेन सत्यभामागृहे भगवन्तम् इन्द्र आगत्य विज्ञापितवांस्तदा तस्याः कौतुकाय तया सह ययौ इति यद्वा त्वदनुज्ञयैव त्वत्सुतं हनिष्यामीति इतिहासेनोक्तं भूम्यै वरं दत्तं सत्यापयितुं सत्यभामाया भूम्यंशत्वात्तया सह ययौ इति यद्वा नारदानीतपारिजातकुसुमे रुक्मिण्यै दत्ते सति कुपितां सत्यभामां सान्त्वयितुं तुभ्यं पारिजाततरुमेव दास्यामीति प्रतिश्रुतम् इति हरिवंशे प्रसिद्धं तदर्थं तां नीतवानिति गरुडारूढ इत्यत्र हेतुं वदन् पुरं विशिनष्टि—गिरीति। गिरीति। गिरिदुर्गैश्शस्त्रदुर्गै-श्चोपलक्षितं जलाग्न्यनिलैश्च परितो वर्तमानैश्च दुर्गमं घोरैर्दृढैश्च मुरस्य पाशैः परितः आवृतम्॥ २-३ ॥ गदयेति चक्रेण सुदर्शनेनाग्निजलवायून् निर्विभेद असिना खड्गेन॥ ४ ॥

### श्रीविजयध्वजतीर्थकृता पदरत्नावली

यथाकथं पृष्टं तत्सर्वम्॥ १ ॥ द्वारवत्यां महाभागे निवसत्यच्युते नृप। दीनेनोद्विग्नचित्तेन समागम्य त्रिविष्टपात्॥ हृतछत्रेण शक्रेण हृतकुण्डलबन्धुना। हृतामराद्रिस्थानेन ज्ञापितोभौमचेष्टितम्। इन्द्रमाश्वास्य गोविन्दः सुसम्पूज्य विसृज्य

च ॥ हिमाद्रौ तुङ्गशिखरे जलाग्न्यनिलदुर्गमम् । स सम्प्राप्य भटैर्गुप्तं दानवेन्द्रपुरं महत् ॥ चकर्त मौरवं पाशं चक्रेणामन्दमच्छिनत् । क्षुरमालां तथा घोरां निचकर्तासिना हरिः ॥ वायव्यास्त्रेण सलिलं वारुणास्त्रेण पावकम् । हरिर्निमिषमात्रेण नाशयामास भारत । शङ्खनादेनतीव्रेणमनांसिचमनस्विनां ॥ हृते कुण्डले यस्य स हृतकुण्डलः हृतकुण्डलो बन्धुर्माता यस्य स तथा तेन नरकेण हृतम् अमराद्रौ मेरौ स्थानं यस्य तथा प्राग्ज्योतिषपुरं नरकस्य नगरम् ॥ २ ॥ कुत्र तन्नगरमत्राह—हिमाद्राविति । जलेनानिलेन वायुना दुर्गमं गन्तुमशक्यं मुरपाशानामयुतैः अनेकैः षट्सहस्रैरित्यर्थः यद्वा मुरपाशैरयुतैरसम्बद्धैः पृथक्कृतैः शस्त्रदुर्गैः दुर्गमपि गिर्यादिक्रमेण ॥ ३-७ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

शक्रप्रोक्तो हरिर्भौममहन् प्राप तदाहृताः स्त्रीः सहस्राण्यूनषष्टितमे द्युतरुमाहरत् ॥ येन ताः स्त्रियो निरुद्धाः स भौमो यथा भगवता हतः एतदाचक्ष्वेत्यन्वयः एतदिति विशिनष्टि विक्रममिति ॥ १ ॥ हृतच्छत्रेणेति । वरुणस्य छत्रहरणेपि देवेन्द्रत्वात्तस्यैव छत्रं हृतमभूदिति तथोक्तं हृते कुण्डले यस्य स बन्धुर्माता यस्य तेन हृतम् अमराद्रिस्थानं मन्दरशृङ्गं मणिपर्वताख्यं यस्य तेन इन्द्रेण भौमस्य चेष्टितं छत्रहरणादिकं ज्ञापितः सन् ययौ भार्यया सत्यभामया सहित इति त्वदनुज्ञयैव त्वत्पुत्रं हनिष्यामीति भूम्यै यदुक्तं तत् सत्यं कर्त्तुं स्वविभूत्या भूम्या सह सत्यभामाया ऐक्यादेवात्र सत्यभामैव भूमिः सा च महायुद्धसङ्कटे तदेव जहीममित्यनुज्ञास्यते नान्यदेति । नारदानीतपारिजातपुष्पस्य रुक्मिण्यै प्रदानात् कुपितां सत्यभामां सान्त्वयन् तुभ्यं तद्वृक्षमेव दास्यामीति प्रतिश्रुत्य शक्रात् तदाहरणसामर्थ्यतां दर्शयितुं तां सङ्गे नीतवानिति वा ॥ २ ॥ जलाग्न्यनिलैश्च सर्वतो वर्तमानैर्दुर्गमम् ॥ ३-४ ॥

### गूढार्थदीपिनी

ऊनषष्टितमे कृष्णो भौमं हत्वाऽन्तरं गतः । कन्यासहस्रमुद्वाह्य पारिजातमथानयत् ॥ १ ॥

येन स्त्रियो निरुद्धाः स भौमः यथा हतः । तदेतत् भगवतो विक्रमं चरितं कथय ॥ १ ॥ इन्द्रेणेति सार्द्धं । इन्द्रेण भौमचेष्टितं विज्ञापितः सन् भगवान् प्राग्ज्यौतिषपुरं भौमनगरं ययावित्यन्वयः । कथंभूतेन इन्द्रेण । हृते कुण्डले यस्याः सा अदितिबन्धुर्माता यस्य तेन । पुनश्च हृतं मेरौ स्थानं मणिपर्वताख्यं यस्य तेन । कथंभूतं पुरम् । मुरपशानामयुतैरनेकैः षट्सहस्रैरित्यर्थः । घोरैस्तीक्ष्णैः । दृढैरभेद्यैः । हृतच्छत्रेण । अत्र वरुणच्छत्रहरणेऽपि प्रधानत्वादिन्दस्यैव मानभङ्गादिन्द्रेणेत्युक्तम् ॥२-३॥ गदया प्रक्षिप्तयेति योज्यम् ॥ ४ ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

"अन्याश्च विविधा भार्या कृष्णस्यासन् सहस्रशः । भौमं हत्वा तन्निरोधादाहृताश्चारुदर्शनाः" ॥ इति यदुक्तं तदेकोनषष्टितमे प्रपञ्च्यते—यथेति । येन ताः स्त्रियो निरुद्धाः स भौमः यथा हतः चकारात् येन कारणेन हतस्तदाचक्ष्व तदाख्याहि ॥ १ ॥ भौमेन वरुणस्य छत्रे हृतेऽपि देवेन्द्रत्वादिन्द्रस्यापि तच्छत्रमतो हृतच्छत्रेण हृते कुण्डले यस्य स हृतबन्धुर्मातृरूपो यस्य तेन हृतममराद्रौ स्थानं मणिपर्वतलक्षणं यस्य तेनेन्द्रेण भौमचेष्टितं ज्ञापितः भार्यया सत्यभामया सहितः गरुडारूढः प्राग्ज्योतिषपुरं भौमनगरं ययौ सभार्यः इत्यस्यायमभिप्रायः सत्यभामा श्रीकृष्णस्य नित्या भार्या—भूदेवीति समाख्याता प्राणेभ्योऽप्यतिगरीयसी । अभिमानवतीं देवीं प्राणेभ्योऽपि गरीयसीम् । जानन् सात्राजितीं विष्णुर्विवेश शनकैरिव ॥ इत्युपक्रम्य—"मनसा कर्मणा वाचा न त्वामतिचराम्यहम् । गुणा गन्धादयो भूमेः शब्दद्याश्चावरे गुणाः । ध्रुवं पङ्कजगर्भाभे ! त्वयि स्नेहस्तथा मम । रुचिरग्नौ यथा दिव्या प्रभा चैव दिवाकरे । कान्तिश्च शाश्वतीश्चन्द्रे स्नेहस्त्वयि तथा मम" ॥ इति हरिवंशोक्तेः भूदेव्याः सत्यभामायाः विभूतिर्भूमिस्तस्यै वरं दत्तं त्वदनुज्ञयैव त्वत्पुत्रं हनिष्यामीति प्रसिद्धमितिहासे सत्यभामानुज्ञाद्वारा तत्सत्यं कर्तुं हरिवंशप्रसिद्धं श्रीनारदानीतं पारिजातपुष्पं भगवता रुक्मिण्यै दत्तं तच्छ्रुत्वा कुपितां सत्यभामां तुभ्यं पारिजातमेव दास्यामीत्यनुनीय तत्समक्षं पारिजातमानेतुं च तया सहैव ययाविति ॥ २-५ ॥

### सत्यधर्मकृता श्रीभागवतटिप्पणी

हरिः ॐ ॥ भौमं हत्वेत्यारोप्यबीजं मुनौ स मुनिव्रते तदङ्कूरणप्ररोहणादिकं कामयानः शुकं परीक्षित्पृच्छतीत्याह ॥ राजेति । यथा भौमं नरको यथा निरुद्धास्ता स्त्रियस्तेन भौमेन कथं नीतास्तात् । अव्ययम् । शार्ङ्गधन्वनो विक्रममाचक्ष्व ॥ १ ॥ त्रिविष्टपात्स्वर्गासमागम्यागमस्योद्विग्नं चित्तं यस्य स तेन दीनेन ॥ २ ॥ हृतं छत्रं यस्य स तेन । यद्यपि न छत्रं सहस्रनेत्रस्य । यद्वक्ष्यति वरुणाय तथा छत्रं प्राहिणोद्दैत्यकिङ्करैरिति तथाऽपि पौलेपीरमणस्याखिललोकपालमुख्यत्वात्तदप्रदापने मानभङ्गः स्वस्यैवेति तदुक्तिरिति ज्ञेयम् । हृते कुण्डले यस्याः सा हृतकुण्डला सा बन्धुर्माता यस्य स तेन । हृतम् । अमराद्रौ स्थानं मणिपर्व-

तात्मकं यस्य तेन । शुक्रेण भीमचेष्टितं कुजकुचेष्टां ज्ञापितो विज्ञापितः ॥ ३ ॥ इन्द्रं समाश्वास्य प्रसान्त्वय्य तमिन्द्रं सुसम्पूज्य विसृज्य गमयित्वा सभार्यः ससत्यभामः । सत्यभामाधाम्नि स्थितं प्रत्यागतमिन्द्रमिदं सर्वं तच्छ्रुतिस्मृतिं गतमिति कौतुकमवलोकयितुकामिनीति नीतवांस्तामिति सभार्यः । यद्वा भौमस्य दौरात्म्यं दृष्टवती चेदनपत्यं वरं मन्ये कदापत्याच्छुचास्पदादिति मतिमती शान्ता भवेदिति भूम्यात्मिकायाः सत्यभामायाः सह नयनमिति सभार्यः । यथोक्तमाचार्यैः । मुमोद सत्यभामया । रमैव साऽपि भूरितीति । अथवा पुष्पे पारिजातस्य सर्वकामितदे नारदेन दत्ते च रुक्मिण्यै कृष्णेन कुपितां तां समाधातुं पारिजातं तरुमेव तरुणि दास्यामिति प्रतिश्रुतत्वात्तां सह निनाय नायको नाकमिति सभार्यः । यथोक्तं हरिवंशमहाभारततात्पर्यनिर्णययोः । सोऽर्चितो वासुदेवेन मुनिरर्चम······सताम् । पारिजाततरोः पुष्पं ददौ कृष्णाय भारत । तद्दृष्ट्वा राजकुसुमं रुक्मिण्याः प्रददौ हरिरित्यारभ्यालं कमलपत्राक्षि रुदितेन मनस्विनीत्यादिना विधाय तत्समाधिं प्रसीदैकापराधं मे मर्षयस्व शुचिस्मिते । पारिजातस्य पुष्पाणि यावत्कालं त्वमिच्छसीति । दाताऽस्म्यहं पारिजातं तरुं त इति । अहं रुद्राय धनुरातनोमीत्याद्युक्तलक्षण यत्तत्प्रदर्श्य रमात्वख्यात्वै नयनं नलिनाया इति सभार्यः । ननु न च कुतो ज्येष्ठा रुक्मिण्या विनिगमनविरहादिति तु दत्तोत्तरम् । कुसुमसुमनसत्वात्तस्या एतस्या द्युतिसुरतरुवितरणपरिहरणीयरुट्वाद्विनिगमकादिति सम्भवद्भगवन्नयनेऽयमेवेति सभार्यः ससत्यभाम इति वा । द्युमणिपराजयेन तत्प्रतमणिकृताहन्ताशान्त्यर्थं वैतन्नयनं ज्ञेयम् । नरकनगरं प्राग्ज्योतिषपुरम् ॥ ४ ॥

**श्रीमद्वल्लभाचार्य्यकृता सुबोधिनी**

सर्वासामुद्धृतिः पूर्वं संक्षेपेण निरूपिता । दशमे विस्तरेणाह तामेवान्यविभाषया ॥ १ ॥
यदर्थमवतीर्णोऽसौ नात्यन्तं तत्र मृग्यते । हेतुरित्यत्र निर्णीतमतस्ता जगृहे हरिः ॥ २ ॥

स्त्रीणां सामान्यतो विवाहे निरूपिते तत्र पराक्रमो न श्रुत इति तदर्थं पृच्छति, सर्वाणि कर्माणि वीर्यवन्ति चेद्भक्तिजनकानि भवन्तीति । **यथा** हत इति । **भगवतेति** न हनने सन्देहः, किन्तु प्रकारे एव । **भौम** इति भगवत एव पुत्रः । ननु सर्व एव यथा हताः तथा सोऽपि हत इति को विशेष इति चेत्, तत्राह **येन** चेति । राज्ञां हि ताः कन्याः षोडशसहस्रसङ्ख्याताः । यदि स्थानतः स्वरूपतो वा सुगमः स्यात् तदा सर्वे राजानः सम्भूय तं मारयेयुः । लज्जास्पदत्वाद्दुहितृहरणस्य । अतो ज्ञायते सर्वप्राणिनामवध्यः स इति दुर्गमश्चेति तादृशस्य वधो लौकिकन्यायेन कथमिति भगवति विचारणा । **ताः** प्रसिद्धाः । किञ्च । निरुद्धा एव कुतः, कथं नोपभुक्ताः । ता वा भगवता कथमाहृता इति । यथा विक्रमो भवति, तथा आचक्ष्व । अनेन तासां विवाहे लोके क्लिष्टता प्रतिभातीति ज्ञापितम् । युक्त्या चैवं ज्ञायतेऽक्लिष्टं भवतीति । यतोऽयं शार्ङ्गधन्वा । न हि समर्थः क्लिष्टं करोति ॥ १ ॥ तत्र प्रसङ्गात्तासां विवाहो जात इति वक्तुं देवकार्यार्थं भगवान् प्रवृत्त इत्याह **इन्द्रेणेति** । पूर्वं नरकासुरो दिग्विजये इन्द्रं पराजित्य जयख्यापनार्थं त्रयं गृहीतवान् । राजत्वख्यापकं छत्रम्, तेनेन्द्रत्वं गृहीतवान् । अदितिकश्यपपुत्रत्वमपरिहार्यमहत्त्वं मत्वा कश्यपात् भगवान् महानिति पितृकृतोत्कर्षे सिद्धे 'इयं वा अदिति'रिति भूमिपुत्रत्वेनादितित्वे च रूपविशेषख्यापके कुण्डले तस्या गृहीत्वा स्वमात्रे भूम्यै दत्तवान् । तथा त्रैलोक्याधिपतित्वं च दूरीकर्तव्यम् । तत्र यत्र यस्तिष्ठति, तदधिपतित्वं न दूरीकर्तव्यम्, साधारण्यात्, अतो भूम्याधिपत्यं दूरीकर्तुममराद्रिस्थानं मेरौ यदिन्द्रस्य स्थानं तदपि हृतवान् । अनेन स्वस्थाधिपत्यं दूरापास्यमिति न पातालाधिपत्यव्युदासाय किञ्चिच्चकार । स्वर्गस्थानमपि ग्राह्यमित्यध्यवसायोऽस्ति । अन्येष्ववतारेष्ववतारप्रयोजनमात्रं करोति । नाधिकम् । नापि वामनः पुत्रं मारयितुमिच्छति । भ्रात्रपेक्षया तु पुत्रः प्रियः, अदितिर्भूमिश्च भक्ते । स्वापेक्षयापि पुत्रः प्रिय इति पुत्रेण स्वमात्रे कुण्डले दीयमाने च न निवारयति । विशेषावतारे सर्वगतं तेजस्तत्रैव गच्छति । अतो वामन उदासीन इति इन्द्रः कृष्णमेव विज्ञापयामास । हृते कुण्डले बन्धोर्मातुर्यस्य । हृतममराद्रेः स्थानं यस्य । चेष्टितमधिकग्रहणरूपम् । ज्ञापितो भगवान् । न हि तत्पुत्रोऽन्येन हन्तुं शक्यः । पूर्वं हि चतुर्मूर्तिर्भगवानास । तत्रैका तपः करोति । अपरा परिपालनम् । अपरा भोगम् । चतुर्थी तु निद्राति । तासां च रहटघटिकान्यायेन कर्मणां परावृत्तिः । या तपस्यति, सावेक्षां करोति । यावेक्षिष्ट, सा भुङ्क्ते । या बुभुजे, सा शेते । याशयिष्ट, सा तपस्यतीति । क्रियायाः कालश्च सहस्रं वत्सराणि । तत्रैषा व्यवस्था । या तपस्यति, सोत्तिष्ठति । ये केचन स्वार्थं तपः कुर्वन्ति, तेभ्यः प्रसन्ना भवति । तत्रैकदा भूमिः तपस्यन्ती स्थिता । सन्ध्यायां च भगवानुत्थितो वरार्थं प्रेरयामास । ततः सन्ध्यायां भूमिः पुत्रं वव्रे । ततोऽयं नरको जातः कालवशादसुरः । ततो भगवान् भूम्या पुनः प्रार्थितः । नायं हन्तव्य इति । ततो भगवानाह 'त्वत्सम्मतिव्यतिरेकेण न हनिष्यामी'ति । स्वस्यास्त्रं नारायणाख्यं दत्तवान् । यावदस्मिन्नस्त्रम्, तावन्न मृत्युरिति । स चासुरत्वात् महादेवभक्तो बभूव । त्रिशूलं च प्राप्तवान्, नारायणास्त्रसमानम् । ततः स्वयं शिवभक्त इति त्रिशूलं स्वार्थे स्थापितवान् । पुत्राय भगदत्ताय नारायणास्त्रं ददौ । अतो हनने भूमिसम्मतिरेव ग्राह्या । भूमिश्च सत्यभामा ॥ २ ॥ अतो नरकवधार्थं भगवान् सत्यभामया सह गरुडाधिरूढो गत इत्याह **सभार्यो गरुडारूढ इति** । **प्राग्ज्योतिषपुरमिति** तन्नगरनाम । यदा तेजोबन्नात्मिका सृष्टिः, ततः पूर्वमिदं स्थानमुत्पादितमिति ज्ञापनार्थं तथा नाम । ततस्तस्य षडावरणानि निरूपयति **गिरिदुर्गैरिति** । सर्वतः गिरयः पर्वताः अश्वेचरस्य दुर्गमाः । साम्प्रतं कामरूदेश इति तत्प्रसिद्धिः । शस्त्रदुर्गाणि द्वितीयानि । दुर्गत्वं परितः स्थितया गमनप्रतिबन्धकत्वम् । शस्त्राणि

खड्गादीनि । यथा असिपत्रवनम् । ततो मध्ये जलं परितः । ततोन्तरग्निः । ततो वायुरिति । मुरो नाम पञ्चपर्वाविद्याधिष्ठात्री देवता । तस्य पाशाः सर्वापेक्षयान्तरावरणभूताः, ते च दृढाः, पूर्वापेक्षयापि । अनेन क्रम उत्तरोत्तरबलिष्ठत्वं सूचितम् । **सर्वत आवृतमिति** । सर्वैर्न मार्गोऽपि संरक्षितः । स्वयं तु खेचरः । तेजःप्रभृत्यावरणत्रयं उपर्यपीति सम्प्रदायः । तेन सर्वागम्यम् ॥ ३ ॥ तादृशस्यापि लौकिकप्रकारेण वधं वक्तुं क्रमेण दुर्गाणां नाशनमाह **गदयेतिति** । गदाप्रहारेणाद्रीन्निर्बिभेद । तेन प्रथमावरणे नराणामपि गमनं सुगममभूत् । स एव चेदानीं मार्गः । **सायकैः** शस्त्रदुर्गाणि चिच्छेद । सुदर्शनेन जलाग्न्यनिलदुर्गाण्यन्तर्भावितवानित्याह **चक्रेणेति** । आदावग्निप्रवेशनं सजातीयनिराकरणार्थम् । तदुभयोपष्टम्भकं भवति । तस्य च कार्यं जलम् । ततः कारणं वायुमिति प्रान्तस्थितयोरनुप्रवेशः । मुरपाशांस्तु असिना च नन्दकेन चिच्छेद ॥ ४ ॥

## श्रीसुबोधिनी- सारः

राजप्रश्नः । येन ताः स्त्रियो निरुद्धाः यदर्थं च भगवता स भौमो यथा हत एतत् शाङ्र्गधन्वनो विक्रमं वीर्यं त्वमाचक्ष्व ब्रूहि ॥ १ ॥ शुकोक्तिः । हृतं छत्रं यस्य तेन वरुणेन हृते कुंडले यस्याः सा अदितिर्बंधुर्माता यस्य तेनेन्द्रेण हृतममराद्रौ सुमेरौ स्थानं मणिपर्वतलक्षणं यस्य तेन कुबेरेण भौमस्य चेष्टितं ज्ञापितः सन् सभार्यः कौतुकार्थं स्त्रीसहितः तदनुमतेनैव 'त्वत्पुत्रं हनिष्यामीति इतिहासोक्तम्' भूम्यै वरप्रदानं सत्यं कर्त्तुं सत्यभामायास्तदंशत्वात्तया सह गमनमुक्तं यद्वा नारदानीतकल्पवृक्षपुष्पस्य रुक्मिण्यै दानात् कुपितां सत्यभामां 'त्वदंगणे पारिजातं रोपयिष्यामि' इति सांत्वयता श्रीकृष्णेन प्रतिश्रुतमिति हरिवंशे प्रसिद्धं तदर्थं वाऽविश्वसंत्या तया सहितो गरुडमारूढः प्राग्ज्योतिषं नाम तन्नगरं ययौ ॥२॥ गिरिदुर्गैः पर्वतवप्रैः शस्त्रदुर्गैरुपलक्षितं जलाग्निवायुभिर्दुर्गमं प्रवेष्टुमशक्यं घोरैर्दारुणैर्दृढैर्मुरस्य पाशानामयुतैः सर्वत आवृतम् ॥ ३ ॥ यानप्रकारं तत्राह । गदयाद्रीन् सायकैर्बाणैः शस्त्रदुर्गाणि अग्निं जलं वायुं चक्रेण मुरस्य पाशानसिना खड्गेन तथा निर्बिभेद ॥ ४ ॥

## श्रीविट्ठलरायात्मजश्रीवल्लभकृतलेखः

**दशमे । यथा हत** इत्यत्र । **यथा विक्रमो भवति, तथेति** । मूले एतावत्पूर्वोक्तं विक्रमत्वेनाचक्ष्वेत्यर्थः । एतदित्यस्य विक्रमविशेषणत्वे एतमिति स्यात्, अत उद्देश्यविधेयभावेन व्याख्यानमिति भावः । **इन्द्रेणे**त्यत्र । **यत्र यस्तिष्ठतीति** । नरकासुरः पाताले स्वयमेव तिष्ठतीति पातालाधिपत्यनिवारणार्थं महानुद्यमो नापेक्षित इति भूम्याधिपत्यं निवारितवानित्यर्थः । कामरूपदेशस्थितावपि वासस्थानमसुरत्वात्पातालमेवेति भावः । **दीयमाने** चेति । उभे अपि भक्ते । अतः समत्वान्न निवारयति, पुत्रेण दीयमानत्वाच्च न निवारयतीति चकारः । न निवारयति । **वामन** इति पूर्वेणान्वयः । **सर्वगत**मिति । अवतारान्तरगतमित्यर्थः । **अत** इति । तेजसो भगवति गतत्वादित्यर्थः । **हृते कुण्डले** इत्यर्थकथनम् । हृतकुण्डलो बन्धुर्यस्येति विग्रहः ।

## गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

ऊनषष्टितमे भौम-गृहे दृष्टवरैरथ । स्त्रीजनैः सह कृष्णस्य विवाहो विनिरूप्यते ॥ १ ॥

भौमं हत्वा तन्निरोधादाहृता इति यत् सङ्क्षेपत उक्तं तद्विस्तरबुभुत्सया राजा पृच्छति—यथेति । येन भौमेन ताः स्त्रियो निरुद्धाः स भौमो यथा येन प्रकारेण भगवता हतः, चकारात् येन प्रकारेण च हत इत्यपि बोध्यम्, तदेतत् शाङ्र्गधन्वनः कृष्णस्य विक्रमं चरितमाचक्ष्व आख्याहि ॥ १ ॥ इन्द्रेण भौमचेष्टितं प्रति ज्ञापितः सभार्यो गरुडारूढः श्रीकृष्णः प्राग्ज्योतिषं पुरं भौमनगरं ययाविति द्वितीयेनान्वयः । 'किं तच्चेष्टितम्' । इत्यपेक्षायां 'छत्रहरणादिकम्' इति सूचयन् इन्द्रं विशिनष्टि—हृतं छत्रं यस्य तेन इन्द्रस्य लोकपालप्रधानत्वात् वरुणच्छत्रहरणेऽपि तस्यैव मानभङ्ग इति तथोक्तम् । हृते कुण्डले यस्याः सा अदितिर्बन्धुर्माता यस्य तेन तथा हृतं अमराद्रिः सुमेरुस्तत्रत्यं स्थानं यस्य तेन कदाचिद्भगवता भूम्यै 'त्वत्संमतिव्यतिरेकेण त्वत्पुत्रमेनं न हनिष्यामि' इति वरो दत्तः । सत्यभामाया भूम्यंशत्वात्तत्संमत्यर्थं तामपि सहैव नीतवानिति इतिहासान्तराज्ज्ञेयम् ॥ २ ॥ गरुडेन गमने हेतुं वदन् पुरं विशिनष्टि—गिरिदुर्गैरिति । दुर्गत्वं गमनप्रतिबन्धकत्वं सर्वतस्थितैर्गिरिदुर्गैस्तथा सर्वतः स्थापितैर्भृशुण्ड्यादिशस्त्रदुर्गैश्च दुर्गममिति शेषः । तथा जलाग्न्यनिलैश्च सर्वतो वर्तमानैर्दुर्गमम् । तथा घोरैः आगच्छतां शत्रूणां ग्रहणे अव्यभिचारिभिः दृढैश्छेत्तुमशक्यैः मुरस्य दैत्यस्य पाशायुतैः सर्वत आवृतम् ॥ ३ ॥ एवं स्थिते भगवता दुर्गभेदनप्रकारमाह—गदयेति । चक्रेण सुदर्शनेनाग्न्यादीन् बिभेद, सुदर्शन एवान्तर्भावितवानित्यर्थः । स्पष्टमन्यत् ॥ ४ ॥

## अन्वितार्थप्रकाशिका

ऊनषष्टितमे भौमं हत्वा प्राप नृपात्मजः ॥ दिवोऽहरत्पारिजातं श्लोकाः सार्द्धाः षडब्धयः ( ४६॥ ) ॥
चत्वार्युवाचेति ( ४ ) पादोनाद्रिबाणा ( ५६॥। ) अनुष्टुभः ॥ ५९ ॥

यथेति । येन भौमेन ताः स्त्रियो निरुद्धाः स भौमो यथा येन प्रकारेण चकाराद्येन कारणेन च भगवता हतः । तदेतत् शाङ्र्गधन्वनः कृष्णस्य विक्रमं चरितमाचक्ष्व आख्याहि ॥ १ ॥ इन्द्रेणेति । हृतं छत्रं यस्य तेन इन्द्रस्य लोकपालप्रधानत्वात्

वरुणछत्रहरणेऽपि तस्यैव मानभङ्ग इति तथोक्तं हृते कुण्डले यस्याः सा अदितिर्बन्धुर्माता यस्य तेन तथा हृतम् अमराद्रेर्मन्दरस्य स्थानं मणिपर्वतलक्षणं मन्दरशृङ्गं यस्य तेन इन्द्रेण भगवान् भौमचेष्टितं प्रतिज्ञापितः ।। २ ।। सभार्य इति सार्द्धम् । ततः सभार्यः सत्यभामासहितः गरुडारूढः सन् सर्वतः स्थितैः गिरिदुर्गगमनप्रतिबन्धकैः गिरिभिः तथा सर्वतः स्थापितैर्भुशुण्ड्यादिशस्त्रदुर्गैश्च दुर्गममिति शेषः । अत एव गरुडारूढो भगवान् ययौ । तथा जलाग्न्यनिलैश्च सर्वतो वर्तमानैर्दुर्गमं तथा घोरैः आगच्छतां शत्रूणां ग्रहणे अव्यभिचारिभिः दृढैश्छेत्तुमशक्यैः मुरस्य दैत्यस्य पाशानामयुतैः सर्वत आवृतं प्राग्ज्योतिषपुरं ययौ। कदाचिद् भगवता भूम्यै त्वत्संमतिव्यतिरेकेण त्वत्पुत्रमेनं न हनिष्यामि इति वरो दत्तः। सत्यभामाया भूम्या ऐक्यात्सत्यभामैवात्र भूमिः तत्संमत्यर्थं तामपि सहैव नीतवानिति। यद्वा। सत्यभामागृहगतो भगवानिन्द्रेण छत्राद्यर्थं प्रार्थितोऽतः सत्यभामाकौतुकार्थं तामपि सह नीतवान् । यद्वा। नारदानीतपारिजातैककुसुमे रुक्मिण्यै दत्ते कुपितां सत्यभामां सान्त्वयता तुभ्यं पारिजातमेव दास्यामीति श्रीकृष्णेन प्रतिश्रुतमिति हरिवंशे प्रसिद्धं तदर्थं तान्नीतवानिति ।। २-३ ।। गदयेति। अद्रीन् गिरिदुर्गाणि गदया निर्बिभेद। शस्त्रदुर्गाणि सायकैः निर्बिभेद। अग्नि जलं वायुं च प्रदीप्तेन चक्रेण निर्बिभेद चक्र एवान्तर्भावितवान्। तथा मुररचितान् पाशान् असिना निर्बिभेद ।। ४ ।।

### श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्

अथैकोनषष्टितमेध्याये भौमहननं तदंतः पुराच्छताधिकषोडशसहस्रकन्याहरणं ता द्वारकां नीत्वाऽऽसां पाणिग्रहणं स्वर्गात्पारिजातापहरणं च निरूप्यते। येन भौमेन ताः स्त्रियोनिरुद्धाः चकारात् स भौमो वराहात्मजः श्रीवराहात्मजं भौमं हत्वा संस्थाप्य तत्सुतमिति तोषण्यां पुराणांतरात्। येन निहतः एतत् एतं सर्वं विक्रमं आचक्ष्व ।। १ ।। हृते कुंडले यस्य स चासौ वंधुरदितिर्माता यस्य तेन। वरुणछत्रहरणेपि सर्वदेवे इत्वाद्धत छत्रेणेतींद्रविशेषणमुक्तं हृतममराद्रेमंदरस्य स्थानं श्रृंगं मणिपर्वताख्यं यस्य तेनेंद्रेण भौमचेष्टितं छत्रहरणादिकं। प्रतिज्ञापितो विनयपूर्वकतया कथित इत्यर्थः प्राग्ज्योतिषपुरं तन्नामनगरं। एकदा नारदेनानीते पारिजातैकपुष्पे हरिणा वैदर्भ्यै समर्पिते सति क्रुधितां सत्यभामां प्रसन्नां कुर्वता श्रीकृष्णेन तुभ्यं पारिजातमेवाहं दास्यामीति प्रतिज्ञा कृता सा हरिवंशे प्रसिद्धा अतः श्रीकृष्णस्तस्यै एकस्यै एव पारिजातदानाय तया सह गत इति बोध्यं ।। २ ।। गिरिदुर्गाद्युल्लंघनार्थं गरुडयानं ज्ञेयं। पुरविशेषणान्याह गिरिशस्त्रदुर्गैरुपलक्षितं जलादिभिर्दुर्गमं च। मुरपाशानां अयुतैरसंख्यदशसहस्त्रैरेतैः सर्वैः सर्वत आवृतं पुरं ययाविति संवंधः ।। ३-४ ।।

### भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

ऊनषष्टितमे कृष्णो हत्वा भौमं तदाहृताः। सहस्रशोऽगमत् कन्याश्चाहरत् द्युतरुं दिवः ।। १ ।।
परिणीय च तास्ताभिः पूरयंस्तन्मनोरथान्। रेमे गृहस्थवत्तासामात्मारामो गृहेष्वसौ ।। २ ।।

भौमं हत्वा तन्निरोधादाहृता इति यदुक्तं तद्विस्तरबुभुत्सया पृच्छति राजा। यथेति। येन भौमासुरेण, ताः स्त्रियः निरुद्धाः, स भौमः, भगवता यथा हतः, चकाराद्येन कारणेन हत इत्यपि बोध्यम्। शार्ङ्गधन्वनः भगवतः, एतदिममित्यर्थः। विक्रमं आचक्ष्व समाख्याहि ।। १ ।। एवं पृष्टो मुनिः भौमवधादिकं विस्तरतो वक्तुं तदुपोद्घातमाह। इन्द्रेणेति। हृतं छत्रं यस्य तेन, यद्यपि छत्रहरणं तु भौमेन वरुणस्यैव कृतं भवत्यथापि लोकपालप्रधानत्वात्तत्त्वं शक्रे आरोप्य हृतच्छत्रेणेतीन्द्रविशेषणं कृतम्। हृते कुण्डले यस्याः साऽदितिर्बन्धुर्माता यस्य तेन, हृतममराद्रिस्थानं मणिपर्वतात्मकं यस्य तेन, इन्द्रेण, आगत्य सत्यभामागृहे वर्त्तमानो भगवानिति शेषः। भौमचेष्टितं ज्ञापितः। अतः सभार्यः सत्यभामासहितः, गरुडारूढश्च सन्, प्राग्ज्योतिषपुरं भौमनगरं, ययौ। सत्यभामायै कौतुकं प्रदर्शयितुं तया सह वर्त्तमानत्वात् सभार्य इत्युक्तम्। यद्वा। त्वदनुज्ञयैव त्वत्सुतं हनिष्यामीति हासोक्तं भूम्यै दत्तं वरं पालयितुं सत्यभामाया भूम्यंशत्वात्तत्साहित्यमुक्तम्। यद्वा। नारदानीतपारिजातकुसुमे कृष्णेन रुक्मिण्यै दत्ते सति कुपितां सत्यभामां सान्त्वयितुं तुभ्यं पारिजाततरुमेव दास्यामीति प्रतिश्रुतं हरिवंशप्रसिद्धं, तदर्थं तत्साहित्यं बोध्यम् ।। २ ।। गरुडारूढ इत्यत्र हेतुं वदन् पुरं विशिनष्टि। गिरिदुर्गैरिति। गिरिदुर्गैः शस्त्रदुर्गैः उपलक्षितं जलाग्न्यनिलदुर्गमं, जलपरिखया ज्वलत्खदिराङ्गारवृत्त्या वायुयन्त्रैश्च दुरासदमित्यर्थः। घोरैः दृढैः, मुरपाशायुतैरयुतसंख्याकैर्मुरदानवपाशैश्च, सर्वतः आवृतम्। तत्पुरं ययाविति संबन्धः ।। ३ ।। गदयेति। गदया कौमोदक्या, अद्रीन् अद्रिदुर्गाणि, निर्बिभेद। सायकैर्बाणैः, शस्त्रदुर्गाणि निर्बिभेद। जलं, अग्नि, वायुं, चक्रेण सुदर्शनेन, तथा असिना नन्दकाख्यखड्गेन, मुरपाशान् निर्बिभेद ।। ४ ।।

### कृष्णप्रिया

### भौमासुर उद्धार, षोडशसहस्र कन्याओं का कारागृहविमोचन एवं विवाह-कथा प्रसङ्ग

राजा श्रीपरीक्षित जी ने प्रश्न किया— महाराज शुकदेव जी ! षोडश सहस्र कुमारिकाओं को कारागृह में कैद करने वाले भौमासुर को कैसे मारा ? कन्याओं को कैसे छुड़ाया, प्राग्ज्योतिषनगर को कैसे नष्ट किया ? यह सारी शार्ङ्गधन्वा

भगवान् श्रीकृष्णचन्द्र की अत्यंत अद्भुत लीलाओं को श्रवण कराने का अनुग्रह करें ॥ १ ॥ महाराज श्रीशुकमुनि जी कहने लगे—राजन् परीक्षित् ! महाराज इन्द्र का छत्र, माता अदितिजी के कुण्डल, मेरु महागिरि पर विराजमान देवलोगों का मणि पर्वत नाम से विख्यात निवास स्थान, भौमासुर ने छीन लिया था। महाराजा इन्द्र ने द्वारिका में आकर भौमासुर के ये सब करतूत भगवान् श्रीकृष्ण को सुनाया। कृपानिधान भगवान् कृष्ण यह सब समाचार सुनकर प्रियतमा श्रीसत्यभामा जी के साथ गरुडारूढ होकर भौमासुर की राजधानी प्राग्ज्योतिषनगर में पधारे ॥ २ ॥ यह प्राग्ज्योतिषनगर विविध प्रकार के दुर्गों से दुर्गम था। नगर के चारों ओर गिरिवरों के दृढतर प्राकार थे। दूसरे विविध प्रकार के शस्त्रों की किलेवन्दी थी। तीसरी गहरी जल को खाई थी। पुनः आग की चारों ओर फिरती दिवाल थी। पांचवी किलेबन्दी वायु की बनाई गयी थी। नगर के बाहर एवं भीतर पांच मस्तक वाले मुरदानव ने अकाट्य ऐसे दस हजार दृढ और भयानक पाश-फंदे-बिछा दिये थे ॥ ३ ॥ सर्व समर्थ भगवान् श्रीकृष्ण ने अपनी कौमोदिकी गदा से गिरिदुर्गों की किलेवन्धी नष्टभ्रष्ट कर दी। दूसरी अस्त्रशस्त्रों की किलेवन्धी तीखे बाणों से नष्टभ्रष्ट कर दी। नाथ ने सुदर्शन चक्र से अग्निदुर्ग, वायुदुर्ग, एवं जलदुर्ग को छिन्नभिन्न कर दिया। पुनः भगवान् श्रीकृष्ण ने पञ्चशिरा मुरदानव के विविध पाशों का सर्वथा नाश कर दिया ॥ ४ ॥

**शङ्खनादेन यन्त्राणि हृदयानि मनस्विनाम् । प्राकारं गदया गुर्व्या निर्बिभेद गदाधरः ॥ ५ ॥**

**पाञ्चजन्यध्वनिं श्रुत्वा युगान्ताशनिभीषणम् । मुरः शयान उत्तस्थौ दैत्यः पञ्चशिरा जलात् ॥ ६ ॥**

**त्रिशूलमुद्यम्य सुदुर्निरीक्षणो[1] युगान्तसूर्यानल[2] शोचिरुल्वणः ।**
**ग्रसंस्त्रिलोकीमिव पञ्चभिर्मुखैरभ्यद्रवत्ताक्ष्र्यसुतं यथोरगः ॥ ७ ॥**
**आविध्य शूलं तरसा गरुत्मते निरस्य वक्त्रैर्व्यनदत् स पञ्चभिः ।**
**[3]खं रोदसी सर्वदिशोऽन्तरं[4] महानापूरयन्नण्डकटाहमावृणोत् ॥ ८ ॥**

### कर्दमक्षमा

अन्वयः—निर्विभेद, शङ्खनादेन, यन्त्राणि, च, मनस्विनाम्, हृदयानि, निर्विभेद, गुर्व्या, गदया, प्राकारम्, निर्बिभेद ॥ ५ ॥ पञ्चशिराः, शयानः, दैत्यः, मुरः, युगान्ताशनिभीषणम्, पाञ्चजन्यध्वनिम्, श्रुत्वा, जलाद्, उत्थितः ॥ ६ ॥ युगान्तसूर्यानलशोचिः सुदुर्निरीक्षणः, उल्वणः, त्रिशूलम्, उद्यम्य, पञ्चभिः, मुखैः, त्रिलोकीम्, ग्रसन्, इव, उरगः, यथा, ताक्ष्र्यसुतम्, अभ्यद्रवत् ॥ ७ ॥ गरुत्मते, तरसा, निरस्य, शूलम्, आविध्य, पञ्चभिः, मुखैः, सः, व्यनदत्, सः, महान्, नादः, खम्, रोदसी, सर्वादिसोऽन्तरम्, अण्डकटाहम्, आवृणोत् ॥ ८ ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

युगांताशनेर्ध्वनिवद्भीषणम् । परिखाया जलात् ॥ ६–७ ॥ आविध्य आतोल्य । स महान्नाद इत्यन्वयः ॥ ८ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

यंत्राणि द्वारकपाटनिरोधार्थं लोहादिनिर्मितानि, हृदयानि च ॥ यंत्राणि प्राकारन्यस्तानि, येषामग्रे परसैन्यागमदेशे पादघातमात्रेण चलन्तः प्राकारस्थानां शस्त्रक्षेपसंयोगाः स्युस्तन्निर्भेदनमुपरि स्थित्वा तादृससंयोगान्यथाकरणं, महाशब्दस्य कंपनादिस्वभावत्वात् । मनस्विनां धीराणां हृदयान्यपि यंत्रतुल्यान्येव । गुर्व्येति प्राकारस्थापितगुरुत्वम्, तथापि तन्निर्भेदेऽनायासं सूचयति, यतो गदाधरः तद्विद्याप्रावीण्येन गदाधर इति नाम प्राप्ता इत्यर्थः ॥ ५ ॥ परिखास्थतोयात् ॥ जलदुर्गनिर्भेदनस्य पूर्वकथामाह–पांचजन्येति । पूर्वमेव पांचजन्यशब्दं श्रुत्वेति ज्ञेयम् । युगांताऽशनिभीषणमित्यसुरेष्वेव ज्ञेयम्, 'मल्लानामशनिः' इत्यादिवत् । शयानः सदा मदाविष्टत्वान्निश्चिन्तत्वाच्च तथास्वभावः ॥ ६ ॥ उल्वणो भयंकरः । युद्धादिकौतुकं गायन्निव दीर्घच्छंदसाह–त्रिशूलमिति । सुदुर्निरीक्षणत्वे हेतुः–युगांतेति । उल्वणो भीषणः । तदेवाह–ग्रसन्निति । अभ्यद्रवत् हरिम्, तच्च स्ववधायैवेति दृष्टांतेन द्योतयति–ताक्ष्र्येति ॥ ७ ॥ गरुत्मते तं हन्तुम् । निरस्य निक्षिप्य । आपूरयन् नादेनेति शेषः ॥ निरस्य क्षिप्त्वा । रोदसी दिवं भुवं च । अंतरं छिद्रम्, पातालमित्यर्थः ॥ ८ ॥

---

१. निरीक्ष्यो–विज ; क्षणं–प्रा. पा. । २. रोचि–श्रीधरः वंशी. जीव. वीर. विश्व. ; रुज्ज्वलः–विज. ; रुल्वणं–प्रा. पा. । ३. खं–वीर. विज. ; स–श्रीधर. वंशी. जीव. विश्व. शुक. । ४. दिशोऽम्बरं–त. पु. सू. ।

### श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी

यन्त्राणि प्राकारन्यस्तानि येषामग्रे परसैन्यागमदेशे पादघातमात्रेण चलन्तः प्राकारान्तानां शस्त्रक्षेपकसंयोगविशेषाः स्युः तन्निर्भेदनम् उपरि स्थित्वा तादृशसंयोगान्यथाकरणं महाशब्दस्य कम्पनादिस्वभावत्वात् मनस्विनां वीराणां तदीयानामेव हृदयान्यपि गुर्व्येति प्राकारस्यापि गुरुत्वं तथापि तन्निर्भेदेऽनायासञ्च सूचयति यतो गदाधरः तद्विद्याप्रावीण्येन तन्नामतामेव प्राप्त इत्यर्थः ॥ ५ ॥ टीकायां परिखाया जलादिति जलदुर्गनाशात् यद्वा जलदुर्गनिर्भेदनस्य पूर्वकथामाह—पाञ्चेति । एवं पूर्वपूर्वमेव पाञ्चजन्यध्वनिः विशेषतस्तु यन्त्रनिर्भेदन इति ज्ञेयं युगान्ताशनिभीषणमित्यसुरेष्वेव ज्ञेयं नतु भक्तेषु "मल्लानामशनिः" इत्यादिवत् शयानः सदा मदाविष्टत्वान्निश्चिन्तत्वाच्च तथास्वभावः ॥ ६ ॥ युद्धादिकौतुकेन गायन्निव दीर्घच्छन्दसाह—त्रिशूलेत्यादि । दुंनिरीक्षणत्वे हेतुः युगान्तेति स्वयञ्चोल्वणो भीषणः उल्वणत्वमेवाह—ग्रसन्निति । मुखैर्व्यात्तैः अभ्यद्रवद्धरि तच्च स्ववधायैवेति दृष्टान्तेन द्योतयति—तार्क्ष्येति । यद्वा स्थूलदर्शनत्वात्तार्क्ष्यसुतमेवाभ्यद्रवत् ॥ ७ ॥ निरस्य निश्शेषेण क्षिप्त्वा रोदसी रोदस्यौ दिवं भुवं च अन्तरं च छिद्रं पातालमित्यर्थः ॥ ८ ॥

### श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी

यन्त्राणि औषधादिप्रयोगेण लोहगुलकादिक्षेपकाणि दुर्गन्यस्तानि, मनस्विनामपि गुर्व्येति प्राकारस्यापि गुरुत्वम्, तथापि तन्निर्भेदेनायासञ्च सूचयति, यतो गदाधरः पाणिना गदाधारणमात्रेणैवेति भावः ॥ ५ ॥ शयानो जले, यतो दैत्यः, जात्यैव मद्यपानादिरतत्वात्, किंवा शक्रादिनिर्ज्जयेन नैश्चिन्त्यादिति भावः ॥ ६ ॥ युद्धादि–कौतुकेन गायन्निव दीर्घच्छन्दसाह—त्रिशूलमित्यादि । दुर्निवीक्षणत्वे हेतुः—युगान्तेति । दुर्निरीक्षण इति पाठेऽपि स एवार्थः । अत उल्वणो भीषणः, उल्वणत्वमेवाह—प्रसन्निति । मुखैर्व्यात्तैः, अभ्यद्रवद्धरिं तच्च स्ववधायैवेति दृष्टान्तेन द्योतयति—तार्क्ष्येति ॥ ७ ॥ निरस्य निःशेषेण क्षिप्त्वा, रोदसी रोदस्यौ दिवं भुवञ्च, अन्तरं च छिद्रं पातालमित्यर्थः । शब्दस्याकाशजत्वेन प्राक् खं तदूर्ध्वगामित्वादतिबृहत्वाच्च स्वर्गाख्यमूर्ध्व लोकपञ्चकम्, ततो वहिर्निःसरणाशक्त्या निवृत्य मर्त्यलोकं ततोऽतिविस्तारप्राप्त्या सर्व्वा दिशः, ततोऽतिपूर्त्या विवरद्वारेणाधोलोकमेवं क्रमेण आ सम्यक् पूरयन्नित्यर्थः ॥ ८ ॥

### श्रीमद्वीरराघवाचार्यकृता भागवतचन्द्रचन्द्रिका

मनस्विनां स्वैरिणां मुरादीनां हृदयानि यन्त्राणि च शङ्खनादेन ॥ ५ ॥ पाञ्चजन्येति युगान्ताशनेर्ध्वनिवद्भीषणं पाञ्चजन्यध्वनिमाकर्ण्य ॥ ६ ॥ त्रिशूलमिति युगान्ते सूर्याग्न्योरिव रोचिर्दीप्तिर्यस्य स मुरासुरः अत एवोल्वणः दुंस्सहो दुंनिरीक्षस्सन् त्रिशूलमुद्धृत्य पञ्चभिर्मुखैः त्रिलोकीं ग्रसन्निवाभ्यधावत् यथोरगः सर्पः तार्क्ष्यसुतं गरुडं तद्वत् ॥ ७ ॥ आविध्येति । स मुरः शूलमाविध्यालोल्य तरसा बलेन गरुडाय प्रयुज्य पञ्चभिर्वक्त्रैर्ध्वनन्ननाद किं कुर्वन् रोदसी द्यावापृथिव्यौ खमन्तरिक्षं लोकोपरितनमाकाशं सर्वेषां श्रोत्रबिलं ( स्थानं ) वा दिगन्तरञ्चापूरयन्नादेनेति शेषः । स नादः कृत्स्नमप्यण्डकटाहमावृणोत् ॥ ८ ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

अमन्दमनलम् । निरस्य मुक्त्वा आपूरयन्नादेनेति शेषः ॥ ८–१२ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

मनस्विनां शूराणां यन्त्रतुल्यानि हृदयानि निर्बिभेद ॥ ५–६ ॥ युगान्ताशनेर्ध्वनिवद्भीषणमिति शत्रूणामेव "मल्लानामशनिः" इति वत् परिखाया जलात् ॥ ७ ॥ आविध्य भ्रामयित्वा स महान्नाद इत्यर्थः ॥ ८ ॥

### गूढार्थदीपिनी

यन्त्राणि यन्त्रतुल्यानि दृढानि हृदयानि व्यदारयत् ॥ ५ ॥ युगान्ताशनिवत् प्रलयकालिकवज्रपातवत् भीषणम् । जलात् परिखास्थात् ॥ ६ ॥ स मुरः त्रिशूलमुद्यम्य मुखैः त्रिलोकीं ग्रसन्निव कृष्णमभ्यद्रवदित्यन्वयः । तार्क्ष्यः कश्यपस्तस्य सुतं गरुडम् यथा उरगः । युगान्ते प्रलये सूर्यानलवत् रोचिः दीप्तिर्यस्य । उल्वणो भयङ्करः ॥ ७ ॥ स मुरः गरुत्मते गरुडं हन्तुं त्रिशूलं भ्रमयित्वा वेगेन प्रक्षिप्य च व्यनदत् । स महान् नादः रोदसी दिवं भुवं च । अन्तरं छिद्रं पातालम् । अम्बरमिति पाठे आकाशम् आपूरयन् ब्रह्माण्डमावृणोत् ॥ ८ ॥

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः

युगान्ताशनिध्वनिवद्भीषणम् । पाञ्चजन्यध्वनिं मुरः श्रुत्वा उत्तस्थौ मुर इत्यग्रेपि सम्बन्ध्यते ॥ ६–७ ॥ स नादः अण्डकटाहमावृणोदित्यन्वयः । सोपि तस्मै कृष्णाय ॥ ८–१० ॥

## श्रीसत्यधर्मकृता श्रीभागवतटिप्पणी

हिमाद्रौ तत्रापि तुङ्गशिखरे गिरिदुर्गैः शस्त्रदुर्गैर्मरुपाशयुतैर्वृतमासीद्वाह्ये गिरिं दुर्गं तदन्तः पानीयदुर्गं गौरवं पाशदुर्गं तस्याप्यन्तः क्षुरधारोपमं तत्पाशाश्च ते षट्सहस्राः सुघोराः । अभेद्यत्वमारीभिरतार्यता च दत्तं दुर्गाणां ब्रह्मणाराधितेनेत्याचार्योक्तरर्थोऽत्रधेयः । सुघोरा अन्ये चतुस्सहस्रपाशा इत्यर्थे महाभारततात्पर्यनिर्णयोक्तिविरोधो न यद्वा मरुपाशाश्च तेऽयुताः परस्परमलग्नाश्च तैः षट्सहस्रैरित्यर्थः । यथोक्तं स्थानान्तरे हरिवंशे । क्षुरान्तान्मौरवाप्यशापट्सहस्रान्ददर्श स इति । अत एवं दुर्गस्थानरथारथनाद्गरुडारूढ इत्युक्तिरिति ज्ञेयम् । आयुतेनेति वक्तव्येऽयुतैरिति यदवोचद्ग्रन्थकृत्तेनासंलग्नता तेषां संलग्नेत्यभिप्रैति ॥ ५ ॥ प्राकारस्याकारेण संस्थितं गिरिमद्रिं गदया निर्बिभेद । पर्वतच्छिदिकार्यनिष्पादकतया तदमित्रगोत्राणामन्तरान्तरीयाचरणं न्याय्यं तत्पक्षपातिना गदयैतत्पातोऽपि न्याय्य इत्युक्तिर्युक्ता ॥ ६ ॥ चक्रर्ताच्छिनत् । अमरं मौरवं पाशं चक्रेणाच्छिनत् । मुर इति मुरुरिति च नामनी ॥ ७ ॥ क्षुरमालां तदावलिम् ॥ ८ ॥ तीव्रेण कर्मनिष्ठुरेण ॥ ९ ॥ अशनिवद्भीषणम् । पञ्चशिरांसि यस्य स मुरुः । जलात्प्राक्स्तम्भितादम्भसः ॥ १० ॥ युगान्तः प्रलयस्तत्कालिकं यो सूर्यानिलो तयो रोचिषा तत्समकान्त्योज्वलः । पञ्चभिर्मुखैः त्रिलोकाद्विशेषणसमासः ॥ ११ ॥ आविध्य भ्रामयित्वा निरस्य क्षिप्त्वा पक्षिणे गरुत्मते पञ्चभिर्मुखैर्व्यनदन्ननाद । खं रोदसी द्यावापृथिव्यौ सर्वा दिशोऽन्तरं विदिशोऽण्डकटाहं चापूर्य नादेनावृणोदाच्छादितवान् ॥ १२ ॥ तं शूलम् । खलशूलाः पुंसि चेति लिङ्गानुशासनात्पुल्लिङ्गोऽपि शूलशब्दः । सोऽपि मरुरपि ॥ १३ ॥

## श्रीमद्वल्लभाचार्य्यकृता सुबोधिनी

एवमावरणानि दूरीकृत्य दूरान्मारणसाधनानि पाषाणक्षेपणरूपाणि यत्राणि चिच्छेदेत्याह **शङ्खनादेनेति**। मनस्विनां हृदयानि उत्साहशक्तीश्च । ततो दुर्गप्राकारमपि बिभेदेत्याह **प्राकारमिति**। **गुर्व्येति**। तत्र स्थितानां देवानां नाशनसामर्थ्यं द्योतितम् । तेषामुपेत्य प्रतिबन्धकत्वाभावाय **निरुपसर्गः**। **गदाधर** इति । अग्रे युद्धार्थं सावधान इत्यर्थः ॥ ५ ॥ एवं सर्वावरणानि भित्त्वा सावधानो जातः । शङ्खनादस्य माहात्म्यं 'विष्णोर्मुखोत्थानिलपूरितस्य यस्य ध्वनिर्दानवदर्पहन्ते'ति । ततो दर्पाच्छयानः परिखाजले तन्नादेन दर्पनाशं मत्वा कथं जात इति हेत्वन्वेषणार्थं उत्थितः । न केवलं माहात्म्यात् दर्पनाशकत्वम्, किन्तु स्वरूपतोऽपि नादस्तादृश इत्याह **युगान्ताशनिभीषणमिति**। **युगान्ते** प्रलये, तत्रापि मारकत्वेनैव प्रसिद्धः अशनिः, ततोऽपि भीषणः दर्पं हन्त्येव । प्रलये दैत्यानां दर्पस्तिष्ठतीति प्रसिद्धिः । अतो दर्पेण निश्चिन्तः शयानोऽप्युत्थितः । स च दैत्यस्तेन मारणीय एवेति भगवत्सम्मुखोऽपि विरुद्ध एव जातः । अविद्यासम्बन्धीति ज्ञापयितुं **पञ्चशिराः**। पञ्च शिरांसि यस्येति योगः । **मुर** इत्येव नाम । जलादिति परिखासम्बन्धिनः ॥ ६ ॥ उत्थित एव युद्धार्थं प्रवृत्त इत्याह **त्रिशूलमिति**। अनेनासहायवीरत्वमुक्तम् । **सुदुर्निरीक्षण** इति युक्तमेव तस्य तथात्वम् । यो हि द्रष्टुमेवाशक्यः। तेन सह को वा युध्येत् । किञ्च । **युगान्तसूर्यानलशोचिरुल्वणः**। पाञ्चजन्यध्वनिस्तु प्रलयाशनितुल्य एव, अस्य तु देहकान्तिरपि प्रलयसूर्यानलसदृशी । ततोऽप्युल्वणश्च । अत एव युद्धे निःशङ्कः । महाभूतान्यपि यो भक्षयितुं शक्तः, स कथं जेयो भवेदित्याह **ग्रसंस्त्रिलोकीमिति**। पञ्चभिर्मुखैः चतुर्षु दिक्षु उपरि च सर्वानेव लोकान् भक्षयति, न समायेति । दर्शनमात्रमेव तस्य भयानकम्, न तु युद्धं कर्तुं शक्त इति ज्ञापयितुं दृष्टान्तमाह **ताक्ष्र्यसुतं यथोरग** इति । गरुडं सर्पो यथाभिधावति भक्ष्यः ॥ ७ ॥ गतस्य पराक्रममाह **आविध्येति**। उत्तोल्य भ्रामयित्वा वा । **तरसा** यावद्द्वितीयो न सावधानः । स हि भगवन्तं द्रष्टुमशक्तो गरुडमताडयत् । अविद्या भगवन्तं न विषयीकरोति । कालान्तरमेव भगवत्प्राप्तिरिति कालरूपं गरुडं क्षोभयति । **निरस्य** प्रक्षिप्य । निरसनेन अवहेला सूचिता । न हि अस्मद्बलं शूलेन समर्थितं भवतीति तृणमिव दूरीकृतवान् । ततोऽविद्यया तं मोहयितुं पञ्चभिर्वक्त्रैर्व्यनदत् । विशेषेण शङ्खध्वनिं कृतवान् । अन्यस्त्वेकधा गर्जति, अहं पञ्चधेति ज्ञापयितुम् । तस्य नादस्य महत्त्वमाह **खं रोदसीति**। सर्वमेव विवरस्थानं पूरयन् अण्डकटाहमावृणोत् । उपर्यपि ब्रह्माण्डं भित्त्वा गत इत्यर्थः । तत्त्वानामप्यविद्यामोहो वर्तत इति अलौकिकत्वाच्छब्दस्य बहिर्गमनम् । ब्रह्माण्डस्यापि अण्डत्वाद्रोमकूपवच्छिद्रत्वम् । मध्ये सर्वत्र पूरणं न भविष्यतीति गणयति । खमाकाशं मध्यस्थितं सर्वेषां हृदयाकाशो वा । **रोदसी** द्यावापृथिव्यौ । सर्वा अष्ट दिशः । अन्तरं मध्यम् । शब्दाघातादुत्पन्नस्य शब्दान्तस्य तथात्वं भविष्यतीत्याशङ्क्याह **महानिति**। आ समन्तात्पूरणं वृंहणन्यायेन ॥ ८ ॥

## श्रीसुबोधिनी-सारः

यंत्राणि संक्रमाणि मनस्विनां धीराणां हृदयानि शंखनादेन निर्बिभेद गदाधरो हरिर्गुर्व्या महत्या गदया प्राकारं निर्बिभेद ॥ ५ ॥ युगांते प्रलयेऽशनिर्वज्रस्तद्वद्भीषणं पांचजन्यस्य ध्वनिं श्रुत्वा शयानः पंचशिरा दैत्यो मुरो जलादुत्तस्थौ ॥ ६ ॥ युगांते सूर्याग्निवत् रोचिर्यस्य तत्त्रिशूलम् उद्यम्योल्वणो भयंकरः सुदुर्निरीक्षणो मुरः पंचभिर्मुखैः त्रिलोकीं ग्रसन् इवाभ्यद्रवत् ताक्ष्र्यसुतं गरुडमुरगः सर्प इव ॥ ७ ॥ तरसा वेगेन शूलमाविध्यातोल्य गरुत्मते गरुडं हंतुं निरस्य क्षिप्त्वा पंचभिर्वक्त्रैर्मुखैः स दैत्योऽगर्जत् । स महान्नादः सर्वा दिशोंबरमाकाशमंडकटाहं ब्रह्मांडमापूरयत् ॥ ८ ॥

### श्रीविट्ठलरायात्मजश्रीवल्लभकृतलेखः

मुरः शयान इत्यत्र। परिखासम्बन्धिन इति। आवरणजलस्य चक्रेणान्तर्भावितत्वादिति भावः।

### गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

यन्त्राणि शत्रुप्रवेशप्रतिबन्धकतया सर्वतः कारितानि तथा मनस्विनां शूराणां प्रवेशप्रतिरोधकर्तृणां मुरादीनां हृदयानि उत्साहशक्तीश्च शङ्खनादेन बिभेद। स्पष्टमन्यत् ॥ ५ ॥ युगान्ते प्रलये योऽशनिस्तस्य ध्वनिवद्भीषणं पाञ्चजन्यस्य शङ्खस्य ध्वनिं श्रुत्वा परिखाजले शयानः पञ्चशिरा मुराख्यो दैत्यः तत उत्तस्थौ ॥ ६ ॥ युगान्ते सूर्याग्न्योरिव रोचिर्दीप्तिर्यस्य सः, अत एव उल्बणो भयंकरः, अत एव सुदुर्निरीक्षणः सम्यग्द्रष्टुमप्यशक्यो मुरः त्रिशूलमुद्यम्य पञ्चभिर्मुखैः त्रिलोकीं ग्रसन्निव अभ्यधावत्, मुखानि प्रसार्य भगवन्तं हन्तुं वेगेनागत इत्यर्थः। 'एवं हन्तुमागतोपि स एव मरिष्यति' इति सूचयन् दृष्टान्तमाह— उरगः सर्पो तथा तार्क्ष्यसुतं गरुडं हन्तुमापतेत्तथेति ॥ ७ ॥ आगत्य च शूलमाविध्य अतोऽत्पतरसा बलेन गरुत्मते गरुडं हन्तुं तदुपरि निरस्य प्रक्षिप्य पञ्चभिर्वक्त्रैर्व्यनदत्। किं कुर्वन्? खमाकाशम्, रोदसी द्यावापृथिव्यौ, दिशः, अन्तरं पातालं च तेन शब्देनापूरयन् किं बहुना स च नादः कृत्स्नमप्यण्डकटाहमावृणोत् ॥ ८ ॥

### अन्वितार्थप्रकाशिका

शङ्खेति। गदाधरः कृष्णः यन्त्राणि प्राकारन्यस्तानि यद्वा शत्रुप्रवेशप्रतिबन्धकतया सर्वतः कारितानि तथा मनस्विनां शूराणां प्रवेशप्रतिरोधकर्तृणां मुरादीनां हृदयानि उत्साहशक्तीश्च यन्त्रतुल्यानि मनस्विनां हृदयानीति वा शङ्खनादेन बिभेद प्राकारं च गुर्व्या गदया निर्बिभेद ॥ ५ ॥ पाञ्चजन्येति। युगान्ते प्रलये योऽशनिस्तस्य ध्वनिवद् भीषणं पाञ्चजन्यस्य शङ्खस्य ध्वनिं श्रुत्वा परिखाजले शयानः पञ्चशिरा मुराख्यो दैत्यः ततो जलात् उत्तस्थौ ॥ ६ ॥ त्रिशूलमिति। युगान्ते सूर्यानलयोरिव रोचिर्दीप्तिर्यस्य सः अत एव उल्बणो भयङ्करः अत एव सुदुर्निरीक्षणः सम्यग्द्रष्टुमप्यशक्यो मुरः त्रिशूलमुद्यम्य पञ्चभिर्मुखैः त्रिलोकीं ग्रसन्निव। शता आर्षः। उरगः सर्पो यथा तार्क्ष्यसुतं गरुडं हन्तुमापतेत्तथाऽभ्यधावत्। मुखानि प्रसार्य भगवन्तं हन्तुं वेगेनागतः ॥ ७ ॥ आविध्येति। सः मुरः शूलम् आविध्य उत्तोल्य गरुत्मते गरुडं हन्तुं तरसा वेगेन बलेन वा निरस्य प्रक्षिप्य पञ्चभिर्वक्त्रैर्व्यनदत्। स नादः रोदसी द्यावापृथिव्यौ खमाकाशं च दिशः अन्तरं पातालं चापूरयन् सर्वदिशोऽम्बरमित्यपि पाठः। कृत्स्नमप्यण्डकटाहमावृणोत् ॥ ८ ॥

### श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्

यंत्राणि प्राकारचित्रितानि हृदयानि च ॥ ५ ॥ युगांते योऽशनिर्वज्रपातस्तस्य ध्वनिवद्भीषणम् ॥ ६ ॥ युगांतः प्रलयावसरे सूर्योऽनलयोः कांतिवत् उल्वणो भयानको हरिमभ्यद्रवत् ॥ ७ ॥ गरुत्मते गरुडाय आविध्य आतोल्य निरस्य निक्षिप्य स मुरो वक्त्रैर्व्यनदत्। स महान्नादः खादीन् आपूरयन् सन् अंडकटाहमावृणोत्। अंतरं पातालं ॥ ८ ॥

### भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

शङ्खेति। मनस्विनां स्वैरिणां मुरादीनामित्यर्थः। हृदयानि, यन्त्राणि च, शङ्खनादेन, गुर्व्या गदया, प्राकारं गदाधरः कृष्णः, निर्बिभेद ॥ ५ ॥ पाञ्चजन्येति। युगान्ताशनिभीषणं युगान्तकालजायमानाशनिध्वनिभयंकरं, पाञ्चजन्यध्वनिं श्रुत्वा, शयानो जले कृतशयनः, पञ्चशिराः मुरो मुरनामा दैत्यः, जलात् उत्तस्थौ ॥६॥ त्रिशूलमिति। युगान्ते युगान्तकाले वर्त्तमानयोः सूर्यानलयोरिव रोचिर्दीप्तिर्यस्य सः, सुदुर्निरीक्षणः सुतरां दुःखेन निरीक्षणीयः, उल्बणो दुःसहः मुरः, त्रिशूलं उद्यम्य, पञ्चभिः मुखैः, त्रिलोकीं ग्रसन्निव, वर्त्तमानः सन्, उरगः सर्पः, तार्क्ष्यसुतं प्रति, यथा तथा, अभ्यद्रवदभ्यधावत् ॥ ७ ॥ आविद्ध्येति। स मुरः, शूलं आविद्ध्य आतोल्य, तरसा बलेन, गरुत्मते गरुडाय, गरुडं हन्तुमित्यर्थः। निरस्य प्रयुज्य, पञ्चभिः वक्त्रैर्मुखैः, व्यनदन्ननाद। महान् महत्तोपेतो नादः, खमाकाशं, रोदसी द्यावापृथिव्यौ, सर्वदिशोऽन्तरं सर्वासामपि आशानामन्तरालं, आपूरयन् सन्, अण्डकटाहं, आवृणोत् ॥ ८ ॥

### कृष्णप्रिया

भौमासुर के नगर की रचना विलक्षण थी, चारों ओर यन्त्रों की दिवारबन्धी बनायी थी। श्रीकृष्ण भगवान् ने शंखनाद से वीरपुरुषों के हृदयों को एवं यन्त्रों को तोड़ दिया। पुनः अपनी दिव्य गदा के प्रहार से भगवान ने नगर के परकोटे को तोड़ दिये ॥ ५ ॥ भगवान् श्रीकृष्ण ने प्रलयकाल के विद्युत् एवं मेघनाद के तीव्र ध्वनि के समान पाञ्चजन्य शङ्खनाद

किया। नाद को सुनते ही गाढे नींद में सोये हुए मुर दानव की नींद टूट गयी, वह खड़ा हुआ और पञ्चशिर वाला वह दानव जल से बाहर आया ॥ ६ ॥ मुर दानव प्रलयकाल के उग्र सूर्य और प्रलयाग्नि के समान भयानक तेजस्वी था। मुर दैत्य के सामने देखना भी अशक्य इतना वह भयङ्कर था। देखते ही नेत्रों का तेज नष्ट हो जाता था। पञ्चशिरा मुरदानव ने अपने हाथों में त्रिशूल उठाया और जैसे सर्प महाराज गरुडजी पर टूट पड़े इसी प्रकार भगवान् श्रीकृष्ण पर टूट पड़ा। इसके आक्रमण को देखते यह मालूम पड़ता था कि वह अपने पाँचो मुखों से क्या तीन लोक को निगल जायगा ॥ ७ ॥ मुर दैत्य ने अपने उग्र त्रिशूल को भयानक वेग से गोल-गोल घूमाया और पक्षीराज श्रीगरुडजी पर चलाया। पुनः इतने से संतुष्ट न हुआ और अपने उग्र पाँचो मुखों से अत्यत क्रूर सिंहनाद करने लगा। मुर का सिंहनाद पाताल, पृथ्वी, आकाश, दस दिशाओं और सारे ब्रह्माण्ड में फैल गया एवं पूर्ण ब्रह्माण्ड को भर दिया ॥ ८ ॥

[1]तदापतद् वै त्रिशिखं गरुत्मते हरिः शराभ्यामभिनत्त्रिधौजसा।
मुखेषु[2] तं चापि शरैरताडयत् तस्मै गदां सोऽपि रुषा व्यमुञ्चत ॥ ९ ॥
तामापतन्तीं गदया गदां मृधे गदाग्रजो निर्बिभेदे सहस्रधा।
उद्यम्य बाहूनभिधावतोऽजितः[3] शिरांसि चक्रेण जहार लीलया ॥ १० ॥
व्यसुः पपाताम्भसि कृत्तशीर्षो[4] निकृत्तशृङ्गो[5]ऽद्रिरिवेन्द्रतेजसा।
[6]तस्यात्मजाः सप्त पितुर्वधातुराः [7]प्रतिक्रियामर्षजुषः समुद्यताः ॥ ११ ॥[8]
ताम्रोऽन्तरिक्षः श्रवणो विभावसुर्वसुर्नभस्वानरुणश्च सप्तमः।
पीठं पुरस्कृत्य चमूपतिं मृधे भौमप्रयुक्ता [9]निरगुर्धृतायुधाः ॥ १२ ॥

**कर्दमक्षमा**

अन्वयः—गरुत्मते, आपतत्, तत्, त्रिशिखम्, हरिः, शराभ्याम्, वै, ओजसा, त्रिधा, अभिनत्, च, अपि, तम्, मुखेषु, शरैः, अताडयत्, सः, अपि, तस्मै, रुषा, गदाम्, व्यमुञ्चत ॥ ९ ॥ गदाग्रजः, मृधे, आपतन्तीम्, ताम्, गदाम्, गदया, सहस्रधा, निर्बिभेदे, पुनः, अजितः, बाहून्, उद्यम्य, अभिधावतः, चक्रेण, लीलया, शिरांसि, जहार ॥ १० ॥ इन्द्रतेजसा, निकृत्तशृङ्गः, अद्रिः, इव, कृत्तशीर्षः, व्यसुः, अम्भसि, पपात, पितुः, बधातुराः, अमर्षजुषः, तस्य, सप्त, आत्मजाः, प्रतिक्रियार्थम्, समुद्यताः ॥ ११ ॥ भौमप्रयुक्ताः, धृतायुधाः, ताम्रः, अन्तरिक्षः, श्रवणः, विभावसुः, वसुः, नभस्वान्, च, सप्तमः, अरुणः, मृधे, पीठम्, चमूपतिम्, पुरस्कृत्य, निरगुः ॥ १२ ॥

**श्रीधरस्वामिविरचिता भावार्थदीपिका**

तस्मै श्रीकृष्णाय गदां व्यमुंचत व्यक्षिपत् ॥ ९-१० ॥ इन्द्रतेजसा वज्रेण प्रतिक्रियया हेतुभूतया अमर्षजुषः ॥११॥ पीठं पीठनामानम् निरगन्निरगमन् ॥ १२ ॥

**श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः**

तत् शूलम्। अभिनत् अकृन्तत्। तं मुरम्। सोऽपि मुरोपि। आपतदेव न त्वापतितम् ॥ ९ ॥ अभिधावतः शिरांसीत्यन्वयः। गदाग्रज इति-गदस्यातिशूरत्वेन तस्यातिशूरतमत्वमुक्तम् ॥ १० ॥ तस्य मुरस्य। अमर्षं क्रोधं जुषंत इत्यमर्षजुषः। प्रतिक्रियया हेतुभूतयाऽमर्षजुषः ॥ ११ ॥ तान्नामतो निर्दिशति-ताम्र इति ॥ १२ ॥

**श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी**

वै एव गरुत्मते गरुत्मति आपतदेव नत्वापतितमित्यर्थः। ओजसा वेगेन अपीति सामर्थ्यद्योतकं मुखेष्विति ताद्व्यादानेन क्रोधात् इति सर्वेष्वपि तेषु युगपदेव ताडनं सूचितम् ॥ ९ ॥ मृधे युद्धमध्ये साक्षादेव नतु मायादिना परोक्षमित्यर्थः। गदया

---

१. तमापतन्तं त्रिशिखं गरुत्मते चकर्त बाणद्वितयेन केशवः। मुखेषु तस्यापि शरान्समर्पयन् पुनर्गदां सोप्यममुचन् मधुद्विषे ॥ -विज.।

२. "पञ्चापि" चक्रेण-श्रीधर. टि.। ३. दिशः-विज.। ४. कन्धरो-विजः; शीर्षा-प्रा. पा.। ५. पक्षो-विज.। ६. पपात विष्णोः शिरसि प्रमोदिनी प्रसूनवृष्टिर्निहते मुरेऽसुरे-विज.। ७. चिकीर्षवस्तस्य रणे प्रतिक्रियाम्-विज।

८. ध्रुवश्च विष्णुः श्रवणो विभावसुर्नभो विवस्वातरुणश्च सप्त। रथान्समारुह्य वृषप्रयुक्तान् भौमप्रयुक्ता भवनान्निराक्रमन् ॥ अयुञ्जतासज्ज्य शरासनान्भटाः शक्त्यृष्टिशूलानजिते रुषोल्बणात् ॥ इति पाठ भेदा-विज.।

९. निरगन्-श्रीधर. वश्री. जीव. वीर. विश्व. शुक. सु.।

गदाग्रज इत्यनुप्रासालङ्कारः उल्लासेन गदाग्रज इति तदुपलक्षितभ्रातृकुलयशोदातृतास्मरणसौख्येन च पञ्चापीति पाठे गदयैवेति ज्ञेयं किन्तु अग्रे दृष्टान्ते इन्द्रतेजसेत्युक्त्वा तेजःसाम्याच्चक्रेणेति पाठो युक्तः ॥ १० ॥ वधेनातुराः शोकविह्वलाः अतः प्रतिक्रियार्थममर्षजुषः ॥ ११ ॥ तमेवोक्तपोषण्यायेनाह—ताम्र इति । सप्तम इति भ्रात्रन्तरं निरस्तं तेषां नामग्रहणं नाम्नैव गुणज्ञापनार्थं स्वत एव प्रतिक्रियामर्षजुषः पुनश्च भौमेन प्रयुक्ताः एवं तदेव भौमेन तत्रोद्यतमिति तत्तत्क्रियायां श्रीभगवतो लाघवमपि दर्शितम् ॥ १२ ॥

### श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी

वै एव, गरुत्मते गरुत्मति, आपतदेव, न त्वापतितमित्यर्थः । ओजसा वेगेन, हरिरिति तत्संहाराभिप्रायेण, अपि एव, मुखेष्वेव, तद्व्यादानेन क्रोधादिति सर्वेष्वपि तेषु युगपदेव ताडनं तेन क्षिप्रकारित्वादिकञ्च सूचितम् ॥ ९ ॥ मृधे वर्तमान इति युद्धकौतुकित्वम्, यतो गदाग्रजो युद्धादिविनोदार्थमेव श्रीवसुदेवाद्गदस्याग्रे प्रादुर्भूत इति भावः । यद्वा, युद्धमध्ये साक्षादेव, न तु मायादिना परोक्षमित्यर्थः । यतो गदाग्रजत्वेनावतीर्णः साक्षाद्भगवान्, अमितोऽभिमुखे वा धावतस्तस्य, अजित इति महापराक्रमादिकं सूचितम् । अत एव लीलया जहार, छित्त्वा दूरे पातयामास । पञ्चापीति पाठे गदयैवेति ज्ञेयम् । किन्तु अग्रे दृष्टान्ते इन्द्रतेजसेत्युक्त्या तेजः साम्याच्चक्रेणेति पाठो युक्तः ॥ १० ॥ नितरां निर्म्मलत्वादिना दूरतः कृत्तं शृंगं यस्य सः, वधेनातुराः शोकविह्वलाः, अतः, प्रतिक्रियार्थममर्षजुषोऽतिक्रुद्धाः सन्तः सम्यगुद्यता युद्धार्थमुद्योगं चक्रुः ॥ ११ ॥ तमेवोक्तपोषण्यायेनाह—ताम्रइति । सप्त इति भ्रात्रन्तरं निरस्तम् । पुरस्करणे हेतुः—चमूपतिं नरकस्य सेनान्यमिति । किञ्च, भौमेन प्रयुक्ताः पीठेन सह यातेति नियुक्ताः, अतो धृतायुधाः, अन्यथा शोकातुरतया विचारापगमेनानन्यापेक्षया निर्गमसम्भवात् । यद्वा, स्वत एव प्रतिक्रियामर्षजुषः, पुनश्च भौमेन प्रयुक्ताः, अतः पीठं सम्मान्य धृतायुधाः सन्तो मृधे निमित्ते युद्धस्थाने वा निरगन् पुरान्निर्गताः ॥ १२ ॥

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम्

निरगमन् निर्गताः ॥ १२-१४ ॥

### श्रीमद्वीरराघवाचार्यकृता भागवतचन्द्रचन्द्रिका

तदेति । तिस्रः शिखा यस्य तत् गरुडायागच्छत् त्रिशूलम् ओजसा बलेन शराभ्यां त्रिधा चिच्छेद तं मुरं च मुखेषु शरैस्ताडयामास सोपि मुरोपि रुषा तस्मै कृष्णाय गदां व्यमुञ्चत् प्रायुङ्क्त ॥ ९ ॥ तामिति । गदाग्रजो भगवान् स्वगदया तां मुरप्रयुक्तामापतन्तीं गदां मृधे युद्धे सहस्रधा निर्बिभेद । ततो बाहू उद्धृत्याभिधावतो मुरस्य पञ्च शिरांसि चक्रेणाजितो भगवांश्चिच्छेद ॥ १० ॥ व्यसुरिति । निकृत्तानि शीर्षाणि शिरांसि यस्य स अत एव व्यसुर्गतप्राणोऽम्भसि जले पपात यथा इन्द्रतेजसोपलक्षितेन वज्रेण निकृत्तशृङ्गो गिरिस्तद्वत् तस्य मुरस्यात्मजाः सप्त पितुर्वधात् दुःखिताः प्रतिक्रियायै अमर्षजुषः क्रोधाविष्टाः भौमेन प्रेषिताः धृतान्यायुधानि यैस्ते च मृधे युद्धे निमित्ते पीठनामानं चमूपतिं पुरस्कृत्य समुद्यताः आयत्ताः निरगमन्निर्गता बभूवुरिति सम्बन्धः तानेव सप्त निर्दिशति ताम्र इति ॥ ११-१२ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

गरुत्मते गरुत्मति आपतदेव नत्वापतितं तस्मै श्रीकृष्णाय सोऽपि मुरोऽपि ॥ ९ ॥ उद्यम्य ऊर्च्चीकृत्य अभिधावतो मुरस्य ॥ १० ॥ इन्द्रतेजसा वज्रेण प्रतिक्रियया हेतुभूतया अमर्षयुक्ताः ॥ ११ ॥ निरगन् निरगमन् ॥ १२-१४ ॥

### गूढार्थदीपिनी

वै एवार्थे आपतदेव न त्वापतितम् त्रिशिखं त्रिशूलं ओजसा झटिति शराभ्यां त्रिधा अभिनत् अच्छिनत् । तं मुरमपि मुखेषु अताडयत् सोऽपि मुरोऽपि तस्मै कृष्णाय गदां व्यमुञ्चत् ॥९॥ गदा अग्रजो यस्य सः श्रीकृष्ण आपतन्ती तां गदां गदया निर्बिभिदे । पुनश्च अजितः श्रीकृष्णः बाहून् उत्थाप्य अभिधावतः सम्मुखमागच्छतस्तस्य मुरस्य शिरांसि लीलयाऽनायासेन चिच्छेद ॥ १० ॥ व्यसुः विगतप्राणः सन् स मुरः जले पपात इन्द्रतेजसा वज्रेण छिन्नशिखरः पर्वतो यथा पतति प्रतिक्रिया प्रतीकारः तदर्थम् अमर्षं क्रोधं जुषन्ते तथा ॥ ११ ॥ ताम्रादयः सप्त पुत्राः युद्धार्थं निरगमन्नित्यन्वयः । पीठं पीठनामानम् सेनापतिं पुरस्कृत्य ॥ १२ ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

इन्द्रतेजसा वज्रेण प्रतिक्रियायै अमर्षजुषः क्रोधयुक्ताः ॥ ११ ॥ निरगन् निरगमन् ॥ १२-१३-१४ ॥

**श्रीसत्यधर्मकृता श्रीभागवतटिप्पणी**

गदाग्रजो गदां गदया कौमोदक्या सहस्रधा निर्बिभेद । दिशः प्रति ॥ १४ ॥ इन्द्रतेजसा वज्रनिहितेन मुरेऽसुरे निहते प्रमोदिनी प्रसूनवृष्टिर्विष्णोः शिरसि पपात ॥ १५ ॥ प्रतिक्रियां हरिं हत्वा मृतापचितिरूपां प्रतिक्रियाम् । तन्नामान्याह । ध्रुवश्चेत्यादिना । ध्रुकश्चरिष्णुरित्यत्र चरिष्णुरिति करिष्णुरिति नाम वेति दैत्यगुरुर्विचार्यः । ताम्रोऽन्तरिक्ष इति च पठन्ति ॥ १६ ॥

**श्रीमद्वल्लभाचार्यकृता सुबोधिनी**

एवं तस्य पराक्रममुक्त्वा तत्प्रतीकारार्थं भगवच्चरित्रमाह तदापतदिति । तच्छूलमापतत् गरुडोपरि तदेव स्थितम् । त्रिशिखमित्यनेन भेदत्रयं करोतीति त्रिसत्यानां देवानामपि मारकं तदिति सूचितम् । गरुत्मत इति पक्षवानतिकोमल इति । स्वतो निवारणसामर्थ्यं चाह । भगवांश्च हरिः । ततः प्रतीकारोऽवश्यं कर्तव्य इति शराभ्यामच्छिनत् । त्रिधा छेदे न पुनः प्ररोहतीति । तच्छूलं दैत्यमित्यनेन ज्ञापितम् । **ओजसेति** । तदधिष्ठिता देवतापि यथा छिन्ना भवति, तस्य तेजसा सह वा । तेजोऽपि त्रिधा छिन्नमित्यर्थः । न केवलं त्रिशूलच्छेद एव, किन्तु सोऽपि ताडित इत्याह मुखेष्विति । यथा न रूपात् तस्य रवेण लोकानां भयं जायत इति मुखान्यपि ताडितानि । अर्थात् पञ्चभिः । आपूरितानि वा । तदा यावद्भिः पूरणं भवति । रव एव च निवारणीय इति । **तं चापीति** । भिन्नतया सोऽपि हृदये ललाटे वा हतः । तदा पक्षपातं ज्ञात्वा मम गम्यो भविष्यतीति तस्मै भगवते **सोऽपि** ताडितोऽपि रुषा 'अपकृतोतिक्रुद्धो भवती'ति दूरादेव गदां प्रक्षिप्तवान् ॥ ९ ॥ सापि गदा देवताधिष्ठितेति भगवान् स्वगदयैव तन्निराकरणं कृतवानित्याह **तामापतन्तीमिति** । कौमोदक्या नितरां बिभिदे । सहस्रधेति योजनायामशक्या कृता । सजातीयेन सजातीयहननमयुक्तमित्याशङ्क्याह मृध इति । सङ्ग्रामे न दोषः । **गदाग्रज** इत्यनुप्रासः, स्त्रीणां हितकारी वा । **बाहूनुद्यम्येति** ग्रहणार्थं समागमनमुक्तम् । स च भगवता न स्प्रष्टव्य इति कालेनैव तमच्छिनदित्याह **शिरांसि चक्रेण जहारेति** । पश्चादपि पर्वाणि छिन्नानि, यथा प्रतीत्यापि न संसारः । **लीलयेति** सुदर्शनसामर्थ्यं व्यावर्तयति । पौरुषं स्वकीयमेव व्यापृतम्, परं निरायासेन, प्राप्त एवायासो व्यावर्त्यते । अथवा । लीलैव तत्स्थाने व्यापृता भविष्यतीति । तेन निरोधरूप एव संसारः साम्प्रतं प्रवर्तताम्, नत्वन्य इति लीलयेत्युक्तम् ॥ १० ॥ छिन्नेष्वपि शिरस्सु दैत्यत्वात्कदाचित् प्राणाः हृदयादिषु तिष्ठेयुरिति तस्य छिन्नशिरसोऽग्रिमावस्थामाह व्यसुः पपातेति । विगता असवो यस्येति । भूमौ पतितस्य दैत्यत्वात् पुनरुद्गमो भविष्यतीति अम्भसि पात उच्यते । 'आपो हि रक्षोघ्नी'रिति । अविद्यायामपि भगवत्सामर्थ्यार्थमग्रेऽप्युत्पादनाभावार्थं च **अजित** इत्युक्तम् । न केनापि मायादिभिरपि पराजितः । **निकृत्तशीर्ष** इति । निकृत्तं शिरो यस्येति । नितरां छेदः पुनर्योजनाभावार्थः । आधिदैविकच्छेदार्थो वा । युगान्तरेऽपि प्रादुर्भावाभावाय दृष्टान्तमाह **निकृत्तशृङ्गोऽद्रिरिवेति** । **इन्द्रतेजसा** वज्रेण । तथापदं पुनरुत्थाने इन्द्राद्भयं सूचयति । तथात्रापि भयादनुत्थानम् । तस्य सप्तव्यसनानि पुत्राः साधिकरणा मारिता इति वक्तुं तेषामागमनमाह **तस्यात्मजा** इति । मूलच्छेदे शाखा इव ते न प्रयोजका इति पितुर्वधेनातुराः प्रतिक्रियार्थममर्षजुषः सेवितरोषाः । मारकस्य मारणं प्रतिक्रिया । स्वतः असामर्थ्यात् क्रोधसेवां कृतवन्तः । क्रोधेनापि कदाचिद्भवेदिति । **समुद्यता** इति बहिःसामग्री निरूपिता । अन्तः क्रोधः ॥ ११ ॥ तेषां प्रसिद्ध्यर्थं नामानि गणयति **ताम्रोऽन्तरिक्ष** इति । **ताम्र** इति वर्णतः क्रोधात्मकः । **अन्तरिक्ष** इति सर्वक्रियाव्यापारयितुमशक्यः । **श्रवण** इत्याकाशरूपः । **विभावसुः** सूर्याग्नितुल्यः । **वसुः** भीष्मादेरप्यधिकः । **नभस्वान्** वायुः । तत्तुल्यः । **अरुणः** सर्वोद्बोधकः । वर्णतो वा भयानकः । **सप्तम** इति क्रमोऽत्र विवक्षित इति ज्ञापयति । पीठस्तेषामाधारभूतः । नरकासुरस्य सेनापतिः । मृधे युद्धार्थं भौमप्रयुक्ताः । स्वस्थाने नरकासुरस्तान् प्रेषितवान् । ते हि स्वापेक्षयापि पितृवधाद्युद्धं करिष्यन्तीति । युद्धार्थं प्रथमतो निरगुः, धृतायुधाश्च पश्चाज्जाताः । अनेन युद्धे निश्चयो निरूपितः ॥ १२ ॥

**श्रीसुबोधिनी—सारः**

गरुत्मते आपतत् आयातं तद्वै त्रिशूलं त्रिशिखं तिस्रः शिखा यस्येति हरिः शराभ्यां द्वाभ्यां त्रिधाऽच्छिनदोजसा बलेन मुखेषु पंचसु शरैस्तं च मुरमपि अविध्यत् सोपि मुरस्तस्मै कृष्णाय रुषा गदां व्यमुंचत प्राक्षिपत् ॥ ९ ॥ मृधे संग्रामे आपतंतीं तां गदां गदाग्रजो हरिः स्वगदया सहस्रधा खंडितवान् बाहूनुद्यम्याभिधावतः संमुखमागच्छतो दैत्यस्य चक्रेण शिरांसि चिच्छेद लीलया यतोऽजितः ॥ १० ॥ कृत्तानि छिन्नानि शीर्षाणि यस्य स मुरो व्यसुर्मृतोंभसि परिखाजले पपात इंद्रस्य तेजसा छिन्नमृगोद्रिः पर्वत इव पितुर्वधेन मृत्युनातुरा दुःखिताः प्रतिक्रियार्थम् अमर्षं क्रोधं जुषंते इति तथा तस्यात्मजा मुरस्य पुत्राः सप्त समुद्यता योद्धुं प्रवृत्ताः ॥ ११ ॥ तेषां नामानि ताम्र इति स्पष्टं धृतान्यायुधानि यैस्ते भौमेन प्रयुक्ताः प्रेषिता मृधे पीठं पीठासुरं पुरस्कृत्याग्रे कृत्वा निरगन् निर्गताः । वर्णलोप आर्षः ॥ १२ ॥

**श्रीविट्ठलरायात्मजश्रीवल्लभकृतलेखः**

**मुखेषु तं चापीत्यत्र** । **पञ्चभिरिति** । ताड्यानां मुखानां पञ्चत्वान्नात्र कपिञ्जलन्याय इति भावः । एतस्य रवनिवारणत्वादाहुः **आपूरितानीति** । आपूरणेनैव रवनिवारणसम्भवादिति भावः । तदा पञ्चसंख्या शराणां नास्तीत्याहुः **यावद्भिरिति** । एतत्पक्षकथने बीजमाहुः **रव एवेति** ।

### गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

तिस्रः शिखा यस्य तत्त्रिशिखं त्रिशूलं गरुडाय आपतत् आगच्छदेव हरिः ओजसा झटिति वेगेन शराभ्यां त्रिधा अभिनत् चिच्छेद, तं मुरं चापि मुखेषु शरैरताडयत् । स मुरोऽपि रुषा तस्मै कृष्णाय गदां व्यमुञ्चत ॥ ९ ॥ मृधे युद्धे तां मुर-प्रयुक्तां आपतन्तां गदां गदाग्रजो भगवान् कृष्णः स्वगदया सहस्रधा निर्बिभेदे निर्बिभेद । ततश्च बाहूनुद्यम्य अभिधावतोऽभि-मुखमागच्छतो मुरस्य पञ्चशिरांसि अजितः क्वापि पराजयरहितः कृष्णः लीलया अनायासेनैव चक्रेण चिच्छेद ॥ १० ॥ कृत्तानि छिन्नानि शीर्षाणि शिरांसि यस्य सः मुरः अत एव व्यसुर्गतप्राणोंऽभसि पपात । तस्य महत्त्वं सूचयन् दृष्टान्तमाह—यथा इन्द्र-तेजसा युक्तेन वज्रेण निकृत्तशृङ्गो गिरिः पतति तथेति । ततश्च ताम्रादयः सप्त तस्य मुरस्यात्मजाः पितुर्वधेनातुराः दुःखिताः, अत एव प्रतिक्रियायै अमर्षजुषः क्रोधाविष्टाः मृधे निमित्ते भौमेन प्रयुक्ताः, अत एव धृतायुधाः चमूपतिं पीठनामानं पुरस्कृत्य समुद्यताः आयत्ताः पुरान्निरगान् निसृता; ॥ ११-१२ ॥

### अन्वितार्थप्रकाशिका

तदिति । तिस्रः शिखा यस्य तत्त्रिशिखं त्रिशूलं गरुडाय आपतत् आगच्छदेव हरिः ओजसा झटिति वेगेन शराभ्यां त्रिधा अभिनत् चिच्छेद । तं मुरं चापि मुखेषु शरैरताडयत् । स मुरोऽपि रुषा तस्मै कृष्णाय गदां व्यमुञ्चत ॥ ९ ॥ तामिति । मृधे युद्धे तां मुरप्रयुक्ताम् आपतन्तीं गदां गदाग्रजो भगवान् स्वगदया सहस्रधा निर्बिभिदे निर्बिभेद । ततश्च बाहूनुद्यम्योच्ची-कृत्याभिधावतोऽभिमुखमागच्छतो मुरस्य पञ्च शिरांसि अजितः कृष्णः लीलया अनायासेनैव चक्रेण जहार चिच्छेद ॥ १० ॥ व्यसुरिति । कृत्तानि छिन्नानि शीर्षाणि शिरांसि यस्य सः मुरः इन्द्रतेजसा वज्रेण निकृत्तशृङ्गो गिरिः यथा पतति तथा व्यसुर्गतप्राणोऽम्भसि पपात । सप्तसंख्याः तस्य मुरस्यात्मजाः पितुर्वधेनातुरा दुःखिताः अत एव प्रतिक्रियायै प्रतिक्रियया हेतु-भूतया वा अमर्षजुषः क्रोधाविष्टाः युद्धाय समुद्यता बभूवुः ॥ ११ ॥ ताम्र इति । ताम्रादयः षट् सप्तमोऽरुणश्चेति ते सप्त मुरसुताः मृधे निमित्ते भौमेन प्रयुक्ता अत एव धृतायुधाः चमूपतिं पीठनामानं पुरस्कृत्य पुरान्निरगन् निर्गताः । आर्षः ॥ १२ ॥

### श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्

गरुत्मते गरुत्मति । आपतत् तद्वै तदेव तस्मै कृष्णाय ॥९॥ अभिधावतः शीघ्रं सन्मुखमागछतः ॥१०॥ कृत्तशीर्षाछिन्न-मस्तकः इंद्रतेजसा शक्रवज्रेण प्रतिक्रियार्थंपितृवैरग्रहणार्थममर्षजुषः क्रोधयुक्ताः ॥ ११ ॥ पीठं पीठाभिधं सेनापतिं निरगन् निरगमन् ॥ १२ ॥

### भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

तदिति । गरुत्मते गरुडं हन्तुं, आपतदागच्छत् तत्, तिस्रः शिखा यस्य तत्, त्रिशूलमित्यर्थः । हरिः, ओजसा शराभ्यां त्रिधा, अलुनात् चिच्छेद वै । तं मुरं चापि, शरैः मुखेषु पञ्चस्वप्यास्येषु, अताडयत् । स मुरोऽपि, रुषा, तस्मै कृष्णाय, गदां व्यमुञ्चत ॥ ५ ॥ तामिति । गदाग्रजः श्रीकृष्णः, मृधे आवतन्तीं तां मुरप्रयुक्तां गदां, गदया स्वकीमोदक्या, सहस्रधा निर्बिभिदे । ततः बाहू भुजौ, उद्यम्य उद्धृत्य, अभिधावतो मुरस्य, शिरांसि, अजितः श्रीहरिः, लीलया चक्रेण, जहार । बाहून-भिधावत इति पाठे, तस्य शिरःपञ्चकवद्भुजबाहुल्यमपि बोध्यम् ॥ १० ॥ व्यसुरिति । इन्द्रतेजसा इन्द्रतेजसोपलक्षितेन वज्रेणे-त्यर्थः । निकृत्तानि छिन्नानि शृङ्गाणि शिखराणि यस्य सः, अद्रिः पर्वतः इव, कृत्तानि छिन्नानि शीर्षाणि यस्य सः मुरः, व्यसुर्गतप्राणः सन्, अम्भसि जले, पपात । सप्त सप्तसंख्याकाः, तस्य मुरस्य, आत्मजाः पितुः वधातुराः पितृवधादतिदुःखिता इत्यर्थः । प्रतिक्रियामर्षजुषः प्रतिक्रियायै क्रोधाविष्टाः सन्तः, समुद्यताः कृष्णेन सह योद्धुमुद्यमयुक्ताः, आसन्निति शेषः ॥ ११ ॥ तान्नाम्ना निर्दिशन् तेषां युद्धाय पुरान्निष्क्रमणमाह । ताम्र इति ॥ ताम्रः, अन्तरिक्षः श्रवणः, विभावसुः, वसुः नभस्वान्, सप्तमः अरुणश्च । एते भौमप्रयुक्ताः नरकासुरेणापि नियुक्ताः, धृतान्यायुधानि यैस्तथाभूताः सन्तः, चमूपतिं भौमसेनाधिनाथं, पीठं पीठनामानमसुरं पुरस्कृत्य, मृधे संग्रामविधाननिमित्तमित्यर्थः । निरगन् निर्गता बभूवुः ॥ १२॥

### कृष्णप्रिया

भगवान् श्रीकृष्ण के ध्यान में आया कि मुरप्रयुक्त यह भयङ्कर त्रिशूल श्रीगरुडजी पर आ रहा है तब अपने हस्त लाधव को दिखाते हुए नाथ ने अत्यन्त कौशल से दो बाण लगाये और बाणों के प्रहार से त्रिशूल के तीन टुकड़े हो गये । पुनः पुरुषोत्तमः ने मुर दैत्य के मुख में भगवान् ने बहुत बाण लगाये । प्रतीकार न कर सकने से मुर दानव को क्रोध आया और आविष्ट होकर मुर दैत्य ने भगवान् श्रीकृष्ण पर गदा चलायी ॥ ९ ॥ गदाग्रज भगवान् श्रीकृष्ण ने देखा कि मुरदानव की गदा आ रही है तब गदा के आने के पहिले ही नाथ ने अपनी गदा चलायी और गदा से गदा को चूर-चूर कर दिया । अब

मुर दानव निःशस्त्र हो गया इसलिये मुर ने अपनी भुजायें उठायी और फैलाकर भगवान पर टूट पड़ा तब उसके आने से पूर्व आसानी से सुदर्शन चक्र से भगवान् ने मुर दानव के पाँचों मस्तक कबन्ध से उतार लिये ॥ १० ॥ सिर कटते ही मुरदानव के के पाँचो प्राण निकल गये और स्वयं मुरदैत्य जल में गिर पड़ा मान महाराज इन्द्र के वज्र से शिर कट जाने पर कोई महान् गिरि महासागर में गिर पड़ा हो। अपने पिता की मृत्यु देखकर अत्यन्त खिन्न हुए दानव के ताम्र, अन्तरिक्ष, श्रवण, विभावसु, वसु, नभस्वान्, और सप्तम पुत्र अरुण, ये सातो पुत्र वदला लेने के लिये क्रोधाविष्ट होकर अस्त्र-शस्त्र से सुसज्ज बनकर पीठ नाम के दैत्य को सेनानायक वनाकर भौमासुर की आज्ञा से भगवान् श्रीकृष्ण पर चढ़ आये ॥ ११–१२ ॥

प्रायुञ्जतासाद्य शरानसीन् गदाः शक्त्यृष्टिशूलान्यजिते रुषोल्बणाः ।
तच्छस्त्रकूटं भगवान् स्वमार्गणैरमोघवीर्यस्तिलशश्चकर्त ह ॥ १३ ॥
तान्[1] पीठमुख्याननयद् यमक्षयं[2] निकृत्तशीर्षोरुभुजाङ्घ्रिवर्मणः[3] ।
स्वानीकपानच्युतचक्रसायकैस्तथा[4] निरस्तान् नरको धरासुतः ॥ १४ ॥
निरीक्ष्य दुर्मर्षण आस्रवन्मदैर्गजैः पयोधिप्रभवैर्निराक्रमत् ।
[5]दृष्ट्वा सभार्यं गरुडोपरि स्थितं सूर्योपरिष्टात् सतडिद्घनं यथा ।
[6]कृष्णं स तस्मै व्यसृजच्छतघ्नीं योधाश्च सर्वे युगपत् स्म विव्यधुः ॥ १५ ॥
तद् भौमसैन्यं भगवान् गदाग्रजो विचित्रवाजैर्निशितैः शिलीमुखैः ।
निकृत्तबाहूरुशिरोऽङ्घ्रि[7] विग्रहं चकार तर्ह्येव हताश्वकुञ्जरम् ॥ १६ ॥

**कर्वमक्षमा**

अन्वयः—आसाद्य, रुषा, उल्बणाः, अजिते, शरान्, असीन्, गदाः, शक्त्यृष्टिशूलानि, प्रायुञ्जत, अमोघवीर्यः, भगवान्, स्वमार्गणैः, तत् शस्त्रकूटम्, तिलशः, चकर्त ॥ १३ ॥ निकृत्तशीर्षोरुभुजाङ्घ्रिवर्मणः, पीठमुख्यान्, तान्, यमक्षयम्, अनयत्, दुर्मर्षणः धरासुतः, नरकः अच्युतचक्रसायकैः, स्वानीकपान्, तथा, निरस्तान्, निरीक्ष्य, पयोधिप्रभवैः, आस्रवन् मदैः, गजैः, निराक्रमत्, गरुडोपरिस्थितम्, सभार्यम्, कृष्णम्, यथा, सूर्योपरिष्टात्, सतडिद्घनम्, निरीक्ष्य, सः, तस्मै, शतघ्नीम्, व्यसृजत्, च, योधाः सर्वे, युगपत्, विव्यधुः, स्म ॥ १४–१५ ॥ भगवान्, गदाग्रजः, तर्हि-एव, विचित्रवाजैः, निशितैः शिलीमुखैः, तत् भौमसैन्यम्, निकृत्तबाहूरुशिरोऽङ्घ्रिविग्रहम्, हताश्वकुञ्जरम्, चकार ॥ १६ ॥

**श्रीधरस्वामिविरचिता भावार्थदीपिका**

कृत्तानि शीर्षादीनि येषां तान् ॥ १४ ॥ शतघ्नीं शक्तिविशेषम् ॥ १५ ॥ विचित्रा वाजाः पत्राणि येषां तैर्बाणैर्निकृत्ता बाहव ऊरवः शिरोध्राः कंधरा विग्रहा देहाश्च यस्मिंस्तत् तर्ह्येव तं यदा विव्यधुस्तस्मिन्नेव क्षणे ॥ १६ ॥

---

१. तान्—वीर. च. पु. टि; तान् योद्धुमिच्छूननय–विज. । २. यमालयम्–श्रीधर. टि. । ३. कार्मुकान्–विज. । ४. हतान्निशम्याशु चुकोप भूमिजः–विज.; मृधेहतान्–च. पु. टि. ।

५. रथैरनेकसाहस्रैर्गजैश्च वहुभिर्वृतः । महत्या सेनया युक्तश्चायादायोधनं बली ॥ विजये ।

६. गृहीतकोदण्डमुदारशङ्खकौमोदकीचक्रधरं चतुर्भुजम् ।
नीलजीमूतसङ्काशं दृष्ट्वा तं गजवाहनम् । शङ्खमाध्माय गोविन्दः सिंहनादं व्यनीनदत् ॥
वरूथिनी दैत्यपतेः सुघोराञ्शरान्ववर्षाच्युतमूर्ध्नि दुर्जया ।
कृष्णे स भौमो व्यसृजच्छतघ्नीं लोहायसीं तेन भृशं स विव्यथे ।
अनेकवाणान्निर्मुक्तान्नरकेण स्मय न्निव । चकर्त बाणैर्युगपत्तदद्भुतमिवाभवत् ॥
ततोनु सैन्यं भगवान्गदाग्रजो विचित्रपत्रैर्निशितैः शरौघैः । निकृत्तबाहूरुशिरोङ्घ्रिविग्रहं चकार तूर्णं नृप साश्वकुञ्जरम् ॥
साधंत्रयस्थाने एते दृश्यते विज.; त्रिषष्टितमोऽध्यायः विज. ।

७. शिरोध्र–श्रीधर. वंशी. जीव. वीर. विज. ।

**श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः**

अजिते कृष्णाय । तेषां शस्त्राणां कूटं समूहम् 'कूटोऽस्त्री निश्चले राशौ' इति मेदिनी ॥ प्रायुङ्क्तेत्यर्द्धकम् । शरादीनां गुरुत्वे घातकत्वे चोत्तरोत्तरं श्रैष्ठ्यम् । ऋष्टिः खड्गभेदः ॥ १३ ॥ तांस्ताम्रादीन् । आस्रवन्मदो येभ्यस्तैः । यमक्षयं यमशब्दोपलक्षिताष्टगांयोगस्थानम्, मोक्षमिति वास्तवोर्थः । यं चाक्षयमाहुस्तमित्यर्थः । "तत्रापि मोक्ष एवार्थ आत्यन्तिकतयेष्यते" इति चतुर्थोक्तेः ।अच्युतेति चक्राद्यवैयर्थ्याभिप्रायेण । निरस्तांल्लीलयैव हतान्निरीक्ष्य उत्तुंगदुर्गाद्यारोहणेन दृष्ट्वा । नरक इति जातमात्रेण मनुष्यमस्तकस्य मुखे ग्रहणात् तत्संज्ञां प्राप्त इति, जन्मत एव दुष्टस्वभावः सूचितः । तदाख्यायिका च कालिकापुराणे ज्ञेया । धरासुत इति शक्तित्वं दर्शितम् ॥ १४ ॥ स भौमः । तस्मै कृष्णाय ॥ पयोधिप्रभवैरैरावतकुलोद्भवैः सह, 'ऐरावतकुलेभांश्च' इति वक्ष्यमाणत्वात्, पुरान्निराक्रमत् । सभार्यमिति तद्दर्शनेनातिक्रुद्ध इति भावः । अहो मामपि कातरमयं मनुते, यतः सस्त्रीक आगतस्त्वं निर्भयं ज्ञापयितुमिति क्रोधे हेतुः ॥ १५ ॥ शिलीमुखैर्बाणैः । तत् उपस्थितम् ॥ १६ ॥

**श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी**

प्रायुङ्क्तेत्यर्द्धकम् । आसाद्याजितं शरादीनां यथोत्तरं गुरुत्वे घातकत्वे च श्रैष्ठ्यं तत्र ऋष्टिः खड्गभेदः शस्त्राणां कूटं समूहम् स्वैरसाधारणैः ॥ १३ ॥ यमक्षयं मृत्युमित्यर्थः यमगृहगमनोत्तरं मोक्षस्तु ज्ञेयः अच्युतेति चक्राद्यवैय्यर्थ्याभिप्रायेण तथा तेन शीर्षादिकर्त्तनप्रकारेण निरस्तान् लीलया दूरत एव हतान् वीक्ष्य उत्तुङ्गदुर्गाद्यारोहणेन नरक इति जातमात्रेण मनुष्यमस्तकस्य मुखे ग्रहणात् तत्सञ्ज्ञाप्राप्त्या जन्मत एव दुष्टभावः सूचितः तदाख्यायिका च कालिकापुराणे ज्ञेया धरायाः सुतः इति महाशक्तित्वं दर्शितम् ॥ १४ ॥ पयोधिप्रभवैर्गजैः सह तत्प्रभवैरावतकुलजत्वात् तथाचाग्रे ऐरावतकुलेभांश्चेतिः निरक्रमत् निरक्रामत् पुरान्निष्क्रान्तः सभार्यं दृष्टवेति तेन महाक्रुद्धस्सन्निति भावः । च अपि युगपदपि विव्यधुः ॥ १५ ॥ विचित्रवाजैरिति । वेगवत्त्वादिकमभिप्रेतं न च केवलमश्वाद्यारुढा हताः ( तेषां ) वाहनानि चेत्याह—हतेति ॥ १६ ॥

**श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी**

आसाद्याजितम्, शरादीनां यथोत्तरं गुरुत्वे घातकत्वे च श्रैष्ठ्यम्, तत्र ऋष्टिः खड्गभेदः, अजिते कदाचित् केनापि जेतुमशक्तेऽपि भगवति प्रायुङ्क्त चिक्षुपुः, यतो रुषा उल्वणा दारुणाः, शास्त्राणां कूटं समूहं स्वकीयैरसाधारणैर्मार्गणैः, अत एव प्रत्येकं तिलशश्च कर्त्त । यतोऽमोघं वीर्य्यं पराक्रमो यस्य सः, यतो भगवान् सर्व्वैश्वर्य्यपूर्णः, ह हर्षे ॥ १३ ॥ यमक्षयं मृत्युद्वाराभावलक्षणमपुनरावृत्तिमोक्षमित्यर्थः अच्युतेति चक्राद्यवैयर्थ्याभिप्रायेण, तथा तेन शीर्षादिकर्त्तनप्रकारेण निरस्तान् लीलया दूरत एव हतान् निरीक्ष्य, चारचक्षुषा उत्तुंगदुर्गाद्यारोहणेन वा । नरक इति जातमात्रेण तेन मनुष्यमस्तकस्य मुखे ग्रहणात्तत्संज्ञाप्राप्त्या जन्मत एव दुःस्वभावः सूचितः । तदाख्यायिका च श्रीकालिकापुराणे व्यक्तैव । धरायाः सर्व्वंसहायाः सुतोऽपि दुर्मर्षणः सन्, यद्वा, धरायाः श्रीभगवत्प्रियायाः सुत इति महाप्रभावोऽभिप्रेतः, अत एव दुर्मर्षणः, आ समन्तात् सदा स्रवन् मदो येषां तैः सह, यतः पयोधिप्रभवैः भीराब्धिमथनोद्भुतैरावतकुलोद्भवत्वात्, तथा चाग्रे वक्ष्यति ( भा० १०।५९।३७ )–ऐरावतकुलेभांश्च' इति निराक्रमत् पुरान्निष्क्रान्तः । कृष्णं श्यामसुन्दरं सभार्य्यं दृष्ट्वेति महाक्रुद्धः सन्निति । यद्वा, तादृशं तं दृष्ट्वापि, अहो महादारुणत्वमिति भावः । योधा गजारूढाः किंवा अन्येऽपि तत्संगागताः । ततश्च गजैः सहेत्युक्तिस्तेषां तत्र प्राधान्यात्, च एव, युगपदेव, वित्यधुर्वेदधुमस्त्रादीनि असृजन्नित्यर्थ ॥ १५ ॥ विचित्रवाजैरिति वेगवत्त्वादिकमभिप्रेतम् । स्वरूपमात्रनिर्द्देशोऽयम् । एवं निशितैरित्याद्यपि न च केवलमश्वाद्यारूढा दैत्या एव हतास्तेषां वाहनानि च तथैवेत्याह–हतेति ॥ १७ ॥

**श्रीसुदर्शनसूरिकृतशुकपक्षीयम्**

निराक्रमत् निर्गतवात् ॥ १५ ॥ विचित्रवाजैः विचित्रपक्षैः ॥ १६–२४ ॥

**श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका**

प्रायुङ्क्तेति । उल्बणास्ते ताम्रादयः आसाद्य अभ्येत्य रुषा क्रोधेन अजिते श्रीकृष्णे शरादीन् प्रायुञ्जत प्रयुक्तवन्तः तदा भगवान् स्वमार्गणैः स्वशरैस्तच्छस्त्रजालं तिलप्रमाणशश्चिच्छेद हेति विस्मये ॥ १३ ॥ तानिति । निकृत्तानि छिन्नानि शीर्षादीनि येषां तांस्ताम्रादीन् यमसदनमनयत् वर्ष्म शरीरं तच्चोपात्तातिरिक्तप्रदेशपरम् इदमर्थं पृथगन्वेतव्यम् ॥ स्वानीकपानिति । स्वान् कांश्चिदनीकपान् सेनापतीन् अच्युतस्य सायकैर्हतानिति शेषः । तथा कांश्चिन्निरस्तान् दूरतः पतितांश्च दृष्ट्वा धरासुतो नरकः दुस्सहः स्रवन्मदो येषां तैः पयोधिप्रभवैः पयोध्यन्तर्द्वीपजैर्गजैः सह निराक्रमन्निर्गतवान् दृष्ट्वेति यथा सूर्यस्योपरिष्टात् तडिता सहितं घनं नीलमेघं तद्वत् सभार्य्यं गरुडोपरि स्थितं कृष्णं तत्र सूर्यस्थानीयो गरुडः तडित्स्थानीया भार्या घनस्थानीयस्तु कृष्ण इति विवेकः स भौमस्तस्मै कृष्णाय शतघ्नीं शस्त्रविशेषं व्यसृजत् प्रायुङ्क्त तथा योधाश्च भौमसम्बन्धिनः युगपत्प्रविव्यधुः

ताडयामासुः स्वस्वायुधैरिति शेषः ॥ १४–१५ ॥ तदिति । विचित्रा वाजाः पत्राणि येषां तैर्निशितैर्बाणैर्निकृत्ता बाहवः ऊरवः शिरोधरा विग्रहा देहाश्च यस्य हताः अश्वाः कुञ्जराश्च यस्मिन् तथाभूतं तद्र्यैव यदा विव्यधुस्तस्मिन्नेव क्षणे चकार ॥ १६ ॥

**श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली**

( मूलम् ) पपात विष्णोः शिरसि प्रमोदनी प्रसूनवृष्टिर्निहते मुरेऽसुरे ॥ क ॥

रथान्समारुह्य वृषप्रयुक्तान् भौमप्रयुक्ता भगवान्निराक्रमन् । अयुञ्जतासज्यशरासनान् भटाः शक्त्यृष्टिशूलानजिते रुषोल्वणान् । ख ।

तच्छस्त्रकूटं भगवान्स मार्गणैरमोघवीर्यस्तिलशश्चकर्त ह । तान्योदधुमिच्छूननयद्यमक्षयं निकृत्तशीर्षोरुभुजांघ्रिकार्मुकान् ।

ततो द्रुततरं गत्वा भटा राजपुरं महत् । हतान्मुरसुतान्सर्वान्नरकाय न्यवेदयन् ॥

स्वानीकपानच्युतचक्रसायकैर्हतान्निशम्याशुचुकोपभूमिजः । निरीक्ष्यदुर्मर्षणमास्रवन्मदैर्गजैः पयोब्धिप्रभवैर्निराक्रमत् ॥

रथैरनेकसाहस्रैर्गजैश्च बहुभिर्वृतः । महत्या सेनया युक्तश्चायादायोधनं बली ॥ ग ॥

दृष्ट्वासभार्यंगरुडोपरिस्थितंसूर्योपरिष्ठत्सतडिद्घनं यथा । गृहीतकोदण्डमुदारशङ्खकौमोदकीचक्रधरं चतुर्भुजं ॥

नीलजीमूतसङ्काशं दृष्ट्वा तं गजवाहनम् । शङ्खमाध्माय गोविन्दः सिंहनादं व्यनीनदत् ॥

वरूथिनी दैत्यपतेः सुघोरान् शरान्ववर्षाच्युतमूर्ध्नि दुर्जया । कृष्णे सभौमो व्यसृजच्छतघ्नीं लोहायसीन्तेनभृशंसविव्यथे ॥ ० ॥

अनेकबाणान्निर्मुक्तान्नरकेण स्मयन्निव । चकर्तबाणैर्युगपत्तदद्भुतमिमाभवत् ॥

ततोनुसैन्यम्भागवानुगदाग्रजोविचित्रपत्रैर्निशितैः सरौघैः । )

प्रमोदिनी सन्तोषजननी ॥ क ॥ भौमेन प्रयुक्ताः प्रेरिताः निराक्रमन्निर्गताः आसज्य ज्यामारोप्य ॥ ख ॥ कूटं समूहम् ॥ १३–१४ ॥ आयोधनं युद्धस्थानम् ॥ ग ॥ सूर्योपरिष्टात्स्थितं तडिता सहितं घनं मेघम् ॥ १५ ॥ लोहेनायसा निर्मितां तेन शतघ्नीप्रयोगेण विव्यथे "व्यथ ताडने" इति धातोः ताडिताभूत् ततोनु तदनन्तरम् ॥ ० ॥ गरुडस्य पक्षाभ्यां निघ्नतान्निहतान् गजानच्छिनत् ॥ १६–१७ ॥

**मज्जीवगोस्वामिकृतक्रमसंदर्भः**

यमक्षयं मृत्युमित्यर्थः । मोक्षस्तु ज्ञेयः ॥ १४ ॥

**श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी**

यमक्षयं यमनियमाद्यष्टाङ्गयोगस्थानं मोक्षमिति वास्तवोऽर्थः ॥ १४ ॥ आस्रवन्तो मदा येषां तैर्गजैः सह निरक्रामत् शतघ्नीं शक्तिविशेषम् ॥ १५ ॥ विचित्राः वाजाः पत्राणि येषां तः ॥ १६ ॥

**गूढार्थदीपिनी**

अजितमासाद्य तस्मिन् अजिते श्रीकृष्णे रुषा शरादीन् प्रायुञ्जत प्रयुक्तवन्तः उल्वणा भीषणास्ते ऋष्टिः उभयतोधारखड्गः । शस्त्रकूटं बाणसमूहम् । मार्गणैर्बाणैः तिलशः चकर्त । हेत्यवहेलने ॥ १३ ॥ तानित्यर्द्धम् । तान् ताम्रादीन् । निकृत्तानि छिन्नानि शीर्षादीनि येषां तान् । यमअक्षयमाहुस्तम् । यमालयमिति पाठे यमनियमाद्यष्टाङ्गयोगस्थानं मोक्षमित्यर्थः ॥ १४ ॥ स्वानीकपान् स्वसेनापतीन् चक्रसायकैः तथा निरस्तान् एवं हतान् निरीक्ष्य दुर्मर्षणोऽसहमानः स नरकः गजैः गजस्थैः सैन्यैः सह पुरात् निराक्रमदित्यन्वयः । पयोधिप्रभवैः ऐरावतकुलोद्भवैः । तस्य पयोधिप्रभवत्वादित्यर्थः ॥ १५ ॥ स नरकः कृष्णं दृष्ट्वा तस्मै शतघ्नीं व्यसृजत् अन्येऽपि योधास्तमेकदैव विव्यधुः । स्म एवार्थे । अत्र सूर्यस्थानीयो गरुडः तडित्स्थानीया भार्या घनस्थानीयः कृष्णः इत्यवधेयम् । शतघ्नी तोपभेदः ॥ १६ ॥

**श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः**

शतघ्नीं शक्तिविशेषम् ॥ १५ ॥ विचत्राः वाजाः पत्राणि येषां तैः ॥ १६–१९ ॥

**श्रीसत्यधर्मकृता श्रीभागवतटिप्पणी**

भवनान्निराक्रमन् वहिः । शरा अस्यन्तेऽनेनेति शरासनश्चापः । करणाधिकरणयोश्चेति ल्युट् । तान् अमिते कृष्णे आसज्य सज्यं कृत्वा शरात्प्रयुञ्जत प्रायुञ्जत ॥ १७ ॥ तच्छस्त्रकूटं तत्सत्यमुक्तं शस्त्रसमूहं तिलशो मार्गणैश्चकर्त । निकृन्तशीर्षोरुभुजाङ्घ्रिकामुकांस्तांतस्म । यमक्षयं यमगृहमनयत् ॥ १८ ॥ भटाः मृतोर्वरिताः सर्वान्सप्तापि ॥ १९ ॥ दुर्मर्षणः सहनहीन आस्रवन्तो मदा येभ्यस्तैः । पयोब्धिः क्षीरसमुद्रस्तस्मात्प्रभवन्तीति ते तथा तैः सह निराक्रमत् ॥ २० ॥ सहस्रमपि साहस्रम् ।

लक्ष्मिर्लक्ष्मी हरेः प्रियेति द्विरूपकोशः। अनेकसाहस्रैरायोधनं समरस्थलमायात्। नोत्तरवदुत्तरत्र भावीत्याह। बलीति ॥ २१ ॥ गरुडोपरि स्थितं सभार्यं सूर्यस्योपरिष्टात्तदुपरि विद्यमानतटितासहितं घनं मेघमिव गरुडसमः सूर्यः। तन्निसमा सत्यभामा। घनसमः श्रीधन इति तदेतदानुरूप्यं ज्ञेयम्। उदारेति शङ्खादिचक्रान्तविशेषणम्॥२२॥ गजः सुप्रतीको व्यनीनदच्चकार॥२३॥ दुर्जया वरूथिनी सेना लोहमयीं किञ्चित्स्थलेऽयोमयी शतघ्नीं तन्नाम्नीं शक्तिं तेन तत्क्षेपणेन विव्यधे ताडितोऽभूत् व्यथित इवाभवत्। आश्वस्तोऽथ हृषीकेशः संज्ञां प्राप्य च केशवः। धनुस्तस्यै ततो दत्वा शार्ङ्गभारसंहरणे। युद्धयस्व नरकं देवि श्रान्तोऽस्मि युधि पीडितः। तदा युद्धं समारेभे नरकेण दुरात्मनेत्यारभ्य शक्तिर्भगवतो देवि वासुदेवस्य पश्यतः। ततः प्रीतोऽथ तां वीक्ष्य परिष्वज्य महाविभुः। श्रमाम्भश्चापि तस्यास्तु परिमृज्याथ केशवः। कण्ठस्याभरणं तस्यै ददौ प्रीतमना हरिः। न दत्तमय रुक्मिण्यै दत्तं तस्यै महात्मना। महार्घ्यं लोकविख्यातं हृतं बलिमुखे तदेत्यन्तेन ग्रन्थेन हरिवंशोक्तां सूचयामास व्यासो विव्यथ इत्यनेनानुसन्धेयम्। इत्येव कृष्णो दर्शयन् श्रान्तवत्स्वम्। तदा दृप्तं नरकं वीक्ष्य देवी सत्याददे कार्मुकं शार्ङ्गसंज्ञम्। चकार तं यतमानं च भौमं निरायुधं विरथं च क्षणेनेत्याचार्योक्तेश्च ॥ २४ ॥ अनेकबाणानेकदा ॥ २५ ॥ विचित्रपत्रैः शरीधैः। विग्रहः शरीरम्। हे नृप परीक्षित्। तत्तदावान्तरनरपाश्च साश्वाः कुञ्जराश्च यस्मिंस्तदिति वा ॥ २६ ॥

इति श्रीभागवतटिप्पण्यां सत्यधर्मकृतायां दशम उत्तरार्धे त्रिषष्टिरध्यायः ॥ १०-६३ ॥

### श्रीमद्वल्लभाचार्य्यकृता सुबोधिनी

ततः शस्त्राणि प्रायुङ्क्तेत्याह **प्रायुञ्जतेति**। आसाद्य निकटे गत्वा पड्विधान्यस्त्राणि भगवति प्रयुक्तानि निरूपयति **शरानित्यादिभिः**। अष्टिरायुधविशेषः। सप्तभिरपि प्रत्येकं पड्विधानि प्रयुक्तानि। यद्यप्यजितो भगवानिति जानन्ति, तथापि **रुषा** क्रोधेन उल्वणाः सन्तः तथा कृतवन्तः। भगवता कृतं प्रतीकारमाह **तच्छस्त्रकूटमिति**। **स्वमार्गणैरिति**। असाधारणैर्बाणैः, अन्यथा अग्नेर्बाणाः, दुर्गाया असिः, गदा वायोः, अष्टिरपि वरुणादेः, शक्तिर्मायायाः, शूलं शिवस्येति, एतावन्तः तत्तद्देवताधिष्ठिता न हता भवेयुः। ननु भगवानेव तेष्वपि स्वसामर्थ्यं दत्तवानिति कथं भगवांश्च कर्तेत्याशङ्क्याह **अमोघवीर्य** इति। तेषु दत्तं परगामि मोघं जातम्, तदेव स्वस्थाने अमोघम्। अतः अमोघेन मोघानि वीर्याणि प्रतिहतानीत्यर्थः। तिलशः कर्तनं पुनर्नीत्वा लोहखण्डान्यपि सज्जीकर्तुमशक्तानीति ज्ञापयति। हेत्याश्चर्ये। तावन्न कर्तव्यम्, प्रयोजनाभावात्, तथापि स्वस्याक्लिष्टकर्मत्वं ज्ञापयितुं तावत् पराक्रमं प्रदर्शितवान्। शस्त्राणां विनियोगमुक्त्वा प्रयोक्तॄणामाह **तान् पीठमुख्यानिति**। **यमक्षयमिति** तावद्दण्डार्थम्, मुरवत्पुनरावृत्त्यभावाय वा। ते हि पीठं पुरस्कृत्य समागता इति उपजीव्यत्वात् उत्साहनिवृत्त्यर्थं प्रथमतः स एव हतः। मूर्च्छादिना अलौकिकप्रकारेण हननं व्यावर्तयितुमाह **निकृत्तेति**। चत्वार्यङ्गानि कवचं च निकृत्तानि येषाम्। पितुः पञ्चांशाः तेषु प्रतिष्ठिता इति कार्ये तदंशव्यावृत्त्यर्थं शिरःप्रभृतीनां छेदनम्। शीर्षाणि ऊरवः भुजाः अङ्घ्रयश्च। ज्ञानं गतिश्चाद्यन्तयोः। उत्पत्तिः कर्माणि च मध्ये। तत एवं क्रमः ॥ १३½ ॥ तत उभयेषां मुरस्य तत्पुत्राणां च फलरूपस्य नरकस्य निराकरणार्थं प्रवृत्तिमाह, **स्वानीकपानिति**। तस्य जयहेतवः सेनाः तासामनीकानां रक्षकाः। अज्ञानेन व्यसनैश्च नरकः सिद्धो भवतीति तेषां निराकरणे स्वयं निराकृतोऽपि लौकिकैः साधनैः स्वजयो भविष्यतीति आस्रवन्मदैर्गजैः सहितः युद्धार्थं निराक्रमत्। अच्युतत्वान्न तस्य केनाप्यंशेन क्षतिः। मुरश्चक्रेण हतः, अन्ये सायकैरिति ससाधनसाध्यस्यानुवादः। **तथेति** प्रकारस्यापि। ततस्तदपेक्षया समर्था गजा इति सूचयितुं पूर्वानुवादः। नन्वग्निवत् भगवान् स्थूलान् सूक्ष्मानपि दहतीति, ततो बलिष्ठानपि गजान् मारयिष्यतीति, कथं तत्प्रवृत्तिरिति चेत्, तत्राह **निरीक्ष्येति**। **दुर्मर्षण** इति। दुष्टक्रोधयुक्तः। ज्ञानाच्छादको वर्तत इति तथा प्रवृत्तिः। गजानामुत्कर्षमाह **आस्रवन्मदैः पयोधिप्रभवैरिति**। कार्यकारणोत्कर्षौ निरूपितौ। स्वभावतो गजा जीवेषूत्कृष्टाः सञ्चराः। अतस्त्रिविधोऽप्युत्कर्षो निरूपितः। गजानां मदस्रव एव बलोत्कर्षे हेतुः। ऐरावतः पयोधिप्रभव इति समानजनकत्वेन तत्सामर्थ्यं सर्वेषां निरूपितम् ॥ १४ ॥ मातरं पितरं कालं च दृष्टवानिति निरूपयितुं तस्य भगवद्दर्शनं वर्णयति **दृष्ट्वा सभार्यमिति**। युद्धार्थमागमनशङ्कैव निवारिता। तत्रानुरक्तश्चेत्, कृतार्थ एव भवेदिति। भगवान् न लौकिकसाधनैरलौकिको जेतुं शक्य इति अभूतोपमामाह **सूर्योपरिष्टादिति**। अद्भुतत्वाद्रागद्वेषाभ्यामिष्टानिष्टसूचकं भवति। यदि सूर्योपरि आधिदैविकः मेघः आधिदैविकविद्युल्लतया सह तिष्ठति, आदित्य एव पर्जन्य इति भवति। तस्याधिदैविकं रूपं तादृशमिति वचनोपपत्तिः। तथापि कृष्णः कालात्मा स्त्रीणां हितकारीति तस्य न सद्बुद्धिरुत्पन्ना, किन्तु विरुद्धैवेति तत्कार्यमाह **तस्मै व्यसृजच्छतघ्नीमिति**। शतं हन्तीति योगोऽपि तस्य विवक्षितः। तादृशीं विशेषेणासृजत्, योधाश्च शतघ्नीभिर्बाणैर्वा युगपदेव स्मेति प्रसिद्धे विव्यधुः॥ १५ ॥ आदौ तेषामपराधो निरूप्यते। भगवतोऽक्लिष्टत्वाय। यावत्ते युद्धार्थं प्रवृत्ताः, ततः पूर्वं तस्मिन् वा समये भगवान् स्वमार्गणैः प्रथमतो योधांश्चिच्छेद। ततस्तत्प्रयुक्तान्यस्त्राणि। पूर्वमस्त्राणामुपस्थित्यभावात्। नात्र क्रमो दोषाय। **तत्प्रसिद्धं** भौमस्य सैन्यम्। भगवत्त्वात् न पुत्रादिभावस्तस्य बाधक इति भगवत्प्रवृत्तिः। सोऽपि मातुः पुत्र इति पित्रापि सह युद्धकरणं नायुक्तम्। **गदाग्रज** इति। भक्तोत्पादनार्थं भगवतस्तथाकरणं युक्तमेव। लौकिकेनैव प्रकारेण तान् हतवानिति

ज्ञापयितुं भगवच्छरान् विशिनष्टि विचित्रवाजैरिति । दूरगमनलक्ष्यैकगमनप्रयोजकाः पक्षाः । विचित्रा वाजा येषामिति । वायुर्जायते गतिर्वा येभ्य इति । निशितानि कार्यसाधकानि । निकृत्तानि बाह्वादीनि यस्येति । प्रक्षेपकौ बाहू । आगमने जङ्घालता प्रयोजिका । कर्मजन्मनी वा पूर्ववत् । ततो ज्ञानगती । बाहूरुशिरोऽङ्घ्रयः विग्रहे यस्येति तादृशं चकार । तर्ह्येव यस्मिन् क्षणे युद्धार्थं तत्सैन्यं प्रवृत्तम्, तस्मिन्नेव क्षणे प्रथमशस्त्रविमोकानन्तरं यथा नापरं विमुञ्चति, तदर्थं पार्श्वभागान् सर्वानेव निराकृतवान् । वाहनानां निराकरणमाह । हता अश्वाः कुञ्जराश्चेति । चतुरङ्गे रथा अचेतनाः । नराणां स्वरूपमुक्तमेव, अवशिष्यन्ते वाजिनः करिणश्चेति ॥ १६ ॥

### श्रीसुबोधिनी-सारः

उल्बणाः क्रूरास्ते रुषा क्रोधेनासाद्य प्राप्यागत्य वाऽजितेऽजितं हंतुं शरान् असीन् गदाः शक्तीः ऋष्टीन् शूलानि प्रायुंजत प्राक्षिपन् । अमोघं सफलं वीर्यं यस्य स भगवान् तत् शस्त्राणां कूटं-समूहं तेषां शस्त्रवृंदं वा स्वस्य मार्गणैर्बाणैः तिलशश्चकर्त्त चिच्छेद ह स्फुटम् ॥ १३ ॥ निकृत्तानि शीर्षोरुभुजांघ्रिवर्माणि येषां पीठो मुख्यो येषां तान् यमस्यालयं संयमिनी मृत्युपदं वा हरिरनयत् प्रेषयत् तथाच्युतस्य चक्रेण सायकैर्निरस्तान् पराभूतान्स्वानीकपान् स्वसेनापतीन् निरीक्ष्य दुर्मर्षणोऽसहिष्णुर्धरायाः पृथ्व्याः सुतो नरको निराक्रमत् निर्ययौ आ सर्वतः स्रवन् मदो येषां तैः पयोधिप्रभवैः क्षीरसमुद्रजातैर्गजैः सह गरुडस्योपरि स्थितं सभार्यं सस्त्रीकं कृष्णं दृष्ट्वा सूर्यस्योपरिष्टात् सतडित्सविद्युत् घनं मेघं यथैव अभूतोपमेयं तस्मै कृष्णाय शतघ्नीं शक्तिविशेषं स नरको व्यसृजत् प्रायुंक्त सर्वे योधा युद्धकारिणो युगपत्सहैव विव्यधुः स्म प्रसिद्धम् ॥ १४-१५ ॥ तत् भौमस्य सैन्यं निकृत्ता बाह्वादयो यस्मिन् तत् हता अश्वाः कुंजरा यस्मिंस्तत् तर्हि तत्क्षणे एव गदाग्रजो भगवान् चकार विचित्रपुंखैः शिलीमुखैः निशितैस्तीक्ष्णैः शरैः ॥ १६ ॥

### श्रीविट्ठलरायात्मजश्रीवल्लभकृतलेखः

स्वानीकपानित्यस्याभासे । उभयेषामित्यस्यैव विवरणं मुरस्य तत्पुत्राणां चेति । फलरूपस्येति । फलनिरूपकस्य युद्धफलत्वेन द्रव्यादिदातुरित्यर्थः । दृष्ट्वा सभार्यमित्यत्र । भगवानिति । अलौकिको भगवाँल्लौकिकैर्जेतुमशक्य इत्यन्वयः ।

### गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

उल्बणा भयंकरास्ते ताम्रादय। आसाद्य अभ्येत्य रुषा क्रोधेनाजिते श्रीकृष्णे शरादीन् प्रायुञ्जत प्रक्षिप्तवन्तः । तदा भगवांश्च स्वमार्गणैः स्वबाणैस्तेषां शस्त्रकूटं शस्त्रसमूहं तिलशः तिलप्रमाणतः चकर्त्त चिच्छेद । तत्र सामर्थ्यमाह—अमोघवीर्य इति । विस्मयं सूचयति—हेति ॥ १३ ॥ निकृत्तानि छिन्नानि शीर्षादीनि येषां तान् पीठादीन् यमालयमनयत् । भगवता हतानां मृतानां यमयातनाऽसम्भवात् तत्र तत्र भगवत्पदप्राप्तिकथनाच्च अत्र यमालयशब्देन मृत्युमात्रं विवक्षितमिति ज्ञेयम् ॥ १४ ॥ स्वानीकपान् स्वसेनापतीन् अच्युतस्य सायकैस्तथा निरस्तान् एवं निहतान् निरीक्ष्य दुर्मर्षणः असहमानो धरासुतो नरकः आस्रवन् मदो मदबिन्दुर्येषां तैः पयोधिप्रभवैः ऐरावतकुलोत्पन्नैर्गजैः निराक्रमत् योद्धुं विनिर्गतः ॥ १५ ॥ तदा स भौमो गरुडस्योपरि स्थितं सभार्यं कृष्णं दृष्ट्वा तस्मै शतघ्नीं शस्त्रविशेषं व्यसृजत् प्रायुङ्क्त । तथान्येपि भौमसम्बन्धिनो योद्धारः स्वस्वायुधैस्तं विव्यधुस्ताडयामासुः । गरुडस्थे भगवति दृष्टान्तमाह—सूर्यस्योपरिष्टात्तडिता सहितं घनं नीलमेघं यथा तथेति । तत्र सूर्यस्थानीयो गरुडः, तडित्स्थानीया भार्या, घनस्थानीयः कृष्ण इति विवेक। ॥ १६ ॥

### अन्वितार्थप्रकाशिका

प्रेति । उल्बणा भयंकरास्ते ताम्रादयः आसाद्य अजितं प्राप्य रुषा क्रोधेनाजिते श्रीकृष्णे शरादीन् प्रायुञ्जत प्रजहुः । ऋष्टिः खड्गभेदः तदा अमोघवीर्यः भगवान् स्वमार्गणैस्तेषां शस्त्रकूटं शस्त्रसमूहं तिलशः तिलप्रमाणतः चकर्त चिच्छेद ॥ १३ ॥ तानित्यर्द्धम् ॥ निकृत्तानि छिन्नानि शीर्षोरुभुजाङ्घ्रिवर्माणि येषां तान् पीठमुख्यान् पीठादीन् यमालयमनयत् । भगवता हतानां मृतानां यमयातनाऽसंभवात् । तत्र भगवत्पदप्राप्तिकथनाच्चात्र यमालयशब्देन मृत्युमात्रं विवक्षितमिति ज्ञेयम् । यद्वा । यमनियमाद्यष्टाङ्गयोगस्थानम् ॥ १४ ॥ स्वेति ॥ स्वानीकपान् स्वसेनापतीन् अच्युतस्य चक्रसायकैस्तथा निरस्तान् एवं निहतान् निरीक्ष्य दुर्गाद्यारोहणेन वीक्ष्य दुर्मर्षणः असहमानो धरासुतो नरकः जातमात्रेण नरशिरसो मुखेन ग्रहणात्तन्नामा आस्रवन् मदो मदबिन्दुर्येषां तैः पयोधिप्रभवैः ऐरावतकुलोत्पन्नैर्गजैः निराक्रमत् योद्धुं विनिर्गतः । दीर्घाभाव आर्षः ॥ १५ ॥ दृष्ट्वेति ॥ तदा स भौमो गरुडस्योपरि स्थितं सभार्यं कृष्णं दृष्ट्वा तस्मै शतघ्नीं शक्तिविशेषं व्यसृजत् । सर्वेऽन्ये योधाश्च युगपत् विव्यधुस्ताडयामासुः । आर्षमिदं स्म पादपूर्त्तौ । गरुडस्थे भगवति दृष्टान्तमाह । सूर्यस्योपरिष्टात्तडिता सहितं घनं नीलमेघं यथा तथेति तत्र सूर्यस्थानीयो गरुडः तडित्थानीया भार्या घनस्थानीयः कृष्णः इति विवेकः ॥ १६ ॥

### श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्

अजिते श्रीकृष्णे कूटं समूहं ॥ १३ ॥ निकृत्तानि शीर्षादीनि येषां तान् यमालयं अनयत् यमक्षयमित्यपि पाठः ॥ १४ ॥ स भौमः तस्मै कृष्णाय । शतघ्नीं शक्तिं ॥ १५ ॥ विचित्रवाजाः पत्राणि येषां तैः वेगवद्भिः शिलीमुखैः शरैः निकृत्ताः छिन्नाः बाहवश्च उरवश्च शिरोघ्नाग्नीवाश्च विग्रहाः शरीराणि च यस्मिन् तत् भौमसैन्यं चकार ॥ १६-१७ ॥

### भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

प्रायुञ्जतेति ॥ रुषा क्रोधेन, उल्बणा अतिभयानकाः पीठादयः, आसाद्य कृष्णान्तिकं प्राप्य, शरान् बाणान्, असोन् खड्गान्, गदाः शक्त्यृष्टिशूलानि शक्तीः ऋष्टीन् शूलानि चेत्यर्थः । अजिते श्रीकृष्णे, प्रायुञ्जत प्रयुक्तवन्तः । तदा अमोघवीर्यः भगवान्, तत् शस्त्रकूटं, तत्प्रयुक्तं शस्त्रजालमित्यर्थः । स्वमार्गणैः स्वकीयवाणैः, तिलशः तिलप्रमाणतः, चिच्छेद । ह स्फुटार्थः । ततः, निकृत्तानि छिन्नानि शीर्षाणि ऊरवः भुजाः अङ्घ्रयः वर्माणि च येषां तान्, पीठमुख्यान् तानसुरान्, यमक्षयं, अनयत् । यमसदनं प्रापयामासेत्यर्थः ॥ १३ ॥ स्वानीकपानिति ॥ धरासुतः पृथिव्यास्तनयः, नरकः भौमासुरः, अच्युतचक्रसायकैः अच्युतस्य चक्रेण सायकैर्बाणैश्चेत्यर्थः । तथा निरस्तान् उक्तप्रकारेण हतान्, स्वानीकपान् स्वकीयान् सेनापतीन्, निरीक्ष्य दृष्ट्वा, दुर्मर्षणः स्वानीकपहननमसहमानः सन्, आस्रवन् मदो येषां तैः, पयोधिप्रभवैः समुद्रान्तरीयजैः गजैः सह, निराक्रमत्पुरान्निष्क्रान्तवान् ॥ १४ ॥ दृष्ट्वेति ॥ स नरकासुरः सूर्योपरिष्टात् सूर्यस्योपरितनप्रदेशे, स्तडिद्घनं यथा, तडिता सह वर्त्तमानं नीलमेघमिव सभार्यं भार्यया सहैव, गरुडोपरि स्थितं, कृष्णं दृष्ट्वा, तस्मै कृष्णाय, कृष्णं हन्तुमित्यर्थः । तत्र सूर्यस्थानीयो गरुडः, तडित् स्थानीया भार्या, घनस्थानीयस्तु श्रीकृष्ण इति विवेकः । शतघ्नीं शक्तिविशेषं, व्यसृजत् प्रायुङ्क्त । तथा सर्वे योधाश्च भौमसंबन्धिनः सर्वे योधा अपीत्यर्थः । युगपत् विव्यधुः स्म । स्वस्वायुधैस्ताडयामासुरित्यर्थः ॥ १५ ॥ तदिति ॥ तर्ह्येव, गदाग्रजः भगवान्, विचित्रा वाजाः पत्राणि येषां तैः, निशितैस्तीक्ष्णैः, शिलीमुखैर्बाणैः, तत् भौमसैन्यं, निकृत्ता बाह्वादयो यस्य तत्, तत्र बाहवो भुजाः, ऊरवः सक्थीनि, शिरांसि मस्तकानि, अङ्घ्रयः पादाः विग्रहा देहाः । हताः अश्वा घोटकाः कुञ्जरा गजाश्च यस्मिंस्तथाभूतं, चकार ॥ १६ ॥

### कृष्णप्रिया

ये सब समर में आकर क्रोधान्ध होकर श्रीकृष्ण भगवान् पर बाण, करवाल, गदा, शक्ति, ऋष्टि, त्रिशूल आदि अत्यन्त तीव्र शस्त्रास्त्रों की वर्षा करने लगे। राजन्! आप जानते है कि अजित भगवान् की शक्ति सफल एवं अनन्त है। समर्थ प्रभु ने अपने तीखे और तीव्र बाणों से उनके शस्त्रास्त्र-समूह को तिल-तिल करके काट दिये ॥ १३ ॥ अच्युत भगवान् के सुदर्शन चक्र और बाणों से सेनानायक पीठ और सहायक दैत्यों के मस्तक, जँघे, भुजा, पैर एवं कवच सम्पूर्ण कट गये पुनः पुरुषोत्तम ने इन सबको यमराज महाराज के धाम पहुँचा दिये। धरासुत नरकासुर ने देखा कि अच्युत भगवान् के सुदर्शन चक्र एवं सायकों से अपनी सेना और सेनानायकों का सम्पूर्ण नाश हो गया, तब वह भौम अतिशय क्रोध से जलने लगा ॥१४॥ तब भौमासुर रोषाविष्ट होकर महासागर के किनारे प्रकट हुए अनन्त संख्यावाले मदोन्मत गजगजों की विपुल सेना लेकर प्राग्ज्योतिषनगर से युद्ध के लिये सन्मुख आ गया। समराङ्गण में आकर जब भौमासुर देख रहा है तो जैसे सूर्य के ऊपर सौदामिनी पत्नी के साथ वर्षाकाल का श्याम मेघ के समान सुशोभित गरुड़ पर प्रियपत्नी श्रीसत्यभामाजी के साथ विराजमान भगवान् श्रीकृष्ण का दर्शन हुआ। श्रीकृष्ण को देखते ही भौमासुर ने भगवान् द्वारिकाधीश के ऊपर अपनी "शतघ्नी" नाम की गदा चलायी और भौमासुर के योधाओं ने श्रीकृष्ण के ऊपर अपने-अपने शस्त्र एवं अस्त्र चलाये ॥ १५ ॥ तब गदाग्रज गोविन्द भगवान् भी विचित्र पंखवाले तीक्ष्ण से तीक्ष्ण बाण चलाने लगे। इस बाणवर्षा से तत्काल ही भौमासुर के सैन्य की भुजाएँ, जंघे, गर्दन और शरीर मस्तक-रहित देह कट-कटकर भूमिशायी होने लगे एवं गजराज और घोड़े भी मरने लगे ॥ १६ ॥

**[1]यानि योधैः प्रयुक्तानि शस्त्रास्त्राणि कुरूद्वह । हरिस्तान्यच्छिनत्तीक्ष्णैः शरैरेकैकशस्त्रिभिः ॥ १७ ॥**
**उह्यमानः सुपर्णेन पक्षाभ्यां निघ्नता गजान् । गरुत्मता हन्यमानास्तुण्डपक्षनखैर्गजाः ॥ १८ ॥**
**[2]पुरमेवाविशन्नार्ता नरको युध्ययुध्यत । दृष्ट्वा विद्रावितं सैन्यं गरुडेनार्दितं स्वकम् ॥ १९ ॥**
**तं भौमः प्राहरच्छक्त्या वज्रः[3] प्रतिहतो यतः । [4]नाकम्पत तया विद्धो मालाहत[5] इव द्विपः ॥ २० ॥**

---

१. अथ चतुःषष्टितमोऽध्यायः-विज. ; मुक्तानि चास्त्राणि कुरुद्वहामुना तान्यच्छिनत् तीक्ष्णशरैस्त्रिभि स्त्रिभिः । प्राच्ये "यानि" श्लोकस्य स्थानेऽयं पाठः । २. तुरङ्गमाश्च दुर्धर्षाः पेतुरुर्व्यां गतासवः-विज. । ३. वज्रेणेव हरिर्गिरिम्-विज. । ४. तयातिविद्धो गरुडो-विज. । ५. विद्ध-प्रा० ।

### कर्दमक्षमा

अन्वयः—कुरूद्वह ! योधैः, यानि, शस्त्रास्त्राणि, प्रयुक्तानि, हरिः, तानि एकैकशः, त्रिभिः, तीक्ष्णैः, शरैः, अच्छिनत् ॥१७॥ सुपर्णेन, उह्यमानः, कृष्णः, आसीत्, च, पक्षाभ्याम्, गजान्, निघ्नता, गरुत्मता, तुण्डनखैः, हन्यमानाः गजाः, आर्त्ताः, पुरम्, एव, आविशन्, नरकः, युधि, गरुडेन, अर्दितम्, विद्रावितम्, स्वकम्, सैन्यम्, दृष्ट्वा, अयुध्यतः । सः भौमः, तम्, गरुडम्, शक्त्या, प्राहरत्, तया, शक्त्या प्रतिहतः, वज्रः, मालाहतः, द्विपः, इव, न, अकम्पत ॥ १८-२० ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

अत्याश्चर्ये कुरूद्वहेति सबोधनम् । तथाहि तैर्यानि प्रयुक्तानि शस्त्राण्यस्त्राणि तत्प्राप्तेः पूर्वमेव तत्सर्वसैन्यं हत्वा पश्चात्तानि शस्त्राण्यस्त्राणि च चिच्छेद तत्राप्येकैकं शस्त्रमस्त्रं च त्रिभिः शरैरित्याश्चर्यम् ॥ किंच गरुत्मतेति ॥ १७-१९ ॥ यतो यया शक्त्या वज्रः प्रतिहत आस गरुडस्तु नाकम्पत ॥ २० ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

कुरूद्वहेति—त्वय्यप्यस्त्रशस्त्रनिपुणे नैतत्कदाचिन्न दृष्टं श्रुतं वेति भावः । तैर्योधैः । तत्प्राप्तेः शस्त्रप्राप्तेः । तत्सैन्यं भौमसैन्यम् । तानि सैन्यप्रयुक्तानि । तत्रापि छेदेपि ॥ १७ ॥ न केवलं भगवानेवाद्भुतमपि तु तद्वाहनमपीत्याह—किञ्चेति । तुंडं चंच्वग्रम् "तुंडोऽस्त्री पक्षिचंच्वग्रे लवने ताडनेऽपि च" इति निरुक्तिः ॥ सुपर्णेनोह्यमान इति तत्रैव लीलयातिशीघ्रगत्येतस्ततो नीयमान इत्यर्थः । भगवन्तं वहतापि पक्षाभ्यां गजहननात्तत्प्रभावोत्कर्षोप्युक्तः । गजा एते योधैरनधिष्ठिताः, राजवाहकाः पृथक्स्थिता इति । कुरूद्वहेत्याश्चर्येण संबोधनम्, कुरुषु मध्ये भीष्मार्जुनादिभिरप्येतत्प्रयोगलाघवं कृष्णेन ज्ञापितैरपि न ज्ञातुं शक्यत इति भावः ॥ १८ ॥ युधीति तस्य निर्भयतोक्ता ॥ १९ ॥ तं गरुडम् । तया शक्त्या ॥ यतो यया ॥ २० ॥

### श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी

यानीति सार्द्धकम् । शस्त्राणि खड्गादीनि अस्त्राणि शरादीनि सुपर्णेनोह्यमान इति तत्रैवेतस्ततो लीलयाऽतिशीघ्रगत्या महाशोभा सूचिता श्रीगरुडस्यापि प्रभाव उक्तः श्रीभगवन्तं वहतोपि पक्षाभ्यां गजानां हननात् एतेच योधैरनधिरूढा राजवाहकाः पृथक्स्थिता ज्ञेया ॥ १७ ॥ तत्र केचिन्निहता एव केचिच्च भग्ना इत्याह—गरुत्मतेति ॥ १८ ॥ युधीति । युधि स्थितस्सन्नित्यर्थः । इति तस्यातिनिर्भयत्वादिकं सूचितं विद्रावितं भङ्गं प्रापितं यतोऽर्दितं यद्वा किञ्चिद्विद्रावितं किञ्चिदर्दितञ्च हतं दृष्ट्वा सैन्यमिति सैन्यस्य गजप्राधान्यात् किम्वा गजरक्षिणाम् अश्ववारादीनां सङ्ग्रहात् ॥ १९ ॥ विद्धोपि नाकम्पत नाव्यथत अनुभावेन भावो व्यज्यते किम्वा स्वस्थानाद्धैर्याच्च नाचलदित्यर्थः ॥ २० ॥

### श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी

शस्त्राणि खड्गादीनि, अस्त्राणि शरादीनि, हरिरिति—तादृशक्षिप्रकारित्वेन सर्व्वेषां मनोहरणात् ॥ १७ ॥ सुपर्णेनोह्यमान इति तत्रैवेतस्ततो लीलयातिशीघ्रगत्यादेर्महाप्रभावता सूचिता । यद्वा, श्रीगरुड़स्यापि प्रभाव उक्तः, श्रीभगवन्तं वहतापि पक्षाभ्यां गजानां हननात्, एते च योधैरनधिरूढ़ा राजवाहकाः पृथक् स्थिता महागजा ज्ञेयाः । तत्र केचिन्निहता एव केचिच्च भग्ना इत्याह—गरुत्मतेति । अग्रे स्थिताः केचित्तुण्डेन चञ्च्वा, पार्श्वद्वयस्थाश्च पक्षाभ्यां पश्चात्स्थिताश्च रणनखैरिति ज्ञेयम् । एवं तस्यापि क्षिप्रकारित्वं महाविक्रमादिकञ्च दर्शितम् ॥ १८ ॥ युधि स्थितः सन्निति तस्यापि निर्भयत्वादिकं सूचितम्, सर्व्वसैन्ये विनष्टेऽपि निजगजेषु भग्नेष्वपि तत्रावस्थानात् । विद्रावितं भंगं प्रापितम्, यतोऽर्द्दितम्; यद्वा, किञ्चिद्विद्रावितं किञ्चिदर्द्दितञ्च हतं दृष्ट्वा । सैन्यमिति सैन्यस्य गजप्रधानत्वात्, किंवा गजरक्षिणामश्ववारादीनां संग्रहात् ॥ १९ ॥ विद्धोऽपि नाकम्पत नाव्यथत, किंवा स्वस्थानाद्धैर्य्याच्च नाचलदित्यर्थः—तया किञ्चिदपि कर्त्तुमशक्तत्वात् । तत्रैव दृष्टान्तः—मालेति ॥ २० ॥

### श्रीमद्वीरराघवाचार्यकृता भागवतचन्द्रचन्द्रिका

यानीति । हे कुरूद्वहेत्याश्चर्य्यसम्बोधनं तथाहि तैर्योधैः यानि शस्त्राणि प्रयुक्तानि बभूवुः तत्प्राप्तेः पूर्वमेव तत्सैन्यं सर्वं हत्वा पश्चात्तानि शस्त्राणि चिच्छेद तत्राप्येकैकं शस्त्रं त्रिभिः शरैरिति ॥ १७ ॥ कथम्भूतः पक्षाभ्यां गजान्निघ्नतो गरुत्मतोह्यमानः किञ्च गरुत्मतेति, गरुत्मता कर्त्रा तुण्डादिभिः साधनैर्हतास्ताडिता अत एवार्त्ता गजाः ॥ १८ ॥ पुरं प्राग्ज्योतिषपुरमेव विविशुः नरकस्तु युद्धेऽयुद्ध्यत । दृष्ट्वेति । विद्रावितं पलायितं गरुडेन पीडितं स्वकीयं बलमवलोक्य भौमस्तं गरुडं शक्त्या प्राहरत् तां विशिनष्टि, यतः यया शक्त्या वज्रः प्रतिहतः आस ॥ नेति । तया शक्त्या ताडितोपि गरुडो नाकम्पत यथा मालया हतो गजस्तद्वत् ॥ १९-२० ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

हरिरिन्द्रः ॥ १८–२० ॥

### श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शिनी

सैन्यस्य वाह्वादिच्छेदमुक्त्वा तत्प्रयुक्तास्त्रशस्त्राणां छेदमाह—यानीति । शस्त्राणि खड्गादीनि अस्त्राणि शरादीनि एकैकश इति कर्मणः करणस्य च विशेषणं योधैर्यानि प्रयुक्तानि तेषां लक्ष्यप्राप्तेः पूर्वमेव तत्तत्प्रयोक्तॄन् प्रथमं छित्वा ततस्तत्प्रयुक्तानि तानि चिच्छेद तत्राप्येकैकं शस्त्रमस्त्रं च त्रिभिस्त्रिभिः शरैश्चिच्छेद तैरपि त्रिभिः प्रत्येकमेव प्रयुक्तैर्न तु युगपत् तत्प्रयुक्तैरित्याश्चर्य्येण सम्बोधनं कुरूद्वहेति कुरुषु मध्ये भीष्मार्जुनादिभिरपि नैतत्प्रयोगलाघवं कृष्णेन ज्ञापितैरपि ज्ञातुं शक्यत इति भावः ॥ १७–१९ ॥ यया शक्त्या वज्रः प्रतिहत आसीत् ॥ २० ॥

### गूढार्थदीपिनी

यर्हि तं विव्यधुस्तर्ह्येव तत्सैन्यं तथाभूतं चकारेत्यन्वयः । वाजा पत्राणि । निशितैस्तीक्ष्णैः शिलीमुखैर्बाणैः । निकृत्ता बाह्वादयो यस्य । हता अश्वादयो यस्य । शिरोध्रो ग्रीवा ॥ १७ ॥ यानीति सार्द्धम् । सुपर्णेन उह्यमानो नीयमानो हरिरित्यत्रान्वेति ॥ १८ ॥ तुण्डं चञ्च्वम् । युधि युद्धं ॥ १९ ॥ विद्रावितं पलायितम् । अर्दितं पीडितम् । ते गरुडम् । यतो यया ॥ २० ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

यतः यया ॥ २० ॥

### श्रीसत्यधर्मकृता श्रीभागवतटिप्पणी

हरिः ॐ । एकैकश एकमेकं त्रिभिस्त्रिभिः शरैर्गजान्पक्षाभ्यां निघ्नता सुपर्णेनोह्यमानः ॥ १ ॥ गरुत्मता गतं । तुरङ्गमास्तुरगाः । तुरगोऽपि तुरङ्गश्च तुरङ्गम इतीष्यत इति त्रिरूपकोशः । गतासवा निष्प्राणाः ॥ २ ॥ हरिरिन्द्रः ॥ ३ ॥ तया शक्त्या । अतिविद्धो नरकादि दृष्ट्वा मालाहतो द्विपो हस्तीव । किञ्चिदीषदपि न चचाल ॥ ४ ॥ ततः शक्तिमुक्त्यनन्तरम् ॥ ५ ॥ अर्धचन्द्रम् शरम् । शरासने सन्धायाक्रष्टुकामं नरकं विज्ञाय । तच्चापं सन्धितार्धचन्द्रधनुः केशवोऽच्छिनन् ॥ ६ ॥ कालायसमयीं कृष्णायोविकृतां मधुसूदनस्तां क्षुरप्रेण चकर्त ॥ ७ ॥ निशातमुत्तेजितं परशुं भौमः प्राहिणोत् । तां चासिना श्रीधरश्चिच्छेद ॥ ८ ॥ पञ्चसप्तति तोमरान् चिक्षेप ॥ ९ ॥ एकेन तत्रापि योगपद्येनेति तदद्भुतमिवाभवत् । नेदं देवस्याद्भुतमिति सूचयतीति वेन ॥ १० ॥

### श्रीमद्वल्लभाचार्य्यकृता सुबोधिनी

ततः शस्त्राणां छेदनमाह । यानि तैरेव योधैः प्रयुक्तानि । शस्त्राणि गृहीत्वा प्रहरणसाधनानि । अस्त्राणि तु प्रक्षेप्यानि, ब्रह्मास्त्रादिरूपाणि वा । कुरूद्वहेति विपरीतत्वाद्विश्वासार्थम् । तानि स्थितानि अग्रेपि साधनत्वाल्लोकोपद्रवकारीणि भविष्यन्तीति तान्यच्छिनदित्यभिप्रायेणाह हरिरिति । तीक्ष्णैः शरैरिति नालौकिकत्वम् । एकैकशस्त्रिभिरिति च । ये पुनर्गजाः स्वार्थं शोभाकरा भवन्ति, तान् न हतवानिति वक्तुं तादृशेन गरुडेन उह्यमानो भगवान्निरूप्यते । येन गजाः अन्तःप्रवेशनार्थं पक्षाभ्यामेव हताः । हस्ताभ्यामन्तःप्रवेशिता इव निरूपिताः । सेनारूपाः दैत्यांशा गजा मारिताः, साधारणा देवांशाश्च रक्षिता इति विभागः ॥ १७ ॥ ततो गरुडहतानां पुरप्रवेशमाह गरुत्मतेति । तुण्डपक्षनखाः तामससात्विकराजसाः आर्ताः सन्तः पुरमेवाविशन् । न तु तेषु युद्धार्थं बुद्धिरुत्पन्नेत्यर्थः । ततस्तेषु निवृत्तेषु नरकः स्वयमयुध्यत । युधीत्यावश्यकता ॥ १८ ॥ इदं युद्धं केवलमेव, अहं योत्स्यामी'ति उत्साहनिश्चयात्मकम्, शस्त्रप्रहरणात्मकं त्वाह दृष्ट्वेति । गरुडेन विद्रावितं स्वसैन्यं दृष्ट्वा, अर्दितं च, न केवलं भयमात्रेण पलायितम् । यद्यपि स्वयं भगवता सह युद्धार्थमागतः, अन्यं च न गणयति, तथापि तादृशोऽपि स्वयमेव तं गरुडं शक्त्या प्राहरत् । ननु तथाप्यल्पे कथं स्वविक्रमं योजितवानित्याशङ्क्याह वज्रः प्रतिहतो यत इति । गरुडाद्वज्रोऽपि प्रतिहतः । तदमृतहरणे गरुडस्य प्रसिद्धम् । अतो महति पौरुषं कर्तव्यमिति न काप्यनुपपत्तिः ॥ १९ ॥ इदं माहात्म्यमग्रेऽप्युपयुज्यते । एकमेव वाहनं भगवत इति तदुपद्रवे भगवति काचिच्छङ्का स्यात्, अतस्तन्निवारणं वक्तव्यम्, अत एव किञ्चिज्ज्ञातमित्याह नाकम्पतेति । तया शक्त्या विद्धः । तेनाल्पमपि शरीरभेदमाशङ्क्य दृष्टान्तमाह मालाहत इवेति । मालया हतः । भेदेऽपि व्यथाभावमाह द्विप इवेति । यथा अङ्कुशेन विद्धः द्विपो जागर्ति, कार्यक्षमश्च भवति, तथा गरुडः अतिपराक्रमयुक्तो जात इत्यर्थः । ततो लज्जितो नरकासुरः महादेवात् प्राप्तं शूलं तस्मिन् जीवति अमोघमच्युते योजयितुं विचारितवानित्याह शूलमिति । यतो भौमो मातुः पुत्रः । तथा करणे हेतुमाह वितथोद्यम इति । वितथः गरुडे पराक्रमो व्यर्थो जात इति ॥ २० ॥

### श्रीसुबोधिनी-सारः

हे कुरूद्वह योधैर्यानि शस्त्रास्त्राणि प्रयुक्तानि तानि हरिरच्छिनत् तीक्ष्णैः शरैः एकैकशस्त्रिभिरिति युद्धकर्तृविशेषणम् ॥ १७ ॥ सुपर्णेन गरुडेनोह्यमानः पक्षाभ्यां गजान् निघ्नता गरुत्मता तुंडेन चंच्वा पक्षाभ्यां नखैर्हन्यमाना विदार्यमाणा गजा आर्त्ताः पीडिताः पुरं नगरमेवाविशन् प्रविष्टवंतः युधि नरकोऽयुध्यत गरुडेनार्दितं पीडितं स्वकम् आत्मीयं सैन्यं विद्रावितं दृष्ट्वा ॥ १८-१९ ॥ यतो यया शक्त्या वज्रः प्रतिहतस्तथा शक्त्या भौमोसुरस्तं गरुडं प्राहरत् तया विद्धोसौ नाकंपत मालया हतो द्विपो गज इव ॥ २० ॥

### गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

यदा ते तं विव्यधुस्तर्ह्येव तस्मिन्नेव क्षणे गदाग्रजो भगवान् कृष्णस्तद्भौमसैन्यं विचित्रा वाजाः पत्राणि येषां तैर्निशितैस्तीक्ष्णैः शिलीमुखैर्बाणैर्निकृत्ता बाहवः ऊरवः शिरोधरा विग्रहाश्च यस्य, तथा हताः अश्वाः कुञ्जराश्च यस्मिंस्तथाभूतं चकार ॥ १७ ॥ हे कुरूद्वह । तत्सैन्यवधात्, पूर्वमेव यानि योधैः प्रयुक्तानि शस्त्राणि गृहीत्वा प्रहरणसाधनानि अस्त्राणि प्रक्षेप्याणि तानि हरिरेकैकशः त्रिभिस्त्रिभिस्तीक्ष्णैः शरैरच्छिनदित्यन्वयः ॥ १८ ॥ एवं झटिति सैन्यहनने गरुडस्य महावेगहेतुं सूचयन् विशिनष्टि—उह्यमान इति ॥ १९ ॥ तदा गरुत्मता तुण्डादिभिर्हन्यमानाः अत एव आर्ता गजाः पुरमेवाविशन् । तदेको नरक एव युद्धेऽयुध्यत । गरुडेनार्दितं पीडितं अत एव विद्रावितं पलायितं च स्वकीयं सैन्य दृष्ट्वा भौमस्तं गरुडं शक्त्या प्राहरत् । शक्तेरमोघत्वं दर्शयति—यतः यया शक्त्या वज्रः प्रतिहतः ॥ २० ॥

### अन्वितार्थप्रकाशिका

तदिति ॥ यदा ते तं विव्यधुः तर्ह्येव तस्मिन्नेव क्षणे गदाग्रजो भगवान् कृष्णस्तद् भौमसैन्यं विचित्रा वाजाः पत्राणि येषां तैर्निशितैस्तीक्ष्णैः शिलीमुखैर्बाणैर्निकृत्ता बाहवः ऊरवः शिरोधरा कन्धरा विग्रहा देहाश्च यस्य तथा हता अश्वाः कुञ्चराश्च यस्मिंस्तथाभूतं चकार ॥ १७ ॥ यानीति सार्द्धम् ॥ हे कुरूद्वह ! तत्सैन्यवधात्पूर्वमेव यानि योधैः प्रयुक्तानि शस्त्राणि हस्तस्थान्येव प्रहरणसाधनानि खड्गादीनि अस्त्राणि प्रक्षेप्याणि शरादीनि तानि पक्षाभ्यां गजान्निघ्नता सुपर्णेन उह्यमानो हरिरेकैकश इति कर्मणः करणस्य च विशेषणम् । त्रिभिस्तीक्ष्णैः शरैरच्छिनत् । अयं भावः । योधैर्यानि प्रयुक्तानि तेषां लक्ष्यप्राप्तेः पूर्वमेव तत्प्रयोक्तॄन् प्रथमं छित्त्वा ततस्तत्प्रयुक्तानि तानि चिच्छेद तत्राप्येकैकं शस्त्रमस्त्रं च त्रिभिः शरैश्चिच्छेद । तैरपि त्रिभिः प्रत्येकमेव प्रयुक्तैर्नतु युगपत् प्रयुक्तैरित्याश्चर्येण कुरूद्वहेति भीष्मार्जुनादावपि नैतत्प्रयोगलाघवमिति ॥ १८ ॥ गरुत्मतेति ॥ तदा गरुत्मता तुण्डादिभिर्हन्यमाना अत एवार्ता गजाः पुरमेवाविशन् तदेको नरक एव युद्धेऽयुद्ध्यत । गजाश्चैते योधैरनारूढा राजवाहका ज्ञेयाः ॥ १९ ॥ दृष्ट्वेति ॥गरुडेनार्दितं पीडितम् अत एव विद्रावितं पलायितं च स्वकीयं सैन्यं दृष्ट्वा भौमस्तं गरुडं शक्त्या प्राहरत् । यतः यया शक्त्या वज्रोऽपि प्रतिहतः आसीत् ॥ २० ॥

### श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्

युधि नरको भौमासुर एक एव अयुध्यतः ॥ १८ ॥ तं गरुडं यतो यया शक्त्या वज्रोपि पूर्वं प्रतिहतस्तिरस्कृतो बभूव ॥ १९ ॥ तया शक्त्या गरुडो नाकंपत न चचाल । अतस्तार्क्ष्ये वितथोद्यमः ॥ २० ॥

### भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

यानीति । हे कुरूद्वह राजन् , योधैर्भौमसंबन्धियोद्धृभिः, यानि शस्त्रास्त्राणि, प्रयुक्तानि, एकैकशः तानि, पक्षाभ्यां गजान् निघ्नता, सुपर्णेन गरुडेन, उह्यमानः हरिः, तीक्ष्णैः त्रिभिः शरैः, अच्छिनत् । हरिर्भौमयोद्धृप्रयुक्तशस्त्रादीनि तत्प्राप्तेः पूर्वमेव त्रिभिस्त्रिभिः शरैः प्रत्येकं छित्त्वा, तत् सैन्यं च हतवानिति भावः ॥ १७ ॥ गरुत्मतेति । तुण्डपक्षनखैः, गरुत्मता गरुडेन, हन्यमानाः गजाः भौमकरिणः, आर्त्ताः सन्तः, पुरं एव, अविशन् । युधि संग्रामे तु, नरक एको भौमासुर एव, अयुद्धयत ॥ १८ ॥ दृष्ट्वेति । गरुडेन, अर्दितं अत एव, विद्रावितं पलायितं स्वकं सैन्यं दृष्ट्वा, यतः यया शक्त्या, वज्रः इन्द्रायुधं, 'वज्रोऽस्त्री' इत्यमरः । प्रतिहतः, तया शक्त्या, भौमः तं गरुडं, प्राहरत् । गरुडं हन्तुं शक्तिं प्राहिणोदित्यर्थः ॥ १९ ॥ नाकम्पतेति । तया शक्त्या विद्धः, भौमेन ताडित इत्यर्थः । गरुडः, मालाहतः मालया ताडितः, द्विपः हस्ती इव, न अकम्पत । ततः, वितथोद्यमः गरुडे व्यर्थोद्यमः, भौमः, अच्युतं श्रीकृष्णं हन्तुं, शूलं, आददे स्वीकृतवान् ॥ २० ॥

### कृष्णप्रिया

राजन् ! इधर समराङ्गण में नरकासुर के योद्धाओं ने द्वारिकानाथ पर जो-जो शस्त्रास्त्र चलाये थे उन सबको भगवान् श्रीहरि ने अत्यन्त तीव्र एवं तीक्ष्ण तीन-तीन बाणों से काट दिये ॥ १७ ॥ महाराज कुरुनन्दन ! इस संग्राम में भगवान्

श्रीकृष्ण अपने प्रियतम श्री गरुड जी पर सवार थे समराङ्गण खेल रहे थे, तब स्वयं समर्थ सुपर्णजी अपने पंखों से गजराजों को मार रहे थे। गरुड जी की तीक्ष्ण चोंच, पंख, एवं पंजो की मार से चोट से अत्यन्त आर्त्त होकर समराङ्गण से भागकर प्राग्ज्योतिष नगर में घुस गये। युद्ध भूमि में केवल भौमासुर ही युद्ध करने लगा। इधर भौमासुर ने देखा कि गरुड जी के पंखों की गहरी चोट से आर्त होकर सारा सैन्य भाग रहा है, तब भौमासुर ने इन्द्र के वज्र को विफल बनाने वाली अपनी शक्ति चलायी किन्तु इस शक्तिप्रहार से पक्षीराज श्री गरुड जी तनिक भी चलायमान नहीं हुए। श्रीगरुड जी पर शक्ति का प्रहार जेसे ऐरावत गजराज पर फूलों की माला से प्रहार किया गया हो वैसा मालूम होता था ॥ १८-२० ॥

[1] शूलं भौमोऽच्युतं हन्तुमाददे वितथोद्यमः ।
तद्विसर्गात् पूर्वमेव नरकस्य शिरो हरिः । अपाहरद् गजस्थस्य चक्रेण क्षुरनेमिना ॥ २१ ॥
सकुण्डलं चारुकिरीटभूषणं[2] [3]बभौ पृथिव्यां पतितं समुज्ज्वलत् ।
हाहेति साध्वित्यृषयः सुरेश्वरा माल्यैर्मुकुन्दं विकिरन्त ईडिरे ॥ २२ ॥
[4]ततश्च [5]भूः कृष्णमुपेत्य कुण्डले प्रतप्तजाम्बूनदरत्नभास्वरे ।
[6] स वैजयन्त्या वनमालयार्पयत् प्राचेतसं छत्रमथो महामणिम् ॥ २३ ॥
अस्तौषीदथ विश्वेशं देवी देववरार्चितम् । प्राञ्जलिः प्रणता राजन् भक्तिप्रवणया धिया ॥ २४ ॥

**कर्दमक्षमा**

अन्वयः—तया, विद्धः, अपि, मालाहतः, द्विपः, इव, न, अकम्पत, गरुड, इति, यावत् । एवं, वितथोद्यमः, सः, भौमः, अच्युतम्, हन्तुम्, शूलम्, आददे ॥ २१ ॥ हरिः, तद्विसर्गात्, पूर्वमेव, गजस्थस्य, नरकस्य, शिरः, क्षुरनेमिना, चक्रेण, अपाहरत् ॥ २२ ॥ सकुण्डलम्, चारु, किरीटभूषणम्, समुज्वलत्, पृथिव्याम्, पतितम्, शिरः, बभौ, तदा, नरकसम्बन्धिनः, हा, हा, इति, ऊचुः, ऋषयः, साधु, इति ( ऊचुः ), सुरेश्वराः, मुकुन्दम्, माल्यैः, विकिरन्तः, सन्, ईडिरे ॥ २३ ॥ ततः, भूः, कृष्णम्, उपेत्य, प्रतप्तजाम्बूनदभास्वरे, कुण्डले, वैजयन्त्या, वनमालया, सह, प्राचेतसम्, छत्रम्, अथ, महामणिम्, च, अर्पयत् ॥ २४ ॥

**श्रीधरस्वामिविरचिता भावार्थदीपिका**

गरुडे वितथोद्यमः सन् शूलं त्रिशूलमाददे धृतवान् ॥ २१-२२ ॥ प्रतप्ते जांबूनदे यानि रत्नानि तैर्भास्वरे मेर्वंशभूतं मन्दरं महामणिं चार्पयदिति ॥ २३-२४ ॥

**श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः**

वितथोद्यमो व्यर्थप्रयत्नः । तद्विसर्गाच्छूलत्यागात् । ततोऽमोघशूलहस्तं भौममालक्ष्य शीघ्रमिमं जहीति सत्यभामयोक्तः कृष्णस्तं जघानेत्याह—तदिति ॥ २१ ॥ हाहेति दैत्याः, साध्विति मुनयः । हाहेति 'हा विषादशुग्र्तिषु, इह निंदायां

---

१. किंचिदपि राजेन्द्र चचाल नरकाहवे ।
ततः कार्मुकमादाय नरकः शरसञ्चयान् । मुमोच कृष्णे तान्सर्वानिच्छिनत्केशवः शरैः ॥ १ ॥
ततोऽर्धचन्द्रं नरकं सुसन्धाय शरासने । आक्रष्टुकामं विज्ञाय तच्चापं केशवोऽच्छिनत् ॥ २ ॥
ततः कालायसमयीं गदां गुर्वीं धरासुतः । आददे तां क्षुरप्रेण चकर्त मधुसूदनः ॥ ३ ॥
ततो निशातं परशुं भौमः परबलार्दनः । प्राहिणोद्विष्णवे तं च चिच्छेद श्रीधरोऽसिना ॥ ४ ॥
ततः कृष्णाय चिक्षेप तोमरान्पञ्चसप्ततिम् । चकार सिंहनादं च नरकः परवीरहा ॥ ५ ॥
तांस्तोमरान्कुरुश्रेष्ठ शरेणैकेन केशवः । चिच्छेद यौगपद्येन तदद्भुतमिवाभवत् ॥ ६ ॥

२. भूषितं—वीर. विज. । ३. शिरः—वीर. ।

४. हत्वा हरिर्नरकं दैत्यवर्यं मरुद्गणैः सहितो लोकपालैः । समाहूतः पौरमुख्यैः सभार्यः प्राग्ज्योतिषं प्रविविशद्द्रष्टुकामः ॥ १ ॥
तत्रापश्यद्यदुश्रेष्ठो विचित्रं मणिपर्वतम् । च छत्रं वारुणं हृद्यं सलिलस्रावि भारत ॥ २ ॥
शक्राय प्राहिणोद्भूयः केशवो मणिपर्वतम् । वरुणाय तथा छत्रं प्राहिणोद्दैत्यकिंकरैः ॥ ३ ॥
तान्विसृत्य हरिर्देवान्स्वयमेव जगत्पतिः । प्राविशद्भौमसदनं पुरन्दरपुरोपमम् ॥ ४ ॥

५. ततो धरा—विज. । ६. पौत्रं च वीरं भगदत्त संज्ञितं निवेद्य मालामपि वैजयन्तीम्—विज. । इत्यर्धं पाठः ।

च इति क्षीरस्वामी। हा पापिष्ठ नरक, हा विश्वोद्वेजक त्वं यन्मृतस्तत्साधुसाध्विति ऊचुः। विकिरन्त आच्छादयन्तः, ऊचुरिति शेषः॥ २२॥ ततो भौममृतेरनन्तरम्। वनमालया सह कुण्डले आर्पयदित्यन्वयः। किंभूतया—वैजयन्ती वसुविधमौक्तिकमाला, तत्सहितया। वनमाला तु हरेरर्चनायैव न तु भौमेन कस्यचिदानीतेति बोध्यम्। महांतो मणयो यत्र तं सुमेरोरंशभूतं मन्दराख्यगिरिशिखरम्। 'हृतामराद्रिस्थानेन' इत्युक्तेः। वैजयन्ती पंचवर्णा, वनमाला चरणलम्बिनी पत्रपुष्पमयीति भेदः। यद्वा—अष्टधामौक्तिकनिर्मिता वैजयन्ती, पञ्चरत्नमयी वा। अनयोर्लक्षणं तृतीयस्कन्धे टीकायामस्माभिर्लिखितमेव॥ २३॥ अथ भगवदर्चनकुण्डलादिप्रत्यर्पणोत्तरम्। भक्त्या प्रवणया तद्गतया। "निम्नेऽथ तत्परे वक्रे प्रवणो वननिर्गतः" इति निरुक्तिः। अथ तत्तदर्पणोत्तरम्। भक्त्या प्रवणाऽऽयत्ता धीस्तया प्रणताऽवनतमस्तका सती। देववरैर्ब्रह्मादिभिरप्यर्चितम्। हे राजन्निति—श्रीकृष्णयशःश्रवणेन राजमान एव राजा भवतीति भावः॥ २४॥

### श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी

तस्य शूलस्य विसर्गात्प्रागेव अपाहरत् तस्याजानत इवाहरत् यतः क्षुरवत्तीक्ष्णधारा नेमयो यस्य तेन॥ २१॥ शिरो बभौ लोकदृष्टी रञ्जयामास यतः पतितं दुष्टसम्बन्धित्वादितिभावः। अतस्तदीयशोभारचनमपि तदानीमेव तदुपोद्वलकं जातमिति सविनोदमाह—समुज्ज्वलमिति। समुज्वलदिति क्वचित् तत्र हेतुः सकुण्डलमित्यादि हाहेति निन्दायां महापापिष्ठोऽयमासीदित्यर्थः। हाविषादशुगार्त्तिष्वित्यत्र निन्दायां चेति हि क्षीरस्वामी। साध्विति हर्षात् भद्रं जातमिदमित्यर्थः। ऊचुरिति शेषः। सुरेश्वरः इन्द्रादयस्तं माल्यैर्विकिरन्त आच्छादयन्तः॥ २२॥ वैजयन्ती पञ्चवर्णा वनमाला चरणलम्बिनी पत्रपुष्पमयीतिभेदः। वैजयन्तीसहितया वनमालया सह॥ २३॥ अथ तत्तदर्पणानन्तरं भक्त्या प्रवणा आयत्ता वशीकृता या तया बुद्ध्या प्रणता स्तुत्यर्थं प्राक् कृतप्रणामा पश्चात् प्राञ्जलिः सती यद्वा प्रणता च अवनतमस्तका सती तुष्टाव यतः विश्वेशम् अतो देववरैर्ब्रह्मादिभिरर्चितं तत्तत्प्रकारेणैवास्तौदितिभावः॥ २४॥

### श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी

अच्युतं सुस्थिरतयाभिमुखे सन्तं भगवन्तमित्यर्थः, यद्वा, अच्युतमव्यर्थं शूलम्, तस्य शूलस्य विसर्गात् प्रागेव अप अनायासेन क्षिप्रमेवाहरत्, यतः क्षुरवत्तीक्ष्णधारा नेमयो यस्य तेन॥ २१॥ पतितमपि बभौ शिरः, यतः सम्यगुज्ज्वलम्। तत्र हेतुः—सकुण्डलमित्यादि। हाहेति भूमिसुतशिरःपातात्, साध्विति च दुष्टमरणात्, यद्वा, हाहेति तदनुगाः, ऋषयश्च साध्वित्यूचुरिति शेषः। सुरेश्वरा इन्द्रादयो माल्यैर्विशेषेण श्रीसत्यभामा-गरुडसाहित्यादिना, किरन्तो व्याप्नुवन्तः, मुकुन्दमिति नरकवधेन परमानन्दप्रदानात्, अत एव ईडिरे जयजयेत्यादिस्तुत्या तुष्टुवुः॥२२॥ भूर्मातृत्वेन नरकस्य गृहे मूर्त्तिमती सदा वर्त्तमाना, किंवा तदानीमेवाविर्भूता, कृष्णं साक्षाद्भगवन्तं स्वपतिमित्यर्थः। अत उपेत्य समीपे गत्वा, वैजयन्ती पञ्चवर्णा, वनमाला चापादलम्बिनी पत्रपुष्पमयीति भेदः। वैजयन्ती-सहितया वनमालया सह। अथो समुच्चये, विलम्बे वा, त्वरयादौ मालासहित-कुण्डलार्पणतः पश्चात् छत्राद्यर्पणात्॥ २३॥ अथ तत्तदर्पणानन्तरं भक्त्या प्रवणा आयत्ता वशीकृता या तया बुद्ध्या, प्रणता स्तुत्यर्थं प्राक् कृतप्रणामा, पश्चात् प्राञ्जलिः सती; यद्वा, प्रणता चावनतमस्तका सती तुष्टाव; यतो विश्वेशम्, अतो देववरैः श्रीब्रह्मादिभिरर्च्चितं तत्तत्प्रकारेणास्तौषीदिति भावः। यतो देवी श्रीभगवत्प्रिया भक्त्या द्योतमाना वा; इति तस्याः श्रीभगवन्माहात्म्याभिज्ञता सूचिता। अतस्तत्स्तुतिश्रवणार्थमवधापयति—हे राजन्निति॥ २४॥

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम्

प्राचेतसं वारुणम्॥ २३-२८॥ ( २४ )

### श्रीमद्वीरराघवाचार्यकृता भागवतचन्द्रचन्द्रिका

शूलमिति। गरुडे व्यर्थोद्यमस्सन् शूलमाददे स्वीकृतवान् तद्विसर्गाच्छूलप्रयोगात् पूर्वमेव हरिर्नरकस्य शिरश्चक्रेण चिच्छेद कथम्भूतेन क्षुरस्येव नेमिः धारा यस्य तेन॥ २१॥ सकुण्डलमिति। कुण्डलाभ्यां सहितं सुन्दरेण किरीटेन भूषितं शिरः पृथिव्यां पतितं सत् सम्यगुज्ज्वलत् नरकसम्बन्धिनो हाहेति ऋषयस्तु साधु साध्वित्यूचुः सुरेश्वरास्तु कुसुमैर्विकिरन्तो मुकुन्दं तुष्टुवुः॥ २२॥ ततश्चेति। ( सा ) भूः भूमिर्नरकस्य माता प्रतप्ते जाम्बूनद यानि रत्नानि तैर्भास्वरे कुण्डले तथा वैजयन्त्या वनमालया सह प्राचेतसं वारुणं छत्रं मेवंशभूतं मन्दरशिखरं महामणिञ्च कृष्णायार्पयामास॥ २३॥ अस्तौषीदिति। हे राजन्! देवो देववरैरर्चितश्च तं कृष्णं भक्त्या प्रवणा या धीस्तयोपलक्षिता तुष्टाव॥ २४॥

### श्रीविजयध्वजतीर्थकृता पदरत्नावली

( मूलम् ) तयातिविद्धो गरुडो मालाविद्ध इव द्विपः। न किञ्चिदपि राजेन्द्र चचाल नरकाहवे॥
ततः कार्मुकमादाय नरकः शरसञ्चयान्। मुमोच कृष्णे तान् सर्वानच्छिनत्केशवः शरैः॥
ततोऽर्धचन्द्रं नरकं सुसन्धाय शरासने। आकृष्टुकामं विज्ञाय तच्चापं केशवोच्छिनत्॥ क॥

ततः कालायसमयीं गदां गुर्वीं धरासुतः। आददे तां क्षुरप्रेण चकर्त मधुसूदनः॥ ख॥
ततो निशातं परशुं भीमः परबलार्दनः। प्राहिणोद्विष्णवे तं च चिच्छेद श्रीधरोऽसिना॥
ततः कृष्णाय चिक्षेप तोमरान्पञ्चसप्ततिम्।
चकार सिंहनादञ्च नरकः परवीरहा। तांस्तोमरान् कुरुश्रेष्ठ! शरेणैकेन केशवः॥
चिच्छेद यौगपद्येन तदद्भुतमिवाभवत्। आक्रष्टुकामम् आकर्णपूर्णमाकर्षणेच्छुकम्॥ क॥
नाम्ना क्षुरप्रेण शरेण॥ ख॥
क्षुरनेमिना निशितनेमिना॥ २१-२३॥
भक्त्या प्रवणया सततया धिया बुद्ध्या॥ २४॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

ततश्चामोघशूलहस्तं भौममालक्ष्य शीघ्रमिमं जहीति सत्यभामयोक्तः कृष्णस्तं जघानेत्याह—तदिति॥२१॥ हा हेति। "हाविषादशुगार्त्तिषु" इत्यत्र निन्दायाञ्चेति क्षीरस्वामी हा पापिष्ठ! नरक हा विश्वोद्वेजक! त्वं यन्मृतस्तत्साधु साध्वित्यूचुः विकिरन्त आच्छादयन्तः॥ २२॥ महामणिं मणिपर्वतम्॥ २३-२४॥

### गूढार्थदीपिनी

वितथोद्यमः व्यर्थप्रयत्नः॥ २१॥ तद्विसर्गात् शूलप्रक्षेपात् पूर्वमेव शिरः अपाहरत् चिच्छेद। क्षुरनेमिना क्षुरवत्तीक्ष्णधारेण॥ २२॥ किरीटं मुकुटम्। हाहेति दैत्याः साधु साधु इति ऋषय ऊचुरिति शेषः। माल्यैः पुष्पैः मुकुन्दं विकिरन्त आच्छादयन्त ईडिरे॥ २३॥ ततश्च भूः कुण्डले छत्रादिकं च वनमालया सह कृष्णम् आर्पयदित्यन्वयः। प्रतप्ते सुवर्णे खचितानि यानि रत्नानि तैः भास्वरे कुण्डले। वैजयन्ती पञ्चरत्नमयी। वनमालापत्रपुष्पमयी तया सह महान्तो मणयो यत्र तं मेरोरंशभूतं मन्दराचलशिखरम् प्राचेतसं वारुणं छत्रं च आर्पयत्॥ २४॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

शिरोऽपाहरत् सत्यभामानुज्ञयेति ज्ञेयम्॥ २१-२२॥ महान्तो मणयो यस्मिन् तं मणिपर्वतम्॥ २३-२४॥

### श्रीसत्यधर्मकृता श्रीभागवतटिप्पणी

वितथोद्यमो व्यर्थोद्यमो विगतं तथा सत्यं यस्मात्स वितथ उद्यमो यस्य सः। मिथ्या मृषा च वितथ इत्यमरोक्तेरयं वाच्यलिङ्गः शब्दः। तद्विसर्गाच्छूलोत्सर्जनात्। क्षुरवद्विद्यमाननेमिवता चक्रेण गजस्थस्य शिरोऽपाहरत्॥ ११॥ पृथिव्यां पतितमुज्वलत्प्राक्। इदानीं सद्यः पतितत्वात्तत्रापि मातर्येव पाताव्दभावित्युचितं भानम्! हाहेति नारका अवदन्निति शेषः। यद्वा हाहेति किं हससीत्याभाणकमूलमिदं सत्साध्विति हाहेति। ऋषयः सुरेश्वरा इत्यनेनान्वेति। मुकुन्दमाल्यैः पुष्पैर्विकिरन्तमीडिरेऽस्तुवन्॥ १२॥ हरिर्नरकं हत्वा आश्वयुजचतुर्दश्यां पौरमुख्यैः समाहूतो द्रष्टुकामः प्राग्ज्योतिषं प्राविशत्॥ १३॥ मणिपर्वतं सुरगिरित उत्कृत्य नीतम् सलिलस्रावि सदा वरुणसम्बन्धि छत्रं चापश्यत्॥१४॥ शक्राय मणिपर्वतं वरुणाय छत्रं च दैत्यकिङ्करैः प्राहिणोत्। त्रिविष्टपपर्यन्तं गरुडोपर्यारोप्य नीत्वेन्द्राय दत्वा दैत्यकिंकरैः प्राहिणोद्वरुणायेत्यर्थः। यथोक्तम्। समन्ततो योजनानां शते द्वे प्रवृद्धमिन्द्रस्य सरत्नपर्वतम्। नित्यामृतस्रावि जलेश्वरस्य छत्रं च दौर्भ्यां गरुडे न्यधाद्धरिरित्याचार्यैः। तांस्तान्पदार्थांस्तत्र प्रेषयामास। अनेन निस्पृहता ध्वनिता॥ १५॥ तान्देवान्विसृज्य राजाऽन्तःपुर इतरैर्नागन्तव्यमित्यमरपरित्यागः॥ १६॥ ततोऽन्तरागमनानन्तरं धरा कृष्णमुपेत्य सङ्गम्य प्रतप्तं जाम्बूनदं निष्ठापितमष्टापदं तदात्मके च ते रत्नैर्भास्वरे चेति ते। अदितिकुण्डले भगदत्तसंज्ञितं पौत्रं च तथा वैजयन्तीं मालां च निवेद्य॥ १७॥ अर्पयित्वा देववरार्चितं देवी प्राञ्जलिः प्रणता सती भक्तिप्रवणया भक्त्या सदा वक्रया धियाऽस्तौषीत्॥ १८॥

### श्रीमद्वल्लभाचार्य्यकृता सुबोधिनी

भगवान् पुनः शूलस्यापि माहात्म्यं स्थापनीयमिति, यस्मिन् क्षणे शूलं त्यक्ष्यति, तत्पूर्वक्षण एव सुदर्शनेन तस्य शिरोऽच्छिनदित्याह **तद्विसर्गादिति**। पूर्वमेवोत्पन्नप्रयत्नेन छेदनसमकालमेव विसर्गोऽपि जातः। अन्यथा स्थिते शूले सोऽवध्य इति केचित्। नेदं महादेवदत्तं शूलमित्यन्ये। किञ्च। स गजस्थः। आचमनाद्यभावान्न तस्मिन् शूले महादेवः सन्निहित इत्याह **गजस्थस्येति**। चक्रस्य सामर्थ्यं व्यावर्तयितुमाह **क्षुरनेमिनेति**॥ २१॥ ततस्तस्य शिरसः पुनर्योजनाभावाय विनियोगान्तरं वदन् वर्णयति **सकुण्डलमिति**। यथा भूमेः सकाशात् शिर एव प्रादुर्भूतमविकृतं तथा भातीति ज्ञापयितुं कुण्डलकिरीटयोर्वर्णनम्।

सम्यक् उज्ज्वलत् शिरः पतितं जातमित्यर्थः। ततो बभौ। भूमिरवहेलनं न करोतीति सम्यक् स्थापनात् शोभा। यथा तदीयः पुत्रः तस्यै समर्प्यते। इयं भूमिरभिमानिनी देवता, न त्विला भगवच्छक्तिः, सा आधिदैविकी। सत्यभामा त्वाधिदैविकी। तस्या आनयने पञ्च प्रयोजनानि। पूर्णो भवति शक्त्या सहितः, बलभद्रे शक्तिविभागे योन्यंशः पृथक्कृत इति। माहात्म्यं च प्रदर्शनीयम्। तद्वाक्येन नरकासुरोऽपि हन्तव्यः। सापत्न्यसहनार्थम्, अन्यथा सा स्त्र्यन्तरसद्भावं न सहेत। बलाद्धरणे तु दुष्टत्वात् मंस्यत इति। पारिजातहरणार्थं च। ततो लोकाः हाहेत्यब्रुवन्। ऋषयश्च स्वपुत्र इति स्वयमेव छिन्न इति। अन्ये च पुनः ऋषयः साध्विति। सुराश्च साध्वेव कृतमिति। अनुमोदनमेव कुर्वाणाः माल्यैः विकिरन्तः, नरकस्यापि मोक्षो दत्त इति, मुकुन्दमीडिरे। हाहेतीडिरे, साध्विति च, किमित्ययं पुत्रो मारित इति भगवतः पराक्रममुक्त्वा ईडिरे। अन्ये तु साध्वेव कृतमिति वदन्तः ईडिरे इति। पुष्पवृष्टिर्देवार्थं तद्वध इति सूचयति ॥ २२ ॥ यदर्थमयं हतः, तस्मिन् हते तज्जातमित्याह ततश्चेति। उपेत्य निकटे समागत्य। कृष्णत्वान्न तस्या भयम्। अदित्याः कुण्डले सर्वदैव प्रकर्षेण तप्तजाम्बूनदवत् रत्नवच्च भास्वरे। उभयमपि तत्र प्रकृतिभूतमिति द्वयमुक्तम्। वैजयन्तीं वनमालां च भगवद्दत्तां समर्पितवती। भगवत्पूजार्थं वा वैजयन्ती। वरुणेन निर्मितं समुद्रोद्भूतमिन्द्रस्यैव छत्रं इदमन्यद्वा भगवदर्थे दत्तम्। अथो महामणिः कौस्तुभसदृशः। अथो इत्यनेन पूर्वं भगवदीयमेव भगवते दत्तम्, इदं त्वतिरिक्तमिति पुत्रोपार्जितं दत्तवती। अथवा। वैजयन्त्या सह कुण्डले भूमिष्ठे, छत्रं स्वर्गस्थम्, मणिः पातालस्थ इति। उपलक्षणत्वेन त्रिलोक्यां यत्किञ्चिदुत्कृष्टं तत्सर्वं निवेदितवती। एतदरिक्तहस्तत्वार्थमेव। वस्तुतस्तु सर्वं भगवत एव, सा भार्या स पुत्र इति। अत एव पुत्रेण सह न भेद इति भगवदर्थमेव सङ्गृहीताः स्त्रिय इति अन्यावरोधस्थस्त्रीविवाहो न दुष्यति ।२३। अथापराधशान्त्यर्थं भिन्नप्रक्रमेण स्तोत्रं करोतीत्याह अस्तौषीदिति। ननु घातकः कथं स्तूयत इत्याशङ्क्याह विश्वेशमिति। पुत्रत्वादिसम्बन्धस्य प्रयोजकत्वाभावाय विश्वपदम्। स्तोत्रपरिज्ञानाय देवीति। ननु ( तथापि ) साम्प्रतमलौकिकं कृतमिति कथं स्तुतिरित्याशङ्क्याह। देववरैः साम्प्रतमेवार्चितमिति। प्राञ्जलिरिति नम्रता दीनता च सूचिता। प्रणतेति शरीरेण नम्रा। स्त्रीस्वभावात् दुःखभयव्यावृत्त्यर्थमाह भक्तिप्रवणया धियेति। भक्तिप्रवणा प्रतिबन्धकमप्यनादृत्य भक्तिगामिनी, यथा जलं निम्नगामि। बुद्धिश्चेत्तद्गता सा मनसोऽपि नियामिकेति सर्वमेव भक्तिप्रवणम्।

षड्भिः स्तुत्वा प्रार्थयते पौत्रजीवितमुत्तमम्। चतुर्भिर्नमनं प्रोक्तं सर्वभावप्रसिद्धये ॥
माहात्म्यं च स्वरूपं च ततो द्वाभ्यामुदीरितम् ॥ २४ ॥

### श्रीसुबोधिनी-सारः

वितथो निष्फल उद्यमो यस्य स भौमोऽच्युतं हरिं हंतुं शूलमाददे जग्राह। तस्य शूलस्य विसर्गात्प्रयोगात्पूर्वमेव गजस्थस्य हस्त्यारूढस्य नरकस्य शिरः क्षुरवत् तीक्ष्णा नेमिर्धारा यस्य तेन चक्रेण हरिः श्रीकृष्णोऽपाहरत् अच्छिनत् ॥ २१ ॥ कुंडलाभ्यां सहितं चारु सुंदरं किरीटं कुंडलं भूषणं यस्मिन् तत् समुज्ज्वलत् दीप्तिमत् पृथिव्यां पतितं बभौ शुशुभे हाहेत्यसुराः साधु इति ऋषयः ऊचुरिति शेषः। सुरेश्वरा देवेंद्राः माल्यैः पुष्पैर्मुकुंदं विकिरंत आच्छादयंतं ईडिरे तुष्टुवुः ॥ २२ ॥ ततोनंतरं भूस्तन्माता कृष्णमुपेत्य प्राप्य प्रतप्ते शुद्धे जांबूनदे सुवर्णे यानि रत्नानि तैर्भास्वरं कुंडले प्राचेतसं वारुणं छत्रमार्पयत् अथोनंतरं सवैजयंतया वनमालया सह महामणिमार्पयत् ॥ २३ ॥ अथ प्रांजलिः प्रणता देवी भूमिर्देववरैरर्चितं विश्वस्येशं हरिं भक्त्या प्रवणया द्रवीभूतया धिया बुद्ध्यास्तावीत् इडभाव आर्षः हे राजन्! ॥ २४ ॥

### श्रीविट्ठलरायात्मजश्रीवल्लभकृतलेखः

तद्विसर्गादित्यत्र। चक्रस्य सामर्थ्यमिति। नेमीनामेव सामर्थ्यं तेजोरूपत्वं चक्रसामर्थ्यं प्रकटितमित्यर्थः। सकुण्डलमित्यत्र। भूमिसत्यभामयोर्भेदमाहुः इयं भूमिरिति। न त्विलेति। 'श्रिया पुष्ट्ये'ति नवशक्तिषु गणिता सा आधिदैविकी इला नरकासुरमाता नत्वित्यर्थः। तर्हि सा इला का इत्यत आहुः सत्यभामा त्विति। सत्यभामा तु इलारूपा आधिदैविकी भवत्येवेत्यर्थः।

### गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

तया शक्त्या विद्धस्ताडितोऽपि गरुडो नाकम्पत। अन्यत्र प्रबलत्वेऽपि गरुडे शक्तेरकिञ्चित्करत्वं सूचयन् दृष्टान्तमाह—मालया हतो यथा द्विपो गजो न कम्पते। एवं गरुडे वितथोद्यमः सन् भौमोऽच्युतं हन्तुं शूलमाददे स्वीकृतवान् ॥ २२ ॥ हरिस्तु तद्विसर्गात् शूलप्रक्षेपात् पूर्वमेव क्षुरस्येव तीक्ष्णा नेमिः धारा यस्य तेन चक्रेण गजस्थस्य नरकस्य शिर अपाहरत् चिच्छेद ॥२३॥ कुण्डलाभ्यां सहितं सुन्दरं किरीटं भूषणं यस्य तत्, अतएव सम्यक् उज्ज्वलत् प्रकाशमानं तस्य शिरो पृथिव्यां पतितं जातम्। तदा च नरकसम्बन्धिनो हाहेति, ऋषयस्तु साधुसाध्वित्यूचुः। सुरेश्वरास्तु कुसुमैर्मुकुन्दं विकिरन्त आच्छादयन्त ईडिरे तुष्टुवुः ॥ २४ ॥

## अन्वितार्थप्रकाशिका

नेति । तया शक्त्या विद्धोऽपि गरुडो मालाहतो द्विप इव नाकम्पत । एवं गरुडे वितथोद्यमः स भौमोऽच्युतं हन्तुं शूलमाददे स्वीकृतवान् ॥ २१ ॥ ततश्चामोघशूलहस्तं भौममालक्ष्य शीघ्रमिमं जहीति सत्यभामयोक्तः कृष्णस्तं जघानेत्याह— तदिति हरिस्तु तद्विसर्गात् शूलप्रक्षेपात् पूर्वमेव क्षुरस्येव तीक्ष्णा नेमिः धारा यस्य तेन चक्रेण गजस्थस्य नरकस्य शिर अपाहरत् चिच्छेद ॥ २२ ॥ सकुण्डलमिति ॥ कुण्डलाभ्यां सहितं चारु सुन्दरं किरीटं भूषणं यस्य तत् अत एव सम्यक् उज्ज्वलत् प्रकाशमानं तस्य शिरः पृथिव्यां पतितं जातं तदा च तदा नरकसंबन्धिनो हा हेति ऋषयस्तु साधु साध्वित्यूचुः । यद्वा । "हा विषादशुग्र्तिषु" इत्यत्र निन्दायां चेति क्षीरस्वामी । हा पापिष्ठेति यत्त्वं मृतस्तत्साध्विति च ऋषय ऊचुरिति । सुरेश्वरास्तु माल्यैः कुसुमैर्मुकुन्दं विकिरन्तं आच्छादयन्तम् ईडिरे तुष्टुवुः । आमभाव आर्षः ॥ २३ ॥ ततश्चेति ॥ नरकस्य माता भूः कृष्णमुपेत्य प्रतप्ते अत्युज्ज्वलिते जाम्वूनदे स्वर्णे खचितानि यानि रत्नानि तैर्भास्वरे कुण्डले अथो तथा वैजयन्त्या रत्नमिश्रितबहुगुणकुसुमग्रथितया वनमालया सह प्राचेतसं वारुणं छत्रं महामणिं मेरुंशभूतमन्दरगिरिशिखरं चार्पयत् ॥ २४ ॥

## श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्

क्षुरनेमिना तीक्ष्णधारेण ॥ २१ ॥ शिरो बभौ । ऋष्यादय ऊचुरिति शेषः । माल्यैः । विकिरंतो वर्षंतः ॥ २२ ॥ भूः पृथिवी । प्रतप्ते देदीप्यमाने जांवूनदेहेव कांचने खचितानि यानि रत्नानि तैर्भास्वरे कुंडले अदितिकर्णभरणे प्राचेतसं वारुणं छत्रं च । महामणिं मंदरशृंगवैजयंतीपंचवर्णरत्नमाला तत्सहितया वनमालाया सहार्पयत् ॥ २३ ॥ प्रांजलिः कृतकरसंपुटा भक्तेः प्रवणया वशया बुद्ध्या ॥ २४ ॥

## भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

तदिति ॥ हरिः श्रीकृष्णः, तद्विसर्गात् शूलप्रयोगात् पूर्वं एव, गजस्थस्य नरकस्य, शिरः क्षुरनेमिना क्षुरवत्तीक्ष्णधारावता, चक्रेण अपाहरत् ॥ २१ ॥ सकुण्डलमिति ॥ सकुण्डलं कुण्डलाभ्यां सहितं, चारुणा सुन्दरेण किरीटेन भूषणं भूषितं, समुज्ज्वलत्, तच्छिरः, इति शेषः । पृथिव्यां पतितं सत्, बभौ । नरकसंबन्धिनः हा हेति, ऋषयस्तु, साधु इति ऊचुः । सुरेश्वरा देवाः, माल्यैः पुष्पैः, विकिरन्तो वर्षन्तः सन्तः, मुकुन्दं श्रीकृष्णं ईडिरे तुष्टुवुः ॥ २२ ॥ ततश्चेति ॥ ततश्च, भूर्भूमिर्नरकस्य मातेत्यर्थः । कृष्णं उपेत्य, प्रतप्ते जाम्वूनदे यानि रत्नानि तैर्भास्वरे, कुण्डले, तथा सवैजयन्त्या, वनमालया, वैजयन्त्या वनमालया, सहेत्यर्थः । प्राचेतसं वारुणं छत्रं, अथो महामणिं मेरुंशभूतं मणिप्रधानं, मन्दरशिखरं, आर्पयत् अर्पयामास ॥ २३ ॥ अस्तौषीदिति ॥ अथ हे राजन्, देवी भूः, देवेषु वरा ब्रह्मादयस्तैरर्चितस्तं, विश्वेशं जदेकनाथं कृष्णं, भक्त्या प्रवणा तया, धिया प्राञ्जलिः प्रणता सती, अस्तौषीत् ॥ २४ ॥

## कृष्णप्रिया

जब भौमासुर के सारे प्रयत्न निकम्मे हो गये तब उसने भगवान् श्रीकृष्ण को मारने के लिये अपने हाथ में त्रिशूल उठाया । नरकासुर ने उठाया तो सही, अभी छोड़ा तो नहीं उसके पूर्व ही द्वारिकेश श्रीहरि ने छुरे के समान अतिशय तीक्ष्ण धार वाले सुदर्शन चक्र से गजराज के ऊपर बैठे हुए भौमासुर का सिर काट दिया ॥२१॥ किरीट और कुण्डलों के जगमगाता तेजोमय भौमासुर का मस्तक धरणी के ऊपर गिर पड़ा । उसको देखकर भूमि पर रहे हुए भौमासुर के स्वजन 'हा हा' हाहाकार कर पुकारने लगे, ऋषिजन मुनिजन एवं सज्जन "साधु" "साधु" कहने लगे और देवतालोग भगवान् श्रीकृष्ण ऊपर कुसुम वर्षा के साथ यशोगान करने लगे ॥ २२ ॥ भौमासुर के बध के पीछे पृथ्वी देवी श्रीकृष्ण भगवान के पास आकर भक्तिभावपूर्वक नाथ के वक्षःस्थल में वैजयन्ती मालाजी को पधराने के पश्चात् वनमाला भी पहिना दी और देव माताजी के तेजोमय एवं तपाये हुए विशुद्ध सुवर्ण एवं मणिमण्डित दो कुण्डल भगवान् के श्रीचरणों में समर्पित कर दिये, पुनः वरुण देव का छत्र और साथ में एक दिव्यमणि भी भगवान् को समर्पित की ॥ २३ ॥ पुनः भूदेवी इन्द्रादि समर्थ देवों से समर्चित्त विश्वनाथ भगवान् को नमस्कार पुरःसर करवद्ध अञ्जलि पुरःसर भक्तिप्रह्व हृदय से निजनाथ की स्तुति करने लगी ॥ २४ ॥

## [1]भूमिरुवाच

**नमस्ते देवदेवेश शङ्खचक्रगदाधर । भक्तेच्छोपात्तरूपाय परमात्मन् नमोऽस्तु ते ॥ २५ ॥**

**नमः पङ्कजनाभाय नमः पङ्कजमालिने । नमः पङ्कजनेत्राय नमस्ते पङ्कजाङ्घ्रये ॥ २६ ॥**

**नमो भगवते तुभ्यं वासुदेवाय [2]विष्णवे । पुरुषायादिवीजाय पूर्णवोधाय ते नमः ॥ २७ ॥**

**अजाय जनयित्रेऽस्य ब्रह्मणेऽनन्तशक्तये । [3]परावरात्मन् भूतात्मन् परमात्मन् नमोऽस्तु ते ॥ २८ ॥**

---

१. भूरुवाच–प्रा. पा. । २. चक्रिणे–प्रा. पा. । ३. चराचरात्मन् लोकेश–विज. त्मन् भूतानां ।

### कर्दमक्षमा

अन्वयः—अथ हे राजन्, प्राञ्जलिः, देवी, प्रणता, भक्तिप्रवणया, धिया, देववरार्चितम्, विश्वेशम्, अस्तौषीत् ।।२५।। भूमिरुवाच, हे देवदेवेश ! हे शङ्खचक्रगदाधर ! ते नमः, भक्तेच्छोपात्तरूपाय, हे परमात्मन्, ते तुभ्यम्, नमः, अस्तु ।।२६।। पङ्कजनाभाय, ते नमः, पङ्कजमालिने ( ते ) नमः, पङ्कजनेत्राय, पङ्कजांघ्रये ते नमः ।। २७ ।। भगवते, वासुदेवाय, विष्णवे, तुभ्यम्, नमः, आदिबीजाय, पुरुषाय, पूर्णबोधाय ते नमः ।। २८ ।।

### श्रीधरस्वामिविरचिता भावार्थदीपिका

ऐश्वर्यं ज्ञात्वा भूमिः स्तौति । नमस्त इति । परमात्मन् देवाद्यंतर्यामिन् ।। २५ ।। येन मंत्रेण कुंत्याः प्रसन्नः पूर्वमासीत्तेन मंत्रेण नमस्यति । नम इति । पंकजं नाभौ यस्य तस्मै । जगत्कारणायेत्यर्थः । अत एव सत्कीर्तिमयी पंकजमाला विद्यते यस्य तस्मै । एवंभूतं ध्यायतां पंकजवत्सुप्रसन्ने तापोपशमने नेत्रे यस्य तस्मै । पंकजवत्सुसेव्यौ पंकजांकितौ वांघ्री यस्य तस्मै नम इति ।। २६ ।। किञ्च भगवते निरतिशयैश्वर्याय वासुदेवाय सर्वभूताश्रयायात एव विष्णवे व्यापिने । न हि सर्वभूताश्रयत्वं परिच्छिन्नस्य संभवतीति कुतः सर्वाश्रयत्वं तत्राह । पुरुषाय सर्वस्मात्कार्यात्पूर्वमेव सते "पूर्वमेवाहमिहासामिति तत्पुरुषस्य पुरुषत्वम्" इति श्रुतेः । एतदपि कुतः । आदिबीजाय आदेर्जगत्कारणस्यापि कारणाय । एवमपि न मृदादिवज्जाड्यमित्याह । पूर्णबोधायेति ।। २७ ।। नन्वेवमपि स्वस्य कारणात्पूर्वं सत्त्वं न स्यादत आह । अजायेति । स्वयमजाय । अस्य च जगतो जनयित्रे । उभयत्रापि क्रमेण हेतुद्वयम् । ब्रह्मणे बृहते अनंतशक्तय इति च । बृहत्त्वादजत्वमनंतशक्तित्वात्तज्जनयितृत्वमित्यर्थः । ननु पित्रादयः पुत्रादीनां जनकास्तेषां च तत्पूर्वे तेषां च भूतानि तेषां च स्वकर्मद्वारेण जीवाः किमत्राहं तत्राह परावरात्मन्नित्यादि । पुत्राद्यात्मकत्वात्त्वमेव जनक इत्यर्थः ।। २८ ।।

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

देवाद्यंतर्यामिन्निति स्वस्यापि तदधीनत्वमाह ।। ननु त्वमपि देव्यसि कथं मत्स्तवने प्रवृत्ता, तत्राह-हे देवदेवेश, त्वं तु देवानामिंद्रादीनामपि ये देवा द्योतका ब्रह्मादयस्तेषामपि ईशस्तुत्यर्हो मम तु तत्सृष्टायास्तत्र का वार्तेति भावः । अतस्तेषामवनार्थमेव शंखादिशस्त्रधरोऽसीति भावः । यत्र । तत्र हेतुत्वेन संबोधयति-हे परमात्मन्निति । त्वां विना ते न किञ्चित्कर्तुं समर्था इति भावः । अतस्ते नमोऽस्तु । यद्वा-परमात्मन्नित्यस्यायं भावः-भगवंस्त्वद्द्वेषिमातुरपि ममान्तःकरणं जानास्येवेति तात्पर्यम् ।२५। इत्यर्थ इति-न तु योगवृत्त्या नाभिस्थापितकमलः कश्चिदपरो ग्राह्य इति भावः । अत एव जगत्कारणत्वादेव । एवम्भूतं जगत्कारणमुत्तमकीर्तिम् । न हि पंकजं प्रायः सेव्यत इत्यरुच्याह-पंकजांकिताविति ।। मन्नेत्रादिसर्वेन्द्रियकृतार्थीकर्तुमेवात्रागतोऽसीति प्रेम्णा माधुर्यं वर्णयति-नम इति । पंकजयोनितया नाभेस्सरोवरसाम्येन गांभीर्यमभिप्रेतम् । यद्वा-श्रीकृष्णनाभेः पद्माकारत्वात् । भक्त्युद्रेकेण चरणयोरन्ते निर्देशः । चरणयोरेकस्यैव पंकजांकितत्वेऽपि सजातीयत्वेनैक्यविवक्षया स्वामिचरणैः पंकजांकिताविति व्याख्यातम् ।। २६ ।। पुनर्हरेरैश्वर्यं द्योतयंत्याह-किञ्चेति । अत एव सर्वभूताश्रयत्वादेव । तदेवाह-न हीति । सर्वाश्रयत्वे हेतुमाशंकते-कुत इति । एतत् सर्वकार्यपूर्वकालीनत्वम् । जगत्कारणस्य ब्रह्मादेः । एवमपि बीजरूपत्वेऽपि । पूर्णबोधाय ज्ञानैकरूपाय ।। तवैश्वर्यामृतसिंधावप्यहं खेलयंत्यस्मीत्याह—नम इति । भगवते निरतिशयैश्वर्याय । भगवत्त्वेपि वासुदेवाय वासुदेवो भगवताम्' इत्युक्तेर्वसुदेवनंदनाय, स्वयं भगवत इत्यर्थः । वसुदेवपुत्रत्वेऽपि विष्णवे सर्वव्यापकाय । सर्वव्यापकत्वेऽपि पुरुषाय पुरुषवत्परिच्छिन्नायेत्यर्थः । पुरुषवत्परिच्छिन्नत्वेऽप्यादिबीजाय सर्वादेः । श्रीनारायणस्याप्याविर्भावप्रयोजकब्रह्ममोहनलीलायां तथा दर्शनात् । तादृशादिबीजत्वेऽपि पूर्णश्चासौ बोधश्चेति, पूर्णं ज्ञानस्वरूपं यद्ब्रह्म तस्मै । अप्राकृतानंतविशेषत्वेऽपि त्वमेव निर्विशेषं ब्रह्मेत्यर्थः । तोषिणीकारास्तु—पुरुषाणां निजजनानामायः प्रेमादिलाभस्तस्यादिबीजाय कारणाय तद्दात्रे इत्यर्थमाहुः ।। २७ ।। पुनराशंकते-नन्विति । एवमपि पूर्णबोधरूपत्वेपि । अजाय कारणवर्जितायेत्यर्थः । अस्य विश्वस्य । उभयत्रापि-अजत्वे जनयितृत्वे च । इत्यर्थ इति-ब्रह्मण एवाजत्वं तद्भिन्नस्य तज्जत्वादनंतशक्तेरेव जनकत्वं, तद्भिन्नस्य जन्यत्वादिति भावः । अत्राऽऽशंकते-नन्विति । अत्र जनने । अहं किं, क इत्यर्थः । इत्यर्थ इति-पित्रादीनामपि जन्यत्वश्रुतेः परमकारणस्य तवैव मुख्यं जनकत्वमित्याशयः ।। त्वमजोऽपि अथ चास्य विश्वस्य जनयिता, जनयितापि त्वमेव ब्रह्म निर्विशेषरूपं, निर्विशेषस्वरूपमपि त्वमेवानंतशक्तिः सविशेषस्वरूपश्च, अनंतशक्तित्वेऽपि तव तिस्र एव शक्तयस्तटस्थबहिरंगांतरंगलक्षणाः, ताश्च त्वमेव इत्याह-परावरेषामुत्कटनिकृष्टानामात्मा जीवस्त्वमेव त्वमेव भूतात्मा पञ्चभूतात्मको देहस्त्वमेव परमात्मांतर्यामी ।। २८ ।।

### श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी

देवानां देवा ब्रह्मादयस्तेषामीश परिपालक ! अत एव दुष्टवधार्थं शङ्खादिधर ! किञ्च भक्तानां तेषामेवेच्छया उपात्तानि प्रकटीकृतानि श्रीमत्स्यादिरूपाणि येन तस्मै किञ्च तेषां सद्बुद्ध्यादिप्रवर्त्तकश्च त्वमेवेत्याशयेनाह—परमात्मन्निति ।। २५ ।।

देवदेवेशत्वमुपपादयन्ती स्तौति—नम इति। एतदादिपद्यद्वयं तैर्व्याख्यातं तत्र पङ्कजाङ्कितावङ्घ्री इत्येकस्यैव तदङ्कितत्वेपि सजातीयत्वेऽपि नैक्यविवक्षयेति मन्तव्यं यद्वा अथ सौन्दर्य्यं वर्णयति-पङ्कजेति। पङ्कजयोनितया नाभेः सरोवरसाम्येन (भी) गम्भीरताभिप्रेता यद्वा पङ्कजवन्नाभिर्यस्य श्रीकृष्णनाभेः पद्माकारत्वात् पङ्कजनाभत्वादीनां त्रयाणां यथोत्तरं सौन्दर्य्यहेतुत्वे श्रेष्ठ्यम् अन्ते तु भक्त्युद्रेकेण श्रीचरणयोः सौन्दर्य्यनिर्द्देशः॥ २६॥ ईदृशन्तु सौन्दर्य्यादिकं युक्तमेवेत्याह—नम इति। भगवते निजाशेषगुणप्रकटनपराय यतः वसुदेवनन्दनाय अत एव विष्णवे स्वमहिम्ना च जगद्व्यापकाय किञ्च पुरुषाणां निजजनानाम् आयः प्रेमादिलाभस्तस्यादिबीजाय न च तदर्थं तेषां विज्ञापनापेक्षास्तीत्याह-पूर्णेति॥ २७॥ श्रीवसुदेवसुतस्य तवैवैतदैश्वर्य्य मित्याह-अजायेत्यादि॥ २८॥

### श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी

भक्तिप्रवणधीत्वेन पुनः पुनर्नमन्ती, तत्रापि प्रागेव वन्दमाना स्तौति—नमस्त इति। देवानां देवाः श्रीब्रह्मादयस्तेषामीश! परिपालक! अतएव दुष्टवधार्थं शङ्खादिधर! किञ्च, भक्तानां तेषामेवेच्छया उपात्तानि प्रकटितानि श्रीमत्स्यादिरूपाणि येन तस्मै; किञ्च, तेषां सर्व्वसद्बुद्ध्यादि-प्रवर्त्तकश्च त्वमेवेत्याशयेनाह—परमात्मन्निति। शङ्खादीनां तत्तत्क्रमेणोक्तिः प्रायो वामाधः कराद्दक्षिणाधः करान्तं क्रमेण तत्तद्धारणात्। तत्र च भार्य्यात्वेन वामस्थितया तया प्राग् वामत एव वर्णनादिति दिक्। एवं श्रीनारदादिवच्चतुर्भुजत्वेन तथासौ दृश्यत इति ज्ञेयम्। यद्वा, ननु देवदेवशः श्रीनारायण एव, सत्यम्, शङ्खादिधारणात्; स एव त्वमित्याह—शङ्खेति। ननु मम नारायणत्वे कथं कदाचिद्द्विभुजत्वम्? तत्राह—भक्तेच्छयोपात्तं रूपं मनुष्यमूर्त्तिर्द्विभुजत्वादिना सौन्दर्य्यं वा येन तस्मै, तथापि निजशक्त्या सर्व्वं व्याप्नुवन्नन्तरपि भासीति। किंवा अतएव सर्व्वेषां प्रियतमोऽसीत्याह—परमात्मन्निति॥ २५॥ देवदेवेशत्वमुपपादयन्ती स्तौति—नम इति। एतदादिपद्यद्वयं तैर्व्याख्यातम्। पक्षान्तरे च सौन्दर्य्यमेव वर्णयति—पंकजेति। पंकजयोनितया नाभेः सरोवरसाम्येन गभीरताभिप्रेताः यद्वा, पंकजवन्नाभिर्यस्य, कृष्णनाभेः पद्माकारत्वात् पंकजनाभत्वादीनां यथोत्तरं सौन्दर्य्यहेतुत्वे श्रैष्ठ्यम्, अतएव भक्त्युद्रेकेण श्रीचरणयोः सौन्दर्य्यविशेषापेक्षयान्ते निर्द्देशः॥ २६॥ ईदृशन्तु सौन्दर्य्यादिकं युक्तमेवेत्याह—नम इति। भगवते निजाशेषभगवत्ताप्रकटनपराय, यतो वसुदेवनन्दनाय, अतएव विष्णवे स्वमहिम्ना जगद्व्यापकाय, तच्चान्तर्वहिश्चेत्याह—पुरुषाय, अन्तर्य्यामितया सर्व्वेषां हृदि सदा वर्त्तमानाया किञ्च, आदिबीजाय मधुरमधुरविचित्रबाल्यादिक्रीड़ाया निदानाय—अन्यत्र तादृशबाल्यक्रीड़ाद्यविस्तारणात्। यद्वा, किञ्च, पुरुषाणां निजजनानामायः प्रेमादिलाभस्तस्यादिबीजाय, न च तदर्थं तेषां विज्ञापनापेक्षास्तीत्याह—पूर्णेति। यद्वा, किञ्च, पूर्णा आत्मारामास्तेषामपि बोधो मुक्ति तुच्छताया भक्त्युत्कृष्टतायाश्च ज्ञानम्, किंवा बोधयति भगवत्त्वादिकमिति बोधो भक्तियोगो यस्मात्तस्मै, तेषामपि स्वस्मिन् भक्तौ प्रवर्त्तकायेत्यर्थः। तथा च श्रीकुन्तीस्तुतौ (भा० १।८।२०) 'तथा परमहंसानां मुनीनाममलात्मनाम्। भक्तियोगविधानार्थं कथं पश्येमहि स्त्रियः॥' इति॥ २७॥ अजायेति सदातनतया तस्म कारणराहित्यमुक्तम्, परेषां कारणानां महदादीनाम्, अवरेषां च कार्य्याणां ब्रह्माण्डादीनाम्, किंवा परे उत्कृष्टाः श्रीब्रह्मादयः, अवरे अपकृष्टाः स्थावरादयस्तेषामात्मन्निति जीवानां भगवदंशतयाभेदाभिप्रायेण न केवलमात्मा, तेषामन्तर्य्यामी च त्वमेवेत्याह—हे परमात्मन्निति; अन्यत्तैर्व्याख्यातम्। पक्षान्तरे श्रीवसुदेवपुत्रतया परिच्छिन्नवद्दृश्यमानरूपत्वेऽपि बहिरन्तर्व्यापकत्वं घटत एवाद्भुतानन्तशक्तित्वादित्याह—अजायेति। निर्व्विकारायाजन्मविकाराय,—जन्मविकाराभावेन तदनन्तरान्यविकाराणामप्यभावात्। तथाप्यस्य विश्वस्य जनयित्रे। ननु निर्व्विकारस्य जनयितृत्वं किल विरुद्धं स्यात्? परमेश्वरत्वात् सर्व्वं घटेतैवेत्याह—ब्रह्मणे ब्रह्मघनमूर्त्तये, अतएवानन्तशक्तये, अन्यत् समानम्। तत्रैव पक्षान्तरे निजजनलाभनिदानत्वादिकमेव दर्शयति—अजायेति। ब्रह्मणे श्रीब्रह्मार्थमस्य विश्वस्य बोधस्य वा जनयित्रे, श्रीब्रह्मणस्तत् पुरुषतां दर्शयंस्तमेव विशिनष्टि—अजायेति; आत् विष्णोर्जायत इत्यजस्तस्मै, जननञ्च बह्वाश्चर्य्यमयत्वादिनेत्याशयेनाह—अनन्तेति। अनेन महावात्सल्यञ्च दर्शितम्। यद्वा, ननु श्रीब्रह्मैव विश्वं सृजति? सत्यम्, त्वदद्भुतशक्त्यै वेत्याशयेनाह—अनन्तेति। ननु स्वीयानां तथास्तु नाम, आत्मारामाणां भक्तौ प्रवर्त्तनं कुतः? निजकारुण्यप्रभावादेवेत्याह—परेति; परे पित्रादयः, अवरे मात्रादयस्तेषामात्मन्! स्नेहेन पुत्रादिपालने प्रवर्त्तक! पित्रादिभ्योऽप्यधिकाधिकं सहजं त्वत्कारुण्यमित्याह—परमात्मन्निति। त्वत्कारुण्यार्णवांशविभागमात्रलाभे नैवान्येषां सर्वेषां कारुण्योदयादिति॥ २८॥

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका

स्तुतिमेवाह-नमस्त इति। तावत्परत्वभक्तानुग्रहशीलत्वसर्वान्तिरात्मत्वादिविशिष्टं स्तुवन्ती नमस्करोति। देवानामिन्द्रादीनां देवो ब्रह्मा तस्येश भक्तानुग्रहेच्छया उपात्तरूपाय गृहीतविग्रहाय तुभ्यं हे परमात्मन्! नमः॥ २५॥ पङ्कजनाभायेति मन्त्रेण विशेषेण नमस्करोति-नम इति। पङ्कजं चतुर्मुखोत्पत्तिस्थानभूतं नाभिः यस्य तस्मै जगत्कारणभूताय इति भावः। अतएव सत्कीर्त्तिमयी पङ्कजमाला यस्य तस्मै पङ्कजनेत्राय पङ्कजवत्प्रपन्नजनतापत्रयोपशमननेत्राय पङ्कजवत्सौगन्ध्यसौकुमा-

र्य्यादियुक्ताङ्घ्रये अनेन भक्तैर्ध्येयत्वमुक्तम् ॥ २६ ॥ अथ ध्येयत्वसमनियतकारणत्वविशिष्टं नमस्करोति—नमो भगवते इति। भगवत इति कारणत्वोपयुक्तगुणपूर्त्तिरुच्यते आदिवीजाय कारणकारणाय अनेन सृष्टिकारणत्वमुक्तम् अथ स्थितिकारणत्वमाह—वासुदेवाय विष्णवे पुरुषायेति—स्थितिर्हि मन्वाद्यन्तःप्रवेशस्वावतारादिभिः तत्र वासुदेवायेत्यनेन वसुदेवपुत्रत्वादिरूपस्वावतारेण स्थितिरभिप्रेता पुरुषायेत्यनेन मन्वादिपुरुषशरीरान्तःप्रवेशेन विष्णवे इत्यनेन कृत्स्नजगदन्तरात्मतया चाभिप्रेता पूर्णवोधायेत्यनेन लयकारणत्वं सूचितं प्रलयदशायां स्वानन्दानुभवपूर्णाय असहायत्वेनावस्थितायेत्यर्थः ॥ २७ ॥ अथ कारणत्वप्रयुक्तविकारादिदोषप्रसङ्गं वारयन्ती नमस्करोति । अजायेति । अस्य जगतो जनयित्रे अनेन निमित्तकारणत्वमुक्तम् उपादानकारणत्वन्त्वादिवीजायेति पुरस्तादेवोक्तं तथाप्यजाय कार्यगतोत्पत्त्यादिविकाररहिताय विकाराणां स्वशरीरभूतप्रकृतिपुरुषगतत्वादिति भावः। न हि लोके किञ्चिदेवं दृष्टमित्येवम्विधदुर्घटत्वशङ्कां व्यावर्त्तयति—अनन्तशक्तय इति । अनन्ताः अपरिमिताः शक्तयः स्वासाधारणाः अग्न्यादेर्दाहकत्वादय इव यस्य तस्मै ब्रह्मणे इति दृष्टान्तार्थं यथा स्वरूपेण गुणैश्च निरतिशयवृहत्त्वन्त्वदसाधारणं तथा कारणत्वमजत्वञ्चेति तर्हि जगदुपादानत्वं केनाकारेणेत्यक्षपेक्षायां "नामरूपयोर्निर्वहिता ते यदन्तरा तद्ब्रह्म" इतिश्रुत्युक्तविधया चिदचिद्गतनामरूपनिर्वाहकत्वोपयुक्तान्तरात्मत्वेनेत्यभिप्रेत्य सम्बोधयति—परावरात्मन् उच्चावचजीवान्तरात्मन्! भूतात्मन् अचिदन्तरात्मन् अचिदन्तरात्मत्वं जीवसाधारणमिति तद्विशेषे पर्य्यवसाययति—परमात्मन्निति। परमात्मशब्दश्च गीताचार्येण निरुक्तः "यो लोकत्रयमाविश्य विभर्त्यव्यय ईश्वरः" इति जीव आत्मापि स्वभावेन व्ययः त्वन्तु स्वरूपतः स्वभावतश्चाव्ययः इत्यभिप्रेतम् ॥ २८ ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

भक्तेच्छया उपात्तं स्वीकृतं रूपम् ॥ २५-२६ ॥ वासुदेवाय सर्वत्र स्थित्वा द्योतमानाय विष्णवे सच्चिदानन्दरूपाय पुरुषाय पूर्णषड्गुणाय आदेर्ब्रह्मणो बीजाय व्यञ्जकाय ॥ २७ ॥ अस्य प्रपञ्चस्य जनयित्रे उत्पादकाय ब्रह्मणे वेदादिशब्दराशिवेद्याय सर्वशब्दवाच्यत्वे हेतुमाह—अनन्तेति । "अनन्ता वै वेदाः" इति श्रुतेः। चराचरात्मन् चराचरमात्मा देहः प्रतिमास्थानीयो यस्य स तथा परमात्मन् प्रत्यक्स्वरूप ॥ २८ ॥

### श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः

भक्तेच्छोपात्तरूपायेत्यादि । भक्तैः स्वेच्छयोपात्तं मनसि गृहीतं रूपं यस्य ॥ २६-४५ ॥

इति श्रीदशमे श्रीबृहत्क्रमसन्दर्भे एकोनषष्ठितमोऽध्यायः ॥ ५९ ॥

### श्रीनाथचक्रवर्तिपादविरचिता चैतन्यमतमञ्जूषा

भक्तैरिच्छया स्वेच्छया उपात्तं मनसि गृहीतं रूपं यस्य ॥ २६-४५ ॥

इत्यूनषष्ठितमोऽध्यायः ॥ ५९ ॥

### श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शिनी

परमात्मन्निति। त्वद्विद्विषो जनन्या अपि ममान्तःकरणं त्वं जानास्येवेति भावः ॥ २५ ॥ मन्नयनादिसर्वेन्द्रियकृतार्थीकरणायागतोऽसीति माधुर्यं वर्णयति—नम इति ॥ २६ ॥ तवैश्वर्य्यामृतसिन्धावप्यहं खेलयन्त्येवास्मीत्याह—नम इति। भगवते निरतिशयैश्वर्य्याय भगवत्त्वेऽपि वासुदेवाय 'वासुदेवो भगवताम्" इत्युक्तेर्वसुदेवनन्दनाय स्वयं भगवते इत्यर्थः वसुदेवपुत्रत्वेऽपि विष्णवे सर्वव्यापकाय सर्वव्यापकत्वेपि पुरुषाय पुरुषवत् परिच्छिन्नायेत्यर्थः। पुरुषवत् परिच्छिन्नत्वेपि आदिबीजाय सर्वादिः श्रीनारायणस्याप्याविर्भावप्रयोजकाय ब्रह्ममोहनलीलायां तथा दर्शनात् तादृशादिबीजत्वेऽपि पूर्णश्चासौ बोधश्चेति पूर्णं ज्ञानस्वरूपं यद्ब्रह्म तस्मै अप्राकृतानन्तविशेषवत्त्वेऽपि त्वमेव निर्विशेषं ब्रह्मेत्यर्थः ॥ २७ ॥ अजायेति त्वमजोऽप्यथ चास्य विश्वस्य जनयिता जनयिताऽपि त्वमेव ब्रह्म निर्विशेषं स्वरूपं निर्विशेषरूपमपि त्वमेवानन्तशक्तिः सविशेषस्वरूपञ्च अनन्तशक्तित्वेऽपि तवतिस्र एव शक्तयस्तटस्थबहिरङ्गान्तरङ्गलक्षणास्ताश्च त्वमेव इत्याह—परावरेषामुत्कृष्टनिकृष्टानामात्मा जीवस्त्वमेव त्वमेव भूतात्मा पञ्चभूतात्मको देहः त्वमेव परमात्मा अन्तर्यामी ॥ २८ ॥

### गूढार्थदीपिनी

प्रवणया वशीकृतया । देववरैर्ब्रह्मादिभिः ॥ २५ ॥ उपात्तं गृहीतम् रूपं येन ॥ २६-२८ ॥

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः

भक्तेच्छाविष्कृतनिरतिशयमङ्गलमूर्ति भगवन्तं स्तौति—नम इति द्वाभ्याम् ॥ २५-२६ ॥ जगद्धेतुतया स्तौति—न इति। आदिबीजाय नमः प्रधाने अतिव्याप्तिं वारयति पुरुषायेति जीवे प्रतिव्याप्तिं वारयति पूर्णबोधाय न तु आदिबीजस्येह

कुतः सम्भव इत्यत आह—वासुदेवाय वसुदेवापत्याय वसुदेवापत्यत्वे परिच्छिन्नता स्यादत आह विष्णवे व्यापिने ननु व्यापिनः कथं गमनागमनादिकं घटेत इत्यत आह भगवते अचिन्त्यैश्वर्याय ॥ २७ ॥ आदिबीजायेत्यनेन भगवतो विश्वोत्पादकस्योत्पादकं नास्तीति सूचितं तत्स्फुटतया दर्शयति अस्य विश्वस्य जनयित्रे विश्वजनयितृत्वयोग्यतां दर्शयति—ब्रह्मणे इत्यादिना। **ब्रह्मणे** निरतिशयवृहत्स्वरूपगुणाय अनन्ताः अपरिमिताः चेतनाचेतनरूपाः शक्तयो यस्य तस्मै बहुव्रीहिना शक्तितद्वतःरत्यन्तभेदप्रतीतिरजस्तमोद्वैताद्वैतलक्षणं तादात्म्यं सम्बन्धं दर्शयितुं सम्बोधयति परावरात्मन् ब्रह्मादिनरकपर्यन्तचेतनानामात्मन् ! भूतात्मन् भूताद्यन्वेतनात्मन् ते नमोऽस्तु ननु चेतनानामचेतनानाञ्चाहमेवात्मा चेत्तर्हि सर्वे दोषा बहुत्वजडत्वादयोऽपि भवेयुरित्यत आह—परमात्मन्निति ॥ २८ ॥

**श्रीसत्यधर्मकृता श्रीभागवतटिप्पणी**

हे देवदेवेश देवदेवानां ब्रह्मादीनामीश शङ्खचक्रगदाधर भक्तानामिच्छया तत्संरक्षणेच्छयोपात्तं रूपं देहो येन तस्मै ते नमो नमः ॥ १९ ॥ पङ्कजमालाऽस्यास्तीति तस्मै। शिखादिः ॥ २० ॥ आदित्वेनेतरमतानां बीजं तस्मै पूर्णबोधाय ज्ञानमने ॥ २१ ॥ अस्य जगतो जनयित्रे जनकाय। तेन न किञ्चित्प्रयोजनमिति तुना द्योत्यते। स्वस्य जनकोऽस्ति चेन्न। निरवधिकजगज्जनकता तस्येत्यत उक्तमजायेति। ब्रह्मणे गुणपूर्णायानन्तशक्तयेऽपरिमितिसामर्थ्यायाप्रतिबद्धशक्तये वा। अनन्तमक्षरतत्त्वं रमा शक्तिर्भार्या यस्य सः। शक्यत्वाच्छक्तयो भार्या इत्युक्तेः। चराचरात्मन्। तदन्तर्गतपरमात्मन् विशिष्टचेतन लोकनायक। अनेकश्रुतिप्रतीकत्वान्नासङ्गतिरियं पुनरुक्तिरर्थतोऽपि दोषायेति ज्ञेयम् ॥ २२ ॥

**श्रीमद्वल्लभाचार्यकृता सुबोधिनी**

आदावाविर्भूतः कश्चिदन्यो भविष्यति, कथमन्यथा पुत्रं मारयेदित्याशङ्कां परिहरन्तीं लक्षणमाह **नमस्त** इति। **ते** तुभ्यं नमः। देवतायाः कथमन्यनमस्कार इत्याशङ्क्याह **देवदेवेति**। ईशत्वाच्छिक्षैव, न मारणमिति पुत्रमारणेऽपि नान्यथात्वम्, देवदेवानामपि ब्रह्मादीनामीश इति नान्योऽत्र कश्चिद्वक्तव्यः। तथात्वे हेतुमाह। शङ्खचक्रगदाः धारयतीति। अर्थात्पद्मम्। त्रयाणां कार्यमुक्तमेव 'गदया निर्बिभेदाद्री'नित्यादिना। अद्यापि भगवान् न पुरं प्रविष्टः, गरुड एव स्थितः चतुर्भुजः प्रकट इति तथोच्यते। तादृशस्य कथं नराकृतित्वमित्यत आह **भक्तेच्छोपात्तरूपायेति**। भक्तानां यादृशी इच्छा, तादृशमुपात्तं रूपं येन। ननु रूपग्रहण एव अन्यथाभावो भवतीति, तत्राप्यन्यादृशं रूपं गृहीतमिति जीवतुल्यत्वात् कथं नमस्करणीय इत्याशङ्क्याह **परमात्मन्निति**। जीवात्मन एव रूपान्तरस्वीकारे तथात्वम्, न तु परमात्मन इति। अत एव भक्ताधीनत्वात् पुनर्नमस्यति **नमोऽस्तु त** इति ॥ २५ ॥ कुन्त्या चतुर्धा स्तुतो भगवान् प्रसन्न इति स्वयमपि नमस्यति **नमः पङ्कजनाभायेति**। तया हि ब्रह्माण्डे सर्वत्वं सर्वोत्तमत्वं चोक्तम्। पङ्कजं नाभौ यस्येति नारायणत्वेन पुरुषत्वं निरूपितम्। तेन ब्रह्माण्डरूपत्वं सिध्यति। तत्रोत्कर्षस्त्रिधा, लक्ष्मीपतित्वेन सर्वोपास्यत्वेन सर्वसुसेव्यत्वेन च। सुसेव्यश्चेन्महान् भवति, स सर्वपुरुषार्थान् सुखेन प्रयच्छतीति। पङ्कजानां माला वर्तते अस्येति पङ्कजमालया लक्ष्म्या वृतः। 'तया विना क्व देवत्व'मित्यादिव क्येः तस्याः सर्वपुरुषार्थरूपत्वम्। **पङ्कजनेत्रायेति** दृष्ट्यैव सर्वतापहारकत्वं वशीकर्तृत्वं च। **पङ्कजाङ्घ्रित्वेन** सुसेव्यत्वम् ॥ २६ ॥ एवं ब्रह्माण्डे स्वरूपोत्कर्षं निरूप्य तत्त्वेषु तथात्वमाह **नमो भगवते तुभ्यमिति**। सर्वतत्त्वानां मूलभूतो भगवान्, भगरूपाणि च तत्त्वानीति शास्त्रार्थदृष्ट्या स्तुतिं व्यावर्तयति **तुभ्यमिति**। **वासुदेवायेति**। तत्त्वानां करणप्रयोजनरूपाय मोक्षदात्रे। अनेनोपासनामार्गेण सेव्यत्वादुत्कर्ष उक्तः। **विष्णव** इति कर्ममार्गेऽपि सेव्याय। विष्णुः यज्ञः स्वतन्त्र इति ज्ञापयितुं यज्ञे विष्णुपदप्रयोगः। 'तत्त्वेषु पुरुषो महा'निति तद्रूपत्वमाह **पुरुषायेति**। तत्र क्रियाज्ञानशक्त्युत्कर्षमाह **आदिबीजाय पूर्णबोधायेति**। **बीजानां** कार्योत्पादनसमर्थानामपि उत्पादकाय। पूर्णा क्रियाशक्तिरुक्ता। पूर्णो बोधो यस्येति स्पष्टा ज्ञानशक्तिः ॥ २७ ॥ एवं तत्त्वोत्कर्षमुक्त्वा पुरुषोत्तमत्वमाह **अजायेति**। सर्वविकाररहितं परतत्त्वमिति सिद्धान्तेनाह **अजायेति**। जननाभावेन तदन्तरा भावाः तत एव निराकृताः। जगत्कर्तृत्वेन तथात्वमिति ये मन्यन्ते, तन्मतेनाह **अस्य जनयित्र** इति। स्वयमजोऽन्येषां जननं करोतीति सर्वोत्तमत्वमपि सिध्यति। आर्षज्ञानेन तथात्वमुच्यत इति नात्र प्रमाणं वक्तव्यम्। ब्रह्मैव वस्त्विति ब्रह्मवादे। तत्राप्याह **ब्रह्मण** इति। वृहत्त्वाद्वृंहणत्वाच्च ब्रह्म। सर्वभवनसमर्थं वस्त्वित्यपि पक्षेणाह **अनन्तशक्तय** इति। आत्मवादेनाह। **परे** ब्रह्मादयः, **अवरे** अस्मदादयः। तेषामात्मा भगवान्। भूतानि जडानि तेषामप्यात्मा। जीवजडयोरात्मत्वमुपपाद्य अन्तर्यामित्वमाह **परमात्मन्निति**। अन्ते नमनं सर्वत्रानुषञ्जनार्थम् ॥ २८ ॥

**श्रीसुबोधिनी—सारः**

हे देवदेवेश हे शंखचक्रगदाधर ! ते तुभ्यं नमः हे परमात्मन् ! भक्तानामिच्छार्थमुपात्तं गृहीतं रूपं येन तस्मै ते तुभ्यं नमोऽस्तु ॥ २५ ॥ पंकजं पद्मं नाभौ यस्य तस्मै नमः पंकजानां मालाऽस्यास्तीति तथा तस्मै नमः पंकजवन्नेत्रे यस्य तस्मै नमः

पंकजवदंघ्री पादौ यस्य तस्मै नमः ॥ २६ ॥ वासुदेवाय विष्णवे तुभ्यं भगवते नमः आदिकारणाय पूर्णज्ञानाय पुरुषाय ते नमः ॥ २७ ॥ अजाय ब्रह्मणेऽस्य विश्वस्य जनयित्रे उत्पादकायानंतशक्तये नमोस्तु हे परावरात्मन् हे भूतात्मन् हे परमात्मन् ! ॥ २८ ॥

### गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

ततश्च नरकस्य माता भूः कृष्णमुपेत्य प्रतप्ते अत्युज्ज्वलिते जाम्बूनदे खचितानि यानि रत्नानि तैर्भास्वरे कुण्डले, अथो तथा वैजयन्त्या रत्नमिश्रितबहुगुणकुसुमग्रथितया वनमालया सह प्राचेतसं वारुणं छत्रं, महामणिं च अर्पयत् ॥ २५ ॥ अथ अनन्तरं प्राञ्जलिः प्रणतमस्तका भक्तिप्रवणया धियोपलक्षिता च देवी भूम्याभिमानिनी देवता देववरैर्ब्रह्मादिभिरभ्यर्चितम्, तत्र हेतुः-विश्वेशं कृष्णमस्तौषीदित्यन्वयः ॥ २६ ॥ स्तुतिमेवाह-नम इति सप्तभिः । देवा इन्द्रादयः, तेषामपि देवा ब्रह्मादयः, तेषामपीशः । तत्र हेतुमन्तर्यामित्वं सूचयन् पुनः सम्बोधयति—हे परमात्मन्निति । 'स च विष्णुर्नाहम्' इत्याशङ्क्य 'त्वमेव विष्णुः' इत्याशयेन सम्बोधयति-शङ्खचक्रगदाधरेति । 'तस्य किमर्थं देहग्रहणम्' इत्यपेक्षायामाह—भक्तानां या इच्छा तदनुरूपमुपात्तं स्वीकृतं रूपं देहो येन तस्मै ते तुभ्यं नमो नमोऽस्तु ॥ २७ ॥ पङ्कजं त्रिलोकात्मकं चतुर्मुखोत्पत्तिस्थानं नाभौ यस्य तस्मै जगत्कारणभूताय नमः । तथा पङ्कजस्य माला यस्य तस्मै नमः । पङ्कजवत् प्रसन्ने प्रपन्नजनतापत्रयोपशमने नेत्रे यस्य तस्मै नमः । पङ्कजवत् सौगन्धसौकुमार्यादियुक्तावङ्घ्री यस्य तस्मै ते तुभ्यं नमः ॥ २८ ॥

### अन्वितार्थप्रकाशिका

अस्तौषीदिति ॥ हे राजन् ! अथानन्तरं प्राञ्जलिः प्रणतमस्तका भक्तिप्रवणया धियोपलक्षिता च देवी भूम्यभिमानिनी देवता देववरैर्ब्रह्मादिभिरभ्यर्चितं विश्वेशं कृष्णमस्तौषीत् । इडभाव आर्षः ॥ २५ ॥ नम इति ॥ हे देवदेवेश ! हे शङ्खचक्रगदाधर ! हे परमात्मन् ! हे देवाद्यन्तर्यामिन् ! भक्तानामिच्छया उपात्तं रूपं येन तस्मै तुभ्यं नमोऽस्तु ॥ २६ ॥ नम इति ॥ स्पष्टम् ॥ २७ ॥ नम इति ॥ भगवते वासुदेवाय विष्णवे ते तुभ्यं नमः । पुरुषाय आदेर्जगत्कारणस्यापि बीजाय पूर्णबोधाय ते नमः ॥ २८ ॥

### श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्

अथ भूमिः श्रीकृष्णं स्तौति नम इति भक्तेच्छया उपात्तं गृहीतं रूपं मनुष्याकारो येन तस्मै । हे परमात्मन् परमो मुक्तबद्धपुरुष देहेभ्यः श्रेष्ठ आत्मा देहो यस्य स तत्संबुद्धिः ॥ २५ ॥ नम इति पंकजतुल्या नाभिर्यस्य तस्मै ॥२६॥ वासुदेवाय वसुदेवपुत्राय । तत्पुत्रत्वेपि विष्णवे सर्वत्र व्यापनशीलाय सर्वत्र व्यापकत्वेपि पुरुषाय अनादिसिद्धपुरुषाकाराय । तथा च श्रुती । आत्मैवेदमग्र आसीत्पुरुषविध इति दिवि तिष्टत्येकस्तेनेदं पूर्णं पुरुषेण सर्वमिति । अतः । आदिविजाय मुख्यकारणाय पूर्णवोधाय समग्रज्ञानज्ञात्रे ते तुभ्यं नमः ॥ २७ ॥ अज्ञाय प्राकृतगुणमयजन्महीनाय अस्य विश्वस्य जनयित्रे उत्पन्नकर्त्रे । ब्रह्मणे सर्वेभ्यो महते अतः अनंतशक्तये अनंता असंख्याताः पुरुषकालप्रकृतिप्रभृतयः शक्तयो यस्य तस्मै अतः परावरात्मन् पराणां महामुक्तानां अवराणां ब्रह्मादीनां च आत्मांतर्यामी तत्संबुद्धिः । अतो हे भूतात्मन् भूतानां चेतनाचेतनानां आत्मा आत्मत्वेन प्रवर्तक अतो हे परात्मन् श्रेष्ठमूर्त्ते ते तुभ्यं नमोस्तु ॥ २८ ॥

### भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

स्तुतिमेवाह नमस्त इति सप्तभिः । तत्र तावत् सर्वपरत्वभक्तानुग्रहशीलत्वसर्वान्तरात्मत्वादिविशिष्टतया स्तुवन्ती नमस्करोति ॥ नमस्त इति ॥ देवानामिन्द्रादीनां देवो ब्रह्मा तस्येशस्तत्संबुद्धिः । अनेन सर्वपरत्वमुक्तम् । हे शङ्खचक्रगदाधर, ते तुभ्यं, नमः । हे परमात्मन्, अनेन सर्वान्तरात्मत्वमुक्तम् । भक्तेच्छया भक्तानामनुग्रहेच्छया उपात्तं रूपं मूर्तिर्येन तस्मै, अनेन भक्तानुग्रहशीलत्वमुक्तम् । ते तुभ्यं नमः अस्तु ॥ २५ ॥ येन मन्त्रेण कृष्णः कुन्त्याः प्रसन्नः पूर्वमासीत्तेन मन्त्रेण नमस्यति ॥ नम इति ॥ पङ्कजं ब्रह्मोत्पत्तिस्थानभूतं कमलं नाभौ यस्य तस्मै, ते तुभ्यं, नमः । जगत्कारणभूतायेत्यर्थः । पङ्कजानां कमलानां माला विद्यतेऽस्येति तस्मै, ते नमः । पङ्कजे इव नेत्रे प्रपन्नजनतापत्रयोपशमने नेत्रे यस्य तस्मै, ते नमः । पङ्कजे इव अङ्घ्री सौगन्ध्यसौकुमार्यादियुक्तौ पादौ यस्य तस्मै, ते नमः ॥ २६ ॥ नम इति ॥ वासुदेवाय वसुदेवपुत्रत्वेनाविर्भूताय, तथात्वेऽपि, विष्णवे सर्वत्र व्यापनशीलाय, सर्वत्र व्यापनशीलत्वेऽपि, पुरुषाय सर्वदा पुरुषाकृतिमते, 'आत्मैवेदमग्र आसीत्पुरुषविध' इति, 'दिवि तिष्ठत्येकस्तेनेदं पूर्णं पुरुषेण सर्वम्' इति च श्रुतेः । आदिबीजाय मुख्यकारणाय, पूर्णबोधाय सर्वकालं संपूर्णबोधवते भगवते, ते संपूर्णैश्वर्यवत्तया श्रुतिप्रसिद्धाय, तुभ्यं नमो नमः ॥२७॥ अजायेति ॥ अजाय जायमानत्वेऽपि जन्मादिविकाररहिताय, विकाराणां स्वशरीरभूतप्रकृतिपुरुषगतत्वादिति भावः । अस्य विश्वस्य, जनयित्रे उत्पत्तिकर्त्रे, ब्रह्मणे गुणैश्वर्यमहिमादिभिः

सर्वेभ्योऽपि वृहते, न हि लोके किंचिदेवंविधं दृष्टमित्येवंविधदुर्घटत्वशङ्कां वारयति। अनन्ता अपरिमिताः शक्तयः स्वासाधारणा अग्न्यादेर्दाहकत्वादय इव यस्य तस्मै, ते तुभ्यं, हे परावरात्मन् महामुक्तानां ब्रह्मादीनां चान्तर्यामिन्, हे भूतात्मन् चेतनाचेतन-प्रवर्त्तक, हे परमात्मन्, नमः अस्तु ॥ २८ ॥

**कृष्णप्रिया**

श्री भूमिदेवी ने कहा—हे देवाधिदेव! हे शङ्खचक्र गदाधर केशव! आपके श्रीचरणों में मैं नमस्कार करती हूँ। हे परमात्मन्! आप निजजनों के मनोरथों को पूर्ण करने के लिये उनके मनोरथ के अनुकूल मङ्गल एवं विविध स्वरूप और अवतार धारण करते हैं ॥ २५ ॥ श्री ब्रह्मा एवं ब्रह्माण्ड के विधाता कमलनाभ कृष्ण आपको नमस्कार, पङ्कजमाला धारण करनेवाले पङ्कजमाली जो को प्रणाम, हे कमलनयन श्रीकृष्ण आपको नमस्कार, भक्तों के हृदय में विराजने वाले पङ्कजपाद आपको बारंबार नमस्कार ॥ २६ ॥ हे नाथ! ऐश्वर्य-वीर्य-यशः-श्री-ज्ञान-वैराग्य नाम के षड्विध ऐश्वर्य-सम्पन्न भगवान् के श्रीचरणों में प्रणाम। समस्त विश्व में रहनेवाले श्री वसुदेवनन्दन जी को नमस्कार। सर्वत्र व्यापक श्री विष्णु भगवान को बारंबार नमस्कार। पूर्णपुरुष को प्रणाम। समस्त कारणों के कारण आदिकारण ब्रह्मा को प्रणाम। पूर्णबोधस्वरूप पुरुषोत्तम जी को नमस्कार ॥ २७ ॥ अजन्मा होते हुए भी अनन्त ब्रह्माण्डों के जन्मदाता को प्रणाम, परमब्रह्म श्रीकृष्ण को प्रणाम, अनन्तशक्तियों के नाथ को नमस्कार; पर और अवर आदि सर्वतत्त्व स्वरूप, सर्वलोकस्वरूप, कार्य और कारणस्वरूप प्राणी-मात्र के आत्मा श्रीकृष्ण को प्रणाम; हे परमात्मन् आप के श्रीचरणों में मेरे अनन्त नमस्कार-बारंबार प्रणाम ॥ २८ ॥

**त्वं वै सिसृक्षू रज [1]उत्कटं प्रभो तमो निरोधाय [2]बिभर्ष्यपावृतः।**
**स्थानाय सत्त्वं जगतो जगत्पते[3] कालः प्रधानं [4]पुरुषो [5]भवान् परः ॥ २९ ॥**

**अहं पयो ज्योतिर[6]थानलो नभो मात्राणि देवा मन इन्द्रियाणि।**
**कर्ता महानित्यखिलं चराचरं[7] त्वय्यद्वितीये भगवन्नयं भ्रमः ॥ ३० ॥[8]**

**तस्यात्मजोऽयं तव पादपङ्कजं भीतः प्रपन्नार्तिहरोप[9] सादितः[10]।**
**[11]तत् पालयैनं कुरु हस्तपङ्कजं शिरस्यमुष्याखिलकल्मषापहम् ॥ ३१ ॥**

**श्रीशुक उवाच**

**इति भूम्यार्थितो[12] वाग्भिर्भगवान् भक्तिनम्रया[13]।**
**दत्त्वाभयं भौमगृहं प्राविशत् सकलर्द्धिमत् ॥ ३२ ॥**

**कर्दमक्षमा**

अन्वयः—हे परावरात्मन्, हे भूतात्मन्, हे परमात्मन्, ते (तुभ्यम्) अजाय, अस्य, जनयित्रे, अनन्तशक्तये, ब्रह्मणे नमः ॥ २९ ॥ हे प्रभो, त्वम्, वै, सिसृक्षुः, सत्, उत्कटम्, रजोगुणम्, बिभर्षि। निरोधाय (उत्कटम्) तमोगुणम्, बिभर्षि। जगतः, स्थानाय, उत्कटम्, सत्वम्, बिभर्षि, हे जगत्पते, भवान्, प्रधानम्, कालः, असंवृत्तः, परपुरुषः, अस्ति, इति शेषः ॥ ३० ॥ हे भगवन्, अहम्, ज्योतिः, अथ, अनिलः, नभः, मात्राणि (शब्दादय) देवाः, मनश्च, इन्द्रियाणि, च, कर्ता, महान्, इति, अखिलम्, चराचरम्, यद्, अद्वितीये, त्वयि, प्रतीयते, अयम्, भ्रम, एव ॥ ३१ ॥ हे प्रपन्नार्त्तिहर! अयम्, तस्य, आत्मजः, मया, तव, पादपङ्कजम्, उपसादितः, अयम्, भीतः, तत्, एनम्, पालय, अमुष्य, शिरसि, अखिलकल्मषापहम्, हस्तपङ्कजम्, कुरु ॥ ३२ ॥

---

१. उत्कटः—विज. । २. बिभर्ष्य—श्रीधर. वंशी. जीव. वीर. विश्व. शु.; षि—विज. । ३. प्रभो—विज. । ४. नः—विज. । ५. षोडस्यापाइ.—वि. । ६. रथो—वि.; रवा नलोऽनिलो—वीर. । ७. तु कारणं—वि. ।

८. यदाहमुद्धृता नाथ त्वया सूकरमूर्तिना। त्वत्स्पर्शसंभवः पुत्रस्तदायं मेऽभ्यजायत ॥
सोऽयं त्वयैव दत्तो मे त्वया च विनिपातितः ॥ विजयेऽन्यद् दृश्यते।

९. रं—विज. । १०. तुम्—विज. । ११. त्वं—विज. । १२. चि—विज. । १३. प्रसन्नः प्रददौ तस्मै भगदत्ताय चाभयम्—विज. ।

## श्रीधरस्वामिविरचिता भावार्थदीपिका

ननु गुणा विश्वोत्पत्त्यादिहेतवस्ते च प्रधानस्यैव तस्य च पुरुषः क्षोभकस्तत्र च कालो निमित्तमिति प्रसिद्धं किमत्राहं तत्राह। त्वं वा इति। तमसो धारणेऽप्यसंवृत एव। स्थानाय पालनाय। जगतः सृष्ट्याद्यर्थमुत्कटं रजआदि त्वमेव बिभर्षि सृजसीत्यर्थः। कालप्रधानपुरुषाश्च त्वद्व्यतिरिक्ता न संति त्वं तु परः सर्वव्यतिरिक्तः। अतस्त्वमेव जनयितेत्यर्थः॥ २९॥ कार्यकारणप्रपंचस्य तदव्यतिरेकं तस्य च सर्वव्यतिरेकमुपपादयति। अहमिति। अहं भूमिः। मात्राणीति देवा मन इंद्रियाणीति च त्रिविधाहंकारकार्याणि। कर्ताऽहंकारः॥ ३०॥ एवं स्तुत्वा प्रार्थयते तस्येति। हे प्रपन्नार्तिहर। तस्य नरकस्य। अयं भगदत्तो नाम भीतोऽत एव मया तव पादपंकजमुपसादितः॥ ३१॥ अभयं दत्त्वा॥ ३२॥

## श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

पुनर्भंग्यन्तरेणाऽऽशंकते—नन्विति। ते च गुणाः। तस्य प्रधानस्य। तत्र च क्षोभे। पूर्ववदाह—किमत्राहमिति। निरोधाय नाशाय। उत्कटमधिकम्। इत्यर्थ इति—रजोधारणेन सर्गं करोषीति भावः। अतः सर्वव्यतिरिक्तत्वात्। इत्यर्थ इति—कालादीनां सामग्रीमात्रत्वात्त्वमेव मुख्यं कारणमिति भावः॥ समयभेदेनास्य सृष्ट्यादिकं मायाशक्त्या त्वमेव करोषीत्याह—त्वमिति। उत्कटम् उद्रिक्तम्। असंवृतो न तु जीववत्तैः संवृतः। अतस्त्वच्छक्तिकार्यत्वादिदं जगत्त्वदात्मकम्। ये च नित्याः कालमायाजीवास्तेऽपि त्वच्छक्तित्वात्त्वदात्मका एवेत्याह—काल इति। किन्तु स्वरूपशक्त्या उश्चक्तेभ्य एतेभ्यः परोऽन्यः॥ २९॥ तदव्यतिरेकं तदभिन्नत्वम्। तस्य भगवतः सर्वव्यतिरेकं सर्वातिरिक्तत्वम्। मां स्वविषयज्ञानस्य सत्त्वेन त्रायन्त इति मात्रा इंद्रियाणि। अथ पुनरर्थे। अयं पृथिव्यादिरूपः प्रपञ्चः शुक्तिरजतवद्भ्रम एव न तात्त्विक इति भावः। यद्वा—अयं जगद्भ्रमः चक्रभ्रमणवद्विश्वस्य परिवर्त्तनं त्वयि नियतमित्यर्थः। भ्रमशब्दस्यारोपपरत्वेऽर्थक्रियानुपपत्तेरिति तीर्थः॥ ननु तत्तद्रूपश्चेत्कथं परत्वं तत्राह—अहमिति। तेषां त्वच्छक्तिरूपमात्रत्वेन तदनन्यत्वान्न विद्यते द्वितीयं यस्य तथाभूतेऽपि त्वयि पूर्वोक्तं कार्यं चराचरं भ्रमो भ्रमेणैव प्रतीतमित्यर्थः। अंतरंगशक्त्याऽऽलिंगिता। ते बहिरंगशक्तिकार्यैर्न स्पर्शः। आकाशादीनां वाय्वादिभिस्तद्धर्मैरिव चेति भावः। तदुक्तम्—"मायां व्युदस्य चिच्छक्त्या कैवल्ये स्थित आत्मनि" इति॥ ३०॥ आत्मज औरसः। मां कुतो न नमतीति चेदाह—भीतत्रस्तः। अत एव त्रस्तत्वादेव। अहं किं करोमीत्यत आह—यत उपसादितस्ततो हेतोः। एनं भगदत्तम्॥ ननु प्रस्तुतं किं तदुच्यताम्, तत्राह—तस्येति। महादुष्टत्वेन नामाऽग्रहणम्। ननु दुष्टस्यात्मजत्वादयमपि वध्य एव तत्राह—उपसादित इति, शरणं प्रापितः। किञ्च—अस्याऽपितृकत्वादिदुःखञ्च हरणीयमित्याह—प्रपन्नेति। तस्मादकुतश्चिद्भयमप्येनं विधेहीत्याशयेनाह—कुर्वीति। ननु तथा सति पितृवद्दुष्टतां करिष्यति तत्राह—अखिलेति। त्वच्छ्रीहस्तस्पर्शप्रभावेण नायमपराधं कर्तेति भावः। पंकजरूपकेण स्वयमेव तापापगमादिकं ध्वनितम्॥ ३१॥ इतीत्थम्। वाग्भिरेवार्चितस्ताभिरेव नानोपचारगणनाद्भावितः। ऋद्धिश्चोक्ता हरिवंशे—"न वै राज्ञा कुबेरेण न शक्रेण यमेन च। रत्नसंनिचयस्तादृग्दृष्टपूर्वो न च श्रुतः॥" इति। किञ्च—तत्रैव धनरक्षिणां दैत्यानामुक्तौ—"देवगंधर्वरत्नानि पन्नगानां च यद्वसु। तानि सर्वाणि सन्तीह नरकस्य निवेशने॥" इति॥ ३२॥

## श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी

वै एव त्वमेव उत्कटमिति साम्येन सृष्ट्याद्यासिद्धेः प्रभो इति विचित्रजगत्सृष्टिसामर्थ्यात् जगत्पत इति स्वभावत एव पालकत्वात् अन्यत्तैः यद्वा असम्वृतः सृष्ट्यादिकर्मभिरव्याप्तः॥ २९॥ ननु, तत्तद्रूपश्चेत्कथं परत्वम्, तत्राह—अहमिति। तत्त्वानन्तर्य्यक्रमेणोक्तत्वादथशब्दः चकाराद्बुद्धिचित्ते तेषां त्वच्छक्तित्वात् कार्य्यरूपमात्रत्वेन त्वदनन्यत्वान्न विद्यते द्वितीयं यस्य तथाभूतेऽपि त्वयि इति पूर्वोक्तं कार्य्यं चराचरं भ्रमो भ्रमेणैव प्रतीतमित्यर्थः। अन्तरङ्गशक्त्यालिङ्गितस्य ते बहिरङ्गशक्तिकार्य्यैर्न स्पर्शः आकाशादीनां वाय्वादिभिः तद्धर्मैरिवचेति भावः। यथोक्तं प्रथमे श्रीमदर्जुनेन "मायां व्युदस्य चिच्छक्त्या कैवल्ये स्थित आत्मनि" इति तस्मात्सर्वमेव तुच्छं तव कोपविषयो न भवति किन्तु कृपाविषय एवेति भावः॥ ३०॥ ननु, प्रस्तुतं किं तदेवोच्यतां तत्राह—तस्येति। महादुष्टत्वेन नामाग्रहणं ननु दुष्टस्यात्मजत्वादयमपि वध्य एव, तत्राह उपसादित एति। शरणं प्रापितः किञ्चास्य पितृकत्वादिदुःखञ्च हरणीयमित्याह—प्रपन्नेति। तस्मादकुतश्चिद्भयमप्येनं विधेहीत्याशयेनाह, कुर्विति। ननु, तथा सति पितृवद्दुष्टतां करिष्यति तत्राह अखिलेति। त्वच्छ्रीहस्तस्पर्शप्रभावेनायमपराधं न कर्त्तेति भावः पङ्कजरूपकेण स्वयमेव तापापगमादिकं ध्वनितम्॥ ३१॥ वाग्भिरेवार्चितः प्रसादित इति "किञ्चित्करोत्यण्वपियत्स्वदत्तम्" इत्युक्तस्वभावत्वेन ताभिरेव नानोपचारमननाद्भावितः ऋद्धिश्च वर्णिता श्रीहरिवंशे—

"न वै राज्ञा कुबेरेण न शक्रेण यमेन च। रत्नसन्निचयस्तादृग्दृष्टपूर्वा न च श्रुतः"॥ इति

किञ्च तत्रैव धनरक्षिणां दैत्यानामुक्तौ—

"देवगन्धर्वरत्नानि पन्नगानाञ्च यद्वसु। तानि सर्वाणि सन्तीह नरकस्य निवेशने" इति॥ ३२॥

### श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी

ननु एक एवात्मान्तर्य्यामी चेति विरुद्धं स्यात्, न, कार्य्यकारणात्मकं जगत्त्वदभिन्नं त्वञ्च तस्माद्भिन्न एवेति भेदाभेदन्यायेनाह—त्वमिति, वै एव, त्वमेव, उत्कटमिति साम्येन सृष्ट्याद्यसिद्धेः। 'प्रभो' इति विचित्रजगत्सृष्टिसामर्थ्याज्जगत्पत इति स्वभावत एव पालकत्वात्, विशेषतश्च तदानीं पालने प्रवृत्तेः। अत एवास्यान्ते निर्द्देशः, पक्षान्तरद्वये च विरोधपरिहारतः समानमेव। अन्यत्तैर्व्याख्यातम्। यद्वा, असंवृतः सृष्ट्यादिकर्म्मभिरव्याप्तः, किंवास्य परेणान्वयः, पालनार्थं स्वयमेव श्रीविष्णवादिरूपेण प्रकटः सन्नित्यर्थः॥ २९॥ अथ समुच्चये, चकाराद्बुद्धिचित्ते, त्वय्यद्वितीये त्वयि भिन्नतयास्तीत्ययं भ्रमः। तथा सति तस्यापि सत्यत्वनित्यत्वप्रसंगात्। ननु तथास्तु नाम, कोऽत्र दोषः? तत्राह—अद्वितीय इति। तथा सति ( छा० ६।२।१ ) 'एकमेवाद्वितीयम्' इत्यादि-श्रुत्युक्त्या द्वितीयत्वबाधापत्तेरिति भावः। चराचरस्य त्वदभिन्नत्वेऽपि ततस्त्वं भिन्न एवेत्याह—भगवन्निति, हे परमेश्वर! अत इदं सर्व्वं त्वदीयत्वेन त्वदव्यतिरिक्तम्, त्वञ्च भगवत्त्वेनास्मदव्यतिरिक्त एवेति। यद्वा, अद्वितीयेऽपि त्वय्यस्तीत्याधाराधेयभावेन भेदोऽयं भ्रमः किम्? काक्वा, अपि तु नैव। त्वदंशतया सच्चिदानन्दस्वरूपाणामपि जीवानां चिद्रूपत्वेन भेदराहित्येऽपि समुद्रस्य तरंगाणामिव पार्थक्यात्, अतस्तरंगेभ्यः समुद्रस्येव ततस्तव भिन्नता सिद्धैवेत्याह—भगवन्निति। तरंगाणां समुद्रत्वस्येव जीवानां भगवत्त्वस्याभावात्॥ ३०॥ तस्येति महादुष्टत्वेन तन्नाम्नोऽग्राह्यत्वात्। ननु दुष्टस्यात्मजत्वादयमपि वध्य एव, तत्राह—उपसादित इति, शरणागतत्वात्। किञ्चास्य पितृशोकादिदुःखञ्च हर्त्तव्यमित्याह—प्रपन्नेति। तत्तस्मादकुतश्चिद्भयमप्येनं विधेहीत्याशयेनाह—कुर्व्विति। ननु तथा सति पितृवद्दुष्टतां करिष्यति, तत्राह-अखिलेति। त्वच्छ्रीहस्तस्पर्शप्रभावेणायमपराधं न कर्त्तेति भावः। पंकजरूपकेण श्रीहस्तस्य सुशीतलतादिसूचनतः स्वयमेवाशेषतापापगमादिकमपि ध्वनितम्॥ ३१॥ वाग्भिरर्च्चितः सम्मानितः, वाचामुत्कृष्टत्वेन भगवत्तोषहेतुत्वात्। तत्रैव गुणविशेषञ्च दर्शयति—भक्तोति। भगवान् परमदयालुः, अत एवाभयं तस्मै दत्त्वा प्रकर्षेण श्रीसत्यभामेर्ष्यापरिहारार्थं श्रीगरुडादवतीर्य्यैकाकित्वादिना, किं वा तया सत्यभामया, तेन गरुडेन, भूम्या, भगदत्तेन, कोशरक्षकादिभिश्च साहित्यादिनाविशत्। भूमिपुत्रगृहत्वादेव सकलर्द्धिमत्, ऋद्धिश्च वर्णिता श्रीहरिवंशे ( विष्णु-प० ६४।८ )-'न वै राज्ञा कुवेरेण न शक्रेण यमेन च। रत्नसन्निचयस्तादृग् दृष्टपूर्वो न च श्रुतः'। इति। किञ्च, तत्रैव ( विष्णु० प० ६४।१७ ) धनरक्षिणां दैत्यानामुक्तौ—'देवगन्धर्व्वरत्नानि पन्नगानाञ्च यद्वसु। तानि सर्व्वाणि सन्तीह नरकस्य निवेशने॥' इति॥ ३२॥

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम्

निरोधाय संहाराय तमो बिभर्षि स्थानाय स्थितये सत्त्वम्॥ २९॥ अहं पृथिवी देवाः ज्ञानेन्द्रियाणि इन्द्रियाणि कर्मेन्द्रियाणि यद्वा, देवाः इन्द्रियाभिमानिदेवाः कर्त्ता देहे अहम्बुद्धिकरणहेतुत्वात् कर्त्तेत्यहङ्कारो विवक्षितः। भ्रमः देवादीनां जीवाद्यभिमानभ्रमहेतुत्वात् पृथिव्यादितत्त्वजातं भ्रम इत्युच्यते अद्वितीये समाभ्यधिकरहिते भ्रमति आविस्तिरोभावादिभिरिति भ्रमः॥ ३०-३२॥

### श्रीमद्वीरराघवाचार्यकृता भागवतचन्द्रचन्द्रिका

उक्तनामभिरभिप्रेतमेव कारणत्वं सुव्यक्तमाह—त्वं वा इति। हे विभो! तावत्त्वं स्रष्टुमिच्छुः उत्कटं रजो बिभर्षि रजोगुणप्रधानचतुर्मुखाख्यदेहानुप्रवेशेन सृजसीत्यर्थः। जगतां विनाशाय संहाराय तमःप्रधानकालाग्निरुद्रादीननुप्रविशसि तथात्वेन विनाशयसीत्यर्थः। स्थानाय स्थितये तु हे जगत्पते! उत्कटं सत्त्वं बिभर्षि सत्त्वप्रधानमन्वादिशरीरकोभूत्वा पालयसीत्यर्थः। न केवलं सृष्ट्यादिवत् पालनमपि सद्वारकमेवापि त्वद्वारकमपीत्यभिप्रायेण विशिनष्टि। असम्वृत्तः असम्वृतोपि जीवादिसम्वरणरहितोपि केवलस्वावताररूपेणापि पालयसीत्यर्थः। उपादानकारणत्वप्रयुक्तं कार्य्यानन्यत्वं वक्तुं कारणत्वं न स्वरूपेणापितु प्रकृतिपुरुषकालवैशिष्ट्यरूपेणेत्यभिप्रेत्य कारणत्वावस्थायां प्रकृत्यादिशरीरकत्वमाह-काल इत्यादि। इदं सामानाधिकरण्यं शरीरात्मभावनिबन्धनम् अत एव स्वरूपतादात्म्यनिबन्धनत्वाशङ्कानिरासाय विशिनष्टि—पर इति। परोऽन्यः सन्निहितत्वात्कालादेरन्य इत्यर्थः। "ऐतदात्म्यमिदं सर्वम्, तत्सत्यम्, स आत्मा" इतिवदयं निर्देशः॥ २९॥ अथ कार्य्यानन्यत्वमाह—अहमिति। अहं पृथिवी पयो जलं ज्योतिष एव प्रदर्शनार्थमनल इत्युक्तम् अनिल इति तत्कारणस्याकाशस्याप्युपलक्षणं मात्राणि गन्धादितन्मात्राणि देवा इन्द्रियाधिष्ठितारः दिग्वातादयः इन्द्रियाणि ज्ञानेन्द्रियाणि कर्मेन्द्रियाणि च दश कर्त्ता देहेऽहम्बुद्धिहेतुत्वात् कर्त्तेत्यहङ्कारो विवक्षितः। यद्वा महानिति तत्कार्यस्याहङ्कारस्याप्युपलक्षणं कर्त्ता जीवः "कर्त्ता शास्त्रार्थवत्त्वात्" ( २-३-३३ ) इति सूत्रात् इत्येवम्विधमखिलं चराचरात्मकं जगदद्वितीये स्वतुल्यवस्त्वन्तररहिते त्वय्येव प्रकृतिपुरुषकालशरीरके त्वय्येव मृदि घट इव वर्त्तते इति शेषः। अतो मृदयं घटः इतिवत्त्वदभिन्नमेवेत्यर्थः। यद्वा उपादानत्वं कालादिवैशिष्ट्यरूपेणेत्यभिप्रायेण कालादितादात्म्यमाह-काल इत्यादि। तच्च तादात्म्यं न स्वरूपाभेदनिबन्धनमित्यभिप्रायेण तेभ्योन्यत्वमाह पर इति। तर्हि किं निबन्धनमिति जिज्ञासायां शरीरात्मभावनिबन्धनमित्युपपादयति—अहमिति। त्वय्येवान्तःप्रविश्य धारके

आत्मन्यवतिष्ठत इत्यर्थः। पृथिव्यादिषु स्वतन्त्रबुद्धिस्तु भ्रमात्मिकेत्याह–अयं भ्रम इति। अयं पृथिव्यादिषु स्वतन्त्रवस्तुत्वप्रत्ययो भ्रमः भ्रमात्मक इत्यर्थः। व्यासार्य्यैस्तु "देहानां जीवाभिमानहेतुत्वात्पृथिव्यादितत्त्वजातं भ्रम इत्युच्यते" इति व्याख्यातम् ॥३०॥ एवं स्तुत्वा किञ्चित्प्रार्थयते–तस्येति। अयं भगदत्तनामा तस्य भौमस्यात्मजः भीतस्सन् हे प्रपन्नार्त्तिहर! तव पादपङ्कजमुपसादितः मया प्रापितः तं प्रपन्नमेनं पालय अमुष्य भगदत्तस्य शिरसि अखिलाशुभहन्तृ त्वत्करपङ्कजं कुरु निधेहि ॥ ३१ ॥ इतीति। भक्त्या नम्रा प्रणता तया भूम्या कर्त्र्या वाग्भिः साधनभूताभिरर्चितः सकला ऋद्धयः भोग्यभोगोपकरणादिसमृद्धयो यस्मिन् सन्तीति तद्भौमस्य गृहं प्राविशत् ॥ ३२ ॥

### श्रीविजयध्वजतीर्थकृता पदरत्नावली

सिसृक्षुः स्रष्टुकामः उत्कटस्त्वं रजोगुणं बिभर्षि उपादत्से निरोधाय संहाराय सम्वृतं ज्ञानसम्वरणकारणं तमोगुणं स्थानाय जगत्स्थित्यै सत्त्वगुणं कालः प्राणिनामदृष्टपाचकः एवम्विधः क इति तत्राह–प्रधान इति। प्रधानः पुरुषोसि पुरुषोत्तमोसीत्यर्थः। "उत्तमः पुरुषस्त्वन्यः" इति स्मृतेः। पुरुषत्वेपि परिच्छिन्नत्वं नास्तीत्याह–अपार इति। यद्वा जगत्कारणं प्रधानपुरुष इति केचित्सङ्गिरन्ते तदाशङ्कां निवारयति–प्रधान इति। प्रधानशब्दवाच्यः पुरुषशब्दवाच्यश्च त्वमेव तर्हि परिशिष्यमाणः क इत्यत्राह–अस्येति। अस्य प्रपञ्चस्य पारः परिशिष्यमाणः संसारनदीपार; तीरान्तरशब्दवाच्यस्त्वमित्यर्थः ॥ २९ ॥ सृष्ट्यादिकर्त्ता त्वमित्युक्त्यैवाखण्डकर्तृत्वप्रतीतावपि धात्रादिशब्दाभ्यां विरिञ्चादेरपि कर्तृत्वशङ्कामिदानीं निवारयति, अहमिति। अहं नाम्ना पृथिवी मीयन्त इति मात्राणि शब्दादिविषयाः मानं स्वविषयज्ञानं स्वसत्त्वेन त्रायन्त इति वा देवा इन्द्रियाभिमानिनः कर्ता अहङ्काराभिमानी महान्महत्तत्त्वाभिमानी विरिञ्चः तुशब्द एवार्थे इतिशब्दः समासिवचनः महदाद्यभिमान्यन्तमखिलकारणम् अद्वितीये च त्वय्येव त्वमेव धारयसीत्यर्थः। आतिथ्यवत्कदाचिन्नेत्याह–भगवन्निति। हे ऐश्वर्यादिगुणार्णव! अयं जगद्भ्रमः चक्रभ्रमणवद्विश्वस्य परिवर्तनं त्वन्नियंतमित्यर्थः। भ्रमशब्दस्यारोपार्थत्वाङ्गीकारे अर्थक्रियानुपपत्तिरिति ॥ ३० ॥ साम्प्रतं तव किं विधेयमित्यत्राह—तस्येति। अयं पुरोवर्ती तस्य नरकस्यात्मजः औरसः पुत्र इति जानीहीति शेषः। तर्हि किमिति मत्प्रणामं न करोतीत्यत्राह—तवेति। तव प्रपन्नार्तिहरं पादपङ्कजं प्राप्य त्वां प्रसादयितुं भीतस्त्रस्तः इत्यन्वयः। ततः किमत्राह—तदिति। यतो भीतस्तत्तस्मात्तत्पालनं चैतदेवेत्याह–कुर्विति। अनेन किं फलं स्यादित्याशङ्क्य पापनिमित्तं सर्वमनर्थजातं तन्नाशे सर्वसुखं स्यादिति भावेनाह—अखिलेति। यद्वा, प्रपन्नार्तिहरं भगवन्तं प्रसादयितुं तव पादपङ्कजं भीतः सञ्चलितः प्राप्त इत्यर्थः। "भीतिभयसञ्चलनयोः" इति धातुः। अतो रक्षेत्याह तदिति ॥ ३१–३६ ॥

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः

ननु, तत्तद्रूपश्चेत् कथं परत्वम्? तत्राह। अहमिति। तेषां तच्छक्तिकार्य्यरूपमात्रत्वेन तदनन्यत्वान्न विद्यते द्वितीयं यस्य तथाभूतेऽपि त्वयि इति पूर्वोक्तकार्यं चराचरं भ्रमो भ्रमेणैव प्रतीतमित्यर्थः। अन्तरङ्गशक्त्यालिङ्गितस्य ते बहिरङ्गशक्तिकार्य्यैः न स्पर्शः। आकाशादीनां वाय्वादिभिस्तद्धर्म्मैरिव चेति भावः। तथोक्तम् "मायां व्युदस्य चिच्छक्त्या कैवल्ये स्थित आत्मनि" इति रूपमत्र प्रकाशः ॥ ३०–४२ ॥

### श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शिनी

समयभेदेनास्य विश्वस्य मायाशक्त्या सृष्ट्यादिकं करोषीत्याह—त्वमिति। उत्कटम् उद्रिक्तं रजस्तमःसत्त्वं च बिभर्षि असम्वृतः न तु जीववत्तैः सम्वृतः अतस्त्वच्छक्तिकार्यत्वादिदं जगत् त्वदात्मकं ये च नित्याः कालमायाजीवास्तेऽपि त्वच्छक्तित्वात्त्वदात्मका एवेत्याह—काल इत्यादि। किन्तु त्वं स्वरूपशक्त्या उक्तेभ्यः एतेभ्यः परोऽन्यः ॥२९॥ ननु, ममाप्ययं देहो भूतात्मक एव चक्षुरादीन्द्रियाण्यपि वैकारिकाण्येवेत्यतो मां मायाशबलं ब्रह्मेत्याचक्षते कथमहमेतेभ्यः पर इत्यत आह—अहं भूमिः मात्राणि विषयाः कर्त्ता अहङ्कारः महांश्चित्तमित्येतत् सर्वं चरं मनश्चक्षुरादि अचरं भूमिप्राणादि त्वयि भ्रमः ये त्वय्यपि भूतेन्द्रियादिकं ब्रुवते ते भ्रान्ता एवेत्यर्थः। यतोऽद्वितीये न विद्यते द्वितीयं यस्मिन् त्वयीदं देहेन्द्रियादिकं सर्वं त्वदात्मकं चिदेव न तु त्वत्तोऽद्वितीयं मायादिकमित्यर्थः ॥ ३० ॥ एवं स्तुत्वा प्रार्थयते—तस्येति। अयं भगदत्तो नाम भीतः अत एव मया तव पादपङ्कजमुपसादित इति ॥ ३१–३२ ॥

### गूढार्थदीपिनी

अस्य विश्वस्य। परे ब्रह्मादयोऽवरेऽस्मदादयस्तेषां सर्वेषामात्मा ॥ २९ ॥ त्वं वै त्वमेव सिसृक्षुः सन् उत्कटं रजोगुणं बिभर्षि। निरोधाय विनाशाय तमः जगतः स्थानाय पालनाय सत्त्वं च बिभर्षीत्यन्वयः। अथापि असंवृतः स्वतन्त्रः। कालः गुणक्षोभकः प्रकृतिः पुरुषश्च भगवान् भवानेव। तेभ्यः परः व्यतिरिक्तश्च ॥ ३० ॥ इत्येवमखिलं चराचरं जगत् अद्वितीये त्वयि

भ्रम एव रज्जौ सर्प इव। अहं भूमिः। मात्राणि शब्दादयः। कर्ता अहङ्कारः। महान् महत्तत्त्वम् ॥ ३१ ॥ हे प्रपन्नार्तिहर। तस्य भौमस्य अयमात्मजः भगदत्तः भीतः सन् तव पादपङ्कजम् उपसादितः प्रापितः। तत् तस्मात् एनं पालय। अमुष्य शिरसि हस्तपङ्कजं च कुरु। अखिलं कल्मषमपहन्तीति तथाभूतम् ॥ ३२-३३ ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

स्वावतारैः स्वांशाभ्याञ्च विश्वस्य पालनादि करोषीति स्तुवन् प्रकृत्यादीनां भगवति ज्ञादात्मामाह—त्वमिति। प्रधानं प्रकृतिः पुरुषो जीवः भवानेव ॥ २९ ॥ एवं सर्वकारणत्वं सर्वात्मकत्वमेकस्यैवानन्तशक्तेर्भगवतः उक्तमथ तदनुदावपूर्वकं नानाकारणवादवैशेषिकादिपक्षं श्रुतिविरुद्धं निराकरोति—अहमिति। अहं भूमिः पयःप्रभृतीनि चत्वारि महाभूतानि मात्राणि सूक्ष्मरूपाणि भूतानि देवाः मनः इन्द्रियाणि चकारात्तेषां कारणमहङ्कारः तत्कारणं महान् कर्ता जीवः "विज्ञानं यज्ञं तनुते कर्माणि तनुतेपि च" "कर्त्ता शास्त्रार्थवत्त्वात्" ( २।३।३३ ) इति श्रुतिसूत्रप्रसिद्धः जातावेकवचनम् इति चराचरं चेतनाचेतनात्मकमखिलं कार्यजातम् अद्वितीये एव त्वयि तादात्म्यसम्बन्धेनास्ति "सदेव सौम्येदमग्र आसीत्" एक एव नारायण आसीत्"—

"अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्त्तते। मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव॥"

इत्यादिश्रुतिस्मृतिभ्यः हे भगवन्! अयं प्रसिद्धः नानाकारवादस्तु भ्रमः तत्र समवायिकारणं नानापरमाणवो निमित्तकारणमीश्वरः सोपि शिवादिभेदेनानेकविधस्तार्किकादिभिः स्वीकृतः अत एव तर्कविमोहितो भौमस्त्वद्विमुखस्त्वया हत इति भावः ॥ ३० ॥ इत्थं स्तुत्वा प्रार्थयते—तस्येति। अयं भगदत्ताभिधः भीतः अत एव हे प्रपन्नार्तिहर! मया तव पादपङ्कजमुपसादितः तत्तस्मात् एनं पालय ॥ ३१ ॥ अभयं दत्वा ॥ ३२ ॥

### श्रीसत्यधर्मकृता श्रीभागवतटिप्पणी

यदा त्वं सिसृक्षुः सर्जनेच्छावांस्तदोत्कटं कार्याभिमुखं रजो विभर्षि। निरोधाय नाशं कर्तुमिच्छसि तदा संवृत्तं ज्ञानाद्यावरकं तमोगुणमुत्कटं विभर्षि। तथा स्थानाय पालनार्थमुत्कटं सत्त्वं विभर्षि। उत्कटं प्रभवित्ति पाठे हे उत्कटोत्कृष्ट प्रभो स्वामिन्नित्यर्थः। अपारोऽपरिच्छिन्नोऽस्य जगतः पारः पारयितेति वा। गुणवानपि नागुणवांल्लोकवदित्याह। अपार इति। अपगता अरा दोषा यस्मात्स इति वा। पुनर्जगत्प्रभवित्ति वदन्ती धरा वराहाभिन्नत्वेन जगत्प्राणः समीरण इत्यमरैकव्याकृतिमाश्रित्य मत्प्राणनाथेति सम्बोधयदिति बोध्यम् ॥ २३ ॥ अहं महो पय आपो ज्योतिरग्निरनिलो वायुर्नभो गगनं मात्रा गन्धाद्या देवा इन्द्रियाभिमानिनो मनः। मन एव मनुष्याणामित्युक्तेरिन्द्रियेभ्यः पृथक्कृत्योक्तम्। इन्द्रियाणीतराणि कर्ताऽहङ्काराभिमानी हरोऽभिमानी महत्तत्त्वाभिमानी ब्रह्मेत्यखिल इति यत्कारणं तत्सर्वमद्वितीयेऽसदृशे त्वदाधारतया वर्तते। यदाकदाचिद्यस्यकस्यचिद्यत्किञ्चिदधीनं भवति न तथेत्याह। भगवन् अयं भ्रमो जगच्चक्रपरिवर्तनं त्वय्येवेति। सदा त्वदधीन एवायमिति भावः। एवं सति यच्चाहं कर्तेत्यभिमानी अभिमानवान्सोऽयं भ्रमोऽन्यथामतिरित्यर्थः ॥ २५ ॥ एतावत्स्तवनेनावनि किं फलितमभिलषेत्यतो लपति ॥ तस्येति। तस्य त्वन्मारितस्य मम कुमारस्यायमात्मजो भीतस्तातघातात्। प्रपन्नार्तिहरं तव पादपङ्कजमुपसादितः प्राप्तो यतस्ततोऽखिलकल्मषापहं तव हस्तपङ्कजममुष्य सिरसि कुर्वेन् पालय च ॥ २६ ॥ वाग्भिर्भूम्याऽर्चितस्तस्मै तदुपदिष्टाय भगदत्ताय प्रसन्नः सन्नभयं प्रददौ ॥ २७ ॥ वंश्ये वंशपरम्परायास्ते राज्ये तं भगदत्तं नियोज्य तत्पदे तत्तत्पदे अमात्यांश्च नियोज्यानन्तरं भौमेन नरकेणोपरुद्धानां कान्तानां योषितां श्रेणीः पङ्क्तिः प्राविशत् ॥ २८ ॥

### श्रीमद्वल्लभाचार्य्यकृता सुबोधिनी

माहात्म्यमाह त्वं वै सिसृक्षुरिति। सिसृक्षुः उत्कटं कार्योन्मुखं रजो विभर्षि। निरोधाय तमः। तथा सति तेनावृतः स्यादित्यत आह **अपावृत इति**। आवरणरहितः। स्थानाय सत्त्वं विभर्षि। सर्वत्रोत्कटं विशेषणम्। अन्यो न तत्र प्रतिबन्धक इति वक्तुमाह जगतप्त इति। गुणानां नियामकाश्रयः। क्षोभकः कालः। स्वरूपभूता प्रकृतिः। पुरुषः अधिष्ठाता। एतत्त्रयमपि भवानेव। नापि तावन्मात्रम्, किन्तु तेषामपि परः ॥ २९ ॥ एवं सर्वोत्तमत्वमुक्त्वा सर्वत्वमाह अहमिति। तत्त्वानि कार्यं च भवानेवेत्यर्थः। अहं पृथिवी। अथेति त्रिवृत्करणपक्षान्यत्वं बोधयति। **मात्राणि** रूपतन्मात्रादीनि। **देवाः** दिग्वातादयः दश इन्द्रियाणि तथा। चकाराद्बुद्धिप्राणाः। कर्ता अहङ्कारः। महान् महत्तत्त्वम्। इतीति प्रकारवाची, समाप्तिवाची वा। अखिलमित्यस्यानुवादः चराचरमिति। भिन्नतया प्रतीतिरेव भ्रान्तेति, भेदोऽवश्यं कार्ये वक्तव्य इति अखिलमित्युभयत्र संबध्यते, न्यूनाधिकदोषपरिहाराय। **अद्वितीये त्वयि** 'एकः सन् बहुधा विचचार' इत्यादिश्रुत्या भगवानेव सर्वरूपेण विचरतीत्युक्तत्वात् भेदो भिन्नो नान्यः सम्भवति। तत्त्वादिनिरूपकाणां स्मार्तानां विचारकाणामपि भेदो हृदये भासत इति। अयं सर्वोऽपि भ्रमः एवं परिगणनात्मकः। त्वामेव यतो बहुधा गणयन्तः गणितानां परस्परं भेदं मन्यन्त इति। वस्त्वन्तरत्वमेव भेदः ॥ ३० ॥ एवं स्तुत्वा प्रार्थयते **तस्यात्मजजोयमिति**। स्तोत्रेण सर्वेषामपराधाः परिहृताः। भ्रान्ता इति सर्वो भवानेवेति च। **आत्मज इति**।

राज्यदानार्थं तत्पुत्रत्वं निरूप्यते। तव पादपङ्कजं प्रपन्न इति तस्मिन् स्नेहकरणार्थम्। भीत इति दयार्थम्। तथापि शत्रुर्मारणीय इत्याशङ्क्याह **प्रपन्नार्त्तिहरेति। उपसादितः** पादयोरागत्य पतितोऽस्ति, न तु त्वां विरुद्धं मन्यते। अनेन 'ये यथा मां प्रपद्यन्त' इति विचारेणापि तस्मिन् कृपा विधेयेति निरूपितम्। तस्मात्**पालयेति** प्रार्थना। एनमिति प्रदर्श्याह। भार्यात्वात्सोऽपि पौत्र इति धाष्ट्र्यात् पुनर्विज्ञापनान्तरमाह **कुरु हस्तपङ्कजं शिरस्यमुष्येति**। यथा स्वस्य रक्षित इति प्रतीतिर्भवति। ननु वाक्येनापि भवति, को विशेषो हस्तस्पर्श इत्याशङ्क्याह **अखिलकल्मषापहमि**ति। कालत्रये त्रिविधान्यपि पापानि तस्मिन्न तिष्ठन्तीति हस्तपङ्कजमखिलकल्मषापहं भवति। स्वाधिकरणमेव तथा सम्पादयतीति। यद्यपि तत्पुत्रोऽपि दुष्टो मारणीय एव, तथापि भूमिप्रार्थनया तदा न मारितः ॥३१॥ सर्वैः सर्वमेव प्रार्थ्यते, तथापि यद्यत्र उचितम्, तदेव करोति, नान्यथा अणुमात्रमपीत्याह **इति भूम्येति**। वाग्भिः सह अर्चितः अर्चनद्रव्यैः। वाग्भिरेव वा। शिष्टं तस्यैवेति। बुद्धिं तु भगवान् स्त्रियमिव सर्वेभ्यो दत्तवान्। पुरञ्जनोपाख्याने तदुपपादितम्। तत्सर्वजीवेषु भिन्नम्। अन्यथा प्रमाणानां वैयर्थ्यं स्यात्। अतो बुद्धिदोषगुणान् पुरस्कृत्य यथोचितं करोतीति सर्वमविरुद्धम्। समयविशेषे लीलार्थं तथा बुद्धीनां निर्माणम्। तदाह **भगवानि**ति। तथापि भक्तिनम्रया स्तुत इति अभयमेव दत्वा स्वगृहमेवेति **भौमगृहं** प्राविशत्। तत्र हेतुः **सकलर्द्धिमदि**ति। तत्पुत्रस्य प्राणा एव तस्मिन् समये रक्षणीया इति तथाकरणम्, अन्यथा तावतीनां कन्यानां वैयर्थ्यं स्यात्। तदुपार्जितसर्वग्रहण एव तस्यापहारदोषपरिहारो भवतीति ॥ ३२ ॥

### श्रीसुबोधिनी-सारः

हे जगत्पते जगतः सिसृक्षुः स्रष्टुमिच्छुस्त्वमुत्कटं रजो बिभर्षि स्थानाय पालनार्थं सत्त्वं निरोधाय संहारार्थं तमो बिभर्षि हे प्रभो असंवृतो नित्यज्ञानः कालः प्रधानं परः पुरुषो भवान् ॥ २९ ॥ अहं पृथिवी तदादीनि पंचभूतानि मात्राणि विषया गंधादयः देवा इंद्रियाणि मनः कर्त्ता त्रिविधाऽहंकारो महान् इत्येवं चराचरमखिलं सर्वं द्वैतजातमद्वितीये त्वयि भ्रमोऽध्यस्तः हे भगवन् ॥ ३० ॥ प्रार्थयते हे प्रपन्नार्त्तिहर तस्य नरकस्यात्मजः पुत्रोयं भीतः तव पादपंकजमुपसादितः प्रापितः तत्तस्मात्त्वमेनं पालय अमुष्य शरणं गतस्यास्य शिरसि अखिलकल्मषापहं सर्वपापनाशनं हस्तपंकजं स्वपाणिपद्मं कुरु निधेहि ॥ ३१ ॥ शुकोक्तिः। भक्तिनम्रया भूम्या पृथिव्या इत्येवमर्थितो याचितो वाग्भिरभयं दत्त्वा सकला ऋद्धयः संत्यस्मिन्निति भौमस्य गृहं प्राविशत् ॥ ३२॥

### श्रीविट्ठलरायात्मजश्रीवल्लभकृतलेखः

इति भूम्येत्यत्र। **शिष्टमि**ति। वाण्याः स्वकीयत्वं व्युत्पादयन्ति बुद्धिं त्विति। उपक्रमे भक्तिप्रवणाया धियः स्तुतौ करणत्वकथनाद्बुद्धिकार्यं स्तुतिरूपा वाण्यपि स्वकीयेति भावः। **तत्सर्वजीवेष्वि**ति। बुद्धिदानं भिन्नभिन्नप्रकारकमित्यर्थः। तथाकरणमिति। प्राणमात्ररक्षार्थमभयदानमित्यर्थः। **अन्यथेति**। अन्येषां कन्यादीनां रक्षणे इत्यर्थः।

### गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

किञ्च भगवते ऐश्वर्यादिगुणपूर्णाय वासुदेवाय वसुदेवनन्दनाय तुभ्यं नमः। सर्वपालकत्वेन प्रणमति–विष्णव इति। सर्वोपादानत्वेन प्रणमति–आदिबीजायेति। सर्वसाक्षित्वेन प्रणमति–पूर्णबोधायेति। तत्र हेतुं सूचयन्नाह—पुरुषायेति। पूर्ष्वन्तःकरणेषु शेते निवसतीति पुरुषस्तस्मै नमः ॥ २९ ॥ सर्वनिमित्तकारणत्वेन प्रणमति–अस्य विश्वस्य जनयित्रे इति। 'तथापि तज्जनकः कश्चिदन्यः स्यात्' इत्याशङ्क्याह—अजायेति। ननु 'पित्रादयः पुत्रादीनां जनकास्तेषां च तत्पूर्वे तेषां च भूतानीति कथं मम सर्वकारणत्वम्' इत्याशङ्क्य 'सर्वोपादानत्वात् सर्वात्मकस्त्वमेव' इत्याशयेन सम्बोधनद्वयमाह–परावरात्मन्निति, भूतात्मन्निति। सर्वात्मत्वे विकारित्वमाशङ्क्य निर्लेपत्वमाह–परमात्मन्निति। 'कथमेवं संभवति' इत्याशङ्क्याह–अनन्तशक्तय इति। 'एवंभूतं तु वेदे ब्रह्म प्रसिद्धम्' इति चेत् 'तदेव त्वम्' इति आह–ब्रह्मणे इति ॥ ३० ॥ उक्तं सृष्ट्यादिकर्तृत्वमेव स्पष्टयति–त्वं वै इति। 'त्वत्स्वामिकमेव जगत्, इति स्पष्टयन् संबोधयति–जगत्पते इति। स्वामिनामपि लोककालकर्मादिपारतन्त्र्यदर्शनात् सर्वथा स्वातन्त्र्यं सूचयन् सम्बोधयति–प्रभो इति। त्वमेव सिसृक्षः स्रष्टुमिच्छुः सन् उत्कटं कार्योन्मुखं रजोगुणं बिभर्षि रजोगुणप्रधानचतुर्मुखो भूत्वा सृजसीत्यर्थः। तथा जगतो निरोधाय विनाशाय उत्कटं तमोगुणं बिभर्षि तमःप्रधानकालाग्निरुद्रादिरूपो भूत्वा विनाशयसीत्यर्थः। तथा जगतः स्थानाय पालनाय उत्कटं सत्त्वं गुणं बिभर्षि सत्त्वप्रधानविष्ण्वादिरूपो भूत्वा पालयसीत्यर्थः। एवं सृष्ट्यादिकुर्वतो विकारित्वमाशङ्क्याह–असंवृत इति। स्वातन्त्र्येण कार्यार्थं गुणाङ्गीकारेपि तैरवशीकृतत्वान्न विकारित्वमित्यर्थः। 'कालप्रधानपुरुषाणामपि स्वातन्त्र्यप्रसिद्धेः कथं मम स्वातन्त्र्यम्' इत्याशङ्क्याह—काल इति। कालादिरूपोऽपि परः पुरुषोत्तमो भवानेवेत्यर्थः ॥ ३१ ॥ ननु 'ममापि वसुदेवपुत्रतया सर्वजनतुल्यप्राकृतत्वेन प्रतीतेः कथं पुरुषोत्तमत्वम्' इत्याशङ्क्याह–अहमिति। अहं भूमिः, पयो जलम्, ज्योतिरग्निः, अथशब्दोऽप्यर्थे, अनिलः पवनः, नभः आकाशः, मात्राणि शब्दस्पर्शरूपरसगन्धाः, देवा इन्द्रियाधिष्ठातारोऽग्न्यादयः, मनश्च, इन्द्रियाणि च चक्षुरादीनि, कर्ता अहंकारः, महान् बुद्धिः, इत्येवं चराचरं प्राकृतं यत्त्वयि प्रतीयते सोऽयं प्रतीत्यामको जनानां भ्रमो बुद्धिमोह एव। तत्र हेतुमाह–अद्वितीय इति। आनन्दमात्रकरपादमुखोदरादि-

रूपे त्वयि प्रकृतिकार्यलेशाभावादित्याशयः। ननु 'कथमेवमानन्दमात्रस्य पुरुषाकारत्वम्' इत्यपेक्षायाम् 'अचिन्त्यानन्तैश्वर्यादिशक्तिमत्त्वात्' इत्याशयेन सम्बोधयति—भगवन्निति ॥ ३२ ॥

### अन्वितार्थप्रकाशिका

अजायेति ॥ हे परावरात्मन् परेशामवरेषां च आत्मभूत ! हे भूतात्मन् पृथिव्यादिरूप ! हे परमात्मन् ! अजाय जन्मरहिताय अस्य विश्वस्य जनयित्रे ब्रह्मणे अनन्तशक्तये ते तुभ्यं नमः ॥ २९ ॥ त्वमिति ॥ हे प्रभो ! हे जगत्पते ! त्वं वै त्वमेव सिसृक्षुः स्रष्टुमिच्छुः सन्नुत्कटं कार्योन्मुखं रजोगुणं बिभर्षि । रजःप्रधानब्रह्मादिरूपो भूत्वा सृजसीत्यर्थः। तथा जगतो निरोधाय विनाशायोत्कटं तमोगुणं बिभर्षि । तमःप्रधानकालाग्निरुद्रादिरूपो भूत्वा विनाशयसीत्यर्थः। तथा जगतः स्थानाय पालनाय उत्कटं सत्त्वं गुणं बिभर्षि सत्त्वप्रधानविष्ण्वादिरूपो भूत्वा पालयसीत्यर्थः। तथा भवान् तमसो धारणेऽप्यसंवृतः स्वतन्त्र एव कालः प्रधानं पुरुषश्च भवानेव तेभ्यः परो व्यतिरिक्तश्च ॥ ३० ॥ अहमिति ॥ हे भगवन् ! अहं भूमिः पयो जलं ज्योतिरग्निः। अथशब्दोऽप्यर्थे । अनिलः पवनः नभः आकाशः मात्राणि शब्दस्पर्शरूपरसगन्धाः देवा इन्द्रियाधिष्ठातारोऽग्न्यादयः मनश्च इन्द्रियाणि च चक्षुरादीनि इति त्रिविधाहङ्कारकार्याणि कर्ता अहङ्कारः महान्बुद्धिः इत्येवम् अखिलं चराचरं प्राकृतं यदद्वितीयेऽपि त्वयि प्रतीयते सोऽयं प्रतीत्यात्मको जनानां भ्रमः बुद्धिमोह एव। भ्रमे यथा रूप्यादिशुक्त्यादितो नातिरिक्तं शुक्त्यादयस्तु ततोऽतिरिक्ताः अन्यथा रूप्यादिबाधे तद्बाधापत्तेः। तस्मात्सर्वमेव तुच्छं न ते कोपस्य विषयोऽपि तु दयापात्रमेव ॥ ३१ ॥ तस्येति ॥ हे प्रपन्नार्तिहर ! अयं भगदत्ताख्यः तस्य भौमस्यात्मजो मया तव पदपङ्कजमुपसादितः प्रापितः। यस्मादयं भीतस्तस्मादेनं पालय तथा अखिलकल्मषापहं स्वहस्तपङ्कजममुष्य शिरसि कुरु निधेहि ॥ ३२ ।

### श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्

ननूत्पत्त्यादीनां पुरुषप्रकृतिकाल ब्रह्मादय एव हेतवो नत्वहमिति चेत्तत्राह त्वमिति सिसृक्षुर्विश्वं स्रष्टुमिच्छुस्त्वं अनिरुद्धरूपेण उत्कटं शुद्धं रजो बिभर्षि निरोधाय विश्वनाशाय । संकर्षणरूपेण तमश्च बिभर्षि स्थानाय जगतः। पालयनाय प्रद्युम्नरूपेण सत्वं बिभर्षि । अतः। कालादीनां प्रवर्त्तको गुणैरसंवृत्तोभवान् परः सर्वेभ्यः श्रेष्ठः ॥ २९ ॥ अहं भूमिः कर्त्ताहंकारः उक्तं चेतनाचेतनं भवता सदृशमस्तीति अद्वितीये अद्वितीय उक्तेषु सर्वेषु चेतनाचेतनेषु नास्ति स्वरूपस्वभावादिभिस्त्वादृशो द्वितीयो यस्य एवंभूते अप्राकृतदिव्यावयविनि त्वयि अयं चेतनाचेतनसादृश्यरूपो जनानां भ्रमो विपरीतज्ञानं भवति ॥ ३० ॥ प्रार्थयतोसत्या हतस्येति हे प्रपन्नार्त्तिहरतस्य त्वया हतस्य भौमस्यायं भगदत्ताभिधः पुत्रो भीतः अतो मया तव पादपंकजमुपसादितः प्रापितः तत्तस्मादेनं पालय ॥ ३१ ॥ भक्त्या नम्रतया भूम्या ॥ ३२ ॥

### भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

सांप्रतं स्वाभिप्रेतं सर्वकारणत्वं सम्यक्तयाऽऽह । त्वं वा इति । हे प्रभो, त्वं वै त्वमेव, सिसृक्षुः स्रष्टुमिच्छुः सन्, उत्कटं तीव्रं, रजः बिभर्षि रजोगुणप्रधानचतुर्मुखाख्यदेहानुप्रवेशेन सृजसीत्यर्थः। तथा निरोधाय जगतां नाशाय, उत्कटं तमः, बिभर्षि। प्रधानभूतकालाग्निरुद्रानुप्रवेशेन जगद्विनाशयसीत्यर्थः। तथा हे जगत्पते, जगतः स्थानाय स्थितये, उत्कटं सत्त्वं, बिभर्षि। सत्त्वप्रधानमन्वादिकानुप्रशेन मन्वादिशरीरको भूत्वा पालयसीत्यर्थः। भवान्, कालः, प्रधानं, पुरुषः कालादिशरीरकस्त्वमेव भवसीत्यर्थः। तद्गतदोषसम्बन्धो मम प्राप्तः स्यात्तत्राह। परः अतः, असंवृतः, वस्तुतस्तव कालादेरनन्यत्वात्त्वं तदसंवृत एवेत्यर्थः। 'ऐतदात्म्यमिदं सर्वं तत् सत्यं स आत्मा' इतिवदयं निर्देशः ॥ २९ ॥ एवं कारणानन्यत्वं प्रदर्श्याथ कार्यानन्यत्वमाह। अहमिति । अहं पृथिवी, पयो जलं, ज्योतिस्तेजः, अथ अनिलो वायुः, नभः आकाशं, मात्राणि शब्दादयो विषयाः, मात्राशब्दे क्लीबत्वमार्षम्। देवा दिगादयः, इन्द्रियाणि श्रोत्रादीनि च, मनः इदं बुद्ध्यादीनामुपलक्षणम्। महान्महत्तत्त्वं, कर्त्ता जीवः 'कर्त्ता शास्त्रार्थत्वात्' इति सूत्रात्। 'आत्मा कर्त्ता एव, शास्त्रार्थवत्त्वात्। अन्यथा कुर्यान्न कुर्यादिति शास्त्रस्य वैयर्थ्यं स्यात्' इत्येतद्व्याख्या। इत्येवंविधं, अखिलं, चराचरं, अद्वितीये स्वरूपस्वभावैश्वर्यादिभिः स्वसमानापरवर्जिते त्वयि, वर्त्तते। चराचरं त्वदेकाश्रयमेव भवतीत्यर्थः। हे भगवन्, चराचरमऽत्वदाश्रयं वदतामिति शेषः। अयं अत्वदाश्रयोक्तिरूप एषः भ्रमः, एव ॥ ३० ॥ एवं स्तुत्वा किंचित् प्रार्थयते। तस्येति। हे प्रपन्नार्त्तिहर, तस्य त्वया छिन्नशिरसो भौमस्य, अयं भगदत्तनामा आत्मजः सुतः, भीतः सन् तव पादपङ्कजं, उपसादितः। तत्तस्मात्, एनं पालय। अमुष्य भगदत्तस्य, शिरसि, अखिलकल्मषापहमखिलाशुभहर्तृं, हस्तपङ्कजं पाणिपद्मं, कुरु निधेहि ॥ ३१ ॥ इतीति। इतीत्थं, भक्तिनम्रया भूम्या, वाग्भिः अर्थितः सम्प्रार्थितः, भगवान् श्रीकृष्ण, अभयं भगदत्तायेति शेषः। दत्त्वा, सकलाः ऋद्धयो भोग्यभोगोपकरणादिसमृद्धयो यस्मिन् सन्तीति तत्, भौमगृहं भौममन्दिरं, प्राविशत् ॥ ३२ ॥

**कृष्णप्रिया**

हे सर्वसमर्थनाथ ! हे प्रभो ! यह निश्चित बात है कि "स अकामयत" आपकी जब ब्रह्माण्डों की रचना करने की कामना हुई तब आपने उत्कट रजोगुण का अङ्गीकार किया; जब इन ब्रह्माण्डों का निरोध–उपसंहार करना चाहा तब उत्कट तमोगुण को स्वीकार किया। एवं हे जगन्नाथ ! जब आप इस विश्व का पालन-रक्षण करना चाहते हो तब उत्कट सत्वगुण को स्वीकार करते हो। लेकिन उत्पत्ति-पालन-निरोध के तीन गुणों को स्वीकार करने पर भी आप असंवृत-इन गुणों से ढक जाते नहीं है। भगवन् ! आप ही प्रकृति हैं, आप ही पुरुष हैं और सर्वसंयोजक नियोजक काल भी आप हैं फिर भी इन सबसे परे भी आप हैं ॥ २९ ॥ हे भगवन् ! अधिक आप सर्वज्ञ को क्या निवेदन करूँ, पृथ्वी ( अहं ) जल, तेज, वायु, आकाश, पञ्चतन्मात्रा, मनः, इन्द्रियों, इन्द्रियों के अधिष्ठाता देवगण, अहंकार ( कर्ता ) महान्–महत्तत्व प्रकृति, एवं संक्षेप में यह सचराचर ब्रह्माण्ड आपका ही स्वरूप है लेकिन अज्ञान से अथवा भ्रान्ति से आप से भिन्न-भिन्न मालुम हो रहा है ॥ ३० ॥ अब दैन्य पुरःसर भूमिदेवी निवेदन कर रही है कि हे नाथ ! हे शरणागतवत्सल ! हे भक्तभयभंजन ! हे भगवन् ! यह मेरा पौत्र भगदत्त आपके श्रीचरणों में प्रपन्न होकर प्रणाम कर रहा है। भौमासुर का पुत्र है, अब आप ही उसके पिता हैं पितामह हैं। नाथ ! यह भयभीत हो रहा है। मैं भगदत्त को आपके श्रीचरणों में शरण ले आयी हूँ। भगवन् बालक की रक्षा कीजिये और अपना अभयद एवं वरद करसरोज इसके सिरपर रखिये। नाथ ! आपका करकमल समस्त पाप-ताप-संताप का निवारक है ॥ ३१ ॥ श्री शुकमहर्षिजी ने कहा—महाराज ! जब श्रीपृथ्वी देवी ने भक्ति समर भाव एवं वाणी से दीन होकर नम्रता से भगवान् श्रीकृष्ण की प्रार्थना की तब भगवान् ने भगदत्त एवं पृथ्वी को अभयदान दिया। तदन्तर सकल-सम्पत्ति सम्पन्न भौमासुर के राजभवन में भगवान् ने चरणधरी की ॥ ३२ ॥

[1]तत्र राजन्यकन्यानां षट्सहस्राधिकायुतम् । [2]समाहृतानां विक्रम्य राजभ्यो ददृशे हरिः ॥ ३३ ॥
तं प्रविष्टं स्त्रियो वीक्ष्य[3] नरवर्य[4] विमोहिताः । मनसा वव्रिरेऽभीष्टं पतिं दैवोपसा[5]दितम् ॥ ३४ ॥
भूयात् पतिरयं मह्यं[6] धाता तदनुमोदताम् । [6] इति सर्वाः पृथक् कृष्णे भावेन[7] हृदयं दधुः ॥ ३५ ॥
ताः प्राहिणोद् द्वारवतीं सुमृष्टविरजोऽम्बरैः[8] । [9] नरयानैर्महाकोशं[10] रथाश्वा[11]द्रविणं महत् ॥ ३६ ॥

**कर्दमक्षमा**

**अन्वयः**—श्रीशुक उवाच—भक्तिनम्रया, भूम्या, इति, वाग्भिः, अर्थितः, भगवान्, अभयम्, दत्त्वा, सकलर्द्धिमत्, भौमस्य, गृहम्, प्राविशत् ॥ ३३ ॥ तत्र, हरिः, भौमगृहे, विक्रम्य, राजभ्य, उपलक्षणतया, सिद्धादिभ्यश्च, भौमाहृतानाम्, षट्, सहस्राधिकायुतम्, राजकन्यानाम्, ददृशे ॥ ३४ ॥ स्त्रियः, तम्, प्रविष्टम्, नरवीरम्, वीक्ष्य, विमोहिताः ( सन्त्यः ) दैवोपसादितम्, अभीष्टम्, पतिम्, मनसा, वव्रिरे, ॥ ३५ ॥ ताः, सर्वाः, धाता, मह्यम्, तत्, अनुमोदताम्, अयम्, पतिः, भूयात्, इति, पृथक्-भावेन, कृष्णे, हृदयम्, दधुः ॥ ३६ ॥

**श्रीधरस्वामिविरचिता भावार्थदीपिका**

शताधिकमित्यपि ज्ञातव्यम् । यथाह श्रीपराशरः । "कन्यापुरे स कन्यानां षोडशातुलविक्रमः ॥ शताधिकानि ददृशे सहस्राणि महामते" इति । राजभ्य इत्युपलक्षणं सिद्धादिभ्यश्चेति । तथा च तेनैवोक्तम् । "देवसिद्धासुरादीनां नृपाणां च जनार्दन । हृत्वा हि सोऽसुरः कन्या रुरोध निजमंदिरे" इति ॥ ३३–३४–३५ ॥ प्राहिणोत् प्रस्थापयामास । सुमृष्टा कमनीयाश्च ता विरजोंबरऽम्बराश्रयाश्च नरयानैः शिविकाभिः । अपि च महाकोशानिति ॥ ३६–३७ ॥

**श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः**

तत्र भौमगृहे । पराशरमतमाश्रित्य समासः । षट्सहस्राणि च अधिकानि च अयुतश्चैतेषां समाहारस्तथा । अधिकपदमत्र शतार्थकम् । तेनैव पराशरेण । सोऽसुरो नरकासुरः ॥ ३३ ॥ तं कृष्णम् ॥ अभितः सर्वतोभावेनेष्टं वांछितं दैवेन प्राचीनतद्भक्तिरूपेण प्रापितम् । तदुक्तं हरिवंशे–"निवसन्त्यो यथा देव्योऽसुखिन्यः कामवर्जिताः । वरिवव्रुर्महाबाहुरेकवेणी धराः स्त्रियः । सर्वाः

१. राज्ये नियोज्य तं वंश्ये तदमात्यांश्च तत्पदे । भौमावरोधकान्तानां श्रेणीं संप्राविशद् हरिः ॥–विजयेऽधिकः ।

२. भौमा–श्रीधरादयः । ३. [ ताः सर्वाः नव यौवनाः स्वलंकृता विचित्राङ्गचो ] अधिकं विज. । ४. वीरं–श्रीधरादयः; वर्यं–वीर. ५. पा–विज. । ६. इति सर्वेश्वरे कृष्णे ता नार्यो हृदयं दधुः–विज. । ७. कृतचेतसः–प्रा पा. । ८. रुचिराम्बराः–विज. ; म्बराः–श्रीधर. वंशी. जीव. वीर. विश्व. । ९. खरैरुष्ट्रै–विज । १०. कोशान्–श्रीधरादयः । ११. श्वान्–श्रीधर. वंशी. जीव.; थांश्च–विज. ।

काषायवासिन्यः सर्वाश्च नियतेन्द्रियाः। व्रतोपवासतत्त्वज्ञाः कांक्षन्त्यः कृष्णदर्शनम् ॥" इति ॥ ३४ ॥ अयं कृष्णः। धाता ईशः। तदस्मत्पतित्वम् ॥ मह्यं ममेति पृथक्पृथग्निगूढसंकल्पादेकवचनम् ॥ ३५ ॥ ता भौमगृहस्थाः ॥ सुमृष्टाः स्नपनादिना निर्मलीकृताश्च ता विरजोंवराः शुद्धवस्त्राः, तथाभूताः कृत्वा प्राहिणोदित्यर्थः। द्रविणं रत्नादिकं गवादिकं मदनसारिकादिकञ्च। महत्त्वं बहुमूल्यादिना बाहुल्येन च, श्रेष्ठम्। तदुक्तं हरिवंशे तद्धनाध्यक्षैः—"इमानि मणिरत्नानि विविधानि बहूनि च। गोषु चापि भवेद्यावत्कामस्तावज्जनार्दन ॥ तावतीः प्रापयिष्यामो वृष्ण्यंधकनिवेशनम्। कामव्याहारिणश्चैव पक्षिणः प्रियदर्शनाः ॥ चन्दनागुरुकाष्ठानि तथा कालीयकान्यपि। वसु यत्त्रिषु लोकेषु धर्मेणाधिगतं तव ॥" इति ॥ ३६ ॥

## श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी

विक्रम्य पराक्रम्य राजभ्यो भौमेनाहृतानाम् ॥ ३३ ॥ वीक्ष्य साक्षाद्दृष्ट्वा विमोहिताः हरिणा अभितः सर्वतो भावेनेष्टं विराद्वाञ्छितं तच्च सुदुर्लभमपि दैवेन प्राचीनतद्भक्तिरूपेण उपसादितं प्रापितं पतिं पतित्वेनैव वव्रिरे तथा च तत्रैव—

"निवसन्त्यो यथा देव्यः सुखिन्यः कामवर्ज्जिताः। परिवव्रुर्महाबाहुमेकवेणीधराः स्त्रियः ॥
सर्वाः काषायवासिन्यः सर्वाश्च नियतेन्द्रियाः। व्रतोपवासतत्त्वज्ञाः काङ्क्षन्त्यः कृष्णदर्शनम् ॥" इति ॥ ३४ ॥

कथं परिवव्रिरे ? तदाह—भूयादिति। मह्यं मम पतिः पृथक्-पृथक् निगूढसङ्कल्पादेकवचनम् ॥ ३५ ॥ नरयानैः प्राहिणोत्, कथम्भूताः सतीः ? सुष्ठु मृष्टाः स्नपनादिना निर्मलीकृताश्च ताः विरजोऽम्बराश्च तथाभूताः कृत्वेत्यर्थः। द्रविणं रत्नादिकं गवादिकं मदनशारिकादिकञ्च महत्त्वं बाहुल्येन बहुमूल्यत्वादिना च श्रैष्ठ्यं तथाच तत्रैव धनरक्षिणामुक्तौ—

"इमानि मणिरत्नानि विविधानि बहूनि च। गोषु चापि भवेद्यावत्कामस्तावज्जनार्दन ॥
तावतीः प्रापयिष्यामो वृष्ण्यन्धकनिवेशनम्। कामव्याहारिणश्चैव पक्षिणः प्रियदर्शनाः ॥
चन्दनागरुकाष्ठानि तथा कालीयकान्यपि। वसु यत्त्रिषु लोकेषु धर्मेणाधिगतं तव" ॥ इति ॥ ३६ ॥

## श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी

हरिरिति तासां मनोहरणात् ॥ ३३ ॥ वीक्ष्य साक्षाद्दृष्ट्वा हरिणा वीक्षणेनैव वा विशेषेण मोहिताः, किंवा स्वार्थे इण्, विमूढाः सत्यः, यतः स्त्रियः, अभितः सर्व्वतोभावेनेष्टं चिराद्वाञ्छितं तच्च सुदुर्लभमपि दैवेन निजशुभादृष्टेन तत्कारुण्येन वा प्रापितं पतिं पतित्वेन वव्रिरे। तथा च तत्रैव ( हरिवंशे विष्णु० प० ६४।२६।२७ )

'निवसन्त्यो यथा देव्यः सुखिन्यः कामवर्ज्जिताः। परिवव्रुर्महाबाहुमेकवेणींधराः स्त्रियः ॥
सर्व्वा काषायवासिन्यः सर्व्वाश्च नियतेन्द्रियाः। व्रतोपवासतत्त्वज्ञाः काङ्क्षन्त्यः कृष्णदर्शनम् ॥' इति ॥

कथं वव्रिरे ? तत्राह—भूयादिति। मह्यं मम पतिः, ममेत्येकत्वं भावोद्रेकेणासापत्न्याय प्रत्येकं सर्व्वाभिरन्तःप्रार्थनात्, अत एवोक्तम्—पृथगिति, धातेति जगत्पोषणादिना शक्तिविशेषोऽभिप्रेतः, अतोऽनुमोदताम्, कृष्णे तासां चित्ताकर्षके भगवति ॥ ३५ ॥ नरयानैः प्राहिणोत्। कथम्भूताः ? सतीः सुष्ठु मृष्टाः स्नपनादिना निर्म्मलीकृताश्च ता विरजाम्बराश्च तथाभूताः कृत्वेत्यर्थः। द्रविणं रत्नादिकं गवादिकं शुकादिकञ्च, महद्बाहुल्येन बहुमूल्यत्वादिना च श्रेष्ठम्, तथा च तत्रैव धनरक्षिणामुक्तौ ( हरिवंशे विष्णु० प० ६४।११, १४, १५, १६ )—

'इमानि मणिरत्नानि विविधानि बहूनि च। गोषु चापि भवेद्यावत्कामस्तव जनार्द्दन ॥
भावतीः प्रापयिष्यामो वृष्ण्यन्धकनिवेशनम्। कामव्याहारिणश्चैव पक्षिणः प्रियदर्शनाः ॥
चन्दनागुरुकाष्ठानि तथा कालीयकान्यपि। वसु यत्त्रिषु लोकेषु धर्म्मणाधिगतं तव ॥' इति ॥ ३६ ॥

## श्रीसुदर्शनसूरिकृतशुकपक्षीयम्

राजभ्यो भौमेन आहृतानामित्यन्वयः ॥ ३३ ॥ दैवोपसादितं भाग्यलब्धम् ॥ ३४-४० ॥

## श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका

तत्रेति। पराक्रम्य राजभ्यो भौमेनाहृतानां राजकन्यानां षट्सहस्राण्यधिकानि यस्मिन् तदयुतं दशसहस्राणि षोडशसहस्राणीत्यर्थः। ददर्श ॥ ३३ ॥ तमिति। वरवर्य्यं वरश्रेष्ठं तं कृष्णं दैवेन प्रापितं भाग्यलब्धमभीष्टं पतिं मेनिरे ॥ ३४ ॥ मननप्रकारमेव दर्शयति—भूयादिति। मह्यं मम तदस्मदभिमतं धाता ब्रह्मा अनुमोदताम् अनुगृह्णातु सत्यापयत्वित्यर्थः। इतीति। पृथक् प्रत्येकं भावेनोक्ताभिसन्धिना कृष्णे हृदयं चित्तं दधुः निदधुः ॥ ३५ ॥ ता इति। विगतमालिन्यान्यम्बराणि यासां ताः

सुमृष्टाश्च स्नापिताः धौतवस्त्राद्यलङ्कारिताश्चेत्यर्थः । नरयानैरान्दोलिकाभिर्द्वारकां प्रति प्रेषयामास तथा महान् कोशो मूल्यं येषां ताननर्घान् रथादीन् विपुलं धनं च प्राहिणोत् प्रेषयामास ॥ ३६ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

षट्सहस्रेणाधिकमयुतं शताधिकमपि विष्णुपुराणदृष्ट्या ज्ञेयं राजभ्य इत्युपलक्षणं सिद्धादिभ्यश्च सकाशादादृतानाम् ॥ ३३-३५ ॥ नरयानैः शिबिकाभिर्महाकोशादीनपि ॥ ३६-३८ ॥

### गूढार्थदीपिनी

तत्र भौमगृहे । विक्रम्य पराक्रमं कृत्वा राजभ्यः भौमेनाहृतानामित्यन्वयः षट्सहस्राणि च अधिकानि च अयुतञ्चैतेषां समाहारः । अधिकपदमत्रशतार्थबोधकम् । तेन शताधिकषोडशसहस्राणीत्यर्थः ॥ ३४ ॥ तं श्रीकृष्णम् ॥ ३५ ॥ मह्यं मम । धाता विधाता । भावेन सङ्कल्पेन मनो दधुः ॥ ३६ ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

षट्सहस्राणि येषु शतोत्तरषट्सहस्रेषु तानि षट्सहस्राणि अधिकानि यस्मिन् तत् षट्सहस्राधिकं तच्चायुतं च तथा शताधिकषोडशसहस्राणीत्यर्थः—

"कन्यापुरे स कन्यानां षोडशातुलविक्रमः । शताधिकानि ददृशे सहस्राणि महामते ॥ इति

विष्णुपुराणे च राजन्यकन्यानाम् देवसिद्धासुरनृमुख्यकन्यानाम्—

"देवसिद्धासुरादीनां नृपाणां च जनार्दन ! । हृत्वा हि सोऽसुरः कन्या रुरोध निजमन्दिरे ॥ इति

विष्णुपुराणे च ॥ ३३-३७ ॥

### श्रीसत्यधर्मकृता श्रीभागवतटिप्पणी

षट्सहस्रैरधिकं यदयुतं दशसहस्रं तच्छोडशसहस्रमित्यर्थः । षट्सहस्रैस्तथाऽधिकेन शतेन च सहितं यदयुतं तत्तद्ददृश इत्यर्थः । यथोक्तं पराशरेण । कन्यापुरे स कन्यानां षोडशातुलविक्रमः । शताधिकानि ददृशे सहस्राणि महामुन इति । आचार्यवर्याश्च । अष्टौ सहस्राणि शतं च रूपशीलोदारा अक्षताः सद्व्रतस्था इत्युक्तवन्तः । विक्रम्य विक्रमं कृत्वा राजभ्यो राजसिद्धादिभ्यो राजतयाऽवतरितसिद्धादिभ्यो वा । यथोक्तं पराशरेण च । देवसिद्धासुरादीनां नृपाणां च जनार्दन । हृत्वा हि सोऽसुरः कन्या रुरोध निजमन्दिर इति । भौमाहृतानां देवगन्धर्वकन्यास्तासां प्रधाना त्वष्टृपुत्री कशेरुरित्युक्तेस्तासां स्वरूपं ज्ञेयम् ॥३३॥ नवयौवना इति विवृतमाचार्यैरक्षता इति । स्वलङ्कृता विचित्राङ्ग्य स्वलङ्कृता इव विचित्राङ्ग्य इति योजनीयम् । तथा हि हरिवंशे । एकवेणीधराः स्त्रियः । सर्वाः काषायवासिन्यः सर्वाश्च नियतेन्द्रिया इति स्वभावशोभानुपमेति भावः । नरवर्य हे राजन् । विमोहिता इत्युत्तरेणान्वेति । नरवर्येण कृष्णेन विमोहिता इति वा ॥ ३४ ॥ दैवोपपादितमदृष्टानियामकश्रीहरिघटितमभीष्टं पतिं वव्रिरे । धाता विधिः । तद्भर्तृ भवनम् ॥ ३५ ॥ इति सर्वेश्वरे कृष्णे । एवं प्रकारेण ताः मनो दधुः । सुमृष्टं शुद्धं रुचिरमम्बरं यासां ताः । इदानीं दानवारिनारिभ्योऽम्बरण्याभरणं च दत्वा प्राहिणोदिति रुचिराम्बरत्वादिकं तासाम् ॥ ३६ ॥

### श्रीमद्वल्लभाचार्य्यकृता सुबोधिनी

तथापि कन्यानां स्वत एव वरणमाह तत्रेति । यतो राजन्यकन्याः सजातीयं रूपं वीर्यं चापेक्षन्ते । अयुतं षट् सहस्राणि च षोडशकलानां सहस्रधा तत्तदधिष्ठात्र्यो देवताः भूमौ प्रतिष्ठिता इति भूमिजेनाहृताः भगवत्प्रेरणया भ्रमात् । तदैव च तावत्यः सम्पन्नाः । एता द्विस्वभावा इति ज्ञापयितुं सङ्ख्याद्वयेन निर्दिष्टाः । षट्सहस्राण्ययुतं चेति । तत्राधिकपदं षट्सहस्राणामुत्तमत्वाय । ता ह्यप्सरसः । देवतात्वात्तद्रूपेण क्रीडार्थं जाताः । ता आदावष्टावक्रं स्तुत्वा पश्चादुपहसितवत्य इति ज्ञापयितुं द्विस्वभावत्वं निरूपितम् । अत एवादावन्ते च ऋषिकोपात् दुःखप्राप्तिः, प्रमादाद्वरणे बुद्धिः । **राजभ्यो विक्रम्य समाहृतानामिति** बलादानयनमुक्तम् । 'सर्वान् बलकृतानर्थान् न कृतान् मनुरब्रवी'दिति ज्ञापयितुम् । हरिस्तासां दुःखहर्ता तथात्वाय ददृशे ॥ ३३ ॥ वरणमाहतं प्रविष्टमिति । प्रकर्षेण स्वनिकटे समागच्छन्तम् । यतः स्त्रियः स्त्रीभिरवश्यं पतिर्वरणीय इति । तथापि भगवान् पुरुषोत्तमः कथं वृत इत्याशङ्क्याह **नरवर्यमिति** । नराकृतित्वं स्त्रीणां प्रियाकृतिं च गृहीतवानिति । यतो विमोहिताः । निरुद्धत्वाद्भयेन न कायेन वरणम् । **अभीष्टमिति** । पूर्वमपि तथैव भावनया स्थिताः । पतित्वेनैव वरणम् । **दैवोपसादितमिति** समये प्राप्ते एतादृशे वरणमावश्यकमिति ज्ञापयति । तेन युक्तमेव । यथा पित्रा निकटे वरणार्थं वर आनीयते, एवं दैवेनानीतः ॥ ३४ ॥ तासां मनोरथवाक्यमाह **भूयात्** पतिरिति । मह्यमिति प्रत्येकम् । ब्रह्माण्डे संवत्सरात्मकस्य प्रजापतेरधिकारो दत्त इति तदनङ्गीकारे पितुराज्ञाभाव इव वरणं न सम्भवतीति तदनुज्ञां प्रार्थयन्ति **धाता तदनुमोदतामिति** । सर्वासामेक

एव भावः। स तु पृथक्, न तु प्रत्येकपर्यवसायी। कृष्ण इति तासां प्रियः। **भावेन** आकाङ्क्षया पतिरयं भवत्विति। श्रद्धया वा रसाधारभूतभावेन वा। हृदयं **दधुरिति**। तत्रैव स्थिरीकृतवत्यः॥ ३५॥ शरीरमतःपरं भावाधिष्ठानं भगवदीयं कर्तुं तासामशक्तिरिति भगवांस्तत्सम्पादितवानित्याह **ताः प्राहिणोदिति**। **द्वारवतीमिति**। तासामभिलषितार्थस्थानम्। द्वारं हि तद्भगवत्स्थानगमने। **सुमृष्टविरजोम्बरैः** कृत्वा नरयानैर्दोलाभिः। न केवलं स्त्रीरत्नान्येव प्रेषितवान्, किन्त्वन्यान्यपि रत्नानीति वक्तुमाह **महाकोशमिति**। महान्तं रत्नादिकोशम्। **रथाश्वद्रविणमिति**। त्रिविधमुत्तमं धनं प्रेषयामासेति सम्बन्धः। तेषामपि प्रेषणे हेतुः महदिति। महदन्यत्र स्थापितमल्पस्यानिष्टं करोतीति॥ ३६॥

### श्रीसुबोधिनी–सारः

तत्र गृहे राजकन्यानां भौमेनाहृतानां षट्सहस्रेणाधिकेन शतेन युक्तमयुतं हरिः श्रीकृष्णो ददर्श। आर्त्वमार्षम्। राजन्यो विक्रम्य पराक्रम्य तान् जित्वेत्यर्थः॥ ३३॥ गृहं प्रविष्टं तं नरवीरं श्रीकृष्णं वीक्ष्य दृष्ट्वा दैवेनोपसादितं प्रापितम् अभीष्टं वांछितं पतिं वव्रिरेंगीचक्रुः स्त्रियः। तत्र हेतुर्विमोहिताः॥ ३४॥ मह्यं ममायं पतिर्भूयात् धाता ब्रह्मा तत्संपादयतु इत्येवं पृथक्-पृथक् भावेन प्रेम्णा कृष्णे सर्वा हृदयं मनो दधुः धारयांचक्रुः॥ ३५॥ सुमृष्टानि अत्युज्ज्वलानि विरजांसि अंबराणि वस्त्राणि यासां ताः ताः कन्याः महाकोशान् निधीन् रथाश्वान् महद्द्रविणं भूरिधनं च नरयानैर्नरैर्यानैर्वा द्वारवतीं प्रैषयत् हरिः॥ ३६॥

### श्रीविट्ठलरायात्मजश्रीवल्लभकृतलेखः

तथापीति। यद्यप्यपहारदोषपरिहारार्थं भगवता वरणं कर्तव्यमेव तथापीत्यर्थः। **वरणमाहेति**। मानसं वाचिकं चाग्रिमाभ्यां तद्धेतुं चाद्येन एवं त्रिभिः श्लोकैरा्हेत्यर्थः।

### गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

एवं भगवन्तं स्तुत्वा प्रार्थयते—तस्येति। 'शरणागतरक्षैव तव युक्तास्वाभाविकत्वात्' इत्याशयेन सम्बोधयति–प्रपन्नार्तिहरेति। अयं भगदत्ताख्यस्तस्य भौमस्यात्मजो मया तव पादपङ्कजमुपसादितः प्रापितः, यस्माद्भीतस्तस्मादेनं पालय। ननु 'तत्पुत्रत्वादयमपि सदोष एव, कथं पालनीयः?' इत्याशङ्क्याह—अखिलकल्मषापहं सकलदोषनिवर्तकं स्वहस्तपङ्कजमस्य शिरसि कुरु निधेहि इति॥ ३३॥ भक्त्या नम्रया प्रणतया भूम्या इत्येवं वाग्भिः प्रार्थितो भगवान् भगदत्ताय अभयं दत्त्वा सकला ऋद्धयो भोगोपकरणादिसमृद्धयो यस्मिन् सन्ति तथाभूतं भौमस्य गृहं प्राविशदित्यन्वयः॥ ३४॥ तत्र भौमगृहे विक्रम्य पराक्रमं कृत्वा राजभ्यो भौमेन आहृतानां राजकन्यानां षट्सहस्राण्यधिकानि यस्मिंस्तदयुतं दशसहस्राणि षोडशसहस्राणि हरिर्ददृशे। शताधिकमित्यपि ज्ञातव्यम्, यथाह श्रीपराशरः—'कन्यापुरे स कन्यानां षोडशातुलविक्रमः। शताधिकानि ददृशे सहस्राणि महामते' इति। 'राजन्य' इति सिद्धादीनामप्युपलक्षणम्, तथोक्तं पराशरेण—'देवसिद्धासुरादीनां नृपाणां च जनार्दन हृत्वा हि सोऽसुरः कन्या रुरोध निजमन्दिरे॥ ३५॥ दैवेन भगवदाराधनाष्टावक्रवरदानादिविशेषेण उपसादितं स्वसमीपं प्रापितं भवनं प्रविष्टं तं कृष्णं वीक्ष्य विमोहितास्ताः स्त्रियो मनसा तं पतिं वव्रिरे। तथावरणे हेतुमाह—अभीष्टमिति। तत्रापि हेतुमाह–नरवीरमिति॥ ३६॥

### अन्वितार्थप्रकाशिका

इतीति॥ भक्त्या नम्रया प्रणतया भूम्या इत्येवं वाग्भिः प्रार्थितो भगवान् भगदत्तायाभयं दत्त्वा सकला ऋद्धयो भोगोपकरणादिसमृद्धयो यस्मिन् सन्ति तथाभूतं भौमस्य गृहं प्राविशत्॥ ३३॥ तत्रेति॥ भौमगृहे विक्रम्य पराक्रमं कृत्वा राजभ्यः उपलक्षणतया सिद्धादिभ्यश्च भौमेनाहृतानां राजन्यकन्यानां षट् सहस्राण्यधिकानि यस्मिंस्तदयुतं दशसहस्राणि षोडश सहस्राणि शताधिकानि इत्यपि ज्ञेयम्। हरिर्ददृशे। तथा च पराशरः। "देवसिद्धासुरादीनां नृपाणां च जनार्दन। हृत्वा हि सोऽसुरः कन्या रुरोध निजमन्दिरे" इति। "कन्यापुरे स कन्यानां षोडशातुल्यविक्रमः। शताधिकानि ददृशे सहस्राणि महामते॥" इति च॥ ३४॥ तमिति॥ दैवेन भगवदाराधनाष्टावक्रवरदानादिविशेषेण उपसादितं स्वसमीपं प्रापितं भवनं प्रविष्टं नरवीरम् अभीष्टं कृष्णं वीक्ष्य विमोहितास्ताः स्त्रियो मनसा तं पतिं वव्रिरे॥ ३५॥ भूयादिति॥ अयं मह्यं मम पतिर्भूयात् तदेतन्ममाभिमतं धाता परमेश्वरोऽनुमोदतां सत्यं करोतु। सर्वास्ताः पृथक् प्रत्येकम् इत्येवंभूतेन भावेनाभिप्रायेण कृष्णे हृदयं दधुः॥ ३६॥

### श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्

राजन्यकन्यानां षट्सहस्रेणाधिकमयुतं दशसहस्रशताधिकमपि षोडशसहस्रमिति विष्णुपुराणात् ज्ञेयं। अत्राप्यंतिमेऽध्याये वक्ष्यति कथंभूतानां सा राजन्यान् विक्रम्य जित्वा राजभ्यो भौमेनाहृतानां॥ ३३–३४॥ ताः कथं वव्रिरे तदाह भूयादिति। तदस्मत्प्रार्थनं धाता अनुमोदतां सिद्धं कुरुतां॥ ३५॥ प्राहिणोत् प्रेषयामास महाकोशादींश्च॥ ३६–३७॥

### भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

तत्रेति। तत्र भौमगृहे, विक्रम्य पराक्रम्य, राजभ्यः, भौमाहृतानां भौमेनाहरणीकृतानां, राजन्यकन्यानां, षट् सहस्राण्यधिकानि यस्मिंस्तच्च तद्युतं च षोडशसहस्राणीत्यर्थः। हरिः श्रीकृष्णः, ददृशे। अत्र शताधिकत्वमपि ज्ञातव्यम्। यथाह श्रीपराशरः। 'कन्यापुरे स कन्यानां, षोडशातुलविक्रमः। शताधिकानि ददृशे सहस्राणि महामनाः' इति। राजभ्य इत्युपलक्षणं सिद्धादीनामपि। तथा तेनैवोक्तम्। 'देवसिद्धासुरादीनां नृपाणां च जनार्दन। हृत्वा हि सोऽसुरः कन्या रुरोध निजमन्दिरे' इति ॥ ३३ ॥ तमिति ॥ प्रविष्टं कन्यापुरे कृतप्रवेशं, नरवीरं नरश्रेष्ठं, दैवोपसादितं दैवेन प्रापितं, तं श्रीकृष्णं, वीक्ष्य विमोहिताः संजातमोहाः, स्त्रियस्ताः कन्याः, मनसा अभीष्टं पतिं मेनिरे ॥ ३४ ॥ भूयादिति ॥ मह्यमस्माकमित्यर्थः। अयं पतिः, भूयात्। तदेतत्, धाता ब्रह्मा, अनुमोदतामनुगृह्णातु। इतीत्थं, सर्वाः पृथक् प्रत्येकं, भावेन कृष्णे, हृदयं मनः, दधुः। श्रीकृष्णे चित्तं चक्रुरित्यर्थः॥ ३५ ॥ ता इति। सुमृष्टानि शुद्धानि विरजांसि विगतमलान्यम्बराणि वासांसि यासां ताः, ताः स्त्रियः, नरयानैः द्वारवतीं प्रति, प्राहिणोत्। तथा, महाकोशान् रथाश्वान्, महत् द्रविणं च, प्राहिणोत् ॥ ३६ ॥

### कृष्णप्रिया

भौमासुर के राजमहल में प्रवेश करते ही देखा कि भौमासुर ने राजाओं को पराजित करके बलात्कार से सोलह हजार राजकुमारियों को छीनकर राजमहल में कैद कर रखा है ॥ ३३ ॥ जब कारागृहग्रस्त राजकुमारियों ने भवन के भीतर पधारे हुए नरोत्तम भगवान् श्रीकृष्ण का दर्शन किया उसी क्षण सब कुमारियाँ मुग्ध हो गयीं। सभी कन्याओं ने अपना परम सौभाग्य माना और भगवान् की अहैतुकी अनुकम्पा का फल माना, पुनः अपना परम सौभाग्य मानकर अपने मन-ही-मन द्वारिकाधीश कृपानिधान भगवान् श्रीकृष्ण का अपने प्रियतम पति के स्वरूप में वरण कर लिया ॥ ३४ ॥ प्रत्येक कुमारिका ने पृथक् पृथक् अपने मन से ही यह मनोरथ किया कि श्रीद्वारिकाधीश भगवान ही मेरे पति हों और विश्वविधाता मेरे इस मनोरथ को सिद्ध करें—इस अनन्य भाव से भगवान् के श्रीचरणों में अपना सर्वस्व न्योछावर किया ॥ ३५ ॥ पुनः भगवान ने सभी राजकुमारियों को दिव्य दुकूल एवं चित्राम्बरों के साथ उत्तम अलंकारों से समलङ्कृत करके पालकियों में बैठाकर श्रीद्वारिकापुरी भेज दिया। उन कन्या के साथ श्रेष्ठ कोश भण्डार उत्तम कक्षा के अश्व रथ आदि श्रेष्ठ समृद्धि भी भेज दिया ॥ ३६ ॥

**ऐरावतकुलेभांश्च चतुर्दन्तांस्तरस्विनः[१]। [२]पाण्डुरांश्च चतुःषष्टिं प्रेषयामास केशवः[३] ॥ ३७ ॥**
**[४]गत्वा सुरेन्द्रभवनं दत्त्वादित्यै च कुण्डले। पूजितस्त्रिदशेन्द्रेण सहेन्द्राण्या[५] च स प्रियः ॥ ३८ ॥**
**नोदितो[६] भार्ययोत्पाट्य पारिजातं गरुत्मति। आरोप्य सेन्द्रान् विबुधान् निर्जित्योपानयत् पुरम् ॥ ३९॥**
**स्थापितः सत्यभामाया गृहोद्यानोपशोभनः। अन्वगुर्भ्रमराः स्वर्गात् तद्गन्धासवलम्पटाः ॥ ४० ॥**

### कर्दमक्षमा

अन्वयः—ताः सुमृष्टविरजाम्बराश्च भगवान् नरयानैः द्वारवतीम् प्राहिणोत्, तथा रथाश्वा द्रविणं महत् महाकोशान्नपि प्राहिणोत् केशवः, चतुर्दन्तान्, तरस्विनः, पाण्डुरान्, ऐरावतकुले भांश्च चतुर्षष्टिं प्रेषयामास ॥ ३७ ॥ स प्रियः सुरेन्द्र-भवनं गत्वा अदित्यै कुण्डले च दत्त्वा इन्द्राण्या सह त्रिदशेन्द्रेण, पूजितः, तत्र स्थितः ॥ ३८ ॥ भार्यया चोदितः पारिजातं उत्पाट्य गरुत्मति आरोप्य सेन्द्रान् विबुधान् निर्जित्य पुरम् उपानयत् ॥ ३९ ॥ समानीतः पारिजातः सत्यभामायाः गृहोद्यानो-पशोभनः वृक्ष इति यावत् स्थापितः, स्वर्गात् तद्गन्धासवलम्पटाः भ्रमराः अन्वगुः ॥ ४० ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

सप्रियः सत्यभामासहितः ॥ ३८–३९ ॥ गृहोद्यानं निष्कुटं तदुपशोभयति यः ॥ ४० ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

पांडुराञ्छ्वेतवर्णान्। चतुःषष्टिं चतुःषष्ठिसंख्याकान् ॥ चतुःषष्टिं चेति चकारात्तरस्विनोऽन्यांस्तावदूनषट्सहस्राणि चेति ज्ञेयम्। तदुक्तं वैष्णवे–"चतुर्दंष्ट्रान् गजांश्चोग्रान् षट्सहस्रान्स दृष्टवान्। कांबोजानां तथाश्वानां नियुतान्येकविंशतिम् ॥

१. मदोत्कटान्–विज. । २. भगदत्ताय दत्त्वैकं सुप्रतीकं ततोऽपरान्। विज. । ३. चतुःषष्टितमोऽध्यायः। ४. इत आरभ्याष्टौ न सन्ति–विज. । ५. महे–विज. । ६. चोदितो–श्रीधरादयः।

कन्यास्ताश्च तथा नागांस्तानश्वान्द्वारकापुरीम्। प्रापयामास गोविन्दः सद्यो नरकिङ्करैः।" इति। यच्च हरिवंशे रक्षिणामुक्तौ– "भीमरूपाश्च मातंगाः प्रबलाविद्धतांकुशाः। हेमसूत्रमहाकक्षाश्चापतोरणमालिनः॥ रुचिराभिः पताकाभिः सरला रुचिरांकुराः। ते च विंशतिसाहस्रा द्विस्तावत्यः करेणवः॥" इति। तच्च, चतुर्दंष्ट्रेतरसंग्रहादुक्तेभ्य आधिक्यं ज्ञेयम्। द्वितीयचकारात्तानपि प्रेषयामासेति ज्ञेयम्। एवं वारुणं छत्रं मणिपर्वतं च तत्र न प्रेषयामास किन्तु गरुडोपरि निधाय दिवं गत इति। तथा च तत्रैव– "तादृशं वारुणं छत्रं तथैव मणिपर्वतम्। आरोपयामास हरिर्गरुडे पतगेश्वरे॥" इति। श्रीहरिवंशे च–"ततस्तद्वारुणं छत्रं स्वयमुत्क्षिप्य माधवः। हिरण्यवर्पंवर्पंतुमारुरोह विहङ्गमम्॥" इति। किञ्चाग्रे–"तस्य पर्वतराजस्य शृंगं यत्परमार्चितम्। विमलार्केन्दुसंकाशं मणिकांचनतोरणम्॥ सपक्षिगणमातंगं समृगव्यालपादपम्। शाखामृगगणाकीर्णं सुप्रशस्तशिलातलम्॥ न्यंकुभिश्च वराहैश्च रुरुभिश्च निषेवितम्। सप्रपातमहासानुं विचित्रशिखरद्रुमम्। अत्यद्भुतमचिंत्यं च मृगवृंदविलोडितम्। जीवंजीवकसंघैश्च बर्हिभिश्च निषेवितम्॥ तदप्यतिबलो विष्णुर्दोर्भ्यामुत्पाट्य भास्वरम्। आरोपयामास बली गरुडे पक्षिणां वरे॥ मणिपर्वतशृंगं च सभार्यं च जनार्दनम्। उवाह लीलया पक्षी गरुडः पततां वरः॥" इति॥३७॥ सुरेन्द्रभवनगमनादिप्रकारविशेषश्च श्रीविष्णुपुराणे– "गरुडो वारुणं छत्रं तथैव मणिपर्वतम्। सभार्यं च हृषीकेशं लीलयैव वहन्ययौ॥ ततः शंखमुपाध्मासीत्स्वर्गद्वारगतो हरिः। उपतस्थुस्ततो देवाः सार्घपात्रा जनार्दनम्॥ स देवैरर्चितः कृष्णो देवमातुर्निवेशनम्। सिताभ्रशिखराकारं प्रविश्य ददृशे दितिम्॥ स तां प्रणम्य शक्रेण सह ते कुंडलोत्तमे। ददौ नरकनाशं च शशसास्यै जनार्दनः॥" इति। किञ्च–"अदित्या तु कृतानुज्ञो देवराजो जनार्दनम्। यथावत्पूजयामास बहुमानपुरःसरम्॥" इति। श्रीहरिवंशे च–"अर्चितो देवराजेन रत्नैश्च प्रतिपूजितः। सत्यभामा च पौलौम्या यथावदभिनंदिता॥" इत्यादि॥ ३८॥ पारिजातलक्षणम्–"प्रवालमूलः सौवर्ण इंद्रनीलच्छदान्वितः। वैदूर्यवेदिको मुक्ताफलो माणिक्यपुष्पधृक्॥ गोमेदपक्वप्रवरो वज्रकिञ्जल्करंजितः। मरकतस्थूलशाखो हि पारिजातः प्रकीर्तितः॥" इति तीर्थः॥ भार्यया चोदित इत्यत्र विशेषः श्रीविष्णुपुराणे–"ददर्श च सुगंधाढ्यं मंजरीपुष्पधारिणम्। शच्याह्लादकरं ताम्रबालपल्लवशोभितम्॥ मथ्यमानेऽमृते जातं जातरूपसमत्वचम्। पारिजातं जगन्नाथः केशवः केशिसूदनः॥ तं दृष्ट्वा प्राह गोविंदं सत्यभामा द्विजोत्तमः। कस्मान्न द्वारकामेष नीयते देवपादपः॥ यदि ते तद्वचः सत्यं सत्यात्यर्थं प्रियेति मे। मद्गेहनिष्कुटार्थाय तदयं नीयतां तरुः॥ न मे जांबवती तादृगभीष्टा न च रुक्मिणी। सत्ये यथा त्वमित्युक्तं त्वया कृष्णाऽसकृत्प्रियम्॥ सत्यं तद्यदि गोविंद नोपचारकृतं वचः। तदस्तु कल्पवृक्षोऽयं मम निष्कुटभूषणम्॥ बिभ्रती पारिजातस्य केशपक्षेण मंजरीम्। सपत्नीनामहं मध्ये शोभेयमिति कामये॥" इति। निःशेषेण जित्वा धुरं द्वारकामुप दाक्षिण्येन निन्ये॥३९॥ 'निष्कुटन्तु गृहोद्याने' इति मेदिनी। तस्य पारिजातस्य गंध एवाऽऽसवो मादकद्रव्यं तत्र लंपटा लोलुपाः 'लंपटो लोलुपे मत्ते' इति निरुक्तिः॥ पारिजातस्य माहात्म्यमाह–यद्गंधेति। तन्माहात्म्यमन्यच्च विस्तार्योक्तं तेनैव–"यमभ्येत्य जनः सर्वो जातिं स्मरति पौर्विकीम्। वास्यते यस्य पुष्पाणां गंधेनोर्वी त्रियोजनम्। ततस्ते यादवाः सर्वे देहबंधानमानुपान्। ददृशुः पादपे तस्मिन्कुर्वंतो मुखदर्शनम्॥" इति। हरिवंशे च– "नानाविधानि तूर्याणि गेयानि मधुराणि च। शुश्रुवुस्तस्य वृक्षस्य नातिदूरगता नराः॥ यो यं संकल्पयामास गंधं हृद्यं नरस्तथा। स तदेव समाजघ्रौ पारिजातसमुद्भवम्॥" इति। किञ्चाग्रे–"मनीषितेन स तरुरल्पो भवति भारत। सुमहान्वासुदेवस्य तदद्भुतमभून्महत्॥ कदाचिद्द्वारकां सर्वां प्रच्छादयति भारत। कदाचिद्धस्तधार्यश्च भवत्यंगुष्ठसंनिभः॥" इति। अत्र वारुणं छत्रमिंद्राय दत्तं, मणिपर्वतश्च द्वारकामानीत इति ज्ञेयम्। तथा च श्रीहरिवंशे–"प्रविवेश गृहं शौरिरादाय मणिपर्वतम्। तं च शक्रस्य दयितं पारिजातं महाद्रुमम्॥" इति॥ ४०॥

**श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी**

चतुष्षष्टिश्चेति चकारात् तरस्विन्योन्यान् तावदूनषट्सहस्राणि चेति ज्ञेयम्; तथा च श्रीविष्णुपुराणे—

"चतुर्दंष्ट्रान् गजांश्चोष्ट्रान् षट्सहस्रान् स दृष्टवान्। काम्बोजानां तथाऽश्वानां नियुतान्येकविंशतिम्॥
कन्यास्ताश्च तथा नागांस्तानश्वान् द्वारकापुरीम्। प्रापयामास गोविन्दः साद्यो नरककिङ्करैः" ॥ इति।

यच्च हरिवंशे रक्षिणामुक्तौ—

"भीमरूपाश्च मातङ्गाः प्रबलाविकृताङ्कुशाः। हेमसूत्रमहाकक्षाश्चापतोरणशालिनः ॥
रुचिराभिः पताकाभिः शबला रुचिराङ्कुशाः। ते च विंशतिसाहस्रा द्विस्तावत्यः करेणवः॥ इति।

तच्च चतुर्दंष्ट्रेतरसङ्ग्रहादुक्तेभ्य आधिक्यं ज्ञेयं। द्वितीयचकारात्तानपि प्रेषयामासेति ज्ञेयम् एवं वारुणं छत्रं मणिपर्वतं च तत्र न प्रेषयामास किन्तु गरुडोपरि निधाय दिवं गत इति ज्ञेयं तथाच तत्रैव।

"तादृशं वारुणं छत्रं तथैव मणिपर्वतम्। आरोपयामास हरिर्गरुडे पतगेश्वरे" ॥ इति।

श्रीहरिवंशे च—

ततस्तद्वारुणं छत्रं त्वयमुत्क्षिप्य माधवः। हिरण्यवर्षं कुर्वन्तमारुरोह विहङ्गमम्॥

किञ्चाग्रे—

तस्य पर्वतराजस्य शृङ्गं यत्परमार्चितम् । विमलार्केन्दुसङ्काशं मणिकाञ्चनतोरणम् ॥
सपक्षिगणमातङ्गं समृगव्यालपादपम् । शाखामृगगणाकीर्णं सुप्रस्तरशिलातलम् ॥
न्यङ्कुभिश्च वराहैश्च रुरुभिश्च निषेवितम् ॥ सप्रपातमहासानुं विचित्रशिखरद्रुमम् ॥
अत्यद्भुतमचिन्त्यञ्च मृगवृन्दविलोडितम् । जीवञ्जीवकसङ्घैश्च बर्हिभिश्च निषेवितम् ॥
तदप्यतिबलो विष्णुर्दोर्भ्यामुत्पाट्यभास्वरम् । आरोपयामास बली गरुडे पक्षिणांवरे ॥
मणिपर्वतशृङ्गञ्च सभार्यञ्च जनार्द्दनम् । उवाह लीलया पक्षी गरुडः पतताां वरः ॥ इति ॥ ३७ ॥

सुरेन्द्रभवनगमनादिप्रकारविशेषश्च श्रीविष्णुपुराणे—

गरुडो वारुणं छत्रं तथैव मणिपर्व्वतम् । सभार्य्यञ्च हृषीकेशं लीलयैव वहन् ययौ ॥
ततः शङ्खमुपाध्मासीत् स्वर्गद्वारगतो हरिः । उपतस्तुस्ततो देवाः सार्घ्यपात्रा जनार्द्दनम् ॥
स देवैरर्च्चितः कृष्णो देवमातुर्निवेशनम् । सिताभ्रशिखराकारं प्रविश्य ददृशेऽदितिम् ॥
स तां प्रणम्य शक्रेण सह ते कुण्डलोत्तमे । ददौ नरकानशञ्च शशंसास्यै जनार्द्दनः ॥ इति ।

किञ्च—

अदित्या तु कृतानुज्ञो देवराजो जनार्द्दनम् । यथावत् पूजयामास बहुमानपुरस्सरम्" ॥ इति ।

श्रीहरिवंशे च—

अर्च्चितो देवराजेन रत्नैश्च प्रतिपूजितः । सत्यभामाच पौलम्या यथावदभिवन्दितः ॥ इत्यादि ॥ ३८ ॥

भार्य्यया चोचित इत्यत्र विशेषः श्रीविष्णुपुराणे—

ददर्श च सुगन्धाढ्यं मञ्जरीपुष्पधारिणम् । शैत्याह्लादकरं ताम्रबालपल्लवशोभितम् ॥
मथ्यमानेऽमृते जातं जातरूपमयत्वचम् । पारिजातं जगन्नाथः केशवः केशिसूदनः ॥
तं दृष्ट्वा प्राह गोविन्दं सत्यभामा द्विजोत्तम । कस्मान्न द्वारकामेष नीयते कृष्ण पादपः ॥
यदि ते तद्वचः सत्यं सत्यात्यर्थं प्रियेति मे ॥ मद्गेहनिष्कुटार्थाय तदयं नीयतां तरुः ॥
न मे जाम्बवती तादृगभीष्टा न च रुक्मिणी ॥ सत्ये यथा त्वमित्युक्तं त्वया कृष्णासकृत्प्रियम् ॥
सत्यं तद्यदि गोविन्द नोपचारकृतं वचः ॥ ततस्तु पारिजातोऽयं मम निष्कुटभूषणम् ॥
बिभ्रती पारिजातस्य केशपक्षेण मञ्जरीम् ॥ सपत्नीनामहं मध्ये शोभेयमिति कामये ॥ इति ।

निश्शेषेण जित्वा पुरं द्वारकामुपदाक्षिणोनानयत् ॥ ३९ ॥

पारिजातस्य माहात्म्यमाह—यद्गन्धेति । तन्माहात्म्यमन्यच्च विस्तार्योक्तं तेनैव—

यमभ्येत्य जनः सर्वो जातिं स्मरति पौर्विकीम् । वास्यते यस्य पुष्पाणां गन्धेनोर्वी त्रियोजनम् ॥
ततस्ते यादवाः सर्वे देहबन्धानमानुषान् । ददृशुः पादपे तस्मिन् कुर्वन्तो मुखदर्शनम् ॥ इति ।

श्रीहरिवंशे च—

नानाविधानि तूर्य्याणि गेयानि मधुराणि च । शुश्रुवुस्तस्य वृक्षस्य नातिदूरगता नराः ॥
योऽयं सङ्कल्पयामास गन्धं हृद्यं नरस्तथा । स तदेव समाजघ्रौ पारिजातसमुद्भवम् ॥ इति ।

किञ्चाग्रे—

मनीषितेन स तरुरल्पो भवति भारत । सुमहान् वासुदेवस्य तदद्भुतमभून्महत् ॥
कदाचिद्द्वारकां सर्वां प्रच्छादयति भारत । कदाचिद्धस्तधार्य्यश्च भवत्यङ्गुष्ठसन्निभः ॥ इति ।

अत्र वारुणं छत्रमिन्द्राय दत्तं मणिपर्वतस्तु द्वारकामानीत इति च ज्ञेयं तथाच श्रीहरिवंशे—

प्रविवेश गृहं शौरिरादाय मणिपर्वतम् । तं शक्रस्य दयितं पारिजातं महाद्भुतम् ॥ इति ॥ ४० ॥

**श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी**

चतुःषष्टिश्चेति चकारात् तरस्विभ्योऽन्यान् तावदुनषट्सहस्राणि चेति ज्ञेयम् । तथा च श्रीविष्णुपुराणे (५।२९।३२-३३)

'चतुर्दंष्ट्रान् गजांश्चोग्रान् षट्सहस्रान् स दृष्टवान् । काम्बोजानां तथाश्वानां नियुतान्येकविंशतिम् ॥
कन्यास्ताश्च तथा नागांस्तानश्वान् द्वारकापुरीम् । प्रापयामास गोविन्दः सद्यो नरककिङ्करैः ॥' इति ।

यच्च श्रीहरिवंशे रक्षिणामुक्तौ ( विष्णु० प० ६४।११,१२,१३ )—

'भीमरूपाश्च मातंगाः प्रवालविकृतांकुशाः। हेमसूत्रा महाकक्षाश्चापतोमरशालिनः॥
रुचिराभिः पताकाभिः शवला रुचिरांकुशाः। ते च विंशतिसाहस्रा द्विस्तावत्यः करेणवः॥' इति।

तच्च चतुर्दंष्ट्रेतरसंग्रहानुक्तेभ्य आधिक्यं ज्ञेयम्। चकारादेव तानपि प्रेषयामासेति च। द्वारवत्यां प्रेषणे हेतुः—माधवो मधुकुलोद्भव इति यादवानामानन्दार्थमिति भावः॥ ३७॥

एवं वारुणच्छत्रं मणिपर्व्वतञ्च तत्र न प्रेषयामास, किन्तु गरुडोपरि निधाय दिवं गत इति ज्ञेयम्। तथा च तत्रैव विष्णुपुराणे ( ५।२९।३४ )—'ददृशे वारुणं छत्रं तत्रैव मणिपर्वतम्। आरोपयामास हरिर्गरुडे पतगेश्वरे॥' इति। श्रीहरिवंशेऽपि ( विष्णु० प० ६४–१९ )–'ततस्तद्वारुणं छत्रं स्वयमुत्क्षिप्य माधवः। हिरण्यवर्णं वर्षन्तमारुरोह विहंगमम्॥' किञ्चाग्रे ( विष्णु- प० ६४।३९–४४ )—

'तस्य पर्व्वतराजस्य शृंगं यत् परमार्च्चितम्। विमलार्केन्दुसंकाशं मणिकाञ्चनतोरणम्॥
सपक्षिगणमातंगं समृगव्यालपादपम्। शाखामृगगणाकीर्णं सुप्रस्तरशिलातलम्॥
न्यंकुभिश्च वराहैश्च रुरुभिश्च निषेवितम्। सप्रपात–महासानुं विचित्रशिखरद्रुमम्॥
अत्यद्भुतमचिन्त्यञ्च मृगवृन्द–विलोडितम्। जीवं जीवकसङ्घैश्च बर्हिभिश्च निषेवितम्॥
तदप्यतिबलो विष्णुदोर्भ्यामुत्पाट्य भास्वरम्। आरोपयामास बली गरुडे पक्षिणां वरे॥
मणिपर्व्वतशृंगञ्च सभार्य्यञ्च जनार्द्दनम्। उवाह लीलया पक्षी गरुडः पतताम्वरः॥' इति।

चकाराद्वारुणच्छत्रं मणिपर्वतञ्च भौमर्किकरैर्वोढुमशक्यं श्रीगरुडोपर्य्येव निधाय स्वसंगत्या द्वारकायामानयदिति श्रीहरिवंशोक्त्यनुसारेण ज्ञेयम्। तथा च तत्र पारिजातहरणानन्तर-द्वारकाप्रवेशे—'प्रविवेश गृहं शौरिरादाय मणिपर्व्वतम्। तञ्च शक्रस्य दयितं पारिजातं महाद्रुमम्॥' इति, किञ्च—'ततोऽन्तःपुरमध्ये तं सशृंगं मणिपर्वतम्। न्यवेशयदमेयात्मा वृष्णिभिः सहितोऽच्युतः॥' इति। सुरेन्द्रभवनगमनादिप्रकारविशेषश्च श्रीविष्णुपुराणे ( ५।३०।१–४ )—

'गरुडो वारुणं छत्रं तथैव मणिपर्वतम्। सभार्य्यञ्च हृषीकेशं लीलयैव वहन् ययौ॥
ततः शङ्खमुपाध्मासीत् स्वर्गद्वारं गतो हरिः। उपतस्थुस्ततो देवाः सार्घ्यपात्रा जनार्द्दनम्॥
स देवैरर्च्चितः कृष्णो देवमातुर्निवेशनम्। सिताभ्रशिखराकारं प्रविश्य ददृशेऽदितिम्॥
स तां प्रणम्य शक्रेण सह ते कुण्डलोत्तमे। ददौ नरकनाशञ्च शशंसास्यै जनार्द्दनः॥' इति।

किञ्च, ( वि० पु० ५।३०।२८ )—'अदित्या तु कृतानुज्ञो देवराजो जनार्द्दनम्। यथावत् पूजयामास बहुमानपुरःसरम्॥' इति। श्रीहरिवंशे च ( विष्णु० प० ६४।५३ )—'अर्च्चितो देवराजेन रत्नैश्च प्रतिपूजितः। सत्यभामा च पौलोम्या यथावदभि- नन्दिता॥' इत्यादि॥ ३८॥

भार्यया चोदित इत्यत्र विशेषः श्रीविष्णुपुराणे ( ५।३०।३०–३६ )—

'ददर्श च सुगन्धाढ्यं मञ्जरीपुष्पधारिणम्। शच्याह्लादकरं ताम्रवालपल्लवशोभितम्॥
मथ्यमानेऽमृते जातं जातरूपमयत्वचम्। पारिजातं जगन्नाथः केशवः केशिसूदनः॥
तं दृष्ट्वा प्राह गोविन्दं सत्यभामा द्विजोत्तम। कस्मान्न द्वारकामेष नीयते कृष्ण पादपः॥
यदि ते तद्वचः सत्यं सत्यात्यर्थं प्रियेति मे। मद्गेहनिष्कुटार्थाय तदयं नीयतां तरुः॥
न मे जाम्बवती तादृगभीष्टा न च रुक्मिणी। सत्ये यथा त्वमित्युक्तं त्वया कृष्णा सकृत् प्रियम्॥
सत्यं तद्यपि गोविन्द नोपचारकृतं वचः। तदस्तु नारिजातोऽयं मम निष्कुटभूषणम्॥
बिभ्रती पारिजातस्य केशपक्षेण मञ्जरीम्। सपत्नीनामहं मध्ये शोभेयमिति कामये॥' इति।

निःशेषेण जित्वा पुरं द्वारकामुप दाक्षिण्येनानयत्, तद्युद्धञ्च पितामहेन श्रीपराशरेण बहुशो वर्णितत्वादत्र न विस्तारितम्॥ ४०॥ पारिजातस्य माहात्म्यमाह—यस्य गन्धासवयोर्लम्पटाः सन्तो भ्रमरा इतस्ततो भ्रमणशीला अतिचञ्चला अपि स्वर्गात्तमन्वगमन्निति तन्माहात्म्यम्, अन्यच्च विस्तार्य्योक्तं तेनैव ( वि० पु० ५।३१।११–१२ )—

'यमभ्येत्य जनः सर्वो जातिं स्मरति पौर्व्विकीम्। वास्यते यस्य पुष्पाणां गन्धेनोर्व्वी–त्रियोजनम्॥
ततस्ते यादवाः सर्व्वे देहबन्धानमानुषान्। ददृशुः पादपे तस्मिन् कुर्वन्तो मुखदर्शनम्॥ इति,

श्रीहरिवंशे च ( विष्णु० प० ७५।५८–५९ )—

'नानाविधानि तूर्य्याणि गेयानि मधुराणि च। शुश्रुवुस्तस्य वृक्षस्य नातिदूरं गता नराः॥
यो यं संकल्पयामास गन्धं हृद्यं नरस्तथा। स तदेव तमाजघ्रे पारिजातसमुद्भवम्॥' इति।

किञ्चाग्रे ( विष्णु० प० ७५।६५-६६ )—

'मनीषितेन स तरुरल्पो भवति भारत। सुमहान् वासुदेवस्य तदद्भुतमभून्महत् ॥
कदाचिद्द्वारकां सर्वां प्रच्छादयति भारत। कदाचिद्धस्तहार्य्यश्च भवत्यं गुण्ठसन्निभः ॥' इति।

यच्च श्रीद्वारकानिर्म्माणप्रसंगे प्रागुक्तम् ( भा० १०।५०।५४ )—'सुधर्म्मां पारिजातञ्च महेन्द्रः प्राहिणोद्धरेः' इति तत्समाधानं तैः कृतमेव, यद्वा, पारिजातस्यास्य महेन्द्रेण प्रस्थापनात् स्वयमेव श्रीभगवता बलादानयनाच्च, तथा श्रीहरिवंशेऽपि बारद्वयं तदुक्तेश्च स्वल्पबहुलप्रभावत्वादिना, किंवा सर्वसामान्यता श्रीसत्यभामैकस्वाम्यादिना भेदः कल्प्यः ॥ ४० ॥

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका

ऐरावतेति। चत्वारो दन्ता येषां तान् तरस्विनः बलीयसः ऐरावतकुलोद्भवान् अत एव पाण्डुरांश्च तुष्षष्टिसङ्ख्याकान् प्रेषयामास ॥ ३७ ॥ गत्वेति। सप्रियः ससत्यभामः इन्द्राण्या शच्या पूजितः भार्यया सत्यभामया चोदितः प्रेरितः पारिजातं तरुमुत्पाट्य गरुत्मति आरोप्य सेन्द्रान् देवान् युद्धे निर्जित्य पुरं द्वारकां प्रति प्रापयामास ॥ ३८—३९ ॥ स च तरुः स्थापितः आलवाल इति शेषः। सत्यभामाया गृहारामे शोभावहो बभूव तस्य सौरभमकरन्दयोर्लोलुपाः भ्रमराः स्वर्गादन्वगच्छन् सेन्द्रान् विबुधान्निर्जित्येतीन्द्रकृष्णयोः पारिजातार्थः सङ्ग्राम उक्तः ॥ ४० ॥

### श्रीविजयध्वजतीर्थकृता पदरत्नावली

वंश्ये वंशप्राप्ते तत्पदे अमात्यपदे श्रेणीं पङ्क्तिं शालां वा ॥ एरावतकुले जातानिभान् पाण्डुरान् श्वेतदेहान् ॥३७–४५॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्यां एकोनषष्टितमोऽध्यायः ॥ ५९ ॥

( श्रीविजयध्वजतीर्थरीत्या चतुष्षष्टितमः ) ॥ ६४ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

भार्यया सत्यभामया प्रेरितस्सन् ॥ ३९ ॥ स्थापितः पारिजातवृक्षः गृहान्तस्थितमुद्यानमुपशोभयतीति सः ॥ ४० ॥

### गूढार्थदीपिनी

ताः कन्याः। सुमृष्टाः स्नापिताः कमनीयवस्त्राश्च कृत्वा। प्राहिणोत् प्रेषयामास। नरयानैः शिबिकाभिः। तथा महत् बहुमूल्यं द्रविणं रत्नादिकं च प्राहिणोत् ॥३७॥ पाण्डुरान् श्वेतवर्णान्। चादन्यानपि ॥३८॥ सप्रियः सत्यभामासहितः ॥३९-४०॥

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः

प्रियया सहितः सप्रियः ॥ ३८–३९ ॥ गृहोद्यानमुपशोभयतीति सः ॥ ४० ॥

### श्रीसत्यधर्मकृता श्रीभागवतटिप्पणी

महाकोशान्द्रविणमुपविद्यमानं। ऐरावतकुलजगजान् चत्वारो दन्ता येषां ते तान् तदर्थं कुबेरो भगदत्तोऽभवत्तस्मै न भगवद्दत्तः स इति नेत्याह। भगदत्तायैकं सुप्रतीकं तन्नामानं नागं दत्वा। अपरान्पाण्डुरांश्च चतुःषष्टिं केशवः प्रेषयामासेति ॥ ३७ ॥

इति श्रीभागवतटिप्पण्यां सत्यधर्मकृतायां दशम उत्तरार्धे चतुःषष्टिरध्यायः ॥ १०–६४ ॥

### श्रीमद्वल्लभाचार्य्यकृता सुबोधिनी

विशेषतः स्वार्थमेव गजान् प्रेषितवानित्याह **ऐरावतकुलेभांश्चेति**। यस्मिन् कुले ऐरावत उत्पन्नः तत्कुलोत्पन्नाः। तेषामितरवैलक्षण्यमाह। **चतुर्दन्तानिति** रूपवैलक्षण्यम्। **तरस्विन इति** स्वभाववैलक्षण्यं च। चकारादुच्चैःश्रवसः कुलप्रसूतान् अश्वानपि प्रेषयामासेति। पाण्डुरानन्यांश्च। चतुर्दन्तत्वं वेगवत्त्वं च मृगादिजातिष्वपि वर्तत इति तद्व्यावृत्त्यर्थं पाण्डुरत्वम्। अन्येऽप्येतादृशा एव, तैः सह निर्दिष्टत्वात्परमं वैजात्यं भेदकम्। तत्र दन्तादिषु वैलक्षण्यं कल्प्यम्। **चतुःषष्टिमिति** कलारूपत्वं तेषां बोधितम्। **केशव इति**। महादेवभक्तत्वात्तद्वरेणैतावत्त्वं तस्य जातमिति कदाचिन्महादेवोऽतुष्टो भवेदित्याशङ्क्याह **केशव इति**। केशयोरपि सेव्यः ॥ ३७ ॥ ततस्तत्रत्यं कार्यं कृत्वा यदर्थमागत इन्द्रप्रेरणया तत्कृतवानित्याह **गत्वेति**। **सुरेन्द्रभवनं** स्वर्गस्थानम्, तत्रैव स्थितायै अदित्यै कुण्डले दत्वा। अदित्या भोगरूपं तत्रास्ते। क्रियारूपा त्वंशेन देवकी जाता। चकारादिन्द्रायापि छत्रादिकं दत्तवान्। ततस्त्रिदशेन्द्रेण पूजितः। त्रिदशपदं तेषां जरामृत्युरहितानामिन्द्रेण तेभ्योऽपि परमैश्वर्यदानसमर्थेन

स्वामित्वेन पूजित इति भगवदुत्कर्षः सत्यभामायै प्रदर्शितः। सभार्यो भगवान् गत इति सभार्येणैव पूजितः। अन्यथा लोके विरुद्धमिव भवेत्। पूजायां सत्यभामाया वा न प्रवेशः स्यात्। चकाराद्देवैः देवपत्नीभिश्च। ननु भगवान् सर्वेश्वर इतीन्द्रादिभिः पूज्यते, सत्यभामा कथं पूजितेत्याशङ्क्याह **सप्रिय** इति। प्रियया सहितः। भगवत्प्रियत्वात् सापि पूजिता। अन्यथा भगवान् प्रीतो न भवतीति ॥ ३८ ॥ ततः स्त्रीगोष्ठ्यां शच्या सह वार्तायां पारिजातपुष्पाकाङ्क्षायां मनुष्यत्वेन शच्या अपकर्षे निरूपिते बहिर्मुखाया वचनमसहमानया प्रार्थितो भगवान् पारिजातमानीतवानित्याह **नोदित** इति। ततो भगवान् पारिजातसमीपे गत्वा सभार्यो गरुडारूढः तं पारिजातमुत्पाट्य नरकगृहवत्तत्रापि भगवति विद्यमाने सर्वोत्कृष्टं स्थातुमयुक्तमिति तत्पुनर्गरुडे समारोप्य सोम इव भूमावानीतवान्। तदिन्द्रादीनामनभिप्रेतमिति सेवका लीलानुसारेणैव स्वामिनः स्वकार्यं कर्तुं युक्ता इति सिद्धान्तमज्ञात्वा अस्मभ्यं दत्तं कथं हरतीति समागता युद्धं कर्तुम्। तदा सेन्द्रान् विबुधान् जित्वा तेषां प्रतिबन्धं निराकृत्य पुरं द्वारकामुपानयत्। न तु मध्ये त्यक्त्वा समागतो, दत्वा वा प्रार्थनायां कदाचिन्नानयेत्। मतान्तरभापेयमिति पूर्वमेवावोचाम ॥ ३९ ॥ ततः स्त्रीवाक्यात् स्त्र्यर्थमेव तत्समानीतमिति ज्ञापयितुं सत्यभामाया गृहे स्थापितवानित्याह **स्थापित** इति। गृहमुद्यानं च उप समीपे शोभयतीति। उभयोः शोभनं वा यस्मादिति गृहोद्यानोपशोभनः। गृहोद्यानयोर्मध्ये स्थापितः। तस्य पारिजातस्य सर्वोत्कर्षमाह **अन्वगुर्भ्रमराः स्वर्गादि**ति। स्वर्गमपि परित्यज्य तस्य यो गन्धः आसवः, रसश्च गन्ध एव वा, आसवो मादकः, तस्मिन् **लम्पटाः** विवेकेनापि तत्त्यागासमर्थाः। किञ्च। नाम्ना ते भ्रममरणयुक्ताः, स्वर्गे तु तदुभयाभावः। तथापि समागता इति विषयोत्कर्ष उक्तः ॥ ४० ॥

### श्रीसुबोधिनी–सारः

चतुःषष्टिम् ऐरावतकुलजातान् हस्तिनः चतुर्दंतान् चत्वारो दंता येषां तान् तरस्विनो वेगशालिनः पांडुरवर्णान् केशवः प्रेषयामास ॥ ३७ ॥ सुरेंद्रगृहं गत्वाऽदित्यै कुण्डले चाद्वरुणाय छत्रं कुबेराय मणिपर्वतस्थानं दत्वा इन्द्रेण इंद्राण्या चादन्यैर्देवैः सप्रियः सत्यभामासहितः स श्रीकृष्णः पूजितः ॥ ३८ ॥ स्त्रीवश्यतां सूचयति। भार्यया स्त्रिया नोदितः प्रेरितः पारिजातं कल्पवृक्षमुत्पाट्य गरुडे आरोप्य सेन्द्रानिंद्रसहितान् विबुधान् देवान् निर्जित्य पुरं द्वारकामानीतवान् ॥ ३९ ॥ सत्यभामाया गृहोद्यानं निष्कुटं शोभयतीति तथा स्थापितः तस्य तरोर्गंधस्यासवे मकरन्दे लम्पटा लाषुका भ्रमराः स्वर्गादन्वगुः पृष्ठतः आययुः ॥ ४० ॥

### श्रीविट्ठलरायात्मजश्रीवल्लभकृतलेखः

**ऐरावतेत्यत्र**। **अन्येपीति**। पाण्डुरेभ्योऽन्ये श्यामा गजा अपि तरस्विन इत्यर्थः। **तत्र दन्तादिष्विति**। मृगादिषु चतुर्दन्तत्वेपि दन्तादिषु गजाद्वैलक्षण्यमित्यर्थः।

### गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

वरणप्रकारं दर्शयति—भूयादिति। अयं मह्यं मम पतिर्भूयात्, तवेतन्मम अभिमतं धाता परमेश्वरोऽनुमोवतां सत्यं करोतु। पृथक् प्रत्येकं सर्वास्ता इत्येवं भूतेन भावेनाभिप्रायेण कृष्णे हृदयं दधुः ॥ ३७ ॥ सुमृष्टाः स्नापिताश्च विरजाम्बराश्च ताः स्त्रियो भगवान् नरयानैः शिबिकाभिर्द्वारवतीं प्राहिणोत् प्रस्थापयामास। तथा रत्नादिपूर्णान् महाकोशान्, तथा स्थादीन्, महद्विपुलं धनं च प्राहिणोत् ॥ ३८ ॥ चत्वारो दन्ता येषां तान् तरस्विनः वेगवत्तरान् पाण्डुरान् चतुःषष्टिसङ्ख्याकान् ऐरावतकुलोद्भवान् इभांश्च केशवः ब्रह्मरुद्रयोरपि नियन्ता कृष्णो द्वारवतीं प्राहिणोदित्यन्वयः ॥ ३९ ॥ सप्रियः सत्यभामासहितः श्रीकृष्णः सुरेन्द्रभवनं गत्वा अदित्यै च कुण्डले दत्त्वा त्रिदशेन्द्रेण देवेन महेन्द्राण्या च पूजितः ॥ ४० ॥

### अन्वितार्थप्रकाशिका

ता इति। सुमृष्टाः स्नापिताश्च विरजोऽम्बराश्च कृत्वा ताः स्त्रियो भगवान् नरयानैः शिबिकाभिर्द्वारवतीं प्राहिणोत् प्रस्थापयामास। तथा महाकोषादीनपि प्राहिणोत् ॥ ३७ ॥ ऐरावतेति। चत्वारश्चत्वारो दन्ताः येषां तान् तरस्विनः वेगवत्तरान् पाण्डुरान् श्वेतान् चतुःषष्टिसंख्याकान् ऐरावतकुलोद्भवान् इभांश्च चकारादन्येऽपि गजाश्वादयो हरिवंशात् ज्ञेयाः। केशवः कृष्णो द्वारवतीं प्राहिणोत् ॥ ३८ ॥ गत्वेति। सप्रियः सत्यभामासहितः श्रीकृष्णः सुरेन्द्रभवनं गत्वा अदित्यै च कुण्डले दत्त्वा चकारादिन्द्राय छत्रं दत्त्वा तत्र स्थितः त्रिदशेन्द्रेण देवेन सहेन्द्राण्या च पूजितः ॥ ३९ ॥ नोदित इति। भार्यया सत्यभामया नोदितः सन् तत्रत्यं पारिजाताख्यं तरुमुत्पाट्य गरुत्मति आरोप्य सेन्द्रान् विबुधान् युद्धे निर्जित्य पुरं द्वारकां प्रत्युपानयत् ॥ ४० ॥

### श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्

स प्रियः प्रियया सत्यभामया सहितः ॥ ३८ ॥ गरुत्मति गरुडे ॥३९॥ तस्या पारिजातस्य गंधे आसवे रसे च लपटाः। अन्वगुः अन्वागच्छंति स्म ॥ ४० ॥

**भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी**

ऐरावतेति ॥ केशवः, चतुर्दन्तान् पाण्डुरान् श्वेतान्, तरस्विनो महाबलांश्च, चतुःषष्टि चतुःषष्टिसंख्याकान्, ऐरावतकुलेभांश्च, प्रेषयामास ॥ गत्वेति ॥ ततः, सुरेन्द्रभवनं स्वर्गं गत्वा प्राप्य, अदित्यै कुण्डले दत्त्वा च, स्थितः कृष्णः, सप्रियः सभार्यः पत्न्या सहित एवेत्यर्थः । त्रिदशेन्द्रेण देवाधिपतिना शक्रेण, महेन्द्राण्या च, पूजितः ॥ ३८ ॥ नोदित इति ॥ भार्यया सत्यभामया, नोदितः संप्रेरितः कृष्णः, पारिजातं उत्पाट्य, गरुत्मति गरुडे, आरोप्य, सेन्द्रान् इन्द्रसहितान्, विबुधान् देवान्, निर्जित्य, पुरं द्वारकां, उपानयत् प्रापयामास ॥ ३९ ॥ स्थापित इति ॥ स तरुरिति शेषः । सत्यभामायाः गृहोद्यानमुपशोभयतीति तथाभूतः, स्थापितः आलवाल इति शेषः । तद्गन्धासवलम्पटाः तस्य सौरभमकरन्दयोर्लोलुभाः, भ्रमराः स्वर्गात्, अन्वगुः अन्वगच्छन् ॥ ४० ॥

**कृष्णप्रिया**

श्वेतवर्ण के इन्द्र के ऐरावत गजराज के वंश में प्रकट हुए एवं चार दाँत वाले चौसठ हाथिओं को भी भगवान् ने द्वारिका भेज दिया ॥ ३७ ॥ पुनः पुरुषोत्तम श्रीकृष्ण वहाँ से स्वर्ग नगरी में इन्द्र राज के दिव्य महलों में पधारे देवराज इन्द्र ने अपनी पत्नी इन्द्राणी शची देवी के साथ श्रीसत्यभामाजी और भगवान् का अर्चन किया ॥ ३८ ॥ जब भगवान् अमरावती से द्वारावती पधार रहे थे तब श्रीसत्यभामाजी की इच्छा का आदर करते हुए श्रीकृष्ण प्रभु ने पारिजातक तरुवर को उखाड़ कर गरुड़जी के पीठ पर रख लिया । राजकृत इन्द्र ने भगवान् से संघर्ष किया । भगवान् ने इन्द्र के साथ सर्व देवों को और इन्द्र को जित एवं लज्जित बनाकर तरुवर को लेकर द्वारिका की ओर प्रस्थान किया ॥ ३९ ॥ पारिजात तरु को भगवान् ने सत्यभामाजी के भवन के उद्यान में लगा दिया । इस तरुवर ने उद्यान एवं महल की सुषमा बढ़ायी । इन्द्र के उद्यान में कल्पतरु के गन्ध एवं मकरन्द में लुब्ध जो भ्रमर थे वे स्वर्ग को छोड़कर द्वारिका आ गये ॥ ४० ॥

**ययाच आनम्य किरीटकोटिभिः पादौ स्पृशन्नच्युतमर्थसाधनम् ।**
**सिद्धार्थ एतेन विगृह्यते महानहो सुराणां च तमो धिगाढ्यताम् ॥ ४१ ॥**

**अथो मुहूर्त एकस्मिन् नानागारेषु ताः स्त्रियः । यथोपयेमे भगवांस्तावद्रूपधरोऽव्ययः ॥ ४२ ॥**

**गृहेषु तासामनपाय्यतर्क्यकृन्निरस्तसाम्यातिशयेष्ववस्थितः ।**
**रेमे रमाभिर्निजकामसम्प्लुतो[1] यथेतरो[2] गार्हकमेधिकांश्चरन् ॥ ४३ ॥[3]**

**इत्थं रमापतिमवाप्य पतिं स्त्रियस्ता ब्रह्मादयोऽपि न विदुः पदवीं यदीयाम् ।**
**भेजुर्मुदाविरतमेधितयानुराग[4]हासावलोकनवसंगमजल्पलज्जाः ॥ ४४ ॥**

**प्रत्युद्गमासनवरार्हणपादशौचताम्बूलविश्रमणवीजनगन्धमाल्यैः ।**
**[5]केशप्रसारशयनस्नपनोपहार्यैर्दासीशता अपि विभोर्विदधुः स्म दास्यम्[6] ॥ ४५ ॥**

**इति श्रीमद्भागवते महापुराणे[7] दशमस्कन्धे पारिजातहरणनरकवधो[8] नाम[9]एकोनषष्टितमोऽध्यायः ॥ ५९ ॥**

**कर्दमक्षमा**

**अन्वयः**—इन्द्रः प्रथमं मूर्द्धानमानम्य किरीटकोटिभिः पादौ स्पृशन् अर्थसाधनम्, अच्युतम्, ययाचे, पश्चात् सिद्धार्थः सन् महान् अपि एतेन विगृह्यते, अहो सुराणाम् तमः धिक् आढ्यताञ्च धिक् ॥ ४१ ॥ अथ एकस्मिन् एव मुहूर्ते ताः स्त्रियः नानागारेषु तावद्रूपधरः अव्ययः भगवान् यथा उपयेमे ॥ ४२ ॥ तासां निरस्तसाम्यातिशयेषु गृहेषु अवस्थितः गार्हकमेधिकान् चरन् अतर्क्यकृत् यथेतरः निजकामसम्प्लुतः ( वशीकृतः ) अनपायी भगवान् कृष्णः, रमाभिः रेमे ॥ ४३ ॥ ताः स्त्रियः इत्थम् यदीयां पदवीम् ब्रह्मादयोऽपि न विदुः तं रमापतिम् पतिम् अवाप्य अविरतमेधितया हासावलोकनवसङ्गम-

१. धाम-वीर. । २. गार्हमेधिकां-वीर. ।

३. स्वदारेषु पृथग् भावो भक्तचित्तानुवर्तितः । अनन्तस्याद्वितीयस्य किं नु चित्रं गुरुद्विषः ॥ १ ॥
योगेश्वरेश्वरः कृष्णो भक्तैरद्यापि लक्ष्यते । अन्तर्बहिः समन्ताच्च शतधा च सहस्रधा ॥ २ ॥-विज. ।

४. विरह-वीर. । ५. ध-वीर. ६. रैः-वीर. । ७. पारमहंस्यां संहितायां-प्रा. पा. । ८न्धे उत्तरार्धे पारिजातहरणं नरकवध एको-प्रा. पा. । ९. चतुः षष्टितमो-बिज. ।

जलपलज्जा ताः मुदा अविरतम् भेजुः ॥४४॥ दासीशता अपि ताः प्रत्युद्गमासनवरार्हणपादशौच ताम्बूलविश्रमणवीजनगन्ध-माल्यैः केशप्रसारशयनस्नपनोपहार्यैः विभोः, दास्यम् विदधुस्म ॥ ४५ ॥

इति श्रीमद्भागवते दशमस्कन्धे निरोधलीलायामुत्तरार्द्धे एकोनषष्टितमोऽध्याया. अन्वयाः समाप्ताः ॥ ५९ ॥

**श्रीधरस्वामिविरचिता भावार्थदीपिका**

सेन्द्रान्विबुधान्निर्जित्येतींद्रकृष्णयोः संग्राम उक्तस्तत्र ननु कथं प्रसाधितस्वमनोरथेन श्रीकृष्णेन महेन्द्रस्य संग्राम इत्याह यथाच इति। अच्युतमर्थसाधनमिति च कर्मद्वयं याचति धाताः विगृह्यते विग्रहं करोति महानपि तमः क्रोधः। आढ्यतां धनिकतां धिगिति ॥ ४१ ॥ यथा यथावत्। अनेन देवक्यादिबंधुजनसमागमोऽपि प्रतिगृहं यौगपद्येन सूचितः। अव्ययः सर्वत्रापि संपूर्ण एव ॥ ४२ ॥ अहो भाग्यं नारीणामित्याह त्रिभिः। गृहेष्विति। अतक्यीणि कर्माणि करोति तथा सः निरस्तं साम्यमतिशयश्च यैरन्येषां तेषु गृहेष्वनपाय्यवस्थितः। रमाभिर्लक्ष्म्या अंशभूताभिः निजकामसंप्लुतः स्वानंदपरिपूर्णः। गार्हक-मेधिकान् गृहस्थधर्मान् ॥ ४३ ॥ अनुरागं हाससहितमवलोकं च तत्पूर्वकं नवसंगमं च तद्गतं जल्पं च तस्मिन् लज्जां च भेजुः ॥ ४४ ॥ विश्रमणं पादसंवाहनम्। केशप्रसारः केशप्रसाधनम्। दासीनां शतानि विद्यंते यासां तथाभूता अपि स्वयं विभो-र्दास्यं विदधुः ॥ ४५ ॥

इति श्रीमद्भागवते दशमस्कंधे उत्तरार्द्धे श्रीध० टीकायामेकोनषष्टितमोऽध्यायः ॥ ५९ ॥

**श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः**

अर्थसाधनायेति चतुर्थ्याः "अकथितं च" इति कर्मत्वम्। एतेन कृष्णेन सह। विगृह्यत इति कर्मकर्तरि प्रयोग इत्यभि-प्रेत्यैव स्वामिचरणैर्विग्रहं करोतीति व्याख्यातम्। यद्वा—एतेनेन्द्रेण महानपि श्रीकृष्णो विगृह्यते विग्रहविषयीक्रियत इत्यर्थः। 'आढ्य इभ्यो धनी श्रीमान्' इति कोशात्। धिग्योगे द्वितीया॥ सेद्रान्विबुधान्निर्जित्येत्युक्तम्, तत्र स्वार्थसाधकेनापि स्वेष्टदेवेनापि श्रीकृष्णेन सहेंद्रस्य युद्धं श्रुत्वातिविस्मितं राजानं प्रतींद्रदौरात्म्यमाह—यथाच इति। अर्थसाधनं स्वार्थसाधकं कृष्णं ययाचे—नरकं हत्वा कुंडलादीन्यानीय देहीति प्रार्थ्यते स्म। सिद्धार्थः प्राप्तकुंडलादिकः सन्नेतेन कृष्णेन सह। विगृह्यते इत्यार्षम्। विगृह्णाति विग्रहं करोति, तत्रापि महान्सुरेशः सन् अहो आश्चर्यं सुराणामपि तमः क्रोधः, सात्त्विकानां तेषामिदमत्यसंभवमिति भावः। तत्रापि सुरेशस्य तस्य, तस्मादाढ्यतां धनिकत्वं धिक्, आढ्यता हि कंकमसंभवमप्यनर्थं-नोत्पादयतीति भावः ॥ ४१ ॥ अथो नरकवधोत्तरस्त्र्यानयनानंतरम्। अनेन यथावदिति कथनेन। संकल्पमात्रेणानंतब्रह्मांडस्रष्टु-र्निजसंबंध्यनेककिरणं नाद्भुतमिति भावः। अव्ययत्वात्तस्य सर्वसर्जनसामर्थ्यमस्तीति। अव्ययपदेऽकारो ब्रह्मविष्णुरुद्रवाचकः। 'ओं विष्णुः शंकरो ब्रह्मा' इति सौभरिकोशात्। उकारेण लोकपालाः, ईकारेण लक्ष्म्याद्या उक्ताः सौभरिणैव। तेषामय उत्पत्ति-स्थानलयाधिकरणरूपः। अकारात्परोकारस्थाने वादेशे ईकारस्थाने यादेशे च कृतेऽव्य इति भवति। तथा च अश्च उश्च ई च अव्यस्तासामयोऽव्ययः "सावित्री पार्वती लक्ष्मीस्सर्वा देवांगनाश्च याः। ईवाचका लोकपाला उकारेणोदिता इह ॥ उत्पत्त्या-दित्रये प्राप्तौ शुभावहविधावयः।" इति व्याडिः। एतेन श्रीकृष्ण एव सर्वेषामुत्पत्त्यादिकर्तेति ध्वनितम्। श्रीमद्भागवतस्य 'पुराणं ब्रह्मसंमितम्' इत्युक्तेर्वेदरूपत्वाद्वेदस्य च मंत्ररूपत्वान्मंत्रेषु वर्णानामपि वाचकत्वमस्ति यथा—"वियद्भृगुस्थमनुयुग्" इत्यादौ वियत् 'हः', भृगुः 'सः', मनुः 'औः' तेन विसर्गाढ्यं च सत् 'हौः' भवति। यथा—'दामोदरश्चंद्रयुतः' इति, 'विधिर्वास-वशांतीन्दुयुक्तम्' इत्यादि। अत्र दामोदरः 'ऐ', बिंदुयुतः 'ऐं' भवति। तथा—विधिः 'कः' वासवः 'लः', शांतिः 'ई' बिंदुयोगे 'क्लीं' इति भवति। तथा वेदेपि—"शं वै प्रजापतिः कं वै प्रजापतिः" इत्यादिश्रुतिदर्शनात्, 'अक्षराणामकारोऽस्मि' इति स्मृतेश्च। वर्णानां वाचकत्वमस्त्येव, स्फुटितं चैतद्भाष्ये पतंजलिना। भागवतपदानां बीजरूपता पंचाध्यायीव्याख्याने 'जगौ कलं वामदृशां मनोहरम्' इत्यत्रापि स्फुटिता। अथो द्वारकामागत्य। एकस्मिन्मुहूर्ते इति—तस्यैव वैवाहिकलग्नस्य तदानीं सर्वतोभद्रत्वेन मौहूर्तिकलोकैरुक्तत्वात्। यावत्यः स्त्रियस्तावद्रूपधरः। रूपाण्यनैकस्यैव वपुषः प्रकाशभेदास्तानि धरतीति रूः। न तु तावद्वपुर्द्धर इति कायव्यूहो व्याख्येयः। "चित्रं बतैतदेकेन वपुषा युगपत्पृथक्। गृहेषु द्व्यष्टसाहस्रं स्त्रिय एक उदावहत् ॥" इत्यग्रिमोक्तेः। यथा यथावदित्यनेन देवक्यादिबंधुसमागमोऽपि प्रतिगृहं यौगपद्येन सूचित इति स्वामिचरणाः। तेषामपि प्रकाश-भेदोऽचिंत्यशक्त्यैव कारितो ज्ञेयः। अव्ययः सर्वत्रापि पूर्ण एव, न त्वंशेन वर्तमानः "प्रकाशो वस्तुभेदेषु गण्यते स हि नो पृथक्" इति भागवतामृतोक्तेः ॥ ४२ ॥ तासां न विद्यतेऽपायो वियोगो यस्य स तथा ॥ तदेव दर्शयन्नाह—गृहेष्विति। तासां गृहेषु अन-पायी सन् अव समंतात्कायमनोवचोभिः स्थितश्च सन्, रमाभी रमायाः स्वरूपशक्तेरेव नानावृत्तिरूपाभी रेमे। भगवानिति पूर्वेणान्वयः। अतो नात्मारामतापूर्णकामतयोर्हानिरिति भावः। ननु तास्वप्यात्मभाव एव चेत्कस्तर्हि रसविशेषस्तत्राह—निजो न तु प्राकृतो यः कामः स्वजनविशेषेषु प्रेमविशेषस्तेन संप्लुत इति। शक्तित्वेन भेदाभेदवृत्तिमतोष्वपि तासु लीलार्थं पृथगावि-र्भावाद्भेदवृत्तिप्रधानासु स्वरूपशक्तिभेदह्लादिनीवृत्तिविशेषप्रेममयीषु तासु तादृशप्रेमरसचमत्कारवैशिष्ट्यं तस्यापि जायत इति

भावः। ननु भवत्वेवं प्रपंचात्वतीर्णत्वाद्‌गृहादिसामग्री, न तु तदनुरूपा तत्राह—निरस्तेति। परमवैकुंठतोऽपि श्रेष्ठेष्वित्यर्थः। अत एव तत्र रमयैकयैव, अत्र तु रमाभिर्बह्वीभिरित्युक्तम्। ननु कथं युगपत्सर्वत्रानपायित्वादिकं तत्राह–अतर्क्यकृत्, अचिन्त्यशक्तिमय इत्यर्थः। अनपायित्वं चात्र योग्यावसरं व्याप्येति ज्ञेयम्, गृहमेधिकांश्चरन्नित्युक्तत्वात्, प्रथमस्कंधे चात्र च विप्रलम्भश्रवणात्। निजकामसंप्लुतत्वमेव दृष्टान्तेन दृढीकरोति—यथेति। तासां स्वरूपशक्तिवृत्तिरूपत्वं दर्शितं स्कांदे प्रभासखण्डे—"पुरा कृष्णो महातेजा यदा प्रभासमागतः। सहितो यादवैः सर्वैः षट्पंचाशत्प्रकोटिभिः। षोडशैव सहस्राणि गोप्यस्तत्र समागताः। लक्षमेकं तथा षष्टिरेते कृष्णसुताः प्रिये॥" इत्युपक्रम्य "ततो गोप्यो महादेवि विद्यायाः षोडश स्मृताः। तासां नामानि ते वक्ष्ये तानि ह्येकमनाः शृणुः॥ लंबिनी चन्द्रिका कान्ता क्रूरा शान्ता महोदया। भीषणी नंदिनी शोका सुपूर्वविमलाक्षया। सुभद्रा शोभना पुण्या हंससीता कला क्रमात्॥ हंस एव मतः कृष्णः परमात्मा जनार्दनः। तस्यैताः शक्तयो देवि षोडशैव प्रकीर्तिताः॥ चन्द्ररूपी मतः कृष्णः कलारूपाश्च ताः स्मृताः। संपूर्णमण्डला तासां मालिनी षोडशी कला॥ प्रतिपत्तिथिमारभ्य संचरत्यासु चन्द्रमाः। षोडशैव कलायास्तु गोपीरूपा वरानने॥ एकैकशस्ताः संभिन्नाः सहस्रेण पृथक्पृथक्। एवं ते कथितं देवि रहस्यं ज्ञानसम्भवम्। य एवं वेद पुरुषः स ज्ञेयो वैष्णवो बुधैः॥" इति। अत्र गोप्यो राश्य इत्यर्थः। 'गोपो भूपेऽपि' इति नानार्थात्। सर्वं गोपायन्तीति शक्तयो वा, श्रीदशाक्षरे व्याख्याविशेषवत्। लंबिनी अवतारशक्तिः। सुपूर्वविमला सुविमला हंससीतेत्यत्र प्राप्तस्य हंसशब्दस्य वाच्यमाह—हंस एवेति। स च चन्द्ररूपी चन्द्रदृष्टान्तेनोद्दिश्य इत्यर्थः। कलारूपा इति—ताश्च शक्तयश्चन्द्रस्याऽमृतादिकलादृष्टान्ता नोद्दिश्या इत्यर्थः। अनुक्तामंतिमां महाशक्तिमाह–संपूर्णेति। दृष्टान्तोपपादनाय चन्द्रस्य तादृशत्वमाह–प्रतिपदिति। आस्वेतत्तुल्यासु कलासु यथा चन्द्रमाः प्रतिपत्तिथिमारभ्य संचरति, तथा सोपि लीलारसविशेषं प्राप्य तत्तच्छक्तिं प्रकाशयतीत्यर्थः। विवक्षितमाह—षोडशैवेति। षोडशानामेव विद्यारूपत्वादेतदुपदेशस्य ज्ञानसम्भवरहस्यत्वात्, तज्ज्ञानस्य वैष्णवतानुमापकलिंगत्वाच्च। क्रूराभीषणीशोकानामपि भगवत्स्वरूपभूतानामेव मतीनाम् 'मल्लानामशनिः' इतिवत्। श्रीकृष्णस्य कठिनत्वप्रत्यायकत्वात् 'मृत्युर्भोजपतेः' इतिवत्। दुर्जनवित्रासकत्वादसतां शास्तेति तदीयशोकहेतुत्वादेव च तत्तन्निरुक्तिरुपपद्यते। यथा प्रकाशरूपाया एव सूर्यकान्तेरुलूकेषु तमआदिव्यञ्जकतेति। अतः 'चन्द्ररूपो स्मृतः कृष्णः कलारूपाश्च ताः स्मृताः" इति स्फुटमेव स्वरूपभूतत्वं दर्शितम्। अतोऽन्यथाख्यानं किंचित्तत्र जीवांतराप्रकाशापेक्ष्यं किञ्चिन्मायिकमिति ज्ञेयम्॥ ४३॥ इत्थमुक्तरीत्या। ताः भौमादिवधेनानीताः। यदीयां कृष्णसंबंधिनीम्। अविरतं निरंतरमेधितया वर्धमानया॥ रमायाः पूर्णलक्ष्मीरूपायाः श्रीरुक्मिण्याः पतिमिति परमदौर्लभ्यं वैदग्ध्यादिकं च सूचितम्। ता रमांशभूताः। पतिमवाप्य स्वातंत्र्येण लब्ध्वा। ब्रह्मादयोऽपि किं पुनरन्ये, पदवीमपि किं पुनस्तम्, न विदुरपि किं पुनर्लभेरन्नित्यर्थः। अतस्तस्य लाभो रमात्वेनैव संभवतीति साध्वेवोक्तं रमाभिरिति भावः। चिरमनवस्तरतावपि नवसंगमेत्युक्तिरत्यौत्सुक्येन तासां नित्यनूतनवत्प्रतीतेः। अत एवानवरतमेधितया मुदेति हासादीनां तत्तत्क्रमेणोदयात्तथैवोक्तिः। मुदा तदेव भेजुः, कथम्—अनुरागेण हासादयो यासां ताः तत्तत्प्रकारेणेत्यर्थः॥ ४४॥ प्रत्युद्‌गम आगतस्य संमुखगमनम्। वरेण कुंकुमेनार्हणमर्चनम् "वरो जामातरि श्रेष्ठे देवाद्याप्ते च कुंकुमे" इति धरणिः। कुंकुम इत्युपलक्षणम्। वीजनं व्यजनचालनम्। गन्धश्चन्दनमेव। अत एव प्रत्युद्‌गमेति, प्रत्युद्‌गमः श्रुत्वैवोत्थायाभिमुख्येन गमनम्, आदरस्तदनन्तरमन्या च संमाननक्रिया, तत्रापि भयं कदाचिदस्याभीष्टभंगः स्यात्, निजधर्मादिकाच्चेति शंकित्वं पाठोऽयं चित्सुखसंमतः। पाठांतरं तु प्रायिकम्। आसनादीनामपि तत्तत्संस्थापनक्रियासु तात्पर्यम्॥ श्रीगोपीसदृशोत्कंठिबादरायणये नमः। तादृग्व्याख्याकृतेऽप्यस्तु श्रीधरस्वामिने नमः॥ ४५॥

इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे दशमस्कन्धोरार्द्धे एकोनषष्टितमोऽध्यायः॥ ५९॥

### श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी

ययाचे पूर्वमिन्द्रः महानपि सुराणां सात्त्विकानामपि॥ ४१॥ एकस्मिन्नेव मुहूर्त्ते इति युगपदित्यर्थः। तस्यैव मुहूर्त्तस्य गोधूल्यादिरूपत्वेन सर्वतो भद्रत्वात् यावत्यः स्त्रियः तावद्रूपधरः रूपमत्र एकस्यैव विग्रहस्य प्रकाशभेद एव न तु विग्रहभेदः—

"चित्रं बतैतदेकेन वपुषा युगपत् पृथक्। गृहेषु द्व्यष्टसाहस्रं स्त्रिय एक उदावहत्॥"

इति वक्ष्यमाणात् अचिन्त्यशक्तित्वात् अत एवाव्ययः॥ ४२॥ तदेव दर्शयन्नाह—गृहेष्विति। तासां गृहेष्वनपायी सन् अवसमन्तात् कायमनोवचोभिः स्थितश्च सन् रमाभिः रमायाः स्वरूपशक्तेरेव नानावृत्तिरूपाभीरेमे भगवानिति पूर्वेणान्वयः अतो नात्मारामतापूर्णकामतयोर्हानिरिति भावः। ननु तास्वप्यात्मभावः एव चेत् कस्तर्हि रसविशेषः? तत्राह, निजो ननु प्राकृतो यः कामः स्वजनविशेषेषु प्रेमविशेषः तेन सम्प्लुत इति शक्तित्वेन भेदाभेदवृत्तिमतीष्वपि तासु लीलार्थं पृथगाविर्भावात् भेदवृत्तिप्रधानासु स्वरूपशक्तिभेदाह्लादिनीवृत्तिविशेषप्रेममयीषु तादृशप्रेमरसचमत्कारवैशिष्ट्यं तस्यापि जायत इतिभावः। ननु, भवत्वेवं प्रपञ्चावतीर्णत्वात् गृहादिसामग्री ननु तदनुरूपा तत्राह–अतुल्येति। परमवैकुण्ठतोपि श्रेष्ठेष्वित्यर्थः। अत एव तत्र रमयैकयैव अत्र तु रमाभिर्बह्वीभिरित्युक्तम्। ननु, कथं युगपत्सर्वत्रानपायित्वादिकम्? तत्राह—अतर्क्यकृत् अचिन्त्यशक्तिमय

इत्यर्थः अनपायित्वञ्चात्र योग्यावसरं व्याप्येति ज्ञेयं गार्हमेधिकांश्चरन्नित्युक्तत्वात् प्रथमस्कन्धे चात्र च विप्रलम्भश्रवणात् निजकामसम्प्लुतत्वमेव दृष्टान्तेन दृढीकरोति—यथेति। तासां स्वरूपशक्तिवृत्तिरूपत्वञ्च दर्शितम् यथा स्कान्दे प्रभासखण्डे—

"पुरा कृष्णो महातेजा यदा प्रभासमागतः। सहितो यादवैः सर्व्वैः षट्पञ्चाशत् प्रकोटिभिः॥
षोडशैव सहस्राणि गोप्यस्तत्र समागताः। लक्षमेकं तथा षड्भिरेते कृष्णसुताः प्रिये॥

इत्युपक्रम्य—

ततो गोप्यो महादेवि विद्यायाः षोडश स्मृताः। तासां नामानि ते वक्ष्ये तानि ह्येकमना शृणु॥
लम्बिनी चन्द्रिका कान्ता क्रूरा शान्ता महोदया। भीषणी नन्दिनी शोका सुपूर्व्वविमलाक्षया॥
शुभदा शोभना पुण्या हंससीताकलाः क्रमात्। हंस एवमतः कृष्णः परमात्मा जनार्द्दनः॥
तस्यैताः शक्तयो देवी षोडशैव प्रकीर्त्तिताः। चन्द्ररूपीमतः कृष्णः कलारूपास्तु ताः स्मृताः॥
सम्पूर्णमण्डला तासां मालिनी षोडशी कला। प्रतिपत्तिथिमारभ्य सञ्चरत्यासु चन्द्रमाः॥
षोडशैव कलायास्तु गोपीरूपा वरानने। एकैकशस्ताः सम्भिन्नाः सम्भिन्नाः सहस्रेण पृथक्-पृथक्॥
एवं ते कथितं देवि रहस्यं ज्ञानसम्भवम्। य एवं वेद पुरुषः स ज्ञेयो वैष्णवो बुधैः॥ इति।

अत्र गोप्यो राज्य इत्यर्थः। गोपो भूपेऽपीति नानार्थात् सर्व्वं गोपयन्तीति शक्तयो वा। श्रीदशाक्षरव्याख्याविशेषवत् लम्बिनी अवतारशक्तिः सुपूर्व्वविमला सुविमला हंससीतेत्यत्र प्राप्तस्य हंसशब्दस्य वाच्यमाह—हंस एवेति। स च चन्द्ररूपी चन्द्र-दृष्टान्तेनोद्देश्य इत्यर्थः। कलारूपा इति ताश्च शक्तयश्चन्द्रस्यामृतादिककलादृष्टान्तेनोद्देश्या इत्यर्थः। अनुक्तामन्तिमां महाशक्ति-माह—सम्पूर्णेति। दृष्टान्तोपपादनाय चन्द्रस्य तादृशत्वमाह—प्रतिपदिति। तस्वेतत्तुल्यासु कलासु यथा चन्द्रमाः प्रतिपत्तिथि-मारभ्य सञ्चरति तथा सोऽपि लीलावसरविशेषं प्राप्य तत्तच्छक्तिं प्रकाशयतीत्यर्थः। विवक्षितमाह—षोडशैरिति। षोडशानामेव विद्यारूपत्वादेतदुपदेशस्य ज्ञानसम्भवरहस्यत्वात् तज्ज्ञानस्य वैष्णवतानुमापकलिङ्गत्वाच्च क्रूरा भीषणीशोकानामपि भगव-त्स्वरूपभूतानामेव सतीनां "मल्लानामशनिः" इतिवत् श्रीकृष्णस्य कठिनत्वप्रत्यायकत्वान्मृत्युर्भोजपतेरितिवत् दुर्जनवित्रास-कत्वात् असतां शास्तेतिवत् तदीयशोकहेतुत्वादेव च तत्तन्निरुक्तिरुपपद्यते यथा प्रकाशैकरूपाया एव सूर्य्यकान्तेरुलूकेषु तम आदिव्यञ्जकतेति अतश्चन्द्ररूपीमतः कृष्णः कलारूपास्तु ताः स्मृता इति स्फुटमेव स्वरूपभूतत्वं दर्शितम् अतोऽन्यथाख्यानं किञ्चिन्मायिकमिति ज्ञेयम्॥ ४३॥ रमायाः पूर्णलक्ष्मीरूपायाः श्रीरुक्मिण्याः पतिमिति परमं दौर्लभ्यं वैदग्ध्यादिकञ्च सूचितं ता रमांशभूताः पतिमवाप्य स्वातन्त्र्येण लब्ध्वा ब्रह्मादयोपि किम्पुनरन्ये पदवीमपि किम्पुनस्तं न विदुरपि किम्पुनर्नलभेरन्नि-त्यर्थः। अतस्तस्य तथा लाभो रमात्वेनैव सम्भवतीति साध्वेवोक्तं रमाभिरिति भावः चिरमनवरतरतावपि नवसङ्गमेत्युक्तिर-त्यौत्सुक्येन तासान्नित्यनूतनवत्प्रतीतेः अत एवानवरतमेधितया मुदेति हासादीनां तत्तत्क्रमेणैवोदयात्तथैवोक्तिः अन्यत्तैः। यद्वा मुदा तमेव भेजुः कथम् अनुरागेण हासादयो यासां तास्तत्तत्प्रकारेणेत्यर्थः॥ ४४॥ अत एव प्रत्युद्गमेति प्रत्युद्गमः श्रुत्वै-वोत्थायाभिमुख्येनागमनम् आदरस्तदनन्तरमन्या च सम्माननक्रिया तत्रापि भयं कदाचिदस्याभीष्टभङ्गः स्यान्निजधाष्टर्यादि-कञ्चेति शङ्कत्वं पाठोयं चित्सुखसम्मतः पाठान्तरन्तु प्रायिकम् आसनादीनामपि तत्तत्सङ्ख्यापर्नक्रियासु तात्पर्य्यम्॥ ४५॥

श्रीगोपीसदृशोत्कण्ठिवादरायणये नमः। तादृग्व्याख्याकृतेऽप्यस्तु श्रीधरस्वामिने नमः॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिण्यां एकोनषष्टितमोऽध्यायः॥ ५९॥

## श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी

ययाचे पूर्व्वमिन्द्रः; किं कृत्वा? किरीटस्य कोटिभिरग्रभागैः पादौ स्पृशन्, आ सम्यक् साष्टांगं बहुशो नत्वा, इति महाभक्तिरुक्ता। अच्युतमिति स्वार्थसाधनात् कदाचित् कथञ्चिदपि च्युति-राहित्यात्। एतेनाच्युतेन देवेन्द्रत्वादिना भगवद्भक्त-त्वादिना वा महानपि। अहो आश्चर्य्ये खेदे वा, च अपि, सुराणां शुद्धसात्त्विकानामपि। ननु, ऐश्वर्य्यमदात् सम्भवेदेवेत्याशंक्य तं निन्दति—धिगिति॥ ४१॥ अथो मांगल्ये कार्त्स्न्ये वा, एकस्मिन्नेव मुहूर्त्त इति युगपदित्यर्थः। यतः स्त्रियः, अन्यथा स्त्रीस्वभावेन सापत्न्योत्पत्त्या तासामीर्ष्यादिसम्भवेदिति भावः। यावत्यः स्त्रियस्तावद्रूपधरः शताधिकषोडशसहस्ररूपधरः। एवं तस्य सर्व्वेषामेव रूपाणां सत्यत्वं नित्यत्वं च सूचितमेव। यद्वा, तावद्रूपधर इवैक एवोपयेमे, यतो भगवान् सर्व्वैश्वर्य्य-परिपूर्णः, अतएवाव्ययः। एवं तस्य सर्व्वेषामपि रूपाणां सत्यत्व-नित्यत्वादिकमपि सूचितमेव॥ ४२॥ तदेव दर्शयन्नाह—गृहेष्विति। तासां सर्व्वासां सर्व्वेष्वपि गृहेषु अनपायी सदा सुस्थिरः सन्, अतर्क्यकृदिति अन्यगृहेऽपि रमते, अन्यस्यामपि प्रीयत इत्यादि—तच्चेष्टितस्य ताभिरतर्कणात्। निजकामसंप्लुतोऽपि, किंवा तादृशः सन् रेमे। कुतः? निरस्तेति। इति वैकुण्ठतोऽप्या-धिक्यमुक्तम्। किञ्च, रमाभिरिति तत्रैकैव लक्ष्मीः, अत्र तु वर्ह्व्य इत्यर्थः। यद्वा, रमयन्ति लक्ष्मीतोऽप्यधिकं श्रीकृष्णं प्रीण-यन्तीति तथा ताभिः। एवं परमैश्वर्य्येऽपि लौकिकत्वेन रतिमाधुरी पूर्व्ववद्दृष्टान्तेन बोधयति—यथेति। चरन् आचरन् इतरो

विषयसुखलम्पटोऽविवेकी। अन्यत्तैर्व्याख्यातम्। यद्वा, निजानां स्त्रीयानां कामा अभिलाषाः, संप्लुत इत्यनेन तेषामानन्त्यादिना महार्णवत्वं ध्वनितम्, तेषु संप्लुतोऽत्यर्थं निमग्नस्तत्परिपूरणासक्त इत्यर्थः। यद्वा, निजलौकिकत्वेऽप्यलौकिकत्वादलौकिकत्वेऽपि लौकिकत्वादसाधारणो यः प्रेमलक्षणकामरससमुद्रस्तस्मिन् संप्लुतः॥ ४३॥ रमापति श्रीरुक्मिण्याः पतिमिति परमं दौर्लभ्यं वैदग्ध्यादिकञ्च सूचितम्। ता अनिर्व्वचनीयपुण्यवत्यः पतिमवाप्य स्वातन्त्र्येण लब्ध्वा। स्त्रिय इति तद्योग्यतोक्ता, पदवीमपि, किं पुनस्तम्; न विदुरपि, किं पुनर्लभेरन्नित्यर्थः। चिरमनवरतमपि नवसंगमेत्युक्तिरत्यौत्सुक्येन तासां नित्यनूतनवत् प्रतीतेः, हासादीनां तत्तत्क्रमेणोदयात्तथैवोक्तिः। अविरतमेधितयेति ब्रह्मानन्दादप्याधिक्यमुक्तम्। तस्य सदा वृद्धयभावादस्याश्च परमकाष्ठां प्राप्ताया अपि नित्यनूतनत्वादिना माधुर्य्यविशेषेण सदा वृद्धेः। अन्यत् समानम्॥ ४४॥ तथापि ताः सगर्व्वास्तृप्ताश्च नाभवन्, किन्तु प्रेमभरेण दासीवत् विविधसेवां चक्रुरित्याह—प्रत्युद्गमेति। प्रत्युद्गमः—दूराद्दर्शन-मात्रेणैवासनादुत्थाय अग्रेऽभिगमनम्, आदरः—अहो भाग्यमस्माकं जयजयेत्यादिमिष्टवाक्यैः, आतपत्रधारणादिना च सम्माननं गृहकर्म्मादिपरित्यागेन तदेकासक्तिर्वा, भयं सशंकत्वं सम्भ्रमो वा, पतित्वेन साध्वीभावेन वा नवसंगमानुसन्धानादिना वा, किंवा अप्रागल्भ्यमासनताम्वूलगन्धादीनामर्पणेनेति ज्ञेयम्। पादयोः शौचं प्रक्षालनम्, शयनं शय्याविस्तारणम्, उपहार्य्याणि उपहारयोग्यानि विचित्रमिष्टेष्टभोज्यपेयादीनि, विभोर्निजप्राणेश्वरस्येति प्रेमभरेणैव तत्तद्विधानं तेनानन्दविशेषश्च सूचयति—एमेति, एतच्च सुप्रसिद्धमेवेति तासामवलत्वादिनात्र संशयो न कार्य्य इति भावः। इति प्रसंगाद्भावविशेषोदयेन श्रीवादरायणिना स्त्रीणां तत्रापि श्रीभगवद्भर्त्तृकाणां सौभाग्यं श्लोकत्रयेण वर्णितम्, तच्चान्ते (भा० १०।९०।२७)–'याः संपर्य्यचरन् प्रेम्णा पादसम्वाहनादिभिः। जगद्गुरुं भर्त्तृबुद्धया तासां किं वर्ण्यते तपः॥' इत्यादिना व्यक्तं भावि।

श्रीगोपीभावसम्पन्न-वादरायणये नमः। तादृग् व्याख्याकृतेऽप्यस्तु श्रीधरस्वामिने नमः॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे उत्तरार्द्धे श्री श्रील-सनातन-गोस्वामिपाद-कृतायां श्रीवृहद्वैष्णवतोषण्यां श्रीदशम-टिप्पण्यामेकोनषष्टितमोऽध्यायः॥ ५९॥

## श्रीसुदर्शनसूरिकृतशुकपक्षीयम्

ययाचे इन्द्र इत्यध्याहारः सिद्धार्थ इति सप्तमी अथो प्रयोजने सिद्धे सतीत्यर्थः। इन्द्रः सिद्धार्थश्चाभूदिति वाक्यान्तरम् एतेन इन्द्रो महान् महापुरुषेण कृष्णेन महानपि युद्धेन प्रत्यर्थी क्रियते अहो सुरणामपि तमः मोहः आढ्यतां धिगित्यर्थः॥ ४१-४२॥ अतर्क्यकृत् अचिन्त्यचेष्टितकारी॥ ४३-४४॥ रमाभिः दासीशता अपि दासीशतयुक्ता अपि॥ ४५॥

इति श्रीमद्भागवतव्याख्याने दशमस्कन्धे श्रीसुदर्शनसूरिकृतशुकपक्षीये एकोनषष्टितमोऽध्यायः॥ ५९॥

## श्रीमद्वीरराघवाचार्यकृता भागवतचन्द्रचन्द्रिका

नन्विन्द्रः पराजितः किमकरोदित आह–ययाच इति। आनम्य इन्द्रो मूर्द्धानमिति कर्तृकर्मपदाध्याहारः किरीटाग्रैः पादौ स्पृशन् अर्थसाधनमाश्रितजनाभिमतप्रयोजननिष्पादकं कल्पतरुं ययाचे तमेवङ्कृतवन्तमिन्द्रं निन्दति–सिद्धार्थ इति। तावन्निष्पन्नस्वप्रयोजनः समनन्तरमेवैतेन स्वप्रयोजनसाधकेन भगवता विगृह्यते विरुध्यते तत्समनन्तरमेव महान् याच्ञ्या प्राप्तकल्पतरुत्वेन आढ्यो बभूव तस्मादहो सुराणां तमः अहङ्कारमाढ्यताञ्च धिक् तदुभयं निन्द्यमित्यर्थः॥ ४१॥ अत इति। अतस्ततः एकस्मिन्नेव मुहूर्ते नानावहुध्वगारेषु यावत्यः स्त्रियस्तावत्सु गृहेषु इत्यर्थः। तथा तावन्ति रूपाणि शरीराणि धरतीति तथाभूतस्ताः षोडशसहस्रसङ्ख्याकाः स्त्रियः स्त्रीरुपयेमे उदवोढेति भगवन्महिमातिशयोक्तिः॥ ४२॥ अहो तासां भाग्यमित्याह–गृहेष्विति। अतर्क्याण्यचिन्त्यानि चेष्टितानि करोतीति तथा स भगवान्निजधाम्ना स्वतेजसा उपात्तमनुजरूपत्वेपि अपरित्यक्तस्वासाधारणप्रभावेनेत्यर्थः। सम्प्लुतो व्याप्तोऽपि स्वानन्दानुभवपूर्णोपि वा निरस्तसाम्यातिशयेषु भोग्यादिसमृद्धया समाभ्यधिकरहितेषु तासां गृहेषु अनपायी विश्लेषरहितोऽवस्थितः प्राकृतजनवत् गार्हमेधिकान् ( गार्ह्यधर्मवान् गृहस्थधर्मवान् ) गृहस्थधर्मांश्चरन् अनुतिष्ठन् रमाभीरमणीयाभिः स्त्रीभिः सह रेमे॥ ४३॥ अतिचित्रमेतदेकस्यानेकधा भवनमिति विस्मयमानं प्रत्याह–स्वदारेष्विति। अपरिच्छिन्नस्य समाभ्यधिकरहितस्य स्वभक्तचित्तानुवर्त्तिनो मुरारेः पृथक्भावः स्वदारेषु एकदैव तत्तद्दाराभिमतरूपधारणं किं चित्रं तदद्भुतचेष्टितेषु नेदं चित्रमित्यर्थः॥ क॥ भक्तचित्तानुवर्त्तिन इति विशेषणाभिप्रेतं व्यनक्ति—अद्यापि न केवलं तदैव अपित्वधुनापि योगीश्वरेश्वरः योगनिर्वाहकः कृष्णोन्तर्हृदि बहिस्तत्रापि समन्ताच्च भक्तैः परिपूर्णभक्तियोगैः शतधा सहस्रधा च लक्ष्यते॥ ख॥ अथाहरहस्तासां वृत्तिकममाह–इत्थमिति द्वाभ्याम्। रमापतिं श्रीकृष्णं तं विशिनष्टि यस्य श्रीकृष्णस्य सम्वन्धिनीं पदवीं महिमानं ब्रह्मादयोपि न विदुः तं पतिमवाप्य अविरहमविच्छिन्नं सन्ततमिति यावत् तद्यथा तथा वर्द्धितया मुदा अनुरागसहितो हासस्तत्पूर्वकावलोकश्च तत्पूर्वको नवसङ्गमश्च तत्र जल्पाः नर्मवचनानि तेषु लज्जः भेजुः प्रापुः॥ ४४॥ किञ्च प्रत्युद्गमेति दासीनां ( दास्यः ) शतानि यासां तथाभूता अपि स्वयमेव विभोर्भर्त्तुः

प्रत्युद्गमादिभिर्दास्यं विदधुश्चक्रुः तत्र प्रत्युद्गमः प्रत्युत्थानम् आसनवरार्हणम् आसनश्रेष्ठसमर्पणं पादशौचं पादप्रक्षालनं विश्रमणं पादसम्वाहनादिना श्रमापहरणम् ॥ ४५ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायां एकोनषष्टितमोऽध्यायः ॥ ५९ ॥

### श्रीमज्जीवगोस्वामिकृतक्रमसंदर्भः

गृहेष्विति। अनपायित्वमत्र योग्ययोग्या वत्सरं व्याप्येति ज्ञेयम् गार्हमेधिकांश्चरन्नित्युक्तत्वात् निजाः स्वप्रियविशेषाः तेषां कामेन प्रेममयाभिलाषसम्प्लुतो व्याप्तो वशीकृत इत्यर्थः ॥ ४३ ॥ ब्रह्मादयोऽपीत्युक्त्वा तथा लोभो रमात्वेनैव साध्वेवोक्तं रमाभिरिति भावः ४४-४५ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धीये श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे एकोनषष्टितमोऽध्यायः ॥ ५९ ॥

### श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शिनी

सेन्द्रान् विबुधान्निर्जित्येत्युक्तं तत्र स्वार्थसाधकेनापि स्वेष्टदेवेनापि कृष्णेन सहेन्द्रस्य युद्धं श्रुत्वाऽतिविस्मतं राजानं प्रतीन्द्रदौरात्म्यमाह—ययाचे इति। अर्थसाधनं स्वार्थसाधकं कृष्णं ययाचे नरकं हत्वा कुण्डलादीन्यानीय देहीत प्रार्थयतेस्म सिद्धार्थः प्राप्तकुण्डलादिकस्सन् एतेन कृष्णेन सह विगृह्यते इत्यार्षं विगृह्णाति विग्रहं करोति तत्रापि महान् सुरेशस्सन्नपि अहो आश्चर्य्यं सुराणामपि तमः क्रोधः सात्त्विकानां तेषामिदमत्यसम्भवमिति भावः। तत्रापि सुरेशस्य तस्य तमःतस्मादाढ्यतां धनिकत्वं धिक् आढ्यता हि कमसम्भवमप्यनर्थं नोत्पादयतीति भावः ॥ ४१ ॥ अथो द्वारकामागत्य एकस्मिन् मुहूर्त्त इति तस्यैव वैवाहिकलग्नस्म तदानीं सर्वतो भद्रत्वेन मौहूर्त्तिकलोकैरुक्तत्वात् यावत्यः स्त्रियस्तावद्रूपधरः रुपाण्यत्र एकस्यैव वपुषः प्रकाशभेदा एव तानि धरतीति सः नतु तावद्वपुर्धर इति कार्यव्यूहो व्याख्येयः—

चित्रं बतैतदेकेन वपुषा युगपत् पृथक्। गृहेषु द्व्यष्टसाहस्रं स्त्रिय एक उदावहत्" ॥

इत्यग्रिमोक्तेः। यथा यथावदित्यनेन देवक्यादिबन्धुजनसमागमोपि प्रतिगृहं यौगपद्येन सूचित इति श्रीस्वामिचरणाः तेषामपि प्रकाशभेदोऽचिन्त्यशक्त्यैव कारितो ज्ञेयः। अव्ययः सर्वत्रापि पूर्ण एव नत्वंशेन वर्तमानः प्रकाशस्तु भेदेषु गण्यते सहि नो पृथगिति भागवतामृतोक्तेः ॥ ४२ ॥ तासां गृहेष्वनपायी प्रकाशभेदैः सर्वेष्वेव स्थित इत्यर्थः। अतर्क्यकृदिति तथा अतर्क्यं कर्म करोति यथा सर्वत्रापि सञ्चारितदासीसखीका अपि ताः प्रत्येकमहमेव संयोगिनी अन्यास्तु विरहिण्य एवेति जानन्तीति भावः। निरस्तं साम्यमतिशयश्च येभ्य इति तादृशा गृहा अपि वैकुण्ठेपि न सन्ति किमुत तादृशरमणादिसुखानीत्यर्थः। निजेन स्वरूपभूतेनैव कन्दर्पेणेव सम्प्लुतो निमग्नः रमाभी रेमे इति, वैकुण्ठे खल्वेकयैव रमया स्वांशो नारायण एव रमते इति वैकुण्ठादपि द्वारकाया ऐश्वर्येणाधिक्यं गार्हमेधिकान् धर्मांश्चरन्निति माधुर्य्येणाप्याधिक्यं ज्ञापितं तासां रमात्वेन स्वरूपशक्तित्वं स्कान्दे प्रभासखण्डेपि यथा—

षोडशैव सहस्राणि गोप्यस्तत्र समागताः। हंस एवमतः कृष्णः परमात्मा जनार्दनः ॥
तस्यैताः शक्तयो देवि षोडशैव प्रकीर्त्तिताः। चन्द्ररूपीमतः कृष्णः कलारूपास्तु ताः स्मृताः ॥
सम्पूर्णमण्डला तासां मालिनी षोडशीकला ॥ षोडशैव कलायास्तु गोपीरूपा वराङ्गने ॥
एकैकशस्ताः सम्भिन्नाः सहस्रेण पृथक् पृथक् ॥ इति ॥

पाद्मे कार्तिकमाहात्म्ये च "कैशोरे गोपकन्यास्ता यौवने राजकन्यका" इति अतः पूर्णतमस्य श्रीवृन्दावननाथस्य यथा द्वारकानाथः पूर्णः प्रकाशस्तथैव पूर्णतमानां तदीयाह्लादिनीशक्तीनां गोपीनां पूर्णप्रकाशरूपा पट्टमहिष्य इति ॥ ४३ ॥ रमायाः पूर्णलक्ष्मीरूपायाः पतिं श्रीकृष्णमवाप्य ब्रह्मादयोपि किं पुनरन्ये पमवीमपि किं पुनस्तं न विदुरपि किं पुनर्लभेरन्नित्यर्थः। अविरतमेव एधितया प्रवृद्धया मुदा अनुरागसहितं हासावलोकं तत्पूर्वकं नवसङ्गमञ्च तत्र तदुचितजल्पञ्च तत्प्रतिजल्पे प्राप्ते सति लज्जाञ्च भेजुः प्रापुः ॥ ४४ ॥ विश्रमणं सम्वाहनं केशानां प्रसारः प्रसाधनं दासीनां शतानि विद्यन्ते यासां तथाभूता अपि स्वयं विभोर्दास्यं विदधुरिति ॥ ४५ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम्। ऊनषष्टितमोऽध्यायो दशमेऽजनि सङ्गतः ॥ ५९ ॥

### गूढार्थदीपिनी

तद्गन्ध एव आसवो मादकद्रव्यं तत्र लम्पटा लोलुपाः भ्रमराः ॥ ४१ ॥ इन्द्रः प्रथमं स्वशिरं आनम्य मुकुटकोटिभिरग्रभागैः पादौ स्पृशन् अच्युतं ययाचे। किमर्थम्। अर्थसाधनाय कार्यसिद्धये। अत्र चतुर्थ्या 'अकथितं च' इति कर्मत्वम्। याचेर्द्विकर्मकत्वात्। सिद्धार्थः सिद्धकार्यः सन् अहो महान् ज्ञानवानपि एतेन श्रीकृष्णेन विगृह्यते विग्रहं करोति अतः सुराणां

तमः क्रोधम् आढ्यतां च धिक्। यद्वा। सुराणां मध्ये पूर्वं महानपि एतेन विगृह्यतेऽतोऽमहान्। कर्मकर्त्तरि प्रयोगः॥ ४२॥ यथा यथावत् सविधि॥ ४३॥ तासां गृहेषु अनपायी अवियोगी सन् अवस्थितः। कुतः। अतर्क्यं तर्कासंभवं कर्म करोतीति। निरस्तं साम्यमतिशय आधिक्यं च यैस्तेषु गृहेषु निजेति स्वानन्दपूर्णः। इतरः प्राकृतः। गार्हकमेधिकान् गृहस्थधर्मान् आचरन्। रमाभिः रुक्मिणीमुख्याभिः सह रेमे॥ ४४॥ पदवीं प्राप्तिमार्गम्। एधितया निरन्तरं वर्धमानया मुदा तं भेजुः अनुरागादिषु लज्जा यासां ताः स्त्रिय इत्यस्य विशेषणम्॥ ४५॥ दासीनां शतानि विद्यन्ते यासां ता अपि विभोः श्रीकृष्णस्य सेवां स्वयमेव चक्रुः। कैः प्रत्युद्गमादिभिः। प्रत्युद्गमः प्रत्युत्थानम्। अर्हणम् अर्ह्यतेऽनेनेति अर्हणं पूजनद्रव्यम्। विश्रमणं पादमर्दनम्। प्रसारोऽलङ्करणम्। उपहार्या भक्ष्यभोज्यादयस्तैः॥ ४६॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां दशमस्कन्धोत्तरार्द्धे गूढार्थदीपिन्यामेकोनषष्टितमोऽध्यायः॥ ५९॥

## श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः

सेन्द्रान् विबुधान्निर्जित्येतीन्द्रस्य स्वेष्टदेवेन सर्वदोपकारकर्त्रा श्रीकृष्णेन सह सङ्ग्राम उक्तस्तत्र धनिकतां क्रोधञ्च हेतुमाह—ययाचेति। तत्तदवसरे शत्रुनाशाद्यर्थं तदानीमेव कुण्डलाद्यर्थञ्च अर्थसाधनं मनोरथसाधकम् अच्युतं परमेश्वरं ययाच प्रार्थयते स्म सिद्धार्थः प्राप्तमनोरथश्च सुराणां मध्ये महानपि तथापि अहो आश्चर्य्यम् एतेन श्रीकृष्णेन विगृह्यते विग्रहं करोति इन्द्र इति शेषः। अतस्तमः क्रोधलक्षणं आढ्यतां धनिकताञ्च धिक्॥ ४१॥ यावत्यः स्त्रियस्तावद्रूपधरः नानागारेषु पृथक् पृथक् गृहेषु यथायथावदुपयेमे अनेन देवक्यादिबन्धुजनसमागमोऽपि प्रतिगृहं यौगपद्येनेति गम्यते अव्ययः सर्वत्रापि सम्पूर्ण एव यतो भगवानचिन्त्यैश्वर्यः॥ ४२॥ तासामहो भाग्यमित्याह—गृहेष्विति त्रिभिः। निरस्तमतिशयश्च येभ्यः तेषु गृहेषु अनपायी विश्लेषरहितोऽवस्थितः अतर्क्याणि तर्क्यागोचराणि चेष्टितानि करोतीति तथा निजकामसंप्लुतः स्वानन्दतृप्तोऽपि यथेतरः इतरवत् अतृप्तवत् रमाभिः छत्रिणो यान्तीतिवत् रुक्मिणीमुख्याभिः रेमे॥ ४३॥ अविरतमेधितया प्रवृद्धया मुदा अनुरागसहितमवलोकञ्च तत्पूर्वकं नवसङ्गमञ्च तद्गतजल्पञ्च तस्मिन् लज्जाञ्च भेजुः प्रापुः॥ ४४॥ दासीनां शतानि विद्यन्ते यासां तथाभूताः अपि स्वयं विभोः प्रत्युद्गमादिभिर्दास्यं विदधुश्चक्रुः तत्र प्रत्युद्गमः प्रत्युत्थानम् विश्रमणं सम्वाहनम् केशानां प्रसारः प्रसाधनम्॥ ४५॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धीये श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे एकोनषष्टितमोऽध्यायः॥ ५९॥

## श्रीमद्वल्लभाचार्यकृता सुबोधिनी

अस्मिन्नपि मते भगवत्कृतमेव युक्तम्, नत्विन्द्रकृतमिति तत् कृतं निन्दति **ययाच** इति। य इन्द्रः अच्युतमर्थसाधनं ययाचे, पश्चात् सिद्धार्थः सन् अर्थसाधकेनैव विगृह्यते। प्रसङ्गाद्याचनं वारयति **आनम्येति**। प्रार्थनारूपम्। ननु मान्यः नमस्कृत्य याच्यते प्रसङ्ग इति, तत्राह **किरीटकोटिभिः पादौ स्पृशन्निति**। स्वापकर्षं भावयन्नपि ययाचे। किञ्च। स्वयमसमर्थः भगवान् समर्थः नरकं हन्तुमिति जानन् तथा प्रार्थितवानिति अभिप्रायं द्योतयति **अच्युतमिति**। अर्थस्य साधनं यस्मादिति। तस्मादेव कार्यसिद्धिः। समर्थोऽपि नान्यः कार्यं करोति। एवं महत्त्वेन भगवन्तं ज्ञात्वापि, पराक्रमं दृष्ट्वापि, स्वयं महानपि विगृह्यते। ननु कथं कारणविरुद्धं कार्यम्, तत्राह **अहो** इति। तथाप्युपपत्तिर्वक्तव्येति चेत्, तत्राह **सुराणां च तम** इति। सात्त्विकानां ज्ञानप्रधानानां केवलतमोरूपमज्ञानमिति। विरुद्धमनूद्य अर्थादाढ्यताहेतुत्वेन निरुच्यते। अत एव तां निन्दति **धिगाढ्यतामिति**। श्रीसम्पत्तिरेवाज्ञानमूलमप्रतिहतम्, नत्वन्यत्, तत्र सुरत्वादिकं बाधकमित्यर्थः॥ ४१॥ शौर्यविशं परित्यज्य कामावेशेन, अनन्तरूपत्वात्कामस्य, तत्तत्पूरकरूपेण तासु विवाहर्रतिमानानि सम्पादितवानित्याह **त्रिभिः**। **अथो** इति। एकस्मिन्नेव मुहूर्ते सर्वतः समानफलत्वाय। कामनायास्तथात्वात्। नानागारेषु ताः स्थापयित्वा यथावदुपयेमे। दृष्टिभ्रमादिपक्षान् वारयितुमाह **तावद्रूपधर** इति। तत्र सामर्थ्यं **भगवानिति**। रूपाणामप्यविकृतत्वाय **अव्यय** इति। **यथा** गृह्योक्तप्रकारेण॥ ४२॥ विवाहमुक्त्वा रमणमाह **गृहेष्विति**। तासां गृहेषु अनपायी नित्यं तिष्ठति। ता हि प्रमाणस्थकामानुसारेण न विवाहिताः, किन्तु प्रमेयस्थानुसारेण। स हि पुष्टः निरन्तरश्च नित्यरमणात्मकः। अतो विवाहक्षणमारभ्य यावत्स्थिति नित्यरमणमेव तासु कृतवान्। विधिपरिपालनार्थमेव दश पुत्रोत्पादनम्, तदत्र न वक्तव्यम्, कामप्राधान्यात्। उत्पादने हि कामः क्षीयत इति। ननु निरन्तररमणे बहूनि दूषणानि, कार्यान्तरे व्याघातः, लोकानां सन्देहोत्पत्तिः, परस्परं तासामन्योन्यगोष्ठ्यां सन्देहः, तत्राह **अतर्क्यकृदिति**। **यथा** न कोऽपि तर्कं उत्पद्यते कस्यापि, तथा करोति। लोकप्रतीतिमेव विरोधेऽन्यथा जनयति। बहून्येव रूपाणीति केनचिद्रूपेणान्यत्रापि गच्छति। परमत्र विशेषकार्यं न करोति। अतः शाल्वादिषु विद्यमानोऽपि न युद्धं कृतवान्। कामार्थमेव स्थित इति कामसम्पत्त्यर्थं गृहान् वर्णयति **निरस्तसाम्यातिशयेष्विति**। स्वर्गादिष्वपि ( न ) महिषीगृहाणां साम्यमतिशयो वा क्वचिदप्यस्ति। स्वयं **चावस्थितः** स्थिरः। वैयग्र्ये अस्थैर्ये च संततः कामः बाधितः स्यात्। एवं सर्वोपपत्तौ ताभिः **सह रेमे**। ननु भगवान् निरिन्द्रियः, ब्रह्मानन्दरूपायां लक्ष्म्यामेव रमते, नत्वन्यत्रेति कथं रमणमित्याशङ्क्याह **रमाभिरिति**।

यावन्ति भगवद्रूपाणि तावन्त्येव लक्ष्मीः करोतीति तासु लक्ष्म्यास्तावतां रूपाणामावेशः। एवं करणे हेतुः। निजकामेन संप्लुत इति। सेनायामागतायां कामोऽप्याविर्भूतः। जीवकामव्युदासार्थं निजपदम्। एवं सति तासां सङ्कल्पो न सिध्येदित्याशङ्क्याह **यथेतर** इति। केवलप्राकृतत्वं वारयति **गार्हमेधिकांश्चरन्निति**। गृहमेधिधर्मानाचरन् श्रौतान् स्मार्तांश्च ॥ ४३ ॥ तासां मानसम्पत्तिं कृतवानित्याह इत्थमिति। अथवा द्वाभ्यां भगवच्चरित्रमुक्तम्। तथाकरणानन्तरं ताभिरप्येकं कामरसेन कृतम्, एकं तु भक्त्येत्याह द्वाभ्याम्, इत्थमिति। रमाया एव भगवान् पतिः, नत्वन्यासाम्। तद्रासाः जीवा एवान्यासाम्। तं पतिं स्वयमवाप्य। पूर्वं बन्द्या गृहीतास्ताः। बन्दिग्रहणं तासामुपकारायैव जातमिति। **अविरतमेधितया मुदा भगवन्तं भेजुरिति** सम्बन्धः। निरन्तरं सेवितवत्यः। ननु किमाश्चर्यं स्त्रियो हि भर्तृसेवां कुर्वन्त्येवेति चेत्, तत्राह **ब्रह्मादयोऽपि न विदुः पदवीं यदीयामिति**। मार्गमेव भगवतो न जानन्ति, कुतः सेवां करिष्यन्ति। अभिप्रेता हि सेवा कर्तव्या। अभिप्रायस्तु दुर्गमः। तदपि ज्ञात्वा सेवां कृतवत्य इत्यलौकिकं बोध्यते। तत्रापि न विधिकिङ्करतया, किन्तु मुदा। औत्सुक्यान्मुदः प्रवृत्तिं वारयति **अविरतमेधितयेति**। भगवति तासां षड्भावानाह **अनुरागेति**। अन्यथा भक्तिरस एव स्यात्, न कामरसः। प्रथमतोऽनुरागः चित्ते। ततो हासः भावप्राकट्यम्। ततोऽवलोकनं दृष्ट्या सङ्गः। ततो नवसङ्गमो नित्यम्। नित्यनूतनत्वाद्भगवतः। ततो जल्पाः नानाविधाः कथाः। तत उत्थितानां लज्जा कुलवधूभावप्राकट्यम्। अन्यथा अगुप्तो रसः रसाभासः स्यात्। **जातलज्जा** इति पाठः सुगमश्चिन्त्यः ॥ ४४ ॥ कामकृतमुक्त्वा भक्तिकृतमाह **प्रत्युद्गमेति**। दूरादागच्छन्तं दृष्ट्वा यथाकथञ्चिदपि स्थिताः प्रत्युद्गता भवन्ति। अग्रे गच्छन्ति। तत आसनं भगवते प्रयच्छन्ति। ततो वरार्हणमभीष्टं कुर्वन्ति, यदाज्ञापयति। वरस्य वा विवाहसमये समागतस्य यथोपचाराः क्रियन्ते, मधुपर्कादिः पाणिग्रहणादिर्वा। ततः पादप्रक्षालनम्, ततस्ताम्बूलदानम्, ततो विश्रमणं पादसंवाहनम्, ततो वीजनं व्यजनादिभिः, ततो गन्धमाल्यादिदानम्, ततः स्वेच्छयोपविष्टस्य माल्यादिग्रथनार्थं केशप्रसारः, ततः शयनम्, ततः कामे तृप्ते स्नपनम्, तत उपहारः भक्ष्यभोज्यादिदानम्। कामार्थमेव हि स्त्रीगृहे गमनम्, न तु भोजनार्थम्। अतः कामानन्तरमेव भोजनं युक्तम्, अन्यथोभयमपि विरसं स्यात्। एवं द्वादशधोपचाराः प्रत्यहं कर्तव्याः, द्वादशधा मनसो वृत्तिपूरणार्थम्। एवं करणे तासां क्लेशात् रसोत्पादकता न स्यादित्याशङ्क्याह **दासीशता अपीति**। अतस्ताभिः सुसंस्कृताः भगवतो दास्यं विदधुः। क्लिष्टो भगवानेताभिरेवं सेवित इति सापेक्षसेवां कश्चिद्ब्रूयात्, तद्व्यावृत्त्यर्थमाह **विभोरिति**। सर्वतः समर्थस्य। एवं सर्वासां विवाहावधिसेवान्ताः क्रिया निरूपिताः। मानापनोदनादिकं तु वक्तव्यम्, तदुत्तराध्याये रुक्मिण्यामुक्त्वा सर्वत्रातिदेशं वक्ष्यति। यदैव भगवान् यस्मिन्नंशे तिरोहित इव भवति, तत्रैव भगवत्कृतसमाननात् मान उत्पद्यत इति स्थितिः ॥ ४५ ॥

इति श्रीभागवतसुबोधिन्यां श्रीमल्लक्ष्मणभट्टात्मजश्रीमद्वल्लभदीक्षितविरचितायां दशमस्कन्धविवरणे उत्तरार्धे दशमोऽध्यायः ॥ १० ॥

## श्रीसुबोधिनी-सारः

'सर्वे स्वार्थपरायणाः' इति सूचयन् संपदां निंदति। पूर्वमापदि प्रणम्य किरीटकोटिभिर्मुकुटाग्रभागैः पादौ स्पृशन् सन् इंद्रोऽच्युतं हरिमर्थसाधनं प्रति ययाचे इदानीं सिद्धोऽर्थो मनोरथो यस्य स एतेन श्रीकृष्णेन विगृह्यते विग्रहं करोति अहो सुराणां देवानां महान् तमः क्रोधः अतः आढ्यतां धनिकतां धिगिति भावः॥ ४१ ॥ अथो इति मंगले एकस्मिन्मुहूर्त्ते नानागृहेषु यथावत् ताः स्त्रियः तावंति रूपाणि धरतीति न कर्मण्यणा बाधात् किं तु षष्ठीसमासो गंगाधरवत् अव्ययोऽविनाशी भगवानुपयेमे परिणिन्ये ॥ ४२ ॥ तासामहोभाग्यं वर्णयति। निरस्तम् अपाकृतं साम्यमतिशयश्चान्येषां यैस्तेषु तासां स्त्रीणां गृहेषु अवस्थितोऽनपायी नापायो यस्यास्तीति अतर्क्याणि कर्माणि करोतीति निजकामसंप्लुतः स्वानंदपरिपूर्णः गार्हकमेधिकान् गृहस्थधर्मान् चरन् सन् रमाभिर्लक्ष्म्यंशसंभूताभिः स्त्रीभी रेमे इतरः प्राकृतजन इव ॥४३॥ ब्रह्मादयोपि यदीयां पदवीं मार्गं न विदुः तं रमायाः पतिं श्रीहरिमित्थममुना प्रकारेण ताः स्त्रियः पतिमवाप्याविरतं निरंतरम् एधितया संवर्द्धितया मुदा हर्षेण भेजुः अनुरागः स्नेहो हासः प्रसिद्धस्ताभ्यां सहितमवलोकश्च तत्पूर्वको नव संगमश्च तद्गतं जल्पं रतिवार्त्तां च तस्मिन् लज्जां भेजुः ॥ ४४ ॥ दासीनां शतानि यासां तास्तथाभूता अपि विभोर्हरेर्दास्यं विदधुः चक्रुः स्वयं स्म प्रसिद्धम्। कैः प्रत्युद्गमः संमुखागमनम् आसनं वरार्हणमर्घ्यादि पादशौचं चरणप्रक्षालनं तांबूलं वीटकं विश्रमणं पादसंवाहनं वीजनं गंधः माल्यानि पुष्पाणि तैः केशानां प्रसारः प्रसाधन शयनं शय्याविधिः स्नपनम् उपहार्य्यं भोजनसंपत्तिस्तैः ॥ ४५ ॥

इति श्रीमद्भा० दशमस्कन्धे उ० सुबोधिन्यां टीकायामेकोनषष्टितमोऽध्यायः ॥ ५९ ॥

## श्रीविट्ठलरायात्मजश्रीवल्लभकृतलेखः

**ययाच** इत्यस्याभासे। **अस्मिन्नपि मते** इति। मतान्तरभाषायामपीत्यर्थः। **गृहेष्वित्यत्र**। **प्रमाणस्थेति**। 'एवं व्यवायः प्रजया न रत्यै' इत्यत्र प्रजार्थं तदङ्गत्वेन कामः सम्पादनीय इत्युक्तम्। अयं प्रमाणस्थः कामः। भोगार्थकः कामः

प्रमेयस्थ:। तथाच प्रजार्थं न विवाहिता:। अष्टभिरेव महिषीभिस्तत्सिद्धे:। किन्तु नानाविधविलासार्थं विवाहिता इत्यर्थ:। इत्थमित्यत्र। जल्पलज्जा इत्यर्श आद्यजन्तम्। प्रत्युद्गमेत्यस्य व्याख्यानान्ते पूर्वं 'मथो मुहूर्ते' इत्यस्याभासे अन्त्यश्लोकयोर्मानं वाक्यार्थ इत्युक्तम्। तद्व्युत्पादयन्ति यदैव भगवानिति।

इति दशमाध्यायव्याख्या।

## गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

भार्यया सत्यभामया नोदित: सन् तत्रत्यं पारिजाताख्यं तरुमुत्पाट्य गरुत्मति आरोप्य सेन्द्रान् विबुधान् युद्धे निर्जित्य, पुरं द्वारकां प्रत्यनयत्॥ ४१॥ सत्यभामाया गृहसमीपस्थमुद्यानमुपशोभयतीति तथा तत्र स्थापित:। यद्यपि पारिजातं महेन्द्र: प्राहिणोदिति पूर्वोक्तेर्द्वारकायां सोस्ति तथापि सोन्यत्रास्ति, अयं तु सत्यभामामनोरथेनानीतस्तदुद्याने स्थापित इति ज्ञेयम्। तदुत्कर्षमाह-अन्वगुरिति॥ ४२॥ "भगवता सह इन्द्रस्य विरोधो न युक्त:' इति आह—ययाच इति। इन्द्र: प्रथमं मूर्धानमानम्य किरीटाग्रैर्भगवत्पादौ स्पृशन् तमर्थसाधनं शरणागतमनोरथनिष्पादकम्, तत्र हेतु:--अच्युतमक्षीणबलपराक्रमं ययाचे भौमवधादिकं प्रार्थितवान्। पश्चात्सिद्धार्थ: निष्पन्नभौमवधादिप्रयोजन: सन् महानपि एतेन दु:साध्यकार्यसाधकेन स्वामिना सह वृक्षनिमित्ते विगृह्यते विरोधं कृतवान्। अहो आश्चर्यं सुराणां सात्त्विकत्वेन ज्ञानयोग्यानां चापीन्द्रसहायभूतानां तमोऽज्ञानम्। तत्र हेतुं सूचयन्नाह—आढ्यतां धनिकतां धिगिति॥ ४३॥ तद्विवाहमाह—अथेति। द्वारकागमनानन्तरं एकस्मिन्नेव मुहूर्ते ता: शताधिकषोडशसहस्रसङ्ख्याका: स्त्रिय: स्त्रीर्भगवान् यथोचितमुपयेमे उदवोढ। ननु 'एकस्मिन्मुहूर्ते एकस्य कथं ताभिर्बह्वीभिर्विवाह: संभवति' इत्याशङ्क्याय—नानागारेष्विति। यावत्य: स्त्रियस्तावत्सु गृहेषु स्वयमपि तावद्रूपधर इति। 'तावद्रूपधारणेन ताभि: सह रमणेपि तस्य न कश्चिदायास:, क्षतिर्वा' इत्याशयेनाह--अव्यय इति॥ ४४॥ एवं भगवतो विवाहान्निरूप्य तस्य रमणमाह—गृहेष्विति। तासां पत्नीनामेकशताष्टाधिकषोडशसहस्रसङ्ख्याकानां गृहेषु अनपायी विश्लेषरहित: अवस्थित: न इतरवत् प्राकृतजनवत् गार्हकमेधिकान् गृहस्थधर्मांश्चरन् अनुतिष्ठन् ताभि: सह भगवान् कृष्णो रेमे इत्यन्वय:। गृहाणां भगवद्रमणयोग्यतामाह-निरस्तसाम्यातिशयेष्विति। भोग्यपदार्थसमृद्ध्या साम्यान्यधिकरहितेषु। स्त्रीणामपि तद्रमणयोग्यतामाह-रमाभिरिति। 'लक्ष्म्यंशभूताभि: एकस्य बहुषु गृहेषु कथमवस्थानम्' इत्याशङ्क्याह-अतर्क्यकृदिति। यो ह्यचिन्त्यं जगदिच्छामात्रेण करोति तस्य किमशक्यम्? अतस्तावद्रूपेण प्रतिगृहावस्थानमित्याशय:। न च 'आप्तकामस्य कथमेवं रमणम्' इत्याशङ्क्याह-निजकामेति। निजानां स्वभक्तानां तासां कामेन मनोरथेन संप्लुतो वशीकृत: स्वयं स्वरूपानन्दपूर्णोपि तासां मनोरथानुसारेण एवं रेमे इत्यर्थ:॥ ४५॥ तासां भाग्यातिशयं सूचयन् भगवद्भजनमाह-इत्थमिति द्वयेन। ब्रह्मादयोपि यदीयां पदवीं यत्प्राप्तिमार्गमपि न विदुस्तं रमापतिं कृष्णमित्थमुक्तविवाहप्रकारेण पतिमवाप्य अनुरागसहितो हासस्तत्पूर्वकोवलोकश्च नवसङ्गमश्च तत्र जल्पा नर्मवचनानि तेषु लज्जाश्च यासां ता: स्त्रिय: अविरतं निरन्तरमेधितया वर्धितया मुदा भेजु: तमेव सेवितवत्य इत्यन्वय:॥ ४६॥ सेवनमेव विशेषतो दर्शयति-प्रत्युद्गमेति। दासीनां शतानि विद्यन्ते यासां तथाभूता अपि ता: स्त्रिय: स्वयमेव विभोर्महत्तमस्य भर्तु: प्रत्युद्गमादिभिर्दास्यं विदधुश्चक्रु:। प्रत्युद्गम आगच्छन्तं दृष्ट्वा तदग्रतो गमनम्, आसनं आसनदानम्, वरार्हणं अर्घ्यदानादिसत्कार:, पादयो: शौचं प्रक्षालनम्, ताम्बूलसमर्पणम्, विश्रमणं पादसंवाहनादिना श्रमापहरणम्, व्यजनादिभिर्वीजनम्, गन्धस्य चन्दनादेर्दानम्; माल्यानि पुष्पाणि तत्समर्पणम्, केशप्रसार: केशप्रसाधनम्, शयनं शय्याया आस्तरणम्, स्नपनम्, उपहार्या: भक्ष्यभोज्यादय:, तै ४७॥

इति श्रीवल्लभाचार्य-वंश्यगोपालसूनुना। श्रीमन्मुकुन्दरायाणां पादसेवाधिकारिणा॥ १॥
श्रीमद्गिरिधराख्येन भजनानन्दसिद्धये। श्रीमद्भागवतस्येयं टीका बालप्रबोधिनी॥ २॥
रचिता दशमे तत्र राजसानां निरोधने। ऊनषष्टितमो वृत्तिं गत: कृष्णस्य सत्पते:॥
भौमेनाहृतकन्याभि: सहोद्वाहनिरूपक:॥ ३॥

## अन्वितार्थप्रकाशिका

स्थापित इति। सत्यभामाया गृहसमीपस्थमुद्यानमुपशोभयतीति तथा तत्र स्थापित:यद्यपि पारिजातं महेन्द्र: प्राहिणोदिति पूर्वोक्ते: द्वारकायां सोऽस्ति तथापि सोऽन्यत्रास्ति। अयं तु सत्यभामामनोरथेनानीतस्तदुद्याने स्थापित इति ज्ञेयम्। तस्य पारिजातस्य गन्धासवे लम्पटा: आसक्ता: भ्रमरा: स्वर्गात्स्वर्गं परित्यज्य तत् पारिजातमन्वगु:॥ ४१॥ ननूपकारकेण कृष्णेन कथमिन्द्रस्य संग्राम इत्यत: प्राह-ययाच इति। इन्द्र: प्रथमं मूर्द्धानमानम्य किरीटस्य कोटिभिरग्रैर्भगवत्पादौ स्पृशन् तमर्थसाधनं भौमवधादिकार्यसाधकम् अच्युतं ययाचे। भौमवधादिकं प्रार्थितवान्। अर्थसाधनमिति याचे: द्विकर्मकस्य कर्म वा पश्चात्सिद्धार्थ: निष्पन्नभौमवधादिप्रयोजन: सन्महान् ज्ञानवानपि एतेन दु:साध्यकार्यसाधकेन स्वामिना सह वृक्षे निमित्ते विगृह्य

ते विरोधं कृतवान् । आर्षः प्रयोगः । अहो आश्चर्यं सुराणां सात्त्विकानां चापि तमोऽज्ञानं जातम् । अतः आढ्यतां धनिकतां धिक् । यद्वा । सुराणां तमो धिक् आढ्यतां च धिक् ॥ ४२ ॥ अथो इति । अथ द्वारकागमनानन्तरम् एकस्मिन्नेव देवज्ञोक्ते मुहूर्ते ताः शताधिकषोडशसहस्रसङ्ख्याकाः स्त्रियः स्त्रीः नानागारेषु तावद्रूपधरः अव्ययः सर्वत्र पूर्ण एव नत्वंशेन वर्त्तमानः भगवान् यथा यथोचितमुपयेमे । एतेन देवक्यादिवन्धुजनसमागमोऽपि भगवतः प्रभावात् प्रतिगृहमेव । अत्र चक्रवर्त्यादयः । अत्रैकस्यैव वपुषः रूपाणि प्रकाशभेदा एव नतु कायव्यूहो व्याख्येयः । "चित्रं बतैतदेकेन वपुषा युगपत्पृथक् ॥ गृहेषु द्व्यष्ट साहस्रं स्त्रिय एक उदावहत् ॥" इति वक्ष्यमाणत्वात् देवक्यादीनामपि प्रकाशभेद एव कारित इत्याहुः ॥ ४३ ॥ गृहेषु इति । तासां पत्नीनां निरस्तसाम्यातिशयेष्विति भोग्यपदार्थसमृद्ध्या साम्याधिकरहितेषु गृहेषु अवस्थितः अनपायी विश्लेषरहितः सन् इतरवत् प्राकृतजनवत् गार्हकमेधिकान् गृहस्थधर्मांश्चरन् अनुतिष्ठन् अतर्क्यकृत् अचिन्त्यस्य जगतः कर्ता निजानां भक्तानां कामेन संप्लुतो वशीकृतः स्वानन्दपूर्णो वा भगवान् कृष्णः रमाभिः लक्ष्म्यंशभूताभिः ताभी रेमे ॥ ४४ ॥ इत्थमिति द्वयेन ॥ ब्रह्मादयोऽपि यदीयां पदवीं यत्प्राप्तिमार्गमपि न विदुस्तं रमापतिं कृष्णमित्थमुक्तविवाहप्रकारेण पतिमवाप्य अनुरागसहितो हासस्तत्पूर्वकोऽवलोकश्च नवसङ्गमश्च तत्र जल्पा नर्मवचनानि तेषु लज्जाश्च यासां ताः स्त्रियः अविरतं निरन्तरमेधितया वर्धितया मुदा भेजुः तमेव सेवितवत्यः । यद्वा । अनुरागादिलज्जान्तान् कर्मभूतान् भेजुरिति ॥४५॥ प्रत्युद्गमेति । दासीनां शतानि विद्यन्ते यासां तथाभूता अपि ताः स्त्रियः स्वयमेव विभोर्महत्तमस्य भर्त्तुः प्रत्युद्गमादिभिर्दास्यं विदधुश्चक्रुः । प्रत्युद्गम आगच्छन्तं दृष्ट्वा तदग्रतो गमनम् आसनम् आसनदानं वरार्हणम् अर्घ्यदानादिसत्कारः पादयोः शौचं प्रक्षालनं ताम्बूलसमर्पणं विश्रमणं पादसंवाहनादिना श्रमापहरणं व्यजनादिभिर्वीजनं गन्धस्य चन्दनादेर्दानं माल्यानि पुष्पाणि तत्समर्पणं केशप्रसारः केशप्रसाधनं शयनं शय्यायाः आस्तरणं स्नपनम् उपहार्याः भक्ष्यभोज्यादयस्तैः एताश्च भगवतः स्वरूपशक्तिभूताः । तथा च स्कान्दे प्रभासखण्डे । "षोडशैव सहस्राणि गोप्यस्तत्र समागताः । हंस एव मतः कृष्णः परमात्मा जनार्दनः । तस्यैताः शक्तयो देवि षोडशैव प्रकीर्तिताः । चन्द्ररूपी मतः कृष्णः कलारूपास्तु ताः स्मृताः । सम्पूर्णमण्डला तासां मालिनी षोडशी कला । षोडशैव कला यास्तु गोपीरूपा वरानने । एकैकशस्ताः संभिन्नाः सहस्रेण पृथक्-पृथक् ।" इति पाद्मे कार्तिकमाहात्म्ये च । "कैशोरे गोपकन्यास्ता यौवने राजकन्यकाः" । इति । अतो यथा बाल्ये गोप्यः तथा यौवने पट्टमहिष्यः ॥ ४६ ॥

इति श्रीभागवते दशमस्कन्धे उत्तरार्द्धेऽन्वितार्थप्रकाशिकायामेकोनषष्टितमोऽध्यायः ॥ ५९ ॥

## श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्

श्रीकृष्णेन सह पारिजातनिमित्तकलहकर्तॄन्निंदादीन्निंदन्नाह यया च इति पादौ स्पृशन् सन् किरीटकोटिभिः आनम्य इंद्रः अर्थस्य साधनं साधनरूपं अच्युतं श्रीकृष्णं स्वप्रयोजनाय ययाचे याचितवान् पश्चात् सिद्ध्यर्थः सन् एतेन श्रीकृष्णेन सह विगृह्यते विग्रहं करोति स्मेत्यर्थः । अहो सुराणामपि महान् महत्तमोऽविवेकः तेषां आढ्यतां धनिकतां धिक् श्रीकृष्णेन साद्धं देवानां संग्रामविस्तरस्तु हरिवंशाद्विष्णुपुराणाच्च बोध्यः ॥४१॥ यथा यथाविधि ॥ ४२ ॥ अन्यगृहाणां निरस्तसाम्यं अतिशयश्च यैस्तेषु तासां गृहेषु अनपायी अखंडः अवस्थितः अतर्क्यकृत् अचित्य चरित्रकृत् निजकामेन स्वलाभेन संप्लुतः संपूर्णः सन्नपि इतरो गृहस्थो यथा स्वस्त्रीभिः सह रमते तथा रमाभिः लक्ष्मीतुल्याभिः सह भगवान् रेमे ॥ ४३ ॥ अनुरागयुतो हासश्चावलोकश्च तत्पूर्वको नित्यनूतनसंगश्च तद्गतो विचित्रजल्पश्च लज्जा चैतानि ताः स्त्रियो भेजुः यद्वा । अनुरागयुता हासादयः संति यासां ताः स्त्रियः अविरतं निरंतरं एधितया मुदा हरिं भेजुः ॥ ४४ ॥ दासीनां शतानि संति यासामेव भूता अपि प्रत्युद्गमादिभिः स्वयमेव विभोः स्वपतेः श्रीकृष्णस्य दास्यं विदधुः । कृतवत्यः । प्रत्युद्गमः सन्मुखगमनं । पादशौचमंघ्रिप्रक्षालनं । विश्रमणं पादाद्यंगसंवाहनं केशप्रसारः केशप्रसाधनं । शयनं शय्याकरणं ॥ ४५ ॥

इति श्रीशुद्धैकांतधर्मप्रवर्त्तकगुरुराजेन्द्रश्रीसहजानंदस्वामिशिष्यगोपालानंदमुनिविरचिते निगूढार्थप्रकाशके श्रीमद्भागवतस्य दशमस्कंधव्याख्याने नरकवधोनामैकोनषष्टितमोऽध्यायः ॥ ५९ ॥

## भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

प्रसाधितस्वमनोरथेन श्रीकृष्णेन सह पारिजातनिमित्तककलहकर्तॄन्निन्द्रादीन्निन्दन्नाह । ययाच इति । आनम्य प्रणम्य, इन्द्रः मूर्द्धानमिति च कर्तृकर्मपदाध्याहारः । किरीटकोटिभिः किरीटाग्रैः, पादौ स्पृशन् सन्, अर्थसाधनमाश्रितजनाभिमतप्रयोजननिष्पादकं, अच्युतं श्रीकृष्णं, ययाचे । स्वप्रयोजनाय याचितवान् । सिद्धार्थः तावन्निष्पन्नप्रयोजनः सन्नेव, एतेन स्वप्रयोजनसाधकेन भगवता, महान् सन्, विगृह्यते विग्रहं करोति । तस्मात्, अहो सुराणां तमः अहंकारं, आढ्यतां च धिक् । तदुभयं निन्द्यमित्यर्थः ॥ ४१ ॥ अथो इति । अथो अव्ययोऽविनाशिस्वरूपः, भगवान् श्रीकृष्णः, एकस्मिन् मुहूर्त्ते, नानागारेषु ताः स्त्रियः, तावद्रूपधरः सन्, यथा यथाविधि, उपयेमे । इति भगवन्महिमातिशयोक्तिः ॥ ४२ ॥ अहो तासां भाग्यमित्याह । गृहेष्विति । अतर्क्याणि अचिन्त्यानि चेष्टितानि करोतीत्यतर्क्यकृत् कृष्णः, निरस्तं साम्यमतिशयश्च येभ्यस्तेषु भोग्यादिसमूहसमाभ्यधिक-

रहितेषु, तासां गृहेषु, अवस्थितः। अनपायी विश्लेषरहितः, निजकामसंप्लुतः स्वानुभवानन्दपूर्णोऽपि, इतरः संसारी जनः यथा, तथा, गार्हकमेधिकान् गृहस्थधर्मान्, चरन्ननुतिष्ठन् सन्, रमाभिस्ताभी रामाभिरित्यर्थः। रेमे एवंविधैतन्माहात्म्योक्त्या देवक्यादि-बन्धुजनसमागमोऽपि प्रतिगृहं यौगपद्येनेत्यपि सूचितम् ॥ ४३ ॥ अथाहरहस्तां वृत्तिक्रममाहेत्थमिति द्वाभ्याम्। इत्थमिति। इत्थं ब्रह्मादयः अपि, यदीयां पदवीं, न विदुः, तं रमापतिं लक्ष्मीकान्तं पतिं अवाप्य, ताः स्त्रियः, अविरतं निरन्तरं, एधितया वृद्धिं गतया, मुदा युक्ताः सत्यः, अनुरागसहितो हासस्तत्पूर्वकोऽवलोकस्तत्पूर्वको नवसंगमश्च तत्र जल्पा अतिनर्मवचनानि तेषु लज्जा तां, भेजुः संप्रापुः ॥ ४४ ॥ प्रत्युद्गमेति। किं च प्रत्युद्गमश्च आसनं च वरार्हणं च पादशौचं च ताम्बूलं च विश्रमणं च वीजनं च गन्धश्च माल्यानि च तैः, केशप्रसाधश्च शयनं च स्नपनं च उपहार्याणि च तैः, ताः दासीनां शतानि यासां तथाभूताः सत्योऽपि, विभोर्भगवतः, दास्यं स्वयमेव, विदधुश्चक्रुः। स्मेति प्रसिद्धौ। तत्र प्रत्युद्गमः प्रत्युत्थानं, आसनमासनसमर्पणं, वरार्हणं श्रेष्ठमर्हणं, पादशौचं चरणप्रक्षालनं, विश्रमणं पादसंवाहनादिना श्रमापहरणं, शेषं स्पष्टम् ॥ ४५ ॥

इति श्रीधर्मधुरंधरश्रीधर्मात्मजप्रत्यक्षपुरुषोत्तमश्रीसहजानन्दस्वामिसुतश्रीरघुवीराचार्यसूनुभगवत्प्रसादाचार्यविरचितायामन्व-यार्थविबोधिन्यां भक्तमनोरञ्जन्याख्यायां श्रीमद्भागवतटीकायां दशमस्कन्धे उत्तरार्द्धे एकोनषष्टितमोऽध्यायः ॥ ५९ ॥

## कृष्णप्रिया

महाराज ! स्वार्थ की सीमा को देखिये ! राजा इन्द्र ने माता के कुण्डल इत्यादि भौमासुर से जब लौटाने का कार्य था तब तो विनम्र होकर सिर नवाँकर मुकुट के अग्रभाग से भगवान् श्रीकृष्ण के चरणारविन्दों का स्पर्श करके नाथ की सहायता की याचना की थी। आश्चर्य–सीमा देखिये कि जब कार्य सिद्ध हो गया तब उसी इन्द्र ने केवल तरुवर के लिये विश्वपति भगवान् श्रीकृष्ण से युद्ध ठान लिया। यह कहना होगा कि देवता लोग बड़े तमोगुणी एवं कृतघ्न ही हैं। क्या कहा जाय; धनमद से भरे हुए हैं उनकी धनमदान्धता को धिक्कार है ॥ ४१ ॥ द्वारिका में पधारकर भगवान ने अनेक एक समान महल बनवाये, प्रत्येक कुमारिका के लिये स्वतंत्र स्वरूप लिया पुनः सर्व कुमारियों के साथ एक ही मुहूर्त में विधिपूर्वक विवाह किया ॥ ४२ ॥ राजन् परीक्षित् ! भगवान् श्रीकृष्ण की प्रत्येक अर्धाङ्गनाओं के दिव्य महालयों में लोकोत्तर सर्वश्रेष्ठ सामग्रियाँ भरी थीं। इन सामग्रियों की तुलना में विश्व के किसी भी स्थान में या दिव्यलोक में सामग्री नहीं है। इन सामग्रियों से उत्तम सामग्री की सम्भावना नहीं हो सकती ॥ ४३ ॥ राजन् परीक्षित् ! ब्रह्मादिदेववर भी भगवान् श्रीकृष्ण के स्वरूप, सामर्थ्य एवं महिमा को जानते नहीं हैं और भगवान् की प्राप्ति के उपाय भी जानते नहीं हैं। ये सब रानियाँ बड़भागिनी हैं कि जिन्होंने लक्ष्मीपति भगवान् श्रीकृष्ण को अपने पति के स्वरूप में प्राप्त कर लिया था। राजन् ! इन रानियों का सौभाग्य कैसे कहा जाय ? अब द्वारिकानाथ की कृपा से इन रानियों के आनन्द एवं अनुराग में बाढ़ आती रहती थी। सब रानियाँ मधुर मुस्कान, रसमय चितवन, नवसङ्गम, स्नेहालाप और भाव को बढ़ानेवाली सहज सुलभ लज्जा से निरंतर भगवान् की सेवा करती थीं ॥ ४४ ॥ राजन् ! नाथ जब निजमहल में विराजते तब भगवान् के साथ सैकड़ों दासियाँ सेवा में रहतीं, लेकिन रानियाँ स्वयं सादर एवं सानुराग सेवा करती थीं। जब भगवान् बाहर से पधारे तब स्वयं लिवा लातीं, श्रेष्ठ आसन पर बैठातीं, श्रेष्ठ सामग्रियों से स्वागत करतीं, पादपखारन करतीं, चरणसेवा करतीं, मीजन करतीं, इत्र–तैल फुलेल लगातीं, गन्ध लगातीं, कुसुम मालायें पहनाती, केश सँवारती, भगवान को पोठाती, अभ्यङ्ग कराती, महाप्रसाद लिवाती इस प्रकार विविध सेवा अपने करकमलों से ही करती रहती थीं ॥ ४५ ॥

इति श्रीमद्भागवते दशमस्कन्धे उत्तरार्द्धे निरोधलीलायां भाषान्तरे एकोनषष्टितमोऽध्यायः समाप्तः ॥ ५९ ॥

# विजयध्वजतीर्थीयपाठः

श्रीशुक उवाच

हत्वा नरकमत्युग्रं दानवं दानवान्तकः। आरुह्य गरुडं प्रायात्प्राग्ज्योतिषपुरान्नृप ॥ १ ॥
स गच्छन् गगने विष्णुः वन्दितुं देवमातरम्। जगाम त्रिदशावासं सहितः सत्यभामया ॥ २ ॥
स्वर्गद्वारं गतो विष्णुर्दध्मौ शङ्खं महास्वनम्। उपाजग्मुस्तदाकर्ण्य सार्घ्यपाद्या दिवौकसः ॥ ३ ॥
पूजितस्तैः सुरैः कृष्णः भक्तिनम्रैर्गतज्वरैः। सुरेन्द्रभवनं दिव्यं प्रविवेश मनोरमम् ॥ ४ ॥
तत्र शक्रः समं शच्या पूजयामास केशवम्। रत्नैराभरणैर्दिव्यैर्गन्धमाल्यैश्च शोभनैः ॥ ५ ॥
ततः प्रायात्पुरीं मातुरदित्याः सह भार्यया। दृष्ट्वोपतस्थे तं देवी पुत्रमायान्तमच्युतम् ॥ ६ ॥
ववन्दे तां हरिस्तं सा पूजयामास भामिनी। आशीर्भिः परमप्रीता चिरं दृष्टं यदूत्तमम् ॥ ७ ॥
सत्यभामापि कौरव्य श्वश्र्वाः कृष्णेन चोदिता। पादयोः कुण्डले तस्या निधाय प्रणनाम वै। ८।
स्नुषामाश्लिष्य सन्तुष्टा सा पुनर्लब्धकुण्डला। आनन्दबाष्पप्रचुरा प्राहेदं कश्यपप्रिया ॥ ९ ॥
न ते जरा न वैरूप्यं कान्तेन सह विप्रियम्। भूयात्कल्याणि सुव्यक्तं मत्प्रसादात्कदाचन ॥१०॥
ततोऽनुज्ञाप्य तां देवीं त्रिदशानपि केशवः। आरुह्य प्रययौ तार्क्ष्यं सहितः सत्यभामया ॥ ११ ॥
महात्मना गगने देव देव्यौ गरुत्मता नीयमानौ विचित्रम्। अपश्यतां नन्दनं चारुगुप्तं शचीभर्तुर्दयितं हृद्यगन्धम् ॥ १२ ॥
वनं दृष्ट्वा दिव्यगन्धं सुपुष्पं कृष्णं सत्या प्राह पाणौ गृहीत्वा। प्रविश्यास्मिन् साधु चित्रं विहर्तुं मुहूर्तं मे काम्यते केशवेति ॥ १३ ॥
अथावरुह्य गरुडात्तस्या वचनगौरवात्। प्रविवेश वनं कृष्णः पालितं शक्रकिङ्करैः ॥ १४ ॥
तत्रापश्यत्तरून् दिव्यान् मत्तसारङ्गनादितान्। फलभारनतान् भूरि प्रसूनरजसावृतान् ॥ १५ ॥
चलत्किसलयोपेतान् विहङ्गध्वनिशोभितान्। विचरन्ती तथा तत्र पारिजातं महाद्रुमम् ॥ १६ ॥
दृष्ट्वा प्रपच्छ गोविन्दं विस्मयाकुललोचना। को नामायं तरुर्देव विचित्रो भुवनत्रये ॥ १७ ॥
सत्यमेतस्य वृक्षस्य कृतार्थाः फलभागिनः। प्रवालमूलो विपुलो जातरूपमहातनुः ॥ १८ ॥
इन्द्रानीलच्छदच्छन्नो लसद्वैदूर्यवेदिकः। माणिक्यपुष्पोविविधमुक्ताफलफलान्वितः ॥ १९ ॥
गोमेदपक्वप्रकरो वज्रकिञ्जल्करञ्जितः। स्फुरन्मरकतस्थूलशाखाशतविराजितः ॥ २० ॥
तरुरेषजगन्नाथ मनो मे हरते भृशम्। नेतव्योयं पुरीं वृक्षो यद्यहं ते प्रिया प्रभो ॥ २१ ॥
छायायामुपविष्टां मामन्यपत्न्यस्तवानघ। दृष्ट्वा मंस्यन्ति दयितां सर्वाभ्यो मां तवाच्युत ॥ २२ ॥
इत्युक्तो देवकीपुत्रः सत्यया प्रियकान्तया। प्राह नायं तनुभंद्रे नेतव्यो नन्दनाद्वनात् ॥ २३ ॥
पुरा क्षीराम्बुधेर्जातो मथ्यमानात्सुरासुरैः। शक्राय दत्तः सकलैः सदा तत्फलभोक्तृभिः ॥ २४ ॥
तन्नाहार्यमनादृत्य मया मित्रं शतक्रतुम्। तरुरत्नं सरोजाक्षि धर्ममेवानुतिष्ठता ॥ २५ ॥
नीयमाने च वृक्षेऽस्मिन् पारिजाते शुचिस्मिते। सङ्ग्रामो जायते घोरस्त्रिदशैर्जयकाङ्क्षिभिः ॥ २६ ॥
इत्युक्ता देवदेवेन सत्यभामा पुनर्हरिम्। प्राह भीषयसे किं मां व्यलीकैः कंसमर्दन ॥ २७ ॥
नाभ्यनन्दद्दुराचारा शची मां गृहमागताम्। हेतुर्हि वृक्षस्तस्यायं भर्तृपौरुषगर्विता ॥ २८ ॥
नेतव्यः सर्वथा वृक्षः पारिजातोयमच्युत। प्रियाहं तव चेन्नाथ नोचेद्विरम साम्प्रतम् ॥ २९ ॥
इत्युक्तः सत्यया कृष्णस्ताननादृत्य रक्षकान्। उत्पाट्यारोपयामास परिजातं गरुत्मति ॥ ३० ॥
ततो निवारयामासुर्गोविन्दं वनपालकाः। केचिद्द्रुततरं जग्मुर्देवेन्द्राय निवेदितुम् ॥ ३१ ॥
कृष्ण कृष्ण न हर्तव्यस्तरुरेषोऽमरार्चितः। हरसे यदि तस्य त्वं फलं सद्योऽनुभोक्ष्यसि ॥ ३२ ॥
प्राप्नोषि न पुरीं कृष्ण सहानेन महीरुहा। सद्यः पश्यसि देवेन्द्रं पृष्ठतोऽभ्युद्युतायुधम् ॥ ३३ ॥
सुरेन्द्रान्तिकमासाद्य द्रुतं ते वनरक्षकाः। उपविष्टं समं शच्या शक्रं दृष्ट्वाब्रुवन्नृप ॥ ३४ ॥

वनरक्षका ऊचुः

अवज्ञायाखिलान् देवानिन्द्राणीं च त्वया सह। जहार कृष्णदयिता पारिजातं महाद्रुमम् ॥ ३५ ॥
उक्ताऽस्माभिर्भृशं देव वारयद्भिर्हरिप्रिया। उपालभ्याहरद्वृक्षं भर्तृपौरुषगर्विता ॥ ३६ ॥

श्रीशुक उवाच

इत्याकर्ण्याप्रियं शक्रो दण्डाहत इवोरगः। शचीं विलोक्य पार्श्वस्थां नामृष्यत्तत्पराभवम् ॥ ३७ ॥

सन्नाहोद्योगमाघोष्य सन्निपात्य च सैनिकान् । लोकपालान् समाहूय निश्चक्राम सुरेश्वरः ॥ ३८ ॥
ऐरावतं चतुर्दन्तमारुह्य वरवारणम् । गृहीतवज्रं गच्छन्तमनुजग्मुर्दिवौकसः ॥ ३९ ॥
वैश्वानरस्तु तुरगमारुह्य दृढदंशितः । घोरां शतघ्नीमादाय स्रुवपुच्छां ययौ रणम् ॥ ४० ॥
यमस्त्वारुह्य महिषं दण्डमादाय वीर्यवान् । मृत्युकालादिभिर्युक्तो युद्धार्थी शक्रमन्वगात् ॥४१॥
निर्ऋतिश्च महातेजा घोरमारुह्य पौरुषम् । असिहस्तो महाबाहुर्युद्धाय प्रययौ नृप ॥ ४२ ॥
मकरं भीषणाकारमारुह्य वरुणस्त्वरन् । पाशोद्यतकरः प्रायाद्युद्धायानुशचीपतिम् ॥ ४३ ॥
वायुः कृष्णमृगारूढो दंशितस्तोमरायुधः । सुरेश्वरमनुप्रायाद्योद्धु चक्रभृता सह ॥ ४४ ॥
ऊढां चतुर्भिः पुरुषैः शिबिकां नरवाहनः । योद्धुकामस्त्वरन् प्रायाद्विष्णुना मुद्गरायुधः ॥४५॥
ईशानो वृषभं तुङ्गमारुह्य शितशूलभृत् । वासवेन समं प्रायाद्भूतकोटिसमन्वितः ॥ ४६ ॥
भेरीशङ्खमृदङ्गैश्च पणवानकगोमुखैः । सुवर्णसुषिरैर्दिव्यैः कांस्यतालैश्च भूरिभिः ॥ ४७ ॥
रथनेमिनिनादैश्च हयानां खरनिःस्वनैः । क्ष्वेलितास्फोटितैर्घोरैः सङ्ग्रामाह्वानगर्जनैः ॥ ४८ ॥
तिष्ठ तिष्ठेति मा याहि क्व यासीति पुनः पुनः । प्रवदद्भिः सुरगणैः शतशोथ सहस्रशः ॥ ४९ ॥
कम्पयद्भिश्च शस्त्रौघैः प्रेषयद्भिश्च वाहनम् । पुरोहमितिगच्छद्भिः शतशोथ सहस्रशः ॥५०॥
घोरैर्ज्याघातनिर्घोषैः सिंहनादैश्च भूरिभिः । अभिदुद्रुवुरुद्वृत्ताः सिंहं गोमायवो यथा ॥ ५१ ॥

इति श्रीभागवते महापुराणे दशमस्कन्धे विजयध्वजतीर्थपाठे पञ्चषष्टितमोऽध्यायः ॥ अधिकपाठे प्रथमः ॥ १ ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

गतज्वरैः नष्टसन्तापः ॥ १-३-४-५ ॥ उपतस्थे समीपे तस्थौ ॥ ६ ॥ भाम तेजः अस्याः अस्तीति भामिनी चिरकालदृष्टम् ॥ ७ ॥ श्वश्र्वाः भर्तुर्मातुः ॥ ८-९ ॥ सत्यभामामाशिषा योजयति-न ते जरेति । वैरूप्यं सौन्दर्याभावः विप्रियं कलहः ॥ १०-११ ॥ हृद्यगन्धं हृदयप्रियगन्धम् ॥ -१२-१३ ॥ काम्यते वनसम्पदिति शेषः । काम इति वा ॥ १४ ॥ सारङ्गनादितान् भृङ्गनादितान् ॥ १५-१६ ॥ विविधं चित्रं मुख्यं मिश्रफलं यस्मिन् स विचित्रः "चित्रमालेख्यमिश्रयोः" इति "मिश्रमाविलमुख्ययोः" इति च ॥ १७ ॥ एतस्य वृक्षस्य फलभागिनः कृतार्थाः इति सत्यमित्यन्वयः । वैचित्र्यं कथयति-प्रवालेति । प्रवालो रत्नविशेष एव मूलं शिफा यस्य स तथा विपुलो विस्तृतः जातरूपं सुवर्णमेव महातनुर्यस्य स तथा ॥ १८ ॥ इन्द्रनीलमेव छदः पत्रं इन्द्रनीलच्छदः तेन छन्नः सम्वृतः लसद्वैदूर्यरत्नमेव वेदिः परिष्कृता भूमिर्यस्य स लसद्वैदूर्यवेदिकः माणिक्यरत्नान्येव पुष्पाणि यस्य स माणिक्यपुष्पः विविधानि तारतम्योपेतानि मुक्ताफलान्येव फलानि विविधमुक्ताफलानि तैरन्वितः ॥ १९ ॥ गोमेदरत्नान्येव पक्वानि गोमेदपक्वानि तेषां प्रकारा यस्य स तथा वज्ररत्नान्येव किञ्जल्कानि तै रञ्जितोऽरुणीकृतः स्थूलाः शाखाः स्फुरन्ति मरकतरत्नान्येव स्थूलशाखाः स्फुरन्मरकतस्थूलशाखाः तासां शतेन विराजितः ॥ २०-२१ ॥ मंस्यन्ति निरूपयन्ति ॥ २२ ॥ २३ ॥ तस्मात्समुद्राज्जातानां फलानां भोक्तृभिः ॥ २४-२५ ॥ जयकाङ्क्षिभिः जयेच्छुभिः जितयुद्धैर्वा ॥ २६ ॥ व्यलीकैः कपटवचनैः ॥ २७ ॥ तरुन्नयने निमित्तमाह-नेति ॥ २८ ॥ विरम प्रियभाषणमितिशेषः ॥ २९-३५ ॥ उपालभ्य भर्त्सयित्वा ॥ ३६-३७ ॥ सन्नाहो युद्धोद्योगार्थं विद्यमानं गोमुखं सन्निपात्य सम्मेलयित्वा सैनिकान् सेनानायकान् ॥ ३८-३९ ॥ स्रुवं पुच्छे यस्याः सा ताम् ॥४०॥ मृत्युकालादिभिः प्रभृतिभिः ॥४१-४३॥ चक्रभृता कृष्णेन ॥४४॥ नरवाहनो वैश्रवणः ॥४५-४६॥ सुवर्णसुषिरैः काहलैः ॥ ४७ ॥ क्ष्वेलितैः सिंहनादैः आस्फोटितैः भुजास्फालैः ॥ ४८-५१ ॥

इति श्रीविजयध्वजतीर्थकृतपदरत्नावल्यां पञ्चषष्टितमोऽध्याय. ॥ ६५-१ ॥

## अथ षट्षष्टितमोऽध्यायः

श्रीशुक उवाच

सुरानभिद्रुतान् दृष्ट्वा सत्यमाह जगत्पतिः । इमे प्राहुणिकाः प्राप्तास्तववृन्दारका इति ॥ १ ॥
तथा ब्रुवाणे देवेशे प्रेषिता देवसैनिकाः । नदन्तो मुमुचुः कृष्णे शरवृष्टिं कुरूद्वह ॥ २ ॥
ततः शार्ङ्ग समादाय सत्या व्यसनविक्लवा । मुक्तांश्चिच्छेद बाणौघैस्ताञ्छरान्देवसैनिकैः ॥ ३ ॥
ततो वैश्रवणः श्रीमान् बहुभिर्गुह्यकैर्वृतः । विस्फारयंस्तालमात्रं कार्मुकं कनकाटवि ॥ ४ ॥
स्वर्णपुङ्खान् शरान्मुञ्चन् सिंहवद्व्यनदन्मुहुः । अभिदुद्राव समरे तिष्ठतिष्ठेति चाब्रवीत् ॥ ५ ॥
तैः पञ्चभिः शरैः सत्या निशितैर्मर्मभेदभिः । अर्पयामास वेगेन विशाले जठरे नृप ॥ ६ ॥
सोतिविद्धो रणे बाणैस्त्रिभिर्मल्लैर्हरिप्रियाम् । अयोधयद्धनपतिः सिंहनादं व्यनीनदत् ॥ ७ ॥

तानप्राप्तानर्धचन्द्रैस्त्रिभिश्चिच्छेद सा शरैः। भूयोऽष्टभिः शरैर्देवीं वत्सदन्तैर्मनोजवैः॥ ८॥
विव्याध गुह्यकपतेर्ललाटे कुरुपुङ्गव। पीडितस्तैर्भृशं बाणैः पौलस्त्यः क्रोधविह्वलः॥ ९॥
सन्दधे निशितान् बाणानेकविंशति संयुगे। तानन्तरे सत्यभामा सायकैः सप्तभिर्नृप॥ १०॥
चिच्छेद निमिषार्धेन त्रिधैकैकं हरिप्रिया। सत्यभामा ततः क्रुद्धा पौलस्त्यस्य महद्धनुः॥ ११॥
अर्धचन्द्रेण चिच्छेद मुष्टिदेशे द्विधा नृप। ततोऽन्यच्चापमादाय सज्यं कृत्वा धनेश्वरः॥ १२॥
ववर्ष शरजालानि क्रोधात्सर्प इव श्वसन्। सर्वांस्तान् सायकान् सङ्ख्ये शरैः सन्नतपर्वभिः॥ १३॥
चिच्छेद लीलया देवी तवद्भुतमिवाभवत्। ततः क्रुद्धो वैश्रवणः सत्यभामां विलोक्य च॥ १४॥
प्राह पश्य हनिष्यामि त्वामद्य मम पौरुषम्। इत्युक्त्वा तालमात्रे तु चापे गुह्यकसत्तमः॥ १५॥
पश्यतां सर्वदेवानां मार्ष्टुकामः पराभवम्। सन्दधे सूदितुं देवीमर्धचन्द्रं शरोत्तमम्॥ १६॥
तदवेत्य मनस्तस्य क्षुरप्रेण हरिप्रिया। चिच्छेद कार्मुकं तस्य मुष्टिदेशे कुरूद्वह॥ १७॥
ततो मुद्गरमादाय घोरं दानवभीषणम्। भ्रामयित्वा शतगुणं देव्यै चिक्षेप वित्तपः॥ १८॥
तं मुद्गरं महाघोरमायान्तं कुरुपुङ्गव। वामेन पाणिना कृष्णो जग्राहोच्चैर्जहास च॥ १९॥
ततो निवृत्तसङ्ग्रामो विदुद्राव धनेश्वरः। शशंस देवीं कृष्णश्च समाश्लिष्याभिपूजयन्॥ २०॥
पलायिते धनपतौ सङ्ग्रामे कंसवैरिणा। वरुणोऽभ्यद्रवत्कृष्णं पाशमुद्यम्य संयुगे॥ २१॥
तमायान्तमभिप्रेक्ष्य तार्क्ष्यो मकरवाहनम्। अभ्यद्रवन्महासत्त्वः शार्दूल इव गोवृषम्॥ २२॥
तयोः समभवद्युद्धं घोरं तार्क्ष्यजलेशयोः। यथा देवासुरे युद्धे बलिवासवयोरिव॥ २३॥
तत्र काश्यपपुत्रस्य कण्ठे पाशं जलेश्वरः। क्रुद्धश्चकर्ष विन्यस्य सिंहः सिंहमिवौजसा॥ २४॥
तं पक्षकोट्या गरुडः समुद्धृत्य जलेश्वरम्। पद्भ्यां गृहीत्वा मकरं चिक्षेप वरुणालये॥ २५॥
कृच्छ्राद्गृहीतपाशस्तु वरुणो गतवाहनः। पदातिरेव सङ्ग्रामाद्विदुद्राव यथागतम्॥ २६॥
तथा गते वार्धिपतौ सङ्ग्रामे वायुपावकौ। सममेवाभ्यवर्तेतां गोविन्दं कुरुसत्तम॥ २७॥
पावकः पञ्चभिर्बाणैर्मारुतश्च तथा त्रिभिः। आयोधयद्धृषीकेशं तदद्भुतमिवाभवत्॥ २८॥
ततः प्रहस्य गोविन्दो बाणेनैकेन पावकम्। विव्याध सप्तभिश्चैव समीरणमरिन्दमः॥ २९॥
एकेनाग्निः क्षुरप्रेण गाढं वक्षसि ताडितः। तमसा धारणं मत्वा विदुद्राव रणाद्द्रुतम्॥ ३०॥
दृष्ट्वा समीरणो युद्धादपयातं हुताशनम्। सायकाचितसर्वाङ्गमात्मानं चातिविह्वलः॥ ३१॥
विदित्वा पुण्डरीकाक्षं संग्रामे प्रत्युपस्थितम्। न्यवर्तत कुरुश्रेष्ठ प्राणत्राणपरायणः॥ ३२॥
ततो महिषमारुह्य दण्डमुद्यम्य भास्वरम्। कृष्णमभ्यद्रवद्युद्धे यमः क्रोधारुणेक्षणः॥ ३३॥
तमुद्यतमहादण्डं दृष्ट्वा कमललोचनः। गदां विसृज्य तद्धस्तात्पातयामास भूतले॥ ३४॥
गदया ताडितो दण्डे त्रस्तहस्तः परेतराट्। विदुद्राव परावृत्य महिषेण कुरूद्वह॥ ३५॥
वैवस्वत गतं दृष्ट्वा निर्ऋतिर्भयविह्वलः। नाभ्यवर्तत गोविन्दं योद्धुं विदिततद्बलः॥ ३६॥
शङ्करस्तु महातेजास्त्रिशूली वृषवाहनः। अनेकभूतसङ्घातैः कृष्णमभ्यद्रवद्रणे॥ ३७॥
तावुभौ लोकविख्यातौ बलिनौ वीर्यशालिनौ। चक्राते कदनं घोरं परस्परजयैषिणौ॥ ३८॥
ईशानो दशभिर्बाणैः कृष्णं तार्क्ष्यं च पञ्चभिः। विव्याध समरे राजन् तिष्ठतिष्ठेति चावदत्॥ ३९॥
ततः शार्ङ्गं समादाय कृष्णः परपुरञ्जयः। त्रिंशद्भिर्युगपद्बाणैर्विव्याध वृषवाहनम्॥ ४०॥
गरुडः पन्नगरिपुः पद्भ्यां द्वाभ्यां च संयुगे। पक्षाभ्यां चञ्चुकोट्या च मर्दयामास ते वृषम्॥ ४१॥
भूयोऽपि कृष्णो नाराचैः पञ्चाशत्प्रमितैर्नृप। योधयामास समरे शङ्करं लोकशङ्करम्॥ ४२॥
ततस्त्रिशूलमाविध्य निशितं घोरदर्शनम्। प्राहिणोद्वासुदेवाय कुपितो धूर्जटिर्नृप॥ ४३॥
दृष्ट्वा त्रिशूलमायातं केशवस्तं निवारितुम्। गदां कौमोदकीं गुर्वीं प्राहिणोद्दैत्यमर्दनीम्॥ ४४॥
ते वै कौमोदकी शूले कृत्वा नभसि सङ्गरम्। ज्वलमाने महाघोरे पेततुः सममम्बुधौ॥ ४५॥
निपात्याब्धौ त्रिशूलं तद्गदा कौमोदकी पुनः। आससाद करं विष्णोस्त्रिशूलमपि शूलिनः॥ ४६॥
तत उद्यम्य निशितं खड्गं पन्नगभूषणः। कृष्णमभ्यद्रवत्सङ्ख्ये पार्ष्णिभ्यां चोदयन् वृषम्॥ ४७॥
तूर्णं गृहीत्वा बाहुभ्यां विषाणे तस्य नन्दिनः। स शूलपाणिं चिक्षेप वैनतेयो धनुः शतम्॥ ४८॥
ततो विसृज्य सङ्ग्रामं त्रिशूली वृषवाहनः। प्रमथैः सहितः प्रायात्कुरुश्रेष्ठ यथागतम्॥ ४९॥

इति श्रीभागवतेमहापुराणेदशमस्कन्धेषट्षष्टितमोऽध्यायः॥ ६६॥

### श्रीविजयध्वजतीर्थकृता पदरत्नावली

प्राहुणिकाः सम्भावनया भोजयितव्याः वृन्दारका देवाः ॥ १–३ ॥ कनकाविद्धाटवीः कोटिर्यस्य तत्तथा ॥ ४–५ ॥ विशाले जठरे विस्तृतोन्नतोदरे ओदनमिवेति शेषः ॥ ६–७ ॥ वत्सदन्तैः शरविशेषैः ॥ ८–९ ॥ अन्तरे मध्ये ॥ १०–१९ ॥ निवृत्तसंग्रामः निवृत्तयुद्धः ॥ २०–२३ ॥ काश्यपपुत्रस्य गरुडस्य ॥ २४–२६ ॥ वार्धिपतौ वरुणे ॥ २७–२९ ॥ असाधारणं लोकोत्तरम् ॥ ३० ॥ सायकाचितसर्वाङ्गं शरसञ्चितसर्वावयवम् ॥ ३१–३४ ॥ परेतराट् यमः ॥ ३५–३७ ॥ कदनं युद्धम् ॥ ३८–४० ॥ चञ्चुकोट्या तुण्डकोट्या वृषं नन्दिकेश्वरम् ॥ ४१–४२ ॥ धूर्जटिः शङ्करः ॥४३–४६॥ पन्नगभूषणः सर्पालङ्कारः शिवः पार्ष्णिभ्यामास्फालनेनचोदयन् प्रेरयन् ॥ ४७ ॥ शूलपाणिना सहितं नन्दिनम् ॥ त्रिशूलित्वं गणस्यापि सम्भवतीति वृषवाहन इति ॥ ४९ ॥

इति श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्या षट्षष्टितमोऽध्याय ॥ ६६ ॥ अधिकपाठे द्वितीयः ॥ २ ॥

## सप्तषष्टितमोऽध्यायः

### श्रीशुक उवाच

ततः स्वयं देवपतिस्तुङ्गमारुह्य वारणम् । किरीटी बद्धतूणीरः प्रगृहीतशरासनः ॥ १ ॥
अभ्यद्रवद्रणे कृष्णं गजः केसरिणं यथा । पारिजातकृते राजन् पौलोम्या वचनं स्मरन् ॥ २ ॥
तमायान्तमभिप्रेक्ष्य हरिः परपुरञ्जयः । शङ्खं दध्मौ महानादं दिशः समभिपूरयन् ॥ ३ ॥
तमभिद्रुत्य देवेन्द्रो महद्विस्फारयन् धनुः । क्षुरप्रेण सुतीक्ष्णेन कृष्णं विव्याध सङ्गरे ॥ ४ ॥
हरिर्विद्धः क्षुरप्रेण देवराजेन वक्षसि । प्रहस्य साधु शक्रोसि युक्तं त इति चाब्रवीत् ॥ ५ ॥
भूयोपि बाणान् दश देवराजः सन्धाय चापे भुजगेन्द्रकल्पे । आकर्णपूर्णं विनिकृष्य कृष्णे मुमोच चक्रे सह सिंहनादम् ॥ ६ ॥
तानन्तरे कंसरिपुर्महात्मा छित्वा त्रिधैकेन शरेण बाणान् । विव्याध बाणैर्दशभिः सुधौतैः पुरन्दरं भारत लीलयैव ॥ ७ ॥
ते शरा देवराजस्य गात्रं निर्भिद्य सावृति । शोणिताक्ताः प्रदृश्यंते भूयो वेगेन निर्गताः ॥ ८ ॥
पुनश्च शक्रः कोदण्डे शरान् सन्धाय षोडश । मुमोचाकृष्य गोविन्दस्ताश्चकर्त शरैस्त्रिभिः ॥ ९ ॥
भूयोपि बाणैस्त्रिशद्भिः सुरराजानमाहवे । आयोधयद्धरिस्ते च ममज्जुः शक्रवक्षसि ॥ १० ॥
ततश्चुकोप देवेन्द्रो दण्डाहत इवोरगः । प्रेषयामास तोत्रेण तार्क्ष्यं प्रति महागजम् ॥ ११ ॥
स गजः प्राप्य गरुडं पाकशासनचोदित; । चतुर्भिर्घटयामास दन्तैर्बाहुयुगान्तरे ॥ १२ ॥
ततस्तुण्डेन गरुडः पक्षाभ्यां च तथा नखैः । अर्दयामास कौरव्य गजमैरावताह्वयम् ॥ १३ ॥
शक्रस्तु वज्रमुद्यम्य घोरं दानवभीषणम् । पश्यतां सर्वभूतानां प्रजहार वृषाकपिम् ॥ १४ ॥
तमागतं मधुरिपुर्वज्रं दुश्च्यवनायुधम् । वामेन पाणिना विष्णुर्जग्राह प्रजहास च ॥ १५ ॥
निरायुधः सुरपतिर्गरुडार्दितवाहनः । व्यावर्तत रणाद्राजन् व्रीडावनतकन्धरः ॥ १६ ॥
तं दृष्ट्वा भ्रष्टसङ्कल्पं पलायनपरायणम् । सत्यभामा सुरपतिं प्रहसन्तीदमब्रवीत् ॥ १७ ॥

### सत्यभामोवाच ।

एहि शक्र निवर्तस्व मा या हि कुलिशायुध । पलायनमयुक्तं हि पौलोम्या वल्लभस्य ते ॥ १८ ॥
ऐश्वर्यमत्ता पौलोमी भर्तृपौरुषगर्विता । अवमंस्यति सद्यस्त्वां भार्या रणपराजितम् ॥ १९ ॥
इत्थं देव्या गिरं शक्रः सोपालम्भमुदीरिताम् । निशम्याभिमुखो भूत्वा प्राह देवीं शुचिस्मिता ॥ २० ॥

### इन्द्र उवाच

येनामरासुरमहोरगयक्षसिद्धागन्धर्वकिन्नरपिशाचनिशाचराद्याः ।
सृष्टाखिलोकगुरुणा रणमूर्ध्नि तेनको वा न याति परिभूतिमलं विरुध्य ॥ २१ ॥
वत्सो यथा तनुबलः सकृदेत्य मातर्यूथस्य पानसमये कुरुते विरोधम् ।
तद्वद्वयं च निजशैशवमप्रमेये—नाथे विरुध्य पिशिताशनि दर्शयाम ॥ २२ ॥
इति सत्राजितः पुत्रीमुक्त्वा भारतसत्तम । कृताञ्जलिः प्रणम्याह वासुदेवं पुरन्दरः ॥ २३ ॥

### इन्द्र उवाच

नमस्ते देवदेवेश पुण्डरीकाक्ष माधव । क्षमस्व मत्कृतं विश्वमपराधं जगत्पते ॥ २४ ॥
न मां त्वदेकशरणं शरणागतवत्सल । भूरिबालिशमक्षान्त्वं परित्यक्तुं त्वमर्हसि ॥ २५ ॥

ऐरावतश्च कुलिशं पारिजातश्च पादपः। देवराज्यञ्च भगवन्नियच्चाप्यमरावती ॥ २६ ॥
त्वदधीनमिदम्विश्वमहमाज्ञाकरस्तव। अत्र यद्रोचते नेतुं नीयतां तद्यथेच्छया ॥ २७ ॥
किन्तु वक्ष्यामि गोविन्द मूलं त्वयि विरुध्यतः। रमसे मानुषे लोके भगवंस्त्वमनन्यधीः ॥ २८ ॥
तत्र नीते पारिजाते भवता कल्पपादपे। तेन सा जायते स्वर्गान्निर्विशेषा वसुन्धरा ॥ २९ ॥
तेनाहं यदुशार्दूल विरोधं कृतवांस्त्वयि। तत्क्षन्तव्यं त्वया देव कार्याकार्यं विजानता ॥ ३० ॥

श्रीशुक उवाच

इत्युक्तो देवराजेन देवदेवो जनार्दनः। पुरन्दरं कुरुश्रेष्ठ प्राह प्रहसिताननः ॥ ३१ ॥

श्रीभगवानुवाच

अपराधस्त्वया शक्र न कश्चिदपि चेष्टितः। यत्कृतं तन्मयैवागस्त्वभेदादावयोः परम् ॥ ३२ ॥
यत्त्वयाद्य सहस्राक्ष चेष्टितं साध्वसाधुवा। मयैव यत्कृतं सर्वं नात्र कार्या विचारणा ॥ ३३ ॥
पारिजातस्तरुश्रेष्ठो मय्यारूढे तर्हदिवम्। मन्निर्देशात्सहस्राक्ष स्वयमेष्यति नन्दनम् ॥ ३४ ॥
इत्युक्तो वासुदेवेन देवराजः कुरूद्वह। गोविन्दं सत्यभामाञ्च प्रसाद्य गरुडं तथा ॥ ३५ ॥
पुत्रो मे रक्षितव्यस्ते श्यालो वीभत्सुरित्यपि। भूयोभूयः प्रार्थयित्वा कृतानुज्ञः पुरन्दरः ॥ ३६ ॥
सार्धं सकलदिक्पालैर्लब्धवज्रः पुरं ययौ। पुरन्दरं सदिक्पालं विसृज्य यदुनन्दनः ॥ ३७ ॥
गरुडं प्राह कौरव्य यास्यामो द्वारकामिति। गोविन्दं सत्यभामाञ्च पारिजातञ्च पादपम् ॥ ३८ ॥
गरुडः पन्नगरिपुर्लीलयैव वहन् ययौ। सम्प्रविश्य पुरीं रम्यां द्वारतोरणभूषिताम् ॥ ३९ ॥
पताकमालिनीं दिव्यां सिक्तसम्मृष्टभूतलाम्। ऊढोपायनताम्बूलस्रग्गन्धकलयाक्षतैः ॥ ४० ॥
उपस्थितैर्यदुश्रेष्ठैः पूजितश्चाभिवन्दितः। तूर्यमङ्गलनिर्घोषैर्वेदस्वाध्यायनिस्स्वनैः ॥ ४१ ॥
प्रविवेश सभां दिव्यां सुधर्मां वृद्धसेविताम्। आहुकं वसुदेवञ्च बलभद्रं तथाग्रजम् ॥ ४२ ॥
आभवाद्य यथान्यायं पूजितस्तैर्यथोचितम्। उपविष्टः सभामध्ये काञ्चने परमासने ॥ ४३ ॥
रराज राजशार्दूल वृहस्पतिपुरोगमैः। लोकपालैरुपासीनैर्दिवि वज्रधरो यथा ॥ ४४ ॥
प्राङ्गणे सत्यभामायाः पारिजातं महाद्रुमम्। स्थापयामास गोविन्दः सर्वतो मणिकुट्टिमे ॥ ४५ ॥
आयान्तं देवकीपुत्रं योषित्सार्थेन भूरिणा। श्रुत्वा द्रष्टुमुपाजग्मुः सकला यादवस्त्रियः ॥ ४६ ॥
वसुदेवस्तु कौरव्य रोहिण्याद्याः स्त्रियोखिलाः। आजग्मुः केशवं द्रष्टुं जितशत्रुमनामयम् ॥ ४७ ॥
स दृष्ट्वा मातरो विष्णुर्देवक्या सह सङ्गताः। चक्रे प्रणाममाशीर्भिस्ताश्च तं प्रत्यपूजयन् ॥ ४८ ॥
रुक्मिण्याद्यास्तथा सप्त महिष्यः कृष्णवल्लभाः। प्रणेमुर्देवमभ्येत्य दिव्यरूपाः स्वलङ्कृताः ॥ ४९ ॥
रेवती रामदयिता त्रिवक्रा च यशस्विनी। एकानङ्गा च तन्वङ्गी चित्रा च वरवर्णिनी ॥ ५० ॥
अन्याश्च कुरुशार्दूल भोजवृष्ण्यन्धकस्त्रियः। आनीतप्रमदासार्थं जितशत्रुमनामयम् ॥ ५१ ॥
गोविन्दं सत्यभामां चाप्यानीतममरद्रुमम्। प्रीत्युत्फुल्लमुखाः सर्वे कौतुकाद्द्रष्टुमीययुः ॥ ५२ ॥
तं समेता यथाजोषं लाजप्रसवतण्डुलैः। स्पृष्ट्वा मूर्ध्नि मुकुन्दस्य जग्मुः स्वं स्वं निवेशनम् ॥ ५३ ॥

इति श्रीभागवते महापुराणे दशमस्कन्धे सप्तषष्टितमोऽध्यायः ॥ ६७ ॥

## श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

ते तव युक्तं न्याय्यं स्त्रीजितस्येति शेषः। न्याय्ये सम्युक्तमिति यादवः॥ १-५ ॥ सः ह इति च्छेदः स शक्रः युद्धप्रारम्भे ॥ ६-७ ॥ गात्रं गात्राण्यवयवान् सावृतीतिक्रियाविशेषणं सकवचर्निर्भिद्य ॥ ८-९ ॥ आहवे युद्धे ॥ १० ॥ तोत्रेण गजताडनचर्मणा ॥ ११ ॥ बाहुयुगान्तरे वक्षसि ॥ १२-१४ ॥ दुश्च्यवनायुधम् इन्द्रायुधम् अजेयप्रहारार्थमायुधं समाप्तमिति दर्शयितुं पूनर्वचनमिति ज्ञातव्यम् ॥ १५-१७ ॥ निवर्तस्व पुनरागच्छ मा याहि मा गच्छ प्रहसन्तीत्यस्य तात्पर्यं दर्शयति—पौलोम्येति ॥ १८ ॥ अवमंस्यति अवज्ञास्यति ॥ १९-२० ॥ गतासुरावेश इन्द्रः प्रतिवक्ति—येनेति ॥ २१ ॥ तनुबलः अल्पबलः मातर्यूधस्येतिपाठः ऊधस्यमूधसि जातं क्षीरं मातरि विरोधं हे पिशिताशनि "याज्ञियान्नै च मांसे च पिशितं देवभोजनम् इति ॥ २२-२४ ॥ भूरिबालिशम् अधिकमूर्खम् ॥ २५-२७ ॥ मूलं निमित्तम् अनन्यधीः तत्रैव निरतबुद्धिः ॥ २८-३१ ॥ त्वया यत्कृतं तदागः मयैव कृतं विद्धि आवयोः परमत्यभेदात् त्वयि स्थित्वा त्वयैव अपराधं कारयित्वा परिहरामीत्यर्थः ॥ ३२ ॥ एतदेव विवृणोति-यत्त्वयेति ॥ ३३-४४ ॥ मणिकुट्टिमे मणिबद्धस्थाने ॥४५॥ योषित्सार्थेन निरन्तरपत्न्या सहेतिशेषः ॥४६-४९॥

एकानङ्गा दुर्गा सुभद्रा चित्रा तारेतिच "अनुत्पन्नरजाः श्यामा तं दृष्ट्वा वरवर्णिनी। अप्रसूता भवेद्गौरी" इति च ॥ ५० ॥ आनतिः प्रमदानां सार्थो येन स तथा तम् ॥ ५१–५३ ॥

इति श्रीभागवते महापुराणे दशमस्कन्धे विजयध्वजतीर्थकृतपदरत्नावल्यां सप्तषष्टितमोऽध्यायः ॥ ६७ ॥ अधिकपाठे ॥ ३ ॥

श्रीशुक उवाच

आराध्य देवदेवेशं शङ्करं लोकशङ्करम्। तपसा तोपयित्वा तं कैलासगिरिवासिनम् ॥ १ ॥
रुक्मिण्यां तनयं लेभे दग्धकामं पुनर्हरिः। वीरं प्रद्युम्ननामानं रूपौदार्यगुणान्वितम् ॥ २ ॥

राजोवाच

पुत्रार्थमीश्वरं दृष्ट्वा स्वयं लब्धवरो हरिः। अवाप कीदृशं पुत्रं किं नामानं वदस्व मे ॥ ३ ॥

श्रीशुक उवाच

कामस्तु वासुदेवांशो दग्धः प्रागुद्रमन्युना। देहोपपत्तये भूयस्तमेव प्रत्यपद्यत ॥ ४ ॥
स एव जातो वैदर्भ्यां कृष्णवीर्यसमुद्भवः। प्रद्युम्न इति विख्यातः सर्वतोऽनवमः पितुः ॥ ५ ॥
तं शम्बरः कामरूपी हृत्वा तोकमनिर्दशम्। स विदित्वात्मनः शत्रुं प्रास्योदन्वत्यगाद्गृहम् ॥ ६ ॥
तं निर्जगार बलवान् मीनः सोप्यपरैः सह। वृतो जालेन महता गृहीतो मत्स्यजीविभिः ॥ ७ ॥
तं शम्बराय कैवर्ता उपाजह्रुरुपायनम्। सूदा महानसं नीत्वाऽवद्यन् स्वधितिनाऽद्भुतम् ॥ ८ ॥
दृष्ट्वा तदुदरे बालं मायावत्यै न्यवेदयन्। नारदोऽकथयत्सर्वं तस्याः शङ्कितचेतसः ॥ ९ ॥
बालस्य तत्त्वमुत्पत्तिं मत्स्योदरनिवेशनम्। सा च कामस्य वै पत्नी रतिर्नाम यशस्विनी ॥ १० ॥
पत्युर्निर्दग्धदेहस्य देहोत्पत्तिं प्रतीक्षती ॥ ११ ॥
निरूपिता शम्बरेण सासूपोदनसाधने। कामदेवं शिशुं बुद्ध्वा चक्रे स्नेहं सदार्भके ॥ १२ ॥
नातिदीर्घेण कालेन स कार्ष्णी रूढयौवनः। जनयामास नारीणां वीक्षन्तीनाञ्च विभ्रमम् ॥ १३ ॥

सा तं पतिं पद्मदलायतेक्षणं प्रलम्बबाहुं नरलोकसुन्दरम्।
सव्रीडहासोत्तमविभ्रमेक्षितैः प्रीत्योपतस्थे रतिरात्मनो धनः ॥ १४ ॥

तामाह भगवान् कार्ष्णिर्मातस्ते मतिरन्यथा। मातृभावमतिक्रम्य वर्तसे कामिनीव मे ॥ १५ ॥

रतिरुवाच

भवान्नारायणसुतः शम्बरेण हृतो गृहात्। अहं तेऽधिकृता पत्नी रतिः कामो भवान् प्रभो ॥ १६ ॥
एष त्वा निर्दशं सिन्धावक्षिपच्छम्बरोऽसुरः। मत्स्योग्रसीत्तदुदरादिह प्राप्तो भवान् प्रभो ॥ १७ ॥
तमिमं जहि दुर्धर्षं दुर्नयं शत्रुमात्मनः। मायाशतविदं त्वं च मायाभिर्मोहनादिभिः ॥ १८ ॥
परिशोचति ते माता कुररीव मृतप्रजा। पुत्रस्नेहाकुला दीना विवत्सा गौरिवातुरा ॥ १९ ॥
प्रभाष्यैवं ददौ विद्यां प्रद्युम्नाय महात्मने। मायावती महामाया सर्वमायाविनाशिनीम् ॥ २० ॥
स च शम्बरमभ्येत्य संयुगाय समाह्वयत्। अविषह्यैस्तमाक्षेपैः क्षिपन् सञ्जनयन् कलिम् ॥ २१ ॥
सोधिक्षिप्तो दुर्वचोभिः पदाहत इवोरगः। निश्चक्राम गदापाणिरमर्षात्ताम्रलोचनः ॥ २२ ॥
गदामाविध्य तरसा प्रद्युम्नाय महात्मने। प्रक्षिप्य व्यनदन्नादं वज्रनिष्पेषनिष्ठुरम् ॥ २३ ॥
तामापतन्तीं भगवान् प्रद्युम्नो गदया गदाम्। अपास्य शत्रवे क्रुद्धः प्राहिणोत्स गदां नदन् ॥ २४ ॥
स च मायां समाश्रित्य दैतेयीं मयदर्शिताम्। निर्ममेऽश्ममयं वर्षं कार्ष्णौ वैहायसोऽसुरः ॥ २५ ॥
बाध्यमानोऽश्मवर्षेण रौक्मिणेयो महारथः। सत्त्वात्मिकां महाविद्यां सर्वमायोपमर्दिनीम् ॥ २६ ॥
ततो गौह्यकगान्धर्वपैशाचोरगराक्षसीः। प्रायुंक्त शतशो दैत्यः कार्ष्णिर्व्यधमयत्सताः ॥ २७ ॥
निशातमसिमुद्यम्य सकिरीटं सकुण्डलम्। शम्बरस्य शिरः कायात्ताम्रश्मश्रु जहार तत् ॥ २८ ॥
आकीर्यमाणो दिविजैः स्तुवद्भिः कुसुमोत्करैः। भार्ययाऽम्बचरारिण्या पुरं नीतो विहायसा ॥ २९ ॥
अन्तःपुरवरं राजन् ललनाशतसङ्कुलम्। विवेश पत्न्या गगनाद्विद्युतेव बलाहकः ॥ ३० ॥
तं दृष्ट्वा जलदश्यामं पीतकौशेयवाससम्। प्रलम्बबाहुं ताम्राक्षं सुस्मितं रुचिराननम् ॥ ३१ ॥
अलङ्कृतमुखाम्भोजं नीलवक्रालकालिभिः। कृष्णं मत्वा स्त्रियो भीता निलिल्युस्तत्र तत्र ह ॥ ३२ ॥
उपधार्य शनैरीषद्वैलक्षण्येन योषितः। उपजग्मुः प्रमुदिताः सस्त्रीरत्नं शुचिस्मिताः ॥ ३३ ॥
अथ तत्रासितापाङ्गी वैदर्भी वल्गुभाषिणी। अस्मरत्स्वसुतं नष्टं स्नेहस्नुतपयोधरा ॥ ३४ ॥

कोऽन्वयं नरवैदूर्यः कस्य वा कमलेक्षणः। धृतः कया वा जठरे केयं लब्धाथ केन वा ॥ ३५ ॥
मम चाप्यात्मजो नष्टो नीतो वा सूतिकागृहात्। एतत्समवयो रूपो यदि जीवति कुत्रचित् ॥ ३६ ॥
कथं त्वनेन सम्प्राप्तं सारूप्यं शाङ्र्गधन्वनः। आकृत्यावयवैर्गत्या स्वरहासावलोकनैः ॥ ३७ ॥
स एव वा भवेन्नूनं यो मे गर्भे धृतोऽर्भकः। अमुष्मिन् प्रीतिरधिका वामः स्फुरति मे भुजः ॥ ३८ ॥
एवं मीमांसमानायां वैदर्भ्यां देवकीसुतः। देवकीवसुदेवाभ्यां नारदेन महात्मना ॥ ३९ ॥
अन्यैश्च यादवश्रेष्ठैरुत्तमश्लोक आविशत्। विदितार्थोऽपि भगवांस्तूष्णीमास जनार्दनः ॥ ४० ॥
नारदोऽकथयत्सर्वं शम्बराहरणादिकम्। तच्छ्रुत्वा महदाश्चर्यं कृष्णान्तःपुरयोषितः ॥ ४१ ॥
देवकीवसुदेवश्च कृष्णरामौ यथा स्त्रियः। दम्पती तौ परिष्वज्य रुक्मिणी च ययुर्मुदम् ॥ ४२ ॥
नष्टं प्रद्युम्नमायान्तमाकर्ण्य द्वारकौकसः। अहो मृत इवायातो बालो दिष्ट्येति चाब्रुवन् ॥ ४३ ॥

यं वै मुहुः पितृसरूपनिजेशभावास्तन्मातरो मनसिजार्द्रहृदोरुभावाः।
चित्रं मतत्खलु रमास्पदबिम्बभूते कामे स्मरेऽक्षविषये किमुतान्यनार्यः ॥ ४४ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे शम्बरदैत्यवधोनामाष्टषष्टितमोऽध्यायः ॥ ६८ ॥ अधिकपाठे ॥ ४ ॥

## श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

"सोयं मनुष्यलोकः पुत्रेण जय्यः" इति श्रुतिविहितसदाचारो भुव्यवतीर्णैर्देवादिभिरनुष्ठेय इति दर्शयितुं श्रीकृष्णस्य तदनुष्ठानप्रकारं शम्बरासुरवधलक्षणं विक्रमं च कथयत्यस्मिन्नध्याये लोकस्य जनस्य शं सुखं करोतीति लोकशङ्करः तं देवदेवो नारायणः ईशः स्वामी यस्य स तथा तम् आराध्य लोकदृष्ट्या इति शेषः ॥ १-३ ॥ प्राग्रुद्रमन्युना दग्धो यः कामः भूयस्तमेव रुद्रमेव देहोत्पत्तये प्रत्यपद्यत ॥ ४ ॥ स एव कामः कृष्णवीर्यसमुद्भवो वैदर्भ्यां जातः उपात्तदेहः कीदृशः वासुदेवस्यांशः प्रद्युम्नो यस्मिन्नाविष्टः स तथा अत एव तदभिधानमेवास्याभिधानमित्याह—प्रद्युम्न इति। सर्वतो वीर्यादिभिः पितुरनवमः कृष्णस्य पुत्रत्वे योग्यः ॥ ५ ॥ तोकं सद्यो जातं शिशुं निर्गतो दशमो दिवसो यस्मात्स निर्दशः तम् उदन्वति समुद्रे ॥ ६ ॥ अपरैर्मत्स्यैर्जालेन सिचा वृतः संस्यूतः मत्स्यजीविभिर्दाशैः ॥ ७ ॥ कैवर्ताः मत्स्यमारकाः "कैवर्तौ दाशधीवरौ" इति च महानसं पाकस्थानं स्वधितिना परशुना "परश्वधः कुठारः स्यात् परशुः स्वधितिस्तथा" अवाद्यन् अखण्डयन् "दो अवखण्डने" इति धातुः ॥ ८ ॥ मायावती शम्बरस्य महानसाध्यक्षस्त्री ॥ ९ ॥ किमकथयदत्राह—बालस्येति। मत्स्योदरनिवेशनं मत्स्योदरप्रवेशम् ॥ १०-११ ॥ पक्वानां सूपानां मुद्गानां वाह्युपदंशानामोदनस्य च साधने संस्कारे यद्वा सूपादिसाधने अध्यक्षतया साधने सेकसाधने विध्युपायनिवृत्तिषु—

"मरणे मृतसंस्कारे वाचने नूनमेव च। सेनाग्रे यातनायाञ्च सेचने स्फूर्तिसेवयोः" ॥

इति ॥ १२ ॥ कृष्णस्यापत्यं कार्ष्णिः विभ्रमं विकारं यद्वा देवाद्यन्यतमा इति विशिष्टभ्रमम् ॥ १३ ॥ रतिरात्मनो धनैस्तं पतिमुपतस्थे अभिमुखेन तस्थौ, किमात्मधनानि सुवर्णादीनि? नेत्याह—सव्रीडेति। व्रीडया सहितो हासः सव्रीडहासः उत्तमो विभ्रमः उत्कृष्टा शृङ्गारचेष्टा ईक्षणं कटाक्षनिरोक्षणं तैः ॥ १४ ॥ मातृभावं मातुः स्वभावं सुरतकामिनी ॥ १५ ॥ अधिकृता पत्नी वधूत्तमा ॥ १६ ॥ त्वां निर्दशम् इति पाठः ॥१७॥ मोहनशोषणद्रावणाभिर्मायाभिः ॥ १८ ॥ कुररस्य स्त्री कुररी "उत्क्रोशः कुररो मतः" इति मृतप्रजा नष्टापत्या ॥ १९ ॥ महामाया महासामर्थ्या ॥ २० ॥ ओष्ठमवष्टभ्य दंष्ट्रा दन्तैरिति शेषः ॥ २१-२२ ॥ नादमिति क्रियाविशेषणं वज्रनिष्पेषः स्फूर्जथुस्तद्वन्निष्ठुरो नादो यथा भवति तथा व्यनदत्" स्फूर्जथुर्वज्रनिष्पेषः" इति हलायुधः ॥ २३-२४ ॥ दैतेयीं दैत्यानां कुले देवतामिव विद्यमानां वैहायसः विहायसि गगने स्थितः ॥ २५ ॥ सत्त्वात्मिकां बलज्ञाननिधिविष्णुदेवत्यां महाविद्यां विज्ञानास्त्रसंज्ञाम् ॥ २६ ॥ गौह्यकादीन्यस्त्राणि प्रायुंक्त गुह्यकास्त्रं गौह्यकं व्यधमयदनाशयत् ॥ २७ ॥ ताम्रश्मश्रु कपिलरुचिरश्मश्रु ॥ २८-२९ ॥ बलाहको मेघः ॥ ३०-३१ ॥ निलिल्युः निलीनाः ॥३२॥ वैलक्षण्येन कृष्णलक्षणविपरीतलक्षणनिकरेण ॥ ३३ ॥ असितापाङ्गी नीलरुचिकान्तनेत्रान्ता ॥ ३४ ॥ नरवैदूर्यः नरश्रेष्ठः नराकारं वैदूर्यरत्नमिव शोभमान इति वा कस्य पुत्रः कया स्त्रिया धृतो गर्भ इति शेषः इयं कानने वा लब्धा ॥ ३५ ॥ प्रकारान्तरेण शङ्कते—ममेति ॥ ३६ ॥ सारूप्यं सादृश्यं, सारूप्यं केनेति? तत्राह—आकृत्येति ॥ ३७ ॥ नूनं निश्चयः ॥ ३८ ॥ मीमांसमानायां विचारयन्त्याम् ॥ ३९-४३ ॥ नारीणां विभ्रमं जनयामासेति यदुक्तं न तच्चित्रं मन्तव्यमित्याह—यं वा इति। यं दृष्ट्वा तस्य प्रद्युम्नस्य मातरः हरेः पत्न्यः मनसिजार्द्रहृदा कामरसक्लिन्नमनस्कत्वेनोरुभावाः बहुविधशृङ्गारचेष्टायुक्ताः अङ्गुष्ठनखमुखमूलेन करयुगपीडनादिविकारलक्षणलक्षिता अभूवन्नित्यन्वयः। किं विशिष्टाः पितृसरूपतया पितृसारूप्येण निजेशोऽस्मत्पतिरयमिति भावोभिप्रायो यासां तास्तथा ताः तस्मिन् कामे मदने तच्चित्रं न खलु काम्यत इति कामस्तस्मिन् कामे अक्षविषये चक्षुर्गोचरे किमु इतोपि चित्रं नेत्याह रमेति रमास्पदस्य लक्ष्मीमूर्तेः श्रीकृष्णस्य बिम्बादखण्डलक्षणोपेताद्देहादुद्भूते

जाते "आत्मा वै पुत्रनामासि" इति श्रुतेः । श्रीकृष्णस्य बिंबस्य यल्लक्षणं तत्सर्वमस्य बिम्बस्य निधीयत इति श्रीकृष्णदेहप्रतिबिम्बभूत इत्यर्थः ।

"बिम्बोऽस्त्री मण्डलसमप्रतिमामुखलक्ष्मसु । प्रतिरूपे प्रतिकृतौ स्याद्बिम्बकापाल" ॥

इति अन्यनार्यः तन्मातृव्यतिरिक्ताः स्त्रियाः स्मृतेपि विमुह्यन्ति दृष्ट्वा किमु तदिदं सर्वं कृष्णमाहात्म्यविलास इति समर्थविशेषं वा इत्यनेन दर्शयति ॥ ४४ ॥

इति भागवते महापुराणे दशमस्कन्धे उत्तरार्द्धे विजयध्वजतीर्थे अष्टषष्टितमोऽध्यायः ॥ ६८ ॥ अधिकपाठे ॥ ४ ॥

## एकोनसप्ततितमोऽध्यायः

श्रीशुक उवाच

पौण्ड्रको नाम राजा वै तस्मिन् काले कुरूद्वह । द्वारकां वृष्णिनिलयां निरुध्य बहुसैनिकः ॥ १ ॥
अर्दयामास कृष्णेन विदित्वा रहितां निशि । तं कामपालः शैनेयो वसुदेवोद्धवादयः ॥ २ ॥
उग्रसेनश्च कौरव्य ये चान्ये यदुपुङ्गवाः । अर्पयामासुरायान्तं कालयोग्यमिवातिथिम् ॥ ३ ॥

राजोवाच

कश्चासौ पौण्ड्रको नाम कस्मिन् देशे महीपतिः । कस्य वा तनयो ब्रह्मन् सर्वमेतद्वदस्व मे ॥ ४ ॥

श्रीशुक उवाच

अपुत्रः काशिराजो वै कन्यां सुतनुसंज्ञिताम् । प्रायच्छद्वसुदेवाय राज्यशुल्कां कुरूद्वह ॥ ५ ॥
तत्र जज्ञे महाबाहुर्दिवाकरसमद्युतिः । कुमारः पौण्ड्रको नाम बलवीर्यमदान्वितः ॥ ६ ॥
वसुदेवसुतत्वाच्च वासुदेवेतिशब्दितः । जाते तस्मिन् महाराजो वसुदेवो महाद्युतिः ॥ ७ ॥
राज्यं तस्मिन् समारोप्य सकोशबलवाहनम् । उवाह कंसावरजां देवकीं देवतोपमाम् ॥ ८ ॥
निरुद्धो भोजराजेन कंसेनानकदुन्दुभिः । कदाचिदपि न प्रायात्करवीरपुरीमति ॥ ९ ॥
असह्यं मातृसापत्न्यमभ्रातृत्वं तथात्मनः । स्मरमाणः स काशीशो यदूनुद्विजतेऽनिशम् ॥ १० ॥
स कृष्णरहितां श्रुत्वा समेत्य द्वारकां निशि । विमृद्य बलभद्रेण शैनेयेनापि निर्जितः ॥ ११ ॥
निहतानेकसाहस्रहयकुञ्जरसैनिकः । जगाम परशर्वर्यां पुरीं वाराणसीं नृप ॥ १२ ॥
प्रभातायां तु शर्वर्यां हरिर्बदरिकाश्रमात् । आययौ तार्क्ष्यमारुह्य द्वारकां रामपालिताम् ॥ १३ ॥
सपताकैः सार्घ्यपाद्यैर्यदुवृष्ण्यन्धकादिभिः । अभिवर्णितवृत्तान्तः प्राविशत्केशवः सभाम् ॥ १४ ॥
कदाचित्पौण्ड्रको नाम काशिराजः प्रतापवान् । वासुदेवोहमित्यज्ञो दूतं कृष्णाय प्राहिणोत् ॥ १५ ॥
त्वं वासुदेवो भगवानवतीर्णो जगत्पतिः । इति प्रस्तोभितो बालैर्मेने स्वात्मानमच्युतम् ॥ १६ ॥
दूतस्तुद्वारकामेत्य सभायामास्थितं हरिम् । कृष्णं कमलपत्राक्षं राजसन्देशमब्रवीत् ॥ १७ ॥
वासुदेवोवतीर्णोहमेक एव न चापरः । भूतानामनुकम्पार्थं त्वं तु मिथ्याभिधां त्यज ॥ १८ ॥
यानित्वमस्मच्चिह्नानि मौढ्याद्बिभर्ष्यभीतवत् । त्मक्त्वे हि मां त्वं शरणन्नोचेद्देहिममाहवम् ॥ १९ ॥
कत्थनं तदुपाकर्ण्य पौण्ड्रकस्याल्पमेधसः । उच्चकैरुग्रसेनाद्याः सभ्याः जहसतुस्तदा ॥ २० ॥
उवाच दूतम्भगवान्परिहासकथा मनु । उत्स्रक्ष्ये मूढ़चिह्नानि यैस्त्वमेवं विकत्थसे ॥ २१ ॥
मुखन्तवविधायाज्ञकङ्कगृध्रवकैर्वृतम् । शयिष्य सेहतस्तत्र भविताशरणंशुनाम् ॥ २२ ॥
इति दूतस्तदाक्षेपं स्वामिने सर्वमाहरत् । कृष्णोपि रथमारुह्य प्रायात्काशीं ससैनिकः ॥ २३ ॥
पौण्ड्रकोपि तदुद्योगमुपलभ्यमहारथः । अक्षौहिणीभिः सहितो निश्चक्रामपुराद्द्रुतम् ॥ २४ ॥
तमायान्तं रथोपस्थे सुवर्णगरुडे स्थितम् । सुवर्णबाहुयुमलमपश्यत् पौण्ड्रकं हरिः ॥ २५ ॥
शङ्खार्यसिगदाशाङ्र्गं दधच्छ्रीवत्सलक्षितम् । बिभ्राणं कौस्तुभमणिं वनमालाविभूषितम् ॥ २६ ॥
कौशेयवाससीपीतेवसानङ्गरुडध्वजम् । आमुक्तमाल्याभरणं स्फुरन्मकरकुण्डलम् ॥ २७ ॥
दृष्ट्वा तमात्मनासाम्यं कृत्रिमंवेषमास्थितम् । यथानटंरङ्गगतम्विजहासभृशं हरिः ॥ २८ ॥
क्षणेनतंकाशिपतेः सैनिकादृढधन्विनः । शरैराच्छादयामासुर्मेघाः शैलमिवाम्भसा ॥ २९ ॥
केचिद्गजान् रथानश्वानास्थाय रणमूर्द्धनि ।
शूलैर्गदाभिः परिघैः शक्त्यृष्टिप्रासतोमरैः । असिभिः पट्टिशैर्बाणैः प्रहरन्नरयो हरिम् ॥ ३० ॥

तस्य काशिपतेर्मित्रं पार्ष्णिग्राहो परो नृपः। अक्षौहिणीभिस्तिसृभिरुपायान्नृपसङ्गरम् ॥ ३१ ॥

कृष्णस्तु तत्पौण्ड्रककाशिराजयोर्बलं गजस्यन्दनवाजिपत्तिमत्। गदासिचक्रेषुभिरार्दयद्भृशं यथा युगान्ते हुतभुक्प्रभाज्वलन् ॥३२॥

आयोधनं तद्रथवाजिकुञ्जरद्विपत्खरोष्ट्रैरिपुणावखण्डितैः। बभौ च तन्मानवहं मनस्विनामाक्रीडनं भूतपतेरिवोल्बणम् ॥ ३३ ॥

अथाह पौण्ड्रकं शौरिर्भोभो पौण्ड्रक यद्भवान्। दूतवाक्येन मामाह तान्यस्त्राण्युत्सृजामि ते ॥ ३४ ॥

त्याजयिष्येऽभिधानं मे यत्त्वयाद्य मृषा कृतम्। व्रजामि शरणं तेद्य यदिनेच्छामि संयुगम् ॥ ३५ ॥

इति क्षिप्त्वा शितैर्बाणैर्विरथीकृत्य पौण्ड्रकम्। शिरोऽहरद्रथाङ्गेन वज्रेणेन्द्रो यथा गिरेः ॥ ३६ ॥

तथा काशिपतेः कायाच्छिर उत्कृत्य पत्रिभिः। न्यपातयत्काशिपुर्यां पद्मकोशमिवानिलः ॥ ३७ ॥

एवं मत्सरिणं हत्वा पौण्ड्रकं ससखं हरिः। द्वारकामाविशत्सिद्धैर्गीयमानकथामृतः ॥ ३८ ॥

**श्रीशुक उवाच**

शिरः पतितमालोक्य राजद्वारि सकुण्डलम्। किमिदं कस्य वा वक्त्रमिति संशयिरे जनाः ॥ ३९ ॥

राज्ञः काशिपतेर्ज्ञात्वा महिष्यः पुत्रबान्धवाः। पौराः शोकहता राजन्नाथनाथेत्युपाद्रवन् ॥ ४० ॥

सुदक्षिणस्तस्य सुतः कृत्वा संस्थाविधिं पितुः। निहत्य पितृहन्तारं यास्याम्यपचितिं पितुः ॥ ४१ ॥

इत्यात्मनाभिसन्धाय सोपाध्यायो महेश्वरम्। सुदक्षिणोऽर्चयामास परमेण समाधिना ॥ ४२ ॥

प्रीतोऽविमुक्ते भगवांस्तस्मै वरमदाद्विभुः। पितृहन्तुर्वधोपायं स वव्रे वरमीप्सितम् ॥ ४३ ॥

दक्षिणाग्निं परिचर ब्राह्मणैः सह ऋत्विजः। आभिचारविधानेन स चाग्निः प्रमथैर्वृतः ॥ ४४ ॥

साधयिष्यति सङ्कल्पमब्रह्मण्ये प्रयोजितः। इत्यादिष्टस्तथा चक्रे कृष्णायाभिचरन्नृप ॥ ४५ ॥

ततोग्निरुत्थितः कुण्डान्मूर्तिमानतिभीषणः। तप्तताम्रशिखाश्मश्रुरङ्गारोद्गारिलोचनः ॥ ४६ ॥

दंष्ट्रोग्रभ्रुकुटीदन्तकठोरास्यः स्वजिह्वया। आलिहन् सृक्विणी रक्ते विधुन्वन् त्रिशिखं ज्वलत् ॥ ४७ ॥

पद्भ्यां तालप्रमाणाभ्यां कम्पयन् धरणीतलम्। सोभ्यधावद्वृतो भूतैर्द्वारकां प्रदहन्दिशः ॥ ४८ ॥

तमाभिचारदहनमायान्तं द्वारकौकसः। विलोक्य तत्रसुः सर्वे वनदाहे यथा मृगाः ॥ ४९ ॥

अक्षैः सभायां क्रीडन्तं भगवन्तं भयातुराः। त्राहि त्राहीति लोकेश वह्नेः प्रदहतः पुरम् ॥ ५० ॥

श्रुत्वा तज्जनवैक्लव्यं दृष्ट्वा स्वानाञ्च साध्वसम्। धरणीशः प्रहस्याह माभैष्टेत्यवितास्म्यहम् ॥ ५१॥

सर्वस्यान्तर्बहिः सोथ कृत्यां माहेश्वरीं विभुः। विज्ञाय तद्विघातार्थं पार्श्वस्थं चक्रमादिशत् ॥ ५२ ॥

तत्सूर्यकोटिप्रतिमं सुदर्शनं जाज्वल्यमानं प्रलयानलप्रभम्।
स्वतेजसा खं ककुभोऽथ रोदसी चक्रं मुकुन्दस्य झटित्यपूरयत् ॥ ५३ ॥
कृत्यानलः प्रतिहतः स रथाङ्गपाणे रस्त्रौजसा नृप विभग्नमुखो निवृत्तः।
वाराणसीं प्रति समेत्य सुदक्षिणं तं सर्त्विग्जितं समदहत्स्वकृतोभिचारः ॥ ५४ ॥

चक्रं च विष्णोस्तदनुप्रविष्टं वाराणसीं साट्टसभालयापणाम्। सगोपुराट्टालककोष्ठतोरणां सकोशहस्त्यश्ववरूथमन्दिराम् ॥ ५५ ॥

दग्ध्वा वाराणसीं सर्वां विष्णुचक्रं सुदर्शनम्। भूयः पार्श्वमुपातिष्ठत्कृष्णस्याक्लिष्टकर्मणः ॥ ५६ ॥

य एतच्छ्रावयेन्मर्त्य उत्तमश्लोकविक्रमम्। समाहितो वा शृणुयात्सर्वपापैः प्रमुच्यते ॥ ५७ ॥

तावुभौ सर्वपापेभ्यो ब्रह्महत्यादिभिर्नृप। विमुच्य देहावसाने विष्णुलोकं प्रयास्यतः ॥ ५८ ॥

**इति श्रीभागवते महापुराणे दशमस्कन्धे एकोनसप्ततितमोऽध्यायः ॥ ६९ ॥**

**श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली**

न यस्य स्वः पर इतीममर्थं सत्यं कर्तुं पौण्ड्रकवधलक्षणं विक्रमं कथयितुमुत्तराध्यायप्रारम्भः ॥ १ ॥ तस्मिन्काले कृष्णरहितां विदित्वा कामपालो बलभद्रः ॥ २ ॥ अर्पयामासुः शरानितिशेषः ॥ ३-४ ॥ राज्यमेव शुल्कं यस्यां सा तथा ताम् ॥ ५-६ ॥ नामान्तरमाह—वसुदेवेति ॥ ७-८-९ ॥ उद्विजते भीतिं करोति भयकरणमात्मन एव फलतीति द्योतनाय स्मरमाण इति ॥ १० ॥ द्वारकां समेत्य पमृद्य ॥ ११ ॥ परशर्वर्यामिपरात्रे उषःकाले ॥ १२-१३-१४ ॥ बालैरज्ञैः प्रस्तोभितोऽविद्यमानगुणेन प्रस्तुतो मूढाक्षेपमुक्तो वा ॥ १६-१७-१८ ॥ अस्मच्चिह्नानि चक्रादीनि मां शरणमेहि ॥ १९ ॥ कत्थनं व्यर्थभाषणम् ॥ २० ॥ अनु अनन्तरम् उत्स्रक्ष्ये त्याजयिष्ये त्वदीयानि चिह्नानि ॥२१-२२॥ स्वामिने पौण्ड्रकाय। २३-२४-२५-२६। आमुक्तमाल्याभरणं बद्धमालालङ्कारम् ॥ २७-२८-२९ ॥ ऋष्टिः खड्गविशेषः प्रहरन् प्राहरन् ॥ ३० ॥ पार्ष्णिग्राहं पृष्ठतो गोप्तारम् ॥ ३१ ॥ प्रभया ज्वलन् ॥ ३२ ॥ यदायोधनं युद्धस्थानं तद्बभाविरयन्वयः। अवखण्डितैरुच्छिन्नैः। "खण्डि खण्डने"

द्विपदः पदातयः मनस्विनां शूराणां मानवर्धनं भूतपतेराक्रीडनं श्मशानम् ॥ ३३ ॥ किमाह शौरिरिति तत्राह—यदिति। भवान् दूतवाक्येन वासुदेवोवतीर्णोहमित्यादिलक्षणेन यन्मामाह तत्पश्येति शेषः। किन्तदिति तत्राह तानीति यान्युत्सृजेति भवानाह रणे तान्यस्त्राण्युत्सृजामि मुञ्चामि ॥ ३४॥ अद्य त्वयाऽहं यदेव वासुदेवेत्यभिधानं मृषा कृतं तत्त्वां त्याजयिष्ये प्रहापयिष्यामि यदि संयुगं नेच्छामि तर्हि त्वां शरणं व्रजामीति ॥ ३५–३८ ॥ संशयिरे संशयं चक्रिरे ॥ ३९–४० ॥ संस्थाविधिं प्रेतक्रियाम् अपचितिम् अनृणत्वं प्रतिक्रियां वा अर्चनायामपचितिः प्रेतक्षये निष्कृतौ व्यय इति। ४१। आत्मना मनसा इत्यभिसन्धाय सङ्कल्प्य। ४२। अविमुक्ते काश्याम् अविमुक्तेश्वरनामक्षेत्रविशेषे वा प्रीतः। ४३। दक्षिणाग्निमन्वाहार्यनामेनं परिचर पूजय आभिचारविधानेन क्षुद्रप्रयोगप्रकारेण। ४४। अब्रह्मण्ये ब्राह्मणाचारविरुद्धाचारे प्रयोजितः आदिष्टः ईश्वरेणेति शेषः। आभिचरन् कृत्यप्रयोगं कुर्वन्। ४५–४६। त्रिशिखं शूलमिति शेषः। ४७–४८। आभिचारदहनं कृत्यालक्षणाग्निम्। ४९। अक्षैर्दुरोदरैः। ५०। धरणीशः भूमीशः धरणं यस्य तद्धरणितस्य त्रैलोक्यस्य वा अवितास्मि रक्षितास्मि। ५१–५२। सुदर्शनं नाम चक्रम् अक्षं खं बिलं व्योम वा "खमिन्द्रिये दिवि व्योम्नि ताम्रे द्वाराभ्युपाययोः" इतियादवः।५३। अभिचारः कृत्याग्निः।५४। तदनु सुदक्षिणदहनानन्तरम् अन्तःप्रतिष्ठङ्कोष्ठयन्तर्गृहं वरूथं रथगुप्तिशालाम्। ५५–५६। एतच्चरित्रश्रवणादिफलमाह–य इति। ५७। तावुभौ श्रोता श्रावयिता च ब्रह्महत्यादिभिरुपलक्षितेभ्योऽशुभेभ्यः ॥ ५८ ॥

इति श्रीभागवते महापुराणे दशमस्कन्धे विजयध्वजतीर्थकृतपदरत्नावल्याम् एकोनसप्ततितमः ॥ ६९ ॥

## सप्ततितमोऽध्यायः

श्रीशुक उवाच

अथैकदा द्वारवत्यां वसतो रामकृष्णयोः। सूर्योपरागः सुमहानासीत्कल्पक्षये यथा ॥ १ ॥
तं ज्ञात्वा मनुजा राजन् पुरस्तादेव सर्वशः। स्यमन्तपञ्चकं क्षेत्रं जग्मुः श्रेयोविधित्सया ॥ २ ॥
निःक्षत्रियां महीं कुर्वन् रामः शस्त्रभृतां वरः। नृपाणां रुधिरौघेण यत्र चक्रे महाह्रदान् ॥ ३ ॥
ईजे च भगवान् रामो यत्रास्पृष्टोपि कर्मणा। लोकस्य सङ्ग्रहायैषो यथान्योघापनुत्तये ॥ ४ ॥
महत्यां तीर्थयात्रायां तत्रागुर्भारतीः प्रजाः। कृष्णः षोडशसाहस्रमहिषीशिविकान्वितः ॥ ५ ॥
पुत्रपौत्रजनानीकैर्वारक्रान्ताकरेणुभिः । नगरस्त्रीकदम्बैश्च प्रियासार्थैश्च संयुतः ॥ ६ ॥
वृष्णयश्च तथाक्रूरवसुदेवगदादयः। ययुर्भारत तत्क्षेत्रं स्वमघं क्षपयिष्णवः ॥ ७ ॥
शठप्रद्युम्नसाम्बाश्च सुचन्द्रोद्धवसारणाः। आहुकं कृतवर्माणं संस्थाप्य पुररक्षणे ॥ ८ ॥
ते रथैर्देवविख्यातैर्हयैश्च तरलप्रभैः। गजैर्बृहद्भिरभ्रामैर्नृभिर्विद्याधरद्युभिः ॥ ९ ॥
व्यरोचन्त महाभागाः पथि काञ्चनमालिनः। वेदवादित्रनिर्घोषैः शङ्खदुन्दुभिनिस्स्वनैः ॥ १० ॥
गायन्तः कृष्णकृष्णेति गोविन्देति च सन्ततम्। ककुभः पूरयन्नादैर्जग्मुः सर्वे कुरूद्वह ॥ ११ ॥
स्यमन्तपञ्चकं प्राप्य क्षेत्रं त्रैलोक्यविश्रुतम्। तृणैः पूर्णैस्तथा काष्ठैश्चक्रिरे भवनानि च ॥ १२ ॥
कम्बलाजिनवस्त्राणां शिबिराणि महीभृताम्। आसन्विचित्ररूपाणि शतशोथ सहस्रशः ॥ १३ ॥
तत्राजग्मुर्नृपाऽनेके ब्राह्मणाश्च सहस्रशः। वैश्याः शूद्राश्च निस्सङ्ख्या ये चान्ये वर्णनिन्दिताः ॥ १४ ॥
ऋषयश्च महात्मानो विख्याताः शंसितव्रताः। सोपाध्यायाः साग्निहोत्राः स्नातका गृहमेधिनः ॥ १५ ॥
अन्धाश्च बधिराश्चैव कुब्जा वामनपण्डकाः। व्यङ्गा जडाश्च मूकाश्च कर्मक्षयपरीप्सवः ॥ १६ ॥
गोविन्दचरणाम्भोजरेणुरञ्जितमस्तकाः। कटकाङ्गदकेयूरहारकुण्डलभूषणाः ॥ १७ ॥
स्रग्गन्धदिव्यवसनाः कलत्रैः खेचरा इव। तत्र स्नात्वा महाभागा उपोष्य सुसमाहिताः ॥ १८ ॥
ब्राह्मणेभ्योऽददुर्द्धेनूर्वासःस्रग्रुक्ममालिनीः। रामह्रदेषु विधिवत्पुनराप्लुत्य वृष्णयः ॥ १९ ॥
ददुः स्वर्णं द्विजाग्र्येभ्यः कृष्णे नो भक्तिरस्त्विति। स्वयञ्च तदनुज्ञाता वृष्ण्यः कृष्णदेवताः ॥ २० ॥
भुक्त्वोपविविशुः कामं स्निग्धच्छायाङ्घ्रिपाङ्घ्रिषु। तत्रागतांस्ते ददृशुः सुहृत्सम्बन्धिनो नृपान् ॥२१॥
मत्स्योशीनरकौशल्यविदर्भकुरुसृञ्जयान्। काम्बोजकैकयान्मद्रान् कुन्तिगान्धारकेरलान् ॥२२॥
अन्यांश्चैवात्मपक्षीयान्परांश्च शतशो नृपान्। नन्दादीन्सुहृदो गोपान्गोपीश्चोत्कण्ठिताश्चिरम् ॥२३॥

अन्योन्यसन्दर्शनहर्षरंहसा प्रोत्फुल्लहृद्वक्त्रसरोरुहश्रियः।
आश्लिष्य गाढं नयनैः स्रवज्जलाहृष्यत्त्वचोरुद्धगिरो ययुर्मुदम् ॥ २४ ॥
स्त्रियश्च सम्वीक्ष्य मिथोतिसौहृदाः सचापलापाङ्गदृशोऽभिरेभिरे।
स्तनैः स्तनान्कुङ्कुमपङ्करूषितान्निहत्य दोर्भ्यां प्रणयाश्रुलोचनाः ॥ २५ ॥

ततोभिवाद्य ते वृद्धान्यवीयैरभिवादिताः। स्वागतं कुशलं पृष्ट्वा चक्रुः कृष्णकथामिथः ॥ २६ ॥
पृथा भ्रातॄन्स्वसुर्वीक्ष्य तत्पुत्रान्पितरावपि। भ्रातृपत्नीर्मुकुन्दञ्च जहौ सङ्कथयाशुचः ॥ २७ ॥

कुन्त्युवाच

आर्यभ्रातरहम्मन्ये आत्मानमकृताशिषम्। यद्वा आपत्सु मद्वार्तां नानुस्मरथ सत्तमाः ॥ २८ ॥
सुहृदो ज्ञातयः पुत्रा भ्रातरः पितरावपि। नानुस्मरन्ति स्वजनं यस्य दैवमदक्षिणम् ॥ २९ ॥

वासुदेव उवाच

अम्ब ! मास्मानसूयेथा देवक्रीडनकान्नरान्। ईशस्य हि वशे लोकः कुरुते कार्यतेथवा ॥ ३० ॥
कंसप्रतापिताः सर्वे वयं यता दिशो दश। एतर्ह्येव पुनः स्थानं दैवेनासादिताः स्वसः ॥ ३१ ॥

श्रीशुक उवाच

वसुदेवोग्रसेनाद्यैर्यदुभिः सेविता नृपाः। आसन्नच्युतसन्दर्शपरमानन्दनिर्भराः ॥ ३२ ॥
भीष्मो द्रोणोऽम्बिकापुत्रो गान्धारी ससुता तथा। सदाराः पाण्डवाः कुन्ती सञ्जयो विदुरः कृपः ॥ ३३ ॥
कुन्तिभोजो विराटश्च भीष्मको नग्नजिन्महान्। पुरुजिद्द्रुपदः शैब्यो धृष्टकेतुश्च काशिराट् ॥३४॥
दमघोषो विशालाजो मैथिलो मद्रकैकयाः। युधामन्युः सुशर्माच ससुता वाह्लिकादयः ॥ ३५ ॥
राजानोन्ये च राजेन्द्र युधिष्ठिरपुरोगमाः। श्रीनिकेतं वपुः शौरेः सस्त्रीका वीक्ष्य विस्मिताः ॥ ३६ ॥
अथ ते कृष्णरामाभ्यां सम्यक्प्राप्तसमर्हणाः। प्रशशंसुर्मुदा युक्तास्तुष्टाः कृष्णपरिग्रहान् ॥ ३७ ॥
अहो भोजपते यूयं जन्मभाजो नृणामिह। यत्पश्यथासकृत्कृष्णं दुर्दर्शमपि योगिनाम् ॥ ३८ ॥
यन्निस्सृतं वेदमयं पुनाति पादावनेजनपयस्तु वचश्च शास्त्रम्।
भूःकालभर्जितभगापि यदङ्घ्रिपद्म स्पर्शोद्धशक्तिरभिवर्षति नोऽखिलार्थान् ॥ ३९ ॥
तद्दर्शनस्पर्शनानुपथप्रजल्पशय्यासनाशनसयौवनपिण्डबन्धाः ।
येषां गृहे निरयवर्त्मनिवर्ततांच स्वर्गापवर्गविरमः स्वयमास विष्णुः ॥ ४० ॥
नन्दस्तत्र यदून्प्राप्तान् श्रुत्वा कृष्णपुरोगमान्। तत्रागमद्वृतो गोपैस्तरसा तद्दिदृक्षया ॥ ४१ ॥
तं दृष्ट्वा वृष्णयो हृष्टास्तन्वः प्राणमिवोत्थिताः। परिषस्वजिरे गाढं चिरदर्शनकातराः ॥ ४२ ॥
वसुदेवः परिष्वज्य सम्प्रीतः प्रेमविह्वलः। स्मरन् कंसकृतान् क्लेशान् पुत्रन्यासञ्च गोकुले ॥४३॥
कृष्णरामौ परिष्वज्य पितरावभिवाद्य च। नकिञ्च नोचतुः प्रेम्णा साश्रुकण्ठौ कुरूद्वह ॥ ४४ ॥
तावुत्सङ्गं समारोप्य बाहुभ्यां परिरभ्यच। यशोदाच महाभागा सुतौ विजहतुः शुचः ॥ ४५ ॥
रोहिणी देवकी चैव परिष्वज्य व्रजेश्वरीम्। स्मरन्त्यौ तत्कृतां मैत्रीं बाष्पकण्ठ्यौ समूचतुः ॥ ४६ ॥
को विस्मरेत वां मैत्रीमनुवृत्तां व्रजेश्वरि। अथवाप्यैन्द्रमैश्वर्यं यस्या नेह प्रतिक्रिया ॥ ४७ ॥
एतावदृष्टपितरौ युवयोः स्म पित्रोः सम्प्रीणनाभ्युदयपोषणपालनानि।
प्राप्योषतुर्भवति पक्ष्महयद्वदक्ष्णोर्न्यस्तावकुत्रच भयो न सतां परस्तात् ॥ ४८ ॥
गोप्यश्च कृष्णमुपलभ्य चिरादभीष्टं यत्प्रेक्षणे दृशिषु पक्ष्मकृतं शपन्ति।
दृग्भिर्हृदीकृतमलं परिरभ्यसद्यस्तद्भावमापुरपि नित्ययुजां दुरापम् ॥ ४९ ॥
भगवांस्तास्तथाभूता विविक्त उपसङ्गताः। आश्लिष्यानामयं पृष्ट्वा प्रहसन्निदमब्रवीत् ॥ ५० ॥
अपिस्मरथ नः सख्यः स्वानामर्थचिकीर्षवः। गतांश्चिरायितानन्यासङ्गात्कृपणचेतसः ॥ ५१ ॥
अवबुद्ध्य यथास्मासु इदमेव विशङ्कये। नूनं भूतानि भगवान्युनक्ति वियुनक्ति च ॥ ५२ ॥
वायुर्यथा घनानीकं तृणतूलरजांसि च। संयोज्य क्षिपते भूयास्तथा भूतानि भूतकृत् ॥ ५३ ॥
मयि भक्तिर्हि भूतानाममृतत्वाय कल्पते। दिष्ट्यासीन्मयि सुस्नेहो भवतीनां मुदावहः ॥ ५४ ॥
अहं हि सर्वभूतानामादिरन्तोन्तरं बहिः। मौक्तिकानां यथा खंवाभूर्वायुर्ज्योतिरङ्गनाः ॥ ५५ ॥
एवमेतानि भूतानि भूतेष्वात्मात्मना ततः। उभयं मय्यथ परे पश्यथाततमक्षरे ॥ ५६ ॥

श्रीशुक उवाच

अध्यात्मशिक्षया गोप्य एवं कृष्णेन शिक्षिताः। तदनुस्मरणध्वस्तजीवकोशास्तमध्यगुः ॥ ५७ ॥
नताः स्म ते नाथ पदारविन्दं योगेश्वरैर्हृदि विचिन्त्यमगाधबोधैः।
संसारकूपपतितोत्तरणावलम्बं गेहञ्जुषामपि मनस्युदियात्सदा नः ॥ ५८ ॥

इति श्रीभागवते महापुराणे दशमस्कन्धे उत्तरार्द्धे सप्ततितमोऽध्यायः ॥ ७० ॥

**श्रीविजयध्वजतीर्थकृता पदरत्नावली**

तीर्थयात्रायां बहुविधं पुण्यं निमित्तं कालं ततोऽपि विशिष्टं तत्र स्नानात्सत्पात्रत्यागात्सन्दर्शनात्पुण्यवतां पुण्यराशेरितरेषामप्यघक्षयाच्छुद्धान्तःकरणत्वेन निर्मला कृष्णविषया भक्तिः मुक्तावानन्दविशेषं मुक्तिञ्च ददातीति कृत्वा लौकिकाचारं विडम्बयतः कृष्णस्य तीर्थयात्रादिलक्षणं चरितं कथयत्यस्मिन्नध्याये तत्रादौ तीर्थयात्रायां निमित्तमाह—अथेति, कल्पक्षय इत्यनेन सर्वग्रासं लक्षयति ॥१॥ पुरस्तादुपरागादितिशेषः । स्यमन्तपञ्चकं कुरुक्षेत्रं स्यमन्तानां ह्रदानां पञ्चकं यस्मिंस्तत्तथा ॥२॥ एतदेव स्पष्टयति—निःक्षत्रियामिति । निषिद्धाः क्षत्रिया यस्यां सा तथा तां यत्र देशे यत्पञ्चमहाह्रदांश्चक्रे तत्स्यमन्तपञ्चकम् ॥३॥ कर्मणा हत्यानिमित्तपापोत्पन्नेन अस्पृष्टोपि लोकसंग्रहायेति विकर्मणेति केचित्पठन्ति ॥४॥ भारतोः भारतखण्डले विद्यमानाः ॥५॥ वारकान्ताः गणिकास्तदारूढकरेणुभिः ॥ ६–८ ॥ तरलानां तरङ्गाणां प्रभावत्प्रभा येषां ते तथा अतिधवलप्रभा इत्यर्थः । तैर्विद्याधरद्युतिभिः ॥ ९–१२ ॥ कम्बलाजिनवस्त्राणां वितानैरितिशेषः ॥ १३ ॥ अनेक इति पदच्छेदः बहव इत्यर्थः । निन्दिताश्चतुर्वर्णेभ्यः पृथक् कृताः ॥ १४ ॥ शंसितव्रताः निर्मलव्रताः स्नातकाः दण्डसोदककमण्डलुधराः गृहमेधिनः पञ्चयज्ञाधिकारिणः ॥ १५ ॥ कुब्जाः वक्राङ्गाः वामना ह्रस्वावयवाः पण्डकाः क्लीबाः व्यङ्गाः हस्ताद्यवयवहीनाः किं साध्यमिति तत्राह कर्मेति ॥ १६ ॥ कटकं वलयः ॥ १७–१८ ॥ वासांसि स्रजश्च रुक्ममालाः स्वर्णमालाः आसां सन्तीति वासस्स्रग्रुक्ममालिन्यः ताः ॥ १९–२४ ॥ सचापलाश्चाञ्चल्येन सहिताः अपाङ्गदृशः कटाक्षवीक्षणानि यासां तास्तथा अभिरेभिरे आलिङ्गनं चक्रुः ॥ २५–२७ ॥ केयं कथेति तत्राह—आर्येति । आर्यभ्रातर्ज्येष्ठभ्रातः वसुदेवः अकृताशिषम् अजीर्णपुण्यम् अस्मदापत्सु मद्वार्तां नानुस्मरथेति यत्तस्मादिति शेषः ॥ २८ ॥ तत्र किङ्कारणमिति तत्राह—यस्येति अदक्षिणं विपरीतवृत्ति ॥ २९ ॥ देवक्रीडनकान् देवस्येश्वरस्य क्रीडोपकरणभूतान् ईशस्य वशे स्थितो लोकः कर्माणि कुरुते सङ्गेन कार्यते वा "कार्यते ह्यवशः" इति स्मृतेः ॥ ३० ॥ कंसेन प्रतापिताः सन्तापं प्रापिताः एतर्हि इदानीं स्वसः हे भगिनि ॥ ३१–३६ ॥ कृष्णपरिग्रहान् कृष्णाशयान् ॥ ३७–३८ ॥ तुशब्दोऽवधारणार्थः चशब्दः समाहारार्थः यस्य कृष्णस्य वदनान्निस्सृतं वचः वागात्मकं शास्त्रं ब्रह्मसूत्रादिलक्षणम् इदं जगत्पुनात्येव यस्य पादावनेजनपयश्च पुनाति कालाग्निना भर्जितमगा निर्दग्धवीर्या भूः यस्याङ्घ्रिपद्मस्पर्शेन इद्धा समृद्धा शक्तिर्यस्याः सा तथा साऽस्मदर्थेऽखिलार्थानभिवर्षति तं कृष्णमसकृत्पश्यथेति यस्मात्तस्माज्जन्मभाज इति गतेनान्वयः ॥३९॥ इतोपि यूयञ्जन्मभाज इत्याशयेनाह—तद्दर्शनेति । निरयवर्त्मनि इष्टप्रददेवविरहितमार्गे अत एव दुःखविषये गृहे वर्ततां वर्तमानानां स्वर्गापवर्गविरमः दुःखासम्भिन्नप्रदेशः स्वर्गः कर्मसाध्यप्रदेशः अपवर्गो मोक्षः तयोर्विरामो यस्मात्स तथा मुक्तेरेव दातेत्यर्थः । "अपवर्गः क्रियासाध्ये फलाप्तौ त्यागमोक्षयोः" इति । यद्वा विशेषेण रमणं यस्मात्स तथा "ज्ञानादेव स्वर्गो ज्ञानादेवापवर्गः;" इति श्रुतेः । किमुत सन्न्यासिनामिति चशब्दः एवम्विधो विष्णुः स्वयमंशावेशमन्तरेण येषां युष्माकं गृहे आसते यूयं तस्य हरेर्दर्शनं च स्पर्शनञ्च अनुपथश्चानुगमनञ्च प्रजल्पश्च शय्या च आसनञ्च अशनञ्च तानि इमानि यस्य स यौवनस्य पिण्डस्य देहस्य सन्ति स तथा तस्य पिण्डस्य बन्धः दृढालिङ्गनं येषां ते तथा तस्माज्जन्मसाफल्यं युष्माकमितिशेषः ॥ ४०–४३ ॥

कृष्णरामयोर्जनमोहनविडम्बं कथयति-कृष्णरामाविति ॥ ४४–४५ ॥ व्रजेश्वरीं यशोदां समूचतुः सम्भाषणं चक्रतुः ॥ ४६ ॥ यस्याः मैत्र्याः वां युवयोः ॥ ४७ ॥ एतौ कृष्णरामौ युवयोः पित्रोः समीपे न्यस्तौ युवयोः सम्प्रीणनादीनि प्राप्य ऊषतुः सम्प्रीणनं सम्प्रीतिः अभ्युदयो जातकाद्यभिवृद्धिकर्म रसायनादिपुष्टिकरणं पोषणं कीदृशौ अदृष्टपितरौ पितृशब्दास्पदास्मद्दर्शनमप्राप्तौ सतां परस्तात्सज्जनेभ्योन्यत्राकुतश्चन भयौ कुत्रचित् भययुक्तौ न भवतः कुत्रचेत्युक्तं सङ्क्षिपति नकारेण सत्सु भययुक्ताविर्त्यर्थः । ब्राह्मणादिसज्जनवधाद्बिभ्यतौ यद्वा बाल्ये विडम्बनार्थं सज्जनमन्तरेण दुष्टेभ्यो नाकुत्रच भयौ न बिभ्यतावित्यर्थः । तत्र दृष्टान्तमाह—पक्ष्मेति । यद्वद्यथा समीपन्यस्तत्वात्पक्ष्मेत्येकवचनं द्विवचनार्थे पक्ष्मणो अक्ष्णोः नेत्रयोः कुतश्चिद्भयनिवारके तथा युवामिति शेषः ॥ ४८ ॥ गोप्यश्चिरकालादृष्टं कृष्णमुपलभ्य दृष्ट्वा सद्यः दृग्भिः हृदि कृतम् अलं परिरभ्य तद्भावं तस्मिन्योग्यां भक्तिमापुरित्यन्वयः कीदृशं नित्ययुजां नित्यमनोयोगिनामपि दुरापं दुरापमित्यनेन भक्तेरेव प्राधान्यं सूचयति या गोप्यः यत्प्रेक्षणे तादर्थ्ये सप्तमी प्रेक्षणार्थं दृष्टिषु नेत्रेषु पक्ष्मणां कृतं निमेषलक्षणं कर्म शपन्ति पक्ष्मकर्तारं विधिं चेत्यनेन भक्त्यतिशयो दर्शितः ॥ ४९–५० ॥ स्वानां यदूनामर्थचिकीर्षवः अभीष्टं कर्तुकामाः अन्यासङ्गादन्यकार्यासक्तेश्चिरायितान् चिरादनागतान् कृपणेषु चेतो यासां तास्तथा ॥ ५१ ॥ यथा यथावदवबुध्यास्मास्विदमेव विशङ्क्य किन्तदिति तत्राह नूनमिति ॥ ५२ ॥ एतदेव विवृणोति-वायुरिति ॥ ५३ ॥ प्रेष्ठवियोगादस्माकम् अनुताप इति तत्राह—मयीति ॥ ५४ ॥ मम परिच्छिन्नत्वे मद्वियोगशङ्का तदेव नास्ति सर्वगतत्वादिति हिशब्दसूचितं हेतुं व्यनक्ति—अहं हीति । आदिः कारणम् अन्तः संहर्ता आद्यन्तकाले वर्तमानो वा ननूक्तशङ्कायाः कः परिहार इति तत्राह–अन्तरमिति । हे अङ्गनाः ! यथा खादिभूतानि भौतिकानां घटकविवक्षयैकवचनम् ॥ ५५ ॥ आत्मना परमात्मना तत इति खादीनि तत्तानि जीवस्तत इति योज्यं विध्यविध्यभावादौपचारिको व्यपदेश इति तत्राह—उभयमिति । यत् यदुक्तं शास्त्रीयमथ तस्मादुभयं जीवभूतशब्दवाच्यं तत्त्वं परे सर्वोत्तमे अक्षरे ब्रह्मणि मय्याततमिति पश्यथेत्यन्वयः । अनेनेदं श्रद्धेयमिति आयातमिति ज्ञायते ॥ ५६ ॥ स्त्रीणामयम् उपदेशो घटपृष्टसलिलासेकवद्व्यर्थ

इति तत्राह—अध्यात्मेति। देहमधिकृत्य वर्तमानानां परमात्मादितत्त्वानां शिक्षयोपदेशलणया शिक्षिताः विद्योपादानं कारिताः तदनुस्मरणेन तस्य कृष्णस्य निरन्तरोपासनया जातज्ञानाग्निना ध्वस्तो दग्धः जीवकोशः लिङ्गशरीराभिमानो यासां तास्तथा तं कृष्णमध्यगुः तं ज्ञातवत्यः ॥ ५७ ॥ ज्ञातकृष्णतत्त्वा इदं जगुरित्याह—नताः स्मेति। "अस भुवि" इत्यस्याशिषि प्रयोगः नताः नताभवामेति प्रार्थयामहे जन्मान्तरेपि त्वत्पादाब्जनमनमाशास्मह इत्यर्थः। ननु किमस्य माहात्म्यं येन तन्नमनमर्थनीयमिति तत्राह—योगेश्वरैरिति। यत्याश्रमिवत् ज्ञानदुर्बला नेत्याह—अगाधेति। किमर्थं विचिन्त्यमिति हेतुगर्भविशेषणमाह-संसारेति। संसारकूपपतितानाम् अस्मादुत्तरणावलम्बम् ऊर्ध्वगमनलक्षणाधिश्रेणिहस्ताधारं किञ्च गेहञ्जुषां गेहाद्यदेहपोषणनिरतानामपि नो मनसि सदोदियान्निरन्तरमुदेतु त्वत्स्वरूपमिति शेषः ॥ ५८ ॥

इति श्रीभागवते दशमस्कन्धे पदरत्नावल्यां टीकायां सप्ततितमोऽध्यायः ॥ ७० ॥ अधिकपाठं ॥ ६ ॥

## एकसप्ततितमोऽध्यायः

श्रीशुक उवाच

तथानुगृह्य भगवान् गोपीनां स गुरुर्गतिः। युधिष्ठिरमथापृच्छत्सर्वांश्च सुहृदोव्ययम् ॥ १ ॥
त एवं लोकनाथेन परिपृच्छय सुसत्कृताः। प्रत्यूचुर्हृष्टमनसस्तत्पादेक्षाहतांहसः ॥ २ ॥

कुतोऽशिवस्त्वच्चरणाम्बुजासवं महन्मनस्तोमुखनिस्सृतं क्वचित्।
पिबन्ति ये कर्णपुटैरलं प्रभो देहम्भृतस्तत्कृतमुच्छ्वसन्ति हि ॥ ३ ॥
तं त्वात्मधामविबुधात्मगतिं त्र्यवस्थमानन्दसम्प्लवमखण्डविकुण्ठबोधम्।
कालोपसृष्टनिगमावपनात्तयोगमायाकृतिं परमहंसगतिं नताः स्मः ॥ ४ ॥
इत्युत्तमश्लोकशिखामणिं जनेष्वभिष्टुवत्स्वच्युतकौरवस्त्रियः।
समेत्य गोविन्दकथां मिथोऽग्रणन्नृलोकगीतां शृणु वर्णयामि ते ॥ ५ ॥

द्रौपद्युवाच।

हे वैदर्भ्यच्युतो भद्रे हे जाम्बवति कौशले। हे सत्यभामे कालिन्दि शैब्ये रोहिणि लक्ष्मणे ॥ ६ ॥
हे कृष्णपत्न्य एतन्नो ब्रूत वो भगवान्स्वयम्। उपयेमे यथालोकमनुकुर्वन् स्वमायया ॥ ७ ॥

रुक्मिण्युवाच

चैद्याय मार्पयितुमुद्यतकार्मुकेषु राजस्वशेषभटशेखरिताङ्घ्रिरेणुः।
निन्ये मृगेन्द्र इव भागमजावियूथात्तच्छ्रीनिकेतचरणाब्जसमर्चनाय ॥ ८ ॥

सत्यभामोवाच

यो मे सनाभिवधतप्तहृदा ततेन लिप्ताभिशापमपमार्ष्टुमुपाजहार।
जित्वर्क्षराजमथ रत्नमदात्स तेन नीतिच्छिदादिशत मां प्रभवेपि दत्ताम् ॥ ९ ॥

जाम्बवत्युवाच

आज्ञाय देहविकृतिन्निजनाथदैवं सीतापतिं त्रिनवहान्यमुनाभियुध्य।
ज्ञात्वावधीरणमुपाहरदर्हणम्मां पादौ प्रगृह्य मणिनाहममुष्य दासी ॥ १० ॥

कालिन्द्युवाच

तपश्चरन्तीमाज्ञाय स्वपादस्पर्शकाम्यया। सख्योपेत्याग्रहीत्पाणिं याहं तद्गृहमार्ज्जनी ॥ ११ ॥

मित्रविन्दोवाच

यो मां स्वयम्वरमुपेत्य विजित्य भूपान् निन्येश्वयूथमिवचात्मबलिं द्विपारिः।
भ्रातॄंश्च मेऽपकुरुतः स्वपुरंश्रियोगात्तस्यास्तु मेनुभवमङ्घ्र्यवनेजनाम्भः ॥ १२ ॥

नीलोवाच

सप्तोक्षणोऽतिबलवीर्यसुतीक्ष्णशृङ्गान् पित्रा कृतान् क्षितिपवीर्यपरीक्षणाय।
तान्वीरदुर्मदहनस्तरसा निगृह्य क्रीडन्बबन्ध ह यथा शिशवोऽजतोकान् ॥ १३ ॥

य इत्थं वीर्यशुल्कां मां दासीभिश्चतुरङ्गिणीम् । पथि निर्जित्य राजन्यान्निन्ये तद्दास्यमस्तु मे ॥ १४ ॥

भद्रोवाच

पिता मे मातुलेयाय स्वयमाहूय दत्तवान् । कृष्णे कृष्णाय तच्चित्तामक्षौहिण्या सखीजनैः ॥ १५ ॥
तस्य मे पादसंस्पर्शो भवेज्जन्मनि जन्मनि । कर्मभिर्भ्राम्यमाणाया येन तच्छ्रेय आत्मनः ॥ १६ ॥

लक्ष्मणोवाच

ममापि राज्यच्युतजन्मकर्म च श्रुत्वा मुहुर्नारदगीतमास ह ।
चित्तं मुकुन्दे किल पद्महस्तया । वृतः स्वये यस्तु विहाय लोकपान् ॥ १७ ॥
ज्ञात्वा मम मतं साध्वि पिता दुहितृवत्सलः । बृहत्सेन इति ख्यातस्तत्रोपायमचीकरत् ॥ १८ ॥
यथा स्वयम्वरे राज्ञि मत्स्यः पार्थेच्छया कृतः । अयं तु बहिराच्छन्नो दृश्यते स जले परम् ॥ १९ ॥
श्रुत्वैतत्सर्वतो भूपा आययुर्मत्पितुः परम् । सर्वास्त्रशस्त्रतत्त्वज्ञाः सोपाध्यायाः सहस्रशः ॥ २० ॥
पित्रा सम्पूजिताः सर्वे यथावीर्यं यथावयः । आददुः सशरं चापं वेद्धुं पार्षति मद्धियः ॥ २१ ॥
आदाय व्यसृजन् केचित्सज्जीकर्त्तुमनीश्वराः । आकोष्ट्यां ज्यां समाकृष्य पेतुरेकेऽमुना हताः ॥ २२ ॥
सज्जं कृत्वाऽपरे वीराः प्राग्ज्योतिमगधेश्वरौ । भीमो दुर्योधनः कर्णो नाविन्दंस्तदवस्थितिम् ॥ २३ ॥
मत्स्याभासं जले दृष्ट्वा ज्ञात्वा च तदवस्थितिम् । पार्थो यत्तोसृजद्बाणान्नाच्छिनत्पस्पृशे परम् ॥ २४ ॥
राजन्येषु निवृत्तेषु भग्नमानेषु मानिषु । भगवान् धनुरादाय सज्यं कृत्वाऽथ लीलया ॥ २५ ॥
तस्मिन् सन्धाय विशिखं मत्स्यं वीक्ष्य सकृज्जले । छिन्नेषुणाऽपातयत्तं सूर्ये चाभिजिति स्थिते ॥ २६ ॥
दिवि दुन्दुभयो नेदुर्जयशब्दोऽपतद्भुवि । देवाश्च कुसुमासारान् मुमुचुर्हर्षविह्वलाः ॥ २७ ॥
तद्रङ्गमाविशमहं कलनूपुराभ्यां पद्भ्यां दिशो भ्रमयती चलपेशलाभ्याम् ।
वृत्ते पिधाय परिधाय च कौशिकाग्र्ये सव्रीडहासवदना कबरीधृतस्रक् ॥ २८ ॥
उन्नीय वक्त्रमुरुकुण्डलकुन्तलत्विट् गण्डस्थलं शिशिरहासकटाक्षमोक्षम् ।
राज्ञो निरीक्ष्य परितः शनकैर्मुरारेरंसेऽनुरक्तहृदया विदधे स्वमालाम् ॥ २९ ॥
ततो मृदङ्गपटहा शङ्खभेर्यानकादयः । निनेदुर्नटनर्तक्यो ननृतुर्गायका जगुः ॥ ३० ॥
एवं वृते भगवति मायेशे नृपयूथपाः । न सेहिरे याज्ञसेनि ! स्पर्धिनो हृच्छयातुराः ॥ ३१ ॥
मां रथं स समारोप्य लसद्धयचतुष्टयम् । शार्ङ्गमुद्यम्य सन्नद्धस्तस्थावीशश्चतुर्भुजः ॥ ३२ ॥
दारुकश्चोदयामास काञ्चनोपस्करं रथम् । मिषतां द्विषतां राज्ञि वृकाणां मृगराडिव ॥ ३३ ॥
ते त्वसज्जन्त राजन्या निषेद्धुं पथि केचन । संयत्ता उद्धृतेष्वासा ग्रामसिंहा यथा हरिम् ॥ ३४ ॥
ते शार्ङ्गच्युतवाणौघैर्नुन्नबाह्वङ्घ्रिकन्धराः । निपेतुः प्रधने केचिदेके सन्त्यज्य दुद्रुवुः ॥ ३५ ॥
ततः पुरीं पतिजयभूत्यलङ्कृतां रविच्छदध्वजपटचित्रतोरणाम् ।
कुशस्थलीं दिवि भुवि चाभिसंस्तुतांतदासमाविशत्तरणिरिव स्वकेतनम् ॥ ३६ ॥
पिता मे पूजयामास सुहृत्सम्बन्धिबान्धवान् । महार्हवासोलङ्कारैः शय्यासनपरिच्छदैः ॥ ३७ ॥
दासीभिः सर्वसम्पद्भिर्भटेभरथवाजिभिः । आयुधानि महार्हाणि ददौ पूर्णस्य भक्तितः ॥ ३८ ॥
आत्मारामस्य तस्येमा वयं वै गृहदासिकाः । सर्वसङ्गनिवृत्त्याद्धा तपसा च बभूविम ॥ ३९ ॥

महिष्य ऊचुः

भौमं निहत्य सगणं युधि तेन रुद्धा ज्ञात्वाऽथ नः क्षितिजये हृतराजकन्याः ।
निर्मथ्य संसृतिविमोक्षमपि स्मरन्ती पादाम्बुजं परिणिनाय य आप्तकामः ॥ ४० ॥
न वयं साध्वि साम्राज्यं स्वाराज्यं भौज्यमप्युत । वैराज्यं पारमेष्ठ्यं वा आनन्त्यं वा हरेः पदम् ॥ ४१ ॥
कामयामह एतस्य श्रीमत्पादरजः श्रियः । कुचकुङ्कुमगन्धाढ्यं मूर्ध्ना वोढुं गदाभृतः ॥ ४२ ॥
व्रजस्त्रियो यद्वाञ्छन्ति पुलिन्द्यस्तृणवीरुधः । गावश्चारयतो गोपैः पादस्पर्शं महात्मनः ॥ ४३ ॥

इति श्रीभागवते महापुराणे दशमस्कन्धे एकसप्ततितमोऽध्यायः ॥ ७१ ॥

**श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली**

श्रोत्रादीनां भक्त्यतिशयजननायाविस्मरणायातीताध्यायेषु उक्तं कृष्णविक्रमं सङ्क्षेपतोनुक्रामत्यस्मिन्नध्याये, तत्रादावुपोद्घातं रचयति–तथेति । यथोपदिष्टं ज्ञानं सुदृढं स्यात्तथा ज्ञानोपदेशेनानुगृह्य गतिः मुक्तिलक्षणानन्ददत्वेनेत्याशयः । अव्यय-

मनामयं कुशलमित्यर्थः ॥ १ ॥ तस्य हरेः पादेक्षया चरणनिरीक्षणेन हतांहसः निर्मूलपापाः ॥ २ ॥ किम्विधां कथामूचुरिति, तत्राह—कुत इति । ये जनाः कर्णपुटैः महन्मनस्तोमुखनिस्सृतं महतां व्यासादीनां मनस्तः मनःपूर्वकं मुखकमलान्निस्सृतं गलितं त्वच्चरणाम्बुजासवं तव पादकमलकथामृतं क्वचित्कस्मिंश्चित्प्रसङ्गेपि अलम्पिवन्ति अलम्बुद्धिराहित्येन सेवन्ते तेषामशिवः अशुभः पन्थाः कुतः स्यादित्यन्वयः । कीदृशोऽशिवमार्ग इति तत्राह-देहम्भृत इति । देहम्भृतः उदरम्भराः तत्कृतमशिवमार्ग-प्राप्तं व्यसनं प्रेक्ष्य उच्छ्वसन्ति दीर्घं श्वसन्ति द्वाये देहभृतः शरीरिणः कर्णपुटैः त्वच्चरणाम्बुजासवं पिवन्ति तत्तस्य तव कृतं चरितमुच्छ्वसन्ति लोके उपदिश्य विकासयन्ति विस्तारयन्ति तेषामशिवः कुत इति ॥ ३ ॥ ननु नारायणचरणकमलामृत-पायिनाममङ्गलं नास्तीत्यनेन अन्येपामस्तीत्यायातं, तत्र भवन्तः के ? इति तत्राह—तन्त्वेति । तन्त्वानताः स्म इत्यन्वयः । यस्य पादाब्जसुधापायिनाममङ्गलं नास्ति तम् अस्य देवदत्तवदन्याधीनत्वे किमेतन्नमनफलमित्यत्राहुः आत्मधाम आत्मैव धाम गृहलक्षणम् आश्रयो यस्य स तथा तं स्वाश्रयमित्यर्थः । स्वाश्रयत्वं चेतोपि महत्ता देवाद्यन्यतमेन नियतेन किन्न स्यादित्यत्राहुः—विवुधेति । विवुधानामात्मा गतिः स्वभावगमकं स्वामिनमाश्रयं वा स्वभावगमकत्वं कथमत्राहुः त्र्यवस्थमिति तिस्रोऽवस्थाः जाग्रदाद्या यस्मात्स तथा तम् अनेन देवानां जाग्रल्लक्षणानिमिषस्वभावं दैत्यानां सुप्तिलक्षणाज्ञानस्वभावं मनुष्याणां स्वप्न-लक्षणमिश्रज्ञानस्वभावं गमयतीति ज्ञातव्यं नन्ववस्थात्रयनियन्तृत्वे तत्कृतं श्रमलक्षणं दुःखमनिवारितमापतेद्देवदत्तवदत्राहुः—आनन्देति । आनन्दानां सम्प्लवो महौघो यस्मिन् स तथा तं पूर्णानन्दमित्यर्थः । नन्वनुभवलक्षणसाधनाभावात्पाषाणानामपि पूर्णानन्दः किं न स्यादत्राहुः, अखण्डेति, अखण्डः निरन्तरः अविकुण्ठः विमिश्रः बोधो यस्य स तथा तं स्वाभिन्ननिष्कल्मष-ज्ञानमित्यर्थः । नन्वेवम्विधस्य जननं किमर्थमत्राहुः कालेति । कालेन गुणेनोपसृष्ट उत्पन्ना निगमो वेदादिशास्त्रनिचयस्तस्यावप-नाय पुनरभिव्यक्तिलक्षणाङ्कुरीकरणायात्ताऽङ्गीकृताः योगमायाकृतिः स्वरूपभूतेच्छाया देहो येन स तथा तं "आकारो देह आकृतिः" इति यादवः । उक्तार्थसर्वस्वे किं प्रमाणमत्राहुः—परमेति । परमहंसानां वेदान्तैकनिष्ठानां सन्न्यासिनां गतिर्ज्ञानं यस्मिन् स तथा तं भगवत्स्वरूपविषयं परमहंसज्ञानं प्रमाणमितरेषामित्यर्थः ॥ ४ ॥ अच्युतस्य कौरवाणां च स्त्रियः समेत्य एकत्र मिलित्वा यां कथामगृणन् तां वर्णयामि त्वं शृणु ॥ ५ ॥ प्रश्नप्रतिवचनपूर्वकां शृण्विति न गानवदत्रेति विवेकायाह द्रौपदीति । हे षोडशसहस्रकृष्णपत्न्यः ! पृथङ्नामग्रहणं बाहुल्यान्न कृतं स्वेच्छया लोकमज्ञजनमनुकुर्वन् अच्युतो भगवान् स्वयं वो युष्मान् यथा येन विधिना उपयेमे तं विधिमस्माकं ब्रूतेत्यन्वयः ॥ ६–७ ॥ राजसु जरासन्धादिषु मा माम् अशेषभटानामित्युपलक्षणं राज्ञां शेखरितः मूर्द्धसु शेखर इव अङ्घ्रिरेणुर्येन स तथा भागं तदर्थत्वेन क्लृप्तांशं न ग्राम्यभोगेच्छयेत्यत्राह–श्रीनिकेतेति । श्रीत्यनेन तद्भागं सूचयति अजानामवीनां यथा ॥ ८ ॥ सनाभेः सहोदरस्य प्रसेननाम्नो वधेन तत्सहृदा सन्तप्त हृदयेन ततेन तातेन पित्रा लिप्ताभिशापं कथितमिथ्यादोषम् अपमार्ष्टुम् परिहर्तुम् ऋक्षराजानं जाम्बवन्तं जित्वा रत्नमुपाजहार अथ तेन कृष्णेन भगवतानीतच्छित्प्राप्तभेदलक्षणापराधः स मे पिता मां प्रभवे कर्तुमकर्त्तुमन्यथाकर्तुं समर्थाय आदिशत दत्तवान् रत्नश्चा-दात् कीदृशीं मामन्यस्मै वाचा दत्तामपि यद्वा ऋक्षराजं जित्वा रत्नमाहरत् आहृत्य च तद्रत्नं मत्पित्रे अदात्तेन रत्नेन सह भगवतानीतच्छित्स पिता तस्मै प्रभवे आदिशतेत्यन्यत् समम् ॥ ९ ॥ देहविकृतिं परिमाणतो वर्णतश्च विलक्षणदेहं कृष्णं प्रत्यक्ष-दृष्ट्या आज्ञाय सम्यक् ज्ञात्वा अनेन श्रीकृष्णेन त्रिनवाहानि सप्तविंशतिदिनान्यभियुध्य एन कृष्णं निजनाथदेवं स्वकुलस्वामि-देवताभूतं सीतापतिं पुनर्ज्ञात्वा मे पिता जाम्बवान् अवधीरणम् अवज्ञानमर्हणम् अपराधपरिहारयोग्यं पूजासाधनं मां मणिना सह पादौ प्रगृह्योपाहरत् कृष्णायेति शेषः यद्वा अवधिरवधानं निश्चयज्ञानं यत्तस्येरणं येन सोवधीरणः दशरथपुत्रोवतीर्णोयमिति विशिष्टज्ञानजनक इत्यर्थः । तं पराजित इति वा पाठः अज्ञायेति च त्वममुष्याधुना कीदृशीत्यत्राह—अहमिति "अपि माषं मषं कुर्याच्छन्दोभङ्गं न कारयेत्" इति वचनात् त्रिनवहानीति यद्वोत्तराकारगुणस्तैर्ज्ञस्यकल्पतो गुण इत्यनेन पूर्वपरस्थानयोः गुणादेशेन रूपे सिद्धे भवति ॥ १० ॥ याऽहमिदानीं तद्गृहमार्जनी तां मां स्वपादस्पर्शकाम्यया तपश्चरन्तीं विज्ञाय सख्यार्जुनेन सहोपेत्य मम पाणिमग्रहीत् या कृष्णदेवता मम पाणिमग्रहीत् अहं तद्गृहमार्जनीति वा याय इति व्यत्ययेनान्वयो वा ॥ ११ ॥ यः कृष्णः द्विपारिः सिंहः श्वयूथं विजित्यात्मने क्लृप्तं बलिमुपहारमिव स्वयम्बरे भूपानुपेत्य विजित्य भ्रातॄन् अपकुरुतोऽपकुर्वतः सतः मां निन्ये स्वपुरश्चागात् अनुभवं जन्मनि जन्मनि मम तस्य हरेरङ्घ्रयवनेजनाम्भोस्त्वित्यन्वयः । अपकरणे हेतुः श्रिय इति सम्पदो हेतोः "श्रीः पद्मायां कान्तिसम्पदोः" इति तस्या अंशं मामिति वा ॥ १२ ॥ अत्यधिके बलवीर्ये सुतीक्ष्णानि शृङ्गाणि च येषां ते तथा तान् बलशक्तिवीर्यविक्रमदुर्मदान् घ्नन्तीति दुर्मदहनः अजतोकान् छागशिशून् ॥ १३ ॥ ततः किमकारीति तत्राह—य इति ॥ दासीभिः सह मां निन्येति ॥ १४ ॥ हे कृष्णे द्रौपदि ॥ १५ ॥ येन पादस्पर्शेनात्मनो मे तच्छ्रेयः स्यात् सपाद-स्पर्शो भवेत् ॥ १६ ॥ हे राज्ञि द्रौपदि ! यस्तु लोकपानिन्द्रादीन्विहाय पद्महस्तया स्वयम्वृतः तस्मिन्मुकुन्दे मम चित्तमासेत्य-न्वयः ॥ १७ ॥ द्रौपदीस्वयम्वरे द्रौपद्याः पार्थवरेच्छया मत्स्यः कृतो यथा तथा मे पिता तत्रोपायमचीकरत् इदमुपायमतो विशिनष्टि अयन्त्विति तु शब्देनान्याशक्यं दर्शयति अयं मत्स्यः दीर्घस्तूणशिखरेऽवलंबितो बहिराच्छन्नः व्यवहितसर्वाङ्गः अदर्श-नाद्वेधोऽसुकर इति तत्राह दृश्यत इति स मत्स्यः परं केवलं जले दृश्यते वेणुनालं निर्गतच्छायया जले प्रतिविम्बितत्वेन चक्षु-र्विषय इत्यर्थः । तदनेनाधोमुखे न जलेच्छायामवलोक्य वेद्धव्य इति पार्थकृतलक्षवधोदधिकासुकरमिति ज्ञायते ॥ १८–१९ ॥

उपाध्याया आचार्याः पुरोहिता वा ॥ २० ॥ हे पार्वति ! सिद्धे कार्ये भोगार्थं मयि धियो येषां ते मद्धियः ॥ २१ ॥ व्यसृजन् मुक्तवन्तः आकोष्ठ्यां धनुरग्रपर्यन्तम् ॥ २२ ॥ तस्य मत्स्यस्य स्वरूपावस्थितिं नाविन्दन्न ज्ञातवन्तः ॥ २३ ॥ मत्स्याभासं मत्स्याकरं यत्तोऽभयेन बाणानसृजत् नाच्छिनच्च तर्हि किं कृतमत्राह पस्पृश इति ॥ २४–२५ ॥ अभिजिति दिनमध्यमुहूर्ते सति ॥ २६ ॥ भुवि जयशब्दोऽपतत् व्याप्तोऽभूत् ॥ २७ ॥ दिश इति लक्षणया दिक्षु स्थितान् नृपान् भ्रमयती कामविकार-सूचकनानाचेष्टाकुलान् कारयन्ती तद्रङ्गं तत्स्वयम्बरस्थलं चलेन पादविक्षेपेण पेशलाभ्यां सुन्दराभ्यां वृत्ते स्वरूपे स्वेतरवस्तुभ्यो व्यावृत्तरूपे कौशिकाग्र्ये कृमिकोशोत्थतन्तुकृतवस्त्रश्रेष्ठे यद्वा वृते जघने परिधाय वृत्ते पीने स्तनद्वये पिधाय वा कबर्यां धृता स्रक् माला यस्याः सा तथा ॥ २८ ॥ शिशिरवत् तुषारवद्धवलो हासः स्निग्धो वा ॥ २९–३० ॥ हे याज्ञसेनि द्रौपदि ! ॥ ३१ ॥ ईशः शिवो नेत्याह चतुर्भुज इति ॥ ३२–३३ ॥ ग्रामसिंहाः सारमेयाः हरिं सिंहम् ॥ ३४ ॥ नुन्नाः छिन्नाः बाहवश्चाङ्घ्रयश्च कन्धराश्च येषां ते तथा प्रधने युद्धे ॥ ३५ ॥ पत्युः स्वामिनः कृष्णस्य जयभूत्या जयश्रिया अलङ्कृतां यथा जयलक्ष्मीरुत्कृष्टा तथाऽलङ्कृतां वा रविच्छदध्वजपटाश्च चित्रतोरणाश्च यस्यां सा तथा तां रविं छादयन्तीति रविच्छदाः आतपप्रतिष्टम्भकाः चित्रा नानावर्णास्तोरणाः स्वकेतनम् आत्मीयोदयशिखरिशिखरम् ॥ ३६–३७ ॥ पूर्णस्य अन्यपालकरहितस्य ॥ ३८ ॥ दासी-त्वञ्च तप आदिपुण्यनिचयेन प्राप्तमिति ज्ञापनायोक्तं सर्वेति अद्धा यथार्थभूतया "अद्धा प्रत्यक्षसत्ययोः" इति ॥ ३९ ॥ षोडश-सहस्रस्त्रियः स्वविवाहप्रकारं कथयन्ति—भौममिति । यः कृष्णः क्षितिजये भूमण्डलविजये राज्ञो निर्मथ्य हृतराजकन्याः ज्ञात्वा सगणं भौमन्निहत्य तेन नरकेण रुद्धाः निरोधलक्षणसंसृतेर्मोक्षं स्मरन्तीर्नोऽस्मान् पादाम्बुजं परिनिनाय समीपं प्रापयामास पादाम्बुजं सेवयितुमूढवान्वा न कामुकबुद्ध्या, कुतः ? आप्तकामः ॥ ४० ॥ वयमपि भगवत्पादरजस्सेवामन्तरेण नान्यदैश्वर्य-पदमाशास्महे इत्याहुः—न वयमिति । साम्राज्यमुत्तरदेशराज्यं स्वाराज्यं पूर्वदेशराज्यं भौज्यं दक्षिणदेशराज्यं वैराज्यं पश्चिम-देशराज्यं पारमेष्ठ्यं चक्रवर्तिपदम् आनन्त्यं सर्वदेशाधिपत्यं वा हरेः पदम् इन्द्रपदं वा साम्राज्यं चक्रवर्तिपदं स्वाराज्यं स्वर्ग-राज्यं भौज्यमन्तरिक्षराज्यं वैराज्यं पातालराज्यम् अणिमादिराज्यं वा पारमेष्ठ्यं ब्रह्मपदम् आनन्त्यं मोक्षं वा न कामयामहे किन्तु गदाभृतो हरेः पदं कामयामहे ॥ ४१ ॥ किमर्थमत्राह—एतस्येति । एतस्य गदाभृतः श्रीमत्पादरजः मूर्ध्नि वोढुं कीदृशं श्रियो लक्ष्म्याः कुचलिप्तकुङ्कुमरजोगन्धाढ्यम् ॥ ४२ ॥ व्रजस्त्रियः यत्पादरजो वाञ्छन्ति न केवलं व्रजस्त्रिय एव वाञ्छन्ति पुलिन्द्यादयोपीत्याहुः—पुलिन्द्य इति । गावः गाः ॥ ४३ ॥

इति श्रीभागवते महापुराणे दशमस्कन्धे विजयध्वजतीर्थकृतपदरत्नावल्याम् एकसप्ततितमोऽध्यायः ॥ ७१ ॥

## अथ द्विसप्ततितमोऽध्यायः

श्रीशुक उवाच

श्रुत्वा पृथा सुबलपुत्र्यथ याज्ञसेनी माधव्य इत्थमनुयाः परमप्रतीताः ।
कृष्णेऽखिलात्मनि हरौ प्रणयानुबन्धं सर्वा विसिस्म्युरलमश्रुकलाकुलाक्ष्यः ॥ १ ॥

इति सम्भाष्यमाणासु स्त्रीभिःस्त्रीषु नृभिर्नृषु । आययुर्मुनयस्तत्र कृष्णरामदिदृक्षया ॥ २ ॥
द्वैपायनो नारदश्च च्यवनो देवलोऽसितः । विश्वामित्रः शतानन्दो भारद्वाजोथ गौतमः ॥ ३ ॥
रामः सशिष्यो भगवान् वसिष्ठो गालवो भृगुः । पुलस्त्यः कश्यपोऽत्रिश्च मार्कण्डेयो बृहस्पतिः ॥ ४ ॥
द्वितस्त्रितश्चैकतश्च ब्रह्मपुत्रस्तथाङ्गिराः । अगस्त्यो याज्ञवल्क्यश्च वामदेवादयोऽपरे ॥ ५ ॥
तान् दृष्ट्वा सहसोत्थाय प्रागासीना नृपादयः । पाण्डवाः कृष्णरामौ च प्रणेमुर्लोकवन्दितान् ॥ ६ ॥
तानानर्चुर्यथा सर्वे सहरामोऽच्युतोर्चयत् । स्वागतासनपाद्यार्घ्यमाल्यधूपानुलेपनैः ॥ ७ ॥
उवाच सुखमासीनान् भगवान् धर्मगुप्तनुः । सदसस्तस्य महतो यतवाचोनुश्रृण्वतः ॥ ८ ॥

श्रीभगवानुवाच

अहो वयं जन्मभृतो लब्धं कार्त्स्न्येन तत्फलम् । देवानामपि दुष्प्रापं यद्योगेश्वरदर्शनम् ॥ ९ ॥
किं स्वल्पतपसां नृणामर्चायां देवचक्षुषाम् । दर्शनस्पर्शनप्रश्नप्रह्वपादार्चनादिकम् ॥ १० ॥
न ह्यम्मयानि तीर्थानि न देवा मृच्छिलामयाः । ते पुनन्त्युरुकालेन दर्शनादेव साधवः ॥ ११ ॥

नाग्निर्न सूर्यो न च चन्द्रतारकं न भूर्जलं खं श्वसनोऽथ वाङ्मनः ।
उपासिता भेदकृतो हरन्त्यघं विपश्चितो घ्नन्ति मुहूर्तसेवया ॥ १२ ॥
यस्यात्मबुद्धिः कुणपे त्रिधातुकेस्वधीः कलत्रादिषु भौम इज्यधीः ।
यत्तीर्थबुद्धिश्च जलेन कर्हिचिज्जनेष्वभिज्ञेषु स एव गोखरः ॥ १३ ॥

श्रीशुक उवाच

निशम्येत्थं भगवतः कृष्णस्याकुण्ठमेधसः । वचो दुरन्वयं विप्रास्तूष्णीमासन् भ्रमद्धियः ॥ १४ ॥
चिरं विमृश्य मुनय ईश्वरस्येशितव्यताम् । जनसङ्ग्रह इत्यूचुः स्मयन्तस्तं जगद्गुरुम् ॥ १५ ॥

ऋषय ऊचुः

यन्मायया तत्त्वविदुत्तमा वयं विमोहिता विश्वसृजामधीश्वरम् ।
यदीशितव्यायति गूढ ईहया अहो विचित्रं भगवद्विचेष्टितम् ॥ १६ ॥
अनीह एतद्बहुधैक आत्मना सृजत्यवत्यत्ति न बध्यते यथा ।
भौमैर्हि भूमिर्बहुनामरूपिणी अहो विभूम्नश्चरितं विडम्बनम् ॥ १७ ॥
अथापि काले स्वजनाभिगुप्त्यै बिभर्षि सत्त्वं खलनिग्रहाय ।
स्वलीलया वेदपथं सनातनं वर्णाश्रमात्मा पुरुषः परो भवान् ॥ १८ ॥

ब्रह्म ते हृदयं शुक्लं तपःस्वाध्यायसंयमैः । यत्रोपलब्धं सुव्यक्तमव्यक्तं च ततःपरम् ॥ १९ ॥
तस्माद्ब्रह्मकुलं ब्रह्मन् ! शास्त्रयोनेस्त्वमात्मनः । सभाजयसि सद्धाम तद्ब्रह्मण्यगुणो भवान् ॥ २० ॥
अद्य नो जन्मसाफल्यं विद्यायास्तपसो दृशः । त्वया सङ्गम्य सद्गत्या यत्त्वं नः श्रेयसां परः ॥ २१ ॥
नमस्तस्मै भगवते कृष्णायाकुण्ठमेधसे । स्वयोगमाययाच्छन्नमहिम्ने परमात्मने ॥ २२ ॥
न यं विन्दन्त्यमी भूपा एकारामाश्च वृष्णयः । मायाजवनिकाच्छन्नमात्मानं कालमीश्वरम् ॥ २३ ॥

तस्याद्य ते ददृशिमाङ्घ्रिमघौघमर्षतीर्थास्पदं हृदि धृतं सुविपक्वयोगैः ।
उत्सिक्तभक्त्युपहताशयजीवकोशा आपुर्भवद्गतिमथानुगृहाण भक्तान् ॥ २४ ॥

श्रीशुक उवाच

इत्यनुज्ञाप्य दाशार्हं धृतराष्ट्रं युधिष्ठिरम् । राजर्षिवर्यांस्तान् गन्तुं मुनयो दधिरे मनः ॥ २५ ॥
तद्वीक्ष्यताननुव्रज्य वसुदेवो महायशाः । प्रणम्य चोपसङ्गृह्य बभाषेदं सुयन्त्रितः ॥ २६ ॥

वसुदेव उवाच

नमो वः सर्वदेवेभ्यो ऋषयः श्रोतुमर्हथ । कर्मणा कर्मनिर्हारो यथा स्यान्नस्तदुच्यताम् ॥ २७ ॥

नारद उवाच

नातिचित्रमिदं विप्रा वसुदेवो बुभुत्सया । कृष्णं मत्वाऽर्भकं यन्नः पृच्छति श्रेय आत्मनः ॥ २८ ॥
सन्निकर्षो हि मर्त्यानामनादरणकारणम् । गाङ्गं हित्वा यथान्योऽम्भस्तत्रत्यो याति शुद्धये ॥ २९ ॥
यस्यानुभूतिः कालेन लयोत्पत्त्यादिनास्य वै । स्वतोऽन्यस्माच्च गुणतो न कुतश्चन रिष्यति ॥ ३० ॥

तं क्लेशकर्मपरिपाकगुणप्रवाहैरव्याहतानुभवमीश्वरमद्वितीयम् ।
प्राणादिभिः स्वविषयैरुपगूढमज्ञो मेने ससूर्यमिव मेघहिमोपरागैः ॥ ३१ ॥

अथोचुर्मुनयो राजन्नाभाष्याऽऽनकदुन्दुभिम् । सर्वेषां शृण्वतां राज्ञां तथैवाच्युतरामयोः ॥ ३२ ॥
कर्मणा कर्मनिर्हार एष साधुनिरूपितः । यच्छ्रद्धया यजेद्विष्णुं सर्वयज्ञेश्वरं मखैः ॥ ३३ ॥
चित्तस्योपशमो यो वै कविभिः शास्त्रचक्षुषा । दर्शितः सुगमो योगो धर्मश्चात्ममुदावहः ॥ ३४ ॥
अयं स्वस्त्ययनः पन्था द्विजातेर्गृहमेधिनः ।
यच्छ्रद्धयाप्तवित्तेन शुक्लेनेज्येत पूरुषम् । वित्तैषणां यज्ञदानैर्गृहैर्दारसुतैषणाम् ॥ ३५ ॥
आत्मलोकैषणामेवं कालेन विसृजेद्बुधः । ग्रामे त्यक्तैषणाः सर्वे ययुर्धीरास्तपोवनम् ॥ ३६ ॥
ऋणैस्त्रिभिर्द्विजो जातो देवर्षिपितॄणां प्रभो । यज्ञाध्ययनपुत्रैस्तान्यनिस्तीर्य त्यजन् पतेत् ॥ ३७ ॥
ब्रह्मचर्यसुताभ्यां वै ऋषिपित्रोर्महामते ! यज्ञैर्देवर्णमुन्मुच्य निर्ऋणोऽशरणो भवेत् ॥ ३८ ॥
वसुदेव भवान्नूनं भक्त्या परमया हरिम् । जगतामीश्वरं भेजे स यद्वां पुत्रतां गतः ॥ ३९ ॥

**इति श्रीभागवते महापुराणे दशमस्कन्धे उत्तरार्द्धे विजयध्वजतीर्थकृतपदरत्नावल्यां द्विसप्ततितमोऽध्याय. ॥ ७२ ॥**

**श्रीविजयध्वजतीर्थकृता पदरत्नावली**

हरेर्ज्ञानिप्रियत्वं यज्ञस्य तदेकविषयत्वं तत्प्रीतेर्मुक्तिसाधनत्वं पुत्रमित्रादिस्नेहस्य संसारमूलत्वमित्यादिकमध्यायद्वये कथयति; तत्र व्यासादिमुनीनाम् आगमनं वक्तुं पृथादिस्त्रीणां सन्तोषोद्रेकम् कथयति—पृथेत्यादिना । या माधव्यः माधवपत्न्यः

तासां कृष्णे प्रणयानुबन्धं दृष्ट्वेतिशेषः। विसिस्म्युः विस्मिताः अभवन्नित्यन्वयः। सत्यादीनां भक्तिप्रवाहं दृष्ट्वा वा ॥ १ ॥ इदानीमृषीणामागमनप्रकारं वक्ति—इतीति ॥ २–४ ॥ द्वितस्त्रितश्चैव ताः सहोदराः "त्रितः कूपेऽवहितो देवान् हवत ऊतये" इति श्रुतेः ॥ ५ ॥ प्रागुत्थायाथानर्चुः नमनादिनेतिशेषः ॥ ६–७ ॥ धर्मगुप् धर्मगोप्त्री तनुर्यस्य स तथा ॥ ८ ॥ तत्फलं जन्मफलम् ॥ ९ ॥ नृणां युष्मद्दर्शनादिकं दुष्प्रापमिति किं वक्तव्यमित्याह स्वल्पेति। अर्चायामिति सप्तमी प्रथमार्थे प्रतिमैव देव इति चक्षुर्दर्शनं येषां ते तथा "अर्चा पूजाप्रतिष्ठयोः" इति ॥ १० ॥ ननु, बहिर्मुखानां नृणां तीर्थादिदर्शनादेर्जन्मनः साफल्यं स्यात्किं साधुदर्शनादिनेति तत्राह–त इति। तत्र सन्निहितास्ते देवा अप्युरुकालेन कालक्षेपं कृत्वैव पुनन्ति नतु तदानीमेव तत्र किङ्कारणमित्यस्येदमेवोत्तरं कलनमेव कालः ज्ञानं तावददन्तः "कल ज्ञाने" इतिधातुः। उरुणा गुरुणोपदिष्टज्ञानेन तत्स्वरूपं तन्मन्त्रतदङ्गाचरणादिकं ज्ञात्वा समुपास्य तद्दर्शनं प्राप्य तत्प्रसादेनाघक्षय इत्यतो गुरूपदेशः कारणमित्यर्थः। प्रकृते किमनेनेत्यत्राह—दर्शनादिति। साधवः स्वदर्शनादन्यथाज्ञानमपगमयन्ति एवशब्दः गुरूपदेशं व्यवच्छिनत्ति ॥ ११ ॥ नन्ववद्यनिमित्तमन्यथाज्ञानं जायते तत्राज्यादयः स्वदर्शनादघं क्षपयित्वाऽन्यथाज्ञानं नाशयन्ति ततो जन्म सारूप्यमिति तत्राह–नेति। कस्याघं न हरन्तीत्यत उक्तं भेदकृतः अन्यथाज्ञानिनः पुंसः दाहकत्वादिशक्तिदर्शनायमेवाग्निशब्दप्रवृत्तिहेतुरित्यन्यथाज्ञानं बहिर्मुखानां जायते मनः मनोभिमानीदेवः "मनोब्रह्मेत्युपास्त" इति श्रुतिः। एवकारेण कियत्कालोव्यवच्छिन्न इति तत्राह–मुहूर्तेति। अत्र प्रतीतार्थमपहाय तत्र सन्निहितदेवताकल्पनं निष्प्रमाणकमित्यादिशङ्का "प्राकृतैर्दृश्यमानन्तु न द्रवं तीर्थमुच्यते" इत्यादिना परिहर्तव्या भेदस्यान्यथाज्ञानत्वञ्च भिन्नस्याभेदतो दृष्टिरिति प्रमाणसिद्धं नन्वियं व्यवस्था कुतः ऋष्यादिभ्यो देवानाम् उत्तमत्वादित्यतः—

"उत्तमा अपि देवेशा अचरान्विदुषो नृणाम्। पूजायै सम्प्रयच्छन्ति परोक्षत्वप्रिया यतः॥"

इत्यादेः ॥ १२ ॥ इतोपि विद्वज्जनपूजा नृभिः कार्येत्याशयेनाह—यस्येति। यस्य पुरुषस्य त्रिधातुके प्राधान्यात्पृथिव्यप्तेजःकृते वातपित्तश्लेष्माकुले वा कुणपेशववदचेतनदेहे आत्मबुद्धिः अहमिति ज्ञानं देहोऽहमित्यन्यथाज्ञानमित्यर्थः। यस्य च कलत्रादिषु असद्भार्यादिषु स्वधीः मदीया एते अहमेषां भर्ता नान्य इति स्वकीयत्वबुद्धिः विषयभोगलौल्यं तत्र निमित्तं यस्य भौमे भूविकारे शिलादौ इज्यधीः पूज्यबुद्धिः यद्यस्य जले द्रवरूपे तीर्थबुद्धिः अघक्षयबुद्धिः यस्याभिज्ञेषु कर्हिचिदपि न पूज्यत्वबुद्धिः स गोखरः गवि पृथिव्यां गर्दभः नापरः गोस्पर्शनादिना शुद्धिः स्यादिति गौश्चासौ खरश्चेति विग्रहो न सङ्गच्छत इत्युक्त एवार्थः ॥ १३ ॥ अकुण्ठमेधसः अप्रतिहतज्ञानस्य दुरन्वयम् अन्वेतुमशक्यं दुर्ज्ञेयमित्यर्थः। भ्रमन्ती अनवस्था धीर्येषां ते तथा ॥ १४ ॥ मुनयः किमकुर्वन् पुनरिति तत्राह–चिरमिति। ईश्वरस्य जगन्नियन्तुरीशितव्यतां विद्वज्जनान् प्रति दास्यभावं चिरं विमृश्य अयं जनसङ्ग्रहः उन्मार्गप्रवृत्तिरिवाचारलक्षण इति मत्वा तं जगद्गुरुमूचुरित्यन्वयः ॥ १५ ॥ अहो हरेर्विडम्बनमिति कुतूहलादुत्पन्नमन्दस्मितं कुर्वन्तः किं स्वाश्रमगमनमुत बालककथामाहोस्वित्तत्त्वविषयं किञ्चिदूचुरित्याशङ्क्य तत्त्वविषयमेवेत्याह–यन्माययेति। तत्त्वविदुत्तमाः वयं यस्य मायया विमोहिताः स भवानीहया लोकचेष्टया गूढः ईशितव्यायति अनीशवदाचरतीति यस्मादहो भागवतो विचेष्टितं विचित्रम् "लोहितादिडाड्भ्यः क्यष्" ( ३।१।१३ ) इति क्यष् प्रत्ययः ॥ १६ ॥ चेष्टायामतर्क्यत्वमुपपादयति—अनीह इति। आत्मना परप्रेरणामन्तरेण यथा भूमिः भौमैः स्वविकृतैः पदार्थैर्बहुनामरूपिणी कार्यरूपेण बध्यते यथा तथा भवान्न बध्यत इत्यन्वयः यो भवाननीहः कूटस्थ एतज्जगद्बहुधा सृजत्यवत्यत्तीति तस्मादहो विभूम्नश्चरितं कीदृशं विडम्बयतीति विडम्बनम् ॥ १७ ॥ यद्यपि लोकविडम्बनशक्त्या मोहयसि तथापि काले सज्जनोपप्लवसमये वेदपथञ्च बिभर्षि वर्णाश्रमात्मा वर्णाश्रमस्थापनाचार्यः ॥ १८ ॥ यतो वेदमार्गप्रणेता ततस्ते तव ब्राह्मणकुलं शुक्लत्वञ्च कस्मादित्यत्राह—यत्रेति। यत्र ब्राह्मणकुले अव्यक्तं परं ब्रह्म सुव्यक्तं व्यवधानमन्तरेण उपलब्धं दृष्टं यत्तस्मात् शास्त्रयोनेः वेदप्रतिपाद्यस्यात्मनस्तव सद्धाम प्रशस्तं स्थानं यतः सम्भावयति यत्तस्माद्भवान् ब्रह्मण्यगुणः ब्राह्मणप्रियत्वगुणलक्षणशिखामणिः ॥१९॥ न केवलं जन्मन एव साफल्यमासीत् किन्तु विद्यादेरपीति तत्र निमित्तं त्वया सङ्गम्येति त्वं नः त्वत्सङ्गत्या श्रेयसां सकाशात्परः पुरुषार्थ इति यत् ॥२१–२२॥ एकस्त्वमेवारामः क्रीडावनं येषां ते तथा ॥२३॥ अघौघं मर्षयति नाशयतीत्यघौघमर्षं तादृशस्य तीर्थस्य गङ्गाशब्दवाच्यस्यास्पदं स्थिराश्रयं सुष्ठु विपक्वाः परिपाकं प्राप्ताः योगाध्यानलक्षणाः तैः उत्सिक्तया उद्रिक्तया भक्त्या उपहृतः सम्यगुन्मूलित आशयः स्थानं यस्य स तथा स जीवकोशः जीवाख्यसन्निधानवस्थानीयं लिङ्गशरीरं येषां ते तदुत्सिक्तभक्त्युन्मूलितस्थानलिङ्गशरीराः भवतो गतिं स्थानं वैकुण्ठलक्षणम् ॥ २४–२५ ॥ उपसङ्गृह्य अनुज्ञामिति शेषः। बभाष इदं "व्यत्ययो बहुलम्" इति सूत्रात् बभाषे इदमिति छान्दसः ॥ २६ ॥ सर्वे देवा येषु सन्निहितास्ते सर्वे देवास्तेभ्यः सर्वत्र देवो देवनं प्रकाशनं येषां ते तथा तेभ्य इति वा निर्हारो मूलच्छेदः ॥ २७ ॥ आत्मनः स्वस्य श्रेयः शिवं न पृच्छतीति यत्तदिदं नातिचित्रं मर्त्यस्वभावादितिशेषः ॥२८॥ कोयं मर्त्यस्वभाव इति तत्राह–सन्निकर्ष इति। तत्र गङ्गातीरे स्थितोन्यः पृथक्जनः बालिशः शुद्धं यद्गाङ्गं गङ्गासम्बन्धिजलं हित्वाऽन्याम्भः तटाकादिस्थं जलं यथा याति तथायं विचार इत्यर्थः ॥२९॥ यस्यानुभूतिः स्वरूपचैतन्यं कालेनास्य जगतो लयोत्पत्त्यादिना तदन्तःपातित्वेन स्वता स्वनिमित्तेनान्यस्मात्सत्वादिगुणाच्च कुतश्चनान्यतोऽधर्मतो न रिष्यति न हिंसितं न नष्टं स्यात् "रिष हिंसायाम्" इतिधातुः ॥ ३० ॥ अज्ञः अज्ञानिवद्वसुदेवः स्वविषयैः स्वेन गृह्यमाणैः

प्राणादिभिरिन्द्रियादिभिः प्राकृतैर्गूढं तेन इत्यन्वयः। क्लेशैरविद्यास्मितरागद्वेषाभिनिवेशैः कर्मपरिपाकैः पुण्यापुण्यफलैस्त्या-ज्यानुभोगैः परितापेतिपाठे अध्यात्मिकाभिधेयैर्विकारैः भौतिकैर्गुणप्रवाहैः सृष्ट्यादिभिरव्याहतोऽनभिभूतोनुभवः अनुभावो माहात्म्यं यस्य स तथा तम् अत्र हेतुगर्भविशेषणद्वयमाह—ईश्वरमद्वितीयमिति उपरागो राहुणा मेघादिभिराच्छन्नप्रकाशरूपं सूर्यमप्रकाशं मन्यते यथा तथेति ॥ ३१ ॥ प्रश्नप्रतिवचनमकृत्वा यत् किञ्चित्कथनं किं केन सङ्गतमिति मन्दाशङ्कां परिहर्तुमाह–अथेति ।३२। साधुभिः विद्वद्भिर्निरूपितः ॥ ३३ ॥ कर्मणा कर्मनिर्वापणं पङ्काम्भसा पङ्कप्रक्षालनमिवानुपपन्नमित्याशङ्क्य ब्रह्मार्पणबुद्ध्या-नुष्ठितं सत्समर्थं भवति चिकित्सितद्रव्यमिवेत्याशयेनाह–चित्तस्येति। "कविभिः शमोपनिष्ठता बुद्धेः" इति शास्त्रचक्षुषा यश्चित्त-स्योपशमो भगवदेकनिष्ठालक्षणो दर्शितः सुगमो योग उपायश्चिकित्सालक्षणः आत्मनः परमात्मनो मुदावहः सन्तोषजनको धर्मश्चाहिंसालक्षणः कर्मनिर्वापणसाधनम् ॥ ३४ ॥ उक्तं निगमयति–अयमिति। अयं ब्रह्मार्पणबुद्ध्यानुष्ठितः स्वस्तिमङ्गलस्य निष्पापस्य मोक्षस्य वा अयनमाश्रयः द्विजातेस्त्रैवर्णिकस्य गृहमेधिनः गृहस्थस्य आप्तवित्तेन न्यायार्जितधनेन शुक्लेन निर्मलेन ॥ ३५ ॥ इदानीं शुद्धान्तःकरणस्य सन्यासप्रकारं निरूपयति–वित्तैषणामिति। बुधः संसारस्यासारतां विद्वान् यज्ञदानै-रनुष्ठितैर्वित्तैषणां वित्तेच्छां विसृजेदिति सर्वत्र योज्यं गृहैर्गृहस्थाश्रमैः सहृदारसुतैषणाम् आत्मन इहामुत्र लोके धीरास्त्यागशक्ति-मन्तः ग्रामे ग्राम्यविषये त्यक्तैषणा इत्यनेन ब्रह्मचारिणामपि सन्यासम् सूचयति "यदहरेव विरजेत्तदहरेव प्रव्रजेत्" इति ॥ ३६ ॥ तत्रातिशयितवैराग्याभावे एवम्विधस्य सन्यासानधिकार इति स्मार्तपक्षमाहुः—ऋणैरिति। त्रिभिर्ऋणैर्युक्तो जातः तानृणविशेषा-ननिस्तीर्य गृहादित्यजधः पतेत् ऋणवीजभर्जनवैराग्याग्न्यभावात् इति शेषः ॥ ३७ ॥ तत्र ऋणनिवारणप्रकारमाह–ब्रह्मचर्येति। अनेन वेदाध्ययनं सूचयति अशरणः गृहरहितः ॥ ३८ ॥ कर्मनिर्हारणप्रश्नस्य प्रतिवचनमुक्त्वा जनसङ्ग्रहणायेदं त्वया पृष्टम-स्माभिरिति तदनुसृत्य प्रोक्तं भवतस्तज्जन्मान्तरानुष्ठानशुद्धस्य नेदानीं कर्तव्यमस्तीति ममत्वं ध्वनयन्तः सम्बोधयन्ति–वसु-देवेति। नूनं निश्चयः यद्यस्मात् भेज इत्यनेन लिटा अनद्यतनेन परोक्षवाचिना बहूनि पुरातनानि हरिभक्तिनिमित्तानि जन्मानि सूचितानि "बहूनां जन्मनामन्ते ज्ञानवान्मां प्रपद्यते" इतिस्वोक्तेः ॥ ३९ ॥

इति भागवते महापुराणे दशमस्कन्धे विजयध्वजतीर्थटीकायां द्विसप्ततितमोऽध्यायः ॥ ७२ ॥ अधिकपाठे ॥ ८ ॥

## त्रिसप्ततितमोऽध्यायः

श्रीशुक उवाच

इति तद्वचनं श्रुत्वा वसुदेवो महामनाः। तानृषीनृत्विजो वव्रे मूर्ध्नानम्योपसृत्य च ॥ १ ॥
त एवमृषयो राजन् वृता धर्मेण धार्मिकम्। तस्मिन्नयाजयन् क्षेत्रे मखैरुत्तमकल्पकैः ॥ २ ॥
तद्दीक्षायां प्रवृत्तायां वृष्णयः पुष्करस्रजः। स्नाताः सुवाससो राजन् राजानः सुष्ठ्वलङ्कृताः ॥ ३ ॥
तन्महिष्यश्च मुदिता निष्ककण्ठ्यः सुवाससः। दीक्षाशालामुपाजग्मुरालिप्ता वस्तुपाणयः ॥ ४ ॥
नेदुर्मृदङ्गपटहशङ्खभेर्यानकादयः। ननृतुर्नटनर्तक्यस्तुष्टुवुस्तत्र मागधाः ॥ ५ ॥
जगुः सुकण्ठ्यो गन्धर्वाः सुगीतं सह भर्तृकाः। तमभ्यषिञ्चन्विधिवद्भक्तमव्यग्रमृत्विजः ॥ ६ ॥
पत्नीभिरष्टादशभिः सोमराजमिवोडुभिः।
ताभिर्दुकूलवलयहारनूपुरकुण्डलैः। स्वलङ्कृताभिर्विभवैर्दीक्षितो जनसम्वृतः ॥ ७ ॥
तस्यर्त्विजो महाराज नूत्नकौशेयवाससः। सप्तदशविरेजुस्ते यथा वृत्रहणोऽध्वरे ॥ ८ ॥
तदा रामश्च कृष्णश्च स्वैस्वैर्बन्धुभिरन्वितौ। रेजतुः स्वसुतैर्दारैर्जीवेशौ स्वविभूतिभिः ॥ ९ ॥
ईजेऽनुयज्ञं विधिना अग्निहोत्रादिलक्षणैः। प्राकृतैर्वैकृतैर्यज्ञैर्द्रव्यज्ञानक्रियेश्वरम् ॥ १० ॥
अथर्त्विग्भ्योऽददात्काले यथाम्नातं सुदक्षिणाः। स्वलङ्कृतेभ्योलङ्कृत्य गोभूकन्यामहाधनाः ॥ ११ ॥
पत्नीसंयाजावभृथैश्चरित्वाथ महर्षयः। सस्नूरामह्रदे विप्रा यजमानपुरस्सराः ॥ १२ ॥
स्नातोऽलङ्कारवासांसि वन्दिभ्योऽदात्तथा स्त्रियः। ततः स्वलङ्कृतान् वर्णान्साश्वभ्योन्नेन पूजयत् ॥ १३ ॥
बन्धून् सदारान् ससुतान् पारिबर्हेण भूयसा। विदर्भकोशलकुरून् काशिकैकेयसृञ्जयान् ॥ १४ ॥
सदस्यर्त्विक्सुरगणानृभूतसूतचारणाः। श्रीनिकेतमनुप्राप्य शंसन्तः प्रययुः क्रतुम् ॥ १५ ॥
धृतराष्ट्रोनुजो द्रोणो भीष्मो द्रौणिः कृपस्तथा। नारदो भगवान् व्यासः सुहृत्सम्बन्धिबान्धवाः। १६ ।
बन्धून् परिष्वज्य यदून् सौहृदक्लिन्नचेतसः। ययुर्विरहकृच्छ्रेण स्वदेशांश्चापरे जनाः ॥ १७ ॥
नन्दस्तु सहगोपालैर्महत्या पूजयार्चितः। कृष्णरामोग्रसेनाद्यैर्न्यवसद्बन्धुवत्सलः ॥ १८ ॥
वसुदेवोञ्जसोत्तीर्य मनोरथमहार्णवम्। सुहृद्वृतः प्रीतमना इदमाह करे स्पृशन् ॥ १९ ॥

वसुदेव उवाच

भ्रातरीशकृतः पाशो नृणां यः स्नेहसंज्ञितः। तं दुस्त्यजमहं मन्ये सुराणामपि योगिनाम् ॥ २० ॥
अस्मास्वप्रतिकल्पोयं यत्कृतं ज्ञानसत्तमैः। मैत्र्यर्पिता फलावापि न निवर्तेत कर्हिचित् ॥ २१ ॥
प्रागकल्पास्तु कुशलं भ्रातर्वो नाचरेमहि। अधुना श्रीमदान्धाक्षा नपश्याम पुरःसतः ॥ २२ ॥
माराज्यश्रीरभूत्पुंसः श्रेयस्कामस्य मानद। स्वजनान् भृत्यबन्धून् वा न पश्यति ययान्धदृक् ॥ २३ ॥
एवं सौहृदशैथिल्यचित्त आनकदुन्दुभिः। रुरोद तत्कृतां मैत्रीं स्मरन्नश्रुविलोचनः ॥ २४ ॥
नन्दस्तु सख्युः प्रियकृत्प्रेम्णा गोविन्दरामयोः। अद्यश्व इति मासांस्त्रीन्यदुभिर्मानितोऽवसत् ॥ २५ ॥
ततः कामैः पूर्यमाणः सव्रजः सहबान्धवः। परार्ध्याभरणक्षौमनानानर्घ्यपरिच्छदैः ॥ २६ ॥
वसुदेवोग्रसेनाभ्यां कृष्णार्जुनबलादिभिः। आदाय पारिबर्हन्तं यापितो यदुभिर्ययौ ॥ २७ ॥
तदा गोप्यश्च गोपाश्च गोविन्दचरणाम्बुजे। मनः क्षिप्तं पुनर्हर्तुमनीशा मथुरां ययुः ॥ २८ ॥
द्रोणो भीष्मोङ्गराजश्च बाह्लीकविदुरादयः। सपुत्रो धृतराष्ट्रश्च जग्मुः स्वंस्वं निकेतनम् ॥ २९ ॥
अन्ये च सर्वराजानो देवयात्रार्थमागताः। गते मासत्रये भूयः स्वानेव विषयान् ययौ ॥ ३० ॥
पाण्डवाश्च महात्मानः पृथा च नृपसत्तम। अनुज्ञाताः केशवेन बाष्पगद्गदभाषिणः ॥ ३१ ॥
शक्रप्रस्थं ययुः सर्वे स्वजनैः परिवारिताः। बन्धुषु प्रतियातेषु वृष्णयः कृष्णदेवताः ॥ ३२ ॥
परिवार्य हृषीकेशं ययुर्द्वारवतीं पुरीम् ॥ ३३ ॥

इति श्रीभागवते महापुराणे दशमस्कन्धे त्रिसप्ततितमोऽध्यायः ॥ ७३ ॥

श्रीविजयध्वजतीर्थकृता पदरत्नावली

धर्मेण काल्पोक्तेन विधिना उत्तमकल्पकैः राजसूयसमैः ईषदसमाप्तौ कल्पब्देश्यदेशीयर इतिसूत्रात् ॥ १–२ ॥ दीक्षा स्याद्व्रतसङ्ग्रह इति पुष्करस्रजः कमलबीजमालाऽवलम्बिकण्ठाः ॥ ३ ॥ आलिप्ताश्चन्दनेनेतिशेषः। हिरण्यादिवस्तुपाणयः—

"हिरण्यं रजतं वापि गृहीत्वा क्रमुकंफलम्। शालां विशेद्यज्ञपत्नी शपेयुस्त्वन्यथा सुराः" ॥

इतिवचनात् ॥ ४–५ ॥ अव्यग्रमव्याकुलम् ॥६–७॥ होता पोता नेष्टा प्रशास्ता अध्वर्युराग्नीध्रो मैत्रावरुण इत्येवमादयो ऋत्विजः षोडश दीक्षितस्त्वैक इति सप्तदश सदस्येन वा सह वृत्रहणः इन्द्रस्य यज्ञे ॥ ८ ॥ जीवानामीशौ स्वरूपभूताभिर्विभूतिभिः मूर्तिमतीभिः—

"अणिमा महिमा गरिमा लघिमा प्राप्तिरेव च। ईशित्वं च वशित्वञ्च तथा प्राकाम्यमेवच" ॥

इतिसमाख्याताभिः नानाविधचेतनराशिसमुदायेन तत्तद्योग्यतानुसारेण सभाजनसमयेऽपेक्षिताभिः ॥ ९ ॥ द्रव्यज्ञानोपपदयोः क्रिययोर्यज्ञलक्षणयोः ईश्वरं द्रव्ययज्ञदानयज्ञयोः स्वामिनमित्यर्थः। कथमीज इति तत्राह—अनुयज्ञेति ॥ अनुशब्दो वीप्सावचनः, तन्तं यज्ञं प्रति विधिना कल्पोक्तप्रकारेण अग्निहोत्रादिलक्षणैः अग्निहोत्रेष्ट्यादिचिह्नैः प्राकृतैर्यज्ञैः सप्तक्रतुभिः वैकृतैर्यज्ञैः सौत्रामण्यादिभिरुत्तरक्रतुभिः ॥ १० ॥ यथाम्नातं यथाकथितं महान्ति धनानि यासां तास्तथा ॥ ११ ॥ पत्नीसंयाजः पत्नीभिः क्रियमाणः काश्चन देवता उद्दिश्य यजनम् अवभृथः समाप्तिः कर्मस्थानम् उभयत्रेष्टिविशेषाश्च भवन्ति तैश्चरित्वा तांश्च कृत्वेत्यर्थः ॥ १२ ॥ पूजयदपूजयत् स्त्रियः स्त्रीभ्यः ॥ १३ ॥ पारिबर्हेण पूजाद्रव्येण विदर्भादींश्चापूजयदितिशेषः ॥ १४ ॥ सदस्यर्त्विगादयः प्रययुरित्यन्वयः ॥ १५ ॥ अनुजो विदुरः ॥ १६–२० ॥ युष्माभिर्ज्ञानिन सत्तमैरस्मासु यत्कृतं सोयं स्नेहपाशोऽप्रतिकल्पः असदृशः याचास्माभिर्युष्मास्वर्पिता मैत्री अफला वापि मिष्फलात्रापि कर्हिचिदपि न निवर्तेत निवृत्यास्मत्त इति शेषः ॥ २१ ॥ एतदेव विवृणोति–प्रागिति। हे प्रातः! प्राग्वः कुशलं नाचरेमहि, कुतः? अकल्पा असमर्थाः कंसेनोपद्रुतत्वात् अधुना श्रीमदान्धाक्षाः वयं पुरस्तः परः स्थितान्नपश्याम इति यदत इति शेषः ॥ २२ ॥ यया राजश्रिया ॥ २३ ॥ सौहृदेन स्नेहेन शैथिल्यं शिथिलस्वभावं प्राप्तं चित्तं यस्य स तथा ॥ २४–३३ ॥

इति श्रीभागवते महापुराणे दशमस्कन्धे त्रिसप्ततितमोऽध्यायः ॥ ७३ ॥ अधिकपाठे ॥ ६ ॥

## चतुस्सप्ततितमोऽध्यायः

श्रीशुक उवाच

अथैकदात्मजौ प्राप्तौ कृतपादाभिवन्दनौ। वसुदेवोभिनन्द्याह प्रीत्या सङ्कर्षणाच्युतौ ॥ १ ॥
मुनीनां वदतां श्रुत्वा पुत्रयोर्धर्मसूचकम्। तद्वीर्यजातविश्रम्भः परिष्वज्याभ्यभाषत ॥ २ ॥

कृष्णकृष्ण महायोगिन् सङ्कर्षण सनातन । जाने वामस्य यत्साक्षात्प्रधानपुरुषौ परौ ॥ ३ ॥
यत्र येन यतो यस्य यस्मै यद्यद्यथा यदा । स्यादिदं भगवान् साक्षात् प्रधानपुरुषेश्वरः ॥ ४ ॥
एतन्नानाविधं विश्वमात्मसृष्टमधोक्षज । आत्मनानुप्रविश्यात्मन् प्राणान् जीवो बिभर्ष्यजः ॥ ५ ॥
प्राणादीनां विश्वसृजां शक्तयो याः परस्य ताः । पारतन्त्र्याद्वैसादृश्याद्द्वयो श्चेष्टैव चेष्टितम् ॥ ६ ॥
कान्तिस्तेजः प्रभा सत्ता चन्द्राग्न्यर्कसविद्युताम् । यत्स्थैर्यं भूभृतां भूमेर्वृत्तिर्गन्धोऽर्थतो भवान् ॥ ७ ॥
तर्पणं प्राणनं चापां द्रवत्वं ताश्च तद्रसः । ओजःसहोबलञ्चेष्टा गतिर्वायोस्तवेश्वर ॥ ८ ॥
दिशां त्वमवकाशोसि शब्दस्त्वं स्फोट आश्रयः । नादोवर्णस्त्वमोङ्कार आकृतीनां पृथक्कृतिः ॥ ९ ॥
इन्द्रियन्त्विन्द्रियाणान्त्वं देवाश्च तदनुग्रहाः । अवबोधो भवान् बुद्धेर्जीवस्यानुस्मृतिः सती ॥ १० ॥
भूतानामसि भूतादिरिन्द्रियाणाञ्च तैजसः । वैकारिकं विकल्पानां प्रधानमनुशायिनाम् ॥ ११ ॥
नश्वरेष्विह भावेषु तदसित्वमनश्वरः । यथा द्रव्यविकारेषु द्रव्यमात्रं निरूपितम् ॥ १२ ॥
सत्त्वं रजस्तम इति गुणास्तद्वृत्तयश्च याः । त्वय्यद्धा ब्रह्मणि परे कल्पिता योगमायया ॥ १३ ॥
तस्मान्न सन्त्यमी भावा यर्हि त्वय्यविकल्पिताः । त्वञ्चामीषु विकारेषु सन् सदा व्यावहारिकः ॥ १४ ॥
गुणप्रवाह एतस्मिन्नबुद्धा त्वखिलात्मनः । गतिं सूक्ष्मामबोधेन संसरन्तीह कर्मभिः ॥ १५ ॥
यदृच्छया नृतां प्राप्य सुकल्पमिह दुर्ल्लभम् । स्वार्थे प्रमत्तस्य वयो गतं त्वन्माययेश्वर ॥ १६ ॥
असावहं ममैवैते देहे वा स्यान्वयादिषु । स्नेहपाशैर्निबध्नाति भवान् सर्वमिदं जगत् ॥ १७ ॥
युवां न नः सुतौ साक्षात्प्रधानपुरुषेश्वरौ । भूभारदैत्यक्षपणे अवतीर्णौ तथात्थिह ॥ १८ ॥

तत्ते गतोस्म्यरणमद्य पदारविन्दमापन्नसंसृतिभयापहमार्तबन्धो ।
एतावतालमलमिन्द्रियलालसेन मर्त्यात्मदृक्त्वयि परे यदपत्यबुद्धिः ॥ १९ ॥
सूतीगृहे ननु जगाद भवानजो नौयद्यज्ञ इत्यनुयुगं निजधर्मगुप्त्यै ।
नानातनूर्गगनवद्विदधज्जहासि को वेद भूम्न उरुगाय विभूतिमायाम् ॥ २० ॥

श्रीशुक उवाच

आकर्ण्येत्थं पितुर्वाक्यं भगवान् सात्वतर्षभः । प्रत्याह प्रश्रया नम्रः प्रहसन् श्लक्ष्णया गिरा ॥ २१ ॥
वचो वः समवेतार्थं तातैतदुपमन्महे । यन्नः पुत्रान् समुद्दिश्य तत्त्वग्राम उदाहृतः ॥ २२ ॥
अहं यूयमसावार्य इमे च द्वारकौकसः । सर्वेप्येव यदुश्रेष्ठ विश्वं च सचराचरम् ॥ २३ ॥
आत्मा ह्येकः स्वयञ्ज्योतिर्नित्योन्यो निर्गुणो गुणैः । आत्मसृष्टैस्तत्कृतेषु भूतेषु बहुधेयते ॥ २४ ॥
खं वायुर्ज्योतिरापो भूस्तत्कृतेषु यथाशयम् । आविस्तारोल्पभूर्येकनानात्वं यात्यसावपि ॥ २५ ॥
एवं भगवता राजन् वसुदेव उदाहृतम् । श्रुत्वा विनष्टनामाधिस्तूष्णीं प्रीतमना अभूत् ॥ २६ ॥
अथ तत्र कुरुश्रेष्ठ देवकी सर्वदेवता । श्रुत्वाऽऽनीतं गुरोः पुत्रमात्मजाभ्यां शुचिस्मिता ॥ २७ ॥
कृष्णरामौ समाश्राव्य पुत्रान्कंसविहिंसितान् । स्मरन्ती कृपणा प्राह वैक्लव्यादश्रुलोचना ॥ २८ ॥

देवक्युवाच

राम रामाप्रमेयात्मन् कृष्ण योगेश्वरेश्वर । वेदाहं वां विश्वसृजामीश्वरावादिपूरुषौ ॥ २९ ॥
कालविध्वस्तसेतूनां राज्ञामुच्छास्त्रवर्तिनाम् । भूमेर्भारायमाणानामवतीर्णौ क्षयाय मे ॥ ३० ॥
यस्यांशांशांशभागेन विश्वस्थित्युदयौ लयः । भवन्ति किल विश्वात्मंस्तं त्वाद्याहं गतिं गता ॥ ३१ ॥
चिरान्मृतसुतादाने गुरुणा किल चोदितौ । आनिन्यथुः पितृस्थानाद्गुरवे गुरुदक्षिणाम् ॥ ३२ ॥
तथा मे कुरुतां कामं युवां योगेश्वरेश्वरौ । भोजराजहतान् पुत्रान् कामये द्रष्टुमाहृतान् ॥ ३३ ॥

श्रीशुक उवाच

एवं सञ्चोदितौ मात्रा रामकृष्णौ कुरूद्वह । सुतलं सम्विविशतुर्योगमायामुपाश्रितौ ॥ ३४ ॥

तस्मिन् प्रविष्टावुपलभ्य दैत्यराड् विश्वात्मदैवं सुतरां तथात्मनः ।
तद्दर्शनाह्लादपरिप्लुताशयः सद्यः समुत्थाय ननाम सान्वयः ॥ ३५ ॥
तयोः समानीय वरासनं मुदा निविष्टयोस्तत्र महात्मनोस्तयोः ।
दधार पादाववनिज्य तज्जलं सवृन्द आब्रह्मपुनद्यदम्बुभिः ॥ ३६ ॥

समर्हयामास महाविभूतिभिर्महार्हवस्त्राभरणानुलेपनैः।
स्रग्धूपदीपामृतभक्षणादिभिः स्वगोत्रवित्तात्मसमर्पणेन च ॥ ३७॥
स इन्द्रसेनो भगवत्पदाम्बुजं भ्रमन्मुहुः प्रेमविभिन्नया धिया।
बभाष हानन्दजलाकुलेक्षणः प्रहृष्टरोमा नृप गद्‌गदाक्षरम् ॥ ३८॥

बलिरुवाच

नमोऽनन्ताय महते नमः कृष्णाय वेधसे। साङ्ख्ययोगवितानाय ब्रह्मणे परमात्मने ॥ ३९॥
दर्शनं वां हि भूतानां दुष्प्रापमतिदुर्लभम्। रजस्तमःस्वभावानां यन्नः प्राप्तं यदृच्छया ॥ ४०॥
दैत्यदानवगन्धर्वसिद्धविद्याधरादयः। यक्षरक्षः पिशाचाश्च भूतप्रमथनायकाः ॥ ४१॥
विशुद्धसत्त्वधाम्न्यद्धा त्वयि शास्त्रशरीरिणि। नित्यं निबद्धवैरास्ते वयं चान्ये च तादृशाः ॥ ४२॥
केचनोद्बद्धवैरेण भक्त्याः केचन कामतः। न तथा सत्त्वसंरब्धाः सन्निकृष्टाः सुरादयः ॥ ४३॥
इदमित्थमिति प्रायस्तव योगेश्वरेश्वर। नविदन्त्यपि योगेशा योगमायां कुतो वयम् ॥ ४४॥
तन्नः प्रसीद निरपेक्षविमृग्ययुष्मत्पादारविन्दधिषणः स्वगृहान्धकूपात्।
निष्क्रम्य विश्वशरणङ्घ्र्युपलब्धवृत्तिः शान्तो यथैक उत सत्त्वसखैश्चरामि ॥ ४५॥
शाध्यस्मानीशितव्येश निष्कामान् कुरु नः प्रभो। पुमान्यच्छ्रद्धया तिष्ठंश्चोदनाया विमुच्यते ॥ ४६॥

श्रीभगवानुवाच

आसन् मरीचेः षट् पुत्रा ऊर्णायां प्रथमेन्तरे। देवलं जहसुर्वीक्ष्य सुतांच्छपितुमुद्यतम् ॥ ४७॥
तेनासुरीमगुर्योनिममुनावद्यकर्मणा। हिरण्यकशिपोः शापात्पुत्रास्ते योगमायया ॥ ४८॥
देवक्या जठरे जाता राजन् कंसविहिंसिताः। सा तान् शोचत्यात्मजान् स्वांस्त इमे ध्यासतेन्तिके ॥ ४९॥
इत एतान् प्रणेष्यामो मातृशोकापनुत्तये। ततः शापविनिर्मुक्ता लोकं यास्यन्ति विज्वराः ॥ ५०॥
स्मरोद्‌गीथः परिष्वङ्गः पतङ्गः क्षुद्रभृत् घृणी। षडिमे मत्प्रसादेन पुनर्यास्यन्ति मद्‌गतिम् ॥ ५१॥
इत्युक्त्वा तान्समादाय इन्द्रसेनेन पूजितौ। पुनर्द्वारवतीमेत्य मातुः पुत्रानयच्छताम् ॥ ५२॥
तान् दृष्ट्वा बालकान् देवी पुत्रस्नेहस्नुतस्तनी। परिष्वज्याङ्कमारोप्य मूर्ध्न्यजिघ्रदभीक्ष्णशः ॥ ५३॥
अपाययत्स्तनं प्रीता सुतस्पर्शपरिस्नुतम्। मोहिता मायया विष्णोर्यथासृष्टिः प्रवर्त्तते ॥ ५४॥
पीत्वाऽमृतं पयस्तस्याः पीतशेषं गदाभृतः। नारायणाङ्गसंस्पर्शप्रतिलब्धात्मदर्शनाः ॥ ५५॥
ते नमस्कृत्य गोविन्दं देवकीं पितरं बलम्। मिषतां सर्वभूतानां ययुर्धाम विहायसा ॥ ५६॥
तान् दृष्ट्वा देवकीदेवी मृतागमननिर्गमम्। मेने सुविस्मिता मायां कृष्णसंसूचितां नृप ॥ ५७॥
एवम्विधान्यद्भुतानि कृष्णस्य परमात्मनः। वीर्याण्यनन्तवीर्यस्य सन्त्यनन्तानि भारत ॥ ५८॥

सूत उवाच

य इदमनुशृणोति श्रावयेद्वा मुरारेश्चरितममृतकीर्तेर्वर्णितं व्यासपुत्रैः।
जगदघभिदलन्तद्भक्तसत्कर्णपूरं भगवति कृतचित्तो याति तत्क्षेमधाम ॥ ५९॥

इति श्रीमागवते दशमस्कन्धे चतुस्सप्ततितमोऽध्यायः ॥ ७४ ॥

## श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

सुखं गुणोपसंहारार्थं सम्यक्तत्त्वविज्ञाने हरौ भक्तिविधानं सुशकमिति पुनरपि हरेर्माहात्म्यं निगद्यतेऽस्मिन्नध्याये तदर्थं वसुदेवः कृष्णरामौ सम्बोध्य वक्ति अथेति ॥ १ ॥ पुत्रयोः कृष्णरामयोः धाम्नस्तेजसः माहात्म्यलक्षणस्य सूचकं वदतां मुनीनां वचः श्रुत्वा तयोर्वीर्ये माहात्म्ये जातविश्रंभः पुनरङ्कुरितविश्वासः॥ २ ॥ अहं वां प्रधानपुरुषौ जाने वां यथाऽस्य विश्वस्य सकाशात् परौ विलक्षणत्वेनोत्तमौ भवतस्तथेति यद्वाऽस्य जगतस्तत्त्वं जाने ॥ ३ ॥ तत्कथमिति तत्राह—यत्रेति। यत्र यस्मिंस्तिष्ठति "यस्मिन्निदम्" इति श्रुतिः "यतो वा इमानि भूतानि" इति "यस्य ब्रह्म च क्षत्रञ्चोभे भवत ओदनः मृत्युर्यस्योपसेचनम्" इति काठकाः। यस्मा इदं क्रियत इति "सच्च त्यच्चाभवत्" इति यथास्थितं यदा काले इदं स्यात् तथा तदाऽस्मात् "ब्रह्मैवेदं विश्वम्" इत्ति श्रुतिः। इदं जगत्साक्षात् स्पष्टं निर्विचारं प्रधानपुरुषेश्वरशब्दवाच्यो भगवानेव स्यात्तस्मात्सत्ताया अपि तदधीनत्वात् यद्वा यत्र यस्मिन्नधिष्ठाने येन साधनेन यतो मृदः यस्य सम्बन्धेन यस्मै देवदत्ताय यद्वस्तु यथाप्रकारेण यदा यस्मिन् काले ॥ ४ ॥ तद्दिदं कथितमेव स्पष्टत्वाय कथयति—एतदिति। आत्मना त्वया सृष्टम् आत्मना अनुपहृतस्वरूपेण आत्मन्नात्मनि प्राणानिन्द्रि-

याणि जीवो जीवनप्रदः ॥ ५ ॥ प्राणादीनां मुख्यप्राणादीनां याः शक्तयस्ताः परस्य हरेर्विद्यमानाः तत्र हेतुः पारतन्त्र्येति । वैसादृश्याद्वैलक्षण्यात् तदुपपादयति द्वयोरिति द्वयोर्जीवेशयोः श्रेष्ठे अतिशयेनोत्तमे हरौ चेष्टितं यस्मात्तस्मात् इत्यर्थः । यथा वायोः शक्त्या तृणपर्णादीनां चालनं यथा वा पुरुषस्य शक्त्या शरादीनां वेगवती गतिस्तथा प्रकृते इति भावः ॥ ६ ॥ पदार्थगुणानां तदधीनत्वमाह—कान्तिरित्यादिना । चन्द्राग्न्यर्काणां सविद्युतां खद्योतादीनां मध्ये चन्द्रस्य या कान्तिः अग्नेर्यत्तेजः सूर्यस्य या प्रभा विद्युदादीनां या सत्ता भूभृतां यत्स्थैर्यं भूमेर्या वृत्तिः सस्यादीनां जीवनत्वं यो गन्धो गुणस्तत्सर्वमर्थतोऽभिधेयत्वं यद्भवान्नान्यः ॥ ७ ॥ किञ्च अपां यत्तर्पणं तृप्तिः प्राणनं चेष्टा द्रवत्वं स्यन्दनं ता आपश्च तासां रसो गुणश्च वायोः ये ओजआदयः ते सर्वे तवाधीनप्रवृत्तिनिमित्ताः ओजोवष्टम्भः सहोमर्षणं वलं शक्तिः चेष्टा स्पन्दनं गतिः समर्पणम् ॥ ८ ॥ यो दिशामवकाशः "सत्वं यश्च स्फोटो व्योमनि आश्रयः सत्वं निर्दोषः शब्द आगमः" इति वचनात् वर्णक्रमलक्षणोर्थव्यञ्जकशब्दस्त्वं किञ्च स्फोटो वेणुदारणादौ जन्यो ध्वनिराश्रयः शङ्खादिजन्यस्त्वमित्यर्थः "अवरस्वरातिगगरः" इति श्रुतेः आकृतीनां ब्रह्मादिप्राणिनां देवानां याः पृथक्कृतीः पृथक्क्रियाः अनिमेषादिलक्षणास्ताश्च त्वदधीनाः ॥ ९ ॥ इन्द्रियाणामिन्द्रियमिदं द्रवणं तदनुग्राहका देवाः सूर्यादयश्च त्वं बुद्धेरवबोधो ज्ञानजननशक्तिः जीवस्य सत्यनुस्मृतिः स्मरणशक्तिश्च भवान् ॥ १० ॥ पञ्चभूतानां कारणं भूतादिस्तामसाहङ्कारः चक्षुरादीन्द्रियाणां कारणं तैजसाहङ्कारः विकल्पानां जरादिशून्यत्वेन परमात्मव्यपदेशानां विविधाः कल्पाः न्यायाः येषां तेषां वा देवानां कारणं वैकारिकाहङ्कारः सङ्कल्पविकल्पानां मनोवृत्तीनां वा अनुशायिनां जीवानां कारणं प्रधानं प्रकृतिस्त्वं महदादीनां वा ॥ ११ ॥ सर्वभावानामादिस्त्वमिति निरूप्याधुनान्तकालावस्थायित्वं च तवेति समर्थयते नश्वरेष्विति । इह नश्वरेषु नाशशीलेषु भावेषु पदार्थेषु योऽनश्वरः अविनाशीभावस्तद्द्रव्यं त्वमसि सूक्ष्मार्थत्वान्निदर्शनेनावगमयति तथाहि, द्रव्यं प्रधानं तद्विकारेषु पृथिव्यादिषु पदार्थेषु प्रलये नश्वरेषु द्रव्यमात्रं केवलं स्वरूपभूतं प्रधानमेव निरूपितं तत्त्वज्ञैरिति शेषः यद्वा द्रव्यं परमाणु तत्संयुक्तेषु घटादिपदार्थेषु नश्वरं द्रव्यमात्रं परमाणुमात्रं निरूपितं परमाणुत्ववेदिभिरिति शेषः ॥१२॥ नन्वेवं तर्हि प्रधानादेर्नित्यत्वेन परमात्मनियतत्वमायातमिति तत्राह—सत्त्वमिति । इति शब्दो हेत्वर्थः जगदुत्पत्त्यादिहेतवः सत्वादयो गुणा ये याश्च तेषां गुणानां वृत्तयो व्यापाराः ते ताश्च परे ब्रह्मणि तद्व्याप्ते च देशे व्याप्ते त्वयि श्रद्धा अनिर्वचनीयत्वेन कल्पिताः समर्थिताः । "एतस्मिन् खल्वक्षरे गार्ग्याकाश ओतश्च प्रोतश्च" इत्यादिवेदान्तवाक्यैः सत्त्वादिगुणानां प्रधानस्वरूपत्वेन तेषां तदाधारत्वकथने प्रधानस्य तदाश्रयत्वं किमु वक्तव्यमिति । परमाणुपक्षे शुक्लवर्णेन सत्त्वेनाव्याः रजसा पार्थिवाः सतमसा आवरकेण वायवीयाः परमाणवो लक्ष्यन्ते इति शब्देनादित्ववाचिना तैजसा लक्षिता इति चतुर्विधा गुणास्तन्तुस्थानीया परमाणवो यास्तद्वृत्तयः संयोगलक्षणस्त्वयि कल्पिताः त्वत्प्रेरितत्वेन कार्यकरणक्षमत्वेन समर्थिता इत्यर्थः । किमनेन नित्यमेनेत्यत उक्तं योगमाययेति योगमायया स्वसमवेतेच्छया ॥ १३ ॥

व्यतिरेकं दर्शयति—तस्मादिति । यर्हि यदाऽमी भावास्त्वय्यविकल्पिता त्वदाधारत्वेन निरूपिताः तदा तस्मादनाधारतया न सन्ति स्वरूपत एव नश्यन्ति तस्मात्तत्सत्तापि त्वदधीनेत्यर्थः । एतदेव विशदयति—त्वञ्चेति । अमीषु विकारेषु विविधप्रकारेषु पदार्थेषु त्वञ्च त्वमेव सन् सद्भावं कुर्वन् सदा व्यावहारिकः हानादिव्यवहारनिर्वाहकः नान्य इत्यर्थः ॥ १४ ॥ नन्वेवं तर्हि कस्मादेतस्य संसार इति; तत्राह—गुणेति । एतस्मिन् गुणप्रवाहे संसारे अखिलात्मनः अखण्डस्वामिनः तव सूक्ष्मामतीन्द्रियां गतिं स्थितिं सर्वव्यापी सर्वनियामक इत्यादि लक्षणामबुद्ध्वाऽज्ञात्वा तेनाबोधेनाज्ञानेन इह कर्मभिः संसरन्तीत्यन्वयः । तत्त्वाज्ञानात्संसार इतिभावः ॥ १५ ॥ ननु, भवतु मनुष्यत्वलाभात् ज्ञानं सुलभं तस्मान्मोक्षोपि स्यादित्याशङ्क्य सर्वं च त्वत्प्रसादमन्तरेण दुर्लभमित्याह—यदृच्छयेति । यदृच्छया भगवदिच्छया तत्रोद्बुद्धयाऽऽरब्धपुण्यकर्मणा नृतां मनुष्यत्वं प्राप्य इह मनुष्यशरीरे त्वन्मायया स्वार्थे प्रमत्तस्य मम वयो गतं वृथेतिशेषः । अतः सुकल्पं क्लृप्तं फलप्रदं ज्ञानं दुर्लभमभूदितिशेषः नितरां ममत्वं त्वन्मायया ॥ १६ ॥ स्वार्थे प्रमादः कीदृश इति तत्राह—असाविति । असौ देहोहमस्य देहस्यान्वयादिषु इन्द्रियकलत्रादिषु ममैवैते सन्त इति सुदृढैर्ममत्वेन बध्नाति न केवलं मामेव किन्तु सर्वमिति भावेनोक्तं सर्वमिति ॥ १७ ॥ त्वदनुग्रहान्मम किञ्चित् ज्ञानमुत्पन्नमिति भावेनाह—युवामिति । प्रधानपुरुषेश्वरौ प्रकृतिजीवेश्वरौ ॥ १८ ॥ अतः किं तत्राह-तत्त इति । इन्द्रियलालसेन इन्द्रियाणां शब्दविषयभोगेच्छया मर्त्ये मृत्युशिरस्के देहे आत्मदृक् अहमिति दर्शनं यत्परे परमात्मनि त्वयि अपत्यबुद्धिः पुत्रत्वज्ञानम् ॥ १९ ॥ सूतीगृह इति । अजः शुक्रशोणितसम्पर्कजन्यशरीररहितः भवान् सूतीगृहे अरिष्टे अहं यज्ञोविष्णुरिति नौ जगाद नन्विति यत्तस्मादनुयुगं निजवल्लभधर्मरक्षायै नानातनूः सुरनरादिनानाविधशरीराणि विदधत् कुर्वन् त्वं पुनः रक्षावसाने तास्तनूः जहासि तिरोदधासि कथं दधातीत्यत उक्तं गगनवदिति, यथा युगं युग्मं कार्यकारणद्वयात्मकपदार्थजातमनु अणुबृहदनुकूलत्वेन नानाभवति पुनस्तद्गगनं तत्पदार्थजातस्य कारणावशेषे स्वयमेवैकमेव भवति तथेत्यर्थः । हे उरुगाय! भूम्नः पूर्णानन्दस्य तव विभूतीनां मायां माहात्म्यं को वेद ? वेद चेत् ब्रह्मैव वेत्ति वायुर्वा नान्यः अनेन गगनादस्य विशेषो दर्शितः ॥ २० ॥ ब्रह्माद्यन्यतममन्तरेण प्रत्यक्षं भगवता सल्लापः कस्य सुलभोऽतो वसुदेवस्य भाग्यमतिविचित्रमिति भावेन कृष्णस्य प्रतिवचनप्रकारं कथयति—आकर्ण्येत्यादिना ॥ २१ ॥ समवेतार्थं श्रुतिस्मृत्युपपन्नार्थं प्रसिद्धार्थं वा ॥ २२ ॥ युष्मदादिविश्वमहमेव मदधीनमेव

नान्याधीनं "सर्वं खल्विदं ब्रह्म" इतिश्रुतिसिद्धम् ॥ २३ ॥ मत्समो नास्तीत्याह—एक इति । केवलः द्वितीयवर्जितः त्वं वा क इत्यत उक्तम् आत्मेति आत्मशब्देन किं देह उच्यते इत्यतः स्वयञ्ज्योतिर्नित्य इति अनेन विशेषणद्वयेन जीवोपि व्यावृत्तः तस्य नित्यानभिभूतस्वयञ्ज्योतिष्ट्वाभावाद्धरेस्तद्भावात् । "ब्रह्मवेदाहं ब्रह्मास्मि" इति श्रुतेः । बलमानन्द ओजश्चेति वा अहमेवेत्युक्त्याऽभेदः किं नस्यादित्यत उक्तम् अन्य इति अहमस्मादन्योन्यविलक्षणः कुतः निर्गुणः सत्त्वादिगुणनिमित्तवैपरीत्याभावात् अन्यस्य तद्भावात् "कार्यतेह्यवशः कर्म सर्वः प्रकृतिजैर्गुणैः" इत्यादेः । ननु तर्ह्यप्राप्तनिषेधः कस्मादिति तत्राह—इन्द्रियपूर्णेषु भूतेषु प्राणिदेहेषु बहुधेयते यथारुचिज्ञायते जनेनेतिशेषः । यथात्मनिमित्तैर्गुणैः पञ्चभूतैः तैर्विरचितेषु शेषं समम् ॥ २४ ॥ एतदेव दृढयति—खंवायुरिति । खादीनि तत्कृतेषु वस्तुषु यथाशयं यथास्थानं स्थितानि भवन्ति तथा असौ हरिरपि अल्पेष्वल्पत्वेन भूरिषु महत्त्वेनाविस्तारः प्रकाशिताविस्तारः एकनानात्वम् एकस्यानेकसङ्ख्याविषयत्वं यातीत्यन्वयः । अत्रायं भावः । स्वसृष्टतत्तद्वस्तुनियमार्थं तत्तद्वस्तुपरिमाणभूतं गृह्णातीति तात्त्विकाः ॥ २५ ॥ विनष्टं नाम कुत्सितमाधिर्यस्य स विनष्टनामाधिः "नाम कुत्सनसम्भाव्य प्रकाशेषु निगद्यते" इति ॥ २६ ॥ अथ मङ्गलाचरितमारभ्यते सर्वा देवता यस्यां सन्निहिताः स तथा ॥ २७ ॥ समाश्राव्य सम्बोध्य ॥ २८–२९ ॥ मे मत्तः सकाशात् कालेन विध्वस्तधर्मसेतूनाम् ॥ ३० ॥ भागो भजनं स्वीकारस्तेन गतिं शरणं गतास्मि ॥ ३१ ॥ पितृस्थानाद्यमलोकात् ॥ ३२–३४ ॥ तथात्मनः स्वस्य सुतरामिष्टदेवम् ॥३५॥ तज्जलं पादावनिर्णिक्तजलं यस्य पादजलैराब्रह्म चतुर्मुखपर्यन्तं जगत्पुनत्पुनाति शुध्यति छान्दसोयं प्रयोगः आदित्यः सुपथाऽकरदित्यादिष्विव ॥ ३६ ॥ अमृतभक्षणं रसायनभोजनम्—

"अमृतं व्योम्नि देवान्ने यज्ञशेषे रसायने ।
अयाजिते जले जग्धौ मोक्षणे हेम्नि गोरसे । क्लीबे नात्वमरे स्त्रीतु गुडूच्यां मद्यभिक्षयोः ॥"

इतियादवप्रकाशः इन्द्रसेनो बलिः "गोत्रं नाम्नि कुलेऽचले" इति "आत्मा देहे भृतौ जीवे धैर्ये" इति वा प्रेमविभिन्नया स्नेहप्रवृद्धया धिया भगवत्पदाम्वुजं भ्रमत् शरणं गच्छन् प्रदक्षिणं कुर्वन् वा हाशुभमितिस्मरन् "हाविषादशुभार्तिषु" इति बभाषेतिसम्भ्रमाद्व्यत्ययः बभारेति पाठे पादाम्बुजंभबार गद्गदाक्षरं वचो जगादेतियोज्यम् ॥ ३७–३८ ॥ वेधसे अश्रमेण कर्त्रे साङ्ख्ययोगयोर्ज्ञानकर्मणोर्वितानो विस्तारः येन स तथा तस्मै साङ्ख्ययोगशास्त्रकाराय वा दृष्टकपिलादिभ्यो व्यावर्तनायाह—ब्रह्मण इति । नन्वमुना व्यावृत्तिः कथमत्राह परमात्मन इति ॥ ३९ ॥ अव्यक्तस्वभावयोर्युवयोर्दर्शनमनुग्रहसाध्यं नतु प्रयत्नसाध्यमिति भावेनाह–दर्शनमिति । वां दर्शनं भूतानां दुष्प्रापं हि यस्मात्तस्माद्रजस्तमस्स्वभावानां नातिदुर्लभं यद्युष्मद्दर्शनं प्राप्तं तद्यदृच्छया देवयोर्युवयोरनुग्रहोन्मुखीभूतयेच्छयेति मन्य इति शेषः ॥ ४० ॥ रजस्तमः स्वभावफलं प्रकटयन् तामसत्वं नाम चूडारत्नं निर्मलीकर्तुं दर्शनं कृतमित्याशयेनाह–दैत्येति । ये दैत्यदानवास्ते वयञ्च शास्त्रं वेदादिग्रन्थ एव शरीरं प्रतिमालक्षणमस्यास्तीति शास्त्रशरीरी तस्मिन् "शास्त्रं ग्रन्थनिदेशयोः" इति विशुद्धसत्त्वधाम्नि केवलज्ञाननिधाने त्वयि नित्यं निबद्धवैराः अन्ये राक्षसाश्च तादृशा निबद्धवैरा इत्यतो न कोप्यस्मद्गुणो युष्मद्दर्शन इति शेषः ॥ ४२ ॥ ननु, नित्यानुसन्धानलक्षणान्तः करणगुणेनाविर्भूतज्ञानगुणोस्तीति माशाङ्क्षियतः सुरादीनामपि नास्ति कुतोस्माकमिति भावेनाह–केचनेति । केचन चैद्यादयः उद्वद्धवैरेण कचिदुद्गतवैरेण भक्ताः केचन गोपीजनाः कामतो भक्ताः सन्निकृष्टाः सहवर्तमानाः सत्त्वसंरब्धा उद्रिक्तसत्त्वगुणाः प्राणात्ययेप्यनुज्झितयुष्मद्भक्तिनिश्चयाः सुरगन्धर्वादयस्तथाऽनादिद्वेषसंरम्भादिना भक्ता न भवन्ति किन्तु निश्चलभक्तिसिन्धवः ॥ ४३ ॥ अपि तथापि ते योगेशाः ज्ञानोपायश्रेष्ठाः प्रायो बहुलं तव योगमायां जगत्सृष्ट्याद्यनुसंहितस्वरूपमाहात्म्यं न विदन्ति कथं इदमित्थमेवम्भूतमिति न जानन्ति वयं कुतो हेतोर्बुध्यामह इति ॥ ४४ ॥ अधुना स्वाशयम्विज्ञापयति–तन्नइति । यतो युष्मद्भक्तिज्ञानाभ्यामनुग्रह एवं प्रार्थनीयस्तत्तस्मान्नस्तथा प्रसीद कथं यथा एक उत्तमपुत्रादिस्नेहलक्षणसङ्गरहित एव सत्यं श्रीनारायण एव सखा येषां ते तथा तैर्युष्मद्भक्तैः सह चरामि वर्तमानो भवामि किङ्कृत्वा गृहान्धकूपान्निष्क्रम्य निर्गतो भूत्वा कीदृशोहं शान्तः युष्मन्निष्ठायुक्तः कथमत्राह निरपेक्षैः सन्यासिभिः विमृश्ययोरन्वेषणीययोर्युष्मत्पदारविन्दयोः धिषणा धीर्यस्य स धिषणा धिष्ण्यं गृहं वा अस्तु निवासस्थानं किञ्जीवनमत्राह–विश्वेति । विश्वस्य पक्षपातित्वेन शरणयोरक्षित्रोरङ्घ्र्योः सेवयोपलब्धा प्राप्ता वृत्तिर्जीविका यस्य स तथा ॥ ४५ ॥ सत्सेवनमपि युष्मच्छिक्षयैव भाव्यमिति भावेनाह–शाधीति । यस्मिंश्छासने श्रद्धया तिष्ठन् स्थिरः सन् चोदनाया विधिनिषेधलक्षणायाः संसृतेर्विमुच्यते ॥ ४६ ॥ शाधीतिवाक्यं श्रुतवान् कृष्णस्त्वयाधुनेदं कर्तव्यमिति वक्तुमुपक्रमते–आसन्नित्यादिना । प्रथमे मनोरन्तरे ये पुत्रास्ते कस्मिंश्चित्काले सुतान् शपितुम् शिक्षयितुम् उद्यतं देवलं वीक्ष्य जहसुः ॥ ४७ ॥ अमुना अवहासलक्षणपापकर्मणा निमित्तेन तेन देवलेनासुरीं योनिमगुः आपुः कालनेमेः पुत्रत्वेन इतिशेषः ते कालनेमेर्जाताः पुत्रा हिरण्यकशिपोः शापेन योगमायया देवक्या उदरे नीताः ततो जाताः कंसेन विहिंसिता इत्यन्वयः ॥ ४८ ॥ सा देवकी अधुना कुत्र आसत इत्यत आह त इमइति ॥ ४९ ॥ ततः किमत्राह इतइति ॥ ५० ॥ अभिज्ञानार्थन्तन्नामानि निर्दिशति–स्मर इत्यादिना । मद्गतिं मत्स्थानम् ॥ ५१ ॥ अयच्छतां दत्तवन्तौ ॥ ५२ ॥ अजिघ्रदाघ्राणं कृतवती ॥ ५३ ॥ सुतानां स्पर्शेन परिस्नुतं क्षरितं सुतमित्यर्थः । मायया महिम्ना ॥ ४५ ॥ अमृतमिव स्वादु लुप्तोपमं तस्याः देवक्यास्तनयस्य गदाभृतः

कृष्णस्य कृद्योगेषष्ठी नारायणस्याङ्गस्पर्शेन प्रतिलब्धम् आत्मदर्शनम् आत्मज्ञानं येषां ते तथा ॥ ५५–५६ ॥ कृष्णस्यसं समीचीनाम् अबाधितां सुष्ठूचितां नान्यस्येति कृष्णसंसूचितां मायां महिमानम् ॥ ५७ ॥ अनेनेन्द्रजालम् अतिदेशेनोपसंहरति–एवमिति। कृष्णेन संसूचितेयं माया अथापि बह्वयः सन्तीत्यतो वोपसंहरति एवमिति ॥ ५८ ॥ फलमाह–यइति। अमृतवन्निर्मलकीर्त्तेः जगतोऽघं पापं दुःखं वा भिनत्तीति जगदघभित् भक्तानां सत्प्रशस्तं कर्णपूरं कर्णाभरणं तस्य हरेः क्षेमधाम मोक्षलक्षणं स्थानं याति ॥ ५९ ॥

इति श्रीभागवते महापुराणे दशमस्कन्धे उत्तरार्द्धे चतुस्सप्ततितमोऽध्यायः ॥ ७० ॥ अधिकपाठे ॥ १० ॥

राजोवाच

सर्वासां महिषीणान्तु गोविन्दासक्तचेतसाम्। मय्येव प्रेमवान्विष्णुरितिनिश्चितचेतसाम् ॥ १ ॥
समः सर्वासु वा कृष्ण एकस्यां प्रेमवानुत। तन्मे त्वं शंस तच्छ्रोतुं रतिरस्ति मम प्रभो।। २।।

श्रीशुक उवाच

महिषीणान्तु सर्वासां प्रथमा भीष्मनन्दना। प्रेमवानधिकं तस्यामिति प्रख्यातिरूर्जिता ॥ ३ ॥
कदाचित्प्रेमकलहः केशवेन तया समम्। कृतस्तच्छृणु कौरव्य कार्त्स्न्येन कथयामि ते ।। ४ ।।

**श्रीविजयध्वजतीर्थकृता पदरत्नावली**

प्रेक्षावतां भगवत्तत्त्वविज्ञानेऽधिकार इति लक्षणवृत्त्या तन्माहात्म्यं कथयत्यस्मिन्नध्याये तत्र श्रुतभगवन्माहात्म्यो राजा विशेषविवित्सया शुकं पृच्छति सर्वासामिति किमत्र संशयबीजमित्यत उक्तं गोविन्देत्यनेन ॥ १ ॥ सर्वासु प्रेमवान् मय्येव प्रेमवान् इत्युक्तममुना ॥ २ ॥ एकस्यां किमितिप्रतीयत इति प्रश्नावकाशो नास्तीति भावेन परिहरति महिषीणामिति ॥ ३ ॥ कथं प्रख्यातिरिति तां वक्तुमुपक्रमते कदाचित् तच्चरितम्।. ४ ॥

**श्रीसत्यधर्मकृता श्रीभागवतटिप्पणी**

हरिः ॐ ॥ दानवान्तकोऽत्युग्रं नरकं हत्वैवं कृत्वाऽऽगत इत्याह ॥ नरकमिति। नरकमत्युग्रं हत्वा प्रापयित्वा तमआदिकम्। हन हिंसागत्योरिति स्मरणात्। अन्तर्णीतण्यर्थश्च ॥ १ ॥ देवमातरमदितिं सहितो युक्तो भाविकुण्डलमण्डलनहितसमेत इति च ॥ २ ॥ साघ्यपाद्याः पादार्घ्याभ्यां चेति यत्। दिवौकसो दिवोकस इति द्वावपि शब्दावद्वन्द्वार्थावुपपादितं च प्राक् ॥ ३ ॥ हत्वा नरकमत्युग्रं दानवं दानवान्तकः। आरुह्य गरुडं प्रायात्प्राग्ज्योतिषपुरागतः। ज्वरो नरकासुररूप उपतापो येषां तैस्तस्कृत इति वा। दिव्यं तल्लोकम्। दिव्यैरिति सर्वान्वयि ॥ ५ ॥ पुरीममरावतीगतभवनविशेषाम्। तं पुत्रमायातं दृष्ट्वा। उपतस्थे गतम् ॥ ६ ॥ तां मातरमाशीर्भिः पूजयाम ॥ ७ ॥ श्वश्र्वाः पत्युर्मातुः कुण्डले नरकं हत्वा नीते ॥८॥ कश्यपप्रिया तद्भार्या ।।९।। विप्रियग्। अव्ययं विभक्तीत्यर्थाभाव्येऽव्ययं विरोध इति यावत्। सुव्यक्तं यथा भवति तथा। मत्प्रसादं प्राप्य स्थितायास्त इत्यन्वयः ॥ १० ॥ देवीमदितिम् ॥ ११ ॥ देवदेव्यौ। नैकशेषः परवल्लिङ्गता च। नीयमाने ऊह्यमाने सत्यात्मनोऽनुसारिणी हरिप्रवृत्तिरिति द्योतयितुमेवं निर्दिदेशेति ज्ञेयम्। चाराः इन्द्रभटाः। चार्विति पाठे वनविशेषणम्। गुप्त दूतैरिति शेषः ॥ १२ ॥ पाणौ गृहीत्वा गतम्। मुहूर्तं मे चित्तं विहर्तुं कामयते। कामय इति पाठे चित्रमिति। मुहूर्तमित्यत्यन्तसंयोगे द्वितीया ॥ १३ ॥ तस्याः सत्यभामाया वचनगौरवात्तद्गुरुत्वात्। आन्तरङ्गिको भावस्तु तस्या यद्वचनं दातास्म्यहं पारिजातं तरुं त इति स्ववचनं तद्गारवाक्षिति ॥ १४॥ सारङ्गा भ्रमरा रजसा परागेण ॥ १५ ॥ चलद्भिः किसलैरुपेतान्। तत्र नन्दने तथा यथा मनस्तथा।१६। विस्मयेनाकुले लोचने यस्याः सा। नाम्ना को विचित्रो विशिष्टश्चित्रादिति विचित्रः। चित्रं स्यादद्भुतालेख्यतिलकेषु विहायसीति विश्वः। द्युलोके श्रेष्ठ इत्यर्थः। एतस्य वृक्षस्य। फलभागिनः कृतार्था इति नोपचरितमितीरयति ॥ सत्यमिति। प्रवाला विद्रुमास्तदात्मकं मूलं वा मूलो यस्य सः। विपुलो विशालो जातरूपमयी महती तनुर्यस्य सः ॥ १७–१८ ॥ इन्द्रनीलमहच्छदाः पत्राणि तैश्छन्नः। छदः पालाश इति विश्वः। लसन्ती वैदूर्यमयी वेदिका यस्य विदूरान्नो गतम्। माणिक्यान्येव पुष्पाणि यस्य सः। मुक्ताफलानि मुक्ता एव फलानि तैरन्वितः ॥ १९ ॥ गोमेदात्मा पक्वः। पचो व इति वः। स्वयं पातात्पक्वता। प्रकरो विकीर्णः कुसुमादिर्यस्य सः। प्रकरश्चोपकारे स्याद्विकीर्णकुसुमादिष्विति विश्वः। वज्रा एव किञ्जल्कास्तै रञ्जितः। स्फुरन्मरकतात्मिकाः स्थूलाः शाखास्तासां शतेन विराजितः॥ २० ॥ हे जगन्नाथ। एनं तरुर्मे मनो भृशं हरते। आदरातिशयात्पुनर्वृक्ष इत्युक्तिः। यदि तेऽहं प्रियो तर्हि नेतव्यः। पुरीं द्वारावतीम् ॥ २१ ॥ अन्याश्च ताः पत्न्यश्च ताः। हे अच्युत। सर्वाभ्यो मां दयितां मंस्यन्तीति जानते ॥ २२ ॥ प्रिया च सा कान्ता च तया। नन्दनाद्वनात्। हे भद्रे। न नेतव्यः ॥ २३ ॥ तज्जन्मोक्त्वा तन्मनः प्रसादयितुं यतते।। पुरेति। सुरासुरैर्मथ्यमानात्क्षीराम्बुधेर्जातस्तदा तत्फलं समुद्रजातं भोक्तृभिर्देवैः स्वं स्वं गृहीत्वायमिन्द्राय दत्त इति भावः ॥ २४ ॥ मित्रं शक्रमनादृत्य मया नाहार्यम्। तदनाहरणे हेतुमाह। धर्ममेवानुष्ठितेति ॥ २५ ॥ हे शुचिस्मिते।

पारिजाते वृक्षे नीयमाने जयकाङ्क्षिभिर्जयापेक्षावद्भिस्त्रिदिशैः सङ्ग्रामो जायते ॥ २६ ॥ देवदेवेन । इत्युक्ता सत्यभामा । हे कंसमर्दन व्यलोकैरनृतैः किं मां भीपस इति प्राह । अलीकं स्वप्रियेऽनृत इति विश्वः । कंसमर्दनेत्यनेन समर्थतां वचोऽलीकतामूलं ध्वनयति ॥ २७ ॥ नलिननयननयने तरोः कारणं किमित्यतः कथयति ॥ नेति । दुराचारा शचीं मां गृहमागतां नाभ्यनन्दन्न चाभिनन्दितवती न च सच्चकारेति यावत् । तत्र निमित्तं किमित्यत इदमित्याह ॥ तस्येति । तस्य मदनाभिनन्दनस्य । अयं वृक्षो लोकविलक्षणो हेतुर्भर्तृपौरुषगर्वितेति । कृष्णेर्ष्याजननाय मुख्यः स हेतुरिति भावः ॥ २८ ॥ अच्युत नाथ । अहं तव प्रिया चेत्सर्वथा सङ्ग्रामो वा किं वा भवतु भवतोऽयं तरुः पारिजातो नेतव्यः । न प्रिया चेत्साम्प्रतं विरम तूष्णीमास्व । न व्यथाकर्त्र्या भाव्यमिति भावः । न चामरसमसमरे जयो नाप्यपजयो न वा मरणं तथा मरणं न निश्चितमिति । न राज्यादिचुत्यभावेनान्यथा-सिद्धमच्युतपदमिति च न वद तव न मृत्युरित्यप्याह ॥ यमच्युतेति । यमाच्च्युतो यमबाधातीतो विमृत्युरिति यावत् ॥ २९ ॥ उत्पाट्य उत्कृत्य गरुत्मति गरुडे आरोपयामास गतम् ॥ ३० ॥ वनपालाः केचिद्द्रुततरं यथातथा केचिज्जग्मुः ॥ ३१ ॥ हरसे चेत्सद्यन्तत्फलं हरणफलमनुभोक्ष्यसि ॥ ३२ ॥ तदेव विविच्याहुः । अनेन महीरुहा सह पुरीं द्वारकां न पाप्नोति । किञ्च पृष्टतोऽ-भ्युद्यतमायुधं बज्रं येन तं पश्यतीति ॥ ३३ ॥ शच्या समं साकमेकासन उपविष्टं त्वया सहेन्द्राणीं चावज्ञाय धिक्कृत्य । कृष्णा-दयितेति वचनं तद्बोधितो जहार हरिरिति भावेनेति ज्ञेयम् ॥ ३४-३५ ॥ भर्तृपौरुषगर्विता हरिप्रियाऽस्माभिर्निवारयद्भिरुक्ताऽपि भृशमुपालभ्य भर्सयित्वा वृक्षमहरत् ॥ ३६ ॥ पार्श्वस्थां शचीं विलोक्य तत्पराभवं नामृष्यन्न सेहे । तरुणीपुरतोऽप्रतिष्ठा न सोढुं शक्येति शचीपार्श्वस्यामित्यनेन ध्वनयति ॥ ३७ ॥ सन्निपात्य मेलयित्वा सैनिकान्सेनासमवेतांस्तथा लोकपांश्चा सामाहूय तैःसह निर्जगाम ॥ ३८ ॥ ऐरावतं वरवारणं वारं यद्वा तदणयति गमयतीति वरवारणतां मदोदकस्रावणमिति यावत् । वराः प्रतिभटा-स्तेषां वारणं निवारणं येनेति वा वरान्वारयतीति वा । आरुह्य गृहीतवज्रं गच्छन्तमिन्द्रं दिवौकसोऽनुजग्मुः ॥ ३९ ॥ वैश्वा-नरोऽग्निः । तुरङ्गं तुरगो वाहमात्रेऽपीत्युक्तेर्वाहनमुरणम् । मेपारूढं वरप्रदमित्युक्तेरारुह्य वैश्वानरोऽग्निः । वैश्वानरस्तूरणमिति च सरलः पाठः । विश्वे नरा अस्येति वैश्वानरः । नरे संज्ञायामिति विश्वशब्दस्य दीर्घः । श्रुवं पुच्छे यस्याः सा तां शतघ्नी-मादाय रणं प्रति ययौ ॥ ४० ॥ मृत्युकालावमात्यौ तदादिभिर्युक्तः ॥४१॥ पौरुषं स्वार्थेऽण् । पुरुषं । असिहस्तः खड्गपाणिः ।४३। भीषणाकारं मकरमारुह्य वरुणस्त्वरन् पाशोद्यतकरः शचीपतिमनु युद्धाय प्रायात् ॥ ४३ ॥ कृष्णमृगः सारङ्गः । तोमरमायुधं यस्य सः । चक्रभृता कृष्णेन ॥४४॥ नरवाहनः कुबेरः । चतुर्भिः पुरुषै रूढां शिविकामारुह्येत्यन्वयः ॥४५॥ ईशानः शिवो भूतानां कोटयस्ताभिः समन्वितः ॥ ४६ ॥ सुवर्णसुषिरैः सुवर्णात्मकसरन्ध्रैः काहिलीभिरित्यर्थः । सुषिरं विवरे वाद्ये सरन्ध्रे सुषिरोऽनिल इति विश्वः । भूरिभिर्बहलैः खुराणां निःस्वनास्तैः क्ष्वेलितैः सिंहनादैरास्फोटितैरूर्वाद्यास्फालनैः सङ्ग्रामार्थमाव्हानं तद्रूपैर्गर्जनैः ॥ ४८ ॥ तव मायेति प्रवदद्भिरिति वा । मा याहि न गच्छ । हि यस्मात्त्वया मायाऽऽश्रितास्तः ॥ ४९ ॥ अहं पुरोऽहं पुर इति गच्छद्भिः ॥ ५० ॥ सिंहं गोमायवः सृगालाः ॥ ५१ ॥

इति श्रीभागवतटिप्पण्यां सत्यधर्मकृतायां दशम उत्तरार्धे पञ्चषष्टिरध्यायः ॥ १०—६५ ॥

## श्रीसत्यधर्मकृता श्रीभागवतटिप्पणी

॥ हरिः ॐ ॥ प्राहुणिका आमन्त्र्य भोजयितव्याः । तव ॥ १ ॥ प्रेषिता इन्द्रेण ॥ २ ॥ अव्यसनविक्लवा व्यसनः खेदो विक्लवो विह्वलता ताभ्यां रहिता देवसैनिकैर्मुक्तान्वो बाणौघैस्ताञ्छरांश्चिच्छेद ॥ ३ ॥ तालमात्रं तालस्य मात्रं प्रमाणं यस्य तत् कार्मुकम् । कनकाटविः कनकमयाटविः कोटिर्यस्य तत् । अटवटिभ्यामविरित्यविः । रे समसमरे तिष्ठ तिष्ठेति चाब्रवीत् ॥५॥ विशाले विस्तृते जठरे उदरे ॥ ६ ॥ स धनपतिः ॥ ७ ॥ सा सत्या ॥ ८ ॥ गुह्यकपतेः गुह्यकेश्वरस्य ॥ ९ ॥ एकैकं त्रिधा विच्छेद ॥ १०-११ ॥ अर्धचन्द्रेण तदाकृतिमता बाणेन मुष्टिप्रदेशे तद्धार्यप्रदेशे । सति स्वापथे येन दानं वैश्रवणेति तन्मुष्टिदेशे ताडनं युक्तमिति भावः । अत एवामाणकं बद्धमुष्टिरिति । सज्जं ज्यासहितम् ॥ १२ ॥ सङ्ख्ये युद्धे सन्नतानि पर्वाणि येषां ते तैः ॥ १३ ॥ तत्रापि नायताक्ष्या आयास इत्याह ॥ लीलयेति ॥१४॥ त्वमद्य मम पौरुषं पश्य त्वां-हनिष्यामीत्युक्त्वा तालमात्रे तु चापे ॥१५॥ पराभवं पराजयं मार्ष्टुकामः परिहर्तुकामः शरोत्तममर्धचन्द्रं सन्दधे ॥ १६ ॥ तत्स्वहननोद्योगकरणमवेत्य ज्ञात्वा ॥ १७ ॥ शतगुणं शतवारं भ्रामयित्वा देव्यै चिक्षेप ॥ १८ ॥ वामेन पाणिना जग्राहानन्तरमुच्चैर्जहास च । वामेनेत्यनेन भार्याभागो वाम इति प्रसिद्ध इत्युक्तेस्तव भागहस्तेनैव धारणान्न तव पराजय इति ध्वनयामास ॥ १९ ॥ समाश्लिष्याभिपूजयन्देवीं शशंस ॥ २० ॥ पाशमुद्यम्य संयोगे कृष्णमभ्यद्रवत् ॥ २१ ॥ गोवृषं शार्दूलो व्याघ्रः ॥ २२ ॥ देवासुरे युद्धे प्रसक्ते बलिवासवयोरिवैतद्युद्धं यथा तथा युद्धं समभवत् । यथा तथा सम्यगिति वा ॥ २३ ॥ काश्यपपुत्रस्य गरुडस्य ॥ २४ ॥ गरुडस्तं वरुणं पक्षकोट्या समुद्धृत्य पद्भ्यां मकरं तद्वाहनं गृहीत्वा वरुणालये चिक्षेप ॥ २५ ॥ कृच्छ्रात्कष्टाद्गृहीतो गरुडगलगतः प्रतिगृहीतः पाशो येन सः । यथाऽऽ-गतस्तथा विदुद्राव ॥ २६ ॥ वार्धिपतौ समुद्रनाथे वायुपावकौ समं युगपदेव मरुत्सखो हुताशन इति मैत्र्यात् ॥ २७ ॥ मरुतो वायुः ॥ २८ ॥ समीरणं समीरं तं कृष्णमसाधारणं स्वाशक्यं मत्वा ॥ ३० ॥ आत्मानं स्वं सायकैराचितं सर्वमङ्गं यस्य स तम् ॥ ३१ ॥ पुण्डरीकाक्षं साक्षान्नारायणं विदित्वा ज्ञात्वा ॥ ३२ ॥ यमोऽयमोऽसदृश इति वा ॥ ३३ ॥ विसृज्य मुक्त्वा

तद्धस्ताद्यमकारात् महादण्डं भूतले पातयामास । अनेन वरं स मानयामास सारसासनस्येति ध्वनयति ॥ ३४ ॥ त्रस्तहस्तः कम्पितकरः परेतराट् प्रेतपतिः ॥ ३५ ॥ विदिततद्बलो विदितं तस्य कृष्णस्य बलं येन सः । योद्धुमेव नाभ्यवर्तत नाभिससार ॥ ३६ ॥ त्रिशूली तद्वान् वृषो नन्दी ॥ ३७ ॥ परस्परं जयैषिणौ तदिच्छौ कर्दनं युद्धम् ॥ ३८ ॥ ईशानः शिवो दशभिर्बाणैः कृष्णं तार्क्ष्यं च गरुडं च पञ्चभिः शरैर्विव्याध । समरे युद्धे रे समलक्ष्मीरमण । तिष्ठ तिष्ठ कृष्णेति चावदत् । अनुवादेन साकं पिनाकोऽपि तेनानीत इति वादे ऊह्यमिति सूच्यते । त्रिषु स्थानेषु नतं च तच्छूलमायुधं धनुस्तदस्यास्तीति वाऽऽवृत्त्या पिनाकग्रहः । शूलं प्रहरण इति विश्वः । त्रयाणां लोकानां शूलं मृत्युर्येन सोऽस्यास्तीति वा । मृत्याविति तत्रैवोक्तेः ॥३९॥ त्रिशद्भिरेकस्य त्रिकं त्रिकमिति त्रिंशत्सङ्ख्यैः ॥४०॥ पन्नगरिपुरिति तदलङ्कृतिकृथेति ध्वन्यते । द्वाभ्यां पद्भ्यां पक्षाभ्यां च चञ्चुकोट्या तत्प्रान्तेन तं वृषं मर्दयामास ॥ ४१ ॥ पञ्चाशदिति प्रमितैर्गणितैः ॥ ४२ ॥ निशितं सशाणीकृतम् ॥ ४३ ॥ आयान्तं त्रिशूलम् ॥ ४४ ॥ कौमोदकीशूले । अभ्यर्हितत्वादादौ कौमोदक्युक्तिः । अम्बुधौ समुद्रे ॥ ४५ ॥ तत्त्रिशूलं निपात्याब्धौ सा कौमोदकी विष्णोः करं तथा शङ्करकरं शूलं चाससाद ॥ ४६ ॥ निशितं खड्गं । इदमप्युक्तगतिकम् । पार्ष्णिभ्यां पादपृष्ठभागाभ्यां वृषं चोदयन् । अनेन गरुडबाधितस्य गमनासामर्थ्यं द्योतयति ॥ ४७ ॥ तस्य नन्दिनो विषाणे । सप्तमी वा द्वितीयाद्विवचनं वा । बाहुभ्यां पद्भ्यां गृहीत्वा सशूलपाणिं सहहरं वैनतेयो धनुः शतं तत्परिमितं देशं प्रति चिक्षेप ॥४८॥ ततः स्वपातानन्तरं वृषवाहनस्त्रिशूली शूलस्य मोघतां वृषस्य गमनासामर्थ्यतां ध्वनयितुमेवमुक्तिः । प्रमथैर्भूतगणैः पारिषदैः सहितो यथाऽऽगतं तथा प्रायात् । प्रेण स्वोपास्यं रामं किं राम समरः कर्तव्य इत्यप्राक्षीलयक्ष इव तेन चाजित्यजनं क्षेम इत्युक्तमित्याभाणकमभिप्रैतीति मन्तव्यम् ॥ ४९ ॥

इति श्री भागवतटिप्पण्यां सत्यधर्मकृतायां दशमे उत्तरार्धे षट्षष्टिरध्यायः ॥ १०–६६ ॥

**श्रीसत्यधर्मकृता श्रीभागवतटिप्पणी**

॥ हरिः ॐ ॥ ततः शर्वादिसर्वसुपर्वविद्रावणानन्तरम् ॥ १ ॥ गजः केसरिणं सिंहं पारिजातकृते तन्निमित्तं पौलोम्यो वचनं परीभाव्य भगवन्तं नगमानयेति मानिनीवाक्यम् । अनेनोभावपि भार्यामूलमेव कलहं कलयत इति द्योत्यते ॥ २ ॥ हरिस्तमिन्द्रम् ॥ ३ ॥ महद्धनुर्विस्फारयन् । सङ्करे क्षुरप्रेण शरविशेषेण विव्याध । रे विव्याधसङ्ग विविधा व्याधास्तेषां सङ्गो यस्य स तत्सम्बुद्धिः । तैर्व्याधैर्विधेयकर्म पश्यतो हरत्वादिकं तत्त्वं कृतवानिति सम्बोधयामास वासवो वसुदेवं तथेति वाऽऽवृत्त्या ज्ञेयम् ॥ ४ ॥ साधु सम्यक् त्वं शक्तोऽसि । अतस्त इदं मदङ्गताडनं युक्तं न्याय्यमिति चाब्रवीत् । अनेनायं मम शयोऽधुनापि शीतलो जात इवेत्येव समये उपकारं विस्मृत्यायात इति हास इति ज्ञेयम् । न्यायसंयुक्तयोर्युक्तमिति यादवः ॥ ५ ॥ भुजगेन्द्रकल्पे मासृण्येनाकारेण च सर्पसमे । असहो दुस्सहो यो सिंहनादस्तं । स इन्द्रः सिंहनादं च चक्रे हेत्यन्वयो वा । सुधौतैर्निशितैः ॥ ७ ॥ सावृति । आवृत्या तद्रूपेण वर्मणा सहितं तद्गात्रं निर्भिद्य भूयोवेगेन बहुवेगेन शोणिताक्ता वेगेन विनिर्गता भूयः पुनः प्रदर्श्यत इति वा ॥ ८ ॥ तान् षोडशारांस्त्रिभिः पतत्त्रिभिरेकेन षट्द्वाभ्यां पञ्चकं पञ्चकमिति विवेकः ॥ ९ ॥ सुरराजानं त्रिंशत्सङ्ख्या बाणाः ॥ १० ॥ तोत्रेणाङ्कुशेन ॥ ११ ॥ बहुयुगान्तरे उरसि ॥ १२ ॥ तुण्डेन चञ्चुना ॥ १३ ॥ वृषाकपिं हरिम् । वृषा इन्द्रः प्राग्घनुमन्तं प्रतीव प्रजहारेति लुप्तोपमा च । वासवो वृत्रहा वृषेत्यमरः ॥ १४ ॥ मधुरिपुर्मधुसूदनः । इदानी मधुर्मनोहरः सन्नेव रिपुः । न क्रौर्ये पुरस्तिष्ठेच्छक्र इति भावः । आगतं स्वसमीपं वज्रं वामेन करेण जग्राह । हे दुश्च्यवन । आगतं त आयुधं किलेति जहास चेत्यन्वयः ॥ १५ ॥ निरायुधः क्षुरप्रादिवज्रान्तानामायुधानां विसर्जनाद्वर्जितायुधस्तथा गरुडार्दितवाहनश्च व्रीडया व्रीडेन वाऽऽनता कन्धरा यस्य स सन्ध्यावर्ततापासर्पदिति यावत् । व्रीडा व्रीडश्चेति द्विरूपकोशः ॥ १६ ॥ प्रहसन्ती भर्तृभ्रातृत्वादपहसन्ती ॥ १७ ॥ हे शक्र । एहि निवर्तस्व । हे कुलिशायुधेति बह्वप्रतिष्ठां सूचयतीति मन्तव्यम् । अधुना मधुनाथहृतत्वात्तस्य । पौलोम्या वल्लभस्य पत्युस्ते पलायनं न युक्तं योग्यं न । पौलोम्या वल्लभस्येति स्वतदवमाननेर्ष्यामाविश्चकार सत्यभामेति ज्ञेयम् ॥ १८ ॥ ऐश्वर्यमत्ता भर्तृपौरुषगर्विता पौलोमीभार्या रणपराजितं त्वा स त्वामवमंस्यत्यवमानयति ॥ १९ ॥ सोपलम्भं सापहासमुदीरितां गिरं शक्रो निशम्याभिमुखो भूत्वा शुचिस्मितां देवीं प्राह ॥ २० ॥ गतासुरावेशः शचीशो हरिगुणानुदीरयन्स्वस्वभावमाविर्भावयति । येनेति । अमराद्यानिशाचरान्ताः सृष्टा उत्पादितास्तेन त्रिलोकगुरुणा को वा पुमात्रणमूर्ध्नि विरुद्ध्यालं परिभूतिमति पराभवं न याति । परिभूतिमलं तद्रूपं कलङ्कं न यातीति । अलं विरुद्ध्येति तु नान्वयः सरसः । तस्य च तमोहेतुत्वात् । वक्ष्यमाणगोवत्सन्यायोऽप्यतनुगुणः स्यात् । अनयेनातिपरिभूतिमलमिति वा ॥ २१ ॥ तनुबलोऽल्पं तनु बलं यस्य स वत्सस्तर्णकः सकृदेत्य झडित्युपागम्योधस्यमूधोभवं क्षीरं तस्य पानसमये मातरि गवि विरोधं मुखघट्टनादिजं कुरुते करोति । स्तन्याप्रदानसूचके कुरुते कुत्सिते शब्दे कृते सतीत्यप्यर्थः । तद्वद्वत्सवत् । अप्रमेये नाथे पत्यौ श्रीकृष्णे विरुद्ध्य किञ्चिद्विरोधम् । हे पिशिताशनि यज्ञीयान्नभोजने सत्ये निजशैशवमस्मद्बालभावं मौढ्यमिति यावद्दर्शयामः । हे अप्रमेये । नाथ स्वामिनि पिशिताशनि बहिर्मांसभक्षिणि स्त्रीराक्षसीत्युपहासः । त्वयि विरुद्ध्येव निजशैशवं दर्शयाम इति वा । यद्वा हे देवान्नाशिनि अमृतभोजने । अस्मल्लोकस्तु पारिजातेन तथामृतेन च विशिष्ट इति विशिष्टस्तत्रैकस्तु बलादवले गृहीत इदमन्नं मदीयमपि गृहाणेति वचनं दुश्च्यवनस्येति ज्ञेयम् । याज्ञीयान्ने च मांसे च पिशितं देवभोजनमिति यादवः । इदं सर्वं निजशैशवं

तव शैशवमेव न केशवस्येत्युपाहसदित्यपि ज्ञेयम् ॥ २२ ॥ सत्राजितः पुत्रीं प्रत्युक्त्वा कृताञ्जलिपुटः पुरन्दरो वासुदेवं प्रणम्याह ॥ २३ ॥ विश्वं समस्तम् ॥ २४ ॥ भूरिबालिशमतिमूर्खम् । सुवर्णादिवितरणकृतरुरिति भूरिभूरि प्रयुक्तं सुवर्णार्थं बालिश इति । भूरिर्ब्रह्माच्युतेषु भूरिप्राज्यसुवर्णयोरिति विश्वः । अक्षान्तं क्षमारहितम् । तथाऽपि त्वदेकशरणं त्वं मां त्यक्तुं नार्हसि ! अहाने हेतुमाह । शरणागतवत्सलेति ॥ २५ ॥ सर्वं त्वदधीनमित्युक्त्वा कश्चन विशेषं पुनः पारिजातप्रत्यर्पणविषयं तं मुखतो वादयितुं पीठमारचयति । ऐरावत इति । कुलिशं भिदुरम् ॥ २६ ॥ इमं सर्वं त्वदधीनमहं तवाज्ञाकरोऽत्रैतन्मध्ये यत्तुभ्यं रोचते यथा सम्यगसन्देहेनेच्छया तदनुसारेण नीयताम् ॥ २७ ॥ इयन्मतिमता भवता कुतः कृतः कलह इत्यत आह । किन्त्विति । त्वयि विरुद्धयतो मम मूलं निमित्तं वक्ष्यामि । अनन्यधीर्यदर्थमवतीर्णस्तत्कार्यादन्यत्र निर्गतमतिर्मानुषे लोके रमसे क्रीडसि ॥२९॥ तत्र पारिजाते नीते तेन सा वसुन्धरा धूः स्वर्गान्निर्विशेषा निर्गतो विशेषो यस्याः सा तथा ज्ञायते । अस्मत्सदनवैशेष्यसाधनं भविष्यतीति कलहः कृत इति वक्ति । तेनेति । त्वं त्विदं कार्यं न कार्यं चेति विजानन्निति त्वया तन्मम मौर्ख्यं क्षन्तव्यम् ॥३०॥ प्रहसिताननो ममतावन्ममताविशेषं दर्शयित्वा मोहयिष्याम्येनमिति हासः ॥ ३१ ॥ हे शक्र त्वया न कश्चिदपराधश्चेष्टितः कृतः । यदागस्त्वया कृतस्तन्मयैव कारितम् । तवास्वतन्त्रत्वात् । आवयोस्त्वदन्तर्गतस्य मम चेत्यावयोः परमत्यन्त भेदात् । आवयोरभेदान्मत्यैक्त्यादिति व्याकुर्वते । पूर्वश्लोकात्पुरन्दरमित्यत्रत्यमनुवर्तते । अथशब्दानुशासनं के ते शब्दा इतिवत् । आवयोः पुरं शरीरं यत्कृतं यन्निमित्तमेकं व्यक्तमेकमिति । तस्याभेदाद्भेदाभावादेकत्वादिति यावत् । एकपितृकत्वात्त्वया यदकारि साधु वाऽसाधु मयाऽकारि विचारणाऽत्रैतद्विषये न कार्या । हे सहस्राक्ष साध्वसाधु वा यत्कृतं तत्त्वयाऽनया शच्या कृतमेव । तदुद्बोधनेनागतत्वात्तव । अत्र यत्सर्वं कृतं तन्मया सत्ययैव कृतम् । एतयोर्मध्ये आर्या का द्वे अपि बालिशे वाले इति भावः । विचारणा नास्तीत्यन्तरङ्गिको भावोऽवसेयः ॥ ३३ ॥ निर्विशेष्यं परिहरति । मयि दिवमारूढे तरुश्रेष्ठः पारिजातो मन्निदेशादाज्ञाया नन्दनं वनं स्वयमेष्यति । अतरुः अतो गतो रुःशब्दो यस्य स निश्शब्द एष्यतीति न तर्वतिरेकः । त्वया प्रेषणीयं मया प्रेष्यत इति शब्दं विनेत्यर्थः ॥ ३४ ॥ गोविन्दं सत्यभामां च गरुडं च प्रसादयित्वा ॥ ३५ ॥ मे पुत्रस्तव शालो बीभत्सुरर्जुनो रक्षितव्य इत्यपि भूयोभूयः प्रार्थयित्वा कृता दत्ताऽनुज्ञा यस्य स पुरन्दरः ॥ ३६ ॥ सकलदिक्पालैः सार्धं लब्धवज्रः कृष्णात्पुरममरावतीं ययौ ॥ ३७ ॥ गरुडो गोविन्दं सत्यभामां च पारिजातं पादपं च ॥ ३८ ॥ पन्नगरिपुर्लीलयैव स्वान्तर्यामिभगवल्लीलयैव वहन्ययौ । न स्वतः पतत्त्रिणः समर्थता । उक्तं चोद्योगपर्वणि । विष्णुरुवाच । अहमेवात्मनात्मानं वहामि । त्वां च धारये । इमनावन्मनेकं त्वं बाहुं सव्यतरं वह स्वहस्तन्यस्तभारोऽभूद्वा सर्वस्नेहकारणात् । निपपातेत्यारभ्य-क्षन्तुमर्हसोऽत्यन्तेन विश्वम्भरसर्वस्वादिकं सलघिमानं चकारेति लीलयैवेति वा ॥ ३९ ॥ ऊढा उपायनाक्षतान्ता यैस्तैः ॥ ४० ॥ उपस्थितैर्यदुश्रेष्ठैः पूजितोऽभिवन्दितश्च ॥ ४१ ॥ दिव्यां दिवि भवामेवात्रायाताम् ॥ ४२ ॥ यथान्यायमभिवाद्य तैर्यथोचितं स्वयं पूजितश्च ॥ ४३ ॥ बृहस्पतिः पुरोधाः । तत्पुरोगमैस्तदाद्यैर्लोकपालैरुपासीनैर्दिवि वज्रधर इन्द्रो यथा तथा सभामध्ये काञ्चने परमासने उपविष्टो रराज । ननु पुरोधसां च मुख्यं मां विद्धि पार्थ बृहस्पतिमिति गीतायां बृहस्पतेः पुरोधोऽग्र्यत्वम् । तथाऽन्यत्र च वसिष्ठस्य पुरोहितवैशिष्ट्यमुच्यते । तत्र कथं समाधिरिति चेत् । दैवपुरोधसां मध्ये बृहस्पतिर्मानुषपुरोधसां वसिष्ठ इति विवेकसम्भवात् । यथोक्तमेकादशतात्पर्ये । वसिष्ठोऽभ्यधिकस्तेषां मानुषाणां पुरोधसामिति त्रैकाल्य इति । प्रसङ्गादिदमुक्तमिति ज्ञेयम् ॥ ४४ ॥ सर्वतः परितो मणिकुट्टिमे मणिनिबद्धभूमौ ॥ ४५ ॥ औत्सुक्यातिशयेन पुरत एव हरिसदः स्थितिमिव स्थापनं सुरतरोस्तरुण्या अङ्गण उक्त्वा तत्पूरङ्गं सङ्गमयन्नाह । आयान्तमिति । योषित्सार्थेन शतोत्तरषोडशसहस्रस्त्रीसमूहेन भूरिणैवंरूपेण बहुलेन सुवर्णादिना सह वा । आयान्तमागच्छन्तं तथा नरकासुरलाभविनाशकमित्यायस्यान्तोविनाशो येन तमित्यर्थः । आयास्यान्तो निवासः कोशस्तं वा । अन्तः स्थागं स्थलं वासः प्रवेश इति चोच्यत इति बृहद्भाष्योक्तेः । श्रुत्वा तं द्रष्टुं सकल यादवस्त्रिय उपाजग्मुः ॥ ४६ ॥ रोहिण्याद्या रोहिणी बाल्हीकपुत्र्येवाद्या यासां ताः । यथोक्तं बृहद्भाष्ये । बाल्हीकस्तु कौरव्यः । बाल्हीकपुत्री रोहिणी । अतो बलभद्रः कौरव्यायणीपुत्र इति । स्त्रियो वसुदेवपत्न्यः ॥ ४७ ॥ देवक्या साक्षाज्जनन्या सह दृष्ट्वा ताभ्यः प्रणामं चक्रे ता मातरोऽप्याशीर्भिः प्रत्यपूजयन् ॥ ४८ ॥ सप्तमहिष्यो नगरगा दिव्यरूपाः स्वभावतः ॥ ४९ ॥ रामदयिता बलाबला त्रिवक्रा । एकाङ्गनेति दुर्गानाम । तन्वङ्गी कोमलाङ्गी वा तन्नाम्नी काचना वा चित्रा सुभद्रा । सुभद्रा चित्रा तारेति विश्वः । अनुत्पन्नरजाः श्यामा तद्दृष्टा वरवर्णिनीत्यभिधानाद्वरवर्णिनी सद्यो दृष्टरजस्का । काचित्तन्नाम्नीति केऽपि ॥ ५० ॥ आनीतः प्रमदानां सार्थो येन तम् ॥ ५१ ॥ गोविन्दं सत्यभामां चानीतममरद्रुममपि । चापिन्या आनीतम् । चापं धृत्वा समरं कृतवतीति विदितवृत्ताः प्रीत्युत्फुल्लमुखाः सर्वाश्च सर्वे च सर्वे कौतुकाददृष्टमायय: ॥ ५२ ॥ लाजाश्च भ्रष्टव्रीहयः । लाजाः स्युर्भ्रष्टधान्येषु लाजः स्यादार्द्रतण्डुलः । उशीरे लाजमुद्दिष्टमिति विश्वः । प्रसवाः पुष्पाणि फलानि च । प्रसवस्तु फले पुष्प इत्यमरः । तण्डुलैः कृष्णस्य मूर्ध्नि स्पृष्ट्वा विकीर्येति यावत् । स्वं स्वं निवेशनं गृहं जग्मुः ॥ ५३ ॥

इति श्रीभागवतटिप्पण्यां सत्यधर्मकृतायां दशम उत्तरार्धे सप्तषष्ठिरध्यायः ॥ १०–६७ ॥ ६ ॥

### श्रीसत्यधर्मकृता श्रीभागवतटिप्पणी

हरिः ॐ ॥ किङ्करादपि शङ्कराद्वरवरणे तत्सम्माननीयता भवति जगतीति जगदीशोऽपि मानिन्या सह तपोऽचरदिति वा येन यस्य कामस्य हानिस्तेनैव तस्य । कामं पुनस्तनुभवं चेदियदतिशयितः । स्वरूपनाशः कर्तव्य इति मनसा तपोऽचरदिव हरिरभूतया जातः पोतः शम्बरमम्बरचरमसुरममीमरादित्यादि प्रतिपाद्यतेऽस्मिन्नध्याये । तत्रापि शुकः साम्मुख्येनामुग्धं राजानं प्रति वक्तीति वक्ति ॥ श्री शुक इति । श्लोकद्विकमेकान्वयम् । हरिर्लोकशङ्करम् । न स्वस्येत्यनेनैव ध्वन्यते । आराध्यो यो देवदेवः स्वयमेवेशो यस्य तम् । कैलासाख्यो गिरिस्तस्मिन्वासोऽस्यास्तीति तम् । यद्वा कैलासश्च गिरिर्वायुश्चासावाश्रित्य वर्तमानम्। कैलासेन सहितो गिरिस्तस्मिन्निति वा । एवञ्चेन्न द्वन्द्वाभ्र्याहितमादिप्रसक्तिरिति बोध्यम् । तपसा तोषयित्वा । अतो नारेध्येत्यति-रेकशङ्केति सन्तोष्टव्यम् । सामान्यविशेषभावादिश्चागतिका गतिः । तेनैव दग्धं कामं पुनः प्रद्युम्नेति नाम यस्य तम् । रूपौदार्य-गुणान्वितं वीरं तनयं रुक्मिण्यां प्रथमप्रमदायां लेभे प्राप ॥ १–२ ॥ ईश्वरं हरं पुत्रार्थं सोऽयं मनुष्यलोकः पुत्रेण जय्यो नापुत्रस्य लोकोऽस्तीत्यादेर्लोकनायकोऽपि लोकमनुकुर्वन् दृष्ट्वा तेन लब्धो वरो येन स सन् कीदृशं पुत्रम् । यद्यपि सामान्यतो रूपौदार्य-गुणान्वितमिति प्रकार उक्तस्तथाऽपि विविच्य ज्ञातुमयं प्रश्न इति ज्ञेयम् । नाम्नः पूर्वं प्रद्युम्ननामानमित्युक्तेः पुनः किन्नामानमिति परीक्षिदपरीक्षक इव कथमप्राक्षीदिति चेत्सत्यम् । किन्निमित्तं नाम प्रद्युम्नेति यस्य तं किन्नामानमित्यर्थपरत्वोपपत्तेः । हे स्व स्वामिन्मे वद । स्वश्चासावहं च तस्य । प्रकाशमानः सन्वदेत्यर्थे भासमानोपसम्भाषेत्यात्मनेपदता वा ॥ ३ ॥ रुद्रमन्युना मामपि वशयितुमायातो मायात इति कोपेन देवदेवेन शूलिना खेदितेन कृतोऽनङ्ग इति हरिवंशोक्तेः । यः प्राग्दग्धः कामस्तस्य पुन-र्देहोपपत्तये भूयस्तमेव प्रत्यपद्यत गतवान् ॥ ४ ॥ वैदर्भ्यां कृष्णवीर्यसमुद्भवः सन् स एव जातः । नामागतिप्रकारमाह ॥ वासु-देवांशः प्रद्युम्न इति विख्यात इति । वासुदेवादिव्यूहमध्ये योंऽश एको भागः प्रद्युम्नस्तदावेशित्वात्प्रद्युम्न इति विख्यात इत्यर्थः । पितुः सर्वतः प्रकारसर्वस्वेनानवमः समः पुत्रीभवनयोग्य इति यावत् । उत्तरत्र पितुर्भाविनां नवानां सत्त्वादयं दशम इत्यनवम इत्यर्थः ॥ ५ ॥ शम्बरोऽनिर्दशमनतिक्रान्तदशादिनमात्मनः स्वस्य तं सप्तरात्रे सम्पूर्णे निशीथ सूतिकागृहाज्जहार कृष्णस्य शिशुम् । विदितं तच्च कृष्णस्य देवमायानुवर्तिनः । ततो तनुगृहीतः स मृत्युना परितायरित्युक्त्वा दोर्भ्यामुत्क्षिप्य नगरं स्वं निनाय महासुरः । अनपत्या तु तस्यासीद्भार्या रूपगुणान्विता । नाम्ना मायावती नामेत्यादिना हरिवंशे परत्वादेतदनुरोधेन मीनलीलत्वं दाशदानादिकं ग्रन्थान्तरसंवादाच्च ग्राह्यमिति नानुक्तिदोषः । शत्रुं शातयितारं विदित्वा तं तोकमर्भकं हृत्वा । ननु सति भगवति सोऽरिष्टं गत्वा कथं हृतवानित्यत आह । कामरूपीति । कामेन स्वेच्छया रूपमस्यास्तीति कामेन हरीच्छया चेत्यपि स इत्यर्थः । ज्ञाततत्कर्मापि कृष्णस्तूष्णीकस्तन्मारणार्थं कुमारविषय इति तात्पर्यम् । उदन्वत्युदधौ प्रास्य क्षित्वा गृहं स्वमगाद्ययौ ॥६॥ बलवान्मीनो निर्जगार । मत्वाऽपि मत्केतनकीर्तिव्यञ्जकः स्यामिति तदभिप्राय इत्यभिप्रायोऽस्य विभावनीयः । स मीनोऽपरैः सजातीयैरितरैर्मीनैः सह महता स्वेच्छाछेदनीयेन जालेनानायेन । जालं गवाक्षं आनाय इति विश्वः । आवृतो मत्स्यजीविभिर्दाशैर्गृहीतः ॥ ७ ॥ तमुपायनं शम्बराय कैवर्ताः । कैवर्तो दाशधीवरावित्यमरः । कैवर्तेत्यपि पठन्ति । दाशा उपाजह्रुः । सूदाः । सूदस्तु सूपकार इति विश्वः । महानसं पाकस्थानम् । अद्भुतं मीनं स्वधितिना कुठारशेषेण । परश्वधः कुठारः स्यात्परशुः स्वधितिस्तथेत्यभिधानम् । अवधन् अवाधन् अखण्डयन् । दोऽवखण्डन इति धातोः । द्वयोः कुठारः स्वधितिः परशुश्च परश्वध इत्यमरः ॥ ८ ॥ तदुदरे । उदरं च पुरो वर्तेतान्तः किञ्चित्किं वै तदेवैवमिति तद्विषयके संशये । उदरं संशयः प्रोक्तः परिनिष्ठा तु निश्चय इति तात्पर्योक्तेः । तदुदरे मत्स्यकुक्षौ बालं दृष्ट्वा सूदा मायावतीति रतिरेव शापात्तद्गृह एवावात्सीद-तत्सङ्गा । यथोक्तं हरिवंशे नारदरौक्मिणेयसंवादे । सप्तरात्रे त्वसम्पूर्णे सूतिकागारमध्यगः । वधार्थं शम्बरेण त्वं ह्रियमाणोऽस्त्युपेक्षितः । केशवेन महाबाहो देवकार्यार्थसिद्धये । एषा मायावती नाम भार्या वै शम्बरस्य तु । रतिं तं विद्धि कल्याणीं तव भार्यां पुरातनीम् । तव संरक्षणार्थाय शम्बरस्य गृहेऽवसत् । मायां शरीरजामस्य मोहनार्थं दुरात्मनः । रतेरूत्पादनार्थाय प्रेषयत्य-निशं तदेत्यादिना । तस्यै न्यवेदयत् ॥ ९ ॥ शङ्कितचेतसस्तस्य मायावत्या नारदो बालस्य तत्त्वं मुख्यं रहस्यं कामत्वमिति वा उत्पत्तिं मत्स्योदरनिवेशनमित्यादिकं सर्वमकथयत् ॥ १० ॥ सा च कामस्य पत्नी रतिः प्रतीक्षती प्रतीक्ष्यमाणा रुद्रोक्तं समयम् । यथोक्तं तत्रैव । रत्या प्रसादितो देवः कामपत्न्या त्रिलोचनः । इत्यारभ्य विष्णोर्मानुपदेहस्तु द्वारकायां भविष्यति । तस्य पुत्रस्तु ते भर्ता भविष्यति न संशयः । तद्गच्छ शम्बरगृहं भार्या मायावती भव । मायारूपप्रतिच्छन्ना शम्बरं मोहयिष्यसि । तत्र त्वमात्मनः कान्तं बालरूपं विवर्धय । प्राप्तयौवनदेहः स शम्बरं निहनिष्यति । ततस्त्वया सहानङ्गो द्वारकां वै गमिष्यति । रमिष्यति त्वया सार्धं शैलपुत्र्या त्वहं यथेत्यन्तेन । कामपत्नी प्रणम्याथ देवदेवमुमापतिम् । जगाम शम्बरगृहं कालस्यान्तं प्रतीक्षतीति च ॥ ११ ॥ सूपौदनसाधने पाककर्मणि शिशुं कामदेवं नारदोक्त्या बुद्ध्वाऽर्भके सदा स्नेहं चक्रे ॥१२॥ कृष्णस्यापत्यं कार्ष्णिः । नातिदीर्घेणाल्पीयसा कालेन रूढं यौवनं यस्य सोऽभवत् । रसायनमहिम्ना । यथोक्तं तत्रैव । रसायनप्रयोगैश्च शीघ्रमेन-मवर्धयदिति । व्यधत्त पुत्रमुत्तमं मनोभवं पुरातनम् । चतुस्तनोर्हरेः प्रभोस्तृतीयरूपसंयुतः । ततस्तदाह्वयोऽभवत्स रुक्मिणीसुतो

बली। पुरैव मृत्यवेऽवदत्तमेव शम्बरस्य हि। प्रजातमब्जजाङ्कजस्तवान्तकोऽयमित्यपि। स मायया हरेः सुतं प्रगृह्य सूतिकागृहात्। अवाक्षिपन्महोदधावुपेक्षितोऽरिपाणिना। तमग्रसज्जलेचरः स दाशहस्तमागतः। कुमारमस्य तूदरे निरीक्ष्य शम्बरे ददुः। विपाट्य मत्स्यकोदरं स शम्बरः कुमारकम्। न्यवेदयन्मनोभवप्रियाकरे सुरूपिणम्। अनङ्गतामुपागते पुरा हरेण साङ्गजे। वशं विरिञ्चशापतो जगाम शम्बरस्य हि। पुरा हि पञ्चभर्तृकां निशम्य कञ्जजोदिताम्। जहास पार्वतात्मजां शशाप तां ततस्त्वजः। भवासुरेण दूषितेति सा ततो हि मायया। पिधाय तां निजां तनुं जगाम चान्ययासुरम्। गृहपिपामुरस्थिता निजस्वरूपतोऽसुरम्। न गच्छति स्म सा पतिं निजं समीक्ष्य हर्षिता। रसायनैः कुमारकं व्यवर्धयद्रतिः पतिम्। सुपूर्णयौवनोऽभवच्चतुर्भिरेव वत्सरैः। पतिं सुपूर्णयौवनं निरीक्ष्य तां विलज्जतीम्। उवाच कार्ष्णिरम्ब ते कुचेष्टितं कथं त्विति। जगाद साऽखिलं पतिं तदाऽस्य जन्म चागतिमित्याचार्योक्तकथाऽत्रानुसन्धेया। वीक्ष्यतीनां वीक्ष्यमाणानां विभ्रमं मनोविनोदम् ॥ १३ ॥ सा रतिः पद्मदलायिते ईक्षणे यस्य तम्। प्रलम्बौ बाहू यस्य तं नरलोके सुन्दरस्तं सव्रीडो यो हासः स चोत्तमो विभ्रमो विलासस्तद्युक्तानीक्षितानि पुनःपुनरवलोकनानि तैस्तदात्मभिरात्मधनैः प्रीत्या तं पतिमुपतस्थे ॥ १४ ॥ हे मातस्तव मतिरन्यथा कुत इति कार्ष्णिस्तां प्राह। तमेवान्यथाभावं विवृणोति ॥ मातृभावमिति। मे मम विषये मातृभावं तत्त्वमतिक्रम्य कामिनीव वर्तस इति। यद्यप्यवद्यावभेति निपातितः शब्दोऽवतेर्मप्रत्यये निष्पन्न इति व्याख्या कौमुद्याम्। अवमे नीचे। कामिनी सती वर्तस इति वा। वष्टिभागुरिरल्लोपमवाप्योरुपसर्गयोरिति स्मरणात्। चतुर्थतात्पर्ये च। वधिमवधिमल्लोपेनेति ॥ १५ ॥ इति पतिगिरं श्रुत्वा रतिरतीवहृष्टा स्वरत्युपयोगिनीं कथां कथयति ॥ भवानिति। गृहात्। तथाऽप्यवमीयत इत्येवम् इत्यमरसुधायां व्याख्यातमुपायान्तरमेतदिति। कारागृहात्। अधिकृता विवाहिता नीयतेति वा। अत्र महानसेऽधिकृता। अनेन दत्ताधिकारेति वा। रतिस्तन्नाम्नी पत्नी भवान्कामस्तद्रूपः ॥ १६ ॥ निर्दशं सप्तदिनकं तदुदराद्विपाटितमन्मत्स्यकुक्षेः ॥ १७ ॥ मायाशतविदं बहुमायाज्ञं मोहनादिभिर्मायाभिर्दुर्धर्षं दुर्जयं चात्मनस्तमिमं शत्रुं जहि ॥ १८ ॥ द्वारकावृत्तं किञ्चित्कथयति। गतप्रजा हृतत्वद्रूपापत्ययुक्ता ते माता रुक्मिणी कुररीव कुक्रोशयोषेव। गतप्रजेति वा विवत्सेति वाऽत्राप्यन्वेति। कुक्रोशःकुररी मत इति कोशः। पुत्रस्नेहाकुला। दृष्टान्तद्वयप्रदर्शनं गमनमनस्त्वरण इति मन्तव्यम्। आतुरा शोचति ॥ १९ ॥ एवं प्रभाष्य महात्मने स्मरणमात्रेण विद्याग्रहणपाटवमाहात्म्यवते। नन्ववमेयं वामा कथं विद्यामदादिति चेन्न। तस्या मूलकलेवरेणैव सत्त्वादेतस्य मानुषतनुषा युक्तत्वाद्युक्तं स्मारणमिति। सर्वा याः शम्बरसम्बन्धिन्यस्तां विनाशयतीति स तथा। सर्वा हिंसिकाश्च ता मायाश्च ता विनाशयतीति सा तं वा ॥ २० ॥ ननु च क्व वा द्वारका क्व च प्रसवः क्व वाऽयमसुरस्तथाऽपि ज्ञात्वोदधौ क्षिपन्नयं कथं बालमालक्ष्य न मम रिपुरयमिति जानन्हिंसितवानिति चेत्। भगवदुपेक्षणमेवैतदपेक्षणमूलमिति तदप्रतिभानसम्भवात्। ध्वजपातनादिकं तदमात्यतत्सेनाहननादिकं हरिवंशोक्तमनुसन्धेयम् ॥ २१ ॥ फलितमभिलपति ॥ स चेति। ओष्ठमधरम्। दन्तैरिति शेषः। अवष्टभ्यालम्ब्य विदस्येति यावत्। अवाच्चालम्बनाविदूर्ययोः। अवात्स्थम्भेरेतयोरर्थयोः सस्य षः स्यादिति षत्वम्। अनिदितामिति नलोपः। आक्षेपैराक्षिप्यते एभिरित्याक्षेपास्तिरस्कारास्तैः कलिं कलहं सञ्जनयन्समाह्वयत् ॥ २१ ॥ पदा हत उरग इव मूकस्य नासिकाप्रदर्शने यथा मर्षस्तथा गूढपात्वात्सर्पस्य पदा हतिरतीवकोपकारणमित्येवमुक्तिरिति ज्ञेयम्। सा स्त्री तु गतैवैयमेव मत्पाणिगृहीतेति गदापाणिरित्यनेन ध्वन्यते ॥ २२ ॥ वज्रनिष्पेषनिष्ठुरं वज्रयोः सतोरर्थौ निष्पेषसङ्घर्षस्तज्जन्यो नादो लक्ष्यते तद्वत्कठोरस्तन्नादं व्यनददकरोत्। वज्रनिर्घोषेति पाठे स्फूर्जथुवन्निष्ठुरमित्यर्थः। अमरेऽपि स्फूर्जथुर्वज्रनिष्पेष इत्यपि पाठः। पिष्लृ सञ्चूर्णने। घञ्। इदुपधस्येति कः। निष्पेषशब्दस्तदुत्थशब्दपर इति भानुः। स्फूर्जथुर्वज्रनिष्पेष इति हलायुधोऽपि ॥२३॥ प्रद्युम्न आपतन्तीं तां तदीयाम्। गदया स्वयाऽपास्य निरस्य पुनर्नदंस्तां गदां शत्रवे क्रुद्धः प्राहिणोत् ॥ २४ ॥ दैतेयीं मयदर्शितां तत्कृतां दैत्येभ्यो दत्तां मायां समाश्रित्य वैहायसो गगनग इति तत्सम्बन्धी। असुरः कार्ष्ण्यें अश्ममयवर्षं निर्ममे ॥ २५ ॥ महारथो रौक्मिणेयोऽश्मवर्षेण बाध्यमानः सत्त्वात्मिकां महाविद्यां रतिप्रीतिसमीरितां निर्ममे ॥ २६ ॥ गौह्यकां च कौवेरी चेत्येवमाद्या मायाः शतशः प्रायुङ्क्त ताः स कार्ष्णिर्व्यधमत् ॥ २७ ॥ ताम्राणि श्मश्रूणि यस्मिंस्तत् सकिरीटं सकुण्डलं निशातमसिमुद्यम्य शम्बरस्य तच्छिरः कायाज्जहार ॥ २८ ॥ स्तुवद्भिः स्तोत्रं कुर्वाणैर्दिविजैः कुसुमोत्करैः पुष्पसङ्घैः कीर्यमाणः सन् अम्बरचारिण्या भार्यया विहायसा गगनमार्गेण पुरं द्वारकां नीतः ॥ २९ ॥ ललनाशतं तद्बहुसहस्रं तेन सङ्कुलमन्तःपुरवरं गगनादवरुह्य विद्युता तटिता सह बलाहको मेघ इव पत्न्या सह विवेश। गगनेऽततीति गगनादिति प्रथमा वा ॥ ३० ॥ उत्तरश्लोकेनान्वयः। स्त्रियोऽन्तःपुरस्थाः। जलदश्याममित्यादीनि विशेषणानि कृष्णसारूप्यं साधयन्ति भ्रमसाधनानीति ज्ञेयम्। नीलानां वक्त्राणमलकानामालयः पङ्क्तयस्ताभिरलङ्कृतं मुखाम्भोजं यस्य तं कृष्णं मत्वा लज्जया तत्र तत्र निलिल्युर्निलीना अभवन् ॥ ३१–३२ ॥ ईषद्वैलक्षण्येन किञ्चिद्विलक्षणलक्षणवत्तया शनैर्मन्दं स्वैरं वोपधार्य नायं श्रीकृष्ण इति निश्चित्य सस्त्रीरत्नं स्त्रीरत्नेन सहितं प्रमुदिताः सत्य उपजग्मुः समीपमापुः ॥ ३३ ॥ तत्र तत्समये योषित्परिषदि वा। असितापाङ्गी नीललोचना वैदर्भी वल्गुभाषिणी रुक्मिणी स्नेहेन स्नुतौ पयोधरौ कुचौ यस्याः सा। पयोधरः स्यात्कुचकोशकारकेति विश्वः। नष्टं सूतिकागार एवादर्शनं गतं स्वसुतमस्मरत्सस्मार ॥ ३४ ॥ अयं नरवैदूर्यः कः कमलेक्षणः कस्य पुत्र इति शेषः। कया कामिन्या गर्भे धृता इयं कामिनी काऽस्य केनोपायेन लब्धेति तर्कयन्ती तत्प्रकारेणातर्कयदित्याह ॥ ममेति। नष्टो मृतः सूतिकागृहान्नीतो

यदि कुत्रचिज्जीवति चेदेतत्समवयोरूपो भवेत् ॥ ३५–३६ ॥ परश्चेन्नैवंरूपः स्यादित्यूहयति । अनेन शार्ङ्गधन्वनः सारूप्यं तु शब्द ईषद्व्यत्यासमूचकः । प्राप्तं तदेव देवसारूप्यं देवी विविच्य वक्ति ॥ आकृत्येत्यादिना ॥ ३७ ॥ यो मे मया गर्भे धृतः स एवायं भवेत् । नूनं निश्चयेन । कुत इत्यत आह ॥ अमुष्मिन्निति । अधिका प्रीतिर्भवति न भवेदन्यत्रैवमिति भावः । मे वामो भुजः स्फुरति । अन्यथैवं मङ्गलसूचकं शकुनमपि न स्यात् ॥ ३८ ॥ वैदर्भ्यां रुक्मिण्यामेवं मीमांसमानायां विचारयन्त्यां सत्यां देवकीवसुदेवाभ्यां नारदेन च महात्मनाऽन्यैश्च यादवश्रेष्ठैश्च सहाविशत् । तदन्तःपुरमिति शेषः । विदितार्थोऽपि जनार्दनस्तूष्णीमज्ञातैतरक इवास ॥ ३९–४० ॥ नारदः शम्बराहरणादिकं शम्बरेण दैत्येनाहरणमपहरण एवादिर्यस्य तत्सर्वं वृत्तम् । शम्बरं जलं प्रत्याहरणं क्षेपः शम्बराज्जलादाहरणं गिलनं मीनेनैवेति शम्बरेणानन्तरं शंबरान्मत्स्यादाहरादिकमिति वा । शम्बरं सलिले वित्ते लोध्रव्रतविशेषयोः । शम्बरो दैत्यहरिणमत्स्यशैलजलान्तर इति विश्वः । अकथयद्यत्तन्महदाश्चर्यं महतामाश्चर्यमिति वा । कृष्णमन्तःपुरयोषितः ॥४१॥ देवकीवसुदेवौ कृष्णरामौ च तथा स्त्रियोऽन्याश्च रुक्मिणी च तौ दम्पती परिष्वज्य मुदं ययुः ॥४२॥ द्वारकौकसो दूरागारा नष्टं प्रद्युम्नमायातमाकर्ण्य वालो मृत आयातश्चेद्यथा तथाऽऽयातः । अहो आश्चर्यम् । दिष्ट्या परमसुखमित्यब्रुवंश्च ॥ ४३ ॥ नारीणां विभ्रमं जनयामासेति यदुक्तं तदित्थं चेदपि नैतस्मिन्स्मरेच्चित्रं तदिति सहेतुकमाह ॥ यमिति । यं दृष्ट्वा तन्मातरः कृष्णपत्न्यः पितृसरूप इति कृष्णसमानरूप इति निजेशे स्वस्वामिनि कृष्णे भावो मनो यासां तास्तथा । स्वरमणारमणेच्छवो मुहुः पुनर्मनसिजार्द्रं च तदुधृच्चेतना अभवन् । तच्चित्रं न खलु निश्चयेन । तत्र तन्त्रे रमास्पदबिम्बभूते रमाया आस्पदं हरिस्तस्य बिम्बभूते प्रतिबिम्बे । बिम्बं फले बिम्बिकायाः प्रतिबिम्बे च मण्डल इति विश्वः । आस्पदेति । स्मरे साक्षादक्षविषये यत्स्मरणादेवास्मरणं शरीरे नारीणां भवति किं वक्तव्यमेवं चेदिति भावः । अन्यनार्यः कामे कमनीयेऽक्षविषये उरुर्नानाविधो भावोऽभिप्रायो वा चेष्टो वा मनो वा यासां ताः । भवेयुरिति किं वक्तव्यमिति भावः । वैलक्षण्येन न नाथ इति मतिमतीनां तथा नारदोपदिष्टवृत्तानां समाश्लिष्टकार्ष्णीनां कृष्णानां तन्मातॄणां एवंविधमोहस्यानूहास्पदत्वादप्रत्ययवायश्च तासामित्यर्थो न क्लिष्ट इति मन्तव्यम् । भावः स्वभावाभिप्रायचेष्टासतात्मजन्मसु । क्रियालीलापदार्थेषु बुधजन्तुविभूतिष्विति विश्वः ॥ ४४ ॥

**इति श्रीभागवतटिप्पण्यां सत्यधर्मकृतायां दशम उत्तरार्धेऽष्टषष्टिरध्यायः ॥ १०–६८ ॥**

## श्रीसत्यधर्मकृता श्रीभागवतटिप्पणी

हरिः ॐ । हरिसमताममतानां दशेदृशो धुरीति विवरीतुं तथा मन्तुः पौड्रकवासुदेवस्य यादववासुदेवेन कृतां क्रियां वक्त्यत्राध्याये । तत्रादौ बदरिकाश्रमं गतवति गरीयसीनगरी गृहीतुं सुशकेति मन्वानो द्वारकामगादित्याह । पौंड्रक इति । तस्मिन्काले बहुसैनिको बहवः सैनिका यस्य सः । कृष्णेन रहितां विदित्वा वृष्णिनिलयां निशि रात्रौ निरुद्ध्यार्दयामास । तं पौण्ड्रकं कामपालो हलायुधो वसुदेवश्चोद्धवश्चादी येषां ते ॥ १–२ ॥ हे कौरव्य । अतिथिं काले यथा तथाऽऽयान्तं तं प्रति शरीरानिति शेषः । अर्पयामासुः ॥ ३ ॥ कः किं कुलः क्व वा राजा कस्य तनयां ब्रह्मन् एतत्सर्वं मे वदस्व ॥ ४ ॥ अपुत्रः पुत्ररहितः काशीति नगरनाम । सुतनुरिति संज्ञिता ताम् । राज्यमेव शुल्कं यस्याः सा ताम् । वसुदेवाय प्रायच्छद्ददौ ॥ ५ ॥ तत्र सुतनौ पौण्ड्रको नाम कुमारो जज्ञे उदभूत् ॥ ६ ॥ वासुदेव इति नाम चैतस्मादित्याह । वसुदेवसुतत्वादिति । शब्दितः रुज्ञातशब्दस्तस्मिञ्ज्ञाते सति शुल्कत्वेन सङ्कल्पितं राज्यं तस्मिन्पौण्ड्रके समारोप्य । तदारोपणं न शून्यीकृत्येत्याह सकोशबलवाहनमिति ।

अनन्तरं कंसावरजां देवतोपमां देवकीमुवाह परिणिनाय ॥ ७–८ ॥ कदाचिदपि करवीरपुरीमपि न प्रायात् । तां तुनेति किं वक्तव्यमित्यर्थसूचकोऽपिः ॥ ९ ॥ मातुः सुतनोः सापत्यं सपत्नीसाहित्यम् । किञ्च पुनरनागमनाद्वसुदेवस्य न गर्भनिभृता मातुरिति स्वस्य भ्रातृकत्वं चासह्यं सोढुमशक्यम् । स्मरमाणः स्मरन् । यदूनभिशमुद्वेजते उद्वेयति । विमृद्य मर्दयित्वा बलभद्रेण शैनेयेन चेत्युभाभ्यां निर्जितः पराभूतः ॥ ११ ॥ निहता अनेकसाहस्रहयकुञ्जरसैनिका यस्य स सन् । वाराणसीं पुरीं स्वां परशर्वर्यामुषःकाले जगाम ॥ १२ ॥ शर्वर्यां प्रभया सूर्यप्रभयाऽऽतायां गतायां तार्क्ष्यं पितापुत्रयोर्नामिदं गरुडम् । अभिवर्णितवृत्तान्तोऽभिवर्णितो रामादिभिर्वृत्तान्तः पौण्ड्रकवार्ता यस्य सः । सभां सुधर्माम् ॥ १४ ॥ तिष्ठतु ज्येष्ठ इति कृष्णे तूष्णीके सति । तदायुरासन्नमिति मतिरियमुदभूतस्येति वक्ति । कदाचिद्दूतं कृष्णाय प्राहिणोत् प्रेषयामासेति । प्रह्णे इति पिङ्गलनागोक्तेः प्रोत्तरको यकारो लघुः सन् पौण्ड्रककार्यलाघवं सूचयतीति ज्ञेयम् ॥ १५ ॥ इति बालैर्मूर्खैः प्रस्तोभितो वञ्चितोऽपि भवान्स्वात्मानमच्युतं मेने जानाति । त्वं देवशक्त्यां गुणकर्मयोनौ रेतस्त्वजायां कविरादधेऽज इत्युदाहृत्य ऋग्भाष्यटीकायां मध्यमपुरुषादिनियमो नास्तीत्युक्तेरनियमेन इत्यन्वयो वा । विस्तृतं चास्माभिरनुसन्धेयम् । बालालाप एव मूलं तवाच्युतनाम न स्यादिति भावः ॥ १६ ॥ राजसन्देशमज्ञपौण्ड्रकाज्ञाम् ॥ १७ ॥ भूतानामुपर्यनुकम्पार्थं तां कर्तुं मिथ्याभिधां मुधानाम त्यज ॥ १८ ॥ अस्मच्चिन्हान्यस्माकं चिन्हानि शङ्खचक्रादीनि । अभीतवन्मोह्यबन्मूढतया बिभर्षि । तानि त्यक्त्वा मा मां त्वं शरणमेहि नो चेन्ममाहवं युद्धं देहि ॥ १९ ॥ अल्पमेधसः कत्थनमफलपर्यवसायिभाषणम् । उग्रसेनाद्याः सभ्याः सभायां साधवो जहसुः ॥ २० ॥ परिहासः

कथम्। अनु तदनन्तरं यैः कल्पितैरल्पमते विकत्थसे तानि कृत्रिमचिन्हान्युत्स्रक्ष्ये त्याजयिष्ये ॥ २१ ॥ हे अङ्ग। तव मुखं कङ्कगृध्रबकैर्वृतं विधाय यत्र शयिष्यसे तत्र शुनां सारमेयानां शरणं भविता ॥२२॥ तदाक्षेपं तेन कृष्णेन कृतमाक्षेपं तिरस्कारगिरं स्वामिने पौण्ड्रकायाहरन्काशीं प्रायात् ॥ २३ ॥ पुरात्काश्याः ॥ २४ ॥ गरुडप्रतिनिधितया सुवर्णकृतसुपर्णे। चतुर्भुजतां दर्शयितुं सुवर्णबाहुयुगलम्। शङ्खार्यसिगदाशार्ङ्गम्। सेनाङ्गत्वादेकवद्भावः। दधच्चासौ श्रीवत्सलक्षितश्च तम्। श्रीवत्सार्थे दग्धवक्षःस्थलोऽभूदित्यादेर्दाहेन तत्र कालिमेति मन्तव्यम् ॥ २६ ॥ आमुक्तानि कण्ठे स्थापितानि माल्याभरणानि यस्य तम् ॥ २७ ॥ तमात्मनाऽसाम्यं न विद्यते साम्यं यस्य सोऽसाम्यः स नेति नासाम्यः साम्यवान्। आत्मना नासाम्यस्तम्। पदमेकम्। वेषं कृत्रिमाकारमास्थितम्। रङ्गगतं नटं यथा तथा तं कृत्रिमं दृष्ट्वा भृशं हरिर्जहास ॥ २८ ॥ तं कृष्णं शरैः। यद्यपि शरशब्दो बाणस्येवोदकस्यापि वाचक इत्येकेनैव शैलशैलधरपक्षे बाणैरुदकैरित्यावृत्त्या तन्त्रेणेवार्थसम्भवेऽम्भसित्यतिरिक्तं सद्यथोदकमकिंचित्करं गिरौ पतितं तथाऽरावपि पतितं न बबाधिर इति लिङ्गेन च सह ध्वनयामासेत्यवसेयम् ॥ २९ ॥ आस्थायेति गजं रथांश्चेति द्वितीयान्तपदैरन्वेति। प्राहरन् प्राहरन् प्राहरन्नित्यपि सुपठम् ॥३०॥ अपरः सोऽपि काशीशः पार्ष्णिग्राहः पृष्ठरक्षरितसृभिरक्षौहिणीभिः सह ॥ ३१ ॥ प्रभाज्वलन् हुतभुगग्निः। युगान्ते प्रलये ॥ ३२ ॥ आयोधनम् रणधरणीम्। रथाः स्यन्दना वाजिनोऽश्वाः कुञ्जरा गजा द्विपदः पदातयो गर्दभा उष्ट्राः क्रमेलकाः। मनस्विनां युद्धोत्थावतां मानवहर्माभिमानप्रापकम्। इषुणेत्यनेनैकेनैवानेकेषामवखण्डनं सूचयता भगवत्सामर्थ्यवैपुल्यं द्योतितं भवति। भूपतेर्हरस्योल्बणमाक्रीडं क्रीडास्थानं श्मशानमिव बभौ ॥ ३३ ॥ अथ दर्शनानन्तरं दूतवाक्येन वासुदेवोऽवतीर्णोऽहमित्यादिना मामाहृतान्यस्त्राणि ते समक्षमुत्सृजामि त्वया यन्मृषा कृतं मिथ्यात्वेन कृतमभिधानं त्याजयिष्येति शेषः। मां स्वयं त्याजयिष्ये। स्वार्थे वा णिच्। त्यक्ष्यामि। अद्य ते त्वां शरणं यामि। कदेदं सर्वमित्यत आह। यदीति। त्वया सह युद्धं यदि नेच्छामि तदेदं मदनुष्ठेयमिति भावः। इति क्षिप्त्वा तिरस्कृत्य शितैर्बाणैस्तं विरथीकृत्य रथाङ्गेन चक्रेण ॥ ३६ ॥ काशिपतेरेतद्द्वैशैकदेशेशस्य पत्त्रिभिः शिर उत्कृत्यानिलः पद्मकोशमिव काशिपुर्यां तन्नगर्यां न्यपातयत् ॥ ३७ ॥ एवं मत्सरिणं मात्सर्ययुक्तं ससखं मित्रकाशीशसहितम्। अपष्ठुच्। अथवा अच्प्रत्ययवान्विति अजिति योगविभागादच्प्रत्ययः। यद्वा समानं स्वं स्वसुखेन सुखं यस्य स सखः। मित्रमिति यावत्। तेन सहितः ससखः। तं विराजते पद्मनाभसधर्म इत्यादेः। हत्वा सिद्धैर्गीयमाना कथैवामृतं तद्वत्तृप्तिकरी यस्य सः, द्वारकामाविशत् ॥ ३८॥ किमिदमिति दूतो विलोक्य कस्य वेदं वक्त्रमिति समीपमुपेत्य जनाः संशयिरे संशयाञ्चक्रुः ॥ ३९ ॥ काशिपते राज्ञस्तच्छिर इति ज्ञात्वा नाथ नाथेति। नाथ अथ न किल त्वमित्युपा द्रवन्निति वा ॥ ४० ॥ पितुः संस्था मरणं तदनन्तरं क्रियमाणं विधिमावश्यकं कर्म कृत्वा पितृहन्तारं निहत्य पितुरपचितिमनृण्यम्। अर्चनायामपचितिप्रक्षये निष्कृतौ व्यय इति च ॥ ४१ ॥ आत्मना मनसा सोपाध्यायः सपुरोहितः परमेण समाधिना महेश्वरमर्पयामास ॥ ४२ ॥ अविमुक्ते काशीनामके क्षेत्रे प्रीतो भगवान्हरेर्वरमदात् तद्दानमनस्कोऽभूदित्यर्थः। स सुदक्षिणो वधोपायं वरं वव्रे। उपायमित्यनेन तन्मात्रविषयो वरो न वधविषय इति ध्वनयति। उपायः स्वयमपायवान्नेति नियमादर्शनात् ॥ ४३ ॥ सुदक्षिणं प्रति नेतरानलपरिचरणं कुर्विति वक्तव्यमित्याह। महादेवो दक्षिणाग्निमन्वहार्यपचननामानं परिचरेतीरयामासेति भावः। सहस्रर्त्विजः। ऋत्विक्शब्दपर्यायोऽयमृत्विजशब्दः। तैर्ब्राह्मणैः सह दक्षिणाग्निं परिचरेति वा। अभिचारविधानेनाभिचारिकेणाथर्वमन्त्रविधानेन। सुदक्षिणा शुशुक्षणिः प्रम्यैर्मद्दूतैर्वृतः सन्। अब्रह्मण्यैर्ब्राह्मणाचारविरहितैः प्रयोजितः सन्वितस्तदुपरि विसृष्टश्चेतव सङ्कल्पं साधयिष्यतीति हरेणादिष्टः कृष्णायाभिचरंस्तमुद्दिश्याभिचारिकमाचरंस्तथा शिवशंसितप्रकारेण चक्रे। अनेन किंवदन्त्या कृष्णो ब्रह्मण्य इति मतिस्तस्येति स्फार्यते। किञ्च चक्र इत्यात्मनेपदेन तत्फलं तद्गामीति सूच्यते ॥ ४४-४५ ॥ ततो मन्त्रतः परिचरणानन्तरं मूर्तिमान्साकारः। तप्ततानवद्विद्यमानानि शिखाश्मश्रूणि यस्य सः। अङ्गारस्योद्गारिणीव मती लोचने यस्य सः ॥ ४६ ॥ दंष्ट्रोग्रभ्रुकुटीदन्तैः कठोरं क्रूरमास्यं यस्य सः। स्वजिव्हया रक्ते ताम्रे सृक्किणी आलिहन्। तिस्रः शिखा अग्रभागा यस्य तत्त्रिशूलमिति शेषः। ज्वलद्विधुन्वत् ॥ ४७ ॥ तालप्रमाणाभ्यां पभ्द्यां धरणीतलं कम्पयन् भूतैर्हराज्ञप्तैर्दिशः प्रदहन् द्वारकामभ्यधावत् ॥ ४८ ॥ वनदाहे मृगा यथा तथा। सर्वे द्वारकौकस आभिचारदहनं विलोक्य तत्रसुः। भीता अभवन् ॥ ४९ ॥ सभायामक्षैः पाशैः क्रीडन्तं भगवन्तम्। पुरीं प्रदहतो वन्हेस्त्राहि त्राहि। धात्वन्तररूपम्। त्रायस्व त्रायस्वेति भयातुरा लोकेशमवदन् ॥ ५० ॥ जनवैक्लव्यं श्रुत्वा स्वानां च साध्वसं च दृष्ट्वा मा भैष्टाहमविताऽस्मीति धरणीशः प्रहस्याह ॥ ५१ ॥ स विभुः सर्वस्यान्तर्बहिश्च व्याप्त इति माहेश्वरीं हरसम्बन्धिनीं कृत्यां विज्ञाय तद्विघातार्थं तस्या विनाशार्थं पार्श्वस्थं चक्रं सुदर्शनमादिशत् ॥ ५२ ॥ सूर्यकोटिप्रतिमं कोटिसूर्यसमप्रभम्। जाज्वल्यमानं प्रभयाऽनलस्यापि प्रभा यस्य तत्सुदर्शनं भक्तानां मुकुन्दस्य चक्रं स्वतेजसा खमाकाशं ककुभो दिशो रोदसी द्यावापृथिव्यौ झडित्यपूरयत् ॥ ५३ ॥ रथाङ्गपाणेरस्त्रौजसा प्रतिहतो विभग्नमुखो निवृत्तः सन्। स्वकृतः सुदक्षिणकृतोऽभिचारः कृत्यानलो वाराणसीं प्रति समेत्य सन्निहितं सुदक्षिणं समदहत् ॥ ५४ ॥ तदनु सुदक्षिणदहनमनु विष्णोश्चक्रमट्टान्यन्यानि सभाश्चालयाश्चापणाश्च तैः सहिता ताम्। अट्टशूला इति विराटपर्वव्याख्यास्। अट्टमन्नं शियो वेदशूलो विक्रय उच्यते। केशो भग इति प्रोक्त इत्युक्तेः। अनेन नाट्टालकाट्टान्यतरातिरेकः। गृहाट्टालक-

गोपुराट्टालकभेदेन भेद इति त्वगतिका गतिः। सगोपुराट्टालककोष्ठतोरणामिति गतम्। वरूथं मन्दिरं रथगुप्तिस्थानम् ॥५५॥ सुदर्शनं पुनरक्लिष्टकर्मणः कृष्णस्य पार्श्वमुपाश्रित्। सकर्मकत्वान्नोपादिति प्रवर्तते ॥ ५६ ॥ समाहित इति श्रावकश्रोतृविशेषणम्। उत्तमश्लोकस्य विक्रमो यस्मिंस्तदेतच्चरितं श्रावयेच्छृणुयाच्च सर्वपापैः स प्रमुच्यत इति पृथक् पृथगन्वयः। उत्तमनूद्य फलमभिलपति। तावुभाविति। ब्रह्महत्यादिभिः सहितेभ्यः सर्वपापेभ्यः। तादुभावात्मानं विमुच्य विमोच्य देहावसाने सति विष्णुलोकं प्रयास्यतः। सर्वपापेषु तद्वत्सु इभ्यः श्रेष्ठश्च। सर्वपापेभ्यः सर्वपापश्चेति तावुभाविति वा। अतिपापिनावित्यर्थः ॥ ५७–५८ ॥

इति श्री भागवतटिप्पण्यां सत्यधर्मकृतायां दशमे उत्तरार्धे एकोनसप्ततितमोध्यायः॥ १०–६९ ॥

## श्रीसत्यधर्मकृता श्रीभागवतटिप्पणी

हरिः ॐ ॥ श्रीकलत्रे लोकमनुकर्तरि स्यमन्तपञ्चकं गन्तुमुद्यते सति तत्रायन्खरकिरणोपरागहेतोर्ग्रामीणा अपि सकलाः सबालवृद्धा इव नानाजनपदजना लोकनाथावलोकनोत्सुका 'अपि समागुरिति निरूप्यतेऽत्राध्याये। तत्रादौ तत्क्षेत्रमाहात्म्यं तत्कर्तृगुणांश्चाह ॥ अथेति। एकदा कदाचिद्रामकृष्णयोर्द्वारकायां वसतोः सतोः। कल्पक्षये यथा प्रभाकरप्रभाप्रतिबन्धस्तथेति महान्। अनेन सर्वग्रासो ध्वन्यते। सूर्योपरागः सूर्यग्रहणमासीत् ॥ १ ॥ तमुपरागं मनुजा ज्ञात्वा सर्वशः पुरस्तादेव भगवदागमादग्र एव स्यमन्तं पञ्चकं स्यमन्तनामकह्लदपञ्चकोपेतं कुरुक्षेत्रं श्रेयोविधित्सया श्रेयस्कृतीच्छया जग्मुः ॥ २ ॥ कथं तत्पञ्चकं भवनमित्यतस्तत्प्रपञ्चयति ॥ निःक्षत्रियामिति। निर्गताः क्षत्रिया यस्याः सा तां महीं कुर्वंच्छस्त्रभृतां वरो रामो भार्गवो नृपाणां स्वहतानां रुधिरौघेण रक्तप्रवाहेण यत्र महाह्लदान्पञ्च चक्रे ॥ ३ ॥ कर्मणाऽस्पृष्टोऽपि तदबद्धोऽपि भगवान्रामोऽन्यः परतन्त्रो यथाऽघानां पापानामपनुत्तिरपहृतिस्तस्यै यजति। तथा लोकस्य सङ्ग्रहाय यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जन इत्यादेर्लोकं शासितुमीजे ॥ ४ ॥ तस्मिन्काले महत्यां तीर्थयात्रायां भारतीर्भारत्यस्तत्खण्डगाः प्रजा आगुः। षोडशसहस्रमहिषीणां शिबिका नरवाहनानि ताभिरन्वितः ॥ ५ ॥ वर्षसाहस्रामित्यनुव्याख्यावसरे सहस्रं परिमाणमस्येति साहस्रः सङ्घस्तदस्य परिमाणमित्यर्थे शतमानविंशतिकसहस्रवसनादण्वियणो विधानादिति सुधाभिधानादण्। विस्तरस्तु ननु सहस्रशब्दादित्यारभ्य तथा च सहस्ररूपपरिमाणोपाधिके सङ्घरूपेऽर्थं सङ्ख्यावाचिनः सहस्रशब्दसङ्ख्यायाः संज्ञासङ्घसूत्राध्ययनेष्वित्यनेनाण्प्रत्यये णित्वादादिवृद्धौ यस्येति चेत्यकारलोपे साहस्रशब्दनिष्पत्तिरुक्तं भवतीत्यन्तया वाक्यार्थचन्द्रिकया ज्ञेयम् ॥ ५ ॥ वारकान्तारुढकरेणुभिः कदम्बैः समूहैः प्रियासार्थे रुक्मिण्यादिसङ्घैश्च संयुतः ॥ ६ ॥ स्वं स्वसम्बन्धि पापं क्षपयिष्णवः ॥ ७ ॥ शठादयो वज्रादय आहुकं कृतवर्माणं च पुररक्षणे संस्थाप्य ॥ ८ ॥ ते शठाद्या देवेष्वपि ख्यातैर्हयैस्तरलप्रभैस्तरलानां हारमध्यमणीनां प्रभा येषां ते तैः। तरलं चञ्चले सङ्गे हारमध्यमणावपीति विश्वः। एतेन हारोऽपि तेषां कण्ठे वर्तत इत्यसूचि। अभ्राभैर्धवलानां श्यामलानां च जलदानां भावात् गजा अपि सिता असिताश्च ज्ञेया नृभिः। विद्याधराणां द्युः प्रकाशो येषां ते तैः ॥ ९ ॥ सहशलाद्या महाभागाः काञ्चनमालिनश्च पथि व्यरोचन्त ॥१०॥ कृष्ण कृष्णेति गोविन्देति पूरयन्नादाः पूरयन्तश्च तेः नादाश्च तैः। काः पूरयन्तस्ते नादा इत्यत आह ॥ ककुभ इति। एकदेशान्वयमात्रं सोढव्यम्। एकवचनं बहुवचनार्थं वा ॥११॥ त्रैलोक्यविश्रुता भवनानि गृहान् ॥१२॥ महीभृतां राज्ञां विचित्ररूपापि नानावर्णानि ॥ १३ ॥ नृपानेक इति पदम्। नृपाश्च तेऽनेके चानेकनृपा इत्यर्थः। वर्णनिन्दितास्तास्ताद्याः ॥ १४ ॥ सोपाध्यायाः साचार्याः स्नातका दण्डोदककमण्डलुधरा गृहमेधिनः पञ्चयज्ञाधिकारिणः ॥ १६ ॥ कुब्जाश्चिवक नाम्नाः खर्वाः पण्डका षण्डा व्यङ्गाः करादिविकला जडा मूर्खा वोन्मादिनो वा कर्मक्षयपरोप्सवस्तमिच्छन्तः ॥ १६ ॥ रेणुभी रञ्जितानि मस्तकानि येषां ते तथा। कटकाङ्गदकेयूरकुण्डलैर्भूषणं येषां ते ॥ १७ ॥ कलत्रैर्भार्याभिः सह खेचरा गन्धर्वा इव तत्र तत्समये उपोष्योपोषणं कृत्वा ॥ १८ ॥ वासश्च स्रजः पुष्पाणां रुक्माणां माला आसां सन्तीति ता धेनूः। रामह्रदेषु पञ्चसु पुनराप्लुत्य ॥ १९ ॥ कृष्णे नो भक्तिरस्त्वित द्विजाग्रेभ्यः स्वन्नं षड्रसमन्नं षड्रसमन्नं ददुः। तदनुज्ञातास्तैर्ब्राह्मणैः ॥ २० ॥ स्निग्धा निबिडा छाया येषां ते च तेऽङ्घ्रिपाश्च तेषामङ्घ्रयः। भुक्त्वोपविविशुः। सुहृदश्च सम्बन्धिनश्च तान्नृपांस्तत्रागतान्ददृशुः ॥ २१ ॥ मत्स्यादयो देशास्तद्भवान् ॥ २२ ॥ परान्परपक्षीयांश्चिरं बहुकालमुत्कण्ठिता उत्कलितोपेताः ॥ २३ ॥ रंहो वेग उत्फुल्लानि च तानि वक्त्रसरोरुहाणि च तेषां श्रीः शोभा येषां ते। अन्योन्यं परस्परं गाढमाश्लिष्य नयनैः स्रवन्ति गलन्ति जलानि येषां ते। हृषत्यस्त्वचो येषां ते। सरोमाञ्चा रुद्धगिरस्तोषातिशयनिरुद्धवाचो मुदं ययुः ॥ २४ ॥ स चापला ललनास्वभावश्चापलमपाङ्गे तत्सहिता दृशो नेत्राणि यासां ताः। अभिरेभिरे आलिलिङ्गिरे। आलिङ्गनमङ्गीमाह॥ स्तनैः स्तनानीति ॥ २५ ॥ यवोयैर्यवीयाभिः स्वागतमित्युक्त्वा कुशलं पृष्ट्वा मिथः कृष्णकथाश्चक्रुः ॥ २६ ॥ भ्रातृन्वसुदवादीन् स्वसृर्भागिनीस्तत्पुत्रान्स्वस्रीयान्। पितरौ कुन्तिभोजं तद्भार्या च सङ्कथया परस्परकतया शुचः शाकांस्तत्प्रापकाकारभेदाच्छुचय इत्युक्तिः। जहौ तत्याज ॥ २७ ॥ सा वार्ता केत्यतः कीर्तयति ॥ आर्येति। भ्रातः कनिष्ठभ्रमं पितृव्यादिभ्रमं च वारयितुं ते पदे। आत्मानं मामकृताशिषमकृताऽसम्पादिताऽऽशीरभिमतार्थो यथा तां मन्ये। आत्मपदविवक्षया तर्मिति वा। तत्र तन्त्रमाह ॥ यदिति। यत

आपत्स्वनेकास्वागतास्वपि मद्वार्तां नानुस्मरथेति । दुर्वृत्तानां किमिदं त्वदस्मरणं चित्रमित्यत आह ॥ सत्तमा इति ॥ २८ ॥ लोके लोकानां दैवहीनानां दशेदृशीति भ्रातः कातर्यास्थापितः शब्दो न तवोपरीति वक्ति ॥ सुहृद इति । एते स्वजनमपि तं नानुस्मरन्ति । यस्य स्वजनस्य दैवमदक्षिणमसहकारि । अहं हीनदेवा यूयं किं करिष्येथेति भावः ॥ २९ ॥ आदौ स्वापन्ना वक्तव्य उपद्रुतेष्विति पर्यायतस्तदुदाहृतदैवपदार्थं विवृण्वंस्तां समाधाय स्वापदमपि वक्ति द्वाभ्याम् ॥ अन्बेति । मातर्भगिनि । अस्मान्नासूयेथा अस्मभ्यमसूयां न कुरु । देवक्रीडनकान् देवस्य क्रीडनायैरिति तत्क्रीडासाधनभूतान्नरान्हि यतस्तदेव देवक्रीडनकत्वं सामान्यत आह । ईशस्य हरेर्वशे स्थितो लोकः कुरुते तथा कार्यते कर्माणि । ईशेन यथा कार्यते तथा कुरुत इति वा । अतोऽत्र न वयं स्वतन्त्रा इति भावः ॥ २० ॥ स्वसः कंसप्रतापिता वयम् । तत्रैव सर्वे सुहृदश्च दशदिशो याता इति भिन्नवाक्यतया योजनीयम् । अन्यथा वसुदेवस्यापि देशान्तरगमनापत्तेः । तस्य चादर्शनात् । एतर्हीदानीमेव पुनस्तदेव स्थानं दैवेनासादिताः स्वसाम्यं प्रापिता वयमपि बहुकष्टिन इति न विचारावसर इति भावः ॥ ३०–३१ ॥ नृपा देशान्तराधीशा अच्युतस्य दर्शो दर्शनम् । वायवाहि दर्शतेत्यृग्भाष्ये दर्शितस्तत्तद्दृष्टित्वात् । दृशोर्भावे घञि दर्शो दर्शनमिति तट्टीकायां चोक्तेः । तज्जनितो यः परमानन्दस्तेन निर्भराः पूर्णास्तस्य निर्भरो नैर्भयं येषां ते वा ॥ ३२ ॥ ससुता गान्धारी । अनेन पित्रननुरूपता पुत्राणां ध्वनयति । अन्यथा ससुतोऽम्बिकापुत्र इति वदेदिति ध्येयम् । सदारा द्रौपद्यादिभार्यासहिताः ॥ ३३ ॥ भीष्मको रुक्मिणीपिता । पिता च नग्नजिन्नीलायाः ॥ ३४ ॥ दमघोषः शिशुपालपिता विशालाक्ष इति यथार्थ विशेषणं वा कस्यचिद्राज्ञः स्वतन्त्रं नाम वेति निर्णये न नामकरणसमयवर्तिनो वयम् । ससुता बाल्हिकादयो राजानः ॥ ३५ ॥ शौरेः श्रीनिकेतनं सम्पदाश्रयं रमाश्रयं वा वपुः सस्त्रीका वीक्ष्य विस्मिता अभवन्निति शेषः ॥ ३६ ॥ सम्यक् स्वस्वयोग्यतानुसारेण प्राप्तं समर्हणं येषां ते स्वयं तुष्टा ये मुदा युक्तास्तान् कृष्णपरिग्रहान् भार्याः प्रशशंसुः । भगवदङ्गसङ्गोऽङ्गनानामहो इति पारोक्ष्येणास्तुवन्परिजानन् । परिग्रहः परिजने पत्न्यां स्वीकारमूलयोरिति विश्वः ॥ ३७ ॥ भोजपते उग्रसेन इह नृणां मध्ये यूयं जन्मभाजः । तत्र निमित्तमाहुः । योगिनामपि दुर्दर्शं कृष्णमसकृद्बहुवारं निरन्तरमिति यावत् । पश्यथेति यदिति ॥ ३८ ॥ अधुनाऽपि मधुनाथदर्शनादिभाज इति जन्मभाज इति भोजराजादीन्प्रति राजानो वदन्ति ॥ यन्निःसृतमिति । तुरेवार्थे । तुः पयः सः समयस्य च किञ्चित्प्रमितविशेषसूचको वा । तन्महत्त्वस्यागतगीतारूपं च यन्निःसृतमुत्पन्नं च व्यक्तं जगत्पुनातीत्यावृत्त्या तन्त्रेण वाऽन्वयः । तथा पादावनेजनपयश्च गङ्गारूपं तथा तद्वचश्च । गङ्गा गङ्गेति यो ब्रूयादित्यादेस्तद्व्याहरणं च पुनाति । कालेन भर्जितभगं ऐश्वर्यादिर्यस्याः । दग्धस्वसम्पत्कादिदानीं यदङ्घ्रिपद्मयोः स्पर्शः सम्बन्धस्तेनेद्धाऽभिवृद्धा शक्तिर्यस्याः सा वीर्यवतीति यावत् । नोऽखिलार्थान् ईप्सितान् अभिवर्षति तमसकृत्पश्यथेति यूयं जन्मभाज इति प्रशशंसुरित्यतीतेनान्वयः । यन्निःसृतं वेद शास्त्रं च पादावनेजनपयश्च योऽयं पुनातीति वा ॥ ३९ ॥ निरयवर्त्मनि निरयः संसारस्तद्वर्त्मनि वर्ततां संसारिखानां निरयद्वारभूतत्वात्तद्वर्त्मनि वा वर्तमानानां येषां भवने गृहे स्वर्गापवर्गविरमोऽपवर्गः कर्मसाध्यफलात्मा स्वर्गश्चासौ स च तस्य विरमोऽप्राप्तिर्यस्मात्सः । स्वर्गो मुक्तिरपवर्गः स्वर्गस्तयोस्तयोर्विषये विरमोऽनभिलाषात्मा औदासीन्यं यस्मात्स एकान्तिनां स्वर्गापवर्गोऽपि वर्जनीय इति तदनार्जने मतिद इति भावः । अपवर्गस्त्यागमोक्षयोः । क्रियावसानसाफल्येऽप्यपवर्गः प्रयुज्यत इति विश्वः । अपवर्गः क्रियासाध्ये फलासौ त्यागमोक्षयोरिति च । स्वर्गः सुषुप्तिरित्याख्या मुक्तेरपि समा यत इति बृहदारण्यकभाष्योक्तेः । विष्णुः स्वयं प्रधान आस । धात्वन्तररूपम् । अव्ययं वा । प्रधानवाचकत्वे कश्चानन्यः केवलस्वयमिति ब्रह्म इति तृतीयतात्पर्योक्तेः । स्वयं साक्षात्कृष्णकेशात्मेति वा । ये च तस्य दर्शनं स्पर्शनमनुपथो गमनं प्रजल्पः सम्भाषणं शय्या च मिलित्वाऽऽसनं च सयौवनेन पिण्डेन देहेन बन्ध आलिङ्गनादिर्येषां ते । पिण्डो देहे जपापुष्पे निपाते सिल्हकेऽपि चेति विश्वः । निरयवर्त्म नरकमार्गो निवर्तन्तां गच्छत्विवयासेत्यप्यर्थः । स्वर्गश्च सुखदुःखसम्भिन्नश्च लोकोऽपवर्गो मोक्षश्च तयोर्विरमो विरतिस्तथा विशेषतो रमो रतिश्च येन स इति वा । पिण्डा देहा जरादिना सहिताः सयौवनास्ते येन सम्बन्धो गाढालिङ्गनादियं वामिति वा । स्वयं सुशोभनदैवं निमित्तीकृत्यासेति वा । अनेन निरयवर्त्मनीति प्रोक्तप्रतिषेधः कृत इति मन्तव्यम् । यूनो भावो यौवनम् । हायनान्तेत्यण् । अन्निति प्रकृतिभावः कर्म वा । केचिदुद्धवार्जुनौ सेनेयार्जुनौ यथासम्भवं द्वौ ग्राह्यौ । दर्शनाशनान्तैः । तया सम्पदा सहितौ सयौ । एकारान्तः शब्दः । वने पिण्डबन्ध आलिङ्गनादिर्यस्यैषाम् । सर्वमुर्वरितं सममिति वा । सयौनसपिण्डबन्धं इति पाठे यौनेरयं यौनः स च स पिण्डश्च तेन बन्धोऽनुबन्धस्तेन सहित इति स तथा । प्राहुणिकज्ञातिसम्बन्धवानिति यावत् ॥ ४० ॥ तत्र स्यमन्तपञ्चके तरसा त्वरया ॥ ४१ ॥ तन्वः शरीराणि चिराद्दर्शनं तेन कातराः परिषस्वजिरे आलिलिङ्गुः । उपसर्गादिति षत्वम् ॥ ४२ ॥ पुत्रन्यासं सुतस्थापनं च स्मरन् ॥ ४३ ॥ पितरौ यशोदानन्दौ ॥ ४४ ॥ यशोदा च नन्दश्चेति तौ सुतौ । उत्सङ्गमूरुम् । उत्सङ्गमुद्गतसङ्गमेकमेकं चोत्कृष्टसङ्गं च जगद्वहमिति तावित्यप्यर्थः ॥ समारोप्य तथा बाहुभ्यां परिरभ्य च शुचो विरहजशोकान्विजहतुः ॥ ४५ ॥ व्रजेश्वरीं यशोदां बाष्पकण्ठे देवकी रोहिणी चेत्युभे । बाष्पकण्ठाविति पाठे यशोदानन्दौ प्रति समूचतुरित्यर्थः । बाष्पकण्ठाविति पाठो ललितः । तत्कृतं यशोदानन्दकृतम् । मैत्रीं स्मरन्त्यौ ॥ ५६ ॥ हे व्रजेश्वरि हे व्रजेश्वर । वामनुवृत्तामविच्छिन्नां मैत्रीं । को विस्मरेत विस्मरेत् । का विस्मरेतेति ते । प्रक्रमानुरोधेन वक्तव्ये क इति

वदन्त्यौ स्मरणेऽस्मरणेति स्वातन्त्र्यं किञ्चित्प्रत्याहरणेऽपि न स्त्री स्वातन्त्र्यमर्हतीत्यादेर्नावयोः पत्यादेरिति सूचयत इति मन्तव्यम्। नैवास्ति प्रत्युपकृतियोग्यं किञ्चिदथवा दातव्यं चेल्लोकेऽधिकत्वेन सम्प्रतिपन्नं चैन्द्रमैश्वर्यं च यस्या मैत्र्याः प्रतिक्रिया तत्फलरूपं न ॥४३॥ अदृष्टौ पितरावहं वसुदेवश्चेत्येतौ याभ्यां तौ। यद्यपि नद्यतश्चेति कपा भाव्यं तत्पितृत्वमेवाप्रामाणिकमिति ध्वनयितुं स नायात इति ज्ञेयम्। पित्रायंशोदानन्दयोस्तथामतयोर्युवयोः सम्प्रीणनं सम्प्रीतिजननमभ्युदयो जातकर्माद्यभिवृद्धिव्यापारः पोषणं रसायनादिभोजनतः पालनमनलानिलादितः। एतानि प्राप्यास्माभिर्न्यसौ। मयूरव्यंसकादिसमासः। तर्हि लोकानुकरणार्थं सर्वमनुकुर्वतोः सद्भ्योऽपि भयं न किमित्यत आहतुः। न सतां परस्तादसद्भ्योऽन्यत्र सद्भ्य इति यावत्। सभयाविति शेषः। सतां परस्तादकुत्र च भयौ। पक्ष्मेत्येकवचनेन बलपक्षे यथाकथञ्चित्संरक्षणं भवेन्न भवेत्कथञ्चिदपि भगवत्पक्ष इति मन्तव्यम्। पक्ष्मेत्यक्षिलोमवाचकपदोत्तरमेकवचनेन शुक्लकेशकृष्णकेशयोरैक्यं सूच्यत इति वा। न सतां परस्तात्। असदन्येषां सतामिति यावत्। कुत्र न च विद्यते भयं याभ्यामित्यकुत्र च भयाविति वा ॥ ४८ ॥ गोप्योऽभीष्टं कृष्णं चिरादुपलभ्य यस्य प्रेक्षणे प्रसक्ते दृशिषु नेत्रेषु पक्ष्मकृतमुन्मीलनमीलनादिरूपं तद्व्यापारम्। पक्ष्मणां कृतं धातारं वा शपन्ति। क्रियाप्रबन्धे लट्। अशपन्। दृग्भिर्हृदि कृतमलमिति वृत्तलक्षणव्यत्यस्त्या तासां सद्वृत्तव्यत्यासं ध्वनयति। दृग्भिर्नीरीक्ष्यानन्तरे हृदि कृतं साकारमङ्कूरितमलं परिरभ्य नित्यं मनोयुजो योगिनस्तेषामपि दुरापं दुष्प्रापं तद्भावं तद्भक्तिम्। भावो भक्तिस्समुद्दिष्टेति बृहद्भाष्योक्तेः। आपुः। प्रेक्षण इति तादर्थ्ये सप्तमी वा ॥ ४९ ॥ भगवान्कृष्णो विविक्ते एकान्ते उपसङ्गता मिलिता आश्लिष्य तथाऽनामयं नीरोगतां पृष्ट्वा प्रहसन्निदमब्रवीत् ॥ ५० ॥ हे सख्यः स्वानां ज्ञातीनामर्थं चिकीर्षव इति विग्रहः। न लोकेति षष्ठीप्रतिषेधात्। कृपणचेतसो गतान्। अन्यासङ्गात्कार्यान्तरासक्तेः। अन्यासामासङ्गात्तद्दुहितोऽप्यर्थो भवतु का हानिरित्यपि भगवद्भावः। चिरायितान् आगमनालस्यं कृतवतो नः स्मरथापि स्मरथ किम् ॥ ५१ ॥ यथायथावत्सम्यगिति वा। अवबुद्धय विचार्यास्मासु यूयं वयं चेति वयम्। त्यदादित्वात्परस्यैकशेषः। इदमेवेत्यपरनिरासः। विशङ्क्ये तर्कयामि। किन्तदित्यत आह। नूनमिति। त्वमेव योजयितेव वियोजयिता चेति तन्मुखत एव वादयितुं परोक्षत आह। भगवान्हरिर्भूतान्यस्मदादिभिर्युष्मदादीनि युनक्ति संयोजयति विनियुक्ति विनियोजयति च प्रागिह संयोगकर्तेदानीं विनियोगकर्तेश्वर इति भावः। एतमेवाभिप्रायं निदर्शनेन द्रढयति ॥ वायुरिति। घनानामनीकं मेघमण्डलं तथा तृणं च लघु तूलं कार्पासो रजांसि परागादीनि संयोज्यानन्तरं क्षिपते। तथा भूतकृद्धरिर्भूतानि संयोज्य भूयः पुनः क्षिपति। भूतकृद्यत्किञ्चिद्भूतकृद्वायुरपीति तदुभयान्वयीति ज्ञेयम् ॥ ५३ ॥ परमरहस्यदृष्टौ तु मम युष्माकं च सर्वथा वियोग इति वक्तुं तत्स्वभावमावेदयति ॥ मयीति। मयि भक्तिर्भूतानां जनानाममृतत्वाय मुक्तये कल्पते। किमापणवीथीकथया कथयोपयुक्तमित्यतः कथयति। मुदावहः स्वरूपसुखप्रापकः। अनेनामृतत्वेति विवृतार्थम्। भवतीनां सुस्नेहः। इदमपि भक्तिशब्दार्थकथनमिति बोध्यम्। दिष्ट्या सुखेनासीत्। उत्पन्न इति। ५४ ॥ अहं सर्वभूतानामादिरुत्पादकस्तथाऽन्तो नाशकोऽन्तरं मध्ये च बहिश्च वर्ते। हिरन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः। तद्दूरे तद्वदन्तिके। तदन्तरस्य सर्वस्य तदु सर्वस्य बाह्यत इत्याद्यागमप्रसिद्धिद्योतकः। अङ्गना भौतिकानां पदार्थानां खमाकाशो जलं भूः पृथ्वी वायुर्ज्योतिरग्निः। भौतिकानामन्तर्बहिश्च यथा भूतानि वर्तन्ते इति न दृष्टान्तः। वृषा यूथे वेत्यृग्भाष्येऽल्पस्यापि प्रसिद्ध्येव दृष्टान्तत्वं युज्यत इत्युक्तेर्हरेर्निरवधिकव्याप्तत्वात्। यथा भूतानीत्युक्तौ न प्रतीयेत कार्यकारणभावः। किञ्च क्रमेणोक्तौ स्वातन्त्र्यं च तेषां प्रतीयेतेत्येषामेकैकशो ग्रहणमिव व्यत्यस्योक्तिरिति च ध्येयम् ॥ ५५ ॥ एवमेतानि भूतानि भौतिकेषु ततानि परमात्मना ततानि तैनैवात्मा च ततः। तर्हि स आत्मा त्वदितरः किमित्यतोऽहमेव स इति विधत्ते। उभयं भूतान्यात्मेत्युभयं कोटिद्वयं मय्यक्षरे परे आततं पश्यथ। अथपर इति पदमेकम्। न विद्यतेऽन्नं यस्य स चासौ परश्च तस्मिन्। अनश्नन्नन्योऽभिचाकसीति। अन्यो निरन्नोऽपि बलेन भूयानित्यादिश्रुतिस्मृतयोऽत्र भवन्ति। अन्नन्यमिति श्रुतेः ॥ ५६ ॥ एवमध्यात्मशिक्षयाऽध्यात्मानं देहमधिकृत्य विद्यमानानां परमात्मतत्वानां शिक्षयोपदेशेन कृष्णेन शिक्षिता उपात्तविद्या गोप्यस्तस्य कृष्णस्यानुस्मरणेन ध्वस्तो जीवकोशः शरीरं तदभिमान इति यावत्। यासां ताः श्रीकृष्णं तं हरित्वेनाध्यगुर्व्यजानन्। या एवं प्राङ्न शिक्षितास्ता गोप्यः कृष्णेऽध्यात्मशिक्षया ब्रुवति सति। इतरं पुरावत् ॥५७॥ अध्यगुरित्युक्तज्ञानवतीनां गोपीनां प्रार्थनां। प्रार्थनाऽस्माकमियमित्याहुः। नता इति। नाथ ते अगाधबोधैर्योगेश्वरैर्हृदि विचिन्त्यं योगेश्वरमात्रविचिन्त्यं चेत्कार्यसमयसमयातानां मशकानां किमिति नीतिवन्नेति शंसति ॥ संसारेति। संसार एव कूपस्तत्पतितानामुत्तरणे ऊर्ध्वमागमनेऽवलम्ब्यं निःश्रेण्याद्याश्रयं पदारविन्दं नताः स्म। गेह जुषां सेवमानानामपि नो मनसि सदा तत्पदारविन्दमुदियात् ध्यानकाले उदितं भवतु। एतदर्थं नताः स्मेति वाऽन्वयः। अस भुवीत्यस्याशिषि प्रयोगः। नतावामेति प्रार्थयामहे। जन्मान्तरे तु त्वत्पादाब्जनमनमाशास्मह इत्यर्थ इत्यस्यार्थः प्रेक्षावदीक्षणीयः। भूरादेशस्य वर्जनीयत्वादिति केचित्। स्म तव महत्त्वं स्मृत्वेति वा ॥ ५८ ॥

इति श्रीभागवतटिप्पण्यां सत्यधर्मकृतायां दशम उत्तरार्धे सप्ततिरध्यायः ॥ १०-७० ॥

## श्रीसत्यधर्मकृता श्रीभागवतटिप्पणी

॥ हरिः ॐ ॥ अत्रापि भक्तिमार्गमेव व्यत्स्नीकर्तुं कृष्णभार्याणां कृष्णायाश्च संवादादिकं प्रतिपाद्यते। तत्रादौ धर्मादिकुशलालापादिकरत्पीठिकां रचयति ॥ तथेति। गुरुरभिहितहितो गतिर्गम्यस्थानं भगवान्गोपीनां गोपीस्तासामुपरि चाऽनुग्राह्यानुग्रहं कृत्वा स कृष्णोऽथ गोपायापनानन्तरं युधिष्ठिरम्। गवियुधिभ्यां स्थिर इति षत्वं सप्तम्या अलुक्। धर्मं तथाऽन्यांश्च सुहृदोऽव्ययं क्षेममपृच्छत् ॥ १ ॥ लोकनाथेन श्रीकृष्णेनैवमुक्तरीत्या परिपृच्छ्य पृष्टा। सुसत्कृतो बहुबहुमानितस्तत्पादयोर्वीक्षा निरीक्षणं तया हतमंहो दुरितं येषां ते तथा। कृष्णाङ्घ्रिदृष्टिनष्टदुरिष्टा हृष्टमनसश्च प्रत्यूचतुः ॥ २ ॥ हे प्रभो। कर्णपुटैर्महमनस्तो महतां व्यासादीनां मनस्तो मनःपूर्वकं मुखतो निःसृत त्वच्चरणाम्बुजासवं तव चरणकमलकथामृतं क्वचिदपि पिबन्ति तेषामशिवो न विद्यते शिवं मङ्गलं यस्मिन्स व्ययः कुतः स्यात्। ते चालं देहभृतो बिभ्रति ये ते तत्कृतं तत्प्रापककर्मकर्तारं जनं वीक्ष्योच्छ्वसन्ति ह। अयं वृथा नश्यतीति क्लिश्यतीति भावः। हीतीदमर्थस्य प्रसिद्धिमाह। तत्कृतं तव व्यापारमुच्छ्वसन्ति शिष्यप्रशिष्यद्वारा प्रकाशयन्ति तेषां कुतोऽशिव इति वा। शिवं मोक्षे सुखे भद्रे शिवं भद्रमिति विश्वानेकार्थध्वनिपदमञ्जर्यौ। आश्वमेधिके पर्वणि गुरुशिष्यसंवादे नो मार्गाः शिवाश्च स्युरिति। तथाऽन्यत्रापि एतादृशः शिवः पन्था इति प्रयोगात्पुल्लिङ्गो मङ्गलवाचीत्यशिवोऽमङ्गलमिति वा। ये देहम्भृतस्तदभिमानवन्तस्तेषां चिज्ज्ञानं तत्कृतं स्वकर्माद्युच्छ्वसन्ति क्लिश्यन्ति तेषां कुतः। सार्वविभक्तिकस्तसिः। कौ शिव इति वा। परत्र क्लेश इति किं वक्तव्यमित्यर्थः ॥ ३ ॥ पिबन्ति ये कर्णपुटैरिति पारोक्षोक्त्या स्वेषां तदितरतापाततः प्रतीता तामपाकर्तुं तन्मध्ये वयमित्यवयन्ति ॥ तमिति। आत्मधाम आत्मनो धामाश्रयस्त प्रतिष्ठितः स्वे महिम्नीत्यादेः। विबुधानां ज्ञानिसामान्यस्यात्मगतिं स्वरूपप्रापकमात्मना धात्रा। आत्मा सुरोत्तः सुमना विरिञ्चश्चेति कथ्यत इत्युक्तेः। धाम तेजआदिकं येषां ते च ते विबुधाश्च तेषामात्मगतिदं वा। अवस्थं तिस्रोऽवस्था जाग्रदाद्या यस्मात्सः। एकैकस्यावस्थात्रिकदातेति वा। देवानां जागरणं दैत्यानां सुप्तिलक्षणाज्ञानं मानुषाणां स्वप्नलक्षणमिश्रज्ञानस्वभावं प्रापयतीति त्र्यवस्थं वा। आनन्दसम्प्लवं आनन्दस्य सम्प्लवो बाहुल्यं यस्य स तम्। अखण्डो विकुण्ठः सर्वगुणाभिन्नोऽप्रतिहतो बोधो यस्य तम्। एतादृशे मनुष्यलोके कर्मवश इव कुतो जात इत्यत आहुः ॥ कालेति। कालेनोपसृष्टाः सोपसर्गाः उत्सन्ना इति यावत्। निगमा वेदास्तेषामावपनं व्यक्तिकरणरूपपुनरावापस्तस्मै। आत्ता स्वीकृता योगमायया नित्याऽवियोगिन्याऽऽत्मेच्छयाऽऽकृतिर्देहो येन स तं कालेन यवनेनोपसृष्टा ये निगमा अवान्तरपुराणि तेभ्य आवपनमन्यत्र स्थापनं तदर्थम्। आत्ता स्वीकृता योग उपायस्तत्साधिका या मायाशक्तिस्तस्याः कृतिर्व्यक्तिर्येन तम्। कालोपसृष्टानामेषत्तदुपद्रवाणां निगमे नगर इति द्वारकायामावपनमत्रत्यानां रात्री तत्र स्थापनं तदर्थे आत्ता स्वीकृता योगमायायाः कृतिरभिव्यंजनं येन स तं वा। एतदर्थसर्वस्वे मानमाहुः। परमहंसानामतिशुद्धानां वेदान्तनिष्ठानां गतिर्ज्ञानं यस्मिस्तं तज्ज्ञानविषयीकृतवैभवमित्यर्थः। हंसगतिर्हंसेन गतिर्गमनं यस्य स तस्य परम इत्युत्तम इति परमहंसगतिस्तं वा। परमहं बहूत्सवं सगतिमस्माभिरनीश्वरैः सहापि गतिर्गमनादिकं यस्य स तं वा। अनेन कारुण्यं ध्वन्यते। आवपनार्थं योग उपायो येन तम्। आयाकृतिं सकललाभात्मकदेहवन्तं। आकारो देह आकृतिरिति यादवः। तं त्वा त्वां तं तु नतास्मः। तन्तुश्चासावात्मा च पुत्रो ब्रह्मा तस्य धाम चासौ वि विबुधात्मगतिस्तं वा। तिस्रोऽवस्था आकारविशेषाः श्रीभूदुर्गेति यस्याः सा च सा मा च रमा च तस्या आनन्दसम्प्लवो येनेति वा। तिस्रोऽवस्था यस्मात्स चासौ तम्। नन्दस्य नन्दगोपस्य सम्यक् सम्प्लवो वारिधिपारणे नौकायितं तं वरुणागारं गत्वा नीतवान्नन्दमिति ॥४॥ उत्तमश्लोकशिखामणिं जनेष्वित्यभिष्टुवत्सु। अच्युतस्य तथा कौरवाणां च स्त्रियः समेत्यैकत्र मिलित्वा मिथः परस्परं नृलोको विशिष्टनृणां लोकः स्वर्गादिस्तत्र गीताम्। यथोक्तम्। शर्मणा नृपत्नीरित्यृक्टीकायां। नरो देवाः प्रधानपुरुषत्वादिति। गोविन्दकथामगृणन्। तान्तेऽनुवर्णयामि त्वं च तां शृण्वित्यन्वयः ॥ ५ ॥ हे वैदर्भि रुक्मिणि। हे भद्रे हे जाम्बवति हे कोसले सत्ये तस्या एव नीलेति नामान्तरम्। हे सत्यभामे हे कालिन्दि। शैव्ये मित्रविन्दे भो लक्षणे। यत्तु श्रीधरीये रोहिणी नाम काचिदष्टमहिषीतुल्येति व्याकूतं तदुत्तरत्र तदुत्तरानीरणान्वसरसम्। किञ्चाष्टमहिषीतुल्येति तु बाधितमिति बोधनीयम्। किञ्च महिषीतुल्येति स्थूलदृष्टित उक्तौ चाष्टेति स्पष्टेदं मुद्रणविरोधो वज्रलेपायित इत्यलम्। रोहमारोहमुत्सङ्गः सोऽस्या अस्तीति रोहिणी। उपसर्गाश्च धातुलीनार्थद्योतका इति स्थितेः। मतुवर्थश्च प्राशस्त्यं सहोरूरितिवद्वारारोह इति सर्वविशेषणमेवेति केचित्। वस्तुतस्तु जाम्बवत्या एव नामान्तरम्। प्रदाय रोहिणीं शुभां मणिं च तमित्याचार्योक्तेः ॥ ६ ॥ नायं विवाहक्रमः। तथात्वे जाम्बवत्या रुक्मिण्यव्यवधानेनाभिधातव्यत्वात्। नाप्युत्तमक्रमः। रुक्मिण्यनन्तरं सत्यभामायास्तदनन्तरं जाम्बवत्यास्तासां मध्ये जाम्बवती प्रधाना। रामेण तुल्या जाम्बवती प्रियत्व इत्युक्तेर्वक्तव्यत्वात्। कः क्रमोऽत्रेति चेत्सत्यम्। प्रत्यर्थमादितो रुक्मिणीसत्यभामाया औत्तम्याद्ग्रहणम्। जाम्बवत्याश्च रमावेशाभावदशायां किञ्चिन्त्यौन्यं षण्णामितरासामिति यथायथं ग्रह इति सम्भवात्। यथोक्तमाचार्यैः। कृष्णस्यान्याः किञ्चिदूनाश्च तस्याः। यदाऽऽवेशो बहुलः स्याद्रमायास्तदा तासु प्रीयते केशवोऽलम्। यदा वंशो ह्रासमुपैति तत्र प्रद्युम्नतो विंशगुणाधिकाः स्युरित्यादिना। हे कृष्णपत्न्यः शतोत्तरषोडशसङ्ख्याः। पत्न्य इत्यनेन सर्वाऽपि तत्कर्तृ व यज्ञफलभोक्त्र्य इति पाणिगृहीत्य इति सूचयति। स्वमायया लोकमनुकुर्वन् स्वयं प्रधानपुरुषः

सन् यथा येन प्रकारेण व उपयेमे एतन्नोऽस्मान्प्रति ब्रूत ॥ ७ ॥ भैष्मी भाषते ॥ चैद्यायेति । मा मां चैद्याय शिशुपालायार्पयितुं दत्तुं राजसु जरासन्धादिषु । उद्यतकार्मुकेषूद्यतानि कार्मुकाणि येषां तेषु । उद्यतकार्मुकेषु राजस्विति पदं वा । समासान्तविधेरनित्वान्न टच् । उद्यतकार्मुकानीषवश्चैषां ते राजानश्च तेषु । उद्यतकार्मुकेषु यथा भवति तथा राजस्विति वा । अशेषा अनप्रधाना मुख्याश्च राजानो भटाश्च तेषां शेखेरितः शेखरवदाचरन्नङ्घ्रिरेणुर्येन सः । तन्मूर्धन्यरत्नकिरीटोपरि संस्थापितचरणरेणुरजाश्चावयश्च तेषां यूथात्सङ्घान्मृगेन्द्रः सिंहः स्वभागमामिषादिकमिव मां निन्ये नीतवान् । न सौन्दर्यलुब्धः स नीतवानिति समापि नाहन्ता किन्त्वेतत्कृत इत्याह ॥ तच्छ्रीनिकेतेति । सा च सा श्रीश्च तस्या निकेतमाश्रयो यच्चरणाब्जं तस्य समर्चनं तदर्थम् ॥ ८ ॥ यो मे सनाभीति श्लोकेऽप्रतीतेरिवार्थस्य तृतीयाभ्रान्तेश्च । नीतच्छिदादिशतेत्यत्र स्वयं प्रथमान्ततया पदं विच्छिद्यानूद्य व्याख्याति ॥ नीतच्छिद्भगवता प्राप्तभेद इति । नीता च्छिद्येनेति विग्रहोऽनेन सूच्यते । भावे वा सम्पदादिक्विबित्युक्तं भवति । मित्रभेद इति यथेति टीकोक्तेः । भगवता प्राप्तवैमनस्य इति वा । ततश्चायं श्लोकार्थः । साक्षाल्लक्ष्म्यौ द्वे इति रुक्मिण्यनन्तरं सत्यभामा भाषत इति भाषते ॥ सत्यभामेति । सनाभिः समाना नाभिरुदरं यस्य सहोदरः प्रसेनः । समानो नाभिरिति वा । यद्यपि नाभिः क्षत्रिय इत्यनुशासने नायं प्राणिप्रतीकवाची स्त्रीलिङ्ग इति ज्ञायते तथाऽपि कथं तर्हि समुल्लसत्पङ्कजपत्रकोमलैरुपाहितश्रीण्युपनीतनाभिरिति भारविः । उच्यते । दृढभक्तिरित्यादाविव सामान्ये नपुंसकं बोध्यम् । वस्तुतस्तु लिङ्गमशिष्यं लोकाश्रयत्वाल्लिङ्गस्येति भाष्यात्पुंस्त्वमपीह साधुः । अत एव नाभिर्मुख्यनृपे चक्रमध्यक्षत्रिययोः पुमान् । द्वयोः प्राणिप्रतीके च स्त्रियां कस्तूरिकामृग इति मेदिनी । रभसोऽपि । मुख्यराट् क्षत्रियो नाभिः पुंसि प्राण्यङ्गके द्वयोः । चक्रमध्यप्रधाने च स्त्रियां कस्तूरीकामृग इति । एवमेवंविधेऽन्यत्रापि बोध्यमिति लिङ्गानुशासनवृत्त्युक्तेः प्रासङ्गिक्युक्तिः । तस्य वधः सिंहविहितः संहारस्तेन । ततेन तातेन । तत कस्मै मां दास्यसीति काठके तथा नाभागखण्डे च तताभाङ्तुरित्यादेः । श्रौतानुवादो वा ततोऽनुकम्प्ये जन इति विश्वाल्लौकिको वा लिप्ताभिप्रायम् । स्वारोपितमपवादमपमार्ष्टुं मार्जयितुमृक्षराजं जाम्बवन्तं जित्वा रत्नमदात् । कृष्णस्तेन रत्नेन सह । तेन कृष्णेन भगवता नीतच्छित् प्राप्तभेदः सापराध इति यावत् । सन्मम पिता दत्तामपि वाचाऽक्रूरादिभ्यः सङ्कल्पितामिति दत्तप्रायामपि मां प्रभवे समर्थाय । अनेन तान्परित्यज्यात्र प्रदाने निदानं कर्तुमकर्तुमन्यथाकर्तुं समर्थत्वमित्युक्तं भवति । आदिशतादिशत् । रत्नं कन्यारत्नं च ददावित्यर्थः । सनाभिवधाज्जातं तप्तं तापो हृद्याततं व्याप्तं च तेन हृदयात्ततापेनेत्यर्थः । सुखविशिष्टाभिधानादितिवदाहिताग्न्यादिवद्विशेषणपरनिपातः । करणेन स्वेन लिप्तो लंपितोऽभिशापः कृष्णो ययाचे मणिं स मया न दत्त इति मद्भ्रातरं घातयित्वा नीतवान्रत्नमिति स्वारोपितोऽपवादस्तमृक्ष राजं जित्वा यद्रत्नमुपाजहार यस्तस्मै प्रभवे नीतछित्पिता तेन रत्नेन सह दत्ता मामप्यादिशतेति वाऽन्वयः । यो मे पिता रत्नं मे मह्यमादिशत्तमवश्यं दिशेत्युक्तावपि सते प्रभवे तन्नोपजहार न दत्तवान् । अथ प्रसेनमरणानन्तरमित रथयथापूर्वं योज्यम् । अदाने हेतुमप्याह । रत्नमदात्तल्लाभप्रयुक्तो मदो हन्ता तस्मात्॥९॥मम पिताऽपि अमुना कृष्णेन त्रिनवहानि सप्तविंशतिदिनानि । अभियुद्ध्य युद्धं कृत्वा । देहविक्रतिं कृष्णदेहस्य रामदेहतया भवनरूपमाज्ञाय ज्ञात्वा प्रत्यक्षतो दृष्ट्वा निजनाथदैवं स्वनाथनयोग्यं देवमुपास्यं सीतापतिमाज्ञाय च । अनन्तरमयधीरणमनादरं ज्ञात्वा तच्छान्त्यै पादौ प्रगृह्य मणिना सहार्हणं मां तत्परिहारयोग्यामित्यर्हणरूपां मामुपाहरद्दत्तवान् । इत्यहममुष्य दासी । इहामुष्याज्ञा यदा भविष्यति तत्करिष्यामीति दासीति वाऽऽवृत्त्यान्वयः । त्रिनवाहानीति पठणे छन्दोभङ्गभियाऽपि मार्षं मषङ्कुर्याच्छन्दोभङ्गं न कारयेदित्यादेर्ह्रस्वपाठः । यद्वा शकन्ध्वादिपाररूप्ये ह्रस्वता ज्ञेया । प्राज्ञाय देहकृदमुमिति पठन्तोऽपि प्राज्ञाय देहकृन्मम पितेति तत्रार्थः । अगणयित्वा गतदिनं त्रिनवहानीत्युक्तिरिति नाष्टाविंशतिदिनाभिधानविरोधः । देहस्य विकृतिर्यस्य तमिति वा । स्मृतिगते तु राघवे तदाकृतिं यदुत्तमे । समस्तभेदवर्जितां समीक्ष्य सोऽयमित्यवेदित्युक्तविकृतिशब्द आकृतिपर्याय इति मन्तव्यम् । द्वितीयपाठे तु सीतापतिमित्येतद्विवरणपरमाचार्यवच इत्यनुसन्धेयम् ॥ १० ॥ स्वपदस्पर्शकाम्यया तपश्चरन्ती आज्ञाय ज्ञात्वा सख्याऽर्जुनेन सहोपेत्य यस्याः पाणिमग्रहीदहं तद्गृहमार्जनीव । याऽहमिति पाठे सर्वोपिता च तद्दर्शनादिवद्वर्ततेत्यर्थः । तस्या गृहमार्जनीति विग्रहः । सख्योपेतेति च पाठ उपेतपदोपेतसूत्रस्मारक इति च वदन्ति ॥ ११ ॥ यः कृष्णः स्वयंवरमुपेत्य भूयान्द्विपारिः सिंहः श्वयूथं ग्रामसिंहनिवहं विजित्यात्मबलिं स्वापहारमिव विजित्य मां निन्ये । न केवलं भूयान्विजित्य किन्त्वपकुरुत आगात्तस्य मेऽनुभवं प्रतिजन्म । अवनेजनान्भोऽस्तु ॥ १२ ॥ यथा शिशवो बाला अजतोकान् छागशिशून्वध्नन्ति तथा । अतिबलवीर्यसुतीक्ष्णशृङ्गान् अत्यधिके बले च वीर्यं चैषां ते च ते सुतीक्ष्णानि शृङ्गानि येषां ते च ते ते च तान् । क्षितिपानां वीर्यपरीक्षणाय कृतान् । वीराणां दुर्मदमहदहङ्कारं घ्नन्तीति तान्वीरदुर्मदहनः सप्त उक्षणो वृषभान् । तरसा बलेन बेगेन च क्रीडन्निगृह्य बबन्ध ह प्रसिद्धम् ॥ १३ ॥ यश्चेत्थं वीर्यशुल्कं वीर्यमेव शुल्कं मूल्यद्रव्यं यस्याः सा ताम् । दासीभिः सहितां तया च तुरङ्गसेनावती पथि राजन्यान्निर्जित्य मां निन्ये । तद्दास्यं दासीत्वं मेऽस्तु॥१४॥मम मे पिता श्रुतकीर्तिः । हे कृष्णे द्रौपदी । मातुलेयाय मातृभ्रातृपुत्राय कृष्णाय तच्चित्तां मां सखीजनैरक्षोहिण्या सेनया च सहिताम् । स्वयमाहूय कारयित्वा दत्तवान्यस्मै ॥ १५ ॥ तस्य पादस्पर्शः । जन्मनि जन्मनि पदमेकम् । कर्मभिर्भाग्यमाणाया आत्मनस्तद्येन श्रेयो भवेत् ।

श्रेयः प्राप्तिनिवृत्तिश्च कर्मणां येन स पादस्पर्शो जन्मनि जन्मनि भवेदित्यर्थः। कर्मभिर्भग्यमाणा या गोपस्त्रियस्तासां तच्छ्रेयो येन। संस्पर्श आत्मनः कृष्णस्य मेऽस्त्विति वा॥ १६॥ हे राज्ञि राजराजीवनयने द्रौपदि। अच्युतस्य जन्म कर्म च जन्मना सहितं च तत्कर्म चेति वा। तच्छ्रुत्वा वक्ता च नानृतवादी नापि कश्चिदनामगोत्र इत्याह। नारदगीतमिति। मम चित्तं मुकुन्दे आस तल्लग्नमभूत्। न कयाऽपि सवृतो वृतः कथं कथय त्वयेत्यतः कथयति॥ स्वयं पद्महस्तयेति। पद्मं हस्ते यस्याः सा तया लक्ष्म्या। लोकपालान् ब्रह्मादीन्। एष ब्रह्मातिवृद्धस्तपति दिनमणिश्चञ्चलो मातरिश्वा दिग्वासा नीलकण्ठ इत्यादेर्विहाय त्यक्त्वा वृतः किलेदं सत्यमित्यर्थः। किलशब्दस्तु वार्तायां सम्भाव्येऽनृतसत्ययोरिति विश्वः। स्वयमित्यनेन मयि तदावेशमात्रमिति ध्वन्यते॥ १७॥ हे साध्वि द्रौपदि। मम मतं दुहितृवत्सलो बृहत्सेन इति ख्यातः। पिता तत्र मन्मनोरथसम्पत्तावुपायमचीकरच्चकार॥ १८॥ यद्यपि तत्र पिताऽपि मत्स्यवेधने मच्छरीरजां दास्यामीति प्रतिश्रुत्य चकार मत्स्यस्थापनं ततोऽपीदमसुसाध्यवेधं लक्ष्यमिति लक्षणां वक्ति॥ यथेति। हे राज्ञि तव स्वयं वरः पार्थेच्छया पार्थात्मवरापेक्षया मत्स्यकृतः। अयं मत्स्यः। तुशब्दः सर्वाशक्यवेधत्वरूपविशेषसूचकः। बहिराच्छन्नः प्रावृतसर्वाङ्गः तर्हि क्वावलोक्य वेद्धव्यः स इत्यत आह॥ जले परं केवलं दृश्यत इति। कन्यार्थं कथं मुखबन्धः कर्तव्यमिति लज्जां वर्जयित्वा जले प्रतिबिम्बितं मुखमधोविधाय कीचकान्तस्तत्तच्छायां लक्षयित्वा लक्ष्यं वेद्धव्यमिति तदसुसाधता बोधताऽनेनेति ज्ञेयम्॥ १९॥ मत्पितुः पुरं सर्वतो भूपा एतन्मत्स्यवेधनं श्रुत्वाऽऽययुः। सोपाध्यायाः साचार्याः सर्वास्त्रशस्त्रतत्त्वज्ञाः सर्वशो बहुलाः॥ २०॥ वेद्धुं लक्ष्यं मत्स्यं मद्धियो मद्विवाहमतयः सशरं चापमाददुः॥ २१॥ धनुरादाय सज्जीकर्तुमनीश्वरा असमर्थाः केचिद्व्यसृजन् धनुस्तत्यजुः। आकोटिज्यामिति तथा कोष्टं ज्यामिति सरलौ पाठौ। आकोटि अन्तेपर्यन्तं ज्यां मौर्वीं समाकृष्यामुना धनुरग्रेण हता एके केचन पेतुः। कोष्टशब्दोऽपि कोटिवाची। आकोट्यामिति पाठे द्वे पदे। सप्तम्यार्थी पञ्चमी चेदपि द्वे पदे परन्तु सानुशासिनिकी॥ २२॥ प्राग्योती च मगधश्च तेषामीश्वरौ नरकजरासन्धौ भगदत्तो वा प्राग्ज्योतीशः। ज्योतिश्शदपर्यायो ज्योतिशब्द इत्येकः प्राग्ज्योतिर्मगधेश्वराविति च पेठुः। ज्योतिषशब्दपर्यायोऽयं ज्योतिश्शब्द इति केऽपि। दुर्योधनः कर्मश्चेत्येते तदवस्थितिं नाविन्दन्न व्यजानन्। भीमश्च तदवस्थितिं तस्मिन्स्वोपविष्टस्थल एवावस्थितिमवस्थानं कृत्वा कृतवानित्यर्थः यथावस्थानान्वये भीमस्यार्जुनापेक्षया दौर्बल्यम्। किञ्च साक्षात् प्राणात्मकस्य भगवन्मात्रयोग्यकार्ये प्रवृत्तिश्च स्याताम्। न च ते तत्र सम्भवतः। यथोक्तम्। भीमश्चोपालभ्यमप्येतदत्र द्रष्टुं च नैवेच्छदरीन्द्रधारिणः। योग्ये कर्मण्यायातं चापराधी स्यामित्यब्जः पश्यमानो महात्मेति। तर्हि न गमनमन एव कर्तव्यं भीमेनेति चेत्। सत्यम्। लक्षणासुलक्षणविवाहमङ्गलप्रापकत्वात्तदुपपत्तेः॥ २३॥

मत्स्यछायां मत्स्याभासं जले दृष्ट्वा तदवस्थितिं ज्ञात्वा चाप्यर्थः। बाणान् छिन्नानसृजत् लक्ष्यं नाच्छिनत् परं केवलं पस्पृशे पस्पर्श। ननु धनञ्जयः स्वात्मबलं प्रकाशयन्सज्जं कृत्वा धनुरेकलक्ष्यम्। नैवाददे बाणमनिच्छयैव प्राप्यां जानन् केशवेनैव तां चेति श्रीमदुक्तेरत्र पुनर्यतोऽसृजद्बाणानच्छिनत्पस्पृशे परमित्युक्तिरिति विरोध इति चेत्। नैवाददे बाणमित्यस्य तच्छेदो यथा स्यात्तथा नैवादद इत्येवम्परत्वेन तूष्णीं स्पर्शानिवारणात्। इदमपि कार्यमर्जुनेन तथाऽपि मागधादिमानभङ्गार्थं तदमनस्कतयाऽनुष्ठानस्य प्रत्यवायानर्पकत्वात्। इदमप्युक्तं तत्रैव धनञ्जयः स्वात्मबलं प्रकाशयन्निति। यतच्छिन्ने मत्स्येऽपराधी भवेयमिति यतेन्द्रियः॥ २४॥ मानिषु दुर्गर्ववत्सु भग्नमानेषु हीनमानेषु तथाऽशक्यमिति निवृत्तेषु सत्सु लीलयेति सज्जीकरण इवादानेऽपि क्रीडा ज्ञेया॥ २५॥ अभिजिति मध्येऽहनि सूर्ये स्थिते सति तं मत्स्यं छिन्नेषुणैकेनैकवारं तत्रापि छिन्नेनेषुणेति त्वन्मत्स्यवेधापेक्षया शक्यपातोऽयमिति प्रत्यपादयदिति ध्वन्यते॥ २६॥ अपतत् शुश्रुव इति यावत्। कुसुमासारान् अविच्छिन्नपुष्पधारासम्पातम्॥ २७॥ स चासौ रङ्गश्च तम्। तत्तदेत्यर्थेऽव्ययं वा। रङ्गो रणे खरे रागे नृत्ये रङ्गं त्रपुण्यपीति विश्वः। कलमधुरध्वनिनी नूपुरे ययोस्ताभ्यां चलपेशलाभ्यां चलेनैकैकशो विक्षेपेण मनोहराभ्यां पद्भ्याम्। दिशो भ्रामयती तत्स्थिताञ्जनान्भ्रान्तां कुर्वन्ती बुद्धिमतोऽपि दिग्भ्रमं जनयन्तीति वा वृते सह जघने तथा कुचयोर्युगलं च पिधाय परिधाय कृमिकाशोत्थश्रेष्ठेति कौशिकाग्र्ये क्षौमे सव्रीडहासं वदनं यस्याः सा। जानपदेति ङीष्। केशपाशे धृता स्रजो माला यस्याः सा। रङ्गं नृत्यजनयुतम्। अन्यथा चेद्रणाङ्गणं चाविशम्॥ २८॥ प्रविष्टा चाहम्। उरणी च ते कुण्डले च तथा कुन्तलाश्च तेषां त्विट् कान्तिर्यस्मिंस्तद्गण्डस्थलं यस्य तत्। हासेन सहितः कटाक्षः शिशिरः शीतलश्चासौ हासकटाक्षश्च तस्य मोक्षो हि स्थापनमन्यत्र यस्य तत्। अजिरशिशिरेति निपातितः शब्दः। शिशिरस्तु ऋतोर्भेदे तुषारे शीतलेऽन्यवदिति विश्वः। वक्त्रमुन्नीयोन्नम्य परितो राज्ञः कांश्चिदपलायितान्निरीक्ष्यानुरक्तं हृदयं यस्याः सा। राजपराजयार्थमियत्कृतं नमनस्तस्य त्वयीत्यतोऽप्याह। अनुरक्तहृदयेति। अनुरक्तं मय्यासक्तं हृदयं कृष्णाख्यं ब्रह्म यस्याः सा। स्वभागहरणाद्यानात्फलानां यापनान्नृणाम्। हृदयं भगवान्विष्णुरिति वचनात्। हृदयं ब्रह्म आरुणा उपासते हृदयनाद्धृदयमित्यादेश्च। शनकैर्मुरारेरंसे स्कन्धे स्वमालां स्वधृतेति स्वमाला तां विदधे। नियमावहं विदध इति धात्रो लिट्सम्भवति। पारोक्ष्यं च देवदेवत्वाद्युज्यते। परोक्षप्रिया इव हि देवा इत्यादेः। दधधातोर्वा लिटि रूपम्। दधे दधावहे दधामह इति रूपाणि। क्रियाप्रबन्धे लडित्यतीतार्थतोपपद्यते॥ २९॥ ततो मालाल्पपादांसमालासमासज्जनानन्तरम्॥ ३०॥ मयेशे

भगवत्येवं वृते सति। एवंवृत्त इति पाठे एवं वृत्तं यस्य स तस्मिन्। मायेश इति पाठे मायाया ईशो रमारमणस्तस्मिन्। हे याज्ञसेनि। स्पर्धिनः स्पर्धा येषामस्तीति स्पर्धिनः शिखादिः। मन्मथार्ता इति हृच्छ्रयातुराः॥ ३१॥ हयानां शैब्यसुग्रीव-मेघपुष्पादीनां चतुष्टयं यस्य स तं चतुर्भुजस्सन्नीशस्तस्थौ॥ ३२॥ काञ्चनमय उपस्करो हि परिच्छदो यस्य स तां द्विषतां मिषतां पश्यतां सताम्। ताननादृत्येत्यर्थः। मृगराट् वृकाणां पश्यतां स्वभागं नीत्वा गच्छति यथा तथेति॥ ३३॥ केचन ते राजन्या निषेद्धुं पथि मार्गे संयुक्ता उद्धृतेष्वासा यथा ग्रामसिंहा हरिं तथाऽसज्जन्त सङ्गता अभूवन्॥ ३४॥ नुन्नाच्छिन्ना बाह्वङ्घ्रिकन्धरा येषां ते तथा प्रधने सङ्गरे सन्त्यज्य रणम्॥ ३५॥ पत्युर्जयभूतिर्जयलक्ष्मीस्तयाऽलङ्कृतं रविं सूर्यं छादयन्तीति रविच्छदास्ते च ते ध्वजपटाश्च तैश्चित्राणि तोरणानि यस्यां सा सोमवंशसम्भवीयध्वजपटादे रव्यांच्छादकता-युक्तिमती। दिवि भुवि च जनैः संस्तुतां तरणिः सूर्यः स्वकेतनमुदयगिरिं यथा विशति तथा समाविशत्॥ ३६॥ परिच्छदै-रितरसाधनैः॥ ३७॥ सर्वसम्पद्भिर्दासीभिर्भटेभादिभिश्च सर्वसम्पद्भिः सहायुधानि ददौ। एतेन तस्य किं स्वोद्धृत्यै दत्तवानि-त्याह। पूर्णस्य भक्तित इति। सर्वं तस्यैव तस्य दत्तमिति षष्ठ्या द्योतयति॥ ३८॥ सर्वसङ्गनिवृत्त्या तपसाऽद्धा सम्यक्। इमा वयं च गृहदासिका बभूविम। नास्मत्कृत्यं तस्य किन्तु दयया लालयत्यस्मानित्याह। आत्मारामस्य स्वरमणस्येति॥३९॥ शतोत्तरषोडशसहस्रयोषितो भाषन्ते भौममिति। यः क्षितिजये स्वकृते राज्ञो निर्मथ्य हृता राजकन्यास्तेन नरकेण रुद्धा न केवलमेतत्कारागारमोक्षणाऽपि तु संसृतिविमोक्षणं स्मरन्तीरस्मरतीर्नो युधि तं भौमं सगणं निहत्य पादाम्बुजं परिनिनाय नीत्वा पादाम्बुजं स्मरन्तीः परिणिनायोवाहेति वा। नास्मदाशा तस्येत्याहुः। आप्तकामः पूर्णकाम इति॥ ४०॥ अग्नि-पुत्रत्वात्तपसा स्त्रीत्वमेतमिच्छयाऽऽसमतोऽस्ति वेदाधिकार इत्यावेदयितुं ता अष्टमपञ्चकद्वितीयाध्यायगतता राज्याय साम्राज्याय स्वाराज्याय वैराज्याय पारमेष्ठ्यायेत्यन्तखण्डमर्थतः सङ्गृह्येतदादिसर्वापेक्षया हरिचरणपरिचरणमधिकमिति वदन्ति। नेति। हे साध्वि। साम्राज्यं धर्मतः प्रजापालनयोग्यसम्राड्त्वं भोज्यं भोगसमृद्धिः स्वाराज्यमनन्याधीनत्वं वैराज्यं प्रतिपक्षि-क्षितिपेभ्यो वैशिष्ट्यम्। अथामुष्मिकं च नेति वदन्ति। स्वाराज्यं स्वर्गाधिपत्यं पारमेष्ठ्यं सत्यलोकाधिपत्यमानन्त्यमनन्तो नाशशून्यो लोको वैकुण्ठः स एवानन्त्यं हरेः पदं स्थानभूतं वयं न कामयामहे। आनन्त्यं भोगिन्यां विद्यमानं शेषसाम्राज्यं हरेरिन्द्रस्य पदं स्वर्गमिति वा। प्राचीमासन्दीमित्यादिबह्वृचब्राह्मणोक्तप्रकारेण साम्राज्यस्वाराज्यवैराज्यानि क्रमादुत्तरपूर्व-दक्षिणपश्चिमदेशाधीशत्वानीति ज्ञेयम्। एतस्य श्रियो रमायाः कुचयोः कुङ्कुमगन्धास्तैराढ्यं गदाभृतः श्रीमत्पादरजो मूर्ध्ना वोढुं कामयामहे॥ ४२॥ एतादृक्कामनास्पदस्य श्रीमत्पदस्यास्मत्काम्यता नाश्चर्यावहेति तां ताः कान्ता वदन्ति। व्रजस्त्रिय इति। आभीरभामिन्योऽज्ञता ध्वन्यते। तथा पुलिन्द्यः शबरनार्यस्तृणानि वीरुधश्च। तद्देवविवक्षयोत्प्रेक्षा वेति केचित्। गोपैः सहगाश्चरयतो महात्मनः कृष्णस्य पादस्पर्शं गावश्च यद्यतो वाञ्छन्ति किं कामना न भवेदस्माकमिति भावः॥ ४३॥

इति श्रीभागवतटिप्पण्यां सत्यधर्मकृतायां दशम उत्तरार्धे एकसप्ततिरध्यायः॥ १०—७१॥

## श्रीसत्यधर्मकृता श्रीभागवतटिप्पणी

हरिः ॐ॥ ज्ञानिमाहात्म्यं सहोत्सवस्तु वासुदेवमत्र विषयो मुक्तेः साधनं भगवत्तोष इत्यादिकमत्र प्रतिपाद्यते। तत्रादौ कृष्णं द्रष्टुं कृष्णद्वैपायनाद्युपयानं तदेतत्संवादं च वक्तुं द्रौपद्याद्या माधववधूबोधितवृत्ताः किं चक्रुरित्यतस्तदाह॥ श्रुत्वेति॥ पृथा कुन्ती सुबलपुत्री गान्धारी अथ यज्ञसेनी द्रौपदी च। अनेन नैकान्ते श्रीकान्तकान्तः प्रतिपप्रच्छ द्रौपदी किन्त्वेतदादि स-तैवेति द्योत्यते। याः परमप्रतीता अतिख्याता अनुतरतमभावेन माधविकास्तासामित्थमखिलात्मनि हरौ कृष्णे इत्थं तदुक्ति-सक्तस्फोरितं प्रणयानुबन्धं याचनापूर्वकमनुबन्धं भक्तिम्। अनुबन्धस्तु भक्तिः स्याद्बन्धः स्नेह उदाहृत इति तात्पर्यान्तरात्। प्रणयः प्रेम्णि विश्रम्भे यात्राप्रसरयोरपीति विश्वः। सविश्वासं स्नेहमिति वा श्रुत्वा सर्वाः पृथाद्या अश्रुकलाभिराकुलान्यक्षीणि यासां ताः सत्यः। अलमिति यथायथमन्वेतुमलम्। विसिस्म्युर्विस्मिता अभवन्॥ १॥ सम्भाष्यमाणास्त्विति विपरिणतलिङ्गं सन्नृष्विव्यनेनाप्यन्वेति। कृष्णरामयोर्दिदृक्षा दर्शनेच्छा तया मुनयस्तत्र स्यमन्तपञ्चके आययुः॥२॥ तदभिधानाभिधानं मङ्गल-करमिति तन्नाम कीर्तयति॥ द्वैपायन इति। व्यासो नारदो देवलोऽसित इति सामानाधिकरण्यं वैयधिकरण्यं वोभयथाऽपि व्युत्पादितमस्माभिरालोचनीयम्। शतानन्दो गौतमसुतः॥ ३॥ रामो भार्गवो भार्गवेयोऽपि वा। रामो भार्गवेय इति बह्वृच-ब्राह्मणं प्रागुदाहृतमनुसन्धेयम्। बृहस्पतिः॥ ४॥ एकतो द्वितस्त्रित इति क्रमः। बह्वृचब्राह्मणे एकतो द्वितस्त्रित इति। तथार्यजुष एकताय स्वाहाद्वितायस्वाहात्रितायस्वाहेति चोक्तेः। गदापर्वणि बलदेवयात्रायाम्। आसन्पूर्वके युगे राजन्मुनयो भ्रातरस्त्रयः। एकतश्च द्वितश्चैव त्रितश्चैवाग्निसन्निभाः। सर्वे प्रजापतिसमाः प्रजावन्तस्तथैव चेत्यारभ्य तत्राप्यमितविक्रान्तः स्पृष्ट्वा तोयं हलायुध इत्यन्तेन ग्रन्थेन तन्माहात्म्यमुक्तमनुसन्धेयम्। कूपे वहितो देवान्वत ऊतय इति श्रुतेः॥ ५॥ प्राक् तदागतेः पूर्वमा-सीना उपविष्टा नृपादयः सहसाऽविलम्बेनोत्थाय पाण्डवाः कृष्णरामौ च लोकवन्दितांस्तान्प्रणेमुः॥ ६॥ सर्वे पाण्डवाद्या यथा तानानर्चुस्त सहरामोऽच्युतः कृष्णोऽर्चयत्। सहरामो द्वैपायनोऽच्युतः श्रीकृष्णात्मैव तथाऽपि लोकानुकारं स्वयमार्चयदिति

भिन्नवाक्यतयोक्तिर्यथाशब्दश्च सूचयतः। तत्पूजासाधनानि बोधयति ॥ स्वागतासनमित्यादिना ॥ ७ ॥ धर्मं गोपायतीति धर्मगुब् सा तनुर्यस्य सः। यतवाग्यस्य तत्तस्य। महतः सदसः सभाया अनुशृण्वतः सुखं यथा तथासीनान्। यतवाचो महतो मुनीन्प्रतीत्यप्यन्वयः। भगवानुवाच ॥ ८ ॥ यद्यतो योगेश्वरदर्शनं देवानामपि दुष्प्रापं तत्फलं जन्मनः फलं जन्मनः फलभूतां कार्त्स्न्येन लब्धम्। ततो वयं जन्मभृतः प्रशस्तदेहधारिणो दुर्घटं घटितमित्याह। रामपाराशर्ययोस्तादात्म्यादितरेषां चाहमित्युक्तौ स्यात्प्रत्यवाय इति वयमित्युक्त्याऽन्येषामस्मदीयानां तद्वीर्लभ्यं ध्वनयतीति मन्तव्यम्। यथाऽऽहुः प्रकाशिकायाम्। वयमस्मदीया इति मूलार्थः कृष्णस्य जन्माभावादिति ॥ ९ ॥ देवानामपीत्यनेन नृणां का कथेति सूचितमर्थात्तद्विशदयति ॥ किमिति। स्वल्पं तपो येषां ते तथा तेषामर्चायां प्रतिमायामेव देवेति देवतेति चक्षुर्दर्शनं ज्ञानं येषां तेषां योगेश्वराणाम्। प्रह्वेति भागप्रधानम्। दर्शनं स्पर्शनं प्रश्न इष्टगोष्ठिप्रह्वत्वेन प्रावण्येन पादानामर्चनमेवादिर्यस्य तद्दुष्प्रापमिति किमाश्चर्यमित्यर्थः ॥ १० ॥ न ह्यम्मयानि तीर्थानीति श्लोके न तत्र तीर्थादिषु परपवित्रीकरणशक्तिरस्ति चेदपि कालविलम्बेन तदिति तन्मात्रस्य जडस्य तथात्वं प्रतीयत इत्यतः स्वयं तात्पर्यमाह॥ अम्मयाभिमानिन्य इति। अम्मयानि नद्यादीनि। आदिपदेन प्रतिमादिपरिग्रहः। एतदभिमानिन्योऽपि देवताः। देवा इति सति पुंलिङ्गे देवता इति वदन्नस्ततो गत्वा वक्ष्यमाणसहकारिसमवधानेऽपि स्वातन्त्र्यं नास्ति किन्तु ममैवेति ध्वनयति। किञ्च पृथिव्याद्यभिमानिनो देवताः प्रथितोजस इत्यादिमानिकतां स्वोक्तेः स्फोरयति। उरुकालेनेति व्याख्याति गुरूपदेशं प्रापयित्वेति। तथा चोरोर्गुरोः कलयति जानात्यनेनेति कालः शास्त्रोपदेशस्तेन तदुपदेशं प्रापयित्वैव पुनन्ति स्वासां पारोक्ष्यात्। केचित्तूरुकाले जातेऽपि नैव पुनन्ति। किन्तूपदेशं प्रापयित्वैव पुनन्तीति बहिष्ठं योजनमाहुः। ननु तच्छब्देनाम्मयतीर्थानां देवानां च परामर्शो न सम्भवति। नपुंसकलिङ्गशब्दवाच्यानां पुल्लिङ्गेन परामर्शायोगात्। न चैकशेषेणादोषः। नपुंसकमनपुंसकेनैकवच्चास्यान्यतरस्यामिति नपुंसकशेषोक्तेरतः कथमिति चेत्। उभयत्रापि बुद्धिस्थादेवपरामर्श इत्यर्थसूचकं त इति पदमिति नानुपपत्तिः। ततश्चायं श्लोकार्थः। तीर्थीकुर्वन्ती-र्थादिकं यथेच्छं वर्तत इति किं साधु साधुदर्शनादिनेत्यत आह। अम्मयानि केवलजडजलानि न हि किन्तु तदन्तर्गता देवाः। मृच्छिलामयास्तद्विकृताकाराः प्रतिमादयो देवा न किन्तु तदन्तर्गता देवाः। न च सद्यस्तेषामपि पावनं सुशकं किन्तु तेऽम्मयास्तत्स्था देवाः प्रतिमान्तरस्थाश्चेति ते देवाः। त इति पुल्लिङ्गेन परामर्श शंसन्व्यासो देवा अन्तस्थाः स्थानद्विकेऽपि ग्राह्या इत्यसूचयत्। अन्यथा तानित्यवक्ष्यत्। इदं चाचार्यस्याम्मयाद्यभिमानिदेवता इति व्याकुर्वते। मूलं मूलकृद्दर्शितमित्यवधेयम्। उरुकालेन गुरूपदिष्टज्ञानसाधनज्ञानोपदेशेन विलम्बेनैव पुनन्ति। उरुकालेऽपि नैवापरोक्ष्यात्स्वयं पुनन्ति किन्तूरुकालेन गुरूपदेशेन पुनन्तीत्यावृत्त्याऽन्वयः। तदुक्तं स्कान्दे वैशाखमाहात्म्ये षष्ठेऽध्याये। यान्यम्मयानि तीर्थानि देवा वा मृच्छिलामयाः। अपि तेन पुनन्त्येव दर्शनादेव साधव इति। सहकार्यन्तरविधिः पक्षेण तृतीयं तद्वतो विध्यादिवदिति। यथा वाऽऽचार्यस्य शिष्याः। वाराहे च। ज्ञानादिदानं देवानां विष्णुना साधु चोदितम्। वेदे च तेषां विहितं तत्राचार्यो महत्तरः। विहितः सहकारित्वे यद्गुरुः सुप्रसन्नः सन्दद्यात्तन्नान्यथा भवेत्। गुरुरेव परागतिरित्यादेरिति केचित्। तर्हि के सद्योऽविद्याबन्धं विष्वस्य पवित्र्यदा इत्यत आह। साधवो दर्शनादेवेति। विना गुरूपदेशादिकं न सुमिला एत इति तत्सम्पत्त्यनन्तरं तत्फलरूपास्त इति दर्शनादेवेत्युक्तिरत्र तदपेक्षया देवा जाग्रतो वर्तन्त इति भावः। फललाभानन्तरं तन्मात्रसाधनस्यानीप्सनीयत्वात् ॥ ११ ॥ नाग्निर्न सूर्यो न च चन्द्रतारकमिति श्लोकेऽग्न्यादय उपासिताः परस्परं स्वेषां हरेश्चाभेदकृता भेदं करोति जानातीति स तस्याघं विपश्चितो ज्ञानिनो न घ्नन्ति न नाशयन्ति। विपश्चितः प्रसक्तभेदविरुद्धाभेदज्ञानिनस्त्वघं घ्नन्तीति भेदज्ञानिनिन्दनमभिनन्दनमभेदज्ञानिन इत्यन्यथाप्रतीतिनिवारणाय स्वयं तत्पदार्थमाह। भेदकृतोऽन्यथाज्ञानिन इति। देवाश्च तदेवाबादिकमाश्रित्यासत इति पारोक्ष्यान्नान्यथामतिमहापयन्ति। विपश्चितस्तु प्रात्यक्षिका इति प्रत्यक्षदर्शनात्। तदुपेत्य। अज्ञानामधिकारिणामन्यथाज्ञानमपगमयन्ति। तुस्तत्र तरतमभावरूपविशेषद्योतकः। एवकारस्तु सत्यधिकारे दर्शनस्यानन्यथाभावसूचकः। कुणपे त्रिधातुक इत्यादिमूलोक्तमन्यथाज्ञानमुपलक्षणपरमिति सूचयन्नुक्तश्लोकद्विकार्थे मानमाह ॥ प्राकृतैरिति। प्राकृतैरज्ञैर्दृश्यमानं द्रवं तीर्थमिति नोच्यते तु नोच्यत एव। देवाश्च शिला एवेति शिलामात्रा न तर्हि क इत्यत आह ॥ तत्रान्तरस्थिता देवा इति। तदन्तःस्थिता इत्येतावता पूर्तौ यत्तत्रेत्युक्तं तेन तं त्रायन्ते सर्वप्रकारेण पालयन्तीति तत्राश्च सन्तस्तन्मध्ये स्थिता अन्त आस्थिता वा देवा उच्यन्ते ज्ञानिभिः। तर्हि कथं ते दृश्यन्त इत्यत आह ॥ गुरूपदेशेनेति। गुरूपदेशन्त्विति वा। अन्यथाज्ञानिना तद्रूपं तदन्तर्गतं न दृश्यते च। तत्रामन्तॄणामनर्थमप्याह ॥ कोपादिति। कोपाज्जडजलाद्यैक्यज्ञानजाच्छापं प्रयच्छन्ति। तस्माद्गुरुमुपाव्रजेत्। तस्मात्तीर्थानि देवाश्च सर्वदेवमयो द्विजः। तीर्थानि पदे विप्रस्य दक्षिण इत्यादेश्च तीर्थमृदादिप्रतिमान्तरस्थिता देवा विद्वत्सु ज्ञानिष्वेव संस्थिताः। अतः साधवो दर्शनादेवेत्युक्तमुपपन्नमिति भावः। यस्माद्बुद्धिः कुणप इत्यत्रोपलक्षणमन्यथाज्ञानमेतल्लक्षणमिति मानेनाचष्टे ॥ भिन्नस्येति। भिन्नस्य वस्तुनोऽभेदतोऽभेदेन दृष्टिर्दर्शनमपि भेदिभिर्नादरणीयेति। वस्तुयाथात्म्येन तस्य वस्तुनो भिन्नत्वादिति तदभेददृग्भेदज्ञानं विनिन्दितम्। विद्यमानस्याभेदस्य दर्शनं क्वचिदपि न निन्दितम्। न तद्वाक्यस्य तत्र तात्पर्यमिति तात्पर्यम्। शिलाः प्रतिमादयः। अस्म्यहं देवोऽहमिति च या दृष्टिरुत्तमस्याधमत्वेन दृष्टिरिति योज्यम्। नीचस्य चोच्चत्वेनासमस्य

समत्वेन समस्यासम इति दर्शनं ज्ञानं द्रवं जडं जलं देहोऽहमिति च या मतिर्नास्तिकादीनामनुभासजन्या। तदुक्तम्। देहात्मत्वं यदि न तत्प्राप्तं प्रत्यक्षतः क्वचिदित्यनुव्याख्यानव्याख्यासुधायां नास्त्येव देहात्मप्रतीतिर्याऽनुमानादिना। बाध्ये येषां चास्तिकादीनां तेषामपि ते इन्द्रियजा किन्तु अनुमानाभासजन्यैवेतीति। असतीषु भार्यास्वसत्सु सदितरेषु च स्वीया इति दर्शनम्। एवमादिकं भेदज्ञानमिति प्रोक्तं या चान्येनानेनाप्युपलक्षणीया माऽस्तीति ध्वन्यते। तस्मात्तस्या अन्यथामतेरपहानाय त्याजनाय वरा गुरवः संसेव्याः। समा तदेकपट्टुतामभिप्रैति। गुरूणां पूजया। सुप्सुपेति समासः। सर्वा देवताः प्रीयन्ते प्रीता भवन्ति। एषां गुर्वन्तर्वसतां प्रीतिरन्यथा न स्यात्। तदनन्यथात्वं स्वयं व्याकरोति॥ गुरूक्ति स्वाधिष्ठानगुरूपदेशमपहायेति। नृणां सतां पूजाविशेषेण सदा कार्या। कृत्यानां कर्तरि वेति स्मरणान्नृणामित्युपपद्यते। विशिष्टेष्वधिका मध्यमेषु मध्यत इति भक्तिस्तारतम्येन भवेत्। सहाराः सुरा आराध्या इति स्वातन्त्र्येण तत्सपर्या न कार्येत्यायातः। तेऽपि वा साक्षात्स्वसमर्चनं विहायैव कुतः कुर्वन्तीत्यत आह॥ उत्तमा अपीति। पूज्यत्वेन स्वसन्दर्शिते गुरुभ्य उत्तमा अपि देवेशाः स्वाधमान्विदुषो ज्ञानिनः पूजायै प्रयच्छन्ति ददति। तत्र तन्त्रं यतः परोक्षप्रिया इव हि देवाः प्रत्यक्षद्विष इत्यादेः। तेषु स्थित्वाऽनुपमां पूजां सदा स्वयं गृह्णन्ति। ज्ञानानि च पूजितगुरुद्वारा प्रयच्छन्ति। एवंविदा गुर्वादिके पूजिते पूजिता देवाः। सब्रह्माणः सकेशवाः सुरवराः पूजिताः स्युः। न च सान्निध्यात्ते महायोगिन्पातकानि महन्त्यपि। सद्यो नश्यन्तीत्यादिवचनात्सज्जनदर्शनादेर्महापातकघातकत्ववत्पुराणादिषु गङ्गा गङ्गेति यो ब्रूयात्। प्रयागेति स्मरणं पापभाजनम्। प्रयागे मरणान्मुक्तिः स्मरणादरुणाचले। सेतुं दृष्ट्वा विमुच्यत इति पापापनोदकत्वं तथामोचकत्वं चोच्यतेऽतः को निर्बन्धस्तीर्थाद्यपेक्षया प्रेक्षावदौत्तम्य इति वाच्यम्। पक्वयोगिनां ज्ञानद्वारैव पापापहानवादीनि तानि वचनानि मुक्त्यभिधायीनि च पापान्मुक्तिपराणि स्तुतिपराणि च। यथोक्तं तृतीयाध्यायगीताभाष्यटीकयोः। गत्यन्तरं च नान्यः पन्था इत्यस्य नास्ति। इतरेषां ज्ञानद्वाराऽप्यविरोधः। यत्र तीर्थाद्येव मुक्तिसाधनमुच्यते ब्रह्मज्ञानेन वा मुक्तिः प्रयागमरणेन वा। अथवा स्नानमात्रेण गोमत्यां कृष्णसन्निधावित्यादौ तत्र पापान्मुक्तिः स्तुतिपरता वा। तत्रापि कुत्रचिद्ब्रह्मज्ञानसाधनत्वमेवोच्यते। अन्यथा मुक्तिं निषिध्य ब्रह्मज्ञानं विना मुक्तिर्न कथञ्चिदपीष्यते। प्रयागादेस्तु या मुक्तिर्ज्ञानोपायत्वमेव हीत्यादौ। न च तीर्थस्तुतिवाक्यानि तत्प्रस्तावेऽप्युक्तज्ञाननियमं घ्नन्ति। यथा किञ्चिद्दक्षं भृत्यं प्रत्युक्त्वाऽयमेव हि राजा किं राज्ञेत्यादीनि। यथाऽऽह भगवान्। यानि तीर्थादिवाक्यानि कर्मादिविषयाणि च। स्तावकान्येन तानि स्युरज्ञानां मोहकानि च। भवेन्मोक्षस्तु मद्दृष्टेर्नान्यतस्तु कथञ्चनेति नारदीये। ननु यथा मोक्षस्य ज्ञानसाध्यत्वे तमेवमित्याद्यागमाः सन्ति तथा कर्मसाध्यत्वेप्यपामसोमेत्यादयो विद्यन्ते तत्कथं निर्णय इत्यतः सावकाशत्वनिरवकाशत्वबलादित्याह। गत्यन्तरं चेति॥ ज्ञानद्वारेति। स्तुतीति प्रशस्तत्वोपलक्षणेत्यर्थः। प्रशस्तत्वसादृश्येन गौणी वा दुष्टजनव्यामोहनार्थत्वस्योपलक्षणमेतत्। अज्ञानां सम्यग्ज्ञानायोग्यानामित्यन्तेन ग्रन्थेन॥ अथ श्लोकद्विकार्थः॥ न ह्यम्मयानीत्यादिनोक्तं वितस्य तथा दर्शनादेवेत्येवकारव्यावर्त्यः कालः कश्च ग्राह्य इत्यत आह॥ नेति। प्रसिद्धकाष्ठाधिरूढोऽग्निस्तदन्तर्गतो भेदकृतोऽन्यथाज्ञानिनः पुंसः। भेदेऽभेदज्ञानिनः। एवमेव सूर्याद्याश्चन्द्रश्च तारकं च। सर्वो द्वन्द्वो विभाषयेत्येकवद्भावः। चन्द्रेण सहितं च तत्तारकं चेति वा। खमाकाशः श्वसनो मातरिश्वा वा तदभिमानीन्द्रोऽग्निश्च मनः। सोमस्य पृथग्ग्रहणादुमा वा तत्पतिर्वा। उपासितास्सेविता अपि अघं हरन्ति। विपश्चितो ज्ञानिनस्तु मुहूर्तं सेवा तयैवाघं तत्सङ्गं घ्नन्तीत्येकेनैवावृत्त्या घ्नन्ति घ्नन्तीत्यन्वयसम्भवे किमिति हरन्तीति पदमिति चेन्न। न घ्नन्तीत्यन्वयने मास्तु हरणं मरणं स्यादिति। तथाऽन्यत्र हरन्तीत्येवोक्तौ हृतस्यापि केशादेः पुनरङ्कूरणवत्पातकाज्जृम्भणं स्यादिति हरन्ति घ्नन्तीत्युक्तिः। तत्र हरणमेव नास्ति हननं तु दूरापास्तम्! अत्र तु हनने जाते न पुनर्भवस्तस्येति विशेषोऽपि बोधितः स्यादिति सन्तोष्टव्यम्। न ह्यम्मयानि तीर्थान्यपि तु देवास्तेऽपि न स्वातन्त्र्येण तीर्थेन शुद्धिकराणि किन्तु हरिरेव तीर्थं तद्भक्ताः साधव इति व्याकुर्वन्ते। विष्णुतीर्थीयवचनमुदचकथन्। सर्वशुद्धिकरत्वात्तु तीर्थाख्यो विष्णुरच्युत इति। तथा साधवः। नाम ब्रह्मेत्युपासीतेत्यादाविव प्रथमा सप्तम्यर्थे। साधुषु स्थिता देवाः। यदधीना यस्य सत्ता तत्तदेव भण्यत इत्यादेः साधुसत्ताया देवाधीनत्वात्सामानाधिकरण्ये साधवो देवा इति व्याचक्रुः। यस्याधिकारिणः कुणपे शवसदृशे त्रिधातुके प्राधानिकपृथिव्यप्तेजःकृते। वातपित्तश्लेष्मधातुयुते देहे। चेतन आत्मबुद्धिर्मम देह इति स्वाधीनतामतिरन्यथामतिः। कलत्रादिष्वसत्सु स्वधीः स्वकीया मतिर्भौमे भूमिशिलादिकृतप्रतिकृताविज्याः पूज्या इति बुद्धिर्यस्य सः। जले तीर्थबुद्धिस्तीर्थं शुद्धिकृदिति बुद्धिर्यस्य सः। अभिज्ञेषु जनेषु कर्हिचिद्यदाकदाचिदपि यस्य नेज्यधीरतीर्थबुद्धिर्वा स एव गोखरः। गवि भूमौ खरो गर्दभः। यद्वा देहोऽहमित्यन्यथाज्ञानमित्यर्थः। न च क्व च प्रत्यक्षतः प्राप्तमनुमानमबाधितम्। देहात्मत्वं यदि न तत्प्राप्तं प्रत्यक्षतः क्वचित्। मम देह इति ह्येव न देहोऽहमिति प्रमेत्याद्यनुव्याख्यानप्रतीतिरेव वा प्रभावानित्युक्तेः कथमिदमिति चेन्न। देहस्यात्मत्वं प्रत्यक्षतः प्राप्तमित्यारभ्य सुधायां क्वचित्प्रतीतेरभावात्क्वचित्प्रतीतिसद्भावेऽपि प्रत्यक्षजत्वाभावात्क्वचित्प्रत्यक्षप्रतीतिभावेऽप्ययथार्थत्वात्क्वचिदयथार्थत्वेऽपि प्रबलप्रत्यक्षेण बाधादित्यर्थः। अत एव क्वापीत्युक्तम्। अन्येनेत्यनुपजीव्येनागमादिनेत्यर्थः। तदेवं स्वभावतः प्रबलेन प्रत्यक्षेण विरुद्धावनुमानागमावाभासावेवेत्यन्तेन ग्रन्थेन स्फुटविवेकाभावेन व्यवहारमिति निर्णीतत्वाद्देहात्मबुद्धिर्नैषां ममाहमिति धीः श्वशृगालभक्ष्य इत्याद्यर्थोऽवसेयस्तद्वत्मनेति काऽत्र कथन्ता। गोः खर

इति शब्दो वाचको यस्य स गोखर इति वा। पश्यज्जनानां गवां नेत्राणां खर इव खर इति वा। गौश्च पशुप्रायश्चासौ खरो दुश्शब्दकारित्वादिति केचित्। अनुव्याख्यासुधाद्यभिद्यानेन ब्रह्मपुराणादिगतवैकुण्ठमाहात्म्यादिवचनानां क्षेत्रतीर्थमाहात्म्यप्रतिपादकानां गतिरुक्ता वेदितव्या। तथा हि तानि। सद्धर्मरतिदान्यत्र कतिसङ्ख्यानि तानि च। कति च ज्ञानदान्यत्र भक्तिवैराग्यदानि च। मुक्तिप्रदानि कान्यत्र तानि मे वद सुव्रत। सद्धर्मरतिदान्यत्र सन्ति चाष्टोत्तरं शतम्। भक्तिवैराग्यदान्यत्र षष्ठीन्यष्टोत्तराणि च मुक्तिदान्यत्र षट्चेत्यादीनि ॥ १३ ॥ भगवतः कृष्णस्य दुरन्वयं दुस्साध्वोऽन्वयस्तदर्थसम्बन्धतस्मिन्यस्य वा तत्। तत्रासम्बद्धमिति यावत्। तत्र तन्त्रमकुण्ठमेधस इति। मेधश्शब्दोऽयं स्वतन्त्रः। अप्रतिहतमतिः। यद्वा योऽकुण्ठमेधसोऽकुण्ठो मेधा यस्य च स चासौ साररूपत्वात्सश्च तस्य भगवतः कृष्णस्येति। सारत्वात्स इति प्रोक्त इत्यादेः। इत्थं निशम्य विप्रा मेधाविनोऽपि। गृणन्तु विप्र ते धिय इत्यृक्टीकायां विप्रमेधाविन्नित्युक्तेः। विप्रो गृत्स इत्यादिचतुर्विंशतिनामसु पाठादिति तट्टिप्पण्युक्तेः। तन्नामसु पाठात्। भ्रमद्धियो भ्रमन्ती धीर्येषां ते तथा सन्तः। तूष्णीं मौनवन्त आसन् ॥ १४ ॥ कथं जगाद एवं जगदीश इत्यालोच्यैवं निश्चित्यापदंश्चेत्याह। चिरमिति। ईश्वरस्यापीशितव्यतां नियम्यकूटघटितताम्। तद्वचनतः प्राप्तं निशम्य श्रुत्वाऽनन्तरं चिरं विमृश्य जगद्गुरुं कृष्णं प्रति स्मयन्तः सन्तो जनसङ्ग्रह इति लोकानुकृतिरित्यूचुः। यद्वा जनसङ्ग्रह इति स्वयं विमृश्य जगद्गुरुं प्रति स्मयन्त ऊचुरित्यन्वयः ॥ १५ ॥ तदृषिवर्गः किमवादीदित्यत आह। ऋषय इत्यादिना। हे विश्वसृजां ब्रह्मादिजगत्सर्जकानामधीश्वर स्वामिन्। तत्त्वविदुत्तमा वयमपि। यस्य तव मायया प्राज्ञया शक्त्येति वा विमोहिता मोहं प्राप्ता विमा विगता मा येभ्यस्ते विमा अज्ञा इत्युदिता इदं चर्येति ते तथेति वा। कथं तत्त्वविदुत्तमा इति आत्मनो निरहन्ता आहुरिति मोहिता इत्यनेन परास्तम्। स भवान् ईहया स्वेच्छया त्वचेष्टयेति वा गूढोऽनभिव्यञ्जितनिजचर्यः। ईशितव्या य ईशितव्यश्च स्वप्रेयः स भवति। लोहितादिढाज्भ्यः क्यषिति क्यष्। स च भवत्यर्थे त्वाचारार्थे। भृशादिभ्यो भुव्यच्वेर्लोपश्च हल इति भुवीत्यनुवृत्तेस्तदर्थस्तु भवत्यर्थ इत्युक्तेर्नाचारः। विकल्पतः पदयोरभिधानात्परस्मैपदता सम्भवति। तद्वद्भवतीति तात्पर्यम्। तत्तदनुकरणरूपं भगवच्च तद्विचेष्टितं च भगवदैश्वर्यादिमद्विचेष्टितं तत्स्वरूपत्वात्तस्येति सम्भवति चेष्टितस्यापि भगवत्त्वम्। अहो आश्चर्यम् पारोक्ष्योक्तिर्वा भगवतो विचेष्टितमहो। तर्हि मायया निगूढ इति मायिकत्वमुच्यत इति प्रतीयत इत्यत आहुः ॥ विचित्रमिति। विगता चित्रा माया यस्मात्तदमायिकमित्यर्थः। विचित्रं नानाविधमिति वा। अहो विचित्रमत्याश्चर्यकरमिति वा ॥ १६ ॥ तच्चेष्टावैचित्र्यं स्पष्टयन्ति ॥ अनीह इति। आत्मना स्वेनानीहः फलाकाङ्क्षाशून्योऽक्लिष्टकारी वा एकः प्रधान एतज्जगद्बहुधा सृजत्यवत्यत्ति। यथा भूमिर्भौमैः स्वसम्बन्धिभिः पदार्थैः। बहुनामरूपिणी बहुविधानि नामानि च रूपाणि च सन्त्यस्या इति सा। यया बध्यते तथा भगवान्वध्यते। किञ्चित्कार्यकर्त्र्या धात्र्या बन्धो बहुविधम्। विभूम्नो विशेषतो भूमा पूर्णता यस्य स विभूमा। विडम्बनं विडम्बयतीति तत्तथा हि यतस्तस्मादहो ॥ १७ ॥ विडंबनं च न सदा किन्तु प्रयोजनमात्यायिकं तदेवं प्रवर्तस इति विज्ञापयन्ति ॥ अथापीति। स्वजनाभिगुप्त्यै स्वजनरक्षणाय स्वजनायतो वा इमानि भूतानि जायन्त इत्यादेः, स्वजातास्तेषामभिगुप्त्यै येन जातानि जीवन्तीति श्रुतेः। स त्वं तदन्यतमो बिभर्षि। किञ्च काले वेदपथप्रतिबन्धने यथावस्थितार्थप्रतिबन्धे तथा। स आत्मा तत्त्वमसीत्यादावनकारप्रश्लेषेण छेदने च खलैः प्रस्ताविते तं वेदपथं भवांस्तं पथम्। वाटः पथश्च पन्थाश्चेत्युक्तेः। मार्गं वेदेति जानातीति स्वलीलया तत्खलनिग्रहाय बिभर्षि सनातनं सदातनं ससंवादं स्याद्यथा तथा बिभर्षि। प्रागुदाहृतं गीतातात्पर्यमनुसन्धेयम्। अनन्तरं वर्णाश्रमात्मा सकलवर्णाश्रमधर्मप्रवर्तक इति तत्स्वामी परः पुरुष उत्तमपुरुष इतोदम्भरणहेतुः। परोभवो भवतः पर इति परोभवा मुक्तास्तानपि बिभर्षीति वा। परोभवाननयति चेष्टयतीति स वा। नलोपाद्यभावस्तु तज्जलानित्यादिवदिति साधूक्तं प्रागनुसन्धेयम्। परो इत्युत्तमार्थकमव्ययम्। रञ्जनात्प्रकृतिः प्रोक्ता रज इत्येव वैदिकैः। तस्या अप्युत्तमो विष्णुर्यतोऽतः स परोरजा इति बृहद्भाष्ये। परो इति ततः परमिति छान्दोग्यभाष्ये तद्वदयमपीति मन्तव्यम्। स्वजनस्य स्वात्मजस्य विधेर्नाभो नाभ्यां वा गुप्त्यै रक्षणाय। हे खलनिग्रहाय खलस्य वेदस्तेयस्य हयास्यस्य निग्रहस्य हननस्यायो हि लाभो येन स तं यापयतीति तत्सम्वुद्धिर्वा। मत्स्यात्मा सन् काले तत्संहारे जाते सनातनं वेदपथं काले ब्रह्माणि बिभर्षि। वर्णाश्रमात्मा वर्णानां विषयेऽश्रमः श्रमरहित आत्मा मनो यस्य स सन्। पुरुषः प्राणो यस्य सः। परोभवान् बहुकांतिमांश्चासीदिति शेषः। हरिश्च प्रकतिश्चैव ब्रह्मवायू तथैव च। सुपर्णशेषरुद्राश्च शक्रः सूर्ययमावपि। अग्निर्यमानुजश्चैव कालशब्दोदिताः क्रमात्। पूर्वोक्तास्त्वपरोक्तानां प्रभवः सर्वशो मता इत्यादिमहासंहितायामिति द्वितीयतात्पसंक्तेः। खलान्निगृह्णातीति स तथा स चासावायश्च तत्सम्वुद्धिरिति वा। महाफलप्रदत्वात्तु विष्णुराय इतीरित इति निरुक्त इत्येकादशतात्पर्योक्तेः। तत्रैवायस्तु फलमुद्दिष्टमिति चोक्तम् ॥ १८ ॥ ब्रह्म ते हृदयमिति श्लोके ब्राह्मणजातेर्हृदयतादात्म्यमुच्यत इत्यन्यथाप्रतीतिनिरासाय तदनूद्य व्याचष्टे ॥ हृदयं प्रियमिति। कथं हृदयशब्दः प्रियार्थक इत्यतस्तं तस्मिन्निर्वक्ति ॥ हृदयनादिति। हृदाश्रितत्वात्प्रियस्येति भावः। द्वितीयतात्पर्ये च। हृदयं प्रियमुद्दिष्टं कान्तमित्यभिधीयत इति ॥ ततश्चायं श्लोकार्थः ॥ तपःस्वाध्यायसंयमैः शुक्लं गुह्यं ब्रह्म ब्राह्मणजातिस्ते हृदयं प्रियं परं च। तदुभयघटकमाह ॥ यत्रेति। ब्राह्मणकुलेऽव्यक्तं ब्रह्म सुव्यक्तं यथा भवति तथाऽव्यवधानेनेति यावत्। उपलब्धं दृष्टं यत्तमः परं शुक्लं च। किञ्च तस्मात्तत्र ब्रह्मोपलब्धिर्यस्मात्। हे ब्रह्मन्

शास्त्रयोनेः शास्त्रं योनिः प्रमाणमस्येति शास्त्रयोनिस्तत्र सर्वस्वामिनः सद्धाम सन्मुख्यमाश्रयस्तस्मात्सम्भावयसि अहो वयं जन्मभृत इत्यादिना सम्भावयसि। यत्तद्ब्रह्मण्यगुणो ब्रह्मण्याः सर्वेऽपि गुणा अप्रधानीभूता यस्मात्स तच्छिखामणिर्भवान्भवतीति ॥ १९–२० ॥ अहो वयं जन्मभाज इति यत्तन्नटनं परमार्थत इदानीमिति विज्ञापयन्ति ।। अद्येति। यद्वयं त्वया सङ्गम्य सङ्गं प्राप्य स्थितास्तस्मान्नोऽद्य जन्मसाफल्यं जन्मनः सफलता। साफल्यमिति विश्लिष्टं विद्यादिपदैरन्वेतव्यम्। विद्याया अभ्यस्तशास्त्रस्य तपसः कृच्छ्रादेर्दृशो ज्ञानस्य चक्षुषो वा साफल्यम्। कुत इत्यादीत्यत आह ॥ यदिति। सङ्गत्यैवं सहवासेन श्रेयसां मध्ये परो विशिष्टश्रेयोरूप इति। सङ्गत्या लिङ्गभङ्गानन्तरं गमनेन प्राप्यश्रेयसां परः स्वामी। तद्विश्राणनकृत्तत इति वा। यद्वा त्वमङ्गत्या किञ्चिद्वस्तुसङ्गाभावेन सन्नपि। असङ्गो ह्ययं पुरुष इति श्रुतेः। अथाऽपि त्वयैव सङ्गमिनो जन्म साफल्यम्। तत्र तन्त्रं यत्त्वं नः श्रेयसां मध्ये पर इति। यद्यपि न इत्येकोक्त्याऽलं न पुनर्न इति वक्तव्यं तथाऽपि तस्य नो इत्यव्ययरूपतया त्वयाऽर्थाज्जन्मभाज इत्यनेन यज्जन्मसाफल्यमुक्तं तत्तव नो किन्तु न इत्यर्थकं सदन्तरङ्गतः सार्थकमित्यवधेयम् ॥ २१ ॥ परोक्षस्तुतिस्त्वतिप्रीतिकृदिति तथा नमन्ति। भगवते हे अकुण्ठमेध हे से सहितो या रमयेति सेस्तत्सम्बुद्धिर्हे स इति। अकुण्ठमेधस इति वा परमात्मने साक्षाद्विष्णुरूपाय कृष्णाय ते नमः। तर्ह्येवं किं गोपरूपगोपनं तस्येत्यत आह ॥ स्वयोगेति। स्वस्य स्वरूपभूता वा या योगशक्तिस्तया छन्नो महिमा यस्य स तस्मा इति वा ॥ २२ ॥ अत एव न तेषां तव मनीषेति भाषन्ते ॥ नेति। ईश्वरमीशेभ्यो वरं सकलेप्सितदम्। माया तु स्वेच्छा तद्रूपिणी या जवनिका तिरस्करिणी। प्रतिसीरा जवनिका स्यात्तिरस्करिणी च सेत्यमरः। जुवत्यस्यां जुः सौत्रो धातुर्गतौ वेगे च ल्युट् स्वार्थे कन्। यमनिकेति वा पाठः। यमयति यम उपरमे ल्युट्। यवनिकेति नामरे पाठो न व्याख्याता च। तथाऽपि बहुव्यवहाराद्यु मिश्रण इत्यस्य यवनिकेति रूपमिति ज्ञेयम्। तया छन्नमात्मात्मानं यममी भूपा मिलिता न विन्दन्ति। भवतु कदाचिन्मिलितानामवेदनं वेदनं तु सदा तदनुवर्तिनां यादवानामित्यतो नैते विन्दन्तीत्याहुः। एकरामा एकस्मिन्नेकेनैव वा रमन्त इति तथा वृष्णयोऽपि यं न विन्दन्ति। च समुच्चये। तस्मै नम इत्यतीतेन वा तस्येत्युत्तरेण वाऽन्वयः ॥२३॥ अद्य तस्याङ्घ्रिं ददृशिम। मोदेशः। एकान्तिनां तु ज्ञानमात्रमर्थनीयमिति। वरिति ज्ञानमुच्यते। सव्यश्चाङ्घ्रिर्ज्ञानात्मेति तं ददृशिमेत्येकवचनेन ध्वनयामासुः। हे अद्य उपजीव्येति वा। किं तद्दर्शनेनेत्यतो वदन्ति ॥ अघौघमर्षतीर्थास्पदमिति। धातूनामनेकार्थत्वात्तितिक्षार्थोऽप्यत्र नाशार्थः। नाशयन्तीति तानि च तानि तीर्थानि च तेषामास्पदं स्थानभूतम्। सुविपक्वयोगैरत्यन्तं विपक्वः फलोन्मुखो योग उपायो भक्त्यादिर्येषां ते तर्हीदं धृतं ध्यातमिति यावत्। आस्पदं प्रतिष्ठायामिति निपातितः शब्दः। ध्यानमात्रं न पुरुषार्थ इत्यत आहुः। उत्सिक्तोद्रिक्ता या भक्तिस्तयोपहृतोऽपहृत आशयो स्थानमभिप्रायो विषयाभिलाष इति यावत्। येषां ते ते च ते जीवकोशा जीवस्य कोशस्थानानीति लिङ्गानि येषां ते। भगवत्गतिमापुः। अथः तद्वदयमपि तद्हृदि धृतवन्त इति तदनन्तरं भक्तान्नोऽनुगृहाण। न उपर्यनुग्रहं कुर्विति यावत्। पूर्वं भक्तत्वेन ग्रहाणानन्तरं भगवद्गतिमनुग्रहाणेत्यप्यावृत्याऽन्वयः ॥ २४ ॥ दाशार्हं कृष्णमित्यनुज्ञाप्य विज्ञाप्य धृतराष्ट्र युधिष्ठिरं तान्राजर्षिवर्यान्राजर्षिश्रेष्ठान्राजश्रेष्ठान्कांचित्स्वतः पुरतस्तत्रायातानृषिश्रेष्ठान्वाऽनुज्ञाप्य मुनयो द्वैपायनाद्या गन्तुम् ॥२५॥ पश्चात्कृत्वा प्रणम्य। इदं किं पृच्छसि पृच्छेति तत्तदनुशासनमुपसङ्गृह्येदं वक्ष्यमाणं बभाषे। आर्षो बभाषेदमिति निर्देशः। बभाषेति पदव्यत्ययो वा। उत्तरत्र क्रत्वादेः करिष्यमाणस्य पत्न्यानुकूल्येन भाव्यमिति सा चानुवर्तिनीति वाऽऽह ॥ दं सुयन्त्रित इति। दमिति भार्यावाच्यव्ययम्। दं सुयन्त्रिता यस्य स इति तदर्थः। इदं च वां पुत्रतां गत इति वक्ष्यमाणानुगुणम्। दं कलत्रं बुधैः प्रोक्तं छेदे दातरीत्यनेकार्थध्वनिपदमञ्जरी। द्रस्तरौ दं कलत्रे च दाने छेदे च दातरीति विश्वश्च ॥ २६ ॥ सर्वे देवा येषु सन्निहिता इति सर्वदेवास्तेभ्यः। सर्वदेवमयो विप्रः। सर्वा देवता वेदविदि ब्राह्मणे वसन्तीत्यादेः। वो नमः। हे ऋषयः श्रोतुं मद्वचनं श्रोतुमर्हथ योग्या भवत। कर्मणाऽनुष्ठितेनेष्ट्यादिना नरकाद्यनर्थप्रापककर्ममूलच्छेदो यथा स्यात्तथा नः प्रत्युच्यन्ताम् ॥२७॥ वसुदेवेन वासुदेवे सकलफलरूपे समीपे सति कथमस्मान्प्रति कृतः प्रश्नः किमियदज्ञोऽयमिति कुतुकिनोऽन्यान्मुनीन्स्वयं स्वयम्भूर्नारद आह ॥ नेति। हे विप्रा वसुदेव आत्मनः श्रेयो बुभुत्सया नोऽस्मान्पृच्छतीति यत्तदिदं नातिचित्रम्। यद्यस्मात्कृष्णमर्भकं मत्वा स्थित इति। इदं मननं कुतोऽमतिहेतुरित्यतोऽप्याह ॥ अर्भकमिति। अर्भः को ब्रह्मा यस्य तमाद्याद्यम् ॥२८॥ कश्यपस्यापि प्राग्वसुदेवस्य मानवतनुमत इदं सम्भवदेवेति तन्मौढ्यं सदृष्टान्तमाचष्टे ॥ सन्निकर्ष इति। मर्त्यानां सन्निकर्षोऽमर्त्यैः सन्निकर्षस्तदमर्त्यानादरणे कारणम्। हि लोकसम्मतम्। यथा तत्रत्यः। अमेहक्वतसित्रेभ्यः इति त्यः। तत्र सन्यः पामरो गां गमम्भो हित्वाऽन्यदीयमम्भः शुद्धये याति। सति जगज्जनकेऽस्मान्पृच्छति तदनादरणेनेति तद्वदयमिति भावः ॥ २९ ॥ तन्मननान्यथात्वं विवरीतुं तन्मेयस्वभावमाह ॥ यस्येति। यस्यैतत्तनयस्यानुभूतिर्ज्ञानं न तथा। अस्य जगतो विश्वान्तर्निदेशे तदुत्पत्त्यादिप्रयुक्तोत्पत्त्यादिना च स्वतो नयनादिकण्डूयनसमये नखमुखदलने जातेऽशनैरशनसमये रदनैरशनारदने चेत्यवमादौ स्वतः। यथोक्तमेकादशे। जनोऽस्य हेतुः सुखदुःखयोश्चेत्किमात्मनश्चात्र हि भौमयोस्तत्। जिह्वां क्वचित्सन्दशति स्वदद्भिस्तद्वेदनायां कतमाय कुप्येदित्यादिना। अन्यस्मादृष्यादेः सत्त्वादिगुणाच्च। कुतश्च नार्तकिता दशनिपातादेश्च। नरिष्यति न नश्यति। नरिष्यतीत्युक्तिस्तस्यास्तत्तादात्म्यात्। अस्य जगतो यथा तथा। यस्यानुभूतिः काले ज्ञानं स्वतोऽत्यन्तं व्याप्तः। स योऽतोऽश्रुत इति श्रुतेः।

अन्यस्मादित्यादि पूर्ववत् । यो नरिष्यति क्लेशप्रापको यः कर्मपरिपाकस्तत्प्रापका ये गुणास्तेषां प्रवाहाः परम्परास्तैरव्याहतोऽनुभवो ज्ञानमनुभावो वा यस्य स तम् । तत्र हेतुरीश्वरमिति । तदखण्डत्वे च हेतुरद्वितीयमिति । एतादृशं कृष्णम् ॥ ३० ॥ यथा मेघेन हिमेनोपरागेण राहुग्रहणेन च छादितं सूर्यमसूरिरप्रकाशं मनुजो मनुते तथा गुणप्रवाहैः प्राणादिभिर्गूढं सत्त्वरजसस्तमसां शुक्लरक्तनीलत्वेन हिममेघोपरागाणां तथात्वेन तैर्गूढं सूर्यमिवेति निदर्शनम् । एवमन्वयान्तरमिति ज्ञेयम् । केचिन्माञ्जिवर्णाश्चेति रामायणस्योक्तेरभ्रस्य रक्तता ज्ञेया । स्वविषयैः स्थूलेन्द्रियगोचरैः प्राणादिभिः प्राकृतैरुपगूढं मेने । प्राकृतशरीरं मेन इत्ययमज्ञोऽतः प्रश्नो युक्त इत्याशयः । स्वविषयैः स्वमातृमातृकैः प्राणादिभिर्वलादिभिश्चेष्टादिभिर्वा गूढं भवन्तमर्भकं मेन इत्यज्ञ इति वा । असुरविपर्ययैरितरेषामिति वा ॥ ३१ ॥ प्राज्ञा एतदज्ञताज्ञापनेनैव समयमगमयर्न्किवोत्तरं तत्पृष्टस्यावदन्नित्यत आह ॥ अथेति । मुनयः सर्वेषां राज्ञां शृण्वतां तथा रामकृष्णयोः शृण्वतोश्च । आनकदुन्दुभिमाभाष्योचुः ॥ ३२ ॥ यद्यप्येतदपायोपायाः सन्ति बहवस्तथाऽपि वित्ततच्चित्ताः स मे मुनय इदं निर्हारकारणमैरयन्नितीरयति ॥ कर्मणेति । साधु यथा तथा निरूपिता शास्त्रे । साधुर्भिनिरूपित इति सङ्ग्राह्यत्वे हेतूक्तिः । एप वक्ष्यमाणः सर्वयज्ञेश्वरं विष्णुं मखैर्यज्ञैश्च यजेत्पूजयेदिति यः स एप निरूपित इति वाऽन्वयः ॥ ३३ ॥ मखैरिति युष्मन्मुखतो यदुक्तं तत्कर्मकरणेक्षणे पुनस्तदन्तरकर्माकरणात्कर्मणा कर्मनिर्हारो दुश्शकः । भित्तेर्जलेन सम्मार्जने मृत्तिकैवेति नयत इति न युक्तिसहमिति दत्तो मयि शङ्कावहूपपादनेन श्लोकपञ्चके परिहरन्ति ॥ चित्तस्येति । चित्तस्य मनस उपशमो विषयेभ्य आहरणलक्षणाः । यः कविभिः शास्त्रचक्षुषा तद्रुपरूपमात्रग्रहेण दर्शितः । स सुगमो योगः कर्मबीजभर्जनोपायोऽयमेत्र चात्मनः स्वस्य मुदावहो धर्मो नेतर इत्यर्थः । चशब्दोऽवधारणे । यस्योपशम उपशान्तिरक्रोधोपरोध इति यावत् । तस्य चिज्ज्ञानम् । तथा यः पारत्रिक्यः सम्पदश्च सुगमा इत्यप्यर्थः ॥ ३४ ॥ स्वस्तीत्यव्ययमिति पक्षे स्वस्त्ययनः स्वस्त्याश्रयः । अयनशब्दः स्त्रीलिङ्ग इत्ययन इति सम्भवति । विस्तृतश्च प्राक् तत्प्रकारः । स्वस्तिरस्तु न इत्यादेः स्वस्तेरयन इति च । अयं मङ्गलाश्रयो मार्गः । अधिकार्यत्र क इत्यत आहुः ॥ द्विजाते गृहमेधिने गृहस्थाश्रमिण इति । स किमात्मेत्यतो वदन्ति । श्रद्धया शुक्लेन न्यायार्जितेनेति निर्मलेन वित्तेन पुरुषं भगवन्तमिज्येतेति यः सोऽयमित्यन्वयः ! आप्तेति सम्बोधनं च ॥ ३५ ॥ सन्न्यासस्तु विरक्तैरतिविरक्तैश्चेति द्विविधैर्ग्राह्यः । तत्र नानुपनीतस्य नाधिकारः । अधिकारश्च गृहिणाम् । तत्र द्वौ पक्षौ श्रौतः स्मार्तश्चेति । यदहरेव विरजेत्तदहरेव प्रव्रजेदित्याद्युदित आद्यः । अतिविरक्तोपनीतपरिणतविषयः । द्वितीयस्तु पित्रादिऋणपरिहारानन्तरं ग्राह्य इति विवेकं मनसि कृत्वा वदन्ति । वित्तैषणामिति। यज्ञाश्च दानानि च तैर्वित्तैषणां द्रव्यापेक्षा विसृजेदिति सर्वत्रान्वेतव्यम् । विसृजेत् । बुधः संसारासारतावित् । गृहैस्तत्तदाश्रमैः सहदारसुतैषणाम् । धीरो धैर्यं तद्विसर्गहेतुरित्यर्थः । कालेन ज्ञातेन कालेन भगवता निमित्तेनात्मलोकषणामात्मनः स्वस्य लोकविषयिणीं वैकुण्ठादिलोकेच्छां विसृजेत् । एकान्तिकत्वात् । स्वत एवागमिष्यति न याचनोचितेति भावः । एवं कालेन क्रमेणेत्यप्यर्थः । ग्राम्ये स्त्रीभोगे त्यक्तैषणाः सर्वे धीरा ब्रह्मचारिणोऽपि तपः प्रतिवनं ययुः । सन्न्यासिनः सन्तो वाऽतिविरक्ताः ॥ ३६ ॥ विरक्तेनेयदनुष्ठाय सन्न्यासो ग्राह्य इति तदाहुः । ऋणैरिति । जात उत्पन्नो द्विजो देवऋषिपितॄणां चेति त्रिभि ऋणैः । क्रमात्तदापकानाहुः । यज्ञेत्यादिना । यज्ञेन देवानामृणपरिहारः । अध्ययनेन ऋषिऋणपरिहारः । पुत्रेण पितृऋणमिति । तान्देवादींस्त्रीन् अनिस्तीर्य पुत्रेण जय्य इत्यादेस्तद्द्वारा जित्वेति यावत् । त्यजन्गृहाद्याश्रमं यतेन्नरकाद्यनर्थमृणवाधया प्राप्नुयात् । निस्तार्येति पाठे स एवार्थः । अतिविरक्तस्य तु तन्महिम्नैव तदादिऋणपरिहार इति मन्तव्यम् । ब्रह्मचर्यमत्र वेदाध्ययनम् । अध्ययनेति प्रागुक्तेः । पुत्रेति पुरोदीरणादत्रापि ब्रह्मचर्यपुत्राभ्यां चेति वक्तव्ये यद्ब्रह्मचर्यसुताभ्यां चेत्याहुस्तेन ब्रह्मचर्यं च सुता च ताभ्यां तच्च सुतश्चेति ताभ्यामावृत्त्या सुतया सुतेन चर्षिपित्रो ऋणमुन्मुच्य । कन्योदिता बत कुलद्वयतारिणीति । पुत्राच्छतगुणं पुत्री यदि पात्रे प्रदीयत इत्यादेः । स्वायम्भुवययात्यादीनां दौहित्रयज्ञाष्टकादिभ्य ऋणमुक्तिः प्रसिद्धा चेति विशेषं सूचयामासुरित्यवसेयम् । हे महामते वसुदेव यज्ञैर्देवानामृणमुन्मुच्यैव निरृणोऽशरणो गृहरहितः अ एव परमात्मैव शरणं यस्य स वा भवेत् ॥ ३८ ॥ जानता त्वया कृतः प्रश्नो लोकोद्धृत्यै तदुत्तरं च तदर्थमेवमस्माभिरुक्तम् । वस्तुतस्तु त्वमेवंविध इति न तवावश्यकमिति तमुत्साहयन्त आहुः ॥ वसुदेवेति । हे वसुदेव भवान्परमया देवकी सर्वदेवतेत्यादेरुत्तमया देवक्या सह जगतामीश्वरं हरिं गतः शरणं यातो नूनं निश्चयः । कुतः स इत्यत आहुः । यद्यतः स हरिर्वां युवयोः पुत्रतां भेजेऽत इति । एवमर्थापने वामिति सुलग्नम् ! परमया देवक्या सहेदानीं पुरा च पुरुषजन्मसु सभार्यो भवान्भेजे नूनं यतः स वां पुत्रतां गत इति वाऽन्वयः ॥ ३९ ॥

इति श्रीभागवतटिप्पण्यां सत्यधर्मकृतायां दशम उत्तरार्धे द्विसप्ततितमोऽध्यायः ॥ १०–७२ ॥

## श्रीसत्यधर्मकृता श्रीभागवतटिप्पणी

॥ हरिः ॐ ॥ तन्मुखैरिति मुखवचनम् । तानेवर्षीनृत्विजो वव्रे ॥ १ ॥ धर्मेण यथा वरणं कर्तव्यं तद्धर्मेण वृता धर्मेण कल्पोक्तेन च तस्मिन्क्षत्रे उत्तमकल्पकैरुत्तमः कल्पो धरणीवितरणादिरूपः पक्षो येषु तैर्मखैः । उक्तंचाश्वमेधे पर्वणि । पृथिवी दक्षिणा चात्र विधिः प्रथमकल्पकः । विद्वद्भिः परिदृष्टोऽयं शिष्टे विधिविपर्यय इति । प्रभुः प्रथमकल्पे तु यो ऽनुकल्पं प्रवर्तते । न तस्य साम्परायः स्याच्छ्रुतिरेषा सनातनीत्यनन्तदेवीये । तथा प्रथमस्कन्धीय । नयित्वाश्वमेधैस्तन्त्रिभिरुत्तमकल्पकैरिति

श्लोकव्याकृतौ यादवार्यैस्तद्यज्ञपञ्चकमजस्त्रिगुणं स एभ्यः सद्दक्षिणेत्युदाहृत्य श्रीमदुक्ति दक्षिणादिविषये विहितोत्तमकल्पयुतैरित्यर्थ इत्युक्तेश्च ॥ २ ॥ तस्य दीक्षाव्रतसङ्ग्रहस्तस्यां प्रवृत्तायां सत्यां पुष्करस्रजः कमलमाला रलयोरैक्याद्बहुमुक्तादिमाला इति वा राजान इतरे । सुष्ठ्वित्यव्ययम् । सुष्ठु प्रशंसनेऽपि च कथ्यत इति विश्वः । स्तुत्यमलङ्कृतमलङ्कारो येषां ते । सुष्ठु भृशं यथाऽलङ्कृता इति ॥ ३ ॥ तन्महिष्यो वसुदेवदेव्यो निष्कं वक्षोऽलङ्करणं तद्युक्ताः कण्ठा यासां ता आलिप्ता गन्धादिना । वस्तूनि हिरण्यफलादीनि पाणिषु यासां ता हिरण्यं रजतं वाऽपि गृहीत्वा क्रमुकं फलम् । शाला विशेद्यज्ञपत्नी शपेयुस्त्वन्यथा सुरा इति वस्तुशास्त्रं वा । यच्छमित्री यजमाननानिनी निशातं शस्त्रं गृहीत्वा प्रविशेच्छालामिति याज्ञिकाः ॥ ४ ॥ मृदङ्गपटहशङ्खभेर्यानकमादिर्येषां त इति विग्रहः । तूर्याङ्गत्वात् । गन्धर्व्यस्तद्भार्या अप्सरस इति न सरसम् । सहभर्तृका इत्युक्तेः ॥ ५ ॥ तमभ्यषिञ्चन्विधिवद्भक्तमव्यग्रभक्तमृत्विज इति सरलः पाठः । अव्यग्रमव्याकुलं भक्तं वसुदेवमव्यग्रं यथा भवति तथाऽभ्यषिञ्चन्निति वाऽन्वयः । विधिवदभ्यक्तमिति पाठस्तु बहुश्लिष्टः । अक्तं नयनयोः कज्जलेन प्रायस्त्रैककुदेन तन्न चेद्येन केन वा । यथोक्तं वाजसनेयके । यदाञ्जनं त्रैककुदमिति । त्रैककुदेनाञ्जनेनाङ्क्ते । यदि त्रैककुदं नाधिगच्छेद्येनकेन चाऽञ्जनेनाञ्जीतेति । तथैवापस्तम्बारणं च यदाञ्जनं त्रैककुदं जातँ हिमवतस्परि । तेनामृतस्य मूलेनारातीं जम्भयामसीति । तत्फलं च प्रथमपञ्चकतृतीयखण्ड । आञ्जन्त्येनं तेजो वा एत...र्यदाञ्जनं सतेजसमे वैनं कृत्वा दीक्षयन्त्येकविंशत्या दर्भपिञ्जूलैः पावयन्तीत्यादिनोक्तं ज्ञेयम् । पिञ्जूलशब्दः सङ्घवाची । तत्रापि दक्षिणस्याक्ष्णः प्रागञ्जनमनन्तरं वामस्य । दक्षिणं पूर्वमङ्क्त्वेत्यादेः । ककुच्छब्दः शृङ्गवाची । हिमवत्सम्बन्धिशिखरत्रये जातस्त्रैककुदोऽञ्जनविशेष इत्यर्थः । अभ्यक्तं नवनीतेन । तथा ह्यध्वरप्रस्तावे । हविष्यमुभौ भुक्त्वा लेपनपर्याप्तं नवनीतं त्रेधा विभज्यैकं पयोऽसिदर्भपिञ्जूलाभ्यां नवनीतमुद्योतीत्याद्युक्तं नवनीतेन वाऽऽज्येन वा घृतेन वा युतेन वेति विशेषो ब्राह्मणेनावसेयः । तत्राज्यघृतशब्दयोरर्थभेद आयुतपदार्थश्च । य आज्यघृतयोर्भेदः पूर्वाचार्यैरुदाहृतः । सर्पिर्विलीनमाज्यं स्याद्घनीभूतं घृतं विदुरिति वचनादवसेयः । विलीनं द्रवदायुतं चेषद्द्रवदाज्यमित्यर्थः । अधिकारिविशेषपरा चोक्तिः । दीक्षयन्ति नवनीतेनाभ्यञ्जन्तीत्युक्त्वाऽऽज्यं देवानां सुरभि घृतं मनुष्याणामित्यादेः । विस्तरस्तु ब्राह्मणव्याख्यातोऽवसेयः । अभ्यषिञ्चदष्टादशभिस्तत्सङ्ख्याभिः । उडूनि नक्षत्राणि तैरश्विन्यादिभिः सोमराजं चन्द्रं बहुत्वेन कान्तिमत्त्वेन च तन्निदर्शनं न तु तत्सङ्ख्यात्वेन सप्तविंशतिसङ्ख्यात्वात्तेषाम् । जनसंवृत इति पाठो नासंवृतः । अंजनसंवृत इति निरञ्जनः पाठः । सोमाध्वरपञ्चके । अत्र कृष्णाजिनेन यजमानं दीक्षयन्तीत्यारभ्य वृत्रघ्नस्य विष्टपमगममिति चेत्यन्तेन तदावश्यकतोक्तेः ॥ ७ ॥ अपि माषं माषं नीत्या सप्तदशेति पाठ्यम् । ऋत्विजः । अध्वर्युः १ प्रतिप्रस्थाता २ नेष्टा ३ उन्नेष्टा ४ एवमध्वर्य्वादिचतुष्कम् । ब्रह्मा १ ब्राह्मणाच्छंसि २ आग्नीध्र ३ पोता ४ ब्रह्मचतुष्कम् । होता १ मैत्रावरुणा २ अच्छावाक ३ ग्रामस्तोता ४ । उद्गाता १ प्रस्तोता २ प्रतिहर्ता ३ सुब्रण्य ४ ॥ ४–१६ ॥ सदस्य एक इति सप्तदशर्त्विजः । सोमप्रवाकस्तु नैतन्मध्ये निविष्ट इति सप्तदशेत्युक्तिः । वृत्रहण इन्द्रस्यऽध्वरे यज्ञे । अत्राल्लोपाभावस्तु यज्ञस्याङ्गवैकल्याभावसूचकः ॥ ८ ॥ जीवेशौ जीवयति सर्वानिति जीवः शेषः सर्वाधारकत्वात् । तदात्मकत्वाद्बलश्चेशश्च जीवेशौ । रामश्च कृष्णश्चेति प्रागुक्तश्चानुकूलिताः । स्वविभूतिभिः स्वसन्निधानपात्रैः स्वसुतैर्दारैश्चान्वितौ स्वरूपभूताणिमादिभिर्वा ॥ ९ ॥ अनुयज्ञं प्रति प्रतिक्रतु यो विधिः कल्पोक्तः प्रकारस्तेन । यथाऽग्निहोत्रादिचिन्होपेतैरित्यग्निहोत्रादिलक्षणैः प्राकृतैः समाम्नातसर्वाङ्गा ज्योतिष्टोमादयः सप्त तैः । द्रव्यं पुरोडाशो ज्ञानमेतस्यात्र विनियोग इत्यादिज्ञानं क्रिया तदनुसारिकर्मेत्येतत्स्वामिनम् । द्रव्याद्रव्यज्ञानक्रियापदोत्तरं यज्ञपदमनुसन्धेयम् । ततश्च द्रव्ययज्ञो ज्ञानयज्ञः क्रियायज्ञस्तपोयज्ञस्तेषामीश्वरम् । द्रव्ययज्ञास्तपोयज्ञा ज्ञानयज्ञास्तथा पर इत्यादेः । ईजे ॥ १० ॥ यथोत्तमकल्पत्वेन गमावगमिनं काले विहिते स्वलङ्कृतेभ्यः प्राग्दत्तालङ्कारेभ्यः पुनस्तानलङ्कृत्य गोभूकन्या महान्ति धनानि यासां ता अददात् ॥ ११ ॥ प्रति प्रतिभावं गतया जाघन्या पत्नी संयाजं करोतित्यादेः । जाघन्या क्रियमाणपत्नीकर्तृकक्रतुविशेषः । तथाऽऽवभृथः समाप्तिस्तदाद्या वारुणेष्ट्यादींश्चरित्वा कृत्वा । तृतीया द्वितीयार्थे । तैः सहितमभिहितं कर्मेति वा । अथ तदनन्तरम् । न च नाथेति वक्तव्यम् । क्त्वाप्रत्ययेन तदानन्तर्यबोधनादिति वाच्यम् । तस्य नियमेन पूर्वकालानवगमकत्वात् । तथा ह्युदाहृतं मुखं व्यादाय स्वपितीत्यादि । अतोऽथेति सार्थकम् । रामह्रदे परशुरामनिर्मिते यजमानपुरःसरा विप्रा मेधाविनः सस्नुः ॥ १२ ॥ स्नातस्तातः कृष्णस्य बन्दिभ्यः स्तुतिपाठकेभ्योऽलङ्कारवासांसि अदात् तथा स्त्रियो वसुदेवभार्या अपि ददुः । ततः स्वलङ्कृतान्वर्णान् अश्वेभ्योऽन्नेन पूजयदपूजयत् ॥ १३ ॥ पारिबर्हेण योग्यद्रव्येण । तानाह ॥ विदर्भकोसलेत्यादिना ॥ १४ ॥ सदस्या ऋत्विजश्च सुरगणा आगताः । नरो भूता देवयोनयः पितरश्चारणाश्च श्रीनिकेतं श्रीनिवासं कृष्णमनुप्राप्य क्रतुं शंसंतः प्रययुः ॥ १५ ॥ धृतराष्ट्रोऽनुजस्ततो जात्या हीनः सन् जात इति विदुरः । अनु हीने चेति विश्वः । व्यास इत्येते सुहृत्सम्बन्धिबान्धवान् ॥ १६ ॥ बन्धून्यदून् सौहृदेन क्लिन्नं द्रवच्चेतो येषां ते ॥ १७ ॥ पूजया तत्साधनेन ॥ १८ ॥ वसुदेवो मनोरथमहार्णवमञ्जसोत्तीर्य करे नन्दं स्पर्शयन् ॥ १९ ॥ हे भ्रातः नृणां यः स्नेहसंज्ञित ईशकृतः पाशस्तत्तुलः । ईशकृतत्वं तद्दुस्त्यजत्वे हेतुः । सुराणां च योगिनामपि दुस्त्यजं मन्ये का कथाऽस्माकमिति भावः ॥ २० ॥

ज्ञानसत्तमैर्ज्ञानेन श्रेष्ठैर्युष्माभिरस्मासु यत्कृतं व्यापारोऽजानतो महिमानं तवेदमित्युदाहृत्य बृहद्भाष्ये सलीलमुक्तं तच्चास्माभिः प्राग्लिखितमत्रानुसन्धेयम्। अप्रतिकल्प उपकरणीयप्रतिनिध्यन्तररहितः। किन्तु यत्क्षमं कर्तुं तन्मात्रं कथितं कथितं कृषेरिव पलालकुलमितिवत्कृतमित्याह। अफलाऽपि मैत्री अर्पिता साऽपि निवर्तेत कलिरिति नेत्यालपति। न निवर्तेत कर्हिचिदिति ॥२१॥ यथा छन्ने छन्नेऽवगमपटिम्न्यक्षिणि किम्विति वद सौभाग्यासौभाग्यदशयोर्न वैषम्यं फलन्त इति ॥ प्रागिति। हे भ्रातर्वो युष्मदादीनां कुशलं नाचरेम हि प्रसिद्धम्। कुत इत्यत आह। अकल्पाः कंससङ्कीलनचरणा इति। अधुना तु पुरः सतो युष्मान् श्रीमदेनान्धीन्यक्षीणि येषां ते तथा सन्तः पश्यामः। असद्विषये मीलितलोचनता युक्तेत्यतो न नन्द तादृशा इत्याह ॥ सतः सज्जनानपीति ॥ २२ ॥ श्रीर्यासां मम तु भवतु किलान्येषामपीति तन्माहात्म्यवचनपूर्वकमर्थयते। यया श्रियाऽन्धदृक्सन् स्वजनान् स्वो हरिस्तस्य जना दासास्तान्। भृत्या बन्धवो जामात्रादयो भ्रात्रादयश्च तान्न पश्यति। भृतितो ये बन्धवोऽन्योन्यं स्नेहपात्राणि तान्यपीत्यप्यर्थः। सा राज्यश्रीः। हे मानद नन्द श्रेयस्कामस्य पुंसो माऽभूत्। अडागम आर्षः ॥ २३ ॥ सौहृदेन शैथिल्यं द्रवतेति यावत्। यस्य चित्तं यस्य स एव। आनकदुन्दुभिरश्रुलोचनस्तत्कृतां मैत्रीमेव स्मरन् रुरोद ॥ २४ ॥ सख्युर्वसुदेवस्य प्रियकृत्। गोविन्दरामयोः प्रेम्णाऽद्य श्वः प्रातःप्रयाणोद्योग इति तस्मिंश्च निर्गमोद्योगेश्वर इति यदुभिर्मानितस्त्री-न्मासानवसत् ॥ २५ ॥ सव्रजो व्रजस्य स्वकीयलोकसहितः परार्ध्येति आभरणक्षौमाणां विशेषणम्। नानाविधानर्घ्यपरिच्छदैः पूर्यमाणः कृष्णार्जुनबलादिभिः कृष्णपरमप्रियत्वाद्बलस्य कदाऽपि वा विमनस्कत्वात्ततः प्रागुक्तः पार्थ इति ज्ञेयम्। कृष्ण-रामोद्धवादिभिरित्यपि पठन्ति। तं तद्दत्तं यदुभिर्यापितो ययौ ॥ २६–२७ ॥ गोप्यश्च काश्चन गोपाश्च केचन गोविन्दचरणाम्बुजे क्षिप्तं मनोऽपहर्तुं कार्यान्तरव्यापृतं कर्तुमिति यावत्। अनीशा असमर्था मधुरां ययुः ॥ २८ ॥ अङ्गराजः कर्ण इति च जानन्ति पूर्वराजानः। सर्वे राजान इति पठन्ति ॥२९–३०॥ बाष्पगद्गदभाषिणी च भाषिणश्च ते ॥३१॥ कृष्णो देवता येषां ते तथा॥ ३२ ॥

**इति श्रीभागवतटिप्पण्यां सत्यधर्मकृतायां दशम उत्तरार्धे त्रिसप्ततितमोऽध्यायः ॥ १०–७३ ॥**

## श्रीसत्यधर्मकृता श्रीभागवतटिप्पणी

हरिः ॐ ॥ विशारदैर्नारदादिभिरुद्बोधितबोधस्य वसुदेवस्य वासुदेवरामौ प्रति तत्त्ववचनं वचनं च तं प्रति भगवत-स्तथा देवक्या मृतापत्यप्रदर्शनमित्यादिमाहात्म्यमितरश्रुतवद्भक्तिकृदिति निरूप्यतेऽत्राध्याये। तत्रादौ पादाभिवन्दनं नन्दन-योर्वसुदेवस्याह। अथेति। द्वारकागमनानन्तरं कदाचित्कृतं पादाभिवन्दनं याभ्यां तौ सङ्कर्षणाच्युतौ प्रीत्या भक्तिविशेष-रूपिण्याऽभिनन्द्याहो नटनमिति। अभिनन्दनं कृत्वाऽऽह ॥ १ ॥ आहेत्युत्साहेन प्रथमं प्रतिज्ञाय तदुपयुक्तमुक्त्वा तदुक्तिप्रकार-मीरयति। मुनीनामिति। वदतां मुनीनां सकाशात्पुत्रयोर्धाम तेजः पराक्रममिति यावत्। श्रुत्वा स्वयं च तयोर्वीर्याज्जातो विश्रम्भो विश्वासो यस्य सः। अनेनान्यथैवं सामर्थ्यं न स्यादिति स्वतर्कणेन च तत्सत्यतां निश्चितवानिति ध्वन्यते। स्वसाक्षि-सिद्धवीर्यादिजनितविश्वासो वा। तौ परिष्वज्यालिङ्ग्य सूचकं तदुपदिष्टं स्वसाक्षिसिद्धं च न विस्मृतमपि तु वर्तते हृदीति सूचकं वचोऽभ्यभाषत। धामसूचकं वदतामिति वाऽन्वयः। वाचालोऽयमिति यथा नोपेक्षा भवेत्तयोस्तथाऽवदद्वसुदेव इत्यप्याह। वदतां वाग्मिनाम्। वदो वदावदो वाग्मीत्यमरः। परिष्वज्यालिङ्ग्य तामाश्रित्येति यावत्। अभ्यभाषतेति ॥ २ ॥ परिष्वङ्गे साक्षादेतस्य नाधिकार इति ध्वनयितुमादौ सङ्कर्षणाच्युतावित्यादौ सङ्कर्षणग्रहः। अधुना तु मधुनाथ एव वक्ष्यमाणलक्षण-लक्षितः साक्षादिति च तत्पुरस्करणमिति मन्तव्यम्। कृष्ण कृष्ण सनातनं वेदवेद्यं पुराणपुरुषं वा हे सङ्कर्षण। बलेत्यनुक्त्वा सङ्कर्षणेति वदन् एतदसम्भावितगुणपात्रं तदन्तर्गतः सङ्कर्षण इति ध्वनयामासेत्यवसेयम्। अस्य जगतः प्रधानपुरुषौ। प्रधान-पुरुषो मुख्यपुरुषः पुरुषोत्तमः एक एकश्च प्रकर्षेणाधानं निधानं मूर्ध्नि यस्य स चासौ पुरुषश्चेति। परौ वा जाने। साक्षादिति ज्ञानस्य यथार्थतां ध्वनयति। यद्वा साक्षान्मुख्यतः परावित्यर्थः। अस्य जगतः सकाशात्परौ विलक्षणाविति साक्षात्प्रधानपुरुषौ जान इति वा ॥ ३ ॥ तदेव प्रधानपुरुषेश्वरत्वादिकं घटयन्नाह। यत्रेति। यत्रेदं तिष्ठति। यस्मिन्निदं सञ्च विचैधि सर्वमित्यादेः। येन। येन जातानि जीवन्तीति। यतः। यतो वा इमानि भूतानीति। यस्य यस्य ब्रह्म च क्षत्रं चोभे भवत ओदनः। मृत्युर्यस्यो-पसेचनम्। यस्य प्रसादादित्यादेः। यस्मा इदं क्रियत इति यस्मै। यत्। सच्च त्यच्चेति। यथा। धाता यथा पूर्वमकल्पयदिति। येन प्रकारेण स्थितं यदा काले। इदं विश्वं स्यात्तथा साक्षात्तत्कुर्वन् भगवानेव त्वमिति प्रधानपुरुषेश्वरः। यदधीना यस्य सत्ते-त्यादेः। ब्रह्मैवेदं सर्वमिति श्रुतेः। साक्षात्प्रधानपुरुषेश्वरो भगवानेव स्यादित्यपि योजयन्ति। यत्र गोत्रादौ येन यतो मृदो यस्य कुलालादेः सम्बन्धेन। अकारकत्वात् षष्ठ्यः। यस्मै जलाद्याहरणार्थं वा यद्घटादिकं यथा कम्बुग्रीवादिमत्त्वेन प्रकारेण यदा काले स्यात् तत्सर्वमित्यपि योजयन्ति ॥ ४ ॥ तदेव विवृणोति एतदिति। आत्मसृष्टं स्वोत्पादितमात्मना तत्तत्स्वभा-वेनात्मनाऽणुरूपेण वा तद्विश्वमनुप्रविश्यात्मन् आदानादिकर्तः हे अधोक्षज। प्राणानीन्द्रियाणि जीवो जीवयतीति जीवः। जीवो विनियता साक्षी जीव इति भगवतोऽनिरुद्धस्याख्येति श्रुतेः। बिभर्षि पोषयसि। आत्मन्परमे व्योमन्निति वदात्मनि वा बिभर्षि धत्से वा। एतत्सम्भावकमाह। अज इति ॥ ५ ॥ तर्हीतरत्र दृश्यते कर्तृत्वादिकं कथमिति चेत्तत्राह। प्राणदीनां तथा विश्वसृजां प्रजाप्रत्यानां विश्वसृजां तत्त्वेन प्रवर्तमानानां ब्रह्मादीनां प्राणादीनां तदिन्द्रियाणां याः शक्तयो विषयग्रहण-

सामर्थ्यानि ताः। तथा चेष्टितं कर्मापि परस्य तदितरस्य तन्नियम्यत्वेन स्थितस्य। द्वयोर्मध्ये श्रेष्ठे सर्वं प्राणादिकं जीव इति हरिश्चेति द्वयोर्जीवेशयोः श्रेष्ठे कृष्ण एव वर्तते। तत्र हेतुः पारतन्त्र्यादिति। जीवजातस्य वैसादृश्यं विसदृशत्वं तस्माद्वैलक्षण्यादिति वा। द्वयोर्मध्ये श्रेष्ठे त्वयि चेष्टितं तदनुरूपं चेत्प्राणादीनां विश्वसृजां परस्य धातुरपि या रमाया अपि तास्तच्चेष्टितानुकूलाः शक्तयो भवन्ति। तत्र तन्त्रं पारतन्त्र्यादिति। तत्राप्यस्वतन्त्रवर्गे न साम्येनेत्याह। वैसादृश्याद्वैलक्षण्यादेव भवन्ति तरतमभावेनेति यावत्। पारतन्त्र्याद्वैसादृश्यादित्यस्याक्षरपरे लघु भवितव्यं तदर्थं चैवं वैसादृश्यात्पारतन्त्र्यादिति पाठे न किञ्चिद्वृत्तविच्छित्तिरथाऽप्येवं पठन् जीवत्वेनैकीकृत्योक्तजीवानां परतन्त्राणां मध्ये द्वौ च तौ सदृशौ च। द्वीत्युपलक्षणे। ये ये द्वौ त्रयो वा ब्रह्मवायू द्वन्द्वकामौ शेषरुद्रगरुडाश्चेवमादयः। द्विसदृशयोर्भावो द्वैसादृश्यं तस्मात्। परस्य ब्रह्मणो यास्ताः शक्तयस्तच्चेष्टितं च वायोरित्यादिविशेषसूचनं ततानेति ज्ञेयम्। द्वैसादृश्यात्पारतन्त्र्यादिति पाठे यद्यपि वृत्तसम्पत्तिश्चेदपि न वैसादृश्यप्रतीतिर्भवति। प्राक् प्रधानपुरुषेश्वराविति द्वयोः साम्यं न किन्तु छत्रिन्यायेन मयोक्तमिति। यत्र येनेत्यादिनैकमेव गृह्णन् द्वयोः प्रधानपुरुषत्वेनोक्तयोर्मध्ये श्रेष्ठे ताः शक्तयश्चेष्टितं चेत्यन्तरङ्गं स्वस्य ध्वनयामासेति मन्तव्यम्॥ ६॥ विद्युद्भिः सहिताः सविद्युतश्चन्द्रश्चाग्निश्च ते च ते सविद्युतश्च तेषाम्। चन्द्राग्न्यर्कर्क्षविद्युतामिति सरलः पाठः। न च ऋक्षाणां पृथग्ग्रहणं न युक्तम्। पृथक् तद्गुणानीरणादिति वाच्यम्। ऋक्षविद्युतां सत्त्वैको गुण इति नानुपपत्तिः। चन्द्रस्य कान्तिरग्नेस्तेजोऽर्कस्य प्रभा ऋक्षविद्युतां सत्तामेतत्कान्त्यादिकं त्वं त्वयैतेषां न तत्प्रकाश्यत्वमिति तत्त्वम्। तथा च श्रुतिः। न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः। तमेव भान्तमनुभाति सर्वम्। तस्य भासा सर्वमिदं विभातीति। स्मृतिश्च। यदादित्यगतं तेज इत्यादिका। भूभृतां पर्वतानां यत्स्थैर्यं भूमेर्वृत्तिराधारतयाऽवस्थानं सस्याद्यधिरोहकत्वेन जीवनदत्वं च यो गन्धस्तद्गुण इत्यादिसर्वमर्थतो मुख्यतो भगवान्नान्यः। पारतन्त्रमेव विवृतम्॥ ७॥ तर्पणं तृप्तिः प्राणनं चेष्टाद्रवत्वं स्यन्दनं ता आपस्तद्रसश्च मधुरस्त्वदधीनमदः सर्वम्। ओजोऽवष्टम्भः सहः साहनं बलं शक्तिः स्पन्दनं किञ्चिच्चलनं तर्वादिचालनं वा गतिः क्वचिन्मण्डलाकारगमनं सदेति वा गतिः स्पर्श इति वा वायोरियत्तव त्वदधीनम्॥ ८॥ दिशां त्वमवकाशस्तदवकाशत्वदो दिशस्त्वं भूताकाशश्च त्वं तद्गुणः शब्दश्च शब्दो वेदादिः स्फोटो वेणुदारणादिज आश्रयः पक्ष्याद्याधारतारूपो नादः नादो नाम वर्णविशेषोऽकाराद्यतिशान्तान्तः सोऽयमष्टाक्षरमत इति तन्त्रसारे कर्मनिर्णयटीकायां च। नादो नामवर्णविशेषो मन्त्रशास्त्रे प्रसिद्ध इत्युक्तेः। वर्णोऽकारादिः। ॐकारस्त्रिमात्रोऽनन्तमात्रश्च। आकृतीनां पृथक् कृतो। आकाराकारोवाराद्यात्मना पृथक्करणानि। आकृतीनां संस्थानविशेषाणां त्वं ते त्वदधीना मन्ये। आकृतीनां ब्राह्मादीनां पृथक्कृतीः पृथक्क्रियाश्च त्वदधीना इति वा। वैयाकरणाश्च स्फोटो वाक्यपदयोरिति वर्णयन्ति। आश्रयः शङ्खादिकमाश्रित्यविद्यमानः शब्द इति वर्णयन्ति॥ ९॥ इन्द्रियाणां चक्षुरादीनां विषयमुद्दिश्य द्रवताम्। द्रवतां हीन्द्रियाणां तु नियन्ता प्राण एकराडिति बौधायनश्रुतिः। विषयद्रवणात्तेषामिन्द्रियत्वमुदाहृतमिति बृहत्संहितायामिति भाष्योक्तेः। त्वमेवेन्द्रियं। तच्छक्तिप्रद इत्यर्थः। तदनुग्रहस्तेष्वनुग्रहो येषां ते तदनुग्रहा देवाः सूर्यादयो बुद्धिरवबोधो ज्ञानशक्तिरूपो जीवस्य सती यथावस्थितार्थविषयिणां स्मृतिः स्मरणशक्तिश्च॥ १०॥ भूतानां पञ्चानां भूतादिस्तामसाहङ्कार इन्द्रियाणां कारणं तैजसाहङ्कारो विकल्पानां विविधत्वेनाध्यात्मिकादिभेदेन कल्प्यन्त इति विकल्पादेवास्तेषां वैकारिकाहङ्कारः। देवा वैकारिकाः स्मृता इत्यादेः। वैकारिकान्मनो जज्ञ इत्यादेः। विकल्पान्। बहुवचनमाद्यर्थे। सङ्कल्पविकल्पाद्यात्मवृत्तिसहितमनश्चेति वा। अनुशायिनां संसारिणां जीवानाम्। कर्मानुशयनाच्चैव संसार्यनुशयी स्मृत इति तत्त्वनिर्णयोक्तेः। प्रधानं प्रकृतिः संसारकारणम्॥ ११॥ ईश्वरत्वमादिरित्युदीर्यन्ते नश्वरेषु त्वमनश्वरः स्थातेति स्थापयन्नाह॥ नश्वरेष्विति। इह मात्रेषु पदार्थेषु नश्वरेषु नाशवत्सु त्वमनश्वरो नाशशून्यः। तद्द्रव्यं तादृग्वस्त्वसि। तत्र निदर्शनमाह। यथेति। द्रव्यविकारेषु मृदादिविकारेषु घटादिषु नश्वरेषु मृन्मात्रं यथा निरूपितमस्तीति तज्ज्ञैस्तथेति योजयन्ति। अनवस्थानमात्रे निदर्शनं पादानतायां नेत्यनुसन्धेयम्। द्रव्यस्य घटादेर्विकारेषु महारजनाञ्जनादिजेषु कालतो नष्टेषु द्रव्यमात्रं पटमात्रं निरूपितं तथेति वा द्रव्यस्य परमाणो विकारेषु तत्संयुक्तघटादिनश्वरेषु द्रव्यमात्रं परमाणुमात्रं नित्यमिति निरूपितं तद्वेदिभिरिति योजयन्ति।१२। तर्हि यन्मूलद्रव्यत्वेनावशिष्टं तन्नित्यमिति न भगवदधीनमित्यायातमिति तत्राह। तदिति। तद्यन्मूलद्रव्यं प्रधानादिकं सत्त्वरजस्तम इति गुणास्तद्गुणा वृत्तयस्तद्व्यापाराश्च याः कियत्यस्ताः परे ब्रह्मणि योगमायया सर्वोपायस्वरूपेच्छया कल्पिताः समर्थिता सत्या एवाद्धा निस्सन्देहं वर्तन्ते। परमाणुपक्षे सत्त्वं शुक्लवर्णस्तेनाप्या रजसा पार्थिवास्तमसा वायवीया इति शब्देनादित्यवाचिना तैजसा लक्षिता इति चतुर्विधा गुणास्तन्तुस्थानीया इति ते तद्वृत्तयोऽपि संयोगादिलक्षणास्त्वयि समर्थिताः कार्यकारणक्षमत्वेनेत्यर्थ इत्युपपादयन्ति। अनित्यं पटादिद्रव्यं भवतु भगवन्नियतं प्रधानं नित्यं तत्कथमन्यनियतमित्यत आह। सत्त्वमित्यवतार्थ नित्यं नित्यात्मना यत इत्यादेः प्रधानस्य सपरिकरस्य भगवन्नियतत्वे तत्पटादिकं किं वक्तव्यं तदायत्तमितीत्यर्थपरोऽयं श्लोक इति व्याकुर्वन्ति॥ १३॥ अन्यथैतदेव स्थितिदुर्लभेति भाषते॥ यर्हीति। यर्हि त्वय्यविकल्पिताः पारमार्थिका अमी भावा न सन्ति तस्मात्ते न सन्ति न स्थास्यन्ति नश्यन्ति। अनाधारत्वात्। तस्मादेतत्स्थितिहेतोस्त्वं चामीषु विकारेषु नानापदार्थेष्वमीषु मूलप्रधानादिद्रव्येषु तथा विकारेष्विति वा सदा सन्नवस्थितो व्यावहारिको हानोपादानादिव्यवहारनिर्वाहको वर्तसे नान्य इत्यर्थः। अव्यवहारिकस्तस्मात्सदा सन्नयं प्रपञ्च इति शेष इत्यपि योजयन्ति॥ १४॥

इयति सति कुतः संसार इत्यत आह ॥ गुणेति । एतस्मिन्गुणप्रवाहे प्रपञ्चे वर्तमाना अखिलात्मनः सर्वस्वामिनस्तव गतिं स्थितिमबोधेनावहिः प्रकाशनेनेति सूक्ष्मां कर्मभिर्ज्ञानप्रतिबन्धकैरबुद्ध्वेह संसरन्ति संसारं प्राप्नुवति। प्रसादं विना न व्यक्तो भवसि त्वमिति स्वकर्मप्रतिवद्धसंविदः संसरन्ति त इति भावः। तदव्यक्तमाह हि। अतोऽनन्तेन तथा हि लिङ्गमित्यादेः॥ १५ ॥ ननु नानाविधहीनतरशरीरेषु सतो यदाकदाचिद्यथाकथञ्चिन्मानवतनुसम्पत्तौ संवित्साधनेन मोक्षोऽपि स्यादित्यतोऽपि न त्वत्प्रसादं विनैतत्साधनमित्याह ॥ यदृच्छयेति । यदृच्छा त्वेतत्प्रापणमात्रहेतुर्भगवदिच्छा तया नृतां मनुष्यतां पुण्यवशात्प्राप्य । सा कीदृशीत्यत आह । सुकुल्यां संवित्सम्पादनसमर्थां दुर्लभमितरजन्मनीति। इह स्वार्थे प्रमत्तस्य प्रमादयुक्तस्योन्मत्तस्य मम मज्जातीयस्य च । तत्र तन्त्रं त्वन्माययेति । सा च कुतोऽतार्येत्यत आह ॥ ईश्वरेति । वयं वृथा गतम् । सुकल्पमिह दुर्लभमिति पाठेऽपि नृतामित्येतदर्थस्य नृत्वमित्यस्य विशेषणे इति ज्ञेयम् । विवृतः प्रागयं प्रकारोऽनुसन्धेयः । नृतामिहेदानीं प्राप्य यदृच्छया स्वेच्छयैव स्थितं सुकल्पं मुक्तिदानसमर्थं वयोगतं गरुडवाहनं त्वन्माययैव स्वार्थे प्रमत्तस्य पुंसो दुर्लभं मन्य इति शेषः ॥ १६ ॥ स प्रमाद एतादृश इति शंसति ॥ असाविति। ममासौ देहोऽहमेते च ममास्य देहस्यान्ववायादिष्वनुबन्धेषु । इन्द्रियजयादिषु । इदं सर्वं मदादिजगत्स्नेहपाशैर्भवानेव बध्नाति । अयं प्रमादस्त्वत्कर्तृकस्तत्कर्मायत्त इति भावः ॥ १७ ॥ प्रीत्या सङ्कर्षणाच्युतौ पुत्रयोर्धर्मसूचकमिति तथा प्रधानपुरुषौ पराविति । द्वावपि प्रस्तुत्य यत्र येनेत्यारभ्येदं जगदिति पर्यन्तं बलकबलनानर्हगुणैस्तदर्हमेकं भगवन्तं स्तुत्वा प्रस्तावानुकूल्येन पुनर्द्वयोः स्तवनेन विद्यमानस्थितिं विज्ञापयति ॥ युवामिति । युवां नः सुतौ न । तर्हि काविति तत्राह ॥ साक्षात्प्रधानपुरुषेश्वराविति । तादृशौ चेच्छौरेऽत्र कुत इत्यत आह ॥ भूभारेति । तथा नु तथाऽपि भूभारायितदैत्यानां क्षपणे भाविन्यवतीर्णावितोऽसुतौ ॥ १८ ॥ स्तुत्यन्ते मङ्गलमाचरन्निवैक एव तस्येष्ट इति पुनरावश्यकं तं प्रत्येव प्रार्थयते ॥ तदिति । हे आर्तबन्धो आपन्नसंसृतिभयापह । आपन्नानां शरणागतानां या संसृतिस्तस्या यद्भयं तदपहन्तीति तत्तत् ते पदारविन्दं पादकमलमद्याहं शरणं गतोऽस्मि । अस्म्यहं शरणं गत इति वा । एतावतेन्द्रियलालसेन विषयत्वमुद्दिश्य करणानां द्रवणौत्सुक्येनालमलमतिपर्याप्तम् । कुतो वसुदेवैतज्जिहासा तवेति वासुदेव वदसि चेदित इत्याह ॥ यदिति । यद्यतो लालसान्मर्त्ये देहे आत्मदृगहमिति मतिस्तत्त्वयि परे सर्वोत्तमेऽपत्यमिति बुद्धिश्चाभूतां तेनालमलम् । परापरविवेकनाशको विषयलालस इति भावः । लालसो लालसाऽपि स्याद्याञ्चातृष्णातिरेकयोः । औत्सुक्ये त्विति विश्वः । विषयतृष्णयेति वा । आर्तबन्धाविति धर्मिण आपन्नसंसृतिभयापहमिति पदारविन्दरूपावयवस्योक्त्या तयोरैक्यं सूचयति । यः शरण गतस्तस्यापन्नेत्यहं शरणं गत इति वा । अत्रापन्नाः स्युरित्युत्तरत्र संसृतिभयं च द्वयं च द्वयं सार्थकम् ॥ १९ ॥ पुत्रौ नेत्यत्र त्वदुक्तिरपि मानमिति विज्ञापयति ॥ सूतीगृह इति । अरिष्टेऽजो यज्ञोऽहं तन्नामेति । नौ जायापती प्रति भवाञ्जगाद ननु निश्चितम् । निजेन क्लृप्तो यो धर्मस्तद्गुप्त्यै गोपनार्थमनुयुगं प्रतियुगं नानातनूः सुरनरतिर्यगादिशरीराणि विदधत्स्वीकुर्वंस्तत्कार्यपर्याप्त्यनन्तरं तां जहासि मूले गमयसि । पूर्णमदः । स्वाप्ययादित्यादेः । हे उरुगाय ब्रह्मादिस्तुत्य तव विभूतिमायामैश्वर्यसामर्थ्यं को वेद न कोऽपि । को ब्रह्मा चेदपि न साकल्येन वेद किञ्चिद्वेदेत्यप्यर्थः । गगनवदिति निदर्शनमसङ्गत्व इति मन्तव्यमिव घटादिनाशे तदवच्छिन्नस्य तस्य मूलाकाशनिवेशवन्मूलनिवेशनं च यज्ञो विष्णुर्देवतेत्यादेर्यज्ञो विष्णुः ॥ २० ॥ इत्थं पितुः पूर्वोदीरितरीत्या तातस्य वाक्यमाकर्ण्य श्रुत्वा प्रहसन् । अयं हास एव किञ्चिदुदञ्चितज्ञानजवजवनिकारूप इति ज्ञेयम् । प्रश्रयाद्विश्वासान्नम्रं श्लक्ष्णया गिरा । प्रति तदुत्तरतयाऽऽह । प्रति श्लिष्टतयाऽऽहेत्युक्त्या तत्कालं तदुक्तनिराकरणं च ध्वनयति । यद्वक्ष्यति यन्नः पुत्रान्समुद्दिश्येति । सात्वतर्षभ इति गतम् ॥ २१ ॥ हे तात वो वच एतत्समवेतः श्लिष्टोऽर्थो यस्य तत् युक्तार्थमिति यावत् । वयमुपमन्महे । यतो नः पुत्रान्समुद्दिश्य लक्षीकृत्य तत्त्वग्रामो रहस्यसमूह उदाहृतोऽतः ॥ २२ ॥ यूयमसावार्यो बलराम इमे द्वारकौकसश्च सर्व इतरे सचराचरं विश्वमहं मदधीनं । सर्वं खल्विदं ब्रह्म । यदधीना यस्य सत्ता तत्तदित्येव भण्यत इत्यादेः ॥ २३ ॥ स्वस्वरूपं स्वयमेव निरूपयति । आत्मेति । एकः प्रधान एकत्वादेः करोतीति क ए चासौ कश्चेत्येक एकः सकलकर्तेत्यर्थः । स्वयंज्योतिः स्वयंप्रकाशो नित्य आत्मा तच्छब्दवाच्यः । पूर्वत्र च सामानाधिकरण्येन प्राप्ताभेदप्रतीतिं वारयन्नाह ॥ अन्योन्यविलक्षण इति । निर्गुणः सत्त्वादिशून्यः स्वभिन्नगुणरहितः । आत्मसृष्टैर्गुणैस्तत्कृतेषु भूतेषु प्रविष्टो वहुधेयते लोकैः । भूतेषु पञ्चसु वा ॥ २४ ॥ पञ्च च भूतानि प्रपञ्चयति ॥ खमिति । तत्कृतेषु पदार्थेषु यथाशयं यथास्थानं स्थिता भवन्ति यथा तथाऽसौ हरिराविस्तार उपरि छन्नः सन्नपि । अल्पभूर्येकनानात्वमल्पस्थानेऽल्पत्वं भूरिस्थाने महति महत्त्वं । एकस्मिन्नेकत्वं नाना नानास्थानेषु नानाभावो नानात्वं याति ॥ २५ ॥ वसुदेव एवं भगवतोदाहृतं श्रुत्वा विनष्टो नाम कुत्सित आधिर्यस्य सः । नाम कुत्सनसम्भाव्यप्रकाशेषु निगद्यत इति । यदा विनष्टं नामापि यस्य स विनष्टनामा स आधिर्यस्य स तथा । तन्नामाऽपि नष्टमिति यावत् । विनष्टनानाधिरिति सरलः पाठः । प्रतिमनास्तूष्णीमभूत् ॥ २६ ॥ अथेति कथान्तरारम्भे । सर्वा देवता यस्यां सा देवकी शुचिस्मिता । आत्मजाभ्यां रामकृष्णाभ्याम् । गुरोः सान्दीपनेः पुत्रं मृतमानीतं श्रुत्वा कृष्णरामौ समाश्राव्य कंसविहिंसितान्पुत्रान्स्मरन्ती कृपणा दीना वैक्लव्याद्विह्वलतयाऽश्रुलोचना प्राह ॥ २७–२८ ॥ अप्रमेयात्मन् योगेश्वरेश्वर कृष्ण राम राम । विश्वसृजामीश्वरौ आदिपुरुषौ वामहं वेद ॥२९॥ कालेन विध्वस्ताः सेतुमर्यादा येषां ते तथा तेषामुच्छास्त्रवर्तिनामुच्छृङ्खलवृत्तीनामत एव भूमेर्भारायमाणानां राज्ञां क्षयाय मे मय्यवतीर्णे मासत्रयानन्तरं दुर्गापवाहित आहितश्च गर्भे रोहिण्यामिति न इत्युक्तिर्युक्ता । अवतीर्णोऽसि ॥ ३० ॥ यस्यांशांशांश-

भागेनांशांशस्वीकारेणांशांशांशविभागेन विशेषकृतेन विश्वस्थित्युदयौ लयश्चेत्येते भवन्ति। किलेति समयवार्ता। हे विश्वात्मन्। तं त्वा त्वामद्य आद्य वा। तन्तवो मत्पुत्रा आद्या यस्येति तत्सम्बुद्धिः। हे तन्त्वाद्य अनेनानयनाबन्धं सूचयति। गतिं प्राप्य स्थानं गता ॥ ३१ ॥ किमियताऽस्मत्स्तवनेन तव मातरितःपरं वाऽभिलषितं भाषस्वेत्यत आह ॥ चिरादिति। अनेन तदुत्तरं स्वकुमारमारणमिति तदादानसौशक्यं ध्वन्यते। पितृस्थानात्पितृपतिस्थलात्। गुरवे गुरुदक्षिणां तदात्मानं मृतं सुतमानिन्यथुः ॥ ३२ ॥ तथा मे कामं योगेश्वरेश्वरौ युवां कुरुतम्। स क इत्यत आह ॥ भोजराजेति। भोजराजः कंसस्तेन हृतान्पुनराहृतान्पुत्रान्द्रष्टुं कामये ॥ ३३ ॥ सुतलं संविशतुः। तत्र तन्त्रं योगमायामुपाश्रिताविति ॥ ३४ ॥ तस्मिन्स्वस्थाने प्रविष्टौ रामकृष्णौ दैत्यराड्बलिरुपलभ्य तयोर्मध्ये विश्वात्मदैवं सुतरामात्मनश्च दैवमुपलभ्य तद्दर्शनजनिताल्हादस्तेन परिप्लुत आशयोऽन्तःकरणं यस्य सः। सद्यस्तत्क्षणं समुत्थाय सान्वयः सपुत्रमित्रकलत्रो ननाम ॥ ३५ ॥ वरासने उत्तमासने। आसनवितरण एव सहभावः। समानीय दत्वा तयोर्मध्ये कृष्णस्य पादौ। अत एव पादावित्युक्तिः। अन्यथा पादानित्यवक्ष्यत्। किञ्च ब्रह्मेत्यादिकमयुक्तं च। अवनिज्य तज्जलं सवृन्दः कुटुम्बनिकुरम्बसहितो दधार शिरसीति शेषः। आब्रह्म पुनद्यदम्बुभिः। यदम्बु हेत्यपि पठन्ति हि। तत्र पक्षे यद्वारणम्। अम्बुभिर्वृतैः आब्रह्म ब्रह्माणमभिव्याप्य पुनत्पवित्रयत्प्रागवर्ततेत्यर्थः। द्वितीयः स्फुटोऽर्थः ॥३६॥ महाविभूतिभिरिति विशदयति। अमृतं रसायनं घृतं वा। अमृतं व्योम्नि देवान्ने यज्ञशेषे रसायने। अयाचिते जले जग्धौ मोक्षणे हेम्नि गोरसे। क्लीबे नात्वमरे स्त्री तु गुलूच्यां मद्यभिक्षयोरिति यादवप्रकाशः। अमृतं सलिले घृत इति विश्वः। गोरसभक्षणं वा। स्वस्य गोत्रं कुलम्। गोत्रं नाम्नि कुले चल इति। वित्तस्यात्मनः स्वतनोः समर्पणेन च समर्हयामासेत्यन्वयः ॥३७॥ इन्द्रसेनो बलिर्भगवत्पदाम्बुजे विश्रब्धप्रेमभक्तिस्तद्विभिन्नयाऽभिवृद्धया धिया। आनन्दजलाकुलेक्षणः प्रहृष्टरोमा गद्गदाक्षरमुवाच ॥ ३८ ॥ महतेऽनन्ताय नमः। वेधसे ज्ञानात्मने। साङ्ख्यं शुद्धात्मतत्त्वविज्ञानं साङ्ख्यमित्यभिधीयत इत्यादेर्ज्ञानं योगः कर्म तयोर्वितानो विस्तारो येन कपिलादिना तस्मै। ब्रह्मणे गुणपूर्णाय परमात्मने मुख्यस्वामिने व्याप्त्यादिमते वा ॥ ३९ ॥ भूतानां प्राणिनां वा दर्शनं हि यतो दुष्प्रापं दुःसाधप्राप्ति तत्सदपि रजस्तमस्वभावानां किञ्चिद्रजोमिश्रतमःप्रचुरस्वभाववतां यदृच्छयाऽतिदुर्लभमपि यन्नः प्राप्तमतो दैवं मम विपुलमिति मन्य इति शेषः। सात्त्विकानां भूतानां दुष्प्रापमस्माकं त्वतिदुर्लभं तथाऽप्यनुग्रहात्प्राप्तमहो इति भावः। दुष्प्रायामितरे तद्धेतुज्ञानं तया तज्ज्ञानाभावादेव दुर्लभमिति पदमेकं वा। एवञ्च तद्दौर्लभ्यहेतुरपि सूचित इति ध्येयम् ॥ ४० ॥ दर्शनहेतुः कोऽपि नैवास्मास्विति युवयोर्दयैव कारणमिति वदति ॥ दैत्येति। दैत्यदानवा अस्मदादयः। पिशाचाश्चेति पाठः ॥४१॥ विशुद्धसत्त्वधाम्नि शास्त्रशरीरिणि शास्त्रं वेदादिकं च तच्छरीरं वा सन्निधानस्थानमस्यास्तीति तच्छरीरी तस्मिन्। त्वयि निबद्धवैरास्ते वयमन्ये राक्षसादयोऽपि तादृशा निबद्धवैराः। अनेनास्मद्व्यापारः शास्त्रविरुद्ध इति द्योतयामास ॥४२॥ भक्तान्विविक्तानुक्त्वा स्वयं नैतदन्यतम इति स्वं तुच्छीकृत्य वदति। केचन शिशुपालादयः। तात्पर्यमुक्तमत्रानुसन्धेयम्। कामतो गोपीजनाः। एतद्वत्सत्त्वसंरब्धाः सत्त्वगुणोद्रिक्तभक्तियुक्ताः सन्निकृष्टाः सदा समीपवर्तिनः सुरादयो नाचञ्चलभक्ता इत्यर्थः। एतदपेक्षयोद्बद्धवैरा इत्याद्युक्तिः। सुरादयः सुरेभ्यः आदयः सुरादयः पूर्वदेवा इत्यर्थः। सन्निकृष्टा अतिनीचा इत्यप्यन्तरर्थः ॥ ४३ ॥ एतादृशा अपि विदृशाः का कथाऽस्माकमिति कथयति ॥ इदमिति। हे योगेश्वरेश्वर। योगेशा अपि तव योगमायां सहजशक्तिमिदमित्थमिति प्रायो बाहुल्येन न विन्दन्ति न जानन्ति। वयं योगहीनाः कुतो जानीम इति। बलेरन्तरर्थस्तु कुतः कुं भूमिं निकृत्य योगीशा वयं च किञ्चिज्जानीम इति। स्वस्थितिं ज्ञानादिस्थितिं भागवतीं चोक्त्वा स्वाशयं विशदयति ॥ तदिति। निरपेक्षा एकान्तिकाः सन्न्यासिनो वा तैर्विमृग्यं विचार्यं त्रित्तनीयमिति यावत्। पादारविन्दे तयोर्वा धिषणा यस्य स सन् स्वगृहान्धकूपात्संसारात्प्रायान्निष्क्रम्य निर्गत्य विश्वस्य शरणं ययोस्तवाङ्घ्र्योः सेवयोपलब्धा वृत्तिर्जीविका यस्य सः। शान्तेर्विषयानागतिगतकोपा। सत्त्वं त्वम्। सत्त्वं सद्गुणसारत्वादित्यादेः सखा येषां तैर्मनीषिभिः सहैकोऽनुबन्धिविधुरो यथा चरामि तथा नः प्रसीद। हे विश्वशरण अङ्घ्र्युपलब्धा वृत्तिर्मार्गो यस्य सः। ते वनकृदेवेति वा। चरामीत्यानुगुण्यमेवं चेदिति ज्ञेयम्। सत्त्वं गुणो ज्ञानं साधुत्वं वा सखा येषां तैरिति वा। समासान्त आर्षः। यद्वा सत्त्वस्य तव सखायो महान्तस्तै सह चरामीति वा ॥ ४५ ॥ शास्त्रशरीरिणीति प्रागीरणाच्छासकस्त्वमिति शिक्षयेति शंसति ॥ शाधीति ! हे ईशितव्यानामीशास्मान् शाधि। तच्छिक्षणफलं च त्वन्निमित्तमिति तथा कुर्वित्याह ॥ निष्कामान्नः कुर्विति। नासामर्थ्यं तवेत्याह ॥ प्रभविति। नः प्रभविति वाऽन्वयः। यच्छ्रद्धया यस्मिंश्छिक्षणे श्रद्धया तिष्ठन्पुमानधिकारी चोदनाया, विधिनिषेधबन्धपात्रत्वाच्चोदना संसृतिस्तस्याः सकाशाद्विमुच्यतेऽतः शाधीति प्रस्तुतयोरेतद्वाऽनेक एवेत्येवमुपसंहरणमिति ज्ञेयम् ॥ ४६ ॥ आगमनप्रयोजनं वक्तुं तदुपोद्घातमाह ॥ श्रीभगवानिति। प्रथमेऽन्तरे स्वायम्भुवमन्वन्तरे मरीचेः सकाशादूर्णायां तन्नाम्न्यां भार्यायां षट् तत्सङ्ख्याः पुत्रा आसन्। ते च स्वपुत्रान् शपितुं कदाचिदुद्यतं देवलं वीक्ष्य जहसतुरपाहसन्। तत्कार्यं च दृष्ट्वा तेनामुना वधकर्मणा पापव्यापारेण। आसुरीं योनिं कालनेमिसुतत्वेनासुरजन्मागुः प्रापुः। देवाः कं जहसुर्वीक्ष्य सुतां यमितुमुद्यतमिति पठन्ति। देवा एते षट्। सुतां वाचं यमितुमुद्गतं कं प्रजापतिं वीक्ष्य जहसुरपहसन्नित्यर्थः। इतरत्समम्। तृतीयस्कन्धे। वाचं दुहितरं तन्वीं स्वयम्भूर्हरतीं मनः। अकामां चकमे क्षत्तः सकाम इति नः श्रुतम्। तमधर्मे कृतमतिं विलोक्य पितरं सुताः। मरीचिमुख्या मुनयो

विश्रम्भात्प्रत्यबोधयन् । नैतत्पूर्वैः कृतं त्वद्य न करिष्यन्ति ये परे । यः स्वां दुहितरं गच्छेदनिगृह्याङ्गजं प्रभुः । तेजीयसामपि ह्येतन्न सुश्लोक्यं जगद्गुरो । यद्वृत्तमनुतिष्ठन्वै लोकः क्षेमाय कल्पते । नमस्तस्मै भगवते य इदं स्वेन रोचिषा । आत्मस्थं व्यञ्जयामास स धर्मं पातुमर्हति । स इत्थं गृणतः पुत्रान्पुरो दृष्ट्वा प्रजापतीन् । प्रजापतिपतिस्तन्वीं तत्याज व्रीडितस्तदेत्येवोक्तेस्तत्कृतासुरजन्मोक्तिस्तथा मरीचिमुख्या इत्युक्तेरेतत् षट्पुत्रग्रहणं च पूर्वोत्तरापरामर्शमूलमित्युपेक्ष्यम् ॥ ४७ ॥ हिरण्यकशिपोः स्वौदासीन्येन ब्रह्मोपास्तिक्रोधेनात्र हिरण्यकशिपोर्जाता इति पठित्वा तत्क्षण एव हिरण्यकशिपोर्जाता योगनिद्रया नीता इति केचिद्व्याचक्रुः । तस्य चिन्तयतस्त्वेवं पातालभगमन्मनः । यत्र ते गर्भशयनात् षड्गर्भा नाम दानवाः । अमरप्रतिमा युद्धे पुत्रा वै कालनेमिनः । आर्यकं वै परित्यज्य हिरण्यकशिपुं पुरा । उपासाञ्चक्रिरे दैत्याः पुरा लोकपितामहम् । ततो हिरण्यकशिपुः सरोषो वाक्यमब्रवीत् । मामुत्सृज्य वरो यस्माद्वृतो यः पद्मसम्भवात् । तस्माद्वस्त्याजितः स्नेहः शत्रुभूतांस्त्यजाम्यहम् । षड्गर्भा इति योऽयं वः शब्दः पित्रा विवर्धितः । स एव वो गर्भगतान्पिता सर्वान्वधिष्यति । षडेव देवकीगर्भे षड्गर्भा वै महासुराः । भविष्यथ ततः कंसो गर्भस्थान्वो हनिष्यतीत्युक्तिविरुद्धं तच्चैतदपीत्युपेक्ष्यम् । आचार्या अपि । मरीचिजाः षण्मुनयो बभूवुस्तदेव कंसः प्राहसन्कार्श्यहेतोः । तच्छापतः कालनेमिप्रसूता अवध्यतार्थं तप एव चक्रुः । धाता प्रादाद्वरमेषां तथैव शशाप तान्क्ष्मातले सम्भवध्वम् । तत्र स्वततो भवतां निहन्तेत्यात्मान्यतो वरलिप्सुर्ह्निरण्यः । दुर्गा तदा तान्भगवत्प्रचोदिता प्रस्वापयित्वा प्रचकर्ष कायात् । क्रमात्समावेशयदाशु देवकीगर्भाशये तान्न्यहनच्च कंस इति प्रोचुः । जगामाथ ततो विष्णुरित्यारभ्य स च मे न प्रणश्यतीत्येतदन्तेन हरिवंशे निद्रासंविधानमुक्तमनुसन्धेयम् । पुत्राः कालनेमेर्योगमायया भगवदाज्ञप्तया दुर्गया देवक्या जठरे न्यस्तास्त एव जातास्तत्क्षण एव कंसेन प्राक्कालनेमिना विहिंसिताः । सा मम माता तान्स्वानात्मजान्नुद्दिश्य शोचती । ते च क्व वर्तन्त एतर्हि स्वामिन्निन्त्यत आह । त इमे तवान्तिके समीपेऽध्यासत इति ॥ ४९ ॥ इत एतात्स्थलादेतान्प्रणेष्यामः । ततः शापेन देवलदत्तेन विनिर्मुक्ता विज्वरा अनुपतापा लोकं स्वदेहं यास्यन्ति सुरा भवन्ति ॥ ५० ॥ तन्नामानि कीर्तयति ॥ स्मरेति । स्मरेण सहित उद्गीथः स्मरोद्गीथो द्वौ परिष्वङ्गादिघृण्यन्ताश्च आहृत्य षट् । मत्प्रसादेन पुनस्तत्तनुगमनानन्तरं मुक्तिं यास्यन्ति ॥५१॥ इति बलिं प्रत्युक्त्वा तान्समादाय । इन्द्रेति विवक्षाभावादभावः सन्धेः । अनेन समादायो यस्येति समादाय आगता अपि देहान्तरत्वान्न ते विभागार्हाः पितृधन इति समादय इत्यप्यर्थविशेषो द्योतित आवृत्त्येति ज्ञेयम् । अयच्छतां ददतुः ॥ ५२ ॥ मूर्ध्नि शिरसि । एकैकश आघ्राणनमित्येकवचनोपपत्तिः । अभीक्ष्णशः पुनः पुनः ॥ ५३ ॥ सुतानां स्पर्शेन परिस्रुतं प्रस्नुतं स्तनं तयोः क्षीरमपाययत् । यया मायया सृष्टिः प्रवर्तते तया मायया मोहिता मृतानां पुनर्जातप्रायत्वाभिप्रायेयमुक्तिः ॥ ५४ ॥ गदाभृतो भुक्तशेषं तत्पीतशेषम् । अनेन किञ्चित्सङ्कुचितस्वकलेवरस्य देवकीस्तनं दत्वा व्रजं प्रत्यनैषीदिति द्योत्यते । अत एवामृतम् । लुप्तोपमम् । अमृतवद्विद्यमानं पयः पीत्वा नारायणस्याङ्गस्पर्शप्रतिलब्धमात्मनो भगवतो दर्शनं येषां ते तथा ॥ ५५ ॥ ते गोविन्दं नमस्कृत्य तथा पितरं वसुदेवं बलं बलरामं च सर्वेषां भूतानां तत्रत्यानां मिषतां पश्यतां धाम स्वं विहायसा ययुः । देवकी स्वाभिलषितसिद्धयुत्तरं न दुराग्रहं कृतवतीत्यप्याह । सा देवकी विहाय गन्तॄन्पुत्रान्विहायैव स्थितेति ॥ ५६ ॥ तं दृष्ट्वेति पाठः । मृतस्यागमनसहितो निर्गमस्तं दृष्ट्वा सुविस्मिता मायां शक्तिं कृष्णसंसूचितां कृष्ण एव सम्यक् सु अत्यन्तमुचितां मेने । कृष्णेन संसूचितां मायां स्वरूपशक्तिं मेन इति वा ॥ ५७ ॥ न चित्तं चित्रय परीक्षिदिदं परीक्ष्यास्मदादिमनोगोचराणां चानन्तानां भावादिति बोधयति ॥ एवंविधानीनि । अनन्तवीर्यस्य कृष्णस्य परमात्मन एवंविधान्यनन्तानि वीर्याणि सन्ति ॥ ५८ ॥ सूत एतत्फलं लपति ।। य इति । अमृतकीर्तेर्मुक्तिप्रदा कीर्तिर्यस्य तस्य मृतानमृतत्वकरणेन कीर्तिर्यस्य तस्य वा । मुरारेर्व्यासपुत्रैर्वर्णनप्रकारबाहुविध्याद्बहुवचनं पूजार्थे वा तदादिभिरिति वा वर्णितमिदं चरितं योऽनुश्रृणोति यश्च श्रावयेत् । किञ्चाघं भित्तीति तत् भक्तानां सत्समीचीनं कर्णपूरं करणाभरणरूपं श्रृण्वन् श्रावयन्वा भगवति कृतं चित्तं यस्य स तत्क्षेमधाम मोक्षधाम याति । भक्तकर्णावतंस इति पाठेऽप्ययमेवार्थः । कालाद्यप्रतिहतमिति क्षेमधामेति ॥५९॥

**इति श्रीभागवतटिप्पण्यां सत्यधर्मकृतायां दशम उत्तरार्धे चतुःसप्ततितमोऽध्यायः ।। १०—७४ ।।**

## श्रीसत्यधर्मकृता श्रीभागवतटिप्पणी

।। हरिः ॐ ।। भगवत्प्रवृत्तिः सर्वाऽपि श्रुता मुक्तिकरीति राजाऽनेकासु कामिनीषु कथमवर्तत भगवानिति कुतुकतः शुकं पृच्छति ।। सर्वासामिति । तुना तत्र तरतमभावं सूचयति । तद्बुद्धिं बोधयति ।। मय्येवेति । इत्येवं निश्चितमसन्दिग्धं चेतो यासां तास्तासाम् ।। १ ।। सर्वासु सम उतैकस्यां कस्याञ्चित् । श्रोतुं रतिरस्तीति मम शंश प्रभो विदितैतन्मर्मम् ।। २ ।। सर्वासां महिषीणां मध्ये प्रथमा पूर्वं परिणता तस्यामधिकं यथा तथा प्रेमवान्कृष्ण इति ऊर्जितोः दिग्विनताप्रख्यातिः प्रसिद्धिरस्ति ।। ३ ।। यदर्थं साक्षाल्लक्ष्मीरूपिण्योरपि प्रेमतरतमभावो रुक्मिणीसत्यभामारूपयोर्निरूपितस्तां कथां कथयितुं प्रतिज्ञां विधत्ते ।। कदाचिदिति । तया रुक्मिण्या समं प्रेमकलहो लोकमनुकुर्वता कृतः । तं कार्त्स्न्येन ते त्वां प्रति कथयामि । कौरव्य तच्छृणु । केशवे भगवद्विषये कार्त्स्न्येन कथयति न वद । कुतः । अमितेऽप्रमेये तथा कथनं न समं वक्तुं न मम शक्तिरस्ति योग्यं नेत्यपि ज्ञेयोऽन्वयः ।। ४ ।।

# [1]अथ षष्टितमोऽध्यायः

| श्लोकाः | अनु. | मि. उ. | इ. वं. | व. | उ. | श्लो. अ. | उ. अ. | अ. अ. | सं. श्लो. अ. | सं. श्लो. | अ. |
|---|---|---|---|---|---|---|---|---|---|---|---|
| ५९ | ३६ | ३ | १ | १९ | ७ | २४०८ | ४३ | ४२ | २४९३ | ७७॥ | ५ |

[2]

## श्रीशुक[3] उवाच

कर्हिचित् सुखमासीनं स्वतल्पस्थं जगद्गुरुम् । पतिं पर्यचरद् भैष्मी व्यजनेन सखीजनैः ॥ १ ॥
[4]यस्त्वेतल्लीलया विश्वं सृजत्यत्त्यवतीश्वरः । स हि जातः स्वसेतूनां गोपीथाय यदुष्वजः ॥ २ ॥
तस्मिन्नन्तर्गृहे[5] भ्राजन्मुक्तादामविलम्बिना । विराजिते वितानेन दीपैर्मणिमयैरपि ॥ ३ ॥
मल्लिकादामभिः[6] पुष्पैर्द्विरेफकुलनादितैः[7] । जालरन्ध्रप्रविष्टैश्च गोभिश्चन्द्रमसोऽमलैः[8] ॥ ४ ॥

### कर्दमक्षमा

अन्वयः—श्रीशुक उवाच—कर्हिचित्, स्वतल्पस्थम्, सुखं, आसीनं, जगद्गुरुं, पतिं ( कृष्णं ) सखीजनैः, सह, भैष्मी, व्यजनेन, पर्यचरत् ॥ १ ॥ यस्तु, ईश्वरः, लीलया, विश्वं, सृजति, अत्ति, अवति, स, अजः, स्वसेतूनाम्, गोपीथाय, यदुषु, जातः ॥ २ ॥ हे राजन् ! तस्मिन्, अन्तर्गृहे, भ्राजन्, मुक्तादामविलम्बिना, वितानेन, विराजिते, तथा, मणिमयैः, दीपैश्च, विराजिते ( उपतस्थे इति परेणान्वयः ) ॥३॥ मल्लिकादामभिः, द्विरेफकुलनादितैः, पुष्पैः, जालरन्ध्रप्रविष्टैः, अमलैः, चन्द्रमसो, गोभिः, विराजिते, ( उपतस्थे इति परेणान्वयः ) ॥ ४ ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

अथ षष्टितमे कृष्णः परिहासेन रुक्मिणीम् । कोपयित्वा ततः प्रेमकलहे तामसांत्वयत् ॥ १ ॥
रामारामजनानंदमहोदयविडंबनैः । रुक्मिण्या प्रेमकलहच्छद्मनैश्वर्यमीर्यते ॥ २ ॥

स्वतल्पस्थं स्वपर्यंकस्थम् ॥ १ ॥ वक्ष्यमाणं रुक्मिण्याः श्रीकृष्णे परमं प्रेमसंभावयितुं तस्योक्तमेव तत्त्वमनुस्मारयति । यस्त्विति ॥ २ ॥ आदौ तावत्त्रिभिः श्लोकैर्मन्दिरमनुवर्णयति । तस्मिन्निति । तच्छब्देनातिप्रसिद्धमाह । भ्राजन्ति मुक्तादामानि तेषां विलंबाः संति यस्मिंस्तेन वितानेन । विराजिते तृतीयांतानां विराजितपदेनान्वयः ॥ ३ ॥ सुगंधितया द्विरेफकुलैर्नादिते प्रविशद्भिश्चंद्ररश्मिभिः ॥ ४ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

ततः कोपानंतरम् । तां रुक्मिणीम् ( १ ) । रामास्वारामो रमणं येषां ते जनास्तेषामानंदस्तस्य महोदयस्तस्य विडंबनैः ( २ ) । पर्यंकः शय्याभेदः । श्रीमदनिरुद्धविवाहानंतरमेव वक्तुं योग्यामप्येतां श्रीरुक्मिणीदेव्याः प्रेमकलहक्रीडां महिषीविलासप्रसंगाद्रसविशेषोदयेनाधुना वक्तुमारभते—कर्हिचिदित्यादिना यावदन्तम् । कस्मिंश्चिद्गृहसुखक्रीडाकाले तस्या गृहे तस्या

---

१. ६५–६६–६७ इति त्रयोऽध्यायाऽधिका–विज. ।

२. राजोवाच—

सर्वासां महिषीणां तु गोविन्दासक्तचेतसाम् । मय्येव प्रेमवान् विष्णुरिति निश्चितचेतसाम् ॥ १ ॥
समः सर्वासु वा कृष्ण एकस्यां प्रेमवानुत । तन्मे त्वं शंस तद्भोतुं रतिरस्ति मम प्रभो ॥ २ ॥

श्रीशुक उवाच—

महिषीणां तु सर्वासां प्रथमा भीष्मनन्दना । प्रेमवानधिकं तस्यामिति प्रख्यातिरूर्जिता ॥ ३ ॥
कदाचित्प्रेमकलहः केशवेन तया समम् । कृतस्तच्छृणु कौरव्य कार्त्स्न्येन कथयामि ते ॥ ४ ॥

३. बादरायणि–प्रा. पा. । ४. य एतत्–विज. । ५. राजन्–श्रीधर. टि. । ६. धूपैः–वीर. ; दिव्यैः–विज. : मृष्टैः–प्रा. पा. । ७. ते–त. पु. मू. । ८. ऽरुणैः–वीर. विज. प्रा. पा. ।

एव पर्यंके वर्तमानम् । तादृशपरिचरणे हेतुः—जगतः सर्वस्मात्सकाशाद्गुरुं महत्तमम् । विशेषतश्च स्वपतित्वात्परमप्रेमास्पदत्त्वेत्यर्थः । सखीजनैः सह पर्यचरन्नानापरिचर्यामकरोत्, पश्चात्तु व्यजनेन स्वयं पर्यचरदित्यर्थः । सखीजनानां बहुत्वस्य निर्देशात्, व्यजनस्य त्वेकत्वे तथा बह्वीनामेकसेवानर्हत्वात्, 'बालव्यजनमादाय–' इत्यनुवदिष्यमाणत्वाच्च ॥ १ ॥ तस्य कृष्णस्योक्तं तत्त्वम् 'ब्रह्मादयोपि न विदुः पदवीं यदीयाम्' इत्याद्युक्तम् । 'गोपीथं रक्षणे दुग्धे' इति निरुक्तिः । जगद्गुरुत्वमेव दर्शयति–। तु प्रसिद्धौ । एतद्विविधाश्चर्यमयम् । ईश्वरः प्रकृत्यादिनियंता पुरुषावतारः सन् हि एव स स्वयं भगवानेव स्वेनेश्वररूपेण कृतानां नानासेतूनां गोपीथाय रक्षणायाजोपि जातः जन्मलीलया प्रादुर्भूतः ॥ २ ॥ "वितानो यज्ञ उल्लोचे विस्तारे पुंनपुंसकम्" इति मेदिनी । तत्र प्रेमकलहक्रीडा च जातेति वर्णयितुं सप्तभिः पद्यैः प्रेम वर्णयन्नादावुभयोस्तदुद्दीपनसामग्रीं वर्णयति—सार्द्धैस्त्रिभिः । गृहस्य वर्णनं त्रिभिः, अर्धेन शय्यायाः, अथ श्रीरुक्मिण्याः प्रेमवर्णनं सार्द्धेन, ततः श्रीभगवतस्तत्त्ववर्णनं सोपेति द्वयेनेति सप्त । तत्र तस्मिन्निति चतुष्कम् । अंतर्गृहे चंद्रशालादियुक्ते नानागृहशालिस्वांगनांतःपुरमध्ये । विराजित इति स्वत एव रत्नमित्यादिना राजमाने वितानादिभिश्च विशेषतो राजित इत्यर्थः ॥ ३ ॥ 'दामोक्तं गुणमालयोः' इति कोशान्मल्लिकादामभिर्मल्लिकाधिकैः पुष्पैः शोभित इत्यर्थः । मल्लिकादामभिर्द्वारादिबद्धैः । पुष्पैरन्यैश्च स्थानेस्थाने विकीर्णैः । 'धूपैः' इति क्वचित्पाठे आगुरवस्त्वग्रे । अरुणैरिति प्रागुद्यन्मात्रता सूचिता । इयं क्रीडा प्रदोषारंभे ज्ञेया ॥ ४ ॥

### श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी

श्रीमदनिरुद्धविवाहानन्तरमेव वक्तुं योग्यामप्येतां श्रीभगवद्रुक्मिणीदेव्योः प्रेमकलहक्रीडां महिषीविलासप्रसङ्गाद्रसविशेषोदयेन वक्तुमारभ्यते—कर्हिचिदित्यादिना यावदन्तम् । कस्मिंश्चिद्गृहसुखक्रीडाकाले स्वतल्पस्थं तस्या गृहे तस्या एव पर्य्यङ्क्ते वर्त्तमानं तादृशपरिचरणे हेतुः जगतः सर्वस्मात् सकाशात् गुरुं महत्तमं विशेषतश्च स्वपतित्वात् परमप्रेमास्पदत्त्वेत्यर्थः । सखीजनैः सह भैष्मी पर्य्यचरत् नानापरिचर्यामकरोत् पश्चात्तु व्यजनेन स्वयं पर्य्यचरदित्यर्थः । सखीजनानां बहुत्वस्य निर्द्देशात् व्यजनस्यत्वेकस्य तथा बह्वीनामेकसेवानर्हत्वात् । बालव्यजनमादायेत्यनुवदिष्यमाणाच्च ॥ १ ॥ जगद्गुरुत्वमेव दर्शयति—यस्त्विति । तु प्रसिद्धौ एतद्विविधाश्चर्य्यमयम् ईश्वरः प्रकृत्यादिनियन्ता पुरुषावतारस्सन् हि एव स स्वयं भगवानेव स्वेनेश्वररूपेण कृतानां सेतूनां तत्तन्मर्यादानां गोपीथाय रक्षणाय अजोपि जातः जन्मलीलया प्रादुर्भूतः ॥ २ ॥ तत्र प्रेमकलहक्रीडा च जातेति वर्णयितुं सप्तभिः पद्यैः प्रेमवर्णयन्नादावुभयोस्तदुद्दीपनसामग्रीं वर्णयति—सार्द्धैस्त्रिभिः । तत्र गृहस्य वर्णनं त्रिभिः शय्याया अर्द्धेन अथ रुक्मिण्याः प्रेमवर्णनम् उपेति सार्द्धेन श्रीभगवतस्तत्त्ववर्णनं सोपेतिद्वयेनेति सप्त तत्र तस्मिन्निति चतुष्कम् अन्तर्गृहे चन्द्रशालादियुक्तनानागृहशालिस्वाङ्गणान्तःपुरमध्ये विराजित इति स्वत एव रत्नमित्यादिना राजमाने वितानादिभिश्च विशेषेण राजित इत्यर्थः ॥ ३ ॥ मल्लिकानां दामभिर्द्वारादिबद्धैः पुष्पैरन्यैश्च स्थानेस्थाने विकीर्णैर्धूपैरिति क्वचित्पाठे साधारणो धूप आगुरवस्त्वग्रे अरुणैरिति प्रागुद्यन्मात्रता सूचिता एवमियं क्रीडा प्रदोषान्ते ज्ञेया जालरन्ध्रप्रविष्टैश्च गोभिरिति धूपैरागुरवैरिति च तत्रत्यगृहशोभा दर्शिता किन्तु चन्द्रांशुप्रवेशः पूर्वतः धूपनिर्गमस्तु मारुतानुकूल्येन ज्ञेयः वनशब्दः सर्वासां षट्टमहिषीणां गृहेष्विन्द्रेण पूर्वं प्रस्थापितस्यैकैकस्य पारिजातस्य वृत्तेः यस्तु मुख्यमूलचन्दनवृक्षवन्मुख्यमूलपारिजातवृक्षपवनसम्बन्धात् अन्ये वृक्षास्ते भवन्ति स तु न प्रेषितः श्रीभगवतैव परमाच्छिद्यानीत इति ज्ञेयम् । न च केवलं तदामोद एव विचित्रान्यपुष्पादीनामपि सौरभ्यमस्तीत्याह—उद्यानेति । जालरन्ध्रेभ्यो विशेषेण सर्वदिग्व्यापकत्वादिना निर्गतैः तादृशे अन्तर्गृहे यश्चन्द्रशालाङ्गणगतः पर्य्यङ्कः तस्मिंश्च यत्कशिपूत्तमं तस्मिन् ॥ ४–५ ॥

### श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी

श्रीमदनिरुद्धविवाहानन्तरमेव वक्तुं योग्यामप्येतां श्रीभगवद्रुक्मिणीदेव्योः प्रेमकलह–क्रीडां रतिप्रसंगाद्रसविशेषोदयेन वक्तुमारभते—कर्हिचिदित्यादिना यावदन्तम् । कस्मिंश्चिद्गृहसुखक्रीड़ाकाले सुखं यथा स्यात्तथा आसीनम् । किमधिकरणकमित्यपेक्षायामाह—स्वतल्पस्थं तस्या गृहे तस्या एव पर्य्यंके वर्त्तमानम् । यद्वा, सुखमासीनमित्यत्र हेतुः—स्वतल्पस्थमिति, सखीजनैः सह पर्य्यचरदसेवत, यतो जगतो गुरुं विशेषतश्च पतिमात्मनः प्रियमिति परिचरणे भक्तिविशेषः सूचितः । तच्च तस्या युक्तमेवेत्याशयेनाह—भैष्मीति । कन्यात्वेऽपि निजपित्राद्यनादरेण या स्वयं निभृतं श्रीकृष्णं प्रति स्वनयनार्थं दूतं प्राहिणोदिति भावः ॥ १ ॥ तादृशपतित्वेन तथा परिचर्य्यया च श्रीरुक्मिण्या महाभाग्यं द्योतयन् जगद्गुरुत्वमेव दर्शयति—यस्त्विति । तु प्रसिद्धौ, एतद्विविधाश्चर्य्यमयम्, ईश्वर इति सर्व्वनैरपेक्ष्येण बालकवत् केवलं क्रीडार्थमेवेति । किंवा, किमर्थं सृष्ट्यादि करोति, तत् केनापि बोद्धुं न शक्यत इति । यद्वा, सर्व्वजीवानां पालकत्वेन तेषां स्वस्वकर्म्मोपभोगेन परमपदप्राप्त्यर्थमिति भावः । हि एव, स एव, स्वकृतानां सेतूनां तत्तन्मर्य्यादानां गोपीथाय रक्षणाय अजोऽपि जातः । अतस्तस्येयं सृष्ट्यादेरप्यधिकाश्चर्य्यमयी मधुरमधुरा क्रीडा योग्यैवेति भावः ॥ २ ॥ तत्र वक्ष्यमाण–श्रीभगवद्भावविशेषोद्दीपनोपकरणानि सप्तभिर्वदन्नादौ गृहं वर्णयति—तस्मिन्निति त्रिभिः । अन्तर्गृहे गृहमध्ये विराजित इति स्वत एव रत्नभित्त्यादिना राजमाने वितानादि-

भिश्च विशेषेण राजित इत्यर्थः। मल्लिकानां दामभिर्भित्यादिबद्धैः पुष्पैरन्यैश्च स्थाने स्थाने विकीर्णैररुणैरिति प्रागुद्यन्मात्रता सूचिता ॥ ३-४ ॥

**श्रीसुदर्शनसूरिकृतशुकपक्षीयम्**

भ्राजन्मुक्तादामविलम्बिना भ्राजत् विलम्बमानमुक्तादामवता ॥ ३-१२ ॥

**श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका**

अथ भगवतो रुक्मिण्या सह प्रेमकलहं वर्णयति षष्टितमेन कर्हिचिदिति। भैष्मी रुक्मिणी जगद्गुरुं स्वपर्यङ्कस्थं तत्रापि सुखं यथा तथा आसीनं सखीजनैः सहिता व्यजनेन चामरेण पर्य्यचरत् उपचचार ॥ १ ॥ एतदेव प्रपञ्चयति—यस्त्वित्यादिनोपासाञ्चक्र ईश्वरमित्यन्तेन। तावज्जगद्गुरुत्वं प्रपञ्चयति-यस्त्विति। सृजति स्वाराधनोपयुक्तकरणकलेवरादिप्रदानेन हितं करोति अत्ति संहरति संसरतां जीवानां प्रलयमुखेन विश्रान्तिरूपहितं करोति अवति पालयति अनिष्टनिरसनेष्टप्रापणरूपहितं करोतीति भावः। किञ्च स्वसेतूनां स्वकृतधर्म्ममर्य्यादानां गोपीथाय रक्षणाय यदुषु जातः कथम्भूतोप्यजोपि कर्मायत्तोत्पत्तिरहितोपि स्वेच्छया यदुष्ववतीर्ण इत्यर्थः। गुरुत्वं हितैककारित्वम्। एवं जगद्गुरुरिति भावः य एवम्विधस्तमीश्वरमुपतस्थे इति यच्छब्दस्य सम्बन्धः ॥ २ ॥ अथ स्वतल्पस्थमित्युक्ततल्पं वर्णयितुं तावत्तत्तल्पाश्रयमन्तर्गृहं वर्णयति— तस्मिन्निति त्रिभिः। तच्छब्दः प्रसिद्धिपरः तृतीयान्तानां विराजित इत्यनेनान्वयः भ्राजन्ति, मुक्तादामानि तेषां विलम्बा यस्मिन् तेन वितानेन उल्लोचेन मणिमयैरपि दीपैरित्यर्थः ॥ ३ ॥ द्विरेफानां भ्रमराणां कुलेन समूहेन नादितैर्मल्लिकादामभिश्च विराजित इत्यन्वयः नादित इति पाठान्तरं तदा सौरभलोभभ्रमद्भ्रमरकुलैर्नादिते तत्र हेतुर्मल्लिकादामभिर्धूपैश्च विराजितः इति (चन्द्रमसोरुणैरित्यत्र सन्धिरार्षः) अरुणैरौदयकालिकत्वादिति भावः। जालरन्ध्रद्वारा अन्तःप्रविष्टैश्चन्द्रमसो गोभिः किरणैश्च ॥ ४ ॥

**श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली**

स्वस्याः रुक्मिण्यास्तल्पे तलिमे स्थितम् ॥ १ ॥ राजन् हरिचरितमतिचित्रमिति भावेन तत्स्वरूपलक्षणमाह—य इति ॥ २ ॥ यद्गृहं रुक्मिण्यै क्लृप्तं तस्मिन्नन्तर्गृहे पर्यङ्के दन्तविहितमञ्चे कशिपूत्तमे तलिमे मृदुवस्त्रप्रावरणास्तरणे सुखासीनं पतिमुपतस्थ इत्यन्वयः। मुक्तादाम्नां विलम्बोस्यास्तीति मुक्तादामविलम्बि तेन उपरि बद्धचित्रपटेनेत्यर्थः ॥ ३ ॥ अरुणैरित्यनेन चन्द्रोदयकालभवा गावो लक्ष्यन्ते ॥ ४॥

**श्रीमज्जीवगोस्वामिकृतक्रमसंदर्भः**

जगद्गुरुत्वमेव दर्शयति ॥ १ ॥ यस्त्विति राजपुत्रीत्यादि ॥ २ ॥ इदमस्यावतारिका प्रघट्टके ॥ ३-१२ ॥

**श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शिनी**

कृष्णवाक्पेषणीपिष्टद्रुतकर्पूरात्र रुक्मिणी। सम्मोह्याश्वासिता तं प्रत्यूचे षष्टितमे स्फुटम् ॥

जगद्गुरुं पतिमिति च परिचरणे हेतू ॥ १ ॥ वक्ष्यमाणे रुक्मिण्याः प्रेमसेवारसभञ्जने तस्य केवलं विनोद एव हेतुर्वस्तुतस्तु नान्य इति निदर्शनार्थं विश्वसृष्ट्यादेरपि विनोदहेतुकत्वमभिव्यञ्जयति-यस्त्वेतदिति। स्वसेतूनां धर्मादिमर्य्यादानां गोपीथाय पालनायेति स्वप्रियजनप्रेममर्य्यादायास्त्रोटनं न तस्याभीप्सितं किन्तु तेन तद्दृढीकरणमेवेति भावः ॥ २ ॥ तस्याः प्रेमसेवासुखस्य सर्वाण्येवोपकरणानि पूर्णानीति दर्शयितुं मन्दिरं वर्णयति-तस्मिन्निति त्रिभिः। भ्राजन्मुक्तादाम्नां विलम्बाः लम्बमाना गुच्छाः सन्ति यस्मिंस्तेन वितानेन चन्द्रातपेन विराजिते तृतीयान्तानां विराजते इत्यनेनान्वयः। अरुणैर्गोभिरिति चन्द्रमस उदयरागमयैः किरणैः प्रविशद्भिः आगुरवैर्धूपैश्च निर्गच्छद्भिः कशिपूत्तमे शयनीयेषु श्रेष्ठे ॥ ३-७ ॥

**गूढार्थदीपिनी**

कृष्णः षष्टितमे भैष्मीं प्रेमहास्येन कोपिताम्। सान्त्वयित्वाऽम्यनन्दत्तामुक्तयुक्तानुवादतः ॥ १ ॥

आसीनमित्यत्र हेतुः स्वतल्पेति। पतिं पर्यचरत् सेवितवती ॥ १ ॥ तु प्रसिद्धौ स हि स एव सेतूनां धर्ममर्यादानां गोपीथाय रक्षणाय अजोऽपि जातः। 'गोपीथं रक्षणे मुग्धे' इति निरुक्तिः ॥ २ ॥ तस्मिन्निति चतुष्कम्। भ्राजन्ति मुक्तादामानि मुक्तामालास्तेषां लम्बमाना गुच्छाः सन्ति यस्मिंस्तेन वितानेन चन्द्रातपेन विराजिते अन्तर्गृहे। तृतीयान्तानां विराजितपदेनान्वयः। पुष्पैरन्यैश्च इतस्ततो विकीर्णैः। द्विरेफो भ्रमरः। गोभिः किरणैः। पारिजातवनस्य आमोदो गन्धस्तद्युक्तेन वायुना। पूर्वप्रस्थापितपारिजातस्य एकैकस्य सर्वत्र गृहेषु सत्त्वाद्वनमित्युक्तम्। पर्यङ्के शय्याकारमञ्चे। कशिपूत्तमे तूलिकास्तरणयुक्ते ॥ ३-६ ॥

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः

पूर्वाध्याये रमाभी रेमे इत्यनेन "इत्थं रमापतिमावाप्यपतिं स्त्रियस्ताः" इत्यनेन च रमायाः प्राधान्यं सूचितं तदेव हास्यलीलाद्वारा षष्टितमे वर्णयति–कर्हिचिदिति ॥ १ ॥ जगद्गुरुमित्यनेन, सर्वपूज्यत्वं भगवतो दर्शितं तदेव प्रपञ्चयति–यो विश्वं सृजत्यवतीति अयं भावः विश्वकारणमेव जिज्ञास्यमित्युक्तं भगवता सूत्रकारेण "अथातो ब्रह्मजिज्ञासा" "जन्माद्यस्य यतः" इति "तदेवध्येयम्" इत्याह भगवती श्रुतिः "कारणन्तु ध्येयम्" इति तच्च विश्वकारणं यदुषु आविर्भूतं तस्य सभार्थस्य स्वरूप-गुणश्रवणमननध्यानादिकं श्रेयोर्थिभिर्महतादरेण कर्तव्यमिति ॥ २ ॥ स्वतल्पस्थं पतिं पर्यचरदित्येतत्प्रपञ्चयति–तस्मिन्निति चतुर्भिः । वितानादिभिर्भ्राजिते सुगन्धाकृष्टैः द्विरेफकुलैर्नादिते तस्मिन्नतिप्रसिद्धे पर्यङ्कगते कशिपूत्तमे शयनीयश्रेष्ठे हंसतूलि-कायां सुखासीनं पतिमुपतस्थे असेवतेति चतुर्णामन्वयः कथम्भूतेन वितानेन भ्राजता मुक्तादाम्नां विलम्बाः लम्बमानाः गुच्छाः सन्ति यस्मिन् तेन आगुरवैः अगुरुसम्भवैः कथम्भूते कशिपूत्तमे पयःफेननिभे पयसः क्षीरस्य फेन इव मृदुनि कथम्भूतं पतिं जगतामनन्तकोटिब्रह्माण्डानामीश्वरम् ॥ ३–६ ॥

### श्रीसत्यधर्मकृता श्रीभागवतटिप्पणी

कर्हिचित्सुखं यथा तथाऽऽसीनं स्वतल्पस्थं स्वशय्यास्थितं जगद्गुरुं पतिं भैष्मी सखीजनैः सह व्यजनेन चामरादिना पर्यचरत्सिषेवे ॥ ५ ॥ परवशः शुकस्तल्लक्षणमाह ॥ य इति । एतज्जगल्लीलया विश्वं सृजत्यवत्यत्ति स हि । स एव स्वसेतूनां गोपीथायागतं रक्षणार्थं स्वयमजोऽपि यदुषु जातः ॥ ६ ॥ भ्राजन्ति यानि मुक्तादामानि विलंबीनि यस्मिंस्तेन वितानेनोल्लोचने विराजितेऽन्तर्गृहे रुक्मिण्या मणिमयैर्दीपैर्विराजिते ॥ ७ ॥ द्विरेफा भ्रमराश्चन्द्रमसोऽरुणैर्जालानां गवाक्षाणां रन्ध्रैः प्रविष्टैर्गोभिः करैः । आरुण्येन तारुण्यं चन्द्रस्य द्योत्यते । अमलैरिति पाठो निर्मलः । अरुणकिरणवत्कालस्यातरुणीरमणकालत्वात्स्वतल्पस्थ-मित्यानुकूल्याच्च विराजित इत्यनेनान्वयः ॥ ८ ॥

### श्रीमद्वल्लभाचार्य्यकृता सुबोधिनी

वाचिकस्तु तिरोभावो रुक्मिण्यामुच्यते स्फुटः । एकदेशे निरोधार्थमन्यथा लौकिकं भवेत् ॥ १ ॥
सर्वथा कृतसेवायाः परीक्षापि निरूप्यते । यथा प्राणे शरीरस्य स्थितिस्तद्वद्यथा भवेत् ॥ २ ॥
सान्त्वनं कायिकं त्वत्र निःसम्बन्धाद्यतो भयम् । दोषाभावाय वाक्यं तु ईर्ष्यामात्सर्यदोषनुत् ॥ ३ ॥
निर्दुष्टायाः परिज्ञानमविरोधस्य वर्णनात् । निरूप्यते यतः सा हि न कुतश्चिद्भ्रमं भजेत् ॥ ४ ॥
शब्दार्थयोर्विरोधः स्यात् प्रामाण्ये सर्वथैव हि । लक्षणायामपि तथा मुख्यार्थो बाधितो यतः ॥ ५ ॥
अतो हि भगवद्वाक्यं दुर्ज्ञेयं सर्वथा मतम् । यस्त्वेतस्य परिज्ञाता स न मुह्यति कर्हिचित् ॥ ६ ॥

पूर्वाध्यायान्ते सर्वभावेन स्त्रीणां सेवा निरूपिता । तस्याः परीक्षार्थमिदमारभ्यते । तत्र प्रथमं पूर्वषट्के निष्पन्ने, उत्तरादिरूपं बीजनमाह कर्हिचिदिति । **सुखमासीन**मिति विश्रमान्ता सेवा निरूपिता । **स्वतल्पस्थ**मिति अग्रिमावश्यकत्वं निरू-पितम् । कदाचिद्भगवान् रुक्मिण्या गृहे सभात उत्थाय रात्रौ समागतः । ततः प्रत्युद्गमनादिप्रकारेण स्वशय्यायामेवोपवेशितः । कामकलापूर्णं च तद्गृहम्, तत्पित्रादिभिः प्रायेण तत्सुखार्थं सामग्री प्रेषितेति लक्ष्यते । अन्यथा भगवान् स्वदत्तायां सामग्र्यां नैवं वदेत् । सापि भावज्ञा । नैवमभिमानेन सेवां कर्तुं प्रवर्तेत । अतोनभिप्रेतमेव स्वशय्यायां दीनभावमकृत्वा उपवेशितवती । भगवांश्च कथं तथा वदतीत्याशङ्कायामाह **जगद्गुरु**मिति । स हि सर्वोपदेष्टा । भ्रमादन्यथा बुद्धौ जातायां तन्निवारणीयमिति जगद्गुरोः कार्यमेव तत् । पतित्वान्निःशङ्कं पर्यचरत् । भैष्मीत्वात् साभिमाना । **व्यजनेने**ति स्वयं व्यजनं गृहीत्वा । सखीजनैः सहिता स्वोत्कर्षबुद्ध्या ता अपि स्थापितवती ॥ १ ॥ ननु तथापि संतोषे दुःखजननमयुक्तमिति चेत्, तत्राह **यस्त्वेत**दिति । उभयथापि भगवतो नैवंकरणे दोषः । आदावुत्पत्तिस्थितिप्रलयकर्ता, यथोत्पत्तिं हर्षादेः करोति, स्थितिं वा, तथा प्रलयमपि करोतीति हर्षादेर्नाशनं भगवत्कार्यमेव । किञ्च । भगवान् **स्वसेतूनां** स्वकृतमर्यादानां धर्मादीनां **गोपीथाय** रक्षणार्थमेवावतीर्णः । अन्यथा अजस्य यादवेष्ववतारो नोपपद्येत । ननु प्रलये कश्चन भगवत उद्योगो दृश्यते, समयश्च तादृश इति चेत्, तत्राह **लील-येति** । न तस्य उत्पत्त्यादिकरणे किञ्चित्साधनं मृग्यते, किन्तु लीलयैव करोति । नापि यदोः पुष्टिस्थस्य विहितकालाद्यपेक्षा । नापि स्वभावमप्यन्यथा कृत्वा समागतस्य यदर्थमागतस्तत्करणमयुक्तं भवति ॥ २ ॥ तर्हि देशवशात्कालवशाद्वा भगवांस्तथोक्त-वानित्याशङ्क्य गृहं वर्णयति **तस्मिन्नन्तर्गृह** इति । तां च रसाधिकरणभूतां षड्भिश्चतुर्भिर्द्वाभ्यां च । **गृहमध्य** इत्येकान्तता । तत्रापि **तस्मिन्नि**ति प्रसिद्धिः । तेन तत्कामस्थानमेव, नतु क्रोधादिस्थानम् । आदौ तस्योपरि शोभां वर्णयति । भ्राजन्मुक्तादाम्नां विलम्बनयुक्तेन वितानेन चन्द्रातपेन विराजिते । परितो विलम्बीनि मुक्तादामानि यस्मिंश्चन्द्रातपे । तेन विराजितं कामस्थान-मेव भवति । मणिमयैरपि दीपैः परितो विराजिते । मल्लिकादामभिः केवलपुष्पैश्च सर्वतः । शृङ्गाररसानुभावकमाह । द्विरेफ-

कुलानां नादितं यत्रेति । द्विरेफाणां वा कलं नादितम् । चन्द्रोऽप्यत्यन्तमुद्बोधक इति तत्किरणानामन्तःप्रवेशमाह जालरन्ध्रप्रविष्टैश्चेति । चन्द्रमसः अरुणैरुदयकालीनैः किरणैः रागयुक्तैः गवाक्षमार्गेणान्तःप्रविष्टैः विराजिते ॥ ३–४ ॥

### श्रीसुबोधिनी-सारः

अथ षष्टितमे लीला गृहस्थस्य निरूप्यते । रुक्मिणीं परिहासेन रुष्टां सांत्वयता ध्रुवम् ॥ १ ॥

शुकोक्तिः । कर्हिचित्कदाचित् स्वतल्पस्थं स्वशय्यायां स्थितं जगतां गुरुं श्रीकृष्णं सुखमासीनं पतिं सखीजनैः सह भैष्मी रुक्मिणी व्यजनेन सेवयांबभूव ॥ १ ॥ कोसौ जगद्गुरुस्तत्राह ईश्वरो यो लीलया एतद्विश्वं सृजति अत्ति खादति अवति पाति सोऽजो हि स्वमर्यादानां गोपीथाय रक्षणार्थं यदुषु जातः ॥ २ ॥ क्वेत्यपेक्षायामाधारं निरूपयति । भ्राजंति मुक्तानां दामानि तेषां विलंबाः संति यस्मिंस्तेन विराजिते तस्मिन्नंतर्गृहे तृतीयांतानामत्रान्वयः मणिमयैर्दीपैरपि विराजिते इति मल्लिकाया दामभिः पुष्पैर्द्विरेफाणां भ्रमराणां कुलैर्नादिते जालच्छिद्रैः प्रविष्टैरमलैर्निर्मलैश्चंद्रस्य गोभिः किरणैः ॥ ३–४ ॥

### श्रीविट्ठलरायात्मजश्रीवल्लभकृतलेखः

**एकादशे । यथा प्राणे** इति । प्राणे सति यथा शरीरस्य स्थितिर्भवति, तद्वत्सेवायां सत्यां रुक्मिण्याः शरीरस्य स्थितिरिति ज्ञानं यथा स्यात्तदर्थं परीक्षा निरूप्यते इत्यर्थः । ननु वाचिकतिरोधाने वाचैव सान्त्वनमुचितम्, अतः 'पर्यङ्कादवरुह्याशु' इत्यनेन कायिकसान्त्वनं कुतः कृतवानित्यत आहुः **सान्त्वनमिति** । यतो हेतोर्निःसम्बन्धसम्भावनया भयम् । सम्बन्धश्चात्र कायिको, नतु वाचिकमात्ररूपः । त्रिविधविवाहस्य पूर्वमुक्तत्वात् । अतो दशम्यवस्थारूपदोषाभावाय सान्त्वनं कायिकं कृतवानित्यर्थः । तर्हि पूर्वमेव 'राजपुत्रो'त्यादिवाक्यं किमर्थमुक्तवानित्यत आहुः **वाक्यमं त्विति** । तर्हि दोषपराहित्यं कथं ज्ञातं भवेदित्य आहुः **निर्दुष्टाया** इति । भगवद्वाक्येष्वविरोधस्य वर्णनाद्धेतोर्निर्दुष्टायाः परिज्ञानं निरूप्यते । यतो हेतोः सा निर्दुष्टैव भगवद्वाक्येषु भ्रमं न भजेत् । निर्दुष्टाया एव भ्रमाभावो युक्त इति हिशब्दः । भ्रमस्वरूपमाहुः **शब्दार्थयोरिति** । **कर्हिचिदित्यस्याभासे । तत्र प्रथममिति** । वीजनकथनेन प्रत्युद्गमादिषट्कमप्युक्तमेव, तदेव 'सुखमासीन' मित्यनेनानूदितमिति भावः । **तस्मिन्नन्तर्गृह** इत्यस्याभासे । **देशवशादिति** । गृहमुत्तमं नास्तीत्यर्थः । एतत्परिहारार्थं गृहवर्णनम् । तस्यावर्णनेन परिहार्यमाशङ्कामाहुः **कालावशादिति** । तस्या वयो भोगयोग्यतासंपादकं जातं नास्तीत्यर्थः ।

### गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

अथ षष्टितमेऽध्याये पत्नीसेवां प्रदर्शयन् । रुक्मिणीं प्रति कृष्णस्य परिहासो निरूप्यते ॥ १ ॥

तत्र रुक्मिणीकृतां सेवामाह—कर्हिचिदिति । स्वतल्पस्थं तत्रापि सुखं यथा स्यात्तथा आसीनं जगद्गुरुं परमेश्वरत्वेन सर्वपूज्यं स्वपतिं कृष्णं सखीजनैः सह भैष्मी रुक्मिणी व्यजनेन पर्यचरत् सेवितवती ॥ १ ॥ तस्यास्तत्र प्रेमाधिक्ये हेतुत्वेन जगद्गुरुत्वमेव स्पष्टयति—यस्त्विति । यस्त्वीश्वरो लीलया निमित्तेनैतद्विश्वं सृजति, अत्ति संहरति, अवति रक्षति च स एव स्वयमजः कर्माधीनजन्मरहितोऽपि स्वसेतूनां स्वकृतधर्ममर्यादानां गोपीथाय परिरक्षणाय यदुषु जात इत्यन्वयः ॥ २ ॥ स्वतल्पस्थमित्युक्त्या 'स्वतल्पः कुत्रासीत्' इत्यपेक्षायां यदाधारं गृहमनुवर्णयति—तस्मिन्निति त्रिभिः । तच्छब्दः प्रसिद्धिपरः । उत्तमत्वेन प्रसिद्धेऽन्तर्गृहे गृहमध्ये यः पर्यङ्कः तदुपरि स्थापिते पयःफेनवन्मृदुले शुभ्रे धवले कशिपूत्तमे उत्तमशय्यायां सुखं यथा स्यात्तथाऽऽसीनं जगतामीश्वरं पतिमुपतस्थे असेवदिति चतुर्णामन्वयः । उत्तमत्वमेव स्पष्टयति—भ्राजन्ति यानि मुक्तादामानि तेषां विलम्बा यस्मिंस्तेन वितानेन चन्द्रातपेन विराजिते, तथा मणिमयैर्दीपैरपि विराजिते ॥ ३ ॥ मल्लिकादामभिरन्यैरपि पुष्पैश्च विराजिते । द्विरेफाणां सौरभ्यलोभेन आगतानां भ्रमराणां कुलेन समूहेन नादिते । जालरन्ध्राणि गवाक्षछिद्राणि तन्मार्गैरन्तःप्रविष्टैरमलैः शुद्धैः रजोमेघादिकालुष्यरहितैश्चन्द्रमसो गोभिः किरणैश्च विराजिते ॥ ४ ॥

### अन्वितार्थप्रकाशिका

कृष्ण षष्टितमे प्रेम कलिं कृत्वाऽथ रुक्मिणीम् । असान्त्वयत्पुनस्तां च तत्र श्लोका नवेषवः ( ५९ ) ॥
उवाचेत्यष्टकं ( ८ ) साङ्घ्रिपञ्चशैला ( ७५।) अनुष्टुभः ॥ ६० ॥

कर्हिचिदिति ॥ स्वतल्पस्थं तत्रापि सुखं यथा स्यात्तथा आसीनं जगद्गुरुं पतिं कृष्णं सखीजनैः सह भैष्मी रुक्मिणी व्यजनेन पर्यचरत् सेवितवती ॥ १ ॥ रुक्मिण्याः प्रेमसेवारसभञ्जने तस्य लीला एव हेतुर्नान्य इति निदर्शनार्थं विश्वसृष्ट्यादेरपि लीलाहेतुकत्वमभिव्यञ्जति—यस्त्विति ॥ यस्त्वीश्वरो लीलया निमित्तेनैतद् विश्वं सृजति अत्ति संहरति अवति रक्षति च । स एव स्वयमजः स्वसेतूनां स्वकृतधर्ममर्यादानां गोपीथाय परिरक्षणाय यदुषु जातः । तेन स्वप्रियजनप्रेममर्यादात्रोटनं न तस्याभीष्टं किंतु तेन दृढीकरणमेवेति भावः ॥ २ ॥ तस्मिन्निति चतुष्कम् ॥ हे राजन् ! भ्राजन्ति यानि मुक्तादामानि तेषां विलम्बाः लम्बमाना गुच्छाः सन्ति यस्मिंस्तेन वितानेन चन्द्रातपेन विराजिते तथा मणिमयैरपि विराजिते मल्लिकादामभिरन्यैरपि पुष्पैश्च

विराजिते द्विरेफाणां सौरभ्यलोभेनागतानां भ्रमराणां कुलेन समूहेन नादिते जालरन्ध्राणि गवाक्षच्छिद्राणि तन्मार्गैरन्तःप्रविष्टैरमलैः शुद्धै रजोमेघादिकालुष्यरहितैः चन्द्रमसो गोभिः किरणैश्च विराजिते । अरुणैः इत्यपि पाठः ॥ ४ ॥

### श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्

अथ षष्टितमेऽध्याये रुक्मिण्या कलहं विभुः । हास्येनाकरोत् कृष्णः पुनस्तस्याश्च सांत्वनम् ॥ १ ॥
प्रत्युक्ति कृष्णवचसां रुक्मिण्या हसतां प्रियाम् । इति प्रसंगं श्रीशुकः प्राहप्रेमरसोद्गमम् ॥ २ ॥

कर्हिचिदिति सखीजनैः सह व्यजनेन व्यजनादिसेवोपचारेण पतिं परमेश्वरं पर्यचरत् सिषेवे ॥ १ ॥ जगद्गुरुत्वं निरूपयन्नाह य इति । गोपीथाय रक्षणाय ॥ २ ॥ प्रथमं तावत्त्रिभिः श्लोकैः श्रीकृष्णमंदारशोभां निरूपयति तस्मिन्निति ॥ तस्मिन्नंतर्गृहे प्रसिद्धे मुख्यांतःपुरे भ्राजतां शोभमानानां मुक्तादाम्नां विलंबाः परितो बंधनानि विद्यन्ते यस्मिंस्तेन वितानेन विराजिते सर्वतृतीयांतपदानि विराजितपदेन योजनीयानि ॥ ३ ॥ पुष्पैर्धूपैरिति पाठौ । द्विरेफाणां भ्रमराणां कुलैर्नादिते सुगंधाधिक्याच्छब्दिते जालरंध्रेषु वातागमनछिद्रेषु प्रविष्टैः गोभिर्गभस्तिभिश्च ॥ ४ ॥

### भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

रुक्मिणीं परिहासेन कोपयित्वा स्वयं हरिः ॥ अथ षष्टितमे प्रेमकलहे तामसान्त्वयत् ॥ १ ॥

कर्हिचिदिति ॥ कर्हिचित् कस्मिंश्चित् समये, भैष्मी रुक्मिणी, स्वतल्पस्थं स्वकीयपर्यङ्कावस्थितं, तत्रापि सुखासीनं सुखं यथा तथाऽऽसीनं, पतिं स्वस्वामिनं, जगद्गुरुं, स्वाश्रितहितोद्यतं श्रीकृष्णं, सखीजनैः सहिता सती, व्यजनेन चामरेण, पर्यचरदुपचचार ॥ १ ॥ सामान्येनोक्तमिमेवार्थं प्रपञ्चयति य इत्यादिनोपासांचक्र ईश्वरमित्यन्तेन तत्र तावज्जगद्गुरुत्वं प्रपञ्चयति ॥ यस्त्विति ॥ ईश्वरः यस्तु परमेश्वरो यो भगवांस्तु, एतत् विश्वं, लीलया सृजति विसृजति, अवति रक्षति, अत्ति संहरति, स हि स एव, अजः सन्नपि, स्वसेतूनां स्वकृतधर्ममर्यादानां, गोपीथाय रक्षणाय, यदुषु जातः गुरुत्वं हि हितैककारित्वं 'को गुरुरधिगततत्त्वः स्वजनहितायोद्यतः सततं । इत्यभियुक्तोक्तेः तच्चात्र सर्जनादिक्रियया द्योतितं तद्यथा । सृजति स्वाराधनोपयुक्तकरणकलेवरादिप्रदानेन हितं करोतीति । अवति अनिष्टनिरसनेष्टप्रापणरूपेण पालनरूपं हितं करोति इति । अत्ति संसरतां जीवानां प्रलयमुखेन विश्रान्तिप्रदानार्थकसंहरणात्मना हितं करोतीति ॥ २ ॥ अथ स्वतल्पस्थमित्युक्तं तत्र यत्र तल्पं तत्रस्थं प्रदेशं वर्णयति तस्मिन्निति त्रिभिः ॥ तस्मिन्निति ॥ तच्छब्दोऽत्र प्रसिद्धिपरः । तृतीयान्तानां विराजित इत्यनेन संबन्धः । तस्मिन् प्रसिद्धे, अन्तर्गृहे गृहमध्यप्रदेशे विषये, भ्राजन्ति यानि मुक्तादामानि तेषां विलम्बाः सन्ति यस्मिंस्तेन, वितानेनोल्लोचेन मणिमयैः दीपैः अपि, विराजिते ॥ ३ ॥ मल्लिकेति ॥ मल्लिकादामभिः, द्विरेफकुलनादितैः पुष्पैः, यदुपरि भ्रमरा गुञ्जारवं कुर्वन्ति तथाविधैः कुसुमैरित्यर्थः । यदा द्विरेफकुलनादिते इति पाठान्तरं, तदा सौरभलोभभ्रमद्भ्रमरकुलैः नादिते, पुष्पैः मल्लिकादामभिश्च विराजिते, इत्यर्थः कार्यः । जालरन्ध्रप्रविष्टैः अमलैः चन्द्रमसः गोभिः किरणैश्च, विराजिते ॥ ४ ॥

कृष्णप्रिया

## गृहस्थाश्रम विनोद माधुर्य

श्रीशुकदेवजी ने कहा—महाराज परीक्षित् ! एक दिवस अखिल ब्रह्माण्ड के नाथ सद्गुरु भगवान् श्रीकृष्ण, श्री रुक्मिणी जी के पर्यङ्क पर सुखपूर्वक विराजमान थे । श्री भीष्मकराज कुमारी श्री रुक्मिणी रानी सखीवृन्द के साथ निजनाथ श्री द्वारिकानाथ जी की सेवा कर रही थी, नाथ को वीजन डोल रही थी ॥ १ ॥ राजन् ! जो सर्वसमर्थ जगदीश्वर आसानी से समस्त विश्व की रचना, रक्षा एवं प्रलय करते हैं वही अज–अविनाशी–भगवान् स्वनिर्मित धर्ममर्यादाओं का रक्षण करने के लिये यादवों के यहां प्रकट हुए हैं ॥ २ ॥ महारानी का महल अति मनोहर था । उस दिव्य भवन में रमणीय चँदोवे तने हुए थे । इन चँदोवे के चारों ओर मुक्तामणियों की महामूली झालरें लटक रही हैं और सारे भवन में मणिमय दीपक जगमगा रहे थे ॥ ३ ॥ मधुमालती चमेली मल्लिका के पुष्प एवं मालाओं की लटें महँक रही थी । इन मालाओं और पुष्पों पर भौरों की पंक्तियाँ गुंजार कर रही थी । मनोहर झराखों के गवाक्षों–जालियों में से चन्द्रमा की श्वेत किरणावली राजभवन के भीतर छिटक रही थी ॥ ४ ॥

**पारिजातवनामोदवायुनोद्यानशालिना[1] । धूपैरगुरुजैः[2] राजन् जालरन्ध्रविनिर्गतैः ॥ ५ ॥**
**पयःफेननिभे शुभ्रे पर्यङ्के कशिपूत्तमे । उपतस्थे सुखासीनं जगतामीश्वरं पतिम् ॥ ६ ॥**
**बालव्यजनमादाय रत्नदण्डं सखीकरात् । तेन वीजयती देवी उपासाञ्चक्र ईश्वरम् ॥ ७ ॥**
**[3]सोपाच्युतं क्वणयति [4]कलनूपुराभ्यां रेजेऽङ्गुलीयवलयव्यजनाग्रहस्ता ।**
**वस्त्रान्तगूढकुचकुङ्कुमशोणहारभासा नितम्बधृतया च परार्घ्यकाञ्च्या ॥ ८ ॥**

---

१. शोभिना–वीर । २. रागरवैः–विज. । ३. साप्य–प्रा. पा. । ४. मणि–श्रीधर वंशी जीव. वीर. विज. विश्व. ।

### कर्दमक्षमा

अन्वयः—उद्यानशालिना, पारिजातवनामोदवायुना, जालरन्ध्रविनिर्गतैः, अगुरुजैः, धूपैश्च, विराजिते ( उपतस्थे इति परेणान्वय ) ॥ ५ ॥ तस्मिन्, पयःफेननिभे, कशिपूत्तमे, शुभ्रे, पर्यङ्के, सुखासीनं, जगतां, ईश्वरं, पतिं, उपतस्थे ( भैष्मी इति पूर्वेणान्वयः ) ॥ ६ ॥ देवी, सखीकरात्, रत्नदण्डं, बालव्यजनं, आदाय, तेन, बीजयन्ति, ईश्वरं, उपासाञ्चक्रे ॥ ७ ॥ सा उपाच्युतं, अङ्गुलीयवलयव्यजनयाग्रहस्ता, मणिनुपुराभ्यां, कणयति, वस्त्रान्तगूढ कुचकुङ्कुमशोणहारभासा नितम्बधृतया पराध्र्य-काञ्च्या, च, रेजे ॥ ८ ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

निर्गच्छद्भिरगुरुसंभवैर्धूपैश्चातिमनोहरत्वं दर्शितम् ॥ ५ ॥ पयसः क्षीरस्य फेन इव मृदूनि पर्यंकस्थे कशिपूत्तमे हंसतूलिकायाम् उपतस्थे असेवत ॥ ६ ॥ तदेवाभिनयति । वालव्यजनति ॥ ७ ॥ उपाच्युतमच्युतस्य समीपे सा मणिनूपुराभ्यां रेजे । क्वणयती मणिमयौ नूपुरौ कूजयन्ती तथा अंगुलीयवलयव्यजनान्यग्रहस्ते हस्ताग्रे यस्याः सा वस्त्रांतेन गूढौ स्थगितौ कुचौ तयोः कंकुमं तेन शोणो हारस्तस्य भासा नितंबे धृता या परार्ध्या अमूल्या कांची तया च रेजे ॥ ८ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

जालरंध्रप्रविष्टगोभिर्धूपैश्च गृहशोभादर्शिता । वनशब्दः सर्वासां पट्टराज्ञीनां गृहेष्विंद्रेण पूर्वप्रस्थापितपारिजातस्यै-कैकस्य सर्वत्र वृत्तेः । न च केवलं तदामोद एव विचित्रान्यपुष्पादीनामपि सौरभ्यस्तीत्याह—उद्यानेति । जालरंध्रेण विशेषतो निखिलदिग्व्यापकत्वादिना निर्गतैः । तादृशगृहे यश्चंद्रशालांगणगतः पर्यंकस्तस्मिन्यत्कशिपूत्तमं तस्मिन् ॥ ५ ॥ "एकोक्त्या कशिपुर्भक्ताच्छादने च द्वयोः पृथक्" इति विश्वः । "आयामः सप्ततालः स्याच्चतुस्तालं तु विस्तृतम् । द्वितालमुन्नतं ज्ञेयमेतत्पर्यंक-लक्षणम् ॥" इति शिल्पिशास्त्रे । 'अंगुष्ठमध्यमयोर्विस्तृतयोरंतरालस्तालः' इति प्रयोगरत्ने । "शय्याच्छादनवस्त्रे च कशिपुर्लं-घुमञ्चके" इति धरणिः ॥ तदेव विशिनष्टि—पय इत्यादिपदाभ्याम् । उपतस्थे इत्यादेः पुनः पुनरुक्तिस्तु भावविशेषेण पुनः पुनस्तादृक्सेवाभिकामात् ॥ ६ ॥ तदेव उपस्थानम् । अभिनयति दर्शयति । तेन बालव्यजनेन ॥ व्यजनसेवाप्रकारमाह—बाल-व्यजनं चामरम् । देवी महापट्टराज्ञी ॥ ७ ॥ अंगुलीयवलयान्यंगुलिभूषणानि । हस्तस्याग्रमग्रहस्तमिति राजदंतादित्वात्समासः । स्थगितावाच्छादितौ । 'पश्चान्नितंबः स्त्रीकट्याः' इत्यमरः । "कांची स्यान्मेखलादाम्नि प्रभेदे नगरस्य च" इति मेदिनी । 'स्यात्पराध्र्यमनर्घ्येऽपि परभागे द्वयोः' इति निरुक्तिः ॥ सेति—सा कणयन्ती शब्दायमाना रेजे । राजने हेतुः—मणिनूपुराभ्यामु-पलक्षिता, अंगुलीयेत्यादिलक्षणा । 'तत्र तत्स्मारितानंतहृताखिलेंद्रियः' इति, "वासुदेवे भगवति निमग्नहृदयोऽब्रवीत्" इत्यादि-रीत्या प्रस्तूयमानतदेकस्फूर्त्या तां सभामप्यनवधाय 'बाहुप्रसारपरिरंभकरालकोरु—' इत्यादिकं यथाऽवर्णयत्तथैव तत्सखीजन-स्फुरणवशात्तद्भावितः संस्तस्या रहस्यामपि शोभां वर्णयति—वस्त्रेति । तत्र वस्त्रांतेत्यादिद्वयेनोपलक्षिता चेत्यर्थः । तत्र शाटी-रूपवस्त्रस्य दीर्घत्वात् सम्यगेव गूढत्वं ज्ञेयम्, अन्तशब्दस्य स्वरूपार्थकक्वणने हेतुः—मणीति, वलयेति, परार्द्धेति च । वीजनेन, भावेन चलनादिति ज्ञेयम् ॥ ८ ॥

### श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी

तदेव विशिनष्टि—पयइति । पदाभ्याम् उपतस्थ इत्यादेः पुनः पुनरुक्तिर्भावविशेषेण तादृक्सेवाभिकामात् ॥ ६ ॥ व्यजनेन पर्य्यचरदित्युक्तं तत्प्रकारमेव विशिष्याह—बालव्यजनमिति । वालव्यजनं चामरं देवी ( महा ) पट्टमहिषी अत्र टीका-याम् अभिनयतीत्यभिनवपूर्वकं वदतीत्यर्थः ॥ ७ ॥ सेति । सा क्कणयति शब्दायमाना रेजे राजने हेतुः मणिनूपुराभ्यामुपलक्षिता अङ्गुलीयेत्यादिलक्षणा तत्र तत्स्मारितानन्तहृताखिलेन्द्रिय इति "वासुदेवे भगवति निमग्नहृदयोऽब्रवीत्" इति रीत्या प्रस्तू-यमानतदेकस्फूर्त्या तां सभामप्यनवधाय बाहुप्रसारपरिरम्भकरालकोर्वित्यादिकं यथावर्णयत् तथैव तत्सखीजनस्फुरणवशा-त्तद्भावभावितस्सन् तस्या रहस्यामपि शोभां वर्णयति—वस्त्रेति । तत्र वस्त्रान्तेत्यादिद्वयेनोपलक्षिता चेत्यर्थः । अत्र शाटीरूप-वस्त्रान्तस्य दीर्घत्वात्सम्यगेव गूढत्वं ज्ञेयम् अन्तशब्दस्य स्वरूपार्थकत्वात् क्कणने हेतुः मणीति वलयेति परार्द्ध्येति च वीजनेन भावेन च चलनादितिज्ञेयम् ॥ ८ ॥

### श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी

एवमियं क्रीडा प्रदोषारम्भे ज्ञेया । वन-शब्दः सर्व्वासां श्रीमहिषीणां प्रीत्यै प्रतिगृहमेकैकस्य पारिजातस्य सृष्टेः, किंवा तेनैकेनैव वनिकावत् सर्व्वद्वारकाव्याप्तेः । न च केवलं तदामोद एव, विचित्रान्यपुष्पादीनामपि सौरभ्यमस्तीत्याह—उद्यानेति । एवं वायोः शीतलोद्यान-सम्बन्धेन शैत्यम्, शालित्वेन मान्द्यं चोक्तम् । जालरन्ध्रेभ्यो विशेषेण सर्व्वदिग्व्यापकत्वादिना निर्गतैः;

तत्तच्छ्रवणेन प्रहर्षाद्राजमानं श्रीपरीक्षितं दृष्ट्वा तथैव सम्बोधयति—राजन्निति ॥ ५ ॥ उक्तपोष-न्यायेन परिचरणप्रकारमेव प्रहर्षाद्वर्णयति—पय इति द्वाभ्याम् । तादृशेऽन्तर्गृहे यः पर्य्यंकस्तस्मिंश्च यः कशिपूत्तमस्तस्मिन् । तत्र च बर्हिर्विशिनष्टि—पय इति द्वाभ्याम् । उपतस्थ इत्यादेः पुनः पुनरुक्तिर्भाव-विशेषेण तादृक्सेवाभिकामात् ॥ ६ ॥ व्यजनेन पर्य्यचरदित्युक्तम् । तत्प्रकारमेव विशिष्याह—वालव्यजनमिति चामरम्, किंवा पिञ्छादिरचितं लघुतरस्वल्पव्यजनम्, कोमलतरकरत्वात् । देवीति तादृगुपासनेन शोभाभरोदयात्; यद्वा, श्रीमहिषी ॥ ७ ॥ तमेव ससाधनं दर्शयन् वक्ष्यमाणश्रीभगवत्प्रीतिहेतुत्वेन तां वर्णयति—सेति । मणीत्यादिना क्रमेण पादयोर्हस्तस्य वक्षसो मध्यभागस्य चेत्येवं सर्व्वांगशोभोक्ता । अन्यत्तैर्व्याख्यातम् । यद्वा, वीजनेन सर्व्वांगचलनाद्वलयादीन् क्वणयन्ती ॥ ८ ॥

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका

उद्यानवने शोभते रोचते इति तथा तेन पारिजातवनामोदयुक्तेन वायुना अगुरुजेरगरुकाष्ठजेर्गवाक्षरन्ध्रविनिर्गतैर्धूपैश्च हे राजन् ! ॥ ५ ॥ अथ तल्पं वर्णयति—पयःफेनेति । दुग्धफेनवन्मृदुले धवले च पर्यङ्के यत्कशिपूत्तममास्तरणश्रेष्ठं तस्मिन् सुखं यथा तथा आसीनं पतिमुपतस्थे सन्निधिमवापेत्यर्थः ॥ ६ ॥ रत्नमेव दण्डस्थानीयं तदाकारं च यस्य तद्वालव्यजनं चामरं सख्याः कराद्धस्तादादाय तेन वालव्यजनेन वीजयती देवी रुक्मिणी उपासाञ्चक्रे तमेव पश्यन्त्यवतस्थ इत्यर्थः ॥ ७ ॥ तादात्विकीं तामनुवर्णयति—सेति । सा रुक्मिणी उपाच्युतम् अच्युतसमीपे मणिमयनूपुराभ्यां क्वणयती ध्वनिमुत्पादयन्ती अङ्गुलीयाऽग्रहस्ते हस्ताग्रे यस्याः सा वस्त्राञ्चलेन गूढयोः स्थगितयोः कुचयोः कुङ्कुमेन शोणो यो हारः मुक्ताहारस्तस्य भासा दीप्त्या नितम्बयोर्धृतया परार्ध्यया: काञ्च्या च रेजे ॥ ८ ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

पारिजातानां मन्दाराणां वनस्य काननस्यामोदेन युक्तेन वायुना शोभिते कीदृशेन उदान इव शालिना मनोहरेण पारिजातवनस्य सम्भजनीयस्य सेव्यस्यामोदस्य सम्बन्धिना वायुना वा आगरवैरगरुसम्पृक्तैः ॥ ६ ॥ पयःफेननिभे जलबुद्बुदवन्मसृणे ॥ ६ ॥ किं कर्मेति तत्राह—वालव्यजनमिति ॥ ७ ॥ उपाच्युतम् अच्युतस्य समीपे उन्नमदवनमतोः पादयोर्मणिनूपुराभ्यां क्वणयति अङ्गुलीयाख्यवलयेन व्यजनेन च युक्तं हस्ताग्रं यस्याः सा तथा पृथक्कृते वलये हस्तमूलेति वक्तव्यं न तु हस्ताग्रेति वस्त्रान्तेन वस्त्राञ्चलेन गूढयोः कुचयोः लिप्तकुङ्कुमचूर्णसम्बन्धेन शोणस्य रक्तस्य हारस्य मुक्तादाम्नो भासा युक्तोपलक्षणे तृतीया नितम्बधृतया कटिप्रदेशवेष्टितया परार्ध्यकाञ्च्या अनर्घरशनया च युक्ता ॥ ८ ॥

### श्रीमज्जीवगोस्वामिकृतः बृहत्क्रमसन्दर्भः

वालव्यजनेत्यादि । वालव्यजनं चामरम्, स्वल्पव्यजनखण्डं वा ॥ ७-८ ॥

### श्रीनाथचक्रवर्तिपादविरचिता चैतन्यमतमञ्जूषा

वालव्यजनं चामरम् स्वल्पव्यजनं वा ॥ ७-८ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

उपाच्युतम् अच्युतस्य समीपे सा मणिनूपुराभ्यां रेजे क्वणयन्ती अर्थान्मणिनूपुरौ काञ्ची च अत्यायतव्यजनचालनेन सर्वाङ्गस्पन्दनात् स्वनयन्तीत्यर्थः । अङ्गुलीयवलयव्यजनानि अग्रहस्ते यस्याः सा वस्त्रान्तेन शाटिकाञ्चलेन गूढौ गुप्तीकृतौ सकञ्चुकौ यौ तयोः कुचौ कुङ्कुमेन शोणस्य हारस्य भासा परार्द्ध्या परार्द्धमूल्यया काञ्च्या च रेजे ॥ ८ ॥

### गूढार्थदीपिनी

वालव्यजनं चामरम् । वीजयती वाहुलकान्नुमभावः ॥ ७ ॥ सा रुक्मिणी अच्युतस्य समीपे ताभ्यां रेजे । तौ क्वणयन्ती सती । अङ्गुलीयकादीनि अग्रहस्ते हस्ताग्रे यस्याः सा । राजदन्तादित्वात्समासः । वस्त्रान्तेन शाटिकाञ्चलेन गूढयोः कुचयोः कुंकुमेन यः शोणहारः तस्य भासा परार्घ्या अमूल्या परार्द्धमूल्या वा काञ्ची तेषां च रेजे ॥ ८ ॥

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः

व्यजनेनेति यदुक्तं तत्प्रपञ्चयति—वालव्यजनमिति ॥७॥ सा देवी क्वणयती नूपुरकाञ्च्याद्याभरणानि व्यजनचालनवशात् कूजयन्ति अङ्गुलीयवलयव्यजनानि अग्रहस्ते हस्ताग्रे यस्या सा मणिनूपुराभ्यां वस्त्रान्तेन गूढयोः कुचयोः कुङ्कुमेन शोणस्य हारस्य भासा दीप्त्या परार्ध्यया कांच्या च उपाच्युतमच्युतस्य समीपे रेजे ॥ ८ ॥

## श्रीसत्यधर्मकृता श्रीभागवतटिप्पणी

परिजातवनानामामोदस्तेन युक्तो वायुस्तेनोद्यानेनोर्ध्वगमनेन शालत इति तेन शोभिते । अगुरवैरगुरुभवैर्धूपैर्जालरन्ध्रविनिर्गतैः शोभिते ॥ ५ ॥ पयःफेननिभे क्षीरोपरिगफेनसदृशे पर्यङ्के शुभ्रे दान्तिकत्वात् । पर्यङ्के सुखासीनं जगतामीश्वरं पतिं भर्तारमुपतस्थे ॥ १० ॥ सखीकराद्रत्नदण्डं बालव्यजनमादाय तेनेश्वरं वीजयति देव्युपासाञ्चक्रे ॥ ११ ॥ अच्युतमुप मणिनूपुराभ्यां क्वणयती क्वणयन्ती । अङ्गुलीयवलयव्यजनाग्रहस्ता अङ्गुलीयान्यूर्मिकावलयानि करभूषणानि व्यजनानि चाग्रं हस्ते हस्ताग्रे यस्याः सा । वस्त्रान्ते गूढो यो कुचौ तयोर्यत्कुङ्कुमं तेन शोणो हारो मुक्तामाला तस्य भासो यस्याः सा । भासशब्दोऽयम् । भासो भासि स्वमाख्यात इति विश्वः । नितम्बधृतया परार्घ्यानिर्घ्या काञ्ची तया विरेज इत्यन्वय ॥ १२ ॥

## श्रीमद्वल्लभाचार्यकृता सुबोधिनी

अलौकिकोद्बोधकमाह—पारिजातकवृक्षाणां पूर्वप्रेषितपारिजातकल्पवृक्षस्य पोताः सर्वत्र स्थापिता वनप्राया जाताः । ते तस्य गृहस्य परितो वर्तन्त इति गवाक्षादिमार्गेण तदामोदयुक्तो वायुरपि तत्र प्रविष्टः, तेनापि विराजिते । तस्य शैत्यं मान्द्यं च वर्णयितुमाह **उद्यानशालिने** वाप्यः निर्झराश्च सन्ति । तत्रापि उद्यानं शाला यस्य । तेन मन्दतापि समायाति । सहजान्युद्बोधकान्युक्त्वा कृत्रिमान्याह **धूपैरिति** । अगरुजैः अगरुयुक्तनानाविधद्रव्योद्भूतैः । **राजन्निति** विश्वासार्थम् । अन्तः स्थापितः स धूमः, न तु बहिष्ठोऽन्तःप्रविष्ट इति ज्ञापयितुं विशेषणमाह **जालरन्ध्रविनिर्गतैरिति** ॥ ५ ॥ अधः शोभामाह **पयःफेननिभ इति** । पयःफेनस्य निरन्तरमुच्छूनता विचित्रता शुभ्रता च । सूत्रोपनिबद्धं मध्ये परितो दन्तैर्हीरकैश्च निर्मितम्, तेन शुभ्रम्, कशिपुना सुतरामुत्तमम् । एवं सामग्रीं वर्णयित्वा रसदातारं भगवन्तं तत्र स्थितं वर्णयति । तत्र सुखं यथा भवति तथा आसीनम् । लोकवेदशङ्काभावार्थं विशेषणद्वयम् । **जगतामीश्वरं पतिमिति** ॥ ६ ॥ कुलवधूत्वादीश्वरत्वाच्च स्वतःप्रवृत्तिरयुक्तेति निकटे स्वयं स्थितेत्याह **बालव्यजनमादायेति** । चमरीं वालस्य व्यजनम् । रत्नानि दण्डे यस्य । अनेन दासीत्वं स्वस्य प्रकाशितम्, न तु नायिकात्वम् । तथा सति धाष्ट्र्यं भविष्यतीति पूर्वं सख्या हस्ते तत् स्थितम्, तदपि नापकर्षजनकमिति तस्य वर्णनम् । भगवति विलम्बमाने सखीहस्तात् स्वयं गृहीतवती, तेन वीजयती जाता । तदप्युद्बोधकम् । सेवया ईश्वरः परितुष्यतीति तदपि कृतवतीत्याह **उपासांचक्र** इति । सेवनरूपं निकटेऽवस्थानमुपासनम् ॥ ७ ॥ मुख्य आलम्बनविभाव इति तां वर्णयति **सोपाच्युतमिति** । अल्पचलनेन कलनूपुराभ्यां क्वणयती भवति । जघनादिभारात् स्थिरतया स्थातुमशक्ता किञ्चिच्चलनान्नूपुरशब्दं करोति । एतादृशी निर्बन्धेन सेवां कुर्वाणापि रेजे । भगवन्निकटे समागच्छन्तं हस्तं वर्णयति **अङ्गुलीयेति** । अङ्गुलीयानि बलयानि व्यजनाग्र्यं च हस्ते यस्याः । वस्त्रान्तेन गूढयोः कुचयोः कुङ्कुमेन शोणो यो हारः तस्य भासा रेजे । नितम्बधृतया बहुमूल्यकाञ्च्या च । रसोत्पादकस्थाननिरूपणार्थं स्थानद्वयवर्णनम् । हस्तपादौ तु वर्णितौ पूर्वार्धेन । एवं रसस्थानमादिमध्यावसानेषु वर्णितम् । भगवतः सुमुखत्वाभावात् न सापि सुमुखीति मुखमान्तरो भावश्च न वर्णितः ॥ ८ ॥

## श्रीविट्ठलरायात्मजश्रीवल्लभकृतलेखः

पारिजातेत्यत्र । पूर्वप्रेषितेति । आद्येऽध्याये 'सुधर्मां पारिजातं चे'त्यत्रोक्तस्येत्यर्थः । उद्यानं शाला यस्येति मत्वर्थीयविवरणम् । न तु बहुव्रीहिः ।

## श्रीसुबोधिनी-सारः

पारिजातस्य कल्पतरोर्वने आमोदो यस्मिस्तेन वायुना उद्यानं शालते शोभयतीत्येवं शीलेन जालरंध्रेभ्यो विनिर्गतैरगुरुजैर्धूपैर्विराजिते ॥ ५ ॥ पयसो दुग्धस्य फेनवत् निभेऽतिकोमले शुभ्रे पर्यंके कशिपूत्तमे हंसतूलिकायां सुखासीनं जगतामीश्वरं पतिमुपतस्थे उपासांचक्रे ॥ ६ ॥ सख्या दास्याः करात् हस्तात् रत्नमया दंडा यस्य तं वालैर्जातं व्यजनमादाय गृहीत्वा स्वयं तेन वालव्यजनेन वीजयती सती देवी रुक्मिणी सेवनं चकारेश्वरं स्वामिनं हरिम् ॥ ७ ॥ उपाच्युतमच्युतस्य समीपे मणिमयाभ्यां नूपुराभ्यां मंजीराभ्यां क्वणयती शब्दयंती अंगुलीयानि वलयं व्यजनमग्रहस्ते व्यजनाग्रं वा हस्ते यस्याः सा वस्त्रस्योत्तरीयस्यांतेन गूढौ आवृतौ कुचौ तयोः कुंकुमं तेन शोणो रक्तो हारस्तस्य भासा दीप्त्या नितंबे धृतयापरार्घ्ययाऽमूल्यया कांच्या सा रुक्मिणी रेजे ॥ ८ ॥

## गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

उद्यानशालिना उद्यानशोभिना पारिजातवनामोदयुक्तेन वायुना जालरन्ध्रविनिर्गच्छद्भिरन्तस्थैरगुरुजैर्धूपैश्च विराजिते । 'ईदृशं गृहं राज्ञामपि दुर्लभम्' इति सूचयन् सम्बोधयति—राजन्निति ॥ ५-६ ॥ तत्सेवामेव अभिनयेन दर्शयति—रत्नानि दण्डे यस्य तद्वालव्यजनं चामरं सख्याः करात् स्वयमादाय गृहीत्वा तेन चामरेण ईश्वरं जगत्पालकं भर्तारं वीजयती देवी अतिदीप्यमाना रुक्मिणी उपासाञ्चक्रे । तत्समीपे स्थिता अङ्गुलीयवलयव्यजनानि अग्रहस्ते हस्ताग्रे यस्याः सा, अत एव क्वणयती व्यजनचालनवेगेन सर्वाङ्गप्रकम्पनात् भूषणध्वनिमुत्पादयन्ती जातेत्यर्थः ॥ ७ ॥ उपाच्युतं अच्युतसमीपे स्थिता सा रुक्मिणी

मणिखचितनूपुराभ्यां वस्त्रान्तेन शाटिकाञ्चलेन गूढयोः गुप्तीकृतयोः कुचयोः कुङ्कुमेन शोणो यो मुक्ताहारस्तस्य भासा दीप्त्या, तथा नितम्बयोः धृतया परार्ध्यया अनर्घ्यया काञ्च्या च रेजे इत्यन्वयः ॥ ८ ॥

### अन्वितार्थप्रकाशिका

तेन उद्यन्मात्रता व्यज्यते । तेन प्रदोषान्त इयं क्रीडा ज्ञेया । उद्यानशालिना उद्यानशोभिना पारिजातवनामोदयुक्तेन वायुना सर्वासां पट्टस्त्रीणां गृहेषु पूर्वमिन्द्रेण गौणपारिजातानां प्रस्थापनात् । "सुधर्मां पारिजातं च महेन्द्रः प्राहिणोद्धरेः ।" इति प्रागुक्तेः । मुख्यः पारिजातस्त्वेक एव स एवेन्द्रं जित्वाऽऽनीतः जालरन्ध्रेभ्यो विनिर्गच्छद्भिरन्नस्थैरगुरुजैर्धूपैश्च विराजिते तस्मिन्नुत्तमत्वेन प्रसिद्धेऽन्तर्गृहे गृहमध्ये यः पर्यङ्कः तदुपरि स्थापिते पयःफेनवन्मृदुले शुभ्रे धवले कशिपूत्तमे उत्तमशय्यायां सुखं यथा स्यात्तथासीनं जगतामीश्वरं पतिमुपतस्थे सेवितवती ॥ ३-६ ॥ तदेवाह—बालेति ॥ रत्नानि दण्डे यस्य तद्वाल-व्यजनं चामरं सख्याः करात् स्वयमादाय गृहीत्वा तेन चामरेण ईश्वरं जगत्पालकं भर्त्तारं बीजयती । नुमभाव आर्षः । देवी अतिदीप्यमाना रुक्मिणी उपासांचक्रे ॥ ७ ॥ सेति ॥ उपाच्युतम् अच्युतसमीपे स्थिता अङ्गुलीयवलयव्यजनानि अग्रहस्ते हस्ताग्रे यस्याः सा अत एव क्वणयती व्यजनचालनवेगेन सर्वाङ्गप्रकम्पनात् भूषणध्वनिमुत्पादयन्ती । नुमभाव आर्षः । मणिनूपुराभ्यां क्वणयती इति वा । सा रुक्मिणी मणिखचितनूपुराभ्यां वस्त्रान्तेन शाटिकाञ्चलेन गूढयोः गुप्तीकृतयोः कुचयोः कुङ्कुमेन शोणो यो मुक्ताहारस्तस्य भासा दीप्त्या तथा नितम्बयोर्धृतया परार्घ्यया अमूल्यया काञ्च्या च रेजे ॥ ८ ॥

### श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्

आगरवैः अगुरुसंभवैः प्रागिंद्रप्रेषितसामान्यपारिजातवृक्षाणां वने सत्यपि इन्द्रोद्यानादानीतो यः पारिजातः सतूत्त-मोत्तमपारिजातो ज्ञेयः ॥ ५ ॥ पर्यंके पर्य्यंकस्थे कशिपूत्तमे श्रेष्ठतूलिकायां सुखासीनं उपतस्थे सिषेवे ॥ ६ ॥ वालव्यजनं चामरं ॥ ७ ॥ उपाच्युतं अच्युतस्य समियेसामणिमयनूपुराभ्यां वस्त्रांतेन गूढयोर्गुप्तयोः कुचयोः कुंकमेन रक्तहाराणां भासा कांत्या च नितंबधृतया परार्घ्यकांच्या अमूल्यकटिमेखलया च रेजे सा च कथंभूता क्वणयती नूपुरादीन् शब्दयंती अंगुलीयादीनि संति अग्रहस्ते हस्ताग्रे यस्याः सा अंगुलायं अंगुल्याभरणं ॥ ८ ॥

### भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

पारिजातेति ॥ उद्यानशालिना पारिजातवनामोदवायुना पारिजातवृन्दीयामोदयुक्तेन वायुनेत्यर्थः । हे राजन्, जाल-रन्ध्रविनिर्गतैः अगुरुजैः धूपैः, विराजिते ॥ ५ ॥ एवं गृहान्तर्भागं संवर्ण्याथ तल्पं वर्णयति ॥ पयः फेननिभ इति ॥ पयःफेननिभे दुग्धफेनवन्मृदुले, शुभ्रे श्वेतवर्णे च, पर्यङ्के यत् कशिपूत्तमं श्रेष्ठास्तरणं तस्मिन्, सुखासीनं जगतां ईश्वरं, पति स्वस्वामिनं श्रीकृष्णं, उपतस्थे असेवत । रुक्मिणीति शेषः ॥ ६ ॥ वालेति ॥ रत्नानि दण्डे यस्य तत्, रत्ननिचितदण्डमित्यर्थः । वालव्यजनं चामरं, सखीकरात् आदाय, तेन चामरेण, वीजयती देवी रुक्मिणी, ईश्वरं श्रीकृष्णं, उपासांचक्रे ॥ ७ ॥ तादात्विकीं तामनुवर्णयति ॥ सेति ॥ सा रुक्मिणी, उपाच्युतमच्युतसमीपे, मणिनूपुराभ्यां निचितमणिभ्यां नूपुराभ्यां क्वणयती ध्वनिमुत्पा-दयन्ती, अङ्गुलीयानि ऊर्मिकाः वलयानि कटककङ्कणानि व्यजनं च अग्रहस्ते हस्ताग्रे यस्यास्तथाभूता सती, वस्त्रान्तेन गूढौ स्थगितौ यौ कुचौ तयोः कुङ्कुमेन शोणो हारो मुक्ताहारस्तस्य भासा दीप्त्या, नितम्बधृतया, परार्ध्यकाञ्च्या अनर्घ्यकटिमेखलया च, रेजे ॥ ८ ॥

### कृष्णप्रिया

राजमहल के प्राङ्गण के उद्यान में पारिजात तरुवर राजि के कुसुमों की सुगन्धमयी वायु चारों ओर मन्द-मन्द बह रही थी । भवन के झरोखों की जालियों में से अगर धूप का धूआँ बाहर निकल रहा था ॥ ५ ॥ राजमहल की सुषमा मनोमोद दे रही थी । रनिवास में शयन खंडों में दूध के फेन के समान श्वेत-कोमल-बिछौनों से समाच्छादित रमणीय पर्यङ्क पर भगवान् श्रीकृष्ण आनन्द से विराजमान थे और श्रीरुक्मिणी देवीजी जगत्पति को निजप्रियतम पतिस्वरूप में प्राप्त करके बड़े चाव से सेवा कर रही थी ॥ ६ ॥ मणिमण्डित डाँडिओं की देदीप्यमान चँवर को सखी के हस्त से स्नेह से लेकर देवी रुक्मिणी जो स्वयं अतिस्नेह एवं आदर से भगवान् के श्रीचरणों की सेवा कर रहे थी ॥ ७ ॥ रुक्मिणीजी साक्षात् महालक्ष्मी जी ही हैं। देवी जी के करकमलों में मणिमण्डित अँगूठियाँ वलय और चँवर अति सुशोभित लगते थे । चरण सरोज में धारण किये हुए रत्नमण्डित पायल रुन झुन रुन झुन कर रहे थे । कंचुकी और वक्षःस्थल के वस्त्र से ढके हुए स्तनों की केशर की लालिमा मुक्तामणि की श्वेतमाला रक्तरङ्ग की दीख रही थी और चमक रही थी । नितम्ब तट पर विराजती महामूली मणि मेखला की लड़ियाँ लटक रही थी । इस प्रकार निरंतर समलङ्कृत श्रीरुक्मिणी जी प्रियपति श्रीकृष्ण के निकट में रह कर ही सेवा करती थी ॥ ८ ॥

तां [1]रूपिणीं श्रियमनन्यगतिं [2]च दृष्ट्वा या लीलया धृततनोरनुरूपरूपा।
प्रीतः स्मयन्नलककुण्डलनिष्ककण्ठवक्त्रोल्लसत्स्मितसुधां हरिराबभाषे॥ ९॥

श्रीभगवानुवाच

राजपुत्रीप्सिता भूपैर्लोकपालविभूतिभिः। महानुभावैः श्रीमद्भिः रूपौदार्यबलोर्जितैः॥ १०॥
तान् प्राप्तानर्थिनो[3] हित्वा चैद्यादीन् स्मरदुर्मदान्। दत्ता भ्रात्रा स्वपित्रा च कस्मान्नो[4] ववृषेऽसमान्॥११॥
राजभ्यो बिभ्यतः सुभ्रूः समुद्रं शरणं गतान्। बलवद्भिः कृतद्वेषान् प्रायस्त्यक्तनृपासनान्॥ १२॥

### कर्दमक्षमा

अन्वयः—या, लीलया, धृततनोः, अनुरूपरूपा, तां, रूपिणीं, अनन्यगतिं, श्रियं, अलककुण्डलनिष्ककण्ठ, वक्त्रोल्लसत्स्मितसुधां, प्रीतः, स्मयन्, हरिः, आबभाषे॥ ९॥ श्रीभगवानुवाच—हे, राजपुत्रि! लोकपालविभूतिभिः, महानुभावैः, रूपौदार्यबलोर्जितैः, श्रीमद्भिः, भूपैः, ईप्सिता (अभूः इति शेषः)॥ १०॥ तान्, प्राप्तान्, अर्थिनः, चैद्यादीन्, स्मरदुर्मदान्, भ्रात्रा, स्वपित्रा, च, त्वं, दत्ता, आसीः, तान्, हित्वा, असमान् नः, कस्मात्, ववृषे॥ ११॥ हे सुभ्रू! राजभ्यो, बिभ्यतः, समुद्रं, शरणं, गतान्, बलवद्भिः, कृतद्वेषान्, प्रायः, त्यक्तनृपासनान्, अस्मान्, कथं, ववृषे, इति, पूर्वेणान्वयः॥ १२॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

तां निरीक्ष्य प्रीतस्सन्स्मयमानो हरिराबभाषे। कथंभूताम्। या लीलया धृतनरतनोस्तस्यानुरूपरूपा अनुरूपं रूपं यस्यास्ताम्। यथोक्तं श्रीपराशरेण—"देवत्वे देवदेहेयं मनुष्यत्वे च मानुषी॥ विष्णोर्देहानुरूपां वै करोत्येषाऽऽत्मनस्तनुम्" इति। किं चालकैः कुंडलाभ्यां निष्केण पदकेनालंकृतकंठेन च चतुर्दिक्षु शोभिते वक्त्रे उल्लसंती स्मितसुधा यस्यास्ताम्॥ ९॥ सर्वगुणयुक्ताऽपि तव बुद्धिर्मन्देत्याशयेनाह राजपुत्रीत्याद्येकादशभिः। हे राजपुत्रि लोकपालानामिव विभूतिरैश्वर्यं येषां तैस्तथा महाप्रभावैराढ्यैः रूपादिभिरूर्जितैश्च पूर्वमीप्सिताऽसि॥ १०॥ तान्हित्वा नोऽस्मानसमानान्कस्माद्ववृषे वृतवती त्वम्॥ ११॥ प्रायशो राजभ्यो जरासंधादिभ्यो बिभ्यतो भयं प्राप्नुवतः॥ १२॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

तां रुक्मिणीम्। अनुरूपं योग्यम्। देवत्वे देवभावे। इयं लक्ष्मीः। पुनः शोभाधिक्यमाह—किञ्चेति। अलकादीनां चतुष्कत्वाच्चतुर्दिक्ष्विति ज्ञेयम्॥ तामिति—रूपिणीं वैकुंठलोकादौ लक्ष्मीरूपादेरप्यधिकरूपशालिनीमित्यर्थः। प्रशंसायां मत्वर्थीयः। तत्र हेतुः—येति। 'विस्मापनं स्वस्य च–' इत्यादिवचनप्रामाण्येन तेनाप्यधिकसौंदर्यप्रकटनादिति भावः। प्रीत इति भावविशेषं द्योतयति। अत एव नर्मविशेषस्य वक्तव्यत्वात्। स्मयन्स्मयमानः। सर्वप्रकारेण मदनुरूपाया अप्यस्याः स्वस्यानुरूपत्वं युक्त्या प्रदर्श्य परिहसामि, तत इयं किं वदेत्तदहमद्य श्रृणवानीति भावः अनन्यगतिमपि ताम् आ सम्यग्वाग्भंग्यादिना बभाषे। यतो हरिः नर्मादिना प्रियजनानां धैर्यादिहर इति भावः। यद्वा-आ इति पृथक्पदं खेदे। तां प्रति तादृगुक्तेरयोग्यत्वात्। तच्च वक्ष्यत्येव—अतदर्हामिति॥ ९॥ अधिक्षिपति—सर्वगुणेत्यादिना। न हि राजपुत्रं विना राज्यपुत्र्यन्ययोग्या भवतीति सम्बुद्ध्याशयः॥ अत्रायं भगवतोऽग्रिमवाक्प्रवृत्त्या भावोधिगम्यते—एकेनैव द्युतरुकुसुमेनास्यै दत्तेन सत्यभामा तादृशमानकोपरसवर्षिण्यभूद्—यथा मया पादपतनादिभिरप्युपशमयितुमशक्या, दत्तेन तद्वृक्षेणैव प्रसादिता, इयं रुक्मिणी तु तद्वृक्षदानदर्शनेनापि न कोपं व्यंजयामास, तदस्या असंभावितमानायाः परमगंभीरायाः प्रियंवदाया रोषोक्तिमाध्वीकं कथमहं लभेयेति विमृश्य खल्वियमुक्तिरेवास्याः कोपमुत्पादयिष्यतीति निरचैषीद्भगवानिति केचिदाहुः। अन्ये तु—नायकेन प्रेमवृक्षस्योन्मूलने कृते सति प्रेमवती नायिका कीदृशी भवेदिति दिदृक्षैव भगवत आसीदिति तत्वमित्याहुः। प्रिये त्वमात्मनः परमबुद्धिमत्त्वं मन्यसे, वस्तुतस्तु संपूर्णसाद्‌गुणवत्या अपि स्वार्थानभिज्ञायास्तव बुद्धिरेवैकात्यल्पीयसी भवति, कथमिति चेच्छ्रुयतामित्येकादशभिराह—हे राजपुत्रि इति। त्वं राज्ञः पुत्री, अहं तु वसुदेवस्याकिंचनस्य पुत्रोऽतः कस्मादस्मान् मां ववृषे वृतवत्यसि। सविशेषणस्य बहुत्वमार्षम्। न च गत्यंतराभावात्त्वामहं वृतवत्यस्मीति वाच्यम्, भूपैरीप्सितासि। न च ते भूपा मत्तो विभूतिरूपगुणादिभिर्न्यूना इत्याह—लोकपालविभूतिभिरिति, श्रीमद्भिरिति, न तु रन्तिदेवाद्यैरिव धनसमृद्धिभोगरहितैरित्यर्थः॥ १०॥

१. रुक्मिणीं—विज। २. निरीक्ष्य—श्रीधर. वंशी. जीव. वीर. विज. विश्व. शुकः। ३. भूयान्—वीर.। ४. नववृषे समान्—वीर.; दृदेववृषोपमान्—विज.।

अर्थिनस्त्वदिच्छावतः। स्मरदुर्मदान् युवानः। अस्मान् सर्वथा त्वत्सादृश्यरहितान्। दत्ता वाचा दत्ता॥ न च ते तदानीं दूरे स्थिता इत्याह–प्राप्तानिति। न च बंधूनां तत्रासम्मितिरित्याह–भ्रात्रा पित्रापि वाग्दत्तैवेत्यर्थः। स्वपित्रेत्यत्र स्वशब्देन कन्यायाः पित्रधीनतोक्ता॥ ११॥ न केवलं त्वदसमाः किन्तु नृपांतरसमा अपि नेत्याह–किञ्चेति। प्रायः पदेन न सर्वथेत्यर्थो बोध्यः, 'वज्रं तत्राभ्यषेचयत्' इत्याद्युक्तेः॥ किञ्च–क्षत्रियजातेर्मम भीरुत्वलक्षणं महादोषमपि त्वं नाद्राक्षीरित्याह–राजभ्य इति। न च भीरुत्वेऽपि मम शिष्टत्वमस्तीत्याह–बलवद्भिरिति। प्रायोग्रहणाद्द्वित्रैरेवार्जुनादिभिर्मैत्र्यं न तु बहुभिः। किञ्च–यादवत्वाम्नायतो राजत्वाभावेऽपि कंसवधात्प्राप्तं यद्राजत्वं तदप्युग्रसेनाय दत्त्वा त्यक्तमित्याह–त्यक्तेति॥ १२॥

### श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी

तामिति। रूपिणीं वैकुण्ठलोकादौ लक्ष्मीरूपादेरप्यधिकरूपशालिनीमित्यर्थः। प्रशंसायां मत्वर्थीयः तत्र हेतुः येति विस्मापनं स्वस्य चेत्यादिवचनप्रामाण्येन तेनाप्यधिकसौन्दर्य्यप्रकटनादिति भावः। अत्र। ( लीलयेति कर्तृ तृतीयान्तं ) प्रीत इति भावविशेषं द्योतयति अत एव नर्मविशेषस्य वक्तव्यत्वात् स्मयन् स्मयमानः अनन्यगतिमपि ताम् आ सम्यक् वाग्भङ्ग्यादिना बभाषे यतो हरिः नर्मादिना प्रियजनानान्धैर्य्यादिहर इति भावः। यद्वा आ इति पृथक् पदं खेदे तां प्रति तादृगुक्तेरयोग्यत्वात्तच्च वक्ष्यत्येव अतदर्हामिति॥ ९॥ तत्र स्ववरणे कारणमज्ञातमिव पृच्छन्नाह—राजेति त्रिकेण। हे राजपुत्रीति सर्वगुणरूपादिसम्पत्तिः सूचिता अत एव श्रीहरिवंशप्रोक्ते प्राचीने स्वयम्वरोद्यमे भूपैरीप्सितासि महानुभावैर्महाप्रभावैः श्रीमद्भिराढ्यैः यद्वा श्रीः सम्पत् शोभा च तद्वद्भिः॥ १०॥ प्राप्तान् स्वयमेव गृहागतान् तत्र चार्थिनः त्वां याचमानान् तत्रापि स्मरेण दुर्मदान् अतिमत्तान् अतिपरिहासोऽयं च अपि तत्रापि भ्रात्रा स्वपित्रा च दत्ता चैद्यायेति शेषः। स्वशब्देन कन्यायाः पित्रधीनतोक्ता एवं यथोत्तरं भूपानां त्यागायोग्यता च असमान् आत्मनस्तेषां वासदृशान् न इति बहुत्वम् "अस्मदाद्वेयाश्चे" ( १·२·५१ ) इति वचनात् यद्वा नः मदादीन् यादवान् ववृपे पत्यादिरूपेणाङ्गीचकर्थ परोक्षनिर्द्देशस्तथैव वृतत्वात् अन्यथाऽहमपि न्यावारयिष्यमिति भावः॥ ११॥ असमत्वे हेतुः, राजभ्य इति। तथाप्यसमर्थस्वदुरन्तकारितेति न्यायेन बलवद्भिस्तैः सह तव हरणादिना कृतोऽनुवर्त्तितो द्वेषो यैस्तान् किञ्च ते भूपाः, वयं तु नेत्याह–त्यक्तेति। प्राय इति ( हरिवंशप्रोक्तस्य ) स्वस्य राजेन्द्राभिषेकस्य क्षणमात्रस्वीकाराभिप्रायेण उग्रसेनादीनाञ्च तदङ्गीकारो बलादिवेति च हे सुभ्रूः इति तच्छ्रवणात्तस्या भ्रूकौटिल्यदर्शनेन तादृशस्फूर्त्तेः स्तुतिपूर्वकमेवोपालम्भस्य प्रारब्धत्वाच्च एवमुत्तरत्रापि॥ १२॥

### श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी

तादृश्यास्तस्याः सन्दर्शनेन जातभावविशेषाच्छ्रीभगवानपि कौतुकेन वाक्क्रीडाविशेषं चकारेत्याह—तामिति। रूपिणीं वैकुण्ठलोकादौ लक्ष्मीरूपादेरप्यभ्यधिकसौन्दर्य्यशालिनीमित्यर्थः। तत्र हेतुः—येति। ( भा० ३।२।१२ ) 'विस्मापनं स्वस्य च' इत्यादिवचनप्रामाण्येन पूर्व्वतस्तेनाप्यधिकसौन्दर्य्यप्रकटनादिति भावः। प्रीत इति भावविशेषं द्योतयति। किंवा नर्म्मविशेषस्य वक्तव्यत्वात् स्मयन् स्मयमानः; अनन्यगतिमपि ताम्, 'आ' सम्यग् वाग्भंग्यादिनाबभाषे, यतो हरिर्नर्म्मादिना प्रियजनानां धैर्य्यादिहर इति भावः। यद्वा, 'आ' इति पृथक्पदं खेदे, तां प्रति तादृगुक्तेरयोग्यत्वात्, तच्च वक्ष्यत्येव ( २८ श० श्लो० ) 'अतदर्हाम्' इति॥ ९॥ हे राजपुत्रीति सर्व्वगुणरूपादिसम्पत्तिः सूचिता। अतएव भूपैरीप्सितासि; यद्वा, आत्मतुल्यमेव वरीतुमर्हसीति भावः। श्रीः सम्पत् शोभा वा, तद्वद्भिः॥ १०॥ प्राप्तान् स्वयमेव गृहागतान्, तत्रार्थिनः, त्वां याचमानान्, तत्रापि स्मरेण दुर्म्मदानत्यर्थं मत्तान्, च अपि, तत्रापि भ्रात्रा स्वपित्रापि दत्ता। स्व-शब्देन कन्यायाः पित्रधीनतोक्ता। एवं यथोत्तरं भूपानां त्यागायोग्यानाञ्चासमानयोग्यान् किंवा आत्मनोऽसदृशान्; यद्वा, भूपैः सहासमान्, इत्यात्मनो लोकपालविभूत्यादिराहित्यमुक्तम्। अतस्तत्तद्वैपरीत्यमस्य व्याख्येयम्। 'नः' इति बहुत्वेन श्रीबलदेवादीन् सर्व्वानेव यादवान् संगृह्णाति। न च मन्तव्यम्, यादवानां मद्बन्धूनां मध्ये कोऽपि तादृशोऽस्ति, यत्सम्बन्धादहं वरीतुं योग्योऽस्मीति भावः॥११॥ किञ्च, भयादिदोषादपि वरणयोग्या न भवाम इत्याह—राजभ्य इति। तेभ्यो भयादेव समुद्रमाश्रितान्। कुतस्तेभ्यो भयमित्यपेक्षायामाह—बलवद्भिस्तैः सहेति। तैः कृतो द्वेषो येष्वित्ति वाक्येऽपि स एवार्थः। ननु भवन्तोऽपि बलिनः? तत्राह—त्यक्तेति। राजत्वाभावेन सैन्याद्यभावात्; यद्वा, राजपरिच्छदाभावेनापि किंवा राजपुत्री राजपुत्रस्यैव योग्येति न वरणयोग्या इत्याह—त्यक्तेति। प्राय इति कदाचिन्महाराजपरिच्छदाद्यंगीकारात्। एवमस्य सर्व्वत्रैप्यन्वयः। सुभ्रु! हे सुन्दरीति सौन्दर्य्यमेव तवास्ति, न तु कोऽपि विचार इति भावः। एवमग्रेऽन्यत्रापि॥ १२॥

### श्रीमद्वीरराघवाचार्यकृता भागवतचन्द्रचन्द्रिका

तामिति। तां रुक्मिणीं निरीक्ष्य प्रीतो हरिः स्मयन् ईषद्धसन् आबभाषे उवाचेति सम्बन्धः। कथम्भूताम्? रूपिणीं मनुष्यरूपधारिणीं श्रियं महालक्ष्मीं न विद्यतेऽन्यः पतिः प्रत्यवतारं यस्यास्ताम् अनन्यगतिमिति पाठान्तरं तदा न विद्यतेऽन्या

गतिः प्राप्तिर्यस्यास्ताम् अनन्यप्राप्यामित्यर्थः। धृततनोः उपात्तमनुष्यरूपस्य हरेर्या अनुरूपा ताम् अलकैः कुण्डलाभ्यां निष्केण पदकाख्यभूषणेनालङ्कृतेन कण्ठेन चतुर्दिक्षु शोभिते वक्त्रे उल्लसन्ती स्मितमेव सुधा यस्यास्तां यद्वा अलककुण्डलनिष्काणि यथास्थानं कण्ठवक्त्रयोर्यस्यास्ताम् अनेनानपायिनोः श्रीश्रियःपत्योर्वक्ष्यमाणो विवादः केवलं नृलोकविडम्बनायेति सूच्यते ॥ ९ ॥ भाषणमेवाह—राजपुत्रीत्यादिभिरेकादशभिः। तात्पर्यतस्तामुपचरन्तीमभिनन्दयन्नेव शाब्दवृत्त्या कोपयन्निव कूटवचांसि प्रयुङ्क्ते हे राजपुत्रि! लोकपालानामिव विभूतिरैश्वर्य्यं येषां महान् प्रभावो येषां भोग्यादिसमृद्धिमद्भिर्लोकपालविभूतिभिरित्यस्यैव प्रपञ्चः श्रीमद्भिरपि रूपादिभिरुच्छ्रितैरुत्कृष्टैर्भूपैस्त्वमीप्सिता रूपं सौन्दर्यमौदार्य्यं वदान्यत्वं बलं शत्रुपरिभवसामर्थ्यम् इत्थं सर्वं वस्तुगत्या आत्मनिष्ठमित्यभिप्रेतं शब्दतस्त्वपरित्याज्यत्वे तात्पर्य्यम् ॥१०॥ तानिति। तानेवम्विधानर्थिनो याचमानान् स्मरेण कामेन दुष्टो मदो येषां तान् चैद्यादीन् त्वं पित्रा भ्रात्रा च दत्ता सती समानननुरूपान् कस्माद्धेतोर्न ववृषे न वृत्तवत्यसि नो ववृषे इति पाठे अर्थिनो हित्वेति पाठ्यं तान् हित्वा नोऽस्मान् कस्माद्धेतोर्वृतवत्यसीत्यर्थः। अतस्त्वं मन्देति भावः। तत्र हेतुं वदन्नात्मानं विशिनष्टि असमानिति। अननुरूपानित्यर्थः। बहुवचनं कोपापादनार्थं अस्मासु त्वदनुरूपः कोऽधुना वा वरणीयोऽस्तीति "न तत्समश्चाभ्यधिकश्च दृश्यते" इति श्रुत्युक्तविधया सर्वोत्तमं मां कस्माद्धेतोर्वृतवत्यसि तं हेतुम् आवयोः लक्ष्मीनारायणयोरनपायित्वरूपं त्वं जानास्येवेति हार्द्रो भावः ॥ ११ ॥ असमत्वमेव प्रपञ्चयितुं विशिनष्टि-राजभ्य इति। हे सुभ्रु! राजभ्यो जरासन्धादिभ्यो बिभ्यतः भीतानत एव समुद्रं शरणं गृहं प्राप्तान् समुद्रान्तर्द्वीपमानसस्थानत्वेनाश्रितानित्यर्थः। हार्द्रभावपक्षे तु अबिभ्यत इति छेदः ममाभीतत्वं त्वदानयनकाले किं त्वया न दृष्टमिति भावः। समुद्रं शरणं गतानित्यस्यायं भावः त्वत्पितृक्षीरसागरगतसमुद्रत्वधर्मयोगित्वमात्रप्रयुक्ते प्रेमातिशयेन लवणार्णवान्तर्द्वीपमाश्रितानां किं पुनः साक्षात्त्वत्पितरि दुग्धार्णवे साक्षाच्छ्वशुरेऽस्माकं प्रीतिः किन्तराम् साक्षात्त्वयीति। बलवद्भिरिति बलशालिभिर्जरासन्धादिभिः सह कृत उत्पादितो द्वेषो यैस्तानिति शाब्दोर्थः। पक्षान्तरे तु बलवद्भिरिति निन्दायां मतुप् "भूमनिन्दाप्रशंसासु" इत्यनुशासनात् बलं धारणसामर्थ्यं तथा च बलवद्भिः निन्दितबलैः इन्द्रियाण्यात्मवश्यतया धर्त्तुमसमर्थैरजितेन्द्रियैरिति यावत् कृतः द्वेषो येषु तान् अजितेन्द्रियाणामेकमातृप्रसूतानामपि त्वद्भ्रातॄणां मयि द्वेषस्तव तु जितेन्द्रियाया अत एव मद्याथात्म्याभिज्ञायास्त्वयि ममेव मयि प्रीतिरभ्यधिकैवेति प्रकृतोपचारप्रशंसायां तात्पर्य्यं प्रायः प्रायशः त्यक्तं नृपासनं यैस्तान् शापवशात् सिंहासनानर्हवंशप्रभवत्वादिति भावः। पक्षान्तरे तूभयविभूतिनायकस्य परमेष्ठिनो मम केवलप्राकृतजनाधिष्ठेयनृपासनस्यायोग्यत्वादिति भावः। मम भर्त्ता नारायणश्चेदयमस्पृष्टशापदोषो नृपासनमधितिष्ठेदेवेत्यनारायणत्वसम्भावनानिरासायेदमुक्तं नृपासनपरित्यागस्याभिनयमात्रत्वाच्चेत्यपि तात्पर्य्यम् ॥ १२ ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

हरिः नीलनीरदकान्तिः श्रीकृष्णः या लीलया धृततनोर्भगवतः अनुरूपरूपा अनुकूलसौन्दर्या अनुगुणवृत्ता वा तां रुक्मिणीं आबभाष इत्यन्वयः निष्कङ्ग्रैवेयकं अलककुण्डलाभ्यां निष्कालङ्कृतकण्ठेन च युक्तवक्त्रे उल्लसत् स्मितमेव सुधा यस्याः सा तथा ताम् ॥ ९ ॥ ईप्सिता प्रार्थिता श्रीमद्भिः श्रीकटाक्षविषयैर्हे राजपुत्रि ॥ १० ॥ वरणे गुणानाह—प्राप्तानिति। वाचा दत्ता देववृषोपमान् देव श्रेष्ठसमानान् ॥ ११ ॥ स्ववरणाङ्गीकारे दोषानाह—राजभ्य इति। अर्थीत्यादिगुणोपेतान् नृपान्हित्वा राजभ्य इत्यादिदोषयुक्तानस्मान् कस्मात्प्राप्तेत्यन्वयः ॥ १२ ॥

### श्रीमज्जीवगोस्वामिकृतः बृहत्क्रमसन्दर्भः

तां रूपिणीमित्यादि। रूपिणीं रूपवतीं श्रियम्, अस्मिन्नेव शरीरे श्रीरूपवती बभूवेत्यर्थः। एवम्भूतां तां निरीक्ष्य हरिराबभाषे इत्यन्वयः। तां कामित्याह—या लीलया लीलादेव्या धृतालिङ्गिता तनुर्यस्य तथाभूतस्य हरेरनुरूपरूपया अनुरूपं यस्याः। अथवा, या अनुरूपरूपा अर्थात् हरेरेव, तनोः श्रियं कान्ति लीलया सह, रूपिणोऽधृततनुकान्तिस्तनुलीलारूपवती यस्या इत्यर्थः। तां हरिराबभाष इत्यन्वयः। श्रियं कीदृशीम्? अनन्यगतिम्, न विद्यतेऽन्यत्र गतिर्यस्याः। तत्रैव सर्वतोभावेन वर्त्तमानामित्यर्थः। स्मयन्निति सोपहासम्, प्रीत इति सौन्दर्यदर्शनेन ॥ ९ ॥ राजपुत्रीत्यादि। राजपुत्रीति सोत्प्रासपरम् ॥११-१६॥

### श्रीनाथचक्रवर्तिपादविरचिता चैतन्यमतमञ्जूषा

तां रूपिणीं श्रियमित्यादि। रूपवतीं श्रियमस्मिन्नेव शरीरे श्रीरूपवतीं बभूवेत्यर्थः, अथवा तां निरीक्ष्य तां कामित्यपेक्षायामाह—या तनोः श्रियं कान्तं रूपवतीं लीलया सह अधृत धृतवतीतामित्यर्थः श्रियं कीदृशीम्? अनन्यगतिम्—न विद्यते अन्या गतिर्यस्याः, अतोऽनुरूपं रूपं यस्याः स्मयन्निति सोपहासम् प्रीत इति सौंदर्य दर्शनेन ॥ ९ ॥ राजपुत्रीति सोत्प्रासपरम् ॥ ११-१६ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

तां निरीक्ष्य हरिराबभाषे इत्यन्वयः रूपिणीं श्रियं वैकुण्ठस्थायाः श्रियः सकाशादपि बहुसौन्दर्य्यवतीं भूम्नि मत्वर्थीयः तत्र हेतुः येति—

"देवत्वे देवरूपा सा मानुषत्वे च मानुषी। विष्णोर्देहानुरूपां वै करोत्येषात्मनस्तनुम्॥"

इतिपराशरोक्तेः वैकुण्ठनाथादप्यधिकसौन्दर्य्यवतः कृष्णस्य कान्ता सापि तत्रत्यश्रियोप्यधिकसौन्दर्य्यवतीत्यर्थः। स्मयन् स्मयमान इति सर्वप्रकारेण मदनुरूपाया अप्यस्याः स्वस्या अननुरूपत्वं युक्त्या प्रदर्श्य परिहसामि तत इयं किं वदेत्तदहमद्य शृण्वानीतिभावः। अलकैः कुण्डलाभ्यां निष्कालङ्कृतकण्ठेन च चतुर्दिक्षु शोभिते वक्त्रे उल्लसन्ती स्मितसुधा यस्यास्ताम्॥ ९॥ अत्रायं भगवतोऽग्रिमवाक्यदृष्ट्या भावोऽधिगम्यते, एकेनैव द्युतरुकुसुमेनास्यै दत्तेन सत्यभामा तादृशमानकोपोक्तिरसर्वाषिण्यभूत् यथा मया पादपतनादिभिरप्युपशमयितुमशक्या दत्तेन तद्वृक्षेणैव प्रसादिता इयं रुक्मिणी तु तद्वृक्षदानदर्शनेनापि न कोपं व्यञ्जयामास तदस्या असम्भावितमानायाः परमगम्भीरायाः प्रियम्वदायाः रोषोक्तिमाध्वीकं कथमहं लभेयेति विमृश्य खल्वेव मुक्तिरेवास्याः कोपमुत्पादयिष्यतीति निरचैषीत् भगवानिति केचिदाहुरन्ये तु नायकेन प्रेमवृक्षस्योन्मूलने कृते सति प्रेमवती नायिका कीदृशी भवेदिति दिदृक्षैव भगवत आसीदिति तत्त्वमित्याहुः ततश्च प्रिये त्वमात्मनः; परमवुद्धिमत्त्वं मन्यसे वस्तुतस्तु सम्पूर्णसर्वसाद्गुण्यवतया अपि स्वार्थानभिज्ञायास्तव बुद्धिरेवैकात्यल्पीयसी भवति कथमिति चेत् श्रूयतामित्याहैकादशभिः। हे राजपुत्रि! त्वं राज्ञः पुत्री अहन्तु वसुदेवस्याकिञ्चनस्य पुत्रोऽतः कस्मादस्मान्नो ववृषे वृतवत्यसि सविशेषणस्य बहुत्वमार्षं नच गत्यन्तराभावात्त्वामहं वृतवत्यस्मीति वाच्यं भूपैरीप्सितापि नच ते भूपा मत्तो विभूतिरूपगुणादिभिर्न्यूना इत्याह—लोकपालेत्यादि। श्रीमद्भिरिति नतु रन्तिदेवाद्यैरिव धनसमृद्धिभोगसमृद्धिरहितैरित्यर्थः। न च ते तदानीं दूरे स्थिता इत्याह, प्राप्तानिति। न च बन्धूनां तथासम्मतिरित्याह भ्रात्रा पित्रापि दत्ता वाग्दत्तैवेत्यर्थः। किञ्च क्षत्रियजातेर्मम भीरुत्वलक्षणम् महादोषमपि त्वं नाद्राक्षीरित्याह राजभ्य इति नच भीतत्वेपि मम शिष्टत्वमस्तीत्याह वलवद्भिरिति प्राय ग्रहणात् द्वित्रैरेवार्जुनादिभिर्मैत्र्यं नतु बहुभिः किञ्च यादवत्वात् न्यायतो राजत्वाभावेपि कंसवधात् यत् प्राप्तं राजत्वं तदपि उग्रसेनाय दत्वा त्यक्तमित्याह त्यक्तेति॥ १०-१२॥

### गूढार्थदीपिनी

तां निरीक्ष्य प्रीतो हरिः स्मयन् सन् तामाबभाषे इत्यन्वयः। या धृतनरतनोर्भगवतः अनुरूपरूपा। कीदृशीम्। अलकैः कुण्डलाभ्यां निष्कालङ्कृतकण्ठेन च युक्ते वक्त्रे उल्लसन्ती स्मितरूपा सुधा यस्याः ताम्। निष्कं ग्रैवेयकम्॥ ९॥ हे राजपुत्रि त्वं भूपैरीप्सितासि। ऊर्जितैः सम्पन्नैः॥ १०॥ तानिति युग्मम्। चैद्यः शिशुपालः। दुर्मदान् उन्मत्तान्। दत्ता वाचा दत्ता। हे सुभ्रूः। उग्रसेनादीनां तदङ्गीकारात्प्राय इत्युक्तम्। ववृषे वृतवती॥ ११-१२॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

रूपिणीं अप्राकृतरूपवतीं स्वासाधारणविग्रहयुक्तं श्रियं महालक्ष्मीम् अनन्यगतिं नास्ति कृष्णादन्या गतिर्गन्तव्या देवता यस्याः सा ताम् लीलया आविष्कृताप्राकृतमूर्त्तेर्भगवतः अनुरूपं रूपं यस्यास्ताम् अयमर्थः यदा लीलार्थं भगवान् अप्राकृतं नित्यं स्वां तनूं देवमनुष्याद्याकारेणाविष्करोति तदा भगवत्यपि नित्यामप्राकृतां स्वां तनूं भगवदनुरूपाभिः करोतीति तथोक्तं वैष्णवे—

देवत्वे देवदेहेयं मानुषत्वे च मानुषी। विष्णोर्देहानुरूपां वै करोत्येषात्मनस्तनूम्॥
राघवत्वे भवेत्सीता रुक्मिणी कृष्णजन्मनि। अन्येष्वप्यवतारेषु विष्णोरेवानपायनी॥ इति॥

अलकैः कुण्डलाभ्यां निष्कयुक्तकण्ठेन च चतुर्दिक्षु शोभिते वक्त्रे उल्लसन्ती स्मितरूपा सुधा यस्यास्तां निरीक्ष्य स्मयन् ईषद्धसन् हरिराबभाषे इत्यन्वय॥ ९॥ हे राजपुत्रि! लोकपालानामिव विभूतिरैश्वर्यं येषां तैस्तथा महानुभावत्वादिगुणयुक्तैः ईक्षिता भ्रात्रा पित्रा च दत्ता दातुं प्रवर्त्तिततांश्च अर्थिनः प्राप्तानपि हित्वा नः अस्मान् कस्मात् मां वृतवती त्वमिति त्रयाणामन्वयः॥ १०—१२॥

### श्रीसत्यधर्मकृता श्रीभागवतटिप्पणी

श्रियां रमातिमकामनयः स्वयं गतिर्यस्याः सा ताम्। प्रधानयाचकस्त्वेकश्चानन्यः केवलः स्वयमिति तृतीयतात्पर्योक्तेः। स्वेतरगतिशून्यं वा। लीलाया धृता तनुः स्वस्य तस्या अनुरूपं रूपं स्वभावचेष्टादि यस्याः सा। यां यां परेश उरुधेव करोति लीलां तां तां करोत्यनु तथैव रमाऽपि देवीत्युक्तेः। पाराशरोऽपि। देवत्वे देवदेहेऽयं मनुष्यत्वे च मानुषी। विष्णोर्देहानुरूपां

वै करोत्येषात्मनस्तनुमिति। या तां प्रीतः स्मयं रहस्यप्रौढिं दर्शयन्। अलकाश्च कुण्डले च तैस्ताभ्यां सहितं निष्कयुक्तः कण्ठश्च तत्सहितं च तद्वक्त्रं च तत्रोल्लसत्स्मितमेव सुधा यस्याः सा तां निरीक्ष्याबभाषे ॥ १३ ॥ लोकपालविभूतिभिर्लोकपालानां नाकपालादीनां विभूतयो येषां तैः। महानुभावः। अनुभावः प्रभावे स्यादिति विश्वः। प्रभावो येषां तैः श्रीमद्भिः सम्पद्वद्भी रूपौदार्यबलोर्जितै रूपं चौदार्यं च बलं च तैरूर्जितैरुत्कृष्टैर्भूपैः। हे राजपुत्रि त्वमीप्सिता ॥ १४ ॥ तान्प्राप्तान्स्वतोऽर्थिनस्त्वद-पेक्षावतः स्मर दुर्मदान्। स्वपित्रा भीष्मकेण भ्राता रुक्मिणा च दत्ता च। देववृषोपमान्देवश्रेष्ठसदृशांश्चैद्यादींस्तदाद्यान्हित्वा। ईप्सितेत्यनेनैव तेषामर्थिताऽर्थात्सिद्धा पुनः प्राप्तानर्थिन इतिवद्यन्नुक्तरत्र सर्वस्य स्वोक्तस्य प्रायो मुख्यमर्थमभिदधत्या रुक्मिण्या प्राप्ताश्च तेऽनर्थिनोऽनर्थवत इति विवरीतुं विवरं वितताररेति मन्तव्यम् ॥ १५ ॥ यूयं कीदृशा इत्यतो सङ्ग्राह्यगुणका इति तान्गुणानस्यां स्वत्वेनाह। हे सुभ्रूः राजभ्यो बिभ्यतोऽत एव समुद्रं शरणं गतान् बलवद्भिर्जरासुतादिभिः कृतद्वेषान्। प्रायस्त्यक्तनुपासनं यदुंशापतो यैस्तान् कस्माद्वृतवती ॥ १६ ॥

## श्रीमद्वल्लभाचार्यकृता सुबोधिनी

एवं रसार्थं देशकालादीनामानुगुण्येऽपि भगवति स रसो नोत्पन्नः। न हि भगवान् रसानुभवार्थं समागतः, किन्तु धर्मरक्षार्थं निरोधार्थं च। तदत्र रसानुभवे क्रियमाणे वाधितं भविष्यतीति तद्दोषानराकरणार्थं किञ्चिदुक्तवानित्याह **तां रूपिणी-**मिति। भगवतो लक्ष्मीर्नियता अपरिहार्या च। तादृशीमपि न मन्यत इति वक्तुं तां वर्णयति। **तां** गुणतः प्रसिद्धाम्। **रूपिणीं श्रियमि**ति स्वरूपत उत्कृष्टाम्। **अनन्यगतिमि**ति भक्ताम्। अनेन भगवद्योग्यता निरूपिता। तस्या गुणत्रयमपि ज्ञात्वा तथोक्त-वानिति वक्तुमाह **दृष्ट्वे**ति। आकृतिरसमाना भविष्यतीति तन्निराकरोति। या लीलया धृततनोरनुरूपं रूपं यस्याः सा। तस्या गुणादिभिः प्रोतः, अन्यथा गुणानां कार्यासाधकत्वेन अगुणत्वमेव स्यात्। अतस्तैर्गुणैः प्रीतोऽपि भगवान् स्मयन् जातः। नह्येता-दृशगुणवत्त्वे गर्व उचित इति, गर्व एवोपक्षीणा गुणा इति वा। अत एव प्रीतोऽपि स्मयन् जातः। यदा भगवान् सम्मुखः हास्य-वदनोऽपि जातः, तदा रुक्मिणी सुमुखं ज्ञात्वा स्वयमपि तथा जातेत्याह **अलककुण्डलनिष्ककण्ठवक्त्रोल्लसत्स्मितसुधा**मिति। शरीरमिव मुखं सर्वतो वर्णयति। उपर्यलकाः, उभयतः कुण्डले, अधः पदकयुक्तः कण्ठः त्रिवल्यात्मकः स्वरूपतोऽपि सुन्दरः, अन्यथा कण्ठपदं व्यर्थं स्यात्। एवं त्रिभिः कृत्वा सुन्दरं यद्वक्त्रं तत्र उल्लसत् स्मितमत्यन्तं प्रफुल्लरसमिव स्मितमेव सुधा। महादेवेन दग्धमपि कामं जीवयतीति। तादृशीमाबभाषे। तत्र हेतुर्हरिरिति। स हि तस्या अपि दोषं दूरीकर्तुं यतते ॥ ९ ॥ भगवद्वाक्यान्याह **राजपुत्रीत्येकादशभिः**। सप्तभिः स्वोत्कर्षः विपरीततया स्वस्य धर्माणां च निरूपितः। येन भगवान् सिध्यति तन्निराकृत्य। चतुर्विधपुरुषार्थसिद्ध्यर्थं विपरीततया श्लोकचतुष्टयमाह। तत्र प्रथमं तस्याः कृतमनभिनन्दन् श्रियं कीर्तिं च विपरीततया निरूपयति। तत्रापि प्रथमं श्रियम्। **राजपुत्री**ति सम्बोधनं जातिकुलोत्कर्षसूचकम्। **भूपैरीप्सिते**ति सौन्दर्यम्। **लोकपालविभूतिभि**रिति माहात्म्यम्। गुणाश्च। तेषामुत्कर्षं तदपेक्षयाप्यस्या उत्कर्षं वक्तुमाह **महानुभावै**रित्यादिपदत्रयेण। उत्कर्षो द्विविधः, बाह्य आभ्यन्तरश्च। बाह्यो द्विविधः, अलौकिको लौकिकश्च। तद्द्वयमाह। महाननुभावो येषाम्। श्रीयुक्ता-श्चेति। आन्तरमाह **रूपे**ति। रूपं शरीरसौन्दर्यम्। औदार्यमपेक्षितो गुणः सर्वदोषनिवारकश्च। बलं क्षत्रियाणामपेक्षितम्। तैरूर्जिताः अतिपुष्टाः। एवमेकेन सा स्तुता ॥ १० ॥ अगत्या तथा कृतमिति पक्षं वारयति **तान् प्राप्ता**निति। बहूनां निर्देशो विचार्य ग्रहणाय। सर्वेषामर्थित्वात्। त्वदर्थित्वमेवापेक्षितमिति भावः। **प्राप्ता**निति शरीरेण सम्बद्धान्। एवं बहिरन्तःसम्बद्धान् परित्यज्य। तत्रापि तव समानत्वमप्यन्तर्बहिश्च। कामादिना शरीरेण च सम्बद्धाः। विवाहश्च समयोरेवेत्यग्रे वक्ष्यते। न च तेषामप्रसिद्धिरित्याह **चैद्यादी**निति। जनपदशब्दत्वादतिप्रसिद्धिः। **स्मरदुर्मदा**निति। देशकालाद्यपेक्षामपि परित्यज्य स्त्रीहितं कुर्वन्तीत्यर्थः। तद्विवाहे लोकशास्त्रविरोधाभावमाह **दत्ता भ्रात्रा स्वपित्रे**ति। वाग्दत्ता। मुख्यतो भ्रात्रैव दत्तेति प्रथमं तन्निर्देशः। **स्वपित्रे**ति। तस्यैव सा कन्येति न स्वातन्त्र्यं स्वतो दाने। ऐहिकार्थं तु विवाहः। तदैहिकं तेष्वेव युक्त्या शास्त्रेण लोकेन च सिद्धमिति तत्परित्यज्य कस्मादेव हेतोः **नोऽस्मान् ववृषे** वृतवती। अविशेषादिति चेत्। तत्राह **असमा**निति। बहुवचनं सम्बन्धिकुलाभिप्रायम्, यथा राजानः त्वत्समाः, तथा नाहम्, नाप्यहं राजसमः, नाप्यस्मदीयाः। तेन लौकिकार्थं वरणपक्षे लौकिकोत्कर्षाभावात् आसक्त्यभावेन सुखाभावाच्च अलौकिकस्य प्रकृतेऽसम्भवात् कस्माद्ववृषे। हेतुश्चेदस्ति, वक्तव्य इति भावः ॥ ११ ॥ नन्वीक्षेव हेतुः, सर्वोऽपि स्वेष्टमेव वृणुते, अतो वस्तुविचारो व्यर्थ इत्याशङ्क्य वस्तुनि दोषानाह **राजभ्य** इति।

रूपतः फलतश्चैव सम्मत्या युक्तिभिस्तथा। चतुर्भिर्दूषणं प्राह चतुर्विधमिहाच्युतः ॥ १ ॥

तत्र प्रथमं स्वरूपदोषमाह। राजानो जरासन्धादयः, तेभ्यो बिभ्यत इति। न हि भयानकरसेनाविष्टानां सुखजन-कत्वमस्ति। किञ्च। **समुद्रं शरणं गता**निति। नह्यन्यं शरणं गतस्य स्वातन्त्र्यमस्ति। नह्यस्वतन्त्रस्य सुखसाधकत्वम्। सर्वान् यादवानालक्ष्य बहुवचनम्। कपटमानुषलीलेव यादवलीलाप्याश्रितेति तैः समानधर्मवचनं लीलायां युक्तमेव। लौकिकदृष्ट्यैव स्वीकृत इति तदुपयोगिप्रकारेण पदार्थनिरूपणेनापि शास्त्रीयो दोषः। तृतीयं दूषणं **बलवद्भिः कृतद्वेषा**निति। द्वेषमात्रस्य

करणमयुक्तम् । फलपर्यवसाने तु न दूषणम् । बलवत्पदात्फलपर्यवसानाभावोऽपि सूच्यते । बहुभिश्च सह कलहः न युक्तः । सर्वतः शङ्काया विद्यमानत्वान्न स्वास्थ्यं लोकप्रतीत्या निरूपयति । सर्वबलवद्विरोधे फलमपि जातं सूचयति प्रायस्त्यक्तनृपासनानिति । ययातिशापात्त्यक्तं नृपासनं यैः यादवैः । अर्जुनादिव्युदासार्थं प्राय इति । अतो राजकन्यया राजैव विवाह्यो मुख्यः । अथवा राजमित्रम्, राजतुल्यो भवतीति । अथवा । स्वदेशस्थितः खण्डमण्डलाधिपतिर्वा । अथवा । निकृष्टपक्षे निर्भयः । नतु चतुर्विधदोषयुक्तः कश्चिदपि विवाह्यो भवति ॥ १२ ॥

### श्रीविट्ठलरायात्मजश्रीवल्लभकृतलेखः

**राजभ्यो बिभ्यत** इत्यत्र । **फलपर्यवसाने** त्विति । द्वेषफलं तेषां मारणं कर्तुं शक्येत चेद्द्वेषे न दूषणम् । परं तदेव न शक्यमित्याहुः **बलवत्पदा**दिति ।

### श्रीसुबोधिनी-सारः

या लीलया धृता तनूर्मूर्त्तिर्येन तस्य स्वस्यानुरूपं योग्यं रूपं यस्याः तदुक्तं पराशरेण "देवत्वे देवदेहेयं मनुष्यत्वे च मानुषी ॥ विष्णोर्देहानुरूपां वै करोत्येषात्मनस्तनुम्" इति तां रूपिणीं मूर्त्तिमतीं श्रियं लक्ष्मीमनन्यगतिं स्वात्मनिष्ठाम् अलकैः केशैः कुंडलाभ्यां निष्केण पदकेन युक्तेन कंठेन शोभिते वक्त्रे मुखे उल्लसंती स्मितसुधा यस्यास्तां निरीक्ष्य दृष्ट्वा हरिरुवाच । प्रीतः स्मयन्सन् ॥ ९ ॥ हे राजपुत्रि महाननुभावो येषां लोकपालानामिंद्रादीनामिव विभूतिरैश्वर्यं येषां तैः रूपौदार्यबलैरूर्जितैः समृद्धैः श्रीमद्भिर्भूपैस्त्वमीप्सिता वांछितासि ॥ १० ॥ स्मरेण स्मर एव वा दुर्मदो येषां तान् चैद्यादीन् शिशुपालप्रभृतीन् अर्थिनो याचकान् प्राप्तान् परिणेतुं हित्वा त्यक्त्वा स्वभ्रात्रा रुक्मिणा स्वपित्रा भीष्मकेण दत्ता वाचाऽसमान् विसदृशान् नोस्मान्कस्माद्धेतोः ववृषे वृतवती ॥ ११ ॥ अतुल्यतां व्यनक्ति । हे सुभ्रूः राजभ्यो जरासंधादिभ्यो बिभ्यतः त्रस्यतः समुद्रस्य शरणं प्राप्तान् बलवद्भिः कृतो द्वेषो वैरं यैः प्रायो बाहुल्येन त्यक्तं नृपासनं राजसिंहासनं यैस्तान् ॥ १२ ॥

### गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

तां रुक्मिणीं निरीक्ष्य प्रीतो हरिः स्मयन् ईषद्धसन् आबभाषे इत्यन्वयः । तत्प्रीतिहेतुत्वेन तत्स्वरूपमनुवर्णयति—या लीलया निमित्तभूतया धृततनोः स्वीकृतमनुष्यरूपस्य भगवतोऽनुरूपं योग्यं रूपं मूर्तिर्यस्याः सा तां रूपिणीं मनुष्यरूपधारिणीं श्रियं लक्ष्मीम् । पराशरेणापि एतत्स्पष्टमुक्तम्—"देवत्वे देवदेहेयं मनुष्यत्वे च मानुषी ॥ विष्णोर्देहानुरूपां वै करोत्येषाऽऽत्मनस्तनुम्" इति ॥ एवं रूपानुधारणे हेतुमाह—अनन्यगतिमिति । न विद्यते अन्या गतिराश्रयो यस्यास्ताम्, कदापि विश्लेषरहितामित्यर्थः । तात्कालीनं तच्छोभातिशयमाह—अलकैः कुण्डलाभ्यां निष्काख्यभूषणालङ्कृतेन कण्ठेन च शोभिते वक्त्रे उल्लसन्ती स्मितरूपा वसुधा यस्यास्तामिति ॥ ९ ॥ तद्भाषणमेव दर्शयति—राजपुत्रीति । 'राजपुत्रि' इति संबोधनेन 'तव चातुर्यमेव युक्तम्, नैव बुद्धिमान्द्यम्' इति सूचयति । लोकपालानामिन्द्रादीनामिव विभूतिरैश्वर्यं येषां तैः महानुभावैः श्रीमद्भिर्धनाढ्यैः तथा रूपं सौन्दर्यम्, औदार्यं मुक्तहस्तता, बलं शत्रुपरिभवसामर्थ्यम्, तैरूर्जितैरुत्कृष्टैर्भूपैर्वरणयोग्यैस्त्वमीप्सिता अभीष्टा ॥ १० ॥ अतो भ्रात्रा स्वपित्रा च तेभ्यो दत्ता अत अर्थिनो याचमानान् प्राप्तांस्तांश्चैद्यादीन् हित्वा असमान् त्वदननुरूपान्नोऽस्मान् कस्माद्धेतोर्ववृषे वृतवतीति द्वयोरन्वयः । 'कामान्धा हि युक्तायुक्तविचारमकृत्वैव स्त्रीप्रियं कुर्वन्ति, ते हि ताभिर्वरणयोग्याः, तादृशश्च ते' इत्याह—स्मरेण कामेन दुष्टो मदो येषां तानिति । उभयत्र बहुवचनं संबन्ध्यभिप्रायेण तत्संबन्धिनोऽपि तादृशाः, अस्मत्संबन्धिनोऽपि न तादृश इति भावः ॥ ११ ॥ असमत्वमेव प्रपञ्चयन्नात्मनो विशिनष्टि—राज्भ्य इति । 'तव चास्मत्सङ्गतौ न निर्वाहः, सुकुमारीत्वात्' इत्याशयेन संबोधयति—सुभ्रिति । समुद्रं शरणं गतान् समुद्रान्तर्द्वीपमावासस्थानत्वेनाश्रितानित्यर्थः । अन्याश्रितानां स्वातन्त्र्याभावात् नान्यसुखसाधकत्वं संभवतीत्याशयः । समुद्रशरणगमने हेतुमाह—राजानो जरासन्धादयस्तेभ्यो बिभ्यतो भीतानित्यर्थः । न हि भयानकरसाविष्टानां परसुखसाधकत्वं संभवतीति भावः । भीतत्वे हेतुमाह—बलवद्भिः सह कृतो द्वेषो यैस्तानिति । 'तर्हि राज्यसंपत्त्यर्थं यत्नो विधेयः, तत्संपत्त्या द्वपिविजयेन भयनिवृत्तिः स्यात्' इत्याशङ्क्याह—प्रायस्त्यक्तनृपासनानिति । सहस्रबाह्वादयो राज्यमपि कृतवन्तः, तदभिप्रायेण प्रायग्रहणम् । ययातिना कुलवृद्धेन निराकृतत्वादस्माकं राज्यसंपत्त्याशैव नास्तीत्यर्थः ॥ १२ ॥

### अन्वितार्थप्रकाशिका

तामिति ॥ या लीलया निमित्तभूतया धृततनोः स्वीकृतमनुष्यरूपस्य भगवतोऽनुरूपं योग्यं रूपं मूर्तिर्यस्याः सा तां रूपिणीं मनुष्यरूपधारिणीं श्रियं लक्ष्मीम् अनन्यगतिम् इति न विद्यते अन्या गतिराश्रयो यस्यास्तां कदापि विश्लेषरहिताम् अलकैः कुण्डलाभ्यां निष्केण पदकाख्यभूषणेनालङ्कृतेन कण्ठेन च चतसृषु दिक्षु शोभिते वक्त्रे उल्लसन्ती स्मितरूपा सुधा

यस्यास्तां रुक्मिणीं निरीक्ष्य प्रीतः हरिः स्मयन् शता आर्वः । आबभाषे जगाद । आः इति खेदे । तादृग्वक्तुमयोग्यामपि बभाषे इति तोषिणी ॥ ९ ॥ अत्र प्रियायाः प्रणये कोपोक्तिश्रवणेनापि कान्तस्यानन्दो भवतीति प्रसिद्धम् । अत्र अस्यै रुक्मिण्यै दत्तेनैकमात्रच्युतरुपुष्पेण सत्यभामाकोपोक्तिः रसर्वापिण्यभूत् । इयं तु सत्यभामायै च्युतरुदानदर्शनेनापि कोपं न चक्रे । तदस्या अतिसौम्यशीलायाः कोपोक्तिमाधुर्यं कथं लभेयेति वक्ष्यमाणोक्तिरेवास्याः कोपाय भविष्यतीत्याशयेन भगवानेवमाहेत्याहुः । गर्वापनोदस्तु न मुख्यः । अन्ये तु प्रेमवृक्षस्योन्मूलने कृते प्रेमवती नायिका कीदृशी स्यादिति दिदृक्षयैव भगवानेवमाहेत्याहुः । तत्र सर्वगुणयुक्ताया अपि ते बुद्धिर्मन्देत्याह—राजेति ॥ हे राजपुत्रि ! लोकपालानाम् इन्द्रादीनामिव विभूतिरैश्वर्यं येषां तैः महानुभावैः श्रीमद्भिर्धनाढ्यैः तथा रूपं सौन्दर्यम् औदार्यं मुक्तहस्तता बलं शत्रुपरिभवसामर्थ्यं तैरूर्जिष्टैरुत्कृष्टैर्भूपैर्वरणयोग्यैस्त्वमीप्सिता अभीष्टा अभूः ॥ १० ॥ तानिति युग्मम् ॥ हे सुभ्रूः ! भ्रात्रा स्वपित्रा च तेभ्यो दत्ता अतः अर्थिनो याचमानान् प्राप्तान् नतु दूरे स्थितान् स्मरेण कामेन दुर्मदान् तान् चैद्यादीन् त्यागायोग्यानपि हित्वा असमान् त्वं राज्ञः पुत्री अहं निर्धनस्य वसुदेवस्य पुत्र इत्यादिना अननुरूपान् राजभ्यः जरासन्धादिभ्यो बिभ्यतः भयं प्राप्नुवतः अतः समुद्रं शरणं गतान् न बलवद्भिरित्यादि स्पष्टम् । अस्मान् कस्मात्त्वं ववृषे वृतवती । सविशेषणस्य बहुत्वमार्षम् ॥ ११-१२ ॥

## श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्

रूपिणीं स्वरूपसौन्दर्यवतीं ॥ अलकैः कुंडलाभ्यां च निष्ककंठेन पदकालं कृतकंठेन च चतुर्दिक्षु शोभिते वक्त्रे उल्लसंतीहास्यसुधा यस्यास्तां तां रुक्मिणीं निरीक्ष्य हरिराबभाषे कुतः यतो या वैदर्भी लीलया धृततनोर्हरेः अनुरूपं योग्यं रूपं यस्याः सास्ति ॥ ९ ॥ तत्र स्वपाणिग्रहणे रुक्मिण्या अल्पबुद्धित्वमस्तीति दर्शयन्नाह राजपुत्रीत्याद्येकादश श्लोकैः ॥ हे राजपुत्रि लोकपालानामिंद्रादीनामिव विभूतिर्येषां तैः रूपादिभिरूर्जितैः श्रेष्ठभूपैः शिशुपालादिभिः पूर्वमीक्षितासि ॥ १० ॥ तान् हित्वा असमान् तवातुल्यान् नोऽस्मान् कस्माद्ववृषे उपयेमे ॥ ११ ॥ राजभ्यो मागधादिभ्यः बिभ्यतो भीतिं प्राप्नुवतो नोऽस्मान् कस्माद्ववृषे इति पूर्वेण संबंधः ॥ १२ ॥

## भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

तामिति । या लीलया धृततनोरुपात्तमनुष्यशरीरस्य श्रीकृष्णस्य, अनुरूपं रूपं यस्याः सा, तां रुक्मिणीं, रूपिणीं मनुष्यरूपधारिणीं, श्रियं महालक्ष्मीं न विद्यतेऽन्या गतिर्यस्यास्तां, अलकैः कुण्डलाभ्यां निष्केण पदकाख्यभूषणेन अलंकृतेन कण्ठेन चतुर्दिक्षु शोभिते वक्त्रे उल्लसन्ती स्मितमेव सुधा यस्यास्तथाभूतां, निरीक्ष्य, प्रीतः हरिः, स्मयन् ईषद्धसन्, आबभाषे । अनुरूपरूपा इत्यत्र पराशरः । 'देवत्वे देवदेहेयं मनुष्यत्वे च मानुषी । विष्णोर्देहानुरूपां वै करोत्येषाऽऽत्मनस्तनुम्' इति ॥ ९ ॥ अनपायिनोः श्रीपत्योः वक्ष्यमाणोविवादः केवलं नृलोकविडम्बनायेति सूचयन् भाषणमेवाह राजपुत्रीत्याद्येकादशभिः । तत्र तात्पर्यतस्तामुपचरन्तीमभिनन्दयन्नेव कूटवचांसि प्रयुङ्क्ते । तत्रापि सर्वगुणयुक्ताया अपि तव बुद्धिर्मन्देत्याशयेनाह । राजपुत्रीति । हे राजपुत्रि, लोकपालानामिव विभूतिरैश्वर्यं येषां तैः, महाननुभावः प्रभावो येषां तैः, श्रीमद्भिः रूपौदार्यबलोर्जितैः रूपादिभिरुत्कृष्टैः, तत्र रूपं सौन्दर्यं, औदार्यं वदान्यत्वं, बलं शत्रुपरिभवसामर्थ्यं, भूपैः राजभिः, त्वं ईप्सिता ॥ १० ॥ तानिति । तानेवंविधान्, अर्थिनो याचमानान्, स्मरेण कामेन दुर्दृष्टो मदो येषां तान् चैद्यादीन्, हित्वा त्वं, स्वपित्रा, भ्रात्रा च, दत्ता तेभ्यः समर्पिता सत्यपि असमाननननुरूपान्, नोऽस्मान्, कस्मात् ववृषे वृतवती । तान् हित्वा नो वृतवती त्वं मन्देति भावः ॥ ११ ॥ असमत्वमेव प्रपञ्चयितुं स्वान् विशिनष्टि । राजभ्य इति । हे सुभ्रूः, राजभ्यो जरासंधादिभ्यः, बिभ्यतः भीतान् अत एव, समुद्रं समुद्रात्मकं, शरणं गृहं, गतान् प्राप्तान्, समुद्रान्तर्द्वीपमावासस्थानत्वेनाश्रितानित्यर्थः । बलवद्भिः बलिभिः, कृतः द्वेषो यैस्तान्, प्रायः प्रायशः त्यक्तं नृपासनं यैस्तान् । शापवशात् राजोपवेश्यसिंहासनानर्हवंशप्रभवत्वादिति भावः ॥ १२ ॥

## कृष्णप्रिया

देवी जी की घुंघराली श्याम अलकावली, कर्णों के कर्णपूर, और कण्ठकी निष्क स्वर्ण कण्ठी की शोभा विलक्षण थी । मुखकमल से मन्दमन्द मुसकान की अमृतवर्षा हो रही थी । भगवत्परा श्रीरमा ही रुक्मिणी जी के स्वरूप में सेवा कर रही थी । भगवती महालक्ष्मीजी ने देखा कि भगवान् निजलोक से मनुष्य लोक में लीलामनुष्य के स्वरूप में पधारे हैं तब स्वयं रुक्मिणी जी के स्वरूप में प्रकट हो गयी । साक्षात् परा रमा श्री रुक्मिणी जी अब रसिकवर भगवान् रसोद्रेक बहाने के बहाने मधुर विनोद कर रहे हैं ॥ ९ ॥ भगवान् श्री कृष्णचन्द्र जी ने कहा—राजकुमारी ! देवी रुक्मिणी ! लोकपालों के समान ऐश्वर्य एवं समृद्धि सम्पन्न, प्रतापशाली, श्रीमान् रूप औदार्य, पराक्रम से परिपूर्ण बड़े बड़े भूपशिरोमणि आप से विवाह करना चाहते थे ॥ १० ॥ देवी जी ! आपके पितृचरण भीष्मक राजा एवं ज्येष्ठ भ्राता रुक्मिणी और भ्रातृजन आदि सर्व स्वजन चेदी नरेश शिशुपाल के साथ विवाह करना चाहते थे एवं वाग्दान भी कर चुके थे । पुनः स्मरोन्मत्त और समर्थ वीर

शिशुपाल वगैरे आप के याचक वन रहे थे आपने इन सबको छोड कर मेरे जैसे सर्व सामान्य जन का वरण किया, जो किसी भो प्रकार आपके तुल्य नहीं है। देवी ? आपने ऐसा क्यों किया ? ॥ ११ ॥ हे कमललोचने राजकुमारी ! आप को सुविदित है कि जरासन्ध आदि वीर राजाओं से भयभीत होकर महासागर की शरण में जा बसे हैं। पुनः समर्थ वीर-महावीर नृपतियों से हमने वैर बांध लिया है। यह भी आप जानती हो कि हम राजसिंहासनारोहण अधिकार से भी सर्वथा वंचित है ॥ १२ ॥

अस्पष्टवर्त्मनां पुंसावलोकपथमीयुषाम् । [1]आश्रिताः पदवीं सुभ्रूः प्रायः सीदन्ति योषितः ॥ १३ ॥
निष्किञ्चना वयं शश्वन्निष्किञ्चनजनप्रियाः । तस्मात् प्रायेण न ह्याढ्या मां भजन्ति सुमध्यमे ॥ १४ ॥
ययोरात्मसमं वित्तं जन्मैश्वर्याकृतिर्भवः[2] । तयोर्विवाहो मैत्री च नोत्तमाधमयोः क्वचित् ॥ १५ ॥
वैदर्भ्येतदविज्ञाय त्वया दीर्घसमीक्षया । वृता वयं गुणैर्हीना भिक्षुभिः श्लाघिता मुधा ॥ १६ ॥

### कर्वमक्षमा

अन्वयः—अस्पष्टवर्त्मनां, अलोकपथं, ईयूषां, पुंसां, पदवीं, आस्थिताः, योषितः, हे, सुभ्रू ! प्रायः, सीदन्ति ॥ १३ ॥ हे सुमध्यमे ! वयं, निष्किञ्चनाः, शश्वत्, निष्किञ्चनजनप्रियाश्च ( स्म ) तस्मात्, मां, हि, प्रायेण, आढ्या, मां, न, भजन्ति ॥१४॥ ययोः, जन्म, ऐश्वर्यः, कृतिः, भवः, वित्तं, आत्मसमं ( भवति ) तयोः, मैत्री, विवाहश्च, उचितः, क्वचित्, उत्तम, अधमयोः, न, उचितः ॥ १५ ॥ हे वैदर्भि ! एतत्, अभिज्ञाय, अदीर्घसमीक्षया, त्वया, गुणैः, हीना, भिक्षुभिः, श्लाघिता, वयं, वृत्ता ॥ १६ ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

अस्पष्टवर्त्मनामविज्ञाताचाराणाम् । अलोकपथमस्त्रीपारतंत्र्यम् । पदवीं मार्गम् । आस्थिता अनुसृताः ॥ १३ ॥ किंच निष्किचना इति ॥ १४ ॥ आत्मसमं परस्परमनुरूपम् । जन्मैश्वर्याभ्यां सहिता आकृतिः रूपं जातिर्वा समा । भव आयतिः ॥१५॥ न दीर्घा समीक्षा विचारो यस्यास्तया ॥ १६ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

प्रायः पदं पूर्वोक्तार्थपरम् । अस्त्रीपारतन्त्र्यं वनितानुकूल्यवर्जितम् ॥ अत्रोत्तरमलभमानः साक्षादेव तदाक्षिपन्निव स्त्रीमात्रस्यापि मादृशभजनमयुक्तमित्याह—अस्पष्टेति । क्वचित्परदारसेवादिदर्शनेन क्वचिद्वैदिकाचारदर्शनायं किं नास्तिक आस्तिको वा, आस्तिकत्वेऽपि क्वचिद्यज्ञाद्यर्थमृगयादिदर्शनेन, क्वचिन्मुचकुन्दादौ तन्निन्दादर्शनेन च किं प्रवृत्तो निवृत्तो वेत्यादि न स्पष्टं न सुबोधं वर्त्म अदुष्टहिताचरणं येषाम्, तथा लोकपथं स्त्रीपुत्राद्यपेक्षादिलक्षणं दृष्टहिताचरणं नतं प्राप्नुवन्तं स्त्रियाः पुरतस्तद्भ्रात्राद्यपमानाज्जातमात्रपुत्राद्यरक्षणाच्च । प्रायो वितर्के, बाहुल्ये वा । यच्च काश्चिन्न सीदन्ति तत्तासामेव गुण इत्यपि तादृशीभिर्वयमभजनीया एवेति भावः ॥ १३ ॥ निजनैः स्वं द्योतयति—किञ्चेति । निरव्ययमभावे । निष्किञ्चना अकिंचनाः । यतोऽकिंचनप्रियास्तस्माद्धे तोः । प्रायेणेत्युक्तेर्ध्रुवांबरीषादय आढ्या भजंत्यपीत्यर्थः । किञ्च—आढ्यमात्रस्यापि न मद्भजनमाचारमात्रप्राप्तमित्याह—'उदासीना वयं नूनम्' इति वक्ष्यमाणानुसारेण न विद्यते किंचन येषां ते वयं मत्प्रधाना इत्यर्थः । किञ्च—निष्किञ्चनजनानां प्रियाः । यद्वा—निष्किञ्चनजन एव प्रिया येषां ते । शश्वन्नित्यम्, अस्योभयतोप्यन्वयः । प्रायेणेत्याढ्यत्वेप्यन्तर्विरक्तान्वर्जयित्वेति भावः । वस्तुमात्रेप्यासक्तिभावान्निष्किञ्चना एवेति भावः । अतो मां तेषु प्रधानं सुतरां न भजंतीत्यर्थः । अतो महाराजपुत्र्यास्तवाढ्यत्वेनांतर्वैराग्यासंभवेन सुतरां मद्भजनमयुक्तमिति भावः ॥१४॥ मया तव विवाहस्तु सर्वथानुचित एवेत्याह—ययोरिति । आत्मना समं परस्परार्थकमत्रात्मपदम्, ययोरिति सान्निध्यात् । संनिधेरप्यर्थग्राहकत्वमुक्तम्—"वाक्यवाच्यान्यसंनिधेः प्रस्तावदेशकालादेः" इति काव्यप्रकाशे मम्मटेन । "आकारेऽवयवे रूपे जातावाकृतिरुच्यते" इति धरणिः । "आयतिस्तु स्त्रियां दैर्घ्ये प्रभावागामिकालयोः" इति मेदिनी । "भवः क्षेमेशसंसारे सत्तायां प्राप्तिजन्मनोः" इति च । भव आयतिः, प्रभाव इत्यर्थः ॥ किञ्च—सर्वेषामप्येवमेव युक्तमित्याह—ययोरिति । तयोरेव युज्यत इति शेषः । अन्यत्तैः । तत्रायतिरुत्तरकालो भवितव्यतेत्यर्थः । तज्ज्ञानञ्च ज्योतिः शास्त्रादिना । समकालजन्मना वयोऽभिप्रेतम् । न केवलं विवाहः मिथः सौहार्दमपि तयोरेव स्यादित्याह—मैत्री च, मैत्र्यपि व्यतिरेकेण । तदेव द्रढयति—नेति । क्वचित्कस्मिंश्चिद्देशे काले वा ॥ १५ ॥ एतद् वित्तजन्मादि । मुधा वितथे ॥ उपसंहरति—वैदर्भीति । एतत्सर्वं पूर्वोक्तमविज्ञायाविचार्य । ननु स्वैः सद्गुणैर्युक्ता एव यूयं, तच्च 'श्रुत्वा गुणान्-' इत्यादिना विज्ञापितमेव तत्राह—भिक्षुभिरिति । याचकैर्धनादिलोमेनेव श्लाघिता इत्यर्थः । वैदर्भीति दूरदेशोद्भवत्वात्तद्वारकामात्रश्रवणमभिप्रेतम् ॥ १६ ॥

---

१. स्थिताः—श्रीधर. वंशी. जीव. वीर. विश्व. शुक. सु. । २. भवेत्—वीर. ।

### श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी

तत्रोत्तरमलभमानः साक्षादेव तदाक्षिपन्निव स्त्रीमात्रस्यापि मादृशभजनमयुक्तमित्याह–अस्पष्टेति। क्वचित्परदारसेवादिदर्शनेन क्वचित् वैदिकाचारदर्शनेनायं किं नास्तिकः आस्तिको वा ? आस्तिकत्वेपि क्वचिद्यज्ञाद्यर्थमृगयादिदर्शनेन क्वचित्तु मुकुन्दादौ तन्निन्दादर्शनेन च किम्प्रवृत्तो निवृत्तो वेत्यादि न स्पष्टम् न सुबोधं वर्त्म अदृष्टहिताचरणं येषां तथा लोकपथः स्त्रीपुत्राद्यपेक्षादिलक्षणं दृष्टहिताचरणं न तं प्राप्तवतां स्त्रियः पुरतस्तद्भ्रात्राद्यपमानात् जातमात्रपुत्राद्यरक्षणाच्च प्रायो वितर्के बाहुल्ये वा यच्च काश्चिन्न सीदन्ति तत्तासामेव गुण इत्यपि तादृशीभिर्वयमभजनीया एवेति भावः॥ १३॥ किञ्चाढ्यमात्रस्यापि मद्भजनं नाचारप्राप्तमित्याह—उदासीना वयं नूनमिति। वक्ष्यमाणानुसारेण न विद्यते किञ्चन येषां ते वयं मत्प्रधाना इत्यर्थः। किञ्च निष्किञ्चनजनानां प्रियाः यद्वा निष्किञ्चनजना एव प्रिया येषां ते शश्वन्नित्यम् अस्योभयतोऽप्यन्वयः। अतो मां तेषु प्रधानं सुतरां न भजन्तीत्यर्थः। प्रायेणेति आढ्यत्वेप्यन्तर्विरक्तान् वर्जयित्वेति भावः अतो महाराजपुत्र्यास्तवाढ्यत्वेनान्तर्वैराग्यासम्भवेन च मद्भजनमयुक्तमिति भावः॥ १४॥ किन्तु सर्वेषामप्येवमेव युक्तमित्याह–ययोरिति। ययोरेव युज्यत इति शेषः। अन्यत्तैः। तत्रायतिरुत्तरकालो भवितव्यतेत्यर्थः तज्ज्ञानं च ज्योतिश्शास्त्रादिना यद्वा जन्म जातिः आकृतिः रूपं भवश्चोत्पत्तिरिति समकालजन्मना वयोऽभिप्रेतं मैत्री चेति दृष्टान्तत्वेन यद्वा न केवलं विवाहः मिथः सौहार्दमपि तयोरेव स्यादित्याह मैत्रीति च अपि मैत्र्यपि व्यतिरेकेण तेदव द्रढयति नेति क्वचित्कस्मिंश्चिद्देशे काले वा॥ १५॥ उपसंहरति–वैदर्भीति। एतत्पूर्वोक्तं सर्वमविज्ञाय अविचार्य्य ननु स्वैः सर्वसद्गुणैर्युक्ता एव यूयं तच्च श्रुत्वा गुणानित्यादिना मया विज्ञापितमेव तत्राह–भिक्षुभिरिति। याचकैर्धनादिलोभेनैवतस्ततः श्लाघिताः इत्यर्थः श्लाघ्यामाह वैदर्भीति दूरदेशोद्भवत्वात् तद्वारकमात्रश्रवणमभिप्रेतं न च वक्तव्यं तेभ्यो धनादिदाने नापि वदान्यत्वं महागुणः स्यादिति यतो मुधा धनाद्यन्नोपि त्वादृशीषु तल्लोभेनैव श्लाघिता इत्यर्थः॥ १६॥

### श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी

लोकवैलक्षण्येनापि न वरणयोग्या भवाम इत्याह—अस्पष्टेति। प्रायो बाहुल्ये, सदैव सर्व्वथा सीदन्तीत्यर्थः। किवा प्रायः इत्याश्रिताः पातिव्रत्याद्यभावेनैपदाश्रितास्तु न सीदन्ति, अतोऽत्यन्तासक्त्या मदाश्रयणेन त्वं दुःखं प्राप्स्यसीति भावः॥ १३॥ धनाद्यभावेनापि न वयं वरणयोग्याः; यद्वा, निष्किञ्चनत्वेन मम निष्किञ्चनजना एव प्रियाः, न तु विभूतिमन्तो राजन्यादय इत्याह—निष्किञ्चना इति। ननु स्वतो मास्तु धनादिकम्, प्रियजनधनादिनापि तत्सत्ता सम्भवेत्? तत्राह—निष्किञ्चनेति, निष्किञ्चनजनानां प्रियाः, किंवा निष्किञ्चनजना एव प्रिया येषां ते, शश्वन्नित्यमित्यर्थः। अस्योभयतोऽप्यन्वयः। पक्षान्तरे चार्थः स्पष्ट एव! नैव प्रायेणेति धनादिवृद्ध्यर्थं कदाचित् केनचिदाढ्येनापि भजनात् अतस्तवाढ्यत्वेन धनादिवृद्ध्यनपेक्षया च मद्भजनमयुक्तमिति भावः॥ १४॥ वैषम्येण लोकव्यवहारविरोधाल्लज्जादिनापि न वयं वरणयोग्या इत्याह—ययोरिति। आकृतिः रूपं भवश्चोत्पत्तिरिति समकालजन्मना वयोऽभिप्रेतम्, मैत्री चेति दृष्टान्तत्वेन। यद्वा, न केवलं विवाहः, मिथः सौहार्दमपि तयोरेव स्यादित्याह—मैत्रीति। 'च' अपि मैत्र्यपि, अन्यथा तु न स्यादेव, विरुद्धत्वादित्युक्तार्थमेव द्रढ़यति—नेति। एको जनो धनादिसम्पत्त्योत्तमः, परश्च तदभावेनाधमस्तयोः क्वचित् कस्मिंश्चिद्देशे काले वा॥ १५॥ अविज्ञाय अविचार्य्य, हे वैदर्भीति दाक्षिणात्यत्वेन वैदग्ध्यादिकं सूचितम्, तथाप्यदीर्घ-समीक्षया। ननु सर्व्वसद्गुणगणैर्युक्ता यूयम्, तच्च (भा० १०।५२।३७) 'श्रुत्वा गुणान्' इत्यादिना मया लिखितमेव, तत्राह—भिक्षुभिरिति। याचकैर्धनादिलोभेनेतस्ततः श्लाघ्यामह इत्यर्थः। न च वक्तव्यम्, तेभ्यो धनादिदानेनापि वदान्यत्वमहागुणः स्यादिति। यतो मुधा धनाद्यलाभेनापि केवलं त्वादृशीषु तल्लोभेन श्लाघिता इत्यर्थः॥ १६॥

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम्

अलोकपथमीयुषां पुंसां पदवीमित्यन्वयः॥ १३–२०॥

### श्रीमद्वीरराघवाचार्यकृता भागवतचन्द्रचन्द्रिका

किञ्च सत्कुलप्रसूतानां त्वादृशीनामनिर्धारितकुलोत्पथवञ्चकमादृशानुवर्त्तनं दुःखहेतुरित्याह—अस्पष्टेति। वर्त्म गतिः प्रकारः जातिरिति यावत् किमयं वसुदेवसुतः क्षत्रियः उत नन्दात्मजस्तृतीयवर्णप्रसूत इत्येवमस्पष्टं संशयविषयं वर्त्म येषां तेषाम् आलोकपथं लोकविरुद्धपथम् उत्पथमित्यर्थः। ईयुषामुन्मर्य्यादानामित्यर्थः। एवम्विधानां मादृशां पुंसां पदवीमास्थिता अनुवृत्ताः स्त्रियस्त्वद्विधाः हे सुभ्रु! प्रायशः सीदन्ति क्लिश्यन्ति॥ पक्षान्तरे तु अस्पष्टवर्त्मनां दुर्ज्ञेयस्वरूपस्वभावानामपि अलौकिकपथमकर्मवश्यानामाचारं चेष्टितमिति यावत् प्राप्तानां कुर्वतामपीत्यर्थः। पुंसामस्माकं पदवीं याथात्म्यम् आस्थिताः

मामनुवर्त्तमाना एव स्त्रियः प्रायशः सीदन्ति षद्लृ गतौ, मत्यर्थाबुद्ध्यर्थाः विदन्येतेवेत्यर्थः। मामननुवर्त्तमानास्तु एवं विधानामप्यस्माकं पदवीं न विदुरेव अतो मामनुवर्त्तमानायाः मद्याथात्म्याभिज्ञायास्तव मदुपचरणं युक्तमेवेति ॥ १३ ॥ किञ्च लोके कुरूपोऽप्याढ्य एव स्त्रीणामभिमतः अहं त्वनाढ्यः न त्वादृशया वरणीय इत्याह—निष्किञ्चना इति। नास्ति किञ्चन स्वं येषां ते निष्किञ्चना निर्द्धना इति यावत् पृषोदरादित्वात् साधुः तर्हि यूयं केषां प्रियाः के च युष्माकं प्रिया इत्यत्राह—निष्किञ्चनेति। मादृशानामेव जनानां वयं प्रियास्ते च प्रिया येषां तथाभूताश्चेत्यर्थः। तथाहि तस्मादेव हेतोः हे सुमध्यमे नोऽस्मान् प्रायशो आढ्यासम्पन्नाः न भजन्ति नानुवर्तन्ते अनन्यार्हशेषत्वानन्यशरण्यत्वानन्यभोग्यत्वरूपाकारत्रयशालिनी त्वं मामेव भजस इत्युचितमेवेत्यभिप्रेतम् ॥ १४ ॥ किञ्च "विवाहश्च तथा मैत्री समयोरेव शोभते" इति न्यायेन असमयोरावयोः सम्बन्धो न शोभत एवेत्याभिप्रायेणाह—ययोरिति। ऐश्वर्येण सहिता आकृतिरैश्वर्य्याकृतिरैश्वर्य्यमाकृतिश्चेत्यर्थः। तत्र जन्म कुलम् आकृतिः सौन्दर्य्यं ययोरात्मसमं परस्परानुरूपं वित्तादिकं भवेदस्ति तयोरेव विवाहो मैत्री च उत्तमाधमयोरस्मादृशयोस्तु क्वचित्कदाचिदपि स नोचित इत्यर्थः। पक्षान्तरे तु वित्तादिभिरसमयोरपि स्वभावतः शेषशेषिणोरावयोः सम्बन्धोऽनुरूपः नतु विषमयोस्त्वच्चैद्यथोरिति ॥ १५ ॥ सर्वमेतद्वैषम्यमविचार्य्यैव त्वया वृता वयमित्याह—वैदर्भीति। हे वैदर्भि ! अदीर्घा अदूरा समीक्षा विचारो यस्याः तया त्वया एतन्मदुपन्यस्तमननुरूप्यमविदित्वा त्वया वयं वृताः कथम्भूताः गुणैर्वरणीयताहेतुभूतैः श्लाघ्यैर्गुणैः रहिताः अत एव भिक्षुभिर्मुधा मिथ्या असद्गुणारोपेणेति भावः श्लाघिताः नत्वाढ्यैः। पक्षान्तरे तु दीर्घसमीक्षयेतिच्छेदः। अविज्ञायाविचार्य्य जगन्मातुर्मम चैद्यादयः पुत्रस्थानीया इति तद्गतं वित्तजन्मादिसाम्यमविचार्य्यैवेति यावत् दीर्घा भगवदसाधारणगुणान्वेषणपरा समीक्षाविचारो यस्यास्तया त्वया गुणैः परमात्मासाधारणैः कल्याणगुणैर्हीनाः "ओहाङ्गतौ" सङ्गता इत्यर्थः। अत एव भिक्षुभिर्न्नारदादिभिर्मुधा व्यर्थं प्रयोजनान्तरनिरपेक्षं श्लाघिता वयं वृताः ॥ १६ ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

एवम्विधपुरुषप्राप्तौ योषितां भयं भवतीत्याह—पुंसामिति। अलोकपथमीयुषां लोकविलक्षणमार्गवर्तिनां पुंसां पदवीमास्थिताः योषितः प्रायः सीदन्तीत्यन्वयः ॥ १३ ॥ अस्माद्दोषाच्च वयं न वरणीया इत्याह—निष्किञ्चना इति। आढ्या राजकुमार्यः ॥ १४ ॥ अयञ्चैको हेतुर्लोके विवाहेत्याह—ययोरिति। ऐश्वर्याकृतिरैश्वर्ययुक्ताकारः भवः सौन्दर्यम् ॥ १५ ॥ एतद्गुणागुणसर्वस्वम् अदीर्घसमीक्षया अल्पबुद्ध्या मुधावृद्ध्या ॥ १६-१८ ॥

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः

वर्त्म अदृष्टहिताचरणम्। लोकपथो दृष्टहिताचरणम् भव आयतिरुत्तरकालो भवितव्यतेत्यर्थः ॥ १३-२० ॥

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी

अस्पष्टवर्त्मनां कदाचित्परदारग्रहणेन कदाचिद्वैदिकाचारवत्त्वेन च वयमधार्मिका धार्मिका वेत्यस्पष्टवर्त्मनां भार्य्याया अपि अग्रतस्तद्भ्रातुरवमानत्वान्न लोकपथमपि ईयुषामस्मद्विधजनानां पदवीम् आस्थिता धार्मिका अनुसृताः सीदन्ति प्रायग्रहणात् काश्चित् यन्न सीदन्ति तत्तासामेव गुण इति भावः ॥१३॥ निष्किञ्चना इति वस्तुमात्रेप्यासक्त्यभावादिति भावः ॥१४॥ किञ्च तव मद्भार्य्यात्वं नोपपद्यत इत्यत्र नीतिशास्त्रवाक्यं शृण्वित्याह—ययोरिति। तव पितृपैतामहबहुधनवत्त्वात् बहूनि वित्तानि मम तु पितुर्वसुदेवस्य वित्ताभावान्मदुपार्जितमेवेदं यत्किञ्चिद्वित्तं जन्मेति त्वं महाकुलप्रसूता अहं यादवत्वादकुलीनः ऐश्वर्य्यमिति तव विदर्भदेशस्थकुण्डिनादिबहुनगरेष्वधिकारः ममत्वानर्त्तदेशस्थायामेकस्यां द्वारकानगर्यामेव आकृतिरिति त्वं गौरी अहन्तु काल ऐश्वर्य्येण सहाकृतिरैश्वर्य्याकृतिः भव इति "भवः क्षेमेश संसारे" इत्यभिधानात् त्वं सदाकल्याण्येव ममतु कल्याणवत्त्वं बहुशत्रुकत्वात् सन्दिग्धमेवेति ॥ १५ ॥ न दीर्घा समीक्षा विचारो यस्यास्तया ॥ १६ ॥

### गूढार्थदीपिनी

किं प्रवृत्तो निवृत्तो वेत्यादि न स्पष्टं सुबोधं वर्त्म येषाम्। अलोकपथं स्त्रीपारतन्त्र्यरहितम्। सीदन्ति क्लिश्यन्ति। प्रायो वितर्के, बाहुल्ये वा ॥ १३ ॥ निरव्ययमभावे। निष्किञ्चना अकिञ्चनाः। शश्वत् नित्यमुभयत्रान्वेति। निष्किञ्चनेत्यत्र बहुव्रीहिस्तत्पुरुषो वा। अम्बरीषादिव्यावृत्तये प्रायेणेत्युक्तम् ॥ १४ ॥ जन्मकुलम्। आकृतिर्जातिः। समम् अनुरूपम्। जन्मैश्वर्याभ्यां सहिता आकृतिः। भवः प्रभावः ॥ १५ ॥ एतत् वित्तजन्मादि। अदीर्घसमीक्षया। नास्ति दीर्घसमीक्षा परिणामविचारो यस्यास्तथा त्वया वयं वृता मुधा व्यर्थमेव ॥ १६ ॥

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः

अस्पष्टवर्त्मनामविज्ञातमार्गाणाम् अलोकपथमीयुषाम् लोकातीतं मार्गं प्राप्तानामस्मद्विधानां पदवीं मार्गं स्त्रियः त्वद्विधाः आस्थिताः अनुश्रिताः सीदन्ति क्लिश्यन्ति ॥ १३—१४ ॥ आत्मसमम् अन्योन्यसदृशम् ऐश्वर्येण सहिता आकृतिः रूपं भवः क्षेमः "भवः क्षेमेपि संसारे" इत्यभिधानात् ॥ १५ ॥ नदीर्घा मय्यसङ्कुचिता समीक्षा यस्यास्तया ॥ १६-१७ ॥

## श्रीसत्यधर्मकृता श्रीभागवतटिप्पणी

एतादृशो मृगदृशः क्लिश्यन्तीत्याह अस्पष्टवर्त्मनामिति । अस्पष्टं वर्त्म चौर्यमार्गो येषां तेषां लोकानां पन्था लोकपथो न लोकपथस्तं लोकविलक्षणं मार्गमीयुषां प्राप्तवतां पदवीमास्थितास्तदनुयायिन्यो योषितः प्रायः सीदन्ति । एतादृशा वयं तादृशी त्वमिति तत्त्वम् ॥ १७ ॥ इतोऽपि न वरणीया इत्याह ॥ निष्किञ्चना इति । निर्गतं किञ्चनापि येषां त इति तथा शश्वत्सदा न सहवासोऽपि श्रीमति श्रीमहामित्याह । शश्वन्निष्किञ्चनजनाः प्रिया येषामिति ते तथा यस्मात्तस्मात् हे सुमध्यमे रुक्मिणि । सुमध्ये नास्तीति तत्सम्बुद्धिः सुमध्यम इति च । आढ्याः श्रीमन्तो नः प्रायेण न भजन्ति न तु लक्ष्मीपतिं हरिम् । यस्यानुग्रहमिच्छामि तस्य वित्तं हराम्यहमित्यादेः ॥ १८ ॥ भवतु भवान्यादृशो वाऽनुबन्धो जातः किमिति मतिगती वद न नीतिरेवं लोक इत्याह ॥ ययोरिति । आत्मसममात्मनोः समं जन्म कुलं समम् । ऐश्वर्यसहिताऽऽकृतिः समा । भवो मङ्गलं समस्तयोरेव विवाहो मैत्री च विहितो विहिता । उत्तमाधमयोः क्वचिदपि न शोभते । अतोऽहमवमस्त्वं महावंश्येति जातमयुक्तमिति तात्पर्यम् ॥ १९ ॥ हे वैदर्भि । एतद्विवाहोपयुक्तगुणशून्यत्वविज्ञायादीर्घसमीक्षया जाल्मया गुणैर्हीना वयं वृताः । एतद्वित्तावृत्ता भ्रान्ताऽसीति कान्तामाह । भिक्षुभिरन्नार्थिभिर्मुधा वृथा श्लाघिता इति ॥ २० ॥

## श्रीमद्वल्लभाचार्य्यकृता सुबोधिनी

अविचार्य मोहात् नीतिं परित्यज्य विवाहे बाधकमाह **अस्पष्टवर्त्मनामिति** । अथ यद्यलौकिकदृष्ट्या दूषणानि परिहृत्य विवाहं कुर्यात्, तदा अलौकिकव्यवहारस्तया ज्ञातुमशक्य इति लौकिकपक्षाश्रयणे उभयभ्रष्टाः **स्त्रियः** सीदन्ति । अलौकिकानां लक्षणमाह । न स्पष्टं वर्त्म येषाम् । यस्य हि रीतिर्ज्ञायते, तदनुसारेण व्यवहर्तुं शक्यते । कदाचित्ते लोकानुसारेणापि व्यवहरन्तीति तेषां नियतमार्गज्ञानाभावेऽपि तदाश्रितो लौकिकमार्गो ज्ञायत इति कथमवसाद इति चेत् । तत्राह **अलोकपथमीयुषा-मिति** । **अलोका** लोकातिरिक्ताः, लोके स्थित्वापि अलौकिकानामेव मार्गमाश्रयन्ति । तेषां लौकिकव्यवहारोऽप्यलौकिक इत्यर्थः । अत एव क्षणिकानामव्यवस्थितगतीनां पदवी**माश्रिताः** सीदन्ति । **प्रायः** इति । ता अपि चेत्तत्प्रवणास्तादृश्य एव भवेयुः तद्व्यावृत्त्यर्थं प्रायग्रहणम् ॥ १३ ॥ किञ्च । यं न कोऽपि भजते, तं यो भजते, स सीदतीति वक्तुं मां न कोऽपि भजत इत्याह भगवान् **निष्किञ्चना** इति । धनिन एव स्त्रीणां प्रियाः, वयं तु निष्किञ्चनाः । नाप्यस्मदीयाः सकिञ्चना इत्याह **निष्किञ्चनजनप्रिया** इति । निष्किञ्चना एव जनाः प्रिया येषाम्, निष्किञ्चनजनानां च स्वयं प्रियाः । अतः साक्षात्परम्परयापि धनाभाव उक्तः । एतत्प्रायिकं भविष्यतीत्याशङ्क्य सर्वजनीनं नियतमेतदित्याह **तस्मादिति** । **आढ्या** धनेन सम्पन्नाः प्रायेण न मां भजन्ति, धननाशस्योभयथापि सम्भवात् । यद्यप्यस्मासु स्नेहं कुर्यात्, तदा सर्वस्वमस्मदर्थं विनियुञ्ज्यात्, तदापि निर्धनो भवेत् । यदि वास्मन्माहात्म्यं बुद्ध्वा आन्तरमेव भजनं कुर्यात्, तदापि अस्माकं प्रियः स इति अस्माभिरेव स्वप्रियत्वसिद्ध्यर्थं स निर्धनः क्रियते । अत उभयथापि लोके प्रतिष्ठाकरमाढ्यत्वं नश्यतीति न भजन्ति । तव तु आढ्यत्वमेव स्वरूपमिति स्वरूपनाश एव सम्भावित इति भावः । **प्रायेणेति** अम्बरीषादिव्युदासार्थम् ॥ १४ ॥ नीतिविरोधमाह **ययोरात्मसममिति** । **सुमध्यमे** इति सम्बोधनं निर्धनगृहे स्थातुमशक्तिं बोधयति । कार्यकरणासामर्थ्यात् भोगाभावाच्च । अत एव समान एव विवाह्यः, नासमान इति । लौकिकं समानत्वं **यैः** सिध्यति, तान् धर्मानाह । **ययोः** स्त्रीपुरुषयोर्मित्रयोर्वा समानं वित्तं भवति, समानं च कुले जन्म, वयो वा, ऐश्वर्यं च समानम्, आकृतिश्च, वयस्तारुण्यं च, भव उत्पत्तिर्वा । जन्मभवयोः कालदेशकृतो भेदोऽनुसन्धेयः । सर्वथा साम्यं न युक्तमनुपपन्नं चेति आत्मपदम् । स्वयोग्यानुसारि साम्यमित्यर्थः । यथा चतुर्विंशतिवार्षिकः पतिः, षोडशवार्षिकी कन्येति । पञ्च धर्माः समाः । ऐश्वर्येण सहिता आकृतिः । 'कन्या वरयते रूप'मिति श्लोकेऽपि पञ्चापेक्षिता धर्मा उक्ताः । रूपमत्राकृतिः । वित्तं स्पष्टम् । श्रुतमैश्वर्यस्थानीयम् । कुलं जन्म । भवः समृद्धिः पक्वान्नस्थानीया । तदेवात्रापि ग्राह्यम् । तत्र लौकिकदृष्ट्या राजसमानं धनं नान्यस्य भवतीति साम्याभावः सिद्धः । जन्म । यादवानां तथा न कुलीनत्वमिति लोकप्रसिद्धिः । आकृतिरपि न गौरेति । राज्याभावादेव **नैश्वर्यम्**, उद्भवोऽपि तत एव निवर्तते । देवाज्ज्ञातेऽपि विवाहे मैत्री न तिष्ठतीति प्रकृते मैत्र्या अप्युपयोगात् ग्रहणम् । **उत्तमाधमयोस्तु न क्वचिदिति** । क्वचिदपि नेत्यर्थः । क्वचिज्जातं वा न सुखकरं भवतीति वैलक्षण्यम् ॥ १५ ॥ तर्हि किमतः परं कर्तव्यमिति चेत्, तत्राह **वैदर्भीति** द्वाभ्याम् । एकेनाज्ञानं समर्थ्यते । 'अज्ञानात्कृतमकृतमेवे'ति हविर्विपर्यास इव पुनर्यथाकरणमित्युपाय इति प्रथममज्ञानमाह । **वैदर्भि** विदर्भराजदुहितः । अनेन सत्कुलप्रसूतत्वमुक्तम् । **अविज्ञाय वयं वृता** इति । एतत्तस्या अज्ञानसमर्थनं कार्यान्तरविधानार्थम्, न तु दोषारोपार्थम् । ननु स्तोत्रद्वारा विज्ञापनया च तया पदार्था ज्ञायन्त एव, तत्कथमज्ञानमित्याशङ्क्याह **अदीर्घसमीक्षयेति** । न दीर्घा सम्यगीक्षा यस्याः । आपातत उत्कर्षं दृष्ट्वा अलौकिकमज्ञात्वा लौकिकं सुखं भविष्यतीति वरणाददीर्घदर्शित्वम् । वस्तुतस्तु भगवान् सर्वसंसारनिवारकः, न तु संसारप्रद इति वस्तुतोऽप्यदीर्घदर्शित्वम् । तत्र हेतुमाह **गुणैर्हीना** इति । सगुणादेव संसारो भवति । ननु पूर्वं नारदादिभिः त्वदीयैः अनन्तगुणपूर्णत्वेन भवान् स्तुतः, तत्कथं गुणैर्हीना इति चेत्, तत्राह **भिक्षुभिः श्लाघिता** इति । भिक्षवो हि न वस्तुस्वरूपं जानन्ति, परस्य कथमिष्टमनिष्टं वा भवतीति स्वकार्यमात्रं पश्यन्ति । अन्यथा न याचेरन् । तदुक्तं पूर्वम् । 'नूनं स्वार्थपरो लोको न वेद

परसङ्कटम्। यदि वेद न याचेते'ति सामान्यतो याचकदूषणम्। अतः स्वयं गुणातीता इति केवलं मोक्षार्थिनः संसारापेक्षिणोपि स्थाने स्तुवन्तीति भिक्षुभिः श्लाघिता इति दूषणम्। तत्रापि मुधा। तेषां स्वाचरणादेव पुरुषार्थोऽपि सिध्यतीति मोक्षेऽपि न मद्दानापेक्षा, परमभक्तानां तु सुतरामेव न मदपेक्षा। अतो मुधैव स्वरसात्ते स्तुवन्ति। ये पुनः संसारापेक्षिणः, तैर्न तद्ग्राह्यम्। अतः स्वतः परतश्च अभिप्रायापरिज्ञानात् भ्रमस्तवोत्पन्न इति अज्ञानादेव वरणमित्यर्थः॥ १६॥

### श्रीसुबोधिनी-सारः

तादृशां वरणं दुःखहेतुरित्याह। अस्य स्पष्टं वर्त्म मार्गः प्रवृत्तिर्येषां तेषाम् अलोकपथं लोकातीतमार्गमीयुषां सेवमानानां पुंसां पदवीं मार्गमाश्रिता योषितः स्त्रियः प्रायः सीदंति दुःख्यंति हे सुभ्रूः॥ १३॥ किं च वयं निष्किंचना निःसंगाः शश्वन्निरंतरं निष्किंचना जनाः प्रिया येषां ते वयं स्मः। तस्माद्धेतोः आढ्या धनिनो मां प्रायेण न भजंति न सेवते हे सुमध्यमे॥ १४॥ विचारशून्या त्वमित्याह। ययोर्वित्तं धनं जन्म ऐश्वर्यम् आकृती रूपं भव आयतिर्ज्ञातिवर्गश्चात्मना समं तुल्यं भवति तयोर्विवाहो मैत्री च युक्ता उत्तमाधमयोर्विसदृशयोः क्वचिन्न॥ १५॥ हे वैदर्भि एतदविज्ञाय न वृद्धा न दीर्घा समीक्षा विचारो यस्याः सा तया त्वया विक्षुभिर्विरक्तैः श्लाघिता गुणैर्हीना वयं मुधा वृथा वृताः स्मः॥ १६॥

### गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

'किञ्चास्मदनुसरणं तव केवलदुःखहेतुरेव' इत्याशयेन आह-अस्पष्टवर्त्मनामिति। अस्पष्टवर्त्मत्वे हेतुमाह-अलोकं लोकातीतं पथमीयुषां गच्छतामिति। एवंभूतानां पुंसां पदवीं मार्गमास्थिताः अनुवर्त्तमाना योषितः प्रायः सीदन्ति क्लिश्यन्ति। विवेकवतीनामृष्यादिपत्नीनां क्लेशाभावात् प्रायग्रहणम्। 'त्वं च न क्लेशयोग्या' इति सूचयन् संबोधयति-सुभ्रु इति॥ १३॥ 'धनाभावादप्यस्मदनुसरणे तव क्लेश' इति सूचयन्नाह-निष्किञ्चना इति। वयं निष्किञ्चना धनादिसंपत्तिरहिताः। 'नचास्मत्संबन्धिनामपि धनमस्ति, येन ततोऽपि धनलाभात्तव निर्वाहः स्यात्' इत्याशयेनाह-निष्किञ्चना जनाः प्रिया येषां ते इति बहुव्रीहिः। निष्किंचनानां जनानां प्रिया इति तत्पुरुषो वा समासः। 'न चायं व्यवहारः कादाचित्कः, किंतु सार्वदेशिक एव' इत्याह-शश्वदिति। तस्माद्बहुव्रीहिपक्षे स्वप्रियत्वसिद्धयर्थमस्माभिरेव ते निर्धना क्रियन्ते इति धननाशशङ्काया विद्यमानत्वात्। तत्पुरुषसमासपक्षे तु धनाद्यासक्तानामस्मद्भजनासंभवात् अस्मत्प्रीत्यर्थं सर्वस्वविनियोगभयाच्च आढ्या धनादिसंपन्ना प्रायेण मां न भजन्ति। 'शास्त्रप्रसिद्धमेवैतत्' इति सूचयति-हीति। धनाद्याढ्यानामप्यंबरीषादीनां भगवद्भजनस्य प्रसिद्धत्वात् प्रायग्रहणम्। तव च निर्वाहो धनं विना दुर्घट' इत्याशयेन संबोधयति-सुमध्यमे इति॥ १४॥ किंच "विवाहश्च तथा मैत्री समयोरेव शोभते" इति न्यायविरोधादपि 'असमयोरावयोः संबंधो न युक्तः' इत्यभिप्रायेणाह-ययोरिति। ययोरात्मसमं परस्परानुरूपं वित्तादिकं भवेत्तयोरेव विवाहो युक्तः, मैत्री च युक्ता। उत्तमाधमयोस्तु विवाहमैत्र्यौ क्वचिदपि न युक्ते इत्यन्वयः। तत्र जन्मैश्वर्याभ्यां सहिता आकृतिः जन्म सत्कुले प्रसूतिः। ऐश्वर्यं विभवः। आकृतिः सौन्दर्यम्। भवः जातकनिर्णीतमुत्तरफलम्॥ १५॥ 'महत्कुले महत्स्थाने चोत्पन्नायास्तवैवं बुद्धिमान्द्यं न युक्तम्' इत्याशयेन संबोधयति-वैदर्भीति। एतत्पूर्वोक्तमननुरूप्यमविज्ञाय वयं मुधा वृथैव त्वया वृता इत्यन्वयः। अज्ञाने हेतुमाह-अदीर्घा अदूरा समीक्षा विचारो यस्यास्तयेति। 'वयं च न वरणयोग्या' इत्याह-गुणैर्हीना इति। तथापि वरणे हेतुमाह-भिक्षुभिर्नारदादिभिः मुधैव श्लाघिता इति॥ १६॥

### अन्वितार्थप्रकाशिका

अस्पष्टेति॥ हे सुभ्रूः! अस्पष्टवर्त्मनाम् अविज्ञाताचाराणाम् अलोकं लोकातीतं पथं स्त्रीवश्यताभावमीयुषां गतानामिति एवंभूतानां मादृशानां पुंसां पदवीं मार्गमास्थिताः अनुवर्तमाना योषितः प्रायः सीदन्ति क्लिश्यन्ति। काश्चिन्न सीदन्ति तत्तासामेव गुण इति भावः। ऋष्यादिपत्नीनां क्लेशाभावात्प्रायोग्रहणम्॥ १३॥ निष्किञ्चना इति॥ हे सुमध्यमे! वयं शश्वत् सदा निष्किञ्चनाः निर्द्धना निष्किञ्चनजनप्रियाश्च बहुव्रीहिस्तत्पुरुषो वा तस्मात् प्रायेण आढ्याः धनिनो मां न भजन्ति। अम्बरीषादिव्यावृत्तये प्रायेणेति॥ १४॥ ययोरिति॥ ययोः वित्तम् आत्मसमं परस्परानुरूपं इदं जन्मादीनामपि यथोचितं विशेषणम्। जन्म सत्कुलम् ऐश्वरं ऐश्वर्यम्। ष्यञ् ङीप् च। आकृतिः सौन्दर्यम् ऐश्वर्ययुक्ता कृतिरिति समासो वा। भवः उत्पत्तिर्वय इति यावत्। समृद्धिर्वा एतानि आत्मसमानि स्युः तयोरेव विवाहो मैत्री च युज्यते। उत्तमाधमयोस्तु क्वचिदपि न युज्यते॥ १५॥ वैदर्भीति॥ हे वैदर्भि! एतत्पूर्वोक्तमसाम्यम् अविज्ञाय अदीर्घसमीक्षया दीर्घविचाररहितया त्वया गुणैर्हीना भिक्षुभिर्मुधैव श्लाघिता वयं वृता मुधा वृता इति वा॥ १६॥

### श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्

अस्पष्टमविज्ञेयं वर्त्म। आचरणं येषां तेषां अलोकपथं लोकाचारहीनपथं। ईयुषां प्राप्तानां पुंसां पदवीं मार्गमास्थिता आश्रिताः हे सुभ्रु॥ १३॥ निष्किंचना इति आढ्या धनिकाः हे सुमध्यमे॥ १४॥ आत्मसमं अन्यो अन्ययोग्यं वित्ताद्यस्ति

तयोर्विवाहादि स्यात् ॥ ऐश्वर्यं सामर्थ्यं आकृतिराकारश्च भवोवयः ॥ १५ ॥ हे वैदर्भिनास्तिदीर्घा समीक्षाविवेकदृष्टिर्यस्यास्तया मुधा मिथ्याश्लाघिताः स्तुताः ॥ १६ ॥

**भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी**

अस्पष्टेति ॥ अस्पष्टं वर्त्म आचारो जातिर्वा येषां तेषां, किमयं वसुदेवसुतः क्षत्रियः, वा नन्दात्मजत्वात्तृतीयवर्ण-प्रसूतः, इति अनिर्धार्यजातिकाचाराणामित्यर्थः। अलोकपथं लोकविरुद्धपन्थानमुत्पथमित्यर्थः। ईयुषामुन्मर्यादानामित्यर्थः। पुंसां, पदवीं मार्गं, आस्थिता अनुवृत्ताः। योषितः स्त्रियः, त्वद्विधा इत्यर्थः। हे सुभ्रूः, प्रायः प्रायशः, सीदन्ति क्लिश्यन्ति ॥१३॥ किं च लोके कुरूप्यप्याढ्य एव स्त्रीणामभिमतः अहं त्वनाढ्यः अतः, न त्वादृश्या वरणीय इत्याह ॥ निष्किंचना इति ॥ वयं शश्वत्, नास्ति किंचन स्वं येषां ते निष्किंचना निर्द्धना इत्यर्थः। तर्हि यूयं केषां प्रियाः के च तव प्रिया इत्यत्राह। निष्किंचन-जनानां प्रियाः, निष्किंचनाः जनाः प्रिया येषां तथाभूताश्च। तस्माद्धेतोः, हे सुमध्यमे, आढ्याः, प्रायेण मां न भजन्ति हि ॥१४॥ किं च विवाहश्च तथा मैत्री समयोरेव शोभते इति न्यायेनासमयोः संबन्धो न शोभत एवेत्यभिप्रायेणाह ॥ ययोरिति ॥ ययोः स्त्रीपुरुषयोः, वित्तं, जन्म ऐश्वर्येण सहिता आकृतिरैश्वर्याकृतिः, ऐश्वर्यमाकृतिश्चेत्यर्थः। वयः आत्मसमं परस्परानुरूपं भवेत्, तयोः एव, विवाहः, मैत्री च, घटते। क्वचित् उत्तमाधमयोः, अस्मत्सदृशयोः, न घटते ॥ १५ ॥ सर्वमेतद्वैषम्यमविचार्यैव त्वया वयं वृता इत्याह ॥ वैदर्भीति ॥ हे वैदर्भि, अदीर्घा समीक्षा विचारो यस्यास्तया, त्वया, एतन्मदुपन्यस्तं सर्वं, अविज्ञाय अविदित्वा, गुणैः वरणीयताहेतुभूतैः, हीना रहिताः, भिक्षुभिः मुधा मिथ्यैव, श्लाघिताः प्रशंसिताः वयं, वृताः ॥ १६ ॥

**कृष्णप्रिया**

हे पद्मलोचने सुन्दरी ! अधिक क्या कहें ! हम किस पथ के पथिक हैं, हमारा कौन सा मार्ग है हमारा कौन सिद्धान्त है यह भी जनसमूह को अच्छी तरह से मालूम नहीं है। क्या कहें ? हम लोकव्यवहार से भी अनभिज्ञ हैं एवं व्यव-स्थित लोकव्यवहार का पालन नहीं कर पाते। हम अनुनय-विनय-प्रणय के पण्डित नहीं हैं इसलिये अर्धाङ्गनाओं को कैसे प्रसन्न करना है, यह भी जानते नहीं हैं। जो सन्नारियाँ हमारा वरण करती हैं प्रायः उन्हें क्लेशानुभूति ही होती है ॥ १३ ॥ हे सुमध्यमे ! हम तो नित्य के अकिंचन है। हम विदुरजी जैसे अकिंचनों से स्नेह करते हैं एवं अकिंचनजन हमसे स्नेह रखते हैं। आप अच्छी तरह से जानती हो कि न हमारे पास कुछ था न कुछ रहेगा। जो जन अपने को धनाढ्य मानते हैं, जानते हैं वे न केवल हमसे नाता रखते हैं सेवा और स्नेह भी करते हैं ॥ १४ ॥ राजकुमारी ! यह बात विवेक सम्पन्न है कि जिनका वित्तकुल-ऐश्वर्य-आकृति-वैभव-जन्म परस्पर समान होता है—उन दोनों से विवाह और मैत्री का नाता सम्बन्ध होना चाहिये। यदि अपने से उत्तम या निकृष्ट हो उनसे न किया जाय ॥ १५ ॥ विदर्भ राजकुमारी रुक्मिणी मुझे लगता है कि आपने दीर्घ दृष्टि से विचार किये विना हमारा वरण किया है। जो लोक भिक्षुक हैं वे ही हमारी झूठी प्रशंसा करते रहते हैं। देवी हम गुण सम्पन्न भी नहीं हैं ॥ १६ ॥

**अथात्मनोऽनुरूपं वै भजस्व क्षत्रियर्षभम्। येन त्वमाशिषः सत्या इहामुत्र च लप्स्यसे ॥ १७ ॥**
**चैद्यशाल्वजरासंधदन्तवक्त्रादयो नृपाः। [1]मम द्विषन्ति वामोरु रुक्मी चापि तवाग्रजः ॥ १८ ॥**
**तेषां वीर्यमदान्धानां दृप्तानां स्मयनुत्तये। आनीतासि मया [2]भद्रे [3]तेजोऽपहतयेऽसताम् ॥ १९ ॥**
**उदासीना वयं नूनं न स्त्र्यपत्यार्थकामुकाः। आत्मलब्ध्याऽऽस्महे पूर्णा गेहयोर्ज्योतिरक्रियाः ॥ २० ॥**

**कर्दमक्षमा**

अन्वयः—अथ, आत्मनः, अनुरूपम्, वै, क्षत्रियर्षभम्, भजस्व, येन, इह, च, अमुत्र, त्वम्, सत्याः, आशिषः, लप्स्यसे ॥ १७ ॥ हे वामोरु ? चैद्यशाल्वजरासन्धादयः, नृपाः, च, तव, अग्रजः, रुक्मी, अपि, मम, द्विषन्ति ॥ १८ ॥ हे भद्रे ! वीर्यमदान्धानाम्, दृप्तानाम्, तेषाम्, मदनुत्तये, असत्ताम्, तेजः, अपनुत्तये, अपहरता, मया, आनीता, असि ॥ १९ ॥ वयम्, नूनम्, उदासीनाः, स्त्री अपत्यार्थकामुकाः, न, गेहयोः, ज्योतिः, इव, अक्रियाः, आत्मलब्ध्या, पूर्णाः, आस्महे ॥ २० ॥

**श्रीधरस्वामिविरचिता भावार्थदीपिका**

अथ इदानीमपि ॥ १७ ॥ तर्हि किमित्यानीताऽहमिति चेत्तत्राह। चैद्यशाल्वजरासंधेति। मम मां द्विषंति ॥ १८ ॥ स्मयनुत्तये गर्वापनयनाय ॥ १९ ॥ स्त्रीणामतिदुःसहमौदासीन्यमकामत्वञ्चाह। उदासीना इति। गेहयोर्देहगेहयोरुदासीना अत एव ज्योतिरक्रियाः ज्योतिः प्रदीपादि तद्वत्साक्षिमात्रतया क्रियारहिता आस्महे वर्तामहे इति ॥ २० ॥

---

१. द्विषन्ति मां वरारोहे विज. । २. तान्वि—वीर; ह्यद्धा—बिज. त्वं च—च. पु. टि. । ३. पहृताऽ—श्रीधरादयः ।

**श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः**

येनाऽनुरूपेण ॥ एवमुक्तमिव यदुक्तं यच्च वक्ष्यते तत्रात्यंतासंभवोक्त्या तस्यां परमकोमलचित्तायां परिहासत्वं चातिस्फुटीकरोति, किञ्च—यदभूत्तदभूदेव तव स्थिरयौवनत्वादधुनापि काचित्क्षतिर्नाभूदतो विवेकं कुर्वित्याह—अथेति, इदानीमपि । वै एव, अनुरूपं सदृशमेव ॥ १७ ॥ स्वयमाशंक्य समाधत्ते—तर्हीति । आदिना पौंड्रकादिः । चैद्येत्यादि तैरवतारितम्, तत्र चेदित्यधिकं भाति । किञ्च द्वाभ्यामिति शेषः । विशेषस्तु तव मद्भक्ताया अग्रजोपीति । अत्र वर्तमानसमीप एव वर्तमानत्वमस्य मारितत्वेन वक्ष्यमाणत्वात् ॥ १८ ॥ तेषां चैद्यादीनाम् । स्मयो गर्वस्तस्य नुत्तये नाशाय । न च तत्र मम कोऽपि दोषः, किन्तु दुष्टस्वभावेनैव ते द्विषंतीत्याह—वीर्येण प्रभावेण बलेन वा यो मदो मत्तता तेनांधानां हृतविवेकानामतो दृप्तानां गर्वितानामिति । अतस्तेषां स्मयनुत्तये आनीतासि । तत्र हेतुविशेषः—असतां तेजोपहरतेति । त्वदानयने तदेव प्रयोजनं न तु त्वद्विवाहादिकमिति भावः ॥ १९ ॥ स्वस्य स्त्रीणामयोग्यतामाह—स्त्रीणामिति । उदासीना अनासक्ताः विषयव्यापारशून्याः, खपुष्पादिवदप्रसिद्धा वा । 'उदासीनस्त्वप्रसिद्धे विषयासक्तिवर्जिते । मध्यस्थ ऊद्ध्वर्वमासीने" इति धरणिः । अत एवोदासीनत्वादेव । ननु नानावैभवयुक्तस्य नानास्त्रीसंग्रहवतः कुतोऽकिंचनत्वादिकम्, किञ्च—अस्पष्टवर्त्मत्वादिनात्मनि वा कुतो दांभिकत्वमिवांगीक्रियत इत्याशंक्य सर्वं समादधदेव तद्विधानामतिदुःसहमाह—उदेति । नूनं निश्चये । उदासीना न तु कुत्राप्यासक्ता न चात्मीयेष्वपीत्यह—नेति । कुतः—आत्मेति । आत्मसुखेनैव सुखिन इत्यर्थः । गेहयेरित्येकशेषात्, न च देहस्य गेहसामान्येन तच्छब्दप्रयोगात् । ज्योतिरक्रिया इति-परमात्मैकभावेनेति भावः । तदिदं परमार्थतः । स्वस्य जीवांतर्यामित्वापेक्षयोक्तमतो देहगेहौ चात्र जीवसंबंधिनावभिप्रेतौ न तु स्वसंबंधिनौ, लीलाविनोदस्तु स्वदेहगेहेषु लौकिकज्ञानित्वाद्यारोपणायोक्तमिति ज्ञेयम् ॥ २० ॥

**श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी**

एवमयुक्तमिव यदुक्तं यच्च वक्ष्यते तत्रात्यन्तासम्भवोक्त्या तस्यां परमकोमलचित्तायां परिहासत्वञ्चातिस्फुटीकरोति अथेति वै एव अनुरूपं सदृशमेव आशिषः कामान् सत्याः स्थिरा उत्तमा वा ॥ १७ ॥ चैद्येति तैरवतारितं तत्रेति चेदित्यधिकमिव भाति किञ्च आहेत्यस्यानन्तरं चैद्येत्यादिद्वाभ्यामिति शेषः विशेषतस्तु तव मद्भक्ताया अग्रजोपीति अत्र वर्त्तमानसामीप्य एव वर्त्तमानवत्त्वम् अस्य मारितत्वेन वक्ष्यमाणत्वात् ॥ १८ ॥ न च तत्र मम कोपि दोषः किन्तु दुष्टस्वभावेनैव ते द्विषन्तीत्याह वीर्य्येण प्रभावेण बलेन वा यो मदो मत्तता तेन अन्धानां हृतविवेकानामतो दृप्तानां गर्वितानामिति अतस्तेषां स्मयनुत्तये एवानीतासि तत्र हेतुविशेषः असतां तेजोपहरतेति त्वदानयने तदेव प्रयोजनं न तु त्वद्विवाहादिकमिति भावः ॥ १९ ॥ ननु, नानावैभवयुक्तस्य नानास्त्रीसङ्ग्रहवतः कुतो निष्कञ्चनत्वादिकं किञ्चास्पष्टवर्त्मत्वादिनात्मनि वा कुतो दाम्भिकत्वमिवाङ्गीक्रियत इत्याशङ्क्य सर्वं समादधदेव तद्विधानामतिदुःसहमाह—उदेति । नूनं निश्चये उदासीनाः न तु कुत्राप्यासक्ताः न चात्मीयेष्वपि इत्याह—नेति । कुत आत्मेति आत्मासुखेनैव सुखिन इत्यर्थः । गेहयोरित्येकशेषात् न च देहस्य गेहसामान्येन तच्छब्दप्रयोगात् ज्योतिरक्रिया इति परमात्मैकभावेनेति भावः । तदिदं परमार्थतः स्वस्य जीवान्तर्यामित्वापेक्षायोक्तम् अतोः देहगेहौ चात्र जीवसम्बन्धिनावेवाभिप्रेतौ न तु स्वसम्बन्धिनौ लीलाविनोदस्तु स्वदेहगेहेषु लौकिकज्ञानित्वाद्यारोपणायोक्तमिति ज्ञेयम् ॥ २० ॥

**श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी**

वै एव, अनुरूपं सदृशमेव, अतः क्षत्रियेषु ऋषभं श्रेष्ठं पुरुवंश्यादिजातमर्ज्जुनादिकमित्यर्थः । आशिषः कामान् सत्याः स्थिरा उत्तमा वा ॥ १७ ॥ चैद्यादीनां यथापूर्व्वं द्वेषं श्रैष्ठ्यम्, तव मद्भक्ताया अग्रजोऽपि, ममेत्येकत्वं द्वेष्यत्वे स्वस्याप्राधान्यमननात् ॥ १८ ॥ न च तत्र मम कोऽपि दोषः, किन्तु दुष्टस्वभावेनैव ते द्विषन्तीत्याह-वीर्य्येण प्रभावेण बलेन वा यो मदो मत्तता तेनान्धानां हृतविवेकानाम्, अतो दृप्तानां गर्वितानां स्वयनुत्तयेऽतो हेतुविशेषः । असतां तेजोऽपहरतेति त्वदानयने मे तदेव प्रयोजनम्, न तु त्वद्विवाहादिकमिति भावः । पाठान्तरेऽपि स एवार्थः । किं त्वस्माभिरिति बहुत्वेनात्मनः सर्व्वसाधारण्यप्रतिपादनात्तस्यामौदासीन्यमेव बोधयति ॥ १९ ॥ एवं नृपाणां निर्जयादिनापि राजभ्यो विभ्यत इत्येव दृढ़ीकृतम्, दुष्टत्वेन तैः सदा छिद्रान्वेषणात्, नूनं निश्चये, उदासीनत्वादीनामुत्तरोत्तरं पूर्व्वपूर्व्वस्मिन् हेतुः । आत्मलब्ध्या स्वानन्दानुभवेन पूर्णाः । एवमुक्तानामसमत्वादीनां दोषाणां यथोत्तरं वरणायोग्यत्वे श्रैष्ठ्यम् । यद्यपि 'अपि मे पूर्णकामस्य नवं नवमिदं प्रियम्' इत्यादिवचनप्रामाण्येन तस्य भक्त-भक्त्याद्यपेक्षास्ति, तथापीदृश्युक्तिर्नर्म्मपरत्वादेव, न तु तत्त्वत इति सर्व्वमेव तदुक्तं विपरीतार्थत्वेन ज्ञेयम् ॥ २० ॥

**श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका**

किमत इत्यत आह—अथेति । अथ अधुनेत्यर्थः । क्षत्रियर्षभं चैद्याद्यन्यतमं भजस्व, तं विशिनष्टि—येन सेव्यमानेन क्षत्रियर्षभेण हेतुना इहामुत्र च लोके सत्याः सतीराशिषः कामान् लप्स्यसे प्राप्स्यसे पक्षान्तरे तु क्षत्रियर्षभं क्षत्रियश्रेष्ठत्वेन अवतीर्णं

मामित्थं भजस्व इह लीलाविभूतौ अमुत्र नित्यविभूतौ च येन मया सेव्यमानेन सह सत्याः आशिषः कामान् मदनुभवात्मकान् लप्स्यसे इत्यर्थः ॥ १७ ॥ तर्हि मां किमर्थमानीतवानसीत्यत आह—चैद्येति । हे वामोरु ! शोभनोरु मम द्विषन्ति मां द्विषन्तीत्यर्थः ॥ १८ ॥ ततः किमत आह-तेषामिति । वीर्य्यमदेनान्धानां विवेकशून्यानां गर्वितानां च तेषां चैद्यादीनां च स्मयनुत्तये गर्वापाकरणाय मया त्वमानीता कथम्भूतेन असतां खलानां तेजसामिति कर्मणिषष्ठी तेजांसि हरता पक्षान्तरे तु यद्यपि मदनपायिनी त्वं केनाप्युपायेन मामेव प्राप्तवत्यसि यथापि तेषां स्मयनुत्तये मया नीतासीति प्रासङ्गिकोक्तिः युक्तञ्चैतदित्यभिप्रायेणाऽऽत्मानं विशिनष्टि-असतां तेजांसीति पूर्ववत् हरता "लक्षणहेत्वोः क्रियायाः ( ३-२-१२-६ ) इति शत्रादेशः हर्त्तुमवतीर्णेनेतिशेषः ॥ १९ ॥ स्त्रीणामतिदुस्सहमौदासीन्यमकामुकत्वञ्चात्मन्याह—उदासीना इति । गेहयोरुदासीनाः गृहशब्दपर्यायो गेहशब्दोप्यत्र कलत्रवेश्मोभयपरः अत एव द्विवचनान्तनिर्देशः अत एव न स्त्र्यपत्यार्थकामुकाः दारेषणापुत्रेषणाधनेषणारहिताः तत्र हेतुरात्मलब्ध्या स्वात्मानुभवलाभेनैव पूर्णाः अलम्पटाः ज्योतिषा स्वयम्प्रकाशस्वात्मस्वरूपस्फुरणेन हेतुना अक्रियाः निष्क्रियाः प्राकृतचेष्टारहिताः आस्महे वर्त्तामहे इत्यर्थः । पक्षान्तरेत्वर्थस्तु यथोक्त एव तात्पर्य्यन्तु असतां स्मयनुत्तयेऽवतीर्णस्य मम गृहमेधिधर्मानुवर्त्तनं विडम्बनमात्रमन्यथैवम्विधस्यैतन्न घटत इति ॥ २० ॥

## श्रीविजयध्वजतीर्थकृता पदरत्नावली

स्मयनुत्तये अहङ्कारनिरासाय असतां दुरात्मनां तेजोपहरता अभिमानलक्षणप्रभावप्रणाशङ्कुर्वता मया नीतासीत्यन्वयः ॥ १९ ॥ स्वभावं सूचयति–उदासीना इति । उदासीना विषयव्यापारशून्याः खपुष्पादिवदप्रसिद्धा वा न स्त्र्यपत्यार्थकामुकाः कलत्रपुत्रधनलोलुपा न आत्मलब्ध्या स्वरूपलाभेन पूर्णाः अलम्बुद्धयः आस्महे इह क्रियाश्च आत्मसदृशाः कर्माणि जीवकर्मतुल्यानि न भवन्ति अतिमानुषाणीत्यर्थः ॥ २० ॥

## श्रीमज्जीवगोस्वामिकृतः बृहत्क्रमसन्दर्भः

अथात्मन इत्यादि । अथ-शब्दो वाक्यान्तरद्योतकः । तद्वाक्यं तु देव्या पूर्वमेव प्रतिहतज्ञानया न श्रुतम्, अस्य प्रत्युत्तराभावात् । अत्यन्तासह्यमप्येतत्तदश्रवणमेव देहसद्भावे हेतुः ॥ १७–२० ॥

## श्रीनाथचक्रवर्तिपादविरचिता चैतन्यमतमञ्जूषा

अथात्मन इत्यादि । वाक्यान्तरेऽथशब्दः । एतद्वाक्यन्तु पूर्वमेव देव्या प्रतिहत-ज्ञानया न श्रुतम्, अस्य प्रत्युत्तराभावात् एतेनैव देहोऽपि स्थितः ॥ १९–२० ॥

## श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

किञ्च यदभूत्तदभूदेव तव स्थिरयौवनत्वादधुनापि काचित् क्षतिर्नाभूदतो विवेकं कुर्वित्याह—अथ इदानीमपि ॥१७॥ तर्हि किमित्यानीताऽहमित्याशङ्क्याह—चैद्येति । मम माम् ॥ १८ ॥ स्मयनुत्तये गर्वापनोदाय ॥ १९ ॥ न चान्यभजने मम दुःखं माशङ्किष्ठा इत्याह–उदासीना इति । गेहयोर्देहगेहयोरुदासीनाः अत एव ज्योतिः प्रदीपादि तद्वत् साक्षिमात्रतया क्रियारहिता आस्महे ॥ २० ॥

## गूढार्थदीपिनी

अथ अतः । येन अनुरूपेण अमुत्र परलोके त्वम् आशिषो भोगान् लप्स्यसे ॥ १७ ॥ मम माम् शेषे षष्ठी । रुक्मी चापि द्वेष्टि । तस्य हतत्वाद्वर्तमानसामीप्ये लट् ॥ १८ ॥ दृप्तानां गर्वितानां स्मयनुत्तये गर्वनाशाय ॥ १९ ॥ गेहयोर्देहगेहयोरुदासीना अनासक्ता वयम् इत्यन्वयः । आत्मलब्ध्या आत्मानन्देन पूर्णा आस्महे वर्तामहे । ज्योतिः प्रदीपादि तद्वत्साक्षित्वेन अक्रिया क्रियारहिताश्च आस्महे वर्तामहे ॥ २० ॥

## श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

मम माम् ॥ १८ ॥ स्मयनुत्तये गर्वापनयनाय ॥ १९ ॥ गेहयोः एकः गेहशब्दो गृहवाचकः द्वितीयः गृहिणीवाचकः "न गृहं गृहमित्याहुर्गृहिणी गृहमुच्यते" इति वचनात् तत्रैकशेषे गेहयोः लौकिकगृहकलत्रयोरुदासीनाः ज्योतिरक्रियाः ज्योतिवत् चिन्तामणिवत् स्वार्थव्यापारवर्जिता परार्थे व्यापृयमानाः आस्महे वर्तामहे ॥ २० ॥

## श्रीसत्यधर्मकृता श्रीभागवतटिप्पणी

कोपेन छिन्ना नाशिका न हि शान्त्या प्ररोहेदितिवत्कृतस्य करणायोगादितिवच्च न नूतनं किञ्चिदुद्भावयितुमुचितमित्यतः शक्यमेवंकर्तुमित्याह ॥ अथेति । आत्मनोऽनुरूपमुक्तगुणैः समं योग्यं क्षत्रियर्षभं भजस्व येनोढेनेहामुत्र च सत्या अर्थवतीराशिषोऽभिलाषान् लप्स्यसे प्राप्नोषि ॥ २१ ॥ हे वरारोहे । तवाग्रजो रुक्मी चापि मां द्वेष्टि ॥ २२ ॥ इयन्निदर्शनमधुना तन्वतो नन्दनन्दन तदभिनन्दनं कुत इति न गदेतदर्थमानीताऽसि मानिनि मयेत्याह ॥ तेषामिति । वीर्यमदान्धानां दृप्तानां तेषां

स्मयनुत्तयेऽनहङ्काराय त्वद्धाऽतिसम्यक् । असतां तेजोऽपहरता मयाऽऽनीताऽसि । भद्र इति पाठः सुभद्रः ।। २३ ।। सत्यस्मद्रीति-रियमित्याह ।। उदासीना इति । नूनं वयमुदासीना यथा स्त्र्यपत्यार्थकार्मुका न । आत्मलब्ध्या स्वरूपलाभेनैव पूर्णा अस्महे । क्रियाश्चात्मसदृशा न ह्यस्माकमिति शेषः । क्रियाश्च निरन्तरं क्रियमाणा नद्धा बन्धनीया य आत्मानो जीवास्ते सदृशा योग्या यासां ताः क्रिया अस्माकमिति वा । प्रसिद्धं चोलूखबन्धादिकमिति भाव इति वा । आत्मासदृशा यासां ता इति विग्रहः । उपसर्जनतया न ङीप् । आर्षो वा । सदृश इति पाठे न कोऽपि दोषः ।। २४ ।।

## श्रीमद्वल्लभाचार्यकृता सुबोधिनी

तर्ह्यतः परं किं कर्तव्यमित्याकाङ्क्षायामाह । अथेति भिन्नप्रक्रमेण । पितृगृहे गत्वा पूर्ववत् कृत्वा आत्मनोऽनुरूपं संसारैकप्रवणम् । स्त्रियः संसारैकस्वभावा इति स्त्रीणां न मुक्तिरिति मर्यादा । स्त्री च भर्तृसायुज्यं प्राप्नोति । अतः समाने भर्तरि सर्वमेतदुपपद्यते, न विषम इति, अन्यथा स्त्रीनाशो भर्तृनाशो वा स्यात् । स को वा वरणीय इत्याकाङ्क्षायां बहिर्मुखं निर्दिशति **क्षत्रियर्षभमिति** । ते हि बहिर्मुखा एव । अन्यथा निर्दयाः परघातं न कुर्युः । क्षत्रियश्रेष्ठत्वात् न कोऽपि वाच्यतां मन्यते । तेषां जये अन्यसम्बन्धिन्योऽप्याह्रियन्त इति न दूषणमपि । आकाङ्क्षा तु तेषां वर्तत इत्युक्तमेव । ततः किं स्यादित्या-शङ्क्याह **येनेति** । सत्या आशिषः, प्रवाहनित्या विषयाः, तैरेव सिध्यन्ति, न त्वन्यैः । ऐहिकामुष्मिकफलरागरहितस्तु मत्परायण इति न मत्सेवया सर्वजन्मस्वैहिकामुष्मिकफलसिद्धिः । अतः संसार्यैकस्वभावक्षत्रियर्षभवरणेनैव फलप्राप्तिरिति युक्तम् । त्वमिति मायारूपत्वमुक्तम् । कापट्यं तत्रैव सफलं भवति, न तु ब्रह्मणीत्यर्थः ।। १७ ।। नन्वेवं कर्तव्ये, सर्वज्ञेन त्वया किमित्यहमाहृतेति चेत्, तत्राह **चैद्येति** द्वाभ्याम् । तान् तेषां दोषं च निरूपयति । आद्यन्तौ शापवशात् द्वेषिणौ । मध्यमौ देवतान्तरोपासकौ बहि-र्मुखाविति चत्वार उक्ताः । तेन शापात् वा स्वभावाद्वा ये अन्यपराः, ते द्विषन्तीति । येऽप्यन्ये तानप्येतादृशधर्मवतः आदिशब्देन परिगृह्णाति । **नृपा** इति तेषां सर्वथा अमारणे हेतुः । मम सम्बन्धिनोऽपि मां द्विषन्ति । किञ्च । त्वत्सम्बन्धिनोऽपीत्याह **रुक्मी चापीति** । तव मुख्यः सम्बन्धी ज्येष्ठभ्राता । चकारात्तत्सम्बन्धिनः । सम्बन्धविशेषस्योक्तत्वात् ते तवापरिहार्या इत्यपि सूचितम् । अतस्तेऽस्मदीयास्त्वदीयाश्चेति तेषां गर्वलक्षणसन्निपातनिवृत्त्यर्थं त्वमानीतेत्याह । **वामोरु**विति सम्बोधनाददुष्टत्वं च द्योतितम् । निवार्यं दोषमनुवदति **तेषां वीर्यमदान्धानामिति** । वीर्यमदेन अन्धानाम् । यथा अन्धः निकटे स्थितमपि गर्तं न जानाति, अपि तु पतत्येव, तथा ते वैष्णवानलेषु पतन्तः मया निवारिता इति भावः । किञ्च । **दृप्ताः** हृदयशून्या अपि । न वा प्रमाणम्, न वा विचारस्तेषामित्यर्थः । ताभ्यां जातो यः स्मयः तस्य नुत्तये आनीतेति समानयने हेत्वन्तरमिति, दोषाभावश्च पूर्वं प्रतिपादित इतीतरभजनं समर्थितं भवति । ननु तेषां गर्वाभावस्तत्पराजयेनैव सिद्धो भवतीति किं मदाहरणेनेत्याशङ्क्याह **तेजोऽपहृतय** इति । तेषां तेजोऽप्युपहर्तव्यम् । **उपहृतये** नाशाय वा । जयपराजयावव्यवस्थिताविति शास्त्रेण कदाचिज्जातेऽपि पराजये न यावज्जीवं ग्लानिं मन्यन्ते । सत्प्रतिभाः सन्तः पुनरायान्ति च । एवं कृते तु गततेजसो भवन्तीति न तेषां पुनरुद्गमः । तेजोहरणं दोषाय भविष्यतीत्याशङ्क्याह **असतामिति** । असतां तेजोनाशः युक्त एव ।। १८-१९ ।। एवं रुक्मिण्या उपयोगमुक्त्वा स्वार्थं सा स्थापनीयेति पक्षं वारयति **उदासीना** इति । नूनमिति नात्र सन्देहः युक्त्या कर्तव्यः । ईषणात्रयं पर्यवसितं स्त्रीपुत्र-धनरूपम् । तदपेक्षायामन्तस्तन्निवार्यरोगे तदपेक्षा भवति । पूर्णानन्दस्य स्वस्मिन् दोषाभावात् औदासीन्यमेव । द्वेषाभावात् नापि त्याज्यम् । अतः स्वस्योपचयापचयाभावात् न स्त्र्यपत्यार्थकामुकाः । अत्र भगवत्सम्बन्धः नोभयेच्छाकृतः, किन्त्वन्य-तरेच्छाकृत एव । कार्यमुभयेच्छाधीनमिति तदनुरोधे भगवतः सकाशात्तत्कार्यमुत्पद्यते । अननुरोधे तु नेति नावश्यकत्वं कार्यस्य । अनुरोधस्तु न नित्यः भिक्षुकेष्विव । अतोऽन्यत्र नित्यापेक्षिणो गमनमुचितम् । 'धर्मार्थकाममोक्षार्थं य इच्छेदि'त्यादिवाक्यमपि पृथगेव दानं बोधयति, नतु क्रियायां भगवत्सम्बन्धम्, अन्यथा भगवांस्तद्दाता न भवेदेव, स्वस्य निर्बन्धसम्भवात् । अकामुकत्वे हेतुमाह **आत्मलब्ध्येति** । यद्यपि भगवति नायं हेतुः आत्मत्वात् अज्ञानादिव्यवधानाभावाच्च । 'आत्मलाभान्न परं विद्यते' इति श्रुतिरपि न फलस्य फलसम्बन्धं बोधयति । तथापि लौकिकोक्त्या सम्मतिप्रदर्शनार्थं तथोच्यते । यथा लब्धात्मानः न स्त्र्यादि-कामुकाः, एवं वयमिति । वाच्यं त्वेतावत्**पूर्णा आस्महे** इति । सर्वदैव वयं पूर्णास्तिष्ठाम इत्यर्थः । नित्यप्राप्त एवात्मा हेतुत्वेना-नूद्यत इति । ननु तथापि क्रीडार्थं समागतस्य क्रीडानिर्वाहार्थं कामना भवत्येवेति चेत्, तत्राह **गेहयोर्ज्योतिरक्रिया** इति । आविर्भूतमनाविर्भूतं वा तेजः स्वयं कार्ये न व्यापृतं भवति, किन्त्वाविर्भूतं केनचिन्निमित्तेन स्वसम्बन्धिनं प्रकाशयति । सम्बन्धिन एव च दोषं नाशयति, नतु स्वस्य काचिदपेक्षा । आविर्भूतमिति **गेहयो**र्देहगेहयोः । उभयमपि तुल्यमिति ख्यापयितुं समानशब्देन निर्देशः । ज्योतिरिव क्रियारहिताः ज्योतिरक्रियाः । अनेन तेजोवद्भगवदाविर्भाव इत्युक्तम् । अतः क्रिया विकारा-त्मिका नास्तीति नास्माकं काप्यपेक्षा । फलं च न नियतमिति फलापेक्षायामन्यानुसरणं कर्तव्यमिति सिद्धम् । २० ।।

## श्रीविट्ठलरायात्मजश्रीवल्लभकृतलेखः

**उदासीना** इत्यत्र । **दोषाभावा**दिति । कामाद्यभावादित्यर्थः । **गेहयो**रिति सप्तमी । देहे गेहे च ज्योतिरिव क्रिया-रहिता इत्यर्थः ।

### श्रीसुबोधिनी–सारः

अथेदानीमपि आत्मनोऽनुरूपं तुल्यं राजोत्तमं भजस्व त्वं सेवय पत्यपमानिताया देवरादिष्वस्थानस्य याज्ञवल्क्यादिभिरुक्तत्वात् येन हेतुना सत्या आशिष इहामुत्र च लोकद्वये त्वं प्राप्स्यसि ॥ १७ ॥ तर्हि किमित्यानीतेति चेत्तत्राह । हे वामोरु ! चैद्यादयो भूपा नृपाः तवाग्रजो ज्येष्ठभ्राता रुक्मी चापि मम मह्यं द्विषंति ॥ १८ ॥ वीर्यमदाभ्यामंधानां दृप्तानां गर्वितानां तेषां स्मयनुत्तये गर्वापहारार्थं हे भद्रे असतां दुष्टानां तेजोपहरता मानं खंडयता मया नीतासि ॥ १९ ॥ वयमुदासीनाः नूनं निश्चयेन स्त्रीपुत्रधनलुब्धा न गेहयोर्देहगेहयोरक्रिया निर्वर्त्तितव्यापारा आत्मनो लब्ध्या प्राप्त्या पूर्णा आस्महे वर्त्तामहे ज्योतिः प्रदीपादिरिव साक्षिण इत्यर्थः । शुकोक्तिः ॥ २० ॥

### गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

अथ तस्मात् अस्मद्वरणस्य विफलत्वात् अधुनापि येन सेव्यमानेन इहास्मिन् लोके अमुत्र परलोके त्वं सत्याः सतीः स्वाभिलषिताः आशिषो विषयान् लप्स्यसे प्राप्स्यसे तमात्मनोऽनुरूपं स्वयोग्यं क्षत्रियश्रेष्ठमेव भजस्वेत्यर्थः । परलोकमनोरथोपि दानादिद्वारा धनाढ्यानामेव सिद्ध्यतीत्यमुत्रग्रहणम् ॥ १७ ॥ ननु 'तर्हि किमर्थमहं युष्माभिरानीतास्मि' इत्यपेक्षायामाह— चैद्येति द्वाभ्याम् । हे वामोरु ! तवाग्रजः ज्येष्ठो भ्राता रुक्मी, तथा चैद्यादयो नृपाश्चापि मम मां द्विषन्ति ॥ १८ ॥ अतो वीर्यमदेनान्धानां विवेकशून्यानां दृप्तानां गर्वितानां तेषां शिशुपालादीनां स्मयनुत्तये गर्वविनाशाय असतां दुष्टानां तेजोऽपहरता मया त्वमानीतासीति द्वयोरन्वयः ॥ १९ ॥ स्त्रीणामतिदुःसहमौदासीन्यमकामुकत्वं चात्मन्याह—उदासीना इति । नित्यं सर्वदा वयमुदासीनाः सर्वत्रासक्तिरहिताः, अत एव गेहयोर्देहगेहयोरपि ज्योतिरक्रियाः ज्योतिः प्रदीपादि तद्वत्साक्षिमात्रतया सर्वविक्रियारहिताः आस्महे वर्तामहे । अतो नूनं निश्चयेन न स्त्र्यपत्यार्थकामुकाः स्त्रीपुत्रधनेच्छारहिताः । तत्र हेतुमाह—आत्मलब्ध्या स्वात्मानन्दानुभवेनैव पूर्णा इति ॥ २० ॥

### अन्वितार्थप्रकाशिका

अथेति ॥ अथ इदानीमपि येन सेव्यमानेन इहास्मिन् लोके अमुत्र परलोके च त्वं सत्याः स्वाभिलषिताः आशिषो विषयान् लप्स्यसे प्राप्स्यसे । तमात्मनोऽनुरूपं स्वयोग्यं क्षत्रियश्रेष्ठमेव भजस्व ॥ १७ ॥ तर्हि किमित्यहमानीता तत्राह—चैद्येति । हे वामोरु ! चैद्यशाल्वादयः नृपाः मम माम् । शेषे षष्ठो । द्विषन्ति तथा तवाग्रजो रुक्मी चापि मां द्वेष्टि तस्य हतत्वाद्वर्त्तमानसामीप्ये लट् ॥ १८ ॥ तेषामिति । हे भद्रे ! वीर्यमदेनान्धानां विवेकशून्यानां दृप्तानां गर्वितानां तेषां शिशुपालादीनां स्मयनुत्तये गर्वविनाशाय असतां दुष्टानां तेजोऽपहरता मया त्वमानीतासि । नतु कामुकतया उद्वोढुम् ॥ १९ ॥ स्त्रीणां दुःसहमौदासोन्यमकामुकत्वं चाह यद्वा न चान्यभजने मम दुःखलवोऽपीत्याह—उदासीना इति । वयमुदासीनाः सर्वत्रासक्तिरहिताः अत एव गेहयोर्देहगेहयोरपि देहशब्दसमानार्थतां गेहशब्दस्याश्रित्यैकशेषः । देहस्यापि जीवगेहत्वात् । ज्योतिरक्रियाः ज्योतिः प्रदीपादिस्तद्वत्साक्षिमात्रतया सर्वविक्रियारहिताः । यद्वा । देहगेहयोः उदासीना इत्यन्वयः । आत्मलब्ध्या स्वात्मानन्दानुभवेनैव पूर्णा आस्महे वर्तामहे । अतो नूनं निश्चयेन स्त्र्यपत्यार्थकामुकाः न स्त्रीपुत्रधनेच्छरहिताः स्मः ॥ २० ॥

### श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्

अथाधुनापीत्यर्थः ॥ १७ ॥ एवं तर्हि मामत्र कस्मादानीतवानिति चेत्तत्र हेतुवदामि चैद्येति द्वाभ्यां ॥१८॥ स्मयनुत्तये गर्वनाशाय ॥ १९ ॥ स्त्रीपुत्रादीन् विना पुरुषस्य कथं स्थितिरित्याशंकायामाह उदासीना इति । देहगेहयोः समानार्थत्वाद्गेहशब्दं प्रयुज्य गेहं च गेहं च गेहे तयोर्गेहयोरित्येकशेषः गेहयोर्देहगेहयोरित्यर्थः उदासीनाः अतः स्त्र्यादिकामुकानभवामः पुनश्च कथंभूताः मणिदीपादिज्योतिरिव अक्रियाः देहाद्यर्थं क्रियाशून्याः आत्मलब्ध्या स्वलाभेन पूर्णावयमास्महे वर्त्तामहे ॥ २० ॥

### भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

अथेति ॥ अथेदानीमपि, आत्मनः तव, अनुरूपं क्षत्रियर्षभं क्षत्रियश्रेष्ठं, भजस्व सेवस्व । येन सेव्यमानेन क्षत्रियर्षभेण-हेतुना, इह लोके, अमुत्र परलोके च, सत्याः सतीः, आशिषः कामान्, त्वं लप्स्यसे प्राप्स्यसे वै ॥ १७ ॥ तर्हि मां किमर्थमानीतवानसीत्यत आह ॥ चैद्येति ॥ हे वामोरु शोभनोरु, चैद्यश्च शाल्वश्च जरासंधश्च दन्तवक्त्रश्च ते आदयो येषां ते, नृपाः, तव अग्रजः रुक्मी चापि, मम मां, द्विषन्ति ॥१८॥ ततः किमत आह ॥ तेषामिति ॥ वीर्यमेव मदो वीर्यस्य वा मदस्तेनान्धा विवेकशून्यास्तेषां, दृप्तानां गर्वितानां, तेषां चैद्यादीनां, स्मयनुत्तये गर्वापाकरणाय, हे भद्रे, असतां खलानां, तेजसां कर्मणि षष्ठी । तेजांसीत्यर्थः । हरता मया, त्वं आनीता असि ॥ १९ ॥ स्त्रीणामतिदुःसहमौदासीन्यमकामुकत्वं च तदात्मन्यारोप्याह ॥ उदासीना इति ॥ वयं

ज्योतिरक्रियाः ज्योतिषा स्वात्मस्वरूपाखण्डस्फुरणेन हेतुना अक्रियाः निष्क्रियाः, प्राकृतचेष्टारहिताः, न स्त्र्यपत्यार्थकामुकाः दारैषणापुत्रैषणाधनैषणारहिताः, कुतः। यतः, आत्मलब्ध्या स्वात्मानुलाभेनैव, पूर्णाः। अत एव, गेहयोः कलत्रवेश्मनोः, नित्यं उदासीनाः, नूनमित्यपि पाठः। आस्महे वर्त्तामहे। गेहयोरित्यत्र गृहशब्दपर्यायो गेहशब्दस्ततोऽत्रायं कलत्रवेश्मोभयपरः। अत एव द्विवचनान्तत्वेन निर्दिष्टः। केचित्तु गेहयोर्देहगेहयोरुदासीना अत एव, ज्योतिरक्रियाः ज्योतिः प्रदीपादिस्तद्वत्साक्षिमात्रतया क्रियारहिता इत्याहुस्तत्पक्षे भगवतः केवलज्योतिः स्वरूपत्वं सच्चिदानन्दादिगुणवद्भगवद्विग्रहे देहदेहिविभागानर्हत्वतस्तत्र भगवत औदासीन्यायुक्तत्वं चायात्यतो यथोक्त एवार्थः साधुः ॥ २० ॥

### कृष्णप्रिया

रानी! अब भी कुछ बिगड़ा नहीं है। यदि आप चाहें तो अपने सदृश किसी क्षत्रिय वीर का वरण कर लीजिये। उसके माध्यम से आपकी इहलोक की और पारलौकिक सर्व कामनाएँ पूर्ण हो जायेंगी ॥ १७ ॥ हे वामोरु! हे सुन्दरी! आप अच्छी तरह से जानती हो हो कि चैद्य नरेश शिशुपाल-शाल्व-मागध-जरासन्ध-दन्तवक्त्र-आदि नरेश एवं आपका ज्येष्ठ भ्राता रुक्मी सभी मेरे साथ द्वेष करते हैं ॥ १८ ॥ हे भद्रे! हे कल्याणी! शिशुपाल प्रभृति सब नरपति वीर्यमद से अंधे हो गये थे, गर्विष्ठ हो रहे थे; उन उच्छृंखलों का मद-मान मर्दन करने के लिये ही मैं आपको उठा लाया था और कोई हेतु नहीं था ॥१९॥ देवी सुनिश्चित है कि हम उदासीन ही हैं। स्त्री-पुत्र और अर्थकामुक नहीं हैं। धनादि की प्राप्ति के लिये हम सर्वथा निष्क्रिय हैं। आत्मलाभ से हम पूर्णकाम हैं–कृतार्थ हैं। जैसे अपने निवासो में दीपज्योति के समान केवल द्रष्टामात्र हैं ॥ २० ॥

**श्रीशुक[1] उवाच**

**एतावदुक्त्वा भगवानात्मानं वल्लभामिव। मन्यमानामविश्लेषात् तद्दर्पघ्न उपारमत् ॥ २१ ॥**

**इति [2]त्रिलोकेशपतेस्तदाऽऽत्मनः प्रियस्य देव्यश्रुतपूर्वमप्रियम्।**
**आश्रुत्य भीता हृदि जातवेपथुश्चिन्तां दुरन्तां रुदती जगाम ह ॥ २२ ॥**
**पदा सुजातेन नखारुणश्रिया भुवं लिखन्त्यश्रुभिरञ्जनासितैः[3]।**
**आसिञ्चती कुङ्कुमरूषितौ स्तनौ तस्थावधोमुख्यतिदुःखरुद्धवाक् ॥ २३ ॥**
**तस्याः सुदुःखभयशोकविनष्टबुद्धेर्हस्ताच्छ्लथद्वलयतो व्यजनं पपात।**
**देहश्च विक्लवधियः सहसैव [4]मुह्यन् रम्भेव वायुविहता प्रविकीर्य केशान् ॥ २४ ॥**

### कर्दमक्षमा

अन्वयः—श्रीशुक उवाच—भगवान्, अविश्लेपात्, आत्मानम्, वल्लभाम्, मन्यमानाम्, तद् दर्पघ्नः, इव, एतावत्, उक्त्वा, उपारमत् ॥ २१ ॥ इति, आत्मनः, प्रियस्य, त्रिलोकेशपतेः, अश्रुतपूर्वम्, अप्रियम्, आश्रुत्य, हृदि-जातवेपथुः, भीता, देवी, रुदती, दुरन्ताम्, चिन्ताम्, ह, जगाम ॥ २२ ॥ नखारुणश्रिया, सुजातेन, यदा, भुवम्, लिखन्ती, अञ्जनासितैः, अश्रुभिः, कुङ्कुमरूषितौ, स्तनौ, आसिञ्चती, अतिदुःखरुद्धवाक्, अधोमुखी, तस्थौ ॥ २३ ॥ तस्याः, सुदुःखभयशोकविनष्टबुद्धेः, श्लथद्, वलयतः, हस्तात्, व्यजनम्, पपात, च, विक्लवधियः, सहसा, एव, मुह्यन्, देहः, पपात्, केशान्, विकीर्य, वायुविहता, रम्भा, इव, देवी, पपात ॥ २४ ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

अविश्लेपाद्धेतोः आत्मानमेव वल्लभामित्येवार्थे इवशब्दः ॥ २१–२२ ॥ चिंतालक्षणमाह। पदेति। नखैररुणा श्रीः कांतिर्यस्य तेन सुजातेन सुकोमलेन पदा ॥२३॥ सुदुःखमप्रियश्रवणात् भयं त्यागशंकया शोकोऽनुतापः तैर्विनष्टा बुद्धिर्यस्यास्तस्याः। श्लथंति पतन्ति वलयानि यस्माद्धस्तात्। देहश्च पपात विक्लवा अवशा धीर्यस्यास्तस्याः ॥ २४ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

एतावत् 'राजपुत्रीप्सिता–' इत्यारभ्य 'ज्योतिरक्रियाः' इत्यन्तवाक्यसन्दर्भम्। तद्दर्पघ्नो रुक्मिणीदर्पहरः। वल्लभाशब्दस्य परमप्रियभार्यायां रूढत्वस्वीकारेणाऽजहल्लिंगत्वादात्मतुल्याधिकरणत्वेऽपि स्त्रीत्वम्। तस्या दर्पो वल्लभात्वाभिमानस्तद्घ्न इवेति नर्ममयत्वात्। तथा च वक्ष्यति—'हास्यप्रौढिमजानन्त्याः' इत्यादि। तथा च स्वयमेव वक्ष्यति—"त्वद्वचःश्रोतु-

१. बादरायणि–प्रा. पा. २. त्रिलोकाधि–वीर-। ३. रंजनाविलैः–वीर.। ४. विम्यद् विज.।

कामेन क्ष्वेल्याचरितमङ्गने" इति ॥ २१ ॥ इतीत्यम् । तत्पूर्वोक्तम् । 'तदा' इति वा पाठो ज्ञेयः । तत्र यदा हरिणेदृग्दुःखकरं वच उक्त्वोपरतं तदेत्यर्थः । दुरन्तामपाराम् । अस्या रासव्याख्यातः प्रेमजातिद्वये दाक्षिण्यमयप्रेमत्वान्मानस्य नोदयः, किन्तु परिहासतायाः स्फुटत्वेऽपि चिंताया एवोदय इत्याह–इतीति । इत्येतद्वचनम् । तदा सुखकेलिसमये । लोकेशानां ब्रह्मादीनामपि पालकस्येति तस्य सर्वपरिपालकतया परुषोक्त्ययोग्यता विशेषता च । आत्मनः स्वस्य प्रियस्य । स्वयं देवी सर्वासु प्रेयसीषु मुख्यतया । तथाप्यप्रियम्, किञ्चाश्रुतपूर्वमिति तया दुस्तर्काभिप्रायत्वं परमासह्यत्वं चाभिप्रेतम् । आ अतिनैकट्यादिना सम्यक् श्रुत्वा त्यागशंकया भीता । हृदीति कम्पस्यांतरतया भयस्य गौरवं सूचितम् । चिंतामनिष्टावाप्तिजन्यध्यानलक्षणाम् । दुरन्तां दीर्घां दारुणां वा । हेत्यव्ययमाचारातिक्रमे ॥ २२ ॥ लक्षणं चिह्नम् । रूपितौ लिप्तौ । 'रूप-संगे' धातुः ॥ २३ ॥ तस्याः रुक्मिण्याः । रंभा कदली "रंभा कदल्यप्सरसोर्ना वेणौ वारणांतरे" इति कोशात् । सुदुःखमप्रियश्रवणात्, भयं त्यागशंकया, शोकस्ताभ्यां तापः, तैर्विनष्टा बुद्धिर्यस्याः । अतः परिहासोऽयमिति विचारोऽनाभूदिति भावः । श्लथंतीति सहसैव विरहपीडोत्थादतिकार्श्याद्वलयानि पेतुरिति गम्यते । तत्र हेतुमाह–न च केवलं विचारो नष्टश्चेतना पीत्याह—विक्लवधियः, नष्टचेतनापीत्यर्थः । ततश्च मुह्यन्निति सहसैव नवम्यपि दशान्तः पपातेति । स्तंभादंतिमः प्रलयश्च सात्त्विकोऽभूदिति भावः ॥ २४ ॥

### श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी

वल्लभाशब्दस्य परमप्रियभार्यायां रूढत्वस्वीकारेणाजहल्लिङ्गत्वादात्मतुल्याधिकरणत्वेपि स्त्रीत्वं तामिव मन्यमानामिति केवलमुत्प्रेक्षते वस्तुतस्तु उपतस्थे सुखासीनमित्याद्युक्तरीत्या दासीतुल्यत्वमेव स्थाप्यते ततश्च तस्या दर्पं सत्यभामादिवदहं प्रणयं प्रणयकोपं न व्यञ्जयामीत्ययमपि कदाचिन्नोदासिष्यत इत्येतमभिमानं सकौतुकं हन्तीति तद्दर्पघ्नः सन् उपारमत प्रणयस्य प्रणयकोपस्य च दर्शनप्रतीक्षया तूष्णीमासेत्यर्थः । तथा च वक्ष्यति श्रीमान् मुनीन्द्रः "हास्यप्रौढिमजानन्त्याः" इत्यादि तथा च स्वयमेव वक्ष्यति—

"त्वद्वचः श्रोतुकामेन क्ष्वेल्याचरितमङ्गने । मुखं च प्रेमसंरम्भस्फुरिताधरमीक्षितुम्" ॥ इति ।

तदिदन्तु पुरस्ताद्विस्तारयिष्यते ॥ २१ ॥ ततश्चास्या रासव्याख्यातः प्रेमजातिद्वये दाक्षिण्यमयप्रेमत्वात् मानस्य नोदयः किन्तु परिहासतायाः स्फुटत्वेपि चिन्ताया एवोदयः इत्याह—इतीति । इत्येतद्वचनं तदा तादृशसुखकेलिसमये त्रिलोकेशानां श्रीब्रह्मादीनामपि पालकस्येति तस्य सर्वपरिपालकतया परुषोक्त्ययोग्यताविशेषतश्चात्मनः स्वस्य प्रियस्य स्वयं देवी सर्वासु प्रेयसीषु मुख्यतमा तथाप्यप्रियं किञ्चाश्रुतपूर्वमिति तथा दुस्तर्क्याभिप्रायत्व परमासह्यत्वञ्चाभिप्रेतम् आ अतिनैकट्यादिना सम्यक् श्रुत्वा त्यागशङ्कया भीता हृदीति कम्पस्यान्तरतया भयस्य गौरवं सूचितं चिन्ताम् अनिष्टावाप्तिजन्यध्यानलक्षणां दुरन्तां दीर्घां दारुणां वा हेत्यव्ययमाचाराति क्रमे ॥ २२ ॥ सुजातेनेति । भूमिलिखनायोग्यतोक्ता तथापि तेन लिखन्तीति दुरन्तचिन्ता दर्शिता एवमञ्जनासितैरिति कुङ्कुमरूषिताविति च ज्ञेयम् आ सम्यक् सिञ्चन्तीत्यश्रूणां धारा सूचिता नखारुणश्रियेत्युपरिभागेपि तच्छविभिररुणायितत्वात् ॥ २३ ॥ ननु स्वभावतो महाकौतुकपर एव सः किञ्च पुत्रपौत्राद्युत्पत्त्यादिना कथमपि त्यागो न सम्भवेदिति कथं तया न विचारितं तत्राह तस्याः परमदाक्षिण्यमयप्रेमविख्यातायाः विनष्टबुद्धित्वाद्विचाराभावः श्लथद्वलयत इत्यनेन वलयान्यपि पतितानीति ज्ञेयं न च केवलं विचारो नष्टः चेतनापीत्याह—विक्लवधिय इति । अत एव मुह्यन् प्रकर्षेण विकीर्य्य केशानित्यनेन मोहस्य रम्भेति दृष्टान्तेन च पातस्यातिशयः सूचितः ॥ २४ ॥

### श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी

इवेति वस्तुतः प्रेमभरस्वभावाद्दैन्योदयेनात्मनः प्रायो दासीत्वमननात् । तथा चाग्रे कुरुक्षेत्रयात्रायां श्रीद्रौपदीं प्रति तस्य एवोक्तौ ( भा० १०।८३।८ )—'तच्छ्रीनिकेतचरणोऽस्तु ममार्च्चनाय' इति । इवेत्यस्य परतोऽप्यन्वयः । मन्यमानामिव, वस्तुत उक्तन्यायेन तादृशमननस्याप्यभावात्तस्या दर्पो वल्लभाभिमानस्तद्घ्न इव, वस्तुतो दर्पाभावात् तस्याः, नर्म्मकेलिपरत्वाच्च तस्य; तथा च वक्ष्यति ( २५ श०-श्लो० ) 'हास्यप्रौढिम्' इत्यादि । तादृशोक्तौ हेतुः—भगवान् महाकौतुकीत्यर्थः । तथा च स्वयमेव वक्ष्यति ( २९ श०-श्लो० )—'त्वद्वचः श्रोतुकामेन क्ष्वेल्याचरितम्' इति ॥ २१ ॥ इत्येवं तद्वचनम्, किंवा इत्येतत्तदा तादृशसुखकेलिसमये, त्रिलोकेशानां श्रीब्रह्मादीनामपि पत्युः पालकस्येति तस्य सर्व्वपरिपालकतयापकर्षोक्त्ययोग्यतोक्ता, विशेषतश्चात्मनः स्वस्य प्रियस्य तथाप्यप्रियम्; किञ्च, अश्रुतपूर्व्वमिति दुस्तर्काभिप्रायत्वं चाभिप्रेतम्,—पूर्व्वश्रुतत्वे सति चिरविचारादिना कथञ्चिदभिप्रायतर्कणसह्यत्वयोरपि सम्भवात् । 'आ' इति नैकट्यादिना सम्यक् श्रुत्वा त्यागशंकया भीता त्रिलोकेशपतित्वादेव परमस्वातन्त्र्येण तस्य सर्व्वसम्भवादिति भावः । हृदीति—आन्तरतया कम्पस्य भयस्य च गौरवं सूचितम् । चिन्तामनिष्टावाप्तिजन्यध्यानलक्षणां दुरन्तां दीर्घां दारुणां वा, यतो देवी श्रीभगवत्प्रियतमा, अनेन सह सदाक्रीडापरा वा, चिन्ताया अनुभावानाह । ह खेदे ॥ २२ ॥ पदा सुजातेनेत्यादि; आभ्यां विशेषणाभ्याम्, तेन भूमिलिखनायोग्यतोक्ता; तथापि तेन लिखन्तीति दुरन्तचिन्ता दर्शिता । एवमञ्जनासितैरिति कुंकुमरूषिताविति तथा ज्ञेयम् । आ सम्यक् सिञ्चतीति अश्रूणां

धारा द्योतिता ॥ २३ ॥ ननु स्वभावतः सदा महाकौतुकपर एव सः; किञ्च, पौत्राद्युत्पत्त्यादिना कथञ्चिदपि त्यागो न सम्भवेदेवेति कथं तया न विचारितम् ? तत्राह—सुदुःखेति । विनष्टबुद्धित्वाद्विचाराभावः, श्लथद्वलयत इत्यनेन वलयान्यपि पतितानीति ज्ञेयम् । न च केवलं विचारो विनष्टः, चेतना च विनष्टेत्याह—विक्लवधिय इति । अतएव मुह्यन्; प्रकर्षेण विकीर्य्य केशानिति मोहस्य, रम्भेति दृष्टान्तेन च पातस्यातिशयः सूचितः ॥ २४ ॥

**श्रीसुदर्शनसूरिकृतशुकपक्षीयम्**

वल्लभां मन्यमानाम् अलं वल्लभीकृत्याभिमानवतीम् ॥ २१-३३ ॥

**श्रीमद्वीरराघवाचार्यकृता भागवतचन्द्रचन्द्रिका**

एतावदिति अविश्लेषाद्विश्लेषाभावाद्धेतोरात्मानमेव वल्लभामितरपत्न्यपेक्षया भगवतो निरतिशयप्रीतिविषयां मन्यमानां रुक्मिणीं तद्दर्पघ्न इव तस्या दर्पमपनेतुकाम इवेत्यर्थः । एतावदुक्त्वा उपारमत्तूष्णीमास इवशब्दस्य व्यवहितेनापि दर्पघ्न इत्यनेन सम्बन्धः स्वारस्यात् दर्पघ्न इवेत्यनेन वस्तुतस्तामुपचरन्तीमभिनन्दितुमुक्त्वेति सूच्यते ॥२१॥ ततः किमासीदित्यत्राह—इतीति । देवी रुक्मिणी आत्मनः स्वस्याः प्रियस्य त्रिलोकाधिपतेः तदश्रुतपूर्वं कदाप्यश्रुतमित्येवम्विधमप्रियं वच आकर्ण्य भीता त्यागसम्भावनाभीता अत एव हृदि जातवेपथुः सञ्जातकम्पा रुदती चापारां चिन्तामवाप यद्यप्यभिप्रायान्तरेणैव प्रयुक्तानि वचांसि यद्यपि च साक्षाल्लक्ष्म्यवतारभूता सापि तदभिप्रायं जानात्येव तथापि किमयं रामावतार इवात्रापि केनापि व्याजेन मां जिहासति किम्वाभिनन्दतीत्येवं पूर्वकोटिसम्भावनामात्रेणैव जातवेपथुः रुदती च चिन्तामवापेतिताात्पर्य्यम् ॥ २२ ॥ चिन्तालक्षणमाह—पदेति । नखैररुणा श्रीः कान्तिर्यस्य तेन सुकोमलेन पादेन वामपादाङ्गुष्ठेन भुवं लिखन्ती अञ्जनेनाविलैर्व्याप्तैरश्रुभिश्चन्दनचर्चितौ स्तनौ सिञ्चती दुःखेन रुद्धा वाग्यस्याः सा अधोमुखी चावतस्थे ॥ २३ ॥ तस्या इति । सुदुःखमप्रियश्रवणजन्यं भयं त्यागसम्भावनाजन्यं शोकश्च तैर्विनष्टा स्फुरणरहिता बुद्धिर्यस्यास्तस्याः रुक्मिण्याः श्लथन्ति तात्कालिकदुःखप्रभवकार्श्येन भ्रश्यन्ति वलयानि यस्मात् तस्माद्धस्ताद्व्यजनं पपात भूमाविति शेषः । तथा विक्लवा अधृष्टा धीर्यस्यास्तस्या हेतुगर्भमिदं तत्त्वात् तस्या देहः मुह्यन् मोहं प्राप्नुवन् केशान् विकीर्य्य पपात केशपाशविश्लथपूर्वकं पपातेत्यर्थः । यथा वातेन चण्डमारुतेन विहता रम्भा कदली पतति तद्वत् ॥ २४ ॥

**श्रीविजयध्वजतीर्थकृता पदरत्नावली**

अविश्लेषान्निरन्तरसाहित्येन स्थितेरात्मनं वल्लभामिव मन्वानाम्प्रियतमाम् ॥ २१ ॥ यदा हरिणैतादृशं दुःखकरं वचनमुक्त्वापरतं तदा देवी आत्मनः प्रियस्य त्रिलोकेशपतेरश्रुतपूर्वमप्रियं वचनमाश्रुत्यदुरन्ताच्चिन्ताञ्जगाम प्रत्ययारम्भे प्रतिवचनोपक्रमेद्वौ इति वचनात् इति वचनोपक्रमभीता अत एव हृदि जातवेपथुः उत्पन्नकम्पा तल्लक्षणमाह—रुदतीति ॥ २२ ॥ एतदेव विवृणोति—पदेति । रक्तनखप्रभया अरुणा श्रीर्यस्य स तथा तेन कोमलेन पदा भुवं लिखन्ती अञ्जनासितैः कृष्णैः अश्रुभिः कुङ्कुमरूषितौ स्तनौ आसिञ्चन्ती अधोमुखी भूत्वा तस्थावित्यन्वयः ॥ २३ ॥ सुखदुःखादिभिर्विनष्टा इदङ्कर्तव्यमित्यपश्यन्ती बुद्धिर्यस्याः सा तथा श्लथद्विगलद्वलया यस्य स तथा तस्मात् केशान् प्रविकीर्य देहश्च पपात कीदृशः विभ्यत्सञ्चलन् कम्पमान इत्यर्थः । रम्भा कदली ॥ २४ ॥

**श्रीमज्जीवगोस्वामिकृत क्रमसन्दर्भः**

वल्लभाशब्दस्य परमप्रियभार्यायां रूढत्वस्वीकारेणाजहल्लिङ्गत्वादात्मातुल्याधिकरणत्वेऽपि स्त्रीत्वं तदानीमपि क्रोधांशानभिव्यक्तौ सकौतुकतदुद्भावनाय तमारोपयति ॥ २१-३० ॥

**श्रीमज्जीवगोस्वामिकृतः बृहत्क्रमसन्दर्भः**

एतावदित्यादि । आत्मानं वल्लभां मन्यमानां तद्दर्पघ्न इव एतावदुक्त्वा विरराम । अयं भावेनैषा सर्वासां मध्येऽहमेव वल्लभेति गर्ववती । नाप्ययं तद्दर्पघ्नः, अपि त्वविश्लेपाद्धेतोस्तया सह तस्य विश्लेषाभावाद् विप्रलम्भसुखानुभावो नास्ति, विप्रलम्भो रसनीयो न भवतीत्यस्य चानेकविधत्वे साक्षाद्विप्रलम्भरूपं प्रणयकोपमुद्भावयितुं सपरिहासमेवाह ननु वास्तवम् तेनात्मानं वल्लभां मन्यमानां स्त्रियं यथा तद्दर्पघ्नः पुरुषोऽतिपरुषं वदति, तथायमपि परिहासेनोक्तवान् । इव-शब्द उभयत्र सम्बध्यते । न विना विप्रलम्भेन सम्भोगः पुष्टिमश्नुते' इति न्यायात् विप्रलम्भार्थमयमुद्यमः । वक्ष्यति च ( २९ श्लो० ) "त्वद्वचः श्रोतुकामेन" इत्यादि ॥ २१ ॥ इतीत्यादि । त्रिलोकेशपतेरपि सैवात्मा यस्य स तथा तस्य, तदात्मनः प्रियस्य प्रेयसः, न तु भर्त्तुरेव । अश्रुतपूर्वं तस्मिन्नेव दिने तच्छ्रुतमित्यर्थः ॥२३॥ तस्या इत्यादि । श्लथद्वलयत इति तत्कालकार्श्यं ध्वनितम् । न केवलं व्यजनं पपात, अपि तु देहश्च निपपात, नितरां पपातेत्यर्थः । व्यजनं पपात, देहो निपपातेत्युपसर्गकृतो विशेषः । केव ? वातविहता रम्भेव । सा यथा स्वयं नोत्तिष्ठति तथा । प्रविकीर्य केशानिति पतनात् पूर्वमेव केशाः स्रस्ता इत्यर्थः ॥ २४ ॥

**श्रीनाथचक्रवर्तिपादविरचिता चैतन्यमतमञ्जूषा**

एतावदित्यादि । आत्मानं वल्लभां मन्यमानां तद्दर्पघ्न इव एतावदुक्त्वा उपारमद् विरराम । अयमर्थः—न सा अहमेव सर्वासां मध्ये वल्लभेति गर्ववती, नाप्ययं तस्यास्तं दर्पं हन्तुं परुषमवदत्, अपि तु अविश्लेपात् हेतोस्तया सह तस्य विश्लेषो नास्ति, तेन 'न विना विप्रलम्भेन सम्भोगः पुष्टिमश्नुते' इति न्यायात् विप्रलम्भमेतमुद्भावयितुं कृत्रिमकर्कशमुक्तवानित्यर्थः । विप्रलम्भस्य पञ्चप्रकारत्वात् साक्षादपि ईर्ष्याख्यः स्वानन्दे विप्रलम्भः सम्भवतीति ॥२१॥ इतीत्यादि । त्रिलोकेशपतेरपि सैवात्मा यस्य स तदात्मा तस्य तदात्मनः, प्रियस्य न तु भर्त्तुः । अश्रुतपूर्वं तस्मिन्नेव दिने श्रुतम् ॥ २२-२३ ॥ तस्या इत्यादि । श्लथद्व-लयतो हस्ताद्व्यजनं पपात, वलयैः सह पपातेत्यर्थः । न केवलं व्यजनं पपात, तद्देहश्च ॥ २४-२५ ॥

**श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी**

वल्लभामिवेति सर्ववल्लभासु श्रेष्ठामपि तां परमानुरागोत्थस्वयोग्यत्वमननेनैव आत्मानं वल्लभामिव मन्यमानामेता-वदुक्त्वा अविश्लेपाद्धेतोरिति भार्य्यात्वायोग्यामपि मामयं स्वगुणेनैव सुभगां भार्याङ्करोति तदहमेतावदद्भुतगुणार्णवभर्तृ-कैवास्मीति यो दर्पस्तं हन्तीति सः वल्लभाशब्दस्य परमप्रियभार्य्यावाचित्वेनोद्देश्यविधेयभावेनान्वयात् न पुंस्त्वं वल्लभा-शब्दस्य परमप्रियभार्य्यायां रूढत्वस्वीकारेणाजहल्लिङ्गत्वादात्मतुल्याधिकरणत्वेपि स्त्रीत्वं तस्या दर्पो वल्लभात्वाभिमानः तद्घ्न इति नर्म्ममयत्वात् तथाच वक्ष्यति "हास्यप्रौढिमजानन्त्याः' इत्यादि तथाच स्वयमेव वक्ष्यति त्वद्वचः श्रोतुकामेन क्ष्वेल्या चरितमिति इति वैष्णवतोषिणी ॥ २१-२२ ॥ चिन्तालक्षणमेवाह-पदेति । नखैररुणा श्रीः कान्तिर्यस्य तेन सुजातेन सुकोमलेन ॥ २३ ॥ सुदुःखमाप्रियश्रवणात् भयत्यागशङ्कया शोकस्ताभ्यामनुतापः तैर्विनष्टा बुद्धिर्यस्याः अतः परिहासोऽयमिति विचारो नोदभूदितिभावः । श्लथन्ति वलयानि यस्माद्धस्तादिति सहसैव विरहपीडोत्थादतिकार्श्याद्वलयान्यपि पेतुरिति गम्यते तदनन्तरं देहश्च पपात तत्र हेतुः विक्लवधियः इति बुद्धेर्नाशस्यापि प्रागुक्तेर्विनष्टचेतनाया इत्यर्थः । ततश्च मुह्यन्निति सहसैव नवम्यपि दशा अतः पपापेति स्तम्भाद्यन्तिमः प्रलयश्च सात्विकोऽभूदिति भावः ॥ २४ ॥

**गूढार्थदीपनी**

अत्रेवशब्द एवार्थे । अविश्लेपाद्धेतोः वल्लभामात्मानमेव मन्यमानाम् । उपारमत् तूष्णीमभूत् ॥ २१ ॥ देवी रुक्मिणी इति प्रियतमस्य तत्पूर्वोक्तमप्रियं वच आश्रुत्य भीता अत एव रुदती सती दुरन्तामपारां चिन्तां जगामेत्यन्वयः । हेति दुःखे । जातवेपथु उत्पन्नकम्पा ॥ २२ ॥ नखैररुणा श्रीः कान्तिर्यस्य तेन सुजातेन कोमलेन यदा भुवं लिखन्ती अञ्जनेन असितैः श्यामैः अश्रुभिः स्तनौ आसिञ्चती तस्थौ रूपितौ लिप्तौ ॥ २३ ॥ तस्या हस्तात् व्यजनं तथा तस्या देहोऽपि मुह्यन् मूर्च्छां प्राप्नुवन् कदलीव सहसा पपातेत्यन्वयः । वियोगकार्श्येन श्लथन्ति पतन्ति वलयानि यस्मात् । विक्लवा व्याकुला अधीरा ॥ २४ ॥

**श्रीमच्छुकदेवकृता सिद्धान्तप्रदीपः**

वल्लभामिवेति भौमगृहादानीतः सर्वाः वल्लभा एव सत्यभामाद्याः वल्लभासु श्रेष्ठाः इयं तु न वल्लभा नाऽपि वल्ल-भासु श्रेष्ठा । अपि तु "कृष्णात्मिका जगत्कर्त्री मूलप्रकृतिरुक्मिणी" इत्यादिश्रुतेः साक्षान्महालक्ष्मीः वल्लभासु श्रेष्ठास्तास्वपि श्रेष्ठा एवम्भूतामपि तां अविश्लेपात् हेतोः वल्लभामिव सर्वासु निकृष्टामिव मन्यमानाम् एतावदुक्त्वा तद्दर्पघ्नः तत्प्रसिद्धं प्रेष्ठं न्यमंसत स्वस्वमिति वक्ष्यमाणं तासां दर्पं हन्ति सः उपारमत् तद्दर्पनाशार्थं स्वमुखेनैव रुक्मिण्याः सर्वश्रेष्ठ्यं वक्तुन्तन्मुखवचन-श्रवणार्थं च हास्यवाक्यमुदाहृत्य तूष्णीं बभूवेत्यर्थः । न त्वादृशीं प्रणयिनीं गृहिणीं गृहेषु पश्यामीति वक्ष्यति च तच्छब्देन रुक्मिणीपरामर्शस्तु नैव साधुः अस्मिन् ग्रन्थे ग्रन्थान्तरे च तस्याः दर्पगन्धस्पर्शस्याप्यदर्शनात् अन्यासामपि भगवत्प्रियाणां दर्पाभासः भगवल्लीला सौन्दर्यार्थः ॥ २१ ॥ भीता त्यागशङ्कया ॥ २२ ॥ चिन्तायुक्ताया दशामाह—वदेति । नखैररुणा श्रीः कान्तिर्यस्य तेन कोमलेन ॥ २३ ॥ सदुःखेनाप्रियश्रवणजेन भयेन त्यागशङ्कोद्भवेन शोकेन किं भविष्यतीत्यनुतापेन च विनष्टा विमोहिता बुद्धिर्यस्यास्तस्याः श्लथन्ति अतिदुःखभयशोककातर्येण पतन्ति वलयानि यस्मात् तस्मात् व्यजनं पपात तथा विक्लवा अवशा धीर्यस्यास्तस्याः देहः मुह्यन् मोहमुद्वहन् पपात ॥ २४ ॥

**श्रीसत्यधर्मकृता श्रीभागवतटिप्पणी**

आत्मानं वल्लभामतिप्रियामिव मन्यमानमिवैवेति वा । तत्र हेतुरविश्लेषान्नित्यसम्बन्धादिति । एतावदुक्त्वा तद्दर्पघ्न उपारमत् । उपोपपादकत्वात्परस्मैपदता । लोकापेक्षया तद्दर्पघ्न इव सन्नुपारमत्समापयास ॥ २५ ॥ जगन्नाटकमनु जगन्नाटकीद-माटीकतेत्याह ॥ इतीति । त्रिलोकेशानां पतिस्तस्यात्मनः प्रियस्याश्रुतपूर्वं कदाऽप्यश्रुतमश्रुतपूर्वमिति वचनं स्वस्याप्रियं देव्या-श्रुत्य भीता । हृदि जातवेपथुरुत्पन्नकम्पा रुदती चिन्तां दुरन्तां जगाम । तत्तद्वै धनुरित्यादिभागवततात्पर्यतोऽयमिवार्थ-

स्तच्छन्दः। वस्तुतो न जगामेत्यर्थः। ह शोके। चिन्तौ चिन्ताचर्यामाह ॥ पदेति। नखैररुणा श्रीर्यस्य तेन सुजातेन कोमलेन भुवं लिखन्ती चिन्तातान्तकान्ता स्वभावोऽयं सन्नपि त्वद्रूपसत्यभामापक्षपातवान्नाथ एवं ततानेति तामदोदरदिति भावसूचक इति ज्ञेयम्। अञ्जनं कज्जलं तेनासितैर्नीलैरश्रुभिर्नयनतोयैः कुङ्कुमरूषितौ स्तनौ आसिञ्चती। अतिदुःखेन रुद्धा वाग्वचनं यस्याः सा। अधोमुखी सती तस्थौ ॥ २७ ॥ सुदुःखमुत्तरत्र त्यक्ष्यति किञ्चेति भयं शोको बहिः प्रदर्शितः। एतैर्तौ विनष्टा बुद्धिर्यस्याः सा कर्तव्यमूढेति यावत्। तस्याः श्लथन्ति गलन्ति वलयानि यस्मात्तस्माद्धस्ताद्व्यजनं पपात। कार्श्यं तत्क्षणत एव जातं निष्प्राणता चेति क्रमाद्धेतू। विह्वलधियो बिभ्यद्देहश्च वातविहता रम्भेव कदलीव केशान्प्रविकीर्य पपात। केशप्रकिरणेन यदि त्वं नाथ कृष्ण श्रीहरिकृष्णकेशस्तर्हि नाहं तव पत्नी न चैवमिति भावं ध्वनयामासेति ज्ञेयम् ॥ २८ ॥

### श्रीमद्वल्लभाचार्य्यकृता सुबोधिनी

निःसम्बन्धं निरूप्य भगवान् निवृत्त इत्याह **एतावदुक्त्वेति**। इदमेव वाचा तिरोधानम्। तिरोधाने निमित्तमाह **आत्मानं वल्लभामिवेति**। तत्रापि हेतुः **अविश्लेषात्**। यथा चैद्यादीनां दर्पहननार्थं एषा समानीता, एवमेतस्या अपि दर्पनिराकरणार्थं सम्बन्धनिराकरणं दर्पहेतुना सह सम्बन्धे विद्यमाने स्मयाभावो न भवतीति अनेनैव भविष्यतीति ज्ञात्वा कृतवानिति ज्ञापयति। **वल्लभा** भगवतोऽत्यन्तं प्रिया। प्रीतिविषयत्वादपेक्षिता इवेति। बहुस्त्रीकत्वात्कार्यस्यान्यथापि सिद्धेः। एकभार्यस्य यथा सा वल्लभा भवति, तथा सा मन्यते, अन्यथा अविश्लेषो हेतुर्न स्यात्। अथवा। अज्ञानेन भगवन्तं भजतीति प्रबोधार्थं भगवानेवं वदतीति ज्ञापयितुं दृष्टान्तमाह **आत्मानं वल्लभामिवेति**। भगवन्तं स्त्रियमिव मन्यते, 'यथा स्त्रिया सम्परिष्वक्तो न बाह्यं कञ्चन वेदे'ति सुषुप्त्युपाख्याने 'शारीर आत्मा प्राज्ञेनात्मना सम्परिष्वक्त' इति निरूपितम्। 'सुषुप्त्युत्क्रान्त्योर्भेदेने'त्यत्र विवृतम्। तस्य यथा प्रबोधः कार्यते, एवमस्या अपीति। **अर्धवल्लभां** वा आत्मानं मन्यत इति वेति। **उपारमत्** वाक्यात् कायिकमानसव्यापाराच्च ॥ २१ ॥ ततो यज्जातं तदाह **इतीति** त्रिभिः। सम्यक् ज्ञानवत्याः किञ्चिज्ज्ञानवत्याः मूर्छितायाश्च अवस्थाः क्रमेणोच्यन्ते। यतस्त्रिगुणा हि सा। अतः सत्त्वादितमोन्ता अवस्था वर्णिताः। प्रत्येकं गुणानां त्रैविध्यमिति त्रितयं त्रितयं निरूप्यते। तत्र प्रथमं सत्त्वे कार्यत्रयमाह। **इति** पूर्वोक्तप्रकारेण निःसम्बन्धप्रतिपादकं वाच्य**माश्रुत्य** प्रथमं भीता, जाता, त्यक्ष्यतीति। ततो हृदये वेपथुः कम्पोऽपि जातः। दुरन्ता चिन्तापि। चिन्ता सात्त्विकी, भयं तामसम्। त्रिलोक्याः ईशः, पतिश्च स्वस्यापि, लौकिकवैदिकोत्कृष्टसम्बन्धौ निरूपितौ। **तदेति**। तस्यामवस्थायाम्। **तदिति** वा प्रसिद्धं सर्वजनीनम्। अतः सत्यमपि कुर्यात्। केवलं लोकतो वेदतश्चैव सम्बन्ध इति न, किन्तु स्वस्यापि रोचत इत्याह **प्रियस्येति**। ननु परिहासवचनमेतद्भविष्यतीति कथं भयमिति चेत्, तत्राह **दैवीति**। देवतारूपा सा, सत्यमेव भगवान् वदतीति ज्ञातवती। तर्ह्यभिप्रायं ज्ञात्वा दर्पं परित्यज्य कथं न प्रपन्नेत्याशङ्क्याह **अश्रुतपूर्वमिति**। दर्पः सर्वदैव जायते, वाक्यं तु न कदाचिदप्येवं श्रुतम्। तदप्यासमन्तात् श्रुत्वा अभिप्रायतोऽर्थतश्च। अतः प्रथमतो भयं मनसि जातम्। हृदयस्थाने कम्पोऽपि जातः, इदं कायिकमिव बुद्धेः। अहङ्कारस्तु निवर्तनीय एव। चिन्ता चेतसः। **रुदतीति** रोदनमिन्द्रियाणाम्, अहङ्कारः तद्रूपेण निर्गत इति ज्ञापनार्थः। हेत्याश्चर्यम्। कथं वाक्यमात्रेणेतामवस्थां प्राप्तवतीति। आन्तरमेतन्निरूपितम्। बाह्यं निरूपयति **पदा सुजातेनेति**। **सुजातेना**तिकोमलेन लक्षणयुक्तेन वा। तेन लक्षणानामुत्पादकस्य वा दोषमापादयन्ती तथा कृतवती। अथवा। उत्कृष्टत्वाच्चरणस्य नैवमनिष्टं भविष्यतीति ज्ञापनार्थं तथोच्यते। **नखारुणश्रियेति**। नखेषु नखैः कृत्वा वा अरुणा श्रीर्यस्येति। अनेन नखानां मणिरूपत्वमुक्तम्। अयं सात्त्विक उत्कर्षः। सहजागन्तुकोत्कर्षयुक्तेन पदा भुवं लिखन्ती। चिन्ताकुलितायास्तथैव व्यापार इति भूमिं लिखन्तीति। भूम्यां किञ्चिल्लेखनं निषिद्धम्, भूमिं भित्त्वान्तःप्रवेक्ष्यामीति भावेन तथा लेखनम्। इयं हि लौकिकी भाषा, लौकिकभावनिराकरणार्थमेव भगवता तथोक्तमिति यः कश्चन भावः परमोत्कर्षं प्राप्तः फलपर्यवसायी भवतीति ज्ञापनार्थं तथोच्यते। अतस्तस्याः कायिकव्यापारो निरूपितः। मानसमाह। अश्रुभिः कुङ्कुमरूषितौ स्तनावासिञ्चती। मनस्यतिशोकाग्निरोत्पन्नान्यश्रूणि अञ्जनमपि भित्त्वा निर्गच्छतीति तस्या अतिरिक्तः सर्वोऽपि वर्णस्तैरपनीत इति सूच्यते। कुङ्कुमं कज्जलं च उभयमपहृतमिति। अधोमुखीति च मानसमेव। अतिदुःखेन रुद्धा वागिति वाचो निवृत्तिः। उभयोरल्पो व्यापारः। वाक् तु निवृत्तैवेति। बाह्याभ्यन्तरामवस्थामुक्त्वा देहस्य पातमाह **तस्या इति**। आद्येन मानसपातश्च। तस्या देहः पपात। देहधारिका बुद्धिः प्रयत्नद्वारा। सा तु त्रिभिर्नष्टेति सुदुःखभयशोका निरूपिताः। **सुदुःखं** पुरुषोत्तमलक्षणविषयाभावात् आनन्दरूपस्य भगवतस्तिरोभावाद्वा। **भयं** भगवानन्येभ्यो दास्यतीति। **शोकः** स्वस्य सर्वनाशात्। त्रिदोषेण बुद्धिनाशः। स स्वकीयं प्रयत्नाभावमपि करोतीत्याह **हस्तात् श्लथद्वलयतो व्यजनं पपातेति**। कृशत्वात् श्लथद्वलयत्वम्। आदौ धर्मनाशः, पश्चाद्धर्मिण इति। क्रमेण ह्रास इति नालौकिकप्रकारेण तस्याः पातः। व्यजनं वीज्यमानं धारकप्रयत्ननाशात् पपात। अनेन स्थूलः प्रयत्नो नष्ट इत्युक्तम्। सूक्ष्मोऽपि नष्टः येन प्राणो धार्यत इत्याह **देहश्चेति**। देहश्च पपात। चकारात्तत्सम्बन्धीन्याभरणादीन्यपि। इतोऽपि सूक्ष्मः कारणप्राणधारकोऽवशिष्यते। तस्मिन्निवृत्ते सर्वनाशो भविष्यतीति भगवत एतावद्दूरं परीक्षा। लौकिक्याः पुनर्जीवनमलौकिकं न युक्तमिति ततः पूर्वमेव प्रतीकारं करिष्यति। सूक्ष्मा धारिका बुद्धिः स्वप्नेऽपि तिष्ठतीति कथं देहपात इति चेत्, तत्राह **विक्लव-**

धिय इति। सूक्ष्मापि बुद्धिर्वैक्लव्यं प्राप्तवती। विचारेण तदपनोदाभावमाह सहसैव मुह्यदिति। 'मुग्धेऽर्धसम्पत्ति'रिति न्यायेन अर्धं मृता। केवलमासन्यस्तिष्ठति। अत एव पतिता, न मृता। पतनादपि भयं भवतीति भयेन प्रयत्नाभिव्यक्तिमाशङ्क्य तन्निषेधार्थमाह रम्भेव वदातविहतेति। वाय्वाघातेन यथा कदली भग्ना पतति, सर्वथा प्रयत्नरहिता स्वतोऽपि कोमला। प्रविकीर्य केशानिति रम्भातुल्यत्वं निरूपितम्। अथवा। मूर्च्छासमये शिरोभ्रमणं जातमिति केशग्रन्थिविस्रंसनात् केसविकीर्णता जाता। केशा वेण्याकारेण न बद्धाः॥ २४॥

**श्रीविट्ठलरायात्मजश्रीवल्लभकृतलेखः**

एतावदुक्त्वेत्यत्र। दर्पहेतुनेति। चैद्यादीनां दर्पे हेतुर्मायात्वादियम्। तथा च तेषां दर्पहेतुना तया सह भगवतः सम्बन्धे तेषां स्मयनुत्तिर्न भवति, किन्त्वधिकः स्मयो भवेदित्यर्थः। दर्पहेतुर्भगवत्सम्बन्धः प्रबलः सन्नधिकं दर्पं जनयेदिति भावः। अनेनेति। सम्बन्धनिराकरणेनेत्यर्थः। कृतवानिति। सम्बन्धनिराकरणमिति पूर्वमन्वयः। लौकिकसम्बन्धे भार्यां प्रति स्वयमेवान्यभजनं नोपदिशेदिति भावः। तस्याः सुदुःखेत्यत्र। लौकिक्याः पुनर्जीवनमिति। उत्तरार्धे लोकधर्मपुरस्कारेण लीलाकरणात्तादृशलीलासम्बन्धिन्या अलौकिकप्रकारेण जीवन न युक्तम्। पूर्वार्धे अलौकिकभावेन लीलाकरणात्तत्र व्रजस्थानां जीवनमलौकिकं सम्पादितवानिति द्वादशाध्याये तथैव निरूपितमिति भावः।

**श्रीसुबोधिनी-सारः**

अहमेवास्य वल्लभा इत्यात्मानं वल्लभामिव एवार्थे मन्यमानां रुक्मिणीविश्लेषात्सदेकत्र वासात् हेतोः एतावदुक्त्वा तस्या दर्पं गर्वं सौभाग्यमदं हंतीति हरिः तूष्णीं बभूव॥ २१॥ आत्मनः प्रियस्य भर्तुः त्रिलोकस्येशानां पतेस्तस्य इत्येवमश्रुतपूर्वं नवीनमप्रियं वच आश्रुत्य श्रुत्वा भीता हृदि जातो वेपथुः कंपो यस्याः सा देवी रुक्मिणी रुदती दुरंतां दुष्पारामनंतां चिंतां जगाम प्राप॥ २२॥ तल्लक्षणमाह नखैररुणा श्रीः कांतिर्यस्य तेन सुजातेनातिमृदुना पदा चरणेन भुवं लिखंती पृथिवीं चित्रयन्ती अंजनेन कज्जलादिनाऽसितैः कृष्णै रश्रुभिः कुंकुमेन रूषितौ लिप्तौ स्तनौ आसिंचती अधोमुखी अतिदुःखेन रुद्धा वाक् वाणी यस्याः सा तस्थौ॥ २३॥ सुदुःखमप्रियभाषणात् भयं त्यागशंकातः शोकोऽनुतापः तैर्विनष्टा बुद्धिर्यस्य विक्लवा मोहं गता धीर्यस्यास्तस्या रुक्मिण्याः श्लथंति पतंति वलयानि यस्मात्तस्माद्धस्तात् व्यजनं पपात केशान् प्रविकीर्य विक्षिप्य देहश्चापि सहसाऽकस्मान्मुह्यन् विचेताः पपात वायुना विहता त्रुटिता रंभा कदलीव॥ २४॥

**गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी**

एवमुक्तेः प्रयोजनमाह—एतावदिति। अविश्लेषाद्धेतोरात्मानं वल्लभामितरपत्न्यपेक्षाया भगवतो निरतिशयप्रीतिविषयां मत्वा गर्वितां रुक्मिणीं तद्दर्पघ्नः तस्या गर्वमपनेतुकामो भगवानेतावदुक्त्वा उपारमत् तूष्णीं बभूवेत्यर्थः॥ २१॥ ततः किं वृत्तं तदाह—इतीति। त्रिलोकेशा ब्रह्मादयः, तेषामधिपतेः पालकस्य आत्मनः प्रियस्य भर्तुरित्येवंभूतमप्रियं वचनमाश्रुत्य त्यागसंभावनया भीता अत एव हृदि जातो वेपथुः कम्पो यस्याः सा अत एव रुदती देवी रुक्मिणी तदा दुरन्तां अपारां चिन्तां जगामेत्यन्वयः। भगवल्लीलाया आश्चर्यं सूचयति—हेति। 'अप्रियेणापि परिहासवचनेन कथमेवं भयं संभवति' इत्यपेक्षायामाह—अश्रुतपूर्वमिति। अश्रुतपूर्वत्वात्तद्यथार्थमेव मत्वा भीता जातेति भावः॥ २२॥ चिन्तालक्षणमाह—पदेति। नखैररुणा श्रीः कान्तिर्यस्य तेन सुजातेन कमलवत्सुकोमलेन पदा वामपादाङ्गुष्ठेन भुवं लिखन्ती निखननेन स्वप्रवेशार्थं विवरं संपादयन्तीव, तथा अञ्जनेन असितैः श्यामैरश्रुभिः कुङ्कुमभूषितौ स्तनावासिञ्चती, तथा दुःखेन रुद्धा वाग्यस्याः सा रुक्मिणी अधोमुखी सत्यवतस्थे॥ २३॥ तस्या रुक्मिण्या हस्ताद्व्यजनं पपातेत्यन्वयः। तत्र हेतुमाह—अप्रियश्रवणजन्यं सुदुःखम्, त्यागसंभावनाजन्यं भयं च, शोकश्चाग्रे कथं निर्वाह इत्यनुतापात्मकः, तैर्विनष्टा अनुसन्धानरहिता बुद्धिर्यस्यास्तस्या इति। दुःखातिरेकमेव सूचयन् हस्तं विशिनष्टि—श्लथन्ति तात्कालिकदुःखभवकार्श्येन भ्रश्यन्ति वलयानि यस्मात् तस्मादिति। तथा तस्या देहश्च सहसा झटित्येव मुह्यन् मूर्च्छां प्राप्नुवन् केशान् विकीर्य केशपाशविश्लथनपूर्वकं पपात। तत्र हेतुमाह—विक्लवा व्याकुला धीर्यस्यास्तस्या इति। तत्र दृष्टान्तमाह—रम्भेवेति। यथा वातेन प्रचण्डमारुतेन विहता रम्भा कदली पतति तद्वदित्यर्थः॥ २४॥

**अन्वितार्थप्रकाशिका**

एतावदिति॥ अविश्लेषाद्धेतोरात्मानमिव आत्मानमेव। इवेत्येवार्थे। वल्लभामितरपत्न्यपेक्षया भगवतो निरतिशयप्रीतिविषयं मन्यमानाम् अतो गर्वितां रुक्मिणीं यद्वा सर्ववल्लभासु श्रेष्ठामपि तां परमसुशीलतया स्वस्यायोग्यतामननेन आत्मानं वल्लभासदृशं मन्यमानाम् अथवा अहं कदापि कोपं न करिष्यामीत्यतोऽहं भगवतो वल्लभैव स्यामिति मन्यमानां वल्लभामिति प्रियभार्यायां रूढिं स्वीकृत्य उद्देश्यविधेयभावेनान्वयं स्वीकृत्य वा न पुंस्त्वं तद्दर्पघ्नः तस्या गर्वमपनेतुकामो भगवानेतावदुक्त्वोपारमत् तूष्णीं बभूव॥ २१॥ इतीति॥ त्रिलोकेशा ब्रह्मादयस्तेषामधिपतेः पालकस्य आत्मनः प्रियस्यैवंभूतम् अश्रुतपूर्वं पूर्वम-

श्रुतम् अप्रियं वचनम् आश्रुत्य अश्रुतपूर्वत्वात् यथार्थमेव मत्वा त्यागसंभावनया भीता अत एव हृदि जातो वेपथुः कम्पो यस्याः सा अत एव रुदती देवी रुक्मिणी तदा दुरन्ताम् अपारां चिन्तां जगाम ।। २२ ।। पदेति ।। नखैररुणा श्रीः कान्तिर्यस्य तेन सुजातेन सुकोमलेन पदा वामपादाङ्गुष्ठेन भुवं लिखन्ती निखननेन स्वप्रवेशार्थं विवरं सम्पादयन्तीव तथाऽञ्जनेनासितैः श्यामैरश्रुभिः कुङ्कुमभूषितौ स्तनावासिञ्चती तथा अतिदुःखेन रुद्धा वाग्यस्याः सा रुक्मिणी अधोमुखी सत्येव तस्थौ ॥ २३ ॥ तस्या इति ।। अप्रियश्रवणजन्यं सुदुःखं त्यागसम्भावनाजन्यं भयं च शोकश्चाग्रे कथं निर्वाह इत्यनुतापात्मकस्तैर्विनष्टा अनुसन्धानरहिता बुद्धिर्यस्याः विक्लवधियः व्याकुलबुद्धेस्तस्याः रुक्मिण्याः श्लथन्ति तात्कालिकदुःखभवकार्श्येन भ्रश्यन्ति पतन्ति वलयानि यस्मात् तस्माद्धस्ताद्व्यजनं पपात । वलयानि पूर्वमेव पेतुरिति भावः । तथा तस्या देहश्च सहसा झटित्येव मुह्यन् मूर्छां प्राप्नुवन् केशान् विकीर्य केशपाशविश्लथनपूर्वकं रम्भेवेति । यथा वातेन प्रचण्डमारुतेन विहता रम्भा कदली पतति तद्वत् पपात ॥ २४ ॥

### श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्

अविश्लेषात् निरंतरमवियोगाद्धेतोः आत्मानं स्वां वल्लभामिव हरेरतिप्रियामेव मन्यमानां भैष्मीं तद्दर्पघ्नः तस्या वैदर्भ्यादर्प्पं राजकुलजन्माद्यभिमानं हंतीति तथाभूतः एतावदुक्त्वा उपारमत् । विरमत ।। २१ ।। इतीति तदा तस्मिन् काले आत्मनः स्वस्याः प्रियस्य हरेः देवी वैदर्भी अश्रुतपूर्वं वाक्यं ।। २२ ।। चिंताचिह्नमाह पदेति नखैररुणाश्रीः शोभा यस्य तेन सुजातेन मृदुना । पदाभुवं लिखंती अश्रुभिः स्तनौ आसिंचती ।। २३ ।। अप्रियश्रवणेन सुतरां दुःखं च त्यजन संदेहेन भयं च शोकः संतापश्च तैर्विनष्टा बुद्धिर्यस्यास्तस्याः विक्लवधियो विक्लवा परवशा धीर्यस्यास्तस्याः श्लथंति स्रसंति वलयानि यस्मात्तस्माद्धस्तात् व्यजनं पपात देहश्च ।। २४ ।।

### भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

एतावदिति ।। अविश्लेषाद्विश्लेषाभावाद्धेतोः, आत्मानमेव, वल्लभामितरपत्न्यपेक्षया भगवतो निरतिशयप्रीतिविषयां, मन्यमानां रुक्मिणीं, तद्दर्पघ्नः इव, तस्या दर्पमपनेतुकाम इवेत्यर्थः । भगवान् श्रीकृष्णः, एतावत् उक्त्वा, उपारमत्तूष्णीमास । आत्मानं वल्लभामिवेतीवशब्दोऽत्रैवार्थे वा बोध्यः । तत्पक्षे तद्दर्पघ्नः सन् इति योजना ।। २१ ।। ततः किमासीत्तत्राह ।। इतीति । देवी रुक्मिणी, आत्मनः स्वस्याः, प्रियस्य प्राणतोऽपि प्रेमास्पदीभूतस्य, त्रिलोकेशपतेः त्रिलोकाधिपतिस्वामिनः श्रीकृष्णस्य, इत्येवं भूतं, अश्रुतपूर्वं पूर्वं कदापि यान् मुखादेवं विधं नाकर्णितं, अप्रियं श्रवणकटुत्वादप्रीतिजनकं, तत् आश्रुत्य वचः आकर्ण्य, भीता त्यागसंभावनया भयं प्राप्ता, अत एव हृदि, जातवेपथुः संजातकम्पा, रुदती सती च, दुरन्तां चिन्तां, ह स्फुटं यथा तथा, जगाम ।। २२ ।। चिन्तालक्षणान्येवाह पदेति द्वयेन ।। पदेति ।। नखैररुणा श्रीः कान्तिर्यस्य तेन, सुजातेन सुकोमलेन, पदा पादेन, वामपादाङ्गुष्ठेनेत्यर्थः । भुवं लिखन्ती, अञ्जनेनाविलानि व्याप्तानि तैः, असितैरिति पाठे अञ्जनेन कृष्णवर्णैः, अश्रुभिः, कुङ्कुमेन रूषितौ स्तनौ, आसिञ्चती, अतिदुःखेन रुद्धा वाग्यस्या सा, अधोमुखं यस्यास्तथाभूता सती, तस्थौ ।। २३ ।। तस्या इति । सुदुःखं सुतरामाधिजाता पीडा च भयमप्रियश्रवणजन्या भीतिश्च शोकस्त्यागसंभावनाजन्या शुक् च तैर्विनष्टा स्फुरणरहिता बुद्धिर्यस्यास्तस्याः रूक्मिण्याः, श्लथन्ति तात्कालिकदुःखभवकार्श्येन भ्रश्यन्ति वलयानि यस्मादिति ततः हस्तात् व्यजनं चामरं, पपात न्यपतत् । भूमाविति शेषः । तथा विक्लवा अधृष्टा अवशेत्यर्थः । धीर्यस्यास्तस्याः, हेतुगर्भमिदम् । तत्त्वात्, तस्या रुक्मिण्याः, मुह्यन् मोहमुपगच्छन्, देहश्च देहोऽपि, केशान् प्रविकीर्य, वातेन चण्डमारुतेन विहता रम्भा कदली इव, सहसा एव, पपात ।। २४ ।।

### कृष्णप्रिया

श्रीशुकदेव जी ने कहा राजन् ! निजनाथ श्रीकृष्ण से क्षणभर भी विलग न होने के हेतु श्रीरुक्मिणी जी के हृदय में ऐसा गर्व हो गया था कि मैं ही श्रीकृष्ण की सबसे अधिक प्रियतमा हूँ; इस अभिमान की निवृत्ति के लिये ही इतना कहकर स्वयं मूक हो गये ।। २१ ।। राजन् परीक्षित् ! देवी रुक्मिणी जी ने अपने प्रियतम नाथ श्री त्रिलोकीनाथ भगवान् श्रीकृष्ण के श्रीमुख से प्रथम ही बार ऐसी अप्रिय वाणी का श्रवण किया तब श्रीदेवी अत्यन्त भयान्वित बन गयी, हृदय में भारी कम्प होने लगा, आर्तस्वर से रोने लगी, चिन्ता के अगाध महासागर में डूबने लगी ।। २२ ।। देवी रुक्मिणी जी का हृदय कोमल और सरल था । वह लाल कान्ति वाले नखों से लालिमा प्राप्त किये चरणारविंद से धरणी को कुरेदने लगी । कुङ्कुम केशर से रङ्गे हुए वक्षःस्थल को नेत्र के अश्रुओं से पखारने लगी । वाणी अवरुद्ध हो गयी दुःख के अतिरेक से बोल न पायी और मुखकमल नीचे की ओर लटक गया और देवी सर्वथा स्तब्ध हो गयी ।। २३ ।। देवी रुक्मिणीजी की विचारशक्ति अतिशय दुःख, भय और शोक से नष्टप्राय हो गयी । क्या नाथ त्याग करेंगें ! इस प्रकार की वियोग सम्भावना से श्रीरुक्मिणी जी एक ही क्षण में इतनी देह से दुबली हो गयी कि करकमलों से कंगन खिसक गया । सखी के हाथ से लिया हुआ चँवर अपने हाथ से गिर पड़ा और बुद्धि की विकलता के कारण देवी तत् क्षण अचेत हो गयीं, उनके केश निखर गये और वायु के वेग से भूमि से उखड़े हुए केले के खंभे की नाईं देवी की सुकोमल काया धरणी पर ढल गयी ।। २४ ।।

**तद् दृष्ट्वा भगवान् कृष्णः प्रियायाः प्रेमबन्धनम् । हास्यप्रौढिमजानन्त्याः करुणः सोऽन्वकम्पत ॥ २५ ॥**
**पर्यङ्कादवरुह्याशु तामुत्थाप्य चतुर्भुजः । केशान् समुह्य तद्वक्त्रं प्रामृजत् पद्मपाणिना ॥ २६ ॥**
**प्रमृज्याश्रुकले नेत्रे स्तनौ चोपहतौ शुचा । [1]आश्लिष्य बाहुना राजन्ननन्यविषयां सतीम् ॥ २७ ॥**
**सान्त्वयामास सान्त्वज्ञः कृपया कृपणां प्रभुः । [2]हास्यप्रौढिभ्रमच्चित्तामतदर्हां सतां गतिः ॥२८॥**

### कर्दमक्षमा

अन्वयः—हास्यप्रौढिम्, अजानन्त्याः, प्रियायाः, तत्, प्रेमबन्धनम्, दृष्ट्वा, करुणः, भगवान् सः, कृष्णः, अन्वकम्पत ॥ २५ ॥ आशु, पर्यङ्कात्, अवरुह्य, चतुर्भुजः, ताम्, उत्थाप्य, केशान्, समुह्य, पद्मपाणिना, तद्, वक्त्रम्, प्रामृजत् ॥२६॥ राजन् ! अश्रुकले, नेत्रे, च, शुचा, अपहतौ, स्तनौ, प्रमृज्य, बाहुना, आश्लिष्य, सान्त्वज्ञः, सताम्, गतिः, प्रभुः, हास्यप्रौढिभ्रमच्चित्ताम् अतदर्हाम्, कृपणाम्, कृपया, सान्त्वयामास ॥ २७-२८ ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

हास्यस्य प्रौढिं गांभीर्यम् ॥ २५ ॥ चतुर्भुज इति उत्थापनाश्लेषणवक्त्रपरिमार्जनाद्यर्थमाविष्कृतचतुर्भुज इत्यर्थः । समुह्य निबध्य ॥ २६ ॥ अश्रुकले अश्रुभिः शोभिते । शुचा शोकाश्रुभिः ॥ २७ ॥ सांत्वयामासानुनीतवान् ॥ २८ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

तत् प्रेमबन्धनम् । "प्रौढिर्गाम्भीर्यशकटीधारणास्वधिकेऽपि च" इति निरुक्तिः । स कृष्णः ॥ यथा सांसारिकजीवानामविद्यया बन्धनं तथा तस्याः प्रेम्णा बंधनं तदिति तस्य महादाढ्यं ध्वनितम् । यतः हासस्य प्रौढिं प्रौढत्वमजानन्त्या इति प्रेमपरिणामोऽनुरागो हि स्वाश्रयस्य प्रतिक्षणं दैन्यमेवापादयति, ततश्च नाहमेतद्योग्येत्यतोऽनेन त्यक्तैवाहमिति भ्रांतचित्ताया इत्यर्थः ॥ २५ ॥ तां रुक्मिणीम् । इत्यर्थ इति तात्पर्यम् । तद्वक्त्रं रुक्मिणीमुखम् ॥ अनुकम्पामेवाह—पर्यंकादिति त्रिभिः । उत्थाप्य भूमितः स्वांके निवेश्येत्यर्थः । प्रकर्षेणाऽऽवृत्त्यादिनाऽमृजत् ॥ २६ ॥ अनन्यविषयां हठप्राप्तकृष्णाम् "विषयो गोचरे देशे तथा जनपदेऽपि च । प्रबन्धाद्यस्य यो ज्ञातस्तत्र रूपादिके पुमान्" ॥ इति मेदिनी । अतदर्हामेवंविधहास्यायोग्याम् ॥ प्रमृज्येति युग्मकम् । प्रभुः सतीं पातिव्रत्यादिसद्गुणवतीं तां सांत्वयामास । सांत्वने हेतुः—सतां गतिः । सन्मात्राणां स्वयमेव शरणं किमुत तस्या इत्याह—अनन्यविषयामात्मैकाश्रयाम् । तादृशसांत्वने हेतुः—कृपणां स्वोपेक्षामननेन दुःखदीनचित्ताम् । तत्र हेतुः—हास्येति । तत्र हेतुः—अतदर्हां परमसरलस्वभावत्वात् । ननु तादृशखेदने झटिति कथं सांत्वनं स्यात्तत्राह सांत्वज्ञः सांत्वनाचातुर्यपण्डितः । तज्ज्ञत्वमेव विवृणोति—प्रमृज्येति । अश्रूणि कलयतः क्षरत इत्यश्रुकले । एवं तस्य खेदने सांत्वने च चातुरीमनुस्मृत्य साश्चर्यमिवाह—प्रभुर्यदा यत्करोति तदा तत्रैव समर्थ इत्यर्थः ॥ २७-२८ ॥

### श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी

तदनिर्वचनीयं प्रेमैव बन्धनं शृङ्खला तदिति तस्य महादाढर्यं ध्वनितं किन्तु हास्यप्रौढिमजानन्त्या आजनत्या विचारयितुमशक्नुवत्याः वाम्यमयद्वितीयप्रेमभेदाभवात् स महाकौतुकपरोप्यन्वकम्पत यतः करुणः सर्वप्राणिषु दयालुः किमुत तस्यामिति भावः यतो भगवान् कृष्णः तत्तन्महागुणत्वेनातिप्रसिद्धः इत्यर्थः ॥ २५ ॥ अनुकम्पामेवाह-पर्य्यङ्कादिति त्रिभिः । उत्थाप्य भूमितः स्वाङ्के निवेश्येत्यर्थः । प्रकर्षेण आवृत्यादिनाऽमृजत् ॥ २६ ॥ प्रमृजेति युग्मकम् । प्रभुः सतीं पातिव्रत्यादिसद्गुणवतीं तां सान्त्वयामास सान्त्वने हेतुः सतां गतिः सन्मात्राणां स्वयमेव शरणं किमुत तस्या इत्याह अनन्यविषयाम् आत्मैकाश्रयां तादृशसान्त्वने हेतुः कृपया तत्र हेतुः कृपणां स्वोपेक्षामननेन दुःखदीनचित्ताम् अत्र हेतुर्हास्येति तत्र हेतुः अतदर्हां परमसरलस्वभावत्वात् ननु, तादृशखेदने झटिति कथं सान्त्वनं स्यात् तत्राह—सान्त्वज्ञः सान्त्वनाचातुर्ये पण्डितः तज्ज्ञत्वमेव विवृणोति-प्रमृज्येति । अश्रूणि-कलयतः क्षरत इति अश्रुकले एवं तस्य खेदने सान्त्वने च चातुरीमनुस्मृत्य साश्चर्यमिवाह—प्रभुः यदा यत् करोति तदा यत्रैव समर्थ इत्यर्थः ॥ २७-२८ ॥

### श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी

तदनिर्वचनीयम्, प्रेमैव बन्धनं शृङ्खला तत्, इति तस्य महादाढर्यं ध्वनितम् । यतः प्रियायाः, अतएव हास्यप्रौढिमजानन्त्या विचारयितुमनवगच्छन्त्याः, स महाकौतुकपरोऽपि; यद्वा, प्रियजनपरवशः; किञ्च, करुणः कृपालुः, तत्रापि भगवान्

---

१. आश्लिषत्-श्रीधर. टि. । २. हास्यप्रौढे-वीर. विज. ; हास्यैः प्रौढैः-प्रा. पा. ।

निजाशेषगुणप्रकटनपरः, यतः कृष्णोऽनिर्व्वचनीयविचित्रमाहात्म्यामृतमहोदधिः, किंवा अतएव प्रियजनचित्ताकर्षकः, अतोऽन्वकम्पत; यद्वा, करुणः स्वयमपि रोदनादिना निजानां मूर्त्तकरुणरसः सन् ॥ २५ ॥ अनुकम्पामेवाह—पर्य्यंकादिति त्रिभिः। उत्थाप्य भूमितः स्वांके निवेश्येत्यर्थः। पद्मवत् सर्व्वसन्तापहरणादिगुणयुक्तेन पाणिना प्रकर्षेण पुनः पुनरावृत्त्यादिनामृजत् ॥२६॥ अश्रूणि कलयतः प्रवहत इत्यश्रुकले; तद्वार्त्ताश्रवणेन शोकाकुलं श्रीपरीक्षितं स्वस्थयन्नाह—हे राजन्निति। यद्वा, अकारप्रश्लेषेण अराजमानो महार्त्त्या म्लानः सन्नित्यर्थः। यतो न विद्यतेऽन्यो विषयो गतिर्यस्यास्ताम्, यतः सतीं पतिव्रताम्, बाहुनेत्येकत्वं व्यग्रतयैकेनांके ग्रहणात्। अन्येन नेत्रयोरपरेण, स्तनयोर्मार्ज्जनाच्च। यद्वा, प्रागुक्तन्यायेनैकत्वेऽपि द्वित्वस्य बहुत्वस्य च प्राप्त्या गाढालिंगनं वोधयति। प्रभुः सान्त्वनसमर्थः, यतः सान्त्वं मिष्टवाक्यं जानातीति, शंकया व्याकुलं चित्तं यस्यास्ताम्; अतो न तां हास्यप्रौढिमर्हतीति तथा ताम्। सोऽपि तादृशजनेषु तादृशीं हास्यप्रौढिं कर्त्तुं नार्हतीत्याशयेनाह—सतां गतिरिति ॥ २७-२८ ॥

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका

तदिति। स भगवान् कृष्णः हास्यप्रौढिं चातुर्य्यमजानन्त्या इव लक्षितायाः प्रियायास्तत्प्रेमबन्धनं प्रेमपाशमवलोक्य करुणावानन्वकम्पत अनुपदमेव भीत इव अङ्कपतेत्यर्थः ॥ २५ ॥ ततः किमकरोदित्यत्राह—पर्य्यङ्कादिति। चतुर्भुजः उत्थापनाश्लेषणवक्त्रपरिमार्जनार्थमाविष्कृतचतुर्भुज इत्यर्थः। केशान् समुह्य निबद्ध्य पद्मतुल्येन पाणिना वक्त्रं प्रामृजत् ॥ २६ ॥ किञ्च, प्रमृज्येति। अश्रूणां काला बिन्दवो ययोस्ते नेत्रे तथा शुचा शोकाश्रुणा उपहतौ स्तनौ च प्रमृज्य परिमृज्य हे राजन्! बाहुना आलिङ्ग्य सान्त्वज्ञः सताङ्गतिः प्राप्यः श्रेयःप्राप्त्युपायभूतो वा विभुर्भगवान् हास्यप्रौढ्या भ्रमच्चित्तं यस्यास्ताम् अतदर्हाम् इत्थमवहसितुमनर्हां तत्र हेतुरनन्यविषयां न विद्यते अन्यः पुरुषान्तरं विषयः ज्ञानविषयो यस्यास्तां दीनां सतीं रुक्मिणीं सान्त्वयामास ॥ २७-२८ ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

हास्यं नाम शृङ्गारादिष्वेको रसः तस्य प्रौढिं समुद्रेकं करुणः करुणारसं प्राप्तः, अस्य विवरणमन्वकम्पतेति ॥ २५ ॥ चतुर्भुजः; कृष्णः द्वाभ्यां भुजाभ्याम् उत्थाप्य द्वाभ्यां केशान् समुह्य एकीकृत्य बद्ध्वा वक्त्रं प्रामृजत् इति द्योतनाय चतुर्भुज इति प्रत्युक्तम् ॥ २६ ॥ अश्रूणां कला ययोस्ते तथा शुचोपहतौ कृशौ स्तनौ च अनन्यविषयाम् अन्यस्पर्शनायोग्याम् ॥ २७ ॥ अतदर्हां प्रेमगर्भविषादवचनायोग्याम् ॥ २८ ॥

### श्रीमज्जीवगोस्वामिकृतः बृहत्क्रमसन्दर्भः

तामुत्थाप्य चतुर्भुज इत्यादि। चतुर्भुज इति द्वाभ्यां परिरेभे, द्वाभ्यां केशान् बबन्धेत्यर्थः। चतुर्भुजस्तदैवाभवदिति मन्तव्यम्—अन्तःपुरे सन्ततं द्विभुजत्वेनैव स्थितत्वात्। चतुर्भुजत्वमत्रैव शोभते ॥ २५-२८ ॥

### श्रीनाथचक्रवर्तिपादविरचिता चैतन्यमतमञ्जूषा

चतुर्भुज इति। द्वाभ्यां परिरेभे, द्वाभ्यां केशं बबन्धेति चतुर्भुजत्वमत्रैव शोभते स्म ॥ २६-२८ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

यथा सांसारिकजीवानाम् अविद्यया बन्धनं तथा तस्याः प्रेम्णा बन्धनं यतो हास्यस्य प्रौढिं प्रौढत्वम् अजानन्त्या इति प्रेमपरिणामः अनुरागो हि स्वाश्रयस्य प्रतिक्षणं दैन्यमेवोत्पादयति ततश्च नाहमेतद्योग्येत्यतोऽनेन त्यक्तैवाहमिति भ्रान्तचित्ताया इत्यर्थः ॥ २५ ॥ चतुर्भुज इति उत्थापनाश्लेषणवक्त्रपरिमार्जनार्थमाविष्कृतभुजचतुष्टय इत्यर्थः। समुह्य निबध्य ॥ २६ ॥ अश्रुकले अश्रुधरे शुचा शोकाश्रुणा ॥ २७-२८ ॥

### गूढार्थदीपिनी

बन्धनं पाशम्। प्रौढिं गाम्भीर्यम् अन्वकम्पत कृपां कृतवान् ॥ २५ ॥ द्विभुजोऽपि चतुर्भुजः सन्। समुह्य निबध्य। द्वाभ्यामुत्थापना आश्लेषौ द्वाभ्यां च केशबन्धनं मुखमार्जनं च ॥ २६ ॥ प्रमृज्येति युग्मम्। अश्रूणि कलयतः क्षरतः कला बिन्दवो वा। शुचा शोकाश्रुणा उपहतौ आर्द्रौ। सान्त्वं सान्त्वनोपायम्। अतदर्हामेवंविधहास्या योग्याम् ॥ २७-२८ ॥

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः

हास्यप्रौढिं गाम्भीर्यमजानन्त्याः प्रेमरूपं बन्धनं पाशम् ॥ २५-२६ ॥ अश्रूणां कलाः बिन्दवो ययोस्ते शुचा इत्येकवचनं जातौ शोकाश्रुभिः ॥ २७-२८ ॥

**श्रीसत्यधर्मकृता श्रीभागवतटिप्पणी**

भगवान्कृष्णः प्रियायाः प्रेमबन्धनं स्नेहानुबन्धं तद्दृष्ट्वा हास्यप्रौढिमानमजानन्त्येव दर्शयिष्याः करुणः करुणयतीति स्वभावतः स इदानीमन्वकम्पतानुकम्पां कुर्वन्निव दर्शयामास ॥ २९ ॥ अनुकम्पाव्यापारमुपपादयति। पर्यङ्कादिति। द्वाभ्यामुत्थाप्यैकेन केशान्नाशीभूतान्केशानैकीकृत्यैकेन मुखं प्रामृजदिति। चतुर्भुजता च वक्ष्यमाणकार्यानुगुणतयोक्तेति मन्तव्यम् ॥३०॥ शुचोपहतौ शुष्काविति यावत्। न सदा तथेति द्योतयितुं शुचेत्युक्तिः। विविच्य सर्वाङ्गविचारकाले समन्ताद्घटना किलासीत्। सुपीनदेवी स्तनमध्यदेशे सुदुर्लभा सा परमच्युतस्येत्युक्तिराश्लिष्य सान्त्वयामासेत्यन्वयः ॥ ३१ ॥ हास्यप्रौढेः। प्रादूढेष्विति बृद्धिः। अतदर्हां विषादजनकवचनायोग्यां सान्त्वनप्रकारज्ञः सान्त्वयामास ॥ ३२ ॥

**श्रीमद्वल्लभाचार्य्यकृता सुबोधिनी**

तदा भगवान् क्षणविलम्बे समाधानमशक्यमिति उपेक्षाभावं परित्यज्य, तस्यामपेक्षाभावं कृत्वा, शीघ्रं प्रतिक्रियार्थं प्रवृत्त इत्याह **तद्दृष्ट्वेति**। तस्याः पतनं दृष्ट्वा करुणायुक्तो भूत्वा अन्वकम्पत। तस्या दुःखनिवृत्तिमियेष। अभिप्रायानुसारेण यत्तयाग्रे निरूपितं तावद्वक्तव्यम्। ततश्च अभिमानाभावे ज्ञाते भगवान् कृपां कुर्यात्। यत्तु मध्ये मूर्च्छया पतनम्, तदभिप्रायाज्ञानात्। ईश्वरवाक्ये च यावत्स एव स्वाभिप्रायं न प्रकाशयति, तावदर्थान्तरं न वर्णनीयम्। अतो लौकिकत्वात्तस्या अभिप्रायापरिज्ञानात् त्यागभयेन तथावस्थोचितैव। तदा भगवानुत्तरेऽदत्ते अभिमानाभावे चाज्ञातेऽपि कृपामेव कृतवान्। तत्र हेतुः **करुण** इति। दयायुक्तः। दयायामपि हेतुः **तद्दृष्ट्वेति**। **भगवानिति** सर्वार्थाभिज्ञता। **कृष्ण** इति स्त्रीणां प्रियः। तासामुद्धारार्थे आगतः कथं तां मारयेत्। ननु बहव एव मूर्च्छिता भवन्ति वचसा त्रासिताः, किमत्राश्चर्यमिति चेत्, तत्राह **प्रियायाः प्रेमबन्धनमिति**। सापि भगवतः प्रिया, भक्तत्वात्। तस्याश्च प्रेमातिशयः सम्बन्धाभावे ज्ञात एव प्राणपरित्यागरूपः। प्रेमैव बन्धनमिति भगवत्प्रेम्णैव सा बद्धा तिष्ठति। तदभावे ज्ञात एव पतितेति। ननु युक्तमेव तस्यास्तथात्वम्, केनांशेन सन्तुष्टः, सन्तोषहेतोराश्चर्यस्याभावादित्याशङ्क्याह **हास्यप्रौढिमजानन्त्या** इति। हास्यरसे पूर्वपक्षसिद्धान्तन्यायेन पदार्थनिरूपणं प्रौढिः। तत्र भगवता पूर्वपक्षः कृतः। यतो रुक्मिणी न लौकिकी। नापि लौकिकविषयमपेक्षते। अतोऽवश्यं सिद्धान्तो वक्तव्यः। तद्वक्तुं न जानातीति मुग्धभावात् बालानामिवाभिमानो न दोषायेति मूर्च्छां दृष्ट्वा स्वभावतोऽपि परमकारुणिकः अनुकम्पां कृतवान् ॥ २५ ॥ ततो यत्कृतवांस्तदाह **पर्यङ्कादिति**। स्वयं शीघ्रमवरुह्य पर्यङ्कात्, हस्तद्वयेन तामुत्थाप्य, हस्तद्वयेन च केशान् समूह्य, एकेन हस्तेन केशबन्धं धृत्वा, दक्षिणेन तद्वक्त्रं प्रामृजत्। **पद्मपाणिनेति** शीतलेनामृतस्राविणा। तेन तापापनोदः जीवनं च जातम्। स्पर्शेनैव प्राणाः समागताः ॥ २६ ॥ ततः स्वस्थां सान्त्वयामासेत्याह **प्रमृज्येति**। तेनैव पाणिना अश्रूणि प्रमृज्य, अश्रूणां कला यत्र। तत उत्थाप्यैव धृत्वैव हस्तद्वयेन मध्ये एकेन केशबन्धम्। उक्तां क्रियां कृतवान्। अतः सान्त्वनपर्यन्तं चतुर्भुज एव स्थितः। प्रकर्षेण मार्जनं अश्रूणि दूरीकृत्य परितः स्थितकज्जलस्य सर्वत्र स्थापनम्, तथैवान्यत्रापि स्नेहप्रकाशार्थं त्यागाभावविश्वासार्थं च बाहुना आश्लिष्य। ननु स्वयमेव 'न स्त्र्यपत्यार्थकामुका' इत्युक्त्वा, पुनः किमर्थं तथा कृतवान्, तत्राह **अनन्यविषयामिति**। न विद्यते अन्यो विषयो यस्याः। यद्ययमपि विषया न भवेत्, तदा शरीरनाशः स्यादिति। 'ये त्यक्तलोकधर्माश्च मदर्थे तान् बिभर्म्यहमि'ति। तस्यास्तथात्वं ज्ञात्वा स्वप्रतिज्ञास्थापनार्थमेव तथा कृतवानित्यर्थः! ततश्च स्त्रीत्वेन न कामिता, किन्त्वनन्यविषयत्वेन। किञ्च। **सती** पतिव्रता। तदुपेक्षायां मर्यादाविरोधोऽपि स्यात्। **राजन्निति** सम्बोधनं भ्रमाभावाय। राजा हि पूर्णविषयो भवतीति ॥ २७ ॥ किञ्च, **सान्त्वयामासेति**। ततो वाक्यैः सान्त्वयामास। ननु स्वयमेव निःसम्बन्धं प्रतिपाद्य, कथं सान्त्वनं कुर्यादित्याशङ्क्याह **सान्त्वज्ञ** इति। सान्त्वने हेतुः **कृपयेति**। नतु भयेन कथञ्चिदपि। **कृपणामिति** दयायां हेतुः। नतु भार्याम्। ननु धर्मद्वयस्य विद्यमानत्वात्कथं कार्पण्यमेव हेतुरित्यत आह **प्रभुरिति**। स हि स्वतः समर्थो न भार्यादिकमपेक्षते। **हास्यप्रौढिवाक्यैर्भ्रमच्चित्तामिति** वाक्यसान्त्वने हेतुः। अन्यथा कायसान्त्वनेनैव चरितार्थता स्यात्। अतश्चित्तभ्रमोऽपि निवारणीयः। ननु तिष्ठतु चित्ते भ्रमः, किं स्यात्, अत आह **अतदर्हामिति**। तद्विद्रूपतयावस्थानं नार्हति। शरीरेण कृपाम्, वाचा अकृपां च। शरीरे स्वास्थ्यम्, चित्तेऽस्वास्थ्यं वा। यतो भगवान् **सतां गतिः**। सन्तो हि निःसन्दिग्धा भवन्ति, भगवद्वाक्यविश्वासेन प्रवर्तन्ते। 'द्विःशरं नाभिसन्धत्ते द्विःस्थापयति नाश्रितान्।' 'कौन्तेय प्रतिजानीहि न मे भक्तः प्रणश्यती'ति। अतश्चित्तभ्रमापनोदनार्थं वाचा सान्त्वनं कर्तव्यम् ॥ २८ ॥

**श्रीविट्ठलरायात्मजश्रीवल्लभकृतलेखः**

**तद्दृष्ट्वेत्यत्र**। **अनुकम्पामिति**। कृतवानिति शेषः। अनुकम्पापदार्थमाहुः दुःखेति। परदुःखप्रहाणेच्छायाः कृपापदार्थत्वादिति भावः।

**श्रीसुबोधिनी-सारः**

हासस्य प्रौढिं गांभीर्यमजानंत्याः प्रियायाः तत् प्रेमबन्धनं दृष्ट्वा करुणो दयालुः स भगवान् कृष्णोऽन्वकंपत दयामकृत ॥ २५ ॥ पर्यंकाच्छय्यात आशु शीघ्रमवरुह्योत्तीर्य तां रुक्मिणीम् उत्थाप्य द्वाभ्यां हस्ताभ्याम् एकेन केशान्समुह्य संबध्य

पद्मपाणिनान्येन तस्या वक्त्रं मुखं प्रामृजत् पर्यशोधयत् इत्येतदर्थं चत्वारो भुजा यस्य सः ॥ २६ ॥ अश्रूणां कला ययोस्ते नेत्रे शुचा शोकेनोपहतौ स्तनौ च प्रमृज्य परिशोध्यानन्यविषयामात्मनिष्ठां सतीं बाहुनाश्लिषत् आलिंगयत् ॥ २७ ॥ सांत्वं सांत्वनं जानातीति प्रभुः सतां गतिः कृपया कृपणां दीनां हास्यप्रौढ्या भ्रमच्चित्तं यस्याः तामतदर्हां तथा वैक्लव्यायोग्यां सांत्वयामासानुनीतवान् ॥ २८ ॥

### गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

तदा च स कृष्णः हास्यस्य प्रौढिं चातुर्यमजानन्त्याः प्रियायास्तत् पतनं प्रेमबन्धनं प्रेमपाशं च दृष्ट्वा अन्वकम्पत कृपां कृतवानित्यन्वयः। 'सा च कृपा तस्य स्वाभाविकी, न कामप्रयुक्ता' इत्याशयेनाह—करुण इति। तत्र हेतुः—भगवानिति ॥२५॥ 'कथं च कृपा कृतवान्' तत्राह—पर्यङ्कादिति। चतुर्भुजः उत्थापनाश्लेषणवक्त्रपरिमार्जनाद्यर्थमाविष्कृतचतुर्भुजः सन् आशु पर्यङ्कादवरुह्य पतितामुत्थाप्य तस्याः केशान् समुह्य निबद्धय पद्मवत्कोमलेन पाणिना तद्वक्त्रं प्रामृजत् ॥२६॥ सान्त्वज्ञः सान्त्वनोपायज्ञः प्रभुः सर्वथा सर्वदा च सर्वं कर्तुं समर्थश्च श्रीकृष्णः अश्रूणां कला बिन्दवो ययोस्ते नेत्रे तथा शुचा शोकाश्रुणा उपहतौ आर्द्रीकृतौ स्तनौ च प्रमृज्य बाहुना आश्लिष्य तां कृपया सान्त्वयामासेति द्वयोरन्वयः। 'विवेकित्वात्त्वमेवैतल्लीलारहस्य श्रवणयोग्यः, नान्यः कश्चिन्मन्दबुद्धिः कामी, तस्यान्यथाकल्पनया दोषप्रसङ्गात्' इति सूचयन् सम्बोधयति—राजन्निति। सान्त्वने हेतुमाह—कृपणामिति। तत्र हेतुमाह—हास्यप्रौढ्या भ्रमच्चित्तं यस्यास्तामिति। 'कृपणतायामपि किम्' इत्यत आह—अतदर्हामिति। दैन्यायोग्यामित्यर्थः। तत्रापि हेतुमाह—अनन्यविषयामिति। न विद्यते भगवतोऽन्यो विषयः आश्रयत्वेनाभिप्रेतो यस्यास्तामित्यर्थः। तत्रापि हेतुमाह—सतीं पतिव्रतामिति। ननु 'तस्यास्तथात्वेऽपि स्वस्याप्तसमस्तकामत्वात् कथमेवं दैन्यसूचकं सान्त्वनकरणं सम्भवति' तत्राह—सतां गतिरिति। सतां स्वैकनिष्ठानां गतिः फलतया प्राप्यः। तस्याः स्वैकपरत्वादेवमसान्त्वने फलस्यादर्शनादमीषां तद्भजने प्रवृत्तिरेव न स्यात्, न च तद्विनोद्धारः, अतस्तदर्थं तत्सान्त्वनं युक्तमेव ॥ २७–२८ ॥

### अन्वितार्थप्रकाशिका

तदिति। करुणः दयालुः भगवान् स कृष्णः हास्यस्य प्रौढिं गाम्भीर्यमजानन्त्याः। नुमार्षः। प्रियायास्तत् पतनं प्रेमबन्धनं प्रेमपाशं च दृष्ट्वा अन्वकम्पत कृपां कृतवान् ॥ २५ ॥ पर्यङ्कादिति। चतुर्भुजः आश्लेषणवक्त्रपरिमार्जनाद्यर्थमाविष्कृतभुजचतुष्को भगवान् आशु पर्यङ्कात् अवरुह्य पतितां तामुत्थाप्य भूमितः स्वाङ्के निवेश्य तस्याः केशान् समुह्य निबद्धय पद्मतुल्यकोमलेन पाणिना तद्वक्त्रं प्रामृजत्। श आर्षः ॥ २६ ॥ प्रमृज्येति युग्मम्। हे राजन्! सान्त्वज्ञः सान्त्वनोपायज्ञः सतां गतिः प्रभुर्भगवान् अश्रूणां कला बिन्दवो ययोस्ते अश्रुभिः शोभिते वा अश्रुधरे वा नेत्रे तथा शुचा शोकाश्रुणा उपहतौ आर्द्रीकृतौ स्तनौ च प्रमृज्य बाहुना आश्लिष्य अनन्यविषयां भगवदन्याश्रयरहितां सतीं कृपणां दीनाम् अतः अतदर्हां खेदयितुमयोग्यां किन्तु वदिष्यतीति हासप्रौढ्या भ्रमच्चित्तं यस्यास्तां रुक्मिणीं कृपया सान्त्वयामास ॥ २७–२८ ॥

### श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्

हास्यस्य प्रौढिं गांभीर्यकलां ॥ २५–२६ ॥ अश्रुभिः कले सुंदरे शुचा शोकाश्रुबिंदुकलापेनोपहतौ बाहुना बाहुद्वयेनाश्लिष्य। नास्ति कृष्णादन्यो विषयो यस्यास्तां ॥ २७ ॥ सांत्वज्ञः अनुनयकुशलः कृपणां दीनां सांत्वयामास ॥ २८ ॥

### भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

तदिति। भगवान् सः कृष्णः, हास्यस्य प्रौढिश्चातुर्यं तां, अजानन्त्याः प्रियायाः, तत् प्रेमबन्धनं, दृष्ट्वा अवलोक्य, करुणः करुणावान् सन्, अन्वकम्पत। भीत इवाकम्पतेत्यर्थः। यद्वा। अन्वकम्पतानुकम्पां चकारः ॥ २५ ॥ ततः सः किमकरोदित्यत्राह। पर्यङ्कादिति। ततः पर्यङ्कात् स्वतल्पात्, आशु अवरुह्य, चतुर्भुजः उत्थापनाश्लेषणवक्त्रपरिमार्जनाश्वासनायाविष्कृतचतुर्भुजः कृष्णः, तां रुक्मिणीं उत्थाप्य, केशान् समूह्य निबद्धय, तद्वक्त्रं रुक्मिण्यास्यं, पद्मपाणिना पद्मसदृशशीतलमृदुकरेण, प्रामृजत् ॥ २६ ॥ किं च प्रमृज्येति। सान्त्वयामासेति च। हे राजन्, सान्त्वज्ञः सान्त्वनरीत्यभिज्ञः सतां गतिर्भक्तजनानां प्राप्यः श्रेयः प्राप्त्युपायभूतो वा। प्रभुर्भगवान् श्रीकृष्णः, अश्रूणां कला बिन्दवो ययोस्ते, नेत्रे, शुचा शोकेन, उपहतौ स्तनौ च, प्रमृज्य, हास्यप्रौढ्या भ्रमत् चित्तं यस्यास्तां, अतदर्हामेवंविधहास्यप्रौढीकरणानर्हां, कृपणां दीनां, अनन्यविषयां, सतीं साध्वीं, तां रुक्मिणीं, बाहुना आश्लिष्य, कृपया, सान्त्वयामास इति द्वयोरेकान्वयः ॥ २७–२८ ॥

### कृष्णप्रिया

भगवान् श्रीकृष्ण ने देखा कि प्रियतमा श्रीरुक्मिणी जी हँसी-विनोद की गम्भीरता को नहीं समझ सकीं और प्रेम बन्धन की दृढता के ही हेतु देवी जी की यह दशा हो गयी है। परम कारुणिक भगवान् श्रीकृष्ण का अति सुकुमार हृदय कमल

श्रीरुक्मिणी जी के लिये करुणा से छलक उठा ॥ २५ ॥ प्रियाजी की करुणामयी परिस्थिति को देखते ही श्री द्वारिकेश तत्क्षण चतुर्भुज होकर पर्यङ्क से नीचे उतर गये। भूतल पर गिरी हुई श्री रुक्मिणी जी को उठा लिया और प्रियाजी के बिखरे हुए केश कलाप को समारने लगे पुनः अपने कोमल एवं शीतल कर कमलों से देवी जी के मुखारविंद को पोछने लगे और स्पर्श सुख देने लगे ॥ २६ ॥ श्रीकृष्णजी ने श्रीरुक्मिणीजी के नयनों से निकले हुए और शोकसंतप्त अश्रुओं से भींगे हुए वक्षःस्थल को पोंछकर अपने प्रति अनन्य स्नेह भाव रखने वाली निर्दोष एवं सरल सती श्रीरुक्मिणी जी को दोनों भुजाओं में लेकर हृदय से लगा लिया ॥ २७ ॥ भगवान् श्रीकृष्ण नर्म विनोदी और रसज्ञ हैं एवं करुणानिधान हैं। श्रीरुक्मिणी जी नर्म विनोद अभिज्ञ नहीं है सरल है। नाथ समझाने में बड़े विचक्षण हैं भगवद्गीता उसमें प्रमाण है। भगवान हास्य विनोद कर रहे हैं रुक्मिणी वह वास्तविक बात मान ली और चित्त अत्यन्त खेद और भययुक्त हो गया तब संतो के आश्रय भगवान् सान्त्वना एवं समाधान करने लगे ॥ २८ ॥

### श्रीभगवानुवाच

**मा मा वैदर्भ्यसूयेथा जाने त्वां मत्परायणाम् । त्वद्वचः श्रोतुकामेन [1]क्ष्वेल्याऽऽचरितमङ्गने ॥ २९ ॥**
**मुखं च प्रेमसंरम्भस्फुरिताधरमीक्षितुम् । कटाक्षेपारुणापाङ्गं सुन्दरभ्रुकुटीतटम् ॥ ३० ॥**
**अयं हि परमो लाभो गृहेषु गृहमेधिनाम् । यन्नर्मैर्नीयते यामः प्रियया भीरु [2]भामिनि ॥ ३१ ॥**

### श्रीशुक उवाच

**सैवं भगवता राजन् वैदर्भी परिसान्त्विता । ज्ञात्वा तत्परिहासोक्तिं प्रियत्यागभयं जहौ ॥ ३२ ॥**

#### कर्दमक्षमा

अन्वयः—श्री भगवान् उवाच—हे वैदर्भि ! हे अङ्गने ! मत्परायणाम्, त्वाम्, जाने, मा, मा, असूयेथाः, त्वद्वचः, श्रोतुकामेन, क्ष्वेल्या, आचरितम् ॥ २९ ॥ प्रेमसंरम्भस्फुरिताधरम्, कटाक्षेपारुणापाङ्गम्, च, सुन्दरभ्रुकुटीतटम्, मुखम्, ईक्षितुम्, मया, क्ष्वेल्याचरितम् ॥ ३० ॥ हे भीरु ! हे भामिनि ! गृहमेधिनाम्, गृहेषु, हि, अयम्, परमः, लाभः, यत्, नर्मैः, प्रियया, यामः, नीयते ॥ ३२ ॥ श्रीशुक उवाच—राजन् ! भगवता, एवम् परिसान्त्विता, सा वैदर्भी, तत्, परिहासोक्तिम्, ज्ञात्वा, प्रियत्यागभयम्, जहौ ॥ ३२ ॥

#### श्रीधरस्वामिविरचिता भावार्थदीपिका

मा माम् । त्वद्वचः किं नु वदिष्यसीति श्रोतुकामेन श्रोतुमिच्छता क्ष्वेल्या नर्मणा एवमाचरितमुक्तं न तत्त्वतः । हे अंगने सुन्दरि ॥ २९ ॥ प्रेमसंरंभेण प्रणयकोपेन स्फुरितः कंपितोऽधरो यस्मिंस्तत् । कटाशब्देन कटाक्षास्तैराक्षेपैररुणावपांगौ यस्मिंस्तत् । अत एव सुन्दरं कुटिलं भ्रुकुटीतटं यस्मिंस्तत् ॥ ३० ॥ ननु कलहे किं कौतुकं सुखं वाऽत आह । अयं हीति । नर्मैर्नर्मभिः । यामः कालः ॥ ३१-३२ ॥

#### श्रीवंशीधरकृता भावार्थदीपिकाप्रकाशः

'क्ष्वेलिर्नर्मणि हासे च' इति निरुक्तिः । मेत्यपि युग्मकम् । मा माम् । माभ्यसूयेथा मयि दोषदृष्टिं मा कुरु । नन्वनन्यगतिमपि मां त्यक्तुमिच्छसि कुतो नाभ्यसूया कार्या तत्राह—जान इति । अतः कदाचित्कथंचिदपि न त्याज्येति भावः । ननु तत्कुतस्तादृगुक्तं तत्राह—त्वद्वच इति । ननु तथापि सत्यवचनेन त्वया मिथ्या वक्तुं न युज्यते तत्राह—क्ष्वेल्याचरितमिति । नर्मसु तद्योग्यमित्यर्थः । अंगने परमसुन्दरीति स्तुतिः । अंगनास्त्वेतदुचितमेवेति भावः । हे वैदर्भीति—विशिष्टदर्भवनवासिभिर्मृगपक्ष्यादिभिरिव त्वयापि तन्न ज्ञातमिति भावः ॥ २९ ॥ एकदेशन्यायेन कटपदं कटाक्षपरम् । नर्मोक्तौ प्रयोजनांतरं चाह—प्रेमसंरंभेणेति, तैर्व्याख्यातम् । ननु यदि सत्यकामस्य भगवतस्तथाभूतेवेच्छाऽऽसीत्तदा तदानीमेव रुक्मिणी सकोपकुटिलकटाक्षा कथं नाभूदिति चेत्—इच्छाशक्तिर्हि भगवत एवाधीना प्रेमा तु तं भगवंतमप्यधीनीकरोतीति प्रेम्णोऽग्रे न तस्याः कापि प्रभविष्णुता । प्रेमा ह्यानन्दरूपमपि भगवन्तमतिशयेनानन्दयित् तदिच्छामपि कदाचिदन्यथा करोति । इदमत्र तत्त्वम्—आसां रुक्मिण्यादीनां मधुरप्रेमस्नेहप्रणयमानरागानुरागेषु सप्तसु स्थायिभावेषु मध्ये कदाचित्कश्चित्स्वावसरं प्राप्योदयत इत्यतस्तदानीं व्यजनसेवामयेऽनुरागः स्थायिभाव एवोदगात् तस्य च दैन्यसंचारिप्राबल्यात्तस्याः खेदचिंतामोह एवाभून्न तु तस्मिन्प्रणयकोपकटाक्षादयः । ते चोपरिष्टान्मानस्थायिभावोदयक्षणेषु भविष्यन्त्येव । किञ्च—धृतस्नेहवत्या रुक्मिण्या मानकौटिल्यातिशयः

---

१. क्ष्वेला—विज. । २. भाषिणि—धिज. ।

प्रायो नोदयते, मधुस्नेहवत्याः सत्यभामाया अनुरागोऽपि मानगर्भ एवेति संरंभसकंपाधरकुटिलकटाक्षादिमुखं कृष्णस्य तत्रैव संपद्यत इति ॥ ३० ॥ कौतुकमद्भुतम् । यत् यः । 'नर्मस्तु नर्मणा सार्द्धम्' इति द्विरूपकोशाददन्तोपि नर्मशब्दः । 'यामस्तु प्रहरे काले' इति मेदिनी । हि यस्मादयं गृहेषु वर्तमानानां गृहमेधिनां गृहेषु लाभः फलं सुखमित्यर्थः । गृहेष्विति—प्रोषितादीनां तत्सुखं निषेधति—याम एकप्रहरोपि । प्रिययेति सर्वाभ्यो मे त्वमतिवल्लभा, अतस्त्वयैव सहैतद्युज्यत इति । हे भीर्विति–भयमयदक्षिणप्रेमस्वभावादेव शंकां वहसि न तु विचारेणेति भावः । अतस्तदानीमपि क्रोधांशानभिव्यक्तौ सकौतुकं तदुद्भावनाय तमारोपयति—हे भामिनीति । एवं 'मा मा वैदर्भ्यसूयेथाः' इत्यपि । अत्र श्रीभगवतः सकौतुकोऽयमभिप्रायः—इयं खलु सरलप्रेमवती परमगांभीर्यवतीति ततो ममाभीष्टः प्रिया कोपविलासः प्रेमनिर्बंधप्रकाशकसविकारकण्ठोक्तिविशेषो वा नास्यां स्फुटमुपलभ्यते, तस्मात्कोपविलासो वा तज्जननाभावे तु द्वितीयस्तादृशोक्तिविशेषो वा यथास्यां प्रकाशेत तथा बाढं परिहासेन प्रयतिष्ये । तत्र यस्यां कोपजनने भ्रातृवैरूप्यादिकमपि कारणं नासीत्तस्यां तत्रान्यत्परमायोग्यमेव । किन्त्वहमेव मदविश्लेषसुखमेवास्याः सर्वस्वमिति तद्दर्पन्यक्कारेणैव कोपः संभवेद्यदि ततोपि कोपो नाविर्भवेत्तथापि मद्विश्लेषभयेन पूर्वानुरागवदधुनापि विकारविशेषसहितो निगदेनैव प्रेमनिर्बंधः प्रकाशयेतेति । तत्र 'राजपुत्रीप्सिता भूपैः' इत्यादिकस्य तस्य श्रीकृष्णवचनस्य सप्रणयत्वं परिहासमयत्वं च 'तां रूपिणीम्' इति, 'प्रीतः स्मयन्' इत्यनेन च व्यक्तम्, परिहासमयत्वं तु विशेषतोप्युक्तं प्रसंगेन । तस्याः प्रेमसारल्यादिद्वयमपि 'तद्दृष्ट्वा भगवान्' इत्यादिना । हास्यं परिहासस्तत्र प्रौढिरवश्यमेनां सरलप्रेमवतीमपि गंभीरामपि क्षोभयिष्यामीति गर्वः तां प्रणयरसकौटिल्याभावेनाजानत्या इत्यर्थः । एवमग्रेपि हास्यप्रौढेर्भ्रमच्चित्तामिति । तत्र तेन परिहासेन कोपविलासादिदर्शनमेवाभीष्टमिति स्वयमेवोक्तम्' मा मा वैदर्भि' इति त्रिभिः । अथ तस्य तत्प्रेमनिबंधप्रकाशकविकारदर्शनेच्छापि प्राक्तनेनैव वाक्येन व्यक्ता 'तद्दृष्ट्वा भगवान्' इत्यादिना । तथा निगदनेनैव तद्व्यक्तिदर्शनेच्छापि स्वयमेव व्यंजयिष्यते 'साध्व्येतच्छ्रोतुकामैः' इति । तथैव च तस्या वाक्यम्—'जाड्यं वचस्तव गदाग्रज' इत्यादि । एवं स्वदर्पन्यक्कारेण तत्क्षोभो दर्शितः, अथ तदविश्लेषन्यक्कारेण तत्क्षोभो दर्शितः । तदविशेषन्यक्कारे श्रीशुकवाक्यम्—'एतावदुक्त्वा' इत्यादि । अन्यस्य तत्र हेतुत्वं भगवतैव निराकरिष्यते—'भ्रातुर्विरूपकरणम्' इत्यादिनेति । वैदर्भी तादृशानुरागेण विदर्भादागता वा । प्रियेण तेन यस्त्यागः स्वस्य त्याजनं तस्माद्भयम् । ॥ ३१ ॥ सा वैदर्भी । तस्य कृष्णस्य परिहासवचनम् ॥ ३२ ॥

### श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी

मामेत्यपि युग्मकम् । मा मां माभ्यसूयेथाः मयि दोषदृष्टिं मा कुरु ननु अनन्यगतिमपि मां त्यक्तुमिच्छसि कुतोऽसूया न कार्य्या तत्राह–जान इति । अतः कदाचित्कथञ्चिदपि न त्याज्येति भावः । ननु, तत्कुतस्तादृगुक्तं, तत्राह—त्वद्वच इति । ननु तथापि सत्यवचनेन त्वया मिथ्या वक्तुं न युज्यते तत्राह, क्ष्वेल्येति, नर्मसु तद्योग्यमित्यर्थः । हे अङ्गने परमसुन्दराङ्गीति स्तुतिः ॥ २९ ॥ प्रेमसंरम्भेति तृतीयालुक्च्छान्दसः अतः कटेत्यादिकयोरप्यन्वयः सर्वेषामेव विशेषणानां वचसि मुखे चान्वयः ॥ ३० ॥ हि यस्मादयं गृहेषु वर्त्तमानानां गृहमेधिनां गृहिणां लाभः फलं सुखमित्यर्थः । गृहेष्विति प्रोषितादीनां तु तथा सुखं निषेधयति यामः एकप्रहरोपि प्रिययेति सर्वाभ्योपि मे त्वमतिवल्लभा अतस्त्वयैव सहैतत् युज्यत इति हे भीर्विति भयमयदक्षिणप्रेमस्वभावादेव शङ्कां वहसि नतु विचारेणेति भावः। अतस्तदानीमपि क्रोधांशानभिव्यक्तौ सकौतुकं तदुद्भावनाय तमारोपयति–हे भामिनीति । एवं मा मा वैदर्भ्यसूयेथा इत्यपि अत्र श्रीभगवतः सकौतुकोयमभिप्रायः इयं खलु सरलप्रेमवती परमगाम्भीर्य्यवती च ततो ममाभीष्टः प्रियाकोपविलासः प्रेमनिर्बन्धप्रकाशकसविकारकण्ठोक्तिविशेषो वा नास्यां स्फुटमुपलभ्यते तस्मात्कोपविलासो वा तज्जननाभावे तु द्वितीयस्तादृशोक्तिविशेषो वा यथा स्यां प्रकाशेन तथा बाढं परिहासेन प्रयतिष्ये तत्र यस्यां कोपजनने भ्रातृवैरूप्यादिकमपि कारणन्नासीत् तस्यां तत्रान्यत्परमायोग्यमेव किन्त्वहमेव मदविश्लेषसुखमेव चास्याः सर्वस्वमिति तद्दर्पन्यक्कारेणैव कोपः सम्भवेत् यदि ततोपि कोपो नाविर्भवेत् तथापि मद्विश्लेषभयेन पूर्वानुरागवदधुनापि विकारविशेषसहितो निगदेनैव प्रेमनिर्बन्धः प्रकाश्येतेति तत्र राजपुत्रीप्सिताभूपैरित्यादिकस्य तस्य श्रीकृष्णवचनस्य सप्रणयत्वं सपरिहासमयत्वं च तां रूपिणीमित्यादौ प्रीतः स्मयन्नित्यनेन व्यक्तं परिहासमयत्वं तु विशेषतोप्युक्तं प्रसङ्गेन तस्याः प्रेमसारल्यादिद्वयमपि तद्दृष्ट्वा भगवानित्यादिना हास्यं परिहासः तत्र प्रौढिः अवश्यमेनां सरलप्रेमाणमपि गम्भीरामपि क्षोभयिष्यामीति गर्वः तां प्रणयरसकौटल्याभावावेनाजानत्या इत्यर्थः । एवमग्रेपि हास्यप्रौढेर्भ्रमचित्तामिति तत्र तेन परिहासेन कोपविलासादिदर्शनमेवाभीष्टमिति स्वयमेवोक्तं मामावैदर्भीत्यादि त्रिभिः । अथ तस्य तत्प्रेमनिर्बन्धप्रकाशकविकारदर्शनेच्छापि प्राक्तनेनैव वाक्येन व्यक्ता तद्दृष्ट्वा भगवानित्यादिना तथा निगदनेनैव तद्व्यक्तिदर्शनेच्छापि स्वयमेव व्यञ्जयिष्यते साध्व्येतच्छ्रोतुकामैरिति तथैव च तस्या वाक्यं 'जाड्यं वचस्तवगदाग्रज' इत्यादि एवं स्वदर्पन्यक्कारेण तत्क्षोभो दर्शितः । अथ तदविश्लेषदर्पन्यक्कारे श्रीशुकवाक्यम् एतावदुक्त्वेत्यादि अन्यस्य तु हेतुत्वं श्रीभगवतैव निराकरिष्यते भ्रातुर्विरूपकरणमित्यादिनेति ॥३१॥ वैदर्भी तादृशानुरागेण विदर्भादागता या प्रियेण तेन यस्त्यागः स्वस्य त्यजनं तस्माद्भयम् ॥ ३२ ॥

### श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी

मां माभ्यसूयेथा मयि दोषदृष्टिं मा कुरु, मा-शब्दस्य तत्राप्यादौ प्रयोगो निषेधस्य दार्ढ्यार्थं तत्प्रार्थने वैयग्र्याच्च। नन्वनन्यगतिमपि मां त्यक्तुमिच्छसि, कुतोऽसूया न कार्य्या, तत्राह—जान इति। अतः कदाचित् कथञ्चिदपि न त्याज्येवेति भावः। ननु तत् कुतस्तादृगुक्तम्? तत्राह—त्वद्वच इति। ननु तथापि सत्यवचनेन त्वया मिथ्या वक्तुं न युज्यते, तत्राह—क्ष्वेल्येति। नर्म्मसु तद्योग्यमेवेत्यर्थः। हे 'अंगने' इति सर्व्वथा सौन्दर्य्यवत्या त्वया सुन्दरमेव वचो वक्तव्यमित्याशयेनेति भावः॥ २९॥ तथाप्यवाच्यं तादृशं दुःखप्रदं वचो वक्तुं न युज्यते, सत्यम्, किन्तु देहिकसौन्दर्य्यविशेषञ्च द्रष्टुमित्याह-मुखञ्चेति। समासान्तः प्रविष्टस्यापि प्रेमसंरम्भेत्यस्य परतोऽप्याकर्षः, तत्रैव तत्तत्सम्पत्तेः, स्फुरिताधरत्वादीनां यथोत्तरं सौन्दर्य्याधिक्ये संरम्भलक्षणत्वे वा श्रैष्ठ्यम्, तादृगुक्तिं विना क्रोधानुदयेन तत्तत्सौन्दर्य्यानुभवासिद्धेरिति भावः॥ ३०॥ हि एव, अयमेव, गृहेषु वर्त्तमानानां गृहमेधिनां पञ्चयज्ञादिगृहस्थधर्म्मे दीक्षितानां गृहिणां वा, लाभः फलं सुखमित्यर्थः। गृहेष्विति प्रोषिता-दीनामन्यप्रयोजनस्याप्यपेक्ष्यत्वात्; यद्वा, गृहमध्य इत्यर्थः, सभादौ तदसम्भवात्। परम इति विषयान्तरभोगादिना सद्यस्तादृक्-सुखानुत्पत्तेः। याम एकप्रहरोऽपि; प्रिययेति सर्व्वाभ्यो मे त्वमतिवल्लभा, अतस्त्वयैव सहैतद्युज्यत इति। हे 'भीरु' इति साध्वी-त्वेन भयस्वभावादेव शंकां वहसि, न च विचारेणेति। हे भामिनीति च प्रणयकोप एव त्वया कर्त्तुं युज्यते, न त्वीदृशदुःखादि-कमिति भावः॥ ३१॥ भगवता सर्व्वशक्तिमता, अतः परि सर्व्वतोभावेन सान्त्विता सती, यतो वैदर्भी कन्यात्वेऽपि तदर्थं त्यक्तसर्व्वार्थेति। यद्वा, परमवैदग्ध्या तत्त्वं बोद्धुं समर्थेति भावः। अतस्तस्य तां वा तेन प्रागुक्तां सर्व्वां परिहासेनैवोक्तिं ज्ञात्वा प्रियेण तेन यस्त्यागः स्वस्य त्यजनं तस्माद्भयम्। यद्वा, भयत्यागे हेतुः—वैदर्भी, न च मैथिलीति तज्जन्मन्येव तत्सम्भ-वात्। ननु तथापि तस्मिन् विश्वसितुं नार्हतीति, तत्राह—भगवानिति। श्रीरघुनाथत्वे प्राय आर्य्यधर्म्मो दर्शितः, अधुना च भक्तवात्सल्यादिसर्व्वसद्गुणप्रकटनात्तादृक्त्वं न सम्भवेदिति भावः। हे राजन्निति च अहो तयापि तस्मात्तादृशभयं प्राप्यते, कथमन्येन विश्वासः कार्य्यः इति प्रणयोक्तिः॥ ३२॥

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका

सान्त्वनप्रकारमेवाह—मामेति। हे वैदर्भि! मां मासूयेथाः मह्यमसूयां माकृथा इत्यर्थः। त्वामहमेव परायणं परम-प्राप्यं यस्यास्तथाभूतां जाने तर्हि किमर्थमित्थमुक्तमित्यत आह—त्वद्वच इति। तव वचः श्रोतुमिच्छता किन्नु वदिष्यति तत् शृणोमीत्येवं कामयमानेन मया हे अङ्गने! क्ष्वेल्या नर्मणा एवमाचरितं कृतमुक्तमिति यावत्॥ २९॥ किञ्च, मुखञ्चेति। प्रेम-संरम्भेण प्रणयकोपेन स्फुरितः कम्पितः अधरो यस्मिन् कटशब्दोऽत्रापाङ्गसामीप्याद्गण्डस्थलपरः कटयोर्गण्डस्थलयोरधिकरण-योराक्षेपाः कोपावेशेन चञ्चलनेत्राघातास्तैररुणावपाङ्गौ नेत्रान्तौ यस्मिन् तत्सुन्दरं कुटिलं भ्रुकुटीतटं यस्मिन् तत्तव मुखञ्चेक्षितुं द्रष्टुमाचरितमिति पूर्वेण सम्बन्धः॥ ३०॥ ननु, कलहे किं कौतुकं? सुखं वा? अत आह—अयं हीति। कोसौ? हे भीरु! हे भामिन कोपिनि! प्रियया सह नर्मैः प्रणयकलहैर्यामो नीयत इति यदेष परमो लाभ इत्यर्थ। सुखमेवेति भावः। यामग्रहणं घटिकाक्षणाद्युपलक्षणम्॥ ३१॥ सैवमिति। तद्भगवदुक्तं परिहासार्थोक्तिरूपमेव ज्ञात्वा प्रियकर्तृकत्यागसम्भावनाप्रयुक्तं भयं तत्याज॥ ३२॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

मा मां प्रति माऽसूयेथाः गुणे दोषदर्शनं न कुरु तस्याः तव वचः श्रोतुकामेन मया क्ष्वेलया नर्मलक्षणलीलयाऽऽचरितं कृतम्॥ २९॥ प्रेमसहितसंरम्भेण स्फुरिताधरं कम्पमानाधरोष्ठं कटाक्षेण तिर्यक्दर्शनेनारुणापाङ्गेन रक्तनेत्रप्रान्तेन सुन्दर-भ्रुकुटीतटम्॥ ३०॥ कामिवज्जनविडम्बनं मयाऽकारीत्याशयेनाह-अयमिति। प्रियया सह नमः स्नेहगर्भपरिहासवचनैर्यामः कालावयवो नीयत इति यदयमेव गृहस्थानां गृहेषु परमो लाभो हीत्यन्वयः॥ ३१॥ द्विविधं वाक्यम् इष्टसाधनाववोधकमेकं दुःखपरिहारात्मकं तत्र पश्चादुक्तं दुःखविनाशकमिति भावेनाह—सैवमिति॥ ३२॥

### श्रीमज्जीवगोस्वामिकृतक्रमसंदर्भः

हे भाविनीति एवं मा मां मासूयेथा इत्यपि नत्वेवम्॥ ३१-३४॥

### श्रीमज्जीवगोस्वामिकृतः बृहत्क्रमसन्दर्भः

मामेत्यादि। हे वैदर्भि! मा मां मासूयेथाः, मयि असूयां मा कृथाः। यद्वा, मामा अभ्यसूयेथा इति सम्भ्रमाद्वीप्सा। नन्वेवं परुषं वचस्त्वयाऽभिहितम्, कथमसूयात्र न कार्येत्याह—त्वद्वचः श्रोतुकामेन क्ष्वेल्या परिहासेनैतदाचरितम्, न तु हृत्कषायेन॥ २९॥ नन्वेवं परिहासः किं बुद्धिमता क्रियते? इत्याह— मुखञ्च प्रेमसंरम्भ-स्फुरिताधरमीक्षितुम्। तव कोपो न

मया दृष्टः कदाचिदपि तदावलम्बवचो न श्रुतमिति तथा विहितमित्यर्थः। कटाक्षे अपारुणः अपाङ्गो यत्र, अपशब्दोऽत्राधिवयार्थः अव्ययानामनेकार्थत्वात्। हे भीरु! भीते ॥ ३२ ॥

### श्रीनाथचक्रवर्तिपादविरचिता चैतन्यमतमञ्जूषा

मा मेति संभ्रयाद्वीप्सा, कदापि त्वत्कोपो मया न दृष्टः कोपाविलं वचोऽपि न श्रुतम्, तद्दर्शनश्रवणार्थमिदमुक्तमित्याह—मुखञ्चेत्यादि। कटाक्षे अपारुणोऽत्यन्तारुणोऽपाङ्गो यत्र, अप-शब्दोऽत्राधिवयार्थः। हे भीरु भीत! हे भामिनि कोपने ॥ २९-३२ ॥

### श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शिनी

ननु, त्वया चेदिदं शरीरं त्यक्तं तर्हि कथमेष महाभारो मया वोढव्य इत्यतो मयाप्येतत् त्यज्यते तत्राश्लेषाश्रुमार्जनादिना कपटप्रेमाणं प्रकटीकृत्य यत्प्रत्यूहं विधत्से तत् किमतोऽप्यतिदुःखदिरसा पुनरपि ते वर्त्तत इति स्वस्मिन् दोषारोपणमाशङ्क्याह—मेति। हे वैदर्भि मा मां मा असूयेथाः ननु च हन्त हन्त परमकारुणिक त्वयि मम नेयमसूया किन्तु त्वत्पार्श्वे स्थित्वा दुःखमेव प्राप्नुवत्याः मम हितार्थमेव सुखमयीमन्यां गतिं यदुपदिष्टवानसि तदाकर्णितवत्याः ममेयमानन्दमूर्च्छैवाभूत् तद्भङ्गञ्च त्वं किमकार्षीः सा यदि क्षणमपरमप्यस्थास्यत्तदा मम तव च परमैव निर्वृत्तिरभविष्यदिति तस्या सप्रेमवक्रोक्तिमाशङ्क्याह—त्वां मत्परायणां मदनन्यगतिमहं जाने तर्हि कथमेवं दुर्वाक्यमवचस्तत्राह—त्वद्वचः कां कां वक्रोक्तिं वदिष्यतीति श्रोतुकामेन मया क्ष्वेल्या नर्मणैव आचरितम् एवमुक्तं ननु तत्त्वतः हे अङ्गने सुन्दरि ॥ २९ ॥ नर्मोक्तौ प्रयोजनान्तरञ्चाह—प्रेमसंरम्भेण प्रणयकोपेन स्फुरितः कम्पितोऽधरो यत्र तत् कटाशब्देन कटाक्षास्तैराक्षेपे अरुणावपाङ्गौ यस्मिन् अत एव सुन्दरं कुटिलं भ्रुकुटितटं यस्मिन् तच्च तत् मुखम् ईक्षितुञ्च ननु यदि सत्यकामस्य भगवतस्तथाभूतैवेच्छा आसीत्तदा तदानीमेव रुक्मिणी सकोपकुटिलकटाक्षा कथं नाभूदिति चेत् उच्यते इच्छाशक्तिर्हि भगवत एवाधीना प्रेमा तु तं भगवन्तमप्यधीनीकरोतीति प्रेम्णाग्रेण तस्याः कापि प्रभविष्णुता प्रेमा हि आनन्दरूपमपि भगवन्तमतिशयेनानन्दयितुं तदिच्छामपि कदाचिदन्यथा करोति इदमत्र तत्त्वम् आसां रुक्मिण्यादीनां मधुरप्रेमरसवतीनां रतिप्रेमस्नेहप्रणयमानरागानुरागेषु सप्तसु स्थायिभावेषु मध्ये कदाचित् कश्चित् स्वावसरं प्राप्योदयते इत्यतस्तदानीं व्यजनसेवासमये अनुरागस्थायिभाव एवोदगात् तस्य च दैन्यसञ्चारिप्रावल्यात् तस्याः खेदचिन्ता मोह एवाभूत्नतु तस्मिन् प्रणयकोपकटाक्षादयः तेचोपरिष्ठान्मानस्थायिभावोदयक्षणेषु भविष्यन्त्येव किञ्च घृतस्नेहवत्या रुक्मिण्याः मानकौटिल्यातिशयः प्रायो न उदयते मधुस्नेहवत्याः सत्यभामायास्तु अनुरागोपि मानगर्भ एवेति संरम्भसकम्पाधरकुटिलकटाक्षादिसुखं कृष्णस्य तत्रैवाभिसम्पद्यत इति ॥ ३० ॥ ननु, मत्कृतया व्यजनादिपरिचर्य्यया दुःखं लभसे किन्तु तां परित्यक्तवत्याः मम कठोरकोपोक्त्यैव सुखं लभसे अपरञ्च प्रियाया मम हर्षसोत्फुल्लं मुखं त्वन्नयनाभ्यां न रोचते किन्त्वतिदुःखरूक्षं कोपविवर्णीकृतं रसप्रतिकूलं भ्रुकुटिभीषणं मुखमेव रोचत इति कोयं ते स्वभावस्तत्राह—अयमिति ॥ ३१-३३ ॥

### गूढार्थदीपिनी

मेति युग्मम्। मा माम् मा असूयेथा दोषदृष्ट्या न पश्य। क्ष्वेल्या परिहासेन एवमाचरितमुक्तं न तत्त्वतः। 'क्ष्वेलिर्नर्मणि हासे च' इति निरुक्तिः। प्रेमसंरम्भः प्रणयकोपः। एकदेशन्यायेन कटाः कटाक्षास्तेषामाक्षेपररुणौ अपाङ्गौ यस्मिन् अत एव सुन्दरं कुटिलं भ्रुकुटीतटं यस्मिन् तत् मुखं चेक्षितुमेवमाचरितमिति पूर्वेणान्वयः ॥ २९-३० ॥ यत् नर्मैः परिहासवचनैर्यामः प्रहरो नीयते तदयमेव। नर्मशब्दोऽदन्तोऽपि 'नर्मस्तु नर्मणा सार्द्धम्' इति द्विरूपकोशात्। गृहैर्दारैर्मेधन्ते सङ्गच्छन्त इति गृहमेधिनः। 'मेधृ' सङ्गमे। धातुः ॥ ३१-३२ ॥

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः

मा माम् क्ष्वेल्या नर्मणा आचरितमुक्तम् कटैः कटाक्षैराक्षेपेण अरुणावपाङ्गौ यस्मिन् तत् ॥ २९-३० ॥ नर्मैर्नर्मभिः यामः कालः ॥ ३१-३२ ॥

### श्रीसत्यधर्मकृता श्रीभागवतटिप्पणी

सान्त्वनप्रकारं दर्शयति। हे वैदर्भि अङ्गने कल्याणि मह्यं माऽसूयेथाः। त्वां मत्पराणां जाने जानामीति। तर्हि किमिदं मदन्तिक इति न वदेति वदति। त्वद्वाक्यं श्रोतुकामेन मया क्ष्वेलया नर्मगर्भलीलयाऽऽचरितमिति। क्ष्वेल्याचरितमिति पाठे क्ष्वेलीशब्दः कल्प्यः ॥ ३३ ॥ न केवलं वचः श्रोतुं किन्तु मुखं प्रेमसंरम्भः स्नेहारभटी तेन स्फुरितः कम्पमानोऽधरो यस्य तत्। कटाक्षेण यदीयकटाक्षमोक्षेणारुणोऽपाङ्गो यस्य स तन्त्रन्यायेन। तच्च तत्कटाक्षपातमात्रेण स्मरोद्रेक इति तात्पर्यम्।

सुन्दरं भ्रुकुटीतटं च यस्मिंस्तत्। ईक्षितुं कटाक्षेणेक्षितुमिति वा। अरुणेनेदानीं प्रदर्शितकोपतः। वस्तुतस्त्वसित एव स इति ज्ञेयम्। शिष्टं प्राग्वत्॥ ३४॥ अयं रसिकव्यापार इति मयाऽकारीत्याह॥ अयमिति। गृहमेधिनां गृहस्थाश्रमिणां गृहेषु भार्यासु तन्मध्ये प्रियया नर्मभिर्यामः कालो नीयते तादृशो यामस्त्वमेव प्राप्नुहीत्येवमित्ययं परो लाभो मुख्यलाभः। अत एव वटुसन्ध्यावन्दनवेलायां तटाकान्तं द्विजोत्तमैरिति। हि यतोऽत एवं कृतमिति भावः। हे भीरुवद्भाषिणि गृहेषु सति वा॥ ३५॥ प्रियेण त्यागस्तत्कर्तृकः स्वकर्मकस्तस्माद्भयं जहौ तत्याज। भगवत् मुखमिति पदे। भगमस्तीति तत्। एतेन तन्मुखमिति परास्तम्॥ ३६॥

## श्रीमद्वल्लभाचार्यकृता सुबोधिनी

तामेवाह त्रिभिः। **मा मेति**। कायवाङ्मनसां पूर्वं पूर्वं बलिष्ठमिति कायेन सान्त्वने कृते फलरूपत्वात्तस्य वाचिकस्य दुर्बलत्वाच्च जातमेव सान्त्वनम्। परं कायवाचोः परस्परविरोधात् भगवान्न विश्वसनीय इति स्यात्, तन्निषेधति, हे **वैदर्भि, मां मासूयेथा** इति। दोषारोपेण मा पश्य। अथवा। निष्कारणमेतावद्दुःखं दत्तमिति कदाचिदसूयां कुर्यात्। अन्यत्तु सहजमेव, न तेन कश्चिदुपकारं मन्यते। तर्ह्येवं वचनस्य प्रवृत्तिविरुद्धस्य कोऽभिप्राय इति चेत्, तत्राह **जाने** त्वामिति। अन्यथा ज्ञात्वा अन्यथावचनमभिप्रायं सूचयति। ननु निर्दुष्टा सर्वथा चेत्, तदेवमपि दोषं न मंस्यत इति किं दोषनिराकरणेनेत्यत आह **वैदर्भीति**। जन्मभूमिसम्बन्धात् कदाचिदेवमपि भावयेदिति, अन्यथा चित्तवृत्तिभङ्गवता कृतेति तद्दर्पहननं क्ष्वेल्यर्थं च न परस्परं विरुध्यते। **शब्दस्य त्रेधा वृत्तिः। मुख्या गौणी तात्पर्यवृत्तिश्चेति। लक्षणागौण्योस्त्वभेदः, तात्पर्ये वा अन्तर्भावः**। तत्र मुख्यार्थबाधः दर्पहननपक्षे क्ष्वेलिपक्षे च तुल्यः। ततः प्रासङ्गिको गौणः क्ष्वेल्यां पर्यवस्यति। तात्पर्यं तु दर्पहनन इति उभयमविरुद्धम्। 'स्त्रीषु नर्मविवाहे च'ति वाक्यात् मुख्यार्थरहितशब्दप्रयोगो न दोषाय। अन्यथा तात्पर्यादीनां वैयर्थ्यं स्यात्। 'परोक्षवादा ऋषयः परोक्षं च मम प्रिय'मिति भगवद्वाक्याच्च। पूर्वपक्षन्यायेन बहिर्मुखत्वं लौकिकत्वं च तस्यामारोप्य, वाक्यानि प्रयुक्तानीत्यवोचाम। प्रासङ्गिकानि फलानि भगवान् निर्दिशति सान्त्वनार्थम्। मुख्यार्थो न विवक्षित इत्यत्र हेतुः **जाने त्वां मत्परायणामिति**। अहमेव परमयनं यस्याः। तर्हि कथने कोऽभिप्राय इति चेत्, तत्राह **क्ष्वेल्याचरितमिति**। **क्ष्वेली** परिहासः। परिहासार्थमेव हि गालयः उत्पन्नाः। अतः क्ष्वेल्यैवाचरितं तादृशवचनभाषणं कृतमित्यर्थः। तथाकरणे दोषाभावमाह **अङ्गने** इति। अङ्गं नयति प्रापयतीति तादृश्या सह रसोत्पत्त्यर्थं वक्तव्यमेव। प्रासङ्गिकत्वात्तदानीमेवैतदभावेऽपि न दोषः। अग्रे तु भविष्यति। दर्पस्तु भगवदीयतया स्वल्पो मृग्य एव, अन्यथा ज्ञानमार्गात् को विशेषः स्यात्। परमुद्गतो नापेक्ष्यते। तस्मिन्निराकार्ये वक्ता ईश्वर इति सर्वोऽपि निवृत्तः, तदाधाराः प्राणा अपि। तदनभिप्रेतमिति पुनः प्रतिप्रसवमाह **जाने त्वामिति**। परन्त्वहमेव वल्लभेति न मन्तव्यमिति भावः। क्ष्वेल्याः प्रयोजनमाह **त्वद्वचः श्रोतुकामेनेति**। गूढं वाक्यमपि श्रोतव्यमिति भावः॥ २९॥ प्रयोजनान्तरमाह **मुखं चेति**। मुखं च ईक्षितुम्। गालिदाने हि लोकाः कुप्यन्ति, तथा त्वमपि कोपं करिष्यसीति कोपोत्पादनार्थं तथोक्तम्। प्रेमरसस्त्रिविधो भवति, सात्त्विको राजसस्तामसश्च। सात्त्विकस्तत्र पुत्रादिसाधारणः। राजसः स्त्रियामेव धर्मसहितः। तामसस्तु जार एव भवति। सहजः स भावः कदाचिदत्र द्रष्टव्य इति तदुत्पादनार्थं वचनम्। प्रेम्णा यः क्रोधसंरम्भः, तेन स्फुरितमधरं यत्र, कटाक्षेपा वक्रदृष्टयः, तत्सहितमरुणं अपाङ्गं नेत्रान्तं यस्य। सुन्दरश्च भ्रुकुट्याः तटः। मुखं रसालं तामसं तदैवं भवति। दृष्टिश्च सात्त्विकी तदैव रसाला। तदैव भ्रभङ्गश्च रसालः॥ ३०॥ ननु किमेवं वाक्कायचोः श्रवणादिनेति चेत्, तत्राह **अयं हीति**। गृहमेधिनां गृहेषु कामैकप्रधानेषु अयमेव परमो लाभः, अनिषिद्धः सन् पूर्णः कामरसः प्राप्यत इति। अतो यत्र रसाभास एव, तत्र चेद्रसः प्राप्यते, स कथं न परमो लाभो भवेत्। **गृहमेधिनामिति** स्वभावतो रसाभाव उक्तः। **नर्मैः** परिहासवचनैः। **यामः** कालः याममात्रं वा। त्रियामा रात्रिः। तत्र निद्रार्थं यामद्वयम्, ततो याममात्रमेवावशिष्यते। **प्रियया सहेति**। प्रीतिस्त्वन्तरा, कायिकः साधारणः, वाचनिकं चेन्न स्यात्, तदेकाङ्गविकलमिति सर्वथा परिहासो वक्तव्यः। नन्वेवं सति विरसता चेत्स्यात्, तदाधिकं नश्येदित्याशङ्क्याह। **भीर्विति** सम्बोधनम्। 'विशेषास्त्वङ्गना भीरुः कामिनी वामलोचना' इति स्त्रीविशेषवाचित्वान्नैवं विरसं करोति। **भामिनीति** लौकिकं चातुर्यमुच्यते। तेन स्वभावतः गुणतश्चोत्तमेति नान्यथा करिष्यतीति भावः॥ ३१॥ ततः स्वस्था भूत्वा भगवदभिप्रेतं कृतवतीत्याह **सैवमिति** द्वाभ्याम्। आदौ स्वास्थ्यमुच्यते। सा पूर्वं तथोक्ता तथाभूता च। ननु उभयमपि भगवद्वाक्यमेवेति कथमस्मिन्वाक्ये विश्वासः, पूर्वोत्तरभावस्त्वप्रयोजकः, यथा पूर्वत्र हेतुरुक्तः, तथात्रापि मरणमनभिप्रेतं भविष्यतीति हेतुः कुतो न भवेत्, ततो निर्विचिकित्सं कथं प्रवृत्तिरित्याशङ्क्याह **भगवतेति**। स हि सर्वसमर्थो यथेच्छं करोतीति। **राजन्निति** पूर्ववत्। वैदर्भी स्वभावतो भक्तिप्रधाना राजसीति। परितः सान्त्वनं कायवाङ्मनोभिः। बाधकं च विरुद्धं वाक्यं परिहासोक्तिं ज्ञात्वा उदासीनत्वे चिन्तारहिता अलौकिकी त्यक्ष्यतीत्येव स्फुरितबाधा अभिप्राये ज्ञाते प्रियत्यागभयं जहौ। अन्यथा सशेषोभिमानो न भवेदिति। तया क्ष्वेल्यर्थतैव ज्ञाता, नतु स्मयाभावार्थता। अत एव यथार्थत्वे प्रियत्यागेन यद्भयं तत्त्यक्तवती॥ ३२॥

### श्रीविट्ठलरायात्मजश्रीवल्लभकृतलेखः

**मा मा वैदर्भीत्यत्र।** **अन्यत्त्विति।** लौकिकविषयाभावादिकमित्यर्थः। **न तेनेति।** लौकिकविषयादिना कश्चिदपि भक्त उपकारं न मन्यते। अतस्तदभावकथनं सहजत्वान्न दुःखदम्, किन्तु त्यागबोधकं वाक्यं दुःखदमित्यर्थः। **दोषं न मंस्यते इति।** एतादृशवाक्याकथनेपि विषयान्न भावयिष्यतीत्यर्थः। **एवमपीति।** विषयभोगमपीत्यर्थः। **प्रासङ्गिकानि फलानीति।** दर्पहनने तात्पर्यात्तन्मुख्यं फलं स्वपरायणत्वज्ञानक्ष्वेलिकोपादीनि प्रासङ्गिकानीत्यर्थः। **मुख्यार्थ इति।** त्याग इत्यर्थः। **गाल्य इति।** विवाहाद्युत्सवे उच्यन्ते ता इत्यर्थः। **प्रतिप्रसवमाहेति।** भगवज्ज्ञानस्य सिद्धविषयत्वात्तज्ज्ञानेन प्राणादीनां प्रतिप्रसवो जातः। प्राणादिस्थितिं विना भगवत्परायणत्वं न सिध्यतीति भावः। **अयं हीत्यस्याभासे।** **श्रवणादिनेति।** श्रवणं च तदादि-दर्शनं च तयोः समाहारस्तथा। **तेनेति।** तथा च 'वचः श्रोतुकामेने'त्युक्तेन वाचः श्रवणेन 'मुखं च ईक्षितु'मित्युक्तेन कायस्य दर्शनेन चेत्यर्थः। **व्याख्यानान्ते नान्यथा करिष्यतीति।** मनसि वैरस्यं न व्यापयिष्यतीत्यर्थः।

### श्रीसुबोधिनी-सारः

हे वैदर्भि मा मां माभ्यसूयेथा मा निंदय मत्परायणां त्वामहं जाने वेद्मि कथं तर्हि एतत्कारणं तत्राह। तव वचः श्रोतुकामेन रुष्टेयं कथं भाषत इत्येतदर्थं क्ष्वेल्याचरितं नर्मकृतं हे अंगने ॥ २९ ॥ प्रेम्णः प्रणयस्य संरंभेण कोपेन स्फुरितोऽधर ओष्ठो यस्मिंस्तत्कटाक्षैराक्षेपास्तैः वर्णलोप आर्षः। अरुणावपांगौ यस्मिन् सुन्दरं वक्रं भ्रुकुटीतटं यस्मिंस्तच्च तच्च मुखमीक्षितुं द्रष्टुम् ॥ ३० ॥ न चेद्वृकलहेन किं सुखमिति वाक्यम्। गृहमेधिनां गृहेषु अयमेव परमो लाभः कोसावित्यत आह हे भीरु हे भामिनि प्रियया श्रिया सह नर्मैर्नर्मभिर्हास्योक्तैर्यामः कालस्तदवयवो वा नीयते इति यत् ॥ ३१ ॥ शुकोक्तिः। राजन् भगवता श्रीष्णे नैवं परिसांत्विता वैदर्भी सा तस्य पत्युः परिहासेनोक्तिं कथनं ज्ञात्वा प्रियस्य त्यागाद्भयं जहौ तत्याज ॥ ३२ ॥

### गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

सान्त्वनप्रकारमेवाह—मेति। 'विदर्भदेशाधिपतिकन्यात्वात् न त्वमेवं शोकयोग्या' इति सूचयन् सम्बोधयति—वैद-र्भीति। मा मां मा असूयेथाः 'निर्निमित्तमेव मह्यं दुःखं दत्तवान्' इति दोषारोपेण मा पश्येर्थः। यतो मत्परायणां अहमेव परं अयनं आश्रयो यस्यास्तथाभूतां त्वामहं जाने। अतो न तव दुःखोत्पादनार्थमेवमुक्तवानित्याशयः। 'तर्हि किमित्येवमुक्तवान्' इत्यपेक्षायामाह—त्वद्वच इति। 'परिहासयोग्या च त्वम्' इति सूचयन् सम्बोधयति—अङ्गनेति। मद्वचनेन क्रुद्धा सती किं वदिष्यतीति तव वचः श्रोतुमिच्छता मया क्ष्वेल्या परिहासेनैवमाचरितमुक्तमित्यर्थः ॥ २९ ॥ प्रयोजनान्तरमप्याह—मुखं चेति। प्रेमसंरम्भेण प्रणयकोपेन स्फुरितः प्रकम्पितोऽधरो यस्मिंस्तत्, कटाक्षेपां वक्रदृष्टयस्तत्सहितमरुणं अपाङ्गं नेत्रान्तं यस्मिन् तत्, अत एव सुन्दरं भ्रुकुटीतटं यस्मिन् तत्, एवंभूतं तव मुखं चेक्षितुमेतदाचरितमिति पूर्वेणैवान्वयः ॥ ३० ॥ 'एवं कुटिलवचनश्रवणेन कुपितमुखदर्शनेन वा किं' तत्राह—अयमिति। 'त्वं तु परिहासवचनमपि न सहसे, भीरुत्वात्' इति सूचयन् सम्बोधयति—हे भीरुभामिनि इति। यत्प्रियया सह नर्मैर्नर्मभिः परिहासवचनैः यामः कालो नीयते तदयमेव गृहेषु दुःखप्रधानेषु वर्तमानानां गृहमेधिनां गृहसम्बन्धिहिंसापराणां गृहस्थानां परमो लाभः सुखरूपं फलमन्यत्तु सर्वं दुःखमेवेत्यन्वयः ॥ ३१ ॥ भगवल्लीलाश्चर्यं सूचयन् सम्बोधयति—राजन्निति। सा वैदर्भी रुक्मिणी भगवता एवं परिसान्त्विन्ता, अत एव तस्य परिहा-सार्थमेवमुक्तं न तात्त्विकमिति ज्ञात्सा प्रियकर्तृकत्यागभयं जहौ तत्याजेति सम्बन्धः ॥ ३२ ॥

### अन्वितार्थप्रकाशिका

मेति। हे वैदर्भि ! हे अङ्गने सुन्दरि ! मा मां मा असूयेथाः निर्निमित्तमेव मह्यं दुःखं दत्तवानिति दोषारोपेण मा मा पश्येत्यर्थः। यतो मत्परायणाम् अहमेव परम् अयनम् आश्रयो यस्यास्तथाभूतां त्वामहं जाने। यतः त्वद्वचः किन्नु वदि-ष्यतीति श्रोतुकामेन मया क्ष्वेल्या परिहासेनैवमाचरितमुक्तं नतु तत्त्वतः ॥ २९ ॥ मुखं चेति। प्रेमसंरम्भेण प्रणयकोपेन। आर्षस्तृतीयालोपः। तेन कटेत्यादिकयोरप्यन्वयः। स्फुरितः प्रकम्पितोऽधरो यस्मिंस्तत्। कटशब्देन कटाक्षास्तेषामाक्षेपैर-रुणावपाङ्गौ नेत्रान्तौ यस्मिन् तत् अत एव सुन्दरं भ्रुकुटीतटं यस्मिन् तत् एवंभूतं तव मुखं चेक्षितुमेतदाचरितमिति पूर्वेणै-वान्वयः ॥ ३० ॥ अयमिति। हे भीरु ! हे भामिनि ! यत्प्रियया सह नर्मैर्नर्मभिः परिहासवचनैः यामः कालो नीयते। तदयमेव गृहेषु दुःखप्रधानेषु वर्तमानानां गृहमेधिनां परमो लाभः सुखरूपं फलमन्यत्तु सर्वं दुःखमेव ॥ ३१ ॥ सेति। हे राजन् ! सा वैदर्भी रुक्मिणी भगवता एवं परिसान्त्विता अत एव तस्य परिहासोक्तिं न तात्त्विकमिति ज्ञात्वा प्रियकर्तृकत्यागभयं जहौ तत्याज ॥ ३२ ॥

### श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्

मा मां हे अंगने क्ष्वेल्या उपहासेनाचरितं एतद्वचनमुक्तं ॥ २९ ॥ प्रेमसंरंभेण स्नेहविशिष्टक्रोधेन स्फुरितः कंपितोऽधरो यस्मिंस्तत्। कटानां कटाक्षानामाक्षेपैर्निक्षेपैः अरुणौ अपांगौ नेत्रप्रांतभागौ यस्मिंस्तत्। अतस्सुंदरभ्रुकुटीतटं। मुखमीक्षितुं

मया क्ष्वेल्या चरितमिति पूर्वेण संबंधः ॥ ३० ॥ ननु कलहे किं कारणं तत्राह अयमिति नर्मनर्मभिरुपहासवाक्यैः प्रियया सह गृहस्थैः यामः प्रहरादिकालो नीयते इति यदयं ॥ ३१-३२ ॥

**भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी**

सान्त्वनप्रकारमेवाह मा मामिति त्रिभिः । मा मामिति । हे वैदर्भि रुक्मिणि, मां असूयेथाः । मह्यमसूयां मा कृथा इत्यर्थः । मा मा, इत्यपि पाठः त्वां अहमेव परायणं परमप्राप्यं यस्यास्तथाभूतां, जाने । तर्हि किमर्थमित्थमुक्तमित्यत आह । त्वद्वच इति । हे अङ्गने, त्वद्वचः त्वदीयं वचनं, श्रोतुकामेन श्रोतुमिच्छता, किं नु वदिष्यति तच्छृणोमीत्येवं कामयमानेनेत्यर्थः । मया, क्ष्वेल्या नर्मणा, एवं आचरितं कृतमुक्तमिति यावत् ॥ २९ ॥ किं च । मुखं चेति । प्रेमसंरम्भेण प्रणयकोपेन स्फुरितः कुपितोऽधरो यस्मिस्तत्, कटाशब्देष्ट कटाशब्देन कटाक्षाः तेषां वक्रदृष्टेनामाक्षेपैररुणावपाङ्गौ नेत्रप्रान्तौ यस्मिस्तत्, सुन्दरे कुटिले भ्रुकुटीतटे यस्मिस्तत्, यद्वा कटाक्षेपः कटाक्षेण तिर्यग्दर्शनं तेनारुणापाङ्गेन रक्तनेत्रप्रान्तेन सुन्दरं भ्रुकुटीतटं यस्मिस्तदित्येकं पदम् । मुखं च मुखमपि, ईक्षितुं, एवमाचरितमिति पूर्वेण संबन्धः ॥ ३० ॥ ननु कलहे किं कौतुकं सुखं वा अत आह । अयं हीति । गृहमेधिनां गृहेषु, अयं हि अयमेव, परमः लाभः । कोऽसौ तत्राह । हे भीरु, हे भामिनि, प्रियया सह, नर्मैः प्रणयकलहैः, यामः प्रहरः, नीयते इति यत्, एष परमो लाभ इत्यर्थं ॥ ३१ ॥ सैवमिति । हे राजन्, सा वैदर्भी रुक्मिणी, भगवता श्रीकृष्णेन, एवमुक्तप्रकारेण, परिसान्त्विता सती, तद्भगवदुक्तं, परिहासोक्ति ज्ञात्वा, प्रियत्यागभयं प्रियकर्तृकत्यागसंभावनाप्रयुक्तां भीतिमित्यर्थः । जहौ तत्याज ॥ ३२ ॥

**कृष्णप्रिया**

करुणानिधान भगवान् श्रीकृष्ण ने कहा—हे विदर्भतनये ! मुझ पर नाराज नहीं होना ! देवी ! मैं अच्छी तरह से जानता हूँ कि आप मत्परायण एवं अनन्य प्रियतमा हो । प्रियाजू ! मैं आपके श्रीमुख से नर्मविनोदमयी सुधा झरती वाणी सुनना चाहता था । मैंने जो वाक्य कहें वे वास्तविक वाक्य न थे लेकिन नर्म वाक्य थे । जिन वाक्यों से आपके मर्म में दुःख हुआ क्षमा कीजिये ॥ २९ ॥ देवीजी ! मेरे ऐसे कटाक्ष एवं कठोर वाक्यों को सुनकर आप रुष्ट हो जायँ आपके नयन रुष्ट हो जायँ आपके बिम्बाधर प्रणय रोष से फड़कने लगे । कटाक्ष पूर्ण नजरों से देखने से नेत्रों में लालिमा छा जाय और आपकी भौंहें चढ़ जाने से मुख सरोज का लावण्य और सौन्दर्य का रस प्राप्त हो इस आशय से औपचारिक वाक्य सुनाये थे ॥ ३० ॥ प्रियतमाजू ! हे भामिनी ! हे सुन्दरी ! निरन्तर एवं दिन रातभर गृहस्थाश्रम के कार्यों में डूबे हुए गृहस्थ दम्पत्तियों के मनोमोद एवं नैसर्गिक आनन्द का यह ही लाभ है कि निज अर्धाङ्गना से हास्य विनोद करते हुए कुछ समय आनन्द में विताया जाय यह परम सुख माना ॥ ३१ ॥ श्रीशुकमुनिजी ने कहा—महाराज परीक्षित् ! जब कृपासिन्धु द्वारिकानाथ निजनाथ ने विदर्भ राजकुमारी प्रियतमा श्रीरुक्मिणीजी को स्नेहमयी वाक्सुधा से समझाया तब देवीजी को इस बात का निश्चय हो चुका कि मेरे प्राणजीवन ने केवल हास्य विनोद में ही ऐसे वचन सुनाये । देवीजी के हृदय से यह भय हट गया कि नाथ हमें छोड़ देंगे ॥ ३२ ॥

**बभाष ऋषभं पुंसां वीक्षन्ती भगवन्मुखम् । सव्रीडहासरुचिरस्निग्धापाङ्गेन भारत ॥ ३३ ॥[1]**

**रुक्मिण्युवाच**

**नन्वेवमेतदरविन्दविलोचनाह यद् वै भवान्[2] भगवतोऽसदृशी[3] विभूम्नः ।**
**क्व स्वे महिम्न्यभिरतो भगवांस्त्र्यधीशः क्वाहं गुणप्रकृति[4]रज्ञगृहीतपादा ॥ ३४ ॥**
**सत्यं भयादिव गुणेभ्य उरुक्रमान्तः शेते समुद्र उपलम्भनमात्र आत्मा ।**
**नित्यं कदिन्द्रियगणैः[5] कृतविग्रहस्त्वं त्वत्सेवकैर्नृपपदं विधुतं तमोऽन्धम् ॥ ३५ ॥**
**त्वत्पादपद्ममकरन्दजुषां मुनीनां [6]वर्त्मास्फुटं नृपशुभिर्ननु दुर्विभाव्यम् ।**
**यस्मादलौकिकमिवेहितमीश्वरस्य [7]भूमंस्तवेहितमथो अनु ये भवन्तम्[8] ॥ ३६ ॥**

**कर्दमक्षमा**

अन्वयः—हे भारत !, सव्रीडहासरुचिरस्निग्धापाङ्गेन, भगवन्मुखम्, वीक्षन्तीं, पुंसाम्, ऋषभम्, बभाषे ॥ ३३ ॥ रुक्मिणी-उवाच—हे अरविन्दविलोचन ! विभूम्नः, भगवतः, असदृशी इति, यत्, भवान्, आह, ननु, एतद्, योग्यम्, एव,

१. रुक्मिणी चारु सर्वाङ्गी साक्षाच्छ्रीरनपायिनी—च. पु. टि. । २. भवान्न भवतः—वीर. विज. । ३. सदृशो—विज. । ४. रत्य—विज. । ५. गुणैः—वीर. विज. । ६. वर्त्म—विज. । ७. भूम्नः—वीर. । ८. न्ति—विज. ।

स्वे, महिम्नि, अभिरतः, अधीशः, भगवान्, क्व ? अज्ञगृहीतपादा, गुणप्रकृतिः, अहम्, क्व ? ॥ ३४ ॥ हे उरुक्रमः, गुणेभ्यः, भयात्, इव, अन्तःसमुद्रे, उपलम्भनमात्र, आत्मा, नित्यम्, कदिन्द्रियगणैः, कृतविग्रहः, त्वम्, नित्यम्, शेते, तत्, सत्यम्, त्वत्, सेवकैः, अन्धम्, तमः, नृपपदम्, विधुतम्, तर्हि भवत् कृते, किमु, वक्तव्यम्, ॥ ३५ ॥ हे भगवन्–नृपशुभिः, ननु, त्वत् पादपद्ममकरन्दजुषाम्, मुनीनाम्, वर्त्म अस्फुटम्, दुर्विभाव्यम्, हे भूमन्, ईश्वरस्य, तव, ईहितम्, अथ, अलौकिकम्, यस्मात्, भवन्तम्, ये, अनु, तेषाम् अपि अलौकिकम् इव, स्यादेव ॥ ३६ ॥

## श्रीधरस्वामिविरचिता भावार्थदीपिका

भगवतस्तस्य ऐश्वर्ययुक्तं मुखं सव्रीडेन हासेन रुचिरेण स्निग्धेनापांगेन वीक्षमाणा ॥ ३३ ॥ "असमत्वं भयं दुर्गाश्रयणं प्रबलैः कलिः । अराजत्वमविज्ञाता लौकिकेहावसादनम् ॥ निष्किञ्चनत्वं तत्प्रीतिराढ्यानादरणीयता । अनौचित्यं निर्गुणत्वं वृथा श्लाघा च भिक्षुभिः ॥ औदासीन्यमकामत्वं स्वदोषान्षोडशाऽसतः ॥ अज्ञत्वादीर्घदर्शित्वे भैष्म्यारार्ज्ञा बहून्गुणान् । कृष्णेनमोदितान्भैष्मी न्यषेधत्तद्गुणस्तवैः ॥" भगवता स्वनिंदापराणीव यानि वचनान्युक्तानि तानि सर्वोत्कर्षपरतया व्याचक्षाणा प्रतिभाषते स्म । तत्र यदुक्तं 'कस्मान्नो ववृषेऽसमान्' इति तत्रासाम्यं सत्यमेवेत्याह—नन्वेवमिति । हे अरविंदविलोचन ! त्र्यधीशस्त्रयाणां ब्रह्मादीनामप्यधीशो नियंता त्वं क क चाहं गुणप्रकृतिस्त्रिगुणस्वभावा प्राकृता गुणमयी प्रकृतिर्वा । ननु त्वमेवाधीश्वरी श्रीः सर्वैरुपास्यत्वादिति चेदत आह—अज्ञैः सकामैर्गृहीतौ पादौ यस्याः सा ॥ ३४ ॥ यदुक्तं "राजभ्यो बिभ्यतः सुभ्रूः समुद्रं शरणं गतान्" इति तत्राह सत्यमिति । हे उरुक्रमेति भयाभावं दर्शयति । गुणाः शब्दादय एव राजंत इति राजानस्तेभ्यो भयादिवेति अंतर्हृदये समुद्रे तद्वदगाधे विषयाकारैरपरिच्छिन्न इत्यर्थः । शेते निश्चलतया प्रकाशते । उपलंभनमात्रश्चैतन्यघन आत्मा भवानिति । 'बलवद्भिः कृतद्वेषान्' इति यदुक्तं तदपि सत्यमित्याह—नित्यमिति । कदिंद्रियगणैः कुत्सितैर्वहिर्मुखैरिंद्रियगणैः वृत्त्यभिप्रायेण बहुवचनम् । कुत्सित इंद्रियगणो येषामिति वा । तैस्त्वं नित्यं कृतविग्रहः तेषु तवाप्रतीतेः । यदुक्तं 'त्यक्तनृपासनान्' इति तदपि युक्तमेवेत्याह— त्वत्सेवकैरिति । नृपाणां पदमासनमंधं गाढं तम एव तत् । अविवेकबहुलत्वात् त्वत्सेवकैरेव तत्यक्तं किं पुनर्वक्तव्यं त्वया त्यक्तमिति ॥३५॥ "अस्पष्टवर्त्मनां पुंसामलोकपथमीयुषाम्" इति यदुक्तं तदपि तथैवेत्याह—त्वत्पादेति । नृपशुभिर्नराकारैः पशुभिः । किं पुनर्वक्तव्यं तव वर्त्मास्फुटमिति । किंच यस्माद्ये भवंतमनुवर्तंते तेषामपीहितमलौकिकमिव । अथो अतः किमु वक्तव्यं तवेश्वरस्येहितमलौकिकमित्यर्थः । "आस्थिताः पदवीं सुभ्रूः प्रायः सीदंति योषितः" इत्यस्य परिहारं वक्ष्यति यद्वाञ्छयेति पंचमश्लोके ॥ ३६ ॥

## श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

पुंसामृषभमिति सर्वसौन्दर्यवैदग्ध्यादिकमुक्तम् । अतो भगवदिति । स्वेनैव सुस्निग्धस्मितश्रमजलादिना च श्रीमत्, अत एव विशेषेणेक्षमाणा । केन—सव्रीडहासरुचिरस्निग्धापांगेन । तत्र व्रीडापूर्वं हास्यप्रौढिज्ञानाशक्तेः, हासः संप्रति हास्यप्रौढानुसंधानात्, व्रीडासहितेन हासेन रुचिरः स्निग्धश्च प्रेमरसार्द्रो योऽपाङ्गस्तेन, इतीक्षणविशेषोपि दर्शितः । एवञ्च परमोत्तमयोस्तयोः प्रेमसंवादो महावंशयशस्करगुणत्वात्त्वमेव बोद्धुमर्हसीत्यतस्तत्र मनो निधेहीत्याह—भारतेति ॥ ३३ ॥ असमत्वमतुल्यत्वम् । अविज्ञातं चालौकिकं चाविज्ञातालौकिके ते च ते ईहे चाविज्ञातालौकिकेहे ते चावसादनं चैतेषां समाहारो विज्ञातालौकिकेहावसानम्, तथा चाविज्ञातेहालौकिकेहाऽवसादनं चेति त्रयम् । तत्प्रीतिर्निष्किंचनप्रीतिः । अनौचित्यमौचित्याभावः । असतोऽविद्यमानान् । भैष्म्या द्वौ दोषौ । तद्गुणस्तवैः कृष्णगुणकथनैः । ते दोषा एव गुणास्तद्गुणा इतिवा । तत्र तेषु षोडशसु, तत्रेत्युक्तार्थमेव । यद्भवानाहैतदेवमेव । ननु एवार्थे । समो न त्वयेति । कथम्—विभूम्नो देशकालवस्तुपरिच्छेदसहितस्य व्याप्तस्य भवतः सदृशो नास्तीति, किन्तु भवानेव भवत्समः "रामरावणयोर्युद्धं रामरावणयोरिव" इतिवत् । मत्सदृशी त्वमिति चेन्नेत्याह—क्वेति । ननु ब्रह्मादयो मत्सदृशा एवेति--चेदाह--अधीश इति । त्रिगुणस्वभावत्वे वैलक्षण्यासिद्धे राह--प्राकृतगुणमयी स्वाभाविकगुणविकारा । प्रकृतिर्मूलकारणं, गुणानामित्यर्थः । अत्राक्षिपति भगवान्--नन्विति । इत्यत इत्यत्र । अज्ञेति–विद्वांसस्तु मां त्यक्त्वैव त्वामुपासत इति भावः ॥ अत्र टीकापद्येषु अविज्ञातेत्यादिना दोषत्रयमज्ञातेहा च लौकिकेहा चावसादनञ्चेति । भवतः सदृशी नाहमिति यद्भवानाह एतदेवं सत्यमेवेत्यर्थः । किन्तु भवत इति वक्तव्ये भगवत इति गौरवात् । वै व्यक्तम् । ननु निश्चितम् । कुतः--विभूम्नः, अनंताद्भुतमाहात्म्यपरिपूर्णस्य । अरविंदादपि विशिष्टलोचनेति सौदर्येणापि न सदृशीति भावः । असदृशीत्वमेव व्यंजयति--क्वेति । स्वे महिम्नीति स्वरूपमेव महिमा परमप्रशंसाहेतुः, परमानंदरूपत्वात्तस्मिन्नित्यर्थः । तादृशे तत्रापि सर्वतोभावेन यतो भगवान्सर्वोत्कृष्टपदे वर्तते, अहं तु गुणा जाड्यादिदोषयुक्तास्तमःपर्यन्तास्त्रयः प्रकृतिः स्वरूपं यस्याः सा । क्व—सर्वनिकृष्टपदे वर्तेऽतो महदेवान्तरमिति भावः । एवं स्वरूपगते गौरवलाघवे दर्शिते । ऐश्वर्यगतं अप्याह--त्रयाणां गुणानां ब्रह्मादीनां वा ईश आराध्यः पुरुषस्तस्याप्युपरीशो भगवानधीशः, अहं त्वज्ञैस्त्वद्वहिर्मुखैर्गृहीता आश्रिताः पादा अंशाः सत्त्वादिवैभवरूपा यस्याः, सा, तत्सारांशजगल्लक्ष्मीत्वेप्यज्ञैरिंद्रादिभिरेवाश्रितौ पादौ चरणौ यस्यास्सा इत्यर्थान्तरोक्तिरिति

स्वस्य स्वरूपशक्तित्वेऽपि निजांशाभासमायाशक्तित्वेनोपन्यासो दैन्येनेव, टीकायां प्रथमार्थवत्। अतो वास्तवार्थे दैन्यं यथा स्वे स्वीये महिम्नि का कदा सर्वज्ञत्वादिरूपसौंदर्यसामर्थ्यादिरूपे वैभवेऽभिरतो भगवान् क, क वाऽहं स्वरूपभूतत्वेऽपि शक्तित्वेन शक्तिमत्त्वापेक्षया गौणी प्रकृतिर्यस्याः सा, तथा त्रयाणाम् "त्रिपाद्व्याप्तिः परे धाम्नि अनित्यं पादमैश्वरम्" इति पाद्मोत्तरखंडानुसारेण वैकुंठगतत्रिपाद्विभूतिरूपायां सर्वोपरीश्वरो भगवान्क, क चाहमस्य विष्णोस्तव ज्ञैर्ज्ञातृभिरेव गृहीतौ पादौ यस्याः सा, त्वन्महिमानुगतिमात्रसिद्धतत्तदैश्वर्येत्यर्थः। अथ दैन्यं विनापि वास्तवार्थे तत्तदुत्तरम्—यथैवमेवंभूतो भगवान्क कुत्रान्यत्र वर्तते किन्तु सर्वदा। ममाश्रयत्वेनैव वर्तते, अहं क कुत्रान्यत्र किन्तु सर्वदा त्वदाश्रितत्वेनैव वर्ते, तथा गुणा भवत ऐश्वर्यादय एव प्रकृतिः स्वरूपं यस्याः सा। अत एव न विद्यते ज्ञः पंडितो येभ्यस्तैर्गृहीतपादेति। एवं कथमसमत्वं घटत इति भावः॥ ३४॥ येन पादन्यासेनातिवलदैत्यानीकपतेर्बलेः पृथिवी गृहीता तस्य कुतो भयमिति संबुद्धचभिप्रायः। इत्यर्थ इति—समुद्रवदगाधांतःकरणं विषयाकारतरंगैर्न परिच्छिद्यत इति भावः। यद्यपीन्द्रियगण एक एव तथाप्येकैकेन्द्रियवृत्तीनामनंतत्वाद्गुणैरिति बहुत्वमित्यर्थः। इन्द्रियाणां जडत्वात्स्वतो बहिर्मुखता न संभवतीत्यत आह—कुत्सितो विषयोन्मुखः। सत्यमित्यर्द्धांगीकारे। यद्वा—राजन्ते स्वशक्त्या द्योतन्ते इति राजानो गुणास्तेभ्यः इवेति शिक्षायां संसारावृत्तिहेतुगुणेभ्यो बिभ्यज्जनः समुद्रिक्तसुखाय समुद्रादिजलवासेन तपस्यति तथाहमपीति भावः। यद्वा—पंचभूतमुद्रासहिते शरीरे शेते भयादिवांगुष्ठमात्रः सन् "अंगुष्ठमात्रः पुरुषः" इति श्रुतेः। तर्हि जीववज्जन्माद्यपि स्यादत आह—उपलंभनमात्रः केवलचिन्मयः देहधर्मास्पृष्टः। कथम्—तत्राह—आत्मेति। सुखमेवाददाति नाण्वपि दुःखमित्यात्मा, जीवस्तु न तथेति। नृपपदं नृपासनं, न तु नॄन्पातीति नृपस्तत्पदन्तदर्थ इत्यर्थः॥ भगवद्विवक्षितस्योत्तरानुपपत्तेः—सत्यमिति। अस्य टीकायास्तात्पर्यमिदम्—'राजभ्यः'—इत्यादि यदुक्तं तत्तु गौण्यैव वृत्त्या संभवति न तु मुख्ययेत्याह—सत्यमिति। यद्भवानंतःसमुद्रे समुद्रमध्ये द्वारकायां दुर्गे शेते लीनतया प्रकाशते तद्भयादिवेत्येव, न तु भयादेवेत्यर्थः। यतो गुणाख्यराजभ्यश्चित्ताख्यांतःकरणसमुद्रे तस्मादिवांतर्यामिरूपेणापि शेते, न तु तस्मादेवेत्यर्थः। उभयत्र हेतुः—उपलंभनेति। यच्च 'बलवद्भिः' इत्यादिकमुक्तं तत्तु मुख्ययैव। सत्यमित्याह—कदिंद्रियगणयुक्तैर्जीवैः कर्तृभिर्नित्यमेव कृतो विग्रहो विरोधो यत्र तथाभूतस्त्वमतः संप्रत्यपि तादृशे राजभिः स एव कर्तुं योग्य इत्यर्थः। श्लेषेण यत्तोन्तर्यामिरूपत्वेपि कुत्सितैरिंद्रियगणैः कृतविग्रहस्त्वमित्यर्थः। यतस्तादृशेषु च त्वदीयस्वरूपादीनां यथावत्स्फूर्तिर्नास्ति ततस्तेषां त्वयि विरोधारुच्यादिमयद्वेषी युक्त एवेति भावः। अथवा—आत्मा त्वम्, शेते इत्यन्वयानुपपत्तेरात्मत्वमित्येतयोः पदयोर्न विशेषणविशेष्यभावः, अत उपमानोपमेयभाव एव योज्यः। इवाद्यभावः न तु लुप्तोपमेयम्। अयमर्थः—हे उरुक्रम आत्मा शुद्धजीवो यथा गुणेभ्यस्तन्मयेभ्यः कदिंद्रियेभ्यो भयादिवांतर्हृदयाकाशे समुद्रवदनवगाह्ये शेते लीनतया वसति तथा त्वं गुणेभ्यः सदा, अधुना तु तत्प्रधानेभ्यो राजभ्यश्च भयादिवांतःसमुद्रे समुद्रस्य मध्ये श्वेतद्वीपादाविव द्वारकाख्ये धाम्नि शेषे नित्यं तथा वससि। तथा च श्रुतयः—"यमन्तसमुद्रे कवयो वयन्ति तदक्षरे परमे प्रजातयः। प्रसूता जगतः प्रसूती तोयेन जीवान्व्याससर्ज भूम्याम्"॥ इत्यारभ्य "तदेव ब्रह्म परमं कवीनाम्" इत्याद्याः, "यः कामयते मुग्धं कृणोमि तं ब्रह्माणं तमृषिं तं सुमेधां समयोनिश्चरन्तः" इति महालक्ष्मीवचनाद्याश्च, "नित्यं सन्निहितस्तत्र भगवान्मधुसूदनः" इत्येकादशवचनं च। तत्रोभयत्र साम्यमुपैति भगवत्यपि तन्मात्रत्वं सच्चिदानन्दविग्रहत्वादिति॥ ३५॥ तथैव सत्यमेव अलौकिकेहत्वमाह—किञ्चेति। इत्यर्थ इति—विधिनिषेधविषयताऽज्ञस्यैव न ज्ञानिनः, नतरां सर्वज्ञस्य तवेति भावः। पंचमश्लोके—अतः परत्र पंचम इत्यर्थः॥ ननु प्रेमसंबोधने, निश्चये वा। मुनयो ज्ञानिनस्तेषामपि त्वद्भक्तसंगादिप्रभावेण त्वत्पादयोर्मकरंदो यत्किंचिन्माधुर्यं तज्जुषां वर्त्म निजाभिरुचितचेष्टितम्। अस्फुटं स्वाच्छादनलोकसंग्रहाद्यर्थचेष्टितांतरावृतम्' अतो दुर्विभाव्यम्, बोद्धुमशक्यमिति भावः। इहास्पदवर्त्मनामिति स्वमते योजितम्। अलौकिकमिव यतः लोकातीतं लौकिकत्वेप्यलौकिकत्वदर्शनात्। तत्र हेतुः—हे भूमन् अपरिच्छिन्नमाहात्म्येति॥३६॥

**श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी**

पुंसामृषभमिति सर्वसौन्दर्य्यवैदग्धादिकमुक्तम् अतो भगवदिति स्वेनैव सुस्निग्धस्मितश्रमजलादिना च श्रीमत् अत एव विशेषेणेक्षमाणा केन सव्रीडहासरुचिरस्निग्धापाङ्गेन तत्र व्रीडा पूर्वं हास्यप्रोढिज्ञानाशक्तेः हासः सम्प्रति हास्यप्रौढ्यनुसन्धानात् व्रीडासहितेन हासेन रुचिरश्च स्निग्धश्च प्रेमरसार्द्रो योपाङ्गस्तेनेतीक्षणविशेषोपि दर्शितः एष च परमोत्तमयोः तयोः प्रेमसम्वादमहावंशयशस्करगुणात्वात्त्वमेव बोद्धुमर्हसीत्यतस्तत्र मनोनिधेहीत्याह—भारतेति॥ ३३॥ तत्र टीकापद्येषु अविज्ञातेत्यादिना दोषत्रयं अविज्ञातेहा च अलौकिकेहा च अवसादनश्चेति भवतः सदृशी नाहमिति यद्भवानाह एतदेवं सत्यमेवेत्यर्थः। किन्तु भवत इति वक्तव्ये भग इति गौरवभरात् वै व्यक्तं ननु निश्चितं कुतः विभूम्नः अनन्ताद्भुतमाहात्म्यगुणसौन्दर्य्यादिपरिपूर्णस्य अरिविन्दादपि विशिष्टलोचनेति भवदेकाङ्गसौन्दर्य्येणापि न सदृशी किमुत सर्वाङ्गसौन्दर्य्येणापि न सदृशी किमुत सर्वाङ्गसौन्दर्येणेति भावः। असदृशीत्वमेव व्यञ्जयति क्वेति स्वे महिम्नीति स्वरूपमेव महिमा परमप्रशंसाहेतुः परमानन्दरूपत्वात् तस्मिन्नित्यर्थः। तादृशे तत्र अभिसर्वतो भावेन यतो भगवान् भवान् क सर्वोत्कृष्टपदे वर्त्तते अहन्तु गुणा जाड्यादिदोषयुक्तास्तमःपर्य्यन्ताश्च; प्रकृतिः स्वरूपं यस्याः सा क सर्वनिकृष्टपदे वर्त्ते अतो महदेवान्तरमिति भावः। एवं

स्वरूपगते गौरवलाघवे दर्शिते ऐश्वर्य्यगते अप्याह-त्रयाणां गुणानां ब्रह्मादीनां वा ईशः आराध्यः पुरुषस्तस्याप्युपरीशो भगवानधीशः अहन्त्वज्ञैस्त्वद्बहिर्मुखैरेव गृहीताः आश्रिताः पादा अंशाः सत्त्वादिवैभवरूपा यस्याः सा तत्सारांशजगल्लक्ष्मीत्वेपि अज्ञैरिन्द्रादिभिरेवाश्रितौ पादौ चरणौ यस्याः सेत्यर्थान्तरव्यक्तिः इतिस्वस्य स्वरूपशक्तित्वेपि निजांशाभासमायाशक्तित्वेनोपन्यासोदैन्येनैव टीकायाः प्रथमार्थवत् त्र्यधीश इत्यस्य टीकायां श्रीशिवश्रीब्रह्मणोरिव भगवतः श्रीविष्णोरपि श्रीकृष्णनियाम्यत्वं स्फुटमेवाङ्गीकृतम् अतो वास्तवार्थे दैन्यं यथा स्वे स्वीये महिम्नि काकस्य सर्वज्ञादिरूपसौन्दर्य्यसामर्थ्यादिरूपे च वैभवेभिरतो भगवान् क, कचाहं स्वरूपभूतत्वेपि शक्तित्वेन शक्तिमत्त्वादपेक्षया गौणी प्रकृतिर्यस्याः सा तथा त्रयाणां त्रिपाद्व्याप्तिः परे धाम्नि अनित्यं पादमैश्वरमिति पाद्मोत्तरखण्डानुसारेण वैकुण्ठगतत्रिपाद्विभूतिरूपाणां सर्वोपरीश्वरो भगवान् क ? क वाऽहम् अस्य विष्णोस्तवज्ञैर्ज्ञातृभिरेव गृहीतौ पादौ यस्याः सा त्वन्माहिमानुगतिमात्रसिद्धतत्तदैश्वर्य्येत्यर्थः। अथ दैन्यं विनापि वास्तवार्थे तदुत्तरं यथा एवमेवम्भूतो भगवान् क कुत्रान्यत्र वर्त्तते किन्तु सर्वदा ममाश्रयत्वेनैव वर्त्तते अहञ्च कुत्रान्यत्र किन्तु सर्वदा तदाश्रितत्वेनैव वर्त्ते तथा गुणा भवत ऐश्वर्य्यादय एव प्रकृतिः स्वरूपं यस्यास्सा अत एव न विद्यते ज्ञः पण्डितो येभ्यस्तैर्गृहीतपादेति एवं कथमसमत्वं घटत इति भावः ॥३४॥ भगवद्विवक्षितस्योत्तरानुपपत्तेः सत्यमित्यस्य टीकायाः तात्पर्यमिदं राजभ्य इत्यादि यदुक्तं तत्तु गौण्येव वृत्त्या सम्भवति नतु मुख्ययेत्याह-सत्यमिति। यद्भवानन्तस्समुद्रे समुद्रमध्ये द्वारकाख्ये दुर्गे शेते लीनतया प्रकाशते तद्भयादिवेत्येव नतु भयादेवेत्यर्थः। यतो गुणाख्यराजभ्यश्चित्ताख्यान्तःकरणरूपसमुद्रे तस्मादिवान्तर्यामिरूपेणापि शेते नतु तस्मादेवेत्यर्थः। उभयत्र हेतुः उपलम्भनेति यच्च बलवद्भिरित्यादिकमुक्तं तत्तु मुख्ययैव सत्यमित्याह—कदिन्द्रियगणयुक्तैर्जीवैः कर्तृभिः नित्यमेव कृतो विग्रहो विरोधो यत्र तथाभूतस्त्वम् अतः सम्प्रत्यपि तादृशैराजभिः स एव कर्त्तुं योग्य इत्यर्थः। श्लेषेण यतोन्तर्य्यामिरूपत्वेपि कुत्सितैरिन्द्रियगणैः कृतविग्रहस्त्वमित्यर्थः। यतस्तादृशेषु जीवेष्विन्द्रियेषु च त्वदीयस्वरूपादीनां यथावत् स्फूर्त्तिर्नास्ति ततस्तेषां त्वयि विरोधारुच्यादिमयद्वेषो युक्त एवेति भावः। अन्यत्तैः। अथवा आत्मा त्वं शेत इत्यन्वयानुपपत्तेरात्मा त्वमित्येतयोः पदयोर्न विशेषणविशेष्यभावः अत उपमानोपमेयभाव एव योज्य इवाद्यभावः नतु लुप्तोपमेयम् अयमर्थः हे उरुक्रम ! आत्मा शुद्धजीवो यथा गुणेभ्यः तन्मयेभ्यः कदिन्द्रियेभ्यो भयादिव अन्तर्हृदयाकाशे समुद्रवदनवगाह्ये शेते लीनतया वसति तथा त्वं गुणेभ्यः सदा तेभ्योऽधुना तु तत्प्रधानेभ्यो राजभ्यश्च भयादिव अन्तस्समुद्रे समुद्रस्य मध्ये श्वेतद्वीपादाविव द्वारकाख्ये धाम्नि शेषे नित्यं तथा वससि तथाच श्रुतयः "यमन्तस्समुद्रे कवयो वयन्ति" तदक्षरे परमे प्रजाः' यतः प्रसूता जगतः प्रसूतीतो येन जीवान् व्यससर्जभूम्याम्" इत्यारभ्य "तदेव ब्रह्म परमं कवीनाम्" इत्याद्याः "यं कामये तमुग्रं कृणोमि तं ब्रह्माणं तमृषिं तं सुमेधां, समयो निरप्सन्तरिति महालक्ष्मीवचनाद्याश्च "नित्यं सन्निहितस्तत्र भगवान् मधुसूदनः" इत्येकादशवचनञ्च तत्रोभयत्र साम्यम् उपेति भगवत्यपि तन्मात्रत्वं सच्चिदानन्दविग्रहत्वादिति ॥ ३५ ॥ ननु, प्रेमसम्बोधने निश्चये वा मुनयो ज्ञानिनः तेषामपि त्वद्भक्तसङ्गादिप्रभावेन त्वत्पादयोर्मकरन्दो यत्किञ्चिन्माधुर्य्यं तज्जुषां वर्त्म निजाभिरुचितचेष्टितम् अस्फुटं स्वाच्छादनलोकसङ्ग्रहाद्यर्थचेष्टितान्तरेणावृतम् अतो दुर्विभाव्य वाद्घुमशक्यमिति भावः। नृपशुभिरिति सद्बुद्धिभिस्तु बोद्धुं शक्यमिति भावः इत्यस्पष्टवर्त्मनामिति स्वमते योजितम्। अलोकेति योजयति—यस्मादिति अलौकिकं लोकातीतम् इवेति लौकिकत्वेप्यलौकिकत्वदर्शनात् तत्र हेतुः भूमन् हे अपरिच्छिन्नमाहात्म्येति ॥ ३६ ॥

**श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी**

पुंसामृषभमिति—सर्वसौन्दर्य्यवैदग्ध्यादिकमुक्तम्, अतः श्रीभगवतः श्रमादिजातप्रस्वेदकणिकादिना स्निग्धहासादिना च श्रीमत्, इत्यन्तः प्रसादः सूचितः। अत एव वीक्षमाणा; केन ? सव्रीडहासरुचिरस्निग्धापांगेन, तत्र व्रीडाहास्य-प्रौढिज्ञानाशक्तेः, किं वा साध्वीस्वभावाद्भावविशेषाद्वा हासो हास्यप्रौढानुसन्धानात्, अन्तःप्रसादोदयाद्वा, भावविशेषादेव वा, व्रीडासहितेन हासेन रुचिरश्च स्निग्धश्च प्रेमरसाद्रो योऽपांगस्तेनेति, वीक्षमाणेति वि-शब्दार्थोऽपि दर्शितः। एवं तस्या अपि परमवैदग्ध्यादिकमुक्तम्, तेन च द्वयोरपि परमोत्तमत्वादिना वक्ष्यमाणार्थस्य परतमत्वं सूचितम्। तच्च महावंशजत्वात् परमोत्तमस्त्वमेव बोद्धुमर्हसीत्यतस्तत्र मनो निधेहीत्याह—हे भारतेति ॥ ३३ ॥ भवतः सदृशी नाहमिति यद्भवानाह। पाठान्तरेऽपि स एवार्थः, किन्तु भवत इति वक्तव्ये भगवते इति गौरवभवात्; वै व्यक्तम्। ननु निश्चितम्। एवमेतत् सत्यमेवेत्यर्थः। कुतः ? विभूम्नोऽनन्ताद्भुतमाहात्म्य-परिपूर्णस्य, अरविन्दादपि विशिष्टलोचनेति सौन्दर्य्येणापि न सदृशीति भावः। तत्तदेवाभिव्यञ्जयति—स्वेति। स्वेऽसाधारणे महिम्नि निजानन्देऽभितो रतः, यतो भगवान् साक्षात्परमेश्वरः, अत एव अधीशः, अहं विषयसुखाद्यपेक्षिका स्त्री। एवं तस्य त्रयाणां विशेषणानां विरुद्धार्थत्वेन यथासंख्यं व्याख्येयम्। यद्वा, भगवानिति पूर्ववद्भवानित्यर्थः। ततश्च तस्य द्वयोर्विशेषणयोर्विरोधेनास्या विशेषणद्वयम्। अन्यत्तैर्व्याख्यातम्। यद्वा, स्वे महिम्नि एकस्मिन्नेव कर्म्मणि युगपल्लौकिकत्वैश्वर्य्ययोर्योगेन पूर्व्वपूर्व्वतो माहात्म्यविशेषेऽभिरतस्तत्प्रकटनपरः। तथा चोक्तं श्रीब्रह्मणा द्वितीयस्कन्धे ( भा० २।७।२६ )—'कर्माणि आत्ममहिम्नोपनिबन्धनानि' इति। तच्च पूर्व्वं व्याख्यातमेव। तत्सम्भावयति, यतो भगवाननन्ताद्भुतशक्तियुक्त इति। अतस्त्रयाणा-

मधोमध्योर्द्ध्वलोकानामधीशः, अहं दक्षिणैकदेशविदर्भराजकन्या, किञ्च, स्वगुणैः प्रकृतिरिव प्रकृतिर्जडेत्यर्थः। ननु तर्हि कृतलोकपालविभूतिभिर्भूपैः प्रार्थिता, विचाराभावादित्याह—अज्ञेति। इत्यात्मनोऽज्ञजनाधीशता परमाज्ञता च सूचिता। एवमुत्क्रमेण विरोधो वितर्क्यः। यद्वा, पूर्ववत्तस्य विशेषणाभ्यां क्रमेणैवास्या विशेषणयोर्विरोधः। तथाहि क्व स्वे महिम्न्यभिरतः, क गुणप्रकृतिः, क सर्व्वलोकानामपीश्वरः, क भवन्महिमानभिज्ञैः क्षुद्रैः सेव्याज्ञेति दिक् ॥ ३४ ॥ सत्यमन्तः शेते, कुतः ? गुणेभ्यो भयात्; कुतः ? वहिः स्थित्या विषयदोषस्पर्शशंकात इत्यर्थः। इवेति तत्त्वतो दोषास्पर्शेन भयाभावात्, क्रमो विक्रमः, गुणेभ्य इति तेषां प्रायः सर्व्वत्र प्रकाशमानतया राजभिरैक्येन तैनैव राज्ञां बोधनात्। एवं बलवत्त्वेन कदिन्द्रियैरित्यपि वहिः स्थस्यान्तःशयनमुपपादयति—उपेति। ज्ञानघनमूर्त्तिः, अत एव आत्मा भवानेव। भवानिति वक्तव्ये आत्मेति पूर्ववद्गौरवात्; यद्वा, पूर्वतो भवानित्यनुवर्त्तत एव। आत्मा स्वयमेवेति किंवान्तर्यामितयेत्यर्थः। सत्यमिति परत्राप्यनुवर्त्तते, कदिन्द्रियगणैः सह कृतो विग्रहो विरोधो येन सः, तेभ्यो नरकादिषु दुःखप्रदानात्; यद्वा, तैः कृतो विग्रहो यस्मिन् सः, तेषां त्वदभजनात्। एवं पूर्वोक्तबलवद्भिरित्यत्रापि वाक्यं ज्ञेयम्। तव सेवकैः परिचर्य्यामात्रभक्तौ प्रवर्त्तमानैरपि, अत्रैवमेकवाक्यता, यतोऽन्तः शेते, अतः कदिन्द्रियैः कृतविग्रहः, वहिर्मुखतयान्तर्दृष्ट्यभावेन महादुष्टतासम्पत्तेः। अत एव त्वत्सेवकैर्विधूतम् नृपपदे कदिन्द्रियत्वसिद्धेरिति ॥ ३५ ॥ मुनयो ज्ञानिनस्तेषामपि त्वद्भक्तसंगादिप्रभावेण त्वत्पादयोर्मकरन्दो भक्तिरसस्तज्जुषां सताम्, किन्तरां सहजभक्तिमताम् किन्तमां भवेत्यर्थः। ननु प्रेमसम्बोधने निश्चये वा, अस्फुटमसंगतम्, मधुपानेन मत्तानामिवाननुसन्धानेन निजाचारच्युते, अतो दुर्विभाव्यं बोद्धुमशक्यम्, नृपशुभिरिति सद्बुद्धिभिस्तु बोद्धुं शक्यमिति भावः—तेषां कर्म्मस्वनधिकारात्, तच्च ( भा० ११।२०।९ ) 'तावत् कर्म्माणि कुर्वीत' इत्यादौ बहुशो वक्तव्यमेवमेव। किञ्च, तेषामभिप्रायादितर्कनाच्च। ( गी० ४।१७ ) 'कर्मणो ह्यपि बोद्धव्यं बोद्धव्यञ्च विकर्म्मणः' इत्यादौ विकर्म्मणोऽपि कस्यचिदनुमतविहितत्वादिति दिक्। ( १३ श० श्लो० ) 'अलोकपथमीयुषाम्' इत्यत्रोत्तरं यस्मादिति। अलौकिकं लोकातीतम्, इवेति प्रायः सदाचारपालनेन लोकानुसरणात्, यद्वा, लोकोक्तिरीत्यानधिकार्थः। तत्र हेतुः—भूमन् ! हे अपरिच्छिन्नमाहात्म्येति लौकिकत्वे परिच्छिन्नतापत्त्या लोकातीतस्यैवेहितस्य योग्यत्वादिति भावः अन्यत्तैर्व्याख्यातम्। यद्वा, अस्फुटत्वे हेतुः—यस्मादिति। 'इव' एव, अलौकिकमेव, अथो अतस्तेषामपि ईहितमलौकिकमेव। अन्यत् समानम्। एवमप्यलोकपथमीयुषामित्यत्रोत्तरं सिद्धमेव। यद्वा, पूर्वमप्यस्पष्टवर्त्मनामित्यत्रैव हेतुः—अलोकेति। ननु निश्चये, एतदपि निश्चितमेवेत्यर्थः ॥ ३६ ॥

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम्

त्र्यधीशः ब्रह्मेन्द्राणामधीशः गुणानां सत्त्वादीनां लोकानां वा अज्ञगृहीतपादा किरणः प्रभाव अज्ञानप्रतिबद्धज्ञानेत्यर्थः। गुणप्रकृतिः गुणवश्यास्वभावा एवं भगवतो रुक्मिण्याश्च एवम्विधा वादाः मनुष्यसाजात्यानुगुणाः इतरेषाम् अज्ञानात्मानुगुणः इतरेषाम् अज्ञानामिव लीलया ज्ञानानामिव न स्वाभाविकसार्वज्ञादि विरोधः ॥ ३४ ॥ उपलम्भनमात्रः ज्ञानस्वरूपः न क्वापि जडः ॥ ३५-३६ ॥

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका

सैवमिति। तद्भगवदुक्तं परिहासार्थोक्तिरूपमेव ज्ञात्वा प्रियकर्तृकत्यागसम्भावनाप्रयुक्तं भयं तत्याज ॥ ३२ ॥ किञ्च बभाष इति। हे भारत ! सव्रीडहासेन रुचिरेण स्निग्धेनापाङ्गेन भगवतो मुखं वीक्षमाणा तं पुंसामृषभं पुरुषोत्तममाबभाषे उवाच ॥ ३३ ॥ भाषणमेवाह—नन्विति पञ्चदशभिः। तत्र तावद्यदुक्तं कस्मान्नो ववृषेऽसमानिति तदनुभाष्य प्रतिभाषते—नन्विति। ननु, हे अरविन्दविलोचन ! तिष्ठन्तु तावदसाम्यं गुणान्तरैः लोचनसौन्दर्य्येणैव त्वं स्वतुल्यरहित इति तत्सम्बोधनाभिप्रायः अहं भवतो असदृसी असमानेति यद्भवानुवाचेत्यनुवादः यद्यप्यसमानिति भगवदुक्त्या भवत्या अहमसम इति प्रतीयते एवं च मम भवान् असम इति यदित्येवमेवातुवदितव्यं तथापि भगवदभिप्रायक्रोडीकारेणानूदितम् अनुवादमुखेनापि मया सह भवान् असम इति वक्तुम् अनुचितमित्यभिप्रायेण च यद्भवान् उवाच तत्तात्त्विकमेवेति वाक्यशेषः। तदेवोपपादयति—भूम्नः स्वरूपस्वभावाभ्यामपरिच्छिन्नस्य हेतुगर्भमिदं क्वेत्यादिः भगवान् षाड्गुण्यपूर्णः त्र्यधीशश्चिलोकीनायकः स्वे महिम्नि स्वासाधारणायां नित्यविभूतावभिरतस्त्वं क ? गुणप्रकृतिः त्वद्गुणानुवर्त्तिस्वभावा त्वच्छन्दानुवर्त्तिनी त्वत्परतन्त्रेति यावत्, ननु, त्वमपि स्वतन्त्रा ब्रह्मादिभिरुपास्यमाना तदभिमतफलप्रदा चेत्यत आत्मानं विशिनष्टि—अज्ञगृहीतपादेति। अज्ञैर्मम त्वत्पारतन्त्र्यमजानद्भिः गृहीतावुपासितौ पादौ यस्याः साऽहं क ? अभिज्ञास्तु नमां स्वतन्त्रामुपासते किन्तु मां त्वत्परतन्त्रां पुरुषकारमात्रङ्कृत्वा मद्विशिष्टं त्वामेवोपासते इति भावः ॥ ३४ ॥ यदुक्तं राजभ्यो बिभ्यतस्सुभ्रु समुद्रं शरणं गतानिति तत्र प्रतिभाषते—सत्यमिति। हे उरुक्रम ! उरवः विपुलास्त्रिलोकीसङ्ग्राहकाः क्रमाः पादविन्यासाः यस्य तथाभूत ! पादक्रमैरेव त्रिलोकीं सङ्गृह्णतस्तव कथं राजभ्यो भयमितितदभिप्रायः भयादिवेति भगवदुक्त्यनुवादः राजभ्यो भयात्समुद्रं शरणं गत इत्येतत्सत्यमेवेत्यर्थः। वस्तुतो भयाभावसूचकेनेवशब्देन राजभ्यो बिभ्यत इति त्वदुक्तौ अबिभ्यत इतिच्छेदो भवदभिमत इति

सूच्यते तर्हि कुतः शरणं गत इत्यत्र आह—गुणेभ्य इति। मत्पितृदुग्धाब्धिगतसमुद्रत्वागाधत्वादिधर्मेभ्यः समुद्रत्वादिधर्मयोगात् लवणार्णवं शरणङ्गत इत्यर्थः। तदपि किमर्थमित्यत आह-उपलम्भनमात्र इति। सप्तम्यन्तमिदम् उपलम्भनमात्रे प्रदर्शनमात्रे निमित्ते मयि प्रीत्यतिशयप्रदर्शनार्थं शरणं गत इत्यर्थः। मात्रशब्देन न तु स्वपरित्राणाद्यर्थमिति सूच्यते अन्तःशेते समुद्र इति दृष्टान्तार्थम् अन्तरित्यव्ययं मध्ये वर्त्तते यथोपलम्भनमात्रे निमित्ते भवानन्तस्समुद्रे क्षीराब्धिमध्ये शेते तद्वल्लवणार्णवं शरणङ्गत इत्यर्थः। युक्तञ्चैतदित्यभिप्रायेण विशिनष्टि—आत्मेति। ममेति शेषः। आत्मा निरतिशयप्रीतिविषयः यो यस्य प्रियतमः स तस्यापि तथा। तथाचोक्तं भगवता 'प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः' ज्ञानीत्वात्मैव मे मतम्'' इति च। एवञ्च त्वत्प्रियतमायाः मम प्रियतमत्वान्मत्सम्बन्धिगुणाश्रये तव प्रीतिरुचि तैवेति भावः। बलवद्भिः कृतद्वेषानित्यत्र प्रतिभाषते, नित्यं कदिन्द्रियगुणैः कृतविग्रहस्त्वमिति। कच्छब्देन बलवद्भिरित्यत्र मतुप् निन्दार्थकत्वेन व्याख्यातः कदिन्द्रियाणां गुणा विषयाः शब्दादयो येषां तैः कुत्सितानीन्द्रियाणि गुणास्तद्विषयाश्शब्दादयश्च येषां तैरिति वा त्वं नित्यं कृतो विग्रहः यस्य सः कृतद्वेषः कृताप्रीतिरिति यावत्। प्रायस्त्यक्तनृपासनानित्यत्र प्रतिभाषते, त्वत्सेवकैरिति। नृपाणां परमासनमन्धं गाढं तम एव तमश्शब्दोऽत्र नरकपर्यायस्तद्धेतुपरः नरकावहमित्यर्थः। हेतुगर्भमिदं तत्त्वात्तन्नृपपदं त्वत्सेवकैरेव विधुतं तुच्छीकृत्य त्यक्तं किम्पुनस्त्वयोभयविभूतिनायकेन त्यक्तमिति॥ ३५॥ अस्पष्टवर्त्मनामित्यत्र प्रतिभाषते-त्वत्पादेति। तव पादपद्मयोर्यो मकरन्दः अनुभवरसात्मकस्तं सेवमानानां मुनीनामेव वर्त्म याथात्म्यम् अस्फुटं किम्पुनरितरेषामिति भावः। तदेवाह—नृपशुभिरिति। ननु, हे भगवन्! नृपशुभिः नर एव पशवस्तैः पशुतुल्यैर्नृभि; पशुवज्जिह्वोपस्थसुखमात्राभिज्ञैर्नृभिः इत्यर्थः। दुर्विभाव्यं दुःखेनापि भावयितुं चिन्तितुमशक्यं वर्त्मेति अलोकपथमीयुषामित्यत्र प्रतिभाषते-यस्मादिति। यस्मात् ये त्वामनुवर्त्तन्ते तेषामपीहितं चेष्टितम् अलौकिकमेवाथो अतः किमु वक्तव्यं भूम्नस्तवेश्वरस्येहितमलौकिकमित्यर्थः॥ ३६॥

## श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

पूर्वोक्तमभीष्टसाधनावबोधकत्वेनोपादेयमिति सूचयितुमाह-बभाष इति॥ ३३॥ देववृषोपमान् नृपान्हित्वाऽस्मान्कस्माद्धृतवतीत्यत्राह-नन्विति। यद्वा इह जीवराशौ आत्मसदृशा न सन्ति अस्माकं क्रियाश्च नेत्यस्योत्तरमाह-नन्विति। वा इत्ययं कृष्णोक्तवाक्यार्थारम्भे वर्तते नन्वित्यनुमतार्थे भवान् यदाह समो नास्तीति एतदेवं ननु अनुमतं कथं तत्राह नेति विभूम्नः देशतः कालतो गुणतश्चापरिच्छिन्नस्य व्याप्तस्य भवतः सदृशोऽन्यो नास्ति किन्तु भवानेव रामरावणयोर्युद्धमितिवत् मत्सदृशी त्वमसीति, नेत्याह क्वेति। भगवानैश्वर्यादिगुणसामग्रीसमृद्धो भवान् क्व? राजादिवदन्याधीनत्वं किं न स्यादिति तत्राह स्व इति अनेन स्वार्थो क्रिया नास्तीत्युक्तं भवति सत्त्वादिगुणप्रवर्तकत्वेन प्रकृतिशब्दवाच्याऽहं क्व? तर्हि त्रिलोक्यां कश्चिन्मत्समः स्यादित्यतो नेति भावेनाह—त्र्यधीश इति। त्रयाणां लोकानां त्रयाणां वेदानां त्रयाणां गुणानां वा ईश इत्यनेन इन्द्रादिनिरासोऽभूदित्येतल्लोकपालविभूतिभिरित्यस्योत्तरं ब्रह्माद्यन्यतमोपि नेति भावेनाह-अन्येति। अन्यैर्ब्रह्मादिभिः अनेन महानुभावैरित्यस्योत्तरं क्वाहमित्यमुना श्रीमद्भिरित्यादेः॥ ३४॥ राजभ्यो बिभ्यतः सुभ्रु इति यदुक्तं तदर्धाङ्गीकारेण परिहरति-सत्यमिति। हे उरुक्रम! बाल्यादेरभिमानिजनशिरोरत्नराजराजितमहापादन्यास! समुद्रेऽन्तः शेत इति सत्यं किन्तु राजभ्यो बिभ्यत इत्यसत्यं तर्हि तद्वचर्थमुक्तं नेत्याह भयादिति "राजृ दीप्तौ" इतिधातोः कार्ये प्रकाशमानेभ्यः स्वशक्तिद्योतकेभ्यः सत्त्वादिगुणेभ्यो भयादिव सज्जनशिक्षार्थम् इवशब्दः संसारावृत्तिहेतुभ्यो गुणेभ्यो बिभ्यज्जनः समुद्रिक्तसुखार्थीसमुद्रादिजलवासेन यथा तपस्यति तथाऽहमिति यद्वा पञ्चभूतमुद्रासहितत्वात्समुद्रे शरीरेऽन्तर्हृदि शेते यत्सत्यं तत् दीप्यत् शब्दादिगुणेभ्यो भयादवाङ्गुष्ठमात्रः "अङ्गुष्ठमात्रः पुरुषः" इतिश्रुतेः शरीरान्तस्थस्य जीवादविशेषाज्जननादिकमपि स्यादिति तत्राह-उपलम्भनमात्र इति। केवलचिन्मयः अतो न देहधर्मा अस्य स्युरिति भावः। एकत्र स्थितयोर्जीवेशयोर्विशेषः कथमत्राह आत्मेति। आत्मा तथाविधस्वभावः किन्नामधेयो भवानित्यतो वाह, आत्मेति। आत्मा सुखमेवाददाति नाण्वपि दुःखमित्यात्माजीवस्तु शरीरमादाय शरीरान्तराणि निर्मिमीत इति तच्छब्दवाच्यबलवद्भिः कृतद्वेषानित्यस्य तात्पर्यं वक्ति-य इति। यः अनित्ये कैन्द्रियगुणैः कृतविग्रहः स त्वं तादृङ्माहात्म्यः "बलवानिन्द्रियग्रामः" इति स्मृतेः। बलवन्ति परिवर्तनवन्ति नानायोनिष्वित्यतोऽनित्यानीन्द्रियाणीत्युच्यन्ते नियन्तुमशक्यत्वाद्बलवन्तीति। भवत्प्रसादादितरेषाम् इन्द्रियजयो भवतस्तु स्वत इति "पराञ्चि खानि व्यतृणात्स्वयम्भूः" इति श्रुतेः। प्रायस्त्यक्तनृपासनानित्यत्राह-त्वत् सेवयेति। तव सेवा यस्याः साऽहं त्वत्सेवा तया त्वत्सेवया मया नृपासनं नृपपदं नृपशब्दवाच्यमात्रं ननु नॄन् पान्तीति नृपालनरक्षणार्थोपेतम् अन्धन्तमः प्रति विधुतं तत्त्यजनं कृतमित्यर्थः। तस्माद्भवानेव नृपशब्दमुख्यार्थत्वात्त्वज्ज्ञैस्सर्वैस्त्यक्तं दत्तं नृपासनं यस्मै स त्यक्तनृपासनः शिशुपालादय एव त्यक्तमुज्झितं यैस्ते तथा त्वत्सेवया हेतुना वा ते त्यक्ताः॥ ३५॥ अस्पष्टवर्त्मनाम इत्यस्यार्थमाह—त्वत्पादेति। तव पादपद्ममकरन्दसेविनां मुनीनां वर्त्म स्वरूपं स्फुटं स्पष्टं तथापि त्वदुक्तं सत्यं नृपशुभिरज्ञानिभिर्दुर्विभाव्यं दुर्ज्ञेयं तस्मादस्पष्टमित्युच्यते यद्वा मुनीनां वर्त्म नृपशुभिः स्फुटं दुर्विभाव्यं किमु तव वर्त्मेति अलोकपथमीयुषामित्यस्याप्ययमर्थ इत्याह-यस्मादिति। हे भूमन्! ईश्वरस्य तवेहितमलौकिकमिव यस्मादयो तस्मात्तवेहितमनु अनुकूलानि मम ईहितानि भवन्ति अलौकिकानीति शेषः। तवेहितमनुक्रियमाणानि ममेहितान्यलौकिकानि यस्मात्तस्मात्किमु तवेहितमलौकिकमिति वा॥ ३६॥

**श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः**

सत्यम् ॥ ३५—३६ ॥

**श्रीमज्जीवगोस्वामिकृतः बृहत्क्रमसन्दर्भः**

बभाष इत्यादि। पुंसामृषभं श्रीकृष्णं बभाषे पुरुषोत्तममित्यर्थः। किङ्कुर्वती मुखं वीक्षती अर्थाच्छ्रीकृष्णस्य कीदृशं भगवत् श्रीमत् "भगं श्रीकाममाहात्म्य" इत्याद्यमरः। अन्यथा भगवन्मुखं वीक्षती पुंसामृषभं बभाष इति पुरुषान्तरप्रतीति-दोषः स्यात् ॥ ३३ ॥ किं बभाष इत्याह—नन्वित्यादि। ननु, भोः अरविन्दविलोचन यद्भवानाह तदेवमेतत् कथं नो ववृषेऽ-समानिति यदुक्तं तत्सत्यमेव भवतः सदृशी न भवान्येव यतस्त्वं त्र्यधीशः त्रयाणां गुणानां नियन्ता गुणातीत इति यावत्। अहं गुणप्रकृतिः गुणाः प्रकृतयो यस्याः गुणस्वभावेत्यर्थः। त्वं स्वे महिम्नि स्वानन्दे नित्यपरिपूर्णभावे अभिरतः अहम् अज्ञ-गृहीतपादा। अतोऽहमसादृश्येव अत्यन्तासम्भावनायां क द्वयम् अतस्त्वं सत्यवागेव इति लक्ष्मीत्वस्फूर्त्तावपि दैन्यमेवास्याः इति गर्वगर्भं दैन्यं किञ्च तवैतदुक्तमनुचितं न ह्युत्तमः स्वं महिमानं प्रकटयतीति सोत्प्रासप्रत्युत्तरञ्च ॥ ३४ ॥ राजभ्यो बिभ्यतः सुभ्रु समुद्रं शरणं गतानिति यदुक्तं तदपि सत्यमेवेत्याह—सत्यमित्यादि। हे उरुक्रम आत्मा भवान् विग्रहरूपी त्वं गुणेभ्यो गुण-कार्य्येभ्यो राजभ्यो भयादिव समुद्रे अन्तः अन्तस्समुद्रं शेते इति यत्तदपि सत्यं कीदृश आत्मा उपलम्भनमात्र उपलम्भनमुपलब्धि-र्ज्ञानम् तन्मात्रं अंशो यस्य ज्ञानमिति यद्वस्तु तदपि तवैव मात्रेत्यर्थः। वस्तुतस्तु असमुद्रो मुद्रासङ्कोचः तया सह वर्त्तत इति तथा न समुद्रम् असमुद्रम् असङ्कोचमिति यावत्। एवंविधे अन्तः भक्तानां अन्तःकरणे शेते इव। कीदृश, भयात् भयमत्तीति भयात् यद्बिभेति स्वयं भयं "भीरपि यद्बिभेति" इत्याद्युक्तेः। पुनः कीदृशः गुणेभ्यः गुण्याढ्यः इभ्य आढ्यो धनीत्याद्यमरः। गुणातीतोपि भक्तवात्सल्यादिमङ्गलगुणभूयिष्ठः अतस्तव कुतो भीः अतः राजभ्यो बिभ्यत इति यदुक्तं तत् अविभ्यत इति मन्तव्यं समुद्रं मुद आनन्दस्य रा मानं तया सह वर्त्तमानं शरणं गृहं धाम गता इति भगवद्वचनमन्यथा व्याख्याति। किन्तु अभक्तास्तु त्वामेवम-जानन्तो भवता सह विग्रहं कुर्वन्तीत्याह नित्यमित्यादि। कदिन्द्रियगणास्त्वद्विमुखेन्द्रियाः अत एव ते अबला एव ज्ञानरहितत्वात् तैः कृतविग्रहः कृतदेह एव त्वं न तु तैर्गीयसे कदिन्द्रियगणत्वेनाधमत्वाद्दुर्बला एव ते यतः तेन बलवद्भिः कृतद्वेषानिति यदुक्तं तदपि विरोधिलक्षणयैवेति सत्यं त्यक्तनृपासनानिति यदुक्तं तदपि सत्यमेव कुत इत्याह—त्वत्सेवकैरित्यादि। त्वत्सेवका अपि नृपपदं त्यजन्ति किं पुनस्त्वमिति सर्वथा सत्यवागेव भवानिति वक्रोक्तिः ॥ ३५ ॥ ननु अस्पष्टवर्त्मनामिति यदुक्तं तदपि सत्यमेव तव वर्त्मनोऽस्पष्टत्वं प्रसिद्धमिति किं चित्रं त्वदनुसृतानामपि यत्तथैवेत्याह—त्वत्पादपद्मेत्यादि। त्वत्पादपद्मे यो मकरन्दश्छिद्र-सस्तज्जुषां मुनीनां वर्त्म अस्फुटं तत् नृपशुभिर्नराकारैः पशुभिर्दुर्विभाव्यम् ननु भोः कुत इत्याह—यस्मादीश्वरस्य तव ईहितम् अलौकिकमेव इव एवार्थे। हे भूमन्! भवन्तम् अनुगता ये एकान्तभक्तास्तेषां च ईहितम् अलौकिकमेव तत्त्वाद्वर्त्मास्फुटमेवेति सत्यवागेवासीति वाक्यार्थः ॥ ३६ ॥

**श्रीनाथचक्रवर्तिपादविरचिता चैतन्यमतमञ्जूषा**

पुंसामृषभं पुरुषोत्तमं मुखं वीक्षती निरीक्षमाणा, मुखं विशिनष्टि—भगवत् श्रीमत् 'भगं श्रीकाममाहात्म्यम्', अन्यथा भगवन्मुखं वीक्ष्य पुंसामृषभं बभाष इति विरुद्धं स्यात् ॥ ३३ ॥ नन्वेवमित्यादि। ननु भोः! एवमेतद् यदुक्तं तदेव किन्त्वर्थोऽन्य इति प्रपञ्चयति—त्वं त्र्यधीशस्त्रयाणां गुणानामधीशो नियन्ता गुणातीतः, अहं गुणप्रकृतिस्त्वं स्वे महिम्नि आनन्दे अभिरतः। अहमज्ञ-गृहीतपादा इति श्रीरप्यहं न तव योग्येति 'सत्यमेव, किन्तु तवैतद्वक्तुं न योग्यम्, न ह्युत्तमः स्वं महिमानं प्रकटयति। राजपुत्रीति सम्बोधनजनिते कोपे स्वरूप-स्फूर्त्या प्रत्युत्तरम् ॥ ३४ ॥ एवं भगवता यदुक्तम् तदेवान्यथयति-सत्यं भयादिवेत्यादि-बहुभिः। मम तु कथा दूरादास्ताम्, अहं त्वदीयत्वादनन्यैव मर्त्याकाराद् वा विना अन्यं श्रयेत इत्याह—कान्यमित्यादि। मर्त्येत्यन्वयः। लक्ष्म्या मम आलयं सम्यक् लयस्थानं लय आश्लेषस्य पराकाष्ठा ॥ ३५-४२ ॥

**श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शिनी**

भगवता येन येन वाक्येन स्वस्यापकर्षः रुक्मिण्या उत्कर्षश्चोक्तस्तदेव वाक्यमनुवदन्ती रुक्मिणी तद्विपर्ययं व्याचष्टे तत्र यदुक्तं कस्मान्नो ववृषेऽसमानिति तत्रासाम्यं सत्यमेवेत्याह—हे अरविन्दविलोचन यद्भवानाह कस्मान्नो ववृषेसमानिति तत् ननु निश्चितमेव मे तत् सत्यमेवेत्यर्थः स्वे स्वीये महिम्नि षडैश्वर्यलक्षणे अभिरतो भगवान् त्र्यधीशः त्रिगुणनियन्ता भगवान् क, अहं गुणप्रकृतिर्जडा नियम्या वा क्वेति त्वत्तोऽतिनिकृष्टाया मम कुतस्त्वत्साम्यसम्भावनापीति भावः। गुणप्रकृति-र्बहिरङ्गाशक्तिस्तस्या स्वांशत्वात् स्वस्य तत्स्वरूपत्वमननमतिदैन्यादेव ॥ ३४ ॥ यदुक्तं राजभ्यो बिभ्यतः सुभ्रु समुद्रं शरणङ्ग-तानिति तत्राह सत्यमिति। हे उरुक्रम महाशक्ते इति भयाभावं दर्शयति "क्रमः शक्तौ परीपाट्याम्" इति विश्वः। गुणाशब्दाद-

यस्तेभ्यो राजन्त इति राजानस्तेभ्यो भक्तानां यद्भयं तदेव भक्ताधीनस्य तवापि भयमिवेत्यतस्तद्भयादिव अन्तस्ससमुद्रे समुद्रवदगाधे स्वभक्तहृदय एव शेते अतः शरणं गतानिति शरणशब्दस्य गृहमित्यर्थः कुतः तत्र ममास्तित्वे किं प्रमाणमिति चेत्तत्राह "नापेषि नाथ हृदयाम्बुरुहात् स्वपुंसाम्" इति प्रणयरशनया धृताङ्घ्रिपद्म इति ब्रह्मादिवाक्यादुपलम्भनं मात्राणां रूपरसगन्धादीनां यस्य सः भक्तैर्ध्यानोपलभ्यमानसौन्दर्यादिरित्यर्थः। आत्मा परमात्मा भवानेवेत्यर्थः यदुक्तं बलवद्भिः कृतद्वेषानिति तत्राह–नित्यमिति कदिन्द्रियगणैः स्वभक्तस्य विषयग्राहिभिरिन्द्रियैः सह वृतयुद्धः गणैरिति वृत्यभिप्रायेण बहुत्वं भक्तस्य संसारदुःखत्राणार्थमिति भावः। अयमर्थः साधकभक्तानां प्रथमतो ध्यानगम्यं यत् किञ्चित् माधुर्य एव त्वं भवसि ननु प्रत्यक्षीभवसि यत् तन्मन्ये विषयेभ्यो भयादिव तदन्तःकरणे प्रविश्य स्वपिष्येव यतो भक्तिवृद्ध्या कदिन्द्रियेषु निवृत्तेषु सत्सु विषयनिवृत्तौ सत्यां स्वापादुत्थित इव साक्षादेव प्रत्यक्षीभूय स्वीयानेकमाधुर्य्याणि स्वभक्तान् ग्राहयसीति यदुक्तं त्यक्तनृपासनानिति तदपि युक्तमेवेत्याह–त्वत्सेवकैरपि नृपपदं नृपासनम् अविवेकबहुलत्वादन्धं तमइव विधुतं त्यक्तं किन्पुनर्वक्तव्यं त्वया त्यक्तमिति अत्र सेवकैरिति पददृष्ट्या पूर्वत्रोभयत्रापि भक्तसम्बन्धो व्याख्यातः॥ ३५॥ अस्पष्टवर्त्मनामिति यदुक्तं तदपि तथेत्याह–त्वदित। नन्विति निश्चये अलोकपथमीयुषामिति यदुक्तं तदपि सत्यमेवेत्याह यस्मादलौकिकं लोकातीतमेव तवेहितम् अथो अत एव भगवन्तमनुवर्त्तन्ते ये तेषामपीहितमलौकिकमेव॥ ३६॥

## गूढार्थदीपिनी

सव्रीडो यो हासस्तेन रुचिरः स्नेहयुक्तो योऽपाङ्गस्तेन वीक्षन्ती सती॥ ३३॥ वै एवार्थे। अहमसदृशी इति यत् भवानाह तदेतत् एवमेव। त्रयाणां गुणानां देवानां वा अधीशः भवान् क। अज्ञैः सकामैः। महिम्नि स्वरूपे॥ ३४॥ हे उरुक्रम अनन्तपराक्रम। गुणरूपेभ्यः राजभ्यः भक्तानां भयमेव तव भयं तस्मात् हेतोः समुद्रवत् अगाधेऽन्तः भक्तान्तःकरणे शेते विराजते इत्यपि सत्यम्। कुत्सित इन्द्रियगणो येषां तैर्बहिर्मुखैः कृतविग्रहः कृतोपेक्षः तेषु तवाप्रतीतेः। त्वत्सेवकैः प्रियव्रतादिभिरेव नृपपदं विधुतं त्यक्तं किमुत वक्तव्यं त्वया त्यक्तमिति। उपलम्भनमात्रः ज्ञानस्वरूपः॥ ३५॥ मकरन्दो भक्तिरसस्तं सेवमानानाम्। अज्ञैःदुर्विभाव्यं दुर्ज्ञेयम्। किंच यस्यात् ये भवन्तमनुवर्तन्ते तेषामपीहितं चेष्टितमलौकिकमिव। अथो अतः किमु वक्तव्यं तवेहितमलौकिकम्॥ ३६॥

## श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः

सव्रीडहासेन रुचिरेण स्निग्धेन अपाङ्गेन भगवन्मुखं वीक्षन्ति वीक्षमाणा॥ ३३॥ यद्यत् हास्यार्थमुपन्यस्तं तत्तद्वेपरीत्या व्याचक्षाणा प्रतिभाषते स्म नन्वित्यादिना। हे अरविन्दविलोचन कस्मान्नो ववृषेऽसमानिति भवान् यदाह एतत् ननु निश्चितम् एवम् असाम्यं सत्यमेवेत्यर्थः। यतो भगवतः विभूम्नः असदृशी अहमस्मि तदेवाह त्र्यधीशः त्रयाणां लोकानामधीशः सर्वेश्वर इत्यर्थः। स्वे महिम्न्यभिरतः स्वानन्देन स्वे महिम्न्यभिरतः स्वानन्दपूर्णस्त्वं क? क चाहं गुणप्रकृतिः भगवतः गुणलुब्धा शक्तिः शाकपार्थिवत्वान्मध्यमपदलोपः त्वद्गुणगणचिन्तनस्वाभावा इत्यर्थः। अनेन चेतनविलक्षणज्ञानानन्दस्वरूपेति द्योतितम्। जीववैलक्षण्यमाह—अज्ञगृहीतपादेति। अज्ञैर्वासुदेवतत्त्वज्ञैः स्वामिपत्नीत्वेन गृहीतौ पादौ यस्याः सा चेतनाचेतनविलक्षणा भगवद्गुणगणध्यानैकधना भवच्छक्तिविशेषरूपा भवदीयपत्नी तथैव भाग्वतैः पूज्यासर्वथात्वत्तोऽपकृष्टेत्यर्थः॥ ३४॥ यदुक्तं "राजभ्यो बिभ्यतः सुभ्रूसमुद्रं शरणं गतानि"ति तत्राह सत्यमिति। हे उरुक्रम उरवः अतिविपुलाः क्रमाः पादविन्यासाः भक्तभयनाशनाः दुष्टभयवर्द्धनाः यस्य तथाभूत यद्वा हे उरुक्रम "क्रमः शक्तौ परीपाट्यम्" इति विश्वः सर्वथा शरणागतजनभयनाशन! स्वयमभयेत्यर्थः। उपलम्भनं परमात्मतत्त्वग्राहकं तन्मात्रे शुद्धे अन्तर्हृत्पद्मे समुद्रे समुद्रवदगाधे गुणाः शब्दादयः रज आदयो रागद्वेषादिस्वकार्यसहिता वा राजन्त इति राजानस्तेभ्यः मद्भक्तानेते बाधयेयुरिति भयात् भक्तानामप्यहर्निशं भक्तिरसमत्तानां प्रायोगुणेभ्यो भयाभावादिवेत्युक्तम् आत्मा "एष ते आत्मान्तर्यामी"ति श्रुतेः। अन्तरात्मा भवान् शेते इत्यर्थः बलवद्भिः कृतद्वेषानिति यदुक्तं तदपि सत्यमेवेत्याह—कुत्सित इन्द्रियगणो येषां तैः बलान्नित्यं संसारे एव वसन्ति न तु त्वदुपदेशं श्रुतिस्मृतिरूपं स्वीकुर्वन्ति तैर्बलवद्भिर्नित्यबद्धै रसुरस्वभावैर्नित्यं त्वं कृतविग्रहोसि—

"मामप्राप्यैव कौन्तेय ततो यान्त्यधमां गतिम्। क्षिपाम्यजस्रमशुभानासुरीष्वेव योनिषु॥

इति श्रीमुखोक्तेः यदुक्तं त्यक्तनृपासनानिति तदपि युक्तमेवेत्याह—त्वत्सेवकैरिति। नृपाणां पदमासनम् उग्रसेनयुधिष्ठिरादिनृपासनव्यावृत्यर्थमाह—तमोन्धमिति। अन्धं गाढं तम एव तत् संसारहेतुत्वात् त्वत्सेवकैरेव विधुतं त्यक्तं किम्पुनर्वक्तव्यं त्वया त्यक्तमिति॥ ३५॥ अस्पष्टवर्त्मनां पुंसामित्यनेन स्वस्यास्पष्टवर्त्मत्वं द्योतितं तदपि तथैवेत्याह—त्वदिति। ननु निश्चितं त्वत्पादपद्ममकरन्दसेविनां मुनीनामन्तर्वृत्तीनां वर्त्मास्फुटं दुर्ज्ञेयं भवति किं पुनर्वक्तव्यं तव वर्त्मास्फुटमिति यदपि सूचितमलोकपथमीयुषामित्यनेन स्वस्य लोकातीतपथगत्वं तदपि तथैवेत्याह–यस्मात् भवन्तं ये अनुगताः मुनयः तेषामपीहितमलौकिकं लोकातीतमिव अथो अतः ईश्वरस्य तवेहितमलौकिकमिति किमु वक्तव्यम्॥ ३६॥

## श्रीसत्यधर्मकृता श्रीभागवतटिप्पणी

नन्वेतदेवमरविन्दविलोचनाहेति श्लोके समनिषेधः क्रियते स्वस्य स्वसमस्य सत्वात् । भाष्ये चतुर्थे द्वितीयपादे । अथातः समाश्चासमाश्चाभिधीयन्ते समासमाश्च । अथ समानि ब्रह्मणो रूपाणि यैरुत्पत्तिः स्थितिर्लयो नियतिरायतिश्चैकं ह्येवम् । अथासमा ब्रह्मेन्द्रो रुद्रः प्रजापतिर्बृहस्पतिर्ये के च देवा गन्धर्वा मनुष्याः पितरोऽसुरा यत्किञ्चेदं चरमचरं च । अथ समासमा । प्रकृतिर्वावसमासमैषा हि नित्या जरा तद्वशा चेति श्रुतौ तथा स्वदृष्टान्तो हरेर्भवेदित्यृग्भाष्ये तथा प्रथमतात्पर्ये व्यत्यासोऽन्वयश्चैव प्रसिद्धो भूत एव च । सर्वसंहारकश्चेति दृष्टान्तः पञ्चधा स्मृत इति ब्राह्मे । ऊर्णनाभ्यादिको विष्णो विष्णुर्विष्णोस्तथैव च । विष्णुर्जीवस्य दृष्टान्ता ऊनसाम्याधिकाः क्रमादिति ब्राह्म इत्यादावुक्तेरतथेत्यतो नात्र स्वमताऽमता रुक्मिण्याः किन्त्वन्यस्य सेति भावं विवृण्वन्नन्यगृहीतपादेत्यत्रत्यमन्यपदं लं पः प्रातिपदिकान्तरयेत्यत्र प्रातिपदिकान्तं सत्पुंलिङ्ग-प्रथमान्तत्वेन निषेधप्रतियोगिसमर्पकं भवतीति मनसि कृत्वा मौलभवच्छब्दोत्तरमन्ययोगवच्छेदवेवकारेण स्वनिबद्धेन सूचयंस्तेन सह मौलं पदान्यनुवदति । भवानेव भवतः सदृश इति । अनेनैव गृहीतपादेत्यस्य गृहीतौ पादौ तव यया सेत्यर्थ इति भगवानित्यस्याप्यावृत्तिरित्यसूचि । अन्यथा स्वधिक्कारप्रस्तावनानगुण्यापत्तेरिति ज्ञेयम् । अथ मूलार्थः । हे अरविन्दलोचन भवान्यदाह देववृषोपमान्हित्वा त्यक्तनृपासनानित्यादि नार्थादिति ज्ञेयम् । एतदेवं ननु तथैवेति निश्चितम् । तदेव दर्शयति । भवतः सदृशो नेति ! अन्यो भगवतः सदृशो न किन्तु भवानेव भवतः सदृशः । विभूम्नो भावभवित्रोरभेदात् । विशेषतो भूमा यस्य स तस्येति वा । अनन्वयः । इन्दुरिन्दुरिव श्रीमानित्यादौ तदन्वयः । रामरावणयोर्युद्धं रामरावणयोरिवेत्यादिवत् । समना चासृत्युपक्रमादमृतत्वं चानुपोष्येति त्वं मम समैवेति न स्वामिन्निति विशेषकं धर्ममाह । स्वमहिम्नि मदनधिष्ठिते रतः । भगवान्समग्रैश्वर्यादिमान् । स्त्र्यधीशो वेदा वा लोका वा गुणा वा श्रीभूदुर्गा वेति तदधीशः । क्वेति कालदेशव्याप्तिरेवं हि समग्रभगवत्त्वं च तव न ममेत्युक्त्वा तदुपोद्वलयति । गुणप्रकृतिः सत्त्वादिगुणप्रवर्तकतया तच्छब्दवाच्याऽहं क्वेति । गुणैः स्वरूपभूतैः । प्रकृष्टकरणात्प्रकृतिरिति भगवतोऽपि विशेषणम् । तदुपोद्वलयति गृहीतपादेति । गृहीतौ तव पादौ यया सा । गृही मदभिन्नभार्यायुतस्त्वं तस्य ईतौ अपेक्षयेति । इना इतौ प्राप्तौ पादौ यया सेति वा । स भगवः कस्मिन्प्रतिष्ठित इति स्वेमहिम्नीत्यादेः । देशतः कालतश्चैव गुणतश्च त्रिधा ततिः । सा समस्ता हरेरेव न ह्यन्ये पूर्णसद्गुणा इति गीतातात्पर्योक्तेः । मत्स्यकूर्मवराहाद्याः समा विष्णोरभेदतः । ब्रह्माद्यास्त्वसमाः प्रोक्ताः प्रकृतिश्च समासमेति वाराहोक्तेर्न समैवाहमिति तात्पर्यम् । राजपुत्रीप्सितेत्यारभ्य न ह्यात्मसदृशा इत्यन्तस्य भगवद्वाक्यस्य श्रवणशोकसम्मूढा प्रौढाऽपि रुक्मिणी नैकधारया धारणं तदिति नैकसरण्योत्तरमभिदधाना साम्मुग्धेन तज्जगाविति तत्पौर्वापर्यविचारः कर्तव्य इति ज्ञेयम् ॥ ३८ ॥ सत्यं भयादिवेति श्लोके नृपपदं तमोऽन्धं विधुतमिति सामानाधिकरण्येन नृपस्थानस्यान्धतमसात्मकत्वं प्रतीयते । तच्च बाधितमित्यतो नृपपदमिति प्रथमान्तं तमोऽन्धमिति द्वितीयान्तं तत्रापि नृपपदं तत्स्थानवाचि किन्तु नामवाचि प्रतिशब्दमध्याहृत्यान्वयः । ऊर्ध्वरेतं विरूपाक्षं शङ्करं नीललोहितम् । ऋतं सत्यं परं ब्रह्मेत्याद्युद्देश्यद्वितीयका विभक्तिरूर्ध्वरेतादि प्रथमा रुद्रगोचरा । तस्माद्विष्णुं परं ब्रह्म प्रतीत्येवेति भावेन किञ्चिदनूद्य स्वयं व्याचष्टे । नृपपदं नृपशब्दमात्रवाच्यमिति । तथा च नृपेति पदं नाममात्रं यस्य तदिति तत्पदविग्रहः सूचितः । एतल्लब्धार्थमाह । न तु मुख्यतो नृपालक इति । अनेन केवलं रूढतां तस्याभिप्रेति । तमोऽन्धमन्धतमसं प्रति विधुतं मयाऽऽक्षिप्तमित्यर्थः । मौलत्वत्सेवया मयेति पदेनान्वयः । ततश्चायं श्लोकार्थः । राजभ्यो बिभ्यतः सुभ्रूः समुद्रं शरणं गतानिति यत्तत्स्वयमर्धाङ्ग्यर्धाङ्गीकारेण परिहरति । सत्यमिति । उपलभनमेवोपलम्भनमात्रं । आत्माऽऽदानादिकर्ता स्वामी सर्वगुणपूर्ण इति वा । सर्वान्गुणानात्मशब्दो ब्रवीतीत्यादेः । समुद्रं तत्राप्यन्तः शेत इति समुद्रं शरणं गतानिति सत्यम् । गुणेभ्य उरु अति यथाक्रमो यस्य स तत्सम्बुद्धिः । गुणातीत । भयाद्राजादिजातात् । इव । वस्तुतस्तु न तस्मादितीवेन द्योत्यते । अतो भयादिति वाच्ये इवोक्तिरिति ज्ञेयम् । सत्त्वादिगुणगणनेन वर्तमानस्य न रजस्तमः प्राकृतिकभूपभीतिरिति भावः । बलवद्भिः कृतद्वेषानित्यस्य न बलवन्तो नाम दृश्यन्त इत्युत्तरयति । य इति । अनित्यानि किं सुखमिन्द्रियाणि च येषां तेषां राज्ञो गणैर्यस्त्वं विग्रहो येन सः । कृतविग्रहत्वमङ्गीकृतं नाङ्गीकृतं तत्प्रबलत्वमिति भावः । प्रायस्त्यक्तनृपासनानित्यस्य केवलं रूढनृपपदकास्त्वं तु न तथेति स्वानुष्ठितकर्मप्रतिपाद्योत्तरमाह । त्वत्सेवयेति । तव सेवा यस्याः सा तया । नृपेति पदं वाचकः शब्दो यस्य तत् नृपा इति पद्यत इति यावत् । तमोऽन्धमन्धन्तमः प्रति विधुतं प्रक्षिप्तं सेवया करणेन मयेति शेषः । तमोऽन्धं प्रति विधुतं त्वत् त्वत्तस्तद्विधुतमिति किं वाच्यमित्यर्थः । गुणैरिभ्य आढ्येऽप्यनित्यकेन्द्रियगणैर्मानवैः सम्पादित इति कृतो विग्रहः शरीरं यस्य सः । अनेन कृतद्वेषान्कृतवन्निर्मितवदाचरन्तः कृतं ता वेषा येषामिति पदमङ्गीकृत्यार्थं सूचितवन्तीति चतुरता ध्येया । यस्त्वं त्यक्तेन्द्रियगणैः कृतविग्रहो नित्यसुखात्मकेन्द्रियगणैरेव स्वीकृतविग्रह इति वा ॥ ३९ ॥ त्वत्पादमकरन्दजुषां मुनीनामिति श्लोके तवेहितमनु मे आवर्तितमनुवृत्तं वेहितमिति न भवन्तीत्यनेनैकवचनान्ते-नान्वेतुं शक्यम् । असम्भवादित्यतस्तथा सद्बहुवचनतया विपरिणतमन्वेतीति दर्शयन्नन्वयमाह । तवेहितमनु म ईहितानि भवन्तीति । ततश्चायं श्लोकार्थः । अस्पष्टवर्त्मनां पुंसामलोकपथमीयुषामित्यादेरुत्तरमाह । त्वत्पादेति । त्वत्पादपद्ममकरन्दजुषां

सेवमानानां तस्मिन्प्रीतिमतां वा मुनीनां वर्त्म नृपशुभिः स्फुटं दुर्विभाव्यं ननु। तव किं वक्तव्यं दुर्विभाव्यमिति भावः। तादृशानां मुनीनां तव वर्त्म दुर्विभाव्यम् नृपशुभिर्मनुष्येषु पशुप्रायैर्दुर्विभाव्यमिति किं वाच्यमिति युक्तमुक्तम्। हे भूमन्। ईश्वरस्य यस्मात्स्वेहितं व्यापारोऽलौकिकं लोकविलक्षणमाप्तकामव्यापारत्वात्। इवैव तवेहितं चेष्टामनु। अथा मे ईहितमीहितानि भवन्ति प्रायः सीदन्ति प्रायः सीदन्ति योषित इत्यभिप्रायः कथमिति चेत्। ते च मानिन्योऽन्याः पुरुषाश्चान्य इति भावः। यां यां परेश उरुवेव करोति लीलां तां तां करोत्यनु तथैव रमाऽपि देवीत्यादेः॥ ४०॥

### श्रीमद्वल्लभाचार्य्यकृता सुबोधिनी

ततः स्वस्था भगवदभिलषितं किञ्चिदुक्तवतीत्याह **बभाष** इति। पुंसामृषभं पुरुषोत्तमम्। अनेन भगवान् न स्त्रीपतिरित्युक्तम्। ततश्च स्त्रीबुद्धिः कापट्यं स्त्रीवश्यता च भगवतो निवारिता। एवं ज्ञात्वैव सा यथार्थं वदति, नतु साप्यन्यथा ज्ञात्वा अन्यथा वदति। तथा सत्यभिप्रायान्तरकल्पनायामनवस्था स्यात्। **वीक्षन्ती भगवन्मुख**मिति। दृष्ट्यैव परमः सन्तोषः वाच्यार्थस्फूर्तिरपि निरूपिता। अन्तर्गतं भावत्रयं आविष्कुर्वती तथोक्तवतीत्याह **सव्रीडे**ति। लज्जा स्वाभाविकी सात्त्विकी, हासो राजसः शृङ्गारप्रधानः। रुचिरं स्निग्धं यदपाङ्गं तदपि गुणत्रययुक्तम्। तेन वीक्षन्तीति स्वान्तःस्थितभावोद्गिरणं निरूपितम्। अत'श्चित्तमनेनैवाकृष्यत' इति वचनानि पोषकाण्येव भवन्ति, नत्वन्यार्थकल्पनया कदाचिदपि विरुद्धानि भवन्तीति भावः॥३३॥ वचनान्याह **पञ्चदशभिः नन्वेव**मिति। कला एवैताः त्रिविधमपि पञ्चविधं कामरसं प्रबोधयन्तीव। कथं भगवता तद्वाक्यश्रवणार्थं सूत्ररूपाणि वाक्यानि निरूपितानीत्याकाङ्क्षायां बहिरङ्गप्रकारं परित्यज्य अन्तरङ्गप्रकारेणैव तद्वाक्यव्याख्यानरूपाणि वाक्यानि श्रोष्यतीत्यवगत्य तद्व्याख्यानमेवाह। अन्यथा 'अप्रतिषिद्धमनुमतं भवती'ति विरोधोऽङ्गीकृतः स्यात्, ईश्वरवाक्यं वा बाधितार्थमिति। अतो दोषनिराकरणार्थं प्रवृत्तो भगवान् तस्यां नैवं दोषं सम्पादयेत्। अतः स्ववाक्यान्येव इयं व्याचष्टामिति भगवदभिप्रायः। तत्र भगवता यदुक्तं 'कस्मान्नो ववृषेऽसमा'निति, तत्रार्थद्वयं सम्भवति। हीनत्वेनोत्तमत्वेन वा। तत्रोत्तमत्वेनैव तत्पदं सार्थकमित्याह **नन्वेवमेत**दिति। असमानिति पदं परित्यज्य, प्रथमं श्लोकद्वयमर्थतोऽङ्गीकृतमिति न तद्बाधनार्थं किञ्चिदुच्यते। प्रयोजनं त्वग्रे वक्तव्यम्। दोषस्त्वादौ परिह्रियते। तमपि शब्दं स्वरूपतोऽङ्गीकरोति। हे अरविन्दविलोचन, यद्वै निश्चयेन भवानाह। नन्विति कोमलसम्बोधनेन अर्थतो विचार्यमाणे प्रातीतिके स पूर्वपक्ष एवेति ज्ञापयति। आदावेव नन्वित्युक्तत्वात्। सर्वाण्येव वाक्यानि यथाश्रुतानि पूर्वपक्ष एवेत्युक्तं भवति, **एवमेत**त्तथैव स्वार्थपरमित्यर्थः। सम्बोधनेन दृष्ट्यैव तापहारकः कथं वाक्यैस्तापं जनयिष्यतीति विरुद्धार्थपरित्यागो युक्त इति सूचितम्। वै निश्चयेन। नत्वेकदेशेनापि बाध्यते। असमानित्यस्य व्याख्यानम्, **न भवतः सदृशी**ति। न विद्यन्ते समा येषां न समा इति वा। एवमर्थद्वये प्रथमार्थ एव ग्राह्यः। भगवन्निरूपितं साम्यमन्यत्र नास्तीति। भगवांस्तु सर्वसमः, 'समः प्लुषिणे'त्यादिश्रुतेः। यथाकाशः सर्वसमो भवति, नत्वाकाशसमः कश्चित्। अतः अहं भवतः समा न भवामीति। तत्र हेतुः **विभूम्न** इति। विशिष्टो भूमा यस्येति, विगतो भूमा यस्मादिति वा। वैशिष्ट्यं सर्वतः, अन्यत्र भूमाभावे च असमानत्वं सिद्धमेव। भगवतो व्यापकत्वं सर्वश्रुतिसिद्धम्, गुणानां मायाया वा न तथेति सर्वजनीनत्वाद्धेतुरयं युक्तः। ननु तथापि त्वय्येव रमत इति तस्यापि रत्युत्पादिका त्वमेव महती समा वेत्याशङ्क्याह **क्व स्वे महिम्नी**ति। भगवान् सर्वदा स्वस्मिन्नेव रमते। अभितो रमणं तत्रैव। केनचिदंशेन कदाचिदेव कार्ये रमणम्। अत एव तत्कार्याण्यपि घटादीनि कदाचिदेव व्यापृतानि भवन्ति, नतु सर्वदा। **स्वे महिम्नि** स्वपूर्णानन्दे। इयं च सृष्टिरूपा माया, नतु मुख्या लक्ष्मीर्ब्रह्मानन्दरूपापि। तस्या एवांशो मायेति न क्वचिद्विरोधः। यतो **भगवान्**। ननु समशो भवतु, तत्रापि को विशेष इति चेत्, तत्राह **अधीश** इति। त्रयाणां गुणानां तत्कार्याणां चाधीशः। नहीशितव्यैरीश्वरो रमते। तर्हि त्वमपि भगवति वा स्वस्मिन् वा रमसे। अतः साम्यमेवोचितमिति चेत्, तत्राह **क्वाहं गुणप्रकृ**तिरिति। मम तु प्रकृतिर्गुणाः, भगवतस्तु परमानन्दः। यथैको मृण्मयेन व्यवहरति, अपरः सौवर्णेनेति। अतः स्वरूपरमणमपि ममाप्रयोजकम्। भगवत्यपि रमणं क्वचिदपि परिच्छिन्नत्वान्ममैकदेशेनैव। न हि परिच्छिन्नः सर्वथा व्याप्तुमर्हति। किञ्च। कार्यद्वारापि ममापकर्ष एवेत्याह **अज्ञगृहीतपादे**ति। यद्यपि मत्सेवका बहवः, मां चाकाङ्क्षन्ते संसाररूपाम्, तथापि ते अज्ञाः। श्रेष्ठाश्रयणमेव महत्त्वसूचकम्, नत्वश्रेष्ठानां बहूनामपि। न हि बह्व्यो मक्षिकाः यं कञ्चिदपकृष्टमाश्रयन्त इति गरुडाश्रितभगवत्तुल्यो भवति। गृहीतपादपदेन दोषाभावोऽप्युक्तः। अनेनान्ये मत्सेवका एवेति न तेऽपि मत्समाः। तेनान्यान् समत्वेनाभिप्रेत्य यद्भगवतोक्तम्, तदपि निवारितं ज्ञातव्यम्॥ ३४॥ एवमसमपदं व्याख्याय, 'राजभ्यो बिभ्यत' इत्यर्धेन यद्भयं निरूपितम्, तदपि तथैवेति व्याचष्टे **सत्य**मिति। रजसो धर्मा राजसा राजानः। ते हि निरन्तरं प्रकृत्यैकस्वभावाः। तेषु विद्यमानेषु न कदाचिदप्यात्मसुखस्फूर्तिः। 'सुखमस्यात्मनो रूपं सर्वेहोपरतिस्तनु'रित्येव विवृतम्। अतः स्वानन्दानुभवे रजस्तमःप्रधानान् गुणान् परित्यज्य, **समुद्रे** मुद्रासहिते, यत्र गुणानां प्रवेशो न भवति, तादृशे **उपलम्भनमात्रे** केवले चिद्रूपे। ज्ञानं हि मायानिवर्तकं भवतीति। **तत्राप्यन्तः** यथा दूरादपि न कोऽपि पश्यति, तथा लीनः सन् आत्मा सूक्ष्मो व्यापको भूत्वा तदात्मकः सन् व्याप्नोतीति च ज्ञापयितुमप्यात्मपदम्। ते त्वकिञ्चित्करा इति **भयादिवे**त्युक्तम्। तत्र हेतुः **उरुक्रमे**ति। यथाश्रुतमग्रे निराकरिष्यते। अनेनात्रापि द्वारकायां आत्मरमणा-

र्थमेव स्थीयत इति गुणरूपेभ्यस्तेभ्यः पलायय समागमनं युक्तमिति समर्थितम्। यदप्युक्तं 'बलवद्भिः कृतद्वेषा'निति, तदपि सत्यमेव। व्याचष्टे नित्यमिति। **कदिन्द्रियाणां** कुत्सितेन्द्रियाणां गणो येषु। सर्वाण्येवेन्द्रियाणि बहिर्मुखानीति। ते हि बलवन्तो भवन्ति अदान्तैरिन्द्रियैः। वस्तुतस्तु दुर्बला एव, इन्द्रियपरवशत्वात्। ते हि दुष्टाः काका इव स्प्रक्ष्यन्तीति तद्दत्तं न ग्राह्यमिति। वैदिकप्रकारेण कदाचित्ते यज्ञं कुर्युरिति, 'न द्विषतोऽन्नमश्नीया'दिति तद्दत्तभागाभजनेऽपि न दोष इति, तदर्थं तैः सह सर्वथैव भवान् कलहं करोति। एतदेव देव्यैः सह नित्यविरोधे निमित्तम्। 'प्रायस्त्यक्तनृपासना'निति व्याचष्टे **त्वत्सेवकैर्नृपपदं विधुतं तमोऽन्धमिति**। त्वत्सेवकैरपि तत्पदं त्यज्यते। ततो ज्ञायते नृपसिंहासनमधममिति। तस्मिन्नुत्कृष्टे तत्प्राप्य पश्चात्त्वत्सेवारसमनुभूय तत्परित्यागो नोपपद्येत। अतो भगवच्चरणसेवातो राज्यमपकृष्टमिति सिद्धम्। ततश्चापकृष्टे भगवान्न तिष्ठतीति युक्तमेव। यत्र भगवद्धर्मा अपि न तिष्ठन्ति, तत्र कथं भगवांस्तिष्ठेत्। यत्र कमलादेर्गन्धोऽपि न सम्भाव्यते, तत्र कमलस्थितिरिव। स्पष्टं तद्गतं दोषमाह **तमोऽन्धमिति**। तत्रोपविष्टोऽन्धो भवतीति। तम इव सद्विरोधी च भवतीति। **प्रायःपदं** लौकिकदृष्ट्या अपेक्षितमिति न निराकृतम् ॥ ३५ ॥ यत्कार्ये कारणदोषमङ्गीकृत्य प्रवृत्तौ दूषणं द्वयं हेतुत्वेनोक्तं 'अस्पष्टवर्त्मनां पुंसामलोकपथमीयुषा'मिति, तदपि सत्यमिति व्याचष्टे **त्वत्पादपद्मेति**। 'सीदन्ती'ति तु फलमग्रे विवेचनीयम्। तव मार्गो न स्पष्ट इत्यास्ताम्। ये त्वच्चरणरजसा जातदेहाः, त्वच्चरणरजोभिलाषिणो वा, त्वामुपासते, तेषामपि वर्त्मास्फुटम्। स्फुटत्वे तु तैः प्रतिबन्धान्न मननं सिध्यति। यथा कालं वञ्चयित्वा भगवान् भक्तान् नेष्यत्यभिप्रेतानेव, तथा तेऽपि गुप्ताश्चरन्तीति त्वदुपासकाः कर्मिणोऽपि गुप्ता भवन्ति। सुतरां चरणोपासकाः ज्ञानिनः, सुतरामपि पादपद्मोपासका भक्ताः। तत्रापि भक्तिरसाभिज्ञाः मकरन्दनिषेवकाः तं रसमन्यो ग्रहीष्यतीति। अतो बहिर्विसदृशाचरणात्तेषामपि मार्गो न स्फुटः। अयं मार्ग एवैतादृश इति अस्पष्टवर्त्मत्वं न दोषाय, अपि तु गुणायैव। 'स्वे स्वेऽधिकारे या निष्ठा स गुणः परिकीर्तितः। विपर्ययस्तु दोषः स्यादुभयोरेष निश्चय' इति वाक्यात्। ननु तथापि लोके प्रसिद्धमेतद्दूषणमिति चेत्, तत्राह **नृपशुभिर्ननु दुर्विभाव्यमिति**। युक्तमेवैतत्। नहि सर्वैरुत्कृष्टो मार्गः ज्ञेयो भवति। तथा सति साधारणः स्यात्। विशिष्टास्त्वत्रापि जानन्त्येव। अन्यथा कथं तत्सेवका भवेयुः। कथं वा तथा कुर्युः। अतो ये नराकाराः पशवः अपुच्छशृङ्गाः, अन्यः सर्वोऽपि व्यवहारः पशुतुल्य एव, तैर्दुर्विभाव्यमेव। **नन्विति** युक्तमित्यर्थे सम्बोधनम्। तेऽपि विवेकिनश्चेत्, अग्रे ज्ञास्यन्तीति। प्रथमं दुर्विभाव्यत्वं पूर्वपक्षोऽपि। 'अलोकपथमीयुषा'मिति लोकवैलक्षण्यमपि दूषणं लोके प्रसिद्धं तत्परिहरति **यस्मादलौकिकमिवेति**। भगवानलौकिकः भगवद्धर्माश्च। अन्यथा भगवतो न किञ्चित्कार्यं स्यात्। भगवन्मार्गस्य वा। संसारस्यान्यथैव सिद्धत्वात्तन्निवारकं त्वलौकिकमेव। किञ्च। लोकेपि साधारणस्येश्वरस्य च कृतौ वैलक्षण्यं प्रतीयते। न च तद्दोषाय भवति। तथा भगवतोऽपि अलौकिकमिव ईहितम्। ननु तथा सति कार्येषु लोकाः सहाया न भविष्यन्तीति चेत्, तत्राह **भूमन्निति**। त्वमेव महान्, किं तुच्छैरित्यर्थः। किञ्च। न सर्वथा अलौकिकम्, किन्त्वतिमूढानामेव तदगम्यम्। अन्यथा भगवतः सेवकाः मार्गपारम्पर्यं च न स्यादित्याशयेनाह **अथो अनु ये भवन्तमिति**। भगवतस्त्वीहितं शास्त्रेषु भाववर्णनाज्ज्ञातुमपि शक्यम्। तदीयानां तु सुतरामेवाभिप्रायो न बुध्यत इति भिन्नप्रक्रमः। तस्मादलौकिकेऽपि बहवः प्रकाराः सन्तीति लोकवत्तदपि प्रसिद्धम्। तस्माद्यावन्तो गुणा लौकिके, ततोऽप्यधिका अलौकिके इति नैतद्दूषणम्, किन्तु गुण एवेत्यर्थः। साधनस्यादोषत्वे कार्यस्यान्यथात्वं परिहृतमेव, तथाप्यग्रे परिहरिष्यते ॥३६॥

**श्रीविट्ठलरायात्मजश्रीवल्लभकृतलेखः**

**बभाषे** इत्यत्र। **अतश्चित्तमिति**। सव्रीडेत्यादिकथनाद्भावोद्गिरणेनैव चित्तमत्राकृष्यते। अतोऽन्यथाज्ञात्वाऽन्यथा-वदतीत्येवं चित्तविरुद्धानि वचनानि न भवन्तीत्यर्थः। **नन्वेवमित्यत्र**। अत्र भगवद्वाक्यानि गौण्या वृत्त्या व्याख्यायन्ते। तात्पर्यार्थो दर्पहननम्। शक्योऽर्थः पातीतिक इति विभागः। **त्रिविधमपीति**। कायिकवाचिकमानसिकभेदेन त्रैविध्यम्। चुम्बनाश्लेषनखक्षतदन्तक्षतताडनभेदेन पञ्चविधत्वम्। **तद्वाक्येति**। तादृशवाक्येत्यर्थः। इयमाकाङ्क्षा रुक्मिण्या एव जाता तदा इत्यत्रगत्य व्याख्यानमेवाहेत्यन्वयः। **अतो दोषेति**। विरोधाङ्गीकाराद्बाधितार्थत्वस्वीकाराद्वा प्राप्तं दोषं दोषनिराकरणार्थं प्रवृत्तत्वान्न सम्पादयेत्। **विभूम्न** इत्यत्र। विशिष्टो भूमा बाहुल्यं यस्येत्यर्थः। **प्रथमपक्षे**। यस्माद्धेतोर्बाहुल्यं सर्वतो विगतम्। अन्यत्र बाहुल्यं नास्तीत्यर्थो द्वितीयपक्षे। वैशिष्ट्यं विवृण्वन्ति **सर्वत** इति। द्वितीयपक्षं विवृण्वन्ति **अन्यत्रेति**। 'भूमा सम्प्रसादा'दित्यधिकरणे श्रुत्युक्तमेव भूमपदं भगवद्वाचकमुक्तम्, अन्यत्र तु बाहुल्यार्थकमपि भवतीति ज्ञेयम्। नन्वस्या 'अपि अर्धो वा एष आत्मन' इति वाक्याद्भगवदानन्दत्वमेव, अतः 'क्व स्वे महिम्नी'ति कथमुपपद्यते इत्यत आहुः **इयं चेति**। एतद्वाक्यवक्त्री सृष्टिनिरूपिका आनन्दशक्तिरूपा मायेत्यर्थः। नन्वेवं सत्येतस्या मुख्यलक्ष्मीत्वं बाधितं भवेदित्यत आहुः **तस्या एवेति**। अस्या मुख्यत्वेप्यवस्थाविशेषकृतदैन्याविर्भावात्तावदंशमेवादाय वाक्यमुक्तवतीति भावः। **सत्यमित्यत्र**। **सूक्ष्म** इति। विरलावयवः सन् व्यापको भूत्वेत्यर्थः। **तदात्मक** इति। गुणात्मकः सन् शेते इति ज्ञापयितुमपि, गुणान् व्याप्नोतीति च ज्ञापयितुमप्यात्मपदमुक्तमित्यर्थः।

## श्रीसुबोधिनी-सारः

सव्रीडेन हासेन रुचिरेण स्निग्धे नापांगेन भगवतो मुखं वीक्षंती पश्यंती पुंसामृषभं श्रेष्ठं हरिमुवाच हे भारत ॥ ३३॥ हे अरविंदविलोचन भगवतो विभूम्नोऽसदृशी नानुरूपेति यद्वै भवानाह ननु निश्चयेन एतदेवमित्थमेव तथाहि त्रयाणां ब्रह्मादीनाम् अधीशो नियन्ता स्वे महिम्नि अभिरतः आप्तकामत्वात् भगवान् भवान्क गुणा एव प्रकृतिरुपादानं यस्याः सा त्रिगुणस्वभावा अज्ञैर्ब्रह्मादिभिः सकामैः त्वमेव सर्वेश्वरी श्रीरिति गृहीतौ पादौ यस्याः सा सर्वोपास्याहं क्वेति महदंतरम् ॥ ३४ ॥ राजभ्यो बिभ्यत इत्युत्तरं वदति । हे उरुक्रम सत्यम् उक्तं गुणेभ्यः शब्दादिभिः भयादिवांतर्हृदये समुद्रे तद्वदगाधे उपलंभनमात्रः चैतन्यघनः शेते निश्चलत्वेनास्ते बलवद्भिः कृतद्वेषानित्युत्तरमाह । कदिंद्रियगणैः कुत्सितैर्बहिर्मुखैरिंद्रियवृत्तिभिः कुत्सित इंद्रियगणो येषामिति वा तैः नित्यं कृतवैरस्त्वमसि प्रायस्त्यक्तनृपासनानिति तदपि युक्तं नृपपदं राज्यस्थानं तमोंधं गाढतमोव्याप्तं तव सेवकैर्भक्तैर्विधुतं त्यक्तम् अतस्त्वयि तदाशा कथं संभाव्यते ॥ ३५ ॥ अस्पष्टवर्त्मनां पुंसामित्यनुवदति । तव पादपद्मयोर्मकरंदं जुषन्त इति तथा तेषां मुनीनां वर्त्म मार्गोऽस्फुटं नृपशुभिरज्ञैर्दुर्विभाव्यमवितर्क्यमचिरयं नन्वेव यस्माद्धे तोर्ये भवंतं त्वामनुवर्त्तंते तेषामपीहितं चेष्टितमलौकिकमिव लोकातीतमिव प्रतीयतेऽथो ईश्वरस्य तवेहितमलौकिकमिति किं वक्तव्यं हे भूमन् ॥३६॥

## गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

'ब्रह्मादिसेव्यलक्ष्म्यवतारत्वेपि रुक्मिण्या भगवत्सेवापरत्वमेवेत्यत्र विश्वासस्त्वया कार्यः, महत्कुलोत्पन्नत्वात्' इति सूचयन् सम्बोधयति—भारतेति । सव्रीडो यो हासः तेन रुचिरो यः स्निग्धः स्नेहयुक्तोऽपाङ्गः कटाक्षस्तेन भगवतो मुखं वीक्षन्ती विशेषेण निमेषपरिहारेण ईक्षमाणा रुक्मिणी पुंसामृषभं पुरुषोत्तमं श्रीकृष्णं प्रति बभाषे तस्य स्वनिन्दापराणि यानि वचनानि तानि तदुत्कर्षपरतया व्याख्यातवतीत्यर्थ ॥ ३३ ॥ तत्प्रतिभाषणमेवाह—नन्विति । 'तिष्ठतु तावदसाम्यं गुणान्तरैः, लोचनसौन्दर्यमात्रेणापि त्वं स्वतुल्यरहित' इत्याशयेन सम्बोधयति—अरविन्दलोचन इति । विभूम्नो व्यापकस्य भगवत ऐश्वर्यादिगुणपरिपूर्णस्य भवतोऽहमसदृशी असमानेति यद्भवानाह तदेतद्भवद्वचनमेव वै यथार्थमेवेत्यर्थः । तत्रासमत्वं हीनत्वेनोत्तमत्वेन वा द्विविधम् । 'तत्रोत्तमत्वेनैव तवासमत्वं शास्त्रे प्रसिद्धमेव' इति सूचयति—नन्विति । असमत्वमेवोपपादयति—क्वेति । स्वमहिम्नि निजानन्दस्वरूपे अभिरतो भगवान् वैराग्यादिगुणपूर्णः त्रयाणां रजःसत्त्वतमसां गुणानामधीशः नियन्ता भवान् क्व ? गुणप्रकृतिः गुणकार्यविषयाविष्टचित्ताहं च क्व ? महद्वैषम्यमित्यर्थः । 'ननु त्वमप्यधीश्वर्येव, ब्रह्मादिभिरुपास्यमानत्वात्तदभिमतफलप्रदत्वाच्च' इत्याशङ्क्याह—अज्ञगृहीतपादेति । अज्ञैरेव गृहीतौ पादौ यस्याः सा । विवेकिभिस्तु त्वमेवाराध्य इति भावः ॥ ३४ ॥ यदुक्तं 'राजभ्यो बिभ्यतः सुभ्रु समुद्रं शरणं गतान्' इति तत्राह—सत्यमिति । 'पादविन्यासैस्त्रिलोकीं सङ्गृह्णतस्तव कथं राजभ्यो भयं स्यात्' इति सूचयन्ती सम्बोधयति—उरुक्रमेति । गुणाः गुणकार्यभूताः शब्दादय एव राजन्त इति राजानस्तेभ्यो भयादिव समुद्रे समुद्र इवागाधेऽन्तःकरणे उपलम्भनमात्रः चैतन्यघन आत्मा भवान् शेते निश्चलतया तिष्ठतीत्यपि सत्यमेवेत्यन्वयः । 'निर्लेपत्वाद्वस्तुतो भयं नास्त्येव' इति सूचयन्त्याह—इवेति । 'बलवद्भिः कृतद्वेषान्' इति यदुक्तं तदपि सत्यमेवेत्याह—नित्यमिति । कदिन्द्रियगणैः कुत्सितो विषयोन्मुख इन्द्रियगणो येषां तैस्त्वं नित्यं कृतविग्रहः, परस्परसेव्यसेवकभावादर्शनात् । यदुक्तं 'त्यक्तनृपासनान्' इति तदपि युक्तमेवेत्याह—त्वत्सेवकैरिति । नृपाणां पदमासनं त्वत्सेवकैरपि प्रियव्रतादिभिस्त्यक्तं त्वया त्यक्तमिति पुनः किंवक्तव्यमित्याशयः । अविवेकबहुलत्वादिति तत्र हेतुं सूचयन्ती विशिनष्टि—अन्धं गाढं तमः अज्ञानमिति ॥ ३५ ॥ 'अस्पष्टवर्त्मनां पुंसामलोकपथमीयुषाम्' इति यदुक्तं तदपि तथैवेत्याह—त्वत्पादेति । यस्मात् ये भवन्तमनुवर्तन्ते सेवन्ते तेषां तव पादपद्मयोर्यो मकरन्दः परमानन्दात्मको रसविशेषः तज्जुषां तं सेवमानानां तदनुभवं कुर्वतां मुनीनां मननशीलानां विवेकिनामेव तावद्वर्त्म मार्गः अस्फुटं ईहितं चेष्टितं चालौकिकमिव । अत एतदुभयमपि नृपशुभिः पशुतुल्यैरविवेकिभिर्ननु दुर्विभाव्यं अवितर्क्यम् । नन्वित्यवधारणे । अथो तस्मात् हे भूमन् ! तवेश्वरस्य सत्मास्फुटमीहितं चालौकिकं दुर्विभाव्यं च भवतीति किं वक्तव्यमिति शेषेणान्वयः ॥ ३६ ॥

## अन्वितार्थप्रकाशिका

बभाष इति ॥ हे भारत ! सव्रीडो यो हासः तेन रुचिरो यः स्निग्धः स्नेहयुक्तोऽपाङ्गः कटाक्षस्तेन भगवतो मुखं वीक्षन्ती । शता आर्षः । रुक्मिणी पुंसामृषभं पुरुषोत्तमं श्रीकृष्णं प्रति बभाषे ॥ ३३ ॥ असाम्यं भूपतिभ्यो भीः दुर्गस्याश्रयणं ततः ॥ प्रबलैः कलहो राज्याभावश्चास्पष्टवर्त्मता ॥ अलौकिकाचारता च योषितामवसादनम् ॥ निष्किञ्चनत्वं तत्प्रीतिराढ्यानादरणीयता ॥ अनौचित्यं विवाहस्य निर्गुणत्वं वृथा स्तुतिः ॥ औदासीन्यमकामत्वं स्वदोषान् षोडशासतः ॥ अज्ञत्वादीर्घदर्शितवे भैष्म्या राज्ञां बहून् गुणान् ॥ कृष्णनर्मोदितान् भैष्मी न्यषेधत्तद्गुणस्तवैः ॥ तत्र असमानित्युक्तं तत्राह—नन्विति ॥ हे अरविन्दविलोचन ! विभूम्नोऽनन्तगुणपूर्णस्य भगवतः भवतोऽहमसदृशी असमानेति यद् भवानाह तदेतद् भवद्वचनमेवं वै यथार्थमेव । यतः स्वे असाधारणे महिम्नि निजानन्दस्वरूपेऽभिरतो भगवान् त्रयाणां गुणानां ब्रह्मादीनां वा अधीशः नियन्ता भवान्

क अज्ञैः सकामैरेव गृहीतौ पादौ यस्याः सा गुणा एव प्रकृतिः स्वरूपं यस्याः साऽहं च क महद्वैषम्यमिति ॥ ३४ ॥ राजभ्यो बिभ्यत इति इत्यत्र बलवद्भिः कृतद्वेषानित्यत्र प्रायस्त्यक्तनृपासनानित्यत्र चाह—सत्यमिति ॥ हे उरुक्रम ! गुणाः गुणकार्यभूताः शब्दादय एव राजन्त इति राजानस्तेभ्यो भक्तानां भयमेव तव भयं तस्माद् भयादिव समुद्रे समुद्र इवागाधे भक्तान्तःकरणे उपलम्भनमात्रः चैतन्यघन आत्मा भवान् शेते निश्चलतया तिष्ठतीत्यपि सत्यम् । कुतः कुत्सितैः बहिर्मुखैरिन्द्रियाणां गणैरदान्तैः । वृत्त्यभिप्रायेण बहुत्वम् । सह त्वं नित्यं कृतविग्रहोऽसि । अन्धं गाढं तमः अज्ञानहेतुः नृपाणां पदमासनं त्वत्सेवकैरपि प्रियव्रतादिभिस्त्यक्तं त्वया त्यक्तमिति पुनः किं वक्तव्यम् ॥ ३५ ॥ अस्पष्टवर्त्मनां पुंसामित्यत्राह—त्वत्पादेति ॥ यस्मात् ये भवन्तमनुवर्तन्ते सेवन्ते तेषां तव पादपद्मयोर्यो मकरन्दः परमानन्दात्मको रसविशेषः तज्जुषां तं सेवमानानां तदनुभवं कुर्वतां मुनीनामेव तावद्वर्त्म मार्गः अस्फुटम् ईहितं चेष्टितं चालौकिकमिव अत एतदुभयमपि नृपशुभिः पशुतुल्यैरविवेकिभिर्ननु दुर्विभाव्यम् अवितर्क्यम् । नन्वित्यवधारणे । अथो तस्मात् हे भूमन् ! तवेश्वरस्य वर्त्माऽस्फुटमीहितं चालौकिकं दुर्विभाव्यं च भवतीति किं वक्तव्यमिति शेषः ॥ ३६ ॥

### श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्

सव्रीडेन हासेन रुचिरेण स्निग्धेन चापाङ्गेन भगवन्मुखं वीक्षन्ती सती पुंसां मध्ये ऋषभं श्रेष्ठं हरिं बभाषे अत्रासमत्वं राजभ्यो भयं दुर्गाश्रयणं बलवद्द्वेषः अराजत्वं ॥ अस्पष्टाचारवत्त्वं अलौकिकाचारत्वं योषिदवसादः निष्किंचनत्वं निष्किंचनप्रियत्वं आढ्याभजनीयत्वं । विवाहानौचित्यं गुणहीनता । मुधा श्लाघित्वं औदासीन्यं अकामुकत्वं चेति षोडशस्वदोषा अज्ञत्वादीर्घदर्शित्वरूपौ द्वौ भैष्मी दोषौ राज्ञां गुणाश्चैतत् सर्वं भगवता यदुक्तं तत्र हरिर्दोषपराणि यानि वाक्यानि तानि सर्वोत्कर्षपरतया व्याचक्षाणा प्रतिवक्ति ॥ ३३ ॥ तत्र कस्मान्नो वव्रुषेऽसमानिति यदुक्तं तदुत्तरमाह नन्विति ॥ हे अरविंदलोचन पद्मनेत्र भगवतः भगं नानाविधमैश्वर्यषट्कं विद्यतेऽस्य तस्य । अत एव विभूम्नः सर्वोत्कृष्टस्वरूपस्वभावादिभिर्महामुक्तेभ्योप्यतिमहत्तमस्य तव असदृशी असमानात्वमिति यद्भवान् ॥ मामाह एतदेवमेव वै निश्चितमस्ति नात्र संशयः तथाहि स्वे स्वकीयेक्षराक्षरपुरुषोत्कृष्टे परमानंदमये महिम्नि अभिरतः सदासक्तः अधीशः त्रयाणां ब्रह्मादीनां संकर्षणादीनां च कालमायापुरुषाणां च अचेतनबद्धचेतनमुक्तानां चैवमनेकविधत्रिकाणामधीशो नियामकः अतो भगवानचित्या संख्येश्वर्यसंपन्नस्त्वं अज्ञैर्विषयासक्तैरबुधैर्गृहीतौ न तौ पादौ यस्याः सा गुणः स्वभक्तेभ्यो धनधान्यादिसमृद्धिप्रदायकत्वेतद्रूपा प्रकृतिः स्वभावो यस्याः साअहं लक्ष्मीः का अतस्त्वया सह ममात्यसमत्वमित्यर्थः ॥ ३४ ॥ राजभ्यो बिभ्यतः सुभ्रु समुद्रं शरणं गतानिति यत् ॥ कथितं तत्राह सत्यमिति हे उरुक्रम उपलंभनमात्रः चैतन्यघनमूर्त्तिः आत्मा सर्वांतर्यामि परमात्मा भवान् गुणेभ्यो रजस्तमो गुणोत्पन्न कामक्रोधलोभमानेर्ष्यादिभ्यः भयादिव समुद्रे तद्वदगाधे । अंतर्हृदये शेते योगिजनानां शिक्षार्थं स्वांतर्हृदये प्रतिलोमदृष्ट्यावर्त्तमान इत्यर्थः ॥ अनया रीत्या भयात्समुद्रशरणगमनं सत्यं बलवद्भिः कृतद्वेषानिति यदुक्तं तस्यापि सत्यत्वमाह नित्यमिति ॥ कदिंद्रियगणैः कुत्सितः ॥ प्राकृतविषया सक्त इंद्रियगणो येषां तैर्जनैः ॥ साकं कृतविग्रहस्त्वमसि ॥ तेषां उरे वर्त्तमान इत्यर्थः त्यक्तनृपासनानिति यदुक्तं तदपि सत्यमित्याह त्वत्सेवकैरिति त्वत्सेवकैरपि नृपाणां पदं राज्यासनं अंधं निविडं तमोज्ञानरूपं ॥ ज्ञात्वा विधुं तं त्यक्तं । तर्हि त्वया तस्य त्यजने किमाश्चर्यमित्यर्थः ॥३५॥ अस्पष्टवर्त्मनां पुंसामलोकपथमीयुषामित्यनेन अस्पष्टाचारत्वं अलौकिकाचारत्वं यत्कथितं तथैव तत्सत्यमित्याह त्वत्पादेति । त्वच्चरणकमलसुगंधं सेवमानानां मुनीनां वर्त्ममार्गः अस्फुटं अस्फुटतया बोध्यं नास्ति केषामिति चेत्तत्राह नृपशुभिरिति । नृपशुभिर्भागवतधर्महीनैर्मनुष्याकारैः । पशुभिः तव भक्तमुनीनां वर्त्मदुर्विभाव्यमतर्क्यं ननु निश्चितं तर्हि तेषां तव वर्त्मास्फुटं । तत्र किमु वक्तव्यमिति भावः । यस्माच्चे भवन्तमनुसरन्ति तेषामपीहितमलौकिकमिव भवति । अतो तर्हि ईश्वरस्य तवेहितमलौकिकं स्यात्तत्र किमु वक्तव्यमित्यर्थः । आस्थिताः पदवीसुभ्रुप्रायः सीदन्ति योषित इत्यस्योत्तरमितः । पंचमश्लोके यद्वांछया नृपशिखेति वक्ष्यतीति बोध्यं ॥ ३६ ॥

### भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

बभाष इति । हे भारत, सव्रीडहासेन रुचिरः स्निग्धो योऽपाङ्गस्तेन, भगवन्मुखं, वीक्षन्ती वीक्षमाणा रुक्मिणी, पुंसां, ऋषभं पुरुषोत्तममित्यर्थः । बभाषे उवाच ॥ ३३ ॥

असमत्वं राजभीतिर्दुर्गाश्रयणमेव च । बलवद्द्वेषराजत्वालौकिकाचारसंश्रयाः ॥ १ ॥
अलौकिकाध्वगमनं योषितामवसादिता । निष्किंचनत्वं निष्किंचिज्जनसंप्रियता तथा ॥ २ ॥
आढ्यैश्चाभजनीयत्वमनौचित्यं विवाहके । गुणे रहितता भिक्षुश्लाघितत्वमुदासिता ॥ ३ ॥
अकामुकत्वमित्येते स्वदोषाः षोडशोदिताः । अदीर्घदर्शितामौढ्ये भैष्म्यामुक्ते यथायथम् ॥ ४ ॥
कृष्णनर्मोदितान् भैष्मी गुणान् राज्ञां बहूनपि । न्यषेधद्गुर्वद्दिव्यगुणसंस्तवनैर्मुदा ॥ ५ ॥

भगवतः स्वनिन्दापराणीव यानि वचनानि तानि सर्वोत्कर्षपरतया व्याचक्षाणा प्रतिभाषते। तत्र यदुक्तं 'कस्मान्नो चवृषेऽसमान्' इति तत्रासाम्यं सत्यमेवेत्याह। नन्वेवमेतदिति। हे अरविन्दविलोचन कमलनयन, भगं नानाविधमैश्वर्यषट्कं विद्यतेऽस्येति भगवांस्तस्य, विभूम्नः स्वरूपस्वभावादिभिरविच्छिन्नस्य तव, स्वरूपस्वभावादिभिर्महत्तमस्य तवेति वा। असदृशी असमाना, इति भवान् मां यत् आह, एतत्, एवं एव। ननु इति तथाहीत्यर्थेऽत्राव्ययम्। स्वे स्वकीये, महिम्नि क्षराक्षरपुरुषोत्कृष्टपरमानन्दमये स्वासाधारणे महिमनीत्यर्थः। अभिरतः देशकालाद्यविच्छेदेन सदा वर्त्तमानः, त्र्यधीशः त्रिलोकनायकः, यद्वा त्रयाणां ब्रह्मविष्णुमहेशानां वा, संकर्षणप्रद्युम्नानिरुद्धानां वा, कालमायापुरुषाणां वा, अचेतनबद्धचेतनानामेवमनेकविधत्रिकाणामधीशो नियामकः, अतः भगवान् षाड्गुण्यपूर्णः, अचिन्त्यानन्तैश्वर्यसंपन्नस्त्वमित्यर्थः। क। ननु त्वमपि स्वतन्त्रा ब्रह्मादिभिरुपास्यमाना तदभिमतफलप्रदा चेति चेन्न। गुणप्रकृतिः त्वद्गुणानुवर्त्तिस्वभावात्स्वच्छन्दानुवर्त्तिनी, त्वत्परतन्त्रा त्रिगुणात्मिका चेत्यर्थः। अज्ञैर्विषयासक्तैर्गृहीतौ प्रणतौ पादौ यस्याः सा, अहं क। वै एतत् सत्यमेव। अतः त्वया सह ममातीवासमानत्वमिति परमार्थमेव त्वद्वच इति भावः॥ ३४॥ यदुक्तं 'राजभ्यो बिभ्यतः सुभ्रूः समुद्रं शरणं गतान्' इति तत्राह। सत्यमिति। उरवो विपुलाः त्रिलोकीसंग्राहकाः क्रमाः पादविन्यासा यस्य तत्संबोधने हे उरुक्रम, पादक्रमैरेव त्रिलोकीं संगृह्णतस्तव कथं राजभ्यो भयं, तथापि भयादिवेतीवपदमुपन्यस्य तत् साध्यते। गुणेभ्यः सर्वपराभवकरणशीलत्वोपेतेभ्यो राजोपमितेभ्यः सत्त्वादिगुणेभ्यः, भयात् इव, अन्तरन्तःकरणे समुद्रे, अन्तःकरणस्य समुद्रवदगाधत्वात्तत्तुल्ये हृदये इत्यर्थः। शेते भवानास्ते। कथंभूतस्तत्र त्वं शेषे इत्यत्राह। उपलम्भनमात्रश्चैतन्यघनः, आत्माऽन्तरात्मा, एवं राजभ्यो भयप्रकारो दुर्गाश्रयणं चेति द्वयमुक्तम्। एवं द्वयोः सत्यतां प्रतिपाद्य 'बलवद्भिः कृतद्वेषान्' इति यदुक्तं तस्य सत्यतामाह। त्वं नित्यं कत् कुत्सितैः जनमनसः प्राकृतविषयप्रवणविधानतारूपबलवत्त्वादसमीचीनैरिन्द्रियगणैः, कृतः विग्रहो द्वेषोऽप्रीतिर्येन स एवंभूतः, असि। यदुक्तं 'त्यक्तनृपासनान्' इति, तस्य सत्यतामाह। नृपपदं राज्यासनं, अन्धं गाढं, तमः तमः शब्दोऽत्र नरकपर्यायः। नरकावहमित्यर्थः। हेतुगर्भमिदम्। त्वत्वात्, त्वत्सेवकैः विधुतं त्यक्तं, तर्हि त्वत्कृते तत्यागे किमाश्चर्यमिति भावः। एवं 'राजभ्यो बिभ्यत' इत्यादिकं यत्त्वयोक्तं, तत् सत्यम्। मदुक्तरीत्या सत्यमेवेत्यर्थः॥ ३५॥ 'अस्पष्टवर्त्मनां पुंसाम्' इति यदुक्तं तस्यापि सत्यतामाह। त्वदिति। तव पादपद्मयोश्चरणकमलयोर्यो मकरन्दोऽनुभवरसात्मकः पुष्परसस्तं जुषन्ते सेवन्ते इति तेषां मुनीनां अपि, तव वर्त्म याथात्म्यं यदा अस्फुटं, तदा नृपशुभिः नराकारत्वेऽपि पशुतुल्यानामित्यर्थः। दुर्विभाव्यं दुःखेनापि चिन्तयितुमशक्यं, न। नु अपि तु अशक्यमेवेत्यर्थः। अतस्तवास्पष्टवर्त्मत्वमपि सत्यमेवेति भावः। 'अलोकपथमीयुषाम्' इति यदुक्तं तदपि सत्यमित्याह। यस्माद्धेतोः, ये भवन्तं त्वां अनु, वर्त्तन्ते तेषामपि, ईहितं चेष्टितं, अलौकिकं इव। इवात्रावधारणे। अथो अतः, भूम्नः ईश्वरस्य, तव ईहितं अलौकिकं, अत्र किमु वक्तव्यमिति शेषः॥ ३६॥

## कृष्णप्रिया

देवी जी के हृदय में स्नेह उमड़ पड़ा; पुनः लज्जामय मन्द हास्य, स्नेह पूर्ण सुधास्रावी चितवन एवं अनुराग से करुणासिंधु भगवान् श्रीकृष्णचन्द्र का मुखकमल अवलोकन करती देवी देवाधिदेव का निवेदन कर रही हैं॥ ३३॥ श्रीरुक्मिणी जी ने कहा—हे अरविन्द लोचन ? आपने सत्य ही कहा कि मैत्री एवं व्याह समकक्ष में होना चाहिये। आपकी समानता मैं कैसे कर सकती हूँ ? सबसे प्रथम आप ऐश्वर्य यशः आदि षड्गुण सम्पन्न पूर्ण ब्रह्म भगवान् हैं। पुनः आप निजानन्द परिपूर्ण पुरुषोत्तम हैं। आप त्रिगुणीत, तीनों गुणों के स्वामी एवं विधि हरिहर आदि देवताओं से सदा सेवित परब्रह्म हैं। और हे नाथ मैं त्रिगुणात्मिका प्रकृतिरूपा एवं अज्ञजन ही मेरे चरणों को पकड़ते हैं, जो केवल अनन्त कामनाओं से भरे हुए हैं। प्रियतम ! प्रकृति एवं पुरुष का साम्य कैसे हो सकता है॥ ३४॥ हे नाथ ! आपने यह कहा कि राजाओं के भय से मैं समुद्र के भीतर रहा हूँ। यह वास्तविक कथन है—लेकिन रहस्य यह है कि जरासन्धादि भूतल के छोटे-छोटे राजाओं के भय से नहीं। लेकिन राजा शब्द का रहस्य एवं अर्थ यह है कि सत्वादि तीन गुण ही राजा हैं। वे ही सबके नियामक हैं सर्व देवगण भी इन तीनों के आधीन मालूम पड़ते हैं। आप तीनों के आधीन नहीं हैं लेकिन व्यवहार ऐसा बताते हैं। आप निरंतर निजानंद समुद्र में ही रहते हैं। नाथ ! आपका तो निरंतर दुष्ट इन्द्रियों के समूह से संघर्ष चलता ही है। भगवन् ! आपके श्रीचरणों के सेवक नृपतियों ने राजपद को अन्धः तमः समझकर दूरतक छोड़ दिया है पुनः आपके लिये तो कहना ही क्या ?॥ ३५॥ प्रियतम ! आपने कहा कि हमारा मार्ग स्पष्ट नहीं है, वह नयी बात नहीं है—आपके चरणकमल चञ्चरीक एवं आपके पदपङ्कजों के मकरन्द रस-पान करने वाले भक्तजनों का मार्ग भी अस्पष्ट रहता है और संसार सुखरत विषयी जीव उस दिव्य पथ की कल्पना भी नहीं कर पाता है। श्रीरुक्मिणीजी ने आगे बढ़कर कहा कि स्वामिन् ! आपके प्रपत्ति पथ पर चलने वाले आपके भक्तों का सामर्थ्य एवं व्यवहार भी दुर्ज्ञेय ही रहा है एवं अलौकिक चेष्टायें रहती हैं फिर आपके विषय में क्या कहना ?॥ ३६॥

निष्किंचनो ननु भवान् न यतोऽस्ति किंचिद् यस्मै बलिं बलिभुजोऽपि हरन्त्यजाद्याः ।
न त्वा विदन्त्यसुतृपोऽन्त[1]कमाढ्यतान्धाः [2]प्रेष्ठो भवान् बलिभुजामपि तेऽपि तुभ्यम् ॥ ३७ ॥
त्वं वै समस्तपुरुषार्थमयः फलात्मा यद्वाञ्छया सुमतयो विसृजन्ति [3]कृत्यम् ।
तेषां विभो समुचितो[4] भवतः [5]समाजः पुंसः स्त्रियाश्च रतयोः सुखदुःखिनोर्न ॥ ३८ ॥
त्वं न्यस्तदण्डमुनिभिर्गदितानुभाव[6] आत्माऽऽत्मदश्च जगतामिति मे वृतोऽसि ।
[7]हित्वा भवद्भ्रुव [8]उदीरितकालवेग[9]ध्वस्ताशिषोऽब्जभवनाकपतीन् कुतोऽन्ये ॥ ३९ ॥
[10]जाड्यं वचस्तव गदाग्रज [11]यश्च भूपान् विद्राव्य शार्ङ्गनिनदेन जहर्थ मा त्वम् ।
सिंहो यथा स्वबलिमीश[12] पशून् स्वभागं तेभ्यो भयाद् यदुदधिं शरणं प्रपन्नः ॥ ४० ॥

**अन्वयः—**भगवन् ! ननु, भवान्, निष्किञ्चनः, न, यतः, किञ्चित्, बलिभुजः, अजाद्याः, अपि, यस्मै, बलिम्, हरन्ति, आढ्यतान्धाः, असुतृपः, अन्तकम्, त्वाम्, विदन्ति, बलिभुजाम्, अपि, भवान्, प्रेष्ठः, ते, अपि, तुभ्यम्, प्रेष्ठाः ॥ ३७ ॥ सुमतयः, यद्वाञ्छया, कृत्स्नम्, विसृजन्ति, समस्तपुरुषार्थमयः, त्वम्, वै, फलात्माः, विभो ! भवतः, समाजः, तेषाम्, समुचितः, पुंसः, च, स्त्रियाः, रतयोः, अतः, सुखदुःखिनः, समाजः, न, स्यात् ॥ ३८ ॥ हे नाथ ! भवद्भ्रुवः, उदीरितकालवेगध्वस्ताशिषः, अब्जभवनाकपतीन्, हित्वा, त्वम्, न्यस्तदण्डमुनिभिः, गदितानुभावः, जगताम्, आत्मा, च, आत्मदः, इति, मे, वृतः, असि, अन्ये, कुतः, चिन्तयामि ॥ ३९ ॥ हे गदाग्रज ! यः, शार्ङ्गनिनदेन, भूपान्, विद्राव्य, त्वम्, माम्, जहर्थ, इति, तव, यद्, वचः, तत्, जाड्यम्, ईश ! सिंहः, यथा, पशून्, विद्राव्य, स्वभागम्, बलिम्, यथा, हरति, तथा, जहर्थ । तेभ्यः, भयात्, यद्, उदधिम्, शरणम्, प्रपन्नः, इतिवाक्यम्, तु, जाड्यम् ॥ ४० ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

"निष्किंचना वयं शश्वन्निष्किञ्चनजनप्रियाः । तस्मात्प्रायेण न ह्याढ्या मां भजन्ति सुमध्यमे" इत्येतच्छ्लोकोक्तं दोषत्रयं परिहरति । निष्किंचन इति । दरिद्रतालक्षणं निष्किंचनत्वं एतत्तु तव न घटत इत्याह । यस्मा इति । अन्यतो बलिभुजः पूज्या अपि ब्रह्मादयो यस्मै भवते बलिं हरन्ति तस्य सर्वेश्वरस्य भवतो दरिद्रता न घटत इत्यर्थः । निष्किंचनजनप्रिया इत्यत्र तत्पुरुषेण बहुव्रीहिणा वा निंदा स्यादिति स्वयमप्युभयथा स्तौति । प्रेष्ठो भवानिति । बलिभुजां ब्रह्मादीनां लोकेश्वराणां त्वं प्रेष्ठस्तेऽपि तुभ्यं तवेति । "तस्मात्प्रायेण न ह्याढ्या मां भजन्ति" इति तस्योत्तरम् । न त्वां विदन्तीति आढ्यतयाऽन्धास्त्वामन्तकं न विदन्ति । अतस्ते असुतृपः असूनेव तर्पयन्ति न त्वां भजन्तीत्यर्थः ॥ ३७ ॥ बलिभुजामपि भवान्प्रेष्ठ इत्यत्र हेतुं वदन्ती 'ययोरेव समं वित्तम्' इत्यनेनोक्तमनौचित्यं परिहरति । त्वं वा इति । फलात्मा परमानन्दरूपः । 'एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति' इति श्रुतेः । समाजः सेव्यसेवकलक्षणसंबंधो न तु पुंसः स्त्रियाश्च मिथो रतयोः । अत एव तत्कृतसुखदुःखिनोः । तदाकुलयोरित्यर्थः ॥ ३८ ॥ 'भिक्षुभिः श्लाघिता मुधा' इत्यस्य परिहारः त्वमिति भिक्षुपदव्याख्यानं न्यस्तदंडैर्मुनिभिरिति । मुधेत्यस्य परिहारः आत्मेति । यदर्थं सर्वं प्रियं भवति तस्य जगतामात्मनस्तव वरणं न वृथेत्यर्थः । किंच आत्मद इति । "वैदर्भ्येतदविज्ञाय त्वयाऽदीर्घसमीक्षया" इति स्वस्मिन्नुक्तं दोषद्वयं परिहरति । इतीति । इति ज्ञात्वैव मे मया वृतोऽसीत्यज्ञानपरिहारः । हित्वेत्यदीर्घसमीक्षापरिहारः । भवतो भ्रुवः सकाशादुदीरितो यः कालस्तस्य वेगरसेन ध्वस्ता आशिषो येषां तान्ब्रह्मादीनपि विहाय । कुतोऽन्ये वराका इत्यर्थः ॥ ३९ ॥ स्वाज्ञानं परिहृत्य पुरुषांतरगुणवर्णनप्रदीप्तकोपसंरंभेण तस्मिन्नेवाज्ञानमापादयति । जाड्यमिति । सिंहो यथा पशून्विद्राव्य स्वबलिं हरति तथा शार्ङ्गधनुर्निनादेनैव जरासंधादीन्विद्राव्य मां स्वभागं श्रियं यस्त्वं हृतवानसि तस्य तव राजभ्यो भयादुदधिं प्रपन्न इति यद्वचो भाषणं तज्जाड्यं मांद्यम् । न घटत इत्यर्थः ॥ ४० ॥

---

१. न्तिक–विज. । २. प्रेष्ठः सतां बलिभुजामपि योऽन्तरास्ते–विज । ३. कृत्स्नम्–श्रीधर. वंशी. जीव. वीर. विज. विश्व. । ४. दितो–विज. । ५. प्रसादः श्रय्यां च यश्च–विज. । ६. हृदि भावितात्मा–प्रा. पा । ७. मु–विज. । ८. दु–विज. । ९. गन्ध–विज. । १०. सत्यं–विज. । ११. यश्च–विज. ; यस्तु–श्रीधर. वंशी. जीव. वीर. विश्व. । १२. माशु–वीर. ।

**श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः**

अन्यतोऽन्येभ्यः। इत्यर्थ इति—न हि मत्कटा क्षापेक्षिब्रह्मादिसेव्यपादमत्सेव्यस्य नैःस्वलक्षणदौर्गत्यं संगच्छत इति भावः। तत्पुरुषेण निष्किचनजनानां प्रिया इत्येवंरूपेण। बहुव्रीहिणा निष्किचनजनाः प्रिया येषां ते तथेत्येवंरूपेण वा। स्वयमपि रुक्मिण्यपि। उभयथा समासद्वयाभिप्रायेण। प्रेष्ठोऽतिप्रियः। इत्यर्थ इति—न हि प्राणतर्पणपराणां त्वद्दृष्टिर्भवतीति भावः। 'निष्किचनाः' इत्यस्य योग्यमर्थं योजयति। निरिति निषेधे। ननु निश्चये। यतो यद्व्यतिरिक्तमन्यत्किञ्चिन्नास्त्यत एव निष्किचनः, नान्यत इत्यर्थ। ननु दरिद्र एव निष्किचनः प्रसिद्धः—सत्यम्, तादृशत्वं तु तव न घटत इत्याह—यस्मा इति। 'तस्मात्प्रायेण' इत्युक्तं सत्यमेवेत्याह—न त्वामिति। अन्तकमिति "वीर्याणि तस्याखिलदेहभाजाम्" इति, 'प्रमत्तमुच्चैरितिकृत्यचिन्तया' इत्यादिप्रामाण्येन, 'न यतोऽस्ति किंचित्' इति न्यायेन च तेषामन्तवरूपं त्वां तद्रूपतया न विदन्ति, स्वशासनकर्तृत्वेनापि नानुसंदधते। यद्वा—अन्ते मरणेऽपि कं स्मरणादिना सुखं यस्मात्तमपि न विदन्ति। ते के—ये आढ्यतमांधा ज्ञानहीना न तु बहिराढ्यमात्राश्च। अत एव भवतापि प्रायेणेत्युक्तम्। यतो यत्र वाऽसुतृपो निजेन्द्रियमात्रभरणतत्परा न त्वन्य इति। 'निष्किचनजन—'इत्यस्य योग्यमर्थं योजयति-बलिभुजामिति। तेषामपि भवानेव प्रेष्ठो न तु बलयो बलिदातारो वा। 'तदस्तु मे नाथ स भूरिभागः' इत्यादिभ्यः। अत एवाढ्या अपि तेन तत्तयान्धाः प्रत्युत निष्किचना एव, विषयभोगोऽपि तत्र रागाभावात्। ननु संपदभावमात्रेणान्ये तदंगब्रह्मचर्यतयाऽपि संभवादत एव त्वां त एव भजन्ति नान्ये, एवं तवापि त एव प्रेष्ठा इति तन्निष्किचनत्वं परमविशिष्टमेवेति। अत्र समासभेदकस्य स्वरविशेषस्यानुसन्धानं वैकल्यादेव ज्ञेयम्। एकवाक्यता चैवम्—निश्चितं भवान् निष्किचनो यदि तर्हि कथं मदुक्तमंगीचकर्थैव-सत्यम्, तत्र न दरिद्रत्वलक्षणेनार्थेन किन्त्वनेनैवेत्याह—नेति। अत एव यस्मा इत्यादि। ये तु त्वां न विंदन्ति ते खल्वाढ्यतान्धा असुतृपश्च, ये तु त्वां विदन्ति ते खल्वतिप्रेष्ठा इत्येतद्योजनापेक्षयैव तदुक्ताक्रमेणोत्तरम्। 'आस्थिताः' इत्यादेस्तूत्तरं संरंभयोग्यत्वात्तत्प्रसंगे देयम्॥ ३७॥ समस्तपुरुषार्था धर्मार्थकाममोक्षास्स्वरूपमस्येति तथा। स्वरूपे मयट्। परमानन्दरूपत्वमाह श्रुतिः—एतस्य परमात्मरूपस्य मात्रामंशमुपजीवन्त्याश्रयन्तीत्यर्थः। अत एव मिथोरतत्वादेव। तत्कृते मिथोरतिकृते सुखदुःखे ययोर्विद्येते तौ तथा तयोः। इत्यर्थ इति—परस्पररतिकृतसुखदुःखक्लिष्टयोस्तव रतिः कदापि न संभवतीति भावः। वै प्रसिद्धौ। समस्ताः पुरुषार्था धर्मादयश्चत्वारस्त्वद्भक्तिभेदाश्च तन्मयस्तत्प्राचुर्यवान्, "सर्वगंधः सर्वरसः" इति "एतं सपत्वाम इत्याचक्षते, एतं सर्वाणि रामाणि अभिसंयन्ति, एष उ एव भामनीः, एष हि सर्वाणि रामाणि नयताम्, एष उ एव भामनीः, एष सर्वेषु वेदेषु भाति" इति "अयमात्मा उपहतपाप्मा" इत्यादिश्रुतेः। अत एव वृहत्साम्नि—"बृहत्वार्थिवं बृहदन्तरीक्षं बृहद्दिवं बृहद्वामं बृहद्भ्यो वामं वामेभ्यो वामम्" इति ब्रह्मणः सर्वात्मत्वं सर्वेभ्योपि मनोहरत्वमुपदिश्यते। यतः फलात्मा "को ह्येवान्तात् कः प्राण्यात् यदेष आकाश आनन्दो न स्यात्" इति, "रसो वै सः, रसं ह्येवायं लब्ध्वा नन्दी भवति" इति, "एतस्मै वा" इत्यादिश्रुतेः। अतो यदित्यादि। कृत्स्नं देहिकं देहवित्ताद्यभिमानं लोकद्वयापेक्षं मोक्षादिकमपि सर्वं विसृजन्ति, अतस्त एवाकिंचनाः, भवानेव तत्प्रेष्ठ इति युक्तमेवेति भावः। एवं पूर्वार्थप्रतिपादनपूर्वकम् 'ययोरात्मसमम्' इत्यादावुत्तरमाह—तेषामिति। विभो हे सर्वेश्वर एवमपि तैः सहैव सम्यगुचितः, भवतो वित्ताद्यपेक्षाराहित्येन तैरेव साम्यात्, संशब्देनान्यैर्भक्तैरप्यौचित्याभासः सूचितः। रतयोरिति भाग्याभाव उक्तः। अत एव सुखदुःखिनोरिति, दुःखप्रतीकारमात्ररूपं सुखं दुःखं च तयोरुचितमिति भावः॥ ३८॥ इत्यर्थ इति—"आत्मनस्तु कामाय सर्वं प्रियं भवति" इति श्रुतेरतिप्रीतेर्मोक्षहेतुत्वाद्वैयर्थ्यं नेति भावः। अन्यदाह—किञ्चेति। वराकाः शोचनीयाः। इत्यर्थ इति—न हि सर्वेश्वरप्रीतिमता प्राकृताः सेव्यन्त इत्याशयः। "वराकः शंकरे पुंसि शोचनीयेऽभिधेयवत्" इति मेदिनी। तत्रैव समुद्रमथनवृत्तं स्मरत्याह—त्वमिति। न्यस्तदण्डेति गर्वादिराहित्यं सूच्यते, तेनांबुभिक्षुतावैशिष्ट्यम्। मुनिभिरित्यात्मारामत्वं, तेन तत्रापि वैशिष्ट्यम्। तैर्गदितोऽनुभावो माहात्म्यं यस्य स इति यथार्थगुणत्वं दर्शितम्। आत्मा सर्वमूलस्वरूपम्। भवद्भ्रुव इति कालस्यापि प्रवर्तकत्वेन कालापरिच्छिन्नत्वं तथा तदीयनिजलोकादेरपि नित्यत्वादिकं तथा ब्रह्माद्याशिषां तद्भ्रूक्षेपकालमात्रस्थायित्वादिकं चोक्तम्। नाकपतय इंद्राद्याः। अब्जभवमपि हित्वा किं पुनर्नाकपतीनित्येवं व्याख्येयमिति ब्रह्मादीनामवज्ञास्पदत्वं दर्शितवती। श्रीशिवस्यानुक्तिस्तु—तत्रावधानाविषयत्वं दर्शयित्वा तादृशत्वभाव एव तदकरणे हेतुं व्यनक्ति। यद्यपि स्वाभाविक एव तस्यास्तस्मिन्ननुरागो न तु विचारापेक्षस्तथापि स्वाभाविकत्वे सति विचारोऽप्यनुषज्जतीति तदंशमालंब्य सिद्धान्तितं, तस्यैव योग्यत्वात्॥ ३९॥ संरंभस्संवेगः। तस्मिन्नेव श्रीकृष्ण एव। इत्यर्थ इति—अनुचितसंभाषणमेव मौढ्यापादकमिति भावः। "पौर्वापर्यमनालोच्य कथनं त्वधियां भवेत्" इत्युक्तेः। तदेवमकस्मान्मानाख्यस्थायिभावोदयरतिस्वज्ञानसमीक्षयोरज्ञानं तस्मिन्नेव व्यंजनया वृत्त्योक्त्वापि पुनः पुरुषांतरगुणवर्णनप्रदीप्तकोपेनाभिधयापि तस्मिन्नज्ञानं संरंभभ्रुकुटिकुटिलकटाक्षं स्पष्टयन्त्याह—जाड्यमिति। जाड्यमयमित्यर्थः। यस्त्वं भूपान्विद्राव्य स्वभागं मां श्रियं जहर्थ, तेभ्यो भयादुदधिं प्रपन्नः शरणं प्राप्तस्त्वमिति यत्तव वचो भाषणं तत्तव जाड्यमज्ञानज्ञापकमित्यर्थः। ननु च पूर्वमकोपतया त्वया 'सत्यं भयादिव' इत्यादिवचः सत्यमेव समाहितमिति चेत्-सत्यम्, तन्ममापि जाड्यमिति ज्ञेयम्॥ ४०॥

**श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी**

निष्किचना इत्यस्य योग्यमर्थं योजयति । निरिति निषेधे ननु निश्चये यतो यद्व्यतिरिक्तमन्यत्किञ्चिन्नास्ति तत एव निष्किञ्चनः नान्यत इत्यर्थः । ननु दरिद्र एव निष्किञ्चनः प्रसिद्धः सत्यं तादृशत्वन्तु तव न घटत इत्याह—यस्मा इति । तस्मात्प्रायेणेत्युक्तं सत्यमेवेत्याह—न न त्वामिति । अन्तकमिति "वीर्याणि तस्याखिलदेहभाजाम्" इति प्रमत्तमुच्चैरितिकृत्यचिन्तयेत्यादिप्रामाण्येन न यतोऽस्ति किञ्चिदिति न्यायेन च तेषाम् अन्तकरूपं त्वां तद्रूपतयापि न विदन्ति स्वशासनकर्तृत्वेनापि नानुसन्दधते यद्वा अन्तेपि मरणेपि कं स्मरणादिना सुखं यस्मात्तमपि न विदन्ति ते के ये आढ्यतमान्धाः ज्ञानहीना ननु बहिराढ्रमात्राश्च अत एव भवतापि प्रायेणेत्युक्तं यतो यत्र वाऽसुतृपः निजेन्द्रियमात्रभरणतत्परो नत्वन्यः इति निष्किञ्चनजनेत्यस्य योग्यमर्थं योजयति प्रेष्ठ इति । बलिभुजामपि तेषां भवानेव प्रेष्ठः ननु बलयो बलिदातारो वा तदस्तु मे नाथ स भूरिभाग इत्यादिभ्यः अत एव आढ्या अपि तेनैवान्धाः प्रत्युत निष्किञ्चना एव विषयभोगेपि तत्र रागाभावात् ननु सम्पद्भावमात्रेणान्ये तुरङ्गब्रह्मचर्यताया अपि सम्भवात् अत एव त्वां त एव भजन्ति नान्ये एवं तवापि त एव प्रेष्ठा इति तन्निष्किञ्चत्वं परमविशिष्टमेवेति अत्र समासभेदकस्य स्वरविशेषस्यानानुसन्धानं वैकल्पादेव ज्ञेयम् एकवाक्यताचैवं निश्चितं भवान् निष्किञ्चनः तर्हि कथं मदुक्तमङ्गीचकर्थेव सत्यं तत्र न दरिद्रत्वलक्षणेनार्थेन किन्त्वनेनैवेत्याह—नेति । अत एव यस्मा इत्यादि ये तु त्वां न विदन्ति ते खल्वाढ्यतान्धाः असुतृपश्च ये तु त्वां विदन्ति ते खल्वतिप्रेष्ठा इत्याह प्रेष्ठ इति एतद्योजनापेक्षयैव तदुक्तातिक्रमेणोत्तरमास्थिता इत्यादेस्तूत्तरं संरम्भयोग्यत्वात् तत्प्रसङ्गे देयम् ॥ ३७ ॥ वै प्रसिद्धौ समस्ताः पुरुषार्था धर्मादयश्चत्वारस्त्वद्भक्तिभेदाश्च तन्मयः तत्प्राचुर्यवान् "सर्वगन्धः सर्वरसः" इत्यादि "एतं सम्पाद्वाम इत्याचक्षते एतं सर्वाणि रामाणि अभिसंयन्ति एष उ एव भामनीः स एष हि सर्वाणि रामाणि नयताम् एष उ एव भामनीः एष सर्वेषु वदेषु भाति ' इत्यादि. "अयमात्मा अपहतपाप्मा" इत्यादिश्रुतेः । अत एव "बृहत्साम्निबृहत्पार्थिवं बृहदन्तरिक्षं बृहद्दिवं बृहद्वामं बृहद्भ्योवामं वामेभ्यो वामम्" इति ब्रह्मणः सर्वात्मत्वं सर्वभ्योऽपि मनोरमत्वमुपदिश्यते यतः फलात्मा "को ह्येवान्यात्कः प्राण्याद्यदेष आकाश आनन्दो न स्यात् इति "रसो वै सः रसं ह्येवायं लब्ध्वानन्दी भवति" इति "एतस्मैवा" इत्यादि श्रुतेः । अतो यदित्यादि कृत्स्नं दैहिकं देहं वित्ताद्यभिमानं लोकद्वयापेक्षा मोक्षादिकमपि सर्वं विसृजन्ति अतस्त एवाकिञ्चनाः भवानेव तत्प्रेष्ठ इति युक्तमेवेति भावः । एवं पूर्वार्थप्रतिपादनपूर्वकं ययोरेवेत्यादावुत्तरमाह—तेषामिति । विभो हे सर्वेश्वर ! एवमपि तैः सहैश्व सम्यगुचितः भवतो वित्ताद्यपेक्षाराहित्येन तैरेव साम्यात् संशब्देनान्यैर्भक्तैरप्यौचित्याभासः सूचितः । रतयोरिति त्यागाभाव उक्तः अत एव सुखदुःखिनोरिति दुःखप्रतीकारमात्ररूपं सुखं दुःखञ्च तयोरुचितमितिभावः ॥ ३८ ॥ तत्रैव समुद्रमथनवृत्तं स्मरन्त्याह—त्वमिति । न्यस्तदण्डेति गर्वादिराहित्यं सूच्यते तेन भिक्षुतावैशिष्ट्यं मुनिभिरित्यात्मारामत्वं तेन तत्रापि वैशिष्ट्यं तैर्गदितः अनुभावो माहात्म्यं यस्य सः इति यथार्थगुणत्वं दर्शितम् । आत्मा सर्वभूतस्वरूपं भवद्भ्रुव इति कालस्याऽपि प्रवर्त्तकत्वेन कालापरिच्छिन्नत्वं तथा तदीयनिजलोकादेरपि नित्यत्वादिकं तथा ब्रह्माद्याशिषां तद्भ्रूक्षेपकालमात्रस्थायित्वादिकञ्चोक्तं नाकपतयः इन्द्राद्याः अब्जभवमपि हित्वा किम्पुनर्नाकपतीनित्येवं व्याख्येयम् इति ब्रह्मादीनामवज्ञास्पदत्वं दर्शितवती अत्र शिवस्यानुक्तिस्तु तत्रावधानाविषयत्वं दर्शयित्वा तादृशत्वभावएव तदकरणे हेतुं व्यनक्ति यद्यपि स्वाभाविक एव तस्यास्तस्मिन्ननुरागः ननु विचारापेक्षः, तथापि स्वाभाविकत्वे सति विचारोप्यनुषज्जतीति तदंशमालम्ब्य सिद्धान्तितं तस्यैव सिद्धान्ते योग्यत्वात् ॥ ३९ ॥ जाड्यं वच इति भावकर्मणोः ष्यत्र् विधानात् भावपक्षे यत्नतः सामानाधिकरण्यनिर्देशयो वचसो जाड्यप्राचुर्यापेक्षया कर्मपक्षे तु स्पष्टमेव तुशब्दो विरोधे हरणे हेतुः स्वभागमिति हे गदाग्रजेति त्वत्कनिष्ठेन गदेनैकेनापि विद्राव्यास्ते भूपहतकाः किमुत त्वयेति भावः यत ईश हे अशेषशक्तियुक्त ॥ ४० ॥

**श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी**

यतो यद्व्यतिरित्तम् । ननु दरिद्र एव निष्किञ्चनः प्रसिद्धः, तत्राह—यस्मा इति । अन्तकमिति पुत्रादिमृत्युदृष्टान्तेनावश्यं भाविमरणानुसन्धानादन्तकतयापि वेदितुं योग्यमिति भावः, यद्वा, अन्ते मरणेऽपि कं स्मरणादिना सुखं यस्मात्तमपि न विदन्ति, यतोऽसुतृपः, यत आढ्यतया अन्धा ज्ञानहीनाः, उक्तन्यायेन सर्वलोकश्रेष्ठत्वान्निरहंकारत्वाद्वा श्रीब्रह्मादय एवाकिञ्चनास्तेषां प्रेयानित्याह—प्रेष्ठ इति । अपिद्वयमुभयत्रापि प्राधान्यं गमयति । यद्वा, बलिभुजामपि किं पुनर्वक्तव्यम्, त्वदर्थं त्यक्ताशेषपरिग्रहाणां निष्किञ्चनानामिति । एवं श्रीब्रह्मादीनामाढ्यत्वेऽप्यान्ध्याभावेनासुतृप्त्वाभावाज्ज्ञानेन त्वद्भजनयोग्यमेवेत्यभिप्रायेण प्रस्ताव-प्रसंगतया तथा सर्वसारतरस्य प्रेष्ठत्वस्य स्तुतिरीत्यान्ते निर्देश्यतया पूर्वोक्तक्रमातिक्रमेणोत्तरं ( १३ श० श्लो० ) 'आस्थिताः' इत्यादेस्त्वग्रे संरम्भेणैव देयत्वेन तदुक्तानुकूलोत्तरं प्रसंगेऽस्मिन्न दत्तमिति ज्ञेयम् । तच्च तैरप्यग्रे व्याख्येयम् । अत्रैवमेकवाक्यता । बलिभुजां पूज्यमप्यहो आढ्यतान्धाः, विदन्ति, तच्च युक्तमेवेत्याह—प्रेष्ठ इति । आढ्यतान्धानां तदप्रियत्वादिति भावः ॥ ३७ ॥ वै प्रसिद्धौ, समस्ताः पुरुषार्था धर्मादयश्चत्वारस्त्वद्भक्त्यादयश्च तन्मयः, यतः फलात्मा कस्यचिदानन्दहेतुत्वेन, कस्यचिच्च साक्षादानन्दस्वरूपत्वेनेत्येवं सर्वेषामेव तेषामानन्दे पर्य्यवसानात्, यद्वा, फलरूपाणां तेषामात्मा च

प्रवर्त्तकः। एवं साध्यत्वं साधनत्वं चोक्तम्, अतएव कृत्स्नं साधनादिकमन्यत् सर्व्वं सुमतयो विवेकिनो विसृजन्ति। यद्वा, पुरुषार्थश्चतुर्वर्गस्तस्य फलं भक्तिः प्रेमा वा, तस्यात्मा च तस्य तव वाञ्छया वाञ्छामात्रेणापि, किं पुनः प्राप्त्येत्यर्थः। कृत्स्नं दैहिकं देहं वित्ताद्यभिमानं लोकद्वयापेक्षां मोक्षादिकमपि सर्वं विसृजन्ति उपेक्षन्ते, अतितुच्छत्वात् प्रायो दुःखप्रदत्वाच्च। अतस्त एवाकिञ्चनाः, तत्प्रेष्ठ एव भवानिति युक्तमेवेति भावः। ययोरेवेत्यादावुत्तरमाह—तेषामिति। विभो! हे सर्व्वव्यापक! हे जगदीशेति वा, तथापि तैः सहैव सम्यगुचितः, भवतोऽपि वित्ताद्यपेक्षाराहित्येन तैरेव साम्यात्। यद्वा, विभो! हे परिपूर्ण! अतो वित्तादिभिर्भवतः सम्बन्धासिद्धेरिति भावः। अत्यागिनामपि विविधकामेन भजतां तत्तत्फलप्रदानादिना कथञ्चित्सम्बन्धो युज्यत इति सं०—शब्दार्थः। रतयोरिति त्यागाभाव उक्तः। अतएव सुखदुःखिनोरिति दुःखप्रतीकारमात्ररूपं सुखं दुःखञ्च तयोरुचितमेवेति भावः। अन्यत्तैर्व्याख्यातम्। यद्वा, वित्तादिभिर्ग्राम्यसुखेऽपि दुःखिनोरेव, तथापि रतयोः, अतस्ताभ्यां सर्वथा नोचित एवेत्यर्थः॥ ३८॥ न्यस्तदण्डैर्मोक्षापेक्षकैः सन्न्यासिभिरपि, किं पुनर्मोक्षोपेक्षकैः श्रीनारदादिभिर्मुनिभिर्गदितो व्यक्तं वर्णितोऽनुभावो माहात्म्यं यस्य सः। अनुभावमेवाह—आत्मा सर्वान्तर्य्यामी ईश्वर आत्मदश्चेति। असीति—वरणस्य स्थैर्य्यं बोधयति, भवद्भ्रुव इति कालस्यापि प्रवर्त्तकत्वेन कालानधीनतया कालापरिच्छिन्नत्वं तथा वैकुण्ठलोकादेरपि नित्यत्वादिकं तथा श्रीब्रह्माद्याशिषां तद्भ्रूक्षेपकालमात्रस्थायित्वादिकञ्चोक्तम्। नाकपतय इन्द्राद्या अब्जभवमपि हित्वा, किं पुनर्नाकपतीनित्येवं व्याख्येयम्। श्रीशिवस्यानुक्तिस्तस्य नाकपत्यन्तर्गतत्वादेवेति ज्ञेयम्॥ ३९॥ तु-शब्दो विरोधे, प्रत्यक्षविरुद्धत्वादित्यर्थः। हरणे हेतुः—स्वभागमिति, अन्यथापकीर्त्तिप्रसक्तिरिति भावः। अस्यान्ते निर्द्देशो लज्जया प्रागवाच्यत्वात्। हे गदाग्रजेति त्वत्कनिष्ठेन पदेनैकेनापि विद्राव्याः, किं पुनस्त्वयेति भावः। यत ईश! हे अशेषशक्तियुक्त॥ ४०॥

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम्

बलिभुजः हविर्भोक्तारः अजाद्याः ब्रह्माद्याः बलिभुजां ब्रह्मादीनां प्रेष्ठं प्रियतमं त्वाम् असुतृपः प्राणतर्पकाः न विदुस्तेऽपि ब्रह्मादयोपि तुभ्यं तव शेषभूता इत्यर्थः॥३७॥ तेषां मुनीनां समाजः तवोचितः स्त्रीपुंसोरतयोः नः समुचितः अजितेन्द्रियाणां जन्तूनां न सुखायेत्यर्थः॥ ३८-४०॥

### श्रीमद्वीरराघवाचार्यकृता भागवतचन्द्रचन्द्रिका

आस्थिताः पदवीमित्यादौ प्रतिभाषिष्यते यद्वाञ्छयेत्यष्टमेन, तावन्निष्किञ्चना इत्यत्र प्रतिभाषते-निष्किञ्चन इति। ननु, हे विभो! त्वं निष्किञ्चन इति सत्यमेव कुतः यतः किञ्चिदप्यनवाप्यं नास्ति यस्य तथाभूतस्त्वं निष्किञ्चन इत्यर्थः। दरिद्रतालक्षणनिष्किञ्चनत्वन्तु तव न घटत इत्याह—यस्मा इति। बलिभुजः बलिं पूजां भुञ्जन्त इति तथा अन्येभ्यः पूजार्हा अपि ब्रह्मादयो यस्मै तुभ्यं बलिं पूजां हरन्त्यर्पयन्ति कुर्वन्तीत्यर्थः। तस्य सर्वेश्वरस्य भवतो दरिद्रता न घटत इत्यर्थः। निष्किञ्चनजनप्रिया इत्यस्योत्तरं प्रेष्ठो भवानित्यादि। निष्किञ्चनजनप्रिया इत्यत्र बहुव्रीहितत्पुरुषान्यतरत् उभावपि वा सर्वथा चेदृश एव भवानित्याह—प्रेष्ठ इति। बलिभुजां पूजार्हाणां नारदादीनामकिञ्चनानामनन्यप्रयोजनानां प्रेष्ठो भवान् तथा तेऽपि बलिभुजोऽपि तुभ्यं तव प्रेष्ठाः तस्मात् प्रायेणेत्यस्योत्तरमाह—न त्वामिति। आढ्यतया अभिजनादिभिराढ्यत्वाभिमानेनान्धाः विवेकशून्याः अन्तकम् अन्तं करोतीति अन्तकरस्तथाविधं त्वा त्वां न विदन्ति न भजन्ते असुतृपः असूनिन्द्रियाण्येव तर्पयन्तीति अन्तकमित्यस्य कालरूपेणायुर्हरन्तमित्याशयः॥ ३७॥ प्रेष्ठ इत्यत्र हेतुं वदन्ती ययोरात्मसमं वित्तमित्यादिनोक्तम् अनौचित्यं परिहरति—त्वं वा इति। समस्तपुरुषार्थस्वरूपः फलात्मा अभीप्सितफलरूपः आत्मा च यद्वा अभीष्टतपःफलरूपः सर्वेषामिष्टतमं हि फलं सुखं त्वन्तु निरवधिकानन्दरूपः चतुर्विधपुरुषार्थनिर्वाहकत्वस्वरूपस्य निरतिशयानन्दरूपस्य च तव सुखलेशसाधनभूतवित्तादिमद्भिस्साम्यं दूरापास्तमेवेति भावः। तर्हि निस्समत्वादेव मम त्वयाऽसमया सह विवाहोऽनुचित एव जात इत्यत आह यद्वाञ्छयेति। यस्मिन् त्वद्दास्ये वाञ्छया कृत्स्नं त्वद्दास्य व्यतिरिक्तं सर्वम्विसृजन्ति त्यजन्ति नेच्छन्तीति यावत् अतएव ते जनाः सुमतयस्तेषां तव च समाजः सङ्गतिरुचित एव न हि तारतम्येपि स्वभावतः शेषशेषिणो; सम्बन्धा नोचितः अतस्त्वद्दास्यमात्राकाङ्क्षिण्याः मम तव च सम्बन्धः सूचित एवेति भावः। सामान्येन तु सम्बन्धोऽनुचित इत्यभिप्रेत्याह—पुंस इति। रतयोर्मिथोरतयोरत एव तत्कृतसुखदुःखिनोः पुंसः स्त्रियाश्च न समाजो नोचित इत्यर्थः। यः केवलमैथुन्यतत्प्रयुक्तसुखदुःखानुभावार्थः समाज; सतु नोचितः यस्त्वावयोः शेषशेषिलक्षणः समाजः स उचित एवेति भावः॥ ३८॥ भिक्षुभिः श्लाघिता मुधेत्यस्योत्तरमाह—त्वमिति। भिक्षुपदव्याख्यानं न्यस्तदण्डैरिति भिक्षुभिः सर्वभूतसुहृत्त्वं प्रार्थयमानैर्न्यस्तदण्डैरित्यस्याप्ययमेवार्थः गदितः श्लाघितः प्रभावो यस्य तथाभूतः तत्र हेतुं वदन्ती मुधेत्यस्योत्तरमाह—आत्मेति। त्रिजगतामात्मा आत्मदः आत्मपर्य्यन्तप्रदः "य आत्मदा बलदा" इति श्रुतेः। आत्मत्वादात्मपर्य्यन्तवदान्यत्वाच्च गदित इत्यर्थः। आत्मद इत्यनेन मुक्तप्राप्यत्वं विवक्षितं नह्यात्मनः प्राप्यस्य च श्लाघा प्रयोजनान्तरापेक्षा किन्तु स्वसत्तालाभार्थाप्राप्यप्राप्त्यर्थां चेति मुधैवेति सत्यमुक्तमित्यर्थः। आत्मनः शरीरादिविलक्षणतया स्तुतौ हि शरीरसत्तासिद्धिः अथ

वैदर्भ्येतदविज्ञाय त्वयादीर्घसमीक्षयेत्यस्योत्तरमाह— इतीति । इतीत्थम्भूतं भवन्तं ज्ञात्वेति शेषः । अब्जभवनाकपतीन् ब्रह्मेन्द्रादीन् भवतो भ्रुवः सकाशादुदीरितो यः कालस्तस्य वेगेन ध्वस्ताः आशिषो येषां तथाभूतान् हित्वा विहाय एवम्विधत्वान्मम् तेषां पुत्रस्थानीयत्वाच्च तद्गतवित्तादिप्रयुक्तसाम्यमविचार्य्यैवेति भावः । एवं हित्वेत्यनेनाविज्ञायति व्याख्यातं मे मया त्वं वृतोसि अब्जयोन्यादय एवाविचार्य्याः कुतोन्ये चैद्यादयो विचार्य्याः स्युरित्यर्थः ॥ ३९ ॥ पुनः सिंहावलोकितन्यायेन राजभ्यो बिभ्यत इत्यस्योत्तरं वक्तुमात्मानयनदृष्टान्तेन निर्भयत्वं स्थापयन्ती स्पष्टमबिभ्यत इत्येव प्रयोक्तव्ये संशयापादकेन राजभ्यो बिभ्यत इति पूर्वरूपात्मकसन्धिना प्रयुक्तं वचः शृण्वतां जाड्यावहमित्याह—जाड्यमिति । हे गदाग्रज यस्त्वं शार्ङ्गनिनदेन शत्रून् भूपान् विद्राव्य पलाययित्वा मां जहर्थ हृतवानसि तस्येदं वचोजाड्यं शृण्वतां सन्धिविशेषमजानतां त्वयि भयसम्भावनात्मके ज्ञानरूपजाड्यावहमित्यर्थः । हरणे दृष्टान्तः यथा सिंहः पशून् महिषादीन् विद्राव्य स्वभागं हरति तद्वदिति किं तद्वचो यज्जाड्यं तदाह—तेभ्य इत्यादि । तेभ्यः शत्रुभूतेभ्यो भयादुदधिं समुद्रं शरणं प्रपन्न इति यत्तत् ॥ ४० ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

निष्किञ्चना वयमितीदं निबोधयतः किञ्चित्किञ्चिन्मात्रं नास्ति किन्तु सर्वमेवास्त्यतो भवान्निष्किञ्चन इत्युच्यते नत्वनाढ्यत्वं निष्किञ्चनत्वमित्याह—यस्मा इति । सर्वप्राणिदत्तबलिभुजोप्यजाद्या यस्मै बलिं हरन्ति स भवान्निष्किञ्चन इति विदुषां परिषदि न शोभत इति शेषः । तस्मात्प्रायेण नोह्याढ्या न भजन्तीत्यत्रावधारयामहे नत्वेति आढ्यातान्धाः ऐश्वर्यमदान्धाः त्वा त्वां न विदन्ति न जानन्ति न लभन्ते चेत्यन्वयः । दूरस्थत्वान्न विदन्तीति, नेत्याह—अन्तिकमिति "नेदिष्ठमन्तिकतमम्" इत्यमरः । अत्र हेतुरसुतृप इति स्वेन्द्रियपोषणपरत्वात् अन्तिकस्थत्वं स्पष्टयति बलिभुजामिति यस्त्वं बलिभुजां ब्रह्मादीनामप्यन्तरास्से तिष्ठसि किमुतेतरेषां नियन्तृत्वेनेतिशेषः । अत्र प्रमाणमाह—प्रेष्ठ इति । सतां प्रियतमः "प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः" इत्यतो ज्ञानिदर्शिनं प्रमाणम् "कस्मै देवाय हविषा विधेम इमा रुद्राय स्थिरधन्वने गिरः" इत्यादिश्रुतिः ॥३७॥ ययोरेव समं वित्तम् इत्याद्युक्तमनुवदति—त्वं वा इति । वैशब्दो हेत्वर्थः त्वं फलात्मासुखात्मा परमानन्दस्वरूपो वै यस्मात्तस्मात् समस्तपुरुषार्थमयोऽर्थ्यत इत्यर्थः । मयट् प्रत्ययः प्रधानार्थः सर्वस्मात् प्राधान्यस्वरूपः समस्तपुरुषैरर्थ्यमानस्वरूप इत्यर्थः । ये सुमतयः सम्यग्ज्ञानिनो यस्य तव वाञ्छया अनुग्रहेच्छया कृत्स्नं पुत्रमित्रवित्तादिसर्वं विसृजन्ति मुञ्चन्ति त्यक्तसर्वेषणा इत्यर्थः । अनेन प्रकृते किमागतमत्राह—तेषामिति । हे विभो तेषां सुमतीनां भवतश्च प्रसादः पूर्णसुखलक्षणो गुणः समुदितिः सम्यगुक्तः समानो वा नास्तीत्यस्य कोभिप्राय इत्यत उक्तं यश्चेति चोऽप्यर्थे यश्च कोपि नास्तीत्यर्थः । ननु युवयोः कोपि गुणः समो नास्ति किमत्राह—त्रय्याञ्चेति । त्रय्यां चशब्दात् स्मृतिष्वपि च तयोर्युवयोर्यश्च कोपि गुणोऽस्ति स क इत्यतो रतयोरित्यनेन सूचितः । "अग्निष्टोमेन स्वर्गकामो यजेत" इति वेदोक्तकर्मकर्तृत्वेन सुमतीनां त्रयीरतत्वं भवतो वेदप्रतिपाद्यत्वेन चेत्येवमाकारेण समत्वम् ननु जीवस्य चेतनत्वेन ज्ञानानन्दादिगुणोऽस्त्येवातः कथं समो गुणो नास्तीत्यत्राह—सुखदुःखिनोरिति । सुखदुःखिनोर्युवयोर्मध्ये केवलपरिपूर्णसुखो भवांस्ते सुमतयो भवज्ज्ञानपर्यन्तं दुःखिन इति । ननु पश्चात्समगुणत्वमापन्नं योवाऽऽनन्दाद्विमुक्तः ज्ञानानन्दी भवतीति श्रुतेरितीयमाशङ्का "अल्पसम्पूर्णशक्तित्वादल्प पूर्णसुखत्वतः" इति स्मृतिवचनेन परिहरणीया यद्वा ये सुमतयः कृत्स्नं विसृजन्ति तेषां भवतः पुंसां भवदीयपुरुषाणां यस्त्वं फलात्मा परमानन्दमोक्षरूपः समुदितिः सम्यगुक्तः त्रय्यां त्रिवेदविहितमार्गे वर्तमानयोः सुखदुःखिनोः धर्माधर्मानुष्ठानेन तत्तत्फलभुजोर्विहितप्रतिषिद्धकर्त्रोर्यस्त्वं फलात्मा न समुदितः स त्वं मे वृतोसीत्यन्वयः ॥ ३८ ॥ भिक्षुभिः श्लाघिता मुधेत्यस्योत्तरं शृणु—त्वमिति । न्यस्तो वाङ्मनःकायलक्षणो दण्डो यैस्ते न्यस्तदण्डाः तैर्मुनिभिः वाचंयमैः निर्जितेन्द्रियग्रामैः यतिभिरित्यर्थः । गदितानुभावः स्पष्टीकृतप्रभावस्त्वम् अदीर्घसमीक्षयेति यदुक्तं तत्राह—आत्मेति । जगतामात्मा स्वामी भजतामात्मदः सायुज्यमुक्तिप्रदश्चेति । दीर्घसमीक्षया निश्चित्य मे मया त्वमभिहितः वृतोसि "हिर्हेतावधारणे" इतियादवः । भवतः भवज्ज्यायमानमुदीरितमुदीरणं प्रेरणं यस्य स भवद्भ्रुवदुदीरितः स चासो कालः भवद्भ्रुवदुदीरितकालः तस्य गन्धेन ध्वस्ताशिषः निरस्तसम्पदः अद्भ्यो जातोऽब्जः ब्रह्मा "सोऽद्भ्य एव पुरुषं समुद्धृत्यामूर्च्छयत्" इति श्रुतेः । भवो रुद्रः नाकपतिरिन्द्रः एतान् मुक्त्वा अन्यांश्चैद्यादीन् मुक्त्वेति कुतः? किमु वक्तव्यमित्यर्थः । एषामदीर्घसमीक्षया वृतोसीत्यर्थः ॥ ३९ ॥ राजभ्यो बिभ्यत इत्येतत्प्रकारान्तरेणाक्षिपति—सत्यमिति । हे गदाग्रज ! चशब्द एवार्थे यस्त्वमेव शार्ङ्गनिनदेन भूपान् विद्राव्य मां जहर्थ हृतवानसि कथमिव यथा सिंहः स्वभागं पशुलक्षणं स्वबलिं स्वस्य भरणे योग्यं हरति तथा तेभ्यो राजभ्यो भयाद्युदधिं शरणं प्रपन्न इति यत्तत् तव वचः सत्यं साधुभावं त्यजतीति अस्मद्व्यामोहनार्थमुक्तमिति भावः ॥ ४० ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

निष्किञ्चन इति निरिति निषेधे नु निश्चितं भवान् निष्किञ्चनः तर्हि कथं मदुक्तमङ्गीचकर्थेव सत्यं तत्तु न दरिद्रत्वलक्षणेनार्थेन । किन्त्वनेनैवेत्याह—नेति । अतएव यस्मा इत्यादि येतु त्वां न विदन्ति ते खल्वाढ्यतान्धाः असुतृपश्च येतु त्वां

विदन्ति ते खल्वतिश्रेष्ठा इत्याह—प्रेष्ठ इति । एतद्योजनापेक्षयैव तदुक्तातिक्रमेणोत्तरं । आस्थिता इत्यादेस्तूत्तरं संरम्भयोग्यत्वात् तत्प्रसङ्गे देयम् ॥ ३७-४१ ॥

### श्रीमज्जीवगोस्वामिकृतः बृहत्क्रमसन्दर्भः

ननु ( १४ श० श्लो० ) "निष्किञ्चना वयं शश्वन्निष्किञ्चनजनप्रियाः" इति यदुक्तम् तदपि सत्यमेवेत्याह—निष्किञ्चन इत्यादि । ननु भो भगवन् ! भवान् निष्किञ्चन एव कुतः ? इत्याह—न यतोऽस्ति किञ्चित्, न विद्यते किञ्चन यस्मादिति पञ्चम्यन्तपदार्थेन, सत्यमेव तदित्यर्थः । ननु ब्रह्मादयो यद्भिन्नाः पृथगीशा वर्तन्ते, तत् कथमयमर्थः समर्थ्यतामित्याशङ्क्याह—यस्मै बलिमित्यादि । बलिभुजो ब्रह्मादयो यस्मै तुभ्यं बलिं हरन्ति अतोऽसुतृपो विषयिणस्त्वां न विदन्ति । कीदृशं त्वाम् ? अन्तकं कालाख्यशक्त्या सर्वसंहारकम् । ते कीदृशाः ? आत्मतयैश्वर्येणान्धाः । न केवलं तेषामेवान्तकम्, अपि तु बलिभुजां ब्रह्मादीनामपि, न केवलमसुतृप एवाढ्यतान्धास्तेऽपि बलिभुजोऽपीत्यर्थः । अतस्त्वं प्रेष्ठः प्रियतमः सर्वेषां प्रेष्ठः । अत एव निष्किञ्चनोऽसीति यत्तत् सत्यमेवेति वाक्यार्थः ॥ ३७ ॥ ( १५ श० श्लो० ) "ययोरेव समं वित्तं ययोरेव समं बलम्" इत्यादि यदुक्तम्, तदपि सत्यमेवेत्याह—तं वै समस्तेत्यादि । त्वं समस्तपुरुषार्थमयः फलात्मा फलस्वरूपः, सर्वपुरुषार्थं सर्वलोकार्थं सर्वलोकनिमित्तमित्यर्थः । अयः शुभावहो विधिः सर्वलोकशुभादृष्टम्, यस्त्वां भजते, स एव तव योग्य इत्यर्थः । तेनाहं त्वत्कामत्वेन त्वद्योग्यैव । अतो मम त्वया सह समत्वमस्त्येवेति फलात्मतां दर्शयति—यद् वाञ्छया सुमतयो विसृजन्ति कृत्स्नम् । फलार्थं हि सर्वं एव यतन्ते । हे विभो ! तेषां समाजो गोष्ठी भवतः समुचित एव । तेनाहमपि भवदर्थं सर्वमसृजम्, मया सह गोष्ठी तव समुचितैवेति पुंसः स्त्रियाश्चान्योन्यं रतयोर्गोष्ठी न समुचिता । त्वया सह यदि पुंसो वा स्त्रियो वा गोष्ठी भवति तदा समुचितैव । सान्द्रानन्दस्वरूपेण भवता सह सङ्गतः पुरुषः स्त्री वा त्वत्समत्वमेव लभते, न त्वन्योन्यं तयोः । कुतः ? इत्याह—सुखदुःखिनोः, कदाचित् सुखिनोः, कदाचिद् दुःखिनोः नित्यसुखे त्वयि सङ्गतस्तु पुरुषः स्त्री वा नित्यसुखित्वमेव लभते । अथवा सुखेऽपि कामसुखेऽपि दुःखिनोः,—( भा० ११।१९।४१ ) "दुःखं कामसुखापेक्षा" इत्युक्तेः ॥ ३८ ॥ ( १६ श० श्लो० ) "वैदर्भ्येतदविज्ञाय" इति यदुक्तम् तदपि सत्यमेव । एतद्भवदुक्तं विपरीतं ( १२ श० श्लो० ) "राजभ्यो बिभ्यतः" इत्यादिकमविज्ञाय वस्तुत्वाभावात् सर्वमिदमविज्ञायैवेत्याह—त्वं न्यस्तदण्डमुनिभिरित्यादि । न्यस्तदण्डैरात्मारामैर्मुनिभिर्गदितानुभावः, आत्मा श्रीविग्रहः आत्मदः सर्वेषां प्राणद आत्मशोधको वा, 'दैप शोधने' इति कृत्वा मे मया वृतोऽसि । अत एतदविज्ञायैवेति तवोक्तिः सत्या । किं कृत्वा वृतोऽसि ? इत्याह— हित्वेत्यादि । भवनाकपतयोऽपि भवद्भ्रूभङ्गकालध्वस्ताधिकाराः किमुतान्ये नाकयति—शब्दोऽत्र ब्रह्मादिपरः ॥ ३९ ॥ ( १२ श० श्लो० ) "राजभ्यो बिभ्यतः सुभ्रु ! समुद्रं शरणं गतान्" इति भगवदुक्तं पुनः स्मृत्वा सत्यत्वेन स्ववैदग्ध्या प्रथमं प्रतिपादितमपि पुनरत्यन्तासम्भाव्यत्वेन प्रत्यक्षबाधितं मत्वा सक्रोधोपहासमाह—जाड्यं वचेत्यादि । हे गदाग्रज ! तव वचोजाड्यं वचसो जाड्यमित्यर्थः । अथवा, हे गदाग्रज ! तव जाड्यमिदम् । किं तत् ? तेभ्यो भयादुदधिं शरणं प्रपन्न इति वचः । क्रुद्धोक्तौ न्यूनपदत्वं गुणः । कुतो जाड्यमिदं वचो न सत्यम् ? नैवेत्याह—यस्त्वित्यादि । यस्त्वं भूपान् विद्राव्य शार्ङ्गनिनदेनैव, न तु युद्धकौशलेन मां जहर्थ । क इव ? इत्याह—सिंहो यथेत्यादि । तस्मात्तवैतज्जाड्यमेव पूर्वं पूर्वं धैर्यभावेनैव सर्वं भगवद्वचनमन्यथयित्वा सत्यत्वेन प्रतिपाद्य सम्प्रत्यमर्षभावेन तदेवान्यथयतीति ॥ ४० ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

निष्किञ्चना वयं शश्वदिति यदुक्तं तत्राह—निष्किञ्चन इति । निरिति निषेधे नास्त्यधिकं किमपि वस्तु यस्मात् स निष्किञ्चनस्त्वं यद्वा सर्वविभक्तिकस्तसिः न विद्यते किञ्चन ऐश्वर्यमाधुर्ययशोबलज्ञानवैराग्यादिकं किन्तु सर्वांशित्वात् सम्पूर्णमेव यस्य सः दरिद्रत्वान्न विद्यते किञ्चनापि यस्य स इत्यर्थस्तु त्वयि न घटत इत्याह—यस्मा इति । तस्मात् प्रायेण न ह्याढ्या मां भजन्तीति यदुक्तं तत्राह—नेति । आढ्यतया अन्धाः अत एवासुतृपः स्वप्राणतर्पका बहिर्मुखास्त्वामन्तकं दण्डकर्त्तारं नैव विदन्ति कुतो भजिष्यन्तीत्यर्थः । निष्किञ्चनजनप्रिया इति यदुक्तं तत्र तत्पुरुषसमासमाश्रित्य कैमुत्येनाह—प्रेष्ठ इति । भवान् बलिभुजामपि सकामानामपि ब्रह्मादीनां प्रेष्ठः किमुत निष्किञ्चनानां निष्कामभक्तानां प्रेष्ठ इति, बहुव्रीहिमाश्रित्याह, तेपि सकामभक्ता अपि तुभ्यं तव प्रियाः किमुत निष्कामभक्ताः निष्किञ्चनजनाः न येषां भजनादन्यच्चिकीर्षितमभीप्सितं जिज्ञासितञ्च किञ्चित्तेज्ञेया । निष्किञ्चना बुधैरिति पौराणिकोक्तेर्भक्तवाचित्वे निष्किञ्चनशब्दो व्याख्यातः ॥ ३७ ॥ ययोरेव समं वित्तमित्यादि यदुक्तं तत्तु त्वत्तोऽन्यत्रैव नतु त्वयि सम्भवेदित्याह—त्वमिति । फलात्मा फलस्वरूपः समाजः सेव्यसेवकलक्षणसम्बन्धः सतु नारायणलक्ष्म्योरपि त्वदस्मदाद्योरपि प्राकृतस्य पुंसः नतु स्त्रियाश्च मिथो रतयोः ॥ ३८ ॥ भिक्षुभिः श्लाघिता मुधेति यदुक्तं तत्र भिक्षुशब्दार्थं व्याचक्षाणा भिक्षुश्लाघैव सर्वोत्कर्ष इत्याह—त्वमिति । न्यस्तदण्डेति त एव भिक्षव उच्यन्त इतिभावः । गदितानुभावः श्लाघितप्रभावः आत्मा परमात्मेति यदर्थं सर्वं प्रियं जातं तेषामात्मनामप्यात्मनस्तव श्लाघा न मुधेत्यतो मुधेति त्वदुक्तिरेव मुधेतिभावः । जगतामात्मद इति जगद्वर्त्तिजनेभ्योपि भजद्भ्यस्त्वमा-

त्मानमपि ददासीति ज्ञात्वैव मे मया त्वं वृतोसि तदपि यदुक्तं त्वया वैदर्भ्येतदविज्ञायेति तन्ममेदं विचक्षणं ज्ञानमज्ञात्वैवेति भावः। भवतो भ्रुवः सकाशादुदीरितो यः कालस्तस्य वेगेन ध्वस्ता आशिषो येषां तान् ब्रह्मादीनपि विहाय त्वं वृतोसि कुतोऽन्ये वराकास्तदपि यदुक्तं त्वया अदीर्घसमीक्षयेति तन्मम दीर्घसमीक्षामप्यविज्ञायैवोक्तमिति भावः॥ ३९॥ तदेवमकस्मान्मानाह्य-स्थायिभावोदयवती स्वज्ञानसमीक्षयोरज्ञानं तस्मिन्नेव व्यञ्जनया वृत्या उत्कापि पुनः पुरुषान्तरगुणवर्णनप्रदीप्तकोपेनाभि-धयापि तस्मिन्नज्ञानं ससंरम्भभ्रुकुटिकुटिलकटाक्षं स्पष्टयन्त्येवाह—जाड्यमिति। जाड्यमयमित्यर्थः। यस्तु त्वं भूपान् विद्राव्य स्वभागं मां श्रियं जहर्थ तेभ्यो भयादुदधिं शरणं प्रपन्नस्त्वमिति यत्तव वचो भाषणं तत्तव जाड्यम् अज्ञानज्ञापकमित्यर्थः। ननु च पूर्वमकोपनया त्वया "सत्यम्भयादिव गुणेभ्य उरुक्रमान्तः शेते समुद्र" इत्येनन तद्वचः सम्यगेव समाहितमिति चेत्सत्यं तन्ममापि जाड्यमिति ज्ञेयम्॥ ४०॥

**गूढार्थदीपिनी**

निर्निषेधे। नास्ति किञ्चन दुर्लभं वस्तु यस्य यस्माद्वा स निष्किञ्चनो न तु दरिद्रः। यतोऽन्यत् किञ्चन् नास्ति यस्मै तुभ्यं बलिभुजः पूज्या अपि अजाद्याः बलिं हरन्ति पूजां समर्पयन्ति। बलिभुजां ब्रह्मादीनां त्वं प्रेष्ठः ते च तुभ्यं तव प्रेष्ठा प्रिय-तमा अतोऽन्ये आढ्यतया अन्धा एव अन्तकं त्वां न विदन्ति केवलमसूनेव तर्पयन्ति ते मूढा एव॥ ३७॥ वै एवार्थे। पुरुषार्था धर्मादयः स्वरूपमस्येति। स्वरूपे मयट्। फलात्मा फलदाता च यत् यस्य तव प्राप्तीच्छया सुमतयः कृत्स्नं मोक्षादिकमपि त्यजन्ति। तेषां सुमतीनाम् भवत्समाजः सेव्यसेवकलक्षण एव न तु स्त्रीपुंसयोः समाजः समुचित उपयुक्तः। रतयोः अनुरक्तयोः। अत एव सुखेति॥ ३८॥ न्यस्तस्त्यक्तः। अनुभावः प्रभावः। जगतामात्मा। आत्मदश्च इति हेतोः मे मया त्वम् वृतोऽसि। अब्जो भवो ब्रह्मा तदादीन् हित्वा। कथंभूतान्। भवतो भ्रुवः सकाशात् प्रेरितो यः कालवेगस्तेन ध्वस्ता आशिषो भोगा येषान्तान्। नाकपतय इन्द्रादयः। अन्ये तुच्छा चैद्यादयः कुतः॥ ३९॥ पशून् विद्राव्य यथा सिंहः स्वबलिं हरति एवं भूपान् विद्राव्य स्वभागं मां त्वं जहर्थ हृतवानसि अतो भयादुदधिं प्रपन्न इति यद्वचस्तज्जाड्यमनुचितमिवेति॥ ४०॥

**श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः**

निष्किञ्चना वयमिति यदुक्तं तदपि सत्यमेवेत्याह—निष्किञ्चन इति। ननु, निश्चितं यतः यस्य किञ्चित् अल्पं जीव-विषयं कर्मजन्यं प्राकृतं देहादिकं नास्ति स भवान् निष्किञ्चन एव दरिद्रतालक्षणं निष्किञ्चनत्वन्तु तव नोपपद्यते इत्याह यस्मायिति। अजाद्याः ब्रह्मादय; अन्यतो बलिभुजोपि यस्मै बलिं हरन्ति स भवान् इति योज्यम् निष्किञ्चनजनप्रिया इति यदुक्तं तदपि युक्तमेवेत्याह—प्रेष्ठोभवानिति। बलिभुजां परदत्तान्नभुजामगृहाणां मुनीनां भवान् प्रेष्ठः ते तुभ्यं प्रेष्ठाः अतः निष्किञ्चनजनानां प्रियास्तेवा प्रिया येषामिति निष्किञ्चनजनप्रिया वयमिति त्वदुक्तिः उपपन्नेत्यर्थः॥ ३७॥ ययोरात्मसमं वित्तं जन्मैश्वर्याकृतिर्भवः। तयोर्विवाहो मैत्री च नोत्तमाधमयोः क्वचित्। इति यदुक्तं तत् अन्यस्त्रीपुरुषविषयं त्वयि तु निरतिशयोत्कृष्टे निकृष्टा एव शिष्टा दास्यं कुर्वन्ति तद्वदहमपि भार्याभावेन त्वामेव भजामीत्याशयेनाह—त्वमिति। हे विभो! व्यापक! त्वद्वैभवापेक्षया सर्वे पदार्थाः परिच्छिन्ना इति सम्बोधनाभिप्रायः वै निश्चितं समस्ताः सम्पूर्णाः पुरुषार्था येभ्यस्ते तथा सर्वपुरुषार्थोपायास्तन्मयः समस्तपुरुषार्थोपायरूपः फलात्मा फलरूपः पुरुषार्थः रूपः उपेय इत्यर्थः। यद्वाञ्छया यद्वास्ये-च्छया शोभना त्वन्निरतिशयोत्कर्षधारणवाती मतिर्येषां ते कृत्स्नं त्वत्तो निकृष्टं विसृजन्ति "भूमात्वेव विजिज्ञासितव्यः" इत्यादि श्रुतेः। तेषामेव निकृष्टानां भवतो निरतिशयोत्कृष्टस्य समाजः सेव्यसेवकलक्षणसम्बन्धः सम्यगुचितः अन्येषान्तु वित्तादिसमत्वेन परस्परं समाजो युक्तः न भवतः समाज इत्याह—पुंसःस्त्रियाश्च मिथो वित्तादिसमत्वेन रतयोर्न भवतः समाजः समुचितः अत एव दुःखितयोरित्युक्तम्॥ ३८॥ भिक्षुभिःश्लाघिता मुधेति यदुक्तं तत्रोत्तरमाह—त्वमिति। भिक्षवो मुनयः "ऋषिर्यतिर्मुनिर्भिक्षुस्तापसः संयतो यमी" इति कोशात् न्यस्तदण्डाः अभयदाः प्रजापीडावारणार्थं भिक्षयैव कालक्षेपं कुर्वन्ति अतस्ते भिक्षव इत्यर्थः। तेच मुनयः न्यस्तदण्डमुनयः तैर्गदितानुभावः श्लाघितप्रभावः। मुधेत्यस्योत्तरमाह—आत्मेति। जगतां सर्वेषामात्मनामात्मा नहि आत्मनामप्यात्मनः श्लाघा मुधा भवतीति भावः। प्रयोजनमाह—आत्मदः श्लाघाकर्तॄणामात्मपर्यन्त-फलद इत्यर्थः "य आत्मदा बलदा" इति श्रुतेः। वैदर्भ्येतदविज्ञाय त्वयाऽदीर्घसमीक्षयेति यदुक्तं तदुत्तरमाह—इतीति। इतीत्थं ज्ञात्वैव मे मया वृतोसीत्येतदविज्ञायेत्यस्योत्तरम् अदीर्घसमीक्षयेत्यस्योत्तरमाह—हित्वेति। भवतो भ्रुवः सकाशात् उदीरितो यः कालस्तद्वेगेन ध्वस्ता आशिषां येषां तान् ब्रह्मादीनपि हित्वा कुतोऽन्ये केऽन्ये इत्यर्थः। सर्वपरित्यागपूर्वकत्वद्भिनिवेषेण मत्समीक्षाया अदीर्घत्वमिति भावः॥ ३९॥ राजभ्यो बिभ्यतः इत्यत्र सिंहावलोकनन्यायेन पुनः किञ्चिदुत्तरमाह—जाड्यमिति। हे गदाग्रज! सिंहो यथा पशून् विद्राव्यं स्वभागं हरति तद्वच्छार्ङ्गनिनादेनैव भूपान् जरासन्धादीन् विद्राव्य स्वभागं मां यस्त्वं जहर्थ हृतवानसि तस्य तव राजभ्यो बिभ्यत इति वचोभाषणं जाड्यं भवति श्रोतॄणां जाड्यपादकं भवति अबिभ्यत इति स्पष्टप्रयोगादर्शनात्॥ ४०॥

## श्रीसत्यधर्मकृता श्रीभागवतटिप्पणी

निष्किञ्चनो ननु भवान्न यतोऽस्ति किञ्चिदिति श्लोको हरेः सर्वराहित्यमुच्यत इति भ्रमभ्रंशं किञ्चिदध्याहृत्य योजयंस्तनोति ॥ यतः किञ्चिन्मात्रमिति । किञ्चिन्मात्रं यतो नास्तीत्युक्तलभ्यार्थं दर्शयति ॥ किन्तु सर्वमेवास्तीति । मात्रेति किञ्चिदित्यतःपरं योज्यमित्युक्तं भवति ॥ ततश्चायं मूलार्थः । यतो यस्मात्किञ्चित्किञ्चिदेव नास्त्यतो निष्किञ्चनः । नितरां किञ्चन सर्वं यस्य स इति निष्किञ्चनपदार्थो ज्ञेयः । बहुकिञ्चनातिरिक्तस्य सर्वस्य दुर्निरूपत्वात् । आढ्या न भजन्तीति यदुक्तं तत्र केचिच्चिदाढ्याः केचिन्मदाढ्याः इति द्विविधास्तत्र चिदाढ्या इम एवं कुर्वन्तीत्याह ॥ यस्मा इति । यस्मै स्वयं बलिभुज इतरवितरितवलिभुजोऽजाद्या अपि बलिं हरन्ति सपर्यां कुर्वन्तीति यावत् । ये केचनाढ्यतया मदाढ्यतयाऽन्धा असुतृपाः स्वप्राणमात्रतर्पकास्त्वां न विन्दन्ति न जानन्ति पूजा तु दूरोत्सारितेति भावः । दूरे सत्त्वान्न विन्दन्तीति नेत्याह । अन्तिकम् । नेदिष्टमन्तिकमित्यमरः । समीपवर्तिनमपि । कथं समीपवर्तता कीर्तितेत्यतः कीर्तयति ॥ सतां प्रेष्ठेति । प्रियो यस्त्वं बलिभुजां शुनां तदादिनिकृष्टयोनिजानामप्यन्तः । आस्ते सतामन्तरा स्म इति किं वक्तव्यमित्यर्थः । शुनि चैव श्वपाके च पण्डिताः समदर्शिन इत्याद्यन्यथा युक्तं स्यादिति मन्तव्यम् । अन्तरा आस्स इति वा । कैमुत्यघटकमाह ॥ प्रेष्ठ इति । सतां प्रेष्ठः । प्रियो हि ज्ञानिनोऽत्यर्थमहमित्युक्तेः । तेऽजाद्या विन्दन्ति प्रागनन्तरं नत्वा बलिं हरन्तीत्यप्यर्थः । बलिभुक् शुनि वायस इति रत्नकोशः । वायसादीनां वा ॥ ४१ ॥ त्वं वै समस्तपुरुषार्थमयः फलात्मेति श्लोके सर्वपुरुषार्थमयफलात्मपदयोर्भेदो मयटश्च कोऽर्थः । उत्तरार्धेनान्वयः सम्यक् प्रतीयते । चशब्दः किमर्थः किमर्थश्च यच्छब्द इत्यतः समस्तं यथावद्व्याकृत्य तत्र मानं चोदाहरति ॥ फलात्मा सुखात्मेति । फलं तत्प्राप्यफलाभावात्फलपदेन सुखं ग्राह्यम् । तदेवात्मा स्वरूपं यस्य सः । अत एवेति फलात्मकत्वादेव पुरुषार्थमय इति पुरुषार्थमयत्वे हेतूक्तिरिति सूचयति । पुरुषैरधिकारिभिरर्थ्यत इति पुरुषार्थः स एव तन्मयः । एतेन मयटस्तादात्म्यमर्थ इति दर्शयति । सुमतिकोटिरे भगवानेक इति युवयोरित्युक्तिरित्यभिप्रेत्य तेषां सुमतीनां भवतश्चेत्युक्तिः । समुदित इत्यस्य समुदायसहित इति सम्यगुदित इत्याद्यर्थप्रतीतिः स्यात्स चात्र नातिक्लिष्ट इत्यनूद्य व्याचष्टे ॥ समुदितैः समा इति । प्रसादो नामेच्छाविशेषो वा गुणान्तरं वा न नः काचित्क्षतिरित्युक्तेः सर्वेषां गुणानां तादात्म्याद्गुणमात्राभिधायक इत्यभिप्रेत्याह ॥ गुण इति । यच्छब्दो यतश्चोदेति सूर्य इत्यादिवर्तिकशब्दार्थ इति स्वयमनूद्य चशब्दोऽप्यर्थ इति तेन संयोज्य व्याकरोति । यश्च कोऽपि त्रय्यां रतयोरिति हरितदितरयोर्विधिबद्धतादिसाम्यं प्रतीयत इत्यतो रतशब्दस्य कोटिद्वययोग्यमर्थं तदनूद्य दर्शयति ॥ त्रय्यां रतेभ्योरिति । त्रय्यां वेदे रतास्तदुक्तेः कर्मकर्तृत्वेन सुमतयः । भगवतस्तु तत्प्रतिपाद्यत्वेन तद्गतत्वमिति विवेकः । सुखदुःखिनोरित्युभयोरुभयप्रसक्तिः प्रसक्तिश्च क्रामिकेऽर्थे तेषां सुमतीनां सुखसामान्याभावश्चेत्यतः स्वयमनूद्य व्याकरोति ॥ सुखदुःखिनोरिति । सुखं च दुःखं च ते स्तोऽनयोरिति सुखदुःखिनौ तयोरित्यर्थः । प्राशस्त्यं तच्च केवलं परिपूर्णत्वरूपं तद्वान्भवानभवत् । ज्ञानपर्यन्तं तदुदयावधिदुःखिनस्ते सुमतयः । अनन्तरमभवन्नित्यवदन्वदंश्च भवानभवदिति तत्सुखं न स्वातन्त्र्येण तेषामिति ध्वनयामास । दुर्दुःखमिति सम्प्रोक्तं खं सुखं प्रोच्यते बुधैरिति स्नेनैवान्यत्रोक्तेर्दुर्दुःखेन सहितं च तत्खं चेति विग्रह एतदपार्थप्रतीतिवारणसम्भवेन पराक्रमणीयमत्राचार्यैरिति चेत्सत्यम् । मुक्तावपि दुःसाहितीभायात्स्वस्य न भातव्यं तयेत्येवं वचनीयत्वात् । अत एव सुखिनोरन्तरमित्यनुक्तिरिवोक्तिर्मानेऽल्पसुखत्वत इत्यस्येति ज्ञेयम् । अल्पशक्तिसम्पूर्णत्वात् तथाऽल्पपूर्णसुखत्वतोऽल्पसम्पूर्णदर्शितत्वात् अल्पदर्शी च सम्पूर्णदर्शी च तयोर्भावस्तत्त्वम् । जीवः कृष्णश्च तयोः साम्यं न । सुमतिपदं तथा सुखपदं च जीवसामान्यपरं सम्पूर्णशक्त्याद्युपलक्षकमल्पशक्त्याद्युपलक्षकं चेति ज्ञेयम् । स्मृतिष्वपीति स्मृतिसमुच्चायकश्चशब्द इत्यर्थः ॥ अथ मूलार्थः ॥ भूमंस्तवेहितमथोऽनुभवन्तीति ययोरेव समं वित्तमिति किञ्चिदुत्तरितप्रार्यमिदानीं स्पष्टं न समस्तवास्तीति बोधयति ॥ त्व वेति । फलात्मा सुखं हि फलं तदेवात्मा स्वरूपं यस्य सः । अत एव समस्तैः पुरुषैरर्थ्यत इति पुरुषार्थः स एवेति तन्मयः पुरुषार्थरूप इति यावत् । यस्य तव वाञ्छया प्रसादमाकाङ्क्षन्तः सुमतयः सुसमीचीना मतिर्येषां ते कृत्स्नं पुत्रमित्रादिकं विसृजन्ति त्यजन्ति निर्गतैषणा भवन्तीत्यर्थः । दारान्सुतान्प्रियान्प्राणान्परस्मै सन्निवेदयेदित्यादेरभिमानत्यागेन त्वय्येवार्पयन्तीति वा । हे विभो तेषां तदादिजीवसङ्घस्य भवतश्चेति युवयोः सुखदुःखिनोः प्रसादो गुणः समुदितः समो यश्च कोऽपि नास्ति । तयोर्विवाह इत्यादिकं न मत इति भावः । सुखदुःखिनोरिति वदन्मूलकृद्रतशब्दस्यार्थद्वयं कटाक्षयामास । तदेव व्यञ्जयामासुराचार्या इति नोन्मूलत्वशङ्कापीडेति ज्ञेयम् । सुखी केवलपरिपूर्णसुखवान् अथवा सुखं तदात्मकमिति सुखं च दुःखी ज्ञानोदयपर्यन्तं दुःखी तयोः ॥ ४२ ॥ त्वन्न्यस्तदण्डमुनिभिरिति पद्येऽब्जभवो ब्रह्मा चाद्रुदः कुतो न गृहीतोऽनुगृहीतश्च तदधम इन्द्रो बहुवचनं चानुपपन्नमित्यतोऽब्जपदमनूद्य तदर्थमुक्त्वा भवपदेन तद्ग्रह इति समाधत्ते ॥ अब्जो ब्रह्मेति । अब्जजः कथमब्ज इत्यतस्तेभ्योऽप्येकदोत्पन्नत्वाद्धातुरित्यर्थप्रतिपादकं मानमुदाहरति । सोऽद्भ्य एव पुरुषं समुद्धृत्यामूर्छयदिति श्रुतेरिति । सः परमात्माऽद्भ्यस्तदादिभूतेभ्यस्तदंशानिति शेषः । उद्धृत्य पुरुषममूर्छयत्साकारमकरोत् । पुरुषोऽत्र कुतो धाता यः कश्चिन्मानवः किन्न स्यादित्यतः स्पष्टां श्रुतिमाह ॥ अद्भ्यः सम्भूतो हिरण्यगर्भ इत्यष्टाविति चेति । अद्भ्योऽवादिभ्यः सम्भूतो जातो हिरण्यगर्भ इति । अम्भस्य पारे भुवनस्य मध्य इत्याद्यावेदितगुणत्वेनाष्टो तुष्टाव हरिमिति शेषः । षट्

स्तुतावित्यस्य लङि छान्दसं रूपम्। अष्टौ लोकपाला इति। ननु यदि पुरुषशब्दो निर्णीतार्थ इति तन्निर्णयार्थमद्भ्यः सम्भूतो हिरण्यगर्भ इत्यष्टाविति श्रुतिरुदाहृता हन्त तर्हि चशब्दो व्यर्थः। अतत्समाख्यारूपत्वादिति चेन्न। मुख्यवक्तव्यस्याद्भ्य इत्यंशस्य सत्त्वेन समाख्यात्वोपपत्तेश्चशब्दः सम्भवीयदष्टावित्याद्यधिकाभिधानं तत्पूर्वं श्रुतिवर्णरूपमिति विवेकसम्भवात्॥ ततश्चायं मूलार्थः॥ भिक्षुभिः श्लाघिता मुधेति तदुत्तरयति॥ त्वमिति। न्यस्तो दण्डः कायवाङ्मनसम्भवो हस्तादिना शिक्षणं वाचा निष्ठुरगोष्ठी मनसाऽहितचिन्तनमित्येवंरूपस्त्यक्तो यैस्ते तैर्मुनिभिर्गदितोऽनुभावो यस्य सः। आत्मा मत्स्वामी सर्वस्वामी चात्मदः सायुज्ययोजकद इति तद्वः स्वरूपशरीरद इति वा जगतामविशेषेण सतामिति हेतोर्मे मया वृतोऽसि। इदानीमेव वृत इति नेत्याह॥ मुक्त्वेति। भवतो भवज्जायमानं यदुदीरितं प्रेरणं यस्य स चासौ कालस्तस्य गन्धो लेशस्तेन ध्वस्ता आशिष एषां तान्। अद्भ्यो जायत इत्यब्जो ब्रह्मा भवो रुद्रो नाकपतिरिन्द्र एतान्मुक्त्वा प्राग्वृतोऽसि। इदानीमन्यान्मुक्त्वा वृतोऽसीति कुतो वाच्यम्। अदीर्घसमीक्षयेत्यज न त्वदुक्तोऽर्थः। अपि तु न विद्यते दीर्घो बहुलः कालो येषामिति तेऽदीर्घास्तत्सम्पदश्चाशाश्वतिका इति समीक्षया मया वृतोऽसीति तदर्थः। क्वचिच्चिरायुरित्यादिनाऽष्टमे स्पष्टमुक्तेः। एष ब्रह्मेत्यादेः। हित्वा चैद्यानित्युत्तरितमत्रेति न क्रम इत्यनुसन्धेयम्। न्यस्तो हस्तविन्यस्तो दण्डो येषामिति तैर्मुनिभिरन्यैर्गृहस्थैस्तपोनिरतैरिति मुधापेक्षां विनेत्यर्थः। निष्कामैरिति यावदिति। पूर्वं न सर्वेशेन कटाक्षिता हनुकर्मत्वे तु न चतुराननादय इत्यर्थिन इति तांश्चैद्यादीनिति वदता किञ्च देववृपोपमानिति गदता च ज्ञायतेऽस्मद्व्याख्यानमेवैतत्सख्यं भजते। अन्यथोक्तेप्सितार्थिन इत्यादिना ते प्रत्यवेयुरिति भावः। भगवदुदीरितकालवेगः कुतोऽन्य इति पाठं मन्ये सुन्दरम्। भवतो भ्रुवः सकाशादुदीरित एतदादिकार्योन्मुखीकृतो यः कालस्तस्य वेगो येषां तेऽन्ये शिशुपालादयः कुतो न त्याज्या इति तदर्थः। आत्मानं जीवजातत्यात्मदः स्वभावाविर्भावक इति वा॥ ४३॥ समुद्रं शरणं गतानिति प्राक् प्रकारान्तरेणार्धाङ्गीकारेण परिहृत्य त्वदुक्तार्थकतायां न शुभं भवति भगवन्निति तदशोभानिमित्तमुपन्यस्त काक्वोपहासमुखेन प्रतिषेध्यति॥ सत्यमिति। हे गदाग्रज ईश। यच्च त्वं भूपांश्चैद्यादीन् शार्ङ्गनिनदेन तद्ध्वनिना ध्वनिं विद्राव्य। अनेन सुनायासः सूच्यते। यथा सिंहः स्वबलिं पशुं शशगोमायवद्यावृतं तान्विद्राव्य स्वलक्षितमिति हरति तया स्वमा त्वदुद्देश्येन प्रभा भा यस्याः सा या ताम्। यन्नाच्छलेन विभवेऽर्पयन्ती स्वशोभामित्युक्तेः। जहर्थ हृतवान् स त्वं तेभ्यो भयाद्धेतोरुदधिमगं गोमन्तं च शरणं प्रपन्न इति यत्तव वचः सत्यम्। काकुः। न सत्यमित्यर्थः। क्वचिद्गदयाऽग्रे त्यागात्पूर्वमेव जयो यस्य सः इति चार्थः। गदान्मदलाभहेतुकाद्रोगादेवाग्रे जयो येन स इति वा। गदाद्रोगोऽग्रे जायत इति स तथा तत्सम्बुद्धिः। तदपेक्षया प्राग्जातस्य न तद्बाधेति नीरोगतेति वा। अस्वबलिं पशुपरिवर्तनेन स्पर्शेनेति यावत्। शून्यं स्वभागं पशुं यथेतरन्वयो वा। समुद्रमितीदं मुद्रणेन हरिणेरितेऽपि यदुदधिमित्याह तेनोदा निधीयन्तेऽस्मिन्निति योगेन प्रवर्षणाख्यशृङ्गोपेततागस्य द्योतयामास। भयादिति सङ्गत्या गोपीगृहीत इति नानुवर्तोवितदोषश्च॥ ४४॥

### श्रीमद्वल्लभाचार्य्यकृता सुबोधिनी

यदप्यभजनसम्मत्यर्थं स्वतः परतश्च धनाभावलक्षणं दूषणमुक्तम्, तस्याप्यन्यथार्थं व्याचष्टे **निष्किञ्चन** इति। निष्किञ्चनपदं यौगिकमत्र, न तु रूढं निर्धनार्थम्। योगमाह **न यतोऽस्ति किञ्चिदिति**। **नन्विति** निश्चयेनैव। भवान् निष्किञ्चनः। यस्य किञ्चन नास्ति, किन्तु सर्वमेव। यतो हेतोर्वा किञ्चिन्नास्ति, किन्तु सर्वमेवास्ति। यतो भिन्नं वा। अत्रापि ज्ञानोदये सर्वं भगवतः सकाशादल्पमेव भविष्यतीति यतः सर्वं किञ्चिदेवेति नन्वर्थः। अथवा। निरुपसर्गो निर्गतार्थे। यतो भगवतः सकाशात् सर्वमेव निर्गतमिति। **नयतः** सर्वं प्रापयतो भगवतः सकाशात्किञ्चिदस्तीत्यर्थः। ननु रूढिं परित्यज्य, किमिति योग आश्रीयते इति चेत्, तत्राह **यस्मै बलिं बलिभुजोऽपि हरन्तीति**। न हि बाधितोर्थः स्वीकर्तुं शक्यते। यथा प्रकरणवशात्सैन्धवादिपदेषु युद्धार्थं प्रवृत्तौ, सिन्धुजत्वमेव पुरस्कृत्य, अश्व एव प्रतीयते, न तु लवणम्, तथात्रापि बलिभुज इन्द्रादयोऽपि सर्वोपास्या यस्मै बलिं हरन्ति। चरणक्षालने अजः प्रसिद्ध इति तेनापि बलिर्दत्तो भविष्यति। चरणसेवका इति ज्ञापयितुं वा तदादित्वम्। अनेन स्वतो धनाभावपक्षः परिहृतः। परतो धनाभावपक्षे सिद्धान्तमाह **न त्वां विदन्तीति**। ज्ञात्वा हि भजनम्। नन्वज्ञानमपि दोषाभावप्रतिपादकमिति चेत्। सत्यम्। यदि प्रतिबन्धाभावेऽप्यज्ञानं भवेत्। अत्र तु त्वदज्ञाने हेतुरस्तीत्याह **असुतृप** इति। प्राणतर्पण एव व्यापृता न जानन्ति। ज्ञापनार्थं प्रयत्ने अवकाशाभावात्। नन्वनावश्यकत्वं तथासति जातमिति प्राणापेक्षया अपकर्षात् अज्ञानमदोषायेवेति चेत्, तत्राह **अन्तकमिति**। स हि मारकः सर्वसंहर्ता। अतः सर्वैरेव ज्ञातव्यः। तथाप्यज्ञानं बहिर्मुखत्वादेव। हेत्वन्तरमप्याह **आढ्यतान्धा** इति। आढ्यतया अन्धाः। न हि चक्षुषि द्रव्यादिना पिहिते कश्चित्पश्यति। तथाढ्यता सर्वत्र व्यापृता निरन्तरा अन्धत्वमेव सम्पादयति। परिमितमेव गुणो, नत्वपरिमितं धनम्। अजीर्णान्नवत्। अतो ज्ञानाभावात् परतो धनाभावो युक्तः। नह्यन्धत्वापादकं धनं भवति। यदप्युक्तं 'निष्किञ्चनजना एवास्माकं प्रियाः, नत्वाढ्या' इति स्वरुचिनिरूपणम्, तदपि युक्तमेवेत्याह **प्रेष्ठो भवानिति**। बलिभुजां विरक्तानां देवानां वा भवान् प्रियः, पुरुषार्थसाधकत्वात्। अपि शब्देनोभये सङ्गृहीताः। तदनुगामिनश्च। तेऽपि तुभ्यं त्वदर्थमेव जातास्तव प्रियाः। यो हि यदर्थ-

मेवोत्पद्यते, स तु तस्य प्रियः। नात्रार्थशब्दो निवृत्तिवाची। अतोऽन्योन्यं प्रियत्वात् निष्किञ्चना एव जनाः प्रियाः, न तु धनवन्तः, पुरुषार्थापेक्षाभावात्। अतदर्थत्वाच्च। अनेन 'तस्मात्प्रायेण नह्याढ्या' इत्यभजनं समर्थितम्॥ ३७॥ यदुक्तं भगवता 'ययोरात्मसमं वित्त'मिति विवाहयोग्यत्वाय. तत्र निर्णयमाह त्वं वै समस्तपुरुषार्थमय इति। पुरुषार्थश्चेद्धर्मादिर्भवेत्, उभयातिरिक्तः, तत्र जन्मादयः पञ्च विचारणीयाः। क्षेत्रबीजयोर्वैजात्ये फलानुत्पत्तेः। ननु फलसाधनयोर्जन्मादिकं तुल्यमपेक्ष्यते। अतो लौकिकदृष्ट्यैव यो भवन्तं साधनत्वेन मन्यते, तं प्रत्येवैषा वाचोयुक्तिः, नत्वस्मान् प्रतीति असमतयाऽविवाहकथनं न मां प्रति न त्वां प्रतीति प्रकरणादिदं वाक्यमुत्कर्षमेवाहेति, नतु प्रकरणे केनाप्यंशेन सम्बध्यत इत्यभिप्रायेणाह। त्वं सर्वपुरुषार्थमयः। धर्मादयः पुरुषार्थाः त्वदवयवेषु वर्तन्ते। यथा गङ्गायां जलम्। ततोऽपि गङ्गा महती, तथा भवानिति मयडर्थः। साधनैः साधितास्तत्र भविष्यन्तीत्याशङ्क्याह फलात्मेति। पुरुषार्थाः साधनरूपा अपि भवन्तीति साधनफलरूपत्वं वा प्रतिपाद्यते। सर्वेषामेव वा फलानां त्वमात्मा। नहि परमानन्दे कश्चित् स्वाधिकारो नास्तीति विलम्बते। भगवतः फलत्वं साधनत्वं चार्पज्ञानेनोक्त्वा लौकिकबुद्ध्या तदनङ्गीकारं मत्वा तेषामप्यनुग्रहाय युक्तिमाह यद्वाञ्छयेति। फलाकाङ्क्षायामेव विरुद्धानां च परित्यागः, साधनानां च ग्रहणम्, नतु फलयोः अन्यफलाकाङ्क्षया। न ह्यन्यत्फलं त्यज्यते, वैषम्यादेकस्य सिद्धत्वादपरस्यासिद्धत्वात्, अतो राज्यं न फलम्, नापि फलसाधनम्, यदुच्यते यद्वाञ्छयापि त्यज्यत इति। ननु तथापि राज्यमैहिकं फलं भवतीति तत्परित्यागे भ्रान्तत्वं स्यादित्याशङ्क्याह सुमतय इति। कृत्यं कर्तव्यम्। साधनसाध्यरूपत्वात् भगवतः स एव ग्राह्यः, नत्वन्य इति कृत्यं छेदनमर्हतीति सुमतित्वे हेतुरप्युक्तः। अतस्त्वदर्थमेव ये सिद्धाः, तेषां तव च समाजो युक्त इत्याह तेषामिति। यद्यपि मैत्री विवाहश्च तेष्वपि न सम्भवति, तथाप्येकगोष्ठ्यां सम्बन्धमात्रमपि युज्यत इति तन्निरूप्यते। विभो इति सामर्थ्यम्। राज्यादिपरित्यागिनां परमसुकुमाराणां सन्तोषजनने। सम्यगुचितः समाजः राजमन्त्रिणामिव। सर्वथा आनुगुण्यं प्रतिपादयितुं दृष्टान्तमाह पुंसः स्त्रियाश्चेति। यथा पुंसः स्त्रियाः समाजः, चकारान्मित्रयोः समानशीलव्यसनयोः। 'अश्वं न त्वा वारवन्तं' इतिवत् उपमार्थवाचकाभावेऽपि निरुक्तादिवोपमार्थत्वमुच्यते। तत्रापि प्रसङ्गं वारयति रतयोरिति। सर्वक्लेशरहितत्वे सत्यन्योन्यं प्रीतयोः। प्रीत्यादिसद्भावेऽपि बाधकं चेद्भवेत्, तदा न भवतीति व्यावर्तयति सुखदुःखिनोर्नेति। एकः सुखी, अपरो दुःखी रोगादिना, तयोः कथमपि न समाजः। अनेन दुःखिनोः सुखिनोर्वा समाज उक्तः॥ ३८॥ यदप्युक्तं 'भिक्षुभिः श्लाघिता मुधे'ति अज्ञानसमर्थनार्थम्, तत्रापि निर्णयमाह त्वं न्यस्तदण्डमुनिभिरिति। भिक्षुभिः परमहंसैरिति व्याख्येयम्। मुधेति फलाकाङ्क्षारहितैश्च। अन्यथा नारदादिषु लौकिकभिक्षुकत्वाभावात् बाधितार्थता स्यात्। अन्ये च भिक्षवः न श्लाघां कुर्वन्ति। तदाह। न्यस्तो दण्डो भूतेषु यैः। अनेन दोषाभाव उक्तः। ते च ते मुनयश्चेति गुणाः। व्यक्तवाण्या अपरोक्षवचनैः (उक्तः) अनुभावो यस्य। श्लाघामात्रं न, किन्तु यथा कृतं तथेत्यनुभावपदेनोच्यते। तत्स्वानुभवसिद्धं तेषाम्। अन्यथा कथं तादृशा जाताः। अतस्तेषां वचनं सार्थकमिति तद्वाक्यैर्ज्ञात्वा भवान् सम एव वृतः। समत्वे हेतुरात्मेति। यथा बहिर्दृष्टौ समत्वापादका जन्मादयः, तथान्तर्दृष्टावात्मत्वमेव। न हि कस्यचिदपि स्वात्मा न समः। तर्हि वरणेन किमित्यत आह आत्मदश्चेति। जीवाः खण्डितात्मान एव स्थिताः। तेषामात्मानं स्वात्मानं वा प्रयच्छतीति। अनेन त्वं स्वात्मानं दास्यसीति ज्ञात्वैव मया वृत इत्युक्तम्। चकाराद्धर्मादीनपि। नन्वहं कथं तवात्मेत्याशङ्क्य साधारण्येनाह जगतामिति। इति बुद्ध्यैव वृतः। अत एव तेऽपि परित्यक्ता इत्याह हित्वा भवद्भ्रुव उदीरितकालवेगध्वस्ताशिष इति। न केवलं मयेदानीमेव भवान् वृतोऽन्यपरित्यागेन, किन्तु पूर्वमेव लक्ष्मीस्वयंवरे अब्जभवनाकपतिप्रभृतीन् परित्यज्य जन्मैश्वर्योत्कर्षयुक्तान् भवानेव वृत इति सम्बन्धः। तेषां परित्यागे हेतुमाह। भवतो भ्रूः कालजनिका, तस्याः सम्बन्धी, तेनैवोदीरितो यः कालः, तस्य वेगेन ध्वस्ताः आशिषो येषाम्। क्षणमपि विसम्मतौ भ्रूवक्रतायां सर्वनाश एव तेषां भवतीति किं तेषां वरणेन। नहि मुमूर्षुः कयाचिद्व्रियते। ब्रह्मादीनामेव चेदियमवस्था, कुतोन्ये वरणयोग्या भवन्तीत्याह कुतोऽन्य इति। अतो ज्ञात्वैव भवान् वृतः। नाप्यन्ये वरणीयाः। अन्यद्भगवदुक्तं नास्माकं बाधकम्, उदासीनत्वं च। आत्मात्मदत्वेन अस्मदिष्टमेव। अहमपि तथा भविष्यामीति॥ ३९॥ एवं बाधकानि पदानि साधकत्वेन व्याख्याय, वाक्यार्थं चोक्त्वा, यथाश्रुतं भगवद्वाक्यं लोकदृष्टिपरत्वेऽपि विरुध्यते, तस्माद्वाक्यानि विपरीततया स्वोत्कर्षमेव प्रतिपादयन्तीति वक्तव्यमित्यभिप्रायेणाह जाड्यं वच इति। अतः परं पुनः सर्वे श्लोकाः लोकदृष्ट्यापि विरुध्यन्त इति व्याख्यास्यते। यतो विपरीततया स्वोत्कर्षमेव प्रतिपादयेयुः। तदा ध्वनिपरत्वेन तान्येव वाक्यानि योजितानि भवन्ति। यदुक्तं प्रथमत एव 'राजभ्यो बिभ्यत' इति, तत्रोत्तरमुच्यते। 'मुखं च प्रेमसंरम्भस्फुरिताधरमीक्षितु'मिति भगवतोक्तत्वात्तामसप्रकारेणापि क्रोधाविष्टा वाक्यानि खण्डयतीति पूर्वस्माद्विशेषः। भयं हि जडस्य भवति। जाड्यादेव कम्पो दृश्यते। तत्र भगवति भयहेतोरभावात् वक्तुर्भयवाचकः शब्दः। भट्टानामिव शब्दस्यैव शक्तिद्वयं परिकल्प्य वक्तृत्वं वाच्यत्वं च। सार्थकता सम्पादनीयेत्याह जाड्यं वच इति। वच एव जाड्यं जडता भीतत्वमिति यावत्। तवेति भेदार्थमसमासः। ननु विद्यमाने वक्तरि मुख्यार्थं परित्यज्य वचोजडता कथं सम्पाद्यत इत्यत आह गदाग्रजेति। यथा गदोत्पत्तिपर्यन्तं स्वयमभीतोऽपि क्रियां जडां सम्पादितवान्, एवं वाचमप्यत्र तथा सम्पादयति। तेन भगवदिच्छयैव तथा कायिकवाचिकयोर्जातत्वान्न किञ्चिद्दूषणम्।

वच इति वाच इति वचस इति वा छान्दसम्। अथवा। केनचिद्धर्मेण ज्ञानाभावेन लोके जडो भवति। प्रकृते तु जडत्वसम्पादकत्वं वच एव। केवलं वाक्यादेव प्रतीयते जाड्यम्, न त्वर्थत इत्यर्थः। चकारात् पूर्वं बहुधा भगवज्जयं समुच्चिनोति। यस्त्वं भूपान् शाङ्र्गनिनदेनैव विद्राव्य, पशुतुल्यान् कृत्वा, मां जहर्थ। पशव एव हि शब्दमात्रेण पलायन्ते। पूर्वं निनदेनैवाभिभूय समाहृता, पश्चात् युद्धार्थं प्रवृत्तौ बलेन सर्वे हृता इत्यविरोधः। हे हि शब्दमात्रेण पलायन्ते, तेन तेभ्यो भयं सम्भाव्यते। शाङ्र्गनिनदेनेति हेतुरत्रोक्त इति पूर्वं धनुष्टङ्कारं कृतवानिति लक्ष्यते। राजन्यचक्रं परिभूयेत्यत्र शाङ्र्गनिनदेनेति योजनीयम्। देवाद्गृहीत्वा अनवहितेषु तेषु समागत इति पक्षं व्यावर्तयति सिंहो यथेति। बलाद्ग्रहणदोषं व्यावर्तयति स्वभागमिति। अदत्तस्यापि ग्रहणे दोषाभावं सामर्थ्यं चाह ईशेति। यथा क्लृप्तोऽपि भागो देवैर्न गृह्यते, अहुतश्चेत्, तथेश्वरो न भवतीत्यर्थः। लोके स्वभागस्य बलादपि ग्रहणं दृष्टमिति। मां त्वमिति प्रत्यक्षं प्रमाणमुक्तम्। पशूनिति सिंहव्यावृत्तिः। न हि सिंहस्य कन्या सिंहेन बलाद्ग्रहीतुं शक्या। यद्यपि स्वभागरूपा। देवादीनां रक्षाभावाय स्वबलिमिति। स्वार्थमेव देवैः क्लृप्तमिति। यथा सिंहः पशून् विद्राव्य, स्वभागभक्षकान् व्याघ्रादीन् नादेनैव निवार्य, स्वभागं कुम्भस्थमांसं हरति, एवं निःशङ्कं हृतवतः ते कथं भयमिति। भयवाक्यमनुवदति, विरुद्धार्थमिति वक्तुम्, तेभ्यो भयाद्यदुदधिं शरणं प्रपन्न इति। यस्मात्तेभ्यो भयात्त्वमुदधिं शरणं प्रपन्नः, अस्माद्वचो जाड्यमित्यर्थः। उत्तरवाक्यगतो यच्छब्दं नापेक्षत इति न तच्छब्दाध्याहारः। पशुतुल्येभ्यो विद्राविर्तेभ्यो भयवचनं बाधितार्थं भवत्येवेति विपरीततयैवार्थो वक्तव्य इति भावः। अनेनैव 'बलवद्भिः कृतद्वेषा'निति व्याख्यातम्। न हि पशवः पलायनपरा बलवन्तो भवन्ति। स्वयमेव त्यक्तनृपासनत्वमुत्कर्ष एव ॥ ४० ॥

### श्रीविट्ठलरायात्मजश्रीवल्लभकृतलेखः

निष्किञ्चनो नन्वित्यत्र। नात्रार्थशब्द इति। अनुपदसंस्कृते यदर्थमेवोत्पद्यते इत्यत्रोक्तोऽर्थशब्दोऽन्यार्थनिवृत्तिवाची न। तथासति भगवदर्थत्वाभावेन भगवत्प्रियत्वं न स्यात्। किन्तु भगवदर्थत्ववाचीत्यर्थः। अर्थशब्दस्य पञ्चमोऽर्थो निवृत्तिरिति तथाशङ्क्य निराकृतम्। पुरुषार्थेति। पुरुषार्थमयो भगवानिति वक्ष्यते, तेषां तदपेक्षा नास्ति, किन्तु धनापेक्षैवेत्यर्थः। त्वं वै समस्तेत्यत्र। उभयातिरिक्त इति। भार्यापुरुषातिरिक्त इत्यर्थः। भगवांस्तु पुरुषार्थरूप एवेति भावः। साधनत्वेनेति। पुरुषार्थसाधनत्वेनेत्यर्थः। प्रकरणादिति। प्रकरणं भगवद्विवाहस्य। 'ययोरात्मसम'मिति वाक्यमेतस्मात्प्रकरणादुत्कर्षमर्हति। बाधित्वादत्र प्रकरणे प्रवेशमलभमानमन्यत्रोत्कृष्टव्यम्, लौकिकविवाहप्रतिपादकत्वेन वक्तव्यमित्यर्थः। गङ्गा महतीति। आधिदैविकी गृहेपि प्रकटा भवतीति जलापेक्षया महत्परिमाणेत्यर्थः। फलयोरिति। सिद्धयोरिति शेषः। फलमिति। सिद्धमिति शेषः। छेदनमर्हतीति कृत्यपदनिरुक्तिः। कृती छेदने इति धातोर्ण्यत्। अश्वं न त्वेति। अयं नकार इवार्थकत्वेन निरुक्ते प्रथमाध्याये व्याख्यातः, तद्वदत्रापि उपमारूपार्थवाचकेवादिपदाभावेपि नकारस्यैवावृत्तस्योपमार्थकत्वमुच्यते। तथा च नकारस्यावृत्तिः। पूर्वनकारस्योपमार्थकत्वम्। रतयोरिवेत्यर्थः। द्वितीयस्य निषेधार्थकत्वम्। सुखदुःखिनोः समाज उचितो न भवतीत्यर्थः। प्रसङ्गमिति। प्रसङ्गात्कार्यान्तरार्थे मिलितयोः स्त्रीपुंसयोः समाजस्तथा रसजनको न भवतीत्यर्थः। त्वं न्यस्तदण्डेत्यत्र। गदितानुभाव इति। गदधातोरर्थमाहुः व्यक्तवाण्येति। अहमपि तथेति। भगवद्वरणे अहमप्यात्मलब्ध्या पूर्णा भविष्यामीत्यर्थः। जाड्यं वच इत्यत्र। जाड्यादेवेति। जाड्यं भयं हेत्वभावाद्भगवत्यनुपपन्नं वक्तरि शब्दे पर्यवस्यति। तथा च भयेन शब्दस्य कम्पो जातः। अतः अभीतमपि भगवन्तं भीतं बोधयति शब्द इति भावः। वक्तुरिति। शब्दस्येत्यर्थः। शब्दस्य कथं वक्तृत्वमित्याशङ्क्य सम्मतिपूर्वकं व्युत्पादयन्ति भट्टानामिवेति। वच एव जाड्यमिति। वचस एव जडतेत्यर्थः। क्रियां जडामिति। भययुक्तामित्यर्थः। वाचमपीति। वाक्यमपि भययुक्तं सम्पादयतीत्यर्थः। इदं शक्तिद्वयकल्पनं पूर्वमीमांसायामुक्तम्, न तु व्यासाभिमतमित्यरुच्या पक्षान्तरमाहुरथवेति। अस्मिन्पक्षे वच इति पञ्चम्यन्तम्। उपपत्तिस्तु छान्दसत्वेनोक्तैव। यश्च त्वमेतादृशः, स त्वं तेभ्यो भयादुदधिं शरणं प्रपन्न इति यद्यस्मादतो वचस एव जाड्यमित्यन्वयः।

### श्रीसुबोधिनी-सारः

आस्थिताः पदवीं सुभ्रूः प्रायः सीदन्ति योषित इत्युत्तरं यद्वांछयेति वक्ष्यति निष्किंचना वयं शश्वन्निष्किंचनजनप्रिया इत्युत्तरमाह। यतोन्यत्किंचन वस्तुजातं नास्तीत्यतो भवान् निष्किंचनो ननु निश्चयेन न तु दरिद्रः बलिभुजोऽन्यतो बलिभोक्तारोप्यजाद्या ब्रह्माद्या यस्मै तुभ्यं बलिं ददति अतो महादरिद्रैः पूज्य इत्युक्तं निरस्तम् उभयथापि स्तौति बलिभुजां ब्रह्मादीनामपि भवान्प्रेष्ठः तेपि ब्रह्मादयः तुभ्यं तव प्रेष्ठाः तस्मात्प्रायेण न ह्याढ्या मां भजन्ति सुमध्यमे इत्युत्तरत्वेनात्मविमुखान् धनिनो निंदन्नाह ये आढ्यतयांधाः असुतृपः केवलं प्राणपोषकास्तेंतकं कालरूपिणं त्वा त्वां न विदन्ति न जानन्ति कथमुहो भजनम् ॥ ३७ ॥ 'ययोरात्मसमं वित्तम्' इति सम्बन्धे दोष उक्तस्तं समाधत्ते। त्वं पुरुषार्थचतुष्टयरूप उपासनानुसारात् फलात्मा फलदः यस्य तव वांछया सुमतयो ज्ञानिनः कृत्स्नं सर्वं विसृजंति त्यजंति निष्कामा भवन्ति तेषां भवतस्तव समाजः सम्बन्धः सेव्यसेवकरूपः समुचितो योग्यः मिथो रतयोः परस्परं मिथुनीभूतयोः पुंसः स्त्रियाश्चेति द्वयोः

सुखदुःखयुक्तयोर्न ॥ ३८ ॥ भिक्षुभिः श्लाघिता मुधा इति परिहारमाह । त्यक्तदण्डैर्मुनिभिर्गदितो वर्णितोनुभावो यस्य स त्वम् आत्मा जगतामात्मदश्च भवतो भ्रुवः सकाशादुदीरितो यः कालस्तस्य वेगेन ध्वस्ता नष्टा आशिषो येषां तानब्जभवनाकपतीन् ब्रह्मशिवस्वर्गपतीन् हित्वा इति हेतोः मे मया वृतोसि एतेन वैदर्भ्येतदविज्ञाय इत्युत्तर दत्तं भवति । अन्ये पामराः कुतो वरेण्याः ॥ ३९ ॥ हे गदाग्रज तव वचो राजभ्यो बिभ्यत इत्यादि जाड्यं मांद्यम् । तथाहि । शाङ्र्गस्य निनदेन भूपान् जरासंधादीन् विद्राव्य यस्त्वं मां जहर्थ हे ईश पशून् विद्राव्य सिंहः स्वभागमिव तेभ्यो भयाद्धेतोरुदधिं समुद्रं शरणं गत इति यावत् ॥४०॥

## गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

'निष्किञ्चना वयं शश्वन्निष्किञ्चनजनप्रियाः । तस्मात्प्रायेण न ह्याढ्या मां भजन्ति सुमध्यमे' इत्येतच्छ्लोकोक्तं दोषत्रयं परिहरति—निष्किञ्चन इति । नन्विति सम्बोधने । हे प्रभो ! यतः सकाशात् किञ्चिदपि दुर्लभं नास्ति तथाभूतो निष्किञ्चनो भवान् । 'दरिद्रतालक्षणं निष्किञ्चनत्वं तु तव न घटते' इत्याशयेनाह—यस्मा इति । बलिं पूजां भुञ्जते स्वीकुर्वन्ति इति बलिभुजः अन्यैः पूज्या अपि ब्रह्मादयो यस्मै तुभ्यं बलिं हरन्ति पूजां समर्पयन्ति तस्य सर्वेश्वरस्य तव दरिद्रता कथं स्यादिति शेषः । निष्किञ्चनजनप्रिया इत्यत्र 'बहुव्रीहिणा तत्पुरुषेण वा निन्दा स्यात्तदुभयत्रापि नियमो नास्ति' इत्याशयेनाह—प्रेष्ठ इति । बलिभुजां लोकेश्वराणां ब्रह्मादीनामपि भवान् प्रेष्ठः ते ब्रह्मादयोऽपि तुभ्यं तव प्रेष्ठाः । 'तस्मात् प्रायेण न ह्याढ्या मां भजन्ति' इत्यस्योत्तरमाह—न त्वामिति । आढ्यतया धनाभिजनादिभिराढ्यत्वाभिमानेनान्धाः विवेकशून्या अतएव असुतृपः असून् इन्द्रियाण्येव तर्पयन्तीति तथाभूता अन्तकमायुर्हरन्तं कालरूपमपि त्वा त्वां न विदन्ति न जानन्ति । अतो न भजन्तीत्यर्थः ॥ ३७ ॥ प्रेष्ठत्वे हेतुं वदन्तो 'ययोरात्मसमं वित्तम्' इत्यादिनोक्तमनौचित्यं परिहरति–त्वमिति । 'वा' इत्यनेन 'अयमर्थः शास्त्रप्रसिद्ध' इति द्योतयति । समस्तपुरुषार्थमयः धर्मार्थकाममोक्षाख्यचतुर्विधपुरुषार्थप्रदः फलात्मा फलं हि परमानन्दस्तत्स्वरूपश्च, 'एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति' इति श्रुतेः । अत्र अविवेकिनामाचारं प्रमाणमाह—यद्वाञ्छयेति । यस्य फलरूपस्य तव वाञ्छया प्राप्तीच्छया सुमतयः कृत्स्नं सर्वमपि व्यवहारं विसृजन्ति त्यजन्तीत्यर्थः । "नहि कश्चित् क्षणमपि जातु तिष्ठत्यकर्मकृत्" इति वचनेन सर्वत्यागेन स्थित्यसम्भवात् तावन्मात्रेण मत्प्राप्त्यसम्भवाच्च किञ्चिदनुष्ठानमवश्यं कर्तव्यम् । 'तर्हि किं कुर्वन्ति' इत्यपेक्षायां 'त्वद्भजनमेव' इत्याशयेनाह—तेषामिति । हे विभो ! तेषां विवेकिनां भवतः समाजः सेव्यसेवकलक्षणः सम्बन्धः यद्वा भवत्सम्बन्धिनां भक्तानां समाजः तत्र स्थित्वा त्वद्भजनमेवोचितः, तयोः परस्परानुरागयुक्तयोः अत एव सुखदुःखिनोः पुंसः स्त्रियाश्च समाजो गोष्ठीस्तेषां नोचितः ॥ ३८ ॥ 'भिक्षुभिः श्लाघिता मुधा' इत्यस्योत्तरमाह—त्वमिति । भिक्षुपदव्याख्यानं न्यस्तदण्डमुनिभिरिति । न्यस्तस्त्यक्तः दण्डः प्राणिपीडा यैस्ते च ते मुनयो मननशीला विवेकिनश्च तैर्गदितः श्लाघितोऽनुभावो यस्य तथाभूतो जगतामात्मा स्वभक्तानामात्मदश्च त्वमिति ज्ञात्वा अब्जभवो ब्रह्मा नाकपतयो स्वर्गपतयः इन्द्रादयस्तान् हित्वा उपेक्ष्य मे मया वृतोसीत्यन्वयः । ब्रह्माद्युपेक्षायां हेतुमाह—भवतो भ्रुवः सकाशात् उदीरितो यः कालस्तस्य वेगेन ध्वस्ताः खण्डिताः आशिषो भोगा येषां तानिति । यदि ब्रह्मादीनामियं व्यवस्था तदाऽन्ये चैद्यादयः कुतो वरणयोग्या इति शेषः । आत्मेति वृथा श्लाघेति परिहृतं अन्येषां तदर्थप्रियत्वात् । ज्ञात्वा इत्यनेन अज्ञानपरिहारः । हित्वेत्यनेनादीर्घसमीक्षापरिहारः ॥ ३९ ॥ एवं स्वाज्ञानं परिहृत्य किञ्चित्क्रोधाविष्टा तद्वाक्यानि खण्डयति—जाड्यमिति । हे गदाग्रज ! सिंहो यथा पशून् महिषादीन् विद्राव्य स्वबलिं स्वभागं हरति तथा यस्त्वं शाङ्र्गधनुर्निनादेनैव भूपान् जरासन्धादीन् विद्राव्य पलायनं कारयित्वा स्वभागं मां जहर्थ हृतवान् असि । तस्य तव तेभ्यो राजभ्यो भयादुदधिं शरणं प्रपन्न इति यद्वचो भाषणं तज्जाड्यं अनन्वितमेवेत्यन्वयः । 'परमाप्तस्य तव भक्तप्रतारकं वचनं न पुनरुक्तम्' इत्याशयेन सम्बोधयति—ईशेति ॥ ४० ॥

## अन्वितार्थप्रकाशिका

निष्किञ्चना इति श्लोकोक्तं दोषत्रयं प्रत्याह—निष्किञ्चन इति ॥ नन्विति सम्बोधने । हे प्रभो ! यतः सकाशात् किञ्चिदपि दुर्लभं नास्ति यस्य तथाभूतो निष्किञ्चनो भवान् नतु दरिद्रतारूपनिष्किञ्चनत्ववान् यतः बलिं पूजां भुञ्जते स्वीकुर्वन्ति इति बलिभुजः अन्यैः पूज्या अपि अजादयः ब्रह्मादयोऽपि यस्मै तुभ्यं बलिं हरन्ति पूजां समर्पयन्ति तस्य सर्वेश्वरस्य तव दरिद्रता कथं स्यादिति शेषः । निष्किञ्चनजनप्रिया इत्यत्र तत्पुरुषमाश्रित्याह बलिभुजां लोकेश्वराणां ब्रह्मादीनामपि भवान्प्रेष्ठः बहुव्रीहिमाश्रित्याह ते ब्रह्मादयोऽपि तुभ्यंत व प्रेष्ठाः आढ्यतयाभिजनादिभिराढ्यत्वामानेनान्धाः विवेकशून्या अत एव असुतृपः असून् इन्द्रियाण्येव तर्पयन्तीति तथाभूता अन्तकमायुर्हरन्तं कालरूपमपि त्वा त्वां न विदन्ति न जानन्ति । अतो न भजन्ति इत्यर्थः ॥ ३७ ॥ ययोरात्मसमं वित्तमित्यत्राह—त्वमिति ॥ समस्तपुरुषार्थमयः धर्मादिप्रदः फलात्मा फलं हि परमानन्दस्तत्स्वरूपश्च यस्य फलरूपस्य तव वाञ्छया प्राप्तीच्छया सुमतयः कृत्स्नं सर्वमपि व्यवहारं विसृजन्ति त्यजन्तीत्यर्थः । हे विभो ! तेषां विवेकिनां भवतः समाजः सेव्यसेवकलक्षणः सम्बन्धः । यद्वा । भवत्संबन्धिनां भक्तानां तैरेव समाजः उचितः । रतयोः

परस्परानुरागयुक्तयोः अत एव सुखदुःखिनोः पुंसः स्त्रियाश्च समाजो भवतो भक्तानां च नोचितः ॥ ३८ ॥ भिक्षुभिः श्लाघिता इत्युक्तं तत्र भिक्षुश्लाघैव सर्वोत्कर्ष इत्याह—त्वमिति ॥ न्यस्तस्त्यक्तः दण्डः प्राणिपीडा यैस्ते च ते मुनयश्च त एव भिक्षव उच्यन्ते तैर्गदितः श्लाघितोऽनुभावो यस्य तथाभूतो जगतामात्मा स्वभक्तानामात्मदश्च त्वमिति ज्ञात्वा भवतो भ्रुवः सकाशात् उदीरितो यः कालतस्य वेगेन ध्वस्ताः खण्डिताः आशिषो भोगा येषां तान्। अब्जभवो ब्रह्मा नाकपतयः स्वर्गपतयः इन्द्रादयस्तान् हित्वा उपेक्ष्य मे मया वृतोऽसि। अन्ये कुतः चैद्यादीनां का गणना। एतेन वैदर्भ्येतदविज्ञायेत्यपि अदीर्घदर्शित्वमज्ञानं च समाहितम् ॥ ३९ ॥ स्वाज्ञानं परिहृत्य पुरुषान्तरगुणवर्णनप्रदीप्तकोपसंरम्भेण भगवत्येवाज्ञानमापादयन्ती समुद्रं शरणं गतानित्यत्राह—जाड्यमिति ॥ हे ईश ! हे गदाग्रज ! सिंहो यथा पशून्महिषादीन् विद्राव्य स्वबलिं स्वभागं हरति तथा यस्त्वं शार्ङ्गधनुर्निनादेनैव भूपान् जरासन्धादीन् विद्राव्य पलायनं कारयित्वा स्वभागं मां जहर्थ हृतवान् असि। तस्य तव तेभ्यो राजभ्यो भयादुदधिं शरणं प्रपन्न इति यद्वचो भाषणं तज्जाड्यमनन्वितमेव। "यत्तु सत्यं भयादिव" इति पूर्वं मया भवद्वचः समाहितं तन्ममापि जाड्यमेवेति भावः ॥ ४० ॥

### श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्

निःकिंचनावयं शश्वदित्येतस्मिच्छ्लोके गदितं यद्दोषत्रिकं तन्निराकरोति निःकिंचन इति। यतस्त्वतः पुरुषोत्तमात्किंचित्किमपि वस्तु उत्तमं नास्तीति ननु निश्चितमस्ति अतो भवान्निःकिंचनोऽस्ति यस्मै तुभ्यमितरलोकानां बलिभुजोपि उपहारग्राहका अपि अजाद्यामहाधनिका ब्रह्मादिदेवाः बलिं पूजोपहारं हरंति समर्पयंति। अतो निःकिंचनशब्दवाच्यो दरिद्रीभवान्नास्तीतिभावः। निःकिंचनावयंशश्च निःकिंचनजनप्रिया इत्यत्र विशेष्यविशेषणयोर्बहुवचनं स्वानेकावतारपरं बोध्यं निःकिंचनजनप्रिया इति यदुक्तं तस्यान्वर्थतयोत्तरमाह नास्ति हरिव्यतिरिक्तं किंचनवस्तु येषां ते निःकिंचनांस्ते चेते जनाः साधुजनाश्च तेषां प्रियाः वयं यद्वा ते निःकिंचनजनाः प्रिया येषां तथाभूता वयं स्मः इति भवता यदुक्तं तस्मिन्पक्षे बलिभुजः बलिं अतिप्रेम्णा प्रह्लादादिभिस्तुभ्यं समर्पितं त्वद्भुक्तावशिष्टं भुंजंतीति तथाभूताः। अजाद्याः अजा अजन्मानो ब्रह्मपुरश्वेतद्वीपादिहरिधामस्थाः। महामुक्तास्तदाद्यानारदसनकादयः अकिंचनाः साधवः यस्मै तुभ्यं बलिं पूजोपहारं हरंति समर्पयंति तेषामकिंचनसाधूनां भवान् प्रियः तेऽपि तव प्रिया इत्यर्थः। नह्याढ्यतमां भजंतीत्यस्योत्तरमाह नेति आढ्यतया धनिकतया ये अंधाः कार्याकार्यविवेकदृष्टिहीनाः अतएवासुतृप उदरंभरास्ते। अंतकं भक्तजनिमृतिनाशकं। त्वां न विदंति। अतो न भजंतीत्यर्थः ॥ ३७ ॥ ययोरात्मसमं वित्तमित्यस्योत्तरमाह त्वमिति। समस्तपुरुषार्थमयः धर्मादिचतुष्टयपुरुषार्थरूपः अतः फलात्मा अनवधिकातिशयस्वपरमानंदप्रदस्त्वमसि अतः सुमतयो यस्य तव वांछया प्राप्तुमिच्छया कृत्स्नं प्राकृतसुखं ब्रह्मसुखं च विसृजंति त्यजंति। कृत्यमिति पाठे तु सांसारिकव्यापारवृंदं त्यजंति अतो हे विभो तेषां भवतस्तव च। समाज उपास्योपासकरूपसंबंधः समुचितः सम्यग्योग्योस्ति रतयोः परस्परमासक्तयोः अतएव सुखदुःखिनोः आसक्तिजनितसुखलेशमिश्रानेकविध दुःखव्याकुलयोः पुंसः स्त्रियाश्च समाजो न समुचितोस्ति तव भक्तानामेव परमसुखं नान्येषां स्त्रीपुंसानामिति भावः ॥ ३८ ॥ इदानीं भिक्षुभिः श्लाघिता मुधा इति यदुक्तं तस्योत्तरमाह। त्वमिति न्यस्तो राज्यादित्यागेन त्यक्तो दंडो जननिग्रहो यैस्तैर्मुनिभिर्मनुप्रियव्रतांगप्रभृतिभिर्भिक्षुभिः। जगतां चेतनानां आत्मा अंतर्यामी। आत्मदो भक्तानां स्वमूर्त्तिप्रदश्चेति। गदितो योनुभावः स सत्योस्ति न मुधेति ज्ञात्वैव मे मया वृत्तोसि किंकृत्य भवद्भ्रुवस्तव भृकुटेः सकाशात् उदीरितः। उत्थितो यः कालस्तस्य वेगेन ध्वस्ता हृता आशिषो भोग्यपदार्था येषां तान् विधि शिवेंद्रान् हित्वा त्वमेव वृतः। तर्ह्यन्ये चैद्यादयस्तु छास्तान् हित्वेति कुतो वक्तव्यमित्यर्थः वैदर्भ्येतदविज्ञाय त्वया दीर्घसमीक्षयेति स्वदोषद्वयमुक्तं तस्य परिहारो वृतोसीत्यारभ्योक्तः ॥ ३९ ॥ समुद्रशरणं गतानित्यस्योत्तरांतरमाह जाड्यमिति। तेभ्यो राजभ्यो भयात् शरणमाश्रयं उदधिं त्वं प्रपन्न इति यत्तव वचस्तज्जाड्यं वाणीविलासपरं न परमार्थः ॥४०॥

### भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

'आस्थिताः पदवीं सुभ्रूः प्रायः सीदन्ति योषितः' इत्यस्य परिहारं यद्वाञ्छयेतीतः पञ्चमे श्लोके वक्ष्यति। इदानीं तावत् 'निष्किंचना वयं शश्वन्निष्किंचनजनप्रियाः। तस्मात् प्रायेण नह्याढ्या मां भजन्ति सुमध्यमे' इत्येतच्छ्लोकोक्तं दोषत्रयं परिहरति ॥ निष्किंचन इति ॥ यतः किंचित् न अस्ति। ततः, भवान् निष्किंचनः, न। नु कुतः बलिभुजः अन्येभ्य इन्द्रादिभ्योऽपि बलिग्राहकाः, अजाद्या ब्रह्मादयः अपि, यस्मै तुभ्य बलिं पूजां, हरन्त्यर्पयन्ति। ततः न विद्यते किंचन स्वं यस्येत्येवं दरिद्रतालक्षणं निष्किंचनत्वं तु तव न घटतेऽपि तु न विद्यते किंचन प्राप्यं यस्येत्यकिंचन इति तु घटते इत्यर्थः। न हि करदीकृतभूपालश्चक्रवर्ती नृपो निष्किंचन इति वक्तुं शक्य इति भावः। 'निष्किंचनजनप्रिया' इत्यत्र तत्पुरुषेण बहुव्रीहिणा वा निन्दा न स्यादिति स्वयमुभयथा स्तौति। बलिभुजां पूजार्हाणामनन्यप्रयोजनत्वादकिंचनानां नारदादीनां, भवान् प्रेष्ठः। न विद्यते भगवतस्त्वत्तोऽन्यदधिकं येषां तेऽकिंचना नारदादयस्ते ये जनास्तेषां प्रिय इति तत्पुरुषपक्षे स्तुतिः। ते नारदादयोऽकिंचना जनाः अपि, तुभ्यं तव, प्रेष्ठाः। ते उक्तविधा अकिंचना जनाः प्रिया यस्येति बहुव्रीहिपक्षे स्तुतिः। बलिभुक्शब्दविशेषितानां नारदा-

दीनामपि अकिंचनशब्देन स्वभिमतं दारिद्र्यं नास्तीति न निन्दापरतयाऽकिंचनशब्दार्थो युक्तः। 'तस्मात् प्रायेण न ह्याढ्या मां भजन्ति' इत्यस्योत्तरमाह। आढ्यतया धनकुलाभिजनरूपाद्याढ्यत्वाभिमानेनान्धा विवेकहीनाः, असुतृपः केवलेन्द्रियतर्पणपराः, अन्तं करोतीत्यन्तकस्तं, त्वा त्वां, न विदन्ति। अन्तकशब्दोक्त्या कालरूपेणायुर्हरन्तमित्याशयः। अन्धानां त्वद्वैभवाचक्षुः-श्रोत्रविषयत्वादसुतर्पणपरतया त्वदभजनमिति भावः॥ ३७॥ बलिभुजामपि भवान् प्रेष्ठ इत्यत्र हेतुं वदन्ती 'ययोरात्मसमं वित्तम्' इत्यनेनोक्तमनौचित्यं परिहरति॥ त्वं वा इति॥ समस्तपुरुषार्थमयः धर्मादिसमस्तपुरुषार्थस्वरूपः, फलात्मा अभीप्सित-फलरूपः, आत्मा चेत्यर्थः। यद्वा। स्वाश्रितवाञ्छितार्थफलप्रदत्वात् फलरूपः अनवधिकातिशयानन्दमयत्वात्परमानन्दस्वरूपश्च। 'एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति' इति श्रुतेः। त्वं वै एवंभूत एकस्त्वमेवेत्यर्थः। यद्वाञ्छया यस्य तव सेवा-प्राप्तिवाञ्छया, सुमतयः शोभनबुद्धयः, कृत्स्नं त्वद्दास्यव्यतिरिक्तं सर्वं सांसारिकसुखमित्यर्थः। विसृजन्ति त्यजन्ति नेच्छन्तीति यावत्। हे विभो, तेषामुक्तविधसुमतीनां, भवतश्च समाजः सेव्यसेवकलक्षणः संबन्धः, समुचितः। अत्र प्रथमपादेन वित्तादिमद्भि-र्भगवत्साम्यं दूरापास्तं, द्वितीयतृतीयपादाभ्यां त्वद्दास्यमात्रकाङ्क्षिण्या मम तव संबन्धस्तूचित इति सूचितम्। चतुर्थपादेन च मदन्येन संबन्धस्त्वनुचित इत्यभिप्रेत्याह। रतयोर्विषयादिभोगार्थं मिथ आसक्तयोः, अत एव सुखदुःखिनोः तत्कृतसुखदुःख-भाजोः, पुंसः स्त्रियाश्च, स्त्रीपुरुषयोरित्यर्थः। न, तव समाजो नोचित इत्यर्थः। यः केवलमैथुन्यतत्प्रयुक्तसुखदुःखानुभवार्थः समाजः स तु नोचितः यस्त्वावयोः शेषशेषिणोः समाजः, सतु समुचित एवेति भावः॥ ३८॥ 'भिक्षुभिः श्लाघिता मुधा' इति यदुक्तं तस्योत्तरमाह॥ त्वमिति॥ भिक्षुपदव्याख्यानं न्यस्तदण्डेति। त्वं न्यस्तदण्डमुनिभिः सर्वभूतसुहृत्त्वं प्रार्थमानैर्भिक्षुसंज्ञाभाग्-भिर्मुनिभिः, गदितः श्लाघितः अनुभावः प्रभावो यस्य तथाभूतः। तत्र हेतुं वदन्ती मुधेत्यस्योत्तरमाह। जगतां आत्मान्तर्यामी, आत्मदः स्वस्मिन् गाढानुरागवतामात्मीयमूर्त्तिपर्यन्तफलप्रदश्च। 'आत्मदा बलदा' इत्यादि श्रुतेः। आत्मत्वादात्मपर्यन्तवदान्य-त्वाच्च यतस्त्वं मुनिगदितानुभावोऽतः, भिक्षुकृतं तव मिथ्याश्लाघित्वं नास्तीति भावः। 'वैदर्भ्येतदविज्ञाय त्वयाऽदीर्घसमीक्षया' इति स्वस्मिन्नुक्तं दोषद्वयं परिहरति इतीति। इतीत्थं भूतं त्वां ज्ञात्वेति शेषः। भवतः या भ्रूस्तस्याः सकाशात्, उदीरितो यः कालस्तस्य वेगेन ध्वस्ता नाशं प्राप्ता आशिषः आशीःफलरूपा लोकभोगादयो येषां तान्, अब्जभवनाकपतीन् ब्रह्मेन्द्रादीन् हित्वा विहाय, मे मया, त्वं वृतः, असि। अन्ये चैद्यादयः, कुतः। ब्रह्मादीन् विहाय यदा त्वं मया परिणीतस्तदा चैद्यादीन् विहाय तथा कुर्यां, तत्र किमु वक्तव्यमित्यर्थः। दीर्घसमीक्षयैव विचार्यैव मया वृतोऽसि त्वमिति भावः॥ ३९॥ एवं स्वाज्ञानं परिहृत्य पुरुषान्तरगुणवर्णनप्रदीप्तकोपसंरम्भेणेदं वचस्तव शृण्वतां जाड्यावहमित्याह—जाड्यमिति॥ हे गदाग्रज, यस्तु त्वं, शार्ङ्गनिनदेन, भूपान् प्रतिपक्षताभाजो नृपान्, विद्राव्य पलाययित्वा, हे ईश, सिंहः यथा पशून् महिषादीन्, विद्राव्य स्वबलिं स्वभागं हरति, तद्वत् मां जहर्थ हृतवानसि। एवं भूतस्य तव तेभ्यो राजभ्यः, भयात् उदधिं समुद्रं, शरणं प्रपन्नः। इति यत् वचः, तत् जाड्यं, शृण्वतां तव जाड्यताबोधकमित्यर्थः॥ ४०॥

## कृष्णप्रिया

प्रियतम! आपने कहा कि—निष्किञ्चनावयं शश्वत् देवि! हम सदा निष्किञ्चन हैं, वह सर्वथा सुसङ्गत है आपकी अकिञ्चनता दरिद्रता नहीं है लेकिन आपसे अतिरिक्त कोई पदार्थ नहीं हैं केवल आपही सर्व हैं यही श्रुति भगवती जी का वचन है कि "सर्वं खल्विदं ब्रह्म"। आज शिव आदि देवाधिदेवों को भक्तजन जो पूजा चढ़ाते हैं सेवा आदि सामग्रियाँ समर्पण करते हैं वे सब आपके श्रीचरणों में समर्पित करते हैं। पुनः आपने कहा "न आढ्याः भजन्ते माम्" जो धनाढ्य जन हैं वे मेरा भजन नहीं करते हैं वह ठीक ही है क्योंकि धनमदान्धजन को दृष्टि ही नहीं कि भगवान् है। उनकी नजरों में केवल इन्द्रियों की तृप्ति ही केवल रही है। पुनः दृष्टि में यह भी अनुसन्धान है कि मृत्यु मेरे शिर पर सवार हो रहा है फिर भजन कैसे करें?। देवाधिदेव जो आदिभक्तों से प्राप्त करते हैं उनके आप ही प्रियतम हैं और आपको देवाधिदेव श्री प्रिय-अतिप्रिय है॥ ३७॥ भगवन्! निश्चित रूप से यही सिद्धान्त है कि—मनुष्यमात्र के लिये जो धर्म, अर्थ, काम एवं मोक्ष नाम के जो चार पदार्थ हैं वे चारों पुरुषार्थ आपके ही स्वरूप हैं। भगवन्! आपके श्रीचरणों की प्राप्ति के लिये विवेकसम्पन्न सज्जन लोग समस्त भौतिक दैविक सुख साधनों को विना विलम्ब छोड़ देते हैं। स्वामिन्! उन परमभक्त विवेक सम्पन्न सज्जनों का आपके साथ निरंतर नाता होना चाहिये। लेकिन, जो विषयों से घिरे हुए स्त्री पुरुष परस्पर का सम्बन्ध से सुख दुःख के वश बनकर रहे हैं वे आपका सम्बन्ध प्राप्त करने में कैसे योग्य हो सकेंगे॥ ३८॥ स्वामिन्! आपने कहा कि "भिक्षुभिः श्लाघिता मुधा" केवल व्यर्थ भिक्षुकों ने ही हमारी प्रशंसा की है यह कहना सर्वथा सुसंगत है लेकिन वे भिक्षुक महापुरुष कौन है नाथ? पूर्ण प्रशान्त आत्मरत एवं परमविरक्त महापुरुषों ने ही आपका उज्ज्वल यशोगान किया है। वे भिक्षुक "न्यस्तदंडमुनिभिः" सतत मननशील मुनिवर हैं और किसी भी अपराधी को कभी न दण्ड देना इस प्रकार के आत्मदर्शी एवं करुणालु हैं। पुनः अनेक रात्रियों दिवसों के परिपक्व निश्चय एवं आपकी सम्पूर्ण महिमा श्रुति शास्त्र एवं पुण्यश्लोक पुरुषों ने गायी है उनका श्रवण करने के पश्चात् ही वरण किया है। मुझे यह अनुसन्धान है कि आप प्राणीमात्र के आत्माओं के आत्मा हैं पुनः अपने निजभक्तों को

आत्मदान करते हैं। प्रियतम मैं यह भी जानती हूँ कि नाकपति इन्द्र अब्जनाभ ब्रह्माजी एवं कैलासपति श्री शङ्कर आदि समर्थ देवों का भी वरण इसलिये नहीं किया कि आपकी भृकुटी के संकेत से प्रकट होने वाला वह महाकाल उनके उरःपुर में रही हुई उन आशाओं को मिट्टी में मिला देता है फिर तो जरासन्ध शिशुपाल आदि नाममात्र नरेशों की बात ही क्या कही जाय ? ॥ ३९ ॥ हे गदाग्रज ! हे यदुवीर ! हे यदुवर ! आपने कहा कि "समुद्रं शरणं गताः" नृपतियों डरकर भागकर हम समुद्र की शरण में गये, यह तो आपका उपहास-विनोद वाक्य है। नाथ ! आपने स्वयंवर के अवसर पर इकट्ठे हुए जरासन्धादि नृपतियों को आपके शार्ङ्ग धनुष्य के मात्र टङ्कार से भगाकर एवं रुक्मी को लज्जित एवं पराजित करके निजदासी को भाव एवं चाव से अपनी शरण में ले गये कि जैसे गजराज केसरी अपने सिंहनाद से वन्यपशुओं को भगाकर अपना भाग ले जाय यह तो पराक्रमवीर आप ही कर सकते हैं ॥ ४० ॥

यद्वाञ्छया नृपशिखामणयोऽङ्गवैन्यजायन्तनाहुषगयादय ऐकपत्यम् ।
राज्यं विसृज्य विविशुर्वनमम्बुजाक्ष सीदन्ति [1]तेऽनुपदवीं त इहास्थिताः किम् ॥ ४१ ॥
कान्यं [2]श्रयीत तव पादसरोजगन्धमाघ्राय सन्मुखरितं जनतापवर्ग्यम्[3] ।
लक्ष्म्यालयं त्वविगणय्य गुणालयस्य[4] [5]मर्त्या [6]सदोरुभयमर्थविविक्तदृष्टिः ॥ ४२ ॥
तं त्वानुरूपमभजं जगतामधीशमात्मानमत्र च परत्र च [7]कामपूरम् ।
स्यान्मे तवाङ्घ्रिररणं[8] सृतिभिर्भ्रमन्त्या [9]यो वै भजन्तमुपयात्यनृतापवर्गः ॥ ४३ ॥
[10]तस्याः स्युरच्युत नृपा भवतोपदिष्टाः स्त्रीणां गृहेषु खरगोश्वविडालभृत्याः ।
यत्कर्णमूलमरिकर्शन नोपयाता[11] युष्मत्कथा मृडविरिञ्चसभासु गीता ॥ ४४ ॥

**कर्दमक्षमा**

अन्वयः—हे अम्बुजाक्ष ! अङ्गवैन्यजायन्तनाहुषगयादयः, नृपशिखामणयः, यद्वाञ्छया, ऐकपत्यम्, राज्यम्, विसृज्य, वनम्, विविशुः, तर्हि, इह, ते, पदवीम्, अमु, आस्थिताः, ते, सीदन्ति, किम् ? ॥ ४१ ॥ सन्मुखरितम्, जनतापवर्गम्, गुणालयस्य, लक्ष्म्यालयम्, तव, पादसरोजगन्धम्, आघ्राय, अर्थविविक्तदृष्टि, मर्त्या, का, अन्या, सदा, उरुभयम्, अन्यम्, श्रयेत ॥ ४२ ॥ जगताम्, अधीशम्, अत्र, च, परत्र, कामपूरम्, अनुरूपम्, आत्मानम्, तम्, त्वाम्, अभजम्, यः, वै, अपवर्गः, भजन्तम्, उपयाति, सृतिभिः, भ्रमन्त्यः, मे, तवाङ्घ्रिः, अरणम्, स्यात् ॥ ४२ ॥ हे अरिकर्षण ! हे अच्युत ! भवता, उपदिष्टाः, स्त्रीणाम्, गृहेषु, खरगोश्वविडालभृत्याः, नृपाः, तस्याः, स्युः, मृडविरिञ्चसभासु, गीताः, युष्मत्, कथाः, यत्कर्णमूलम्, न, उपययात् ॥ ४४ ॥

**श्रीधरस्वामिविरचिता भावार्थदीपिका**

यच्च 'अन्यदस्पष्टवर्त्मनाम्' इत्यादिना अर्थात्त्वां भजन्तः सीदंतीत्यवसादनं श्रमावहत्वमुक्तं तदपि मन्दमेवेत्याह—यद्वाञ्छयेति । यस्य तव भजनवांछया नृपोत्तमाः अंगो वेनस्य पिता, वैन्यः पृथुः, जायन्तो भरतः नाहुषो ययातिः, गयश्चादिर्येषां ते य एते तव पदवीं मार्गमाश्रितास्ते किं सीदन्ति न सीदन्त्येव अपि तु त्वत्पदं प्राप्ता इत्यर्थः । एवं कोपावेशेनावसादनस्यपरिहारादस्पष्टवर्त्मनामित्येतदानन्तर्यं विहायात्रोत्कर्षः ॥ ४१ ॥ यच्चोक्तम् 'अथात्मनोऽनुरूपम्' इति तत्राह—काऽन्यमिति श्लोकद्वयेन । गुणानामालयस्य तव पादसरोजगंधं जनताया अपवर्गं मोक्षरूपं लक्ष्म्या आलयं तत्सेव्यं सद्भिर्मुखरितं वर्णितमाघ्राय तमविगणय्य मर्त्या मरणधर्मिका सदा उरुभयं यस्य तमन्यं का स्त्री श्रयेत सेवेत अर्थे विविक्ता दृष्टिर्यस्याः सा गुणालयस्येत्यनेन गुणैर्हीना इति यदुक्तं तदपास्तम् ॥ ४२ ॥ अतस्त्वामेवाहमभजमित्याह । तं त्वेति । किंच प्रार्थयते । स्यादिति । अरणं शरणम् । सृतिभिर्देवतिर्यगादिभिर्जन्मभिः पाठांतरे त्वर्थवादबहुलकर्मश्रवणैरित्यर्थः । कथंभूतस्य तव ! यस्त्वमनृतस्य संसारस्यापवर्गो नाशो यस्मात्स भजन्तमुपयात्यात्मसात्करोति तस्य तवांघ्रिरिति । भीतस्य हि शरणमेवानुरूपं भजनयोग्यमतस्त्वामहमभजमित्यर्थः ॥ ४३ ॥ ये चोक्ता राज्ञां बहवो गुणाः "राजपुत्रीप्सिता भूपैर्लोकपालविभूतिभिः" इत्यादिना तत्र सेर्ष्यं सशापं सांगुलिभंगं चाह द्वाभ्याम् । तस्याः स्युरिति । खरा इव केवलं भारवाहा गावो बलीवर्दा इव नित्यं व्यापार-

१. तेनु–विज. । २. यी–वीर.; श्रयेत–श्रीधर. वंशी जीव विश्व.; का स्त्री वृणीत–विज. । ३. वर्गम्–श्रीधर. वंशी. जीव. वीर. विज. विश्व. । ४. याद्यं–विज. ५. मर्त्यं–वीर; मर्त्याशिषो–विज. । ६. विवंक विज. । ७. रूपम्–विज. । ८. शरणं श्र–विज. । ९. ये वै भजन्त्युत यान्त्यनृतापवर्गम्–विज. । १०. कस्याः–विज. । ११. यायात्–श्रीधर. वंशी जीव. वीर. विज. विश्व. ।

क्लिष्टाः श्वान इवावमता बिडाला इव कृपणा हिंस्राश्च भृत्या इव किंकरा नृपास्तस्या दुर्भगायाः पतयः स्युः यस्याः कर्णपथं त्वत्कथा न प्राप्नुयादिति ॥ ४४ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

इत्यर्थ इति—न हि सुखिनो दुःखमार्गे प्रवृत्तिरपि तु पूर्वसिद्धसुखादिकसिद्ध्यर्था तु भवत्येवेति तात्पर्यम् । एवमित्थम् । कोपावेशेनानन्तर्यं प्रथमं वक्तव्यमस्पष्टवर्त्मपदार्थवर्णनं विहाय । अत्रोत्कर्ष उत्कर्षो वर्णितः । कोपावेशेनैवैतत्परिहर्तुं योग्यमिति संप्रत्येवावसादनं परिहरति—यद्वांछयेति । यस्य वांछया, तस्य ते तवेति योज्यम् । नु प्रश्ने । इह जगति यत्र कुत्रापीत्यर्थः । प्रायः सीदंतीह योषितामुपलक्षणत्वात् ॥ ४१ ॥ जनताया जनसमूहस्य । आघ्राय आसेव्य । अविगणय्यागणयित्वा । अर्थे परमार्थे । विविक्ता विवेकवती । यत्त्वयोक्तम् 'अथात्मनः' इत्यादि तदपि तथैवेत्याह—केति । या त्वदीयं यशो न श्रुतवती साऽन्यं श्रयतु नामेति भावः । सद्भिर्भ्रमरैरिव मुखरितं स्तुतम् जनताया जनमात्रस्यापि श्रवणादिभिरपवर्गसाधकम् । अवगणय्यावज्ञाय । मर्त्या मानुषीति । राक्षसप्रेतादिकन्या त्वन्यमाश्रयतामिति भावः । कीदृशमन्यम्—सदोरुभयम् । अर्थविविक्तदृष्टिरित्यविचारांधा त्वन्यं श्रयत्विति भावः । 'गुणालयम्' इत्यनेन गुणैर्हीनेत्यपि पराहतम् ॥ ४२ ॥ अतो गुणालयत्वात्सत्यत्वाच्च । 'सृतिर्जन्ममार्गयोः' इति निरुक्तिः । पाठांतरे 'श्रुतिभिः' इति पाठे । इत्यर्थ इति—"अपाम सोमममृता अभूम" इत्यादिवाक्याकर्णनैरिति भावः । अतोऽनुरूपत्वात् । इत्यर्थ इति—'अथात्मनोनुरूप–' इति दत्तोत्तरं जातमिति भावः । तम् उक्तमाहात्म्यम् । अत एवानुरूपं भजनयोग्यमभजम् । जन्मांतरेष्वपि तवैव भजनं करिष्यामीति वदती प्रेमभरदैन्येनात्मनो लीलामानुषीत्वं मत्वा तद्भजनं दुर्लभं मन्यमाना प्रार्थयते—स्यादिति । विविधजन्मभिरितस्ततो भ्रमंत्या अति । 'श्रुतिभिः' इति पाठे काश्चिच्छ्रुतयस्त्वां सर्वत्रानासक्तं वदन्ति, काश्चित्तु भक्तासक्तं, काश्चित्तु कदाचिद्दुःखेष्युदासीनप्रायमित्येवं विविधाः, ताभिः शंकां प्राप्तवत्याः । योंघ्रिस्त्वमिति टीका विचार्या, उपयातीति प्रथमपुरुषेणान्वयाय त्वंपदस्य विशेषणत्वं, य इत्यस्य विशेष्यत्वमंगीकृत्य समाधेया वा । अन्यत्तैः । तत्र चेति 'भीतस्य' इत्यादिवाक्यार्थयोजना । इत्यनेन प्रकारेणेत्यर्थः । अत्रानुरूपपदस्य व्याख्यापूर्वमव्याख्यानादेवेति । यद्वा—सृतिभिर्गतिभिस्तव तादृशनानाचेष्टाभिः । पाठांतरे, श्रुतिभिर्लक्ष्मीप्रियत्वादिकथनपराभिस्तत्राप्यनासक्त्यादिविख्यापिकाभिः । यद्वा—तवान्यावतारे सीतादीनां परित्यागादिश्रवणैरत्र च श्रीगोपीनां तथाद्येवेदृशवचनश्रवणैश्चानृतं तादृशविविधभ्रमस्तस्यापवर्गो यस्मात् । गीर्देवीव्यञ्जितार्थश्चायम्—तव सृतिभिर्नानावताररीतिभिर्भ्रमंत्या "देवत्वे देवदेहा सा मानुषत्वे च मानुषी" इत्यादिविष्णुपुराणोक्तेः । भवद्वल्लीलाकारप्रकटनेन त्वया सह विहरन्त्याः । पाठान्तरे यथायथा तत्तदवतारे मत्प्रतिपादिका श्रुतयस्तथा विहरंत्य इत्यर्थः । कीदृशोंघ्रिः–अनृतस्यापवर्गो यत्र स सच्चिदानन्दरूप इत्यर्थः । अन्यत्समम् ॥ ४३ ॥ तत्र राजगुणेषु । सेर्ष्यमक्षांतिसहितम् । सशापं परानिष्टोक्तिसहितम् । सांगुलिभंगं मुखेंगुलिप्रदानपूर्वकम् । अवमता अवज्ञास्पदाः । कृपणा मन्दाः । 'कृपणः कुत्सिते मन्दे क्रिमावपि' इति मेदिनी । दुर्भगाया मन्दभाग्यायाः । मृडः शिवः । तस्याः स्युरिति शापः, भवतोपदिष्टा इतीर्ष्या, खरगोश्वेति मुखांगुलियोग्यमिति विवेकः । हे अच्युतेति कालदेशाव्यभिचारिगुणो भवानेव, अन्यत्र गुणाभासमात्रत्वेऽपि व्यभिचारान्नान्य इति भावः । महादोषमप्याह–स्त्रीणामिति । अन्यत्तैः । तत्र किंकरा इति–किं करोमीत्याज्ञाप्रतीक्षका इत्यर्थः । क्षीरस्वामिना तथा तन्निरुक्तेः । यद्वा–खरपदेन ताड्यमानोपि तामनुगंतृत्वात्, गौर्भारवाहकत्वात्, अश्वः कदाचित्तद्वोढृत्वात्, श्वा वा पिंड वांछया तदाज्ञाकारित्वात्, बिडालस्तदुच्छिष्टभोक्तृत्वात्, भृत्याः पूर्ववदिति । यस्याः कर्णस्य मूलमवधानविषयमुप समीपे न यायात्, ईषदपि न गच्छेदित्यर्थः । युष्मदिति–गौरवेण बहुत्वात् । न च स्त्रीणामल्पबुद्धित्वात्तासां मनोहरा, अपि तु परमविदुषामपीत्याह—मृडेति । अरिकर्षण हे शत्रुसूदन भगवद्द्वेषेण ते मृतप्राया इति भावः ॥ ४४ ॥

### श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी

कोपावेशेनैवैतत्परिहर्तुं योग्यमिति सम्प्रत्येवावसादनं परिहरति—यद्वाञ्छयेति । तस्य वाञ्छया राज्यं देवेन्द्रादीनामपि स्पृहणीयं विसृज्य नृपशिखामणयस्ते वनं विविशुः तस्मात् नन्दनन्दनरूपत्वेन तैर्निश्चितस्य ते तवेत्यन्वयः । नु प्रश्ने इह जगति यत्रकुत्रापीत्यर्थः । प्रायः सीदन्तीत्यत्रापि योषितामुपलक्षणत्वादत्र नृपा अपि सङ्गृहीताः ॥ ४१ ॥ अन्या पुनरन्यं श्रयेत नाम तव पादसरोजगन्धन्त्वाघ्रायाप्यविगणय्य कान्यं श्रयेत तदघ्राणेऽन्याश्रयणमेवाविगणनमिति भावः । पादेत्यादिका भक्त्युक्तिः गुणग्रामं श्रुत्वेत्यर्थः । कीदृशं सद्भिरात्मारामैरपि मुखरितं सशब्दीकृतं शब्देन संयोजितं पूर्वसव्याख्या वर्णितमित्यर्थः । जनानां तापस्यवर्गो वर्जनं यस्मात्तं सर्वसम्पत्तेराश्रयं च इति मुक्तमुमुक्षुविषयिसेव्यत्वमुक्तम् अत एव गुणालयस्य सर्वगुणनिधेः अन्यस्य दोषमाह—मर्त्यश्च सः आ समन्तात् सदा सर्वदा च उरुभयं यस्य स च सः तम् उपलक्षण चैतत् सन्मुखरितविपरीतत्वादिकस्य नन्वन्यमाश्रयमाणा बह्वो दृश्यन्ते, तत्राह—अर्थेति । ता मूर्खा एवेति भावः ॥ ४२ ॥ तमुक्तमाहात्म्यम् अत एवानुरूपं भजनस्य योग्यमभजं जन्मान्तरेष्वपि तवैव भजनं करिष्यामीति वदन्ती प्रेमभरदैन्येनात्मनोलीलामानुषीत्वमेव च संमानु-

षीत्वं मत्वा तद्भजनं च दुर्लभं मन्यमाना प्रार्थयते—स्यादिति। विविधजन्मभिरितस्ततो भ्रमन्त्या अपि श्रुतिभिरिति पाठे काश्चित् श्रुतयस्त्वां सर्वत्रानासक्तं वदन्ति काश्चित्तु भक्तासक्तं काश्चित्कदाचित्तु दुःखेप्युदासीनप्रायमित्येवम्विधाः ताभिः शङ्कां प्राप्नुवत्याः योऽङ्घ्रिः यस्त्वमिति टीका विचार्य्या उपयातीति प्रथमपुरुषेणान्वयाय त्वम्पदस्य विशेषणत्वं य इत्यस्य विशेष्यत्वमङ्गीकृत्य समाधेया वा अन्यत्तैः तत्र च इति भीतस्येत्यादिवाक्यार्थयोजना इति अनेन प्रकारेणेत्यर्थः। अत्रानुरूपपद-व्याख्या पूर्वसव्याख्यानादेवेति यद्वा सृतिभिर्गतिभिः तव तादृशनानाचेष्टाभिः पाठान्तरे श्रुतिभिः लक्ष्मीप्रियत्वादिकथनपराभिः तत्राप्यनासक्त्यादिविख्यापिकाभिश्च यद्वा तवान्यावतारे सीतादीनां परित्यागादिश्रवणैः अत्र च श्रीगोपीनां तथाविधवैदूष्यवचन-श्रवणैश्च अनृतं तादृशविविधभ्रमः तस्यापवर्गो यस्मात् गीर्देवी व्यञ्जितार्थश्चायं तव सृतिभिर्नानावताररीतिभिर्भ्रमन्त्याः "देवत्वे देवदेहा सा मानुषत्वे च मानुषी" इत्यादिविष्णुपुराणोक्तेः भवल्लीलाकारप्रकटनेन त्वया सह विहरन्त्याः पाठान्तरे यथायथा तत्तदवतारे मत्प्रतिपादिकाः श्रुतयस्तथा विहरन्त्या इत्यर्थः। कीदृशोऽङ्घ्रिः अनृतस्यापवर्गो यत्र सः सच्चिदानन्दरूप इत्यर्थः। अन्यत् समानम् ॥ ४३ ॥ हे अच्युतेति कालदेशाव्यभिचारिगुणो भवानेव अन्यत्र गुणाभासमात्रेत्वपि व्यभिचारान्नान्य इति भावः। महादोषमप्याह—स्त्रीणामिति। अन्यत्तैः। तत्र किङ्करा इति किङ्करोमीत्याज्ञाप्रतीक्षका इत्यर्थः। क्षीरस्वामिना तथा तन्निरुक्तेः। यद्वा खरः पदेन ताड्यमानोपि तामनुगन्तृत्वात् गोर्भारवाहकत्वात् अश्वः कदाचित्तद्वोढृत्वात् श्वावा पिण्डी-वाञ्छातस्तदाज्ञाकारित्वात् बिडालः तदुच्छिष्टभोक्तृत्वात् भृत्यः पूर्ववदिति यस्याः कर्णस्य मूलमवधानविषयम् उप समीपे न यायात् ईषदपि न गच्छेदित्यर्थः। युष्मदिति गौरवेण वहुत्वात् न च स्त्रीणामल्पबुद्धित्वात्तासामेव मनोहरा अपि तु परमविदुषा-मपीत्याह—मृडेति। अरिकर्षण हे शत्रुसूदनेति भवद्द्वेषेण ते मृतप्राया इति भावः ॥ ४४ ॥

## श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी

अस्य वाञ्छया तस्य ते तवेत्यन्वयः। नृपशिखामणय इति साम्राज्यं सूचितम्, तदेवाह—ऐकपत्यमेकस्वामिकम-पीत्यर्थः। यद्वा, त एव नृपशिखामणयः, न तु जरासन्धादय इति भावः। आदिशब्दात् प्रियव्रतादयः, नु प्रश्ने, किंवा अनुपदवीं त्वन्मार्गानुसारिमार्गमपि इह वनेऽपि किं सीदन्ति? हे अम्बुजाक्षेति सौन्दर्य्यमात्रदर्शनापेक्षयैवास्थिता इति भावः ॥ ४१ ॥ तु अपि, अस्य यथापेक्षं सर्व्वैरन्वयः। पादसरोजस्यैकस्यापि गन्धमीषत्सम्बन्धमपि आघ्राय श्रवणादिना कथञ्चिद्दूरतो लब्ध्वापि किं पुनः साक्षात्त्वां लब्ध्वेत्यर्थः। गुणालयस्येति गन्धस्यापि सर्वगुणनिधित्वं सूचितम्। तदेव दर्शयति—जनेत्यादिपदद्वयेन। अत एव सद्भिः श्रीनारदादिभिर्मुखरितम्, अविगणय्य अनादृत्य कान्यं श्रयेत, अपि तु सर्वा त्वामेवाश्रयितुमर्हतीत्यर्थः। यतो मर्त्या श्रीमार्कण्डेयादीनामिव त्वत्तो मरणस्यापि निवृत्तेरिति भावः। किञ्च, सर्वार्थसिद्धिरपि स्यादित्याह—अर्थेति। अन्यस्त्वा-त्मानमपि रक्षितुं स्वश्रेयश्च साधयितुं न शक्नुयादित्याह—सदोरुभयमिति। अन्यत्तैर्व्याख्यातम्। यद्वा, सन्तो मौनशीला अपि मुखरिता येन तं जनानां स्वभक्तानाम्, तापस्य आध्यात्मिकादितापलक्षणस्य तद्विच्छेदजस्य वापवर्गो वर्ज्जनं यस्मात्तं लक्ष्म्याः सर्वसम्पत्तेरालयम्। एवं विशेषणत्रयस्यास्य यथोत्तरं श्रेष्ठ्यम्। अन्यत् समानम् ॥ ४२ ॥ तमुक्तमाहात्म्यम्, अत एवानुरूपं भजनयोग्यमभजम्। अनुरूपत्वमेव पुनर्विशेषतो दर्शयन्ती तं विशिनष्टि—जगतामित्यादिना। अधीशम्—ईश्वरेश्वरम्, न च केवलं बहिरेवाधीशत्वम्, अन्तरपीत्याह—आत्मानमन्तर्यामिणम्, सत्कर्म्मसु प्रवर्त्तनादिना परमं गुरुं सुहृदश्चेत्यर्थः। किञ्च, अत्रेति चकारद्वयं द्वयोरपि प्राधान्यार्थम्, एवमेषां त्रयाणां विशेषणानां यथोत्तरमनुरूपत्वे श्रेष्ठ्यम्। न केवलमस्मिन्नेव जन्मन्य-भजम्, जन्मान्तरेष्वपि तवैव भजनं करिष्यामीति वदन्ती प्रेमभरदैन्येन तद्दुर्लभं मन्यमाना प्रार्थयते—स्यादिति। विविधजन्म-भिरितस्ततो भ्रमन्त्या अपि, पाठान्तरे श्रुत्युक्त—कर्म्माचरणेन विचित्रजन्मानि प्राप्नुवत्या अपीत्यर्थः। कामपूरणमेव दर्शयति—य इति। वै प्रसिद्धौ, अनृतापवर्ग इति संसारदुःखध्वंसन–पूर्वकमित्यर्थः। अन्यत्तैर्व्याख्यातम्। तत्रानुरूपमिति तस्य पूर्वमव्याख्या-नादत्रार्थगत्या व्याख्यार्थं गृहीतम्, किंवा लेखकभ्रमादिति। अथवा योऽङ्घ्रिः, अनृतोऽप्रियोऽनादृतो वा भवत्यपवर्गो मोक्षो यस्मात् सः। अन्यत् समानम् ॥ ४३ ॥ हे अच्युतेति—असाधारणमाहात्म्यामृतपरिपूर्णो भवानेव, अन्ये तु सर्वगुणरहिता दुष्टा इति भावः। तदेव दर्शयति—स्त्रीणामिति। स्त्र्यधीनेष्वित्यर्थः, इति कापुरुषत्वं सूचितम्। यस्याः कर्णस्य मूलं प्रान्तमपि उप समीपे न यायात्। युष्मदिति गौरवेण भक्तवर्गापेक्षया वा ॥ ४४ ॥

## श्रीसुदर्शनसूरिकृतशुकपक्षीयम्

जायन्तः जयन्तीपुत्रः ऐकपत्यं पत्यन्तरशून्यम् ॥ ४१ ॥ सन्मुखरितं सद्भिः स्तुत जनानामपवर्गहेतुं तव पादसरोज-माघ्राय का स्त्री तदनादृत्य अर्थविविक्तदृष्टिः पुरुषार्थविषयविविक्तज्ञानवती स्यात् त्वत्पादपद्मोपेक्षिणी चेत् न पुरुषार्था-भिज्ञेत्यर्थः ॥ ४२ ॥ या अपवर्गहेतुभूतं भगवन्तं वारयति जहाति सा नृताचेष्टेत्यर्थः ॥ ४३ ॥ खरगोश्वेति खरादितुल्याः ॥ ४४ ॥

## श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका

आस्थिताः पदवीं सुभ्रु प्रायः सीदन्ति योषित इत्यस्योत्तरमाह—यद्वाञ्छयेति। यस्मिन् त्वद्दास्ये वाञ्छया ये अङ्गादयो नृपोत्तमाः ऐकपत्यं ततो मत्वर्थीयोच् तद्राज्यं त्यक्त्वा वनं विविशुः तत्राङ्गो वेनस्य पिता वैन्यः पृथुः जायन्तो भरतः नाहुषो ययातिः ते नृपशिखामणयो हे अम्बुजाक्ष तव पदवीमास्थिताः इह सीदन्ति किं क्लिश्यन्ति किम्? अपित्विह पदवीं याथात्म्यं सीदन्ति उपासिषत उपासिषुः उपासनादशायामपि त्वदनुभवात्मकं सुखम् अनुबभूवुः इह लोके आस्थिता अवस्थिताः किम्? किन्तु त्वत्साधर्म्यमवापुरित्यावृत्त्यान्वयः॥ ४१॥ अथात्मनोनुरूपमित्यस्योत्तरमाह—कान्यमिति श्लोकद्वयेन। गुणानां कल्याणानामाश्रयस्य तव पादसरोजयोर्गन्धं कथम्भूतं जनतायाः जनसमूहस्यापवर्गं निरतिशयफलरूपं लक्ष्म्याः ममालयम् आश्रयं सेव्यमिति यावत्। सद्भिर्मुखरितमाघ्रातम् अविगणय्य अनादृत्य मर्त्यं मरणशीलं सदा उरुभयं यस्य स तमन्यं पुरुषं का वा स्त्री अर्थविवेकदृष्टिः स्वहिताहितविभागपरिशीलनपरा चेदाश्रयेत गुणाश्रयस्येत्यनेन गुणैर्हीना इत्येतत्पूर्वोक्तविधया व्याख्येयमित्यभिप्रेतम्॥ ४२॥ अतस्त्वामेवाहमभजमित्याह—तमिति। तमुक्तविधं किञ्च अनुरूपं शेषित्वादिति भावः। एवम्विधत्वात् त्वामेवाभजम् किञ्चित् प्रार्थयते स्यादिति। स्मृतिभिर्गतिभिर्जन्मभिरिति यावत्—

"राघवत्वे भवेत्सीता रुक्मिणी कृष्णजन्मनि। देवत्वे देवदेहेयं मनुष्यत्वे च मानुषी"॥

इत्युक्तावतारविशेषैरित्यर्थः। भ्रमन्त्याश्चरन्त्यास्त्वत्सहचारिण्या मम तवाङ्घ्रिरेव अरणं शरणं गृहमाश्रय इति यावत् स्यात् कथम्भूतस्य योऽनृतस्य पापस्य तन्मूलसंसारस्य वा अपवर्गोऽवसानं यस्मात् तथाभूतः भजन्तमुपयाति अनुभजते तस्य तवेति सम्बन्धः॥ ४३॥ ये राज्ञां गुणाः राजपुत्रीप्सिताभूपैरित्यादिनोक्तास्तत्र सेर्ष्यं सशापं साङ्गुलिभङ्गञ्चाह द्वाभ्याम्। तस्यास्स्युरिति। हे अच्युत हे नृपाः स्त्रीणाङ्गृहेषु स्त्रीप्रधानकेषु गृहेषु खरा इव केवलं भारवाहाः गोबलीवर्दा इव नित्यं व्यापारक्लिष्टाः श्वान इवावमताः गृहपालनाद्यर्थं द्वारस्थाश्च बिडाला इव कृपणाः पदा ताड्यमाना अपि पुनः पुनरनुवर्त्तमानाश्च भृत्या आज्ञाधारकाश्च ते तस्या दुर्भगायाः पतयः स्युः तामेव विशिनष्टि—यदीत्यादिना। हे अरिकर्शन शत्रुहन्! त्वं यस्याः कर्णमूलं कर्णपथं नोपयायाः नोपगतवान् तथा मृडविरिञ्च्यादिभिस्सभायां तेषां सभायां वा गीतास्तव कथाश्च नोपाययुः या त्वां त्वत्कथाञ्च कदापि न श्रुतवती तस्याः पतयः स्युरिति सम्बन्धः॥ ४४॥

## श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

प्रायः सीदन्ति योषित इत्यत्र वक्ति—यद्वाञ्छयेति। नृपशिखामणयोऽङ्गादयो यस्य तव श्रीपादनिषेवणवाञ्छया ऐकाधिपत्यं राज्यं साम्राज्यं विसृज्य वनं विविशुः ते राजानः सीदन्ति किम्? तवानुपदवीं नास्थिताः किम्? आस्थाय न सीदन्तीत्यर्थः अम्बुजाक्षेत्यनेन नयनयोः स्निग्धं गुणं सूचयति॥ ४१–४२॥ स्थिरबुद्धित्वेन पुरुषाणां विषादाभावेपि भीरूणां स्त्रीणां स स्यादिति मन्दाशङ्कां श्लोकद्वयेन परिहरति—केति। का स्त्री सततरमणकाङ्क्षिणी जनतायाः जनसमूहस्यापवर्गो मोक्षो यस्मात्स तथा तं सद्भिः मुखरितं मुख्यत्वेनेरितं दत्तमुपदिष्टं प्रधानीकृतमित्यर्थः। एवंविधं तव पादसरोजगन्धमाघ्राय निषेव्य पुनरत्र परत्र च कामरूपं त्वामविगणय्य मर्त्याशिषानाशशिरस्कसम्पदा कारणेन उरुभयं गुरुतरभीतिमन्तं जनं वृणीतेत्यन्वयः। कीदृशं त्वां लक्ष्म्याः सकलसम्पद आलयं शौर्यादिगुणानामालयम् अत एवाढ्यं च यस्त्वमविशेषेण स्त्रीपुरुषाणामर्थनीयगुणरत्नाकरस्तं त्वामहमभजं चैद्यादीन् हित्वेति शेषः। कथम्विधं त्वामनुरूपमनुकूलसौन्दर्यं जगतामधीशं जगतामीश्वराणां ब्रह्मादीनामपि सम्पत्प्रदम् अत एव आत्मानं तेषां स्वामिनं कीदृश्यहञ्च अर्थविविक्तदृष्टिः अर्थोऽयमिति विवेकी कृतदृष्टिः अव्यक्तज्ञानेत्यर्थः। किम्बहुनेत्याशयेनाह—स्यादिति कीदृश्याः भ्रमत्याः भ्रमः ति अन्नं यस्याः सा भ्रमतिः तस्याः विपरीतज्ञानिनामशिष्त्र्या इत्यर्थः। केनेयमवगम्यत इत्यत उक्तं श्रुतिरिति। श्रुतिप्रमाणेन सिद्धाया इति शेषः "अभ्रमाभ्रमतामैत्री या वेदैरधिगम्यते" इत्यादिस्मृत्या च मुखन्तु वदने मुख्यं इति यादवः "तीरयन्नम्" इति श्रुतिः। पारत्रिककामरूपत्वं दर्शयति य इति। ये त्वां भजन्ति त उत एवानृतापवर्गं संसारान्मोक्षं यान्तीत्यन्वयः "तमेवं विद्वानमृत इह भवति" इति श्रुतिर्वैशब्देन गृहीता॥ ४३॥ नृपाणां हेयत्वे दोषान्तरमाह—कस्या इति। हे अच्युत! स्वतः परतो वा च्युतिरहित भवतोपदिष्टा नृपाश्चैद्यादयः कस्याः स्त्रिय न कस्या अपि भवन्तीत्यर्थः। सर्वदोषेष्वाधिको दोषोयमिति भावेहान—यत्कर्णमूलमिति। हे अरिकर्शन मृडो रुद्रः रुद्रविरञ्चसभासु गीता युष्मत्कथा येषां नृपाणां कर्णमूलं नोपयायान्नोपगच्छति त इति शेषः। तासां स्युरितिपाठे यासां कर्णमूलं तासां स्त्रीणां ते नृपाः स्युरित्यर्थः॥ ४४॥

## श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

मर्त्यश्च स आ समन्तात् सदा सर्व्वदा च उरु भयं यस्य स च सः॥ ४२॥ सृतिभिः गतिभिस्तव तादृशनानाचेष्टाभिः पाठान्तरे तवान्यावतारे सीतादीनां परित्यागादिश्रवणैः अनृतं तादृशविविधः भ्रमः तस्यापवर्गो यस्मात्॥ ४३–४४॥

### श्रीमज्जीवगोस्वामिकृतः बृहत्क्रमसन्दर्भः

( १३ श-श्लो० ) "अस्पष्टवर्त्मनाम्" इत्यादिनार्थतः प्राप्तं मदुक्ताः सीदन्तीति यद्भगवद्वाक्य-तात्पर्यम्, तदन्यथाकारेण सत्यत्वेन स्थापयन्त्याह—यद्वाञ्छयेत्यादि। ऐकपत्यं राज्यं विसृज्य वनं विविशुः अतस्तद्भक्ता सीदन्त्येव, विरोधिलक्षणया तदेव सत्यत्वेन प्रतिपादितम्। वस्तुतस्तत्तेषां परमानन्दलाभ एव। तत् सर्वं विसृज्य तस्थुषां त्वद्भजनमेव परमानन्द इत्याह—ते तव पदवीं वर्त्म आस्थिताः। तथा कृत्वा त्वत्पदवीं त्वत्प्रेमानन्दसाम्राज्यं प्राप्ताः इह किं चित्रमिति वाक्यशेषः ॥४१॥ ननु भो भगवन्! मम तु कथा दूरादास्ताम्, का मर्त्या कन्या त्वां विनान्यं पतित्वेन श्रयीतेत्याह—कान्यमित्यादि। का मर्त्येत्यनुषङ्गः। तव पादसरोजगन्धम् कीदृशम्? लक्ष्म्यालयम् लक्ष्म्या आ सम्यक् लय आश्रयो वा यत्र ॥ ४२ ॥ अमर्त्यायाः मम त्वमेवानुरूप इत्याह—तं त्वानुरूपमभजमित्यादि। यो भवान् भजन्तमुपयाति भजति अनृतां मिथ्याकृतोऽपवर्गो मोक्षोऽपि यस्मात्, अर्थाद्भक्तैर्भजतो जनस्यापवर्गमपि मिथ्यात्वेन हापयित्वा स्वपरिजनत्वं सम्पाद्य भजतां जनानुपभजसि। (भा० १०।१४। २६) "अज्ञानसंज्ञौ भवबन्धमोक्षौ" इति मोक्षस्य मिथ्यात्वमेव। यद्वा, अनृतात्त्वदितरादुपवर्जयसि त्याजयसीति, अनृतादपवर्गो यस्मादिति विग्रहः। अतो मम त्वमेवानुरूपोऽसि, तवाप्यहं नृसृतिभिरवतारैस्त्वया सह भ्रमन्त्याः ॥ ४३ ॥ न त्वेवमेतोऽहं प्राक्सिद्धा नित्यप्रेयसी तेन त्वामभजम्; किन्तु स्त्रीमात्रस्यापि मध्ये या त्वत्कथा न श्रुतवती, तस्या एव भवतोपदिष्टाः पतयः स्युरित्यन्वयव्यतिरेकाभ्यां श्लोकद्वयेनाह—तस्याः स्युरित्यादि। ये स्त्रीणां गृहेषु खरादिवदधीना भवन्ति ॥ ४४-४५ ॥

### श्रीनाथचक्रवर्तिपादविरचिता चैतन्यमतमञ्जूषा

अमर्त्यायाः मम त्वमेवानुरूपं, तेन त्वामेवाभजमित्याह—तं त्वानुरूपमित्यादि ॥ ४३ ॥ अतोऽहं प्राक्सिद्धा प्रेयसी, तेन त्वामेवाभजम्, किन्तु स्त्रीमात्रस्यापि मध्ये या त्वत्कथा न श्रुतवती, तस्या एव भवतोपदिष्टः पतिः स्यादित्याक्षेपेणाह—अन्वयव्यतिरेकाभ्याम्, तत्रान्वयं दर्शयति—तस्याः स्युरित्यादि ॥ ४४ ॥

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी

यत्त्वयोक्तम् अस्मत् पदवीमास्थिताः प्रायः सीदन्ति योषित इति तदपि जाड्यमित्याह—यद्वाञ्छयेति। जायन्तो भरतः ते तव पदवीम् आश्रितास्ते राजनः किं सीदन्ति किं ते निर्बुद्धयः यतो वयं राजकन्याः निर्बुद्धयः सीदाम इति त्वयोच्यते ॥ ४१ ॥ यच्चोक्तम् अथात्मनोऽनुरूपं वै भजस्वेति, तत्राह—कान्यमिति द्वाभ्याम्। आघ्रायेति या त्वदीयं यशो न श्रुतवती साऽन्यं श्रयतु नामेति भावः सद्भिर्भ्रमरैरिव मुखरितं स्तुतं जनतायाः जनमात्रस्यापि श्रवणादिभिरपवर्गसाधकम् अविगणय्य अविज्ञाय मर्त्या मानुषीति राक्षसप्रेतादिकन्यात्वन्यमाश्रयतामिति भावः। अन्यं कीदृशम् सदोरुभयं अर्थविविक्तदृष्टिरित्यविचारान्धा तु श्रयत्विति भावः। गुणालयस्येत्यनेन गुणैर्हीना इति यदुक्तं तदपि पराहतम् ॥ ४२ ॥ अहं तु श्रुतचरत्वद्गुणा मानुष्यकन्या विचारवतीत्यतस्त्वामेवाभजमित्याह—तमिति। अनुरूपं यत आत्मानं परमात्मनस्तव भजनमुचितमेवेत्यर्थः। स्वस्य लीलामानुषीत्वमेवाकस्मादतिदैन्योदये कर्ममानुषीत्वं मत्वा तद्भजनं प्रार्थयते—स्यादिति। सृतिभिर्विविधजन्मभिर्भ्रमन्त्या अपि मे, श्रुतिभिरिति पाठे तवान्यत्रावतारे सीतादीनां त्यागस्य श्रवणैरत्र च गोपीनां तथाद्यैवैतादृशवचनश्रवणैश्च भ्रमन्त्याः विविधशङ्कामयं भ्रमं प्राप्नुवत्या अपि यस्तवाङ्घ्रिः भजन्तमुपयाति कृपया तत् समीपं स्वयमेवायाति अनृतस्य विविधभ्रमस्यापवर्गो नाशो यस्मात् सः तेन तवाङ्घ्रिपद्ममेवास्मदादीनां सुखदं समरसञ्च शरणं भूयान्नतु मुखपद्मं यत् खलु विषयरसमेव कदाचित् मारकं विषमप्युद्गिरति कदाचित् सञ्जीवकममृतमपीति-द्योतितम् ॥ ४३ ॥ ये चोक्ता राज्ञां बहवो गुणाः राजपुत्रीप्सिता भूपैर्लोकपालविभूतिभिरित्यादिना तत्र सेर्ष्यं सशापं साङ्गुलिस्फोटञ्चाह—तस्या इति द्वाभ्याम्। खरा गर्दभा इव तत्पादताडिताः गावो बलीवर्दा इव भारवहनादिव्यापारक्लिष्टाः श्वान इव तद्गेहपालनार्थं तदन्येषु वैरकारिणः बिडाला इव तदुच्छिष्टभोजिनः भृत्या इव तद्दास्यकारिणो नृपास्तस्या अधमायाः पतयः स्युः यस्याः कर्णपथं त्वत्कथा न प्राप्नुवात् हे अरिकर्षण ममारीन् शिशुपालादीन् अन्तकनगरीं प्रति कर्षसि त्वमित्यर्थः ॥ ४४ ॥

### गूढार्थदीपिनी

यस्य तव भजनवाञ्छया अङ्गवैन्यादयो नृपोत्तमा राज्यं विसृज्य वनं विविशुः। तस्य ते पदवीं मार्गमास्थितास्ते किं सीदन्ति क्लिश्यन्ति नैव अपि तु मुक्तिं प्राप्ता इत्यन्वयः। नु प्रश्ने ॥ ४१ ॥ गुणानामालयस्य तव गन्धवन्मनोहरं यश आघ्राय आसेव्य पुनस्तत् अवज्ञाय का मर्त्या अन्यपतिमाश्रयेत न कापीत्यन्वयः। सद्भिः मुखरितं वर्णितम्। जनतायाः अपवर्गं मोक्षस्वरूपम्। लक्ष्मीरपि आलीयते आसज्जतेऽस्मिन्। अर्थे परमार्थे विविक्ता विवेकवतो दृष्टिर्यस्याः सा। उरुभयं मृत्युभययुक्तमन्यम् ॥ ४२ ॥ तं त्वामहम् अभजम्। परत्र परलोके च सर्वस्यापि कामपूरमात्मानं परमात्मानम्। वै एवार्थे। यो भजन्तं भक्तमुपयाति अनुगृह्णात्येव नात्र संदेहः तस्मादङ्घ्रिर्मे अरणं शरणं स्यादित्यन्वयः। सृतिभिर्नानाजन्मभिर्भ्रमन्त्या मे।

अनृतापवर्गः संसारमोचको यः ॥ ४३ ॥ यस्याः कर्णपथं युष्मत्कथा न प्राप्नुयात् तस्यास्ते पतयः स्युः । ते के । ये गृहेषु खरादिवद्वर्तमानाः । गावो वृषभाः । मृडः शिवः ॥ ४४ ॥

**श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः**

यदुक्तमास्थिताः पदवीं सुभ्रु प्रायः सीदन्ति योषित इति तस्य सिंहावलोकनन्यायेनोत्तरमाह—यद्वाञ्छयेति । यद्यस्य तव वाञ्छया अङ्गपृथुभरतययातिगयादयः ऐकपत्यम् एकाधिपत्यं राज्यं त्यक्त्वा वनं विविशुः ऐते तव पदवीं मार्गमाश्रितास्ते किं सीदन्ति नैव सीदन्ति अपि तु त्वां प्राप्नुवन्ति "मद्भक्ता यान्ति मामपि" इति स्मृतेः ॥ ४१ ॥ यदुक्तमथात्मनोऽनुरूपं वै भजस्वेति तस्योत्तरमाह—केति द्वयेन । गुणालयस्य स्वाभाविकगुणमन्दिरस्य गुणैर्हीना इति श्रीमुखवचनन्तु प्राकृतगुणाभिप्रायमिति भावः । प्राकृतगुणवर्जितस्य कल्याणगुणाश्रयस्य तव सन्मुखरितं सद्भिर्वर्णितम् । जनतायाः जनसमूहस्य अपवर्गम् अपवर्गदम् लक्ष्म्या आलयमाश्रयं सेव्यम् पादसरोजयोः गन्धं गन्धवन्मनोहरं यशः आघ्राय अपि तु शब्दः अप्यर्थः । अविगणय्य अवज्ञाय मर्त्या मनुष्यजातीया उपलक्षणञ्चैतत् यक्षराक्षसोरसादिस्त्रीणाम् अर्थे विविक्ता दृष्टिर्यस्याः सा चेत्स्त्री का सदोभयं यस्य तमन्यं श्रयेत आश्रयेतेत्यर्थः ॥४२॥ अहन्तु त्वदनुरूपरूपा त्वद्भार्या त्वां सर्वेश्वरं सर्वात्मानं सर्वपुरुषार्थपदं ज्ञात्वैवाभजमित्याह—तं त्वा त्वाम् अनुरूपमभजम् यतो भजनीयस्त्वमेवेत्याशयेन भगवन्तं विशिनष्टि—जगतामधीशमात्मानम् इहामुत्र च कामपूरमिति । सर्वेश्वरं सर्वात्मानं सर्वपुरुषार्थप्रदञ्च "देवत्वे देवदेहेयं मानुषत्वे च मानुषी" इति विष्णुपुराणाप्रसिद्धेः पुनःपुनर्लीलावशाद्वियोगेर्भीता सती नैरन्तर्य्येण भजनं प्रार्थयते—सृतिभिर्गतिभिः प्रादुर्भावैरित्यर्थः । श्रुतिभिरिति पाठे व्रजसुन्दरीपरित्यागश्रवणैः अथात्मनोनुरूपं वै भजस्वेति त्वद्वचनश्रवणेन च भ्रमन्त्याः दोलायमानायाः स्वरूपैक्यभ्रमः सेव्ये देवतान्तरतुल्यताभ्रम इत्यादिरूपस्यानृतस्य भ्रमस्यापवर्गो नाशो यस्मात्स तथा भजन्तमुपयाति आत्मसात्करोति एवम्भूतो यो भवान् तस्य तवाङ्घ्रिः अरणं शरणं मे स्यात् ॥ ४३ ॥ ये चोक्ता—

राजपुत्रीप्सिता भूपैर्लोकपालविभूतिभिः । महानुभावैः श्रीमद्भीरूपौदार्यबलोर्जितैः ॥

इति राजगुणास्तत्रोत्तरमाह—तस्या इति द्वाभ्याम् । हे अच्युत ! नित्यमूर्त्ते अरिकर्षण भजनविरोधिह्यज्ञानादिनाशन ! यस्याः कर्णमूलं युष्मत्कथा नोपययात् न प्राप्नुयात् तस्याः भाग्यवर्जितायाः स्युः पतय इति शेषः । तत्र हेतुं दर्शयितुं तान् विशिनष्टि—स्त्रीणां गृहेषु औपस्थ्यसुखप्रधानेषु खरा इव केवलं भारवाहाः गावो बलीवर्द्दा इव नित्यं व्यापारक्लिष्टा श्वान इव तमोबहुलाः बिडाला इव हिंस्रा भृत्या इव व्याप्रियमाणाः ॥ ४४ ॥

**श्रीसत्यधर्मकृता श्रीभागवतटिप्पणी**

प्रायः सीदन्ति योषित इत्युत्तरयति ॥ यद्वाञ्छयेति । तस्य तव वाञ्छया त्वत्प्रसादासादनकामनया नृपशिखामणयस्तच्छ्रेष्ठाः । अङ्गेत्येकदा विशकलितं पर्यायं सदम्बुजाक्षेत्यनेनान्वेति । अङ्गो नाम तद्देशेशः कश्चिद्राजा स च वैन्यो वेनापत्यं पृथुः । वेनः स जगत्पीडनादतद्गुणस्तत्पुत्र इति द्योतयितुं वैन्येत्युक्तिः । यथोक्तं चतुर्थतात्पर्ये । पीडां वेनेति च प्राहुर्वेनोऽसौ पीडनादितीति । जायन्तो जयन्तो भरतो दुष्यन्तस्य नामान्तरं जयन्त इति । नाहुषः । स्वार्थिकाणि स वा तत्पुत्रः ययातिर्वा गय आदिर्येषां ते । एकः पतिर्यस्य तत् तस्य भाव ऐकपत्यं आ सम्यगैकपत्यं च यस्य तत् । स्वार्थे वाऽऽपत्यं तैयक् एकाधिपतीत्यर्थः । राज्यं विसृज्य वनं विविशुर्निविविशिरे । ते सीदन्ति किं त इत्यन्वयं तेषां पदवीमास्थिता योषित इति शेषः । सीदन्ति असीदन् किमित्यन्वयः । अतो न योषिदनुक्तिदोषः । यद्वा ते सीदन्ति किं अनुपदवीं नास्थिताः किमित्येवान्वयः । न स्त्री स्वातन्त्र्यमर्हतीत्यादेस्तत्सुखदुःखसुखदुःखा इति न पृथग्वक्तव्या इत्यनुक्तिः । तदनुमतानां सतीनां सती भवतु तथा त्वं तु न मतेति कथमिति न वदाहं सेति दयापात्रमित्यप्याह ॥ अम्बुजाक्षेति । अम्बुजा कमला तस्यामक्षिणी यस्य स तत्सम्बुद्धिः ॥४५॥ अप्रतिपत्तिविप्रतिपत्तिभ्यां का स्त्री वृणीतं त्वामिति पद्यद्विकस्य यथावदर्थमाह ॥ सन्मुखरितं सद्भिः प्रधानीकृतमिति । नखमुखकुञ्जभ्यो र इति विहितो रः स्वार्थे । गतेरर्थवत्त्वमिति यथा । ततश्च मुखशब्दस्य मणिर्मुखं प्रधानं चेत्युक्तमस्य वचो भवेदिति मानात् । तथा मुखं प्रधाने प्रारम्भ इति नानार्थरत्नमालोक्तेश्च मुखशब्दस्य पर्यायो मुखरशब्दः । स च भावप्रधानः । मुखरत्वं सञ्जातं यस्य तत् । भावदीपे इदमेव निदर्शनीकृत्य चिन्तासन्तापलेपोद्भवमतिमुखरेति मुखशब्द एव प्रधानवाचीति व्याकृतम् । पूर्वं तथाऽज्ञातं तथा ज्ञातमिति द्वयर्थः । अनादितः सिद्धस्य करणायोगात् । दासीकृतामर इतिवत् । तत्रैवापेक्षितमध्याहृत्य मर्त्याशिषोरुभयमर्थविविक्तदृष्टिरिति पदद्वयं व्याख्याति । मर्त्याशिषेति मर्त्या नश्यन्ती आशीस्तया निमित्तभूतयोरुभयं यस्य स तं जनम् । अर्थः शाश्वतिको बिम्बरूपी हरिः प्रत्यर्थः प्रतिबिम्बरूपः सर्व इति विविक्ता विवेकं भेदं प्राप्ता दृष्टिर्ज्ञानं यस्याः सेति । अनेनार्थपदार्थपदात्पूर्वं प्रतिपदमध्याहार्यमित्यसूचयदिति ज्ञेयम् । कामरूपमपेक्षितसर्वस्वात्मकं त्वामविगणय्य । अथवा मर्त्याशिषोरुभयमिति पदमेकम् । मर्त्याशिषाया उरुभयं यस्य स तं जनम् । हलन्तत्वाट्टाबन्तता । अनेनोरुभयशब्दयोगे कथं न पञ्चमीति

परास्तम् । भाष्यकृताऽत एव तृतीयान्ततया पृथक् कृत्य व्याकृतवानिति मन्तव्यम् । अलक्षयित्वा भ्रमत्या इति साक्षाल्लक्ष्म्या भ्रमो भ्रमणं वा प्रतीयते न सम्भवतीत्यतः स्वयं व्याकृत्य तदविगानाय श्रुतिभिरिति व्याकृत्य मानमुदाहरति ॥ भ्रमतिरिति। भ्रम इत्यर्थ आद्यचि तद्वाञ्जनः स तिरन्नं यस्याः सा भ्रमतिः । तस्या भ्रमत्याः । अर्थः सम्पन्नः क इत्यत आह ॥ मिथ्याज्ञानिभक्षिकाया इत्यर्थ इति । क्वचिद्भ्रमतिरिति सा भ्रमतीति च पाठद्वयं दृश्यते । तदतिदृश्य आद्यः । दृश्यो द्वितीयः । भ्रमन्तस्तिरन्नं यस्याः सेति तस्याः । भ्रमतीति च । य एवं वेद तत्सत्यं सदितिः प्राणस्तीत्यन्नं यमित्यसावादित्यस्तदेतत्त्रिवृदिति । व्यञ्जनमात्रस्य नित्यस्य ग्रहणादिकार उच्चारणार्थ इति सर्वैरेष्टव्ये भवत्वीकारोऽपीति तथोक्तिरितिकारान्ततया निर्देशोऽथवा भ्रमन्तः । तू अन्नं इ कोपेन यस्या भ्रमती । ई दुःखभावने कोप इति विश्वः । केचित्तु रित्यन्ननामेति विवृत्य पुनरिकार इच्छार्थक इति तद्रूपकामितान्नवती भ्रमतीति व्याचक्रुः । भ्रमतीति पाठो भ्रमा भ्रमतामत्रेति मानिकवर्णानुगुणः । परोऽपि वर्णवाचमेव तकारमत्र इकारस्तूच्चारणार्थो निवद्ध इत्येतरेयव्याकृतावक्तवृत्तिम् । श्रुतिभिः श्रुतिप्रमाणेन । अभ्रमो न विद्यते भ्रमो यस्याः सा । भ्रमतामन्यथाज्ञानिनां या वेदैरधिगम्यते । तस्यै ते देव्यै नमोऽस्तु । सा लक्ष्मीरिति कुत इत्यत आह ॥ विष्णुवक्षःस्थलाश्रय इति । विष्णोर्वक्षःस्थलमेवाश्रयो यस्याः सा तत्सम्बुद्धिः । नारदीयोक्तेर्भ्रमतिस्तुतिभिः पदयोरर्थाशयः इत्यर्थः ॥ ततश्चायं श्लोकद्विकार्थः ॥ अङ्गादिपुरुषग्रहे नाङ्गना अप्युक्तप्राया इति सूचितम् । तदेव देवं प्रति देवी वितत्या त्यागे निमित्तमुपन्यस्य वक्ति ॥ केति । का स्त्री सन्मुखरितं सद्भिः प्रधानीकृतम् । दुर्मुखे मुखरावद्धमुखाविति नामरेरितोऽर्थोऽत्र सम्भवीति पराक्रान्तमाचार्यैः । तत्त्वेन ज्ञानं जनतापवर्गं संसारे जनानां न भवति । तापानां वर्गो ह्याध्यात्मिकादितापत्रयं यस्मादनन्तरम् । जनताया अपवर्गो मोक्षो येन स तम् । लक्ष्म्यालयं शोभापदम् । गुणालयाढ्यम् । न विद्यते लयः कदाचिदेषां ते च ते गुणाश्चेति गुणालयाः । विशेषणस्य परनिपातः । तदाढ्य तत्सम्पन्नं तव पादसरोजगन्धमाघ्राय तमविगणय्य का स्त्री अर्थविविक्तदृष्टिबिम्बो हरिरेते प्रतिबिम्बा इति जनं प्रत्यर्थविविक्तज्ञाना मर्त्याशिषोरुभयं मर्त्याशिषा निमित्तोभयं जनम् । मर्त्याशिषयोभयमिति वा जनं चैद्याद्यं वृणीत । यद्येवमपि काचित्कामिनी वृणोत सा का कुत्सितेत्यप्यर्थः । ईहितमनु हितनीत्युक्तेरनुरूपं तमेतादृशपादसरोजमन्धोपेतम् । जगतामवान्तरभेदज्ञापनाय बहुवचनम् । आत्मानं गतम् । अत्र च परत्र च कामरूपम् । कामपूरमित्यपि पठन्ति । तथा तात्पर्ये चेति न विरोधः । जनतापवर्गमित्यस्यात एव प्रागस्माभिरर्थद्वयमभिहितमिति ज्ञातव्यम् । अहमभजं श्रुतिभिर्वेदप्रमाणेनाधिगम्याया भ्रमत्या मिथ्याज्ञानिभक्षिकाया मे तवाङ्घ्रिशरणं तद्रूपं रक्षयितृ स्यात् न । न केऽपि तत्काङ्क्षितवन्तः । काङ्क्षणेऽपि तत्फलं तेषामिति नेत्याह । ये भजन्ति तेऽच्युत तद्भजनानन्तरमनृतादस्थिरतायास्तथाविधात्संसारादपवर्गं मुक्तिं यान्तीति ततो भजन्ति । उतेति नापरथा मुक्तीति तदसन्धिर्ध्वन्यतेऽसन्धिना नरो विशिष्टमानवत्वाद्देवादयो मानवा तेषां यस्तापवर्गः पूर्वोक्तः स न येन तं चेत्यप्यर्थः ॥ ४६-४७ ॥ कस्याः स्युरिति श्लोके खरगोऽश्वबिडालभृत्या इत्यत्र द्वन्द्वसमासे भृत्याः स्वतन्त्रपदार्थ इति किञ्चिदुत्कृष्टताभायात्तथा न भीतव्यमिति समासेन सह योजनामतिनैच्या वेदिकां दर्शयति ॥ खरगोऽश्वबिडालाद्भृत्याः स्त्रीणामिति । अनेन बुद्ध्या विविक्तं भृत्यपदं स्त्रीपदेनान्वेतीति कटाक्षितमाचार्यैरिति ज्ञेयम् । ततश्चायं श्लोकार्थः । हे अच्युत सर्वप्रकारेण च्युतिरहित । भवतोपदिष्टा वरत्वेन वरणीया इति ते गृहेषु खरवद्भारवाहकतया गोवन्नस्योता गाव इव तदधीनत्वेन श्ववत्तत्परिवेषणमार्गान्वेषणेन सारमेयवत् दुभ्रुताशया बभ्रुवत् भृत्याः स्त्रीणाम् । एत एतस्याः पुरुषा भवेयुरिति भाषते । यत्कर्णमूलमिति । हे अरिकर्शन वैरिकर्षक । तत्कर्षणमेतऽभिमर्शनजमित्यप्याह । अरिणा चक्रेण कर्शनं येन योग्यतयाऽरिग्रहणं वाऽऽवृत्या केति ज्ञेयम् । मृडविरिञ्चसभासु हरहिरण्यगर्भसभासु । अत्र पुरहरपुरस्करणं जरासन्धसाल्वादींल्लक्षयित्वा । शिवश्च नः परागतिर्गुरुर्भवानरिहंरिः । शिवोरुलिङ्गमित्यलं सुमाल्यवस्त्रभूषणैः । समर्चितमित्याचार्योक्तेर्मुख्यत्वेन सम्प्रतिपन्नाभ्यां हरिविरिञ्चाभ्यां । एतदपि नैकान्त इति तदपि नैकस्यां कदाचित्सभायामित्याह सभास्वित्यनेन । गीता युष्मत्कथा कर्णमूलं यस्याः कर्णमूलं कर्णविवरं नोपायात्तस्याः कस्याश्चित्स्युर्नान्यस्येति भावः । यत्कर्णमूलं येषां मगधादय उपविष्टाः कस्याः स्युरिति न कस्या अपि स्युर्यादृशो यक्षस्तादृशो बलिरितिवत्ताद्दृश्या एव कस्याश्चित्स्युरित्यर्थः । न दाक्षिण्येन गीता सेति वाऽऽह । मृडविरिञ्चसभासु सुगीतेति ॥ ४८ ॥

## श्रीमद्वल्लभाचार्य्यकृता सुबोधिनी

यदुक्तं भगवता 'अस्पष्टवर्त्मना'मिति 'तन्मार्गानुवर्तिनः सीदन्ती'ति, तत्राप्यन्यार्थप्रतीतेः अवाक्यार्थधीजनकत्वात् ध्वनिप्रकारेणैव निर्णय इत्याह **यद्वाञ्छयेति । योषित** इति पदमुपलक्षकम् । तेन पुरुषा अपि सीदन्तीति वक्तव्यम् । स्त्रीपदमप्रौढान्यवृत्तीति । अवसादस्तत्रैव लयः । भगवानग्रे गत इति तेन मार्गेण जिगमिषया राज्यादिकं विसृज्य, राज्यादिभ्यो भगवद्दर्शनं महदिति तद्वाञ्छया नृपशिखामणयः अम्बरीषप्रभृतयः वनं विविशुः । भगवति समागतेऽपि ते न समागता इति पूर्वमपि न व्याघुट्यागता इति पदवीमन्वेव अवसन्नाः भगवन्मार्ग एव मार्गप्रदर्शका इव स्थिताः । अन्यथा भगवन्मार्गो न प्रवर्तेत । अतः अवसादवाक्यं यथार्थम्, तथापि बहव एव प्रवर्तन्त इति न दूषणम् । नन्वेकत्र निरूपणे कृते कथं सर्वत्र युज्यते, तत्राह **ते इहास्थिताः किमिति । ते अङ्गादयः । अङ्गः पृथोः पितामहः । वेन्यः पृथुः । जायन्तो भरतः जयन्त्याः पुत्रः । नाहुषो**

**ययातिः । गयः** प्रियव्रतवंशजः । एते इह आस्थिताः किम्, आमरणान्ते किं गृह एव स्थिताः, अपि तु वने प्रविष्टाः । तत्रैवावसन्नाः । तेन विपरीतार्थे ये गृहे स्थिताः, त एवावसन्नाः, ननु त इति वाञ्छामात्रेण स्वकीयं सिद्धमपि राज्यं परित्यजन्ति । वने स्वावसादमपि सहन्ते । तत्र भगवन्तं प्राप्य अधमराज्यपरित्यागः किमाश्चर्यमिति भावः ॥ ४१ ॥ 'निष्किञ्चना वयं शश्व'दिति भयन्यायेनैव निवारितमपि लक्ष्म्याश्रयत्वेन तन्निवारयन्नाढ्याभजनमपि विपरीततया व्यावर्तयति **कान्यं श्रयीतेति** । का वा **स्त्री** तव पादसरोजगन्धमाघ्राय अन्यं लशुनामेध्यरूपं आश्रयेत । अनेनोत्कर्षविषयः तत्र स्वरुचिश्चेति निरूपितम् । क्वचिन्निन्दितमप्येतादृशं भवतीति तद्व्यावृत्त्यर्थमाह **सन्मुखरित**मिति । सद्भिर्मुखरवत् भगवच्चरणारविन्दो वर्णित इति । फलसाधकत्वमाह **जनतापवर्ग्य**मिति । जनतायाः प्राणिमात्रस्य आपवर्ग्यमपवर्गमभिव्याप्य यावत्सुखं तत्सर्वं यस्मादिति । प्रमाणं फलं चोक्तम् । किञ्च । स्त्रीणां मुख्या लक्ष्मीः सम्पत्तिरूपा च । तस्यास्तदेव गृहमिति स्त्रीभिः सर्वाभिस्तत्रैव स्थातव्यम् । नन्वेवं सति कथं सर्वासामन्य एव भर्तारः । तत्र तुशब्देन पूर्वपक्षं निराकरोति **अविगणय्येति** । समागतमुपस्थितं भगवन्तमविगणय्य कापि नान्यं श्रयते । किञ्च । मर्त्या स्वयं मरणधर्मा मरणनिवर्तकमात्मदं भगवन्तमेव सेवितुमर्हति, नतु **सदोरुभयं** सर्वदेव कालादेः सकाशात् अधिकं भयं यस्येति । महद्भयं मरणात्मकम् । स्वस्य कदाचिद्वा तद्भवेत् । सेव्यस्तु सर्वदैव तादृशभयवानित्यभजनेहेतुरुक्तः । किञ्च । गुणालयस्य तव । अनन्तगुणानामालयरूपो भवानेव । ततो या गुणरूपा भविष्यति, सा त्वामेव श्रयते, दोषरूपा त्वन्यमिति स्थितिः । ननु बह्व्य एव गुणरूपाः अन्यमपि भजन्ति, अन्यथा भगवत्समानकाले अन्येषां विवाहो न स्यात्, तत्राह । अर्थे विवक्ता दृष्टिः यस्या इति । अविचारेण अर्थविवेचनासामर्थ्येन वा अन्यभजनम् । प्रयोजनतारतम्यदृष्टौ तु मर्त्यायाः गुणरूपायाः लक्ष्म्यंशायाः पूर्वोक्तन्यायेन भगवदाश्रयणमेव युक्तमित्यर्थः । अनेन समताविवाहः साधारणः, उत्कृष्टविवाह एव कर्तव्य इति 'तयोर्विवाहो मैत्री' इति पक्षः परिहृतः । अन्यथा लक्ष्म्यादीनां विवाहो नोपपद्येत ॥ ४२ ॥ 'वैदर्भ्येतदविज्ञाये'त्यस्योत्तरमाह **तं त्वानुरूप**मिति । अज्ञानेन विवाहे हि अन्यवरणं कर्तव्यं भवेत् । ज्ञात्वैव वृत इति स्वज्ञातमर्थमनुवदति । **तं** पूर्वोक्तलक्ष्मीपतित्वादिधर्मयुक्तम् । **त्वा**मिति तादृश एवावतारेऽपि न प्रच्युतस्वरूपस्त्वम् । ननु तथापि समविवाह एवोचित इतिचेत् । तत्राह **अनुरूप**मिति । मम तु त्वमनुरूप एव, उत्कृष्टत्वात्, तव परमहं नानुरूपा । तस्मादयमुपालम्भः न मां प्रति वक्तव्यः । किञ्च । अतिनिकृष्टैरपि ईश्वरः सेव्य एव स्वशक्त्यनुसारेण, तदाह **जगतामधीश**मिति । किञ्च । सर्वेषामात्मा सेव्यः । सर्वं स्वार्थमिति । भवांस्त्वात्मा । किञ्च । पुरुषार्थप्रदः सेव्यः । स भवानित्याह **अत्र च परत्र च कामपूर**मिति । चकारादिह लोके परलोकसुखानि प्रयच्छति । स्वर्गादिसुखानि । परलोके च जातिस्मरणादिना ऐहिकं फलं प्रयच्छतीति चकारौ । काममभिलषितार्थं तस्य पूररूपं पूरयति प्रवाहरूपं वा । ननूक्तं 'वयमुदासीना' इति, अतः कामाभावात् कथं त्वत्कामपूरणमिति चेत् । तत्राह **स्यान्मे तवाङ्घ्रिशरण**मिति । संसारे निराश्रये परिभ्रमन्त्या मम तव चरणः आश्रयोऽस्तु । कामनापूरणाद्यभावेऽपि चरणे आश्रयत्वं न विहन्यते । नन्वाश्रयमात्रेण भगवांश्चेन्न किञ्चित्कुर्यात्, तदा किं भवेदित्याशङ्क्याह **यो वै भजन्तमुपयात्यनृतापवर्ग** इति । **अनृतापवर्गो** मोक्षः, विशेषेण अप्रार्थितोऽपि भगवता अदत्तोऽपि, भगवद्भक्तमुपयाति, भगवच्चरणामोद इव । अनृतस्य भगवत्यपवर्ग एव । तत्र गतः सीमान्ते गत इव तदभावमवश्यं प्राप्नोति । अतो विशेषफलाभावेऽपि मोक्षस्तु सिद्ध एव इति ॥ ४३ ॥ नन्वेतावदेव चेत् प्रार्थ्यम्, तदा विषयभोगानन्तरमन्यभजनेऽपि शास्त्रार्थानुसारेणापि भजने मोक्षो भवेत्, अत उभयं परित्यज्य विषयाधिकारिणः कथं मद्भजनमिति चेत् । तत्राह **तस्याः स्युरि**ति । सत्यं या तादृशी प्राकृती, तस्याः पतयः त्वया गणिताः चैद्यादयो भवन्तु सर्वथा विषयपूरकाः । या केवलं विषयानपेक्षते । सर्वा एवापेक्षन्त इति चेत् । तत्राह **यत्कर्णमूलं नोपयाता युष्मत्कथा** इति । कथानां कर्णप्रवेशे यथा विषयाभिलाषा गच्छति, तद्वक्ष्यति । कथं राज्ञां सर्वथा विषयपोषकत्वम्, न भगवत इति वैलक्षण्यं निरूपयति **स्त्रीणां गृहेष्वि**ति । स्त्रीणां शयनभोजनविहारमलत्यागादिगृहेषु ये स्वोत्कर्षं परित्यज्य तत्सेवापरा भृत्या भवन्ति, यथा गृहदासाः । दास्येऽपि चतुर्धा विशेषमाह **खरादिपदैः** । गर्दभो हि तदपेक्षितं जलादिकं तत्कर्तव्यं स्वयं करोति । तथा ये भार्याकर्तव्यं स्वयं कुर्वन्ति निरालस्याः । यथा वा गावो वृषभाः शकटैस्ता वहन्ति दुह्यन्ति वा, स्वसर्वस्वं प्रयच्छन्ति, इष्टदेशेषु स्वयं भारमूढ्वा, तथा ताः प्रापयन्ति । यथा वा श्वानः रात्रौ गृहस्वामिनि शयाने स्वयमनिद्रः तत्पालनं करोति, तथा नीचा भूत्वा शरीरेण पालयन्ति । एवं स्थितिगतिशयनेषु सेवकत्वमुक्तम् । एवमपि सति यदि भोगस्तुल्यो भवेत्, भोगार्थं वा भवेत्, तदा न काचिच्चिन्ता, किन्तु तच्छेषस्य निकृष्टस्यैव तदुच्छिष्टस्य तदनुपयुक्तस्य वा भोग इति बिडालदृष्टान्तमाह । स हि स्त्रीणां पादयोः भक्षणयाचनार्थं अनेकां चेष्टां करोति, ततस्ता दुग्धं पीत्वा भाण्डनिर्यासमिव प्रयच्छन्ति कदाचित्, तथा ये निकृष्टा नियतभोगाः तादृशैरेव स्त्रीणां भोगः सम्पादयितुं शक्यते । विषयाभिलाषिण्यः तादृशमेवापेक्षन्ते । कथाः कर्णे साधारण्येन प्रविशन्ति सर्वेषामेवेति यादृशप्रवेशेन कार्यं कुर्वन्ति तद्वक्तुमाह **कर्णमूल**मिति । अन्तःप्रवेशे मूलसम्बन्धः कथानाम् । विषयाभिलाषनाशकत्वे हेतुमाह **अरिकर्षणे**ति । विषं यान्तीति विषयाः अरयः तान् कर्षत इति शत्रुनाशको विषयनाशको भवति । तत्कथास्तद्रूपाः । ता अप्यच्युताः स्वनाशशङ्कारहिताः । विषयैस्तन्नाशः कर्तुं न शक्यत इति । तत्रापि बहुरूपाः एकरूपाद्भगवतोऽतिबलिष्ठाः । तत्राप्युप समीपे स्वयमेव

समागता बह्व्यः। **युष्मत्कथा** इति समासेन तासां नित्यं भगवत्सहभाव उक्तः। तासां विषयनिवर्तकत्वे युक्तिमुक्त्वा, प्रमाणमाह **मृडविरञ्च्यसभासु गीता** इति। प्रलयोत्पत्तिकर्तारौ तौ। तदुभयं तदधीनमेवेति तेषामपेक्षितम्। तत्सभासु गीयते, यत्तयोर्दुर्लभमभिलषितं च। प्रत्यहं क्रियमाणासु सर्वास्वेव सभासु भगवत्कथा एव गीयन्ते। अनेन तयोरपि उत्कृष्टो भगवानिति निरूपितम्। ताभ्यां कथानां फलं निर्णीतमिति प्रमाणनिरूपणे तथोक्तम्। तावेव हि मुख्याविति। अनेन स्त्रीणां शापो निरूपितः। या भगवत्कथा न शृणोति, सा तादृशं पतिं प्राप्नोतीति। सामान्यतः स्त्रियो दुष्टा इति हि योनिदोषं मत्वा, भगवानेवं निराकरोतीति सा मन्यते। अन्यथा पुरुषानसमानपि भजने अनिषिध्य मामेव कथं निषेधतीति॥ ४४॥

### श्रीविट्ठलरायात्मजश्रीवल्लभकृतलेखः

**यद्वाञ्छयेत्यत्र**। **पूर्वमपीति**। भगवदागमनात्पूर्वमपि नागताः। आगमनानन्तरमपि नागता इत्यर्थः। **कान्यं श्रयीतेत्यत्र**। **मुखरवद्वर्णयन्ति** मुखरयन्ते। 'प्रातिपदिकाद्धात्वर्थे बहुल'मिति बाहुलकाण्णिङ्। तथार्वाणतं मुखरितमित्यर्थः। अपवर्गमभिव्याप्येत्यापवर्ग्यम्, अव्ययीभावः। तथा वर्तते इत्यापवर्ग्यं सुखं प्रत्यक्षा क्रियेतिवदर्शआद्यच्। जनतायास्तद्यस्मादिति विग्रहमभिप्रेत्याहुर्**जनताया** इति।

### श्रीसुबोधिनी-सारः

यस्य तव वांछया नृपाणां नृपेषु वा शिखामणयः मस्तकरत्नभूता अंगेति सम्बोधनम् राजा वा वैन्यः पृथुर्जायंतो भरतो नाहुषो ययातिर्गयः प्रसिद्धस्ते आदिर्येषां ते ऐकपत्यं चक्रवर्त्तिराज्यं विसृज्य त्यक्त्वा वनं विविशुः। हे अम्बुजाक्ष ते तवानुपदवीं ये इह लोके आस्थितास्ते किं सीदन्ति दुःख्यन्ति अपि तु न सीदन्त्यवसादनोत्तरम्॥ ४१॥ अथात्मनो रूपं वै भजस्व क्षत्त्रियर्षभम् इत्युक्तमाक्षिपति गुणानामालयस्यास्पदस्य तव लक्ष्म्या आलयं तत्सेव्यं सद्भिर्मुखरितं वर्णितं जनताया जीवसंघस्यापवर्गं मोक्षरूपं पादसरोजयोर्गंधमाघ्राय तम् अविगणय्यानादृत्य मर्त्या मरणधर्मिकाः अर्थे विविक्ता पूता दृष्टिर्यस्याः सा का स्त्री सदा उरु महद्भयं यस्य तमन्यं श्रयेत सेवेत न कापि "बहिर्मुखा भजन्त्यन्यं न तथाहमनिंदिता" इत्युक्तेः॥ ४२॥ अनुरूपं तुल्यमात्मानं जगतामधीशमत्र परत्र च लोकद्वये कामपूरं वांछितप्रदं तं त्वा त्वाम् अहमभजमिति मत्कौशल्यं किं चाऽनृतस्य मिथ्यासंसारस्यापवर्गो नाशो मोक्षो वा यस्मात्स यो भगवान् भजंतमुपयात्यात्मसात्करोति तस्य तवांघ्रिश्चरणं सृतिभिर्देवादजन्मभिर्भ्रमन्त्या मे ममारणं शरणं स्यात् वै एव॥ ४३॥ "राजपुत्रीप्सिता भूपैः" इति राज्ञां गुणानुक्तानाक्षिपति। हे अरिकर्षण मृडः शिवो विरिंचिर्ब्रह्मा तयोः सभासु गीता युष्माकं कथा यस्याः कर्णमूलं श्रोत्रपथं नोपयायात् नेयात् तस्या मंदभाग्यायाः स्त्रियो भवता त्वयोपदिष्टा उक्ता नृपाः स्युः हे अच्युत कीदृशास्ते इत्यत आह—स्त्रीणां गृहेषु खरादिरूपाः गर्दभा इव भारवाहा गावो बलीवर्दा इव व्यापारक्लिष्टाः श्वान इवापमानपात्राः बिडाला इव कुरूपाः भृत्या इव वश्याः॥ ४४॥

### गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

यच्चास्पष्टवर्त्मनां पुंसां पदवीमास्थिता योषितः सीदन्तीति स्वजने क्लेश उक्तस्तत्रोत्तरमाह—यद्वाञ्छयेति। यस्य तव वाञ्छया प्राप्तीच्छया ये अङ्गादयो नृपशिखामणयो राजोत्तमा ऐकाधिपत्यं एकः स्वयमधिपतिर्यस्मिन्नेतादृशमपि स्वराज्यं विसृज्य त्यक्त्वा त्वत्प्राप्तिसाधनत्वद्भजनार्थं वनं विविशुस्ते तव पदवीं मार्गमास्थिताः किमिह संसारे सीदन्तीति इतरवत् क्लिश्यन्ति? नैव क्लिश्यन्ति। तेषां मुक्तेः प्रसिद्धत्वादित्यर्थः। "भजनावस्थायामेव त्वद्भक्तानां त्वत्कृपादृष्ट्या सर्वसन्तापनिवृत्तिर्भवति, कुतः क्लेशशङ्कावकाश" इति सूचयन्ती संबोधयति—अम्बुजाक्षेति। अङ्गो वेनस्य पिता, वैन्यः पृथुः, जायन्तो भरतः, नाहुषो ययातिः, गयोपि प्रियव्रतवंशजः॥ ४१॥ अथात्मनोनुरूपमन्यं भजस्वेति यदुक्तं तस्योत्तरमाह—कैति द्वयेन। सद्भिर्विवेकिभिर्मुखरितं कथितं तव पादसरोजगन्धमाघ्राय तव चरणकमलप्रभावं श्रुत्वा अविगणय्य त्वामनादृत्य मर्त्या स्वयं मरणस्वभावा का स्त्री अन्यं पुरुषं श्रयेत भजेतेत्यन्वयः। अहं तु साक्षादेव तव पादसरोजगन्धमाघ्रातवती, अतः कथमन्यं भजेयमिति भावः। ननु 'सारासारविवेकिनो हि सर्वं त्यक्त्वा मच्चरणप्रभावं किमिति वर्णयन्ति' तत्राह—जनतापवर्गमिति। जनताया जनसमूहस्य श्रवणकीर्तनादिपरस्य अपवर्गं अपवर्गस्य मोक्षस्य साधकमित्यर्थः। 'सौभाग्यातिशयप्रापकं च' इति सूचयन्त्याह—लक्ष्म्यालयमिति। लक्ष्म्या अप्यालयं आश्रयं सेव्यमित्यर्थः। तुशब्देनात्र सन्देहो नास्तीति सूचयति। 'मर्त्यम्' इति पाठे तु नान्यो भजनयोग्यो मरणशीलत्वादिति पुरुषविशेषणम्। भजनयोग्यत्वे हेत्वन्तरमप्याह—सदोरुभयमिति। जीवतोपि सदोरु अधिकं भयं यस्य कर्माधीनत्वात् इत्यर्थः। गुणैर्हीना इत्यस्य परिहारं वदन्ती तद्भजने हेत्वन्तरमप्याह—गुणाश्रयस्येति। ज्ञानैश्वर्यबलादिगुणार्णवस्येत्यर्थः। ननु 'कथं तर्हि स्त्रियोऽन्यपुरुषासक्ता भवन्ति' इत्याशङ्क्य तासामज्ञत्वं सूचयन्त्याह—अर्थेति। अर्थे विविक्ता दृष्टिर्यस्याः सा स्वहिताहितविभागपरिशीलनपरा चेदित्यर्थः॥ ४२॥ तमुक्तप्रभावमनुरूपं योग्यमेव त्वा त्वामभजं उत्कृष्टत्वात्। उत्कृष्ट एव स्त्रियाः पतिर्योग्यो भवतीत्युत्कर्षमेव स्पष्टयन्ती विशिनष्टि—जगतामधीश इति। सर्वस्यात्मानमिति।

अत्रास्मिन् लोके परत्र परलोके च सर्वान् कामान् विषयान् पूरयति प्रापयतीति तथा तमिति। इतोऽग्रेऽपि तद्भजनं प्रार्थयते—स्यादिति। यो वै तवाङ्घ्रिं भजन्तं पुरुषं उपयाति अनायासेन स्वयमेव प्राप्तो भवति संसृतिभिर्जन्मभिर्भ्रमन्त्या मे मम अरणं सेव्यतयाऽऽश्रयः स्यादित्यनुगृहाणेति शेषेणान्वयः। 'चरणप्राप्त्यापि किम्' इत्यपेक्षायामाह—अनृतस्य देहादावहं ममाभिमान-पूर्वकं नानाविधदुःखस्यापवर्गो निवृत्तिर्यस्मात्तथाभूत इति ॥४३॥ यत्तु भगवतोक्तं 'राजपुत्रीप्सिता भूपैर्लोकपालविभूतिभिः इति' तदसहमाना तान्निन्दत्याह—तस्य इति द्वाभ्याम्। 'मम तु त्वमेव योग्यो गुणतः स्वरूपतश्च च्युतिरहितत्वात्' इत्याशयेन सम्बोधयति—अच्युतेति। भवतोपदिष्टाः विभूत्यादिगुणवत्त्वेन संस्तुता भूपास्तस्याः स्त्रियाः पतयः स्युः। 'मम तु न ते वरण-योग्या' इत्याशयेनाह—स्त्रीणामित्यादिना। स्त्रीप्रधानेषु गृहेषु खरा इव तासां भारवाहकाः, गावो बलीवर्दा इव सर्वदा व्यापारक्लिष्टाः, श्वान इवावमताः गृहादिरक्षणपराश्च, विडाला इव कृपणा हिंस्रा उच्छिष्टभक्षकाश्च, भृत्या इवाज्ञानुसारिणः। तस्या इति कस्या इत्यपेक्षायामाह—यत्कर्णेति। कामक्रोधादिशत्रुनिवर्तिका त्वत्कथैव। 'तच्छ्रवणरहितायाः कामाद्यभिभूतायाः कथं विवेकः स्यात्' इत्याशयेन सम्बोधयति—अरिकर्शनेति। यस्याः दुर्भगायाः कर्णरन्ध्रं कर्णमूलं युष्मत्कथा नोपयायात् नोपगच्छेत्। तत्कथामाहात्म्यमाह—मृडविरिञ्चिभ्यां तत्र तत्र सभासु गीतेति। भगवद्भक्ताभिप्रायेण युष्मदिति बहुत्वं विवक्षितम् ॥ ४४ ॥

## अन्वितार्थप्रकाशिका

अस्पष्टवर्त्मनामित्यत्र त्वां भजन्तः सीदन्तीत्युक्तं तदपि मन्दमेवेत्याह—यदिति। हे अम्बुजाक्ष! अङ्गो वेनस्य पिता वैन्यः पृथुः जायन्तो भरतः नाहुषो ययातिः गयोऽपि प्रियव्रतवंशजः इत्यादयः नृपशिखामणयो राजोत्तमा ऐकाधिपत्यम् एकः स्वयमधिपतिर्यस्मिन्नेतादृशमपि। स्वार्थे ष्यञ्। स्वराज्यं विसृज्य त्यक्त्वा यद्वाञ्छया त्वत्प्राप्तिसाधनत्वद्भजनार्थं वनं विविशु-रतस्ते तव पदवीं मार्गमास्थिताः किमिह संसारे सीदन्तीति इतरवत् क्लिश्यन्ति न क्लिश्यन्ति तेषां मुक्तेः प्रसिद्धत्वात् ॥ ४१ ॥ अथात्मनोऽनुरूपमित्यत्राह—केति। जनताया जनसमूहस्य श्रवणकीर्तनादिपरस्य अपवर्गरूपं लक्ष्म्या अपि आलयम् आश्रयं सद्भिर्विवेकिभिः मुखरितं कथितं ज्ञानादिगुणानामालयस्य इत्यनेन गुणैर्हीना इत्यपास्तम्। तव पादसरोजगन्धमाघ्राय तव चरणकमलप्रभावं श्रुत्वा अर्थे विविक्ता दृष्टिर्यस्याः सा स्वहिताहितविभागपरिशीलनपरा मर्त्या मानुषस्वभावा अविगणय्य त्वामनादृत्य का स्त्री सदा उरु अधिकं भयं यस्य तम्। यद्वा। मर्त्यश्चासावासमन्तात्सदा उरु भयं यस्य स च तमित्येकं पदम्। अन्यं पुरुषं श्रयेत भजेत। राक्षसादिस्वभावाविचारान्धा त्वन्यं श्रयेतेति ॥ ४२ ॥ तमिति ॥ अतः जगतामधीशं सर्वस्यात्मानम् अत्रास्मिन् लोके परत्र परलोके च सर्वान्कामान् विषयान् पूरयति प्रापयतीति तया तं त्वाम् अनुरूपं योग्यमेवाहमभजम्। अनृ-तस्य संसारस्यापवर्गो निवृत्तिर्यस्मात् तादृशो यो भवान् तवाङ्घ्रिं भजन्तं पुरुषम् उपयाति आत्मसात्करोति। अनायासेन स्वय-मेव प्राप्तो भवति तस्य तवाङ्घ्रिः। यद्वा। य इत्यङ्घ्रेरेव परामर्शकः सृतिभिर्जन्मभिः श्रुतिभिरिति पाठे अर्थवादबहुलकर्म-श्रवणैः भ्रमन्त्या मे मम अरणं सेव्यतयाश्रयः स्यादित्यनुगृहाणेति शेषः ॥ ४३ ॥ राजपुत्रीप्सिता भूपैरित्यत्र लोकपालविभूति-त्वादयो राज्ञां गुणा उक्तास्तत्र सेर्ष्यमाह—तस्या इति ॥ हे अच्युत! हे अरिकर्शन! ये राजानः स्त्रीणां गृहेषु स्त्रीप्रधानेषु गृहेषु खरा इव तासां भारवाहकाः पादताडिता अप्यनुगन्तारश्च गावो बलीवर्दा इव सर्वदा व्यापारैः परिक्लिष्टाः श्वान इवावमताः गृहादिरक्षणपराश्च विडाला इव कृपणा हिंस्रा उच्छिष्टभक्षकाश्च भृत्या इवाज्ञानुसारिणः भवतोपदिष्टाः विभूत्यादिगुणवत्त्वेन संस्तुता नृपास्तस्या दुर्भगायाः स्त्रियाः पतयः स्युः। यस्याः कर्णमूलं मृडविरिञ्चसभासु गीता युष्मत्कथा नोपयायात् मम तु न ते वरणयोग्याः ॥ ४४ ॥

## श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्

आस्थिताः पदवीं सुभ्रु प्रायः सीदंति योषित इति यदुक्तं तदपि जाड्यमित्याह—यद्वांछयेति। यस्य तव वांछया ध्यानेच्छया नृपश्रेष्ठा अंगादयः॥ ऐकपत्यं राज्यं त्यक्त्वाननं विविशुः। तस्य तव पदवीं मार्गं ये आस्थिता अश्रितास्ते इह लोके किं सीदंति न सीदंति॥ अपितु तव परमानंदमयमक्षरपदमेव गताः। अतो योषिदवसादवाक्यं जाड्यमिति भावः अंगो वेन पिता वैन्यः पृथुः जायंतो भरतः नाहुषो ययातिः॥ ४१ ॥ आत्मनोनुरूपमिति यदुक्तं तं उत्तरमाह केति द्वाभ्यां सन्मुखरितं सद्भिरात्मारामैरपि मुखरितं वर्णितं जनतापवर्गं जनतायाजनसमूहस्यापवर्गं मुक्तिरूपं यद्वा जनानां ये तापास्तेषां वर्गो वर्जनं यस्मात्तं लक्ष्मीः सर्व-संपत्त्यधिपाया आलयं निवासस्थानं गुणानां सत्यशौचसौंदर्यादीनामसंख्यानां आलयस्य निवासभूतस्य तव अनेन गुणैर्हीना इत्युक्ता गुणहीनता प्रत्युक्तापादसरोजगंधमाधाय तमविगणय्यानादृत्य मर्त्या मरणधर्मा अर्थे साध्यप्रयोजने विविक्ताविचार-कुशला दृष्टिर्यस्याः साकास्त्री सदा उरु बहुभयो यस्य तं। अन्यं पतिं श्रयेत सेवेत॥ गुणालयस्येति पदेन हरेः सकाशादन्येषां मूर्खत्वमुक्तं हरिस्तु सर्वदा सुखनिधिः स च सर्वस्त्रीभिर्वरणीय इति भावः॥ ४२ ॥ अतस्त्वामेवाहमभजमित्याहतमिति। आत्मानं परमात्मानं। कामपूरकं त्वामहमभजं। सृतिभिर्देवमनुष्यादिषु संसरणैर्जनिभिरिति यावत्। भ्रमंत्या मे मम तवांघ्रिः

अरणं शरणं स्यात् यस्त्वांघ्रिः अनृतस्य संसरणस्य अपवर्गो नाशो यस्मात्तथाभूतः सन् त्वां भजंतं जनं उपयाति समीपे गच्छति अतो भवभीतानां तवांघ्रि शरणमेवानुरूपमिति भावः ॥ ४३ ॥ राजपुत्रीप्सिता भूपैर्लोकपालविभूतिभिरित्यादिनोक्तानां राजगुणानां राज्ञां च निंदां कुर्वत्याह श्लोकद्वयेन । तस्या इति हे अच्युत ! भवतोपदिष्टाः कथिता ये नृपास्ते कथंभूताः स्त्रीणां गृहेषु खरवत्पादताडिता अपि स्त्रियमनुगच्छंतः गावः अनड्वाह इव भारवाहकाः । श्वान इव तिरस्कृताः बिडालमार्जारा इव हिंस्रयोदरंभराः भृत्याः किंकरास्तद्वत् स्त्री परवशा भवन्ति । ते च तस्यानंदभाग्यायाः भर्त्तारः स्युः यस्याः कर्णमूलं श्रोत्रपथं तत्कथा नोपयायातु न प्राप्नुयात् ॥ ४४ ॥

## भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

'प्रायः सीदन्ति योषित' इत्यस्योत्तरमाह । यद्वाञ्छयेति । यस्मिंस्त्वद्दास्ये वाञ्छेच्छा तया, नृपशिखामणयः नृपोत्तमा, अङ्गो वेनपिता च वैन्यः पृथुश्च जायन्तो भरतश्च नहुषो ययातिश्च गयश्च ते आदयो येषां ते, राजानः, ऐकपत्यमेकस्वामिकं राज्यं विसृज्य, हे अम्बुजाक्ष, वनं विविशुः । एवं ते तव, पदवीं आस्थिताः ते नृपाः, इह सीदन्ति किं नु । न सीदन्त्येवेत्यर्थः । इहोपासनादशायामपि त्वदनुभवात्मकं सुखमेवानुबभूवुरमुत्र त्वत्साधर्म्यमवापुश्चेत्यर्थः ॥ ४१ ॥ 'अथात्मनोऽनुरूपम्' इत्यस्योत्तरमाह द्वाभ्याम् । काऽन्यमिति । गुणानां कल्याणानामाश्रयस्तस्य तव, जनताया जनसमूहस्यापवर्गं निरतिशयफलरूपं, लक्ष्म्या रमाया आलयमाश्रयं सेव्यमिति यावत् । सन्मुखरितं सद्भिर्वर्णितं, पादसरोजगन्धं आघ्राय तु आघ्रायापि, अविगणय्य, तं त्वत्पादसरोजगन्धमनादृत्य, मर्त्यं मरणशीलं, सदा उरु महद्भयं यस्य तं, अन्यं पुरुषं, अर्थविविक्तदृष्टिः स्वहिताहितविभागपरिशीलनपरा, का वा स्त्री, श्रयेत । गुणाश्रयस्येत्यनेन 'गुणैर्हीना' इति यदुक्तं तदपास्तम् ॥ ४२ ॥ अतस्त्वामेवाहमभजमित्याह । तं त्वेति । जगतां अधीशं, आत्मानं अत्र लोके परत्र लोके च, कामपूरं च मनोरथपूरकमेव, तं प्रसिद्धं, त्वा त्वां, अनुरूपं ज्ञात्वा, अभजम् । अहं तवाननुरूपापि भवान् ममानुरूप एवेति बुद्ध्वा त्वामाश्रित्य त्वामेवाभजमिति भावः । एवमुक्त्वा किंचित् प्रार्थयते । सृतिभिर्गतिभिर्जन्मभिरिति यावत् । 'राघवत्वेऽभवत् सीता रुक्मिणी कृष्णजन्मनि । देवत्वे देवदेहेयं मानुषत्वे च मानुषी' इति वचनात्त्वदवतारविशेषैरित्यर्थः । भ्रमन्त्याश्चरन्त्यास्त्वत्सहचारिण्या इत्यर्थः । मे मम, अनृतस्य पापस्य तन्मूलसंसारस्य वा अपवर्गो नाशो यस्मात्सः, यः भजन्तं उपयाति आत्मसात् करोति । तस्य तव, अङ्घ्रिश्चरण एव, अरणं शरणरूपः, स्यात् वै ॥ ४३ ॥ ये राज्ञां गुणा 'राजपुत्रीप्सिता भूपैः' इत्यादिनोक्तास्तत्र सेर्ष्यं सशापं साङ्गुलिभङ्गं चाह द्वाभ्याम् । तस्या इति । हे अच्युत, स्त्रीप्रधानकेषु गृहेषु, खरगोश्वबिडालभृत्याः खरा इव केवलं भारवाहाः, गावो बलीवर्दा इव नित्यं व्यापारक्लिष्टाः, श्वान इवावमताः गृहपालनार्थं द्वाःस्थाश्च, बिडाला इव कृपणा हिंस्राश्च, भृत्या इव किंकराश्च, ये नृपाः, भवता उपदिष्टाः, ते नृपाः, हे अरिकर्षण शत्रुहन्, यत्कर्णमूलं यस्याः कर्णपथं, मृडः, शिवः, विरिञ्चयाः विरिञ्चिसहिता नारदादयस्तत्सुतास्तेषां सभास्तासु गीता, युष्मत्कथा न उपयायात् । अत्र कथेत्येकवचनं जात्यभिप्रायकम् । कथाः नोपाययुरित्यर्थः । या त्वां त्वत्कथाश्च न श्रुतवती तस्याः पतयः इति शेषः । स्युः ॥ ४४ ॥

## कृष्णप्रिया

हे कमल लोचन ! आपने प्रासङ्गिक एक वाक्य कहा कि प्रिये ! "आस्थिताः पदवीं सुभ्रूः प्रायः सीदन्ति योषितः" जो लोग हमारा आश्रय लेते हैं वह प्रायः दुःखी होते हैं तो बात कैसे जँचती है क्योंकि अङ्गराजा, महाराज पृथु श्री भरत जी जयन्ती माता के पुत्र, नहुषपुत्र ययाति, और गयराजा आदि सम्राट् नरपति लोग अपना एकातपत्रछत्र एवं अकंटक साम्राज्य का त्यागकर आपके चरणों की प्राप्ति की इच्छा से वन में जाकर तपश्चर्या करने लगे । यदि आपकी प्राप्ति प्रधान नहीं होती और परमानन्दमय न होती तो नाथ सम्राट् के सम्राट् वन में क्यों पधारते और ऐसे विवेकनिधि इस पथ में दुःखकर मार्ग में क्यों प्रवेश करते ? ॥ ४१ ॥ कृपानाथ ! आपने कहा कि "अथात्मनो हि रूपं वै भजस्व" राजपुत्री ! अभी भी योग्य वर का वरण कर लो" प्रियतम ! आप सर्वज्ञ और हृदयस्थ रहते हुए भी यह कैसे कह सकते हो ? महाराज ! हे करुणानिधान ! हे गुणनिधान ! आपके श्रीचरणों की सुगन्ध का संतवर सतत यशोगान गाते ही रहते हैं, उन सुकुमार चरणकमलों का केवल आश्रय लेने से ही संसार के जीव पाप ताप, संताप मात्र मुक्त हो जाते हैं । भगवती श्री श्रीदेवी ३ श्रीकृष्ण प्रभु ! आपके श्रीचरणों में निवास करती है । प्रियतम ! इतना आपके विषय में जानने वाली और अपने हित-अहित को अच्छी तरह से समझने वाली कौन सी राजकुमारी होगी ? जो एक बार प्रभु के यशः सुगन्ध का सुख लेकर जन्म मृत्यु जरा व्याधि आधि उपाधियों से युक्त मर्त्यजन की ओर नजर भी करें ॥ ४२ ॥ प्रियतम ! आप ही अखिल लोकनाथ है; इहलोक एवं परलोक की समस्त इच्छाओं के आप ही एक परिपूरक हैं और आप आत्मा हैं । नाथ पूर्णविवेक पूर्ण समझदारी से आपका वरण किया है आपको मेरे लिये सर्वथा अनुरूप जानकर ही वरण किया है । यदि मुझे अनेकानेक जन्मों में मेरे कर्मों के अनुसार जिस जिस

योनि में जन्म लेना पड़े फिर भी मुझे चिन्ता नहीं है। हाँ नाथ! एक कामना अवश्य है कि जो कृपासिन्धु भगवान् भक्तवत्सल है, संसार-भय निवर्तक हैं और अपनी आत्मा का प्रदान भी कर देते हैं वैसे आपके श्रीचरणों की नित्य शरण में रहूँ ॥ ४३ ॥ हे अच्युत! हे द्वारिकेश! आपने कहे हुए राजा लोग जिनके श्रवण में न आये हों। जिनके कर्णप्रदेश में आप का यश ने प्रवेश किया न हो वैसे खर के समान बोझ ढोने वाले, बैलों की तरह गृह परिवार के सारे भार को सतत उठाने वाले, श्वानों के समान घर के आङ्गन में बैठने वाले उपेक्षा से रोटी को खाने वाले, या तो बिल्ली की तरह चोरी से पेट भरने वाले अथवा घर घाटी के समान सारा घर कामना बोझा उठाने वाले शिशुपाल आदि नृपतियों; उनके पति हो जिनके कर्णपथपर देवाधिदेव लोक में नित्य जिसका गान होता है ऐसी रसमयी कथा कर्णप्रदेश में न प्रविष्ट हुई होगी ॥ ४४ ॥

त्वक्श्मश्रुरोमनखकेशपिनद्धमन्तर्मांसास्थिरक्तकृमिविट्क[1]फपित्तवातम् ।
जीवच्छवं भजति [2]कान्तमतिर्विमूढा या ते पदाब्जमकरन्दमजिघ्रती स्त्री ॥ ४५ ॥
[3]अस्त्वम्बुजाक्ष मम ते चरणानुराग आत्मन् रतस्य मयि चानतिरिक्तदृष्टेः ।
यर्ह्यस्य वृद्धय उपात्तरजोऽतिमात्रो मामीक्षसे तदु ह नः परमानुकम्पा ॥ ४६ ॥
[4]नैवालीकमहं मन्ये वचस्ते मधुसूदन । अम्बाया इव हि प्रायः कन्यायाः [5]स्याद्रतिः क्वचित् ॥ ४७ ॥
[6]व्यूढायाश्चापि पुंश्चल्या मनोऽभ्येति नवं नवम् । बुधोऽसतीं न बिभृयात् तां बिभ्रदुभयच्युतः ॥ ४८ ॥

### कर्दमक्षमा

**अन्वयः**—या, ते, पदाब्जमकरन्दम्, अजिघ्रती, स्त्री, विमूढा, त्वक्श्मश्रुरोमनखपिनद्धम्, अन्तः, मांसास्थिरक्तकृमिविट्कफपित्तवातम्, जीवच्छवम्, कान्तमतिः, भजति ॥ ४५ ॥ हे अम्बुजाक्ष! आत्मन्, रतस्य, च, मयि, अनतिरक्तदृष्टेः, ते, चरणानुरागः, मम, अस्तु, यर्हि, अस्य, वृद्धये, उपात्तरजः, अतिमात्रः, माम्, ईक्षसे, तद्, उ, ह नः, परमा, अनुकम्पा ॥ ४६ ॥ हे मधुसूदन! अहम्, ते, वचः, अलीकम्, न, एव, मन्ये, अम्बाया, इव, कन्याया, क्वचित्, रतिः, स्यात् ॥ ४७ ॥ व्यूढायाः, अपि, पुंश्चल्याः, नवम्, नवम्, अभ्येति, बुधः, ताम्, असतीम्, न, बिभृयात्, ताम्, बिभ्रत्, उभयच्युतः, भवति ॥४८॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

तथाहि। ते पदाब्जमकरंदमजिघ्रती सती या स्त्री विमूढा सा कांतोऽयमिति मतिर्यस्याः सा कांतमतिर्जीवच्छवं भजति। त्वगादिभिर्बहिः पिनद्धं छन्नमंतर्मांसादिमयमिति ॥ ४५ ॥ यदुक्तमुदासीना वयमित्यादिना तत्राह। अस्त्विति। यद्यपि त्वं निरपेक्षस्तथाऽपि मम ते चरणानुरागोऽस्तु मयि च मय्यपि नातिरिक्ता अतिशयवती दृष्टिर्यस्य तस्य ते आत्मन् आत्मन्येव रतस्य। तर्हि तव तेन को लाभः। त्वच्चरणानुराग एव महाल्लांभः। किञ्च। यर्ह्यस्य विश्वस्य वृद्धये उपात्ता रजसोऽतिमात्रा औत्कंठ्यं येन स तथाभूतः सन्मामीक्षसे। उ एवार्थे। ह हर्षे। तदेव नः परमानुकंपा अत्यनुग्रह इति ॥ ४६ ॥ तदेवं सर्वं तदुक्तं प्रतिव्याख्याय प्रसन्नचित्ता मंत्रमुपदिशंत्याह द्वाभ्याम्। नैवेति। अथात्मनोऽनुरूपमित्यादि ते वचोऽलीकं मिथ्येति नैव मन्ये यतो लोके कन्याया एव क्वचिद्रतिर्भवति। यथा काशिराजकन्यानामंबाम्बालिकांबिकानां तिसृणां मध्ये अंबायाः कन्याया एव शाल्वे रतिर्जाता तद्वत् ॥ ४७ ॥ व्यूढायाः परिणीताया अपीति। उभयस्मादिहपरलोकद्वयाच्च्युतो भ्रष्ट इति ॥ ४८ ॥

### श्रीवंशीधरकृता भावार्थदीपिकाप्रकाशः

कफादिर्मलविशेषः। जीवच्छवं श्वसन्मृतकम्। एतेन श्रीकृष्णवपुस्तु "आनंदश्मश्रुरानंदकेश—" इत्यादि श्रुतेर्मलमयं न, केवलचिद्घन एव, अंगरचनादि तु भक्तानुग्रहार्थमेवेति ध्वनितम्। 'स वै पतिः स्यादकुतोभयः स्वयम्' इत्यादिप्रमाणतो वस्तुतः स्त्रीणां सार्वकालिकीनामपि त्वमेव पतिस्तदपि या त्वदन्यं पतिं भजति सा प्रेतमेव रमयन्ती भजतीत्याह— त्वगिति, जीवच्छवत्वमेव दर्शयति विशेषणद्वयेन। त्वगादिभिः पिनद्धम्, अन्यथा दौर्गंध्याकृष्टमक्षिकाकीटकोटिभिश्च व्याप्तं स्यादिति भावः। ते सच्चिदानन्दघनविग्रहत्वेन प्रसिद्धस्य तवात्र त्वगादिषु केषांचित्तत्संगिमात्राणां निषेधः। वेदादावप्रसिद्धत्वात्स्वयमननुभवाच्च। केषांचित्तु लोकप्रसिद्धजडमलिनादिस्वरूपाणामेव न तु तत्र वेदप्रसिद्धानां सच्चिदानन्दस्वरूपाणामपि, वेदप्रसिद्धत्वादेव तथा स्वयमनुभवात्, बीभत्समात्रस्यैव त्यागस्य विवक्षितत्वाच्चेति ज्ञापितम्। मूढैवांतर्मांसादिमयं जीवं तमेव शवं कांतमत्या भजति, ते पादाम्बुजमकरन्दं पौराणिकजनभक्तैः सर्वतः प्रसारितमपि या न भजतीति हेतोः सा मूढा, नाहं

---

१. भरितान्त्रवीतं—विज। २. काम—विज। ३. अस्त्य—विज। ४. लीकं भरत्येव—विज। ५. वादरतिः—विज। ६. जडा—वीर.; मूढा—विज।

मूढेति भावः ।। ४५ ।। स्वापेक्षामप्याह—किञ्चेति । यद्वा—अस्य जगतोऽभिवृद्धये सृष्ट्ये उपात्तं रजोतिमात्रं रजो येन स तथा। यद्वा—उपात्ता प्रलये मूलरजसि अतीतासंगता मात्रा अंशा येन स तथा । यद्वा—स्थित्यै उपात्ता रजसोऽतिरिक्ता मात्रा सत्वलक्षणा येन, तदा मामीक्षते । यद्वा—वर्धनं छेदेन वृद्धिः संहारस्तस्यै उपात्ता रजोतिक्रांता मात्रा तमोलक्षणा येन स तथा। अत्रेक्षणं नाम तत्तत्कार्यमनुस्मृत्य रजआदिमदधीनतत्तद्गुणाभिवर्धनमभिप्रेतम् । अथ "त्रिगुणा ह्येष प्रकृतिरगुणो वा विष्णुः स यदात्मरजा रजोस्या उद्वर्धयती स्यात्" इत्यादि श्रुतेः । नैतत्स्वप्रयोजनमुद्दिश्येति—किं त्वरमानुद्दिश्य परमानुकंपेति भावः ।। हे अंबुजाक्षेति सौरूप्योद्देशः । तत्रातिलोभे हेतुः—माम् । प्रकृतिरूपामिति । दैन्येनाऽभेदोक्तिः, प्रकृतेस्तच्छायारूपकत्वेन निकृष्टांशत्वात्, न त्वात्मरत्या । तदपि न घटेतेत्याशंक्याह—उपात्तेति । उपादानमत्र सांनिध्यमात्रेणोपकरणम्, ईक्षणं च स्वैरितयैवेति, ज्ञेयम् । यद्वा—मत्संबंधाभासेन तत्रापि मद्रूपतामारोप्य तव दृष्टिरिति स्थिते मयि तु परमैवानुकंपेति मद्विधत्वदेकशरणजनसंबंधादन्यत्रैव तवौदासीन्यमिति भावः । तदेवमेव टीकाप्रतिज्ञातश्च षोडशानामपि दोषाणामसत्त्वं घटेत । यद्वा—मयि च रतस्य, यतः अनतिरिक्तदृष्टेः स्वरूपशक्तित्वान्मय्यभिन्नदृष्टेः । रजो रागस्तत्राप्यन्यानुरागस्य विवृद्धये स्वयमुपात्तरागादिमात्रः सन् यन्मामीक्षसे कदाचिदालोकयसि तत्परमानुकम्पा तद्रूपमेव । अन्यत्समम् । अतः 'नामरूपे भगवति' इति षष्ठस्कंधोक्तेस्तव देहस्यात्मैकरूपत्वान्मम च तदभिन्नत्वात् तन्मत्संबंधादन्यत्रैवौदासीना इत्यादिवाक्यप्रवृत्तिरिति भावः ।। ४६ ।। मंत्रं रहस्यम् । तद्वदंबावत्—त्वय्येव मम रतिः पर्यवस्यतीति भावः । भारत चेयं कथा—काशिराजपुत्रीत्रयमंबादिकं भीष्मेण स्वयंवरे जितम्, जित्वा च ताः स्वभ्रात्रे विचित्रवीर्याय प्रायच्छत्तदा तास्वंबोवाच—हे भीष्म नाहं त्वां त्वद्भ्रातरञ्चान्यं वा विना शाल्वं वृणे, इत्युक्तो भीष्मस्तां शाल्वाय प्रस्थापयामासेत्यलं विस्तृत्या । अथवा—यदेतत्सर्वमुक्तं भवता तत्तु स्त्रीसाधारणत्वमेवाभिप्रेत्य न तु तद्विशेषत्वम्, तच्च युक्तमित्युपसंहरति—नैवेति युग्मकेन । वचः स्त्री जातिस्वभावसूचकमीदृशं वचनम्, अलीकमविषयं नैव मन्ये, हि यस्मात्कन्याया अपि क्वचिदेव त्रैव पुरुषे रतिः स्यात् । प्रायो बाहुल्येनेति तासु साध्वी जातिरित्यर्थः । टीकायाश्च कन्याया एव कस्याश्चिदेव कन्याया इत्यर्थः । तत्र दृष्टान्तः—अंबाया इवेति ।। ४७ ।। पुमांसं दृष्ट्वा चलति निजधर्माद्या सा पुंश्चली "या नारी रूपजात्याद्यर्चितयित्वोत्सुका भवेत् । पुरुषोयमिति ज्ञात्वा रत्यै सा पुंश्चली स्मृता" इत्युक्तेः । असतीं पुंश्चलीं न बिभृयात् विवाहितामपि पृथक्शय्यां कुर्यादित्यर्थः । एवमकुर्वन्पतितो भवतीत्याह—तामिति । "पुंश्चल्यां गमनाद्विप्रस्तप्तसूर्मिं व्रजेत्पुनः । जीवन्नेव भवेच्छूद्रो मृतो भुंक्तेऽत्र यातनाः" ।। इति स्मृतेः । विप्र इत्युपलक्षणम् । मृतः पुनरत्र तप्तसूर्मौ ।। पुनः पुंश्चल्यास्तु व्यूढाया अपीत्यादि । मादृशी तु सर्वोत्तमैव सर्वज्ञेन भगवता स्वीकारादित्याह—बुध इति । न बिभृयात्–बिभर्तीति न संभाव्यत इत्यर्थः । अत उभयच्युत एव तां बिभ्रद्भवतीत्यर्थः । एतेन 'अथात्मनोनुरूपम्' इत्याद्युत्तरितम् ।। ४८ ।।

### श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी

अहो अत्यन्तघृणास्पदत्वेन च ते कथञ्चिदपि त्वदीयानां मनसोपि सम्बन्धयोग्या न स्युरित्याह—त्वगिति । जीवच्छवत्वमेव दर्शयति—त्वगित्यादिना । विशेषणद्वयेन यस्य शरीरमात्रस्य दृष्ट्या कान्तमतिः स्त्रीप्रवर्तते तस्य शवेन को भेद इति भावः । त्वगादिभिः पिनद्धम् अन्यथा दौर्गन्ध्याद्याकृष्टमक्षिकादिकीटकोटिभिश्च व्याप्तं स्यात्, यथाहुः—

"यदिनामास्य कायस्य यदन्तस्तद्बहिर्भवेत् । दण्डमुद्यम्य लोकोयं शुनः काकाश्च वारयेत् ।।" इति भावः । ते सच्चिदानन्दविग्रहत्वेन प्रसिद्धस्य तव अत्र त्वगादिषु केषाञ्चित्तत्संज्ञिमात्राणां निषेधः वेदादावप्रसिद्धत्वात् स्वयमनुभवाच्च केषाञ्चित्तु लोकप्रसिद्धजडमलिनादिस्वरूपाणामेव नतु तत्र वेदप्रसिद्धानां सच्चिदानन्दरूपाणामपि वेदप्रसिद्धत्वादेव तथा स्वयमनुभवात् बीभत्सपरित्यागमात्रस्यैव विवक्षितत्वाच्चेति ज्ञापितम् । अत्र "या लीलया धृततनोरनुरूपरूपा" इत्युक्तत्वादस्यास्त्वयमभिप्रायः भवत्सदृशदेहा मादृशी तावत् स्वत एव तादृशे जुगुप्सिते यातु स्वयमपि त्वगित्याद्युक्तलक्षणदेहा सापि कथञ्चित्तादृशत्वदनुभवं विनैव तत्र रमते त्वदनुभवे सति नतु स्वदेहेपि किञ्च त्वद्भजनयोग्यत्वाय मलिनवस्त्रादिवत्तत्त्यागमपि वाञ्छति योग्यत्वस्य तु क्रमतारतम्यं ज्ञेयं त्रिवक्राया इव पूर्वदेह एव सद्यस्तद्योग्यत्वाविर्भावात् अन्तर्गृहगताः काश्चिदित्याद्युक्तानामिव पूर्वदेहत्यागपूर्वकस्तद्योग्यदेहाविर्भावात् पिङ्गलाया इव स्वदेहे जुगुप्साया उदयात् किम्बहुना कान्यं श्रयेतेति मदनुभवोक्त्या तथा "दधति सकृन्मनस्त्वयि य आत्मनि नित्यसुखे न पुनरुपासते पुरुषसारहरावसथान्" इति श्रुत्युक्त्या च वयं सर्वा अपि त्वन्निष्ठा एव प्राकृते त्वत्सारूप्यं प्राप्ते च नासज्जामः किमुत त्वद्विरोधिषु चैद्यादिष्विति ।। ४५ ।। हे अम्बुजाक्षेति सौरूप्योद्देशस्तत्रातिलोभे हेतुः मां प्रकृतिरूपामिति दैन्येनाभेदोक्तिः प्रकृतेस्तच्छायारूपत्वेन तन्निकृष्टांशत्वात् नन्वात्मरत्या तदपि न घटत इत्याऽऽशङ्क्याह—उपात्तेति । उपादानमत्र सान्निध्यमात्रेणोपकरणम् ईक्षणं च स्वैरितयैवेति ज्ञेयं यद्वा मत्सम्बन्धाभासेन तत्रापि मद्रूपतामारोप्य तव दृष्टिरिति स्थिते मयि तु परमैवानुकम्पेति मद्विधत्वादेकशरणजनसम्बन्धादन्यत्रैव तवौदासीन्यमिति भावः । तदेवमेव टीकाप्रतिज्ञातं च षोडशानामपि दोषाणामसत्वं घटते किन्तु प्रथमं प्रकृतिवीक्षणं ततस्तस्याः क्षोभः ततो गुणानां पार्थक्ये सति सृष्ट्यर्थं रजसः पृथग्वीक्षणमिति क्रमो लभ्यते यद्वा मयि च रतस्य यत अनतिरिक्तदृष्टेः स्वरूपशक्तित्वात् मय्यभिन्नदृष्टेः रजो रागः तत्राप्यस्यानुरागस्य विवृद्धये स्वयमुपात्तरागातिमात्रश्च सन् यन्मामोक्षसे कदाचिदालोकयसि तत्

परमानुकम्पा तद्रूपमेव अन्यत्समानम् अतस्तव देहस्यात्मैकरूपत्वान्मम च तदभिन्नत्वात्तन्मत्सम्बन्धादन्यत्रैवोदासीना इत्यादि-वाक्यप्रवृत्तिरिति भावः ॥ ४६ ॥ अथवा यदेतत्सर्वमुक्तं भगवता तत्तु स्त्रीसाधारणत्वमेवाभिप्रेत्य न तु तद्विशेषत्वं तच्च युक्तमित्युपसंहरति—नैवेति युग्मकेन । वचः स्त्रीजातिस्वभावसूचकमीदृशं वचनम् अलीकमविषयं नैव मन्ये हि यस्मात् कन्याया अपि क्वचिदेकत्रैव पुरुषे रतिः स्यात् प्रायो बाहुल्येनेति तासु साध्वीजातेरित्यर्थः । टीकायाञ्च कन्याया एवेति कस्याश्चिदेव कन्याया इत्यर्थः । तत्र दृष्टान्तः, अम्बाया इवेति, अतः पुंश्चल्यास्तु व्यूढाया अपीत्यादि मादृशी तु सर्वोत्तमैव सर्वज्ञेन भवता स्वीकारादित्याह—बुध इति । न बिभृयात् बिभर्त्तीति न सम्भाव्यत इत्यर्थः । अत उभयच्युत एव तां बिभृयाद्भवतीत्यर्थः । एतेन अथात्मनोनुरूपमित्यप्युत्तरितम् ॥ ४७-४८ ॥

### श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी

न च वक्तव्यमप्रकटत्वेन नोपयायादिति सर्व्वत्र सर्व्वैरेव कीर्त्यमानत्वादित्याह—त्वगिति । जीवच्छवत्वमेव दर्शयति विशेषणद्वयेन; रोमाणि पक्ष्मादीनि, त्वगादिभिः पिनद्धम्, अन्यथा दौर्गन्ध्याद्याकृष्ट-मक्षिकादि-कीट-कोटिभिर्व्याप्तैरिति भावः । त्वगादीनां यथापूर्व्वं मांसादि-विधाने श्रेष्ठ्यं तथा मांसादीनां घृणाभरास्पदत्वमाधिक्यं वा ज्ञेयम् । विशेषेण मूढा विवेकहीना, ते सच्चिदानन्दघनमूर्त्तेस्तव । एवं राजभिः सहासमानिति पक्षेऽपि तेषामत्यरतापकर्षस्य श्रीभगवत्परमोत्कर्षस्य चोक्त्याऽसमत्वमेव दृढ़ीकृतयोत्तरितमिति । अन्यत्तैर्व्याख्यातम् । यद्वा, कान्तमतिः सुन्दरबुद्धिरपि त्वत्पदाब्जरसगन्धराहित्येन विमूढा सतीत्यर्थः ॥ ४५ ॥ अम्बुजाक्ष ! हे परमसुन्दरेत्यर्थः । अतस्त्वच्चरणयोरनुरागोऽस्तु, आत्मरतत्वादेव मयि पत्न्यामप्यनतिरिक्ता अन्यलोकसाधारणी दृष्टिर्मतिर्यस्य तस्य; अस्य सकलभक्तगणस्य; मां लक्ष्मीं मां प्रकृतिरूपाम्,—प्रकृतेरपि तदंशत्वात्; यद्वा, विभूतिप्रधानाद्यर्थमीक्षसेऽपेक्षसे । ननु आत्मरत्या तदपि न घटेतेत्याशंक्याह—उपेति । यद्वा, सन्तत्युत्पादनेनास्य यदुवंशस्य वृद्धयेऽर्थमित्यर्थः । तस्य गुणातीतत्वेऽपि रज इत्युक्तिरप्राकृत सच्चिदानन्दगुणान्तर्गत-रजोऽभिप्रायेण । तच्च श्रीभागवतामृते बहुशो विवृतमेव । 'नः' इति स्वसखीदास्याद्यपेक्षया, परमेति तस्याः सुदुर्लभत्वात् । अन्यत्तैर्व्याख्यातम् । यद्वा, अम्बुजाक्षेति त्वच्चरणानुरागेण त्वत्सौन्दर्य्यदर्शनमेव महालाभ इति भावः । किञ्च, अस्यानुरागस्य वृद्धये उपात्तगोपक्रीडया स्वीकृते रजोभिर्गोपादधूलिभिरतिकान्ता मात्रा वर्हापीड़म् गुञ्जावतंस-वनमालावस्त्रादिपरिच्छदो यस्य सः, व्रजजनानन्दक-सायन्तनगोपवेशः सन्नित्यर्थः । तथा च विश्वः—'मात्रं चावधृतौ कात्स्न्र्ये मात्रा कर्ण-विभूषणे । अक्षरावयवे वृत्ते मानेऽल्पे च परिच्छदे ।' इति । यद्वा, उपात्ते रजोभिरतिमात्रो भरितः । अन्यत् समानम् ॥ ४६ ॥ हे मधुसूदनेति मधुमादिदैत्यं प्रति वरदानादिपालनेन सत्यवाक्यम्, श्लेषेण मधुसूदनो भ्रमरस्तद्वत् सारग्राहित्वं सूचयति । अतोऽलीकं नैव मन्ये, किन्तु कन्याया एव मन एकनिष्ठम्, न त्वन्यस्या इत्याह—अम्बाया इवेति । हि यतः, क्वचित् कस्मिंश्चिदेकस्मिन् पुरुषे, प्राय इति कस्याश्चित् कन्याया अपि पुरुषान्तरे रतिः, न त्वन्यस्या इत्यभिव्यञ्जयति ॥ ४७ ॥ व्यूढाया इति । च अपि, व्यूढाया अपि पुंश्चल्या दुष्टायाः सत्याः, अपि गर्ह्यायाम्, अभितो याति; यद्वा, अभि अभयं यथा स्यात्तथा याति, नवं नवमिति पूर्वपूर्वत्यागेनापरापरकामान्न विभृयाद् गृहे न रक्षेत्, किन्तु परित्यजेदेवेत्यर्थः— बुधश्चेत्; यद्वा, ननु मनोवृत्तं कथं ज्ञातं स्यात् ? तत्राह—बुध इति ॥ ४८ ॥

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम्

विमूढा अज्ञा या स्त्री का त्वत्पादपमजिघ्रती भवती स जीवच्छवं भजति ॥ ४५-५९ ॥

### श्रीमद्वीरराघवाचार्यकृता भागवतचन्द्रचन्द्रिका

तथाहीत्याह—त्वगिति । या स्त्री तव पदाब्जमकरन्दम् अजिघ्रवती नाघ्रातवती कदाप्यश्रुतत्वत्कथा अत एव विमूढा अत एव कान्तः प्रियतमोऽयं ममेति मतिर्यस्याः सा बहिस्त्वगादिभिः पिनद्ध छन्नमन्तर्मांसादयो यस्मिन् तज्जीवादपि शवतुल्यं कलेवरं यस्य तं पुरुषाधमं भजते विण्मलं त्वगादयः प्रसिद्धाः ॥ ४५ ॥ यदुक्तमुदासीना वयमित्यादि तत्राह—अस्त्विति । हे अम्बुजाक्ष ! आत्मन् आत्मनि रतस्य आत्मारामस्येत्यर्थः । अनेन निरपेक्षारूपमुदासीनत्वमनूदितं मय्यनतिरिक्ता अनतिशयिता दृष्टिर्यस्येत्यनेनाकामुकत्वं तस्य च तव चरणयोरनुरागः प्रेमा अस्तु, मेति शेषः । यद्यप्युदासीनोऽकामुकश्च सन् गृहमेधिधर्मान् अभिनयसि तथापि मयाऽपि त्वच्चरणानुरागमात्रमेव प्रार्थनीयं नतु ततोधिकमिति भावः । सन्तु तव वचांसि आपातप्रतीत-निष्ठुरार्थपराणि, तथापि कदाचित्समयविशेषे तव मय्यनुकम्पा दुर्निवारैवेत्यभिप्रेत्याह—यर्हीत्यर्द्धेन यर्हि यदा अस्य विश्वस्य विवृद्धये समृद्धये उपात्ता रजसस्सृष्ट्युपयुक्तरजोगुणस्यातिमात्रा औत्कट्यं येन तथाभूतः सन् मामीक्षसे इति यत् तदुह तदेव परमा निरतिशया अनुकम्पा कृपा विचित्रं जगत्सृष्ट्वा तत्र मदनुमोदनार्थं मामीक्षसे इत्येषैव महतीकृपेत्यर्थः ॥४६॥ तदेवं सर्वं तदुक्तं प्रतिभाष्य प्रसन्नचित्ता मन्त्रमुपदिशन्ती प्राह—नैवेति द्वाभ्याम् । हे मधुसूदन ! तव यद्वचः अथात्मनोनुरूपं वा इत्यादि तदलीकम-

नृतमिति न मन्ये नासत्यमित्यर्थः। कुतः? यतो लोके कन्याया एव क्वचित्पुरुषविशेषे रतिर्भवति यथा अम्बायाः काशिराजपुत्रिकायाः अम्बाख्यायास्तद्वत् अम्बायाः कन्याया एव साल्वे रतिर्बभूवेतीतिहासोत्र विवक्षितः ॥ ४७ ॥ तथा ऊढायाः परिणीताया अपि पुंश्चल्याः मनो नवन्नवं पुरुषमभ्येति ततः किमत आह—बुध इति। बुधो बुद्धिमान् असतीमुक्तविधां स्त्रियं न बिभृयात् विपर्ययेऽनर्थमाह—बिभ्रत् पुष्णन् उभयच्युतः उभयस्मादेतल्लोकात्परलोकाच्च प्रच्युतो भवति इहामुत्र च न सुखी किन्तु दुःख्येव भवतीत्यर्थः ॥ ४८ ॥

**श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली**

एतदेव स्पष्टयति—त्वक्श्मश्रुरोमेति। या स्त्री तव पदाब्जमकरन्दमजिघ्रती असेवमाना सा जीवच्छवं जीवन्मृतं पुरुषं भजति तत्र निमित्तं, काममतिरिति, अस्य सम्पदमाह—बहिस्त्वगादिभिः पिनद्धं बद्धम् अन्तर्मांसादिभिः सम्वृतं ननु विग्रहोप्येतादृशः कृष्णस्य किं न स्यादविशेषादिति चेन्न "आनन्दश्मश्रुरानन्दकेशः" इत्यादिश्रुतेर्हेतोः कालात्ययानदिष्टत्वात्॥ ४५ ॥ अहमप्येतादृशी नेत्याह—अस्त्विति। चरणयोरनुरागः परा भक्तिरस्तीति भक्तेः सर्वदैकप्रकारत्वं कथयति मया तव न कोप्यर्थ इति भावेनाह—आत्मन्निति। आत्मन्नात्मनि ममतु त्वत्तो महानर्थोऽस्तीति भावेनाह, मयि चेति, मयि महाधिकारिण्यां भक्तेर्न अतिरिक्ता दृष्टिरनुग्रहलक्षणा यस्य स तथा भक्त्यनुकूलानुग्रह इत्यर्थस्तस्य चशब्दो भक्तेरन्वयव्यतिरेकसूचकः तत्कुत इति चेन्न "य एष देवः परं क्षरोमरस्तं वा एनमाहुः भक्ताः" इत्यादिश्रुतिसिद्धत्वात् अनेनैव तारतम्यं सूचयति "अथातो भक्तिमीमांसा" इति श्रुतिविहितत्वात् अन्योन्यं हेतुहेतुमद्भावञ्च "मिलितो वाव एतौ एतौ भवतो यदनुग्रहश्च भक्तिश्च" इति श्रुतिसिद्धमनुवदति मिलितावन्योन्यं हेतुहेतुमद्भावोपेतौ भक्त्यनुकूलानुग्रहविशेषं कथयति—यर्हीति। यर्हि यदास्य जगतोऽभिवृद्धये सृष्टिलक्षणायै उपात्तं स्वीकृतं रजोऽतिमात्रं केवलं रजो येन स तथा यद्वा उपात्ताः प्रलये मूलरजसि अतीताः सङ्गताः मात्रा अंशाः येन स तथा मूलरजोगुणोपदानवानित्यर्थः। तदु तदेव मामीक्षसे ह विशेषत इत्यर्थः। यदा स्थितिलक्षणायै उपात्ता रजसोतिरिक्ता मात्रा सत्त्वलक्षणा येन स तथा तदा मामीक्षसे यदातिवृद्धिरहितो वर्धनं छेदनं संहारस्तस्मै उपात्ता रजोतिक्रान्ता मात्रा तमःलक्षणा येन स तथा अत्रेक्षणं नाम तत्तत्कार्यमनुस्मृत्य रज आदिमदधीनतत्तद्गुणाभिवर्धनमभिप्रेतं तदुक्तं "अथ त्रिगुणाद्व्येष प्रकृतिरगुणो वा विष्णुः स यदात्मरजा रजोस्या उद्वर्धयति" इत्यादि श्रुतौ नैतत्स्वप्रयोजनमुद्दिश्येति नः अस्मानुद्दिश्य कृता परमकृपेति भावः ॥ ४६ ॥ भगवती भगवदुक्तेरेवं तात्पर्यं प्रकाश्य निगमयति—नैवेति। हे मधुसूदन! ते तव वचः अलीकं असत्यलक्षणं भारं न भरति ननु बिभर्त्येव "भृञ् भरणे" इति धातुः। कथमिव अम्बायाः कन्यावादरतिरिव यथा मातुः कन्याप्रदानकथायां रतिस्तात्पर्याभिनिवेशलक्षणा नालीकं भवति प्रायः एवायमर्थोऽनुमतो हि "समुच्चयेऽनुमत्यां चाप्येव साम्येऽवधारणे इति यादवः। क्वापि मातुरतिरलीकं भरति तव वचः क्वाप्यलीकं न भवत्येवैतदुक्तं क्वचिदिति क्वचित्क्वापि ॥ ४७ ॥ इदानीं कृष्णस्य नियतदारत्वमात्मनो नियतपातिव्रत्यञ्च ध्वनयन्ती देवी पुंश्चलीममर्थं वादयति—मुग्धाया इति। अस्यार्थः आचार्योक्तोत्र लिख्यते यामसतीं बुधो न बिभृयात् याञ्च तां बिभ्रदाद्दृष्टच्युतो भवति तस्याः अपि पुंश्चल्यास्त्वयि मनो नवन्नवमभ्येतीति मूर्च्छया मोहिन्या मूढत्वं युवयोरपि तत्र तत्र सुलभमुपलब्धमिति मन्दाशङ्का "अमुग्धैव तु मुग्धैव त्वद्दुःखदुःखिता" इति च "श्रीर्दर्शयेद्धरिश्चैव नैवैतौ मोहदुःखिनौ" इत्यादिस्मृत्या परिहर्तव्या ॥ ४८ ॥

**श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः**

त्वक्श्मश्रु ॥ ४५ ॥ अस्तु ॥ ४६-४९ ॥

**श्रीमज्जीवगोस्वामिकृतः बृहत्क्रमसन्दर्भः**

व्यतिरेकमाह—त्वक्श्मश्रुरोमेत्यादि। त्वद्विग्रहस्य सान्द्रानन्दमयत्वात्। अतस्त्वत्पदाब्जमजिघ्रती जीवच्छवं जीवन्मृतं भजति; या तु जिघ्रती, सा तु जीवच्छवान् त्वदितरान् पतीन् न कामयते। यदेतदुक्तं भवता तत् सर्वमनन्वितमेव। मम पुनरेतदेवास्त्वित्याह—अस्त्वेवमित्यादि। हे अम्बुजाक्ष! ते तव चरणाम्बुजानुरागो मेऽस्तु। कीदृशस्य तव? आत्मन् रतस्य, आत्मनि भक्ते रतस्य मयि विरतस्येत्यन्वयः। कुतः? अनतिरिक्तदृष्टेस्तुल्यदृष्टेः, अहं भार्येति मय्यधिका दृष्टिर्मास्तु, तुल्या तद्भवितुमर्हतीति भावः। यर्हि यदा अस्य चरणानुरागस्य वृद्धय उपात्तरजोऽतिमात्रो गृहीत रागातिशयः सन् मामीक्षसे, तदेव नोऽस्मान् प्रति परमानुकम्पेत्यर्थः॥ ४६ ॥ उपसंहरति—नैवेत्यादि। किं बहुना? स्वालौकिकप्रकटनेन त्वया यदुक्तम्, तदेव सत्यम्, नैवालीकमहं मन्ये। अन्ये मन्यन्ते चेत्, मन्यन्तां नाम। लौकिकेऽपि दृश्यते कन्यायाः क्वचिदेव रतिः। तत्रास्यैव प्रमाणमिदमपि त्वया न ज्ञातमित्याक्षेपः॥ ४७ ॥ पुंश्चल्यास्तु व्यूढाया अपि मनो व्यभिचरतीति दर्शयन्त्याह—व्यूढाया इत्यादि। तां बिभ्रद्बुधोऽपि उभयच्युतो भवति। त्वां विना पुरुषान्तरं भजन्ति याः, ता एवं पुंश्चल्य इत्याक्षेपः ॥ ४८-४९ ॥

### श्रीनाथचक्रवर्तिपादविरचिता चैतन्यमतमञ्जूषा

व्यतिरेकं दर्शयति—त्वक्श्मश्रुरोमेत्यादि। त्वद्विग्रहस्यानन्दमयत्वात् नैवम्विधत्वम्। तेन त्वद्विग्रहे त्वगावत् प्रतीयमानम्, न तु त्वगादि; अतस्त्वत्पदाम्बुजमजिघ्रती स्त्री एवम्भूतं जीवच्छवं भजति ॥ ४५-४६ ॥ उपसंहरति—नैवालीकमित्यादि। किं बहुना ? स्वालौकिकत्व-प्रकटनेन त्वया यद्यदुक्तं तदेव सत्यम्, नैवालीकमहं मन्ये। अन्ये मन्यन्ते-वेत् मन्यन्तां नाम किन्तु नाहं लक्ष्मीः, न त्वमपि भगवान्। अस्त्वेवमपि तु लोकेऽपि दृश्यताम्-कन्यायाः क्वचिदेव रतिस्तत्राम्बैव प्रमाणम्। इदमपि न ज्ञायते-इत्याक्षेपः ॥ ४७ ॥ पुंश्चल्यास्तु व्यूढाया अपि मनो नरं नवमभ्येति। त्वां बिभ्रत् बुधोऽपि उभयच्युतो भवति, न तु त्वम्, कदाचित् तन्मध्ये त्वां चेदभ्येति, तदा साप्येकान्तभक्ता भवति, पिङ्गलावत्। तस्मात्त्वया यदुक्तं तत्सर्वं प्रलाप एवमाक्षेपः ॥ ४९-५० ॥

### श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शिनी

"स वै पतिः स्यादकुतोभयः स्वयम्" इत्यादि प्रमाणतो वस्तुतस्तु स्त्रीणां सार्वकालिकीनामपि त्वमेव पतिस्तदपि या त्वदन्यं पतिं भजति सा प्रेतमेव रमयन्ती भजन्तीत्याह—त्वगिति। त्वगादिभिर्बहिः पिनद्धमन्यथा दौर्गन्ध्याद्याकृष्टमक्षिकादिकीटकोटिभिर्व्याप्तः स्यादिति भावः। अन्तर्मांसादिमयं जीवं तमेव शवं कान्तोयमिति मतिर्यस्याः सैव मूढा भजति, मौढ्यमेवाह—ते सच्चिदानन्दविग्रहत्वेन प्रसिद्धस्य तव पदाब्जस्य मकरन्दं माधुर्यं पौराणिकजनप्रभञ्जनैः सर्वत्रैव प्रसारितमप्यजिघ्रती ॥४५॥ यदुक्तमुदासीना वयमिति तत्र तदुदासीनतानुसन्धानमात्रेणैव मानसस्थायिभावोपशान्तौ सत्यामतिदैन्यसमुद्रे निमज्जन्त्येवाह—अस्त्विति। यद्यपि त्वं निरपेक्षस्तदपि मम ते चरणानुरागोऽस्तु मयि तवौदासीन्यमुचितमिवेत्याह—आत्मन्रतस्य आत्मारामस्य अत एव यथा ते जगत्यस्मिन्नुदासीना दृष्टिस्तथैव मयि च अनतिरिक्ता ततोऽनधिका दृष्टिर्यस्य तस्य किञ्च यर्हि अस्य विश्वस्य वृद्धये उपात्ता रजसोतिमात्रा औत्कण्ठ्यं येन सः तथाभूतः सन्माम् ईक्षसे उ एवार्थे ह हर्षे तदेव नः परमानुकम्पा तदेवाहं परमं स्वसौभाग्यमभिमन्ये इति भावः। अयमर्थः "तथाहमपि त्वच्चित्तोनिद्राञ्च न लभे निशि" इति त्वद्वचनान्मयि तवासक्तिः उदासीना वयमिति वचनादौदासीन्यं च दृश्यते तस्मान्मयि भवानासज्जते चेदहन्ते परमान्तरङ्गा स्वरूपशक्तिरेवात एवात्मारामोपि मय्यात्मभूतायां रमत एव मय्युदास्ते चेदहन्ते बहिरङ्गा शक्तिर्गुणप्रकृतिरेवेत्यतो मयि तवोभयत्वमिव त्वय्यपि ममोभयत्वमिति ॥ ४६ ॥ अथवा मम स्त्री जातित्वान्मामेव लक्षीकृत्यान्यासांस्त्रीणां स्वभावं व्याख्याय पुरुषान् परान् भवानशिक्षयदित्याह—नैवेति। यथात्मनोऽनुरूपमित्यादि ते वचः अलीकं न मन्ये यतो लोके कन्याया अपि क्वचिद्रतिर्भवति यथा काशिराजकन्यानाम् अम्बाऽम्बालिकाम्बिकानान्तिसृणां मध्ये अम्बायाः कन्याया अपि साल्वे रतिर्जाता ॥ ४७ ॥ तद्वदेव व्यूढाया अपि उभयसमात् लोकद्वयात् बुधो विज्ञ एव त्वन्तु सर्वज्ञ एव मां पूर्वमेवात्यक्ष एव यदि मां तादृशीमज्ञा य इति भावः ॥ ४८ ॥

### गूढार्थदीपिनी

ते पदाब्जमकरन्दमजिघ्रती सतो या स्त्री कान्तमतिः सा जीवन्मृतकमेव भजति। कथंभूतम्। त्वगादिभिर्बहिः पिनद्धमाच्छन्नम्। अन्तश्च मांसादयो यस्मिंस्तथाभूतम् ॥ ४५ ॥ आत्मन् आत्मनि। 'सुपां सुलुगिति सप्तम्या लुक्। यद्वा सम्बोधनम्। मयि अनुरक्तस्य यतः अनतिरक्तदृष्टेर्मय्यभिन्नदृष्टेः। अस्य जगतः वृद्धये उपात्ता गृहीता रजसोऽतिमात्रा उत्कटं रजो येन स त्वम् मामीक्षसे। तदु हतदेव हर्षे। नोऽस्माकमुपरि ते अनुकम्पा ॥ ४६ ॥ अलीकमनृतम् न मन्ये। क्वचित् एकत्रैव पुरुषे प्रायो बाहुल्येन। यथा तिसृणां काशिराजकन्यानां मध्ये अम्बायाः शाल्वे रतिः ॥ ४७ ॥ व्यूढाया विवाहितायाः उभयस्मात् लोकद्वयात् च्युतः ॥ ४८ ॥

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः

त्वगादिभिर्बहिः पिनद्धं छन्नम् अन्तर्मांसादिमयं जीवच्छवं जीवन्मृत नृपादिरूपं भौतिकदेहं ते पदाब्जमकरन्दं भवदीयकीर्त्तिम् अजिघ्रती अशृण्वन्ती अत एव विमूढा कान्तोऽयमिति मतिर्यस्याः सा एवंभूता या स्त्री सा भजति ॥ ४५ ॥ उदासीना वयमिति यदुक्तं तत्राह—अस्त्विति। आत्मन् आत्मनि रतस्य निरपेक्षस्योदासीनस्येत्यर्थः। मयि च नातिरिक्ता अतिशयवती दृष्टिर्यस्य तस्य मय्यकामुकस्येत्यर्थः। एवम्भूतस्यापि ते चरणयोर्ममानुरागोऽस्तु एतावतैव लब्धार्थास्मीति भावः। अस्य विश्वस्य वृद्धये उपात्ता रजसोऽतिमात्रा औत्कण्ठ्यं येन सः मा चेतना परमा शक्तिरहं तद्विलक्षणा अमा अचेतना प्रकृत्याख्या तामीक्षसे उ एवार्थे ह हर्षे तत्तदेव नोऽस्मान्प्रति परमानुकम्पा अत्यनुग्रहः अयमर्थः सृष्टिं कृत्वा तत्र प्रविश्य अस्माभिः सह अत्यद्भुतां लीलां करिष्यतीत्येवं सृष्टिप्रारम्भकाले एवास्माकं विनोदो जातः अधुना लीलामृतसेवनसमय

एवेति ॥ ४६ ॥ तदेवं सर्वं भगवदुक्तं प्रति व्याख्यायाथ मामुदिश्य स्त्रीमात्रस्वभावाभिप्रायेण यदि त्वया तथोक्तं तदापि सत्यमेवोक्तमित्याह—नैवालीकमिति द्वयेन। अथात्मनोनुरूपं वै भजस्वेत्यादि वच अम्बाया इव कन्याया एव क्वचित्कस्मिंश्चित्पुरुषे रतिः स्यात् अम्बाम्बिकाम्बालिकानां काशिराजकन्यानां मध्ये अम्बायाः कन्याया एव साल्वे रतिर्जाता पश्चात् भीष्मेण विचित्रवीर्यविवाहार्थं ताः स्वयम्वरे राजचक्रं परिभूय स्वपुरे आनीताः तत्राऽम्बयोक्तं मया साल्वः पतिर्वृत इति तदनन्तरं भीष्मेण सा निसृष्टा गच्छ साल्वं प्रतीति भारते विस्तरो द्रष्टव्यः ॥ ४७ ॥ व्यूढायः परिणीतायाः ॥ ४८ ॥

## श्रीसत्यधर्मकृता श्रीभागवतटिप्पणी

त्वक् श्मश्रुरोमनखेति श्लोके लोकेशस्य नैतादृक् शरीरमिति प्रतीयते। दृश्यते च तत्। वेधादिदर्शनाच्चेत्यतो विग्रहोऽप्राकृतः। विद्वन्मुग्धवच्चैव केशवो वेदनार्तवत्। प्रदर्शयति मोहाय नैव विष्णुस्तथा भवेदित्यादेस्तमङ्गीकृत्य मानेन तत्स्वरूपं निरूपयति। आनन्दश्मश्रुरिति। आनन्दात्मकानि श्मश्रूणि मुखरोमाणि यस्य सः। आनन्दात्मकः केशः। अनेन यत्केशतः प्रादुर्भावस्तदाद्या आनन्दात्मका इत्यावेदयितुं तत्पदघटितश्रुत्युदाहरणमिति तात्पर्यं सूच्यते। आपादादानखादभिव्याप्य सर्वं आनन्दस्तदात्मकावयववान् स एष विष्णुरजो जननहीनोऽमृतो मुख्यामृतोऽचलः स्थिरः। यो ब्रह्मा गुणपूर्णो योऽधिकारी। एनं कृष्णमेकं प्रधानं वेद स आनन्दस्यैवं तदात्मकस्य सार्ष्णितां सामीप्यम्। अग्निर्हिङ्कार इति खण्डे छन्दोगोपनिषच्चतुर्थप्रपाठके सलोकतां सार्ष्णितां सायुज्यमिति खण्डार्थे सामीप्यमिति व्याख्यातत्वात्, यत्र क्वच न सामीप्यसार्ष्णिशब्दौ सह श्रूयेते तत्र सामीप्यातिसामीप्ये अधिकारिविवक्षया ज्ञेये। सलोकतां समानलोकत्वं सायुज्यं सयुजां भावः सायुज्यम्। माध्यंदिनायनश्रुतेरप्राकृतत्वगादिमत्त्वमेव तस्येति न प्राकृतः अप्राकृतो विग्रह इत्यर्थः। श्रुतिरिति पाठे यतोऽस्ति श्रुतिस्ततो न प्राकृतविग्रह इत्यर्थः। ननु विष्णोरेवैषा तोषात्मककेशादिमत्त्वं प्रतिपादयति किमायातं यादवस्येति चेन्न। सुस्मूर्षुतु भवानुक्तार्थसङ्गतेः। साक्षाद्विष्णुरध्यात्मदीप इति देवक्या तथा त्वं ब्रह्म परमं धामेत्यर्जुनेन चोक्तेः कृष्णं प्रति। ऋष् ज्ञाने इतीवास्य भाष्योक्तेराङ्पूर्वादृषधातोस्तिप्रत्यये आर्धधातुके गुणे समानशब्दस्य सभावे सवर्णदीर्घे सार्ष्णिस्तद्भावं स्वयोग्यज्ञानितामित्यपि वर्णयन्ति। तच्छब्दश्रवणात्कृष्णपरेयं श्रुतिरिति समाधत्ते। अथवा सार्ष्णिष्टुत्वे च तां समानचक्राद्यायुधवतां। ये पृषतीभि ऋष्टिभिः। मरुतो भ्राजदृष्टय इत्येतद्भाष्येऽन्यदायुधमुच्यत इत्युक्तेः शङ्खचक्रादयस्तत्पदग्राह्याः। सर्वे चारुचतुर्भुजाः। धनुर्निषङ्गासिगदाशङ्खचक्राम्बुजश्रिय इत्यादेः। ऋषः गताविस्यस्याः क्तिचक्तौ च संज्ञायामिति क्तिजन्तः शब्दः। सार्ष्णितामिति क्वचित्कपाठे णकारागमो वाऽखण्डो वैदिकः स इति वा ज्ञेयम्। परस्तु सार्ष्टिरेव सार्ष्णिरिति व्याचख्याविति सार्ष्णितेति वा। पृथक् फलश्रवणादानन्दश्मश्रुरिति नार्थवाद इति ज्ञेयम्। ततश्चायं श्लोकार्थः। त्वक्चर्म च श्मश्रूणि च नखाश्च केशाश्च तैः पिनद्धं पिहितं बहिरन्तस्तु मांसेनास्थ्ना रक्तेन कृमिभिर्विड्भिर्विष्टाभिर्भरितं भरोऽस्य सञ्जात इति स तथा। तथाऽन्तैर्वीतं परीतं जीवच्छवं जीवन्तमेव शवसदृशदेहं पुरुषमिति यावत्। या ते पदाब्जमजिघ्रती अनाघ्रातवती मूढा स्त्री कामयति स्म परवशा भजति न मद्विधेति भावः। क्वचित्कृमिन्तिरिति पाठो दृश्यते। तौ दृश्यौ। तथोक्तममरसुधायाम्। नीलङ्गुस्तु कृमिः कर्णकलीकाः क्रमति। क्रमू पादविक्षेपे। क्रमितिमीति कः। बाहुलकात्सम्प्रसारणमिति। द्रुमामया भवेत्पुंसि कीटे चक्रमिव कृमिरिति रभसः। कृधिर्नाकृमिवत्कीट इति निरभिधानाभिधानेन च ॥ ४९ ॥ अस्त्वम्बुजाक्षेति श्लोकेऽनतिरिक्त दृष्टेरिति। मयि चात्रपश्चाद्द्वैतज्ञानवत इत्यन्यथामतिमन्यथयितुं स्वयमनूद्य व्याचष्टे। अनतिरिक्तदृष्टेर्भक्त्यानुसारिणी दृष्टिः कृपादृष्टिस्तद्वत्त इत्यनुग्रहवत इति। कथं पूयते भक्त्यादिकमविद्यमानमित्यतो मानमानन्दमुनिरुदाहरति। स इति। अत्युपसर्गपूर्वकस्त्वादृगत्यर्थाद्रिगेः कर्तरि क्तप्रत्ययेऽतिरिक्ता तामतिक्रान्ता न भवतीत्यनतिरिक्ता दृष्टिः सुखयाम्येनमितीच्छाविशेषो यस्येति विग्रहः सूचितः। तथा चायं श्रुत्यर्थः। स एष इति प्राक् प्रकृतो हरिः परामृश्यते। परः सर्वोत्तमोऽजरो जरारहितोऽमरो मरणरहितस्तमेनं परं भक्तं भक्तिस्वाम्यात्तसम्बन्धिना। आहुरिति बहुसम्मतिमाह श्रुतिः। तत्स्वाम्यं स्फोरयति। हि यतः स भक्त्याऽनुगृह्णातीति। भक्त्यैवेदं जगद्वृणुते स्वकीयतया स्वीकरोति। इदमित्यसङ्कुचितवृत्तीति स्वयं तदर्थापयति। श्रियमित्यादिना। आपिपीलकं तज्जीवपर्यन्तं भक्तं वृणुतेऽभक्तं न वृणुते। यावद्भक्तो विशेषणीभूता भक्तिर्यावतीत्यर्थः। तावत्तद्भक्त्यनुसारम्। अधिकमिति क्रियाविशेषणम्। भक्तितारतम्यहेतुकम्। वरणादितारतम्यमित्यत्र श्रुतिमुदाहरति। अथातो भक्तिमीमांसेति। युवा स्यादित्यत्र न स्वातन्त्र्येणेति तद्व्याख्याति। साधुना विष्णुना योति। यु मिश्रणामिश्रणयोरिति स्मरणात्ततः क्वनि युवा मिश्रीभवति। तथा तादात्म्यं नार्थ इत्यमिश्रीभवतीत्यावृत्त्याऽप्यर्थ इति केचित्। तैरनुव्याख्यातद्व्याख्यासुधाविरोधानुरोधः सम्पाद्यः। ते च स्वावसरे उदाहरिष्येते। युवा नित्यतरुणो मुक्त्यनन्तरं साधुयुवा साधुना विष्णुना युक्त इति साधुयुवा। आध्यायकः प्राप्ताध्ययनफलः। आशिष्ठोऽनुनीभवदानन्दः। दृढिष्ठो लिङ्गभङ्गानन्तरं प्राप्तानन्यथात्वात्। अतिबल इति बलिष्ठः। विवृतान्येतानि पदान्यनुव्याख्यासुधयोस्तथा तैत्तिरीय भाष्ये च। साधुना विष्णुना युक्तो मुक्तः साधुयुवा मतः। यौवनं नित्यमेतस्य मुक्तस्येति युवा स च। फलमध्ययनस्याप्तं तेनाध्यायक ईरितः। निह्रासानन्दसम्प्राप्त्या चाशिष्ठ इति गीयते। स्थिरतयानन्यथाप्राप्तेर्दृढिष्ठ इति चोदितः। बलिष्ठश्च स्वभावेन मुक्तो भवति केवलम्। इदानी

तैत्तिरीयश्रुतौ मुक्तमनुष्यज्ञापकं दर्शयन्युवा स्यादित्यादीनि पदानि व्याचष्टे। साधुनेति। निर्दोषो हि साधुरित्युच्यते। न च विष्णोरितरो निर्दोषोऽस्ति। अतः साधुना विष्णुनेत्युक्तम्। तृतीयान्ते साधुशब्द उपपदे यु मिश्रण इत्यस्मादन्येभ्योऽपि दृश्यत इति क्वनिन्प्रत्यये साधुयुवेति भवति। यद्वा युजिरं योग इत्यस्येदं रूपम्। दृशिग्रहणासामर्थ्याद्धातोरन्तलोपः। तथा च भगवत्सामीप्यलक्षणमोक्षवानित्युक्तं भवति। युवशब्दादप्यतिशयेन साधुयुवशब्दो मुक्तस्त्वज्ञापक इति क्रममतिलङ्घ्याादौ व्याख्यातः। यद्यपि युवशब्दो यौवनमितस्तथाऽपि मुख्यामुख्ययोर्मुख्ये सम्प्रत्यय इति नित्ययौवनमङ्गीकार्यम्। तच्चैतस्य मनुष्यमुक्तस्यैव युज्यते तं संसारिण इति हेतोर्यया च स मुक्त एव। आध्यायकशब्दो यद्यप्याङ्पूर्वादिगध्ययन इत्यस्माण्वुल्प्रत्यये सति निष्पन्नः सम्यगध्ययनकर्तारमाह। तथाऽप्यत्र पुरुषार्थप्रसङ्गादध्ययनस्य चापुरुषार्थत्वादध्ययनफलप्राप्तेर्लक्षको वर्णनीयः। अध्ययनस्य फलं च तेनैवाप्तं मुक्तेरेव तत्फलत्वात्। तेन कारणेन मुक्त एवाध्यायक ईरितः। आ सम्यक् समन्ताच्च शमस्येत्याशोऽतिशयेनाशेषः। सम्यक्त्वादिकं च ह्रासाभावादिकमेव। ततो निर्ह्रासस्य योग्यतानुसारेण पूर्णस्यानन्दस्य सम्प्राप्त्या कारणेन मुक्त एव आशिष्ठ इति च गीयते। अधिकारो हि दृढो नाम। अतिशयेन दृढो दृढिष्ठः। छान्दसत्त्वादकृतो हलादेर्लघोरित्येतन्न भवति मुक्त एव स्थितस्यान्यथाप्राप्तेरतिशयेन निर्विकारत्वाद्दृढिष्ठ इति चोदितः। बलमस्यास्तीति बली। अतिशयेन बली बलिष्ठ.। अतिशयश्च स्वाभाविकत्वम्। स्वभावेन बलिष्ठश्च केवलं मुक्तो भवति नामुक्तः। अतो बलिष्ठ इति स एवोच्यत इतीति। यस्तु साधुर्गुणैर्युक्तस्तस्यैवाप्यखिला मही। त्रेतायुगे चक्रवर्ती यदा मुक्तस्तु संसृतेः। अधीति फलपूर्णत्वादाध्यायक इतीरितः। स एव विष्णुना युक्तो गच्छतीति युवा स्मृत इति। तस्येयं पृथिवी वित्तेन पूर्णा स्यादधीनेति शेषः। तस्येयं पृथिवीत्यादि पूर्वभावव्यपेक्षया। पूर्वभावोऽमुक्तत्वम्। मुक्तामुक्तमनुष्ययोर्विवक्षया हि युवा स्यादित्यादीकृत्यैकविषयताप्रतिभासो नानुपपन्न इत्यन्तेन सुधोक्तमनुसन्धेयम्। स एको मानुषो मुक्तः। एको भक्तिको मनुष्यो भवति। ये शतं मानुषा भक्ता एतावानेतत्प्रमाणो मानुषः। गन्धर्वो भवतीत्येकवचनान्तेन सर्वत्रान्वितो भवति। तश्चक्रवर्तितामापन्नस्य शतभक्तिमेलने मनुष्यगन्धर्व एको भक्त एकत्वसङ्ख्यावच्छिन्नभक्तिमानिति। एवमुत्तरत्राप्यनुसन्धेयम्। ते ये शतं मनुष्यगन्धर्वा एतावान्देवगन्धर्वः। ते ये शतं गन्धर्वास्तावांश्चिरलोकपितृकाश्चिरलोकस्तत्रत्यपितृगणः। एतदुक्तं तैत्तिरीयभाष्ये। एकानन्दस्वरूपोऽसौ मानुषो मुक्त इष्यते। तस्माच्छतगुणानन्दा गन्धर्वा मानुषात्मकाः। मुक्त्या श्रुतिफलं प्राप्तास्ततः कामाहतास्तथा। तेभ्यः शतगुणानन्दा देवप्रेष्यास्तु मुख्यतः। एते हि देवगन्धर्वा मुक्तेभ्यस्तेभ्य एव च। शताधिका हि पितरस्तेभ्य आजानदेवताः। अनाख्याता देवतास्तु जाता देवकुलेऽन्वयाः। आजानदेवतास्ता हि ताभ्योऽग्र्याः कर्मदेवताः। बल्याद्या अन्तरा प्राप्तदेवताः कर्मदेवताः ताभ्यश्च तात्त्विकादेवाः सृष्ट्यादौ देवतां गताः। तेभ्यो दक्षश्चेन्द्रनामा स हीन्दुरारयत्पुरा। तस्माद्बृहस्पतिर्नाम महेन्द्रत्वात्पुरन्दरः। तस्मात्प्रजापतिर्मुक्तो रुद्रः प्रजननेशिता। तस्माद्ब्रह्मा शतगुणो मुक्त इत्येष निर्णयः। यथाऽऽनन्दे तथा ज्ञाने विष्णुभक्तौ बलादिके। अत एतदुदाहरणं युक्ततरमिति ज्ञेयम्। सर्वैर्गुणैः शतगुणाः क्रमेणोक्तेन तेऽखिला इत्यादि। ते ये शतं चिरलोकपैतृका एतावांश्चिरलोकगतदेवगणः। एतच्छताधिकभक्तिमत्यतात्त्विकी बल्यादिकर्मदेवता तद्गणः। तस्या अतात्त्विक्या देवतायाः सकाशात्तात्त्विकी देवता तत्त्वेशगणस्तच्छतांशभक्त्यधिकः पुरुहूत इन्द्रः। एतच्छताधिको रुद्रस्ततो विरिञ्चो ब्रह्मा ततः श्री एतावती भक्त्यधिका भवति। ते ये शतं विरिञ्चा इत्यत्र शतशब्दो बहुत्वपरः। एभ्यः श्रीस्तु मुक्तेभ्यो गुणैः कोटिगुणोत्तरा। ज्ञानानन्दबलादिभ्य इति बृहद्भाष्योक्तेः। यदर्थमिदमुक्तं तन्निगमयति। तद्यावतीति। अथ एषो यद्भक्तिरितरानन्दतारतमभावभाविकैष हरिः परमः परानन्दः। विश्वो देशादिपूर्णो विनोदो विशेषतो नुदति प्रेरयतीति तथाऽपनोदः स्वयमपगतप्रेरकः सकारकः सम्यक्करोति कारयतीति वा सकारकः। किञ्च विविधतया कारकोऽपि। अधिकारकः कारकत्वेनेतरमताधिकः। एतस्यैव बिम्बभूतानन्दस्य मात्रं विप्लुषम्। अन्यानि भूतानि रमादितृणचरमाणि उपजीवन्त्युपजीव्य वर्तन्त इति पौत्रायणश्रुतिः। क्षितिपानां तु कोशशौर्यवयः पुत्रदेहदार्ढ्ययुतस्य च। सप्तद्वीपवती भर्तुर्यत्सुखं जायतेऽतुलम्। स एको मानुषानन्दो मोक्षे तु प्रतिपद्यते। तस्माच्छतगुणानन्दो महीशानां निगद्यते। तस्माच्छतगुणानन्दा गन्धर्वा मानुषात्मका इति वायुपुराणमधिमाहात्म्योक्तेर्ग्रहणमत्र ज्ञेयम्। देवर्षिपितृपनराः क्षितिपा मानुषगन्धर्वा इत्यादेश्च। मानुषा वर्णभेदेन तथैवाश्रमभेदत इति मानुषगन्धर्वा इति सूत्रभाष्योक्तेश्च। यदर्थं भक्तितारतम्यमुक्तं साधनस्योत्तमत्वेन साध्यं चोत्तममाप्नुयुरित्यादेस्तदनुग्रहमहत्त्वतादमहत्त्वं भक्त्यनुग्रहयोः सामानाधिकरण्ये च स्पष्टयन्ती श्रुतिमुदाहरति। मिथिताविति। एतौ भक्तिरनुग्रहश्चेत्येतौ मिथितौ मिथुनीभावेन ताविति तौ भवतः। स्वयमेवैतत्पदार्थं प्रपञ्चयति। यदनुग्रहश्च भक्तिश्चेति। एताविन्युपपत्तये भक्तिश्चानुग्रहश्चेति पुमांस्त्रियेत्युक्तेर्व्यत्ययस्यान्वयो ज्ञेयः। पुनः पुनर्दार्ढ्याय व्याप्तेर्होक्तिः। प्रकृतौ रमायां तदवरो रमावरो महत्यभिमन्यमानाभिमानिनोरभेदं व्यपदेशो दृष्टचर इति चतुर्मुखेऽथ रुद्रे तत इन्द्रे देवेषु तात्त्विकेषु तेन तत्त्वेशा अप्युपलक्षणीयाः। चिरलोकगर्षिपितृषु मनुष्याश्चक्रवर्तिन इति श्रुतिर्यतोऽस्ति ततोऽनतिरिक्तदृष्टिरित्यस्योक्त एवार्थो युक्त इति भावः। तथैवोपात्तरजोऽतिमात्रमिति भगवतो रजःसम्बन्धः प्रतीयत इत्यतः स्वयं तद्व्याकृत्य प्रसङ्गसन्निधापितगुणद्वयेन सह रजःसम्बन्धो न हरेरस्तीत्यत्र मानमभिधत्ते। तस्यामेवेति। तस्यां प्रकृतावेव रजसो गुणस्योद्रेचनमुद्रिक्तीकरणमुपात्तरजोमात्रत्वमुपात्तं रजसोऽतिमात्रमुद्रेचनं येनेति मूले विग्रह इत्यनेनासूचीति ज्ञेयम्। रजः

परमपरयोः सत्त्वतमसोरुपलक्षकमिति ज्ञेयम्। अथेति गुणवदगुणवद्विवेचनारम्भे। त्रिगुणा त्रयो गुणा यस्यां सा त्रिगुणा प्रकृतिः। अगुणो वाव विष्णुः। अरजास्तत्सम्बन्धविधुरः। अस्याः प्रकृतेः सकाशाद्रज उद्वर्धयति स्थुलीकरोति तत एषा वाव स्थूलतां याता सृष्टिः। स हरिः स्वयमसत्त्वः सत्त्वं चोद्वर्धयति। एषोद्रिक्तसत्त्वात्प्रकृतेः स्थितिः। तथा तमसाऽतत्सङ्गस्तमुद्वर्धयति। एष वाव लयः कथ्यत इति शेषः। एते गुणा यथा स्वकार्यकारिणः सन्तो नैनं स्पृशन्ति एष भगवानपि। एतांस्तत्कार्यानुभवेन नाभ्युपस्पृशति। अतोऽयमगुणो भवति न तु सर्वथा तदनाश्रयो विश्वम्भरत्वहान्यापत्तेः। अत्रैतद्विषयेऽयं श्लोकोऽपि भवति मानमिति शेषः। निर्गुणस्य यद्गुणादानन्दगुणस्वीकारः श्रुतौ श्रूयते तत्प्रकृतेः सकाशाद्गुणवर्धनं तदात्मकः। कदाचिदेष गुणैः स्पृश्यते। तत्र हेतुर्हि स परम इति। प्रकृतिर्जडा मुख्यतस्तदुद्रेचनपात्रं पात्रं च रमाहरिस्वाम्येन। स च स्वातन्त्र्येणोद्रेचक इति विवेको ज्ञेयः। ततश्चायं श्लोकार्थः॥ स्वस्वभावमावेदयन्त्यात्मानं ताभ्यो विमूढाभ्यो व्यावर्तयन्त्याह॥ अस्तीति। हे अम्बुजाक्ष! मम ते चरणानुरागस्तत्परमभक्तिरस्ति। लटा सार्वत्रिकत्वं तस्य द्योतयति। न त्वां विना ममापि गतिरिति नेत्याह॥ आत्मन्नात्मनीति। रतस्य स्वरमणस्य तव न रमणीकृत्यमिति भावः। मयि चानतिरिक्ता भक्त्यनुसारिणी दृष्टिरनुग्रहो यस्य तस्य। यर्हि यदाऽस्य जगतो विवृद्धये सृष्ट्यै मय्युपात्तरजोऽतिमात्र उपात्तं रजसोऽतिमात्रमुद्रेचनं येन सः। तस्यामित्यावृतं मयीत्यस्य व्याख्यानमिति मन्तव्यम्। तद्रमात्मकत्वं द्योतयितुं तस्यामित्युक्तेस्तात्पर्य इति तात्पर्यं ज्ञेयम्। मामीक्षस इति यत्तन्नोऽस्मदुपरि परमाऽनन्यसाधारिण्यनुकम्पा करुणाकर्तुमकर्तुमन्यथाकर्तुं शक्तस्यास्मदीक्षणं करुणामूलमिति भावः। उ अवधारणे। हेतीतरगुणद्वयस्यापि कार्यानुरोधेनोद्रेचनं मानिकमिति तदुपलक्षणीयताद्योतकमिति मन्तव्यम्। न इति मामिति च गदन्ती रूपविशेषाविशेषतां च तेषां ध्वनयामास॥ ५०॥ नैवालीकं भवत्येवेति श्लोके सर्वथा व्यतिरेकनिदर्शनत्वं प्रतीयते। तथा भीष्मभार्यायाः कन्येति वादे रतिरिवेति चेति प्रायःपदं क्वचित्पादाभ्यां क्वचिदलीकता चेति। ततः स्वयं सान्वयमर्थं दर्शयति॥ मातुरिति। मातुः कन्याप्रदानवादे पुत्र्या वराय वितरणकथायां रतिरिमामस्मै दास्यामिति प्रीतिस्तज्जन्यं वचो यथा प्रायोऽलीकं मिथ्या न भवति। अनेनायथार्थं क्वचिद्भवति यथावस्थितांश एव निदर्शनमत्रेति सूचयति। तथा ते वचः क्वापि नालीकं भवत्येव। अत्र प्रायःपदान्वयभ्रमयातानृतत्वभ्रमभ्रंशमेवकारयोजनेनातनोदिति ज्ञेयम्॥ ततश्चायं श्लोकार्थः॥ आत्मनो रूपं भजस्वेत्युक्तं यथार्थमिति वक्ति॥ नैवेति। हे मधुसूदन। ते वचोऽलीकं नैव भवति सत्यमेव। अम्बाया मातुः कन्यावादरतिः प्रीतियुक्तं सङ्कल्पं प्रायो यथा नालीकं भवति तथा तद्याथार्थ्यवद्वचनविशेषवत्तव वचः क्वचित्क्वापि नालीकं भवति। अनुरूपो मम त्वमेवेति नालीकं तव वच इति नालीकलोचन औत्तरयदिति ज्ञेयम्। अतोऽपि न पाङ्क्तमुत्तरमिति ज्ञायते। भवतीति पाठ एवाचार्यगृहीत इति दृष्टान्तेऽपि भवतीति संयोज्य दार्ष्टान्तिकेऽवधारणसहितं तं विधायावृत्त्याऽन्वयनाज्ज्ञायते। रूपतोऽपि न शोभां बिभर्ति॥ ५१॥ मूढाया अपि पुंश्चल्या इति श्लोके नान्वयार्थौ सरसतया प्रतीयेते इति किञ्चिदध्याहृत्य तावाह॥ यामसतीमिति। यामसतीं बुधो न बिभृयाद्यां च बिभ्रत्पुमानुभयस्माच्च्युत इत्यर्थापयति। दृष्टादृष्टच्युतो भवति ऐहिकपारलौकिकभ्रष्टो भवति। तस्या अपि पुंश्चल्यास्त्वयि मनो नवं नवमभ्येति पुंमात्रं गच्छन्त्याऽपि तस्या नवं नवं यथा तथा नित्यनूतनतयेति यावत्। मनोऽभ्येति। सुखदुःखभयेति श्लोके रुक्मिण्या दुःखादिकं प्रतीयते तथा विप्लवधिय इति भ्रान्तिश्च तथाऽऽर्तेति मोहः प्रतीयते। न च साक्षाल्लक्ष्म्या जयन्ती जानकी सत्या रुक्मिणीत्यादिका रमेत्यादिबृहदारण्यकभाष्योक्तप्रमाणविरोधात्। तथा द्वावेतौ नित्यमुक्ताविति विरोधाच्चेत्यतो मानेन तत्प्रदर्शनमात्रं न तद्वास्तवमित्याह॥ अमुग्धेवेति। हरिश्चैवं दर्शयेदित्यन्वयः। मिथः परस्परं तादृग्वचनं तादृशमाकारं च लीलयैव नृणां दर्शयन्तौ मोहं कुर्याताम्। उभयोर्व्यापारो दुर्जनमोहनार्थमेवेत्यत्र बहुमानसंवादोऽस्तीति बोधयितुं शास्त्रदर्शनादित्युक्तमिति मन्तव्यम्। एवं कुतः कुर्वाते तयोः शास्ता किन्नेत्यतोऽप्याह। शास्तुरदर्शनान्नास्ति शास्तेति च। एवं लीलां लातीति भावः। तच्च भारतादिकमजानन्पृच्छति स्मान्यास्ततनूस्त्यक्त्वा दिवं गतः। इत्याद्यसुरमोहाय दर्शयामास नाट्यवदिति। अदुःखाऽबद्धेत्यादि च॥ ततश्चायं श्लोकार्थः॥ यामसतीं बुधो न बिभृयाद्यां च तां बिभ्रत्पुमानुभयस्माद्दृष्टादृष्टाच्च्युतो भवति। तस्या अपि मूढायाः पुंश्चल्याः पुंमात्रगामिन्या मनो नवं नवं यथा तथा त्वय्यभ्येति। मादृशानां मनो गच्छेदिति किं वाच्यमतो मया त्वं वृत इति भावः॥ ५२॥

### श्रीमद्वल्लभाचार्य्यकृता सुबोधिनी

तर्हि तासामैहिकं सुखं तैर्भविष्यति, ऐहिकामुष्मिकयोस्तुल्यत्वादप्रयोजकः शाप इत्याशङ्क्याह त्वगिति। न हि शवालिङ्गने कश्चन भोगोऽस्ति। स्वप्नेऽपि तथा दर्शने मृत्युर्भवति। अग्निप्रवेशे तु शवालिङ्गने स्पष्ट एव मृत्युः। यदि तस्मिन् देहे चेतनः कश्चिदिन्द्रियवान् भवेत्, तदा स न गर्दभादिभावं प्राप्नुयात्। अतः केवलं शव एव, परं जीवच्छवः। प्रसिद्धात् प्राणा अत्र विशिष्टाः। न केवलं शवत्वमात्रमेव दूषणम्, किन्तु अवयवशोऽपि विचारे तत् दुष्टमित्याह। बाह्याभ्यन्तरभेदतः। तस्य शवस्य परितस्त्वक्। ऊर्ध्वं लम्बितभागे श्मश्रूणि। यथाष्टदिशः पूर्वभागः। सर्वत्र लोमानि यथा तृणानि। अन्तेषु नखाः,

यथा प्राकारे शृङ्गाणि शूलानि वा । पश्चात्केशाः । एवं सर्वतो बहिः पिनद्धम् । अन्तस्तु मांसम्, तस्याप्याधारभूतमस्थि च । तत्रापि मध्ये नाडीषु लोहितम् । नाड्यो बहिरप्यायान्तीति रुधिरं मांसाद्बहिरप्युपलभ्यते । वस्तुततस्त्वन्तः । तत्र च क्रमयः क्षुद्राः जीवाः । ततोऽपि मध्ये पुरीषम् । कफपित्तवाताः शास्त्रसिद्धा रोगादिसूचकाः । एवं दृष्टादृष्टदोषा निरूपिताः । नन्वेतादृशं चेत्कुत्सितम्, तदा कथं भजेतेत्याशङ्क्याह **कान्तमतिरिति** । अयं कान्तः परमसुन्दर इति तस्मिन्नुत्कृष्टबुद्धिः । ननु प्रत्यहं मलादिरूपत्वं दृश्यत इति कथं तस्मिन् कान्तबुद्धिः स्यात्, तत्राह **विमूढेति** । ननु सर्वासामेव स्त्रीणामियमेव व्यवस्थेति साधारण्यादस्यैव भोगशब्दवाच्यत्वात् सुखजनकत्वस्य दृष्टत्वात्तादृशेनैव सुखं भविष्यतीति व्यर्थं तद्दोषनिरूपणमिति चेत् । तत्राह **या ते पदाब्जमकरन्दमिति** । यथा श्रोत्रं कथा गृह्णाति, तथा घ्राणमपि भगवन्तमा..व्य भगवच्चरणारविन्दरजो गृह्णाति चेत्, तदा शवं न गृह्णाति । यो हि कमलगन्धमाजिघ्रति, स शवगन्धात् विचिकित्सते । विशेषानभिज्ञस्तु काकादिः न विचिकित्सत इति नायं सर्वात्मना भोगरूपः । स्त्रीपदं पतिव्रताव्युदासार्थम् । सा हि धर्मार्थमेव भगवद्बुद्ध्या तं भजत इति । नापि तस्या विषयापेक्षा ॥ ४५ ॥ एवमितरभजने स्त्रियं पुरुषं च निन्दित्वा, स्वस्य विषयाधिकार एवेति सर्वथा विषयाभावे केवलमोक्षाधिकारात् स्वस्यापि प्रवृत्तिर्व्यर्थेत्याशङ्क्याह **अस्त्वम्बुजाक्ष मम ते चरणानुराग** इति । **अम्बुजाक्षेति** दृष्ट्यैव परमसुखदातृत्वं निरूपितम् । ते चरणानुरागो ममास्तु । **उभयोरनुरागे** उभयोः सुखं भवति, स्पर्शादिना, नत्वननुरागे । तत्र भगवतश्चेन्मयि नानुरागः, तदा पूर्णानन्दत्वात् मत्स्पर्शादिकृतसुखाभावेऽपि न काचित् क्षतिः । मम तु पूर्णानन्दत्वाभावात् अन्यत्र स्पर्शे धाष्ट्र्यं भवतीति चरणस्पर्शे विरोधाभावात् तत्रानुरागोऽस्तु । प्रार्थनायां लोट् । **मम त** इति अव्यवहित-सम्बन्धः प्रार्थनाधिकारे हेतुः । भगवतो नापेक्षित इति द्वितीयस्य स्नेहः कदाचित् प्रतिबन्धकत्वेन अनपेक्षितः स्यात् । ततो भगवदिच्छाभावे रागो न भवेदिति प्रार्थना । भगवतोऽनपेक्षत्वे हेतुः **आत्मन्त्रतस्येति** । तर्ह्यात्मारामो विषयेष्विव त्वय्यपि भगवान् सम्बन्धं न करिष्यतीत्याशङ्क्याह **मयि चेति** । यथा भगवानात्मनि रमते, एवं प्रपञ्चेऽपि रमते । तत्र प्रपञ्चस्य मूलं स्वरूपमहमिति सृष्टिप्रलययोः सिद्धत्वान्मत्सङ्गं न बाधिष्यत इत्यर्थः । नन्वेवं सति संसारिणामात्मारामाणां च को विशेष इति चेत् । तत्राह **अनतिरिक्तदृष्टेरिति** । सर्वात्मनो भगवतः आत्मनि वा मयि वा न अतिरिक्ता दृष्टिर्यस्य । सर्वस्यैवात्मत्वा-देकैव दृष्टिः सर्वत्र । तर्हि तव कथं स्त्रीरूपः पुरुषार्थः सिध्येत्, अन्यथा स्त्रीत्वं व्यर्थं स्यादिति चेत् । तत्राह **यर्ह्यस्य वृद्धय** इति । यर्हि भगवान् अस्य जगतो वृद्धये आत्ता रजसः अतिमात्रा अधिकमात्रारूपः कामः येन । तर्हि मामीक्षिष्यते । 'वर्तमान-सामीप्ये वर्तमानद्वेति । तर्हि तदेव नोऽस्मभ्यं सर्वशक्तिभ्यः परमानुकम्पा । अस्मासु महती कृपेत्यर्थः । 'मम योनिर्महद्ब्रह्म तस्मिन् गर्भं दधाम्यहम् । सम्भवः सर्वभूतानां ततो भवति भारते'ति वाक्यात् । ईक्षणेनैव चिच्छक्त्याधानमुक्तम् । सम्बन्धस्तु भगवता सह नित्य इतीक्षणमेव विशेषः ॥ ४६ ॥ एवमुदासीनत्वेऽपि स्वस्य सर्वपुरुषार्थसिद्धिमुक्त्वा, सुखप्रस्तावनायां भगवान-कस्मादेवं यदुक्तवान्, तत्र को हेतुरित्याशङ्क्य, परीक्षार्थं तेषामुपयोग इति भावं वर्णयति द्वाभ्याम् । **नैवालीकमहं मन्य** इति । यथाश्रुतार्थत्वेऽपि **ते** वचः अहमलीकं न मन्ये । असम्भावितवचनमलीकम् । मधुसूदनत्वात् परमसमर्थस्य सर्वापेक्षारहितस्य क्लिष्टकरणे प्रयोजनाभावात् परीक्ष्यैव सम्बन्धः कर्तव्य इति सूचितम् । सम्भावनायां स्त्रीत्वमेव हेतुः । यतः महति कुले जातायाः काशिराजसुताया अम्बायाः कन्याया इव क्वचित् साल्वे रतिर्दृश्यते । अम्बा अम्बिका अम्बालिकेति तिस्रः काशिराज-कन्याः भीष्मेण विचित्रवीर्यार्थे स्वयंवरे आहृताः । ततो ज्येष्ठा भीष्मं प्रति स्वाभिप्रायमुक्तवती 'साल्वे मन्मन'इति । ततो भीष्मेण प्रेषिता, साल्वेनान्याहृतेत्यगृहीता, पुनर्भीष्मं प्राप्ता । परशुरामवाक्यादपि भीष्मेणासङ्गृहीता, तपसा देहं त्यक्त्वा शिखण्डी भूत्वा, भीष्मवधार्थमुत्पन्नेति भारतकथा । व्यूढाया अपि पुंश्चल्याः । जन्मसंस्काराद्ग्रहैर्वा बहुपुरुषसम्बन्धिनी भवति । ततस्तस्या मनः नवं नवं पुरुषमभ्येति । तदवश्यं परीक्षणेन ज्ञातव्यम् । तत्र प्रयोजनमाह **बुधः असतीं न बिभृयादिति** । **तां बिभ्रदुभयच्युत** इति बाधकम् ॥ ४७-४८ ॥

## श्रीसुबोधिनी-सारः

या हि ते तव पादाब्जयोर्मकरंदमजिघ्रति सा विमूढा स्त्री कांतोयमिति बुद्धिर्यस्याः सा त्वगादिभिः पिनद्धमावृतमंत-र्मांसादयो यस्य तं जीवन्मृतं भजतीत्यहो मोहवैभवम् ॥ ४५ ॥ "उदासीना वयम्" इत्युक्तमुररीकृत्य प्रार्थयते मयि चापि नातिरिक्तोत्तमेयमिति दृष्टिर्यस्य तस्यात्मन् रतस्य स्वात्मारामस्य ते तव चरणयोरनुरागः प्रीतिरस्तु मम हे अंबुजाक्ष अस्य जगतो विवृद्धये उपात्ता गृहीता रजसोऽतिमात्रा येन स हरिर्यर्हि यदा मामीक्षसे पश्यसि तदीक्षणमेव नोऽस्माकं परोनुग्रहः तु एव ह हवै ॥ ४६ ॥ हे मधुसूदन अथात्मनोनुरूपं वा इत्यादि ते वचोऽलीकं मिथ्या नाहं मन्ये कन्याया अंबायाः काशिराजसुताया इव प्रायः क्वचिदन्यत्र रुचिः स्यादिति भारतादिपर्वणि कथा मम तु त्वय्येव तिष्ठतीति भावः ॥ ४७ ॥ न केवलं कन्याया एवान्यत्र रतिरपि तु व्यभिचारिण्या विवाहिताया अपि मनो नवं नवमभ्येति प्रचलति तामसतीं दुष्टां बुधः पंडितो न दध्यात् । तत्र हेतुः । बिभ्रत् धारयन् उभयस्माल्लोकद्वयाच्च्युतो भ्रष्टो भवति ॥ ४८ ॥

## गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

या स्त्री तव पादाब्जमकरन्दमजिघ्रती तव चरणमाहात्म्यं कथायामश्रुतवती सा कान्तो कमनीयोऽयमिति मतिर्यस्यास्तथाभूता। तत्र हेतुमाह—विमूढेति। विशेषेण मोहितचित्ता बहिस्त्वगादिभिः पिनद्धं छन्नं अन्तश्च मांसादयो यस्मिंस्तं अतो जीवदपि शवतुल्यं पुरुषं भजतीत्यन्वयः॥ ४५॥ यदुक्तम् 'उदासीना वयम्' इत्यादि तत्राह—अस्त्विति। तस्मिन् स्वासक्तिं सूचयन्ती सम्बोधयति—अम्बुजाक्षेति। मयि चापि अनतिरिक्ता अनतिशयवती अनासक्ता दृष्टिर्यस्य तस्य। तत्र हेतुमाह—आत्मन् आत्मनि निजस्वरूपानन्दे रतस्येति। ते तव चरणानुरागो ममास्तु। एवं त्वय्युदासीनस्य चरणानुरागेऽपि तव किं फलं स्यात्तत्राह—यर्हीति। अस्य विश्वस्य वृद्ध्यर्थं उपात्ता अङ्गीकृता रजोगुणस्यातिमात्रा औत्कण्ठ्यं येन तथाभूतः सन् मां त्वमीक्षसे तत् उत दीक्षणमेव नोऽस्माकं सर्वासां शक्तीनां परमा निरतिशया अनुकम्पा तव कृपेति। हेति हर्षं सूचयति॥ ४६॥ अथात्मनोऽनुरूपं भजस्वेति यदुक्तं तत्र विवेकवती काऽन्यं श्रयेतेत्युत्तरमुक्तम्। 'मूढायास्तु तदपि संभवति' इत्याह—नैवेति द्वाभ्याम्। हे मधुसूदन! अथात्मनोनुरूपं भजस्वेति यत्ते वचस्तदहमलीकमनृतमसत्यं न मन्ये, कुतो यतो लोके कन्याया एव क्वचित्पुरुषविशेषे रतिर्भवति। तत्र दृष्टान्तमाह—अम्बाया इवेति। यथा काशिराजकन्यानामम्बाम्बिकाम्बालिकानां तिसृणां मध्ये अम्बायाः कन्याया एव शाल्वे रतिर्जातेति तद्वदित्यर्थः। 'विवेकवत्यास्तु न स्वत एवं रतिः, पित्रधीनत्वात्' इत्याशयेन प्रायग्रहणम्॥ ४७॥ तथा व्यूढायाः परिणीतायाः अपि पुंश्चल्या मनो नवं नवं पुरुषमभ्येति व्यवहारे सत्यपि बुधो विवेकी पुरुषः असतीं पुंश्चलीं स्त्रियं न बिभृयात् न प्रतिगृह्णीयात्। विपर्ययेऽनर्थमाह—तामिति। तामसतीं बिभ्रत् पुष्णन् पुरुषः उभयच्युतो भवति अस्मिन् लोके परलोके च दुःखमेवानुभवति, न सुखमित्यर्थः॥ ४८॥

## अन्वितार्थप्रकाशिका

त्वगिति॥ या विमूढा स्त्री ते तव पदाब्जमकरन्दमजिघ्रती तव चरणमाहात्म्यं कथायामश्रुतवती। नुमभाव आर्षः। सा कान्तः कमनीयोऽयमिति मतिर्यस्यास्तथाभूता सती त्वक्श्मश्रुरोमनखकेशैः पिनद्धं छन्नम् अन्तश्च मांसास्थिरक्तकृमिविट्कफपित्तवाता यस्मिन् तं जीवन्तमपि शवतुल्यं पुरुषं भजति॥ ४५॥ उदासीना वयमित्यत्राह—अस्त्विति॥ हे अम्बुजाक्ष! मयि चापि मय्यपि अनतिरिक्ता नास्त्यतिशयवती दृष्टिर्यस्य तस्य आत्मन् आत्मनि निजरूपानन्दे रतस्येति आत्मन्निति सुपां सुलुगिति सप्तम्या लुक्। यद्यपि त्वं मयि त्वं निरपेक्षः आत्मरतश्चेति तथापि ते तव चरणानुरागो ममास्तु यर्हि अस्य विश्वस्य वृद्धये उपात्ता अङ्गीकृता रजोगुणस्यातिमात्रा औत्कट्यं येन तथाभूतः सन्मां प्रकृतिरूपां त्वमीक्षसे तत् उ तदीक्षणमेव नोऽस्माकं सर्वासां शक्तीनां परमा निरतिशया अनुकम्पा अत्यनुग्रहः॥ ४६॥ एवं सर्वं तदुक्तं प्रतिव्याख्याय प्रसन्नचित्ता प्राह—नेति॥ हे मधुसूदन! अथात्मनोऽनुरूपं भजस्वेति यत्ते वचस्तदहमलीकमनृतमसत्यं न मन्ये यतः अम्बायाः काशिराजसुतायाः शाल्व इव कन्याया एव क्वचित्पुरुषे रतिर्भवति। मम तु रतिस्त्वय्येव पर्यवस्यतीति। अम्बा अम्बिका अम्बालिकेति तिस्रः काशिराजकन्याः भीष्मेण विचित्रवीर्यार्थं स्वयंवरे आहृताः। ततो ज्येष्ठा भीष्मं प्रति स्वाभिप्रायमुक्तवती शाल्वे मन्मन इति। ततो भीष्मेण प्रेषिता शाल्वेनान्याहृतेत्यगृहीता पुनर्भीष्मं प्राप्ता परशुरामवाक्यादपि भीष्मेणासंगृहीता तपसा देहं त्यक्त्वा शिखण्डीभूत्वा भीष्मवधार्थमुत्पन्नेति भारतकथा॥ ४७॥ व्यूढाया इति॥ व्यूढायाः परिणीतायाः अपि पुंश्चल्या मनो नवं नवं पुरुषमभ्येति एवं व्यवहारे सत्यपि बुधो विवेकी पुरुषः असतीं पुंश्चलीं स्त्रियं न बिभृयात् न प्रतिगृह्णीयात्। यतः तामसतीं बिभ्रत् पुष्णन् पुरुषः उभयच्युतो भवति। अस्मिन् लोके परलोके च दुःखमेवानुभवति॥ ४८॥

## श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्

त्वगिति त्वगादिभिः पिनद्धमाच्छादितं अंतर्मध्ये मांसादयो विद्यंते यस्मिंस्तं। अतो जीवच्छवं नरं कांतोयमिति मतिर्यस्या एवंभूता सती या स्त्री भजति सा विमूढायतस्ते तव पदाब्जमकरंदमजिघ्रती असेवमानास्ति॥ ४५॥ उदासीना वयं नूनमित्यस्योत्तरमाह अस्त्विति॥ हे अंबुजाक्ष आत्मन् आत्मनि रतस्य मपि च न अतिरिक्ता अधिका दृष्टिर्यस्य तस्य संकुचितांतर्यामिशक्त्याकृतप्रतिलोम दृष्टेरपीत्यर्थः अनेन अकामुकत्वमुक्तं ते तव चरणयोः अनुरागः प्रीतिरस्तु सा च कदेति चेत्तत्राह यर्हि अस्य विश्वस्य वृद्धये उत्पतये पालनाय च उपात्ता रजोतिमात्रा रागात्मकवृत्तिर्येन सः। त्वं भामीक्षसे विकसितांतर्यामिशक्तिप्रवर्त्तिकयाऽनुलोमदृष्ट्यापश्यसीत्यर्थः उहण्वार्थे। तदेव नोऽस्माकं परमानुकंपा अत्यन्तदयास्ति॥ ४६॥ अदीर्घसमीक्षया त्वया वयं वृता त्वया इत्यस्योत्तरं कुर्वती सती प्रत्युक्तिमुपसंहरति द्वाभ्यां नैवेति। अदीर्घसमीक्षया वयं वृता इति ते तव वचस्तदहमलिकमसत्यं न मन्ये तद्वचस असाध्वीपरत्वात् अहं तु साध्व्यस्मि अतो मया तु दीर्घसमीक्षयेव वृतोसि हि यतः साध्व्यसाध्वीति द्विविधासु स्त्रीषु मध्ये साध्व्याः कन्याया अपि क्वचित् एकस्मिन्नेव पुरुषे रतिः स्यात् यथा अंबायाः पार्वत्याः कंन्याया अपि शंकरे रतिः तथा ममापि त्वय्येव रतिः॥४७॥ पुंश्चल्याः असाध्व्याः व्यूढायाः कृतपाणिग्रहणाया अपि नवं नवं नरं तां बिभृतसन्। उभयलोकतः च्युतः॥ ४८॥

## भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

त्वगिति । या स्त्री, ते तव, पदाब्जमकरन्दं, अजिघ्रती नाघ्रातवती, कदाप्यश्रुतत्वत्कथेति यावत् । अत एव, विमूढा अत एव, कान्तः प्रियतमोऽयं ममेति मतिर्यस्याः सा, एवंविधा स्यात् । सा स्त्री, त्वक् च श्मश्रूणि च केशाश्च नखाश्च रोमाणि च तैः पिनद्धं बहिश्छन्नं, अन्तः मांसं च अस्थीनि च रक्तं च कृमयश्च विट् च कफश्च पित्तं च वातश्च यस्मिंस्तत् । जीवदपि, शवं शवतुल्यं पुरुषं, भजति ॥ ४५ ॥ यदुक्तम् 'उदासीना वयम्' इत्यादि तत्राह । अस्त्विति । हे अम्बुजाक्ष कमलनयन, आत्मन् आत्मनि रतस्य, आत्मारामस्येत्यर्थः । अनेन निरपेक्षत्वरूपमुदासीनत्वं सूचितम् । मयि च मय्यपि, अनतिरिक्ता अनतिशयिता दृष्टिर्यस्य तस्य, अनेन अकामुकत्वमपि सूचितम् । ते तव, चरणानुरागश्चरणकमलयोर्गाढ़स्नेहः, मम अस्तु । ननु निरपेक्षादात्मारामादकामुकान्मत्तश्चरणानुरागप्रार्थनया तव मत्संबन्धिनी कान्यनुकम्पा इत्यत्राह । यर्हि यदा, अस्य विश्वस्य, वृद्धये वृद्ध्यर्थं, उपात्ता रजसः सृष्ट्युपयुक्तरजोगुणस्य अतिमात्रा औत्कण्ठ्यं येन तथाभूतः सन्, उ एवार्थे, ह हर्षे । मां ईक्षसे, तत् सैव, नोऽस्माकं, परमा अनुकम्पा । अत्र, 'अथ त्रिगुणा ह्येषा प्रकृतिरगुणो वा विष्णुः स यदात्मरजा रजोऽस्या उद्धर्द्धयति' इत्यादिश्रुतिरस्याः प्रकृतित्वमपि गमयति । त्वदीक्षणमात्रेणैव कृतकृत्याऽस्मीति भावः ॥ ४६ ॥ तदेवं सर्वं तदुक्तं प्रतिभाष्य प्रसन्नचित्ता मन्त्रमुपदिशन्तीव प्राह नैवेति द्वयेन । नैवेति । हे मधुसूदन, ते तव, यत् वचः, अथात्मनोऽनुरूपं वै भजस्व क्षत्रियर्षभम्' इत्यादिकं यद्वचनमित्यर्थः । तत् अहं अलीकमनृतं मिथ्येति यावत् । नैव, मन्ये । असत्यं नेत्यर्थः । कुतः हि यतः ! अम्बयाः काशिराजपुत्र्याः इव, कन्यायाः प्रायः, क्वचित् रतिः प्रीतिः, स्यात् । अम्बाऽम्बिकाम्बालिकाख्यानां तिसृणां काशिराजकन्यानां मध्ये अम्बायाः कन्याया एव शाल्वे रतिर्बभूव, मम रतिस्तु त्वय्येव पर्यवस्यतीत्यभिप्रायः ॥ ४७ ॥ व्यूढाया इति । किंच व्यूढायाः परिणीतायाः अपि, पुंश्चल्याः स्त्रियाः, मनः, नवं नवं पुरुषं अभ्येति च एव । ततः किमत आह । बुधो बुद्धिमान्, असतीमसाध्वीं, तां स्त्रियं, न बिभृयात् न पुष्णीयात् । बिभ्रत्तां पुणन् सन्, उभयच्युतः एतल्लोकात्पराल्लोकाच्च प्रच्युतो भवति । इहामुत्र च न सुखी किं तु दुःख्येव तिष्ठतीति भावः ॥ ४८ ॥

## कृष्णप्रिया

प्रियतम ! यह भौतिक शरीर उच्छ्वास लेने पर भी मृत देह के समान है । कारण यह है कि—चमड़ी, दाढी, मूँछ, रोमावली, नख, केशों से आच्छादित है, लेकिन भीतर के भाग में तो मांस, हड्डी, खून, शोणित, कीटाणु, मलमूत्र, कफ, वात, पित्त आदि भरे पड़े हैं ऐसे नश्वर देह वाले पुरुषों को अपने प्रियतम पति समझ कर सेवा करती है जिसको आपके श्रीचरण कमलों की सुधागाथा कर्णपथ पर नहीं आयी ॥ ४५ ॥ हे अरविन्दलोचन ! प्रियतम ! आप आत्माराम पूर्ण पुरुष हैं । कभी यह कोमलाङ्गी है मनोहरा है अथवा रमणी है यह आप को कभी विचार नहीं आता है । आपने इसलिये कहा कि "उदासीना वयं नूनम्" वह स्वाभाविक गुण है । लेकिन मैं तो सामान्यजन हूँ इसलिये यह नम्र निवेदन है कि आपके पद पंकज में दृढानुराग रहे । आप इस विश्व के विकास के लिये उत्कट रजोगुण का अङ्गीकार करके मेरी ओर देखते हैं, वह आपकी अनुकम्पा है ॥ ४६ ॥ हे नाथ मधुसूदन ! आपने कहा था कि अभी भी अनुरूप वर की खोज कर लो, मैं आपके इस वाक्य को मिथ्या नहीं मानती । काशी नरेश की कन्या अम्बा के समान किसी-किसी कन्या की कामना दूसरे पुरुष में सुनी गयी है ॥ ४७ ॥ स्वामिन् ! व्याह हो जाने पर भी पुंश्चली स्त्री की मति नये-नये पुरुषों की ओर आसक्ति रहती है । जो बुद्धिमान् मनुष्य है वह ऐसी कुलटा नारी को कभी अपने साथ न रखे । पुंश्चली रखने वाला मनुष्य इस लोक और परलोक को खो बैठता है पुनः उभयभ्रष्ट हो जाता है ॥ ४८ ॥

## श्रीभगवानुवाच

**[1]साध्व्येतदभिज्ञाय त्वं राजपुत्रि प्रलम्भिता । मयोदितं [2]यदन्वात्थ सर्वं तत् सत्यमेव हि ॥ ४९ ॥**
**[3]यान् यान् कामयसे [4]कामान् मय्यकामाय मानिनि । सन्ति ह्येकान्तभक्तायास्तव कल्याणि नित्यदा ॥ ५० ॥**
**उपलब्धं पतिप्रेम पतिव्रत्यं च तेऽनघे । यद्वाक्यैश्चाल्यमानाया न धीर्मय्यपकर्षिता ॥ ५१ ॥**
**ये मां भजन्ति दाम्पत्ये तपसा व्रतचर्यया । कामात्मानोऽपवर्गेशं मोहिता [5]मम मायया ॥ ५२ ॥**

## कर्दमक्षमा

अन्वयः—श्रीभगवान्–उवाच—'राजपुत्रि ! साध्वी, एतत्, श्रोतुकामैः, त्वम्, प्रलम्भिता मया, उदितम्, यद्, अनु, आत्थ, तत्, सर्वम् एव, हि ॥ ४९ ॥ हे भामिनि ! अकामाय, मयि, यान्, यान्, कामान्, कामयसे, हे कल्याणि ! एकान्त-

---

१. कामेन–वीर. ; कामैस्त्वं–श्रीधर. वंशी. जीव. विज. विश्व. । २. यदन्वर्थं–विज. । ३. यं यं–विज. । ४. काममयि कामाय का–विज. ; भामिनि–श्रीधर. वंशी. जीव. विश्व. । ५–मायया हि मे–प्रा. पा. ।

भक्तायाः, तव, ते, मयि, सन्ति ॥ ५० ॥ हे अनघे ! पतिप्रेम, पातिव्रत्यम् च-उपलब्धम्, यद्, वाक्यैः, चाल्यमानायाः, धीन्न, मयि, अपकर्षिता ॥ ५१ ॥ ये कामात्मानः जनाः अपवर्गेशं मां दाम्पत्ये तपसा ब्रह्मचर्यया च भजन्ति ते मम मायया मोहिताः ( सन्ति ) इति भावः ॥ ५२ ॥

## श्रीधरस्वामिविरचिता भावार्थदीपिका

उपहसिता प्रलम्भिता। अन्वात्थान्वाख्यातवती ॥ ४९ ॥ मयि एकांतभक्तायास्ते कामाः संत्येव। अकामाय कामनिवृत्तये मोक्षपर्यवसायिन इत्यर्थः ॥ ५० ॥ अनुवादेन वरान् दत्वा तामभिनन्दति। उपलब्धमिति। यद्यस्मान्मयि वर्तमाना धीर्नापकर्षिता नान्यविषया जाता ॥ ५१ ॥ एकांतभक्तिमभिनंद्य तामेव दृढीकर्तुं सकामान् भक्तान्निंदति ये मामिति। दांपत्ये दंपत्युपभोग्यसुखार्थम् ॥ ५२ ॥

## श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

एतत् पूर्वोक्तं वचः। अन्वाख्यातवती अनुवादं कृतवती। तत् अनुवादरूपकथनम्। यद्यपि हे साध्वि इति गुणेन, हे राजपुत्रीत्यैश्वर्यजातिभ्यां स्तूयते तथापि साध्वीति साध्वेवोत्तरं विचार्य दातव्यं त्वयेति मयोक्तमिति भावः। तच्च युक्तमेवेत्याह-राजपुत्रीति। श्रोतुकामैरस्माभिरिति बहुत्वेन परिहसितुं तत्सख्योपि काश्चित्क्रोडीकृता अत्र, न तु, "अस्मदो द्वयोश्च" इति बहुवचनं प्राप्नोति 'सविशेषणानां प्रतिषेधः' इति तन्निषेधात्, तथाप्यस्मच्छब्दोऽध्याहृत एव। यद्वा-श्रोतुकामैर्मत्कर्णेन्द्रियवृत्तिसमूहैरेव तद्द्वारा प्रलम्भिता अनु अनन्तरमेवात्थ मदुक्तिमेव प्रकारान्तरेण व्याख्यातवतीत्यर्थः ॥ ४९ ॥ इत्यर्थ इति-कामनिवृत्तिरेव मोक्षः। तथाहि-"प्रजहाति यदा कामान्मानवो मनसि स्थितान्। तर्ह्येव पुण्डरीकाक्ष भगवत्त्वाय कल्पते।" इति प्रह्लादः। अत्र परमसन्तुष्टेनापि मया कस्तुभ्यं वरो देय इत्याह—यानिति। काम्यन्त इति कामा गुणाः संपदश्च अकामाय कामादन्यस्मै प्रेममात्रविलासाय 'अकामः सर्वकामो वा' इत्यादौ तथार्थप्रतीतेः। हे कामिनीति स्वभावसंबोधने। मद्विषयककामवत्यास्तव ते मदीयमेवायोग्याः कामाः कन्याश्च सर्वोत्कृष्टा एवेति भावः। यद्वा-कामिनि त्वद्विषयककामयुक्ते मयि-एवमन्योन्यतत्परत्वेन परमप्रियतोक्ता। 'भामिनि' इति पाठे हे कोपवति यतः कृत्रिमवाक्येनापि मत्परिचर्याप्रातिकूल्ये सति त्वं महाकोपमकार्षीरिति भावः। हि एव, संत्येव। स्वभावतो वर्तन्त एव। तत्रापि नित्यमेवाकामायेत्यादौ हेतुः—एकान्तभक्तायाः निष्कामभक्तायाः। यद्वा-ए अकारवाच्ये मयि वासुदेवे कान्तोऽयमतोऽस्याऽयोग्योक्तिरपि सोढव्येत्येवं भक्तायाः स्नेहवत्या इत्यर्थः। अतो हे कल्याणि नित्यमंगले। एकांतभक्ताया इत्युक्त्या कामानित्यस्याकामायेत्यस्य चान्यार्थकता परास्ता ॥ ५० ॥ अनुवादेन पुनरुक्तप्रायेण। यद्वा-अनुवादेन प्रीत इति शेषः तां रुक्मिणीम्। नान्यविषया जाता मत्तोऽन्यत्र न नीता। पातिव्रत्यं चाभीष्टासौ निमित्तम्। यद्यप्यस्माद्वाक्यैः प्रेमभंगप्रतिपादकवचनैर्नर्मलक्षणैर्मया चाल्यमानायाः क्षोभ्यमाणाया अपि तव धीः प्रकृष्टप्रेममयी नापकर्षिता यत्किंचिदपकर्षं न्यूनत्वं न प्राप्ता किमुत भंगं, किन्तु बद्धमूलेव स्थिताऽतः प्रेम्णो लक्षणं साक्षादनुभूतमिति भावः। तदुक्तम्—"सर्वथा ध्वंसरहितं सत्यपि ध्वंसकारणे। यद्भावबन्धनं यूनोः स प्रेमा परिकीर्तितः।" इति। न तिष्ठत्यघमपराधो दासीनामपि यस्यामित्यतः प्रेयसो ममायमपराधः सुतरामेव क्षंतव्य इति भावः ॥ ५१ ॥ एवं तस्याः स्वस्मिन्पतिभावमयीमेकान्तमुक्तिं स्तुत्वा तत्पोषणाय प्राकृतीनां पतिभावार्थं स्वभजनमपि निंदन्नुभयेषां दांपत्यार्थमपि निंदति-ये मामिति। तपसा स्वधर्मेण। व्रतादीनां कृच्छ्रादीनां चर्यया पुनःपुनराचरणाशक्त्या। भजने हेतुः-कामेषु विषयभोगेष्वात्मा चित्तं येषां ते। अपवर्गः पंचमस्कन्धानुसारेण भक्तिलक्षणस्तस्येशं दातारमपि। हि एव मोहिता एव। एवमेवोक्तं केतुमालवर्षे भगवत्प्रादुर्भावविशेषेणैवेति भावः। यथा पंचमे—"स्त्रियो व्रतैस्त्वा हृषिकेश्वरं स्वतो ह्याराध्य लोके पतिमाशासतेऽन्यम्। तासां न ते वै परिपांत्यपत्यं प्रियं धनायूंषि यतोऽस्वतंत्राः। स वै पतिः स्यादकुतोभयः स्वयं समंततः पाति भयातुरं जनम्। स एक एवेतरथा मिथो भयं नैवात्मलाभादधिमन्यते परम्। यातस्य ते पादसरोरुहार्हणं निकामयेत्साखिलकामलंपटा। तदेव रासीप्सितमीप्सितोऽर्चितो यद्भग्नयाञ्जा भगवन्प्रतप्यते" ॥ ५२ ॥

## श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी

यद्यपि हे साध्वीति गुणेन हे राजपुत्रीत्यैश्वर्य्यजातिभ्यां स्तूयते तथापि साध्वीति साध्वेवोत्तरं दातव्यं त्वयेति विचार्य्यं मया तथोक्तमिति भावः। तच्च युक्तमेवेत्याह—राजपुत्रीति। अत एव श्रोतुकामैरस्माभिः प्रलम्भिता परिहसिता बहुत्वं तत्र स्थिताः सखीरप्यात्मना सम्मेल्य सहायीकरोति मां प्रत्यायपयति च अन्वात्थ मदुक्तिमेवानुकूलप्रकारविशेषेण व्याख्यातवतीत्यर्थः। हि निश्चये अत्र संशयो नास्तीत्यर्थः ॥ ४९ ॥ अत्र परमसन्तुष्टेनापि मया कस्तुभ्यं वरो देय इत्याह—यानिति। काम्यन्त इति कामाः गुणाः सम्पदश्च अकामाय कामादन्यस्मै प्रेममात्रविलासाय अकामः सर्वकामो वेत्यादौ तथार्थप्रतीतेः हे कामिनीति स्वभावसम्बोधनेन मद्विषयककामवत्यास्तव ते मदीयसेवायोग्याः कामाः कन्याश्च सर्वोत्कृष्टा एवेति भावः। यद्वा कामिनि त्वद्विषयककामयुक्ते मयि एवमन्योन्यतत्परत्वेन परमप्रियतोक्ता भामिनीति पाठान्तरे क्रोधक्षमापणार्थं तदनुवादः हि एव सन्त्येव

स्वभावतो वर्त्तन्त एव तत्रापि नित्यमेव अकामायेत्यादौ हेतुः एकान्तभक्तायाः निष्कामभक्तियुक्तायाः अतो हे कल्याणि नित्यमङ्गले ॥ ५० ॥ उपलब्धमिति । यद्यस्मात् वाक्यैर्नर्मलक्षणैश्चाल्यमानायाः क्षोभ्यमाणाया अपि धीः प्रेमलक्षणा स्नेहभङ्गज्ञानहेतुभिरपि तैर्नापकर्षिता अपकर्षं न्यूनतां न प्रापिता किन्तु बद्धमूलतयैव स्थितेत्यर्थः । इदं हि प्रेमाख्यभावपरिणामविशेषलक्षणं सर्वथा ध्वंसरहितं सत्यपि ध्वंसकारणे "यद्भावबन्धनं यूनोः स प्रेमा परिकीर्त्तितः" इति न तिष्ठति अघं भक्तानामप्यपराधो यस्यां तथा तत्सम्बोधनम् अतो मदपराधः सुतरामेव क्षन्तव्य इति भावः ॥ ५१ ॥ एवं तस्याः स्वस्मिन् पतिभावमयीमेकान्तभक्ति स्तुत्वा तत्पोषाय प्राकृतेषु प्रकृतीनां पतिभावार्थं स्वभजनमपि निन्दन् उभयेषां दाम्पत्यार्थमपि निन्दति—येमामिति । तपसा स्वधर्मेण व्रतानां कृच्छ्रादीनाञ्च चर्य्यया पुनःपुनराचरणासक्त्या भजने हेतुः कामेषु विषयभोगेषु आत्मा चित्तं येषां ते अपवर्गः पञ्चमस्कन्धानुसारेण प्रेमभक्तिलक्षणः तस्य ईशं दातारमपि हि एव मोहिता एव एवमेवोक्तं केतुमालवर्षे भगवत् प्रादुर्भावविशेषेणैवेति भावः । यथा पञ्चमे—

> "स्त्रियो व्रतैस्त्वां हृषीकेश्वर स्वतो ह्याराध्य लोके पतिमाशासतेऽन्यम् ।
> तासां न ते वै परिपान्त्यपत्यं प्रियं धनायूंषि यतो स्वतन्त्राः ॥
> स वै पतिः स्यादकुतोभयः स्वयं समन्ततः पाति भयातुरञ्जनम् ।
> स एक एवेतरथामिथो भयं नैवात्मलाभादधिमन्यते परम् ॥
> या तस्य ते पादसरोरुहार्हणं निकामयेत्साऽखिलकामलम्पटा ।
> तदेव रासीप्सितमीप्सितोर्चितो यद्भग्नयाच्ञा भगवन् प्रतप्यते ॥ इति ॥ ५२ ॥

### श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी

हे साध्वीति—त्वया साध्व्येवोत्तरं दातव्यमिति भावः । तच्च युक्तमेवेत्याह—हे राजपुत्रीति । अतएव श्रोतुकामैरस्माभिः, बहुत्वं शुश्रूषाया गौरवेणात्मनो बहुमानात्, हि निश्चये, अत्र संशयो नास्तीत्यर्थः ॥ ४९ ॥ ननु तर्हि प्रसादविशेषं विधेहीत्यपेक्षायामाह—यानिति; वीप्सयालौकिका अपि सर्व्वे गृहीताः । अकामाय प्रेमविलासाय । हे कामिनीति—मद्विषयककामवत्यास्तव ते कामाः सर्व्वोत्कृष्टार्थप्राप्तिरूपाः सन्त्येवेति भावः । यद्वा, कामिनि त्वद्विषयककामयुक्ते मयि । एवमन्योन्यं सकामत्वेन परमप्रियतोक्ता । अतो न विद्यते कामः फलाभिसन्धिर्यस्मिन् प्रेम्णि तस्मै तद्वृद्धये यान् यान् कामयसे, हि एवं, सन्त्येव, स्वभावतो वर्त्तन्त एव । कुतः ? एकान्तभक्तायाः; तदपि कुतः ? हे कल्याणि ! स्वधर्म्माचरणात् नित्यप्रियत्वाद्वेति भावः । अतः परमसन्तुष्टेनापि मया किं ते वरो देय इति भावः ॥ ५० ॥ अतस्ते त्वयैव पत्यौ पत्युर्वा यत् प्रेम तत् उप दाक्षिण्येन स्वसमीपे वा, शीघ्रमनायासेन लब्धमेव । अथवा तथाप्यस्त्विवति श्रीमुखेनानुमोदस्व, तत्राह—उपेति । स्वयमेवोपलब्धं किं पिष्टपेषणवन्ममानुमोदेनेति भावः । यद्यस्माद्वाक्यैर्नर्म्मलक्षणैरेव, न तु तात्त्विकैः । चाल्यमानायाः क्षोभ्यमाणाया अपि नापकर्षिता अपकर्षं न प्राप्ता, किम्भूतकर्षमेव गतेत्यर्थः । न तिष्ठत्यघं भक्तानामपराधो यस्यां तथा तत्सम्बोधनम्, अतो मदपराधः क्षन्तव्य इति भावः ॥ ५१ ॥ तपसा स्वधर्म्मेण, व्रतादीनां कृच्छ्रादीनां चर्य्यया पुनः पुनराचरणासक्त्या; भजने हेतुः—कामेषु विषयभोगेषु आत्मा चित्तं येषां ते; अपवर्गः संसारदुःखध्वंसः, किंवा पञ्चमस्कन्धोक्तानुसारेण भक्तिलक्षणस्तस्य ईशं दातारमपि; हि एव, मोहिता एव; अन्यत्तैर्व्याख्यातम् । यद्वा, पत्नीतया तु पतिप्रेमादिसम्पत्त्या मया सह रतिविशेष एव सर्व्वार्थश्रेष्ठतर इत्याशयेनाह—य इति । दाम्पत्ये मया सह मैथुन्यसुखार्थम्, यतो मद्विषयकप्रेमविलासरूपे कामे आत्मा येषां ते, हि अपि, मम दुरतिक्रममायस्यापि, मायया एव मोहिताः, मा ऊहिता न तर्किता अपि ते मायासम्बन्धरहिता इत्यर्थः ॥ ५२ ॥

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका

अथैवं क्रोडीकृतस्वाभिप्रायो भगवानिदमेव मदभिप्रेतं कूटवचांसि तु त्वद्वचः शुश्रूषया प्रयुक्तानीत्याह—साध्वीति । हे साध्वि ! हे राजपुत्रि ! श्रोतुकामेन मया एतत्त्वद्वच इति शेषः । प्रलम्भिता इत्थमुपहसितेत्यर्थः । यन्मयोदितं सर्वमन्वात्थ तात्पर्य्यक्रोडीकारेण प्रतिभावितवत्यसि तत्सवं सत्यमेव मदभिप्रेतमेव ॥ ४९ अतीव तुष्टोऽनुगृह्णाति—यान् यानिति । हे मानिनि यान् यान् कामान् "स्यान्मे तवाङ्घ्रिररणम्" अस्त्वम्बुजाक्ष मम ते चरणानुरागः" इत्येवं काम्यमानान् अकामाय कामानिर्वृत्तये मदनपायित्वव्यतिक्रमनिवृत्तये कामयसे ते कामाः मय्येकान्तभक्ताया अनन्यप्रयोजनभक्तियुक्तायास्तव हे कल्याणि ! नित्यदा सन्त्येव न त्वया प्रार्थ्या मया देयाश्चेत्यर्थः ॥५०॥ अभिनन्दति–उपलब्धमिति । हेऽनघे पत्यौ कृष्णे प्रेम्णा यत्पातिव्रत्यं पतिपाराथ्यं तदुपलब्धं दृष्टं मयेति शेषः । कुतः ? यद्यतो वाक्यैरुक्तविधैर्मद्वाक्यैश्चाल्यमानाया अपि तव धीर्बुद्धिर्मयि नापकर्षिता नापनीता नान्यविषया जाता ॥ ५१ ॥ एकान्तभक्तिमभिनन्द्य तामेव दृढीकर्त्तुं सकामान् भक्तान्निन्दति–ये मामिति । ये जनाः कामात्मानः क्षुद्रमनोरथाविलचित्ताः मोक्षाधिपतिमपि मां दाम्पत्ये दम्पत्योः कर्मणि दम्पत्युपभोगसुखार्थमित्यर्थः । तपसा मनः प्रणिधानात्मकेन व्रतचर्यया अनशनादिव्रतानुष्ठानेन च भजन्ति ते मम मायया मोहिताः ॥ ५२ ॥

**श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली**

भगवत्योक्तं भगवता किमनुमतं विमतमिति विकल्पं परिहरति-साध्विति। एतद्वचः प्रलम्भिता प्रस्तोभिता अन्वर्थमनुकूलार्थम् ॥ ४९ ॥ हे ईश्वरि ! यं यं कामं कामयसे सर्वे त्वयि नित्यदा सन्ति हि यस्मात्तस्मात्कां विभूतिं कामयसे न कामपीत्यर्थः। यद्वा यं यं कामं कामयसे तान् मयि कामयस्व तेषामभावाद्वच्मीत्याह—सन्तीति। तस्मात्प्रियवचनमुक्तं कामयति ॥ ५० ॥ भर्तुः स्नेहः पातिव्रत्यञ्चाभीष्टसम्पत्प्राप्तौ निमित्तं तत्तवास्तीत्याह-उपलब्धं दृष्टं तत्र हेतुर्यद्वाक्यैरिति मयि सल्लग्ना धीर्नापकर्षिता अन्यत्र न नीता यद्यस्मान्नित्यमुक्तत्वादावयोः दाम्पत्यं नित्यम् ॥ ५१ ॥ तत्र मुक्तिमन्तरेण दाम्पत्यापेक्षयाऽस्मद्भजनमयुक्तमित्याशयेनाह—य इति ॥ ५२ ॥

**श्रीमज्जीवगोस्वामिकृतक्रमसंदर्भः**

नैव अकामाय कामादन्यस्मै प्रेयपात्रविलासाय ॥ ५० ॥ उपलब्धम् ॥ ५१ ॥ ये माम् ॥ ५२ ॥

**श्रीमज्जीवगोस्वामिकृतः बृहत्क्रमसन्दर्भः**

यान् यानित्यादि। अय-कामिनि ! 'अयः शुभावहो विधिः' तं कामयितुं शीलं यस्याः सम्बोधने अकामा त्वं मयि मद्विषये यान् कामान् कामयसे इच्छसि, ते ते कामास्तव सन्ति; प्रार्थनीयं तव नास्तीत्यभिप्रायः। यत एकान्तभक्तायाः एकान्तभक्तत्वेऽहं तव वश्य एव। मयि प्रार्थनान्तरं क्वेति तात्पर्यम् ॥ ५० ॥ तर्हि कथमेवं रुक्षमवादीः ? इत्याशङ्क्याह—उपलब्धमित्यादि। मया परमभ्रामकेणापि तव धीर्भ्रामयितुं न पारिता। अतो मामजैषीरिति। अतस्ते पतिप्रेमोपलब्धम् ॥ ५१ ॥ प्रेम दाम्पत्य एव भवति, तत्र भवत्येव प्रमाणम् अतः प्रेमाकाङ्क्षिणो दाम्पत्येनैव मां सेवितुमर्हन्तीति व्यतिरेकेण तदेव स्तवन्नाह—ये मामित्यादि। दाम्पत्ये सति ये मां तपसा व्रतचर्यया भजन्ति, ते मम मायया मोहिताः। कीदृशः माम् ? अपवर्गेशम्, अपगतो वर्गो वर्जनं यस्मात् तथाभूतमीशं ये मां भजन्ति, तान् कदापि नाहं त्यजामीत्यर्थः। यद्वा, दाम्पत्ये सति तप आदिना येऽपवर्गेऽपवर्गनिमित्तं मां भजन्तीत्यर्थः। कीदृशं माम् ? शं सुखस्वरूपम्। ते कीदृशा ? कामात्मानः, ममेदं भूयादिति यः कामः सङ्कल्पस्तत्रात्मा यत्नो यासाम्, त्वं त्वकामा पूर्वोक्तेः ॥ ५२ ॥

**श्रीनाथचक्रवर्तिपादविरचिता चैतन्यमतमञ्जूषा**

उपलब्धं पतिप्रेमेत्यादि। मया भ्रामकचक्रचूड़ामणिना चाल्यमानाया अपि तव न धीरपकर्षिता। तन्मायया स्थिरीभूतासि, अतो लक्ष्मीरेवासि, सा ह्येव मन्मायया न लिप्यते, अतः पतिप्रेम उपलब्धम्। पतिप्रेम तु दाम्पत्य एवेति दाम्पत्यं प्रशंसन्नाह—ये मां भजन्तीत्यादि। दाम्पत्ये सति तदन्यथा कृत्वा तपसा व्रतचर्यया अपवर्गे अपवर्ग-निमित्तं ये न भजन्ति, ते मम मायया मोहिताः। किम्भूतं माम् ? शं कल्याण-गुणं सुखस्वरूपं वा। कामात्मान इदं मे भूयादिति सङ्कल्पभाजः तेन मोक्षार्थिनोऽपि कामात्मानः ॥ ५१-५२ ॥

**श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी**

श्रोतुकामैरस्माभिरिति बहुवचनेन परिहसितुं तत्सख्योपि काश्चित् क्रोडीकृताः अत्र नत्वस्मदोर्द्वयोश्चेति बहुवचनं प्राप्नोति सविशेषणानां प्रतिषेध इति तन्निषेधात् तत्राप्यस्मच्छब्दोत्राध्याहृत एव यद्वा श्रोतुकामैर्मत्कर्णेन्द्रियवृत्तिसमूहैरेव मद्द्वारा प्रलोभिता उपहसिता अनु अनन्तरम् आत्थ मदुक्तिमेव प्रकारान्तरेण व्याख्यासि व्याख्यातवतीत्यर्थः ॥ ४९ ॥ परमसन्तुष्टेनापि मया तुभ्यं को वरो देय इत्याह-यान् यान् कामान् मत्परिचर्य्यालक्षणान् कामयसे किमर्थं मयि अकामाय कामभिन्नाय प्रेम्णे प्रेमार्थमित्यर्थः। मयि कीदृशे कामिनि कामयमाने भामिनीति पाठे हे कोपवति यतः कृत्रिमवाक्येन मत्परिचर्याप्रातिकूल्ये सति महाकोपमकार्षीरिति भावः। अत्र एकान्तभक्ताया इत्यनेन कामानित्यस्य कामायेत्यस्य च अन्यार्थकता पराहता ॥ ५० ॥ यत् यस्मात् वाक्यैः प्रेमभङ्गप्रतिपादकवचनैर्मया चाल्यमानाया अपि तव धीर्मयि प्रकृष्टप्रेममयी बुद्धिर्न अपकर्षिता यत् किञ्चिदपकर्षमपि न प्राप्ता किमुत भङ्ग यतः प्रेम्णो लक्षणं साक्षादनुभूतमिति भावः। तदुक्तं "सर्वथा ध्वंसरहितं सत्यपि ध्वंसकारणे। यद्भावबन्धनं यूनोः सप्रेमा परिकीर्त्तितः" इति हे अनघे न तिष्ठत्यघमपराधो दासीनामपि यस्यमित्यतः प्रेयसो ममायमपराध क्षन्तव्य इति भावः ॥ ५१ ॥ सकामभक्तान् निन्दति—ये इति। दाम्पत्ये दाम्पत्याय मत्पतिः मत्सुखदो भवतु मद्भार्य्या वा मत्सुखदा भवत्विति प्राकृतदाम्पत्युभोगसुखार्थमित्यर्थः। अपवर्गेशं पञ्चमस्कन्धगद्यानुसृत्या प्रेमदातारं यद्वा अपकृष्टा भवन्ति वर्गाश्चत्वारोपि यतस्तथाभूतम् ईशं माम् ॥ ५२ ॥

**गूढार्थदीपिनी**

हे साध्वि। प्रलम्भिता उपहसिता मयोदितं यत् अन्वात्थ अनूद्योत्तरं कृतवती तत् सर्वं सत्यमेव ॥ ४९ ॥ हे भामिनि हे कोपवति। 'भाम कोपे' इत्यस्मात्। अकामाय कामनानिवृत्तये। यान् यान् मनोरथान् करोषि ते कामा निष्कामभक्तायास्तव

सन्ति हि सन्त्येव अतो न त्वया प्रार्थ्या न च मया देया एव ॥ ५० ॥ यत् यस्मात् मयि निबद्धा धीः त्वया नापकर्षिता नान्यत्र नीता हे अनघे ॥ ५१ ॥ कामेषु विषयभोगेषु आत्मा चित्तं येषां ते । अपवर्गेशं मोक्षदातारम् । दाम्पत्ये दम्पतिसुखार्थम् ॥५२॥

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः

हे साध्वि ! उपलम्भिता उपहसिताऽसि यदन्वात्थ अन्वाख्यातवती तत्सर्वं सत्यमेव ॥ ४९ ॥ हे मामिनि ! "स्यान्मे तवाङ्घ्रिररणम्" अस्त्वम्बुजाक्ष मम ते चरणानुराग इत्येवम्विधान् कामान् यान् यान् अकामः अन्यनिरपेक्षः स्वतः पूर्णकामोऽहं तदर्थं मत्प्रियार्थं कामयसे हे कल्याणि ते सर्वे कामाः मयि एकान्तभक्तायाः नित्यदा सन्ति ॥ ५० ॥ तामभिनन्दति— मयि या धीः सा नापकर्षिता ॥ ५१ ॥ एकान्तभक्तिमभिनन्द्य तद्दार्ढ्यार्थं सकामान् भक्तान् निन्दति येति दाम्पत्ये स्त्रीपुरुषसंयोगसुखार्थम् ॥ ५२ ॥

### श्रीसत्यधर्मकृता श्रीभागवतटिप्पणी

भगवत्योक्तं भगवाञ्छ्रुत्वाऽभूषयददूषयद्वेत्यतोऽभ्युपगममादिमस्य पक्षस्य दर्शयन्देवो देवीं प्रति वक्तीति वक्ति ॥ श्री भगवानिति । हे साध्वि राजपुत्रि राज्ञो दुहिता । एतद्विलासवचनं श्रोतुकामेन मयोपहसिता त्वम् । प्रलम्भिता विप्रलम्भिता यन्ममोदितं वचनमनु अनुसृत्यार्थो यस्य तत् सर्वं त्वद्वचनं सत्यमेव यथार्थमेवेत्यनेन न किञ्चित्तत्रानृतमिति द्योत्यते । ममोदितं यदन्वर्थेति पाठः स्फुटार्थः । मयोक्तमन्वर्थं क्षेप्यार्थं त्वयोक्तं सर्वं सत्यमेवेति वा ॥ ५१ ॥ हे कामिनि यं यं कामं कामयसे काङ्क्षसि तं तं मयि कामय । तर्हि प्राक् स नाभूत्तस्या इत्यभूदिकिलेत्यत आह ॥ सन्तीति । अनेन बहुवचनेन वीप्सालभ्योऽर्थः सूचितः । हे कल्याणि । एकान्तभक्तायास्तव कामा नित्यदा सन्ति । एतेन वरणं वितरणं च पामरविवक्षयेति ज्ञेयमित्यसूचि । यं कामं केन ब्रह्मणा सहितश्चासावमश्च प्राणश्च तम् । अकामं कामविरोधिनमिति रुद्रं तथा कामं वा । यं ज्ञानमस्यास्तीत्यर्श आद्यचि सुमेधसं कर्तुं कामयसे तस्य नित्यं ददातीति सा तथेति । कामास्तव नित्या, सन्ति यतस्ततः । कामयेति मयोदितमन्वर्थं हीनार्थं निष्प्रयोजनमिति कामाशामप्राप्तप्राप्तिविषयिणी अयसे गच्छसि न तादृशोऽर्थो वर्तत इति वा । वागेव सा प्राणो मः पतिरीरित इति छन्दोगोपनिषद्भाष्योक्तेः । येति ज्ञानं कामं समुद्दिष्टमिति वचनात् । अम्भृणीसूक्तं स्मर्तव्यम् । नित्यदा कामा इतर आनन्दाद्याः सन्ति सत्यं तथाऽपि यं मद्विषयं ज्ञानं कामय नान्यम् । यस्माद्ब्रह्मेन्द्ररुद्रादिदेवतानां श्रियोऽपि च । ज्ञानस्फूर्तिः सदा तस्मै हरये । नव नव सुविशेषोपलम्भज्ञानाभावः सर्वस्येत्यादेः । एकान्तभक्ता ये तेषां सन्ति कालान्तरे प्रादुर्भवन्ति । या रमात्मिकायास्तव तु नित्यदेति किं त्वं कामयसे । अहं च कामयेति वदामीत्यपि योजयन्ति ॥ ५२ ॥ वाक्यैश्चोदनप्रकाराकारबाहुविध्यवद्वाक्यैः । चोद्यमानायाः प्रेर्यमाणाया या मयि धीर्मद्विषयिणी शेमुषी सा नापकर्षिता न प्रत्याहृता तत इति ॥ ५३ ॥ त्वद्वन्नान्येषां योषिज्जनानां सुलभोऽहमिति वक्ति ॥ य इति । तपसा साधारणो न व्रतचर्यया साधारणेन च । ये योषिज्जना मां दाम्पत्ये जायापतिभावे तदर्थं भजन्ति । कामात्मनः कामकलुषीकृतचेतसोऽपवर्गेशं मां ते मम मायया मोहिता मोक्षप्रच्युतिर्लक्ष्यानुपलब्धिश्च तेषामिति भावः । एकान्तभक्ताया इत्यनेनैकान्तिकत्वमभिनन्द्य सकामान्निन्दयति ॥ ये मामिति । दाम्पत्ये तन्मिथुनीभावाविर्भवत्सुखार्थम् । योषिज्जनं दूषयित्वा पुरुषानपि सकामान्दूषयति ॥ मामिति । हे मानिनि । अपवर्गसम्पदं साक्षान्मोक्षसम्पद्रूपम् । सत्पतिं तत्पतिमिति पाठौ । तत्र तत्स्वामिनं तस्या अपवर्गसम्पदः पतिमित्यर्थः । मां प्राप्य तपआदिना प्रसन्नं विधाय सम्पद ऐहिकीर्वाञ्छन्ति ये ते मन्दभाग्याः । कुत इत्यत आह ॥ ये निरये दुर्योनौ वा नरके वा स्युस्तद्वन्त इति । कुतस्तत्सम्पत्तत्रेत्यत आह । मात्रात्मकत्वाच्छब्दादिविषयाव्यतिरेकित्वात्तेषां सार्वत्रिकत्वान्निरय उक्तरूपद्विके । सुसङ्गमः सुमिलस्तत्सम्पद्भोग इत्याशयः । हे निरये नितरां शुभदैववति रुक्मिणि । अथवा निर्गतं आयोगमनं मां त्यक्त्वा यस्याः सा । अथवा न विद्यते रयो लयो यस्याः सा तथा तस्याः सम्बुद्धिः हे निरये । पूर्वोक्तमन्दभाग्यत्वादिमतो न भवतीति । तव सुसङ्गमः । ये मामित्युक्तमेव व्यक्तीकरोति मामिति वा ॥ ५४-५५ ॥

### श्रीमद्वल्लभाचार्य्यकृता सुबोधिनी

एवं साभिप्रायं प्रकारद्वयेन भगवद्वाक्यानि व्याख्यातानि । तत्र व्याख्याने सान्त्वनार्थं प्रकाशितं स्वाभिप्रायं तया वर्णितं श्रुत्वा, अनन्यत्वं परिज्ञाय, दीनत्वस्य हीनभावत्वस्य च प्रकाशितत्वात् गर्वाभावमपि ज्ञात्वा, सन्तुष्टो भगवान् तस्या वाक्यमभिनन्दति **साध्व्येतदिति** । **एतद्वचाहृतमुक्तं साध्वेव** । हे साध्वीति वा । पूर्वमेव त्वमेवं वक्ष्यसीत्यभिज्ञाय **प्रलम्भिता वक्रोक्त्या वञ्चिता** । एवं वचने सामर्थ्यं **राजपुत्रीति** । साध्वीत्येतदमर्मेति ज्ञापितम् । व्याख्यानं यथा व्याख्यातमेवेत्याह **मयोदितं यदन्वात्थेति** । उदितस्यानुवचनं व्याख्यानम् । अतः **मयोदितं यदन्वात्थ** व्याख्यातवती, तत्सर्वं सत्यमेव । हि युक्तश्चायमर्थः । अन्यथा वाक्यानामसम्बद्धार्थता स्यात् ॥ ४९ ॥ प्रसन्नः सन् प्रार्थितचरणारविन्दरतिदानप्रस्तावे बह्वेव प्रयच्छति **यान्यान् कामयसे कामानिति** । मत्सम्बन्धिनः सर्व एव सकामा निष्कामाश्च व्यवहाराः निष्कामा एव । सिद्धवदनुवादेनाय

वरो दत्तः । यान् कामान् कामयसे, तानकामाय कामयस इति । यतो **मयी**त्यावृत्त्या योजना । वीप्सा नानाविधत्वाय । तस्मात्तव कामा निष्कामा भवन्त्वित्युक्तं भवति । **मानिनी**ति सम्बोधनं मानापनोदनार्थमेवमुच्यत इति सूचयति । निष्कामा मानवती न भवतीति । एवं कामानां निष्कामत्वमुक्त्वा, सर्वानेव कामान् प्रयच्छति **सन्ति ही**ति । अर्थात् कामाः । तत्र दानव्यतिरेकेणैव विद्यमानत्वे हेतुः **एकान्तभक्ताया** इति । हि युक्तश्चायमर्थः । या ह्यनन्यभक्ता, सा सर्वं प्राप्नोतीति । एकान्ते वा भजते, साप्यपेक्षितं कामसुखं प्राप्नोतीति । **तवे**ति तत्रानुभवो निरूपितः । **कल्याणी**ति स्वरूपयोग्यता विवाहितत्वाद्भाग्यं चोक्तम् । **नित्यदे**ति सर्वदा । छान्दसः ॥ ५० ॥ तदा पतनक्रियया यज्जातं तदप्याह **उपलब्धं प्रतिप्रेमे**ति । परित्यागसम्भावनायामेव शरीरत्यागस्य कृतत्वात् पतिप्रेम उपलब्धम् । पातिव्रत्यं चोपलब्धम् । व्रतभङ्गे मरणमेवाङ्गीकृतमिति । चकारान्मयि स्थिरापि बुद्धिः, मत्स्पर्शेनैव जीवनस्य प्राप्तत्वात् । चकारात् हेत्वन्तरमप्याह **यद्वाक्यै**रिति । यस्मात् कारणात् वाक्यैश्चाल्यमानाया अपि तव धीः मयि **नापकर्षिता,** अपकर्षं न प्राप्तवती । सर्वथाभावस्तु दूरापास्तः ॥ ५१ ॥ तया यद्विरक्ततया भक्तिमार्गानुसारेण भक्तिमेवोररीकृत्य, कादाचित्कः कामः समर्थितः, तदेव युक्तम्, न तु लौकिकवन्मद्भजनमिति स्वयं सम्मतिं वक्तुं विपरीते वाधकमाह **ये मां भजन्ती**ति । **दाम्पत्ये** दम्पत्योरिव भावार्थे । भक्तिमार्गे एवं नास्तीति, अन्यत्र भगवद्भजनं न लोकसिद्धमिति, स्वयं कर्ममार्गे तत् वक्तुं साधनमाह **तपसा व्रतचर्यये**ति । **तपः** पुरुषस्य, व्रतचर्या स्त्रियः । कथं भगवन्तमपि तथा भजन्ति । न हि शैत्यार्थं कश्चिद्वह्निं सेवत इति, तत्राह **कामात्मान** इति । कामात्मानः काममेव पुरुषार्थं मन्यन्ते । भगवानपवर्गेशः मोक्षदाता । एवं विरुद्धयोः सेव्यसेवकयोरपि सतोः यद्भजनं सिध्यति, तन्मायामोहनेनैवेत्याह **मोहिता मम मायये**ति ॥ ५२ ॥

### श्रीविट्ठलरायात्मजश्रीवल्लभकृतलेखः

**यान्यान्कामयसे** इत्यत्र । **यतो मयि** इत्यावृत्त्येति । यतस्ते कामा मयि । अतोऽकामायेत्यावृत्तम्, **मयी**तिपदमकामत्वे हेतुत्वेनोक्तमित्यर्थः । **ये मा** मित्यत्र । अन्यत्रेति । लोकास्तु कामात्मानः, भक्तिमार्गे एवं नास्ति । कामात्मत्वं नास्तीति हेतोः कर्मादिमार्गेभ्योऽन्यत्र भक्तिमार्गे भजनं लोकप्रसिद्धं न भवतीत्यर्थः ।

### श्रीसुबोधिनी-सारः

श्रीकृष्णोक्तिः । हे साध्वि हे राजपुत्रि एतद्वचः श्रोतुमिच्छद्भिरस्माभिस्त्वं प्रलंभितोपहसिता मयोदितम् उक्तं यत्तदनु त्वम् आत्थ उक्तवती अनुवादरूपेण सत्सर्वं सत्यमेव हि युक्तम् ॥ ४९ ॥ हे भामिनि कोपने यान् यान् कामान् कामयसे इच्छसि ते मयि एकांतभक्तायास्तव नित्यदाऽकामाय निवृत्तये मोक्षार्थं संति हे कल्याणि हि युक्तम् ॥ ५० ॥ अभिनंदति हे अनघे शुद्धे निष्पापे ते तव पातिव्रत्यं पतौ प्रेम च मयोपलब्धं ज्ञातं दृष्टं च यद्यस्माद्वाक्यैः चाल्यमानाया मयि धीर्बुद्धिर्नापकर्षिता नान्यविषया जाता ॥५१॥ सकामान्निंदति । कामेष्वात्मा चित्तं येषां ते ये तपसा व्रतचर्ययाऽपवर्गेशं मोक्षप्रदं मां दांपत्ये स्त्रीपुरुषोपभोगसुखार्थं भजंति ते मम मायया मोहिताः ॥ ५२ ॥

### गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

एवं तस्या दैन्येन यथार्थवचनेन च सन्तुष्टो भगवानाह—साध्वीति । 'तुभ्यं दुःखोत्पादनं न युक्तं राजपुत्रीत्वात्, सुस्वभावत्वाच्च' इति सूचयन् द्विःसंबोधयति—हे साध्वीति, हे राजपुत्रीति च । एतत्त्वदुक्तं वचनं श्रोतुकामेन मया त्वं प्रलम्भिता उपहसिता । ममोदितं यत् अन्वात्थ व्याख्यातवती तत् सर्वं सत्यं यथार्थमेव । 'युक्तत्वात्' इति सूचयन्नाह—हीति ॥ ४९ ॥ स्नेहेन सम्बोधयति—भामिनीति । सकलगुणपूर्णत्वं स्नेहे हेतुं सूचयन् पुनः सम्बोधयति—कल्याणीति । अकामाय संसारसुखहेतुकामनानिरासाय "स्यान्मे तवाङ्घ्रिररणं सृतिभिर्भ्रमन्त्या" "अस्त्वम्बुजाक्ष मम ते चरणानुराग" इत्येवं यान् यान् कामान् कामयसे मनोरथान् करोषि ते कामा मय्येकान्तभक्तायास्तव नित्यदा सन्त्येव, अतो न त्वया प्रार्थ्या न च मया देया इत्यर्थः ॥ ५० ॥ 'कुतो ममैकान्तभक्तिमत्त्वं' तत्राह—उपलब्धमिति । हे अनघे सर्वदोषरहिते ! पतिप्रेम पत्यौ मयि निरतिशयः स्नेहः तथा पातिव्रत्यं सर्वोत्कृष्टत्वबुद्ध्या पत्येकनिष्ठत्वं च ते तव उपलब्धं मया दृष्टमेव । 'कथम्' इत्यपेक्षायामाह—यदिति । यस्माद्वाक्यैरुक्तविधैर्मद्वाक्यैश्चाल्यमानाया अपि मयि स्थिता तव बुद्धिर्नापकर्षिता मय्यपकर्षं दृष्ट्वाऽन्यविषया न जातेत्यर्थः ॥ ५१ ॥ एवमेकान्तभक्तिमभिनन्द्य तामेव दृढीकर्तुं सकामान् भक्तान् निन्दति—ये मामिति । अपवर्गेशं मोक्षदातारमपि मां दाम्पत्ये दम्पत्युपभोगसुखार्थं ये जनास्तपसा पंचाग्निवातवर्षादिसन्तापसहनेन व्रतचर्यया एकादश्याद्युपवासपरिचर्यादिना न भजन्ति ते मम मायया मोहिता इत्यन्वयः । मोहमेव स्पष्टयति—कामात्मान इति । कामो विषयभोगाभिलाषः आत्मन्यन्तःकरणे येषां ते ॥ ५२ ॥

## अन्वितार्थप्रकाशिका

साध्वीति । हे साध्वि ! हे राजपुत्रि ! एतत्त्वदुक्तं वचनं श्रोतुकामेन मया त्वं प्रलम्भिता उपहसिता श्रोतुकामैस्त्व-मिति बहुवचनपाठे परिहासे रुक्मिणीसख्योऽपि काश्चित् क्रोडीकृताः । ममोदितं यत् अन्वात्थ प्रकारान्तरेणानुव्याख्यातवती तत् सर्वं यथार्थमेव ॥ ४९ ॥ यानिति । हे भामिनि ! हे कल्याणि ! अकामाय कामनानिरासाय मोक्षे पर्यवसायिन इति भावः। यान्यान्कामान्कामयसे मनोरथान् करोषि ते कामाः मय्येकान्तभक्तायास्तव नित्यदा । दा आर्षः । सन्त्येवातो न त्वया प्रार्थ्या न च मया देया इत्यर्थः ॥ ५० ॥ उपलब्धमिति । हे अनघे ! पत्यौ मयि प्रेम तथा पातिव्रत्यं सर्वोत्कृष्टत्वबुद्धया पत्येक-निष्ठत्वं च ते तव उपलब्धं मया दृष्टमेव । यस्माद्वाक्यैः उक्तविधैर्मद्वाक्यैश्चाल्यमानाया अपि ते धीर्मयि वर्त्तमाना न अप-कर्षिता नान्यविषया जाता । अतः प्रेयसो ममापराधः क्षन्तव्य इति भावः ॥ ५१ ॥ ये मामिति । कामात्मानः विषयभोगचित्ताः ये जनाः अपवर्गे शं मोक्षदातारमपि मां दाम्पत्ये दम्पत्युभोगसुखार्थं तपसा व्रतचर्यया च भजन्ति ते मम मायया मोहिताः ॥ ५२ ॥

## श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्

हे साध्वि प्रलम्भिता परिहसिता ॥ यत् मयोदितं अन्वात्थप्रकारभेदेन कथयसि तत् सर्वं सत्यमेव ॥ ४९ ॥ हे भामिनि मयि यान् ॥ यान्कामान्कामयसे ते कामाः एकांतभक्तायास्तव अकामाय निष्कामाय नित्यदा संति ।। ५० ॥ तस्या एकान्त-भक्तित्वं प्रशंसति उपलब्धमिति ॥ पत्यावेव प्रेमयस्मिस्तत् पातिव्रत्यमपि चोऽप्यर्थे ते त्वया उपलब्धं । यद्यस्मात् वाक्यैश्चाल्य-मानायास्तव मयि स्थिता धीः । नापकर्षिता नान्यत्र गता मय्येव निश्चला स्थिताऽस्तीत्यर्थः ॥ ५१ ॥ सकामान्निन्दन्नाह ये इति दाम्पत्ये दांपत्याय स्त्रीपुरुषभोगसुखाय कामेषु विषयेषु आत्मा मनो येषां ते ॥ ५२ ॥

## भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

अथैवं क्रोडीकृतस्वाभिप्रायो भगवानिदमेव मदभिप्रेतं कूटवचांसि तु त्वद्वचःशुश्रूषया प्रयुक्तानीत्याह नवभिः। साध्वीति । हे साध्वि, हे राजपुत्रि, एतत् वचः, श्रोतुकामेन मया, त्वं प्रलम्भिता उपहसिता । श्रोतुकामैस्त्वमित्यपि पाठः। यत् मम उदितं सर्वं, अन्वात्थ अन्वाख्यातवती । तात्पर्यंक्रोडीकारेण प्रतिभाषितवतीत्यर्थः । असि । तत् सर्वं, सत्यमेव मदभि-प्रेतमेव, हि । अवधारणद्वयं तत्परमार्थोक्त्यर्थमेव ॥ ४९ ॥ अतीव तुष्टो भगवाननुगृह्णाति । यानिति । हे भामिनि, यान् यान् कामान् कामयसे, 'स्यान्मे तवाङ्घ्रिररणं सृतिभिर्भ्रमन्त्याः' 'यस्त्वम्बुजाक्ष मम ते चरणानुराग' इत्याद्युक्तरीत्येच्छसि, ते त्वया काम्यमानाः कामाः, मयि एकान्तभक्तायाः तव, हे कल्याणि, नित्यदा सर्वकालं, सन्ति हि । ते कामाः, अकामाय कामनिवृत्तये, सन्ति । न त्वया प्राप्याः मया देयाश्चेत्यर्थः ॥ ५० ॥ अभिनन्दति । उपलब्धमिति । हे अनघे, ते तव, पतिप्रेम पत्यौ स्नेहः, पातिव्रत्यं पतिपाराध्यं च, उपलब्धं, मयेति शेषः । कुतः । यद्यतः, वाक्यैः चाल्यमानायाः अपि, ते धीः मयि वर्त्तमाना सती, न अपकर्षिता नान्यविषया जातेत्यर्थः ॥ ५१ ॥ एकान्तभक्तिमभिनन्द्य तामेव दृढीकर्तुं सकामभक्तान् निन्दति । ये मामिति । कामात्मानः क्षुद्रमनोरथविलसिताः, ये जनाः, अपवर्गेशं मोक्षाधिपतिमपि मां, दांपत्ये दम्पत्योः कर्मणि दम्पत्युपभोगसुखार्थमित्यर्थः । तपसा मनःप्रणिधानात्मकेन, व्रतचर्यया अनशनादिव्रतानुष्ठानेन च, भजन्ति । ते, मम मायया मोहिताः ॥ ५२ ॥

## कृष्णप्रिया

भगवान् श्रीकृष्ण कहते हैं—देवी ! साध्वी ! हे राजपुत्री ! आपके श्रीमुख से ऐसे विवेक स्नेह समर वचन सुधा का पान करने के लिये ही मैंने हास्य विनोद और व्यङ्ग्य वचन सुनाये थे । प्रिये ! मेरे वाक्यों की आपने योग्य समालना की एवं सुसङ्गत समाधान किया ॥४९॥ हे भामिनी ! हे राजकुमारी ! आप मेरी प्राणेश्वरी ही हैं और मेरे प्रति आप का स्नेह भी अनन्य है । हे कल्याणी ! मैं सर्वथा निष्काम हूँ; इसलिये आप मुझसे जो-जो कामना करती हो वे तो सर्व सदा के लिये आपको सिद्ध ही हैं ॥ ५० ॥ प्रियाजू ! आप निर्दोष एवं पुण्यमयी मेरी प्रियतमा हो । मैंने आपको प्रासकर पतिप्रेम और पातिव्रत्य दोनों सम्पादन किया । भली भाँति विचित्र बार्ता कहकर आपको चलायमान करने का मेरा प्रयत्न निष्फल गया और आपकी अनन्यता सुदृढ़ होती रही ॥ ५१ ॥ देवी ! मैं तो भक्तों को अपवर्ग देने वाला मुकुन्द हूँ । जीव फिर भी मेरी माया से मोहित होकर जो जन तपश्चर्या, व्रताराधन आदि सत्कर्मों से दाम्पत्य सुख की कामना करते हैं, आराधना करते हैं वे मार्ग चुक गये हैं ॥ ५२ ॥

मां प्राप्य मानिन्यपवर्गसम्पदं वाञ्छन्ति ये सम्पद एव [1]तत्पतिम् ।
ते मन्दभाग्या [2]निरयेऽपि ये नृणां मात्रात्मकत्वान्निरयः[3] सुसंगमः ॥ ५३ ॥
दिष्ट्या [4]गृहेश्वर्यसकृन्मयि त्वया कृतानुवृत्तिर्भवमोचनी खलैः ।
सुदुष्करासौ सुतरां दुराशिषो ह्यसुम्भरायाा निकृतिजुषः[5] स्त्रियाः ॥ ५४ ॥
न त्वादृशीं प्रणयिनीं गृहिणीं गृहेषु पश्यामि मानिनि यया स्वविवाहकाले।
प्राप्तान् नृपानवगणय्य रहो[6] अहो मे प्रस्थापितो द्विज [7]उपश्रुतसत्कथस्य ॥ ५५ ॥
भ्रातुर्विरूपकरणं युधि निर्जितस्य प्रोद्वाहपर्वणि च तद्वधमक्षगोष्ठ्याम् ।
दुःखं समुत्थमसहोऽस्मदयोगभीत्या नैवाब्रवीः किमपि तेन वयं जितास्ते[8] ॥५६॥

**कर्वमक्षमा**

अन्वयः—हे मानिनि, अपवर्गसम्पदं, तत्पतिं, मां, प्राप्य, सम्पद, एव, वाञ्छन्ति, ते, मन्दभाग्या, एव, ये, निरयेऽपि, तेषां नृणां, मात्रात्मकत्वात्, सुसङ्गम, एव ॥ ५३ ॥ हे गृहेश्वरि ! त्वया, असकृत्, मयि, अनुवृत्तिःकृता, तत्, दिष्टया, असौ, अनुवृत्तिः, भवमोचनी, खलैः, सुदुष्कराः, हि, असुम्भरायाः, दुराशिषः, निकृतिञ्जुषः, दुरभिप्रायायाः, स्त्रियास्तु, सुदुष्करा एव ॥ १४ ॥ हे, मानिनि, स्वविवाहकाले, यया, प्राप्तान्नृपान्, अविगणय्य, उपश्रुताः, सत्यकथाः, यस्य, तस्य, मे, रहोहरेः, द्विजः, प्रस्थापितः, त्वादृशीं, प्रणयिनीं, गृहिणीं, गृहेषु, न, पश्यामि ॥ ५५ ॥ युधि, मया, निर्जितस्य, भ्रातुः, विरूपकरणं, तथा, प्रोद्वाह, पर्वणि, च, अक्षगोष्ठ्यां, तद्वधं, च, कालान्तरेऽपि, समुत्थं, दुःखं, असहः, नैवाब्रवीः, अस्मद् अयोगभीत्या, किमपि, नैवोक्तवती, तेन, त्वया, वयं, सर्वे, जिताः ॥ ५६ ॥

**श्रीधरस्वामिविरचिता भावार्थदीपिका**

मायामोहितत्वमेवोपपादयति । मां प्राप्येति । अपवर्गेण सह संपदो यस्मिंस्तं माम् । प्राप्य प्रसाद्य ये केवलं संपद एव विषयान्वांछंति न तु माम् । तत्पतिं तासां संपदामपि योऽहमेव पतिस्तम् । तथा ये विषया निरयेऽप्यतिनिकृष्टयोनावपि स्युस्तान् । किंच तेषां पुंसां मात्रात्मकत्वाद्विषयात्मकत्वान्निरयः सुसंगमः शोभनसंगम एव स्यादतो मंदभाग्या एव त इत्यर्थः ॥ ५३ ॥ तस्मात् हे गृहेश्वरि त्वया मयि भवमोचनी निष्कामानुवृत्तिः कृता एतद्दिष्ट्या भद्रम् । कथंभूता । खलैः सुदुष्करा । दुराशिषो दुरभिप्रायाया अत एव असुंभरायाः प्राणतर्पणपरायाः निकृतिजुषो वंचनपरायाः स्त्रियाः सुतरामसावनुवृत्तिर्दुष्करेति ॥ ५४ ॥ किंच संति निष्कामाः प्रेम्णैव मय्यनुवर्तमाना बह्व्यः किंतु त्वया सदृशीं कापि न पश्यामीति तस्या भक्तिं बहुमानेनाभिनंदति । न त्वादृशीमिति त्रिभिः । उपश्रुताः सत्यः कथा यस्य मे ॥ ५५ ॥ प्रोद्वाहपर्वण्यनिरुद्धविवाहे । अक्षगोष्ठ्यां द्यूतसभायाम् । तस्य भ्रातुर्वधम् । तस्मिन्काले कालांतरे वा तदनुस्मरणतः पुनः पुनः समुत्थं दुःखमस्माभिरयोगो वियोगस्तद्भीत्या असहः सोढवत्यसि । अनेनैवानिरुद्धविवाहानंतर्यमस्य ज्ञातव्यम् ॥ ५६ ॥

**श्रीवंशीधरकृता भावार्थदीपिकाप्रकाशः**

"अतिनिकृष्टजनो प्रोक्तो निरयो नरके दुर्भगसुभगयोश्च" इति निरुक्तिः । विषयिणां नरक एव न तु सुखमित्याह—किञ्चेति । तेषां मद्विमुखानां मात्रा सु शब्दादिविषयेष्वात्मा बुद्धिर्येषां ते मात्रात्मकास्तेषां भावस्तत्त्वं तस्मात् । अतो विषयाविष्टमनस्त्वादित्यर्थः । सुसंगमः सुलभः । इत्यर्थ इति—मंदभाग्या एव विषयैषिणो नरकेषु गच्छन्ति मद्विमुखत्वादिति । मत्पराणां तु मोक्षः करकलित एव 'यांति मद्याजिनोपि माम्' इति स्मृतेः । टीकायामपवर्गेण सह संपदो यस्मिन्नित्यर्थकथनमेव न तु विग्रहः, उपपदविभक्त्या समासाभावात् । अपवर्गयुक्ताः संपदो यस्मिन्निति विग्रहः, समासश्च मध्यमपदलोपी । अपवर्गोत्र मोक्षो भक्तियोगश्च । संपद्यन्त इति संपदो विषयाः, अतः संपद एव विषयानिति काकाक्षिन्यायेन संपद एव विषयानेव । न तु मामिति न संगच्छते समानविभक्त्यन्तस्व्यावर्तत्वस्वादेवकारस्य । तेषां विषयवांछकानाम् । निरयो निकृष्टयोनिरपि सुशोभनोऽभिरुचितश्चासौ संगमनीयश्चेत्यर्थः । तत्र हेतुर्निरयस्यापि विषयात्मकत्वादिति । यद्वा—हे भामिनि परिहासेपि मद्विच्छेदशंकयात्मकोटितोपि परमप्रेमास्पदे मय्यपीर्ष्या रतः अपवर्गरूपा प्रेमभक्तिलक्षणा सपद्यस्मात्तमपि तथा तत्पतिं पूर्वोक्तदांपत्यादिसंपदः पतिमपि मां प्राप्य वशीकृत्य संपदे दांपत्यादिसंपदर्थमेव मां वांछन्ति पुनः पुनः सेवितुमीहन्ते, न तु मदर्थं ते मन्दभाग्या

१. सत्-विज. । २. ये स्यु-विज. । ३. मे-विज. । ४. युते-विज. । ५. विकृति-विज. । ६. रहोहरो-श्रीधर. वंशी. जीव. ; रहस्करो-वीर. ; रहोपहो-जीव. ; रहारहो विज. । ७. स्थित-विज. । ८. स्मा-वीर. ।

अप्रशस्तभक्तिसंस्कारवन्तः। यतो ये तत्संपद्वांछकास्ते निरये नरकेऽपि संति तत्सादृश्यं कथं मद्भक्तियोगिनां युज्यत इति भावः। ननु संपदिच्छका महाविपत्तिरूपं निरयं कथं गच्छन्ति तत्राह—नृणां मात्रात्मकत्वात् पापेनापि तदुपार्जकत्वान्निरयः सुसंगमः, प्रयत्नं विनापि लभ्य इत्यर्थः। अन्यत्समम् ॥ ५३ ॥ यस्माद्विषयिणां निरयदुःखं तस्माद्धेतोः। असकृत्पुनः पुनः। दुष्टः केवलविषयनिष्ठोऽभिप्रायो यस्यास्तस्याः। अत एव दुरभिप्रायत्वादेव। असुंभरायाः स्वप्राणपोषणपरायाः। वञ्चनञ्चात्र निजपातिव्रत्यप्रदर्शनपूर्वकं जारसेवनं, तत्परायणायाः॥ या भवमोचनी संसारबंधमोचनी सा त्वया कृता, तव भयाभावार्त्वाय सा ऋणवत्येवाभूदन्यैरेव त्वदनुगंतृलोकैः कृता भवमोचनी भवेदिति भावः। ननु तर्हि खला अपि मुक्ताः स्युस्तत्राह—खलैरिति ॥ ५४॥ रुक्मिण्या भक्तिं गुरूकरोति—किञ्चेति। क्वापि कास्वपि कुत्रापि वा यया त्वया अवगणय्य त्यक्त्वा रहोहरो रहस्यप्रापकः दूत इत्यर्थः। मे मम पार्श्वे इति शेषः॥ गृहेषु सार्वत्रिकेषु स्वीयेष्वपि वा स्वविवाहस्य कालेऽत्यासन्नसमये रहो रहस्यं वहति प्रापयतीति सः 'रहोहरः' इति पाठेऽपि स एवार्थ इति तादृशभावेष्वपि पितृमात्रादिसर्वजनेष्वप्यनादरः सूचितः। 'रहोऽतिगुह्ये सुरते' इति विश्वः। उपश्रुतसत्कथस्येति—गृहांतर्मद्वार्त्ताश्रवणमात्रेणैव न तु मन्माहात्म्यानुभवेनेत्यर्थः। किमुताधुना जातपरमासक्तित्वे सतीति भावः। मानिनीति—मानः पूजा चित्तसमुन्नतिर्वा हे तद्वति तद्योग्या त्वमेव न त्वन्येति भावः ॥ ५५॥ तेनातिदुःसहसहनादिना जिता वशीकृताः। अनेन तद्वधमितिवचनेन। अस्य क्ष्वेल्याचरितस्य॥ किञ्च—भ्रातुरिति बंधुवात्सल्येन तत्तदसह्यता, युधि निर्जितस्येति त्वद्भ्रातृत्वाद्युद्धेऽपि तस्य निर्जयायोग्यता, तथा प्रोद्वाहेत्यादिना तदानीं तद्वधायोग्यता सूचिता। यतोऽसहिष्ठा अतो नाब्रवीश्च। भीतिः शंका, ईश्वरोऽयं कदाचिन्मय्यनवधानं कुर्यादित्याशंकयेत्यर्थः। अस्मदिति बहुत्वं निजबंधुजनापेक्षया। आत्मना सह वियोगेन तैरपि तत्सिद्धेः। किंवा—पराजिताः अस्माकं तादृश शक्त्यभावात्। वयमिति न केमलमहं मदीयाश्च ॥ ५६॥

### श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी

टीकायामपवर्गेण सह सम्पदो यस्मिन्नित्यर्थकथनमेव नतु विग्रहः उपपदविभक्त्या समासाभावात् अपवर्गयुक्ताः सम्पदो यस्मिन्निति विग्रहः समासश्च मध्यपदलोपी अपवर्गोऽत्र मोक्षो भक्तियोगश्च सम्पद्यन्त इति सम्पदो विषयाः अतः सम्पद एव विषयानिति काकाक्षिन्यायेन सम्पद एव विषयानेवेति योज्यम् अन्यथा न तु मामिति न सङ्गच्छते समानविभक्त्यन्तरव्यावर्त्तकत्वादेवकारस्य तेषां विषयवाञ्छकानां नृणां निरयो निकृष्टयोगिरपि सुशोभनोऽभिरुचितश्चासौ सङ्गमनीयश्चेत्यर्थः। तत्र हेतुः निरयस्यापि विषयात्मकत्वादिति यद्वा हे मानिनि परिहासेपि मद्विच्छेदशङ्कयाऽऽत्मकोटितोपि परमप्रेमास्पदे मय्यपीर्ष्यावति अपवर्गरूपा प्रेमभक्तिलक्षणा सम्पद्यस्मात्तमपि तथा तत्पतिं पूर्वोक्तदाम्पत्यादिसम्पदः पतिमपि मां प्राप्य वशीकृत्य सम्पदो दाम्पत्यादिसम्पदर्थमेव वाञ्छन्ति पुनः पुनः सेवितुम् ईहन्ते नतु मदर्थं ते मन्दभाग्या अप्रशस्तभक्तिसंस्कारवन्तः यतो ये तत्सम्पद्वाञ्छकास्ते निरयेपि सन्ति तत्सादृश्यं कथं मद्भक्तियोगिनां युज्यत इति भावः। ननु सम्पदिच्छाका महाविपत्तिरूपं निरयं कथं गच्छन्ति तत्राह—नृणां मात्रात्मकत्वात् पापेनापि तदुपार्जकत्वात् निरयः सुसङ्गमः प्रयत्नं विनापि लभ्य इत्यर्थः। अन्यत्समानम् ॥ ५३ ॥ असकृत् सदेत्यर्थः। सेयञ्च त्वत्कृतमदनुवृत्तिर्भवस्य प्रपञ्चस्यापि सर्वस्य मोचनी श्रवणादिना सर्वेषामपि सर्वदुःखतो मोक्षकरी तर्ह्येतदूद्ध्वं प्रपञ्चं न स्थास्यत्येव किं तत्राह—खलैः श्रीगुर्वादिवञ्चकैः सुदुष्करा करोत्यर्थस्य सर्वधात्वर्थव्यापकत्वाद्दुर्बोधादिरूपाञ्च दुराशिषः मन्निष्ठत्वाभावाद्दुष्टा आशीः कामो यस्याः तत्र हेतुः यतः कुतश्चेदिन्द्रियतर्पणमात्रपरायाः यतो निकृतिञ्जुषः पूर्ववत् खलाया इत्यर्थः। गृहेश्वरीति त्वयैव दृष्टान्तरूपया मम सर्वेष्वपि गृहेषु अनुवृत्तिः प्रवर्तितेति त्वमेव सर्वगृहस्वामिनीति यद्वा गृहस्येश्वरी त्वमेव अहन्तु त्वदधीन एवेति भावः॥ ५४॥ गृहेषु सार्वत्रिकेषु स्वीयेष्वपि वा स्वविवाहस्य काले अत्यासन्नसमये रहः रहस्यं वहति प्रापयतीति तथा सः रहोरह इति पाठेऽपि स एवार्थः। पितृभ्रात्रादिसर्वजनेष्वनादरः सूचितः उपश्रुतसत्कथस्येति स्वगृहान्तर्मद्वार्त्ताश्रवणमात्रेणैव नतु मन्माहात्म्यानुभवेनेत्यर्थः। किमुताऽधुना जातपरमासक्तित्वे सतीति भावः। मानिनीति मानः पूजा चित्तसमुन्नतिर्वा हे तद्वति तद्योग्या त्वमेव नत्वन्येति भावः॥ ५५॥ किञ्च भ्रातुरिति बन्धुवात्सल्येन तत्तदसह्यता युधि निर्जितस्येति त्वद्भ्रातृत्वाद्युद्धेऽपि तस्य निर्जयायोग्यता तथा प्रोद्वाहपर्वणीत्यादिना तदानीं तद्वधायोग्यता सूचिता यतोऽसहोऽसहिष्टा अतो नाब्रवीश्च भीतिः शङ्का ईश्वरोयं कदाचित् मय्यनवधानं कुर्य्यादित्याशङ्कयेत्यर्थः। अस्मदिति बहुत्वं निजबन्धुजनापेक्षया आत्मना सह वियोगेन तैरपि तत्सिद्धेः ते त्वया जिताः वशीकृताः किं वा पराजिता अस्माकं तादृशशक्त्यभावात् वयमिति न केवलमहं मदीयाश्च ॥ ५६॥

### श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी

अपवर्गरूपा सम्पत् यस्मात्तमपि, तत्पतिमिति मद्वाञ्छया सम्पदोऽपि स्वयमेवाधीना भवन्तीति भावः। तथापि ता एव वाञ्छन्ति, न तु मामिति स्वामिपादैरार्थिको नञ् व्याख्यातम्। सर्वदोषहरं सर्वसद्गुणाधायकं तासु कथञ्चिन्मत्सम्बन्धमित्यर्थः। हे मानिनीति मत्प्रीतिवाञ्छयैव मानस्याप्याचरणात्त्वादृशी भूरिभागैवेति भावः। अन्यत्तैर्व्याख्यातम्। पक्षान्तरे—

ये तु केवलं प्राकृतविषयभोगमेव वाञ्छन्ति, ते दुर्भगा एवेत्याह—मामिति । अर्थः स एव । अथवा प्रसंगाद्विषयकामुकानिव मोक्षेच्छून्निन्दति—मामिति । मोक्षसम्पदं ये वाञ्छन्ति; अकारप्रश्लेषेण—यतो न विद्यते सम्पत् प्रेमसम्पद् येषु ते, तस्याः प्रेमसम्पदः पतिं दातारमपि, निरयेऽपि ये स्युस्तास्तु ये वाञ्छन्ति, तेषां निरयः सुसंगमः । अन्यत् समानम् । यद्वा, मयि प्रेमसम्पत्त्यैव मया सह दाम्पत्यं सिध्येदित्याशयेन तस्याः परमसाध्यत्वमाह—मोक्षसम्पदमपि सम्पदे प्रेमसम्पत्त्यर्थमेव वाञ्छन्ति । अकारप्रश्लेषेण—अमन्दभाग्या भूरिभागाः ॥ ५३ ॥ असकृत् सदेत्यर्थः । भवो भक्तिप्रतिघातकसंसारतापस्तस्मान्मोचयतीति तथा सा, अयं स्वरूपमात्रनिर्देशः, यद्वा, भवस्य प्रपञ्चस्यापि सर्वस्य मोचनी श्रवणादिना सर्वदुःखतो मोक्षकरी, खलैः परदोषसूचकैः पुरुषैः, हि निश्चितम्, दुराशिष इत्यादिविशेषणत्रयस्य यथोत्तरं सुदुष्करताहेतुत्वे श्रैष्ठ्यम् । एवं तस्याः खलत्वादिदोषनिरसनेन परमसाध्वीत्वं तेनानुवृत्तेर्दार्ढ्यमपि सूचितम् । हे गृहेश्वरीति स्वदृष्टान्तेन मम सर्वेष्वपि गृहेष्वनुवृत्तिप्रवर्त्तनात्त्वमेव सर्वगृहस्वामिनीति । यद्वा, गृहस्येश्वरी त्वमेव, अहन्तु त्वदधीन एवेति भावः ॥ ५४ ॥ त्वादृशीं त्वत्सदृशीम्, गृहेषु सार्वत्रिकेषु स्वीयेष्वपि वा, स्वविवाहस्य काले अत्यासन्नसमये रहो रहस्यं वहति प्रापयतीति तथा सः, पाठान्तरेऽपि स एवार्थः । इति पितृभ्रात्रादिसर्वस्वजनेष्वनादरः सूचितः । उपश्रुतमत्कथस्येति स्वगृहान्तर्मद्वार्त्ताश्रवणमात्रेणैव, न तु माहात्म्यानुभवेनेत्यर्थः । हे मानिनि ! मानः पूजा चित्तसमुन्नतिर्वा, तद्वदिति तद्योग्या त्वमेव, न त्वन्येति भावः ॥ ५५ ॥ भ्रातुरिति बन्धुवात्सल्येन तत्तदसह्यता, यूधि निर्जितस्येति त्वद्भ्रातृत्वाद्युद्धेऽपि तस्य निर्ज्जयायोग्यता, प्रोद्वाहपर्व्वणीत्यादिना तदानीं तद्वधायोग्यता च सूचिता, भीतिः शंका, कदाचिदस्माभिः सह वियोगः स्यादित्याशंकयेत्यर्थः । यद्वा, अयोगो दुःखाकुलत्वेनासंयोगस्तस्माद्भीत्या, अस्माभिरिति बहुत्वं श्रीवलदेवादीनामपेक्षया, आत्मना सह वियोगेन तैरपि तत्सिद्धेः । यद्वा, तस्यास्तद्भीत्यात्मनो बहुमानात्, किं वक्तव्यम्, हृदि तत्तदसहिष्ठा इति किमपि नाब्रवीश्च निजमनोदुःखादिकम्, किंवा तद्विरूपकरणादिकमपि किञ्चिन्नाभिव्यञ्जितवतीत्यर्थः । ते त्वया जिता वशीकृता, किंवा पराजिताः, अस्माकं तादृशशक्त्यभावात् । वयमिति न केवलमहम्, मदीयाः सर्वेऽपीत्यर्थः ॥ ५६ ॥

**श्रीमद्वीरराघवाचार्यकृता भागवतचन्द्रचन्द्रिका**

तदेवोपपादयति—मामिति । अपवर्गः मोक्षस्स एव सम्पत् लक्ष्मीर्यस्मात्तं तासामपवर्गेतरसम्पदामपि पतिं मां प्राप्य प्रसाद्य तप आदिभिरिति शेषः । सम्पदः अपवर्गेतरकामानेव वाञ्छन्ति ते जना मन्दभाग्याः, कुतः ? यद्यस्माद्ये नृणां विषयास्ते निरये नरकेपि स्युः कुतः शब्दादिविषयसुखानां केवलदुःखात्मकनरके सम्भवस्तत्राह—मात्रात्मकत्वात्तेषां सुखलेशात्मकत्वान्नरकेपि सम्भव इतिभावः । अतो निरयः सुसङ्गमः शोभनरूपतया प्रतीयमानो दम्पत्योः सङ्गमः निरयो नरकप्राय एव अतस्ते मन्दभाग्या इत्यर्थः ॥ ५३ ॥ पुनरप्यभिनन्दति-दिष्ट्येति । हे गृहेश्वरि ! त्वया मयि भवमोचनी निष्कामा अनुवृत्तिः कृता एतद्दिष्ट्या आनन्दः वृत्तिं विशिनष्टि-असावनुवृत्तिः खलैर्दुर्जनैः दुःखेनापि कर्त्तुमशक्या दुराशिषो दुरभिप्रायाः अत एवासुम्भरायाः इन्द्रियतर्पणपरायाः निकृतिञ्जुषः वञ्चनपरायाः स्त्रियास्तु सुतरां दुष्करा ॥ ५४ ॥ न त्वामिति । हे मानिनि ! प्रणयिनीं प्रेमवतीं न पश्यामि तत्र निदर्शनं वदन् तां विशिनष्टि—ययेति । यया त्वया अविगणय्यानादृत्य श्रुताः सत्कथास्त्वदीया येन तस्य मे मह्यं रहस्करः रहस्यवार्त्ताहर्त्ता द्विजः प्रेषितः अतस्त्वादृशीं भार्यां न पश्यामीत्यर्थः ॥ ५५ ॥ किञ्च त्वद्गुणैरेवाहं वशीकृत इत्याह—भ्रातुरिति । युद्धे मया निर्जितस्य भ्रातुः रुक्मिणः विरूपकरणं तथा प्रोद्वाहपर्वण्यनिरुद्धविवाहोत्सवे तत्राप्यक्षगोष्ठ्यां द्यूते तस्य रुक्मिणो वधम् इदं समनन्तराध्याये स्फुटीभविष्यति समुत्थं तद्वधश्रवणजं दुःखञ्च अस्मदयोगभीत्या अस्मद्विश्लेषभीत्या हेतुभूतया असहः सोढवत्यसि किमपि नाब्रवीः नोक्तवत्यसि तेनैवम्विधगुणजातेन वयं जितास्स्म वशीकृताबभूविम यद्यप्यस्य प्रणयकलहस्यानिरुद्धविवाहानन्तर्यमतो ज्ञायते तथापि अत्र व्युत्क्रमेणोक्तिः प्रश्नानुगुण्येनेत्यवगन्तव्यम् ॥५६॥

**श्रीविजयध्वजतीर्थकृता पदरत्नावली**

ननु, तर्हि सम्पदर्थे भगवद्भजनं युक्तं हीति तत्राह—मामिति । सतः सत्यस्य मोक्षस्य पतिं ये सम्पल्लक्षणभोगाः कथं तेषां भोगानां निरये सत्त्वमिति तत्राह—मात्रात्मकत्वादिति । मात्रात्मत्वात्तेषां भोगानां शब्दादिविषयाविनाभूतत्वान्निरये सुसङ्गमः सुलभः सङ्गम इत्यर्थः ॥ ५३ ॥ सर्वभक्तेषु त्वमेव मुख्यभक्तेत्याशयेनाह—दिष्ट्येति । हे गृहैश्वर्ययुते देवि त्वया मय्यनुवृत्तिः भक्तिः कृतेति यत्तद्दिष्ट्या त्वदन्येषां भवमोचनी वा असावनुवृत्तिः खलैः सुदुष्करा दुराशिषः दुष्टेच्छायाः पत्या सह दुर्वाक्यायाः वा असुम्भरायाः स्वप्राणपोषणपरायाः विकृतिञ्जुषः जारलक्षणव्याजसेवमानायाः स्त्रियः सुतरां सुदुष्करा दिष्ट्या गृहं मङ्गलमन्दिरञ्च ऐश्वर्ययुतश्च दिष्ट्या गृहैश्वर्ययुतः तस्मिन्निति वा ॥ ५४ ॥ श्लोकत्रयेण देव्याः पूर्वोक्तां भक्तिं लालयति—न त्वादृशीमित्यादिना । उपस्थिता समीपं प्रापिता त्वत्सत्कथा यस्य स तथा तस्य रहोरहः अतिरहसि ॥ ५५ ॥ विरूपकरणं केशवपनं प्रोद्वाहपर्वणि विवाहलक्षणोत्सवदिवसे अक्षगोष्ठ्यां द्यूतविशेषक्रीडायां तस्य भ्रातुर्वधम् अस्मदयोगभीत्या अस्मद्विरहभयेन ॥ ५६ ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

मन्दभाग्यत्वमेव दर्शयति—येऽन्ये सम्पद्वाञ्छका निरयेऽपि वर्त्तन्ते। येऽन्यत्र वर्त्तन्ते तेषां नृणां मात्रात्मकत्वाद-त्यन्तविषयावेशात्यागेन विषयार्ज्जनान्निरयोऽपि सुसङ्गमः अनिच्छयापि प्राप्य इत्यर्थः ॥५३॥ तस्मादेतत् समानवासनत्वात्तेऽपि मन्दभाग्या इत्याह—असकृत् सदेत्यर्थः। कृता प्रचारिता भवस्य सर्व्वस्यैव प्रपञ्चस्य श्रवणादिना सर्व्वदुःखतो मोक्षकरी तर्हि ऊद्ध्वं प्रपञ्चो न स्थास्यत्येव तत्राह खलैर्गर्व्वादिभिर्मुखैः दुष्करैः करोत्यर्थस्य सर्व्वधात्वर्थव्यापकत्वाद्दुर्बोधादिरूपा च ॥ ५४-५९॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धीये श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे षष्टितमोऽध्यायः ॥ ६० ॥

### श्रीमज्जीवगोस्वामिकृतः बृहत्क्रमसन्दर्भः

इममेवार्थं स्पष्टयति—मां प्राप्येत्यादि। तत् तस्मात् मां पतिं प्राप्य पतित्वेन लब्ध्वापवर्गसम्पदं ये वाञ्छन्ति, तेऽ-सम्पदो दरिद्रा एव। दरिद्राः खलु क्षुद्रमेव प्रार्थयन्ते तेऽत्यन्तमन्दभाग्या एव। वाञ्छन्तीति पूर्वेणैवानुषङ्गः। यच्छब्देन तच्छब्द आक्षिप्यते, एवं तच्छब्देनापि यच्छब्दः, यत्तदोर्नित्यसम्बन्धात्। तेषां मन्दभाग्यत्वेन कः परिणाम इत्याह—निरय इत्यादि। तेषां निरयः सुसङ्गमः। तत्र हेतुः—मात्रात्मकत्वात् मात्रा विषयाः ॥ ५४ ॥ दाम्पत्यं प्रणम्य तदेव द्रढयति—न तादृशीमित्यादि बहुभिः। उक्तव्याख्यानं विनैव तेषां वाक्यानाम् असङ्गतेर्भगवतो वचनासौष्ठवदोषप्रसङ्गः स्यात् ॥ ५५-५७ ॥

### श्रीनाथचक्रवर्तिपादविरचिता चैतन्यमतमञ्जूषा

इममेवार्थं स्पष्टयति—मां प्राप्येति। हे मानिनि! तत्तस्मात् मां पतिं पतित्वेन प्राप्य अपवर्गसम्पदं ये वाञ्छन्ति, तेऽसम्पद एव दरिद्रा एव। दरिद्रा हि क्षुद्रमर्थं प्रार्थयन्ते, अपि तु ये विषया निरयेऽपि स्युस्तान् ये वाञ्छन्ति तेऽत्यन्तं मन्द-भाग्या एव। वाञ्छन्तीति पूर्वेणैव सम्बन्धः। यच्छब्देन तच्छब्द आक्षिप्यते, एवं तच्छब्देनापि यच्छब्दः—यत्तदोर्नित्य-सापेक्षत्वात्। तेषां मन्दभाग्यत्वे नरकः परिणाम इत्याह—निरयः सुसङ्गमः, तेषां निरयः सुलभः स्यात्। तत्र हेतुः—मात्रात्म-कत्वाद्-विषयात्मकत्वात् ॥ ५४ ॥ इदानीं दाम्पत्यं प्रशस्य तमेवार्थं द्रढयति—न त्वादृशीत्यादि बहुभिः ॥ ५५-५७ ॥

### श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शिनी

उक्तमेवार्थं प्रपञ्चयति—मामिति। अपकृष्टा वर्गसम्पन्मोक्षानन्दोपि यतस्तं मां प्राप्य सम्पदः प्राकृतीरेव वाञ्छन्ति यतस्तासामपि पतिं दातारं ते सम्पद्वाञ्छकाः मन्दभाग्याः यतो नारकीष्वपि योनिषु स्त्रीसङ्गादिविषयसुखान्यनायासेनैव लभ्यत इत्याह—ये जीवा निरयेपि सूकरादिजातावपि वर्त्तन्ते तेषां नृणां जीवानां मात्रात्मकत्वात् विषयात्मकत्वात् स स निरय एव सुसङ्गमः स्त्रीसङ्गादिसुखसाधकत्वात् शोभनसङ्गमहेतुरित्यर्थः ॥ ५३ ॥ या भवमोचनी सा त्वया कृतेति तव भयाभावस्त्वयि सा ऋणवत्येवाभूदन्यैरेव कृता भवमोचनी भवेदिति भावः। ननु तर्हि खला अपि मुक्ताः स्युस्तत्राह—खलैरिति। दुराशिषः दुरभिप्रायाया असुम्भरायाः स्वप्राणतर्पिण्या. निकृतिञ्जुषः वञ्चनपरायाः अतिखलायाः स्त्रियास्तु सुतरामेव दुष्करा ॥ ५४ ॥ परन्तु प्रेमवतीनां मद्भार्याणामपि मध्ये गृहिणां मम त्वमेव गृहिणीश्रेष्ठेत्याह—नेति। मानिनीति मान आदरः हे तद्वति रहोवहः रहस्यवस्तुप्रापकः "रहोतिगुह्ये सुरते" इति विश्वः। उपश्रुताः सत्यः कथा यस्य तस्य मम स्थाने ॥ ५५ ॥ प्रोद्वाहपर्वण्यनिरुद्ध-विवाहे अक्षगोष्ठ्यां द्यूतसभायां तस्य भ्रातुर्वधं समुत्थं तत्र तत्र अस्मदयोगभीत्या अस्मासु न युज्यते नोचितो भवतीत्यस्मदयो-गस्तद्भीत्या किमपि दुःखं नैवाब्रवीः। कीदृशम्? असहो दुर्बलं केवलं लोकापेक्षेकहेतुत्वादिति भावः। पुनः कीदृशम्? समुत्थं समुच्चथा स्यात्तथा तिष्ठतीति तद्दुःखं मत्प्रतिकूलरुक्मिहिंसनादतः सुखसहितमेवेत्यर्थः। अनेनैवानिरुद्धविवाहा-नन्तर्य्यमस्य ज्ञातव्यम् ॥ ५६ ॥

### गूढार्थदीपिनी

हे मानिनि अपवर्गयुक्ताः सम्पदो यस्मिन् तम्। अत एव तासां सम्पदां पतिं मां प्राप्य ये सम्पद एव विषयानेव वाञ्छन्ति ते मन्दभाग्या इत्यन्वयः। ये निरये नरकतुल्यशूकरादियोनावपि स्युः अतो मात्रात्मकत्वात् विषयनिष्ठत्वात्तेषां निरय एव सुलभो भवेन्न मोक्ष इत्यर्थः ॥ ५३ ॥ हे गृहेश्वरि। असकृत् निरन्तरं मयि अनुवृत्तिः कृता एतद्दिष्ट्या भद्रं जातम्। कथंभूता। खलैः सुदुष्करा। निकृतिजुषो वचनपरायाः स्त्रियास्तुः असात्वनुवृत्तिः सुतरां दुष्करेति। दुराशिषा दुर्व्यसनाया इन्द्रियतर्पणपरायाः। सर्वत्र शेषे षष्ठी। निकृतिमित्यत्र तदर्हमिति निर्देशात् द्वितीया ॥ ५४ ॥ गृहेषु भार्यासु मध्ये त्वया सदृशीं प्रणयिनीं प्रेमवती न पश्यामि यया त्वया नृपान् अवगणय्य त्यक्त्वा मे मम पार्श्वे रहोहरो दूतः प्रस्थापितः। उपश्रुता सती कथा यस्य तस्य मे मां प्रति ॥ ५५ ॥ भ्रातुः रुक्मिणः। प्रोद्वाहपर्वणि अनिरुद्धविवाहे अक्षगोष्ठ्यां द्यूतसभायाम् तद्वधम् समुत्थं तत्तत्स्मरणजं दुःखमसहः सोढवत्यसि। वियोगः भवेन। ते त्वया। 'सह' धातोराधृषीयस्य णिजभावे रूपम् ॥ ५६ ॥

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः

तदेवोपपादयति–मामिति । अपवर्गेण सह सम्पदो यस्मात् तम् मां प्राप्य आराध्य केवलं सम्पद एव वाञ्छन्ति तासां सम्पदां पतिं मां न वाञ्छन्ति ये ते मन्दभाग्याः कुतः मात्रात्मकत्वात् मात्राः सम्पद एव न त्वहम् आत्मा आश्रयो येषां मात्रासु वा आत्मा मनो येषां ते मात्रात्मानः स्वार्थे कः तेषां भावस्तत्त्वं तस्मात् ननु तथापि ते धन्याः देवमनुष्यादिरूपेण दाम्पत्यं प्राप्य विहरन्तीत्यत आह—ये दाम्पत्याभिरतास्ते निरयेपि सन्ति ननु निरयतो देवमनुष्यादिलोकस्य महद्वैलक्षण्यमत आह—नृणां सुसङ्गमः शोभनतयाऽभिमतः स्त्र्यादिभिः सङ्गमः निरय एवेत्यन्वयः ॥ ५३ ॥ भवमोचनी निष्कामा असौ अनुवृत्तिः खलैः सुदुष्करा दुराशिषो दुरभिप्रायायाः असुम्भरायाः प्राणतर्पणपरायाः निकृतिञ्जुषः प्रत्युपकाङ्क्षावत्या सुतरां सुदुष्करा ॥ ५४ ॥ रुक्मिण्याः सर्वाभ्यः श्रैष्ठ्यं दर्शयति—न त्वादृशीमित्यादि त्रिभिः । मानः आदरः तद्वती मानिनी तस्याः सम्बं धने हे मानिनि ! रहोहरः अतिगुह्यसन्देशहरः "रहोतिगुह्ये सुरते" इति विश्वः । उपश्रुता सत्या कथा यस्य मे समीपे ॥ ५५ ॥ प्रोद्वाहपर्वणि अनिरुद्धविवाहे तत्र च अक्षगोष्ठ्यां द्यूतसभायां तस्य भ्रातुर्वधश्च समुत्थं तद्वधश्रवणजं दुःखञ्च अस्माभिरयोगो वियोगस्तद्भीरुया असहः सोढवत्यसि अनेन हास्यलीला अनिरुद्धविवाहानन्तरं कृता इति ज्ञायते तथापि किमपि नाब्रवीः नोक्तवत्यसि तेन गुणगणेन वयं ते त्वया जिताः वशीकृताः ॥ ५६ ॥

### श्रीसत्यधर्मकृता श्रीभागवतटिप्पणी

एतामभिनन्दनीयगुणोपपाद्य नन्दयन्स्त्रीपुंसौ निन्दनीयधर्ममुपपाद्य गोविन्दो निन्दति ॥ दिष्ट्येति । गृहैश्वर्ययुतं सम्बद्धं यया तत्सम्बुद्धिः । गृहैश्वर्यसक्तदिति च पठन्ति । हे गृहैश्वरीति सम्बोधनम् । उभयपक्षेऽपि श्रियः सम्भवीदम् । भवमोचिनि । वस्तुत इतरेषाम् । हे भवमोचिनि रमात्मिके । यामप्यनुवृत्तिः कृता असत्कृता वासौ । खलैः खं सुखं लान्त्यादत्त इति खलास्तैः प्रक्रमानुगुण्यादर्थः स्वीकार्य इति । खं विषयसुखं तैः सुदुष्कराः कर्तुमशक्या दुराशिषोऽसाध्याभिलाषाया असुम्भरायाः स्वप्राणमात्रपोषणरतायाः । वैवक्षिकसंज्ञात्वमाश्रित्य संज्ञायां भृतृवृजीति खचि खित्यनव्ययस्येति मुम् । निकृतिः कापट्यं जुषः सेवमानायाः स्त्रियः सुतरां सुदुष्करा सा त्वया कृतेति दिष्ट्या सुभद्रं गृहैश्वर्ययुते मयीत्यन्वयो वा । ये मां भजन्ति दाम्पत्य इत्यस्यैका व्याख्या सख्यमेतत्पद्यगतसुतरां दुराशिष इत्यादिना भजत इति सोपादेया ॥ ५६ ॥ श्लोकत्रिकेन देवीसेवां लालयंस्तद्गुणान्स्वानुभूतान्विशालयंति ॥ नेति । प्रणयिनी स्नेहसहितां त्वादृशीं त्वत्सदृशीं गृहेषु गृहिणीं भार्यां न पश्यामि । हे भामिनि । स्वविवाहकाले प्राप्तानन्नायासेन नृपानविगणय्यागणयित्वा रहो रहोऽत्येकान्त्ये उपस्थिता सती कथा तव यस्य तस्य । यो द्विजः प्रस्थापितः । प्रेणपत्रसाहित्यं सूचयति । रहः स्वनगरेऽरहो द्वारवत्यामिति वा ॥ ५७ ॥ वयमेतदादिजयिनोऽपि त्वया सहस्रहयसेनानीरपि स्वभार्या कार्पासचयकृन्नीत्या पराभूता इति लोकमनुकुर्वन्वक्ति । युधि निर्जितस्य भ्रातू रुक्मिणो विरूपकरणं पञ्चचूडोकरणमक्षगोष्ट्यामक्षखेलनपरिषदि प्रोद्वाहपर्वण्यनिरुद्ध विवाहोत्सवे तद्वधं रुक्मिवधं बलकृतम् । अत्र द्वयीं गतिमवलम्ब्य ग्रन्थक्रमः । अनिरुद्धविवाहः प्राक् पश्चाद्रुक्मिणीप्रणयकलहशंसकः शंसकश्च प्राक् कलहस्यानन्तर विवाहस्येति । तत्राद्ये जातो रुक्मिवधं इति प्रोद्वाहकर्मणीत्युक्तिर्युक्ता । द्वितीये तु द्वयोरपि सार्वज्ञ्याद्भाविनं वधं तत्सहनेन सह भविष्यतात्क्त्वान्हरिरेव्यन्नयेनेत्यविरोधो ज्ञेयः । तथा तदुत्थं दुःखं चासहः । धारवन्तररूपं । तत्र तन्त्रमसमदयोगभीत्या वियोगभयेन लोकार्थं प्रदर्शितेन किमपि नैवाब्रवीरिति तेन वयं ते त्वया जिताः पराभूताः ॥ ५८ ॥

### श्रीमद्वल्लभाचार्य्यकृता सुबोधिनी

साधारणसेवकानां स्थितिमुक्त्वा, ये पुनर्विशेषेण भगवन्तं प्राप्ताः, तेऽपि चेत् सकामा भवेयुः, तदा कालेन तेषां बुद्धिर्नश्यत इति निन्दति **मां प्राप्य मानिनीति** । अपवर्गस्य सम्पद्यस्मात् । **मानिनीति** सम्बोधनं मानस्य विद्यमानत्वान्न त्वं प्रार्थयिष्यसीति सूचितम् । ये केवलमैहिकसम्पद एव प्रार्थयन्ति, ते मन्दभाग्याः । यथा मन्दभाग्यो निधिमपि प्राप्य, पाषाण इति पदा प्रक्षिपति, एतन्मन्दभाग्यस्य लक्षणम् । ननु विषया अपि दुर्लभाः स्त्रीधनादयः, तत्कथं मन्दभाग्यत्वमिति चेत् । तत्राह । **ये विषया निरयेऽपि नृणां भवन्ति** । तत्र हेतुः **मात्रात्मकत्वादिति** । न हि क्वचिद्विषयाभावोऽस्ति । श्वादियोनावपि विषयोपभोगस्य दृष्टत्वात् । दुःखं तु विषयसम्बन्धे नियतम् । तारतम्यं स्वप्रयोजकम् । तर्हि तादृशो निरयोऽपि सम्पत्तियुक्तः समीचीन इति चेत्, तत्राह **निरयः सुसङ्गम** इति । सुष्ठु सङ्गमो यस्येति । न तदर्थं तपः कर्तव्यं मद्भजनं वा । अतः अक्लेशसिद्धे क्लेशकरणात् दुर्भाग्यत्वम् । पूर्णादल्पप्रार्थनायां मन्दभाग्यत्वं वा स्यादिति तथा न भावनीयमित्युपदेशः ॥ ५३ ॥ तया यदुक्तं मामीक्षसे, तर्हि नः परमानुकम्पेति तदभिनन्दति **दिष्ट्येति** । असकृन्मयि त्वया या अनुवृत्तिः कृता, सा दिष्ट्या कृता । यतः सा भवमोचनी । **गृहेश्वरीति** सम्बोधनं लोकप्रसिद्धसंसारसुखं तव सिद्धमेवेति सूचयति । अनुवृत्तिर्नामोदासीनेऽपि भगवति तदनुसरणम् । तत्प्रथमं पत्रप्रेषणेनात्मसमर्पणरूपा । ततो रुक्मिवधे प्रार्थनया वाक्समर्पणरूपा । तत इदानीं मूर्च्छया मनःसमर्पणरूपा । स्वाभिप्रायप्रतिपादकैर्वाक्यैश्च सर्वसमर्पणरूपा । ईश्वराद्भिन्नतया स्थितो संसारः 'ईशादपेतस्ये–' इत्युक्तत्र

वक्ष्यते। अत इयं भवमोचनी भवति। ननु किमाश्चर्यम्, भार्या करोत्येवेति चेत्। तत्राह **खलैः सुदुष्करेति**। दुष्टैरुक्मिप्रभृतिभिः कृत्वा सुतरां दुष्करा। **खला** दुष्टस्वभावाः मात्सर्येण परकार्यनाशकाः। किञ्च। अन्तरपि तव बाधकं न जातमित्याह **दुराशिष** इति। दुष्टा प्राकृती आशीर्यस्य तस्याः मदनुवृत्तिः सुतरामेव दुर्लभा। तत्राप्यसावेतादृशी। तत्रापि **असुंभरायाः** प्राणपोषिकायाः। तत्रापि **निकृतिजुषः** नरकसेविकायाः। **स्त्रियश्च**। अन्तःकरणप्राणेन्द्रियशरीरदोषाणां प्रत्येकसद्भावेऽपि दुर्लभा, समुदाये किं वक्तव्यमित्यर्थः। इमामेवोपपत्तिं हिशब्द आह॥ ५४॥ एतादृश्योऽन्या अपि बह्व्यः सन्तीति स्त्रीणामपि मध्ये तामुत्कृष्टत्वेन स्तौति **न त्वादृशीमि**ति। प्रणयिनी गृहिणी दुर्लभा। लौकिकधर्माभिनिविष्टा गृहिणी। तथाभूतापि परमप्रेमयुक्ता आत्मनोऽप्यधिकस्नेहवती दुर्लभा भवति। **गृहेषु** गृहस्थाश्रमेषु मम बहुरूपेषु। **न पश्यामीति** तादृश्या अभावे प्रमाणम्। **मानिनीति** मानसद्भावेन अन्यासक्तिनिवृत्तिः अपकीर्तिलेशस्याप्यसहनं च सूच्यते। कथमित्याकाङ्क्षायामुपपादयति। **यया** स्वविवाहकाले प्राप्तान् सर्वप्रकारेण शिशुपालादीनविगणय्य, **रहः** एकान्ते द्विजः प्रस्थापितः। नापि मया सह परिचयः, किन्तु उपश्रुता सद्भिः कृता कथा यस्य, सत्कथा वा। अहो आश्चर्ये। नह्येतादृशं क्वचिदपि लोके जातमिति। स्वयंवरे तु वरणं युक्तम्, नत्वेतादृशम्, अन्याः सर्वा एव लौकिकप्रकारेणानीताः। अनेन सम्बन्धप्रकारः त्वत्सदृशो नान्यासामिति निरूपितम्॥ ५५॥ अपराधसहनं च त्वत्सदृशं नान्यासामित्याह **भ्रातुर्विरूपकरणमि**ति। विवाहसमये रुक्मिणो ज्येष्ठभ्रातुर्**विरूपकरणं** मुण्डनम्, तत्रापि युधि निर्जितस्य। **प्रोद्वाहपर्वणी**त्युभयत्र सम्बध्यते। यद्यपीयं कथा प्रद्युम्नोत्पत्तेः पूर्वमेव, अन्यथा भगवान् अन्यभजनं न वदेत्। न हि पुत्रपौत्रादियुक्ता क्वचिदेवमुच्यते। प्रथमसङ्ग एवैवं भवति। सर्वथा हृदयानभिज्ञदशायां तस्या अपि पतनादिसम्भवः, न तु निरन्तरप्रवृत्तौ। अनिरुद्धविवाहे तु अक्षगोष्ठ्यां तद्वधः। तदुत्तराध्याये वक्ष्यते। तथापि यथा तया आर्षज्ञानेन सर्वं निरूपितम्, तथा भगवानपि तां तादृशीं मत्वा भाव्यर्थमपि सिद्धवत्कारेण निरूपयति। भूतप्रत्ययस्तु लङ्प्रयोगः। 'छन्दसि लुङ्लङ्लिटः' इति दश लकारार्थेषु भवन्तीति आवृत्त्या योजनायां द्वितीयवाक्ये भविष्यदर्थे ज्ञातव्यः। ताभ्यां समुत्थं दुःखमसह इत्यपि तथा। अस्मदयोगः अस्मत्सम्बन्धोः निर्वर्तिष्यत इति भयेन उत्पत्तिबलिष्ठभ्रातृसम्बन्धापेक्षयापि अस्मत्सम्बन्धाभावशङ्कापि महतीति सर्वोत्तमा त्वमेव। चकारान्मध्ये प्रद्युम्नविवाहादौ तदवगणनादि संगृह्यते। समुत्थं दुःखं सोढुमशक्यम्। बलभद्रोपदेशात् समुत्थमिति ज्ञायते। एकक्रियोपात्तत्वात् द्वितीयमपि तादृशमेव। तेन दुःखसहनेन **ते** त्वया वयं जिताः। तव वयमित्यपि। जयोऽप्यङ्गीकृतः। त्वदीयत्वं च॥ ५६॥

## श्रीसुबोधिनी-सारः

अपवर्गेण सह संपदो यस्मिस्तं मां प्राप्य प्रसाद्य ये संपदो विषयान् वांछन्ति न तु तासां संपदां पतिं माम् इति काका व्याख्येयम्। भट्टास्तु। तत्पतिं मां प्राप्य संपद एव ये वांछन्ति ते मंदभाग्याः ये विषया नृणां पुंसां मात्रात्मकात् विषयात्मकत्वान्निरयेऽपि नरके निकृष्टश्वसूकरोष्ट्रखरादियोनावपि स्युः अतो निरय एव सुसंगमः सुलभस्तेषां निरयेषु संगमः इति पाठः साधुः हे मानिनि॥ ५३॥ हे गृहेश्वरि त्वया भवमोचनी संसारनिवर्त्तिनो अनुवृत्तिरसकृन्मुहुः कृता दिष्ट्या भद्रम् खलैः पापिभिर्दुष्टैरभक्तैरसौ सुदुष्करा दुराशिषो दुरभिप्राया असुंभरायाः प्राणोपचयकर्त्र्या निकृतिं शाठ्यं जुषते इति तस्याः स्त्रिया नितरां सुदुष्करा "कुसृतिर्निकृतिः शाठ्यम्" इत्यमरः॥ ५४॥ गृहेष्वनेकेषु प्रणयिनीं प्रेमवतीं त्वादृशीं गृहिणीं त्वत्तुल्यां स्त्रीं नाहं पश्यामि तद्यथा हे मानिनि उपश्रुता नारदादिभिः सत्यः कथा यस्य तस्य मे षष्ठी चतुर्थ्यर्थे स्वविवाहसमये प्राप्तान् नृपान् अनादृत्य रहोहरः संदेशप्रापको द्विजो विप्रः प्रेषितः यया॥ ५५॥ युधि निर्जितस्य भ्रातुस्तव रुक्मिणो विरूपकरणम् एतेनानिरुद्धविवाहानंतरमेतद्वृत्तमिति ज्ञायताम्। प्रोद्वाहपर्वणि अनिरुद्धविवाहेऽक्षगोष्ठ्यां द्यूतसदसि तस्य भ्रातुस्तव रुक्मिणो वधं ततः समुत्थं दुःखं चासहः सोढवती अस्माभिरयोगो वियोगस्तस्माद्भीतया भयेन किमपि साध्वसाधु नैवाब्रवीस्त्वं तेन कारणेन ते त्वया वयं जिता स्मः॥ ५६॥

## गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

उक्तमेवोपपादयति—मामिति। 'आत्माभिमान एव मदन्तरायकरो महान् दोष इति स त्वया त्याज्य' इति सूचयन् संबोधयति—मानिनीति। अपवर्गो मोक्षस्तत्सहिताः संपदो यस्मात्तं तत्पतिं मोक्षादिपुरुषार्थचतुष्टयदातारं मां प्राप्य तपआदिभिः प्रसाद्य ये केवलं संपद एव वाञ्छन्ति, न माम्, ते मन्दभाग्या एव। ननु 'सम्पद्वतां लोके उत्कर्षदर्शनात् कथं तेषां मन्दभाग्यत्वम्' इत्याशङ्क्याह—ये इति। नृणां सम्बन्धिनो ये विषयास्तेषां मात्रात्मकत्वात् तामसाहङ्कारकार्यत्वात् ते निरये नरकतुल्ये श्वसूकरादिनीचयोनावपि सुलभा एव। तानेव यदि प्राप्तसंसारोद्धारसाधनमद्भजनाधिकारा मनुष्या अपि वाञ्छन्ति तर्हि तेषां निरयोऽपि सुसङ्गमः शोभनतयाऽभिमत एव। अतस्ते मन्दभाग्या एव, स्वेनैव स्वानर्थसम्पादनादित्यर्थः॥ ५३॥ 'त्वं तु कृतार्था, इत्याह— दिष्ट्येति। 'लोकप्रसिद्धमपि गृहसुखं तु तव सिद्धमेव' इति सूचयन् सम्बोधयति—गृहेश्वरीति। असकृत् निरन्तरं त्वया या मयि अनुवृत्तिः सेवा कृता सा दिष्ट्या। तया तव भद्रं मम च महान् सन्तोषो जात इत्यर्थः। तत्र हेतुं

सूचयन्ननुवृत्तिं विशिनष्टि—यतोऽसावनुवृत्तिः खलैर्दुर्जनैर्दुःखेनापि कर्तुमशक्या, दुराशिषो दुरभिप्रायायाः स्त्रियास्तु सुतरां सुदुष्करा। दुरभिप्रायमेव स्पष्टयति—निकृतिजुषः परोपकारं परप्रयोजनं चापश्यन्त्या असुंभरायाः केवलं स्वेन्द्रियतर्पणपरायाः इति। 'सुदुष्करत्वं कुत' इत्यपेक्षायां 'संसारबन्धनिवर्तकत्वात्' इति हेतुमाह—भवमोचनीति। सुकरत्वे तु सर्वमोक्षेण संसार एवोच्छिद्येतेत्याशयः॥ ५४॥ 'अन्यासक्तिनिरासांशे त्वभिमानोपि गुण एव' इति सूचयन् सम्बोधयति—मानिनीति। यया त्वया स्वविवाहकाले त्वां परिणेतुं प्राप्तान्नृपान् अविगणय्य अनादृत्य उपश्रुताः सत्यः कथा यस्य तस्य मे तं मां प्रति रहोहरो गुह्यसन्देशप्रापको द्विजः प्रस्थापितस्तादृशीं त्वादृशीं प्रणयिनीं प्रेमवतीं गृहिणीं भार्यां गृहेषु बह्वीषु भार्यासु मध्ये न पश्यामी-त्यन्वयः॥ ५५॥ अपि च युद्धे मया निर्जितस्य भ्रातुः रुक्मिणो विरूपकरणं तथा प्रोद्वाहपर्वणि अनिरुद्धविवाहोत्सवे अक्षगोष्ठ्यां द्यूतसभायां तस्य रुक्मिणो वधं च ततश्च कालान्तरेऽपि समुत्थं तत्स्मरणजं दुःखं चास्मदयोगभीत्या अस्माभिः सह वियोगभयेन असहः सोढवत्यसि किञ्चिदपि कटुवचनं नैवाब्रवीः नैवोक्तवती तेनैवमस्मासु स्नेहाधिकेनैव ते त्वया वयं सर्वे जिता वशीकृताः। बहुवचनं तु वसुदेवरामाद्यभिप्रायेणोक्तम्। यद्यप्यनिरुद्धविवाहरुक्मिवधादिसमनन्तराध्याये कथनीयं तथापि तस्य भूतत्वेन निर्देशादस्य रुक्मिणीपरिहासस्य तदानन्तर्यं ज्ञेयम्॥ ५६॥

## अन्वितार्थप्रकाशिका

मामिति॥ हे मानिनि! अपवर्गो मोक्षः तत्सहिताः सम्पदो यस्मात्तं तत्पतिं तासां सम्पदामपि योऽहमेव पतिः तं मां प्राप्य तपआदिभिः प्रसाद्य ये केवलं सम्पदो विषयान् एव वाञ्छन्ति नतु मामपवर्गं वा ते मन्दभाग्या एव ये विषयाः निरये नरकतुल्ये श्वसूकरादिनीचयोनावपि सुलभा एव तानेव यदि मोक्षयोग्या मनुष्या अपि वाञ्छन्ति तर्हि तेषां नृणां मात्रात्मकत्वात् विषयात्मकत्वात् निरयोऽपि सुसङ्गमः शोभनतयाऽभिमत एव। यद्वा। ये सम्पद्वाञ्छकाः ते निरये निकृष्टयोनावपि स्युः। तत्र हेतुः विषयवाञ्छकानां निरयोऽपि सुसङ्गमः निरयस्यापि मात्रात्मकत्वात्। अतस्ते मन्दभाग्या एव स्वेनैव स्वानर्थसम्पादनात्॥ ५३॥ दिष्ट्येति॥ हे गृहेश्वरि! त्वया असकृत् निरन्तरं मयि अनुवृत्तिः कृता तद्दिष्ट्या भद्रं जातं यतः असौ अनुवृत्तिः भवमोचनी खलैर्दुर्जनैर्दुष्करा दुःखेनापि कर्तुमशक्या निकृतिजुषः वञ्चनपरायाः अतिखलायाः। विकृतिमिति क्विबन्तयोगे द्वितीयाऽऽर्षी। तदर्हमिति निर्देशाद्वा असुम्भरायाः केवलं स्वेन्द्रियतर्पणपरायाः दुराशिषो दुरभिप्रायायाः स्त्रियास्तु। सर्वत्र शेषे षष्ठी। सुतरां सुदुष्करा॥ ५४॥ नेति॥ हे मानिनि! यया त्वया स्वविवाहकाले त्वां परिणेतुं प्राप्तान् नृपान् अविगणय्य अनादृत्य उपश्रुताः सत्यः कथा यस्य तस्य मे तं मां प्रति रहोहरो गुह्यसंदेशप्रापको द्विजः प्रस्थापितस्तादृशीं त्वादृशीं प्रणयिनीं प्रेमवतीं गृहिणीं भार्यां गृहे बह्वीषु भार्यासु मध्ये न पश्यामि॥ ५५॥ भ्रातुरिति॥ युधि मया निर्जितस्य भ्रातुः रुक्मिणो विरूपकरणं तथा प्रोद्वाहपर्वणि अनिरुद्धविवाहोत्सवे अक्षगोष्ठ्यां द्यूतसभायां तस्य रुक्मिणो वधं च ततश्च कालान्तरेऽपि समुत्थं तत्स्मरणजं दुःखं चास्मदयोगभीत्या अस्माभिः सह वियोगभयेन हेतुना असहः सोढवत्यसि। सहतेराधृषीयस्य णिजभावे रूपम्। तथा किञ्चिदपि कटुवचनं नैवाब्रवीर्नैवोक्तवती। यद्वा। किमपि दुःखं नैवाब्रवीः तेनैवमस्मासु स्नेहाधिक्येनैव ते त्वया वयं सर्वे जिता वशीकृताः। एतेन रुक्मिवधादिकं तत्परिहासात्पूर्वं ज्ञेयम्॥ ५६॥

## श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्

अपवर्गयुक्ताः संपदो यस्मिंस्तं मां। प्राप्य संपद एव केवलं वांछति नतु तत्पतिं मां। अतस्ते मंदभाग्याः यतो नृणां ये विषयास्ते निरयेपि निरयसदृशश्वशूकरादिदेहेपि संति॥ मात्रात्मकत्वात् शब्दादिप्राकृतविषयासक्तमानसत्वात् तेषां निरयः सुसंगमः सुखेन संगमः प्राप्तिर्यस्य तथाभूतः स्यात्॥ ५३॥ रुक्मिण्या अप्रतिहत प्रेमप्रशंसन्नाह दिष्ट्येति हे गृहेश्वरि॥ खलैः॥ सुदुष्करा भवमोचनी॥ मयि यानुवृत्तिः सा त्वया। असकृत्। पुनः पुनः कृता एतद्दिष्ट्या समीचीनं जातं॥ दुराशिषो दुष्टमनोरथाया असुंभरायाः इन्द्रियपोषणपरायाः निकृतिजुषः प्रतारणयुक्तिपरायाः स्त्रियाः असौमदनुवृत्तिः सुतरां सुदुष्करा॥ ५४॥ यया त्वया। उपश्रुता सत्कथा यस्य तस्य॥ मे मम॥ समीपे॥ रहोहरः॥ तव गुप्तपत्रिकाहरो द्विजः प्रस्थापितः प्रेषितः। अतो त्वादृशीं गृहिणीं अहं न पश्यामि॥ ५५॥ प्रोद्वाहपर्वणि अनिरुद्धोद्वाहे सति अक्षगोष्ठ्यां राज्ञां द्यूतरमणसंसदि॥ तद्वधं रुक्मिवधं पुनः पुनः स्मृत्वा॥ समुत्थं दुःखं मद्वियोगभीत्या त्वं॥ असहः तस्य सहनमकरोरित्यर्थः॥ किमपि नैवाब्रवीः तेन वयं जिताः॥ स्म अयं प्रेमकलहः॥ प्रकरणानुसारे काले बोध्यः॥ ५६॥

## भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

मायामोहितत्वमेवोपपादयति। मां प्राप्येति हे मानिनि, अपवर्गो मोक्षः स एव संपल्लक्ष्मीर्यस्मात्तं, यद्वा। अपवर्गेण मोक्षेण सह सम्पदो यस्मिंस्तं तासामपवर्गेतरसंपदामपि पतिस्तं, मां प्राप्य प्रसाद्य, तपआदिभिरिति शेषः। सम्पदः अपवर्गेतरकामान् एव, ये जनाः, वाञ्छन्ति। ते जनाः, मन्दभाग्याः, कुतः। यद्यस्मात्, ये नृणां विषयाः, ते निरये नरकेऽपि,

स्युः, कुतः शब्दादिविषयसुखानां केवलदुःखात्मकनरके संभवस्तत्राह। मात्रात्मकत्वात्तेषां सुखलेशात्मकत्वात्, यद्वा। ये नृणां विषयास्ते निरये निरयप्रायनिकृष्टयोनावपि स्युः मात्रासु विषयेषु आत्मा येषां तत्त्वात्, तेषां निरयः, सुसंगमः शोभनसुखतया प्रतीयमानः दंपत्योः संगमो नरकप्राय एव, तदासक्तत्वात्ते मन्दभाग्या इति भावः॥ ५३॥ पुनरप्यभिनन्दति। दिष्ट्येति। हे गृहेश्वरि, त्वया, मयि असकृत्, भवमोचनी अनुवृत्तिः, कृता। दिष्ट्या तेन मम महानानन्द इत्यर्थः। अनुवृत्तिं विशिनष्टि। असावनुवृत्तिः, खलैर्दुर्जनैः, सुदुष्करा दुःखेनापि कर्त्तुमशक्या। दुराशिषो दुरभिप्रायायाः, अत एव असुंभराया इन्द्रियतर्पणपरायाः, निकृतिजुषः वञ्चनपरायाः स्त्रियाः, सुतरां दुष्करा हि॥५४॥ नेति। हे मानिनि, गृहेषु दारेषु, त्वादृशीं प्रणयिनीं प्रेमवतीं, गृहिणीं स्त्रियं, न पश्यामि। तत्र निदर्शनं वदंस्तां विशिनष्टि। यया त्वया, स्वविवाहकाले प्राप्तान् नृपान्, अवगणय्य, अनादृत्य, उपश्रुता सती कथा यस्य तस्य, मे मम, मह्यमित्यर्थः। रहोहरो रहस्यवार्त्ताहर्त्ता, द्विजः प्रस्थापितः सम्प्रेषितः। अतस्त्वादृशीं भार्यां न पश्यामीत्यर्थः॥ ५५॥ किं च त्वद्गुणैरेवाहं वशीकृत इत्याह। भ्रातुरिति। युधि युद्धे, मया निर्जितस्य, भ्रातुः रुक्मिणः, विरूपकरणं, तथा प्रोद्वाहपर्वणि अनिरुद्धविवाहोत्सवे, तत्रापि अक्षगोष्ठ्यां द्यूते, तद्वधं रुक्मिणो वधं, इदं समनन्तराध्याये स्फुटीभविष्यति। समुत्थं तद्वधश्रवणाज्जातं दुःखं च, अस्मदयोगभीत्या अस्मद्विश्लेषहेतुव भीत्या, असहः सोढवत्यसि। किमपि न अब्रवीः नोक्तवत्यसि। तेनैवंविधगुणजातेन, ते त्वया, वयं जिताः वशीकृता बभूविम एव। यद्यप्यस्य प्रणयकलहस्यानिरुद्धविवाहानन्तर्यं ज्ञायते, तथाप्यत्र व्युत्क्रमेणोक्तिः प्रश्नानुगुण्येनेत्यवगन्तव्यम्॥ ५६॥

**कृष्णप्रिया**

हे मानिनी रुक्मिणी देवी! मैं अपवर्ग, मोक्ष और सर्वसम्पत्तियों का स्वामी हूँ फिर यह न जानकर जो लोग केवल मुझसे लौकिक सुखों की ही कामना करते हैं, मेरी प्रेममयी भक्ति की अभिलाषा नहीं करते हैं वे लोक मन्दभागी ही हैं कारण कि जो भौतिक सुख-सम्पत्ति है वह तो नरक में क्षुद्र सुखों में और क्षुद्र पशुपक्षियों की योनि में भी सुलभ है। ये सर्व सुख इन्द्रियों के ही विषय हैं। जो इन सुखों में आसक्त है उनके लिये नरक सुलभ है॥५३॥ हे गृहदेवो! हे स्वामिनी! अत्यन्त आनन्द की बात है कि आपने सतत संसार बन्धनों से मुक्त करने वाली अहैतुकी प्रेमलक्षणा सेवा-भक्ति की है जो भव मोक्षदायिनी है। यह क्रिया यह भक्ति खलों के लिये सर्वथा अशक्य है। जिन नारियों के अन्तःकरण कलुषित भावों से भरे हुए हैं और अपने भौतिक विषयों की तृप्ति में ही जो लगे रहे हैं पुनः इन इच्छाओं की प्राप्ति के लिये छल कपट में डूबे हैं; ऐसे विषयी जीवों के लिये तो सर्वथा दुष्कर है॥ ५४॥ हे सम्माननीये देवि! मेरा विपुल परिवार है, सर्व भक्त है, फिर भी आपके समान स्नेह करने वाली गृहिणी नजरों में नहीं आती। प्रिये! आपने कभी देखा न था, मुनिवरों से केवल सुना था फिर भी बड़े बड़े वीर नर आपकी उत्कण्ठा से आये थे, व्याह चाहते थे, लेकिन सबकी उपेक्षा करके विवाहकाल में आपने अनुराग से महाराज श्रीसुदेव जी को गुप्त संदेश लेकर भेजे थे॥ ५५॥ प्रिये! कहाँ तक कहूँ! विवाहप्रसङ्ग में युद्ध के समय विजीत आपके भ्राता को बांध कर मैंने उसको कुरुप बनाया। अनिरुद्ध के विवाह अवसर पर चौसर खेलने में बड़े भाई श्री बलभद्र जी ने उसको मार दिया! यह दुःख असाधारण था लेकिन आपका स्नेह और सहिष्णु को धन्यवाद है कि हमारे साथ वियोग न हो, मनोभङ्ग न हो, वैमनस्य न हो, यह समझकर सारा दुःख चुपचाप सह लिया और कभी मुझे यह बात भी नहीं कही। इस स्नेह-सौजन्य से मैं वश हूँ॥ ५६॥

**दूतस्त्वयाऽऽत्मलभने [1]सुविविक्तमन्त्रः प्रस्थापितो मयि चिरायति शून्यमेतत्।**
**मत्वाजिहास[2] इदमङ्गमनन्ययोग्यं तिष्ठे[3]त तत्त्वयि वयं प्रतिनन्दयामः॥ ५७॥**

**श्रीशुक उवाच**

**एवं सौरतसंलापैर्भगवान्देवकीसुतः[4]। स्वरतो रमया रेमे नरलोकं विडम्बयन्॥ ५८॥**
**[5]अथान्यासामपि [6]विभुर्गृहेषु गृहवानिव। आस्थितो गृहमेधीयान् धर्माल्लोकगुरुर्हरिः[7]॥ ५९॥**

**इति श्रीमद्भागवते महापुराणे[8] दशमस्कन्धे कृष्णरुक्मिणीसंवादो नाम [9]षष्टितमोऽध्यायः॥ ६०॥**

---

१. विभक्त–वीर.। २. जिहासुरिद–विज.। ३. तिष्ठेस्ततत्त्व–विज.। ४. देवकीसुतः–वीर. विज.; जगदीश्वरः–श्रीधर. वंशी. जीव.। ५. तथा–श्रीधर. वंशी. जीव. वीर. विज. विश्व.। ६. स्त्रीणां–वीर. विज. ७. जुषन्–विज.। ८. पारमहंस्यां संहितायां दमस्कन्धे उत्तरार्धे–प्रा. पा.। ९. पञ्चसप्ततितमो–विज.।

### कर्दमक्षमा

अन्वयः—आत्मनः, लभने, त्वया, सुविविक्तः, मन्त्रः, प्रस्थापितः, मयि, चिरायति, सति, एतत्, विश्वं, शून्यं, मत्वा, अनन्ययोग्यं, इदं, जिहासुः, इति, निश्चितवती, तत्, त्वयि, एव, तिष्ठेत, इति, वयं, प्रतिनन्दयाम ॥ ५७ ॥ एवं, भगवान्, जगदीश्वरः, स्वरतः, नरलोकं, विडम्बयन्, सौरतसंलापैः, रमया, सह, रेमे ॥ ५८ ॥ यथा, रुक्मिणी, तथाऽन्यासामपि, गृहेषु, आस्थितः, विभुः, लोकगुरुर्हरिः, गृहमेधीयान्, अनुतिष्ठन्, ताभिः, सह, रेमे ॥ ५९ ॥

इति श्रीमद्भागवते दशमस्कन्धे निरोधलीलायामुत्तरार्द्धे षष्टितमोऽध्यायाः अन्वयाः समाप्ताः ॥ ६० ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

अपि च दूत इति आत्मलभने मत्प्राप्त्यर्थम् । मयि चिरायति श्वोभाविनि विवाहे आगंतव्यमिति कृते समये कथंचिदप्राप्तवति सत्येतद्विश्वं शून्यं मत्वेदमनन्ययोग्यमंगं जिहासे त्यक्तुमिच्छामि त्यक्ष्यामीत्येवं दूतः प्रस्थापितः तथाह्युक्तं त्वया "यर्ह्यंबुजाक्ष न लभेय भवत्प्रसादं जह्यामसून् व्रतकृशाञ्छतजन्मभिः स्यात्" इति । यद्वा अजिहास इतिच्छेदः । त्यक्तुमैच्छ इत्यर्थः । तत्तव कर्म त्वय्येव तिष्ठेत् । न तत्प्रतिकर्तुं शक्यमित्यर्थः । किंतु केवलं त्वां प्रति नन्दयामो हर्षयाम इति ॥ ५७ ॥ सौरतसंलापैः सुरतनर्मगोष्ठीभिः ॥ ५८–५९ ॥

इति श्रीमद्भागवते दशमस्कन्धे उत्तरार्द्धे श्रीध० टीकायां षष्टितमोऽध्यायः ॥ ६० ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

अन्यदाह–अपि चेति । सुविविक्तमन्त्रः सुष्ठु प्रकाशितरहोवचनः । जिहास इति तङार्षः । आर्षत्वाश्रयणस्यागतिकगतिकत्वादाह–यद्वेति । इत्यर्थ इति–सन्नंताज्जहातेर्लङो मध्यमपुरुषैकवचनमिति ध्येयम् । तत् मां विनाऽन्यत्यागरूपम् । इत्यर्थ इति–अपरिचितेऽतीवानुरागोऽप्रतिकार्यो भवतीति भावः । पुनः पूर्वानुरागवैशिष्ट्यं स्मृत्वाह–दूत इति । अस्यायमेवार्थः–प्रस्थापितो मत्पार्श्वं प्रेषितः । कीदृशः सुष्ठु विविक्तो निर्णिक्तो मन्त्रो गुप्ता युक्तिर्यत्र सः । ततश्च मयि चिरायति तदातिथ्यत्वत्संदेशश्रवणावेशवर्त्मदैर्घ्यादिभिः किंचिद्विलंबे सति एतत् पितृभ्रात्रादिबन्धुयुक्तमपि विश्वं शून्यं मत्वा कुत्राप्यालंबनं न लब्ध्वेदं सर्वोत्कृष्टमप्यंगं शरीरमजिहासस्त्यक्तुमैच्छः 'दुर्भगाया न मेधाता' इत्यादिचिंतया भवत्याऽऽशाबन्धच्छेदावगमात् 'यर्ह्यंबुजाक्ष न लभेय भवत्प्रसादम्' इत्यादिपूर्वोक्तस्वारस्याच्च । अजिहास इत्यत्र हेतुः अनन्ययोग्यमन्यस्मै समर्पणाऽयोग्यमित्यर्थः । प्रतिनन्दयामः हर्षयन्तीं त्वां हर्षयामः ॥ ५७ ॥ रुक्मिण्या गुणान्वक्तुमशक्यान्मत्वाह शुकः–एवमिति । स्वरत आत्मारामोपि । रमया साक्षाल्लक्ष्म्या । विडंबयन्ननुकुर्वन् । रुक्मिणीमाधवौ वन्दे ययोः कलहसन्निभा । वाग्वैदग्धी मिथस्तोत्रतात्पर्याश्चर्यता मता । एवमिति अन्येपि तादृशा बहवो विलासाः सूचिताः । स्वरतो रमणस्वरूपशक्तित्वेन स्वरमणयोग्यया रुक्मिण्या सह रेमे । तस्मिन्नमणेऽपि विशेषः—नरेति । क्रीडालोभेनैश्वर्यांशं गुणीकृत्य तादृशलीलया नरलोकमनुकुर्वन्नपि परममाधुर्येण तमपि हीनोपमानं कुर्वन्नित्यर्थः । यतो भगवानपि देवकीसुतस्तथाविर्भावेणैव प्रारब्धलील इत्यर्थः ॥ ५८ ॥ इदमन्यत्रातिदिशति–तथेति । यथा रुक्मिण्या रेमे तथेत्यर्थः । अथातो हेतोर्विभुरपि स्वयमेवैकः सर्वाणि गृहाणि व्याप्नुवन्नित्यर्थः । एतच्चाग्रे व्यक्तं भावि । गृहवानिवेति–यथाऽन्यो गृही तथेत्यर्थः । गृहमेधीयान् गृहस्थसम्बन्धिनस्तादृशप्रियाप्रेममयान्वैदिकांश्च धर्मानास्थित आचरदित्यर्थः । यतो लोकगुरुस्तस्मादेव ते धर्माः प्रवर्तंत इत्यर्थः । यतो हरिस्तेन शीलेन सर्वेषां मनोहर इत्यर्थः । यद्वा–आश्रितः सन्रेमे इति पूर्वक्रिययैवान्वयः । अतो गृहधर्मानुष्ठानेऽपि क्रीडार्थमेवेति ॥ ५९ ॥

इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे दशमस्कन्धोत्तरार्धे षष्टितमोऽध्यायः ॥ ६० ॥

### श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी

पुनः पूर्वानुरागवैशिष्ट्यं स्मृत्वाऽऽह—दूत इति । अस्यायमेवार्थः आत्मलभने मत्प्राप्त्यर्थं त्वया दूतः प्रस्थापितः स च सुविविक्तमन्त्रः सुष्ठु निर्णिक्ता गुप्तयुक्तिर्यत्र सः ततश्च मयि चिरायति तदातिथ्यत्वत्सन्देशश्रवणावेशवर्त्मदैर्घ्यादिभिः किञ्चिद्विलम्बमाने सति एतत् पितृमात्रादिबन्धुयुक्तमपि विश्वं शून्यं मत्वा कुत्राप्यवलम्बनं न लब्ध्वेदं सर्वोत्कृष्टमप्यङ्गम् अजिहासः त्यक्तुमैच्छः । "दुर्भगाया न मे धाता" इत्यादि चिन्तया भवत्या आशाबन्धच्छेदावगमात् "यर्ह्यम्बुजाक्ष न लभेय भवत्प्रसादम्" इत्यादि पूर्वोक्तस्वारस्याच्च अजिहास इत्यत्र हेतुरनन्ययोग्यम् । अन्यस्मै समर्पणायोग्यमित्यर्थः । प्रतिनन्दयामः केवलमनुमोदामहे ॥ ५७ ॥

रुक्मिणीमाधवौ वन्दे ययोः कलहसन्निभा । वाग्वैदग्धी मिथस्तोत्रतात्पर्याश्चर्य्यता मता ॥

एवमित्यन्येऽपि तादशा बहवो विलासाः सूचिताः स्वरतो रमया स्वरूपशक्तित्वेन स्वरमणयोग्यया रुक्मिण्या सह रेमे तस्मिन् रमणेऽपि विशेषः न वेति क्रीडालोभेनैश्वर्य्यांशं गुणीकृत्य तादृशलीलया नरलोकमनुकुर्वन्नपि परममाधुर्य्येण तमपि

हीनोपमानं कुर्वन्नित्यर्थः। यतो भगवानपि देवकीसुतस्तथाविर्भावितेनैव प्रारब्धलील इत्यर्थः॥ ५८॥ अथ अतो हेतोर्विभुरपि स्वयमेवैकः सर्व्वाणि गृहाणि व्याप्नुवन्नित्यर्थः एतच्चाग्रे व्यक्तं भावि गृहवानिवेति यथाऽन्यो गृही तथैवेत्यर्थः। गृहमेधीयान् गृहस्थसम्बन्धिनस्तादृशप्रियाप्रेममयान् वैदिकांश्च धर्म्मानास्थितः आचरदित्यर्थः। यतो लोकगुरुस्तस्मादेव ते धर्म्माः प्रवर्त्तन्त इत्यर्थः। यद्वा यतो हरिस्तेन शीलेन सर्वेषां मनोहर इत्यर्थः। आश्रितस्सन् रेमे इति पूर्व्वक्रियैवान्वयः इति पूर्वधर्म्मानुष्ठानमपि क्रीडार्थमेवेति॥ ५९॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिण्यां षष्टितमोऽध्यायः॥ ६०॥

## श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी

सुविविक्तो महारहस्यः परमविचित्रो वा मन्त्रो गुप्तवाक्यं यस्मिन् सः, इत्यस्य ज्ञाततया परमनिभृतत्वेन प्रेमविशेषः सूचितः। एतत् पितृमात्रादिबन्धुवर्गयुक्तमपि विश्वं जिहास। इत्यत्र हेतुः—अनन्ययोग्यमिति। अन्यस्मै समर्पणायोग्यत्वादित्यर्थः। प्रतिनन्दयामस्त्वया क्रियमाणस्य महानन्दस्य प्रतिच्छायारूपेण कथञ्चिन्नन्दयामः, नन्दयितुं यताम इति।

तौ विदग्धवरौ वन्दे ययोः प्रेमोक्तयो मिथः। स्वसंवेद्याः परैर्बोध्या न स्युर्भक्तिं विना ययोः॥

इत्यन्येऽपि तादृशा बहवः सूचिताः॥ ५७॥ स्वरतोऽपि रमया श्रीरुक्मिण्या सह रेमे, यतो भगवान् साक्षादीश्वरो देवक्याः सुतः क्रीडार्थं तस्यां जात इत्यर्थः। अतएव नरलोकं विडम्बयन् मनुष्यक्रीडामनुकुर्व्वन्, किंवा उतयोरैक्यात् स्थिरीकुर्व्वन्नित्यर्थः; यद्वा, निजसुखविलासोद्रेकेण तादृशसुखादिरहितं नरलोकं तुच्छीकुर्व्वन्; यद्वा, नरलोकं विडम्बयन्निति लोकदृष्ट्या रतेर्लौकिकत्वम्, भगवानिति त्वैश्वर्य्यमित्येवमेकत्रैव लौकिकत्वैश्वर्य्ययोयोगेन पूर्व्ववदतिमाधुरी सूचिता। तत्रैव हेतुर्देवकीसुत इति॥ ५८॥ अथ मांगल्ये; यद्वा, सर्व्वप्रेष्ठतमया श्रीरुक्मिण्या सह रतेरनन्तरम्। विभुरिति स्वयमेवैकः सर्व्वाणि गृहाणि व्याप्नुवन्नित्यर्थः। एतच्चाग्रे श्रीनारददृष्टैश्वर्य्याध्याये व्यक्तं भावि। गृहवानिवेति—यथान्यो गृही तथैवेत्यर्थः। गृहमेधीयान् गृहस्थसम्बन्धिनो धर्म्मानास्थित आचरदित्यर्थः। किमर्थम्? लोकगुरुलोकशिक्षार्थमित्यर्थः। यतो हरिः सर्व्वलोकदुःखहर्त्तेति; यद्वा, अन्यगृहस्थाशक्यानन्ताद्भुतधर्म्माचरणेन सर्व्वेषां मनो हरन्निति भावः। इति तेषामसाधारण्यमुक्तम्; यद्वा, आस्थितः सन् रेम इति पूर्व्वक्रिययैवान्वयः। इति गृहधर्म्मानुष्ठानमपि क्रीडार्थमेवेत्यर्थः। एवं पितृत्वेन गृहावानिवेत्यनेन च पूर्व्ववदतिमाधुरी ज्ञेया।

श्रीधरस्वामिचरणैर्निपीतममृतं मुदा। तेषां प्रसादमुच्छिष्टं किञ्चित् सञ्चिनुमो वयम्॥ ५९॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे उत्तरार्द्धे श्री श्रील-सनातन-गोस्वामिपाद-कृतायां श्रीबृहद्वैष्णवतोषण्यां श्रीदशम-टिप्पण्यां षष्टितमोऽध्यायः॥ ६०॥

## श्रीसुदर्शनसूरिकृतशुकपक्षीयम्

इति श्रीमद्भागवतव्याख्याने दशमस्कन्धे श्रीसुदर्शनसूरिकृतशुकपक्षीये षष्टितमोऽध्यायः॥ ६०॥

## श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका

किञ्च, दूत इति! आत्मलभने मत्प्राप्त्यर्थं सुविभक्तः यर्ह्यम्बुजाक्ष न लभेय तव प्रसादं जह्याम्यसून् व्रतकृशान् शतजन्मभिः स्याम्" इत्येवं विविच्य ज्ञापितः मन्त्रो यस्य सः दूतः प्रेषितः तदाऽपि चिरायति ईषद्विलम्बं कुर्वति सति एतद्विश्वं शून्यं मत्वा इदमनन्यार्हमङ्गं शरीरं जिहासे हातुमिच्छाभीत्येवं भवती तिष्ठेत स्थितवतीति यत्त्वया केवलं प्रतिनन्दयामः प्रतिकर्त्तुमशक्नुवन्तः केवलं हर्षयाम इत्यर्थः। यद्वा जिहासे इत्येवं विभक्तमन्त्रो दूतः प्रस्थापित इति सम्बन्धः॥ ५७॥ एवमिति। नरलोकं विडम्बयन्ननुकुर्वन् हेतुगर्भमिदं तत्त्वादित्थं सौरतसल्लापैः सुरतनर्म्मगोष्ठीभिः स्वरतः आत्मारामोपि रमया लक्ष्म्यवतारभूतया रुक्मिण्या सह रेमे॥ ५८॥ तथेति। अन्यासामपि पत्नीनां गृहेषु गृहाश्रमीव गृहस्थाश्रमयुक्तान् धर्म्मानास्थित सन्नेव रमे॥ ५९॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायां षष्टितमोऽध्यायः॥ ६०॥

## श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

आत्मलभने स्वलाभार्थं सुष्ठु विविक्तमन्त्रः स्पष्टीकृतरहोवचनः चिरायति विलम्बनं कुर्वति सति एतज्जगच्छून्यम् असदमङ्गलम्मत्वाऽनन्ययोग्यम् अन्यपुरुषसंयोगायोग्यमिदम् अङ्गं जिहासुस्तिष्ठेरिति यावत्॥ ५७॥ देव्या गुणा ब्रह्मायुषापि वक्तुं न शक्या इति सङ्क्षिपतीत्याह—श्रीशुक इति। सौरतसंलापैः सुरतसम्बन्धिमिथोभाषणैः नरलोकं मनुष्यजनं विडम्बयन्

अनुकुर्वन् ॥ ५८ ॥ इदमन्यत्रातिदिशति—तथेति । गृहवान् गृहस्थ इव आस्थितः उद्गतश्च प्रकाशितः "आङ् उद्गमने ॥१–४०॥ इति सूत्रम् ॥ ५९ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्यां षष्टितमोऽध्यायः ॥ ६० ॥
( श्रीविजयध्वजतीर्थरीत्या पञ्चसप्ततितमः ) ॥ ६० ॥

### श्रीमज्जीवगोस्वामिकृतः बृहत्क्रमसन्दर्भः

एवमित्यादि । सुरतं प्रेम, तदर्हः संलापस्तेन नरलोकमनुकुर्वन् रमया रुक्मिणीरूपया लक्ष्म्या रेमे । कीदृशः ? स्मरतः स्वे निजैश्वर्ये रतः ॥ ५९ ॥

इति श्रीदशमे श्रीबृहत्क्रमसन्दर्भे षष्टितमोऽध्यायः ॥ ६० ॥

### श्रीनाथचक्रवर्तिपादविरचिता चैतन्यमतमञ्जूषा

एवमित्यादि । सुरतं प्रेम तदर्हः संलापः सौरतसंलापः तैर्नरलोकं विडम्बयन् नरादिलोकं तिरस्कुर्वन्नलौकिको भूत्वेत्यर्थः । अथवा नरलोकमनुकुर्वन् सुरतोऽपि मनुष्यलीलामनुकुर्वन् ॥ ५९ ॥

इति षष्टितमोऽध्यायः ॥ ६० ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

आत्मनो मम लभने लभनाय प्रापणार्थं ततश्च मयि चिरायति विलम्बमाने सति एतद्विश्वं शून्यं मत्वा इदमङ्गम् अनन्ययोग्यम् अजिहासः त्वं त्यक्तुमैच्छः तत्तव कर्म त्वय्येव तिष्ठेत न तत्प्रतिकर्तुं शक्यमित्यर्थः । किन्तु वयं प्रतिनन्दयामः हर्षयन्ती त्वां प्रति हर्षयामः ॥ ५७ ॥ सौरतसँल्लापैः सुरतसँल्लापैः सुरतसम्बन्धिर्नर्मसम्वादैः स्वरत आत्मारामः अत एव रमया आत्मभूतया रेमे विडम्बयन् स्वयं नरलीलोपि स्वसुखदर्शनयातिरस्कुर्वन् तं हीनोपमानं कुर्वन्नित्यर्थः ॥ ५८–५९ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् । दशमेऽस्मिन् षष्टितमः सङ्गतस्सङ्गतस्सताम् ॥ ६० ॥

### गूढार्थदीपिनी

आत्मलभने मत्प्राप्त्यर्थम् । सुष्ठु विविक्तो विज्ञापितो मन्त्रो गुप्तवृत्तं यस्य सः । मयि चिरायति विलम्बमाने सति एतद्विश्वं शून्यं मत्वा इदमङ्गं जिहासे त्यक्तुमिच्छामि त्यक्ष्यामीत्यर्थः । यद्वा । अजिहासः त्यक्तुमैच्छः । सन्नन्ताज्जहातेर्लङि मध्यमपुरुषैक वचनम् । तत् तव कर्म त्वय्येव तिष्ठेत न तत्प्रतिकर्तुमुपकर्तुं शक्यम् । वयं तु केवलं साधु साधु कृत्वा त्वामभिनन्दयामः । अनन्ययोग्यम् अन्यस्मै समर्पणायोग्यम् ॥ ५७ ॥ सौरतसंलापैः सुरतसम्बन्धिनर्मोक्तिभिः । स्वरत आत्मारामोऽपि । विडम्बयन् अनुकुर्वन् रमया रेमे ॥ ५८ ॥ गृहमेधीयान् गृहस्थसम्बन्धिनो धर्मानाश्रितः सन् रेमे इति पूर्वेणैवान्वयः ॥ ५९ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां दशमस्कन्धोत्तरार्द्धे गूढार्थदीपिन्यां षष्टितमोऽध्यायः ॥ ६० ॥

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः

आत्मलभने मत्प्राप्त्यर्थं ततश्च मयि चिरायति विलम्बमाने इदं विश्वं शून्यं मत्वा इदमङ्गमनन्ययोग्यं स्वासाधारणम् अजिहासे त्यक्तुमैच्छ इत्यर्थः । तत् तव चेष्टितं त्वय्येव तिष्ठेत न तत्प्रतिकर्तुं शक्यमित्यर्थः । किन्तु केवलं त्वां प्रतिनन्दयामः हर्षयामः ॥ ५७ ॥ जगदीश्वरः जगद्यात्रानिर्वाहकः नरलोकं विडम्बयन् अनुकुर्वन् एवम्भूतैः सौरतसंलापैः सुरतकर्मगोष्ठीभिः स्वरतः स्वसम्पन्नोपि रमया स्वयं लक्ष्म्या सह रेमे ॥ ५८ ॥ अन्यासामपि सत्यभामादीनां गृहेषु तथा रेमे ॥ ५९ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धीये श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे षष्टितमोऽध्यायार्थप्रकाशः ॥ ६० ॥

### श्रीसत्यधर्मकृता श्रीभागवतटिप्पणी

आत्मलाभेन स्वलाभार्थं स्वामित्वेन मम लाभार्थं वा सुविविक्तमन्त्रोऽतिगुप्तभाषणहर्ता यो दूतस्तत्त्वेन कृतो द्विजः प्रस्थापितस्तेन सहागति मयि च किञ्चिच्चिरायति विलम्बमलम्बमान इव जाते । अनेन प्रस्थापितो द्विज इति पूर्वोक्तेः पौनरुक्त्यमिति शङ्का परास्ता । एतज्जगच्छून्यं तत्प्रायं मत्वा । अनन्ययोग्यमितरायोग्यमनन्यः प्रधानोऽहं तन्मात्रयोग्यमिति वा । अङ्गं जहसे त्यक्तुमिच्छामिति यत्तत् । यर्ह्यम्बुजाक्ष न लभेयं भवत्प्रसादं जह्याम्यसून्व्रतकृशा बहुजन्मभिः स्यामिति त्वत्कृतकामनाद्ब्राह्मणदत्तादेव ज्ञायते । त्वय्येव तिष्ठेत् तत्प्रतिकरणे न वयं शक्ताः किन्तु कं तु मातुरेतत्कृत्यमस्माकमित्याह । वयं प्रतिनन्दयाम इति । केवलं तुष्याम इत्यर्थः । जिहासुस्तिष्ठेस्तत इति पाठे इदमङ्गं जिहासुस्तिष्ठेरिति यावदिति पूर्वटीकोक्तोऽ-

र्थोऽवधेयः। प्रतिनन्दयाम इत्यनेन पठनादिभिरिदमङ्गं। एतज्ज्ञानं यत्र तिष्ठेत्तानधिकारवतोऽपि नन्दयाम इति ध्वनयति। महाकथायास्तत्फलालापं विना समापनायोगात् ॥ ५९ ॥ कियत्पर्यंतं विडम्बनं गुणाश्चैकत्रेतरा मता मयि च त्वदादिसर्वा मताः साकल्येनेति हरिरुपसंहरतीतीरयति। एवमिति। सुतसम्बन्धिनः सँल्लापैस्तैर्नरलोकं विडम्बयन्रमया स्वरतोऽपि रेमे। अनेनानुकम्पैव रमणकारणं नान्यदिति ध्वनयति ॥ ६० ॥ तथा रुक्मिणीवदन्यासां स्त्रीणां गृहेष्वपि गृहमेधियान्धर्मान्गृहवानिव लोकगुरुर्जुषन्सेवमान आस्थितोऽतिष्ठत् ॥ ६१ ॥

इति श्रीभागवतटिप्पण्यां सत्यधर्मकृतायां दशम उत्तरार्धे पञ्चसप्ततितमोऽध्यायः ॥ १०-७५ ॥

## श्रीमद्वल्लभाचार्य्यकृता सुबोधिनी

अन्यदेकं तव चरित्रं अनन्यदपि अनुपमेयमपि जयाद्यङ्गीकारेऽप्यप्रतीकार्यमपीत्याह **दूत** इति। **आत्मलभने** कृष्णप्राप्त्यर्थम्। सुष्ठु विविक्तो मन्त्रो यस्य तादृशो द्विजः प्रस्थापितः। अनेन मयि सिद्धवद्विश्वासः प्रथमत एव कृत इति निरूपितम्। ततो मयि **चिरायति** विलम्बमाने एतज्जगच्छून्यमेव मत्वा, इदमङ्गं शरीरमनन्ययोग्यं केवलं भगवदेकभोग्यं जिहास इति मत्वा द्विजः प्रस्थापित इति पूर्वेणैव सम्बन्धः। प्रस्थापनसमय एवैते पक्षा विचारिताः। इति एतत्त्वय्येव तिष्ठेत। विध्यर्थोऽयम्। नास्य प्रतीकारः सम्भवतीति। अप्रयोजकत्वेन तथात्वमाशङ्क्य निराकरोति **तत्त्वय्येव तिष्ठेत, वयं तु प्रतिनन्दयाम** इति। अस्मिन्नर्थे वयं ऋणिन इति भावः ॥ ५७ ॥ एवं सान्त्वनं कृतमुपसंहरन् अन्यास्वप्येवंभावमतिदिशत्येवमिति द्वाभ्याम्। सौरताः सुरतयोग्याः संलापाः, येन सुरतं वर्धते। **भगवानि**ति लीलायां योग्यता। **देवकीसुत** इति स्त्रीणां प्रियार्थे भक्तहितैकसाधकत्वात् तथा करोतीति सूचितम्। **स्वरतोऽपि रमया** लक्ष्म्या रुक्मिण्या सह रेमे। न तु वाक्यैरेव निवृत्तव्यापारः। परब्रह्मणस्तदयुक्तमाशङ्क्य लीलानुकरणमाह **नरलोकं विडम्बयन्नि**ति। अन्यथा नरोऽयमिति लोकानां प्रतीतिर्न स्यात्। अतिदिशति **अथान्यासामपी**ति। अयमेव न तास्वपि प्रकारः, किन्त्वतिरिक्तस्तत्तद्योग्यः। तदाह **अथ**शब्दः। **अन्यासामपि** रुक्मिणीव्यतिरिक्तानां गृहेषु **गृहवानिव** प्राकृत इव तदनुकरणं कुर्वन् **गृहमेधीयान्** धर्मानास्थितः, लौकिकान् वैदिकांश्च। विडम्बनार्थं लौकिकाश्रयणम्, तत्पूर्वमुक्तम्। वैदिकाश्रयणे विशेषमाह **लोकगुरुरि**ति। तथागत्य सर्वकरणे बहुकालस्थिती च हेतुः **हरिरि**ति ॥ ५९ ॥

इति श्रीभागवतसुबोधिन्यां श्रीमल्लक्ष्मणभट्टात्मजश्रीमद्वल्लभदीक्षितविरचितायां दशमस्कन्धविवरणे उत्तरार्धे एकादशोऽध्यायः ॥ ११ ॥

## श्रीविट्ठलरायात्मजश्रीवल्लभकृतलेखः

**एवं सौरतेत्यत्र। लीलायां योग्यतेति।** षड्गुणैर्लीलाकरणादितिभावः। **न तु वाक्यैरेवेति।** बीजनलीलायामेतावज्जातम्। ततो गन्धमाल्यकेशप्रसारशयनस्नपनोपहारान् स्वीकृतवानित्यर्थः।

इत्येकादशाध्यायव्याख्या समाप्ता।

## श्रीसुबोधिनी-सारः

किं च त्वद्गुणास्त्वय्येवेति प्रशंसति। आत्मनो मम लभने प्राप्त्यर्थे सुविविक्ते रहस्यगुप्तो मन्त्रो यस्य स दूतस्त्वया प्रस्थापितः मयि चिरायति विलम्बे कृते सति एतद्विश्वं शून्यं मत्वा इदमंगं शरीरम् अनन्ययोग्यं मद्भोग्यं त्वं जिहासे त्यक्तुमैच्छः तत्तथा करणं त्वय्येव स्यात् इति वयं हर्षयामः त्वां श्लाघयामो वा ॥ ५७ ॥ शुकोक्तिः। सुरतनर्मभाषणैर्नरलोकं विडंबयन् स्वस्मिन्रत आत्मरतिर्जगदीश्वरो भगवान् रमया लक्ष्म्यंशरूपया रुक्मिण्या सह रेमे ॥ ५८ ॥ गृहवान् गृहस्थ इव गृहमेधीयान् धर्मानास्थितो लोकानां गुरुर्हरिर्विभुः अन्यासामपि स्त्रीणां गृहेषु तथा तद्वद्रेमे ॥ ५९ ॥

इति श्रीमद्भा० दशमस्कन्धे उ० सुबोधिन्यां टीकायां षष्टितमोध्यायः ॥ ६० ॥

## गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

किंच आत्मलभने मत्प्राप्त्यर्थं सुविविक्तः "यर्ह्यम्बुजाक्ष न लभेय भगवत्प्रसादं जह्यामसून् व्रतकृशान् शतजन्मभिः स्यात्" इत्येवं विविच्य ज्ञापितो मन्त्रो यस्य स दूतस्त्वत्प्रेषितस्तदा मयि चिरायति ईषद्विलम्बं कुर्वति सति एतद्विश्वं शून्यं मत्वा इदं मदङ्गमनन्ययोग्यं अन्ययोग्यं न भवतीति जिहासे त्यक्तुमिच्छामीत्येवं निश्चितवती तत् त्वत्कर्म त्वय्येव तिष्ठेत्, वयं तु केवलं प्रतिनन्दयामः प्रतिकर्तुमशक्नुवन्तः केवलं स्तुत्या वां हर्षयाम इत्यर्थः ॥ ५७ ॥ रुक्मिणीरमणपरिहासाद्युपसंहरति–एवमिति। सौरतसंल्लापैः सुरतसंल्लापैः सुरतयोग्यैः परिहासैर्भगवान् कृष्णो रमया लक्ष्म्यवतारभूतया रुक्मिण्या सह रेमे इत्यन्वयः। नन्वेवं 'रममाणस्य वैराग्याभावात् कथं भगवत्त्वम्' इत्याशङ्क्याह—स्वरत इति। आत्मारामत्वं तु तस्य न भग्नमित्यर्थः। ननु 'रमया सह रममाणस्य कथमात्मारामत्वम्' इत्याशङ्क्य 'अचिन्त्यशक्तित्वात्' इति हेतुं सूचयन्नाह–

जगदीश्वर इति। 'किमर्थमेवं रेमे' तत्राह—नरलोकं विडम्बयन् अनुकुर्वन् इति ॥ ५८ ॥ यथा रुक्मिणी गृहे तथाऽन्यासामपि स्वभार्याणां गृहेषु आस्थितो हरिर्गृहमेधीयान् गृहस्थैरनुष्ठेयान् धर्माननुतिष्ठंस्ताभिः सह रेमे। एकस्य कथं बहुषु गृहेष्ववस्थानं तत्राह—विभुरिति। तावद्रूपधर इत्यर्थः। 'कर्मभिर्निर्लेपस्य किं धर्माचरणेन' तत्राह—लोकगुरुरिति। लोकान् शिक्षयितुमित्यर्थः ॥ ५९ ॥

इति श्रीवल्लभाचार्य-वंश्यगोपालसूनुना। श्रीमन्मुकुन्दरायाणां पादसेवाधिकारिणा ॥ १ ॥
श्रीमद्गिरिधराख्येन भजनानन्दसिद्धये। श्रीमद्भागवतस्येयं टीका बालप्रबोधिनी ॥ २ ॥
रचिता दशमे तत्र राजसानां निरोधने। षष्टितमो गतो रुक्मिणी परिहासबोधकः ॥ ३ ॥

## अन्वितार्थप्रकाशिका

दूत इति ॥ आत्मनो लभने मत्प्राप्त्यर्थं सुविविक्तः विविच्य ज्ञापितो मन्त्रो यस्य स दूतस्त्वया प्रस्थापितः प्रेषितस्तदा मयि चिरायति ईषद्विलम्बं कुर्वति सति। आर्षः प्रयोगः। एतद्विश्वं पित्रादियुतमपि शून्यं मत्वा इदमङ्गमनन्ययोग्यमन्ययोग्यं न भवतीति हेतोर्जिहासे त्यक्तुमिच्छामि। त्यक्ष्यामीत्येवं निश्चितवती। तङार्षः। यद्वा। अजिहासः त्यक्तुमैच्छः जह्यामसूनिति पूर्वोक्तेः। तत् त्वत्कर्म त्वय्येव तिष्ठेत। तङार्षः। वयं तु केवलं प्रतिनन्दयामः प्रतिकर्तुमशक्नुवन्तः केवलं साधु साधु इति स्तुत्या त्वां हर्षयामः ॥ ५७ ॥ एवमिति ॥ स्वरतः आत्मारामो भगवान् जगदीश्वरः नरलोकं विडम्बयन्ननुकुर्वन् एवं सौरतसंलापैः सुरतनर्मगोष्ठीभिः रमया लक्ष्म्यावतारभूतया रुक्मिण्या सह रेमे। ॥ ५८ ॥ तथेति ॥ यथा रुक्मिणीगृहे तथाऽन्यासामपि स्वभार्याणां गृहेषु आस्थितः विभुः तावद्रूपधरः लोकगुरुर्हरिर्गृहमेधीयान् गृहस्थैरनुष्ठेयान्धर्माननुतिष्ठंस्ताभिः सह रेमे ॥ ५९ ॥

इति श्रीकृष्णसेवार्थमन्वितार्थप्रकाशिकाम्। गङ्गासहायो दशमे व्यधात्षष्टितमे सुखम् ॥

इति श्रीमद्भागवते दशमेऽन्वितार्थप्रकाशिकायां षष्टितमोऽध्यायः ॥ ६० ॥

## श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्

दूत इति। त्वां विना अनन्ययोग्यं अन्यस्य योग्यं नास्तीतीदमंगमहं जिहासे त्यक्ष्यामीति मत्वा समयं कृत्वा आत्मलभने। मत्प्राप्त्यर्थमित्यर्थः। त्वया सुविविक्तः अतिगुप्तो मंत्रः संदेशो यस्मिन्सः दूतो द्विजः प्रस्थापितो द्वारिकायां प्रेषितः श्वो भाविनिविवाहे मयि चिरायति किंचिद्विलंबयति सति। एतद्विश्वं शून्यं तवाभूत्। तत्तव कर्म त्वय्येव तिष्ठेत्। अस्माभिर्न तत् प्रतिकर्त्तुं शक्यमित्यर्थः। अतो वयं प्रतिनंदयामः साधु साध्वित्यनुमोदयामहे। यद्वा त्वया मत्प्राप्त्यर्थं दूतः प्रस्थापितः मयि चिरायति सति एतद्विश्वं शून्यं मत्वा इदमनन्ययोग्यमंगं अजिहासः इति पदच्छेदः त्वं त्यक्तुमैच्छः शेषं पूर्ववत् ॥ ५७ ॥ सौरतसंलापैः सुरतः आलापैः क्रीडावचनैः स्वरतः आत्मरतः ॥५८॥ अन्यासां स्वस्त्रीणां। धर्मान् प्रति आस्थितः ॥ ५९ ॥

इति श्रीशुद्धैकांतधर्मप्रवर्त्तकगुरुराजेन्द्रश्रीसहजानंदस्वामिशिष्यगोपालानंदमुनिविरचिते निगूढार्थप्रकाशके श्रीमद्भागवतस्य दशमस्कंधव्याख्याने रुक्मिणीसंवादो नाम षष्टितमोऽध्यायः ॥ ६० ॥

## भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

किं च ॥ दूत इति ॥ त्वया, आत्मलभने मत्प्राप्त्यर्थं, सुविविक्तः 'यर्ह्यम्बुजाक्ष न लभेय तव प्रसादं जह्यामसून् व्रतकृशान् शतजन्मभिः स्याम्' इत्येवं विविच्य ज्ञापितो मन्त्रो यस्य सः, दूतः, प्रस्थापितः प्रेषितः। ततः मयि, चिरायति ईषद्विलम्बं कुर्वति सति, एतद्विश्वं शून्यं, मत्वा, इदं अनन्ययोग्यमन्यानर्हं, अङ्गं, अजिहासः त्यक्तुमुद्युक्ता अभूः। यद्वा जिहासेऽहमिति। तदेतत्, त्वयि, तिष्ठेत घटेत, वयं त्वां, प्रतिनन्दयामः प्रतिकर्त्तुमशक्नुवन्तः सन्तः केवलं प्रशंस्य, हर्षयुक्तां कुर्म इत्यर्थः। यद्वा। अजिहास इत्येवं सुविविक्तमन्त्रो दूतः प्रस्थापित इति संबन्धः ॥ ५७ ॥ एवमिति। नरलोकं, विडम्बयन्ननुकुर्वन्, हेतुगर्भमिदम्। तत्त्वात् एवमित्थं, सौरतसंलापैः सुरतकर्मगोष्ठीभिः, जगदीश्वरः भगवान्, स्वरत आत्मारामोऽपि, रमया लक्ष्म्यवतारभूतया रुक्मिण्या सह, रेमे ॥५८॥ तथेति ॥ तथा अन्यासामपि पत्नीनां गृहेषु, गृहवान् इव गृहाश्रमी यथा तथेत्यर्थः। गृहमेधीयान् गृहस्थाश्रमप्रयुक्तान् धर्मान्, आस्थित आश्रितः। लोकगुरुः हरिः श्रीकृष्णः, विभुः सन्, रेमे ॥ ५९ ॥

इति श्रीधर्मधुरंधरश्रीधर्मात्मजप्रत्यक्षपुरुषोत्तमश्रीसहजानन्दस्वामिसुतश्रीरघुवीराचार्यसूनुभगवत्प्रसादाचार्यविरचितायामन्वयार्थविबोधिन्यां भक्तमनोरञ्जन्याख्यायां श्रीमद्भागवतटीकायां दशमस्कन्धोत्तरार्द्धे षष्टितमोऽध्यायः ॥ ६० ॥

### कृष्णप्रिया

प्रिये ! मुझे प्राप्त करने के लिये आपने गुप्त संदेश के साथ विप्रवर्य वसुदेवजी को भेजे थे लेकिन मेरे आने में कुछ विलम्ब हो गया तब यह सारा विश्व आपको शून्य सा दीख पड़ा तब आपने अपना सर्वाङ्ग सुन्दर श्री अङ्ग के लिये और किसी को सुपात्र न मानकर देहत्याग का निश्चय कर लिया था। देवि ! आपका यह अनन्य स्नेह आपके ही अंदर रहे। हम इसका बदला कैसे चुकावें निरंतर आपके इस सर्वोत्कृष्ट स्नेह का अभिनन्दन करते रहें ॥ ५७ ॥ श्री शुकदेवजी ने कहा— राजन् ! भगवान् श्रीकृष्ण तो निजानन्द पूर्ण है फिर भी जब आप मानव लीला का नाटक करते हैं तब इस दाम्पत्य स्नेह को समृद्ध करने के लिये विनोदपूर्ण मधुर वार्तालाप भी करते हैं और अपनी प्रियतमा भगवती श्रीदेवीजी के साथ विहार भी करते हैं ॥ ५८ ॥ भगवान श्रीकृष्ण लोक शिक्षण दे रहे हैं। वे स्वयं "विभु" सर्वव्यापक हैं। नाथ सत्यभामा आदि अन्य अर्धाङ्गनाओं के राजभवनों में भी गृहस्थाश्रम धर्म का पालन करते और आदर्श दाम्पत्य जीवन एवं आनन्द से धर्म का सतत् पालन करते थे ॥ ५९ ॥

इति श्रीमद्भागवतस्य दशमस्कन्धस्योत्तरार्द्धे निरोधलीलायां रुक्मिणीपरिहासोक्तिप्रसङ्गो भाषायां षष्टितमोऽध्यायः ॥ ६० ॥

# अथैकषष्टितमोऽध्यायः

| श्लोकाः | अनु. | मि. उ. | वस. | उ. | श्लो. अ. | उ. अ. | अ. अ. | सं. श्लो. अ. | सं. श्लो. | अ. |
|---|---|---|---|---|---|---|---|---|---|---|
| ४० | ३५ | १ | ४ | ३ | १४५४ | १६ | ४७ | १५१८ | ४७। | ६ |

श्रीशुक उवाच

एकैकशस्ताः कृष्णस्य पुत्रान् दश दशाबलाः । अजीजनन्ननवमान्पितुः सर्वात्मसम्पदा ॥ १ ॥
गृहादनपगं वीक्ष्य राजपुत्र्योऽच्युतं स्थितम् । [1]प्रेष्ठं न्यमंसत[2] स्वं स्वं न तत्तत्त्वविदः स्त्रियः ॥ २ ॥
चार्वब्जकोशवदनायतबा[3]हुनेत्रसप्रेमहासरसवीक्षितवल्गुजल्पैः ।
सम्मोहिता भगवतो न मनो विजेतुं स्वैर्विभ्रमैः समशकन् वनिता विभूम्नः ॥ ३ ॥
[4]स्मायावलोकलवदर्शन[5]भावहारिभ्रूमण्डलप्रहितसौरतमन्त्रशौण्डैः ।
पत्न्यस्तु षोडशसहस्रमनङ्गबाणैर्यस्येन्द्रियं विमथितुं [6]करणैर्न शेकुः ॥ ४ ॥

कर्दमक्षमा

अन्वयः—श्रीशुक उवाच—राजन् ! कृष्णस्य, ताः, अबलाः, एकैकशः, दश, दश, सर्वात्मसम्पदा, पितुः अनवमान्, पुत्रान्, अजीजनन् ॥ १ ॥ राजन् ! राजपुत्र्यः, गृहान्, अनपगम्, स्थितम्, अच्युतम्, वीक्ष्य, स्त्रियः, न, तत्, तत्वविदः, स्वम्, स्वम्, प्रेष्ठम्, अमन्यत ॥ २ ॥ भगवतः, चार्वब्जकोशवदनायतबाहुनेत्र सप्रेमहासरसवीक्षितवल्गुजल्पैः, सम्मोहिताः, वनिताः, स्वविभ्रमैः, विभूम्नः मनः, विजेतुम्, न, समशकन् ॥ ३ ॥ षोडशसहस्रम्, पत्न्यः, तु, स्मायावलोकलवर्दाशतभावहारि भ्रूमण्डलप्रहितसौरतमन्त्रशौण्डैः, अनङ्गबाणैः, करणैः, यस्य, इन्द्रियम्, विमथितुम्, न, शेकुः ॥ ४ ॥

श्रीधरस्वामिविरचिता भावार्थदीपिका

एकषष्टितमे शौरेः पुत्रपौत्रादिसंततिः । अनिरुद्धविवाहे च रुक्मिणो रामतो वधः ॥ १ ॥
अष्टाधिकशतद्वयष्टसहस्त्रस्त्रीसमुद्भवान् । कोटिशः पुत्रपौत्रादीन्हरिर्दारैरयोजयत् ॥ २ ॥

तदेतद्वक्तुमाह । एकैकश इति । कृष्णस्याबला भार्याः सर्वा या आत्मनि सम्पत्तया पितुः सकाशादनवमानन्यूनान् ॥ १ ॥ प्रेष्ठं न्यमंसत अच्युतस्य प्रियतमं प्रत्येकं स्वं स्वं मेनिरे । न तस्य तत्त्वमात्मारामत्वं विदंति ताः ॥ २ ॥ आत्मारामत्वं व्यनक्ति द्वयेन । चार्विति । चार्वब्जकोशवद्वदनं च आयतानि बाहुनेत्राणि च सप्रेम्णा हासरसेन वीक्षितानि च वल्गुजल्पाश्च भगवतः एतैः संमोहिता वनिताः स्वैःस्वैरनेकैर्विभ्रमैस्तस्य श्रीकृष्णस्य मनो विजेतुं हतुं न समशकन्न शक्ता बभूवुः । विभूम्नः परिपूर्णस्य ॥ ३ ॥ तासां विभ्रमान्वर्णयन्नेतद्विवृणोति । स्मायेति । स्मायो गूढहसितं तद्युक्तोऽवलोकलवः कटाक्षस्तेन दर्शितः सूचितो भावोऽभिप्रायस्तेन हारि मनोहरणशीलं यद्भ्रूमंडलं तेन प्रहिताः प्रस्थापिता ये सौरता मन्त्रास्तेषु शौण्डैः प्रगल्भैरनंगस्य बाणैः शरैरन्यैश्च करणैः कामशास्त्रप्रसिद्धैर्यस्येंद्रियं मनो विमथितुं क्षोभयितं षोडशसहस्रमपि पत्न्यो न शेकुरिति ॥ ४ ॥

श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

चादन्येषामपि । रामतो बलदेवात् ( १ ) । अष्टभिरधिकं शतमष्टाधिकशतम्, द्विरावृत्ता अष्टौ द्वयष्टौ च तानि सहस्राणि द्वयष्टसहस्राणि, तच्च तानि च स्त्रियोष्टाधिकशतद्वयष्टसहस्रस्त्रियस्तासु समुद्भवान् ( २ ) । तदेतल्लोकविडम्बनम् । ता रुक्मिण्याद्याः । सर्वात्मसम्पदाऽन्यूनदेहादिस्वभावसमृद्धया । अजीजनञ्जनयामासुः ॥ १ ॥ स्वं स्वं निजं निजमात्मानं देहमिति यावत् । गृहात्स्वस्वपुरात् । अनपगं प्रीतिपूर्वकमन्यभार्यापुराणि नापगच्छंतं किन्त्वनुरोधवशात्कदाचिदेवेति । तोषिणी तु—अनपगं नायिकांतरगृहगमनरहितमित्याह । तस्य तत्त्वं सर्वगृहावस्थानरूपं न विदन्तीति ताः ॥ २ ॥ नन्वेवं

१. आत्मनोऽमंसत प्रेष्ठं–विज. । २. त्वात्मानं न तु तत्व–प्रा. पा. । ३. चारु–विज. । ४. स्मेरा–वीर. । ५. दर्शित–श्रीधर. वंशी. जीव. वीर. विज. विश्व. । ६. करणे–श्रीधर. वंशी. जीव. वीर. विज. विश्व. ।

तस्यातिकामुकत्वमेव प्रतीयते, न, किन्तु प्रेमैकवशत्वमेवेत्युदाहरति द्वाभ्याम्। वनिता जनितात्यर्थाऽनुरागास्ताः स्त्रियः स्वैः स्त्रीजातीयैः विभ्रमैर्विलासैर्भगवतो मनो विशेषेण तत्प्रेमाधिकसपत्नीतुल्यत्वेन जेतुं वशीकर्तुं नाशकन्, किंतु स्वप्रेमांशानुरोधेनेति भावः। अत एव-सप्रेमेति। वनिताशब्देन गृहादनपगामित्वं वशत्वं च लक्षितम्। यद्यपि विसंशब्दयोरेकतरेणाप्यभीष्टार्थलाभस्तथापि विशब्देन श्रीभगवति वशीभावचिह्नं, संशब्देन तास्वपि तत्कृतियोग्यचिह्नं तादृशं न दृष्टमितिपृथगवसितं तादृशविममव्यजने हेतुश्चाविति। चार्वब्जकोशवदनादिभिः सम्मोहिताः प्रेम्णा कामेन वा क्षोभिता इति। अत्र पूर्वं वदनं पश्यन्ति पश्चाल्लज्जादृष्ट्या बाहुँ ततस्तद्दर्शनेन गाढालिंगनस्पृहाजातधाष्टर्येन पुनर्मुखे दृश्यमाने मिथो नेत्रमेलनं ततः सप्रेमहासादीति। एतदुक्तं भवति-परस्परं तस्य ताभिः सह प्रेमवशतास्त्येव किन्तु कदाचित्तत्प्रेमाधिकसपत्नीवत्तन्मनो वशीकर्तुं काममयान्विलासान् दर्शयन्ति तदा तस्य तद्वत्तन्न स्यादित्यतो न कामुकत्वं किन्तु प्रेमविशेषवशत्वमेवेति। विभून्नः सर्वापेक्ष्यपरिपूर्णस्य कामुकत्वं न संभवति भक्तवश्यत्वरूपमहागुणस्य तत्र सद्भावोऽस्त्येवेति 'अहं भक्तपराधीनः' इत्युक्तेः। अत एव गोपालतापिन्यामुक्तम् "विद्यामयो यस्स कथं विषयीभवति, यो हि कामेन कामान्कामयते स कामी भवति, यो हि वै त्वकामेन कामान्कामयते सोऽप्यकामी भवति" इति श्रुतेः। चारू रम्यो योऽजकोशोंऽबुजमध्यभागस्तत्तुल्यं वदनमास्यं तथा॥ ३॥ तासां स्त्रोणाम्। सौरताः सुरतोद्बोधकाः। "शौंडो मत्ते प्रगल्भे च ख्याते शौंडी तु पिप्पली" इति धरणिः। कामशास्त्रप्रसिद्धैर्हावादिभिः। यस्य कृष्णस्य। न शेकुर्वशीकृतकामत्वेन दृढवीर्यत्वात्। बाणशब्देन भ्रूमण्डलस्य धनुष्ट्वं ध्वनितम्, मंडलशब्देन तस्याकृष्टत्वम्, ततश्च तादृशभ्रूमण्डलेन प्रहिता मुक्ताश्च सौरतमन्त्रशौंडाश्चेति विग्रह। अन्येऽपि बाणा मन्त्रेण शौंडा भवन्तीति। यस्येति यच्छब्दस्यांतिमनिर्देशात्तच्छब्दानपेक्षयैवान्वयः। तथा चालंकारिकाः-'यच्छब्दोप्युत्तरवाक्यार्थगतत्वेनोपपत्तेः पूर्ववाक्यगतस्य तच्छब्दस्योपादानं नापेक्षते इति। यथा-"साधु चन्द्रमसि पुष्करैः कृतं मीलितं यदभिरामताधिके। उद्यताज्जयिनि राधिकामुखे तेन साहसमनुष्ठितं पुनः" इति॥ ४॥

**श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी**

अनवमानन्यूनान् कृष्णस्याबलाः न विद्यते तं विना बलं गतिर्यासा तादृशभार्या इत्यर्थः॥ १॥ एकस्य तावतीषु तावत्पुत्रजननासम्भावनां कैमुत्येन परिहरति तत्प्रसङ्गे ताभिः सममत्यासक्तिश्च दर्शयति-गृहादिति। स्थितमिति प्रतिवारमेव यथासमयमेव बहिः प्रदेशादन्तःपुरमगच्छन्निव निजगृह एवागत्य वर्त्तमानमित्यर्थः। तथापि तस्मादनपगं नायिकान्तरगृहगमनरहितं वीक्ष्य विशेषेण दृष्ट्वा राजपुत्र्य इत्युपलक्षणं देवादिपुत्र्योपि आत्मानं प्रेष्ठममंसत प्रत्येकमिति शेषः टीकायां स्वंस्वमिति पुनरुक्तिस्तु प्रत्येकमात्मानमित्यस्यैव निर्गलितार्थकथनाय स्वमितिपाठे तु प्रत्येकमित्यस्य वैयर्थ्यं स्यात् अन्यत्तैः। यद्वा, न तस्य तत्त्वं सर्वगृहावस्थानरूपं विदन्तीति ताः तद्विलासभरमोहेनान्यानुसन्धानासक्तेरिति भावः॥ २॥ नन्वेवं तस्यातिकामुकत्वामिव प्रतीयते न किन्तु प्रेमैकवशत्वमेवेत्युदाहरंस्तासां मोहञ्च दर्शयति-चार्विति द्वाभ्याम्। वनिताः जनितात्यर्थानुरागास्ताः स्त्रियः स्वैः स्त्रीजातीयैर्विभ्रमैर्विलासैर्भगवतोः मनो विजेतुं विशेषेण स्वस्वतत्प्रेमाधिकस्य पत्नीतुल्यत्वेन जेतुं वशीकर्त्तुं न सम्यगशकन् किन्तु यावांस्तत्प्रेमांशस्तावदेवेत्यर्थः। अत एव सप्रेमेति तस्यापि प्रेमनिगदेनैवोक्तम् वनिताशब्देन गृहानपगामित्वं लक्षितं वशत्वञ्च यद्यपि विसंशब्दयोरेकतरेणाप्यभीष्टार्थलाभः स्यात्तथापि विशब्देन श्रीभगवति वशीभावचिह्नं संशब्देन तास्वपि तत्कृतियोग्यत्वचिह्नं तादृशं दृष्टमिति पृथगवमितं तथा तादृशविभ्रमव्यञ्जने हेतुः, चार्विति चार्वब्जकोशवदनादिभिः सम्मोहिताः सम्यक् प्रेम्णा कामेन च क्षोभिता इति अत्र पूर्वं वदनं पश्यन्ति पश्चाल्लज्जानम्रदृष्ट्या बाहुः ततस्तद्दर्शनेन गाढालिङ्गनस्पृहाजातधाष्टर्येन पुनर्मुखे दृश्यमाने मिथो नेत्रमिलनं ततः सप्रेमहासादीति पाठक्रमेण व्यक्तम् एतदुक्तं भवति परस्परं तस्य ताभिः प्रेमवशताऽस्त्येव किन्तु यदि कदाचित्तत्प्रेमाधिकसपत्नीवत्तन्मनो वशीकर्त्तुमनङ्गबाणैरिति वक्ष्यमाणात् काममयान् विलासविशेषान् दर्शयति तदा तस्य तद्वत्तन्न स्यादित्यतो न कामुकत्वं किन्तु प्रेमविशेषवत्त्वमेवेति, तच्च युक्तमित्याह-विभून्नः स्वतः सर्वापेक्षणीयपरिपूर्णस्य ततः कामुकत्वं न सम्भवति महागुणस्य भक्तवशत्वस्य तु तत्र सद्भाव एवेति भावः। तदुक्तम् "अहं भक्तपराधीनो ह्यस्वतन्त्र इव द्विज" इति। अतस्तमुद्दिश्य श्रीगोपालतापन्यामप्युक्तं "विद्यामयो हि यः स कथं विषयी भवति" इति। योहि कामेन कामान् कामयते स कामी भवति योहि वै त्वकामेन कामान् कामयते सोप्यकामी भवतीति॥ ३॥ स्मायेत्यादिकं विभ्रमाणां विशेषणं प्रहितत्वं व्यञ्जितत्वं सौरतमन्त्रत्वं सुरतसम्बन्धिरहस्ययुक्तित्वम् अनङ्गबाणैस्तद्रूपैरित्यर्थः। यद्वा, तदेव विवृणोति—करणैः कामशास्त्रप्रसिद्धैरुपायैर्विशेषेण मथितुं न शेकुरिति पूर्ववत् तेषां रूपकम् अनङ्गबाणैरित्येषां विशेषणं भ्रमण्डलेति बाणशब्देन च भ्रूमण्डलस्य धनुष्ट्वं ध्वनितं मण्डलशब्देन तस्याकृष्टत्वं ततश्च तादृशभ्रूमण्डलेन प्रहिता मुक्ताश्च ते सौरतमन्त्रशौण्डाश्चेति विग्रहः अन्येपि बाणा मन्त्रेण शौण्डा भवन्तीति यस्येति यच्छब्दस्यान्तिमनिर्द्देशात्तच्छब्दानपेक्षयैवान्वयः। तथा चालङ्कारिकाः यच्छब्दोप्युत्तरवाक्यार्थगतत्वेनोपपत्तेः पूर्ववाक्यगतस्य तच्छब्दस्योपादानं नापेक्षत इति; तथा—

"साधु चन्द्रमसि पुष्करैः कृतं मीलितं यदभिरामताधिके। उद्यता जयिनि राधिकामुखे तेन साहसमनुष्ठितं पुनः"॥ इति।

एवं श्रीव्रजदेवीनां तत्र तत्र परमशुद्धोत्कृष्टं प्रेमप्रशंसनादाभ्यः सर्वाभ्योप्याधिक्यं सूचितम्॥ ४॥

**श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी**

ताः सर्वा अबलास्तन्वंग्यः, कृष्णस्य सर्व्वशक्तिमतः, अतः सर्व्वात्मसम्पदा अनवमान् अन्यूनान् ॥ १ ॥ एवं श्रीभगवतस्तास्वासक्तिं तासां च तस्मिन् पञ्चभिवर्णयन्नादौ तद्धेतुमाह—गृहादिति । स्वगृहान्नापगच्छति न निःसरतीति तथाभूतम्, यतः स्थिरं स्थिरतया स्वगृहे सदा साक्षाद्वर्त्तमानमित्यर्थः । तत्र हेतुः—राजपुत्र्यः सर्व्वसद्गुणरूपादिमत्य इति भावः । देवादिपुत्रीसत्तायामपि राजपुत्र्य इति तासामेव प्राधान्यात् । एवं कस्मादपि गृहाच्च्युतिराहित्येनाच्युतम्, आत्मानं प्रत्येकं सर्व्वाः स्वं स्वं नितराममंसत । इत्थमात्मानमित्येव तैः प्रत्येकं स्वं स्वमिति व्याख्यातम् । अतः स्वं स्वमिति पाठश्चिन्त्यः । न तस्यानपगमस्य अच्युतस्य वा तत्त्वं मद्गृह एवान्यत्रापि तिष्ठतीत्येवंलक्षणं वितन्वनुसन्दधतीति तथा ताः, यतः स्त्रियस्तत्प्रेमभरमोहिता इति भावः ॥ २ ॥ चार्वब्जकोशवदनादीनां यथोत्तरं संमोहने श्रैष्ठ्यम्, तत्र वदनादपि वाह्वोरायततया गाढ़ालिंगनाभिप्रायेण, भगवत इति लोकातीतसंमोहन-सामर्थ्यादिकं ध्वनितम् । अतः सम्यङ् मोहिता आकृष्टचित्ता अपि विभूम्नोऽपि मनोविशेषेण भक्तेभ्योऽधिकतया जेतुं वशीकर्त्तुं न सम्यगशकन् किम् ? काका, अपि तु सम्यक्तया शेकुरेवेत्यर्थः । एवमग्रेऽपि । कुतः ? स्वैरसाधारणैः प्रेमविशेषमयैरित्यर्थः । अतएव वनिताजनितपुरुषार्थानुरागा योषितः परमस्वतन्त्रस्यापीश्वरस्य प्रियजनप्रेमपरवशत्वादिति भावः । तथा चोक्तं श्रीभगवतैव ( भा० ९।४।६३ )—'अहं भक्तपराधीनो ह्यस्वतन्त्र इव द्विज' इत्यादि । एवमन्योन्यं भावविशेषेणान्योन्यं मोहनमुक्तम् । यद्वा, विजेतुं विशेषेण जेतुं वशीकर्त्तुम्, यथा व्रजदेव्यो विजिग्यिरे, तथा जेतुमित्यर्थः ॥ ३ ॥ स्मायेत्यादिकं विभ्रमाणां विशेषणम्, अनंगबाणानामेव विशेषणम्, ततश्च न तिष्ठत्यंगं येभ्यस्तथाभूतैर्मर्म्मभेदिभिर्वाणैरित्यर्थः । एवं वाण-शब्देन भ्रूमण्डलस्य धनुष्ट्वं ध्वनितम्, ततश्चैवं वाक्यम्—तादृशभ्रूमण्डलेन प्रहिता मुक्ताश्च ते सौरतमन्त्रशौण्डाश्च तैरिति, विमथितुं विशेषेण मथितुम्, यथा व्रजदेव्यो विशेषेण ममन्थुस्तथा मथितुं न शेकुरिति ॥ ४ ॥

**श्रीसुदर्शनसूरिकृतशुकपक्षीयम्**

स्मायावलोकः स्मयकार्यवलोकजम् ॥ ४–३१ ॥

**श्रीमद्वीरराघवाचार्यकृता भागवतचन्द्रचन्द्रिका**

अथ भगवतस्तासु पत्नीषु पुत्रपौत्रादिपरम्परा अनुवर्णयत्येकपद्यितमेन—एकैकश इति । ताः कृष्णस्यावलाः स्त्रियः सर्वाः या आत्मसम्पत्तया पितुः सकाशादनवमानन्यूनान् तुल्यान् एकैकशो दशदश पुत्रान् जनयामासुः ॥ १ ॥ तदेव विस्तरेण वक्तुं तावत्तासां भगवन्मायामोहितत्वं भगवतस्तदवशत्वञ्चाह—गृहादिति द्वाभ्याम् । गृहादनपगं नापगच्छति न निष्क्रामतीति तथा तं स्थितं गृहेष्वेव स्थितमच्युतमवलोक्य सर्वास्ता राजपुत्र्यः अतत्त्वविदः भगवद्याथात्म्यानभिज्ञाः हेतुगर्भमिदं तत्त्वात् प्रत्येकं स्वं स्वमात्मानं प्रियतमं भगवत इति शेषः । न्यमंसत अमन्यन्त ॥ २ ॥ चार्विति । चार्व्वब्जकोशवद्वदनम् आयतानि बाहुनेत्राणि च सप्रेम्णा हास्यरसेन वीक्षतानि च वल्गुजल्पाश्च तैः साधनैर्भगवता कर्त्रा सम्मोहिताः वनिताः स्वैरनेकैर्विभ्रमैर्विभूम्नः परिपूर्णस्य भगवतः मनो मानसं जेतुं वशीकर्त्तुं न समशकन् न समर्था बभूवुः तस्यात्मारामत्वादिति भावः ॥ ३ ॥ तासां विभ्रमान् वर्णयन्नेव तद्विवृणोति–स्मेरेति । स्मेरो गूढहसितं तद्युक्तोऽवलोकलवः कटाक्षस्तेन रचितस्सूचितो भावोऽभिप्रायस्तेन हारि मनोहरणशीलं यद्भ्रूमण्डलं तेन प्रहिताः प्रस्थापिताः ये सौरतमन्त्राः तेषु प्रगल्भैरनङ्गस्य बाणैरन्यैश्च करणैः कामशास्त्रप्रसिद्धैर्यस्य भगवत इन्द्रियं मनः मथितुं क्षोभयितुं षोडशसहस्रमपि पत्न्यः न शेकुर्नाशक्नुवन् ॥ ४ ॥

**श्रीविजयध्वजतीर्थकृता पदरत्नावली**

अध्यायद्वयेन लोकविडम्बनानुचरितं कथयति—तेन सतां ज्ञानाभिवृद्धिरसतामन्यथेति तत्रादावेकैकस्यां दशदश पुत्रा आसन्नित्यादि कथयति—एकैकश इति । सर्वात्मसम्पदा अन्यूनदेहादिस्वभावसमृद्ध्या ॥ १ ॥ अनपगं अपगमरहितम् ॥ २ ॥ एवमपि पराजयः स्त्रीणामेवेत्याह—चार्विति ॥ ३ ॥ स्मायः मन्दस्मितं तेन युक्तोऽवलोकः स्मायावलोकः तस्य लवेनाल्पेन दर्शितो भावेन स्पन्दनलक्षणक्रियया हारिणा मनोहरेण भ्रुवोर्मण्डलवलयेन प्रहिताः सौरतमन्त्राः सुरतवर्धनमन्त्राः एतैः शौण्डैः पटुत्वमाप्तैः कामबाणैः करणैः सम्भोगसाधनैः यस्य हरेरिन्द्रियं रेतोलक्षणं विमथितुम् आलोडयितुं स्रावयितुं वा वशीकृतकामत्वेन दृढवीर्यत्वात् ॥ ४ ॥

**श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः**

तत्त्वं सर्वगृहस्थिततत्वम् ॥ २ ॥ चार्विति तत्त्वम् ॥ ३–१० ॥

**श्रीमज्जीवगोस्वामिकृतः बृहत्क्रमसन्दर्भः**

गृहादित्यादि । स्त्रियः सत्यभामाद्या राजपुत्र्यः अतद्यथा भवति, सामान्यस्त्रीभाववद् यथा न भवति तथा । स्वं स्वमात्मानं प्रेष्ठं सर्वतः प्रियतमं न्यमंस्यत नितराममन्यत । कीदृश्यः ? तत्वविद आत्मतत्वज्ञाः यद्वा, न विद्यन्ते तस्य

श्रीकृष्णस्य तत्त्वविदो याभ्यरताः; ता यथा कृष्णतत्त्वं जानन्ति न तथान्ये केऽपीति भावः । किं कृत्वा ? गृहात् स्वगृहादनपगं युगपदेव सर्वेषु गृहेषु सदा सन्तमच्युतं वीक्ष्यात्मानमेव प्रेष्ठममंसत ॥ १–२ ॥ न तु तं वशीकर्तुम् शेकुरित्याह—चार्वित्यादि द्वाभ्याम् । अनङ्गबाणैर्मथितुं न शेकुः, प्रेम्णा तु शेकुरेव ॥ ५ ॥

### श्रीनाथचक्रवर्तिपादविरचिता चैतन्यमतमञ्जूषा

गृहादनपगमित्यादि । स्त्रियः सत्यभामादयो राजसुताः, न तद्यथा भवति सामान्यस्त्रीभाववद् यथा भवति, तथा स्वं स्वमात्मानं प्रेष्ठममंसत । तत्र हेतुः—गृहादनपगमित्यादि । सदैवास्माकं गृहे तिष्ठतीति नैष स्त्रीजितः, अपि त्वस्माकमेव सौभाग्यमीदृक्षमपि सर्वा एव स्त्रीतुल्या नात्मानं मेनिर इत्यर्थः । चेत्तत्त्वविदः श्रीकृष्णस्य तत्त्वविद आत्मानमेव प्रेष्ठम-मन्यन्त, न तु तं वशीकर्त्तुमशक्नुवन्, तत्त्वविस्त्वादित्याह—चार्वित्यादिद्वाभ्याम् । अनङ्गबाणैर्मथितुं न शेकुः, प्रेम्णा तु शेकुरेव । तदेवाह—प्रत्युद्गमेत्यादि । दास्यम्—सेवाख्यां प्रेमलक्षणां साध्यां भक्तिमित्यर्थः ॥ १–४० ॥

इत्येकषष्टितमोऽध्यायः ॥ ६१ ॥

### श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शिनी

एकषष्टितमे कृष्णपुत्रपौत्राभिधोच्यते । द्यूतेऽहन् रुक्मिणं रामोऽनिरुद्धोद्वाहपर्वणि ॥

ताः कृष्णस्य अबला भार्याः पितुः श्रीकृष्णस्य सर्वाः आत्मभूता स्वरूपभूता या सम्पत्तया अनवमान् अन्यूनान् ॥ १ ॥ गृहात् स्वस्वपुरात् अनपगं प्रीतिपूर्वकमन्यभार्यापुराणि न अपगच्छन्तं किन्त्वनुरोधवशादेव कदाचिदेवेति वीक्ष्य आत्मानं स्वं स्वमेव प्रेष्ठं परमसुभगं न्यमंसत नत्वन्यजनं किन्तु अतर्क्ययोगमायया सर्वप्रियाजनसुभगतासम्पादकं तस्य तत्त्वं विदन्तीति ताः ॥ २ ॥ भगवद्विलासमात्रेणापि वशीभूतानां तासां समञ्जसरतिमत्त्वात् प्रेममयाः काममयाश्च विलासाः सम्भवन्ति तत्र काममयैर्विलासैस्तस्या वशीभावमाह चार्विति द्वाभ्याम् । चार्वब्जकोशवद्वदनञ्च आयतौ बाहू आयते नेत्रे च सप्रेमहासरसेन वीक्षितानि च वल्गुजल्पाश्च तैः सम्मोहिताः स्वैः स्वीयविभ्रमैर्विलासैः तस्य मनो विजेतुं न समशकन् तत्र हेतुः विभूम्नः स्वत एव सर्वापेक्षणीयपदार्थपरिपूर्णस्य ॥ ३ ॥ तासां काममयान् विभ्रमान् विवृणोति-स्मायेति । करणशब्दस्य इन्द्रियवाचकत्वात् करणैर्नेत्रैरनङ्ग बाणैर्यस्य कृष्णस्येन्द्रियं मथितुं न शेकुः कीदृशैः स्मायः स्मितं तत्सहितोऽवलोकलवः कटाक्षस्तेन दर्शितः सूचितोऽभिप्रायस्तेन हारि मनोहरणशीलं यद्भ्रूमण्डलं तेन प्रहिताः प्रस्थापिता ये सौरतमन्त्रास्तेषु शौण्डैः प्रगल्भैः ॥ ४ ॥

### गूढार्थदीपिनी

एकषष्टितमे कृष्णपत्नीनां वंशवर्णनम् । अनिरुद्धविवाहे च द्यूतेऽहन् रुक्मिणं बलः ॥ १ ॥

कृष्णस्य ताः अबला दशं दश पुत्रान् जनयामासुः । 'दशास्यां पुत्रानाधेहि' इति श्रुतेः । सर्वा या आत्मनि सम्पत् सौन्दर्यादिरूपा तया पितुः सकाशात् अनवमान् अन्यूनान् ॥ १ ॥ न अपगच्छति न निष्क्रामतीति अनपगम् । अत एव गृहेष्वेव स्थितम् तं स्वं स्वं प्रेष्ठं प्रियतमं मेनिरे । तत्त्वम् आत्मारामत्वं न विदन्तीति तथा ॥ २ ॥ भगवतः चारुकमलकोशवत् वदनेन आयतैः बाहुनेत्रैश्च सप्रेमहासवीक्षणैश्च मधुरभाषणैश्च संमोहिताः वनिता यस्य मनो वशीकर्तुं न समशकन् न समर्था बभूवुरित्यन्वयः । विभ्रमैः शृङ्गारभावैः । विभूम्नः परिपूर्णस्य ॥ ३ ॥ षोडशसहस्रमपि पत्न्यः यस्य मनः क्षोभयितुं न शेकुः । कैः । करणैः साधनैः नेत्रादिभिः । कीदृशैः । स्मायो मन्दस्मितं तद्युक्तेन अवलोकलवेन कटाक्षेण दर्शितो यो भावः अभिप्रायः तेन हारि आकर्षकं यत् भ्रूमण्डलं तेन प्रेषिता ये मन्त्राः रत्यालापाः तेषु शौण्डैः प्रगल्भैः अनङ्गबाणैः ॥ ४ ॥

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः

एकषष्टितमे भगवतः पुत्रपौत्रादिसन्ततिः अनिरुद्धविवाहे रुक्मिवधश्च निरूप्यते-एकैकश इति । कृष्णस्य अबलाः भार्याः सर्वा आत्मनि या सम्पत् तया पितुः सकाशादनवमान् अन्यूनान् ॥ १ ॥ स्वं स्वमात्मानं प्रेष्ठं प्रियतमम् न्यमंसत अच्युत-स्याहमेवातिप्रेष्ठा नान्या इति प्रत्येकं मेनिरे भक्तप्रियस्यास्य सर्वा एव प्रिया इति तस्य तत्त्वं स्वभावं न विदन्ति ताः ॥ २ ॥ किञ्च चार्वब्जकोशवद्वदनञ्च आयतानि बाहुनेत्राणि च सप्रेम्णा हासरसेन वीक्षितानि च वल्गुजल्पाश्च भगवतः एतैः सम्मोहिताः स्वैर्विलासैर्विभूम्नः परिपूर्णस्य मनो विजेतुं न समशकन् अशक्ता बभूवुः ॥ ३ ॥ तासां विभ्रमान् दर्शयति—स्मायेति । स्मायेन गूढहसितेन युक्तोऽवलोकलवो निरीक्षणलेशः तेन दर्शितो निवेदितो भावोऽभिप्रायः सम्भोगाभिलाषः तेन हारि चित्ताकर्षणशीलं यत् भ्रूमण्डलं तेन प्रहितेषु प्रेषितेषु सौरतमन्त्रेषु शौण्डैः प्रगल्भैः अनङ्गबाणैः अन्यैश्च करणैर्वात्स्यायादिप्रोक्तैः सम्भोगसाधनैः यस्येन्द्रियं मनो विमथितुं क्षोभयितुं षोडशसहस्रमपि पत्न्यो न शेकुः नैवाशक्नुवन् ॥ ४ ॥

## श्रीसत्यधर्मकृता श्रीभागवतटिप्पणी

हरिः ॐ। लोकमनुकुर्वन् लोकेशो वंशमवर्धयज्जातजातं देवता इति तच्चरितश्रवणं भगवद्भक्त्युपोद्वलकमित्यध्यायद्विकेन वदति एकैकश इति। ता योषित एकैकशः पृथक् पृथगेकेका एकैकस्य श्रीजनस्य सकाशादेकाशास्ता प्रशस्ता रूपादिनेत्याह। एकैकशस्ता इत्यप्यर्थः। कृष्णस्य सकाशात्पितुः सर्वात्मसम्पदा सर्वाङ्गसम्पदा। अनवमान् पुत्रीभवनभाग्ययुता इत्यनवमान्समस्तान् दशदशाजीजनत्। एकैकशोऽबला दशाजीजनन्नित्येकैकस्यां दशपुत्रा अभवन्निति तद्वीप्सयैव लाभे पुनर्दशेति न वक्तव्यमिति चेत्। महात्मन्नर्थान्तरे तु तत्सार्थकं किलार्थान्तरपक्ष एवं दशाया दैवस्य बल यासां ता इति। दशा दैवे वार्तिकायां वस्त्रप्रान्ते च कीर्तिता। अवस्थायां प्रवृत्तौ चेति रानमाला ॥१॥ राजपुत्र्यो गृहादनपगमापगमरहितं तत्रैव वर्तमानमात्मप्रियं प्रेष्ठममंसत व्यजानात्। तत्तत्वं विन्दतीति ता न भगवत्तत्त्वावगमविकलाः ॥ २॥ तत्सौंदर्यमुपपाद्य तदजितत्वमजितस्यावेदयति। चार्विति। भगवतश्चारु अब्जकोशवद्वदनं मुखं च। आयते च ते चारुणे च ते नेत्रे च सप्रेमहासरसं यद्वीक्षितं च वल्गुजल्पा मनोहरव्यवहाराश्च तैर्विमोहिताः स्वैर्विभ्रमैर्विलासैश्चावितत्यतदन्वयि च मनो विजेतुं न समशकन् शक्ता नाभूवन्। तत्र तन्त्रं विभूम्न इति ॥ ३॥ अधुनाऽपि मधुनाथस्य बहुधा तत्सामर्थ्यमुधाकरणं वक्ति कश्चिच्छ्लोकैः। स्मायः स्मितसम्बन्धी योऽवलोकस्तस्य लवो लेशस्तस्य दर्शितं दर्शनं तेन भावो मनस्तद्धारिणा मनोहरेण भ्रुवा मण्डलसङ्घस्तेन प्रहिताः प्रेषिता ये सौरतमन्त्राः सुरतसम्बन्धिरहस्यभाषणानि तैः शौण्डाः पुरुषवशीकरणपटवस्तैरनङ्गबाणैः पञ्चबाणैः सह कारिसहितैः करणैः स्वेन्द्रियैः षोडशसहस्रं तत्सङ्ख्याः पत्न्य इन्द्रियस्य भवतो विमथितुं विलोडयितुं स्वपरवशीकर्तुं न शेकुर्न समर्था अभवन्। निरीक्षणादिसर्वेन्द्रियकार्या अविषया इति द्योतयितुमिन्द्रियमित्येकवचनम्। दर्शितो यो भावो लीलाविशेषस्तेन हारि हरत्स्ववशीकुर्वद्यद्भूमंडलं तत्प्रतिहतैरिति वा। भावः क्रियालीलापदार्थेष्विति विश्वः ॥ ४॥

## श्रीमद्वल्लभाचार्य्यकृता सुबोधिनी

द्वादशे रमणं प्राह पुत्रपौत्रयुतस्य हि। प्रसङ्गान्मारणं चोक्तं रुक्मिणः प्रतिबन्धनुत् ॥ १॥
भगवान् केवलं लोके क्रीडार्थं न समागतः। किन्तु सर्वोद्धारणाय तदुद्वाहेऽपि मारणम् ॥ २॥
कलौ शुद्धक्षत्रियो हि न स्थाप्य इति निश्चयात्। पापं विवाहमकरोत् फलं तस्याप्यसूचयत् ॥३॥
देवकीप्रीतये वंशः स्थाप्य एवेति तत्तथा। तदानीं सर्वधर्माणां सम्यक् स्थितिनिरूपणे ॥ ४॥
'दशास्या'मिति वाक्येन दशपुत्रनिरूपणम्। यथोक्तं श्रुतिसिद्धं हि कर्तुं नान्यः क्षमो भवेत् ॥५॥
लोकवेदौ पुरस्कृत्य रमणं तत्तथोच्यते।

पूर्वं लौकिकं रमणमुक्तम्, इदानीं वैदिकं रमणमाह **एकैकश इति**। 'कथं रुक्म्यरिपुत्राये'त्यन्तेन। धर्मो हि द्विविधः, विहितकरणं निषेधपरिपालनं च। 'त्रयीद्विषो हन्तव्या इति, नोपेक्षितव्या इति, दैत्यानां रुक्मिप्रभृतीनां वधोऽप्यतोऽग्रे निरूप्यते। तत्र प्रथमं 'दशास्यां पुत्रानाधेही'ति वेदवाक्यात् सर्वास्वेव दश पुत्रान् नाधिकान् न न्यूनांश्चोत्पादितवानिति निरूप्यते। भगवत एकैकशः स्त्रियः ताः सर्वा एव कृष्णस्य स्वप्रियस्य अबलाः स्त्रियः दश दश पुत्रान् अजीजनन्। तासु पुत्रजनने भगवतः सर्वोऽपि भावोऽस्तीति ज्ञापयति। **पितुः अनवमान्** अन्यूनान्। केनचिदंशेन तथात्वं वारयति **सर्वात्मसम्पदेति**। सर्वा याः आत्मसम्पदः शरीरेन्द्रियादिसम्पत्तयः, ताः समुदिताः प्रत्येकं भवन्तीति ज्ञापयितुमेकवनं तासामेवोत्कर्ष इति कदाचित् स्यात्, तन्निवृत्त्यर्थम् ॥ १॥ प्राकृतत्वमाह **पञ्चभिः**। **गृहादनपगमिति**। आदौ साभिमाना जाताः। तत्र हेतुः **गृहादनपगं भगवन्तं** वीक्ष्येति। सर्वदा गृह एव भगवांस्तिष्ठति। भगवत्सम्बन्धेऽपि तथा दोषोत्पत्तौ औत्पत्तिकराजकन्यात्वं हेतुः। अच्युतत्वात् न स्वतः सुरतविच्छेदः। अतः स्वेच्छापूरकत्वं च ताभिर्ज्ञातम्। व्यापकत्वेनागमनमाशङ्क्य, लौकिकन्यायेन तथात्वमित्याह **स्थित-मिति**। गृहेष्वेव लौकिकवत् स्थितम्। एवं भगवतो गुणत्रयेण कृत्वा आत्मानं प्रेष्ठं भगवतः प्रियममंसत। ननु सत्यमेव आत्मा प्रेष्ठः, भगवतोऽप्यात्मैवेति, तत्राह **अतत्त्वविद इति**। तस्य तत्त्वं तत्त्वं च न जानन्ति। भगवदभिप्रायं वस्तुतत्त्वं च न जानन्तीत्यर्थः। यतः स्त्रियः ॥ २॥ तत्सम्बन्धाद्भगवतोऽपि कदाचित्तद्धर्मसम्बन्धः स्यादित्याशङ्क्य निराकरोति **चार्वब्ज-कोशेति**। भगवद्धर्मैः संमोहिताः भगवन्तं व्यामोहयितुं न समशकन्। स्वयं वनिताः वनं प्राप्ताः, यत्र संसाराटवी सम्पद्यत इति। स तु विभूमा। विगतो भूमा यस्मादिति। स्वयमुज्जटप्रायाः, स तु सर्वाधिवास इति यावत्। तासु भगवतः षड्धर्मान् मोहकानाह। चार्वब्जकोशवत् वदनम्। आयता बाहवः। नेत्रे च। सप्रेमहासः। रसपूर्वकं वीक्षितम्। वल्गुजल्पाः मनोहरकथाः। पूर्णरसाख्यापनार्थं चार्वब्जकोशत्वम्। परिष्वङ्गक्रिया पूर्णेति ख्यापयितुं आयतपदम्। नेत्रं सौन्दर्यार्थे भिन्नम्। तद्धि स्वरूपतोऽपि रसोद्बोधकम्। एतत्त्रयं कायिकं रसार्थम्। मानसिकमाह **सप्रेमहासरसवीक्षितमिति**। प्रेम हास्यं रसवीक्षितानीति त्रयम्। स्नेहाभावे तन्न रसालं भवतीति सहभावो निरूपितः। हासो रसोद्बोधकः, रसवीक्षितानि प्रलोभकानि। वाचनिकान्याह **वल्गुजल्पैरिति**। मनोहरार्थानि वाक्यानि स्वपक्षस्थापकानि परपक्षदूषकाणीति, तान्यपि त्रिविधानि। एवं कायवाङ्मनोभिः सम्मोहिताः, अत एव दुर्बलाः भगवतो मनो विजेतुं वशीकर्तुं नाशकन्। अनेन भगवच्चित्तं तासु नासक्तमित्युक्तम् ॥ ३॥

नापि क्षोभं जनयितुं शक्ता इत्याह **स्मायावलोकेति**। आसक्तिरन्या, मनःक्षोभोऽन्यः। कदाचिद्वशीकरणार्थं भावानुत्पाद्य कथञ्चित्स्वमोहमपि प्रतिबध्य विलम्बमाना भवेयुः, तथाकरणेऽपि न क्षोभका जाता इति सम्बन्धासम्बन्धाभ्यां भगवति दोषमुत्पादयितुं न शक्ता इति निरूप्यते। स्मायावलोकः गर्वपूर्वकं दर्शनम्, तेन सम्बन्धे विलम्बं सूचयन्ति, मानापनोदनार्थमुपेक्षां बाधितुं लवदर्शनानि च कुर्वन्ति, कटाक्षैः अलसवलितादिभिः स्वासक्तिं कुर्वन्ति, ततो भावहारिभ्रूमण्डलं कुर्वन्ति, तेन यथैव भगवतो भावः मनोधर्मः, स्वस्मिन्नासक्तं भवति, तादृशं कामशास्त्रसिद्धं भ्रूमण्डलं कुर्वन्ति, तैस्त्रिभिः प्रहिता याः चेष्टाः सौरतमन्त्रैश्च शौण्डाः बलिष्ठाः। सुरतोद्बोधकानि यानि गुह्यभाषणानि। अनेन दृष्टादृष्टसाधनानि निरूपितानि। सर्वाश्च पत्न्यः **यथासुखं** प्रवृत्तौ सङ्कोचरहिताः प्रतिबन्धरहिताश्च। तत्रापि **षोडशसहस्रं** षोडशकलस्य मनसः सहस्रप्रकारेण व्यामोहनसमर्थाः। **अनङ्गबाणाः** चेष्टासहिताव्यवविशेषाः यैर्जयो भवत्येव। मन्त्रसहिता बाणाः कार्यसाधका इति ब्रह्मास्त्रादिषु प्रसिद्धिः। मण्डलीकृतकार्मुका दृष्टद्वारा, तथा दृष्टिमुष्ट्योरेकत्वाय लवदर्शितानि। वीररसाविष्काराय स्मायावलोक इति। एवं सर्वसाधनसम्पत्तियुक्तैरपि बाणैः यस्येन्द्रियं मनश्च विमथितुं ग्लानियुक्तं अस्तम्भयुक्तं वा कर्तुं न शेकुः। सहजानामेतादृशेर्थे जयो न भवतीति कठिनदुर्गस्थेषु राजधर्मेषु कापट्यं निरूपितमिति कुहकैः कपटधर्मैरपि न शक्ताः॥ ४॥

**श्रीविट्ठलरायात्मजश्रीवल्लभकृतलेखः**

**द्वादशे। कारिकायाम्। प्रतिबन्धनुदिति।** भगवद्भजने प्रतिबन्धको रुक्मी स्वरूपाज्ञानपर्वरूपः, तन्मारणेन भजनप्रतिबन्धनिवृत्तिर्जातेत्यर्थः। फलमिति। रुक्मिणो वधः पापविवाहफलमित्यर्थः। तादृशविवाहेनाशुद्धत्वमपि सम्पाद्य वंशस्थापने हेतुमाहुः **देवकीप्रीतये** इति। भगवत्सदृशसुतवरणं वंशस्थापनाभिप्रायेणैवेति भावः। **स्थितिनिरूपणे** इति। निमित्तसप्तमीयम्। धर्मस्थितिनिरूपणार्थमित्यर्थः। **गृहादनपगमित्यस्याभासे। प्राकृतत्वमिति** लौकिभावत्वमित्यर्थः। **स्मायावलोकेत्यत्र**। स्मयास्यायं स्मायस्तादृशोऽवलोक इत्यर्थः। लवमीषन्मात्रं दर्शनं लवदर्शनमित्यर्थः। **मण्डलीकृतेति**। भ्रुवस्तादृशाकारत्वादिति भावः। **दृष्टिमुष्ट्योरिति**। मुष्ट्या यथा धनुर्धृत्वा बाणः प्रक्षिप्यते, तथा दृष्टि भ्रूपर्यन्तां विधाय कटाक्षबाणाः प्रक्षिप्यन्ते इत्यर्थः। **कठिनेति**। कठिनदुर्गस्थेषु जनेषु सत्सु राजधर्मेषु मध्ये कापट्यमपि राजधर्मो निरूपित इत्यर्थः।

**श्रीसुबोधिनी-सारः**

शुकोक्तिः। कृष्णस्याबलाः स्त्रियस्ता एकैकशः सर्वा या आत्मनि सम्पत् तया पितुरनवमान्सदृशान् दश दश पुत्रानजीजनत्॥ गृहादनपगं नापगच्छति न यातीति तथाभूतम् अच्युतं श्रीकृष्णं स्थितं वीक्ष्य राजपुत्र्यो भूपकन्याः स्वं स्वमात्मानं प्रेष्ठमच्युतस्य प्रियतमं मेनिरे न तस्य तत्त्वमात्मारामत्वं विदन्तीति तथा स्त्रियः॥ २॥ चारु सुन्दरमब्जकोशवत् वदनं मुखमायतानि बाहुनेत्राणि सप्रेम्णा हासरसेन वीक्षितानि दर्शनानि वल्गुजल्पानि मंजुलभाषणानि तैः सम्मोहिता विभूम्नो भगवतो मनो विजेतुं वशीकर्त्तुं वनिताः स्त्रियः स्वैर्विभ्रमैर्न समशकन् न समर्था बभवुः॥ ३॥ एतद्दृढीकर्त्तुं पूर्वोक्तमेव श्लोकमुपन्यस्यति स्मायेन गूढहासेन युक्तोऽवलोकलवः कटाक्षस्तेन दर्शितं सूचितं भावहारि मनोहरणशीलं यत् भ्रूमण्डलं तेन प्रहिताः प्रेरिता ये सौरतमन्त्राः सुरतनर्मकेलयस्तेषु शौंडैः प्रगल्भैः अनंगस्य कामस्य पंच बाणैरन्यैः करणैः कामशास्त्रप्रसिद्धैर्वश्याद्युपायैर्यस्य श्रीकृष्णस्येन्द्रियं मनो विमथितुं षोडशसहस्रं तुशब्दादष्टोत्तरशतं पत्न्यः स्त्रियो न शेकुः॥ ४॥

**गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी**

एकषष्टितमे कृष्ण पुत्रपौत्रादिसन्ततिः। रुक्मिणो बलभद्रेण वधश्च विनिरूप्यते॥ १॥

अथ तासु भगवत्पत्नीषु पुत्रपौत्रादिपरम्परामनुवर्णयति—एकैकश इति। ताः पूर्वोक्ताः कृष्णस्याबला भार्या एकैकशो दश दश पुत्रानजीजनन्। पुत्रान् विशिनष्टि—सर्वा या आत्मनि श्रीकृष्णे सौन्दर्यादिसम्पत् तयाः पितुः सकाशात् अनवमान् अन्यूनान् तत्तुल्यानित्यर्थः॥ १॥ तान् पुत्रानेव विस्तरेण प्रदर्शयन् प्रसङ्गात्तासां भगवद्भार्याणां भगवन्मायामोहितत्वं भगवतस्तदवश्यत्वं चाह—गृहादिति पञ्चभिः। गृहादनपगं नापगच्छति न निष्क्रामतीति तथा तं सर्वदा स्वस्वगृहेऽवस्थितं अच्युतं सम्भोगादौ वैरस्यरहितं श्रीकृष्णं वीक्ष्य ताः स्त्रियः प्रत्येकं स्वस्वमात्मानं तस्य प्रेष्ठं प्रियतमं मेनिरे इत्यन्वयः। तासामभिमानाधिक्ये हेतुमाह—राजपुत्र्य इति। 'तथापि तस्यात्मारामत्वात् तथाभिमानोऽयुक्त एव' इत्याशङ्क्याह—न तत्तत्त्वविद इति। तस्य तत्त्वमात्मारामत्वं न विदन्तीति तथाभूता यतोऽतस्तासां तथाभिमान इत्यर्थः॥ २॥ आत्मारामत्वमेव स्पष्टयति—चार्विति। भगवतश्चार्वब्जकोशवदनं च, आयतानि दीर्घाणि बाहुनेत्राणि च, सप्रेम्णा हासरसेन वीक्षितानि च, वल्गुजल्पाः मनोहरवाक्यानि च, तैः सम्मोहितास्तत्रासक्तास्ता वनिताः स्वैरनेकैर्विभ्रमैस्तस्य विभूम्नः निजानन्दपरिपूर्णस्य मनो विजेतुं वशीक न समशकतुंन् सम्यक्प्रकारेणापि शक्ता न बभूवुः॥ ३॥ तासां विभ्रमानेव दर्शयन्नेतद्विवृणोति—स्मायेति। स्मायो गूढहसितं तद्युक्तो योऽवलोकलवः कटाक्षस्तेन दर्शितः सूचितो यो भावोऽभिप्रायस्तेन हारि मनोहरणशीलं यद्भ्रूमण्डलं तेन प्रहिताः प्रस्थापिता ये सौरतमन्त्रास्तेषु शौण्डैः प्रगल्भैः अनङ्गस्य कामदेवस्य बाणैः कामशास्त्रप्रसिद्धैरन्यैश्च करणैर्यस्य भगवत इन्द्रियं मनः विमथितुं क्षोभयितुं षोडशसहस्रमपि पत्न्यः न शेकुः समर्था न जाता इत्यर्थः॥ ४॥

## अन्वितार्थप्रकाशिका

एकषष्टितमे शौरेः सन्ताना रुक्मिणो वधः । अनिरुद्धविवाहोऽत्र श्लोकाः प्रोक्ता द्विसिन्धवः ( ४२ ) ॥
त्रीण्युवाचेत्यर्द्धयुक्ताः पञ्च वेदा ( ४५॥ ) अनुष्टुभः ।; ६१ ॥

एकैकश इति । ताः पूर्वोक्ताः कृष्णस्याबला भार्या एकैकशः सर्वा या आत्मनि सौन्दर्यादिसम्पत्तया पितुः सकाशात् अनवमान् अन्यूनान् तत्तुल्यान् यद्वा पितुः सर्वात्मभूता स्वरूपभूतायाा सम्पत्तया अन्यूनान् दश दश पुत्रानजीजनन् ॥ १ ॥ गृहादिति । अच्युतं श्रीकृष्णं स्वस्वगृहादनपगं नापगच्छति तथा तं सर्वदा स्वस्वगृहेऽवस्थितं वीक्ष्य राजपुत्र्यः राजादिपुत्र्यः तस्याच्युतस्य तत्त्वमात्मारामत्वं न विदन्ति । तथाभूताः ताः स्त्रियः प्रत्येकं स्वस्वमात्मानं तस्य कृष्णस्य प्रेष्ठं प्रियतमं न्यमंसत । अहमेवास्य प्रिया नान्या भार्या इति मेनिरे ॥ २ ॥ चार्विति । भगवतश्चार्वब्जकोशतुल्यं वदनं च आयतानि दीर्घाणि बाहुनेत्राणि च प्रेम्णा हासरसेन च सहितानि च वल्गुजल्पाः मनोहरवाक्यानि तैः संमोहितास्तत्रासक्ता वनिताः जातानुरागाः स्त्रियः स्वैरनेकैर्विभ्रमैस्तस्य विभूम्नः निजानन्दपरिपूर्णस्य मनो विजेतुं वशीकर्तुं न समशकन् सम्यक् प्रकारेणापि शक्ता न बभूवुः ॥ ३ ॥ स्मायेति । स्मयः स्मितमेव स्मायो गूढहसितं तद्युक्तो योऽवलोकलवः कटाक्षस्तेन दर्शितः सूचितो यो भावोऽभिप्रायस्तेन हारि मनोहरणशीलं यद्भ्रूमण्डलं तेन प्रहिताः प्रस्थापिता ये सौरतमन्त्रास्तेषु शौण्डैः प्रगल्भैः । अनङ्गस्य कामदेवस्य बाणैः कामशास्त्रप्रसिद्धैरन्यैश्च करणैरिति स्वामिपादाः । करणैरुपायैः तेषां रूपकम् अनङ्गबाणरूपैरिति स्मायेत्यादिकरणानां विशेषणम् । करणैः नेत्रैरिति चक्रवर्ती । सर्वमिदं करणशब्दप्रतीतग्राम्यतापरिहारायेति यस्य भगवत इन्द्रियं मनः विमथितुं क्षोभयितुं षोडशसहस्रमपि पत्न्यः न शेकुः समर्था न जाताः ॥ ४ ॥

## श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्

अथेदानीमेकषष्टितमेऽध्याये पट्टपत्नीनां पुत्रगणनमन्यासामपि संततिवर्णनं चानिरुद्धोद्वाहे रामकृतरुक्मिहननं च गदति एकैकश इति । अबलाः स्त्रियः सर्वथा आत्मनि स्वस्मिन् संपदा पितुः सकाशादनवमान् । अन्यूनान् तत्तुल्यानित्यर्थः । दशदशपुत्रान् । एकैकशः अजीजनत् ॥ १ ॥ अनपगं अगच्छंतं स्थितं सदा वर्त्तमानं । तस्य तत्त्वं स्वरूप याथार्थ्यं विदंतीति तत्वविदस्तथाभूतानभवंतीति ताः स्वंस्वं स्वकीयं स्वकीयं प्रेष्ठं न्यमंसत मेनिरे ॥ २ ॥ श्रीकृष्णस्य निर्लेपत्वमाह द्वाभ्यां चार्विति अब्जकोशवद्वदनं चायतानि विस्तृतानि बाहुनेत्राणि च स प्रेमहासरसेन वीक्षितानि च वल्गुजल्पाः मनोहरवाक्यानि च चारुभिरेतैर्भगवत्संबंधिभिः संमोहिताः संजातानुरागाः वनिताः स्वैः स्वकीयैर्विभ्रमैः शृंगारिकभावैः विभूम्नः पूर्णकामस्य भगवतः सर्वैश्वर्यसंपन्नस्य श्रीकृष्णस्य मनो विजेतुं न समशकन् न समर्था बभूवुः ॥ ३ ॥ स्मायेति स्मायेन मंदहसितेन युक्तश्चासावलोकलवः कटाक्षश्च तेन दर्शितः प्रकटितो भावः स्वाभिप्रायस्तेन हारि चित्तहरणशीलं यद्भ्रूमंडलं तेन प्रहिताः प्रेरिताश्च ते सौरतमंत्राश्च तेषु शौंडैर्निपुणैः अनंगस्य बाणैरिषुभिः ततो भिन्नैश्च करणैरनंगशास्त्रविख्यातैरुपायैः यस्य हरेरिंद्रियमंतःकरणं । विमथितुं चालयितुं षोडशसहस्रं पत्न्यो न शेकुः समर्था न बभूवुः ॥ ४ ॥

## भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

संततिः पुत्रपौत्रादेरेकषष्टितमे हरेः । विवाहे चानिरुद्धस्य रामतो रुक्मिणो वधः ॥ १ ॥

एकैकश इति ॥ एकैकशः ताः, कृष्णस्य, अबलाः स्त्रियः, सर्वा या आत्मसंपत् तया, पितुः सकाशात्, अनवमानन्यूनान् तुल्यानिति यावत् । दश दश पुत्रान्, अजीजनन् जनयामासुः । श्रीकृष्णत एकैकपत्न्यां दश दश पुत्रा अभूवन्नित्यर्थः ॥ १ ॥ तदेव विस्तरेण वक्तुं तावत्तासां भगवन् मायामोहितत्वं भगवतस्तदवश्यत्वं चाह द्वाभ्याम् ॥ गृहादिति ॥ गृहात् न अपगच्छति न निष्कामतीत्यनपगस्तं, स्थितं गृहेष्वेव सर्वकालं स्थितमित्यर्थः । अच्युतं परमेश्वरं श्रीकृष्णं, वीक्ष्यावलोक्य, राजपुत्र्यः राज्ञां सुताः, सर्वास्ताः स्त्रियः, अतत्तत्त्वविदः भगवद्याथात्म्यानभिज्ञाः, हेतुगर्भमिदम् । तत्त्वात् प्रत्येकं स्वं स्वं स्वस्वात्मानमित्यर्थः । प्रेष्ठं प्रियतमं, भगवत इति शेषः । न्यमंसतामन्यन्त ॥२॥ चार्विति ॥ चारु अब्जकोशवद्वदनं च आयतानि बाहुनेत्राणि च सप्रेम्णा हासरसेन वीक्षितानि च वल्गुजल्पाश्च तैः साधनैः, भगवता कर्त्रा, संमोहिताः, वनिताः, स्वैः विभ्रमैः, स्वकीयैरनेकविधैर्विलासैरित्यर्थः । विभूम्नः परिपूर्णस्य कृष्णस्य, मनो मानसं, विजेतुं वशीकर्त्तुं, न समशकन् शक्ता न बभूवुः । तस्यात्मारामत्वादिति भावः । भगवता इत्यत्र भगवत इत्यपि पाठः । तत्पक्षे भगवतः विभूम्नः अनयोः पर्यायेण विशेषणविशेष्यभावः । चार्वित्यादिभिः स्वैः विभ्रमैः, वनिताः, तन्मनः विजेतुं न समशकन्नित्यन्वयः ॥ ३ ॥ तासां विभ्रमान्वर्णयन्नेतदेव विवृणोति ॥ स्मेरेति ॥ क्वचित् स्मायेत्यपि पाठः । तत्र स्मेरस्माययोरेकार्थत्वम् । स्मेरो गूढहसितं तद्युक्तोऽवलोकलवः कटाक्षस्तेन दर्शितः सूचितो भावोऽभिप्रायस्तेन हारि मनोहरणशीलं यत् भ्रूमण्डलं तेन प्रहिताः प्रस्थापिता ये सौरतमन्त्रास्तेषु शौण्डैः प्रगल्भैः, अनङ्गस्य कामस्य बाणैः शरैः, अन्यैश्च करणैः कामशास्त्रप्रसिद्धैः, यस्य भगवतः, इन्द्रियं मनः, विमथितुं क्षोभयितुं, षोडशसहस्रं तु षोडशसहस्रपरिमिता अपि पत्न्यः, न शेकुः नाशक्नुवन् ॥ ४ ॥

## कृष्णप्रिया

### भगवान् की पारिवारिक कथा

श्रीशुकदेवजी ने कहा—राजन् ! भगवान् श्रीकृष्ण की सर्व अर्धाङ्गनाओं की कुक्षि से दस-दस पुत्र उत्पन्न हुए। भगवान् के सर्व पुत्र भगवान् के समान बल वीर्य रूप आदि श्रेष्ठ गुणों से सम्पन्न थे ॥ १ ॥ महाराज ! राजकुमारियाँ यह देखती थीं कि हमारे प्रियतम भगवान् श्रीकृष्णजी कभी राजभवन से बाहर नही पधारते, केवल हमारे ही समीप रहते हैं। इससे रानियों का मन्तव्य था कि नाथ की मैं ही प्रियतमा हूँ। महाराज ! सच कहो, तो रानियाँ पूर्णपुरुषोत्तम की महिमा नहीं जानती थीं ॥ २ ॥ महाराज ! भगवान् श्रीकृष्ण की रानियाँ निजानन्द-निमग्न सुन्दरवर भगवान् श्रीकृष्ण के कमल कली के समान रमणीय मुख, दीर्घबाहु, दीर्घनेत्र, प्रेमपूर्ण मधुर हास्य, रसमय अवलोकन, हृदयङ्गम वार्तालाप आदि से स्वयं ही अत्यन्त मुग्ध रहती थीं। यद्यपि रानियाँ सर्वथा रमणीय थीं फिर भी अपने हाव-भाव कटाक्ष आदि शृङ्गार भावों से नाथ के मन को अपनी ओर आकृष्ट करने में सफल न हो सकीं ॥ ३ ॥ श्रीद्वारिकाधीश प्रभु की षोड़श सहस्र से अधिक रानियाँ थी एवं सर्वाङ्ग रमणीय थीं। वे मधुर स्मित और तिरछी चितवनमयी भौंहों के इशारे से चलाये हुए कामकलामय मधुर रस से पूर्ण-परिपूर्ण होने पर भी किसी भी प्रकार से चेष्टाओं से, सामग्रियों से श्रीकृष्ण के मन इन्द्रियों में क्षोभ न कर सकीं ॥ ४ ॥

[1]इत्थं रमापतिमवाप्य पतिं स्त्रियस्ता ब्रह्मादयोऽपि न विदुः पदवीं यदीयाम् ।
भेजुर्मुदाविरतमेधितयानुरागहासावलोकनवसङ्गमलालसाद्यम् ॥ ५ ॥[2]
प्रत्युद्गमासनवरार्हणपादशौचताम्बूलविश्रमणवीजनगन्धमाल्यैः ।
केशप्रसार[3]शयनस्नपनोपहार्यैर्दासीशता अपि विभोर्विदधुः स्म दास्यम् ॥ ६ ॥
[4]तासां या दशपुत्राणां कृष्णस्त्रीणां पुरोदिताः । अष्टौ महिष्यस्तत्पुत्रान् प्रद्युम्नादीन् [5]गृणामि ते ॥ ७ ॥
चारुदेष्णः सुदेष्णश्च चारुदेहश्च वीर्यवान् । सुचारुचारुगुप्तश्च[6] भद्रचारुस्तथापरः ॥ ८ ॥

#### कर्दमक्षमा

अन्वयः—ब्रह्मादयः, यदीयाम्, पदवीम्, न, विदुः, ताः, स्त्रियः, इत्थम्, रमापतिम्, पतिम्, अवाप्य, अविरतम्, एधितया, मुदा, अनुरागहासावलोकनवसङ्गमलालसाद्यम् भेजुः ॥ ५ ॥ दासीशताः, अपि, कृष्णपत्न्यः, दासीभूताः, प्रत्युद्गमासन-वरार्हण-पादशौच-ताम्बूल-विश्रमपा-वीजन-गन्ध-माल्यैः, केशप्रसार-शयन-स्नपनोपहार्यैः, विभोः, दास्यम्, विदधुः, स्म ॥ ६ ॥ दशपुत्राणाम्, तासाम्, कृष्णस्त्रीणाम्, याः, पुरोदिताः, अष्टौ, महिष्यः, प्रद्युम्नादीन्, तत्पुत्रान्, ते, गृणामि ॥ ७ ॥ चारुदेष्णः, च, सुदेष्णः, च, चारुदेहः, वीर्यवान् च सुचारुः, च, चारुगुप्तः, च तथा अपरः, भद्रचारुः ॥ ८ ॥

#### श्रीधरस्वामिविरचिता भावार्थदीपिका

अनुरागेण हासोऽवलोकश्च नवसंगमे लालसमौत्सुक्यं च ते आद्या यस्य विभ्रमकदंबस्य तं भेजुः। अनुरागहासावलोकनवसंगमलालसाद्यं भेजुस्तस्य मनो विजेतुं न शेकुरिति वा ॥ ५ ॥ किन्तु प्रत्युद्गमादिभिर्विभोस्तस्य दास्यं नित्यं विदधुरिति। प्रौढभावेऽपि नवसंगमाद्यभिधानमगतसारत्वेनौत्सुक्येन च तथा प्रतीतेः। तेषामेव श्लोकानां प्रस्तावांतरपुनःपुनरावृत्तिरिति सौंदर्यात् ॥ ६ ॥ प्रासंगिकमुक्त्वा प्रस्तुतमाह तासामिति। दशदश पुत्रा यासां तासां मध्येऽष्टौ महिष्यो याः प्रागुक्तास्तत्पुत्रानिति ॥ ७-१२ ॥

#### श्रीवंशीधरकृता भावार्थदीपिकाप्रकाशः

ता रुक्मिण्याद्याः। यदीयां यत्संबंधिनीम्। विभ्रमपदाध्याहारे गौरवं मत्वार्थांतर—अनुरागेति। पूर्वेणैव सम्बन्धः। नवो नित्यनूतनः संगमोंगसंगश्च लालसा तृप्त्यभावश्च तदाद्यं तदादिकविलासमनेकं स्वकर्तृकं कृष्णकर्तृकं वा भेजुः। "तथाह-

---

१. यास्वीप्सितं स्वभवनेष्वधिरूढमुच्चैर्लक्ष्म्यैकधाम सरसप्लुतवीक्षणेन ।
ऐक्षन्सतामपि पतिं च सतीः कटाक्षैः स्थूणान्तरेण नवसङ्गमलज्जयैव ॥ १ ॥
रामा गृहे विहरतः पुरतः कराभ्यां बद्धेक्षणा॥ स्वदयितस्य मुदा हसन्त्यः ।
गात्रान्तराण्यपिदधुर्निजपूरुषस्य क्लेशावहान्यपि तदङ्गजभङ्गभीताः ॥ २ ॥—विज. ।

२. ५-६ श्लोकौ विजये न स्तः । ३. प्रसाध—श्रीधर. टि. । ४. आसां—प्रा. पा. । ५. गृणन्ति तान्—विज. । ६. दीप्तिश्च—प्रा. पा. ।

मपि तच्चित्तो निद्रां च न लभे निशि" इति भगवदुक्तिज्ञाप्यः "ईक्षितोंतःपुरस्त्रीणां सव्रीडस्मितवीक्षितैः। कृच्छ्राद्विसृष्टे निरगाज्जातहासो हरन्मनः ।।" इति, "रेमे स्त्रीरत्नकूटस्थो भगवान्प्राकृतो यथा" इत्यादिकोक्तिज्ञाप्यश्च पारिजाताद्यपहरणज्ञाप्यश्च तासां प्रेममयैर्विलासैस्तद्वशीभावस्त्वस्त्येति ज्ञेयम् ।।५।। सेवनानुरागमाह–किन्त्विति। वरार्हणं पुष्पांजलिरत्नांजलिनिक्षेपादि। प्रौढभावेऽपि नवोढात्वाभावेपि। अगतसारत्वेनैकरसरूपयौवनादिमत्त्वेनौत्सुक्येनानुरागाधिक्येन च तथाप्रतीतेर्नवसंगसमास्वादप्रतीतेः। तेषामेव पूर्वोक्तानामेव। प्रस्तावांतरे प्रकृतांतरे ।।६।। प्रासंगिकं प्रसंगानुगतम्। तासां सर्वासाम्। तत्पुत्रान्रुक्मिण्यादिपुत्रान्। ते तुभ्यम् ।। ७ ।। प्रद्युम्नादन्येषां कानि नामानीत्यत आत—चारुदेष्ण इति। वीर्यवानिति सर्वविशेषणम् ।। ८-९ ।।

### श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी

ततश्च तासां ब्रह्मादिभिरपि दुर्गमभजनं दर्शयति—इत्थमिति। रमापतिं श्रीरुक्मिणीकान्तं श्रीगोपीरूपाणां परमरमाणां वा रमणं निरन्तरं वर्द्धमानया मुदा तादृशावलोकनयुक्तनवसङ्गमलालसा आद्या यत्र तद्यथा स्यात्तथा भेजुः ।। ५ ।। किञ्च प्रत्युद्गमेति प्रसारेति प्रसाधेति वा पाठः एषां प्रायोनुक्रमोपचारत्वं गम्यं वरार्हणं पुष्पलाजरत्नाञ्जलिनिक्षेपादि अत्र टीकायां प्रौढभावेपीत्यादिकं प्रकरणसङ्गमनं तथा तेषामेवेति प्रथमस्कन्धाद्युक्तानामित्यर्थः ।। ६ ।। तत्पुत्रान् तासामेव पुत्रानित्यर्थः। बाहुल्यभियेति भावः ।। ७-८ ।।

### श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी

यस्य भगवतस्तं प्रेष्ठं न्यमंसतेति पूर्व्वेण, किंवा रमापतिमिति परेणान्वयः। तु अपि, षोडशसहस्रमपि, न तु कतिचिदित्यर्थः। पूर्व्वोक्तानुसारेण साष्टशताधिकं ज्ञेयम्। इत्युक्तेन तन्मनोवशीकरणप्रकारेण ।। ५-६ ।। तासां पुत्रानिति अन्यासां प्रत्येकं पुत्राणामुक्तौ प्रयोजनाभावात्, अतिवाहुल्येन प्रस्तुतकथारसविघाताच्च। प्रद्युम्न आदिर्येषां तानिति तस्य सर्व्वेभ्यो ज्येष्ठत्वात् रूपगुणादिना श्रेष्ठत्वाच्च। वीर्य्यवानिति सर्व्वेषां विशेषणम्, अतस्तत्समुच्चयार्थं प्रायः सर्व्वत्रैव चशब्दः। तथेति च परश्चारुगुप्तस्यानुज इत्यर्थः। एवमग्रजानुजक्रमेण सर्व्वे ज्ञातव्या इति भावः ।। ७-८ ।।

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका

इत्थमिति। किन्तु तदीयां पदवीं याथात्म्यं ब्रह्मादयोपि न विदुः तमित्थम्भूतं श्रियः पतिं पतिमवाप्य ताः स्त्रियः अविरतं सन्ततं यथा तथा एधितया वर्द्धितया मुदा नवसङ्गमे लालसौत्सुक्यमाद्यो यस्य विभ्रमकदम्बस्य तं भेजुः नवसङ्गमलालसाद्यं भेजुस्तस्य मनो विजेतुं न शेकुरिति वा ।। ५ ।। किन्तु प्रत्युद्गमादिभिः विभोस्तस्य दास्यं विदधुरिति प्रौढभावेपि नवसङ्गमाद्यभिधानमगतसारत्वेनौत्सुक्येन च तथा प्रतीतेः एतेषामेव श्लोकानां प्रस्तावान्तरे पुनःपुनरावृत्तिरपि सौन्दर्य्यात् ।। ६ ।। प्रासङ्गिकमुक्त्वा प्रस्तुतमाह–तासामिति। दशदश पुत्राः यासां तासां कृष्णस्य स्त्रीणां मध्ये या अष्टौ रुक्मिण्यादयः पूर्वं कथितास्तासां पुत्रान् प्रद्युम्नादीन् तुभ्यं कथयामि ।। ७ ।। चारुदेष्ण इति। प्रद्युम्नः प्रमुख आदिर्येषामिति तद्गुणसम्विज्ञानो बहुव्रीहिः ते दश पितुर्हरेरनवमास्तुल्या रुक्मिण्याः पुत्रा इति शेषः। प्रद्युम्नव्यतिरिक्तान्नव पुत्रान्निर्दिशति। चारुदेष्ण इति। वीर्य्यवानिति चारुदेहविशेषणम् ।। ८-९ ।।

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

याः पत्न्यः पक्ष्मकटाक्षैः स्थूणान्तरेण स्तम्भव्यवधानेन स्वीप्सितं सुतरामभीष्टं कृष्णमैक्षन् अपश्यन् ता इति शेषः केन उच्यते लक्ष्म्याः कान्त्या एकधामप्रधानगृहञ्च सरसं सस्नेहं प्लुतं दीर्घीकृतं सृतं वा वीक्षणं दर्शनं लक्ष्म्येकधामसरसप्लुतवीक्षणं तेन स्वभवनेष्वधिरूढम् उत्तुङ्गमञ्चारूढम् अपि सम्भावनार्थं सतीः सत्यः स्थूणान्तरे किमर्थं वीक्षणमित्यत उक्तं नवसङ्गमेति ( क )। सुरतादन्यत्र काले तासां लीलाविशेषमाह—रामा इति। रामाः स्त्रियः गृहे विहरतः स्वदयितस्य कराभ्यां पुरतो बद्धेक्षणाः मुदा रोमाञ्चहेतुहर्षेण हसन्त्यः सात्तपाशं कुर्वन्त्यः निजपूरुषस्य निजभर्तुः क्लेशावहानि क्लेशाकराण्यपि गात्रान्तराणि विषयेभ्यः स्पर्शयोग्येभ्यो गात्रेभ्योऽन्यत् गात्राणि अपि दधुः वस्त्रादिना पिहितानि चक्रुरित्यन्वयः। कीदृश्यः तस्याङ्गजस्याश्लेषलक्षणकामस्य भङ्गे भीता अपीति ( ख ) ।। ५-६ ।। इदानीं तासां पृथक्-पृथक् पुत्रान् वक्तुमुपक्रमते—तासामिति। दशदश पुत्रा यासां ताः दशपुत्राः तासां तासां कृष्णस्त्रीणां मध्ये याः पुरोदिताः पूर्वोक्ताः अष्टौ महिष्यस्तासां तान् पुत्रान् प्रद्युम्नादीन् गृणन्ति तत्रत्या इति शेषः ।। ७ ।। प्रद्युम्नादन्ये किं नामन इति तत्राह—चारुदेष्ण इत्यादिना ।। ८-९ ।।

### श्रीमज्जीवगोस्वामिकृतः बृहत्क्रमसन्दर्भः

तदेवाह—प्रत्युद्गमेत्यादि। दास्यं प्रेमलक्षणं साध्यं पादसेवाख्यभक्तिम् ।। ७-४० ।।

इति श्रीदशमे श्रीबृहत्क्रमसन्दर्भे एकषष्टितमोऽध्यायः ।। ६१ ।।

## श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शिनी

तासां प्रेममयैर्विभ्रमैस्तदिन्द्रियमथनकारणकमङ्गसङ्गञ्चाह—इत्थमिति। अनुरागः प्रेमविलासविशेषस्तन्मयो यो हासावलोकस्तेन नवः नित्यनूतनः सङ्गमो अङ्गसङ्गश्च लालसा तृप्त्यभावश्च तदाद्यं तदादिकमनेकविलासं स्वकर्त्तृकं कृष्णकर्त्तृकं वा भेजुः "तथाहमपि तच्चित्तो निद्राञ्च न लभे निशि" इतिभगवदुक्तिज्ञाप्य—

ईक्षितोन्तःपुरस्त्रीणां सव्रीडस्मितवीक्षितैः। कृच्छ्राद्विसृष्टो निरगाज्जातहासो हरन्मनः॥" इति।

"रेमे स्त्रीरत्नकूटस्थो भगवान् प्राकृतो यथा" इत्यादिशुकोक्तिज्ञाप्यश्च पारिजाताद्याहरणज्ञाप्यश्च तासां प्रेममयैर्विलासैस्तद्वशीभावस्त्वस्त्येवेति ज्ञेयम्॥ ५॥ तासां तद्विषयकप्रेम्णः परिचर्य्यात्मिकाननुभावानाह—प्रत्युद्गमेति। वराहंणं पुष्पाञ्जलिरत्नाञ्जलिनिक्षेपादि॥ ६॥ प्रासङ्गिकमुक्त्वा प्रस्तुतमाह—तासामिति। दशदश पुत्राः यासां तासां मध्ये या अष्टौ महिष्यः प्रागुक्ताः॥ ७-१३॥

## गूढार्थदीपिनी

यदीयां पदवीं यथार्थस्वरूपं न विदुः तं पतिम् अवाप्य स्त्रियः निरन्तरं र्घधितया मुदा सङ्गमलालसात् यं भेजुः तस्य इन्द्रियमित्यन्वयः॥ ५॥ दासीशता अपि ताः स्त्रियः विभोः श्रीकृष्णस्य दास्यं सेवां स्वयमेव विदधुः। स्म इत्याश्चर्यम्। कैः। प्रत्युद्गमादिभिः। प्रत्युद्गमः आगच्छतः पुरतो गमनम् अर्ह्यतेऽनेनेति वरार्हणम्। अर्घ्यपाद्यादि शौचं प्रक्षालनम्। वीजनं व्यजनचालनम्। माल्यैः पुष्पैः। प्रसारः अलङ्करणम्॥ ६॥ दश दश पुत्रा यासाम् तासाम्। पुरा उदिताः कथिताः ते तुभ्यम् कथयामि॥ ७॥ वीर्यवान् सर्वेषां विशेषणम्॥ ८॥

## श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः

यदीयां पदवीं ब्रह्मादयोपि न विदुस्तं रमापतिमित्यन्ताः पूर्वोक्ताः स्त्रियोपि पतिमवाप्य अविरतं सन्ततं यथा तथा एधितया वर्द्धितया मुदा अनुरागेणातिप्रेम्णा हासोऽवलोकश्च नवो नित्यनूतनः सङ्गमोऽसङ्गसङ्गश्च लालसः औत्सुक्यं च ते आद्या यस्य विभ्रमकदम्बस्य तं भेजुः॥ ५॥ किञ्च प्रत्युद्गमादिभिर्विभोः व्यापकस्य श्रीकृष्णस्य दास्यं नित्यं विदधुः तत्र वरैः श्रेष्ठैः पुष्पादिभिरर्हणं पूजनम् उपहार्य्याणि तत्तत्काले जातानि वस्तूनि॥ ६॥ दशदश पुत्राः यासां तास्तथा तासां मध्ये अष्टौ महिष्यो याः रुक्मिण्याद्याः पुरोदिताः तत्पुत्रान् ते तुभ्यं गृणामि कथयामि॥ ७-१२॥

## श्रीसत्यधर्मकृता श्रीभागवतटिप्पणी

याः स्वभवनेषु तत्रोच्चैरुत्तुगमञ्चादौ चाधिरूढं लक्ष्म्येकधामसम्पन्मुखाश्रयं तव तन्त्रं सरसप्लुतवीक्षणेन स्वीप्सितं सुष्ठ्वोप्सितं कामितमपि सतां सज्जनानां पतिं चन्द्रमिव वियामानं वा सतीः सत्यो नवसङ्गमलज्जयेव स्थूगान्तरेणेक्षन्न पश्यन्। नित्यनूनमुखप्रदत्वान्नवसङ्गम इति लज्जयैवेत्यपि पाठः सम्भवति। भित्त्याद्यनुक्त्वोक्त्या च स्थूणान्तरेणेति नृसिंहादिकमन्यच्च दुंरितादिनिवृत्तय इत्यादेर्हरिसङ्गान्तरायापनुत्त्यै श्रीनृसिंहस्य तदन्तर्लसतः प्रार्थनामतन्वंस्तन्वङ्ग्यः स चायमिति प्रादुर्भूयादिहेति वा ध्वन्यते॥ ५॥ रामा गृह इति श्लोके गात्रान्तरशब्दार्थः क इति न ज्ञायते प्रतीयते क्लेशावहपदस्य निजभर्तृपदेनान्वयो वाधितोऽङ्गजभङ्गोऽपि कृष्णेन क्रियमाणः स्वाङ्गे जायमानो नो भङ्ग इति चेत्यतः स्वयं किञ्चिदनूद्याध्याहृत्य किञ्चिदन्वयप्रदर्शनेनार्थापनेन च तां वारयति। गान्त्रान्तराण्यपिदधुः पिधातव्येभ्योऽन्यान्यपीति। गात्राणि पिधातव्यानीत्यूरुमूलो राजादीनि तेभ्योऽन्यानि मुखादीन्यपिदधराच्छादितवत्यः। लक्षणया तानि च मुखादीनि ज्ञेयानीति सूचयन्किञ्चिदध्याहृत्यान्वयं दर्शयति। येषामवयवानां पिधानेनात्मनः क्लेशो भवतीति। तथा निजभर्तुरपि गात्रान्तराण्यपिहितव्यान्यप्यपिदधुः आच्छादितवत्यः। तत्र हेतुं वक्तुं तदङ्गजभङ्गभीता इति पदमिति मनसि कृत्वा सोपोद्वलकं तदङ्गभङ्गजपदार्थं वर्णयति। निर्लज्जा इति। अनेन दासीसमाजे सती सत्यश्चुम्बनादिनीरता अतो निर्लज्जा इति। अङ्गजपदेन कामशब्दो लक्ष्यस्तेन चाभिलाषो ग्राह्यः। अकामो मदभिलाषप्रसोषी स्यादसाविति भयात्स्वमुखतन्मुखादीनासाच्छादनमन्तरत एवं चुम्बनाद्युपयोगि चक्रुरिति भावः। ततश्चायं श्लोकार्थः। रामा गृहे विहरतो रामा दासीनार्यस्ताभिः सहितं गृहं तस्मिन्निति चावृत्याऽर्थः। क्रीडतो विहरतो हरिविरुद्धवदाचरतोऽस्वार्थगतासङ्गतयानालिङ्ग्यांङ्ग्वर्तमानरयेति यावत्। स्वदयितस्य स्वपीतमात्रस्य निजपुरुषस्य भर्तुः पुरतोऽग्रे कराभ्यां स्वयं बद्धानि पिहितानीक्षणानि यासां ताः। मुदाऽऽनन्देनाहसन्त्य ईषत्स्मितं कुर्वत्यः स्वपती नृपती वा सतीसतीनां बहुमतो न बहुह्लास इति तत्। गात्रान्तराणि अपिहितोरुमूलकुचाद्यतिरिक्तान्यात्मनः क्लेशावहानि। मुखनयनमुखपिधाने किञ्चिच्छ्वासस्यजनभजनतः क्लेशापादकानि स्वाङ्गानि तथा निजपुरुषस्यापि नयनवदनादीन्यपि निर्लज्जाः सतीपरिवारजने किमिदं तन्दङ्गपरतन्वतीति तस्य पत्युरङ्गजः कामः स्वाभिलाषरतस्य भङ्गरतस्माद्भीताः

पिदधुः। रमणीरमणयोः पटकुटिकारूपपटादिघटितावरणयोरन्तरेव सम्भावितस्वेप्सितचुम्बनालम्बनादिकं भवति भक्तिपात्राणामिति भामिन्य एवं काञ्चनलीलामलालयन्निति मूलतात्पर्यं ज्ञेयम्॥ ६॥ दशपुत्राणां कृष्णस्त्रीणां षोडशसहस्राष्टोत्तरशतशङ्ख्यानां तासां मध्ये याः पुरा मायास्यां प्रत्युदिता अष्टौ महिष्यो रुक्मिण्याद्यास्तत्पुत्रान्प्रद्युम्नादींस्तान्गृणन्ति तानिव गृणन्ति। अन्ये सदृशा न सन्त एतत्सदृशा इति तथा गृणन्तीति वा जानातीति शेषः॥ ७॥ गृणन्तु ते भवतु तन्नामाय गमस्तेषां मम किमन्यस्योदरशूलामूलिकाद्यदनमन्यस्येति वद्वद स्वामिन्नित्यावसरमवितरन्मुनिस्तदभिधा अभिधत्ते। प्रद्युम्नः पूर्वं प्रद्युम्नादीनित्यनेनाम्नात इति पुरस्कृतश्चारुदेष्ण इति ज्ञेयम्। वीर्यवानित्यादावीर्यमाणानां च विशेषणम्। अपरे इति योग्यान्वयि॥ ८॥

**श्रीमद्वल्लभाचार्य्यकृता सुबोधिनी**

एवं तासां दोषं तत्सम्बन्धेन भगवति दोषाभावं च प्रतिपाद्य, भगवत्सामर्थ्येनैव तासु धर्मः स्थापित इति पुत्रोत्पादनमुक्त्वा, 'पतिमेकादशं कृधी'ति वेदवाक्यानुसारेण भगवत्सेवां कृतवत्य इत्याह **द्वाभ्याम्**। इत्थमिति। पूर्वमेतच्छ्लोकद्वयं व्याख्यातम्। विवाहप्रसङ्गे उक्तमपि पुनः स्वस्थाने तदेवोक्तवान्। तस्मात्सर्वोऽप्यर्थः स एव। भ्रमव्यावृत्त्यर्थं पाठविशेषमाह **लालसाढ्यमिति**। पूर्वमनुरागादयः स्त्रीनिष्ठाः, इदानीं भगवन्निष्ठाः। अनुरागपूर्वको हासो मानसः, अवलोक ऐन्द्रियः, नवसङ्गमः कायिकः। त्रिभिरपि या लालसा तदिच्छाविशेषः तया आढ्यो भगवान्। स्त्रीनिष्ठानेतान् धर्मान् स्वस्मिन् भावयतीति भगवन्निष्ठा धर्माः। प्रत्युद्गमादिभिः दास्यं च विदधुः। सेवा तदपेक्षिता कामकृता, दास्यं साधारणमिति विशेषः। स्त्रीत्वं भक्तत्वं च देहमन्तःकरणं च कृतार्थीकृतवत्य इत्यर्थः॥ ६॥ विधिप्राधान्यात् विधिसिद्धानामष्टमहिषीणां पुत्रान् गणयितुमारभते। येन भगवान् धर्मरक्षार्थमेतावद्रूपो जात इति तन्नामग्रहणे राज्ञः पापक्षयो भवतीति, तदर्थं प्रसिद्धान्यपि नामानि निरूपयति। **तासां** कृष्णस्त्रीणां दशपुत्राणाम्। सर्वा एव दशपुत्रयुक्ताः। तासां मध्ये याः पूर्वमुक्ता अष्टौ महिष्यः रुक्मिणीप्रभृतयः तत्पुत्रान् प्रद्युम्नादीन्, ते त्वद्धितार्थं गृणामि। अन्याः कामकृता इति न तेषां नामग्रहणम्॥ ७॥ **चारुदेष्णादयो** नव प्रद्युम्नानन्तरभाविनः। यथा नामावयवास्तद्गुणाः। **वीर्यवानिति** विशेषणं सुन्दरदेहस्य शौर्यशङ्काभावेनोक्तम्। चकाराः सर्वत्र पूर्वधर्मसमुच्चयार्थाः। अन्तिमः कन्यासमुच्चयार्थः। अन्येऽपि कन्यासमुच्चयार्था इति केचित्। यदनन्तरं कन्या, तत्र चकार इति। **तथेति** वीर्यवान्। तेन सह वीर्यवत्त्वमाशङ्क्य पृथगुपदिशति **अपर** इति। परः सर्वेभ्यः श्रेष्ठो वा॥ ८॥

**श्रीसुबोधिनी-सारः**

"उक्तानां पुनरावृत्तिः सौंदर्यार्थं प्रसंगतः॥ व्याख्यातानां पुनर्व्याख्या शीघ्रमर्थावबोधनात् १ अब्रवीदग्रतो वाक्यमुवाचेति प्रदृश्यते॥ प्रायः पुराणशैलीयं संख्यापूर्त्यर्थमेव हि २" इत्थमिति द्वौ श्लोकौ अनंतरोक्तार्थौ अतो न पुनर्विव्रियेते॥ ५-६॥ दश दश पुत्रा यासां तासां कृष्णस्त्रीणां मध्ये या अष्टौ महिष्यः पट्टराज्यः पुरा विवाहप्रस्तावे उदितास्तासां पुत्रान्प्रद्युम्नादीन् ते तुभ्यं गृणामि ब्रवीमि॥ ७॥ चारुदेष्णादयो नव प्रद्युम्नः प्रमुखो प्रमुख्यो ज्येष्ठो वा येषां ते दश पितुः नावमाः तुल्या रुक्मिण्यां जाताः॥ ८-९॥

**गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी**

एतच्छ्लोकद्वयं प्रसङ्गात् विवाहप्रकरणे उक्तमपि पुनस्तदेव तासां भक्त्युद्रेकं सूचयन्नाह—इत्थमिति। ब्रह्मादयो यदीयां पदवीं यत्प्राप्तिमार्गमपि न विदुस्तमित्थंभूतं रमापतिं विष्णुं ताः स्त्रियः पतिमवाप्य अविरतं निरन्तरमेधितया वर्धितया मुदा हर्षेण अनुरागेण हासोऽवलोकश्च नवसङ्गमे नित्यं नवीनतया प्रतीयमाने तत्सङ्गमे लालसं औत्सुक्यं च ते आद्या यस्य विभ्रमकदम्बस्य तं भेजुः चक्रुरित्यन्वयः॥ ५॥ तासां सेवां दर्शयति—प्रत्युद्गमेति। दासीनां शतानि विद्यन्ते यासां तथाभूता अपि ताः स्त्रियः स्वयमेव विभोर्महत्तमस्य कृष्णस्य प्रत्युद्गमादिभिः दास्यं विदधुरित्यन्वयः। प्रत्युद्गमः आगच्छन्तं दृष्ट्वा तदग्रतो गमनम्, आसनं आसनदानम्, वरार्हणं अर्घ्यदानादिसत्कारः, पादयोः शौचं प्रक्षालनम्, ताम्बूलसमर्पणम्, विश्रमणं पादसंवाहनादिना श्रमापहरणम्, व्यजनादिभिर्वीजनम्, गन्धस्य चन्दनादेः समर्पणम्, माल्यानां पुष्पाणां समर्पणम्, केशानां प्रसाधनम्, शयनं शय्याया आस्तरणम्, स्नपनम्, उपहार्या भक्ष्यभोज्यादयस्तैः॥ ६॥ एवं प्रासङ्गिकमुक्त्वा प्रस्तुतमाह—तासामिति। दश दश पुत्रा यासां तासां कृष्णस्त्रीणां मध्ये या अष्टौ रुक्मिण्यादयो महिष्यः पुरोदिताः पूर्वं कथितास्तासां पुत्रान् प्रद्युम्नादीन् ते तुभ्यं गृणामि कथयामीत्यन्वयः॥ ७॥ प्रद्युम्नः प्रमुखः आदिर्येषामिति तद्गुणसंविज्ञानो बहुव्रीहिः। ते दश पितुर्हरेरनवमाः सौन्दर्यादिगुणैस्तुल्या रुक्मिण्यां पुत्रा जाताः। प्रद्युम्नव्यतिरिक्तान्नव पुत्रान्निर्दिशति—चारुदेष्ण इति॥८-९॥

**अन्वितार्थप्रकाशिका**

इत्थमिति॥ ब्रह्मादयोऽपि यदीयां पदवीं यत्प्राप्तिमार्गमपि न विदुस्तमित्थंभूतं रमापतिं विष्णुं पतिमवाप्य ताः स्त्रियः अविरतं निरन्तरमेधितया वर्धितया मुदा हर्षेण अनुरागेण हासोऽवलोकश्च नवसङ्गमे नित्यं नवीनतया प्रतीयमाने

तत्सङ्गमे लालसा औत्सुक्यं च ते आद्या यस्य विभ्रमकदम्बस्य तं भेजुः चक्रुः। अनुरागहासावलोकनवसङ्गमलालसाद्यं भेजुः। तथापि तस्य मनो विजेतुं न शेकुरिति वा ॥ ५ ॥ प्रत्युद्गमेति ॥ दासीनां शतानि विद्यन्ते यासां तथाभूता अपि ताः स्त्रियः स्वयमेव विभोः कृष्णस्य प्रत्युद्गमादिभिः दास्यं विदधुरित्यन्वयः। प्रत्युद्गमः आगच्छन्तं दृष्ट्वा तदग्रतो गमनम्। आसनं आसनदानं वरार्हणम् अर्घ्यदानादिसत्कारः पादयोः शौचं प्रक्षालनं ताम्बूलसमर्पणं विश्रमणं पादसंवाहनादिना श्रमापहरणं व्यजनादिभिर्वीजनं गन्धस्य चन्दनादेः समर्पणं माल्यानां पुष्पाणां समर्पणं केशानां प्रसारः प्रसाधनं शयनं शय्याया आस्तरणं स्नपनम् उपहार्या भक्ष्यभोज्यादयस्तैः अत्र प्रौढभावेऽपि नवसङ्गमाद्यभिधानमगतसारत्वेनौत्सुक्येन च तथा प्रतीतेः तेषामेव श्लोकानां प्रस्तावान्तरे पुनः पुनरावृत्तिरतिसौन्दर्यात् ॥ ६ ॥ प्रस्तुतमनुसरति—तासामिति ॥ दश दश पुत्रा यासां तासां कृष्णस्त्रीणां मध्ये या अष्टौ रुक्मिण्यादयो महिष्यः पुरोदिताः पूर्वं कथितास्तासामेव पुत्रान् प्रद्युम्नादीन् ते तुभ्यं गृणामि कथयामि। विस्तरभयादिति भावः ॥ ७ ॥ चारुदेष्ण इत्यादयः प्रायो निगदव्याख्याताः ॥ ८ ॥

## श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्

इत्थमिति अविरतं निरंतरं एधितया वर्द्धितया मुदा ताः स्त्रियः अनुरागेण हासोऽवलोकश्च नवसंगमे नवीनसमागमे लालसोत्कंठा चैते आद्या यस्मिन् कर्मणि यथा स्यात्तथा तं भेजुः यद्वा। अनुरागहासावलोकनवसंगमलालसात् यं भेजुः। अतस्ताद्यन्या इति भावः ॥ ५ ॥ पुनः पूर्वप्रसंगमाह प्रत्युद्गमेति। प्रत्युद्गमादिभिस्तस्य विभोः स्वयं दास्यं विदधुः ॥ ६ ॥ दशपुत्राणां एकैकशो दश दश पुत्राः संति यासां तासां मध्ये अष्टौ महिष्यः याः याः पुरोदिता अभूवन् तासां पुत्रान् ते तुभ्यं गृणामि कथयामि ॥ ७-८ ॥

## भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

इत्थमिति ॥ किं तु यदीयां पदवीं याथात्म्यं, ब्रह्मादयः अपि, न विदुः। तमित्थंभूतं रमापतिं श्रियः पतिं, ताः स्त्रियः, पतिं अवाप्य, अविरतं यथा तथा, एधितया वर्द्धितया, मुदा, अनुरागेण हासोऽवलोकश्च नवसंगमे लालसमौत्सुक्यं च ते आद्या यस्मिन् कर्मणि यथा स्यात्तथा, भेजुः। यद्वा, अनुरागहासावलोकनवसंगमलालसात्, यं भेजुः, तस्य मनः विजेतुं, न शेकुरिति॥५॥ प्रत्युद्गमेति ॥ प्रत्युद्गमश्च आसनं च वरार्हणं च पादशौचं च ताम्बूलानि च विश्रमणं च वीजनं च गन्धश्च माल्यानि च तैः, केशप्रसाधश्च शयनं च स्नपनं च उपहार्यमुपहारार्पणं च तैः, दासीशताः अपि, ताः विभोः दास्यं, विदधुः स्म। एतेषामेव श्लोकानां प्रस्तावान्तरे पुनरावृत्तिरतिसौन्दर्यात् ॥ ६ ॥ प्रासङ्गिकमुक्त्वा प्रस्तुतमाह ॥ तासामिति। दश दशसंख्याकाः पुत्रा यासां तासां, तासां ब्रह्माष्टावक्रादिकथितदत्ततपोवराभ्यां, श्रीकृष्णपतिमुपलब्धानां, कृष्णस्त्रीणां श्रीकृष्णपत्नीनां मध्ये, याः अष्टौ रुक्मिण्यादयः महिष्यः, पुरा पूर्वं उदिताः कथिताः, तत्पुत्रान् तासां सुतान्, प्रद्युम्नादीन्, ते तुभ्यं, गृणामि कथयामि ॥ ७ ॥ चारुदेष्ण इति ॥ चारुदेष्णः, सुदेष्णः, चारुदेहः, वीर्यवांश्च वीर्यवानिति चारुदेहविशेषणं न तु सुतान्तरसंज्ञा। सुचारुः, चारुगुप्तश्च, तथा अपरः भद्रचारुः ॥ ८ ॥

## कृष्णप्रिया

राजन्! ब्रह्मादि समर्थ देवाधिदेव भी भगवत्प्राप्ति के उपायों को नहीं जानते हैं एवं नाथ के नैसर्गिक स्वरूप को भी नहीं जानते। उन ही रमापति भगवान् श्रीद्वारिकानाथजी को उन रानियों ने, राजकुमारियों ने निज सौभाग्यनाथ के स्वरूप में प्राप्त किया। पुनः नित्य निरन्तर उन स्त्रियों के स्नेह और रस की पुष्टि होती रहती थी। वे राजकुमारियाँ स्नेहमय स्मितहास्य, रसमय अवलोकन, नवसङ्गम लालसा आदि से श्यामसुन्दर भगवान की सेवा में लगी रहती थी ॥ ५ ॥ इन रानियों के साथ अनन्त दासियों के रहने पर भी भगवान् जब महल में बाहर से पधारते तब सब रानियाँ सन्मुख होकर स्नेह सद्भाव से भगवान् को ले आती, अच्छे आसनों पर बैठाती, श्रेष्ठ सामग्रियों से स्वामी की अर्चना करती, चरण सरोज का प्रक्षालन करती, ताम्बूल बीडी अरोगावती, चरण सेवा कर श्रम को दूर करती, चँवर ढोलती, इत्र सुगन्ध, तैल गन्ध लगाती, वन माला माला पहनाती, केश सँवारती, सुलाती, अभ्यङ्ग कराती विविध प्रकार की सामग्रियाँ सिद्ध कर प्रियतम को प्रसाद लिवाती सतत सेवा में लगी रहती थी ॥ ६ ॥ राजन्! आगे यह बात कही है कि भगवान् श्रीकृष्णचन्द्रजी की प्रत्येक पत्नी के दस-दस पुत्र थे। इन षोड़श सहस्र रानियों में अष्ट पटरानियाँ थी उनकी व्याहगाथा आपने सुनी है। पुनः उनके प्रद्युम्न आदि पुत्रों का वर्णन सुनिये ॥ ७ ॥ महाराज! श्रीरुक्मिणीजी महाराजजी की कुक्षि से प्रद्युम्न आदि दस पुत्र हुए जो भगवान् श्रीकृष्ण के तुल्य किसी भी क्षेत्र में कम नहीं थे ॥ ८ ॥

चारुचन्द्रो [1]विचारुश्च चारुश्च दशमो हरेः । प्रद्युम्नप्रमुखा जाता रुक्मिण्यां [2]नावमाः पितुः ॥ ९ ॥
भानुः सुभानुः स्वर्भानुः प्रभानुर्भानुमांस्तथा । चन्द्रभानुर्बृहद्भानुरतिभानुस्तथाष्टमः ॥ १० ॥
श्रीभानुः प्रतिभानुश्च सत्यभामात्मजा दश । साम्बः सुमित्रः पुरुजिच्छतजिच्च सहस्रजित् ॥ ११ ॥
विजयश्चित्रकेतुश्च [4]वसुमान् [5]द्रविडः क्रतुः । जाम्बवत्याः सुता ह्येते साम्बाद्याः पितृसंमताः [6] ॥ १२ ॥
[7]वीरश्चन्द्रोऽश्वसेनश्च चित्रगुर्वेगवान् वृषः । आमः शङ्कुर्वसुः श्रीमान् [8]कुन्तिर्नाग्नजितेः सुताः ॥ १३ ॥
श्रुतः कविर्वृषो वीरः सुबाहुर्भद्र एकलः । शान्तिर्दर्शः पूर्णमासः कालिन्द्याः सोमकोऽवरः ॥ १४ ॥
[9]सुघोषो गात्रवान्सिंहो [10]बलः प्रबल ऊर्ध्वगः । माद्र्याः [11]पुत्रा महाशक्तिः सह ओजोऽपराजितः ॥ १५ ॥
[12]वृको हर्षोऽनिलो गृध्रो [13]वर्धनोऽन्नाद एव च । [14]महाशः पावनो वह्निर्मित्रविन्दात्मजाः [15]क्षुधिः ॥ १६ ॥

### कर्दमक्षमा

अन्वयः—चारुचन्द्रः, च, विचारुः, च, चारुः, हरेः, दशमः, इति प्रद्युम्नप्रमुखाः, रुक्मिण्याम्, पितुः, नावमाः, जाताः ॥ ९ ॥ भानुः, सुभानुः, स्वर्भानुः, प्रभानुः, तथा, भानुमान्, चन्द्रभानुः, बृहद्भानुः, तथा, अष्टमः, अतिभानुः, श्रीभानुः, प्रतिभानुः, इति, दश, सत्यभामात्मजाः । साम्बः, सुमित्रः, पुरुजित्, शतजित्, च, सहस्रजित्, विजयः, चित्रकेतुः, च, वसुमान्, द्रविडः, क्रतुः, पितृसंमताः, एते, साम्बाद्याः, हि, जाम्बवत्याः, सुताः ॥ १०-१२ ॥ वीरः, चन्द्रः, अश्वसेन, च, चित्रगुः, वेगवान्, वृषः, आमः, शङ्कुः, वसुः, श्रीमान् कुन्तिः, नाग्नजितेः, सुताः ॥ १३ ॥ श्रुत, कविः, वृषः, वीरः, सुबाहुः, भद्रः, एकलः, शान्तिः, दर्शः, पूर्णमासः, अवरः, सोमकः, कालिन्द्याः, सुताः ॥ १४ ॥ प्रबोधः, गात्रवान्, सिंहः, बलः प्रबलः, ऊर्ध्वगः, महाशक्तिः, सहः, ओजः, अपराजितः, मद्रराजपुत्र्याः माद्र्याः, दश-पुत्राः ॥ १५ ॥ वृकः, हर्षः, अनिलः, गृध्रः, वर्धनः, च, अन्नादः, महाशः, एव, पावनः, वह्निः क्षुधिः मित्रविन्दात्मजः ॥ १६ ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

श्रीमानिति वसोः कुन्तेर्वा विशेषणम् ॥ १३ ॥ भद्रो नाम एकल एकः । सोमकोऽवरः कनीयान् । एते कालिन्द्याः सुता इति ॥ १४ ॥ माद्र्या लक्ष्मणायाः ॥ १५ ॥ क्षुधिश्च दशमः । एते मित्रविंदात्मजाः ॥ १६ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

स्वर्भानुः स्वर्गेऽपि यस्य दीप्तिर्यश इत्यर्थः ॥ १० ॥ पुरुजिदसंख्यजयी ॥ ११-१२ ॥ वेगवानिति नामैव । अमात्रोगान् हिनस्तीत्यामश्चिकित्साविज्ञः तद्धितप्रत्ययानां सर्वार्थे विधानाद्धिसायामत्राण् ॥ १३ ॥ वृषपदावृत्तिस्तु प्रवृत्तिनिमित्तभेदात्, पूर्वं वृषपदं धर्मवत्परमिह तु वदान्यपरम् "वृषो धर्मे बलीवर्दे राश्याखुशुक्रलेषु च । श्रेष्ठे स्यादुत्तरस्थोयं व्यासेऽपि परिकीर्तितः ॥" इति मेदिनी । वीर इति वृषविशेषणं, सर्वेषां वा । स्वामिना त्वेकल इति भद्रविशेषणं कृत्वा वीर इति नामांतरमेवोक्तम् । पूर्वं वीरपदं शूरपरमिह तु वीराः संत्यस्येति वीरो मत्वर्थीयाच् । 'अवरश्चरमे त्रिषु' इति धरणिः इह ज्येष्ठयानुजभावस्तूद्देशक्रमत एव ज्ञेयः ॥ १४ ॥ सहओज इत्यत्र विनि लोपः 'गम्यमानस्याप्रयोग एव लोपः' इति कैयटः ॥ १५ ॥ महानाशो भोजनं यस्य स तथा । वैयधिकरण्ये पूर्वपदस्याकार आर्षत्वादेव । महं तेजोऽश्नुत इति वा 'महश्च महसा सह' इति द्विरूपकोशात् ॥ १६ ॥

### श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी

चार्विति युग्मकम् । वीर्य्यवानिति सर्वेषां विशेषणम् अतस्तत्समुच्चयार्थं प्रायः सर्वत्रैव चशब्दः तथेति च परश्चारुगुप्तस्यानुज इत्यर्थः । एवमग्रजानुजक्रमेण सर्वे ज्ञातव्या इति भावः । दशम इत्येकादशाभावं दृढयति एवं सर्वमग्रेपि ज्ञेयं हरेरिति सर्वमनोहरस्य तस्य पुत्रा अपि तादृशाः "यथाबीजं तथाङ्कुरम्" इति न्यायेनेति भावः । अनेनैवाभिप्रायेण सर्वत्र चारुशब्दः अत एव पितुर्नावमा न्यूना न भवन्ति पूर्वोक्तस्याप्यस्य पुनरुक्तिस्तद्दार्ढ्यार्थम् अतोग्रेपि सर्वत्रेदमनुवर्त्त्यम् ॥ ९ ॥ भानुरिति सार्द्धकम् । अष्टम इति पर इतिवत् भानुशब्दश्चारुशब्दवत् ज्येष्ठाया जाम्बवत्याः प्राक् सत्यभामायाः पुत्राणामुक्तिः प्रेमाधिक्येन तस्याः

---

१. ऽति–वीर. विज. । २. मान्–विज. । ३. सदृशाः–विज. ; नवमाः–च. पु. टि. । ४. कीर्तिमान्–च. पु. टि. । ५. द्रविणः–वीर. विज. । ६. संनिभाः–वीर. ; वत्सलाः–प्रा. पा. । ७. चारुचन्द्रोऽप्रसेनश्च–प्रा. पा., भानुश्च–वीर. विज. ८. दृति–वीर.; कृति–विज. । ९. प्रजश्वो–वीरः, प्रघोषो–श्रीधर. वशी. जीव. वीर. विज. । १०. सिद्धो–विज. । ११. सुताः–प्रा. पा. । १२. ह्यर्को–वीर.; ऽहंकोऽनिलो नीलो–विज. । १३. वह्नन्नो–वीर. विज. । १४. महाशापोऽवनो–विज.; महीशः–श्रीधर. टि. । १५. सुधीः–च. पु. टि.; कृतिः–विज. ।

श्रैष्ठ्यात् एवमग्रेपि ज्ञेयम् ॥ १० ॥ साम्ब इति च सार्द्धकम् । द्रविणो द्रविड़श्चेति पाठद्वयं हि एव पित्रा सम्मताः न्यायादनपेततत्वेन निश्चिताः एवं साम्बपुराणादौ साम्बवृजिनस्य नारदकल्पितत्वेनैव प्रसिद्धत्वात् तत्र श्रीभगवतोपि लोकशिक्षाभिप्रायेणैव तदिच्छत्वात् यथा मुसलशापादावपीति भावः ॥ ११-१२ ॥ श्रीमानिति सर्वेषामेव वा विशेषणम् ॥ १३ ॥ भ्रातॄणामपि मध्ये द्वयोर्वृष इत्येकनामत्वं केनचिदपरिहार्य्येण कारणेन भवेत् व्यवहारस्तु मात्रादिनामविशेषणेन सिद्धयतीति ज्ञेयम् एवमग्रे वीरोपि तद्वच्छूरबलावपि ॥ १४ ॥ सह ओजसी सकारान्ते मूर्त्तं सह एवार्यमित्याद्यभिप्रायेण पुत्राः सुताः इति पाठद्वयम् ॥ १५ ॥ महांश इत्यत्र महासिः क्वचित् वह्निघ्न इत्यत्र वर्द्धनः क्वचित् ॥ १६ ॥

### श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी

दशम इत्येकादशाभावं द्रढ़यति । एवं सर्वमग्रेऽन्यत्रापि ज्ञेयम् । हरेरिति मनोहरस्य तस्य पुत्रा अपि तादृशा इति भावः । अनेनैवाभिप्रायेण सर्वत्र चारु-शब्दः, अत एव पितुर्नावमा न्यूना न भवन्ति, पूर्वोक्तस्याप्यस्य पुनरुक्तिस्तद्दाढ्यर्थम् । अतोऽग्रेऽपि सर्वत्रेदमनुवर्त्त्यम् ॥ ९ ॥ अष्टम इति पर इतिवत्, विशेषतश्च दीप्त्या चारुदेष्णादिभ्योऽप्याधिक्यं बोधयति, ज्येष्ठायाः श्रीजाम्बवत्याः प्राक् श्रीसत्यभामायाः पुत्राणामुक्तिः प्रौढ़तया प्राक् तत्पुत्रोत्पत्तेः, किंवा प्रेमाधिक्येन तस्याः श्रैष्ठ्यात् । एवमग्रेऽपि ज्ञेयम् । हि एव, पिता वत्सलो येषु ते, पितुरत्यन्तस्नेहविषया एवेत्यर्थः । इति कुत्रापि कथ्यमानः श्रीसाम्बापराधो निरस्तः, वस्तुतो लोकशिक्षार्थमेव तस्य कारितत्वेन मायिकत्वादिति दिक् ॥ १२ ॥ श्रीमानिति तैर्व्याख्यातम् । यद्वा, श्रीसत्यभामात्मजानां भानुनामत्वात् श्रीमानेको भानुश्चन्द्रश्चैको ज्ञेयः, हरिश्चन्द्रादिवत् संज्ञायां सुडागमः, असकारपाठो वा ॥ १३ ॥ एकल एकः, न तु भद्र इति सर्वेषां विशेषणमित्यर्थः ॥ १४ ॥ सहादयस्त्रयोऽप्यकारान्ताः, यद्वा, सह ओजसो सान्तौ, अपराजित् तकारान्तः द्वन्द्वसमासः, संज्ञापेक्षया तन्नायोः पुंस्त्वम्, किंवा मूर्त्तं सह एव ओज एवेत्यभिप्रायेण नपुंसकत्वम् ॥ १५ ॥ एव अपि, अन्नादोऽपि, महांसश्च, वर्द्धनादिसंज्ञाया साम्येन, महाश इति पाठश्च क्वचित्, शैव्यानामपि सैवेति टीकास्यास्ति, मित्रविन्दात्मजा इत्यस्यानन्तरं लेख्याया अपि लेखकभ्रमेणैव ॥ १६ ॥

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका

अथ सत्यभामासुतानाह—भानुरिति । भान्वादयो दश सत्यभामायाः सुता इत्यन्वयः । जाम्बवतीसुतानाह—साम्ब इति । एते साम्बादयः पितृतुल्याः जाम्बवत्याः सुताः ॥ १०-१२ ॥ नाग्नजितीसुतानाह—भानुरिति । श्रीमानिति वसोर्द्दैवेर्वा विशेषणम् ॥ १३ ॥ कालिन्द्याः सुतानाह—श्रुतिरिति । भद्रस्यैवैकल इति नामान्तरं सोमकोऽवरस्तेषां सर्वेषां कनीयान् एते दश कालिन्द्याः सुता इति शेषः ॥ १४ ॥ अथ लक्ष्मणायाः सुतानाह—प्रजङ्घ इति । माद्रयाः लक्ष्मणायाः सुताः प्रजङ्घादय इत्यन्वयः ॥ १५ ॥ मित्रविन्दायास्सुतानाह—वृक इति । क्षुधिर्दशमः एते मित्रविन्दात्मजाः ॥ १६ ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

चन्द्रस्य स्वर्भानू राहुरिव अपरः लोकस्य भानुः सूर्य इव स्वः स्वर्गपुरे स्थितः ॥१०-१२॥ नाग्नजितेः नग्नजित्पुत्र्या नीलायाः ॥ १३ ॥ वृषविशेषणं वीर इति अपरः सोमतोपि कालिन्द्याः सुतः ॥ १४ ॥ माद्रयाः लक्ष्मणायाः ॥ १५-१७ ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

साम्बाद्याः पितृसम्मताः ॥ ११-४० ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धीये श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे एकषष्टितमोऽध्यायः ॥ ६१ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

भद्रोनाम एकलः एकः सोमको ऽवरः कनिष्ठः ॥ १४ ॥ माद्र्याः लक्ष्मणायाः ॥ १५-१७ ॥

### गूढार्थदीपिनी

पितुः नावमा अन्यूनाः । नैकधावत्समासः ॥ ९-१२ ॥ देहलीदीपकन्यायेन श्रीमानिति उभयोर्विशेषणम् ॥ १३ ॥ भद्रविशेषणम् एकलः इति एक एव शत्रून् लाति । अवरः कनिष्ठः सोमकः ॥ १४ ॥ माद्रयाः लक्ष्मणायाः । अपराजितो दशमः । सह ओज, इत्यत्र विनिलोपः गम्यमानस्याप्रयोग एव लोप इति कैयटः ॥ १५ ॥ क्षुधिश्च दशमः ॥ १६ ॥

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः

श्रीमानिति कुन्तेर्विशेषणम् ॥ १३ ॥ एकलः एकः शान्तिगुणयुक्तत्वान्मुख्यः इति शान्तेर्विशेषणम् ॥ १४ ॥ माद्रयाः लक्ष्मणायाः ॥ १५-१६ ॥

### श्रीसत्यधर्मकृता श्रीभागवतटिप्पणी

दशमः प्रद्युम्नेन सह हरेः सकाशाद्रुक्मिण्याः प्रद्युम्नप्रमुखा जाताः। यद्वा रुक्मिण्या न वमा इति छेदः। वमा अवमा इत्यर्थः। न समासो वा। पष्टिभागुरिरित्यादेः ॥ ९ ॥ मान्त्राद्या दश सत्यभामात्मजाः ॥ १० ॥ पितृसम्मताः साम्बाद्या दश-जाम्बवत्याः सुताः ॥ ११-१२ ॥ श्रीमानिति शब्दो यथायथं योजनयोग्यः। श्रीमान्। नाग्नजितिर्नीलायाः ॥ १३ ॥ वीर इत्यपि तथाऽपरः कनिष्ठः सोमकः कालिन्द्याः सुताः ॥१४॥ महाशक्तिरपि तथा सुघोषाद्यपराजितान्ता माद्रयालक्षणायाः ॥१५॥ वृकादिक्षुत्यन्ता मित्रविन्दात्मजाः ॥ १६ ॥

### श्रीमद्वल्लभाचार्य्यकृता सुबोधिनी

**दशम** इति क्रमोऽत्र विवक्षित इत्युक्तम्। हरेः सकाशात् प्रद्युम्न एव प्रमुखो येषाम्। रुक्मिण्या जाताः। करणमात्रं रुक्मिणी, नत्वेते मातृपुत्रा इति। तत्र हेतुः यतः **पितुरनवमाः**। **अवमो** न्यूनभावः ॥ ९ ॥ भानुप्रभृतयो दश सत्यभामायाः। तथेति यस्य कर्माणि न प्रसिद्धानि, सोऽपि प्रसिद्धवदेव ज्ञातव्य इति तथेत्युच्यते क्वचित्। **अष्टम** इति तस्य स्वतन्त्रता महत्त्वं च। सङ्ख्यायां पृथगुपदेशात्। **सत्यभामात्मजा** इति परिज्ञानार्थमेव मातृनिरूपणम्। सर्वेषां पुत्राणां सर्वासु मातृव्य-वहारस्तुल्य इति ॥ १०½ ॥ साम्बादयो दश जाम्बवत्याः सुताः। एते इति तेषां देवतात्वात् निरूपणसमये उपस्थितिमाह। **पुनः साम्बाद्या** इति वचनं दशानां द्विःस्वभावत्वं द्योतयति। ततो भगवतोऽसम्मतिमाशङ्क्य पितृसम्मतिमाह **पितृसम्मता** इति ॥ ११-१२ ॥ श्रीमानिति विशेषणं। नाग्नजितेः सत्यायाः पुत्राः। श्रुतादयो दश कालिन्द्याः। **एकल इति विशेषणं** एक एव सन् सर्वान् शत्रून् लातीति। सोमकस्त्ववरो दशमः। सङ्ख्यापूरणार्थं पश्चादुत्पन्नः। सुघोषादयः माद्रयाः लक्ष्मणायाः पुत्राः। **ऊर्ध्वग** इति नाम। **महाशक्तिरेकः**। सहो भिन्नः। ओजश्च। **अपराजित** इति नाम ॥ १४-१५ ॥ वृकादयो दश मित्रविन्दायाः। महाश इति नाम। क्षुधिर्दशमः सङ्ख्यापूरकः ॥ १६ ॥

### श्रीसुबोधिनी-सारः

भान्वादयो दश सत्यभामाया आत्मजाः ॥ १० ॥ सांबादयो दश पितुः श्रीकृष्णस्य संमता एते जांबवत्याः सुताः ॥ ११-१२ ॥ वीराद्या दश नाग्नजितेः सुताः ॥ १३ ॥ श्रुतादयो दश तत्र भद्र एकः सोमकोऽवरः कनिष्ठः कालिंद्याः सुता ॥१४॥ प्रघोषादयो दश माद्रया लक्ष्मणायाः पुत्राः ॥ १५ ॥ वृकादयः क्षुध्यंता दश मित्रविंदाया आत्मजाः पुत्राः ॥ १६ ॥

### गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

अथ सत्यभामासुतानाह—भानुरिति। भान्वादयो दश सत्यभामात्मजा इत्यन्वयः ॥ १०-११ ॥ साम्वाद्याः क्रत्वन्ता हि प्रसिद्धा एते जाम्बवत्याः सुताः ॥ १२ ॥ वीरादयः कुन्त्यन्ता दश नाग्नजितेः सुताः। 'श्रीमान्' इति वसोः कुन्तेर्वा विशेषणम् ॥ १३ ॥ श्रुतादयः सोमकान्ता दश कालिन्द्याः सुताः। एक एव शत्रून् लातीति एकल इति भद्रविशेषणम्। अवरः कनीयान् इति सोमकविशेषणम् ॥ १४ ॥ प्रघोषादयोऽपराजितान्ता दश माद्रया लक्ष्मणायाः सुताः ॥ १५ ॥ वृकादयः क्षुध्यन्ता दश मित्रविन्दात्मजाः। वृकः उदर्कः सन्धिरार्षः ॥ १६ ॥

### अन्वितार्थप्रकाशिका

पितुर्नावमा अन्यूनाः अत्र दशम इत्युक्तिः "दशास्याः पुत्रानाधेही"ति श्रुत्युक्तसंख्यादरः। हरेरिति मनोहरत्वं तेन पुत्राणां तादृशत्वम्। अत्र सर्वत्र चारुपदम्। एवमग्रे भानुपदमपि ॥ ९-१२ ॥ श्रीमानिति वसोः कुन्तेर्वा विशेषणम्। नाग्निजिती कालिन्दी पुत्रयोः वृष इत्येकनामत्वं केनचिदपरिहार्यनिमित्तेन। व्यवहारस्तु मात्रादिनामविशेषणेन। एवं वीरादावपि ॥ १३ ॥ एक एव शत्रून् लातीति एकल इति भद्रविशेषणम्। अवरः कनीयान् इति सोमकविशेषणम्। कालिन्द्याः सुताः ॥ १४ ॥ माद्रया लक्ष्मणायाः ॥ १५ ॥ वृक उदर्कः सन्धिरार्षः। क्षुधिश्च दशम एते मित्रविन्दात्मजाः ॥ १६ ॥

### श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्

पितुः कृष्णात् अवमाः न्यूनाः न संति ॥ ९-१२ ॥ श्रीमानिति वसोः कुंतेर्वा विशेषणं ॥ १३ ॥ भद्राभिधः एकलः एकः सोमकः अवरः कनिष्ठः एते कालिंद्याः पुत्राः ॥ १४ ॥ माद्रयाः लक्ष्मणायाः ॥ १५ ॥ क्षुधिसंज्ञः अंतिमः इमे मित्रविंदायाः पुत्राः ॥ १६ ॥

### भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

चारुचन्द्र इति ॥ चारुचन्द्रः विचारुश्च, दशमः चारुश्च। एते प्रद्युम्नप्रमुखाः तद्गुणसंविज्ञानोऽत्र बहुव्रीहिः। पितुः न अवमाः नावमाः पुत्रा इति शेषः। हरेः सकाशात्, रुक्मिण्यां जाताः। इति द्वयोरेकान्वयः ॥ ९ ॥ अथ सत्यभामासुतानाह

सार्द्धेन ॥ भानुरिति ॥ भानुः, सुभानुः, स्वर्भानुः, प्रभानुः, तथा भानुमान्, चन्द्रभानुः, बृहद्भानुः, तथा अष्टमः रतिभानुः, श्रीभानुः प्रतिभानुश्च, एते दश सत्यभामात्मजाः ॥१०॥ जाम्बवतीसुतानाह सार्द्धेन ॥ साम्ब इति । साम्बः सुमित्रः पुरुजित्, सहस्रजिच्च विजयः, चित्रकेतुः, वसुमान्, द्रविडः, क्रतुश्च, पितृसंमताः पितृतुल्याः साम्बाद्याः, एते जाम्बवत्याः सुताः, हि ॥ ११ ॥ नाग्नजितीसुतानाह ॥ वीर इति ॥ वीरः, चन्द्रः, अश्वसेनः, चित्रगुः, वेगवान्, वृषः, आमः, शङ्कुः, श्रीमान्, वसुः, कुन्तिश्च । श्रीमानिति वसोः कुन्तेर्वा विशेषणम् । एते नाग्नजितेः सुताः ॥ १२ ॥ कालिन्दी सुतानाह ॥ श्रुत इति ॥ श्रुतः, कविः, वृषः, वीरः, सुबाहुः, भद्रः, एः स्मृतेः कं सुखं लाति गृह्णातीत्येकलः अनुभूतार्थाखण्डस्मृतिमान् । शान्तिः एकल इति भद्रस्य शान्तेर्वा विशेषणम् । 'ए स्मृतावप्यसूयानुकम्पामन्त्रणहूतिषु' इति मेदिनी । दर्शः, पौर्णमासः, अवरः कनिष्ठः, सोमकः । एते कालिन्द्याः सुता इति शेषः ॥ १३ ॥ अथ लक्ष्मणायाः सुतानाह ॥ प्रघोष इति ॥ प्रघोषः, गात्रवान्, सिंहः, बलः, प्रबलः ऊर्ध्वगः, महाशक्तिः, सहः, ओजः, अपराजितः । एते माद्र्या लक्ष्मणायाः पुत्राः ॥१४॥ अथ मित्रविन्दात्मजानाह ॥ वृक इति ॥ वृकः, हर्षः, अत्र केचिदर्क इति केचिदर्हक इति बहुधा पठन्ति । अनिलः, गृध्रः, वर्द्धनः, नादः, अन्नाद इत्यपि पठन्ति । महाशः, पावनः, वह्निः क्षुधिश्च । एते मित्रविन्दायाः आत्मजाः एव ॥ १५ ॥ अथ भद्रायाः सुतानाह ॥ संग्रामजिदिति ॥ संग्रामजित्, बृहत्सेनः, शूरः, प्रहरणः, अरिजित्, जयः, सुभद्रः, वामः, आयुः, सत्यकश्च, भद्रायाः सुता इति शेषः । एवमन्यासामपि शताधिकषोडशसहस्रपत्नीनां दश दश पुत्राः अभवन् । तासां मध्ये केनचिद्गुणेन महत्या रोहिण्याः सुतानामुक्तिर्दीप्तिमानित्यर्द्धेन प्रदर्शयति, तेनान्यासामपि बोध्याः । दीप्तिमांश्च ताम्रतप्तश्च तावाद्यौ येषां ते, हरेः सकाशात्, जाता इति शेषः । रोहिण्याः, तनयाः ज्ञेया इति शेषः ॥१६॥

**कृष्णप्रिया**

प्रद्युम्न, चारुदेष्ण, सुदेष्ण, परमवीर चारुदेह, सुचारु, चारुगुप्त, भद्रचारु, चारुचन्द्र, विचारु और दशवाँ चारु पुत्र था ॥ ९ ॥ रानीजी श्रीसत्यभामाजी के भी दस पुत्र थे । भानु, सुभानु, स्वर्भानु, प्रभानु, भानुमान्, चन्द्रभानु, बृहद्भानु, अतिभानु, श्रीभानु एवं प्रतिभानु नामके थे । श्रीमती जाम्बवतीजी के भी दस कुमार थे । साम्ब, सुमित्र, पुरुजित्, शत्रजित्, सहस्रजित् विजय, चित्रकेतु, वसुमान् , द्रविड, और क्रतु संज्ञक एवं पितृचरणों के अतिशय प्रिय और समान थे ॥ १०-१२॥ नाग्नजिती श्रीसत्या पटरानीजी के भी-वीर-चन्द्र, अश्वसेन, चित्रगु, वेगवान्, वृष, आम शङ्कु, वसु, और श्रीमान् कुन्ति नाम के तेजस्वी दस पुत्र थे । श्रीकालिन्दीजी पटरानीजी के भी श्रुत, कवि, वृष, वीर, सुबाहु, भद्र, शान्ति-दर्श, पूर्णमास, एवं सबसे छोटा कुमार सोमक थे ॥ १३-१४ ॥ मद्रदेशाधिपतिजी की सुपुत्री श्रीलक्ष्मणाजी के प्रघोष, गात्रवान्, सिंह, बल, प्रवल, ऊर्ध्वग, महाशक्ति, सह, ओज, एव अपराजित संज्ञक तेजस्वी पुत्र थे ॥ १५ ॥ श्रीमित्रविन्दा महारानीजी के-वृक, हर्ष, अनिल, गृध्र, वर्धन, अन्नाद, महाश, पावन, वह्नि, एवं क्षुधि संज्ञक तेजस्वी दस कुमार थे ॥ १६ ॥

**संग्रामजिद् बृहत्सेनः शूरः प्रहरणोऽरिजित् । जयः सुभद्रो भद्राया वाम आयुश्च सत्यकः ॥ १७ ॥**

**दीप्तिमांस्ताम्र¹ पत्राद्या रोहिण्यास्तनया हरेः । प्रद्युम्नाचानिरुद्धोऽभूद्² रुक्मवत्यां महाबलः ॥ १८ ॥**

**पुत्र्यां तु रुक्मिणो राजन् नाम्ना भोजकटे पुरे ।**

**एतेषां पुत्रपौत्राश्च बभूवुः कोटिशो नृप । मातरः कृष्णजातानां सहस्राणि च षोडश ॥ १९ ॥**

**राजोवाच**

**कथं रुक्म्यरिपुत्राय प्रादाद् दुहितरं युधि ।**

**कृष्णेन परिभूतस्तं हन्तुं रन्ध्रं प्रतीक्षते । एतदाख्याहि मे विद्वन् द्विषोर्वैवाहिकं³ मिथः ॥ २० ॥**

**कर्दमक्षमा**

अन्वयः—संग्रामजित्, बृहत्सेनः, शूरः, प्रहरणः, अरिजित्, जय , सुभद्रः, वामः, आयुः, च, सत्यकः, भद्रायाः, सुताः ॥ १७ ॥ हरेः, रोहिण्याः, दीप्तिमान्, ताम्रतप्तः, आद्याः, दश-दश-पुत्राः, आसन्, प्रद्युम्नात्, रुक्मवत्याम्, च, महाबलः, अनिरुद्धः, अभूत्, राजन्, भोजकटे, पुरे, रुक्मिणः, रुक्मवत्याम्, अनिरुद्धः, अभूत् ॥ १८-१९ ॥ राजा उवाच—युधि, कृष्णेन, परिभूतः, तम्, हन्तुम्, रन्ध्रं, प्रतीक्षते, सः, रुक्मी, अरिपुत्राय, दुहितरम्, प्रादात् ? हे, विद्वन्! द्विषोः, मिथः, वैवाहिकम्, एतत्, मे, आख्याहि ॥ २० ॥

१. पत्राद्याः-वीर. विज. ; तप्ताद्याः-श्रीधर. वंशी. जीव. । २. भूतोऽसौ-प्रा. पा. । ३. वैवाहिकीं क्रियां-विज. ।

**श्रीधरस्वामिविरचिता भावार्थदीपिका**

संग्रामजित्प्रमुखाः सत्यकान्ता भद्रायाः सुताः, शैब्यानामापि सैव ॥ १७ ॥ रोहिण्याः सुतानामुक्तिरन्यासामुपलक्षणार्थम् ॥ १८ ॥ एतेषामिति । अन्येषामपि श्रीकृष्णपुत्राणां शतसंख्यस्त्रीषु पुत्राः पौत्राश्च कोटिशो बभूवुः । तत्र हेतुत्वेन श्रीकृष्णपत्नीनां बाहुल्यमनुस्मारयति । मातरः कृष्णजातानामिति । चशब्देनाधिकाश्चेत्युक्तम् ॥ १९ ॥ यः कृष्णं हंतुं रंध्रं प्रतीक्षते स कथं प्रादादिति । वैवाहिकं विवाहनिमित्तम् ॥ २० ॥

**श्रीवंशीधरकृता भावार्थदीपिकाप्रकाशः**

सैव भद्रैव । अष्टानां सर्वमुख्यानां पुत्रानुक्त्वा षोडशसहस्रमुख्याया रोहिण्या आह—दीप्तिमानिति ॥ १७ ॥ प्रासंगिकमाह–प्रद्युम्नादिति । भोजकटे–स्थितस्येति शेषः ॥ १८ ॥ एतेषां प्रद्युम्नादीनाम् । तत्र कृष्णपुत्र पौत्रानंत्ये । अधिका अष्टोत्तरशतमिति ज्ञेयम् ॥ १९ ॥ अरिपुत्राय कृष्णपुत्राय । रंध्रमवकाशम् । यो रुक्मी । विवाहनिमित्तं विवाहकारणम् । 'रंध्रं तु दूषणे छिद्रे' इति मेदिनी ॥ २० ॥

**श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी**

सङ्ग्रामेति शैब्यानामपि सैवेति टीका व्याख्यायास्तु मित्रविन्दात्मजा इत्यस्यानन्तरं योग्यायाः अपि लेखकभ्रमेणैव भद्रायाः सुता इत्यस्यानन्तरं लेखः श्रीविष्णुपुराणे ह्येतत्प्रसङ्गे "शैब्यायां मित्रविन्दायाम्" इति तथात्रैवाग्रे कुरुक्षेत्रयात्रायां श्रीद्रौपदीप्रश्ने शैब्येति मित्रविन्दे इति च टीकैव ॥ १७ ॥ दीप्तीत्यर्द्धकम् । रोहिणी शताधिकषोडशसहस्रमहिषीणां मुख्या तस्याः ॥ १८ ॥ आश्चर्य्यादाह—हे राजन्निति ! एतेषां श्रीप्रद्युम्नादीनाम् ॥ १९ ॥ कथमिति सार्द्धकम् ॥ २० ॥

**श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी**

भद्रायाः सुता इत्यस्यानन्तरं लेखः, श्रीविष्णुपुराणीयैतत्प्रसंगे 'शैब्यायां मित्रविन्दायाम्' इति तथात्रैवाग्रे कुरुक्षेत्रयात्रायां श्रीद्रौपदीप्रश्ने शैब्ये मित्रविन्दे इति च श्रीस्वामिपादैरेव व्याख्यातत्वात् ॥ १८–१९ ॥ रोहिणी शताधिकषोडशसहस्रमहिषीणां मुख्या, तस्याम्, त्वर्थे चकारः । पौत्रोत्पत्त्याभिन्नोपक्रमात् तु-शब्दो विरोधे, श्रीभगवद्द्वेषिणो रुक्मिणः पुत्र्यां तत्रापि तत्पुरे श्रीमदनिरुद्धोत्पत्तेः, अतएवाश्चर्य्यादाह—हे राजन्निति । राजमान इति वा । एतेषां श्रीप्रद्युम्नादीनाम्; हे नृपेति आनन्त्येनाद्भुतत्वात् ॥ १८–१९ ॥ अरेः श्रीकृष्णस्य पुत्राय प्रादात् प्रणयेनादात् । अरित्वमेव दर्शयति—युधि परिभूत इति । प्रतीक्षते अपेक्षते मृगयते वा । हे विद्वन्निति तत्त्वया ज्ञायत एवेति भावः ॥ २० ॥

**श्रीमद्वीरराघवाचार्यकृता भागवतचन्द्रचन्द्रिका**

अथ भद्रायास्सुतानाह—सङ्ग्रामजिदिति । भद्राया इत्यस्य सुता इति शेषः । एवमन्यासामपि षोडशसहस्रपत्नीनां दशदश पुत्राः तथैव रोहिण्याः सुतानामुक्तिरन्यासामपि सुतप्रदर्शनार्थं दीप्तिमानिति । हरेराश्रितात्तिहरस्य बलभद्रस्य रोहिण्याश्च जाताः इत्यर्थः । अथ विवक्षिष्यमाणकथाविषयकपिपृच्छिषामुत्पादयन् भगवतः पौत्रादीनाह—प्रद्युम्नादिति द्वाभ्याम् । हे राजन् नाम्ना भोजकटमिति प्रसिद्धे पुरे वसत इति शेषः । तस्य रुक्मिणः पुत्र्यां रुक्मवत्याख्यायां भार्य्यायां प्रद्युम्नादनिरुद्धो बभूव, तेषाञ्चेति । तेषां प्रद्युम्नव्यतिरिक्तानां कृष्णपुत्राणामपि पुत्राः पौत्राश्च कोटिशो बभूवुः तत्र हेतुत्वेन श्रीकृष्णपत्नीनां बाहुल्यमनुस्मारयति—मातर इति । कृष्णजातानां मातरः षोडशसहस्राणि चशब्दात्ततोप्याधिक्यं सूच्यते ॥ १७–१९ ॥ रुक्मिण पुत्र्यामित्युक्तं तत्र पृच्छति राजा–कथमिति । अरेः कृष्णस्य पुत्राय प्रद्युम्नाय कथं दुहितरं ददौ किञ्च स हि रुक्मी युद्धे कृष्णेन परिभूतोऽवमानितस्तं कृष्णं हन्तुं रन्ध्रमन्तरं प्रतीक्षते स कथं प्रादादिति भावः । एतदिति । हे विद्वन् द्विषोः कृष्णरुक्मिणोर्मिथो यद्वैवाहिकं विवाहनिमित्तमेतन्मह्यमाख्याहि ॥ २० ॥

**श्रीविजयध्वजतीर्थकृता पदरत्नावली**

रोहिण्याः भद्रायाः ॥ १८ ॥ भोजकटे पुरे स्थितस्य रुक्मिणः पुत्र्याम् एतेषां मातरः कृष्णभार्याणां षोडशसहस्राणि ॥१९॥ अरेः कृष्णस्य पुत्राय प्रद्युम्नाय तं कृष्णं रन्ध्रमवसरं द्विषोः शत्रुभूतयोः वैवाहिकीं विवाहसम्बन्धिनीम् ॥२०॥

**श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी**

अष्टानां सर्वमुख्यानां पुत्रानुक्त्वा षोडशसहस्रमुख्याया रोहिण्या आह—दीप्तिमानिति ॥ १८ ॥ मातर इति कृष्णजातानां मातर एव सङ्ख्यातुं शक्यते नतु पुत्रपौत्रादयः ताश्च षोडशसहस्राणि अष्टोत्तरशतानि च ॥ १९ ॥ वैवाहिकं विवाहस्य कारणम् ॥ २० ॥

### गूढार्थदीपिनी

संग्रामेति सार्द्धम् । अरिजित् नाम एकः । भद्रा शैव्या । षोडशसहस्रमुख्या रोहिणी भौमान्तःपुरतः प्राप्ता ॥ १७ ॥ पुरे कञ्चित्कालं निवसतः प्रद्युम्नादिति योज्यम् ॥ १८ ॥ कृष्णात् जातानां पुत्राणां मातरः चशब्दात् अष्टोत्तरशतानि च ॥ १९ ॥ अरिपुत्राय प्रद्युम्नाय । रन्ध्रम् छिद्रम् अवसरमित्यर्थः ॥ २० ॥

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः

सत्यकान्ताः भद्रायाः शैब्यानामपि सैव ॥ १७ ॥ एवं दशदशपुत्राः अन्यासामपि ज्ञेया इति सूचयितुमाह—दीप्तिमानिति ॥ १८ ॥ एतेषां प्रद्युम्नादीनां यतः कृष्णजातानां तेषां मातरोऽपि षोडशसहस्राणि चकारादष्टोत्तरशताधिकानीति वैवाहिकं विवाहनिमित्तम् ॥ २० ॥

### श्रीसत्यधर्मकृता श्रीभागवतटिप्पणी

सङ्ग्रामनिद्बृहत्सेनेत्येवैकं विशेष्यमेकं विशेषणमित्येकतरन्नाह शूर इति यथायथं विशेषणम् । प्रहरणः २ अरिजित् ३ जयः ४ सुभद्रो भद्राया इति पाठः ५ वामः ६ आयुः ७ सात्यकः ८ दीप्तिमान् ९ एते ताम्रपात्राया दशरोहिण्या जाम्बवत्या यथा हरेः सम्मतास्तथैते सुभद्रायास्तनया इति । अत्र निर्देशक्रमेणादिमत्वान्तिमत्त्वे न विवाहक्रमेण । हरिवंशे च रोहिण्या अष्टौ महिष्य इति प्रतिज्ञाय रुक्मिणी सत्यभामा चेति विशेषणत्रयमित्युक्त्वा रुक्मिणीतनयान् शृण्वित्येवोक्ते रोहिणीत्यनुक्तेः सा नवमोति लेखनं तु भारतविगीतम् । ततः क्षमापयन्सुतां प्रदाय रोहिणीं शुभाम् । अथापि साम्बनामकं सुतं च रोहिणी हरेः । चतुर्मुखांशसंयुतं कुमारमेव षण्मुखमित्याचार्या रोहिणीति नान्या जाम्बवत्या इति यत्र क्वचिद्ग्रन्थान्तरे रोहिणीशब्दः श्रूयते चेन्नाष्टमहिषीसमा नवम्यस्तीति जजल्पुः । हरिवंशे च सुतां जाम्बवतश्चापि रोहिणीं कामरूपिणिमित्युक्तेश्च । अतो न भद्राऽपि । अतोऽस्मदुक्तयोजनाऽऽचार्यकटाक्षितेति दिक् । अथवा सङ्ग्रामजित् १ बृहत्सेनः २ प्रहरणः ३ अरिजित् ४ जयः ५ सुभद्रः ६ वामः ७ आयुः ८ सत्यकः ९ दीप्तिमांश्चेति १० दश भद्रायाः पुमपत्यानि रोहिण्याः । तदादीनां सर्वासां ताम्रपात्राद्यास्तनया योषितो जाता इति वा । सर्वासामेका द्वे चतस्रश्च कन्या जाता इति विशेषं द्योतयितुमेव रोहिणीनाम तथा ताम्रपत्राद्या इति सत्यभामा चतुरपत्यमध्य एकस्या नाम च गृहीत इति । तथा च रुक्मिणी तनयान्कन्या चारुमती तथेत्युक्त्वा जज्ञिरे सत्यभामायां भानुर्भीमरथः क्षुपः । रोहितो दीप्तिमांश्चैव ताम्रवक्त्रो जिनान्तकः । भानुर्ग्रामणिका चैव ताम्रपात्रा जलन्धरा । चतस्रो जज्ञिरे तेषां स्वसारो गरुडध्वजादित्यादि हरिवंशशंसनात् । अत्र तत्र नामव्यत्ययासश्च तेषां बहुनामतया सम्भवतीति न विसंवादः । न चाचार्यैः पृथक्पृथक् तासु दशैव पुत्रकानधत्त कन्यामित्येकवचः प्रत्युक्तं तर्हि कथमिति वाच्यम् । मुख्यविवक्षयैकवचनमाचार्याणां मुख्यामुख्यविवक्षया बादरायणस्येत्यविरोधसम्भवात् ॥ १७ ॥ यदर्थमेतत्कीर्तनं तत्र परीक्षितानु योजयित्वोत्तरं वक्तुं बीजावापं कुर्वन्किञ्चित्तदुपोद्धातं रचयति । प्रद्युम्नादिति । रुक्मिणो मातुलस्य । भोजकटे पुर इति पुनरनुबन्धदौर्घल्यहेतुवचनम् । कोटिशो बहुकोटिसङ्ख्याः ॥ १८–१९ ॥ यः कृष्णेन युधि परिभूतस्तं हन्तुं रन्ध्रमवकाशं प्रतीक्षत स कथमरिपुत्राय दुहितरं प्रादात् ॥ २० ॥

### श्रीमद्वल्लभाचार्यकृता सुबोधिनी

सङ्ग्रामजिदादयो दश भद्रायाः । सत्यको दशमः । रोहिणी षोडशसहस्राणां शताधिकानां मुख्या । क्वचिदेषैवाष्टमहिषीमध्य इति भद्रायाः स्थाने मन्त्रशास्त्रे प्रसिद्धा । तस्या दीप्तिमान् पुत्रः अष्टमहिषीपुत्रतुल्यः । तेनैकाशीति पुत्राः एकाशीति भक्तिप्रकारा इव भगवता प्रकटीकृता इति द्योतितम् । ताम्रपत्राद्या रोहिण्यास्तनयाः साधारणाः । अस्या दशपुत्रागणनमन्यासां दशपुत्रत्वख्यापकम् ॥ १७½ ॥ पौत्रान् निरूपयन् एकं निरूप्य तत्सदृशा अन्य इत्यतिदिशति **प्रद्युम्नाच्चानिरुद्धोऽभूदिति** । रुक्मवती रुक्मिणः पुत्री मातुलकन्या । प्रद्युम्नस्तत्रैव कियत्कालं स्थितः । तत्रैव विवाहं कृत्वा पुत्रमुत्पादितवान् । शत्रुगृहे कथमेकाकी स्थित इति शङ्कां वारयति **महाबल** इति । चस्त्वर्थे । भगवदाविष्टात् प्रद्युम्नादनिरुद्धो जात इति ज्ञापयितुं चकारः । अन्यथा कामाज्जातोऽप्रयोजकः स्यात् । मायावत्यामुत्पादनं वारयति **पुत्र्यां तु रुक्मिण** इति । मायावत्या नामान्तरमावेशो वा स्यादिति तुशब्दः असम्भावनां व्यावर्तयति । **राजन्निति** सम्बोधनं प्रद्युम्नस्य द्वारकाप्रेषणाभावं द्योतयति । सोऽपि राजा तत्रैव जामातरं दुहितरं च स्थापितवानिति । **पुरे** स्वनगरे । नाम्ना भोजकटे । एकं पौत्रमुक्त्वा अन्यानतिदिशति । एतेषां पुत्रपौत्राश्च पुत्राः पौत्राश्च कोटिशो जाताः । न तेषु दशसङ्ख्यानियमः । सर्वेषामेकमत्यार्थमाह **मातरः कृष्णजाताना**मिति । सर्वेषामेव भगवत्पुत्राणां सर्वा एव भगवत्स्त्रियो मातरः । यथा जननी, तथैव सर्वा इति सापत्न्याभावो निरूपितः । चकारादष्टोत्तरशतम् ॥ १८–१९ ॥ रुक्मिकन्याविवाहः असम्बद्ध इति तत्र हेतुं पृच्छति **कथमिति** । विवाहः स्नेहकृतः, पुत्रः पितुरिति अयमपेक्षया अरिपुत्रो द्वेष्यो भवति, दुहिता चात्यन्तं प्रिया । द्वेषकारणमाह **युधि कृष्णेन परिभूत** इति । विस्मृतो द्वेष इति चेत् । तत्राह

हन्तुं रन्ध्रं प्रतीक्षत इति। अद्यापि द्वेषव्यापारान्न निवृत्तः। रन्ध्रमिति साक्षाद्विरोधे असामर्थ्यं सूचितम्। प्रसिद्धसम्बन्धहेतोरभावात् हेत्वन्तरं पृच्छति एतदाख्याहीति। विद्वन्निति कथने ज्ञानं हेतुभूतं निर्दिशति। द्विषोः परस्परं द्वेषविषययोः मिथो वैवाहिकं विवाहसम्बन्धि व्यवहरणं कारणं वा ॥ २० ॥

### श्रीसुबोधिनी-सारः

संग्रामजिदादयो दश सत्यकांता भद्रायाः सुताः ॥ १७ ॥ हरेः रोहिण्याः षोडशसहस्राष्टोत्तरशतसंख्याप्रधानाया दीप्तिमान् ताम्रतप्त आद्यः प्रधानो येषां ते दश पुत्रा उपलक्षणत्वादन्यासामपि बोध्याः प्रद्युम्नात् रुक्मवत्यां पत्न्यां रुक्मिणः पुत्र्यां महाबलोऽनिरुद्धोऽभूत् नाम्ना भोजकटे पुरे हे राजन् एतेषां पुत्रपौत्राः कोटिशो बभूवुः कृष्णाज्जातानां पुत्राणां मातरः षोडशसहस्राणि चात् शतमष्टोत्तरम् हे नृप ॥ १८-१९ ॥ राजप्रश्नः। युधि संग्रामे कृष्णेन परिभूतस्तिरस्कृतो विरूपकरणात् तं कृष्णं हंतुं रंध्रं छिद्रमवसरं यः प्रतीक्षते स रुक्मी अरेः शत्रोः कृष्णस्य पुत्राय दुहितरं कन्यां कथं प्रादात् द्विषोर्वैरिणोर्मिथः परस्परं एतद्वैवाहिकं विवाहकर्म मे मह्यमाख्याहि वर्णय हे विद्वन् ॥ २० ॥

### गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

सङ्ग्रामजिदादयः सत्यकान्ता दश भद्रायाः पुत्राः। एवमन्यासामपि षोडशसहस्रपत्नीनां प्रत्येकं दश दश पुत्रा जाता इति सूचयंस्तन्मध्यपातिन्या रोहिण्याः सुतानाह—दीप्तिमानिति ॥ १७ ॥ एवं भगवतः पुत्रान्निरूप्य पौत्रान्निरूपयति—प्रद्युम्नादिति द्वाभ्याम्। हे राजन्! नाम्ना भोजकटे पुरे निवसतः प्रद्युम्नाच्च रुक्मिणः पुत्र्यां रुक्मवत्यां भार्यायां महाबलः अनिरुद्धाख्यः पुत्रोऽभूत् ॥ १८ ॥ तथैतेषां प्रद्युम्नव्यतिरिक्तानामपि पुत्राणां पुत्राः पौत्राश्च कोटिशो बभूवुः। तत्र हेतुत्वेन श्रीकृष्णपत्नीनां बाहुल्यमनुस्मारयति—मातुर इति। हे नृप! कृष्णाज्जातानां पुत्राणां मातरः षोडश सहस्राणि, चकारस्ततोऽप्यष्टोत्तरशताधिक्यसूचनार्थः ॥ १९ ॥ 'रुक्मिणः पुत्र्याम्' इत्युक्तं तत्र पृच्छति—कथमिति। अरेः कृष्णस्य प्रद्युम्नाय रुक्मी स्वदुहितरं कथं प्रादात्। अरित्वमेव स्पष्टयति-यतो युद्धे कृष्णेन रुक्मी परिभूतोऽवमानितः अतस्तं कृष्णं हन्तुं रन्ध्रमवसरं प्रतीक्षते। अतस्तस्य कन्यादानासम्भवादिति भावः ॥ २० ॥

### अन्वितार्थप्रकाशिका

संग्रामजिदाद्याः सत्यकान्ताः भद्रायाः सुताः भद्रैव शैब्यानाम ॥ १७ ॥ दीप्तिमानिति अर्द्धम्। दीप्तिमान् ताम्रः तप्तः इत्याद्याः हरेः सकाशाद्रोहिण्याः षोडशसहस्रमहिषीषु प्रथमायाः सुताः अन्यासामप्येवं ज्ञेयाः। प्रद्युम्नादिति। हे राजन्! नाम्ना भोजकटे पुरे कंचित्कालं द्वारकात आगत्य निवसतः प्रद्युम्नाच्च रुक्मिपुत्र्यां रुक्मवत्यां भार्यायां महाबलः अनिरुद्धाख्यः पुत्रोऽभूत् ॥ १८ ॥ एतेषामिति। एतेषां प्रद्युम्नव्यतिरिक्तानामपि पुत्राणां पुत्राः पौत्राश्च कोटिशो बभूवुः। यतः हे नृप! कृष्णाज्जातानां पुत्राणां मातरः षोडसशहस्राणि चकारस्ततोऽप्यष्टोत्तरशताधिक्यसूचनार्थः ॥ १९ ॥ कथमिति। अरेः कृष्णस्य पुत्राय प्रद्युम्नाय रुक्मी स्वदुहितरं कथं प्रादात्। यतो युधि युद्धे कृष्णेन रुक्मी परिभूतोऽवमानितः। अतस्तं कृष्णं हन्तुं रन्ध्रमवसरं प्रतीक्षते ॥ २० ॥

### श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्

संग्रामजिदादिसत्यकांताः भद्रायाः सुताः ॥ १७ ॥ षोडशसहस्रपरिमितासु स्त्रीषु मुख्यायाः रोहिण्याः हरेर्भार्यायाः तनयाः ॥ १८ ॥ एतेषामुक्तानामनुक्तानां च कृष्णसुतानां कोटिशः पुत्राः पौत्राश्च बभूवुः कृष्णजातानां कृष्णोत्पन्नानां तेषां पुत्राणां षोडशसहस्राणि चकारादेकशताधिकाः मातरः अभूवन् ॥ १९ ॥ तं कृष्णं हेतुं द्विषोः परस्परवैरिणोः कृष्णरुक्मिणोः मिथो वैवाहिकं विवाहकारणं ॥ २० ॥

### भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

अथ विवक्षिष्यमाणविषयपिपृच्छिषामुत्पादयन् भगवतः पौत्रादीनाह प्रद्युम्नादिति द्वाभ्याम्। प्रद्युम्नादिति ॥ हे राजन्, नाम्ना भोजकटे भोजकटमिति प्रसिद्धे इत्यर्थः। पुरे, वसत इति शेषः। रुक्मिणः पुत्र्यां, रुक्मवत्यां तु, प्रद्युम्नात् सकाशात्, महाबलः अनिरुद्धश्च, अभूत् ॥ १७ ॥ एतेषामिति ॥ एतेषां प्रद्युम्नव्यतिरिक्तानां, श्रीकृष्णपुत्राणामपि पुत्रपौत्राश्च पुत्राः पौत्राश्चेत्यर्थः। हे नृप, कोटिशः, बभूवुः। तत्र हेतुत्वेन श्रीकृष्णपत्नीनां बाहुल्यमनुस्मारयति। मातर इति। कृष्णजातानां श्रीकृष्णत उत्पन्नानां, सुतानां मातरः षोडशसहस्राणि, चशब्दात्ततोऽप्याधिक्यं सूच्यते। षोडश सहस्राणि तदुपर्यप्याधिकमेकशतमित्यर्थः। बभूवुः ॥ १८ ॥ रुक्मिणः पुत्र्यामित्युक्तं तत्र राजा पृच्छति कथमिति सार्द्धेन ॥ कथमिति ॥ यः युधि, कृष्णेन परिभूतः, तं कृष्णं, हन्तुं, रन्ध्रं छिन्द्रं, प्रतीक्षते, सः रुक्मी, अरिपुत्राय श्रीकृष्णसुताय प्रद्युम्नाय, दुहितरं

स्वां सुतां, कथं प्रादात् । हे विद्वन्, द्विषोः, श्रीकृष्णरुक्मिणोः, मिथः परस्परं, वैवाहिकं विवाहकर्म, यत् एतत्, मे मह्यं आख्याहि ॥ १९ ॥ न जानामीति मा वोच इत्याह ॥ अनागतमिति अनागतं भविष्यत्, अतीतं भूतं, वर्त्तमानं, अतीन्द्रियमस्मदिन्द्रियागोचरं, विप्रकृष्टं दूरस्थं, व्यवहितं कुड्याद्यन्तरितं च, एतत्सर्वं, योगिनः सम्यक्, पश्यन्ति साक्षात् कुर्वन्ति । अतो जानास्येवेति भावः ॥ २० ॥

**कृष्णप्रिया**

श्रीभद्रारानीजी के भी तेजस्वी संग्रामजित्, वृहत्सेन, शूर, प्रहरण, अरिजित्, जय-सुभद्र, वाम, आयु, एवं सत्यक, तेजस्वी दस कुमार थे ।।१९।। राजन् ! भगवान् श्रीकृष्ण द्वारिकाधीशजी की षोडशसहस्र से भी अधिक रानियाँ थी । श्रीरोहिणी इनमें विशिष्ट थी । उनके दीप्तिमान् ताम्रतप्त आदि दस-दस वीर पुत्र थे । और सर्व पत्नियों के भी दस दस पुत्र थे । रुक्मवती रानी में प्रद्युम्नजी से अनिरुद्ध जी का प्राकट्य हुआ था । वह रुक्मवती मायावती श्रीरतिरानी से भिन्न भोजकट नगर निवासी रुक्मी राजा की सुकुमारी थी और उसका व्याह प्रद्युम्न जी से किया गया था । श्री अनिरुद्ध महान् वीर पराक्रमी थे । राजन् ! भगवान् के पुत्रों की सोलह हजार एक सौ से अधिक माताएँ थी । भगवान् श्रीकृष्ण के पुत्र और पौत्रों की संख्या करोड़ तक पहुँच गयी थी ।। १७-१९ ॥ महाराज ने प्रश्न किया भगवान् शुकाचार्य जी ! आप परम विवेकी हैं कहिये ! भगवान् श्रीकृष्ण ने संग्राम में रुक्मी का पराजय और तिरस्कार किया था वह चाहता था कि अवसर मिलते ही श्रीकृष्ण का वध कर दे ॥ २० ॥

**अनागतमतीतं च वर्तमानमतीन्द्रियम् । विप्रकृष्टं व्यवहितं सम्यक् पश्यन्ति योगिनः ॥ २१ ॥**

**श्रीशुक उवाच**

**वृतः स्वयंवरे साक्षादनङ्गोऽङ्ग[1]युतस्तया । राज्ञः समेतान् निर्जित्य जहारैकरथो युधि ॥ २२ ॥[2]**

**यद्यप्यनुस्मरन् वैरं रुक्मी कृष्णावमानितः । व्यतरद् भागिनेयाय सुतां कुर्वन् स्वसुः प्रियम् ॥ २३ ॥[3]**

**कर्दमक्षमा**

अन्वयः—योगिनः, अनागतम्, अतीतम्, वर्तमानम्, अतीन्द्रियम्, विप्रकृष्टम्, व्यवहितम्, सम्यक्, पश्यन्ति ॥ २१ ॥ श्रीशुक उवाच—अङ्गयुतः, साक्षात्, अनङ्गः, तया, स्वयंवरे, वृतः, एकरथः, समेतान्, राज्ञः, युधि, निर्जित्य, जहार ॥ २२ ॥ यद्यपि, कृष्णावमानितः, वैरम्, अनुस्मरन्, रुक्मी, स्वसुः, प्रियम्, कुर्वन्, भागिनेयाय, सुताम्, व्यतरत् ॥ २३ ॥

**श्रीधरस्वामिविरचिता भावार्थदीपिका**

रुक्मिणोऽभिप्रायं कथं जानीम इति चेदत आह । अनागतमिति । अतीन्द्रियमस्मदादीद्रियागोचरम् । विप्रकृष्टं दूरस्थम् । व्यवहितं कुड्याद्यंतरितम् ॥ २१ ॥ तत्रोत्तरम् । स्वयंवरे रुक्मवत्या वृतः सन् राज्ञो निर्जित्य जहारेति ॥ २२ ॥ यद्यपि श्रीकृष्णावमानितस्तथापि वैरमनुस्मरन्नपि व्यतरत्प्रादात् अन्वमोदतेत्यर्थः ॥ २३ ॥

**श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः**

ननु दुर्घटघटना कारिणीयं भगवदिच्छा भगवल्लीलाशक्तिरेव सा सामान्यतो ज्ञायताम्, विशेषपर्यालोचनं त्वस्या अशक्यमित्याशंक्याह—अनागतमिति । योगिनस्तावदनागतादिकं जानन्ति, भगवद्भक्तिविशेषत्वेन परमतद्विशेषा भवन्तस्तु भगवत्संबंधिनमपि तत्तद्विशेषं जानंतीति भावः । अनागतं भावि ॥ २१ ॥ तत्राक्षेपे । एकरथः सेनारहितः । भीतोऽयं वैरिपुत्राय कन्यां दित्सतीत्यप्रतिष्ठाभयाद्रुक्मिणा स्वपुत्र्याः स्वयंवरणमकारि इत्याह-वृत इति । वरणे हेतुः—अन्यत्र य आवेशभावेनानंगः स पुनरत्र साक्षात्पूर्णरूपोंगयुतश्चेत्यर्थः । समेतान् तथा स्वयंवरे तस्मिन्वृतेऽपि तेन सह योद्धुं मिलितान् । विवाहोत्तरं मातुलप्रीत्या तस्य पुरे चिरवासेन, यद्वा—द्वारकातः पुनरानयनात्तत्रानिरुद्धस्य जन्माभूदिति ज्ञेयम् ॥ २२ ॥ इत्यर्थ इति-न तु तेन श्रद्धया दत्ता हृतामन्यः शाल्व इवांबां न ग्रहीष्यतीति हेतोस्तद्दानं स्वीकृतवानिति भावः । कारणांतरमाह—स्वसुरिति, स्वप्राणरक्षिकायाः स्वसुः श्रीरुक्मिण्याः प्रियं कुर्वन् कर्तुम् ॥ २३ ॥

**श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी**

ननु, दुर्घटघटनाकारिणीयं भगवदिच्छा भगवल्लीलाशक्तिरेव वा सामान्यतो ज्ञायतां तद्विशेषपर्यालोचनन्त्वशक्यमित्याशङ्क्याह—अनागतमिति । योगिनस्तावदन्यदनागतादिकं जानन्ति भगवद्भक्तिविशेषत्वेन परमतद्विशेषाः भवन्तस्तु

१. ऽङ्गवृता-वीर. । २. "२२ एवं २३" श्लोकौ पूर्वापर्येण वर्तते-वीर प्रा. पा. । ३. तदेवानु-श्लोकादारभ्य नव श्लोकाः अधिकाः-विज. ।

भगवत्सम्बन्ध्यपि तत्तद्विशेषं जानन्तीति भावः ॥ २१ ॥ तत्र तमेवेयं वरीतेति निश्चित्य तदसहिष्णुनिजवर्गवञ्चनार्थं स्वयम्वरश्च कृत इत्याह-वृत इति । वरणे हेतुः, अन्यत्र य आवेशभावेनानङ्गः स पुनरत्र साक्षात्पूर्णरूपः अङ्गयुतश्चेत्यर्थः, समेतान् स्वयम्वरे तया वृतेनापि तेन सह मत्सरेण योद्धुं मिलितान् युधि निर्जित्येत्यादिना महापराक्रमः उक्तः एवं विवाहानन्तरं मातुलस्य प्रीत्या तस्य पुरे चिरनिवासेन किम्वा द्वारकां गतस्य तस्य पुनः प्रत्यानयनात् तत्रानिरुद्धस्य जन्मेत्युक्तम् ॥ २२ ॥ यद्यपीति द्वयं तैर्व्याख्यातं तत्र व्यतिक्रमेण व्याख्यानं सिद्धान्ते स्वयम्वरणस्य मुख्यत स्वसृप्रियचिकीर्षयास्तु तदनुमोदनमात्रत्वेन गौणतेति ज्ञापनार्थं यद्वा वैरम् अनुस्मरन् सदा चिन्तयन्नपि स्वसुः श्रीरुक्मिणीनाम्न्याः श्रीभगवन्महाशक्तेस्तत्स्वसृभूतायाः स्नेहप्राबल्येनैव ददावित्यर्थः । अग्रेपि स्वसुः प्रियचिकीर्षयेत्येव वक्ष्यते ॥ २३ ॥

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका

न जानामीति मावोच इत्याह—अनागतमिति । अतीन्द्रियमस्मदिन्द्रियागोचरं विप्रकृष्टं दूरस्थं व्यवहितमीषदन्तरितं चेत्येतत्सर्वं योगिनो भवन्त सम्यग्यथावत् पश्यन्ति साक्षात्कुर्वन्ति अतो जानास्येवेति भावः ॥ २१ ॥ एतदेव स्पष्टयितुं तावत्स्वयम्वरे तद्दुहिता प्रद्युम्नेन हृतेत्याह-वृत इति । एक एव रथो यस्य सः असहायः प्रद्युम्नेन हृतेत्याह—वृत इति । एक एव रथो यस्य सः असहायः प्रद्युम्नः स्वयम्वरे तथा रुक्मवत्या वृतः स्वयञ्च तस्यामनुरागयुक्तः, समेतान् युयुत्सया प्राप्तान् राज्ञो नृपान् युद्धे निर्जित्य तां जहार ॥ २२ ॥ इत्थमापृष्टः प्राह मुनिः-यद्यपीति । यद्यपि रुक्मी कृष्णेनावमानितस्तथापि वैरमनुस्मरन्नपि स्वसुः रुक्मिण्या, प्रियं कुर्वन् "लक्षणहेत्वोः" इति शत्रादेशः कर्त्तुमित्यर्थः । व्यतरद्ददौ अन्वमोदतेति भावः । न त्वाहूय कन्यां ददौ अपितु स्वयम्वरे प्रद्युम्नेन हृतामन्वमोदतेत्युत्तरमभिप्रेतम् ॥ २३ ॥

### श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी

तदेवाभिव्यञ्जयति—अनागतमिति । ननु वर्त्तमानमन्येऽपि पश्यन्ति ? तत्राह—अतीन्द्रियमिति । तदेवाह—विप्रेति पदद्वयेन । योगिनोऽपि पश्यन्ति, किं पुनर्भवादृशाः श्रीभगवद्भक्तवरा इत्यर्थः । अन्यत्तैर्व्याख्यातम् । यद्वा, अतीन्द्रियं ब्रह्म व्यवहितं मायान्तरतमविशेषेण श्रीनारायणादप्याधिक्येन प्रकृष्टं श्रीकृष्णञ्च पश्यन्ति, यतो योगिनो भक्तियोगवन्तः, किं पुनः रुक्मिणोऽभिप्रायमिति भावः ॥ २१ ॥ वैरमनुस्मरन् सदा चिन्तयन्नपि स्वसुः श्रीरुक्मिण्याः स्नेहेन ददावित्यर्थः । अंगयुत इति कामदेवत्वादप्युत्कर्ष उक्तः, अतो वृतः, समेतान् स्वयम्वरे तया वृत्तेनापि तेन सह दुर्बुद्धया द्वेषेण युद्धार्थं मिलितान्, युधि निर्जितेत्यादिना महापराक्रम उक्तः । एवं विवाहानन्तरं मातुलस्य प्रीत्या तस्य पुरे चिरं वासेन किंवा द्वारकां तस्य पुनः गतस्य श्वशुरेण प्रत्यानयनात्तत्रानिरुद्धस्य जन्मेति ज्ञेयम् ॥ २३ ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

अतीतकथा नेदानी वक्तुं शक्येति नेत्याह— अनागतमिति । विप्रकृष्टं दूरस्थं व्यवहितम्मूर्त्तद्रव्यान्तरितम् ॥ २१-२२ ॥ अर्धाङ्गीकारेण परिहरति—यद्यपीति । व्यतरद्दत्तवान् भागिनेयाय सहोदर्याः पुत्रायेति सूचितं प्रियम् इष्टं स्पष्टं तदेव आचष्टे—कुर्वन्निति । इदं दाने कारणम् ॥ २३ ॥ ननु, ततः परं वैरं मुक्तवान् किम् ? न तताधिकमभूत् कथमत्राह—तदेवेति । श्रीशैलनिलयं श्रीपर्वतवासिनं मल्लिकार्जुननामानमित्यर्थः ॥ क ॥ छन्दयामास अभीष्टं दत्तवान् "वशाभिप्राययोश्छन्दः" इति ॥ ख ॥ शत्रुसङ्घानां मनसेति शेषः । अजेयाच्छेद्यत्वे तथास्तामित्युक्त्वा तस्य कृष्णभक्तिं दर्शयितुं वक्ति-वावयञ्चेति ॥ ग-च ॥ तर्हि बन्धुमैत्रीं निर्दुष्टात्माऽकार्षीत् किम् ? नेत्याह—मैत्रीमिति । अपितु बन्धुकृत्याकरणेन कल्मषमकरोत् ॥छ॥ मैत्र्यकरणे विरोधाकारणे च निमित्तमाह—यदीति । अनङ्गश्चेत् किमवलोक्य वृत इत्यत उक्तमङ्गयुत इति ॥ ज-झ ॥ यम् अनिरुद्धम् ॥ ञ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

अनागतमिति । तेनाहमप्यत्रेति जानामीति न वक्तव्यमिति भावः ॥ २१ ॥ किन्तु वैरिपुत्राय कन्यां दित्सतीत्यप्रतिष्ठाभयाद्रुक्मिणा स्वपुत्र्याः स्वयम्वरणसभा कारितेत्याह वृत-इति ॥ २२ ॥ तत्रोत्तर स्वप्राणरक्षिकायाः स्वसुः प्रियं कुर्वन् कर्त्तुम् ॥ २३ ॥

### गूढार्थदीपिनी

एतत् विवाहकारणम् । अनागतं भविष्यत् । विप्रकृष्टं दूरस्थम् । सम्यक् साक्षात् पश्यन्ति ॥२१॥ अङ्गयुतः मूर्तिमान् । तया रुक्मवत्या ॥ २२ ॥ भागिनेयाय रुक्मिणीपुत्राय । कुर्वन् कर्तुं 'लक्षणहेतोः' इति शतृप्रत्ययः ॥ २३ ॥

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः

अनागतं भविष्यम् अतीतं भूतम् वर्तमानं विप्रकृष्टं दूरस्थं ब्रह्माण्डान्तर्वर्तिव्यवहितं मुष्ट्यान्तरितबीजस्थं पत्रपलाशादिकम् ॥ २१ ॥ विद्विषोरपि कृष्णरुक्मिणोः अपत्यविवाहे निमित्तं रुक्मिणः स्नेह इत्युत्तरमाह-वृत इति द्वाभ्याम् ॥२२-२३॥

## श्रीसत्यधर्मकृता श्रीभागवतटिप्पणी

एतदित्यव्ययम्। एतां वैवाहिकीं क्रियां। द्विषोरिति। विरुद्धामाख्याहि। न मम तावती परिचितिरिति न वद स्वामिन्निति ज्ञानिवत्वं स्फोरयन्परोक्षतो योगिमाहात्म्यमाह॥ अनागतमिति। विप्रकृष्टं भित्त्याद्यनावृतदूरप्रदेशवर्ति व्यवहितं तदन्तरितमिति विवेकः। अतस्तव योगित्वान्नाविदितं किञ्चिदित्युदञ्च्य मां प्रति तां कथमिति तात्पर्यं राज्ञो ज्ञेयम्॥ २१॥ कृष्णावमानित इति यद्यप्यनुस्मरंस्तथाऽपि स्वसुः रुक्मिण्याः प्रियं कुर्वन्भागिनेयाय तत्पुत्राय प्रद्युम्नाय सुतां व्यतरत्। विशिष्य-भागिनेयायेत्युक्तप्रपञ्चनमेव स्वसुः प्रियं कुर्वन्नित्यनेन कृतमित्यनेके। स्वसुः प्रियं कुर्वन्नित्येवोक्तौ न वरो वरणीयगुण इति तद्दाक्षिण्यमात्रं दाननिदानमिति स्यादित्यत उक्तं भागिनेयायेति। भाजिकन्या देया तस्मै वैतस्मा इत्यालोचने इनः श्रेष्ठ इति भागिनेयस्तस्मै। गुणाभावश्छान्दसः। सर्वोर्वीशपुत्रापेक्षया श्रेष्ठतामतिविषयाय सोऽपि योग्य इत्यर्थः। परेयं प्रियमित्युक्तेः स्वसुः प्राणमात्रावशिष्ट इति सु असवो यस्य सोऽपि योग्य इत्यर्थः। परेयं प्रियमावर्त्यपरेयं स्वव्यतिरिक्तसर्वविषयं प्रियं कुर्वन् भागिनेयाय सुतां व्यतरदिति वा॥ २२॥ प्राय आयोधनपराभवस्मरणं विहाय विवाहानन्तरमनन्तविद्वेषं त्यक्तवान्भवेदित्यतः स्वभावस्यानपायात्तत उत्तरमपि मल्लिकार्जुनं यदुवरवरप्रदमित्यपः प्रथातः स्वेर्ष्या फललब्ध्यै तपसाऽतोषयदित्याह॥ तदेवेति॥ २३॥ वरेण छन्दयामास वरं वरयेति स्वाभिप्रायमाविष्कृतवान्। स च रुक्म्यपि दृढं वव्रे। सति शलादौ धनुर्वरणं च किमर्थमिति चन्ने। शार्ङ्कस्य पिनाकस्य चैकदोत्पत्तेः हर ऐकं हरिरेकं जगृहतुर्हरिशरासनपराजये जाते स हरशरासनांशेन धनुषा जयो स्यामिति दुराशात इति ज्ञेयम्॥ २४॥ शत्रुसङ्घानामजेयमप्राप्यं धर्तुमशक्यमिति यावत्। त्रिदिशैरप्यच्छेद्यम्। तथेति स्यातामजेयत्वाच्छेद्यत्वे इत्युक्त्वा कार्मुकं दत्वा शङ्कर इदं चोवाच च॥ २५॥ यदा विष्णौ तद्विषये विरुद्धचसे विरोधं करोषि तदैतत्कार्मुकं त्वां हित्वा मामेव प्रतिपत्स्यति। अन्यथा नेत्युक्त्वा कार्मुकं दत्वा। पुनः कार्मुकं दत्वेत्यनेन स्वामिन्महादेव यदर्थमियानायासः सम्पादितस्तन्नोपपादितमिति वक्तुमवसरमददानो न व्यदृश्य तादृश्योऽभूदिति द्योतयति। सोऽपि। अपिना पिनाकिना कृष्णहनने ईप्सिते न वरवितरणमिति वरग्रहणं सूचितमिति ज्ञेयम्। कृष्णमृते विना॥ २८॥ अत इति डोलायमान-मानसः सोऽभूदित्याह॥ विरोद्धुमिति। तत्र तन्त्रं धनुर्लोभस्तद्ग्राध्यम्। अकल्मषामतिशुद्धां मैत्री नैवाकरोत्। तत्पूर्तिरामायणं कियती कण्डूतिस्तावत्कण्डूयनमिति नीत्योपर्युपरि सम्बन्धिव्यवहृतिपूर्तिव्यवहारादिमात्रमकरोदित्यकल्मषां नेत्यनेन ध्वन्यते॥ २९॥ गिरीशस्य वचो मामेव प्रतिपत्स्यतीति वैरं चानुस्मरन्न मैत्रीमकल्मषां चाकरोदित्यतीतेनान्वयः। तद्वितरण-पूर्वरङ्गमुपपादयति॥ वृत इति। अनङ्गः प्राक् अङ्गयुत इदानीं स्वयंवरे साक्षात्तया रुक्मवत्या वृतः॥ ३०॥ समेतान्राज्ञो युधि निर्जित्यैकरथो निस्सहायो जहार सः। यत्कृतेऽनिरुद्धनिमित्तं सहस्रबाहुर्बाणो द्विभुजोऽभवत्। एतद्विस्तरस्तु स्वावसरे वक्ष्यते॥ ३२॥

## श्रीमद्वल्लभाचार्य्यकृता सुबोधिनी

नन्वेतत्पूर्वं न श्रुतम्, समाध्यभावादधुना न चिन्त्यत इति तज्ज्ञानं कथमिति चेत्, तत्राह **अनागतमतीतं चेति**। योगिनां देशकालव्यवधायकानि ज्ञाने न प्रतिबन्धकानि। यथा चक्षुःसन्निकर्षः प्रत्यासत्तिः प्रत्यक्षे, तथा सर्वत्र योगिनां योगजधर्मः प्रत्यासत्तिः। कालो हि वस्तूनि नयति, यथा नदी जलम्। यद्यपि जलमभिज्ञानद्रव्यसहितं क्वचिद्देशे स्थितं तस्मिन् समये तद्देशस्थितः पश्यति, तथापि प्रदेशान्तरे गतं न पश्यति तद्देशस्थितः। सहगतो वा तदपि पश्यति। यथा वा मनुष्यैर्द्रष्टु-मयोग्यमपि देवाः पश्यन्ति, यथा सर्वैराच्छन्नं कालज्ञाः पश्यन्ति, एवं सर्वसामर्थ्ययुक्तो योग एव सर्वसमर्थः। वर्तमानस्य विशेषणमतीन्द्रियमिति। **अतीतं** यन्नानुभूतम्। **अनागतं** यत् ज्ञापकरहितम्। चकाराद्धर्मान्तरमापन्नम्। **विप्रकृष्टं** देश-व्यवहितम्। निकटस्थमपि व्यवहितं भित्त्यादिना। सर्वमेव योगिनः सम्यक् पश्यन्ति। ध्यानेन ज्ञानं ज्ञानिनाम्। योगिनां तु भगवत इव योगजधर्मे प्रकटे सर्वज्ञत्वमिति॥ २१॥ तत्र प्रद्युम्नविवाहे हेतुद्वयमाह **यद्यप्यनुस्मरन्निति** द्वाभ्याम्। 'स्वसुः प्रियं कुर्वन्' इत्येकम्, 'स्वयंवरे कन्ययैव वृत' इत्यपरम्। तत्र प्रथममुपपादयति। कृष्णावमानितः वैरमनुस्मरन् यद्यपि वर्तते, तथापि स्वसुः प्रियं कुर्वन् **भागिनेयाय** भगिनीपुत्राय मातृपक्षपातिने सुतामदात्। अनुरोध्या स्वसा, सा पूर्वमपकृता तदभि-प्रायमज्ञात्वा पश्चात् ज्ञात्वा कथं प्रसन्ना भवतीति विचार्य, प्राणश्च तया रक्षित इति, स्वकन्यां तत्पुत्राय प्रायच्छत्। प्रियं प्रियाय चेद्दीयते, तदा प्रसन्नः सर्वोऽपि भवतीति॥ २२॥ द्वितीयमाह **वृतः स्वयंवरे साक्षादिति**। यद्वशादन्येऽपि म्रियन्ते, स एव साक्षात् पूर्वमनङ्गः। अतः कयाप्यवृतः इदानीमङ्गयुतो जात इति तयाभिज्ञया वृतः। स्वयंवरे वृतो न प्रत्याख्यायत इति स महाभिमानी कन्यायाः स्वयंवरं कृतवान्, पश्चाद्विधानपूर्वकमपि सन्तोषेण दत्तवानिति **व्यतरदित्युक्तम्**। तस्य रूपमेव महत्, न पौरुषं भविष्यतीत्याशङ्क्याह **राज्ञः समेतान्निर्जित्य जहारेति**। युधि सावधानान्, तत्रापि मिलितान् सर्वान् नितरां जित्वा। **एकरथ** इत्यसहायः, हृत्वा मातुलगृहमेव गत इति पूर्वश्लोकानुरोधादवसीयते। एकरथत्वादिधर्मैः प्रतीतया पितुरधि-कत्वमुक्तम्॥ २३॥

### श्रीविट्ठलरायात्मजश्रीवल्लभकृतलेखः

अनागतमित्यस्याभासे । **समाध्यभावादिति** । एतन्निरूपणस्य माहात्म्याप्रतिपादकत्वेन समाधिभाषात्वाभावादित्यर्थः । **व्याख्याने** । **कालो हीति** । इदं लौकिकं कालाधीनमेव । भगवल्लीलाया एव कालानधीनत्वमिति भावः ।

### श्रीसुबोधिनी–सारः

अन्याभिप्रायमन्यैश्च दुर्ज्ञेयमिति मा वदेत्याह । अनागतं भविष्यम् अतीतं भूतं वर्तमानम् अतींद्रियागोचरं विप्रकृष्टं देशांतरस्थं व्यवहितं कुड्याद्यन्तरितं च योगिनः सम्यक् पश्यंति ॥ २१ ॥ शुकोक्तिः । स्वयंवरे पूर्वमनंगोंगरहितः शिवेन भस्मीकरणादधुनांगयुतो मूर्त्तिमान् कामः साक्षात्तया रुक्मवत्या वृत एकरथो युधि समागतान् राज्ञः निर्जित्य जहार ताम् ॥ २२ ॥ यद्यपि कृष्णेनावमानितो रुक्मी वैरमनुस्मरन् तथापि स्वसुर्भगिन्याः प्रियं कुर्वन् भागिनेयाय भगिनीपुत्राय सुतां व्यतरददात् ॥ २३ ॥

### गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

हे विद्वन् ! द्विषोः द्वेषयुक्तयोः कृष्णरुक्मिणोर्मिथो यद्वैवाहिकं विवाहनिमित्तं तन्मे मह्यमाख्याहि । ननु 'एतन्न जानामि' इत्याशङ्क्याह–अनागतमिति । अनागतं भविष्यत् अतीतं भूतं, वर्तमानं च सर्वं वस्तु योगिनः सम्यक् साक्षात्पश्यन्ति । 'ननु वर्तमानं तु सर्वे एव पश्यन्ति, तेन क उत्कर्षः' इत्याशङ्क्य वर्तमानं विशिनष्टि—अतीन्द्रियं अस्मदिन्द्रियागोचरम् । विप्रकृष्टं दूरस्थम् । व्यवहितं कुडयाद्यन्तरितम् । अतोऽज्ञातं तव किञ्चिदपि नास्ति, अतो वक्तव्यम् ॥ २१ ॥ यद्यपि कृष्णेनावमानितस्तथापि वैरं स्मरन्नपि रुक्मी स्वसुः रुक्मिण्याः प्रियं कुर्वन् भागिनेयाय प्रद्युम्नाय स्वसुतां व्यतरत् प्रददावित्यन्वयः ॥ २२ ॥ ननु 'स्वयमाहूय कन्यां दत्तवान्, किंतु तया वृतेन प्रद्युम्नेन कृतं तद्धरणमनुमोदितवान्' इत्याशयेनाह—वृत इति । तया रुक्मवत्या स्वयंवरे वृतः प्रद्युम्नः तत्र समेतान् कन्याप्राप्तिलोभेनागतान् बलात्कन्याग्रहणाय युधि प्रवृत्तान् राज्ञः निर्जित्य कन्यां जहारेत्यन्वयः । तत्पराक्रमातिशयं सूचयन् विशिनष्टि—एकरथ इति । तया वरणे तत्सौन्दर्यातिशयं हेतुं सूचयंस्तत्र हेतुमाह–अङ्गयुतः मूर्तिमान् साक्षादनङ्गः कामदेव इति ॥ २३ ॥

### अन्वितार्थप्रकाशिका

एतदिति अर्द्धम् ।। हे विद्वन् ! द्विषोः द्वेषयुक्तयोः कृष्णरुक्मिणोर्मिथो यद्वैवाहिकं विवाहनिमित्तं तन्मे मह्यमाख्याहि । अनागतमिति ।। अनागतं भविष्यत् अतीतं भूतं वर्तमानं च अतीन्द्रियम् अस्मदिन्द्रियागोचरं विप्रकृष्टं दूरस्थं व्यवहितं कुड्याद्यन्तरितं च सर्वं वस्तु योगिनः सम्यक् साक्षात्पश्यन्ति । अतः सर्वज्ञत्वात् वद ॥ वृत इति ।। रुक्मवत्या स्वयंवरे वृतः अङ्गयुतः मूर्तिमान् साक्षादनङ्गः कामदेवः प्रद्युम्नः एकरथः एकरथमात्रसहायः सन् तत्र समेताद् कन्याप्राप्तिलोभेनागतान् बलात्कन्याग्रहणाय युधि प्रवृत्तान् राज्ञः निर्जित्य कन्यां जहार ॥ यद्यपीति ।। यद्यपि कृष्णेनावमानितः वैरं स्मरन्नपि रुक्मी स्वसुः स्वप्राणरक्षिकायाः रुक्मिण्याः प्रियं कुर्वन् भागिनेयाय प्रद्युम्नाय स्वसुतां व्यतरत् प्रददौ । प्रद्युम्नकृतं कन्याहरणमनुमोदितवानिति भावः ।। रुक्मिण्या इति ।। हे राजन् ! विशालाक्षीं नेत्रादिसौन्दर्यवतीं चारुमत्याख्यां रुक्मिण्यास्तनयां कन्यां तदवस्थां कृतवर्मणः सुतो बलिसंज्ञक उपयेमे । उपलक्षणमेतत् । अन्यासामपि एकैकाः कन्या अभूवन् ताश्च वराः उपयेमिरे ।। २१–२४ ।।

### श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्

अनागतं भविष्यं अतीतं भूतं चातींद्रियमिंद्रियाप्राप्यं विप्रकष्टं दूरदेशस्थं ।। व्यवहितं भितिकादिव्यवधानयुक्तं वस्तुजातं । योगिनः पश्यंति ॥ अतएतदाख्याहीति पूर्वेण संबंधः ।। २१ ।। तया रुक्मवत्या अनंगः प्रद्युम्नः तां जहार ।। २२ ।। यद्यपि कृष्णेनावमानितः कृतापमानः अतः वैरं स्मरन्नपि भागिनेयाय प्रद्युम्नाय स्वसुतां स्वसुप्रियं कुर्वन् सन् व्यतरत् ददौ ।।२३।।

### भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

इत्थमापृष्टः प्राह मुनिः ॥ वृत इति ॥ तया रुक्मिणः सुतया रुक्मवत्या, अनङ्गः सन्नपि, अङ्गयुतः शंभुवरादङ्गयुतो जातः, साक्षान्नयनविषयतां प्राप्तः काम इत्यर्थः । स्वयंवरे, वृतः । ततः, एकरथः सः, समेतान् राज्ञः, युधि निर्जित्य, जहार ॥ २१ ॥ यद्यपीति ॥ यद्यपि, रुक्मी कृष्णावमानितः श्रीकृष्णेन तु कृतावमानः, वैरं च अनुस्मरन् स्मरत्येव, तथापि, स्वसुः स्वप्राणरक्षकभगिन्याः, प्रियं कुर्वन्, 'लक्षणहेत्वोः–' इति शत्रादेशः । प्रियं कर्त्तुमित्यर्थः । भागिनेयाय स्वभगिनीसुताय प्रद्युम्नाय, सुतां स्वतनयां, व्यतरद्ददौ । तदा बहुभिः संप्रेरितोऽपि तदन्वमोदत । न त्वाहूय कन्यां ददावित्येवं प्रश्नोत्तरमभिप्रेतम् ॥ २२ ॥ रुक्मितनयाप्रसङ्गात् किं भगवतो दुहितरः सन्ति, यदि सन्ति तर्हि कस्यां भार्यायां कति कति कन्या अजीज-

नन्निति राज्ञो बुभुत्सां शमयन्नाह ।। रुक्मिण्या इति ।। हे राजन्, विशालाक्षीं विशालनयनां, चारुमतीं चारुमतीसंज्ञां, रुक्मिण्याः, कन्यां कन्यावस्थोपेतां तनयां, बली एतन्नामा कृतवर्मसुतः, उपयेमे किल। एवं सर्वासामप्येकैका कन्या तासां सर्वासां विवाहोपलक्षणार्थं ज्येष्ठायाः रुक्मिण्यास्तनयाया विवाह उक्तः ।। २३ ।।

### कृष्णप्रिया

महाराज ! आप तो योगिवर हैं आप से कोई बात छिपी नहीं है। योगिजन भूत-भविष्य-वर्तमान तीनों काल की सब बात अच्छी तरह से जानते हैं। अधिक क्या कहा जाय ? जो इन्द्रियातीत बातें होती हैं निकट प्रदेश में है या तो दूर सुदूर या मध्य में अन्तरायवाली भी बातें जानते हैं ।। २१ ।। श्रीशुकदेवजी महाराज ने कहा—राजन् ! श्रीप्रद्युम्न कुमार प्रत्यक्ष कामदेव थे। श्रीप्रद्युम्नजी की गुणगरिमा और रूपमाधुरी प्रसन्न होकर रुक्मवती ने स्वयंवर में प्रद्युम्नजी का वरण किया था। श्रीप्रद्युम्नजी ने संग्राम में अकेले ही स्वयंवर में इकट्ठे हुए समस्त राजाओं को जीत लिया और रुक्मवती का अपहरण कर लाये ।। २२ ।। राजन् ! भगवान श्रीकृष्ण से पराजित एवं अपमानित रुक्मी के हृदय की वैरवृत्ति शान्त नहीं हुई थी और उनके हृदय में वैर की आग भभक रही थी लेकिन अपनी बहिन रुक्मिणीजी को प्रसन्न करने के आशय से अपने भानजे प्रद्युम्नजी को अपनी कन्या दे दी ।। २३ ।।

**रुक्मिण्यास्तनयां राजन् कृतवर्मसुतो बली। उपयेमे विशालाक्षीं[1] कन्यां चारुमतीं किल ।। २४ ।।**
**दौहित्रायानिरुद्धाय पौत्रीं रुक्म्यददाद्धरेः।**
**रोचनां बद्धवैरोऽपि स्वसुः प्रियचिकीर्षया। जानन्नधर्मं तद्[2] यौनं स्नेहपाशानुबन्धनः ।। २५ ।।**
**तस्मिन्नभ्युदये राजन् रुक्मिणी रामकेशवौ। पुरं भोजकटं जग्मुः साम्ब[3]प्रद्युम्नकादयः ।। २६ ।।**
**तस्मिन् निवृत्त उद्वाहे कालिङ्गप्रमुखा नृपाः। दृप्तास्ते रुक्मिणं प्रोचुर्बलमक्षैर्विनिर्जय ।। २७ ।।**
**अनक्षज्ञो[4] ह्ययं राजन्नपि तद्व्यसनं[5] महत्। इत्युक्तो बलमाहूय तेनाक्षै रुक्म्यदीव्यत ।। २८ ।।**

### कर्दमक्षमा

अन्वयः—राजन् ! कृतवर्मसुतः, बलीकामा, विशालाक्षीम्, चारुमतीम्, कन्याम्, उपयेमे ।। २४ ।। राजन् ! हरेः, बद्धवेरः, अपि, तद्, यौनम्, अधर्मम्, जानन्, अपि, स्नेहपाशानुबन्धनः, स्वसुः, प्रियचिकीर्षया, अनिरुद्धाय, दौहित्राय, रोचनाम्, पौत्रीम्, अदात् ।। २५ ।। राजन् ! तस्मिन्, अभ्युदये, रुक्मिणी, रामकेशवौ, साम्बप्रद्युम्नादयः, भोजकटं, पुरम्, जग्मुः ।। २६ ।। तस्मिन्, उदवाहे, निवृत्ते, दृप्ताः, कलिङ्गप्रमुखाः, नृपाः, अक्षैः, बलम्, विनिर्जय, इति, प्रोचुः ।। २७ ।। राजन् ! हि, अनक्षज्ञः, अपि, अयम्, तद्, महत्, व्यसनम्, आसीत्, इति, उक्तः, बलम्, आहूय, रुक्मी, तेन, अक्षैः अदीव्यत ।। २८ ।।

### श्रीधरस्वामिविरचिता भावार्थदीपिका

सर्वासामपि एकैका कन्या तत्सर्वविवाहोपलक्षणार्थं ज्येष्ठकन्याविवाहमाह। रुक्मिण्या इति ।। २४ ।। यौनं विवाहः। तद्यौनमधर्मं जानन्निति "द्विषदन्नं न भोक्तव्यं द्विषंतं नैव भोजयेत्" इति लोकविरोधात्। "अस्वर्ग्यं लोकविद्विष्टं धर्ममप्याचरेन्न तु" इति निषेधाच्चेत्यर्थः ।। २५-२६ ।। लोकविरुद्धाचरणफलं वक्तुमाह। तस्मिन्निति ।। २७ ।। अदीव्यत् क्रीडितवान् ।। २८-२९ ।।

### श्रीवंशीधरकृता भावार्थदीपिकाप्रकाशः

सर्वासां कृष्णभार्याणाम्। चारुमतीनाम्नीं बलीनामा। यद्यप्ययं विवाहोऽनुचितस्तथापि जन्मांतरीयकर्मवशाद्भगवदनुमोदनेनाशास्त्रीयमपि शास्त्रीयं भवति वेदस्यापि तदाज्ञारूपत्वात्तदुक्तं क्रियते "मया प्रोक्तं हि लोकस्य प्रमाणं सत्यलौकिके" इति कपिलदेवोक्तेः। "एतत्पुंसां परं श्रेयो यत्तवाज्ञानुपालनम्" इति भृगूक्तेः ।। २४ ।। योन्यै तत्प्राप्तय इदं यौनं विवाहः। तत् मातुलपुत्रीविवाहरूपम्। यद्यपि "मातुलस्य सुतामूढ्वामातृगोत्रां तथैव च" इत्यादिस्मृतेः प्रायश्चित्तविधानादधर्मोऽपि तथापि "आयाहींद्र पथिभिरीळनेभिर्यज्ञमिमं नो भागं जुषस्व तृप्तां जहुर्मातुलस्येव योषा भागस्ते पैतृष्वसेयीमिव" इति मंत्रलिंगात्। "यौषापत्यं मातुलीयं यथा भागः पितृष्वसुः पुत्रस्यैवंवयांतेंशंजुषस्वेंद्रेत्यृषिर्जगौ" इति श्रुतेः स्मृत्यपेक्षया बलवत्त्वम्। तदुक्तम्—

---

१. लाक्षः—वीर. विज. । २. तद्योगं—विज. । ३. प्रद्युम्नाद्यास्तथापरे—वीर. । ४. बलो राजन्—वीर. विज. । ५. नी महान्—विज. ।

"श्रुत्या स्मृतेर्विरोधे श्रुतिर्बलीयसी"। तथाहि—"श्रुतिस्मृतिपुराणानां विरोधो यत्र दृश्यते। श्रौतं तत्र प्रमाणं स्याद्द्वयोर्द्वैधे श्रुतिर्वरा। श्रुतिद्वैधं तु यत्र स्यात्तत्र धर्मावुभौ स्मृतौ। स्मृतिद्वैधे तु विषयः कल्पनीयः पृथक्-पृथक्॥" इत्याचारार्कोक्तेर्यद्यपि 'मातुलस्य सुतामूढ्वा' इत्यादिस्मृतेः "मातुलस्येव व योषाभागस्ते" इत्यादिश्रुतेः प्राबल्यमस्ति तथापि "अस्वर्ग्यं लोकविद्विष्टं धर्ममप्याचरेन्नहि" इति लोकविद्विष्टत्वाद्धर्मत्वेऽप्यकार्य्यत्वमेव। यच्चोक्तम् "दक्षिणे मातुलीकन्या ह्युत्तरे मांसभोजनम्। चर्मोदकं धन्वनि च न दुष्टं मनुरब्रवीत्॥" इति तच्च तत्रत्यानां देशधर्मत्वान्न दुष्टम्। तदुक्तं स्मृत्यंतरे—"यद्यपि स्यात्स्वयं ब्रह्मा त्रैलोक्याकर्षणक्षमः। तथापि लौकिकाचारं मनसापि न लंघयेत्॥ समयाचारिको धर्मो जातिदेशकुलोद्भवः। ग्रामाचारः परिग्राह्यः सर्वत्रैव यथोदितम्" इति। एवमेककुलस्थदेवकीवसुदेवकृष्णसत्यभामाविवाहवत्पूर्वोक्तचारुमतीकृतवर्मसुतविवाहोऽपि कुलधर्मत्वान्न दुष्टः। यद्वा—यादवानां चंद्रसूर्योभयवंश्यानामन्यतरत्वमादाय भिन्नवंशतापि संभवति। तथा च सर्वथैव तेषां परस्परविवाहे न दोषः। उभयवंश्यत्वं यदूनां हरिवंशे वर्णितम्। तथाहि—ययातेर्यदुः, यदोः क्रोष्टा, क्रोष्टुर्देवमीढः, तस्माच्छूरः, तस्माद्वसुदेवः, तत कृष्णः। पुनः सूर्यवंशाद्धर्यश्वाद्यदुः, यदोर्माधवः, तस्मात्सत्त्ववान्, सत्त्वतो भीमः, भीमादंधकः, ततो रैवतः, तत ऋक्षः, ततो विश्वगर्भः, ततो वसुः, वसोर्वसुदेवः, ततः कृष्ण इति चंद्रवंशीययदोः षष्ठस्य सूर्यवंशीयात्तत एकादशत्वं च कृष्णस्य न कल्पांतराभिप्रायं किन्तु गृहाद्गृहांतरप्रवेशवद्योगबलेनैक एव यदुः सूर्यवंशेऽपि प्रादुर्बभूव सूर्यवंशं स्ववंशे आनीतवान्। यथा ब्रह्मणो मानसः पुत्रो वसिष्ठः केनचिन्निमित्तेन पुनर्मित्रावरुणाभ्यां जन्म लब्ध्वापि वसिष्ठत्वं न जहौ। एवं यदुरपि लीलया देहद्वयं दध्रे, न तावद्द्वौ यदू जातावेक एव यदुर्वंशद्वयकर्तेति। एवं वसुदेवकृष्णावपि वंशद्वयानुगतावेक एव। एवं वसुशूरयोरपि पितृभेदान्नामभेदेऽपि स्कन्दसनत्कुमारवद्व्यक्त्यैक्यमेव। यादवानां देवतात्वेनाप्येकस्योभयसम्बन्धस्य युगपत्संभवान्न विरोधः। अत एव क्वचिन्नरधर्मोल्लंघनेऽपि न तेषां दोषः शास्त्रस्य मनुष्यपरत्वमेव प्राय इति लोकसंग्रहार्थं स्वीकुर्वंतु शास्त्रं मा वेत्यलं प्रसक्तानुप्रसक्तेन॥२५॥ तस्मिन्विवाहलक्षणे। अभ्युदये मंगले "आविर्भावे प्रकाशे च मंगलेऽभ्युदयः स्मृतः" इति धरणिः॥२६॥ तस्मिन्प्रकृते। अक्षैः पाशकैः "अक्षो रथस्यावयवे व्यवहारे विभीतके। पाशके शकटे कर्षे ज्ञाने चात्मनि रावणौ॥" इति हेमचन्द्रः॥ २७॥ तेन बलेन॥ २८॥

## श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी

नूनं बलीतिसंज्ञा सा च सर्वेषां गुणानामुपलक्षणम् अत एव तस्मै सा दत्तेति भावः। विशालाक्षीमिति "धन्या पितृमुखी कन्या" इति न्यायात्॥ २४॥ दौहित्रायेति सार्द्धकम्। हरेः हरौ बद्धवैरोपि अधर्म्मं क्वचित् मातुलकन्यापरिणयशास्त्रे आचारे सत्यपि शत्रुसम्बन्धस्य तत्रत्यलोकानामपि व्यवहारविरुद्धत्वेनान्याय्यत्वं जानन्नप्यददात् यतः स्नेहपाशेनानु निरन्तरं बध्यत इति तथा सः॥ २५॥ एवमपि श्रीभगवति कौटिल्यस्य फलमाह–तस्मिन्निति। अभ्युदये महोत्सवे रुक्मिण्या आदावुक्तेः भ्रातृगृहाय तस्या एव प्रयोजकत्वात् श्रीरामस्य साम्बस्य चादावुक्तिः स्वसम्बन्धिगृहे श्रीकृष्णेन श्रीप्रद्युम्नेन च स्वस्मादपि यथा स्वं तस्य पुरस्कारात्॥ २६॥ तस्मिन्निवृत्त इति सार्द्धकम्। नृपो यथा हरिवंशे—

"संयुक्ता ज्ञातयश्चैव रुक्मिणः सुहृदश्च ये। आहूता रुक्मिणा तेपि तत्राजग्मुर्नराधिपाः"॥ इति॥ २७॥

हि यतः प्रोत्साहयन्ति हे राजन्निति राजत्वेन तव सम्यगक्षज्ञानं भवतीति भावः। इतीत्यर्द्धकम् अदीव्यत सभामध्ये तथा च तत्रैव—

ते शुभां काञ्चनस्तम्भां कुसुमैर्भूषिताजिराम्। सभामाविविशुर्हृष्टाः सिक्तां चन्दनवारिणा॥

किञ्च—

निकृत्य तं जिगीषन्तो दाक्षिणात्या नराधिपाः। मणिमुक्ताः सुवर्णञ्च तत्रानिन्युः सहस्रशः॥
ततः प्रावर्त्तत द्यूतं तेषां रतिविनाशनम्। कलहस्यास्पदं घोरं दुर्मतीनां क्षयावहम्॥ इति॥ २८॥

## श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी

बलीति—गुणः, विशालाक्षाख्य इति रूपञ्च सूचितम्। अतो राजन् राजमानः, हे नृपेति वा, किल निश्चये, भृत्यस्य प्रभुकन्याविवाहे संशयो न कार्य्यस्तस्य भक्तवात्सल्यादित्यर्थः॥ २४॥ हरेः–हरौ बद्धवैरोऽपि अधर्म्मं लोकाचारविरुद्धेन अन्याय्यं जानन्नप्यदात्, यतः स्नेहपाशेन अनु निरन्तरं बध्यत इति तथा सः॥ २५॥ अभ्युदये महोत्सवे, आदि-शब्दात् सर्व्वे कुमारा यादवाश्च; साम्बात् पश्चात् प्रद्युम्नस्योक्तिः, श्वशुरस्य मरणशंकयागमने तस्य गौणत्वात्, अत एव संज्ञामात्रापेक्षया क-प्रत्ययः। हे राजन्निति दुष्टरुक्मिणो मृत्युहेतूपसत्त्या प्रहर्षात्॥ २६॥ नृपाः प्रायो दाक्षिणात्या रुक्मिणः सुहृदो विवाहोत्सवे तेनाहूताः,

तथा च श्रीहरिवंशे ( विष्णु० प० ६१।१५ ) संयुक्ता ज्ञातयश्चैव रुक्मिणः सुहृदश्च ये। आहूता रुक्मिणा तेऽपि तत्राजग्मुर्नराधिपाः ॥' इति। दृप्ताः गर्विताः, प्रोत्साह्योचुः, बलं महाबलिनमपीति भावः। विशेषेणान्यतोऽधिकतया, अतो निःशेषेण सर्वस्वग्रहणादिना जय ॥ २७ ॥ कथमेतद् घटेतेत्यपेक्षायामाह—अनक्षज्ञ इति। हि यतः प्रोत्साहयन्ति, हे राजन्निति राजत्वेन तव सम्यगक्षज्ञानं भातीति भावः। अदीव्यत सभामध्ये; तथा च श्रीहरिवंशे ( विष्णु० प० ६१।२३ )—'तें शुभां काञ्चनस्तम्भां कुसुमैर्भूषिताजिराम्। सभामाविविशुर्हृष्टाः सिक्तां चन्दनवारिणा ॥', किञ्च ( विष्णु प० ६१।२६-२७ )—

'निकृत्या तं जिगीषन्तो दाक्षिणात्या नराधिपाः। मणिमुक्ताः सुवर्णञ्च तत्रानिन्युः सहस्रशः ॥
ततः प्रावर्त्तत द्यूतं तेषां रतिविनाशनम्। कलहस्यास्पदं घोरं दुर्मतीनां क्षयावहम् ॥' इति ॥

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका

रुक्मितनयाप्रसङ्गात् किं भगवतोपि दुहितरः सन्ति यदि सन्ति तर्हि कस्यां कस्यां भार्यायां कति कति कन्या अजीजनत् इति राज्ञो बुभुत्सां शमयन्नाह—रुक्मिण्या इति। तनयामित्येकवचनेनाप्येन्यासामेकैव कन्येति दर्शितं चारुमतीं नाम कन्यां कृतवर्म्मणः सुतः उपयेमे ॥ २४ ॥ न केवलं रुक्मी प्रद्युम्नगृहीतां स्वसुतामेवान्वमोदत अपि तु प्रद्युम्नसुतायानिरुद्धाय स्वदौहित्राय स्वपौत्रीमपि भगिनीप्रियचिकीर्षया ददावित्याह—दौहित्रायेति। हरेरित्यस्य पौत्रायेति शेषः। रोचनां नाम पौत्रीं ददावित्यर्थः। न केवलं बद्धवैरोप्येव अपितु तद्यौनमधर्म्यं जानन्नपि "यु मिश्रणे" योनिर्मिश्रणं वैवाहिकसम्बन्धः तत्प्रयुक्तं भोजनप्रतिभोजनादिकं यौनं तदधर्म्यमस्वर्ग्यं लोकविरुद्ध च जानन्नपीत्यर्थः। "द्विषदन्नं न भोक्तव्यं द्विषन्तं नैव भोजयेत्" इतिशास्त्रादितिभावः। एवम्भूतोप्यदात् तत्र हेतुं वदन् विशिनष्टि स्नेहपाशेन स्वसरि य; स्नेह एव पाशः तेनानुवध्यत इति तथा अत एव तस्याः प्रियं कर्तुमिच्छया ददावित्यर्थः ॥ २५ ॥ लोकविरुद्धाचरणफलं वक्तुमाह—तस्मिन्नित्यादिना। तस्मिन् अभ्युदये अनिरुद्धविवाहरूपोत्सवे निमित्ते ॥ २६ ॥ तस्मिन्निति। तस्मिन्नुद्वाहे निवृत्ते जाते सति ये कलिङ्गप्रमुखास्ते रुक्मिणं प्रोचुः' किमिति? बलं बलभद्रम् अक्षैर्देवनाक्षैस्तद्व्यापारैर्द्यूतैरितियावत्। हे राजन्! रुक्मिन् अयं बलरामः अनक्षज्ञः द्यूतानभिज्ञः अपि तथापि तद्व्यसनं द्यूतव्यसनं महदस्य वर्त्तते इति ॥ २७ ॥ इत्थमुक्तो रुक्मी बलभद्रमाहूय तेन सहाक्षैरदीव्यत क्रीडितवान्। शतमिति निष्काणामित्यादि। तत्र द्यूते रामस्तावन्निष्काणां शतं ततः सहस्रं ततोऽयुतं च पणं जित्वा स्वीकृतवान् पुनस्तं राममपि रुक्मी जितवान् तदा बलं रामं कलिङ्गः प्राहसत् अपहसितवान्। तद्धसनं नामृष्यत् न सेहे ॥ २८-२९ ॥

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली

कृतवर्मणः सुतः पुत्रः ॥ २४ ॥ रुक्मी स्वदौहित्राय हरेः पौत्रायानिरुद्धायेति शेषः। स्वपौत्रमदात् ॥ २५ ॥ तस्मिन्नभ्युदये अनिरुद्धविषये विवाहे प्रवृत्ते सति ॥ २६ ॥ बलं बलभद्रम् ॥ २७ ॥ तद्व्यसनी द्यूतक्रियापरः ॥ २८ ॥

### श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शिनी

यौनं विवाहं अधर्मम् अधर्महेतुं जानन्नपीति 'द्विषदन्नं न भोक्तव्यं द्विषन्तं नैव भोजयेत्" इत्यादिलोकविरोधात् "अस्वर्ग्यं लोकविद्विष्टं धर्ममप्याचरेन्नतु" इति निषेधाच्चेत्यर्थः ॥ २५-२६ ॥ बलं राममिति कृष्णस्य द्यूतेऽपि दुर्जयत्वनिश्चयादिति भावः ॥ २७ ॥ प्रथमं सुवर्णमुद्राणां शतं ततः सहस्रं ततोऽयुतं तं पणं नामृष्यत् अन्तश्चुकोपेत्यर्थः ॥ २८-२९ ॥

### गूढार्थदीपिनी

बली नामा। उपयेमे विवाहितवान् ॥ २४ ॥ दौहित्रेति सार्द्धम्। दौहित्राय रुक्मवतीपुत्राय अनिरुद्धाय। यौनं विवाहसम्बन्धम् अधर्मम् 'द्विषदन्नं न भोक्तव्यं द्विषन्तं नैव भोजयेत्' इति धर्मशास्त्रात् ॥ २५ ॥ अभ्युदये विवाहोत्सवे ॥ २६ ॥ दृप्ता गर्विताः। बलं बलदेवम्। अक्षैः पाशैः विनर्जय ॥ २७ ॥ तथापि द्यूतव्यसनमस्येति शेषः ॥ २८ ॥

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः

सर्वासामेकैका कन्या कुलपुत्राय तदनुरूपाय च दत्तेति सूचयति—रुक्मिण्या इति ॥ २४ ॥ एवं पुत्राणां कन्यानां च विवाहानेकदेशकथनद्वारा दर्शयित्वा महद्विरोधोऽनर्थहेतुरिति सूचयितुं रुक्मिणो वधं पौत्राणां विवाहोपलक्षणार्थमनिरुद्धविवाहञ्चाह—दौहित्रायेति। यौ द्विषोः पौत्रीपौत्रौ तयोः यौनं विवाहमधर्मः अधर्महेतुं जानन्नपि "द्विषदन्नं न भोक्तव्यं द्विषन्तं नैव भोजयेत्" इत्यादिलोकविरोधात् "अस्वर्ग्यं लोकविद्विष्टं धर्ममप्याचरेन्नतु" इति निषेधात् तथापि अदात् ॥ २५-२६ ॥ श्रीकृष्णमजेयं मत्वा बलमित्युक्तम् ॥ २७ ॥ अदीव्यत क्रीडितवान् ॥ २८ ॥

### श्रीसत्यधर्मकृता श्रीभागवतटिप्पणी

विशालाक्षो नाम्ना कृतवर्मणः पुत्रः ॥ ३३ ॥ दौहित्राय स्वपुत्रीपुत्राय पौत्रीं पुत्रपुत्रीं हरेर्हरिणा बद्धवैरोऽपि स्वसुः प्रियचिकीर्षया रोचनां नाम्ना कान्तिमतीं वा। रोचना रुचिरस्त्रियामिति विश्वः ॥ ३४ ॥ तद्योगं श्रीकृष्णानुबन्धमधर्मम्। द्विषदन्नं न भोक्तव्यं द्विषन्तं नैव भोजयेत्। अस्वर्ग्यं लोकविद्विष्टं धर्ममप्याचरेन्न त्वित्यादेः। तद्यौनमिति पाठे योनेरिदं यौनं योनिसम्बन्धमित्यर्थः। जानन्नपि स्नेहपाशानुबन्धनः सन्नददात्। तस्मिन्नभ्युदये विवाहमहे ॥ ३५ ॥ भोजकटं पुरं साम्बप्रद्युम्नकादयो रुक्मिणी रामकेशवौ चेति जग्मुः। तस्मिन्नुद्वाहे प्रवृत्ते कलिङ्गप्रमुखा नृपा दृप्तास्ते रुक्मिणं बलमक्षैः पाशैर्विनिर्जित्य पराजयं कुर्विति प्रोचुः। बलः स्वयमनक्षज्ञो दुरोदरस्थापनाचतुरो न हि लेखनं कलयेदित्यत आहुः। अपि तथाऽपि तद्व्यसनी तस्य तस्मिन्वा व्यसनमस्तीति स तथा तत्पर इति। महानिति प्रकरणविशेषतो धर्मिविशेषणत्वेन सरसमिति व्यसनविशेषणम्। ततश्च महाव्यसनवानिति पर्यवस्यति ॥ ३६ ॥ इत्युक्तः कलिङ्गादिभिर्बलमाहूय तेनाक्षैरदीव्यत चिक्रीड। तत्र राम आदौ शतमिति क्रमेणायुतं पणं ग्लहमादधे न्यधत्त ॥ ३७ ॥

### श्रीमद्वल्लभाचार्य्यकृता सुबोधिनी

एवं धर्मप्रस्तावे पुत्रस्योत्पत्तिं विवाहं चोक्त्वा कन्यादानमपि भगवत्कृतमाह **रुक्मिण्यास्तनयामिति**। कृतवर्मा यादवः, बलीति नाम। विशालाक्षीमिति सौन्दर्यम्। चारुमतीमिति नाम। कन्यामाहूय दत्ताम्। **रुक्मिण्यास्तनयामित्यनेन** अन्यासामपि कन्या उक्ताः सन्तीति तथा तासां विवाहोऽपि ज्ञातव्यः। **विशालाक्षीमिति** सौन्दर्यं तस्या विवाहे प्रयोजकमुक्तम्, नतु महतः कन्यात्वम्। **चारुमतीमिति** नाम्ना अन्या अपि कन्याः सन्तीति सूचितम्। तेन रुक्मिण्याः पञ्च कन्याः पञ्चचकारैरुक्ताः अध्यवसेयाः, अन्यासामपि यथाचकारं कन्यका ज्ञेयाः। किलेति प्रसिद्धे। न तु व्यासादिभिरेतदुपदिष्टमिति। महत्त्वाख्यापकत्वात् केवलं लौकिकत्वात् ॥ २४ ॥ ततोऽनिरुद्धस्तत्रैव भोजकटे जातः। तस्यापि विवाहं तत्रैवाह **दौहित्रायानिरुद्धायेति** स्वकुलस्थां कन्यामन्यो विवाहं मा करोत्विति। तस्या नाम रोचनेति। साप्यनिरुद्धस्य मातुलकन्या। तावता द्वेषः शान्तो भविष्यतीत्याशङ्क्याह बद्धवैरोऽपीति। **स्वसुः प्रियचिकीर्षयेति** पूर्ववद्धेतुः। यावज्जीवं यदेव किञ्चिदुत्कृष्टम्, तदेव भगिनीप्रीत्यर्थं दत्तवानित्यध्यवसीयते। अन्यथा पुनः पुनः तद्धेतुत्वेन नोच्येत। ननु तस्मै देयं दत्तवान्, कथमेतावता स्वसा प्रीता भवतीति चेत्। तत्राह **स्वसुः प्रियचिकीर्षया जानन्नधर्मं तद्यौनमिति**। स्त्रीसम्बन्धः अधर्मो भवति। 'माता पितामही यस्य तथैव प्रपितामही। तिस्र एककुले जाताः सोऽभिशस्तो निगद्यते' इति तस्यामुत्पन्नस्याभिशस्तिदोषात् तद्यौनमधर्मरूपं भवति। अधर्ममप्यङ्गीकृत्य स्वसुः प्रियार्थे दत्तवान्। ननु निषिद्धाचरणे कथं प्रियम्, न वा तत्प्रियं प्रियं भवतीत्याशङ्क्याह **स्नेहपाशवशं गत इति**। स्नेहे सर्वमेव समीचीनं भासते। उभयोः परमस्नेहात् तद्गतो दोषो न भासते। अतो जानन्नपि एवं कृते प्रियं भवतीत्युभयोर्लौकिकबुद्ध्या तथा कृतवानित्यर्थः ॥ २५ ॥ अयं विवाहः लौकिकवदिति दत्तायां कन्यायां वरयात्रिकाः भगवदादयः सर्व एव समागता इत्याह **तस्मिन्नभ्युदय** इति। विवाहोत्सवे रुक्मिणी मुख्या। निमित्तत्वात्। ततो लौकिकमिति ज्येष्ठानुक्रमेण रामकृष्णौ पुरस्त्वमापन्नं भोजकटस्थानं प्रतिज्ञास्थानं जग्मुः। **रामकेशवाविति** ययोर्गमनमसम्भावितं तौ निरूप्य, साम्बप्रद्युम्नादयः वरयात्रिका निरूप्यन्ते। सुन्दरः साम्ब इति प्रद्युम्नादपि प्रथमं निर्दिष्टः, कप्रत्ययोऽनादरे, निषिद्धत्वात् ॥२६॥ निषिद्धाचरणस्य फलमाह **तस्मिन्निवृत्त उद्वाह** इति। कन्यादानानन्तरं वरयात्रायामपि सिद्धायां कलिङ्गदेशाधिपतिः देशनाम्नैव प्रसिद्धः। स्वतः स्नेहेन तूष्णींभूतमपि रुक्मिणं प्रोचुः। यतो दृप्ताः। नापि तस्य तथा करणे किञ्चित्प्रयोजनमस्ति ॥ २७ ॥ नन्वक्षजयः कथमेकान्ततो ममैव भविष्यतीत्याशङ्कायामाह **अनक्षज्ञ** इति। ये हि वैदिककर्मपरा धर्मपरा वा ते ह्यक्षज्ञा भवन्ति। बलस्यानुभयरूपत्वात् युक्तमेवाक्षाज्ञानमिति हिशब्दः। राजन्निति सम्बोधनात्त्वमक्षज्ञ इति। **अपि तद्व्यसनं महदिति** अज्ञो न क्रीडिष्यतीति शङ्कां वारयति। अत आदौ प्रवृत्तः पश्चान्न निवर्तिष्यत इति पराजितो भविष्यति। एवमुपपत्त्या प्रबोधितः तथा कृतवानित्याह **इत्युक्त** इति। बलः पूर्वं ज्ञानोपदेशात् सान्त्वनात् हित इति बलमेवाहूय, भगवतः सकाशात् पृथक्कृत्य, रुक्मी दुर्बुद्धिरदीव्यत, तत्राक्षान्गृहीत्वा रुक्मी प्राह 'पणः क्रियता'मिति। भिन्ना सङ्ख्या चतुर्दिक्ष्वक्षेषु लिख्यते। तत्र कस्यचित् समसङ्ख्या, कस्यचिद्विषमसङ्ख्येति पूर्वमेव प्रतिज्ञाय, क्रीडार्थं प्रवृत्तौ ॥ २८ ॥

### श्रीसुबोधिनी-सारः

एकैका कन्या सर्वासामित्यनेन ज्ञाप्यते तद्विवाहमंतरा गृहाशुद्धेः "कन्याल्पं पुत्रबाहुल्यं गृहस्थसुखकारणम्" इति सूचयति। हे राजन् रुक्मिण्याः तनयां पुत्रीं चारुमतीं विशालनेत्रां कन्यां कृतवर्मणः सुतो बली उपयेमे किल निश्चये ॥ २४ ॥ हरेर्बद्धवैरोपि रुक्मी रोचनां नाम्नीं पौत्रीं स्वदौहित्राय दुहितृपुत्रायानिरुद्धायाऽदात् स्वसुर्भगिन्याः प्रियकरणेच्छया तयोर्यौनं योनिसंबंधं विवाहमधर्मं जानन् सन् स्नेहपाश एवानुबंधो दोषोत्पादो यस्य सः ॥ २५ ॥ 'महत्पापं फलेत्सद्यः' इति सूचयितुं तत्कथामाह। तस्मिन्नभ्युदये विवाहे रुक्मिणी रामकृष्णौ सांबादयो भोजकटं पुरं जग्मुर्ययुः हे राजन् ॥ २६ ॥ तस्मिन्नुद्वाहे

विवाहे निवृत्ते पूर्णे सति कालिंगः प्रमुखो येषां ते नृपा दृप्ता गर्विताः तत्पक्षीयास्ते रुक्मिणं प्रोचुः बलं राममक्षैः पाशकैस्त्वं विनिर्जयेति ॥ २७ ॥ अयं बलोऽनक्षज्ञोऽक्षान्न जानातीति अपि एवं सत्यपि तेषां पाशकानां तस्य वा व्यसनमाग्रहो महत् हि युक्तम् इत्युक्तो रुक्मी बलमाहूय तेन सहाक्षैः पाशकैरदीव्यताक्रीडत ॥ २८ ॥

## गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

एवं पुत्रान्निरूप्य उपलक्षणविधयाऽनिरुद्धं पौत्रं च निरूप्य सर्वासामेव भगवत्पत्नीनामेकैका कन्यास्ति तत्सर्वविवाहोपलक्षणार्थं ज्येष्ठकन्याविवाहमाह—रुक्मिण्या इति। हे राजन्! विशालाक्षीं नेत्रादिसौन्दर्यवतीं चारुमत्याख्यां रुक्मिण्यास्तनयां कन्यां तदवस्थां कृतवर्मणः सुतो बलिसंज्ञक उपयेमे इत्यन्वयः। 'किल' इति लोकप्रसिद्धिं द्योतयति ॥ २४ ॥ रुक्मिणो रुक्मिण्यां स्नेहातिशयं सूचयन्नाह—दौहित्रायेति। तद्यौनं 'यु मिश्रणे'। तं विवाहसम्बन्धमधर्मं जानन्नपि रुक्मी स्वदौहित्राय हरेः पौत्राय अनिरुद्धाय रोचनाख्यां स्वपौत्रीं अददादिति सार्धान्वयः। अधर्मं ज्ञात्वापि वैरिणे दाने हेतुमाह—स्नेह एव पाशस्तेनानुबध्यते इति तथा स इति। तदेव स्पष्टयति—स्वसुः प्रियचिकीर्षयेति ॥ २५ ॥ अधर्मफलं दर्शयन्नाह—तस्मिन्निति। 'राज्ञां विवाहव्यवहारस्तु तव विदित एव' इति सूचयन् सम्बोधयति—राजन्निति। तस्मिन्नभ्युदये अनिरुद्धविवाहोत्सवनिमित्ते सति रुक्मिण्यादयो भोजकटाख्यं पुरं जग्मुरित्यन्वयः ॥ २६ ॥ तस्मिन्नुद्वाहे निवृत्ते सति कालिङ्गः कलिङ्गदेशाधिपनिर्देशनाम्ना प्रसिद्धः प्रमुखो येषां ते ये नृपास्ते बलं अक्षैः देवनसाधनैर्विनिर्जय। ततः पराजयशङ्का तु नैव कर्तव्या, हि यस्मात् अयं बलः अनक्षज्ञः द्यूतानभिज्ञः। तत्रापि राज्याभावं हेतुं सूचयन् सम्बोधयति—राजन्निति। ननु 'तर्हि देवनमेव कथं करिष्यति' इति शङ्कानिरासायाह—अपीति। अनभिज्ञत्वेऽपि अस्य तद्व्यसनं तस्य द्यूतस्य व्यसनं महद्वर्तत इति रुक्मिणं प्रति प्रोचुरिति सार्धान्वयः। 'ते एवं निर्भयतया कथमूचुः' इत्यपेक्षायां तत्र हेतुमाह—दृप्ता गर्विता इति। राजभिरित्युक्तो रुक्मी बलमाहूय तेन सहाक्षैरदीव्यत् क्रीडितवान् ॥ २७-२८ ॥

## अन्वितार्थप्रकाशिका

दौहित्रायेति सार्द्धम् ॥ "द्विषदन्नं न भोक्तव्यं द्विषन्तं नैव भोजयेत्।" इत्युक्त्या व्यवहारविरुद्धं तद्यौनं विवाहसंबन्धम्। "अस्वर्ग्यं लोकविद्विष्टं धर्ममप्याचरेन्न तु।" इति निषेधादधर्ममधर्महेतुं जानन्नपि स्नेह एव पाशस्तेनानुबध्यते इति तथा स इति। रुक्मी स्वसुः प्रियचिकीर्षया स्वदौहित्राय हरेः पौत्राय अनिरुद्धाय रोचनाख्यां स्वपौत्रीम् अददात् ॥ २५ ॥ तस्मिन्निति ॥ हे राजन्! तस्मिन्नभ्युदये अनिरुद्धविवाहोत्सवनिमित्ते सति रुक्मिणी रामकेशवौ साम्बप्रद्युम्नकादयश्च भोजकटाख्यं पुरं जग्मुः ॥ २६ ॥ लोकविरुद्धाचरणफलं वक्तुमाह—तस्मिन्निति ॥ तस्मिन्नुद्वाहे निवृत्ते सति कालिङ्गः कलिङ्गदेशाधिपतिः प्रमुखो येषां ते दृप्ताः गर्विताः नृपाः रुक्मिणं प्रोचुः। त्वं बलमक्षैः देवनसाधनैर्विनिर्जय। कृष्णस्य द्यूतेऽपि दुर्जयत्वनिश्चयात् ॥ २७ ॥ अनक्षज्ञ इति ॥ हे राजन्! हि यस्मात् अयं बलः अनक्षज्ञः द्यूतानभिज्ञः तथापि तद्व्यसनं द्यूतव्यसनं महद्वर्तते। राजभिरित्युक्तो रुक्मी बलमाहूय तेन सहाक्षैरदीव्यत क्रीडितवान्। तङार्षः। कर्मव्यतिहारे वा तङ् ॥ २८ ॥

## श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्

चारुमतीं तत्संज्ञां ॥ २४ ॥ पौत्रीं रोचनां हरेः। हरौ बद्धः वैरोपि तद्यौनं विवाहं अधर्मं जानन् ॥ २५ ॥ अभ्युदये विवाहोत्सवे ॥ २६ ॥ कालिगाद्याः नृपाः अक्षैर्बलं विनिर्जयेति रुक्मिणं प्रोचुः अयं रामः अनक्षज्ञः अक्षज्ञोनभवतीत्युत्तरादपकृष्यते अतः तस्य जयेन कृष्णादि सर्वे यादवाः जिताः स्युः कुंडिनं न प्रवेक्ष्यामीति प्रतिज्ञात्वा या कृता तेषां जयेन तस्याः सत्यत्वं भविष्यतीति भावः ॥ २७ ॥ अयं बलदेवः तेषामक्षाणां व्यसनं तस्याऽस्ति। अक्षैरदीव्यत क्रीडयामास ॥ २८ ॥

## भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

न केवलं रुक्मी प्रद्युम्नगृहीतां स्वसुतामन्वमोदितापि तु प्रद्युम्नसुतायानिरुद्धाय स्वदौहित्राय पौत्रीमपि भगिनीप्रियचिकीर्षया ददौ इत्याह। दौहित्रायेति। 'यु मिश्रणे' तस्य योनिर्मिश्रणं वैवाहिकः सम्बन्धः तत्प्रयुक्तं भोजनप्रतिभोजनादिकं यौनं, तत् यौनं अधर्मं जानन्नपि, अधर्मस्तु 'द्विषदन्नं न भोक्तव्यं द्विषन्तं नैव भोजयेत्' इति शास्त्रादिति भावः। स्नेहपाशानुबन्धनः स्नेहपाशसितः, रुक्मी स्वसुः, प्रियचिकीर्षया, बद्धवैरः सन्नपि, पौत्रीं स्वपुत्रसुतां रोचनां, हरेः पौत्रायेति शेषः। दौहित्राय स्वदुहितृसुताय, अनिरुद्धाय, अददात् ददौ ॥ २४ ॥ लोकविरुद्धाचरणफलमाह। तस्मिन्निति। हे राजन्, तस्मिन् अभ्युदये अनिरुद्धविवाहरूपोत्सवे निमित्ते, रुक्मिणी, रामकेशवौ, साम्बप्रद्युम्नकादयः, भोजकटं पुरं, जग्मुः ॥ २५ ॥ तस्मिन्निति। तस्मिन्, उद्वाहे, निवृत्ते समाप्ते सति, दृप्ताः दर्पपूर्णाः, कालिङ्गप्रमुखाः, ते प्रसिद्धाः नृपाः, हे राजन् रुक्मिन्, त्वं अक्षैः पाशकैः, बलं बलभद्रं, विनिर्जय, इति, रुक्मिणं प्रोचुः। हि यस्मात्, अयं बलः, अनक्षज्ञः अपि, महत् एव, तद्व्यसनं

पाशकखेलनव्यसनं, अस्य वर्त्तते इति शेषः ॥ २६ ॥ इतीति । इतीत्थं उक्तः कलिङ्गनृपादिभिरभिहितः, रुक्मी बलं आहूय, तेन बलेन, अक्षैः अदीव्यत क्रीडितवान् ! तत्र द्यूते, शतं निष्काणामिति शेषः । सहस्रं अयुतं, पणं, रामः, आददे जित्वा स्वीकृतवान् ॥ २७ ॥ तमिति । पुनरिति शेषः । तं तु राममपि, रुक्मी, अजयत् । तत्र तदा, कालिङ्गः, बलं बलभद्रं दन्तान् संदर्शयन्, उच्चैरुच्चस्वरेण, प्राहसत् । तत्तत्कृतमट्टहासं, हलायुधो बलभद्रः, न अमृष्यत् न सेहे ॥ २८ ॥

**कृष्णप्रिया**

महाराज परीक्षित् ! श्री रुक्मिणी जी पुत्री सर्वाङ्ग सुन्दरी चारुमती का विवाह कृतवर्मा नाम के यादव के सुपुत्र बली के साथ किया गया ॥ २४ ॥ राजन् ! यद्यपि रुक्मी का भगवान् श्रीकृष्ण के साथ रुक्मिणीजी के व्याहकाल से सुदृढ़ वैर था । परंतु बहिन श्रीरुक्मिणीजी को संतुष्ट करने के लिये अपनी पुत्री रोचना का विवाह भगवान् श्रीकृष्ण के पौत्र और अपने दौहित्र अनिरुद्ध के साथ कर दिया । शास्त्र-सिद्धान्त से यह विवाह करना योग्य नहीं था फिर भी स्नेहपाशबद्ध होकर रुक्मी ने ऐसा कर दिया ॥ २५ ॥ राजन् ! श्री अनिरुद्धजी के लग्नपर्व अवसर पर भगवान् श्रीकृष्ण, श्री रुक्मिणीजी, श्रीबलरामजी, प्रद्युम्नजी, साम्ब आदि यादव भोजकट नगर में पधारे थे ॥ २६ ॥ राजन् ! लग्नमङ्गल निर्विघ्न पूर्ण होने पर कलिङ्गदेशादि के अभिमानी राजाओं ने रुक्मी से कहा कि रुक्मी ! आप श्रीबलरामजी को पासों के खेल से जीत लीजिये ॥२७॥ राजन् ! रुक्मी और बलभद्रजी पासों के खेल को अच्छी तरह से जानते नहीं हैं फिर भी उन्हें खेलने का भारी व्यसन है । इस तरह कलिङ्ग नरपतियों ने रुक्मी को समुत्तेजित किया और रुक्मी ने श्रीबलरामजी को बुलवाया; वे पधारे और रुक्मी से चौसर खेलने लगे ॥ २८ ॥

**शतं सहस्रमयुतं रामस्तत्राददे पणम् ।**
**तं तु रुक्म्यजयत्तत्र कालिङ्गः प्राहसद्बलम् । दन्तान् संदर्शयन्नुच्चैर्नामृष्यत्तद्धलायुधः ॥ २९ ॥**
**ततो लक्षं रुक्म्यगृह्णाद् ग्लहं [१]तत्राजयद्बलः । जितवानहमित्याह रुक्मी कैतवमाश्रितः ॥ ३० ॥**
**मन्युना क्षुभितः श्रीमान्समुद्र इव पर्वणि । जात्यारुणाक्षोऽतिरुषा [२]न्यर्बुदं ग्लहमाददे ॥ ३१ ॥**
**तं चापि जितवान् रामो धर्मेण[३]च्छलमाश्रितः । रुक्मी जितं मयाऽत्रेमे [४]वदन्तु प्राश्निका इति ॥ ३२ ॥[५]**

**कर्दमक्षमा**

अन्वयः—तत्र, रामः, शतम्, सहस्रम्, अयुतम्, पणम्, आददे, तम्, तु, रुक्मी, अजयत्, तत्र, दन्तान्, संदर्शयन्, कालिङ्गः, उच्चैः, बलम्, प्राहसत्, हलायुधः, तत्, न, अमृष्यत् ॥ २९ ॥ ततः, रुक्मी, लक्षम्, ग्लहम्, अगृह्णात्, तत्र, बलः, अजयत्, कैतवम्, आश्रितः, रुक्मी, अहम्, जितवान्, इति आह ॥ ३० ॥ पर्वणि, समुद्रः, इव, मन्युना, क्षुभितः, जात्यारुणाक्षः, अतिरुषा, न्युर्बुदम्, ग्लहम्, आददे ॥ ३१ ॥ रामः, तम्, च, अपि, धर्मेण, जितवान्, रुक्मी, छलम्, आश्रितः, मया, जितम्, अत्र, इमे, प्राश्निकाः, इति, वदन्तु ॥ ३२ ॥

**श्रीधरस्वामिविरचिता भावार्थदीपिका**

निष्काणां लक्षं ग्लहं पणं कृतवान् । कैतवं कपटम् ॥ ३० ॥ न्यर्बुदं दशकोटीर्ग्लहं क्षुभितो राम आददे ॥ ३१ ॥ छलमाश्रितो रुक्मी मया जितमित्याह ॥ ३२-३५ ॥

**श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः**

पणं लापितद्रव्यम् "पणो वराटमाने स्यान्मूले कार्षापणे ग्रहे । द्यूतदेये धने चैव भृतिस्तुल्योरपि स्मृतः ॥" इति धरणिः । तं पणम् । तत्र तदा । कालिंगस्तद्देशेशः । केचित्तु दन्तवक्र एव स इत्यूचुः । 'कालिंगो भूमिकर्कारौ दंताबलभुजंगयोः' इति मेदिनी । तद्धसनम् ॥ २९ ॥ ततः कालिंगहासोत्तरम् । निष्कणां दीनाराणाम् । "निष्कामस्त्री साष्टहेमशते दीनारकर्षयोः । वक्षोलंकरणे हेमपात्रे हेमपलेऽपि च ॥" इति मेदिनी । 'दीनारः स्वर्णमुद्रिका' इति मंजर्याम् । 'ग्लहो द्यूतपणीकृते' इति च । तत्र तदा । कैतवस्तुच्छले द्यूते' इति मेदिनी ॥३०॥ 'अर्बुदो मांसकीले स्यात्पुरुषे दशकोटिषु । महीधरविशेषे ना" इति मेदिनी । निश्चितोऽर्बुदोत्यर्बुदः ॥ ३१ ॥ तमपि पणम् । धर्मेण न्यायेन । प्राश्निकाः पार्श्वस्थाः "प्राश्निकः पार्श्वगे पुंसि गणके पृच्छकेऽपि च" इति निरुक्तिः । 'पार्श्विकाः' इति पाठः सम्यग्भाति ॥ ३२ ॥

---

१. तं चाज-वीर. ; तदज-विज । २. पूर्ववद्-वीर. । ३. छलतोऽब्रवीत्-विज. । ४. ब्रुवन्तु-प्रा. पा. ।
५. तथेत्याह कलिंगोऽपि दन्तासन्दर्श्य सीरिण। । ततः कोपपरीतात्मा तूष्णीमासीद् हलायुध। ।-विज. ।

### श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी

शतमिति सार्द्धकम् । शतं निष्काणां प्राक् ततः सहस्रं ततोऽयुतं दशसहस्राणि तत्र द्यूते प्रहसनमेवाह—दन्तानिति । उच्चैरतिशयेन सम्यगदर्शयन् हलायुधः प्रसिद्धनिजाक्षपराक्रम इत्यर्थः । अतो नामृष्यत् अन्तश्चुक्रोधेत्यर्थः ॥ २९ ॥ ग्लहम् अगृह्णात् पराजितेन देयमिति स्थापितवान् ॥ ३० ॥ श्रीमात्रामः तच्छब्देनोक्तिश्च तादृशदुष्टवधोद्यतं स्मृत्वा सन्तोषेण तदानीं तेजोविशेषाविर्भावस्मरणेन च अक्षोभिणोपि कदाचित् क्षोभे दुर्द्धर्षत्वेपि च दृष्टान्तः समुद्रः इति । जात्या प्रकृत्यैवारुणाक्षः अतिरुषा त्वतिशयेनारुणाक्षः सन्नित्यर्थः ॥ ३१ ॥ धर्मेण न्यायेन जितवान् जितमित्यादौ आहेति शेषः ॥ ३२ ॥

### श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी

शतं निष्काणाम्, प्राक् ततः सहस्रं ततोऽयुतमिति क्रमेण ज्ञेयम् । तत्र द्यूते प्रहसनमेवाह—दन्तानिति । उच्चैरतिशयेन सम्यग् दर्शयन् प्रकटयन्, उच्चानिति वा, तत् प्रहसनम्; हलायुधो महावीर इति भावः । अतो नामृष्यत्, अन्तश्चुक्रोधेत्यर्थः ॥ २९ ॥ तत्र ग्लहे ॥ ३० ॥ श्रीर्धैर्य्यसम्पत्तद्वानपि, अक्षोभस्यापि कदाचित् क्षोभे दृष्टान्तः—समुद्र इति । जात्या प्रकृत्यैवारुणाक्षः, क्षोभेण चाधिकारुणाक्षः सन्नित्यर्थः । यद्वा, जात्यारुणाक्षः पुनश्च मन्युना क्षुभित इति भ्रूभंगादिकं सूचितम् । अतः श्रीमान् शोभाभरवानिति, अपि एव, राम एव, धर्मेण न्यायेन जितवान् । यद्वा, अकारप्रश्लेषेणाधर्मेणेति, ततश्चास्य परेणान्वयः । इत्याहेति शेषः ॥ ३१-३२ ॥

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम्

धर्मेण रामः जितवानित्यन्वयः छलमाश्रित्य रुक्मी मया जितमित्याहेत्यन्वयः ॥ ३२-४० ॥

इति श्रीमद्भागवतव्याख्याने दशमस्कन्धे श्रीसुदर्शनसूरिकृतशुकपक्षीये एकषष्टितमोऽध्यायः ॥ ६१ ॥

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका

ततो रुक्मी लक्षं ग्लहं पणमाददे बलश्चाजयत् किञ्च कालेन मृत्युना चोदितः अतएव परिहसन् सङ्कर्षणमुवाच किमित्युवाचेत्यत आह—जितवानिति । कैतवं वञ्चनमाश्रितो रुक्मी अहं जितवानित्याहेत्यर्थः ॥ ३० ॥ मन्युनेति । यथा पर्वणि समुद्रस्तद्वन्मन्युना क्षुभितोऽत एव जातेऽरुणेऽक्षिणी यस्य तथाभूतो रामः रुषा पूर्ववल्लक्षं ग्लहमाददे ॥ ३१ ॥ तं रुक्मिणञ्च धर्मेणैवाजयच्च रुक्मीतु छलमाश्रितः मया जितम् अत्रास्मिन् विषये प्राश्निकाः पृष्टव्याः कलिङ्गादयो वदन्ति मया जितमित्येव वदन्ति अतस्ते पृष्टव्या इत्याहेत्यर्थः ॥ ३२ ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

पराजये पणं ग्लहं कलिङ्गः दन्तवक्रः त्वां जितवान् तानशिक्षितं अग्रे इति भावः ॥ २९-३० ॥ अर्बुदं दशकोटिधनम् ॥ ३१-३२ ॥

### श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शिनी

कैतवं कपटम् ॥ ३० ॥ न्यर्बुदं दशकोटीः ॥ ३१ ॥ छलमाश्रितोऽतो रुक्मी मया जितमित्याह—प्राश्निकाः साक्षिणः ॥ ३२ ॥

### गूढार्थदीपिनी

शतमिति सार्द्धम् । 'ग्लहो द्यूतपणीकृते' इति कोशः । आददे स्थापितवान् । तत् हसनम् ॥ २९-३० ॥ न्यर्बुदं दशकोटीः स्थापितवान् जात्या जन्मनैव ॥ ३१ ॥ रामो धर्मेण । रुक्मी छलमित्यत्रान्वेति । प्राश्निकाः पार्श्वस्थाः धर्मतो बलेन वचनेन रुक्मी । 'प्राश्निकः पार्श्वगे पुंसि' इति निरुक्तिः ॥ ३२-३३ ॥

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः

प्रथमं रामः निष्काणां शतं तदनन्तरं सहस्रं पुनः अयुतं पणं जित्वा आददे स्वीकृतवान् एकवारं तं रामं रुक्मी अजयत् तत्र बलं कलिङ्गः प्राहसत् तदुपहास्यं नामृष्यत न सेहे ॥ २९ ॥ निष्काणां लक्षं ग्लहं पणं रुक्मी अगृह्णात् कृतवान् तत्र बलः अजयत् जितवान् कैतवं कपटम् ॥ ३० ॥ न्यर्बुदं दशकोटीर्ग्लहम् आददे जित्वा स्वीकृतवान् ॥ ३१ ॥ तं ग्लहम् अपि निश्चितं धर्मेण राम एव जितवान् तथापि छलमाश्रितः रुक्मी मया जितमित्याह ॥ ३२ ॥

### श्रीसत्यधर्मकृता श्रीभागवतटिप्पणी

तं पणं रुक्म्यजयाज्जितवान्। तत्र बलं कलिङ्गोऽहसज्जहास। न तद्धसनं मन्दमित्याह॥ दं दन्तान्सन्दर्शयन्नुच्चैरिति। तद्धलायुधो नामृष्यन्न सेहे। दुर्बलकोपो दंष्ट्रालयमूल इतिवन्नेत्याह॥ हलायुध इति॥ ३८॥ ततस्तदनन्तरं रुक्मी लक्षं ग्लहमगृह्णत्तं लक्ष्यं बलोऽजयज्जिगाय। कैतवं कापट्यमाश्रितो रुक्म्यहं जितवानित्याह॥ ३९॥ श्रीमानित्यदारिद्र्यं बोध्यते। समुद्रः पर्वणीव मन्युना कोपेन क्षुभितः सञ्चलितस्तथा जाते अरुणे अक्षिणी यस्य सोऽतिरुषा रुषमतिक्रान्तमिति रुट् तेन मनसा न्यर्बुदं शतकोटिधनं ग्लहमाददे॥ ४०॥ धर्मेण शिल्पमस्येत्यर्थे तदस्य शिल्पमिति ठकि तस्येकादेशे आदिवृद्धौ यस्येति चेत्यकारलोपे प्राश्निकेति भवति। प्रश्नकरणरूपशिल्पवन्तः सभ्या इति यावत्। वदन्तित्यब्रवीत्॥ ४१॥

### श्रीमद्वल्लभाचार्यकृता सुबोधिनी

ततोऽक्षहस्तेन रुक्मिणा आज्ञप्तः शतं सहस्रमयुतं उत्तरोत्तरं दशगुणं रामस्तत्र पणमादधे। तं तु पणं स्वानुकूलतया अक्षान् पातयित्वा रुक्मी अजयत्। तत्रानक्षज्ञता कालिङ्गेन प्रथमतो निरूपितेति बलं प्राहसत्। तदपि हसनं प्रकटमित्याह दन्तान्संदर्शयन्नुच्चैरिति। तन्मनसि कापट्येन हसतीति हलायुधो नामृष्यत्। ननु नीतिज्ञेनावश्यं हास्यं सोढव्यम्, तत्राह हलायुध इति॥ २९॥ ततो वारत्रयानन्तरं जये वा पराजये वा विपर्यस्य अन्यः पातयेदित्यक्षशास्त्रात् कपटादिशङ्कानिवृत्त्यर्थं बलः स्वयमक्षान् गृहीत्वा अपातयत्। ततः अयुताद्दशगुणं रुक्मी लक्षं ग्लहं पणात्मकं द्रव्यं प्रतिज्ञातवान्। तत्र तस्यां क्रीडायां बलः अजयत्। एकान्ते क्रीडतीति न स्वकीयाः साम्बादयः साक्षिणः, परं तदीया एव सर्वे। अत एकवारमेव भूयान् पराजयो जात इति, द्यूते मृषा भाषणं न विगीतमिति, जितवानहमित्याह रुक्मी। तानक्षान् विपरीततया धृत्वा प्रदर्श्य कैतवमाश्रितः कपटेनैव जेष्यामीति निश्चित्य मृषोक्तवान्॥ ३०॥ तदा मन्युना क्षुभितस्तदसहमानः। देयाभावादसहनं भविष्यतीत्याशङ्क्य निराकरोति श्रीमानिति। पूर्णधनः। निवार्यमाणोऽपि सहज एव तादृश इति। तस्मिन् काले तथैव युक्तमिति दृष्टान्तमाह। समुद्रः पौर्णमास्यामिवेति। स हि पूर्णं चन्द्रमभिमुखं गच्छति, तथायमपि मच्छिष्य एव मत्तोऽप्युत्कर्षं वाञ्छति, अनृतं च वदतीति चन्द्रमिव जिघृक्षुर्जातः। जात्या स्वभावेन च अरुणाक्षः, अक्रुद्धोऽपि क्रुद्ध इव प्रतीयते, क्रोधे तु का वार्त्तेत्यर्थः। अतिरुषा सुतरामरुणाक्षो जातः। अतो मनसि मारणीयोऽयमिति भावो निरूपितः। ततो वारत्रयं क्रीडितव्यमिति पुनरक्षान् बलो गृहीतवान्। तदा रुक्मी न्यर्बुदं ग्लहमादधे, प्रतिज्ञातवान् दशकोटिमितम्। वारत्रयेण यावद्दशगुणं तावत्सकृदेवादधे, यथैकानृतेनैव सर्वमनृतं भवति॥ ३१॥ पूर्ववत् तं चापि रामो जितवान्, अभिज्ञतया न, किन्तु दैवगत्येत्याह धर्मेणेति। तदा महतीं विनष्टिं दृष्ट्वा, छलमाश्रितः कापट्यमेव कर्तव्यमिति निश्चित्य, रुक्मी आह। चकारेण आहेति पूर्वक्रिया आकृष्यते। मया जितमत्रेमे प्राश्निका ब्रुवन्त्वित्याह। प्राश्निकानामपि स्वानुगुण्यवचने बलस्य स्वज्ञानमेव भ्रान्तमिति प्रतीतिः स्यात्, तदर्थं प्राश्निकानां सभासदाम्। येषामग्रे प्रश्नः सम्भवति सन्दिग्धे, ते प्राश्निकाः। तत्र देशादिदेवाः साक्षिण इति, कालिङ्गादिषु ते अनिविष्टाः, दुष्टत्वात्तेषाम्॥ ३२॥

### श्रीसुबोधिनी-सारः

तत्र क्रीडायां शतं सहस्रमयुतं पणं द्यूते उत्सृष्टं धनं राम आददे निक्षिप्तवान् तं तु पणं रुक्मी अजयत् तत्र सभायां दन्तान्संदर्शयन्नुच्चैः कालिगो बलं प्राहसन् तत् ठीठीतिहसनं हलायुधो रामो नाक्षमत॥ २९॥ ततोनन्तरं लक्षं ग्लहं पणं रुक्मी अधरत् तत्र द्यूते बलोऽजयत् कैतवं कपटमाश्रितो रुक्मी अहं जितवानित्याह॥ ३०॥ तदा मन्युना क्रोधेन क्षुभितः पर्वणि समुद्र इव श्रीमान् रामो जात्यारुणे अक्षिणी यस्य सोऽतिरुषा न्यर्बुदं दशकोटिमितं ग्लहं पणं जग्राह। तं चापि ग्लहं धर्मेण रामो जितवान् छलमाश्रितो रुक्मी मया जितमित्याहेति शेषः अत्र सत्यासत्ये विवादे इमे प्राश्निकाः प्रश्नविदो भाषंतु॥ ३१-३२॥

### गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

तत्र द्यूते प्रथमं सुवर्णमुद्राणां शतं, ततः सहस्रं, ततः अयुतं च क्रमेण रामः पणमादधे स्थापितवान्। तं तु पणं अक्षाणामनुकूलतया पतनात् क्रमेण रुक्मी अजयत्। तत्र च दन्तान् सन्दर्शयन् कालिङ्गो बलमुच्चैः प्राहसत्। हलायुधो बलभद्रस्तु तत्तस्य हसनं नामृष्यत् न सेहे॥ २९॥ ततश्च रुक्मी लक्षं ग्लहं पणं अगृह्णात् स्थापितवान् तत्र च तं बलोऽजयत्, कैतवं कपटमाश्रितो रुक्मी तु 'अहं जितवान्' इत्याह। एवमुक्त्वा च पणं गृहीतवानिति ज्ञेयम्॥ ३०॥ ततः श्रीमान् परिपूर्णधनोपि बलः अनृतवचनान्मन्युना क्रोधेन क्षुभितः प्रचलितचित्तः रुषा न्यर्बुदं दशकोटिसङ्ख्याकं ग्लहमादधे। क्षोभे दृष्टान्तमाह—पर्वणि पौर्णमास्यां समुद्रो यथा चन्द्रं गृहीतुमुद्गच्छति तद्वदिति। 'अक्रुद्धोपि स भयंकरः, क्रोधे पुनः किं वक्तव्यम्' इत्याशयेनाह—जात्या स्वभावेनैवारुणाक्ष इति॥ ३१॥ तं चापि ग्लहं धर्मेण अक्षपतनानुसारेण रामो जितवान्,

रुक्मी तु च्छलमाश्रितः सन् 'मया जितं अत्रास्मिन् विषये इमे पार्षिणकाः समीपस्थाः कालिङ्गादयोपि एवमेव वदन्ति' इत्याहेति शेषः ॥ ३२ ॥

### अन्वितार्थप्रकाशिका

शतमिति ॥ तत्र द्यूते प्रथमं सुवर्णमुद्राणां शतं ततः सहस्रं ततः अयुतं च क्रमेण रामः पणमाददे स्थापितवान् । तं तु पणम् अक्षाणामनुकूलतापतनात् क्रमेण रुक्मी अजयत् । तत्र च दन्तान् संदर्शयन् कालिङ्गो बलमुच्चैः प्राहसत् । हलायुधो बलभद्रस्तु तत्तस्य हसनं नामृष्यत् न सेहे । अन्तश्चुकोपेत्यर्थः ॥ २९ ॥ तत इति ॥ ततश्च रुक्मी निष्काणां लक्षं ग्लहं पणम् अगृह्णात् स्थापितवान् । तत्र च तं बलोऽजयत् । कैतवं कपटमाश्रितो रुक्मी त्वहं जितवानित्याह । एवमुक्त्वा च पणं गृहीतवानिति ज्ञेयम् ॥ ३० ॥ मन्युनेति ॥ ततः अनृतवचनान्मन्युना क्रोधेन पर्वणि समुद्र इव क्षुभितः जात्या स्वभावेनैवारुणाक्षः श्रीमान् बलः अतिरुषा न्यर्बुदं दशकोटिसंख्याकं ग्लहमाददे ॥ ३१ ॥ तमिति ॥ तं चापि ग्लहं धर्मेण अक्षपतनानुसारेण रामो जितवान् । रुक्मी तु च्छलमाश्रितः सन्मया जितम् अत्रास्मिन्विषये इमे प्राश्निकाः साक्षिणः कालिङ्गादयो वदन्त्वित्याह स्मेति शेषः ॥ ३२ ॥

### श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्

शतादिरूप्यमुद्रिकारूपं पणं पराजये दातव्यं वित्तादि तत्र पाशकक्रीडायां । आददे प्रतिज्ञातवान् तं रामग्लहं । तद्धास्यं नामृष्यत् न सेहे ॥२९॥ लक्षंरूप्य मुद्रिकारूपं ग्लहं पणं पराजये दातव्यं धनमित्यर्थः अगृह्णाद्देयत्वेन स्थापितवान् ॥३०॥ जात्यारुणाक्षः स्वाभाविकतया रक्तनेत्रः न्यर्बुदं दशकोटिरूप्यमुद्रिकारूपं ग्लहं ॥ ३१ ॥ तं ग्लहं । धर्मेणरामः मयाजितमिति रुक्मी प्राह । अत्र सभायां इमे प्राश्निकाः स्थिताः साक्षिण इतिवदं तु ॥ ३२-३३ ॥

### भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

तत इति ॥ ततः, रुक्मी, लक्षं ग्लहं पणं, अगृह्णादाददे । कृतवानित्यर्थः । बलः, तत्र तं, अजयत् । तदा, कैतवं वञ्चनं, आश्रितः रुक्मी, अहं जितवान् इति आह ॥ २९ ॥ मन्युनेति । जाते अरुणे अक्षिणी यस्य सः, क्वचित्तु जात्यारुणाक्ष इत्यपि पाठः । श्रीमान् बलः, पर्वणि, समुद्रः इव, मन्युना क्रोधेन, क्षुभितः क्षोभं प्राप्तः सन्, अतिरुषा, न्यर्बुदं दशकोटीः, ग्लहं, आददे । आदधत्, इत्यपि पाठः ॥ ३० ॥ तमिति । तं ग्लहं चापि, धर्मेण रामः, जितवान् । तदा छलं आश्रितः रुक्मी, अत्र इमे प्राश्निकाः प्रष्टव्याः कालिङ्गादयः, मया जितं इति, वदन्तु इत्याहेति शेषः ॥ ३१ ॥ तदेति । तदा, धर्मतो धर्मेण वचनेन च, ग्लहः बलेन एव, जितः । इति, नभोवाणी, अब्रवीत् । रुक्मी, मृषा मिथ्या, वदति वै । इति च, अब्रवीत् एव ॥ ३२ ॥

### कृष्णप्रिया

श्रीबलभद्रजी ने प्रथम सौ, पुनः सहस्र, इसके बाद दस हजार मुद्राओं का दाव लगाया। रुक्मी उन दावोंको जीत गया। रुक्मी की जय होने पर अट्टहास्य करता दाँत दिखाता और ठहाका मारता कलिङ्गराज श्रीबलरामजी की हँसी उड़ाने लगा। बलरामजी हँसी न सह सके और रुष्ट हो गये ॥ २९ ॥ पुनः रुक्मी ने एक लाख मुद्राओं का दाँव लगाया। उस दाव को बलभद्रजी जीत गये, लेकिन मिथ्याभाषी रुक्मी धूर्तता से कहने लगा कि मैंने जीता। इस प्रसङ्ग से बलभद्रजी रोष से लाल-पीले हो गये, मानो महासागर में पूर्णिमा के पर्व पर ज्वार आ गया हो। दाऊजी के नयनकमल नैसर्गिक आरक्त थे, आज अतिशय क्रोध से और भी दाहक हो गये और श्रीबलभद्रजी ने दस करोड़ मुद्राओं का दाव लगाया। अब भी द्यूत के नियमानुसार श्रीबलभद्रजी की ही जीत हुई। लेकिन रुक्मी ने कपट कर कहा, मेरी जय है और कहा कि—चौसर खेल के नियमों के विशेषज्ञ कलिङ्गराज आदि मध्यस्थ इस विषय का निर्णय करें ॥ ३०-३२ ॥

**[1]तदाब्रवीन्नभोवाणी बलेनैव जितो ग्लहः । धर्मतो [2]वचनेनैव रुक्मी वदति वै मृषा ॥ ३३ ॥**
**तामनादृत्य वैदर्भो दुष्टराजन्यचोदितः । संकर्षणं परिहसन् बभाषे कालचोदितः ॥ ३४ ॥**
**नैवाक्षकोविदा यूयं गोपाला वनगोचराः । अक्षैर्दीव्यन्ति राजानो बाणैश्च न भवादृशाः ॥ ३५ ॥**
**रुक्मिणैवमधिक्षिप्तो राजभिश्चो[4]पहासितः । क्रुद्धः [5]परिघमुद्यम्य [5]जघ्ने तं नृम्णसंसदि ॥ ३६ ॥**

---

१. अथा-वीर. । २. वञ्चने-वीर. । ३. श्चाप-वीर. । ४. स्त्वष्टापदेनैवं-विज. । ५. तातं क्रु-प्रा. पा. ; जघानोद्वाहकर्मणि-विज. ; जघ्नेतं नृम्ण-श्रीधरादयः ।

### कर्दमक्षमा

अन्वयः—तदा, नभोवाणी, अब्रवीत्, धर्मतः, बलेन, एव, ग्लहः, जितः, रुक्मी, वचने एव, वै, मृषा, वदति ॥ ३३ ॥ दुष्टराजन्य चोदितः, वैदर्भः, हसन्, ताम्, अनादृत्य, कालचोदितः, सङ्कर्षणम्, परिहसन्, बभाषे ॥ ३४ ॥ यूयम्, वनगोचराः, गोपालाः अक्षकोविदाः, न, अक्षैः, च, बाणैः, राजानः, दिव्यन्ति, भवादृशाः, न दिव्यन्ति ॥ ३५ ॥ रुक्मिणा, एवम्, अधिक्षिप्तः, च, राजभिः, उपहासितः, क्रुद्धः, परिघम्, उद्यम्य, नृम्णसंसदि, तम्, जघ्ने ॥ ३६ ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

नृम्णसंसदि मंगलसभायाम् ॥ ३६-३९ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

प्राश्निकानां दुर्जनत्वेन मिथ्यात्वं संभाव्य श्रीबलस्य कोपं वर्द्धयितुं पापरुक्मिवधार्थं नभोवाण्यभूदित्याह—तदेति। धर्मतो मर्यादाबन्धतो यद्वचनं ग्लहस्वीकारवाक्यं तेनैव, रुक्मी तु मृषैव वदति। विष्णुपुराणेपि—"त्वयोक्तोऽयं ग्लहः सत्यं न मयैषोऽनुमोदितः। एवं त्वया चेद्विजितं न मया विजितं कथम्।" इति। आकाशवाक्यमपि—"विजितं बलदेवेन रुक्मिणा भाषितं मृषा" इति। तदा पार्श्वगकथनावसरे ॥ ३३ ॥ तामाकाशवाणीम् ॥ ३४ ॥ गोपाला इति वक्रोक्तिः। गीस्तु स्तौत्येव—गवां धेनुपृथ्वीवेदादीनां पालका यूयम्, वने निर्जनदेशे एव गोचरा ध्यानविषया भवथ नैव न तु अक्षेषु द्यूतसभासु कोविदा येषां तादृशा भवथ यतोऽक्षैर्बाणैश्च राजानः श्रियोन्मत्ता एव दीव्यंति परहिंसायां रमन्ते न तु भवन्त इव दृश्यन्ते ये भगवद्भक्तास्तेपीत्यर्थः। ततो वयं न जानीमः किंतु भगवद्भक्ता एव जानन्ति स्वतन्त्रलीलानिबन्धनमेवेदृशं भवतां चरितमिति भावः ॥ ३६ ॥ तं रुक्मिणम्। नृपूर्वकटवर्गपवर्गपञ्चमसंयोगमध्यश्चायमकारान्तो नृम्णशब्दो वैदिको मंगलवाची ॥ ३६ ॥

### श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी

प्राश्निकानां नृपाणां दुर्जनत्वेन मिथ्यासाक्षित्वं सम्भाव्य पापरुक्मिवधार्थं श्रीबलदेवस्य कोपं वर्द्धयितुमाकाशवाण्यभूदित्याह—तदेति। धर्मतो मर्य्यादाबन्धतो यद्वचसनं ग्लहस्वीकारवाक्यं तेनैव जितः रुक्मीतु मृषैव वदति तच्च यथा श्रीविष्णुपुराणे—

"त्वयोक्तोऽयं ग्लहः सत्यं न मयैषोनुमोदितः। एवं त्वया चेद्विजितः न मया विजितः कथम् ॥

तत्रैवाकाशवाक्यञ्च—

"विजितं बलदेवेन रुक्मिणा भाषितं मृषा। अनुक्त्वापि वचः किञ्चित्कृतं भवति कर्मणः ॥ इति ॥ ३३ ॥

सङ्कर्षणं सद्यः सर्वं संहर्तुं समर्थमिति भावः। यद्वा स्वयं भगवतो द्वितीयव्यूहमिति परिहसन् उपहसन् ॥ ३४ ॥ यूयमिति। श्रीकृष्णापेक्षया तत्सङ्गिनोपि गृह्णाति अकोविदत्वे हेतुः गोपालाः क्षुद्रजातयः वनमेव गोचरो ज्ञानविषयो येषां तादृशाश्च गीदेवीतु तं स्तावयति गवां धेनुपृथ्वीवेदादीनां पालका यूयं वने निर्जनदेश एव गोचरा ध्यानविषया भवथ नैव ननु अक्षेषु द्यूतसभासु कोविदा येषां तादृशा भवथ यतः अक्षैर्बाणैश्च राजानः श्रियोन्मत्ता एव दीव्यन्ति परहिंसाया रमन्ते ननु भवन्त इव दृश्यन्ते ये भवद्भक्तास्तेपीत्यर्थः। ततो वयं न जानीमः किन्तु भवद्भक्ता एव जानन्ति स्वतन्त्रलीलानिबन्धनमेवेदृशं भवतां चरितमिति भावः ॥ ३५ ॥ एवम् अनेन श्रीकृष्णस्यापि व्यापकेन प्रकारेण रुक्मिणैव हेतुकर्त्रा तैराजभिः कर्तृभिरुपहासितः अतो नृम्णसंसदि जघान नृपूर्वः पवर्गटवर्गपञ्चमसंयोगमध्यमश्चायमकारान्तो नृम्णशब्दो वैदिको मङ्गलवाचकः ॥ ३६ ॥

### श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी

अब्रवीदिति परेण वान्वयः। प्राश्निकानां नृपाणां दुष्टत्वेन मिथ्यावाक्यं सम्भाव्य दुष्टरुक्मिवधार्थं श्रीबलदेवस्य कोपं वर्द्धयितुमाकाशवाण्यभूदित्याह—तदेति। धर्म्मतो जितः, रुक्मी तु वचनेनैव जितमिति वदति, न तु धर्म्मेण, तदपि वै एव, मृषैव; तथा च श्रीविष्णुपुराणे तस्य वाक्यम् ( ५।२८।२० )—'त्वयोक्तोऽयं ग्लहः सत्यं न मयैषोऽनुमोदितः। एवं त्वया चेद्विजितं न मया विजितं कथम्' ॥' किञ्च, ( वि० पु० ५।२८।२२ )—'विजितं बलदेवेन रुक्मिणा भाषितं मृषा। अनुक्त्वापि वचः किञ्चित् कृतं भवति कर्म्मणा' ॥ इति ॥ ३३ ॥ संकर्षणं सद्यः सर्वं संहर्तुं शक्यमिति भावः,—प्रलये तस्य मुखाग्निनैव विश्वस्य दाहात्। यद्वा, द्वितीयव्यूहं साक्षाद्भगवन्तमित्यर्थः। परिहसन् उपहसन् ॥ ३४ ॥ यूयमिति श्रीकृष्णापेक्षया, यतो गोपाला ऋजुबुद्धय इत्यर्थः। कुतः ? वनगोचरा वन्यतया नागरजनसंगाद्यभावेन वैदग्ध्यादिराहित्यादिति भावः ॥ ३५ ॥ एवमनेन श्रीकृष्णव्यापक-

प्रकारेणोपहासित उपहासं कारितः, किंवा भण्डकेन केनापि कृत्वा, किंवा रुक्मिणैव प्रयोजककर्त्रा, तै राजभिरुपहासं कारितः, अतो नृम्णसंसद्यपि जघान । नृम्णशब्दोऽयं वैदिको मंगले ।। ३६ ।।

**श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका**

अथेति । धर्म्मतो बलेन रामेणैव ग्लहो जितः रुक्मीतु वञ्चनेनैवं वदति अतस्तदुक्तिर्मृषेत्यशरीरवाणी प्राहेत्यर्थः ।।३३।। तां नभोवाणीमनादृत्य दुष्टराजन्यैः कलिङ्गादिभिश्चोदितो वैदर्भो रुक्मी कालचोदितोऽत एव परिहसन् बभाषे ।। ३४ ।। भाषणमेवाह—नैवेति । नाक्षकोविदाः न द्यूतकुशलाः तत्र हेतुं वदन् विशिनष्टि—गोपाला वनगोचराश्चेति राजान एवाक्षैः बाणैश्च दीव्यन्ति ननु भवादृशाः पशुपालकाः ।। ३५ ।। रुक्मिणेति रुक्मिणैवम् अधिक्षिप्तो रामः हे नृप ! सभायां संसदि नृपाणां संसदि वा तं जघ्ने ।। ३६ ।।

**श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली**

आकाशसरस्वती किमाहेति तत्राह—बलेनेति ।।३३।। तामाकाशवाणीम् ।।३४-३५।। अष्टपदेन अक्षफलकेन ।।३६-३८।।

**श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी**

तदा तेषां साक्षिणामधर्मिष्ठनृपाणां मिथ्योक्तिसमये धर्मतो वचनं यस्य तेन बलेनैव जितः रुक्मीतु मृषा वदति ।। ३३-३५ ।। नृम्णसंसदि मङ्गलसभायाम् ।। ३६-३९ ।।

**गूढार्थदीपिनी**

ताम् आकाशवाणीम् । वैदर्भो रुक्मी ।। ३४-३५ ।। परिघं लोहदण्डम् । नृम्णसंसदि मङ्गलसभायाम् । नृम्णशब्दो वैदिको मङ्गलवाची ।। ३६ ।।

**श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः**

नृम्णसंसदि मङ्गलसभायाम् ।। ३६-४० ।।

इति श्रीमद्भागवते महापुराणे दशमस्कन्धीये श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे एकषष्टितमोऽध्यायार्थप्रकाशः ।। ६१ ।।

**श्रीसत्यधर्मकृता श्रीभागवतटिप्पणी**

कलिङ्गो दन्तवक्रः सीरिणो हलिनो दन्तान्सन्दर्श्य दर्शयित्वा तथा रुक्मी जित इत्याह । ततस्तदुक्त्यनन्तरं कोपपरीतात्मा हलायुधस्तूष्णीमासीत् ।। ४२ ।। तदा बले तूष्णीके तत्काले नभोवाणी अशरीरिणी वाक् तद्देवता प्राश्निका वदन्त्वित्ति वदन्नशरीरिणीं वाणीमपि विवक्षित्वोच इति च प्राश्निकपदप्रयोगतो ज्ञायते । उपसर्गाणां धातुलीनार्थबोधकत्वपक्षे प्राश्निकैव विप्राश्निका भवति । विप्राश्निकात्वीक्षणिका दैवज्ञेत्यमरात् । सा चात्र देवीत्यब्रवीत् । किमित्यत आह । बलेनैव धर्मतो ग्लहो न्यर्बुदात्मा जितः । वञ्चनेन रुक्मी मृषा वदति । वा एवेति । अवचनेनैवेति तूष्णीमित्येतदर्थकम् । तूष्णीं वदतीत्यर्थः । तथा ह्यपभ्रष्टभाषया किंवदन्ती । सुमङ्गे अथाने अदुं अबद्धेति । वचनेन कलिङ्गादिवचनानुसारेणेत्यर्थः ।। ४३ ।। तामशरीरिणीमनादृत्य । को वैतत्कुलीन एकान्ते निलीनो वक्तीति वाग्देव्यपि मृषा वदतीति वाऽनादरो ज्ञेयः । दुष्टराजन्यचोदितो बहिः कालचोदितोऽन्तः सङ्कर्षणं परिहसन्वैदर्भो बभाषे ।। ४४ ।। वनगोचरा वनगोपाला यूयमक्षकोविदाः कुशला नैव । तर्हि केषां तत्र कौशल्यमित्यतः प्रस्तुतेन सहाप्रस्तुतं स्वजीवनग्लहग्रहणहेतुमप्याह । राजानोऽक्षैर्दीव्यन्ति क्रीडन्ति तथा बाणैश्च दीव्यन्ति भवादृशास्तु न दीव्यन्तीति भाव इत्यन्वयः ।। ४५ ।।

**श्रीमद्वल्लभाचार्य्यकृता सुबोधिनी**

तत्रत्यानां वचनात् पूर्वमेव आकाशवाणी सर्वदेवतामयी सन्देहनिवृत्त्यर्थमाह **बलेनैव जितो ग्लह इति**। यद्यप्यक्षक्रीडां न जानाति, तथापि धर्मतः जितवान् । वचनेनैव केवलेन धर्मरहितेन रुक्मी वदति । वै निश्चयेन । नात्र सन्देहः कर्तव्यः । लौकिकत्वमपि तद्वाक्यस्य निवारयति **मृषेति** । लौकिकाः अप्येतादृशे न मृषा वदन्ति ।। ३३ ।। ततः को वायं कृत्रिमः शब्दः प्रमाणम्, साक्षात् प्राश्निकेषु विद्यमानेष्विति तामनादृत्य दुष्टराजन्यैः तथैव वक्तव्यम्, इदं नाङ्गीकर्तव्यमिति प्रेरितः संकर्षणं परिहसन् बभाषे । यतो वैदर्भः, न धर्मप्रधानदेशस्थः दुःसङ्गश्च । स हि जगदेवाकर्षति लयार्थम् । तादृशसामर्थ्यवन्तं परिहसन् कटाक्षहास्यादिभिः अयुक्तमुक्तवान् । ननु वचनस्य किं प्रयोजनम्, तूष्णीं स्थातव्यम्, उत्थाय वा गन्तव्यमिति तत्राह **कालचोदित इति** ।। ३४ ।। भगवता गोपालत्वं समर्थितमिति तदन्तर्याम्यपि तथैव प्रेरितवान् । बाल्ये हि विद्याभ्यासः, क्षत्रियाणां

च शस्त्राभ्यासः, तस्मिन् समये वने गोचारणमेव कृतमिति लोकविश्वासार्थं मर्मभेदमाह। यूयं नाक्षकोविदाः, यतो गोपालाः। न हि सर्वविद्यासु सर्वे अभिज्ञाः, तस्माद्वने गोचरा एव। उभयमपि ज्ञायत इति चेत्। तत्राह **अक्षैर्दीव्यन्ति राजान** इति। अभ्यासव्यतिरेकेण न विद्या समायातीति अक्षाणामप्रयोजकत्वमाशङ्क्य द्यूतक्रीडापरा अधमा इति शङ्काव्युदासार्थं जयसाधकत्वात् बाणे तुल्यतां वक्तुमाह **बाणैश्चेति**। ननु क्षत्रिया वयमित्युभयं जानीम इति चेत्। तत्राह **न भवादृशा** इति। परगृहे पुष्टा आबाल्यं नीचकर्मणि नियुक्ताः नाक्षबाणकोविदा भवन्तीति निषेधति न भवादृशा इति ॥ ३५ ॥ ततः सर्वैरेव 'सत्यं वदती'त्युक्ते, उपहासे च **कृते**, कालप्रेरितो बलः तत्रैव दैवगत्या कालमुद्गररूपं परिघमुद्यम्य, संसदि सभायामुपविष्टं एव तं जघ्ने। पक्षपातिभिः तस्य पक्षः पोषणीय इति ज्ञापयन्निव सभायामेव जघ्ने। **नृपेति** राज्ञां तथाकरणं युक्तमिति ज्ञापयति। क्रुद्ध इत्यविचारः। **परिघमुद्यम्येत्यन्या** क्रिया निर्वर्तिता। चकारात्तदीयैः सेवकैरप्युपहसितः ॥ ३६ ॥

### श्रीसुबोधिनी–सारः

तदा तस्मिन्काले नभोवाणी आकाशवाक् अब्रवीत् धर्मतो ग्लहः पणो बलेनैव जितोऽस्ति रुक्मी वचनेनैव वदतीति मृषा मिथ्या वै एव ॥ ३३ ॥ तां च वाणीम् अनादृत्य दुष्टै राजन्यैः क्षत्रियैर्नोदितो वैदर्भो विदर्भदेशजातो रुक्मी कालेन चोदितः संकर्षणं बलदेवं परिहसन्नुवाच ॥ ३४ ॥ अक्षेषु कोविदा निपुणा यूयं नैव स्थ तत्र हेतुः वनगोचरा गोपालाः। साभिमान आह। अक्षैर्बाणैश्च राजानो दीव्यन्ति विहरन्ति भवादृशा नैव "राजवार्त्तां कथं वृद्धो वक्तुं श्रोतुं प्रवर्त्तते" इतिवत् अत्यन्तासंभवोक्तेर्महानुपहासः कृत इति ज्ञायते ॥ ३५ ॥ शुकोक्तिः। रुक्मिणा एवमधिक्षिप्तोऽवमानितो राजभिरुपहासितो बलो नृम्णसंसदि मंगलसभायां परिघमुद्यम्य उद्धृत्य तं रुक्मिणं जघ्ने ॥ ३६ ॥

### गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

तदा तस्मिन् काले तु नभोवाणी अदृष्टवक्तृका आकाशे वाणी अब्रवीत् उत्पन्ना। तां दर्शयति—धर्मतोऽक्षपतनानुसारेण बलेनैव ग्लहो जितः। रुक्मी तु वचनमात्रेण मया जितमिति मृषैव वदति ॥ ३३ ॥ तां नभोवाणीमनादृत्य वैदर्भो रुक्मी सङ्कर्षणं प्रति हसन् बभाषे इत्यन्वयः। ननु 'कथमेवमयुक्तमुक्तवान्' तत्राह—दुष्टै राजन्यैः कालिङ्गादिभिश्चोदित इति। 'अन्यप्रेरणेऽपि क्रोधाविष्टस्य समर्थस्य तिरस्कारे कथं प्रवृत्त' इत्याशङ्क्याह—कालचोदित इति। मरणनिमित्तकालेन तद्बुद्धिभ्रंशो जातः, अन्यथा स्वविरूपकरणसमये स्वबन्धविमोचकस्योपकारिणः पराभवे कथं प्रवर्तेत ॥ ३४ ॥ तद्भाषणमेवाह—नैवेति। यूयमक्षकोविदाः द्यूतकुशला नैव भवथ। तत्र हेतुं सूचयन् विशिनष्टि—गोपाला वनगोचराश्चेति। मादृशा राजान एवाक्षैर्बाणैश्च दीव्यन्ति क्रीडन्ति, नतु भवादृशाः पशुपालाः ॥ ३५ ॥ एवं वचनैः रुक्मिणा अधिक्षिप्तः तिरस्कृतः राजभिः कालिङ्गादिभिश्च उपहसितः अतएव क्रुद्धो रामः परिघं लोहदण्डमुद्यम्य तं रुक्मिणं नृपसंसदि राजसभायां जघ्ने ॥ ३६ ॥

### अन्वितार्थप्रकाशिका

तदेति ॥ तदा प्राश्निकानां दुर्जनत्वेन मौनसमये नभोवाणी अदृष्टवक्तृका आकाशवाणी अब्रवीत् उत्पन्ना तां दर्शयति। धर्मतोऽक्षपतनानुसारेण बलेनैव ग्लहो जितः रुक्मी तु वचनमात्रेण मया जितमिति मृषैव वदति ॥३३॥ तामिति ॥ दुष्टै राजन्यैः कालिङ्गादिभिश्चोदितः कालेन मरणहेतुना च चोदितः वैदर्भो रुक्मी तां नभोवाणीमनादृत्य सङ्कर्षणं परिहसन् बभाषे ॥ ३४ ॥ नैवेति ॥ यूयमक्षकोविदाः द्यूतकुशला नैव भवथ। यतो गोपालाः वनगोचराश्चेति मादृशा राजान एवाक्षैर्बाणैश्च दीव्यन्ति क्रीडन्ति नतु भवादृशाः पशुपालाः। वस्तुतः यूयम् अक्षकोविदाः द्यूतव्यसनमग्ना इन्द्रियलम्पटाश्च न भवथ। किंतु गोपालाः वेदादिपालकाः वनवासिमुन्यादीनां ध्यानगोचराश्च यतः अक्षैरिन्द्रियैर्द्यूतैर्वा बाणैश्च राजाद्या मदमत्ता एव क्रीडन्ति नतु भवादृशाः भगवन्तः ॥ ३५ ॥ रुक्मिणेति ॥ एवं वचनैः रुक्मिणाऽधिक्षिप्तः तिरस्कृतः राजभिः कालिङ्गादिभिश्च उपहासितः अत एव क्रुद्धो रामः परिघं लोहदण्डमुद्यम्य तं रुक्मिणं नृपसंसदि राजसभायां जघ्ने। नृम्णसंसदीति पाठे उत्सवसभायाम् ॥ ३६ ॥

### श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्

वैदर्भो रुक्मी ॥ ३४ ॥ दीव्यन्ति क्रीडन्ति ॥ ३५ ॥ नृम्णसंसदि मंगलसभायां ॥ ३६ ॥

### भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

तामनादृत्येति। दुष्टराजन्यचोदितः दुष्टैः कालिङ्गादिनृपतिभिः संप्रेरितः, वैदर्भः रुक्मी, तामाकाशवाणीं, अनादृत्य, कालचोदितः अतएव, परिहसन् सन्, संकर्षणं, बभाषे ॥ ३३ ॥ नैवाक्षेति। गोपालाः वनगोचराः, यूयं अक्षकोविदाः द्यूतकुशलाः, नैव। अक्षैः बाणैश्च, राजानः, दीव्यन्ति। भवादृशाः, नैव ॥ ३४ ॥ रुक्मिणेति। एवं, रुक्मिणा, अधिक्षिप्तः, राजभिः कालिङ्गादिभिः, उपहासितश्च, रामो बलभद्रः, क्रुद्धः सन्, नृम्णसंसदि मङ्गलसभायां, अत्र केचिन्नृपसंसदीत्यपि

वदन्ति। परिघं उद्यम्य, तं रुक्मिणं, जघ्ने हतवान् ॥ ३५ ॥ कलिङ्गराजमिति। यतः यः, विवृतैः द्विजैः दन्तैः, अहसत्। तं कलिङ्गराजं, तरसा प्रसह्य, दशमे पदे पादविन्यासे, गृहीत्वा क्रुद्धः सन्, दन्तान् अपातयत् ॥ ३६ ॥

**कृष्णप्रिया**

सभासद के कहने के पहले ही आकाशवाक् देवता ने कहा कि यदि धर्म को आगे रखकर कहा जाय तब तो श्रीबलराम जी ने यह दाँव जीता है। रुक्मी का कहना सर्वथा झूठ है कि उसने दाँव जीता है ॥ ३३ ॥ खल राजाओं से बहकाया था और सिर पर काल का आरोहण था इसलिये आकाशवाणी का अवहेलन किया। श्रीबलराम की मखौल करते कहने लगा। दाऊजी! आप लोग वन में विचरने वाले ग्वाल लोग हैं और गौओं को चराना जानते हो। पासों को चलाना और बाणों से खेलना तो केवल राजाओं का ही कार्य है; यह आप का कौशल्य नहीं। राजन्! इस प्रकार के आक्षेप और उपहास से श्रीबलराम जी पीले हो गये। आविष्ट होने पर एक मुदगर उठाया और उस माङ्गलिक सभा में ही रुक्मी को मार दिया ॥ ३४-३६ ॥

**कलिङ्गराजं तरसा गृहीत्वा दशमे पदे। दन्तानपातयत् क्रुद्धो योऽहसद् विवृतैर्द्विजैः ॥ ३७ ॥**

**अन्ये निर्भिन्नबाहूरुशिरसो रुधिरोक्षिताः। राजानो दुद्रुवुर्भीता बलेन परिघार्दिताः ॥ ३८ ॥**

**निहते रुक्मिणि श्याले नाब्रवीत् साध्वसाधु वा। रुक्मिणीबलयो राजन् स्नेहभङ्गभयाद्धरिः ॥ ३९ ॥**

**[1]ततोऽनिरुद्धं सह सूर्यया वरं रथं समारोप्य ययुः कुशस्थलीम्।**

**रामादयो भोजकटाद् दशार्हाः [2]सिद्धाखिलार्था मधुसूदनाश्रयाः ॥ ४० ॥**

**इति श्रीमद्भागवते महापुराणे[3] दशमस्कन्धे अनिरुद्धविवाहे रुक्मीवधो नामैकषष्टितमोऽध्यायः[4] ॥ ६१ ॥**

**कर्दमक्षमा**

अन्वयः—दशमे, पदे, तरसा, कलिङ्गराजम्, गृहीत्वा, यः, विवृतैः, द्विजैः, अहसत्, तस्य, दन्तान्, क्रुद्धः, अपातयत् ॥३७॥ बलेन, परिघार्दिताः, निर्भिन्नबाहूरुशिरसः, रुधिरोक्षिताः, अन्ये, राजानः, भीताः, दुद्रुवुः ॥३८॥ रुक्मिणी बलयोः, स्नेहभङ्गभयात्, हरिः, हे राजन्! श्याले, रुक्मिणि, निहते, साधु, असाधु, वा, न, अब्रवीत् ॥ ३९ ॥ ततः सिद्धाखिलार्थाः, मधुसूदनाश्रयाः, रामादयः, दशार्हाः, सूर्यया, सह, वरम्, अनिरुद्धम्, रथम्, समारोप्य, भोजकटाद्, कुशस्थलीम्, ययुः ॥ ४० ॥

इति श्रीमद्भागवते दशमस्कन्धे निरोधलीलायामनिरुद्धविवाहे एकषष्टितमेऽध्याये अन्वयाः समाप्ताः ॥ ६१ ॥

**श्रीधरस्वामिविरचिता भावार्थदीपिका**

सूर्यया नवोढया। सिद्धा अखिला अर्था अभ्युदयशत्रुवधादयो येषां ते ॥ ४० ॥

इति श्रीमद्भागवते दशमस्कन्धे उत्तरार्धे श्रीध० टीकायामेकषष्टितमोऽध्यायः ॥ ६१ ॥

**श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः**

दशमे तत्संख्ये। पदे पादन्यासे। 'शिखायां वा शिखा वै दशमं पदम्' इति वार्तांतविः ॥ ३७ ॥ निर्भिन्नानि बाहूरुशिरांसि येषां ते तथा ॥ ३८ ॥ 'श्यालस्तु पत्नीभ्राता' इति कोशः। राजन्निति–यन्निमित्तं बलदेवेन श्रीकृष्णं प्रति पूर्वं परुषमुक्तं, तेनैव तद्वध इति क्षत्रियजातेश्चरितमद्भुतमिति संचित्य। रुक्मिणो दुष्टत्वेन तद्वधे साध्विति वक्तुमुचितं पत्नीभ्रातृत्वेन तद्वधेऽसाध्विति वक्तुमुचितम्, यन्नाब्रवीत्तत्र हेतुः-स्नेहभंगेति। साधूक्तौ रुक्मिण्याः, असाधूक्तौ बलदेवस्य स्नेहभंग इति विवेकः ॥ ३९ ॥ ततो रुक्मिहननानन्तरम्। 'सूर्या तु स्यान्नवोढायां सूर्यपत्न्यामपि' इति निरुक्तिः। सिद्धाखिलार्थत्वे हेतुः—मधुसूदनाश्रया इति। यद्वा-यथा मधुमादिदैत्यं वरदानचातुर्येणाहंस्तथा रुक्मिणमपि द्यूतक्रीडौदासीन्यमय्या बुद्ध्येति भावः। एतेन रामस्य तद्वधे कृष्णसंमतिरपि द्योतितेति ॥ ४० ॥

इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे दशमस्कन्धोत्तरार्धे एकषष्टितमोऽध्यायः ॥ ६१ ॥

---

१. अथोऽनिरुद्धं सह भार्यया–विज.। २. दशार्हकाः–वीर. विज.। ३. पारमहंस्यां संहितायां दशमस्कन्धे एक–प्रा. पा.। ४. षट्सप्तति–विज.।

## श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी

दशमे पदे पादविन्यास इति भीत्या पलायनात् तथाप्यपातयत् यतः क्रुद्धः तत्र हेतुर्य इति विवृतैः प्रकटितैः वदन्नसौ मन्महद्दुःखमिच्छति दुरात्मा अतोऽस्येममभिलाषं कुतो न पूरयेयमिति विभाव्य तथा कुर्वन् तस्य तमपूपुरदिति च ज्ञातव्यम् ॥ ३७ ॥ अन्ये च राजानः परिघार्दिताः अतो निश्शेषेण भिन्नानि बाह्वादीनि येषां ते बाह्वादीनां यथोत्तरं मर्मस्थानत्वे श्रैष्ठ्यम् अतो रुधिरेणोक्षिताः सिक्ताः अत एव भीताः सन्तो दुद्रुवुः वेगेनापसृताः ॥ ३८ ॥ रुक्मिणि स्वनाम्नैव तादृशदुष्टतया विख्याते इति साध्विति वक्तुमुचितं श्याले तादृशनिजनिकटसम्बन्धिनीत्यसाध्विति । तथापि तत्तन्नाब्रवीत् यतः साध्वित्युक्ते रुक्मिण्याः असाध्वित्युक्ते च बलदेवस्य स्वविषयकोपः स्नेहस्तस्य भङ्गः पलायनं निलीनत्वं तस्माद्यद्भयं तस्मात् यद्यप्येतन्न सम्भवति तथापि स्नेह एव तत्सम्भावयति इति ज्ञेयं यद्वा भङ्गः कौटिल्यं प्रणयकोप इत्यर्थः । यद्वा भङ्गस्तरङ्गः ततश्चानयोर्मय्येतादृशः स्नेहतरङ्गः अहन्तु तद्विपरीतं कथं वदामीति तस्माद्भयमिव भयं लज्जेति ज्ञेयं यद्वा तयोर्योन्योन्यं स्नेहस्तस्य भङ्गभयात् मनागपि तत्र तस्य सम्मत्यनुभावेन रुक्मिण्या बलदेवेऽसूयोत्पत्तिः स्यादिति तूष्णीं स्थितिः साध्वित्यनुक्तिस्तु रुक्मिणीप्रकटपरिभवस्य तत्कुटुम्बलोक विगानस्य च शङ्कयेति भावः । अत एव श्याल इति विशेषितम् एवं स्नेहभङ्गहरणात् हरिरिति तादृशभगवच्चातुर्य्येण प्रहर्षात्तथा पूर्वं विरूपतामात्रकरणेपि श्रीकृष्णं प्रति किञ्चित्परुषमुक्तवता तेनैवाधुना तद्वध इति कौतुकाच्च सम्बोधयति—राजन्निति ॥ ३९ ॥ वरं श्रेष्ठं रथं सम्यक् गीतवाद्यादिसाधुप्रकारेणारोप्य रामस्यादित्वं दुर्जनवैरिवधेन सर्वैः सम्मानितत्वात् तथा कृष्णस्य मौनावलम्बनाच्च सिद्धाखिलार्थत्वे हेतुः मधुसूदनाश्रया इति एवं रामस्यादित्वेपि तदधीनत्वं तथा रामस्य रुक्मिवधे तत्सम्मतिं च द्योतयत्येव तत्र मधुसूदनेति यथा पुरादिदैत्यं मधुं वरदानादिचातुर्य्येणाहन् तथा द्यूतक्रीडोदासीन्यमप्यवुद्धया रुक्मिणञ्चेति भावः ॥ ४० ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिण्यां एकषष्टितमोऽध्यायः ॥ ६१ ॥

## श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी

दशमे पद इति भीत्या पलायनात्, तथाप्यपातयत्, यतः क्रुद्धः, तत्र हेतुः—य इति, विवृतैः प्रकटितैः ॥ ३७ ॥ अन्ये च राजानः परिघेणार्दिताः प्रहृताः, अतो निःशेषेण भिन्नानि बाह्वादीनि येषां ते, बाह्वादीनां यथोत्तरं मर्म्मस्थानत्वेन श्रेष्ठ्यम्, अतो रुधिरेणोक्षिताः सिक्ताः, अत एव भीताः सन्तो दुद्रुवुर्वेगेनापसृताः ॥ ३८ ॥ श्यालेऽपि साध्वित्युक्ते रुक्मिण्याः, असाध्वित्युक्ते च बलस्य यः स्वविषयकस्नेहभंगस्तद्भयात्, यद्वा, तयोर्योऽन्योन्यं स्नेहस्तस्य भंग-भयात्, किञ्चिदनुवत्या तत्रापि तस्य संगत्यनुमानेन श्रीरुक्मिण्याः श्रीबले असूयानुत्पत्तेरिति दिक् । एवं द्वयोरपि स्नेहस्तस्य भंगहरणाद्धरिरिति । तादृशश्रीभगवच्चातुर्य्यण प्रहर्षात्तथा पूर्व्वं विरूपतामात्रकरणादपि श्रीकृष्णं प्रति अतिपुरुषमुक्तवता तेनैवाधुना तद्वध इति कौतुकाच्चाह—हे राजन्निति । यद्वा, दुष्टवधेन राजमानोऽपि ॥३९॥ वरं श्रेष्ठम् । कथम् ? सम्यग् गीतवाद्यादिसाधुप्रकारेणारोप्य; रामस्यादित्वं दुष्टवैरिवधेन सर्व्वैः सम्मानितत्वात्, तथा श्रीकृष्णस्य मौनावलम्बनाच्च, सिद्धाखिलार्थत्वे हेतुः—मधुसूदनाश्रया इति । एवं रामस्यादित्वेऽपि तदधीनत्वं तथा रामस्य रुक्मिणो वेति भावः ॥ ४० ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे उत्तरार्द्धे श्री श्रील-सनातन-गोस्वामिपाद-कृतायां श्रीबृहद्वैष्णवतोषण्यां श्रीदशम-टिप्पण्यामेकषष्टितमोऽध्यायः ॥ ६१ ॥

## श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका

कलिङ्गराजन्तु तरसा प्रसह्य दशमे पदे पादविन्यासे गृहीत्वा क्रुद्धस्सन् दन्तानपातयत् भग्नानकरोदित्यर्थः । तत्र हेतुं वदन्विशिनष्टि—यः कलिङ्गः विवृतैः प्रकाशितैर्द्विजैः दन्तैरहसत् अतो दन्तानेवापारयदित्यर्थः ॥ ३७ ॥ अन्येतु राजानः बलेन कर्त्रा परिघेण साधनेनार्दितास्ताडिता अत एव निर्भिन्नानि बाह्वादीनि येषां ते अत एव रुधिरेणोक्षिताः सिक्ताः भीताश्च दुद्रुवुः पलायितवन्तः ॥ ३८ ॥ निहत इति । हरेः कृष्णस्य स्याले रुक्मिणि निहते सति रुक्मिणी साध्वसाध्विति वा नाब्रवीत् कुतः बलयोः रामकृष्णयोर्विषये यः स्नेहस्तस्य भङ्गभयात् बलयोरित्यत्र द्विवचनबलेन कृष्णपरिग्रहः हरिरिति प्रथमान्तपाठे स्याले रुक्मिणि निहते सति हरिर्भगवान् रुक्मिणीबलयोः रुक्मिणीबलरामयोः स्नेहभङ्गभयात् साध्वसाधु वा नाब्रवीदित्यर्थः ॥३९॥ तत इति । ततो रामादयो दाशार्हकाः सूर्य्यया नवोढ्या सहानिरुद्धं श्रेष्ठं रथमारोप्य आरोहयित्वेत्यर्थः मधुसूदन आश्रयो येषां ते अत एव सिद्धाः सकला अर्थाः प्रयोजनानि येषां ते कुशस्थलीं द्वारकां प्रति ययुर्जग्मुः ॥ ४० ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायां एकषष्टितमोऽध्यायः ॥ ६१ ॥

## श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली

हरेः श्याले रुक्मिणि निहते सति ।। ३९ ।। भार्यया सहानिरुद्धं वरं रथम् आरोप्य रामादयो दशार्हकाः सिद्धाखिलार्थाः सम्पन्नसमस्ताभीष्टाः तत्र हेतुः मधुसूदनेति ।। ४० ।।

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्यां एकषष्टितमोऽध्यायः ।। ६१ ।।

( श्रीविजयध्वजतीर्थरीत्या षट्सप्ततितमः ) ।। ७६ ।।

## श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शिनी

सूर्य्यया नवोढया सिद्धाखिलार्थाः सिद्धसमस्तवाञ्छिता इति विशेषणेन रुक्मिण्या अपि क्रोडीकृतत्वात्तस्या रुक्मिणि हते सत्यन्तः सुखमेवाभूदिति गम्यते तेन स्नेहभङ्गभयादित्यत्र रुक्मिण्या रुक्मिणि बहिः स्नेह एव व्याख्येयः ।। ४० ।।

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् । एकषष्टितमोऽध्यायो दशमेऽजनिसङ्गतः ।। ६१ ।।

## गूढार्थदीपिनी

विवृतैः प्रकटितैः द्विजैः दन्तैः अहसत् ।। ३७ ।। निर्भिन्नानि बाह्वादीनि 'येषां' ते । दुद्रुवुः । पलायितवन्तः ।।३८-३९।। ततो दशार्हाः यादवाः । सूर्यया नवोढया पत्न्या सह तं वरं समारोप्य भोजकटात् कुशस्थलीं द्वारकां ययुरित्यन्वयः ।। ४० ।।

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां दशमस्कन्धोत्तरार्द्धे गूढार्थदीपिन्यामेकषष्टितमोऽध्यायः ।। ६१ ।।

## श्रीसत्यधर्मकृता श्रीभागवतटिप्पणी

रुक्मिणैवमधिक्षिप्तो धिक्कृतो राजभिरितरैरुपहासितश्च । अष्टापदेन येन जयेय्यविजय उद्भावितस्तेन तेनैवाक्षफलकेनाष्टापदं स्यात्कनके सारिणां फलकेऽपि चेति विश्वः । उद्वाहपर्वणि जघानाहन् । परिघमुद्यम्येत्यपाठः । जघानाष्टापदेनैव प्रगृह्य यदुपुङ्गव इति हरिवंशेऽप्युक्तेः ।। ४६ ।। यो विवृतैर्द्विजैर्दन्तैरहसत्तं कलिङ्गराजं दशमे पदे तत्सङ्ख्ये पादविन्यासे गृहीत्वा । अनेन तत्पलायनं ध्वनयति । अन्ये ये उपाहसुस्ते राजानो विभिन्नबाहोरुशिरसः । बाहाशब्दोऽयम् । रुधिरेण रक्तेनोक्षिताः सिक्ताः । बलेन परमं यथाऽर्दितास्तस्माद्भीता दुद्रुवुः ।। ४७ ।। निहते रुक्मिणीश्याल इति श्लोके देवस्य देव्या वा प्रीतिभक्तिभङ्गभीतिः प्रतीयते । नोभयोः सम्भवति सा निर्दोषत्वादित्यतो ब्रह्माण्डवचनेन तत्तात्पर्यमाह ।। नेति । देव्या रुक्मिण्याः स्नेहभङ्गो न केशवस्य तु देवस्यापि न भयं तद्भङ्गाद्भाविनेति शेषः । तर्हि कथमिदं नटनं घटत इत्यत आह । तथाऽपि लोके लोके । यथा स्नेहभीतो भार्यास्नेहाद्भज्यमानाद्भीतो भवति तथा रुक्मिवधे बलकल्पिते किञ्चिदपि हरिर्नोचे । तु शब्दो द्वावेतौ नित्यमुक्तावित्यादिसिद्धनित्यमुक्तत्वादिविशेषार्थकः । ततश्चायं श्लोकार्थः ।। शाले भार्याभ्रातरि । शालास्तु भ्रातरः पत्न्या इत्यमरः । रुक्मिणी निहते स्नेहभङ्गभयात्तद्रक्षणार्थमिति यावत् । रुक्मिणीबलयोर्विषये साधु सम्यगसाध्वसम्यगिति हरिर्नाब्रवीत् । अभावज्ञानं प्रतियोगिज्ञानाधीनमिति यथाक्रममुक्तम् । तथा चेद्बलरुक्मिण्योरिति वक्तव्यं स्यात्तत्तश्च क्रमेऽनुसरणीये नैवं निर्देशः सम्भवतीति चेन्न । एवं निर्दिशन्भगवच्चित्तवेदित्र्या देव्या अपि नानुबन्धोऽयं प्रयोजकोऽपि त्वसद्धननं सम्यगेवेत्यान्तरङ्गिकं भावमावेदयामास व्यास इत्यवसेयम् । अभ्यर्हितत्वाच्च । असाधुताप्रतीतिरित्वतरासुरविवक्षयेति मन्तव्यम् । स्नेहभङ्गभयादिति वेति । यदा तु स्नेहभङ्गभीतिरेव विवक्ष्यते तदा साध्वित्युक्तौ रुक्मिण्याऽसाध्वित्युक्तौ बलस्य स्नेहभङ्ग इति यथाक्रममर्थो ज्ञेयः ।। ४८ ।। ततोऽनिरुद्धमिति वाऽथानिरुद्धमिति वा पाठौ । अथो अनिरुद्ध इत्यसरलः । ओदिति प्रगृह्यसंज्ञायां प्लुतप्रगृह्या अचि नित्यमिति प्रकृतिभावे अथो अनिरुद्धेति भाव्यत्वात् । भार्यया रोचनया सह रथं समारोप्य भोजकटाद्रुक्मिपुराद्रामादयो दाशार्हकाः सिद्धा अखिला अर्था येषां ते तथा । तत्र हेतुर्मधुसूदनाश्रया इति । कुशस्थलो ययुः।। पुस्तकान्तरे तु । ततो रुक्मिहनननान्तरं सूर्यया नार्या । सूर्यार्कपर्णे तपने स्त्री तु नार्यौषधीषु चेति भानुः । सूर्यायाः पश्य रूपाणीति रुच्युक्तेनवोढया सह वरमनिरुद्धं रथं समारोप्य भोजकटाद्रुक्मिणा स्ववासार्थं निर्जितान्निर्गत्य । मधुसूदनाश्रया इति सिद्धार्थाः । दाशार्हका यादवविशेषास्तदाद्या रामादयः कुशस्थलीं द्वारकां ययुः ।। ४९ ।।

इति श्रीभागवतटिप्पण्यां सत्यधर्मकृतायां दशम उत्तरार्धे षट्सप्ततितमोऽध्यायः ।। १०-७६ ।।

## श्रीमद्वल्लभाचार्य्यकृता सुबोधिनी

वाक्यापराधे वधं कृत्वा, मानसिकापराधे ताडनमाह कलिङ्गराजमिति । येनोपहसितः, पलायमानं तं दशमे पदे धृत्वा, क्रियाशक्तिः प्राणस्येति, 'नव वै पुरुषे प्राणा' इति श्रुतेः प्राणानुरोधेन नव प्रयत्नानुपेक्ष्य, दशमे पदे तं गृहीतवान् । ततो लोकेभ्यः दन्ताः प्रदर्शिता इति पुनः प्रदर्शननिवृत्तये दन्तानपातयत् । अत्रापि क्रुद्ध इत्यविचारः । तस्य दोषमाह

योऽहसदिति। **विवृतैर्द्विजैरिति** दन्तानामेव पातने हेतुः ॥ ३७ ॥ अन्येऽप्यनुमोदनकर्तारः निर्भिन्नाः बाहवः ऊरवः शिरांसि च येषां तादृशा जाताः। तत्राभिज्ञानं **रुधिरोक्षिताः** रुधिरेणोक्षिता इति। ततो भीताः सन्तः दुद्रुवुः। स्वतोऽपि भयेन पलायने बलोत्कर्षो न भवतीति पलायने तत्क्रियां साधनमाह **परिघार्दिता** इति ॥ ३८ ॥ नन्वेवमनर्थे पौत्रविवाहे जाते भगवता किं कृतमित्यत आह **निहत** इति। एक एव श्यालो हतः। विवाहे श्यालः पाविन्यहेतुर्भवति। अतः किञ्चिद्वक्तव्यम्। धर्मस्थापनायां दुष्टो मारणीय एव। अतो न वक्तव्यमेव। तदुभयं निषेधति। श्याले निहते साधु असाधु वा नाब्रवीदिति। ननु 'अप्रतिषिद्धमनुमतं भवती'ति तूष्णींभावेऽपि बलभद्रपक्षः स्यात्, तत्किं साध्ववचनेनेति चेत्, तत्राह **निहत** इति। कृते कार्ये वचनं व्यर्थमेव स्यात्। अनेन वक्तव्यो भवति, असाधु कृतमिति, तथापि नोक्तमिति सूच्यते। तत्र हेतुः। रुक्मिण्या स्नेहभङ्गभयादिति। भक्तत्वेऽपि मायायाः कार्यरूपा अविद्येति उत्पत्तिविचारेण स्नेहभङ्गः सम्भाव्यते। ततः प्रपन्नायाः तथात्वे ममापि तथात्वमुचितमिति सर्वथा स्नेहे भग्ने भक्तिमार्गो नश्यतीति भयम्। नन्वीश्वरस्य नष्टेऽपि मार्गे किं भयमिवेति चेत्। तत्राह हरिरिति। स हि सर्वदुःखहर्ता। अन्यथा सर्वेषां दुःखं न गच्छेदिति। तथैवासाध्ववचने बलस्य स्नेहभङ्गभयं हेतुः। तस्य स्नेहभङ्गे अवतारप्रयोजनं न भवेदिति। भगवद्व्यतिरिक्तानामन्यधर्मः प्रवर्तत इति स्नेहभङ्गसम्भवः, शक्तिर्विभक्तेति ॥ ३९ ॥ उभयोर्विनियोगमुक्त्वा, त्रिषूत्साहरहितेषु सत्सु शिष्टानां कृत्यमाह **ततोऽनिरुद्धमिति**। तदीयानां प्रतिबन्धनिवृत्तये रामः पुनरादित्वेन गृहीतो वरयात्रिकाणाम्। सूर्यया नवोढया सह। **रथं समारोप्येति** दुःखितत्वात् बलात् समारोपणमुक्तम्। मातामहः पितामहो मारित इति। **कुशस्थलीमिति** प्रदेशस्य विषमत्वं सूचितम्। दशार्हा यादवविशेषाः। तां दशामर्हन्तीति। शिष्टानामुभयमपीष्टमित्याह **सिद्धाखिलार्था** इति। शत्रुमरणमिष्टप्राप्तिश्च अखिलार्थाः। तथात्वे हेतुः **मधुसूदनाश्रया** इति। एवं धर्मप्रस्तावे अनिरुद्धो धर्मरक्षक इति तत्कथायां दुष्टनिवारणमुक्तम् ॥ ४० ॥

इति श्रीभागवतसुबोधिन्यां श्रीमल्लक्ष्मणभट्टात्मजश्रीमद्वल्लभदीक्षितविरचितायां दशमस्कन्धविवरणे उत्तरार्धे द्वादशोऽध्यायः ॥ १२ ॥

### श्रीविट्ठलरायात्मजश्रीवल्लभकृतलेखः

**निहते रुक्मिणीत्यत्र। तत्र हेतुरिति।** असाधुत्वेन वक्तव्यत्वे साधुत्वाकथने इत्यर्थः।

इति द्वादशाध्यायव्याख्या समाप्ता।

### श्रीसुबोधिनी—सारः

तरसा वेगेन दशमे पदे कलिंगराजं गृहीत्वा दन्तानत्रोटयत् क्रुद्धः सन् तत्र हेतुः विवृतैर्निरावरणैरोष्ठतो बहिर्गतैर्दन्तैर्योऽहसत् ॥ ३७ ॥ बलेन कर्त्रा परिघेणार्दिताः पीडिताः निर्भिन्नानि बाहूरुशिरांसि येषां ते रुधिरेणोक्षिताः सेचिता अन्ये भूपा दुद्रुवुः ॥ ३८ ॥ श्यामुच्छिष्टं लाति गृह्णातीति तस्मिन् रुक्मिणि निहते सति हरिः श्रीकृष्णः साधु असाधु इति वा नाऽब्रवीत् रुक्मिणीबलयो स्नेहस्य प्रीतेर्भङ्गभयात् नाशभयतः हे राजन्! ॥ ३९ ॥ ततोऽनंतरं सूर्यया नवोढया वध्वा सह वरमनिरुद्धं रथं समारोप्य भोजकटात् पुरात् सिद्धाः पूर्णा अखिलाः सर्वेऽर्था मनोरथा येषां मधुसूदनमाश्रयन्तीति ते रामादयो दशार्हा यादवाः कुशस्थलीं द्वारकां ययुः ॥ ४० ॥

इति श्रीमद्भा० दशमस्कन्धे उ० सुबोधिन्यां टीकायामेकषष्टितमोऽध्यायः ॥ ६१ ॥

### गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

कलिङ्गराजं तु तरसा झटिति पलायमानं दशमे एव पादविन्यासे गृहीत्वा क्रुद्धः संस्तस्य दन्तान् भङ्क्त्वा अपातयत्। तत्र हेतुं सूचयन्नाह—य इति। यो विवृतैः प्रकाशितैर्दन्तैरुपलक्षितः सन्नहसत् तस्येत्यर्थः ॥ ३७ ॥ अन्ये च रुक्मिपक्षीया राजानो बलेन कर्त्रा परिघेन साधनेनार्दितास्ताडिता अतो निर्भिन्नानि बाह्वादीनि येषां ते, अत एव रुधिरेणोक्षिताः भीताश्च दुद्रुवुः पलायितवन्तः ॥ ३८ ॥ एवं स्वश्याले रुक्मिणि निहते सति हरिः कृष्णः 'साधु जातमसाधु वा जातम्' इति किमपि नाब्रवीत्। 'इदमपि राजनीतिचातुर्यम्' इति सूचयन् सम्बोधयति—राजन्निति। तत्र हेतुमाह—रुक्मिणीबलयोः स्नेहभङ्गभयादिति। साधु कृतमित्युक्ते रुक्मिण्या वैमनस्यं स्यात्, असाधु कृतमित्युक्ते च बलस्य वैमनस्यं स्यादिति द्वयं माभूत् इत्याशयेन तूष्णीमासीत् इत्यर्थः ॥ ३९ ॥ ततश्च रामादयो दाशार्हा यादवविशेषाः सूर्यया नवोढया चारुमत्या सहानिरुद्धं श्रेष्ठं रथं समारोप्य भोजकटाख्यात् पुरात् कुशस्थलीं द्वारकां प्रतिययुः। गमने हेतुमाह—सिद्धा अखिला अर्था अनिरुद्धविवाहशत्रुवधादिरूपप्रयोजनानि येषां ते। प्रयोजनसिद्धौ हेतुमाह—मधुसूदनाश्रया इति ॥ ४० ॥

इति श्रीवल्लभाचार्य-वंश्यगोपालसूनुना। श्रीमन्मुकुन्दरायाणां पादसेवाधिकारिणा ॥ १ ॥
श्रीमद्गिरिधराख्येन भजनानन्दसिद्धये। श्रीमद्भागवतस्येयं टीका बालप्रबोधिनी ॥ २ ॥
रचिता दशमे तत्र राजसानां निरोधने। एकषष्टितमः कृष्णपुत्रादिविनिरूपकः ॥ ३ ॥

## अन्वितार्थप्रकाशिका

कलिङ्गेति ।। यो विवृतैः प्रकाशितैर्दन्तैरुपलक्षितः सन्नहसत् तं कलिङ्गराजं तु तरसा झटिति पलायमानं दशमे एव पदे पादविन्यासे गृहीत्वा क्रुद्धः संस्तस्य दन्तान् भङ्क्त्वा अपातयत् ।। ३७ ।। अन्य इति ।। अन्ये च रुक्मिपक्षगा राजानो बलेन कर्त्रा परिघेन करणेनार्दितास्ताडिताः अतो निर्भिन्नानि बाह्वादीनि येषां ते अत एव रुधिरेणोक्षिताः भीताश्च दुद्रुवुः पलायितवन्तः ।। ३८ ।। निहत इति ।। एवं स्वश्याले रुक्मिणि हतेऽपि हरिः रुक्मिणीबलयोः स्नेहभङ्गभयात् साधु कृतमित्युक्तौ रुक्मिण्या वैमनस्यं स्यात् । असाध्वित्युक्ते तु बलस्येति हेतोः साधु जातमसाधु वेति किमपि नाब्रवीत् ।। ३९ ।। तत इति ।। ततश्च सिद्धा अखिला अर्था अनिरुद्धविवाहशत्रुवधादिरूपप्रयोजनानि येषां ते मधुसूदनाश्रयाः रामादयो दशार्हा यादवाः सूर्यया नवोढया चारुमत्या सहानिरुद्धं श्रेष्ठं रथं समारोप्य भोजकटाख्यात्पुरात्कुशस्थलीं द्वारकां प्रति ययुः ।। ४० ।।

इति श्रीकृष्णसेवार्थमन्वितार्थप्रकाशिकाम् । गङ्गासहायो दशमस्यैकषष्टितमे व्यधात् ।।

इति श्रीभागवते महापुराणे दशमस्कन्धेऽन्वितार्थप्रकाशिकायामेकषष्टितमोऽध्यायः ।। ६१ ।।

## श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्

विवृतैरुद्घाटितैः द्विजैर्दन्तैः ।। ३७ ।। रुधिरेणोक्षिताः संसिक्ताः ।। ३८ ।। रुक्मिणीरुक्मिसंज्ञे हरिर्नाब्रवीत् ।। ३९ ।। सूर्यया नवपरिणीतया वध्वा दशार्हैः दाशार्हैः यादवः सिद्धाखिलार्थाः निष्पन्नसर्वप्रयोजनार्थाः कुशस्थलीं द्वारकां ।। ४० ।।

इति श्रीशुद्धैकांतधर्मप्रवर्त्तकगुरुराजेन्द्रश्रीसहजानंदस्वामिशिष्यगोपालानंदमुनिविरचिते निगूढार्थप्रकाशके श्रीमद्भागवतस्य दशमस्कंधव्याख्याने अनिरुद्धविवाहे रुक्मिवधो नामैकषष्टितमोऽध्यायः ।। ६१ ।।

## भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

अन्ये इति ।। बलेन बलभद्रेण, परिघार्दिताः परिघेण ताडिताः, अत एव भीताः, अन्ये राजानः, निर्भिन्नबाहूरुशिरसः रुधिरोक्षिताः सन्तः, दुद्रुवुः ।। ३७ ।। निहत इति ।। हरेः श्रीकृष्णस्य, श्याले रुक्मिणि, निहते मारिते सत्यपि, रुक्मिणी, बलयोः रामकृष्णयोः, यः स्नेहस्तस्य भङ्गभयात्, साधु असाधु वा, न अब्रवीत् । अत्र केचित् हरिरिति प्रथमान्तं पठित्वा, रुक्मिणि श्याले, निहते बलेन मारिते सत्यपि, हे राजन्, हरिः श्रीकृष्णः, रुक्मिणीबलयोः स्वस्मिन्, स्नेहभङ्गभयात्, साधु असाधु वा, न अब्रवीत् । इति व्याख्यायन्ते, ते 'दुःखं समुत्थमसहोऽस्मदयोगभीत्या नैवाब्रवीः किमपि तेन वयं जितास्ते' इति पूर्वोक्तमस्मृत्वा व्याख्यायन्ते इति प्रतिभाति ।। ३८ ।। तत इति ।। मधुसूदनः श्रीकृष्णः आश्रयो येषां ते, सिद्धाः अखिलाः सकलाः अर्थाः अभ्युदयशत्रुवधादयः येषां ते, रामादयः, दशार्हाः, सूर्यया नवोढया सह, वरं अनिरुद्धं रथं समारोप्य, ततः भोजकटात्, कुशस्थलीं, ययुः ।। ३९ ।।

इति श्रीधर्मधुरंधरश्रीधर्मात्मजप्रत्यक्षपुरुषोत्तमश्रीसहजानन्दस्वामिसुतश्रीरघुवीराचार्यसूनुभगवत्प्रसादाचार्यविरचितायामन्वयार्थावबोधिन्यां भक्तमनोरञ्जन्याख्यायां श्रीमद्भागवतटीकायां दशमस्कन्धोत्तरार्द्धे एकषष्टितमोऽध्यायः ।। ६१ ।।

## कृष्णप्रिया

प्रथम तो कलिङ्गराज दाँत दिखाकर हँसी उड़ाता था अब बाजी बदलने पर भागने लगा, लेकिन बलरामजी ने दस ही कदम पर उसे पकड़ लिया और रोषाविष्ट होकर उसके दाँत तोड़ दिये ।। ३७ ।। श्री दाऊजी ने अपने मुद्गर की चोट से दूसरे राजाओं के हाथ, पैर, बाँह, जाँघ, मस्तक आदि तोड़ दिये । अङ्गभङ्ग होने पर रुधिर से लथपथ और भयभीत हो वहाँ से भागने लगे ।।३८।। राजन् परीक्षित् ! भगवान् बड़े विवेकी थे । मन से निर्णय किया कि बलरामजी का समर्थन करने पर श्रीरुक्मिणीजी नाराज होंगी और रुक्मि के वध को अनुचित कहने पर दाऊजी नाराज होंगे इसलिये योग्य अयोग्य कुछ नहीं बोले ।। ३९ ।। पुनः श्रीअनिरुद्ध का विवाह सम्पन्न होने पर और शत्रुवध होने पर दोनों कार्य बन जाने पर भगवदाश्रित यादव, श्रीबलभद्रजी, नवविवाहिता दुलहिनी रोचना के साथ श्री अनिरुद्धजी को रथ पर बैठाकर भोजकट नगर से श्रीद्वारिका नगरी की ओर प्रस्थान किया ।। ४० ।।

इति श्रीमद्भागवतस्य दशमस्कन्धे उत्तरार्द्धेऽनिरुद्धविवाहे हिन्दीभाषान्तरं समाप्तम् ।। ६१ ।।

# अथ द्विषष्टितमोऽध्यायः

| श्लोकाः | अनु. | इ. वं. | मि. उ. | उ. | श्लो. अ. | उ. अ. | अ. अ. | सं. श्लो. अ. | सं. श्लो. | अ. |
|---|---|---|---|---|---|---|---|---|---|---|
| ३५ | ३० | १ | ४ | ४ | ६६२ | २० | ४१ | १०५३ | ३२॥। | ५ |

**राजोवाच**

**बाणस्य तनयामूषामुपयेमे यदूत्तमः।[१]**
**तत्र युद्धमभूद् घोरं हरिशंकरयोर्महत्। एतत् सर्वं महायोगिन् समाख्यातुं त्वमर्हसि ॥ १ ॥**

**श्रीशुक उवाच**

**बाणः पुत्रशतज्येष्ठो [२]बलेरासीन्महात्मनः। येन वामनरूपाय हरयेऽदायि मेदिनी ॥ २ ॥**
**तस्यौरसः सुतो बाणः शिवभक्तिरतः सदा। मान्यो वदान्यो धीमांश्च सत्यसंधो दृढव्रतः ॥ ३ ॥**
**शोणिताख्ये पुरे रम्ये स राज्यमकरोत् पुरा।**
**तस्य शम्भोः प्रसादेन किंकरा इव तेऽमराः। सहस्रबाहुर्वाद्येन ताण्डवेऽतोषयन्मृडम् ॥ ४ ॥**

**कर्दमक्षमा**

अन्वयः—राजा उवाच—यदूत्तमः, बाणस्य, तनयाम्, ऊषाम्, उपयेमे, तत्र, हरिशङ्करयोः, महत्, घोरम्, युद्धम्, अभूत्, महायोगिन्! त्वम्, एतत्, सर्वम्, समाख्यातुम्, अर्हसि ॥ १ ॥ श्रीशुक उवाच—येन, वामनरूपाय, हरये, मेदिनी, अदायि, तस्य, बलेः, महात्मनः, पुत्रशतज्येष्ठः, बाणः, आसीत् ॥ २ ॥ तस्य, शिवभक्तिरतः, औरसः, सुतः, बाणः, मान्यः, वदान्यः, श्रीमान्, सत्यसन्धः, दृढव्रतः, आसीत् ॥ ३ ॥ सः, शोणिताख्ये, रम्ये, पुरे, पुरा, राज्यम्, अकरोत्, तस्य, शम्भोः, प्रसादेन, ते, अमराः, किङ्कराः, इव, आसन्, सहस्रबाहुः, बाणः, वाद्येन, ताण्डवे, मृडम्, अतोषयत् ॥ ४ ॥

**श्रीधरस्वामिविरचिता भावार्थदीपिका**

द्वियुक्षष्टितमे प्रोक्तमनिरुद्धस्य रोधनम्। कन्यया रममाणस्य बाणेन बहुबाहुना ॥ १ ॥
अनिरुद्धोद्वहेऽन्यस्मिन् बाणयादवसंयुगे। श्रीकृष्णः श्रीहरं जित्वा बाणबाहूनथाच्छिनत् ॥ २ ॥ १–४ ॥

**श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः**

कन्यया ऊषया (१)। अन्यस्मिन् द्वितीये। 'पाणिग्रहणमुद्वहः' इति नाममाला। अथ हरजयानंतरम् (२)। उपयेमे "उपाद्यमः स्वकरणे" इत्यात्मनेपदम्। तत्र विवाहनिमित्तम् ॥ १ ॥ पुत्राणां शतं तत्र ज्येष्ठः। येन बलिना। अदायि दत्ता ॥ २ ॥ तस्य बलेः। पाणिगृहीतीभार्यायां जात औरसः। वदान्यः "गुणवान्दानशीलश्च वदान्यः पुरुषो मतः" इति नीलकण्ठः ॥ ३ ॥ स बाणः। तस्य बाणस्य। ते प्रसिद्धाः। तांडवे नृत्ये "तांडवं नटनं नाट्यं लास्यं नृत्यं च नर्तने" इत्यमरः। मृडं शिवम् 'गिरीशो गिरिशो मृडः' इति च ॥ ४ ॥

**श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी**

महात्मनः श्रीभगवद्भक्तस्यापि इति बाणस्याभक्तत्वं व्यज्य भगवद्विद्वेषप्रापकापराधविशेषस्य तादृशसत्सङ्गेनापि दुर्निवारत्वं दर्शितं तच्चापराधं महाभागवतसार्वभौमश्रीमृडाराधनेपि दुर्नाशं दर्शयन् प्रत्युत तत्सम्बन्धेन तस्यापि श्रीभगवता सह स्पर्द्धाभासो दृष्ट इति दर्शयितुमाह—सहस्रेत्यादि। सहस्रबाहुरिति वाद्ये कौशलादिकं व्यञ्जितं मृडमिति ताण्डवे हेतुगर्भं नाम मृडयति भगवद्भक्तिमयताण्डवादिना सुखयति ॥ ४ ॥

---

१. ६२–६३ अध्यायौ विजये न स्तः। अयं सार्धश्लोकः सर्वसंमतो न इति जीव.। इतः परम् अष्टार्धानि क्वचित् न दृश्यते इति च. पु. टि। २. बलः–प्रा. पा.।

## श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी

महात्मनः श्रीभगवद्भक्तस्यापि, इति बाणस्याभक्तत्वं ध्वनितम्। सहस्रबाहुरिति च वाद्ये कौशलादिकम्, अतरताण्डवे श्रीभगवत्प्रेमोल्लासेन क्रियमाणे तन्नृत्येऽतोषयत्। मृड़मिति श्रीभगवद्भक्तिप्रवर्त्तनादिना जगत्सुखकरमिति भावः॥ २॥ भगवान् सर्व्वैश्वर्य्ययुक्त इति श्रीकृष्णगुणावताराभिप्रायेण, अतएव सर्व्वेषां भूतानां जीवानामीशः प्रभुः। किञ्च, शरण्य आश्रयणयोग्यः, यतो भक्तवत्सलः, अतश्छन्दयामास, इच्छां कारितवान्। यद्वा, भगवान् परमदयालुरित्यर्थः, अतः सर्व्वेषां भूतानां निजगणभेदानां दुःस्वभावानामपीशः पालकः, किञ्च, शरण्यः शरणागतरक्षकः, किञ्च, भक्तवत्सलः। एवं विशेषणानामेषां यथोत्तरं वरच्छन्दनहेतुत्वे श्रेष्ठ्यम्॥ ३॥ श्रीभगवता युद्धे कार्य्यो बाणबाहुदर्पच्छेदः श्रीशिवस्यानुमत एवेति दर्शयंस्तत्प्रसंगमाह—स इति पञ्चभिः। पार्श्वस्थं पुराधिपत्येन सदा तत्पुरे सपरिवारस्य तस्य निवासात्, तथा च श्रीहरिवंशे कुम्भाण्डचिन्तायाम् ( विष्णु० प० ११६।८१ )—'देवदानवसङ्घानां यः कर्त्ता भुवनप्रभुः। स भवः कार्त्तिकेयश्च कृतवासो हि नः पुरे।' इति। अर्कवर्णेनेति श्रीशिवप्रसादान्महाधनसम्पत्तिस्तया दुर्म्मदता च सूचिता; सम्यक् स्पृशन्निति भक्तिश्च॥ ४॥

## श्रीसुदर्शनसूरिकृतशुकपक्षीयम्

द्विषष्टितमः स्फुटार्थः॥ १-३१॥

इति श्रीमद्भागवतव्याख्याने दशमस्कन्धे श्रीसुदर्शनसूरिकृतशुकपक्षीये द्विषष्टितमोऽध्यायः॥ ६२॥

## श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका

अथ अनिरुद्धविवाहप्रसङ्गात्तदीयमेव विवाहान्तरं समासत, श्रुतपूर्वं विस्तरबुभुत्सया पृच्छति राजा—बाणस्येति। ऊषामुषां नाम तनयां यदूत्तमो अनिरुद्धः तत्र निमित्ते हरिशङ्करयोः कृष्णशिवयोः महद्घोरञ्च युद्धमभूदस्येतत्सर्वं मह्यमाख्यातुमर्हसि॥ १॥ आचष्टे—बाण इत्यादिना। बलेः पुत्राणां शतस्य ज्येष्ठः बाणो नामासीन् कोसौ बलिरित्यत आह—येन बलिना मेदिनी भूमिरदायि दत्ता॥ २॥ बाणं विशिनष्टि—तस्येति। तस्य बलेरौरसः उरसा निर्मितः सुतः सत्ये सन्धा अभिसन्धिर्यस्य धृतं रुद्रोपासनात्मकं व्रतं येन सः॥ ३॥ शोणिताख्य इति। स बाणः तस्य बाणस्य शम्भोः प्रसादेन वरेण हेतुना अमरा देवाः किङ्करा इव॥ ४॥

## श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

श्रीशुक उवाच

तथा ताभिर्वरस्त्रीभीरममाणो जनार्दनः। दिनानि हृतसापत्न्यः सुबहून्यत्यवासयत्॥ १॥

राजोवाच

तासां षोडशसाहस्रमहिषीणां जनार्दनः। तृप्तिं कथं चकारैको मानुषं देहमाश्रितः॥ २॥

श्रीशुक उवाच

हन्त ते कथयिष्यामि श्रोतॄणां विस्मयावहम्। यथा चकार बह्वीनामेकस्तृप्तिं जनार्दनः॥ ३॥

अग्रे एकोनसप्ततितमाध्यायादारभ्य पाठसाम्यं वर्त्तते नास्त्यत्रेतरपाठममानम्।

## श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शिनी

द्विषष्टितम ऊषाया अनिरुद्धेन सङ्गमः। चित्रलेखाहृतेनैतं बाणो बध्नादितीर्य्यते॥ १-४॥

## गूढार्थदीपिनी

द्विषष्टितम ऊषाया अनिरुद्धेन सङ्गमम्। दृष्ट्वा बाणोऽहिपाशेन तं बबन्धेति वर्ण्यते॥ १॥

बाणेति सार्द्धम्। यदूत्तमः अनिरुद्धः। उपयेमे विवाहितवान्॥ १॥ येन बलिना॥ २॥ औरसः पाणिगृहीतभार्यायां प्रथमो जातः पुत्रः। वदान्यः दानशीलः सन्धा प्रतिज्ञा॥ ३॥ शोणितेति सार्द्धम्। ताण्डवे नृत्ये मडं शिवमतोषयत्॥ ४॥

## श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः

अनिरुद्धस्य विवाहान्तरं वक्तुं तावत् द्विषष्टितमे तस्य बाणकन्यान्तःपुरे प्रवेशमाह-बाण इति॥ २-४॥

## श्रीसत्यधर्मकृता श्रीभागवतटिप्पणी

॥ हरिः ॐ ॥ अथोऽनिरुद्धं सह भार्यया रथमित्येतदुत्तरं बाणस्य तनयामुषामुपयेमे यदूत्तम इति श्लोकमारभ्यैवं कृष्णस्य विजयं शङ्करेण च संयुगम् । संसरत्प्रातरुत्थाय तस्य न स्यात्पराजय इत्यन्तमध्यायद्वयं क्वचित्पुस्तके संदृष्ट्यां नास्तीति प्राचीना न व्यचीचरन्विवृतिम् । बहुपुस्तकेषु वर्तत्वेऽपि चानुक्रमणिकायां बाणस्य भुजकृन्तनमित्युक्तेस्तथा तृतीये च शम्बरं द्विविधं बाणं मुरबल्कलमेव च । अन्यांश्च दन्तवक्त्रादीनवधीत्कांश्चाघातयदित्युक्तेश्च तद्व्याक्रियते । उषा उषेति पर्यायो । उषा त्वश्विभार्या । तत्र हरिश्च शङ्करश्च तयोर्महद्घोरं युद्धमभूत्तत्कथमेतत्सर्वं समाख्यातुमर्हसीत्यन्वयः ॥ १ ॥ महात्मनो बलेः पुत्राणां शतं तन्मध्ये ज्येष्ठो बाण आसीत् । किं महात्मत्वं तस्येत्यत आह ॥ येनेति ॥ २ ॥ सुतो न वाल्हीकादिवद्गृहीत इत्याह । औरस इति । पित्रनुरूपतां वक्तुं मान्यादिविशेषणम् ॥ ३ ॥ त इतरेऽमराः किङ्करा इव भृत्या इवाभवन् । सहस्रबाहुर्बाणो वाद्येन मृढमतोषयत् ॥ ४ ॥

## श्रीमद्वल्लभाचार्यकृता सुबोधिनी

निरोधे राजसफले देवानां विजयः स्फुटः । निरूप्यते यतो रुद्धा नान्यं सम्भावयन्ति हि ॥ १ ॥
त्रयोदशे ततोऽध्याये हेतुस्तस्य निरूप्यते । अनिरुद्धप्रसङ्गेन धर्मः सिध्यति तेन हि ॥ २ ॥
सर्वथाप्युपकारित्वात्सर्वतो भयशङ्कया । परमानन्दरूपत्वात्सफलो राजसः स्मृतः ॥ ३ ॥
अनिरुद्धो निरोद्धव्यो निरुद्धो येन केनचित् । तन्मूलाः सर्व एवैते विनिरुद्धा भवन्ति हि ॥ ४ ॥

सर्वदेवजयार्थं प्रथममनिरुद्धस्य बन्धनं निरूप्यते । निरुद्धं मनः सर्वहेतुर्भवतीति । तत्रानिरुद्धबन्धनं कालेनैवेति उषोपाख्यानमुच्यते । कालेऽपि विषयवैचित्र्यीहेतुरिति चित्रलेखा नेत्री ।

स्वप्नेऽपि चेत्प्रसङ्गः स्याद्बद्धो भवति मानवः । अन्येन वा तथा ज्ञातः किमु साक्षात्तथाविधः ॥ १ ॥

प्रथममनिरुद्धबन्धनहेतुसम्बन्धनिरूपकनयनार्थं प्रस्तावनामाह—**बाणः पुत्रशतज्येष्ठ** इति सप्तदशभिः । पुत्राणां शतमध्ये ज्येष्ठ आसीत् । भगवता स बद्ध इति तन्निष्कृतिसूचनार्थं भगवदंशोऽनिरुद्धः तत्पुत्रेण बद्ध इति सूचयितुं बलेः पुत्रत्वं निरूप्यते । ननु तेनैव कथं न बध्यते, तत्राह **महात्मन** इति । स हि महात्मा नापकरोति । **पुत्रशतज्येष्ठ** इति तत्कृतं पितृकृतमेवेति ज्ञापयति । बलेरिवास्यापि बन्धशङ्कापि व्यावर्त्यते, पार्ष्णिग्राहा बहवः सन्तीति । तथापि भगवता सह विरोधे न सामर्थ्यं भवतीति तस्य महादेवोपासनमाह **सहस्रबाहुरि**ति । सहस्रबाहुत्वं च तत्कृपयैव । तेन बहुधा लब्धप्रसादः महादेवात् स इति सूचितम् । ताण्डवे उत्साहवृद्ध्यर्थं वाद्यभूयस्त्वमपेक्ष्यते । तत्र बहुभिर्वादने व्यधिकरणप्रयत्नानां समता न भवतीति, एकेन बहुवाद्यकरणं तोषहेतुर्भवतीति, सहस्रबाहुभिर्वाद्यैः ताण्डवे मृडमतोषयत् ॥ १ ॥ तुष्टस्य कृत्यमाह भगवानिति । वरदानसामर्थ्यं भगवच्छब्देनोक्तम् । तद्दत्तं कोऽप्यन्यथा न करिष्यतीति सूचयितुमाह **सर्वभूतेश** इति । सर्वनियामकः । स एव भूतश्चेत् शरीरसम्बन्धेन जातः साहङ्कारः, तदावश्यमहङ्कारनियामकवश्यो भवति । अहङ्कारे सात्त्विकादिव्युदासं मत्वा आह सर्वेति । सामर्थ्याप्रतिघातो निरूप्य दातृत्वभावं निरूपयति **शरण्य** इति । शरणार्हः स एव भवति, यः प्रपन्नदुःखनिवारकः । तथाप्युचितदाता चेत् परिमितमेव यच्छेदिति, विशेषदानार्थमाह **भक्तवत्सल** इति । यथा वत्सला गौरन्तःस्थितमपि दुग्धं तल्लोभेनान्येभ्योऽपि यच्छति, तथा भगवान् भक्तेभ्यः अदेयमपि यच्छतीति 'वरं ब्रूही'ति छन्दयामास । छन्दनं कामचारनियोगः । ततः स गुह्यं चिकीर्षुर्बाणः सर्वत्र स्वयं गच्छन् शत्रुबाहुल्याद्गृहरक्षार्थं चिन्ताकुलितः तं महादेवं पुराधिपं पुररक्षकं वव्रे । अनेन तस्य पुरस्य सर्वाभेद्यता निरूपिता । तेन देवादीनामपि तत्र प्रतीकारो निवर्तितः ॥ २ ॥ तर्हि तादृशस्य कथं नाश इत्याशङ्क्य, तस्यैव क्रोधेनेति वक्तुं प्रसङ्गान्तरमाह स **एकदेति** षड्भिः । गिरिशो महादेवः, तत्रैव गिरौ शेते इति निरन्तरस्थित्या धार्ष्ट्यं सूचितम् । **पार्श्वस्थमि**ति तत्रापि भक्तकृपया तस्यैव पार्श्वे वर्तमानम्, तेन सुतरामेव तस्य स्मयः । वीर्यस्य दुष्टो मदो यस्य । उपजीव्यातिक्रमकर्ता । वीर्यस्मयेन विवेकरहितस्य कृत्यमाह **किरीटेनार्कवर्णेनेति** । विनीतो हि मुकुटोष्णीषादिकं स्थापयित्वा साष्टाङ्गं प्रणतः विज्ञापयेत् । अयं तु किरीटमेव परिधाय, तत्राप्यग्निवर्णं स्पर्शेऽत्यन्तपरुषम्, तेन चरणाम्बुजमतिकोमलं स्पृशन् आह **नमस्ये** इति । स्तौति । वाचा नमस्कारो वा । महादेवेति न त्वत्सदृशोऽन्योऽस्ति, य उपास्यः स्यादिति । **लोकानां गुरु**मिति । उपदेष्टा फलदाता च भवानेवेति साधनफलरूपत्वं निरूपितम् । तेन त्वमेव प्रार्थनीयः, न त्वन्य इति प्रार्थनायां हेतुरुक्तः । किञ्च । प्रार्थितं सर्वमयुक्तमपि प्रयच्छति । नापि यत्किञ्चित्प्रार्थनायामपि क्रोधं मन्यत इति दृष्टान्तमिवाह **पुंसामपूर्णकामाना**मिति । देवतान्तरतपःप्रभृतिसाधनैः यदा कामना न सिद्धा भवन्ति, तेषां सर्वोपायपरिभ्रष्टानामाश्रयमात्रेण सर्वपूरकममराङ्घ्रिपवत् कल्पवृक्षवत् कामपूरः अमराङ्घ्रिपः यः ॥ ४ ॥

## श्रीविट्ठलरायात्मजश्रीवल्लभकृतलेखः

**त्रयोदशेऽध्याये**। अनिरुद्ध इति। येन केनचिन्निरुद्धः अनिरुद्धः भगवता स्वस्मिन्निरोद्धव्यः इत्यर्थः। तत्र हेतुः **तन्मूला** इति। एते भक्तानामिन्द्रियादयः सर्वे अनिरुद्धमूलाः। तस्य मनोधिदेवत्वादिति भावः। **कालेनैवेतीति**। दैत्यानां कालसेवकत्वेन कालरूपत्वात्तत्पुत्र्या ऊषाया अपि कालरूपत्वमिति भावः। **कालेऽपीति**। कालस्य हेतुत्वेपि विषयवैचित्री मुख्यो हेतुः। तस्यां सत्यां मनोबन्धनं सम्यग्भवतीति भावः। **प्रसङ्ग** इति। कालोपासकैर्दैत्यैरसद्भिः प्रसङ्ग इत्यर्थः। अत एवानिरुद्धबन्धने कालस्य हेतुत्वमुक्तमिति भावः। **साक्षादिति**। जाग्रद्दशायामपि दुःसङ्गवानित्यर्थः। **बाणः पुत्रशतेत्यस्याभासे**। **प्रथम**मिति। अनिरुद्धस्य बन्धने हेतुः ऊषा, तस्याः सम्बन्धनिरूपिका चित्रलेखा, सामान्यनिर्देशात्पुल्लिङ्गकथनम्। तत्कृतं नयनमनिरुद्धस्य। तदर्थमित्यर्थः। **इति सप्तदशभिरिति**। इति श्लोकमारभ्याग्रिमैः सप्तदशभिरित्यर्थः। पूर्वार्धाष्टमाध्याये 'ततस्तु भगवान् कृष्ण' इति श्लोकप्रतीके टिप्पण्यामेवं व्याख्यातम्, तद्रीत्यात्राप्युच्यते।

## श्रीसुबोधिनी-सारः

राजप्रश्नः। बाणस्य तनयां पुत्रीम् ऊषां यदूत्तमोऽनिरुद्ध उपयेमे परिणिन्ये तत्र विवाहे हरिशंकरयोर्महत् युद्धमभूत् घोरं दारुणं च एतत् सर्वं समाख्यातुं त्वमर्हसि हे महायोगिन्॥ १॥ शुकोक्तिः। महात्मनोत्युदारस्य बलेः पुत्रशते ज्येष्ठो बाणोऽभूत् कोसौ बलिरित्यपेक्षायामाह। वामनरूपाय हरये येन मेदिनी पृथिवी अदायि पादत्रयेण दत्तासीत्॥ २॥ तस्य औरसो हृदयजो बाणः सुतः सदाशिवस्य भक्तौ रतः मान्यो वदान्यो दानी धीमान् सत्यप्रतिज्ञो दृढं व्रतं संकल्पो यस्य सः॥ ३॥ रम्ये मनोहरे शोणितमित्याख्या नाम यस्य तस्मिन् पुरे पुरा पूर्वं स राज्यमकरोत् तस्य बाणस्य शम्भोः शिवस्य प्रसादेन तेऽमरा देवाः किंकरा भृत्या इवासन् सहस्रबाहुः स बाणो वाद्येन हेतुना तांडवे नृत्ये मृडं रुद्रम् अतोषयत्॥ ४॥

## गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

द्वियुक्षष्टितमे कृष्णपौत्रस्य बाणकन्यया। ऊषया ह्यनिरुद्धस्य रमणं विनिरूप्यते॥ १॥

अनिरुद्धविवाहप्रसङ्गात् तदीयमेव विवाहान्तरं समासतः श्रुतपूर्वं विस्तरबुभुत्सया पृच्छति—बाणस्येति। यदूत्तमः अनिरुद्धः। स्पष्टमन्यत्॥ १॥ एवं पृष्टस्तद्विवाहं विस्तरतो निरूपयति—बाण इत्यादिना अध्यायद्वयेन। महात्मनोऽत्युदारस्यात्युदारचित्तस्य बलेः पुत्राणां शतस्य ज्येष्ठः पुत्रः बाणो नामासीत्। कथं तस्य महात्मत्वं तत्राह—येन बलिना वामनरूपाय हरये मेदिनी भूमिरदायि दत्ता॥ २॥ बाणं विशिनष्टि—तस्येति। तस्य बलेः सुतो बाणो सदाशिवभक्तिरतः। दत्तः पालितः क्रीतो वापि पुत्रो भवति तच्छङ्कावारणायाह—औरस इति। मान्यः, वदान्यः लोके सन्मानयोग्यः अत्युदारचित्तः, धीमान् व्यवहारे निपुणबुद्धिः, सत्यसन्धः सत्यसङ्कल्पः, धृतव्रतः धृतं रुद्रोपासनात्मकं व्रतं येन सः॥ ३॥ ते आराध्यत्वेन प्रसिद्धा अपि अमरा देवाः शम्भोः प्रसादेन वरेण तस्य बाणस्य किङ्करा इव स्थिताः। स्पष्टमन्यत्॥ ४॥

## अन्वितार्थप्रकाशिका

द्विषष्टितमके बाणोऽनिरुद्धं चोषया रतम्। नागपाशैर्बबन्धात्र श्लोकाः षट्त्रिंशदीरिताः ( ३६ )॥
चत्वार्युवाचेति सार्द्धा अष्टत्रिंशदनुष्टुभः ( ३८॥ )॥ ६२॥

बाणस्येति सार्द्धम्॥ यदूत्तमः अनिरुद्धः बाणस्य तनयाम् ऊषाम् उपयेमे। तत्र हरिशङ्करयोः महत् घोरं युद्धमभूत्। हे महायोगिन्! त्वं एतत्सर्वं समाख्यातुम् अर्हसि। "राजोवाच। बाणस्येति सार्द्धपद्यम्। येन वामनरूपाय" इत्यादिसार्द्धपद्यद्वयं च न सर्वसम्मतमिति तोषिणी॥ १॥ बाण इति॥ येन वामनरूपाय हरये मेदिनी पृथ्वी अदायि दत्ता तस्य महात्मनः बलेः पुत्राणां शतस्य ज्येष्ठः पुत्रः बाणो नामासीत्॥ २॥ तस्येति॥ तस्य बलेः औरसः सुतः बाणः मान्यो लोके सम्मानयोग्यः वदान्य उदारचित्तः प्रियवाक् च धीमान् सत्यसन्धः सत्यप्रतिज्ञः धृतव्रतः सः सदाशिवभक्तिरतः आसीत्॥ ३॥ शोणितेति॥ सः पुरा शोणिताख्ये रम्ये पुरे राज्यमकरोत्। ते आराध्यत्वेन प्रसिद्धा अपि अमरा देवाः शम्भोः प्रसादेन वरेण तस्य बाणस्य किङ्करा इव स्थिताः॥ ४॥

## श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्

अथेदानीं द्विषष्टितमेऽध्यायेऽनिरुद्धस्य हरणं तस्य बंधनं चाह बाण इति तांडवे नृत्ये मृडं शंकरं॥ १॥ भगवान् शिवः वरेण छंदयामास प्रेरयामास वरं वरयेति प्रेरितवानित्यर्थः स बाणः पुराधिपं नगररक्षकं॥ २॥ गिरिशं गिरो शेति इति गिरिशस्तं॥ ३॥ कामपूरश्चासावमरांघ्रिपः कल्पवृक्षश्च तं॥ ४-५॥

**भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी**

कन्यया सुतया बाणोऽनिरुद्धं वीक्ष्य रोधनम् । क्रीडन्तं चक्र एतस्य द्वियुकृषष्टितमे बली ॥ १ ॥
अन्यस्मिन्ननिरुद्धस्योद्वाहे कृष्णो हरं युधि । बाणयादवयोर्जित्वा बाहून् बाणस्य सोऽच्छिनत् ॥ २ ॥

अनिरुद्धविवाहप्रसङ्गात्तदीयमेव विवाहान्तरं बुभुत्सया पृच्छति राजा बाणस्येति सार्द्धेन । बाणस्येति ॥ बाणस्य बाणासुरस्य, ऊषामूषेति नाम्ना प्रसिद्धां, तनयां सुतां, यदूत्तमोऽनिरुद्धः, उपयेमे । तत्र निमित्ते, हरिशंकरयोः श्रीकृष्णशंकरयोः, महत् घोरं, युद्धं अभूत् । हे महायोगिन्, एतत् सर्वं, समाख्यातुं त्वं, अर्हसि ॥ १ ॥ बाण इति । येन बलिना, वामनरूपाय, हरये, मेदिनी भूमिः, अदायि दत्ता । तथाभूतस्य, बलेः, पुत्राणां शतं तत्र ज्येष्ठः, बाण एतन्नामा, आसीत् ॥ २ ॥ बाणं विशिनष्टि तस्येत्यादिना एकश्लोकेन । तस्येति । तस्य बलेः, औरस उरसा निर्मितः, बाणो बाणाख्यः, सः सुतः, सदा शिवभक्तिरतः, मान्यः, वदान्यः, दाता महान्वा, धीमान्, सत्यसंधः सत्यप्रतिज्ञः, दृढव्रतः दृढीकृतरुद्रोपासनात्मकव्रतः च सन्, पुरा पूर्वं, शोणिताख्ये रम्ये पुरे, राज्यं अकरोत् ॥ ३ ॥ तस्येति । तस्य बाणस्य, शम्भोः प्रसादेन वरेण हेतुना, ते प्रसिद्धाः, अमराः देवाः, किंकराः इव, अभवन्निति शेषः । किं वहुना सहस्रं बाहवो यस्य स बाणः, वाद्येन वाद्यवादनेन, मृडं रुद्रं, ताण्डवे नृत्ये, अतोषयत् । मृडे ताण्डवनृत्यं कुर्वति सति सहस्रबाहुभिः पञ्चशतवाद्यानि वादयंस्तमतोषयदित्यर्थः ॥ ४ ॥

**कृष्णप्रिया**

## अनिरुद्ध-विवाह

महाराज परीक्षित् जी ने पूछा—भगवन् श्रीशुकाचार्यजी ! आप तो सर्वदर्शी समर्थ योगिवर हैं । नम्रता से निवेदन है कि यदुकुलशिरोमणि श्रीअनिरुद्धजी ने बाणासुर-कुमारी ऊषाजी के साथ विवाह किया था । इस अवसर पर भगवान् श्रीशङ्करजी और भगवान् श्रीकृष्णजी में परस्पर तुमुल सङ्ग्राम हुआ था । भगवन् इस वृत्तान्त को आप अपने श्रीमुख से सविस्तर सुनाने की अनुकम्पा करें ॥ १ ॥ महाराज श्रीशुकदेव जी ने कहा—राजन् ! भक्तवर महात्मा बलि के सौ पुत्रों में ज्येष्ठ पुत्र का नाम बाणासुर था । महामना बलि राजा ने वामन स्वरूप लेकर पधारे हुए भगवान् श्रीविष्णुजी को समस्त पृथ्वी को समर्पण किया था ॥ ३ ॥ महात्मा श्रीबलिजी का सुपुत्र बाणासुर भगवान् सदाशिव की भक्ति-सेवा में निरंतर संलग्न रहता था । बाणासुर समाज में सम्मान्य, परमोदार, दानी, धीमान्, सत्यप्रतिज्ञ, दृढव्रती पुरुष था । ३ ॥ बाणासुर मनोहर शोणितपुर में राज्य करता था । भगवान् श्रीशङ्करजी की कृपा से इन्द्रादि देवलोग भी सेवक के समान बाणासुर की सेवा करते थे । बाणासुर के एक सहस्र हाथ थे । एक बार ऐसा प्रसङ्ग आया कि भगवान् शङ्करजी ताण्डव नृत्य कर रहे थे तब बाणासुर ने भगवान् शङ्करजी को मृदङ्ग वाद्य बजाकर संतुष्ट कर दिया था ॥ ४ ॥

**भगवान् सर्वभूतेशः शरण्यो भक्तवत्सलः । वरेणच्छन्दयामास स तं वव्रे पुराधिपम् ॥ ५ ॥**
**स एकदाऽऽह गिरिशं पार्श्वस्थं वीर्यदुर्मदः । किरीटेनार्कवर्णेन संस्पृशंस्तत्पदाम्बुजम् ॥ ६ ॥**
**नमस्ये त्वां महादेव लोकानां गुरुमीश्वरम् । पुंसामपूर्णकामानां कामपूरामराङ्घ्रिपम् ॥ ७ ॥**
**दोःसहस्रं त्वया दत्तं परं भाराय मेऽभवत् । त्रिलोक्यां प्रतियोद्धारं न लभे त्वदृते समम् ॥ ८ ॥**

**कर्दमक्षमा**

अन्वयः—तम् वरेण, छन्दयामास, सः, सर्वभूतेशः, शरण्यः, भक्तवत्सलः, प्रसन्नः, जातः, सः, बाणः, तम्, पुराधिपम्, वव्रे ॥ ५ ॥ वीर्यदुर्मदः, स, एकदा, अर्कवर्णेन, किरीटेन, तत्, पदाम्बुजम्, स्पृशन्, पार्श्वस्थम्, गिरिशम्, आह ॥ ६ ॥ महादेव ! अपूर्णकामानाम्, पुंसाम्, कामपूरामराङ्घ्रिपम्, लोकानाम्, गुरुम्, ईश्वरम्, त्वाम्, नमस्ये ॥ ७ ॥ दोः, सहस्रम्, त्वया, दत्तम्, परम्, भाराय, मे, अभवत् । त्रिलोक्याम्, त्वद्, ऋते, समम्, प्रतियोद्धारम्, न, लभे ॥ ८ ॥

**श्रीधरस्वामिविरचिता भावार्थदीपिका**

पुराधिपं पुरपालकम् ॥ ५-६ ॥ कामान्पूरयतीति कामपूरः स चासावमरांघ्रिपः कल्पतरुस्तं त्वाम् ॥ ७-८ ॥

**श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः**

छन्दयामास वरार्थं प्रेरयामास । 'छदि—संवरणे' । स बाणः । तं शिवं पुराधिपं वव्रे—त्वं मम पुराधिपः स्या इति वरयामास ॥ ५ ॥ स बाणः । तत्पदांबुजं हरपदारविंदम् ॥ ६ ॥ लोकानां गुरुं ब्राह्मणत्वात् । ब्राह्मणत्वं तु शिवस्य दिव्या

तृतीयस्कन्धे स्फुटीकृतम्। "वधं भगवता साक्षात्सुनाभोदारबाहुना। आशासे पुत्रयोर्मह्यं मा क्रुद्धाद्ब्राह्मणाद्विभो॥" इति वाक्येन। "आचार्यत्वमाद्यवर्णे मया संस्थापितं धरे" इति वाराहोक्तेः। कामपूरको योऽमराङ्घ्रिपः कल्पतरुस्तत्तुल्यस्तम्॥ ७॥ तस्मान्ममापि कामः पूरणीय इत्याह—दोरिति। त्वदृते त्वां विनेति। यदि कृपया स्वयमेव मे प्रतियोद्धा त्वं भवेस्तदा मे रणकंडूया दुःखनिस्तार इति ध्वनिः। ततश्च त्वां विजित्यैव सर्वदिग्विजयेन सम्पूर्णेन सम्पूर्णयशा अहं भवेयमित्यनुध्वनिः॥ ८॥

### श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी

ननु, कथमसौ तादृशं दुर्जनं स्वीकरोति उच्यते सम्पदैश्वर्यसम्वलितकारुण्यगुणस्वाभाव्येनैवेति तच्च कदाचिदस्य दुर्जीवस्य मत्सम्बन्धेन तादृशदोषोऽप्यादित्यभिप्रेत्येति ज्ञेयं भगवदावेशमयस्वताण्डवे वाद्यसाहाय्येन कारुण्योदयादिति तदेतदभिप्रेत्याह—भगवानित्यर्द्धेन। अत एव वरेण निमित्तेन छन्दयमास स्वाभिप्रायमाचष्ट वाणं प्रति वरं वृणुष्वेति प्रोवाचेत्यर्थः। सा च बाणस्तं पुराधिपतया वव्रे त्वं मम पुराधिपः स्या इति॥ ५॥ तत्र प्रस्तावविशेषमाह—स इत्यादिना। पार्श्वस्थमिति पुराधिपत्वेन सदा तत्पुरे सपरिवारस्य तस्य निवासात् तथा च हरिवंशे कुम्भाण्डचिन्तायां—

"देवदानवसङ्घानां यः कर्त्ता भुवने प्रभुः। स भवः कार्त्तिकेयश्च कृतवासो हि नः पुरे॥" इति

पार्श्वत इति वा पाठः वीर्य्यदुर्मद इति तदपि वरोन्मुखं प्राप्य स्वदौर्जन्यानुरूपमेव वरयिष्यतीतिभावः। अर्कवर्णेनेति। शिवप्रसादान्महाधनसम्पत्तिस्तयाच तस्य दुर्मदता सूचिता ततश्च सम्यक् स्पृशन्निति भक्तिश्च रजस्तमोमय्येवेति सूचितम्॥६॥ नमने हेतुः, हे महादेवेति। सर्वदेवश्रेष्ठत्वादित्यर्थः। किञ्च लोकानां सर्वजीवानां गुरुं सर्वहितोपदेष्टारम् ईश्वरं च प्रभुं नमस्कारे प्रयोजनं सूचयति—पुंसामिति। अतो ममापि कामः पूरयितव्य इति भावः॥ ७॥ वरमपि सगर्व्वैव भङ्ग्या व्यञ्जयति। दोरिति द्वाभ्याम्। परं केवलं, भारत्वे हेतुमाह—त्रिलोक्यामिति। त्वदृते त्वां विना इति त्वमेव मम समस्त्वयातु युद्धं न घटेतैवेति प्रयोजनाभावात् भारायैवाभूदित्यर्थः॥ ८॥

### श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी

नमने हेतुः—हे महादेवेति सर्वदेवश्रेष्ठत्वादित्यर्थः। किञ्च, लोकानां सर्वजीवानां गुरुं पालकत्वादिना उपदेशकत्वेन च पित्रादिरूपमीश्वरञ्च प्रभुम्। प्रयोजनञ्च सूचयति—पुंसामिति। अतो मे कामः पूरयितव्य इति भावः॥ ५॥ परं केवलं भारत्वे हेतुमाह—त्रिलोक्यामिति। त्वत्त ऋत इति त्वमेव समः, त्वया च युद्धं न घटेतैवेति प्रयोजनाभावाद्भारायैवाभूदित्यर्थः॥ ६॥ न च केवलमेव वैफल्येन दुःखम्, कण्डूत्या चेत्याह—कण्डूत्येति। आद्य! सर्वश्रेष्ठेति त्वमेव मम योद्धा योग्यो न त्वन्य इति भावः॥ ७॥ भगवानीश्वर आहेति शेषः। क्रुद्धः सन् दुर्म्मदाद्दुर्व्वाक्याच्च केतुर्मायुरध्वजो भज्यते स्वयमेव। हे मूढेति स्वयमेवात्मविपद्वाञ्छनात् दुर्दर्पाच्च, अहमेव समः कथञ्चित्तुल्यो यस्य स श्रीकृष्णस्तेन, यद्वा, मत्समेनानिरुद्धेन, यद्वा, मया लक्ष्म्या सह वर्त्तत इति समः श्रीकृष्णः, मदीयो मत्सेव्यो यः समस्तेन सहेत्यर्थः॥ ८॥

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका

किम्बहुनेत्याह—सहस्रबाहुरिति। सहस्रं बाहवो यस्य स बाणः सहस्रबाहुवाद्येनेति समस्तपाठे तु सहस्रबाहुभिर्यद्वाद्यं वाद्यवादनं तेन मृडं रुद्रं ताण्डवे नृत्ये अतोषयत् मृडे ताण्डवं कुर्वति सति सहस्रबाहुभिः पञ्चशतवाद्यानि वादयन् तमतोषयदित्यर्थः। इत्थं तोषितः स भगवान् रुद्रस्तं बाणं वरेण 'अध्ययनेन वसतीतिवत्तृतीया' वरार्थं छन्दयामास। स बाणस्तं रुद्रं पुराधिपं पुरपालकं वव्रे त्वं मत्पुरीं पालयन्नास्स्वेति वव्र इत्यर्थः॥ ५॥ स इति। स बाणः वीर्य्येण दुष्टो मदो यस्य सः अर्क इव वर्णः यस्य तेन किरीटेन तस्य रुद्रस्य पदाम्बुजं स्पृशन् गिरिशमुवाच॥ ६॥ उक्तिमेवाह—नमस्य इति। हे महादेव! त्वां नमस्करोमि कथम्भूतं न पूर्णः कामो येषां तेषां पुंसां कामान् पूरयतीति तथा स चासौ अमराङ्घ्रिपः कल्पतरुस्तम्॥ ७॥ त्वया दत्तं भुजसहस्रं केवलं मम भाराय भारार्थमेवाभवत् त्वदृते त्वां विना मया सह प्रतियोद्धारं तुल्यं पुरुषं न पश्यामि मदिष्टदेवेन त्वया तु समेनापि न योत्स्यामीति भावः॥ ८॥

### श्रीमज्जीवगोस्वामिकृतः बृहत्क्रमसन्दर्भः

तच्छ्रुत्वेत्यादि। मत्समेन अहं समः सश्रीको यस्मात् स तथा, यस्य प्रसादादहमीश्वर इत्यर्थः। तेन मदधिकेनेत्यर्थः। यद्वा, समेन सश्रीकेन श्रीलक्ष्मणेन श्रीकृष्णेन समं संयुगं भवेत्। कीदृशम्? मत्, मथ्नातीति मत् क्विपि रूपम् अतस्त्वद्दर्पघ्नः॥ ९-१४॥

### श्रीनाथचक्रवर्तिपादविरचिता चैतन्यमतमञ्जूषा

'मूढ़ ! संयुगं मत्समेन ते' इत्यादि । अहं समः सश्रीकः तस्माद्धेतोः स तथा तेन मदधिकेनेत्यर्थः । यद्वा समेन सश्रीकेन श्रीकृष्णेन, संयुगं कीदृशम् ? मथ्नातीति मत्, संयुगमिति क्लीबत्वमार्षम् ॥ ९-१४ ॥

### श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शिनी

छन्दयामास वशयामास दित्सितेन रणेन वरेण तं वशीचकारेत्यर्थः । "अभिप्रायवशौ छन्दौ" इत्यमरः । स बाणः तं पुराधिपं स्वपुरपालकं वव्रे ॥ ५-६ ॥ कामपूरको योऽमराङ्घ्रिपः कल्पतरुस्तत्तुल्यम् ॥ ७ ॥ तस्मान्ममेदं दुःखमुपशमयितव्यमित्याह—दोरिति । त्वदृते त्वां विनेति यदि कृपया स्वयं त्वमेव मे प्रतियोद्धा भवेस्तदैव मे रणकण्डूया दुःखान्निस्तार इति ध्वनिः । ततश्च त्वां विजित्यैव सर्वदिग्विजयेन सम्पूर्णेन सम्पूर्णयशा अहं भवेयमित्यनुध्वनिः ॥ ८ ॥

### गूढार्थदीपिनी

छन्दयामास वरार्थं प्रेरयामास । पुराधिपं पुरपालकम् ॥ ५ ॥ दुर्मदः उन्मत्तः किरीटेन मुकुटेन ॥ ६ ॥ कामान् पूरयतीति स चासौ अमराङ्घ्रिपः कल्पवृक्षः तत्तुल्यं त्वाम् ॥ ७ ॥ दोषां भुजानां सहस्रम् । त्वत् ऋते त्वां विना अन्यं समं न लभे ॥ ८ ॥

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः

पुरस्य अधिपं रक्षकम् ॥ ५-६ ॥ कामपूरश्चासावमराङ्घ्रिपो देवद्रुमश्च स तथा ॥ ७-८ ॥

### श्रीसत्यधर्मकृता श्रीभागवतटिप्पणी

स बाणस्तं पुरहरमेव पुराधिपं वव्रे । त्वमेव मम पुररक्षको भवेति भवं यथा च इति भावः ॥ ५ ॥ वीर्यहेतुको दुर्दुष्टो मदो हन्ता यस्य च ॥ ६ ॥ हे महादेव । महत एवोत्सवत एव त्वां नमस्ये । इतरेभ्यो वैशेष्यं भाषते ॥ पुंसामिति । अपूर्णकामानां पुंसां कामपूरश्चासावमराङ्घ्रिपः सुरतरुस्तद्रूपम् ॥ ७ ॥ दोष्णां सहस्रम् । कुतोऽरे कुरुपुरुषेण केनचित्सङ्गरमित्यत आह ॥ त्रिलोक्यामिति । त्वदृते रामं मया न लभे ॥ ८ ॥

### श्रीमद्वल्लभाचार्य्यकृता सुबोधिनी

एवं प्रार्थितार्थसिद्ध्यर्थं व्याजेन युद्धं याचते दोःसहस्रं त्वया दत्तमिति । क्रियाशक्तिबाहुल्यार्थं सहस्रं बाहवो दत्ताः । ते निर्विषयाः सार्थका न भवन्ति । विषयस्तु समानेनाधिकेन वा सङ्ग्रामः, तदभावात् भाराय परमभवत् । यथा शीताभावे वस्त्राणि भारायन्ते, युद्धाभावे वा शस्त्राणि । वैयर्थ्यं प्रकटयति त्रिलोक्यां प्रतियोद्धारमिति । तर्हि शशशृङ्गाभावे किं चक्षुः निष्फलं तद्वद्विद्यमानैरेव यथायोग्यं क्रियतामित्याशङ्क्य, समेनैव युद्धं कर्तव्यमिति समस्य तव विद्यमानत्वात्त्वदृते अन्यं समं न लेभे । अनेन भगवान् अस्ति परं स न इन्द्रियविषय इति लेभ इत्युक्तम् ॥५॥ तर्हि मास्तु, सुप्यतामित्याशङ्क्याह कण्डूत्येति । निभृताः पूर्णाः, अतः स्थातुमशक्ताः । तर्हि युद्धाभावे अन्य एव कश्चित् कण्डतिनिवृत्त्यर्थमुपायः क्रियतामित्याशङ्क्य, दिग्गजानहं युयुत्सुः चूर्णयन्नद्रीन् अन्वयाम् । पर्वता अपि चूर्णीकृताः । दिग्गजा अपि युद्धार्थमन्विष्टाः । बलमुभयथा क्षीणं भवति, शौर्यरूपं युद्धेन, बलरूपं पराक्रमेण, तत्राचेतनाश्चूर्णीभूताः, चेतनास्तु पलायिता इति वैयर्थ्यमेव जातमित्यर्थः ॥ ६ ॥ एवं गर्वं श्रुत्वा क्रुद्धो भगवानित्याह तच्छ्रुत्वेति । भगवान् सर्वज्ञः महादेवः क्रुद्धः आहेति पूर्वोक्तैव क्रिया अनुवर्तनीया । यदा ते केतुः भज्यते, तदेव तवाभिज्ञापकं युद्धप्राप्तौ । केतुर्ध्वजः वंशस्य । कन्या जारोपभुक्ता भग्नकेतुरुच्यते । अकस्माद्रसस्थे तस्मिन् केतुभङ्गश्च । तदा त्वद्दर्पघ्नं त्वद्दर्पहननार्थमेव संयुगं मत्समेन भगवता भविष्यति । मया समः भगवान् । सर्वसम इति महादेवेनापि समः ॥ ७ ॥ एवं युद्धसम्भवमाकर्ण्य प्रीतो जात इत्याह इत्युक्त इति । महादेवेनैवमुक्तः हृष्टो जातः, यतः कुमतिः । तस्य महादेववाक्ये विश्वासमाह स्वगृहं प्राविशदिति । स्वयमुद्यममकृत्वा स्वगृहं प्रविष्टः गिरिशादेशं प्रतीक्षन् आस्ते । यद्यपि स आदेशः स्ववीर्यनाशकः, तथापि कुधीः ॥ ८ ॥

### श्रीसुबोधिनी–सारः

शरण्यः शरणे साधुः भक्तेषु वत्सलः कृपालुः सर्वभूतानामीशो भगवान् वरेण छंदयामास बाणं प्रलोभितवान् स तं शिवं पुराधिपं जागरूकं वव्रे ॥ ५ ॥ एकस्मिन्कालेऽर्कवर्णेन सूर्यप्रभेण किरीटेन मुकुटेन तस्य पदांबुजं स्पृशन् सन् वीर्येण दुष्टो मदो यस्य स बाणः पार्श्वस्थं समीपवर्त्तिनं गिरिशं शिवमाह हे महादेव लोकानां गुरुमीश्वरं न पूर्णः कामो मनोभिलाषो येषां तेषां

पुंसां कामानां पूरः पूरकोऽमराणां देवानामंघ्रिपः कल्पवृक्षरूपस्तं त्वां नमस्येहं नमस्करोमि ॥ ६-७ ॥ त्वया दत्तं दोषां भुजानां सहस्रं परं केवलं मे मम भारार्थमभवज्जातं त्वदृते त्वां विना त्रिलोक्यां समं तुल्यं प्रतियोद्धारं प्रतिद्वंद्विनं न लभे न प्राप्नोमि प्रथमांतपाठे यतोऽसम एक एवातुल्यः सर्वोत्तमबलीत्यर्थः ॥ ८ ॥

### गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

सहस्रं बाहवो यस्य स बाणः मृडे ताण्डवे नृत्यविशेषे कुर्वति सति सहस्रबाहुभिर्बाहूनि वाद्यानि वादयन् तमतोषयदित्यर्थः । एवं सन्तोषितो मृडस्तं बाणं वरेण छन्दयामास 'वरं वृणीष्व' इत्युक्तवान् । सर्वदाने सामर्थ्यमाह—भगवानिति । 'तस्य दानमावश्यकम्' इत्यत्र हेतुमाह—सर्वभूतानामीशः पालक इति । सर्वोपास्यत्वमाह—शरण्य इति । तत्र हेतुमाह—भक्तवत्सल इति । स च बाणस्तं रुद्रं पुराधिपं वव्रे त्वं मत्पुरीं पालयंस्तिष्ठेति वृतवान् इत्यर्थः ॥ ५ ॥ स बाण एकदा किरीटेन तत्पदाम्बुजं स्पृशन् गिरिशमाह । 'तद्वचनमयुक्तम्' इति सूचयन्नाह—वीर्येण दुष्टो मदो यस्य स इति ॥ ६ ॥ उक्तिमेवाह—नमस्य इति । हे महादेव ! त्वामहं नमस्करोमि । 'नमस्कारपूजादिनाऽऽराधनयोग्यस्त्वम्' इत्याशयेनाह—लोकानां सर्वप्राणिनां गुरुं पूज्यमिति । तत्र हेतुमाह—न पूर्णः कामो मनोरथो येषां तेषां पुंसां कामान् पूरयतीति तथा स चासावमराङ्घ्रिपः कल्पतरुश्च तमिति । तत्र हेतुमाह—ईश्वरमिति ॥ ७ ॥ 'किमर्थं नमस्करोषि' इत्यपेक्षायामाह—दोस्सहस्रमिति । त्वया वरतया यत् दोस्सहस्रं भुजसहस्रं दत्तं तन्मे मम परं केवलं भारार्थमेवाभवत् । तत्र हेतुमाह—त्रिलोक्यामिति । दोस्सहस्रग्रहणं तु युद्धकौतुकसिद्ध्यर्थमेव । तत्र तु त्वदृते त्वां विना त्रिलोक्यां मया समं सह प्रतियोद्धारं न लभे न लब्धवान्, अतस्तद्भारमात्रमेवाभवत् ॥ ८ ॥

### अन्वितार्थप्रकाशिका

सहस्रेत्यर्द्धम् ॥ सहस्रं बाहवो यस्य स बाणः मृडं श्रीशिवं ताण्डवे नृत्यविशेषे वाद्येन सहस्रबाहुभिर्बहूनि वाद्यानि वादयन् इत्यर्थः । अतोषयत् । भगवानिति ॥ भगवान्सर्वभूतेशः शरण्यः भक्तवत्सलः सन्तोषितो मृडस्तं बाणं वरेण च्छन्दयामास वरं वृणीष्वेत्युक्तवान् । वरेण दित्सितेन छन्दयामास वशीचकार । "अभिप्रायवशौ छन्दौ" इत्यमरः । इत्यन्ये । स च बाणस्तं रुद्रं पुराधिपं वव्रे । त्वं मत्पुरीं पालयंस्तिष्ठेति वृतवान् इत्यर्थः ॥५॥ स इति ॥ वीर्येण दुर्मदः स बाणः एकदा अर्कवर्णेन किरीटेन तत्पदाम्बुजं स्पृशन् पार्श्वस्थं गिरिशमाह स्म ॥ ६ ॥ नमस्य इति ॥ हे महादेव ! लोकानां गुरुम् ईश्वरं न पूर्णः कामो मनोरथो येषां तेषां पुंसां कामान् पूरयतीति तथा च चासावमराङ्घ्रिपः कल्पतरुश्च तं त्वामहं नमस्ये । तङार्षः ॥७॥ दोरिति ॥ त्वया वरतया यत् दोषां भुजानां सहस्रं दत्तं तन्मे मम परं केवलं भाराय एवाभवत् । यतः त्वदृते त्वां विना त्रिलोक्यां मया समं सह प्रतियोद्धारं बलेन तुल्यं योद्धारं न लभे न प्राप्नोमि । अतो यदि त्वमेव योद्धा भवेस्तदा मम मनोरथपूर्तिरिति ध्वन्यते ॥ ८ ॥

### श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्

कंडूत्या दुःसहसंग्रामस्पृहया निभृतैर्व्याप्तैः हे आद्य अद्रीन् चूर्णयन सन् । अयां अहं अगच्छं ॥ ६ ॥ हे मूढ ! त्वद्दर्पघ्नं संयुगं युद्धम् ॥ ७ ॥ स्ववीर्यस्य नशनं यस्मात्तं गिरिशस्यादेशं ध्वजभंगरूपं वाक्यं एवं राजसानां तामसानां च स्वेष्टदेवगुर्वादिषु महत्सु । तत्प्राप्तसमृद्धिसामर्थ्यादयोपि अपराधाय भवेयुरिति बोध्यं ॥ ८ ॥

### भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

भगवानिति । इत्थं तोषित इति शेषः । सर्वभूतेशः, शरण्यः शरणे साधुः, भक्तवत्सलः भगवान् रुद्रः, तं बाणं, वरेण अध्ययनेन वसतीतिवत्तृतीया । वरार्थमित्यर्थः । छन्दयामास नोदयामास । स बाणः, तं रुद्रं, पुराधिपं पुरपालकं, वव्रे । त्वं मत्पुरीं पालयन्नत्रास्स्वेति वव्र इत्यर्थः ॥ ५ ॥ स इति । वीर्येण दुर्दुष्टो मदो यस्य सः, स बाणः, अर्क इव वर्णो यस्य तेन, किरीटेन, तस्य रुद्रस्य पदाम्बुजं चरणकमलं, संस्पृशन् सन्, एकदा, पार्श्वस्थं सदा स्वनिकटवर्त्तिनं, गिरिशं, आहोवाच ॥ ६ ॥ उक्तिमेवाह नमस्य इति त्रिभिः । नमस्ये इति । न पूर्णः कामो येषां, तेषां, पुंसां, कामान् पूरयतीति कामपूरः स चासावमराङ्घ्रिपः कल्पतरुस्तं लोकानां गुरुं, ईश्वरं त्वां, हे महादेव, नमस्ये नमस्करोमि ॥ ७ ॥ दोःसहस्रमिति । त्वया दत्तं, दोःसहस्रं भुजसहस्रं, परं केवलं, मे मम, भाराय भारार्थमेव, अभवत् । यतः त्वदृते त्वां विना, मया सह, प्रतियोद्धारं समं तुल्यं पुरुषं, त्रिलोक्यां, न लभे । न पश्यामीत्यर्थः । मदिष्टदेवेन त्वया तु समेनापि न योत्स्यामीति भावः ॥ ८ ॥

### कृष्णप्रिया

शरणागत संरक्षक भक्तवत्सल समस्त भूतों के इष्टदेव भगवान् शिवजी ने एकबार बाणासुर को कहा—वत्स ! जो कामना हो मुझसे पूर्ण कर लो, तब बाणासुर ने कहा—नाथ ! मेरे नगर की रक्षा करते हुए यहाँ रहिये । भगवान् ने स्वीकार

किया ॥ ५ ॥ एक दिन वीर्य मद से अभिमानी बाणासुर ने समीपवर्ती भगवान् महेश्वर जी के श्री चरणकमलों को सूर्य समान तेजोमय किरीट कोटि से स्पर्श करते हुए कहा प्रभो ! हे देवाधिदेव ! आप स्थावर-जङ्गम समस्त ब्रह्माण्डों के स्वामी एवं गुरु हैं। मैं बार-बार आपको प्रणाम करता हूँ। जिन सेवकों के मनोरथ अबतक संपूर्ण नहीं हुए हैं उनके मनोरथों के परिपूरक आप कल्पतरु हैं ॥ ६-७ ॥ नाथ ! हे भगवन् ! आपने मुझे एक हजार भुजाएँ समर्पित की हैं-लेकिन वे भुजाएँ मेरे लिये तो भाररूप बन गयी हैं। कारण यही है कि अखिल ब्रह्माण्ड में आपके सिवाय मुझे मेरे तुल्य और कोई वीर योद्धा ही नहीं मिलता है जो मेरे साथ संग्राम करे ॥ ८ ॥

**कण्डूत्या निभृतैर्दोर्भिर्युयुत्सुर्दिग्गजानहम् । 'अन्वयां चूर्णयन्नद्रीन् भीतास्तेऽपि प्रदुद्रुवुः ॥ ९ ॥**
**तच्छ्रुत्वा भगवान् क्रुद्धः केतुस्ते भज्यते यदा । त्वद्दर्पघ्नं भवेन्मूढ संयुगं मत्समेन ते ॥ १० ॥**
**इत्युक्तः कुमतिर्हृष्टः स्वगृहं प्राविशन्नृप । प्रतीक्षन् गिरिशादेशं स्ववीर्यनशनं कुधीः ॥ ११ ॥**
**तस्योषा नाम दुहिता स्वप्ने प्राद्युम्निना रतिम् । कन्यालभत कान्तेन प्रागदृष्टश्रुतेन सा ॥ १२ ॥**

### कर्दमक्षमा

अन्वयः—अहम्, कण्डूत्या, निभृतैः, दोर्भिः, युयुत्सुः, अद्रीन्, चूर्णयन्, दिग्गजान्, अन्वयाम्, ते, अपि, भीताः, ततः, प्रदुद्रुवुः ॥ ९ ॥ तत्, श्रुत्वा, क्रुद्धः, भगवान्, आह, मूढ ! ते, केतुः, यदा, भज्यते, तदा, ते, मत्समेन, त्वद्, दर्पघ्नम्, संयुगम्, भवेत् ॥ १० ॥ हे नृप इत्युक्तः, हृष्टः, कुमतिः, स्ववीर्यनशनम्, गिरिशादेशम्, प्रतीक्षन्, कुधीः, स्वगृहम्, प्राविशत् ॥ ११ ॥ तस्य, ऊषा, नाम, दुहिता, सा, कन्या, प्राक्, अदृष्टेन, अश्रुतेन, प्राद्युम्निना, कान्तेन, स्वप्ने, रतिम्, अलभत ॥ १२ ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

हे आद्य निभृतैर्भरितैर्दोर्भिरद्रींश्चूर्णयन् अयामगच्छम् ॥ ९-१० ॥ स्ववीर्यस्य नशनं नाशनं केतुभंगं प्रतीक्षमाणः ॥ ११ ॥ श्रीमहेशादिष्टसंग्रामस्य प्रसंगमाह । तस्योषेति । प्राद्युम्निनाऽनिरुद्धेन तत्रापि स्वप्ने ॥ १२ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

कंडूतिर्गात्रघर्षणम् । 'निभृतं भरिताचले' इति कोषः । यातेर्लङि रूपमयामिति । कंडूत्या रणकंडूत्या नितरां भृतैः पूर्णैर्दोर्भिर्युयुत्सुरहं दिग्गजान्प्रति हे आद्य एतादृशबलैश्वर्यादिस्त्वमेव कारणमसीत्यतस्त्वमेवैतां रणकंडूतिं शमयेति भावः। ऐशानीदिशं विनाऽन्याः सर्वा मया जिता एव, परं त्वष्टौ दिग्गजाञ्जित्वा ममाष्टदिग्विजयोऽस्त्वित्यभिप्रायेणाहं गतवांस्तेऽपि भीताः प्रदुद्रुवुः । किं कुर्वन्—कंडूतिशांत्यर्थमद्रीनपि चूर्णयन् । अतः कथय त्वया सह युद्धं विना मम रणकंड्वा कथमुपशाम्येत्, तस्या उपशमं विना मम कथं धैर्यं भवेदिति मयि दोषो न देय इति भावः ॥ ९ ॥ तदुद्धतवचः । ते केतुः भज्यते कर्मकर्तरि प्रयोगः । ते संयुगमिति पृथक्सम्बन्धादपौनरुक्त्यम् । मत्समेन मत्तुल्येन क्रुद्ध इति प्रथमं तज्जिघांसा शिवमनस्युद्भूदिति भावः । ततश्च स्वहस्तेन स्वसेवकवधोऽनुचितः । परन्तु मत्प्रसादलब्धं महाबलवद्भुजसहस्रं यदाऽयं दुर्मदो भारं मन्यते तर्हि भारावतारणकर्ता मत्प्रभुरेव खल्विममपि भारमपनेष्यतीति परामृश्याह—हे मूढ ! स्वाभीष्टज्ञानशून्य । केतुर्मयूरध्वजः स्वयमेव यदा भज्यते त्रुट्यति । वर्तमानसामीप्ये वर्तमानवत् । मत्समेनेति–तं प्रीणयितुमुक्तम् । वस्तुतस्तु मा लक्ष्मीः तया सह वर्तत इति समः श्रीकृष्णः, मदीयो मत्सेव्यो यः समः स मत्समस्तेनेत्यर्थः । यद्वा—मा शोभा तत्सहितसमः, अहं समः सशोभो यतस्तेन । अत्र क्रुद्ध इतोग्रे उवाचेति शेषः ॥ १० ॥ स्वपराभवश्रुतेर्हर्ष एव कुमतित्वे हेतुः । पुनः कुधीरित्यत्यन्तमौढ्यमाहुः । सर्वेशेन युद्धाकांक्षावत्त्वात् । यदयं मूढेति मां संबोध्य त्वद्दर्पघ्नं संयुगं भवेदिति ब्रूते तदयमेव मूढो मद्दर्पघ्नसंयुगस्यासंभवादेवेति कुत्सिता मतिर्मननं यस्य सः । परं त्वेतद्वाक्येनानुमीयते मदणकंडूपशमकः कश्चिद्बलिष्ठो योद्धुमेष्यतीति मत्वा हृष्टः गिरिशादिष्टं केतुभंगं प्रतीक्षमाणः कदा मे केतुभंगो भविष्यतीत्यमङ्गलसोत्कण्ठत्वात्कुधीरेव स इति विश्वनाथः ॥ ११ ॥ तस्य बाणस्य । तत्रापि तस्मिन्नपि स्वप्नः । कन्या कुमारी । कांतेन श्रीपार्वत्या पतित्वेनादिष्टेनेत्यर्थः । तथा विष्णुपुराणे—"ऊषा बाणसुता विप्र पार्वतीं शम्भुना सह । क्रीडन्तीमुपलक्ष्योच्चैः स्पृहां चक्रे तदाश्रयाम् । ततः सकलचित्तज्ञा गौरी तामाह भाविनीम् । अलमत्यर्थतापेन भर्त्रा त्वमपि रंस्यसे । इत्युक्ता सा तदा चक्रे कदेति मतिमात्मनः । को वा भर्ता ममेत्येनां पुनरप्याह पार्वती । वैशाखशुक्लद्वादश्यां स्वप्ने योऽभिभवं तव । करिष्यति स ते भर्ता बाणपुत्रि भविष्यति ॥" इति ॥ १२ ॥

---

१. अन्वयां–वीर ; आद्यायां–श्रीधर. वंशी. जीव. विज. विश्व. । २. भ्रंशनं–वीर. । ३. च–वीर. ।

### श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी

न च वैफल्येनैव दुःखमित्याह—कण्डूत्येति। कण्डूतिवत् दुस्सहा युद्धस्पृहा तया ते दिग्गजा अपि आद्य सर्वश्रेष्ठेति त्वमेव मम युद्धयोग्यो न त्वन्य इति त्वमेव मया युद्धयस्वेतिभावः। एवं श्रीभगवद्बहिर्मुखस्य स्वसेव्यतया गृहीते देवतान्तरेऽप्यपराध एव फलितः स्यादिति दर्शितम् ॥ ९ ॥ रुद्रोऽपि भगवान् भूतभव्यभवद्वृत्तश्च ईश्वर आहेति शेषः। तदनुरूपमेवोक्तवानित्यर्थः। केतुर्मायूरध्वजः भज्यते स्वयमेव हे मूढेति स्वाभीष्टसिद्धिञ्च न जानासि दुर्दर्पेणैव च वृणोषीति भावः। मत्समेनेति एतावतैवास्य चमत्कारो भविष्यति किमधिकनिर्देशेनेति भावः। वस्तुतस्तु मया लक्ष्म्या सह वर्त्तत इति समः श्रीकृष्णः मदीयो मत्सेव्यो यः मत्समस्तेन सहेत्यर्थः ॥ १० ॥ इत्युक्तो दृष्टः यतः कुमतिः कुत्सितो विचारो यस्य सः ततश्च स्ववीर्य्यस्य नशनं यस्मात्तादृशं गिरिशादेशं तदादिष्टमर्थं प्रतीक्षमाणः स्वगृहं प्राविशत् यतः कुधी दुर्व्यवसाय इति टीकायां नशनं नाशमिति नाशरूपमित्यर्थः। नशनं नाशनमिति क्वचित्पाठः तदेव ध्वजश्चासौ भग्न इति ज्ञेयं तथा च श्रीविष्णुपुराणे—

"ततः प्रणम्य मुदितः शम्भुमभ्यागतो गृहम्। भग्नं तं ध्वजमालोक्य दृष्टो हर्षान्तरं ययौ॥" इति

ईदृशं हरिवंशेऽपि किन्तु बाणकुम्भाण्डयोः सम्वादस्तत्र विशेषः ॥ ११ ॥ कन्याकुमारी कान्तेन श्रीपार्वत्या पतित्वेनादिष्टेनेत्यर्थः। तथा च श्रीविष्णुपुराणे—

उषा बाणसुता विप्र पार्वतीं शम्भुना सह। क्रीडन्तीमुपलक्ष्योच्चैः स्पृहाञ्चक्रे तदाश्रयाम्॥
ततः सकलचित्तज्ञा गौरी तामाह भाविनीम्। अलमत्यर्थपापेन भर्त्रा त्वमपि रंस्यसे॥
इत्युक्ता सा तदा चक्रे कदेति मतिमात्मनः। को वा भर्त्ता ममेत्येनां पुनरप्याह पार्वती॥
वैशाखशुक्लद्वादश्यां स्वप्ने योऽभिभवं तव। करिष्यति स ते भर्त्ता राजपुत्रि भविष्यति" ॥ इति ॥ १२ ॥

### श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी

हेत्युक्तोऽपि हृष्टः, यतः कुमतिः, ततश्च स्ववीर्य्यनशनरूपमपि गिरिशस्यादेशम्; यद्वा, गिरिशस्यादेशे यस्मिंस्तद्गिरिशादिष्टमित्यर्थः। स्ववीर्य्यस्य नशनं नाशो यस्मात्तत् संयुगं प्रतीक्षमाणो बभूव, यतः कुधीः। एवं वाक्यभेदादपौनरुक्त्यम्। यद्वा, कुमतिः कुत्सितसंकल्पः, कुधीर्दुर्व्यवसाय इत्यर्थः। इत्याश्चर्य्यादाह—हे नृपेति। तदेव ध्वजश्चासौ भग्न इति ज्ञेयम्। तथा च श्रीविष्णुपुराणे (५।३३।४)—'ततः प्रणम्य मुदितः शम्भुमभ्यागतो गृहम्। भग्नं तं ध्वजमालोक्य हृष्टो हर्षान्तरं ययौ॥' इति। ईदृशं श्रीहरिवंशेऽपि, किन्तु बाणकुम्भाण्डयोः संवादस्तत्र विशेषः, बहुत्वादत्र न संगृह्यते। एवमग्रेऽपि ॥ ९ ॥ कन्या कुमारी, कान्तेन श्रीपार्व्वत्या पतित्वेनादिष्टेनेत्यर्थः। तथा च श्रीविष्णुपुराणे (५।३२।११-१४)—

'ऊषा बाणसुता विप्र पार्व्वतीं शम्भुना सह। क्रीडन्तीमुपलक्ष्योच्चैः स्पृहाञ्चक्रे तदाश्रयाम्॥
ततः सकलचित्तज्ञा गौरी तामाह भाविनीम्। अलमत्यर्थतापेन भर्त्रा त्वमपि रंस्यसे॥
इत्युक्ते सा तदा चक्रे कदेति मतिमात्मनः। को वा भर्त्ता ममेत्येतां पुनरप्याह पार्व्वती॥
वैशाखशुक्लद्वादश्यां स्वप्ने योऽभिभवं तव। करिष्यति स ते भर्त्ता राजपुत्रि भविष्यति॥' इति ॥ १० ॥

सा तथा श्रीपार्व्वत्यनुगृहीता सौन्दर्य्यादिनानिर्वचनीया वा, तत्र स्वप्ने स्थाने वा, सखीनां निरयेकत्र सुप्तानाम्, विह्वला अत्यार्त्ता, भावि-विरहात्; यद्वा, विह्वला रतिपरिश्रमाद्व्याकुला व्रीडिता च, तादृशोक्तेः, अतो व्रीडिता; तथा च श्रीहरिवंशे (विष्णु० प० ११८।३)—'सा स्वप्ने रमिता तेन स्त्रीभावञ्चापि लम्भिता। शोणिताक्ता प्ररुदती सहसैवोत्थिता निशि॥' इति ॥ ११ ॥ सखी सखीमिति मिथो विश्वास उक्तः; अतोऽपृच्छत्, कौतूहलेन सम्यगन्वितेति तस्यास्तादृगुक्त्यादिना ॥ १२ ॥

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका

कण्डूत्येति। निभृतैर्भरितैर्भुजैर्योद्धुमिच्छुः अद्रीन् चूर्णयन् दिग्गजानभ्ययाम् अभिद्रुतवानस्मि तेऽपि दिग्गजा अपि दुद्रुवुः ॥ ९ ॥ तदिति। तद्बाणवचः श्रुत्वा भगवान् रुद्र प्राहेति शेषः उक्तिमेवाह—केतुरिति। तव केतुर्ध्वजो यदा भज्यते स्वयमेव भग्नः पतेदित्यर्थः। तदा हे मूढ! तव दर्पं हन्तीति तथाभूतः भवेत् सम्भवेत् तेन अमत्समेनेति छेदः नाहं समो यस्य स तेन मत्तोऽप्यधिकेन त्वद्दर्पघ्नेन संयुगश्च भवेत् ॥ १० ॥ इतीति। हे नृप! कुबुद्धिर्बाणः स्ववीर्यं भ्रंशयतीति तथा तं गिरिशस्यादेशं केतुभङ्गात्मकं प्रतीक्षमाणो गृहान् प्राविशत् ॥ ११ ॥ एवं स्थिते रुद्रादिष्टसङ्ग्रामप्रसङ्गमाह—तस्येत्यादिना। तस्य बाणस्य दुहिता उषा नाम कन्या प्रागदृष्टः श्रुतश्च तेन प्राद्युम्निना अनिरुद्धेन सह रतिं लेभे ॥ १२ ॥

### श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शिनी

कण्डूत्या रणकण्डूयया नितरां भृतैः परिपूर्णैर्दोर्भिर्युयुत्सुरहं दिग्गजान् प्रति हे आद्य अयाम् अगच्छम् ऐशानीं दिशं विना सर्व एवान्या दिशो मया जिता एव परन्तु अष्टौ दिग्गजान् जित्वा ममाष्टदिग्विजयोऽस्त्वित्यभिप्रायेणाहं गतवानिति भावः।

किं कुर्वन् भुजवलकण्डूयनिवर्त्तनार्थमद्रींश्चूर्णयन् ते दिग्गजा अपि भीताः अतः कथय त्वया सह युद्धं विना मम रणकण्डूया कथमुपशाम्यतु तस्या उपशमं विना मम कथं धैर्यं भवेदिति मयि दोषो न देय इति भावः ॥ ९ ॥ क्रुद्ध इति प्रथमं तज्जिघांसा शिवमनस्युदमूदिति भावः ततश्च स्वहस्तेनैव स्वसेवकवधोऽनुचितः परन्तु मत्प्रसादलब्धं महाबलबाहुसहस्रं यदयं दुर्मदो भारं मन्यते तर्हि भारावतारणकर्त्ता मत्प्रभुरेव खल्विममपि भारमपनेष्यतीति परामृश्याह केतुर्मायूरध्वजः भज्यते स्वयमेव यदा वर्त्तमानसामीप्ये वर्त्तमानत्वं मत्समेनेति तं प्रीणयितुमुक्तं वस्तुतस्तु मा शोभा तया सह वर्त्तमानः समः अहं समः सशोभा यतस्तेन अत्र क्रुद्ध इत्यनन्तरमुवाचेति शेषः ॥ १० ॥ कुमतिरिति यदयं मूढेति मां सम्बोध्य त्वद्दर्पघ्नं संयुगे भवेदिति ब्रूते तदयमेव मूढः मद्दर्पघ्नस्य संयुगस्यासम्भवादेवेति कुत्सितं मननं विचारो यस्य सः परन्त्वेतादृशवाक्येनानुमीयते मदीयरणकण्डूयोपशमकः कश्चिद्बलिष्ठो योद्धुमेष्यतीति मत्वा हृष्टः स्ववीर्यस्य नशनं नाशो यस्मात् तं गिरिशादेशं तदादिष्टं केतुभङ्गं प्रतीक्षन् प्रतीक्षमाणः कदा मे केतुभङ्गो भविष्यतीत्यलक्षणसोत्कण्ठत्वात् कुधीः ॥ ११—१२ ॥

## गूढार्थदीपिनी

हे आद्य । निभृतैः भरितैः दोर्भिः भुजैः युयुत्सुः सन् अहं दिग्गजान् अयाम् । यातेर्लङि रूपम् । तेऽपि दुद्रुवुः पलायिताः बभूवुः ॥ ९ ॥ केतुः मयूरध्वजः यदा भज्यते कर्मकर्तरि प्रयोगः । मत्समेन कृष्णेन सह संयुगं युद्धम् ॥ १० ॥ वीर्यस्य नशनं नाशो यस्मात् तमादेशं केतुभङ्गात्मकम् ॥ ११ ॥ प्राद्युम्निना अनिरुद्धेन रतिमलमत । स्वप्ने वैशाखशुक्लद्वादशमाम् । इति वैष्णवे ॥ १२ ॥

## श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः

हे आद्य मरीच्यादिभ्यः पूर्वज ! कण्डूत्या निभृतैर्भरितैर्दोर्भि । कुण्डूतिशान्त्यर्थम् अद्रीन् चूर्णयन् दिग्गजान् प्रति अयाम् अगच्छम् ते दिग्गजा अपि भीताः प्रदुद्रुवुः ॥ ९ ॥ भगवान् शिवः मत्समेन ते संयुगमभवेत् इत्याह कदेत्याकाङ्क्षायामाह यदा ते केतुर्भज्यते ॥ १० ॥ स्ववीर्यस्य नशनं नाशो यस्मात्तं गिरिशादेशं केतुभङ्गात्मकम् प्रतिक्षमाणः ॥ ११ ॥ शिवादिष्टसंयुगप्रसङ्गमाह—तस्येति ॥ १२–१४ ॥

## श्रीसत्यधर्मकृता श्रीभागवतटिप्पणी

कण्डूत्या युद्धकामनोत्पन्नया निभृतैः पुष्टैः । हे आद्य । अद्रींश्चूर्णयन्नयमगच्छम् । तेऽपि दिग्द्विपाः प्रदुद्रुवुः ॥ ९ ॥ पुरहरः स्वपुरत एवैवं वदन्तं बाणं शशापेत्याह । तदिति । केतुर्ध्वजः । मत्समेनाहं समः ससम्पत्को येन तेन संयुगं संयुगो युद्धं भवेत् ॥ १० ॥ दृष्टो यदाकदाचिद्वा मम समसमरो हरो वितरित इति तुष्टः । स्ववीर्यनशनं स्ववीर्यस्य नशनं नाशकं गिरिशादेशं प्रतीक्षन्प्रतीक्षमाणोऽभूत् ॥ ११ ॥ तस्य बाणस्य स्वप्ने वैशाखे मासि द्वादश्यां तत्रापि पार्वतीवरेणेति । यथोक्तं हरिवंशे । उषे शीघ्रं त्वमप्येवं भर्त्रा सह रमिष्यसि । द्वादश्यां शुक्लपक्षस्य वैशाखे मासि यो निशीत्यदि । प्राद्युम्निः प्रद्युम्नपुत्रोऽनिरुद्धस्तेन प्रागदृष्टोऽश्रुतश्च साक्षात्तेन ॥ १२ ॥

## श्रीमद्वल्लभाचार्य्यकृता सुबोधिनी

तस्य केतुभङ्गप्रकारमाह तस्योषा नाम दुहितेति । अत्र पुराणान्तरे उषा पत्यर्थं पार्वतीं प्रार्थितवती । ततः सा तुष्टा अद्य यः स्वप्ने त्वां भजिष्यति स तव पतिरिति पार्वत्योक्ता, आधिदैविकः प्राद्युम्निरूपो भगवान् स्वप्नसृष्टौ मायिकयां तामालिङ्ग्य, स्वभावं तत्र स्थापितवान् । ततः सा वस्तुत आधिदैविकेन प्राद्युम्निना रतिमलभत । कन्याया रतिर्व्रतभङ्गहेतुर्भवति । मनोरथमात्रत्वं निवारयति कान्तेनेति । तर्हि भावनयैव मनोरथतुल्यः स्वप्नः तथा जात इत्याशङ्क्याह प्रागदृष्टश्रुतेनेति । प्राक् ततः स्वप्नात्पूर्वं न दृष्टः श्रुतो वा कदाचिदपि तथा । वै निश्चयेनेति दैवोपपत्तिरुक्ता ॥ ९ ॥

## श्रीसुबोधिनी–सारः

कंडूत्या निभृतैः पूर्णैर्दोर्भिर्भुजैर्युयुत्सुर्योद्धुमिच्छुरहं दिशां गजानयामगच्छम् । हे आद्य अद्रीन् पर्वतान् चूर्णयन् सन् ते दिग्गजा अपि भीता प्रदुद्रुवुः ॥ ९ ॥ तच्छ्रुत्वा क्रुद्धः "विषवृक्षोपि संवर्ध्य स्वयं छेत्तुमसांप्रतम्" इति वचनात्स्वयं हंतुमनिच्छन् भगवान् शिव आह । हे मूढ ते तव केतुः पताका यदा भज्यतेऽकस्मात्तदा ते तव मत्समेन मया समेन तुल्येन श्रीविष्णुना राजसमो मंत्रीतिवत्किंचिन्न्यूने समशब्दप्रयोगदर्शनादहं समः किंचिन्न्यूनो यस्मादिति रामानुजीयास्तन्न तुलोपमावर्ज्ये तुल्यार्थयोगे तृतीयया समासस्य विधानात् ते तव संयुगं संयुद्धं भवेत् तत्र जयाशा न कार्येत्यतो विशेषणं तव दर्पं हंतीति तत् ॥१०॥ शुकोक्तिः । हे नृप इत्येवमुक्तः कुबुद्धिर्बाणो हृष्टः स्वगृहे प्राविशत् स्ववीर्यस्य बलस्य नशनं नाशनं केतुभंगं गिरिशस्य शिवस्यादेशम् आज्ञां प्रतीक्षमाणोऽत एव कुधीरिति पुनर्न्यस्तः ॥ ११ ॥ तत्प्रसंगमाह । तस्य बाणस्योषा नाम दुहिता पुत्री कन्या प्रागदृष्टश्रुतेन

प्राद्युम्निनानिरुद्धेन कांतेन भर्त्रा स्वप्ने रतिमलभत ऐतत् एकदाऽऽरामे रममाणयोरुमाशंकरयोर्दर्शनात्सकामामूषां ज्ञात्वाऽनिरुद्धेनास्याः संगमो भविष्यतीति शिववरदानतोऽदृष्टश्रुतेनापि स्वप्ने रतिरुक्ता ॥ १२ ॥

### गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

प्रतियोद्धृलाभमेव स्पष्टयति—कण्डूत्येति । कण्डूत्या निभृतैर्भरितैर्भुजैः युयुत्सुर्योद्धुमिच्छुः अहं अद्रीन् चूर्णयन् दिग्गजान् अन्वयां अनुद्रुतवान्, तदा तेपि प्रदुद्रुवुः पलायिताः । तथाच 'यदि कृपया स्वयं त्वमेव मे प्रतियोद्धा भवेस्तदेव कण्डूतिदुखान्निस्तारः, नान्यथा' इति सूचितम्, त्वदृत इत्युक्तत्वात् ॥ ९ ॥ तद्बाणवचनं श्रुत्वा भगवान् रुद्रः क्रुद्ध आह—हे मूढ! यदा ते केतुर्ध्वजो भज्यते तदा त्वद्दर्पघ्नं तव गर्वनाशकं मत्समेन सह ते तव संयुगं युद्धं भवेद्भविष्यतीति आहेति शेषेणान्वयः ॥ १० ॥ आश्चर्यं सूचयन् सम्बोधयति—नृपेति । इत्येवं रुद्रेणोक्तस्तत्समेन युद्धं भविष्यतीति कृत्वा हृष्टः सन् स्वगृहं प्राप आविशत् । 'त्वद्दर्पघ्नं' इत्युक्तत्वात् 'कथं तेन हर्ष' इत्याशङ्कयाह—कुमतिरिति । गृहं प्रविष्टोऽपि स्ववीर्यनाशसूचकं गिरिशोक्तं केतुभङ्गं प्रतीक्षमाणः आस्ते स्म । तत्रापि तमेव हेतुमाह-कुधीरिति ॥ ११ ॥ एवं स्थिते रुद्रादिष्टसङ्ग्रामप्रसङ्गमाह—तस्येत्यादिना । तस्य बाणस्य ऊषा नाम दुहिता आसीत् । सा च कन्या विवाहरहितैव प्रागदृष्टश्रुतेन कान्तेन मनोहरेण प्राद्युम्निना अनिरुद्धेन सह स्वप्ने रतिं लेभे ॥ १२ ॥

### अन्वितार्थप्रकाशिका

कण्डूत्येति ॥ हे आद्य ! कण्डूत्या रणेच्छाजन्यया कण्डूयया निभृतैः पूर्णैर्दोर्भिर्भुजैः युयुत्सुर्योद्धुमिच्छुः अहम् अद्रीन् चूर्णयन् दिग्गजान् अयाम् अगच्छम् । तदा तेऽपि भीताः प्रदुद्रुवुः पलायिताः ॥ ९ ॥ तदिति ॥ तद्बाणवचनं श्रुत्वा भगवान् रुद्रः क्रुद्धः सन्नुवाच । हे मूढ स्वहितज्ञानशून्य ! यदा ते केतुर्मायूरो ध्वजो भज्यते तदा त्वद्दर्पघ्नं तव गर्वनाशकं मत्समेन सह ते तव संयुगं युद्धं भवेद्भविष्यति । विषवृक्षोऽपि संवर्द्ध्येति न्यायादहं त्वत्प्रतीकारं न करोमि । नापि ते नाशमिच्छामीति भावः ॥१०॥ इतीति ॥ हे नृप ! इत्येवं रुद्रेणोक्तः कुमतिः हृष्टः सन् स्वगृहं प्राविशत् । ततश्च कुधीः सः स्ववीर्यस्य नशनं नाशो यस्मात्तं स्ववीर्यनाशसूचकं गिरिशादेशं गिरिशोक्तं केतुभङ्गं प्रतीक्षन् । शता आर्षः । आस्ते स्म । तदैव ध्वजो भग्न इति विष्णुपुराणे॥११॥ तस्येति ॥ तस्य बाणस्य ऊषा नाम दुहिता आसीत् । ऊषाशब्दः प्रायो दीर्घादिः । क्वापि ह्रस्वादिः सा च कन्या विवाहरहितैव प्रागदृष्टश्रुतेन कान्तेन मनोहरेण प्राद्युम्निना अनिरुद्धेन सह स्वप्ने रतिं लेभे । तत्कारणं विष्णुपुराणे । "ऊषा बाणसुता विप्र पार्वतीं शम्भुना सह । क्रीडन्तीमुपलक्ष्योच्चैः स्पृहां चक्रे तदाश्रयाम् । ततः सकलचित्तज्ञा गौरी तामाह भामिनीम् । अलमत्यर्थतापेन भर्त्रा त्वमपि रंस्यसे ॥ वैशाखशुद्धद्वादश्यां स्वप्ने योऽभिभवं तव करिष्यति स ते भर्त्ता हे राजपुत्रि ! भविष्यति" ॥१२॥

### श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्

शिवोपदिष्टयुद्धप्रसंगमाह तस्येति प्राद्युम्निना अनिरुद्धेन । प्राक् पूर्वं । अदृष्टेन अश्रुतेन च ॥ ९ ॥ तत्र स्वप्ने । तमनिरुद्धं अपश्यंती सती हे कांत क्वासीति वादिनी सती । उत्तस्थौ ॥ १० ॥ कौतूहलेनाऽऽश्चर्येण समन्विता ऊषेति दीर्घादिः क्वचित् ह्रस्वादिः ॥ ११ ॥ हस्तग्राहं पतिः हे राजपुत्रि नोपलक्षये अहं न पश्यामि ॥ १२ ॥

### भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

कण्डूत्येति । कण्डूत्या निभृतैर्भरितैः, दोर्भिर्भुजैः, युयुत्सुर्योद्धुमिच्छुः, अहं अद्रीन्, चूर्णयन् दिग्गजान् अभ्ययामभिद्रुतवानस्मि । ततः, भीताः ते दिग्गजा अपि, प्रदुद्रुवः ॥ ९ ॥ तदिति । तद्बाणवचः, श्रुत्वा क्रुद्धः, भगवान् रुद्रः, प्राहेति शेषः । हे बाण, ते तव, स तुरयं ध्वजः, यदा भज्यते स्वयमेव भग्नः सन्, पतेदित्यर्थः । तदा, हे मूढ, तव दर्पं हन्तीति त्वद्दर्पघ्नः संयुगः, न अहं समो यस्येत्यमत्समस्तेन मत्तोऽप्यधिकेनेत्यर्थः । ते तव, भवेत् । मत्तोऽप्यधिकेन सह त्वद्दर्पघ्नः संग्रामो भवितेत्यर्थः ॥१०॥ इत्युक्त इति । हे नृप, इत्यमुना प्रकारेण, उक्तः रुद्रेणाभिहितः, कुमतिर्दुर्बुद्धिः बाणः, हृष्टः सन्, स्वगृहं प्राविशत् । कुधीः कुत्सितमतिः, स्ववीर्यं भ्रंशयतीति तं, गिरिशादेशं केतुभङ्गात्मकं रुद्रादेशं, प्रतीक्षन् प्रतीक्षमाणः सन्, आस्ते स्मेति शेषः ॥ ११ ॥ एवं रुद्रवचनविश्वासयुते बाणे स्थिते रुद्रादिष्टसंग्रामप्रसङ्गमाह । तस्येति । तस्य बाणस्य, ऊषा नाम ऊषेति नाम्ना प्रसिद्धा, दुहिता कन्या सती, प्रागदृष्टश्रुतेन च, पूर्वमदृष्टेनाश्रुतेन चापीत्यर्थः । प्राद्युम्निना प्रद्युम्नसुतेनानिरुद्धेनेत्यर्थः । कान्तेन स्वामिना, स्वप्ने रतिं, अलभत ॥ १२ ॥

### कृष्णप्रिया

नाथ ! एक बार मेरी भुजाओं में युद्ध करने के लिये इतनी खुजली हुई कि मैं न रह सका और युद्ध करने के लिये दश दिग्गजों की ओर चल पड़ा तब वे दिग्गज भी भाग चले । खुजली से मैं रह नहीं सका तो रास्ते में मेरे लौटते समय मेरी

भुजाओं की चोट से बहुत से पर्वतों को तोड़ फोड़ दिये ॥९॥ उच्छृंखल बाणासुर की यह बात सुनकर भगवान् त्रिपुरारिजी को अल्प क्रोध आया और उन्होंने कहा कि हे मूर्ख ! ध्यान रखना—जिस दिन तेरी ध्वजा टूटकर गिर जायगी उस समय मेरे तुल्य कोई वीरवर से तुम्हारा संग्राम होगा वह संग्राम तेरे अभिमान को चूर्ण कर देगा ॥ १० ॥ राजन् परीक्षित् ! कुमति बाणासुर भगवान् त्रिपुरारीजी की बात सुनकर अतिशय प्रसन्न हुआ और अपने शोणित नगर लौट आया। घर आने पर भगवान् कैलासनाथजी के वचनानुसार उसदिन की प्रतीक्षा करने लगा कि जिस संग्राम से उसके वीर्य का विनाश होने वाला था ॥११॥ राजन् परीक्षित् ! बाणासुर की एक सुन्दरी कन्या थी। कन्या का नाम था उषा, अब तक व्याह नहीं हुआ था। उषा कुमारी ने एक दिन स्वप्न में देखा कि सर्वाङ्ग सुन्दर वीरवर यादव कुमार श्री अनिरुद्धजी के साथ उसका समागम हो रहा है। आश्चर्य की वार्ता तो यह थी कि उषाजी ने न तो कभी अनिरुद्ध का दर्शन किया था न उनके बारे में कुछ सुना था ॥ १२ ॥

**सा तत्र तमपश्यन्ती क्वासि [1]कान्तेति वादिनी। सखीनां मध्य उत्तस्थौ विह्वला व्रीडिता भृशम् ॥ १३ ॥**
**बाणस्य मन्त्री कुम्भाण्डश्चित्रलेखा च तत्सुता। सख्यपृच्छत् सखीमूषां[2] कौतूहलसमन्विता ॥ १४ ॥**
**[3]कान्तं मृगयसे सुभ्रूः कीदृशस्ते मनोरथः। हस्तग्राहं न तेऽद्यापि राजपुत्र्युपलक्षये ॥ १५ ॥**

**ऊषोवाच**

**दृष्टः कश्चिन्नरः [4]श्यामः श्यामः कमललोचनः। पीतवासा बृहद्बाहुर्योषितां हृदयं गमः ॥ १६ ॥**

**कर्दमक्षमा**

अन्वयः—सा, तत्र, तम्, अपश्यन्ती, हे, कान्त, क्वासि, इति वादिनी, विह्वला, भृशम्, व्रीडिता, सखीनाम्, मध्ये, उत्तस्थौ ॥१३॥ बाणस्य, मन्त्री, कुम्भाण्डः, च, तत्सुता, चित्रलेखा, कौतूहलसमन्विता, सखी, ऊषाम्, सखीम्, अपृच्छत् ॥१४॥ हे, सुभ्रूः ! अद्य, अपि, ते, हे, राजपुत्रि !, हस्तग्राहम्, न, उपलक्षये, त्वम्, कम्, मृगयसे ! ते, मनोरथः, कीदृशः ? ॥ १५ ॥ पीतवासाः, बृहद्बाहुः, योषिताम्, हृदयम्, कमललोचनः, श्यामः, कश्चित्, नरः, स्वप्ने, दृष्टः ॥ १६ ॥

**श्रीधरस्वामिविरचिता भावार्थदीपिका**

तं कांतमपश्यंती सा उत्तस्थौ ॥ १३ ॥ ततः किं वृत्तं तत्राह। बाणस्येति ॥ १३ हस्तग्राहं भर्तारम् ॥ १६-१८ ॥

**श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः**

सा ऊषा। विह्वला विवशा विरहात्। यद्वा-रतिश्रमाकुलाऽतो व्रीडिता। तथा च हरिवंशे—"सा स्वप्ने रमिता तेन स्त्रीभावं चापि लंभिता। शोणितात्का प्ररुदती सहसैवोत्थिता निशि॥" इति ॥ १३ ॥ ततस्तदनन्तरम्। तत्सुता कुंभांडात्मजा ॥ १४ ॥ हस्तस्य ग्राहो यत्र स तथा विवाहः। यद्वा-हस्तं गृह्णातीति हस्तग्राहो भर्ता तमित्यर्थः। 'पत्युद्वाहे हस्तग्राहः' इति निरुक्तिः। अद्याप्यद्यपर्यंतमपि ॥ १५ ॥ हृदयंगमो मनोहरः ॥ १६ ॥

**श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी**

विह्वला अत्यार्त्ता विरहात् यद्वा रतिपरिश्रमाद्याकुला अतो व्रीडिता तथा च हरिवंशे—

"सा स्वप्ने रमिता तेन स्त्रीभावञ्चापि लम्भिता। शोणितात्का प्ररुदती सहसैवोत्थिता निशि" ॥ इति।

तदेवं श्रीमदनिरुद्धस्य साक्षादागमनमेव गम्यते तच्च वक्ष्यमाणया चित्रलेखयेव देव्या कृतमेव ज्ञेयं तदिदमुक्तरञ्च तस्य वृत्तं नरलीलाव्यञ्जनादघटते ॥ १३ ॥ सखी सखीमिति विश्वास उक्तः अतोऽपृच्छत् अतोऽनेन कुम्भाण्ड इत्यस्य नान्वयः किन्तु तत्सुतात्वनिर्द्देशानुवादमात्रत्वम् अतश्चशब्दोपि तु शब्दार्थ एव कौतूहलेति तस्यास्तादृगुक्त्यादिना ॥ १४ ॥ मृगयसे कासीत्युक्तेः तत्र च कान्तेति यदुक्तं तत्राह—हस्तेति ॥ १५ ॥ हृदयङ्गम इत्यनुक्तं यौवनोद्भेदादिकमपि सङ्गृह्णाति ॥ १६ ॥

**श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी**

मृगयसे क्वासीत्युक्तेः। सुभ्रू ! हे सुन्दरीति सुन्दरं कञ्चित् मृगयस इति भावः। मार्गणञ्च कया वाञ्छयेत्याह—कीदृश इति। ननु स्वरमणं मृगये, तेन रन्तुं चेच्छामीति चेत्तत्राह—हस्तेति। अद्यापि नोपलक्षये, न पश्यामि, वरान्वेषणस्याप्यकृतत्वात्, हे राजपुत्रीति स्वातन्त्र्याभावादिति भावः ॥ १३ ॥ नरो मनुष्याकारः कश्चित्, श्यामत्वादिना क्रमेणोत्तमकान्ति-

---

१. क्वासि क्वासीति—वीर. । २. चोषां—वीर. । ३. कं त्वं—श्रीधर. वंशी. जीव. वीर. विश्व. । ४. स्वप्ने—श्रीधर. वंशी. जीव. विश्व.।

सौन्दर्य्य-परिच्छद-बलिष्ठत्वादीनि सर्व्वाण्युपलक्षणत्वेन सूचितानि। अतो हृदयंगम इत्यनुक्तं नवयौवनोद्भेदादिकमन्यदपि संगृह्णाति ॥ १४॥ मधु मधुरम्; यद्वा, आधरमधरसम्बन्धिमधुरपृहयतीम्, अपूर्णकामामित्यर्थः ॥ १५ ॥ अपकर्षामीति वर्त्तमाननिर्द्देशः शैघ्र्यबोधनार्थम्, त्रिलोक्यां सोऽस्तीति यदि केनचिद्भाव्यते ज्ञायते सम्भाव्यते वा; यद्वा, स्वार्थे इण्, भूयते तेन स्थीयते, तदानेष्ये, आदिश मया लिख्यमानेषु मध्ये दृष्ट्वा कथयेत्यर्थः ॥ १६ ॥

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका

सेति। सा स्वप्नोत्थिता उषा तं कान्तमपश्यन्ती क्वासि क्वासि क्वास्से क्वास इत्येवं वदन्ती तत्तदा नितरां व्रीडिता लज्जिता च ॥ १३ ॥ ततः किमासीत्तत्राह—बाणस्येति। तस्य कुम्भाण्डस्य सुता चित्रलेखा इदमन्वर्थं नाम सा कौतूहलेन युक्ता सखीमुषामपृच्छत् ॥ १४॥ प्रश्नमेवाह—तमिति। हे सुभ्रु! मनोरथविषयः कीदृश; हे राजपुत्रि! ते तव हस्तग्राहं हस्तं गृह्णातीति तथा तं भर्त्तारम् अद्यापि नोपलक्षये इत्थन्त्वेन न निश्चिनोमीत्यर्थः ॥ १५ ॥ एवमुक्ता प्राहोषा—दृष्ट इति। हृदयङ्गमः मनोहरः ॥ १६ ॥

### श्रीमज्जीवगोस्वामिकृतः बृहत्क्रमसन्दर्भः

तमहमित्यादि। आधरं अधरसम्बन्धि मधु ॥ १८–३३ ॥

इति श्रीदशमे श्रीबृहत्क्रमसन्दर्भे द्विषष्टितमोऽध्यायः ॥ ६२ ॥

### श्रीनाथचक्रवर्तिपादविरचिता चैतन्यमतमञ्जूषा

अधरं मधु अधरसम्बन्धि मधु ॥ १६–३३ ॥

इति द्विषष्टितमोऽध्यायः ॥ ६२ ॥

### श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शिनी

महेशादिष्टसंयुगप्रसङ्गमाह—तस्येति। प्राद्युम्निना अनिरुद्धेन स्वप्न इति तत्कारणं श्रीविष्णुपुराणे यथा—

उषा बाणसुता विप्र पार्वती शम्भुना सह। क्रीडन्तीमुपलक्ष्योच्चैः स्पृहाञ्चक्रे तदाश्रयाम् ॥
ततः सकलचित्तज्ञा गौरी तामाह भाविनीम्। अलमत्यर्थतापेन भर्त्रा त्वमपि रंस्यसे ॥
इत्युक्ता सा तदा चक्रे कदेति मतिमात्मनः। को वा भर्त्ता ममेत्येनां पुनरप्याह पार्वती ॥
वैशाखशुक्लद्वादश्यां स्वप्ने योऽभिभवं तव। करिष्यति स ते भर्त्ता राजपुत्रि भविष्यति ॥ इति १३–१४ ॥

हस्तग्राहं भर्त्तारं विवाहाभावान्न लक्षये ॥ १५–१७ ॥

### गूढार्थदीपिनी

हस्तस्य ग्राहो यस्मिन् तं विवाहं नोपलक्षये। हस्तं गृह्णातीति भर्तारं वा ॥ १५ ॥ हृदयङ्गमः हृदयस्पर्शी ॥ १६ ॥

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः

हस्तं गृह्णातीति तथा तं पतिम् ॥ १५–१७ ॥

### श्रीसत्यधर्मकृता श्रीभागवतटिप्पणी

तत्र जाग्रद्दशायां शय्यायां तरं तारमपश्यन्ती। हे कान्त क्वासीति सखीनां मध्य उत्तस्थौ व्रीडितेतः। यथोक्तं तत्रैव। ततो हर्म्ये शयानां तां वैशाखे मासि भामिनीम्। द्वादशी शुक्लपक्षस्य सखीगणवृतां तदा। यथोक्तः पुरुषः स्वप्ने रमयामास तां तदा। विचेष्टमानां रुदतीं देव्या वचनचोदितः। सा स्वप्ने रमिता तेन स्त्रीभावं चापि लम्भिना। शोणिताक्ता प्ररुदती सहसैवोत्थिता निशीत्यादिना। कुंभाण्डो बाणस्य मन्त्री। यस्तत्सुता नाम्ना रामा। उषाया वचनं श्रुत्वा रामा वाक्यमिदं पुनरित्युक्तेस्तत्रैव। तत्सखी चित्रलेखा स्वयं च तत्सखी उषासखी। तामपृच्छत् ॥ १३ ॥ हे सुभ्रु। कं पुरुषं स्वाप्नं मृगयसे हस्तग्राहं पाणिग्रहणकर्तारम्। अद्यापि तव मनोरथो नाभूदित्युपलक्षये ऊहयामि ॥ १४ ॥ हृदयङ्गमो मनोहरः ॥ १५ ॥ आधरं मधु अधरामृतम्। वृजिनार्णवे दुःखाब्धौ ॥ १६ ॥

### श्रीमद्वल्लभाचार्य्यकृता सुबोधिनी

ततस्तस्या व्रतसमाप्तिं कृत्वा गते, स्वप्नान्ते उत्थिता, तत्र शय्यायां स्वप्नस्य समानदेशे तमनिरुद्धमपश्यन्ती, 'क्वासि कान्ते'ति भाषन्ती, सखीनां मध्ये उत्तस्थौ। सा हि परितः सख्यो मध्ये शेते। गुप्तं सखीषु अन्वेषयन्तीव सा उत्थिता।

उत्थितताया अप्युपभोगलक्षणमाह विह्वलेति। अन्तर्व्रीडिता। भृशमत्यर्थं स्वावस्थां स्मृत्वा ॥ १० ॥ पूर्वमेव पार्वत्या चित्रलेखा नाम योगिनी तस्याः सखी निष्पादिता, यया तस्या मनोरथः सर्वोऽपि सिद्धो भवति। यद्यप्यन्या अपि जिज्ञासां कृतवत्यः, तथापि सा प्रयोजिकेति चित्रलेखाया उपाख्यानमुच्यते बाणस्य मन्त्रीति। मन्त्र्यधीनं राज्यमिति स महादेवेन दत्त इति ज्ञापितम्। कुम्भाण्ड इति नाम। ननु कुम्भाकारावण्डाविति। तस्य दुहिता चित्रलेखा। चकारादन्या अपि तस्य कन्या उषासख्यः। सखी उषायाः। उभयोरन्योन्यसखित्वे न गोप्यं किञ्चिदवशिष्यते वक्तव्ये इति सखीमूषामित्युक्तम्। अतैव पार्वत्युक्तम्, अथैवेयं विह्वलेति कौतुकसमन्विता ॥ ११ ॥ तस्या वाक्यमाह कान्तं मृगयस इति। सुभ्रु इति भ्रूभङ्गादिभावो दृश्यत इति अकन्यात्वं तस्या आह। ननु कान्तान्वेषणं युक्तमेवेति चेत्, तत्राह कीदृशस्ते मनोरथ इति। मनोरथे कृते स्वप्ने तथा दृश्यत इति दृष्ट एवोपाय इति तं मनोरथमेव पृच्छति। कश्चिन्मनोरथो भविष्यतीति चेत्, तत्राह हस्तग्राहमिति। हस्तो गृह्यते अनेनेति हस्तग्राहः पतिः, अस्मिन्निति विवाहो वा। अद्यापि ते विवाहं न लक्षये। कस्याश्चिद्बाल्य एव विवाहो भवति, पश्चात् सखीभिः सम्बन्धः, तदापि विवाहो जात इति लक्ष्यते, विवाहे तु कुलकन्यायाः तत्र मनोरथो युक्तो भवति। राजपुत्रीतिपदात् निरोधेन यथेच्छया सम्बन्धो निवारितः ॥ ११ ॥ उत्तरमाह दृष्ट इति। कश्चिद्विशेषतो निर्वक्तुमशक्यः। नरवरः मनुष्यश्रेष्ठः। सर्वेषामाकृतिर्भिन्नेति स न देवः, नापि दैत्यः, अन्यो वा, किन्तु नरश्रेष्ठ एव। स्वप्ने कात्स्न्र्यानभिव्यक्तिरिति केवलं भ्रमः स्यात्, तत्प्रकृते नास्तीति आकृतिरूपगुणादीन् वर्णयति। सर्वलक्षणसम्पन्ननरत्वं आकृतिः। श्याम इति रूपम्। कमललोचन इति सौन्दर्यम्। पीतवासा इति भूषितत्वम्। बृहद्बाहुरिति भोगयोग्यता। योषितां हृदयङ्गम इति संभोगसामर्थ्यम् ॥ १३ ॥

### श्रीसुबोधिनी-सारः

तमनिरुद्धं पश्यन्ती तत्र स्थाने हे कांत क्वासि कुत्र वर्त्तसे इति वादिनी भाषमाणा विह्वला सखीनां मध्ये उत्तस्थौ संभ्रमेण भृशमत्यर्थं लज्जिता ॥ १३ ॥ बाणस्य कुंभांडो मंत्री तस्य सुता चित्रलेखा सखी कौतूहलेन समन्वितादद्भुतदर्शनयुक्ता सखीमूषाम् अपृच्छत् ॥ १४ ॥ हे सुभ्रूः कं पुरुषं त्वं गवेषसे ते तव मनोरथ इच्छा कीदृशोऽस्ति हे राजपुत्रि ते तव हस्तग्राहं विवाहमद्यापि अधुना नाहमुपलक्षये नो पश्यामि ॥ १५ ॥ ऊषोक्तिः। श्यामवर्णः पद्मनेत्रः पीतांबरो महाबाहुः स्त्रीणां मनोहरः कश्चिन्नरः स्वप्ने दृष्टः ॥ १६ ॥

### गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

ततश्च सा ऊषा तत्र स्वप्ने तमनिरुद्धमपश्यन्ती विह्वलां सती 'हे कान्त ! क्वासि ? त्वं क गतोऽसि' इति वादिनी वदन्ती सखीनां मध्ये उत्तस्थौ जागरणं प्राप्ता। ततश्च व्रीडिता लज्जिता जाता ॥ १३ ॥ कुम्भाण्डाख्यश्च बाणस्य मन्त्री, तस्य सुता चित्रलेखाख्या। सा च ऊषायाः सखी कौतूहलेन आश्चर्येण समन्विता सती तां सखीमूषामपृच्छत् इत्यन्वयः ॥ १४ ॥ तत्प्रश्नमेवाह—कमिति। 'प्राप्तयौवनत्वेऽपि राजपुत्रीत्वेन पुरुषसम्बन्धासम्भवात्' इति सम्बोधनद्वयेन सूचयति—हे सुभ्रु ! हे राजपुत्रीति। ते तव हस्तग्राहमद्यापि नोपलक्षये न पश्यामि। क्वासि कान्तेति वचनात्त्वं कं मृगयसे ? तव मनोरथश्च कीदृशस्तद्वदेति शेषः ॥ १५ ॥ ऊषा प्राह—दृष्ट इति। हृदयंगमः मनोहरः ॥ १६ ॥

### अन्वितार्थप्रकाशिका

सेति ॥ सा ऊषा तत्र स्वप्ने तमनिरुद्धमपश्यन्ती विह्वला सती हे कान्त ! क्वासि त्वं क्व गतोऽसीति वादिनी वदन्ती सखीनां मध्ये उत्तस्थौ जागरणं प्राप्ता भृशं व्रीडिता च जाता ॥ १३ ॥ बाणस्येति ॥ कुम्भाण्डाख्यश्च बाणस्य मन्त्री तस्य सुता चित्रलेखाख्या सा च ऊषायाः सखी कौतूहलेन आश्चर्येण समन्विता सती तां सखीमूषामपृच्छत् ॥ १४ ॥ कमिति ॥ हे सुभ्रूः ! हे राजपुत्रि ! ते तव हस्तग्राहं भर्तारमद्यापि नोपलक्षये न पश्यामि। क्वासि कान्तेति वचनात्त्वं कं मृगयसे। तव मनोरथश्च कीदृशस्तद्वद ॥१५॥ दृष्ट इति ॥ श्यामः कमललोचनः पीतवासा वृहद्बाहुर्योषितां हृदयंगमः मनोहरः कश्चिन्नरः स्वप्ने दृष्टः॥१६॥

### श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्

हृदयंगमो मनोहरः ॥ १३ ॥ आधरं अधरसंबंधि। क्व यातः कुत्र गतः ॥ १४ ॥ व्यसनं दुःखं सः त्रिलोक्यां यदि भाव्यते मया दृश्यते चेत् ॥ १५-१६ ॥

### भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

सेति ॥ सा स्वप्नोत्थितोषा, तं कान्तं, तत्र क्वापि, अपश्यन्ती सती, हे कान्त, क्व असि क्वासे इत्यर्थः। इत्येवं, विह्वला सती, वादिनी वदन्ती, ततः भृशं व्रीडिता लज्जिता च सती, सखीनां मध्ये, उत्तस्थौ ॥ १३ ॥ ततः किमासीत्तत्राह ॥ बाणस्येति ॥ बाणस्य मन्त्री च मन्त्री तु, कुम्भाण्डः, तत् सुता तस्य कुम्भाण्डस्य पुत्री, सखी चित्रलेखा, इदमस्या अन्वर्थं नाम।

कौतूहलसमन्विता कौतुकेन युक्ता सती, सखीं ऊषां, अपृच्छत् ॥ १४ ॥ प्रश्नमेवाह ॥ कमिति ॥ हे सुभ्रूः, त्वं कं मृगयसे । ते तव, मनोरथः कीदृशः । हे राजपुत्रि, अद्यापि, ते तव, हस्तग्राहं भर्त्तारं, न उपलक्षये इत्थंत्वेन न निश्चिनोमीत्यर्थः ॥ १५ ॥ एवं चित्रलेखोक्तोषा प्राह ॥ दृष्ट इति ॥ हे सखि, मया स्वप्ने श्यामः, कमललोचनः, पीतवासाः, बृहद्बाहुः, योषितां हृदयंगम, कश्चित् नरः, दृष्टः ॥ १६ ॥

**कृष्णप्रिया**

राजन् ! ऊषाकुमारी स्वप्न में ही समागम के बाद अनिरुद्ध को स्वप्न में ही अन्तर्हित होता देखकर यकायक बोल उठी । हे प्रियतम ! आप कहाँ चले गये ? आप कहाँ हो ? और ऊषा की नींद टूट गई । ऊषा अतिशय विह्वल हो गयी और आसन पर बैठ गयी । उसने देखा कि स्वयं सखियों के मध्य में बैठी है । इस अवस्था से ऊषा अतिशय लज्जित हो गयी ॥ १३ ॥ राजन् परीक्षित् ! बाणासुर का कुम्भाण्ड नाम का एक मन्त्री था । उसकी चित्रलेखा नाम की एक कन्या थी वह योगिनी थी । ऊषा एवं चित्रलेखा दोनों सखियाँ थी । चित्रलेखा ने आश्चर्यवश ऊषा से प्रश्न किया—हे सुकुमारी ! हे सुलोचने ! हे राजपुत्री ! ऊषा ! मैं अच्छी तरह जानती हूँ कि आज दिन पर्यन्त तेरा किसी व्यक्ति ने पाणिग्रहण नहीं किया है फिर भी हे सखि ! तुम कान्त को ढूंढ रही हो ? तुमने क्या देखा ? तुम्हारी क्या अभिलाषा है, कौन मनोरथ है ? ॥ १४-१५ ॥ ऊषाजी ने कहा—सखी चित्रलेखा ! मैंने स्वप्न में श्याम सलोना सुन्दरवर किसी कमललोचन युवा को देखा । उसने पीताम्बर धारण किया था, मेघ श्याममनोहर कान्ति थी, आजानुबाहु था, रमणियों के चित्त चुराने वाला था; अधिक मैं नहीं जानती हूँ ॥ १६ ॥

**तमहं मृगये कान्तं पाययित्वाधरं मधु । क्वापि यात स्पृहयतीं क्षिप्त्वा मां वृजिनार्णवे ॥ १७ ॥**

**चित्रलेखोवाच**

**व्यसनं तेऽपकर्षामि त्रिलोक्यां यदि भाव्यते । तमानेष्ये नरं यस्ते मनोहर्ता तमादिश ॥ १८ ॥**

**इत्युक्त्वा देवगन्धर्वसिद्धचारणपन्नगान् । दैत्यविद्याधरान् यक्षान् मनुजांश्च यथालिखत् ॥ १९ ॥**

**मनुजेषु च सा वृष्णीन् शूरमानकदुन्दुभिम् । व्यलिखद् रामकृष्णौ च प्रद्युम्नं वीक्ष्य लज्जिता ॥ २० ॥**

**कर्दमक्षमा**

अन्वयः—अधरम्, मधु, पाययित्वा, स्पृहयतीम्, माम्, वृजिनार्णवे, क्षिप्त्वा, क्व, अपि, यातः, अहम्, तम्, कान्तम्, मृगये ॥ १७ ॥ चित्रलेखा, उवाच, ते व्यसनम्, अपकर्षामि, यदि, त्रिलोक्याम्, भाव्यते, तम्, नरम् आनेष्ये, यः, ते, मनोहर्ता, तम्, आदिश ॥ १८ ॥ इति, उक्त्वा, देवगन्धर्वसिद्धचारणपन्नगान्, दैत्यविद्याधरान्, यक्षान्, च, मनुजान्, यथा अलिखत् ॥ १९ ॥ मनुजेषु, सा, वृष्णीन्, शूरम्, आनकदुन्दुभिम्, च, रामकृष्णौ, प्रद्युम्नम्, व्यलिखत्, सा, प्रद्युम्नम्, वीक्ष्य, लज्जिता ॥ २० ॥

**श्रीधरस्वामिविरचिता भावार्थदीपिकाप्रकाशः**

स्वप्ने त्वया दृष्टः एषां मध्ये को वा भवेदिति देवादीन्यथावत्पटेऽलिखत् ॥ १९ ॥ प्रद्युम्नं लिखितं वीक्ष्य श्वसुरोऽयमिति लज्जिता ॥ २०-२१ ॥

**श्रीवंशीधरकृता भावार्थदीपिकाप्रकाशः**

तं स्वप्नदृष्टम् । वृजिनार्णवे दुःखसागरे ॥ १७ ॥ भाव्यते मल्लिखितस्तदाकारो भवत्याऽनुसंधीयेत तदा तमानेष्ये तस्माच्चित्राणि दृष्ट्वा आदिश कथय ॥ १८ ॥ इतीत्थमुक्तरीत्या ॥ १९ ॥ सा चित्रलेखा ॥ २० ॥

**श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी**

आधरं अधरसम्बन्धि मधु स्पृहयन्तीम् अपूर्णकामामित्यर्थः ॥ १७ ॥ अपकर्षामीति वर्त्तमाननिर्देशः शैघ्र्यबोधनार्थः यतो यदि त्रिलोकीमध्ये भाव्यते मया लिखितस्तदाकारो भवत्यानुसन्धीयेत तदा तच्चानेष्य इत्यर्थः । तस्माद्य इति आदिश चित्राणि दृष्ट्वा कथयेत्यर्थः ॥ १८ ॥ श्यामत्वादिलक्षणे गदितेऽप्यन्यानलिखदिति स्वसर्वज्ञता ज्ञापनेन तस्याः विश्वासोत्पादनार्थ-

१. नेष्यामि-प्रा० पा० ।

मिति ज्ञेयं नाना तादृशानां सह योगिन एव ते ज्ञेयाः विश्वेषां लिखनस्यानन्त्यप्राप्तेः ॥ १९ ॥ मनुजेष्विति युग्मकम् । विशेषेणालिखदिति नरः इत्युक्त्या तत्रापि श्यामलादिलक्षणोक्त्या तेष्वेव सम्भावनात् प्रद्युम्नं विलिखितं वीक्ष्य लज्जिता स्वाभाविकभावात् अनिरुद्धन्तं तु वीक्ष्य विलिखितं ह्रिया भावविशेषजनितयाऽवाङ्मुखीती एवङ्गुर्वादिभेदेन लज्जाया अपि भेदश्चेतसो सनेत्रादेरपि सङ्कोचविकासादितो ज्ञेयः प्रकर्षेण सगद्गदत्वादिनाह हे महीपते इति चित्रलेखायास्तादृशं लिखनसौष्ठवम् ऊषायाश्च प्रत्यभिज्ञानादिकं पृथ्व्यां कुत्रापि न सम्भवेदिति त्वया पृथ्वीशत्वाद्विज्ञायत एवेति भावः ॥ २०–२१ ॥

### श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी

देवादीनां प्रायो द्विभुजत्वादिना नराकारसाम्यत्तानप्यलिखत् । श्यामत्वादिलक्षणे गदितेऽप्यन्यानप्यलिखदिति स्वसर्व्वज्ञताज्ञापनेन तस्या विश्वासोत्पादनार्थमिति ॥ १७ ॥ विशेषेणालिखदिति नर इत्यनुक्त्वा तत्रापि श्यामत्वादिलक्षणोक्त्या तेष्वेव सम्भावनात् । लज्जिता सारूप्ये किञ्चिद्वयोऽतिरेकदृष्ट्या श्वशुरमननात् स्वाभाविकभावाद्वा ॥ १८ ॥ ह्रिया भावविशेषजनितया, अतोऽवाङ्मुखी । एवं गुर्व्वादिभेदेन लज्जाया अपि भेदो ज्ञेयः । प्रकर्षेण भावविशेषेण सगद्गदत्वादिनाह—हे महीपते इति, चित्रलेखायास्तादृशं लिखनसौष्ठवमूषायाश्च प्रत्यभिज्ञानादिकं पृथ्व्यां कुत्रापि न सम्भवेदिति त्वया पृथ्वीशत्वाद्विज्ञायत एवेति भावः ॥ १९ ॥ योगिनीति, अतएव तस्या विद्याविशेषवत्त्वात्, किंवा श्रीहरिवंशोक्त्यनुसारेण श्रीनारदतो विद्याप्राप्तेः, तथा च तत्र श्रीभगवतो बिभ्यती चित्रलेखा समाश्वास्य तेनोक्ता ( विष्णु प० ११९।१९ )–'गृह्यतां तामसी विद्या सर्व्वलोकप्रमोहिनी । कृतकृत्यस्तु ते देवि एतां विद्यां ददाम्यहम् ॥' इति । कृष्णेन साक्षाद्भगवता पालितामपि, अतस्तदिच्छयैव तत्तत् सर्व्वमिति भावः । तच्च बुद्ध्या प्रकाशमानत्वमवकलयस्येवेति सम्बोधयति–राजन्निति ॥ २० ॥

### श्रीमद्वीरराघवाचार्यकृताभागवतचन्द्रचन्द्रिका

तमिति । मृगये विचिनोमि स्पृहयतीं काङ्क्षन्तीं मां दुःखार्णवे क्षिप्त्वा कापि नूनं यातः ॥ १७ ॥ इत्येवमुक्ता प्राह चित्रलेखा—व्यसनमिति । तव व्यसनं दुःखमपनयामि कथं त्वया यदि त्रिलोक्यां कश्चिद्भाव्यते अयमेवेति निश्चीयते तर्हि तं नरं पुरुषमानेष्ये अतो यस्ते मनोहर्त्ता तं प्रति मामादिश आज्ञापय ॥ १८ ॥ इतीति । इत्युक्त्वा देवादीन् पटे यथावदलिखत् ॥ १९ ॥ यदा च मनुष्येष्वपि वृष्णीन् तत्रापि शूरादीनलिखत् तदा प्रद्युम्नं वीक्ष्य लज्जिता पुत्रतुल्यरूपत्वादिति भावः ॥ २० ॥

### श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः

तमहमित्यादि । आधरम् अधरसम्बन्धि मधु ॥ १७–३५ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

भाव्यते प्राप्यते ॥ १८–१९ ॥ एतेषां पुरुषाणां मध्ये तव पुरुषः क इति पृष्टा उषा प्रद्युम्नं वीक्ष्य श्वशुरोयमिति बुद्ध्या लज्जिता तत्पुत्रमनिरुद्धं वीक्ष्य सोसावसाविति द्विरुक्तिरतिविस्मयहर्षोदयात् अतस्तत्र चित्रपटे अयमस्य पुत्रोऽयमस्य नामेति प्रतिलेख्य प्रतिमोपरि तया अक्षराण्यपि लिज्जितानीति बुध्यते ॥ २०–२२ ॥

### गूढार्थदीपिनी

आधरम् अधरसम्बन्धि मधु अमृतम् । वृजिने दुःखम् ॥ १७ ॥ व्यसनं कष्टम् । आदिश कथय । भव्यते प्रतीयते ॥१८॥ यथा यथावत् ॥ १९॥ लज्जिता श्वशुरत्वात् ॥ २० ॥

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः

प्राप्तं व्यसनं वियोगजं दुःखमपकर्षाम्यपनयामि यदि भाव्यते अयमेवेति निश्चीयते ॥१८॥ यथा यथावत् ॥ १९–२४ ॥

### श्रीसत्यधर्मकृता श्रीभागवतटिप्पणी

यदि त्रिलोक्यां भाव्यते वर्तसे स इत्यनुचिन्त्यते तमादिश इति । उषां प्रत्युक्त्वा नाम्ना शिल्पतश्च चित्रलेखा ॥ १७॥ व्यलिखत् । शूरं वसुदेवपितरं वसुदेवं च तथा रामकृष्णौ च प्रद्युम्नं च वीक्ष्य लज्जिता । स्वाप्निकस्वरन्तृसारूप्याद्दूहितस्वश्वशूरत्वात् । विलिखितमनिरुद्धं वीक्ष्यावाङ्मुखी तदतिसारूप्यादयमेव स्वाप्निक इति निश्चित्य ह्रिया तद्दृष्टिजातलज्जया स इत्यङ्गुल्या निर्दिश्यासावसाविति विस्मयमाना प्राह ॥ २० ॥

### श्रीमद्वल्लभाचार्यकृता सुबोधिनी

ननु दर्शनमात्रेण कथं कान्तत्वम्, तत्राह **तमहं मृगये** कान्तमिति। स मम कान्तो जातः, मृगये। कथं जात इत्याकाङ्क्षायामाह **पाययित्वाधरं मधु** इति। अनेन सर्वेऽपि सम्बन्धा निरूपिताः। बहुधा सम्बन्धे हि सामार्थ्यक्षये स्त्रियाः पुरुषाधरपानम्। अनेन बहुकालावस्थानं सूचितम्। ततः क्वापि यातः, न तु विलीनः, भोगलक्षणानां विद्यमानत्वात्। विशेषसुखमदत्वा गत इति युक्तमन्वेषणमिति वक्तुमाह **स्पृहयतीं मां वृजिनार्णवे क्षिप्त्वेति**। रसेच्छामुत्पाद्य तदपूरणाद्दुःखम्॥ १४॥ ततः सख्याः प्रतिज्ञामाह **व्यसनं तेऽपकर्षामीति**। यदि त्रिलोक्यां सः, तदा ते व्यसनमपकर्षामि। कथमित्याकाङ्क्षायामाह **भाव्यत इति**। चित्रे मया लिख्यते। तत्र यस्ते मनोहर्ता तमादिश। तमहमानयिष्यामीति व्यसनापकर्षणप्रकारः। यद्यपि नरवर इति विशेषकथनात् देवादीनां लेखनमसङ्गतम्, तथापि देवादयो रूपान्तरेणोपभोगार्थमायान्तीति देवादयो नररूपा एवात्र लिख्यन्ते। ऊर्ध्वादधःपर्यन्तं स्त्रीणां दृष्टिः। अत आदौ देवलेखनम्। एते त्रिगुणाख्यो गुणाः देवादयो नव सामान्यतो लिखिताः। चकारान्मनुष्येषु सर्वप्रकाराः, देवादिष्वपि वा। मनुष्येषु श्यामत्वादिधर्मा उक्ता इति तत्साम्यं यादवेष्वेव वर्तत इति मनुजेषु सा वृष्णीनलिखीत्। ततोऽपि हृदयङ्गमादिधर्मैः उत्तरोत्तरवैशिष्ट्यरूपत्वात् वृष्णिषु शूरमलिखत्। तस्य च पुत्रमानकदुन्दुभिं वसुदेवम्। तत्र यद्यपि रामो न श्यामः, तथापि रूपान्तरेण तथा कुर्यादिति रामोऽपि लिखितः। **रामकृष्णौ चेति**। चकाराद्गदादयोऽपि लिखिताः। प्रद्युम्नं लिखितं वीक्ष्य ईषद्वैलक्षण्यात् तत्पुत्रो भवितुमर्हतीति निश्चित्य विलज्जिता। यद्यपि भगवान् तादृशमकृत्रिमं रूपं कर्तुं शक्तः, तथापि मर्यादायामेकैकस्य गुणस्याभिव्यक्त्यर्थं एक एव पदार्थो निर्णीयते। ततो यादृशो गुणोऽनिरुद्धनिदानभूतः, तेनानिरुद्धो निष्पादित एव। अन्यः क्रियमाणः कृत्रिम एव भवतीति वैलक्षण्यं भवत्येव। आधिदैविको दृष्ट इति अनिरुद्धो वा स्वयं मायया तथा आगत इति न वैलक्षण्यं लज्जया ज्ञातवती। एतत्पुत्रो भविष्यतीति। भर्तृपितामहादिभ्यो न लज्जेति लौकिकाः॥ १७॥

### श्रीसुबोधिनी–सारः

अधरं मधु अधरामृतं पाययित्वा स्पृहयतीं तदिच्छंतीं मां वृजिनस्य दुःखस्यार्णवे समुद्रे क्षिप्त्वा निपात्य क्वापि कुत्र यातो गतस्तं कांतमहं मृगये गवेषयामि॥ १७॥ चित्रलेखोक्तिः। ते तव व्यसनं दुःखम् अपकर्षामि निवर्त्तयामि यदीति संभावनायां त्रिलोक्यां भाव्यते प्रतीयते चेत् तं नरमहमानेष्यामि यस्ते तव मनोहर्त्ता चित्ताकर्षकस्तं प्रति त्वमादिशाज्ञापय॥ १८॥ इत्युक्त्वा देवादीन् मनुजान् मनुष्यांश्च यथा यथावदलिखत् तथेति पाठ इत्येके॥ १९॥ मनुजेषु वृष्णीनलिखत् तत्रापि शूरं शूरसेनम् आनकदुंदुभिं वसुदेवं रामकृष्णौ च व्यलिखत्सोषा बिलिखितं प्रद्युम्नं वीक्ष्य दृष्ट्वा लज्जिता श्वशुरत्वात्॥ २०॥

### गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

स अधरं मधु पाययित्वा स्पृहयतीं काङ्क्षन्तीं मां वृजिनार्णवे विरहदुःसमुद्रे क्षिप्त्वा क्वापि यातस्तं कान्तमहं मृगये विचिनोमीत्यन्वयः। ते तव व्यसनं दुःखमपकर्षामि अपनयामि। कथं तत्राह—यस्ते मनोहर्ता स यदि त्रिलोक्यां क्वाप्यस्ति तदा तं नरं पुरुषमहमिहानेष्ये। मया तावत्सर्वोस्मिन् भाव्यते चित्रे लिख्यते। चित्रलेखा इत्येवमुक्त्वा देवादीनलिखत्। दृष्टः कश्चिन्नर इति नरपदं पुरुषमात्रपरमिति देवादिलिखनं नानुचितम्॥ १७–१९॥ सा मनुष्येष्वपि वृष्णीन्, तत्रापि शूरादीन् अलिखत्। तत्र चानिरुद्धतुल्यरूपत्वात् प्रद्युम्नं लिखितं वीक्ष्य श्वशुरोयमिति लज्जिता जाता॥ २०॥

### अन्वितार्थप्रकाशिका

तमिति॥ सः आधरम् अधरसम्बन्धि मधु पाययित्वा स्पृहयतीं कांक्षन्तीं मां वृजिनार्णवे विरहदुःखसमुद्रे क्षिप्त्वा क्वापि यातस्तं तमहं मृगये विचनोमि॥ १७॥ व्यसनमिति। तव व्यसनं कष्टमपकर्षामि अपनयामि यस्ते मनोहर्ता स यदि मल्लिखितायां त्रिलोक्यां भाव्यते प्राप्यते सोऽयमिति त्वया प्रत्यभिज्ञायते च तर्हि तं नरमानेष्ये। अतो मल्लिखिताचित्रेषु दृष्ट्वा तमादिश कथय॥ १८॥ इतीति॥ चित्रलेखा इत्येवमुक्त्वा देवगन्धर्वादीन् तथा मनुजांश्च चित्रपटे यथा यथावदलिखत्॥ १९॥ मनुजेष्विति॥ सा मनुजेष्वपि वृष्णीन् शूरम् आनकदुन्दुभिम् रामकृष्णौ च व्यलिखत्। ततः प्रद्युम्नं लिखितं वीक्ष्य प्रियसमानरूपत्वात् तदधिकवयस्त्वाच्च श्वशुरोऽयमिति ज्ञात्वा लज्जिता जाता। यद्वा। चित्रपटे अयमस्य पुत्रोऽयं नप्ता इत्याद्यपि साऽलिखत्॥ २०॥

### श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्

चित्रितं प्रद्युम्नं॥ १७॥ अवाङ्मुखी अधोमुखी सती॥ १८॥ योगिनी मंत्रयोगकलावती॥ १९॥ योगमंत्रयोगकलामास्थिता शोणितपुरं नीत्वा। गृहीत्वा सख्यै ऊषायै प्रियंपतिं॥ २०॥

### भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

तमिति । हे सखि, सः मां मधु मधुरं, अधरमधरामृतं, पाययित्वा, स्पृहयतीं काङ्क्षन्तीं, मां वृजिनार्णवे दुःखाब्धौ, क्षिप्त्वा, क्वापि यातः । अहं तं कान्तं, मृगये ॥ १७ ॥ तदुषावाक्यं श्रुत्वा चित्रलेखा प्राह । व्यसनमिति । हे सखि, सः यदि, त्रिलोक्यां भाव्यते अयमेवेति मया निश्चीयते, तदा तु, ते तव, व्यसनं दुःखं, अपकर्षामि । निवर्त्तयिष्यामीत्यर्थः । कथमित्यत्राह । यः, ते तव, मनो हर्त्ता, तं नरं आनेष्ये । परं तु, त्वं तं, आदिश अयमिति मां निवेदय ॥ १८ ॥ इतीति । चित्रलेखा, इत्यमुना प्रकारेण, उक्त्वा, देवांश्च गन्धर्वांश्च सिद्धाश्च चारणाश्च पन्नगाश्च तान्, दैत्यान्, विद्याधरान्, यक्षान्, तथा मनुजांश्च, अलिखत् ॥ १९ ॥ मनुजेष्विति । सा मनुजेषु चापि, वृष्णीन् शूरं आनकदुन्दुभिं, रामकृष्णौ, प्रद्युम्नं च, व्यलिखत् । तत्र ऊषा, प्रद्युम्नं वीक्ष्य तु, लज्जिता । तस्य स्वश्वशुरत्वात्तद्वीक्षणावसरे संजातलज्जाऽभवदित्यर्थः ॥ २० ॥

### कृष्णप्रिया

आगे की कथा सुनो ! उसने मुझे स्वप्न में अधरामृत सुधा पिलायी मैं संतुष्ट होकर पान नहीं हो पायी कि वह मुझे कष्ट सागर में छोड़कर पता नहीं कि वह कहां चला गया ? प्रिये ! चित्रलेखा ! क्या कहूँ मैं उसी प्रियतम प्राणनाथ को खोज रही हूँ ॥ १७ ॥ चित्रलेखा बोली—प्रिय सखी, ऊषा ! बात सुन ले तेरा प्राणवल्लभ यदि इस ब्रह्माण्ड में कहीं भी होगा ? और उसे आप पहचान लोगी तब तो मैं तुम्हारी वियोग वेदना का निवारण कर सकूंगी । अब मैं सुन्दर वरों के चित्र बना रही हूँ तुम अपने प्रियतम को पहचानकर मुझे बता देना । फिर सखी चिन्ता न करना, वह पुरुष कहीं भी होगा मैं उसे तुम्हारे पास अवश्य ले आऊँगी । इतना कहकर चित्रलेखा ने उसी क्षण में देव, गन्धर्व, सिद्धचारण, पन्नग, दैत्य, विद्याधर, यक्ष एवं मनुष्यों के चित्र खींच दिये । मनुष्यों के चित्रों में भी शूरसेन वसुदेवजी के पिता जी का, पुनः श्रीवसुदेवजी का पुनः पूर्णपुरुषोत्तम भगवान् श्रीकृष्णजी का भी चित्र बना दिये । पुनः जब प्रद्युम्नजी का चित्र देखा तब तो ऊषा का सर एकाएक धरणी की ओर झुक गया ॥ १८-२० ॥

**अनिरुद्धं विलिखितं वीक्ष्योषावाङ्मुखी ह्रिया । सोऽसावसाविति प्राह स्मयमाना महीपते ॥ २१ ॥**

**चित्रलेखा तमाज्ञाय पौत्रं कृष्णस्य योगिनी । ययौ विहायसा राजन् द्वारकां कृष्णपालिताम् ॥ २२ ॥**

**तत्र सुप्तं सुपर्यङ्के प्राद्युम्निं योगमास्थिता । गृहीत्वा शोणितपुरं सख्यै प्रियमदर्शयत् ॥ २३ ॥**

**सा च तं सुन्दरवरं विलोक्य मुदितानना । दुष्प्रेक्ष्ये स्वगृहे पुम्भी रेमे प्राद्युम्निना समम् ॥ २४ ॥**

### कर्दमक्षमा

अन्वयः—महीपते, अनिरुद्धम्, विलिखितम्, वीक्ष्य, अवाङ्मुखी, ऊषा, ह्रिया, स्मयमाना, सः, असौ, असौ, इतिः, प्राह ॥ २१ ॥ योगिनी, चित्रलेखा, कृष्णस्य, पौत्रम्, तम्, आज्ञाय, राजन्, कृष्णपालिताम्, द्वारिकाम्, विहायसा, ययौ ॥२२॥ योगम्, अस्थिता, तत्र, सुपर्यङ्के, सुप्तम्, प्राद्युम्निम्, गृहीत्वा, शोणितपुरम्, सख्यै, प्रियम्, अदर्शयत् ॥ २३ ॥ मुदितानना, सा, तम्, च, सुन्दरवरम्, विलोक्य, पुम्भिः, दुष्प्रेक्ष्ये, अश्वगृहे, ( स्वगृहे ) प्राद्युम्निना, समम् रेमे ॥ २४ ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

शोणितपुरं नीत्वा ॥ २३ ॥ पुंभिर्दुष्प्रेक्ष्ये प्रेक्षितुमशक्ये ॥ २४ ॥

### श्रीवंशीधरकृता भावार्थदीपिकाप्रकाशः

एतेषां मध्ये तव पुरुषः क इति पृष्टोषा प्रद्युम्नं वीक्ष्य श्वशुरोऽयमिति बुद्ध्या लज्जिता, चित्रपटेऽयमस्य पुत्रोऽयमस्य नप्तेति प्रतिलेख्यप्रतिमोपरि तयाक्षराण्यपि लिखितानीति बुध्यते । असावनिरुद्धः । वीप्सा संभ्रमे । स स्वप्नदृष्टः ॥ २१ ॥ तमूषोद्दिष्टम् । योगिनी दैत्यात्मजत्वान्मायायोगविशारदा । यद्वा—हरिवंशानुसारेण श्रीनारदतः प्राप्तविद्या । द्वारकां प्रवेष्टुमशक्नुवत्यै चित्रलेखायै नारदेन समाश्वास्य सोक्ता "गृह्यतां तामसी विद्या सर्वलोकप्रमोहिनी । कृतकृत्यां तु दैतेयि विद्यामेतां ददाम्यहम् ॥" इति चित्रलेखा योगमायांशेति केचिदाहुः । हे राजन्निति बुद्ध्या प्रकाशमानस्त्वमवकलयस्येवेति भावः ॥ २२ ॥ तत्र द्वारकायाम् । योगं मायाबलम् "योगोऽपूर्वार्थसंप्राप्तौ संगतिध्यानयुक्तिषु" इति कोशः । नीत्वेति शेषः । सप्तम्यन्तपाठस्तु सुगमः ॥ २३ ॥ सा ऊषा । तमनिरुद्धम् ॥ २४ ॥

### श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी

योगिनीति। स्वत एव तस्या विद्याविशेषवत्त्वात् किम्वा श्रीहरिवंशोक्त्यनुसारेण श्रीनारदतो विद्याप्राप्तेः तथा च तत्र श्रीभगवतो बिभ्यती चित्रलेखा समाश्वास्य तेनोक्ता—

''गृह्यतां तामसी विद्या सर्वलोक प्रमोहिनी। कृतकृत्यास्तु देतेयी एतां विद्यां ददाम्यहम्'' ॥ इति।

कृष्णेन स्वयं भगवता पालितामपि अतस्तदिच्छयैव तत्तत्सर्वमिति भावः। तत्र बुद्धया प्रकाशमानस्त्वमवकलयेवेति सम्बोधयति राजन्निति ॥ २२ ॥ प्रियं वल्लभम् ॥ २३ ॥ मुदितं हर्षेण विकासितमाननमपि यस्याः सा हर्षोद्रेकेन अवहित्था-यामप्यशक्तेः ॥ २४ ॥

### श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी

प्रियं वल्लभम् ॥ २१ ॥ मुदितं हर्षेण विकसितमाननमपि यस्याः सा, हर्षोद्रेकेणावहित्थायामप्यशक्तेः ॥ २२ ॥ यथा तेन सा परमप्रीताभूत्तथा तया च स इत्याह–पराद्ध्येति द्वाभ्याम्। आदि-शब्दात् शय्यादयः, भोजनभक्ष्ययोश्चर्व्याचर्व्यात्वादिना भेदः, वाक्यैश्च नर्म्मादिभिः, शुश्रूषणं पादप्रक्षालनादिसेवा भक्तिर्वा ॥ २३ ॥ शश्वं पुनः पुनः, प्रकर्षेण नित्यनूतनत्वादिना वृद्धः स्नेहोऽनुरागो यस्यां वा तया, रूपादिना सुप्रसिद्धया, न बुबुधे, कति दिनान्यतीतानि, अधुना दिनं निशा वेत्यादिकं न ज्ञातवान्। कुतः ? अपहृतमिन्द्रियं मनो यस्य सः, प्रेममोहितत्वादित्यर्थः ॥ २४ ॥

### श्रीमद्वीरराघवाचार्यकृता भागवतचन्द्रचन्द्रिका

ततोऽनिरुद्धमवलोक्य ह्रिया लज्जया अवाङ्मुखी बभूव स स्वप्नदृष्टः असावेवासावेवेति प्राह—हे महीपते ! ॥ २१ ॥ तमुषया निश्चितं कृष्णस्य पौत्रमनिरुद्धं विज्ञाय योगिनी वैहायसगमनाऽन्तर्धानतूर्णगमनाद्यावहयोगशालिनी आकाशमार्गेण द्वारकां ययौ ॥ २२ ॥ तत्र द्वारकायां शोभने पर्य्यङ्के सुप्तं प्राद्युम्निमनिरुद्धं गृहीत्वा शोणितपुरमागत्येति शेषः सख्यै उषायै ॥ २३ ॥ सा चेति। सा उषा पुम्भिरितरैः प्रेक्षितुमप्यशक्ये स्वगृहे प्राद्युम्निना अनिरुद्धेन सह रेमे ॥ २४ ॥

### श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शिनी

शोणितपुरमित्यनन्तरं गत्वेति शेषः। योगमास्थितेति द्वारकायां प्रवेष्टुमशक्नुवत्यै तस्यै श्रीनारदेन योगविद्योपदेशो हरिवंशादौ दृष्टः चित्रलेखापि योगमायांशभूतेति केचिदाहुः ॥ २३ ॥ पुम्भिर्दुष्प्रेक्ष्ये पुरुषान्तरप्रवेशाशक्य इत्यर्थ ॥ २४ ॥

### गूढार्थदीपिनी

सः असौ असौ अनिरुद्धः। वीप्सा संभ्रमे। अवाङ्मुखी अधोमुखी ॥२१-२२॥ तत्र द्वारकायाम् शोणितपुरे सप्तम्यन्त-पाठ एव सुगम इति वंशीधरी ॥ २३ ॥ पुम्भिः दुष्प्रेक्ष्ये प्रेक्षितुमप्यशक्ये ॥ २४ ॥

### श्रीसत्यधर्मकृता श्रीभागवतटिप्पणी

कृष्णपौत्रमाज्ञाय ज्ञात्वा विहायसा योगिनी ययौ। योगमायावतो नगरीप्रवेशः कथं योगिनीमात्रस्य न वा वासुदेव-त्रासोऽत्रासैतस्या इत्येतद्धरिवंशवचनतः परिहर्तव्यम्। तथा हि तत्। नारदं पश्यते तत्र ध्यायन्तमुदके मुनिम्। तं दृष्ट्वा चित्र-लेखा तु हर्षेणोत्फुल्ललोचना। उपसृत्याभिवाद्येत्यारभ्य कथं हि पुण्डरीकाक्षो ज्ञापितस्तदिदं भवेत्। त्वत्प्रसादाच्च भगवन्न मे कृष्णाद्भयं भवेत्। क्रुद्धो हि स महाबाहुस्त्रैलोक्यमपि निर्दहेत्। इति गर्भीकृत्य स नारदः उवाच च शुभं वाक्यं मा भैस्त्वं समयं शृणु। त्वया नीतेऽनिरुद्धे तु कन्यावेश्म प्रवेशिते। यदि युद्धं भवेत्तत्र स्मर्तव्योऽस्मि शुचिस्मिते। ममैष परमः कामो युद्धं द्रष्टुं मनोरमे। यद्दृष्ट्वा महाप्रीतिप्रवृद्धिश्च दृढा भवेत्। गृह्यतां तामसीविद्या सर्वलोकप्रमोहिनी। कृतकृत्यस्तु ते देवि एष विद्यां ददाम्य-हमिति। भगवदतिसम्मतकार्यतया च न भीरिति मन्तव्यम् ॥ २१ ॥ सख्या उषायै पुम्भी रेमे। ढ्लोप इति दीर्घः ॥ २२-२३ ॥ वाक्यैः समयसमुचितैः ॥ २४ ॥

### श्रीमद्वल्लभाचार्य्यकृता सुबोधिनी

ततोऽनिरुद्धोऽकृत्रिमो लिखित इत्याह अनिरुद्धमिति। विशेषेण लिखितं सहजरूपं स्वप्नदृष्टसमानं दृष्ट्वा, उषा तं साक्षादेव मत्वा, पूर्वसम्बन्धं स्मृत्वा, अधोमुखी जाता। तत आदरेण अन्यं मा लिखत्विति, स एवासावसाविति द्विरुक्तवती। **स्मयमानेति** तस्याः प्राप्स्यामीति हर्षः सूचितः। **महीपते** इति सम्बोधनं भ्रमाभावाय ॥ १८ ॥ ततो वरं निश्चित्य तमानेतुं गतेत्याह **चित्रलेखेति**। **कृष्णस्य पौत्रमिति** स्त्रीणां हितकारी भविष्यति। स्वयं च योगिनी तस्याग्रे रमणं योगाभ्यासेन

ज्ञातवती । अत एव विहायसा ययौ । अन्यथा रक्षकैर्गमनागमनाशक्तेः । **राजन्निति** सावधानार्थम् । **कृष्णपालिताम्** इति । तदानीं कृष्ण एव पालकः पुराध्यक्षः स्वयं जातः, इदमेव कार्यमुद्दिश्य । अन्यथा देवैः सानुभावैश्च रक्षिता पुरीति नान्यः प्रवेशमर्हति ॥ १९ ॥ तत्रापि भगवदिच्छया अनिरुद्धोऽपि न जागर्ति, अन्यथा स एव न गच्छेत् । **स्वपर्यङ्क** इति निर्भरनिद्रात्वाय । ननु राजन्याः सावधाना भवन्ति, कथमेवं निर्भरनिद्रात्वम्, तत्राह **प्राद्युम्निम्** इति । स हि प्रद्युम्नस्य पुत्रो निर्भयः । प्रद्युम्नोऽपि हृतः, सोऽपि हृतो, भगवदिच्छयेति वा । पराभवः स्त्रीप्राप्तिश्चोभयत्र तुल्या । शक्तिह्रासस्तु नैमित्तिक इति बोध्यते । सापि तं नेतुं लौकिकमुपायं परित्यज्य योगमास्थिता । अलौकिक उपायो योगः । आस्थितिः सर्वभावेन तत्रातिभरं दत्वा । गृहीत्वा पर्यङ्कात्तमेव बालकमिव । अप्रबोधो योगानुभावः । **शोणितपुरे** इति नाम्नैव भयानकत्वमुक्तम् । **सख्यै** उषायै । तस्याः प्रियमनिरुद्धं 'अयं तव प्रिय' इति प्रदर्शितवती ॥ २० ॥ तत्र गतः प्रबुद्धः स्त्रीमण्डले । ततः सा मुदितानना तेन सह रेमे । चकारात्सोऽपि तया सह । **मुदितानने**ति तस्या भयाद्यभाव उक्तः, विषयसौन्दर्यात् । लौकिकोऽपि हेतुरस्तीत्याह **दुष्प्रेक्ष्ये स्वगृह** इति । स्त्रियः सर्वाः कन्यायां तस्मिंश्चानुरक्ताः ऐकमत्यं प्राप्ताः । मात्रादयोऽपि । **प्राद्युम्निने**ति सर्वथा कामपूरकत्वम् ॥ २१ ॥

### श्रीविट्ठलरायात्मजश्रीवल्लभकृतलेखः

**तत्र सुप्त**मित्यत्र । **पराभव** इति । शत्रोः पराभव इत्यर्थः । **शक्तिह्रास** इति । प्रद्युम्नः स्वयमेव शत्रुं हत्वा स्त्रियमानीतवान्, अयं तु स्वयं बद्धः, पश्चाद्भगवता मोचित इति शक्तिह्रासो निमित्तवशात् । कालेन तत्रापि विषयवैचित्र्या मनोबन्धो युक्त एवेति पूर्वमुक्तत्वादित्यर्थः ।

### श्रीसुबोधिनीसारः

कृष्णस्य पौत्रं तमनिरुद्धं ज्ञात्वा योगिनी योगोस्या विद्यत इति योगबलयुक्ता चित्रलेखा गुणनाम्नी विहायसाकाशमार्गेण कृष्णेन पालितां द्वारकां ययौ जगाम हे राजन् ॥ २२ ॥ नारदोक्तविद्याबलेन तत्र प्रवेश इति हरिवंशेऽन्यथा कृष्णपालितायां पुरि तस्याः प्रवेशानुपपत्तौ हरणं न स्यादिति भावः । पर्यंके शय्यायामुपरि सुप्तं प्रद्युम्नस्यापत्यं गृहीत्वा योगमास्थिता शोणितपुरमागत्य सख्यै ऊषायै प्रियमनिरुद्धमदर्शयत् ॥ २३ ॥ सुन्दरं वरमित्येके अति सुन्दरमिति गुरवः व्याघ्रादिवच्छ्रेष्ठार्थवाचित्वेनोत्तरपदनियमात् तमनिरुद्धं विलोक्य दृष्ट्वा हर्षितानना प्रसन्नमुखी पुंभिः दुष्प्रेक्ष्ये द्रष्टुमशक्ये स्वगृहे आत्ममन्दिरे प्राद्युम्निनानिरुद्धेन समं सह रेमे ॥ २४ ॥

### गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

ततोऽनिरुद्धं लिखितं वीक्ष्य हे महीपते ! सोषा ह्रिया लज्जया अवाङ्मुखी स्मयमाना हर्षेण प्रहसितमुखी च सती स मया दृष्टोसावसाविति प्राहेत्यन्वयः । वीप्सा सम्भ्रमसूचिका ॥ २१ ॥ चित्रलेखा तमूषया निर्दिष्टं कृष्णस्य पौत्रमनिरुद्धं विज्ञाय विहायसाऽऽकाशमार्गेण कृष्णपालितां द्वारकां ययावित्यन्वयः । समुद्रादिभिर्दुर्गमायामेवंगमनसामर्थ्ये हेतुमाह— योगिनीति । तत्र द्वारवत्यां शोभने पर्यङ्के सुप्तं प्राद्युम्निमनिरुद्धं गृहीत्वा पुनर्योगमास्थाय शोणितपुरमागत्य सख्ये ऊषायै प्रियं तमदर्शयत् ॥ २२–२३ ॥ साच ऊषा तं विलोक्य मुदितानना सती इतरैः पुम्भिरवेक्षितुमप्यशक्ये स्वगृहे तेन प्राद्युम्निना समं सह रेमे ॥ २४ ॥

### अन्वितार्थप्रकाशिका

अनिरुद्धमिति ॥ हे महीपते ! अनिरुद्धं लिखितं वीक्ष्य सा ऊषा ह्रिया लज्जया अवाङ्मुखी स्मयमाना सती स मया दृष्टोऽसावसाविति प्राह स्म ॥ २१ ॥ चित्रलेखेति ॥ योगिनी सा चित्रलेखा तमूषया निर्दिष्टं कृष्णस्य पौत्रमनिरुद्धं विज्ञाय कृष्णपालितां द्वारकां विहायसाकाशमार्गेण ययौ ॥ २२ ॥ तत्रेति । योगमास्थिता सा चित्रलेखा द्वारकां प्रवेष्टुमशक्नुवत्यै तस्यै नारदेन योगविद्योपदेशो हरिवंशादौ दृष्टः । चित्रलेखाऽपि योगमायांश इति केचित् । तत्र द्वारकायां शोभने पर्यङ्के सुप्तं प्राद्युम्निमनिरुद्धं गृहीत्वा शोणितपुरं नीत्वा सख्यै ऊषायै प्रियं तमदर्शयत् ॥२३॥ सेति । सा च ऊषा सुन्दरेषु वरं तं विलोक्य मुदितानना सती इतरैः पुंभिर्दुष्प्रेक्ष्येऽवेक्षितुमप्यशक्ये स्वगृहे तेन प्राद्युम्निना समं सह रेमे । पराद्ध्येति द्वयम् ॥ सोऽनिरुद्धश्च कन्यापुरे गूढः शश्वन्नित्यं प्रवृद्धः स्नेहो यस्यास्तयोषया पराद्ध्यैः अमूल्यैर्वासःस्रगादिभिः पानभोजनभक्ष्यैः मधुरवाक्यैश्च शुश्रूषया चार्चितो बहुमत अत एवापहृतमिन्द्रियं मनो यस्य सः गच्छतोऽहर्गणान्न बुबुधे न ज्ञातवान् ॥ २४–२६ ॥

### श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्

पुंभिः दुःप्रेक्ष्ये दृष्टुमशक्ये ॥ २१ ॥ पराद्ध्यैरमूल्यैः वासःप्रभृतिभिः शुश्रूषया पादसंवाहनादिना चर्चितः ॥ २२ ॥ कन्यांतःपुरे । अहर्गणान् दिन् पूगान् ॥ २३ ॥ आप्रीतामतिप्रसन्नां अतएव दुरवच्छदैः गोपयितुमशक्यैः हेतुभिः रतिचिह्नैः हतव्रतां लक्षयां चक्रुः दृष्टवंतः भटा इति शेषः ॥ २४ ॥

**भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी**

अनिरुद्धमिति । ऊषा, अनिरुद्धं विलिखितं, वीक्ष्य ह्रिया लज्जया हेतुना, अवाङ्मुखी न्यक्कृतास्या, बभूव ! हे महीपते, स्मयमाना सती, सः असौ, असौ, इति प्राह ॥ २१ ॥ चित्रलेखेति । योगिनी सम्यक् सविदितयोगमार्गा, चित्रलेखा, तमनिरुद्धं, कृष्णस्य पौत्रं, आज्ञाय हे राजन्, विहायसा आकाशमार्गेण, कृष्णपालितां द्वारकां, ययौ ॥ २२ ॥ तत्रेति । योगं आस्थिता चित्रलेखा, तत्र द्वारकायां, स्वपर्यङ्के सुप्तं, प्राद्युम्निमनिरुद्धं, गृहीत्वा सपर्यङ्कमुपादाय, शोणितपुरं एत्य, सख्यै ऊषायै, प्रियं अदर्शयत् ॥ २३ ॥ सेति । सा च सोषापि, सुन्दरवरं रूपवत्सु श्रेष्ठं, तमनिरुद्धं, विलोक्य मुदितमाननं यस्यास्तथाभूता सती, पुम्भिः पुरुषैः, दुष्प्रेक्ष्ये वीक्षितुमप्यशक्ये, स्वगृहे प्राद्युम्निनाऽनिरुद्धेन, समं साकं, रेमे चिक्रीड ॥ २४ ॥

**कृष्णप्रिया**

राजन् ! यह अवस्था देखकर चित्रलेखा हर्षित हुई और उत्साह से जब श्री अनिरुद्ध जी का चित्र बनाया तब तो देखते ही लज्जावश उषा जी का मुखकमल धरणी की ओर झुक गया। पुनः मन्दस्मित मुख सरोज से मधुर स्वर से और नेत्र संकेत से कहा कि यही मेरे प्राणनाथ हैं ॥ २१ ॥ महाराज परीक्षित ! चित्रलेखा चित्रिका तो थी पुनः समर्थयोगिनी भी थी। उसने जाना कि यह सुन्दर वर युवा त्रिभुवन सुन्दर भगवान् श्रीकृष्ण चन्द्र जी के सुपौत्र हैं तो वह आनन्दविभोर हो गई और चित्रलेखा नभोमार्ग से रात्री में ही भगवान् श्रीकृष्ण से सुरक्षित श्रीद्वारिकापुरी में पहुँच गयी। प्रभु के दिव्य भवन में श्री अनिरुद्धजी अत्यन्त सुन्दर पर्यङ्क पर निद्रा ले रहे थे। चित्रलेखा योगिनी थी अतः अपने योगबल के सामर्थ्य से श्रीअनिरुद्ध जी को उठाकर बाण के नगर शोणितपुर ले आयी और अपनी प्रिय सखी उषा जी का अपने प्रियतम से समागम करा दिया ॥ २२-२३ ॥ श्री उषा कुमारी अपने अभीष्ट सर्वाङ्ग सुन्दर प्रियतम पति को प्राप्त कर अत्यन्त प्रसन्नवदना हो गयीं। उषा का निवासस्थान ही ऐसा था कि जहाँ किसी भी पुरुष का प्रवेश संभावित न था सेवकों से सुरक्षित था। केवल भगवान् की ही ईच्छा से अनिरुद्ध जी मिल गये थे वह अपने निवास में अनिरुद्ध जी के साथ विहार करने लगी ॥ २४ ॥

**परार्घ्यवासः स्रग्गन्धधूपदीपासनादिभिः । पानभोजनभक्ष्यैश्च वाक्यैः शुश्रूष[1] यार्चितः ॥ २५ ॥**
**गूढः कन्यापुरे शश्वत् प्रवृद्धस्नेहया तया । नाहर्गणान् स बुबुधे ऊषयापहृतेन्द्रियः ॥ २६ ॥**
**तां तथा यदुवीरेण भुज्यमानां [2]हतव्रताम् । हेतुभिर्लक्षयांचक्रुरा[3]प्रीतां दुरवच्छदैः ॥ २७ ॥**
**भटा [4]आवेदयांचक्रू राजंस्ते दुहितुर्वयम् । विचेष्टितं लक्षयामः कन्यायाः कुलदूषणम् ॥ २८ ॥**

**कर्दमक्षमा**

अन्वयः—शश्वत्, परार्घ्यवासः स्रग्गन्धधूपदीपासनादिभिः, च, पानभोजनभक्ष्यैः, च, वाक्यैः, प्रवृद्धस्नेहया, शुश्रूषया, अर्चितः, ऊषया, अपहृतेन्द्रियः, तया, कन्यापुरे, गूढः, सः, अहर्गणान्, न, बुबुधे ॥ २५-२६ ॥ ताम्, यदुवीरेण, तथा, भुज्यमानाम्, हतव्रताम्, आप्रीताम्, दुरवच्छदैः, हेतुभिः, लक्षयाञ्चक्रुः, भटाः, ओदयाञ्चक्रुः, राजन् ! ते दुहितुः, विचेष्टितम्, कन्यायाः, कुलदूषणम्, लक्षयामः ॥ २७-२८ ॥

**श्रीधरस्वामिविरचिता भावार्थदीपिकाप्रकाशः**

स च परार्ध्यैरमूल्यैर्वासः स्रगादिभिः शुश्रूषणपूर्वकमर्चितः सन् ॥२५॥ तया ऊषयाऽपहृतेन्द्रियोऽहर्गणाम् दिनसमूहान्न बुबुधे ॥ २६ ॥ आप्रीतामतिहृष्टाम् । दुरवच्छदैश्छादयितुमशक्यैः ॥ २७ ॥ विचेष्टितं विरुद्धाचरणम् ॥ २८ ॥

**श्रीवंशीधरकृता भावार्थदीपिकाप्रकाशः**

भोजनपदमत्र लेह्यादिपरम् ॥ २५ ॥ सोऽनिरुद्धः ॥ २६ ॥ हतो नष्टो व्रतः पितृदानपूर्वकपतिस्वीकाररूपो धर्मो यस्यास्सा ताम् व्रतो धर्मोपवासयोः' इति धरणिः । हेतुभिः पुंसंगत्रोधकेर्त्रक्निरीक्षणदेहसंस्कारादिभिः ॥ २७ ॥ भटा गृहरक्षकाः "भटः स्यात्पुंसि वीरेऽथ प्रभेदे पामरस्य च" इति मेदिनी । कुलदूषणं व्यभिचारम् ॥ २८ ॥

**श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी**

परार्द्ध्येति युग्मकम् । पानभोजने पेयभोज्ये "कृत्यल्युटो बहुलम्" [ ३-३-११३ ] भोज्यभक्ष्ययोश्चर्व्याचर्व्यत्वादिना भेदः एतैर्यच्छुश्रूषणं तेनार्चितः शश्वत् पुनः पुनःप्रकर्षेण नित्यनूतनादिना वृद्धःस्नेहोऽनुरागो यस्याः यस्यां वा तया नाहर्गणा-

---

१. षणार्चितः-प्रा. पा. । २. क्षत-वीर. ; हतत्रपाम्-प्रा. पा. । ३. चक्रुर्दु-वीर. । ४. निवेदयामासू-वीर. ।

निति श्रीकृष्णपरित्यागेन तत्र चिरस्थितौ सिद्धान्तः तच्च लीलाविशेषाय श्रीकृष्णेच्छयैव ज्ञेयम् तत एव उषया अपहृतम् इन्द्रियं मनो यस्य सः प्रेममोहित इत्यर्थः ॥ २५–२६ ॥ यदुवीरेणेति । परमविदग्धेन निर्भयेन च तेन भुज्यमानां तां हृतव्रतां स्खलितकन्यानियमां लक्षयाञ्चक्रुः भटा इत्युत्तरस्थेनैवान्वयः । कैर्हेतुभिः दुरवच्छदैः हेतुभिः परम्परावगतैः रतिचिह्नैः तत्र मुख्यं चिह्नम् आप्रीतामिति ॥ २७ ॥ भटा अन्तःपुरचराः षण्डादयो रक्षिणो बाणभृत्याः ॥ २८ ॥

### श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी

तथा तेनोक्तप्रकारेण भुज्यमानाम्, अतो हृतं व्रतं कन्यानियमो यस्यास्ताम्, हृतत्रपामिति पाठे यतो निर्लज्जाम्, अत एव आप्रीताम्, यदुवीरेणेति परमं निर्भयत्वं वैदग्ध्यादिकञ्च सूचितम्, अत एव दुरवच्छदैर्हेतुभी रतिचिह्नैः ॥ २५ ॥ भटा अन्तःपुरचराः षण्टकुब्जादयो रक्षिणो बाणभृत्याः, एषामुभयतोऽप्यन्वयः । हे राजन्निति राज्ञे भृत्यैरवश्यमेव स्वप्रयोजनं विज्ञाप्यमिति, किंवा राज्ञस्तव पुत्र्यास्तदसम्भाव्यमिति भावः ॥ २६ ॥ तच्च कथमभूदित्यस्माभिर्बोद्धुं न शक्यत इत्याहुः—अनपायिभिरिति । तु अपि, अस्य यथापेक्षं सर्वैरन्वयः । हे प्रभो ! इति त्वत्प्रभावेणान्तःपुरेऽन्यस्य प्रवेशो नैव सम्भवतीति भावः । अतः पुम्भिर्दुष्प्रेक्षाया अपि, यद्वा, अस्माभिः सदा द्रष्टुमशक्याया इत्यर्थः । केवलं गृहान्तरावृत्य गुप्ताया इति स्वदोषः परिहृतः, दुष्प्रेक्ष्या इति पाठे सखीद्वारैव तदिति भावः ॥ २७ ॥ ततस्तस्माद्भटानामावेदनाच्छ्रुतदूषणः, ततोऽतिदुःखितःप्रकर्षेण शनैर्निगूढतया प्राप्तो गतः सन् ॥ २८ ॥

### श्रीमद्वीरराघवाचार्यकृता भागवतचन्द्रचन्द्रिका

परार्ध्यैति । परार्ध्यैः वासःप्रभृतिभिः शुश्रूषया चार्चितो बहुमतः सोऽनिरुद्धः उषाया गृहे गूढः शश्वन्नित्यं प्रवृद्धः स्नेहो यस्यास्तयाऽपहृतमिन्द्रियं मनो यस्य सः अहर्गणान्न बुबुधे न ज्ञानवान् ॥ २५–२६ ॥ तामिति । यदुवीरेण अनिरुद्धेन भुज्यमानामत एव क्षतं विहतं व्रतं कन्याया विहितं यस्यास्तथाभूतां वीक्ष्य दुरवच्छदैश्छादयितुमशक्यैर्हेतुभिश्चिन्हैर्दूषितां लक्षयाञ्चक्रुः ॥ २७ ॥ भटाः ततस्ते राज्ञे बाणायावेदयाञ्चक्रुः आवेदनप्रकारमेवाह—राजन्नित्यादिना न विद्मह इत्यन्तेन । हे राजन् ! कुलं दूषयतीति तथा तच्चेष्टितं लक्षयामः ॥ २८ ॥

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः

अपहृतेन्द्रियः प्रेममोहित इत्यर्थः ॥ २६–२७ ॥ भटाः षण्डादयः ॥ २८–३१ ॥

### श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शिनी

एतैर्यत् शुश्रूषणं तेनार्चितः ॥ २५–२६ ॥ हेतुभिः रतिचिह्नैः दुरवच्छदैः छादयितुमशक्यैः आप्रीतामत्यानन्दवतीमिति मुख्यं रतिचिह्नं पुरपालकभटश्रिय इति शेषः ॥ २७ ॥ भटाः प्रकारान्तरेण जानन् बाणो नः शास्ति करिष्यतीति प्राप्ताशङ्काः ज्ञापयामासुः कन्याया अपरिणीतायाः अपि ॥ २८ ॥

### गूढार्थदीपिनी

पराद्ध्यैः अमूल्यैः वासःस्रगादिभिः ॥ अपहृतेन्द्रियः आकृष्टमना अहर्गणान् दिनसमूहान् ॥ २६ ॥ हृतं व्रतं कन्यात्वलक्षणम् यस्याः छादयितुमशक्यैः हेतुभिः रतिचिह्नैः । आप्रीताम् अतिप्रसन्नाम् ॥ २७ ॥ भटाः गृहरक्षकाः । विचेष्टितं विरुद्धाचरणम् व्यभिचारं कुलदूषणम् ॥ २८ ॥

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः

पराद्ध्यैरमूल्यैर्वासःप्रभृतिभिः वाक्यैरनुकूलैः शुश्रूषणपूर्वकमर्चितः ॥ २५ ॥ आप्रीतामतिहृष्टाम् हृतं विहतं व्रतं कन्याकृत्यं यस्याः तां हेतुभिः रतिचिह्नैः दुरवच्छदैश्छादयितुमशक्यैः लक्षयाञ्चक्रुः भटा एव स्वसखीद्वारेति बोध्यम् दुष्प्रेक्षे स्वगृहे पुम्भिरित्युक्तवान् ॥ २६–२७ ॥ विचेष्टितं विपरीतं कर्म लक्षयाम। केवलमिदमित्थमिति तु न जानीम इत्याहुः ॥ २८ ॥

### श्रीसत्यधर्मकृता श्रीभागवतटिप्पणी

स्नेहयातयेत्येकं पदं वा । स्नेहत्वेन यातया उषया । अपहृतानि स्वमात्रपराणि कृतानीति ॥ २५ ॥ हृन्तं व्रतं कन्यावस्थावश्यकं कर्म यया सा तां दुरवच्छदैर्दुःसाध्योऽवच्छद आच्छादनं येषां ते तैर्हेतुभिश्चिन्हैराप्रीतां बहुतुष्टां लक्षयाञ्चक्रुः ॥ २८ ॥ अतिस्फुटानि लक्षणानि नाच्छादयितुं शक्यानि । किञ्च यथाकथञ्चिदाच्छादनेऽस्मच्छिरच्छेदने राज्ञा आज्ञा भवेदिति भीता भटान्न्यवेदयन्नित्याह । भटा इति । तत्प्रकारमाह । राजन्निति । वयं ते दुहितुः कन्यायाः कुलदूषणं चेष्टितं लक्षयाम

इति ॥ २७ ॥ यूयं क्व गताः कथं च कोऽन्तर्गत इत्यत आहुः। अनपायिभिः ववाप्यगच्छद्भिरिति। गुप्ताया दुष्प्रेक्षाया दुराचारेति दुष्टा प्रेष्या दूतिका यस्याः सा तस्याः पायिनो न भवन्तीत्यपायिनस्ते न भवन्तीत्यनपायिनोऽतिशयेन मद्यपायिन इत्यर्थः। दैत्यानां धर्मोऽयमिति राजपुरत उक्तौ न बाधेतेत्येवमुक्तिरित्यान्तरङ्गिको भावः। अत एव न विग्रह इति सुलग्नम्। पुंभिः कन्यायाः कृतदूषणम्। बहुवचनेनैकमात्रपर्याप्तसुरता तव तनुजेति तदूहनेन सम्भवति। समेसमेता एव वदन्पृथगिति वा तदिति वा। पुम्भिरस्माभिरित्यन्वये न चाशङ्का नोत्तरं न विद्महे। हे राजन् न विद्महेति वा। विदो लटो वेति स्मरणात् ॥ २८ ॥

## श्रीमद्वल्लभाचार्य्यकृता सुबोधिनी

निलीय क्लेशरमणं व्यावर्तयति परार्ध्येति। परार्ध्यान्यमूल्यानि सर्वाण्येव। धूपदीपासनादिभिरिति देववत्पूजनमुक्तम्। स्नातस्य प्रथमं वस्त्रम्, ततः स्रजः, ततो गन्ध इति। केशेषु संस्कारार्थं धूपः। ततो गृहे प्रविष्टस्य आरात्रिकम्। तत उपवेशनार्थमासनम्। ततः पानभोजनभक्ष्याणि। पानं मादकरुच्युत्पादकद्रव्यकृतम्। भोजनं प्रकृतम्। भक्ष्यं ताम्बूलादि। अथवा। कदाचित्पानम्, कदाचिद्भक्ष्याणि। चकारात्तत्सम्बन्धीनि। मानसस्तु सिद्ध एवेति बाह्या एते निरूपिताः। **वाक्यै**रिति वाचनिकी। शुश्रूषा कायिकी। सर्वभावेनार्चितः ॥ २२ ॥ सोऽपि तासां इच्छानुरोधी जात इत्याह **गूढः कन्यापुर** इति। शश्वन्निरन्तरमुपचाराणां प्रतायमानत्वादनुरोधः। **प्रवृद्धस्नेहये**ति निरन्तरं साधनेषु हेतुः। तस्य क्रियान्तरस्मरणाभावायाह **नाहर्गणान्स बुबुध** इति। ऊषयेति। पूर्वस्त्रीणामप्यस्मरणं सर्वोत्तमैषेति च द्योतितम्। अपहृतं वशीकृतं तदधीनं जातमिन्द्रियं यस्य ॥ २३ ॥ ततः पुरुषोपभुक्ता गर्भकृतैर्लक्षणैः भोगकृतैरेव वा हृतं व्रतं यस्याः। कन्याया ब्रह्मचर्यं व्रतम्, तदा हृतव्रतां तां लक्षयांचक्रुः। **यदुवीरेणे**ति निर्भरो भोग उक्तः तेन स्पष्टानि चिह्नानि। आसमन्तात् पीतां पीतवर्णां, श्रमाद्गर्भेण वा स्त्रीणां तथात्वं भवति। **दुरवच्छदै**रिति। आच्छादयितुमशक्यैः धर्मैः रूपेण च ज्ञात्वा। स्वापराधशङ्कया भटा आवेदयांचक्रुः। तेषां रक्षकाणां कन्यान्तःपुराधिकारिणां वाक्यमाह राजन्निति। अयुक्तं कथं श्राव्यत इत्याशङ्क्य संबोधनेन पश्चान्महदनिष्टं सूचयन्ति। विचेष्टितं व्यभिचारम्। **लक्षयाम** इति प्रमाणं तर्कितमात्रम्। नन्वस्तु को दोष इति चेत्, तत्राह **कुलदूषण**मिति। यद्यपि पापादिना न तेषां भयम्, तथापि दैत्याः न व्यभिचारिणो भवन्तीति। तेषां कुले व्यभिचारो दूषणम्, यथा देवानामनृतम् ॥ २५ ॥

## श्रीसुबोधिनी-सारः

परार्ध्यैरमूल्यैर्वासआदिभिः पानं पेयं रसालादिफलरसदुग्धादि भोजनं ओदनादिभक्ष्यं पर्पटादि तैः वचनैः सेवयार्चितः ॥ २५ ॥ कन्यायाः पुरे गूढो गुप्तः शश्वन्निरंतरं प्रवृद्धः स्नेहो यस्याः तयोषयाऽपहृतमिन्द्रियं मनो यस्य सोनिरुद्धोऽहर्गणान् न बुबोध न विजज्ञे ॥ २६ ॥ तथोक्तप्रकारेण यदुवीरेण अनिरुद्धेन भुज्यमानां हृतं व्रतं कन्यात्वलक्षणं यस्यास्तामाप्रीताम् अतिहृष्टां तामूषां दुरवच्छदैः छादयितुमशक्यैर्हेतुभिर्गर्भस्थित्यादिलक्षणैर्लक्षयामासुः ॥ २७ ॥ भटा द्वारपाला निवेदयां बभूवुः हे राजन् ते तव दुहितुः पुत्र्याः कुलस्य दूषणं यस्मात्तद्विचेष्टितं वयं लक्षयामः ॥ २८ ॥

## गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

सोऽनिरुद्धश्च कन्यापुरे गूढः शश्वन्नित्यं प्रवृद्धः स्नेहो यस्यास्तयोषया परार्ध्यैः अमूल्यैर्वासःप्रभृतिभिः शुश्रूषया चर्चितो बहुमतः अत एवापहृतमिन्द्रियं मनो यस्य सः गच्छतोहर्गणान्न बुबुधे न ज्ञातवान् इति द्वयोरन्वयः ॥ २५-२६ ॥ तामूषां यदुवीरेण तथा निगूढतया भुज्यमानां अतएवाऽऽप्रीतां दुरवच्छदैः छादयितुमशक्यैर्गर्भधारणादिभिर्हेतुभिर्हृतं व्रतं पुरुषसम्बन्धराहित्यं यस्यास्तथाभूतां द्वारपाला भटा लक्षयाञ्चक्रुः ॥ २७ ॥ ततश्च ते राज्ञे बाणायावेदयाञ्चक्रुः। तदावेदनप्रकारमाह—राजन्निति सम्बोधयन्तो आत्मनोपि ततो भयं सूचयन्ति। ते दुहितुः कन्यायाः विवाहरहिताया एव कुलं दूषयतीति तथाभूतं परपुरुषसम्बन्धलक्षणं चेष्टितं वयं लक्षयामः ॥ २८ ॥

## अन्वितार्थप्रकाशिका

तामिति। तामूषां यदुवीरेण तथा निगूढतया भुज्यमानाम् अत एवाऽऽप्रीतामतिहृष्टां दुरवच्छदैः छादयितुमशक्यैर्हेतुभिः रतिचिह्नैर्हृतं व्रतं पुरुषसम्बन्धराहित्यं यस्यास्तथाभूतां भटाः अन्तःपुरचराः षण्ढाः लक्षयांचक्रुः ॥ २७ ॥ भटा इति। ततश्च ते भटाः राज्ञे बाणायावेदयांचक्रुः। हे राजन्! ते दुहितुः कन्यायाः विवाहरहिताया एव कुलं दूषयतीति तथाभूतं परपुरुषसंबन्धलक्षणं चेष्टितं वयं लक्षयामः ॥ २८ ॥

## श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्

ते तव दुहितुः कन्यायाः विचेष्टितं। कुलदूषणं ॥ २५ ॥ अनपायिभिरन्यत्रागच्छद्भिः सावधानैश्च पुंभिः दुःप्रेक्ष्यायाः दृष्टुमशक्यायाः कन्यायाः दूषणं ॥ २६ ॥ यदूद्वहं यदुपुत्साहजनकमनिरुद्धं ॥ २७ ॥ कामात्मजं प्रद्युम्नतनयं ॥ २८ ॥

**भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी**

परार्घ्येति । वासांसि च स्रजश्च गन्धश्च धूपश्च दीपश्च आसनं च परार्घ्यानि वासःप्रभृतीनि आदयो येषां तैः, पानं च भोजनं च भक्ष्यं च तैः, वाक्यैर्मधुरभाषणैः, शुश्रूषया च, अर्चितो बहुमतः ॥ २५ ॥ गूढ इति । सोऽनिरुद्धः, कन्यागृहे ऊषाया भवने, गूढः ऊषया अपहृतमिन्द्रियं मनो यस्य तथाभूतः सन्, शश्वत् प्रवृद्धः स्नेहो यस्यास्तया, तयोषया, क्रीडन् संश्चेति शेषः । अहर्गणान् न बुबुधे । इति द्वयोरेकसंबन्धः ॥ २६ ॥ तामिति । यदुवीरेणानिरुद्धेन, भुज्यमानां अत एव, क्षतं विहतं व्रतं कन्याव्रतं यस्यास्तां, आप्रीतामतिहृष्टां, तामूषां, तथा तथाभूतां वीक्ष्य, दुरवच्छदैः छादितुमशक्यैः, हेतुभिः चिह्नैः, भटाः लक्षयांचक्रुः पुंसंबन्धवतीं तर्कयांचक्रुरित्यर्थः ॥ २७ ॥ भटा इति । ततः भटास्तद्रक्षणार्थमास्थापिता जनाः, हे राजन्, वयं कन्यायाः, ते तव, दुहितुः पुत्र्याः, कुलदूषणं विचेष्टितं लक्षयामः, इति आवेदयांचक्रुः राज्ञे कथयामासुः ॥ २८ ॥

**कृष्णप्रिया**

दिन-प्रतिदिन बढ़ते अनुराग से ऊषा दिव्य वस्त्र, कुसुमों की मालाएँ, सुगन्धमय तैल-फूलेल इत्यादि उपकरण, धूप दीप, उत्तम आसनादि वस्तुओं से, श्रेष्ठ स्वादिष्ट पेय पदार्थों से; भक्ष्य-भोज्य-चोष्य-लेह्य-भोजन सामग्रियों से, मधुर वार्तालाप से श्रीअनिरुद्ध जी की अविश्रान्त अवस्था से सेवा-शुश्रूषा करती थीं । परम सुन्दरी और स्नेहमयी ऊषाजी ने अपने स्नेहानुराग से अनिरुद्धजी के हृदय में स्थान प्राप्तकर लिया और अनिरुद्ध जी गुप्तरूप से कन्या के अन्तःपुर में रह रहे हैं—यह बात भूल गये और यह भी अनुसन्धान न रहा कि यहाँ रहे कितना समय हुआ ॥ २५-२६ ॥ राजन् परीक्षित् ! यदुवीर श्री अनिरुद्ध जी के समागम से श्री ऊषा कुमारी का कौमार्यव्रत तो नहीं ही रहा और अङ्ग-प्रत्यङ्गों के स्वरूप में असाधारण परिवर्तन भी आ गया था जो स्पष्ट कह रहा था कि ऊषा ने गार्हस्थ्य में प्रवेश कर लिया है । पुनः ऊषा अत्यन्त प्रसन्न भी रहने लगी थी । पहरेदारों ने भी समझ लिया था कि ऊषा अवश्य ही किसी पुरुष के संसर्ग में है । राक्षसों ने बाणासुर को जाकर सुनाया कि राजन् ! आप की कुमारी ऊषा के व्यवहार से और रंगढंग से निश्चय हो चुका है कि ऊषा किसी पुरुष के संसर्ग में है और कुलदूषण होने जा रहा है ॥ २७-२८ ॥

**अनपायिभिरस्माभिर्गुप्तायाश्च[1] गृहे प्रभो । कन्याया दूषणं पुम्भिर्दुष्प्रेक्ष्याया न विद्महे ॥ २९ ॥**
**ततः प्रव्यथितो बाणो दुहितुः श्रुतदूषणः । त्वरितः कन्यकागारं प्राप्तोऽद्राक्षीद् यदूद्वहम् ॥ ३० ॥**
**कामात्मजं[2] तं भुवनैकसुन्दरं श्यामं पिशङ्गाम्बरमम्बुजेक्षणम् ।**
**बृहद्भुजं कुण्डलकुन्तलत्विषा स्मितावलोकेन च मण्डिताननम् ॥ ३१ ॥**
**दीव्यन्तमक्षैः प्रिययाभितृण्णया[3] तदङ्गसङ्गस्तनकुङ्कुमस्रजम् ।**
**बाह्वोर्दधानं मधुमल्लिकाश्रितां तस्याग्र आसीनमवेक्ष्य विस्मितः ॥ ३२ ॥**

**कर्दमक्षमा**

अन्वयः—हे प्रभो ! अनपायिभिः, अस्माभि गृहे, गुप्तायाः, च पुम्भिः, दुष्प्रेक्षायाः, कन्यायाः, दूषणम्, न, विद्महे ॥ २९ ॥ ततः, दुहितुः, श्रुतदूषणः, प्रव्यथितः, बाणः, त्वरितः, कन्याऽऽगारम्, प्राप्तः, यदुद्वहम्, अद्राक्षीत् ॥ ३० ॥ भुवनैकसुन्दरम्, श्यामम्, पिशङ्गाम्बरम्, अम्बुजेक्षणम्, बृहद्भुजम्, कुण्डलकुन्तलत्विषः, स्मितावलोकेन, मण्डिताननम्, अभितृण्णया, प्रियया, अक्षैः, दीव्यन्तम्, तदङ्गसङ्गस्तनकङ्कुमसृजम्, मधुमल्लिकाश्रिताम्, बाह्वः, दधानम्, तस्याग्रे, आसीनम्, कामात्मजम्, तम्, अवेक्ष्य, विस्मितः ॥ ३१-३२ ॥

**श्रीधरस्वामिविरचिता भावार्थदीपिका**

अनपायिभिः अपायोऽपसर्पणं प्रमादो वा तद्रहितैः । पाठांतरे दुष्टा प्रेष्या सखी यस्यास्तस्याः पुंभिर्दूषणं कुतो वेति न जानीम इत्यर्थः ॥ २९-३० ॥ कामस्यात्मनो देहाज्जातम् ॥ ३१ ॥ अभिनृम्णया सर्वमंगलया तस्या अंगसंगेन स्तनकुंकुमं यस्यां स्रजि तां बाह्वोर्मध्ये वक्षसि दधानम् । मधुमल्लिका वसन्तभवा मल्लिकास्तदाश्रिताम् । तस्याग्र इत्यार्षः संधिः । तस्या अग्र इत्यर्थः ॥ ३२ ॥

---

१. याः स्व-वीर. । २. त्मजातं-वीर. । ३. नृम्णया-श्रीधर. वंशी. जीव. वीर विश्व.; भितुष्टया-प्रा. पा. ।

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

पाठांतरे 'दुष्प्रेष्यायाः' इति पाठे पुंभिः कृत्वा ॥ २९ ॥ ततो भटोक्तिश्रुत्युत्तरम्। "अपत्ये वायुभेदे चोद्वाहे उद्वह ऊद्ध्र्वगे" इति निरुक्तिः ॥ ३० ॥ कामस्य प्रद्युम्नस्य ॥ ३१ ॥ 'नृम्णं रम्यभद्रयोः' इति धरणिः। इत्यर्थ इति व्याख्या। तत्रागमनसौंदर्यनिर्भयत्वादिभिर्विस्मितो बाणोऽभूत् ॥ ३२ ॥

### श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी

स्वेषामपराधं परिहरन्त आहुः—अनपायिभिरिति। तुशब्दः अशङ्कानिरासार्थः पुम्भिर्दुष्प्रेक्षाया अपि पाठान्तरे पुम्भिर्दूषणमिति पुंश्चल्या दूषणं न विद्मः अनुमीयमानमपि प्रत्यक्षीकर्तुं न शक्नुम इत्यर्थः। "जात्याख्यायामेकस्मिन् बहुवचनमन्यतरस्याम्" ( १-२-५८ ॥ इति स्मरणाद्बहुवचनम् ॥ २९ ॥ प्रकर्षेण शनैर्निगूढतया आप्त आगतः सन् यदूद्वहं यदुश्रेष्ठम् ॥ ३० ॥ यदूद्वहत्वं दर्शयति—कामेति युग्मकेन। सौन्दर्य्यमेवाह—श्याममित्यादिना। निर्भयत्वं दीव्यन्तमित्यनेन वैदग्ध्यादिकं तदङ्गेत्यादिना तस्या अपि व्यूढोचितमङ्गलवेषादिकम् ॥ ३१ ॥ अभिनृम्णयेत्यनेन मधुमल्लिका मधुस्रावि तदुत्तमजातिविशेषः चत्वारो वार्षिका मासा इति वक्ष्यमाणात् प्रावृट्कालप्राप्तेः। तस्य बाणस्याग्रेऽपि आसीनमेव नतु भयादिनोत्थितमित्यर्थः। विस्मितोऽभूत् सौन्दर्य्यादिना तस्य तत्र गमनादिना निर्भयत्वादिना च ॥ ३२ ॥

### श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी

यदूद्वहत्वमेव दर्शयंस्तं वर्णयति—कामेति द्वाभ्याम्। कामस्य प्रद्युम्नस्यात्मजत्वादेव भुवनेषु एकमद्वितीयं सुन्दरम्, सौन्दर्य्यमेवाह—श्याममित्यादिना। कुण्डलयोः कुन्तलानां चालकानां त्विषा कान्त्या ॥ २९ ॥ किञ्च, दीव्यन्तमिति, अनेन निर्भयत्वादिकमपि सूचितम्। तदंगेत्यादिना वैदग्ध्यादिकञ्च, अभिनृम्णयेति तस्या अपि मंगलवेशादिकं वीक्ष्य दूराद् दृष्ट्वा विस्मितः सौन्दर्य्यादिना तस्य तत्र गमनादिना च। अन्यत्तैर्व्याख्यातम्। तत्र 'चत्वारो वार्षिका मासाः' इत्यग्रे वक्ष्यमाणप्रावृट्कालेऽपि वसन्तभवमल्लिका इति बाणस्य भीत्या तत्पुरे सर्व्वेषामृतूणां सन्निपातादिति। यद्वा, श्रीहरिवंशानुसारेण वैशाखशुक्लद्वादश्यां ऊषास्वप्नदर्शनाद्वसन्तमल्लिका एव। ततश्चत्वारो वार्षिका मासा इति वसन्तशेषे ग्रीष्मे च सर्व्वतो मार्गणेनापि तदुद्देशालाभतो वर्षास्वेव शोकोद्रेकात्, अथवा बाह्वोर्बाहुमूलयोः, मधोर्वसन्तस्येव, किंवा मधुयुक्ता मल्लिकास्तदाश्रिताः, तस्य बाणस्याग्रेऽप्यासीनमेव, न तु भयादिनोत्थितमित्यर्थः ॥ ३० ॥ स दीव्यन् किंवा अनिर्वचनीयवीर्य्यः, यतो माधवो मधुकुलोद्भवः, तं बाणं भटैर्वैरिजिघांसया विशेषेण महाघोरत्वेन परमोत्साहादिना चावस्थितोऽवज्ञापूर्वकमतिष्ठत्, तत्रानुरूपो दृष्टान्तः—यथेति ॥ ३१ ॥ जिघृक्षया अन्तःपुरप्रवेशादिवार्त्तापेक्षया, किंवा श्रीहरिवंशोक्त—कुम्भाण्डवाक्यापेक्षयापहरणेच्छेव, न तु जिघांसा तया अहनत् परिघेण प्रहतवान्, शूकरयूथपो महावराहः, सोऽपि यथात्मनो जिघृक्षया परितः प्रसर्पतः शुनो हन्ति, तद्वत्, भवनात् ऊषायाः, कन्यागाराद्वा, निःशेषेण भिन्नाः केषाञ्चिन्मूर्द्धानः केषाञ्चिदूरवः केषाञ्चिच्च भुजा येषां ते, अत एव प्रकर्षेण दुद्रुवुः ॥ ३२ ॥

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका

अनपायिभिः अनुसरद्भिरप्रमादैरस्माभिः स्वगृहे गुप्ताया अपि दूषणं न विद्महे ॥ २९ ॥ तत इति। दुहितुर्यद्दूषणं तच्छ्रुतं येन स बाणः अत एव प्रव्यथितः त्वरायुक्तः कन्यकागृहं प्राप्य यदूद्वहमनिरुद्धं ददर्श ॥ ३० ॥ कथम्भूतम्? कामस्य प्रद्युम्नस्यात्मनो देहाज्जातमत एव भुवनैकसुन्दरं कुण्डलयोः कुन्तलानाञ्च त्विषा स्मितयुक्तेनावलोकेन च मण्डितम् आननं यस्य तम् ॥ ३१ ॥ अभिनृम्णया सर्वतोमङ्गलया प्रियया सह अक्षैर्दीव्यन्तं क्रीडन्तं तस्याः अङ्गसङ्गेन स्तनकुङ्कुमं यस्यां मधुमल्लिका वसन्तभवमल्लिकास्ताभिराश्रितां स्रजं बाह्वोर्मध्ये वक्षसि दधानं तस्या अग्रे पुरतः अत्र सन्धिरार्षः आलक्ष्यावलोक्य विस्मितो बभूव ॥ ३२ ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

मधुमल्लिका शतदलमल्लिकाजातिविशेषः ॥ ३२-३४ ॥

### श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शिनी

अनपायिभिः अपायः अपसर्पणं प्रमादो वा तद्रहितैः दुष्प्रेक्षाया इति पाठे दुष्टा या योगिनी प्रेष्या सखी यस्यास्तस्याः पुम्भिर्दूषणं पुञ्जात्याद्दूषणं न विद्मः अनुमीयमानमपि प्रत्यक्षीकर्तुं न शक्नुम इत्यर्थः "जात्याख्यायामेकस्मिन् बहुवचनमन्यतरस्याम्" इति बहुवचनम् ॥ २९-३१ ॥ अभिनृम्णया परममङ्गलया तस्या अङ्गसङ्गेन स्तनकुङ्कुमं यस्यां तां स्रजम् अंसाभ्यां सकाशात् स्खलितां बाह्वोर्दधानं यद्वा बाह्वोर्बाहुशिरसोः स्कन्धयोरित्यर्थः। मधुमल्लिका वसन्तभवा मल्लिका तदाश्रितां तस्या उषाया अग्रे सन्धिरार्षः अहो महासाहसिनोऽस्यै तावदपि धार्ष्ट्यमिति विस्मितः ॥ ३२ ॥

## गूढार्थदीपिनी

अनपायिभिः अनपगच्छद्भिः। अप्रमत्तैर्वा हे प्रभो ॥ २९-३० ॥ कामस्य प्रद्युम्नस्य आत्मजं तमनिरुद्धं तस्या ऊषाया अग्रे आसीनमवेक्ष्य वाणः विस्मितो बभूवेत्यन्वयः। कथंभूतम्। कुण्डलयोः कुन्तलानां केशानां च त्विषा तथा सस्मितावलोकनेन च मण्डितमाननं यस्य तम्। पुनश्च अभिनृम्णया सर्वाङ्गरम्यया प्रियया सह अक्षैः पाशैः दीव्यन्तं क्रीडन्तम्। पुनश्च। मधुमल्लिकाभिः वसन्तभवं मल्लिकापुष्पैः आश्रितां गुम्फितां स्रजं बाह्वोः मध्ये वक्षसि दधानम्। तस्या अङ्गसंगेन स्तनगतं कुङ्कुमं केसरादि यस्यां तामेवंभूतां स्रजम्। मल्लिका (वेलापुष्पाणि)। कामेति युग्मम्। अवेधसम्बन्धसूचनार्थमयं सन्धिः तस्या अग्रे इति ॥ ३१-३२ ॥

## श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः

अनपायिभिरिति। पुम्भी राजपुरुषैः अनपायिभिरनपसर्पद्भिरस्माभिः द्वारपालैः गुप्तायाः सामीप्येन प्रेक्षितुमशक्यायाः न जानीमः ॥ २९-३१ ॥ अभिनृम्णया सर्वमङ्गलया सह अक्षैर्दीव्यन्तम् तस्याः अङ्गसङ्गेन स्तनकुङ्कुमं यस्यां तां मधुमल्लिका वसन्तभवा मल्लिका तदाश्रितां बाह्वोर्मध्ये दधानं तस्याग्रे इत्यत्र सन्धिरार्षः ॥ ३२ ॥

## श्रीसत्यधर्मकृता श्रीभागवतटिप्पणी

श्रुतं दूषणं येन सः। यदूद्वहमनिरुद्धम् ॥ २९ ॥ कुन्तलानां कुण्डलयोश्च त्विट् तया मण्डितमलङ्कृतमाननं यस्य तत् ॥ ३० ॥ अभिनृम्णया। प्रथमाष्टकपञ्चमाध्यायाष्टाविंशतिवर्गीयान्त्या ऋचः प्रेह्याभीहि धृष्णु हि न ते वज्रो निंसते। इन्द्र नृम्णं हि ते शवोहनो वृत्रं जया। अपोर्चन्ननु स्वराज्यमित्यस्या व्याकृतौ नृम्णं नृणां पुरुषाणां नामकमभिभावकमिति यावदिति माधवोक्तेः पुरुषाभिभावकयेत्यर्थः। पुरुषानविगणय्य वर्तमानयेति यावत्। नॄन्नामयति प्रह्वीकरोतीति सा। सर्वोऽपि पृषोदरादिः। तदङ्गसङ्गेन स्तनकुङ्कुमं यस्याः सा स्रक् च तां मधुमल्लिकावसन्तकालिक्यो मल्लिकाश्रितायां सा तां बाह्वोर्दधाना तमागतं स्यति निरस्यतीति तस्या या अग्रं तस्याग्रं तस्मिन्नित्यासीनं स्वागतावप्यनधिगतभीतिः पीतोऽयमितिः विस्मितः ॥ ३१ ॥ आततायिभिरुद्यतशस्त्रैरनेकैर्भटैर्वृतमावृतं प्रविष्टं तं बाणं माधवो विलोक्य। मौर्वं उर्वस्य मुनेरपत्यमग्निस्तेन सहितस्तम्। अग्न्युद्गारिणमिति यावत्। मौर्वीमिति पठित्वा मुरुर्लोहविशेषस्तन्निर्मितमिति यावत्। मौरव इति स्यात्। तत्र नाप्यभिहितमभिधानं तैः। तथाऽपि व्यादिशं किङ्कराणां तु सैन्यं तेन महात्मना। जघान परिघं लोहमादाय परवीरहेति विष्णुपुराणे पञ्चमेंऽशे त्रयस्त्रिंशोध्याये लोहमित्युक्तेरनुकूलम्। रेफस्य चोर्ध्वगमने च सतीति ज्ञेयम्। अन्तको दण्डधरो यमो जिघांसया तथा व्यवस्थितः ॥ ३२ ॥

## श्रीमद्वल्लभाचार्यकृता सुबोधिनी

तर्हि कः समायातीति शङ्कायामाहुः **अनपायिभिरिति**। स्वतो विवाहं व्यावर्तयति। **कन्याया** इति। अनेन तर्कितस्यार्थस्य युक्त्या बाधोऽप्युक्तः। अत एव दूषणं लक्षयामः, न विवाहे च। अन्यथानिर्धारे तेऽपि हन्तव्याः स्युः ॥ २६ ॥ ततो निर्धारार्थं स्वयं प्रवृत्त इत्याह **तत** इति। प्रकर्षेण व्यथितः शस्त्रादिभ्योऽपि। ततस्त्वरितः कन्यकागारं प्राप्तः प्रथमं यदूद्वहमेव दृष्टवान्। सर्वानेव यदून् उद्वहतीति महाशूरत्वं यदुकुलोत्पन्नत्वं च ज्ञातवान् ॥ २७ ॥ तद्दृष्टमनिरुद्धं वर्णयति, निर्भयत्वाय, **कामात्मजमिति**। स्त्रीणामत्यन्तहितार्थाय कामात्मजत्वमुक्तम्। **भुवनैकसुन्दरमिति** सर्वेषामेव मोहकम्। **श्यामं पिशङ्गाम्बरम्**। पीताम्बरमिति भगवत्सारूप्येण भगवदीयत्वं ज्ञापितम्। **अम्बुजेक्षणमिति** दृष्ट्यैव सर्वाह्लादकत्वमुक्तम्। **बृहद्भुजमिति**। भोगयोग्यता वीरत्वं च। स्वभावतोऽप्ययं महानिति कुण्डलकुन्तलैर्मण्डितमाननं यस्येत्युक्तम्। **स्मितावलोकेनेति** मनोहरस्वभाव उक्तः। अनेन सर्वलक्षणसम्पूर्णोऽयं वर इत्युक्तम् ॥ २८ ॥ तस्य चौर्येण व्यभिचारसम्बन्धं निवारयति। यथा कृतविवाहो स्त्रीपुरुषावक्षैः क्रीडतः, एवं प्रियया सह तदेकनिष्ठया अक्षैर्दीव्यन्तम्। सा च क्रीडा न क्रीडार्था, किन्तु रसपोषिकेत्याह **अभितृष्णयेति**। अभितः तृष्णा यस्याः सर्वतः सम्बन्धं वाञ्छतीति। **अभितृप्तया** वा सम्भोगनितान्ततृप्तया। **अभिनृम्णया** वा। नृम्णमिति प्रकाशनाम। वैदिकशब्दो नृम्णं 'नृम्णाय नृम्ण'मित्यत्र प्रसिद्धम्। प्रकाशमाने प्रकाशमानमित्यर्थः। अभितः प्रकाशमानया, न तु सङ्कोचेन केनचिदप्यंशेन स्थितया। तत्सम्बद्ध एव क्रीडतीति सर्वसन्देहनिवृत्त्यर्थमाह **तदङ्गसङ्गस्तनकुङ्कुमस्रजमिति**। तस्या अङ्गसङ्गेन यत् कुचकुङ्कुमं स्रजि संबद्धं तादृशीं स्रजं बाह्वोर्मध्ये दधानम्। अत्यन्तरसालसमये दृष्टवानिति। मधुयुक्ता या मल्लिका तयाश्रितां स्रजमिति तत्र भ्रमरादिसम्बन्धो निरूपितः। गन्धेन रूपेण च मल्लिका रसपोषिका। तस्यैवाग्रेऽप्यासीनं बाणेऽप्यागते तथैवासीनमित्यर्थः। स्वस्याग्र आसीनमिति वक्तव्ये तस्य तथा विचारो न जात इति शुक एवाह **तस्याग्रेऽप्यासीनमिति**। अत एव विस्मितः ॥ २९ ॥

## श्रीसुबोधिनी-सारः

अनपायिभिः तत्र स्थायिभिरस्माभिर्गृहे गुप्तायाः कन्यायाः पुंभिर्दुष्प्रेक्षाया दूषणं कलंकं कथं जातमिति वयं न जानीमः हे प्रभो ॥ २९ ॥ ततोनन्तरं दुहितुः पुत्र्याः श्रुतं दूषणं येन स बाणः प्रव्यथितोऽतिदुःखितः त्वरितः कन्यकाया अगारं गेहं प्राप्तो यदूद्वहमनिरुद्धमद्राक्षीत् ॥ ३० ॥ कामस्यात्मजं पुत्रं भुवने जगति एकमेव सुन्दरं श्यामं पीताम्बरं पद्मनेत्रं बृहद्बाहुं कुण्डलतोः कुन्तलानां केशानां त्विषा दीप्त्या स्मितयुक्तेनावलोकेनालंकृतमुखम् ॥ ३१ ॥ अभिनृम्णया सर्वमंगलया प्रियया भार्यया सहाक्षैः पाशकैर्दीव्यंतं क्रीडंतं तस्या अंगसंगेन स्तनयोः कुंकुमं यस्यां स्रजि तां मधुमल्लिका वसन्तजातामल्लिकास्तदाश्रितां मालां बाह्वोर्मध्ये दधानं तस्या ऊषाया अग्रे संधिरार्षः। आसीनम् उपविष्टं तम् अवेक्ष्य दृष्ट्वा विस्मितोऽभूत् ॥ ३२ ॥

## गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

'तर्हि यूयमेव द्वारपालाः, युष्माकं द्वारं हित्वेतस्ततः प्रसर्पणेनैवायं दोषो जातः, अन्यथा स कथं स्यात्' इत्याशङ्क्याहुः—अनपायिभिरिति। 'तवान्यथाकोपेरमन्निर्वाहो नास्तीति विचारः कर्तव्य' इत्याशयेन सम्बोधयन्ति—प्रभो इति। अनपायिभिः अनपसर्पद्भिः सावधानैरस्माभिर्गृहे गुप्ताया अत एव पुम्भिर्दुःप्रेक्षाया अपि कन्यायास्तैर्दूषणं कथं जातं तद्वयं न विद्महे ॥ २९ ॥ दुहितुः श्रुतं दूषणं येन सः अत एव प्रव्यथितः बाणः ततः स्थानात् त्वरितं शीघ्रं कन्यागारं प्राप्तः संस्तत्र यदूद्वहमनिरुद्धमद्राक्षीत् ॥ ३० ॥ तमनिरुद्धमवेक्ष्य विस्मितो बभूवेति द्वयोरन्वयः। तमेव वर्णयति—श्यामम्। भुवनेषु एक एव सुन्दरः तथा सुन्दरोन्यो नास्ति तमित्यर्थः। तत्र हेतुमाह—कामस्य तदवतारस्य प्रद्युम्नस्यात्मनो देहाज्जातम्। पिशङ्गं पीतमम्बरं वस्त्रं यस्य तम्। अम्बुजे इव ईक्षणे यस्य तम्। बृहन्तौ भुजौ यस्य तम्। कुण्डलयोः कुन्तलानां च त्विषा दीप्त्या स्मितयुक्तेन अवलोकनेन च मण्डितमाननं यस्य तम् ॥ ३१ ॥ अभिनृम्णया सर्वतः कृतमङ्गलतया प्रियया ऊषया सह अक्षैः दीव्यन्तं क्रीडन्तम्। मधुमल्लिका वसन्तभवा मल्लिकास्ताभिराश्रितां ग्रथितां तस्या अङ्गसङ्गेन स्तनगतं कुङ्कुमं यस्यां तां स्रजं बाह्वोर्मध्ये दधानम्। तस्याग्रे तस्या ऊषाया अग्रे आसीनम्, सन्धिरार्षः ॥ ३२ ॥

## अन्वितार्थप्रकाशिका

अनपायिभिरिति। हे प्रभो ! अनपायिभिः अनपसर्पद्भिः सावधानैरस्माभिर्गृहे गुप्ताया अत एव पुंभिर्दुष्प्रेक्षाया अपि कन्यायास्तैः पुंभिः दूषणं कथं जातं तद्वयं न विद्महे। अतिगुप्तत्वात्प्रत्यक्षीकर्तुं न शक्नुमः। तङार्षः। यद्वा हे इति प्रभो इत्यनेनान्वितम्। विघ्नेति "विदो लटो वा" इति सोरमादेशे रूपम्। दुष्प्रेष्या इति पाठे दुष्टा योगिनी प्रेष्या सखी यस्याः ॥ २९ ॥ तत इति। दुहितुः श्रुतं दूषणं येन सः अत एव प्रव्यथितो बाणः ततः स्थानात् त्वरितं शीघ्रं कन्यकागारं प्राप्तः संस्तत्र यदूद्वहमनिरुद्धमद्राक्षीत् ॥ ३० ॥ कामेति युग्मम्। कामस्य तदवतारस्य प्रद्युम्नस्यात्मनो देहाज्जातं भुवनेषु एक एव सुन्दरः तथा सुन्दरोऽन्यो नास्ति तमित्यर्थः। श्यामं पिशङ्गं पीतमम्बरं वस्त्रं यस्य तम्। अम्बुजे इस ईक्षणे यस्य तं बृहन्तौ भुजौ यस्य तं कुण्डलयोः कुन्तलानां च त्विषा दीप्त्या स्मितयुक्तेनावलोकनेन च मण्डितमाननं यस्य तम्। अभिनृम्णया सर्वतः कृतमङ्गलया प्रियया ऊषया सह अक्षैः दीव्यन्तं क्रीडन्तं मधुमल्लिका वसन्तभवा मल्लिकास्ताभिराश्रितां ग्रथितां तस्या अङ्गसङ्गेन स्तनगतं कुङ्कुमं यस्यां तां स्रजं बाह्वोर्मध्ये दधानं तस्याग्रे तस्या ऊषाया अग्रे आसीनं नतु बाणभयादुत्थितम्। सन्धिरार्षः। तमनिरुद्धमवेक्ष्य विस्मितो बभूव ॥ ३१-३२ ॥

## श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्

अभिनृम्णया मंगलया समस्तमांगलिकैः पतिमतीश्रृंगारैर्युक्तयेत्यर्थः। प्रियया सह अक्षैः दिव्यंतं रममाणं। तस्या अंगसंगेन स्तनकुंकुमं यस्यां तथाभूता चासौ स्रक्कृतां मधुमल्लिकाश्रितां ममुस्त्राविमल्लिकाकुसुमग्रथितां मालां बाह्वोर्मध्ये दधानं तस्याग्रे अत्र संधिरार्षः तस्या अग्र इत्यर्थः ॥ २९ ॥

## भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

अनपायिभिरिति ॥ हे प्रभो, अनपायिभिरनपसर्पद्भिरप्रमादैरिति यावत्। अस्माभिः, गृहे स्वगृहे, गुप्तायाः, अत एव पुम्भिः पुरुषैः, दुष्प्रेक्ष्यायाः, कन्यायाः दूषणं कथं जातमिति शेषः। न विद्महे न जानीमः ॥ २९ ॥ तत इति ॥ ततः, दुहितुः पुत्र्याः, श्रुतं दूषणं येन सः, अत एव, प्रव्यथितः प्रकृष्टव्यथायुक्तो जातः, बाणो बाणासुरः, त्वरितः संजातत्वरः, कन्यकागारं प्राप्तः सन्, तत्र यदूद्वहमनिरुद्धं, अद्राक्षीत् ॥ ३० ॥ यदूद्वहं विशिनष्टि ॥ कामात्मजमिति ॥ कामात्मजं रूपनिधेः साक्षान्मन्मथस्य तु तनयं, भुवनेष्वेक एव सुन्दरस्तं, श्यामं, पिशङ्गाम्बरं परिहितपीतपीताम्बरं, अम्बुजेक्षणं कमलनयनं, बृहन्तावाजानुलम्बिनौ भजौ यस्य तं, कुण्डले च कुन्तलाश्च तेषां त्विट् दीप्तिस्तया, स्मितेन सहितो योऽवलोकस्तेन च, मण्डितं शोभमानमाननं मुखं

यस्य तम् ॥ ३१ ॥ दीव्यन्तमिति ॥ अभिनृम्णया सर्वतो मङ्गलया प्रियया सह, अक्षैः दीव्यन्तं, तस्या ऊषाया अङ्गसङ्गेन स्तन-कुङ्कुमं यस्याः तां, मधुमल्लिका वसन्तभवा मल्लिकास्ताभिराश्रिता तां, स्रजमपि बाह्वोः मध्ये, दधानं, तस्या अग्रे पुरतः आसीनं, तमनिरुद्धं, अवेक्ष्य, विस्मितः बभूवेति शेषः। इति द्वयोरेकान्वयः ॥ ३२ ॥

### कृष्णप्रिया

महाराज ! यह निश्चितरूप से कहते हैं कि लगातार हम सब दिनरात महल का पहरा लगाते रहे हैं कि कोई भी बाहर का मनुष्य ऊषा को देख भी नहीं पाता, फिर भी आश्चर्य है कि कुलदूषण कैसे लग गया। राजन् ! अपने सेवकों से जो अन्तःपुर के संरक्षक थे उनके मुख से ऊषा का कौमार्य खंडित हो चुका है यह सुनकर बाणासुर अतिशय व्यथित हो गया। वह विना विलम्ब ऊषा के निवास गृह में जा पहुँचा और वहाँ पर बैठे हुए अनिरुद्ध को देखा ॥ २९–३० ॥ राजन् परीक्षित् ! बाणासुर अनिरुद्धजी को देख रहा है कि सर्वाङ्गसुन्दरी ऊषा कुमारी अपने सर्वाङ्गों से समलंकृत होकर बैठी हुई थी और पासे खेलती थी। अनिरुद्धजी तो स्वयं कामावतार प्रद्युम्नजी के सुकुमार कुमार थे। त्रिभुवन सुन्दर थे, मेघ श्याम सांवरा श्रीअङ्ग था, पीताम्बर धारण किया था, कमलदल कोमल सुन्दर आँखे थीं, आजानु बाहु थे, कपोलों पर श्याम अलकावली और कुण्डलों की सुमिश्रित कान्ति से एवं स्मितहास्य युक्त अवलोकन से मुख कमल की शोभा अनूठी बन रही थी। युवा कामात्मज अनिरुद्धजी अपनी सर्वाङ्ग सुन्दरी एवं समलंकृत प्रियाजू के साथ पासे खेल रहे थे। अनिरुद्धजी के वक्षस्थल में मधुमालिनी के कुसुमों की माला विराजती थी। उस वनमाला में ऊषाजी के अङ्ग वक्षःस्थल में लगाये गये कुङ्कुम-केसर से आरक्त एवं सुगन्धित थी। अनिरुद्धजी ऊषा के सन्मुख एवं समीप ही विराजते थे ॥ ३१–३२ ॥

**स तं प्रविष्टं वृतमाततायिभिर्भटैरनीकैरवलोक्य माधवः।**
**उद्यम्य मौर्वं परिघं व्यवस्थितो यथान्तको दण्डधरो जिघांसया ॥ ३३ ॥**
**जिघृक्षया तान् परितः प्रसर्पतः शुनो यथा सूकरयूथपोऽहरत्[1]।**
**ते हन्यमाना भवनाद् विनिर्गता निर्भिन्नमूर्धोरुभुजाः प्रदुद्रुवुः ॥ ३४ ॥**
**तं नागपाशैर्बलिनन्दनो बली घ्नन्तं स्वसैन्यं कुपितो बबन्ध ह।**
**ऊषा भृशं शोकविषादविह्वला बद्धं[2]निशम्याश्रुकलाक्ष्यरौदिषीत्[3] ॥ ३५ ॥**

इति श्रीमद्भागवते महापुराणे[4] दशमस्कन्धेऽनिरुद्धबन्धो नाम द्विषष्टितमोऽध्यायः ॥ ६२ ॥

### कर्दमक्षमा

अन्वयः—आततायिभिः, अनीकैः, भटैः, वृत्तम्, प्रविष्टम्, तम्, अवलोक्य, स, माधवः, मौर्वम्, परिघम्, उद्यम्य, यथा, जिघांसया, दण्डधरः, अन्तकः, व्यवस्थितः ॥ ३३ ॥ जिघांसया, परितः, प्रसर्पतः, तान्, सूकरयूथपः, यथा, शुनः, अहरत्, निर्भिन्नमूर्धोरुभुजाः, हन्यमानाः, ते, भवनात्, विनिर्गताः प्रदुद्रुवुः ॥ ३४ ॥ स्वसैन्यम्, घ्नन्तम्, तम्, कुपितः, बलिनन्दनः, बली, ह, बबन्ध, शोकविषादविह्वला, ऊषा, बद्धम्, निशम्य, अश्रुकलाक्षी, भृशम्, अरौदिषीत् ॥ ३५ ॥

इति श्रीमद्भागवते दशमस्कन्धे निरोधलीलायां अनिरुद्धबन्धनाम्नि द्विषष्टितमेऽध्याये अन्वयाः समाप्ताः ॥ ६२ ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

आततायिभिरुद्यतशस्त्रैः। माधवोऽनिरुद्धः। मौर्वं मुरुर्लोहविशेषस्तन्निर्मितम् ॥ ३३–३४ ॥ शोकविषादाभ्यां विह्वला अवशा। अश्रूणां कला बिंदवो ययोस्ते अक्षिणी यस्याः सा ॥ ३५ ॥

इति श्रीमद्भागवते दशमस्कन्धे उत्तरार्द्धे श्रीध० टीकायां द्विषष्टितमोऽध्यायः ॥ ६२ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

सोऽनिरुद्धः। तं बाणम् ॥ ३३ ॥ तान् बाणभटान्। ते बाणभटाः ॥ ३४ ॥ तमनिरुद्धम्। "नागपाशः पुमान्स्त्रीणां करणे वरुणायुधे" इति मेदिनी। बलिनंदन इति विरुद्धलक्षणया मंगलशब्दवत्तस्य दुःखदः पुत्र इत्यर्थः। बलीति श्रीकृष्णस्य

---

१. हनत्–श्रीधर. वंशी. जीव. वीर. विश्व.। २. निशाम्य–श्रीधर. टि.। ३. कलाक्ष्यरोदीत्–वीर.। ४. पारमहंस्यां संहितायां दशमस्कन्धे उत्तरार्धे–प्रा. पा.।

लीलाविशेषेच्छाया विपर्ययादिति। यद्वा—कलिबली कामधेनू "अपिस्विदास्ते भगवान्सुखं वो यः सात्वतां कामदुघोऽनिरुद्धः। यमामनंति स्म हि शब्दयोनिं मनोमयं सत्त्वतुरीयतत्त्वम् ॥" इति तृतीये विदुरप्रश्नाच्छब्दयोनिं निःश्वासव्यञ्जितवेदवृंदं मनोमयं चित्ते वासुदेववन्मनस्युपास्यं सत्त्वं शुद्धसत्त्वात्मकं भगवत्तत्त्वं तस्य च तद्व्यूहत्वे चतुर्थं व्यूहमित्यर्थः। विष्णुधर्मोत्तरे वज्रप्रश्ने—"कस्त्वसौ बालरूपेण कल्पांतेषु पुनः पुनः। पृष्टो यो न त्वया ज्ञातस्तत्र कौतूहलं मम। मार्कंडेय उवाच॥ भूयोभूयो मया दृष्टस्त्वसौ देवो जगत्पतिः। कल्पक्षये न विज्ञातः स मायामोहितेन वै॥ कल्पक्षये तु तं देवं प्रपितामहात्। अनिरुद्धं विजानामि पितरं ते जगत्पतिम् ॥" पाद्मसहस्रनाम्नि तस्य नामानि—"अनिरुद्धो बृहद्ब्रह्म प्राद्युम्निर्विश्वमोहनः। चतुरात्मा चतुर्वर्णश्चतुर्युगविधायकः। चतुर्भेदैकविश्वात्मा सर्वोत्कृष्टांशकोटिसूः। आश्रयात्मा" इति। श्रीगोपालोत्तरतापिन्यां त्वसौ प्रणवार्थत्वेनापि दर्शितः—"रोहिणीतनयो रामः अकाराक्षरसंभवः। तैजसात्मकप्रद्युम्न उकाराक्षरसंभवः॥ प्राज्ञात्मकोऽनिरुद्धो वै मकाराक्षरसंभवः। अर्द्धमात्रात्मकः कृष्णो यस्मिन्विश्वं प्रतिष्ठितम् ॥" इति। 'बलिनं ततो बली' इति पाठे हरिवंशोक्तशक्तिप्रहारेण बाणनिर्ज्जयात्साक्षाद्युद्धाशक्त्या कुंभाण्डोक्त्या मायया सर्पास्त्रैर्बबंधेति ज्ञेयम् "युध्यमानो यथाशक्ति यदा वीरेण निर्जितः। मायया युयुधे तेन स तदा मंत्रिचोदितः॥" इति वैष्णवोक्तेः। "व्यष्टीनामंतरात्मानं श्वेतद्वीपेशमंशतः। बाणोऽवध्नात्प्रभोर्लीलाशक्तिरेवात्र कारणम् ॥" इति। निशम्य श्रुत्वा, कन्यागाराद्बहिर्युद्धात्। 'निशाम्य' इति पाठे तु "नागैर्विचेष्टितं दृष्ट्वा ऊषा प्राद्युम्निमातुरा" इति अरोदित्यर्थः। अरौदिषीदित्यार्षः सिचो लोपाभावः॥ ३५॥

इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे दशमस्कन्धोत्तरार्धे द्विषष्टितमोऽध्यायः॥ ६२॥

## श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी

भटैस्तन्निकटवर्त्तिवीरैः स्वयमवज्ञया लज्जया च तद्द्वारैव ग्रहणार्थं पश्चादाहूतैः मौरवमिति वक्तव्ये मौर्व्यमित्यार्षं विशेषेण महाघोरत्वेन परमोत्साहादिनाचावस्थितोऽवज्ञापूर्वमतिष्ठत् तत्रानुरूपो दृष्टान्तः यथेति॥ ३३॥ जिघृक्षा ग्रहीतुमिच्छैव या जाता नतु जिघांसा तया अहनत् परिघेण प्रहृतवान् उषाया भवनात्॥ ३४॥ बलिनन्दन इति यौगिकार्थो विरोधिलक्षणया मङ्गलशब्दवत् तस्य दुःखदपुत्र इत्यर्थः। बलीति श्रीकृष्णस्य लीलाविशेषेच्छया तदानीं विपर्य्ययादिति ज्ञेयम्—

"अपिस्विदास्ते भगवान् सुखं वो यः सात्वतां कामदुघोऽनिरुद्धः।
यमामनन्ति स्म हि शब्दयोनिं मनोमयं सत्त्वतुरीयतत्त्वम् ॥

इति तृतीये श्रीविदुरप्रश्ने तस्य तादृशमाहात्म्यात् तत्र शब्दयोनिं निश्वासव्यञ्जितवेदवृन्दं मनोमयं चित्ते श्रीवासुदेववन्मनस्युपास्यं सत्त्वं शुद्धसत्त्वात्मकं भगवत्तत्वं तस्य चतुर्व्यूहत्वे चतुर्थं तत्त्वमित्यर्थः। तथा च विष्णुधर्मोत्तरे श्रीवज्रेण पृष्टं।

"कस्त्वसौ बालरूपेण कल्पान्तेषु पुनः पुनः। दृष्टो यो न त्वया ज्ञातस्तत्र कौतूहलं मम॥" इति।

अत्र श्रीमार्कण्डेयेनोत्तरितं—

"भूयोभूयस्त्वसौ दृष्टो मया देवो जगत्पतिः। कल्पक्षये न विज्ञातः स मायामोहितेन वै॥
कल्पक्षये व्यतीते तु तं देवं प्रपितामहात्। अनिरुद्धं विजानामि पितरं ते जगत्पतिम् ॥" इति।

अस्य पाद्मबृहत्सहस्रनाम्नि माहात्म्यनामानि चैतानि—

"अनिरुद्धोबृहद्ब्रह्म प्रद्युम्निर्विश्वमोहनः। चतुरात्मा चतुर्वर्णश्चतुर्युगविधायकः॥
चतुर्भेदैकविश्वात्मा सर्वोत्कृष्टांशकोटिसूः।

श्रीगोपालोत्तरतापिन्यां आश्रयात्मेति तु "असौप्रणवार्थत्वेनापि दर्शितः"—

"रोहिणीतनयो राम अकाराक्षरसम्भवः। तैजसात्मकः प्रद्युम्न उकाराक्षरसम्भवः॥
प्रज्ञात्मकोऽनिरुद्धो वो मकाराक्षरसम्भवः। अर्द्धमात्रात्मकः कृष्णो यस्मिन् विश्वं प्रतिष्ठितम् ॥ इति।

अतः श्रीकृष्णव्यूहत्वेनान्यानिरुद्धत्वात्परमत्वमपीति। बलिनं ततो बलीति पाठस्तु श्रीहरिवंशोक्तशक्तिप्रहारादिना बाणनिर्जयात् नागपाशैरिति साक्षाद्युद्धाशक्त्या कुम्भाण्डवचनेन मायया सर्पास्त्रैर्बबन्धेति ज्ञेयम्। तथाच श्रीविष्णुपुराणे—

"युद्ध्यमानो यथाशक्ति यदा वीरेण निर्जितः। मायया युयुधे तेन स तदा मन्त्रिचोदितः॥ इति।

निशम्य श्रुत्वेति कन्यागाराद्बहिर्युद्धात् किम्वा निशाम्येति पाठः। तथा च श्रीहरिवंशे "नागैर्विचेष्टितं दृष्ट्वा उषा प्राद्युम्निमातुरा" इत्यादि तत्तद्विस्तारश्च तत एव ज्ञेयः अश्रूणां कला धारा रूपा विभागा ययोस्ते अक्षिणी यस्याः सा अरोदीति वक्तव्ये अरौदिषीदित्यार्षं पदम् अरोत्सीदिति पाठेति इड्भावः आर्षः॥ ३५॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिण्यां द्विषष्टितमोऽध्यायः॥ ६२॥

### श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी

बलिनन्दनत्वादेव वली, पाठान्तरे बलिनमिति श्रीहरिवंशोक्त-शक्तिप्रहारादिना बाणनिर्ज्जयात्, नागपाशैरिति साक्षाद्युद्धाशक्त्या कुम्भाण्डवचनेन मायया सर्पाखैर्बबन्धेति ज्ञेयम्। ह खेदे, तथा च श्रीविष्णुपुराणे (५।३३।८)-'युध्यमानो यथाशक्ति यदा वीरेण निर्जितः। मायया युयुधे तेन स तदा मन्त्रिचोदितः॥' इति। निशम्य श्रुत्वेति कन्यागाराद्बहिर्युद्धात् किंवा निशाम्येति पाठः। तथा च हरिवंशे (विष्णु० प० ११९।२००)—"नागैर्व्विचेष्टितं दृष्ट्वा ऊषा प्राद्युम्निमातुरा' इत्यादि, तत्तद्विस्तारश्च तत्रैव ज्ञेयः॥ ३३॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे उत्तरार्द्धे श्री श्रील-सनातन-गोस्वामिपाद-कृतायां श्रीबृहद्वैष्णवतोषण्यां श्रीदशम-टिप्पण्यां द्विषष्टितमोऽध्यायः॥ ६२॥

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका

स इत्यादिसार्द्धमेकान्वयि स माधवो मधुवंशप्रभवोऽनिरुद्धः अत एव आततायिभिरुद्यतायुधैर्भटैः परिवृतं तं बाणमवलोक्य यथा दण्डधरोऽन्तकस्तद्वत् जिघांसया तत्र व्यवस्थितं लोहमयं परिघमुद्यम्य गृहीतुमिच्छया परितः प्रसर्पतस्तानाततायिनः अहनत् जघान यथा सूकराणां यूथं पातीति तथा सूकरश्रेष्ठः शुनो हन्ति तद्वत्। त इति। ते आततायिनः निर्भिन्नाः मूर्द्धादयो येषां तेऽत एव गृहाद्विनिर्गता दुद्रुवुः॥ ३३-३४॥ तमिति। वली बलवान् बलिनन्दनो बाणः स्वसैन्यं घ्नन्तं तमनिरुद्धं कुपितो नागपाशैर्बबन्ध शोकविषादाभ्यां बाह्याभ्यन्तरदुःखाभ्यां विह्वला अवशा अश्रूणां कला बिन्दवो ययोस्ते अक्षिणी यस्याः सा रुरोद॥ ३५॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायां द्विषष्टितमोऽध्यायः॥ ६२॥

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः

अनिरुद्धस्य बन्धः श्रीकृष्णसन्दर्भे व्याख्यातः बलिनन्दनः विरोधलक्षणायाः तस्य दुखदः पुत्र इत्यर्थः। बलीति श्रीकृष्णेच्छयेदानीं विपर्य्ययादिति ज्ञेयम्॥ ३५॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धीये श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे द्विषष्टितमोऽध्यायः॥ ६२॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

माधवोऽनिरुद्धः मूर्वा लोहविशेषस्तन्निर्मितम्॥ ३३-३४॥ अश्रूधरे अक्षिणी यस्याः सा कलिवली कामधेनू अरोत्सीदित्यार्षम् अरोदीदित्यर्थः—

व्यष्टीनामन्तरात्मानं श्वेतद्वीपेशमंशतः। बाणोऽबध्नात् प्रभोर्लीलाशक्तिरेवात्र कारणम्॥ ३५॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम्। द्विषष्टितम एतस्मिन् दशमेऽजनिसङ्गतः॥ ६२॥

### गूढार्थदीपिनी

माधवोऽनिरुद्धः आततायिभिः उद्यतशस्त्रैः। अनीकैरिति पाठः। मौर्वं लोहमयं परिघं दण्डम्॥ ३३॥ प्रसर्पतः आगच्छतः तान्। निर्भिन्नाः मूर्धोरुभुजाः येषां ते तथाभूताः सन्तः दुद्रुवुः पलायिताः बभूवुः॥ ३४॥ अश्रुकलाभिः बिन्दुभिः पूर्णे अक्षिणी यस्याः सा तथाभूता। नागपाशो वरुणायुधः॥ ३५॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां दशमस्कन्धोत्तरार्द्धे गूढार्थदीपिन्यां द्विषष्टितमोऽध्यायः॥ ६२॥

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः

माधवः मधुवंशप्रभवः मौर्वं लोहविशेषनिर्मितम्॥ ३३॥ जिघृक्षया गृहीतुमिच्छया॥ ३४॥ अश्रूणां कलाः बिन्दवो ययोस्ते अक्षिणी यस्याः सा॥ ३५॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धीये श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे द्विषष्टितमाऽध्यायार्थप्रकाशः॥ ६२॥

### श्रीसत्यधर्मकृता श्रीभागवतटिप्पणी

आत्मानं जिघृक्षया परितः प्रसर्पतस्तान्बाणसैनिकान्। सूकरयूथपो महावराहः शुनः सारमेयान्यथा तयाऽहनदहन्। ते प्राद्युम्निना निहन्यमाना भवनान्निर्भिन्नमूर्धोरुभुजा विनिर्गताः सन्तः प्रदुद्रुवुः॥ ३३॥ बलिनन्दनः स्वयं बली च स्वसैन्यं स्वसेनं नान्यस्वामिकं तदित्यप्याह। सेनस्य सहितस्वामिकस्य भावः सैन्यं स्वेनैव सैन्यं यस्य तदिति। घ्नन्तं घातयन्तं तं

नागपाशैः कुपितो बबन्ध ह शोके। उषा भृशं शोकेन बहिःप्रदर्श्येन विषादेनान्तःखेदेन। विषमाददतीति ते पाशभूता अहीशास्तैर्विह्वला विवशा बद्धं निशम्य स्वयं निरीक्ष्याश्रुकलाक्षी अश्रूणां कला विन्दवो ययोस्ते अक्षिणी यस्याः साऽरौदिषद्रुरोद ॥३४॥

इति श्रीभागवतटिप्पण्यां सत्यधर्मकृतायां दशम उत्तरार्धे सप्तसप्ततितमोऽध्यायः ॥ १०-७७ ॥

### श्रीमद्वल्लभाचार्य्यकृता सुबोधिनी

ततो युद्धार्थं तदीया असहमानाः प्रवृत्ता इत्याह **स तं प्रविष्टमिति**। अन्तःप्रविष्टम्। तं श्वशुरम्। **आततायिभिर्वृतमिति** शस्त्रपाणिभिः सह समागच्छन्तम्। मारयिष्यतीति निश्चित्य मधुवंशोत्पन्नः अन्यस्यापि स्वसम्बन्धेन मदं जनयति, किं पुनः स्वस्य साक्षात्, अतो युद्धार्थमेकाकी प्रवृत्त इत्याह **उद्यम्य मौर्वं परिघमिति**। लोहबद्धं तृणविशेषबद्धं वा। मौर्वी काचित्तृणजातिर्लोहजातिर्वा। विशेषेणावस्थितः। सर्वथा निकटगमने प्राणान् ग्रहीष्यतीति ज्ञापनार्थमाह **यथान्तको दण्डधर** इति। **जिघांसया व्यवस्थित** इति स्वरूपेण भयानकत्वं निवारितम् ॥ ३० ॥ ततो यज्जातं तदाह **जिघृक्षयेति**। धर्तव्य एवायम्, न तु हन्तव्य इति परितः समागताः। ततः स्वयमपि तान् परितः प्रसर्पतः अहरत् हृतवान्। दूरे नीतवान्। अहनद्वा। यथा दन्तैर्निकटे गत्वा शुनो हन्ति। ननु केनचित्पराभूतः। दूरादेव तेषां शब्दाः, न तु निकटे समागन्तुं शक्ताः। ततो यज्जातं तदाह **ते हन्यमाना** इति। नितरां भिन्ना मूर्धा ऊरुर्बाहवश्च येषामिति हननासहने हेतुः। अतः प्रथमं सङ्कीर्णत्वाद्भवनाद्विनिर्गताः, पुनस्तत्रापि निर्भिन्नावयवाः प्रदुद्रुवुः ॥ ३१ ॥ तेषु निवृत्तेषु अलौकिकप्रकारेण तं निगृहीतवानित्याह **तं नागपाशैरिति**। **बलिनन्दन** इति पितुर्वैराद्बन्धनं कृतवान्। नागपाशा अवतारविशेषे भगवतोऽपि तथात्वं सम्पादयन्ति, किमुत तदंशानाम्। ततोऽनिरुद्धाद्बली। बलेन बन्धने हेत्वन्तरमप्याह **घ्नन्तं स्वसैन्यमिति**। यदि न मारयेत्, तदा जिज्ञासां कृत्वा पश्चात्तथा अयुक्तत्वं नास्तीति स्वतो महादेवं वा पृष्ट्वा विवाहवदनुमोदनं कुर्यात्। अतः स्वसैन्यं मारयतीति, जामाता भवतीति विनिश्चित्य, बन्धनमेव कृतवान्। तच्च बन्धनं दूरे गतस्य। तदाह **ऊषा भृशमिति**। आश्चर्यं तस्य बन्धनं निशम्य भर्तृत्वे सन्देहाभावादश्रुकलाक्षी सती स्वाभिप्रायं ज्ञापयन्ती अरोदीत्। अनेन तस्य जारत्वं परिहृतम् ॥ ३२ ॥

इति श्रीभागवतसुबोधिन्यां श्रीमल्लक्ष्मणभट्टात्मजश्रीमद्वल्लभदीक्षितविरचितायां दशमस्कन्धविवरणे उत्तरार्धे त्रयोदशोऽध्यायः ॥ १३ ॥

### श्रीसुबोधिनी-सारः

आततायिभिः सशस्त्रैरनेकैर्भटैः शूरैर्वृतं मन्दिरं प्रविष्टं तं बाणमवलोक्य स माधवोऽनिरुद्धो मौर्वं मुरुर्लोहविशेषस्तन्निर्मितं परिघमुद्यम्योद्गृह्य हंतुमिच्छया व्यवस्थितः दण्डधरोंतको मृत्युर्यमो वा यथावतिष्ठते ॥ ३३ ॥ जिघृक्षया ग्रहीतुमिच्छया परितः सर्वतः प्रसर्पत आगच्छतस्तान्त्र भटान् अहन् सूकरयूथपः शुनः कुक्कुरान् इव हन्यमानास्ते भवनाद्विनिर्गता निर्भिन्ना मूर्द्धोरुभुजा येषां ते प्रदुद्रुवुः ॥ ३४ ॥ स्वस्य सैन्यं घ्नंतं तमनिरुद्ध बलेर्नंदनः पुत्रो बली बाणः कुपितो नागपाशैर्बबंध ह खेदे बद्धं निशम्य श्रुत्वा निशाम्येति पाठः साधुः। दृष्ट्वा भृशमत्यर्थं शोकविषादाभ्यां विह्वला अश्रूणां कला बिंदवो ययोस्ते अक्षिण नेत्रे यस्याः सोपाऽरोदिषीत् अरोदीत् आर्षं रूपम् ॥ ३५ ॥

इति श्रीमद्भा० दशमस्कन्धे उ० सुबोधिन्यां टीकायां द्विषष्टितमोध्यायः ॥ ६२ ॥

### गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

स माधवो मधुवंशप्रभवोऽनिरुद्धः आततायिभिः उद्यतशस्त्रैर्भटैः परिवृतं तं बाणं प्रविष्टं अवलोक्य मौर्वं मुरुर्लोहविशेषस्तन्निर्मितं परिघं दण्डविशेषं उद्यम्य गृहीत्वा जिघांसया हन्तुमिच्छया तदग्रतो व्यवस्थितः। तत्र सामर्थ्यं भयकरत्वं च द्योतयन् दृष्टान्तमाह—यथा दण्डधरोन्तको यमस्तथेति ॥ ३३ ॥ जिघृक्षया गृहीतुमिच्छया परितः सर्वतः प्रसर्पतः आगच्छतस्तान् आततायिनः अहनत् जघान। तत्र दृष्टान्तमाह—सूकराणां यूथं पातीति तथा स सूकरश्रेष्ठः शुनो यथा हन्ति तथेति। ते च हन्यमानाः अतएव निर्भिन्ना मूर्धादयो येषां ते गृहाद्विनिर्गताः सन्तः प्रदुद्रुवुः पलायिताः ॥ ३४ ॥ तं स्वसैन्यं घ्नन्तमनिरुद्धं कुपितो बलिनन्दनो बाणो नागपाशैर्ग्रन्थिविशेषैर्बबन्ध, जामातृवधस्यानुचितत्वात्। तत्र तत्सामर्थ्यमाह— बलीति। हेति आश्चर्यं सूचयति। तं बद्धं निशाम्य दृष्ट्वा अनिष्टं जातमिति शोकः तज्जनितं दुःखं विषादस्ताभ्यां विव्हला अवशा, अतः अश्रूणां कला बिन्दवो ययोस्ते अक्षिणी यस्याः सा ऊषा अरौदिषीत् ॥ ३५ ॥

इति श्रीवल्लभाचार्य-वंश्यगोपालसूनुना। श्रीमन्मुकुन्दरायाणां पादसेवाधिकारिणा ॥ १ ॥
श्रीमद्गिरिधराख्येन भजनानन्दसिद्धये। श्रीमद्भागवतस्येयं टीका बालप्रबोधिनी ॥ २ ॥
रचिता दशमे तत्र राजसानां निरोधने। द्वियुक् षष्टितमोध्यायो गत ऊषानिरुद्धयोः ॥
बाणस्यान्तःपुरे वृत्तिं रमणविनिरूपकः ॥ ३ ॥

## अन्वितार्थप्रकाशिका

स इति । स माधवो मधुवंशप्रभवोऽनिरुद्धः आततायिभिः उद्यतशस्त्रैर्भटैः परिवृतं तं बाणं प्रविष्टम् अवलोक्य मौर्वं मूर्वा लोहविशेषस्तन्निर्मितम् । मुरुर्लोहविशेष इति पठतां तोषिण्यादीनां मते ओर्गुणाभाव आर्षः । परिघं दण्डविशेषम् उद्यम्य गृहीत्वा यथा अन्तको दण्डधरस्तथा जिघांसया तदग्रतो व्यवस्थितः ॥ ३३ ॥ जिघृक्षयेति ॥ जिघृक्षया गृहीतुमिच्छया परितः सर्वतः प्रसर्पतः आगच्छतस्तान् आततायिनः सूकराणां यूथं पातीति तथा सूकरश्रेष्ठः शुनो यथा हन्ति तथाऽहनत् । शबलुगभाव आर्षः । ते च हन्यमानाः निर्भिन्नाः मूर्द्धोरुभुजा येषां ते ऊषाया भवनाद्विनिर्गताः सन्तः प्रदुद्रुवुः पलायिताः ॥ ३४ ॥ तमिति ॥ तं स्वसैन्यं घ्नन्तमनिरुद्धं कुपितो बली बलिनन्दनो बाणो नागपाशैर्ग्रन्थिविशेषैर्बबन्ध । जामातृवधस्यानुचितत्वात् बन्धश्चायं भगवदिच्छयैव । अन्यथा चतुर्व्यूहान्तर्गतस्य बाणेन बन्धनासम्भवात् तं बद्धं निशम्य दृष्ट्वा अनिष्टं जातमिति शोकः तज्जनितं दुःखं विषादस्ताभ्यां विह्वला अवशा अतः अश्रूणां कला बिन्दवो ययोस्ते अश्रूणि कलयतोऽधत्त इति तथाभूते इति वा अक्षिणी यस्याः सा ऊषा अरौदिषीत् आर्षः । अरौत्सीदिति वा पाठः सोऽप्यार्षः ॥ ३५ ॥

इति श्रीभागवते महापुराणे दशमस्कन्धेऽन्वितार्थप्रकाशिकायां द्विषष्टितमोऽध्यायः ॥ ६२ ॥

## श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्

आततायिभिः शस्त्रपाणिभिः भटैर्योद्धृभिः वृतं बाणं माधवस्य गोत्राऽपत्यं पुमान् माधवः सः अनिरुद्धः अवलोक्य मौर्वं मुरुर्लोहभेदस्तेन रचितं परिघं उद्यम्य । जिघांसया व्यवस्थितः ॥ ३० ॥ अनिरुद्धं गृहीतुमिच्छया ऊषा भवनस्य परितः प्रसर्पतः अटमानान् तान् भटान् अहनत् अहन् ॥ ३१ ॥ ततः बलिनं बलवंतमनिरुद्धं बली बलवान् बलिनंदन इति पाठे तु बलिपुत्रः बबंध बधं निशम्य दृष्ट्वा अश्रूणां कलपबिंदुधाराययोस्तथाभूते अक्षिणी नेत्रे यस्याः सा अरोदिषीत् अरोदीत् ॥ ३२ ॥

इति श्रीशुद्धैकांतधर्मप्रवर्त्तकगुरुराजेन्द्रश्रीसहजानंदस्वामिशिष्यगोपालानंदमुनिविरचिते निगूढार्थप्रकाशके श्रीमद्भागवतस्य दशमस्कंध-व्याख्याने अनिरुद्धबंधो नाम द्विषष्टितमोऽध्यायः ॥ ६२ ॥

## भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

स इति । माधवः, सोऽनिरुद्धः, आततायिभिरुद्यता युधैः, अनेकैः भटैः, वृतं तं बाणं, प्रविष्टं अवलोक्य, दण्डधरः अन्तकः यथा, तद्वत् जिघांसया हेतुना, मौर्वं मूर्वाख्यं लोहकृतं, परिघं उद्यम्य, व्यवस्थितः बभूव ॥ ३३ ॥ जिघृक्षयेति । जिघृक्षया ग्रहीतुमिच्छया, परितः, प्रसर्पतः तान् भटान्, सूकरयूथपः शुनः यथा, तद्वत् अहनत् । ते आततायिनः, हन्यमाना अनिरुद्धेन ताड्यमानाः, अत एव, भवनात् विनिर्गताः । निर्भिन्नाः मूर्द्धानः ऊरवः भुजाश्च येषां तथाभूताः सन्तः, प्रदुद्रुवुः ॥३४॥ तमिति । बली बलवान्, बलिनन्दनो बलिसुतो बाणः, स्वसैन्यं घ्नन्तं, तमनिरुद्धं, कुपितः सन्, नागपाशैः, बबन्ध ह । ऊषा बद्धं निशम्य, शोकश्च विषादश्च ताभ्यां बाह्यान्तरदुःखाभ्यां विह्वला, अश्रूणां कला बिन्दवो ययोस्तथाभूते अक्षिणी यस्या-स्तथाभूता सती, भृशं अरौदिषीत् रुरोद ॥ ३५ ॥

इति श्रीधर्मधुरंधरश्रीधर्मात्मजप्रत्यक्षपुरुषोत्तमश्रीसहजानन्दस्वामिसुतश्रीरघुवीराचार्यसूनुभगवत्प्रसादाचार्यविरचितायामन्व-यार्थावबोधिन्यां भक्तमनोरञ्जन्याख्यायां श्रीमद्भागवतटीकायां दशमस्कन्धोत्तरार्द्धे द्विषष्टितमोऽध्यायः ॥ ६२ ॥

## कृष्णप्रिया

मधुवंशज श्रीअनिरुद्धजी ने देखा कि बाणासुर अनेक प्रकार के शस्त्रास्त्रों से सुसज्ज सैनिकों को लेकर ऊषा निवास में आक्रमण के लिये आ रहा है तब वीरवर अनिरुद्ध बाणासुर को धराशायी करने के लिये लोहे का परिघ-मुद्गर को लेकर सामने आ गये तब लग रहा था खुद काल-अन्तक यमदण्ड लेकर सामने खड़ा है। बाणासुर के सैनिक अनिरुद्धजी को पकड़ने के लिये जैसे-जैसे अनिरुद्धजी पर झपटते वैसे-वैसे वीर अनिरुद्ध उन सबको मार-मार गिराते थे और भगाते थे। तब ऐसा लग रहा था कि सूकरों के सेनानायक कुत्तों को मार डालते हों। अनिरुद्ध जी के प्रहार से सैनिकों के मस्तक, हस्त, भुजा, जङ्घा आदि अङ्ग-प्रत्यङ्ग टूट गये और अपनी रक्षा के लिए महल से भाग गये ॥३३-३४॥ जब बलिष्ठ बलिनन्दन बाणासुर ने देखा कि इस युवा ने मेरी सेना कुचल डाली है तब वह अत्यंत आविष्ट-रुष्ट हो गया और नागपाश से वीर अनिरुद्ध को बांध लिया। तब ऊषा ने जाना कि अपने प्रियतम वीर अनिरुद्ध जी को बांध लिये हैं तब शोकाविष्ट और विषाद-विह्वल ऊषा के नेत्रों से अश्रुधारा बहने लगी और मुक्तकंठ से रोने लगी ॥ ३५ ॥

इति श्रीमद्भागवत दशमस्कन्धनिरोधलीला उत्तरार्द्धेऽनिरुद्धबन्धे हिन्दीभाषान्तर समाप्त ॥ ६२ ॥

# अथ त्रिषष्टितमोऽध्यायः

| श्लोकाः | अनु. | मि. उ. | उप. | उ. | श्लो. अ. | उ. अ. | अ. अ. | सं. श्लो. अ. | सं. श्लो. | अ. |
|---|---|---|---|---|---|---|---|---|---|---|
| ५३ | ४१ | ११ | १ | ५ | १८१७ | ३१ | ३३ | १८८१ | ५८॥। | १ |

### श्रीशुक उवाच

**अपश्यतां चानिरुद्धं तद्बन्धूनां च भारत । चत्वारो वार्षिका मासा व्यतीयुरनुशोचताम् ॥ १ ॥**
**नारदात्तदुपाकर्ण्य वार्तां बद्धस्य कर्म च । प्रययुः शोणितपुरं वृष्णयः कृष्णदेवताः ॥ २ ॥**
**प्रद्युम्नो युयुधानश्च गदः साम्बोऽथ सारणः । नन्दोपनन्दभद्राद्या रामकृष्णानुवर्तिनः ॥ ३ ॥**
**अक्षौहिणीभिर्द्वादशभिः समेताः सर्वतोदिशम् । रुरुधुर्बाणनगरं समन्तात् सात्वतर्षभाः ॥ ४ ॥**

### कर्दमक्षमा

अन्वयः—श्रीशुक उवाच—भारत ! अनिरुद्धम्, अपश्यताम्, च, अनुशोचताम्, च, तद्बन्धूनाम्, चत्वारः, वार्षिकाः मासाः, व्यतीयुः ॥ १ ॥ कृष्णदेवताः, वृष्णयः, तस्य, बद्धस्य, वार्ताम्, च, तस्य, कर्म, नारदात्, उपाकर्ण्य, शोणितपुरम्, ययुः ॥ २ ॥ प्रद्युम्नः, युयुधानः, च, गदः, साम्बः, अथ, सारणः, नन्दोपनन्दभद्राद्याः, रामकृष्णानुवर्तिनः, सात्वतर्षभाः, समेताः, द्वादशभिः, अक्षौहिणीभिः, समेताः, बाणनगरम्, समन्तात्, रुरुधुः ॥ ३–४ ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिकाप्रकाशः

त्रियुक्षष्टितमे चाथ बाणयादवसंगरे । स्तुतिज्वरेण रुद्रेण बाणबाहुभिदो हरेः ॥ १ ॥

कर्म च युद्धादिकम् ॥ २ ॥ रामकृष्णानुवर्तिन इति । तौ पुरस्तो निर्गताविव्यर्थः ॥ ३ ॥ सर्वतो दिशमित्यस्योत्तरेणान्वयः ॥ ४ ॥

### श्रीवंशीधरकृता भावार्थदीपिकाप्रकाशः

संगरः संग्रामः । बाणबाहून् भिनत्तीति तथा तस्य ( १ ) तद्वंधूनामनिरुद्धबंधूनाम् । तदिति षष्ठ्या लुगार्षः । तस्य बंधूनाम्, चाद्दासादीनामित्यर्थः । वार्षिका[1] वर्षाकालीनाः । वैशाखशुक्लद्वादश्यामूषायाः स्वप्नदर्शनम् । "सप्तरात्रेण ते भीरु दर्शयिष्याम्यहं प्रियम्" इति हरिवंशे चित्रलेखोक्तेर्ज्येष्ठकृष्णपक्षेऽनिरुद्धहरणात् षण्मासेष्वतीतेषु वार्षिका अपि चत्वारो मासा गतास्ततो मार्गमासारंभोऽभूत् । हे भारतेति भरतवंशश्रेष्ठपांडुवंशोद्भवस्त्वं कृष्णलीलामौग्ध्यं जानास्येवेति भावः ॥ १ ॥ तदनिरुद्धबंधनम् ॥ २ ॥ तौ रामकृष्णौ । इत्यर्थ इति–अनुवर्तनमग्रस्थस्यैव भवतीति भावः ॥ ३ ॥ उत्तरेण सर्वतोदिशम् । 'भज्यमाने पुरोद्याने' इत्यादिना सर्वतोदिशमभिनिर्ययावित्यनेन वान्वयः ॥ ४ ॥

### श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी

त्वर्थे चशब्दः भिन्नोपक्रमात् तस्य बन्धूनां सर्वयादवानां चकाराद्दासदास्यादीनाञ्च अनु निरन्तरं शोचतां सतां विशेषेणातीयुः मार्गमासारम्भोऽभूदित्यर्थः । वैशाखशुक्लद्वादशीरात्रौ उषायाः स्वप्नानन्तरं 'सप्तरात्रेण ते भीरु दर्शयिष्याम्यहं प्रियम्" इति श्रीहरिवंशोक्तचित्रलेखावाक्यानुसारेण ज्येष्ठप्रथमे श्रीअनिरुद्धहरणात् षण्मासेष्वतीतेष्वपि वार्षिकाश्चत्वारो मासा इति तेऽपीत्यर्थः । अतोऽत्रैव वा पूर्वचकारान्वयः तेषु त्वधिका चिन्ता जातेत्यभिप्रायात् हे भारत भरतकुलश्रेष्ठ ! पाण्डवकुलोद्भवेति त्वं पुनरेतच्छ्रीभगवतो लीलामौग्ध्यं जानास्येवेतिभावः ॥ १ ॥ तत्तस्यानिरुद्धस्य षष्ठीलुक्छान्दसः उप समीपे आकर्ण्य गुह्यत्वेन कर्णे कथनात् प्रकर्षेण महोद्यमेन ययुः यतः कृष्णस्तत्पितामहरूपः स्वयं भगवानेव देवता परमाराध्यो येषां ते इति भयाभावः सूचितः तच्छब्देन तस्य गमनं सूचितं तेषां तदनुगामित्वात् ॥ २ ॥ प्रद्युम्न इति युग्मकम् । अथ साम्बस्यानन्तरम् इति रामकृष्णानुयाने तेषां क्रम उक्तः नन्दादयोऽत्र पार्षदप्रवरा यादवविशेषाः समेताः स्नेहेन मिलिताः समन्तात् नैरन्तर्येणेत्यर्थः ॥ ३–४ ॥

---

१. पालिताः–वीर. ।

### श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी

त्वर्थे च-शब्दो भिन्नोपक्रमात्, किंवा अप्यर्थे, अपश्यतामपि तस्य बन्धूनां सर्व्वयादवानाम्, चकाराद्दासदास्यादीनाञ्च, अनु निरन्तरम्, शोचतां सत्यम्, विशेषेणातीयुर्मार्गमासारम्भोऽभूदित्यर्थः। वैशाखशुक्लद्वादशीरात्रावूषायाः स्वप्नानन्तरम् ( विष्णु० प० ११८।३० )—'सप्तरात्रेण ते भीरु दर्शयिष्याम्यहं प्रियम्' इति श्रीहरिवंशोक्तचित्रलेखावाक्यानुसारेण ज्येष्ठ-प्रथमेऽनिरुद्धहरणात् षण्मासेष्वतीतेष्वपि चत्वारो मासा इति प्रावृषि युद्धोद्यमाद्यसम्भवात्, किंवा श्रीभगवदिच्छया बाणानिरुद्ध-योर्युद्धापेक्षया विलम्बनात्, अतो वार्षिका अपीत्यर्थः। यद्वा, श्रीबादरायणिमते वर्षारम्भ एव तद्धरणादिति दिक्। श्रीभगवति साक्षात्तत्रैव विराजमानेऽप्यनिरुद्धवृत्ताज्ञानादिनानुशोचनादाश्चर्य्येण सम्बोधयति—भारतेति। यथा त्वत्पूर्व्वजभारतकुलयुद्धा-दावभिमन्युपतनादावप्यज्ञवत्तस्य चेष्टितं तथेति भावः ॥ १ ॥ तत्तदा तस्येति वा, उप समीपे, आकर्ण्य गुह्यत्वेन कर्णे कथनात्, सर्व्वज्ञशिरोमणिना श्रीभगवता स्वयं तदप्रतिपादनन्तु समुद्रकोटिगम्भीरस्वभावत्वेन लौकिकलीलापेक्षया वा, श्रीनारदप्रतिष्ठार्थं वा। एवमग्रेऽपि ज्ञेयम्। प्रकर्षेण महोद्यमादिना ययुः, यतः कृष्णः साक्षाद्भगवानेव देवता इष्टदेवो येषां ते, तदादेशादिति किंवा तत्प्रसादेन सर्व्वसम्पत्तिसद्भावादिति भावः ॥ २ ॥ अथ अपि, युद्धादाविष्ट प्रसिद्धाः, सारणोऽपि यद्वा, साम्बस्यानन्तरमिति रामकृष्णानुयाने तेषां क्रम उक्तः। नन्दादयः पार्षदप्रवरा यादवविशेषाः, आद्य-शब्देन कृतवर्म्मादयो यदुवीराः; यद्वा, नन्दो गोपेन्द्र उपनन्दस्तद्भ्राता भद्रो भद्रसेना गोपसेनाध्यक्षः, आद्य-शब्दात् श्रीदामादयः, प्रायस्तेषां श्रीकृष्णस्नेहेन द्वारकायामेव निवासात्, सदा प्रयाणाद्वा, किंवा श्रीरुद्रेण सह श्रीकृष्णस्य युद्धशंकया स्नेहभरेण द्रुतं व्रजात्तदानीमेवागमनात्, ततश्चाथ-शब्दस्यात्रैवान्वयः। नन्दाद्या अपि प्रद्युम्नादीनाञ्च रामकृष्णानुगमने यथापूर्वमग्रचत्वम्। रामस्यादावुक्तिरग्रजत्वात्, किंवा स्नेहभरणोनुजस्याग्रे प्रयाणात्। इति सर्व्वेषां रमणाद्रामः, स्नेहेनाकर्षणाच्च कृष्ण इति ॥३॥ समेताः स्नेहेनान्योन्यं मिलिताः सन्तः, समन्तात् नैरन्तर्य्येणेत्यर्थः। यतः सात्वतेषु यादवेषु ऋषभाः श्रेष्ठाः, पक्षान्तरे गोपेन्द्रादीनां सद्भावेऽपि सात्वतर्षभा इत्युक्तिः 'छत्रिणो गच्छन्ति' इति न्यायात्, किंवा स्कान्दोक्तप्रामाण्येन यादवैरभिन्नतया तेषामपि यादवत्वात्, यद्वा, सात्वता भगवद्भक्तास्तेषु ऋषभाः ॥ ४ ॥

### श्रीमद्वीरराघवाचार्यकृता भागवतचन्द्रचन्द्रिका

अथानिरुद्धादर्शनजव्यथानां क्रमेण नारदाच्छ्रुततद्वार्त्तानां प्राप्तशोणितपुराणां यदूनां बाणेन सह सङ्ग्रामं वर्णयति त्रिषष्टितमेन—अपश्यतामिति। अनिरुद्धमपश्यतां तस्यानिरुद्धस्य बन्धूनाम् अनुशोचतां सतां वार्षिकाः आषाढाद्याश्विनान्ता-श्चत्वारो मासा व्यतीयुरतिक्रान्ताः ॥ १ ॥ नारदादिति। बद्धस्यानिरुद्धस्य वार्त्तां बन्धनात् पूर्वं तस्य कर्म च श्रुत्वा कृष्णेन पालिताः कृष्णसहिता इत्यर्थः वृष्णयो यादवाः ॥ २ ॥ वृष्णीनेव प्रधानानाह—प्रद्युम्न इति। एते सर्वे रामकृष्णावनुवर्त्तन्त इति तथाभूता ययुः ॥ ३ ॥ अक्षौहिणीभिरिति समेताः सहिताः ॥ ४ ॥

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः

वार्षिकाश्चत्वारो मासा अपीत्यर्थः। वैशाखशुक्लद्वादश्यां तस्याः स्वप्नदर्शनमिति श्रीहरिवंशे ॥ १ ॥ तत् तस्य भगवानिति स्वयं सर्वज्ञत्वात्तन्महिमज्ञ एव बाणमन्यांश्च प्रति स्वपराभवेन तन्महिमानं दर्शयितुमिति भावः ॥ २-२३ ॥

### श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शिनी

जिताभ्यां ज्वररुद्राभ्यां संस्तुतो बाणबाहुभित्। सनप्तृकः पुरीं प्रागात् त्रियुक्षष्टितमे हरिः ॥

ज्येष्ठादिषण्मासेष्वपि व्यतीतेषु चत्वारो वार्षिका इति वार्षिका अपीत्यर्थः ॥ १ ॥ तत्तस्यानिरुद्धस्य कर्म च युद्धादिकम् ॥ २-५ ॥

### गूढार्थदीपिनी

सत्रिषष्टितमे घोरे बाणयादवसंयुगे। संस्तुतिर्ज्वरशर्वाभ्यां बाणबाहुच्छिदो हरेः ॥

अत्र एकश्चकारो हेतौ द्वितीयः समुच्चये। यतः व्यतीयुः अतः प्रययुरिति योज्यम्। वार्षिका वर्षाकालिकाः वार्ता तद्बन्धनवार्ताम्। कर्म युद्धादिकं च ॥ १-३ ॥ समेता मिलिताः सन्तः। सर्वतो दिशं बहिः समन्तात् अन्तश्च ॥ ४ ॥

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः

अनिरुद्धनिरोधानन्तरं बाणयादवयुद्धज्वरकृतभगवत्स्तुतिबाणबाहुच्छेदनादिकं यद्वृत्तन्तद्वर्णयति—अपश्यतामिति त्रिषष्टितमेन ॥ १ ॥ तत्तस्यानिरुद्धस्य कर्म युद्धादिकं बद्धस्य वार्त्ता कन्यान्तःपुरे वासादिकथाम् ॥ २-५ ॥

## श्रीसत्यधर्मकृता श्रीभागवतटिप्पणी

॥ हरिः ॐ ॥ देवतोऽत्रैवं सत्यनिरुद्धे निरुद्धे का कथा वृत्ता द्वारकायामित्यत आह। अपश्यतामिति। वार्षिका वर्षकालसम्बन्धिनो व्यतीयुरतिक्रान्ताः ॥ १ ॥ चित्रलेख्योक्तं नारदः समरमनपगमयन्नागत्यावददिति वदति ॥ नारदादिति। तत्कर्म चेत्यन्वयः ॥ २ ॥ रामकृष्णमनुवर्तितुं शीलं येषां ते तथा। अनेन पुरतो द्वयोस्तदन्वेव तेषां गमनं ध्वन्यते ॥ ३ ॥ द्वादशभिरक्षौहिणीभिः समेताः सात्वतर्षभाः सर्वतो दिशं सर्वासु दिक्षु तथा समन्ताद्विदिक्षु च तद्बाणनगरं रुरुधुः ॥ ४ ॥

## श्रीमद्वल्लभाचार्य्यकृता सुबोधिनी

चतुर्दशे तु धिजयः शिवादीनां निरूप्यते। निरोधो राजसः पूर्णो भविष्यति यतः फले ॥ १ ॥
भक्तवत्सलतां दृष्ट्वा न निरोधः क्वचित्तथा। अतोऽन्यनाशशङ्कापि भजनान्तरबाधिका ॥ २ ॥
न बाधते हरिः क्वापि विरुद्धोऽपि कथञ्चन। अक्लिष्टत्वाय तु हरेरुपेक्षात्र निरूप्यते ॥ ३ ॥
प्रद्युम्नवत्तु तस्यापि नयनेन्वेषणं नहि। अत्रापि नारदः प्रोक्तः प्रमाणं चिन्तनाधिके ॥ ४ ॥
सर्वभावेन युद्धाय ज्वरोपाख्यानमुच्यते। तामसस्तु ज्वरोऽत्रैव समुत्पन्नस्तथोत्तमः ॥ ५ ॥
शीतरोरौ पृथक् पूर्वमुत्पन्नौ मिलितौ नहि। अतो हि भगवानत्र मेलयामास सर्वथा ॥ ६ ॥

पूर्वाध्यायान्ते बन्धनमुक्तम्। एवं शोणितपुरकथायां जातायां द्वारकाकथा वक्तव्येति हेतुत्वेन पूर्वोक्तां कथामाह **अपश्यतां चानिरुद्धमिति**। चकारेण गमनप्रकारज्ञानादयः सङ्गृहीताः। अनिरुद्धोऽपि चेन्निरुद्धः, तदा सर्वमन्यथा भविष्यतीति शोकः। तद्बन्धूनाम्, चकारादन्येषाम्। **भारतेति** विश्वासार्थम्। तूष्णींभावे हेतुः **चत्वारो वार्षिका मासा व्यतीयुरिति**। वर्षायां युद्धादिगमनं बाधितमिति। **अनुशोचतामित्यन्तः** तदेकपरत्वम्। अप्रसिद्धत्वाल्लौकिकप्रकारेण न प्रमाणं सिद्धमित्यन्वेषणेऽपि नोपलब्धिः ॥ १ ॥ अतो नारदवाक्याद्वैष्णवप्रीत्यर्थं कलहार्थमुद्यता इत्याह **नारदादिति**। तद्वृत्तान्तं फलितं बन्धनं वा। **वार्तां** आदितः कथां बद्धस्य **वार्ताम्**। **कर्म च**। तत्कन्यया सह रमणम्। चकाराद्युद्धं च। ततः शोणितपुरं प्रययुः युद्धार्थम्। ननु महादेवाधिष्ठितं तत्, अतस्तद्विरोधसम्भवात् कथं गता यादवा इत्याशङ्क्याह **कृष्णदेवता** इति। कृष्ण एव देवता येषाम्। अनेन सामर्थ्यमपि द्योतितम् ॥ २ ॥ लौकिकं सामर्थ्यं वक्तुं महतां नामानि गृह्णाति **प्रद्युम्न** इति। **युयुधानः** सात्यकिः। **गदो** बलभ्राता। **साम्बः** भगवत्पुत्रः। एते महारथाश्चत्वारः मुख्या गणिताः। **अथ** भिन्नप्रक्रमेण प्रकीर्णकान् गणयति **अथेति**। चकारात्तदीयाः सारणादयो भगवद्भ्रातरः। तेऽपि चत्वारो गणिताः। एवमष्टविधा आदिभूता येषां मुख्यानां गौणानां च। सर्व एव रामकृष्णानुवर्तिनः, नतूद्धताः, स्वतन्त्रा वा। उभयोर्ग्रहणं सम्पूर्णशक्त्यर्थम्। तेषां स्वाभाविकं बलं द्वादशाक्षौहिणीयुतम्। **समेता** मिलिताः अन्योन्यवैमनस्यं परित्यज्य सर्वतो दिशं रुरुधुः। **बाणनगरमिति** प्रसिद्धम्। **समन्तादिति**। न क्वचित्सेनाया विच्छेदः। **सात्वतर्षभा** इति। न तेषां क्वचिद्भयमिति सूचितम् ॥ ३-४ ॥

## श्रीविट्ठलरायात्मजश्रीवल्लभकृतलेखः

**चतुर्दशेऽध्याये। कारिकायाम्। भक्तवत्सलतेति**। सर्वत्र भगवतो भक्तवत्सलता दृष्टा, परन्तु भक्तार्थं देवान्तरेण सह भगवतो विरोधो न दृष्टः। अतो हेतोर्भगवद्भजनस्य अन्तरे मध्ये बाधिका अन्यतो देवान्तरात्स्वस्य नाशशङ्कापि भक्तानां भवेदिति शेषः। अतस्तादृशशङ्कानिवृत्त्यर्थं देवान्तरविजयोऽत्र निरूप्यते इति भावः। ननु भगवान् नारदवाक्यं विना स्वत एव कुतो न प्रवृत्त इत्यत आहुः **न बाधत** इति। कथञ्चन केनचिदंशेन विरोधविषयीकृतोऽपि भगवान् स्वतः क्वापि न बाधते। तर्हि भक्तोपेक्षादोषः स्यादित्याशङ्क्य, तत्तात्पर्यमाहुः **अक्लिष्टत्वाय त्विति**। अक्लिष्टकर्मत्वबोधनार्थमित्यर्थः। **प्रमाणमिति**। प्रद्युम्नवदनिरुद्धस्यापि प्रमाजनको नारद इत्यर्थः। **तामसस्त्विति**। वक्ष्यमाणविधः शिवकलारूप इत्यर्थः। तुशब्देन प्रसिद्धो ज्वरः पूर्वमेवोत्पन्न इति तद्व्यावृत्तिः कृता। **तथोत्तम** इति। वैष्णवो ज्वर इत्यर्थः। **पूर्वमुत्पन्नाविति**। शीतोष्णज्वरौ पूर्वमुत्पन्नौ। ज्वरे शिवकलात्वमधुना जातमिति विभागः। **अपश्यतामित्यत्र**। **अनिरुद्धोपीति**। मनोधिदेवस्यासुरनिरोधे सर्वेषां मनोऽसुरसंबन्धि भविष्यतीत्यर्थः। **प्रमाणमिति**। प्रमाहेतुर्भिज्ञापकं न किञ्चित्सिद्धमित्यर्थः। **वैष्णवप्रीत्यर्थमिति**। वैष्णवानां शोक उक्तस्तन्निवृत्त्यर्थम्। अत एव भगवदाज्ञाया अपि प्रतीक्षा न कृतेति भावः।

## श्रीसुबोधिनीसारः

शुकोक्तिः। हे भारत अनिरुद्धमपश्यतां वीक्षमाणानां तस्य बंधूनामनुशोचतां सतां वर्षायां भवा वार्षिकाश्चत्वारो मासा व्यतीयुर्निर्गताः ॥ १ ॥ बद्धस्य वार्तां तत् कर्म युद्धादि नारदादुपाकर्ण्य श्रुत्वा कृष्णो देवता येषां ते वृष्णयः शोणितपुरं प्रजग्मुः ॥ २ ॥ तत्र मुख्यानाह। प्रद्युम्नः युयुधानः सात्यकिः गदादयः प्रसिद्धाः रामकृष्णानुयायिनः इत्यन्येन तयोर्यानं पूर्वमेव सूचितम् ॥ ३ ॥ द्वादशभिरक्षौहिणीभिः समेता युक्ताः सात्वतर्षभाः सर्वतो दिशं बाणस्य नगरं समन्तात् रुरुधुः ॥ ४ ॥

### गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

त्रियुक्षष्टितमे चाथ बाणयादवसङ्गरः । ज्वररुद्रस्तुतिः कृष्णविजयश्च निरूप्यते ॥ १ ॥

एवं शोणितपुरे बन्धनान्तर्मानिरुद्धवृत्तं निरूप्य द्वारकास्थानां यादवानां वृत्तमाह—अपश्यतामिति । हे भारत ! अनिरुद्धमपश्यतां चकारात् तद्गमनप्रकारं चाजानतां अत एवानुशोचतामेव सतां तस्य बन्धूनां वार्षिका वर्षोपलक्षिता आषाढाद्याश्विनान्ताश्चत्वारो मासा व्यतीयुरतिक्रान्ताः । वर्षा हि प्रतिबन्धिकेति तावदन्वेषणप्रयत्नोऽपि न कृत इति ज्ञेयम् ॥ १ ॥ बद्धस्यानिरुद्धस्य वार्ता तद्बन्धनवार्ता चित्रलेखाहरणं पारमणादिरूपं कर्म च युद्धादिरूपं नारदादुपाकर्ण्य श्रुत्वा प्रद्युम्नादयो वृष्णयो द्वादशभिरक्षौहिणीभिः सेनाभिः समेता मिलिताः युद्धार्थं शोणितपुरं प्रययुरिति त्रयाणामेकान्वयः । ननु 'श्रीमहादेवाधिष्ठितं हि तत्पुरम्, अतस्तद्विरोधेन तत्र भयसम्भवात् कथं ते निर्भयतया तत्रागता' इत्याशङ्क्याह—कृष्णदेवता इति । कृष्ण एव देवता रक्षको येषाम् । अतो न तेषां भयशङ्कालेशः ॥ २ ॥ तेषां गमने हेतुमाह—रामकृष्णानुवर्तिन इति । तावपि पुरतो गतौ, तदनु तेपि गता इत्यर्थः ॥ ३ ॥ गत्वा ते सात्वतर्षभाः यादवश्रेष्ठाः बहिः सर्वतोदिशं अन्तश्च समन्तात् सर्वतो बाणनगरं रुरुधुः ॥ ४ ॥

### अन्वितार्थप्रकाशिका

त्रयःषष्टितमे बाणदोश्च्छेदी शम्भुना हरिः । तद्रक्षार्थं स्तुतस्तत्र श्लोका दहनमार्गणाः ( ५३ ) ॥ ( ५ )
पद्योवाचेऽर्धयुक्ता सप्तबाणा ( ५८॥ ) अनुष्टुभः ॥ ६३ ॥

अपश्यतामिति । हे भरत ! अनिरुद्धमपश्यतां चकारात् तद्गमनप्रकारं चाजानताम् अत एवानुशोचतामेव सतां तस्य बन्धूनां वार्षिकाः वर्षोपलक्षिता आषाढाद्याश्विनान्ताश्चत्वारो मासा व्यतीयुरतिक्रान्ताः । ज्येष्ठादिषण्मासेषु व्यतीतेष्वपि चत्वारो वार्षिका अपि तदन्तर्गता व्यतीता इति व्याख्येयम् ॥ १ ॥ नारदादिति । बद्धस्यानिरुद्धस्य वार्ता तद्बन्धनवार्ता चित्रलेखाहरणोपारमणादिरूपं कर्म च युद्धादिरूपं नारदादुपाकर्ण्य श्रुत्वा कृष्णदेवताः वृष्णयः शोणितपुरं प्रययुः ॥ २ ॥ प्रद्युम्न इति युग्मम् । द्वारकातो बहिर्निर्गतौ रामकृष्णौ अनुवर्तन्ते अनुगच्छन्ति तच्छीलाः प्रद्युम्नादयो द्वादशभिरक्षौहिणीभिः समेता मिलिताः ते सात्वतर्षभा यादवश्रेष्ठाः । अत्र नन्दाद्याः पार्षदाः यादवविशेषाः । बहिः सर्वतोदिशम् अन्तश्च समन्तात्सर्वतो बाणनगरं रुरुधुः ॥ ३-४ ॥

### श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्

इदानीं त्रिषष्टितमेऽध्याये यादवानां शोणितपुरगमनं तेषां बाणेन सह युद्धं च शंकरज्वराभ्यां कृतश्रीकृष्णस्तवनं चानिरुद्धोद्वाहश्च निरूप्यते तस्यानिरुद्धस्य बंधूनां प्रद्युम्नादीनां ॥ १ ॥ बद्धस्य अनिरुद्धस्य कर्मसंग्रामादिकं ॥ २ ॥ रामकृष्णौ अनुवर्त्तंते इति तथाभूताः तदाज्ञानुसारेण वर्त्तमाना इत्यर्थः ताभ्यां सह ययाविति भावः ॥ ३ ॥ द्वयोः सहान्वयः बाणनगरं समंतात् रुरुधुः कथंभूतं तत् सर्वतोदिशं भज्यमानानि पुरोद्यानादीनि यस्मिंस्तत् ॥ ४-५ ॥

### भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

बाणयादवसंग्रामे त्रियुक्षष्टितमे त्वथ । स्तवनं ज्वररुद्राभ्यां हरेर्बाणभुजच्छिदः ॥ १ ॥

अथानिरुद्धादर्शनजव्यथानां क्रमेण नारदाच्छ्रुतवार्त्तानां संप्राप्तशोणितपुराणां यदूनां बाणेन सह संग्रामं वर्णयति । अपश्यतामिति । हे भारत, अनिरुद्धं अपश्यतां चापि, अनुशोचतां तमनुशोचमानानां चापि, तद्बन्धूनां, वार्षिका आषाढाद्याश्विनान्ताः, चत्वारः मासाः, व्यतीयुरतिक्रान्ताः ॥ १ ॥ नारदादिति । बद्धस्य बाणासुरेण नागपाशेन कृतबन्धनस्यानिरुद्धस्य, वार्त्तां संदेशं, तत् बन्धनात् पूर्वमनिरुद्धेन कृतं तत्सैन्यवधादिकमित्यर्थः । कर्म च, नारदात्, उपाकर्ण्य श्रुत्वा, कृष्णपालिताः श्रीकृष्णेन कृतसर्वत्र संरक्षणाः, कृष्णेन सहिता इत्यर्थः । वृष्णयो यादवाः, शोणितपुरं, प्रययुः ॥ २ ॥ वृष्णीनेव प्रधानानाह । प्रद्युम्न इति । प्रद्युम्नः, युयुधानः सात्यकिश्च, गदः, अथ साम्बः, सारणः, नन्दश्च उपनन्दश्च भद्रश्च ते आद्या येषां ते, रामश्च कृष्णश्च तावनुवर्त्तन्ते तच्छीलाः ॥ ३ ॥ अक्षौहिणीभिरिति । सात्वतर्षभाः, दशभिः अक्षौहिणीभिः, समेताः सहिताः सन्तः, समन्तात्परितः, बाणनगरं, रुरुधुः । इति द्वयोरेकसंबन्धः । सर्वतोदिशमित्यस्योत्तरेणान्वयः ॥ ४ ॥

### कृष्णप्रिया

श्रीशुकाचार्यजी ने कहा—राजन् ! वर्षाकाल के चार महीने व्यतीत हो गये लेकिन अनिरुद्धजी का कोई भी समाचार न मिला । सारे कुटुम्बीजन इस प्रसङ्ग से अतिशय शोकाकुल हो रहे थे । तब एक दिन देवर्षि नारद जी ने पधारकर चित्रलेखा

के माध्यम से अनिरुद्ध का शोणितपुर जाना, शोणितपुर में बाणासुर के सैनिकों को पराजित करना, बाणासुर द्वारा नागपाश से बाँधना यह सारा वृत्तान्त सुनाया। भगवान् श्रीकृष्ण को अपना सर्वस्व मानने वाले यादवों ने शोणितपुर पर आक्रमण किया। भगवान् श्रीकृष्ण और बलभद्रजी के अनुयायी सारे यादव, प्रद्युम्नजी, सात्यकि, गद, साम्ब, सारण, नन्द, उपनन्द एवं भद्र आदि ने बारह अक्षौहिणी सेना के साथ व्यूहरचना बनाकर चारों ओर से शोणितपुर को घेर लिया॥ १-४॥

**भज्यमानपुरोद्यानप्राकाराट्टालगोपुरम्। प्रेक्षमाणो रुषाविष्टस्तुल्यसैन्योऽभि[1]निर्ययौ॥ ५॥**

**[2]बाणार्थे भगवान् रुद्रः [3]ससुतैः प्रमथैर्वृतः। आरुह्य नन्दिवृषभं युयुधे रामकृष्णयोः॥ ६॥**

**आसीत् सुतुमुलं युद्धमद्भुतं रोमहर्षणम्। कृष्णशंकरयो राजन् प्रद्युम्नगुहयोरपि॥ ७॥**

**कुम्भाण्डकूपकर्णाभ्यां बलेन सह संयुगः। साम्बस्य बाणपुत्रेण बाणेन सह सात्यकेः॥ ८॥**

**कर्दमक्षमा**

अन्वयः—भज्यमानपुरोद्यानप्राकाराट्टालगोपुरम्, प्रेक्षमाणः, रुषाविष्टः, तुल्यसैन्यः, अभिनिर्ययौ॥ ५॥ भगवान् रुद्रः, बाणार्थे, ससुतैः, प्रमथैः, वृतः, नन्दिवृषभम्, आरुह्य, रामकृष्णयोः, युयुधे॥ ६॥ राजन्! कृष्णशङ्करयोः, प्रद्युम्नगुहयोः, अपि, रोमहर्षणम्, सुतुमुलम्, युद्धम्, अभूत्॥ ७॥ कुम्भाण्डकूपकर्णाभ्याम्, बलेन, सह, संयुगः, बाणपुत्रेण, साम्बस्य, सात्यकेः, सह, बाणेन, युद्धम्, अभूत्॥ ८॥

**श्रीधरस्वामिविरचिता भावार्थदीपिका**

भज्यमानानि पुरोद्यानादीनि। द्वन्द्वैकवद्भावः। अट्टालाः प्राकारादुपरितनान्युन्नतस्थानानि। अभिनिर्ययौ बाणः॥५॥ सुतः स्कंदस्तत्सहितैः प्रमथैर्गणैः। रामकृष्णाभ्यां युयुधे॥ ६-१२॥

**श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः**

तुल्यसैन्यो द्वादशाक्षौहिणीसैन्यः। पुरे द्वादशाक्षौहिण्यवस्थितिस्तु रुद्रयोगबलाद्ध्येया॥ ५॥ सुतपदेन गणेशो न ग्राह्यस्तद्युद्धाश्रवणात्। 'प्रमथाः स्युः पारिषदाः' इत्यमरः। भगवानिति—स्वयं सर्वज्ञोऽपि स्वपराभवेन बाणमन्यांश्च प्रति कृष्णमहिमानमबोधयदिति भावः। तृतीयार्थे षष्ठी रामकृष्णयोरिति॥ ६॥ सुतुमुलं सुसंकुलम् "तुमुलः कलिवृक्षे ना क्लीबं तु रणसंकुले" इति मेदिनी॥ ७॥ सात्यकेः संयुग आसीदित्यन्वयः॥ ८॥

**श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी**

भज्यमानेति समाहारद्वन्द्वगर्भः कर्मधारयः प्रकर्षेण सैन्यगणनादिना ईक्षमाणः तुल्यसैन्य इति सैन्याधिक्येऽपि दुर्मदेनात्मनः सन्याययुद्धत्वं दर्शयितुम् अन्य गो बोध्यते अतोऽभिमुखे निर्ययौ पुरात्॥ ५॥ बाणार्थमिति तद्दुरसङ्गदोषव्यञ्जनार्थमित्यर्थः। बाणार्थ इति सप्तम्यन्तं क्वचित् किञ्च भगवानिति स्वयं सर्वज्ञत्वात्तन्महिमज्ञ एव किन्तु बाणमन्यांश्च प्रति स्वपराभवेन तन्महिमानं दर्शयितुमिति भावः॥ ६॥ सुतुमुलमत्यन्तसङ्कुलम् अतोऽद्भुतम् अत एव लोमहर्षणं श्रवणादपि पुलकोद्गमकरम् एवमादौ सामान्येनोक्त्वा पश्चाद्विशेषेण द्वन्द्वयुद्धमाह—कृष्णेति सार्द्धेन॥ ७॥ कुम्भाण्डकूपकर्णाभ्यां सह बलेन बलस्य संयुगमासीत्॥ ८॥

**श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी**

पुरस्योद्यानादीनां यथोत्तरमान्तरत्वमुत्कृष्टत्वं वा, प्रकर्षेण चरादिद्वारा प्रत्यक्षत्वेन चेक्षमाणः, तुल्यसैन्या द्वादशाक्षौहिणीसहित इति भावत एव तत्तत्सैन्यस्य सद्भावात्, किंवा सैन्याधिक्येऽपि दुर्म्मदेन साम्यार्थमन्यत्यागात्, अतोऽभिमुखे निर्ययौ पुरात्॥ ५॥ भगवान् भक्तवत्सल इति भावः। अतो रुद्भक्तानां दुःखं द्रावयतीति रुद्रः, अतएव रामकृष्णाभ्यामपि युयुधे, अन्यथा भक्तोपेक्षया तयोरेवाप्रीतेरिति भावः॥ ६॥ सुतुमुलमत्यन्तसंकुलम्, अतोऽद्भुतं लोकातीतं विस्मयावहं वा, अतएव लोमहर्षणं सर्व्वांगेषु पुलकोद्गमकरम्। एवमादौ सामान्येनोक्त्वा पश्चाद्विशेषेण द्वन्द्वयुद्धमाह—कृष्णेति सार्द्धेन। तादृशयुद्धेन किंवा श्रीकृष्णेन सह श्रीशंकरस्य युद्धेन विस्मयादाह—हे राजन्निति; यद्वा, राजमानो द्वन्द्वत्वेन शोभमानोऽप्रतिहतो वा॥ ७॥ संयुगः कुम्भाण्ड-कूपकर्णाभ्यां सह बलेन बलस्य॥ ८॥

---

१. विनि-वीर.। २. बाणार्थं-वीर.। ३. स पुत्रः-प्रा. पा.; स सुतः-वीर.।

### श्रीमद्वीरराघवाचार्यकृता भागवतचन्द्रचन्द्रिका

भज्यमानेति। भज्यमानानां पुरादीनां द्वन्द्वैकवद्भावो यद्वा बहुव्रीहिरेव पुरमिति विशेष्याध्याहारः रुषा आविष्टो व्याप्तो बाणस्तुल्यसैन्यः द्वादशाक्षौहिणीसैन्ययुक्तः विनिर्गतः पुरादितशेषः। अट्टालाः प्राकारादुपरितनान्युन्नतस्थानानि ॥ ५ ॥ बाणार्थमिति बाणस्य सहायार्थं ससुतः स्कन्देन सहितः नन्दिनाम वृषभमारुह्य रामकृष्णाभ्यां युयुधेऽयुध्यत ॥ ६ ॥ आसीदिति। तुमलं सङ्कुलं रोमहर्षणं शृण्वतां पश्यताञ्च रोमोद्गमावहं कस्य केन सहेत्यत आह—कृष्णशङ्करयोरिति सार्द्धेन। हे राजन्! बलेन बलभद्रेण सह ॥ ७-८ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

बाणार्थमिति। तद्दुःखसङ्कोचव्यञ्जनार्थमिति भावः। भगवानिति सर्वज्ञोपि स्वपराभवेन बाणमन्यांश्च तन्महिमानं दर्शयितुमिति भावः इति प्राञ्चः। भगवतो युद्धोत्साहसुखसम्पादनार्थं नरलीलत्वेऽपि रामाद्यवतारतो वैलक्षण्येन सर्वोत्कर्षख्यापनार्थञ्च लीलाशक्तिप्रेरिता योगमायैव ब्रह्माणमिव तमपि तदीयानपि विशेषतो मोहयामासैव अत एवोक्तं भक्तिरसामृतसिन्धौ "ब्रह्मरुद्रादिमोहनम्" इति नवीनास्त्वाहुः ॥ ६-१२ ॥

### गूढार्थदीपिनी

भज्यमानानि पुरोद्यानादीनि यस्य। गोपुरं नगरद्वारम् ॥ ५ ॥ सुतोऽत्र स्कन्दः न तु गणेशः तद्युद्धाश्रवणात्। रामेति तृतीयार्थे षष्ठी। आसीदित्यर्द्धम्। सुतुमुलं घनघोरम् ॥ ६-७ ॥ कृष्णेति सार्द्धम् ॥ ८-९ ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

ससुतः स्कन्दसहितः ॥६-१२ ॥

### श्रीसत्यधर्मकृता श्रीभागवतटिप्पणी

भज्यमानानि पुरसमीपगान्युद्यानानि भज्यमानाः प्राकाराश्च तथाऽट्टालगोपुराणि च यस्य तन्नगरम्। पुरात्रोद्यानं तथा प्राकाराट्टालगोपुराणीत्येवं भज्यमानानि तानि यस्मिंस्तदिति वा। निर्नामभग्नानीति यावत्। न भवति पुरा पुरेति व्यर्थमिति चेत्। भज्यमानं च तत्पुरप्राकाराट्टालसहितं च तद्गोपुरं चेति विग्रहः। न नगरपदान्वय इति वा। प्रेक्षमाणो बाणो रुषाऽऽविष्टस्तुल्यं द्वादशाक्षौहिण्यात्मकं सैन्यं यस्य सः। अनेनाधुनाऽऽनीतं सैन्यं बहुलं वर्तते तन्नेति ध्वन्यते। तेन च तस्य नीतिमत्त्वं ध्वन्यत इति ध्वनिर्ध्वनिः ॥ ५ ॥ सुतः स्कन्दस्तत्सहितैः प्रमथैस्तद्गणैर्नन्दी तन्नामा चासौ वृषश्चेति विग्रहः। नन्दिवृषभमिति पाठोऽपि नन्दिनन्दिनाविति द्विरूपोक्तेः। रामकृष्णयोस्ताभ्याम् ॥ ६ ॥ गुहः षण्मुखः ॥ ७ ॥ बलेन रामेण। बाणपुत्रेण केनचित् ॥ ८ ॥

### श्रीमद्वल्लभाचार्य्यकृता सुबोधिनी

गतमात्राः पूर्वमेव तदपराधस्य सिद्धत्वात् परितो नाशयाञ्चक्रुरित्याह **भज्यमानेति**। पुराणि मध्यखण्डाः, यथा महानगरेष्ववान्तरपुराणि भवन्ति। उद्यानमुपवनम्। प्राकारः आवरणम्। अट्टालाः सौधगृहोपरिभागाः। **गोपुरं** पुरद्वारम्। एतानि भज्यमानानि यस्य नगरस्य। भगवदीयैः कृतं स्वनगरं तथाविधं दृष्ट्वा स्वप्रौढिख्यापनार्थं तुल्यमेव बलं गृहीत्वा अभिनिर्ययौ नगरात्। हीनबलत्वे अप्रतिष्ठा स्यात्। अधिकबलत्वे पलायनं सम्भाव्य तन्निषेधार्थं तुल्यबल एव निर्गतः ॥ ५ ॥ ततो भ्रान्तः स इति मत्वा कृष्णस्तत्र रक्षकः। ततः कोऽपि न हतो भविष्यतीति स्वयमप्यत्र पार्ष्णिग्राहो जातः शिव इत्याह **बाणार्थमिति**। मिथ्यात्वाय भगवत्त्वम्। **रुद्र** इति रुद्रोगान् द्रावयतीति। **ससुतः** कार्तिकेयसहितः। तेन सर्वेऽपि देवाः अत्र समागता इति बोद्धव्यम्। स हि चमूपतिः। **प्रमथैर्वृत** इति स्वभूतगणावृतत्वमुक्तम्। दैत्यत्वाद्बाणस्य दैत्याः सहजाः। अनेनैकत्र भगवान् संवत्सरात्मककालसहितः, अन्यत्र सर्व एवेति बहुत्वमप्रयोजकत्वं चोक्तम्। **आरुह्य नन्दिवृषभमिति**। **स्वस्य वृद्ध** बलीवर्दमारुह्य, नाट्यमिव कुर्वन्, रामकृष्णयोर्युयुधे, ताभ्यां सह। वस्तुतस्तयोरेवायम् ॥ ६ ॥ ततो युद्धं वर्णयति द्वाभ्याम् **आसीदिति**। **सुतुमुलमत्यधिकं** निरन्तरशस्त्रपातसहितम्। **रोमहर्षणं** श्रुते रोमाञ्चो भवतीति। विशेषत आह **कृष्णशङ्करयोरिति**। **राजन्निति** कदाचिन्महान्तोऽपि युद्धं कुर्वन्तीति। प्रद्युम्नगुहयोः उभयोः पुत्रयोः। कुम्भाण्डकूपकर्णौ दैत्यसिद्धौ। उभाभ्यां बलेन सह संयुगः। **साम्बस्य बाणपुत्रेणेति**। बाणपुत्र इत्येव प्रसिद्धिः, न तु नाम्नेति। बाणेन सह सात्यकिर्महारथः ॥ ७-८ ॥

## श्रीसुबोधिनीसारः

भज्यमानानि पुरोद्यानादीनि यस्मिंस्तन्नगरं प्रेक्षमाणः पश्यन् रुषाविष्टः क्रोधव्याप्तः तुल्यसैन्यो द्वादशाक्षौहिणीको बाणोऽभिनिर्ययौ योद्धुमाजगाम ॥ ५ ॥ बाणनिमित्तं सुतः स्कन्दस्तत्सहितैः प्रमथैर्गणैर्वृतो भगवान् रुद्रो नन्दिवृषभमारुह्य रामकृष्णाभ्यां युयुधे योद्धुं प्रवृत्तः ॥ ६ ॥ तथाहि हे राजन् कृष्णशिवयोः प्रद्युम्नस्कंदयोरपि सुतुमुलं संकीर्णमद्भुतं रोमहर्षणं युद्धमासीत् ॥ ८ ॥ कुभांडकूपकर्णाभ्यां बाणमन्त्रिणोर्बलेन सह संग्रामः सांबस्य बाणपुत्रेण सह संयुगः सात्यकेर्बाणेन सह संयुगः ॥ ८ ॥

## गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

भज्यमानानि पुरादीनि यस्मिंस्तथाभूतं स्वपुरं प्रेक्ष्य रुषा क्रोधेन आविष्टो बाणस्तुल्यसैन्यः द्वादशाक्षौहिणीसेनायुक्तः पुराद्योद्धुमभिनिर्ययौ । अट्टालाः प्राकाराद्युपरितनान्युन्नतस्थानानि । गोपुरं पुरद्वारम् ॥ ५ ॥ बाणार्थे बाणस्य सहायार्थे ससुतः स्कन्दादिसहितः प्रमथैः स्वगणैश्च वृतो भगवान् रुद्रो नन्दिनामानं वृषभमारुह्य रामकृष्णाभ्यां युयुधे । स्कन्दसाहित्योक्त्या देवसेनापि तत्पक्षे सहायार्थमागता, तस्य तत्सेनापतित्वादिति बोध्यम् ॥ ६ ॥ सुतुमुलं सङ्कुलं निरन्तरशस्त्रपातलक्षणं अत एव शृण्वतां पश्यतां च रोमहर्षणं रोमोद्गमकारणमद्भुतं युद्धमासीदित्यन्वयः । 'कस्य केन सह' इत्यपेक्षायामाह—कृष्णशङ्करयोरिति सार्द्धेन ॥ ७-८ ॥

## अन्वितार्थप्रकाशिका

भज्यमानेति । भज्यमानानि पुरोद्यानानि प्राकाराः अट्टालाः प्राकाराद्युपरि उन्नतस्थानानि गोपुराणि पुरद्वाराणि च यस्मिंस्तथाभूतं स्वपुरं प्रेक्षमाणः रुषा क्रोधेन आविष्टो बाणस्तुल्यसैन्यः द्वादशाक्षौहिणीसेनायुक्तः पुराद्योद्धुमभिनिर्ययौ ॥ ५ ॥ बाणेति । बाणार्थे बाणस्य सहायार्थे ससुतः स्कन्दादिसहितः प्रमथैः स्वगणैश्च वृतो भगवान् रुद्रो नन्दिनामानं वृषभमारुह्य रामकृष्णाभ्यां युयुधे । दुष्टस्यापि स्वभृत्यस्य युद्धसंकटे त्यागानौचित्यात् ॥ ६ ॥ आसीदिति अर्द्धम् । सुतुमुलं सङ्कुलं निरन्तरशस्त्रपातलक्षणम् । अत एव शृण्वतां पश्यतां च रोमहर्षणं रोमोद्गमकारणमद्भुतं युद्धमासीत् ॥७॥ कृष्णेति सार्द्धम् । स्फुटम् ॥८॥

## श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्

प्रमथैर्भूतगणैः सुतेन स्कंदेन सहितः रामकृष्णयोः रामकृष्णाभ्यां सह युयुधे ॥६॥ प्रतिभटयुद्धमाह सार्द्धश्लोकेन ॥७॥ कूभांडकूपकर्णाभ्यां बाणामात्याभ्यां ॥ ८-११ ॥

## भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

भज्यमानेति ॥ सर्वतोदिशं, पुरोद्यानानि च प्राकाराश्च अट्टालाश्च गोपुराणि च भज्यमानानि पुरोद्यानादीनि यस्मिंस्तत्, पुरमिति विशेष्याध्याहारः । प्रेक्ष्य, रुषा क्रोधेन, आविष्टो व्याप्तः बाणः, तुल्यसैन्यो दशाक्षौहिणीसेनायुक्तः, अभिनिर्ययौ विनिर्गतः । पुरादिति शेषः । अट्टालाः प्राकाराद्युपरितनानि अद्भुतस्थानानि ॥ ५ ॥ बाणार्थे इति ॥ बाणार्थे बाणसहायार्थं, ससुतः प्रमथैः वृतः भगवान् रुद्रः नन्दिवृषभं नन्दिनामानं वृषभं, आरुह्य रामकृष्णयोः रामकृष्णाभ्यामित्यर्थः । युयुधे ॥ ६ ॥ आसीदिति हे राजन्, तदा कृष्णशंकरयोः, अद्भुतमाश्चर्यावहं, सुतुमुलं संकुलं, रोमहर्षणं शृण्वतां पश्यतां च रोमोद्गमावहं, युद्धं आसीत् । तयोरिव कस्य केन सह युद्धमासीत्तत्राह सपादश्लोकेन । प्रद्युम्नश्च गुहश्च तयोः अपि ॥ ७ ॥ कुम्भाण्डेति । कुम्भाण्डश्च कूपकर्णश्च ताभ्यां, अनयोर्द्वयोरित्यर्थः । बलेन बलभद्रेण सहेत्यर्थः । साम्बस्य, बाणपुत्रेण सह, सात्यकेः बाणेन सह, संयुगः युद्धमभूत् ॥ ८ ॥

## कृष्णप्रिया

बाणासुर ने देखा कि यादवसेना निज नगर बगीचे, परकोटों, बुर्जों और सिंहद्वारों को नष्टभ्रष्ट कर रही है तब उसको क्रोध आया और स्वयं बारह अक्षौहिणी सेना लेकर नगर से निकल पड़ा ॥ ५ ॥ भगवान् शङ्कर भी बाणासुर की ओर से वृषभराज नन्दीश्वर सवार होकर अपने पुत्र कार्तिक स्वामी और गणों के साथ रणभूमि में आ पहुँचे और भगवान् श्रीकृष्ण और बलभद्र जी के साथ युद्ध करने लगे ॥ ६ ॥ महाराज ! यह युद्ध अति भयानक था, देखनेवालों के रोम जाग्रत हो जाते थे । भगवान् श्रीकृष्ण के साथ भगवान् शङ्कर का और प्रद्युम्नजी के साथ कार्तिक स्वामी का संग्राम हो रहा था ॥७॥ बलभद्रजी के साथ कुम्भाण्ड कूपकर्ण का और साम्बकुमार का बाणासुर के पुत्र के साथ एवं बाणासुर सात्यकि का संग्राम छिड़ गया ॥ ८ ॥

**ब्रह्मादयः सुराधीशा मुनयः सिद्धचारणाः । गन्धर्वाप्सरसो यक्षा विमानैर्द्रष्टुमागमन् ॥ ९ ॥**
**शंकरानुचराञ्छौरिर्भूतप्रमथगुह्यकान् । डाकिनीर्यातुधानांश्च वेतालान्[1] सविनायकान् ॥ १० ॥**
**भूत[2]मातृपिशाचांश्च कूष्माण्डान् ब्रह्मराक्षसान् । द्रावयामास तीक्ष्णाग्रैः शरैः[3]शार्ङ्गच्युतैर्भृशम् ॥११॥**
**पृथग्विधानि प्रायुङ्क्त पिनाक्यस्त्राणि शार्ङ्गिणे[4] । प्रत्यस्त्रैः शमयामास शार्ङ्गपाणिरविस्मितः ॥१२॥**

### कर्दमक्षमा

अन्वयः—ब्रह्मादयः, सुराधीशाः, मुनयः, सिद्धचारणाः, गन्धर्वाप्सरसः, यक्षाः, विमानैः, द्रष्टुम्, आगमन् ॥ ९ ॥ शौरिः, शार्ङ्गच्युतैः, भृशम्, तीक्ष्णाग्रैः, शरैः, शङ्करानुचरान्, भूतप्रमथगुह्यकान्, डाकिनीः, यातुधानान्, च, सविनायकान्, वेतालान्, च, भूतमातृपिशाचान्, कूष्माण्डान्, ब्रह्मराक्षसान्, द्रावयामास ॥ १०-११ ॥ पिनाकी, शार्ङ्गिणे, पृथक्, विधानि, अस्त्राणि, प्रायुङ्क्त, अविस्मितः, शार्ङ्गपाणिः, प्रत्यस्त्रैः, शमयामास ॥ १२ ॥

### श्रीवंशीधरकृता भावार्थदीपिकाप्रकाशः

युद्धमिति शेषः ॥ ९ ॥ डाकिन्यः कालखंडाशन्यः ॥ १० ॥ कु ईषदूष्मा अण्डेषु बीजेषु यस्य स कूष्माण्डः । तदाकारत्वाच्छिवगणोऽपि कूष्माण्डः । शंकरस्य स्वभक्तत्वेन तदनुचरान्भूतादीन्केवलं द्रावयामास न त्ववधीत्, भक्तवत्सलत्वात् ॥११॥ अविस्मितस्तुल्यसमर्थत्वात् ॥ १२ ॥

### श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी

ब्रह्मा आदिर्येषां ते सुराधीशाः एतदादीनां यथोत्तरं न्यूनत्वम् ॥ ९ ॥ शङ्करेति युग्मकम् । प्रेतमातृपिशाचांश्चेति पाठः काश्यादौ । भूतमात्रेति पाठे तु पौनरुक्त्यं समाधेयं देवमातृभ्यो गौर्य्यादिभ्योऽन्या एता भूतमातरः द्रावयामासेव नत्ववधीत् यतः स्वभक्तस्य शङ्करस्यानुचरान् शार्ङ्गधनुषश्च्युतैः निस्सृतैरिति करुणमाहात्म्यञ्च दर्शितम् ॥ १०-११ ॥ दिव्यानि ब्रह्मास्त्रादीनि पृथक् असङ्कीर्णतया प्रायुङ्क्त पृथग्विधानीतिपाठे स एवार्थः शार्ङ्गिणे पिनाकीति चोभयोरपि धनुरादानमुक्तं तच्च परमन्याययुद्धाङ्गीकारव्यञ्जकम् अविस्मितः सावहेलः ॥ १२ ॥

### श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी

सुराधीशादीनां यथोत्तरं दिदृक्षायां न्यूनत्वम्, श्रीरुद्रप्रबोधार्थं श्रीब्रह्मादीनामेवागमने प्राधान्यात् ॥ ९ ॥ श्रीशंकरेण सह युद्धेऽग्रतोऽभिसृतांस्तदीयगणानादौ श्रीकृष्णो भंगं प्रापयामासेत्याह—शंकरेति द्वाभ्याम् । भूता देवयोनिविशेषाः, भूतादीनां यथोत्तरमुग्रत्वमपकृष्टत्वं वा ज्ञेयम् । प्रेताः पिशाचविशेषाः, द्रावयामासैव, न त्ववधीत्, यतः शंकरस्यानुचरान्, शार्ङ्गधनुपश्च्युतैर्निःसृतैरिति अमोघत्वं वेगवत्त्वादिकञ्च सूचितम् ॥ ११ ॥ दिव्यानि ब्रह्मास्त्रादीनि, पृथगसंकीर्णतया प्रायुङ्क्त पृथग्विधानीति पाठे पाठान्तरेऽपि स एवार्थः । शार्ङ्गिणे श्रीशिवविषयकाद्दूरात् सर्वसंहारक-चक्रादिव्यतिरेकेण केवलं धनुषैव युध्यमानायेत्यर्थः । एवं पिनाकीति शार्ङ्गपाणिरिति च तत्तद्धनुषैव युद्धात्, अविस्मितः श्रीरुद्रेण तत्तत्सम्प्रयोगेऽपि गर्व्वरहितः, यद्वा, तादृशयुद्धेऽपि न विगतं स्मितं यस्य सः ॥ १२ ॥

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका

ब्रह्मादय इति । सिद्धचारणादीनामितरेतरयोगद्वन्द्वः तदा गन्धर्वादयोपि (तथा गन्धर्वादीनामपि) आगमन्नाजग्मु ॥ ९ ॥ शङ्करानुचरानिति । शौरि कृष्णः शार्ङ्गाख्याद्धनुषश्च्युतैस्तीक्ष्णमग्रं येषां तैः शरैर्भूतादीन् शङ्करस्यानुचरान् द्रावयामासेति सम्बन्धः ॥ १०-११ ॥ पृथग्विधानीति । पिनाकी रुद्रः शार्ङ्गिणि कृष्णे पृथग्विधानि नानाविधान्यस्त्राणि प्रयुक्तवान् शार्ङ्गपाणिः कृष्णः अविस्मित एव तानि प्रत्यस्त्रैः समयामास ॥ १२ ॥

### गूढार्थदीपिनी

शङ्करेति युग्मम् । शौरिः कृष्णः ॥ १०-११ ॥ पिनाकी रुद्रः । प्रायुङ्क्त प्रयुक्तवान् । प्रत्यस्त्रैः निवारकास्त्रैः । अविस्मित इति तुल्यसामर्थ्यादुक्तम् ॥ १२ ॥

---

१. रक्षरक्षो वि-वीर. । २. प्रेत-श्रीधर. वंशी. जीव. वीर. विश्व. । ३. शार्ङ्गधनुरच्युतैः-श्रीधर. वंशी. जीव. वीर. विश्व. । ४. णि-वीर. ।

### श्रीसत्यधर्मकृता श्रीभागवतटिप्पणी

विमानैस्तानारुह्य ॥ ९ ॥ शौरिः कृष्णः ॥ १० ॥ शङ्करेण सह युद्धयन्नपीमांश्च शार्ङ्धनुश्च्युतैः शरैर्द्रावयामासेत्यन्वयः । पिनाकी हरः प्रत्यस्त्रैः । ११-१२ ॥

### श्रीमद्वल्लभाचार्य्यकृता सुबोधिनी

पञ्चद्वन्द्वान्युक्त्वा तस्य युद्धस्य सर्वोत्कर्षं वक्तुं ब्रह्मादीनामप्याश्चर्यादर्शनमित्याह **ब्रह्मादय** इति । देवानामीशा इन्द्रादयः । **मुनयः** सनकादयः । सिद्धाः कपिलादयः । एते त्रिविधा उत्तमाः । सिद्धचारणाः गन्धर्वाप्सरसो यक्षश्चेति त्रिविधा निकृष्टाः । एवं षड्विधेषु निरूपितेषु सर्व एव निरूपिता भवन्ति । विमानैरागमनं युद्धाभिनिवेशेन देहविस्मरणेऽपि अपातार्थम् ॥ ९ ॥ ततः प्रतिपक्षाणां खण्डनमाह शङ्करानुचरानिति । देवास्तु तदीया एवेति शङ्करानुचरा एव ताडिताः । येः पूर्वं प्रतिज्ञा कृता । **शौरि**रिति पितृनाम्ना निर्देशः । भूताः प्रमथाः गुह्यका इति त्रयः । डाकिनीरित्यादि त्रयः ॥ १० ॥ भूतमातृपिशाचाश्च कूष्माण्डा ब्रह्मराक्षसाः विनायकाश्चेति द्वादशधा भवन्ति । तान् सर्वानेव कालग्रस्तान् तीक्ष्णाग्रैः शरैः शार्ङ्गच्युतैरिति समर्थैर्हेतुभिः कृत्वा भृशं द्रावयामास । तत्प्रहारैर्व्यथिताः पलायनपरा जाताः । ततो भृत्येषु निवृत्तेषु पिनाकी पिनाकेन पृथग्विधान्यस्त्राणि शार्ङ्गिणे भगवते प्रायुङ्क्त । आदौ तुल्यतानिरूपणार्थं धनुर्द्वयग्रहणम् । भगवान् पुनस्तस्य निराकरणमेव कृतवान्, न तु तं दूरीकृतवानित्याह प्रत्यस्त्रैरिति । लौकिकत्वाय शार्ङ्गपाणिरिति । **अविस्मित** इति जयेऽपि गर्वाभाव उक्तः । लौकिकाभिनिवेशद्योतकः ॥ ११-१२ ॥

### श्रीसुबोधिनीसारः

ब्रह्मादयो देवपतयो विमानैर्द्रष्टुमाययुः सिद्धादयश्च ॥ ९ ॥ शंकरस्यानुचरान् भूतादीन् ब्रह्मराक्षसान् तान् शौरिः श्रीकृष्णः शार्ङ्गधनुषः च्युतैः प्रचलितैस्तीक्ष्णाग्रैः शरैर्बाणैर्द्रावयामास ॥ १०-११ ॥ पिनाको अजगवंधनुस्तद्वान् पिनाकी शिवः शार्ङ्गिणे शार्ङ्गधनुष्मते श्रीकृष्णाय तमुद्दिश्य पृथग्विधानि नानाप्रकाराणि अस्त्राणि प्रायुंक्त शाङ्र्गं पाणो यस्य स श्रीकृष्णोऽविस्मितः प्रत्यस्त्रैः तानि निवर्तयामास ॥ १२ ॥

### गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

तस्य युद्धस्योत्कर्षं सूचयन्नाह—ब्रह्मादयो विमानैर्द्रष्टुमागमन्निति । शौरिः कृष्णः शार्ङ्गाख्यधनुषश्च्युतैस्तीक्ष्णाग्रैः शरैः भूतादीन् शङ्करानुचरान् शङ्करकिङ्करान् द्रावयमासेत्यन्वयः ॥ ९-११ ॥ पिनाकी रुद्रः शार्ङ्गिणे कृष्णाय पृथग्विधानि नाना प्रकाराणि अस्त्राणि प्रायुङ्क्त युक्तवान् । शार्ङ्गपाणिः कृष्णः अविस्मितो भयगर्वादिरहित एव तानि प्रत्यस्त्रैः शमयामास ॥१२॥

### अन्वितार्थप्रकाशिका

ब्रह्मादय इति ॥ ब्रह्मादयो विमानैर्द्रष्टुमागमन् ॥ ९ ॥ शङ्करेति युग्मम् ॥ शौरि कृष्णः शार्ङ्गाख्यधनुषश्च्युतैस्तीक्ष्णाग्रैः शरैः भूतादीन् शङ्करानुचरान् शङ्करकिङ्करान्द्रावयामास । शङ्करानुचरत्वान्नावधीदित्यर्थः । अत्र भूतप्रेतयोरवान्तरजातिभेदः । यद्वा । गौर्यादिमातृभ्योऽन्या भूतमातर इति ॥ १०-११ ॥ पृथगिति ॥ पिनाकी रुद्रः शार्ङ्गिणे कृष्णाय पृथग्विधानि नानाप्रकाराणि अस्त्राणि प्रायुंक्त प्रयुक्तवान् । शार्ङ्गपाणिः कृष्णः अविस्मितो भयगर्वादिरहित एव तानि प्रत्यस्त्रैः शमयामास ॥ १२ ॥

### श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्

शार्ङ्गिणे श्रीकृष्णाय पिनाकी रुद्रः प्रायुंक्त प्रेरयामास ॥ १२ ॥

### भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

ब्रह्मादय इति । सुराधीशा देवाधिपतयः, ब्रह्मादयः मुनयः, सिद्धाश्च चारणाश्च ते, गन्धर्वाप्सरसो गन्धर्वैः सहिताः स्वः स्त्रियः, यक्षाश्च, द्रष्टुं युद्धं निरीक्षितुं, विमानैः आगमन् ॥ ९ ॥ शंकरेति । प्रेतेति च । शौरिः श्रीकृष्णः, भूतप्रमथगुह्यकान्, डाकिनीः, यातुधानान्, सविनायकान् वेतालांश्च, प्रेतमातृपिशाचान्, कूष्माण्डान्, ब्रह्मराक्षसांश्च, शंकरानुचरान्, शार्ङ्गधनुश्च्युतैः, तीक्ष्णाग्रैः शरैः, द्रावयामासेति द्वयोरेकान्वयः ॥ १०-११ ॥ पृथगिति । पिनाकी पिनाकधनुर्धरः शिवः शार्ङ्गिणे शार्ङ्गिणं पराजेतुमित्यर्थः । क्वचित्तु शार्ङ्गिणीत्यपि पाठः । पृथग्विधानि नानाविधानि, अस्त्राणि, प्रायुङ्क्त प्रयुक्तवान् । तदपि, अविस्मितोऽस्त्रावलोकजविस्मयरहितः, शार्ङ्गपाणिः श्रीकृष्णः, प्रत्यस्त्रैः शमयामास ॥ १२ ॥

**कृष्णप्रिया**

इस संग्राम को देखने के लिये ब्रह्मा-इन्द्रादि देव लोग, ऋषि मुनिजन सिद्ध चारण, गन्धर्व अप्सरावृन्द और यक्ष लोग विमान में बैठकर आ गये थे ॥ ९ ॥ भगवान् शौरि श्रीकृष्ण ने शार्ङ्गधनुष के तीक्ष्णाग्र बाणों से भूत, प्रेत, प्रमथ, गुह्यक, पिशाच, कूष्माण्ड, ब्रह्माण्ड, ब्रह्मराक्षस आदि शिवानुचरों को प्रहार करके रणसंग्राम से भगा दिया ॥ १० ॥ तब पिनाकपाणि भगवान् शङ्कर जी ने शार्ङ्ग धनुषधारी भगवान् श्रीकृष्ण पर विविध प्रकार के शस्त्रास्त्रों का प्रयोग किया, तब भगवान् श्रीकृष्ण ने बिना आश्चर्य से और आसानी से विरोधी अस्त्रों से प्रतीकार किया ॥ १२ ॥

**ब्रह्मास्त्रस्य च ब्रह्मास्त्रं वायव्यस्य च पार्वतम् । आग्नेयस्य च पार्जन्यं नैजं पाशुपतस्य च ॥ १३ ॥**
**मोहयित्वा तु[1] गिरिशं जृम्भणास्त्रेण जृम्भितम् । बाणस्य पृतनां शौरिर्जघानासिगदेषुभिः ॥ १४ ॥**
**स्कन्दः प्रद्युम्नबाणौघैरर्द्यमानः समन्ततः । असृग् विमुञ्चन् गात्रेभ्यः शिखिनापाक्रमद्[2]रणात् ॥ १५ ॥**
**कुम्भाण्डः कूपकर्णश्च पेततुर्मुसलार्दितौ । दुद्रुवुस्तदनीकानि हतनाथानि सर्वतः ॥ १६ ॥**

**कर्दमक्षमा**

अन्वयः—ब्रह्मास्त्रस्य, ब्रह्मास्त्रम्, च, वायव्यस्य, पार्वतम्, च, आग्नेयस्य, पार्जन्यम्, च, नैजम्, पाशुपतस्य, क्षेपयामास ॥ १३ ॥ जृम्भास्त्रेण, जृम्भितम्, गिरिशम्, मोहयित्वा, शौरिः, बाणस्य, पृतनाम्, असिगदे, पृभिः, जघान ॥१४॥ प्रद्युम्नबाणौघैः, समन्ततः, अर्द्यमानः, स्कन्दः, गात्रेभ्यः, असृग्, व्यमुञ्चन्, शिखिना, रणात्, अपाक्रमत् ॥ १५ ॥ कुम्भाण्डः, च, कूपकर्णः, मुसलार्दितौ, पेततुः, सर्वतः, हतनाथानि, तदनीकानि, दुद्रुवुः ॥ १६ ॥

**श्रीधरस्वामिविरचिता भावार्थदीपिका**

प्रत्यस्त्राण्येवाह । ब्रह्मास्त्रस्येति । नैजं नारायणास्त्रम् ॥ १३-१४ ॥ शिखिना मयूरेण वाहनेन ॥ १५ ॥ तयोरनीकानि । हतौ नाथौ येषां तानि ।: १६ ॥

**श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः**

"न ह्यस्यान्यतमं किञ्चिदस्त्रं प्रत्यवकर्षणम्" इत्युक्तेर्ब्रह्मास्त्रस्य ब्रह्मास्त्रमेव प्रत्यस्त्रमिति भावः ॥ १३ ॥ जृंभणास्त्रेण निद्रोत्पादकास्त्रेण । जृंभितं जातास्फोटम् "जृभितं करणे स्त्रीणां मोहास्फोटितयोरपि" इति मेदिनी ॥ १४ ॥ 'शिखिनौ वह्निकेकिनौ' इत्यमरः ॥ १५ ॥ सर्वतो दुद्रुवुः ॥ १६ ॥

**श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी**

ब्रह्मास्त्रस्य कृते ब्रह्मास्त्रं प्रायुङ्क्तेति पूर्वेणैवान्वयः नैजं निजं स्वार्थेऽण् ॥१३॥ जृम्भितं जृम्भायुक्तं सन्तं मोहयित्वा, तथा च हरिवंशे—

"सशरः सधनुश्चैव हरस्तेनाशु जृम्भितः । संज्ञां न लेभे भगवान् विजेतासुररक्षसाम् ॥ इति

अस्यादीनां यथोत्तरं दूरस्थघातेन श्रैष्ठ्यम् ॥ १४ ॥ एवं श्रीकृष्णस्य जयमुक्त्वा तदीयानामाह—स्कन्द इति द्वाभ्याम् ॥ १५ ॥ कुम्भाण्ड इति । एवं साम्बेनापि बाणपुत्रो निर्जित इति ज्ञेयम् ॥ १६ ॥

**श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी**

नैजं निजमित्यर्थः । ह हर्षे चार्थे वा, अथानन्तरमेव जृम्भितं जृम्भायुक्तं सन्तं मोहयित्वा स्तम्भयित्वा; यद्वा, विसंज्ञं कृत्वा; तथा च श्रीहरिवंशे ( विष्णु० प० १२५।५ )-'सशरः सधनुश्चैव हरस्तेनाशु जृम्भितः । संज्ञां न लेभे भगवान् विजेताऽसुररक्षसाम् ॥' इति; अस्यादीनां यथोत्तरं दूरस्थ-घातने श्रैष्ठ्यम् ॥ १३-१४ ॥ एवं श्रीकृष्णस्य जयमुक्त्वा अन्येषामपि तदीयानामाह—स्कन्द इति द्वाभ्याम् । शिखिना हेतुना, तदभावेऽत्यन्तपीड़या भंगेऽप्यशक्त इति भावः ॥ १५ ॥ बलदेवस्य मुषलेनार्द्दितौ, सर्व्वत इतस्ततः सर्व्वाणीति वा । एवं साम्बेनापि बाणपुत्रो निर्ज्जित इति ज्ञेयम् ॥ १६ ॥

**श्रीमद्वीरराघवाचार्यकृता भागवतचन्द्रचन्द्रिका**

तदेवाह—ब्रह्मास्त्रस्येति । नैजं नारायणास्त्रं शामकं प्रायुङ्क्तेत्यर्थः ॥ १३ ॥ मोहयित्वेति । जृम्भणाख्येनास्त्रेण गिरिशं जृम्भितं जृम्भणयुक्तं यथा तथा मोहयित्वा ॥ १४ ॥ स्कन्द इति । स्कन्दः षण्मुखः असृग्रुधिरं विमुञ्चन् शिखिना मयूर-

१. हरिः शंभुं-प्रा. पा. । २. प्रादवद्-वीर. ।

वाहनेन सह रणस्थानात्प्राद्रवत् ॥ १५ ॥ कुम्भाण्ड इति । मुसलेन बलभद्रप्रयुक्तेनार्दितौ पीडितौ पेततुः हतौ नाथौ येषां तानि तयोरनीकानि सर्वतो दिक्षु दुद्रुवः ॥ १६ ॥

**श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी**

प्रत्यस्त्राण्येवाह—ब्रह्मास्त्रस्य शमनार्थं ब्रह्मास्त्रं प्रायुङ्क्तेति पूर्वेणैवान्वयः नैजं नारायणास्त्रम् ॥ १३-१४ ॥ स्कन्दः कार्तिकेयः शिखिना मयूरेण सह ॥ १५-१९ ॥

**गूढार्थदीपिनी**

नैजं नारायणास्त्रम् ॥ १३ ॥ जृम्भणास्त्रेण निद्रोत्पादकेन । जृम्भितं निद्रितम् ॥ १४ ॥ अर्द्यमानः ताड्यमानः । शिखिना मयूरवाहनेन । अपाक्रमत् पलायितवान् ॥ १५-१६ ॥

**श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः**

प्रत्यस्त्राण्येव दर्शयति—ब्रह्मास्त्रस्येति । नैजं वैष्णवम् ॥ १३-१४ ॥ शिखिना मयूरेण ॥१५॥ तत्तयोः ॥ १६-२१ ॥

**श्रीसत्यधर्मकृता श्रीभागवतटिप्पणी**

तदेव विशदयति । ब्रह्मास्त्रस्येति । वायव्यस्यास्त्रस्य पार्वतं पर्वताभिमान्यभिमन्यमानम् । तदचलनीयत्वात् । अग्रे यस्य च पार्जन्यम् । अनलस्य जलशमनीयत्वात् । नैजं निजस्य स्वस्येदं नारायणास्त्रं पाशुपतस्य पशुपतिसम्बन्धिनोऽस्त्रस्य ॥ १३ ॥ जृम्भणास्त्रेण जृम्भितं जृम्भणोपेतम् । तदारभ्येदमाभाणकं मया कलहः कृतश्चेत्तवास्यं त्याजयिष्यामीति प्रावर्तत लोक इति वदन्ति ॥ १४ ॥ शिखिना स्ववाहनेन मयूरेण तेन सहापाक्रमत् ॥ १५ ॥ तदनीकानि कुंभाण्डकूपकर्णसेना हतनाथानि तत्प्राय-स्वामिकानि ॥ १६ ॥

**श्रीमद्वल्लभाचार्य्यकृता सुबोधिनी**

विशेषत आह **ब्रह्मास्त्रस्य च ब्रह्मास्त्र**मिति । चकारात्सर्व एव ब्रह्मास्त्रभेदा गृहीताः । नात्र पूर्वात्परबलीयस्त्वम्, किन्त्वस्त्राभिज्ञानं बलं च प्रयोजकमिति लौकिकेऽपि भगवदुत्कर्ष एव । **वायव्यस्य** चेत्यत्रापि तथा । पार्वतास्त्रमेव तस्य निवारकम् । वायोर्वाय्वन्तरस्य निवारकत्वाभावात् । आग्नेयस्य च पार्जन्यम्, जलेनैवाग्निः शाम्यतीति । षष्ठ्यन्तस्य शमनार्थं प्रथमान्तं प्रायुङ्क्तेति योजना । **पृथग्विधानि** प्रायुङ्क्तेत्यत एवानुवृत्तिः । नैजं नारायणास्त्रं पाशुपतस्य निराकरणार्थं प्रायुङ्क्तेति । दृष्ट एवान्धकारस्य निवारकः सूर्यः, तथैव सत्त्वं तमसः । चकारेणावान्तराण्यस्त्राण्यपि परिगृहीतानि ॥ १३ ॥ ततः क्षीणास्त्रं जृम्भणास्त्रेण मोहयामास । जृम्भणाख्यो गणस्तृतीये निरूपितः । तदस्त्रं तद्दैवत्यम् । तुशब्दस्तु मोहाभावपक्षं व्यावर्तयति । तत्र हेतुः **गिरिश**मिति । महामोहः पर्वतेष्वेव प्रतिष्ठितः । जृम्भितमिति देवताया अनुभावो दर्शितः । अन्यथा अलौकिकप्रकारेण मोहसम्भावना स्यात् । ततो महादेवे मोहात्परावृत्ते तूष्णींभूते शयाने प्रतिकूले वा । ततो बाणस्य पृतनां शौरिर्जघान । लौकिकप्रकारेण असिगदेषुभिः सर्वथा छेदकमारकाल्पच्छेदकैः ॥ १४ ॥ तत एवं भगवद्युद्धमुक्त्वा, तथान्येषामाह **स्कन्द** इति । बाणसमूहैरर्द्यमानः असृग्व्यमुञ्चन् मूर्छित इव शिखिना हेतुना कृत्वा रणादपाक्रमत् । मयूरस्तं गृहीत्वा पलायित इत्यर्थः ॥ १५ ॥ बलभद्रस्तु विचाराभावात् मारितवानेवेत्याह **कुम्भाण्ड** इति । मुशलेन पीडितौ द्विधा विदीर्णौ सकृत्प्रहारेणैव अग्रमध्यभागभेदेन पेततुः भूमौ मृतावेव । तत्स्पष्टं ज्ञापयति **दुद्रुवुस्तदनीकानी**ति । तयोरनीकानि । तौ हि सेनापती, हतौ नाथौ येषाम् । सर्वत इति केचिद्भ्रमाद्भगवत्कटकेऽपि गता इति वैक्लव्यं प्रदर्शितम् ॥ १६ ॥

**श्रीसुबोधिनीसारः**

तद्यथा ब्रह्मास्त्रस्य प्रत्यस्त्रं ब्रह्मास्त्रं वायव्यस्य पार्वतं पर्वतास्त्रम् आग्नेयस्य मेघं पाशुपतस्य नैजं नारायणास्त्रं प्रत्यस्त्रमित्यर्थः ॥ १३ ॥ जृंभणास्त्रेण जृंभितं गिरिशं रुद्रं मोहयित्वा शौरिः श्रीहरिः खड्गगदाबाणैर्बाणस्य पृतनां सेनां जघान ॥ १४ ॥ प्रद्युम्नस्य बाणानामोघैः पूरैरर्द्यमानः पीड्यमानः स्कन्दः समंततः सर्वतो गात्रेभ्योऽगेभ्योऽसृक् रुधिरं विमुंचन् शिखिना मयूरेण वाहनेन रणात्संग्रामादपाक्रमत् निर्गतः ॥ १५ ॥ मुसलेनार्दितौ कुंभांडः कूपकर्णश्च पेततुर्मम्रतुः हतौ नाथौ येषां तानि तयोर्द्वयोरनीकानि सैन्यानि सर्वतो दुद्रुवुः ॥ १६ ॥

**गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी**

प्रत्यस्त्राण्येवाह—ब्रह्मास्त्रस्येति । नैजं नारायणास्त्रम् ॥ १३ ॥ जृम्भणाख्येनास्त्रेण जृम्भितं यथा स्यात्तथा गिरिशं मोहयित्वा । स्पष्टमन्यत् ॥ १४ ॥ स्कन्दः षण्मुखः प्रद्युम्नस्य बाणौघैः बाणसमूहैः समन्ततः सर्वतः अर्द्यमानस्ताड्यमानः,

अत एव गात्रेभ्यः असृक् रुधिरं विमुञ्चन् शिखिना मयूरेण वाहनेन रणस्थानात् अपाक्रमत् पलायितः ॥ १५ ॥ बलभद्रप्रयुक्त-मुशलेन अर्दितौ ताडितौ कुम्भाण्डकूपकर्णौ पेततुः। एवं हतौ नाथौ येषां तानि तयोरनीकानि सर्वतो दुद्रुवुः ॥ १६ ॥

### अन्वितार्थप्रकाशिका

तदेवाह—ब्रह्मेति ॥ नैजं नारायणास्त्रं शेषं स्फुटम् ॥ १३ ॥ मोहयित्वेति ॥ जृम्भणाख्येनास्त्रेण जृम्भितं यथा स्यात्तथा गिरिशं मोहयित्वा शौरिर्बाणस्य पृतनाम् असिगदेषुभिर्जघान ॥ १४ ॥ स्कन्द इति ॥ स्कन्दः षण्मुखः प्रद्युम्नबाणौघैः समन्ततः सर्वतः अर्द्यमानस्ताड्यमानः अत एव गात्रेभ्यः असृक् रुधिरं विमुञ्चन् शिखिना मयूरेण वाहनेन रणस्थानात् अपाक्रमत् पलायितः। दीर्घाभाव आर्षः ॥ १५ ॥ कुम्भाण्ड इति ॥ बलभद्रप्रयुक्तमुसलेन अर्दितौ ताडितौ कुम्भाण्डकूपकर्णौ पेततुः। एवं हतौ नाथौ येषां तानि तयोरनीकानि सर्वतो दुद्रुवुः ॥ १६ ॥

### श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्

प्रत्यस्त्राणि वदति ब्रह्मास्त्रस्येति। ब्रह्मास्त्रस्योपरि ब्रह्मास्त्रं प्रायुंक्तेति पूर्वेण संबंधः उपरीति पदमध्याहृत्य सर्वत्र यथायोग्यं योज्यं नैजं नारायणास्त्रं ॥ १३ ॥ जृंभणास्त्रेण जृंभणजनकास्त्रेण जृंभितं जृंभणक्रियां प्रापितं। गिरिशं मोहयित्वा ॥१४॥ प्रद्युम्नादीनां जयमाह स्कंद इति द्वाभ्यां शिखिना स्ववाहनेन मयूरेण। रणात् अपाक्रमत् अन्यत्रागच्छत् ॥१५–१६॥

### भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

तदेवाह। ब्रह्मास्त्रस्येति। ब्रह्मास्त्रस्य तु ब्रह्मास्त्रस्य प्रत्यस्त्रं तु, ब्रह्मास्त्रमेव। वायव्यस्य वाय्वस्त्रस्य प्रत्यस्त्रं तु, पार्वतं पर्वतास्त्रमेव। आग्नेयस्याग्निसंबन्धिनोऽस्त्रस्य च तु प्रत्यस्त्रं, पार्जन्यमेव। पाशुपतस्यास्त्रस्य प्रत्यस्त्रं, नैजं च नारायणास्त्रमेव शामकमिति तत् प्रायुङ्क्तेति शेषः ॥ १३ ॥ मोहयित्वेति। ततः शौरिः श्रीकृष्णः, गिरिशं रुद्रं तु, जृम्भणास्त्रेण, जृम्भितं यथा स्यात्तथा, मोहयित्वा, असिगदेषुभिः बाणस्य, पृतनां सेनां, जघान ॥ १४ ॥ स्कन्द इति। स्कन्दः कार्त्तिकेयः, प्रद्युम्नबाणौघैः, समन्ततः अर्द्यमानः, गात्रेभ्यः असृक् रुधिरं, विमुञ्चन् सन्, रणात् शिखिना मयूरवाहनेन, अपाद्रवत् ॥ १५ ॥ कुम्भाण्ड इति। कुभाण्डः, कूपकर्णश्च, मुसलार्दितौ बलभद्रेण मुसलेनार्दितौ सन्तौ, पेततुः। ततः, हतो नाथो येषां तानि, सर्वशः सर्वाण्यपि, तदनीकानि कुम्भाण्डकूपकर्णसैन्यानि, दुद्रुवुः ॥ १६ ॥

### कृष्णप्रिया

श्रीकृष्णजी ने ब्रह्मास्त्र-निवारण ब्रह्मास्त्र से, वायव्यास्त्र का सामना पार्वतास्त्र से, आग्नेयास्त्र का प्रतीकार पर्जन्यास्त्र से और पाशुपतास्त्र का सामना नारायणास्त्र से किया। पुनः भगवान् पुरुषोत्तमजी ने जृम्भणास्त्र से गिरिश कैलासनाथ को मोहित कर दिये तब भगवान् पशुपति युद्ध से उपराम होकर विराम लेने लगे। अब शिवजी से निवृत्त होकर भगवान् श्रीकृष्ण खड्ग, गदा, बाणों से बाणासुर की सेना का संहार कर रहे थे ॥ १३–१४ ॥ यहाँ पर श्रीप्रद्युम्नजी की बाणवर्षा से घायल हुए कार्तिकेय कुमार जी के अङ्ग-प्रत्यङ्गों से शोणित धारा बहने लगी और वे अपनी रक्षा के लिये संग्राम क्षेत्र से अपने वाहन मयूर द्वारा शीघ्र भाग चले। इधर श्री बलरामजी के मुसल प्रहार से पीडित कुष्माण्ड और कूपकर्ण दोनों भूमि पर गिर पड़े। यहाँ रण मैदान में अपने-अपने सेनानायकों को परास्त देखकर बाणासुर की सारी सेना छिन्न-भिन्न हो गयी ॥ १५–१६ ॥

**विशीर्यमाणं स्वबलं दृष्ट्वा बाणोऽत्यमर्षणः। कृष्णमभ्यद्रवत् संख्ये रथी हित्वैव सात्यकिम् ॥ १७ ॥**
**धनूंष्याकृष्य युगपद् [1]बाणः पञ्चशतानि वै। एकैकस्मिञ्छरौ द्वौ द्वौ संदधे रणदुर्मदः ॥ १८ ॥**
**तानि चिच्छेद भगवान् धनूंषि युगपद्धरिः। सारथिं रथमश्वांश्च हत्वा शङ्खमपूरयत् ॥ १९ ॥**
**तन्माता कोटरा नाम नग्ना मुक्तशिरोरुहा। पुरोऽवतस्थे कृष्णस्य पुत्रप्राणरिरक्षया ॥ २० ॥**

### कर्दमक्षमा

अन्वयः—स्वबलम्, विशीर्यमाणम्, दृष्ट्वा, रथी, सात्यकिम्, हित्वा, एव, अत्यमर्षणः, बाणः, संख्ये, कृष्णम्, अभ्यद्रवत् ॥ १७ ॥ रणदुर्मदः, बाणः, युगपद्, वै, पञ्चशतानि, धनूंषि, आकृष्य, एकैकस्मिन्, द्वौ, द्वौ, शरौ, संदधे ॥ १८ ॥ हरिः, तानि, धनूंषि, युगपत्, चिच्छेद, सारथिम्, रथम्, हत्वा, शङ्खम्, अपूरयत् ॥ १९ ॥ मुक्तशिरोरुहा, कोटरा, नाम, तन्माता, नग्ना, पुत्रप्राणरिरक्षया, कृष्णस्य, पुरः, अवतस्थे ॥ २० ॥

---

१. एतानि पञ्चसदधे–प्रा. पा.।

### श्रीवंशीधरकृता भावार्थदीपिकाप्रकाशः

संख्ये युद्धे 'संख्यं समिति' इति मेदिनी ।। १७ ।। एकैकस्मिन्धनुषि ।।१८।। अपूरयदवादयत् ।। १९ ।। तन्माता बाणमाता । श्रीहरिवंशानुरोधेन महातपसा श्रीशिवपुत्रतां प्राप्तस्य तस्य पार्वतीमातृकत्वात् कोटराख्या पार्वत्या काचिन्मूर्तिः श्रीहरिवंशादौ 'कोटवी' इति प्रसिद्धा । तथाहि–'बाणं त्रायस्व देवेशि देवि त्वम्' इति शिवादिष्टया पार्वत्या "गच्छेति लंबे शीघ्रं त्वं बाणस्य रक्षणं प्रति" इत्युक्तां लंबामधिकृत्य तद्वाक्यम्–"कृष्णस्यैकस्य तद्रूपं दर्शयत्पार्श्वमागता । अन्तर्द्धानमुपागम्य त्यक्त्वा सा वाससी पुनः ।। परित्राणाय बाणस्य विजयाधिष्ठिता पुनः । प्रमुखे वासुदेवस्य दिग्वासाः कोटवी स्थिता ।।" अस्यार्थः—दर्शयत् अदर्शयत् । विजयया विजयानाम्न्या पार्वतीसख्याऽधिष्ठिता कृतसाहाय्या । यद्वा—पार्वत्यैवाधिष्ठिता तन्मूर्तिविशेष इत्यर्थः । लंबैव कोटवीति । विष्णुपुराणे तु—कोटवी नाम मंत्रमयी दैत्यकुलदेवता–"नग्ना दैतेयविद्याऽभूत्कोटवी पुरतो हरेः" इति । बाणमाता त्वशनानाम्न्यस्ति "बाणज्येष्ठं पुत्रशतमशनायां ततोऽभवत्"इति षष्ठस्कंधोक्तेः ।। २० ।।

### श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी

स्वस्य बलं सैन्यं सङ्ख्ये द्वन्द्वयुद्धे ।। १७ ।। रणदुर्मदो रणे दुरभिमानः ।। १८ ।। युगपच्चिच्छेद तच्च शरसन्धानकाल एवेति ज्ञेयम् एतच्च लीलामात्रमित्याह—भगवान् सर्वैश्वर्य्ययुक्तः सारथ्यादीनां यथाक्रममुपरिस्थितानां हननं तत्तत्संहाराद्धरिः ।। १९ ।। तस्य बाणस्य मातेति श्रीहरिवंशानुसारेण महातपसा श्री शिवपुत्रतां प्राप्तस्य तस्य पार्वतीमातृकत्वात् कोटराख्या पार्वत्याः काचिन्मूर्त्तिः श्रीहरिवंशादौ कोटरीति प्रसिद्धा, तथाच श्रीहरिवंशे "बाणं त्रायस्व देवि त्वम्" इति शिवादिष्टया पार्वत्या "गच्छेतिलम्बे शीघ्रं त्वं बाणसंरक्षणं प्रति" इत्युक्तां लम्बामधिकृत्य वाक्यम्—

कृष्णस्यैकस्य तद्रूपं दर्शयत् पार्श्वमागता । अन्तर्धानमुपागम्य त्यक्त्वा सा वाससी पुनः ।।
परित्राणाय बाणस्य विजयाधिष्ठिता पुनः । प्रमुखे वासुदेवस्य दिग्वासाः कोटरी स्थिता ।।"

अस्यार्थः दर्शयत् अदर्शयत् विजयया विजयानाम्न्या पार्वतीसख्या अधिष्ठिता कृतसाहाय्या यद्वा पार्वत्यैवाधिष्ठिता तन्मूर्त्तिविशेष इत्यर्थः । लम्बैव कोटरीति तद्विशेषश्च ततो ज्ञेयः श्रीविष्णुपुराणे तु कोटरी नाम मन्त्रमयी दैत्यकुलदेवता । तथाच तत्र "नाम्ना दैतेयविद्याभूत्कोटरी पुरतो हरेः" इति इत्यतोऽत्रापि कोटवीति पाठः क्वचित् रिरक्षया रिरक्षिषया ।। २० ।।

### श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी

विशीर्य्यमाणं भंगं क्षयं वा प्राप्नुवत्, स्वस्य बलं सैन्यम्; यद्वा, सात्यकिना सह युद्धे स्वसामर्थ्यं क्षीयमाणं दृष्ट्वा अनेन सह युद्धे वृथा स्वशक्तिक्षपणेनालम्, मुख्यतमेन श्रीकृष्णेनैव युध्येयेति तमभ्यद्रवत्, द्रुतमभिमुखे आपतत्, यतो रथी नन्दीश्वरसारथिकं रथमारूढः सन्नित्यर्थः । तथा च श्रीविष्णुपुराणे ( ५।३३।२८ )—'नन्दीश संगृहीताश्वमधिरूढो महारथम् । बाणस्तत्राययौ योद्धुम्' इति; सङ्ख्ये द्वन्द्व-युद्धे त्यक्तुमयोग्यमपि सात्यकिं हित्वैव, न तु जित्वोपेक्ष्य वेत्येव-शब्दार्थः, यतोऽत्यमर्षणः ।। १७ ।। वै अपि, पञ्चशतान्यपि, यतो रणे दुर्म्मदोऽतिमत्तः, किंवा अहं महायोद्धा सर्व्वविजयीत्यादिर्दुष्टो मदोऽभिमानो यस्य सः ।। १८ ।। युगपच्चिच्छेद, तच्च शरमोचनात् प्राक् सन्धानकाल एवेति ज्ञेयम् । यतो भगवान् सर्व्वैश्वर्य्ययुक्तः । सारथ्यादीनां यथाक्रममुपरि स्थितानां तथैव हननम्, तत्तत्संहाराद्धरिः ।। १९ ।। तस्य बाणस्य मातेति श्रीहरिवंशोक्तानुसारेण महातपसा श्रीशिवपुत्रतां प्राप्तस्य तस्य श्रीपार्व्वतीमातृकत्वात् कोटराख्या श्रीपार्व्वत्याः काचिन्मूर्त्तिः, तथा च श्रीहरिवंशे ( विष्णु–प० १२६।१०८ )—'बाणं त्रायस्व देवि त्वम्' इति श्रीशिवादिष्टया श्रीपार्व्वत्या ( विष्णु–प० १२६।१०९ )—'गच्छेहि लम्बे शीघ्रं त्वं बाणसंरक्षणं प्रति' इत्युक्तां लम्बामधिकृत्य ( विष्णु० प० १२६।११०–१११ )—

'कृष्णस्यैकस्य तद्रूपं दर्शयत् पार्श्वमागता । अन्तर्द्धानमुपागम्य त्यक्त्वा सा वाससी पुनः ।।
परित्राणाय बाणस्य विजयाधिष्ठिता ततः । प्रमुखे वासुदेवस्य दिग्वासाः कोटवी स्थिता ।।' इति ।

अस्यार्थः—दर्शयत् अदर्शयत्, विजयया विजयानाम्न्या पार्व्वतीसख्या अधिष्ठिता कृतसाहाय्याः यद्वा पार्व्वत्याधिष्ठिता तन्मूर्त्तिविशेष इत्यर्थः । लम्बैव कोटवीति, तद्विशेषश्च तत एव ज्ञेयः; श्रीविष्णुपुराणे तु कोटवी नाम मन्त्रमयी दैत्यकुलदेवता, तथा च तत्र ( वि० पु० ५।३३।३६ )—'नग्ना दैतेयविद्याभूत् कोटवी पुरतो हरेः' इति । इतोऽत्रापि । कोटरीति पाठः क्वचित् ।। २० ।।

### श्रीमद्वीरराघवाचार्यकृता भागवतचन्द्रचन्द्रिका

विशीर्यमाणमिति । विशीर्य्यमाणं हन्यमानं दृष्ट्वा अतीव न मृष्यतीति तथा स बाणः सात्यकिं प्रतियोद्धारं हित्वा अनादृत्य सङ्ख्ये युद्धे रथी सन् कृष्णमभ्यद्रवत् ।। १७ ।। धनूंषीति । रणे दुष्टो मदो यस्य स बाणः एकैकस्मिन् धनुषि द्वौ द्वौ

शरौ सन्दधे ॥ १८ ॥ तानीति । तानि संहितमात्रशराण्येव नतु प्रयुक्तबाणानि धनूंषि चिच्छेद सायकैरिति शेषः । ततः सारथि-रथाश्वान् हत्वा नाशयित्वा शङ्खं पाञ्चजन्यमपूरयत् ॥ १९ ॥ तन्मातेति । तस्य बाणस्य माता कोटरा नाम नग्ना मुक्ताः विस्रस्ताः केशाः यस्यास्तथाभूता च पुत्रस्य प्राणान् रक्षितुमिच्छया कृष्णस्य पुरत उपतस्थे अवस्थितवती ॥ २० ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

कोटरा पार्वत्या एव मूर्तिर्दैत्योपास्या कोटरीति चान्यत्रास्याः संज्ञा रिरक्षया रिरक्षिषया ॥ २० ॥

### गूढार्थदीपिनी

विशीर्यमाणं पलायितं बलं सैन्यम् संख्ये युद्धे ॥ १७ ॥ युगपत् एकदैव रणे दुर्मदः उन्मत्तः ॥ १८ ॥ अपूरयत् अवादयत् ॥ १९ ॥ कोटरेति मन्त्रमयी कुलदेवता न तु तज्जननी षष्ठस्कन्धे तज्जनन्या अशनाया उक्तत्वादिति चक्रवर्ती ॥ २० ॥

### श्रीसत्यधर्मकृता श्रीभागवतटिप्पणी

सात्यकिं हित्वा त्यक्त्वा । न च गरुडारूढानां बलरामकृष्णप्रद्युम्नानां त्रयाणां तथाऽध्वनोऽव्यसाध्यगमनत्वस्य । नारदः । स्मरणं वैनतेयस्य कर्तुमर्हसि माधव । न ह्यन्येन तदध्वानं शक्यं गन्तुं महाभुजेत्यादिना । आस्थितो गरुडं देवस्तस्य चानु हलायुधः । पृष्ठतोऽथ बलस्यापि प्रद्युम्नः शत्रुकर्शन इति हरिवंशे । तथा गतो गरुडमारुह्य स्मृतमात्रागतं हरिः । बलप्रद्युम्न-सहितो बाणस्य प्रययौ पुरमिति विष्णुपुराणे पञ्चमेंऽशे त्रयस्त्रिंशोऽध्याये शंसनाद्द्वादशाक्षौहिण्याः सात्यक्यादीनां च तत्र गमनं न सम्भवतीति रणस्तु दूरोत्सारण इति चेत् । न ह्येको मार्गो ग्रामाणामिति शक्यगमनमार्गगमनसम्भवेन वा गरुडारूढसेना-दीनां वा गमनसम्भवेन सम्भवात् । मन्दरादिभर्तुर्विनतातनयस्यास्येयत्कियदित्यौचित्यात्सात्यकिं हि वेत्यादिसम्भवात् ॥ १७ ॥ एकैकस्मिन्द्वौ द्वौ शरौ शन्दधे । आहृत्य साहस्रम् ॥ १८ ॥ तानि धनूंषि युगपदेकदा रथं च चिच्छेदेत्यन्वयः । सारथिमश्वांश्च हत्वेति चान्वयः ॥ १९ ॥ तन्माता बाणे सुतामिमतिमतीति । कोटरी । उक्तं च तत्रैव । श्रुत्वा लम्बामथाब्रवीत् । गच्छेति लम्बे त्वं तूर्णं बाणसंरक्षणं प्रति । ततो योगं समास्थाय ह्यदृश्या हिमवत्सुता । कृष्णस्यैकस्य तद्रूपं दर्शयन्ती व्यवस्थिता । अन्तर्धानमुपागम्य त्यक्त्वा सा वाससी पुनः । प्रमुखे वासुदेवस्य दिग्वासा कोटरी स्थिता । अथ बाणोऽब्रवीद्वाक्यं देवदेवं सनातनम् । देव्याः पुत्रत्वमिच्छामि त्वया दत्तं त्रिलोचन । शङ्करश्च तथेत्युक्त्वा रुद्राणीमिदमब्रवीत् । कनीयान्कार्तिकेयस्य पुत्रोऽयं प्रतिगृह्यतामित्यादि पुत्रस्योक्तप्रकारेण प्राणरक्षणेच्छया ॥ २० ॥

### श्रीमद्वल्लभाचार्य्यकृता सुबोधिनी

एवं तयोर्वधे बाणः स्वयमागत इत्याह **विशीर्यमाण**मिति । सामान्ययुद्धं परित्यज्य विशेषतः कथं युद्धं करोतीति क्रोधः । ततः सात्यकिं हित्वैव कृष्णमभ्यद्रवत् । अत्र त्यागोऽहं त्वया सह युद्धं न करिष्यामीति । अन्यथा तेन प्रतिरुद्धः स्यात् । अलौकिकं प्रकारं प्रदर्शयिष्यामीति लौकिकपरित्यागः ॥ १७ ॥ तस्य तं प्रकारमाह **धनूंष्याकृष्येति**। साधनानां बहुत्वेऽपि प्रयत्न एक एवेति तस्य शीघ्रता श्लाघ्यते । युगपद्धनूंष्याकृष्य, बाणासुरः पञ्चशतानि योजयित्वा । आकृष्य धनुःपरीक्षां कृत्वा । एकैकस्मिन् धनुषि एकेन हस्तेन द्वौ द्वौ शरौ संदधे । तदैकदा सहस्रं बाणा भवन्ति । ननु किमित्येवमेकदैव बहुसाधन-प्रक्षेपं करोतीत्याशङ्क्याह **रणदुर्मद** इति । रणे दुष्टो मदो यस्येति । न हि मत्तः संबद्धं करोति । सुतरां दुष्टो मत्तः ॥ १८॥ अल्पेनैव निराकरणमाह **तानि चिच्छेदेति** । युगपदेकबाणेन कमलिनीशतपत्रवेधवत् सर्वाण्येव धनूंषि छिन्नानि । ततः सारथिं रथमश्वांश्च । तेनैव न क्षतमात्रं बाणकार्यम्, किन्तु हत्वा । ततोऽपि युद्धादनिवृत्तं वीक्ष्य तदन्तःकरणे भयजननार्थं **शङ्खम-पूरयत्**। 'यस्य ध्वनिर्दानवदर्पहन्ते'ति । ततो भीतः पलायनेऽप्यशक्तः लज्जया रिपोः स्वपश्चाद्भागमदर्शयन् तथैव स्थितः ॥ १९ ॥ ततस्तस्य महादेवगणत्वे पार्वत्या अंशरूपा तस्य धर्मतो माता अभूत् । गणमातृसमाना, धात्री मातृतः, धर्म-मातृतश्च विशिष्टा सा । ततः सा क्वचित्पार्वतीत्युक्ता पर्वतोद्भवा तदंशभूता वा, नाम्ना कोटरा, मातृगणे पठिता, 'कोटरा रेवती ज्येष्ठे'त्यत्रापि प्रसिद्धा, नग्ना भूत्वा मुक्तशिरोरुहा पुत्रप्राणरिरक्षया कृष्णस्य पुरोऽवतस्थे । अनेन तस्य देवसाहाय्यं द्योतितम् । धर्मनिष्ठा चोक्ता । अनेन गणमातेयमिति निरूपणात् साक्षाज्जननी या अशना, या वा तत्पत्नी विन्ध्यावलिः, ते उभे निरस्ते ॥ २० ॥

### श्रीसुबोधिनीसारः

विशीर्यमाणं छिन्नभिन्नत्वेन द्रवंतं स्वबलं दृष्ट्वाऽत्यमर्षणोऽत्यंतासहिष्णुर्बाणः संख्ये संग्रामे सात्यकिं हित्वा त्यक्त्वा रथी कृष्णमभ्यगात् ॥ १७ ॥ युगपदेकदा सहैव पंचशतानि धनूंषि आकृष्य एकैकस्मिन् धनुषि द्वौ द्वौ शरौ रणे दुर्मदो यस्य स बाणः संदधे युयोज ॥ १८ ॥ तानि धनूंषि युगपत्समकालमेव हरिः चिच्छेद सारथिं रथम् अश्वान् च हत्वा भगवान् शंखम-वादयत् ॥ १९ ॥ तस्य बाणस्य माता कोटरा नाम नग्ना वस्त्रहीना मुक्ता विक्षिप्ताः शिरोरुहाः केशा यस्या ययेत्यन्ये पुत्रस्य जीवनेच्छया कृष्णस्य पुरतोऽग्रेऽवतस्थेऽधितस्थौ ॥ २० ॥

## गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

स्वबलं विशीर्यमाणं सर्वतः पलायितं दृष्ट्वा अतिशयेन न मृष्यतीति तथा सः रथी रथस्थो बाणः स्वप्रतियोद्धारं सात्यकिं हित्वा सङ्ख्ये युद्धे कृष्णमभ्यद्रवदित्यन्वयः ॥ १७ ॥ रणे दुर्मदः अतिगर्वितो बाणः युगपदेकदैव सहस्रबाहुत्वात् पञ्चशतैर्भुजैः पञ्चशतानि धनूंष्याकृष्य गृहीत्वा पञ्चशतैर्भुजैः एकैकस्मिन् धनुषि द्वौ द्वौ शरौ सन्दधे इत्यन्वयः ॥ १८ ॥ तत्प्रयोगात्पूर्वमेव तानि धनूंषि हरिः सायकैः चिच्छेद । तत्र सामर्थ्यमाह—भगवानिति । ततश्च सारथिं रथमश्वान् हत्वा शङ्खमपूरयत् अवादयत् ॥ १९ ॥ तदा च कोटरा नाम तस्य बाणस्य माता तस्य पुत्रस्य प्राणान् रक्षितुमिच्छया मुक्ताः शिरोरुहाः केशा यस्याः सा नग्ना सती कृष्णस्य पुरतः अवतस्थे ॥ २० ॥

## अन्वितार्थप्रकाशिका

विशीर्यमाणमिति । स्वबलं विशीर्यमाणं सर्वतः पलायितं दृष्ट्वा अतिशयेन न मृष्यतीति तथा सः रथी रथस्थो बाणः स्वप्रतियोद्धारं सात्यकिं हित्वा संख्ये युद्धे कृष्णमभ्यद्रवत् ॥ १७ ॥ धनूंषीति । रणे दुर्मदः अतिगर्वितो बाणः युगपदेकदैव सहस्रबाहुत्वात् पञ्चशतैर्भुजैः पञ्च शतानि येषामिति बहुव्रीहिः । धनूंष्याकृष्य गृहीत्वा पञ्चशतैर्भुजैरेकैकस्मिन्धनुषि द्वौ द्वौ शरौ सन्दधे ॥ १८ ॥ तानीति । तत्प्रयोगात्पूर्वमेव तानि धनूंषि भगवान् हरिः सायकैः युगपत् चिच्छेद । ततश्च सारथिं रथमश्वान् हत्वा शङ्खमपूरयत् अवादयत् ॥ १९ ॥ तदिति । तदा च कोटरा नाम तस्य बाणस्य माता तस्य पुत्रस्य प्राणानां रिरक्षया रक्षितुमिच्छया । सन्लुगिडभावो वा आर्षः । मुक्ता शिरोरुहाः केशा यस्याः सा नग्ना सती कृष्णस्य पुरतः अवतस्थे । कोटरानाम्नी काचिद्देवी पार्वतीमूर्तिर्दैत्योपास्या बाणस्य मातृत्वेन उक्ता । सैव बाणं ररक्षेति हरिवंशे । इयं कोटरी कोटवी चोच्यते । विष्णुपुराणे तु मन्त्रमयी कुलदेवतेत्युक्तम् ॥ २० ॥

## श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्

रथी बाणः संख्ये युद्धे ॥१७-१९॥ तस्य बाणस्य माता कोटरानाम । विष्णुपुराणे मंत्रमयी दैत्यकुलदेवीत्युक्ता ॥२०॥

## भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

विशीर्यमाणमिति । बाणः, संख्ये युद्धे स्वबलं स्वसैन्यं, विशीर्यमाणं हन्यमानं दृष्ट्वा, अतीव न मृष्यतीत्यमर्षणः सन्, सात्यकिं हित्वा परित्यज्यैव, रथी रथारूढः सन्, कृष्णं अभ्यद्रवत् ॥ १७ ॥ धनूंषीति । रणे दुर्दृष्टो मदो यस्य सः, बाणः, पञ्चशतानि धनूंषि, आकृष्य, युगपत् , एकैकस्मिन् धनुषि, द्वौ द्वौ शरौ, संदधे वै ॥ १८ ॥ तानीति । भगवान् सकलैश्वर्यसंपन्नः, हरिः श्रीकृष्णः, तानि धनूंषि, युगपत् चिच्छेद । सारथिं, रथं, अश्वांश्च, हत्वा, शङ्खं पाञ्चजन्यं, अपूरयत् ध्वनितवान् ॥ १९ ॥ तन्मातेति ॥ ततः कोटरा नाम नाम्ना कोटरेति प्रसिद्धा, तन्माता बाणासुरमाता, नग्ना विवस्त्रा, मुक्ताः विस्रस्ताः केशा यस्याः सा एवंभूता सती, पुत्रस्य प्राणरिरक्षया हेतुना, कृष्णस्य पुरः, अवतस्थे ॥ २० ॥

## कृष्णप्रिया

रथ में बैठकर बाणासुर सात्यकि के संग्राम खेल रहा था। उसने देखा कि मेरा सैन्य श्रीकृष्ण-बलराम-प्रद्युम्न आदि महापुरुषों के प्रहार से छिन्न-भिन्न हो गया है। तब बाणासुर को बहुत क्रोध आया और सात्यकि यादववीर को छोड़कर भगवान् श्रीकृष्णजी के सम्मुख आ गया। महाराज परीक्षित् ! रणदुर्मद बाणासुर ने अपने एक हजार हस्तों से एक ही साथ पाँच सौ धनुष उठा लिये, पुनः प्रत्येक धनुष में दो-दो शर संधान किया। लेकिन बाण छूटने के पहले ही भगवान् श्रीकृष्ण ने उसके सारे धनुष तोड़ दिये। रथ, सारथि, अश्वों को धराशायी कर दिया पुनः शङ्खनाद से विजय घोष किया तब बाणासुर की जननी कोटरा धर्ममाता थी वह अपने भक्त एवं सेवक पुत्र बाणासुर के प्राणों की रक्षा के लिये केश कलाप को फैलाकर विना वस्त्र देह से भगवान् श्रीकृष्ण के सन्मुख आकर खड़ी हो गयी ॥ १७-२० ॥

**ततस्तिर्यङ्मुखो नग्नामनिरीक्षन् गदाग्रजः । बाणश्च [1]तावद् विरथश्छिन्नधन्वाविशत् पुरम् ॥ २१ ॥**
**विद्राविते भूतगणे[2] ज्वरस्तु त्रिशिरास्त्रिपात् ।[3] [4]अभ्यपद्यत दाशार्हं दहन्निव दिशो दश ॥ २२ ॥**
**[5]अथ नारायणो देवस्तं दृष्ट्वा व्यसृजज्ज्वरम् । माहेश्वरो वैष्णवश्च युयुधाते ज्वरावुभौ ॥ २३ ॥**
**माहेश्वरः समाक्रन्दन् वैष्णवेन बलार्दितः ।**
**अलब्ध्वाभयमन्यत्र भीतो माहेश्वरो ज्वरः । शरणार्थी हृषीकेशं तुष्टाव प्रयताञ्जलिः ॥ २४ ॥**

---

१. तव-प्रा. पा. । २. पतौ-प्रा. पा. ।

३. महादेव प्रयुक्तोऽसौ घोररूपोविभीषणः । आविर्बभूव पुरतस्समरेशाङ्गधन्वनः ॥-च. पु. टि. ।

४. अभ्यधावत-श्रीधर. वंशी. जीव. वीर. विश्व. ; अभ्यपद्यत-श्रीधर. टि. । ५. आविर्बभूव पुरतः समरे शार्ङ्गधन्वनः-अधिकं वीरे. ।

**कर्दमक्षमा**

अन्वयः—ततः, नग्नाम्, अनिरीक्षन्, गदाग्रजः, तिर्यङ्मुखः, जातः, तावत्, विरथः, च, छिन्नधन्वा, बाणः, पुरम्, आविशत् ॥ २१ ॥ भूतगणे, विद्राविते, त्रिशिरा, त्रिपात्, ज्वरः, तु, दश, दिशः, दहन्, इव, दाशार्हम्, अभ्यपद्यत ॥ २२ ॥ अथ, देवः, नारायणः, तम्, दृष्ट्वा, ज्वरम्, व्यसृजत्, माहेश्वरः, च, वैष्णवः, उभौ, ज्वरौ, युयुधाते ॥२३॥ वैष्णवेन, समाक्रन्दन्, वलार्दितः, माहेश्वरः, अन्यत्र, अभयम्, अलब्ध्वा, भीतः, शरणार्थी, माहेश्वरः, ज्वरः, प्रयताञ्जलिः, हृषीकेशम् तुष्टाव ॥ २४ ॥

**श्रीधरस्वामिविरचिता भावार्थदीपिका**

अनिरीक्षमाणस्तिर्यङ्मुखो बभूवेति ॥ २१ ॥ ज्वरस्तु योद्धुमभ्यधावदिति ॥ २२ ॥ श्रीनारायणः शीतज्वरमसृजत ॥ २३ ॥ माहेश्वरः समाक्रंदन्युयुधे ॥ २४ ॥

**श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः**

गदाग्रज इति–गदस्यापि तादृशशक्तिपरंपरा विराजतेऽत्र तु किमद्भुतमिति भावः। ततस्तन्मातृनग्नीभवनानन्तरम्। अभूदिति शेषः। तावत्तदा ॥ २१ ॥ अभ्यपद्यत प्राप। श्रीहरिवंशे ज्वरस्वरूपमुक्तम्—"ज्वरस्त्रिपादस्त्रिशिराः षड्भुजो नवलोचनः। भस्मप्रहरणो रौद्रः कालांतकयमोपमः।" इति ॥ २२ ॥ अथ माहेश्वरज्वराऽऽगमनारंभे। अथाऽव्ययमारंभेऽपि। तं ज्वरं। स्वीयं ज्वरम्। व्यसृजदादिदेश ॥ २३ ॥ वैष्णवेन बलेनार्दितः पीडितः समाक्रंदन्नाकुलीभवन्। अन्यत्र नारायणेतरस्थाने। शरणार्थी "शरणं गृहरक्षित्रोर्वधरक्षणयोरपि" इति मेदिनी ॥ २४ ॥

**श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी**

तत इत्यर्द्धकम्। गदाग्रज इति गदस्यापि तादृशशक्तिपरम्परा विराजते तत्र तु किमाश्चर्य्यमिति भावः। तत्र टीकायां योद्धुमभ्यधावदिति शेष इत्यर्थः। ज्वरोऽयुद्ध्यतेति शेष इति चित्सुखश्च ॥ २१ ॥ विद्राविते भूतगण इति श्रीशिवयुद्धादस्य प्राक्तनत्वं द्योतयति यद्वा ज्वरागमनहेतुतया अनुवादमात्रं ज्वरस्तु वर्णितः श्रीहरिवंशे—

"ज्वरस्त्रिपादस्त्रिशिराः षड्भुजो नव लोचनः। भस्मप्रहरणो रौद्रः कालान्तकयमोपमः ॥
नदन्मेघसहस्रस्य तुल्यनिर्घातनिस्वनः। निःश्वसन् जृम्भमाणश्च निद्रान्विततनुर्भृशम् ॥ इति ॥ २२ ॥

अथ सद्य एवेत्यर्थः। इति क्वचित्कमन्यथा व्याख्यानं प्रत्याख्यानं कृतविशेषेण माहेश्वरज्वरादप्याधिक्येनासृजत् तच्च क्रीडयेत्यभिप्रायेणाह—दिव्यति क्रीडतीति देव इति यतो नारायणः तद्रूपेणांशेन तत्रापीच्छामात्रेणैव जगत्स्रष्टेत्यर्थः ॥ २३ ॥ माहेश्वर इत्यर्द्धकम्। समाक्रन्दन् अत्युच्चरवं कुर्वन् युयुध इति ज्ञेयं ततश्च वैष्णवेण ज्वरेण कर्त्रा बलेन करणेनार्दितः अन्यत्राभयमलब्ध्वेति भीत्या यत्र यत्रापयाति तत्र तत्र चैतं वैष्णवो ज्वरोऽनुयाति दुर्वाससं सुदर्शनमिव यं वा रक्षरक्षेति महात्त्या शरणं याति सोपि तमिव भयान्न रक्षतीत्यर्थः। अतो भीतः अत एव शरणं रक्षिता आश्रयो वा तदर्थी सन् प्रणतो नम्रो भक्त्या भूमिष्ठोऽञ्जलिर्यस्य सः पाठान्तरे प्रयतः भक्त्या विशुद्धः उद्यतो वाऽञ्जलिर्येन सः हृषीकेशमिति माहेश्वरोऽयं मयोर्द्वजितः सन् मामेव शरणमागत इति कृपया तेनैवासौ तत्र प्रवर्तितः स्फूर्त्ति प्रापितश्चेति भावः ॥ २४ ॥

**श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी**

गदाग्रज इति निजसर्व्वसद्गुणप्रकटनार्थं यदुकुले श्रीवसुदेवपुत्रतया पदस्याग्रे प्रादुर्भूतस्य तस्य तद्युक्तमेवेति भावः ॥ २१ ॥ विद्राविते भूतगण इति श्रीशिवयुद्धादस्य प्राक्तनत्वं द्योतयति, यद्वा, ज्वरागमनहेतुतयानुवादमात्रम्, ज्वरस्तु वर्णितः श्रीहरिवंशे ( विष्णु० प० १२२।७१–७३ )—

'ज्वरस्त्रिपादस्त्रिशिराः षड्भुजो नवलोचनः। भस्मप्रहरणो रौद्रः कालान्तकयमोपमः ॥
नदन्मेघसहस्रस्य तुल्यनिर्घातनिस्वनः। निःश्वसन् जृम्भमाणश्च निद्रान्विततनुर्भृशम् ॥' इति ॥ २२ ॥

अथ सद्य एवेत्यर्थः। विशेषेण माहेश्वरज्वरादप्याधिक्येनासृजत्, तच्च क्रीड़यैवेत्यभिप्रायेणाह—दीव्यति क्रीड़तीति देव इति, यतो नारायण इच्छामात्रेणैवाशेषजगत्स्रष्टेत्यर्थः ॥ २३ ॥ बलार्द्दितोऽपि सम्यगाक्रन्दन्; यद्वा, बलार्द्दितः सन्नत्यन्तार्त्तनादं कुर्व्वन् उच्चै रुदन् वा। एवमस्य परेणान्वयः, अन्यत्राभयमलब्ध्वेति भीत्या यत्र यत्रापयाति, तत्र तत्रैव तं वैष्णवज्वरोऽनुयाति। दुर्व्वाससं चक्रं सुदर्शनमिव, यद्वा, रक्ष रक्षेति महात्त्या शरणं याति, सोऽपि तमिव भयान्न रक्षतीत्यर्थः। अतो भीतः, अतएव शरणं रक्षिता आश्रयो वा, तदर्थी सन् प्रयतो भक्त्या विशुद्ध उद्यतो वा अञ्जलिर्येन सः पाठान्तरं चिन्त्यम्।

असंगतत्वेऽपि तैरव्याख्यातत्वात् । तद्वाढ्ये च सति प्रणतं प्रणतिस्तद्युक्तोऽञ्जलिर्यस्य, किंवा प्रकृष्टो नताञ्जली यस्य सः। हृषीकेशमिति मोहेश्वरत्वेन कृपया तेनैवासौ तत्र प्रवर्त्तित इति भावः ॥ २४ ॥

**श्रीमद्वीरराघवाचार्यकृता भागवतचन्द्रचन्द्रिका**

तत इति । नग्नामनिरीक्षमाणस्तिर्यङ्मुखो बभूव तावत्तदन्तरं लब्ध्वेत्यर्थः ॥ २१ ॥ विद्रावित इति । भूतगणे विद्राविते पलायिते सति शङ्करेण प्रयुक्तः घोरं रूपं यस्य सः विशेषेण भीषयतीति तथा त्रीणि शिरांसि यस्य त्रयः पादा यस्य स तापज्वरः दशदिशो दहन्निव दाशार्हं कृष्णमभ्यपद्यत अभ्याजगाम ॥ २२ ॥ समरे शार्ङ्गधन्वनः कृष्णस्याग्रे आविर्बभूव। अथेति । देवः कृष्णस्तं ज्वरं दृष्ट्वा ज्वरं वैष्णवं शीतज्वरं व्यसृजत् प्रायुङ्क्त माहेश्वरो वैष्णवश्चेत्युभौ ज्वरौ युयुधाते युद्धङ्कृतवन्तौ तदा वैष्णवेन ज्वरेण कर्त्रा बलेन साधनेनार्दितः विहतः माहेश्वरो ज्वरः समाक्रन्दत् रुरोद । अलब्ध्वेति । अन्यत्र अन्यतः अभयमलब्ध्वा अत एव नितरां भीतः शरणं रक्षितारं तदुपायं वा अर्थयते इति बद्धाञ्जलिः कृष्णं तुष्टाव ॥ २३-२४ ॥

**श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः**

हृषीकेशमिति महेश्वरत्वेन कृपया तेनैवासौ तत्र प्रवर्त्तितः स्फूर्त्ति प्रापितश्चेति भावः ॥ २४ ॥

**श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शिनी**

अनिरीक्षमाणस्तिर्यङ्मुखो बभूव ॥ २१ ॥ ज्वरस्तु योद्धुमभ्यधावदिति शेषः ।

"ज्वरस्त्रिपादस्त्रिशिराः षड्भुजो न बलोचनः । भस्मप्रहरणो रौद्रः कालान्तकयमोपमः" ॥ इति ॥ २२ ॥

शीतज्वरमसृजत् ॥ २३ ॥ समाक्रन्दन् रुदन्नभूत् अन्यत्राभयमलब्ध्वेति स्वस्वामिनः शम्भोरपि पार्श्वं गत्वा तस्य च स्वरक्षणासामर्थ्यं ज्ञात्वैव भीतः प्रणतो भक्त्या भूमिष्ठोऽञ्जलिर्यस्य सः ॥ २४ ॥

**गूढार्थदीपिनी**

तिर्यङ्मुखो बभूवेति योज्यम् ॥ २१ ॥ दाशार्हं श्रीकृष्णम् अभ्यपद्यत सम्मुखमाजगाम ॥ २२-२३ ॥ माहेश्वर इति सार्द्धम् । समाक्रन्दन् व्याकुलीभवन् तुष्टावेति योज्यम् ॥ २४ ॥

**श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः**

त्रीणि शिरांसि यस्य स तथा त्रयः पादा यस्य स तथा ॥ २२ ॥ तं माहेश्वरं तप्तज्वरं दृष्ट्वा शीतं वैष्णवं ज्वरं व्यसृजत् प्रायुङ्क्त ॥ २३ ॥ बलार्दितः बलादर्दितः समाक्रन्दन् सम्यक् रुदन् अभूत् ॥ २४ ॥

**सत्यधर्मकृता भागवतटिप्पणी**

ततस्तिर्यङ्मुखः पश्चात्याननोऽनिरीक्षन् अनिरीक्षमाणः । न नग्नां स्त्रियमीक्षेतेत्यादिप्रतिषेधात् । त्रिशिरास्त्रीणि शिरांसि यस्य सः । तथा त्रियात् । ज्वरं वैष्णवम् ॥ २२ ॥ महांश्चासावीश्वरः शिवस्तस्यायं शैवो वैष्णवश्चेति द्वौ ज्वरौ वैष्णवेन कर्त्रा बलेन करणेनार्दितः ॥ २३ ॥ अभयमन्यत्रान्यस्मात् ॥ २४ ॥

**श्रीमद्वल्लभाचार्य्यकृता सुबोधिनी**

तस्यास्तथाकरणेन यज्जातं तदाह **ततस्तिर्यङ्मुख** इति । 'नग्नां स्त्रीं प्रकटस्तनी'मिति निषेधात् अनिरीक्षन् तिर्यङ्मुखो जातः । किञ्च । गदाग्रजः । ततो भगवति परावृत्ते बाणश्च पराङ्मुखो भूत्वा पुरमविशत् । पदातिः पलायितः । विरथश्छिन्नधन्वेति । चकारात्तदीयाः सर्व एव गताः ॥ २१ ॥ एवं प्रथमयुद्धमुक्त्वा, द्वितीयराजसयुद्धार्थं भगवच्छङ्करयोः प्रस्तावनामाह **विद्राविते भूतगण** इति । यदैव भवान् तिर्यङ्मुखः, तदैव स भावस्त्यक्त इति महादेवोऽपि मोहादुद्गतः। तत आत्मविस्मरणात् साधनसेवकभूतानां भूतानां पलायनं दृष्ट्वा स्वस्य वैदिकभावेन आध्यात्मिकरूपं रुद्रं ज्वरं उत्पादयामासेत्याह । 'रुद्रः पशूंश्छमायेते'त्यत्र रुद्रो ज्वर उक्तः । 'न तस्य रुद्रः पशूनभिमन्यत' इत्यत्रापि । वैदिकमार्गेणापि भगवता सह युद्धं कर्तव्यमिति प्रवृत्त्यर्थं **विद्राविते भूतगण** इति । अत एव ज्वरोत्पत्तिरत्र नोक्ता । रूपान्तरेण रुद्र एव ज्वर इति । तुशब्दोऽन्यं ज्वरं व्यावर्तयति, स त्रिशिराः त्रिपाच्च । दाशार्हं शरणागतरक्षामर्णि कोटराहितार्थे परावृत्तमभ्यपद्यत। स्वसामर्थ्यं प्रकटयन्निवाह **दहन्निव दिशो दशेति** ॥ २२ ॥ तदा भगवान् सर्वरूपोऽपि तन्निवारकवर्मरूपं परित्यज्य, प्रकारान्तरेण पूर्वोत्पन्नं शीतं ज्वरं च योजयित्वा असृजदित्याह **अथ नारायणो देव** इति । तं ज्वररूपं महादेवं दृष्ट्वा । स ज्वरो

रुद्रोऽष्टमूर्तेः शिवस्य कलारूपः 'यास्ते अग्ने घोरास्तनुवः। क्षुच्च तृष्णा च। अस्तु क्वानाहुतिश्च। अशनाया च पिपासा च। सेदिश्चामतिश्च। एतास्ते अग्ने घोरास्तनुव' इति श्रुतेः। 'ताभिरमुं गच्छ, योऽस्मान् द्वेष्टि, यं च वयं द्विष्म' इति श्रुत्यर्थवशात् रुद्रेण प्रेरितास्तास्तनुव एकोभूताः ज्वरत्वमापन्ना भगवत्समीपं गताः। ततो नारायणो देवः पुरुषो यज्ञरूपः 'पुरुषो ह वै नारायण' इति, तस्माद्देवतारूपमग्निं निःसारयितुं वृत्रादिवाग्नीषोमौ ज्वरं व्यसृजत्। श्रुतावपि 'इन्द्र आत्मनः शीतरोराव-जनय'दित्यत्र आत्मा भगवानेव यज्ञः तत्प्रार्थनयैवासृजदिति। ततो ज्वरयोः परस्परं युद्धमासीदित्याह **माहेश्वरो वैष्णवश्चेति। उभौ प्रसिद्धौ**। यथा विष्णुशिवौ पूर्वं युयुधाते, तथा तदीयावपीति। उभयोर्ज्वरत्वात् युद्धं समानम्, तथापि देवताया एव प्राबल्यात् माहेश्वरः वैष्णवेन बलेनार्दितः सम्यगाक्रन्दत्, रोदनं कृतवान्। रुद्रप्रकृतित्वात् तामस एव पीडितो रोदिति, नेतरो। कृतेऽपि रोदने तत्पीडायामनिवृत्तायां वैष्णवाद्भीतः स्वमूलभूतं पूर्वमेव पराजितं मत्वा शरणार्थी सन् हृषीकेशमेव शरणं गतः। अङ्गीकारार्थं तुष्टाव। **हृषीकेश**मिति भगवता तथैव प्रेरितः। किञ्च। अन्यत्राभयमलब्ध्वा पूर्वबाधां स्मृत्वा, भीतश्च। अङ्गी-कारार्थं शरणार्थित्वम्। अन्तःकरणस्य तत्परत्वमनेन निरूपितम्। **प्रयताञ्जलि**रिति कायिको व्यापारो नम्रत्वरूपः॥ २४॥

### श्रीविट्ठलरायात्मजश्रीवल्लभकृतलेखः

**धनूंष्याकृष्येत्यत्र। साधनानामिति। बाहूनामित्यर्थः। ततस्तिर्यङ्मुख** इत्यत्र। **किञ्चेति। निषेधात्तिर्यङ्मुखः।** गदाग्रजत्वाच्च तिर्यङ्मुख इति समुच्चयः। गदाग्रजत्वेनोद्भवहेतुत्वमुक्तम्। नग्नदर्शनं त्वमङ्गलत्वादनुद्भवकरमिति भावः। **प्रसवयुद्ध**मिति। यस्माद्युद्धान्तरं भविष्यति तादृशं प्रसवरूपं युद्धमित्यर्थः। **द्वितीयेति**। रूपान्तरेण युद्धमित्यर्थः। **विद्राविते भूतगण** इत्यत्र। **प्रवृत्त्यर्थ**मिति। भूतगणावृते देशे वैदिकप्रकारो न प्रवर्तेतेत्यर्थः। **तन्निवारककर्मरूपमिति। "न तस्य रुद्र'** इत्यत्र ज्वरनिवारकं कर्मोक्तम्। **तद्रूपं प्रकारं परित्यज्येत्यर्थः। शीतं ज्वरं चेति**। पूर्वं रूपं शीतम्। उत्तरं रूपं वेदे रूरशब्द-वाच्यो ज्वरस्तदुभौ मेलयित्वेत्यर्थः।

### श्रीसुबोधिनी–सारः

ततो हेतोर्नग्नामनिरीक्षन् नेक्षमाणो गदाग्रजः श्रीकृष्णः तिर्यङ्मुखो विमुखोऽभूत् तावत् विरथो रथहीनः छिन्नं धनुर्यस्य स बाणः पुरं शोणिताख्यमविशत्॥ २१॥ भूतानां गणे विद्राविते पलायिते सति त्रीणि शिरांसि यस्य त्रयः पादा यस्य स ज्वरः तु शब्दात् षड्भुजो नवलोचन इत्यनुसंधेयः। दश दिशो दहन्निव दाशार्हं श्रीकृष्णं प्राप्तः॥ २२॥ अथानंतरं तं माहेश्वरं ज्वरं दृष्ट्वा नारायणो देवो वैष्णवं ज्वरं सृष्टवान् तौ उभौ ज्वरौ युयुधाते युद्धं चक्रतुः॥ २३॥ वैष्णवेन ज्वरेणार्दितः पीडितो माहेश्वरो ज्वरः समाक्रोशमानो भीतोऽन्यत्राऽभयं रक्षामलब्ध्वाऽप्राप्य शरणमथंते इत्येवं शीलः कृतांजलिः हृषीकेशं हरिं तुष्टाव॥ २४॥

### गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

तदा च गदाग्रजः कृष्णस्तां नग्नामनिरीक्षमाणस्तिर्यङ्मुखो बभूव। तावत्तदन्तरं लब्ध्वा विरथश्छिन्नधन्वा बाणः पुरमविशत्॥ २१॥ एवं भूतगणे भगवता विद्राविते सति गतमोहेन रुद्रेण प्रयुक्तो दशदिशो दहन्निव प्रकाशमानस्त्रिशिरा-स्त्रिपात् ज्वरो योद्धुं कृष्णमभ्यपद्यत अभ्याजगाम॥ २२॥ अथ नारायणो देवस्तं ज्वरं दृष्ट्वा स्वकीयं शीतज्वरं व्यसृजत्। तदा च उभौ ज्वरौ युयुधाते॥ २३॥ तत्र च वैष्णवेन ज्वरेण कर्त्रा बलेन साधनेनार्दितः पीडितो माहेश्वरो ज्वरो समाक्रन्दत् रुरोद। तदाऽन्यत्र भगवतोऽन्यतः अभयमलब्ध्वा, अत एव भीतः, अत एव शरणं रक्षितारमर्थयते इति शरणार्थी कृताञ्ज-लिश्च सन् माहेश्वरो ज्वरः हृषीकेशं सर्वेन्द्रियनियन्तारं श्रीकृष्णमेव तुष्टाव॥ २४॥

### अन्वितार्थप्रकाशिका

तत इति। ततश्च गदाग्रजः कृष्णः तां नग्नामनिरीक्षन्। शतार्थः। तिर्यङ्मुखो बभूव तावत्तदन्तरं लब्ध्वा विरथ-श्छिन्नधन्वा च बाणः पुरमविशत्॥ २१॥ विद्राविते इति। एवं भूतगणे भगवता विद्राविते सति गतमोहेन रुद्रेण प्रयुक्तो दश दिशो दहन्निव प्रकाशमानस्त्रिशिरास्त्रिपात् ज्वरो योद्धुं कृष्णमभ्यपद्यत अभ्याजगाम॥ २२॥ अथेति। अथ नारायणो देवस्तं ज्वरं दृष्ट्वा स्वकीयं शीतज्वरं व्यसृजत्। तदा च माहेश्वरो वैष्णवश्चेति उभौ ज्वरौ युयुधाते॥ २३॥ माहेश्वर इत्यर्द्धम्। तत्र च वैष्णवेन ज्वरेण कर्त्रा बलेनार्दितः पीडितो माहेश्वरो ज्वरः समाक्रन्दत् रुरोद। समाक्रन्दन्निति पाठे उच्चैः शब्दं कुर्वन् युयुधे रुदन्नभूद्वा। अलब्ध्वेति। तदाऽन्यत्र भगवतोऽन्यतः अभयमलब्ध्वा भीतः अत एव शरणं रक्षितारमर्थयते इति शरणार्थी प्रयताञ्जलिः कृताञ्जलिश्च सन्माहेश्वरो ज्वरः हृषीकेशं श्रीकृष्णं तुष्टाव॥ २४॥

### श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्

नग्नामनिरीक्षन् अनिरीक्ष्यमाणः सन् तिर्यङ्मुखोऽभवत् ॥ २१ ॥ त्रिशिरा इति । यस्य ज्वरस्य नवलोचनत्वं षड्भुजत्वं निद्राजृंभणादिम् त्वं चेत्येतद्धरिवंशे प्रसिद्धं ॥ २२ ॥ माहेश्वर उष्णः वैष्णवः शीतः ॥ २३-२४ ॥

### भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

तत इति ॥ ततः, नग्नां विवस्त्रां स्त्रियं, अनिरीक्षन्नपश्यन्, गदाग्रजः श्रीकृष्णः, तिर्यङ्मुखस्तिरश्चीनास्यः, बभूवेति शेषः । तावत्, तदन्तरं लब्ध्वेत्यर्थः । विरथः, छिन्नधन्वा, बाणश्च पुरं, अविशत् ॥ २१ ॥ ततः किं जातं तत्राह ॥ विद्राविते इति ॥ कृष्णेन, भूतगणे विद्राविते सति, शंकरेण प्रयुक्तः, त्रीणि शिरांसि यस्य सः, त्रयः पादाः यस्य सः, ज्वरः तु, दश दिशः, दहन्निव, दाशार्हं श्रीकृष्णं, अभ्यपद्यत । अत्र क्वचिच्चरमपादस्थाने घोररूपो विभीषण इति पाठः प्रतिभाति, कासुचिट्टीकासु तद्व्याख्याऽदर्शनात् स न गृहीतः ॥ २२ ॥ अथेति ॥ अथ नारायणः, देवः श्रीकृष्णः, तं माहेश्वरं ज्वरं दृष्ट्वा, वैष्णवमिति शेषः । ज्वरं वैष्णवं शीतज्वरमित्यर्थः । व्यसृजत् । ततः, माहेश्वरः महेश्वरसंबन्धी, वैष्णवो विष्णुसंबन्धी चेत्येतौ उभौ ज्वरौ, युयुधाते परस्परं युद्धं चक्रतुः । वैष्णवेन ज्वरेण, बलार्दितः बलेन पीडितः, माहेश्वरः ज्वरः, समाक्रन्ददतिशयेन रुरोद ॥२३॥ अलब्ध्वेति । अन्यत्र भगवतोऽन्यतः, अभयं निर्भयत्वं, अलब्ध्वा, भीतः माहेश्वरः ज्वरः, शरणार्थी, अत एव, प्रयताञ्जलिः सन्, हृषीकेशं तुष्टाव ॥ २४ ॥

### कृष्णप्रिया

गदाग्रज भगवान् श्रीकृष्ण ने कोहरा पर अपनी दृष्टि न पड़ जाय इसलिये अपना मुंह मोड़ लिया तब बाणासुर को मौका मिल गया उनके धनुष्य टूट गये थे रथ नष्ट हो गया था निरुपाय बनकर वह अपने नगर में चला गया ॥ २१ ॥ यहाँ संग्राम से भगवान् त्रिपुरारि जी के भूतगण इधर-उधर जब भाग गये, तब भगवान् भवानी शङ्कर जी का छोड़ा हुआ त्रिशिरा त्रिपाद ज्वर दशों दिशाओं को जलाता हुआ श्रीकृष्ण प्रभु की ओर आ रहा था ॥२२॥ भगवान् श्रीद्वारिकाधीश जी ने सन्मुख आते हुए उष्ण ज्वर को जब देखा तब सामना करने के लिये अपने शीत ज्वर को छोड़ा । अब माहेश्वर ज्वर और वैष्णव-ज्वर परस्पर लड़ने लगे ॥ २३ ॥ दोनों ज्वरों के संघर्ष के अन्त में वैष्णव ज्वर के तेज से आर्त होकर माहेश्वर ज्वर भय-परवश अन्यत्र रक्षण न पाकर दैन्य, पुरःसर शरणार्थी बनकर अञ्जलिबद्ध श्रीहृषीकेश प्रभु की स्तुति करने लगा ॥ २४ ॥

### ज्वर उवाच

**नमामि त्वानन्तशक्तिं परेशं सर्वात्मानं [1]केवलं ज्ञप्तिमात्रम् ।**
**विश्वोत्पत्तिस्थानसंरोधहेतुं यत्तद् ब्रह्म ब्रह्मलिङ्गं प्रशान्तम् ॥ २५ ॥**
**कालो दैवं कर्म जीवः स्वभावो द्रव्यं क्षेत्रं प्राण आत्मा विकारः ।**
**तत्संघातो बीजरोहप्रवाहस्त्वन्मायैषा तन्निषेधं प्रपद्ये ॥ २६ ॥**
**नानाभावैर्लीलयैवोपपन्नैर्देवान् साधूँल्लोकसेतून् [10]बिभर्षि ।**
**हंस्युन्मार्गान् हिंसया वर्तमानान् जन्मैतत्ते भारहाराय भूमेः ॥ २७ ॥**
**तप्तोऽहं ते तेजसा दुःसहेन शान्तोग्रेणात्युल्बणेन ज्वरेण ।**
**तावत्तापो देहिनां तेऽङ्घ्रिमूलं नो सेवेरन् यावदाशानुबद्धाः[11] ॥ २८ ॥**

### कर्दमक्षमा

अन्वयः—ज्वर उवाच—अनन्तशक्तिम्, परेशम्, सर्वात्मानम्, ज्ञप्तिमात्रम्, केवलम्, विश्वोत्पत्तिस्थानसंरोधहेतुम्, प्रशान्तम्, ब्रह्मलिङ्गम्, यत्, ब्रह्म, तत्, त्वा, ह, नमामि ॥ २५ ॥ कालः, दैवम्, कर्म, जीवः, स्वभावः, द्रव्यम्, क्षेत्रम्, प्राणः, आत्मा, विकारः, तत्, संघातः, बीजरोहप्रवाहः, एषा, त्वत्, माया; तत् निषेधम्, त्वां, प्रपद्ये ॥ २६ ॥ लीलया, एव, उपपन्नैः, नानाभावैः, देवान्, साधून्, लोकसेतून्, बिभर्षि, हिंसया, वर्त्तमानान्, उन्मार्गान्, हंसि, ते एतत्, जन्म, भूमेः, भारहाराय ॥२७॥ हे नाथ ! ते, दुःसहेन, शान्तेन, अत्युग्रेण, अत्युल्बणेन, तेजसा, ज्वरेण, तप्तः, अहम्, अस्मि; आशानुबद्धाः, यावत्, जनाः, यावत्, ते, अङ्घ्रिमूलम्, नो, सेवेरन्, तावत्, देहिनाम्, तापः ॥ २८ ॥

१. केशवं-प्रा० पा० । १०. स्वेच्छया-वीर. । ११. बन्धाः-प्रा. पा. ।

**श्रीधरस्वामिविरचिता भावार्थदीपिकाप्रकाशः**

आत्मानं परमशक्तिमंतं मन्यमानः श्रीकृष्णं तापयितुं प्रवृत्तः स्वयमेव तप्तः संस्तं परमेश्वरं ज्ञात्वा स्तुवन्नमस्करोति। नमामीति। त्वा त्वामनंतशक्तिं नमामि। कुतः। परेशां ब्रह्मादीनामीशम्। तत्र हेतुः। सर्वात्मानं सर्वस्यात्मानं चेतयितारम्। तत्कुतः। केवलं शुद्धं ज्ञप्तिमात्रं चैतन्यघनम्। तदेवं चेतयितृत्वेन परमेश्वरत्वमुक्तम्। किंच विश्वसृष्ट्यादिहेतुत्वादपीत्याह। विश्वोत्पत्तीति। नन्वेवंभूतं ब्रह्म प्रसिद्धं नाहमिति तत्राह। यत्तद्ब्रह्मेति। यद्ब्रह्म तदेव त्वमित्यर्थः। किं तद्ब्रह्मेत्यत आह। ब्रह्मलिंगं ब्रह्मणा वेदेन लिंग्यते द्योत्यत इति। तत्कुतः। प्रशांतम्। सर्वविक्रियारहितत्वान्न साक्षाद्वाच्यमिति भावः॥ २५॥ किंच। यत्सविशेषं वस्तु तत्र वयं प्रभवामः त्वयि तु सर्वविशेषातीते न कस्यापि प्रभुत्वं किंतु त्वमेव सर्वप्रभुरिति ज्ञप्तिमात्रत्वं विवृण्वन्स्तौति। काल इति। कालः क्षोभकः। कर्म निमित्तम्। तदेव फलाभिमुखमभिव्यक्तं दैवम्, स स्वभावस्ततसंस्कारः। जीवस्तद्वान्। द्रव्यं भूतसूक्ष्माणि। क्षेत्रं शरीरम्। प्राणः सूत्रम्। आत्मा अहंकारः। विकार एकादशेंद्रियाणि महाभूतानि चेति षोडशकः। ततः संघातो लिंगदेहः। एतस्य च बीजरोहवत्प्रवाहः। रोहोंकुरो देहाद्बीजरूपं कर्म ततोंकुररूपो देहस्ततः पुनरेवमिति प्रवाहः। एषा त्वन्माया। तस्या निषेधः अपोहो यस्मिस्तं त्वां निषेधावधिभूतं प्रपद्ये भज इति॥ २६॥ ननु देवकीतनयस्य मे कथमेवंभूतत्वं तत्राह। नानाभावैरिति। सर्वोपाधिविनिर्मुक्त एव त्वं यथा लीलया स्वीकृतैर्मत्स्याद्यवतारैर्देवान् बिभर्षि पालयसि। तदर्थं लोकसेतून्वर्णाश्रमधर्मान्। तदर्थं तदनुष्ठातॄन्साधून्। तदंगत्वेनोन्मार्गान् दैत्यादीन्हंसि संहरसि। एवमेतदपि तव जन्म भूमेर्भारहरणाय। लीलावतारोऽयं न कस्यापि त्वं तनय इत्यर्थः॥ २७॥ अतोऽज्ञानतस्त्वदभिभवे प्रवृत्तं मां तप्तं रक्षेत्याशयेनाह। तप्तोऽहमिति। ते तेजसा त्वत्सृष्टेन तेजोरूपेण ज्वरेण शांतोग्रेण शीतज्वरेण। परसंतापकस्य युक्त एव ताप इति चेदत आह। तावदिति। सेवायां प्रवृत्तानामनुचित इति भावः॥ २८॥

**श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः**

बलवद्विरोधो न सुखायेत्याह—आत्मानमित्यादिना। तं कृष्णम्। अनंतशक्तित्वे हेतुमाशंकते—कुत इति। तत्र परेशत्वे। तत्सर्वात्मत्वम्। प्रकारांतरेणापि परमेश्वरत्वमाह—किञ्चेति। निजपरमेश्वरत्वे पुनराशंकते—नन्विति। तत्राक्षेपे। इत्यर्थ इति—'अहं ब्रह्म परं धाम' इति श्रीमुखोक्तेरिति तात्पर्यम्। तत्राक्षिपति—किमिति। तत् वेदद्योत्यत्वम्। इति भाव इति—वेदोऽपीदमित्थतया न बोधयति किन्तु तात्पर्येणेत्याशयः, "यतो वाचो निवर्तन्ते" इत्यादिश्रुतेः। अनंतशक्तिमिति—मत्स्वामिनः शंभोः सकाशादपि तव शक्तिरधिकाऽनुभूतेति भावः। तत्र हेतुः—परेशम्। स ईशस्त्वं तु परमेश इत्यर्थः। सर्वात्मानमिति सर्वेषां त्वं परमात्मा भवन्नेव सर्वस्य शंभोरप्यात्मा भवसीत्यर्थः। दन्त्यादिरुक्तशब्दोऽपि शंभुवाची दृष्टः 'सर्वः शर्वः शिवः स्थाणुः' इत्यादौ। ज्ञप्तिमात्रमिति शुद्धचिन्मयत्वम्, केवलमिति मायाशारण्यं निरस्तम्। मत्स्वामी शंभुस्तु मायाशरण एवेति भावः। विश्वोत्पत्तीति त्वं तु सृष्टिस्थितिसंहारकर्ता स तु केवलं संहारकर्तेति भावः। ब्रह्मणा वेदेन लिंग्यते द्योत्यत इति ब्रह्मलिंगं यद्ब्रह्म प्रशांतं तदेव त्वं स तु उग्रे ब्रह्मेति भाव इति विश्वनाथः॥ २५॥ भगवति निजासामर्थ्यमाह—किञ्चेति। तत्र सविशेषवस्तुनि। किन्तु प्रत्युत। तदेव कर्मैव। तत्संस्कारः कर्मसंस्कारः। तद्वान् कर्मसंस्कारवान्। ततः कर्मणः। ततो देहात् पुनरेवं कर्म जीवस्य मायाभिन्नत्वेऽपि मायाग्रस्तत्वान्मायात्वं तस्या मायाया निषेधो यत्र तं त्वां त्वद्देहेन्द्रियादीनि त्वन्मयान्येव न माया इत्यर्थः॥ २६॥ निजेश्वरत्वमाच्छादयन्नाक्षिपति—नन्विति। एवंभूतत्वं मायानिषेधावधिभूतत्वम्। तदर्थं देवपालनार्थम्। पुनस्तदर्थं वर्णाश्रमधर्मार्थम्। तदनुष्ठातन्वर्णाश्रमधर्मनिष्ठान्। तदंगत्वेन धर्मानुष्ठानांगत्वेन। तेषां धर्मनाशकत्वेन तद्धननमपि धर्मानुष्ठानांगमेव। एतत्कृष्णरूपमपि। इत्यर्थ इति—ब्रह्मादिरक्षकत्वेन सर्वादिकारणीभूतस्य न कस्यापि पुत्रता संपनीपद्यत इति भावः। नन्वेवंभूतश्चेत्तर्ह्यनुग्रहनिग्रहज्ञापितौ रागद्वेषौ मायिकधर्मौ किं मयि दृश्येते तत्राह—नानेति। मद्भक्तानुकूलान् बिभराणि एतांस्तत्प्रतिकूलान् हनानीत्येवं भक्तवत्सलस्य तव ये नाना भावा अभिप्रायास्तैर्लीलयानया बाणयुद्धादिकयैवोपपन्नैर्देवानिन्द्रादीन्साधून्मुन्यादींश्च बिभर्षि। उभयेषामपि विशेषणं लोकसेतून् लोकाश्रयभूतान्। तेन भक्तवात्सल्यांगभूतौ रागद्वेषौ तेन न मायिकाविति। अहो मयेदमवगतमित्याह—एतत्ते जन्म भूमेः परमभक्तायाः भारहाराय तादृशसाधुशिरो मणिभक्तवृंदानुग्रहमयत्वाद्दुष्टहिंसादिकोपि तव मायातीतो महागुण एवेति भाव इति विश्वनाथः॥ २७॥ यतस्त्वमेव सर्वशोऽसीत्यतो हेतोः। इति भाव इति—'अपराधः सकृद्भर्त्रा सोढव्यः स्वप्रजाकृतः' इति न्यायेन नायं महतामुचितः। किञ्च—तवास्मीति वदतो हननवदधुना मम संतापोऽपि पातक एवेति तात्पर्यम्। ज्वररूपेण ते तव तेजसा शान्तमपि 'मल्लानामशनिः' इत्यादिन्मादृशदुर्जनं प्रत्युग्रायमाणं यत्तेन तत्राप्युल्बणेन महोद्भटेन। तापः सर्वोपि किं पुनर्ज्वरमात्रकृत इत्यर्थः। नो सेवेरन्नाश्रयेरन्। तत्र हेतुः—आशाभिः पुत्रवित्तलोकेषणाभिर्बद्धा इति। अधुनाहं त्वत्सेवक एवाभूवमिति भाव इति तोषिणी॥२८॥

**श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी**

श्रीमान् महेश्वरोप्यनेनेन जृम्भित इति पूर्णभगवद्बुद्ध्या परिवृत्यागत्य शरणयोग्यत्वं स्तुतियोग्यत्वं च व्यञ्जयन् नमस्करोति नमामीति–तैर्व्याख्यातं तत्र केवलमित्यादावयं भावः शुद्धचैतन्यमेव खल्वात्मा भवति चेतयिताच चैतन्यादेव हि

जडप्रवृत्तिर्दृश्यते ततस्तस्यैव तच्छक्तित्वं तत्तदीशितृत्वञ्च एवं सांसारिकजीवचैतन्यस्य स्वस्वाधिष्ठानगतमेव तत्तत्परमात्मचैतन्यस्य तु सर्वगतम् अतो वाय्वादि महाभूतप्रवृत्तिरपि तस्मादेव न विना त्वत्क्रियते किञ्च नारे "भीषास्माद्वातः पवते" "एको देवः सर्वभूतेषु गूढः" इत्यादिश्रुतेः। अतोऽनन्तशक्तित्वं ब्रह्मादीशितृत्वञ्च तस्यैव घटत इति एवं व्यष्टिद्वारा तस्य तत्तन्निरूप्य समष्टिद्वारापि निरूपयतीत्याह—किञ्चेति प्रशान्तमित्यादावयं भावः विकारजातमेव हि सर्वेषां प्रतीतिविषयः स्यात् अनुभूतजातीयत्वात् ततः शब्दोपि तदेव साक्षाद्बोधयितुं शक्नोति नत्वविकृतं तद्रूपम् अनुभूतजातीयतो विलक्षणत्वात् अतः कथञ्चित् द्योतयत्येव तदिति अथवा ननु ब्रह्म निर्विशेषम् अहन्तु श्रीमद्विग्रहरूपत्वात्सविशेषं तत्राह ब्रह्मैव लिङ्गं श्रीविग्रहो यस्य तं तत्स्वरूपशक्तिवृत्तिवैचित्र्याविष्कारेण शुद्धं ब्रह्मैवैतद्रूपेण प्रकाशित इति भावः। यद्वा ब्रह्मणा वेदेन लिङ्गयसे तथा व्यज्यसे यस्तं यद्वा ब्रह्मणो लिङ्गं लक्षणं यत्र तं विद्वदनुभूततादृशत्वमित्यर्थः। यतः प्रशान्तम् अविकृतं प्रकृष्टं शान्तं शान्तिसुखरूपमिति यावद्वा ॥ २५ ॥ एवं नमस्कुर्वन्नेव शरणत्वसम्पादनाय सर्वाश्रयत्वं न्यरूपयत् सर्वाश्रयत्वेपि केवलत्वादिना तत्तद्दोषालिप्तत्वञ्च तदेवाधुना विवृण्वन् शरणं याति—काल इति। क्षेत्रं प्रकृतिरिति टीकायाः पाठो युक्तः क्षेत्रं शरीरमिति पाठेपि तच्छब्देन कथञ्चित्प्रकृतिरेव व्याख्येया पौनरुक्त्यात् जीवः सोपाध्यवस्थः एषा त्वन्माया एते तव बहिरङ्गशक्तेरेव विलासा इत्यर्थः प्रपद्ये शरणतयाश्रये मायावृतत्वादस्माकमिति भावः ॥२६॥ नन्वेवं निर्दोषश्चेदहं तर्हि कथं कांश्चिद्धन्मि—तत्राह नानेति। लीलानिजपरिकररूपैर्भक्तैः सह क्रीडा तयैव हेतुना उपपन्नैर्योग्यतां लब्धैर्नानाभावैः एतान् मद्भक्तानुगतान् बिभराणि तत्प्रतिकूलांस्त्वेतान् हन्मीत्येवं ये नानाभावा विचित्राभिप्रायाः तैर्देवानिन्द्रादीन् साधूंश्च मुन्यादीन् बिभर्षि उभयेषामपि विशेषणं लोकसेतून् लोकाश्रयरूपानीति तथा उन्मार्गान् हंसि यतोऽयमवतार एतदर्थमित्याह—जन्मेति। भूमेः परमभक्तायाः पृथिव्याः अतस्तादृशसाधुशिरोमणिभक्तवृन्दानुग्रहमयत्वाद्दुष्टहिंसादिकोपि तव मायातीतो महागुण एवेति भावः ॥ २७ ॥ एवं शरणमागम्य तन्निमित्तं निवेदयति—तप्त इति। ज्वररूपेण ते तव तेजसा शान्तमपि "मल्लानामशनिः" इत्यादिवत् मादृशदुर्जनं प्रत्युग्रायमाणं यत्तेन तत्राप्युल्बणेन महोद्भटेन तापः सर्वोपि किम्पुनर्ज्वरमात्रकृत इत्यर्थः। नोसेवेरन् नाश्रयेरन् असेवने हेतुः आशाभिः पुत्रवित्तलोकैषणाभिरनु निरन्तरं बद्धा इत्यर्थः। यद्वा सेवाधिकारिण आह आशया त्वदेककृपातृष्णया अनुबद्धा इति ॥ २८ ॥

**श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी**

केवलमेकमपि सर्व्वेषामात्मानं हृदि हृदि परमात्मरूपेण वर्त्तमानम्। अन्यत्तैर्व्याख्यातम्। यद्वा, यज्जीवतत्त्वं ब्रह्म तदपि त्वम्, जीवानां तत्त्वतस्त्वदंशांशत्वात्; किञ्च, ब्रह्मलिंगं ब्रह्मघनमूर्त्तिमित्यर्थः, परब्रह्मत्वात्, अतएव प्रकृष्टं शान्तं शान्तिः सुखं यस्मात्तत्, तद्रूपं वा ॥ २५ ॥ कालादीनां यथोत्तरं सौक्ष्म्याधिक्य-न्यूनताभ्यां सङ्घातत्वे श्रेष्ठ्यम्; अन्यत्तैर्व्याख्यातम्। ईदृशं तज्ज्ञानं मायिकप्रवाहान्तःपतितानां मादृशां त्वत्कृपया मायानिवृत्तौ सत्यामेव सदा सुसिध्यतीत्येतदर्थं त्वामाश्रयामीत्याह—काल इति। दैवं देवस्य तवेच्छारूपम्, स्वभावः शान्तत्वादिः, क्षेत्रं चित्तं बुद्धिश्च, तस्या मायाया निषेधो यस्मात्तम्, अतस्त्वन्मायाहतस्य ममागस्त्वया क्षन्तव्यमिति भावः॥ २६ ॥ यद्यप्येवं पूर्व्वतः श्रीनारायणरूपेण विविधावतारैश्च कृपां तनोषि, तथाप्यधुना निजाशेषभगवत्ताप्रकटनार्थं स्वयमवतीर्णो विशेषतोऽखिललोकहितं करोषीत्याह—नानेति। विविधावतारैरुपपन्नैस्त्वद्योगैः सर्व्वैश्वर्य्ययुक्तैरित्यर्थः। अतो लीलयैव देवादीन् बिभर्षि, उन्मार्गांश्च हंसि, उन्मार्गान् विमार्गवर्त्तिनः, अतएव हिंसया वर्त्तमानान् लोकहिंसकानित्यर्थः; यद्वा, उन्मार्गानतिक्रान्तसन्मार्गान् दैत्यान् दुष्टराजादींश्च, जीवहिंसया जीवतश्च राक्षसादीन्। एतच्च तव जन्म श्रीदेवक्यां प्रादुर्भावो यथायोग्यमुक्तिभक्त्यादिप्रदानेन भूमेर्भारस्य हरणाय, इदं पूर्व्वं विवृतमेव। अतोऽपराधिन्यपि मयि कृपामेव कर्त्तुमर्हसितरामिति भावः। अन्यत्तैर्व्याख्यातम्। यद्वा, पूर्व्वतोऽप्यधुना कृपाभरं विस्तारयन्नसीत्याह—नानाभावैर्बाल्यादिचेष्टितैर्लीलयैव, न तु मनुष्यत्वादिना हेतुनोपपन्नैः स्वीकृतैः, किंवा, विचित्रक्रीड़यैव, न तु पूर्णकामत्वादीश्वरभावेन युक्तैः, साधून् सदाचारान् लोकसेतून् स्वभक्तांश्च,—बाल्यादिक्रीड़या देवादीनां स्वत एव परमानन्दोत्पत्तेः। हंसीति तच्छ्रवणाद्दुष्टानां भयाद्युत्पत्तेः, इति तेषामपि भयादिना तद्ध्यानादिकं सूचितम्। यद्वा, उन्मार्गान् भक्तिविरुद्धमार्गान् पाषण्डादीन् तत्तत्क्रीड़ाश्रवणादिना दुर्बुद्धीनामपि विमार्गपरित्यागेन सन्मार्गे प्रवृत्तेः, अन्यत् समानम्। एवं भूमेर्भारहरणाय, किंवा भारयुक्तहाराय महालंकारायेत्यर्थः। अतोऽतिदुष्टत्वेन वधयोग्यमपि मामधुना त्वत्कृपया शरणागतं परिपालयेति भावः॥ २७ ॥ तत्र चादौ निजज्वरात् रक्षेत्याशयेनाह—तप्त इति। ननु त्वमपि माहेश्वरः, कथं तप्तोऽसि ? तत्राह—ते तेजसेति। अतएव दुःसहेन, यतः शान्तः शीतश्चासौ उग्रश्च दारुणस्तेन तत्राप्यत्युल्वणेन महोद्भटेन ताप आध्यात्मिकादिरपि, किंवा सांसारिकोऽपि किं पुनर्ज्वरकृत इत्यर्थः। देहिनामिति देहाभिमानेन देह—स्वभावेन वा तापयोग्यतोक्ता। अङ्घ्रेरेकस्यापि मूलं तलभागमपि नो सेवेरन्, कथञ्चित् किञ्चित् परिचर्य्यामपि न कुर्य्युरित्यर्थः। सम्भावनायां सप्तमी। तत्राप्याशया तापापगमस्य सेवनस्यैव वा वाञ्छया अनु ईषद्बद्धा यन्त्रिताः सन्तः, किंवा अनुबद्धाः कृतारम्भाः प्रवृत्ता अपीत्यर्थः। अतोऽधुना त्वत्प्रपत्त्या कमपि तापं नार्हामि, किं पुनस्तज्ज्वरकृतमिति भावः॥ २८ ॥

**श्रीसुदर्शनसूरिकृतशुकपक्षीयम्**

ज्ञप्तिमात्रं क्वापि जाड्यरहितं ब्रह्मलिङ्गं वेदप्रमाणकम् ॥ २५ ॥ देवं कालद्यभिमानिदेवताः स्वभावः जडत्वाजडत्वपरिणामित्वादितत्तद्वस्तुस्वभावः द्रव्यं पृथिव्यादि क्षेत्रं पृथिव्याद्युत्पत्तिभूमिः प्रकृतिः प्राणः पञ्चवृत्तिः आत्मा मतिः विकारः अवस्थाभेदः सङ्घातः शरीरं बीजरोहप्रवाहकार्यकारणप्रवाहः त्वन्माया एषा त्वत्सङ्कल्परूपज्ञानाधीनं सर्वमित्यर्थः अधिकरणे घञ् त्वत् त्वत्तः कृतं भयं न भवेत् ॥ २६ ॥

**श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका**

स्तुतिमेवाह—नमामीति चतुर्भिः। तावत्स्वरक्षणोपयुक्तपरत्वविशिष्टं स्तौति द्वाभ्याम् परेशं त्वां नमामि परेषां ब्रह्मादीनामपीशं नियन्तारं किं प्राकृतराजादिवत् नेत्याह—सर्वात्मानमिति। सर्वेषां ब्रह्मादीनामात्मानम् अन्तःप्रविश्य धारकत्वेन नियन्तारमित्यर्थः। कथमणुस्वरूपब्रह्मादिजीववर्गान्तःप्रवेश इत्यतो विशिनष्टि—केवलं निरवयवं ज्ञानमात्रस्वरूपं सजात्यादन्तःप्रवेशोपपत्तिरिति भावः। मात्रशब्देन क्वचिदपि जाड्याराहित्यं विवक्षितं ननु परेशस्तर्हि कोसौ जगत्कर्त्तेत्यत्र त्वमेवेति वक्तुं कारणत्वोपयुक्तसर्वशक्तित्वादिगुणयोगमाह—अनन्तशक्तिमिति। कारणत्वमाह—विश्वोत्पत्तीति। स्थानं स्थितिः विश्वस्योत्पत्त्यादि हेतुमित्यर्थः। ममैवंविधत्वे किं प्रमाणमत आह—ब्रह्मलिङ्गं वेदप्रमाणकं ननूक्तविधं ब्रह्म नत्वहं तत्राह यत्तद्ब्रह्मेति यद्वेदान्तप्रसिद्धं ब्रह्म तदभिन्नं त्वां नन्वहमपि कदाचिच्छोचामि नेत्याह— प्रशान्तम् अशनाया पिपासाशोकमोहजरामृत्युरूपोर्मिषट्करहितम् ॥ २५ ॥ ननु, कालकर्मस्वभावादीनामेव जगद्धेतुत्वं न ममेत्यत आह—काल इति। दैवं कालाद्यभिमानिदेवता कर्म जीवादृष्टं स्वभावः जडत्वाजडत्वपरिणामित्वादितत्तद्वस्तुस्वभावः द्रव्यं पृथिव्यादिभूतपञ्चकं क्षेत्रं पृथिव्याद्युत्पत्तिभूमिः प्रकृतिः प्राणः पञ्चवृत्तिः प्राणः आत्मा मतिः विकारः अवस्थाभेदः तत्सङ्घातः शरीरं बीजरोहप्रवाहः कार्यकारणप्रवाह एषा एतत्सर्वं त्वन्माया त्वत्सङ्कल्परूपज्ञानाधीनमित्यर्थः। एषेति सर्वनामत्वात् पर्यायेणोद्देश्यविधेयलिङ्गभावत्वात्प्रतिनिर्दिश्यमानमायापेक्षया स्त्रीलिङ्गनिर्देशः तं त्वां निषेधे "नेतिनेति" इति प्रकृतिप्राकृतसमस्तवस्तु गतप्रकारो यस्मिन्निषिध्यते तं त्वां प्रपद्य इत्यर्थः। निषेधमित्यत्राधिकरणे घञ् ॥ २६ ॥ ननूक्तविधः परेशोऽन्य एवाहन्तु यदुष्वन्यतम इत्यत आह—नानाभावैरिति। लीलयैव हेतुभूतया उपपन्नैरन्यथा त्वय्यकर्म्मवश्ये तेषामनुपपन्नत्वादिति भावः। तैर्भावैः प्रकारभूतैः मत्स्याद्यवतारैरिति यावत् धर्मसेतून् धर्ममर्यादाश्च बिभर्षि पुष्णासि उन्मार्गानुत्पथान् हंसि नाशयसि उन्मार्गानित्यस्यैव विवरणं स्वेच्छया वर्त्तमानानिति यथा मत्स्यकूर्मादिजन्म तद्वदेतदपि तव जन्मावतारं भूमेर्भारहाराय भारापनयनार्थम् अनेन वात्सल्यसौशील्यसौलभ्यादीनि सूचितानि ॥ २७ ॥ इत्थं तस्य शरण्यत्वमाविष्कृत्य स्वकीयामार्त्तिमावेदयति तप्त इति। तावच्छान्तेनाप्यन्त उग्रेणोल्बणेन दारुणेनात एव सोढुमशक्येन त्वत्तेजोपबृंहितेन ज्वरेणाहं तप्तस्ततो मां प्रपन्नं पाहीति भावः। परसन्तापकस्य युक्त एव ताप इत्यत आह—तावदिति। यावदाशया रक्षकान्तरसम्भावनाशया तवाङ्घ्रिमूलं न सेवेरन् तावदेव देहिनां तापः सेवायां प्रवृत्तानां त्वनुचितमिति भावः ॥ २८ ॥

**श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः**

नमामीत्यत्र टीकायां केवलमित्यादावयं भावः शुद्धचैतन्यमेव खल्वात्मा चेतयिताच। चैतन्यादेव हि जडप्रवृत्तिर्दृश्यते ततस्तस्यैव तत्तच्छक्तित्वं तत्तदीशितृत्वञ्च। एवं सति जीवचैतन्यस्य स्वस्वाधिष्ठानगतमेव तत्तत्परमात्मचैतन्यस्य तु सर्वगतम् अतो वाय्वादिमहाभूतप्रवृत्तिरपि तस्मादेव "भीषास्माद्वातः पवते" इत्यादेः अतोऽनन्तशक्तित्वं ब्रह्मादि ईशितृत्वञ्च तस्यैव घटत इति एवं व्यष्टिद्वारा तस्य तत्तन्निरूप्य समष्टिद्वारापि निरूपयतीत्याह—किञ्चेति। प्रशान्तमित्यादावयम्भावः। विकारजातमेव हि सर्वेषां प्रतीतिविषयः स्यात् अनुभूतजातीयत्वात् ततः शब्दोऽपि तदेव साक्षाद्बोधयितुं शक्नोति नन्वविकृतं तद्रूपम् अनुभूतजातीयतो विलक्षणत्वात् अतः कथञ्चित् द्योतयत्येव तदिति अथवा ब्रह्मनिर्विशेषम् अहन्तु श्रीमद्विग्रहत्वात् सविशेषः तत्राह ब्रह्मैव लिङ्गं श्रीविग्रहो यस्य तम् ॥ २५ ॥ पूर्वं सर्वाश्रयत्वं तद्दोषालिप्तत्वं यन्निरूपितं तदेव विवृण्वन् शरणं याति—कालो दैवम् अत्र क्षेत्रं प्रकृतिरिति टीकायाः पाठो युक्तः क्षेत्रशरीरमिति पाठोऽपि तच्छब्देनाकथञ्चित् प्रकृतिरेव व्याख्येया पौनरुक्त्यात् ॥ २६ ॥ नन्वेवं निर्दोषश्चेदहं तर्हि कथं कांश्चिद्धन्मि तत्राह—नानेति। लीला निजपरिकररूपैः भक्तैः सह क्रीडा तयैव हेतुना। उपपन्नैर्योग्यतां लब्धैर्नानाभावैरभिप्रायैर्देवानिन्द्रादीन् साधूंश्च मुन्यादीन् बिभर्षि उभयेषामपि विशेषणं लोकसेतून् तथा उन्मार्गान् हंसि यतोऽयमवतार एव तदर्थ इत्याह—भूमेः परमभक्तायाः पृथिव्याः ॥ २७-३३ ॥

**श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः**

नमामि त्वामित्यादि। ज्ञप्तिमात्रम् ज्ञप्तिर्ज्ञानं मात्रा अंशो यस्य; ब्रह्मलिङ्गम्, ब्रह्म वेदस्तदेव लिङ्गं गमकं यस्य, ब्रह्म बृहद् परिपूर्णाम्। यद्वा, यद् यतो ब्रह्म वेदः अतएव ब्रह्मलिङ्गं ब्रह्मणस्त्वद्गमकत्वं त्वज्जन्यत्वेनैव, अतएवानन्तशक्तिम्, यतः परेशं परेषामीशम् ॥ ( २५-३३ )।

### श्रीनाथचक्रवर्तिपादविरचिता चैतन्यमतमञ्जूषा

नमामीत्यादि। ब्रह्मलिङ्गं ब्रह्मवैभवम्, लिङ्ग्यतेऽनेनेति लिङ्गं वैभवम्, यद्यतस्त्वं ब्रह्म वृहदपरिच्छिन्नं पूर्णं ब्रह्मेत्यर्थः। यद्वा, ब्रह्म ब्रह्मणोः शब्दब्रह्म परब्रह्मणोः लिङ्गम् ॥ २५-२६ ॥ जन्मैतदिति-जन्म प्रादुर्भावः ॥ ( २७-३३ )।

### श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शिनी

अनन्तशक्तिमिति। मत्स्वामिनः शम्भोः सकाशादपि तव शक्तिरधिकाऽनुभूतेति भावः। तत्र हेतुः परेशं स ईशस्त्वन्तु परमेश इत्यर्थः। सर्वात्मानमिति त्वं सर्वेषां परमात्मा भवन्नेव सर्वस्य शम्भोरप्यात्मा भवसीत्यर्थः। दन्त्यादिसर्वशब्दोऽपि शम्भुवाची दृष्टः। ज्ञप्तिमात्रमिति शुद्धचिन्मयस्त्वं केवलमिति मायाशाबल्यं निरस्तं मत्स्वामी शम्भुस्तु मायाशबल एवेति भावः। विश्वोत्पत्तीति त्वं सृष्टिस्थितिसंहारकर्त्ता स तु केवलं संहारकर्त्तैवेति भावः। ब्रह्मणा वेदेन लिङ्ग्यते द्योत्यते इति ब्रह्मलिङ्गं यद्ब्रह्म प्रशान्तं तदेव त्वं स तु उग्रं ब्रह्मेति भावः ॥ २५ ॥ केवलं ज्ञप्तिमात्रत्वं विवृण्वन् प्रथमं केवलपदेन व्यावृत्तानि वस्तूनि गणयति—काल इति। कालः क्षोभकः कर्म निमित्तं तदेव फलाभिमुखमभिव्यक्तं दैवं स्वभावस्तत्संस्कारः जीवः तद्वान् द्रव्यं भूतसूक्ष्माणि क्षेत्रं प्रकृतिः प्राणः सूत्रम् आत्मा अहङ्कारः विकार एकादशेन्द्रियाणि महाभूतानि चेति षोडशकः तत्सङ्घातो देहः बीजं देहाज्जायमानं कर्म रोहस्तस्माज्जनिष्यमाणोऽन्यो देहस्तयोः प्रवाहः पौनःपुन्यं परम्परा एषा त्वन्माया तत्र जीवस्य मायाभिन्नत्वेपि मायाग्रस्तत्वान्मायात्वं तन्निषेधं तस्या मायायाः निषेधो यत्र तं त्वद्देहेन्द्रियादीनि त्वन्मयान्येव न माया इत्यर्थः ॥ २६ ॥ नन्वेवम्भूतश्चेदहं तर्ह्यनुग्रहनिग्रहज्ञापितौ रागद्वेषौ मायिकधर्मौ किं मयि दृश्येते? तत्राह—नानेति। एतान् मद्भक्तानुकूलान् बिभराणि एतांस्तत्प्रतिकूलान् हतानीत्येवं भक्तवत्सलस्य तव ये नाना भावा अभिप्रायास्तैर्लीलया अनया बाणयुद्धादिकयैव उपपन्नैर्देवानिन्द्रादीन् साधून् मुन्यादींश्च बिभर्षि उभयेषामपि विशेषणं लोकसेतून् लोकाश्रयभूतानिति तथा उन्मार्गान् हंसि तेन भक्तवात्सल्यगुणाङ्गभूतौ रागद्वेषौ तेन न मायिकाविति भावः अतो मयेदमवगतमित्याह—एतत्ते जन्म भूमेः स्वभक्तायाः भारहाराय ॥ २७ ॥ अतःपरं त्वां स्तोतुमप्यहं न शक्नोमीत्याह—तप्तोऽहमिति। ते तेजसा त्वत्सृष्टज्वरेण शान्तः शीतश्चासावुग्रो दाहकश्च तेन परसन्तापकस्य ते सन्तापो युक्तः एवेति चेदत आह तावदिति। अधुना त्वहं ते भक्त एवाभूवमिति भावः ॥ २८ ॥

### गूढार्थदीपिनी

त्वामनन्तशक्तिं। कुतः नमामीत्यन्वयः। परेशं ब्रह्मादीनामीशम्। पुनश्च ज्ञप्तिमात्रं ज्ञानघनम्। विश्वोत्पत्त्यादिहेतुम्। नन्वेतत् प्रसिद्धं ब्रह्म नाहं तदाह। यदेतत् ब्रह्म तदेव त्वमित्यन्वयः। किं तत्। ब्रह्मणा वेदेन लिङ्ग्यते ज्ञायते तत् ॥ २५ ॥ तेषां संघातो लिङ्गदेहः एतस्य बीजाङ्कुरवत् प्रवाहो भवति सैषा त्वन्मायैव तस्या निषेधम् अपवादभूतं त्वां प्रपद्ये इत्यन्वयः। कालो गुणक्षोभकः। दैवं फलाभिव्यक्तिजनकम्। कर्म निमित्तम्। स्वभावः संस्कारः द्रव्यं शब्दादि। क्षेत्रं शरीरम्। प्राणः सूत्रं क्रियाशक्तिप्रधानं महत्तत्त्वस्य सूक्ष्मा पूर्वावस्था। आत्मा अहङ्कारः विकारः षोडशकः ॥ २६ ॥ लीलया हेतुभूतया गृहीतैः नानाभावै अवतारैः सेतून् वर्णाश्रमधर्ममर्यादाः पालयसि। उन्मार्गान् धर्ममुल्लङ्घ्य वर्तमानान् हंसि ॥२७॥ प्रथमं शान्तः शीतः पुनः उग्रो दाहकश्च शीतज्वरः तेन। उल्वणेन। भीषणेन आशाभिः पुत्रवित्तलोकैषणाभिः ॥ २८ ॥

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः

अनन्तशक्ते, शक्तिद्वारा परिणामित्वं ज्ञप्तिमात्रस्वरूपस्य स्वरूपतो निर्विकारित्वञ्चोक्तं ताः शक्तीः स्वरूपञ्च विभज्य दर्शयन् सर्वाधारत्वं दर्शयति—एषा कार्यकारेण संस्थितत्वा त्वन्माया प्रकृतिः कालः क्षोभकः दैवं दिग्वातार्कादिदेवतागणः कर्म जन्म निमित्तं जीवः क्षेत्रज्ञः स्वभावः परिणामित्वापरिणामित्वादिरूपस्तत्तत्पदार्थधर्मः द्रव्यं भूतसूक्ष्माणि क्षेत्रं व्यष्टिशरीराणि प्राणः पञ्चवृत्तिः आत्माऽहङ्कारः विकारः एकादशेन्द्रियाणि पञ्च महाभूतानि चेति षोडशसङ्घातः समष्टिशरीरं ब्रह्माण्डम् किम्बहुना बीजं प्रधानं तस्माद्रोहप्रवाहः कार्यप्रवाहः संसारप्रवाहश्च यस्मिन् परमकारणे तद्ब्रह्म त्वां प्रपद्ये प्रपत्तेः फलं द्योतयितुं तत्पदवाच्यं ब्रह्म विशिनष्टि तन्निषेधयति तस्य संसारस्य निषेधो निवृत्तिर्यस्मात्प्रपत्तव्यात् तत् जीवकालप्रकृतितत्कार्यनिर्देशः अनुक्तानां ब्रह्मशक्तीनामुपलक्षणार्थः इति सङ्क्षेपार्थः ॥ २५-२६ ॥ एवं विश्वजन्मादिहेतुत्वसर्वशक्तित्वसर्वात्मत्वनिर्विकारस्वरूपत्वसर्वाधारकत्वसंसारनिवर्तकत्वादयो भगवद्गुणा उक्ताः अथ नानावतारैर्देवादीन् यस्त्वं पालयसि उत्पथांश्च हंसि स एव त्वं वसुदेवगृहे अवतीर्णोसीति स्वयं भगवत्त्वपरमकारुणिकत्वादीन् दर्शयितुं स्तौति—नानेति ॥ २७ ॥ त्वत्पराङ्मुखत्वात्त्वां पातयितुं प्रवृत्तः त्वदीयेन ज्वरेण प्रत्युतोपतापितस्तत्सन्निकर्षादधुना त्वद्भक्तोऽस्म्यतो नाधुना तापार्ह इत्यभिप्रायेण प्रार्थयते—ततोऽहमिति। शान्तोग्रेण शीतोग्रेण शीतोग्रेण अत एव दुःसहेन ते तव तेजसा ज्वरेण ॥ २८ ॥

## श्रीसत्यधर्मकृता श्रीभागवतटिप्पणी

यं तापयितुमुपयातस्ततः सन्तप्तोऽनन्यरक्षकस्तं स्तुवन्नमति। नमामीति। अनन्तशक्तिमपरिमिताऽप्रतिबद्धा शक्तिर्यस्य तम्। परेशामीशं सर्वस्वामिनं केवलं जडामिश्रं ज्ञप्तिमात्रं ज्ञानस्वरूपं स्थानं स्थितिः संरोधो नाशो ब्रह्मलिङ्गं ब्रह्म वेद एव लिङ्गं ज्ञापकं यस्य तत्। ब्रह्मणश्च ब्रह्मलिङ्गतत्त्वं चिन्हं यस्मात्तत्। प्रशान्तं समाधानगुणयुक्तं प्रस्तुतभीतिहृतिहेतूक्तिरियम्। यद्ब्रह्म तदेव त्वं त्वा त्वां नमामि॥ २५॥ त्वदृते कस्यापि शक्तिरिति त्वमेवैतत्प्रवर्तकतया तत्तच्छब्द इत्याह। काल इति। दैवं दिष्टं कर्म सत्वं द्रव्यं प्रकृतिः क्षेत्रं लिङ्गशरीरं प्राणः सूत्रात्मा आत्माऽहङ्कारो विकारो मनसा सहैकादशेन्द्रियाणीतराणि पञ्चभूतानीत्याहृत्य षोडशसङ्ख्यस्तत्सङ्घातः स्थूलदेहः स च बीजरोहो यथाऽङ्कुराज्जातस्तज्जनकस्तथा शरीरान्तरसङ्गति हेतुः। त्वन्मायया त्वदिच्छाधीनमेतत्सर्वं तस्मान्निबध्यते। नेति नेतीति निषेधं निषेधशेषं त्वां प्रपद्ये॥ २६॥ ब्रह्मं वाहं चेदेवं ज्वरं वसुदेवादिसप्तजन्म कुत इत्यत आह। नानेति। लीलयैवोपपन्नैर्युक्तैर्नानाभावैः सुरनरतिर्यगादिभी रूपैर्देवान्साधूंस्तदतिरिक्तान्सर्वान्विभर्षि पालयसि तदर्थं लोकसेतुं तन्मर्यादाश्च विभर्षि। उन्मार्गानिति विवरणं हिंसया वर्तमानान् प्रजाद्रोहेण वर्तमानानिति। हिंसि संहरसि। एतत्ते वसुदेवादेर्जन्म भूमेर्भारहाराय हारो हरणं तस्मै॥ २७॥ इयता किमरे ज्वर तव मनोज्वरं वदेत्यतो वक्ति। तप्त इति। अहं ते तेजसा तव तेजोरूपेण निमित्तेन सृष्टेन दुःसहेनोग्रेणात्युल्बणेनातिक्रान्तमुल्बणं मामित्यत्युल्वणस्तेन ज्वरेण तप्तः। तप्तोऽहं त इत्यानुपूर्व्या। हे अहन्ते अहङ्कार। ते तेजसा सामर्थ्येन तप्त इत्यान्तरङ्गिको भावः सूच्यते। हे शान्तेति वा। तव तापो मद्ज्वरापपरिहारस्त्वत्कृतलोकतापफलरूप इत्यतो यादृशो भवतु स भवद्दर्शनादिसेवनावधिक इत्यभिधत्ते। तावदिति। देहिनां तदभिमानवतां यावताऽऽशानुबद्धास्तेऽङ्घ्रिमूलं न सेवेरंस्तावदयं तापः। तदुत्तरं कुतो मम स्वामिस्तथा विनेये दया विधेयेति॥ २८॥

## श्रीमद्वल्लभाचार्यकृता सुबोधिनी

तस्य स्तोत्रमाह **चतुर्भिः**।

स्वरूपबलकार्याणि जानतो मम सर्वथा। रक्षा त्वयैव कर्तव्येत्येवंरूपा स्तुतिः कृता॥ १॥

तत्र प्रथमं स्वरूपमुक्त्वा नमस्यति। शास्त्रसिद्धं स्वरूपं परिदृश्यमानादन्यदिति शङ्कां व्यावर्तयितुं त्वामित्याह, इदमेव तदिति वक्तुम्। नन्वष्टमूर्तेर्ज्वरोऽयं सर्वसंहारकशक्तिरूपः, कथमन्यं स्तौतीत्याशङ्क्य, तस्य माहात्म्यमाह **अनन्तशक्तिमिति**। अनन्ताः शक्तयो यस्येति। ननु कालादेर्ब्रह्मादेर्वा साहाय्ये रक्षा भविष्यतीति किं शत्रोर्महतः शरणगमनेनेत्याशङ्क्याह **परेशमिति**। ब्रह्मादीनामपि नियन्ता। ननु तथापि मरणं वरम्, न तु शत्रोः शरणगमनमित्याशङ्क्याह **सर्वात्मानमिति**। स हि सर्वेषामात्मा, न तु शत्रुः। अनेन वैषम्यनैर्घृण्ययोः परिहृतयोरपि प्रकृतिसम्बन्धात् सर्वात्मनोऽप्यन्यथाभावमाशङ्क्य, तन्निराकरोति **केवलमिति**। न प्रकृत्यादिभिः सम्बद्धं जीववत्। ननु प्रादुर्भूतस्य काममयत्वात् कथं केवलत्वम्, तत्राह **ज्ञप्तिमात्रमिति**। चिद्रूप एवायं प्रकट इति स मन्यते। औडुलोमिवदात्मानं चैतन्यमात्रं मन्यते। साङ्ख्यवद्वा। उभयोर्वैलक्षण्यं जीवत्वब्रह्मत्वकृतम्। सर्वेषामेव दैत्यांशानां तत्पक्षपातिनां च चिन्मात्रपक्ष एव सम्मतः। तत्र केषाञ्चिज्जगत्कर्तृत्वं न भगवतः, किन्तु प्रकृत्यादेरिति। तत्पक्षपातो भविष्यतीत्याशङ्क्य, निराकरोति **विश्वोत्पत्तिस्थानसंरोधहेतुमिति**। विश्वस्य सृष्टिस्थितिप्रलयहेतुस्त्वमेव। केवलादेवाविकृतात् सर्वं जायत इति चिन्तामण्यादौ दृष्टमिति चिन्मात्रस्यापि हेतुत्वं मन्यते। श्रुतिसिद्धत्वात्। अत एवास्मिन्नर्थे अलौकिककर्तृत्वे प्रमाणमाह **यत्तदिति**। लोकवेदप्रसिद्धम्। यल्लोके प्रसिद्धम्, तदेव वेदे प्रसिद्धमिति। ननु कृष्णं पुरस्कृत्य न लोकवेदयोः प्रसिद्धिः क्वचिद्दृष्टा, तथाभूतशब्दस्याश्रुतत्वात्, तत्राह **ब्रह्मेति**। ब्रह्म त्वमेव व्यवहार्यत्वात्कथमित्याशङ्क्याह **ब्रह्मलिङ्गमिति**। जगत्कर्तृत्वतन्निर्वाहकत्वसेतुत्वविधरणत्वादीनि तल्लिङ्गानि तान्येवात्र सन्तीति। अत्रापि प्रमाणमाह **प्रशान्तमिति**। प्रकर्षेण शान्तिः प्रत्यक्षसिद्धा, अन्यथा स्वतन्त्रः समर्थः किमसमदादेः अपेक्षां कुर्यात्। प्रशान्तत्वेन च ब्रह्मधर्मा लक्ष्यन्ते, धर्मश्च ब्रह्मत्वम्। ततो लोकवेदसमन्वयः, तेन जगत्कर्तृत्वमिति, गुणा उत्तरार्धे निरूपिताः, दोषाभावश्च पूर्वार्धे। एवं निर्दोषपूर्णगुणविग्रहत्वं निरूपितम्॥ २५॥ अनेन सर्वसामर्थ्यं भगवत एव सर्वत्र, नान्यस्येति सिद्धमपि प्रतीत्या कालादीनां बलं सिद्धमनूद्य, तन्निराकरणेनैव निराकरोति **कालो दैवमिति**। कार्यकारणरूपाणि वस्तुतस्त्वमेव, तेषु भिन्नतया प्रतीत्या यत्सामर्थ्यपरिकल्पनम्, तदपि त्वन्मायैषा। अन्यथा सर्वप्रमाणसिद्धे कथमन्यथाकल्पनं सम्भवति। तत्र कालः सर्वकारणमिति ज्योतिःशास्त्रादन्वयव्यतिरेकाभ्यां च निश्चीयते। तदवान्तरभेदा ग्रहाः कालावयवास्तदिन्द्रियरूपाः दैवमित्युच्यन्ते। ततो धर्मशास्त्रे तत्सर्वं कर्मवशादिति सामान्यविशेषकर्मभ्यां सर्वकार्योत्पत्तिमाहुः। साङ्ख्याः सर्वत्र बीजस्वभावमेव कारणमाहुः। अन्येऽपि स्वभाववादिनः। जडकार्यकारणवादिनामेवं सिद्धान्तः। जीवकार्यवादिनां मते जीवस्वभाव इति पाठः। सर्वमेव जीवात्मकमिति। यद्यप्ययं ब्रह्मवादे निराकृतः, तथापि पूर्वपक्ष एव निराकृत इति सर्वजीवपक्षोऽपि युक्त एव। कालादयः पञ्च

वा सामान्यकारणभूताः। कालो गुणक्षोभकः। दैवं प्राण्यदृष्टम्। कर्म जन्मनिमित्तं भगवद्रूपं सामान्यम्। जीवो भोक्ता। स्वभावः परिणामहेतुरिति। जीवः स्वभाव इति पाठे कार्यमाह द्रव्यमिति। द्रव्यं तत्त्वानि। तेषां कार्यं देहः क्षेत्रम्। तत्र प्राणः सर्वहेतुः। तस्यापि प्रभुरात्मा। अहंकारः पुराध्यक्षो विकारः। तत्सङ्घातश्च देवतिर्यङ्मनुष्यादिरूपः आद्यः। ततो बीजरोहप्रवाहः बीजभावापन्नानां तेषामेव रोहः। अङ्कुरोत्पत्तिः कार्यमिति यावत्। तस्य प्रवाहोऽनादिसिद्धः बीजाङ्कुरन्यायः। एतत्सर्वं भिन्नतया अखण्डात्त्वत्तः परिज्ञातम्। त्वन्मायैव एषा एवं बुद्धिरूपा भवति। तस्या व्याप्तिः कामवज्जीवेष्वेव। अतो मायावशात्त्वमेव तथा भवसीति निराकरणार्थमाह तन्निषेधमिति। तस्या निषेधो यत्रेति। अतः सर्वसमर्थं त्वामेव प्रपद्ये ॥ २६॥ एवं स्वरूपसामर्थ्ये निरूप्य विशिष्टं कार्यमवतारकृतं निरूपयति नानाभावैरिति। नटवत् मत्स्यादिभावान् बिभर्ति। आनन्दरूप भावमात्रेण तथा जायत इति भावपदम्। तत्रापि नटवत् क्लेशेन न पदार्थसम्पादनम्, किन्त्विच्छयैव तथात्वमित्यर्थः। तेषां प्रयोजनमाह देवान् साधून् लोकसेतून्बिभर्षीति। त्रिविधा एते। साधवो भूमिष्ठाः। धर्ममर्यादाः सेतवः। ते भूमेरधः एव निरूपिताः, 'खाता हि वेदि'रिति। अनेन त्रिलोकस्थितभक्तरक्षार्थं अवतारा इत्युक्तं भवति। एवं गुणार्थतामुक्त्वा दोषाभावार्थतामाह हंस्युन्मार्गानिति। उन्मार्गा धर्ममार्गविरोधिनः। किञ्च। हिंसया वर्तमानान् मारणैकस्वभावान्। अत एतत्ते जन्म तादृशमुभयं कुर्वदपि विशेषकार्यमपि करोतीत्याह भारहाराय भूमेरिति। भारहारो भारहरणम्। अवतारान्तराणि भूम्युपजीवकानामेव दोषाभावं गुणं च सम्पादयन्ति। अयं त्ववतारः भूमेरेव भारं दूरीकरोति। उपलक्षणमेतत्। परमानन्दं च सम्पादयति ॥ २७॥ एवं स्तुत्वा प्रार्थयितुं स्वदुःखं (वि) ज्ञापयति तप्तोऽहमिति। ते दुःसहेन तेजसा क्रूरेण ज्वररूपेण 'नाग्नेर्हि ताप' इति न्यायमपि बाधित्वा संतप्तोऽहम्। 'न हि दृष्टे अनुपपन्नं नाम।' ननु वैष्णवं तेजः न तापं जनयति, तत्राह शान्तोग्रेणेति। बहिः शान्तः, अन्तरुग्रः, अन्यथा वैष्णवतेजसो न दैत्यनिवारकत्वं स्यात्। यथा भगवान् 'चक्षुषश्चक्षुः, श्रोत्रस्य श्रोत्रम्', तथायं धर्मो ज्वरस्यापि ज्वरः, निवर्तकः प्रवर्तकश्चेति आनुगुण्यसिद्ध्यर्थं तापमेव निवारयितुं तथानिरूपणम्। अत्युल्बणमसह्यं क्रूरादपि क्रूरत्वात्। ननु ज्वरे निवृत्ते तापो निवर्तिष्यते, अतो ज्वर एव प्रार्थनीयः। न हि शस्त्रे प्रयुक्ते शस्त्रपीडितः शत्रुं प्रार्थयते इत्याशङ्क्य निराकरोति तावत्ताप इति। देहाभिमानिनां तावदेव तापः, यावत्तेऽङ्घ्रिमूलं नासेवेरन्। अनेनान्यथा तापनिवृत्तिर्न भवतीत्यप्युक्तम्। ज्ञानेपि तापनिवृत्तौ अङ्घ्रिमूलाश्रयणमेव हेतुरिति किमन्तर्गडुना ज्ञानेनेति भक्तेरुत्कर्षोऽप्युक्तः। तर्ह्यसेवने को हेतुः, तत्राह आशानुबद्धा इति। भगवच्चरणारविन्दासेवायां न कामः प्रतिबन्धकः। किन्तु तच्छक्तिराशा। अतो नैराश्याभावात् सर्वत्र तत्तदाशापि न पूर्यत इति तयानुबद्धाः। यावदित्ययमनुबन्धः सान्त इति निरूपितम्। आशायोगेनाशा सत्या भवति, तदा पूर्णा सती निवर्तते, कामनिवृत्तौ तु निवर्तत एव, विषयदोषदर्शनादपि निवर्तते। तन्निवृत्तौ बहवः प्रकारा इति सम्भावनाया विद्यमानत्वात् यावदित्यवधिरुक्तः। अग्निरूपः काम इति। तेन तापस्तावदेवेत्यपि युक्तम् ॥ २८॥

### श्रीविट्ठलरायात्मजश्रीवल्लभकृतलेखः

**नमामि त्वेत्यत्र। प्रकृतिसम्बन्धादिति।** स्वरूपतो वैषम्यनैर्घृण्याभावेपि प्रकृतिसम्बन्धात्तथा स्यादित्यर्थः। **उभयोरिति।** जीवभगवतोश्चिद्रूपत्वे समानेपि जीवत्वब्रह्मत्वकृतं वैलक्षण्यम्। **जीवत्वमंशत्वम्।** ब्रह्मत्वं व्यापकत्वमित्यर्थः। **तत्पक्षपात इति।** तत्पक्षे पातस्तत्पक्षाश्रयणं भविष्यतीत्यर्थः। **अत एवेति।** युक्त्यगम्यत्वादेवेत्यर्थः। **ब्रह्मलिङ्गमिति।** ब्रह्मणो लिङ्गानि यस्येत्यर्थः। **कालो दैवमित्यत्र। यद्यप्ययमिति।** चिरकारणतापक्ष इत्यर्थः। **पूर्वपक्षे इति।** 'न विलक्षणत्वा'दिति सूत्रस्य पूर्वपक्षत्वादिति भावः। एते पञ्चापि प्रमाणसिद्धाः। अतो ज्योतिःशास्त्रादिमतभेदेन विकल्पो न युक्त इत्यरुच्या पक्षान्तरमाहुः कालादय इति। **अतो मायावशादिति। अत** इतिपदं निराकरणार्थमित्यनेनान्वेति। **तप्तोऽहमित्यत्र। तथायं धर्म इति।** शीतरूररूपं भगवत्तेज इत्यर्थः। **शत्रुं प्रार्थयत इति।** किन्तु शस्त्रस्यैव निष्कासनाद्युपायं करोति, तथा ज्वरस्यैव प्रार्थनाद्युपायः कर्तव्य इत्यर्थः। **न कामः प्रतिबन्धक इति।** भगवद्विषयकस्य कामस्य भजनसाधकत्वात्कामामात्रं न प्रतिबन्धकम्, किन्तु तद्विशेषः अप्राप्तवस्त्वभिलाषरूपा आशा प्रतिबन्धिका। भगवत आत्मत्वेन सर्वदा प्राप्तत्वात्तद्भिन्नाभिलाषस्यैवाशात्वमिति भावः। **आशात्यागेनेति।** 'ततो वै ते सत्याशा भविष्यती'त्यत्राशायाः सत्यत्वेन निवृत्तौ स्वर्गप्राप्तिरुक्ता।

### श्रीसुबोधिनीसारः

अचिंत्यशक्तिं परेशं सर्वनियंतारं सर्वेषामात्मानं केवलं ज्ञानघनं विश्वस्योत्पत्त्यादिहेतुं जन्मादिकारणं त्वा त्वां नमाम्यहं स्तौमि यत्तद्ब्रह्म प्रसिद्धं तत्त्वं ब्रह्मणा वेदेन लिंग्यते द्योत्यते इति तत् प्रशांतं शुद्धम् ॥ २५॥ कालादिरूपा एषा तव मायास्ति तस्या निषेधो यस्मिंस्तं निषेधावधिभूतं त्वां प्रपद्ये शरणं व्रजामि कालः क्षोभहेतुः कर्मनिमित्तं दैवं प्रारब्धं स्वभावः तत्संस्कारः जीवस्तद्वान् द्रव्यं भूतसूक्ष्माणि क्षेत्रं शरीरं प्राणः सूत्रम् आत्माहंकार एकादशेंद्रियाणि महाभूतानि पंचेति षोडशात्मकः तत्संघातो लिंगदेहः बीजस्य रोहवदंकुरवत्प्ररोहः संसारप्रवाह इति भावः ॥ २६॥ लीलया स्वेच्छयैवोपपन्नैर्गृहीतैर्नानाभावैर्मत्स्याद्यवतारैर्देवादीन् पालयसि हिंसया वर्तमानान् जीवतो दैत्यादीनुन्मार्गगान् उत्पथगान् त्वं हंसि

एतत्ते जन्म भूमेर्भारहाराय पृथिव्या भारोत्तारणार्थम् ॥ २७ ॥ दुःसहेनासह्येन शांतोग्रेण शीतज्वरेणात्युग्रेण ते तव तेजसाहं तप्तोस्मि ननु परपीडाकरस्य तव तापोऽयुक्तः प्रहिखनितुः श्वभ्रमिवेति चेत्तत्राह आशयानुबद्धा यावत्ते तवांघ्रिमूलं नो सेवेरन् देहिनां प्राणिनां तावदेव तापः ॥ २८ ॥

## गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

तत्कृतां स्तुतिमेव दर्शयति चतुर्भिः तत्रात्मानं परमशक्तिमन्तं मन्यमानो भगवन्तं प्रतापयितुं प्रवृत्तः ततश्च स्वयमेव तज्ज्वरेण सन्तप्तः संस्तं परमेश्वरं ज्ञात्वा नमस्करोति—नमामीति । त्वा त्वामहं नमामि । ननु 'त्वं पीडितो भीतश्चेत्तर्हि परेषां ब्रह्मरुद्रादीनां रक्षायां समर्थानां सत्वात्तान् विहाय शत्रोर्मम नमस्कारादिभिस्तव किं स्यात्' इत्याशङ्क्याह—परेशमिति । परेषां ब्रह्मादीनामपीशं नियन्तारमित्यर्थः । तथाच त्वद्विमुखस्य कोऽपि रक्षको नास्तीति भावः । परेशत्वे हेतुमाह—विश्वोत्पत्त्यादिहेतु यद्ब्रह्म तत्त्वमित्यर्थः । 'हेतुत्वमपि न निमित्तत्वमात्रम्, किंतूपादानत्वमपि' इत्याह—सर्वात्मानमिति । एवं चेद्विकारित्वं स्यात्तत्राह—प्रशान्तमिति । तत्र हेतुः—ज्ञप्तिमात्रमिति । चैतन्यैकरूपमित्यर्थः । 'तथाप्यन्यसम्बन्धाद्विकारित्वं स्यात्' इत्याशङ्क्याह—केवलमिति । 'तथापि कथमभिन्ननिमित्तोपादानत्वं सम्भवति' इत्याशङ्क्याह—अनन्तशक्तिमिति । एवंभूते किं प्रमाणं तत्राह—ब्रह्मलिङ्गमिति । ब्रह्मणा वेदेन लिङ्ग्यते द्योत्यते इति तथा तम् ॥ २५ ॥ सर्वोपादानत्वमेवोपपादयन् कालादेस्तद्भिन्नत्वं निराकरोति—काल इति । कालः गुणक्षोभकः । दैवं ग्रहादि ज्योतिःशास्त्रसिद्धम् । कर्म प्राणिकृतशुभाशुभक्रियाजन्यमदृष्टं पुण्यपापात्मकम् । जीवस्तत्फलसुखदुःखभोक्ता । स्वभावस्तत्तत्परिणामहेतुः तत्तद्वस्तुनिष्ठसंस्कारविशेषः । द्रव्यं शब्दादिभूतसूक्ष्माणि । क्षेत्रं महदाद्युत्पत्तिभूमिः प्रकृतिः । प्राणः पञ्चवृत्तिकः प्रसिद्धः । आत्मा अहङ्कारः । विकारः पञ्चमहाभूतानि, एकादशेन्द्रियाणि चेति षोडशकः । तेषां पृथिव्यादीनां सङ्घातो देहः । एतस्य च बीजरोहप्रवाहः रोहोऽङ्कुरः देहाद्बीजरूपं कर्म ततोऽङ्कुररूपो देहस्ततः पुनरेवमिति प्रवाहः । एषा भेदप्रतीतिरूपा त्वदीया माया तस्या निषेधः अपोहो यस्मिन् ज्ञाते सति भवति तं त्वामहं प्रपद्ये शरणमागतोऽस्मि ॥ २६ ॥ ननु वसुदेवपुत्रस्य मम कथमेवंभूतत्वं तत्राह—नानेति । लीलया अनायासेन सङ्कल्पमात्रेण उपपन्नैः स्वीकृतैः नानाभावैः विविधप्रकारकैर्मत्स्याद्यवतारैर्यथा देवान् साधून् सन्मार्गस्थान् लोकसेतून् वर्णाश्रमादिधर्ममर्यादाश्च सर्वदा बिभर्षि पुष्णासि, तदर्थं च उन्मार्गान् हंसि तथैवैतदपि तव जन्म भूमेर्भारावतारणाय । अतो लीलावतारोऽयम्, न त्वं कस्यापि पुत्र इति । उन्मार्गानेव दर्शयति—हिंसया वर्तमानानिति ॥ २७ ॥ एवं शरणमागत्य स्वदुःखमावेदयन् तन्निरासं प्रार्थयते—प्राप्तोहमिति । शान्तोग्रेण प्रथमं शान्तः शीतस्ततश्चोग्रो दाहकस्तेन अतएवात्युल्बणेन भयंकरेण अत एव दुःसहेन ते तेजसा शक्तिरूपेण ज्वरेणाहं तप्तोऽस्मि, अतः शरणागतं मां ततो रक्षेति शेषः । 'परसन्तापकस्य तव सन्तापो युक्त एव' इत्यत आह—तावदिति । यावदाशया कामवासनयाऽनुबद्धास्तत्तद्विषयप्राप्त्युपायेषु भ्रमन्तस्तवाङ्घ्रिमूलं न सेवेरन् शरणं नैवागच्छन्ति, तावत्तेषां देहिनां तापो युक्तः मम तु त्वच्छरणागतस्य स न युक्त इत्यर्थः ॥ २८ ॥

## अन्वितार्थप्रकाशिका

नमामीति ॥ अनन्तशक्तिं परेषां ब्रह्मादीनामीशं सर्वात्मानं केवलम् असङ्गं ज्ञप्तिमात्रं चैतन्यैकरूपं विश्वोत्पत्तिस्थानसंरोधानां हेतुं यत्तत्सर्वस्वरूपं ब्रह्मात्मकं ब्रह्मणा वेदेन लिङ्ग्यते ज्ञायते ब्रह्मैव लिङ्गं मूर्तिर्यस्येति वा तथा तं प्रशान्तं त्वां नमामि ॥ २५ ॥ काल इति ॥ कालः गुणक्षोभकः कर्मनिमित्तमदृष्टं दैवं तदेव फलाभिमुखमभिव्यक्तम् । स्वभावस्तत्संस्कारो जीवस्तद्वान् द्रव्यं शब्दादिभूतसूक्ष्माणि क्षेत्रं शरीरं प्रकृतिः प्राणः सूत्रम् आत्मा अहङ्कारः विकारः पञ्चमहाभूतानि एकादशेन्द्रियाणि चेति षोडशकः तेषां सङ्घातो लिङ्गदेह एतस्य च बीजरोहवत्प्रवाहः रोहोऽङ्कुरः देहाद्बीजरूपं कर्म ततोऽङ्कुररूपो देहस्ततः पुनरेवमिति प्रवाहः । एषा त्वदीया माया तस्या निषेधः अपोहो यस्मिन् तं त्वां निषेधावधिभूतमहं प्रपद्ये शरणमागतोऽस्मि ॥ २६ ॥ नानेति ॥ लीलयैव उपपन्नैः स्वीकृतैः नानाभावैः विविधप्रकारकैर्मत्स्याद्यवतारैर्यथा देवान् साधून्सन्मार्गस्थान् लोकसेतून् वर्णाश्रमादिधर्ममर्यादाश्च सर्वदा बिभर्षि पुष्णासि तदर्थं च हिंसया वर्तमानान् उन्मार्गान् हंसि तथैवैतदपि तव जन्मभूमेर्भारहाराय भागवतारणाय । न तु त्वं कस्यापि तनयः ॥ २७ ॥ तप्तोऽहमिति ॥ शान्तोग्रेण प्रथमं शान्तः शीतस्ततश्चोग्रो दाहकस्तेन अत एवात्युल्बणेन भयङ्करेण अत एव दुःसहेन ते तेजसा ज्वररूपेणाहं तप्तोऽस्मि । अतः शरणागतं मां ततो रक्षेति शेषः । यावदाशया कामवासनयाऽनुबद्धास्तत्तद्विषयप्राप्त्युपायेषु भ्रमन्तस्तवाङ्घ्रिमूलं नो सेवेरन् शरणं नैवागच्छन्ति तावत्तेषां देहिनां तापो युक्तः । मम तु त्वच्छरणागतस्य दुःखमात्रं न युक्तं किं पुनर्ज्वरमात्रम् ॥ २८ ॥

## श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्

स्वयं पराभूतः सन् स्वतापेनापराभूतं परमेश्वरं श्रीकृष्णं नारायणं विदित्वा प्रणमन्नाह—नमामीति ॥ अनंतशक्तिं असंख्यसामर्थ्यं अतः परेशं परेषां महामुक्तानां कालप्रकृतिपुरुषाणां चेशंनियामकं ॥ अतः सर्वात्मानं चेतनाचेतनवृंदप्रवर्त्तकं

प्रवर्त्तके सत्यपि केवलं निर्दोषं ॥ ज्ञप्तिमात्रं ज्ञानघनविग्रहं ॥ एवं सत्यपि विश्वोत्पत्त्यादिहेतु ॥ यत् ब्रह्म अस्ति तत् प्रशांतं ॥ ब्रह्मलिंगं शरीरं यस्या परब्रह्म त्वां नमामि ॥ २५ ॥ परमात्मनः सर्वोत्कृष्टत्वेन स्तुवन्नाह काल इति । अत्र कालादिपदानां श्लोकानुक्रमेणाचयो न क्रियते किं त्वर्थानुसंगत्वनुसारेणैव कालः परमाण्वादिप्रलयांतःजीवः पुरुषः क्षेत्रं प्राणः सूत्ररूपं महत्तत्त्वं ॥ कर्मजीवानामनेकजन्मार्जितं शुभाशुभं । स्वभावः सत्वादित्रिगुणसमुदायः द्रव्यं पंचभूतानि च ॥ दैवं इंद्रियदेववृंदं ॥ आत्मा अहंकारः विकारः इंद्रियाणि तेषां चतुर्विंशतितत्वानां संघातो देहः ॥ तस्य बीजरोहवत् बीजांकुरवत् ॥ प्रवाहः बीजरूपात्कर्मणः ॥ अंकुररूपो देहः देहात्पुनः कर्म कर्मणः पुनर्देहः एवंभूतः पुनः पुनः प्रवाहः एषा त्वन्मायाजीवमोहिनी तेषां कालादीनां निषेधस्तुल्यत्वनिषेधो यस्मिन् तं त्वां प्रपद्ये शरणं प्राप्तोस्मि ॥ २६ ॥ ननु वसुदेवपुत्रस्य मम कथमेवं माहात्म्यमिति चेत्तत्राह नानेति ॥ लीलयैव उपपन्नैरंगीकृतैः नानाभावैर्वराहादिनानावतारैः देवादीन् बिभर्षि रक्षसि ॥ उन्मार्गान् तद्विपरीतान् हंसि ॥ एतत् वर्त्तमानं यादवं ते जन्म ॥ अतो न त्वं वसुदेवपुत्र इति भावः ॥ २७ ॥ अज्ञानेन त्वदपराधे प्रवृत्तं मां पाहीत्यभिप्रायेणाह तप्त इति ॥ उल्वणेन बलवत्तरेण शोतंशी तं उग्रं अधिकं यस्मिस्तेन ॥ धनकलत्राद्याशानुबद्धाः जनाः यावत् ते तवांघ्रिमूलं ॥ २८ ॥

### भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

स्तुतिमेवाह नमामीति चतुर्भिः । तावत् स्वरक्षणोपयुक्तपरत्वविशिष्टतया स्तौति द्वाभ्याम् । नमामीति ॥ परेषां ब्रह्मादीनामीशो नियन्ता तं, किं प्राकृतराजादिवन्नियन्ता नेत्याह । सर्वात्मानं सर्वेषां ब्रह्मादीनामन्तःप्रविश्य धारकत्वेन नियन्तारमित्यर्थः । के स्वात्मानुभवसुखे वलते तिष्ठतीति तं, धातूनामनेकार्थत्वात् संवरणार्थस्य वलतेः स्थित्यर्थत्वम् । ज्ञप्तिमात्रं ज्ञानस्वरूपे स्वात्मनि जाड्यरहितं, अत्र मात्रशब्देन जाड्यराहित्यस्य विवक्षितत्वात् । ननु ममैवंभूतत्वे सति जगत् कर्त्ता क इति चेत्त्वमेवेति वक्तुं कारणत्वोपयुक्तसर्वशक्तित्वादिगुणयोगमाहानन्तशक्तिमिति । अनन्ताः शक्तयो यस्य तं, कारणत्वमाह । विश्वस्य उत्पत्तिश्च स्थानं स्थितिश्च संरोधो लयश्च तेषां हेतुस्तं, ममैवंविधत्वे किं प्रमाणमत आह । ब्रह्मलिङ्ग वेदप्रमाणकं, ननूक्तविधं ब्रह्म नाहं तत्राह । यत् वेदान्तप्रतिपाद्यं ब्रह्म 'विशोको विजिघत्सोऽपिपास' इत्यादिश्रुत्यभिहितं यद्ब्रह्मेत्यर्थः । तत्त्वमेव । नन्वहमपि कदाचिच्छोचामि नेत्याह । प्रशान्तमशनायापिपासाशोकमोहजरामृत्युरूपोर्मिषट्करहितमित्यर्थः । अतः, त्वा त्वामुक्तविधं भवन्तं नमामि ॥ २५ ॥ ननु कालकर्मस्वभावादीनामेव जगद्धेतुत्वं, न ममेत्यत आह ॥ काल इति ॥ कालः क्षोभहेतुः, देवं कालाद्यभिमानि देवता, कर्म जीवादृष्टं, जीवः कालाद्यधीनः क्षेत्रज्ञः, स्वभावः जडत्वाजडत्वपरिणामित्वादितत्तद्वस्तुस्वभावः, द्रव्यं पृथिव्यादिभूतपञ्चकं, क्षेत्रं पृथिव्याद्युत्पत्तिभूमिः प्रकृतिः, प्राणः पञ्चवृत्तिः प्राणः, आत्मा मतिः, विकारोऽवस्थाभेदः, तत् संघातः शरीरं, बीजरोहप्रवाहः बीजं कर्मरोहोऽङ्कुरस्तद्वत्प्रवाहः देहाद्बीजरूपं कर्म, ततोऽङ्कुररूपो देहस्ततः पुनरेवमिति प्रवाह इत्यर्थः । एषा एतत् सर्वमित्यर्थः । त्वन्माया त्वत्संकल्पज्ञानाधीनमित्यर्थः । तस्या निषेधोऽपोहो यस्मिंस्तं तन्निषेधं, त्वां प्रपद्ये भजे ॥ २६ ॥ ननूक्तविधः परेशोऽन्य एव यदुषु अन्यतमो देवकीतनयोऽहमन्य एवेत्यत आह ॥ नानाभावैरिति ॥ लीलयैव हेतुभूतया, उपपन्नैः स्वीकृतैः, अन्यथा त्वय्यकर्मवश्ये तेषामनुपपन्नत्वादिति भावः । नानाभावैस्त्वत्प्रकारभूतैर्मत्स्याद्यवतारैरित्यर्थः । देवान्, साधून्, लोकसेतून् धर्ममर्यादाः, क्वचित्तु धर्मसेतूनित्यपि पाठो दृश्यते । बिभर्षि पुष्णासि । हिंसया वर्त्तमानान्, अत्र हिंसेत्युपलक्षणं तेन मद्यमांसमैथुनायोग्यान्नाशनजलपानादिरूपाधर्मे वर्त्तमानानित्यर्थः । उन्मार्गान् उत्पथान्, क्वचित्तु 'हंस्युन्मार्गान् स्वेच्छया वर्त्तमानान्' इत्यपि पाठो दृश्यते, तत्पक्षे वामदक्षिणशब्दाभिहितशाक्तकौलकुण्डबौद्धादीन् स्वेच्छाप्रवृत्तानुन्मार्गानित्यर्थो बोध्यः । हंसि । तद्वत्, ते तव, एतत् जन्मापि, तवायमवतारोऽपीत्यर्थः । भूमेः, भारहाराय भारमपनेतुमित्यर्थः । अस्ति । वस्तुतो न त्वं कस्यापि पुत्र इति भावः ॥ २७ ॥ इत्थं तस्य शरण्यत्वमाविष्कृत्य स्वकीयामार्त्तिमावेदयति ॥ तप्त इति ॥ शान्तं च तदुग्रं च तेन, प्रथमतः शान्तवत् प्रतीयमानेनाप्यन्तत उग्रेणेत्यर्थः । अत एव, अत्युल्बणेन भीतिजनकेन, दुःसहेन सोढुमशक्येन, ते तव, तेजसा त्वत्तेजोपबृंहितेन, ज्वरेण, शीतज्वरेण, अहं तप्तः । ततः, प्रपन्नं मां पाहीति भावः । परसंतापकस्य युक्त एव ताप इत्यत आह तावदिति । यावत्, आशया रक्षकान्तरसंभावनाशया, अनुबद्धाः संयुताः सन्तः, ते तव, अङ्घ्रिमूलं नो सेवेरन्, तावत् एव, देहिनामाशायुक्तप्राणिनां, तापः । त्वत्सेवायां प्रवृत्तौ त्वनुचित इति भावः ॥ २८ ॥

### कृष्णप्रिया

ज्वरचतुष्टयी—ज्वर भगवान का यशोगान कर रहा है—हे नाथ ! अनन्तशक्ति आपको प्रणाम; ब्रह्मादि देवाधिदेवों के परमेश्वर, सर्व के आत्मा, सर्वस्वरूप केवल ब्रह्मस्वरूप ज्ञानस्वरूप भगवान् आपके श्रीचरणों में मेरा प्रणाम। विश्व की उत्पत्ति स्थिति एवं निरोध-लय के कारण नाथ ! आप को नमस्कार। श्रुति-निरूपित जो परमब्रह्म है वह भी आप हैं। आपके चरणों में नमस्कार ॥ २५ ॥ नाथ ! भगवन् काल-देव-कर्म-जीव-स्वभाव-द्रव्यपदार्थ-क्षेत्रशरीर-सूत्रात्मा-प्राणआत्मा

अहंकार-विकार एकादश इन्द्रियाँ-तत्सङ्घात-पञ्चमहाभूत-लिङ्गदेह-स्थूलदेह, स्थूलदेह से कर्म, कर्म से पुनः लिङ्गदेह, लिङ्गदेह से पुनः स्थूल यह सारी बीजाङ्कुर न्याय से देहादि की उत्पत्ति यह सारी आपकी ही माया-शक्ति है। और आप माया के निषेध की अन्तिम अवधि हैं। मैं आपके श्रीचरणों का प्रपन्न हूँ॥ २६॥ कृपानाथ! कृपापरवश! आप की दिव्य लीला से अनन्त लोक मङ्गल विग्रह धारण कर लेते हैं और इन विग्रहों से देव मनुष्य संत धर्म मर्यादा आदि दिव्य तत्वों का पालन पोषण संरक्षण करते हैं। पुनः जो उच्छृंखल उन्मार्गगामी दैत्य दुष्ट असुरों का संहार-नाश भी करते हैं। आपका यह श्रीकृष्णावतार पूर्णावतार है वह भूतल का भार-निवारण के लिये है॥ २७॥ हे नाथ! आपके शान्त-उग्र-और अतिशय भयानक तेज ज्वर से मैं अतिशय सन्तप्त हो रहा हूँ। हे कृपानाथ! देहधारी प्राणियों को तभी तक ताप रहता है जब तक वे जीव आशापाश में बद्ध रहे हैं और आप के श्रीचरणों का शरण नहीं स्वीकारते हैं॥ २८॥

**श्रीभगवानुवाच**

**त्रिशिरस्ते प्रसन्नोऽहं[1] व्येतु ते मज्ज्वराद् भयम्। यो नौ [2]स्मरेत संवादं तस्य त्वन्न भवेद् भयम्॥ २९॥**
**इत्युक्तोऽच्युतमानस्य गतो माहेश्वरो ज्वरः। बाणस्तु रथमारूढः प्रागाद्योत्स्यञ्जनार्दनम्॥ ३०॥**
**ततो बाहुसहस्रेण नानायुधधरो[4]ऽसुरः। मुमोच [3]परमक्रुद्धो बाणांश्चक्रायुधे [5]नृप॥ ३१॥**
**तस्यास्यतोऽस्त्राण्यसकृच्चक्रेण क्षुरनेमिना। चिच्छेद भगवान् बाहून् शाखा इव वनस्पतेः॥ ३२॥**

**कर्दमक्षमा**

अन्वयः—श्रीभगवान् उवाच—त्रिशिरः, ते, प्रसन्नः, अस्मि, मज्वरात्, ते, भयम्, वि, एतु, यः, नः, संवादम्, स्मरति, तस्य, त्वत्, न, भयं, भवेत्॥ २९॥ इति, उक्तः, माहेश्वरः, ज्वरः, अच्युतम्, आनम्य, गतः, रथम्, आरूढः, बाणः, तु, जनार्दनम्, योत्स्यन्, प्रागात्॥ ३०॥ नृप! ततः, परमक्रुद्धः, नानायुधधरः, असुरः, बाहुसहस्रेण, चक्रायुधे, बाणान्, मुमोच॥ ३१॥ अस्त्राणि, अस्यतः, तस्य, बाहून्, वनस्पतेः, शाखा, इव, भगवान्, क्षुरनेमिना, चक्रेण, चिच्छेद॥ ३२॥

**श्रीधरस्वामिविरचिता भावार्थदीपिका**

हे त्रिशिरः। व्येतु अपयातु। मदाज्ञापालकः सन्सुखं विचर। काऽसावाज्ञा तामाह। य इति। नौ आवयोरिमं संवादं यः स्मरेत्तस्य त्वत् त्वत्तो न भयं भवेत्। त्वया भयं नोत्पादनीयमित्यर्थः॥ २९-३३॥

**श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः**

इमं श्लोकचतुष्टयात्मकम् 'नमामि' इत्यारभ्य 'यावदाशानुबद्धाः' इत्यंतं संवादम्। इत्यर्थ इति—त्वया स त्यक्तव्य इति भावः। भयं न भवेदिति भगवतोक्तं न तु तं त्वं मा स्पृशेत्युक्तमत एतत्संवादश्रोतुरपि क्वचिज्ज्वरो यत्तिष्ठति ततस्तस्य भयं न भवतीति बोध्यम्। हरिवंशे त्वत्र श्लोकद्वयात्मको मन्त्रोऽपि ज्वरघ्न उक्तः। तथाहि—"त्रिपाद्भस्मप्रहरणस्त्रिशिरा नवलोचनः। स मे प्रीतः सुखं दद्यात्सर्वामयपतिर्ज्वरः। आद्यंतवंतः कवयः पुराणाः सूक्ष्मा बृहंतोप्यनुशासितारः। सर्वाञ्ज्वरान् घ्नंतु ममानिरुद्धप्रद्युम्नसंकर्षणवासुदेवाः इति॥ २९॥ प्रागात् युद्ध इति। योत्स्यन् योत्स्यमानः। जनान् दुष्टानर्दयति पीडयतीति निरुक्तेः स्वपीडकमित्यर्थः॥ ३०॥ ततो युद्धभूमावागमनानन्तरम्। चक्रायुधेऽपि बाणच्छेदकाबधरेऽपि बाणान्यतो मुमोचातो निर्बुद्धिरयमिति हसन् राजानं सम्बोधयति—नृपेति। नृपा एवंवृत्ता एवं भवन्ति यथा त्वया समाधिष्ठं जानताऽपि शमीककण्ठेऽहिर्निक्षिप्तस्तद्वदयमिति भावः॥३१॥ तस्य बाणस्य। वनस्पतेर्वृहद्वृक्षस्य। तदा बाणेन किमपि कर्तुं शक्तद्वयथामापेति दृष्टांतमाह—वनस्पतेरिति॥ ३२॥

**श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी**

एवमस्य सकामत्वादापाततस्तत्ताप एव शान्तो जातो नतु सर्वोपीति श्रीभगवद्वाक्येनैव दर्शयति—त्रिशिर इति। सम्वादमपि किम्पुनर्युद्धादिकं स्मरत्यपि किम्पुनः शृणुयात् कीर्त्तयेद्वा अन्यत्तैः तत्र मदाज्ञेत्यस्यादौ त्वमपीत्यधिकं वाच्यं यो नाविति करुणया तादृशलोकतापकं मुञ्चतापि लोककरुणयोक्तं यद्वा तस्यापि न भवेत् किम्पुनर्मत्प्रपन्नस्य तव मज्ज्वराद्भयमित्यर्थः। इति च तथैव॥ २९॥ अच्युतमिति। सर्वदोषक्षमादिनिजमाहात्म्यतश्च्युतिराहित्याभिप्रायेण तुशब्दस्तादृङ्महापराक्रमस्य ज्वरस्यापगमेपि बाणस्यागमनान्निर्बुद्धित्वं बोधयति रथं नन्दीश्वरसारथिकं माहेश्वरमेव यथोक्तं श्रीविष्णुपुराणे—

---

१. ऽस्मि-श्रीधर. वंशी. जीव. वीर. विश्व; ऽस्मि-प्रा. पा.। २. स्मरति-श्रीधर. वंशी. जीव. वीर. वि.। ३. युतो-प्रा. पा.। ४. परिघं-वीर। ५. नृपः-श्रीधर. टि.।

"नन्दीशसङ्गृहीताश्वमधिरूढो महारथम् । बाणस्तत्रागमद्योद्धुं कृष्णकार्ष्णिबलैः सह ॥" इति

योत्स्यन् योत्स्यमानः जनान् दुर्जनान् अर्द्दयतीति तथा तमिति स्वपीडनार्थमेवागत इति भावः ॥ ३० ॥ नानायुधधरोपि नृपः असुरसैन्यराजोपि परमक्रुद्धः सन् स्वयमेव दूरादादौ बाणान् मुमोच चक्रायुध इति तस्मिंस्तेषां वैफल्यं सूचयति यद्वा चक्रायुधेपि बाणान्मुमोच कुतः परमक्रुद्धः महाक्रोधेन विचारलोपादित्यर्थः । एवं तस्यातिनिर्बुद्धित्वेन हसन् सम्बोधयति नृपेति ॥ ३१ ॥ पश्चादस्त्राणि विविधान्यस्यतः सत इत्यस्त्रमोचनारम्भ एव बाहून् चिच्छेदेति ज्ञेयं यतो भगवान् सर्वशक्तियुक्तः क्षुरवत्तीक्ष्णतरा नेमयः प्रान्ता यस्य तेनेति छेदने शैघ्र्यमनायासादिकञ्च द्योतयति तथाच हरिवंशे—

"अलातचक्रवत्तूर्णं भ्राम्यच्चक्रं सदाभवत् । क्षिप्तन्तु वासुदेवेन बाणस्य रणमूर्द्धनि ॥
विष्णुचक्रं भ्रमत्याशु शैघ्र्याद्रूपं न दृश्यते । तस्य बाहुसहस्रस्य पर्य्यायेण पुनःपुनः ॥
बाणस्य छेदनं चक्रे तच्चक्रं रणमूर्द्धनि ॥ इति ॥ ३२ ॥

**श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी**

सम्वादमपि, किं पुनर्युद्धादिकम्, स्मरत्यपि किं पुनः श‍ृणुयात् कीर्तयेद्वा; अन्यत्तैर्व्याख्यातम् । यद्वा, तस्यापि न भवेत्, किं पुनर्मत्प्रपन्नस्य तव मज्ज्वराद्भयमित्यर्थः । किंवा न भवेन्न भविष्यत्येवेति किं तदर्थमाज्ञा कार्य्येति भावः ॥ २९ ॥ आनम्य दण्डवत् पातादिना सम्यङ् नत्वा, अच्युतमिति तादृशापराधिनं प्रत्यपि भयेन सद्यो वाचैव प्रपत्त्या अभयप्रदानेन—'सकृदेव प्रपन्नो यस्तवास्मीति च याचते । अभयं सर्वदा तस्मै ददाम्येतद्व्रतं मम ॥' इत्यादि-स्वप्रतिज्ञातस्तथा स्वल्पस्तुतिमात्रेण तत्रापि क्षणदैन्येनापि सर्वदोषक्षमादिनिजमाहात्म्यतश्च्युतिराहित्याभिप्रायेण । ननु तथापि लोकोपतापके तस्मिंस्तादृशोऽनुग्रहोऽनुचितः ? तत्राह—माहेश्वर इति, निजप्रेष्ठश्रीरुद्रभक्तत्वादित्यर्थः । अतः श्रीभगवदनुग्रहेण तस्याशेषदोषक्षयादधुनैव तदपि सिद्धमिति भावः । तु-शब्दस्तादृङ्महापराक्रमस्य ज्वरस्यापगमनेऽपि बाणस्यागमनान्निर्बुद्धित्वं बोधयति, रथं माहेश्वरमेव । श्रीनन्दीश्वरसारथिकम्, अतः प्रकर्षेणागादागतः, योत्स्यन् योत्स्यमानः, जनान् दुष्टानर्द्दयतीति तथा तमिति स्वपीडार्थमेवागतमिति भावः ॥ ३० ॥ नानायुधधरोऽपि परमक्रुद्धः सन् दूरादादौ बाणान् मुमोच । चक्रायुध इति तेषां तस्मिन् वैफल्यं सूचयति । यद्वा, चक्रायुधेऽपि बाणान्मुमोच । कुतः ? परमक्रुद्धो महाक्रोधेन विचारलोपादित्यर्थः । एवं तस्यात्यतिनिर्बुद्धित्वेन हसन् सम्बोधयति—नृपेति ॥ ३१ ॥ पश्चादस्त्राणि विविधान्यस्यतः सतोऽस्त्राणि बाहूंश्च चिच्छेद, यद्वा, अस्यत इति वर्त्तमाननिर्द्देशेनास्त्रमोचनात् प्रागेव बाहून् चिच्छेदेति ज्ञेयम्, यतो भगवान् सर्वशक्तियुक्तः । क्षुरवत्तीक्ष्णतरा नेमयः प्रान्ता यस्य तेनेति छेदने शैघ्र्यमनायासादिकरवञ्च द्योतयति; तथा च श्रीहरिवंशे ( विष्णु-प० १२६।१२८-१३० )—

'अलातचक्रवत्तूर्णं भ्राम्याञ्चक्रं तदाभवत् । क्षिप्तन्तु वासुदेवेन बाणस्य रणमूर्द्धनि ॥
विष्णुचक्रं भ्रमत्याशु शैघ्र्यादरूपं न दृश्यते । तस्य बाहुसहस्रस्य पर्य्यायेण पुनः पुनः ॥
बाणस्य छेदनं चक्रे तच्चक्रं रणमूर्द्धनि ॥' इति ।

तत्र च बाणः किञ्चित् प्रतिकर्त्तुमशक्तो वृक्षवत् स्तब्धतां प्राप्त इत्यादिकं दृष्टान्तेन बोधयति-शाखा इति ॥ ३२ ॥

**श्रीमद्वीरराघवाचार्यकृता भागवतचन्द्रचन्द्रिका**

इत्थं संस्तुतः शरण्यो भगवान् तमनुगृह्णन्नाह- त्रिशिर इति । हे त्रिशिरः ! ते तुभ्यम् अहं प्रसन्नः तव मज्ज्वराद्भयं व्येतु व्यपैतु यः पुमानावयोरिमं सम्वादं स्मरति तस्य त्वत् त्वत्तः भयं न भवेत् तं त्वं मा भीषयेत्यर्थः ॥ २९ ॥ इतीति । आनम्य प्रणम्य योत्स्यन् योद्धुं जनार्दनं कृष्णं प्रागादभ्यापतत् ॥ ३० ॥ तत इति । नानाविधान्यायुधानि धरतीति तथा सोऽसुरो बाणः क्रुद्धो हे नृप ! चक्रायुधे कृष्णे परिघं मुमोच प्रायुङ्क्त ॥ ३१ ॥ तस्येति । अस्यतः क्षिपतः प्रयुञ्जानस्येति यावत् तस्य बाणस्यास्त्राणि बाहूंश्च सकृद्युगपत् क्षुरस्येव नेमिर्यस्य चक्रेण सुदर्शनेन चिच्छेद वनस्पतेर्वृक्षस्य शाखा इव ॥ ३२ ॥

**श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी**

नौ तव मम च त्वत्तः सकाशात्तस्य भयं न भवेदित्येव भगवतोक्तं न तु तं त्वं मास्पृशेत्युक्तमत एतत् सम्वादश्रोतुरपि क्वचित् ज्वरो यत्तिष्ठति तद्भयानुत्पादक एवाकिञ्चित्कर एवेति ज्ञेयम् ॥ २९ ॥ योत्स्यन् योत्स्यमानः ॥३०-३१॥ तस्य बाणस्य अस्यतः क्षिपतः ॥ ३२ ॥

**गूढार्थदीपिनी**

व्येतु निवर्तताम् । नौ आवयोः संवादम् । त्वत् त्वत्तः ॥ २९ ॥ योत्स्यन् योद्धुम् ॥ ३० ॥ चक्रायुधे श्रीकृष्णे ॥ ३१ ॥ असकृत् अस्त्राणि अस्यतः क्षिपतः तस्य बाणस्य बाहून् चक्रेण चिच्छेदेत्यन्वयः । क्षुरनेमिना तीक्ष्णधारेण ॥ ३२ ॥

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः

व्येतु अपयातु नौ आवयोः सम्वादं यः स्मरति स्मरेत् तस्य त्वत् त्वत्तो भयं नो भवेत् त्वया भयं मदाज्ञया नोत्पादनीयमित्यर्थः ॥ २९-३३ ॥

### श्रीसत्यधर्मकृता श्रीभागवतटिप्पणी

त्रिशिरः हे ज्वरा मज्ज्वरान्मम ज्वरात् । मथ्नातीति मम चासौ ज्वरश्च तस्मादित्यपि । ते त्वदुपरि प्रसन्नोऽस्मि ते भयं व्येतु । यो नौ तव च मम च संवादं स्मरति तस्य त्वत्त्वत्तो भयं न भवेत् । हरिवंशे च । श्रीभगवानुवाच । महामृधे तव मम च द्वयोरिमं पराक्रमं भुजबलकेवलाः स्त्रियः । प्रणम्य मामेकमनाः पठेत्तु यः । स वै भवेज्ज्वरविगतज्वरो नर इति । ज्वरविभजनं तथा तत्समसमरादिकं च तत्रोक्तमनुसन्धेयम् । तत्र बाणस्थस्वत्राणकृदिति बहुमत इति कृष्णवर्त्मसञ्ज्ञरोक्तिरत्र तु तदुत्तरग्रन्थत्वेनाग्निर्वै देवानामवस इत्यादेस्तज्जयो न यशोविशेषको यशोदासुतस्येत्यनुक्तिरिति ज्ञेयम् ॥ २९ ॥ रथं पुनरन्यम् ॥ ३० ॥ बाहुसहस्रेण नानायुधानां धरः ॥ ३१ ॥ असकृदस्त्राण्यस्यतः क्षिपतः क्षुरनेमिना चक्रेण वनस्पतेः शाखा इव बाहूंश्चिच्छेद । मारणमकृत्वा कृन्त्वा भुजांस्तत्यागे निमित्तं हरिवंशोक्तमनुस्मर्तव्यम् । तच्च । भूयस्त्वमसितापाङ्गि विबला-वस्थिता रणे । बाणे संरक्षणपरा हन्मि बाणं न संशयः । एवमुक्ता तु कृष्णेन भूयो देव्यब्रवीदिदम् । प्रयच्छ ह्यभयं बाणे जीवपुत्री त्वमेव च । मया दत्तवरो ह्येष भूयश्च परिरक्ष्यते । न मे मिथ्या समुद्योगं कर्तुमर्हसि माधव । एवमुक्ते तु वचने कृष्णः परपुरञ्जयः । क्रुद्धः प्रभाषते वाक्यं शृणु सत्यं तु भामिनि । बाणो बाहुसहस्रेण नदते दर्पमाश्रितः । एतेषां छेदनं त्वद्य कर्तव्यं नात्र संशयः । द्विबाहुना च बाणेन जीवपुत्री भविष्यसि । एवमुक्ते तु वचने कृष्णेनाक्लिष्टकर्मणा । प्रोवाच देवी बाणोऽयं देव एवं भवेदितीति ॥ ३२ ॥

### श्रीमद्वल्लभाचार्यकृता सुबोधिनी

एवं विज्ञापितो भगवान् गुह्यकर्ता मृत्योरयं ज्येष्ठः भ्रातेति तं स्थापयितुं नियमबन्धेन निरूपयति **त्रिशिरस्ते प्रसन्नोऽहमिति** । त्रीणि शिरांसि यस्येति । वातपित्तश्लेष्माणः धातुवैषम्यात् । न कर्माणि । कालकर्मस्वभावा वा शिरांसि भवन्ति । अतः सम्बोधनेन तस्याक्षयत्वं निरूपितम् । **अहं प्रसन्न** इति । तव सर्वमेव कार्यं सेत्स्यतीत्युक्तम् । यदर्थं प्रार्थितः, तदाह **व्येतु ते मे ज्वराद्भयमिति** । परं यथा मदीयात्तव न भयम्, तथा त्वत्तोऽपि न मदीयानां भयमित्याशयेनाह **यो नौ स्मरेत संवादमिति** । नौ आवयोः स्तोत्रप्रसादरूपः संवादः । तस्य त्वत् त्वत्तः भयं न भवेदिति भगवदाज्ञा ॥ २९ ॥ एवं कृतार्थः सन् भगवदाज्ञां प्राप्य व्याजेनात्र कस्यापि भयं न कर्तव्यमिति ज्ञापितः स्वस्थानमेव जगाम, मृत्योः समीपम् । **इत्युक्त** इति । अच्युतत्वाद्वाक्यमपि तथा । ततो माहेश्वरो ज्वरो गतः । तस्मिन् गते महादेवाल्लब्धवरः दैवं बलमाश्रित्य युद्धार्थमागत इत्याह **बाणस्त्विति** । तुशब्दः पूर्वागमनाद्विशेषमाह । बाणोऽपि बाणवज्जनार्दन इति जनार्दनं योद्धुं योधयितुम् ॥ ३० ॥ ततः प्रत्येकं बाहुषु नानाशस्त्रा(स्त्रा)णि स्थापयित्वा युयुध इत्याह **ततो बाहुसहस्रेणेति** । नानायुधानि बिभर्तीति । ततश्चक्रायुधं प्रति नानायुधानि मुमोच । ननु भगवता पूर्वमस्य प्राणरक्षा कृतेति कथं शस्त्राणि मुमोच, तत्राह **परमक्रुद्ध** इति । मुमोच, परं वस्तुतस्त्वक्रुद्धः । अन्यथा परमत्वं क्रोधविशेषणं न सम्भवति । समासे वा असामर्थ्यं स्यात् । **चक्रायुधमित्यनेन** चक्रेण सर्वनिराकरणं द्योतितम् । एकतः सहस्रमायुधानि, एकतः सुदर्शनमिति ॥३१॥ समतां प्राप्तां परिहरति **तस्यास्यत** इति । **अस्त्राण्यस्यतः क्षिपतः** । लौकिकप्रकारार्थं क्षुरनेमिना चक्रेण चिच्छेद दशशतानि बाहून् । मध्ये शिरश्छेदनं प्राप्तं निराकरोति **शाखा इवेति** । **वनस्पतेः** । तेन महानिति न शिरश्छिन्नम्, किन्तु तस्य प्रसरणनिराकरणार्थं शाखा इव बाहूनेव चिच्छेद । बाहव एव वरप्राप्ता इति ॥ ३२ ॥

### श्रीविट्ठलरायात्मजश्रीवल्लभकृतलेखः

**त्रिशिरस्त** इत्यत्र । **धातुवैषम्या**दिति । धातुवैषम्यजनितत्वाज्ज्वरस्य वातादय एव शिरांसि, ननु सात्त्विकादि-त्रिविधकर्माणि, कालादयो वेतिपक्ष इत्यर्थः । **अत** इति । अतः परमित्यर्थः । **बाणस्त्वित्यत्र** । **बाणोपीति** । बाणासुरोपि बाणेन शरेण यथादृष्टद्वारैव कार्यं क्रियते, तथा जनार्दनोपि भगवान् दृष्टद्वारेणैव कार्यं करोतीति ज्ञात्वा अहं तु देवबलवान् जात इति मत्वा तादृशं योद्धुं प्रायादित्यर्थः । **तत** इत्यत्र । **न संभवतीति** । पदार्थः पदार्थेनान्वेतीति नियमः । क्रोधस्तु पदार्थैकदेश इति भावः । अस्य नियमस्य प्रायिकत्वेन समाधाने दूषणान्तरमाहुः **समासे वेति** । कर्मधारये कर्तव्ये परमपदस्य क्रुद्धविशेषणत्वा-भावेन विशेषणविशेष्ययोः परस्परानन्वयरूपमसामर्थ्यं स्यात्, तथा च समास एव न भवेत्, 'समर्थः पदविधि'रित्यनुशासनादिति भावः ।

### श्रीसुबोधिनीसारः

श्रीकृष्णोक्तिः। हे त्रिशिरः ते तवोपरि प्रसन्नोस्मि मम ज्वरात्तो तव भयं व्येतु नश्यतु तथाप्येवं कार्यमिति प्रशास्ति नो आवयोः संवादं यः स्मरति तस्य पुंसः त्वत्वत्तो भयं न भवेत् एतेन इह "शैवो ज्वरोरिष्टहेतुर्निवर्तत उपायतः। वैष्णवो मृतिहेतुस्तु न निवर्तति कर्हिचित्" इति सूचितम् ॥ २९ ॥ इत्येवमुक्तोऽच्युतं श्रीकृष्णं प्रणम्य माहेश्वरो ज्वरो गतः बाणस्तु योत्स्यन् योद्धुं रथमारूढो जनार्दनं हरिं प्रायात् ॥ ३० ॥ ततोनन्तरं बाहूनां सहस्रेण नानायुधधरोऽसुरोऽतिक्रुद्धः चक्रायुधे चक्रायुधदमुद्दिश्य बाणान् मुमोच चिक्षेप हे नृप ॥ ३१ ॥ असकृन्मुहुरस्त्राणि अस्यतः क्षिपतस्तस्य तीक्ष्णधारेण चक्रेण भगवान् बाहून् चिच्छेद वनस्पतेर्महावृक्षस्य शाखा इव ॥ ३२ ॥

### गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

एवं संस्तुतः शरण्यो भगवान् तमनुगृह्णन्नाह—त्रिशिर इति। भयंकरत्वं सूचयन् सम्बोधयति—हे त्रिशिरः! ते तुभ्यमहं प्रसन्नः, अतः मज्ज्वरात्तव भयं व्येतु अपगच्छतु। एवमभयं कृत्वा आज्ञापयति-यः पुमानावयोः संवादं स्तुतिप्रसादरूपं स्मरति स्मरेत्तस्य त्वत्वत्तो भयं न भवेत् त्वया भयं नोत्पादनीयमित्यर्थः ॥ १९ ॥ इत्येवं भगवतोक्तो माहेश्वरो ज्वरस्तमच्युतमानम्य नमस्कृत्य ततो गतः। बाणोऽपि रथारूढः सन् योत्स्यन् योद्धुं जनार्दनं कृष्णं प्रति प्रागात् ॥ ३० ॥ ततो हे नृप! बाहुसहस्रेण नानाविधानि आयुधानि धरतीति तथा स बाणः परमक्रुद्धः सन् चक्रायुधे कृष्णे बाणान् मुमोच प्रायुङ्क्त ॥ ३१ ॥ पुनः पुनः अस्त्राणि अस्यतः प्रयुञ्जानस्य तस्य बाणस्य बाहून् चक्रेण भगवान् चिच्छेद। तत्र दृष्टान्तमाह-वनस्पतेर्वृक्षस्य शाखा इवेति ॥ ३२ ॥

### अन्वितार्थप्रकाशिका

त्रिशिर इति। हे त्रिशिरः! ते तुभ्यमहं प्रसन्नः अस्मि। अतः मज्ज्वरात्तव भयं व्येतु अपगच्छतु। यः पुमानावयोः संवादं स्तुतिप्रसादरूपं स्मरति स्मरेदपि किं पुनः श्रृणुयात्कीर्त्तयेद्वा तस्य त्वत्तो भयं न भवेत्। त्वया भयं नोत्पादनीयमित्यर्थः ॥ २९ ॥ इतीति। इत्येवं भगवतोक्तो माहेश्वरो ज्वरस्तमच्युतमानम्य नमस्कृत्य ततो गतः। बाणोऽपि तथा रथं नन्दीश्वरसारथिकं माहेश्वरमिति विष्णुपुराणे। आरूढः सन् योत्स्यन् योद्धुम्। शता आर्षः। जनार्दनं कृष्णं प्रति प्रागात् ॥३०॥ तत इति। ततो हे नृप! बाहुसहस्रेण नानाविधानि आयुधानि धरतीति तथाभूतोऽपि सोऽसुरो बाणः परमक्रुद्धः संश्चक्रायुधे कृष्णे बाणान्मुमोच प्रायुङ्क्त। चक्रायुध इति प्रथमान्तपाठे चक्रायुधोऽपि च बाणः ॥ ३१ ॥ तस्येति। बाणमोचनानन्तरम् असकृत्पुनः पुनः अस्त्राणि अस्यतः प्रयुञ्जानस्य तस्य बाणस्य बाहून् वनस्पतेः वृक्षस्य शाखा इव चक्रेण भगवान् चिच्छेद ॥३२॥

### श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्

हे त्रिशिरः व्येतु गच्छतु ॥ २९ ॥ योत्स्यन् युधं करिष्यन् ॥ ३० ॥ चक्रायुधे श्रीकृष्णे ॥ ३१ ॥ असकृत् वारंवारं। अस्यतः। क्षिपतः। तस्य बाणस्य ॥ ३२-३३ ॥

### भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

इत्थं संस्तुतः शरण्यो भगवांस्तमनुगृह्णन्नाह। त्रिशिर इति। हे त्रिशिरः, ते तुभ्यं, अहं प्रसन्नः अस्मि। मज्ज्वरात् ते तव, भयं व्येत्वपयातु। यः पुमान्, नावावयोः, इमं संवादं, स्मरति, तस्य त्वत्त्वत्तः, भयं न भवेत्। तं त्वं मा भीषयेरित्यर्थः ॥ २९ ॥ इतीति। इतोत्थं, उक्तो भगवताऽभिहितः, माहेश्वरो महेश्वरसंबन्धी, ज्वरः, अच्युतं आनम्य, गतः। ततः, बाणस्तु बाणासुरोऽपि, रथं आरूढः, योत्स्यन् युद्धं कर्त्तुमित्यर्थः। जनार्द्दनं श्रीकृष्णं, प्रागात्। अभ्यपतत् ॥ ३० ॥ तत इति। हे नृप, ततः बाहुसहस्रेण, नानायुधधरः, असुरः बाणः, क्रुद्धः सन्, चक्रायुधे श्रीकृष्णे, परिघं मुमोच ॥ ३१ ॥ तस्येति। भगवान् अस्त्राणि, असकृत् अस्यतः क्षिपतः, तस्य बाणस्य, क्षुरनेमिना चक्रेण, वनस्पतेर्वृक्षस्य, शाखाः इव, बाहून् चिच्छेदः ॥ ३२ ॥

### कृष्णप्रिया

भगवान् श्रीकृष्ण ने कहा—हे त्रिशिर! त्रिपाद! मैं तुम पर प्रसन्न हूँ। भैया! मेरे इस ज्वर से निर्भय हो जाना। विश्व में कोई भी व्यक्ति हम दोनों के संवाद का स्मरण करेगा उसको तुम दोनों से कभी भय नहीं होगा ॥ २९ ॥ भगवान् श्रीकृष्ण के अभयप्रद वचनों का श्रवण कर माहेश्वर ज्वर प्रभु चरणों में प्रणाम करके प्रस्थान कर दिया। इतने में रथारूढ़ होकर सज्जवन कर बाणासुर भगवान् द्वारिकानाथ के साथ संग्राम खेलने के लिये आ पहुँचा ॥ ३० ॥ नरेश! बाणासुर अपने

हजार हाथों में अनेक प्रकार के शस्त्रास्त्रों को सज धज कर आ रहा था। क्रोधाविष्ट वाणासुर सुदर्शन चक्रधारी भगवान् द्वारिकेश पर वाण वर्षा करता था ॥ ३१ ॥ भगवान ने देखा कि वाणासुर हजारों हाथों से विविध प्रकार की वाण वर्षा कर रहा है तब गोविन्द के छूरे के समान तीक्ष्ण धारवाले सुदर्शन चक्र वाणासुर के हाथों को काटने लगे तब ऐसा लगता था कि कोई व्यक्ति तरुवर की कोमल डालियाँ काट रहा है ॥ ३२ ॥

**बाहुषु च्छिद्यमानेषु बाणस्य भगवान् भवः। भक्तानुकम्प्युपव्रज्य चक्रायुधमभाषत ॥ ३३ ॥**

**श्रीरुद्र उवाच**

**त्वं हि ब्रह्म परं ज्योतिर्गूढं ब्रह्मणि वाङ्मये। यं पश्यन्त्यमलात्मान आकाशमिव केवलम् ॥ ३४ ॥**

**नाभिर्नभोऽग्निर्मुखमम्बु रेतो द्यौः शीर्षमाशाः श्रुतिरङ्घ्रिरुर्वी।**

**चन्द्रो मनो यस्य दृगर्क आत्मा अहं समुद्रो जठरं भुजेन्द्रः ॥ ३५ ॥**

**रोमाणि [1]वृक्षौषधयोऽम्बुवाहाः केशा विरञ्च्यो [2]धिषणा विसर्गः।**

**प्रजापतिर्हृदयं यस्य धर्मः स वै भवान् पुरुषो लोककल्पः ॥ ३६ ॥**

**कर्दमक्षमा**

अन्वयः—बाणस्य, बाहुषु, छिद्यमानेषु, भक्तानुकम्पी, भगवान्, भवः, चक्रायुधम्, उपव्रज्य, अभाषत ॥ ३३ ॥ श्री रुद्र उवाच—त्वम्, हि, वाङ्मये, ब्रह्मणि, गूढं, परम्, ब्रह्म, ज्योतिः, यम्, हि, केवलं, आकाशम्, इव, अमलात्मानः, पश्यन्ति ॥ ३४ ॥ यस्य, नभः, यस्य, नाभिः, अग्निः, मुखम्, अम्बु, रेतः, द्यौः शीर्षम्, आशाः, श्रुतिः, उर्वी, अङ्घ्रिः, चन्द्रः, मनः, अर्कः, दृग्, अहम्, शिवः, आत्मा, अहंकारः, समुद्रः, जठरम्, इन्द्रः, भुजा ॥ ३५ ॥ वृक्षौषधयः, रोमाणि, अम्बुवाहाः, केशाः, विरञ्च्यः, धिषणा, विसर्गः, प्रजापतिः, धर्मः, यस्य, हृदयम्, सः, वै, भवान्, लोककल्पः, पुरुषः ॥ ३६ ॥

**श्रीधरस्वामिविरचिता भावार्थदीपिका**

भक्तरक्षणार्थं श्रीरुद्रो भगवंतं स्तौति। त्वं हीति। अयमर्थः। त्वामज्ञात्वाऽयं युध्यत इति न चित्रम्। यतस्त्वं वाङ्मये ब्रह्मण्यपि गूढं ब्रह्म अभिधाऽविषयत्वात्। कुतः। परं ज्योतिः ज्योतिषामपि प्रकाशकत्वादविषय इत्यर्थः। कथं तर्हि प्रतीतिरत आह। यमिति। अमलात्मनां स्वतः प्रकाशस इत्यर्थः॥ ३४ ॥ आस्तां तावन्निर्गुणस्य तव ज्ञानं लीलयाऽधिष्ठितस्त्वया यो विराडिग्रहः सोऽपि न ज्ञायते उदुंबरफलांतर्वर्तिमशकैरिवोदुंबरफलमित्याशयेन विराड्रूपेण स्तौति द्वाभ्याम्। नाभिरिति। यस्य नभआदयो नाभ्याद्यवयवाः स भवान् लोककल्पः पुरुष इत्युत्तरेणान्वयः। नभो यस्य नाभिः। अग्निर्मुखम्। अंबु रेतः। द्यौः शीर्षम्। आशा दिशः श्रुतिः श्रवणेंद्रियम्। उर्वी अंघ्रिः। चन्द्रो मनः। अर्को दृक्। अहं शिव आत्मा अहंकारः। समुद्रो जठरम्। इंद्रो भुजा बाहुः। इंद्रादयो लोकपाला बाहव इत्यर्थः॥ ३५ ॥ ओषधयो रोमाणि। यच्छन्दावृत्तिः स्पष्टार्था। अंबुवाहाः केशाः। विरिंचो धिषणा बुद्धिः। प्रजापतिर्विसर्गो मेढ्रम्। धर्मो हृदयम्। लोकैः कल्प्यतेऽवकल्प्यत इति लोककल्पः॥ ३६ ॥

**श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः**

ननु यदैव येनायुध्यत तदैव तमुपव्रज्य तुष्टावेति भवस्य लज्जापि नाभूत्तत्राह—भगवान् सर्वज्ञः। स्वस्य परस्य ब्रह्मादेरपि तन्मायामोहितत्वं न चित्रमिति जानात्येवातस्तस्मिन्स्वप्रभौ स्वयं भगवति का लज्जेति भावः। भवो रुद्रः॥ ३३ ॥ युद्धप्रवृत्तिमाह—अयमर्थ इति। अयं बाणः। वाङ्मये वेदे। अभिधा कथनं तदगोचरत्वात्। कथनागोचरत्वे हेतुमाशंकते—कुत इति। इत्यर्थ इति—"येनेद्धः सूर्यस्तपति" इत्यादिश्रुतेरिति भावः। अविषयप्रतीतिप्रकारं शंकते—कथमिति। इत्यर्थ इति—'दृश्यते त्वग्रया बुद्ध्या' इति श्रुतेरिति भावः। त्वं परं ब्रह्मैव ज्योतिरप्राकृतज्योतिस्स्वरूपम् "तत्परं परमं ब्रह्म सर्वं विभजते जगत्। ममैव तद्धनं तेजो ज्ञातुमर्हसि भारत॥" इति हरिवंशेऽर्जुनं प्रति भगवदुक्तेः। नन्वेवं जानन् कथं मया युद्धमकरोस्तत्राह—वेदेपि गूढं ब्रह्म साक्षादेव त्वं कथं ज्ञेयः स्या इति भावः। तर्ह्यहमज्ञेय एव तत्राह—यं मायामालिन्यरहिता एव पश्यंति अहं तमोमयः कथं पश्येयमिति भावः। मायाश्रयत्वेपि तव न तल्लेप इत्याह—आकाशमिवेति॥ ३४ ॥ त्वं साक्षाद्ब्रह्मैव

१. यस्यो—श्रीधर. वंशी. जीव. वीर. विश्व. । २. रिञ्चो—श्रीधर. वंशी. जीव. वीर. विश्व. ।

जगदिदमस्मदाद्यात्मकं तव विभूतय एवेत्याह—नाभिरिति। यस्य तव नभोंतरिक्षम्, द्यौः स्वर्गः, उर्वी भूमिः। इत्यर्थ इति—'इन्द्रादयो बाहव आहुरुस्राः' इत्युक्तेरिति ज्ञेयम्॥ ३५॥ ओषधय उद्भिज्जम् 'रोमाण्युद्भिज्जजातीनि' इत्युक्तेः। विसृज्यते रेतःसेचनद्वारोत्पाद्यते देहोऽनेनेति विसर्गः ''बिंदुद्वये विसर्गोथ रादेशे सर्गशिश्नयोः'' इति निरुक्तिः। लोकानकल्पयति स्वनाभ्यादिभिश्चिन्मयैर्नभोस्थ्यादीन्प्राकृतान् चयतीत्यर्थः॥ ३६॥

### श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी

भगवान् महाप्रभावोऽपीति सर्वज्ञ इति वा चक्रायुधमुपव्रज्य शरणागतत्वेनाश्रित्य ननु तथापि महापराधिनं तमुपेक्षितुमेवासावर्हति तत्राह भक्तमनुकम्पितुं शीलमस्येति तथा सः अयं भावः स्वयं भगवन्महिमव्यक्त्यर्थमेव युद्धादिकं कृतवानिति सर्वज्ञे तस्मिन् स्वापराधभञ्जनार्थं यत्नमकरोत् किन्तु निजभक्तस्य तादृशत्वदूरीकरणार्थमेव पूर्वं प्रवृत्तत्वात्तदर्थमेवाधुनाप्युद्यम उचित इति चक्रायुधमिति बाहुवर्गच्छेदनानन्तरं चक्रेणाव्यर्थेन बाणस्य वधशङ्कयेति भावः। अस्तौदिति वक्तव्ये अभाषतेति स्वरूपमात्रवर्णनस्याप्यशक्यत्वेन स्तुतावप्यशक्तेः अतस्तस्य जृम्भापि प्रागेव गतेत्यागतम्॥ ३३॥ त्वं हि त्वमेव परं परमतत्त्वं ननु परमतत्त्वं नाम कथं परिच्छिन्नं दृश्यमानं च एतत् स्यात्तत्राह-ब्रह्म यतोऽन्यद्वृहन्नास्ति तद्रूपं तथा ज्योतिः सर्वप्रकाशकं स्वप्रकाशश्च नन्वत्र किम्प्रमाणं तत्राह वेदे गूढं रहस्यत्वेन क्वचिदेव तथैव दर्शितं तथाच गोपालतापन्यां। ''तेहोचुरेतस्य गोविन्दस्याखिलाधारिणो ब्रहोतिचेतनश्चेतनानामिति तं ह देवमात्मवृत्तिप्रकाशम्'' इति च अत एवोक्तं ''गूढं परं ब्रह्म मनुष्यलिङ्गम्'' इति ननु कथं तर्हि कश्चिदशुद्ध इव प्रतीयते तत्राह यमिति यं त्वां शुद्धात्मानं केवलं शुद्धं स्वरूपशक्त्यैकविलासिनं पश्यन्ति यथावदनुभवन्ति किमिव आकाशमिव यथान्यधर्मैराकाशं न लिप्यते तथात्वमित्येतदर्शे तत्तुल्यमित्यर्थः॥३४॥ नाभिरिति युग्मकम्। लोकैश्चतुर्दशभिर्भुवनैः कल्पते कल्पनया उपास्यत्वेन सम्पाद्यते यः स लोककल्पः यद्वा तत्तया सम्पद्यते यः पुरुषो विराड्रूपः स भवान् भवदधिष्ठानमित्यर्थः॥ ३५-३६॥

### श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी

भगवान् परमैश्वर्य्ययुक्तोऽपि, चक्रायुधमुपव्रज्य शरणागतत्वेनाश्रित्य। ननु तथापि महापराधिनं तमुपेक्षितुमेवासावर्हति ? तत्राह—भक्तमनुकम्पितुं शीलमस्येति तथा सः। चक्रायुधमिति बाहुवर्गच्छेदनानन्तरं चक्रेणाव्यर्थेन बाणस्य वधशंकयेति भावः। अस्तौदिति वक्तव्ये अभाषतेति तत्त्वज्ञेन तेन स्वरूपमात्रवर्णनात्, अतस्तस्य जृम्भापि प्रागेव गतेति ज्ञेयम्॥ ३३॥ अमलस्त्वद्भक्त्या विशुद्धाः, किंवा अमले सर्व्वदोषनिवर्त्तके त्वयि आत्मा चित्तं येषां ते, केवलमेकमपि आकाशमिव बहुधा व्यापकं पश्यन्ति। अन्यत्तैर्व्याख्यातम्। यद्वा, त्वमेव परमेश्वरो वयन्तु तवांशांशाः, अतस्त्वत्तो निजपराजयान्न लज्जे, अनुग्रहश्च मन्य इत्याशयेनादौ परमेश्वरत्वं वर्णयति—त्वमिति। हि एव, परमित्यस्योभयतोऽप्यनुषंगः। परं ब्रह्म त्वमेव, न तु मिथ्याभिमानिनो वयम्। परब्रह्मत्वे हेतुः—परं ज्योतिरिति, ब्रह्मणोऽपि प्रकाशकत्वात्, तच्च ( वृ० २।१।२० ) 'यथाग्नेः क्षुद्रा विस्फुलिंगा व्युच्चरन्त्येवास्मादात्मनः सर्व्वं एवात्मानो व्युच्चवन्ति' इति श्रुत्या जीवानां तत्त्वतः परमेश्वरादेव प्रकाशप्रसिद्धेः। अतस्तद्भक्तवरा एव तत्त्वतस्त्वां पश्यन्ति, न तु वयमित्याह—गूढमपि, यं त्वां केवलं निर्म्मलमाकाशमिव सुश्यामकान्तिसुन्दरं पश्यन्ति, वयन्तु परमेश्वरत्वेनैव पश्यामः, न च सौन्दर्य्यमयत्वेन, अस्माकं भक्तिविशेषाभावेन तदेकपरत्वाभावात्॥ ३४॥ आत्मनोऽन्येषां कार्य्य-कारणानां तदधिष्ठितविराड् विग्रहावयवत्वेन तदंशांशत्वं प्रतिपादयति—नाभिरिति द्वाभ्याम्। लोककल्पः कारणकार्य्यात्मकप्रपञ्चरूपः पुरुषो वैराजेन सहाभेदात्, वै प्रसिद्धौ, नाभ्यादीनाञ्च कोऽपि क्रमो नापेक्षितः, अत्यन्तोच्चावचस्य प्रपञ्चस्य तदवयवत्वमात्रापेक्षया तत्र तात्पर्य्याभावात्। अन्यत्तैर्व्याख्यातम्। तत्र लोकैः कल्पतेऽवकल्पत इति चतुर्द्दशभुवनैः कार्य्य-कारणात्मकैः संपद्यत इत्यर्थः। यद्वा, कल्पत इति सयत्वे लेख्य-लेखकभ्रमान्निर्यत्वम्। अथवा वै एव, स चतुर्द्दशभुवनात्मकः पुरुषः भवानेवाधिष्ठानत्वेनाभेदात्, अन्यत् समानम्॥ ३५-३६॥

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम्

वाङ्मये ब्रह्मणि उपनिषदि आकाशमिव केवलं निर्दोषम्॥ ३४॥ अहमात्मा अन्तःकरणम् अहङ्काररूपम् ''अहङ्कारोऽध्यात्मरुद्रस्तत्राधिदैवतम्'' इति श्रुतेः। चन्द्रो मन इतिवत् कार्यकारणभावेन सामानाधिकरण्यं ''चन्द्रमा मनसो जातः'' इति श्रुतेः एवं भगवत्मनःप्रसूतश्चन्द्रो देहिनां मनसोभिमानी। एवं भगवदीयाहङ्कारप्रसूतो रुद्रो भवत्यहङ्काराभिमानीदेवता॥ ३५-३७॥

### श्रीमद्वीरराघवाचार्यकृता भागवतचन्द्रचन्द्रिका

बाहुष्विति। छिद्यमानेषु सत्सु भगवान् भवो रुद्रः भक्तानुकम्पी हेतुगर्भमिदं तत्त्वादभाषत॥ ३३॥ भाषणमेवाह—त्वं हीत्यादिभिर्द्वादशभिः। केवलं वेदान्तैकवेद्यं योगपरिशुद्धमनोग्राह्यं त्वत्स्वरूपस्वभावादिकं कथमयं मूर्खो जानीयादित्यभि-

प्रयन् स्तौति—त्वं हीति। वाङ्मये ब्रह्माणि वेदे उपनिषदीति यावत् गूढं यत्परं ब्रह्म तत्त्वं किं तद्ब्रह्मस्वरूपमत आह—ज्योतिरिति। स्वप्रकाशं ज्ञानस्वरूपमित्यर्थः। अमलात्मानः योगपरिशुद्धान्तःकरणाः यं पश्यन्ति स त्वमिति सम्बन्धः अथ शरण्यत्वोपयुक्तकल्याणगुणान् विवक्षुस्तावद्दृष्टान्तमुखेन निर्दोषत्वमाह—आकाशमिव केवलं निरस्तानिखिलदोषम्॥ ३४॥ न हि शरीरमात्मनोऽपि प्रियमतस्त्वच्छरीरभूतकृत्स्नजगदन्तर्गतः अयं मूर्खोऽपि तवानुकम्प्य एवेत्यभिप्रयन् विराड्रूपत्वेन स्तौति–नाभिरिति द्वाभ्याम्। नभोऽग्न्यम्बुद्युदिक्पृथिव्यो यथाक्रमं तव नाभिमुखरेतःशिरःश्रोत्रपादाः चन्द्रो मन इति कार्य्यकारणभावेन सामानाधिकरण्यं "चन्द्रमा मनसो जातः" इति श्रुतेः। भगवन्मानसात्प्रसूतस्य चन्द्रस्य सर्वदेहिमनोभिमानदेवतात्वाच्च एवं दृगर्क इत्यपि "चक्षोः सूर्योऽजायत" इति श्रुतेः दृगभिमानिदेवतात्वाच्च यस्य तवेति सर्वत्र योज्यम् अहं रुद्रः आत्मा अन्तःकरणभेदोऽहङ्कारः अत्रापि पूर्ववदेव सामानाधिकरण्यं द्रष्टव्यं जठरं कुक्षिः भुजात्मक इन्द्रः इन्द्रादयस्तव भुजा इत्यर्थः। यच्छब्दानां स वै भवानित्यनेन सम्बन्धः॥ ३५॥ रोमाणीति। ओषधयो यस्य रोमाणि अम्बुवाहा मेघाः केशाः विरिञ्चो धिषणा बुद्धिः प्रजापतिर्विसर्गो मेढ्रं धर्मो हृदयं स वै भवान् इत्थं लोकैः कल्प्यते अवयवत्वेनेति लोककल्पः॥ ३६॥

**श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः**

त्वं हि त्वमेव परं परमतत्त्वं ननु परमतत्त्वं नाम कथं परिच्छिन्नं दृश्यमानं च स्यात् तत्राह ब्रह्म सर्वतो बृहत् तथा ज्योतिः स्वप्रकाशमन्यप्रकाशकञ्च नन्वत्र किं प्रमाणं तत्राह वेदे गूढं रहस्यत्वात् क्वचिदेव तथैव दर्शितं यथा तापन्यां "ते होचुरेतस्य गोविन्दस्याखिलाधारिणो ब्रूहीति चेतनश्चेतनानामिति तं ह देवमात्मवृत्तिप्रकाशम्" इति च अत एवोक्तं "गूढं परं ब्रह्म मनुष्यलिङ्गम्' इति कथं तार्किकैश्चिदशुद्ध इव प्रतीयते तत्राह यमिति केवलं शुद्धं शुद्धत्वे दृष्टान्तः आकाशमिवेति॥ ३४-३६॥

**श्रीमज्जीवगोस्वामिकृतः बृहत्क्रमसन्दर्भः**

त्वं हीत्यादि। त्वं हि परं ब्रह्म मूर्तिमद्ब्रह्मेत्यर्थः। ज्योतिः प्रकाशस्वरूपम्। ननु वेदो मां मूर्त्तं ब्रह्मेति न वदति इत्याशङ्क्याह—वाङ्मये ब्रह्मणि वेदे गूढम्, प्रचरद्रूपवेदगम्यो न भवसि किन्तु आनुमानिकवेदबोधितं त्वा त्वाममलात्मानः पश्यन्ति जानन्ति। किमिव? केवलमाकाशमिव, आकाशो यथाऽऽलिप्तस्तथा। तेन युद्धादि केवलं ते लीलेव। अत्र यः क्रोधादिस्तेन त्वं लिप्तो न भवसीति भावः॥ ३४॥ विराड्रूपं तु तव विभूतिमात्रम्, न तु तद्वास्तवम्। तत् कीदृशम्? इत्याह—नाभिर्नभ इत्यादि द्वाभ्याम्॥ ३५-३६॥

**श्रीनाथचक्रवर्तिपादविरचिता चैतन्यमतमञ्जूषा**

त्वं हीत्यादि। त्वं हि परंब्रह्म गूढं ज्योतिः, वाङ्मये ब्रह्मणि वेदे अमलात्मानः शुद्धान्तःकरणाः केवलं यं पश्यति श्रुतिप्रतिपाद्यमेव ते जानन्ति, कमिव आकाशमिव आकाशो यथा केवलोऽन्यालिप्तस्तद्वत्। यद्वा, आकाशमिव 'काशृ दीप्तौ' काशो दीप्तिः, आसम्यक् प्रकाशमिव, इव एवार्थः॥ ३५-३६॥

**श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी**

ननु, यदेव येन सहायुध्यत तदेव तमुपव्रज्य तुष्टावेति भवस्य लज्जापि नाभूत्तत्राह—भगवान् सर्वज्ञः स्वस्य परस्य ब्रह्मादेरपि तन्मायामोहितत्वं न चित्रमिति जानात्येवातस्तस्मिन् स्वप्रभो स्वयं भगवति का लज्जेति भावः॥ ३३॥ त्वं परं ब्रह्मेव ज्योतिरप्राकृतज्योतिःस्वरूपं—

"तत्परं परमं ब्रह्म सर्वं विभजते जगत्। ममैव तद्घनं तेजो ज्ञातुमर्हसि भारत"॥ इति

अर्जुनंप्रति हरिवंशे भगवदुक्तेः नन्वेवञ्चेज्जानासि तदा मया सह विग्रहं कथमकरोस्तत्राह—वाङ्मये ब्रह्मणि वेदेपि गूढं ब्रह्म साक्षादेव त्वं कथं ज्ञेयः स्या इति भावः तर्हि किमहमज्ञेय एव तत्राह—यमिति। अमलात्मानो मायामालिन्यरहिता एव अहन्तु तमोमयः कथं पश्येयमिति भाव। आकाशमिवेति मायाश्रयत्वेपि तव न तल्लेपः॥ ३४॥ त्वं साक्षाद्ब्रह्मैव जगदिदमस्मदाद्यात्मकन्तु तव विभूतिरेवेत्याह–नभो यस्य तव नाभिः उर्वी तव अङ्घ्रिः अर्को दृक् अहं शिवः आत्मा अहङ्कारः इन्द्रो भुजाः ओषधयो रोमाणि धिषणा बुद्धिः विसर्गः उपस्थः धर्मो हृदयं यच्छब्दावृत्तिः स्पष्टतार्था नभ आदयो येऽमी दृश्यन्ते ते सर्वे सच्चिदानन्दशरीरस्य तव नाभ्यादीनि इति विभूतय इत्यर्थः॥ ३५॥ लोकान् कल्पयसि स्वनाभिमुखादिभिश्चिन्मयैर्नभोऽग्न्यादीन् प्राकृतान् सृजसीत्यर्थः॥ ३६॥

**गूढार्थदीपिनी**

भक्तानुकम्पी भक्तवत्सलः॥ ३३॥ यत् ब्रह्म ब्रह्मणि वेदे गूढं ज्योतिःस्वरूपं आकाशमिव व्यापकं च परं दुर्दर्शं दुर्ज्ञेयमस्ति तदेव अवतीर्णं यं मुनयः पश्यन्ति स त्वं हि त्वमेवेत्यन्वयः॥ ३४॥ नाभिरिति युग्मम्। नभो यस्य नाभिः। द्यौः

स्वर्गः शीर्षं आशा दिशः श्रुतिः श्रवणेन्द्रियम्। अहं शिवः आत्मा अहङ्कारः। भुजा बाहुः। धिषणा बुद्धिः। विसर्गो मेढ्रम्। स पुरुषः लोकैः अवयवित्वेन कल्प्यते प्रतिपाद्यते इति ॥ ३६ ॥

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः

स्वामिनि त्वयि प्रातिकूल्ये मया स्वभक्ताभयदानप्रतिज्ञापालननिर्बन्धतः कृतमतोऽस्मै बाणायाभयं दत्वा मां सत्यप्रतिज्ञं कुर्वत्याशयेन भगवन्तं स्तौति–त्वमित्यादिना। वाङ्मये ब्रह्मणि वेदे प्रतिपादके गूढं विविधैरतिदुर्बोधैः शब्दैर्वर्णितं ब्रह्म-बृहत्स्वरूपगुणशक्तिजिज्ञास्यं तत्त्वं परं चेतनाचेतनविलक्षणं ज्योतिः सर्वप्रकाशम् आकाशमिव सर्वगतेपि सर्वदोपास्पृष्टम् केवलं स्वाश्रयम् त्वमेवासि कथं तर्हि सपरिकरो युद्धङ्कृतवानत आह—यमिति। अमलात्मानः सात्त्विकाः यं त्वां पश्यन्ति त्वन्मायागुणेन तमसा मोहितत्वादकार्यं कृतवानिति भावः ॥ ३४ ॥ किञ्च विभूतिभूतेन मया विभूतिमति त्वयि प्रातिकूल्यं सर्वथा मोहादेव कृतमित्याशयेन भगवन्तं विराड्रूपिणं स्तौति नाभिरिति द्वाभ्याम्। श्रुतिः श्रोत्रम् आत्मा अहङ्कारः भुजाः इन्द्रः विसर्गो मेढ्रम् किम्बहुना लोकान् सर्वान् विभूतिभूतान् यः कल्पयति सृजति स भवान् ॥ ३५–३६ ॥

### श्रीसत्यधर्मकृता श्रीभागवतटिप्पणी

भक्तानुकम्पी बाणकरुणावान्। अनुकम्पाऽस्यास्तीति शिखादित्वादिनिः। अकारान्तः पुल्लिङ्गोऽप्यनुकम्प इति पक्षे अत इनिठनावितीनिरूपं ज्ञेयम्। यथोक्तं भक्तानुकम्पादिति शुद्धसविद्वात्र इत्यनुव्याख्यानव्याख्यासुधायामनुकम्पादनुक्रोशादिति। चक्रायुधम्। अभाषत ॥ ३३ ॥ ब्रह्म परं ज्योतिर्वाङ्मये ब्रह्मणि वेदे गूढमाशामिव केवलमद्वितीयममलात्मानो यं पश्यन्ति ॥३४॥ आत्माऽहङ्कारोऽहन्तत्वमहं। भुजेन्द्रो भुजाशब्दो बाहाशब्दवदाकारान्तः स्त्रीलिङ्गः। बाहा भुजायां बाहुर्ष्विति विश्वः। भुजा इन्द्र इन्द्राद्या भुजश्चासाविन्द्रश्चेति कर्मधारयसमासेऽप्युद्देश्यविधेयभावः सम्भवतीत्येकपद्यं वा ॥ ३५ ॥ विरिञ्चो धिषणा बुद्धिः प्रजापतिर्दक्षो विसर्गो मेढ्रं धर्मो हृदयं लोकान्कल्पयतीति स तथा। पुरुषो विराड्रूपो भवान्यै मानिकतां द्योतयत्यस्यार्थस्य ॥ ३६ ॥

### श्रीमद्वल्लभाचार्य्यकृता सुबोधिनी

ततः स्ववरदत्तबाहुच्छेदने महादेवः सर्वोपायपरिभ्रष्टः भगवन्तं स्तोतुं प्रवृत्त इत्याह बाहुष्विति। केवलं जये रुद्रादीनामभजनं नायाति। जयस्यानियतत्वात्। तद्दत्तवरच्छेदेऽपि तथा। स चेत् स्वतः स्वसामर्थ्याभावं निश्चित्य, भगवन्तमेव प्रार्थयेत्, तदा सर्वथा अन्ये सेवकाः भगवानेव स्वामीति निरोधः फलति नान्यथेति विज्ञापयितुं रुद्रस्तुतिः। भगवानित्युपायपरिज्ञानार्थमुक्तम्। अन्यार्थं स्वस्य लब्धप्रतिष्ठस्य हीनत्वावलम्बने हेतुमाह **भक्तानुकम्पीति**। **उपव्रज्य** निकटे समागत्य। असम्मतिश्चेत्, अन्ततो मां मारयतु, न तु भक्तमिति ज्ञापयितुम्। अनेन भक्तहितार्थमेव पूर्वं लौकिकवैदिकप्रकारेण साहाय्यं कृतमिति ज्ञापितम्। तदभावे स्तोत्रेणापि तथा करोतीति। **चक्रायुधमिति**। छिन्नेष्वपि बाहुषु चक्रं गृहीत्वैव तिष्ठतीति शिरश्छेदमपि कुर्यात्। अतः अभाषत ॥ ३३ ॥ तस्य स्तोत्रमाह **द्वादशभिः**। संवत्सरात्मककालातिक्रमार्थम्। त्वं हि ब्रह्मेति। आदौ लोकदृष्ट्या दृष्टो भगवान् न ज्ञातो भवतीति भगवत्स्वरूपमुक्त्वा, स योगेनैव ज्ञातव्य इत्याह। त्वं निश्चयेन ब्रह्म। युक्तश्चायमर्थः। अन्यथा लौकिकवैदिकप्रकारा व्यर्था न भवेयुः। प्रमेयमेव हि प्रमाणाद्बलिष्ठम्। एतदाह हि शब्दः। ननु तथापि प्रमाणात्कथं बलिष्ठमिति चेत्, तत्राह परं ज्योतिरिति। 'किं ज्योतिरयं पुरुष' इति ब्राह्मणे सूर्यादिनिराकरणप्रस्तावे वागपि निराकृता। सुप्तायां वाचि 'किं ज्योतिरयं पुरुष' इति वाक्यादतः परं ज्योतिर्भगवानेव। तर्ह्येवं सति साक्षात्पुराणपुरुषः परमात्मा देवक्यामवतरिष्यति, स एव वेदार्थ इति कथं वेदे न श्रूयते, तत्राह **गूढं ब्रह्मणि वाङ्मय** इति। वेदैस्तथैव प्रतिपाद्यते, परं गुप्तप्रकारेण। अत एव गुप्तत्वाद्भगवानाह 'वेदैश्च सर्वैरहमेव वेद्य' इति। तर्हि कथं निश्चयेन प्रवृत्तिरित्यत आह **यं पश्यन्तीति**। ते हि प्रथमतो गूढं ज्ञात्वा सूक्ष्मदर्शनार्थं अमलात्मानो भवन्ति। ततः पाञ्चभौतिकेषु घटपटादिषु आकाशमिव अप्रकटमपि शून्यवत्प्रतिभासमानं सर्वत्र पश्यन्ति। तर्हि सङ्घातप्रविष्टं तं जीवरूपं जानीयुः, तत्राह **केवलमिति**। ननु सङ्घाताविष्टम् ॥ ३४ ॥ एवं भगवत्स्वरूपमुक्त्वा विश्वरूपं वदन् प्रमाणप्रतिपादितप्रकारात् अन्यथाज्ञानं प्रत्यक्षतो न प्रमाणविरोधीति ज्ञापयति **नाभिर्नभोऽग्निर्मुखमिति द्वाभ्याम्**। आदौ मध्ये दृष्टिर्भवतीति तन्नभः भगवतो नाभिस्थानमित्याह। ततो रूपवती दृष्टिर्भवतीति 'रूपमग्नौ प्रतिष्ठित'मिति **अग्निर्मुखमित्युक्तम्**। ततो रूपप्रसङ्गे स्त्रियो मुख्यतेति विषयं निरूपयितुं अम्बुनिरूपणम्, एकाश्रयं वा वाचो रसनमिति तदाधारत्वेन जलनिरूपणम्। सृष्टिक्रमेण वा त्रिवृत्करणे अग्न्यन्तरं जलमिति रेतो भगवतः। 'विश्वस्य भगवान् पिते'ति जलमेव बीजमिति तथोच्यते। तत उपरि सर्वतोऽधश्चेति भूमिं त्रिधा निरूपयति। द्यौः शीर्षम्, आशाः परितः ताः श्रुतिः श्रवणेन्द्रियम्। ऊर्वी पृथ्वी अङ्घ्रिः। सर्वत्र जात्यपेक्षायामेकवचनम्। माहात्म्यज्ञापनार्थं वा इन्द्रियप्रकरणत्वात् चन्द्रादीनां निरूपणम्। अयं चन्द्रो यस्य मनः। अर्को दृक्। अहङ्कार आत्मा हृदयम्। समुद्रो जठरम्। इन्द्रो भुजाः।

वृक्षौषधयो रोमाणि । रोमसु सूक्ष्मस्थूलभेदोऽस्तीति द्वयोर्निरूपणम् । अम्बुवाहा मेघा भगवतः केशाः । य एव कश्चित्सर्वात्मकत्वेन वक्तव्यः, स एवं निरूप्यते । तद्धर्मे वेदमूलको धर्म इति वेदात्मके शिवे निरूपितम् । ततः सन्देहे प्रमेये भगवतैव प्रदर्शितं सर्वात्मकत्वमक्रूराय । ततोऽत्र प्रमाणेन वेदेनान्यथाबुद्धिनिराकरणार्थं निरूप्यत इति वक्तव्यप्रयोजनयोर्भेदात् न पौनरुक्त्यम् । विरञ्चयो ब्रह्मा भगवतो धिषणा बुद्धिः । विशेषेण सर्गो यस्मादिति गुह्येन्द्रियम् । चतुर्मुखः प्रजापतिः । धर्मो यस्य हृदयम् । एवं सर्वोत्कर्षमुक्त्वा अन्ते सम्बन्धिनं निरूपयति सर्वत्रानुषङ्गार्थम्, तथादिमध्ययोः उपासनाव्यावृत्त्यर्थं आधिदैविकत्वादिभेदाभावार्थं च । एतादृशः पुरुषो यो नारायणः स एव भगवान् ॥ ३५-३६ ॥

### श्रीविट्ठलरायात्मजश्रीवल्लभकृतलेखः

बाणस्त्वित्यत्र । बाणोपीति । बाणासुरोपि बाणेन शरेण यथादृष्टद्वारैव कार्यं क्रियते, तथा जनार्दनोपि भगवान् दृष्टद्वारेणैव कार्यं करोतीति ज्ञात्वा अहं तु दैवबलवान् जात इति मत्वा तादृशं योद्धुं प्रायादित्यर्थः । तत इत्यत्र । न संभवतीति पदार्थः पदार्थेनान्वेतीति नियमः । क्रोधस्तु पदार्थैकदेश इति भावः । अस्य नियमस्य प्रायिकत्वेन समाधाने दूषणान्तरमाहुः समासे वेति । कर्मधारये कर्तव्ये परमपदस्य क्रुद्धविशेषणत्वाभावेन विशेषणविशेष्ययोः परस्परानन्वयरूपमसामर्थ्यं स्यात्, तथा च समास एव न भवेत्, 'समर्थः पदविधि'रित्यनुशासनादिति भावः । त्वं हि ब्रह्मेत्यत्र । दृश्यमान इति । मानुषत्वेन प्रतीयमान इत्यर्थः । भूम्यादीनामिति । मूले नभस आदित्वेपि भूमेश्चरणरूपत्वात्तदारभ्यैव व्याख्यानं युक्तमिति भावः । तृतीयश्लोकार्थमाहुः अङ्गान्यपीति । लोके रोमकेशादीनां मृतत्वग्रूपत्वेनाङ्गत्वाभावेपि भगवति रोमादीनामङ्गत्वमेव, अतो लोकप्रकारप्रतीतावपि हरेरङ्गानि लोकप्रकाराद्भिन्नानीति यतो विदुस्ततो रोमादीनामप्यङ्गनिरूपणे एव निरूपणमाहेति शेषः । अस्मदर्थं चेति । शिवस्य वेदरूपत्वाद्वैदिकधर्मपालनार्थं चकारात् खलनिग्रहार्थमित्यर्थः । पञ्चमश्लोकार्थमाहुर्निर्दोषेति । एतादृशोप्यस्मदादिभिर्यथाधिकारमेवेयते इत्यर्थः । नाभिर्नभ इत्यत्र । रूपमग्नाविति । रूपस्य तेजस्तन्मात्रारूपत्वादिति भावः । अम्बुनिरूपणमिति । रेतोरूपमम्बु विषयं निरूपयितुं निरूपितमित्यर्थः । तद्धर्मे इति । सद्धर्मनिरूपकोऽष्टमे स्कन्धे तन्निरूपितमित्यर्थः । प्रमेये इति । स्वरूपे इत्यर्थः । तत इति । द्वयेपि तदनन्तरमित्यर्थः । सर्वत्रानुषङ्गप्रयोजनमाहुः तथादिमध्ययोरिति । आदौ मध्ये चैतद्व्यावृत्त्यर्थमेतदभावार्थं च तथा सर्वत्रानुषङ्ग इत्यर्थः ।

### श्रीसुबोधिनीसारः

बाणस्य बाहुषु छिद्यमानेषु सत्सु भक्तमनुकंपितुं शीलं यस्य स भगवान् भवो महादेव उपव्रज्य समीपमागत्य चक्रायुधं श्रीकृष्णमुवाच ॥ ३३ ॥ परं ज्योतिः स्वप्रकाशं ब्रह्म त्वं वाङ्मये ब्रह्मणि वेदे गूढम् अलक्षितं बहुधा संप्रदायात् तर्हि कथं संसारोपरमः "ज्ञात्वा देवं मुच्यते मृत्युपाशात्" इति नियमात्तत्राह । अमलं शुद्धं निर्वासनम् आत्मा चित्तं येषां ते आकाशमिव केवलं निर्लिप्तमसंगं पश्यंत्यात्मत्वेनानुभवन्ति ॥ ३४ ॥ "इन्द्रो मायाभिः पुरुरूप ईयते" इति श्रुतेर्विराड्रूपत्वमाह द्वाभ्याम् । नभः खं यस्य नाभिः अग्निर्मुखम् अम्बु वारि रेतो वीर्यं द्यौः स्वर्गः शीर्षं शिरः आशा दिशः श्रुतिः कर्णः उर्वी पृथिवी अंघ्रिः पादः चन्द्रो मनोऽर्को दृग् नेत्रम् आत्माऽहंकारोहं शिवः समुद्रो जठरम् इन्द्रो भुजः सन्धिरार्षः ॥ ३५ ॥ औषधयो यस्य रोमाणि अम्बुवाहा मेघाः केशाः विरिंचो ब्रह्मा धिषणा बुद्धिः प्रजापतिर्विसर्गो मेढ्रं धर्मो यस्य हृदयं स लोकैः कल्पते इति लोककल्पः पुरुषो भवान् वै एव ॥ ३६ ॥

### गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

एवं बाहुषु छिद्यमानेषु सत्सु चक्रं गृहीत्वैव तिष्ठतीति शिरश्छेदमपि कुर्यादिति ज्ञात्वा भक्तानुकम्पी भक्तकृपापरवशो भगवानपि भव उपायान्तरमलभमान उपव्रज्य समीपमागत्य चक्रायुधमभाषत तुष्टाव ॥ ३३ ॥ भाषणमेवाह—त्वमिति । यत् वाङ्मये ब्रह्मणि वेदेपि गूढं मनोग्राह्यतया प्रतिपादितम् । तत्र हेतुः—ज्योतिः स्वप्रकाशज्ञानरूपं परं ब्रह्म । यं चाशुद्धमनसामविषयमप्यमलात्मानो विशुद्धमनस आकाशमिव व्याप्तं सर्वदोषसंश्लेषरहितं पश्यन्ति स एव त्वमित्यन्वयः । हिशब्दोऽवधारणे ॥ ३४ ॥ "एवं स्वप्रकाशरूपस्य परब्रह्मणो रूपदुर्ज्ञेयत्वमुक्त्वा लीलया स्वीकृतो विराट् विग्रहोपि उदुम्बरफलान्तर्वर्तिमशकैरुदुम्बरफलमिव तदन्तर्वर्तिप्राणिभिर्दुर्ज्ञेय एव" इत्याशयेन विराड्रूपेण स्तौति—नाभिरिति द्वाभ्याम् । यस्य नभआदयो नाभ्याद्यवयवाः स भवान् लोकैः कल्प्यते अवयवित्वेन प्रतिपाद्यते इति लोककल्पः पुरुष इति द्वयोरन्वयः । नभो नाभिः । अग्निर्मुखम् । अम्बु रेतः । द्यौः शीर्षम् । आशाः दिशः श्रुतिः श्रवणेन्द्रियम् । उर्वी भूमिः अङ्घ्रिः । चन्द्रोः । मनः । अर्कः दृक् चक्षुः । अहं रुद्रः आत्मा अहंकारः । समुद्रो जठरम् । इन्द्रः भुजा बाहुः, इन्द्रादयो लोकपाला बाहव इत्यर्थः । एवं सर्वत्रैकवचनं जात्यभिप्रायेण ॥ ३५ ॥ औषधयो रोमाणि । यच्छन्दावृत्तिः स्पष्टार्था । अम्बुवाहा मेघाः केशाः । विरिञ्चो धिषणा बुद्धिः । प्रजापतिर्ब्रह्मैव विसर्गो मेढ्रम् । धर्मो हृदयम् ॥ ३६ ॥

## अन्वितार्थप्रकाशिका

बाहुष्विति । एवं बाणस्य बाहुषु छिद्यमानेषु भक्तानुकम्पी भगवान् भव उपव्रज्य समीपमागत्य चक्रायुधमभाषत तुष्टाव ॥ ३३ ॥ अयं भवन्तमज्ञात्वा युद्धयत इत्याशयेनाह—त्वं हीति । यत् वाङ्मये ब्रह्मणि वेदेऽपि ब्रह्म वाङ्मनसाऽग्राह्यतया प्रतिपादितं परं ज्योतिः ज्ञानरूपं यं च अमलात्मानो विशुद्धमनस आकाशमिव व्याप्तं केवलं सर्वदोषसंश्लेषरहितं पश्यन्ति स त्वम् ॥ ३४ ॥ आस्तां निर्गुणस्य तव ज्ञानं त्वयाऽधिष्ठितो विराड्विग्रहोऽपि दुर्ज्ञान इत्याशयेनाह-नाभिरिति युग्मम् । यस्य नभो नाभिः अग्निर्मुखम् अम्बु रेतः द्यौः शीर्षम् आशाः दिशः श्रुतिः श्रवणेन्द्रियम् उर्वी भूमिः अङ्घ्रिः चन्द्रो मनः अर्कः दृक् चक्षुः अहं रुद्रः आत्मा अहङ्कारः समुद्रो जठरं इन्द्रः भुजा बाहुः इन्द्रादयो लोकपाला बाहव इत्यर्थः । एवं सर्वत्रैकवचनं जात्यभिप्रायेण । ओषधयो रोमाणि यच्छब्दावृत्तिः स्पष्टार्था । अम्बुवाहा मेघाः केशाः विरिञ्चो धिषणा बुद्धिः प्रजापतिर्ब्रह्मेव विसर्गो मेढ्रं धर्मो हृदयं स भवान् लोकैः कल्प्यते अवयवित्वेन प्रतिपाद्यते इति लोककल्पः पुरुष इति ॥ ३५-३६ ॥

## श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्

पार्वतीपतिः । स्तौतित्वमिति ज्योतिषि कोटिसूर्यचंद्राग्निभ्योऽप्यधिकप्रकाशमये ब्रह्मपुराख्येऽक्षरधाम्नि गूढं कैवल्यार्थिनामदृश्यत्वाद्गुप्ततया स्थितं । परं बद्ध-मुक्त-पुरुषेभ्यः श्रेष्ठं ब्रह्मवृद्धत्वाद्यसंख्यगुणगणसागरं पुरुषोत्तमस्वरूपं त्वमसि । वाङ्मये वेदरूपे ब्रह्मणि शब्दब्रह्मणि । अमलात्मानो निर्मलांतःकरणाः आकाशमिव केवलं लोके मनुष्यतया वर्त्तमानमपि आकाशवन्निर्लेपं यं त्वां पश्यंति ज्ञाननेत्रेण ईक्षंते ॥३४॥ इत्थं पुरुषोत्तमत्वेन श्रीकृष्णं स्तुत्वा सांप्रतं विराड्रूपेण तं स्तौति नाभिरिति । नभो गगनं यस्य नाभिः एवं सर्वं योज्यं आशाः दिशः श्रुतिः श्रोत्रेंद्रियं दृक्चक्षुरिंद्रियं । अहं शंकरः यस्य वैराजस्य । आत्मा अहंकारः इन्द्रः भुजा बाहुः ॥ ३५ ॥ विरंच्यो विधिः धिषणा बुद्धिः प्रजापतिः विसर्गः । उपस्थेंद्रियं । धर्मो हृदयं । लोकैश्चतुर्दशभुवनैः कल्पते परमात्मना त्वया कर्त्रा विरच्यते इति लोककल्पः पुरुषो विराट् सः भवान् तवावतार इत्यर्थः ॥ ३६ ॥

## भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

बाहुष्विति । बाणस्य बाहुषु, छिद्यमानेषु सत्सु, भगवान् भवो रुद्रः, भक्तानुकम्पी हेतुगर्भमिदम् । तत्वात्, चक्रायुधं श्रीकृष्णं, उपव्रज्य, अभाषत ॥ ३३ ॥ भाषणमेवाह द्वादशभिः । तत्र केवलं वेदान्तवेद्यं योगपरिशुद्धमनोग्राह्यं त्वत्स्वरूपस्वभावादिकं, कथमयं मूर्खो जानीयादित्यभिप्रयन् स्तौति । त्वं हीति । वाङ्मये ब्रह्मणि वेदे, उपनिषदीति यावत् । गूढं यत्, परं ब्रह्म, तत् त्वं हि । किं तद्ब्रह्मस्वरूपमत आह । ज्योतिः स्वप्रकाशं ज्ञानरूपमित्यर्थः । अमलात्मानः योगपरिशुद्धान्तःकरणाः, आकाशं इव, केवलं निरस्तनिखिलदोषं, यं पश्यन्ति, स त्वमिति सम्बन्धः ॥ ३४ ॥ न हि शरीरमात्मनोऽप्रियमतस्त्वच्छरीरभूतकृत्स्नजगदन्तर्गतोऽयं मूर्खोऽपि तवानुकम्प्य एवेत्यभिप्रयम् कृष्णं विराड्रूपत्वेन स्तौति द्वाभ्याम् । नाभिरिति । यस्य तव, नभ आकाशं, नाभिः । अग्निः, मुखं, अम्बु जलं, रेतो वीर्यं, द्यौः शीर्षं, आशा दिशः, श्रुतिः श्रवणेन्द्रियं, उर्वी पृथ्वी, अङ्घ्रिः, चन्द्रः मनः, कार्यकारणभावेन सामानाधिकरण्यं, 'चन्द्रमा मनसो जातः' इति श्रुतेः । भगवन्मानसात् प्रसूतस्य चन्द्रस्य सर्वदेहिमनोऽभिमानिदेवतात्वाच्च । एवं, दृक् अर्कः, 'चक्षोः सूर्योऽजायत' इति श्रुतेः । दृगभिमानित्वाच्च । अहं शिवः, आत्मा अन्तःकरणभेदोऽहंकारः । अत्रापि पूर्ववदेव सामानाधिकरण्यम् । समुद्रः जठरमुदरं, इन्द्रः, भुजा बाहुः, इन्द्रादयो लोकपाला बाहव इत्यर्थः । 'भुजा बाहा च बाहो स्यात्' इति त्रिकाण्डशेषः ॥३५॥ रोमाणीति । ओषधयः, यस्य तव, रोमाणि, अम्बुवाहा मेघाः, केशाः, विरिञ्चो ब्रह्मा, धिषणा बुद्धिः, 'धिषणा धियि योषिति' इति मेदिनी । प्रजापतिः विसर्गो, मेढ्रं, धर्मः, यस्य, हृदयं, पुरुषः पुरुषाकृतिः, स वै भवान्, स एव त्वमित्यर्थः । लोकैः अवयवत्वेन कल्प्यते इति लोककल्पः, असि ॥ ३६ ॥

## कृष्णप्रिया

भक्तानुकम्पी भगवान् भवानी शङ्करजी ने देखा कि निजभक्त बाणासुर की भुजाएँ कट रही हैं तब करुणानिधान चक्रपाणि श्रीकृष्ण के समीप आये और निवेदन करने लगे ॥ ३३ ॥ अब भगवान् श्री महारुद्र जी ग्यारह श्लोकों से एवं एक श्लोक से अभ्यर्थना करते हैं—श्रीरुद्र प्रभु ने कहा—नाथ ! श्रुतिवाङ्मय में रहस्य रूप से निगूढ तेजोमय परब्रह्म तत्त्व है । लेकिन विशुद्ध हृदय वाले महान् पुरुष ही आकाश के समान निर्लेप और निर्विकार आपके स्वरूप का साक्षात्कार कर सकते हैं ॥३५॥ नाथ नभोमण्डल आपकी नाभि है, अग्निदेव आपका श्रीमुख है; जल आपका वीर्य है; स्वर्ग आपका मस्तक है; दिशाएँ आपके कर्ण हैं; धरणी आपकी चरण है; चन्द्रमा आपका मन है; सूर्यनारायण आपके नेत्र हैं और अहम् मैं शिव आपका अहंकार है; सागर आपका उदर है और इन्द्रदेव आपकी भुजा है ॥ ३५ ॥ ओषधियाँ-धान्यसम्पत्तियाँ आपके रोम है; मेघमण्डल केश है; ब्रह्माजी आपकी बुद्धि हैं; और प्रजापति आपकी विसर्ग इन्द्रिय-लिङ्ग है; धर्म आपका हृदय है; इस प्रकार लोक और समस्त लोकान्तरों के साथ आपके विराट्देह की तुलना की जाती है वे पूर्णपुरुष आप ही हैं ॥ ३६ ॥

तवावतारोऽयमकुण्ठधामन् धर्मस्य गुप्त्यै [1]खलनिग्रहाय ।
वयं च सर्वे भवतानुभाविता विभावयामो भुवनानि सप्त ॥ ३७ ॥
त्वमेक आद्यः पुरुषोऽद्वितीयस्तुर्यः स्वदृग्घेतुरहेतुरीश्वरः[2] ।
प्रतीयसेऽथापि यथाविकारं स्वमायया सर्वगुणप्रसिद्ध्यै ॥ ३८ ॥
यथैव सूर्यः पिहितश्छायया[3] स्वया छायां च रूपाणि च सञ्चकास्ति।
एवं गुणेनापिहितो गुणांस्त्वमात्मप्रदीपो गुणिनश्च भूमन् ॥ ३९ ॥
यन्मायामोहितधियः पुत्रदारगृहादिषु । उन्मज्जन्ति निमज्जन्ति प्रसक्ता वृजिनार्णवे ॥ ४० ॥

### कर्दमक्षमा

अन्वयः—हे, अकुण्ठधामन् ! अयम्, तव, अवतारः, धर्मस्य, गुप्त्यैः, खलनिग्रहाय, च, भवता, अनुभाविताः, वयम्, सर्वे, सप्त, भुवनानि, विभावयामः ॥ ३७ ॥ त्वम्, एकः, आद्यः, पुरुषः, अद्वितीयः, तुर्यः, स्वदृक्, हेतुः, अहेतुः, ईशः, अथ, अपि, स्वमायया, सर्वगुणप्रसिद्धये, यथा, विकारम्, प्रतीयसे ॥ ३८ ॥ यथा, हि, एव, सूर्यः, स्वया, छायया, पिहितः, छायाम्, च, रूपाणि, च, सञ्चकास्ति, एवम्, हे भूमन् ! आत्मप्रदीपः, गुणेन, अपिहितः, गुणान्, च, गुणिनः, सञ्चकास्ति ॥३९॥ यन्मायामोहितधियः, वृजिनार्णवे, प्रसक्ताः, पुत्रदारागृहादिषु, उन्मज्जन्ति. निमज्जन्ति ॥ ४० ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

ननु तत्त्वतः प्रादेशिकशरीरस्य कथं नभो नाभित्वादीत्यत आह । तवेति । हे अकुंठधामन्नप्रच्युतस्वरूप । भवायाभ्युदयाय । न केवलमेतावर्त्किं त्वस्मदनुग्रहार्थमपीत्याह । वयं चेति । सर्वे लोकपालास्त्वया पालिताः सप्तापि भुवनानि पालयाम इति ॥ ३७ ॥ ननु यदि विभावयितारो यूयं विभाव्यानि च भुवनानि सन्ति तर्हि कथमुक्तं त्वं हि ब्रह्मेति न हि ब्रह्मत्वे मम सजातीयविजातीयभेदः संभवतीत्यत आह । त्वमिति । एकः सजातीयभेदरहितः । कुतः । आद्यः पुरुषः पुरुषाणामवस्थात्रयवतामाद्यः प्रकृतिभूतः पुरुषः । कुतः । तुरीयः शुद्ध इत्यर्थः । तदपि कुतः । स्वदृक् स्वप्रकाशज्ञानरूपः । शुद्धादेव ह्युपाधियोगाज्जीवा जायन्ते । "यथाऽग्नेः क्षुद्रा विस्फुलिंगा व्युच्चरंत्येवमेवास्मादात्मनः सर्वं एव आत्मानो व्युच्चरन्ति" इति श्रुतेः । अतः सजातीयरहितः किंच अद्वितीयो विजातीयरहितोऽपि । कुतः । हेतुः सर्वस्य तथा स्वयं हेतुरहितश्चेति । कथं तर्हि प्रतिशरीरं जीवभेदः प्रतीयतेऽत आह । प्रतीयस इति । सर्वगुणप्रसिद्धये सर्वविषयप्रकाशनाय ॥ ३८ ॥ तर्हि किमहमेवं संसारीत्युच्यते नहिनहीति सदृष्टांतमाह । यथैवेति । हे भूमन्स्वया छायया मेघलक्षणया परदृष्ट्या पिहितश्छादितोऽपि सूर्यश्छायां मेघं च रूपाणि च मेघांतरितान्घटादीनपि संचकास्ति प्रकाशयति एवं गुणेनाहंकारेण स्वकार्येण जीवावरकेण तद्दृष्ट्याऽपिहितोऽपि गुणान्सत्त्वादीनुपाधीन्गुणिनश्चोपहिताञ्जीवानपि चकास्ति । आत्मप्रदीपः स्वप्रकाशः । अतः सर्वसाक्षिणस्तव न संसार इत्यर्थः ॥ ३९ ॥ किंच मायाश्रयस्यान्यान्मोहयतस्तव कुतः संसृतिरित्याशयेनाह—यन्मायेति । पुत्रादिषु प्रसक्ताः । वृजिनार्णवे दुःखसारे । उन्मज्जंति देवादियोनिषु । निमज्जंति स्थावरादिषु । तदुक्तं वायवीये । "विपर्ययश्च भवति ब्रह्मत्वस्थावरत्वयोः" इति ॥ ४० ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

पुनराशंकते—नन्विति । प्रादेशिकं प्रादेशमितं शरीरं यस्य तस्य "केचित्स्वदेहान्तर्हृदयावकाशे प्रादेशमात्रं पुरुषं वसन्तम्" इति द्वितीयस्कन्धोक्तेः । यद्वा—प्रादेशो यत्किंचिद्देशस्तत्र तिष्ठतीति प्रादेशिकः 'प्रादेशो देशमात्रेऽपि' इति मेदिनी । साक्षाद्ब्रह्मणोऽदृश्यस्यापि यद्दृश्यत्वं तत्केवलं कृपानिबन्धनमेवेत्याह—हे अकुंठधामन् परब्रह्मणो यद्दृश्यत्वं तस्मात्तर्कैस्तव प्रभावः कुंठीकर्तुमशक्य एवेति भावः । धर्मस्य स्वभक्तिलक्षणस्य तत्प्रतिपक्षमतनिरसनपूर्वकं रक्षणाय जगतः कर्मिज्ञानिमूढबहिर्मुखदुराचारपर्यंतस्याभवाय मोक्षाय न च सामान्यजगत्पालनायेत्याह—वयं सर्वे दिक्पाला भवतानुभाविताः पालिताः सन्तः पालयाम एव तन्मात्रार्थे तवाविर्भावे किं प्रयोजनमिति भाव इति विश्वनाथः ॥ ३७ ॥ पुनर्भंग्यंतरेणाऽऽक्षिपति—ननु यदीति । एकत्वे हेतुमाशंकते—कुत इति । अवस्था जाग्रदाद्याः । तत्र हेतुः—तुर्य्य इति । इत्यर्थ इति—मालिन्यहेत्ववस्थाऽस्पृष्टत्वादिति भावः । तदपि तुर्य्यत्वमपि । उपाधिर्माया । विस्फुलिंगा अग्निकणाः । आत्मानो जीवाः । अत एवंभूतत्वात् । न केवलं सजातीयरहित एवेत्याह—किञ्चेति । विजातीयराहित्यं कस्मादत्राह—हेतुरिति । प्रतीयत इति । प्रातीतिक एव भेदो न स्वाभाविक इति

१. जगतो भवाय—श्रीधर. वंशी. जीव. वीर. विश्व. । २. रीशः—श्रीधर. वंशी. जीव. वीर. विश्व. । ३. स्वयं घनैः—च. पु. टि. ।

भावः। अत्र विश्वनाथः—ननु केचिन्मम गुणावतारा: केचिच्च विभूतय इति मत्तो यूयमभिन्ना एव तत्राह—त्वमेवैक ईशः वयं तु सेवका एव। कुतः-आद्यः पुरुषो यतस्तुरीयः विराट् हिरण्यगर्भश्च कारणश्चेत्युपाधयः "ईशस्य यत्त्रिभिर्हीनं तुरीयं तद्विदुर्बुधाः"। किञ्च—नारायणवासुदेवादयोऽपि त्वदन्तःपातादद्वितीयाः। अन्येषां हेतुः स्वयं हेतुरहितश्च यतः स्वदृक् स्वेनैव दृग्दर्शनं यस्य न त्वन्यः कोऽपि त्वां द्रष्टुं शक्नोतीति भावः। यद्वा—स्वानां भक्तानां दृग्यस्य सः। तथा स्वभक्तानां नित्यसत्ताविचित्रबहुलरूपेण प्रकाशस इत्याह—प्रतीति। स्वेषु या दया कृपा तया तेषामेकांतित्वादिसर्वगुणप्रसिद्धये लोके विख्यात्ये यथाविकारं भावानुसारेण प्रतीतो भवसि। ईदृगैश्वर्यवानपि तुच्छमायागुणानामुपकरोषीत्याह—प्रतीयस इति। यथा विकारं प्रति शरीरं स्वमायया कृत्वा बुद्धीन्द्रियादिगुणानां प्रसिद्ध्यर्थमन्तर्यामितयाऽनुभूयसे यदि त्वमन्तर्यामित्वं न कुरुषे तर्हि तेषां प्रकाशकाभावात्ते जडतया व्यर्थाः स्युरिति भावः॥ ३८॥ पुनराक्षिपति—तर्हीति। सूर्यकिरणा एव मेघाकारेण परिणमंत इत्युक्तं हरिवंशे। एवमित्थम्। अतः स्वप्रकाशत्वात्। इत्यर्थ इति—"ददामि बुद्धियोगं तं येन मामुपयांति ते" इत्युक्तेर्यत्कृपयाऽन्येषां संसारो नश्यति तस्य कुतः स भवेदिति भावः। एवं महाकृपां तन्वन्नपि त्वं साधुवर्गशिरोमणिः स्वाभाविकलज्जाविनयादिना साक्षान्न तनोषि किन्तु गुर्वादिद्वारा पारोक्ष्येणैवेति परमसद्गुणनिधित्वमाह—यथेति। पिहित एव सन्सम्यक्प्रकाशयसि गुणेन तत्रस्थांशेन तस्मिन्स्थानीयेन जीवे पूर्वपूर्वगुर्वादिरूपेणाच्छन्नस्संस्तद्द्वारैवेत्यर्थः। गुणान् कारुण्यादींस्तत्प्रकाशनार्थं गुणिनश्च कारुण्यादिकर्तॄन् परस्परगुर्वादीन्सम्यक्प्रकाशयसि। न च तत्तत्प्रकाशनेऽन्यो हेतुरस्तीत्याह—आत्मना स्वयमेव प्रदीपयति कृपया प्रकाशयतीति तथा सः। तत्र हेतुः-भूमन् हे अपरिच्छिन्नमाहात्म्य 'महांतो हि दयालवः' इत्युक्तेरिति तोषणीकाराः॥ ३९॥ मायायाः स्वाश्रयानावरकत्वं प्रसिद्धमायासु दृष्टम् ततोऽपि न तव संसाराशंकेत्याह—किञ्चेति। उन्मज्जंति ऊर्ध्वं गच्छन्ति। निमज्जंति अधो गच्छंति। तदुन्मज्जनिमज्जनम्। वायवीये वायुपुराणे। विपर्ययो वैपरीत्यम्। ब्रह्माऽप्यज्ञानवशात् स्थावरतां याति का कथाऽन्येषामित्यर्थः॥ ४०॥

### श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी

तवेति तैर्व्याख्यातं तत्र प्रादेशिकत्वमेकदेशस्थत्वं नभो नाभित्वादत्वं तत्तदङ्गाधिष्ठितत्तत्तद्वस्तुत्वं तत्र सिद्धान्तः सर्वदेशकालाप्रच्युतस्वीयविग्रह एव त्वमचिन्त्यशक्त्यैव प्रादेशिकतया भासीति अप्रच्युतस्वरूप इत्यस्य तात्पर्य्याद्गम्यः यद्वा नन्वेवम्भूतस्य मम कथं प्रपञ्चे स्वस्वरूपेण प्राकट्यं तत्राह—तवेति! हे अकुण्ठधामन् श्रीगोलोकादिनित्यस्थान! तव अवतारः अपूर्ववत् प्रपञ्चे प्राकट्यधर्मस्य प्राधान्यतस्त्वद्भक्तानां त्वद्भक्तिलक्षणस्य (अतो) जगतः सर्वजीवानामेव भवाय लोकद्वयश्रेयसे अतो वयञ्चेति विशेषेण त्वद्भक्तिविस्तारणादिना पूर्वत आधिक्येन भावयामः॥ ३७॥ त्वमेक इति तैर्व्याख्यातं तत्र सम्भवतीत्यस्यान्वये येन भेदेन भवन्तो भावयितार इति शेषः। पुरुषाणामित्यादौ चिदंशेनैकापेक्षया जीवेश्वरस्वरूपभेदविवक्षया प्रकाशनायेत्यस्यान्तेऽतो वयमपि तद्विभूतिरूपा एवेति सजातीयादिभेदाभावात् त्वमेव ब्रह्मेति पर्य्यवसितमिति शेषः। किञ्च यथाविकारं स्व स्व देहानुरूपश्चैतन्यप्रकाशतारतम्येन नानाविधः प्रतीयस इत्यर्थः। तच्च स्वमाययाऽचिन्त्यशक्त्येति तत्स्वरूपे तद्धर्मास्पर्शश्च निरूपितः अन्यत्तैः। यद्वा त्वमेकः सजातीयभेदरहितः अद्वितीयो विजातीयभेदरहितश्च यतः आद्यः "विष्णोस्तु त्रीणि रूपाणि" इत्युक्तानां पुरुषाणां मूलरूपः अतस्त्वमेव पुरुषः "पूर्वमेवाहमिहासमिति तत्पुरुषस्य पुरुषत्वम्" इति श्रुतेः। कुतस्तुरीयः विराट् हिरण्यगर्भश्च कारणं चेत्युपाधयः "ईशस्य यत्त्रिभिर्हीनं तुरीयं तद्विदुर्बुधाः" इत्युक्तलक्षणः तदपि कुतः स्वदृक् स्वयं प्रकाशः अतो हेतुरहेतुरपि यद्यप्येवमखण्डस्त्वं तथापि यथाविकारं तत्तद्विकारानुसारेण सर्वेषां तेषां सत्त्वादिगुणप्रकाशनाय महत्स्रष्ट्रादिरूपस्सन् गुणवत्प्रतीयसे तच्च मायया स्वपूर्णतावरणशक्तितारतम्येनेत्यर्थः। अतस्त्वमेव चेशः यद्वा ननु केचिन्मम गुणावताराः केचिच्च विभूतय इति मत्तो यूयमभिन्ना एवेति चेत्तत्राह—त्वमेवैक ईशः वयन्तु सेवका एवेत्यर्थः। कुतः आद्यः पुरुषः यतस्तुर्य्यः नारायणवासुदेवयोरपि त्वदन्तःपातात् अद्वितीयश्च अतोन्येषां हेतुः स्वयन्तु हेतुरहितः यतः स्वदृक् तथापि स्वभक्तानां नित्यसत्यविचित्रबहुलरूपेण प्रकाशसे इत्याह प्रतीति स्वेषु भक्तेषु मायया कृपया तेषामेकान्तित्वादिसर्वगुणस्य प्रसिद्धये लोकेषु विख्यातये प्रकर्षेण सिद्धये वा यथाविकारं भावानुसारेण प्रतीतो भवसीति॥ ३८॥ यथैवेति तैर्व्याख्यातं तत्र सर्वत्र हेतुः हे भूमन्! सर्वात्मत्वादपरिच्छिन्नेति यद्वा ननु ममैव चेन्महत्स्रष्ट्रादिरूपत्वं तर्हि तत्तद्रूपेण मायादिप्रवर्त्तयितुर्ममैव तत्तद्दोषलेपः स्यादित्याशङ्क्य दृष्टान्तेन परिहरति—यथैवेति। यद्वा एवं महाकृपां तन्वन्नपि साधुवर्गशिरोमणिस्त्वं स्वाभाविकलज्जाविनयादिना साक्षान्न तनोषि किन्तु गुर्वादिद्वारा पारोक्ष्येणैवेति परमसद्गुणगणनिधित्वमाह—यथेति। (अपिहित) पिहित एव सन् सम्यक् प्रकाशयसि गुणेन तटस्थांशेन रश्मिस्थानीयेन जीवेन पूर्वगुर्वादिरूपेणाच्छन्नः सन्निति तद्द्वारैवेत्यर्थः। गुणान् कारुण्यादीन् तत्प्रकाशनार्थं गुणिनश्च कारुण्यादिकर्तॄन् परस्परगुर्वादीन् सम्यक् प्रकाशयसि नच तत्तत्प्रकाशने नान्यो हेतुरस्तीत्याह—आत्मना स्वयमेव प्रदीपयति कृपया प्रकाशयतीति तथा सः तत्र हेतुः, भूमन् हे अपरिच्छिन्नमाहात्म्येति॥ ३९॥ तदेवं निगूढं तन्महिमानं व्यज्य प्रस्तुतं बाणार्थप्रसादनं योजयितुं परमापत्प्राप्त्या मदरहितं बाणमपि शिक्षयितुं निवेदयति पञ्चभिः—तत्र तादृशत्वन्महिमाज्ञानमस्य नाश्चर्य्यं प्रायशः सर्वस्यैव मोहितत्वादित्याभिप्रेत्याह—यदिति। यस्य तव माययेति

( पूर्ववत्तच्छब्दानपेक्षा ) वदतात्र तस्य प्रेरकत्वं नाभिमतं किन्तु तत्सम्बन्धाभासबलेन तस्या एव स्वतःकर्तृत्वं तच्च युक्तं तस्मिन्नैर्घृण्यापातात् वक्ष्यते आत्मानं प्रियमीश्वरमिति ॥ ४० ॥

### श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी

एवं सदात्मत्वदीयत्वेन वयं त्वदनुग्रहे योग्या एव, विशेषतश्चाधुना नितरामनुगृहीता इत्याह—तवेति। अवतारो वैकुण्ठलोकादवतरणम्, धर्म्मस्य त्वद्भक्तिलक्षणस्य, अतो जगतः सर्व्वजीवानामेव, भवाय लोकद्वयश्रेयसे, हे अकुण्ठधामन्निति साक्षाद्भगवत्त्वात्। एवं भवतानुभाविताः सन्तो वयमपि त्वद्भक्तिविस्तारणादिना विशेषेण पूर्व्वत आधिक्येन भावयामः ॥ ३७ ॥ त्वमेवेशः, अत एकः, यद्वा, एवं सजातीयविजातीयभेदराहित्यादीशः, अतएव परं ब्रह्मेति भावः। यथा विकारं स्वस्वदेहानुसारेण देहानुरूपचैतन्यप्रकाशतारतम्येन नानाविधः प्रतीयत इत्यर्थः। तच्च स्वमाययेति तत्त्वतोऽपि जीवत्वं निरस्तम्, तच्च व्यक्तं भावि। अन्यत्तैर्व्याख्यातम्। यद्वा, ननु केचिन्मम गुणावताराः केचिच्च विभूतय इति मत्तो युयमभिन्ना एवेति चेत्तत्राह—त्वमिति। त्वमेवैक ईशः, वयन्तु सेवकाः एवेत्यर्थः। कुतः ? आद्य पुरुषः श्रीब्रह्मादिभ्योऽपि श्रेष्ठः, अतस्तुर्य्यः श्रीब्रह्मविष्णुरुद्रेभ्योऽवतारित्वेन भिन्नत्वात्, न च चतुर्व्यूहादीनां पृथक् पृथग् वर्त्तमानानां प्रत्येकमीश्वरत्वेन तव परमेश्वरत्वहानिस्तेषामपि त्वदभिन्नत्वादित्याह—अद्वितीय इति। यतो हेतुस्तेषां त्वत्त एव प्रादुर्भावात्, स्वयं वा हेतुः, यतः स्वदृक् स्वप्रकाशः, तथापि स्वभक्तानां नित्यसत्य-विचित्र-बहुलरूपेण प्रकाशक इत्याह—प्रतीति। स्वेषु भवतेषु मायया कृपया, यद्वा, भक्तेषु तेषु अमायया तेषामेकान्तित्वादिसर्व्वगुणस्य प्रसिद्ध्यै लोकेषु विख्यातये प्रकर्षेण सिद्धौ वा, यथाविकारं भावानुसारेण प्रतीतो भवसि, स्वभक्तेषु प्रत्येकं चतुर्व्यूहादीनां मध्ये स्वस्वसेव्यैकनिष्ठया नित्यसत्यत्वेन परिस्फुरसीत्यर्थः ॥ ३८ ॥ एव अपि, पिहितोऽपि, च-काराभ्यां द्वयोरपि प्राधान्यं द्योत्यते,—दूरस्थानामपि रूपाणां सन्निहितमेघवत् प्रकाशनात्। सञ्चकास्तीति क्रियान्तर्गतः सं-शब्दो मेघाच्छन्नतया सूर्य्यतेजसामतीक्ष्णत्वेन दृष्टेः सम्यक् प्रसारणात्, एवं दार्ष्टान्तिकेऽपि ज्ञेयम्। अहंकाराच्छन्नस्यापि तत्प्रवर्त्तनात् स्वयमेवाभिव्यक्तगुणगुणिनामप्याधिक्यप्रकाशनसिद्धेः। अपिहितः पिहितः, तथा चामरः—'अपिधान-तिरोधान-पिधान'—इत्यादि, यद्यप्यहंकारेण जीव एव पिधीयते, न च परमात्मा, तथापि त्वमित्यहंकाराच्छन्नतया जीवेन तदननुभवात्। अतएव तैरपि व्याख्यातम्। तद्दृष्टयेति जीवदृष्ट्यैवेत्यर्थः। एवं सर्व्वमेव त्वं प्रकाशयसि, त्वञ्च स्वप्रकाश एवेत्याह—आत्मेति। एवं वस्तुतोऽहंकारेण पिहितत्वमपि निरस्तम्, सदा प्रकाशमानत्वादिकञ्च सूचितम्, तत्र हेतुः—भूमन्! हे अपरिच्छिन्नेति अन्येन व्याप्तुमशक्यत्वादित्यर्थः। अन्यत्तैर्व्याख्यातम्। यद्वा, एवं महाकृपां तन्वन्नपि साधुवर्गशिरोमणित्वं स्वाभाविकलज्जाविनयादिना साक्षान्न करोषि, किन्तु गुर्व्वादिद्वारा परोक्षेणेवेति परमसद्गुणगणनिधित्वमाह—यथेति। पिहित एव सन् सम्यक् प्रकाशयति, गुणेन स्वांशेन सूर्य्यच्छायास्थानीयेन जीवेन गुर्व्वादिरूपेणाच्छन्नः सन्नेव तद्द्वारेत्यर्थः। गुणान् कारुण्यादीन्, तत्प्रकाशनार्थं गुणिनश्च कारुण्यादि-कर्तॄन् गुर्व्वादीन् सम्यक् प्रकाशयसि। न च तत्तत्प्रकाशने त्वत्कृपां विनान्यो हेतुरस्तीत्याह—आत्मना स्वयमेव प्रदीपयति कृपया प्रकाशयतीति तथा सः। तत्र हेतुः—भूमन्! हे अपरिच्छिन्नमाहात्म्येति ॥ ३९ ॥ एवं भक्तेष्वेव कृपां प्रकाशयसि, न त्वभक्तेष्विति ते सदा दुःखिन एवेत्याह—यदिति; यस्य तव मायया ॥ ४० ॥

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम्

अद्वितीयः समाभ्यधिकरहितः ॥ ३८ ॥ सूर्य्यः स्वच्छायया स्वकीयरश्मिनिवारणप्रभवजातया पिहितो न भवतीत्यपिहितः अनाच्छादितः सः छायां सञ्चकास्ति प्रकाशयति नैशे तमसि शाखादिच्छायाया अदर्शनात् छायाया आदित्यप्रकाश्यत्वमित्यभिप्रायः गुणेन सत्त्वादिगुणेन गुणान् पृथिव्यादीन् आत्मप्रदीपः स्वप्रकाशः ॥ ३९-४० ॥

### श्रीमद्वीरराघवाचार्यकृता भागवतचन्द्रचन्द्रिका

नन्वेवमप्ययं दुरात्मा निग्राह्य एवेति चेत् यद्यप्येवं तथाप्यधुना शरणङ्गतोऽनुग्राह्य एव युक्तं चैतत्तवावतारस्य प्रपन्नलोकाभ्युदयार्थत्वादित्यभिप्रयन्नाह—तवेति। हे अकुण्ठधामन्! धाम तेजः स्वभाव इति यावत् अवतारदशायामप्यप्रच्युतसार्वज्ञ्यसर्वशक्त्यादिस्वभावेत्यर्थः। जगतः प्रपन्नलोकस्य भवायाभ्युदयाय च अभवायेति वा छेदः अभवाय भवप्रयुक्ततापत्रयनिवृत्तये इत्यर्थः। अनुग्राह्यश्चेत्तर्हि त्वमेवैनमनुगृह्णीष्वेत्यत आह—वयमिति। सर्वे वयं लोकपालास्तावत्त्वया सृष्टाः अनु ततो भाविताः पालिताः सप्त भुवनानि विभावयामः पालयामः वयं ( त ) त्वत्परतन्त्रा इति भावः ॥ ३७ ॥ आकाशमिव केवलमिति निरस्तनिखिलदोषत्वमुक्तं विराट्शरीरत्वोक्त्या सर्वान्तरात्मत्वं फलितं तवावतारोयमित्यनेन निरुपाधिकरक्षकत्ववात्सल्यसौशील्यादिकमाविष्कृतम्। अथ परत्वोपयुक्तं कारणत्वादिकमाह—त्वमेक इति। त्वमस्य जगतः हेतुः कारणं किं चतुर्मुखादिव ?

नेत्याह—अहेतुरिति । स्वयं कारणान्तररहितः, किं निमित्तकारणं ? नेत्याह—एक इति । अविभक्तनामरूपसूक्ष्मचिदचिद्विशिष्टत्वेनैकत्वव्यपदेशार्हः आद्यः पुरुषः जगदुपादानकारणभूतपुरुषश्चेत्यर्थः। किमुपादानकारणमेव ? नेत्याह—अद्वितीय इति। अधिष्ठात्रन्तररहितः निमित्तकारणश्चेत्यर्थः। अत एव प्रकृतिपुरुषविलक्षण इत्याह—स्वदृक् तुर्य्यश्चेति। स्वदृक् स्वयम्प्रकाशज्ञानस्वरूपः अनेन प्रकृतिवैलक्षण्यमुक्तं जडत्वात्तस्याः तुर्य्यः जाग्रत्स्वप्नसुषुप्तिरूपावस्थात्रयसम्बन्धरहितः अनेन जीववैलक्षण्यमुक्तम् आकाशमिव केवलमित्यनेन तुर्य्य इत्यनेन च निर्विकारत्वमुक्तम् एक आद्यः पुरुष इत्यनेन विकाराश्रयत्वरूपोपादानत्वं कथमेतदुभयं मिथो विरुद्धमेकस्मिन्नुपपद्यते ? इत्याशङ्क्य परिहरति—प्रतीयस इति। यद्यपीदं परस्परविरुद्धमथाऽपि सर्वगुणाप्रसिद्धये सर्वेषां गुणानां स्वापृथक्सिद्धविशेषणानां प्रकृतिपुरुषादीनां प्रसिद्धय देवमनुष्यत्वाद्याकारसिद्धये स्वमायया आत्मीयसङ्कल्पेन यथाविकारं प्रकृतिपुरुषगतस्वरूपान्यथाभावस्वभावान्यथाभावरूपविकारानुगुणं प्रतीयसे तत्तदन्तरात्मतया तत्तन्नामरूपनिर्वाहकत्वेन प्रतीयसे प्रमीयसे वेदान्तजन्यप्रमाविषयो भवसीत्यर्थः। अस्मिन् विषये वेदान्तानामेव प्रामाण्यमिति भावः॥३८॥ सर्वगुणेत्यनेन प्रकृतिसम्बन्धः सूचितस्तर्हि जीवस्येव प्रकृत्या तिरोहितस्य यथाविकारमन्तरात्मतया प्रकाशो न स्यादित्याशङ्कां दृष्टान्तेन निराकरोति—यथैवेति। अपिहित इति च्छदेः दार्ष्टान्तिके गुणेनापि इति दर्शनात् अन्यथोपध्मानीयप्रसङ्गाच्च अपिहित इति नञ्समासः ननु "वष्टिभागुरिः" इति वचनविहिताकारलोपाभावपक्षे रूपं स्वया स्वप्रकाशया छायया मेघादिरूपया अपिहितोऽतिरोहितस्वरूपस्वभाव एव सन् नहि मेघादिना सूर्य्यतत्प्रभयोस्तिरोधिः मेघादीन् भित्वा तदन्तर्बहिश्च प्रसरणात् अन्यथा तद्व्यवहितरूपाग्रहणाप्रसङ्गात् यथैवम्भूतः सूर्य्यः छायां मेघादीन् रूपाणि तद्व्यवहितरूपाणि च सम्यक्तस्ते सम्यक् प्रकाशयति एवं हे भूमन्! गुणेन सत्त्वादिगुणेन गुणमयप्रकृत्येति यावत् अपिहित' अतिरोहितस्वरूपस्वभाव एव त्वं गुणान् प्रकृतितत्कार्य्यगतधर्मान् गुणिनः प्रकृत्यादींश्च प्रकाशयसि आत्मप्रदीपः स्वप्रकाशश्च यद्यपि दृष्टान्ते छायासूर्ययोः न सम्बन्धः मिथस्तयोर्विप्रकृष्टत्वात् दार्ष्टान्तिकेत्वपृथक्सिद्धविशेषणविशेष्यभावः सम्बन्ध इति दृष्टान्तो विषमस्तथापि विप्रकृष्टस्येवापृथक्सिद्धाया अपि प्रकृतेरतिरोधायकत्वमन्यप्रकाश्यत्वं तिरोधानप्रतीतेर्भ्रमरूपत्वञ्चेत्येतदेव दृष्टान्ताभिप्रेतम्॥ ३९॥ न केवलमयमेवाज्ञः किन्तु सर्वेऽपि त्वन्मायामोहितत्वादित्यभिप्रयन्नाह—यन्मायेति। यस्य तव मायया मोहिता धीर्येषां ते पुत्रादिष्वासक्ताः वृजिनार्णवे दुःखार्णवे उन्मज्जन्ति उत्प्लवन्ते पुनर्निमज्जन्ति च॥ ४०॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

नन्वेवम्भूतस्य मम कथं प्रपञ्चे स्वस्वरूपेण प्राकट्यम् ? तत्राह—तवेति। धर्म्मस्य प्राधान्यतस्त्वद्भक्तिलक्षणस्य॥३७॥ त्वमेकः सजातीयभेदरहितः अद्वितीयो विजातीयभेदरहितश्च यत आद्यः "विष्णोस्तु त्रीणि रूपाणि" इत्युक्तानां पुरुषाणां मूलरूपः अतस्त्वमेव पुरुषः। "पूर्वमेवाहमिहासमिति तत्पुरुषस्य पुरुषत्वम्" इति श्रुतेः। कुतस्तुरीयः विराट् हिरण्यगर्भश्च कारणं चेत्युपायः "ईशस्य यत् त्रिभिर्हीनं तुरीयं तद्विदुर्बुधाः" इत्युक्तलक्षणः तदपि कुतः स्वदृक् स्वप्रकाशः अतो हेतुरहेतुरपि यद्यप्येवम् अखण्डस्त्वं तथापि यथाविकारं तत्तद्विकारानुसारेण सर्वेषां सत्त्वादिगुणप्रकाशनाय महत्स्रष्ट्रादिरूपरसन् खण्डवत् प्रतीयसे तच्च मायया स्वपूर्णत्वावरणशक्तितारतम्येनेत्यर्थः। अतस्त्वमेव चेश्वर इति ननु ममैव चेन्महत्स्रष्ट्रादिरूपत्वं तर्हि तत्तद्रूपेण मायाप्रवर्त्तयितुर्ममैव तत्तद्दोषलेशः स्यात् इत्याशङ्क्य दृष्टान्तेन परिहरति—यथैवेति॥ ३८–३९॥ तदेवं निगूढं तन्महिमानं व्यज्य प्रस्तुतं बाणार्थं प्रसादनं योजयितुं परमापत्प्राप्त्या मदरहितं बाणमपि शिक्षयितुं निवेदयति पञ्चभिः। तत्र तादृशत्वन्महिमाज्ञानमस्य नाश्चर्य्यं प्रायः सर्वस्यैव मोहितत्वादित्यभिप्रेत्याह—यदिति॥ ४०–४३॥

### श्रीमज्जीवगोस्वामिकृतः बृहत्क्रमसन्दर्भः

त्वं तु सर्वकारणकारणं मूर्त्तानन्दः। नन्वेवं चेदहं तदा कथमवनौ भविष्यामीत्याह—तवावतारोऽयमित्यादि। हे अकुण्ठधामन्! अयं तवावतारः किल धर्मस्य गुप्त्यै जगतो भवाय क्षेमाय। ननु भवन्त एव लोकपालकाः ? नेत्याह—वयञ्चेत्यादि। वयञ्च सर्वे ब्रह्मादयस्त्वयानुभाविता अनुभावितं प्रापिताः, न त्वस्माकं स्वतोऽनुभावः, तदनुभावेनैव सप्तभुवनानि विभावयामः॥ ३७–४०॥

### श्रीनाथचक्रवर्तिपादविरचिता चैतन्यमतमञ्जूषा

विराड्रूपन्तु तव लीलामात्रम्, तत् कीदृशमित्यनूद्य तवावतारोऽयमिति वदन् श्रीकृष्णस्य परमैश्वर्यं प्रदर्शयति—'वयञ्च सर्वे भवतानुभाविताः सन्तो विभावयामो भुवनानि सप्त' इति॥ ३७—४०॥

### श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शिनी

साक्षाद्ब्रह्मस्वरूपत्वाददृश्यस्यापि तव यत् प्रापञ्चिकलोकैर्दृश्यत्वं तदतर्क्यशक्तेस्तव परमकृपानिबन्धनमित्याह। तवेति। हे अकुण्ठधामन्! परब्रह्मणोपि तव यद्दृश्यत्वं तस्मात्तर्कैस्तव प्रभावः कुण्ठीकर्तुमशक्य इत्यर्थः। धर्मस्य स्वभक्ति-

लक्षणस्य गुप्त्यै तत्प्रतिपक्षमतनिरसनपूर्वकरक्षणाय जगतः कर्मिज्ञानिमृदुदुराचारबहिर्मुखपर्यन्तस्यापि अभवाय मोक्षाय न च सामान्यजगत्पालनायेत्याह—वयमिति। सर्वे दश दिक्पालाः भवता अनुभाविताः पालिताः सन्तः पालयाम एव तन्मात्रार्थं तवाविर्भावे किं प्रयोजनमिति भावः ॥ ३७ ॥ मद्विभूतयो यूयमपि मदभिन्ना एवेति तत्र नहि नहीत्याह। त्वमेकः सजातीयभेदरहितः ईश्वरान्तराभावात् त्वत् स्वरूपभूतानां मत्स्याद्यवताराणामपि मध्ये त्वमाद्यः स च त्वं मनुष्याकृतिरेवेत्याह, पुरुषः त्वत्स्वरूपाद्भिन्ना जीवशक्तिः मायाशक्तिरपीत्याह। अद्वितीयः विजातीयभेदरहितः किञ्च पुरुषाकाराणां मुख्यानां स्वरूपभूतानां चतुर्णां व्यूहानाम् अपि मध्ये त्वं तुर्य्यः वासुदेवस्वरूप इत्यर्थः। ननु त्वामन्यः कोपि दर्शयितुं शक्नोतीत्याह। स्वदृक् स्वेनैव दृक् दर्शनं यस्य स अतः सर्वश्रेष्ठत्वात्त्वमेव हेतुः सर्वकारणम् अहेतुस्तव तु कारणं नास्तीत्यर्थः। अत एव ईशः मुख्यमैश्वर्यं तवैवेति भावः एतादृगैश्वर्य्यवानपि त्वमतितुच्छानां मायिकगुणानामप्युपकारं करोषीत्याह—प्रतीयस इति। तथापि तदपि यथाविकारं प्रतिशरीरं स्वमायया कृत्वा ये सर्वे गुणा बुद्धीन्द्रियादयस्तेषां प्रकृष्टसिद्धयर्थं प्रतीयसे अन्तर्यामिरूपेणानुभूयसे तत्र तत्रान्तर्यामित्वं यदि त्वं न स्वीकुरुषे तदा मायागुणानां प्रकाशनाभावात्ते व्यर्था एव भवेयुरिति भावः ॥ ३८ ॥ अदृष्टस्याप्यन्तर्यामिणो मायागुणप्रकाशने दृष्टान्तमाह—यथैव सूर्य्यः स्वया छायया मेघलक्षणाया पिहितः लोकदृष्ट्या आच्छादितोपि छायां मेघं रूपाणि मेघान्तरितान् लोकांश्च घटादीनपि सच्चकास्ति प्रकाशयति एवं गुणेनाऽहङ्कारेण स्वकार्य्येण जीवावरकेण तद्दृष्ट्यापिहितोपि गुणान् बुद्धीन्द्रियविषयादीन् गुणिनो जीवानपि सञ्चकास्ति प्रकाशयसि आत्मा परमात्मा चासौ प्रदीपः प्रकाशकश्चेति ॥ ३९ ॥ स त्वमेव कृपयाऽवतीर्य जीवानुद्धरसि जीवास्तु संसारसिन्धौ पतिता एवेत्याह-यन्मायेति ॥ ४० ॥

### गूढार्थदीपिनी

हे अकुण्ठधामन् अलुप्तज्ञान! भवाय अभ्युदयाय। अनुभाविता पालिताः सन्तः भुवनानि विभावयामः पालयामः ॥ ३७ ॥ स्वदृक् स्वप्रकाशरूपः। सर्वस्य हेतुः स्वयम् अहेतुः। यथाविकारं प्रतिशरीरम् गुणप्रसिद्ध्यै विषयप्रकाशनाय प्रतीयसे ॥ ३८ ॥ यथैव सूर्य छायया मेघलक्षणया आच्छादितोऽपि छायां मेघं रूपाणि घटपटादीनि प्रकाशते। एवं गुणेन अहङ्कारेण स्वकार्येण तद्दृष्ट्या आच्छादितोऽपि त्वं गुणान् सत्त्वादीन् तदुपहतान् गुणिनः जीवानपि प्रकाशयसि आत्मना स्वयमेव दीपयसीति तथा। हे भूमन् परिपूर्ण ॥ ३९ ॥ वृजनार्णवे दुःखसमुद्रे संसारे पुत्रादिषु प्रसक्ताः सन्तः उन्मज्जन्ति ऊर्ध्वं स्वर्गं गच्छन्ति पुण्याधिक्यात्। निमज्जन्ति अधो नरकं गच्छन्ति पापाधिक्यात् ॥ ४० ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

किञ्च सर्वपोषके स्वामिनि पोष्येण मया व्यतिक्रमः कृत इति सूचयति-तवेति। हे अकुण्ठधामन् निरावरण! भवाय अभ्युदयाय भाविताः पालिताः ॥ ३७ ॥ ननु, चक्षुरादिवृत्तिपरिच्छिन्ने पित्रादौ अयमनेन पालितः इति पालकपालितयोः सम्बन्धो दृष्टः कथमकुण्ठस्वरूपे सर्वकरणवृत्तिभिरपरिच्छेद्ये पालकोऽयमिति प्रतीतिरिति शङ्कां निराकरोति—त्वमेक इति। एकः केवलः सजातीयभेदशून्यः अद्वितीयः विजातीयभेदशून्यः सजातीयस्य विजातीयस्य च पदार्थान्तरस्य आवरकस्याभावात् यद्यपि निरावरणस्त्वमसि तथापि गुणप्रसिद्धयै कृपालुत्वस्वभक्तरक्षकत्वसर्वार्थप्रदत्वादिगुणविख्यापनाय यथाविकारं विकारो मायाकार्यं तत्तदनुसारेण मायया कृपया प्रतीयसे करणवृत्त्यनावृतोपि हृदि ध्यातृभिरनुभूयसे इत्यर्थः। नन्वेवम्भूतभेदद्वयशून्ये मयि सति कुतो ध्यातृध्येयादिभेदसिद्धिरित्यत्र स्वगतभेदात्सर्वं सङ्गच्छते इत्याह—आद्य इति। विश्वस्याऽनभिव्यक्तनामरूपस्य बीजमित्यर्थः। तर्हि किं प्रधानं नेत्याह—स्वदृक् स्वयम्प्रकाशः अत एव हेतुः स्वगतस्य चेतनाचेतनात्मकस्य विश्वस्योपादकः स्वयमहेतुरनन्यसिद्धः किञ्च स्वरूपताप्यनेकधा कृपया प्रतीयसे इत्याशयेनाह-पुरुष इति। अनेकपुरुषरूप इत्यर्थः—

"आद्यस्तु महतः स्रष्टृद्वितीयं त्वदसम्भवम्। तृतीयं सर्वभूतस्थं तानि ज्ञात्वा विमुच्यते ॥

इति सात्वततन्त्रोक्तेः तुर्य्यः वासुदेवः वासुदेवादिचतुर्व्यूहस्वरूप इत्यर्थः ॥ ३८ ॥ गुणप्रसिद्ध्यायित्यनेन निर्दिष्टान् गुणान् एकदेशकथनेन सूचयन् तत्तद्धृदि प्रविष्टस्याप्यनावृतत्वं प्रपञ्चयति—यथैवेति। यथा सूर्यः स्वच्छायया मेघलक्षणया पिहितः प्रभया छायां मेघञ्च रूपाणि मेघान्तरितान् घटादीन् अपि सञ्चकास्ति प्रकाशयति एवं गुणेन हृदा पिहितः "अन्तःप्रविष्टः शास्ता जनानाम्" इति श्रुतेरन्तःप्रविष्टोपि हे भूमन् हे सर्वगत! सर्वव्यापकत्वादनावृतः गुणान् अन्तःकरणभेदान् गुणिनम् अन्तःकरणवतो जीवान् आत्मा परमात्मा चासौ प्रदीपः सर्वप्रकाशकः प्रकाशयसीत्यर्थः ॥ ३९ ॥ अथापि जनस्त्वन्मायामोहितः न केवलमहमेवेत्याह—यन्मायेति। वृजिनार्णवे दुःखार्णवे उन्मज्जन्ति देवादियोनिषु निमज्जन्ति स्थावरादिषु ॥४०॥

### श्रीसत्यधर्मकृता श्रीभागवतटिप्पणी

हे अकुण्ठधामन्। अनन्यथाभवत्प्रकाश। तथाभूतवैकुण्ठाख्यधामवान्वा। तवायमवतारो धर्मस्य गुप्त्यै जगतो भवाय मङ्गलाय योग्यस्य। वयं सर्वे च भवताऽनुभाविताः पालिताः सन्तः सप्तभुवनानि विभावयामः पालयामः ॥ ३७ ॥ एको मुख्य

ए चासौ कश्चेत्येककर्तेति वा आद्योऽद्वितीयस्तुर्यो द्वाविंत्याद्युक्तबन्धातीतो गुणातीतो गुणात्ययस्तुरीयश्चेति पञ्चमतात्पर्योवितः। स्वदृक् स्वप्रकाशो हेतुः स्वयं कारणमहेतुः कारणशून्य ईशः श्रीरमणः। अथाऽप्येवं सन्नपि सर्वगुणानां प्रसिद्धिः प्रयोजनसम्पत्तिस्तदर्थं यथाविकारं तत्तद्विधाकारामनुसृत्य स्थूलत्वलघुत्वादिभिः प्रतीयसे। न मृदादिवत्कर्मपरवश इत्याह। स्वमाययेति। स्वेच्छयेत्यर्थः। सु अत्यन्तं अमाययेति वा॥ ३८॥ गुणप्रसिद्धये इत्युक्तं निदर्शनतो विवृणोति। सूर्यं इति। स्वया स्वसम्बन्धिन्या छाययाऽपिहित आच्छादितो लोकलोचनोऽनन्तरं तां छायां रूपाणि तदन्तरितान्यप्रकाशितान् घटादिवस्तूनि च चकास्ति प्रकाशति। स्वयं तदसम्बद्धो यथैवं तथा। गुणेनापिहित इतरमतेः। वस्तुतस्तु पिहितो नेत्यपिहितः। गुणानित्यनुवादेन प्राक्तनं गुणपदं जात्येकवचनाभिप्रायेणेति द्योतयति। अनेनैव सर्वगुणप्रसिद्धये इत्युक्तिरप्यनुकूलितेत्याकलनीयम्। आत्मप्रदीपः स्वरूपज्ञानस्तान्गुणान्गुणिनो जीवानपि चकास्ति प्रकाशयतीति न संसाररतवेति सारांशः। रतवस्य ज्ञेयः। एतदसम्भावनोच्छित्त्यै भूमन्निति॥ ३९॥ यतस्त्वन्मोहिता हि वयं वर्तामहे तव तत्संसारवार्ता कंसारे कथं स्यादित्यपि विज्ञापयन्ति। यदिति। यस्य तव मायया मोहिता धीर्येषां ते पुत्रदारगृहादिषु प्रसक्ता वृजिनार्णवे मज्जन्ति निमज्जन्ति॥४०॥

### श्रीमद्वल्लभाचार्य्यकृता सुबोधिनी

एवं विश्वरूपत्वमुक्त्वा तादृशस्यावतारे प्रयोजनमाह **तवावतारो**ऽयमिति। अकुण्ठो वैकुण्ठः स्वरूपप्रच्युतस्य समागमनं निवारयति सम्बोधनेन। अयं तवावतारः धर्मस्य गुप्त्यै खलनिग्रहाय च उभयार्थमवतारः। यत्र विरोधः, तत्रोभयसमर्थनं विचारणीयमिति निरूप्यते। मदुक्ता भुजा धर्मः, स च खलः, उभयमत्र समाधेयम्। ननु प्रमाणभूतोऽपि भवान् पक्षपातेन करणादप्रमाणं जात इति शङ्कां वारयति वयं चेति। **जगतो भवायेति** पाठेऽपि उद्धवार्थमयं मारणीय इति सिध्यति। येन वा धर्मेणोद्भवो भवति, दैत्यांशनिराकरणपूर्वकेण हि तथा। वयं च भवतैव सर्वार्थे अनुभाविताः, तथा भावनया प्रेरिताः, संस्कृता वा, सप्तभुवनानि विभावयामः। वयं तत्त्वाधिष्ठातृदेवाः ब्रह्माण्डदेवा वा। सर्वत्रैव यदि वयं त्वद्भावभाविताः, तदा अस्मिन्नेव कः सन्देहो भवेत्। अनेन केवलतामसभावकत्वमिति पक्षो निवारितः। अधस्तात्सप्तभुवनेषु तदनुभावः सिद्ध इति उपरितनान्येव सप्तभुवनानि गृहीतानि॥३७॥ ननु तथापि ममाग्रे अयमपकारं करिष्यति, ततो मया मारणीय इति, अस्मिन्ननुभावो न युक्त इति चेत्, तत्राह त्वमेक आद्य इति। यद्यपि भवान् सर्वत्र एक एव, पूर्णगुणश्च, तथापि यावन्ति रूपाणि जगति प्रसिद्धानि घटपटादीन्यपि, तत्र कारणे विचार्यमाणे भगवानेव स्वस्यैकमेकं धर्मं मुख्यतया परिगृह्य, तथाविधो जात इति मन्तव्यम्। तथा सति सहस्रभुजरूपो बाणो येन ( गुणेन ) भवति, स एव गुणः कारणभूतोऽङ्गीकर्तव्य इति तथैव करणमुचितम्। अस्माकं सर्वत्र भेदप्रतीतावपि त्वमेक एव। न हि निम्बबुद्ध्या भक्षिता शर्करा तिक्ता भवति। तस्यैकत्वं साधयति आद्य इति। यथैक एव व्रीहिः अङ्कुरादिभावेन सहस्रं व्रीहयो भवन्ति, तथैक एव भगवानाद्यः कारणभूतः। सङ्घातोत्पत्त्यर्थं व्रीहिवत्। निराकारतामाशङ्क्य कारणस्य बीजात्मकस्य स्वरूपमाह पुरुष इति। तस्य कारणतायां स्त्र्यपेक्षामाशङ्क्याह अद्वितीय इति। कार्यकारणवैलक्षण्यं कार्यवैचित्र्यं च चिन्तामणाविवात्राप्यध्यवसेयम्। तस्योपादानत्वमविकृतत्वं निमित्तत्वं च पूर्वमेव साधितम्। अत एव जगतः अनुपास्यतापि सिद्धा। ब्रह्मत्वे च जगतस्तज्जलान्तत्वमेव। दृष्टान्तैः स्थितिप्रलयावन्यत्रेति निदर्शनमात्रत्वम्। बहवो दृष्टान्ता एकीभूताः भगवति सर्वलक्षणां बुद्धिं सम्पादयन्ति। तर्कमात्रमूलत्वे अप्रामाण्यं स्यादिति दृष्टान्ताभावाच्च श्रुत्यैकसमधिगम्यमेव ब्रह्मेति स्थापितम्। कादाचित्कत्वेऽपि भगवानेव हेतुः। अन्यस्मिन् कारणत्वेन परिकल्प्यमाने या उपपत्तिः, सा भगवत्येव सम्पादनीया। सर्वसमर्थत्वात् ब्रह्मणः। भिन्नाधिकरणत्वे यथा विरोधपरिहारः, तथैकाधिकरणत्वेऽपि। युक्त्यपेक्षायामपि पत्रदारुनिर्यासपुष्पफलेषु बीजमेकमेव कारणं सर्वविलक्षणं दृष्टमिति तस्यैव परम्परया साक्षाद्वा कारणत्वमध्यवसीयते, तथा श्रुतत्वाद्ब्रह्मणोऽप्यध्यवसेयम्, अवधृतप्रामाण्यवेदात्। तथा सति श्रुतिर्यथार्था समर्थिता भवति। वैयर्थ्यं च स्यात्, प्रत्यक्षानुमानादिभिरेव वैदिकार्थस्यापि सिद्धेः। सङ्केतस्तु निरूपकग्रहणादेव। अन्यथा तत्तन्मते आत्मादिपदानां सङ्केतः अलौकिकार्थानामसङ्गतः स्यात्। अतोऽद्वितीयपुरुष एव आद्यो जगत्कारणम्। एवं भगवतः जगत्कारणत्वमुपपाद्य तत्रोत्पत्तिस्थितिप्रलया एव कार्यत्वेन सिद्धा इति मोक्षसाधकत्वं भगवतो वदन् पुनर्विशेषणान्तरमाह तुर्य इति। समाधिगम्यः। यथा जाग्रत्स्वप्नसुषुप्तयः स्थित्युत्पत्तिप्रलयाभिज्ञापिकाः, एवं तुर्यावस्थापि मोक्षाभिज्ञापिका। तस्यां प्रादुर्भूतो भगवान् मोक्षद इति। तस्य मोक्षदाने प्रकारमाह स्वदृगिति। यथाद्वितीयः पुरुषो जगत्कारणम्, तथा **स्वदृक्** स्वस्मिन्नेव दृष्टियुक्तः आत्मानुभवतुष्टः मोक्षहेतुरिति। ननु स्वमोक्षमेव साधयेत्, नतूपासकानामन्येषाम्, तत्राह **हेतुरिति**। अन्येषामपि मोक्षे स्वदृक्त्वे तुर्यत्वे च स एव हेतुः। तर्ह्यन्यस्यास्मदादेः स्वयं स्वस्य ततोऽपि मूलभूतः कश्चिद्भविष्यतीत्याशङ्क्याह अहेतुरिति। न तस्य कश्चिद्धेतुरस्ति। ननु यथा भगवान् स्वेच्छया सर्वं भवतीत्युच्यते, एवं सर्वोऽपि सर्वं भवतु, अभेदश्च श्रुत्या प्रतिपाद्यत इति, तत्राह ईश्वर इति। स हि सर्वसमर्थोऽपि स्वयं तथैव मूलभूतः। कार्यरूपस्तु स्वस्मादेव जायते, सर्वसामर्थ्यस्य विद्यमानत्वात्, ईश्वरेच्छाया नियन्तुमशक्यत्वाच्च। एवं सर्वसामर्थ्यमलौकिकत्वं निर्दोषपूर्णगुणविग्रहकत्वमुपपाद्य सर्वत्र पूर्णगुणकोऽपि यथाविकारं इक्षुक्षीराम्ललवणादिविकारमनतिक्रम्य प्रतीयसे, सर्वात्मना अप्रतीतो भगवन्मायैव नियामिका। ननु तस्याः स्वातन्त्र्यास्वातन्त्र्याभ्यां पुनः

स दोषस्तदवस्थ इति चेत्, तत्राह **सर्वगुणप्रसिद्धया** इति। अन्यथा भगवदीयाः सर्वे गुणाः प्रत्येकं न प्रसिद्धा भवेयुः। यथा षड्रसापि हरीतकी नीरसैव, निसर्गतः कोऽपि रसः सर्वविलक्षणो न प्रतीयत इति, तथैव भगवान् सर्वत्र सर्वगुणप्राकट्ये क्रमरवत्प्रतीयेत। अतो भगवदिच्छारूपया मायया सर्वत्र पूर्णगुणकोऽपि यथाविकारं प्रतीयते। तथैव लीलायां यादवत्वमात्रं प्रकटयितुमाविर्भूतः नान्यान् धर्मान् प्रकटितवानित्यस्मदादीनामप्यज्ञानमिति भावः॥ ३८॥ ननु सर्वत्र कारणेषु कार्योत्पत्तौ कारणप्रत्यक्षता दृश्यते, नत्वप्रत्यक्षान्मृदादेः घटादिकमुत्पद्यते; तथा पदार्थोत्पत्तौ कारणत्वेन ब्रह्मप्रतीतिः स्यात्, तदभावात् प्रत्यक्षविरोधात् कथं कारणतेत्याशङ्क्याह **यथैव सूर्य** इति। 'मेघाः सूर्याद्भूता' इति श्रुतिः, 'यावदादित्यस्तपति रश्मिभिस्ताभिः पर्जन्यो वर्षती'ति श्रुतेः सूर्य एव पर्जन्यः, अन्यथा सवितृत्वं न स्यात्। ततः सूर्यादुत्पन्ना अपि मेघाः यथा सूर्यच्छादकाः, एवं जगदपि भगवदुत्पन्नमपि भगवदाच्छादकम्। यथा तान् मेघान् मेघान्तर्जायमानां वृष्टिं तस्याप्यधोभूमिं भूमिष्ठांश्च पदार्थान् स्वयमदृष्टोऽपि प्रकाशयति, एवं सर्वकारणभूतः भगवानेव सर्वत्र सर्वप्रकाशक इति न काप्यनुपपत्तिः। **छायया मेघैः**। चकारात्तत्कार्यां वृष्टिम्। मेघानां पृथक्त्वं निवारयति स्वयेति। **रूपाणि** घटादीनि। चकारात्तैर्जायमानां क्रियामपि लौकिकीं वैदिकीं च प्रकाशयति। एवं गुणेन स्वयमेव तथाभूतेनापिहितोऽपि सर्वथा गुप्तोऽपि गुणान् कारणभूतान् गुणिनः कार्याणि च प्रकाशयति, आत्मप्रदीपश्च भवति। सर्वथा सामर्थ्यार्थं सम्बोधनं भूमन्निति॥ ३९॥ भगवत्कारणतायां हेत्वन्तरमप्युपादयति **यन्मायामोहितधिय** इति। विवेकिनोऽपि विषयान् दृष्ट्वापि दुःखदान् तत्रैवासक्ता भवन्ति। तत्रेष्टसाधनतायाः लौकिके कारणत्वात् तदभावेऽपि प्रवृत्तेरवश्यं कारणान्तरमाक्षिपति। प्रत्यक्षभ्रमस्य प्रत्यक्षमेव विशेषज्ञानं बाधकमिति दिङ्मोहादौ दृष्टमिति चेत्, तत्राह **प्रसक्ता वृजिनार्णव** इति। दृष्ट्वापि तद्गतदोषान्, अनुभूयापि दुःखम्, पुत्रदारगृहादिषु **उन्मज्जन्त्युत्पद्यन्ते**, 'अन्ते या मतिः सा गति'रिति तत्रैवासक्ताः **निमज्जन्ति**, आसक्त्यैव तत्र स्थिता यावज्जीवं तत्रैव म्रियन्ते। 'प्रजामनु प्रजायन्त' इति पुत्रादुत्पद्यन्ते, पुत्रार्थमेव च क्वचित् म्रियन्ते च। तथैव भार्यायां पुत्ररूपेणोत्पद्यन्ते, भार्यार्थं म्रियन्ते च। गृहे तूत्पत्तिमरणे प्रसिद्धे। आदिशब्देनाश्वगर्दभादिष्वपि। 'अन्ते या मतिः सा गति'रिति भरतवत्तत्राप्युत्पद्यन्ते म्रियन्ते च। तस्मादेवं महामोहहेतुः भगवच्छक्तिरेव काचिदङ्गीकर्तव्या, या प्रत्यक्षशास्त्रैरप्यनुल्लङ्घ्या॥ ४०॥

### श्रीविट्ठलरायात्मजश्रीवल्लभकृतलेखः

**तवावतारोऽयमित्यत्र। मदुक्ता** भुजा इति। मया वरत्वेन दत्ता भुजा वेदरूपेण मया दत्तत्वात् धर्मरूपा इति भावः। **उपरितनान्येवेति**। अधःस्तनाभिप्रायेण सप्तत्वव्याख्याने भगवतानुभाविता इति कथनं व्यर्थं स्यात्, तामसत्वेन तेषां स्वत एव भावनसम्भवादिति भावः। **त्वमेक** इत्यत्र। भगवतः सर्वत्रैकरूपत्वादत्रानुभावो युक्तोत्र नेति विभेदो नास्तीत्यर्थः। **कार्यकारणेति**। कार्यमचेतनमुपादानं चेतनमिति वैलक्षण्यमित्यर्थः। **अत एवेति**। नहि चिन्तामणिनिर्मिताः पदार्थाः फलदत्वेनोपास्यन्ते, किन्तु चिन्तामणिरेव फलदत्वेनोपास्यते इति दृष्टान्तादित्यर्थः। **ब्रह्मत्वे चेति**। जगतो ब्रह्मत्वे तज्जलान्तत्वमेव हेतुरिति शेषः। **भिन्नाधिकरणत्वे** इति। भिन्नोपादानकत्वे इत्यर्थः। **यन्मायेत्यस्याभासे। हेत्वन्तरमिति**। पुत्रादिषु प्रवृत्तिभगवत्कारणतायां हेत्वन्तरं भगवानेव स्वशक्त्या मायया पुत्रादिषु प्रवर्तयतीत्यर्थः। ननु वस्तुस्येष्टसाधनताज्ञानस्यैव हेतुता, नतु भगवत इत्याशङ्क्य व्युत्पादयन्ति **विवेकिनोपीति**। इदमेव विवृण्वन्ति **तत्रे**त्यादिना। तत्र पुत्रादिष्वित्यर्थः। **एतस्य** प्रवृत्तेरित्यनेनान्वयः। **तदभावेपि** इष्टसाधनत्वाभावेपीत्यर्थः। तथा चेष्टसाधनत्वाभावेपि पुत्रादिषु प्रवृत्तेर्हेतोः सा प्रवृत्तिः कारणान्तरं भगवन्तमेव कारणत्वेनाक्षिपतीत्यर्थः। **प्रत्यक्षेति**। एतस्मात्पूर्वं नन्विति शेषः। ननु वस्तुत इष्टसाधनत्वाभावेपि तथाज्ञानं भ्रमात्मकं तिष्ठत्येवातः प्रवृत्तिः। विशेषज्ञानं भ्रमनिवर्तकमिति हेतोर्विशेषज्ञाने चाप्रवृत्तिरत इष्टसाधनताज्ञानस्य कारणता, नतु भगवत इत्याशङ्क्य वृजिनार्णवे प्रसक्ता एव भवन्तीत्याहेत्यर्थः। **प्रत्यक्षमेवेति**। न तु तदर्थमलौकिकमपेक्षितमित्येवकारः। अतो निवृत्तावपि न भगवान्कारणमित्यर्थः। भ्रमात्मकमपीष्टसाधनताज्ञानं नास्ति, तथापि प्रवर्तन्ते इत्याहुः **दृष्ट्वापीति**।

### श्रीसुबोधिनीसारः

हे अकुंठधामन् तवायमवतारो धर्मस्य गुप्त्यै रक्षणाय जगतो भवाय समृद्धये भवता त्वयाऽनुभाविता अनुगृहीताः सर्वे वयं सप्त भुवनानि पालयामः॥ ३७॥ आद्यः पुरुषः श्रीविष्णुः एकोऽद्वितीयः सजातीयविजातीयभेदरहितः तुर्यः शुद्धः स्वदृक् स्वप्रकाशः हेतुरस्य कारणं स्वयमहेतुः। कारणकारणत्वात् ईशोऽवशीकृतमायाशक्तिः जीवरूपेण यथाविकारं प्रतिशरीरं प्रतीयसे स्वमायया सर्वेषां गुणानां प्रसिद्धयै प्रकाशनार्थम्॥ ३८॥ यथा सूर्यः स्वया छायया मेघरूपेण पिहितः छन्नः छायां मेघं रूपाणि च संप्रकाशते एवं गुणेनाहंकारेण पिहितः आवृतस्त्वमात्मप्रदीपो गुणिनो गुणान् सत्वादींस्तदुपाधींश्च संचकास्ति हे भूमन्॥ ३९॥ यस्य मायया मोहिता धीर्येषां ते पुत्रस्त्रीगृहादिषु प्रसक्ता वृजिनस्य दुःखस्यार्णवे समुद्रे संसारे उन्मज्जंति देवादियोनीः प्राप्नुवन्ति निमज्जंति स्थावरादियोनीर्भजन्ते॥ ४०॥

### गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

'एवंभूतस्य ममावतारः किमर्थम्' इत्याशङ्क्याह—तवेति । हे अकुण्ठधामन् अप्रच्युतस्वरूप ! तवायमवतारो धर्मस्य गुप्त्यै रक्षार्थम्, जगतः प्रपन्नजनसमूहस्य भवाय यथोचितं धर्मादिपुरुषार्थसिद्धये । ननु 'यूयमेव लोकपालत्वेन प्रसिद्धास्तत्राहं क' इत्यत आह—वयमिति । वयं च लोकपालाः सर्वे भवता अनुभाविताः प्रभावयुक्ताः कृता एव सप्त भुवनानि विभावयामः पालयामः, न स्वतन्त्रा इत्यर्थः ॥ ३७ ॥ ईशः स्वतन्त्रस्तु एक एव त्वमेवेत्यन्वयः । तत्र हेतुमाह—हेतुरिति । सर्वकारणत्वादित्यर्थः । तत्र हेतुमाह—आद्य इति । 'जगद्धेतुत्वेपि कश्चिदन्य एव तस्य हेतुः स्यात्' इत्याशङ्क्याह—अहेतुरिति । स्वहेतुरहितः । तत्र हेतुमाह—अद्वितीय इति । जीववज्जाग्रत्स्वप्नसुषुप्तिरूपावस्थात्रयं वारयति—तुर्य इति । जडत्वं वारयति—स्वदृगिति । स्वप्रकाशज्ञानरूप इत्यर्थः । सर्वान्तर्यामित्वमाह—पुरुष इति । अथापि उक्तस्वप्रकाशरूपोपि स्वमायया एकोहं बहु स्यामित्यात्मसङ्कल्पेन यथाविकारं देवतिर्यङ्मनुष्यादिस्वस्वरूपेण प्रतीतिः । ननु 'किमर्थमेवं सङ्कल्पः' तत्राह—सर्वगुणप्रसिद्ध्यै इति । रजआदिगुणानां स्वैश्वर्यादिगुणानां च प्रसिद्धिरन्यथा न स्यात्तदर्थमित्यर्थः ॥ ३८ ॥ ननु 'स्वप्रकाशरूपेण कथं न प्रतीयते' इत्यपेक्षायां 'आच्छादितत्वात्' इति सदृष्टान्तमाह—यथैवेति । सर्वसामर्थ्यं सूचयन् सम्बोधयति—भूमन्निति । यथा स्वच्छायया 'यथा हि सूर्यात्प्रभवन्ति वार' इत्यादिवचनात् स्वकार्यमेघवर्षादिरूपया पिहितः आच्छादितोपि सूर्यस्तां छायां रूपाणि च नीलपीतादीनि एकश्चकारोनुक्तघटपटादिसमुच्चयार्थः सञ्चकास्ति प्रकाशयति । एवं गुणेन स्वकार्येण देहाहंकारादिसङ्घातेनाच्छादितोऽपि त्वं तान् गुणान् देहेन्द्रियान्तःकरणादीन् गुणिनस्तदुपहितान् जीवांश्च प्रकाशयसि, स्वयं च आत्मप्रदीपः स्वप्रकाश एव ॥ ३९ ॥ एवं भगवतः स्वरूपं माहात्म्यं चोक्त्वा जीवव्यवस्थामाह—यन्माययेति । यस्य मायया मोहितधियः अत एव पुत्रादिषु प्रसक्ता जीवा वृजिनार्णवे दुःखसागरे उन्मज्जन्ति च स सर्वनियन्ता त्वमेवेति शेषः । उन्मज्जनं दुःखनिवृत्तिः, निमज्जन्ति, निमज्जनं च पुनर्दुःखप्राप्तिः ॥ ४० ॥

### अन्वितार्थप्रकाशिका

तवेति ॥ हे अकुण्ठधामन् अप्रच्युतस्वरूप ! तवायमवतारो धर्मस्य गुप्त्यै रक्षार्थं जगतः भवाय अभ्युदयाय । वयं च लोकपालाः सर्वे भवता अनुभाविताः प्रभावयुक्ताः कृता एव । सप्त भुवनानि विभावयामः पालयामः न स्वतन्त्रा इत्यर्थः ॥ ३७ ॥ त्वमिति । त्वमेक आद्यः पुरुषोऽन्तर्यामी अद्वितीयः तुर्यः जाग्रदाद्यवस्थातीतः स्वदृक् स्वप्रकाशहेतुः सर्वकारणम् अहेतुः स्वहेतुरहितः ईशः स्वतन्त्रः अथापि सर्वगुणानां रजआदीनामैश्वर्यादीनां च प्रसिद्ध्यै स्वमायया यथाविकारं देवतिर्यङ्मनुष्यादिस्वस्वरूपेण प्रतीयसे ॥ ३८ ॥ यथेति । हे भूमन् ! यथा स्वच्छायया स्वकार्यमेघवर्षादिरूपया । तुगभाव आर्षः । परदृष्ट्या अपिहितः आच्छादितो सूर्यस्तां छायां रूपाणि च नीलपीतादिकानि चान्मेघान्तरितान् घटपटादीनपि सञ्चकास्ति प्रकाशयति एवंगुणेन अहंकारेण स्वकार्येण जीवावरकेण तददृष्ट्या अपिहित आच्छादितोऽपि त्वं तान् गुणान् देहेन्द्रियान्तःकरणादीन् गुणिनस्तदुपहितान् जीवांश्च प्रकाशयसि । स्वयं च आत्मप्रदीपः स्वप्रकाश एव अतः सर्वसाक्षिणस्तव न संसारः ॥ ३९ ॥ यदिति ॥ यस्य मायया मोहितधियः अत एव पुत्रादिषु प्रसक्ता जीवा वृजिनार्णवे दुःखसागरे उन्मज्जन्ति निवृत्तदुःखा भवन्ति निमज्जन्ति पुनः दुःखं प्राप्नुवन्ति ॥ ४० ॥

### श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्

पुनस्तं वै राजात्परत्वेन स्तुवन्नाह तवेति । हे अकुंठधामन् अकुंठं अक्षरं धाम स्थानं यस्य तत्संबुद्धिः जगतो जनवृंदस्य अभवाय मोक्षाय यद्वा । जगतो विश्वस्य भवाय वृद्धये । भवता परमेश्वरेण अनुभाविताः पालिताः सर्वे पुरुषकालप्रकृतिवैराजब्रह्मादयः समग्रा वयं ईश्वराः सप्त भुवनानि विभावयामः पालनादियुक्तानि कुर्महे ॥ ३७ ॥ तस्य परमेश्वरस्य द्वितीयत्वमाह त्वमिति । आद्यः सर्वेषामादिभूतः स्वयमनादिः पुरुषः नित्यसिद्धदिव्यसुंदरपुरुषाकारविग्रहः हेतुः सर्वेषां कारणं । अहेतुः नास्ति हेतुः कारणं यस्य सः ईशः सर्वनियंता स्वदृक् स्वेषु स्वकीयभक्तेषु दृक् दृष्टिर्यस्य सः अद्वितीयः स्वरूपस्वभावगुणविभूतिलोकभोगादिभिर्नास्ति द्वितीयः स्वतुल्यो यस्य सः अतएव एकः तुर्यः संकर्षणादित्रिभ्यश्चतुर्थो वासुदेवस्त्वं सर्वेषां चेतनानां ये गुणाः तज्जन्यकर्माणि तेषां प्रसिद्ध्यै प्रकाशाय जीवानां यथा कर्मफलप्रदानायेत्यर्थः । स्वमायया स्वकीययांतर्यामिशक्त्या यथाविकारं क्षेत्रज्ञ गृहीतनानाविधदेवमनुष्यादिदेहानुगुणं प्रतीयसे न्यूनाधिकभावेन विभासि अथापीति पादपूरणे ॥ ३८ ॥ तदेव दृष्टांतेनोपपादयति यथेति । सूर्यः स्वच्छायया स्वकीयानां मेघानां छायया अभ्रयया पिहित आवृतः सन् । छायां अभ्रं रूपाणि पदार्थस्वरूपाणि । यथा संचकास्ति प्रकाशयति । एवं तथा आत्मप्रदीपः स्वप्रकाशस्त्वं गुणेन सृष्टिलक्षणेन । यद्वा । मनुष्यसमानस्वभावेन पिहितः । सन् । गुणान् सत्त्वादीन् गुणिनः प्रद्युम्नादीन् त्रीन् । गुणयुक्तानन्यान् क्षेत्रज्ञांश्च संचकास्ति चकास्सि यथा योग्यं प्रकाशयसि ॥ ३९ ॥ एवं निगूढं भगवन्माहात्म्यमुक्त्वा संप्रति प्रस्तुतं बाणापराधं क्षमापयन्नाह यन्माययेत्यादि षड्भिः । वृजिनार्णवे दुःखसमुद्ररूपे देवतिर्यगाद्युच्चनीचयोनौ ॥ ४० ॥

### भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

नन्वेवं सत्यपि दुरात्माऽयं निग्राह्य एवेति चेत् यद्यप्येवं तथापि अधुना शरणं गतोऽनुग्राह्य एव, युक्तं चैतत्तवावतारस्य प्रपन्नलोकाभ्युदयार्थत्वादित्यभिप्रयन्नाह । तवेति । हे अकुण्ठधामन्, अवतारदशायामपि अच्युतसार्वज्ञसर्वशक्त्यादिस्वभावेत्यर्थः । अयं, तव अवतारः, जगतः प्रपन्नलोकस्य, भवाय अभ्युदयाय, यदा अभवायेति छेदस्तदा भवप्रयुक्ततापत्रयनिवृत्तये इत्यर्थः । धर्मस्य, गुप्त्यै च, भवति । ननु सर्वथैवायमनुग्राह्यश्चेत्तर्हि त्वमेवैनमनुगृह्णीष्वेत्यत आह वयमिति । वयं सर्वे च, सर्वे वयं लोकपाला अपीत्यर्थः । भवता, अनुभाविताः, त्वयैवादौ सृष्टाः पश्चात्पालिताश्चेत्यर्थः । एवंभूताः सन्तः, सप्त भूवनानि, विभावयामः पालयामः । वयं सर्वे तु त्वत्परतन्त्रा इति भावः ॥ ३७ ॥ आकाशमिव केवलमिति निरस्तनिखिलदोषत्वमुक्तम् । विराट्शरीरत्वोक्त्या सर्वान्तरात्मत्वं फलितम् । तवावतारोऽयमित्यनेन निरुपाधिकरक्षकत्ववात्सल्यसौशील्यादिमत्त्वमाविष्कृतम् । अथ परत्वोपयुक्तं कारणत्वादिमाह । त्वमेक इति । ईशः, त्वं एकः अविभक्तनामरूपसूक्ष्मचिदचिद्विशिष्टत्वेनैकत्वव्यपदेशार्हः, आद्यः, पुरुषः, जगदुपादानकारणभूतः पुरुषश्चेत्यर्थः । किमहं केवलमुपादानकारणमेव नेत्याह । अद्वितीयः अधिष्ठात्रन्तररहितो निमित्तकारणं चेत्यर्थः । एवं त्वमुभयविधकारणत्वभागिति भावः । अत एव, प्रकृतिपुरुषविलक्षण इत्याह । स्वदृक् स्वयंप्रकाशज्ञानरूपः, अनेन प्रकृतिवैलक्षण्यमुक्तम् । तस्या जडत्वात् । तूर्यः जाग्रत्स्वप्नसुषुप्तिरूपावस्थात्रयसंबन्धवतो जीवतश्चतुर्थत्वादस्थात्रयसंबन्धरहितः, अनेन जीववैलक्षण्यमुक्तम् । हेतुः, अहेतुः, हन्त तर्हि घटहेतुमृत्कुलालादौ तथाऽदर्शनान्मिथो विरुद्धं तदुभयविधकारणत्वं कथमेकस्मिन्नुपपद्यत इत्याशङ्क्य परिहरति । यद्यपीदं परस्परविरुद्धवत् प्रतीयते, अथापि, अविकारं यथा, विकारसहितो यथा भवति तथा, प्रतीयमानस्त्वमित्यर्थः । स्वमायया स्वसंकल्पेन, सर्वगुणप्रसिद्धये स्वस्य प्रकृत्यादिसम्बन्धवत्तत्तद्रहितत्वादिस्वकीयदिव्यविचित्रगुणख्याति विधातुमित्यर्थः । प्रतीयसे उभयविधकारणताभागवमाससे । अयं भावः । कुलालस्यासर्वशवतेर्घटादिषु मृत्कार्येषु अनन्वयान्नोपादानत्वमचेतनाया मृदोऽपि घटादेर्व्यतिरेकाभावान्न निमित्तत्वं, भगवतस्तु प्रत्यक्षादिप्रमाणान्तराऽनवगतस्य केवलवेदान्तैकसमधिगम्यस्य चिदचिच्छरीरस्य तथात्वेऽपि तद्विलक्षणस्योभयविधकारणत्वोपयुक्तसार्वज्ञसर्वशक्तियुक्तस्यान्वयव्यतिरेकयोर्वेदान्तेभ्योऽवगतत्वादुभयविधकारणत्वोपपत्तिमत्त्वमस्त्यतः, हे भगवंस्त्वं तथा प्रतीयस इति ॥ ३८ ॥ ननूपादानकारणत्वेऽनादिकालतोऽज्ञानरूपप्रकृत्या तिरोहितस्य जीवस्येव सर्वान्तःस्थस्य ममास्वदृक्त्वं प्राप्तमित्यत आह । यथैवेति । अपिहित इति च्छेदः । दार्ष्टान्तिके गुणेनापिहित इति दर्शनादन्यथोपध्मानीयप्रसङ्गाच्च, अपिहित इति नञ्समासः । यथा सूर्यः, स्वच्छायया स्वप्रकाश्यया मेघादिरूपया, अपिहितः एव, अतिरोहितस्वस्वरूपस्वभावः सन्नेव, छायां मेघरूपां, रूपाणि मेघान्तरितान् घटादीनपि, चकारोऽप्यर्थे । संचकास्ति एव प्रकाशयति । द्वितीयश्च कारोऽवधारणे । मेघादीन् भित्वा तदन्तर्बहिश्च प्रसरणात् । अन्यथा तद्व्यवहितरूपाग्रहणप्रसङ्गात् । हे भूमन्, अप्राकृतदीव्यबहुगुण, एवं सूर्यवदेव, गुणेन सत्त्वादिगुणेन गुणमयप्रकृत्येति यावत् । अपिहितः अतिरोहितस्वरूपस्वभाव एव त्वं, गुणान् प्रकृतितत्कार्यगतधर्मान्, गुणिनः प्रकृत्यादींश्च, प्रकाशयसि । अतस्त्वं आत्मप्रदीपः स्वदृक् स्वप्रकाश इति यावत् । यद्यपि दृष्टान्ते छायासूर्ययोर्न मिथः सम्बन्धस्तयोर्विप्रकृष्टत्वात् । दार्ष्टान्तिके त्वपृथक्सिद्धविशेषणविशेष्यभावरूपेण नित्यसम्बन्धात् दृष्टान्तस्यैकदेशित्वं वोध्यम् । अस्वदृक्स्वदृक्तया जीवेश्वरयोर्विलक्षणत्वान्न त्वं जीवसमान इति भावः ॥ ३९ ॥ न केवलमयमसुर एवाज्ञः, किं तु सर्वेऽपि त्वन्मायामोहितत्वादज्ञा एवेत्यभिप्रयन्नाह । यन्मायेति । यन्मायया यस्य तव मायया, मोहिता मोहं प्राप्ता धीर्येषां ते जनाः, पुत्रदारगृहादिषु, प्रसक्ताः आसक्ताः सन्तः, वृजिनार्णवे दुःखाम्बुधौ, उन्मज्जन्ति, देवादियोनिप्राप्तिरुन्मज्जनं स्थावरत्वादिप्राप्तिर्निमज्जनम् ॥ ४० ॥

### कृष्णप्रिया

हे वैकुण्ठनाथ ! हे अखण्ड ज्योतिस्वरूप भगवन् ! आपका अवतरण धर्मरक्षण के लिये और विश्व के कल्याण के लिये हुआ है । हम सब देव लोग आपकी अनुकम्पा से अनुगृहीत होकर सात भुवनों का पालन करते हैं पोषण करते हैं । आप ही एक हैं, आद्य हैं, अद्वितीय पुरुष हैं । पुनः जाग्रत-स्वप्न-सुषुप्ति इन तीन अवस्थाओं में अनुस्यूत रहते हुए भी उन अवस्थाओं से अतीत्य तुरीय तत्त्व आप हैं । आप स्वयंप्रकाश हैं, आप सर्व के कारण होते हुए भी आप का कोई कारण नहीं है । आप स्वयं ईश हैं । हे नाथ ! आप सत्वादि तीन गुणों की विषमता को प्रकट करने के लिये अपनी माया से देव-मनुष्य-पशु पक्षी आदि शरीरों के अनुसार भिन्न-भिन्न आकारों में प्रतीत होते हैं । हे भूमन् ! हे नाथ ! जैसे प्रकाशस्वरूप अपनी छाया मेघ से आच्छन्न हो जाता है वही सूर्य उन मेघों और विभिन्न रूपों को प्रकाशित करता है, उसी प्रकार आप स्वयंप्रकाश होते हुए भी क्षण भर गुणों से आच्छन्न जैसे हो जाते हैं और समस्त गुणों को और गुणाभिमानी जीवों को प्रकाशित करते हैं ॥ ३७–३९ ॥ नाथ ! आपकी माया से मुग्ध बन कर लोग पुत्र-पौत्र-कलत्र-देह-गेह आदि पदार्थों में आसक्त होकर अपार दुःख के महासागर में डूबने लगते हैं ॥ ४० ॥

देवदत्तमिमं लब्ध्वा नृलोके[1] अजितेन्द्रियः । यो नाद्रियेत त्वत्पादौ स शोच्यो ह्यात्मवञ्चकः ॥ ४१ ॥
यस्त्वां विसृजते मर्त्य आत्मानं प्रियमीश्वरम् । विपर्ययेन्द्रियार्थार्थं[2] विषमत्त्यमृतं[3] त्यजन् ॥ ४२ ॥
अहं ब्रह्माथ विबुधा मुनयश्चामलाशयाः । सर्वात्मना प्रपन्नास्त्वामात्मानं [4]प्रेष्ठमीश्वरम् ॥ ४३ ॥
तं त्वा जगत्स्थित्युदयान्तहेतुं समं प्रशान्तं सुहृदात्मदैवतम्[5] ।
अनन्यमेकं जगदात्मकेतं भवापवर्गाय भजाम देवम्[6] ॥ ४४ ॥

**कर्दमक्षमा**

अन्वयः—नृलोके, देवदत्तम्, इमम्, लब्ध्वा, अजितेन्द्रियः, यः, त्वत्पादौ, न, आद्रियेत, हि, आत्मवञ्चकः स, शोच्यः ॥ ४१ ॥ यः मर्त्यः, आत्मानम्, प्रियम्, ईश्वरम् त्वाम्, विसृजते, विपर्ययेत्, सः अमृतम्, त्यजन्, विषम्, अत्ति ॥ ४२ ॥ अहम्, ब्रह्मा, अथ, विबुधाः, च, अमलाशयाः, मुनयः, आत्मानम्, प्रेष्ठम्, ईश्वरम्, त्वाम्, सर्वात्मना प्रपन्नाः ॥ ४३ ॥ जगत् स्थित्युदयान्तहेतुम्, समम्, प्रशान्तम्, सुहृदात्मदेवम्–अनन्यम्, एकम्, जगदात्मकेतम्, देवम्, भवापवर्गाय भजाम ॥ ४४ ॥

**श्रीधरस्वामिविरचिता भावार्थदीपिकाप्रकाशः**

एवं जीवेश्वरव्यवस्थां निरूप्येदानीमभजंतं निंदति द्वाभ्याम् । देवेति । देवेन त्वया कर्माध्यक्षेण दत्तं नृदेहमिमं लब्ध्वापीति ॥४१॥ शोच्यत्वे हेतुः । यस्त्वामिति विपर्यया विपरीता अनात्माप्रियाऽनीश्वरा ये इंद्रियार्थाः पुत्रादयस्तदर्थम्॥४२॥ अहमन्ये च शुद्धमनसस्त्वामेव प्राप्ता इत्याह । अहमिति ॥ ४३ ॥ भगवतो भजनीयत्वे हेतून्वदंस्तद्भक्तिं प्रार्थयते । तं त्वेति । समत्वे हेतुः । प्रशांतमिति । सुसेव्यत्वमाह । सुहृदात्मदैवं सुहृद्वृद्धिप्रवर्तकत्वात् । आत्मा च सर्वात्मकत्वात् । एवंभूतं दैवमीश्वरं त्वाम् । भवापवर्गाय संसारमोक्षाय भजामेत्यन्वयः । न चान्यो भजनीयोऽस्तीत्याह । अनन्यमेकं समानासमानजातीयरहितम् । तत्कुतः । जगतात्मनां च केतमधिष्ठानम् ॥ ४४ ॥

**श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः**

अन्यदाह—एवमित्यादिना । इमं प्रत्यक्षसिद्धम् । आत्मवंचको निजप्रलंभकः । शोच्यः विज्ञैः शोचनीयः ॥ ४१ ॥ मर्त्यो मरणधर्मा ॥ ४२ ॥ सर्वज्ञतामाह—अहमित्यादिना । भक्तिर्विद्यते येषां ते भक्ता भजंत इत्यर्थः । सर्वात्मना कायवाङ्मनोव्यापारेण । भजनीयत्वे हेतुत्रयम्–आत्मानमित्यादि ॥ ४३ ॥ प्रशांतस्य समता भवतीति प्रसिद्धमेव । ननु मदन्येऽपि ब्रह्मादयो भजनीयाः संतीति चेदत्राह—न चेत्यादि । नास्ति अन्यो भिन्नो यस्मात्स तथा तम् । तेषामपि त्वदभिन्नत्वात्त्वदाराधनेन तेष्याराधिता भवन्तीति भावः । अनन्यत्वे हेतुः एकमिति । तद् एकत्वम् । जगतां स्थावराणामात्मनां जंगमानां च कल्पितत्वेनाधिष्ठानानतिरेकात् ॥ ४४ ॥

**श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी**

तत्र त्वया त्वद्भक्तियोग्यतां प्रापितोपि मयैव इव केनचित्कारुणिकेन कृतोपदेशोपि त्वद्विमुखस्त्वसमद्विधानां शोच्य एवेत्याह—देवेति । इमं त्वद्भजनयोग्यं देवेन त्वयैव दत्तं यद्वा केषाञ्चिन्निजमहाभक्तानां सम्बन्धेन सर्वत्र प्रसारिण्या कृपया प्रापितमिमं सम्प्रति त्वदाविर्भाववन्तं नृलोकं मनुष्यभुवनं लब्ध्वेति परमोपकारित्वेनात्यन्तादरयोग्यताभिप्रेता तथाप्यजितेन्द्रियस्सन् न बहुमन्येत हि यस्मादात्मवञ्चक इति ॥ ४१ ॥ तत्र चाधुना मयैव श्रीगुरुणा प्रकाशितमपि यस्त्वां त्यजेत् सतु परमशोच्य इत्याह–य इति । मर्त्यो मरणशील इत्यमृतत्यागायोग्यतोक्ता अभजने दण्डयति चेत्याह–ईश्वरमिति । एवमेषां विशेषणानां यथोत्तरं भजनहेतुत्वे श्रेष्ठ्यं तथापि विसृजेत् न भजेत विषमत्त्यमृतं त्यजेदिति परमाविवेकित्वमुक्तं त्यजन्निति पाठः क्वचित् ॥ ४२ ॥ अहो परमतुच्छोपीदृशस्त्वां न भजति यं परमपूर्णा अपि वयं भजामः अतस्त्वदभजने ईदृशस्यैव हानिरित्याह—अहमिति । अहं ब्रह्मा च त्वया गुणावतारत्वया स्वीकारेण सर्वोर्द्ध्वकक्षां प्रापितः तथा विबुधा देवर्षयः मुनयो ब्रह्मर्षयश्च अमले ब्रह्मण्ये वाऽऽशयो येषां ते आत्मारामाश्चेत्यर्थः । तत्रापि सर्वात्मना सर्वभावेन प्रपन्ना आश्रिताः स्वेषां ( प्रपन्ने ) प्रपत्तौ हेतुः आत्मानं सर्वमूलस्वरूपम् अतएव प्रेष्ठम् अत एवेश्वरमपीति ॥ ३३ ॥ अत एवेदमेव प्रार्थयामह इति वदन् बाणानुग्रहेपि कारणतया विशेषणानि विन्यस्यति–तमिति । ते भजनयोग्यं त्वा त्वां भजामः किमन्यार्थं भजध्वे ? नेत्याह—भवेति । पञ्चमस्कन्धोक्त्यनुसारेण भवेषु जन्मजन्मसु अपवर्गाय भक्तियोगायेत्यर्थः तत्र हेतुत्वेन स्वेषामाकर्षणं तदीयपरमकारुण्यगुणं सूचयति देवेति । दीव्यति भक्तेषु प्रकाशते क्रीडति वा यः सः ॥ ४४ ॥

१. नृलोक–श्रीधर. वंशी. जीव. वीर. विश्व. । २. र्थार्तौं–वीर. । ३. त्यजेत्–श्रीधर. टि । ४. श्रेष्ठ–प्रा. पा. । ५. दैवम्–श्रीधर. वंशी. जीव. विश्व. ; दात्मनायकं–वीर. । ६. देव–वीर. ।

### श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी

अतस्त्वदभक्ता महानिन्द्या एवेत्याह–देवेति । इमं त्वद्भजनयोग्यम्, देवदत्तमिति परमोपकारित्वेनात्यन्तादरयोग्यताभिप्रेता। तथाप्यजितेन्द्रियः सन् नाद्रियेत, आदरेण न सेवेत, किंवा न बहुमन्यतेऽपि शोच्यो निन्द्यः, हि यत आत्मानमपि वञ्चयत इति तथा सः। यद्वा, हि निश्चितं शोच्यः–परमोपकारिणस्तवानादरेणाकृतज्ञत्वादि–सम्पत्तेः। किञ्च, आत्मवञ्चको लोकद्वयसुखरहितोऽभूदित्यर्थः ॥ ४१ ॥ तदेवाह—य इति । मर्त्यो मरणधर्म्मशील इत्यमृतत्यागायोग्यतोक्ता । आत्मानमन्तर्यामित्वेन सर्व्वसत्कर्म्मादौ प्रवर्त्तनात् परमोपकारिणमित्यर्थः । प्रियं स्वत एवात्मनोऽप्यधिकप्रेमास्पदम्, परमात्मत्वात् । एवमवश्यभजनीयत्वेनापि त्यागायोग्यतोक्ता । अभजने दण्डयति चेत्याह—ईश्वरमिति । एवमेषां विशेषणानां यथोत्तरं भजनहेतुत्वे श्रैष्ठ्यम् । तथापि विसृजेन्न भजेत् 'विषमत्त्यमृतं त्यजेत्' इति परमाविवेकित्वमुक्तम् विषयभोगेऽपि सर्वदा महादुःखी, न कदाचिदपि सुखी स्यादित्यर्थः ॥ ४२ ॥ अतएव वयं सर्वथा त्वामभजामेत्याह—अहमिति । विबुधा इन्द्रादिदेवाः, मुनय श्रीसनकादयः, अथ अपि, मुनयोऽपि, सर्व्वात्मना सर्व्वभावेन प्रपन्ना आश्रिताः, यतोऽमलाशया, शुद्धचित्ताः, अन्यथा अमलाशयत्वहानिरिति भावः । यद्वा, मुनीनामेव विशेषणम्, केषाञ्चित्तेषामद्वैतवासनया मलिनाशयानां व्यावृत्त्यर्थम् । प्रपत्ति–राहित्ये चाकृतज्ञत्वादि-महादोषोऽपि पर्य्यवस्यतीति विशिनष्टि—आत्मानमित्यादिना ॥ ४३ ॥ यस्याभवत्या संसारमहादुःखादिकं तम्, किंवा अनिर्व्वचनीयमाहात्म्यं त्वा त्वाम्, महामाहात्म्यमेव दर्शयति—जगदित्यादिना । जगतः सर्व्वस्य स्थित्यादिहेतुमिति परमेश्वरत्वमुक्तम्, अत एव सममीश्वरत्वेन सर्व्वेषु तुल्यम्, इत्यधिकाराद्यनपेक्षया सर्वैरपि भजनीयत्वम्, यद्वा, मया लक्ष्म्या सह वर्त्तमानं समम्, इति भक्तवात्सल्यं तथा कदाचिदपराधे सति जगज्जनन्या तया सोढ़यितव्य इति । साहाय्यं च कुतः ? प्रशान्तं तत्वतः क्रोधादिरहितम्, किंवा अक्षोभ्य इत्यशेषदोषराहित्यम्, अत एव सुहृत् निरुपाधिकृपाकारी, आत्मा स्वतः प्रेष्ठः, दैवमीश्वरः, तच्च तच्च तच्च, इति सुसेव्यत्वमवश्यभजनीयत्वञ्च । यद्वा, अत एव सुहृदां शोभनचित्तानामास्मदेवमिष्टदेवतामिति साधुसेव्यत्वम्, यतोऽनन्यमेकञ्च, इति विजातीय–सजातीयभेदराहित्येन त्वद्भजनात् सर्व्वजीवानां सर्व्वावतारादीनाञ्च भजनसिद्ध्या सर्वानुकूल्येन निर्व्विघ्नत्वादिकं सर्व्वमूलत्वञ्च । किञ्च, देवं दीव्यति, भक्तेषु प्रकाशते, भक्तैः सह क्रीड़तीति वा, तथा तम्, पाठान्तरेऽपि स एवार्थः । किंवा एवं सर्व्वपूज्येति, अतो भवः श्रेयस्तद्रूपोऽपवर्गो मोक्षः, श्रीवैकुण्ठलोक इत्यर्थः । तस्य तात्त्विकोत्तमसुखात्मकत्वात्तस्मै यद्वा, पञ्चमस्कन्धोक्तानुसारेण भवेषु जन्मजन्मस्वपवर्गाय भक्तियोगायेत्यर्थः । भजामेत्याशिषि पञ्चमी ॥ ४४ ॥

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम्

नृलोकं नरशरीरं देवदत्तं भाग्यलब्धं विसृजते इन्द्रियार्थार्थं शब्दादिविषयरूपप्रयोजनार्थम् ॥ ४१-५३ ॥

### श्रीमद्वीरराघवाचार्यकृता भागवतचन्द्रचन्द्रिका

ननु, मोहयन् वृजिणार्णवे पातयंश्चाहं किं निर्घृणः ? नेत्याह—देवदत्तमिति । देवेन निरवधिककृपावता त्वया दत्तं त्वदाराधनोपयुक्तं त्वन्मायातरणसाधनञ्चेमं मनुष्यदेहं लब्ध्वाप्यजितेन्द्रियः इन्द्रियपरवशस्सन् यः पुमान् त्वच्चरणौ नाद्रियेत न सेवेत स शोच्यः अहो किमस्य दौर्भाग्यमित्येवं शोचनीयः कुतः ? हि यस्मादयमात्मवञ्चकः आत्मापहारी—

"योन्यथा सन्तमात्मानमन्यथा प्रतिपद्यते । किं तेन न कृतं पापं चोरेणात्मापहारिणा" ॥

इति वचनार्थोत्रानुसन्धेयः स्वदोषेणैव स्वयं दुःख्यतीति न तव दोषप्रसङ्ग इति भावः ॥४१॥ इतोपि शोच्य इत्याह–यस्त्वामिति । स्वयं मरणशीलस्सन् आत्मानं प्रियमीश्वरञ्च त्वां विसृजते त्यजति न सेवते किन्तु विपर्ययेषु अनात्मस्वप्रियेष्वनीश्वरेषु इन्द्रियार्थेषु शब्दादिष्वार्त्तः दीनः अमृतमपि त्वाम् अमृततुल्यां त्वत्सेवां विषबुद्ध्या त्यजन् आस्ते स शोच्य इति सम्बन्धः ॥ ४२ ॥ यतस्त्वत्सेवाऽमृततुल्योऽत एव वयं त्वामेव प्रपन्ना इत्याह–अहमिति । अहं रुद्रः त्वामेवोक्तविधं सर्वभावेन उपायोपेयभावेन शरणं गताः ॥ ४३ ॥ न केवलमात्मत्वानुगुणगणमात्रप्रयुक्तमेव त्वां प्रपन्नाः किन्तु शरण्यत्वोपयुक्तासङ्ख्येयगुणान्तरयुक्तञ्चेत्यभिप्रयन्नाह—तमिति । हे देव ! तमुक्तविधं किञ्च जगदुत्पत्तिस्थितिकारणं समं वैषम्यरहितं प्रशान्तमूर्मिषट्करहितं भजतामपि शान्त्यावहञ्च सुहृच्चासावात्मनायकश्च तम् अनन्यं स्वतुल्यसेव्यान्तररहितम् एकं स्वाधिकप्रपदनीयान्तररहितम् आत्मकेतम् आत्मनामस्माकं केतमाश्रयमाधारमिति यावत् आत्मैव केतं यस्य तमिति वा "स्वे महिम्नि प्रतिष्ठितः" इति श्रुतेः । भवाभ्युदयायैहिकसुखाय अपवर्गाय मोक्षाय भजामः ॥ ४४ ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

भवेषु जन्मजन्मसु अपवर्गाय प्रेमलक्षभक्तियोगाय ॥ ४४ ॥

### श्रीमज्जीवगोस्वामिकृतः बृहत्क्रमसन्दर्भः

अतस्त्वां ये न भजन्ति, ते मूढाः इत्याह—देवदत्तमित्यादि। त्वत्पादौ यो नाद्रियेत, न भजेत स शोच्यः, हि निश्चितम्, अत आत्मवञ्चकः। त्वदिति दृश्यमान् श्रीविग्रहपरम्। देवेन भवतैव दत्तं नृलोकं वदेदं लब्ध्वा पादावित पादसेवां हित्वा योऽपवर्गमपि प्रार्थयते सोऽपि शोच्य इत्यर्थः॥ ४२-५३॥

इति श्रीदशमे श्रीबृहत्क्रमसन्दर्भे त्रिषष्टितमोऽध्यायः॥ ६३॥

### श्रीनाथचक्रवर्तिपादविरचिता चैतन्यमतमञ्जूषा

यो नाद्रियेतेत्यादि। त्वत्पादौ यो नाद्रियेत त्वच्चरणारविन्दं हित्वा यो मुक्तिं प्रार्थयति, स शोच्यः आत्मवञ्चक इत्यर्थः। ( ४२-५३ ),

इति त्रिषष्टिः॥ एवञ्चतुःषष्टितमोऽध्यायः॥ ६३-६४॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शनी

अभजन्तं निन्दति—देवेन त्वयैव दत्तं नृदेहम्॥ ४१॥ विसृजते त्यजति किमर्थं विपर्ययाः त्वद्विपरीता अनात्मानोऽप्रियाः अनीश्वराश्च ये इन्द्रियार्थाः पुत्रादयस्तदर्थम्॥ ४२॥ यत्त्वया कृतं तन्मया क्षान्तं सम्प्रति त्वया त्वत्सङ्गिभिरन्यैश्च देवैः किं व्यवसितमिति चेत्तत्राह—अहमिति। आत्मानं प्रेष्ठमीश्वरमिति विशेषणत्रयेण अनात्मनः अप्रियस्य अनीश्वरस्य बाणस्य कृते यत्त्वया सह विग्रहमकरवं तदहमेव अमृतं त्यक्त्वा विषम्भुक्तवानस्मीति पूर्वश्लोकेन मामेवाहमनिन्दमिति भगवन्तं ज्ञापयामास॥ ४३॥ तस्मात् स्वभक्तिं स्वयमेव देहीति प्रार्थयते—तमिति। हे देव! भवापवर्गाय भवेभवे जन्मनि जन्मनि अपवर्गाय पञ्चमस्कन्धोक्तलक्षणभक्तियोगाय त्वामेव भजाम प्रार्थनायां लोट् त्वदन्यो भजनीयो न भवतीत्यभिप्रायेण विशिनष्टि—ईश्वरत्वात् जगत्स्थित्युदयान्तहेतुमित्यन्यस्त्वनीश्वरः सममित्यन्यो विषमः प्रशान्तमित्यन्यः प्रकर्षेण शान्तो न भवति सुहृदित्यन्यो हितकृन्न भवति आत्मदेवमिति अन्यः परमात्मा न भवत्यतो द्योतमानश्च न भवतीत्यर्थः। अनन्यमित्यन्योऽनन्यो न भवति किन्त्वन्य एव त्वन्तु स्वभक्तस्यानन्य एव "साधवो हृदयं मह्यं साधूनां हृदयं त्वहम्" इति त्वदुक्तेः, एकमित्यन्योऽनेकः जगतामात्मनश्च केतमाश्रयमित्यन्यस्त्वनाश्रयः॥ ४४॥

### गूढार्थदीपिनी

देवेन त्वया दत्तं नृदेहं मनुष्यदेहं लब्ध्वा यो नाद्रियेत् स शोच्यः निन्दनीयः अपराधीत्यर्थः। आत्मानं वञ्चयतीति वञ्चकः॥ ४१॥ यो मर्त्यो मरणधर्मा त्वां विसृजते उपेक्षते। त्वत्तो विपर्यया विपरीता अर्थात् अनात्मानः अप्रियाः अनीश्वराश्च ये इन्द्रियार्थाः पुत्रादयः तदर्थं स विषम् अत्ति॥ ४२॥ अत एव सर्वे वयं त्वामेव प्रपन्नाः शरणं गताः स्मः। सर्वात्मना कायवाङ्मनो व्यापारेण॥ ४३॥ त्वं त्वां भवापवर्गाय संसारमोक्षाय वयं भजामेत्यन्वयः। प्रार्थनायां लोट्। अनन्यं समानातिशयरहितम् आत्मनां जीवानां च केतम् आधारम्॥ ४४॥

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः

एवं भगवन्मायामोहितानां सामान्यतः संसारित्वमुक्त्वा तत्र त्वत्पराङ्मुखाः नित्यसंसारिणः अस्मदादयस्तु त्वद्भक्ता मुक्तिभागिन इत्याह-देवदत्तमिति॥ ४१॥ विपर्ययाः विपरीताः अनात्मानः अप्रियाः अनीश्वरा ये इन्द्रियार्थाः गृहकलत्रादयस्तदर्थम् अमृतं मोक्षम् विषं संसारम्॥ ४२-४३॥ सुहृत् हितकृत् च आत्मा आश्रयश्च तम् अनन्यमेकम् समानातिशयशून्यम् जगतामात्मनश्च केतं वासस्थानम् भवापवर्गाय संसारनिवृत्तये॥ ४४॥

### श्रीसत्यधर्मकृता श्रीभागवतटिप्पणी

एवं निमज्जनुन्मज्जंस्तज्जनो देवदत्तं देववशादेव नृलोकं मनुजतनुं लब्ध्वाऽपि त्वत्पादावजितेन्द्रियः स एव शोच्यः। स एव ह्यात्मवञ्चकः स्ववञ्चक आत्मघातीति॥ ४१॥ निदर्शनेन शोच्यतां व्यनक्ति। यो मर्त्य आत्मानं प्रियमीश्वरं त्वां विसृजते विसृजति। त्वत्पादानादरणं चरति। किन्निष्ठावान्स इत्यत एतत्स्पृह इत्याह। विपर्ययेन्द्रियार्थार्थं विपर्ययाः क्वचिदेव कदाचिल्लभ्या इव वस्तुतो लभ्या इतीन्द्रियार्थास्तत्तर्पकतयाऽभिमताः सतीसुतादयस्तदर्थमिति योऽमृतं त्यजन्विषमत्ति भक्षयति स इवायमिति स्वघातक इति भावः॥ ४२॥ हे महादेव। न केऽप्यमृते निभृताः सन्ति किमित्यतो न सन्तः सन्तीत्याह अहमिति। इदानीं दयनीयोऽहमिति पुरहरः पुरस्कृत्य स्वभवादीदिति ज्ञेयम्॥ ४३॥ अभीष्टं विज्ञापयितुमुक्तगुणान्कांश्चिसङ्गृह्यामिष्टौति तं त्वामिति। सुहृच्चात्मदेवं सुहृदात्मा देवतमिति वाऽनन्यमेकं जगतः स्वामित्वेन निकेतमाश्रयं संसृत्यपसृत्यै भजाम॥४४॥

### श्रीमद्वल्लभाचार्य्यकृता सुबोधिनी

इदानीं अर्धभगवत्कृपायुक्तानां शोचन्नाह **देवदत्त**मिति। भगवता विवेकेन्द्रियादियुक्तं शरीरं दत्तं यस्मै, सोऽपि चेत् अर्धकृपायुक्तः पूर्णार्थं न यतेत, स मोहितैरपि शोच्यो भवति, देवेन भगवता दत्तम्, भगवदिच्छयैव **नृलोके** मनुष्यदेहे समागत इति। तर्ह्यनादरे को हेतुः, तत्राह **अजितेन्द्रिय** इति। इन्द्रियजयाभावादिन्द्रियैरपकृष्टोऽन्यत्र गच्छति। अतो न सेवते। ननु तर्हि तस्य को दोष इति चेत्, तत्राह **नाद्रियेते**ति। आदरमपि न करोति। तत्रासक्तिर्नियामिकेति। अतो विद्यमानमपि साधनं अन्यथा नाशयतीति स शोच्यो भवति। आत्मवञ्चकश्च। हिशब्दसूचिता युक्तिरुक्ता। परार्थं तथा करोतीत्याशङ्क्य तदभावार्थं निराकरोति **आत्मानमेव वञ्चयती**ति। उपकारस्तु पर्यवसानवृत्त्या आत्मगाम्येव भविष्यतीति यत्रात्मवञ्चनं न भवति, तत्रैव परार्थकरणं युक्तम्, अन्यथा स्वयमेवात्मघाती स्यात्, किं तस्योपकारेण ॥ ४१ ॥ अप्राप्तभगवन्तं निन्दित्वा, प्राप्यापि यस्त्यजति तं निन्दति, भगवदिच्छां मायां स्तोतुम्, अन्यथा वाक्यभेदप्रसङ्गः, **यस्त्वां विसृजत** इति। प्रयोजनाभावमाशङ्क्याह **मर्त्य** इति। मरणधर्मा। आवश्यकत्वायात्मेति। **प्रियं** प्रीतिविषयम्। अनावश्यकेऽपि प्रीतिवशादादरः क्रियते। तत्रापि ईश्वरमन्यथा मारकम्। एवं प्रकारत्रयेण वस्तुतो बाह्याभ्यन्तरव्यवहारेण च आवश्यकं **विसृजते** त्यजति, तत्रापि **विपर्ययेन्द्रियार्थार्थम्**, विपर्यया अनात्माप्रियानीश्वराः, ते च ते इन्द्रियार्थाश्च रूपादयः। न हि कश्चिन्नदीं तितीर्षुर्नौकां दत्वा शिलां गृह्णाति, नौकां त्यक्त्वा वा। शिलार्थमेव वा नौकां त्यजति। तस्य गतिमाह **विषमत्त्यमृतं त्यजन्नि**ति। म्रियमाणोऽमृतं प्राप्य तद्दत्वा यथा विषं गृहीत्वा भक्षयति, तस्य या अवस्था, सा एतस्यापीति भावः ॥ ४२ ॥ तथा भवदादीनामपीत्याशङ्क्याह **अहं ब्रह्मे**ति। यथार्धकृपायुक्ताः अन्ये भ्रान्ताः, यथा वा प्राप्यापि विषयप्रवणाः, तथा न वयम्, किन्तु भिन्नप्रकारमाश्रिताः। भगवतः सात्त्विकत्वादितरौ समानौ प्रथमं गणयति। **अहं रुद्रो ब्रह्मा चे**ति। ततो हीनास्तन्नियम्या विबुधाः। अधिकारिणो निरूप्य ज्ञानपरान् निरूपयति **मुनयश्चे**ति। तेषां पृथङ्निरूपणे हेतुः **अमलाशया** इति। साधनपराः सिद्धाश्चेति वा। अमलाशया मनुष्याः। मुनयः सनकादयोऽपि तथा। एते त्रिविधा अपि। चकारादेतदनुसारिणः सर्वे परिगृहीताः। ते वयं सर्वात्मना त्वां प्रपन्नाः। स्वस्य प्रवृत्तौ हेतुभूतं ज्ञानं निर्दिशति **आत्मानं प्रेष्ठमीश्वर**मिति। पूर्वस्मात्प्रेमातिशयो विशेषः। तेनैव साधनानि अन्यानि सम्पन्नानि ॥ ४३ ॥ साम्प्रतं विरोधमाशङ्क्य तत्परिहारार्थं शरणं व्रजामीत्याह **तं त्वा**मिति। एवं सर्वोपास्यं निर्दोषपूर्णगुणविग्रहं त्वां भजाम। तमिति श्लोकद्वयार्थः परिगृहीतः, लोकवेदप्रसिद्धम्। **त्वां** परिदृश्यमानम्। **जगत्स्थित्युदयान्तहेतु**मिति ब्रह्मत्वाय जगत्कारणत्वमुक्तम्। बहिर्दोषाभावाय **समम्**। **प्रशान्त**मिति अन्तर्दोषाभावाय। **सुहृ**दिति विश्वासार्थम्। **आत्मे**ति भयाभावाय। **दैवत**मितीष्टसिद्धये। भावकृतवैलक्षण्याभावायाह **अनन्य**मिति। न विद्यते अन्यो यस्मादिति। यस्य वा। अन्यबुद्धिर्भगवतो न कस्मिंश्चित् यत एक एव। कार्यमपि न ततः पृथक्, यतोऽयं जगतः आत्मा केतश्च। विशेषतो भजनस्य अपराधनिवर्तकत्वे प्रार्थिते **इष्टमग्रे** प्रार्थयितुमशक्यमिति सर्वस्यापि दोषस्य निवृत्तिरूपं मोक्षमेव प्रार्थयति **भवापवर्गाये**ति। एवं शरणागमनलक्षणं भजनं निरूपितम् ॥ ४४ ॥

### श्रीविट्ठलरायात्मजश्रीवल्लभकृतलेखः

**देवदत्त**मित्यत्र। **परार्थ**मिति। इन्द्रियहितार्थं तथा करोति, तथा च परार्थसाधकत्वं गुण एव स्यादित्यर्थः। **तदभावार्थ**मिति। एवंकरणाभावार्थमेतादृशपरार्थस्य कर्तव्यतां निराकरोतीत्यर्थः। **अन्यथा वाक्यभेदप्रसङ्ग** इति। निन्दायां तात्पर्यकथने। त्वं हि **ब्रह्मे**त्यस्याभासे द्वादशश्लोकानामपि स्तुतिरूपोर्थ उक्तो बाधितो भवेदित्यर्थः। **अहं ब्रह्मे**त्यत्र। **भगवतः सात्त्विकत्वा**दिति। सात्त्विककल्पे भगवान् विष्णुरूपः सन्कार्यं करोति। तथाचात्र भगवतो विष्णुरूपत्वात्सात्त्विकत्वमित्यर्थः। **पूर्वस्मा**दिति। पूर्वश्लोकोक्तस्य प्रियः अस्मदादीनां प्रेष्ठ इति पूर्वस्मात् **स्वस्य** प्रेमातिशयो विशेष इष्ठन्प्रत्ययेनोक्त इत्यर्थः। **तं त्वा**मित्यत्र। **लोकवेदे**ति। स्वस्य वेदरूपत्वादहं ब्रह्मेत्यनेन वेदप्रसिद्धिरुक्ता। तत्पूर्वेण च लोकप्रसिद्धिरित्यर्थः। **भावकृते**ति। कस्मिंश्चिदन्यादृश इति वैलक्षण्यमनन्यत्वान्नास्तीत्यर्थः।

### श्रीसुबोधिनी-सारः

देवेन त्वया दत्तम् इमं नृलोकं मानुष्यं लब्ध्वा प्राप्याजितानि इंद्रियाणि येन स यः तव पादौ न सेवेत स आत्मचोरः शोच्यः हि युक्तम् ॥ ४१ ॥ आत्मानं प्रियमीश्वरं त्वां यो मर्त्यो मनुष्यो विसृज्यते त्यजति विपर्यया विपरीता अनात्मानो जडा दुःखरूपा इंद्रियार्थाः पुत्रादयस्तदर्थं सोऽमृतं त्यजन् विषमत्ति भक्षयति तदुक्तम्। "योन्यथा संतमात्मानं योन्यथा प्रतिपद्यते। किं तेन न कृतं पापं चौरेणात्मापहारिणा" इति ॥ ४२ ॥ अहं शिवो ब्रह्मा विबुधा देवा अमलाशयाः शुद्धचित्ता मुनयः सर्वात्मना सर्वप्रकारेणात्मानमीश्वरं प्रेष्ठं त्वां प्रपन्नाः शरणं गताः ॥ ४३ ॥ जगतः स्थितिः पालनम् उदयो जन्म अंतो नाशस्तेषां हेतुं कारणं सममविषमं शांतं सुहृदुपकारकम् आत्मानं देवं तं त्वां देवं स्वप्रकाशम् अनन्यमेकं जगतामात्मनां च केतमाश्रयं भवस्य संसारस्यापवर्गाय मोक्षार्थं वयं भजेम ॥ ४४ ॥

## गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

इदानीं भगवद्विमुखान्निन्दति—देवेति द्वाभ्याम्। देवेन कर्माध्यक्षेण त्वया दत्तमिमं त्वन्मायातरणसाधनत्वद्भजनोपयुक्तं नृलोकं मनुष्यदेहं लब्ध्वापि यस्त्वत्पादौ नाद्रियेत न सेवेत। तत्राह—अजितेन्द्रिय इति। विषयासक्त्याऽहर्निशं पापाचरणादित्यर्थः। स हि आत्मवञ्चकः शोच्यः॥ ४१॥ शोच्यत्वमेव स्पष्टयति—य इति। विपर्ययास्त्वत्तो विपरीताः अनात्मानः अप्रियाः अनीश्वराः ये इन्द्रियार्थाः पुत्रादयः शब्दादयश्च तदर्थं तदासक्त्या यो मर्त्यः स्वयं मरणशीलः प्रियं त्वां विसृजते त्यजति न सेवते, स यथा अमृतं त्यजन् विषमत्ति तथा शोच्यः। प्रियत्वे हेतुद्वयमाह—आत्मानमिति। अन्येषामात्मार्थत्वेन प्रियत्वान्निरतिशयप्रीतिविषयत्वमात्मन एवेत्याशयः। धर्मादिचतुर्विधपुरुषार्थप्रदत्वेनापि तस्य प्रियत्वमाह—ईश्वरमिति॥४२॥ यतस्त्वद्भजनेनैव कृतार्थता, नान्यथाऽतोऽमलाशया विशुद्धान्तःकरणा वयं सर्वात्मना परिपूर्णेन प्रेम्णा उक्तविधं त्वामेव प्रपन्नाः शरणं गताः स्मः॥ ४३॥ एवं भगवद्भजने प्रवृत्तानामपि तदनुग्रहमन्तरेण भजननिर्वाहस्य दुर्लभत्वं मत्वा तमेव प्रार्थयते—तमिति। हे देव! भवस्य संसारस्यापवर्गाय मोक्षाय तं त्वां वयं भजामेत्यन्वयः। प्रार्थनायां लोट्। भजनीयत्वे हेतून् सूचयन् विशिनष्टि—जगतः स्थित्यादीनां हेतुमिति। तथा सर्वस्य सुहृत् हितचिन्तकश्चासावात्मा चासौ दैवमाराध्यः फलदश्च तं तथापि प्रशान्तं रागलोभसुखदुःखादिसर्वविकाररहितम्। तत्र हेतुमाह—सममिति। तत्र हेतुमाह—जगतः आत्मनां जीवानां च केतमाश्रयभूतमिति। तत्र हेतुमाह—अनन्यमिति। सर्वाभिन्नमित्यर्थः। तत्रापि हेतुमाह—एकमिति॥ ४४॥

## अन्वितार्थप्रकाशिका

देवेति। देवेन कर्माध्यक्षेण त्वया दत्तमिमं त्वन्मायातरणसाधनं नृलोकं मनुष्यदेहं लब्ध्वाऽपि यः अजितेन्द्रियः त्वत्पादौ नाद्रियेत सः आत्मनोऽपि वञ्चकः शोच्यः॥ ४१॥ य इति। यो मर्त्यो मरणशीलः आत्मानं प्रियम् ईश्वरं त्वां विपर्ययाः विपरीताः अनात्मप्रियानीश्वरा ये इन्द्रियार्थाः पुत्रादयस्तदर्थं विसृजते न सेवते। तत्कार्यः। सः अमृतं त्यजन् विषमत्ति॥ ४२॥ अहमिति। अहं शिवः ब्रह्मा विबुधाः मुनयश्च एते अमलाशयाः वयम् आत्मानं प्रेष्ठम् ईश्वरं त्वां सर्वात्मना प्रपन्नाः स्मः॥ ४३॥ तमिति। जगतः स्थित्युदयान्तानां हेतुं समं प्रशान्तं सुहृद्बुद्धिप्रवर्त्तकत्वात्स चासौ आत्मा च सर्वात्मकत्वात् एवंभूतं देवं च तम् अनन्यमेकं सजातीयासजातीयरहितं जगतः आत्मनां जीवानां च केतनमाश्रयभूतं देवं तं त्वां भवस्य संसरणस्य अपवर्गाय भजाम। प्रार्थने लोट्॥ ४४॥

## श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्

तत्र पतितेषु जंतुषु मध्ये हरिभक्तिहीनं नरं निंदन्नाह देवेति। देवेन कर्मफलप्रदात्रा त्वया दत्तं नृलोकं मनुष्यदेहं॥४१॥ विपर्ययाः मोक्षविरोधिनो ये इन्द्रियार्थाः प्राकृताः। शब्दादयस्तदर्थं। त्वां जीवानां कल्याणाय प्रादुर्भूतं प्रत्यक्षं त्यजति सः। अमृतं त्यजन्॥ ४२॥ सर्वः समस्त आत्मा प्रेक्षणश्रवणादींद्रियस्वभावस्तेन सर्वात्मना परमात्मानं त्वां॥ ४३॥ ननु किमर्थं प्रपन्ना इति चेत्तत्राहमिति। समं यथा कर्मफलप्रदातृत्वादसमदादिक्षेत्रज्ञेषु समतयावर्त्तमानं सुहृद्धितकर्त्ता आत्मा स्वयं तद्वज्जनहितकारी देवं सर्वोपास्यः स च स च स च तत्। अनन्यं नास्ति स्वतुल्यः अन्यो यस्य ते। जगति ये आत्मानः क्षेत्रज्ञास्तेषां के तं आश्रयणीयस्थानं एवंभूतं एकं प्रशांतं शांतमूर्त्ति वासुदेवं त्वा त्वां हे देव भवापवर्गाय भजामः॥ ४४॥

## भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

ननु यन्माययेत्युक्तेर्माययया जीवान् मोहयन् वृजिनार्णवे पातयश्चाहं किं निर्घृणः नेत्याह॥ देवदत्तमिति। देवेन निरवधिककृपावता त्वया दत्तं, इमं नृलोकं लब्ध्वा, त्वदाराधनोपयुक्तं त्वन्मायातरणसाधनं चेमं मनुष्यदेहं प्राप्यापीत्यर्थः। अजितेन्द्रियः इन्द्रिय परवशः सन्, यः पुमान्, त्वत्पादौ त्वदीयचरणौ, न आद्रियेत न सेवेत, सः शोच्यः, अहो किमस्य दौर्भाग्यमित्येवं शोचनीयः। कुतः। हि यस्मात्, अयं आत्मवञ्चकः आत्मापहारी॥ ४१॥ इतोऽपि शोच्य इत्याह। यस्त्वामिति। यो जनः, मर्त्यः स्वयं मरणशीलः सन्, आत्मानं, प्रियं, ईश्वरं च, त्वां, विसृजते विपर्यया विपरीताः अनात्मानः अप्रियाः अनीश्वरा इत्यर्थः। ये इन्द्रियार्थाः पुत्रादयस्तदर्थं, विपर्ययेन्द्रियार्थार्त्त इति पाठे, विपर्ययेष्वनात्मस्वप्रियेष्वनीश्वरेष्विन्द्रियार्थेषु शब्दादिष्वार्त्तो दीनः, अमृतममृततुल्यं त्वां त्वत्सेवां चेत्यर्थः। त्यजन्, विषं अत्ति। अतः स शोच्य इति सम्बन्धः॥ ४२॥ यतस्त्वं त्वत्सेवा चामृततुल्याऽत एव वयं त्वामेव प्रपन्नाः स्म इत्याह। अहमिति। अहं रुद्रः, अथ ब्रह्मा, विबुधाः, अमलाशयाः शुद्धान्तःकरणाः मुनयश्च, सर्वात्मना सर्वभावेन उपायोपेयभावेनेत्यर्थः। आत्मानं प्रेष्ठं, ईश्वरं, त्वामुक्तविधं भवन्तमेव, प्रपन्नाः शरणं गताः॥ ४३॥ न केवलमात्मत्वादिगुणयुक्तमेव त्वां प्रपन्नाः, किं तु शरण्यत्वोपयुक्तासंख्येयगुणान्तरयुक्तं चेत्यभिप्रयन्नाह। तमिति। हे देव, तमुक्तविधं, जगतो या स्थितिश्च उदयश्च अन्तश्च तेषां हेतुः कारणं तं, समं वैषम्यरहितं, प्रशान्तं सर्वथोर्मिषट्करहितं, भजतामपि शान्त्यावहं च, सुहृदात्मदैवं सुहृदं सन्तमात्मनायकमित्यर्थः। अनन्यं स्वतुल्यसे-

व्यान्तररहितं, एकं स्वाधिकप्रपदनीयान्तररहितं, जगन्ति च आत्मानश्च तेषां केतमाश्रयमाधारमिति यावत्। त्वां, भवापवर्गाय अभ्युदयाय मोक्षार्थं चेत्यर्थः। भजाम ॥ ४४ ॥

### कृष्णप्रियः

भगवान ने अतिशय अनुकम्पा से मनुष्यों को यह मानव देह दिया है। जो मानव ऐसा दिव्य मानव देह पाकर इन्द्रियों पर संयम करके आपके चरणकमलों की सेवा नहीं करता उस मनुष्य का जीवन सर्वथा शोचनीय है और वह जीव आत्मवञ्चक है ॥ ४१ ॥ हे भगवन्! आप जीवमान के आत्मा, ईश्वर और प्रियतम हैं। जो मृत्यु का ग्रास मानव आपको छोड़कर अनात्म दुःखरूप और क्षुद्र पदार्थों में नित्य बुद्धि करके उनमें लगा रहता है वह अमृत का त्याग कर विष पान कर रहा है ॥ ४२ ॥ मैं शङ्कर, ब्रह्मा, और सर्वदेव और निर्मल मन वाले ऋषि मुनि गण सर्व, सर्वाकार से और सर्वात्म भाव से आपके शरणागत हैं कारण यह कि आप हमारे जीवों के आत्मा, प्रियतम और परमेश्वर हैं ॥ ४३ ॥ हे नाथ! अखिल विश्व की उत्पत्ति स्थिति लय के आप ही कारण हैं, आप समदृष्टि, परम प्रशान्त, सर्व के सुहृद्, आत्मा और इष्टदेव भी हैं। आप एक अद्वितीय विश्व के आश्रय और अधिष्ठान हैं। संसार से मुक्त होने के लिये आपके शरण हैं और आपका भजन करते हैं॥४४॥

**अयं ममेष्टो दयितोऽनुवर्ती मयाभयं दत्तममुष्य देव।**
**[1]सम्पद्यतां तद् भवतः प्रसादो यथा हि ते दैत्यपतौ प्रसादः ॥ ४५ ॥**

**श्रीभगवानुवाच**

**यदात्थ भगवंस्त्वन्नः करवाम प्रियं तव। भवतो यद् व्यवसितं तन्मे साध्वनुमोदितम् ॥ ४६ ॥**
**अवध्योऽयं ममाप्येष वैरोचनिसुतोऽसुरः। प्रह्लादाय वरो दत्तो न वध्यो [2]मे तवान्वयः ॥ ४७ ॥**
**दर्पोपशमनायास्य प्रवृक्णा[3] बाहवो मया। सूदितं च बलं भूरि यच्च भारायितं भुवः ॥ ४८ ॥**

### कर्दमक्षमा

अन्वयः—देव! अयम्, मम, ईष्टः, दयितः, अनुवर्ती, मया, अमुष्य, अभयम्, दत्तम्, तत्, हि, दैत्यपतौ, यथा, ते, प्रसादः, तथा, अमुष्य, भवतः, प्रसादः, सम्पद्यताम् ॥ ४५ ॥ श्रीभगवान् उवाच, भगवन्! नः, त्वम्, यत्, आत्थ, तव, प्रियम्, करवाम, भवतः, यत्, व्यवसितम्, तत्, मे, साधु, अनुमोदितम् ॥ ४६ ॥ वैरोचनिसुतः, अयम्, असुरः, मम, अपि, एषः, अवध्यः, प्रह्लादाय, वरः, दत्तः, ते, अन्वयः, मे, अवध्यः ॥ ४७ ॥ अस्य, दर्पोपशमनाय, मया, बाहवः, प्रवृक्णाः, भुवः, भारायितम्, यत्, च, भूरिबलम्, सूदितम् ॥ ४८ ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

स्वयं भक्तिमाशास्य स्वभक्तस्याभीष्टमाशास्ते। अयमिति। दैत्यपतौ प्रह्लादे ॥ ४५-४६ ॥ वैरोचनिर्बलिर्मद्भक्तस्तत्सुतत्वादवध्यस्तावत् किंच प्रह्लादायेति। अन्वयो वंशः ॥ ४७ ॥ तर्हि किमित्येवं कृतं तत्राह। दर्पोपशमनायेति ॥ ४८ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

अयं बाणः। अमुष्य बाणस्य। तत् अस्याभयप्रदानमेव। भवतस्तव ममोपरि प्रसादः। कथमसुरे प्रसादस्त्वया कृत इति चेदाह—यथा हीति ॥ ४५ ॥ नोऽस्मभ्यम्। यद् अस्याभयप्रदानादि। अनुमोदितं निश्चितम्। वस्तुत आवयोरभेदत्वादिति भावः ॥ ४६ ॥ एष बाणः। अन्वयशब्दोऽत्र सजातीयपरः, तत्रैव तदभिमानोपपत्तेः। विजातीये तु देहान्निष्क्रष्टे कीटादौ प्रसूते च सर्पमंडूकादौ तदभिमानाभावेन झटिति तत्त्यागदर्शनात्। अतो बकबक्यघादीनामपि तिर्यगंतःपातित्वात्कंसादीनां सजातीयत्वाभावाच्च वध्यतैव युक्तेति भावः ॥ ४७ ॥ अस्य बाणस्य। यत् बलम्। भार इवाचरतीति भारायते। ततः कर्तरि क्ते भारायितम् ॥ ४८ ॥

### श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी

तदेवमात्मनस्तदनुपेक्ष्यत्वं प्रतिपाद्य चिरमभीष्टं बाणस्यापि तादृशत्वं युक्तमिति प्रार्थयते-अयमिति। इष्टः त्वद्भक्तिविशेषात्मकताण्डवे वाद्यसाचिव्येन प्रीतिविषयतां यातः तथा दयितः प्रह्लादबलिसम्बन्धेन स्वभावत एव दयाविषयश्चायम्

---

१. सम्पा—श्रीधर. वंशी. जीव. वीर. विश्व.। २. मे तवा—श्रीधर. वंशी. जीव. वीर. विश्व. ३. प्रकृत्ता—प्रा. पा.।

अत एव मदनुवर्त्तितामपि प्राप्तः अत एव मया त्वदनुग्रहाभिमानेन अमुष्य अस्मै अभयं दत्तं भवतो भवता स्वस्य युद्धादपराधं मत्वा लज्जमान आह—यथेति। दैत्यपतौ प्रह्लादे यथा तदनुसारेणापीत्यर्थः ॥ ४५ ॥ भगवन् हे सर्वज्ञेति श्रीप्रह्लादसम्बन्धेनास्मिन् मयाप्यपेक्षणीयत्वं स्वस्मिन् मदनुग्रहं मन्माहिमानं स्वेन सह मम युद्धादिकौतुकं बाहुच्छेदनादिनास्य मदशमनादिमदभिप्रायञ्च ज्ञात्वैव त्वया सर्वं व्यवसितमिति भावः। नः अस्मान् प्रति यदात्थ तत्करवामैव यतस्तव प्रियं प्रीतिकरम् अहो तवोक्त्यपेक्षामपि न सहे यतस्त्वत्सम्मतमेव मया सम्पादनीयमित्याह—भवत इति। व्यवसितं बुद्ध्या निश्चितं साधु यथा स्यात्तथानुऽमोदितं तद्दार्ढ्यविवक्षयाऽतीतनिर्देशः साध्विति व्यवसितादप्याधिक्यार्थं न इति बहुत्वं श्रीबलदेवादि स्वजनापेक्षया अस्माकं मध्ये यं प्रति यदात्थ तत्तेन कर्त्तव्यमित्यर्थः। पश्चान्मयेत्येकत्वं त्वद्भक्तिविशेषेण मया यदनुमोदितं तत्सर्वैरपि मदीयैश्च स्वत एव स्वीकर्त्तव्यमित्यभिप्रायेण ॥ ४६ ॥ मया वध्यस्तु सर्वथा नेत्याह—अवध्य इति। असुरोप्यवध्योयं यत एव वैरोचनसुत; वैरोचनीति क्वचित् अन्वयशब्दोत्र सजातीय एवाभिमतः तत्रैव तदभिमानसम्पत्तेः नहि देहान्निकृष्टे कीटादौ पुत्रवत्प्रसूते सर्पमण्डूकादौ वा परलोकस्य सोयं सम्पद्यते झटिति त्यागदर्शनात् तदेवं बकीबकाघानां वधो न युक्तः लोकेप्यमङ्गलशङ्कया तत्सुहृद्भिस्ते सर्पादयो हन्यन्ते सजातीयास्तु कुमतयोपि ताडनादिना शिक्षन्त एवेति ॥ ४७ ॥ किन्तु दर्पः दोस्सहस्रं त्वया दत्तमित्याद्युक्तिहेतुः तस्योपशमनाय शीघ्रहरणाय प्रकृत्ताः छिन्नाः बलं सैन्यम् ॥ ४८ ॥

### श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी

इष्टः सखा, दयितः, प्रियः, अनुवर्त्ती च सेवकः, इष्टत्वदयितत्वयोः सोपाधि-निरुपाधिस्नेहद्वारा भेदः कल्प्यः, यद्वा, इष्टः प्रियः, यतो दयितः, सखा अनुवर्ती च, यद्वा, इष्टो दयितः प्रियसखः, इष्टोऽनुवर्त्ती च प्रियसेवकः, अतोऽमुष्य अस्मै अभयं दत्तम्। देव ! हे मत्प्रभो ! इति मदीयोऽपि त्वदीय एव, विशेषतश्च भक्तस्य भक्तत्वान्मत्तोऽप्यधिकमनुग्राह्यस्त्वयेति भावः। अतस्तदभयमेव प्रसादः सम्पाद्यतां सम्यक् क्रियताम्। यद्वा, तत्तस्मात् कीदृशः प्रसाद इत्यपेक्षायामाह—हि एव, यथा यादृश एव, प्रह्लादवदात्मनः परमभक्तं कुर्वित्यर्थः। यद्वा, हि यतः, यथा यथावत्, अस्मत्तोऽप्यधिक इत्यर्थः। यद्वा, अहो मयि तवापेक्षा मास्तु, श्रीप्रह्लादापेक्षयापि सम्पाद्यतामिति सदैन्यमाह—यथेति। तदनुसारेणापीत्यर्थः ॥ ४५ ॥ भगवन् ! हे सर्वज्ञेति त्वयि मम यादृशो भावः, यदर्थञ्चास्य बाहवो मया छिन्ना इत्यादिकं सर्वं त्वं वेत्स्येवेति भावः। 'नः' अस्मान् प्रति यदात्थ, तत् करवाम करिष्याम एव, यतस्तव प्रियं प्रीतिकरम्, अहो भवोक्त्यपेक्षया वा किन्त्वत्सम्मतमेव सर्व्वं मया सम्पाद्यमित्याह—भवतेति। व्यवसितं बुद्ध्या निश्चितं साधु यथा स्यात्तथानुमोदितं स्वीकृतम्, तद्दार्ढ्यविवक्षयातीतनिर्द्देशः। साध्विति व्यवसितादप्याधिक्यार्थम्। आदौ बहुत्वं श्रीबलदेवादिस्वजनापेक्षया। अस्माकं मध्ये यं प्रति यदात्थ, तत्तेन कार्य्यमित्यर्थः। पश्चान्म इत्येकत्वं त्वद्भक्तिविशेषेण मयानुमोदितं सत् सर्व्वैरपि मदीयैः स्वत एव स्वीकर्त्तव्यमित्यभिप्रायेण। किं वक्तव्यम्, त्वत्प्रीत्यर्थमयं न हन्तव्य इति ॥ ४६ ॥ ममाप्यवध्य एवेत्यत्यन्तविनयादिना तत्संकोचनिरासार्थमाह—अवध्य इति। असुरोऽप्यवध्योऽयम् यत एष वैरोचनि-सुतः। एवं वाक्यद्वयादेष इत्यपुनरुक्तम्। यद्वा, पाठान्तरमत्रानुसन्धेयम्, तैरव्याख्यातत्वात्। दर्पः 'दोः सहस्रं त्वया दत्तम्' इत्याद्युक्तिहेतुस्तस्योपशमनाय शीघ्रहरणाय, बलं सैन्यञ्च, तु यत्त्विति भवदीयगणाश्च न सूदितास्तेषां भूभारत्वाभावादित्यर्थः ॥ ४७-४८ ॥

### श्रीमद्वीरराघवाचार्यकृता भागवतचन्द्रचन्द्रिका

प्रकृतं विज्ञापयति—अयमिति। अयं बाणः मे त्वां प्रपन्नस्य मम इष्टो भक्तः अनेन "मम मद्भक्तभक्तेषु प्रीतिरभ्यधिका भवेत्" इति भगवद्वचनं स्मारितम् अत एव दयितिः प्रियः अनुवर्तते इति तथा च हे देव ! अमुष्य बाणस्य मया अभयं दत्तं किमत इत्यत आह—तन्मया दत्तमभयं सम्पाद्यतां सफलीक्रियताम् अयमेव भवतोऽनुग्रहः तथाहि ते त्वया दैत्यपतौ प्रह्लादे प्रसादः कृत इति शेषः। त्वद्वंशजं न हनिष्यामीति प्रह्लादमनुगृहीतवानित्यर्थः ॥ ४५ ॥ इत्थं संस्तुतः प्रसन्नः प्राह भगवान्—यदात्थेति। हे भगवन् रुद्र ! नोऽस्मान्प्रति यदात्थ अवोचः यच्च तव प्रियं तत् करवाम यद्वा यत्तव प्रियं तन्नोऽस्माकमप्यतस्तत्करवाम भवता यन्निश्चितमेतत्प्राणसंरक्षणात्मकं तन्मयाप्यनुमोदितम् ॥ ४६ ॥ विरोचनसुत इति हेतुगर्भं तत्त्वादवध्यः तत्रापि हेत्वन्तरमाह—प्रह्लादायेति। अन्वयः वंशजः ॥ ४७ ॥ तर्हि किमर्थं बाहूनच्छिनस्तत्राह—दर्प इति। प्रवृक्णा भिन्नाः तर्हि किमर्थं बहुसैन्यं हतवानसीत्यत आह—नाशितमिति। भूभारापनयनार्थमिति भावः ॥ ४८ ॥

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः

इष्टः त्वद्भक्तिविशेषात्मकताण्डवे वाद्यसाचिव्येन प्रीतिविषयतां याताः तथा दयितः प्रह्लादबलिसम्बन्धेन स्वभावत एव दयाविषयश्चायम् अत एव मदनुवर्त्तितामपि प्राप्तः, अतएव मया त्वदनुग्रहाभिमानेन अमुष्य अस्मै अभयं दत्तं दैत्यपतौ प्रह्लादे यथा तदनुसारेणापीत्यर्थः ॥ ४५-५३ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

भोः शम्भो ! प्रसन्नोऽस्मि वरं वृणु इत्युक्ते सति हे प्रभो ! दुष्टेप्यनुवर्त्तिनि बाणासुरे ममतां त्यक्तुं न शक्नोमि किङ्करोमि तस्मादस्मिन्नपि त्वत्प्रसादोऽस्त्वित्येष एष मे वर इत्याह—अयमिति। तत् अभयं सम्पाद्यतां नन्वत्र को हेतुस्तत्राह—भवतः प्रसाद एव न त्वेतन्निष्ठं किमपि सुलक्षणमस्तीति भावः। ननु कीदृशः प्रसादः कर्त्तव्यस्तत्राह—यथेति दैत्यपतौ प्रह्लादे ॥ ४५-४९ ॥

### गूढार्थदीपिनी

इष्टः अभिमतः। दयितः प्रियश्च सेवकश्च भवतः तव प्रसादः अस्मिन्नपि सम्पाद्यतां यथा प्रह्लादे ॥ ४५ ॥ नोऽस्मान् प्रति यत् ब्रवीषिभवतीयत् व्यवसितं निश्चितं बाहुच्छेदनं तत् न केवलमनुमोदितम् अपि तु साधु सम्यक् पूर्णीकृतम् ॥ ४६ ॥ वैरोचनो बलिः ॥ ४७ ॥ बाहवः प्रवृक्णाः छिन्नाः भार इव आचरति भारायते। तन्नः कर्तरि क्तः भारायितं तच्च सूदितं नाशितम् ॥ ४८ ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

तन्मया दत्तमभयं सम्पाद्यतां सफलीक्रियताम् अयमेव भवतः प्रसादः अनुग्रहो भवतु बाणे इति शेषः। तत्र निमित्ताकांक्षायां हिशब्दः अनिरुद्धश्वशुरत्वादिति हिशब्दार्थः निमित्तान्तरं स्मारयति यथा दैत्यपतौ प्रह्लादे ते त्वया प्रसादः कृतः न वध्यो तव वंशजः इति ॥ ४५-५१ ॥

### श्रीसत्यधर्मकृता श्रीभागवतटिप्पणी

शर्वः सर्वथाऽयं मम त इति सूचयितुं त्रिवारं वदामि ततो नानृतमिति लौकिकीं घाटीं नटयन्नाह। इष्टो दयितोऽनुवृतीति। अतिभक्ततायां तात्पर्यम्। मयाऽमुष्य। तस्य मृतप्रायताभिप्रायेण पारोक्ष्योक्तिः। अभयं दत्तम्। उत्तरत्रानिर्वाहात् षष्ठी च। तदभयं भवतः सम्पाद्यताम्। अन्धकबन्धकः कश्चिदनुबन्धं च दयनीयतायां सदृष्टान्तमाचष्टे। यथा हीति। ते दैत्यपतावतिवलौ दौवारिकतया प्रसादस्तथा कार्यः। तज्जातिस्वभावमावेदयति। असुरत्वेनाहितेऽपि दैत्यपताविति। तद्दौवारकस्त्वमेतद्दौवारिकोऽहमिति समाधिकाराविति मय्यपि दया विधेयेति नर्ममर्मोक्तिः। पौत्रत्वेनेत्यान्तरङ्गिको भावो भवस्य ॥ ४५ ॥ हे भगवन्। त्वं नः प्रति यदात्थाब्रवीस्तत्तव प्रियं करवाम। इदमेकमेव तव कार्यं मम सम्मतमिति न किन्तु कन्नुहर हर सर्वमित्युक्त्वा शर्वं प्रोत्साययति। भवतेति। यद्भवता व्यवसितं तन्मे ममाप्यधुना सम्यगनुमोदितम्। नासङ्गतं त्वं वदेरपि तु तदेवं च वामदेवाभवेदित्यप्याह। साध्वनुमोदितं साधुजनसम्मतमिति ॥ ४६ ॥ बाणप्राणत्राणने कारणान्तरमपि श्रावयति। मयाऽप्येष वैरोचनसुतो बलिबालासुरोऽपि न बध्यः। प्रह्लादाय मे मया तवान्वयो न वध्य इति वरो दत्त इति ॥ ४७ ॥ तर्हीयत्कुतोऽदर्शि भवता भगवन्नित्यत आह। दर्पेति। त्वदनुभूतो भूतपते यस्तद्दर्पस्तन्नाशाय। वृक्णाश्छिन्नाः। सैन्यसूदने मधुसूदनो हेतुमाह। भुवो भारायितमिति ॥ ४८ ॥

### श्रीमद्वल्लभाचार्यकृता सुबोधिनी

विज्ञापनमाह **अयं ममेष्ट** इति। इष्टानुवृत्तिर्लोकसिद्धा। **दयित** इति प्रीतिविषयः। इच्छा रुचिश्च निरूपिते। **अनुवर्तीति** सर्वहेतुः, सर्वदा मामनुवर्तत इति, तेन मयाप्यनुवृत्तिः कर्तव्येति। **अमुष्याभयं मया दत्तमिति** वाचनिकम्। एवं कायवाङ्मनोभिरयमनुरोध्य इति सर्वथा त्वया कृपा कर्त्तव्येत्याह **संपद्यतामिति**। तत्तस्मात्कारणाद्भवतः प्रसादः संपद्यताम्। अथवा। मदुक्तं त्वदुक्तमेव। अतः स पूर्वोक्तः प्रसादः संपद्यताम्, आवयोभिन्नभावाभावात्। प्रसादं विशिनष्टि। **यथा हि ते दैत्यपतौ प्रह्लादे प्रसाद** इति ॥ ४५ ॥ ततो भगवान् प्रीतः कृतं कृतमेवेति वाचा शिवसान्त्वनं कृतवानित्याह **यदात्थेति**। **भगवन्निति** सम्बोधनमभेदाभिप्रायेण। स हि भगवन्तमपृथक्त्वेन भजते। त्वं यदात्थ तन्नोऽस्मान् प्रति। तद्युक्तमेवेति। नोऽस्माकं वा त्वम्। अतः प्रियं करवाम। स्वकीयानां प्रियं कर्तव्यमेवेति। **तवेति**। वस्तुतस्तव वाक्यं च समर्थनीयम्। तदिदानीं बाहुच्छेदनाभावमाशङ्क्य पूर्वोक्तं स्मारयति **भवता यद्व्यवसितमिति**। 'त्वद्दर्पघ्नं भवेन्मूढ संयुगं मत्समेन ते' इति। तत्साध्वेवानुमोदितम्। कृतं तु त्वयैव तच्छब्दद्वारा अनुमोदनमात्रं कृतमिति ॥४६॥ अभयं यत्प्रार्थ्यते, तत्राह **अवध्योऽयं ममाप्येष** इति। प्रह्लादान्वयत्वज्ञापनाय पुरुषत्रयमाह **वैरोचनसुत** इति। विरोचनात्मजस्य बलेः सुतोऽयं बाणः। किमतो यद्येवम्, तत्राह **प्रह्लादाय वरो दत्त** इति। **ते अन्वयो मया न वध्य** इति। ननु भक्ते कथमेवं वचनम्, तत्राह **असुर** इति। असुरा हन्तव्या एवेति। अनेन भक्तकृपालुत्वं भक्तापेक्षया आधिक्येन सूचितम्। स त्वेकस्यैव प्राणरक्षामाह, अहं तु वंशस्यैव कथयामीति ॥४७॥ तर्हि कथं छेदनमिति चेत्, तत्राह **दर्पोपशमनायेति**। प्रकर्षेण छेदनं बाहुमूलकम्। ते वृक्णा एवेति न तस्य प्रतीकारः। सेनावधस्य क्लिष्टकर्मत्वमाशङ्क्य निमित्तान्तरमाह **यच्च भुवो भारायितम्**। चकाराद्भक्तानां बुद्धिनाशकं तत्सर्वमेव बलं **सूदितं** मारितम् ॥ ४८ ॥

### श्रीविट्ठलरायात्मजश्रीवल्लभकृतलेखः

अयं ममेष्ट इत्यत्र। इति वाचनिकमिति। तथा चानुवर्तीति कायिकम्। इष्टो दयित इति मानसमितिभावः। भगवतान्यः प्रसादो न संपादित इत्याशयेन पक्षान्तरमाहुः अथवेति। मदुक्त एवास्य प्रसादः संपद्यताम्, तस्यान्यथाभावो मा भवत्वित्यर्थः। कृतं कृतमेवेति। भुजच्छेदस्तु कृत एव, अवशिष्टं तिष्ठत्वित्यर्थः। यदात्थेत्यत्र। नोऽस्माकं वेतिपक्षे मूले यदस्माद्धेतोरित्यर्थः। बाहुच्छेदनाभावमिति। जातस्य बाहुच्छेदनस्याभावो निवृत्तिः, पुनः बाहुप्ररोह इदानीं स्यादित्याशङ्कयेत्यर्थः। कृतं त्विति। भगवतो व्यवसाय एव कृतिः। क्रिया त्वनुमोदनमात्रम्। यथा व्यवसायेनैव द्रोणादयो हताः। अत एव 'द्रोणं च भीष्मं चे'तिवाक्यम्। तदनन्तरं युद्धादिकं तु लोकप्रतीत्यर्थं तस्यैवानुमोदनम्, तथा सर्वत्रेति ज्ञेयम्। अवध्योयमित्यत्र। कथमेवं वचनमिति। निषेधस्य संभावनाहेतुकत्वाद्वरसंभावनाबाधकं निषेधवचनं कथमुक्तवानित्यर्थः।

### श्रीसुबोधिनीसारः

अयं वाणो ममेष्टो वांछितो दयितः प्रियोऽनुवर्ती आज्ञाकरः सेवकः हे देव मयाऽमुष्यामुष्मै अभयं दत्तं ते त्वया तत्तस्माद्धेतोः संपाद्यतां प्रसादः क्रियताम् असुरे कथं प्रसाद इति तर्कं विरुणद्धि यथा दैत्यपतौ प्रह्लादे भवतः प्रसादो हि युक्तम् हिते प्रिये इति वा ॥४५॥ कृष्णोक्तिः। हे भगवन् त्वं यदात्थ नोऽस्मान् तत्तव प्रियं वयं करवाम यद्भवतो व्यवसितं निश्चितं तन्मे मम साधु यथा भवति तथानुमोदितुं कर्तुमिष्टं मयेति वा ॥ ४६ ॥ वैरोचनस्य बलेः सुतः पुत्र एषोऽसुरो वाणो ममाप्यवध्योऽमारणीय इत्यर्थः कथमित्यत आह प्रह्लादाय मे मया वरो दत्तः कीदृशस्तत्राह तवान्वयो वंशोऽवध्य इति ॥ ४७ ॥ इदं तु त्वदीप्सितं कृतम् "त्वद्दर्पघ्नं भवेन्मूढ" इति तदुक्तेः। अत एव रुद्रः पराजित इति वदंतो निरस्तास्त्वदुक्तेः संपादनात् तदभीष्टमिति भावार्थः। अस्य बाणस्य गर्वनिवृत्तये मया बाहवो भुजाः प्रवृक्णाः छिन्ना यच्च भुवो भूमेर्भारायमाणं बलं सैन्यं भूरि बहु तच्च सूदितं नाशितम् ॥ ४८ ॥

### गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

एवं स्वेष्टं सम्प्रार्थ्य बाणेऽनुग्रहं प्रार्थयति—अयमिति। अयं वाणो ममेष्टः इच्छाविषयः चित्त उषितः। तत्र हेतुः—दयितः प्रियः। तत्र हेतुः—अनुवर्ती सेवकः। अत एव हे देव! मया अमुष्य अभयं दत्तं तत्तस्मात् यथा हि दैत्यपतौ प्रह्लादे ते त्वया प्रसादः कृतः तथाऽस्मिन्नपि भवतः प्रसादः सम्पाद्यतां मद्दत्तमभयं सत्यं क्रियतामित्यर्थः। 'दैत्यपतौ' इत्यनेन भक्तपौत्रत्वात् अस्मिन्नपि तव प्रसाद उचित एवेति सूचितम् ॥ ४५ ॥ एवं संप्रार्थितो प्रसन्नो भगवानाह—यदात्थेति। 'त्वया यत्कृतं तन्मयैव कृतम्, आवयोर्भेदाभावात्' इति सूचयन् सम्बोधयति—भगवन्निति। नोऽस्मान् प्रति त्वं यत् यथा आत्थ प्रार्थितवान् तथैव तव प्रियमस्याभयं करवाम। बाहुच्छेदनं तु यथा भवता व्यवसितं—"त्वद्दर्पघ्नं भवेन्मूढ संयुगं मत्समेन ते" इति निश्चयेनोक्तं तत्तथैव मे मया साधुतयाऽनुमोदितम् नतु त्वदनिष्टं किञ्चित्कृतम् ॥ ४६ ॥ अयमसुरोपि ममावध्यः वधार्हो न भवति। तत्र हेतुमाह—एष वैरोचनिसुत इति। विरोचनपुत्रो बलिः। स मद्भक्तः। तस्य पुत्रत्वादित्यर्थः। तत्रैव हेत्वन्तरमप्याह—प्रह्लादायेति। अन्वयः वंशजः। अत्र सप्तमे तथा च वचनाभावेपि पुराणान्तरे 'भविष्यति च ते वंशो ह्यवध्यो मे सदा किल' इति प्रह्लादं प्रति भगवद्वचनमस्तीति ज्ञेयम् ॥ ४७ ॥ त्वदुक्तदर्पनाशायैवास्य बाहवो मया प्रवृक्णाः छिन्नाः, यच्च भुवो भारायितं भूरि बलं सैन्यं तच्च सूदितं विनाशितम् ॥ ४८ ॥

### अन्वितार्थप्रकाशिका

अयमिति ॥ अयं बाणः मम इष्टः चित्ते उषितः दयितः प्रियः अनुवर्ती सेवकः अत एव हे देव! मया अमुष्य अभयं दत्तं तत्तस्मात् यथा हि दैत्यपतौ प्रह्लादे ते त्वया प्रसादः कृतः तथाऽस्मिन्नपि प्रह्लादवंशजाते भवतः प्रसादः सम्पाद्यतां मद्दत्तमभयं सत्यं क्रियताम् ॥ ४५ ॥ यदिति ॥ हे भगवन्! नोऽस्मान् प्रति त्वं यत् यथा आत्थ कथयसि तथैव तव प्रियमस्याभयं करवाम। बाहुच्छेदनं तु यत् यथा भवता व्यवसितम् "त्वद्दर्पघ्नं भवेन्मूढ संयुगं मत्समेन ते।" इति निश्चयेनोक्तं तत्तथैव मे मया साधुतयाऽनुमोदितं नतु त्वदनिष्टं किंचित्कृतम् ॥ ४६ ॥ अवध्य इति ॥ असुरोऽप्येष ममापि अवध्यः यतः वैरोचनो बलिः मद्भक्तः तत्सुतः किञ्च तव अन्वयः वंशजः स्वजातीय एव तेन बकीबकाद्यसुरादिवधो नायुक्तः इति तोषिणी। मे मम न वध्यः इति मया प्रह्लादाय वरो दत्तः। "भविष्यति च ते वंशो ह्यवध्यो मे सदा किल।" इति टीकाधृतपुराणान्तरवचनात् ॥ ४७ ॥ दर्पेति ॥ त्वदुक्तदर्पनाशायैवास्य बाहवो मया प्रवृक्णाः छिन्नाः। यच्च भुवो भारायितं भूरिबलं सैन्यं तच्च सूदितं विनाशितम् ॥ ४८ ॥

### श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्

एवं तं प्रसाद्यकरणीयमाह। अयमिति इष्टः प्रियः। अतो दयितो दयार्हः। अमुष्य अमुष्मै बाणाय मया अभयं दत्तं तत्संपाद्यतां यथा दैत्यपतौ प्रह्लादे। भवतः। प्रसादोऽस्ति तथा अस्मिन्नपि त्वया प्रसादः कार्यः ॥ ४५ ॥ नोऽस्माकं यत्करणीयं

त्वमात्थ तत्तव प्रियं बाणरक्षणादिकरूपं हितं वयं बलदेवादयस्तवोपास्याः करवामः यत् व्यवसितं विचारितं तन्मे मया सम्यक् अनुमोदितं अंगीकृतं ॥ ४६ ॥ वैरोचनस्य मद्भक्तबलेः सुतः तवान्वयो न वध्य इति मया प्रह्लादाय वरो दत्तः ॥ ४७ ॥ प्रवृक्णाः छिन्नाः सूदितं हतं ॥ ४८-४९ ॥

**भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी**

प्रकृतं विज्ञापयति ॥ अयमिति ॥ अयं बाणः, मम त्वां प्रपन्नस्य ममेत्यर्थः। इष्टः अनुकम्पाविषयः, दयितः प्रियो भक्तः, अनुवर्त्ती च भवति। हे देव, मया अमुष्य बाणस्य, अभयं दत्तं अस्ति। तत्तस्मात्, भवतः प्रसादोऽनुग्रहः, यथा ते तव, दैत्यपतौ प्रह्लादे प्रसादः, भवति हि। तथा अस्मिन् संपाद्यतां मद्दत्तमभयं सफलीक्रियतामित्यर्थः ॥ ४५ ॥ इत्थं संस्तुतः प्रसन्नः भगवान् प्राह यदिति चतुर्भिः ॥ यदिति ॥ हे भगवन् रुद्र, नोऽस्मान् प्रति, त्वं यत्, आत्थ तत्, तव प्रियं करवाम। भवतः यत्, व्यवसितमेतत्प्राणरक्षणात्मकं, तत् मे मया, साधु यथा तथा, अनुमोदितम् ॥ ४६ ॥ अवध्य इति ॥ हे रुद्र, अयं वैरोचनसुतः, असुरः, भवति। अतः, एषः, ममापि अवध्यः, कुतः। मे मया, प्रह्लादाय, वरः दत्तः। तव, अन्वयः, न वध्यः, अतोऽपि न हनिष्यामीति भावः ॥ ४७ ॥ तर्हि किमिति अस्य बाहूनच्छिनस्तत्राह ॥ दर्पेति ॥ मया, दर्पोपशमनाय, अस्य बाहवः, प्रवृक्णाश्छिन्नाः, यच्च भुवः, भूरि, भारायितं बलं च, तच्च सूदितं नाशितम् ॥ ४८ ॥

**कृष्णप्रिया**

रुद्र भगवान् भगवान् श्रीकृष्ण की ग्यारह श्लोकों में स्तुति करके अपने भक्त बाणासुर के लिये अभ्यर्थना करते हुए कहते हैं कि हे भगवन्! यह बाणासुर मेरा अतिशय प्रिय, दयापात्र, आज्ञांकित सेवक है। मैंने इसको अभयदान दिया है। हे कृपासिंधु! जैसा आपका इनके पितामह प्रह्लाद जी पर रहा है, वैसा इन पर नित्य बना रहे ॥ ४५ ॥ भगवान् श्रीकृष्ण ने कहा कि हे शिवजी! आपने जो कहा और जो चाहते हो, मैं वैसा ही करूँगा। इसको मैं निर्भय कर देता हूँ। इसके लिये आपने जो चाहा था कि इनके चार हस्त अखंड रहें, तो वैसा ही होगा ॥ ४६ ॥ भगवन्! यह बाणासुर भक्तिवर बलिराजा का पुत्र है, इसलिये मेरा भी अवध्य है। मैंने प्रह्लाद को वचन दिया, तेरा वंशज दैत्य मेरा अवध्य होगा ॥ ४७ ॥ केवल इसका गर्व उतारने के लिये इसकी अधिक भुजाएँ काट दी हैं जो इसका अनिष्ट न करें। इसका सैन्य भूतल का बोझ था, इसलिये सेना का संहार किया गया ॥ ४८ ॥

**चत्वारोऽस्य भुजाः शिष्टा भविष्यन्त्य[1]जरामराः। पार्षदमुख्यो भवतो नकुतश्चिद्भयोऽसुरः ॥ ४९ ॥**
**इति लब्ध्वाभयं कृष्णं प्रणम्य शिरसासुरः। प्राद्युम्निं रथमारोप्य स [2]वध्वा समुपानयत् ॥ ५० ॥**
**अक्षौहिण्या परिवृतं सुवासःसमलंकृतम्। सपत्नीकं पुरस्कृत्य ययौ रुद्रानुमोदितः ॥ ५१ ॥**

**कर्दमक्षमा**

अन्वयः—अस्य, शिष्टाः, चत्वारः, भुजाः, अजरामराः, भविष्यन्ति, भवतः, पार्षदमुख्यः, असुरः, न, कुतश्चिद-भयः ॥ ४९ ॥ इति, अभयम्, लब्ध्वा, असुरः, शिरसा, कृष्णम्, प्रणम्य, सवध्वा, प्राद्युम्निं, रथम्, आरोप्य, समुपायनत् ॥५०॥ सुवासःसमलङ्कृतम्, अक्षौहिण्या, परिवृतम्, सपत्नीकम्, पुरःस्कृत्य, रुद्रानुमोदितः, ययौ ॥ ५१ ॥

**श्रीधरस्वामिविरचिता भावार्थदीपिका**

अनुगृह्णाति। चत्वार इति ॥ ४९ ॥ सह वध्वा ऊषया ॥ ५० ॥ रुद्रानुमोदित इति तदभिप्रेतस्यैव बाणभुजभंगस्य कृतत्वात् ॥ ५१ ॥

**श्रीवंशीधरकृता भावार्थदीपिकाप्रकाशः**

अस्येत्युक्तार्थः ॥४९॥ प्राद्युम्निमनिरुद्धम्। स-सहेत्यर्थः। 'क्वचिदादेशोऽप्यादेशित्वेन गृह्यते' इति वैयाकरणाः ॥५०॥ तदभिप्रेतस्य रुद्राभिप्रायविषयस्य। "त्वद्दर्पघ्नं भवेन्मूढ संयुगं मत्समेन ते" इति रुद्रोक्तेः ॥ ५१ ॥

**श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी**

प्रसादं सम्पादयति-चत्वार इति। असुरोपि पार्षदमुख्यः त्वत्प्रार्थनानुसारेण जातमद्भक्तित्वादिति भावः। अजरामरत्ववरप्रदानेन भुजकर्त्तनव्यथापि रुद्धः शान्तेति ज्ञेयं न कुतश्चिदपि भयं यस्येति संसारभयस्यापि निवृत्त्या जीवन्मुक्तो

१. व्यत्य-वीर. । २. सह वध्वा समानयत्-प्रा. पा. ।

भावीत्यर्थः। वृषपर्वा बलिर्बाण इत्येकादशे सत्सङ्गलब्धसिद्धित्वस्य वक्ष्यमाणत्वात् नञो लोपाभाव आर्षः॥ ४९॥ कृष्णं सर्वचित्ताकर्षकमाहात्म्यं भगवन्तं दृष्टोपि तादृशप्रसादात् सम्यक् बहुलोपस्करयुक्तत्वादिना उप श्रीकृष्णान्तिके आनयत्॥ ५०॥ संशब्दार्थमेव विवृणोति–अक्षौहिणीत्यर्द्धेन। सपत्नीकम् उषासहितं प्राद्युम्नि रुद्रेति तैर्व्याख्यातम् यद्वा रुद्रेण बाणादिसर्वदुःखद्रावकेण भगवता अनुमोदितः अनुव्रजनादिना हर्षितः सन् ययौ प्रतस्थे श्रीकृष्णः॥ ५१॥

### श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी

एवं दर्पोपशमनादधुना स्वरूपतां प्राप्तो भवत्पार्षदप्रवरो भावीत्याह—चत्वार इति। असुरोऽपि, न कुतश्चिदपि भयं यस्येति संसारभयस्यापि निवृत्त्या जीवन्मुक्तो भावीत्यर्थः॥ ४९॥ इति एवमीदृशं वा, स श्रीकृष्णेनानुगृहीतोऽसुरः कृष्णं सर्व्वचित्ताकर्षक-माहात्म्यं भगवन्तम्, दुष्टेऽपि तादृशप्रसादात्; शिरसा प्रणम्येति छिन्नबाहुवर्गमूलतो रक्तधारास्रावादिवैकल्येन भूमौ दण्डवत्पाताशक्तेः। यद्वा, कृष्णं परमानन्दघनमूर्त्तिम्; प्रणम्येति तत्प्रणाममात्रेणैव छेदवेदनादिनिवृत्त्या तस्यापि परम-सुखत्वं सूचितम्। ततश्च शिरसेत्यस्य परेणान्वयः। वध्वा सह शिरसा कृत्वा सम्यग् बहुलोपस्करयुक्तत्वादिना उप श्रीकृष्णान्तिके आनयत्॥ ५०॥ सं-शब्दार्थमेव विवृणोति—अक्षौहिणीत्यर्द्धेन। सपत्नीकमूषासहितं प्राद्युम्निम्, रुद्रेति तैर्व्याख्यातम्। यद्वा, रुद्रेण वाणादि-सर्व्वदुःखद्रावकेण भगवता अनु निरन्तरं मोदितः, अनुव्रजनादिना हर्षितः सन् ययौ प्रतस्थे श्रीकृष्णः॥ ५१॥

### श्रीमद्वीरराघवाचार्यकृता भागवतचन्द्रचन्द्रिका

रुद्रमुखेन बाणमनुगृह्णाति–चत्वार इति। अस्य वाणस्य चत्वारः भुजाः शिष्टाः आज्ञप्ता अनुगृह्यावशेषिताः इत्यर्थः। अयं जरामरणरहितो भविष्यति न कुतश्चिद्भयं यस्य तथाभूतश्च भविष्यतीति सम्बन्धः॥ ४९॥ इतीति। अभयमिति च्छेदः वध्वा उषया सह प्राद्युम्निमनिरुद्धं समानवद्द्वारकां प्रापयामासेत्यर्थः॥ ५०॥ तदेवाह–अक्षौहिण्येति। शोभने वाससी यस्य तं पत्न्या सहितमनिरुद्धं पुरस्कृत्य पुरतो गमयन् रुद्रानुमोदितः स्वयमप्यनुययौ॥ ५१॥

### श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शिनी

स वाणाऽसुरः वध्वा उषया सह॥ ५०–५१॥

### गूढार्थदीपिनी

अजराः श्रमरहिताः। अमरा अच्छेद्याश्च॥ ४९॥ प्राद्युम्निम् अनिरुद्धम् सादरमानयत् स सहेत्यर्थः। क्वचिदादेशोऽपि आदेशित्वेन गृह्यते इति वैयाकरणाः॥ ५०–५१॥

### श्रीसत्यधर्मकृता श्रीभागवतटिप्पणी

अस्य बाणस्य भुजाश्चत्वारः। अजरामर अ इति छेदः। हे अजरामर हर ह शिष्टा भविष्यन्ति। भवतः पार्षत-मुख्योऽयमसुरः। कुतश्चिदिति निपातसमुदायः सुप्सुपेति समासः। अः कृष्ण आहेति शेषः। अजरामर इति तु श्लिष्टम्। अजरामरा ये पार्षदास्तेषु मुख्य इति वाऽन्वयः। ननु भारते हरिवंशे द्विबाहुना च बाणेनेति। कृत्वा द्विबाहुं तं बाणं छिन्न-शाखामिव द्रुममिति च द्विबाहुंत्वोक्तेः कथमत्र चतुर्भुजमित्युक्तिरिति चेत्। तत्र बाहुशब्द एकबाहुपरोऽत्र न तु भागद्विकबाहुपर इति द्वित्वचतुष्ट्वाविरोधसम्भवात्। यद्वा रुद्राणी प्रति वाणी वाणी च रुद्रं प्रतीति कृष्णेन द्विवारं द्विभुजमितीरणात्तच्चतुष्ट्वं ज्ञेयम्। एवमन्यत्रापि समाधिरवधेया॥ ४९॥ इत्यभयं लब्ध्वा कृष्णे शिरसा प्रणम्य प्राद्युम्नि रथं वध्वोषया सहारोप्य समुपानयत्। कुभाण्डदुहिता रामा उषायाः सखिमण्डले। प्रवेश्य तां महाभागां वैदर्भमवर्धयत्युत। साम्बाय दीयतां रामा कुभाण्डदुहिता शुभेत्यादिकथा। तथा वारुणो बाणस्य गोनिमित्तं जात इत्यादिका चात्र ज्ञेयेति समा सूच्यते॥ ५०॥ अक्षौहिण्या द्वादशसङ्ख्यया। सपत्नीकं सोषम्॥ ५१॥

### श्रीमद्वल्लभाचार्य्यकृता सुबोधिनी

तर्हि मत्प्रार्थनायां को विशेष इत्याशङ्क्याह **चत्वारोऽस्य भुजाः शिष्टा भविष्यन्तीति**। मद्दत्तं सहजं भुजद्वयं त्वद्दत्तमागन्तुकं भुजद्वयमिति चत्वारोऽस्य भुजाः छिद्यमानेषु भुजेषु अवशिष्टा भविष्यन्ति। अनेन सुदर्शनं प्रक्षिप्तं साम्प्रतं छिनत्तीति सूचितम्। अधिकभुजद्वयदाने हेतुः **पार्षदमुख्य इति**। तयोः कालान्तरेऽपि नाशाभावायाह **अजरामरा इति**। देवत्वं निरूपितम्। युक्तमेव **पार्षदमुख्यो भवत इति**। **न कुतश्चिद्भय** इति असुरत्वेऽपि न मत्तो न मदीयान्न गुणेभ्यो भयमित्यर्थः॥ ४९॥ इत्यभयं दत्ते भगवत्कृपावलोकितः स्वोचितं कृतवानित्याह **इति लब्ध्वेति**। अभयं लब्धा, कृष्णं प्रणम्य, कन्यादाने संतुष्टो भविष्यतीति। शिरसेति। तस्यैतदेव महत्, यतोऽयमसुरः। **प्राद्युम्निं** भगवत्पौत्रम्। अर्थाद्बन्धनादिकं

त्याजयित्वा, वरमिवालङ्कृत्य, वध्वा ऊषया सह समुपानयत्। सम्यक् भगवत्समीपमुपानयत्। एतदर्थमेव समागत इति तावता सन्तुष्टः॥ ५०॥ **अक्षौहिण्या परिवृतमिति** पारिबर्हमक्षौहिणी सेना। **सुवाससमलंकृतमिति** वस्त्राभरणानि। ततो भगवत्कृत्यमाह। सपत्नीकं तं पौत्रं पुरस्कृत्य **रुद्रेणानुमोदितः**, अन्यथा दण्डमिव तद्ग्रहणं रुद्रो मन्येत। **कृष्णोनुमोदित** इति पाठे अर्थाद्रुद्रेण। अनेन तस्मिन् भगवत्प्रसादो निरूपितः। जाम्बवत इव शिक्षार्थं निग्रह इत्यपि सूचितम्॥ ५१॥

### श्रीसुबोधिनी-सारः

अस्य शिष्टा उर्वरिताः चत्वारो भुजा अजरामरा भविष्यंति भवतस्तव पार्षदेषु मुख्योऽसुरो न कुतश्चिद्भयं यस्य स भविष्यति॥ ४९॥ शुकोक्तिः। इत्येवमभयं लब्ध्वा प्राप्य कृष्णं शिरसा प्रणम्य सोऽसुरो बाणो वध्वा पुत्र्या सह प्रद्युम्नस्यापत्यं रथमारोप्य न्यवेदयत्॥ ५०॥ अक्षौहिण्या परिवृतं युक्तं सुष्ठु वासोभिः वस्त्रैः समलंकृतं सुष्ठु वासांसि यस्य सम्यगलंकृतानि भूषणानि यस्य स च स च तम् इति गुरवः सपत्नीकं सस्त्रीकं पुरस्कृत्य अग्रे कृत्वा रुद्रेणानुमोदितः साध्विति प्रशंसितः श्रीकृष्णो जगाम॥ ५१॥

### गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

अवशिष्टाश्चत्वारोस्य भुजा अजराः श्रमरहिताः अमरा अच्छेद्याश्च भविष्यन्ति। तथाऽयमसुरोपि यतो भवतः पार्षदेषु मुख्यः प्रियत्वादतो नकुतश्चिद्भयो निर्भयश्च भविष्यति॥ ४९॥ इत्येवं भगवद्वचनादभयं लब्ध्वा असुरो बाणः शिरसा कृष्णं प्रणम्य वध्वा ऊषया सह प्राद्युम्निमनिरुद्धं रथमारोप्य सम्यगादरेणानयत्॥ ५०॥ रुद्रमनोरथसंपादनात्तेनाप्यनुमोदितो वाचा सत्कृतः श्रीकृष्णोप्यनिरुद्धं पुरस्कृत्य द्वारकां ययौ। स्पष्टमन्यत्॥ ५१॥

### अन्वितार्थप्रकाशिका

चत्वार इति॥ अवशिष्टाश्चत्वारोऽस्य भुजा अजराः श्रमरहिताः अमरा अच्छेद्याश्च भविष्यन्ति। तथाऽयमसुरोऽपि यतो भवतः पार्षदेषु मुख्यः प्रियत्वादतो न कुतश्चिद्भयो निर्भयश्च भविष्यति॥ ४९॥ इतीति॥ इत्येवं भगवद्वचनादभयं लब्ध्वा सः असुरो बाणः शिरसा कृष्णं प्रणम्य वध्वा ऊषया सह प्राद्युम्निमनिरुद्धं रथमारोप्य सम्यगादरेणानयत्॥ ५०॥ अक्षौहिण्या इति॥ रुद्रेणानुमोदितः तदभिप्रेतस्यैव बाणभुजभङ्गस्य कृतत्वात् कृष्णोऽपि अक्षौहिण्या परिवृतं सुवासःसमलंकृतं सपत्नीकमनिरुद्धं पुरस्कृत्य द्वारकां ययौ॥ ५१॥

### श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्

प्राद्युम्निं प्रद्युम्नपुत्रमनिरुद्धं वध्वा उषया सह रथमारोप्य सः बाणः समुपानयत् श्रीकृष्णसमीपमानीतवान्॥ ५०॥ सपत्नीकं अनिरुद्धं रुद्रेण शिवेन। अनुमोदितः प्रसादितः॥ ५१॥

### भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

चत्वार इति॥ अस्य, चत्वारः भुजाः, शिष्टाः अवशेषिताः, भविष्यन्ति। अजरामरः, भविष्यति। असुरः अयं बाणः, नकुतश्चिद्भयः सन्, भवतः, पार्षदमुख्यश्च, भविष्यति॥ ४९॥ इतीति॥ असुरो बाणः, इत्येवं विधं असुरो बाणः, इत्येवं विधं अभयं लब्ध्वा, कृष्णं, शिरसा प्रणम्य, प्राद्युम्नसुतमनिद्धं, सवध्वा वध्वोषया सह, रथं आरोप्य, समुपानयत् द्वारकां प्रापयामासेत्यर्थः॥ ५०॥ एतत्स्फुटमाह॥ अक्षौहिण्या सेनया, परिवृतं सुवासः समलंकृतं सपत्नीकमनिरुद्धं, पुरस्कृत्य, रुद्रानुमोदितः रुद्रेण कृतानुमादेनः कृष्णः, ययौ॥ ५१॥

### कृष्णप्रिया

अब इनकी चार भुजाएँ अवशिष्ट रही हैं, ये चारों अजरामर होंगी। बाणासुर आपके पार्षदों में प्रधान रहेगा। अब बाणासुर को किसी से किसी भी प्रकार का भय नहीं रहेगा॥ ४९॥ भगवान् श्रीकृष्ण से अभयदान प्राप्त करके बाणासुर ने श्रीद्वारिकानाथ जी के श्रीचरणों में साष्टाङ्ग दण्डवत् प्रणाम किया। वह नगर में गया, श्री अनिरुद्ध जी को आदर से अपनी पुत्री ऊषा के साथ रथ पर बैठाकर प्रभु के समीप ले आया॥५०॥ पुनः भगवान् पुरुषोत्तम ने भगवान् भवानी शङ्कर की अनुमति से वस्त्रालङ्कार विभूषित ऊषा और अनिरुद्ध जी को एक अक्षौहिणी सेना के साथ लेकर श्री द्वारिकापुरी की ओर प्रस्थान किया॥ ५१॥

[1]स्वराजधानीं समलंकृतां ध्वजैः [2]सतोरणैरुक्षितमार्गचत्वराम् ।
विवेश शङ्खानकदुन्दुभिस्वनैरभ्युद्यतः पौरसुहृद्‌द्विजातिभिः ॥ ५२ ॥
[3]य एतत् कृष्णविजयं शंकरेण च संयुगम् । संस्मरेत् प्रातरुत्थाय न तस्य स्यात् पराजयः ॥ ५३ ॥

इति श्रीमद्भागवते महापुराणे[4] दशमस्कन्धे[5]ऽनिरुद्धानयनं नाम त्रिषष्टितमोऽध्यायः[6] ॥ ६२ ॥

**कर्दमक्षमा**

अन्वयः—सतोरणैः, ध्वजैः, समलङ्कृताम्, उक्षितमार्गचत्वराम्, शङ्खानकदुन्दुभिस्वनैः, पौरसुहृद्‌द्विजातिभिः, अभ्युद्यतः, स्वराजधानीम्, विवेश ॥ ५२ ॥ यः, एतत्, कृष्णविजयम्, च, शङ्करेण, संयुगम्, प्रातः, उत्थाय्य, संस्मरेत्, तस्य, पराजयः, न, स्यात् ॥ ५३ ॥

इति श्रीमद्भागवते दशमस्कन्धे निरोधलीलायां अनिरुद्धानयने त्रिषष्टितमेऽध्यायेऽन्वयाः समाप्ताः ॥ ६३ ॥

**श्रीधरस्वामीविरचिता भावार्थदीपिका**

पौरादिभिरभ्युद्युतोऽभिमुखमागत्य सत्कृतः ॥ ५२-५३ ॥

इति श्रीमद्भागवते दशमस्कन्धे उत्तरार्द्धे श्रीध० टीकायां त्रिषष्टितमोऽध्यायः ॥ ६३ ॥

**श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः**

स कृष्णः ॥ ५२ ॥ एवमित्थम् । कृष्णस्य विजयो यत्र तत्संयुगम् । तस्य स्मर्तुः ॥ ५३ ॥

इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे दशमस्कन्धोत्तरार्धे त्रिषष्टितमोऽध्यायः ॥ ६३ ॥

**श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी**

स श्रीकृष्णः राजधानीं श्रीद्वारकां सम्यक् तदानीं विशेषतोऽलङ्कृतां भूषितमार्गेत्यत्र उक्षितमार्गेत्येवात्र ॥ ५२॥ श्रीकृष्णेन बाणो निर्जितः श्रीरुद्रश्च जृम्भितः इत्यद्भुतं न स्यात् यतस्तत्स्मरणेनापि न कस्यचित् कश्चित्पराजयो भवतीत्याह-य इति । कृष्णस्य विजयमेतं शङ्करेणेति बाणस्य मङ्गलार्थमेव युद्धप्रवर्त्तनाभिप्रायेण सम्यक् श्रद्धापूर्वकं स्मरेदपि किमुत शृणुयात् कीर्त्तयेद्वेत्यर्थः । प्रातरुत्थायेति स्नानापेक्षा च निरस्तापराजयः बाह्याभ्यन्तरादिभ्यो भक्तिविघ्नेभ्यश्च पराभवो न भवतीत्यर्थः ॥ ५३ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिण्यां त्रिषष्टितमोऽध्यायः ॥ ६३ ॥

**श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी**

स श्रीकृष्णो राजधानीं श्रीद्वारकां सम्यगलंकृतामिति सदैवालंकृताम्, तदानीञ्च विशेषतोऽलंकृतामित्यर्थः ॥ ५२॥ श्रीकृष्णेन बाणो निर्जितः, श्रीरुद्रश्च जृम्भित इत्युद्भूतं न स्यात्, यतस्तत्सरणेनापि न कस्यचित् कश्चित् पराजयो भवतीत्याह—य इति । कृष्णस्य साक्षाद्भगवतो विशेषेण जयं बाणबाहुच्छेदनादिलक्षणम्, संयुगमिति संयुगान्तर्गतजृम्भणादिकमपि सूचितमेव । साक्षात्तदनुक्तिर्गौरवात्, शंकरेणेति बाणस्य मंगलार्थमेव युद्धे प्रवृत्त्यभिप्रायेण । यद्वा, कृष्णस्य विजयमुत्कर्षं तमेवाह—'च' अपि, शंकरेणापि संयुगम् । अन्यत् समानम् । सम्यक् स्मरेदिति स्मरणमात्रमपेक्षितम्, न तु कीर्त्तनादि; प्रातरुत्थायेति पावित्र्याद्यपेक्षापि निरस्ता । पराजयो बाह्यान्तरादिभ्यो भक्तिविघ्नेभ्यश्च पराभवो न भवति ॥ ५३ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे उत्तरार्द्धे श्री-श्रील-सनातन-गोस्वामिपाद-कृतायां श्रीबृहद्वैष्णवतोषण्यां श्रीदशम-टिप्पण्यां त्रिषष्टितमोऽध्यायः ॥ ६३ ॥

**श्रीमद्वीरराघवाचार्यकृता भागवतचन्द्रचन्द्रिका**

स इति । स बाणः कृष्णो वा अन्यतरसहितोऽन्यतरो वा पौरादिभिरभ्युद्यतः अभिमुखमागत्य सत्कृतः शङ्खादिध्वनिभिः राजधानीं द्वारकां विवेश कथम्भूतामुक्षिताः सिक्ताः मार्गा वीथयः चत्वराण्यङ्गणानि यस्यां ताम् ॥ ५२ ॥ उक्तकथासंस्मरणफलमाह—य इति । यः पुमान् संस्मरेत् इति श्रवणाख्यानादीनामप्युपलक्षणं तस्य स्मरतः पराजयो न स्यात् ॥ ५३ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायां त्रिषष्टितमोऽध्यायः ॥ ६३ ॥

---

१. स राज–प्रा. पा. । २. मनोरमैर्भूषित–प्रा. पा. । ३. य एवं–श्रीधर. वंशी. जीव. वीर. विश्व. । ४. पारमहंस्यां संहितायां दशमस्कन्धे बाणासुरसंग्रामे कृष्णविजये–प्रा. पा. । ५. उत्तरार्धे–प्रा. पा. । ६, अयमध्यायो विजये नास्ति ।

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

स कृष्णः ॥ ५२-५३ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् । त्रिषष्टितम एतस्मिन् दशमेऽजनिसङ्गतः ॥ ६३ ॥

### गूढार्थदीपिनी

सतोरणैरित्यत्र स इति पृथक् पदं कार्यम् द्वारकां कृष्णः सविवेशेत्यन्वयः । तोरणं वन्दनमालिका । उक्षिताः सिक्ताः मार्गादयो यस्याः । पौरादिभिः अभ्युद्यतः अभिमुखमागत्य सत्कृतः ॥ ५२ ॥ श्रीकृष्णस्य विजयो यत्र संयुगविशेषणम् । तत्पुरुषो वा ॥ ५३ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां दशमस्कन्धोत्तरार्धे गूढार्थदीपिन्यां त्रिषष्टितमोऽध्यायः ॥ ६३ ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

अभ्युद्यतः अभिमुखमुपव्रज्य पूजितः ॥ ५२-५३ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धीये श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे त्रिषष्टितमाऽध्यायार्थप्रकाशः ॥ ६३ ॥

### श्रीसत्यधर्मकृता श्रीभागवतटिप्पणी

स्वराज्यधानीं ध्वजैस्तोरणैश्च समलङ्कृतम् । सतोरणैर्ध्वजैरिति वा । समलङ्कृतां सम्यगलङ्कृताम् । उक्षिता गन्धादिकोदकैर्मार्गचत्वराश्च यस्यां सा ताम् । शङ्खानकदुन्दुभिस्वनैः पौरसुहृद्द्विजातिभिरभ्युद्यतः ॥ ५२ ॥ विशेषत एतच्छ्रवणे फलश्रवणे प्रवर्तन्ते लोका इति तदभिलपति ॥ य इति । तस्य पराजयो न स्यात् परेषामाजयो युद्धानि न भवेयुः । पराजयस्तु दूरोत्सारित इत्यप्यर्थः । अत आवश्यकमेतच्छ्रवणमिति ॥ ५३ ॥

इति श्रीभागवतटिप्पण्यां सत्यधर्मकृतायां दशम उत्तरार्धेऽष्टसप्ततिमोऽध्यायः ॥ १०-७८ ॥

### श्रीमद्वल्लभाचार्यकृता सुबोधिनी

सिद्धार्थस्य भगवतः पुनरागमने पुरीं वर्णयति, विवाहोत्सवे पुरी न वर्णितेति, स्वराजधानीमिति । अनेन विधिवद्विवाहः तेन द्वारकायामेव कृत इति सूचितम् । स्वस्य राजधानीति समागमने विलासा उक्ताः । ध्वजैः सतोरणैरलङ्कृतामित्युपर्यलङ्कारः । **उक्षितमार्गचत्वरा**मित्यधः । गन्धोदैः उक्षिताः सिक्ताः मार्गाः चत्वराण्यङ्गणानि च यस्याः । मध्ये शोभामाह । पौरसुहृद्द्विजातिभिः शङ्खानकदुन्दुभिस्वनैः सहितैरभ्युद्यतः । पौरास्तामसाः, सुहृदो राजसाः, सर्वैरभ्युपगमनम्, अयं विवाहः सर्वसंमत इति ज्ञापयितुम् ॥५२॥ प्रकरणं समाप्तमिति ज्ञापयितुमेतदुपाख्यानश्रवणफलमाह **य एतत् कृष्णविजयमिति** । प्रत्यहं य एतत् स्मरेत्, तस्य पराजयो नेन्द्रियान्तःकरणैर्भवति । भगवता निरुद्धानां विस्मृतप्रपञ्चानां भगवदासक्तियुक्तानां कालादिभिरुपद्रवे राजसानामुद्वेगो भवतीति फलनिरूपणे तदवश्यं वक्तव्यम् । उपायश्चानेन निरूपितः । पराजयसम्भावनायामेतत्स्मर्तव्यमिति ॥ ५३ ॥

इति श्रीभागवतसुबोधिन्यां श्रीमल्लक्ष्मणभट्टात्मजश्रीमद्वल्लभदीक्षितविरचितायां दशमस्कन्धविवरणे उत्तरार्धे चतुर्दशोऽध्यायः ॥ १४ ॥

इति श्रीमद्भागवत-दशम-उत्तरार्ध-राजस-फल-प्रकरणं समाप्तम् ।

### श्रीसुबोधिनी-सारः

सतोरणैः ध्वजैः समलंकृतां मंडिताम् उक्षिता गंधजलैः सिक्ता मार्गाः चत्वराणि यस्यां तां स्वराजधानीं द्वारकां विवेश शंखादिशब्दैः सह पौरैः सुहृद्भिर्द्विजादिभिरभ्युद्यतः संमुखमागत्य सत्कृतः ॥ ५२ ॥ एवं प्रकारेण कृष्णस्य विजयं बाणात् शंकरेण च संग्रामं प्रातरुत्थाय यः संस्मरेत् तस्य पुंसः पराजयो न स्यात् ॥ ५३ ॥

इति श्रीमद्भा० दशमस्कन्धे उ० सुबोधिन्यां टीकायां त्रिषष्टितमोध्यायः ॥ ६३ ॥

### श्रीविट्ठलरायात्मजश्रीवल्लभकृतलेखः

**स्वराजधानीमि**त्यस्याभासे । **विवाहोत्सवे** इति । विवाहार्थं निर्गमने इत्यर्थः । **व्याख्याने** । अनेनेति । पुर्या अलङ्कारकथनेनेत्यर्थः । य एतदित्यत्र । निरुद्धानामित्यस्य विवरणमग्रिमपदद्वयेन ।

इति चतुर्दशाध्यायव्याख्या समाप्ता ।

## गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

ततश्च पौरादिभिरभ्युद्यतः अभिमुखमागत्य सत्कृतः श्रीकृष्णः शङ्खादिशब्दैः सह स्वराजधानीं द्वारकां विवेशे-त्यन्वयः। तां वर्णयति—सतोरणैर्ध्वजैः समलङ्कृताम्। तथा उक्षिताः सिक्ताः मार्गाः चत्वराण्यङ्गणानि यस्यां ताम् ॥ ५२॥ प्रकरणस्य समाप्तत्वात् एतदुपाख्यानश्रवणादेः फलमाह—य इति। एवंभूतं कृष्णस्य विजयं शङ्करेण सह संयुगं युद्धं च यः पुमान् प्रातरुत्थाय सम्यक् श्रद्धाभक्तिपूर्वकं स्मरेत्, इदं श्रवणकीर्तनादीनामप्युपलक्षणम्, तस्य श्रवणादिनिष्ठस्य पराजयः इन्द्रियान्तःकरणादिभ्यः शत्रुभ्यश्चाभिभवो न स्यादित्यर्थः ॥ ५३॥

इति श्रीवल्लभाचार्य-वंश्यगोपालसूनुना। श्रीमन्मुकुन्दरायाणां पादसेवाधिकारिणा ॥ १॥
श्रीमद्गिरिधराख्येन भजनानन्दसिद्धये। श्रीमद्भागवतस्येयं टीका बालप्रबोधिनी ॥ २॥
रचिता दशमे तत्र राजसानां निरोधने। त्रियुक्षष्टितमः कृष्ण-विजयस्य निरूपकः ॥ ३॥

## अन्वितार्थप्रकाशिका

स्वेति ॥ पौरसुहृद्द्विजातिभिः अभ्युद्यतः अभिमुखमागत्य सत्कृतः श्रीकृष्णः शङ्खानकदुन्दुभिस्वनैः सह सतोरणै-र्ध्वजैः समलङ्कृतां तथा उक्षिताः सिक्ताः मार्गाः चत्वराण्यङ्गणानि यस्यां तां स्वराजधानीं द्वारकां विवेश ॥ ५२॥ य इति ॥ एवंभूतं कृष्णस्य विजयं शङ्करेण सह संयुगं युद्धं च यः पुमान् प्रातरुत्थाय सम्यक्श्रद्धाभक्तिपूर्वकं स्मरेत् अपि किमुत कीर्तयेत् शृणुयाद्वा। तस्य पराजयः इन्द्रियादिभ्यो बाह्येभ्यश्च शत्रुभ्यः अभिभवो न स्यात् ॥ ५३॥

इति श्रीभागवते महापुराणे दशमस्कन्धेऽन्वितार्थप्रकाशिकायां त्रिषष्टितमोऽध्यायः ॥ ६३॥

## श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्

उक्षिताः सिक्ताः मार्गाश्चत्वराणि अंगणानि च यस्यां तां द्वारिकां। पौरादिभिः शंखादिस्वनैः सह अभ्युद्यतः अभिमुखमागत्य सत्कृतः स श्रीकृष्णः ॥ ५२-५३॥

इति श्रीशुद्धैकांतधर्मप्रवर्त्तकगुरुराजेन्द्रश्रीसहजानंदस्वामिशिष्यगोपालानंदमुनिविरचिते निगूढार्थप्रकाशके श्रीमद्भागवतस्य दशमस्कंध-व्याख्याने अनिरुद्धद्वारिकानयनं नाम त्रिषष्टितमोऽध्यायः ॥ ६३॥

## भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

स्वेति ॥ स कृष्णः, सतोरणैः तोरणसहितैः, ध्वजैः समलंकृतां, उक्षिताः सिञ्चिताः मार्गाश्चत्वराणि च यस्यां तां, स्वराजधानीं शङ्खानकदुन्दुभिस्वनैः सह, पौरसुहृद्द्विजातिभिः पुरवासिभिः सुहृद्भिर्द्विजातिभिश्चेत्यर्थः। अभ्युद्यतः अभिमुख-मागत्य सत्कृतः सन्, विवेश ॥ ५२॥ उक्तकथासंस्मरणफलमाह ॥ य इति ॥ यः पुमान्, एवमुक्तप्रकारं, कृष्णस्य विजयं, शंकरेण संयुगं संग्रामं च, प्रातः उत्थाय, संस्मरेत् तस्य, पराजयः न स्यात्। अत्र स्मरणं श्रवणाख्यानादीनामुपलक्षणम् ॥५३॥

इति श्रीधर्मधुरंधरश्रीधर्मात्मजप्रत्यक्षपुरुषोत्तमश्रीसहजानन्दस्वामिसुतश्रीरघुवीराचार्यसूनुभगवत्प्रसादाचार्यविरचितायामन्व-यार्थावबोधिन्यां भक्तमनोरञ्जन्याख्यायां श्रीमद्भागवतटीकायां दशमस्कन्धोत्तरार्द्धे त्रिषष्टितमोऽध्यायः ॥ ६३॥

## कृष्णप्रिया

जब लोगों को सूचना मिली कि नाथ श्री ऊषा तथा अनिरुद्धजी के साथ द्वारिका आ रहे हैं तब नगरनिवासियों ने, सारे प्रजाजन ने ध्वजा-तोरणों से नगर के कोने-कोने सजा दिये। राजमार्गों को, छोटी छोटी गलियों को गन्ध सुगन्धित जल से सींच दिया गया। नगर के नागरिक, नर-नारी वृन्द, बन्धुजन, बान्धवजन, विप्रवृन्द, महाजन आदि को आगे कर अतिशय उत्साह और धूम-धाम से प्राणनाथ का स्वागत किया। नाथ के नगरप्रवेश अवसर पर शङ्खनाद, नगाडें और ढोलों की मङ्गल तुमुलध्वनि हो रही थी। भगवान श्रीकृष्ण ने द्वारिकापुरी में इसी प्रकार प्रवेश किया। राजन्! जो सज्जन भगवान् भवानी शङ्कर के साथ भगवान श्रीकृष्ण का युद्ध और विजय-गाथा का प्रातःकाल उठकर स्मरण करता है उसकी पराजय नहीं होती ॥ ५२-५३॥

इति श्रीमद्भागवते दशमस्कन्धे उत्तरार्द्धेऽनिरुद्धानयने ६३ अध्याये भाषान्तरं समाप्तम् ॥ ६३॥

# अथ चतुःषष्टितमोऽध्यायः

| श्लोकाः | अनु. | मि. उ. | व. | उ. | श्लो. अ. | उ. अ. | अ. अ. | सं. श्लो. अ. | सं. श्लो. | अ. |
|---|---|---|---|---|---|---|---|---|---|---|
| ४४ | ३७ | ६ | १ | ३ | १५०९ | १७ | ४३ | १५६९ | ४९ | १ |

### श्रीशुक[1] उवाच

[2]एकदोपवनं राजन् जग्मुर्यदुकुमारकाः । विहर्तुं साम्बप्रद्युम्नचारुभानुगदादयः ॥ १ ॥
क्रीडित्वा सुचिरं तत्र विचिन्वन्तः पिपासिताः । जलं निरुदके कूपे ददृशुः सत्त्वमद्भुतम् ॥ २ ॥
कृकलासं गिरिनिभं वीक्ष्य विस्मितमानसाः[3] । तस्य चोद्धरणे यत्नं चक्रुस्ते कृपयान्विताः ॥ ३ ॥
[4]चर्मजैस्तान्तवैः पाशैर्बद्ध्वा पतितमर्भकाः । नाशक्नुवन् [5]समुद्धर्तुं कृष्णायाचख्युरुत्सुकाः ॥ ४ ॥

### कर्दमक्षमा

अन्वयः—श्रीशुक उवाच—राजन्, एकदा, साम्बप्रद्युम्नचारुभानुगदादयः, यदुकुमारकाः, विहर्त्तुम्, उपवनम्, जग्मुः ॥ १ ॥ तत्र, सुचिरम्, क्रीडित्वा, पिपासिता, जलम्, विचिन्वन्तः, निरुदके, कूपे, अद्भुतम्, सत्वम्, ददृशुः ॥ २ ॥ विस्मितमानसाः, कृपयान्विताः, ते, गिरिनिभं, कृकलासम्, वीक्ष्य, च, तस्य, उद्धरणे, यत्नम्, चक्रुः ॥ ३ ॥ अर्भकाः, चर्मजैः, तान्तवैः, पाशैः, बद्ध्वा, पतितम्, तम्, समुद्धर्तुम्, न, अशक्नुवन्, तदा, उत्सुकाः, कृष्णाय, आचख्युः ॥ ४ ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

चतुःषष्टितमे कृष्णो नृगं पापादमोचयत् । ब्रह्मस्वहारिदोषोक्त्या राज्ञो दृष्टान्तशिक्षयत् ॥ १ ॥
विभूतिभाग्यभोगादिमदोन्नद्धमनोरथान् । अन्वशासद्यदून्कृष्णो नृगोद्धारप्रसंगतः ॥ २ ॥

पिपासितास्तृषिता जलं विचिन्वंतः । सत्त्वं जीवम् ॥ २ ॥ तं च कृकलासं वीक्ष्य ॥ ३ ॥ चर्मजैश्चर्ममयैः पाशैस्तांतवैस्तंतुमयैश्च ॥ ४ ॥

---

१. बादरायणि–प्रा. पा. ।

२. श्रीशुक उवाच—

उपविष्टं सुधर्मायां कदाचित्क्षत्रियैर्वृतम् । विज्ञापयद्वेत्रपाणिर्द्वास्थोऽभ्येत्य जनार्दनम् ॥ १ ॥
शक्रप्रस्थाद्द्विजः कश्चिदागत्य द्वारि तिष्ठति । प्रवेशितव्यो वा देव नवेति यदुसत्तम ॥ २ ॥
प्रवेशयेति कृष्णेन द्वाःस्थेनोक्तेन सत्वरः । प्रवेशितः प्रणम्याह ब्राह्मणः पुरुषोत्तमम् ॥ ३ ॥
धर्मज्ञो धार्तराष्ट्रेण मूढेनाधर्मचारिणा । अक्षैः पराजितो यातः सभार्यः सानुजो वनम् ॥ ४ ॥
ब्राह्मणेनोदितां वाणीमित्याकर्ण्य सुदुःश्रवाम् । क्रोधोद्विग्नमनास्तूर्णमुत्तस्थे हरिरासनात् ॥ ५ ॥
स रथं दारुकानीतमारुह्य सह सत्यया । महत्या सेनया सार्धं ययौ यत्र पृथासुताः ॥ ६ ॥
वने वसन्तं राजानं ब्राह्मणैः परिवारितम् । दृष्ट्वाऽनुशोचत्सुभृशं सानुजं यदुनन्दनः ॥ ७ ॥
व्यसनान्यनुभुक्तानि वर्णयित्वा परस्परम् । उषित्वा तत्र तां रात्रिं पाण्डवैः सह केशवः ॥ ८ ॥
हेतुवाक्यैः समाश्वास्य धर्मराजं युधिष्ठिरम् । भीमसेनार्जुनौ चैव यमौ च यदुनन्दनः ॥ ९ ॥
पाञ्चालीं द्रौपदीं साध्वीं सत्यभामासमन्वितः । आश्वास्यताननुज्ञाप्य ब्राह्मणांश्च सहस्रशः ॥१०॥
सुभद्रामभिमन्युं च रथमारोप्य माधवः । आजगाम वनाद्राजन्पुरीं द्वारवतीं प्रभुः ॥११॥
स प्रविश्य पुरीं दिव्यां पार्थविश्लेषदुर्मनाः । उवास पालयन्पृथ्वीं धर्मेणान्यांश्च कालयन् ॥१२॥

विजयेऽधिका. ।

३. चेतसः–वीर. विज. । ४. चर्मभिर–वीर. ; चर्मभिस्तं तथा–विज. ; तं बद्ध्वा तान्तवैः पाशैः पतितं च तमर्भकाः–प्रा. पा. । ५. तमु– श्रीधर. टि. ।

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

नृगं नृपम् ( १ ) । विभूतिरैश्वर्यम्, भाग्यं संपदः, 'भोग्यम्' इति पाठे भोग्याः स्त्र्यादयः । भोगस्तत्तद्विषयानुभवस्तेषां मदेनोन्नद्धा उच्छृङ्खला मनोरथा येषां तान् । अन्वशासत् विभूत्यादिमदांधानामेषा गतिर्भवतीति स च न कार्य इत्यशिक्षयदित्यर्थः ॥ २ ॥ लीले यमनुरुद्धतः जन्मतः प्रागूह्या श्रीप्रद्युम्नादीनां यौवनोद्भेद एवास्या लीलाया औचित्यात्, क्रीडासक्तत्वात्तु कुमारशब्दप्रयोगः कुमारप्राचुर्याद्वा । सांबस्यादावुद्देशः प्रद्युम्नस्य शंबरपुरात्तत्कालागमनेनागमनाभावात् । स्वल्पपापेनापि तादृशजनस्य तादृशी गतिरित्याश्चर्येण संबोधयति—राजन्निति । हे हरिभक्तिद्योतमानेत्यर्थः । उपवनं नगरोपकंठवनम् ॥ १ ॥ तत्रोपवने । "सत्त्वं गुणे पिशाचादौ बले द्रव्यस्वभावयोः । आत्मत्वे व्यवसायासुचित्तेष्वस्त्री तु जंतुषु ॥" इति मेदिनी ॥ २ ॥ कृकं लासयति नर्तयतीति कृकलासः । "शिरःप्राग्रं कृकं प्रोक्तं कृको गल उदीरितः" इति वामनः । तस्य कृकलासस्य । ते यदुकुमाराः । महाकायस्य तस्य चिरमुपवनांतर्वर्तिकूपस्थस्य भगवदिच्छातो दर्शनं तदैव जातं व्यवहारतस्तु तस्यातिपुरातनकूपस्य गभीरत्वेन चिरासंस्कृतत्वेन लतापत्राद्यावृतत्वेन जलान्वेषणवेलायामेव दृष्टत्वात् ॥ ३ ॥ "तंतुः संततिकार्पासादिसूत्रविस्तृतिषु च" इति निरुक्तिः ॥ ४ ॥

### श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी

एवं श्रीरुद्रनिर्जयादिना प्रकटतरमैश्वर्यमुक्त्वा प्रसङ्गात्किञ्चिदन्यदप्याह—एकदेत्यादिना । एकदा कदाचिदिति क्रीडाक्रमो निरस्तः इतीयं लीलाऽनिरुद्धजन्मतः प्रागूह्या श्रीप्रद्युम्नादीनां यौवनोद्भेद एवास्या लीलाया औचित्यात् क्रीडासक्तत्वात्तु कुमारशब्दप्रयोगः कुमारप्राचुर्य्याच्च साम्बस्यादावुद्देशः प्रद्युम्नस्य शम्बरपुरात्तत्कालागमनेनाग्रगामित्वाभावात् स्वल्पपापेनापि तादृशी गति स्यादित्याश्चर्य्येण पूर्वोक्तलीलावेशपरिहारेच्छया वा सम्बोधयति राजन्निति ॥ १ ॥ तत्रोपवनेऽद्भुतं महाकायत्वेन कूपान्तरपि जीवनादिना च लोकातीतत्वात् महाकायस्य तस्य चिरमुपवनकूपान्तर्वर्त्तमानस्य प्रसिद्धिसम्भवेपि तदानीमेव दर्शनं वस्तुतो भगवत एव तादृशलीलेच्छातः व्यवहारतस्तु तस्यातिपुरातनकूपस्यातिगभीरत्वेन चिरासंस्कृततया लताद्यावृतत्वेन च जलान्वेषणेनैव दृष्टत्वात् ॥ २ ॥ अतिप्राक्कालीनत्वेन तादृशतत्तज्जीवत्वात् गिरिनिभमिति महागौरवं तथा तत्कूपस्याप्यतिवृहत्त्वं सूचितं वीक्ष्य साक्षात् दृष्ट्वा विस्मितचेतसः कृपयान्विताश्च सन्तः विस्मितमानसा इति क्वचित्पाठः ॥ ३ ॥ कथं चक्रुस्तदाह—चर्म्मभिरित्यर्द्धेन । पतितमिति कृकलासरूपं प्राप्य भ्रंशात् नाशक्नुवन् यतोऽर्भकाः बाल्यलीलापेक्षयानाविष्कृतप्रौढभावाः तमुद्धर्तुमिति वा पाठः ॥ ४ ॥

### श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी

एवं श्रीरुद्रनिर्ज्जयादिना प्रकटतरमैश्वर्य्यमुक्त्वा प्रसंगात्तादृशचरितान्तरमप्याह—एकदेत्यादिना नृणामित्यन्तेन । एकदा कदाचिदिति क्रीडाक्रमो निरस्तः, इतीयं लीला अनिरुद्धजन्मतः प्रागूह्या । श्रीप्रद्युम्नादीनां यौवनोद्भेदेऽस्या लीलाया औचित्यात् नैश्चिन्त्यात् क्रीडासक्तत्वात् कुमार-शब्दप्रयोगः । स्वल्पपापेनापि तादृशजनस्य तादृशगतिः स्यादित्याश्चर्य्येण सम्बोधयति—राजन्निति ॥ १ ॥ तत्रोपवने, अद्भुतम्, महाकायत्वेन कूपान्तरपि जीवनादिना लोकातीतत्वात्, महाकायस्य तस्य चिरमुपवनकूपान्तर्वर्त्तमानस्य प्रसिद्धिसम्भवेऽपि तदानीमेव दर्शनं तेषां बाल्येन तदज्ञानात्, किंवा यथाकालं तदुद्धारे श्रीभगवदिच्छोदयात् ॥ २ ॥ गिरिनिभमिति—महागौरवं तथा तत्कूपस्याप्यतिवृहत्त्वं सूचितम् । वीक्ष्य साक्षाद्दृष्ट्वा, विस्मितचेतसः कृपयान्विताश्च सन्तः, यद्वा, 'च' अपि, तस्य तादृशस्यापि कूपात् पापाच्चोद्धरणे यत्नं चक्रुः, यतः कृपान्विता दयाशीलाः ॥ ३ ॥ कथं चक्रुः? तदाह—चर्म्मभिरित्यर्द्धेन । तैर्व्याख्यातम् । यद्वा, कृपान्वितत्वेन पीडापरिहारार्थमादौ चर्म्मभिर्वेष्टयित्वा तदुपरि सूत्रादिनिर्म्मितपाशैर्बद्ध्वा, पतितमित्यर्भकत्वेन तैस्तस्य तत्र पातमननात्, किंवा आत्मोद्धारार्थं तेनैव तत्रागत्य स्वयंपतनात्, यद्वा, प्रागेव कृकलासरूपेण तत्रैव स्वर्गतो भ्रंशात्, नाशक्नुवत्, यतोऽर्भका बाल्यलीलापेक्षया नाविष्कृतप्रौढभावाः ॥ ४ ॥

### श्रीमद्वीरराघवाचार्यकृता भागवतचन्द्रचन्द्रिका

अथ दत्तोपहारप्रयुक्तदुरितनिमित्तकृकलासजन्मनो नृगस्य तज्जन्मविमोचनात्मकं भगवच्चेष्टितमनुवर्णयति चतुष्षष्टितमेन, एकदेत्यादिना तावदुपोद्घातमाह—एकदेति । हे राजन्! साम्बादयो यदुकुमारकाः ॥ १ ॥ क्रीडित्वेति । तत्रोपवने पिपासितास्तृषिताः जलमन्वेषयन्तः क्वचिन्निरुदके निर्जले कूपे महदुन्नतमद्भुतं च सत्वं जन्तुं ददृशुः ॥ २ ॥ कृकलासं नाम गिरितुल्यं जन्तुं विस्मितं चेतो येषां ते तस्य कृकलासस्योद्धरणे निमित्ते यत्नं च चक्रुः ॥ ३ ॥ चार्म्मभिरिति । चर्मभयैस्तन्तुमयैश्च पाशैरज्जुभिर्बद्ध्वा पतितं तमुद्धर्तुं न प्रबभूवुः ॥ ४ ॥

### श्रीविजयध्वजतीर्थकृता पदरत्नावली

( विजयध्वजतीर्थीयपाठानुसारेण सप्ताशीतितमाध्यायस्य त्रयोदशश्लोकादारभ्येयं कथा पठ्यते तथापि श्रीधरीयादिव्याख्यानुसारेणात्रसम्मुद्रयते । )

विचिन्वन्तः अन्वेषणं कुर्वन्तः सत्वं प्राणिनम् ॥ २ ॥ कृकं लासयति नर्त्तयतीति कृकलासः "शिरःप्राग्रं कृकं विदुः" इति च ॥ ३-७ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

चतुष्षष्टितमे कूपोद्धृतात् श्रुत्वा नृगाद्धरिः । दानं स्वान् शिक्षयामास विप्रभक्ति सुशङ्कितान् ॥ १-२ ॥ तं सत्त्वं कृकलासं वीक्ष्य ॥ ३ ॥ चर्मभिश्चर्ममयैः पाशैः तान्तवैः सूत्रमयैश्च ॥ ४-१ ॥

### गूढार्थदीपिनी

चतुःषष्टितमे कृष्णो नृगं योनेरमूमुचत् । ब्रह्मस्वहारिदुर्गत्या नृपानुद्दृतानबोधयत् ॥

सत्यपि यौवने क्रीडासक्तत्वात् कुमारप्राचुर्याद्वा कुमारशब्दप्रयोगः । कुत्सितान् हिंसकजन्तून् मारयतीति वा कुमारः ॥ १ ॥ जलं विचिन्वन्तः अन्वेषयन्तः । सत्त्वं विशालजन्तुम् । कूपे ददृशुः 'सत्त्वं गुणे' जन्तुषु—इति मेदिनी ॥ २ ॥ कृकं गलं लासयति नर्तयतीति तथा । गिरिगिट इति । 'कृको गले' इति वामनः ॥ ३-५ ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

चतुष्षष्टितमे भगवान् ब्रह्मस्वापहारदोषेण कूपे पतितं नृगमुद्धृत्य तन्मुखाद्ब्रह्मस्वापहारदोषं श्रुत्वा स्वकीयान् शिक्षयामासेति वर्णयति, रुक्मिण्यादिविवाहतत्पुत्रोत्पादनादिकं भगवच्चेष्टितं वर्णयित्वाऽथ पुत्रविहारप्रसङ्गे भगवच्चेष्टितं वर्णयितुं सङ्क्षेपतस्तत्पुत्रविहारं तावद्वर्णयति--एकदेति ॥ १ ॥ सत्वं जीवम् ॥ २ ॥ तं च कृकलासं वीक्ष्य कृपयाऽन्विताः तस्य कृकलासस्योद्धरणे यत्नं चक्रुः ॥ ३ ॥ चर्मभिश्चर्ममयैः ॥ ४-५ ॥

### श्रीमद्वल्लभाचार्य्यकृता सुबोधिनी

राजसप्रक्रिया पूर्णा तत्त्वैरिन्द्रियशोधिका । निरूपिता नातियत्ना सात्त्विकी त्वधुनोच्यते ॥ १ ॥
अध्यायैरेकविंशत्या वसुदेवमखावधि । चतुर्धा रूप्यते षड्भिः षड्भिः षड्भिस्त्रिभिस्तथा ॥ २ ॥
अर्थो धर्मस्तथा कामः मोक्षश्च त्रिविधोऽन्ततः । प्रकीर्णकाख्यानवती प्रक्रियेयमिहोच्यते ॥ ३ ॥
नात्र क्रमविवक्षा हि नृगः पूर्वं निरूप्यते । गोप्यः पश्चात्ततो मिथ्यावासुदेवः प्रकीर्तितः ॥ ४ ॥
धर्मकामार्थयुक्ता हि प्रमाणेनैव पोषिताः । द्विविदो लक्ष्मणा चैव नारदश्च त्रयः स्मृताः ॥ ५ ॥
एतेषामर्थसिद्धिर्हि षडविधा प्रोच्यते स्फुटं । ततः साधारणो धर्मो विशिष्टः पञ्चभिस्ततः ॥ ६ ॥
यथा कामकथा षड्भिस्त्रिभिर्मोक्षस्तथोच्यते । अर्थोऽनर्थः सर्वथैव धर्मार्थमपि योजितः ॥ ७ ॥
तस्यापि भगवानर्थः स निरुद्धः फले परम् । अर्थो ब्राह्मणसम्बन्धरहितश्चेत् परः स्मृतः ॥ ८ ॥
दृष्टान्ततो निरूप्यादौ भगवानाह तत् स्फुटम् । उत्तरार्धे पञ्चदशे नृगमोक्षो निरूप्यते ॥ ९ ॥
शिक्षा च सात्त्विके भावे राजसा यादवा यतः ।

अतः परं स्कन्धसमाप्तिपर्यन्तं प्रकीर्णकाः कथाः निरोधोपयोगाय निरूप्यन्ते । तत्र प्रथमं नृगमोक्षो निरूप्यते । नृगो नाम कश्चिद्राजा अर्थवान् दानधर्मपरः ब्राह्मणार्थसंसर्गादनर्थं प्राप्तः, तस्यापि भगवान् उद्धारकः, अधमभावादुद्धृत्य स्वर्गं प्रापयिष्यति, ततः स सर्वतो निरुद्धः भगवन्माहात्म्यं दृष्ट्वा विस्मृतप्रपञ्चः भगवदेकपरो भविष्यति । तदत्र भगवानिरुद्धरूपः तमुद्धृत्य धर्मं ग्राहयामास । कथाक्रमे तु देवान्तरभक्तः यथानर्थं प्राप्तवान्, एवं धर्मपरोऽपि नृग इति वदन् अर्थविषये धर्मतत्त्वमुच्यते । तत्र प्रथमं नृगस्य कृकलासशरीरादपगमो निरूप्यते एकदोपवनमिति षड्भिः । स्त्रियो हि भगवन्माहात्म्यं दृष्टवत्यः, बालकास्तु न जानन्तीति तेभ्य एवानर्थ उत्पत्स्यत इति ब्राह्मणातिक्रमो न कर्तव्य इति तान् बोधयितुं तद्द्वारैव नृगमोक्षो निरूप्यते । एकदा सर्व एव बालकाः क्रीडार्थं द्वारकाया उपवनं जग्मुः । दुर्गादुत्तीर्य पुराणद्वारका उपवनत्वेन स्थिता, 'क्रीडायां गुप्तस्थान'मिति रक्षकैर्निरुद्धमप्युपवनं यदुकुमारकाः रक्षकैरनिरोध्याः जग्मुः । तत्र भगवत्पुत्राणां विशेषतो नामान्याह साम्बप्रद्युम्नेति । विहर्तुमेव गताः । साम्बोऽग्रेऽनर्थहेतुरिति स एव मुख्य उपदेष्टव्य इति प्रथमं निर्देशः । प्रद्युम्नः सर्वमान्यो महासमर्थः । तथापि नृगोद्धारे न समर्थ इति वक्तुं निरूपितः । चारुस्तेषामेव दशमः । भानुर्नाग्नजित्याः प्रथमः । गदादयो

भ्रातरः ॥ १ ॥ क्रीडां प्रस्तावनार्थमुक्त्वा प्रासङ्गिकमाह **क्रीडित्वेति** । समुद्रतीरस्थाने मिष्टं जलं दुर्लभमिति जलान्वेषणार्थं प्रवृत्ताः, कूपास्तत्र सम्भवन्तीति । **ते** बालका अनभिज्ञाः अभिज्ञाश्च प्रवेशं न लभन्त इति जलं विचिन्वन्तः कूपे अद्भुतं विचित्रं सत्त्वं ददृशुः । सर्वलोकविलक्षणत्वादद्भुतं तं वर्णयति । **अनेन भगवदीयानां क्रीडास्थाने पूर्वकृतो धर्मः साधनतामापन्न** इति निरूपितम् । सर्वस्यापि धर्मस्यैतावन्मात्रे उपक्षयात् ॥२॥ **कृकलासमिति** जातिविशेषः । स भवति प्रायेण सूक्ष्मः । गिरिनिभत्वं **तस्याश्चर्यकरम्** । ततस्तान् दृष्ट्वा समारोढुमियेष, न तु शक्तः, अर्धस्थाने समागत्य पुनः पुनः पतति । ततस्तददृष्टवशात् हन्तव्येऽपि शरीरे दयोत्पन्नेति **तेषामुद्धारार्थं** प्रयत्नमाह **तस्य चोद्धरणे यत्नं चक्रुरिति** । चोऽपीत्यर्थे । वस्तुतस्तु हन्तव्य एव । 'अपि कृकलास'मित्यत्र श्रुतौ तथा निरूपणात् । ततो हस्तात्पतितं तं बहव एव वाधस्तादुत्तीर्य कृपया पीडिताः ॥ चर्मभिः चर्मोपरि तं पातयित्वा परितस्तान्तवपाशान् बद्ध्वा सर्वतः स्थिताः तदुद्धारे यत्नं कृतवन्तः । तथापि समुद्धर्तुं नाशक्नुवन्, अलौकिकत्वात् । **अलौकिके भगवानेव साधनमिति** मत्वा कृष्णायाचख्युः । यद्यपि विशेषसाधनैरुद्धर्तव्यो भवति, तथापि उत्सुकाः सन्तः कृष्णायैवाचख्युः । **औत्सुक्यं चित्तोल्लासो विवेकासहिष्णुः** ॥ ४ ॥

## श्रीसुबोधिनी–सारः

शुकोक्तिः । एकस्मिन् काले सांबप्रद्युम्नचारुभानुगदा आदिर्येषां **ते** यदूनां कुमारका बालका विहर्तुं क्रीडितुं उपवनम् कृत्रिमं वनं जग्मुः हे राजन् ॥ १ ॥ तत्र वने सुचिरं बहुकालं यथा भवति तथा क्रीडित्वा पातुमिच्छंतो जलं विचिन्वंतो मृगयंतो निरुदके जलहीने कूपेऽद्भुतमाश्चर्यरूपं सत्त्वं प्राणिविशेषं ददृशुः ॥ २ ॥ गिरिनिभं पर्वतसदृशं कृकलासं शरटं वीक्ष्य दृष्ट्वा चकितचिताः कृपयान्विता युक्तास्ते बालकाः तस्य कृकलासस्योद्धरणे बहिर्निष्कासननिमित्तं यत्नमुद्यमं चक्रुः ॥ ३ ॥ तथाहि चर्मजैः चर्ममयैः तांतवैः तंतुमयैः पाशैः पतितं तं सत्त्वं बद्ध्वाऽर्भका बालाः समुद्धर्तुं बहिरानेतुं न समर्था आसन् तदोत्सुका हर्षिताः कृष्णायाचख्युः ॥ ४ ॥

## श्रीविट्ठलरायात्मजश्रीवल्लभकृतलेखः

**पञ्चदशेऽध्याये** । **कारिकासु** । तत्त्वैरिति । अष्टाविंशतिभिरध्यायैरित्यर्थः । **इन्द्रियशोधिकेति** । तामसप्रकरणीयलीलाश्रवणे तामसाहङ्कारकार्यभूतात्मकत्वात् देहस्य शुद्धिर्भवति, एवं राजसलीलाश्रवणे राजसाहङ्कारकार्येन्द्रियशुद्धिर्भवति । तथा सात्त्विकलीलाश्रवणे सात्त्विकाहङ्कारकार्यस्य मनसः शुद्धिर्भवतीत्याशयेनेदमुक्तं **नातियत्नेति** । तामसानामाग्रहस्य दृढत्वात् तन्निरोधे भूयान् यत्नः, राजसे न तथेत्यर्थः । **चतुर्धेति** । अत्र षड्भिः षड्भिरिति वीप्सया वारत्रयमिदं ज्ञेयम् । तथा च, प्रमेयं साधनं फलं च षड्भिः षड्भिरध्यायैर्निरूप्यते, अन्ते त्रिभिरध्यायैर्धर्मिणो निरूप्यन्ते । एवं चतुर्धेत्यर्थः । षण्णामध्यायानामर्थमाहुः **अर्थ** इति । एवं षडध्याया इति । अनेन प्रकरणविभागोप्युक्तः । प्रमेयसाधनफलैरर्थधर्मकामाः, धर्मिप्रकरणेन त्रिविधो मोक्षश्चोक्त इति । **प्रकीर्णकेति** । प्रकीर्णकानि यान्याख्यानानि तद्वती प्रक्रियेत्यर्थः । अध्यायविभागपक्षमाहुः नात्रेति । अत्र पूर्वोक्तकारिकाया अध्यायविभाजकत्वपक्षे कारिकोक्तः क्रमो न विवक्षितः, किन्तु धर्मयुक्तो नृगः पूर्वं निरूपितः, ततः कामयुक्ता गोप्यः, ततोऽर्थयुक्तो मिथ्यावासुदेवः, ततो मोक्षत्रयमित्यर्थः । **प्रमाणेनैवेति** । नृगः प्रमाणे श्रद्धाधिक्यात् तत्पोषितः, गोप्यो वेदात्मकबलदेवरमणात् प्रमाणपोषिताः, पौण्ड्रकोपि वेदात्मकमहादेववरपुष्टत्वात् प्रमाणपोषितः । त्रिविधमोक्षाधिकारिण आहुः **द्विविद** इति । द्विविदो 'ये च प्रलम्बे'ति श्लोके गणित एव । लक्ष्मणाया आवेशद्वारापि हस्तिनापुरविकर्षणेन भगवन्माहात्म्यज्ञानं मोक्षः । नारदस्य बहुनायिकारमणसंशयनिवृत्तिपूर्वकं भगवद्धर्मज्ञानं मोक्ष इति ज्ञेयम् । प्रकरणविभागपक्षमाहुः **एतेषामिति** । अत्र कारिकोक्तः क्रम एव ज्ञेयः । षड्भिरध्यायैरर्थः, ततः षड्भिर्धर्मः, एकेन साधारणः, पञ्चभिर्विशिष्टः, ततः षड्भिः कामः, ततस्त्रिभिर्मोक्ष इत्यर्थः । **अर्थोऽनर्थ** इति । नृगेन दानार्थं योजितोप्यर्थोऽनर्थरूप एव जात इत्यर्थः । **तस्यापीति** । अनर्थत्वं प्राप्तस्याप्यर्थो भगवानेव । 'चक्षुषश्चक्षु'रितिवदर्थस्याप्यर्थरूपो भगवान्, परन्तु फले कामिते सति स भगवान्निरुद्धो भवति । फलकामनायां सत्यां पुरुषार्थत्वेन स्वयं न प्रकटो भवति, किन्तु अनर्थरूपं पशुपुत्रादिकं ददातीत्यर्थः । यादवानां शिक्षाकरणे हेतुमाहुः **राजसा** इति । सात्त्विकधर्मेषु न निपुणाः । अतः शिक्ष्यन्ते इत्यर्थः । भगवान-निरुद्धरूप इति । राजसप्रकरणे प्रद्युम्नरूपः, सात्त्विकेऽनिरुद्धरूप इति पूर्वं निरूपितम् । एकदोपवनमित्यत्र । **तेभ्य एवानर्थ** इति । मौसलरूपोनर्थ इत्यर्थः ।

## गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

एवं राजसभक्तानां निरोधो विनिरूपितः । अथो सात्त्विकभक्तानां निरोधो विनिरूप्यते ॥ १ ॥
चतुःषष्टितमेऽध्याये कृष्णेन नृगमोचनम् । ब्रह्मस्वहारिदोषस्य वर्णनं च निरूप्यते ॥ २ ॥

'राज्ञामेवं प्रायशः प्रमादो भवतीति स्वदृष्टान्तेन ज्ञेयम्' इति सूचयन् संबोधयति—**राजन्निति** । साम्बप्रद्युम्नादयो यदुकुमारका विहर्तुमेकदोपवनं जग्मुरित्यन्वयः ॥ १ ॥ तत्रोपवने सुचिरं बहुकालं क्रीडित्वा पिपासिताः तृषायुक्ता जलं

विचिन्वन्तः अन्वेषन्तः क्वचिन्निरुदके निर्जले कूपे अद्भुतं महत् सत्त्वं जन्तुं ददृशुः ॥ २ ॥ तं च गिरिनिभं पर्वतसदृशं कृकलासं वीक्ष्य विस्मितं मानसं येषां ते कृपायुक्तास्तस्य कूपादुद्धरणे निमित्ते यत्नं चक्रुः ॥ ३ ॥ तदेवाह—ते अर्भकास्तं कूपे पतितं कृकलासं चर्मभिर्वेष्टयित्वा तान्तवैः पाशैः रज्जुभिश्च बद्ध्वा प्रयतमाना अपि समुद्धर्तुं नाशक्नुवन्। तदा चोत्सुकाः उद्धारे चोत्साहयुक्ताः कृष्णायाचख्युः कथितवन्तः ॥ ४ ॥

### अन्वितार्थप्रकाशिका

चतुःषष्टितमे कृष्णो नृगं शापादमोचयत्। अशिक्षयन्नृपान्दृप्तान् तत्र श्लोकाः कृताब्धयः ( ४१ ) ॥

उवाचत्रितयं ( ३ ) सप्तचत्वारिंशदनुष्टुभः ( ४७ ) ॥ ६४ ॥

एकदेति ॥ हे राजन्! साम्बप्रद्युम्नचारुभानुगदादयः यदुकुमारकाः विहर्तुमेकदोपवनं जग्मुः। एकदेत्यनेन क्रमो निरस्तः। तेनौचित्यादियं लीला प्रद्युम्नादीनां यौवनारम्भ एवानिरुद्धजन्मतः प्राग्बोध्या इति तोषिणी ॥ १ ॥ क्रीडित्वेति ॥ तत्रोपवने सुचिरं बहुकालं क्रीडित्वा पिपासिताः तृषायुक्ताः जलं विचिन्वन्तः अन्वेषयन्तः क्वचिन्निरुदके निर्जले कूपे अद्भुतं महत् सत्त्वं जन्तुं कृकलासं ददृशुः ॥ २ ॥ कृकलासमिति ॥ गिरिनिभं पर्वतसदृशं कृकलासं वीक्ष्य विस्मितं मानसं येषां ते कृपयाऽन्वितास्तस्य कूपादुद्धरणे निमित्ते यत्नं चक्रुः ॥ ३ ॥ चर्मजैरिति ॥ ते अर्भकास्तं कूपे पतितं कृकलासं चर्मजैश्चर्ममयैः तान्तवैः सूत्रमयैश्च पाशैः रज्जुभिः बद्ध्वा प्रयतमाना अपि अर्भकत्वात् समुद्धर्तुं नाशक्नुवन्। तदा चोत्सुकाः उद्धारे उत्साहयुक्ताः कृष्णायाचख्युः कथितवन्तः ॥ ४ ॥

### श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्

इदानीं चतुःषष्टितमेऽध्याये नृगोपाख्यानमाह ॥१॥ पिपासिताः तृषार्त्ताः जलं विचिन्वंतः सत्वं जंतुं विशेषं ॥२-३॥ चर्मभिः चर्मरज्जुमयैः तांतवैः सूत्ररज्जुमयैः ॥ ४-५ ॥

### भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

चतुःषष्टितमे पापात् कृष्णो नृगममोचयत्। शिक्षयन् दृप्तभूपालान् ब्रह्मस्वापहृतावघम् ॥ १ ॥

अथ दत्तापहारप्रयुक्तदुरितनिमित्तकृकलासजन्मभाजो नृगभूपतेस्तज्जन्मविमोचनात्मकं भगवच्चेष्टितमनुवर्णयति तत्र तावदुपोद्घातमाह ॥ एकदेति ॥ हे राजन्, एकदा एकस्मिन् समये, साम्बश्च प्रद्युम्नश्च चारुश्च भानुश्च गदश्च ते आदयो येषां ते, यदुकुमारकाः, विहर्त्तुं, उपवनं जग्मुः ॥ १ ॥ क्रीडित्वेति ॥ तत्रोपवने, सुचिरं बहुवेलं, क्रीडित्वा, पिपासितास्तृषिताः, अत एव, जलं विचिन्वन्तः सन्तः, कस्मिंश्चित् निरुदके जलवर्जिते, कूपे, अद्भुतं महत्त्वादुन्नतत्वाच्चाद्भुतावहमित्यर्थः। सत्त्वं जन्तुं, ददृशुः ॥ २ ॥ कृकलासमिति ॥ ते यदुकुमारकाः, गिरिनिभं पर्वततुल्यं, कृकलासं सरटं वीक्ष्य, विस्मितमानसाः, कृपया दयया, अन्विताः युक्ताः सन्तश्च, तस्य उद्धरणे यत्नं, चक्रुः ॥ ३ ॥ चर्मजैरिति ॥ चर्मजैः, तान्तवैस्तन्तुमयैः च, पाशैः रज्जुभिः, पतितं कूपे इति शेषः। कृकलासं, अर्भकाः बद्ध्वा, समुद्धरन्तः सन्तोऽपीति शेषः। समुद्धर्त्तुं, न अशक्नुवन् न प्रबभूवुः। ततः, उत्सुका आश्चर्याविष्टाः सन्तः, कृष्णाय, आचख्युः कूपपतितसत्त्वं तदुद्धारे स्वकृतप्रयासं च, शशंसुः ॥ ४ ॥

### कृष्णप्रिया

श्रीशुकाचार्य जी ने कहा—राजन् परीक्षित! एक दिन यादव राजकुमार श्रीसाम्ब-प्रद्युम्नजी-चारु-भानुजी एवं गद आदि सब मिलकर घूमने के लिये उपवन में गये। उपवन में देर तक सब खेलते रहे; वहाँ उन्हें सबको प्यास लगी। यादव कुमारों ने इधर उधर सर्वत्र खोजते एक कूप देखा। उस कूप में जल तो नहीं था लेकिन एक विचित्र प्राणी देखा। वह पर्वताकार बड़ा एक गिरगिट था। गिरगिट को देखते ही सबको बड़ा आश्चर्य हुआ। कुमारों के हृदय करुणा से भर गये और वे पुनः उस गिरगिट को निकालने का प्रयत्न करने लगे। यादव कुमारों ने चर्म के और सूत के मजबूत तन्तुओं के तन्तुओं से बाँधकर प्रयत्न करने पर सफलता न मिली तब यदुकुमार आश्चर्यचकित होकर भगवान श्रीकृष्ण के समीप गये और सारा वृत्तान्त प्रभु को सुनाया ॥ १-४ ॥

[1]तत्र गत्वारविन्दाक्षो भगवान् विश्वभावनः । वीक्ष्योज्जहार वामेन तं करेण स लीलया ॥ ५ ॥
स उत्तमश्लोककराभिमृष्टो विहाय सद्यः कृकलासरूपम् ।
संतप्तचामीकरचारुवर्णः[2] [3]स्वर्ग्यद्भुतालंकर[4]णाम्बरस्रक् ॥ ६ ॥
[5]पप्रच्छ विद्वानपि तन्निदानं[6] जनेषु विख्यापयितुं मुकुन्दः ।
कस्त्वं महाभाग वरेण्यरूपो देवोत्तमं त्वां गणयामि[8] नूनम् ॥ ७ ॥
दशामिमां वा[9] कतमेन कर्मणा सम्प्रापितोऽस्य[10]तदर्ह सुभद्र[11] ।
आत्मानमाख्याहि विवित्सतां नो यन्मन्यसे [11]चेत्क्षममत्र वक्तुम् ॥ ८ ॥

## कर्दमक्षमा

अन्वयः—विश्वभावनः, भगवान्, अरविन्दाक्षः, तत्र आगत्य, वीक्ष्य, वामेन, करेण, लीलया, सः, तम्, उज्जहार ॥५॥ उत्तमश्लोक कराभिमृष्टः, सद्यः, कृकलासरूपम्, सः, विहाय, संतप्तचामीकरचारुवर्णः, अद्भुतालङ्करणाम्बरस्रक्, स्वर्गी, बभूव ॥ ६ ॥ भगवान्, मुकुन्दः, विद्वान्, अपि, तन्निदानम्, जनेषु, विख्याययितुम्, वरेण्यरूपः, हे महाभाग ! त्वम्, कः ! नूनम्, त्वाम्, देवोत्तमम्, गणयामि ॥ ७ ॥ हे सुभद्र ! कतमेन, कर्मणा, इमाम्, दशाम्, सम्प्रापितः, अतदर्हः, असि, च, क्षमम्, विवित्सताम्, नः, वक्तुम्, क्षमम्, यदि, च वक्तुम्, मन्यसे, तर्हि, आत्मानम्, आख्याहि ॥ ८ ॥

## श्रीधरस्वामिविरचिता भावार्थदीपिका

संतप्तं चामीकरं सुवर्णं तद्वद्वर्णो यस्य सः । अद्भुता अलंकारांबरस्रजो यस्य सः । स्वर्गी देवो बभूवेति ॥ ६-७ ॥ यद्यदि । क्षमं योग्यम् ॥ ८ ॥

## श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

तत्र कूपसमीपे । तं कृकलासम् ॥ ५ ॥ सः कूपोद्धृतः । सुवर्णमिति "चामीकरं स्वर्णहेमहाटकं वह्निजं तथा" इति कोशांतरात् ॥ ६ ॥ तस्य नृगस्य । विवित्सतां ज्ञातुमिच्छताम् । अत्राधुना ॥ ८ ॥

## श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी

स कृष्णः अरविन्दाक्षः तच्छ्रुत्वा विस्मयलीलयाऽरविन्दवत् प्रफुल्लदृष्टिस्सन् तत्रागत्य वीक्ष्य च तं वामकरेण तत्रापि लीलया सहेलया समाकर्षणरूपयोज्जहार तत्र हेतुः विश्वभावनः सर्वपालनशीलः तत्र योग्यता भगवानिति ॥ ५ ॥ ततश्च सद्यः सर्वपापान्मुक्तः सद्गतिं प्रापेत्याह—स इति । उद्गतं तमो यस्मात्तादृशः श्लोकोऽपि यस्य यशःश्रवणेनापि संसारनिवृत्तेः यद्वा नामाभासादिनापि जगदुद्धारादुत्तमः उत्कृष्टः श्लोको यस्य तस्य भगवतः करेणाभिमृष्टः स्पृष्टः सन्निति हेत्वन्तरनिरसनेन प्रारब्धभोगापेक्षा निरस्ता स्वर्गिलक्षणमाह—सन्तप्तेति अद्भुतेति च । यद्वा स्वर्गिविशेषविवक्षया विशिनष्टि, तत्पदद्वयेन, अत एव संशब्दश्चारुशब्दोऽद्भुतशब्दश्च अन्यत्तैः तत्र तद्वच्चारुवर्ण इति लेख्ये चारुशब्दाभावो लेखकभ्रमादिति ॥६॥ पप्रच्छेत्यर्द्धकम् मुकुन्द इति तन्मोचनाभिप्रायेण महान् भागो भाग्यं यस्य तत्सम्बोधनं महाभाग्यलक्षणमाह वरेण्यं सर्वश्रेष्ठतमं रूपं सौन्दर्यं यस्य सः अतो देवेषूत्तमं गणयामि अवकलयामि नूनं वितर्के ॥ ७ ॥ वा शोके हि निश्चये अतदर्हः ईदृग्दशाया अयोग्योऽपि असीति पाठः स्पष्टः तत्र हेतुः सुभद्र हे परममङ्गलेति कतमनेति पाठः समञ्जसः आत्मानमित्यर्द्धकम् विवित्सतां त्वत्तत्त्वं विविदिषतां नोऽस्माकं कर्म्मणि षष्ठी बहुत्वं परमाश्चर्य्येण सद्यस्तत्रागतानां यादवानामपेक्षया तत्र स्थाने नोऽस्मान् प्रति यदि क्षममिति वाक् चातुर्य्या गुह्यस्यापि प्रकाशनेच्छातः किं वा सर्वसद्गुणनिधेर्विनयस्वभावादेव अत एव न इति पुनर्बहुत्वम् ॥८॥

## श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी

स कृष्णो लीलयोज्जहार, यतो विश्वभावन इच्छामात्रेण विचित्रजगत्स्रष्टा, यतो भगवान् कारुण्याद्यशेषगुणप्रकटनपर इत्यर्थः । अरविन्दाक्ष इति कृपया वीक्षणेनाक्ष्णोः प्रसारणविशेषेण साक्षादरविन्दत्वापत्तेः, किंवा दृष्टिमात्रेण तस्य सर्वताप-

---

१. तत्र गत्वा—वीर. विज. ; तत्राऽऽगत्य—श्रीधर. वंशी. जीव. विश्व. । २. तुल्य—श्रीधरः. टि. । ३. स्वर्गीचि—विज. । ४. करणोपपन्नः—प्रा. पा. । ५. भूत्वा मुकुन्दस्य पदारविन्दं ननाम मूर्ध्ना पतितो धरण्याम्—अधिकः विज. । ६. तस्य कर्म—विज. । ७. म—वीर. । ८. त्वं—विज. । ९. स्व—श्रीधर. वंशी, जीव. विश्व. ; ह्य—वीर. विज. । १०. सुदीप्तिः—वीर. ; सुप्रभः—च. पु. टि. ; सुभद्रः—विज. । ११. नः—श्रीधर. वंशी. जीव. वीर. विश्व. ; ऽङ्गः—विज. ।

हरणात्। करेणेति साक्षात्तेनैव किंवा तेन तत्पाशग्रहणद्वारा ॥ ५ ॥ ततश्च सर्व्वपापान्मुक्तः सद्गतिं प्रापेत्याह—स इति। उद्गतं तमो यस्मात्तादृशः श्लोकोऽपि यस्य, यशःश्रवणादिना संसारार्त्तिनिवृत्तेः यद्वा, नामाभासादिनापि जगदुद्धारादुत्तम उत्कृष्टः श्लोको यस्य तस्य भगवतः करेणाभिमृष्टः स्पृष्टः सन्निति हेत्वन्तरनिरसनेन प्रारब्धभोगापेक्षा निरस्ता; स्वर्गिलक्षणमाह—सन्तप्तेति। अद्भुतेति च अलंकरणानि किरीटकुण्डलादीनि; यद्वा, स्वर्गितो विशेषविवक्षया विशिनष्टि तत्पदद्वयेन। अतएव सं-शब्दश्चारु शब्दोऽद्भुत-शब्दश्च। अन्यत्तैर्व्याख्यातम्। तत्र तद्वच्चारुकर्ण इति लेख्ये चारु शब्दाभावो लेखकभ्रमात्, तयालंकरणेति लेख्येऽलंकारेति च, किंवा तदर्थमात्रव्याख्यानादिति, अथवा सन्तप्तचामीकरादपि चारुवर्णो यस्य सः ॥ ६ ॥ मुकुन्द इति विख्यापनद्वारा ब्रह्मस्वापहारादिपापतो लोकानां मोचनाद्यभिप्रायेण। महान् भागो भाग्यं यस्य तत्सम्बोधनम्। महाभागलक्षणमाह—वरेण्यं सर्व्वश्रेष्ठतमं रूपं सौन्दर्य्यं यस्य सः, अतो देवेपूत्तमं गणयामोऽवकलयामः; नूनं वितर्के ॥ ७ ॥ वा शोके, हि अपि, अतदर्ह ईदृग्दशाया अयोग्योऽपि वा; असीति पाठः स्पष्टः। पाठान्तरे स्पष्टम्। तत्र हेतुः—सुभद्र! हे परममंगलेति; अतो विवित्सताः त्वत्तत्त्वं वेत्तुं लब्धुं ज्ञातुमिच्छतामित्यर्थः। इच्छतां नोऽस्माकम्, कर्म्मणि षष्ठी, बहुत्वं परमाश्चर्य्येण सद्यस्तत्रागतानां यादवानामपेक्षया वा, अत्र स्थाने नोऽस्मान् प्रति; यदि क्षममिति वाक्चातुर्य्यां गुह्यस्यापि प्रकाशनार्थं सर्व्वसद्गुणनिधेर्विनयस्वभावादेव। अतएव न इति पुनर्बहुत्वम् ॥ ८ ॥

### श्रीमद्वीरराघवाचार्यकृता भागवतचन्द्रचन्द्रिका

तत्रेति। विश्वं भावयति अभ्यधिकं करोतीति तथा वामेन करेण लीलयैव तमुज्जहार बहिर्निष्कासितवान् ॥ ५ ॥ स इति। स उद्धृतः उत्तमश्लोकस्य करेण अभिमृष्ट इति हेतुगर्भमिदं सन्तप्तं चामीकरं सुवर्णं तद्वद्वर्णो यस्य सः अद्भुताः अलङ्करणादयो यस्य सः स्वर्गी देवो बभूव ॥ ६ ॥ पप्रच्छेति। तस्य कृकलासजन्मनो निदानं कारणं जानन्नपि मुकुन्दः तज्जनेषु ख्यापयितुं प्रसिद्धीकर्त्तुं पप्रच्छ, प्रश्नमेवाह—कस्त्वमिति। हे महाभाग! वयं तु त्वां ध्रुवं देवश्रेष्ठं गणयाम ॥ ७ ॥ कतमेन केन वा कर्मणा इमां कृकलासत्वरूपां दशामवस्थां प्रापितोऽसि तत्र हेतुः, अतदर्हा एतदवस्थानर्हा शोभना दीप्तिर्यस्य सः। आत्मानमिति। विवित्सतां 'वेत्तुमिच्छतां नोऽस्मभ्यमात्मानमाख्याहि यद्यदि तद्वक्तुं क्षमं योग्यं तर्ह्याख्याहीति सम्बन्धः ॥ ८ ॥

### श्रीविजयध्वजतीर्थकृता पदरत्नावली

विवित्सतां ज्ञातुकामानां यद्यदि ॥ ८-९ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

स्वर्गी देवो बभूव ॥ ६-७ ॥ विवित्सतां विविदिषतां कर्मणि षष्ठी आर्षी यदि क्षमं योग्यम् ॥ ८-९ ॥

### गूढार्थदीपिनी

श्रीकृष्णस्य करेण अभिमृष्टः स्पृष्टः सन् रूपं विहाय स स्वर्गी देवो बभूवेति योज्यम्। चामीकरं सुवर्णं तद्वत् सुन्दरवर्णो यस्य ॥ ६ ॥ तन्निदानं कारणं विद्वान् जानन्नपि प्रचारयितुम् पप्रच्छ। वरेण्यम् आदरणीयम् ॥ ७ ॥ हे सुभद्र पुण्यमूर्ते। अतदर्हः एतद्दशानर्हः। नोऽस्माकमग्रे यत् यदि वक्तुं क्षममुचितं मन्यसे तर्हि कथयेत्यन्वयः। अत्र अधुना आत्मानं स्वप्राक्तनं वृत्तं कथय ॥ ८ ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

सन्तप्तसुवर्णवद्वर्णो यस्य सः अद्भुता अलङ्करणा वरस्रजो यस्य सः स्वर्गी देवो बभूव ॥ ६-७ ॥ यत् यदि क्षममाख्यातुं योग्यं मन्येसे तर्हि आख्याहि ॥ ८-१० ॥

### श्रीमद्वल्लभाचार्य्यकृता सुबोधिनी

तदा भगवान् योनित एव तदुद्धारं कृतवानित्याह तत्र गत्वेति। दृष्ट्यैव सर्वतापहारकः भगवान् सर्वसमर्थः विश्वमेवानुभावयतीति उद्धारकरूपमवलम्ब्यागत इति तदुद्धारोऽपि तस्य युक्त एव। उद्धारमाह वीक्ष्योज्जहारेति। ज्ञात्वास्य कर्मभोगक्षयो जात इति। वामेन करेणेति। लीलां सामर्थ्यातिशयं च ज्ञापयितुम्। वामो हस्तः दैत्यहितकारी, दक्षिणो देवानामिति देवपक्षपातिना तदुद्धाराभावः सूचितः। लीलयेति। स्वस्य कारणाभावादपि यथा अन्या लीला कदाचिद्धर्ममपि बाधते ॥ ५ ॥ ततो यज्जातं तदाह स उत्तमश्लोकेति। करेणाभिमृष्टः भगवत्स्पर्शेन कारणदोषे निवृत्ते उपष्टम्भकाभावात् (तत्) शरीरे पतिते स्वर्गोपभोगयोग्यं शरीरं प्राप्तवानिति तद्वर्णयति संतप्तेति। आवर्त्यमानसुवर्णवर्णः। स्वर्गि स्वर्गसम्बन्धि स्वर्गोऽस्यास्तीति। स्वर्गिणामपि वा अद्भुतानि अलङ्करणान्यम्बराणि स्रजश्च यस्मिन्। तादृशो जात इत्यर्थात् बभूवेति।

अस्तिभवत्योः सर्वत्र प्रयोगात् ॥ ६ ॥ ततो निर्धार्य स्वरूपं ज्ञापयित्वा प्रेषणीय इति स्वतः कथने विश्वासो न जायेतेति तद्द्वारैव वक्तुं तद्वृत्तान्तं पप्रच्छ । ज्ञात्वा प्रश्नो न कर्तव्य इति सर्वेषां सामान्यनिरोधं कर्तुं अयुक्तमपि करोतीति **विद्वानपीत्युक्तवान्** । **विधिरत्र प्रमेये न नियामक इति न भगवतो विहितं निषिद्धं वा किञ्चिदस्ति** । वचनस्यापि प्रयोजनमाह जनेषु विख्यापयितुमिति । तस्य दानं लोके विख्यापनीयम्, अन्यथा 'धर्मः क्षरति कीर्तना'दिति तस्य धर्मक्षयो भवेत् । भगवता पृष्टेन तु वक्तव्यमेव । नन्वेतदपि किमर्थमिति चेत्, तत्राह **मुकुन्द** इति । अग्रे मोक्षो देयः, स च कीर्तिमत एव भवतीति कीर्तिख्यापनार्थं निरोधार्थं वा । अतिकीर्तिमानन्यत्र न प्रवर्तत इति निरोधानन्तरमेव मुक्तिलीलेति । प्रश्नमाह **कस्त्वं महाभागेति** । भाग्यं धर्मस्योत्तमं तेजः तदुपकरोति सर्वत्र, महद्भाग्यं यस्येति । **महाभागेति** सम्बोधनमकस्मादेवंभावे तव सुकृतमस्तीति ज्ञापितम् । **वरेण्यरूप** इति । सहजमेतन्न रूपम्, अत एवं ज्ञायते किञ्चिदुत्कृष्टं कर्मास्तीति, अन्यथा अदृष्टं स्वधर्मं कथं वदेत्, कथिते स्वर्गो न भविष्यतीति तच्छङ्कां निवारयितुमाह **देवोत्तमं त्वां गणयामि नूनमिति** । देवेषु स्वर्गः प्रतिष्ठितः, तत्राप्युत्तमेषु, तत्राप्यहं गणयामि, नहि मद्गणितं कश्चिदन्यथा कुर्यात् ॥ ७ ॥ दोषोऽपि वक्तव्य इत्याह **दशामिमां वेति** । उत्तमस्य अपकृष्टं कर्म न सम्भवति । येन कृकलासरूपं भवेत् । अत उत्कृष्टमेव कर्म प्रकारविशेषापन्नं सत्कर्मैव किञ्चिद्भविष्यतीति तं प्रकारं श्रोतुं प्रश्नः **कतमेनेति** । सम्यक् प्रापणं बहुकालस्थानं तत्र सूचयति । ननु जायन्ते निकृष्टेष्वप्युत्कृष्टसुखजनकानि कर्माणि, उत्कृष्टेष्वपि निकृष्टभावजनकानि । तस्मात् प्रश्नो व्यर्थ इत्याशङ्क्याह **अतदर्ह इति** । देवगत्योत्कृष्टत्वमिति चेत्, तत्राह **सुभद्रेति** । सुभद्रस्य भद्रं स्वाभाविकम्, अभद्रमेव वैशेषिकमिति । किञ्च । **आत्मानं** पूर्वसिद्धमाख्याहि । **विविदिषतामिति** । त्वन्मुखतो वेदितुमिच्छास्माकम्, नतु स्वतः । लौकिकन्यायेन माहात्म्यज्ञानाभावे सङ्कोचान्न वदिष्यतीत्याह **यन्मन्यसे नः क्षममत्र** वक्तुमिति । नोऽस्माकं श्रोतुं क्षमं मन्यसे । क्षमत्वेऽपि अत्र वक्तुं चेन्मन्यसे, पश्चानामग्रे तदा वक्तव्यमिति भावः ॥ ८ ॥

## श्रीसुबोधिनी-सारः

अरविंदाक्षः पद्मनेत्रो भगवान् विश्वपालकः तत्रागत्य कूपे तं दृष्ट्वा **वामेन करेण** हस्तेन लीलयैव स उज्जहार बहिरानिन्ये ॥ ५ ॥ उत्तमश्लोकस्य हरेः करेणाभिमृष्टः संस्पृष्टः स जंतुः सद्यः तत्कालमेव कृकलासरूपं शरटदेहं विहाय त्यक्त्वा संतप्तं शुद्धं चामीकरं सुवर्णं तद्वत् चारुवर्णो यस्याद्भुता अलंकरणांबरस्रजो भूषणवस्त्रमाला यस्य स स्वर्गी देवो बभूवेति शेषः ॥ ६ ॥ तस्य कृकलासस्य निदानमादिकारणं विद्वान् जानन्नपि मुकुंदः श्रीकृष्णो जनेषु प्रकटयितुं पप्रच्छ हे महाभाग त्वं कोसि वरेण्यं सुंदरं रूपं यस्य स देवोत्तमं त्वामहं गणयामि जानामि नूनमेव ॥ ७ ॥ हे सुभद्र अतदर्ह एतद्दशाऽयोग्यस्त्वं कतमेन कर्मणा इमां दशां शरटयोनिरूपां प्रापितोसि यत् यदि नोस्मान् वक्तुं क्षमं योग्यं मन्यसे तर्हि विविदिषतां वेत्तुमिच्छतां नोस्माकं चतुर्थ्यर्थे षष्ठी आत्मानमाख्याहि वर्णय ॥ ८ ॥

## श्रीविट्ठलरायात्मजश्रीवल्लभकृतलेखः

**तत्र गत्वेत्यत्र** । **वामो हस्त** इति । कृकलासस्य आसुरत्वाद्वामेनैव तदुद्धारणमिति भावः । **स्वस्थैति** । यद्यपि स्वस्य कारणं प्रयोजनं नास्ति, तथापि यथान्या लीला कदाचिद्धर्मं बाधते, तथेयमपि धर्मबाधिका लीला । कृतेति शेषः । **स उत्तमश्लोक इत्यत्र** । **तादृश इति** । एतादृशरूपवान् जात इति फलितार्थकथनम् । **बभूवेतीति** । तादृशशरीरप्राप्तो बभूवेत्यन्वय इत्यर्थः । **कस्त्वमित्यत्र** । **अन्यथेति** । वरेण्यरूपपदस्योत्कृष्टकर्मप्रश्नाभिप्रायकत्वाभावे इत्यर्थः । **यन्मन्यसे** इत्यत्राभासे । **लौकिकेति** । भगवतो माहात्म्यज्ञानाभावे 'नव गोप्यानि सर्वथे'ति लौकिकन्यायेन सङ्कोचाद्धेतोस्तादृशं कर्म न वदिष्यति । माहात्म्यज्ञाने तु भगवति दासस्य को वा सङ्कोच इति ज्ञात्वा वदेदिति भावः ।

## गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

विश्वं भावयति पालयति इति विश्वभावनः । अतस्तस्याप्युद्धारे पालनं युक्तमेवेति सूचितम् । दृष्ट्यैव तापनाशकत्वं सूचयन्नाह—अरविन्दाक्ष इति । उद्धारे सामर्थ्यमाह—भगवानिति । तत्रागत्य स कृष्णस्तं कृकलासं वामेन करेण लीलया अनायासेनैवोज्जहार कूपाद्बहिर्निष्कासितवान् ॥ ५ ॥ स उद्धृतो जन्तुः उत्तमश्लोक अविद्यानिवर्तको भगवांस्तस्य करेणाभिमृष्टः स्पृष्टः, अतः पापस्य निवृत्तत्वात् सद्यः कृकलासरूपं विहाय सन्तप्तं यच्चामीकरं सुवर्णं तद्वच्चारुः सुन्दरो वर्णो यस्य सः, तथाऽद्भुता अलङ्करणादयो यस्य स तथा स्वर्गी देवो बभूवेति शेषः ॥ ६ ॥ तस्य कृकलासजन्मनो निदानं कारणं विद्वान् जानन्नपि मुकुन्दः जनेषु तत्ख्यापयितुं प्रसिद्धीकर्तुं तं पप्रच्छ । तदाह—क इति । 'पुण्यातिशयंविनेतद्रूपं दुर्लभम्' इत्याशयेन संबोधयति—महाभागेति । वरेण्यं अभीष्टं रूपं यस्य स त्वं क इति । नूनं निश्चयेनाहं तु त्वां देवोत्तमं गणयामि मन्ये ॥ ७ ॥ हे सुभद्र मङ्गलमूर्ते ! अतदर्हः एतद्दशाप्राप्त्ययोग्योऽपि त्वमिमां दशां कृकलासयोनिं कतमेन कर्मणा प्रापितस्तत्तथाऽस्मानं स्वप्राक्तनं रूपं च विविदिषतां त्वन्मुखाद्वेत्तुमिच्छतां नोऽत्र अस्माकमग्रे वक्तुं क्षमं यत् यदि मन्यसे तर्हि आख्याहीत्यन्वयः ॥ ८ ॥

### अन्वितार्थप्रकाशिका

तत्रेति ।। विश्वभावनः अरविन्दाक्षः भगवान् तत्रागत्य तं कृकलासं वामेन करेण लीलया उज्जहार कूपाद्बहिर्निष्कासितवान् ।। ५ ।। स इति ।। स उद्धृतो जन्तुः उत्तमश्लोकस्य भगवतः करेणाभिमृष्टः स्पृष्टः अतः पापस्य निवृत्तत्वात् सद्यः कृकलासरूपं विहाय सन्तप्तं यच्चामीकरं सुवर्णं तद्वच्चारुः सुन्दरो वर्णो यस्य सः तथाऽद्भुता अलङ्करणादयो यस्य स तथा स्वर्गी देवो बभूवेति शेषः ।। ६ ।। पप्रच्छेति ।। तस्य कृकलासजन्मनो निदानं कारणं विद्वान् जानन्नपि मुकुन्दः जनेषु तत्ख्यापयितुं प्रसिद्धीकर्तुं तं पप्रच्छ । हे महाभाग ! वरेण्यम् अभीष्टं रूपं यस्य स त्वं क इति नूनं निश्चयेनाहं तु त्वां देवोत्तमं गणयामि मन्ये ।। ७ ।। दशामिति ।। हे सुभद्र मङ्गलमूर्ते ! अतदर्हः एतद्दशाप्राप्त्ययोग्योऽपि त्वमिमां दशां कृकलासयोनिं कतमेन कर्मणा प्रापितस्तत् तथात्मानं स्वप्राक्तनं रूपं च विवित्सतां त्वन्मुखाद्वेदितुमिच्छताम् । इडभाव आर्षः । नोऽत्र अस्माकमग्रे । शेषे षष्ठी । वक्तुं क्षमं यत् यदि मन्यसे तर्हि आख्याहि ।। ८ ।।

### श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्

अभिमृष्टः स्पृष्टः संतप्तं चामीकरं कांचनं तद्वत् चारु सुंदरो वर्णो यस्य । अद्भुता अलंकारादयो यस्य सः स्वर्गी अमरोऽभवत् ।। ६-७ ।। तस्याः कृकलासरूपायाः दशाया अर्हं उचितस्तदर्हस्तथाभूतो न भवतीत्यतदर्हः विवित्सतां ज्ञातुमिच्छतां यद्यदि क्षमं योग्यं ।। ८ ।।

### भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

तत्रेति ।। अरविन्दाक्षः कमलनयनः, विश्वं भावयत्यभ्युदितं करोतीति तथाभूतः, भगवान् सः श्रीकृष्णः, तत्र आगत्य तं वीक्ष्य, लीलया, वामेन करेण, उज्जहार कूपाद्बहिः निष्कासितवान् ।। ५ ।। स इति ।। उत्तमश्लोकस्य भगवतो यः करस्तेनाभिमृष्टः स्पृष्टः, सः कृकलासः, सद्यः, कृकलासरूपं विहाय, संतप्तं पुटपाकशोधितं यच्चामीकरं सुवर्णं तस्येव चारुर्वर्णो यस्य सः, अद्भुताः अलंकरणाम्बरस्रजो यस्य सः, तत्र अलंकरणान्याभरणानि, अम्बराणि वस्त्राणि, स्रजः पुष्पादिमालाः, स्वर्गी देवः, बभूवेति शेषः ।। ६ ।। पप्रच्छेति ।। मुकुन्दो मुक्तिप्रदः श्रीकृष्णः, विद्वान् अपि तस्य कृकलासजन्मभाक्तकारणं जानन्नपि, जनेषु विख्यापयितं, तन्निदानं तस्य कृकलासजन्मनः कारणं, पप्रच्छ । हे महाभाग, वरेण्यं सर्वोत्तमं रूपं शरीरं यस्य सः, त्वं कः । वयं तु त्वां, देवोत्तमं देवेषु श्रेष्ठं, गणयाम । नूनम् ।। ७ ।। दशामिति ।। हे सुभद्र मङ्गलरूप, अतदर्हः इमां कृकलासजन्मप्राप्तिरूपां दशां प्राप्तुमयोग्यः, त्वं कतमेन कर्मणा, इमां दशां, संप्रापितः असि । यत् यदि, अत्र नोऽस्मभ्यं, वक्तुं क्षमं योग्यं मन्यसे, तर्हि, विवित्सतामेतद्वेत्तुमिच्छतां, नोऽस्माकं, अस्मान् प्रतीत्यर्थः । आत्मानं, आख्याहि ।। ८ ।।

### कृष्णप्रिया

विश्व के प्राणदाता करुणानिधान अरविन्दलोचन भगवान् द्वारिकानाथ श्रीकृष्ण कूप समीप पधारे। प्रभु ने गिरगिट को देखा और अपने वाम करकमलों से स्पर्श करके आसानी से उसको बाहर निकाल दिया ।।५।। राजन् उत्तमश्लोक भगवान् द्वारिकाधीशजी के करारविन्दों का स्पर्श होते ही वह गिरगिट तो न रहा लेकिन एक स्वर्गीय अमरवत् शरीर बन गया। तपाये हुए सुवर्ण के समान शरीर की उज्ज्वल तेजोमय कान्ति चमक रही थी । उसके दिव्य शरीर पर दिव्यालङ्कार दिव्य वस्त्र और दिव्य कुसुममालाएँ शोभा दे रही थी ।। ६ ।। भगवान् श्रीकृष्णचन्द्रजी सर्वज्ञ हैं, लेकिन ऐसे दिव्य पुरुष को गिरगिट प्राणी का शरीर क्यों मिला-इस रहस्य को सर्वसामान्यजन भी जान ले इस आशय से उन दिव्य पुरुष से भगवान ने अज्ञात की तरह प्रश्न पूछा कि हे महाभाग हे महापुरुष ! आप अवश्य कोई असाधारण आत्मा हैं, कोई देव पुरुष हैं । यदि संकोच का कोई कारण न हो तब रहस्य बताइये ।। ७ ।। हे भद्रपुरुष ! हे पुण्यशील सज्जन ! किस जन्म के कर्मफल से आपको इस शरीर गिरगिट की योनि मिली ? आपके समान सज्जन ऐसी योनि के लिये योग्य नहीं है । हम सब आपका जीवन वृत्तान्त जानना चाहते हैं । यदि कोई गोप्य बात न हो तब ही कहिये ।। ८।।

[1]श्रीशुक उवाच

इति स्म राजा सम्पृष्टः कृष्णेनानन्त[2]मूर्तिना। [3]माधवं प्रणिपत्याह किरीटेनार्कवर्चसा॥ ९॥

नृग उवाच

नृगो नाम [4]नरेन्द्रोऽहमिक्ष्वाकुतनयः प्रभो। [5]दानिष्वाख्यायमानेषु यदि ते कर्णमस्पृशम्॥ १०॥

किं नु तेऽविदितं नाथ सर्वभूतात्मसाक्षिणः। कालेनाव्याहतदृशो वक्ष्येऽथापि तवाज्ञया॥ ११॥

यावत्यः सिकता [6]भूमेर्यावत्यो दिवि तारकाः। यावत्यो वर्षधाराश्च तावतीरददां[7] स्म गाः॥ १२॥

कर्दमक्षमा

अन्वयः—श्रीशुक उवाच—अनन्तमूर्तिना, कृष्णेन, इति, स्म, सम्पृष्टः, अर्कवर्चसा, किरीटेन, प्रणिपत्य, माधवम्, आह॥ ९॥ प्रभो, अहम्, इक्ष्वाकुतनयः, नृगः, नाम, नरेन्द्रः, दानिषु, आख्यायमानेषु, यदि, ते, कर्णम्, अस्पृशम्, तर्हि, आसम्॥ १०॥ सर्वभूतात्मसाक्षिणः, कालेन, अव्याहतं, दृशः, ते, हे, नाथ, किम्, नु, अविदितम्, अथ, अपि, तव, आज्ञया, वक्ष्ये॥ ११॥ नाथ! भूमेः, यावत्यः, सिकताः, दिवि, यावत्यः, तारकाः, च, यावत्यः, वर्षधाराः, तावतीः, गाः, अददाम्, स्म॥ १२॥

श्रीधरस्वामिविरचिता भावार्थदीपिका

यदि ते कर्णमस्पृशमित्यसंदेहे संदेहवचनं यदि वेदाः प्रमाणं स्युरितिवत्। कर्णपथं नूनं प्राप्तः स्यामित्यर्थः॥१०॥ किंच किं न्विति। सर्वेषां भूतानामात्मनो बुद्धेः साक्षिणस्तेऽविदितं किं नु न किंचित्॥ ११-१३॥

श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

अनंतमूर्तिनेत्युक्त्या तद्दानकालेऽपि भगवान्मूर्त्यन्तरेणासीदिति ध्वनितम्। प्रश्नस्तु मनुष्यनाट्याभिप्रायेण श्रीमदमत्तजनशिक्षणार्थमेवेति भावः॥ ९॥ इत्यर्थ इति—श्रीमताऽवश्यं मम नाम श्रुतमेवेति भावः॥ १०॥ श्रीहरेस्त्रिकालज्ञतामाह—किंचेति। यद्यपि ते नाविदितमथापीत्यन्वयः। 'नु वितर्कानुनययोः'॥ ११॥ सिकता रजांसि। यद्वा—सिकता द्वीपाः, अदिवि मर्त्यलोके भारते तारका नद्यः, वर्षधाराः पर्वताः २७४५७ वामरीत्या सप्तविंशसहस्रचतुःशतसप्तपंचाशद्गावो नृगेण दत्ताः, यथाश्रुतार्थग्रहणे गवां स्थितिरपि दुर्घटास्तीति ज्ञेयम्। अददां ददातेर्लङ उत्तमपुरुषैकवचनम्॥ १२॥

श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी

स्म प्रसिद्धो राजेति प्रागवस्थामारोप्योक्तम्। आधुनिकावस्थाया विशेषाव्यक्तेः आनन्दमूर्त्तिना सुखघनविग्रहेणेति दर्शनमात्रेण तत्रापि प्रश्नेन तस्याप्यानन्दाविर्भावः सूचितः अनन्तमूर्त्तिनेति पाठे नित्यविभुविग्रहेणेत्यर्थः। ततश्च तस्य तादृशत्वस्फूर्त्या चमत्कारविशेषो जात इति भावः। एवं प्रथमं तावत् स्वर्गित्वं प्राप्य स्तब्ध एव जातः नतु श्रीभगवन्तं ज्ञातवान् पश्चात्कृपया तेन सम्भाषितस्तु तत्स्वरूपानन्दमनुभूतवान् पश्चादैश्वर्य्यानन्देप्यनुभूते नमस्कारमकरोत् तदाज्ञानुरूपमाह चेत्याह—माधवं लक्ष्मीकान्तं तद्रूपत्वेन विज्ञातमित्यर्थः। प्रणिपत्य दण्डवत् प्रणम्य अर्कवर्चसा किरीटेनोपलक्षित इति तत्र शोभाविशेषो वर्णितः॥ ९॥ यद्यपि नवमस्कन्धरीत्या श्राद्धदेवस्य पुत्र इक्ष्वाकोर्भ्रातेति नृगः प्रसिद्धस्तथाप्यत्रेक्ष्वाकुतनय इत्युक्तेरन्योऽसौ नृग इति ग[ण्य]म्येत नरेन्द्रः सम्राडिति देवोत्तमत्वपरिहारः कस्त्वमित्यस्योत्तरं नृगो नामेत्यादि प्रभो हे राजराजेश्वर! लीलेति विविधवन्दिवृन्दसङ्ग्रहेण कर्णस्पर्शयोग्यताऽभिप्रेता यदीति तैर्व्याख्यातं यद्वा संशय एव विनयभरेणात्यन्तदैन्येन चात्मनस्तच्छ्रवणायोग्यत्वमननात् अत एवोक्तं कर्णमस्पृशमिति कथञ्चिदीषच्छ्रुतः स्यामित्यर्थः। तत्र हेतुः प्रभो इति सर्वेश्वरेश्वरस्वाल्पकजनश्रवणासम्भवादित्यर्थः। दानिष्वित्यादिना निजदातृत्वस्य गोप्यस्यापि सूचनम् ईदृशस्यापि स्वल्पपापेनेदृशो गतिः स्यादिति श्रीभगवदभिप्रायानुसारेण लोकेषु विज्ञापनार्थम् एवमग्रेपि॥ १०॥ ननु, श्रुतोऽस्येव किन्त्वेतत्वद्दशानिदानं न वेद्मीति चेत्तत्राह, किन्त्विति। नाथ हे परमेश्वर! अत एव सर्वेति अत एवान्तरमपि सर्वं वेत्सि किम्पुनर्बाह्यमित्यर्थः। नच वक्तव्यं चिरकालेन विस्मृतमित्याह—कालेनेति॥ ११॥ यावत्य इत्यादेस्तस्य गणत्रयस्य मिलित्वा यावत्त्वमित्यर्थः। अत एव चशब्दः अगण्यतामात्रतात्पर्य्यकमिदं स्मेति प्रसिद्धमेवैतदित्यत्र सम्भावना न कार्य्येत्यर्थः॥ १२॥

---

१. बादरायणि–प्रा. पा.। २. न्द–वीर.। ३. मानुषः–वीर.; प्रतीतः–विज.। ४. ऽहं मानवे वरुणात्मजः–प्रा. पा.। ५. दाने–वीर। ६. भूमौ–वीर। ७. रददा;–विज.; रददं–त. पु. मू.।

### श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी

स्म प्रसिद्धो, इति एवम्, कृष्णेन साक्षाद्भगवतापि सम्यक् पृष्टः सन्, राजेति तत्त्वतः क्षत्रियत्वाद् राजवेशाद्वा, आनन्दमूर्त्तिना सुखघनविग्रहेणेति दर्शनमात्रेण तत्रापि प्रश्नेन तस्याप्यानन्दाविर्भावः सूचितः। माधवं निजाशेषरूपगुणादि-प्रकटनार्थं मधुकुलेऽवतीर्णम्, अतस्तत्सौन्दर्य्य-दिदृक्षया केवलं किरीटेनैव, तत्र चार्कवर्च्चसेति ईषद्ग्रीवानमनेन तन्महादीप्त्येव प्रणिपत्य नमस्कृत्य; यद्वा, अत एव भक्तिभरेण दण्डवद्भूमौ निपातेन साष्टांगं प्रणम्य, अर्कवर्चसा किरीटेन विशिष्टोऽपि; यद्वा, दूरतः किरीट-दीप्त्यापादाम्बुजस्पर्शनेन प्रणिपत्येत्यर्थः ॥ ९ ॥ नरेन्द्रः सम्राडिति देवोत्तमत्वपरिहारः, कस्त्वमित्यस्योत्तरं नृगो नामेत्यादि; प्रभो! हे सर्व्वशक्तियुक्तेति कर्णस्पर्शयोग्यताभिप्रेता। यदीति तैर्व्याख्यातम्। यद्वा, संशय एव विनयभरेणात्यन्तदैन्येन चात्मनस्तच्छ्रवणासम्भवादित्यर्थः। दातृष्वित्यादिना निजदातृत्वस्य गोप्यस्यापि सूचनम्, ईदृशस्यापि स्वल्पपापेनेदृशी गतिः स्यादिति श्रीभगवदभिप्रायानुसारेण लोकेषु विज्ञापनार्थम्, एवमग्रेऽपि ॥ १० ॥ ननु श्रुतोऽस्येव, किन्त्वे-तद्दशानिदानं न वेद्मीति चेत्तत्राह—किं न्विति। नाथ! हे परमेश्वर! अतएव सर्व्वेति, अत आन्तरमपि सर्वं वेत्सि, किं पुनर्बाह्यमित्यर्थः। न च वक्तव्यम्, चिरकालेन विस्मृतमित्याह—कालेनेति ॥ ११ ॥ सिकता इति गवामानन्त्यम्, तारका इति दिव्यत्वम्, वर्षधारा इति तद्दानेऽविरतत्वमभिप्रेतम्। यद्वा, सर्वासामानन्त्यमात्रे तात्पर्य्यम्, ततश्च सिकता नदीपुलिनादि-गतबालुका ज्ञेयाः, एवं सिकतादीनां यथोत्तरमाधिक्यम्, स्मेति प्रसिद्धमेवैतदित्यत्रासम्भावना न कार्य्येत्यर्थः ॥ १२ ॥

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम्

आनन्दमूर्त्तिना हृद्यमूर्त्तिना मानवः मनोः वंशप्रभवः ॥ ९ ॥ दानिषु दानशीलेषु ॥ १०-१३ ॥

### श्रीमद्वीरराघवाचार्यकृता भागवतचन्द्रचन्द्रिका

इतीति। आनन्दमूर्त्तिना हृद्यमूर्त्तिना सम्पृष्टो राजा मानुष इति च पूर्वजन्माभिप्रायेणोक्तम् अर्कस्येव वर्णो यस्य तेन किरीटेन नमस्कृत्याह ॥ ९ ॥ उक्तिमेवाह—नृग इत्यादिना, इत्युक्त्वा तमित्यतः प्राक्तनेन। अहं नृगो नाम नरेन्द्रः राजश्रेष्ठः हे प्रभो! दानिष्वाख्यायमानेषु दानप्रशंसासु वक्तव्यासु इत्यर्थः। दानिषु दानशीलेषु वा यदि तव कर्णमस्पृशम् इत्यसन्देहं वचनं 'यदि वेदाः प्रमाणं स्युरितिवत् कर्णपथं नूनं प्राप्तः स्यामित्यर्थः ॥ १० ॥ किञ्च, किन्न्विति। ते त्वया न विदितं किन्तु विदितमेवेत्यर्थः। तत्र हेतुत्वेन विशिनष्टि—सर्वभूतानामात्मनो बुद्धेः साक्षिणः साक्षाद्द्रष्टुः कालेनाव्याहतमविप्लुतं दृक् ज्ञानं यस्य तस्याथापि यद्यप्येवं तथापि वक्ष्ये ॥ ११ ॥ यावत्य इति। सिकतादयो यावत्यः तावतीर्गाः धेनूरददां दत्तवानस्मि मया दत्तानां गवां सङ्ख्या न विद्यत इत्यर्थः ॥ १२ ॥

### श्रीविजयध्वजतीर्थकृता पदरत्नावली

तव कर्णमस्पृशं ज्ञातुं योग्य इत्यर्थः ॥ १० ॥ अन्यथापि ज्ञातुं शक्य इत्याह—किन्त्विति ॥ ११ ॥ सिकता रजांसि अददास्म अददाम् "दा दाने" इति धातुः तुडागमश्छान्दसः ॥ १२-१५ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

यदीत्यसन्देहेपि यदि वेदाः प्रमाणमितिवत् दानिष्वाख्यायमानेषु दातृजनानां गणनप्रसङ्गे सति अहं तव कर्णमस्पृशं कर्णपथमगममेवेत्यर्थः ॥ १० ॥ किन्तु तव अविदितम् अपि तु सर्वमेव विदितमित्यर्थः ॥ ११ ॥ सिकता इत्यादिकमगण्यतामात्र-तात्पर्य्यकमिति प्राञ्चः कुरुक्षेत्रादिदेशेषु सूर्य्यग्रहणादिकालेष्वेकस्या अपि गोः कोट्यर्बुदगुणीभूतत्वात् तत्र तत्र देशकालेषु प्रतिदिनं च कोट्यर्बुदसङ्ख्यानां गवां दातुस्तस्य तावत् सङ्ख्याकत्वमपि नानुपपन्नमित्यन्ये ॥ १२ ॥

### गूढार्थदीपिनी

स्म साश्चर्यम् ॥ ९ ॥ इक्ष्वाकुभ्रातुर्नृगादन्योऽयं नृगः इक्ष्वाकुतनयः। आख्यायमानेषु प्रशस्यमानेषु। अस्पृशम् अवश्यमेव। यदीति असन्देहे सन्देहवचनम् ॥ १० ॥ आत्मा बुद्धिः तस्य। साक्षिणः अव्याहतदृशः अलुप्तज्ञानस्य ॥ ११ ॥ सिकता द्वीपाः ॥ ७ ॥ अदिवि मर्त्यलोके भारते तारका नद्यः ॥ ४५ ॥ वर्षधाराः पर्वताः ॥ २७ ॥ एवम् अङ्कानां वामतो गत्या २७४५७ इयत्संख्याका एवं गावो नृगेण दत्ता। यथाश्रुतार्थग्रहणे तु तासां स्थितिरपि दुर्घटाऽस्तीति किमुत दानमिति वंशीधरी। अददामिति पाठः स्म एवार्थे ॥ १२ ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

सर्वभूतानामात्मनो बुद्धेः साक्षिणः किन्तु अविदितं सर्वं विदितमेवेत्यर्थः ॥ ११-१३ ॥

## श्रीमद्वल्लभाचार्य्यकृता सुबोधिनी

ज्ञात्वा भगवत्स्वरूपं पुण्यवशेन लोकभाषापि बुद्धेति भगवदाज्ञां कर्तुं स्ववृत्तान्तमुक्तवानित्याह इतीति। स्मेति प्रसिद्धे। प्रश्नः क्लिष्टं कर्म भवतीति स्वदोषनिवृत्त्यर्थं प्रसिद्धिः प्रमाणत्वेनोक्ता। परीक्षितोऽपि शङ्कां व्यावर्तयितुं राजेति। कृष्णेन सदानन्देन सम्भाषणेनापि सुखं भवतीति। भक्तिहितेन वा। **अनन्तमूर्तिनेति**। अनन्ता मूर्तयो यस्येति। तस्य न सर्वात्मना स्वरूपं प्रकाशितम्। तस्य तावन्मात्रेणैवाभिव्यक्तः। **अथवा**। पूर्वप्रकरणयोरन्या मूर्तिः, अस्मिन्प्रकरणे चान्या मूर्तिरिति ज्ञापयितुमनन्तमूर्तित्वम्। ततो भगवन्तं दृष्ट्वा, श्रीनिकेतत्वात् भगवानेवेति विज्ञाय, माधवं प्रणिपत्य, अर्कवर्चसा किरीटेनोपलक्षितः भगवतोऽपि चरणारविन्दं प्रबोधयन्, भक्तांश्चोद्दीपयन्, महानप्येवं जायत इति ब्राह्मणातिक्रमाभावाय ॥९॥ स्ववृत्तान्तमाह **नृगो नामेति षोडशभिः**। नृगः पूर्वमपि प्रसिद्धः इक्ष्वाकोस्तनयः। शतमध्ये विकुक्षिनिमिदण्डकानन्तरमयमेव प्रसिद्धः। **प्रभो** इति सम्बोधनं प्रभुस्थाने मिथ्याभाषणाभावं ज्ञापयति। ननु का प्रसिद्धिः, येन त्वं ज्ञायस इत्याशङ्क्याह दानिष्वाख्यायमानेष्वति। **दानिनो दानकर्तारः, नतु दातारः उदाराः। दानी विध्यपेक्षः, दाता तु निरपेक्ष** इति। यदि **ते** कर्णमस्पृशम्, तदाहं प्रसिद्धः। राजेति, नृग इति, दानीति च नूनं कीर्तिद्वारा गच्छतीति ॥ १० ॥ श्रवणानन्तरं ज्ञानं प्रसिद्धिहेतुत्वेन साधारणं निरूप्य, असाधारणप्रकारेण ज्ञानमाह **किं नु तेऽविदितं नाथेति**। हे नाथ, अनेनोद्धारः तवावश्यक एवेत्युक्तम्। नु इति वितर्के। किं वा ते अविदितम्, किन्तु सर्वमेव विदितमिति। तत्र हेतुः, सर्वभूतानां अन्तःकरणसक्षिणः। ननु कालव्यवधाने जीवोऽपि स्वानुभूतं विस्मरति, तथा भगवतोऽपीति कथं तत् ज्ञानमिति चेत्, तत्राह **कालेनाव्याहतदृश** इति। तस्मात् ज्ञानार्थं प्रतिज्ञापनप्रयोजनाभावात् न वक्तव्यम्, तथापि तवाज्ञया वक्ष्ये, अन्यथा आज्ञोल्लङ्घनं स्यादिति ॥ ११ ॥ आदौ स्वस्य दानित्वमाह **यावत्य सिकता भूमेरिति**। रेणवस्तामसाः, तारकाः सात्त्विकाः, वर्षधारा राजसाः। दृष्टान्तीकृताः, असङ्ख्यातास्त्रिस्रोऽपि त्रिविधा अपि गावः असङ्ख्याता दत्ता इति। अहमददम्। स्मेति प्रमाणम्। तुल्यसङ्ख्यात्वे विवक्षिते तामेव सङ्ख्यां वदेत्, परार्धातिरिक्ता सङ्ख्यापि नास्ति। तस्मादसङ्ख्यातदाने त्रिविधदाने च दृष्टान्ताः। त्रिविधदाने प्रयोजनं चोक्तम्। भूमिसिकता उपादानभूताः, तारकाः प्रकाशकाः, वर्षधाराः पोषिका इति। असङ्ख्यातपदे प्रयुज्यमाने अल्पप्रतीतिः स्यात्, तत एवमुक्तम् ॥ १२ ॥

## श्रीसुबोधिनी-सारः

शुकोक्तिः। अनंतमूर्त्तिना कृष्णेन इत्येवं सम्यक् पृष्टः राजा नृगोर्कवर्णेन सूर्यप्रभेण किरीटेन मुकुटेन माधवं श्रीकृष्णं प्रणम्याह स्म प्रसिद्धम् ॥ ९ ॥ हे प्रभो याचकैर्ऋषिभिर्वा दानिष्वाख्यायमानेषु कथयत्सु सत्सु यदि ते तव कर्णमस्पृशमहं नृगो नाम नरेंद्रो भूपतिरिक्ष्वाकोः तनयः पुत्रः असंदेहे संदेहवचनं यदि वेदाः प्रमाणं स्युरितिवत् ॥१०॥ हे नाथ सर्वभूतात्मसाक्षिणः कालेनाव्याहताऽखंडिता दृक् ज्ञानं यस्य तस्य ते तवाऽविदितमज्ञातं किं नु न किमपि सर्वं ज्ञातमित्यर्थः। अथाप्येवं सत्यपि तवाज्ञयाहं वक्ष्यामि ॥ ११ ॥ भूमेः पृथिव्याः सिकता रेणुकणा यावत्यो यत्संख्याकाः दिवि स्वर्गे तारका यत्प्रमाणाः वर्षधारा जलबिंदवो यत्संख्याकास्तावतीर्गा अहमददमसंख्या गा मया दत्ता इति भावः। तद्विशिनष्टि। पयस्विनीर्दुग्धवतीः तरुणीर्गुंष्टीः शीलादियुक्ताः कपिला वर्णतः सुवर्णशृंगीः न्यायेनार्जिता न तु बलेन रूप्यखुराः सवत्सा वत्सेन सहिता इत्येके वत्सयेति गुरव इदं च धर्मशास्त्रतो रहस्यं बोध्यम्। एतेन केवलाया गोर्दानं निषिद्धमिति सूचितम्। दुकूलं वस्त्रं मालाऽऽभरणं घंटादि यासु ता गा अहं ददौ जन्मभेदात्परोक्ष्यमिति शिष्टा अदामिति भट्टाः ॥ १२-१३ ॥

## श्रीविट्ठलरायात्मजश्रीवल्लभकृतलेखः

इति स्मेत्यस्याभासे। **लोकभाषापीति**। भगवतो लोकवद्भाषणं प्रश्नकरणमन्येभ्योपि मद्वृत्तान्तं बोधयितुमित्यपि बुध्यते इत्यर्थः। **व्याख्याने**। प्रश्नः **क्लिष्टं कर्मेति**। मर्मोद्घाटकत्वादितिभावः। **तथा च** क्लिष्टं कर्म समाधौ नानुभूयते। अतोऽप्रामाणिककथनं शुकस्य दोषः स्यात्तन्निवृत्त्यर्थं शुकेन प्रसिद्धिः प्रमाणत्वेनोक्तेत्यर्थः। **परीक्षितोऽपीति**। एतादृशो दानी कथमेवं जात इति परीक्षितः शङ्का स्यात्तद्व्यावृत्त्यर्थं राजपदम्। यथा त्वं राज्यमदाद्ब्राह्मणातिक्रमकर्ता जातः, तथा राज्यमदात्सोपि तथा जात इति भावः। स्वदोषः प्रसिद्धिकथनेन निवर्तितः। राज्ञोपि शङ्का निवर्तितेत्यपिशब्दः। अथवेति। तामसराजसप्रकरणयोर्वासुदेवप्रद्युम्नमूर्तिः, अत्र प्रकरणेऽनिरुद्धमूर्तिरित्यर्थः। माधवपदस्यार्थमाहुः **श्रीनिकेतत्वादिति**। यावत्य इत्यस्याभासे। **आदाविति**। दोषकथनात्पूर्वमित्यर्थः। **व्याख्याने**। **प्रयोजनं चोक्तमिति**। निबन्धे इति शेषः। तत्र हि 'गुणस्तु दोष एव स्या'दित्यनेन सत्त्वादिगुणविशिष्टदानस्य दोषवत्त्वं गुणरहितस्य च निर्दोषत्वं निरूपितम्।

## गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

आनन्दमात्रं मूर्तिर्यस्य तेन कृष्णेन मानवः प्राक्जन्मनि मनुवंशे उत्पन्नो राजा इत्येवं संपृष्टः अर्कस्येव वर्चो यस्य तेन किरीटेन तथाभूतकिरीटयुक्तमस्तकेन तं प्रणिपत्य नमस्कृत्याहेत्यन्वयः ॥ ९ ॥ तदुक्तिमेवाह—नृग इत्यादिना। 'तवाग्रे

यथार्थमेव वदामि, नान्यथा, दण्डभयात्' इत्याशयेन संबोधयति—प्रभो इति। अहं नृगो नाम नरेन्द्रः इक्ष्वाकुपुत्रः दानिषु दानशीलेषु आख्यायमानेषु प्रशस्यमानेषु सत्सु यदि ते कर्णमस्पृशम् 'यदि वेदाः प्रमाणं स्युः' इतिवदिदमप्यसन्देहे सन्देहवचनम्। नूनं तव कर्णपथं प्राप्तः स्यामित्यर्थः॥ १०॥ यद्यपि ते तव किमप्यविदितं न, सर्वं विदितमेव, अथापि तवाज्ञया त्वत्पृष्टं वक्ष्ये कथयामीत्यन्वयः। 'कथने स्वामित्वात्' इति हेतुं सूचयन् संबोधयति—नाथेति। अविदितत्वे हेतुमाह—सर्वभूतात्मसाक्षिण इति। सर्वभूतानामात्मनो बुद्धेः साक्षिणः साक्षाद्द्रष्टुः। कदाचिदेवं दर्शनेपि कदाचिज्ज्ञानं विलुप्तं स्यादित्याशङ्क्याह—कालेन न व्याहतं न विलुप्तं दृक् ज्ञानं यस्य तस्येति॥ ११॥ तावतीर्गाः अददं स्म दत्तवानस्मि, मया दत्तानां गवां सङ्ख्या नास्तीत्यर्थः॥ १२॥

## अन्वितार्थप्रकाशिका

इतीति॥ अनन्तमूर्तिना पाठान्तरे आनन्दमूर्तिना कृष्णेन प्राग्जन्मनि राजा इत्येवं संपृष्टः अर्कस्येव वर्चो द्युतिर्यस्य तेन किरीटेन तथाभूतकिरीटयुक्तमस्तकेन माधवं प्रणिपत्य नमस्कृत्याह स्म॥ ९॥ नृग इति॥ हे प्रभो! अहं नृगो नाम नरेन्द्रः इक्ष्वाकुपुत्रः नवमस्कन्धोक्तश्राद्धदेवपुत्रादिक्ष्वाकुभ्रातुर्नृगादन्यो नृग इक्ष्वाकुतनयो ज्ञेयः। दानिषु दानशीलेषु आख्यायमानेषु प्रशस्यमानेषु सत्सु यदि ते कर्णमस्पृशं यदि वेदाः प्रमाणं स्युरितिवदिदमसंदेहे संदेहवचनं नूनं तव कर्णपथं प्राप्तः स्याम्॥ १०॥ किमिति॥ हे नाथ! सर्वभूतानामात्मनो बुद्धेः साक्षिणः कालेन न व्याहता न विलुप्ता दृक् ज्ञानं यस्य तस्य ते तव किमविदितं तत्सर्वं विदितमेव। अथापि तवाज्ञया त्वत्पृष्टं वक्ष्ये॥ ११॥ यावत्य इति॥ भूमेर्यावत्यः सिकताः। अत्र बहुषु पुस्तकेषु यावन्त्य इति नुम्वान् पाठो दृश्यते तत्र तु नुमार्षः। यावत्यः दिवि तारकाः यावत्यो वर्षधाराश्च तावतीः गाः अददम्। आलोप आर्षः। स्म पादपूर्तौ। अत्रागण्यतायां तात्पर्यमित्याहुः। अन्ये तु कुरुक्षेत्रादिदेशेषु सूर्यग्रहणादिकालेषु च एकस्या अपि कोटिगुणीभूतत्वात्तत्र तत्र देशकालेषु प्रतिदिनं च कोट्यादिसङ्ख्यानां गवां दातुस्तस्य तावत्संख्यत्वमपि नानुपपन्नमित्याहुः॥ १२॥

## श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्

अनंतमूर्त्तिना अविनाशिविग्रहेण॥ ९॥ यदि यदा दानिषु आख्यायमानेषु सत्सुतदाने कर्णमस्पृशं कर्णपथं प्राप्तो भवेयं॥ १०॥ सर्वभूतानां आत्मनः अंतःकरणस्य साक्षी साक्षाद्दृष्टा तस्य कालेन उत्पत्त्यादिनापि अव्याहतदृशः। अप्रतिहतज्ञानस्य वै तवाविदितं किंनु न किमप्यस्ति तव किं न विदितमस्ति॥ ११॥ गाः अहमद ददौ स्मेति प्रसिद्धं॥ १२॥

## भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

इतीति॥ इतीत्थं आनन्दमूर्त्तिना कृष्णेन, संपृष्टः राजा, अर्कवर्चसा सूर्यसमानतेजसा, किरीटेन किरीटसहितेन मूर्ध्नेत्यर्थः। माधवं श्रीकृष्णं, प्रणिपत्य, स्म स्फुटं यथा स्यात्तथेत्यर्थः। आह॥ ९॥ उक्तिमेवाह नृग इत्यादिना इत्युक्तवेत्यतः प्राक्तनेन ग्रन्थेन॥ नृग इति॥ हे प्रभो, अहं नृगः नाम नरेन्द्रः, नृगनाम्ना प्रसिद्धो राजश्रेष्ठ इत्यर्थः। इक्ष्वाकुतनयः इक्ष्वाकुनृपतेः सुतः, नवमस्कन्धोक्तश्राद्धदेवपुत्रादिक्ष्वाकोर्भ्रातुर्नृगादन्योऽयं नृग इक्ष्वाकुतनयो ज्ञेय इति। दानिषु, आख्यायमानेषु, दानिप्रशंसासु कर्त्तव्यास्वित्यर्थः। आख्यायमानेषु, दानिषु दानशीलेष्विति वा। यदि, ते तव, कर्ण, अस्पृशं, इत्यसंदेहे संदेहवचनं, यदि वेदाः प्रमाणं स्युरिति वत्। कर्णपथं नूनं प्राप्तः स्यामित्यर्थः॥ १०॥ किमिति॥ हे नाथ, सर्वभूतात्मसाक्षिणः सर्वभूतबुद्धेः साक्षात् द्रष्टुः, कालेन, अव्याहताऽविप्लुता दृक् ज्ञानं यस्य, तस्य, ते तव, अविदितं किं नु। सर्वमपि तव विदितमेवास्तीत्यर्थः। अथापि, तवाज्ञया वक्ष्ये॥ ११॥ यावन्त्य इति॥ यावन्त्यः, भूमेः सिकताः वालुकाः, दिवि, यावन्त्यः तारकाः, यावन्त्यः वर्षधाराश्च, अहं, तावतीः गाः धेनूः, सत्पात्रविप्रेभ्य इति शेषः। अददं स्म दत्तवानस्मि। मया दत्तानां गवां संख्या न विद्यते इत्यर्थः॥ १२॥

## कृष्णप्रिया

श्री शुकदेवजी ने कहा राजन्! जब अनन्तमूर्ति भगवान् श्रीकृष्णचन्द्र ने नृगराजा को पूछा तब राजा नृग ने सूर्य समान तेजस्वी मुकुट से मुकुन्द भगवान् के श्रीचरणों में दण्डवत् प्रणाम करते हुए निवेदन करने लगे॥ ९॥ राजा नृग कहने लगे—नाथ! श्राद्धदेव मनुराजा के ज्येष्ठ पुत्र इक्ष्वाकु राजा का नृग नाम का पुत्र हूँ। संभव है कि विश्व के दानियों की चर्चा चली होगी तो मेरा नाम भी कभी कर्णपथ में आया होगा॥ १०॥ नाथ! हे प्रभो! आपसे अज्ञात कोई भी बात नहीं हो सकती। आप सर्वदर्शी-त्रिकालज्ञ है। भूत-भविष्य वर्तमानकाल का व्यवधान भी आपके अखण्ड ज्ञान में बाधक नहीं हो सकता। इसलिये आप से कुछ अविदित नहीं है। लेकिन आपकी आज्ञा पालन करने के लिये वृत्तान्त कह रहा हूँ॥ ११॥ भगवन्! पृथ्वी में जितनी सिकता है नभोदेश में जितने तारे हैं, और वर्षा में जितनी धाराएँ हैं उतनी गोएँ दान की थीं॥१२॥

पयस्विनीस्तरुणीः शीलरूपगुणोपपन्नाः कपिला हेमशृङ्गीः[1] ।
न्यायार्जिता रूप्यखुराः सवत्सा दुकूलमालाभरणा ददावहम्[2] ॥ १३ ॥
स्वलंकृतेभ्यो गुणशीलवद्भ्यः[3] सीदत्कुटुम्बेन ऋतव्रतेभ्यः ।
तपःश्रुतब्रह्मवदान्यसद्भ्यः प्रादां युवभ्यो द्विजपुङ्गवेभ्यः ॥ १४ ॥
गोभूहिरण्यायतनाश्वहस्तिनः कन्याः सदासीस्तिलरूप्यशय्याः ।
वासांसि रत्नानि परिच्छदान् रथानिष्टं च यज्ञैश्चरितं च [4]पूर्तैः ॥ १५ ॥

कस्यचिद् द्विजमुख्यस्य भ्रष्टा गौर्मम गोधने । [5]सम्पृक्ताविदुषा सा च मया दत्ता द्विजातये ॥ १६ ॥

**कर्दमक्षमा**

**अन्वयः**—पयस्विनीः, तरुणीः, शीलरूपगुणोपपन्नाः, कपिलाः, हेमशृङ्गीः, न्यायार्जिताः, रूप्यखुराः, सवत्साः, दुकूलमालाभरणाः, अहम्, ददौ ॥ १३ ॥ स्वलंकृतेभ्यः गुणशीलवद्भ्यः, सीदत्कुटुम्बेभ्यः, ऋतव्रतेभ्यः, तपःश्रुतब्रह्मवदान्यसद्भ्यः, युवभ्यः, द्विजपुङ्गवेभ्यः, प्रादाम् ॥ १४ ॥ गोभूहिरण्यायतनाः, च, हस्तिनः, स दासीः, कन्याः, तिलरूप्यशय्याः, वासांसि, रत्नानि, च, परिच्छदान्, रथान्, च, यज्ञैः, च, पूर्तैः, इष्टम्, चरितम् ॥ १५ ॥ कस्यचित्, द्विजमुख्यस्य, भ्रष्टा, गौः, मम, गोधने, सम्पृक्ता, अविदुषा, च मया, सा, द्विजातये, दत्ता ॥ १६ ॥

**श्रीधरस्वामिविरचिता भावार्थदीपिका**

ऋतव्रतेभ्योऽदंभाचारेभ्यः । तपसा श्रुताः प्रख्यातास्च ते ब्रह्मणि वदान्या अत्युदारा अध्यापनशीलास्च ते संतस्च तेभ्यः ॥ १४ ॥ पूर्तं वापीकूपादि चरितं कृतम् ॥ १५ ॥ एवं वर्तमानस्य मम संकटं किंचिदापन्नं शृण्वित्याह । कस्यचिदिति । द्विजमुख्यस्य प्रतिग्रहनिवृत्तस्य । संपृक्ता मिलिता । अविदुषा ब्राह्मणस्येयमित्यजानता ॥ १६-१७ ॥

**श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः**

यादृशी गौर्देया तत्स्वरूपमाह-पयस्विनीरित्यनेन दुग्धाभाववत्याः तरुणीरित्युक्तेर्बालाया वृद्धायाश्च दानं न कार्यम् । शीलेत्याद्युक्तेः सुशीलायाः परताडनहीनायाः सुरूपायाः शृंगभंगादिदोषहीनाया बहुदुग्धायाश्च दानं कार्यम् । कपिला इत्युपलक्षणम् । यद्वा—कपिला इति बहुत्वोक्तेर्वाराहोक्ता दशविधकपिला ग्राह्याः । तथाहि—"सुवर्णकपिला पूर्वा द्वितीया गौरपिङ्गला । तृतीया चैव रक्ताक्षी चतुर्थी गूढपिंगला ॥ पञ्चमी बहुवर्णा स्यात्षष्ठी स्याच्छ्वेतपिंगला । सप्तमी श्वेतपिंगाक्षी ह्यष्टमी कृष्णपिंगला ॥ नवमी पाटला ज्ञेया दशमी पुच्छपिंगला । एतां दश समाख्याताः कपिलास्ते वरानने ॥ सर्वाश्चैता महाभागास्तारयन्ति न संशयः ॥" इति हेमशृंगरूप्यखुराद्युक्तेः सांगायाः । न्यायार्जिता इत्युक्तेर्मौल्यगृहीतायाः, स्वगेहजातायाः, प्रतिग्रहादिलब्धायाश्च । सवत्सा इत्युक्तेर्वत्सवत्सीसहितायाः, 'वत्सः पुत्रादिवर्षयोः' इत्युक्तेरिहादिपदं पुत्रीपरम्, तेन केवलाया दानं न कार्यमिति भावः ॥ १३ ॥ पात्रस्वरूपमाह—गुणाः सत्यशौचसौमनस्यादयः, शीलं सुचरितं तद्वद्भ्यः । एतेन कटुभाष्यादयः सत्यशौचादिहीना न दानपात्रम् । सीदत्कुटुंबेभ्य इत्यनेन धनिनामगृहस्थानां विद्यादिमतामपि पात्रत्वं नास्ति "वृथा दानं धनाढ्येषु यथा दीपो दिवाकरे" इत्युक्तेः, "हव्यकव्ये यत्र दुग्धघृताद्युपयुज्यते । तस्मै विप्राय गौर्देया यद्वा बालसुताय वै ॥" इति भारतोक्तेश्च । ऋतव्रतेभ्य इत्यनेन दांभिकानां न पात्रत्वम् "धर्मश्च सत्यञ्च दमस्तपश्च अमात्सर्यं ह्रीस्तितिक्षानसूया । यज्ञश्च दानञ्च धृतिः श्रुतञ्च व्रतानि वै द्वादश ब्राह्मणस्य ॥" इत्युद्योगपर्वोक्तानि व्रतानि ग्राह्याणि । तपःश्रुतेत्याद्युक्तेस्तपश्चर्यापराणां वेदवेदांगाध्यापनपराणां सदाचारणामेव पात्रत्वम् । युवभ्य इत्युक्तेर्वृद्धानां दानप्रतिग्रहप्रायश्चित्तासमर्थत्वात् शौचाचारशैथिल्याद्गोसेवासामर्थ्याभावाच्च तेभ्यो दत्तानां गवां दुःखं स्यात्तेन पापोत्पत्तेश्चेति भावः । द्विजपुंगवेभ्य इत्युक्तेर्ब्राह्मणेतराणामविद्यादिमतां च पात्रत्वाभाव उक्तः । स्वलंकृतेभ्य ऊर्द्ध्वपुंड्रादिना भूषितेभ्यः । एतेन रिक्तमस्तकादीनामपि दानानर्हतोक्तेति 'सोर्द्ध्वपुंड्राय दानम्' इति मायापुरीमाहात्म्ये । यद्वा—मयैव पूर्वं सुवर्णकुण्डलादिनाऽलंकृतेभ्यः गोदानार्थवरणे पात्राय स्वर्णकुंडलाद्यवश्यं दत्त्वैव तस्मै गां दद्यादिति सूचितमनेन ॥ १४ ॥ विप्रापराधः सुकृतानंत्यमपि नाशयतीत्याह—गोभूहिरण्येति । आयतनञ्च वासोचितगृहम् । वासांसि कार्पासोर्णक्षौमकौशादीनि । परितश्छाद-

१. ङ्गाः-वीर. । २. म्य-विज. ; स्वदामहम्-च. पु. टि. । ३. वद्भ्यः-विज. । ४. तंम्-श्रीधर. वंशी. जीव. वीर. ; तैः-विज. । ५. संसृष्टा-विज. ।

यंतीति परिच्छदा वस्त्रगृहादयः। यद्वा—परिच्छदपदेन तत्तत्कार्योचितसामग्री ग्राह्या। तदुक्तम् "विवाहादिक्रियाकाले तत्क्रियासाधनं तु यः। ददाति दीनविप्रेभ्यः सोऽश्वमेधफलं लभेत् ॥" इति पुराणात् ॥ १५ ॥ कृकलासत्वप्रापकं किं पापं तत्र अज्ञातापराधं निवेदयति—कस्येति। भ्रष्टाऽस्मदस्तद्देशं विहायान्यदेशं गता ॥ १६ ॥

**श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी**

एवं द्रव्यस्यानन्त्यमुक्त्वा साद्गुण्यमाह—पयस्विनीरिति। शीलं सुस्वभावः स्वामिवश्यतादि रूपं पुष्ट्यादिसौन्दर्यं गुणः सर्वदैव बहुलोत्कृष्टक्षीरदत्वादिः तैरुपपन्नाः युक्ताः कपिलाश्च दशविधाः, ताश्चोक्ताः वाराहे—

"सुवर्णकपिला पूर्वा द्वितीया गौरपिङ्गला। तृतीया चैव रक्ताक्षी चतुर्थी गुडपिङ्गला ॥
पञ्चमी बहुवर्णा स्यात् षष्ठी स्यात् श्वेतपिङ्गला। सप्तमी श्वेतपिङ्गाक्षी अष्टमी कृष्णपिङ्गला।
नवमी पाटला ज्ञेया दशमी पुच्छपिङ्गला। एता दश समाख्याताः कपिलास्तै वरानने ॥
सर्वाश्चैता महाभागास्तारयन्ति न संशयः" ॥ इति

विशेषणानामेषां यथोत्तरं साद्गुण्ये श्रैष्ठ्यम् एवमग्रेप्यूह्यं नच केवलाः किन्तु सालङ्कारा इत्याह—हेमेति रूप्येति च। किञ्च दुकूलाद्या आभरणानि यासां ता इति तत्र दुकूलं पृष्ठोपरिपट्टवस्त्रं मालाश्च रत्नादिनिर्मिता गले किञ्च सवत्सा इति प्रायो धेनवो ज्ञेयाः नच नरेन्द्रत्वेन कथञ्चिदन्यायेन सञ्चिता इत्याह—न्यायेति। अहं ददाविति पुनरुक्त्या तन्निश्चयं बोधयति ॥ १३ ॥ अधुना पात्रसाद्गुण्यमाह—स्वलङ्कृतेभ्य इति। मयैव कनककुण्डलादिनादौ सुष्ठ्वलङ्कृतेभ्य इत्यर्थः। गुणा देहिकाः सल्लक्षणादयः शीलानि आन्तराणि सारल्यविनयादिसुस्वभावाः व्रतानि स्वोत्कर्षाय यत्नसम्पादितानि उद्यमपर्वोक्तानि—"धर्मश्च सत्यं च दमस्तपश्च अमात्सर्य्यं ह्रीस्तितिक्षाऽनसूया तपश्च दानञ्च धृतिः श्रुतञ्च व्रतानि वै द्वादश ब्राह्मणस्य। इति व्रतानि अकापट्येन प्रकटितानि व्रतानि यैस्तेभ्यः तपः स्वधर्मो नित्यं सन्ध्यावन्दनादिः सत्यं सदाचारपरत्वं युवभ्य इति तेषामेव धर्माचरणसामर्थ्येन प्राधान्यात् अत एव द्विजेषु श्रेष्ठेभ्यः प्रकर्षेण भक्त्या पादप्रक्षालनादिपूर्वकमदाम् ॥ १४ ॥ न केवलं ता एव अन्यांश्च बहून् पदार्थानदामित्याह—गो इति। गावो वृषाः आयतनानि गृहादीनि परिच्छदाः छत्रचामरादयः गवादीन् रथान्तान् प्रादामिति पूर्वेणैवान्वयः। यज्ञैः सर्वैरेव चकाराभ्यां यज्ञानां पूर्त्तस्य प्राधान्यं बोधयन् तद्विधाने सम्यक्त्वं बोधयति ॥ १५ ॥ भ्रष्टा विच्युता गोधने गोकुले ॥ १६ ॥

**श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी**

एवं द्रव्यस्यानन्त्यमुक्त्वा साद्गुण्यमाह—पयस्विनीति। शीलं सुस्वभावः स्वामिवश्यतादि, रूपं पुष्ट्यादिसौन्दर्य्यम्, गुणः सदैव बहुलोत्कृष्ट-क्षीरदत्वादि, तैरुपपन्ना युक्ताः, कपिलाश्च दशविधाः, ताश्चोक्ता वाराहे—

'सुवर्णकपिला पूर्व्वा द्वितीया गौरपिंगला। तृतीया चैव रक्ताक्षी चतुर्थी गुड़पिंगला ॥
पञ्चमी बहुवर्णा स्यात् षष्ठी स्यात् श्वेतपिंगला। सप्तमी श्वेतपिंगाक्षी अष्टमी कृष्णपिंगला ॥
नवमी पाटला ज्ञेया दशमी पुच्छपिंगला। एता दश समाख्याताः कपिलास्ते नरानने ॥
सर्व्वाश्चैता महाभागास्तारयन्ति न संशयः ॥ इति।

विशेषणानामेषां यथोत्तरं साद्गुण्ये श्रैष्ठ्यम्। एवमग्रेऽप्यूह्यम्। न च केवलाः, किन्तु सालंकारा इत्याह—हेमेति रूप्येति च। किञ्च, दुकूलाद्या आभरणानि यासां ता इति तत्र दुकूलं पृष्ठोपरि पट्टवस्त्रं मालाश्च रत्नादिनिर्म्मिता गले, किञ्च, सवत्सा इति प्रायो धेनवो ज्ञेयाः। न च नरेन्द्रत्वेन कथञ्चिदन्यायेन सञ्चिता इत्याह—न्यायेति। अहं ददाविति पुनरुक्त्या तन्निश्चयं बोधयति ॥१३॥ अधुना पात्रसाद्गुण्यमाह—स्वलंकृतेभ्य इति। मयैव कनककुण्डलादिनादौ सुष्ठ्वलंकृतेभ्य इत्यर्थः। गुणाश्चोक्ता उद्यमपर्व्वणि—'धर्म्मश्च सत्यञ्च दमस्तपश्च, अमात्सर्य्यं ह्रीस्तितिक्षानसूया। यज्ञश्च दानञ्च धृतिः श्रुतञ्च, व्रतानि वै द्वादश ब्राह्मणस्य ॥' इति। शीलं विनयनम्रत्वादि, तपः स्वधर्म्मः कृच्छ्रादि वा, सत्त्वं श्रीवैष्णवत्वम्, तपआदीनां प्रायो गुणान्तर्गतत्वेऽपि पृथगुक्तिस्तद्विशेषापेक्षया, अत एव द्विजेषु विप्रेषु पुंगवेभ्यः प्रकर्षेण भक्त्या पादप्रक्षालनादिपूर्व्वकमदाम् अन्यत्तैर्व्याख्यातम्। यद्वा, श्रुतं स्मृत्यादिशास्त्रम्, ब्रह्म वेदः, तपआदियुक्ता वदान्याश्च ते सन्तश्च तेभ्यः, वदान्यतया गुणान्तर्गतत्वेऽपि पृथगुक्तिः सत्पात्रत्वेन तस्या अवश्यापेक्ष्यत्वात्, अत एवाग्रे श्रीभगवान् वक्ष्यति ( ३७ श० श्लो० )—'वदान्यानां कुटुम्बिनाम्' इति। कालसाद्गुण्यञ्चाविश्रामत्वेन, तदनपेक्षया नोक्तम् ॥ १४ ॥ न केवलं ता एव, अन्यांश्च बहून् पदार्थानदामित्याह—गा इति। गावो वृषाः, आयतनानि गृहादीनि, परिच्छदाश्छत्रचामरादयः, गवादीन् रथान्तान् प्रादामिति पूर्व्वेणैवान्वयः। यज्ञैः सर्व्वैरेव, च-काराभ्यां यज्ञानां पूर्त्तस्य च प्राधान्यं बोधयंस्तद्विधाने सम्यक्त्वं बोधयति ॥ १५ ॥ कस्यचिदिति—तपआदिना प्रसिद्ध्यभावात्, भ्रष्टा स्वयूथाद् गृहाद्विच्युता, गाव एव धनं देयाशेषद्रव्योत्तमत्वात्तस्मिन्, यद्वा, गोधने गोकुले ॥ १६ ॥

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम्

तपःश्रुतब्रह्मवादान्विताः वदान्याः सन्तः तेभ्यः ॥ १४-२५ ॥

### श्रीमद्वीरराघवाचार्यकृता भागवतचन्द्रचन्द्रिका

ता एव विशिनष्टि—पयस्विनीरिति। अत्र भूम्नि मत्वर्थीयः शीलादिभिर्युक्ता कपिलवर्णाः हेमस्वर्णालङ्कारः शृङ्गयोर्यासां ताः न्यायतः सम्पादिताः रौप्यं रजतालङ्कारः खुरेषु यासां ताः वत्सैः सहिताः दुकूलादीनां द्वन्द्वः ततो मत्वर्थीयोच् ददामि अदां इत्यर्थः ॥ १३ ॥ अथ सत्पात्राणि विशिनष्टि—स्वलङ्कृतेभ्य इति। सीदत् क्लिश्यमानं कुटुम्बं येषां तेभ्यः ऋतव्रतेभ्यः अदम्भाचारेभ्यः तपसा श्रुताः प्रख्यातास्ते ब्रह्माणि वदान्या ब्रह्मवादिनः ते च ते सन्तः तेभ्यो वदान्यवद्भ्य इति पाठे तप आदिविशिष्टेभ्यः एवम्विधेभ्यो ब्राह्मणोत्तमेभ्योऽदामित्यर्थः ॥ १४ ॥ न केवलं गा एवादामन्यदपीत्याह—गोभ्विति। पुनर्गोग्रहणम् इतरापेक्षया तद्भूयस्त्वाभिप्रायकं गवादीनाम् इतरेतरयोगद्वन्द्वः तत्रायतनानि गृहाः दासीभिः सहिताः कन्याः तिलादीनां द्वन्द्वः तत्र रूप्यं रजतं परिच्छदान् गृहोपकरणानि न केवलं प्रादामेव किन्तु यज्ञैरिष्टं च पूर्त्तं स्मार्त्तं कर्म चरितं कृतश्च ॥ १५ ॥ एवं वर्त्तमानस्य मम किञ्चित्सङ्कटमापन्नं शृणु इत्याह—कस्यचिदिति। द्विजमुख्यस्य गां प्रतिगृहीतवतो गौर्भ्रष्टा बलात्तद्धस्ताद्विमोचिता सती मम गोधने सम्पृक्ता मिलिता सा च अविदुषा पूर्वमेव कस्मैचिद्दत्तेत्येवमजनता मया द्विजातयेऽन्यस्मै ब्राह्मणाय दत्ता ॥ १६ ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

भ्रष्टा अभ्यस्तदेशं विहायान्यदेशं गता संसृष्टा सङ्कुलिता अविदुषा अजानता ॥ १६ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

देयवैशिष्ट्यमाह—पयस्विनीरिति ॥ १३ ॥ सम्प्रदानवैशिष्ट्यमाह—स्वलङ्कृतेभ्यः इति। तपसा श्रुताः ख्याताश्च ब्रह्माणि वेदशास्त्रे अध्यापनपरत्वादत्युदाराश्च ते सन्तश्च तेभ्यः ॥१४॥ देयान्तराण्यप्याह—गोभू इति। प्रादामिति पूर्वेणैवान्वयः चरितं कृतम् ॥ १५ ॥ ननु, कृकलाससत्वप्रापकं किं पापम्! तद्ब्रूहीत्यत आह—कस्यचिदिति। भ्रष्टा विच्युता गौरेकैव मम गोकुले सम्पृक्ता मिलिता अविदुषा ब्राह्मणस्येयमित्यजानता ॥ १६-१७ ॥

### गूढार्थदीपिनी

तरुणीत्युक्तेः बालाया वृद्धायाश्च दानं न कार्यम्। वाराहोक्ता दशविधाः कपिला ग्राह्याः ॥ १३ ॥ सुष्ठु सदाचारेण अलङ्कृतेभ्यः। तपसा श्रुता विख्याता ब्रह्माणि वदान्या वेदे अत्युदाराः अध्यापनशीलाश्च ते च ते सन्तः तेभ्यः ॥ १४ ॥ परिच्छदान् गृहोचितसामग्रीः। इष्टं वैदिकं कर्म। पूर्तं स्मार्त्तं कर्म वापीकूपादि चरितं कृतम् ॥ १५ ॥ मुख्यस्य प्रतिग्रहशून्यस्य। भ्रष्टा स्थानात् च्युता। सम्पृक्ता मिलिता अजानता मया दत्ता ॥ १६ ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

तपसा श्रुताश्च ते ब्रह्माणि वदान्या उदारा अध्यापनशीलाश्च ते सन्तश्च तेभ्यः ॥ १४ ॥ गवादीन् प्रादामिति पूर्वेणान्वयः पूर्तं वापीकूपादि चरितं कृतम् ॥ १५ ॥ द्विजमुख्यस्य प्रतिग्रहनिवृत्तस्य नाहं प्रतीच्छे इति वक्ष्यमाणात् भ्रष्टा विच्युता सती मम गोधने सम्पृक्ता मिलिता अविदुषा मदीया नेयमित्यजानता ॥ १६ ॥

### श्रीमद्वल्लभाचार्यकृता सुबोधिनी

गवां गुणानाह पयस्विनीरिति। दुग्धाधिक्ययुक्ताः। तरुण्यः प्रथमप्रसूताः। शीलममारणादिशान्तस्वभावः। रूपं सौन्दर्यम्। एतैर्गुणैरुपपन्नाः। अथवा। गुणाः सत्पुत्राः। दुग्धे घृताधिक्यमारोग्यजनकत्वं च गुणाः। प्रायेण बह्व्यः कपिलाः। दाने कपिला विशिष्टेति। हेमशृङ्गीः सुवर्णशृङ्गयुक्ताः। न्यायार्जिताः, न त्वतिक्रमेण प्राप्ताः। रूप्यखुराः सवत्सा इति विधिप्राशस्त्यार्थमुक्तम्। तेन विहिता एव दत्ताः, नत्वविहिताः, नाप्यविहितप्रकारेण। दुकूलानां माला यासु। दुकूले मालाः आभरणानि च वा। एवं त्रयोदशगुणाः कथिताः ॥ १३ ॥ पात्राभावे सर्वं व्यर्थमिति पात्रधर्मानाह स्वलङ्कृतेभ्य इति। विधिप्रकारोलङ्करणादि, गुणाः विद्याः, शील- माचारः सुखभावश्च। सीदत्कुटुम्बेभ्य इति। गृहीतस्य शीघ्रं सद्विनियोगः। ऋतं व्रतं येषामिति ब्राह्मणस्य सहजो धर्मो निरूपितः। तप इन्द्रियनिग्रहः, श्रुतं यथाविधि, ब्रह्म वेदो वेदार्थश्च, वदान्यत्वमलुब्धता, सत्वं परोपकारत्वं च। तपः श्रुतं ब्रह्म च येषां ते तपःश्रुतब्रह्माणः, ते च ते वदान्याश्च सन्तश्च। युवभ्यो

द्विजपुङ्गवेभ्य इति द्वादशगुणा ब्राह्मणानामुक्ताः ॥ १४ ॥ दानान्तराण्यप्याह **गोभूहिरण्येति**। एकदा असङ्ख्यातगोदानं बहुभ्यः। ततः पृथगपि गावो दत्ताः। भूमिर्वृत्तिकरी। हिरण्यदानं स्वतन्त्रम्। आयतनदानं गृहदानम्। अश्वदानं हस्तिदानं च। कन्यादानं ब्राह्मणाय, पोषितानां कन्यानाम्। **औरस्याः क्षत्रियायां विवाहितायां जाताया राजकन्यायाः स्वयंवर** एव। सदासीरिति पारिबर्हसहिताः। दासीदानं वा कन्यादानेन सहोच्यते। तिलाः तिलपर्वताः। रूप्यं रूप्यपर्वतः। शय्याः सुखशय्यादानम्। वासांसि नानाविधानि। तथैव नव रत्नानि। **परिच्छदान्** कञ्चुकवितानादीन्। रथाश्च गजरथाश्वरथादिभेदाः। एवं पञ्चदशदानानि सर्वदा क्रियन्ते। ततः यज्ञैरिष्टमग्निष्टोमादयश्च कृताः। **पूर्तैश्च चरितं** कूपारामादयश्च धर्मार्थं कृताः ॥ १५ ॥ एवं धर्मपरायणे मयि कर्मवशादधर्मः कश्चनोत्पन्न इत्याह **कस्यचिद्द्विजमुख्यस्येति**। अयं राजा दानाभिनिविष्टचित्तः स्वसेवकेभ्यः यथाकथञ्चिद्देयान् गृह्णाति, न तु जिज्ञासते। एवं बहुधा प्रमादे कदाचिद्भगवान् तत्पापं प्रकटितवान्। कश्चिद्ब्राह्मणः राजप्रतिग्रहरहितः स्वधर्म- निष्ठ आसीत्। तस्य गौः स्वस्थानादपगता राजगोषु प्रविष्टा। ततस्तामनवद्यलक्षणां तदधिकारिणो ज्ञात्वा दानार्थं नीतवन्तः ॥ १६ ॥

## श्रीसुबोधिनी-सारः

केभ्य इत्यत आह। सुष्ठु अलंकृतेभ्यो गुणशीलसंपन्नेभ्यः सत्यव्रतेभ्यः तपसा श्रुता विख्याता तपःश्रुते विद्येते येषु इति वा ब्रह्मणि विप्रे वदान्या अत्युदारास्ते न च संतश्च तेभ्यः सन्तश्च वा तेभ्यः सीदत् दुःख्यत् कुटुंबं येषां कुटुंबेन सीदंत इति वा तेभ्यो युवभ्यो विप्रोत्तमेभ्योऽह प्रादाम् ॥ १४ ॥ गोभूमिसुवर्णमंदिरादिस्थानाश्वहस्तिनः सदासीः कन्याः तिलरूप्यशय्यावासांसि रत्नानि परिच्छादानुपकरणानि प्रादामित्यन्वयः। यज्ञैश्चेष्टं पूर्तं वापीकूपादि चरितं मया कृतम् ॥ १५ ॥ द्विजमुख्यस्य ब्राह्मणोत्तमस्यायाचकस्य कस्यचित्कनखलवासिनो गौः शबला नाम्नी भ्रष्टा मम गोधने गोष्ठे संपृक्ता संमिलिता सा च गौरविदुषा ब्राह्मणस्येयमित्यजानता मया ब्राह्मणाय दत्ता इत्यनेनान्यस्य प्रतिग्रहो दूषित इति ध्वनितम् ॥ १६ ॥

## श्रीविट्ठलरायात्मजश्रीवल्लभकृतलेखः

**पयस्विनी**रित्यत्र। दुकूलेत्यस्य द्वितीयव्याख्याने अर्शआद्यजन्तम्।

## गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

ता एव विशिनष्टि—पयस्विनीरिति। दुग्धाधिक्ययुक्ताः। तरुणीः प्रथमप्रसूताः। शीलं शान्तस्वभावः, रूपं सौन्दर्यम्, गुणाः सदपत्यत्वं दुग्धे घृताधिक्यारोग्यत्वादयः, तदुपपन्नाः युक्ताः। कपिलाः सर्वतः श्वेतवर्णाः। हेमश्रृङ्गीः सुवर्णश्रृङ्गयुक्ताः। न्यायार्जिताः स्वधर्मपूर्वव्यापारेण सम्पादिताः। रूप्ययुक्तखुराः। वत्सैः सहिताः। दुकूलादीनां द्वन्द्वस्तद्युक्ताः। एवंभूता गा अहं ददौ ॥ १३ ॥ अथ दानपात्राणि विशिनष्टि—स्वलङ्कृतेभ्य इति। गुणा वैराग्यसन्तोषादयः, शीलं शान्तः स्वभावः, तद्वद्भ्यः। सीदत् क्लिश्यत् कुटुम्बं येषां तेभ्यः। ऋतं सत्यं व्रतमाचारः सङ्कल्पो वा येषां तेभ्यः। तपसा श्रुताः प्रख्यातास्ते ब्रह्मणि वदान्याः अत्युदाराः वेदाध्ययनशीलाश्च ते सन्तः समचित्ताश्च तेभ्यो द्विजपुङ्गवेभ्यो ब्राह्मणोत्तमेभ्यो गाः प्रादाम् ॥१४॥ न केवलं गा एवादाम्, किंतु गवादीन्, दासीभिः सहिताः कन्याश्च, तिलादीन्, रथान्तांश्च प्रादामित्यन्वयः। पुनः गोग्रहणमितरापेक्षया तद्रूपत्वज्ञापनार्थम्। आयतनानि गृहान्। परिच्छदान् गृहोपकरणानि। यज्ञैरिष्टं अग्निष्टोमादयो यज्ञाश्च कृताः। पूर्तं वापीकूपतटाकदेवतायतनारामादिनिर्माणान्नप्रदानादि चरितं कृतम् ॥ १५ ॥ एवं धर्मपथि वर्तमाने मयि कर्मवशादधर्मः कश्चनोत्पन्न इत्याह—कस्यचिदिति। द्विजमुख्यस्य प्रतिग्रहरहितस्य भ्रष्टा स्वबन्धनाद्विमुक्ता गौर्मम गोधने संपृक्ता मिलिता सा चाविदुषा द्विजस्येयमित्यजानता मया द्विजातये अन्यस्मै ब्राह्मणाय दत्ता ॥ १६ ॥

## अन्वितार्थप्रकाशिका

देयवैशिष्ट्यमाह—पयस्विनीरिति ॥ पयस्विनीः दुग्धाधिक्ययुक्ताः तरुणीः प्रथमप्रसूताः शीलं शान्तस्वभावः रूपं सौन्दर्यं गुणाः सदपत्यत्वदुग्धघृताधिक्यारोग्यत्वादयः तैरुपपन्नाः युक्ताः कपिलाः हेमश्रृङ्गीः सुवर्णश्रृङ्गयुक्ताः न्यायार्जिताः स्वधर्मपूर्वव्यापारेण सम्पादिताः रूप्ययुक्तखुराः वत्सैः सहिताः दुकूलादीनां द्वन्द्वस्तद्युक्ताः एवंभूता गा अहं ददौ। छन्दसि लिडिति अपरोक्षेऽपि भूतसामान्येऽपि च लिट् ॥ १३ ॥ सम्प्रदानवैशिष्ट्यमाह—स्वलमिति ॥ मद्दत्तालङ्कारैः स्वलङ्कृतेभ्यः गुणाः सन्तोषादयः शीलं च तद्वद्भ्यः सीदत् क्लिश्यत् कुटुम्बं येषां तेभ्यः ऋतानि सत्यानि दम्भरहितानि व्रतानि धर्मादीनि येषां तेभ्यः तपसा श्रुताः प्रख्यातास्ते ब्रह्मणि वदान्याः अत्युदाराः वेदाध्यापनशीलाश्च ते सन्तः समचित्ताश्च तेभ्यो युवभ्यः धर्माचरणगोपालनादिदक्षेभ्यः द्विजपुङ्गवेभ्यो ब्राह्मणोत्तमेभ्यो गाः प्रादाम् ॥ १४ ॥ देयान्तराण्याह—गविति ॥ गावोऽत्र वृषाः भूहिरण्यानि आयतनानि गृहान् अश्वान् हस्तिनः सदासीः कन्याः। कबभाव आर्षः। तिलरूप्यशय्याः वासांसि रत्नानि परिच्छदान् रथान् गृहोपकरणानि च प्रादां यज्ञैरिष्टम् अग्निष्टोमादयो यज्ञाश्च कृताः पूर्तं वापीकूपादि चरितं कृतम् ॥ १५ ॥

कस्यचिदिति ॥ कस्यचिद् द्विजमुख्यस्य प्रतिग्रहरहितस्य गौः भ्रष्टा स्वबन्धनाद्विमुक्ता सती मम गोधने सम्पृक्ता मिलिता सा चाविदुषा द्विजस्येयमित्यजानता मया द्विजातये अन्यस्मै ब्राह्मणाय दत्ता ॥ १६ ॥

### श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्

कपिलाश्च वाराहे सुवर्णकपिला श्वेतपिंगला कृष्णपिंगलादिभेदेन दशविधा उक्ताः न्यायेन धर्मशास्त्रोदितेन । अर्जिताः संपादिताः ॥ १३ ॥ ऋतव्रतेभ्यः । ऋतं दंभरहिततया सत्यव्रतं विप्रगुणद्विषट्कं च येषां तेभ्यः तदुक्तं भारते धर्मश्च सत्यं च दमस्तपश्च अमात्सर्यं ह्रीरिततिक्षानसूया । यज्ञश्च दानं धृतिः । श्रुतं च व्रतानि वै द्वादशब्राह्मणस्येति तपसा श्रुताः प्रसिद्धाश्च ते ब्रह्मणि वेदे वदान्याः तत्पाठनेनात्युदाराश्च । ते संतः साधुशीलाश्च तेभ्यः प्रादां ददौ ॥ १४ ॥ तेभ्यः गोप्रभृतीन्यपि ददौ । गावो वृषाः । आयतनानि गेहानि । सदासीः दासीभिः सहिताः परिच्छदानछत्रादीन् यज्ञैः इष्टं कर्मचरितं कृतं पूर्तं वापि कूपादि ॥ १५ ॥ एवं वर्त्तमानस्य मम कृकलासतनुहेतुं वदामीत्याह कस्यचिदिति । द्विजमुख्यस्य ब्राह्मणोत्तमस्य अविदुषा ब्राह्मणस्येयं गौर्नमदीया भवतीत्यज्ञानता मया अन्यस्मै दत्ता ॥ १६ ॥

### भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

ता एव विशिनष्टि ॥ पयस्विनीरिति ॥ पयस्विनीः, अत्र भूम्नि मत्वर्थीयः । बहुदुग्धवतीरित्यर्थः, तरुणीः, शीलं च रूपं च गुणाश्च तैरुपपन्ना युक्ताः, कपिलाः कपिलालक्षणवतीः, यद्वा । कपिलवर्णाः, हेमश्रृङ्गीः स्वर्णालंकृतविषाणाः, न्यायार्जिताः न्यायतः संपादिताः, रूप्यखुराः, सवत्सा वत्सैः सहिताः, दुकूलानि उत्तमवासांसि च माला मुक्ताहाराश्च आभरणानि च तानि विद्यन्ते आसां तास्ताः, दुकूलादीनां द्वन्द्वस्ततो मत्वर्थीयोऽच् । अहं, ददौ ॥ १३ ॥ अथ सत्पात्राणि विशिनष्टि ॥ स्वलंकृतेभ्य इति ॥ स्वलंकृतेभ्यः, गुणशीलवद्भ्यः, सीदत् क्लिश्यमानं कुटुम्बं येषां तेभ्यः, ऋतव्रतेभ्यः, तपःश्रुतास्तपसा प्रख्याताश्च ब्रह्मवदान्या ब्रह्मवादिनश्च ते च सन्तस्तेभ्यः, वदान्यवद्भ्य इति पाठे, तपआदिविशिष्टेभ्यः, युवभ्यः, द्विजपुङ्गवेभ्यः, गा इति शेषः । प्रादाम् ॥ १४ ॥ न केवलं गा एवादां, किं त्वन्यदपीत्याह ॥ गावश्च भूश्च हिरण्यं च अश्वाश्च हस्तिनश्च तान्, सदासीर्दासीभिः सहिताः कन्याः तिलरूप्यशय्याः, वासांसि, रत्नानि, परिच्छदान् गृहोपकरणानि, रथान् द्विजेभ्य इति शेषः । प्रादां, गवादीनामितरेतरयोगद्वन्द्वः । पुनर्गोग्रहणमितरापेक्षया तद्भूयस्त्वाभिप्रायकम् । आयतनानि गृहाः, न केवलं गवादिकमेव प्रादामपि तु, यज्ञैः इष्टं च, पूर्तं स्मार्त्तकर्म च, चरितं कृतम् ॥ १५ ॥ एवं वर्त्तमानस्य मम किंचित् संकटमापन्नं तच्छृणिवत्याह । कस्यचिदिति ॥ द्विजमुख्यस्य प्रतिग्रहानाचरणरूपमहाधर्मस्थतया ब्राह्मणेषु मुख्यस्य, कस्यचित् विप्रस्य, भ्रष्टा बलात्तद्धस्ताद्भ्रष्टतां प्राप्ता गौः, मम गोधने, संपृक्ता मिलिता, सा अविदुषा, मया च, द्विजातये तदितरस्मै ब्राह्मणाय, दत्ता इतरगोभिः समं विश्राणिता ॥ १६ ॥

### कृष्णप्रिया

नाथ ! सभी गौएँ दुधार, तरुण, सरल, सुन्दर सद्गुण सम्पन्न एवं कपिला थीं। उनके सींगों में सुवर्ण मढ़ दिया गया, न्यायोपार्जित द्रव्य खरीद ली थी, खुरें चांदी की थीं, सब गौएँ सवत्सा थीं, दुकूल वस्त्रों से, कुसुमों की मालाओं से, गले में कंठीओं से अलङ्कृत कर दी थी ॥ १३ ॥ हे नाथ ! विप्रवर भी समलङ्कृत थे, गुणशील विद्या समान थे विपुल एवं कष्टग्रस्त कुटुम्ब वाले थे, सत्यव्रती थे, तपस्वी, वेदाध्येता, विद्या दान करने वाले सच्चरित्र, युवावस्था सम्पन्न द्विजवर्य ऋषितनय थे पुनः वस्त्राभूषण से अलंकृत किये जाते थे ॥ १४ ॥ हे नाथ ! इस प्रकार आदर और सत्कारपूर्वक बहुत सी गौएँ, भूमि, सुवर्ण, आवास, हाथी, घोड़े, दासियों के साथ कन्याएँ, तिलके पर्वत, चांदी के पात्र, शय्या, वस्त्रालंकार, रत्नाभूषण, गृह के उपकरण, रथ आदि अनन्त वस्तुओं का दान किया था। वहुत से यज्ञ भी किये थे। कूप-वापिका जलप्याऊँ भी बनवायीं थी ॥ १५ ॥ भगवन् ! क्या निवेदन करूँ ! मेरे दुर्दैव से ऐसा प्रसङ्ग हो गया कि नगर में एक अप्रतिग्रही तपस्वी शीलसम्पन्न ऋषिवर विराजते थे, उनकी एक गाय एक दिन बिछुड़कर मेरे गोमण्डल में आ मिली। मुझे इस विषय का सहज भी ध्यान न था। मैंने प्रमाद से या अनजान अवस्था में उस गाय का किसी ब्राह्मण को दान किया ॥ १६ ॥

**तां नीयमानां तत्स्वामी दृष्ट्वोवाच ममेति तम् । ममेति प्रतिसंग्राह्य[1] नृगो मे दत्तवानिति ॥ १७ ॥**

**विप्रौ विवदमानौ मामूचतुः स्वार्थसाधकौ । भवान् दातापहर्तेति तच्छ्रुत्वा मेऽभवद् भ्रमः ॥ १८ ॥**

**अनुनीतावुभौ विप्रौ धर्म[2]कृच्छ्रगतेन [3]मे । गवां लक्षं [4]प्रकृष्टानां दास्याम्येषा प्रदीयताम् ॥ १९ ॥**

**भवन्तावनुगृह्णीतां किंकरस्याविजानतः । समुद्धरत[5] मां कृच्छ्रात् पतन्तं निरयेऽशुचौ ॥ २० ॥**

---

१. ग्राह्याह-श्रीधर. वंशी. जीव. वीर. विज. विश्व. ; गृह्या-च. पु. टि. । २. कृच्छ्रं-वीर. । ३. मे-विज. ; तौ-प्रा. पा. । ४. प्रगृह्णीतां-विज. । ५. धरतं-वीर. विज. ।

**कर्दमक्षमा**

अन्वयः—ताम्, नीयमानाम्, तत्स्वामी, दृष्ट्वा, तम्, मम, इति, उवाच, च, प्रतिसंग्रह्य, मम, इति, नृगः, मम, इति, उवाच ॥ १७ ॥ स्वार्थसाधकौ, विवदमानौ, विप्रौ, माम्, ऊचतुः, भवान्, दाता, भवान्, अपहर्ता, इति, तत्, श्रुत्वा, मे, भ्रमः, अभवत् ॥ १८ ॥ धर्मकृच्छ्रगतेन, मया, उभौ, विप्रौ, अनुनीतौ, मे, एषा, प्रदीयताम्, प्रकृष्टानाम्, गवाम्, लक्षम्, प्रदास्यामि ॥ १९ ॥ अजानतः, किङ्करस्य, भवन्तौ, अनुगृह्णीतां, अशुचौ, निरये, पतन्तम्, माम्, कृच्छ्रात्, समुद्धरत ॥ २० ॥

**श्रीधरस्वामिविरचिता भावार्थदीपिका**

प्रतिग्राहिणोक्तं दातेति । स्वामिनोक्तमपहर्तेति । अभवद्भ्रमः व्याकुलोऽभवमित्यर्थः ॥ १८ ॥ तदोभावपि प्रत्येकमनुनीतौ प्रार्थितौ । कथं तदाह । गवामिति सार्धेन ॥ १९-२० ॥

**श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः**

तां मयाऽज्ञातदत्ताम् गाम् । तत्स्वामी तस्या गोः पूर्वो नाथः ॥ १७ ॥ विवदमानौ "भासनोपसंभाषाज्ञानयत्नविमत्युपमंत्रणेषु वदः" इत्यात्मनेपदम् । "तङानावात्मनेपदम्" इत्यानस्यात्मनेपदसंज्ञेति । इत्यर्थ इति—भ्रमपदमत्र चेतोऽस्वास्थ्यपरमिति ज्ञेयम् ॥ १८ ॥ अनुनीतौ प्रार्थितौ धर्मकृच्छ्रगतेन धर्मसंबंधिकष्टं प्राप्तेन । प्रकृष्टानामितोऽपि शोभनानाम् । एषा मदज्ञानदत्ता ॥ १९ ॥ कृच्छ्राद्धर्मकृच्छ्रात् । अशुचौ महामलादिपूर्णे अकाराऽप्रश्लेषे तप्ते इत्यर्थः । 'शुचिरनुपहते तप्ते च' इति कोशात् ॥ २० ॥

**श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी**

इत्यस्माद्धेतोः ॥ १७ ॥ स्वार्थस्य स्वीयाभिमानमात्रस्य साधकौ ॥ १८ ॥ धर्मस्य कृच्छ्रे सङ्कटे गते न मयेति शेषः । धर्मकृच्छ्र उपागत इति क्वचित् प्रकृष्टानाम् अस्या अप्युत्कृष्टानां प्रकर्षेण निजाग्रहत्यागपूर्वकान्तःशुद्ध्यादिना दीयताम् ॥ १९ ॥ कृच्छ्रात् कष्टात् समुद्धरतं कृच्छ्रमेवाह—पतन्तमिति । यद्वा कृच्छ्रात्पापाद्धेतोः पतन्तम् ॥ २० ॥

**श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी**

तं गोर्नेतारमुवाच, तेनैव प्रतिग्राहि—दम्भभंगस्तत्स्मरणेनाधुनापि भयानुवृत्त्या वाग्वैकल्यात् । एवमग्रेऽपि; किंवा लेखकभ्रमादेव । प्रतिग्राही ममेत्याहेति मां समुद्धरतामिति च पाठः । एवमन्यत्राप्यूह्यम् । ननु मामकेयं मह्यं दत्ता, कथं तव स्यात्तत्राह—नृग इति, इत्यस्माद्धेतोः ॥ १७ ॥ स्वार्थसाधकाविति तयोरपि तदेकधेनुपरतोक्ता ॥ १८ ॥ धर्म्मस्य कृच्छ्रे संकटे प्रकृष्टानामस्या अप्युत्तमानां प्रकर्षेण निजाग्रह—त्यागपूर्व्वकान्तःशुद्ध्यादिना दीयताम् ॥ १९ ॥ कृच्छ्रात् कष्टान्मां समुद्धरतम् कृच्छ्रमेवाह—पतन्तमिति, यद्वा, कृच्छ्रात् पापाद्धेतोः पतन्तम् ॥ २० ॥

**श्रीमद्वीरराघवाचार्यकृता भागवतचन्द्रचन्द्रिका**

तामिति । तामन्यस्मै दत्तां गां दृष्ट्वा तस्याः गोः स्वामी पूर्वं प्रतिगृहीता तां गां मदीयेत्याह—प्रतिग्राही पश्चात्प्रतिगृहीताऽपि मदीयैवाधुनैव मह्यं नृगो दत्तवानित्याह ॥ १७ ॥ विप्राविति । भवान् दाता ततोपहर्त्तेत्येवमूचतुः यतस्तौ स्वार्थं साधकौ स्वार्थपरावृत एवमूचतुरित्यर्थः ॥ १८ ॥ तद्विप्रयोर्वचः श्रुत्वा ममापि भ्रमो जातः तदा धर्मकृच्छ्रं धर्मसङ्कटं प्राप्तेन मयाऽनुनीतावुपच्छन्दितौ, अनुनयनप्रकारमाह—गवामिति सार्द्धेन । प्रकृष्टानां श्रेष्ठानां गवां लक्षमन्यतरस्मै प्रदीयतां युवयोरन्यतरेणेत्यर्थः ॥ १९ ॥ किञ्च, भवन्ताविति । किङ्करस्य मम कर्मणः शेषत्वविवक्षयेयं षष्ठी किङ्करं मामनुगृह्णीतामित्यर्थः । तत्र हेतुत्वेन विशिनष्टि—अविजानत इति । कृच्छ्राद्धर्मसङ्कटादशुचौ निरये पतन्तं मां समुद्धरतेति पूजार्थं बहुवचनम् ॥ २० ॥

**श्रीविजयध्वजतीर्थकृता पदरत्नावली**

तस्या गोस्वामी पूर्वतनो नाथः अन्यः प्रतिग्रहीता ममेति प्रतिगृह्याब्रवीत् ॥ १७ ॥ विवदमानौ विप्रतिपद्यमानौ "भासनोपसम्भाषाज्ञानयत्नविमत्युपमन्त्रणेषु वदः" ( १-३-४७ ) इत्यत आत्मनेपदं भ्रमः सम्भ्रमः ॥ १८-२० ॥

**श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शिनी**

प्रतिग्राही विप्र उवाच भवान् दातेति गोस्वामी उवाच भवानपहर्त्तेति भ्रमः अतिवैयग्र्यमित्यर्थः ॥ १८-२० ॥

### गूढार्थदीपिनी

तत्स्वामी अप्रतिग्राही ॥ १७ ॥ विवदमानौ । 'भासनोपसंभाषा' इत्यात्मनेपदम् । भ्रमो व्यग्रता ॥ १८ ॥ अनुनीतौ प्रार्थितौ । एषा युवयोर्मध्ये अन्यतरेण अन्यतरस्मै दीयताम् ॥ १९-२० ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

प्रतिग्राह्युवाच दातेति स्वाम्युवाचापहर्त्तेति ॥ १७-१८ ॥ तदा धर्मकृच्छ्रगतेन धर्मकष्टप्राप्तेन उभावपि प्रत्येकमनुनीतौ उपच्छन्दितौ, तदेवाह—गवामिति सार्द्धेन । दास्यामि अन्यतरस्मै एषा प्रदीयतामन्यतरेणाऽन्यतरस्मै ॥१९॥ किङ्करस्य किङ्करमनुगृह्णीताम् कर्म्मणः शेषत्वविवक्षया षष्ठी समुद्धरतेति बहुवचनं पूजार्थम् ॥ २०-२२ ॥

### श्रीमद्वल्लभाचार्य्यकृता सुबोधिनी

ततः प्रतिग्रहीतरि तां प्रतिगृह्य गच्छति सति तत्स्वामी मिलितो मध्ये ममेयं गौः कथं नीयत इति चाह । ततः प्रतिग्राही 'नृगो मे दत्तवा'निति ममेत्याह । **प्रतिसंगृह्य** । प्रतिग्रहं कृत्वा, प्रतिग्रहकथामप्युक्त्वा, नृगो दत्तवानिति ममेत्याह ॥ १७ ॥ एवमुभौ विप्रौ विवदमानौ स्वार्थसाधकौ । प्रतिग्रहे सिद्धे ब्राह्मणस्य गौर्भवति, राज्ञश्च ब्राह्मणगवापहारदोषो भवति । दानप्रतिग्रहयोरभावे ब्राह्मणस्यैव गौः, नापहारदोषः, लोकदृष्टया धर्मे सिद्धे प्रतिग्रहस्य सिद्धत्वाद्दानस्य च प्रतिग्रहीतुरेव गौः, अपहारदोषप्रायश्चित्तं परं कर्तव्यम् । अलौकिकश्चेद्धर्मः देवाद्यधिष्ठितः, तदा अधर्मसिद्धं द्रव्यं धर्मविषयो न भवतीति न दानं सिध्यति । सुतरां प्रतिग्रहः । अतो विवादः । राजा चेदत्र दानमङ्गीकरिष्यति, तदा प्रतिग्रहः सेत्स्यति, अपहारश्च । अपहारदोषस्याधिक्यात् नाङ्गीकुर्याच्चेत्, तदा स्वामी गां नेष्यतीति स्वार्थसाधकौ विप्रौ अन्योन्यं विवदमानौ मां राजानमूचतुः । एकस्य वचनं **भवान् दाते**'ति । तस्मिन्नङ्गीकृते द्वितीय आह अपहर्तेति । हेतुपूर्वकं वृत्तान्तवचनं अर्थात् ज्ञायते । पश्चादपहारवचनं श्रुत्वा मे भ्रमः अभवत् यदेको न प्रार्थितः । एकस्मिन् दोषे अङ्गीकृतं तत्प्रायश्चित्तं स्वेच्छया कृतं स्यात् ॥ १८ ॥ भ्रमादेकमकृत्वा स्वतस्तत्त्वापरिज्ञानात् अन्यस्यापृष्टत्वात् द्वयमपि सन्देहे स्थापयित्वा उभावनुनीतौ । गौः त्यक्तव्येत्यरिमन्नर्थे यथा द्वितीयोऽप्यपहारः सिध्यति । ननूभयोरनुनये को हेतुः, तत्राह **धर्मकृच्छ्रं गतेन मे** इति । तस्य हृदये धर्मे निश्चयाभावात् कृच्छ्रं सङ्कटमेव प्राप्तवान् । अनुनयमाह । गवां लक्षं एतन्निष्कृतित्वेन दास्यामि । एषा प्रदीयतामिति ॥ १९ ॥ ननु निष्कृतिग्रहणे दोषः स्यात्, कथं ग्राह्य इति चेत्, तत्राह **भवन्तावनुगृह्णीता**मिति । मदुपर्यनुग्रहेण निषिद्धमपि कर्तव्यमिति भावः । **अनुग्रहे किङ्करस्येति** । तथापि सापराधो दण्ड्य एवेति चेत्, तत्राह **अविजानत** इति । विशेषेणायमर्थो न ज्ञात इति । अज्ञाते स्वल्पमेव प्रायश्चित्तमित्यनुग्रहेणापि सिध्यति । तस्य भाव्यर्थः स्वत एव स्फुरितः तन्निराकरणार्थं प्रार्थयति **समुद्धरतेति** । **कृच्छ्रात्** सङ्कटात् निर्णयज्ञानाभावात् अशुचौ निरये पतन्तमिति । **हीनभावः निरयो भवति**, ततश्च गोत्वमश्वत्वं वा चेद्भवेत्, तदा निरयत्वेऽपि नाशुचित्वम् । श्वयोनौ शूकरयोनौ वा पाते तथात्वमिति । तामिस्रादौ तु न पातः, नरकभोग एव परम् । योनिसम्बन्धे तु अभिमान उत्पद्यत इति पातः । **अशुचा**विति । लोकप्रसिद्धमलादिप्रदर्शनेन दया वा उत्पाद्यते ॥ २० ॥

### श्रीसुबोधिनी-सारः

मार्गे नीयमानां तां गां दृष्ट्वा तस्या गोः स्वामी तं नीयमानं विप्रं ममेयमित्युवाच प्रतिग्राही विप्रो ममेत्याह तत्र हेतुः नृगो राजा मे मह्यं दत्तवान् इति ॥ १७ ॥ स्वार्थस्य साधकौ विप्रौ विवादं कुर्वाणौ मामूचतुः भवान् दातेति प्रतिग्राहिणोक्तम् अपहर्त्तेति अयाचकेनोक्तम् इति श्रुत्वा मे मम भ्रमोऽभवत् संदेहोऽजायत ॥ १८ ॥ धर्मे कृच्छ्रं गतेनापत्प्राप्तेन मया उभौ द्वौ विप्रौ अनुनीतौ अनुनयं प्रति याचितौ वै एव तदाह विभागेन प्रकृष्टानामुत्तमानां गवां लक्षं प्रदास्यामि भो स्वामिन् एषास्मै प्रदीयतामिति स्वाम्यनुनयः ॥ १९ ॥ किंकरस्य दासस्याविजानतो ममोपरि भवंतावनुग्रहं कुरुतां अशुचौ घोरे नरके पतन्तं मां कृच्छ्रादद्दुःखात् युवां समुद्धरतम् ॥ २० ॥

### गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

तां दत्तां प्रतिग्राहिणा नीयमानां गां तस्याः गो स्वामी दृष्ट्वा मम मदीयेयमित्युवाच, प्रतिग्राही च मदीयेयमित्याह । 'कुतस्त्वया प्राप्ता' इत्यपेक्षायामाह—मे मह्यमधुनैव नृगो दत्तवानिति ॥ १७ ॥ एवं परस्परं विवदमानौ तौ विप्रौ मामूचतुः । तत्र हेतुमाह—स्वार्थसाधकाविति । मन्मुखान्निर्णयेन गोग्रहणोत्सुकावित्यर्थः । तत्र प्रतिग्राह्याह—भवान् दाता अधुनैवेमां मह्यं दत्तवान्, अतः इयं मदीया, अयं च वदति मदीयेति । तदा स्वाम्याह—भवानपहर्तेति । इयं च गौर्मदीया लोके प्रसिद्धा तां चेद्भवानस्मै दत्तवांस्तदापहर्तेत्यर्थः । तत् द्वयोर्वचनं श्रुत्वा मे भ्रमो व्याकुलता अभवत् ॥ १८ ॥ इयं च गौरन्यस्यैव, तस्या दानं यदि अन्यस्मै प्रतिग्राहिणे क्रियते तदा तत्स्वामिनः अपहारः कृतः स्यात् । यदि तु तत्स्वामिनो सा च दीयते तदा दानस्य

कृतत्वात् प्रतिग्राह्यपहारः कृतः स्यात्तदापि स एव दोष इत्येवं धर्मविचारे उभयथापि कृच्छ्रं संकटं प्राप्तेन मया तावुभावपि विप्रावनुनीतो उपच्छन्दितौ। अनुनयप्रकारमाह—गवामिति सार्धेन। प्रकृष्टानां श्रेष्ठानां गवां लक्षं युवयोरन्यतरस्मै दास्यामि, तेनान्यतरेणैषा गौरन्यतरस्मै प्रदीयतामित्यर्थः ॥ १९ ॥ "एका गौर्न प्रतिग्राह्या द्वितीया न कदाचन॥ सा चेद्विक्रयमापन्ना रौरवं नरकं नयेत्" इति गोविक्रयनिषेधात्। 'कथं तन्निष्कृतिरूपं गवां लक्षं ग्राह्यम्' इत्याशङ्क्य 'मदुपर्यनुग्रहेण निषिद्धमपि कर्तव्यम्' इत्याशयेनाह—भवन्तावनुगृह्णीतामिति। अनुग्रहे हेतुमाह—किङ्करस्येति। तथापि सापराधो दण्ड्य एवेति चेत्तत्राह अविजानत इति। इयं गौः अन्यस्येत्यजानतः। अज्ञाते त्वल्पमेव प्रायश्चित्तम्, तत्स्वानुग्रहेणापि सिद्ध्येदित्याशयः। तस्य भाव्यर्थः स्वत एव स्फुरितस्तन्निराकरणं प्रार्थयति—अनेनापहारदोषेण अशुचौ नरके पतन्तं मां तस्मात् कृच्छ्रात् सङ्कटात् अनेन निष्कृतिग्रहणरूपानुग्रहेण समुद्धरतमिति ॥ २० ॥

### अन्वितार्थप्रकाशिका

तामिति ॥ तां दत्तां प्रतिग्राहिणा नीयमानां गां तस्याः गोः स्वामी दृष्ट्वा मम मदीयेयमित्युवाच प्रतिग्राही च मदीयेयमित्याह स्म। यतः मे मह्यमधुनैव नृगो दत्तवानिति ॥ १७ ॥ विप्राविति ॥ एवं परस्परं विवदमानौ स्वार्थसाधकौ मन्मुखान्निर्णयेन गोग्रहणोत्सुकौ तौ विप्रौ मामूचतुः। तत्र प्रतिग्राह्याह स्म। भवान्दाता अधुनैवेमां मह्यं दत्तवान्। स्वाम्याह स्म। इयं गौर्मदीया तां चेद्भवानस्मै दत्तवान् तदा अपहर्त्ता। तद्द्वयोर्वचनं श्रुत्वा मे भ्रमो व्याकुलताऽभवत् ॥ १८ ॥ अनुनीताविति ॥ एवं धर्मविचारे कृच्छ्रं संकटं प्राप्तेन मया तावुभावपि विप्रावनुनीतौ प्रार्थितौ। तदेवाह प्रकृष्टानां श्रेष्ठानां गवां लक्षं युवयोरन्यतरस्मै दास्यामि तेनान्यतरेणैषा गौरन्यतरऽस्मै प्रदीयतामित्यर्थः ॥१९॥ भवन्ताविति ॥ भवन्तौ इयं गौः अन्यस्येत्यविजानतः किङ्करस्य ममोपरि अनुगृह्णीताम्। अनेनापहारदोषेण अशुचौ नरके पतन्तं मां तस्मात्कृच्छ्रात्सङ्कटात् अनेन निष्कृतिग्रहणरूपानुग्रहेण समुद्धरतमिति ॥ २० ॥

### श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्

तं नेतारं दृष्ट्वा इयं गौर्ममास्तीति तत्स्वामी उवाच प्रतिग्राही गोनेतारमित्याह। यतो मे मह्यं नृगो दत्तवान् इति हेतोः ॥ १७ ॥ भवान्मह्यं दातेति प्रतिग्राहिणोक्तं मम धेनोर्भवानपहर्त्तेति स्वामिनोक्तं तच्छ्रुत्वा ॥ १८ ॥ उभौ विप्रौ धर्मकृच्छ्रगतेन मया प्रत्येकमनुनीता तथाहि प्रकृष्टानां श्रेष्ठानां ॥ १९ ॥ कृच्छ्रात् मां युवां समुद्धरतं ॥ २० ॥

### भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

तामिति ॥ तत् स्वामी अप्रतिग्रहकर्त्ता धेनोः स्वामी विप्रः, नीयमानां प्रतिग्रहकर्तृद्विजेन नीयमानां, तां स्वधेनुं दृष्ट्वा, तं सद्यः प्रतिग्रहकर्त्तारं द्विजं, मम इति इयं धेनुर्मदीयाऽस्तीति, उवाच, तदा प्रतिग्राही, यतः नृगः, मे मह्यं, सांप्रतमेव, दत्तवान्, इति हेतोः, मम मदीयेयमिति, आह ॥ १७ ॥ विप्राविति ॥ ततः, स्वार्थसाधकौ विवदमानौ विप्रौ, मां उपेत्य, भवान् सांप्रतमेव, दाता इति, प्रतिग्राही आह। भवान्, अपहर्त्ता अप्रतिग्राहिणो ममास्या धेनोरपहर्त्तेत्याह। एवमुभावूचतुः। तच्छ्रुत्वा, मे मम, भ्रमः अभवत् ॥ १८ ॥ अनुनीताविति ॥ तदा, धर्मकृच्छ्रगतेन धर्मनिमित्तककष्टं प्राप्तेन मया, वै उभौ विप्रौ, अनुनीतौ उपच्छन्दितौ, अनुनयप्रकारमाह गवामिति सार्द्धेन। प्रकृष्टानां गवां, लक्षं दास्यामि। अस्याः स्थाने इति शेषः। अतः, एषा प्रदीयताम्। भवतोर्द्वयोर्मध्येऽन्यतरोऽन्यतरस्मै दीयतामित्यर्थः ॥ १९ ॥ भवन्ताविति ॥ अविजानतः किंकरस्य, कर्मणः शेषत्वविवक्षायां षष्ठी। किंकरं मामित्यर्थः। भवन्तौ, अनुगृह्णीतां, अशुचौ निरये नरके, पतन्तं मां, कृच्छ्रात्, समुद्धरत, अत्र पूजार्थं बहुवचनम् ॥ २० ॥

### कृष्णप्रिया

वह गाय ब्राह्मण अपने घर ले जा रहे थे तब मार्ग में खोजते असली मालिक ने प्रतिग्राही विप्र को कहा—यह गाय तो मेरी है, तब प्रतिग्राही विप्र ने कहा यह गाय मेरी है, मुझे नृग राजा ने इस गाय का दान किया है। नाथ ये दो विप्रवर सत्यवादी थे। अपनी बात पक्की करने के लिये विवाद करते हुए मेरे पास आये। एक प्रतिग्राही विप्र ने कहा राजन्! आपने अभी यह गाय मुझे दान में दी है, तब अप्रतिग्राही ऋषि ने कहा कि यह गाय मेरी है, इसे आप दान में कैसे दे सकते हैं? दोनों की बात सत्य थी। यह बात सबके अनाजानपने में बन गयी थी। मैं धर्मसंकट में आ गया। भगवन्! इन दोनों विप्रवर्यों की विनय-अनुनय करके कहा कि महाराज! इस गाय के बदले में एक लाख उत्तम गौएँ दूँगा, आपलोग कृपा करके मुझे यह गाय दे दीजिये। ऋषि महाराज! आप लोगों का अकिञ्चन किङ्कर हूँ। मुझसे अज्ञात अवस्था में यह अपराध बन गया है। आप इस दास पर दया करें, इस सेवक को घोर नरक से एवं संकट से बचा लीजिये ॥ १७–२० ॥

[1]नाहं प्रतीच्छे वै राजन्नित्युक्त्वा स्वाम्यपाक्रमत् । [2]नान्यद् गवामप्ययुतमिच्छामीत्यपरो ययौ ॥२१॥
[3]एतस्मिन्नन्तरे[4] [5]याम्यैर्दूतैर्नीतो यमक्षयम् । यमेन पृष्टस्तत्राहं देवदेव जगत्पते ॥२२॥
पूर्वं त्वमशुभं [6]भुङ्क्षे [7]उताहो नृपते शुभम् । नान्तं दानस्य धर्मस्य [8] पश्ये[9] लोकस्य भास्वतः ॥२३॥
[10]पूर्वं देवाशुभं भुञ्ज इति प्राह पतेति सः । तावदद्राक्षमात्मानं कृकलासं पतन् प्रभो ॥२४॥

### कर्दमक्षमा

अन्वयः—राजन्, अहम्, न, प्रतीच्छे, इति, उक्त्वा, स्वामी, अपाक्रमत्, गवाम्, लक्षम्, अन्यत्, अयुतम्, अपि, इच्छामि, इति, अपरः, ययौ ॥ २१ ॥ हे, देवदेव ! हे, जगपते ! एतस्मिन्, अन्तरे, याम्यैः, दूतैः, यमक्षयम्, नीतः, तत्र, अहम्, यमेन, पृष्टः ॥ २२ ॥ नृपते ! त्वम्, पूर्वम्, अशुभम्, भुङ्क्षे, उत, अहो, शुभम्, भुंक्षे ? दानस्य, धर्मस्य, भास्वतः, लोकस्य, अन्तम्, न ॥ २३ ॥ देव ! पूर्वम्, अशुभम्, भुञ्जे, इति, सः, पत, इति, प्राह, प्रभो, पतन्, तावत्, आत्मानम्, कृकलासम्, अद्राक्षम् ॥ २४ ॥

### श्रीधरस्वामीविरचिता भावार्थदीपिका

अपरः प्रतिग्राही दुराग्रहो यल्लक्षं त्वयोक्तमन्यदपि गवामयुतं यदि तदपीमां विहाय नेच्छामीत्युक्त्वा गां त्यक्त्वा ययावित्यर्थः ॥ २१ ॥ एतस्मिन्नंतर इति । इतः पूर्वं पापाभावान्नेतुमसमर्था इति भावः ॥२२॥ उताहो इत्येकं पदम् । अथवा पूर्वं शुभमिति नान्तमिति यमस्य स्वस्य वा वाक्यम् । पश्ये पश्यामि ॥ २३ ॥ हे देव यम पूर्वमशुभं भुंज इति मयोक्ते स यमः पतेति प्राह ॥ २४-२५ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

राज्यं राजप्रतिग्रहमहं न प्रतीच्छे करोमीति प्रतिग्रहभयादपाक्रमद्गां त्यक्त्वैवापासरदित्यर्थः । इत्यर्थ इति-अव्ययानामनेकार्थत्वादितिपदं त्यागमपि बोधयतीति भावः ॥ २१ ॥ एतस्मिन्नज्ञातापराधलक्षणे अंतरेऽवकाशे सति पापादायुषः संकोचे सति । यद्वा—अज्ञातविप्रगोदानतः प्राग्यमो ममाह्वा नेऽपि न प्रभुरभूत्तत्सत्त्वे तेनाहमाहूतः । हे देवानां पूज्यानामपि पूज्य जगत्पते इति जगत्पालनार्थं त्वयैव नियुक्तस्य तदुचितमेव । यद्वा—त्वत्कृतनिबंधस्तेषामप्यलंघ्य एवेति भावः । इति भाव इति—'याध्वामृते पथि चरन्प्रभुभिर्न चाल्यः' इति न्यायेन धर्मशीलानां छिद्रं विना दंडो न भवतीति तात्पर्यम् । तत्र यमालये ॥ २२ ॥ यमो मामित्थमपृच्छदित्याह—पूर्वमिति । भुंक्षे भोक्ष्यसे । वर्तमानसामीप्ये लट् । "भुजोऽनवने" इत्यात्मनेपदम् । 'उताहो परिप्रश्नविचारयोः' इति मेदिनी । दानस्य दानरूपस्य । यद्वा—मत्वर्थीयोऽत्र बोध्यस्तेन प्रकृष्टदानवतो धर्मस्येत्यर्थः ॥ २३ ॥ तावत्साकल्येन । कृकलासं सरटम् । वाल्मीकीये तु ताभ्यां विप्राभ्यां त्वं कृकलासो भवेति शाप एव राज्ञे दत्तस्स च विरोधः कल्पांतरव्यवस्थयाऽनुसंधेय इति तोषणीकाराः ॥ २४ ॥

### श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी

वै एव न प्रतीच्छे नैव प्रतिगृह्णामीत्यर्थः । अपाक्रमत् गां त्यक्त्वा प्रतिग्रहभयेनापसृतः ॥ २१ ॥ अन्तरे छिद्रे परिमितायुषः समाप्तेर्मरणावकाशे सति यमस्य क्षयं पतत्यग्रे वक्ष्यमाणात्पुण्यात्मानस्तस्य गम्यं दक्षिणस्यां मानस्योपरिस्थं निवासमेव नतु भूमिष्ठं तत्र यमक्षय एव नत्वन्यत्रेति आदरेण साक्षात्प्रश्नः सूचितः हे देवानां त्र्यादीनामपि देव पूज्य यतो हे जगत्पते जगत्पालनार्थं त्वयैव धर्माधिकारे नियुक्तस्य तस्य तदुचितमेवेति किम्बा त्वत्कृतनिबन्धस्तेषामप्यलङ्घ्य इति भावः । अयं प्रश्ने हेतुः ॥ २२ ॥ अशुभं पापं तद्विप्रगोहरणजं भुंक्ष्व भोक्ष्यसे धर्मस्य यज्ञादेः साधनानन्त्यात् साध्यस्य लोकस्य स्वर्गादेरपि भास्वतः अद्भुतसुखवैभवादिना राजमानस्येत्यर्थः ॥ २३ ॥ पूर्वमिति अशुभोदर्कतायाः परमाशोभनत्वात् प्रकर्षेण अभिनयादिनाह तावत्तत्क्षण एव पतन् सन् प्रभो हे सर्वकर्मेश्वरेति त्वया दीयमानं कर्म फलमवश्यमेव भोग्यमिति किं वा तच्च त्वदिच्छयैवेति भावः । कृकलासमिति तादृशपापस्य तादृशफलत्वात् श्रीरामायणादौ च ताभ्यां विप्राभ्यां तथैव शपनात् तत्रोक्तश्चेतद्विरुद्धं कल्पभेदव्यवस्थया परिहार्य्यम् ॥ २४ ॥

---

१. नान्यां-वीर. ; नान्यां प्रतीच्छे राजेन्द्र इत्युक्त्वा-प्रा. पा. । २. नान्यं-विज. । ३. ततोहं कालयोगेन मृतः परममायया-वीर. विज. । ४. देव दैवन्नीतस्तद्वदामि तवाग्रतः-वीर. । ५. दूतैर्याम्यै-प्रा. पा. । ६. भुंक्ष्व-विज. । ७. अथवा-प्रा. पा. । ८. भवतः-वीर. । ९. पश्य लोकांश्च-विज. । १०. पूर्वमेवा-वीर. विज. ।

### श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी

वै एव, न प्रतीच्छे नैव प्रतिगृह्णामीत्यर्थः। किंवा प्रतिग्रहं मनसापि नेच्छाम्येवेति, अपाक्रमद् गां त्यक्त्वा प्रतिग्रहभयेनापसृतः; कोपेन मयि पृष्ठं दत्त्वा निर्गतो वा ॥ २१ ॥ अन्तरे अवकाशे छिद्रे वा, यमस्य क्षयं निवासमेव, न तु नरकम्। तत्र यमक्षय एव, न त्वन्यत्रेति आदरेण साक्षात्प्रश्नः सूचितः। हे देवानां यमादीनामपि देव पूज्य ! यतो हे जगत्पते ! जगत्पालनार्थं त्वयैव धर्म्माधिकारे नियुक्तस्य तस्य तदुचितमेवेति। किंवा त्वत्कृतनिबन्धस्तेषामप्यलङ्घ्य इति भावः। अयं प्रश्ने हेतुः ॥ २२ ॥ अशुभं पापं तद्विप्र-गोहरणजम्, किंवा दुःखं तत्पापजं भुङ्क्ष भोक्ष्यसे। भुङ्क्ष्वेति पाठे पाठान्तरेऽपि स एवार्थः। धर्म्मस्य यज्ञादेः, दानस्य धर्म्मान्तर्गतत्वेऽपि पृथगुक्तिस्तदतिशयापेक्षया। यद्वा, दानलक्षणस्य धर्म्मस्य अन्यविविधधर्म्मसद्भावेऽपि तस्यैवोक्तिस्तथैव, लोकस्य धर्म्मार्ज्जितस्य स्वर्गादेः; कथम्भूतस्य ? भास्वतोऽनन्ताद्भुतसुखवैभवादिना राजमानस्येत्यर्थः। एवं श्रीध्रुवपदादिवदूर्द्ध्वलोकेष्वेव तस्य वैशिष्ट्यमुक्तम् ॥२३॥ पूर्व्वमिति अशुभोदर्कतायाः परमाशोभनत्वात्, प्रकर्षेणाभिनयादिनाह—तावत् तत्क्षण एव पतन् सन् प्रभो हे सर्व्वकर्म्मेश्वरेति त्वया दीयमानं कर्म्मफलमवश्यमेव भोग्यमिति। किंवा तच्च त्वदिच्छैवेति भावः। कृकलासमिति तादृशपापस्य तादृक्फलत्वात्; श्रीरामायणादौ च ताभ्यां विप्राभ्यां तथैव शयनात् तत्रोक्तश्चैतद्विरुद्धं कल्पभेदव्यवस्थया परिहार्य्यमेव ॥ २४ ॥

### श्रीमद्वीरराघवाचार्यकृता भागवतचन्द्रचन्द्रिका

एवमुक्तयोस्तयोरन्यतरः गोस्वामी हे राजन् ! अहं गवां लक्षमपि न प्रतीच्छे न प्रतिगृह्णामि किन्तु दत्तामेनामेव नयामीत्युक्त्वाऽपाक्रमद्ययौ तथाऽपरोऽपि प्रतिग्राही दुराग्रहः यल्लक्षं त्वया प्रतिश्रुतमन्यदपि गवामयुतं दत्तं यदि तथाप्येनां विहाय नेच्छामीत्युक्त्वा गां त्यक्त्वा ययौ इत्यर्थः ॥ २१ ॥ तत इति। हे परम ! तव मायया परमस्य तव माययेति वा हेतुभूतेन सङ्कल्पेन कालयोगेन निमित्तेन मृतः हे देव ! दैववशाददृष्टानुसारात् यत्र नीतस्तत्तवाग्रतो वदामि ॥ एतस्मिन्निति। हे देवदेव ! जगत्पते ! एतस्मिन्नन्तरे इतः पूर्वं पापाभावात् नेतुमक्षमैरिति भावः। यमसम्बन्धिभिर्यमसदनं प्रापितः तत्र यमसदने यमेनाहं पृष्टश्च ॥ २२ ॥ प्रश्नमेवाह—पूर्वमिति। किं पूर्वमशुभं पापफलं भुङ्क्षे उताहो किम्वा शुभं पुण्यफलं भोक्ष्यसे भवतो दानस्य यो लोकः लोक्यत इति लोकः फलं तस्य भास्वतः प्रकाशमानस्य उपस्थितस्येति यावत् अन्तमवधिं न पश्यामि ॥२३॥ पूर्वमेवाशुभं पापफलं भुञ्जे तस्याल्पीयस्त्वादिति भावः इति मयोक्ते पत निरये इति शेषः। इति इत्थं स यमः मां प्राह तावदिति। तावत्तदैव हे प्रभो ! पतन्नहमात्मानं कृकलासमद्राक्षं दृष्टवानस्मि ॥ २४ ॥

### श्रीविजयध्वजतीर्थकृता पदरत्नावली

अपाक्रमत् अपगतवान् ॥ २१ ॥ याम्यैर्यमस्य विद्यमानैः ॥ २२ ॥ भुंक्ष्व भोक्ष्यसे तव दानस्य धर्मस्य अन्तं नास्ति तज्जन्यलोकान् पश्य इत्युक्तोहं प्राक् अशुभं भुञ्जे इत्यवदं इत्युक्ते स यमः तर्हि पतेति मां प्राह ॥ २३-२७ ॥

### श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शनी

राज्ञां न प्रतीच्छे राजप्रतिग्रहं न करोमीत्युक्त्वा अपाक्रमत् स्वीयां गां विहायैव ययौ अपरः प्रतिग्राही दुराग्रहः यल्लक्षं त्वयोक्तम् अन्यदप्ययुतमपि यदि ददासि तदपीमां विहाय नेच्छामीत्युक्त्वा ययौ ॥ २१ ॥ मरणानन्तरमिति शेषः यमक्षयं संयमनीम् ॥ २२ ॥ अशुभम् अजानता यद्विप्रस्य गौरपहृता तज्जन्यपापफलम् उताहो किं वा शुभं पुण्यफलं तव दानस्य अन्तं न पश्यामि तत्फलस्य भास्वतो लोकस्य स्वर्गस्यापि अन्तं न पश्यामि ॥ २३ ॥ हे देव यम ! पूर्वमहमशुभं भुञ्जे इति मयोक्ते स यमः पतेति प्राह ॥ २४ ॥

### गूढार्थदीपिनी

न प्रतीच्छे अन्यां न प्रतिगृह्णामि। स्वामी अप्रतिग्राही अपाक्रमत् ययौ स्वगां विहाय। अपरः प्रतिग्राही हठी एनामेव नान्यत् इत्युक्त्वा ययौ ॥ २१ ॥ यमक्षयं यमलोकम्। 'क्षि निवासे' इत्यस्मादेरच्। ॥ २२ ॥ उपार्जितस्य दानस्य तज्जन्यधर्मस्य भास्वतः प्रकाशमानस्य स्वर्गादिलोकस्य पुण्यफलस्य च अन्तं नेत्यन्वयः। भुङ्क्षे भोक्ष्यसे। वर्तमानसामीप्ये लट्। 'भुजोऽनवने।' इत्यात्मनेपदम् ॥ २३ ॥ पत गच्छ नीचयोनिमिति यमः मां प्राहेति ॥ २४-२५ ॥

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः

पश्ये पश्यामि ॥ २३ ॥ हे देव ॥ २४-२५ ॥

### श्रीमद्वल्लभाचार्य्यकृता सुबोधिनी

तत्र मुख्यः स्वामी, गोविक्रयस्य निषिद्धत्वात्, अन्यल्लक्षायुतादिसङ्ख्यापरिमितं गोसमूहं अहं न प्रतीच्छ इत्युक्त्वा, राजप्रार्थनां त्यागांशे अङ्गीकृत्य, स्वाम्यपाक्रमत्, प्रतिग्रहस्य राज्ञा स्थापितत्वात् पूर्वप्रतिग्रहस्यैव सिद्धत्वात्। विक्रयपक्षे प्रतिग्रहपक्षे वा दोषश्रवणात्। 'एका गौर्न प्रतिग्राह्या द्वितीया न कदाचन। सा चेद्विक्रयमापन्ना रौरवं नरकं व्रजे'दिति वाक्याद्गवामयुतमपि एतन्निष्कृतित्वेन नाहं प्रतीच्छ इति द्वितीयोऽपि ययौ। राजन्निति संबोधनात् अनिष्कृतित्वेऽपि प्रतिग्रहोऽपि निषिद्ध इति सूचितम्। राजा सर्वेषामनुरोध्यः, अतिक्रमोऽपि सोढव्य इति सूचितम्। लक्षं गावः राज्ञा दातुं शक्याः, न तु ब्राह्मणेन, अयुतमेव परमा काष्ठा ब्राह्मणस्य। कोऽर्हति सहस्रं पशून् प्राप्तुमिति सहस्रस्यैव महत्त्वात्। दशपुत्रविभागे सहस्रशो दानेऽपि अच्युतस्यैव पर्याप्तत्वात्। प्राप्तमयुतं निषेधति **गवामप्ययुत**मिति। यद्यपि तावता पूर्णः कामो भवेत्, तथाप्यव्यवस्थितत्वात् एकस्यामपि गवि यत्रायं सन्देहः, तत्र किमन्यद्वक्तव्यमिति भावः ॥ २१ ॥ एवं ब्राह्मणद्वयक्षोभे दण्डार्थं यमः प्रवृत्तः, गोश्चापहारे आयुः क्षीणमिति तदैव यमदूतैः समागतमित्याह **एतस्मिन्नन्तर** इति। यावदयं प्रतिविधानं कुर्यात्, तन्मध्य एव याम्यैर्यमक्षयं नीतः। अनेन बलान्नयनं निरूपितम्। बलाद्गौर्हृतेति। **तेना**पि ब्राह्मणाः सम्बोधिता इति स्वेच्छयैव तैस्त्यक्त इत्यस्यापि स्वेच्छयैव नरकभोगो निरूप्यते। अत एव इच्छार्थं यमेन पृष्टः। अस्मिन्नर्थे सत्यतां निरूपयितुं **देवदेवे**ति सम्बोधनम्। **जगत्पत** इति च। धर्मकर्तुः कथं यमदण्ड इति शङ्कां वा दूरीकर्तुम्। **प्रमेयबले वेदापेक्ष**या **भगवदाज्ञा** कर्तव्येति निरूपयन् देवस्यापि त्वं देव इति त्वदाज्ञा यमेन कर्तव्या। जगत्पतित्वात् मयापि। अतस्त्वदिच्छयैवं जातमिति नात्र किञ्चित्प्रतिकर्तव्यमस्तीति सूचितम्। हे नृपते, पूर्वं त्वमशुभं भुङ्क्षे। लण्मध्यमपुरुषैकवचनम्, प्रश्नार्थे लट्। अशुभस्याल्पत्वात् नान्तरीयकमिवाशुभं गमिष्यतीति प्रथममशुभभोगप्रश्नः। अथवा। **दुःखान्तता निषिद्धे**ति। अथवा। को वा दुःखानुभवं मन्येत अतः प्रथममेव हे नृपते अशुभं भुङ्क्षे ॥ २२½ ॥ तदा स्वस्यालोचनामाह **नान्तं दानस्य धर्मस्ये**ति। दानस्यान्यस्यापि धर्मस्य अन्तो न **विद्यते**। गोदानप्रस्तावे कश्चिद्वञ्चको धूर्त आसन्नमरणां गां वञ्चयित्वा ब्राह्मणाय दत्वा मुक्तिं गत इति श्रूयते। स हि नगरमध्यवासे मृतायाः गौर्निर्हरणासमर्थः व्याजेन कञ्चिद्ब्राह्मणमाकार्य, तस्मै दानं दत्तवान्। ततो मुहूर्तत्रयानन्तरं गौर्मृता। ततो ब्राह्मणः प्रतिग्रहीता स्ववस्त्रं चाण्डालेभ्यो दत्वा तां गां बहिः निःसारितवान्। एवं ब्राह्मणं वञ्चयित्वा पश्चान्मृतः, यमेन पृष्टः चित्रगुप्तेन, **तस्य** वृत्तान्ते **कथिते** पूर्वं शुभफलभोगं करिष्यामीत्युक्त्वा, तत्रापि कौटिल्यं कृतवान्, तादृशगोदानस्य हि फलं यावद्गौर्जीवति, तावत्परलोके कामधेनुस्तद्वशे तिष्ठतीति। तथा यमेनोक्तः मुहूर्तत्रयं कामधेनुस्त्वदधीना स्थास्यतीति। कामधेनुं प्रत्याह 'व्याघ्रो भूत्वा यमं भक्षये'ति। ततो व्याघ्रेणोपसृतः यमः भीतो विष्णुं शरणं ययौ। यत्रास्ते भगवान् ब्रह्मादिभिर्वृतः। तत्र पश्चादयमपि गतः, कामधेन्वा नीतो, विष्णुसाक्षात्कारे मुक्त इति। यत्र तादृशगोदानस्याप्यनन्तफलत्वम्, तदा विधानपूर्वकं दत्तायाः किं वक्तव्यमिति। अन्यस्याप्येवं धर्मस्यानन्तफलत्वम्। फलं हि द्विविधम्, इह लोके यशः, परलोके स्वर्ग इति। तदुभयमाह **यशो लोकश्च भास्वर** इति। अनन्तं यशः, अनन्तो लोक इति। तामसधर्मेऽपि तथेति तत्पातालोपभोग्यमिति तद्व्यावृत्त्यर्थं **भास्वर** इति। दानस्य फलरूपं यशः अनन्तम्, लोकश्चानन्त इति। **लोकस्य भास्वत** इति पाठे अनन्तं यशः शुभं चेति पूर्वोक्तं सङ्ग्राह्यम्। भुङ्क्ष इति भुञ्ज इति वा क्रिया। भास्वतो लोकस्योत्तमदेहस्य वा। पूर्वं सम्बन्धि अशुभं भुञ्ज इति। देवेति सम्बोधनं परिज्ञानार्थम्। उक्तवानित्यर्थादिति। एवं सति पतेति स यमः प्राह। यतः स ब्राह्मणातिक्रमं दृष्ट्वा क्रोधवान्। पतेति तस्माल्लोकात् भूलोके। **नीचयोनिभूतो नरकः भूमावेव, नान्यत्रे**ति। ततो यज्जातं तदाह **तावदद्राक्ष**मिति। पतन्नात्मानं कृकलासमद्राक्षम्, कर्मणा देहसम्बन्धेन। ग्रहणपरित्यागयोः परिज्ञानं योगज्ञानभक्तिष्वेव। तद्देहाद्द्वैतादात्मपदम्। बहिर्मुखत्वादस्य कर्मदोषो जात एव। **प्रभो** इति। त्वमेव समर्थस्तादृशकर्मभ्यो मोचयितुमिति सूचितम्। **जीवस्य ग्रहणपरित्यागज्ञानमेव नास्ति, कुतो मोचनपरिज्ञानम्**। एतादृशेऽर्थे भगवानेव शरणमिति ॥ २४ ॥

### श्रीविट्ठलरायात्मजश्रीवल्लभकृतलेखः

**नान्तं दानस्ये**त्यत्र। न अन्तो यस्य तत् नान्तम्। नशब्देन समासः। अनन्तं यश इत्यर्थः। **तावदद्राक्ष**मित्यत्र। **कर्मणे**ति। योगादिरहितेनेति शेषः। अयं देहसम्बन्धो भोगार्थमेवेति भावः। योगेति। अत एव तृतीयस्कन्धे परिज्ञातुर्गर्भस्थजीवस्य स्तुतौ शरणगमनमेव निरूपितम्। नन्वेतावद्धर्मकर्तुः कथं दोषसम्बन्ध इत्यत आहुः **बहिर्मुखत्वा**दिति।

### श्रीसुबोधिनी-सारः

गवां लक्षमहं न प्रतीच्छे नेच्छाम्ययाचकत्वादित्युक्त्वा स्वामी निरगात् गवामयुतं तुभ्यम् अन्यत् अधिकं लक्षं चोक्तं दास्याम्येषा स्वामिने दीयतामित्यनुनीतोऽपरो दुराग्रही गवां लक्षमन्यदयुतं नेच्छामीत्युक्त्वा ययौ सा गौरन्यस्मै दत्तेति वाल्मीकीयोत्तरकांडे कथा इति पापबीजम् ॥ २१ ॥ एतस्मिन्मन्वंतरे प्रारब्धभोगानंतरमहं याम्यैर्दूतैर्यमलोकं नीतः हे देवदेव हे जगत्पते यमेन तत्र लोके पृष्टश्च ॥ २२ ॥ हे नृपते पूर्वमादौ अशुभं दुःखं त्वं भुंक्षे उतापि शुभं भुंक्षे इति दानस्य धर्मस्य

भास्वतो दिव्यस्य लोकस्यांतं समाप्तिं न पश्येऽहं नेक्षे ॥ २३ ॥ हे देव पूर्वमशुभं भुंजे इत्यहं प्राह स च यमः पतेति मामाह पतन्नहं तावत् तत्क्षण एव कृकलासं सरटमात्मानमद्राक्षं हे प्रभो ॥ २४ ॥

### गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

एवमुक्तयोर्द्वयोर्मध्ये गोस्वामी "हे राजन् ! यद्यपि त्वं दातुं समर्थोसि तथापि गोविक्रयस्य निषिद्धत्वात् एनां स्वकीयां गां विहाय निष्कृतित्वेन त्वया दीयमानं गवां लक्षमहं न प्रतीच्छे न प्रतिगृह्णामि" इत्युक्त्वा स्वगां गृहीत्वा अपाक्रमत् प्रययौ । तथा अपरः प्रतिग्राह्यपि विक्रयस्य निषिद्धत्वात्त्वद्वचनविश्वासाभावाच्चाहमपि यत्त्वया गवां लक्षं प्रतिश्रुतं ततोन्यदधिकमपि गवामयुतं यदि त्वं ददासि तदप्येनां विहाय गृहीतुं नेच्छामि इत्युक्त्वा ययौ ॥ २१ ॥ एतस्मिन्नन्तरे यावत्स्वदोषनिस्तारोपायं कुर्यां तन्मध्य एव याम्यैर्दूतैरहं यमक्षयं यमस्थानं प्रति नीतः प्रापितः । तत्र यमसदने हे देवदेव जगत्पते ! यमेनाहं पृष्टश्च ॥२२॥ प्रश्नमेवाह—पूर्वमिति । हे नृपते ! पूर्वं प्रथमतस्त्वं किमशुभं पापफलं भुङ्क्षे भोक्ष्यसे उताहो अथवा पुण्यकर्मफलं भोक्ष्यसे ? एवं पृष्टश्चाहं स्वकृतस्य दानस्य तज्जन्यस्य धर्मस्य पुण्यस्य तथा भास्वतः प्रकाशमानस्य स्वर्गादिलोकस्य पुण्यफलस्यान्तमवधिं न पश्यामि ॥ २३ ॥ तदा यमं प्रत्युक्तवान् हे देव यम ! अहं पूर्वमशुभमेव भुञ्ज इति । तदा स यमः पत 'अपकृष्टां योनिं त्वं गच्छ' इति प्राह । 'त्वमेव पतितोद्धारणे समर्थोऽसि' इति सूचयन् संबोधयति—प्रभो इति । पतन् नीचां योनिं गच्छन्नहं तावत् तत्क्षण एवात्मानं कृकलासरूपमद्राक्षम् ॥ २४ ॥

### अन्वितार्थप्रकाशिका

नेति ॥ एवमुक्तयोर्द्वयोः मध्ये गोस्वामी हे राजन् ! यद्यपि त्वं दातुं समर्थोऽसि तथापि गोविक्रयस्य राजप्रतिग्रहस्य च निषिद्धत्वात् त्वया दीयमानं गवां लक्षमप्यहं न प्रतीच्छे न प्रतिगृह्णामि । तङार्षः । इत्युक्त्वा स्वामी स्वकीयां गां विहायैव अपाक्रमत् प्रययौ । दीर्घाभाव आर्षः । तथा अपरः प्रतिग्राह्यपि दुराग्रहः विक्रयस्य निषिद्धत्वात्त्वद्वचने विश्वासाभावाच्चाहमपि यत्त्वया गवां लक्षं प्रतिश्रुतं ततोऽन्यदधिकमपि गवामयुतं यदि त्वं ददासि तदप्येनां विहाय ग्रहीतुं नेच्छामि इत्युक्त्वा ययौ ॥ २१ । एतस्मिन्निति ॥ हे देवदेव जगत्पते ! एतस्मिन्नन्तरे याम्यैर्दूतैरहं यमक्षयं यमस्थानं संयमनीं प्रति नीतः । इतः पूर्वं पापाभावान्नेतुमशक्य इति भावः । अन्तरेऽमितस्यायुषोऽन्ते मरणावकाश इत्यर्थो वा तत्र यमसदने यमेन पृष्टः ॥ २२ ॥ पूर्वमिति ॥ हे नृपते ! पूर्वं त्वं किमशुभं पापम् अजानता विप्रगव्याहरणपापफलं भुङ्क्षे भोक्ष्यसे उताहो अथवा शुभं पुण्यकर्मफलं भोक्ष्यसे दानस्य तज्जन्यस्य धर्मस्य तथा भास्वतः प्रकाशमानस्य स्वर्गादिलोकस्य पुण्यफलस्य अन्तमवधिं न पश्ये न पश्यामि । तङार्षः । उत्तरार्द्धं यमस्य स्वस्य वा वाक्यम् ॥ पूर्वमिति ॥ तदाहं यमं प्रत्युक्तवान् हे देव यम ! अहं पूर्वमशुभमेव भुञ्ज इति तदा स यमः पत अपकृष्टां योनिं गच्छेति मां प्राह स्म । ततश्च हे प्रभो ! पतन् अहं तावत् तत्क्षण एवात्मानं कृकलासरूपमद्राक्षं तत्पापस्य तादृशफलत्वात् । रामायणादौ तु विप्रयोस्तथा शाप उक्तः ॥ २३-२४ ॥

### श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्

हे राजन् । अहं न प्रतीच्छे गोप्रतिग्रहं न कुर्वे अन्यल्लक्षोपरि अयुतं दशसहस्रं इमां विना नेच्छामीत्युक्त्वा धेनुं त्यक्त्वा अपरः प्रतिग्राही ययौ ॥ २१-२२ ॥ पूर्वं प्रथमं अशुभं भुंक्षे उताहो अथवा शुभं तव दानादीनामंतं न पश्ये । भास्वतः प्रकाशमानस्य लोकस्य च ॥ २३ ॥ हे देव हे यमराज पूर्वमशुभंभुजे इति मयोक्तो यमः त्वं पत इति मां प्राह हे प्रभो श्रीकृष्ण तावत् पतन् आत्मानं स्वदेहं कृकलासं अहमद्राक्षं ॥ २४ ॥

### भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

नाहमिति । हे राजन्, एवमुक्तयोस्तयोरन्यतर इति शेषः, अहमप्रतिग्रहकृत्, भवामि । अतः न प्रतीच्छे वै । मद्गवितरगोग्रहणं न करिष्याम्येव । इति उक्त्वा, स्वामी अप्रतिग्रहीता गोपतिः, अपाक्रमत् ययौ । अन्यदेतद्गवितरत्, गवां अयुतमपि, अहं न इच्छामि । इत्युक्त्वा, अपरः, ययौ । लक्षं त्वया प्रतिश्रुतमन्यदपि गवामयुतं यदि दास्यसि, तथाप्येनां विहाय नेच्छामीत्युक्त्वाऽपरोऽपि ययावित्यर्थः ॥ २१ ॥ ततश्चेति ॥ ततश्च, हे परम परमेश्वर, तव मायया, कालयोगेन प्रवृत्तेनेति शेषः । मृतः परासुतां प्राप्तः, एतस्मिन्नन्तरे, याम्यैः दूतैः, यमक्षयं यमालयं नीतः, अहं हे देवदेव, हे जगत्पते, तत्र यमसदने, यमेन पृष्टः ॥ २२ ॥ प्रश्नमेवाह ॥ पूर्वमिति ॥ हे नृपते, त्वं पूर्वं प्रथमं, अशुभं पापफलं भुङ्क्षे । उताहो किं वा, शुभं सुकृतफलं, भास्वतः प्रकाशमानस्य, दानस्य दानसंबन्धिनः, धर्मस्य, लोक्यते इति लोकः फलं तस्य, धर्मसंबन्धिनः फलस्येत्यर्थः । अन्तं, न पश्ये अवधिं न पश्यामीत्यर्थः ॥ २३ ॥ पूर्वमिति ॥ हे देव, पूर्वं प्रथमं, अशुभं पापफलमेव भुञ्जे । इति एवं मया प्रोक्ते सतीत्यर्थः । स यमः, पत निरये इति शेषः । इत्येवं प्राह, हे प्रभो, तावत् अहं, पतन्सन्, आत्मानं कृकलासं, अद्राक्षं दृष्टवानस्मि ॥ २४ ॥

### कृष्णप्रिया

नाथ ! मेरा निवेदन कर ऋषिवर निरुपाय थे। उनकी भी धार्मिक समस्या थी, अप्रतिग्राही दान नहीं ले सकते थे, बदले में लेने से गोविक्रय का प्रायश्चित्त होने जा रहा था, इसलिये धर्मपरवश होकर मुझे कहा राजन् ! मैं इसके बदले में कुछ नहीं लूँगा। यह कहकर गाय का स्वामी चला गया। जो प्रतिग्राही था वह भी इसी प्रकार के धर्मसङ्कट से कहा राजन् ! आप इसके बदले में मुझे एक लाख ही नहीं, दस हजार और भी गौएँ दो तो भी लेने वाला नहीं। यह कहकर प्रतिग्राही विप्रवर भी चले गये ॥ २१ ॥ हे जगन्नाथ ! हे देवाधिदेव ! मेरी आयु समाप्त होने पर यमराज के किङ्कर आये और मुझे यमपुरी में ले गये और महाराज धर्म ने मुझे पूछा ॥ २२ ॥ राजन् नृग ! आप प्रथम अपने पाप का फल भोगना चाहते हो या पुण्य का ? राजन् ! आप अपने दान और सुकृतों के फलस्वरूप दिव्य एवं उत्तम लोक प्राप्त करने वाले हो, जिसकी कोई अवधि ही नहीं है ॥ २३ ॥ नाथ ! तब विनयपूर्वक महाराज श्री धर्मराज को कहा कि हे देव ! प्रथम मैं अपने पाप का फल भोगना चाहता हूँ। तब धर्मराज ने उसी क्षण कहा "कि तुम गिर जाओ"। धर्मराज के कहते ही मैं वहाँ से गिरा और गिरते हुए मैंने देखा कि मैं गिरगिट हो गया हूँ ॥ २४ ॥

**ब्रह्मण्यस्य वदान्यस्य तव दासस्य केशव। स्मृतिर्नाद्यापि विध्वस्ता [१]भवत्संदर्शनार्थिनः ॥ २५ ॥**

**[२]स त्वं कथं मम विभोऽक्षिपथः[३] परात्मा योगेश्वरैः श्रुतिदृशामलहृद्विभाव्यः।**
**साक्षादधोक्षज उरुव्यसनान्धबुद्धेः स्यान्मेऽनुदृश्य[४] इह [५]यस्य भवापवर्गः ॥ २६ ॥**

**देवदेव जगन्नाथ गोविन्द पुरुषोत्तम। नारायण हृषीकेश पुण्यश्लोकाच्युताव्यय ॥ २७ ॥**
**अनुजानीहि मां कृष्ण [६]यान्तं देवगतिं विभो[७]। यत्र क्वापि सतश्चेतो भूयान्मे त्वत्पदास्पदम् ॥ २८ ॥**

### कर्दमक्षमा

अन्वयः—ब्रह्मणस्य, वदान्यस्य, तव, दासस्य, हे, केशव, भवत् संदर्शनार्थिनः, अद्य, अपि, स्मृतिः, न, विध्वस्ता ॥ २५ ॥ हे, विभो ! परात्मा, योगेश्वरैः, श्रुतिदृशा, अमलहृदविभाव्यः, साक्षात्, अधोक्षजः, यस्य, इह, भवापवर्गः, स्यात्, तस्य, अनुदृश्यः, स्यात्, सः, त्वम्, मम, अक्षिपथः, कथम्, जातः ॥ २६ ॥ हे देवदेव ! जगन्नाथ ! गोविन्द ! पुरुषोत्तम ! नारायण ! हृषीकेश ! पुण्यश्लोक ! अच्युत ! अव्यय ! ॥ २७ ॥ कृष्ण ! विभो ! देवगतिम्, यान्तम्, माम्, अनुजानीहि ? यत्र, क्व, अपि, सतः, मे, चेतः, त्वत्, पदास्पदम्, भूयात् ॥ २८ ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

दुर्घटेन श्रीकृष्णदर्शनेन विस्मितः सन्नात्मनो भाग्यमभिनंदति। स त्वमिति। हे विभो स त्वं ममाक्षिपथो लोचनगोचरः सन्कथं साक्षात्प्रत्यक्षऽसोत्यर्थः। किमत्राश्चर्यं तदाह। पर आत्मा अत एव योगेश्वरैरपि श्रुतिदृशा उपनिषच्चक्षुषाऽमले हृदि विभाव्यश्चित्यः। यतोऽधोक्षजः अक्षजमैंद्रियकज्ञानं तदधोऽर्वागेव यस्मात्सः। यस्येह भवापवर्गो भवेत्तस्य भवाननुदृश्यः स्यात्। उरुव्यसनेन कृकलासभवदुःखेनांधबुद्धेस्तु ममैतच्चित्रमित्यर्थः ॥ २६ ॥ उद्रिक्तभक्तिर्बहुधा संबोधयन्नाह। देवदेवेति ॥ २७ ॥ अनुज्ञापयति। अनुजानीहीति। देवलोकेऽपि सतो वर्तमानस्यात्मनो मनसः सन्निधिं प्रार्थयति। यत्र क्वापीति। तत्पदमास्पदं विषयो यस्य तथाभूतं भूयादिति ॥ २८ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

स्मृत्यनाशे हेतुः—तव दासस्येति। न हि नारदादिवद्भगवद्भक्तानां जन्मांतरीयस्मृतिनाशो भवतीति भावः। दास्यत्वे च हेतुत्रयं ब्रह्मण्यस्येत्यादि। ब्राह्मणसेवा च वदान्यानामेव तया च भगवद्दर्शनेच्छोत्पद्यते। तया तद्दास्यं जायत इति स्मृतिर्ममेति शेषः। अद्य कृकलासदेहे तथा महाभिमानिदेवदेहेऽपि न ध्वस्ता भ्रष्टा तत्र हेतवः—ब्रह्मण्यस्येत्यादयः। ब्रह्मण्यस्य ब्राह्मणभक्तस्य, तत्रापि वदान्यस्य यथेष्टदानेन तांस्तोषयतः, तत्रापि दासस्य कर्मसाद्गुण्यार्थं तत्तत्कर्म समर्पणेन त्वदीयं दास्यभक्तिं प्राप्तस्य ततो भवन्महिमज्ञानेन भवतः संदर्शनार्थिनः। दास्ये हेतुः—हे केशव "को ब्रह्मेति समाख्यात ईशोऽहं सर्वदेहिनाम्। अवांतरांशसंभूतो तस्मात्केशवनामवान् ॥" इति हरिवंशोक्तवैभव एवंभूतं त्वां त्यक्त्वा कस्मायन्यस्मै सत्कर्म

१. तव—विज. । २. नास्ति श्लोका विज. । ३. क्षिगतः—वीर. । ४. योगी—च. पु. टि. । ५. शान्ते—वीर. । ६. यातुं—वीर. विज । ७. प्रभो—श्रीधर. वंशी. जीव. वीर. विज. ।

समर्पय इति भावः। संदर्भस्तु ब्रह्मण्यस्य वदान्यस्य च तव योऽहं दासः ब्रह्मण्यवदान्यत्वांशेन त्वदनुगस्येत्यर्थः। न तु त्वत्सेवैकपुरुषार्थिन इति। भवत्संदर्शनार्थिन इति—भवतः परमब्रह्मण्यत्वं वदान्यत्वं च श्रुत्वा दर्शनकौतुकिन इत्येवार्थः। न तु तदर्थानुरागिण इति। तस्मिन्नपि तद्गुणद्वयस्यापनेन तदंशमात्रव्यक्तेः गत्यंतरप्राप्तेश्च। अत एव साधकदशायामप्यंबरीषादिवत्सेवादिवत्सेवादिलक्षणसाक्षाद्भक्तिनादृतेति विघ्नो जातो न तु तद्वद्दुर्वाससा क्रोधे विघ्न इति गम्यते। भगवद्दर्शनादिकं तु यथाकथंचिदभिलाषगुणादिति ज्ञेयम्। विश्वनाथस्तु नृगस्य भक्तिमिश्रकर्मित्वाद्गुणा भूता या भक्तिस्तयैव भगवदग्रे दासस्येति विनयव्यंजिकोक्तिः। भवत्संदर्शनार्थिन इति कदाचिदतिसुंदरश्रीविग्रहमंदिरादिश्रीगीताश्रीभागवतादिशास्त्रप्राप्त्युत्कंठस्य महाभागवतस्यापेक्षणीयं नृगेण यद्वोदारत्वात्संपादितं ततश्च तेन संतुष्यता भोराजंस्तव भगवद्दर्शनं भूयादित्याशीर्यदा दत्ता तदैव नृगस्य भगवद्दिदृक्षाऽभूदिति गम्यते॥ २५॥ कृष्णदर्शनदौर्लभ्यमाह—दुर्घटेत्यादिना। इत्यर्थ इति। साक्षादव्ययस्य प्रत्यक्षार्थकत्वादयमर्थः। प्रत्यक्षस्यानेकविधत्वात्साक्षादिरयुक्त्या चाक्षुषप्रत्यक्षमेव न लभ्यतेऽत उक्तम्—अक्षिपथः सन्निति। अत्र चाक्षुषप्रत्यक्षे। तदाश्चर्यम्। न हि परात्मा चक्षुषा गृह्यते। 'दृश्यते त्वग्र्यया बुद्ध्या' इत्युक्तेः 'नैतत्स्वरूपं भवतोऽसौ पदार्थभेदग्रहैः पुरुषोवदीक्षेत' इति ब्रह्मणोक्तेश्च। अत एव चक्षुरिंद्रियागोचरत्वादेव। अपि शब्दात्किमुत मादृशैरित्यर्थः। यतो हेतोः। अधोक्षज इंद्रियजन्यज्ञानागोचर इत्यर्थः। यस्य पुंसः। भवापवर्गस्संसारांतः। साक्षात्पदमत्रापि योज्यं साक्षादनुदश्य इति। इत्यर्थ इति—बहुजन्मसुकृतावाप्तचरमदेहस्य तव दर्शनमुचितं तानाद्यनधिकारितिर्यग्जन्मनः कथं जातमिति न जाने इति भावः॥ २६॥ दशभिः संवुद्धिभिर्भगवतः परमवैभवं द्योतयन्ननुज्ञापयत्यनुज्ञां प्रार्थयति तद्दर्शनशुद्धचेताः स्वस्य श्रवणकीर्तनादिशुद्धभक्त्यभावेऽपि तद्दर्शने तस्य कारुण्यं प्रशस्यानुज्ञां ग्रहीष्यन्बहुधा संबोध्य प्रार्थयते युग्मेन। प्रथमदेवेति देवगतिगमनानुज्ञायां तद्गतिं प्राप्तस्यापि तस्यैव परमाश्रयत्वेन, द्वितीयदेवेति अधुना त्वमपि देवो जातः किमर्थं मां प्रार्थयसे तत्राह—हे देवानां ब्रह्मादीनामपि त्वं देवोऽसि मम तु का वार्तेति। ननु यद्यहं ब्रह्मादीनामपि देवस्तर्हि क्षुद्रस्त्वमीदृशप्रार्थनधार्ष्ट्येन कथं न संकुचसि तत्राह—हे जगत्पते, जगन्मध्यपातित्वेन प्रार्थनार्होऽस्मीति भावः। ननु सत्यादिलोकस्था ब्रह्मादय एव महांतोऽहं मर्त्यलोकस्थो न तादृशोऽतस्तानेव प्रार्थयस्व तत्राह—हे गोविंद, कृपया गां भुवं विंदतीति तथाभूत मादृङ्मूढपालनायैव भुवमागतोऽसीति भावः। किञ्च—हे पुरुषोत्तम दीनदयालो तेन त्वादृशकृपालव इति त्वं स्वभावत एव सर्वजीवाश्रयोऽसीत्याह—नारायणेति। नारं नरसमूहस्तस्यायनाश्रयोभूतेत्यर्थः। एतादृशप्रार्थनाप्रवर्तकोऽपि त्वमेवेत्याह—हे हृषीकेश सर्वेन्द्रियप्रवर्तक। त्वमेव पावकत्वात्प्रार्थनायोग्य इत्याह—हे पुण्यश्लोक नामोच्चारणादिना पावक मादृशदीनपालने च्युतिरहितत्वादपि त्वमेव प्रार्थयितुं योग्य इत्याह—हे अच्युत। किञ्च—अनन्तभक्ताभीष्टदानैरपि न क्षीयते इत्याह—हे अव्ययेति॥ अत्र विश्वनाथः—देवानां देवोऽपि त्वं जगतामपि नाथत्वान्मन्नाथो भव। गोविंदेति कृपादृष्ट्या मां विंदस्व। अत्र हेतुः—पुरुषेषु विष्ण्वादिषूत्तमः। नारा जीवा अयनमधिष्ठानं यस्येति मां दुर्जीवमप्यधितिष्ठ। हृषीकेश मदिंद्रियाण्यात्मसात्कुरु। पुण्यश्लोक तवैषानृगमोचनी कीर्तिरभूदेव। अच्युत मदन्तःकरणाद्विच्युतो मा भव। अव्ययेति अत्र न ते कोप्यपचय इति ध्वनयः॥ २७॥ सतः स्थितस्य। यत्र क्वापि यस्मिन्कस्मिन्योनौ स्थाने वा त्वत्पदमेवास्पदं विषयो यस्य तथाभूतं मच्चेतो भूयादिति॥ २८॥

**श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी**

स्मृतिर्ममेति शेषः। साक्षात्तथानुक्तिविनयादिना अद्य कृकलासदेहे तथा महाभिमानिदेवदेहेपि तद्विरोधिनि ध्वस्ता न भ्रष्टा तत्र हेतवो ब्रह्मण्यस्येत्यादयः प्रथमतो ब्रह्मण्यस्य ब्राह्मणभक्तस्य तत्रापिवदान्यस्य यथेष्टदानेन तान् परितोषयतः तत्रापि तव दासस्य कर्मसाद्गुण्यार्थं तत्तत्कर्मसमर्पणेन त्वदीयदास्यभक्तिं प्राप्तस्य ततो भवन्महिमज्ञानेन भवतः सन्दर्शनं तदर्थिमः दास्ये हेतुः केशव—

"को ब्रह्मेति समख्यात ईशोहं सर्वदेहिनाम्। आवान्तवाङ्गसम्भूतो तस्मात्केशवनामवान्॥

इति तन्नाम्ना श्रीहरिवंशोक्तवैभव एवम्भूतं त्यक्त्वा कस्मै वा अन्यस्मै सत्कर्मसमर्पय इति भावः। यद्वा, भृगुसाक्षितया ब्रह्मण्यः श्रीबलिसाक्षितयात्मपर्य्यन्तस्य वदान्यश्च यस्त्वं तस्य तव योहं दासस्तत्तत्कर्मसमर्पयतस्तस्य मम शेषं समानम् एवमप्यस्य कृकलासत्वं सुसाध्यायामपि श्रवणादिलक्षणसाक्षाद्भक्तावप्रवृत्तेस्तत्र अविश्वासदोषेण दानादिकर्मण्यपि वैफल्यापातात् सङ्कल्पमाहात्म्येन तु पश्चात्तद्दर्शनादिकं किन्तु ते दास्यदिदृक्षे अपि फलविशेषप्राप्त्यर्थे एव नतु निष्कामे देवगतिफललाभेन कारणानुमानात् अत एव वदान्यस्येति भगवन्तं विशेष्य पर्य्यवसाने तु परमगतिर्भविष्यति सत्यं दिशत्यर्थितमर्थिनो नृणामित्यादौ तथा त्वत्प्राप्तेः दर्शनादेवनश्वरं तद्बीजरूपत्वाच्चेति ज्ञेयं पूर्णयोर्ब्रह्मण्यवदान्यत्वयोरंशानुवर्त्तित्वाद्योहं दास इव दासस्तथा तत्तद्गुणमात्रेण नतु त्वन्निजदासवद्विचित्रेण गुणवृन्देन चमत्काराद्भवद्दर्शनकाङ्क्षी च योहं तस्य मम तत्तत्त्वद्गुणां-

शानुभवप्रभावान्नाद्यापि तत्तत्स्मृतिर्विध्वस्ताभूत् प्रत्युत तादृशत्वद्दर्शनमपि जातमित्यर्थः। अथ तदिदमनुमिमे त्वदीयब्रह्मण्यत्व-वदान्यत्वयोरंशानुकरणमप्यभिमानमयमेव ममासीत् येनाद्यापि त्वदग्रेपि तत्प्रकटनधार्ष्ट्यमेव जातं पूर्वमपि नत्वम्बरीषादि-विधिशाश्वेष्वादरो जातः तत एव तादृशदानकर्मण्यपि विघ्नो बभूव तथापि त्वत्कारुण्यप्रभावादीदृशत्वद्दर्शनमभूत् तादृगभि-मानाविच्छेदादेव स्वर्गित्वं भजन्नपि त्वत्कारुण्यात्तु सत्यं दिशत्यर्थितमर्थितो नृणामिति न्यायेन त्वदनुवर्तित्वपि भविष्यतीति भावः ॥२५॥ स परमदुर्लभः किं वा अनिर्वचनीयमाहात्म्यस्त्वं विभो हे सर्वव्यापकेति चाक्षपथयोग्यत्वं तथा परमात्मा परमात्मे-त्यात्मसाक्षात्कारादपि तत्साक्षात्कारस्य दुर्घटत्वं सूचितं योगो भक्तियोगः तस्मिन्नीश्वरैः समर्थैः परमभक्तैरित्यर्थः। योजना तु तैः कृता यद्वा कथं केन प्रकारेणाक्षपथं प्रयातोसि तन्तु विचारेणापि न लभे इत्यर्थः। यतः पूर्वोक्तप्रकारेणाधोक्षजो ज्ञानाविषयो यः स साक्षात् स्यात् काक्वा नैवेत्यर्थः। तत्रापि मे मम उरुव्यसनान्धबुद्धेः साक्षात्स्यात् काक्वा नतरामित्यर्थः। यतो यस्य भावापवर्ग उपस्थितोस्ति तेनैवानुदृश्यः दृष्टसदृशो भवसि सर्वातीतत्वादानन्त्याच्च तस्मान्मम स्वर्गितां प्राप्तस्य त्विदं दर्शन-मतीव चित्रमिति भावः कथं जातमिति तं कारुण्यप्रकारं स्वशक्तिप्रकारं च स्वयमेव वेत्सीति भावः॥ २६ ॥ तद्दर्शनप्रभावेन जातशुद्धभक्तिश्रद्धः स्वस्य प्राचीनश्रवणकीर्त्तनादिशुद्धभक्त्यभावेपि तद्दर्शनं जातमिति तस्य कारुण्यं प्रशस्यानुज्ञां ग्रहीष्यन् नामकीर्तनप्रियतमत्वेनादौ तैरेव स्तुत्या तं सम्बोधयन् प्रार्थयते—देवदेवेति युग्मकेन। तत्र प्रथमं देवगतिगमनानुज्ञायां तथा तद्गतिं गतस्यापि परमाश्रयत्वे च तत्रैव योग्यतां दर्शयति—देवदेवेति। नन्वहं देवानां ब्रह्मादीनामपि देव इत्यतिक्षुद्रस्त्वमी-दृशप्रार्थनधार्ष्ट्येन कथं न सङ्कुचसीत्याशङ्क्याह—हे जगन्नाथेति। एवं जगन्मध्यपातित्वेपि प्रार्थनार्होऽस्मीति भावः। नन्वा-सतान्तावद्ब्रह्मादयः जगति सत्यलोकादिगता एव महान्तः त्वं मर्त्यलोकगतः कियानित्याशङ्क्याह—हे गोविन्द! कृपया गां पृथिवीं विन्दतीति तथाभूत ततः सम्प्रति तेभ्योपि वयं त्वत्कृपाभाजनानीति भावः। नन्वत्रापि महान्तः सन्ति तत्राह—हे पुरुषोत्तम इति। भवदुचितां दीनदयालुतामिवालम्ब्येदृशं प्रार्थये नतु स्वगुणमिति भावः। किञ्च हे नारायण स्वभावत एव सर्वजीवाश्रय हे हृषीकेश एतादृशप्रार्थनादीनामपि प्रवर्तक! हे पुण्यश्लोक एतादृशकृपाकीर्तिसुधाकर! हे अच्युत एतादृश-शरणागतदीनजनपालनकृते च्युतिरहित! हे अव्यय अनन्तभक्ताभीष्टदाननैरन्तर्य्येऽपि सर्वदा परिपूर्ण इति युक्तमिदं प्रार्थनमिति भावः। ननु यादवविशेषोहं नाहं भवदभिप्रेतो भगवानित्याक्षेपान्तरमाशङ्क्याह—हे कृष्ण! स्वयं भगवान् कृष्णस्तु भगवान् स्वयमिति प्रसिद्धेः अत एव हे विभो सर्वतः परिपूर्णेति ॥ २७-२८ ॥

### श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी

स्मृतिर्ममेति शेषः। साक्षात्तथानुक्तिर्विनयादिनाः; इयं कृकलासदेहे तथा महाभिमानिदेवदेहेऽपि तद्विरोधिन्यपि न ध्वस्ता न भ्रष्टा। तत्र हेतवः—ब्रह्मण्यस्येत्यादयः। दासत्वादेव भवतो भवतां वा, श्रीप्रद्युम्नाद्यपेक्षया सन्दर्शनं साक्षाद्दर्शनं तदर्थिनस्तदेकापेक्षकस्येत्यर्थः। दास्ये हेतुः—केशव! हे साक्षात् परमेश्वर! तथा च श्रीहरिवंशे ( भविष्य-प० ८८।४८ )-'को ब्रह्मेति समाख्यात ईशोऽहं सर्व्वदेहिनाम्। आवां तवांगसम्भूतौ तस्मात् केशव-नामवान् ॥' इति। किंवा केशिमथनेति—अनेन श्रीवृन्दावनक्रीडायाः प्रान्तसूचनेन सा सर्व्वैव संगृहीता, तया चाशेषभगवत्ताप्रकटनमेवाभिप्रेतम्। इति तस्य पूर्वं श्रीजग-न्नाथदर्शनप्रभावादेव श्रीद्वारकेश्वरोपासनं जातमिति ज्ञेयम्। जगन्नाथत्वेन स्तोष्यमाणत्वात् तद्दर्शनं सम्भाव्यम्, अत एव द्वार-कोपकण्ठकूपे पतनम्। एवं श्रीभगवद्दास्येनैव तत्रापि तद्दर्शनैकाकाङ्क्षया तस्य तज्ज्ञानादिकमपि ज्ञेयम्। तथापि कृकलासत्वं श्रीभगवत इव तद्भक्तानामपि लोकशिक्षार्थप्रवृत्त्या विप्रस्वहरणदोषप्रदर्शनार्थं हरिणत्वादि-स्वीकारवत्। एतच्च श्रीभागवता-मृतोत्तरखण्डे विवृतमेव ॥ २५ ॥ स परमदुर्लभः, किंवा अनिर्व्वचनीयमाहात्म्यस्त्वम्, विभो! हे सर्वव्यापकेति अक्षपथा-योग्यत्वम्, तथा परात्मा परमात्मेति आत्मसाक्षात्कारादपि तत्साक्षात्कारस्य दुर्घटत्वं सूचितम्। किञ्च, 'मे' मदीये इह अस्मिन् कूपे जन्मनि वा। एवं मे इत्यस्यापौनरुक्त्यं तस्याप्यनुदृश्य ईषदेव दृश्यः। अन्यत्तैर्व्याख्यातम्। यद्वा, हे मम विभो! हे मदीश्वर! ननु ईश्वरो दासानां दृश्यः स्यादेव? तत्राह—परात्मेत्यादि। योगो भक्तियोगस्तस्मिन्, ईश्वरैः समर्थैः परम-भक्तैरित्यर्थः। श्रुतिदृशा वेदार्थतत्त्वज्ञानेन यदमलं हृत् तस्मिन् विशेषेण भाव्यस्तत्रापि साक्षात् स्वयं योऽधोक्षजोऽवतारीत्यर्थः। किंवा शकटभञ्जने पूतनावधे शकटाक्षादधोऽजायत इत्येवमधोक्षजनाम्ना गोकुले प्रसिद्धः श्रीयशोदानन्दन इत्यर्थः। यस्य भवापवर्गः स्यात्, उ वितर्के, तस्यैव इह श्रीद्वारकायां दृश्यः स्याः। अन्यत् समानम् ॥ २६ ॥ अनुज्ञां ग्रहीष्यन् संकीर्त्तन-प्रियत्वेनादौ श्रीभगवतो नामसंकीर्त्तनेन सम्बोधयन् स्तौति—देवेति। देवानां जगत्पूज्यानां श्रीब्रह्मादीनामपि देव! यतो जगन्नाथ श्रीनीलाद्रिपते! तत्र प्राक् स्वयं श्रीब्रह्मणा अधुनापि देवैस्तत्पूजनात्, अतो गोविन्द! पृथ्व्यां दारुब्रह्मरूपेणावतीर्ण! साक्षाद्भगवन्! अत एव पुरुषोत्तम! पुरुषोत्तमाख्ये स्वक्षेत्रे तत्संज्ञया प्रसिद्ध! अतो नारायण! देवदुर्लभनिजोच्छिष्टमहाप्रसाद-वर्गप्रदानादिना सर्वजीवाश्रय! न केवलं मद्रूपेण बहिरेवासि, किन्त्वन्तश्चेति सेवकानां सर्वशक्तिसम्पादकत्वमाह—हृषीकेश! निजसेवादौ सर्वेषां सर्वेन्द्रियप्रवर्त्तक! यद्वा, तत्रापि भक्तवात्सल्यभरमाह—हृषीकेश! स्वभक्तवाक्सत्यतार्थमेकदा दीर्घकेशा-विर्भावनात् तदाख्यानं तत्रतानृपतेर्बलिभोगप्रदानात् प्रसिद्धमेव, अतः पुण्या उत्कृष्टाः श्लोकास्तत्तन्माहात्म्यनिबन्धनानि

कवीनां पद्यानि यस्मिंस्तथाभूत उत्कृष्टभक्तवात्सल्यादियश इति वा। कुतः? अच्युत ( भा० ९।४।६३ ) 'अहं भक्तपराधीनः' इत्यादि-स्ववागर्थाच्युतिरहित! किंवा सदा नीलाचलनिवासिन्! किञ्च, अव्यय! निरन्तरं तत्तन्महाप्रसादप्रदानेनापि न व्ययो धनादित्रुटिः, किंवा अकालेऽपि भोगादि—ह्रासो यस्य तथाभूत! साक्षान्महालक्ष्म्या सेव्यमानत्वात्, अथवा देवदेवेति परमेश्वरत्वमुक्तम्। तदेव दर्शयति—जगतां कार्य्य—कारणानां सर्वेषां नाथेति, तत्रापि गोविन्द! निजाशेषभगवत्ताप्रकटनार्थं प्राप्तगोकुलेन्द्रत्व! अत एव पुरुषोत्तम! क्षराक्षरातीत! तथा च श्रीगीतासु ( १५।१८ )—'यस्मात् क्षरमतीतोऽहमक्षरादपि चोत्तमः। अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः॥' इति; यद्वा, पुरुषेषु श्रीब्रह्मादिषु त्रिषूत्तम! यतो नारायण साक्षादवतारिपरमेश्वर! किञ्च, हृषीकेश! स्वभक्तौ सर्वेषां सर्वेन्द्रियप्रवर्त्तक! तच्च यथायथमूह्यम्। अतः पुण्यश्लोक! सर्वोत्कृष्टयशःकारुण्यादिनिजाशेषगुणप्रकटनात्, यतोऽच्युत सर्व्वथा परिपूर्ण! किंवा अत एव ( रामायण—युद्धकाण्डे १८।३३ ) 'सकृदेव प्रपन्नो यः' इत्याद्युक्त—स्वप्रतिज्ञातो विच्युतिरहित! अत एवाव्यय अपरिच्छिन्नमाहात्म्य! यद्वा, आत्मदानेनापि न व्येतीत्यव्यय! अथवा अनुज्ञाप्रार्थनेऽपि दैन्येन स्वस्य योग्यतां मन्यमानः श्रीभगवन्माहात्म्येन तां सम्भावयंस्तद्वर्णयति—देवेति। जगन्नाथेति देवदेवोऽपि नीचानामप्यस्माकं प्रभुस्त्वमेवासि, जगदन्तर्गतत्वेन मादृशामपि त्वदेकनाथत्वादिति भावः। तत्रापि गोविन्द! गोपालनादिना महाकारुण्यादि निजाशेष-गुणप्रकटनादित्यर्थः। अत एव पुरुषोत्तम! वैदग्ध्याद्यशेषमहापुरुष—लक्षणसेवित! किञ्च, नारायण! सर्वजीवैकशरण! स्थावरादिनामप्युद्धारात्; किञ्च, हृषीकेश परमसुन्दरेत्यर्थः। न च केवलमाकृत्या सुन्दरः प्रकृत्या चेत्याह—पुण्यश्लोक! तत्तद्बाल्यलीलादिना जगत्पुण्यजनक-यशोविस्तारणात्, अच्युत! बाल्यक्रीडादावपि निजैश्वर्य्याच्युतिरहित! अन्यत् समानम्॥ २७॥ कृष्ण साक्षाद्भगवन्! अत एव विभो! सर्वप्रेरक! अतस्त्वदिच्छयैव देवगतिं देवत्वं स्वर्गं वा, किंवा देवस्य तव गतिं स्थानं श्रीवैकुण्ठलोकं क्रमेण यान्तम्, तत्र च ममापेक्षा नास्ति, किन्तु तद्भक्तावेवेत्याह—यत्रेति। यद्वा, तव पदं श्रीद्वारका—मथुरादि—स्थानं तदास्पदम्॥ २८॥

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम्

अक्षिपथः उरुव्यसनान्धबुद्धेः मम त्वं चक्षुर्विषयः श्रुतिदृशा वेदचक्षुषा अमलहृदि विभाव्यः चिन्त्यः यस्य भवापवर्गः। संसारनाशः तस्य त्वं शान्तहृदि दृश्यो भवसीत्यर्थः॥ २६-२८॥

### श्रीमद्वीरराघवाचार्यकृता भागवतचन्द्रचन्द्रिका

ब्रह्मण्यस्येति। हे केशव! ब्रह्मण्यस्येत्यादिविशेषणचतुष्टयं पूर्वजन्मस्मृत्यनपाये हेतुतयोपात्तं ब्रह्मणि ब्राह्मणकुले साधुब्रह्मण्यः॥ २५॥ अलभ्यलाभेनाधुना कृतार्थोऽभवमित्याह—स त्वमिति। हे विभो! सः यस्याहं सन्दर्शनार्थी स त्वं कथं ममाक्षिपथं गतः लोचनगोचरः कथमित्यनेन दौर्लक्ष्यं सूचितं तत्र हेतुत्वेन विशिनष्टि, परमात्मा न हि परमात्मा केवलं मांसचक्षुषा वीक्ष्य इति भावः। किञ्च योगेश्वरैः श्रुतिदृशा उपनिषच्चक्षुर्द्वारेण निर्मले हृदये विभाव्यः केवलं चिन्त्यः यद्यप्येवमथापि हे अधोक्षज अभक्तेन्द्रियजन्यज्ञानविषयः यस्य भवापवर्गः संसारनाशस्तस्योरुणा व्यसनेनान्धा बुद्धिर्यस्य तथाभूतस्यापि शान्ते सति हृदये त्वं दृश्य एवेत्यर्थः॥ २६॥ हर्षातिशयेन बहुधा सम्बोधयन् किञ्चित्प्रार्थ्यमानश्चानुज्ञां पृच्छति—देवदेवेति। द्वाभ्याम् देवगतिं स्वर्गलोकं प्रति यातं गन्तुम् उद्यतं मामनुजानीहि आज्ञापय यत्र क्वापि सतो वर्त्तमानस्य मम चेतः त्वत्पदास्पदं त्वत्पादारविन्दसंश्रयं भूयात्तथानुगृह्णीष्वेत्यर्थः॥ २७-२८॥

### श्रीविजयध्वजतीर्थकृता पदरत्नावली

देवगतिं स्वर्गं यत्र क्वापि योनिविशेषे सतः सम्भवतः॥ २८॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

ब्रह्मण्यस्य वदान्यस्य च तव योऽहं दासः तस्येति ब्रह्मण्यत्ववदान्यत्वांशेन भवदनुगतस्येत्यर्थः। ननु भवतः सेवकपुरुषार्थिन इति तथा भवत्सन्दर्शनार्थिन इति भवतः परमब्रह्मण्यत्वं वदान्यत्वञ्च श्रुत्वा दर्शनकौतुकिन इत्येवार्थः। ननु तदर्थानुरागपि इति स्वस्मिन्नपि तद्गुणद्वयख्यापनेन तदंशमात्रव्यक्तेः गत्यन्तरप्राप्तेश्च अतएव साधकदशायामपि श्रीमदम्बरीषादिवत् सेवादिलक्षण साक्षाद्भक्तिर्नादृतेऽतिविघ्नो जातः ननु तद्वद्दूर्वाससः क्रोधेऽप्यविघ्न इति गम्यते तथापि भगवद्दर्शनादिकं यथाकथञ्चिदभिलाषगुणादिति ज्ञेयम्॥ २५-४४॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धीये श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे चतुष्षष्टितमोऽध्यायः॥ ६४॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

नृगस्य भक्तिमिश्रकर्मित्वाद्गुणभूतेव या भक्तिरासीत्तामाश्रित्यैव भगवदग्रे दासस्येति विनयव्यञ्जकोक्तिरियं ज्ञेया भवत्सन्दर्शनार्थिन इति कदाचित् कदाचिदतिसुन्दरश्रीभगवद्विग्रहतन्मन्दिरादिश्रीगीताश्रीभागवतादिशास्त्रप्राप्त्युत्कण्ठस्य

महाभागवतस्यापेक्षणीयं नृगेण महादातृत्वात् सम्यक् सम्पादितं ततश्च तेन सन्तुष्यता भो राजंस्तव भगवद्दर्शनं भूयादिति यदेवाशीर्दत्ता तदारभ्यैव नृगस्य भगवद्दिदृक्षाऽभूदिति गम्यते ॥ २५ ॥ स्मृतिर्ममेति शेषः साक्षात्तथानुक्तिर्विनयादिना अद्य कृकलासदेहे तथा महाभिमानी देवदेहेपि तद्विरोधिनि न ध्वस्ता न नष्टा दुर्घटेन श्रीकृष्णदर्शनेन विस्मितः सन्नात्मनो भाग्यमभिनन्दति स एव त्वं मम सकथमक्षपथोऽभूर्य्यः खलु योगेश्वरैः सनकाद्यैरपि श्रुतिदृष्ट्या निर्मले हृदि विभाव्यो ध्येय एव तत्रापि त्वं साक्षादधोक्षजः शकटासुरभञ्जनः स्वयं भगवानेव तत्रापि उरुव्यसनान्धबुद्धेर्मद्विधस्याधमस्यापि किञ्च यस्य जनस्य भवापवर्गः संसारनाशो भवेत्तस्यापि मे मम किं भवान् दृश्यः स्यात् अपि तु न स्यादेव किन्तु महाभागवतस्य कस्यचिदाशीर्वादादेव स्यादिति भावः ॥ २६ ॥ सहसोत्पन्नया श्रद्धया भगवत्कृपया लब्धदास्यो नामान्येवानुकीर्त्तयन्ननुज्ञां प्रार्थयते—देवदेवेति। देवानां देवोपि त्वं जगतामपि नाथत्वान्मन्नाथो भव गोविन्द गवां कृपादृष्ट्या मां विन्दस्व अत्र हेतुः पुरुषेषु विष्ण्वादिष्वप्युत्तमः नारायण नारा जीवा अयनमधिष्ठानं यस्येति मां दुर्जीवमप्यधितिष्ठ हृषीकेश मदिन्द्रियाण्यात्मसात्कुरु पुण्यश्लोक तवैषा नृगमोचनी कीर्त्तिरभूदेव अच्युत मदन्तःकरणाद्विच्युतो मा भव अव्यय अत्र न ते कोऽप्यपचय इति ध्वनयः त्वत्पदमेव आस्पदं विषयो यस्य तथाभूतं मच्चेतो भूयात् ॥ २७-२८ ॥

### गूढार्थदीपिनी

यः श्रुतिदृशा उपनिषच्चक्षुषा अमले हृदि विभाव्यः चिन्तनीयो भवति स त्वं मम साक्षात् अक्षिपथः नेत्रगोचरः कथं जातोऽसि। यस्य भवापवर्गः संसारान्तः भवेत् तस्यैव भवान् अनुदृश्यः स्यात् मम तु एतद्योनिदुःखेन अन्धबुद्धेः कथमेतदित्याश्चर्यम् ॥ २६ ॥ देवदेवेति युग्मम्। देवगति स्वर्गम्। अनुजानीहि। आज्ञां देहि। दशेन्द्रियैः सह मे चेतः त्वत्पदास्पदं भूयादिति दशसम्बोधनैः प्रार्थयते ॥ २७-२८ ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

हे विभो! यस्य भवापवर्गो भवेत् मुक्तिर्भवेत्तस्य यो दृश्यः स्यात् यश्च श्रुतिदृशा वेदान्तश्रवणजन्येन ज्ञानेन अमले हृदि विभाव्यः ध्येयः स त्वं साक्षात्परात्मा अधोक्षजः अधः अर्वागेव अगृहीत्वा निवृत्तमेव अक्षजमिन्द्रियजन्यं ज्ञानं यस्मात् "नानुमानं नेन्द्रियाणि'ति श्रुतेः। उरुव्यसनेन पुनःपुनर्जन्ममरणदुःखेनान्धबुद्धेर्मम इह कथं अक्षपथः चक्षुर्ग्राह्योसि नु अहो मे भाग्यमिति शेषः ॥ २६-२७ ॥ प्रेमातिशयेन बहुधा सम्बोध्य अनुज्ञां प्रार्थयते—अनुजानीहीति। देवगतिं प्रति यान्तं गन्तुमुद्यन्तं मामनुजानीहि आज्ञापय यत्र क्वापि सतो वर्तमानस्य मे चेतः त्वत्पदमास्पदं विषयो यस्य तथाभूतं भूयात् ॥ २८ ॥

### श्रीमद्वल्लभाचार्य्यकृता सुबोधिनी

नन्वेतादृशस्य तव कथं पूर्ववृत्तान्तपरिज्ञानमिति चेत्, तत्राह **ब्रह्मण्यस्येति**। **अज्ञानं** हि स्मृतिनाशकम्, **तत्र ज्ञानसमानाधिकरणम्। ब्राह्मणाः स्वभावतो ज्ञाननिष्ठाः,** 'ज्ञानं विज्ञानमास्तिक्य'मिति वाक्यात्। अतो ब्रह्मण्यस्य ब्राह्मणभक्तस्य ब्रह्मधर्मा हितं कुर्वन्तीति न स्मृतिभ्रंशः। 'राजन्योऽपि सर्वदेवमय' इति ब्रह्मक्षत्रयोस्तुल्यत्वात् 'क्षतात्त्रायत' इति धर्माच्च 'तत्र दानमीश्वरभावश्चे'ति वाक्यात् 'वदान्ये क्षत्रं प्रतिष्ठित'मिति 'अन्योन्यमात्मानं ब्रह्म क्षत्रं च रक्षत' इति वाक्यात् ज्ञानं क्षत्रियमपि पालयति। भगवान् सर्वेश्वर इति ज्ञानादयस्तदधीनाः भगवद्भक्ते स्वोपकारं कुर्वन्तीति प्रकारत्रयेणापि स्मृतिर्न विध्वस्ता। **अस्त्येको ज्ञाननाशप्रकारः चतुर्थे निरूपितः,** 'इन्द्रियैर्विषयाकृष्टैराक्षिप्तं ध्यायतां मन' इत्यादिना। स इतः पूर्वं न जात इत्याह **अद्यापि न विध्वस्तेति। केशवेतिपदं** उत्पत्तिप्रलयकर्त्रोरपि मोक्षं प्रयच्छतीति भक्तज्ञानदाने कः प्रयासः स्यादिति सूचितम्। किञ्च। स्मृतिनाशका यावन्तो मायादयः **ते** सर्वे मत्तो बिभ्यतीत्याह **भवत्संदर्शनार्थिन** इति। **यो भगवद्धर्मान् प्रतीक्षते, तस्य नान्ये धर्माः बाधका भवन्ति** ॥ २५ ॥ एवं स्ववृत्तान्तमुक्त्वा भगवद्दर्शनं दुर्लभं सर्वप्राणिनां कथं ममाकस्माज्जातमिति स्वभाग्यमभिनन्दयन्नाह स त्वं कथमिति। तादृशस्त्वं ममाक्षपथः कथं वा जात इत्याश्चर्यम्। परात्मेति। आत्मनोऽपि परोऽन्तरः कथं देहादपि बहिर्दृश्येतेत्येकानुपपत्तिः। किञ्च। योगेश्वरैरपि योगानुसारेण, तत्रापि **श्रुतिदृशा** वेदबोधितज्ञानेन, न तु वैदिकप्रकारेण, तत्रापि **अमला** दृष्टिर्यस्य तादृशेन विभाव्यः। साधनप्रमाणाधिकारः उत्तमा निरूपिताः। तैरप्येवं प्रत्यक्षो न भवति, किन्तु विशेषेण भाव्यः तर्क्य एव। स मम साक्षात्कथं जात इत्याश्चर्यम्। **अनेन प्रमाणविचारेण दर्शनायोग्यता निरूपिता, प्रमेयविचारेणापि दर्शनायोग्यतामाह अधोक्षजेति।** अधः अक्षजं ज्ञानं यस्मादिति। किञ्च। स्वस्यानधिकारोऽपि। **उरुव्यसनान्धबुद्धेः।** अनेकव्यसनैः अन्धा बुद्धिर्यस्येति। नन्वकारणककार्योत्पत्तिर्न सम्भवतीति, अवश्यं कारणं भगवद्दर्शने वक्तव्यमिति चेत्, तत्राह **स्यान्मेनुदृश्य** इति। मे अनुदृश्यः स्यात्, यस्य मम भवापवर्गः। प्रायेण मम मोक्षः **सम्भाव्यते** केनचित्कारणेन, तद्भगवद्दर्शनव्यतिरेकेण मोक्षो न भवतीति मोक्षसाधनानि फलोन्मुखानि सन्ति भगवद्दर्शनं कारयामासुः। तत्रापि **मोक्ष इहैव, अन्तिमजन्मन्येव भगवत्साक्षात्कारात्** ॥ २६ ॥ एवं दुर्लभदर्शनमुपपाद्य स्वर्गगमनार्थं भगवन्तं

प्रार्थयितुं नवधा भगवन्तं सम्बोधयति **देवदेवेति**। लोके गमने देवानामपि यो देवः तदाज्ञयैव गमनं भवति। स चेत्स्वस्मिन् क्रीडति, तदा देवत्वं भवतीति। **जगन्नाथत्वादवश्यमाज्ञा प्रार्थनीया। गोविन्देति**। सतामिन्द्रः। एवं राजसतामससात्त्विकभावेन प्रभुत्वेन सम्बोधितो भगवान्! आज्ञां प्रार्थयितुं प्रेरकत्वेन त्रिविधं पुरुषमाह। **पुरुषोत्तमः** पूर्णः पुरुषः। **नारायणः** पुरुषो द्वितीयः। हृषीकेशोऽन्तर्यामी तृतीयः पुरुषः। 'विष्णोस्तु त्रीणि रूपाणि पुरुषाख्यान्यथो विदु'रिति वाक्यात्। अनेन भगवत्प्रेरणया भोगार्थं गच्छामीति स्वापराधाभावो निरूपितः। तत्र गतस्य भगवत्स्मरणाद्यभावान्न निस्तार इत्याशङ्क्य भगवद्गुणाः सर्वत्र सन्तीति निरूपयन् विशेषणत्रयमाह **पुण्यश्लोकाच्युताव्ययेति**। पुण्या श्लोका कीर्तिर्यस्येति। विषयसम्बन्धकृतदोषपरिहारः कीर्तिस्वाभाव्यादेव भवतीति सूचितम्। श्लोका विषयेष्वपि भवतीति न विषयैर्विरुध्यते। **तेन सेवनसम्भवः**। भगवतः सर्वतोऽच्युतत्वात् नित्या कीर्तिर्भवति, पूर्णा च। ततः सम्पादनसाधनानपेक्षता। न विद्यते व्ययो यस्मादिति। तेनान्यस्यापि नाशाभाव उक्तः। श्रोतुरप्यच्युतत्वं सम्पादयतीति षष्ठीबहुव्रीहिपक्षेऽपि न दोषः॥ २७॥ एवं स्वर्गगमने सर्वामुपपत्तिमुक्त्वा प्रार्थयति **अनुजानीहीति**। मामिति। आवश्यकं पुण्यफलभोगयुक्तम्। **कृष्णेति**। सर्वथा सर्वप्रकारेण मोचनसमर्थः। न हि तस्य विषयसम्बन्धे मोचनसामर्थ्याभावः। अन्यथा विशेषावतरणं न कुर्यात्। **यान्तं देवगतिमिति** गमनमावश्यकमुक्तम्। अनभिप्रेतत्वादभ्यनुज्ञाभावमाशङ्क्याह **विभो** इति। तथापि विषयसम्बन्धे नाशमावश्यकमाशङ्क्य प्रार्थयति **यत्र क्वापि सतश्चेत** इति। त्रिविधानि स्थानानि सुखदुःखोभयरहितानि। **दुःखे असामर्थ्यम्, सुखे अन्यासक्तिः, उभयाभावे मोहादिरिति सर्वत्रैव स्मरणाभावस्तुल्यः**। तथापि **कृपयैव स्मरणमिति स्थानविशेषस्याप्रयोजकत्वात्** यत्र क्वापि सतो मे चेतः त्वत्पदे एव आस्पदं स्थानं यस्य। तथा सति सर्वत्र गच्छदपि चेतः त्वत्पदयोरेव स्थिरीभविष्यतीति न कापि चिन्ता॥ २८॥

### श्रीसुबोधिनी-सारः

ब्रह्मण्यस्य साधोः वदान्यस्यात्युदारस्य तव दासस्य भवतः संदर्शनमर्थत इत्येवं शीलस्य मम स्मृतिरधुनापि न नष्टा हे केशव॥ २५॥ पर आत्मा योगेश्वरैरपि श्रुतिदृशा उपनिषच्चक्षुषा ज्ञानदृष्ट्याऽमले शुद्धे हृदि विभाव्यो ध्येयः अधोऽर्वागेवाक्षजमिन्द्रियजन्यं ज्ञानं यस्मात् सोऽधोक्षजः स त्वम् उरु भूरि व्यसनं दुःखं तेनांधा बुद्धिर्यस्य तस्य मम साक्षादक्षिपथो नेत्रगोचरः कथं यस्येह लोके भवापवर्गो मोक्षः स्यात्तस्य भवाननुदृश्यः प्रत्यक्षः स्यात् हे विभो॥ २६॥ हे देवदेवेत्यादि संबोधनं स्पष्टार्थम्॥ २७॥ हे कृष्ण देवगतिं यांतं गच्छंतं मामनुजानीहि आज्ञापय यत्र क्वापि देवलोके सतो वर्त्तमानस्य वसतो वा मे मम चेतः तव पदमास्पदम् आश्रयो यस्य तथाभूतं भवेत् हे विभो॥ २८॥

### श्रीविट्ठलरायात्मजश्रीवल्लभकृतलेखः

ब्रह्मण्यस्येत्यत्र। अज्ञानमिति। वस्तुतत्त्वाज्ञानमित्यर्थः। स्वमतेऽज्ञानं पदार्थान्तरम्, न त्वभावरूपम्, अत एवमुक्तम्। स त्वमित्यत्र। **तादृशेनेति**। अयं बहुव्रीहिः तादृशेन पुरुषेण श्रुतिफलितार्थाभिप्रायेण। विग्रहे तु अमलया दृशा विभाव्य इति।

### गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

ननु 'तव पूर्वजन्मस्मृतिः कथम्' इत्यपेक्षायां तत्र हेतून् सूचयन्नाह—ब्रह्मण्यस्येति! हे केशव! ब्राह्मण्यस्य ब्राह्मणभक्तस्य वदान्यस्य दानशूरस्य तव दासस्य भवतः सन्दर्शनमेवार्थो यस्यास्ति तस्य मेऽद्यापि स्मृतिर्न विध्वस्ता न विनष्टेति॥२५॥ एवं भगवत्प्रश्नस्योत्तरमुक्त्वा 'मया नु त्वद्दर्शनं दुर्लभं प्राप्तम्' इत्याह—सत्त्वमिति। महत्तत्त्वाभिप्रायः को वा जानातीति सूचयन् संबोधयति—विभो इति। यः योगेश्वरैः योगाङ्गप्राणायामादिभिर्वशीकृतसङ्घातैरपि श्रुतिदृशा उपनिषच्चक्षुषा अमले हृदि विभाव्यः केवलं चिन्तनीयः, नतु साक्षाद्दर्शनयोग्यः। तत्र हेतुमाह—अधोक्षज इति। अधः अक्षजं ज्ञानं यस्मात्सः। तथेह संसारे यस्य पुरुषस्य भवस्य संसारस्य अपवर्गः समाप्तिः स्यात्तस्य यो मेऽनुदृश्यः। तत्र हेतुमाह—परात्मेति। स एवंभूतस्त्वं मम साक्षात् अक्षिपथो दर्शनविषयः कथं जातोसीत्यन्वयः। 'तर्हि तवापि संसारापवर्गः प्राप्तः स्यात्तेन मद्दर्शनं संभावितमेव' इत्याशङ्क्याह—उरुणा व्यसनेनान्धा विवेकहीना बुद्धिर्यस्य तस्य मम कथं दृश्यः स्यादित्यन्वयः॥ २६॥ एवं दर्शनस्य दुर्लभत्वमुपपाद्य स्वर्गगमनं प्रार्थयितुं बहुधा सम्बोधयति—देवदेवेति। 'देवलोकगमने देवानामपि देवस्य तवाज्ञा अपेक्षिता' इत्याशयेन सम्बोधयति—देवदेवेति। देवदेवत्वे हेतुं सूचयन् सम्बोधयति-जगन्नाथेति। तत्रापि हेतुं सूचयन् पुनः संबोधयति—पुरुषोत्तमेति। भक्तवात्सल्यं सूचयन् संबोधयति—गोविन्देति! जगत्कारणत्वं सूचयन् संबोधयति—नारायणेति। अन्तर्यामित्वेन संबोधयति—हृषीकेशेति। हृषीकाणीन्द्रियाणि तत्प्रेरककीर्तन्ययशस्त्वेन संबोधयति-पुण्यश्लोकेति। विकारित्वमाशङ्क्य तन्निराकुर्वन् संबोधयति-अच्युतेति। तथापि कदाचिद्विनाशमाशङ्क्य तन्निराकुर्वन् संबोधयति—अव्ययेति॥२७॥ परिच्छिन्नत्वं वारयन् संबोधयति—विभो इति। आनन्दस्वरूपत्वेन संबोधयति—कृष्णेति। देवगतिं स्वर्गलोकं यान्तं मामनुजानीहि आज्ञां देहि। तत्र गतस्य विषयासक्त्या भगवद्वैमुख्यमाशङ्क्य प्रार्थयते—कर्मवशाद्यत्र क्वापि सतो वर्तमानस्यापि मम चेतः त्वत्पदमेवास्पदं स्मरणीयतयाऽऽश्रयो यस्य तथाभूतं भूयादिति॥ २८॥

## अन्वितार्थप्रकाशिका

ब्रह्मण्यस्येति ॥ हे केशव ! ब्रह्मण्यस्य ब्राह्मणभक्तस्य वदान्यस्य दानशूरस्य तव दासस्य भवतः संदर्शनमेवार्थोऽस्ति यस्य तस्य मेऽद्यापि स्मृतिर्न विध्वस्ता न विनष्टेति ॥ २५ ॥ स त्वमिति ॥ हे विभो ! यः योगेश्वरैः श्रुतिदृशा उपनिषच्चक्षुषा अमले हृदि विभाव्यः केवलं चिन्तनीयः नतु साक्षाद्दर्शनयोग्यः अधः अक्षजं ज्ञानं यस्मात् स परात्मा त्वम् उरुणा व्यसनेन कृकलासयोनिभवदुःखेन अन्धा बुद्धिर्यस्य तस्य मम साक्षात् अक्षिपथः दर्शनविषयः कथं जातोऽसि । इह संसारे यस्य पुरुषस्य भवस्य संसारस्य अपवर्गः समाप्तिः स्यात् त्वं तस्य अनुदृश्यो भवसि ॥ २६ ॥ देवदेवेति युग्मम् ॥ हे देवेत्यादीनि सम्बोधनानि । हे प्रभो ! देवगतिं स्वर्गलोकं यान्तं मामनुजानीहि आज्ञां देहि । कर्मवशाद्यत्र क्वापि सतो वर्तमानस्यापि मम चेतः त्वत्पदमेवास्पदं स्मरणीयतयाऽऽश्रयो यस्य तथाभूतं भूयात् ॥ २७-२८ ॥

## श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्

अद्यापि सरटदेहेपि स्मृतिर्ममेतिशेषः ॥ २५ ॥ हे विभो परात्मा परस्मिन् प्रकृतिपरे असंख्यसूर्यचंद्राधिकतेजोमये अक्षरब्रह्मणि वर्त्तमानः । आत्माविग्रहो यस्य । एवंभूतो यः पुरुषोत्तमः योगेश्वरैः । समाधिनिष्ठैः श्रुतिदृशा उपनिषत्प्रोक्तज्ञानेन अमले हृदि विभाव्यो दृश्यः स त्वं उरुव्यसनांधबुद्धेः कृकलासतनुदुःखेनांधमतेर्मम अक्षपथो नेत्रगोचरः कथं जातः तदहं न जानामि । यतः अधोक्षज इंद्रियागोचरोपि भवान् इह यस्य भवापवर्गः स्यात्तस्य जनस्य अनुदृश्यः द्रष्टुं योग्योस्ति स त्वं मे मया साक्षात् दृष्ट एव एतन्महद्भाग्यमितिभावः ॥ २६-२७ ॥ मां त्वदीयं त्वमनुजानीहि यत्र कुत्रापि सतो वर्त्तमानस्य मे मम त्वत्पदं तव पादपद्ममेवास्पदं निवासस्थानं यस्य तथाभूतं चेतो भूयात् ॥ २८ ॥

## भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

ब्रह्मण्यस्येति ॥ हे केशव, ब्रह्मण्यस्य ब्राह्मणकुले साधोः, वदान्यस्य, तव दासस्य, भवतस्तव, संदर्शनं संप्रेक्षणं तस्यार्थः प्रयोजनं विद्यतेऽस्येति तस्य मम, अद्यापि, स्मृतिः, न विध्वस्ता नाशं न प्राप्ताऽस्ति ॥ २५ ॥ अलभ्यलाभेनाधुना कृतार्थोऽहमभूवमित्याह ॥ स त्वमिति ॥ हे विभो, सः यस्याहं संदर्शनार्थी, सः परात्मा परमात्मा, न हि परात्मा मांसचक्षुषा वीक्ष्य इति भावः । योगेश्वरैः अपि, श्रुतिदृशोपनिषच्चक्षुर्द्वारेण, अमलहृद्विभाव्यः निर्मले हृदये केवलं चिन्त्यः, अक्षजमैन्द्रियकं ज्ञानं तदधोऽर्वागेव यस्मात्सः, उभयेन्द्रियजन्यज्ञानाविषयः त्वं, उरुणा बहुतरेण व्यसनेनान्धा बुद्धिर्यस्य तस्य, मम अक्षिपथः लोचनमार्गस्य, गोचरः सन्, साक्षात् प्रत्यक्षतयेक्षणीयः, कथं, जातोऽसीति शेषः । किमत्राश्चर्यं तत्राह । यस्य भवापवर्गः संसारनाशः, भाव्यः भवेत्, तस्य भवान् इह अनुदृश्यः, स्यात् । एवंभूतस्त्वं मे मम, अनुदृश्यो जात इदमतिचित्रमिति भावः ॥ २६ ॥ हर्षातिशयेन बहुधा संबोधयन् किंचित् प्रार्थयमानश्चानुज्ञां पृच्छति ॥ देवदेवेति ॥ हे देवदेव, हे जगन्नाथ, हे गोविन्द, हे पुरुषोत्तम, हे नारायण, हे हृषीकेश, हे पुण्यश्लोक पवित्रकीर्त्ते, हे अच्युत, हे अव्यय ॥ २७ ॥ अनुजानीहीति ॥ हे विभो, हे कृष्ण, देवगतिं यान्तमुपगच्छन्तं मां, अनुजानीहि आज्ञापय । यत्र क्वापि, सतो वर्त्तमानस्य, मे मम चेतश्चित्तं, त्वत्पदास्पदं त्वत्पदारविन्दैकाश्रयं, भूयात् । तथाऽनुगृह्णीष्वेति शेषः । इति द्वयोरेकसंबन्धः ॥ २८ ॥

## कृष्णप्रिया

कृपानाथ ! मैं विप्रों का सेवक था, दानशील था, उदारहृदय था, आपका विनम्र भक्त था। नाथ ! मुझे एक उत्कट अभिलाषा थी कि किसी भी उपाय से आपका साक्षात्कार हो जाय, आपका दर्शन हो जाय। हे भगवन् ! आपकी अपार अनुकम्पा से मेरे पूर्व जन्म की स्मृति नष्ट न हुई ॥ २५ ॥ हे विभो ! हे भगवन् ! आप तो साक्षात् सर्वेश्वर हैं, अधोक्षज हैं। योग के प्रवर्तक समर्थ महापुरुष श्रुतिदर्शित उपायों से अन्तःकरण को विशुद्ध बनाकर भक्ति भाव से अद्वैत दृष्टि से आपका ध्यान करते रहते हैं। वे सर्वथा दुर्लभ नाथ आज मेरे नयनपथ कैसे हो गये ? भगवन् ! मैं तो बहुविध व्यसनों से और दुःखफलद कर्मों से घिरा हुआ विषयान्ध बन रहा था। कृपानाथ ! आपका दर्शन तो केवल संसारासक्ति से निवृत्ति होने के बाद ही होती है ॥ २६ ॥ हे देवाधिदेव ! हे जगदीश्वर ! हे गोविन्द ! हे पुरुषोत्तम ! हे नारायण ! हे हृषीकेश ! हे पुण्यश्लोक ! हे अच्युत ! हे अविनाशी ! हे कृष्ण ! हे नाथ ! आपके अनुग्रह से ही मैं अब दिव्य लोक में जा रहा हूँ। आप अनुज्ञा दीजिये। नाथ ! यह विनम्र निवेदन है कि मेरा प्रारब्धवश जहाँ भी निवास हो लेकिन मेरा मनोमराल आपके चरणारविन्द में ही रहे ॥ २७-२८ ॥

नमस्ते सर्वभावाय ब्रह्मणेऽनन्तशक्तये । कृष्णाय वासुदेवाय [1]योगानां पतये नमः ॥ २९ ॥
इत्युक्त्वा तं परिक्रम्य पादौ स्पृष्ट्वा स्वमौलिना । अनुज्ञातो विमानाग्र्यमारुहत् पश्यतां नृणाम् ॥ ३० ॥
कृष्णः परिजनं प्राह भगवान् देवकीसुतः । ब्रह्मण्यदेवो धर्मात्मा राजन्याननुशिक्षयन् ॥ ३१ ॥
दुर्जरं बत ब्रह्मस्वं भुक्तमग्नेर्मनागपि । तेजीयसोऽपि किमुत राज्ञामीश्वरमानिनाम् ॥ ३२ ॥

### कर्दमक्षमा

अन्वयः—सर्वभावाय, ब्रह्मणे, अनन्तशक्तये, कृष्णाय, वासुदेवाय, योगानाम्, पतये, ते नमः, ते नमः, इति, उक्त्वा, तम्, परिक्रम्य, स्वमौलिना, पादौ, स्पृष्ट्वा, अनुज्ञातः, नृणाम्, पश्यताम्, विमानाग्र्यम्, आरुहत् ॥ २९-३० ॥ ब्रह्मण्यदेवः, देवकीसुतः, भगवान्, धर्मात्मा, कृष्णः, राजन्यान् अनुशिक्षयन्, परिजनम्, प्राह ॥ ३१ ॥ तेजीयसः, अग्नेः, अपि, मनाक्, अपि, भुक्तम्, ब्रह्मस्वम्, बत, दुर्जरम्, ईश्वरमानिनाम्, राज्ञाम्, किमुत ॥ ३२ ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

यास्यन्नमस्यति । नम इति । सर्वभावाय सर्वस्य भावो जन्म येन तस्मै ब्रह्मणे कर्तृत्वेऽप्यविकाराय । कुतः । अनंतशक्तये अनंता मायाख्या शक्तिर्यस्य तस्मै वासुदेवाय सर्वभूताश्रयायेत्युपादानत्वमुक्तम् । श्रीकृष्णाय सदानंदरूपायेति पुरुषार्थत्वमुक्तम् । "कृषिर्भूवाचकः शब्दो णश्च निर्वृतिवाचकः ॥ तयोरैक्यं परं ब्रह्म कृष्ण इत्यभिधीयते" इति स्मृतेः ॥ किंच योगानां इष्टापूर्तादिकर्मणां पतये फलदात्रे । अयं भावः । एवंभूतं त्वां विहाय गंतुमनिच्छुरपि गमिष्यामि त्वद्दत्तकर्मफलभोगायेति ॥ २९-३१ ॥ मनागीषदपि भुक्तं सदग्नेरग्निसदृशस्य तेजीयसोऽतितेजस्विनोऽपि दुर्जरम् । ईश्वरमानिनां राज्ञां किमु ॥३२॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

स्मृतेरितिपदमत्र श्रुतिपरं, गोपालतापनीयोपनिषद्यस्य पाठाच्छ्रुतिरेवेयम् । क्वचिच्छ्रुतिस्मृत्योरेकरूपत्वेनैव । यथा—"गोत्रं नो वर्द्धताम्" अयं श्लोकः श्रुतित्वेन स्मृतित्वेन च पठ्यते तथाऽयमपीति । न केवलं सच्चिदानंदरूप एव त्वमपि तु कर्मफलदातापीत्याह—किंचेति । स्वाशयं प्रकाशयति—अयं भाव इति । एवंभूतं सर्वकर्मफलदातारमनंतशक्तित्वादिरूपम् । सर्वेषां भावश्रेष्ठा यस्मात्तस्मै । कुतः—ब्रह्मणे बाह्याभ्यन्तरव्यापकाय । ननु जीवाः स्वयमेव प्रत्यलं चेष्टंते, नेत्याह—अनन्तशक्तये तव शक्त्यैव तेषां तत्तच्छक्तिर्न स्वतः । कुतः—वासुदेवाय सर्वचित्ताधिष्ठात्रे । अत एव योगानां कर्मज्ञानादिलक्षणानां पतये प्रवर्तकाय एवंभूताय तुभ्यं कृष्णाय नमोनमः । भक्त्युद्रेकेण द्विरुक्तिः । यद्वा—सर्वेषां ब्रह्मादीनां स्थावरांतानां भावायोत्पादकाय । स्वरूपतः सर्वबृहत्तमाय । स्वरूपशक्तिमायाशक्तिवृत्तिभेदेनानंतशक्तये । एवमपि कृष्णाय नराकृतिपरब्रह्मणे तत्रापि वसुदेवाज्जन्मलीलयैव प्रकटीभूताय योगानां दुर्घटघटनाशक्तीनां पतये नमोनमो नतिमात्रमेव मुहुरस्तु तन्निकटस्थातुमयोग्यत्वादलं सेवाद्यभिलाषेणेति भावः । अत्र विश्वनाथस्तु—मम त्वयि दास्यभाव एवास्तु त्वं तु सर्वभावविषयीभूत एवासीत्याह—सर्वे भावा यस्मिंस्तस्मै । तत्र शांतभावस्य विषयालम्बनमाह—ब्रह्मणे मूर्तब्रह्मस्वरूपाय । दास्यभावस्याह—अनंतशक्तये महामहैश्वर्याय । सख्यभावस्याह—कृष्णस्यार्जुनस्य नामरूपगुणादिभिः साम्यादेव सदानंददात्रे । वात्सल्यस्याह—वसुदेवस्य पुत्राय । उज्ज्वलभावस्याह—योगानां भक्तियोगमयीनां श्रीरुक्मिण्यादीनां पतये भर्त्रे ॥ २९ ॥ भोगांते मामाप्स्यसीत्यनुज्ञातः इत्युक्तरीत्या । तं श्रीकृष्णम् । विमानाग्र्यं विमानश्रेष्ठम् ॥ ३० ॥ परिजनम् "परीवारे समीपस्थे ज्ञातौ परिजनः स्मृतः" इति निरुक्तिः ॥ ३१ ॥ ब्रह्मस्वं ब्राह्मणद्रव्यम् । ब्राह्मणेन स्वत्वेन स्वीकृतमन्यथा मरुतनृपयज्ञावासत्यक्तब्राह्मणस्वर्णाहरणे युधिष्ठिरस्य स्वर्णस्तेयित्वेन महापातकित्वं स्यादिति भावः । 'ब्रह्म विप्रपरात्मनोः' इति कोशात् । यद्वा—अग्नेरपि दुर्जरम्, अग्निस्तु भुक्तो यथाकथंचिज्जीर्णो भवेदपीत्यर्थः । तेजीयसस्तपस्विनोपि, क्षत्रियादेः किमुत केवलमीश्वरमानिनां प्रभुत्वाभिमानवतामित्यर्थः ॥ ३२ ॥

### श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी

ननु, तर्ह्यत्रैव तिष्ठेति चेत्त्राह—नम इति । तैर्व्याख्यातं यद्वा अतस्त्वत्प्रेरणया यामि तत्र मच्छक्त्या किं स्यादित्याशयेन तस्य सर्वप्रेरकतां प्रदर्शयन्नैश्वर्यं वर्णयति—सर्वेषां भावश्रेष्ठा यस्मात् तस्मै कुतः ब्रह्मणे बहिरन्तश्च सर्वव्यापकाय ननु, जीवाः प्रत्यक्षं स्वयमेव बहुधा चेष्टन्ते नेत्याह—अनन्तेति । तव शक्त्यैव तेषां तत्तच्छक्तिर्न स्वत इत्यर्थः कुतः वासुदेवाय सर्वचित्ताधिष्ठात्रे अत एव योगानां कर्मज्ञानादिलक्षणानां पतये प्रवर्त्तकाय एवमेवम्भूताय कृष्णाय तुभ्यं नमो नमः भक्त्युद्रेकेण

---

१. गोपा–विज. ।

द्विरुक्तिः सदा नम इत्यर्थः। अथवा सर्वेषां ब्रह्मादिस्थावरान्तानां भवाय उत्पादकाय स्वरूपतः सर्वबृहत्तमाय शक्तितश्च स्वरूपशक्तिमायाशक्तिवृत्तिभेदेनानन्तशक्तये एवमपि कृष्णाय नराकृत्यैव परब्रह्मणे तत्रापि वसुदेवाज्जन्मलीलयैव प्रकटीभूताय यतो योगानां दुर्घटघटनाशक्तीनां पतये नमो नमः पुनःपुनर्नमस्कारमात्रं त्वन्निकटे स्थातुमयोग्यत्वादलं सेवाद्यभिलाषेणेति भावः ॥ २९ ॥ पश्यतां नृणाम् आश्चर्य्येण सर्वेषु लोकेषु पश्यत्सु ॥३०॥ स्वयं भगवानपि निजान्तरङ्गवर्गमपि प्रकर्षेण ब्राह्मणापराधदुष्फलदर्शनेनावोचत् यतो देवकीसुतः तैर्निजपरिकरैः सहाङ्गीकृततज्जन्मादिमनुष्यलीलः तत्रापि ब्रह्मण्यो ब्राह्मणहितावतारश्चासौ देवः सर्वश्रेष्ठश्च न केवलं तावन्मात्रो धर्म्मप्रवर्त्तकः किन्तु धर्मात्मा सर्वधर्मप्रवर्त्तकश्च ननु ते तत्परिजनाश्चेत्तर्हि तेषु किं शिक्षा पिष्टपेषणेन तत्राह राजन्यान् तत्रस्थान् क्षत्रियान् ततोन्यानपि तद्व्याजेन शिक्षयितुमित्यर्थः॥ ३१ ॥ दुर्जरं दुष्टाजीर्णवन्महादुःखदमित्यर्थः। बत विस्मये भुक्तं चौर्य्यादिना तेजीयसः इत्यादि तपोयोगादिबलेन पापाद्यपरिभाव्यस्यापीत्यर्थः। ईश्वरमानिना तदभिमानेन तपोयोगादिसम्भावनाशून्यानां तु राज्ञां किमुत सुतरामेव दुर्जरमित्यर्थः। अन्यत्तैः यद्वा मनाक् स्वल्पमपि ब्रह्मस्वम् अग्निमतिक्रम्यापि यस्तेजीयान् तेजस्वितमः तस्यापि ॥ ३२ ॥

## श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी

ननु तर्ह्यत्रैव तिष्ठेति चेत्तत्राह—नम इति। तैर्व्याख्यातम्। यद्वा, अन्तस्त्वत्प्रेरणया यामि, तत्र मच्छक्त्या किं स्यादित्याशयेन तस्य सर्वप्रेरकतां प्रदर्शयन्नैश्वर्य्यं वर्णयति—सर्वेषां भावश्चेष्टा यस्मात्तस्मै। कुतः? ब्रह्मणे बहिरन्तश्च सर्व्वव्यापकाय! ननु जीवाः प्रत्यक्षं स्वयमेव बहुधा चेष्टन्ते, नेत्याह—अनन्तेति। तव शक्त्यैव तेषां तच्छक्तिर्न स्वत इत्यर्थः? कुतः? वासुदेवाय सर्वचित्ताधिष्ठात्रे, अत एव योगानां कर्म्मज्ञानादि-लक्षणानां पतये प्रवर्त्तकाय। एवं कृष्णाय साक्षात् परब्रह्मणे तुभ्यं नमो नमः, भक्त्युद्रेकेण द्विरुक्तिः। अथवा सर्वेषां श्रीब्रह्मादि-स्थावरान्तानां भावाय निजपादाब्जप्रेमार्थं वासुदेवाय वसुदेवगृहेऽवतीर्णाय, अत एव ब्रह्मणे भावविस्तारणेन सर्वव्यापकाय, यतोऽनन्ताः शक्तयो यस्य तस्मै, अत एव योगानां भावोपायानाम्, किंवा बहुत्वं गौरवात्; भक्तियोगस्य पतये पालकाय, एवं कृष्णाय गुह्यनिजैश्वर्य्यप्रकटनपराय ते नमो नमः। अतोऽस्मिन्नवसरे तत्राप्यस्मिन् स्थाने स्थातुं नार्हामि, तथा तल्लीलाहेत्वाद्यवितर्कणेन मुह्येयं चेति भावः॥ २९ ॥ विमानेष्वग्र्यं श्रेष्ठम्, भगवदीयत्वात्, पश्यतां नृणाम्, आश्चर्य्येण सर्व्वलोकेषु पश्यत्सु सत्सु तादृशस्यापि सद्यस्तादृशगतेः। ननु तथापि कञ्चित् कालं विलम्बितुं युज्यते, तत्राह—अनुज्ञातः श्रीभगवता प्रस्थापितः सन् ॥ ३० ॥ परिजनं यादवादि-निजपरिवारवर्गं प्रकर्षेण न्यायप्रमाणादि-दर्शनेनाह। किमर्थम्? राजन्यान् सर्वक्षत्रियान्, अनुशिक्षयन् स्वाचारेण शिक्षितानपि नृग दृष्टान्तेन पुनश्च शिक्षयितुमित्यर्थः, यतो धर्म्मात्मा धर्म्मस्वरूपः, किंवा धर्म्मस्यात्मा प्रवर्त्तकः, तत्रापि ब्रह्मण्येषु ब्राह्मणभक्तेषु देवः श्रेष्ठः, तत्र हेतुः—देवकीसुत इति, अत एव भगवान् सर्वैश्वर्य्यपरिपूर्णः, कृष्णश्च मुनीनामपि चित्ताकर्षकः॥ २३ ॥ दुर्ज्जरं दुष्टाजीर्णवन्महादुःखदमित्यर्थः? वत विस्मयेऽवधारणे वा, भुक्तं चौर्य्यादिना। ईश्वरमानिनामिति तत्त्वत ऐश्वर्य्याभावेन तेजस्वितोक्ता, अन्यत्तैर्व्याख्यातम्। यद्वा, मनाक् स्वल्पमपि ब्रह्मस्वमग्नेः सकाशादपि यस्तेजीयान् महातपस्वी ज्ञानी वा तस्यापि ॥ ३२ ॥

## श्रीसुदर्शनसूरिकृतशुकपक्षीयम्

सर्वभावाय सर्वपदार्थशरीराय ॥ २९-३४ ॥

## श्रीमद्वीरराघवाचार्यकृता भागवतचन्द्रचन्द्रिका

यास्यन्नमस्करोति—नमस्त इति। तुभ्यं सर्वभावय सर्वः भावः पदार्थो यस्य शरीरत्वेनेति स तथा तस्मै तत्र हेतुः ब्रह्मणे स्वरूपेण गुणैश्च निरतिशयबृहत्त्वायानन्ताः शक्तयः कार्योपयुक्तापृथक्सिद्धप्रकृतिपुरुषकालसार्वज्ञसर्वशक्तित्वादयो यस्य तस्मै योगानां पतये निर्वाहकाय॥ २९ ॥ इतीति। स्वमौलिना स्वकिरीटेन विमानाग्र्यं विमानश्रेष्ठम् आरुरोह नृणां पश्यतां सताम् ॥३०॥ कृष्ण इति। ब्रह्मण्यदेवो धर्मात्मेति च हेतुगर्भं तत्वात् राजन्याननुशिक्षयन्नित्यत्र "लक्षणहेत्वोः" इति शत्रादेशः अनुशिक्षयितुमित्यर्थः। परिजनं परितोविद्यमानञ्जनम्प्रति प्राह ॥३१॥ उक्तिमेवाह—दुर्जरमित्यादिनैतद्विश्राव्येत्यतः प्राक्तनेन। बतेत्याश्चर्ये ब्रह्मस्वं मनागीषदपि भुक्तं सदग्नेरग्निसदृशस्यातितेजस्विनोपि दुर्जरं दुःखेनापि न जीर्यतीति तथा किं वक्तव्यम् ईश्वरं मन्यमानानां राज्ञां दुर्जरमिति ॥ ३२ ॥

## श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

सर्वभावाय सम्पूर्णैश्वर्याय सर्वोत्पादनकर्त्रे वा अखण्डलीलायेति वा ॥ २९-३० ॥ परिजनं परित उपासमानं जनम् ॥ ३१ ॥ अग्नेरपि दुर्जरं जीर्णीकर्तुमशक्यं मनागल्पमपि किम्पुनरन्यस्येत्यर्थः॥ ३२ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

मम त्वयि दास्यभाव एवास्तु त्वन्तु सर्वभावविषयीभूत एवासीत्याह—नम इति। सर्वेऽपि भावा यस्मिंस्तस्मै तत्र शान्तभावस्य विषयालम्बनमाह ब्रह्मणे मूर्त्तब्रह्मस्वरूपाय दास्यभावस्याह अनन्तशक्तये महामहैश्वर्याय सख्यभावस्याह—कृष्णाय कृष्णस्यार्जुनस्य नामरूपगुणादिभिः साम्यादेव सदानन्ददात्रे "कृषिर्भूवाचकः शब्दोणश्च निर्वृतिवाचकः" इति स्मृतेः। वात्सल्यभावस्याह—वासुदेवाय वसुदेवपुत्राय उज्ज्वलभावस्याह योगानां भक्तियोगमयीनां श्रीरुक्मिण्यादीनां पतये भर्त्रे ॥ २९ ॥ अनुज्ञातः भोगान्ते मां प्राप्स्यसीत्यादिष्टः ॥ ३०-३१ ॥ ब्रह्मस्वं मनाक् ईषदपि चौर्य्यादिना भुक्तं सत् अग्नेः सकाशादपि यस्तेजीयान् तपोयोगादियुक्तस्तस्यापि दुर्जरम् ॥ ३२ ॥

### गूढार्थदीपिनी

सर्वं भावाय सर्वस्य भावो जन्म यस्मात्। योगानां साधनानां पतये फलदात्रे ॥ २९ ॥ अग्र्यं श्रेष्ठम् ॥ ३० ॥ परिजनं परितो वर्तमानं जनसमुदायम् प्राह ॥ ३१ ॥ स्वं धनं मनाक् ईषदपि भुक्तं सत् अग्नेरिव तेजीयसोऽपि दुर्जरं दुष्पचं भवति किमुत राज्ञामित्यन्वयः ॥ ३२ ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

यास्यन् नमस्करोति सर्वे भावा यस्मात् तस्मै विश्वहेतवे ब्रह्मणे बृहते अनन्ताः असङ्ख्येयाः शक्तयो यस्य तस्मै ॥ २९-३० ॥ परिजनं परितो वर्त्तमानं जनम् ॥ ३१ ॥ बतेत्याश्चर्ये ब्रह्मस्वं मनागीषदपि भुक्तं सत् अग्नेः अग्निसमस्यापि तेजीयसः अतितेजस्विनोऽपि दुर्जरम् ईश्वरमानिनामज्ञानादनीश्वरमात्मानमीश्वरम्मन्यमानानां राज्ञां दुर्जरमिति किमु वक्तव्यम् ॥ ३२-३३ ॥

### श्रीमद्वल्लभाचार्यकृता सुबोधिनी

ततो गच्छन् नमस्यति **नमस्ते सर्वभावायेति**। भगवान् षड्गुणयुक्त इति धर्मिणं निर्दिश्य षड्विशेषणान्याह। भक्तस्य गमनमनुचितमाशङ्क्य सर्वभावस्त्वमेवेति न त्वत्परित्यागः। अनेन कार्यरूपता निरूपिता। कारणरूपतामाह **ब्रह्मण** इति। **अनन्तशक्तय** इति। कारणत्वोपपादकं प्रकारमुक्तवान्। एवं साधनत्वेन त्रिरूपत्वमुक्त्वा, फलेऽपि त्रिरूपतामाह। **कृष्णाय** सदानन्दायेति शुद्धफलरूपत्वम्। **वासुदेवाय** मोक्षफलदात्रे। **योगानां पतय** इति। तस्य मोक्षफलदाने साधनत्वम्। आद्यन्तयोर्नमस्कारः सर्वत्रानुषङ्गार्थः ॥ २९ ॥ अङ्गीकारेणैवाभ्यनुज्ञातः स्वर्गतिं गत इत्याह **इत्युक्त्वेति**। प्रदक्षिणानमस्कारौ सर्वकार्यसाधकौ। स्वमौलिना पादस्पर्शः **भगवद्धर्माणां नित्यत्वात्तच्चरणछायायामेव सर्वभोगसूचकः**। तदेव देवसमानीतं विमानमारुह्य भगवन्माहात्म्यं लोके प्रख्यापयन् नृणां पश्यतामेव सतां यथाविरयर्थः ॥ ३० ॥ एवं नृगस्य ब्राह्मणातिक्रमेण दुर्गतिम्, भगवदीयत्वेन सुगतिं च प्रदर्श्य, निरोधनिरूपणार्थं ब्रह्मस्वसम्बन्धाभावमुपदिशति **कृष्णः परिजनं प्राहेति**। यावदध्यायपरिसमाप्ति। **सात्त्विकाः प्रथमं धर्मे उपदेष्टव्या** इति। परिजनः पुत्रपौत्रादयः। **भगवानिति** भाव्यर्थाभिज्ञः। ब्राह्मणातिक्रमादेव तेषामनिष्टं भविष्यतीति। **देवकीसुत** इति। भक्तकृपालुत्वात्तथाभावो न सम्मतः। किञ्च। ब्राह्मणानामपि हृतप्रेप्सुः। एवमुपदेशे ब्राह्मणातिक्रमं न कुर्युरिति। किञ्च। **धर्मात्मा** धर्मः स्थापनीय इति। एकेनापि ब्रह्मस्वेन मिलितेन सर्व एव कृतो धर्मो नष्टो भवतीति। किञ्च। राजवंशे स्वयमपि प्रादुर्भावलीलां कृतवान्। अतो राजन्यान् शिक्षयन् धर्मार्थं च धर्मः कर्तव्यः कारणीयश्चेति ॥ ३१ ॥ उपदेशमाह द्वादशभिः **दुर्जरं बत ब्रह्मस्वमिति**। आदौ सात्त्विकान्प्रति उपदिशन् धर्मान्तरेण ब्रह्मस्वं गृहीतं परिहर्तव्यमिति पक्षं निराकरोति। **बतेति** खेदे। यथा बालकाः सर्पसमीपं चेद्गच्छेयुः, तदा यथा पित्रादयः खेदमाविष्कुर्वन्ति, तथा भगवानाहेति लक्ष्यते। स्वतः उपायान्तरेण वा न जीर्णं भवतीति दुर्जरम्। यतो ब्रह्मैवाक्षयम्, तस्यापि स्वमिति। अत्यन्तरङ्गम्। उपभुक्तं चेद्दुर्जरमिति। अजीर्णद्रव्यमिव मृत्युसाधकमुक्तम्। यत्र ब्राह्मणस्य ब्रह्मभूतस्य स्वमित्यभिमानः, तत्र दृष्टप्रकारेणैव दुर्जरं भवति, नृग इव, अन्यथात्वे शास्त्रद्वारेति दृष्टादृष्टाभ्यां दुर्जरम्। यः सर्वमेवोपभुक्तं भस्मसात्करोति, तेनाप्यग्निना उपभुक्तं दुर्जरमेव भवति, न तु भस्मसाद्भवतीति ऐहिकदुर्जरत्वमेव निरूपितम्। ननु 'ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते तथे'ति वाक्यात् ज्ञानेन ब्रह्मस्वजरणमिति चेत्, तत्राह **तेजीयसोऽपीति**। ज्ञानं फलोन्मुखं तेजः करोति, तद्वान् तेजस्वी, तस्यापि दुर्जरमुपजीव्यविरोधात्। न हि ज्ञानं स्वोपजीव्यमपि खण्डयति। यत्र ब्राह्मणस्यापि ब्रह्मस्वं दुर्जरम्, तत्र राज्ञां ब्रह्मस्वं कथं न दुर्जरं स्यात्। स्वतो ब्रह्मत्वाभावात् ब्राह्मणोपजीवकत्वाच्च। किञ्च। तत्रापि ये ईश्वरमानिनः, स्वस्य क्षात्रं धर्मं परित्यज्य, भगवद्धर्ममैश्वर्यमभिमन्यन्ते, तेन परधर्मनिष्ठत्वात् सुतरामेव ब्रह्मस्वं दुर्जरं भवति ॥ ३२ ॥

### श्रीसुबोधिनी-सारः

सर्वेषु भावोऽस्ति त्वं यस्य सद्रूपत्वात् तस्मा अनंतशक्तये ब्रह्मणे ते नमः कृष्णाय वासुदेवाय योगानाम् इष्टापूर्त्तादीनां पतये फलदातृत्वात्स्वामिने नमः ॥ २९ ॥ इत्युक्त्वा तं श्रीकृष्णं परिक्रम्य स्वमुकुटेन चरणौ स्पृष्ट्वा तेनानुज्ञातो नृणां पश्यतां सतां विमानाग्र्यं विमानोत्तममारुहत् ॥ ३० ॥ ब्रह्मण्यदेवो धर्मे आत्मा चित्तं यस्य धर्म आत्मा स्वरूपं यस्येति वा देवकीसुतो भगवान् कृष्णो राजन्यान् भूपाननुशिक्षयन् परिजनं भृत्यवर्गमाह ॥ ३१ ॥ मनागीषदपि भुक्तं ब्रह्मस्वं ब्राह्मणधनं दुर्जरं बतेति खेदे अग्नेरग्निसदृशस्यापि तेजीयसोऽतितेजस्विनः ईश्वरा वयमिति मंतुं शीलं येषां तेषां राज्ञां ब्रह्मस्वं दुर्जरमिति किमु वक्तव्यम् ॥ ३२ ॥

### श्रीविट्ठलरायात्मजश्रीवल्लभकृतलेखः

**इत्युक्त्वेत्यस्याभासे । स्वर्गति गत** इति । अस्य क्रममोक्षः । अतः स्वर्गादिभोगानन्तरं मोक्ष इति भावः । विमानारोहस्य स्वर्गमनार्थकत्वात्स्वर्गमनमेव तात्पर्यार्थः । अत एव **यथावित्यर्थ** इत्यनेन गमनमेव तात्पर्यार्थ उपसंहृतः, विमानारोहो वाच्यार्थ इति भावः । **कृष्णः परिजन**मित्यत्र । **सात्त्विकाः प्रथम**मिति । राजन्येभ्यो राजसेभ्यः प्रथमं परिजनाः सात्त्विका उपदेष्टव्याः, प्रकरणित्वात् । अतः प्रथमं परिजनाः पश्चाद्राजन्या उक्ता इत्यर्थः । देवकीसुतपदतात्पर्यमाहुः **भक्तेति** । **दुर्जर**मित्यत्र । **धर्मान्तरेणेति** ब्रह्मस्वग्रहणदोषो धर्मान्तरेण परिहर्तव्य इत्यर्थः । **अन्यथात्वे** इति । वस्तुतः स्वत्वेपि ब्राह्मणस्य तथाभिमानाभावे इत्यर्थः । **यत** इति । अग्नेर्हेतोः पुरुषः सर्वं भुक्तं भस्मसात्करोति । तादृशेनाप्यग्निना करणेन ब्रह्मस्वमुपभुक्तं चेद्दुर्जरमेव भवतीत्यर्थः । अग्नेर्हेतोरपि मनागपि ब्रह्मस्वं भुक्तं चेद्दुर्जरं भवतीति मूलेऽर्थः ।

इति पञ्चदशाध्यायव्याख्या समाप्ता ।

### गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

एवं गमनाज्ञां प्रार्थ्य यास्यन्नमस्करोति—नम इति । आद्यन्तयोर्नमःपदप्रयोगः सर्वत्रानुषङ्गार्थः । कार्यरूपत्वमाह—सर्वभावायेति । कारणत्वेन नमस्यति—ब्रह्मण इति । जगज्जन्मादिकर्तृत्वं सूचयन्नमस्करोति—अनन्तशक्तय इति । सदानन्दरूपफलत्वेन प्रणमति–कृष्णायेति । मोक्षप्रदत्वेन नमस्यति–वासुदेवायेति । धर्मादिप्रवर्तकत्वेन तत्फलप्रदत्वेन च नमस्करोति–योगानां सर्वसाधनानां पतय इति ॥ २९ ॥ इत्येवमुक्त्वा तं श्रीकृष्णं परिक्रम्य स्वमौलिना तत्पादौ स्पृष्ट्वा दण्डवत्प्रणामं कृत्वा तेनानुज्ञातो नृणां पश्यतामेव सतां आगतं विमानाग्र्यमारुहदित्यन्वयः ॥ ३० ॥ ततश्च परिजनं परितो विद्यमानं जनं प्रति कृष्णः प्राहेत्यन्वयः । एवं कथने हेतुमाह—राजन्याननुशिक्षयन्निति । शिक्षायां हेतुमाह—ब्रह्मण्यदेव इति । ब्रह्मणा साधको ब्रह्मण्यः स चासौ देवश्च सर्वाराध्यश्चेति तथा । ब्राह्मणाराधने हेतुमाह—धर्मात्मेति । तत्र हेतुमाह—भगवानिति । स यदि स्वाचारेण लोकं न शिक्षयेत् तदा कः शिक्षयेदित्याशयः । तथापि तस्य भक्तवात्सल्यं सूचयन्नाह—देवकीसुत इति ॥ ३१ ॥ तदुक्ति दर्शयति—दुर्जरमिति । बतेत्याश्चर्यं द्योतयति । मनाक् ईषदपि भुक्तं ब्रह्मस्वं अग्नेः अग्निसदृशस्यातितेजस्विनोऽपि दुर्जरं दुःखेन केनाप्युपायेन न जीर्यति । यद्येवं तदा वृथैवेश्वरमानिनां समर्था वयमित्यभिमानवतां राज्ञां तद्दुर्जरं भवतीति किमुत वक्तव्यम् ॥ ३२ ॥

### अन्वितार्थप्रकाशिका

नम इति ॥ सर्वभावाय कार्यरूपाय सर्वस्य भावो जन्म येन तस्मै इति वा ब्रह्मणे कारणरूपाय अनन्तशक्तये ते नमः । कृष्णाय वासुदेवाय योगानां सर्वसाधनानां पतये नमः ॥ २९ ॥ इतीति ॥ इत्येवमुक्त्वा तं श्रीकृष्णं परिक्रम्य स्वमौलिना तत्पादौ स्पृष्ट्वा दण्डवत्प्रणामं कृत्वा तेनानुज्ञातो भोगान्ते मां प्राप्स्यसीत्यादिष्टः नृणां पश्यतामेव सताम् आगतं विमानाग्र्यमारुहत् । छन्दसश्च्लेरङ् ॥ ३० ॥ कृष्ण इति ॥ भगवान् देवकीसुतः ब्रह्मण्यदेवः धर्मात्मा कृष्णः राजन्यान् क्षत्रियाननुशिक्षयन् परिजनं परितो विद्यमानं जनं प्राह स्म ॥ ३१ ॥ दुर्जरमिति ॥ मनाक् ईषत् अपि चौर्यादिना भुक्तं ब्रह्मस्वम् अग्नेः अग्निसदृशस्यातितेजस्विनोऽपि दुर्जरं यद्येवं तदा वृथैवेश्वरमानिनां समर्था वयमित्यभिमानवतां राज्ञां तद्दुर्जरं भवतीति किमुत वक्तव्यम् ॥ ३२ ॥

### श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्

प्रकृतेः सकाशात् सर्वेषां महदादीनां स्थावरजंगमानां च भावो भवनं जन्म येन तस्मै ब्रह्मणे परब्रह्मणे । अनंतशक्तये अपरिमितसामर्थ्याय योगानां चतुर्वर्गोपायानां पतये प्रवर्तकाय ॥ २९-३० ॥ ब्रह्माणो ब्राह्मणा एव ब्रह्मण्यास्त एव देवाः

पूज्या यस्य सः चातुर्वर्ण्यादित्वात्स्वार्थे ष्यञ् । संज्ञापूर्वकविधेरनित्यत्वाद्वृद्ध्यभावः । यद्वा ब्रह्मण्यानां ब्राह्मणसत्कारशीलानां देव उपास्यः ॥ ३१ ॥ ब्रह्मस्वं ब्राह्मणधनं मनाक् स्वल्पमपि । भुक्तं तेजीयसः याचने समर्थस्य अग्नेरपि दुर्जरं राज्ञां तु किमुतः ॥ ३२ ॥

### भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

अथ यास्यन्नमस्करोति ॥ नम इति ॥ सर्वे भावाः पदार्थाः शरीरत्वेन यस्य तस्मै सर्वभावाय, ब्रह्मणे स्वरूपेण गुणैश्च निरतिशयबृहते, अनन्ताः शक्तयो यस्य तस्मै, वासुदेवाय शुद्धान्तःकरणावस्थिताय वसुदेवपुत्राय वा, योगानां पतये, कृष्णाय, ते तुभ्यं, नमः नमः, पुनः पुनर्नमस्करोमि ॥ २९ ॥ इतीति ॥ तं श्रीकृष्णं प्रति, इतीत्थं, उक्त्वा परिक्रम्य, स्वमौलिना स्वकिरीटेन, पादौ स्पृष्ट्वा, कृष्णेन अनुज्ञातो यदाऽहं हरिकृष्णनाम्ना सारवज्ञातीयधर्माख्यद्विजगृहे प्रादुर्भूय भूमौ विचरिष्यामि तदा भवान्मद्भक्तिरहितकेवलदानादिप्रवृत्तकर्मनिष्ठस्वतः कङ्कजातीयक्षत्रियकुलोत्पन्नाऽभयाख्यभूपनाम्ना संभविष्यन् सन्, मामेष्यति ततः 'यत्र क्वापि सतश्चेतो भूयात्' इति भवद्याचितं सत्यं करिष्यामीत्यनुगृहीतो नृगः, नृणां पश्यतां सतां, विमानाग्र्यमुत्तमं विमानं, आरुहत् ॥ ३० ॥ कृष्ण इति ॥ ब्रह्मण्यः देवः, धर्मात्मा, देवकीसुतः, भगवान् कृष्णः, राजन्यान् क्षत्रियान्, अनुशिक्षयन्ननुशिक्षयितुं, परिजनं परितो विद्यमानं जनं प्रति, प्राह ॥ ३१ ॥ उक्तिमेवाह दुर्जरमित्यादिना एवं विश्राव्येत्यतः प्राक्तनेन ग्रन्थेन ॥ दुर्जरमिति ॥ बतेत्याश्चर्ये । ब्रह्मस्वं ब्राह्मणधनं, मनागीषदपि, भुक्तं सत्, अग्नेरग्निसदृशस्यापि, तेजीयसस्तेजस्विनः, दुर्जरं दुःखेनापि जरणं विधातुमशक्यं तदा ईश्वरमानिनामात्मानमीश्वरमित्यभिमन्यमानानां, राज्ञां दुर्जरं स्यात्, तत्र किमुत किं वक्तव्यमित्यर्थः ॥ ३२ ॥

### कृष्णप्रिया

नाथ! सर्वभावात्मकस्वरूप आपके चरणों में कार्य, कारणादि सर्वस्वरूप आपको प्रणाम, परब्रह्म स्वरूप को नमस्कार- अनन्त शक्तिस्वरूप को प्रणाम, समग्र योग के स्वामी को प्रणाम, वासुदेव-विश्वात्मक स्वरूप को नमस्कार, एवं भगवान् श्रीकृष्ण को प्रणाम ॥ २९ ॥ भगवान के श्रीचरणों में इस प्रकार भक्ति से भरे भाव से बार-बार प्रणाम किये, पुनः पादस्पर्श किया अपने श्रीमस्तक के मुकुट से श्रीचरणों में दण्डवत् किया, भगवान् की परिक्रमा की, भगवान् की अनुज्ञा प्राप्त करके सबके सन्मुख ही दिव्य विमान में बैठकर प्रस्थान किया ॥ ३० ॥ श्री देवकीनन्दन भगवान् श्रीकृष्ण नृगराजा के प्रस्थान के बाद ब्रह्मण्य देव के और धर्माधिष्ठाता के नाते क्षत्रियों को शिक्षा देने के लिये समुपस्थित अपने कुटुम्बी जन को कहने लगे ॥ ३१ ॥ हे कुटुम्बीजन! मनुष्य अग्नि के कितना भी तेजस्वी क्यों न हो लेकिन वे भी ब्राह्मणों का अल्प से भी अल्प द्रव्य को हडपकर कर सकेगा ? नहीं । तब जो नाममात्र के लिए राजा मान बैठा, वह क्या पचा सकेगा ? ॥ ३२ ॥

**नाहं हालाहलं मन्ये विषं यस्य प्रतिक्रिया । ब्रह्मस्वं हि विषं प्रोक्तं नास्य प्रतिविधिर्भुवि ॥ ३३ ॥**
**हिनस्ति विषमत्तारं वह्निरद्भिः प्रशाम्यति । कुलं समूलं दहति ब्रह्मस्वारणिपावकः ॥ ३४ ॥**
**ब्रह्मस्वं दुरनुज्ञातं भुक्तं हन्ति त्रिपूरुषम् । प्रसह्य तु बलाद् भुक्तं दश पूर्वान् दशापरान् ॥ ३५ ॥**
**राजानो राजलक्ष्म्या च नात्मपातं विदन्ति ते । निरयं येऽभिमन्यन्ते ब्रह्मस्वं साधु बालिशाः ॥ ३६ ॥**

### कर्दमक्षमा

अन्वयः—अहम्, हालाहलम्, विषम्, न, मन्ये, यस्य, प्रतिक्रिया, अस्ति, हि, ब्रह्मस्वम्, विषम्, प्रोक्तम्, भुवि, अस्य, प्रतिविधिः, न ॥ ३३ ॥ विषम्, अत्तारम्, हन्ति, वह्निः, अद्भिः, प्रशाम्यति, ब्रह्मस्वारणिपावकः, समूलम्, कुलम्, दहति ॥ ३४ ॥ दुरनुज्ञातम्, ब्रह्मस्वम्, भुक्तम्, त्रिपूरुषम्, हन्ति, प्रसह्य, बलात्, भुक्तम्, दश, पूर्वान्, दश, अपरान्, हन्ति ॥ ३५ ॥ राजानः, राजलक्ष्म्यान्धाः आत्मपातम्, न, विचक्षते, बालिशाः, ब्रह्मस्वम्, निरयम्, साधु, ये, साधु, अभिमन्यन्ते ॥ ३६ ॥

### श्रीधरस्वामीविरचिता भावार्थदीपिका

किंच विषादपि घोरमित्याह हिनस्तीति । संसर्गिसंसर्गेण मारकत्वादग्नितुल्यता स्यात्तदपि नेत्याह । वह्निरिति । अपि च समूलमिति वह्निर्मूलान्यवशेषयति । ब्रह्मस्वलक्षणारणिजः पापपावकस्तु कुलं तदपि समूलमिति ॥ ३४ ॥ दुरनुज्ञातं यथावदननुज्ञातम् । त्रिपूरुषं कुलं स्वयं पुत्रं पौत्रं च । प्रसह्य हठात् । बलाद्राजाद्याश्रयतः ॥ ३५ ॥ ये ब्रह्मस्वमभिमन्यन्ते इच्छन्ति ते निरयमेवाभिमन्यन्ते । अतो बालिशा अज्ञा आत्मपातं न विचक्षत इति ॥ ३६ ॥

---

१. निधि–विज. । २. रमग्नि–वीर. विज. । ३. प्रसह्याति–विज. । ४. न्धा–श्रीधर. वंशी. जीव. ; क्ष्म्याक्ष–विज. । ५. विचक्षते– श्रीधर. वंशी. जीव. विश्व. ; प्रच–वीर. विज. । ६. निरये–विज. ।

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

हालाहलमित्युपलक्षणं स्थावरजंगमोभयविधविषस्य। स्थावरं तिंदुकादि जंगमं सर्पवृश्चिकाद्युत्थम्। विषं नाशकं विशेषेण स्यत्यंतं करोतीति 'षो अंतकर्मणि' इत्यतः "आतश्चोपसर्गे" इति कः। यस्य हालाहलादेः। प्रतिक्रिया मंत्रौषधादिरूपा शंभुना जर्जरितत्वान्निवृत्त्युपायोऽस्तीत्यर्थः। अस्य ब्रह्मस्वस्य। प्रतिविधिः प्रतिक्रिया "प्रतीकारः प्रतिविधिनिवर्तकप्रतिक्रियाः" इति धरणिः। भुवीत्युक्तेर्भूशब्दोपलक्षिततीर्थस्नानादिकश्चास्य निवर्तकं नास्ति किन्तु बहुधा ब्राह्मणार्चनोपवासचांद्रायणादि कथंचिन्निवर्तकं भवेदिति भावः। "यो ब्राह्मणस्य सद्धनमभिनारदमन्यते। विषमे तद्वेकृतं राजा वरुणोऽब्रवीत्॥" इत्यथर्वसंहिताचतुर्थकांडश्रुतेः "न विषं विषमित्याहुर्ब्रह्मस्वं हि विषं स्मृतम्" इति स्मृतेश्च॥ ३३॥ सर्वथाऽप्रतिकार्यत्वमेवाह–किञ्चेति। अत्तारं केवलं संसर्गिणम्। संसर्गेण वह्निसंसृष्टलोहसंसर्गो यथा मारकस्तथा नेत्यर्थः। ब्रह्मस्वलक्षणारणिजतः ब्राह्मणधनरूपारण्युत्थितः पापाग्निः। तदपि कुलमपि। ब्राह्मणधनहारिणो वंशो नश्यतीत्यर्थः॥ ३४॥ दुरत्र वर्जने। अनुज्ञां विना, यथावदनुज्ञां विना च। एतेन अयं मे बंधुरुपकारी मद्धनं मया खल्वदत्तमपि भुंक्ते चेत् भुंक्तामित्येवमनुज्ञातमित्यर्थः। प्रीत्या दत्तं सेवादिना गृहीतं च न दोषायेति भावः। 'प्रीतिदानं न दोषाय' इति वाल्मीक्युक्तेरत्र प्रीतिरुपलक्षणं सेवादेः, अन्यथा ब्राह्मणजातेर्व्यवहारनिरोधः स्यादिति। राजाद्याश्रयादुत्कोचरूपेण गृहीतं पूर्वान्पितृवंश्यानपरान्मातृवंश्यान् एकश्च भोक्तेत्येवमेकविंशतिपुरुषान्। हंतिरत्र दुर्गतिदानेऽस्तीति ध्येयमौचित्यात्॥ ३५॥ आत्मपातं राज्यश्रियः पतित्वा नरके स्वात्मपतनम्॥ ३६॥

### श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी

ब्रह्मस्वं विषतोऽपि विषममित्युत्तरोत्तरवाक्याधिक्येनाह–नेति द्वाभ्याम्। विषं हिंसालक्षणस्वभावाव्यभिचारीत्यर्थः। प्रतिक्रिया मणिमन्त्रादिभिः प्रतीकारोऽस्ति हि एव ब्रह्मस्वमेव प्रकर्षेण न्यायप्रदर्शनादिनोक्तं बुधैः भुवि सर्वत्रापीत्यर्थः॥ ३३॥ अत्तारं तद्भक्षकमेव न सङ्ग्यादिकं प्रकर्षेण शाम्यतीति ब्रह्मस्वारण्यग्निस्तु प्रतीकारैरीषदपि न शाम्यतीति प्रशब्दध्वनिः कुलं पुत्रपौत्रादिकं समूलं पितृपितामहादिसहितम्॥ ३४॥ कथं कियद्दहति तदाह–स्वमिति॥ ३५॥ तस्मात् राजान इति। राजकुल्याः राज्ञां पुत्रादयो भृत्यादयश्च तदुपलक्षणत्वादन्येऽपीत्यर्थः। राजलक्ष्म्येति पाठे राजश्रिया तन्मदेनेत्यर्थः। साधु सम्यक् यथा स्यात्तथा यद्वा साधु बालिशा अतिशयेन मूर्खाः॥ ३६॥

### श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी

ब्रह्मस्वं प्रसिद्धविषतो विषममित्याह–नेति द्वाभ्याम्। विषं मारकमित्यर्थः। प्रतिक्रिया मणिमन्त्रादिभिः प्रतिकारोऽस्ति, हि एव, ब्रह्मस्वमेव, प्रकर्षेण न्यायप्रदर्शनादिनोक्तम्, बुधैर्भुवि सर्वत्रापीत्यर्थः॥ ३३॥ अत्तारं तद्भक्षकमेव, न तु संग्यादिकम्, प्रकर्षेण शाम्यतीति ब्रह्मस्वारण्यग्निस्तु प्रतीकारैरीषदपि न शाम्यतीति प्र-शब्दध्वनिः; समूलं पितृपितामहादिसहितम्॥ ३४॥ कथं दहति? तदाह–ब्रह्मस्वमिति। 'तु' वा, बलाद्वा॥ ३५॥ न च वक्तव्यं रक्षकाणां ब्रह्मस्वभोगो न दोषाय कल्पत इत्याह–राजान इति। राजा लक्ष्य आश्रयो येषां ते; पाठान्तरे राजश्रिया तन्मदेनेत्यर्थः। साधु सम्यग् यथा स्यात्तथा निरयं येऽभिमन्यन्ते; यद्वा, साधुबालिशा अभ्यन्ताज्ञा इत्यर्थः॥ ३६॥

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम्

दुरनुज्ञातं सम्यगनुज्ञारहितम्॥ ३५–४४॥

इति श्रीमद्भागवतव्याख्याने दशमस्कन्धे श्रीसुदर्शनसूरिकृतशुकपक्षीये चतुष्षष्टितमोऽध्यायः॥ ६४॥

### श्रीमद्वीरराघवाचार्यकृता भागवतचन्द्रचन्द्रिका

किञ्च, नाहमिति। हालाहलं न विषं मन्ये, कुतः? यस्य हालाहलस्य प्रतिक्रिया प्रतीकारः वर्त्तते इति शेषः। किन्तु ब्रह्मस्वमेव विषं प्रोक्तं हि यस्मादस्य ब्रह्मस्वस्य भूमौ प्रतिक्रिया नास्ति॥ ३३॥ किञ्च, हिनस्तीति। विषं त्वत्तारं भक्षयितारमेव हन्ति अग्निस्त्वद्भिर्जलैः प्रशाम्यति अनेन संसर्गिसंसर्गेण मारकत्वादग्नितुल्यता स्यादित्येतदपि नास्तीत्युक्तम्। अपि च समूलमिति वह्निर्हि मूलान्यविशेषयति ब्रह्मस्वलक्षणारणिजः पावकस्तु कुलं तदपि समूलं दहति॥ ३४॥ किञ्च, ब्रह्मस्वमिति। दुरनुज्ञातं सम्यगननुज्ञातं सत् भुक्तं स्वं पुत्रं पौत्रञ्चेति त्रीन् पुरुषान् दहति बलाद्राजाद्याश्रयबलात्प्रसह्य बलात्कृत्वा भुक्तं तु दशपूर्वान् पितृपितामहादीन् हन्ति नरके पातयति अपरान् पुत्रपौत्रादीन् दश नाशयति॥ ३५॥ तर्हि राजानः किमिति भुञ्जते इत्यत्र आह–राजान इति। ये राजानः साधु यथा तथा ब्रह्मस्वमभिमन्यन्ते आकाङ्क्षन्ति ते राज्यलक्ष्म्या अन्धा इति शेषः। आत्मा पतत्यस्मिन्निति तथा तं निरयं न प्रतीक्षन्ते न विचारयन्त्यतस्ते केवलं बालिशाः मूढाः इत्यर्थः॥ ३६॥

### श्रीविजयध्वजतीर्थकृता पदरत्नावली

प्रतिनिधिः प्रतिक्रिया नास्ति ॥ ३३ ॥ ब्रह्मस्वाख्यारणिजन्यपावकः ॥ ३४ ॥ दुरनुज्ञातम् अनुज्ञां विना भुक्तम् अननुज्ञातं वा प्रसह्य अविचार्य ॥ ३५ ॥ राजलक्ष्म्याः राजश्रियः पातं निरये आत्मपातं च न प्रचक्षते न पश्यन्ति ये ब्रह्मस्वं साधु मन्यन्ते ते बालिशाः ॥ ३६–३९ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

किं दुर्ज्जरमन्नमिव न विषादप्यतितीव्रमित्याह—नेति । हालाहलं हि शम्भुर्जरयामासैव अस्य प्रतिविधिः प्रतिक्रिया ॥ ३३ ॥ तादृशं विषमपि वरं भोक्तव्यं नतु ब्रह्मस्वमित्याह—वह्निर्हि मूलान्यवशेषयति ब्रह्मस्वारणिपावको हि दुरुपशमत्वाद्वह्निविशेषः पुरातनतरुकोटरमध्यन्यस्तवह्निर्यथा कालेनान्तः प्रवृद्धो बहुवार्षिकजलैरपि न निर्वाति किन्तु मृत्तिकान्तर्गतमूलपर्य्यन्तमपि तरुं दहति तथा कुलं तदपि समूलम् ॥ ३४ ॥ दुरनुज्ञातमिति दुःशब्देन यथावदननुज्ञातमित्यर्थः । अयं मे बन्धुरुपकारी मद्धनं मया खल्वदत्तमपि भुङ्क्ते चेद्भुङ्क्तामित्येवमनुज्ञातमित्यर्थः । त्रिपुरुषं स्वं पुत्रं पौत्रं च प्रसह्य हठात् बलात् राजाद्याश्रयतश्च ॥ ३५ ॥ राजकुल्याः राजकुलप्रसूताः ये ब्रह्मस्वमभिमन्यन्ते ते निरयं नरकमेवाभिमन्यन्ते अतो बालिशा अज्ञाः आत्मपातं न चक्षते ॥ ३६–३९ ॥

### गूढार्थदीपिनी

प्रतिविधिः प्रतिक्रिया ॥ ३३ ॥ विषं कर्तृ अत्तारं भोक्तारम् हन्ति । ब्रह्मस्वमेव अरणिः काष्ठं तज्जातः पावकः समूलं कुलम् ॥ ३४ ॥ दुरत्र वर्जने । अनुज्ञां विना । त्रिपूरुषं स्वयं पुत्रं पौत्रं च । प्रसह्य हठात् बलात् राज्यसाहाय्यात् । पूर्वान् पितृपितामहादीन् । अपरान् पुत्रपौत्रादीन् भोक्तारं च हन्ति ॥ ३५ ॥ निरयं नरकहेतुभूतम् अभिमन्यन्ते इच्छन्ति ते साधु-बालिशाः महामूर्खाः ॥ ३६ ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

ब्रह्मस्वलक्षणारणिजः पावकस्तु कुलं तदपि समूलं दहति ॥ ३४ ॥ दुरनुज्ञातं यथावदनुज्ञातं प्रसह्य हठात् बलात् राजाद्याश्रयतः पूर्वान् पितृपितामहादीन् अपरान् पुत्रपौत्रादीन् ॥ ३५ ॥ निरयम् अन्यायतो गृहीतत्वात् निरयप्रदं ब्रह्मस्वं ये साधु मन्यन्ते ते बालिशाः आत्मपातं न विचक्षते ॥ ३६–३९ ॥

### श्रीमद्वल्लभाचार्य्यकृता सुबोधिनी

एवं मरणपर्यवसायित्वमुक्त्वा तादृशान्यन्यान्यपि सन्तीति अनुपमार्थमितरं निषेधति **नाहं हालाहलं मन्य** इति । समुद्रोद्भूतं महादेवेन पीतं विषं हालाहलम् । न विषमात्रम् । तस्यापि महादेवभक्षितस्य प्रतीकारो दृष्ट इति तस्य विषत्वमेव नास्ति । यद्यपि वाक्यान्तरे 'न विषं विषमित्याहुर्ब्रह्मस्वं विषमुच्यते । विषमेकाकिनं हन्ति ब्रह्मस्वं पुत्रपौत्रक'मिति प्रकारान्तरेण क्रूरता निरूपिता, तथापि तस्याप्यनङ्गीकारार्थमप्रतिक्रियामेवाह । यतो ब्रह्मस्वस्य प्रतिक्रियाभावः, अन्यथा नृगप्रार्थनया सर्वमित्रयोर्ब्राह्मणयोर्दया स्यात्, तदा प्रतिक्रियां कुर्वीताम् । ननु तस्यापि प्रतीकारो दृष्टः, कृकलासशरीरं प्राप्य मुक्त इति, तत्राह **भुवीति** । यथास्थितस्य न प्रतीकार इत्यर्थः ॥ ३३ ॥ तमपि विशेषमाह **हिनस्ति विषमत्तारमिति** । अप्रतीकारेऽपि विषमत्तारमेव हिनस्ति । विषादग्निः क्रूर इति तत्तुल्यो भविष्यतीत्याशङ्क्याह **अद्भिरग्निः प्रशाम्यतीति** । दृष्टत्वात् न लौकिके हेतुर्वक्तव्यः, अलौकिकेऽपि 'आपो वा अग्नेर्भ्रातृव्या' इति श्रुतेः अद्भिः प्रशाम्यत्येव । ब्रह्मस्वस्य अशान्तौ हेतुमाह **कुलं समूलं दहतीति** । ब्रह्मस्वमेव अरणी याभ्यां मथने अग्निर्भवति । स हि यजमानं यदर्थे आधीयते, तमपि दग्ध्वा शाम्यति, यावज्जीवाधिकारादग्निहोत्रस्य । ब्रह्मस्वलक्षणा त्वरणिः कुलार्थमेव प्रविष्टेति कुलमेव दग्ध्वा शाम्यति । न हि कश्चिद्धर्मार्थं परलोकार्थं वा ब्रह्मस्वं गृह्णाति । शरीरमपि कुलोद्भवमिति वंशजनकमिति च कुलमेव पोषयति । निषिद्धार्थं ब्रह्मस्वग्रहणे उभाभ्यां सर्वनाशः । कुलमित्युपलक्षणं वा । यत्रैव क्वचिद्ब्रह्मस्वं सम्बध्यते, तमेव दहतीति सर्वमविवादम् । **समूलमिति** । कुलरक्षकधर्ममपि उपजीवकत्वात् दहति ॥ ३४ ॥ सामान्यतः कुलनाशकत्वं ब्रह्मस्वस्योपपाद्य विशेषतो व्यवस्थामाह **ब्रह्मस्वं दुरनुज्ञातमिति** । दुष्टतया अनुज्ञातम्, मनसि अदत्त्वैव वाङ्मात्रेणानुज्ञातम्, यथा बलाद्गृहीत्वा अनुज्ञां प्रार्थयति । ततो बलिष्ठं ज्ञात्वा मारणादिशङ्कया अनुगृह्णाति, तत् दुरनुज्ञातम् । तच्चेद्भुक्तम्, तदा त्रिपुरुषं हन्ति । भोक्ता तत्पुत्रः पौत्रश्चेति त्रयः पुरुषाः । चौर्यभुक्तं तु निषिद्धत्वान्महापातके पर्यवस्यति । प्रसह्य धृत्वा अतिक्रमं कृत्वा शास्त्रतः बलाल्लोकतश्च भुक्तमेकविंशतिपुरुषान् दहति । तत्र दशपूर्वाः पितृपितामहादयः, परे पुत्रपौत्रादयः, स्वयमेकविंशः । प्रसहनबलयोरान्तरबाह्यभेदेन व्यवस्था, वैदिकलौकिकभेदेन वा । कश्चित् बलाद्गृह्यमाणं प्रयच्छति, स्वयं बलमकृत्वा, कश्चित्तु स्वयमपि बलं करोतीति न

पौनरुक्त्यम् ॥ ३५ ॥ नन्वेवं धर्मशास्त्रे प्रसिद्धे कथं ब्रह्मस्वापहारो भविष्यतीत्याशङ्क्याह **राजान** इति । प्रथमतो राजत्वादेव, तत्रापि राजलक्ष्म्या । चकारादभिजनादिमदैः आत्मनः पातं न विदन्ति, यतस्ते शास्त्रोक्ता राजानः, अन्यथा 'राज्यान्ते नरकं ध्रुव'मिति न स्यात् । अन्यत् क्षत्रियस्य व्याप्यमेव, ब्राह्मण एव परं व्यापकः, ते चेद्ब्रह्मस्वं जानीयुः नरकसाधनत्वेन, तदा न गृह्णीयुः । न हि कश्चिन्नरके पतति । अत एव निरयरूपं ब्रह्मस्वं साधु मन्यन्ते । यतो बालिशः ॥ ३६ ॥

### श्रीसुबोधिनी—सारः

विषादपि दारुणमित्याह । हलाहलं विषं नाहं मन्ये यस्य प्रतिक्रिया मंत्रादिना निवारणविधिरस्ति किंतु ब्रह्मस्वं हि विषं प्रोक्तं यतोऽस्य प्रतिविधिः प्रतिवारणक्रिया भुवि पृथिव्यां नास्ति ॥ ३३ ॥ किंच विषं कर्तृ अत्तारं भक्षकमेव हंति वह्निरग्निरद्भिर्वार्भिः प्रशममुपयाति ब्रह्मणः स्वं धनं तदेवारणिस्तस्माज्जातः पावकः पापाग्निः समूलं कुलं भस्मसात्करोति ॥ ३४ ॥ अथावांतरभेदमाह । दुरनुज्ञातं ब्रह्मस्वं कर्तृ त्रिपुरुषं स्वयं पुत्रं पौत्रं च हंति एतेन तुष्ट्या दत्तं न दोषायेति सूचितं युक्तं चैतत् लोकेपि शास्त्रेपि दृश्यते सीतायै आभूषणाद्यनुसूयया दत्तमिति वाल्मीकीये आरण्यकांडे प्रसह्य हठेन बलतो वा भुक्तं सत् दशपूर्वान् दशाऽवरान् आत्मानं च हंति ॥ ३५ ॥ "जानंतोप्येतमिच्छंति ते भूपा नरकैषिणः" इत्याह । राजसंपदांधा राजानो ये ब्रह्मस्वं साधु अभिमन्यन्ते बालिशा मूर्खास्ते आत्मपातं निरयं न पश्यंति ॥ ३६ ॥

### गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

प्रतिक्रियानिवृत्त्युपायोऽस्तीति शेषः । स्पष्टमन्यत् ॥३३॥ विषादग्नेश्चापि ब्रह्मस्वमतिघोरम्' इत्याह—हिनस्तीति । विषमत्तारं भक्षितारमेव हन्ति, ब्रह्मस्वं तु दुरनुज्ञातं सम्यगननुज्ञातं सद्भुक्तं स्वं पुत्रं पौत्रं चेति त्रिपुरुषं कुलं हन्ति । प्रसह्य हठात् बलात् राजाद्याश्रयणात् भुक्तं तु दशपूर्वानिति पितृपितामहादीन् दशापरान् पुत्रपौत्रादींश्च भोक्तारं च हन्ति नरके पातयति । अग्निरद्भिर्जलैः प्रशाम्यति दहन्नपि मूलमवशेषयति, ब्रह्मस्वलक्षणारणिजः पावकः पापं तु समूलं कुलं दहति ॥३४॥ 'तर्हि राजानः किमिति वाञ्छन्ति भुञ्जते च' इत्यपेक्षायामाह—राजान इति । ये राजानः ब्रह्मस्वं साधु समीचीनमभिमन्यन्ते आकाङ्क्षन्ते भुञ्जते च ते आत्मनः पातं नरके पतनं न विचक्षते न पश्यन्ति । 'अतोऽर्थाद्ब्रह्मस्वकाङ्क्षया नरकमेवाकाङ्क्षन्त' इत्याह—निरयमिति । तददर्शने हेतुमाह—राजलक्ष्म्यान्धा इति । तत्रापि हेतुमाह—बालिशा इति । अज्ञाः । अन्यथा तन्मदो न स्यादित्याशयः ॥ ३६ ॥

### अन्वितार्थप्रकाशिका

नाहमिति ॥ यस्य प्रतिक्रिया शिवकर्तृकपानादिर्निवृत्त्युपायोऽस्ति तं हालाहलं विषं मारकत्वाऽव्यभिचारि न मन्ये हि निश्चितम् । ब्रह्मस्वमेव विषं प्रोक्तम् । अस्य भुवि प्रतिविधिर्नास्ति ॥ ३३ ॥ हिनस्तीति ॥ विषं कर्तृ अत्तारं भोक्तारमेव हन्ति औषधादिना शाम्यति क्वापि गुणमपि करोति । वह्निश्च अद्भिर्जलैः प्रशाम्यति दहन्नपि मूलमवशेषयति । ब्रह्मस्वलक्षणारणिजः पापपावकस्तु कुलं दहति तदपि समूलमिति ॥ ३४ ॥ ब्रह्मस्वमिति ब्रह्मस्वं दुरनुज्ञातं सम्यगननुज्ञातं मित्रधनादिबुध्या भुक्तं स्वं पुत्रं पौत्रं चेति त्रिपुरुषं कुलं हन्ति । प्रसह्य हठात् बलात् राजाद्याश्रयणात् भुक्तं तु दशपूर्वानिति पितृपितामहादीन् दशापरान् पुत्रपौत्रादींश्च भोक्तारं च हन्ति नरके पातयति ॥ ३५ ॥ राजान इति ॥ ये राजलक्ष्म्या अन्धाः बालिशाः मूर्खाः निरयं नरकहेतुं ब्रह्मस्वं साधु समीचीनमभिमन्यन्ते आकाङ्क्षन्ति भुञ्जते च ते आत्मनः पातं नरके पतनं न विचक्षते न पश्यन्ति । साधुबालिशाः अतिमूर्खा इति वा ॥ ३६ ॥

### श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्

ब्रह्मस्वं विषतोऽपि विषमित्याह नेति हालाहलं महाविषं विषं न मन्ये यतः । यस्य महाविषस्य प्रतिक्रियानिवारणोपायोऽस्ति । अस्य ब्रह्मधनरूपविषस्य तु प्रतिविधिर्निवारणोपायो नास्ति ॥ ३३ ॥ ब्रह्मस्वं विषादपि क्रूरतरमस्तीत्याह हिनस्तीति । अत्तारं एकमेव हिनस्ति न बहून् । तर्ह्यग्नितुल्यमिति चेन्नेत्याह वह्निर्दावाग्निः जलैः शाम्यति मूलवर्जितवृक्षादिदहनं च करोति ब्रह्मधनरूपाऽरणिस्तज्जन्यः पापरूपः पावकस्तु समूलं कुलं दहति ॥ ३४ ॥ दुरनुज्ञातं इदं ब्रह्मस्वं भवतीति न ज्ञातं भुक्तं चेत्तर्हि त्रिपुरुषं स्वयं पुत्राः पौत्राश्चेति त्रयाणां पुरुषाणां समाहारस्तत् हंति यर्हि प्रसह्य हठात् । अन्येषां बलाच्च भुक्तं चेत्तर्हि पितरमारभ्य पूर्वान् दश हंति नरके पातयंतीत्यर्थः ॥३५॥ राजलक्ष्म्या अन्धा अन्धीभूता ये राजानः निरयं निरयप्रापकं ब्रह्मस्वं साधु यथा तथाभिमन्यंते ते बालिशाः आत्मपातं न विचक्षते न पश्यन्ति ॥ ३६ ॥

### भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

किं च । नाहमिति । अहं, हालाहलं, विषं न मन्ये । कुतः । यस्य हालाहलस्य, प्रतिक्रिया प्रतिकारः, वर्तते इति शेषः । किं तु ब्रह्मस्वं एव विषं प्रोक्तं, हि यस्मात्, भुवि अस्य, प्रतिविधिः प्रतिक्रिया, न अस्तीति शेषः ॥ ३३ ॥ हालाहल-

तोऽस्यान्यं विशेषं वक्ति। हिनस्तीति। विषं, अत्तारं भक्षितारमेकमेव, हिनस्ति मारयति। ब्रह्मस्वविषं तु, अत्तारं तत्कुलं च हिनस्तीति शेषः। संसर्गेण मारकत्वात्किमग्नितुल्यमेतदिति चेन्न। वह्निः अग्निरपि, अद्भिः प्रशाम्यति जलेन प्रशाम्यति, एकमेव दहति चेत्यर्थः। ब्रह्मस्वरूपाग्नेः प्रसिद्धाग्नेरपरं विशेषमाह। ब्रह्मस्वारणिपावकः, समूलं कुलं, दहति। अग्निर्यद्यपि दहत्यथापि मूलान्यवशेष्य दहति, अयं तु समूलमिति ततो महान् विशेष इति भावः॥ ३४॥ किं च। ब्रह्मस्वमिति। ब्रह्मस्वं, दुरनुज्ञातं सम्यगननुज्ञातं सत्, भुक्तं भवेच्चेत्, त्रिपूरुषं स्वं पुत्रं पौत्रं चेति त्रीन् पुरुषानित्यर्थः। हन्ति। बलाद्राजाद्याश्रयवशात्, प्रसह्य हठात् कृत्वा, भुक्तं सत्, दश पूर्वान्, दश अपरान्, हन्ति। पूर्वान् पितृपितामहादीन् परान् पुत्रपौत्रादीन्॥ ३५॥ राजान इति। ये राजानः, साधु यथा तथा, ब्रह्मस्वं अभिमन्यन्ते आकाङ्क्षन्ते। ते राजलक्ष्म्या, अन्धा इति शेषः। केचित्तु राजलक्ष्म्या ये इत्यत्र राजलक्ष्म्यान्धा इति पाठं पठन्ति। तन्मते ये इति तच्छब्दोपादानाद्बोध्यं, यत्तदोर्नित्यसंबन्धात्। बालिशा मूढाः सन्तः, आत्मा पतत्यस्मिन्नित्यात्मपातस्तं, निरयं नरकं, न विचक्षते न विचारयन्ति। वयं मृत्वा नरके पतिष्याम इति विचारमन्धत्वाद्बालिशत्वाच्च न कुर्वन्तीत्यर्थः॥ ३६॥

### कृष्णप्रिया

मैं हलाहल विष को विष नहीं मानता, क्योंकि उसकी चिकित्सा होती है। वस्तुतः ब्राह्मणों का धन ही परम विष है; उसको पचा लेने के लिये पृथ्वी पर कोई औषध, कोई उपाय नहीं है॥ ३३॥ हलाहल विष केवल खाने वाले का ही प्राण लेता है, और आग भी जल के द्वारा बुझायी जा सकती है, परन्तु ब्राह्मण के धनरूप अरणि से जो आग पैदा होती है, वह सारे कुल को समूल जला डालती है॥ ३४॥ ब्राह्मण का धन यदि उसकी पूरी-पूरी सम्मति लिये बिना भोगा जाय तब तो वह भोगने वाले, उसके लड़के और पौत्र—इन तीन पीढ़ियों को ही चौपट करता है। परन्तु यदि बलपूर्वक हठ करके उसका उपभोग किया जाय, तब तो पूर्वपुरुषों की दस पीढ़ियाँ और आगे की भी दस पीढ़ियाँ नष्ट हो जाती हैं॥ ३५॥ जो मूर्ख राजा अपनी राजलक्ष्मी के घमंड से अंधे होकर ब्राह्मणों का धन हड़पना चाहते हैं, समझना चाहिये कि वे जान-बूझकर नरक में जाने का रास्ता साफ कर रहे हैं। वे देखते नहीं कि उन्हें अधःपतन के कैसे गहरे गड्ढे में गिरना पड़ेगा॥ ३६॥

**गृह्णन्ति यावतः पांसून् क्रन्दतामश्रुबिन्दवः[1]। विप्राणां हृतवृत्तीनां[2] वदान्यानां कुटुम्बिनाम्॥ ३७॥**
**राजानो राजकुल्याश्च तावतोऽब्दान्निरंकुशाः। कुम्भीपाकेषु[3] पच्यन्ते ब्रह्मदायापहारिणः॥ ३८॥**
**स्वदत्तां परदत्तां वा ब्रह्मवृत्तिं हरेच्च यः। षष्टिवर्षसहस्राणि विष्ठायां जायते कृमिः॥ ३९॥**
**न मे ब्रह्मधनं भूयाद् यद्[4] गृद्ध्वाल्पायुषो[5] नृपाः। पराजिताश्च्युता[6] राज्याद् भवन्त्युद्वेजिनोऽहयः[7]॥४०॥**

### कर्दमक्षमा

अन्वयः—हतवृत्तीनाम्, वदान्यानाम्, कुटुम्बिनाम्, विप्राणाम्, क्रन्दताम्, अश्रुबिन्दवः, पांसून्, गृह्णन्ति॥ ३७॥ ब्रह्मदायापहारिणः, निरङ्कुशाः, राजानः, च, राजकुल्याः, तावतः, अब्दान्, कुम्भीपाकेषु, पच्यन्ते॥ ३८॥ यः, स्वदत्ताम्, परदत्ताम्, ब्रह्मवृत्तिम्, वा, हरेत्, सः, षष्टिवर्षसहस्राणि, विष्ठायाम्, कृमिः, जायते, च, कुम्भीपाकेषु, पच्यन्ते॥ ३९॥ न, मे, ब्रह्मधनम्, भूयात्, अल्पायुषः, नृपाः, यत्, गृद्ध्वा, पराजिताः, राज्यात्, च्युताः, उद्वेजिनः, अहयः, भवन्ति॥ ४०॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

अपि च गृह्णन्तीति॥ ३७-३९॥ गृद्ध्वा अभिकांक्ष्य॥ ४०-४१॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

अन्यदाह—अपि चेति। यावतो यावत्संख्याकान्। पांशून् रजःकणान्। गृह्णन्त्यार्द्रीकुर्वंति। वदान्यानां कुटुंबिनामिति विशेषणद्वयेन कदर्येभ्यः कुटुंबहीनेभ्यो गृहीत्वा तद्धनस्य कुटुंबिने स्वधर्मनिष्ठाय दाने राज्ञो न दोष इति सूचितम्॥ ३७॥ राजकुल्यास्तदधिकारिपुरुषाः। दायो द्रव्यम्। 'कुल्यो मान्ये कुलोद्भवे' इति मेदिनी। "विभक्तव्ये पितृद्रव्ये दाने दायो धनेऽपि च" इति निरुक्तिः॥ ३८॥ ब्रह्मवृत्तिं ब्राह्मणजीविकाम्॥ ३९॥ श्रीकृष्णो लोकसंग्रहमाह—नम इति। उद्वेजितुं भीतं कर्तुं कंपयितुं वा शीलं येषां ते तथा ब्राह्मणोद्वेगकर्तारोऽहयः सर्पयोनिं लभन्त इत्यर्थः। मे मदर्थं मत्संबंधि वा न भवतु न मयि

---

१. रुदता—वीर. विज.। २. वित्तानां—विज.। ३. पाकेन—वीर.; नरके तु विप—विज.। ४. यज्जग्ध्वा—विज.। ५. नरा—श्रीधर. वंशी. जीव. नृपाः—प्रा. पा.। ६. च्युताः स्थानाद्—विज.। ७. वयं—वीर.; ह्युद्वेजिता नृपाः—विज.; हि ये—प्रा. पा.।

पर्यवस्यतु। एतेन विप्रदत्तं भगवान्न किमपि गृह्णातीति न शंकनीयम्, कथम्–छलादिना मत्संबंधि मा भवत्विति भगवतोऽभिप्रायः। तदेवाह—यत् गृद्ध्वा बलेन छलेन याञ्चया वा इदं ग्रहीष्यामीत्यभिकांक्ष्यापि इह जन्मन्यल्पायुषः जीवतोऽपि शत्रुभिः पराजितास्संतो राज्याच्च्युता जन्मांतरे सर्पा भवन्ति, येन लोकेषूद्वेजनं ददति स्वयं च लभन्त इत्येवं महादुःखभाज एव चिरं भवन्तीति भावः॥ ४०॥

### श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी

निरयमेव दर्शयति—गृह्णन्तीति युग्मकेन। वदान्यानाम् आतिथ्यादिपराणाम् अतो हृतचित्तत्वेन तदसिद्धया कुटुम्बभरणाशक्त्या च दुःखेन रुदतां सतां गृह्णन्तीत्यादिकं नरककालसङ्ख्यादर्शनार्थं क्वाचित्कमेवोक्तं रोदनाभावेऽपि नरकप्राप्तेः निरङ्कुशाः स्वतन्त्राः अत एव ब्रह्मस्वापहारवन्तश्च भवन्ति तदा कुम्भीपाकेषु तद्भेदेषु प्रत्येकं तावदब्दान् व्याप्य पच्यन्ते यमदूतैः॥ ३७–३८॥ अहो कुम्भीपाकानन्तरञ्च महती दुर्गतिरित्याह—तत्रैव वृत्तिहरणमपि विशेष्याह—स्वेति। जायते तत्रैव तावत्कालं पुनः पुनर्मृत्वा जायत इत्यर्थः॥ ३९॥ किं वक्तव्यं ब्रह्मस्वहरणात् दुर्गतिरिति बलच्छलादिना तज्जिहीर्षयापि जन्मद्वये दुःखं स्यादित्यन्येषामभयदर्शनार्थं स्वयमप्यरुच्यतिशयेन भीत इवाह—नेति। मे मदर्थं मत्सम्बन्धि वा न भूयात् न भवतु न मयि पर्य्यवस्यतु तत्र हेतुः यदिति गृध्वा बलेन छलेन याच्ञया वा इदं गृह्णामीत्यभिकाङ्क्ष्यापि इह जन्मनि अल्पायुषः जीवनेऽपि शत्रुभिः पराजिताः सन्तो राज्यात् च्युता भ्रष्टा अन्यस्मिंश्च सर्पा भवन्ति येन लोकेषूद्वेगं ददति स्वयञ्च लभते इत्यादि महादुःखभाज एव चिरं भवन्तीति भावः नृपा इत्यत्र नरा इति पाठः॥ ४०॥

### श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी

वदान्यानामातिथ्यादिपराणाम्, अतो हृतवृत्तित्वेन तदसिद्धया कुटुम्बभरणाशक्त्या च दुःखेन रुदतां सताम्॥३७॥ राजकुल्या राज्ञां पुत्रादयो भृत्यादयश्च, अतो निरंकुशाः स्वतन्त्राः, अत एव ब्रह्मस्वापहरणशीलाः॥ ३८॥ अहो विप्रजीविकाहरणाच्च महती दुर्गतिरित्याह—स्वेति। किं वक्तव्यम्, स्वदत्तापहारेणेति, परदत्तां वा, जायते कृमिर्भूत्वा तिष्ठति, किंवा तत्रैव तावत्कालं पुनः पुनर्मृत्वा पुनः पुनर्जायत इत्यर्थः॥ ३७॥ किं वक्तव्यम्, हरणाद्दुर्गतिरिति, तद्वाञ्छयापि जन्मद्वये दुःखं स्यादित्याह—नेति। मे मदर्थं मत्सम्बन्धि वा न भूयान्न भवतु, न मयि पर्य्यवस्यतु। तत्र हेतुः—यदिति, इह जन्मनि अल्पायुषो जीवनेऽपि शत्रुभिः पराजिताः सन्तो राज्याच्च्युता भ्रष्टाः, अन्यस्मिंश्च लोकोद्वेजनशीलाः सर्पा भवन्ति। उद्वेजितया सदा भयादिना तत्रापि दुःखं सूचितम्, किंवा सर्पतुल्याः, तथापि पुनः पुनर्नरकादिदुर्मतिः सूचितैव। भक्त्या विप्रैरर्पितानां स्वद्रव्याणां भगवतः स्वीकार्य्यत्वेऽपि न मे भूयादिति बलाद्ग्रहणाभिप्रायेण, किंवा लोकशिक्षार्थं निजभगवत्तानपेक्षयेति दिक्॥ ४०॥

### श्रीमद्वीरराघवाचार्यकृता भागवतचन्द्रचन्द्रिका

गृह्णन्तीत्यादिश्लोकद्वयमेकान्वयं हृतं वित्तं येषां तेषामत एव रुदतां विप्राणाम् अश्रुबिन्दवः यावतः पांसून् गृह्णन्ति आर्द्रान् कुर्वन्ति तावतोऽब्दान्वत्सरान् कुम्भीपाकेन निरयेण पच्यन्ते ब्रह्मदायापहारिणः ब्रह्मस्वापहारिणः निरङ्कुशाः दुर्निवाराः राजादिविशेषणमिदं द्वयम्॥ ३७–३८॥ स्वदत्तामिति। ब्रह्मवृत्तिं ब्राह्मणस्य जीविकाम्॥ ३९॥ ब्रह्मस्वं न मां स्पृशेदित्याशास्ते—नम इति। विपर्ययेऽनर्थमाह—यदिति। यद्ब्रह्मधनं गृद्ध्वा अभिकाङ्क्ष्य अल्पायुषः पराजिताश्च राज्यात् अभ्रष्टाश्च भवन्त्यतो वयमुद्वेजिनः भीतिमन्तो भवेम॥ ४०॥

### श्रीविजयध्वजतीर्थकृता पदरत्नावली

यद्ब्रह्मस्वं जग्ध्वाऽल्पायुषो भवन्ति॥ ४०॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

यद्गृद्ध्वा अभिकाङ्क्ष्यापि किमुत हृत्वेत्यर्थः॥ ४०॥

### गूढार्थदीपिनी

गृह्णन्तीति युग्मम्। क्रन्दतां रुदतां विप्राणां यावतः यावत्संख्याकान् रजःकणान् आर्द्रीकुर्वन्ति। कुल्याः कुलोद्भवाः। दायो द्रव्यम्॥ ३७–३८॥ ब्रह्मवृत्तिं ब्राह्मणविकाम्॥ ३९॥ गृध्वापि अभिकाङ्क्ष्यापि। उद्वेजितुं भयभीतं कर्तुं शीले येषां ते तथाभूताः सन्त जन्मान्तरे सर्पाः भवन्ति॥ ४०॥

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः

गृद्ध्वा अभिकाङ्क्ष्यापि किमुत वक्तव्यं हृतेति ॥ ४०-४४ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धीये श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे चतुष्षष्टितमोऽध्यायार्थप्रकाशः ॥ ६४ ॥

### श्रीमद्वल्लभाचार्य्यकृता सुबोधिनी

सामान्यतो नरकमुक्त्वा विशेषत आह गृह्णन्तीति **द्वाभ्याम्**। हृतवृत्तीनां रुदतामश्रुबिन्दवो यावतः पांसून् गृह्णन्ति। अन्तःशोके हि रोदनम्, तस्य च परिमितिरश्रुभिर्भवति। अश्रूणां च परिमाणं कार्यवशात्, अतो रेणूनां सङ्ख्ययैव शोकसङ्ख्या। निमित्तान्तरं निराकर्तुं **हृतवृत्तीना**मिति। **वदान्याना**मिति लोभादिदोषनिषेधः। **कुटुम्बिना**मिति ह्रियमाणपदार्थावश्यकत्वम्। तदा ब्रह्मस्वता सम्पद्यते अत्यावश्यकत्वात्। निषिद्धायाः क्रियायाः ब्राह्मणविषयायाः पांसुद्वारैवानिष्टनिर्णयो वेदे निरूपितः। 'यावतः प्रस्कन्द्य पांसून् संगृह्णात्, तावतः संवत्सरान् पितृलोकं न प्रजाना'दिति श्रुतेः। एकेन निमित्तमुक्त्वा अपरेण फलमाह **राजानो राजकुल्याश्चेति**। **राजकुल्याः** राजकुलोत्पन्नाः। चकारात्तत्सम्बन्धिनोऽन्ये च, य एव हरणे समर्थाः। तावतः अब्दान् वर्षानभिव्याप्य कुम्भीपाकेषु पच्यन्ते। प्रासङ्गिकदोषपरिहारार्थमाह **ब्रह्मदायापहारिण** इति। निरङ्कुशा इति। तेषां नियामकश्चेन्न स्यात्, अन्यथा तस्यैव दोषो भवेत् ॥ ३८ ॥ ब्रह्मस्वविशेषस्यापहारे दोषविशेषमाह **स्वदत्ता**मिति। पूर्वं स्वेनैव दत्ता, पश्चाद्ब्राह्मणास्वास्स्ये हृता, परेण राज्ञा दत्ता, परराज्यहरणेन हृता। पित्रादिदत्तां स्वदत्तामेवाहुः स्वयमेव पितेति। नात्र धनं विषयः, किन्तु वृत्तिर्भूम्यादिः, यत्र निरन्तरं जीवनसाधनमुत्पद्यते। ब्रह्मवृत्तिर्ब्राह्मणानामेव जीवनसाधनोत्पत्तिस्थानम्। तादृशः षष्टिर्वर्षसहस्राणि नरकरूपायां विष्ठायां कृमिर्भूत्वा तिष्ठति। षष्टिसंज्ञकः संवत्सरः। प्रभवादयः तस्य संज्ञाः। ते सहस्रधा आवृत्ता इति तावद्वर्षाणि। सर्वतो बीभत्सिता सेति उत्पत्तिरेव तत्रेति न क्वचिदपि तस्मिन् शरीरे सुखसम्बन्ध इत्युक्तम् ॥ ३९ ॥ एवं ब्रह्मस्वदोषानुक्त्वा स्वकीयेषु तदभावं प्रतिजानीते **न मे ब्रह्मधनं भूयादिति**। स्वतो देववशाद्वा ब्रह्मस्वं सङ्क्रान्तं भवतीति मे न भूयादिति देवप्रार्थनेव वचनम्। प्रमादादागते को दोष इति चेत्, तत्राह **यद्गृद्ध्वाल्पायुष** इति। यद्गृद्ध्राः यदभिकाङ्क्षिणश्च ते अल्पायुषश्च। ग्रहणमात्र एवायुःक्षयो भवतीत्युक्तम्। आपद्गतानां तथा दोषो न भवतीति **नृपा** इत्युक्तम्। दैवगत्या मरणाभावेऽपि शत्रुभिः पराजिता भवन्ति। राज्यात् च्युताः ततो मृताः स्थानभ्रष्टा जनोद्वेजनकर्तारः सर्पा भवन्ति। अत ऐहिकामुष्मिकदोषस्य विद्यमानत्वात् तत्सङ्गमो मा भवत्विति ॥ ४० ॥

### श्रीसुबोधिनी-सारः

धनाकर्षणे आक्रोशतां विप्राणां नष्टजीविकानां वदान्यानां दानिनां कुटुंबिनाम् अश्रुबिंदवो यावतः पांशून्रेणून् गृह्णन्ति आर्द्रीकुर्वंति ॥ ३७ ॥ तावतोऽब्दान् वर्षाणि यावत् ब्रह्मभागभुजो राजानः तत्कुल्याश्च निरंकुशा उद्वृत्ताः कुंभीपाकेषु पच्यंते ॥ ३८ ॥ किं च स्वेन दत्तां परैर्वा दत्तां ब्रह्मणो विप्रस्य वृत्तिं जीविकां यो हरेत् गृह्णीयात् स षष्टिवर्षसहस्राणि यावत् विष्ठायां पुरीषे कृमिर्जायते ॥ ३९ ॥ ऊर्ध्वबाहुराक्रोशति मे मम ब्रह्मधनं न भूयान्मास्तु। तत्र दोषानाह। यत् विप्रधनं गृद्धाभिकांक्ष्य नृपा अल्पायुषः क्षीणजीविता मारीमृता भवंति युद्धे पराजिता ब्रह्मस्वरसपुष्टत्वात् राज्यात् च्युता भ्रष्टा उद्वेजिनः परभयकारिणोऽहयः सर्पा भवन्ति ॥ ४० ॥

### गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

एवं सामान्यतो नरकपातमुक्त्वा विशेषतस्तदाह—गृह्णन्तीति। क्रन्दतां रुदतां विप्राणामश्रुबिन्दवो यावतो भूपांसून् रेणून् गृह्णन्ति आर्द्रीकुर्वन्ति तावतोब्दान् संवत्सरान् निरङ्कुशाः शास्त्राज्ञोल्लङ्घिनः अत एव ब्रह्मदायापहारिणो राजानो राजकुल्याः राजकुलोद्भवा अमात्यभृत्यादयः तत्सम्बन्धिनश्च कुम्भीपाकेषु नरकविशेषेषु पच्यन्ते क्लिश्यन्तीति द्वयोरन्वयः। रोदने हेतुमाह—हृतवृत्तीनामिति। हृतवृत्तित्वेपि यदि तदर्थव्यापारपरास्तदा न तथा रोदनं कुर्युः' इत्याशङ्क्याह—वदान्यानामिति। उदारचित्तानां त्यक्तव्यापाराणामध्यापनादिनिष्ठानामित्यर्थः। 'तथाप्येकाकित्वे यथाकथञ्चिन्निर्वाहसम्भवान्न रोदनं सम्भवति' इत्याशङ्क्याह—कुटुम्बिनामिति ॥ ३७-३८ ॥ वृत्तिं जीविकाम् ॥ ३९ ॥ एवं ब्रह्मस्वदोषमुक्त्वा स्वयं तदभावं प्रार्थयते—न मे ब्रह्मधनं भूयादिति। तदाकाङ्क्षादोषमाह—यदिति। यद्ब्रह्मधनं गृद्ध्वा अभिकाङ्क्ष्य नराः अल्पमायुर्येषां ते क्षीणायुषो भवन्ति, शत्रुभ्यः पराजिता भवन्ति, राज्यादैश्वर्यात् च्युता भ्रष्टा भवन्ति, मरणानन्तरं च उद्वेजिनः परोद्वेगजनकाः अहयः सर्पा भवन्ति ॥ ४० ॥

### अन्वितार्थप्रकाशिका

गृह्णन्तीति युग्मम् ॥ हृतवृत्तीनां वदान्यानाम् उदारचित्तानां कुटुम्बिनां विप्राणां क्रन्दतामश्रुबिन्दवो यावतो भुवः पांसून् रेणून् गृह्णन्ति आर्द्रीकुर्वन्ति तावतोऽब्दान् संवत्सरान् निरङ्कुशाः शास्त्राज्ञोल्लङ्घिनः अत एव ब्रह्मदायापहारिणो राजानो

राजकुल्या राजकुलोद्भवा अमात्यभृत्यादयः तत्संबन्धिनश्च कुम्भीपाकेषु अवान्तरभेदभिन्नेषु नरकविशेषेषु प्रति नरकभेदं पच्यन्ते क्लिश्यन्ति। इदं च नरककालसंख्यार्थं रोदनाभावेऽपि नरकावश्यंभवात्॥ स्वदत्तामिति॥ यः स्वदत्तां वा परदत्तां वा ब्रह्मवृत्तिं हरेत् स षष्टिवर्षसहस्राणि विष्ठायां कृमिः जायते॥ ३७-३९॥ नेति॥ मे ब्रह्मधनं न भूयात् यद्ब्रह्मधनं गृध्वा अभिकाङ्क्ष्यापि किं पुनर्हृत्वा नराः अल्पमायुर्येषां ते क्षीणायुषो भवन्ति शत्रुभ्यः पराजिता भवन्ति। राज्यादैश्वर्यात् च्युता भ्रष्टा भवन्ति मरणानन्तरं च नरके पतित्वा तच्छेषेण उद्वेजिनः परोद्वेगजनकाः अहयः सर्पा भवन्ति॥ ४०॥

### श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्

पांसून् भूरजांसि॥ ३७॥ ब्राह्मणधनहारकः॥ ३८-३९॥ यत् ब्रह्मधनं गृध्वा वांछित्वा राज्याच्च्युताः मृत्वा उद्वेजिनो जनोद्वेगप्रापकाः अहयः सर्पा भवंति॥ ४०॥

### भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

गृह्णन्तीति॥ राजान इति च॥ हृतं वित्तं येषां, तेषां कुटुम्बिनां, वदान्यानामुदाराणां, रुदतां वित्तापहारतो रोदनमाचरतां, विप्राणां, अश्रुबिन्दवः, यावतः पांसून्, गृह्णन्त्यार्द्रीकुर्वन्ति, तावतस्तावत् संख्याकान्, अब्दान् वत्सरान्, अत्यन्तसंयोगे द्वितीया। निरङ्कुशाः दुर्निवाराः, राजानः, राजकुल्याश्च, यतः ब्रह्मदायापहारिणः, ततः, कुम्भीपाकेन कुम्भीपाकनाम्ना निरयेण, पच्यन्ते। कुम्भीपाकनरकयातनां भुञ्जन्तीत्यर्थः। इति द्वयोरेकसंबन्धः॥३७-३८॥ स्वदत्तामिति॥ यः स्वदत्तां परदत्तां वा, ब्रह्मवृत्तिं हरेत्, सः षष्टिवर्षसहस्राणि षष्टिसहस्रवर्षपर्यन्तमित्यर्थः। विष्ठायां पुरीषे, कृमिः, जायते। चोऽवधारणे॥ ३९॥ ब्रह्मस्वं मा स्पृशेदित्याशास्ते॥ न म इति॥ मे मम तु, ब्रह्मधनं, न भूयादाकाङ्क्षितं मा भवतु। यद्ब्रह्मधनं, गृध्वा अभिकाङ्क्ष्य, नृपाः, अल्पायुषः, पराजिताः, राज्यात् च्युताश्च भवन्ति। उद्वेजिनः सर्वजनोद्वेगकारकाः, अहयः सर्पाश्च, भवन्ति। देहत्यागानन्तरमिति शेषः॥ ४०॥

### कृष्णप्रिया

जिन उदारहृदय और बहुकुटुम्बी ब्राह्मणों की वृत्ति छीन ली जाती है, उनके रोने पर उनके आँसू की बूँदों से धरती के जितने धूलिकण भींगते हैं, उतने वर्षों तक ब्राह्मण के स्वत्व को छीननेवाले उस उच्छृङ्खल राजा और उसके वंशजों को कुम्भीपाक नरक में दुःख भोगना पड़ता है॥ ३७-३८॥ जो मनुष्य अपनी या दूसरों की दी हुई ब्राह्मणों की वृत्ति, उनकी जीविका के साधन छीन लेते हैं, वे साठ हजार वर्ष तक विष्ठा के कीड़े होते हैं॥ ३९॥ इसलिये मैं तो यही चाहता हूँ कि ब्राह्मणों का धन कभी भूल से भी मेरे कोष में न आये, क्योंकि जो लोग ब्राह्मणों के धन की इच्छा भी करते हैं—उसे छीनने की बात तो अलग रही—वे इस जन्म में अल्पायु, शत्रुओं से पराजित और राज्यभ्रष्ट हो जाते हैं और मृत्यु के बाद भी वे दूसरों को कष्ट देनेवाले साँप ही होते हैं॥ ४०॥

**विप्रं कृतागसमपि नैव द्रुह्यत मामकाः। घ्नन्तं बहु शपन्तं च नमस्कुरुत नित्यशः॥ ४१॥**

**यथाहं प्रणमे विप्राननु[1]कालं समाहितः। तथा नमत यूयं च योऽन्यथा मे स दण्डभाक्॥ ४२॥**

**ब्राह्मणार्थो ह्यपहृतो हर्तारं पातयत्यधः। अजानन्तमपि ह्येनं[3] नृग ब्राह्मणगौरिव॥ ४३॥**

**[6]एवं विश्राव्य भगवान् मुकुन्दो द्वा[4]रकौकसः। पावनः सर्वलोकानां[5] विवेश निजमन्दिरम्॥ ४४॥**

**इति श्रीमद्भागवते महापुराणे[7] दशमस्कन्धे[8]ऽनिरुद्धानयनं नाम चतुःषष्टितमोऽध्यायः[9]॥ ६४॥**

---

१. वा-श्रीधर. वंशी. जीव. वीर. विज. विश्व.। २. विप्राः सर्व-विज.। ३. एतद्-वीर.। ४. द्वारिकाप्रजाः-प्रा. पा.। ५. भूतानां-वीर.।

६. सद्भिः समागमो राजन् कदाचिन्नाफलो भवेत्। विमुक्तो नरकाद्राजा नृगः साधुसमागमात्॥ १॥
साधूनां दर्शनं स्पर्शः कीर्तनं स्मरणं तथा। तीर्थानामिव पुण्यानां सर्वमेव हि पावनम्॥ २॥
एतच्छ्रुत्वा त्वया सन्तः सदोपास्याः परन्तप। ब्रह्मस्वं नैव हर्तव्यं यदीच्छसि परां गतिम्॥ ३॥

७. पारमहंस्यां संहितायां-प्रा. पा.। ८. उत्तरार्धे-नास्ति प्रा. पा.। ९. सप्ताशीति-विज.।

## कर्दमक्षमा

अन्वयः—हे मामकाः ! कृतागसम्, अपि, विप्रम्, नैव, द्रुह्यत, घ्नन्तम्, बहुशपन्तम्, च, नित्यशः, नमस्कुरुत ॥४१॥ यथा, अहम्, अनुकालम्, समाहितः, विप्रान्, प्रणमे, तथा, च, यूयम्, नमत, अन्यथा, सः, मे, दण्डभाक् ॥ ४२॥ ब्राह्मणार्थः, अपहृतः, हि, हर्तारम्, अधः, पातयति, हि, अजानन्तम्, अपि, एनम्, ब्राह्मणगोः इव, पातयति ॥ ४३ ॥ भगवान्, मुकुन्दः, द्वारकौकसः, एवम्, विश्राव्य, सर्वलोकानाम्, पावनः, निजमन्दिरम्, विवेश ॥ ४४ ॥

इति श्रीमद्भागवते दशमस्कन्धे निरोधलीलायामुत्तरार्द्धे नृगोपाख्ये चतुष्षष्टितमेऽध्यायेऽन्वयाः समाप्ताः ॥ ६४ ॥

## श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

प्रणमे नमामि ॥ ४२ ॥ न केवलमर्थवादबिभीषिकेयं किं तु प्रत्यक्षमित्याह । ब्राह्मणार्थ इति ॥ ४३-४४ ॥

इति श्रीमद्भागवते दशमस्कन्धे उत्तरार्द्धे श्रीध० टीकायां चतुःषष्टितमोऽध्यायः ॥ ६४ ॥

## श्रीधरस्वामिविरचिता भावार्थदीपिका

ब्राह्मणो यदि कृतागा भवेत्तर्हि किं कार्यमिति चेदाह—विप्रमिति । द्रुह्यत द्रोहं कुरुत । मामका इत्यनेन 'विप्रद्रोही न मामकः' इत्युक्तम्, तत्र मदीयत्वाभिमानं त्यक्त्वा तान्न रक्षामीति भावः । घ्नंतं ताडयन्तम् । शपंतं गालीप्रदानादि कुर्वंतम् ॥ ४१ ॥ प्रणम इत्यात्मनेपदमार्षम् । अनुकालमुहुर्मुहुः । योऽन्यथा मदाचरणविपरीतः । दंडभाक् नरकगामी भवति । तदुक्तं श्रीकृष्णेन पुराणांतरे—"विप्रोत्कर्षाऽसहा ये च नरा लोके नराधिप । ते मद्द्वेष्या न संदेहस्सर्वधर्मबहिष्कृताः ॥ तेषां भक्तिं न मन्येऽहं न दानं न व्रतादिकम् । तीर्थसेवां जपं ज्ञानं यदन्यत्सुकृतं कृतम् ॥ मद्विज्याद्वेषिणस्तान्वै प्रक्षिपामि मुहुर्मुहुः । घोरे बहुक्लेशकरे नरके भृशदारुणे ॥ न ब्राह्मणान्मे दयितं रूपमेतच्चतुर्भुजम् । सर्वं सहे महाराज विप्रनिंदां विना प्रभो ॥ जारजातस्स विज्ञेयो यो निन्दत्यनपत्रपः । ब्राह्मणं मम सर्वस्वं सर्वदेवमयं परम् ॥ दानं व्रतं तथा स्नानं श्राद्धं विप्रमृते वृथा । विप्रस्य देहो राजेन्द्र सर्वदेहिषु सर्वदा ॥ परः शुचिर्विना कर्म सुकृतं किमु कर्मणा । नैव विप्रात्परं मन्ये आत्मानमपरं किमु ॥" इति ॥ ४२ ॥ अर्थवादेन ब्राह्मणोत्कर्षपुरस्सरतद्धनहरणनिषेधबोधकवाक्येन बिभीषिका भयहेतुकोक्तिः । अर्थवादवाक्यं हि स्वार्थप्रतिपादनपरं न भवति किन्तु विधेयनिषेध्ययोः प्राशस्त्यनिंदितत्वे लक्षणया प्रतिपादयन्नस्ति । तल्लक्षणञ्च—'प्राशस्त्य-निंदान्यतरपरं वाक्यमर्थवादः' इति बहुधा निरूपितमक्रूरस्तुतावेतत् । "वेदोक्तिस्तुतिनिंदायां धनार्थप्रवटेऽपि च । शास्त्रार्थेऽ-प्यर्थवादोस्ति" इति निरुक्तिः । अजानन्तमित्युक्तेः किमु जानन्तमिति भावः ॥ ४३ ॥ द्वारकौकस इत्युपलक्षणम् । कथन-तात्पर्यमाह—पावन इति । पावयति शोधयति सन्मार्गोपदेशेनेति पावनः । लोकानां सन्मार्गप्रवृत्त्यर्थं भगवाञ्छ्रावयामासेति भावः ॥ ४४ ॥

इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे दशमस्कन्धोत्तरार्धे चतुःषष्टितमोऽध्यायः ॥ ६४ ॥

## श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी

ननु, यदि विप्र एवास्माकं धनं हरेत् कथञ्चित् द्विष्याद्वा तदा किं कार्य्यमित्यपेक्षायामाह—विप्रमिति । मा द्रुह्यत हन्तुमिच्छामपि न कुरुत एवशब्देन सदा सर्वथा च सा निरस्ता हे मामका इति ये मदीयास्ते न द्रुह्यन्तु अन्यथा तु मदीया न स्युर्मयापि न रक्ष्या इति भावः । घ्नन्तं ताडयन्तमपि ॥ ४१ ॥ न चापराधादिनाप्यनादरेण नमस्कारः कार्य्यः किन्तु भक्त्यै-वेत्याह—यथेति । अनुकालं सदा समाहितः सावधानः सन् विप्रानिति बहुत्वेन तज्जातीन् सर्वानेव सङ्गृह्णाति च अपि यूयमपि यो जनोऽन्यथा करोति स मे दण्डभाग्भवति यमादिद्वाराऽमुत्र साक्षात्स्वयञ्च दण्डयिष्यामीति भावः ॥ ४२॥ एनमिति युष्माभिः साक्षादनुभूतम् ॥ ४३ ॥ विशेषेण प्रत्यक्षदर्शनेन श्रावयित्वा तेषां शिक्षाव्याजेन सर्वेषां लोकानां पावनः तान् पावयितुमित्यर्थः । यथा लोकहितार्थमेव नरावतारं स्वप्रियसखं श्रीमदर्जुनं प्रति गीतोपदेश इति भावः ॥ ४४ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिण्यां चतुःषष्टितमोऽध्यायः ॥ ६४ ॥

## श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी

ननु यदि कदाचिद्विप्र एवास्माकं धनं हरेत् कथञ्चिद्द्विष्याद्वा, तदा हि किं कार्य्यमित्यपेक्षायामाह—विप्रमिति । मा द्रुह्यत, विप्रं प्रति हन्तुमिच्छामपि न कुरुत; एव-शब्देन सदा सर्व्वथा सा निरस्ता । हे मामका इति ये मदीयास्ते एवं कुर्वन्तु, अन्यथा तु मदीया एव न स्युरिति भावः । घ्नन्तं ताडयन्तमपि ॥ ४१ ॥ न चापराधादिनाप्यनादरेण नमस्कारः,

किन्तु भक्त्यैव कार्य्यं इत्याह—यथेति । अनुकालं सदा समाहितः सावधानः सन् । विप्रानिति बहुत्वेन तज्जातीन् सर्व्वान् संगृह्णाति, च अपि, यूयमपि; यो जनोऽन्यथा करोति, स मे दण्डभाग्भवेत् । यमादिद्वारा अमुत्र साक्षात् स्वयं चात्र तं दण्डयिष्यामीत्यर्थः ॥ ४२ ॥ अतः सर्व्वथा विप्रेषु भक्तिरेव कार्य्या, न च कदाचित् कथञ्चित् किञ्चित्तेषां हर्त्तव्यामित्युपसंहरति—ब्राह्मणेति । अर्थो धनम्, हि यतः, अजानन्तमपि पातयति, किं पुनर्ज्ञात्वा हर्त्तारमित्यर्थः । हि निश्चितम्, यतस्तत्प्रत्यक्षमेवेत्याह—एनमिति, युष्माभिः साक्षादनुभूतम् ॥ ४३ ॥ एवमीदृशं विशेषेण प्रत्यक्षप्रमाणत्वादिना श्रावयित्वा, यतो भगवान् ब्रह्मण्यदेवत्वाद्यशेष–सद्गुणगणयुक्तः । किञ्च, मुकुन्दो-ब्रह्मस्वहरणादिदोषप्रदर्शनेन लोकानां सर्व्वदुःखान्मुक्तिप्रदः परमानन्ददो वेत्यर्थः । ननु श्रीद्वारकावासिनो यादवादयः सर्व्वे तदनुवर्त्तिनः स्वत एव ब्रह्मण्याः; किमर्थं ते तथा विश्राविताः ? तत्राह—पावन इति । तेषां शिक्षाव्याजेन सर्व्वानपि लोकान् शिक्षयित्वा पावयितुमित्यर्थः । यथा लोकहितार्थं नरावतारं स्वप्रियसखं श्रीमदर्ज्जुनं प्रत्यपि गीतोपदेश इति ॥ ४४ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे उत्तरार्द्धे श्री-श्रील-सनातन-गोस्वामिपाद-कृतायां श्रीबृहद्वैष्णवतोषण्यां श्रीदशम-टिप्पण्यां चतुःषष्टितमोऽध्यायः ॥ ६४ ॥

## श्रीमद्वीरराघवाचार्यकृता भागवतचन्द्रचन्द्रिका

विप्रमिति । मामका यदि यूयं मदीयास्तर्हि कृतापराधमपि विप्रं नैव द्रुह्यत आर्षत्वात् "क्रुध द्रुहे" इति चतुर्थ्यभावः । किन्तु बहु यथा तथा शपन्तमपि नित्यं नमस्कुरुत ॥ ४१ ॥ इदमेव स्वदृष्टान्तेन द्रढयति— यथेति । अनुकालं त्रिसन्ध्यं प्रणमे नमस्करोमि योन्यथा न नमेत्स दण्डभाक् मे मत्त इति शेषः ॥ ४२ ॥ न केवलमर्थवाद इति विभीषिकेयं किन्तु प्रत्यक्षमित्याह—ब्राह्मणार्थ इति । ब्राह्मणार्थो विप्रधनं हर्त्तारमधो नरके पातयति यथाऽजानन्तमप्येनं नृगं ब्राह्मणस्य गौरपातयत्तद्वत् अज्ञानन्तमपीत्यनेन किमु वक्तव्यं जानन्तं पातयतीति कौमुत्यन्यायोभिप्रेतः ॥ ४३ ॥ एतदिति । द्वारकौकसः प्रत्येतदुक्तम् श्रावयित्वा तत्र हेतुः सर्वलोकानां पावनः ॥ ४४ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायां चतुःषष्टितमोऽध्यायः ॥ ६४ ॥

## श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

द्रुह्यत द्रोहं न कुरुत ॥ ४१-४३ ॥ सर्वलोकानां पावनः शुद्धिकर्त्ता ॥ ४४ ॥

श्रीशुक उवाच

सद्भिः समागमो राजन् कदाचिन्नाफलोभवेत् । विमुक्तो नरकाद्राजा नृगः साधु समागमात् ॥
साधूनां दर्शनं स्पर्शं कीर्तनं स्मरणं तथा । तीर्थानामिव पुण्यानां सर्वमेव हि पावनम् ॥
एतच्छ्रुत्वा त्वया सन्तः सदोपास्याः परन्तपः । ब्रह्मस्वं नैव हर्तव्यं यदीच्छसि पराङ्गतिम् ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम् चतुष्षष्टितमोऽध्यायः ॥ ६४ ॥

( श्रीविजयध्वजतीर्थरीत्या सप्ताशीतितमोऽध्यायः ॥ ८७ ॥ )

## श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शिनी

ननु, विप्र एवास्माकं यदि धनं हरेत् विनैवापराधं द्विष्याद्वा किङ्कार्य्यमित्यपेक्षायामाह— विप्रमिति द्वाभ्याम् । हे मामकाः ! इति ये केचन मदीया भवन्ति तानपि प्रत्यादिशामि न केवलं युष्मानेवेति अन्यथा तु तेषु मया मामकत्वाभिमानस्त्यक्तव्य इति भावः ॥ ४१ ॥ प्रणमे प्रणमामि ॥ ४२ ॥ न केवलमर्थवादविभीषिकेयं किन्त्वयमर्थः प्रत्यक्ष एवेत्याह—ब्रह्मणार्थ इति ॥ ४३-४४ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् । चतुष्षष्टितमोऽध्यायः दशमेऽजनि सङ्गतः ॥ ६४ ॥

## गूढार्थदीपिनी

हे मामका ॥ ४१ ॥ अनुकालं त्रिकालम् । प्रणमे । कर्मकर्तरि लट् तङ् च ॥ ४२ ॥ अधो नरके । यथा ब्राह्मणगौः अजानन्तमपि नृगमपातयदिति योज्यम् ॥ ४३ ॥ द्वारकौकसः द्वारकावासिनो जनान् । पावयति उपदेशेनेति पावनः भगवान् ॥ ४४ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां दशमस्कन्धोत्तरार्द्धे गूढार्थदीपिन्यां चतुःषष्टितमोऽध्यायः ॥ ६४ ॥

## श्रीमद्वल्लभाचार्यकृता सुबोधिनी

ननु ब्राह्मणः स्वयं चेदपराधं कुर्यादसह्यम्, तदा किं कर्तव्यमिति चेत्, तत्राह **विप्रं कृतागसम**पीति। **मामका** इत्यनेन ब्रह्मण्यदेवत्वात् स्वस्य देवता, देवता सुतरां मान्या भवतीति अद्रोहे हेतुरुक्तः, नियमेन द्रोहं मा कुरुत। प्रमादापराधविषयमेतदित्याशङ्क्याह **घ्नन्तं बहु शपन्तं** चेति। मानसापराधे किं वक्तव्यम्, कायिकवाचिकापराधेऽपि द्रोहं मा कुरुत। **बहु**रित्युभयत्र सम्बध्यते। हननमत्र ताडनम्, न तु शिरश्छेदः। 'जिघांसन्तं जिघांसीया'दिति वाक्यात्। शापोऽवगूरणम्। मदीयानां शापो न भवतीति भयाभावात् न केवलं तूष्णीं स्थातव्यम्। तथा सति ब्राह्मणस्य मयोत्पत्तिसम्भवात् पुनरपकारः स्यात्। किन्तु **नित्यं नमस्कुरुत** शङ्काभावार्थम्॥ ४१॥ ननु सर्वात्मकत्वाद्भगवतः व्यवहारस्यापि न तथाभावात् वेदलोकाविरुद्धं कथं कर्तव्यमिति चेत्, तत्राह **यथाहम्**इति। **मदीयानां हि मत्कृतं कर्तव्यम्, किं लोकेन वेदेन वा।** अहं तु त्रिकालं सावधानो भूत्वा भृगुमिव, विप्रत्वेनैव विप्रमात्रं प्रणमे, तथा यूयमपि नमत। न हि मत्तो यूयमधिकाः। चकाराद्भगवदीयाश्च। अनङ्गीकारे बाधकमाह। योऽन्यथा सावधानतया ब्राह्मणं न नमस्करोति, स मे दण्डभाक्, मम दण्डयुक्तो भविष्यति॥ ४२॥ ननु किमेवं निर्बन्ध इति चेत्, तत्राह **ब्राह्मणार्थ** इति। **मदीया ऊर्ध्वगतिमेव यास्यन्ति,** ब्राह्मणार्थस्त्वपहृतः स हर्तारं पातयति। अपहारे **कृ**तेऽधः-पातयत्येव। **अजानन्तमपि** अज्ञाने फले न किञ्चिद्वैगुण्यम्। **एनं नृगं ब्राह्मणगौरिवेति** स्पष्टो दृष्टान्तः॥ ४३॥ एवमुपदेशं कृत्वा प्रसङ्गात्पूर्वद्वारकायामागतः तत्रैव तिष्ठेदित्याशङ्क्य, ततो गतस्य मुख्यद्वारकास्थगृह एव स्थितिमाह **एवं विश्राव्ये**ति। **सर्वान्** विशेषेण श्रावयित्वा भगवांस्तावतैव कार्यं मत्वा सर्वेषां मोक्षदाता ब्राह्मणातिक्रमाभावे मोक्षो भविष्यतीति। **द्वारकौकस** इति। निरुद्धास्त एवेति मोक्षदात्रा संरक्षिताः, भगवत्स्थान एव स्थिताः, भगवतैव पूताः। तानुद्धृत्य संसारान्निजमन्दिरं स्वगृहं विवेश। अनेन सामान्यतः सात्त्विकानां निरोध उक्तः॥ ४४॥

इति श्रीभागवतसुबोधिन्यां श्रीमल्लक्ष्मणभट्टात्मजश्रीमद्वल्लभदीक्षितविरचितायां दशमस्कन्धविवरणे उत्तरार्धे पञ्चदशोऽध्यायः॥ १५॥

## श्रीसुबोधिनी-सारः

कर्त्तव्यमुपदिशति। कृतमागोऽपराधो येन तमपि विप्रं घ्नंतं प्रहरंतं बहु शपंतं वापि नैव द्रुह्येत यूयं मा द्रोहं कुरुत हे मामकाः किं तु नमस्कुरुत प्रणमत नित्यम्॥ ४१॥ अनुकालं प्रतिसमयं समाहितोहं विप्रान् प्रणमे प्रणमामि तथा यूयं च नमत योन्यथा वर्त्तेत स मे दंडभागी॥ ४२॥ न केवलं विभीषामात्रमेतदर्थवादवत् किं तु प्रत्यक्षदृष्टमित्याह अपहृतो ब्राह्मणस्यार्थो हर्त्तारं जनम् अधः पातयति। अजानंतमपि एनं नृगं ब्राह्मणस्य गौरिव हि युक्तम्॥ ४३॥ भगवान् मुकुन्द एवं द्वारकावासिनो विश्राव्य श्रावयित्वा नृगद्वारा सर्वलोकानां पावनः पवित्रकर्त्ता स्वगृहं विवेश॥ ४४॥

इति श्रीमद्भा० दशमस्कन्धे उ० सुबोधिन्यां टीकायां चतुःषष्टितमोऽध्यायः॥ ६४॥

## गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

ननु 'यदि ब्राह्मणः स्वयमेव कश्चिदपराधं कुर्यात्तदा किं कर्तव्यम्' इत्यपेक्षायामाह—विप्रमिति। हे मामकाः!। स्पष्टोऽयम्॥ ४१॥ इदमेव स्वदृष्टान्तेन द्रढयति—यथेति। अनुकालं त्रिसन्ध्यं यथाहं विप्रान् प्रणमे नमस्करोमि तथा यूयमपि नमत। योन्यथा न प्रणमेत् स मे दण्डभाग् भविष्यति॥ ४२॥ 'न केवलमर्थवादविभीषिकेयम्, किं तु प्रत्यक्षसिद्धम्' इत्याह—ब्राह्मणार्थ इति। अपहृतं विप्रधनं हर्तारमधो नरके पातयति। यथा अजानन्तमप्येनं नृगं ब्राह्मणगौरधो नीचयोनावपातयत्तद्वत्। 'अजानन्तम्' इत्यनेन जानन्तं पातयतीति किमुत वक्तव्यमिति कैमुत्यन्यायो दर्शितः॥ ४३॥ मुकुन्दो मुक्तिदो भगवान् कृष्णो द्वारकौकसः प्रति एवं विश्राव्य निजमन्दिरं विवेश। एवं विशेषतः श्रवणे प्रयोजनापेक्षायां 'सर्वलोकपावित्र्यार्थम्' इति सूचयन्नाह—पावनः सर्वलोकानामिति॥ ४४॥

इति श्रीवल्लभाचार्य-वंश्यगोपालसूनुना। श्रीमन्मुकुन्दरायाणां पादसेवाधिकारिणा॥ १॥
श्रीमद्गिरिधराख्येन भजनानन्दसिद्धये। श्रीमद्भागवतस्येयं टीका बालप्रबोधिनी॥ २॥
रचिता दशमे तत्र सात्त्विकानां निरोधने। चतुःषष्टितमो यातो नृगोद्धारनिरूपकः॥ ३॥

## अन्वितार्थप्रकाशिका

विप्रमिति॥ हे मामका मदीयाः! कृतागसमपि घ्नन्तं ताडयन्तं बहु शपन्तं च विप्रं नैव द्रुह्यत किंतु नित्यशः नमस्कुरुत। अन्यथा यूयं मामका नैव स्थ इति भावः॥ ४१॥ यथेति॥ अनुकालं त्रिसन्ध्यं यथाऽहं समाहितः विप्रान् प्रणमे नमस्करोमि। कर्मकर्त्तरि लट् तङ् च। तथा यूयमपि नमत योऽन्यथा न प्रणमेत्स मे दण्डभाग् भविष्यति॥ ४२॥ नेयं केवल-

मर्थवादविभीषिकेत्याह—ब्राह्मणार्थ इति ।। अपहृतो ब्राह्मणस्यार्थो धनं हर्तारमधो नरके पातयति । यथा अजानन्तमप्येनं नृगं ब्राह्मणगौः । टजभाव आर्षः । अधो नीचयोनाववपातयत्तद्वत् जानन्तं पातयतीति कैमुत्येन सिद्धम् ।। ४३ ।। एवमिति ।। सर्वलोकानां पावनः मुकुन्दो भगवान् द्वारकौकसः प्रत्येवं विश्राव्य निजमन्दिरं विवेश । गीतोपदेशो अर्जुनवद्द्वारकौकस इत्युपलक्षणमात्रम् ।। ४४ ।।

इति श्रीकृष्णसेवार्थमन्वितार्थप्रकाशिकाम् । गङ्गासहायो दशमचतुःषष्टितमे व्यधात् ।।

इति श्रीभागवते दशमे स्कन्धेऽन्वितार्थप्रकाशिकायां चतुःषष्टितमोऽध्यायः ।। ६४ ।।

## श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्

भो मामकाः यूयं नैव द्रुह्यत ।। ४१ ।। अन्यथा तान् योननमति ।। ४२ ।। अपहृतो ब्राह्मणस्यार्थः पदार्थः ।। ४३-४४ ।।

इति श्रीशुद्धैकांतधर्मप्रवर्त्तकगुरुराजेन्द्रश्रीसहजानंदस्वामिशिष्यगोपालानंदमुनिविरचिते निगूढार्थप्रकाशके श्रीमद्भागवतस्य दशमस्कंध-व्याख्याने अनिरुद्धद्वारिकानयनं नाम चतुःषष्टितमोऽध्यायः ।। ६४ ।।

## भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

विप्रमिति ।। अतः, हे मामकाः, यूयं यदि मदीयाः स्थ तर्हि, हे मज्जना इत्यर्थः । कृतागसं अपि, विप्रं नैव द्रुह्यत । आर्षत्वात् 'क्रुधद्रुह'—इति चतुर्थ्यभावः । घ्नन्तं हिंसन्तं, बहु यथा तथा, शपन्तं वाऽपि, विप्रं नित्यशः, नमस्कुरुत ।। ४१ ।। इदमेव स्वदृष्टान्तेन द्रढयति ।। यथेति ।। यथा अहं, समाहित एकमनाः सन्, अनुकालं त्रिसंध्यं, विप्रान् प्रणमे नमस्करोमि, तथा मद्वदेव, यूयं च यूयमपि, नमत विप्रान् नमस्कुरुत । यः अन्यथा न नमेदित्यर्थः । सः, मे मम, दण्डभाक्, भवेदिति शेषः ।। ४२ ।। न केवलमर्थवाद इति विभीषिकेयं किं तु प्रत्यक्षमित्याह ।। ब्राह्मणार्थ इति ।। ब्राह्मणार्थो विप्रधनं अपहृतः सन्, हर्त्तारं, अधः नरकेः, पातयति हि । कथमिव अजानन्तं अपि, एनं नृगं, ब्राह्मणगौः इव, ब्राह्मणगौः यथाऽपातयत्तद्वदित्यर्थः । द्वितीय हिशब्द उक्तार्थदार्ढ्याय ।। ४३ ।। एतदिति ।। सर्वलोकानां, पावनः मुकुन्दः, भगवान् श्रीकृष्णः, द्वारकौकसः द्वारकावासिनो जनान्, एतत् विश्राव्य विशेषतः श्रावयित्वा, निजमन्दिरं विवेश, ।। ४४ ।।

इति श्रीधर्मधुरंधरश्रीधर्मात्मजप्रत्यक्षपुरुषोत्तमश्रीसहजानन्दस्वामिसुतश्रीरघुवीराचार्यसूनुभगवत्प्रसादाचार्यविरचितायामन्वयार्थावबोधिन्यां भक्तमनोरञ्जन्याख्यायां श्रीमद्भागवतटीकायां दशमस्कन्धोत्तरार्द्धे चतुःषष्टितमोऽध्यायः ।। ६४ ।।

## कृष्णप्रिया

इसलिये मेरे आत्मीयों ! यदि ब्राह्मण अपराध करे, तो भी उससे द्वेष मत करो वह मार ही क्यों न बैठे या बहुत सी गालियाँ या शाप ही क्यों न दे, उसे तुमलोग सदा नमस्कार ही करो ।। ४१ ।। जिस प्रकार मैं बड़ी सावधानी से तीनों समय ब्राह्मणों को प्रणाम करता हूँ, वैसे ही तुमलोग भी किया करो। जो मेरी इस आज्ञा का उल्लङ्घन करेगा, उसे मैं क्षमा नहीं करूँगा ! दण्ड दूँगा ।। ४२ ।। यदि ब्राह्मण के धन का अपहरण हो जाय तो वह अपहृत धन उस अपहरण करने वाले को अनजान में उसके द्वारा यह अपराध हुआ हो तो भी अधःपतन के गड्ढे में डाल देता है। जैसे ब्राह्मण की गाय ने अनजान में उसे लेने वाले राजा नृग को नरक में डाल दिया था ।। ४३ ।। परीक्षित् ! समस्त लोकों को पवित्र करने वाले भगवान् श्रीकृष्ण द्वारकावासियों को इस प्रकार उपदेश देकर अपने महल में चले गये' ।। ४४ ।।

इति श्रीमद्भागवते दशमस्कन्धे उत्तरार्द्धे नृगोपाख्यानं नाम चतुःषष्टितमोऽध्यायः ।। ६ ।।

# अथ पञ्चषष्टितमोऽध्यायः

| श्लोकाः | अनु. | मि. उ. | उ. | श्लो. अ. | उ. अ. | अ. अ. | सं. श्लो. अ. | सं. श्लो. | अ. |
|---|---|---|---|---|---|---|---|---|---|
| ३२ | ३१ | १ | ३ | १४४० | ६ | ५१ | ११५७ | ३६ | ५ |

### श्रीशुक[1] उवाच

बलभद्रः कुरुश्रेष्ठ भगवान् रथमास्थितः। सुहृद्दिदृक्षुरुत्कण्ठः प्रययौ नन्दगोकुलम् ॥ १ ॥
परिष्वक्तश्चिरोत्कण्ठैर्गोपै[2] र्गोपीभिरेव च। रामोऽभिवाद्य पितरावाशीर्भिरभिनन्दितः ॥ २ ॥
चिरं नः पाहि दाशार्ह सानुजो जगदीश्वरः[3]। इत्यारोप्याङ्कमालिङ्ग्य नेत्रैः सिषिचतुर्जलम्[4] ॥ ३ ॥
गोपवृद्धांश्च विधिवद् यविष्ठैश्चाभिवादितः[5]। यथावयो यथासख्यं यथा सम्बन्धमात्मनः ॥ ४ ॥
[6]समुपेत्याथ गोपालान् हास्यहस्तग्रहादिभिः। विश्रान्तं सुखमासीनं पप्रच्छुः पर्युपागताः ॥ ५ ॥
पृष्टाश्चा[7]नामयं स्वेषु[8] प्रेमगद्गदया गिरा। कृष्णे कमलपत्राक्षे संन्यस्ताखिलराधसः ॥ ६ ॥[9]

### कर्दमक्षमा

अन्वयः—कुरुश्रेष्ठ! बलभद्रः, भगवान्, सुहृद्, दिदृक्षुः, उत्कण्ठः, नन्दगोकुलम्, प्रययौ ॥ १ ॥ चिरोत्कण्ठैः, गोपैः, च, गोपीभिः, एव, परिष्वक्तः, रामः, पितरौ, अभिवाद्य, आशीर्भिः, अभिनन्दितः ॥२॥ दाशार्ह! सानुजः, जगदीश्वरः, नः, चिरम्, पाहि, इति, बलम्, अङ्कम्, आरोप्य, च आलिङ्ग्य, नेत्रैः, सिषिचतुः ॥ ३ ॥ विधिवत्, गोपवृद्धा, न, च, विधिवत् प्रणम्य, यविष्ठैः, अभिवादितः, अथ यथावयः, यथासख्यम्, आत्मनः यथासम्बन्धम् समुपेत्य ॥ ४ ॥ अथ हास्य-हस्तग्रहादिभिः, गोपालान्, समुपेत्य, अथ, च, विश्रान्तम्, सुखम्, आसीनम्, पर्युपागताः, पप्रच्छुः ॥ ५ ॥ अथ प्रेमगद्गदया, गिरा, स्वेषु, अनामयम्, पृष्ट्वा, कमलपत्राक्षे, कृष्णे, संन्यस्ताखिलाराधसः ॥ ६ ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

पंचषष्टितमे रामश्चक्रे गोकुलमागतः। रममाणस्तु गोपीभिः कालिंद्याः कर्षणं मदात् ॥ १ ॥
रामस्य चरितं चित्रं कालिंद्याकर्षणादि यत्। पौंड्रकांतादि कृष्णस्य पृथगुक्तमतः परम् ॥ २ ॥ १ ॥

आशीर्भिरभिनंदितो बभूव ॥ २ ॥ तदाह। चिरमिति ॥ ३ ॥ गोपवृद्धांश्च विधिवदभिवंद्य यविष्ठैरभिवंदितो बभूवेत्यर्थः। अपि च यथावय इति ॥ ४ ॥ ते सर्वे स्वेषु तं राममनामयमारोग्यं पप्रच्छुः ते च तेन पृष्टा इति ॥५॥ कृष्णप्राप्त्यर्थं संन्यस्ताखिलराधसस्त्यक्तसर्वविषयाः ॥ ६–८ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

कर्षणमाकर्षणम् (१)। चित्रमद्भुतम् (२)। बलेन भदंते लोकान्कल्याणयुतान्करोतीति बलभद्रः। अथ श्रीपरीक्षितस्तत्तल्लीलानंदमनुभवतो बलादनुगच्छता श्रीगोकुलव्याकुलतास्मरणेन दूयमानं मनो ज्ञात्वा श्रीमन्मुनींद्रः पुनस्त-दाश्वासनकथां कथांतरावेशेन त्यक्तामपि पातयति—बलभद्र इति। संबुद्धया श्लाघते—हे कुरुश्रेष्ठेति। अतीवशुद्धकुलोद्भूतस्य तव हृदि श्रीव्रजलीलैव स्फुरति मुहुरिति भावः। सुहृदः श्रीवसुदेवादितोऽपि पितृत्वादिमयशुद्धस्नेहांशेन शोभनः सुहृद्येषां तान्नन्दादीन्दिदृक्षुः सन् यश्चिरविरहेणोत्सुकः नित्यतद्दर्शनोत्कंठस्तदा तु लब्धश्रीकृष्णानुज्ञ इति ज्ञेयम्। तदुक्तं श्रीहरिवंशे—"जगामैको व्रजं रामः कृष्णस्यानुमते स्थितः" इति। अत एव वक्ष्यति—कृष्णस्य संदेशैः सांत्वयामासेति। श्रीकृष्णस्तु श्रीवसुदेवादिभिरनुज्ञात एव तेन सह नागच्छत्। अयं श्रीनंदादिप्रेमबद्धः। पुनरत्रानागमिष्यतीत्यननुज्ञात इति ज्ञेयम्। प्रकर्षेण गोपवेशादिना ययौ। तदुक्तं श्रीहरिवंशे—"स प्रविष्टस्तु वेगेन तं व्रजं कृष्णपूर्वजः। वन्येन रमणीयेन वेशेनालंकृतः प्रभुः ॥" इति। रथस्थितिस्तु शीघ्रगमनार्थैव ॥ १ ॥ पितरौ यशोदानंदौ। परिष्वक्तः सर्वांगसंगतं गाढं बहुविधमश्रुपुलकादिवलितं

---

१. बादरायणि–प्रा. पा.। २. गोप–प्रा. पा.। ३. इ्वर–प्रा. पा.। ४. जलैः–श्रीधर. वंशी. जीव. वीर. विज. विश्व.। ५. रभिवन्दितः–श्रीधर. वंशी. जीव. वीर. विज. विश्व.; श्चाभिवादितः–प्रा. पा.। ६. तमु–विज.। ७. पृष्टाश्चा–श्रीधर. वंशी. जीव.; पृष्टश्चाकथयत्—विज.। ८. प्रीताः–च. पु. टि.। ९. ते सर्वे तेषु तं रामं ते च तेनाप्यनामयम्–अधिकः च. पु. टि.।

चालिंगित:, यतश्चिरोत्कंठः। पितरौ तस्य तयोश्च भावानुसारेण तत्र प्रथममितस्ततो लब्धैर्गोपैर्मेलनम्। व्रजाभ्यंतरे तु गोपीभिर्मातृवयस्याभिर्वृद्धाभिरपि। एवं चेत्यनुक्तसमुच्चये, पुरोहितादिभिरित्यपि ज्ञेयम्॥२॥ तद् आशीरभिनन्दनम् (नेत्रेभ्यश्चक्षुर्नाडीभ्यो निर्गतानि नेत्राणि तैः 'कारकात्क्रियायुक्ते' इत्यपादानकारकान्निर्गतेऽर्थे अण्, वैकल्पिकणित्वाद्-वृद्ध्यभावः)। 'नेत्रं नाड्यां तरोर्मूले' इति यादवः। चिरं पाहीति वाग्भंग्या दीर्घायुष्ट्वाऽप्रतिहतबलवीर्याद्याशिषः सूचिताः। जगदीश्वरस्सन्नित्यनन्तरं यद्यपि स्वेषामपि दासार्हत्वमस्ति, तथा पाण्डवकौरववत्प्राचुर्यप्रयोगाविवक्षयायादवेष्वेव मुख्यत्वात्तच्छब्दप्रवृत्तिः। वसुदेवपुत्रत्वेनैव तथा संबोधितः। यद्यपि स्वीयोऽपि पुत्रभावस्तस्मिन्नधिकस्तथापि प्रियभ्रातृ-पुत्रतामाश्रित्यैव स्वयं पुत्रत्वेन पालितस्सौजन्योत्तरसंबंधमेव बहुतरं तेनात्मनश्चैक्यं व्यञ्जयित्वा स्वपुत्र एव विशिष्य दर्शितः। अत एव सानुज इति साक्षात्स्वपुत्रे तदनुजत्वमुक्तम्, तस्यैव प्राधान्यविवक्षया गौणत्वं च। अत एव न इत्यविशेषेणा-स्मान्यादवांश्चेत्यर्थः। अथवोत्कण्ठया श्लेषेण संप्रति तयोः स्वेष्वौदासीन्यं दर्शितम्, तदनुचितमित्याह—न इति। यथा यादवान्पासि तथाऽस्मान्पाहीत्यर्थः। विश्वनाथस्तु—सानुजोऽपि त्वं जगदीश्वर इति सर्वत्र श्रूयते, तदपि वृद्धौ स्वमातापितरा-वावां कथं न पालयसीति भावः॥३॥ यविष्ठैः कनिष्ठैः। इत्यर्थ इति शेषः। यथोचितं कर्तव्यमाह—अपि चेति। आत्मनः वय आद्यनतिक्रमेण गोपालान्सम्प्राप्येति सार्द्धेनान्वयः। तत्रादिनाऽऽश्लेषग्रहः॥४॥ अथ गोपाः पप्रच्छुः। 'गोपालाः' इति पाठोऽपि साधीयान्। ते च गोपाः। तेन रामेण॥५॥ कृष्ण इति निमित्ते सप्तमी। यद्वा—कृष्णे संन्यस्ताः समर्पिता अखिलराधसः सर्वसम्पदः "राधस्तेजसि हिंसायां विषये सिद्धिसम्पदोः" इति धरणिः॥६॥

**श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी**

अथ श्रीपरीक्षितस्तत्तल्लीलानन्दमनुभवतोपि बलादनुगच्छता श्रीगोकुलव्याकुलतास्मरणेन दूयमानं मनो विज्ञाय श्रीमन्मुनिराजः पुनस्तदाश्वासनकथां कथान्तरावेशेन त्यक्तामपि पातयति बलभद्र इत्यादिना। सम्बोधनेन तं श्लाघते च हे कुरुश्रेष्ठेति! बलभद्रो भगवानिति च तं प्रति श्लाघागर्भं सुहृदः श्रीवसुदेवादितोपि पितृत्वादिमयशुद्धस्नेहांशेन शोभनं हृद्येषां तान् श्रीनन्दादीन् दिदृक्षुः सन् प्रययौ यः पूर्वत एवोत्कण्ठः चिरविरहेण नित्यतद्दर्शनोत्सुकः तदातु लब्धश्रीकृष्णानुज्ञ इति ज्ञेयं तथाच हरिवंशे "जगामैको व्रजं रामः कृष्णस्यानुमते स्थितः" इति अत एवात्रापि वक्ष्यति कृष्णस्य सन्देशैः सान्त्वयामासेति एतावद्दिनं तदनुज्ञा च सहैव स्वगमनेच्छयेति लक्ष्यते तच्चश्रीवसुदेवादीनां श्रीनन्दादिप्रेमबद्धोऽसौ तत्रैव तिष्ठेदित्यननुज्ञयैवेति पूर्ववज्ज्ञेयम् अत एव श्रीनन्दादिषु निजागमनसन्देशादिगोपनार्थमेकाकित्वेनैव तत्प्रस्थापनमपि एवमन्तस्तद्भावभावितत्वेन प्रययाविति गोपवेषधारणादिप्रकर्षेण ययावित्यर्थः। तथा च तत्रैव—

"स प्रविष्टस्तु वेगेन तं व्रजं कृष्णपूर्वजः। वन्येन रमणीयेन वेषेणालङ्कृतः प्रभुः॥"

इति रथस्थितत्वं तु परमोत्कण्ठितत्वाच्छीघ्रगमनार्थमेव॥१॥ तद्भावभावितत्वमेव दर्शयति—परीत्यादिभिः। परिष्वक्तः परीति सर्वाङ्गसङ्गतङ्गाढं बहुविधमश्रुपुलकादिवलितं चालिङ्गितः यतश्चिरोत्कण्ठैः पितराविति तस्य तयोश्च भावानुसारेणोक्तं तत्र प्रथममितस्ततो लब्धैर्गोपैर्मिलनं व्रजाभ्यन्तरे तु गोपीभिर्मातृवयस्याभिर्वृद्धाभिरपि एवञ्चेत्यनुक्तस्यापि समुच्चायात्पुरोहितादिभिश्चेति ज्ञेयं तत उद्दिश्य प्रथममिलनो पितरौ श्रीयशोदानन्दावभिवाद्य स्थितो रामस्ताभ्यामपि परिष्वक्तः सन्नाशीर्भिरप्यभिनन्दित इत्यर्थः॥२॥ चिरं पाहीति वाग्भङ्ग्या दीर्घायुष्ट्वाप्रतिहतबलवीर्य्याद्याशिषः सूचिताः जगदीश्वरः सन्नित्याशीरनन्तरं यद्यपि स्वेषामपि दाशार्हत्वं वर्त्तते तथापि पाण्डवकौरववत्प्राचुर्य्यप्रयोगाविवक्षया यादवेष्वेव मुख्यत्वात्तच्छब्दप्रवृत्तिरिति श्रीवसुदेवपुत्रत्वेन तथा सम्बोधितं यद्यपि चोक्तरीत्या स्वीयोपि पुत्रभावस्तस्मिन् अधिकस्तथापि स्वप्रियभ्रातृश्रीवसुदेवपुत्रतामवलम्ब्यैव स्वयं पुत्रत्वेनासौ पालित इति सौजन्यात्तरसम्बन्धमेव बहुतरं मत्वा तेनात्मनश्चैक्यं व्यञ्जयित्वा स्वपुत्रभाव एव विशिष्य दर्शितः अत एव सानुज इत्यनेन साक्षात्स्वपुत्रेपि तदनुजत्वमुक्तं तस्यैव प्राधान्यविवक्षया गौणत्वञ्च अत एव न इत्यविशेषेण यादवानस्मांश्चेत्यर्थः। अथवोत्कण्ठया श्लेषेण सम्प्रति तयोः स्वेष्वौदासीन्यं व्यञ्जितं तत्त्वनुचितमित्याह—न इति। यथा यादवान् पासि तद्वदप्यस्मान् पाहीत्यर्थः॥३॥ ततश्च तत्सङ्गतैर्मिलनमाह—गोपैरर्द्धेन, यथेति सार्द्धद्वयकम्। अथ तद्दिनानन्तरदिन इत्यर्थः। गोपालान् वयस्यादीन् सम्यक् स्नेहादरादिपूर्वकम् उपेत्य उप समीपे तत्तद्गृहादौ एत्य स्वयमागत्य तत्रापि आत्मनो वय आद्यनुरूपं हास्यहस्तग्रहणादिभिः समुपेत्य विश्रान्तं तत्तत्कृतोपचारै-र्लब्धविश्रामं सन्तं तत्रैव भोजनाद्यनन्तरं सुखमासीनञ्च परि सर्वत उपागताः समीपोपविष्टाः सन्तस्ते स्वेषु सम्बन्धिषु यादवेषु विषयेषु अनामयं पप्रच्छुः तत्र वयस्या यथासख्यं तत्तारतम्येनेत्यर्थः। अन्ये तु यथासम्बन्धं पितृभ्रातृपुत्रवर्गत्वानुरूपं तत्रापि यथावयः वयस्तारतम्येनेत्यर्थः। एव हास्यहस्तग्रहो वयस्यानाम् उद्धवागमनोक्तयुक्तिरीत्या रहसि तेषां मुहुस्तदागमनस्फूर्तेर्मिथो हर्षोदयात् आदिग्रहणात्पितृवर्गादीनां वन्दनादयो ज्ञेयाः। तथाच तत्रैव—

"स तानभाषत प्रीत्या यथापूर्वमरिन्दम। गोपीस्तेनैव विधिना यथान्यायं यथावयः॥
तथैव प्राह तान् सर्वान् तथैव परिहर्षयन्। तथैव सह गोपीभिर्योजयन् मधुराः कथाः॥" इति

पृष्टाश्चेति तदनन्तरं ते च तैन पृष्टा इत्यर्थः। तथा पप्रच्छुरित्यत्र पृष्टाश्चेत्यत्र च विशेषणं प्रेमेत्यादि उभयत्रापि हेतुत्वेन तेषां विशेषणं, कृष्ण इत्यादि, कृष्णे स्वभावत एव सर्वाकर्षके कमलपत्राक्षे सौन्दर्य्यतोपि तादृश इत्यर्थः। तथा प्रथमेन सर्वेषामानन्दरूपत्वं द्वितीयेन सर्वतापहरत्वं च व्यञ्जितं तस्मिन्निमित्ते संन्यस्ताखिलराधस इति "यद्धामार्थसुहृत्प्रियात्मतनयप्राणाशयास्त्वत्कृते" इत्युक्तरीत्या पूर्वव तदर्था एव सर्वे विषया अतस्तद्विरहिणां स्वतस्तदनभिरुचेरपि तदागमनाशयैव तद्धारिण इत्यर्थः। तस्य दैत्यादिभिः सङ्करं शृण्वताञ्च तत्तद्विघ्ननिरसनाय संन्यस्तानि देवब्राह्मणेष्वर्पितानि राधांसि गृहान्तर्गतभोग्यानि द्रव्याणि यैस्ते ते श्रीकृष्णार्थमेव सम्प्रति तत्सहायेषु तेष्वनामयं पप्रच्छुः श्रीकृष्णार्थसंन्यस्तसर्वार्थत्वेन परमानुकम्पाचिन्तयोर्विषयत्वात् पृष्टाश्चेत्यर्थः। अत्र प्रकरणे कष्टान्वयतया श्रीमन्मुनीन्द्रस्य तत्स्मरणवैवश्यं व्यज्यते ॥ ४-६ ॥

**श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी**

एवं श्रीकृष्णस्य दीनवात्सल्यमुक्त्वा प्रसंगाच्छ्रीरामस्यापि तदाह—बलेत्यादिना यावत्समाप्ति। सुहृदः श्रीनन्दयशोदादीन् दिदृक्षुः सन्, यत उत्कण्ठश्चिरविच्छेदेन नित्यदर्शनोत्सुकः, अतः शीघ्रगमनार्थं तत्परिचितं रथमारुह्य आरूढं सन्, नन्दस्य गोपेन्द्रस्य, किंवा नन्दयति जगद्विशेषतश्च सानुजमात्मानं हर्षयतीति नन्दं यद्गोकुलं तत् प्रकर्षेण गोपवेशधारणादिना ययौ। तथा च श्रीहरिवंशे ( विष्णु० प० ४६।३ )—'स प्रविष्टस्तु वेगेन तं व्रजं कृष्णपूर्व्वजः। वन्येन रमणीयेन वेषेणालंकृतः प्रभुः ॥' इति। यतो भगवान् परमदयालुः, किंवा सर्वज्ञोऽनुजाभिप्रायं जानन्नित्यर्थः। तथा च तत्रैव ( विष्णु-प० ४६।१ ) 'जगामैको व्रजं रामः कृष्णस्यानुमते स्थितः' इति, अत एवात्रापि वक्ष्यति ( भा० १०।६५।१६ ) 'कृष्णस्य सन्देशैः सान्त्वयामास' इति। बलभद्र इति बुद्ध्यादिबलाधिक्येन महतामाश्वासनादौ समर्थतर इति भावः। हे कुरुश्रेष्ठेति तदर्थं तत्प्रयाणेन प्रहर्षात्, यद्वा, कुरुश्रेष्ठो भवानिवासौ श्रीकृष्णाग्रजतया यदुश्रेष्ठोऽनुजस्यायास्य इत्यादि वाक्यासत्यतासमाधानार्थं प्रयातुमर्हत्येवेति भावः ॥ १ ॥ परितो बहुधा गाढतया सर्वांगसम्मिलनादिना स्वत आलिंगतः, यतश्चिरोत्कण्ठैः, एव अपि, गोपीभिरपि, चकाराद् भृत्यपुरोहितादिभिश्च, इति चिरोत्कण्ठतया परमसम्भ्रमादादौ सामान्येन सर्वेषां परिष्वंगमुक्त्वा, अधुना विशेषतो यथार्हंव्यवहारमाह—राम इति सार्द्धद्वयेन। पितराविति तदानीमपि तयोस्तस्मिन्नपि पुत्रबुद्ध्यनुवृत्तेः, तथा तस्यापि तौ प्रति तादृङ्मतेरनपगमात् ॥ २ ॥ चिरं पाहीति वाग्भंग्या दीर्घायुष्ट्वाप्रतिहतबलवीर्य्याद्याशिषः सूचिता एव। न इति सर्वव्रजजनापेक्षया जगदीश्वरः सन्नित्याशीरन्तरम्। सानुज इति तस्यानागमनेनात्मविषयकं निर्दयत्वं मत्वा प्रार्थनम्, रक्षायां सत्यामपि तत्सम्बन्धराहित्येनारक्षायामेव पर्य्यवसानात्। दाशार्ह! हे यदुकुलोद्भवेति स्वपरित्यागेन यदूनामेव पालनादीर्ष्यया परमार्त्या वा सम्बोधनम्। तज्जैर्यानि जलानिः तैः, नेत्रैरिति वा पाठः, नेत्रभवैरित्यर्थः अन्यत्तैर्व्याख्यातम्। यद्वा, आशीर्भिः—'दीर्घायुरप्रतिहतबलवीर्य्यसमन्वितः। पुत्रपौत्र-धनैश्वर्य्यैर्युक्तो वत्स भवोत्तम ॥' इत्यादिलक्षणाभिः, पितृत्वेनादौ स्नेहभरेणाशीर्भिरभिनन्द्य पश्चाद्दैन्येन प्रार्थयते—चिरमिति। दाशार्ह! हे यदुकुलेश्वरेति तत्पालनपरोऽपि जगदीश्वरत्वेन जगदन्तर्गतानस्मानपि पाहीत्यर्थः। अन्यत् समानम् ॥ ३ ॥ अथ अनन्तरं गोपालानां वयआद्यनतिक्रमेण हास्यादिभिः सम्यगुपेत्य मिलित्वा विश्रान्तं विगतवर्त्मश्रमं सन्तं पश्चात् सुखमासीनम्, किंवा हास्यादिभ्यो विश्रान्तमुपरतम्, यद्वा, चिरप्रवासश्रमरहितम्, अत एव सुखमासीनम्, आदि-शब्दात् प्रियोक्त्यादयः, परितः सर्वत उप समीपे आगताः, आत्मनो यथासम्बन्धमिति श्रीनन्दयशोदयोर्भ्रात्रादिसम्बोधनेनैवात्मनः पितृव्य-मातुलेयत्वादि-सम्बन्धानुसारेणेत्यर्थः। इति पूर्ववदेव सर्व्वो व्यवहारो द्योतितः। तथा च तत्रैव श्रीहरिवंशे ( विष्णुः प० ४६।४-५ )—

'स तानभाषत प्रीत्या यथापूर्वमरिन्दमः। गोपीस्तेनैव विधिना यथान्यायं यथावयः ॥
तथैव प्राह तान् सर्वांस्तथैव परिहर्षयन्। तथैव सह गोपीभिर्योजयन्मधुराः कथाः ॥' इति ॥

प्रेमगद्गदया गिरेत्यस्य चकारात् पृष्टा इत्यनेन पप्रच्छुरित्यनेन वान्वयः। कृष्णे निजचित्ताकर्षके, यतः कमलपत्रवत् परमसुन्दरे, दृष्टिमात्रेण सर्वतापहरे, परमामोदके चाक्षिणी यस्य तस्मिन्निति तत्साक्षात्सन्दर्शनार्थमित्यर्थः। संन्यस्ताखिलराधसः सन्न्यासिवत् परित्यक्ताशेषविषया इति, श्रीमदुद्धवागमनात् प्राक् श्रीकृष्णस्यागमनाशया तत्प्रीत्यर्थमत्यक्तविषयाणां तेषां व्रजवासिनां पश्चादुद्धवागमनेन तस्यागमने प्रायो निराशतया दीर्घविरहविह्वलतया वा, स्वदेहदैहिकाद्यशेषोपेक्षणात्। अन्यत्तैर्व्याख्यातम्। यद्वा, स्वेषु यत् प्रेम तेन गद्गदया, गोपैः पृष्टश्च कच्चिदित्यादिना वक्ष्यत्येव। अन्यत् समानम् ॥ ६ ॥

**श्रीसुदर्शनसूरिकृतशुकपक्षीयम्**

पितरौ यशोदानन्दगोपौ ॥ २-१० ॥

**श्रीमद्वीरराघवाचार्यकृता भागवतचन्द्रचन्द्रिका**

अथ प्रत्येकं रामकृष्णयोश्चेष्टितानि वर्णयति—बलभद्र इति। हे कुरुश्रेष्ठ सुहृद्दिदृक्षुरिति समस्तं पदं सुहृदो बन्धून् द्रष्टुमिच्छुः तत्र हेतुरुत्कण्ठः प्रेमयुतः तद्विषयाभिलाषयुतो वा ॥ १ ॥ परिष्वक्त इति। आलिङ्गितः पितरौ यशोदानन्दगोपौ

अभिवाद्य प्रणम्य ताभ्यामाशीर्भिरभिनन्दितश्च ॥ २ ॥ तदेवाह—चिरमिति । हे दाशार्ह । हे जगदीश्वर ! इदं सम्बोधनद्वयं हेतुगर्भं जगदीश्वरत्वात् स्वाश्रितसंरक्षणार्थं दाशार्हेष्ववतीर्णत्वाच्च सानुजस्त्वं नोऽस्मान् चिरं पाहि चिरमात्मरक्षाप्रार्थनयैव तयोर्दीर्घायुष्ट्वादिकं सर्वं प्रार्थितप्रायमेव तेन विना तदनुपपत्तेरित्याशयेनं चिरं पाहीत्युक्तम् । इतीति । आदिश्यास्य नेत्रैर्नेत्रजैर्जलैः हर्षजलैस्सिषिचतुः स्नपयामासतुः ॥ ३ ॥ गोपवृद्धानिति । ततो गोपवृद्धांश्चाभिवन्द्येति शेषः । यविष्ठैः न्यूनवयस्कैरभिवन्दितः किञ्च यथावय इति अथ ततो हास्यादिभिः आदिशब्देनालिङ्गनादिसङ्ग्रहः आत्मनः स्वस्य वयः सख्यसम्बन्धानुरूपं गोपान् समुपेत्य उपविवेश इति शेषः । विश्रान्तमिति सार्द्धमेकान्वयम् अनामयमारोग्यं पृष्ट्वा कमलपत्राक्षे कृष्णे संन्यस्ताः सम्यक् निहिता राधसः बुद्धयो येस्ते कृष्णैकप्रवणचित्ता इत्यर्थः । प्रेम्णा गद्गदया गिरा परिपप्रच्छुः ॥ ४-६ ॥

### श्रीविजयध्वजतीर्थकृता पदरत्नावली

भगवच्छिक्षितकेशाविष्टस्य शेषावतारस्य बलभद्रस्य हरिमाहात्म्याविनाभूतं माहात्म्यं वर्णयत्यनेन प्रारीप्सितेनाध्यायत्रयेण, तत्र प्रथमे यमुनामदहरणलक्षणं विक्रमं वक्तुं बलस्य गोकुलगमनं वक्ति, द्वितीये द्विविदवधलक्षणं तृतीये कौरवगर्वनिर्वापणार्थं तत्पुराकर्षलक्षणं वक्तुं दुर्योधनसुताहरणं वक्ति ॥ १ ॥ पितरौ यशोदानन्दगोपौ ॥ २ ॥ इति समाप्ताभिवादनादिकर्माणं तं राममङ्कमारोप्य नेत्रैश्चक्षुर्नाडीनिर्गतैः "नेत्रं नाड्यान्तरोर्मूले" इति यादवः ॥ ३ ॥ यविष्ठैः कनिष्ठैः॥ ४॥ हास्येन मन्दस्मितेन हस्तग्रहेण आदिशब्देन परिरम्भणादिकं गृह्यते ॥५॥ संन्यस्ताखिलराधसः समर्पितसमस्तसम्पदः ॥६-८॥

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः

बलभद्र इत्यत्र कृष्णस्यानुमते स्थित इत्यपि श्रीहरिवंशाल्लभ्यते । तथाहि—

"कदाचित्त्वथ कालस्य स्मृत्वा गोपेषु सौहृदम् । जगामैको व्रजं रामः कृष्णस्यानुमते स्थितः" ॥

इति । तेन सह स्वागमनस्य सम्प्रत्ययोग्यतायां । तत्तद्व्रजस्थसान्त्वनार्थं तमेकमेव श्रीकृष्णः स्वयमनुगतवानिति भावः ॥ १-२ ॥ सानुजस्त्वं जगदीश्वरस्सन् चिरं सर्वदैवास्मान् पाहीत्याशिषं ददे। तत्र सानुज इति ज्येष्ठत्वमानेन । तथा स्वस्य तस्मिन् पुत्रभावाधिक्येऽपि दाशार्हेति श्रीवसुदेवेन सह स्वाभेदविवक्षया सा चातिस्नेहेन अथ तद्दिनानन्तरे दिने इत्यर्थः ॥ ३-४ ॥ हास्यहस्तग्रही वयस्यानाम् उद्धवागमनोक्तयुक्तिरीत्या रहसि तेषां मुहुः तदागमनस्फूर्त्तेः मिथो हर्षोदयात् आदिग्रहणात् पितृवर्गादीनां वन्दनादयो ज्ञेयाः ॥ ५-८ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

पञ्चषष्टितमे रामो गोष्ठं गत्वा स्वबन्धुभिः । मिलितः स्वीयगोपीभी रेमे कृष्णां चकर्ष च ॥

बलभद्र इति । ननु प्रेममहोदधिः कृष्णः कथं व्रजं न ययाविति चेदुच्यते "प्रेयसीः प्रेमविख्याताः पितरावतिवत्सलौ। प्रेमवश्यश्च कृष्णस्तांस्त्यक्त्वा नः कथमेष्यति ॥ मत्वैव यादवः प्रत्यबध्नन् हरेर्गतौ । व्रजप्रेमप्रवर्द्धिस्वलीलाधीनत्वमीयुषः" ॥ ननु तर्हि बलदेवोपि स्वप्राणप्रेष्ठभ्रातरं कृष्णं त्यक्त्वा एकाक्येव गन्तुं नार्हति तत्राह—उत्कण्ठः अत्युत्कण्ठचुलुकितधैर्यविवेकादिरित्यर्थः ॥ १ ॥

नित्यानन्दस्वरूपोपि प्रेमतप्तो व्रजौकसाम् । ययौ कृष्णमपि त्यक्त्वा यस्तं रामं मुहुः स्तुमः ॥

गोपीभिर्मातृवयस्याभिः पितराविति तस्य तयोश्च भावानुसारेणोक्तम् अभिनन्दितो बभूव ॥ २ ॥ सानुजोपि त्वं जगदीश्वर इति सर्वत्र श्रूयसे तदपि वृद्धौ स्वमातापितरावावां न पालयसि कथमित्युक्त्वा प्रथमं नन्दस्ततो यशोदा च बलादङ्कमारोप्य सचुम्बनमालिङ्ग्य नेत्रैः नेत्रजैः ॥ ३ ॥ गोपवृद्धानभिवाद्य यविष्ठैरभिवन्दितो बभूवेत्यन्वयः यथावय इति वय आद्यनुरूपं गोपालान् हास्यहस्तग्रहालिङ्गनादिभिः समुपेत्य तत्समीपगमनादिना मिलित्वा विश्रान्तं भोजनानन्तरं कृतशयनं पुनश्च सुखमासीनं तम् अनामयं कुशलं पप्रच्छुः तैन रामेणापि स्वेषु गोपेषु वा प्रेम्णा गद्गदा गीः तया ते गोपाः कुशलं पृष्टाः ते गोपाश्च कृष्णे सम्यक् प्रकारेण न्यस्तान्यर्पितान्यखिलस्य देहादिव्यवहारस्य राधांसि सिद्धयो येस्ते कृष्णगमनदिनमारभ्य तेषां स्वाभाविक्योपि शयनभोजनादिक्रियाः नैव सिद्ध्यन्तीत्यर्थः ॥ ४-६ ॥

### गूढार्थदीपिनी

पञ्चषष्टितमे गोपीनन्दयन् व्रजमागतः । क्रीडार्थेऽनागतां रामः कालिन्दी माचकर्ष च ॥ १ ॥

परिष्वक्तः आलिङ्गितः ॥ १-२ ॥ नेत्रैः नेत्रजैः जनैः प्रेमाश्रुभिः ॥ ३ ॥ गोपेति त्रयम् । गोपवृद्धान् विधिवत् अभिवन्द्य स्वयं यविष्ठैः कनिष्ठैः अभिवन्दितो बभूव । अथ पुनश्च तान् समुपेत्य उपविवेश ततश्च तेन रामेण पृष्टाः गोपा आसीनं रामं स्वेषु यादवेषु अनामयं कुशलं पप्रच्छुरित्यन्वयः। कथंभूताः कृष्णे निमित्ते समर्पितानि राधांसि कर्मफलानि सकलेन्द्रियव्यापाराः वा येस्ते ॥ ४-६ ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

अथ कालिन्द्याकर्षणादिकं बलचरितं पौण्ड्रकवधादिकं श्रीकृष्णचरितञ्च पृथमाह—तत्र पञ्चषष्टितमे कालिन्द्याकर्षणं बलचरितमाह—बलभद्र इति ॥ १-३ ॥ गोपवृद्धांश्चाभिवाद्येति शेषः। यविष्ठैरभिवन्दितो बभूवेत्यर्थः। किञ्च आत्मनो यथावयः यथासख्यं यथासम्बन्धं हास्यादिभिर्गोपान् समुपेत्य आसीनो बभूवेति शेषः ॥ ४ ॥ ते च रामेण पृष्टाः कृष्णसन्यस्ताः निहिताः अखिलराधसः सर्वेन्द्रियवृत्तयो यैस्ते कृष्णैकप्रवणेन्द्रियवृत्तयः सुखासीनं राम स्वेषु यादवेषु अनामयं पप्रच्छुरित्यन्वयः ॥ ४-६ ॥

### श्रीमद्वल्लभाचार्य्यकृता सुबोधिनी

विशेषे सात्त्विके रोधे तामसादिविभागतः। पूर्वं राजसमापन्नाः सत्त्वभावं तथानयत् ॥ १ ॥
तेषां सात्त्विकरूपाणां सकामत्वाद्बलेन हि। निरोधं कारयामास षोडशे तन्निरूप्यते ॥ २ ॥
ततः स्वरूपभावानां दुष्टानां दोषनुद्धरिः। प्रसङ्गादिदमत्रोक्तं वाराणस्यास्तु दाहनम् ॥ ३ ॥
बलस्तामसभावानां राजसानां तथैव च। सात्त्विकानां तथा मानखण्डकः सुनिरूप्यते ॥ ४ ॥
ततः स्त्रीणां तु भगवान् एकेनैव करिष्यति। सप्तमाख्य एकत्र धर्मिणः पृथगीरिताः ॥ ५ ॥
एवं प्रमेयबलतो निरोधः पञ्चधा भवेत्।

पूर्वाध्याये सात्त्विका निषिद्धात् व्यावर्तिताः। षोडशे त्वध्याये लौकिकात् सात्त्विकभावमापादिताः गोपिका निरुध्यन्ते। ततो वैदिकादपि काशीदाहे निरोधं वक्ष्यति। ततः अशास्त्रभक्तेः द्विविदादीनाम्। ततो भीष्मादीनां शास्त्रभक्तेश्च। ततः शास्त्रप्रवर्तकस्य नारदस्यापि मुख्यभावात्। स्वशक्तिर्द्विधा स्थापितेति साधनशक्तिरूपो बलभद्रः गोपिकानां निरोधं कृतवानिति निरूपणार्थं गोकुले बलभद्रगमनादिकमुच्यते। बलभद्रः कुरुश्रेष्ठेति। विश्वासार्थं सम्बोधनम्। भगवानिति निरोधोऽन्यकर्तव्यो न भवतीति साधनरूपो भगवांस्तत्राविष्ट इति भगवान्। रथमास्थितः, न तु पूर्ववद्गुप्तः। सुहृद्दिदृक्षुः नन्दादिदर्शनेच्छया। पूर्वभावमापन्नान्। तदर्थपरमोत्कण्ठायुक्तः नन्दगोकुलं प्रययौ। तेषां निरोधस्तत्र कर्तुं शक्य इति तत्र गतः ॥१॥ पूर्वं तदासक्तिद्वारा पश्चाद्भगवदासक्तिः सुलभेति प्रथमं लौकिकप्रकारेणैव तदासक्तिमाह परिष्वक्तश्चिरोत्कण्ठैरिति। गोपानां गोपीनां एक एवपरिचयलक्षणो भाव इति सह निरूपणम्। गोपीभिरेवेति। द्वयोरपि गोपैरालिङ्गितम्, परं वस्तुतो गोपीभिरेवालिङ्गितः। चकारान्नन्दयशोदाभ्याम्। तत्कृत्यमुक्त्वा बलभद्रकृत्यमाह रामोऽभिवाद्य पितराविति। पितृत्वमेव स्थापितमिति नान्यः शब्दो निरूपितः। तौ वेश्यावपि आशीर्भिरेवाभिनन्दितः ताभ्याम् ॥ २ ॥ पूर्वनिरोधस्य गमने उत्तरत्र क्रियमाणो व्यर्थः स्यादिति पूर्वसम्बन्धस्तथैव स्थित इति निरूप्यते चिरं नः पाहि दाशार्हेति। अस्मान् चिरं परिपालय। यतस्त्वं दाशार्हः। उभयोरेव पुत्रभाव इति सानुज इत्युक्तम्। कृष्णसहितः। जगदीश्वर इति। पूर्वं माहात्म्यज्ञानं वृत्तमनूद्यते। लौकिकोऽपि स्नेहः पूर्वसिद्ध एव प्रकटीकृत इत्याह इत्यारोप्येति। अङ्कमारोप्य प्रौढमपि बालकमेव मत्वा, आलिङ्ग्य नेत्रजैः सिषिचतुः। बलमिति सर्वाङ्गम्, अन्यथा शिखा अनुक्ता एव समागच्छेयुः ॥ ३ ॥ आवश्यकानां प्रणिधानमुक्त्वा अनावश्यकानामाह गोपवृद्धांश्च विधिवदिति। विधिर्गोत्रोच्चारणपूर्वकमभिवादनम्। रामापेक्षया यविष्ठैश्चाभिवादितः। ज्ञातेऽपि माहात्म्ये लौकिकभावस्थापनं निरोधान्तरङ्गम्। यथावयो यथासख्यं यथासम्बन्धमिति कालान्तःकरणदेहधर्माणामनतिक्रम उक्तः। आत्मन इति। यद्यपि ते सर्व एव माहात्म्यज्ञानाद्भगवद्भावमेव मन्यन्ते, तथापि स्वयं यथा तान्मन्यते, तथा कृतवानित्यर्थः ॥ ४ ॥ समुपेत्य सम्यक् मिलित्वा अभिवादित इति पूर्वेण सम्बन्धः। अथ गोपालान् हास्यहस्तग्रहादिभिः यथायोग्यमभिवादितवानिति अर्थवशाद्विपर्ययेण योजनीयम्। हीनेषु हस्तग्रहः, समेषु हास्यम्, उत्तमेष्वभिवादनमिति। एवं कायिकमुपसंहरन् वाचनिकमाह विश्रान्तं सुखमासीनं पप्रच्छुरिति। ज्येष्ठा अपि सन्तीति आसीनमित्युक्तम्। परितः सर्वत उपागताः, न तु कश्चिदपि तत्रोपेक्षां कृतवानित्यर्थः ॥ ५ ॥ प्रथमं लौकिकमाह पृष्ट्वाथानामयं तेष्विति। पर्युपागताः प्रथमतः अनामयं पृष्ट्वा, अथ भिन्नप्रक्रमेण, प्रेमगद्गदया गिरा पप्रच्छुरिति संबन्धः। अयं विशेषो यद्यपि सर्वेषाम्, तथापि विशेषमाह। तेषु ये कृष्णे कमलपत्राक्षे संन्यस्ताखिलराधसः। सर्वा एव सिद्धयो लौकिका वैदिकाश्च भगवत्येव स्थापिताः। तत्र हेतुः कमलपत्राक्ष इति। दृष्ट्यैव सर्वतापनाशं मोहं च सम्पादयतीति ॥ ६ ॥

### श्रीसुबोधिनी-सारः

शुकोक्तिः। हे कुरुश्रेष्ठ भगवान् बलदेवो रथमारूढः सुहृदो द्रष्टुमिच्छुः उत्कंठः समुत्सुको नंदस्य गोकुलं प्रजगाम ॥१॥ चिरमुत्कंठा येषां तैर्गोपैर्गोपीभिश्च परिष्वक्तो मिलितो रामः पितरौ यशोदानंदौ अभिवाद्य प्रणम्य ताभ्यामाशीर्भिरभिनंदितोऽभूत् ॥ २ ॥ हे दाशार्ह सानुजः कृष्णसहितः जगतामीश्वरस्त्वं नोऽस्मान् चिरं बहुकालं यथा भवति तथा पाहि रक्ष इति हेतोरंकमारोप्य नेत्रैः वर्णलोपस्यार्षत्वात् नेत्रजैर्जलैः स्नापयांचक्रतुः ॥ ३ ॥ गोपेषु वृद्धांश्चाभिवाद्य विधिवत् यविष्ठैः कनिष्ठैर-

भिवंदितोऽभूत् आत्मनः स्वस्य वयोवस्थामनतिक्रम्य सख्यं संबंधं च ॥ ४ ॥ समुपेत्य समागम्य गोपालान् गोपान् हास्यकरग्रहादिभिः पूर्वान्वयी परित उपागतास्ते विश्रांतं विखेदं सुखमासीनं रामं पप्रच्छुः ॥ ५ ॥ पूर्वं रामेण अनामयं कुशलं स्वेषु आत्मीयेषु पृष्टाः कमलपत्राक्षे पद्मदलनेत्रे कृष्णप्राप्त्यर्थं संन्यस्ताखिलराधसः त्यक्त सर्वक्रिया निवृत्तिपराः ॥ ६ ॥

### श्रीविट्ठलरायात्मजश्रीवल्लभकृतलेखः

**षोडशेऽध्याये**। पूर्वाध्यायान्ते सामान्यनिरोध उपसंहृतः। अतः परं विशेषनिरोधः पञ्चाध्याय्या अर्थ इत्याशयेनाहुः **विशेषे** इति। एतादृग्निरोधे वक्तव्ये सति **तन्निरूप्यत** इत्यग्रिमेणान्वयः। तामसप्रकरणे तामसत्वं निवर्त्य राजसत्वं सम्पादितवान्, ततो राजसप्रकरणे तदपि निवर्त्य सात्त्विकत्वं सम्पादितवान्, ततः सात्त्विकप्रकरणे निर्गुणत्वम्, ततो मुक्तिस्कन्धे मुक्तिमिति विभागो निबन्धे निरूपित इति तादृशविभागाद्धेतोः पूर्वं तामसप्रकरणे राजसं भावमापन्नाः, ततः सत्त्वभावम्, तथा राजसभावनिवर्तनप्रकारेणानयदिति पूर्वानुवादोऽग्रिमनिरूपणार्थमुक्तः। **तेषामिति**। सात्त्विकत्वं प्राप्तानां तेषां सकामत्वाद्धेतोर्बलेन निरोधं कारयामास। कामस्य तामसत्वात् सङ्कर्षणस्य च तथात्वात्तद्द्वारैव तादृशानां निरोध इति भावः। एतेन निष्कामत्वे सिद्धे कुरुक्षेत्रप्रसङ्गे स्वयं निर्गुणत्वं सम्पादयिष्यतीति प्रकरणसङ्गतिः। **विशेषनिरोधप्रकरणे** प्रथमाध्यायार्थमुक्त्वा द्वितीयाध्यायार्थमाहुः **तत** इति। स्वरूपमात्रे भावो येषां तादृशाः पौण्ड्रकादयः, परन्तु दुष्टा इति तेषां दोषनुज्जात इति शेषः। दोषमात्रं निवर्तनीयम्। **सारूप्यं** तु स्वरूपभावत्वात्सिद्धमेवेति भावः। **बल** इति। यमुनाया द्विविदादीनां भीष्मादीनां च मानखण्डक इत्यर्थः। पञ्चमाध्यायार्थमाहुः **तत** इति। नारदबोधनार्थं पत्नीनां विशेषतो निरोधं रमणं करिष्यतीत्यर्थः। पूर्ववद्धर्मिनिरूपणमत्राप्याशङ्क्याहुः **सप्तमा** इति। धर्मधर्मिप्रकारेण निरूपणे सप्तमा इत्यर्थः। उपसंहरन्ति **एवमिति**। विशेषप्रकारेण निरूपणे पञ्चधा। पूर्वाध्यायोक्तं सामान्यनिरोधमप्यादाय तु षोढेति भावः। **वैदिकादपीति**। सात्त्विकभावमापादितानामिति शेषः। अशास्त्रभक्तेः शास्त्रभक्तेरित्यपि पञ्चमी। ततः सात्त्विकभावमापादितानां द्विविदादीनां भीष्मादीनां चेत्यर्थः। **शास्त्रप्रवर्तकस्येति**। स्वत एव सत्त्वभावयुक्तस्येत्यर्थः। **मुख्यभावादिति**। भगवत एव साधनफलरूपत्वं मुख्यो भावस्तस्माद्द्वैविध्यं स्यमन्तकप्रसङ्गे स्थापितम्। पूर्वं स्वस्यैव साधनरूपत्वात्स्वयमेव निरोधं कृतवान्, अधुना तु साधनशक्तेर्विभागाद्बलद्वारा कारयामास। ततः सकामत्वे निवृत्ते फलरूपः स्वयं कुरुक्षेत्रप्रसङ्गे निरोधं करिष्यतीति भावः। **बलभद्र** इत्यत्र। **पूर्ववदिति**। भ्रमरगीतप्रसङ्गवदित्यर्थः। **पूर्वभावमिति**। सात्त्विकत्वमित्यर्थः। **उत्तरभावमिति**। नैर्गुण्यमित्यर्थः। तत्र **गतस्येति**। रामस्य तत्र गतस्य सतः पूर्वं रामासक्तिद्वारा पश्चाद्भगवदासक्तिः सुलभा भवति। रामस्याधुना तदाविष्टत्वादितिभावः। **परिष्वक्त** इत्यत्र। **गोपैरिति**। एतैरप्यालिङ्गनं तु कृतम्, परन्तु वस्तुतो गोपीभिरेव परिष्वक्तः। आलिङ्गनं सम्पन्नं तासामेव, तथाधिकारादित्येवकारार्थ उक्तः। **द्वयोरपि**। आविष्टावेशिनोरपीत्यर्थः। **विश्रान्तमित्यत्र**। **ज्येष्ठा अपीति**। ज्येष्ठानामपि तत्र विद्यमानत्वात्स्थितिरेव, न तु शयनमित्यर्थः। प्रथममिति। गोपीप्रश्नात्प्रथममन्यप्रश्नमित्यर्थः।

### गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

गोपीभी रममाणेन पञ्चषष्टितमे व्रजे। बलभद्रेण कालिन्द्याः कर्षणं विनिरूप्यते ॥ १ ॥

एवं श्रीकृष्णचरितं निरूप्य रामचरितं निरूपयति—बलभद्र इति। हे कुरुश्रेष्ठ! सुहृदो नन्दादीन् बन्धून् द्रष्टुमिच्छुः, तत्र हेतुमाह—उत्कण्ठ इति। उत्कण्ठा तेषु प्रेम तद्युक्तः अतो रथमास्थितो बलभद्रो नन्दगोकुलं प्रययौ। स्वातन्त्र्यं सूचयन्नाह—भगवानिति ॥ १ ॥ चिरोत्कण्ठैः बहुकालदर्शनादीच्छायुक्तैर्गोपैर्गोपीभिश्च परिष्वक्तः आलिङ्गितः रामो पितरौ यशोदानन्दौ अभिवाद्य प्रणम्य ताभ्यामाशीर्भिरभिनन्दितो बभूव ॥ २ ॥ तदेव दर्शयति—चिरमिति। हे दाशार्ह! सानुजः अनुजेन कृष्णेन सहितस्त्वं नोऽस्मान् चिरं बहुकालं पाहि पालय। ननु 'पुत्रे चिरं जीवेति वक्तव्ये तद्विपरीतं कथमुच्यते' इत्याशङ्क्य तत्र हेतुं सूचयन् संबोधयति—जगदीश्वरेति। इत्येवमुक्त्वा तमङ्कमारोप्य आलिङ्गनं च कृत्वा नेत्रैर्जलैः आनन्दाश्रुभिः सिषिचतुः ॥ ३ ॥ ततो गोपवृद्धांश्च विधिवदभिवन्द्येति शेषः। यविष्ठैर्न्यूनवयस्कैरभिवन्दितो बभूव। ततो हास्यादिभिः आत्मनः स्वस्य वयःसख्यसम्बन्धानुरूपं गोपालान् समुपेत्य उपविवेशेति शेषः। आदिपदेन आलिङ्गनादिसङ्ग्रहः ॥ ४ ॥ ततश्च विश्रान्तं गतश्रमं अतएव सुखं यथा भवति तथाऽऽसीनं रामं परित उपागतास्तेनानामयं पृष्टा गोपाः प्रेम्णा गद्गदाक्षरया गिरा स्वेषु यादवेष्वनामयं पप्रच्छुरिति द्वयोरन्वयः। प्रश्ने हेतुमाह—कमलपत्राक्षे कृष्णे तत्प्राप्त्यर्थं न्यस्ताखिलराधसः परित्यक्तसर्वविषया इति। तदेकचित्ता इत्यर्थः ॥ ५-६ ॥

### अन्वितार्थप्रकाशिका

पञ्चषष्टितमे रामो व्रजगोपीररीरमत् ॥ मदाच्चकर्ष यमुनां तत्र श्लोका गुणाग्नयः ( ३३ ) ॥
उवाचेत्येक ( १ ) मर्द्धाद्यास्त्रयस्त्रिंशनुष्टुभः ( ३३ ॥ ) ॥ ५६ ॥

बलभद्र इति ॥ हे कुरुश्रेष्ठ! सुहृदो नन्दादीन् बन्धून् द्रष्टुमिच्छुः भगवान् बलभद्र उत्कण्ठः प्रेमयुक्तः अथो रथमास्थितो नन्दगोकुलं प्रययौ अत्रैतावन्तं कालं सहैव स्वगमनेच्छया कृष्णेन नानुज्ञातः कृष्णोऽपि नन्दादिप्रेमबन्धात्तत्रैव तिष्ठे-

दिति शङ्कया वासुदेवादिभिर्नानुज्ञातः अधुना तु कृष्णेन स्वागमसंदेशगोपनाय एकाकी प्रस्थापित इति ॥ १ ॥ परिष्वक्त इति चिरोत्कण्ठैः बहुकालं दर्शनादीच्छायुक्तैर्गोपैर्गोपीभिश्च मातृद्वयस्याभिः परिष्वक्तः आलिङ्गितः रामोऽपि पितरौ यशोदानन्दौ अभिवाद्य प्रणम्य ताभ्यामाशीर्भिरनन्दितो बभूव ॥ २ ॥ तदाह—चिरमिति ॥ हे जगदीश्वर ! हे दाशार्ह ! सानुजः अनुजेन कृष्णेन सहितस्त्वं नोऽस्मान् चिरं बहुकालं पाहि पालय । इत्येवं शौर्यैश्वर्यादिसूचिकामाशिषमुक्त्वा तमङ्कमारोप्यालिङ्गनं च कृत्वा नेत्रजैर्जलैः आनन्दाश्रुभिः सिषिचतुः ॥ ३ ॥ गोपेति त्रयम् ॥ ततो गोपवृद्धांश्च विधिवदभिवन्द्येति शेषः । यविष्ठै-र्न्यूनवयस्कैरभिवन्दितो बभूव । ततो द्वितीयदिने हास्यादिभिः आत्मनः स्वस्य वयः सख्यसंबन्धानुरूपं गोपालान् समुपेत्य उपविवेशेति शेषः । आदिपदेन आलिङ्गनादिसङ्ग्रहः । ततश्च विश्रान्तं गतश्रमम् अत एव सुखं यथा भवति तथाऽऽसीनं रामं कमलपत्राक्षे कृष्णे तत्प्राप्त्यर्थं संन्यस्ताखिलराधसः परित्यक्तसर्वविषया इति तदेकचित्ताः परित उपागतास्तेनानामयं पृष्टा गोपाः प्रेम्णा गद्गदाक्षरया गिरा स्वेषु यादवेष्वनामयं पप्रच्छुः ॥ ४–६ ॥

### श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्

इदानीं पंचषष्ठितमेऽध्याये रामस्य गोकुलगमनं यमुनाकर्षणं च वर्णयति उत्कंठः प्रेमोद्रिक्तः ॥ १ ॥ चिरोत्कंठैः बहुकालतोमेलनाभियुक्तैः गोपीभिरपि आशीर्भिः अभिनंदितः ॥ २–३ ॥ गोपवृद्धांश्चाभिवंद्य । आत्मनः स्वस्य यथा संबंधं तान्सत्कुर्वन् तैः सत्कृतः ॥ ४ ॥ रामं प्रतिकुशलं पप्रच्छुः ॥ ५ ॥ किंच रामेणापि स्वेषु व्रजवासिषु अनामयं प्रतिपृष्टास्संतः कृष्णे न्यस्तान्यर्पितानि अखिलानि राधांसि समृद्धयो यैस्ते प्रेमगद्गदया गिरा यादवानां कुशलं पप्रच्छुः ॥ ६ ॥

### भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

आगतो गोकुलं रामः पञ्चषष्ठितमेऽकरोत् । गोपीभी रममाणः सन् मदाद्याम्या विकर्षणम् ॥ १ ॥

अथ रामकृष्णयोश्चेष्टितानि पृथक् विवर्णयिषुर्मुनिरादौ रामचेष्टितानि वर्णयति ॥ बलभद्र इति ॥ हे कुरुश्रेष्ठ, सुहृद्दि-दृक्षुः सुहृदो बन्धून् द्रष्टुमिच्छुः, उत्कण्ठः प्रेमयुतः, बलभद्रः भगवान्, रथं आस्थितः रथारूढः सन्नित्यर्थः । नन्दगोकुलं, प्रययौ ॥ १ ॥ परिष्वक्त इति ॥ चिरोत्कण्ठैर्बहुकालातीतत्वाद्दर्शनोत्कण्ठावद्भिः, गोपैः गोपीभिश्च, परिष्वक्तः आलिङ्गितः एव, ततः रामः, पितरौ यशोदानन्दौ, अभिवाद्य, यदा स्थितस्तदा पितृभ्यामिति शेषः । आशीर्भिः जय जीवेत्याद्याशीर्वचनैः, अभिनन्दितः, आसीत् ॥ २ ॥ चिरमिति ॥ हे दाशार्ह, हे जगदीश्वर, इदं संबोधनद्वयं हेतुगर्भम् । तत्त्वात्, सानुजः अनुजेन कृष्णेन सहितः सन्, नोऽस्मान् चिरं पाहि, इत्येवं, आदिश्य, आलिङ्ग्य परिष्वज्य च, नेत्रैर्नेत्रोद्भवैः, जलैः प्रेमाश्रुभिः, तं सिषिचतुः ॥ गोपवृद्धानिति ॥ ततः, गोवृद्धांश्च, विधिवत्, अभिवन्द्य स्थितः स इति शेषः । यविष्ठैर्न्यूनवयस्कैश्च, अभिवन्दि-तोऽभिवादितः, अथ ततः, यथासख्यं, आत्मनः यथासंबन्धं, गोपालान् समुपेत्य, हास्यहस्तग्रहादिभिः, संमान्य च उपविवेशेति शेषः ॥ ४ ॥ विश्रान्तमिति । विश्रान्तं, सुखं आसीनं, पर्युपागताः परितः संवेष्ट्य स्थिताः, स्वेषु अनामयं पृष्टा बलदेवेन गोपेषु कुशलमनुयुक्ताश्च, कमलपत्राक्षे कृष्णे, कमलदलसमनयनश्रीकृष्णप्राप्त्यर्थमित्यर्थः । संन्यस्ताखिलराधसः संत्यक्तसर्वविषया गोपाः, प्रेमगद्गदया गिरा, इति पप्रच्छुः ॥ ५ ॥ अथ प्रश्नमनुवदति ॥ कच्चिदिति ॥ हे राम, सर्वे नोऽस्माकं, बान्धवाः कुशलं यथा तथा, आसते कच्चित् । हे राम, यूयं दारसुतान्विताः सन्तः, नोऽस्मान्, स्मरथ कच्चित् ॥ ६ ॥

### कृष्णप्रिया

श्रीशुकदेव जी मुनिराज ने कहा—राजन् ! भगवान् श्री दाऊदयाल जी के हृदय में व्रजराय श्री नन्दरायजी एवं अन्य स्वजन स्नेहीजनों से मिलने की उत्कट उत्कण्ठा हुई । आप इस इच्छा से रथारूढ़ होकर द्वारिका से नन्दगाँव गोकुल की ओर पधारे ॥ १ ॥ यहाँ नन्दगाँव गोकुल में रहने वाले गोपजन एवं गोपिकावृन्द श्रीराम श्रीकृष्ण जी से मिलने को चिरकाल से लालायित थे । गोपजनों ने अपने निकट बलभद्रजी को प्राप्त कर बड़े चाव से अत्यन्त उमङ्ग से कण्ठ से लगाये । श्री दाऊदयालजी ने माता श्री यशोदाजी को एवं पितृपाद श्रीनन्दरायजी को पादस्पर्श करके प्रणाम किये । नन्दबाबा एवं यशोदाजी ने भी आशीर्वाद और अभिनन्दन किया ॥२॥ अभिनन्दन करते हुए नन्दरायजी आदि स्वजनों ने कहा बलभद्रजी ! आप तो जगदीश्वर ही हो । आप एवं लघुबन्धु भगवान् कृष्णचन्द्रजी के साथ निरंतर हमारी रक्षा करते रहो । माता-पिता ने ऐसा कहते हुए अपने उत्सङ्ग में बैठाकर स्नेहाश्रुओं से भिगो दिये ॥ ३ ॥ पुनः जो बुजुर्ग गोपजन थे उन सबको श्री बलभद्रजी ने प्रणाम किया और जो छोटे-छोटे गोपजन थे उन लोगों ने श्री बलरामजी को विधिवत् नमस्कार किये । सब व्रजजन अपनी वय मेल-जोल के और स्नेह सम्बन्ध के अनुकूल सबसे मिले जुले ॥ ४ ॥ श्री बलभद्र जी गोपाल बालकों के समीप आये किसी से हस्तधूनन किया, किसी से मधुर-मधुर वार्तालाप किया, किसी को हास्य पुरःसर समालिङ्गन दिया । पुनः श्री बलराम जब श्रममुक्त बने तब विराम के लिए जब विराजे तब सब व्रजजन उनके समीप पहुँचे । इन अनन्य भक्तजनों ने कमललोचन

प्रियतम भगवान् श्रीकृष्ण के लिए ऐहिक सुख-वैभव-भोगविलास और पारलौकिक स्वर्ग मोक्ष पर्यन्त सर्व पदार्थों को त्याग दिया ऐसे समर्पित जन थे। पुनः कृपानिधान श्री बलभद्रजी ने उन भक्तजनों के एवं उनके पारिवारिक कुटुम्बियों के सम्बन्ध में कुशल प्रश्न पूछे, तब सब व्रजजनों ने प्रेममधुरवाणी से श्री बलभद्रजी से प्रश्न किया ॥ ५-६ ॥

**कच्चिन्नो बान्धवा राम सर्वे [1]कुशलमासते। कच्चित् स्मरथ नो राम यूयं दारसुतान्विताः ॥ ७ ॥**
**दिष्ट्या कंसो हतः पापो दिष्ट्या मुक्ताः सुहृज्जनाः। निहत्य निर्जित्य रिपून् दिष्ट्या दुर्गं समाश्रिताः ॥ ८ ॥**
**गोप्यो हसन्त्यः पप्रच्छू रामसंदर्शनादृताः। कच्चिदास्ते सुखं कृष्णः पुरस्त्रीजनवल्लभः ॥ ९ ॥**
**कच्चित् स्मरति वा बन्धून् पितरं मातरं च सः। [2]अपि वा स्मरतेऽस्माकमनुसेवां महाभुजः ॥ १० ॥**

### कर्दमक्षमा

अन्वयः—राम! सर्वे, नः, बान्धवाः, कुशलम्, आसते? दारसुतान्विताः, यूयम्, कच्चित्, नः, स्मरथ? ॥ ७ ॥ दिष्ट्या, पापः, कंसः, हतः, दिष्ट्या, सुहृज्जनाः, मुक्ताः, रिपून्, निर्जित्य, निहत्य, दुर्गम्, समाश्रिताः, दिष्ट्या ॥ ८ ॥ रामसंदर्शनादृताः, गोप्यः, हसन्त्यः, पप्रच्छुः, पुरस्त्रीजनवल्लभः, कृष्णः, सुखम्, आस्ते? ॥ ९ ॥ सः, कच्चित्, मातरम्, पितरम्, बन्धून्, वा, स्मरति? अपि, वा, नः, स्मरते! महाभुजः, नः, स्मरते? अस्माकम्, अनुसेवाम्, स्मरते ॥ १० ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

रामस्य संदर्शनेनादृताः सादराः ॥ ९-११ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

बान्धवा वसुदेवादयः। यथावयो वयआद्यनुरूपम्। गोपालान् हास्यहस्तग्रहादिभिः समुपेत्य तत्समीपगमनादिना मिलित्वा विश्रान्तं भोजनानन्तरं कृतशयनं पुनश्च सुखमासीनं तम् अनामयं कुशलं पप्रच्छुः। तेन रामेणापि स्वेषु गोपेषु या प्रेम्णा गद्गदा गीस्तया ते गोपाः कुशलं पृष्टाः। ते गोपाश्च कृष्णे सम्यक्प्रकारेण न्यस्तान्यर्पितान्यखिलस्य देहादिव्यवहारस्य राधांसि सिद्धयो यैस्ते, कृष्णगमनदिनमारभ्य तेषां स्वाभाविक्योऽपि शयनभोजनादिक्रियाः नैव सिध्यन्तीत्यर्थः। तोषिण्यान्तु—'यद्धामार्थसुहृत्प्रियात्मतनयाः' इति रीत्या पुरैव तस्मिन्नर्पितसर्वविषया अतस्तद्विरहिणां स्वतस्तदनभिरुचिरपि तदागमनाऽशयैव तद्धारिण इत्युक्तम्। तत्र वृद्धाः पृच्छंति—कच्चिन्नोऽस्माकमिति। समानवयसः पृच्छंति—कच्चित्स्मरथ नोऽस्मानिति ॥७॥ मुक्ताः दुःखेभ्यः ॥ ८ ॥ कच्चिदितीष्टप्रश्ने। पुरस्त्रीजनवल्लभ इति साभिप्रायोक्तिः, तदर्थं योऽस्मांस्त्यक्तवानिति। गोप्यः श्रीकृष्णप्रेयस्यः। हसंत्य इत्युन्मादबोधकम्, तादृशमहाविरहदुःखे श्रीबलदेवस्याग्रे तादृशपरमलज्जावतीनां कथमन्यथा हासस्संभवेदिति। रामोऽपि तन्महाभावलक्षणमधिगम्यैव ताः संमानयामासेव न स्ववहेलयामासेत्याह—रामेण कर्त्रा संदर्शनेन स्वानुजप्रेमवत्प्रेयसीबुद्ध्या स्वकर्तृकेण सवात्सल्यदर्शनेन कारणेनादृताः। कच्चित्कृष्णस्तत्र सुखमास्ते। ननु युष्मद्विरहे तत्र तस्य कुतः सुखं तत्राहुः—पुरेति। नागरीः सुंदरीः स्त्रीः प्राप्तस्य तस्य कुतोऽस्माकं ग्राम्याणां विरहदुःखं संभवेदतः सुखं घटेतैवेति भावः ॥ ९ ॥ स कृष्णः। स्मरतीति चेत्तच्छ्रुत्वा तदागमनं संभाव्याहुः—सकृदिति। महाः पूज्या राजकन्या भुंक्ते सेवते इति महाभुजः। इगुपधत्वात्कः। अनेन राजकन्याभोक्ता कथमप्यस्मान्स्मरतीति भावः। अस्मान्मा स्मरतु नाम बंधून् पितृव्यमातुलादीन् पितरं नन्दं मातरं यशोदां च किं स्मरति न वा। श्रृंगाररसविलासेनास्मत्तस्ताः पुरस्त्रियोऽधिकात्तमधिकं सुखयन्तीति जानीम एव। किन्तु वनमालाविरचनस्थासकसंपादनकुसुमपल्लवमयव्यजनशय्योल्लोचादिनिर्माणादिषु वयं तस्य स्मृतिपथमवश्यं याम एवेत्यभिप्रायेण पृच्छन्ति—अपि वेति। स्मरते स्मरति। महाभुज इति तस्य पीनभुजयोर्भक्तिच्छेदरीत्या कुंकुमरसचर्चा न जाने सांप्रतं कीदृशी भवतीति भावः ॥ १० ॥

### श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी

तत्र गोपकर्तृकप्रश्नमेव स्पष्टयंस्तेष्वतिवृद्धानां प्रश्नमाह—कच्चिन्न इति। नोऽस्माकं बान्धवा यादवाः वयस्यानां प्रश्नः कच्चित्स्मरथेति दारसुतैः सह मिलित्वेत्यर्थः। यूयमिति श्रीकृष्णापेक्षया एवं द्वयोर्भ्रात्रोः पुत्रोत्पत्तेरनन्तरमेवास्य तत्रागमनं गम्यते किन्तु दिष्ट्या कंसो हत इत्यादि वक्ष्यमाणात् सन्निहित्यावगमनेन ज्येष्ठपुत्रोत्पत्तेरिति ज्ञेयं यथोक्तं श्रीविष्णुपुराणे "विवाहात्प्रागेव कालयवनवधार्थं मथुरामागतयोस्तद्वधे वृत्ते ततः श्रीकृष्णस्य द्वारकायां गमनमस्य च गोकुले" इति तथा हरिवंशेपि गोमन्थयुद्धे प्रवृत्ते करवीरपुरे श्रृगालवधानन्तरं तयोः श्रीमथुरायामागमने सति चास्य गोकुलागमनम्" इति तत्तु

१. ते वै-प्रा. पा.। २. अप्यसौ मातरं द्रष्टुं सकृदप्यागमिष्यति-श्रीधर. वंशी. जीव.; इदं नास्ति-वीर. विज.।

कल्पभेदव्यवस्थया स्थाप्यमानमपि तदागते नातिविलम्बरोधने तु समवेतः स्यात् ॥ ७ ॥ पितुस्सवयसां प्रश्नः, दिष्ट्येति । ते च स्वदुःखमप्यनादृत्य तन्मङ्गलमेव बहु मन्यन्ते स्म तत्रापि सम्प्रति तत्सहायानां यादवमात्राणां मङ्गलं बहुमन्यमानाः श्रीरामकृष्णयोः कैमुत्यमानयन्ति स्म । कंसो हत इत्यादिका लीलाः क्रमश एवोक्ताः क्रमेण स्वसुखातिशयव्यञ्जनाय सुहृज्जना इति भवतोः साहाय्यकरणात् सम्प्रत्यस्माभिस्तच्छब्देनैव शंसनीया इत्यर्थः । कांश्चिन्निहत्य कांश्चिन्निर्जित्य दुर्गं समाश्रिताः यत्तदपि दिष्ट्या भद्रम् अस्माकं भाग्येनैवेत्यर्थः । अवशिष्टागमनशङ्कानिवृत्तेः अतोऽस्माकं भवतां दूरगमनमपि शङ्कानिवृत्तेः । अतोऽस्माकं भवतां दूरगमनमपि सुखायैव जातमिति द्योतितम् अन्योऽपि शेषस्तत्रैव—

> "तमूचुः स्थविरा गोपाः प्रियं मधुरभाषिणः । रामं रमयतां श्रेष्ठं प्रवासात् पुनरागतम् ॥
> स्वागतं वो महाबाहो यदूनां कुलनन्दन । अद्यास्म निर्वृतास्तात यत्त्वां पश्यामहे वयम् ॥
> प्रीताश्चैव वयं वीर यत्त्वं पुनरिहागतः । त्रिदशानां वयं मान्या ध्रुवमद्यामलानन ॥
> ये स्म दृष्टास्त्वया तात काङ्क्षमाणास्तवागतम् । तव चागमनं दृष्ट्वा सभाग्याः स्म यथा पुरा"॥

इत्यादि किञ्च—

> "प्रत्युवाच ततो रामः सर्वांस्तानभितः स्थितान् । यादवेष्वपि सर्वेषु भवन्तो मम बान्धवाः ॥
> इत्यावयोर्गतं बाल्यमिहाचैवावयोरतम् । भवद्भिर्वर्द्धिताश्चैव यास्यामो विक्रियां कथम् ॥
> गृहेषु भवतां भुक्तं गावश्च परिरक्षिताः । अस्माकं बान्धवाः सर्वे भवन्तो बद्धसौहृदाः ॥

इत्यादि अत्र प्रवासात् पुनरागतमिति तदापि तस्मिन् स्वगृहसम्बन्धित्वाभिमानमेव बोधयति तत्र यदूनां कुलनन्दनेति तथाप्यस्माकमेवेति निजप्रणयव्यञ्जना त्वामित्यादौ तव चेत्युत्तरतश्चकारान्वयात् त्वामपीत्यादिरित्यर्थः । श्रीकृष्णं प्रत्युत कण्ठाव्यञ्जनया तवागमनमिति तवैवास्मासु दयालुत्वमनुभूयते त्वदनुजस्य त्वौदासीन्यमेवेति दर्शितम् अथ श्रीरामवाक्ये यादवेष्वेति तेषामपि यादवत्वान्निर्द्धारणे सप्तमी शुद्धपितृभावादेः तस्यैव निश्चयाय श्रीकृष्णसाम्येनात्मानं निर्दिशति इत्यावयोरिति बाल्यं जन्मादि तस्य यथागतं तथा ममापि गतमित्यर्थः । रतं बाल्यक्रीडा बर्द्धिता इत्यादावेकत्व एव बहुत्वनिर्देशस्तेनात्मसम्भावनया ननु द्वित्वे श्रीकृष्णस्यापि तादृशत्वमुद्देष्टुमसुष्ठुत्वात् अन्यथा द्विवचनप्रकरणर्द्धिताविततोवोच्येत यादवेष्वप्याधिक्ये हेतुर्बद्धसौहृदाः स्वाभाविकत्वात् । परित्यागभ्रमेऽपि स्थिरपितृभावादय इति तेषान्तु तथा न तिष्ठेदिति भावः ॥ ८ ॥ गोप्यस्तद्विशेषाः श्रीकृष्णप्रेयस्यः ताश्च तद्वृत्तश्रवणाद्यर्थं नित्यं रहसि मिथो मिलन्त्यः श्रीमदुद्धववदन्विष्य तेनाप्येकत्र प्राप्ता इति ज्ञेयं तादृशदुःखेप्यनुवर्त्तमाने हसन्त्य इत्युन्मादवोधकं श्रीकृष्णोपहासगर्भं हास्यं कुर्वत्य इत्यर्थः । तस्य चोन्मादमयस्योत्कण्ठामयत्वात् स्वकान्तज्येष्ठमपि पप्रच्छुः टीकायां सादरा इति कृतनमस्कारादिका इत्यर्थः । यद्वा रामस्य उद्धवात् परमान्तरङ्गस्य यत्सम्यक् पूर्वपूर्वस्फूर्त्तिमयदर्शनविलक्षणत्वात् पूर्णं दर्शनं तेनादृताः श्रीकृष्णागमनादौ विश्वस्ताः तत्र स्वत्यागजातेर्ष्योपहसन्त्योपि शुद्धप्रेमविशेषस्वाभाव्येन तत्सुखैकपुरुषार्थत्वात् तन्मात्रं पृच्छन्ति कच्चिदिति ननु युष्माभिर्विना कथं कस्य सुखं तत्राहुः पुरेति नागरस्त्रीगणप्राप्त्या ग्राम्यावियोगे तस्य सुखं घटेतैवेति भावः ॥ ९ ॥ यद्यपि तस्य सुखेनैव किलास्माकं सुखं तथापि स्वेषु तत्कर्तृकतत्स्मरणमवश्यमपेक्ष्यमित्याशयेन तं पृच्छन्ति—कच्चिदिति बन्धून् सखीन् श्रीदामादिगोपान् वा संशये स च शोकव्यञ्जकः अपि किम् अनुसेवां निरन्तरभजनं यद्वा अनुस्मरते पुरस्त्रीभिः सह गोष्ठ्यनन्तरं प्रसङ्गाद्गौणतयापि स्मरति स्मरते इति पुनरुक्तिरार्त्या वाशब्दः कटाक्षे महाभुज इति महापुरुषस्यैतदुचितमिति व्यज्यते वस्तुतस्तु भावविशेषोत्कण्ठया बन्ध्वादीनां त्रयाणां यथोत्तरं श्रैष्ठ्ये ततश्च बन्धून् न स्मरतु नाम पितरं तु किमहो स्मरतीत्येवं व्याख्येवं स्वेषान्तु पृथक्कृत्य पश्चादुक्तिर्दैन्येन ॥ १० ॥

### श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी

नोऽस्माकं बान्धवा यादवाः, राम हे बन्धुवर्गरमण ! इति तस्य बन्धु-वात्सल्येन पुनरपि तथैव सम्बोधनम् । दारेति तत्तदन्वितत्वेनान्येषु स्नेहोत्पत्त्या युष्माकं स्मरणयोग्या न भवाम एव, तथापि किं स्मरथ ? तच्च सम्भवेदिति सम्बोधयति—रामेति । यूयमिति श्रीकृष्णापेक्षया साक्षात्तदनुक्तिः, अनागमनेन तस्य विस्मरणशंकया तदुच्चारणाशक्तेः । एवं द्वयोर्भ्रात्रोरतयोर्विवाहात्तत्रापि पुत्राद्युत्पत्तेरनन्तरमेवास्य तत्रागमनं ज्ञेयम् । यच्चोक्तं श्रीविष्णुपुराणे विवाहात् प्रागेव कालयवनवधार्थं श्रीमथुरामागतयोस्तयोस्तद्वधे वृत्ते ततः श्रीकृष्णस्य द्वारकायां गमनमस्य च गोकुल इति । तथा श्रीहरिवंशेऽपि गोमन्तयुद्धे वृत्ते करवीरपुरे शृगालवधानन्तरं तयोः श्रीमथुरायामागमने सत्यस्य गोकुलागमनमिति; तच्च कल्पभेद-व्यवस्थया सुपरिहार्य्यमेव ॥ ७ ॥ विविधोपद्रवादिनास्मद्दौर्भाग्येन वा मास्तु वा अस्मत्स्मरणमंगलम्, तथापि युष्माकं शत्रुनिर्ज्जयादिना सुखस्थितिरेवास्माकं महामंगलमित्याशयेनाहुः-दिष्ट्येति । पाप इति वधयोग्यतोक्ता, सुहृज्जना आत्मनः सर्वे ज्ञातय इत्यर्थः । किंवा सुहृदो जनाश्च भृत्याः । यद्वा, अस्माकं बान्धवा यादवा मुक्ताः कंसाद्युपद्रवदुःखात् रिपून् कांश्चित् नितरां हत्वा कांश्चिच्च

निःशेषेण जित्वापि दुर्गं समुद्रपरिखत्वादिना परैर्गन्तुमशक्यं स्थानं श्रीद्वारकाख्यं सम्यक् सुहृज्जनसाहित्यादिना दृढमाश्रिता इति यत् तच्च दिष्ट्या, अनिहतानां केषाञ्चिद्दुष्टानां तेषां तत्र गमनशंकानिवृत्तेः; अन्योऽपि विशेषस्तत्रैव ( श्रीहरिवंशे विष्णु० प० ४६।६-८,१०,१६ )—

'तमूचुः स्थविरा गोपाः प्रियं मधुरभाषिणः। रामं रमयतां श्रेष्ठं प्रवासात् पुनरागतम् ॥
स्वागतं वो महाबाहो यदूनां कुलनन्दन। अद्य स्म निर्वृतास्तात यत्त्वां पश्यामहे वयम् ॥
प्रीताश्चैव वयं वीर यत्त्वं पुनरिहागतः। त्रिदशानां वयं मान्या ध्रुवमद्यामलानन ॥
ये स्म दृष्टास्त्वया तात काङ्क्षमाणास्तवागमम्। तव चागमनं दृष्ट्वा सभाग्याः स्म यथा पुरा ॥' इत्यादि।

किञ्च, ( श्रीहरिवंशे विष्णु० प० ४६।१७-१९ )—

'प्रत्युवाच ततो रामः सर्व्वांस्तानभितः स्थितान्। यादवेष्वपि सर्व्वेष् भवन्तो मम बान्धवा ॥
इहावयोर्गतं बाल्यमिह चैवावयो रतम्। भवद्भिर्वर्द्धिताश्चैव यास्यामो विक्रियां कथम् ॥
गृहेषु भवतां भुक्तं गावश्च परिरक्षिताः। अस्माकं बान्धवाः सर्व्वे भवन्तो बद्धसौहृदाः ॥' इत्यादि ॥ ८ ॥

रामस्य व्रजजनरमणस्य सम्यग् गोपवेशादिना साक्षाद्दर्शनेनादृताः सम्मानिताः प्रहर्षिता इत्यर्थः। अतो हसन्त्यः, स्मितमुपहासं वा कुर्व्वत्यः; यद्वा, रामसन्दर्शनादृता अपि, अकारप्रश्लेषेण—अहसन्त्योऽन्तःशोकभरोदयेनाप्रसन्नमुखाः सत्यः। कृष्णः परमानन्दघन इति सुखार्हतोक्ता; यद्वा, अस्मच्चित्ताकर्षकः। ननु युष्माभिर्विना कथं तस्य सुखम्? तत्राहुः—पुरस्य स्त्रीजनाः सर्व्वाः स्त्रियस्तासां वल्लभः, किंवा ता एव वल्लभा यस्य सः, नागरविदग्धस्त्रीगणप्राप्त्या वन्यविदग्धास्मद्वियोगेऽपि तस्य सुखं घटेतैवेति भावः ॥९॥ यद्यपि तस्य सुखेनैव किलास्माकं सुखम्, तथापि तत्स्मरणमवश्यमपेक्ष्यमित्याशयेन पृच्छन्ति—कच्चिदिति। बन्धून् सखीन्, श्रीदामादिगोपान्; वा संशये शोके वा, अपि किमनुसेवां निरन्तरभजनम्; यद्वा, अनुस्मरते पुरस्त्रीभिः सह गोष्ठ्यनन्तरं प्रसंगाद्गौणतयापि स्मरति, स्मरत इति पुनरुक्तिः परमदैन्येन स्मृतिमात्रापेक्षणात्। वा-शब्दः कटाक्षे; महाभुज इति व्रजरक्षार्थं केशिवधे भुजस्य वृहत्तायाः, किंवा पौर्विकगाढालिंगनस्याभिप्रायेणेति स्मरणं सम्भावितम्। बन्धादीनां यथोत्तरं श्रेष्ठ्यम्, ततश्च बन्धून् न स्मरतु नाम, पितरन्तु किमहो स्मरतीत्येवं व्याख्येयम्। यद्वा, अत्यन्तदैन्येनोक्तत्विद्यथोत्तरं न्यूनत्वमूह्यम्। ततश्च बन्धून् स्मरत्येव, पितरं कं स्मरतीत्येवं व्याख्येयम् ॥ १० ॥

### श्रीमद्वीरराघवाचार्यकृता भागवतचन्द्रचन्द्रिका

प्रश्नमेवाह—कच्चिदिति द्वाभ्याम्। हे राम! नोऽस्माकं सर्वे बान्धवाः कुशलमासते कच्चित् दारैः सुतैरन्विताः इदं विस्मृत्यभावसूचकं विशेषणं यूयं नोऽस्मान् स्मरथ कच्चित् ॥ ७ ॥ दिष्ट्येत्यानन्दे अस्माकमयमानन्द इत्यर्थः। सुहृज्जनाः वसुदेवदेवक्यादयः मुक्ताः कंसनिर्बन्धान्मोचिताः कांश्चिद्रिपून् निहत्य कांश्चित् निर्जित्य जलदुर्गं च दुर्गं द्वारकामित्यर्थः ॥८॥ गोप्य इति। रामस्य सन्दर्शने पुनः पुनरीक्षणे आदृताः पप्रच्छुः, प्रश्नमेवाह—कच्चिदास्त इति। पुरस्त्रीजनवल्लभ इत्यनेन ग्राम्यस्त्रीष्वात्मसुतस्य प्रीत्यभावो हेतुगर्भितः ॥ ९ ॥ स कृष्णः पितरं नन्दं मातरं यशोदाञ्च स्मरति कच्चित् अपि वेति। अस्माकमनुसेवामनुवर्त्तनं स्मरते किं वा न स्मरत्येवेति भावः ॥ १० ॥

### श्रीविजयध्वजतीर्थकृता पदरत्नावली

रामसन्दर्शनेनादृताः जातबहुमानाः ॥ ९ ॥ अस्माकमनुसेवां स्मरते न वा ॥ १० ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

हसन्त्य इत्युन्मादबोधकं श्रीकृष्णोपहासगर्भं हासं कुर्वत्य इत्यर्थः ॥ ९-१५ ॥

### श्रीमज्जीवगोस्वामिकृतः बृहत्क्रमसन्दर्भः

गोप्यो हसन्त्यः पप्रच्छुरित्यादि। गोप्योऽत्र नित्यसिद्धेतरा मुनिरूपा इति बोद्धव्यम्। हसन्त्य इत्यस्यायं भावः—प्राक् यदुत्तमोऽयमायातीति कृष्णागमनमाशङ्क्यत्वरया गताः पश्चाद्बलदेवमालोक्य स्वाभाग्यं प्रति सासूयं हसनं चक्रुः ॥ ९ ॥ यथागतं तथा निर्वर्तितमयुक्तमिति समयोचितमेव पृच्छन्ति—कच्चिदित्यादि। कच्चिद्बन्धून् स्मरति? बन्धुस्मरणं तु युक्तमेव। अथवा, पुरस्त्रीजनवल्लभश्चेदतो बन्धुस्मरणमपि तस्यासम्भाव्यम्। किं स्मरतीति साश्यसूयोक्तिः। अपि प्रश्ने, वा कटाक्षे। अस्माकमनुसेवां स्मरते? महाभुज इति गाढालिङ्गनपरम् ॥ १०-१३ ॥

### श्रीनाथचक्रवर्तिपादविरचिता चैतन्यमतमञ्जूषा

गोप्यो हसन्त्यः पप्रच्छुरिति हसन्त्य इत्यस्यायं भावः—प्राक् यदूत्तमोऽयमायातीति कृष्णागमनमाशङ्क्य त्वरया गता बलदेवं वीक्ष्य स्वादृष्टं प्रति सासूयत्वेन हसनमेव चक्रुः, यथागतं तथा निर्वर्त्तितुमयुक्तमिति समयोचितं पृच्छन्ति—कच्चिदित्यादि ॥ १०-१२ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

तत्र वृद्धाः पृच्छन्ति—कच्चिन्नोऽस्माकमिति। समानवयसः पृच्छन्ति स्मरथ नोऽस्मानिति ॥७-८॥ गोप्यः श्रीकृष्णप्रेयस्यः हसन्त्यः इत्युन्मादबोधकं तादृशमहाविरहदुःखे श्रीबलदेवस्याग्रे तादृशपरमलज्जावतीनां कथमन्यथाहासः सम्भवेदिति रामोपि तन्महाभावलक्षणमधिगम्यैव ताः सम्मानयामासेव नत्ववहेलयामासेत्याह—रामेण कर्त्रा सन्दर्शनेन स्वानुजप्रेमवत् प्रेयसीबुद्ध्या स्वकर्तृकेण सवात्सल्यदर्शनेन कारणेन आदृताः कच्चित् कृष्णस्तत्र सुखमास्ते ननु युष्मद्विरहे तत्र तस्य कुतः सुखं तत्राहुः, पुरेति, नागरीः सुन्दरीः स्त्रीः प्राप्तस्य तस्य कुतोऽस्माकं ग्राम्याणां विरहदुःखं सम्भवेत् अतः सुखं घटेतैवेति भावः ॥ ९ ॥ अस्मान् मास्मरतु नाम बन्धून् पितृव्यमातुलादीन् पितरं नन्दं मातरं यशोदां च किं स्मरति नवा श्रृङ्गाररसविलासेनास्मतस्ताः पुरस्त्रियोऽधिकास्तमधिकं सुखयन्तीति जानीमः एव किन्तु वनमालाविरचनस्थासकसम्पादनकुसुमपल्लवमयव्यजनशय्योल्लोचादिनिर्माणादिषु वयं तस्य स्मृतिपथमवश्यं याम एवेत्यभिप्रायेण पृच्छन्ति, अपि चेति। स्मरते स्मरति महाभुज इति तस्य पीनभुजयोर्भक्तिच्छेदरीत्या कुङ्कुमरसचर्चा न जाने साम्प्रतं कीदृशी भवतीति भावः ॥ १० ॥

### गूढार्थदीपिनी

कच्चिदिति प्रश्ने। नोऽस्माकं बान्धवाः वसुदेवादयः ॥ ७ ॥ पापः पापी अर्श आद्यजन्तः ॥८॥ गोप्य इति सार्द्धम्। आदृताः प्राप्तादराः ॥ ९ ॥ अपि किम्। महाः पूज्या राजकन्या भुङ्क्ते इति महाभुजः। इगुपधलक्षणः कः ॥ १० ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

प्रश्नमेवाह—कच्चिदिति द्वयेन ॥ ७-८ ॥ रामसन्दर्शने आदृताः सादराः ॥ ९-११ ॥

### श्रीमद्वल्लभाचार्यकृता सुबोधिनी

नन्दादीनां वाक्यान्याह **कच्चिन्नो बान्धवा रामेति**। सर्वे वसुदेवादयः कुशलमासत इति प्रसङ्गात् लौकिकमेतदुक्तम्। स्नेहं च पृच्छन्ति **कच्चित्स्मरथेति**। **नोऽस्मान्**। **रामेति** स्नेहेन सम्बोधनम्। यूयं सर्व एव **दारसुतान्विता** इति विस्मरणे हेतुः। अतः प्रश्नः सोपालम्भ इव ॥७॥ तेषां जातमभ्युदयादिकं स्वस्यात्यन्तमिष्टमिति ज्ञापयन्तोऽनुवदन्ति **दिष्टया कंसो हतः पाप** इति। भाग्येनैव सुहृज्जनाः कंसात् मुक्ताः। स्वरूपगुणयोस्तस्यासामीचीन्यं प्रतिपादयन्तः तस्य वधो न दोषायेत्यपि सूचयन्तो जरासन्धकृतोपद्रवनिवृत्तिमाहुः **निहत्य निर्जित्य रिपूनिति**। निहत्य कालयवनम्, बलं च निर्जित्य बहुधा जरासन्धादीन्। दुर्गाश्रये जयस्याहेतुत्वात् जयसन्देह एव दुर्गाश्रय इति क्त्वाप्रत्ययेन पूर्वकाल एवोच्यते। एतत्सूचयति **दिष्ट्येति**। द्वारकासम्यगाश्रयणं सम्बन्धिभिः सह स्थितिः ॥ ८ ॥ एवं सर्वेषां प्रश्नमुक्त्वा गोपीनां विशेषमाह **गोप्यो हसन्त्य** इति। राजसप्रकरणे ताः शोकरहिताः कृता इति भगवत्स्मरणेऽपि तासां हर्ष एव जात इति हासयुक्ताः। ननु पूर्णानां पुनः किं प्रश्नेनेत्याशङ्क्याह **रामसंदर्शनादृता** इति। रामस्य सम्यक् दर्शनेन स्नेहकृपापूर्वकेण आदृताः आदरयुक्ताः, ततो याः यथाभूताः तथानुवृत्तिः कर्तव्येति, अप्रश्ने औदासीन्यं च भवतीति पप्रच्छुः ॥ ८½ ॥ प्रश्नमाह **कच्चिदास्त** इति **सार्धैः पञ्चभिः**। अर्धं भावो न्यून इति। पूर्वं बहुविधा निरूपिता अपि। प्रकृते तस्याः कथायाः अनुपयोगात् पुराणान्तरस्थां तामाश्रित्य नन्दगोपकुमारिकाः भगवता द्वारकायां नीता एव। याः पुनरन्यपूर्वाः, ता अपि विमर्शे क्रियमाणे तासामेव वाक्यानुसारेण उपालम्भवाक्यैः अग्रे च भगवद्वाक्यैः भिन्ना एवेति प्रतिभाति। साधारण्य एव वा अत्र निरूप्यन्ते। सन्ति च ताः शङ्खचूडवधे निरूपिताः। अत एव सान्त्वनमासां पृथक् क्रियते। शब्दबलविवेके त्वाश्रीयमाणे अन्यपूर्वाः सर्वा एकरूपा एवेति प्रतिभाति। बलभद्रोपि भगवानेवेति साम्प्रतं भगवच्छक्तिरत्र प्रविष्टेति। अतः पूर्वभावेन सान्त्वनम्, भगवद्भावेन रमणमित्युभयं न विरुध्यते। अत एव सान्त्वनेनात्र विशेष उक्तः। स हि स्वात्मानं भगवद्रूपं प्रदर्श्य तासां लौकिकभावेऽपि पश्चात्कामनां पूरितवान्, उक्ततया अहमेकरूपेण समागतः, अत एव 'आयास्य' इत्यपि वचनं यथाश्रुतम्। कृष्णः साक्षादक्लिष्टकर्मेति आत्मानमेव रमयतीति यथाकथञ्चित्तत्परतामेव सम्पादयतीति न बहिर्धर्मान् कामं च गणयति। भक्तिमार्गविरोधस्तु निरोधे नाशङ्कनीयः। लौकिकसहितभक्तिमार्ग एव विरोधश्च। अतो गोपिकानां भेदे अभेदे वा विशेषो नास्तीति न पृथङ्निरूपणम्। तथापि भेदेनैव व्याख्येयमिति सम्प्रदायः। लौकिकदृष्ट्या पृच्छन्ति। रामेण लौकिकन्यायेन आदृता इति। कृष्णः स्त्रीणां हितकारी। तासां सुखदुःखैः तथा भवतीति वयं क्लिष्टा इति, अन्याश्च सुखिता इति, समानदेशस्थानामेव आनन्ददातृत्वे सुखित्वम्, साधारण्ये त्व(र्ध)सुखित्वमिति प्रायेणानुक्तेऽप्यङ्गीकृते वा आहुः। सत्यं सुखी, यतः **पुरस्त्रीजनवल्लभ** इति। अस्मद्वल्लभत्वे कदाचिदन्यथापि स्यादिति भावः ॥ ९ ॥ कदाचिदस्मत्स्मरणेनाप्यन्यथा भवतीति सम्भावनया आहुः **कच्चित्स्मरति वा बन्धूनिति**। **बन्धून्** गोपान् गोपीश्च। आवश्यकस्मरणं पृच्छन्ति **पितरं मातरं चेति**। यद्यपि त्वं स्मरसि, तथापि स कृष्णः स्मरति, न वेति

सन्देहः। एवं प्रसङ्गमुक्त्वा स्वस्मरणं सम्भावयन्ति **अपि वा स्मरतेऽस्माकमनुसेवामिति**। अपेक्षिता सेवा, इच्छानुसारिणी अनुसेवा भवति। **महाभुज** इति क्रियाशक्तिः सर्वापेक्षया महती निरूपिता। अनेन नयने आगमने वा न तस्य काचिच्छङ्का ॥१०॥

### श्रीसुबोधिनी-सारः

हे राम सर्वे नोऽस्माकं बांधवाः कुशलं सुखमासते कच्चित्किं हे राम दारसुतैः स्त्रीपुत्रैरन्विता यूयं नोऽस्मान्स्मरथ चिंतयथ कच्चित्किम् ॥ ७॥ पापः कंसो हतो दिष्ट्या परममंगलं सुहृज्जना ज्ञातयो वसुदेवाद्या मुक्ता बंधनादुद्दुखाद्वा दिष्ट्या भद्रं रिपून् कालयवनादीन् निहत्य जरासंधादीन् निर्जित्य दुर्गं द्वारकामाश्रिता दिष्ट्या ॥ ८॥ रामस्य संदर्शनेनादृताः सत्कृता हसंत्यो गोप्यः पप्रच्छुः पुरस्त्रीजनानां वल्लभः प्रियः कृष्णः सुखमास्ते कच्चित् किं "यस्य रुष्टो विधिस्तस्य परस्त्रीभिः समागमः" इति सानुशयोक्तिः ॥ ९॥ स कृष्णो बंधून् वा पितरं नंदं मातरं यशोदां च स्मरति कच्चित्किं असौ श्रीकृष्णो मातरं द्रष्टुं सकृदेकवारमायास्यति अपि किम् अस्माकमनुसेवां दासीकर्म महाभुजः स्मरतेऽपि वा किम् ॥ १० ॥

### श्रीविट्ठलरायात्मजश्रीवल्लभकृतलेखः

**निहत्येत्यत्र**। **पूर्वकाल एवेति**। ननु हननस्य जयस्य वा तत्र हेतुत्वमित्येवकारः। **गोप्य** इत्यत्र। **यथाभूता** इति। रामसन्दर्शनप्रकारेणैवंभूता भगवदादृता जाताः, नतु साक्षात्। अतः परोक्षप्रकारेणैवानुवृत्तिः कर्तव्येत्यर्थः। **कच्चिदास्ते** इत्यत्र। सङ्ख्यातात्पर्यमाहुः **अर्धं भाव** इति। षड्गुणो भगवान्पूर्णः। तथा सति षड्भिः श्लोकैः प्रश्नः स्यात्। अत्र वक्तरि भावस्य सावरणत्वेनार्धन्यूनत्वात्सार्धपञ्चभिः प्रश्न इत्यर्थः। ननु प्रश्नकर्तृभावसंख्यया श्लोकसंख्या वक्तव्या भवतीत्या-शङ्क्याहुः **पूर्वमिति**। यद्यपि पूर्वं तामसादिप्रकारेण बहुविधा निरूपिताः, तत्र तद्भावसंख्ययैव श्लोकसंख्या निरूपिता, तथाप्य-धुना आन्तररमणमेव स्थिरीकृतम्। तच्चैकविधमिति सर्वासामेकविध एव भावः। अतः प्रकृते बहुविधकथाया अनुपयोगान्न तद्भावसंख्यया श्लोकसंख्येत्यर्थः। विभागमाहुः **पुराणान्तरेति**। एतास्तु नीता एव। 'नन्दगोपसुतं देवि पतिं मे कुर्वि'ति प्रार्थनादेतासामावेशरमणं न भवतीत्येवकारः। याः पुनरन्यपूर्वाः श्रुतिरूपास्ता अपि भिन्नाः। अतः साधारण्य एव निरूप्यन्ते इत्यर्थः। **शब्दबलविवेके त्विति**। एताः श्रुतिरूपाः, बलोऽपि वेदात्मकः। अतः शब्दरूपयोरुभयोर्बलं सामर्थ्यं तस्य विवेके विवेचने इत्यर्थः। **सर्वा इति**। रासस्था अन्यपूर्वाः शङ्खचूडप्रसङ्गस्थाश्चेत्यर्थः। ननु तादृशीनां बलभद्रेण रमणं कथं सम्भवतीत्या-शङ्क्याहुः **स हि स्वात्मानमिति**। **लौकिकेति**। विवेचने तु न बाधकमित्युक्तमेव। लौकिकभावपक्षेपि न बाधकमित्य**पिशब्दः**। **उक्तत्वेति**। भगवतोक्तत्वाद्भगवता सहैकरूपेण समायतोऽहमित्यर्थः। **साक्षादित्यस्यात्मानमित्यनेनान्वयः**। **आत्मानं बलावि-ष्टमित्यर्थः**। ननु तत्र तद्देहमपि व्यापारयतीत्येवकारः। तत्र हेतुर**क्लिष्टेति**। देहादिरमणे क्लेशः स्यादित्यर्थः। **बाहुर्धर्मानिति**। **देहस्थानीयस्य** बलस्य धर्मानित्यर्थः।

### गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

प्रश्नमेव दर्शयति—कच्चिदिति द्वाभ्याम्। हे राम! नोऽस्माकं बान्धवा वसुदेवादयः कुशलमासते कच्चिदिति **इष्टप्रश्ने**। तदस्माकमिष्टमित्यर्थः। हे राम! नोस्मान् यूयं स्मरथ कच्चित्? 'प्रियबन्धूनां युष्माकं स्मरणं भवेदेवात्र कः सन्देह' इत्याशङ्क्याहुः—**दारैः सुतैश्चान्विता इति**। तत्रासक्तानामस्मद्विस्मरणसम्भवात् इत्याशयः। संबोधनद्विरुक्तिरादरार्था ॥ ७॥ **दिष्ट्येत्यानन्दे**, **येनास्माकं** महानानन्दो जात इत्यर्थः। कंसो हत इति दिष्ट्या। तत्र हेतुमाहुः-**पाप इति**। पापाचारत्वादित्यर्थः। **सुहृज्जना** वसुदेवादयः कंसकृतोपद्रवाद्विमुक्ता इत्यपि दिष्ट्या। रिपून् यवनजरासन्धादीन् निर्जित्य निहत्य च यूयं दुर्गं द्वारकां **समाश्रितास्तत्र** निवासं कृतवन्तः एतदपि दिष्ट्या ॥ ८॥ रामस्य सम्यक् प्रेम्णा दर्शनेन आदृताः प्रासादराः, अत एव हर्षेण हसन्त्यो गोप्योपि तं पप्रच्छुः। तत्प्रश्नमेवाह—कच्चिदास्ते सुखं कृष्ण इति। ननु 'युष्मद्विरहे तत्र तस्य कथं सुखम्' इत्या-शङ्क्य 'पूर्वं त्वस्मास्वेव तस्य महती प्रीतिरासीत्, इदानीं तु सा नास्ति, ग्रामस्त्रीत्वात् पुरस्त्रीलाभाच्च' इति सूचयन्त्य आहुः— **पुरस्त्रीजनवल्लभ इति** ॥ ९॥ बन्धून् गोपान्। सकृदपि एकदापि। अनुसेवां स्वानुवर्तनम्। 'अत्रागमनं तु तस्य सुकरमेव, क्रियाशक्तेराधिक्यात्' इत्याशयेनाहुः—महाभुज इति ॥ १० ॥

### अन्वितार्थप्रकाशिका

वृद्धाः पृच्छन्ति—कच्चिदिति। हे राम! नोऽस्माकं बान्धवाः वासुदेवादयः कुशलमासते कच्चित्। समानवयसः पृच्छन्ति—हे राम! दारैः सुतैश्चान्विताः यूयं नोऽस्माकं स्मरथ कच्चित्। विष्णुपुराणे तु विवाहात्प्रागेव कालयवनवधार्थं तो **मथुरामागतो** तद्वधे कृते कृष्णो द्वारकां गतो रामो व्रजमित्युक्तं तत्कल्पान्तपरम् ॥ ७॥ दिष्ट्येति ॥ पापः कंसो हत इति दिष्ट्या सुहृज्जना वासुदेवादयः कंसकृतोपद्रवाद्विमुक्ता इत्यपि दिष्ट्या। रिपून् यवनजरासन्धादीन् निर्जित्य निहत्य च यूयं दुर्गं द्वारकां

समाश्रितास्तत्र निवासं कृतवन्तः एतदपि दिष्ट्या ॥ ८ ॥ गोप्य इति सार्द्धम् ॥ रामस्य सम्यक् प्रेम्णा दर्शनेन आदृताः प्राप्तादराः अत एव प्रेमोन्मादेन विरहेऽपि हसन्त्यो गोप्यः कृष्णप्रेयस्यः एकान्ते गत्वा तं पप्रच्छुः । कच्चिदिति पुरस्त्रीजनवल्लभः कृष्णः सुखम् आस्ते कच्चित् । सः बन्धून् पितरं मातरं च स्मरति वा कच्चित् ॥ ९ ॥ अप्यसाविति ॥ महाभुजोऽसौ सकृदपि मातरं द्रष्टुम् आगमिष्यत्यपि किम् । अपि वा यस्माकम् अनुसेवां स्मरते किम् । तद्भार्यः ॥ १० ॥

**श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्**

बांधवाः वसुदेवाद्याः सुहृदः हे राम ॥ ७ ॥ कष्टान्मुक्ताः ॥ ८ ॥ रामसंदर्शने आदृताः कृतनमनादिकाः ॥ ९-१० ॥

**भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी**

दिष्ट्येति ॥ पापः कंसः, हतः दिष्ट्या, दिष्ट्येत्यानन्दे । तेनास्माकमानन्दो जात इत्यर्थः । सुहृज्जनाः वसुदेवदेवकयादयः, मुक्ताः कंसकृतबन्धनात् मोचिताः, दिष्ट्या । रिपून् निहत्य निर्जित्य च, दुर्गं समुद्रपरिखां द्वारकामित्यर्थः । समाश्रिताः, दिष्ट्या ॥ ७ ॥ गोप्य इति ॥ रामस्य संदर्शने पुनः पुनरीक्षणे आदृता आदरयुक्ताः, हसन्त्यः, गोप्यः, हे राम, पुरस्त्रीजनवल्लभः, कृष्णः, सुखं आस्ते कच्चित् । इति पप्रच्छुः ॥ ८ ॥ कच्चिदिति ॥ हे राम, सः कृष्णः, पितरं मातरं च, बन्धून् वा, स्मरति कच्चित् । किं च असौ कृष्णः, मातरं द्रष्टुं, सकृदेकवारं अपि, आगमिष्यति अपि किम् ॥९॥ अपीति ॥ ता इति च ॥ महाभुजः कृष्णः, अस्माकं अनुसेवामनुवर्त्तनं, स्मरते अपि वा । यदर्थे, मातरं पितरं, भ्रातॄन्, पतीन्, पुत्रान्, स्वसॄर्भगिनीरपि दुस्त्यजान् एतान्, स्वजनान्, हे दाशार्ह, हे प्रभो, जहिम त्यक्तवतीः, ताः नोऽस्मान्, सद्यः परित्यज्य, संछिन्नसौहृदः, गतः । तर्हि तद्गमने युष्माभिः प्रतिबन्धः किं न कृतस्तद्वाक्यविश्वासादिति चेद्विश्वासः किमिति कृतस्तत्राहुः । तादृशं भाषितं, स्त्रीभिरस्माभिः, कथं नु श्रद्धीयेत विश्वस्येत । तादृशमित्यनेन वञ्चनशीलत्वं विवक्षितम् । स्त्रीभिरित्यनेन मौढ्यमभिप्रेतं, अज्ञत्वाद्विश्वसितवत्य इति भावः ॥ १०-११ ॥

**कृष्णप्रिया**

हे दाऊजी भैया ! हमारे बन्धुजन श्री देवकी, वसुदेवजी आदि सभी सर्वविध कुशल हैं न ? हे राम ! अब तो आप सब पत्नी, पुत्र आदि परिवार के साथ रहते हैं, पुनः वंशविस्तार भी हो गया है, कभी भी आपलोगों को हमारी स्मृति आती है ॥ ७ ॥ यह परम संतोष की बधाई है कि भगवान् श्रीकृष्ण ने पापी कंस का वध किया और अपने स्वजन एवं सुहृज्जनों को महत्कष्ट से मुक्त किये । यह परम सन्तोष की वार्ता है कि आपलोगों ने अन्य भी अनन्त शत्रुओं का उन्मूलन करके और जीत करके समुद्र के मध्य में सुरक्षित दुर्ग में आप सर्वथा निवास करते हैं ॥ ८ ॥ महाराज परीक्षित ! प्रियतम श्री बलरामजी के दर्शन से एवं प्रेममय अवलोकन से व्रज-गोपियाँ कृतार्थ हो गयीं । उन्होंने हँसते-हँसते श्री बलरामजी को पूछा कि भगवान पुर के नर-नारीजनों के प्राणवल्लभ भगवान श्रीकृष्ण सुखी तो हैं न ॥ ९ ॥ दाऊजी ! भगवान् कृष्णजी कभी अपने माता-पिता, बन्धु; स्वजन आदि का स्मरण करते हैं । क्या अपनी वात्सल्यमयी माता यशोदाजी के दर्शन को गोकुल में कभी एक बार भी पधारेंगे महाभुज भगवान श्रीकृष्ण कभी हमारी सेवा का स्मरण करते हैं ? ॥ १० ॥

**मातरं पितरं भ्रातॄन् [1]ज्ञातीन् पुत्रान् स्वसॄरपि । यदर्थे जहिम दाशार्ह दुस्त्यजान् स्वजनान् प्रभो ॥११॥**
**ता नः सद्यः परित्यज्य गतः संछिन्नसौहृदः । कथं नु तादृशं स्त्रीभिर्न श्रद्धीयेत भाषितम् ॥१२॥**
**कथं नु गृह्णन्त्यनवस्थितात्मनो वचः कृतघ्नस्य बुधाः[2] पुरस्त्रियः ।**
**[3]गृह्णन्ति वै चित्रकथस्य सुन्दरस्मितावलोकोच्छ्वसितस्मरातुराः ॥ १३ ॥**
**किं नस्तत्कथया गोप्यः कथाः कथयतापराः । यात्यस्माभिर्विना कालो यदि तस्य तथैव नः ॥ १४ ॥**

**कर्दमक्षमा**

**अन्वयः**—हे दाशार्ह ! यदर्थे, हे प्रभो ! मातरम्, पितरम्, भ्रातॄन्, ज्ञातीन्, पुत्रान्, स्वसॄः, दुस्त्यजान्, अपि, स्वजनान्, जहिम, नः, ताः, सद्यः, परिहृत्य, संछिन्नसौहृदः, गतः, कथम्, नु तस्य, तादृशम्, भाषितम्, स्त्रीभिः, न, श्रद्धीयेत ॥ ११-१२ ॥ अनवस्थितात्मनः, चित्रकथस्य, कृतघ्नस्य, वचः, सुन्दरस्मितावलोकोच्छ्वसितस्मरातुराः, बुधाः, पुरस्त्रियः, कथम्, नु, वै, गृह्णन्ति ॥ १३ ॥ हे गोप्यः ! तत्, कथया, किम्, नः ? अपराः, कथाः, कथयत, यदि, तस्य, कालः, अस्माभिः, विना, याति, तथैव, तस्य, विना, कालः, यास्यति ॥ १४ ॥

१. पतीन्–श्रीधर. वंशी. जीव. वीर. विज. विश्व. । २. मुधा पर–विज. । ३. कृष्णस्य–विज. ।

## श्रीधरस्वामिविरचिता भावार्थदीपिका

तर्हि तद्गमने युष्माभिः प्रतिबंधः किं न कृतः। तद्वाक्यविश्वासादिति चेत्। ननु विश्वासः किमिति कृतस्तत्राहुः। कथं न्विति वक्तृबहुत्वान्नानाविधानि वाक्यानि ॥ १२ ॥ तत्रान्या ऊचुः। कथं न गृह्णन्तीति। अन्या ऊचुः। गृह्णन्ति वा इति। चित्रकथस्य चित्रकथाकथनकोविदस्य किंच सुंदरं स्मितं यस्मिंस्तेनावलोकनेनोच्छ्वसितः क्षुभितो यः स्मरस्तेनातुराः ॥ १३ ॥ अन्या ऊचुः। किं न इति। कालस्तावत्तस्य चास्माकं च यात्येव किंतु तस्य सुखेनास्माकं तु दुःखेनेत्येतावानेव विशेष इति ध्वनितम् ॥ १४-१५ ॥

## श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

यदर्थे कृष्णनिमित्तम्। अक्षराधिक्यमार्षम्। ननु भोः कृष्णप्रियाः स प्रेमवान् कृष्णः सदा वः स्मरत्येवेति चेन्न, अनन्यगतीनामस्माकं परित्यागेन तत्प्रेमणि न विश्वसिम इत्याहुः—मातरमिति सार्द्धेन ॥ ११ ॥ ताः सर्वत्यागवतीः। तन्निरोधः कथं न कृत इत्याह—तर्हीति। तस्य कृष्णस्य 'अहं शीघ्रमायास्ये' इत्यादिवाक्ये विश्वासात्सत्यप्रत्ययात्। विश्वासः कथं कृत इत्याशङ्कते—नन्विति। तत्राऽऽक्षेपे। तादृशं गुडजिह्विकालक्षणं किन्तु श्रद्धेयमेवेत्यर्थः। गुडजिह्विका त्वेत्थम्—यथा तत्कटुताभीत्या निम्बपानमकुर्वाणस्य जिह्वायां गुडलेपनं कृत्वा तं निम्बं पाययंति, तथा प्रियवाक्यान्युक्त्वा पश्चात्कपटकरोऽपि गुडजिह्विक एवेत्यर्थः। तास्तथाभूता अप्यस्मान्सद्यः परित्यज्य गतः। ननु तद्गमने युष्माभिः प्रतिबन्धः किन्न कृतः, तेन सार्द्धं वा किन्न गतास्तत्राहुः—तृणपत्रवत्संछिन्नं सौहृदं प्रेमशृंखला येन सः। अतः कथय किं वयं कुर्म इति भावः। ननु तेन विना प्राणधारणाद्युष्माभिरपि तस्मिन्प्रेम संछिन्नमेवेति चेन्मैवम्, आयास्ये' इति दूतद्वारा मुहुरुक्त्या सञ्छिन्नाया अपि प्रेमशृंखलायाः पुनर्ग्रथनान्निर्गच्छन्तोऽप्यस्माकं प्राणाः पुनर्बद्ध्वा तेनैव स्थापिता इति। ननु तर्हि स आयास्यत्येव कथमधीराः स्थ इति चेन्मैवम्, अद्याप्यनागमनेन तेन तदा तन्मृषैवोक्तमित्यधुना विमृशामः। कथं तर्हि तदुक्तौ तदा विश्वस्तं तत्राहुः—कथं न्विति स्त्रीभिरबुद्धिभिरवक्रधीभिरस्माभिस्तादृशं तद्वचः कथं न श्रद्धीयेत ॥ १२ ॥ तत्र तासु। अन्याः किञ्चिद्बुद्धिमत्यः। अन्यास्तच्चरितज्ञाः। न केवलमुक्तिकौविद्येनैव मोहोऽपि तु तद्भावेनापीत्याहुः—किञ्चेति। किञ्च वन्याः स्त्रियो वयं निर्बुद्धय एव स्मः, नागर्यस्ता अतिसुधियस्तद्भाषिते कथं विश्वसन्तीत्याहुः—कथं न्विति। ताः प्रत्यन्याः समादधत्य आहुः—चित्रकथस्य मिथ्या कथापि तन्मुखे विस्मयरसमयी परमस्वाद्वी भवतीति कथारसत्यागाऽसामर्थ्यादेव शृण्वन्तीत्यर्थः। हेत्वंतरमप्यस्तीत्याहुः—सुन्दरस्मितपूर्वावलोकेनोच्छ्वसित उद्भूय प्रवृद्धो यः स्मरस्तेनातुराः ॥ १३ ॥ अन्या अर्धकुपिताः। तत्कथया कृष्णवार्तया। अपराः कृष्णभिन्नाः। तस्य कृष्णस्य। तथैव तेन विना। सुखेन तस्यान्यास्वासक्तत्वात्, अस्माकं तु तदासक्तानां तद्विरहाद्दुःखेन। ध्वनितं सूचितम्। ताः सर्वाः प्रत्यन्या असूयाप्रेमसंरंभरता आहुः—किन्न इति। कालस्तावत्तस्य चास्माकं च यात्येव किन्तु तस्य सुखेनास्माकं दुःखेनेतीयानेव विशेषः। संयुक्तो जीवति वियुक्तो म्रियते वयं तु न जीवामो नापि म्रियामह इत्यन्यस्त्रीभ्यो विधात्रैवास्माकं ललाटे लिखितस्तत्र कः प्रतीकार इति भावः। इतीति—स्वीयसुधारसमयप्रहसितादिशल्यपंचकेन तासां हृदयं विद्ध्वा कृष्णचन्द्रेण गतमतस्ताः कथं जीवन्तु कथं वा म्रियंतामिति श्रीबलदेवाग्रेऽपि विह्वलीभूय रुरुदुरेव ॥१४॥

## श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी

ननु, बध्वा सदा स्मरत्येवेति चेन्न अनन्यगतीनामस्माकं परित्यागेन सौहृदलक्षणापगमादित्याहुः—मातरमिति सार्द्धेन। दुस्त्यजानपि मात्रादीन् स्वजनांश्च सख्यादीन् मात्रादीनां यथोत्तरं स्निग्धत्वे न्यूनत्वं तत्र भ्रातृभ्योपि पतीनां न्यूनत्वनिर्देशस्तेषु तासामादराभावात् एवमन्यदप्यूह्यं तत्र "पतिसुतान्वयभ्रातृबान्धवानतिविलङ्घ्य तेऽच्युतागताः" इति प्राक्तनेन तासां वचनेन तेषामतिक्रम एव पूर्वं लभ्यते सम्प्रति तु सर्वथा तत्परित्यागपूर्वकतया संहृत्य सर्वासां वनवास एव जहिमेत्यनेन गम्यते तदुक्तं भ्रमरं प्रति अगृहाणां न इति ततश्च पतिपुत्रशब्दप्रयोगश्च लोकप्रसिद्धिमनुसृत्य गौण्यैव वृत्त्येति बोधितं प्रभो इति तदग्रजत्वाद्भवानेव सर्वेषां प्रभुः ततोन्यस्मै वा कस्मा इमं तस्य दुर्नयं निवेदयामेति लज्जामपि परित्यज्य भवत्पार्श्वमागताः स्म इति भावः। हे दाशार्हेति यदुकुलोद्भवोपि त्वं सौहृदादागतः स तु श्रीगोपेन्द्रनन्दनोपि नागत इति भावः। ताः त्यक्ताशेषस्वजनाः अनन्यगतीर्वा परितः सर्वतोभावेन त्यक्त्वा स गतः ननु वत्साः दुष्टकंसवधार्थं गतोऽधुनाऽवश्यकृत्यं समाधायाचिरादागन्तेति चेन्न सम्भाव्यत इत्याहुः, सम्यक् तृणवच्छिन्नं सौहृदम् अस्मासु प्रेमशृङ्खला येन सः अन्यथा परित्यागासम्भवात्। कथं नु तादृशमित्यर्द्धकम्। तादृशं मधुरस्वरविनयशपथादिसम्वलितं न पारयेहमित्यादिलक्षणं स्त्रीभिः कोमलर्जुस्वभावाभिरित्यर्थः। अन्यत्तः। यद्वा ननु कल्याण्यो युष्माभिर्वर्तैतादृशार्त्तिप्रदं तस्मिन् सौहार्दं किमिति कृतं तत्र तादृशोक्तिप्रतिहतत्वादित्याह—कथन्न्विति ॥ ११-१२ ॥ अहो वन्या वयं निर्बुद्धित्वेन तदुक्तौ विश्वासिन्यः स्मः पुरस्त्रियस्तत्वभिज्ञाः कथं विश्वसन्तीत्यत्यन्तप्रेमार्त्तिधर्षिता आहुः कथमिति। नु विस्मये कुतो गृह्णन्ति स्वीकुर्वन्ति श्रद्दधते वा अपितु ग्रहीतुं नार्हन्त्येवेत्यर्थः। कुतः? अनवस्थितात्मनः अस्थिरचित्तस्य अत एव कृतमन्यस्यात्मनश्च सर्वं सौहार्दं हन्तीति तथा तस्य पुरस्त्रीत्वादबुधा अपि वै स्मरणे

मां ज्ञातमित्यर्थः। वाचा ग्रहणं विना आत्मनासक्त्या अस्माकं स्मरणं सम्भवेदित्यभिप्रायेणेति भावः। यद्वा विचित्रवार्त्तां कथयतः सतो यः सुन्दरस्मितावलोकस्तेनोच्छ्वसितस्मरातुराः चित्रकथादिना कामोद्रेकविवशतया हृतविचारत्वादित्यर्थः ॥१३॥ अथोद्रिक्तशोकसन्तप्ताः परस्परमाहुः—किमिति। तस्य कथया वार्त्तया किं न किञ्चित्प्रयोजनम् अपि च दुःखमेव स्यादित्यर्थः। गोप्यः हे कोमलर्जुस्वभावा इत्यर्थः। ननु सत्यं तथापि त्यक्तुं न शक्नुमो हन्त शोकार्त्ताः किं करवामेति चेत्तत्राहुः कथा इति। अपरा अन्यदीयाः "गाढशोकप्रहाराणामचिन्त्यैव महौषधिः" इति न्यायेनान्यकथाभिस्तत्कथाच्छादनस्य तेन तच्छोकतरणस्यापि सम्भवादिति भावः। नच मन्तव्यं तं विनाऽस्मत्कालो नः यास्यतीत्याहुः, यातीति। तथैवेति तर्ह्यस्माकमपि तेन विना कालो यास्यत्येवेत्यर्थः। तद्विरहेण चाद्यावध्यस्माकं हि मध्ये काचिदपि दशमीं दशां न प्राप्तेतिभावः। यद्वा तथैव तेन विनाऽस्माकमपि सुखेनैवेत्यर्थः। परमदुःखेप्यदुःखतानिर्द्देशोयं तज्जन्मदुःखेनैव तत्सहनाङ्गीकारादत्यन्तदुःखमेव ध्वनितम् ॥ १४ ॥

## श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी

ननु वध्वः! सदा स्मरत्येवेति चेन्न, अनन्यगतीनामस्माकमपि परित्यागेन सौहृदलक्षणापगमादित्याहुः—मातरमिति सार्द्धेन! दुस्त्यजानपि मात्रादीन् स्वजनान्, किंवा मात्रादीन्, मात्रादीनां यथोत्तरं स्निग्धत्वे न्यूनत्वम्, तत्र भ्रातृभ्योऽपि पतीनां न्यूनत्वम्, तेषु तासामदराभावात्, एवमन्यदप्यूह्यम्, यद्वा, श्रीकृष्णार्थमत्याज्यतायामाधिक्यम्। प्रभो! हे सर्व्वज्ञानसमर्थेति तत् सर्व्वं त्वया ज्ञायत एवेत्यर्थः। हे दाशार्हेति यदुकुलोद्भवोऽपि त्वं सौहृदादागतः, स च श्रीगोपेन्द्रनन्दनो नैवागत इति भावः॥ ११ ॥ तास्त्यक्ताशेषस्वजना अनन्यगतीर्वा, परितः सर्व्वतोभावेन त्यक्त्वा स गतः, ता इत्यत्र स इति पाठो वा। ननु वत्साः! दुष्टकंसवधाद्यर्थं गतोऽधुनावश्यकृत्यं समाधायाचिरादागन्तेति चेत्तन्न सम्भाव्यत इत्याहुः—सम्यक् तृणवच्छिन्नं सौहृदमस्मासु प्रेमशृङ्खला येन सः, अन्यथा परित्यागासम्भवः। तादृशं शपथादिपूर्वक-विचित्रन्यायवृंहितं स्त्रीभिः कोमलर्जुस्वभावाभिरित्यर्थः। अन्यत्तैर्व्याख्यातम्। यद्वा, ननु कल्याण्यो युष्माभिर्त्तैतादृशार्त्तिप्रदं तस्मिन् सौहृदं किमिति कृतम्? तन्मधुर-मधुरोक्ति-प्रतीति-हृतत्वादित्याहुः—कथं न्विति। तादृशम्—( भा० १०।३२।२२ ) 'न पारयेऽहम्' इत्यादिलक्षणम्॥ १२॥ वक्तृभेदव्यवस्थया पूर्वापरसंगत्यनपेक्षायामपि सतां प्रीतये काचित् संगतिः कार्य्या, तथाहि—अहो वन्या वयं निर्बुद्धित्वेन तदुक्तौ विश्वसिमः स्म, पुरस्त्रियस्त्वभिज्ञाः कथं विश्वसन्तीत्यत्यन्त-तत्प्रेमार्त्तिर्धषिता आहुः—कथमिति। नु विस्मये, कुतो गृह्णन्ति स्वीकुर्वन्ति श्रद्दधते वा अपि तु ग्रहीतुं नार्हन्त्येवेत्यर्थः। कुतः? अनवस्थितात्मनोऽस्थिरचित्तस्य, अत एव कृतमन्यस्यात्मनश्च सर्वं सौहार्द्दं हन्तीति तथा तस्य; यद्वा, उपकारिजनानां परित्यागादिना द्रोहकारिणः, पुरस्त्रीत्वाद्बुधा अपि, वै स्मरणे, मां ज्ञातमित्यर्थः। वचोग्रहणं विना तास्वनासक्त्यास्माकं स्मरणं सम्भवेदिति भावः। अन्यत्तैर्व्याख्यातम्। यद्वा, विचित्रवार्त्तां कथयतः सतो यः सुन्दरस्मितावलोकस्तेनोच्छ्वसितस्मरातुराः—चित्रकथादिना कामोद्रेकविवशतया हृतविचारत्वादित्यर्थः। अन्यत् समानम्॥ १३॥ अथोद्रिक्तशोकसन्तप्ताः परस्परमाहुः—किमिति। तस्य वार्त्तया किम्? न किञ्चित् प्रयोजनम्, अपि च दुःखमेव स्यादित्यर्थः। गोप्यः। हे कोमलर्जुस्वभावा इत्यर्थः। ननु सत्यम्, तथापि तां त्यक्तुं न शक्नुमो हन्त शोकार्त्ताः किं करवामेति चेत्तत्राहुः—कथा इति। अपरा अन्यदीयाः 'गाढशोकप्रहाराणामन्यचिन्ता महौषधिः' इति न्यायेनान्यकथाभिस्तत्कथाच्छादनस्य तेन तच्छोकतरणस्यापि सम्भवादिति भावः। न च मन्तव्यम्, तं विनास्माकं कालो न यास्यतीत्याहुः—यातीति। यद्यस्माभिर्विनापि तस्य कालो याति, तर्ह्यस्माकमपि तेन विना दुःखेनापि यास्यत्येवेत्यर्थः। यद्वा, यथा अस्माभिर्विनापि तस्य कालो याति, तथा तं विनास्माकमपि, तद्विरहेणास्माकं काञ्चिद्दशमीं दशां नाद्यापि प्राप्तेत्यर्थः॥ १४॥

## श्रीसुदर्शनसूरिकृतशुकपक्षीयम्

जहिम त्यक्तवत्यः॥ ११-३०॥

## श्रीमद्वीरराघवाचार्यकृता भागवतचन्द्रचन्द्रिका

एतदेव स्पष्टयितुं तस्य सौहार्दाभावमाहुः—मातरमिति सार्द्धेन। हे दाशार्ह! हे प्रभो! मात्रादीनन्यांश्च स्वजनान् यदर्थे यन्निमित्तमत्याक्ष्म त्यक्तवत्यः ताः नोऽस्मान् सद्य एव परित्यज्य गतः अत एव सञ्छिन्नं सौहृदं येन तथाभूतः तर्हि तद्गमनं युष्माभिः प्रतिबन्धः किं न कृतः तद्वाक्यविश्वासादिति चेत् विश्वासः किमिति कृतस्तत्राहुः—कथं न्वित्यर्द्धेन। तादृशमित्यनेन वञ्चनशीलत्वं विवक्षितं स्त्रीभिरित्यनेन मौढ्यमभिप्रेतं कथं न श्रद्धीयेत विश्वस्येत अज्ञत्वाद्विश्वसितवत्यस्स्मेति भावः॥११-१२॥ वक्तृबहुत्वान्नानाविधानि वाक्यानि तत्रान्या ऊचुः कथमिति अनवस्थितः चञ्चलः आत्मा मनो यस्य तस्य कृतघ्नस्य च कथन्नु बुधाः कुशलाः पुरस्त्रियः गृह्णन्ति विश्वसन्ति अन्या ऊचुः गृह्णन्ति वा इति। विचित्राः कथाः भाषणानि यस्य तस्य हेतुगर्भमिदं भाषणेनैव व्यामोहयितुरित्यर्थः। सुन्दरं स्मितं यस्मिन् तेनावलोकनेन उच्छ्वसितः उद्दीपितो यः स्मरः कामः तेनातुराः आकुलाः इदमपि हेतुगर्भं तत्त्वात्ताः गृह्णन्ति वै इति निश्चये॥ १३॥ अपरा ऊचुः, किमिति। हे गोप्यस्तस्य कथया वार्त्तया

नोऽस्माकं किं कोवा पुरुषार्थः अतोऽन्याः कथाः कथयत तस्य श्रीकृष्णस्यास्माभिर्विना यदि कालो याति तर्हि तथैव नोऽस्माकमपि यात्येव किन्तु तस्य सुखेनास्माकन्तु दुःखेनेत्येतावानेव विशेष इत्यनेन ध्वनितम् ॥ १४ ॥

### श्रीविजयध्वजतीर्थकृता पदरत्नावली

यस्य कृष्णस्यार्थे दृढस्नेहनिमित्तं मात्रादीन् स्वजनान् हिन्म अत्याक्ष्म छान्दसप्रयोगः ॥ ११ ॥ स्त्रीभिस्तादृशं गुडजिह्विकालक्षणं नाषितं कथं नु न श्रद्धीयेत श्रद्धेयमेवेत्यर्थः ॥ १२ ॥ अस्मदन्या नैव श्रद्दधत इत्याहुः—कथमिति। परस्त्रियः अस्मदन्यस्त्रियः अन्यत्र उत्तमस्त्रियः अनवस्थितात्मनः चञ्चलमनसः अन्यत्र सङ्गरहितस्य कृतघ्नस्य अनुपकारिणः अन्यत्रकारिणः विनाशिनः कृष्णस्य पुमधीनस्यान्यत्र पूर्णानन्दस्य मुधा वचः कथं न गृह्णन्ति अन्यत्र वचः मुधा कथं न गृह्णन्ति सार्थमेव गृह्णन्तीत्यर्थः। वैचित्राः नानाविधाः कथाः वाक्यप्रबन्धाः यस्य स तथा तस्य उभयत्र समं कीदृश्यः सुन्दरस्मितावलोकेन उच्छ्वसितेनोद्धतेन स्मरेण आतुराः अन्यत्र निरन्तरस्मरणपरवत्यः ॥ १३ ॥ हरये प्रेम्णा कम्पन्त्यो मिथो जल्पन्ति—किं न इति। हे गोप्यः! अपराः कथाः कथयतस्तस्य कृष्णस्य कथया नः किं प्रयोजनं तस्य कृष्णस्य यद्यस्माभिर्विना कालो याति तथा तर्हि तेन विना नः कालोपि यातीत्यन्वयः ॥ १४ ॥

### श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः

अन्या ऊचुः—किं न इत्यादि। य एवं निष्करुणः तस्य कथया किम्? अपराः कथाः कथय जीवनत्यागायुक्तः क्रियतामित्यर्थः। तत्कथां विना कालो न यातीति चेत्, तदपि न, इत्यपरा आहुः—यातीत्यादि। अस्माभिर्विना यदि तस्य कालो यथा यास्यति, तथैव नो यास्यतीति सामर्षोक्तिः ॥ १४ ॥

### श्रीनाथचक्रवर्तिपादविरचिता चैतन्यमतमञ्जूषा

कथं न्वित्यादि-पृथक् पृथक् वक्तृयुः। अनवस्थितात्मन इत्यादि सासूयत्वपरम्। अन्या ऊचुः। किं न इत्यादि। तत्कथया किम्? न किमपीत्याक्षेपः, तत्कथां त्यक्त्वा किं कार्यम्? तत्राह—कथाः कथयतापराः। अपरास्तदन्याः तत्कथां विना कालो न यातीति चेत् यास्यति, तस्य यथा अस्मान् विना कालो याति तथास्माकमपि यास्यतीत्याक्षेपो भावः ॥१३-१६॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

ननु, भोः कृष्णप्रियाः स प्रेमवान् कृष्णः सदा वः स्मरत्येवेति चेन्न अनन्यगतीनामस्माकं परित्यागेन तत्प्रेमणि न विश्वसिम इत्याहुः—मातरमिति सार्द्धेन। तास्तथाभूता अपि अस्मान् सद्यः परित्यज्य गतः ननु तर्हि तद्गमने युष्माभिः प्रतिबन्धः किं न कृतः तेन सार्द्धमेव वा कथं न गतं तत्राहुः—तृणपत्रवत् सञ्छिन्नं सौहृदं प्रेमश्रृङ्खला येन सः अतः कथय किं वयं कुर्म इति भावः। ननु तर्हि तेन विना प्राणधारणात् युष्माभिरपि तस्मिन् प्रेमच्छिन्नमेवेति चेन्मैवम् आयास्ये इति दूतद्वारा मुहुरुक्त्याच्छिन्नाया अपि प्रेमश्रृङ्खलायाः पुनर्ग्रन्थनात् निर्गच्छन्तोऽप्यस्माकं प्राणाः पुनर्बद्ध्वा तेनैव स्थापिता इति ननु तर्हि स आयास्यत्येव कथमधीराः स्थेति चेन्मैवम् अद्याप्यनागमनात्तेन तदा तन्मृषैव भाषितमित्यधुना विमृशामः कथं तर्हि तद्भाषिते तदा विश्वस्तं तत्राहुः कथंन्विति स्त्रीभिरवक्रबुद्धिभिरबुधाभिरस्माभिस्तादृशं भाषितं कथं न श्रद्धीयेत ॥ ११-१२ ॥ किञ्च वन्याः स्त्रियो वयं निर्बुद्धय एव स्म नागर्यस्ताः अतिसुधियः स्त्रियस्तद्भाषिते कथं विश्वसन्तीत्याहुः—कथन्विति। ताः प्रत्यन्याः समादधन्यः आहुः—चित्रकथस्य मिथ्या कथापि तन्मुखे विस्मयरसमयी परमस्वाद्वीभवतीति कथारसास्वादत्यागासामर्थ्यादेव श्रृण्वन्तीत्यर्थः। हेत्वन्तरमप्यस्तीत्याहुः—सुन्दरस्मितपूर्वावलोकेन उच्छ्वसितः उद्भूय प्रवृद्धो यः स्मरस्तेन आतुराः ॥ १३ ॥ ताः सर्वाः प्रत्यन्या अत्यसूयाप्रेमसंरम्भवत्य आहुः—किन्न इति। कालस्तावत्तस्य चास्माकं च यात्येव किन्तु तस्य सुखेन अस्माकं दुःखेनेत्येतावान् तस्माद्विशेषः। संयुक्ता जीवन्ति वियुक्ता म्रियन्ते वयन्तु न जीवामो नापि म्रियामहे इत्यन्यस्त्रीभ्यश्च विशेषो विधात्रैवास्माकं ललाटे लिखितस्तत्र कः प्रतीकार इति भावः ॥ १४ ॥

### गूढार्थदीपिनी

मातरमिति सार्द्धम्। हे दाशार्ह। यदुवंशिन्। यदर्थे जहिम त्यक्तवत्यो वयं स कृष्णः गत इत्यन्वयः ॥ ११ ॥ कथमिति अर्द्धम्। तादृशं वञ्चनापूर्णम् कथं न। श्रद्धीयेत विश्वसेत् ॥ १२ ॥ अनवस्थितात्मनः अस्थिरचित्तस्य। अन्या ऊचुः गृह्णन्तीति। सुन्दरस्मितावलोकेन प्रबुद्धो यः स्मरः तेन आतुराः व्याकुलाः ॥ १३ ॥ तेन विना अस्माकमपि कालः याति किन्तु तस्य सुखेन अस्माकं दुःखेन एतावानेव भेदः ॥ १४-१५ ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

सञ्छिन्नं सौहृदं येन सः ॥ १२ ॥ ननु, तादृशे भवतीनां सौहृदं कुतः प्रवृत्तमित्यत्र मौढ्यादित्याहुः—कथमिति। स्त्रीभिरबुधाभिरस्माभिस्तादृशं मनोहारि भाषितं कथं तु न श्रद्धीयेत विश्वसेत काश्चित् आस्तामबुधता अस्माकं कथा, पुरस्त्रियो

बुधास्तद्वचः कथं गृह्णन्तीत्याहुः—अन्या आहुः—गृह्णन्तीति। सुन्दरं यस्मिन् तेनावलोकनेन उच्छ्वसितो यः स्मरस्तेनातुराः चित्रकथस्य चित्रकथाकथनकोविदस्य वचो गृह्णन्त्येव ॥ १३ ॥ अन्या आहुः किं न इति ॥ १४-१६ ॥

**श्रीमद्वल्लभाचार्य्यकृता सुबोधिनी**

यद्यपि भगवत्यसूया त्यक्ता, तथापि कालविलम्बात् भवत्येव बुद्धिरन्यथेति पुनस्तासां दोषनिराकरणार्थं निरूपयति **मातरं पितरमिति**। पञ्चावश्यकाः। स्त्रीणां मुख्या माता। भर्तारं परित्यज्येति वक्तव्ये **ज्ञातीनिति** साधारण्येनैव तन्निराकरणमपि कृतम्। भर्तृत्वस्य भगवत्येव स्थापितत्वात्। 'पतीन् पुत्रा'निति पाठे न कोऽपि सन्देहः। आद्यन्तयोः स्त्रीग्रहणं तासां तदनुरोधो महानिति। सर्वैर्निराक्रियमाणाः तदनुरोधं परित्यज्य भगवानेव गृहीत इति **यदर्थे** जहिमेत्युक्तम्। **दाशार्हेति** सम्बोधनात् पश्चात्तापेन कथनं वारयति। त्यागो महानिति वक्तुं तान् विशेषयन्ति **दुस्त्यजान् स्वजनानिति**। अन्तःकरणदेहसम्बन्धो दृढौ निरूपितौ। **प्रभो** इति सम्बोधनं सामर्थ्यस्य विद्यमानत्वात् परित्यागे उपालम्भो युक्त इति बोधितम् ॥ ११ ॥ यदर्थमेतन्निरूपणं तमुपालम्भमाहुः **ता नः सद्यः परित्यज्येति**। अन्तःकरणेऽपि परित्यागार्थमाहुः **संछिन्नसौहृद इति**। सम्यक् छेदः मरणसमानबाधानामप्युपेक्षणात्। ननु ज्ञायत एव वसुदेवपुत्रो यथाकथञ्चिदत्रागत्य स्थितः, तत् किमिति सर्वपरित्यागेन सेवित इति चेत्, तत्राह **कथं नु तादृशं स्त्रीभिरिति**। युक्त्या यद्यपि त्यक्ष्यतीति निश्चितम्, तथापि हृदयाद्यालम्भनेन यथा विश्वास उत्पद्यते, तथा भाषितं कथं न श्रद्धीयेत। स्त्रियो हि शुद्धभावा न कापट्यं जानन्तीति स्वश्लाघा। अतो वाक्यविश्वासादेवं कृतमिति नास्माकं दोषः। 'सर्वधर्मान् परित्यज्य मामेकं शरणं व्रज' 'कौन्तेय प्रतिजानीहि न मे भक्तः प्रणश्यती'-त्यादिवाक्यानि च शास्त्रदृष्ट्या। **नु** इति वितर्के। कश्चिदेवमप्यस्ति, यो विश्वासं न कुर्यादित्यसम्भावनापि सूचिता ॥ १२ ॥ एवं मात्सर्येण भगवति दोषं सम्भाव्य, साम्प्रतं पुरस्त्रीणां सम्बन्धं करोतीति स्मृत्वा, सुतरामीर्ष्या जाता, ततस्तस्य तद्विषयिकसुखं मा भवत्विति विचारयन्त्यः पुरस्त्रियोऽपि चेन्निवृत्ता भवेयुः, तदा भवेदिति ता निवर्तयितुं उपालभन्ते **कथं नु गृह्णन्तीति**। ननु सुखकराणि वाक्यानि सुखं च प्रयच्छन्ति, तत्कथं न विश्वसनीय इति चेत्, तत्राह **अनवस्थितात्मन इति**। न अवस्थिताः एकत्र प्रतिष्ठिताः वेदे लोके वा आत्मानो जीवा यस्य। न हि भगवत्सेवकाः क्वचित्प्रतिष्ठिता भवन्ति। तस्य हि वचनेन तत्सेवकत्वे स्वस्यापि ( तथा ) भविष्यतीति। अतो भगवदीयानां भगवद्व्यतिरिक्ते प्रतिष्ठितत्वाभावात् ऐहिकाभिलाषिण्यः। **नु** निश्चयेन कथं गृह्णन्ति। ननु प्रतिष्ठिति साधने कृते कथं प्रतिष्ठां न लभन्ते, 'अस्मिन्नेव लोके प्रतितिष्ठति, अमुष्मिन्नेव लोके प्रतितिष्ठति, प्रतितिष्ठन्ति वा, य एता रात्रीरुपयन्ती'त्यादिवाक्यैः कृते कर्मणि कथं प्रतिष्ठां न लभन्त इति चेत्, तत्राह **कृतघ्नस्येति**। स हि कृतमपि हन्ति। अत एवोक्तं 'लोके स्वास्थ्यं तथा वेदे हरिस्तु न करिष्यति। पुष्टिमार्गस्थितो यस्मात् साक्षिणो भवताखिला' इति। नन्वेतन्न जानन्तीति चेत्, तत्राह **बुधा इति**। बुधत्वे हेतुः **पुरस्त्रिय इति**। पुरवासिनो विचक्षणा भवन्तीति। तत्र स्वयमेव वचनग्रहणाग्रहणयोर्दुःखतारतम्यं विचार्य, अग्रहणे महदेव दुःखमिति ग्रहणोपपत्तिमाहुः **गृह्णन्तीति**। **वै** निश्चयेन नात्र पूर्वपक्षोऽपि। तत्र हेतुत्रयमाहुः। **चित्रकथस्य** कथावैचित्र्यात् वाचा वशीकृता गृह्णन्ति। सुन्दरस्मितावलोकाभ्यां च मनःकायाभ्यां व्यामोहिताः गृह्णन्ति। त्रयाणां कार्यं जातमित्याहुः। स्मितावलोकाभ्यामुच्छ्वसितो यः स्मरः मर्यादामुल्लङ्घ्य उद्गतो जातः, तेन आतुराः। यथा ज्वरातुरो वैद्यवाक्यं शृणोति। वाक्यात् कटुतिक्तादिकमपि भक्षयति, तद्वदित्यर्थः ॥ १३ ॥ एवं काश्चित्स्वयं दुःखमनुभूय अज्ञानवशाद्दोषनिवर्तके दोषं सम्भावयन्ति, तासां निषेधार्थमन्या आहुः **किं नस्तत्कथया गोप्य इति**। हे गोपस्य स्त्रियः, पामर्यः, तत्कथया नः किम्। भक्तिनिरोधमुक्तीनां दोषोत्पत्तौ प्रयोजकत्वाभावात् सुतरां दोषजनकत्वाच्च तत्कथया नः कोऽपि नोपकारः। भक्तिमार्गे प्रतिबन्धान् दूरीकृत्य स्नेहेन भगवद्भजनं कृतं स्यात्। निरोधे तु क्षणमात्रमपि भगवददर्शने देहेन्द्रियादिकमपि त्यक्तं स्यात्। मुक्तौ वैषम्यग्रहणं न स्यात्। अतो दोषाणामनिवृत्तत्वात् गुणानां चाभावात् तत्कथया नः किम्। ननु कथापि श्रोतव्या, वक्तव्या वा, कथारसावेशादिति चेत्, तत्राहुः **कथाः कथयतापरा इति**। यासु न दोषोत्पत्तिः। ननु कथमेवमौदासीन्यं कर्तुं शक्यम्, तत्राह **यात्यस्माभिर्विना काल इति**। पारमार्थिकप्रयोजनाभावात् लौकिकप्रयोजनार्थं भगवानपेक्ष्यः। तत्रोभयोः विषयता भोक्तृत्वं च। एवं सति अस्माभिर्विना यदि तस्य कालो गच्छति, तदास्माकमपि तं विना गच्छत्येव। नहि वयं मृताः। येन विना यस्य न निर्वाहः, स उपालम्भ्यो भवति। तदा न दोषः शास्त्रे, लोकेऽपि न विगानम्। यथा प्राणात्यये सर्वविषयपरिग्रहस्य। न हि म्रियमाणः निषिद्धादपि जलमन्नं वा गृह्णन् प्रत्यवैति। तथा भगवता विना चेदस्मत्प्राणा गच्छेयुः, तदोपालम्भो निर्दुष्टः। अन्यथा दोष एव स्यात्। उदासीनोपालम्भवत्। अथ भजनानुरूपेण भजनम्, तद्भगवति नास्त्येव। अस्माभिर्विनैव तस्य कालो गच्छतीति। अतः स्वस्य तथाधिकारे भगवच्छास्त्रप्रामाण्ये भगवानेव समागच्छेत्, अप्रामाण्ये तु मरणमेव स्यात्। उभयमपि नास्तीति वृथोपालम्भो न कर्तव्य इत्यर्थः। उभयविधा अप्येताः मूर्च्छापर्यन्तव्यापारयुक्ताः। अतो दुःखात्प्रथमा वदन्ति, मरणाभावाच्च परा निषेधन्ति ॥ १४ ॥

## श्रीसुबोधिनी-सारः

तद्यथा यदर्थे यन्निमित्तं मात्रादीन् दुस्त्यजान् स्वजनान् जह्मि वयमत्यजाम हे दाशार्ह हे प्रभो ॥ ११ ॥ ता नोस्मान् सद्योऽक्रूरागमनकाले परित्यज्य संछिन्नं सौहृदं येन स गतो मथुरां प्रयातः एतेनायास्य इति दौत्यकैरित्युक्तेऽपि तद्वाक्ये न विश्वासः कथं तर्हि तदागमनमिष्यते तत्राहुः। तादृशं भाषितं वचः स्त्रीभिः कथं नु न श्रद्धीयेत न विश्वस्येत ॥ १२ ॥ अन्या ऊचुः। बुधा विवेकवत्यः पुरस्त्रियो माथुर्यो द्वारकीया न अवस्थितं स्थिर आत्मा चित्तं यस्य तस्य कृतघ्नस्य कृष्णस्य वचः कथं नु गृह्णन्ति स्वीकुर्वंति। अन्या ऊचुः। चित्राः कथा यस्य चित्रं कथयतीति यद्वा विचित्राः कथाः कथयतीति वैचित्रकथोऽण्-प्रत्ययः तस्य श्रीकृष्णस्य सुंदरं स्मितं यस्मिंस्तेनावलोकनेन दर्शनेन उच्छ्वसितः क्षुभित उद्गतो वा यः स्मरः कामस्तेनातुराः पीडिता गृह्णंति वै एव ॥ १३ ॥ धीरा ऊचुः। हे गोप्यः तस्य कथया नोस्माकं किं न किमपि अपरा अन्याः कथाः कथयत अस्माभिः विना यदि तस्य कालो निर्गच्छति तथैव नोस्माकमपि याति ॥ १४ ॥

## श्रीविट्ठलरायात्मजश्रीवल्लभकृतलेखः

किं नस्तत्कथयेत्यत्र। भक्तीति। यद्यपि कथाया भक्तिनिरोधमुक्तिसाधकत्वम्, तथापि दोषोत्पत्तौ दोषारोपे सत्ये-तस्यां फलप्रयोजकता भक्तिनिरोधमुक्तिसाधकत्वं नास्तीत्यर्थः। दोषेति। अन्त्यावस्थाहेतुभूतो भावो दोष इति भ्रमरगीते निरूपितं टिप्पण्याम्। तज्जनकत्वादित्यर्थः। फलाप्रयोजकभक्तिनिरोधमुक्तिजनकत्वं दोषजनकत्वं चेति चकारः। फला-प्रयोजकत्वं व्युत्पादयन्ति भक्तिमार्गे इति। दोषोत्पत्तौ सत्यामपि भक्तिमार्गस्य फलाप्रयोजकत्वे इत्यर्थः प्रतिबन्धादित्यादि-नोक्तं त्रयाणामपि फलत्रयं ज्ञेयम्। अत इति। दोषारोपे सति फलाप्रयोजकत्वादित्यर्थः। दोषाणामिति। प्रतिबन्धा देहेन्द्रि-यादिकं वैषम्यग्रहणं च दोषास्तेषामित्यर्थः। गुणानां चेति। 'तव कथामृत'मित्यत्रोक्तानां षड्गुणानामस्मान्प्रत्यप्रकटनादित्यर्थः। उभयविधा अपीति। दोषसम्भाविका दोषनिषेधिकाश्चेत्यर्थः।

## गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

'त्वं चैतद्विचारे कुशलः कृष्णोपालम्भे समर्थश्चासि, ज्येष्ठभ्रातृत्वादनुभूतत्वाच्च' इत्याशयेन द्विःसम्बोधयन्ति—हे दाशार्ह! हे प्रभो! इति। यदर्थं यस्य प्रीत्यर्थं वयं मात्रादीन् दुस्त्यजान् जनान् जह्मि त्यक्तवत्यः, अतो यद्यपि तेनास्मत्स्मरण-मावश्यकम् ॥ ११ ॥ तथापि सतां नोऽस्मान् सद्यः परित्यज्य गतः, अतो भवसि सन्देहोऽस्मान् स्मरति नवेत्याशयः। त्यक्त्वा गमने हेतुमाहुः—सञ्छिन्नं त्यक्तं सौहृदं प्रेम येन स इति। 'तर्हि किमित्येतादृशः कृतघ्नो युष्माभिः सर्वपरित्यागेन सेवित' इति चेत्तत्राहुः—कथं न्विति। 'न पारयेहमनवद्यसंयुजाम्' इत्येतादृशं तद्भाषितं स्त्रीभिः कथं न श्रद्धीयेत न विश्वस्येत? अतस्तद्वचनविश्वासाद्वयं वञ्चिता इति भावः ॥ १२ ॥ वयं ग्राम्या अविदग्धाः, अतस्तद्वचनेन वञ्चिताः। बुधाः निपुणाः पुर-स्त्रियस्तु अनवस्थितात्मनश्चलसौहृदस्य कृतघ्नस्य वचः कथं नु गृह्णन्ति विश्वसन्ति?। बहुत्वात्तत्रान्या आहुः—गृह्णन्तीति। अस्मदादिवत् चित्राः नानाविधाः कथा यस्य तस्य विविधकथाश्रवणेन विमोहिताः तथा सुन्दरं स्मितं यस्मिंस्तेनावलोकेन उच्छ्वसित उद्दीपितो यः स्मरः कामस्तेनातुराः विवशाः सत्यस्तद्वचो गृह्णन्ति। वै शब्दो निश्चये नात्र सन्देहः ॥ १३ ॥ अपरा ऊचुः—किं न इति। सुखदुःखयोः स्वतौल्यं सूचयन्त्यः सम्बोधयन्ति—गोप्य इति। तस्य कृष्णस्य कथया वार्तया नोस्माकं किं फलम्? तत्स्मृत्या दुःखमेव वर्धते, न कश्चित्पुरुषार्थः सिद्ध्यतीत्यर्थः। ननु 'कथारसाविष्टानां कथं कथां विना स्थितिः सम्भवति' तत्राहुः—अपराः कृष्णकथातिरिक्ताः कथाः कथयतेति। 'कथमेवं तत्रौदासीन्यं कर्तुं शक्यम्' इत्याशङ्क्य तत्र विचारमाहुः—यदीति। यदि तस्यास्माभिर्विनापि कालो याति तर्हि तथैव तेन विना नोस्माकमपि कालो यात्येव। परन्तु तस्य सुखेन, अस्माकं तु दुःखेन, एतावानेव विशेषः ॥ १४ ॥

## अन्वितार्थप्रकाशिका

मातरमिति सार्द्धम् ॥ हे दाशार्ह! हे प्रभो! यदर्थं यस्य प्रीत्यर्थं वयं मातरं पितरं भ्रातॄन् पतीन् पुत्रान् स्वसॄरपि दुस्त्यजान् स्वान् जनान् जह्मि त्यक्तवत्यः। अनेन तासां प्रायो वन एव वासो गम्यते। अगृहाणामिति भ्रमरं प्रत्युक्तेश्च ता नोऽस्मान् परित्यज्य संछिन्नं सौहृदं येन तादृशः सन् गतः ॥ ११ ॥ वयं तु तेन विश्वास्य वञ्चिता इत्याहुः—कथं न्विति अर्द्धम्। न पारयेऽहं निरवद्यसंयुजामित्येतादृशं तद्भाषितं स्त्रीभिः सरलस्वभावाभिः अस्माभिः कथं न श्रद्धीयेत न विश्वस्येत। अतस्तद्व-चनविश्वासाद्वयं वञ्चिता इति भावः। वक्त्रीणां बहुत्वान्नानाविधानि वाक्यानि ॥१२॥ कथं न्विति ॥ बुधाः निपुणाः पुरस्त्रियस्तु अनवस्थितात्मनश्चलसौहृदस्य कृतघ्नस्य वचः कथं नु गृह्णन्ति विश्वसन्ति। अन्या आहुः गृह्णन्तीति। चित्राः नानाविधाः कथाः यस्य नानाकथाकथनकोविदस्य तस्य विविधकथाश्रवणेन अस्मदादिवत् विमोहिताः तथा सुन्दरं स्मितं यस्मिंस्तेनावलोकेन उच्छ्वसित उद्दीपितो यः स्मरः कामस्तेनातुराः विवशाः सत्यस्तद्वचो गृह्णन्ति। वैशब्दो निश्चये नात्र संदेहः ॥ १३ ॥ अपरा

मिथ ऊचुः—किं न इति ॥ हे गोप्यः ! तस्य कृष्णस्य कथया वार्तया नोऽस्माकं किं फलं प्रत्युत तत्स्मृत्या दुःखमेव वर्धते । ननु कथारसाविष्टानां कथं कथां विना स्थितिः । अत आहुः अपराः कथाः कथयत । "गाढशोकप्रहाराणामचिन्तैव महौषधिः।" इति न्यायात् । यदि तस्यास्माभिः विनापि कालो याति, तर्हि तथैव तेन विना नोऽस्माकमपि कालो यात्येव । परंतु तस्य सुखेनास्माकं तु दुःखेनैतावानेव विशेषः ॥ १४ ॥

**श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्**

हे दाशार्ह वयं जहिम जहिमः । त्यजामः छांदसं ह्येतद्रूपं ॥ ११ ॥ नोऽस्मान् सद्यः अन्या ऊचुः तादृशं न पारयेहं निरवद्य संयुजामित्यादिरूपं अहमायास्ये इत्यादिरूपं विश्वसनीयं भाषितं सरलचित्ताभिः स्त्रीभिः कथं न श्रद्धीयेत विश्वस्येत अपि तु विश्वस्येतैव ॥ १२ ॥ अपरा ऊचुः कथमिति अनवस्थितः एकस्थिति विधुरः । आत्मा मनो यस्य तस्य हरेः । निश्चयपूर्वकमन्या ऊचुः । चित्राः । वाक्यविचित्रतया मनोहराः कथाः कथनानि यस्य तस्य सुंदराभ्यां स्मितावलोकाभ्यां उच्छ्वसित उद्भूतो यो स्मरस्तेनातुराः व्यग्राः अतस्तद्भाषितं गृह्णन्ति ॥ १३ ॥ अथोद्रिक्तशोकतप्ताः परस्परं प्राहुः किं न इति हे गोप्यः ॥१४–१५॥

**भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी**

वक्तृबहुत्वान्नानाविधानि वाक्यानि तत्रान्या, ऊचुः । कथं न्विति । तच्छीलमविदुषीभिरस्माभिस्तद्वावयमङ्गीकृतमिति शेषः । परं तु हे राम, बुधाः पण्डिततोपेताः, पुरस्त्रियः, अनवस्थितात्मनः अस्थिरचित्तस्य, कृतघ्नस्य कृष्णस्य, वचः, कथं नु गृह्णन्ति सत्यं मानयन्ति । अन्या ऊचुः । चित्राः विचित्राः कथा भाषणानि यस्य तस्य, विचित्रभाषणेन विमोहयितुरित्यर्थः । सुन्दरं स्मितं यस्मिन् स चासाववलोकस्तेनोच्छ्वसित उद्दीपितो यः स्मरः कामः तेनातुरा आकुलाः, इदमपि हेतुगर्भम् । तत्त्वात्, गृह्णन्ति वै निश्चये ॥ १२ ॥ अपरा ऊचुः । किं न इति । हे गोप्यः, तस्य श्रीकृष्णस्य कथा वार्त्ता तया, नोऽस्माकं, किं को वा पुरुषार्थः । ततः, अपराः कृष्णवार्त्तातः, अन्याः, कथा वार्त्ताः, कथयत । तस्य श्रीकृष्णस्य अस्माभिर्विना, यथा यदि, कालः याति, तर्हि तथैव कृष्णवदेव, नोऽस्माकमपि, कालः याति । यास्यत्येवेत्यर्थः । किं तु तस्य सुखेनास्माकं दुःखेनेत्येतावानेव विशेष इत्यनेन ध्वनितम् ॥ १३ ॥ इतीति । इतीत्थं, शौरेः श्रीकृष्णस्य, प्रहसितं, चारु जल्पितं, वीक्षितं, गतिं, प्रेमपरिष्वङ्गं प्रेम्णाऽऽलिङ्गनं, स्मरन्त्यः स्त्रियः, रुरुदुः ॥ १४ ॥

**कृष्णप्रिया**

हे प्रभो ! हे दाशार्ह ! हे बलरामजी ! क्या कहा जाय ? कुटुम्बीजन एवं स्वजनों का त्याग सर्वथा अशक्य है। लेकिन भगवान् कृष्ण के लिये माता-पिता-भाई-पति-पुत्र एवं बहिन-बेटियों का त्याग किया। इसके बदले में हमारे सौहार्द और स्नेह की दरकार न करके हमसे नाता तोड़कर मथुराजी पधार गये, हमारा सर्वथा त्याग किया। हम चाहतीं तो उन्हें रोक लेतीं, दाऊजी आप तो दयालु एवं सर्वज्ञ हैं। भगवान श्रीकृष्ण के स्वरूप एवं महिमा को हम क्या जानें ? हम तो व्रज की गँवार ग्वालिने रहीं। उन विलक्षण पुरुष की मीठी बातों से मुग्ध बन गयीं। स्वाधीन मन बुद्धि वाले उनकी बातों में नगर की विलक्षण मनातिचतुर स्त्रियां भी मुग्ध हो गयीं और हो रही हैं यह तो आश्चर्य है॥ ११–१२॥ तब दूसरी गोपी कहने लगी—अयि सखि ! भगवान नन्दनन्दन श्रीकृष्ण तो गोष्ठी करने में बड़े चतुर हैं, वे ऐसी तो हृदयङ्गम बातें कहते हैं कि क्या कहा जाय ? उनकी मनोहर मुस्कान और स्नेहमय चितवन से नगर की शिक्षित नारियां भी स्नेहवत आकुल-व्याकुल हो जाती हैं और अपनी आत्मा को न्योछावर कर देती होंगी॥ १३॥ तब समीप में बैठी एक गोपी बोली अरी सखियां ! उनकी बातों से हमें क्या मतलब है ? यदि समय पसार करना है तो दूसरी बातें करें। यदि उस निरपेक्ष का समय हमारे बिना बीत जाता है तो उसकी तरह हमारा समय भी कट जायगा, अन्तर इतना होगा कि भले हमारा समय दुःख से कटेगा ॥१४॥

**इति प्रहसितं शौरेर्जल्पितं चारु वीक्षितम् । गतिं प्रेमपरिष्वङ्गं स्मरन्त्यो [1]मुमुहुः स्त्रियः ॥ १५ ॥**

**संकर्षणस्ताः कृष्णस्य संदेशैर्हृदयंगमैः । सान्त्वयामास भगवान् नानानुनयकोविदः ॥ १६ ॥**

**द्वौ मासौ तत्र चावात्सीन्मधुं माधवमेव च । रामः क्षपासु भगवान् गोपीनां रतिमावहन् ॥ १७ ॥**

**पूर्णचन्द्रकलामृष्टे कौमुदीगन्धवायुना । यमुनोपवने रेमे सेविते स्त्रीगणैर्वृतः ॥ १८ ॥**

---

१. रुरुदुः–श्रीधर. वंशी. जीव. वीर. विज. विश्व. ।

### कर्दमक्षमा

अन्वयः—इति, स्त्रियः, इति, शौरेः, प्रहसितम्, इति, जल्पितम्, इति, तस्य, चारु, वीक्षितम्, इति, तस्य, गतिम्, इति तस्य, प्रेमपरिष्वङ्गम्, स्मरन्त्यः, मुमुहुः ॥ १५ ॥ नानानुनयकोविदः, भगवान्, सङ्कर्षणः, कृष्णस्य, हृदयंगमैः, संदेशैः, सान्त्वयामास ॥ १६ ॥ रामः, तु मधुम्, च, माधवम्, एव, द्वौ, मासौ, तत्र, आवात्सीत्, भगवान्, रामः, क्षपासु, गोपीनाम्, रतिम्, आवहन्, कौमुदीगन्धवायुना, सेविते, पूर्णचन्द्रकलामृष्टे, स्त्रीगणैः, वृतः, रेमे ॥ १७-१८ ॥

### श्रीधरस्वामीविरचिता भावार्थदीपिका

नानाविधेष्वनुनयेषु कोविदः ॥ १६ ॥ मधुं चैत्रम् । माधवं वैशाखम् । गोपीनां रतिमिति । श्रीकृष्णक्रीडासमयेऽनुत्पन्नानामतिबालानामन्यासामित्यभियुक्तप्रसिद्धिः ॥ १७ ॥ पूर्णचंद्रस्य कलाभिर्मरीचिभिरामृष्टे उज्ज्वले कौमुदीगंधवायुना कुमुद्वतीनां गंधवातेन सेविते । यद्वा कौमुदीशब्देन तद्विकासितानि कुमुदानि लक्ष्यंते कुमुदगंधवातेनेत्यर्थः ॥ १८ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

स्त्रीणां धैर्यशिथिलवचनं वज्रधारोपममिति लोकसिद्धमित्याशयेनाह—इतीति । इतीत्थमुक्त्वा । प्रेम्णा परिष्वंगमालिंगनम् ॥ १५ ॥ ताः गोपीः । नानाप्रकारा येऽनुनया बोधकवाक्यानि तेषु कोविदः । ता इति याः खलु तादृगवस्था अपि 'कच्चिदास्ते' इत्यनेन पद्येन तत्सुखादेव सुखं मन्यमानाः, याश्च 'अपि वा' इत्यर्द्धेन स्वकर्तृकतत्सेवनाय तत्कर्तृकस्मरणमात्रेण कृतार्थं मन्यमानाः, याश्च 'मातरम्' इत्यनेन तदर्थं साक्षादेव मात्रादिकं सर्वमपि त्यक्तवत्यः, याश्च 'ता नः' इत्यर्द्धेन स्वेषां तु तस्मिन्नविचलसौहृद्यं विज्ञापितवत्यः, याश्च 'कथं नु' इत्यर्द्धेन स्वीयभावस्य तदेकनिष्ठकैमुत्याय स्त्र्यंतरभावमपि प्रमाणीकृतवंत्यः, याश्च 'कथं नु गृह्णन्ति' इत्यर्द्धान्तरेण तस्यानवस्थिततात्मकत्वं कृतघ्नत्वं च दर्शयित्वा स्वेषां तदव्यभिचारित्वं निश्चितवत्यः, याश्च 'गृह्णन्ति' इत्यर्द्धान्तरेण स्वेषां तदेकहृतचित्तत्वं सूचितवत्यः, याश्च 'किं नु तत्कथया' इत्युक्त्या महद्विरहदुःखासहिष्णुतया स्वमनःकठिनीभावाय निवृत्तप्राया अपि 'इति प्रहसिताम्' इति मुनींद्रवचनेन प्रत्युत तदीयस्नेहवारिधिमग्नतया लब्धद्रवा इत्यवगतास्तादृश्यस्ताः । आसां तावद्धेतुकवधांतसंध्यामारभ्य कुरुक्षेत्रगमनावधितदेकजीवनवर्णनेत्यर्थः । अत एवोत्तरे गोपीनामित्यत्राभियुक्तानामन्या एव मता इति तैर्व्याख्यास्यते । तत्र श्रीसंकर्षणस्यानुनयाः प्रथमतः साश्रावलोकनकलततत्सश्लाघतानिवेदनाकर्णता, ततः सप्रेमतद्विषयकनिजानुकम्पावर्णना, ततः सानुतापतदागमनविलंबकारणनानोपद्रवसूचना, ततः सयुक्तिकशपथतदानयनप्रतिज्ञा, ततो युष्माकमीदृशरोदनार्तिं श्रुत्वा स तु प्राणकोटिप्रियतमो बहुतरं दुःखं प्राप्स्यतीति बिभीषिकेत्येवंरूपाः । श्रीकृष्णसंदेशानां हृदयंगमत्वं पराशरेण दर्शितम्—"संदेशैः साममधुरैः प्रेमगर्भैरगर्वितैः । रामेणाश्वासिता गोप्यः कृष्णस्यातिमनोहरैः ॥" इति । तत्र साम्ना—स्तुतिपूर्वकाश्वासनेन । मधुरैरभिरुचितैः । स्तुतिश्च—न पारयेयं निरवद्यसंयुजाम्' इत्यादिरूपा । आश्वासनम्—'अचिरान्मामुपैष्यथ' इत्येवंविधम् । प्रेमगर्भत्वम्—'यत्त्वहं भवतीनां वै' इत्यादिरूपम् । अगर्वितत्वम्—'तद्वः प्रतियातु साधुना' इत्येवंप्रकारम् । एवं च पूर्ववन्नित्यप्रियकृष्णसंयोगमयप्रकाशविशेषव्यंजनयातिमनोहरैरित्यर्थः । संकर्षण इति तासां मन आकृष्य श्रीकृष्णं प्रति प्रापकत्वादिति तोषणीकाराः । कृष्णस्य संदेशैरिति उद्धवस्य दास्यभावः, संकर्षणस्य वात्सल्यभावश्च कृष्णेन गणितः । किन्तूभयोः सख्यभाव एव संदेशप्रेषणे हेतुरभूदिति । बहुवचनेन कश्चित्संदेशो ज्ञानगर्भः, कश्चिदनुनयगर्भः, कश्चित्प्रभावगर्भ इत्येवं बहव एव संदेशाः । हृदयंगमैः रहस्यत्वात्सर्वत्र प्रकाशयितुमनर्हैः । नानानुनयकोविद इति—भो वत्स्यः समाश्वसित सांप्रतमहमेव द्वारवतीं गत्वा बलादेव तमिहानयिष्यामि नाहमुद्धव इव तदधीन एव केवलमिति स्वप्रौढिज्ञापक इत्यर्थ इति विश्वनाथः ॥ १६ ॥ तत्र व्रजे । अभियुक्तप्रसिद्धिस्तत्पर प्रसिद्धिः, किंवदन्त्यस्तीत्यर्थः । "अभियुक्तः परै रुद्धे तत्परे त्वभिधेयवत्" इति मेदिनी । गोपीनां गोप्यन्तराणामित्येवार्थः । नानावाचकशब्दानां युक्त एवार्थो गृह्यते सैंधवमानयेतिवत् । न हि सर्वत्र गोपीशब्देन श्रीकृष्णप्रेयस्य एव गृहीता इति नियमः । "गोप्यश्चाकर्ण्य मुदिता यशोदायाः सुतोद्भवम्" इह 'गोप्यस्तूर्णं समभ्येत्य' इति, 'रुदितमनुनिशम्य तत्र गोप्यः' इति, "कृष्णस्य गोप्यो रुचिरं वीक्ष्य कौमारचापलम्" इह, 'गोप्याददे त्वयि कृतागसि दाम—'इह च तथा "परिष्वक्तश्चिरोत्कंठैर्गोपैर्गोपीभिरेव च" इत्यत्र च व्यभिचारात् । न च पूर्वोत्तराणां प्रसंगप्राप्तत्वेनैकत्वमाशंक्यम्, यथा तत्प्राप्तमत्वेऽपि स्वायंभुवारम्भगतपृथिवीमज्जनेनैव स्वजातिहिरण्याक्षवधानुपपत्त्या तन्मज्जनमन्यदेव समर्थनीयं तथेहायुक्तप्रागुक्तान्यथानुपपत्त्या पूर्वाभ्यस्ता एता अन्या एवेति तस्मात्प्रकरणमिदमेवावतार्यम् । एवं कृष्णप्रियाः सुष्ठु सांत्वायित्वैव याः खलु कुमारगतेन 'गोप्योंतरेण भुजयोः' इत्यनेन या अनुभूतास्ता एव ग्राह्याः ॥ १७ ॥ "कला वृद्धिमरीच्योश्च कला रक्षणमाययोः" इति धरणिः । कुमुदानि सन्त्यास्विति कौमुदाः सरस्यस्तासां कुमुद्वतीनामित्यर्थः । अत्रार्थे कुमुदानां गंधस्य कुमुद्वतीष्वारोपात्सौष्ठवानुपलब्धेरर्थांतरमाह—यद्वेति । इत्यर्थ इति—अयमर्थोपि लक्षणालब्धत्वात्प्राक्तनार्थसदृशो यद्यप्यस्ति तथापि कुमुद्वतीनां गंधासंभवादर्थानुपपत्त्या लक्षणैवोचितेति स्वामिचरणाशयः ॥ १८ ॥

## श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी

इति एवं प्रहसितादिकं स्मरन्त्यः प्रहसितं स्मितं प्रशब्दस्य आरम्भे प्रयोगात् चार्विति लिङ्गविपरिणामेनापि सर्वैर्योज्यं प्रेम्णा परिष्वङ्गः सर्वाङ्गगाढालिङ्गनं यद्वा प्रेमस्नेहार्द्रस्वभावः एषां यथोत्तरं स्मरणेन रोदकत्वे श्रैष्ठ्यं शौरेरिति सम्प्रति शूरवंश्यतया प्रकटितात्मन इति गोपिकापक्षपातेन सप्रणयेर्ष्यं वचनं स्त्रिय इति तासां तत्र विवेकराहित्यं व्यञ्जितम् ॥ १५ ॥ सङ्कर्षण इति । अत्र कृष्णस्य सन्देशैरिति तृतीयानिर्द्देशेन साधकतमत्वप्राप्तेरिदं गम्यते यद्यप्यसौ भगवान् सर्वथा समर्थः तथा सङ्कर्षणः श्रीकृष्णज्येष्ठभ्रातृत्वेन गौरवविषयः तथा नानानुनयकोविदः नानाविधेषु सान्त्वनोपायेषु पण्डितः तेनानुनयेनारब्धसान्त्वन इत्यर्थः । तथापि कृष्णस्य स्वभावत एव सर्वेषामपि चित्ताकर्षकस्य किमुत तासामित्येवं रूपस्य सन्देशैरेव ताः सान्त्वयामास यतो हृदयङ्गमैः तैरेव तासां हृदयाभ्यन्तरं प्रविश्य द्रावकैः तत्र हेतुस्ता इत्येव याः खलु तादृगुन्मादवश्या अपि कच्चिदास्त इत्यनेन पद्येन तत्सुखादेव तदीयहितवर्गसुखादेव च सुखं मन्यमानाः याश्च अपि वेत्यर्द्धेन स्वकर्तृकप्राक्तनतत्सेवायास्तत्कर्तृकस्मरणमात्रेण कृतार्थं मन्यमानाः याश्च मातरमित्यनेन सम्प्रति तदर्थं साक्षादेव मात्रादिकं सर्वमपि त्यक्तवत्यः तच्च स्वयं तस्मै तज्ज्यायसे निवेद्य स्वेषां तदेकनिष्ठत्वं दर्शितवत्यः याश्च तान् इत्यर्द्धेन स्वेषां तु तस्मिन्नविचलसौहृद्यं विज्ञापितवत्यः याश्च कथं न्वित्यर्द्धेन स्वीयभावस्य तदेकनिष्ठत्वकैमुत्याय अस्त्यन्तरभावमपि प्रमाणीकृतवत्यः याश्च कथं नु गृह्णन्तीत्यर्द्धान्तरेण तस्यानवस्थितात्मत्वं कृतघ्नत्वञ्च दर्शयित्वा स्वेषां तदव्यभिचारित्वं निश्चितवत्यः याश्च गृह्णन्तीत्यर्द्धान्तरेण स्वेषां तदेकहृतचित्तत्वं सूचितवत्यः । याश्च किं नस्तत्कथयेत्युक्त्या महातद्विरहदुःखासहिष्णुतया स्वमनःकाठिन्याभावाय निवृत्तप्राया अपि इति प्रहसितमिति मुनीन्द्रवचनेन प्रत्युत तदीयस्नेहवारिधिमग्नतया लब्धद्र[वा]व्या इत्यवगतास्तादृश्यस्ताः आस्तान्तावद्धेनुकवधान्तसन्ध्यामारभ्य कुरुक्षेत्रगमनावधि तासां तदेकजीवनत्ववर्णनेत्यर्थः । एकादशे च रामेण सार्द्धमित्यादिभिः श्रीभगवता स्वयं तत्तदनुरागविस्तारणया स्वैकप्राप्तिकथनयेत्यर्थः । अत एवोत्तरत्र गोपीनामित्यत्राभियुक्तानामन्या एव मता इति तैर्व्याख्यास्यते तत्र श्रीसङ्कर्षणस्यानुनयाः प्रथमतः शास्त्रावलोकनकला ततः सश्लाघा तान्निर्वेदनाकर्णना ततः सप्रेमतद्विषयकनिजानुकम्पावर्णना ततः सानुतापतदागमनविलम्बकारणनानोपद्रवसूचना ततः सयुक्तिकशपथतदानयनप्रतिज्ञा ततो युष्माकमीदृशार्तिरोदनं श्रुत्वा स तु प्राणकोटिप्रियतमो बहुतरं दुःखं प्राप्स्यतीति विभीषिकेत्येवंरूपाः श्रीकृष्णसन्देशानां हृदयङ्गमत्वञ्च श्रीपराशरेण विशिष्य दर्शितम्—

"सन्देशैः साममधुरैः प्रेमगर्भैरगर्वितैः । रामेणाश्वासिता गोप्यः कृष्णस्यातिमनोहरैः ॥" इति

अत्र साम्ना स्तुतिपूर्वकाश्वासनेन मधुरैरभिरुचितैः स्तुतिश्चात्र "न पारयेहं निरवद्यसंयुजाम्" इत्यादिरीतिका आश्वासनम् "अचिरान्मामुपैष्यथ" इत्येवंविधम् प्रेमगर्भत्वं "यत्वहं भवतीनां वै" इत्यादिलक्षणम् अगर्वितत्वं 'तद्वा प्रतियातु साधुना' इत्यादिप्रकारम् अन्ते च पूर्ववन्नित्यश्रीकृष्णसंयोगमयप्रकाशविशेषव्यञ्जनयातिमनोहरैरित्यर्थः । किञ्च यस्ताः स्वयं नाम्ना सङ्कर्षणः सान्त्वयामास स मध्ये मध्ये श्रीकृष्णमपि मनसैव समाकृष्य रहसि काञ्चित् प्रति कदाचिदनुभावयतीति तथा स इत्यर्थः । अत एव सान्त्वयामासेति सुष्ठु घटते एवमेवास्य वक्ष्यमाणस्वप्रियाभिः क्रीडापि युक्ता स्यात् तत्र तत्र हेतुः भगवान् सर्वज्ञत्वात् । तासु तन्नित्यप्रेयसीत्वस्य तत्त्वज्ञसुखसर्वशक्तियुक्त इत्यर्थः । अन्यथा व्याख्याने तु द्वारकायामपि मर्य्यादालोपः प्रसज्ज्येत इत्यलमतिविस्तरेण । एवं सन्देशप्रस्थापनेन तस्मिन् तस्य श्रीकृष्णस्य सख्यांशोऽपि दर्शितः । स च युक्तः अतिसमानवयस्त्वाद्बाल्यमारभ्य सहविहाराच्च "गोप्यन्तरेण भुजयोरपि यत्स्पृहाः श्रीः" इति विनयोक्तिदर्शनात् शङ्खचूडावधादौ तथा दृष्टत्वाच्च अग्रजत्वांशस्तु दशमीमिव दशां गतानां तासां रक्षणार्थमस्फुरन्नेवासीत् ॥ १६ ॥ तदेवं ता इत्यस्य व्याख्या प्रघट्टकानुसारेण तमेवालम्बमानानामभियुक्तानां मतप्रामाण्येन च द्वावित्यत्र गोपीनामिति तदेकमतिगतिभ्यस्त्वपरासां गोप्यन्तराणामित्येवार्थः । सामान्यविशेषवाचकाः शब्दाः प्रसङ्गवशादेव तत्तत्प्रतिपादयन्ति यथा ब्राह्मणा नावमन्तव्या इत्युक्ते सर्वे ते गृह्यन्ते ब्राह्मणावरणीया इत्युक्ते तत्तत्कर्मणि योग्या एव वै व्रियन्ते न तु सर्वे न चान्ये तद्वत् नानावाचकशब्दानामर्थः खलु युक्त एव गृह्यते सैन्धवमानयेतिवत् । नहि सर्वत्र गोपीशब्देन श्रीकृष्णप्रेयस्य एव ता गृहीता इति नियमः "गोप्यश्चाकर्ण्य मुदिता यशोदायाः सुतोद्भवम्' इत्यत्र 'गोप्यस्तूर्णं समभ्येत्य' इत्यत्यत्र "रुदितमनुनिशम्य तत्र गोप्यः" इत्यत्र "कृष्णस्य गोप्यो रुचिरं वीक्ष्य कौमारचापलम्" इत्यत्र "गोप्याददे त्वयि कृतागसि दाम" इत्यत्र 'प्रसादं लेभिरे गोप्य' इत्यत्र च तथात्रैव "परिष्वक्तश्चिरोत्कण्ठैर्गोपैर्गोपीभिरेव च" इत्यत्र व्यभिचारात् । न च प्रसङ्गप्राप्तत्वेनात्र पूर्वोत्तराणामेकत्वमाशङ्क्यं किन्तु यथा पञ्चमस्कन्धे "क्षेत्रज्ञ एता मनसो विभूतीः" इति "क्षेत्रज्ञ आत्मा पुरुषः पुराणः" इत्यव्यवहितेऽपि पद्यद्वये क्षेत्रज्ञशब्दो जीवात्मपरमात्मकत्वेन पृथगेव व्याख्यातो यथा च स्वायम्भुवारम्भगतपृथिवीमज्जनेनैव स्वतान्तर्जाताहिरण्याक्षवधानुपपत्त्या तन्मज्जनमन्यदेव समर्थनीयं तथा ता इत्यत्रोक्ताः प्रागुक्तान्यथानुपपत्त्या पूर्वाभ्यस्ता एता अन्या एव व्याख्यान्तरे तु द्वारकायामपि मर्य्यादालोपः प्रसज्जेतेत्यलमतिविस्तरेण । तस्मात् प्रकरणमिदमेवमवतार्यम् एवं श्रीकृष्णप्रियाः सुष्ठु सान्त्वयित्वा याः खलु कौमारगवेन गोप्यन्तरेण भुजयोरित्यनेन श्रीकृष्णपरिहासेन भावितदङ्गसङ्गत्वेपि सिद्धतया सूचिताः, याश्च शङ्खचूडवधसमयहोरिकाक्रीडायां

श्रीकृष्णप्रेयसीसम्वलिततया वर्णितास्ताश्च प्रागश्रुततदङ्गसङ्गास्तदर्थरक्षितकौमाराः कृष्णस्यानुमते स्थित इत्यनुसारेण तत्प्रार्थनया सान्त्वयामासेत्याह—द्वावित्यादिना। चकारोवान्वाचये सुहृद्दिदृक्षुरुत्कण्ठ इत्युक्तत्वान्मुख्यतया सुहृदां दर्शनमेव वाञ्छितमासीत् आनुषङ्गिकतया गोपीविशेषाणां रतिं चावहन्नित्यर्थः। क्षपास्विति परमगुह्यत्वं व्यञ्जितम्। अत एव यमुनोपवन इति दूरनयनं च राम इति रमणयोग्यताव्यञ्जकं तत्रापि भगवानिति तत्राप्यनेकासाम्॥ १७॥ तदेव विशिष्य वर्णयति—पूर्णेति। श्रीरामस्येच्छया तदा सदा रहसि पूर्णचन्द्रविशेषोदयात्॥ १८॥

### श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी

इति एवं प्रहसितादिकं स्मरन्त्यः, प्रहसितं स्मितं चाविति लिंगविपरिणामेनापि सर्वैर्योज्यम्। प्रेम्णा परिष्वंगं सर्वांगगाढालिंगनम्, यद्वा, प्रेम स्नेहार्द्रस्वभावः; एषां यथोत्तरं स्मरणेन रोदकत्वे श्रैष्ठ्यम्। शौरेरिति निजाशेषभगवत्ता-प्रकटनार्थं शूरवंशेऽवतीर्णस्य तस्य तत्तत् सर्वम्। स्त्रिय इति च प्रेमार्त्तस्वभावानां तासामपि तत् युक्तमेवेति भावः॥ १५॥ कृष्णस्य सर्वचित्ताकर्षकस्य, अत एव हृदयंगमैश्चित्तग्राहकैः (उ० स० १०४) 'कच्चिदभीति न भजत' इत्याद्युद्धव-सन्देशोक्तैः सान्त्वयामास आश्वासयत्, तथा च श्रीविष्णुपुराणे (५।२४।२०) सन्देशैः साममधुरैः प्रेमगर्भैरगर्वितैः। रामेणाश्वासिता गोप्यः कृष्णस्यातिमनोहरैः॥' इति। यतो भगवान् सर्वशक्तियुक्तः, अत एव नानाविधाः—'भ्राता अचिरादेवागत्य युष्मान् प्रीणयिष्यति, युष्माकमीदृशार्त्तिरोदनादिश्रवणेन बहुदुःखं प्राप्स्यति' इत्यादि-सशपथ-वाक्याश्रुप्रमार्ज्जनादि-लक्षणा येऽनुनयाः सान्त्वनोपायास्तेषु कोविदः, यतः संकर्षणः श्रीकृष्णेन सहापृथग्भूत इत्यर्थः॥ १६॥ एवं प्राक् श्रीकृष्णैकप्रियास्ताः सान्त्वयित्वा निजागमनमुख्यप्रयोजनं विधायात्मनो व्रजजनैकप्रियतादिकं दर्शयन्नन्याश्च वसन्ते रमयामासेत्याह—द्वाविति। स्वर्थे चकारो भिन्नोपक्रमात्, एव अपि, माधवमपि, चकारादन्यानि च कतिचिद्दिनानि मधुं माधवमिति तदानीं श्रीवृन्दावनस्य श्रीबलदेवगमनापेक्षया; तदानीं पुष्पादिरसोद्रेकेण शोभाविशेषः सूचितः। क्षपासु वसन्तज्योत्स्नामयरात्रिषु रतिमाद्यरसम्, आ सम्यग् वहन् प्रापयन्, यतो रामो रतिकुशल इत्यर्थः। तत्र हेतुः—भगवान् कामशास्त्रोक्त-तत्तत्प्रकाराभिज्ञ इत्यर्थः। अन्यत्तैर्व्याख्यातम्। अथवा तादृशोऽपि स तादृशैरपि सन्देशैः सान्त्वयामास किम्—काका अपि तु सान्त्वयितुं नाशक्नोदित्यर्थः। यतस्ताः श्रीकृष्णविरहान्यस्तातुरास्तद्दर्शनैक-लालसाकुला इत्यर्थः। अपि च, अतः क्षपासु निद्राकालेष्वपि गोपीनां तासां रतिं सुखम् आ ईषदपि वहन् प्रापयितुं द्वौ मासौ चावात्सीत्। चकारात् किञ्चिदधिकौ, तदानीं तासां विरहार्त्तिभरोत्पत्ते, यतो भगवान् परमदयालुः, किञ्च, रामः सर्वसुखकरः॥ १७॥ कथमवात्सीत्तदाह—पूर्णेति। श्रीरामस्य प्रीत्यर्थं श्रीवृन्दावनशोभार्थं वा, तदानीं नित्यं पूर्णचन्द्रोदयात् स्त्रीगणैः श्रीकृष्णर-मितेतरैः, ते च तैर्व्यञ्जिता एव, अन्यच्च व्याख्यातम्। यद्वा, कौमुदी शारदी ज्योत्नामयी रात्रिः, तथा च कोषे—'कौमुदी चन्द्रिका प्रोक्ता कार्तिकस्य च पूर्णिमा' इति; तस्यामिव कुमुदादिसम्बन्धी यो गन्धस्तद्युक्तेन वायुनेति॥ १८॥

### श्रीमद्वीरराघवाचार्यकृता भागवतचन्द्रचन्द्रिका

इतीति। प्रेम्णा परिष्वङ्गमालिङ्गनं च स्मरन्त्यः॥ १५॥ सङ्कर्षण इति। नानाविधेष्वनुनयेषु सान्त्वनेषु कोविदो निपुणः ताः गोपीः सान्त्वयामास॥ १६॥ द्वौ इति। मधु चैत्रं माधवं वैशाखं चेत्येतौ द्वौ मासौ तत्रावात्सीदुषितवान् अत्यन्त-संयोगे द्वितीया कथम्भूतः सन् तासु मधुमाधवयोः सम्बन्धिनीषु क्षपासु रात्रिषु गोपीनां पूर्वं स्वपरिगृहीतानां व्रजान्निष्क्रमणा-नन्तरम् उत्पन्नानां वा रतिमनुरागमावहन्नुद्रेचयन्॥ १७॥ किञ्च, पूर्णेति। पूर्णचन्द्रस्य कलाभिः मरीचिभिरामृष्टे उज्ज्वले कौमुदीगन्धवायुना कुमुद्वतीगन्धवातेन वासिते यद्वा कौमुदीशब्देन तद्विकासितानि कुमुदानि लक्ष्यन्ते कुमुदगन्धवायुनेत्यर्थः। यमुनाया उपवने स्त्रीसमूहैः परिवृतो रेमे क्रीडितवान्॥ १८॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

शुकः स्त्रीणां धैर्यशिथिलं वचनं वज्रधारोपममिति लोकसिद्धमित्याशयेनाह—इतीति। इत्थमुक्त्वा शौरेः कृष्णस्य प्रहसितादि च स्मरन्त्यो रुरुदुरित्यन्वयः॥ १५-१६॥ मधुमाधवं वसन्तर्त्तुम्॥ १७॥ कौमुदी कुमुद्वती तस्याः गन्धेन सम्पृक्तेन वायुना सेविते॥ १८॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

हृदयङ्गमैरिति प्रकटलीलोपदेशपर्यन्तत्वात् सन्देशविशेषणानि चैतानि श्रीविष्णुपुराणे—

"सन्देशैः साममधुरैः प्रेमगर्भैरगर्वितैः। रामेणाश्वासिता गोप्यः कृष्णस्यातिमनोहरैः" ॥ इति

सङ्कर्षणः मध्ये मध्ये श्रीकृष्णमपि मनसि समाकृष्य दर्शयतीति च तथेत्यर्थः। ताः श्रीकृष्णप्रेयसीः गोपीनां गोप्य-न्तरेण भुजयोरित्यनुसारेण शङ्खचूडवधादिमहोरिकाविहारे श्रीकृष्णप्रेयसीभिः सम्वलितानां तत्प्रेयसीचरीणां गोपीविशेषणा-

मित्यर्थः। अत्र च श्रीकृष्णस्यानुमते स्थित इति कारणं यज्ज्यं पूर्वं ह्यनेन तासामङ्गसङ्गो न वर्णितः किन्त्वनुरागमात्रं ततश्च तदर्थं रक्षितकौमारासु तासु च कृपयासौ तथा प्रार्थितवानिति क्षपास्विति परमगुप्तत्वं व्यञ्जितम् ॥ १६-२४ ॥

**श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः**

इतीत्यादि। अमर्षादिभावशान्तौ स्मृतिभावोदये रुरुदुरित्यर्थः ॥ १५ ॥ सङ्कर्षणस्ता इत्यादि। ताः कृष्णपरिगृहीताः कृष्णस्य सन्देशैः सान्त्वयामास। ननु कथं सन्देशेनैव सान्त्वनमित्याह—हृदयङ्गमैः अचिरादेव मे दर्शनं भविष्यतीत्यादिको य आश्वासस्तेन हृदयङ्गमैः नानानुनयाः कृष्णस्य ये ये नानानुनयास्तेषु कोविदः पण्डितः तस्यै कस्यापि स्मृतिर्न जातेत्यर्थः॥१६॥ गोपीनां रतिमावहन्नित्यादिषु गोपीनां स्वपरिगृहीतानाम्। एवं स्त्रीगणैरित्यत्रापि तथा ॥ १८-३४ ॥

इति श्रीदशमे श्रीबृहत्क्रमसन्दर्भे पञ्चषष्टितमोऽध्यायः,
षट्षष्टितमः, सप्तषष्टितमः, अष्टषष्टितमश्च ॥ ६५-६८ ॥

**श्रीनाथचक्रवर्तिपादविरचिता चैतन्यमतमञ्जूषा**

गोपीनां रतिमावहन्नित्यादि। गोपीनां पूर्वपरिगृहीतानाम्। एवं स्त्रीगणैरित्यपि ॥ १७-३४ ॥

इति पञ्चषष्टिः एवं षट्सप्तषष्टिः, तथाष्टषष्टिश्च ॥ ६५-६८ ॥

**श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी**

इतीति। स्वीयसुधारसमयप्रहसितादिशल्यपञ्चकेन तासां हृदयं विद्ध्वा कृष्णचन्द्रेण गतमतस्ताः कथं जीवन्तु कथं म्रियन्तामिति श्रीबलदेवाग्रेऽपि विह्वलीभूय रुरुदुरेव ॥ १५ ॥ कृष्णस्य सन्देशैरिति उद्धवस्य दास्यभावः सङ्कर्षणस्य वात्सल्यभावश्च कृष्णेन न गणितः किन्तूभयोरनयोः सख्यभाव एव सन्देशप्रेषणहेतुरभूदिति ज्ञेयं बहुवचनेन कश्चित् सन्देशो ज्ञानगर्भः कश्चिदनुनयगर्भः कश्चित् प्रभावगर्भ इत्येवं बहव एव सन्देशाः हृदयङ्गमैरिति रहस्यत्वात् सर्वत्र प्रकाशयितुमनर्हैरितिभावः। नानानुनयकोविद इति भो वत्साः समाश्वसित साम्प्रतमहमेव द्वारवतीं गत्वा बलादेव तमिह आनेष्यामि नाहमुद्धव इव तदधीन एव केवलमिति स्वप्रौढिमज्ञापक इत्यर्थः ॥ १६ ॥ मधुं चैत्रं माधवं वैशाखं गोपीनां रतिमिति श्रीकृष्णक्रीडासमयेऽनुत्पन्नानामतिबालानाञ्चान्यासामित्यभियुक्तप्रसिद्धिरिति श्रीस्वामिचरणाः शङ्खचूडवधसमयहोरिकाक्रीडायां याः कृष्णप्रेयसीसम्वलितया रामप्रेयस्योऽपि निर्दिष्टास्तासामेवेत्यस्मत्प्रभुचरणाः ॥ १७ ॥ पूर्णचन्द्रस्य कलाभिः कौमुदीभिरामृष्टे उज्ज्वले कौमुदीविकसितत्वात् कुमुद्वतीनां गन्धवत् वायुना सेविते यमुनोपवने श्रीरामघट्टतया प्रसिद्धे स्थले किन्तु यत्र श्रीकृष्णेन रासक्रीडा कृता तत् स्थलमपि रामेण दूरतः परिहृतम् ॥ १८ ॥

**गूढार्थदीपिनी**

हृदयङ्गमैः विश्वासजनकैः। अनुनयेषु सान्त्वनादानेषु कुशलः ॥ १६ ॥ मधुं चैत्रं वैशाखं च। रतिमावहन् प्रीतिं जनयन् अवात्सीदित्यन्वयः। वासुदेवकलात्वात् चतुर्व्यूहेषु अन्यतमत्वाच्च भगवदादेशेनैव गोपीविहारे रामः प्रवृत्तोऽतो न दोषलेशोऽपीत्यवधेयम् ॥ १७ ॥ कलाभृष्टे किरणोज्ज्वले। कौमुदी कुमुदसम्बन्धिनी नदी यमुना तद्गन्धयुक्तवायुनासेविते ॥१८॥

**श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः**

रतिमनुरागमुद्वहन् श्रीकृष्णे प्रापयन् ॥ १७ ॥ पूर्णचन्द्रस्य कलाभिर्मरीचिभिरामृष्टे उज्ज्वले कौमुदीशब्देन तद्विकासितानि कुमुदानि लक्ष्यन्ते तद्गन्धवता वायुना सेविते यमुनोपवने श्रीकृष्णलीलास्मरणकथनादिभिः रेमे ॥ १८ ॥

**श्रीमद्वल्लभाचार्य्यकृता सुबोधिनी**

ततो मरणपर्यन्तं पीडिताः भगवदिच्छया अन्तस्तापं बहिःकृतवत्य इत्याह इति प्रहसितमिति। प्रहसितमान्तरम्। बहिर्व्यामोहकम्। शौरेरिति सामर्थ्यमुक्तम्। जल्पितं वाचनिकम्। चारुवीक्षितमैन्द्रियकम्। कायिकं द्विविधमप्याह गतिं प्रेमपरिष्वङ्गमिति। एवं पञ्चाङ्गं भगवन्तं स्मरन्त्यः मोहं मूर्च्छां प्राप्ताः ॥ १५ ॥ मरणे तु सम्भाविते भगवानेवागच्छेत्, सायुज्यं च दद्यात्, तदभावात् बलभद्रेण सान्त्वनं कृतमित्याह सङ्कर्षण इति। ताः पूर्वं निरुद्धाः अपहृतशोकाश्च। पुनरुत्पन्ने दोषे उद्धववत् ततोऽपि विशेषप्रकारेण सान्त्वयामास। यतो भगवान् नानाप्रकारानुनये कोविदश्च। यथैव ताः सान्त्विता भवन्ति, तथैव कृताः ॥ १६ ॥ सान्त्वनार्थमेव ह्ययं गतः, वाक्यमात्रेण सान्त्वनं न भवतीति वसन्तसमये तत्रैव स्थितश्चेत्याह **द्वौ मासौ तत्र चावात्सीदिति**। स हि बहुकालं यत्र क्वचित्तिष्ठति, तत्रापि स्थितः। **मधुं माधवमेव चेति**। वसन्त एव कामकृता पीडा

महतीति। तस्मिन् विद्यमाने कामो न पीडयतीति। भगवान् उद्धवद्वारा अलौकिकसमाधानं कृत्वा लौकिकन्यायेन बलभद्रद्वारा कृतवानिति। रामोपि रतिवर्धनः। क्षपासु भगवद्रूपो भूत्वा गोपीनां रतिमावहन् स्वयमपि रेमे इत्यग्रेण सम्बन्धः। **अवात्सीदिति** पूर्वेण वा। चकारात् स वसन्तो मासत्रयात्मक इति ज्ञातव्यम् ॥ १७ ॥ अन्यार्थमेव चेद्गच्छेत्, तदा लोके अनौचित्यं भवतीति भगवदिच्छया स्वयमपि रतिं कृतवानित्याह **पूर्णचन्द्रकलामृष्ट** इति। तत्पतिसम्बन्धे या न विरुध्यन्ते, ता बलभद्रेणापि न विरुध्यन्त एव। अनेन सर्वत्र भगवद्धर्मेषु भगवत्सिद्ध्यर्थं साक्षान्निर्लेपे सम्बन्धाभावात् अनुकल्पाः कृता इति सूचितम्। अनुकल्पोऽपि सानुभाव एव भवति, न तु निरनुभाव इति यमुनाकर्षणं वरुणादिसम्माननं च निरूपयिष्यति। त्याज्य एव देहादिरिति। यथा वस्त्रापावनार्थं जलं वस्त्रे प्रक्षिप्यते, तथा एताः भगवद्धर्मे प्रक्षिप्ताः। रमणे साधनान्याह। पूर्णचन्द्रकलाभिः मृष्टे उज्वले **यमुनोपवन** इति। वनं नदी च रसपोषके। अपेक्षितो वायुरिति देशं निरूप्य निरूपयति **कौमुदीगन्धवायुनेति**। कुमुदसम्बन्धिनी कौमुदी नदी तत्सम्बन्धिगन्धयुक्तेन वायुना सेविते। कौमुदी ज्योत्ना वा, गन्धश्च। उभयसहितेन वायुना सेवितत्वादेव मन्दत्वम्। इदं रमणं पुष्पावचयादिरूपम्। बहिरिति ज्ञापयितुं **स्त्रीगणैर्वृत** इत्युक्तम्। गणशः सर्वविधा एव स्त्रियस्तत्र सन्तीति ज्ञापितम् ॥ १८ ॥

### श्रीविट्ठलरायात्मजश्रीवल्लभकृतलेखः

**इतीत्यत्र**। **सायुज्यं चेति**। सह योगेन परिष्वङ्गादिकं कुर्यादित्यर्थः। **द्वौ मासावित्यत्र**। **तत्र चेति**। चकारस्यार्थमाहुः **स हीति**। **मासत्रयात्मक** इति। स वसन्तः फाल्गुनमप्यादाय मासत्रयात्मक इत्यर्थः। **अन्यार्थमेवेति**। सान्त्वनार्थमेव गमने ज्येष्ठत्वाल्लौकिकदृष्ट्या अनौचित्यं स्यादित्यर्थः। **पूर्णचन्द्रेत्यत्र**। **साक्षान्निर्लेपे** इति। साक्षाद्भगवदीये निर्लेपे पदार्थे बलभद्रसम्बन्धो न भवति। अतो भगवत्सिद्ध्यर्थं भगवत इव रमणसिद्ध्यर्थं सर्वत्र भगवद्धर्मेषु पूर्णचन्द्रादिसर्वपदार्थेष्वनुकल्पा एव कृताः, गोप्योपि तदनुकल्पाः, रामोपि भगवदनुकल्पः। अतः सर्वमेवानुकल्परूपमिति भावः। रामे भगवदावेशवत्सर्वेष्वेव पदार्थेषु तत्तदावेश इत्यनुकल्पत्वम्। निबन्धे 'पश्चाज्जातास्तु गोपिकाः। श्रुतपूर्वा बलं दृष्ट्वा रेमिरे' इत्युक्तम्। अत्र च शङ्खचूडप्रसङ्गस्था इत्युक्तम्। तत्र पश्चाज्जातासु रमणसमये कायिकसान्त्वनसिद्ध्यर्थं पूर्वसामावेश इत्यविरोधः। **त्याज्य एवेति**। पश्चाज्जातानामावेशाधिकरणानां देहादिः पूर्वरूपत्यागेन शोधनीय एवेत्यर्थः। **भगवद्धर्मे** इति। रामनिष्ठे इत्यर्थः।

### श्रीसुबोधिनी-सारः

इत्येवं शौरेः कृष्णस्य प्रहसितं जल्पितं भाषणं चारु दर्शनं गमनं प्रेमालिंगनं स्मरन्त्यः स्त्रियो रुरुदुः ॥ १५ ॥ ता गोपीः कृष्णस्य हृदयंगमैर्मनोरमैः संदेशैर्नानाविधेष्वनुनयेषु कोविदो निपुणः संकर्षणो भगवान् सांत्वयामास ॥ १६ ॥ तत्र व्रजे मधुं चैत्रं माधवं वैशाखमिति द्वौ मासौ रामोऽवात्सीत् गोपीनां रतिमावहन् प्रीतिं कुर्वन् भगवान् यतः ॥ १७ ॥ पूर्णचंद्रस्य कलाभिर्मृष्टे उज्ज्वले यमुनाया उपवने कौमुदीशब्देन तद्विकासितानि कुमुदानि तेषां गंधयुक्तेन वातेन पवनेन सेविते स्त्रीगणैर्वृतो रेमे ॥ १८ ॥

### गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

इत्येवं वदन्त्यः शौरेः कृष्णस्य प्रहसितादीन् स्मरन्त्यश्च ता व्रजस्त्रियो रुरुदुरित्यन्वयः ॥ १५ ॥ सङ्कर्षणश्च नानाविधेष्वनुनयेषु सान्त्वनेषु कोविदो निपुणः, अतो युक्तिवचनैः तथा हृदयंगमैर्मनोहरैर्विश्वासजनकैः कृष्णस्य सन्देशैश्च ताः गोप्यः सान्त्वयामासेत्यन्वयः। 'गोपीनां भगवति प्रेमाधिक्येन तद्विरहदुःखस्याप्याधिक्यात् अन्येन तच्छान्तिर्दुष्करा' इति सूचयन्नाह—भगवानिति ॥ १६ ॥ क्षपासु रात्रिषु गोपीनां रतिमावहन् प्रीतिं कुर्वन् रामो मधुं चैत्रं माधवं वैशाखं चैत्येतौ द्वौ मासौ तत्र व्रजे अवात्सीदित्यन्वयः। शङ्खचूडवधसमये शङ्खचूडनाशप्रसङ्गे क्रीडायां निर्दिष्टाभिः कृष्णक्रीडितव्यतिरिक्ताभिः रामप्रेयसीभिः तथा कृष्णक्रीडासमयेतिबालाभिरनुत्पन्नाभिश्च सहात्र रामविक्रीडनमित्यभियुक्ता वदन्ति। श्रीमदाचार्यास्तु "बलभद्रद्वारा भगवानेव तासां मनोरथं पूरितवान्, अतो न कश्चन दोष" इत्याहुः। अतएव शुक आह—भगवानिति ॥ १७ ॥ रमणे साधनान्याह—पूर्णेति। पूर्णचन्द्रस्य कलाभिर्मरीचिभिरामृष्टे उज्वले, कौमुदीशब्देन तद्विकासितानि कुमुदानि लक्ष्यन्ते। कुमुदगन्धवायुना सेविते यमुनाया उपवने स्त्रीगणैर्वृतो रामो रेमे इत्यन्वयः ॥ १८ ॥

### अन्वितार्थप्रकाशिका

इतीति। इत्येवं वदन्त्यः शौरेः कृष्णस्य प्रहसितं जल्पितं चारु वीक्षितं गतिं प्रेम परिष्वङ्गं च स्मरन्त्यः ताः स्त्रियः रुरुदुः ॥ १५ ॥ संकर्षण इति। भगवान्संकर्षणश्च नानाविधेष्वनुनयेषु सान्त्वनेषु कोविदो निपुणः अतो युक्तिवचनैः तथा हृदयङ्गमैर्मनोहरैर्विश्वासजनकैः कृष्णस्य सन्देशैश्च ताः गोपीः सान्त्वयामास। अत्र सन्देशप्रेषणेन भगवता रामे सख्यांश एव दर्शितो नत्वव्रजत्वांशस्तासां दशमीं दशां रक्षितुमिति ज्ञेयम् ॥ १६ ॥ द्वाविति। भगवान् रामः क्षपासु रात्रिषु गोपीनां रतिमा-

वहन् प्रीतिं कुर्वन् मधुं चैत्रं माधवं वैशाखं चेत्येतौ द्वौ मासौ तत्र व्रजे अवात्सीदित्यन्वयः। शङ्खचूडवधसमये क्रीडायां निर्दिष्टाभिः कृष्णक्रीडितव्यतिरिक्ताभिः गोप्योऽन्तरेण भुजयोरिति प्राक् सूचिताभिः रामप्रेयसीभिरिति तोषिण्यादयः। कृष्णक्रीडासमयेऽतिबालाभिरनुत्पन्नाभिश्च सहात्र रामविक्रीडनमित्यभियुक्ता वदन्ति इति स्वामिपादाः। बलभद्रद्वारा भगवानेव तासां मनोरथं पूरितवानतो न कश्चन दोष इति केऽप्याहुः ॥ १७ ॥ पूर्णेति। पूर्णचन्द्रस्य कलाभिर्मरीचिभिरामृष्टे उज्ज्वले कुमुदश्चन्द्रस्तत्प्रियात्वात् कौमुदी कुमुद्वती। यद्वा। कौमुदीशब्देन तद्विकासितानि कुमुदानि लक्ष्यन्ते तद्गन्धयुक्तवायुना सेविते यमुनाया उपवने श्रीरामघट्टतया प्रसिद्धे स्थले श्रीकृष्णरासस्थलस्यापि रामेण परिहृतत्वात् स्त्रीगणैर्वृतो रामो रेमे ॥ १८ ॥

### श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्

हृदयंगमैर्मनोहरैः। नानाविधा ये अनुनयाः प्रियोक्तिरचनायुक्तानि वाक्यानि तेषु कोविदो निपुणः। ताः कृष्णभक्ता गोपीः सांत्वयामास ॥ १६ ॥ मधुं चैत्रं माधवं वैशाखं गोपीनां रतिमिति। श्रीकृष्णरमणावसरेऽप्राप्तजन्मनामतिबालानां चातो भगवता सह रत्यभिलाषुकानां श्रीकृष्णरमितेतरगोपीनां रतिमावहन् इति विवेकिनो वदंति रात्रिषु स्वप्रेयस्तीसारतिमावहन् दिनेषु तु कृष्णप्रेयसीः सांत्वयन्निति भावः ॥ १७ ॥ पूर्णचंद्रस्य कलाभिमृष्टे प्रकाशमाने कौमुदीसुगंधयुक्तवायुना सेविते ॥ १८ ॥

### भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

संकर्षण इति ॥ ततः नानाऽनुनयकोविदः, बहुप्रकारप्रीणननिपुणः, भगवान् संकर्षणो बलभद्रः, हृदयंगमैर्मनोहारिभिः, कृष्णस्य संदेशैः, ता गोपीः, सान्त्वयामास ॥ १५ ॥ द्वाविति ॥ भगवान् रामः, क्षपासु रात्रिषु, गोपीनां पूर्वं स्वपरिगृहीतानां व्रजान्निष्क्रमणानन्तरमुत्पन्नानां वा, अन्ये तु श्रीकृष्णक्रीडासमयेऽनुत्पन्नानामतिबालानामन्यासामित्यभियुक्तप्रसिद्धिरित्याहुः। रतिमनुरागं, आवहन् उद्रेचयन्, मधुं चैत्रं, माधवं वैशाखं च, इति द्वौ मासौ एव, तत्र च व्रजे एव, अवात्सीत्। केचित्तु मधुमाधवसंबन्धिनीषु क्षपासु, गोपीनां रतिमावहन्नित्याहुः ॥ १६ ॥ पूर्णचन्द्रेति ॥ पूर्णचन्द्रस्य कलाभिर्मरीचिभिरामृष्टे उज्ज्वले, कौमुदीगन्धवायुना कुमुद्वतीगन्धवातेन, सेविते वासिते, यद्वा। कौमुदीशब्देन तद्विकासितानि कुमुदानि लक्ष्यन्ते, कुमुदगन्धवायुनेत्यर्थः। यमुनोपवने यमुनाया उपवने, स्त्रीगणैः वृतः रामः, रेमे ॥ १७ ॥ वरुणेति ॥ वारुणी सुधया सहोत्पन्ना मदिरा देवी, वरुणप्रेषिता वरुणेन प्रेरिता सती, इदमेव तस्या वारुणीशब्दप्रवृत्तौ निमित्तम्। वृक्षकोटरात्, पतन्ती अधःस्रवन्ती सती, स्वगन्धेन सर्वं तद्वनं, अध्यवासयत् परिमलीचकार ॥ १८ ॥

### कृष्णप्रिया

भगवान श्रीकृष्ण की इस प्रकार बातें करने पर उनके नेत्रों को प्रियतम श्रीकृष्ण का मधुर हास्य, मधुर वार्तालाप, हृदयहारी अवलोकन, ललित गति, प्रेमपूर्ण आलिङ्गन आदि नेत्रों के सामने प्रकट हो गये। उन सबका अनुसंधान होने पर गोपीजन रोने लगे ॥ १५ ॥ राजन् परीक्षित ! अनुनय एवं विनय करने में अत्यन्त कुशल श्रीबलभद्रजी महाराज ने भगवान् श्रीकृष्ण के हृदयङ्गम और मनःशान्ति करने वाले भाव प्रचुर वचनामृतों को वारंवार सुनाकर गोपियों को सान्त्वन दिया ॥ १६ ॥ पुनः सन्तोष प्रदान करने के लिये बलभद्रजी ने चैत्र-वैशाख दो महीने नन्दजी के गोकुल में बिताये। बलरामजी रात्रि के समय गोपीजन के बीच में रहकर उनके आनन्द की पुष्टि करने लगे। खुद ही राम आनन्द है उनके लिये यह तो स्वाभाविक था ॥ १७ ॥ उस वसन्त ऋतु में कुमुदिनी पुष्पों की सुगन्ध से सुवासित, मन्द-मन्द चलती वायु से सेवित एवं पूर्णिमा के पूर्ण चन्द्रमा की चांदनी फैलकर श्रीयमुनोपकूलवती वन-उपवन को उज्वल कर रही हैं और भगवान बलभद्रजी स्त्रीवृन्द के साथ वहाँ विहार कर रहे हैं ॥ १८ ॥

**वरुणप्रेषिता देवी वारुणी वृक्षकोटरात्। पतन्ती तद् वनं सर्वं स्वगन्धेना[1]ऽध्यवासयत् ॥ १९ ॥**
**तं गन्धं मधुधाराया वायुनोपहृतं बलः। आघ्रायोपगतस्तत्र ललनाभिः [2]समं पपौ ॥ २० ॥**
**उपगीयमानचरितो वनिताभिर्हलायुधः। वनेषु व्यचरत् क्षीबो मदविह्वल [3]लोचनः ॥ २१ ॥[4]**
**[5]स्रग्व्येककुण्डलो मत्तो वैजयन्त्या च मालया। बिभ्रत् स्मितमुखाम्भोजं स्वेदप्रालेयभूषितम् ॥ २२ ॥**

---

१. सौरभेणा—विज. । २. पपौ समम्—प्रा. पा. । ३. माहेन्द्र इव वारणः—विज. ।

४. उपगीयमान उद्गायन् वनिताशोभिमण्डले। रेमे करेणु यूथेषु माहेन्द इव वारणः ॥—अधिक: वीर. ।

नेदुर्दुन्दुभयो व्योम्नि ववृषुः कुसुमैर्मुदा। गन्धर्वा मुनयो रामं तद्वीर्यैरीडिरे मुदा ॥—अधिक. वीर. विज. ।

५. शुभैक—विज. ।

कर्दमक्षमा

अन्वयः—वरुणप्रेषिता, वृक्षकोटरात्, पतन्ती, वारुणी, सर्वम्, तत्वनम्, स्वगन्धेन, अध्यवासयत्, बलः, वायुना, उपहृतम्, तम्, गन्धम्, आघ्राय, तत्र, उपगतः, ललनाभिः, समम्, पपौ ॥ १९-२० ॥ वनिताभिः, उपगीयमानचरितः, हलायुधः, मदविह्वललोचनः, क्षीबः, रामः, वनेषु, व्यचरत् ॥ २१ ॥ स्रग्वी, एककुण्डलः, च, वैजयन्त्या, मालया, मत्तः, स्वेदप्रालेयभूषितम्, स्मितमुखाम्भोजम्, बिभ्रत्, व्यचरत् ॥ २२ ॥

श्रीधरस्वामिविरचिता भावार्थदीपिका

वारुणी सुधया सहोत्पन्ना मदिरा ॥ १९-२० ॥ क्षीबो मत्तः ॥ २१ ॥ स्वेद एव प्रालेयं हिमं तेन भूषितम् ॥ २२ ॥

श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

अध्यवासयत् सुगन्धितं चकार । प्राकृतमदिरातो वैलक्षण्यमाह-देवी देवतारूपा लक्ष्मीसहोदरीत्वादिति भावः ॥१९॥ तमपूर्वम् । यत्र वृक्षात्पतति तत्रेत्यर्थः । 'महेला ललना रामा' इति धरणिः ॥ २० ॥ वन्यंते सेव्यन्ते कामिभिरिति वनिताः स्त्रियः । 'वन संभक्तौ' कर्मणि क्तः ॥ २१ ॥ वैजयन्त्या पंचरत्नरचितया ॥ २२ ॥

श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी

देवी तन्मदिराधिष्ठात्री वारुणी वरुणकन्या सैव वृक्षकोटरात् श्रीवृन्दावनकदम्बकुहराद्धारारूपेण पतन्तीत्यधिष्ठानाधिष्ठात्र्योरभेदेन निर्देशो नद्यादिवत्, स च द्वयोरपि लाभविवक्षया अस्या वारुण्या निषिद्धवारुणीभिन्नत्वसूचनाय च तथा हरिवंशे तं प्रति तस्या एव वाक्यं "समीपं प्रेषिता पित्रा वरुणेन तवानघ" इति अध्यवासयत् स्वसौरभ्येन पूर्वतोऽप्यधिकं वासयामास ॥ १९ ॥ तत्रेत्यतितृष्णया तत्र स्थान एव तन्मधु पपौ बल इति बलाविर्भावविशेषं बलात् स्त्रीणां तत्पायनञ्च सूचयति ॥ २० ॥ हलायुध इति स्कन्धन्यस्तलाङ्गलत्वाभिप्रायेण तत्प्रयोजनं चाग्रे व्यक्तं भावि । मदेन विह्वले घूर्णिते लोचने यस्य सः ॥ २१ ॥ स्रग्वीति सार्द्धकम् आपीडादिरूपेणानेकमालायुक्तः वैजयन्त्या च पञ्चवर्णया लक्षितः स्मितयुक्तं मुखाम्भोजं बिभ्रत् धारणस्य विशेषेण तात्पर्यं, स च विशेषतो वर्णितः श्रीहरिवंशे—

"शिरसा चारुकेशेन किञ्चिदावृत्तमौलिना । श्रवणेकावलम्बेन कुण्डलेन विराजिता ॥
चन्दनार्द्रेण पीतेन वनमालावलम्बिना । विबभावुरसा रामः कैलासेनेव मन्दरः ॥
नीले वसानो वसने प्रत्यग्रजदलप्रभे । रराज वपुषा शुभ्रस्तिभिरोधैर्यथा शशी ॥
लाङ्गलेनावसक्तेन भुजगाभोगवर्त्तिना । तथा भुजाग्रश्लिष्टेन मुसलेन च भास्वता ॥
स मत्तो बलिनां श्रेष्ठो रराजाघूर्णिताननः । शैशिरीषु त्रियामासु यथा खेदालसः शशी ॥ इति ॥ २२ ॥

श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी

देवी अमृतमथनोत्पन्नतया लोकातीता, मदिराधिष्ठात्री देवता वा; वारुणीति वरुणोद्भूतत्वादिना तदाख्ययैव प्रसिद्धत्वात्; तथा च श्रीहरिवंशे तं प्रति तस्या एव वाक्यम्—'समीपं प्रेषिता पित्रा वरुणेन तवानघ' इति वृक्षकोटरात् श्रीवृन्दावनकन्दरकुहरात् पतन्ती धारारूपेण अधि अधिकमवासयदिति; स्वत एव पूर्वं विचित्रसौरभ्यवासितमधुना स्वकीयेन गन्धविशेषेण वासितमकरोदित्यर्थः ॥ १९ ॥ उप तद्वारान्तिकमागतः सन्नतितृष्णया तत्र तत्स्थान एव पपौ तन्मधु । बल इति तत्पानाधिक्ये सामर्थ्यम् । तथा बलात् स्त्रीणां तत्पायनञ्च सूचयति—हलायुध इति स्कन्धन्यस्त-लांगलाभिप्रायेण; तत्प्रयोजनञ्चाग्रे व्यक्तं भावि । मदेन स्वभावतो मद्यपानाद्वा मत्ततया विह्वले घूर्णिते लोचने यस्य सः ॥ २०-२३ ॥

श्रीमद्वीरराघवाचार्यकृता भागवतचन्द्रचन्द्रिका

वरुणेति । वारुणी सुधया सहोत्पन्ना मदिरा सा च वरुणेन प्रेरिता सती इदमेव तस्यां वारुणीशब्दप्रवृत्तौ निमित्तं वृक्षकोटरादापतन्ती अधस्स्रवन्ती स्वगन्धेन तद्वनमध्यवासयत्परिमलयाञ्चकारेत्यर्थः ॥ १९ ॥ तमिति तं वायुनोपहृतं घ्राणं प्रत्यानीतं मधुधारायाः गन्धमाघ्राय तत्रागतो बलो रामः स्त्रीभिः सह पपौ पीतवान् ॥ २० ॥ वनितानां शोभिनि मण्डले उपगीयमानः स्वयञ्चोद्गायन् रेमे यथा करेणूनां इभीनाम् यूथेषु माहेन्द्रो वारणो गजः ऐरावतस्तद्वत् ॥ क ॥ नेदुरिति । ववृषुः देवा इत्यध्याहारः मुदा हर्षेण तस्य रामस्य वीर्यैः वीर्यप्रकाशकैर्वचोभिरीडिरे तुष्टुवुः ॥ ख ॥ इत्थमुपगीयमानानि चरितानि यस्य सः क्षीबो मत्तः मदेन विह्वले चञ्चले लोचने यस्य सः वनिताभिः सह वनेषु चचार ॥ २१ ॥ तमेव विशिनष्टि—स्रग्वीति । स्रगस्यास्तीति तथा एकं कुण्डलं यस्य सः वनमालयाऽलङ्कृत इति शेषः । स्वेद एव प्रालेयं हिमं तेन भूषितं स्मितयुक्तं मुखाम्भोजं बिभ्राण ॥ २२ ॥

**श्रीविजयध्वजतीर्थकृता पदरत्नावली**

अध्यवासयत्संस्कारोपेतमकरोत् ॥ १९-२० ॥ ईडिरे तुष्टुवुः ॥ ख ॥ क्षीवः मद्यपानमत्तः ॥ २१ ॥ स्वेदप्रालेयेन धर्महिमजलेन भूषितम् ॥ २२ ॥

**श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी**

देवी तन्मदिराधिष्ठात्री वारुणी वरुणकन्या सेव वृक्षकोटरात् कदम्बकुहराद्धारारूपेण पतन्ती तथा च हरिवंशे तं प्रति तस्या वाक्यं "समीपं प्रेषिता पित्रा वरुणेन तवानघ" इति वारुणीयं सुधया सहोत्पन्ना मदिरेति श्रीस्वामिचरणाः अध्यवासयत् पूर्वतोऽप्यधिकं सुगन्धीचकार ॥ १९-२१ ॥ स्वेद एव प्रालेयं हिमस्तेन भूषितम् ॥ २२ ॥

**गूढार्थदीपिनी**

कोटरात् रन्ध्रात् निःसरन्ती वारुणी वरुणकन्या देवी मदिराधिष्ठात्री लक्ष्मीसहोदरी अतो दिव्यत्वात् तद्ग्रहणेऽपि न दोषः । अध्यवासयत् सुगन्धितं चकार ॥१९॥ मधुधारायाः मदिराया गन्धं उपहृतं घ्राणं प्रत्यानीतं यत्र पतति तत्र उपगतः प्राप्तः ॥ २० ॥ उपेति युग्मम् । क्षीबो मत्तः । वैजयन्ती पञ्चरत्नग्रथिता । स्वेद एव प्रालेयं हिमम् ॥ २१-२२ ॥

**श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः**

देवी मदिराधिष्ठात्री वारुणी "समीपं प्रेषिता पित्रा वरुणेन तवानघ" इति हरिवंशात् वरुणकन्या ॥ १९-२० ॥ क्षीवो मत्तः ॥ २१ ॥ स्वेद एव प्रालेयं हिमस्तेन भूषितं स्मितयुक्तं मुखाम्बुजं बिभ्रत् बिभ्राणः ॥ २२ ॥

**श्रीमद्वल्लभाचार्य्यकृता सुबोधिनी**

तस्यानुभावमाह **वरुणप्रेषितेति** । वारुणी काचिल्लक्ष्म्या सह अमृतमथने उत्पन्ना सा अधिष्ठात्री देवता सर्ववृक्षेषु तिष्ठति । सा दैत्येभ्यो दत्तेति दैत्यराजाधीना सा यस्मिन्नेव वृक्षे अधितिष्ठति, तत एव मधुधारा उत्पद्यते । सङ्कर्षणश्च तामसी भगवन्मूर्तिः । मधुना सम्प्रीतो भवतीति दैत्यराजेन वरुणेनाज्ञप्ता देवतात्वात् यथासुखं यथाभिलषितगन्धरसरूपा पतति । अतो वृक्षकोटरात्पतन्ती सर्वमेव तद्वनं स्वगन्धेन अध्यवासयत् । यथा स गन्धः सर्वव्यामोहको भवति ॥ १९ ॥ अत एव गन्धेनैव वशीकृतो बलभद्रः पपावित्याह **तद्गन्धं मधुधाराया** इति । तत्सर्ववनव्याप्तम् । वायुनोपहृतमिति दूरेपि क्रीडन् आघ्रायोपगतः । उभयेषां पूर्णरमणे भगवत्स्मरणेन कदाचित्सङ्कोचः स्यात्, रसो वा नोत्पद्येत, अत एतदर्थं ललनाभिः समं पपौ ॥ २० ॥ ततो गतक्लेशास्ताः रतिपोषिका जाता इति वक्तुं तासां गानमाह **उपगीयमानचरित** इति । उपगीयमानं चरितं यस्येति । तस्मिन् रुचिरुक्ता । यतो **वनिताः** वनमिताः इति । **हलायुध** इति तस्यापि विचाराभाव उक्तः । किञ्च । क्षीबो मत्तः । अनेन बिचाराभावः सम्यक् निरूपितः । मदेन विह्वले लोचने यस्येति लोकान् पश्यन्नपि न पश्यतीत्युक्तम् ॥ २१ ॥ एवमवस्थापन्नस्य आधिदैविकं रूपं प्रकटीभूतमिति ज्ञापयितुं वर्णयति **स्रग्व्येककुण्डलो मत्त** इति । चत्वारि विशेषणानि चतुर्मूर्तित्वसम्पत्तये निरूपितानि । **स्रग्वी** पुष्पमालापरिवीताङ्गः, एकमेव कुण्डलं यस्य । सङ्कर्षणस्य तदसाधारणं चिह्नम् । योग एव, न साङ्ख्यमिति । मत्तः स्वभावतः । वैजयन्त्या नवरत्नखचितया आपादलम्बिन्या मालया स हसितमुखाम्बुजं श्वेतमुखकमलं बिभ्रत् । स्वेदरूपाः प्रालेयाः हिमकणाः । तेन रूषितमिति । अनेन श्रमः सहज एव शोभाकरः, न तु क्लेशजनित इति सूचितम् । ते प्रस्वेदकणाः न शीतला भवन्तीति ॥ २२ ॥

**श्रीसुबोधिनी-सारः**

वरुणेन प्रेषिता वारुणी देवी मदिरामृतसहजा वृक्षकोटरात् छिद्रात् पतंती सती तत्सर्वं सौगंध्येन व्याप्नोत् ॥ १९ ॥ वायुनोपहृतमानीतं मधुधारायास्तं गंधम् आघ्राय तत्र स्थाने उपगतः प्राप्तो बलो ललनाभिः स्त्रीभिः समं सह पपौ ॥ २० ॥ वनिताभिरुपगीयमानं कीर्त्यमानं चरितं यस्य स हलायुधो रामः क्षीबो मत्तो मदेन विह्वले लोचने यस्य स वनेषु व्यचरत् ॥२१॥ स्रग्वी माली एकं कुडलं यस्य मत्तः वैजयंत्या मालयोपलक्षितः स्वेद एव प्रालेयं मिहिका तेन भूषितं स्मितयुक्तं मुखांभोजं मुखपद्मं बिभ्रत् ॥ २२ ॥

**श्रीविट्ठलरायात्मजश्रीवल्लभकृतलेखः**

**तद्गन्धमित्यत्र** । **भगवत्स्मरणेनेति** । रामाविष्टस्य भगवतो ज्ञानेनेत्यर्थः । **स्रग्व्येककुण्डल** इत्यत्र । **चतुर्मूर्तित्वेति** । वासुदेवाविष्टसङ्कर्षणाविष्टशेषो बल इति जन्मप्रकरणे निरूपितम् । तथा च त्रिमूर्तित्वं सर्वदा । अधुना पुरुषोत्तमोप्याविष्ट इति

चतुर्मूर्तित्वसम्पत्तिरिति संख्यातात्पर्यमुक्तम् । योग एवेति । सङ्कर्षणो हि वेदात्मकः । सांख्ये चात्मानात्मविवेकः । वेदे सर्वस्यैवात्मरूपत्वादयं विवेको न तत्सम्मत इति भावः । तर्हीति । मत्तत्वे सतीत्यर्थः ।

### गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

तस्य प्रभावमाह—वरुणेति । वरुणेन रामसेवार्थं प्रेषिता वारुणी तस्य कन्या देवी मदिराधिष्ठात्री देवता वृक्षकोटरात् पतन्ती अधःस्रवन्ती स्वगन्धेन सर्वमेव तद्वनमध्यवासयत् सुगन्धीचकारेत्यर्थः ॥ १९ ॥ वायुनोपहृतं स्वघ्राणं प्रत्यानीतं तं मधुधाराया गन्धमाघ्राय तत्रागतो बलो रामः स्त्रीभिः समं सह तां वारुणीं पपौ ॥ २० ॥ देवगन्धर्वादिभिरुपगीयमानं चरितं यस्य सः क्षीबो मत्तः मदेन विह्वले लोचने यस्य सः हलायुधो बलभद्रो वनिताभिः सह वनेषु व्यचरत् ॥ २१ ॥ तमेव पुनर्विशिनष्टि—स्रग्वी पुष्पमालापरिवीताङ्गः, एकमेव कुण्डलं यस्य सः, मत्तः स्वभावतोपि मत्तसदृशः, वैजयन्त्या नवरत्नखचितया आपादलम्बिन्या मालयालंकृत इति शेषः । स्वेद एव प्रालेयं हिमं तेन भूषितं युक्तं स्मितयुक्तं च मुखाम्भोजं बिभ्रत् बिभ्राणः व्यचरदिति पूर्वेणैवान्वयः ॥ २२ ॥

### अन्वितार्थप्रकाशिका

वरुणेति ॥ वरुणेन रामसेवार्थं प्रेषिता वारुणी तस्य कन्या देवी मदिराधिष्ठात्री देवता सुधया सहोत्पन्ना लौकिकनिषिद्धमदिराभिन्ना वृक्षकोटरात् पतन्ती धारारूपेण अधःस्रवन्ती स्वगन्धेन सर्वमेव तद्वनमध्यवासयत् सुगन्धीचकारेत्यर्थं ॥ १९ ॥ तमिति ॥ वायुनोपहृतं स्वघ्राणं प्रत्यानीतं तं मधुधाराया गन्धमाघ्राय तत्रागतो बलो रामः ललनाभिः स्त्रीभिः समं सह तां वारुणीं पपौ ॥ २० ॥ उपेति युग्मम् ॥ देवगन्धर्वादिभिरुपगीयमानं चरितं यस्य सः क्षीबो मत्तः मदेन विह्वले लोचने यस्य सः स्रग्वी पुष्पमालापरिवीताङ्ग एकमेव कुण्डलं यस्य सः मत्तः स्वभावतोऽपि मत्तसदृशः वैजयन्त्या नानारत्नरचितया आपादलम्बिन्या मालयाऽलङ्कृत इति शेषः । स्वेद एव प्रालेयं हिमं तेन भूषितं युक्तं स्मितयुक्तं च मुखाम्भोजं बिभ्रत् बिभ्राणः हलायुधः वनिताभिः सह वनेषु व्यचरत् ॥ २१-२२ ॥

### श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्

वारुणी वरुणपुत्री सर्वमदाधिष्ठात्री देवी वृक्षकोटराद्धारारूपेण पतंतीत्यनेन शास्त्रनिषिद्धवारुणी भिन्नेयमिति बोध्यं ॥ १९-२० ॥ क्षीबो मत्तः ॥ २१ ॥ स्वेद एव प्रालेयं हिमकरणस्तेन भूषितं ॥ २२ ॥

### भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

तमिति ॥ बलः, वायुना उपहृतं घ्राणं प्रत्यानीतं, मधुधाराया वारुणीमदिराधारायाः, तं गन्धं, आघ्राय, तत्र उपगतः सन्, ललनाभिः समं स्त्रीभिः सह, पपौ पीतवान् ॥ १९ ॥ उपगीयमान इति ॥ वनितानां शोभि यत् मण्डलं तस्मिन्, उपगीयमानः वनिताभिरुपगीतः, स्वयं च, उद्गायन्, करेणूनामिभीनां यूथानि तेषु, माहेन्द्रो महेन्द्रसंबन्धी, वारण ऐरावतगजः, यथा तद्वत्, रेमे ॥ २० ॥ उपगीयमान इति ॥ वनिताभिः, उपगीयमानानि चरितानि यस्य सः, मदेन विह्वले लोचने यस्य सः, क्षीबो मत्तः, हलायुधो बलः, वनेषु, व्यचरत् विचचार ॥ २१ ॥ तमेव विशिनष्टि ॥ स्रग्वीति ॥ स्रगस्यास्तीति स्रग्वी, एकं कुण्डलं यस्य सः, मत्तः, वैजयन्त्या मालया च, अलंकृत इति शेषः । स्वेद एव प्रालेयं हिमं तेन भूषितं शोभितं, स्मितमुखाम्भोजं स्मितयुक्तं मुखपद्मं, बिभ्रत् बिभ्राणः ॥ २२ ॥

### कृष्णप्रिया

भगवान वरुण द्वारा भेजी हुई वारुणी देवी वृक्ष के कोटर से निकलकर प्रवाहित हो रही थी और उसने अपने सुगन्ध से सम्पूर्ण वन को सुगन्धित कर दिया था ॥ १९ ॥ उस मधुधारा की सुगन्ध को वायुदेवता ने बलरामजी के पास पहुँचाया। अपने आँगन आये अतिथि को उपहार दिया था । उसकी सुगन्ध से आकृष्ट होकर बलरामजी ललना वृन्द के साथ वहाँ आ गये और उस वृन्द के साथ उस मधुधारा का पान किया ॥ २० ॥ उस वन में व्रजवनिता वृन्द श्री बलरामजी के चारो ओर उनके मङ्गलमय चरित्र का गान कर रही थी । श्री बलभद्रजी मदान्विष्ट होकर वन में विचर रहे थे । उस समय उनके लोचन मधुधारा रस के पान से विह्वल हो रहे थे ॥ २१ ॥ कण्ठ में हार था, उनके एक कान में कुण्डल शोभा दे रहा था । आपादलम्बिनि वैजयन्ती माला अधिक शोभा पा रही थी । वह आनन्दमग्न थे, मुखारविन्द पर स्मित हास्य झलक रहा था, पुनः मुख कमल पर प्रस्वेद बिन्दु मुक्तामौक्तिक से झलक रहे थे ॥ २२ ॥

स आजुहाव यमुनां जलक्रीडार्थमीश्वरः ।
'निजं वाक्यमनादृत्य मत्त इत्यापगां बलः । अनागतां हलाग्रेण कुपितो विचकर्ष ह ॥ २३ ॥
पापे त्वं मामवज्ञाय यन्नायासि मयाऽऽहुता । नेष्ये त्वां लाङ्गलाग्रेण शतधा कामचारिणीम् ॥ २४ ॥
एवं निर्भर्त्सिता भीता यमुना यदुनन्दनम् । उवाच चकिता वाचं पतिता पादयोर्नृप ॥ २५ ॥
'राम राम महाबाहो न जाने तव पौरुषम्' । यस्यैकांशेन विधृता जगती जगतः पते ॥ २६ ॥

कर्वमक्षमा

अन्वयः—सः, ईश्वरः, यमुनाम्, जलक्रीडार्थम्, आजुहाव, मत्तः, इति, निजम्, वाक्यम्, अनादृत्य, अनागताम्, आपगाम्, बलः, कुपितः, सन्, हलाग्रेण, ह, विचकर्ष ॥ २३ ॥ पापे, मया, आहुता, त्वम्, माम्, अवज्ञाय, यत्, न आयासि, कामचारिणीम्, त्वाम्, लाङ्गलाग्रेण, शतधा, नेष्ये ॥ २४ ॥ नृप, एवम्, निर्भर्त्सिता, भीता, यमुना, चकिता, पादयोः, पतिता, यदुनन्दनम्, वाचम्, उवाच; राम ! राम ! महाबाहो ! जगतः पते ! यस्य, एकांशेन, जगती, विधृता, इति, तव, विक्रमम्, न, जाने ॥ २६ ॥

श्रीधरस्वामिविरचिता भावार्थदीपिका

मत्तोऽयमित्यनादृत्यानागतामापगां नदीम् ॥ २३ ॥ आहुता आहूता यद्यस्मान्नागच्छसि तस्मात् नेष्ये गमयिष्यामि ॥ २४ ॥ चकिता कंपिता ॥ २५ ॥ एकांशेन शेषाख्येन ॥ २६-२७ ॥

श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

अयं बलो मत्त इति हेतोरनागतामप्राप्ताम् । मत्तस्य वाक्यं न प्रमाणं यतो नदीमप्याह्वयसे, मज्जले विजिहीर्षा चेत्तर्हि स्वयमेवागच्छत्वित्यनादृत्यानागताम् ॥ २३ ॥ आहुतेति छांदसो ह्रस्वः । वस्तुतस्तु पापे निमित्ते लोकानां पापनिवृत्त्यर्थं स्वेच्छयेतस्ततो बहुधा गामिनीमित्यर्थः । देवी चेयं संज्ञाछायान्यायेन लक्ष्म्या विविधमूर्तिवत्तन्महिषीति ज्ञेयम् । यमुना चेयं समुद्रभार्या । समुद्रस्यापि भगवद्विभूतित्वात्तद्भार्या त्वमपि कालिन्द्याः संगच्छत एवेति । वस्तुतस्तु द्वितीयव्यूहस्य भार्येयं कांतिरिति ॥ २४ ॥ एवम् 'पापे त्वं माम्' इत्याद्युक्तप्रकारेण ॥ २५ ॥ जगती भूः ॥ २६ ॥

श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी

निजमित्यत्र नेतीति पाठः क्वचित् । स दुरन्वयः स्वाम्यसम्मतश्च ॥ २३ ॥ पापे इति युग्मकम् । कामचारिणीं स्वैरिणीं वस्तुतस्तु पापे निमित्ते लोकानां पापनिवर्त्तनार्थं स्वेच्छयेतस्ततो बहुधा गामिनीमित्यर्थः । उवाचेत्युक्तवाऽपि वाचमिति पौनरुक्त्यं जलमयरूपेणेव तद्वचनात्तत्पादपतनाच्च विस्मयेन देवीरूपा तु सम्प्रति श्रीभगवन्महिषीरूपेति अथवा वाचमिति वाग्वैशिष्ट्यव्यञ्जनाय देवी चेयं श्रीभगवद्रूपानुसारेण लक्ष्म्याः विविधमूर्त्तिवद्भगवन्महिषीवरायाः श्रीकालिन्द्या एव संज्ञा छायान्यायेन तच्छायाविभूतिरूपा भगवत एव महाविभूतेः समुद्रस्य भार्य्यास्वरूपा मूर्त्तिरेका ज्ञेया । तथा च तत्रैव प्रत्युवाचार्णववधूमिति तां प्रति सम्बोधनं च सागराङ्गने इति ॥ २४-२५ ॥ राम हे जगद्रमण ! अतो मां पीडयितुं नार्हसीति भावः । वीप्सा भीतत्वात् किम्वा क्रुद्धस्य तस्याभिमुखीकरणमयदैन्यात् । हे महाबाहो परमबलिष्ठ ! विक्रमं प्रभावं न जाने न ज्ञातुं शक्तास्मीत्यर्थः । तत्र हेतुः, यस्येति अत्र षष्ठीनिर्द्देशादेकांशस्यैव कर्तृत्वं लक्ष्यते अत एकांशत्वमवतारविशेषत्वमेव न त्वङ्गविशेषत्वं तथा च सति यच्छब्दस्य कर्तृत्वे प्राप्ते तृतीयानिर्देश एव स्यादिति विचार्य्य तैरपि व्याख्यातं शेषाख्येनेति जगती पृथ्वी विशेषणानायासेन धृतास्तीति शेषः । किमर्थं हे जगतः पते जगद्रक्षार्थमित्यर्थः । मादृशनदीसमुद्रादिधारिणी धरणी यस्यैकांशेन विधृते तद्विक्रमज्ञानं मादृशामशक्यमेव स्यादिति भावः ॥ २६ ॥

श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी

स्रग्वी मालांनिर्म्मितैक-कर्णाभरणवानित्यर्थः, यद्वा, आपीडादिरूपेणानेकान्यमालायुक्तो वैजयन्त्या च पञ्चवर्णया विशिष्टः, स्मितयुक्तं मुखाम्भोजं बिभ्रत्, धारणस्य विशेषणे तात्पर्य्यम् । स च विशेषतो वर्णितः श्रीहरिवंशे ( विष्णु० प० ४६।२५-२९ )—

१. नेति-श्रीधर. टि. । २. यमुनोवाच-च. पु. मू. । ३. विक्रमम्-श्रीधरादयः ।

'शिरसा चारुकेशेन किञ्चिदावृतमौलिना। श्रवणैकावलम्बेन कुण्डलेन विराजता॥
चन्दनार्द्रेण पीनेन वनमालावलम्बिता। विबभावुरसा रामः कैलासेनेव मन्दरः॥
नीले वसानो वसने प्रत्यग्रजलदप्रभे। रराज वपुषा शुभ्रस्तिमिरौघैर्यथा शशी॥
लांगलेनावसक्तेन भुजगाभोगवर्त्तिना। तथा भुजाग्रश्लिष्टेन मुषलेन च भास्वता॥
स मत्तो बलिनां श्रेष्ठो रराजाघूर्णिताननः। शैशिरीषु त्रियामासु यथा खेदालसः शशी॥' इति॥ २४॥

ईश्वरस्तदाह्वानादौ समर्थः परस्वच्छन्दो वा, आ सम्यक् अप नीचैर्गच्छतीत्यापगा ताम्, इति गाढ़ाकर्षणान्निम्नखातेनागमनयोग्यतोक्ता, विशेषेण गभीरत्वादिना चकर्ष, यतो बलो बलिष्ठश्रेष्ठ इत्यर्थः। ह स्फुटम्, अन्यत्तैर्व्याख्यातम्। यद्वा, आपगामित्यागमनासामर्थ्यं सूचितम्। तथापि विचकर्ष, कुतः? मत्त इत्यस्माद्धेतोः, अत एव कुपितः।२५। कामचारिणीं स्वैरिणीम्, वस्तुतस्तु पापे निमित्ते लोकानां पापनिवर्तनार्थं स्वेच्छयेतस्ततो बहुधा गामिनीमित्यर्थः॥ २६॥

### श्रीमद्वीरराघवाचार्यकृता भागवतचन्द्रचन्द्रिका

तस्यैव चरित्रान्तरमाह—स इत्यादिना। एवं सर्वानिशा इत्यतः प्राक्तनेन ग्रन्थेन। ईश्वरः प्रभुः स रामः यमुनामाजुहाव आहूतवान् ततो मत्तोयमित्यात्मवावयमनादृत्यानागतामापगां यमुनां कुपितो बलरामः हलाग्रेण विचकर्षाकृष्टवान् हेति विस्मये॥ २३॥ पापे इति। आहुतेति छेदः। हे पापे यद्यतो मया त्वमाहूता मामवज्ञायावहेल्य नागतास्यतस्त्वां स्वैरचारिणीं शतधा नेष्यामि शतकुल्यावतीं करिष्ये॥ २४॥ इत्येवं निर्भर्त्सिताऽत एव भीता यमुना तथैव कर्त्तुमयं प्रभुरिति शङ्किता हे नृप! पादयोः पतित्वा यदुनन्दनं रामं प्रति उवाच॥ २५॥ वाचमेवाह—रामेति द्वाभ्याम्। तव विक्रमं महिमानं न जाने अपारत्वादिति भावः। तदेव स्पष्टयितुमाह—यस्येति। हे जगताम्पते षष्ठ्यन्तपाठे तस्य यस्य एकांशेन सहस्रतममूर्द्धैकदेशेन जगती पृथ्वी विधृता विशेषेण धृता तस्य तवेति सम्बन्धः॥ २६॥

### श्रीविजयध्वजतीर्थकृता पदरत्नावली

हे पापे! आहुता आहूता॥ २३–२६॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

एवमिति यमुनेयं द्वारकास्थायाः श्रीकृष्णपट्टमहिष्याच्छायारूपैव। एषैव च समुद्रपत्नीति तत्र तत्र प्रसिद्धिः। तथाच हरिवंशे। प्रत्युवाचार्णववधूमिति। तां प्रति सम्बोधनञ्च सागराङ्गने॥ २५॥ राम राम इति॥ २६–२८॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

मत्त इति। मत्तस्य वचनं न प्रमाणं यतो नदीमपि माम् आह्वयते मदीयजले विजिहीर्षा चेत् स्वयमायातु इत्यनादृत्य नागताम्॥ २३॥ आहुता आहूता यमुना वाचमुवाचेति यमुनेयं नदीरूपा समुद्रभार्य्या कालिन्द्याविभूतिर्ज्ञेया ननु सा तथा च हरिवंशे "प्रत्युवाचार्णववधूम्" इति॥ २४–२५॥ एकांशेन शेषाख्येन॥ २६॥

### गूढार्थदीपिनी

स इति सार्द्धम्। मत्तोऽयमित्यनादृत्य आपगां नदीम्। ह कोपे॥ २३॥ शतधा शतकुल्यावती करिष्ये। स्वेच्छाचारिणीम्॥ २४॥ चकिता कम्पिता सती॥ २५॥ एकांशेन शेषाख्येन। जगती पृथ्वी॥ २६॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

यमुनां कालिन्दीं भगवदवतारस्य भगवत्प्रियाधर्षणलीला न विरुद्धा॥ २३॥ आहुता आहूता॥ २४॥ चकिता शङ्किता॥ २५॥ एकांशेन शेषाख्येन॥ २६–२७॥

### श्रीमद्वल्लभाचार्यकृता सुबोधिनी

तर्हि स्वरूपनाश एव वारुण्या जात इत्याशङ्क्य, तथा प्रतीतवन्तं देवमपि नाशयतीति ज्ञापयितुं यमुनां तथा गन्यमानां निग्रहं चिकीर्षुराकारितवानित्याह स आजुहावेति। केवलं निग्रहार्थमाकारणे सुतरां मत्तता भवतीति यत्रैव पीत्वा तिष्ठति, तत्रैव जलक्रीडा कर्तव्येति जलक्रीडार्थमित्युक्तम्। नन्वेवं क्रुद्धेऽपि मत्तता भवत्येव, नहीश्वरमर्यादया स्थापिता नद्यः क्वचिदायान्ति, आगता वा कथं न मर्यादाभङ्गं कुर्युः, तत्राह ईश्वर इति। न हि स्वार्थमेव मर्यादा भवति, अन्यथा क्रीडार्थं जगन्निर्माणमिति पक्षो न स्यात्। नहीश्वरः ईशितव्यमुपसर्पति। ततो यमुनया विचारितम्, मत्तोऽयम्, मत्त एव अविचार्यैवा-

कारयतीति बलवाक्यमनादृत्य, आपगां नदीं अनागतां हलाग्रेण विचकर्ष। हलस्याप्याधिदैविकत्वात् देवतासहितां नदीं कूलेऽपि निम्नभावं सम्पाद्य, कुल्यामार्गेण नीतवान्। तदा देवतासहितं जलं स्वभावमार्गेणागच्छत् तेनैव मार्गेण गन्तुं प्रवृत्तम् ॥ २३ ॥ एतदपि मत्तकार्यमेवेत्याशङ्क्य ज्ञानपूर्वकं तथाकरणमित्याह **पापे त्वं मामवज्ञायेति**। मयाहुता आहूता। अथवा। यस्मात्त्वं मामवज्ञाय नागता, अतो मया हुता यथा हुता दग्धा भवति, एवं शुष्केत्यर्थः। न केवलं शुष्कमात्रं निग्रहः, किन्तु अगृह्यामपि करिष्यामि, यतो वृष्टिजलेनापि लोका नदीत्वं न मंस्यन्त इति तदाह **नेष्ये त्वां लाङ्गलाग्रेणेति**। यथा केदारेण सिक्तं जलं गच्छति, ईश्वरवचनोल्लङ्घने महत्पापम्, पापे च दण्डादिकं न दोषायेति **पाप इति** सम्बोधनम्। तस्या अपराधमाह **कामचारिणीमिति** ॥ २४ ॥ इयं न तस्य प्रतिज्ञा, किन्तु निर्भर्त्सनमात्रमित्याह **एवं निर्भर्त्सितेति**। आकर्षणसामर्थ्यं दर्शनादेव ज्ञातवती। सत्यमेव करिष्यतीति। ततो भीता। **यदुनन्दनं** भक्तकृपालुम्। **चकिता** आश्चर्ययुक्ता सती प्रवाहस्थानात् दूरे नीता उवाच। **पादयोः पतितेति** अपराधक्षमापनार्थम्। **नृपेति** सम्बोधनं **परिज्ञानार्थम्**। अल्पो न विश्वसतीति ॥ २५ ॥ तस्याः प्रार्थनामाह **राम रामेति**। आदरे वीप्सा। तेनावज्ञा परिहृता। **महाबाहो** इति स्वज्ञातं भगवत्सामर्थ्यमाह। तज्ज्ञानं सामान्यत एव, विशेषतो न जानामीत्याह **न जाने तव पौरुषमिति**। वस्तुतस्त्वं महाबाहुः। अहं परं न जान इति वा। ज्ञात्वैवापराधशान्त्यर्थं तथा वदतीत्याशङ्कायामाह **यस्यैकांशेनेति**। माहात्म्यं हि दृष्टं जानाति। नदी पुनः भूम्या एकदेशे भवति। 'भूमिरेव पञ्चाशत्कोटिविस्तीर्णा यस्य एकदेशेन विधृता भवति भूमण्डलं सर्षपायति यस्य मूर्ध्नीति वाक्यात्। तस्मादज्ञात्वा कृतोऽपराध इति क्षमा कर्तव्येति भावः। नन्वज्ञात्वा कृतेऽप्यपराधे दण्डो लोके दृष्ट इति चेत्, तत्राह **जगतः पत इति**। उदासीनव्यवस्थेयम्। पतिस्त्वज्ञानकृते न दण्डं करोति ॥ २६ ॥

### श्रीसुबोधिनी-सारः

ईश्वरः स जले क्रीडार्थं विहाराय यमुनामाजुहाव आहूतवान् निजं स्वीयं वाक्यमनादृत्य बलो मत्तः प्रमादीति हेतोरनागतां नायातामापगाम् अद्भिर्गच्छतीति पृषोदरादित्वात्तद्रूपां नदीं हलस्याग्रेण विचकर्ष कुपितः क्रुद्धः ह स्फुटम् ॥ २३ ॥ हे पापे मामवज्ञाय निंदित्वाऽपमान्य वा मयाहूता त्वं नायासि नागच्छसि यद्यतो हलाग्रेण कामचारिणी यथेष्टगामिनीं त्वां शतधा नेष्यामि ॥ २४ ॥ शुकोक्तिः। एवं निर्भर्त्सिता तिरस्कृता यमुना भीता पादयोः पतिता चकिता ससंभ्रमा यदुनंदनं रामं वाचमुवाच हे नृप ॥ २५ ॥ हे राम राम हे महाबाहो तव विक्रमं पराक्रमं न जाने नाहं वेद्मि हे जगतः पते यस्य एकांशेन शेषाख्येन एकेन शिरसेत्यन्ये जगती भूर्विधृता ॥ २६ ॥

### गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

तस्यैव चरितान्तरमाह—स इत्यादिना। स बलो जलक्रीडार्थं यमुनास्थल आजुहाव आहूतवान्। तदा च 'मत्तोऽयम् इति' मत्वा निजं वाक्यमनादृत्य अनागतां तामापगां नदीं कुपितः सन् हलाग्रेण विचकर्षेति सार्धेनान्वयः। ननु 'कथमेवमाह्वानमाकर्षणं च शक्यं' तत्राह—ईश्वर इति। ईश्वरलीलाया आश्चर्यं सूचयति—हेति ॥ २३ ॥ हे पापे! यत् यस्मात् मयाऽऽहूता त्वं मामवज्ञाय अनादृत्य न आयासि अतः कामचारिणीं इच्छाचारिणीं त्वां लाङ्गलाग्रेण शतधा नेष्ये शतकुल्यावतीं करिष्ये इति निर्भर्त्सितवांश्चेति शेषः ॥ २४ ॥ इत्येवं निर्भर्त्सिता अत एव भीता अत एव चकिता प्रकम्पिता पादयोः पतिता यमुना यदुनन्दनं बलं प्रत्युवाच। 'एवं प्रभावो नृपाणामपि दुर्लभ' इति सूचयन् सम्बोधयति—नृपेति ॥ २५ ॥ भयेनैव बहुधा सम्बोधयति—रामरामेति। तव विक्रमं पराक्रमं न जाने विस्मृतवती। 'इदानीं कथं ज्ञातवती' इत्यपेक्षायामाह—यस्येति। जगती पृथ्वी ॥ २६ ॥

### अन्वितार्थप्रकाशिका

स इति सार्द्धम् ॥ ईश्वरः सबलो जलक्रीडार्थं यमुनां स्थलं आजुहाव आहूतवान्। तदा च मत्तोऽयमिति मत्वा निजं वाक्यमनादृत्यानागतां तामापगां नदीं कुपितः सन् हलाग्रेण विचकर्ष। यमुनेयं नदीरूपा समुद्रभार्या छायारूपा कालिन्द्या विभूतिरूपा नतु सैव प्रत्युवाचार्णववधूमिति हरिवंशोक्तेः। पूर्वमुक्ता तु भगवत्पत्नी देवतारूपा मुख्या कालिन्दी ॥ २३ ॥ पापे इति ॥ हे पापे! यत् यस्मात् मया आहुता आहूता। ह्रस्वमार्षम्। त्वं मामवज्ञाय अनादृत्य न आयासि अतः कामचारिणीम् इच्छाचारिणीं त्वां लाङ्गलाग्रेण शतधा नेष्ये शतकुल्यावतीं करिष्ये इति निर्भर्त्सितवांश्चेति शेषः ॥ २४ ॥ एवमिति ॥ हे नृप! इत्येवं निर्भर्त्सिता अत एव भीता चकिता प्रकम्पिता पादयोः पतिता यमुना यदुनन्दनं बलं प्रति वाचमुवाच ॥ २५ ॥ रामेति ॥ हे राम! हे राम! हे महाबाहो! हे जगतः पते! यस्य एकांशेन शेषाख्येन जगती पृथ्वी विधृता तस्यानन्तमूर्तेः तव विक्रमं प्रभावम् अहं न जाने विस्मृतवती ॥ २६ ॥

**श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्**

मत्तोयमिति ज्ञानेन निजं वाक्यमनादृत्या नागतां आपगां यमुनां ।। २३ ।। मया आहूता आहूता यद्यतस्त्वं न आयासि नागच्छसि तस्मात् स्वेच्छाचारिणी त्वां शतधा नेष्ये प्रापयामि ।। २४ ।। चकिता वेपिता ।।२५।। यस्य तव एकांशेन शेषसंज्ञेन। जगती भूमिः ।। २६ ।।

**भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी**

तस्यैव चरित्रान्तरमाह स इत्यादिना एवं सर्वा निशा इत्यतः प्राक्तनेन ग्रन्थेन। स इति। ईश्वरः प्रभुः, सः बलः, जलक्रीडार्थं, यमुनां आजुहाव, ततः, मत्तः अयं इति ज्ञात्वा, निजं वाक्यमात्मवाक्यं, अनादृत्य अनागतां, आपगां यमुनां, कुपितः सन्, हलाग्रेण, ह स्फुटं, विचकर्ष। हेति विस्मये वा ।। २३ ।। पाप इति। हे पापे, यद्यतः, मया आहुता आहूता सत्यपि, त्वं मां अवज्ञाय अवहेल्य, न आयासि। अतः, कामचारिणीं स्वैरचारिणीं त्वां, लाङ्गलाग्रेण हलाग्रेण, शतधा नेष्ये शतकुल्यावतीं करिष्ये इत्यर्थः ।। २४ ।। एवमिति। एवं निर्भर्त्सिता, अत एव, भीता यमुना, चकिता यथोक्तं तथैव कर्त्तुमयं प्रभुरिति शङ्किता सती, हे नृप, पादयोः पतिता सती, पतित्वेत्यपि क्वचित्पाठः। यदुनन्दनं प्रति, वाचं उवाच ।। २५ ।। रामेति। हे राम, हे राम, हे महाबाहो, तव विक्रमं महिमानं, न जाने। अपारत्वादिति भावः। एतदेव स्पष्टयितुमाह। यस्येति। हे जगतः पते, यस्य तव, एकांशेन सहस्रतममूर्द्धैकदेशेन, केचित्तु एकांशेन शेषाख्येनेत्यूचुः। जगती पृथिवी, विधुता विशेषेण धृता। तस्य तवेति संबन्धः ।। २६ ।।

**कृष्णप्रिया**

सामर्थ्यवाले बलभद्रजी ने जलविहार के लिये श्रीयमुनाजी को निमंत्रण दिया। श्रीयमुनाजी ने यह माना कि यह तो मदान्विष्ट हो रहे हैं इसलिये इसके आदेश का अनादर किया और वहाँ नहीं आयी। तब शेषाविष्ट होकर राम ने अपने हल की नोंक से उन्हें खींचा ।। २३ ।। आविष्ट बलरामजी ने कहा अयि पापे यमुने! मेरे आमंत्रण की अवज्ञा करके यहाँ नहीं नहीं आ रही है यह मेरा तिरस्कार ही है। बड़ों के अनादर का फल क्या होता है यह देखो। स्वैर विहार करने वाली यमुने! अभी मैं अपने हल की नोंक से तेरे सौ-सौ टुकड़े कर देता हूँ ।। २४ ।। राजन्! इस प्रकार बलरामजी ने जब यमुनाजी को फटकारा, तब वह चकित होकर श्री बलभद्रजी के चरणकमलों में गिर गयी और गद्‌गद कण्ठ से गुणगान करने लगी ।।२५।। हे आनन्दस्वरूप राम! हे बलराम! आप तो लोकाभिराम साक्षात् अक्षर ब्रह्मस्वरूप हैं! मैं आपकी महिमा क्षणभर विसर गयी थी। लेकिन आपकी कृपा से मैं जान सकी कि हे त्रिलोकनाथ! शेष भगवान् आपका ही अंश हैं, वह इस सारे ब्रह्माण्ड को धारण करते हैं ।। २६ ।।

**परं भावं भगवतो भगवन् मामजानतीम्। मोक्तुमर्हसि विश्वात्मन् प्रपन्नां भक्तवत्सल ।। २७ ।।**
**ततो व्यमुञ्चद् [1]यमुनां याचितो भगवान् बलः। विजगाह जलं स्त्रीभिः करेणुभीरिवेभराट् ।। २८ ।।**
**कामं विहृत्य सलिलादुत्तीर्णायासिताम्बरे। भूषणानि [2]महार्हाणि ददौ कान्तिः[3] शुभां स्रजम् ।। २९ ।।**
**वसित्वा वाससी नीले मालामुन्मुच्य[4] काञ्चनीम्। रेजे स्वलंकृतो [5]लिप्तो माहेन्द्र इव वारणः ।। ३० ।।**

**कर्दमक्षमा**

अन्वयः—हे, विश्वात्मन्! हे, भगवन्! भगवतः, परम्, भावम्, अजानतीम्, हे भक्तवत्सल! प्रपन्नाम्, माम्, भोक्तुम्, अर्हसि ।। २७ ।। ततः, याचितः, भगवान्, बलः, यमुनाम्, व्यमुञ्चत्, इभराट्, करेणुभिः, इव, बलः, स्त्रीभिः, जलम्, विजगाह ।। २८ ।। कामम्, विहृत्य, सलिलात्, उत्तीर्णाय, कान्तिः, लक्ष्मीः, असिताम्बरे, महार्हाणि, भूषणानि, शुभाम्, स्रजम्, ददौ ।। २९ ।। नीले वाससी, वसित्वा, काञ्चनीम्, मालाम्, उन्मुच्य, स्वलंकृतः, लिप्तः, महेन्द्रः, वारणः, इव, रेजे ।। ३० ।।

**श्रीधरस्वामिविरचिता भावार्थदीपिका**

विजगाहावगाहनं कृतवान् ।। २८ ।। उत्तीर्णाय निर्गतायासितांबरादीनि कांतिर्ददौ। कांतिर्लक्ष्मीः यथोक्तं वैष्णवे। "वरुणप्रहिता चास्मै मालामम्लानपंकजाम्।। समुद्राभे तथा वस्त्रे नीले लक्ष्मीरयच्छत" इति ।। हरिवंशे च बलं प्रति लक्ष्मी-

१. भगवान् याचितो यमुनां बलः-प्रा. पा.। २. विचित्राणि-विज.। ३. कान्तिमयीं-वीर. विज.। ४. मामुच्य-श्रीधर. वंशी. जीव. वीर. विश्व; मायाय-विज.। ५. स्वलंकृतस्ताभि-विज.।

वाक्यम् "जातरूपमयं चैकं कुंडलं वज्रभूषणम् ॥ आदिपद्मं च पद्माख्यं दिव्यं श्रवणभूषणम् ॥ देवेमां प्रतिगृह्णीष्व पौराणीं भूषणक्रियाम्" इत्यादि ॥ २९ ॥ वसित्वा परिधाय । आमुच्य कंठे निधाय । चंदनादिभिरालिप्तः ॥ ३०-३१ ॥

**श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः**

परं भावं पारमैश्वर्यम् । मोक्तुं त्यक्तुम् । विश्वात्मन्सर्वाधार ॥ २७ ॥ ततः प्रार्थनातः ॥ २८ ॥ "कांतिर्लक्ष्मी रमा माया वार्द्धिजा विष्णुवल्लभा । विभूतिर्भूतिपद्मा मा हिमांशुभगिनी शुभा" इति धरणिः । वैष्णवे विष्णुपुराणे । अस्मै बलाय । मुद्रा लतादिचिह्नम्, तत्सहिते समुद्रे आभाते इत्याभे ते च ते समुद्राभे । यद्वा—मुद्राभिरामा मुद्राभा, तया सहिते समुद्राभे । जातरूपं सुवर्णम् । वज्रो हीरकमणिः । आदिपद्मम् 'महापद्मश्च पद्मश्च' इत्यत्र निधिगणनायां पद्मस्यादिर्महापद्मोऽस्ति, तेन तदधिष्ठितकमलं ददौ । तच्च पद्माख्यं कर्णभूषणमुच्यते, तदपि देवानामेवास्तीत्याह—दिव्यश्रवणभूषणमिति प्रतीयत इति । पौराणीं प्राक्तनशेषरूपदेवदेहसंबंधिनीम् । "कदम्ब कोटरे जाता नाम्ना कादम्बरीति सा । रूपिणी वारुणी तत्र देवानाममृतारणी ॥ कादम्बरीम् मदकलं विदित्वा कृष्णपूर्वजम् । तिस्रस्त्रिदशनार्यस्तमुपतस्थुः प्रियंवदाः ॥ मदिरारूपिणी भूत्वा कान्तिश्च शशिनः प्रिया । श्रीश्च देवी वरिष्ठा स्त्री स्वयमेवाम्बुजध्वजा ॥ सांजलिप्रग्रहा देवी रौहिणेयमुपस्थिता । वारुण्या सहिता वाक्यमुवाच मदविह्वलम् ॥ बलं जयस्व देवानां बलदेव दिवीश्वर । अहं ते दयिता कांता वारुणी समुपस्थिता ॥ त्वामेवांतर्हितं श्रुत्वा शाश्वतं वडवामुखे । क्षीणपुण्येव वसुधां पर्येमि विमलानन ॥ पुष्पचक्रानुलिप्तेषु केसरेषूषितं मया । अतिमुक्तेषु चाक्षोभ्य पुष्पस्तबककवत्सु च ॥ अहं कदंबमालीना मेघकाले मुखप्रिया । तृषितं मार्गमाणा त्वां स्वेन रूपेण छादिता ॥ सास्मि पूर्णेन योगेन यथैवामृतमंथने । समीपं प्रेषिता पित्रा वरुणेन तवानघ ॥ सा यथैवार्णवगता तथैव वडवामुखे । त्वयोपभोक्तुमिच्छामि संमतस्त्वं हि मे गुरोः ॥ न त्वानन्त परित्यक्ष्ये भर्त्सितापि त्वयानघ । नाहं त्वया विना लोकानुत्सहे देव सेवितुम् । आदिपद्मं च पद्मं च दिव्यं श्रवणभूषणम् । समुद्रार्हाणि नीलानि कौशेयानि च बिभ्रती ॥ मदिरानन्तरं कान्तिः संकर्षणमुपस्थिता । मदेनागलितश्रोणी किंचिदाघूर्णितेक्षणा ॥ प्रोवाच प्रणयात्कांतिर्बद्धांजलिपुटा सती । जयपूर्वेण योगेन सस्मितं वाक्यमर्थवत् ॥ अहं चंद्रादपि गुरुं सहस्रशिरसं प्रभुम् । स्वैर्गुणैरनुरक्ता त्वां यथैव मदिरा तथा ॥ श्रीश्च पद्मालया देवी विधेया वैष्णवोरसि । रौहिणेयोरसि शुभा मालेवामलतां गता ॥ सा मालाममला गृह्य बलस्योरसि दंशिता । पद्मास्या पद्महस्ता वै संकर्षणमथाब्रवीत् ॥ राम रामाभिरामस्त्वं वारुण्या समलंकृतः । कांत्या मया च देवेश संगतश्चन्द्रमा यथा ॥ इयं च सा मया मौलिः प्रोद्धृता वरुणालयात् । मूर्ध्नि शीर्षसहस्रस्य याते भानुरिवाबभौ ॥ जातरूपमयं चैकं कुंडलं वज्रभूषितम् । आदिपद्मं च पद्मं च दिव्यं श्रवणभूषणम् ॥ कौशेयानि च नीलानि समुद्रार्हाणि भावतः । हारञ्च पीनतरलं समुद्राभ्यंतरोषितम् ॥ देवेमां प्रतिगृह्णीष्व पौराणीं भूषणक्रियाम् । समयस्ते महाबाहो भूषणानामलंक्रिया ॥ संगृह्य तमलंकारं ताश्च तिस्रः सुरस्त्रियः । शुशुभे बलदेवो हि शारदेंदुसमप्रभः ॥" इति । अत्र वडवामुखे वडवाग्निसन्निधौ । पाताले शेषरूपेण नित्यं स्थितं त्वामिदानीमंतर्हितम् । एतेन रामः पूर्ण एव शेषो न तु शेषांश इत्युक्तम् । पर्येमि परिभ्रमामि, अन्वेषयितुमिति शेषः । पुष्पचक्रं विकसितसमुदायः । केसराणां पुष्पविशेषाणामेव तेनानुलिप्तेषु केसरवत्सु कुसुमादिषु अतिमुक्तेषु । वासन्तीलतासु पूर्णेन योगेन सर्वांगसम्पत्त्या युक्ता सती त्वया कर्त्रात्मानं भोक्तुमीहे । गुरोः पितुः । कांतिर्मूर्तिमती । जयपूर्वेण योगेन । रामसंबोधनेन हे राम त्वं जयेति शब्देनाभिमुखीकृत्येति शेषः । श्रीश्च वैष्णव्यपी राममेवानुमतेत्याह—श्रीश्चेति । दंशिता वज्रभूषाद्यलंकृता । मौलिर्मुकुटः । वज्रं हीरकम् । समुद्रो मनोरथस्तदर्हाणि । भावतोऽत्यादरेण । भूषणानामेवालंक्रिया त्वया न तु तैस्तवेति भावः । द्वितनुत्वेऽपि तयोरेकरूपत्वात्तत्र लक्ष्मीस्वीकारोऽपि न विरुद्ध इति विष्णुपर्वणि पञ्चनवतितमाध्याये वर्णितम् ॥ २९ ॥ माहेन्द्र ऐरावतः ॥ ३० ॥

**श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी**

अत एव परं भावं महासङ्कर्षणत्वलक्षणं स्वभावं तच्च त्वया ज्ञायत एवेत्याह, भगवन् हे सर्वज्ञेति तत्र हेतुः विश्वस्य आत्मन् परमात्मन्निति अतो विकर्षणान्मोक्तुमर्हसि ननु मदाज्ञालङ्घिनीं त्वां कुतो मुञ्चेऽहं तत्राह—प्रपन्नां शरणागतां प्रपन्नजने च तव कृपैवोचितेत्याह—हे भक्तवत्सलेति ॥ २७ ॥ विशेषेण समाश्वासनपूर्वकममुञ्चत् तथा तत्रैव "शान्तिं व्रज महाभागे गम्यताञ्च यथासुखम्" इत्यादि विमोचनेन दूराकृष्टिरपि ध्वनिता । तथाच तत्रैव "वृन्दावनस्य मध्ये तु सा नीता यमुना नदी" इति । श्रीविष्णुपुराणे च—

"सा कृष्टा तेन सहसा मार्गं सन्त्यज्य निम्नगा । यत्रास्ते बलदेवोऽसौ प्लावयामास तद्वनम्" ॥ इति

जलं तत्रागतं नदीभायम् ॥ २८ ॥ कान्तिर्लक्ष्म्याः मूर्त्तिविशेषः श्रीविष्णुपुराणादौ तु लक्ष्मीरित्यंशेनाभेदाभिप्रायात् इयमेव द्वितीयव्यूहस्य सङ्कर्षणस्य पत्नी ॥ २९ ॥ वसित्वेति स्पष्टम् ॥ ३० ॥

## श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी

वाचं काकुयुक्तां दीनाम्, यद्वा, चकिताया भीतायाः स्त्रियो या वाक् ताम्; यदुनन्दनमिति श्रीकृष्णाग्रजत्वादिना तस्य पादयोः पतनं योग्यमेवेति। हे नृपेति च नृपाद्भीतानां प्रजानामिव भयात्तस्यास्तद्युक्तमेवेति भावः। एवं श्रीयमुनेयं श्रीभगवद्रूपानुसारेण लक्ष्म्या विविधमूर्त्तिवद्भगवन्महिषीवरायाः श्रीकालिन्द्या एव विभूतिरूपा, भगवन्महाविभूतिसमुद्र-भार्य्यास्वरूपा मूर्त्तिरेका ज्ञेया। तथा च तत्रैव (श्रीहरिवंशे विष्णु-प० ४६।४९)—'प्रत्युवाचार्णववधूम्' इति, तां इति, तां प्रति तत्सम्बोधनञ्च (विष्णु० प० ४६।५१) 'सागरंगमे' इति ॥ २७ ॥ राम हे जगद्रमण! अतो मां पीडयितुं मार्हसीति भावः। वीप्सा भीतत्वात्, किंवा क्रुद्धस्य तस्याभिमुखीकरणार्थम्, महाबाहो! हे परमबलिष्ठ! विक्रमं प्रभावं न जाने, न ज्ञातुं शक्तास्मीत्यर्थः। तत्र हेतुः—यस्येति। जगती पृथ्वी, विशेषेण लीलातपत्रवदनायासादिना धृतास्तीति शेषः। किमर्थम्? हे जगतः पते! जगद्रक्षार्थमित्यर्थः। मादृशानन्तनदी-नद-समुद्र-सर्वतादिसहिता पृथ्वी यस्यैकांशेन विध्रियते, तद्विक्रमज्ञानेऽति-दूरवर्त्तिदुष्टजड़जनस्याशक्तिरित्यर्थः ॥ २९ ॥ अतः परं परमं तव भगवतो भावं भगवत्त्वम्, यद्वा जगतीविधारणादन्यं भगवतः सर्वैश्वर्य्यपूर्णस्य तव भावं माहात्म्यमजानतीम्; तच्च मम ज्ञानं त्वया ज्ञायत एवेत्याह—भगवन् हे सर्वज्ञेति। तत्र हेतुः—विश्वस्य आत्मन्! परमात्मन्निति। अतो विकर्षणान्मोक्तुमर्हसि। ननु मानिनि! मदाज्ञालङ्घिकां त्वां कुतो मुञ्चेयम्? तत्राह—प्रपन्नां शरणागताम्; प्रपन्नजने च तव कृपैवोचितेत्याह—हे भक्तवत्सलेति। अथवा ननु एवं जानास्येव, कथं मिथ्या वदसि—न जान इति? तत्राह—परमिति। मोक्तुमर्हसीत्यत्र हेतुः—भगवन्निति। सर्वज्ञस्याज्ञे कृपा युक्तैवेति भावः। यद्वा, हे परम-दयालो! ननु अपराधिषु दण्डो युक्त एवेति चेत्तत्राह—विश्वस्यात्मन् परमप्रिय! इत्यपराधस्त्वया न गृह्यत एवेति भावः। यद्वा, सर्वप्रवर्तकेति यथा नियुक्तास्मि, तथा अकरवमिति को मेऽपराध इति। ननु एवं सर्वमर्य्यादारहितं स्यात्? तत्राह—भक्तवत्सलेति। ननु आज्ञालङ्घिन्याः कुतस्ते भक्तत्वम्? तत्राह—प्रपन्नां पूर्वं सानुजस्य तव जलक्रीडादि-सुखविस्तारणेन कृत-भक्तिमित्यर्थः। यद्वा, श्रीकृष्णमहिष्याः श्रीकालिन्द्या अंशत्वेन मम त्वद्भक्ततासिद्धेः; यद्वा, हलखातपथेन त्वत्पार्श्वगमना-दिति दिक् ॥ २९ ॥ ततो दीनोक्तेः प्रपत्तेर्वानन्तरम्, विशेषेण समाश्वासनपूर्वकममुञ्चत्। तथा च तत्रैव (श्रीहरिवंशे विष्णुः प० ४६।५१)—'शान्तिं व्रज महाभागे सम्यताञ्च यथा सुखम्' इत्यादि, यतो भगवान् प्रपन्नवत्सलः, तत्रापि याचितः काकुभि-र्मोचनं प्रार्थितः, जलं हृत्वा आकृष्टयाः श्रीवृन्दावनन्तःप्रविष्टायाः श्रीबलदेवान्तिकागतायास्तस्या एव; तथा च तत्रैव (विष्णु प० ४६।४२)—वृन्दावनस्य मध्येन सा नीता यमुना नदी' इति; श्रीविष्णुपुराणे च (५।२५।११)—'सा कृष्टा तेन सहसा मार्गं सन्त्यज्य निम्नगा। यत्रास्ते बलदेवोऽसौ प्लावयामास तद्वनम्।' इति। बल इति स्त्रीभिः सह विचित्रजलक्रीडादौ समर्थतर इति भावः ॥ ३० ॥

## श्रीमद्वीरराघवाचार्यकृता भागवतचन्द्रचन्द्रिका

भगवतस्तव परं निरवधिकं भावं प्रभावं हे भगवन्नजानतीमधुना प्रपन्नाञ्च मां मोक्तुमर्हसि तदुपयुक्तं सम्बोधयति भक्तवत्सलेति मुञ्चेत्यस्य यथापूर्वं गमयेत्यर्थः ॥ २७ ॥ तत इति। बलो राम इत्थं याचितो यमुनां व्यमुञ्चत् ततः स्त्रीभिः सह जलं विजगाहे च तथा करेणुभिः सहेभराडैरावतः तद्वत् ॥ २८ ॥ काममिति। कामं यथेच्छं विहृत्योत्तीर्णाय निर्गताय रामाया-सिताम्बरे नीलाम्बरे महार्हाण्यमूल्यानि भूषणानि कान्तिमतीमम्लानश्रियं स्रजं मालाञ्च ददौ यमुनेति कर्तृपदाध्याहारः यथोक्तं—

"वरुणप्रहितां चास्मै मालामम्लानपङ्कजाम्। समुद्राभे तथा वस्त्रे नीले लक्ष्मीरयच्छत" ॥

इति वैष्णवं वचनं तत्रापि लक्ष्मीर्दर्शनीयरूपा मूर्तिधरा यमुनेति व्याख्येयम् ॥ २९ ॥ वसित्वेति। वसित्वा परिधाय काञ्चनीं स्वर्णमयीं मालामाबद्ध्य कण्ठे निधाय काञ्चनीं मालामित्यनुक्तभूषणोपलक्षणम् इत्थं सुष्ठु अलङ्कृतः स्त्रीभिः सह रेजे यथा माहेन्द्रो वारणः तद्वत् ॥ ३० ॥

## श्रीविजयध्वजतीर्थकृता पदरत्नावली

भावमभिप्रायं माहात्म्यं वा ॥ २७-२८ ॥ असिताम्बरे नीलवस्त्रे ददौ यमुनेतिशेषः ॥ २९-३० ॥

## श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

कान्तिर्लक्ष्म्यंशा ॥ २९-३२ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धीये श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे पञ्चषष्टितमोऽध्यायः ॥ ६५ ॥

**श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शिनी**

परं भावं महासङ्कर्षणत्वरूपं त्वत्स्वरूपम् ॥ २७-२८ ॥ कान्तिर्लक्ष्म्याः मूर्त्तिविशेषः यदुक्तं वैष्णवे—

"वरुणप्रेषितां चास्मै मालामम्लानपङ्कजाम् । समुद्राभे तथा वस्त्रे नीले लक्ष्मीरयच्छत" ॥ इति

इयमेव द्वितीयव्यूहस्य सङ्कर्षणस्य स्त्रीति प्राञ्चः ॥ २९ ॥ वसित्वा परिधाय आमुच्य कण्ठे निधाय लिप्तचन्दनेन वारणः ऐरावतः ॥ ३० ॥

**गूढार्थदीपिनी**

परं भावं पारमैश्वर्यम् ॥ २७ ॥ ततः प्रार्थनातः । विजगाहे आलोडनपूर्वकं स्नानं कृतवान् । इभराट् गजेन्द्रः यथा हस्तिनीभिः सह ॥ २८ ॥ उत्तीर्णाय निर्गताय बलाय । असिताम्बरे नीलाम्बरे । कान्तिः लक्ष्मीः ॥ २९ ॥ वसित्वा परिधाय । आमुच्य कण्ठे निधाय । माहेन्द्रः ऐरावतः । लिप्तः चन्दनादिना ॥ ३० ॥

**श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः**

विजगाह अवगाहनं कृतवान् ॥ २८ ॥ कामं यथेच्छं विहृत्य उत्तीर्णाय निर्गताय प्रसिद्धे नीले अम्बरे महार्हाणि अमूल्यानि भूषणानि कान्तिः लक्ष्मीविभूतिभूता ददौ । अत एव वैष्णवे लक्ष्मीशब्दप्रयोगः—

"वरुणप्रहिताञ्चास्मै मालामम्लानपङ्कजाम् । समुद्राभे तथा वस्त्रे नीले लक्ष्मीरयच्छत" ॥ इति ॥ २९ ॥

लिप्तश्चन्दनादिभिः ॥ ३०-३२ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धीये श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे पञ्चषष्टितमोऽध्यायार्थप्रकाशः ॥ ६५ ॥

**श्रीमद्वल्लभाचार्य्यकृता सुबोधिनी**

ननु ज्ञायत एव सङ्कर्षणो महानिति सर्वशास्त्रसिद्धम्, तत्कथमज्ञानमिति चेत्, तत्राह **परं भावं भगवत** इति । त्वयि मनुष्यभाव एव आधिभौतिकभावो वा लोकसिद्धः, न तु परो भावः । यथा भगवति कृष्णे । स एवात्राविष्ट इति न कोऽपि जानाति । अतः परं भावं साक्षाद्भगवतस्ते अजानतीं मां मोक्तुमर्हसि । भगवन्निति सम्बोधनात् इदानीं ज्ञातमिति नाग्रे अपराधः सम्भविष्यतीति सूचितम् । जातेऽप्यपराधे क्षमा कर्तव्येति सम्बोधनान्तरमाह विश्वात्मन्निति । आत्मापराधः कस्यापि न रोषकर इति । तथाप्यधिकारावेशेन भेददर्शनात् अक्षमेति चेत्, तत्राह **भक्तवत्सले**ति । आत्मनो भक्तत्वमाह **प्रपन्ना**मिति ॥ २७ ॥ एवं कर्मज्ञानभक्तिप्रकारैः प्रार्थनायां तां त्यक्तवानित्याह **ततो व्यमुञ्चदि**ति । तयैव मोचनार्थं याचितः, यतो भगवान् । महत इयमेव व्यवस्था । पुनरपकारं न करिष्यतीति बुद्ध्वा तथा कृतवानिति पक्षं व्यावर्तयति **बल** इति । स्वबलाभिनिवेशादेव तथा कृतवान्, न तु ज्ञात्वेत्यर्थः । तस्यां प्रसन्न इति ज्ञापयितुं क्रीडामाह **विजगाह जलं स्त्रीभि**रिति । पूर्ववन्मर्यादां त्यक्तवानिति ज्ञापयितुं दृष्टान्तमाह **करेणुभिरिवेभराडि**ति ॥ एतावत्पर्यन्तं भगवत्त्वमुक्त्वा तिरोहितो भगवानिति ज्ञापयितुं तस्य वस्त्राणां क्लेदनात् वस्त्रान्तरपरिधानमाह **कामं विहृत्य सलिलादुत्तीर्णाये**ति । कान्तिर्भगवतश्चतुर्थी शक्तिः । अत एव तामसी मूर्तिश्चतुर्थी तद्धितार्थं तस्य प्रिये नीले अम्बरे भूषणानि च तदीयानि शुभां स्रजं कल्याणसूचिकां मालां ददौ । अन्यथा अपराधस्मरणात् जीवितमेव न भवेत् । भगवदीयया सत्कृत इति तस्यान्तस्तापो निवृत्तः ॥ २९ ॥ ततस्तत्परिधानात् बहिर्मालिन्यमपि निवृत्तमित्याह **वसित्वा वाससो नीले** इति । सजातीयेनैव सजातीयं व्यावर्त्यत इति नीले वाससी वसित्वा, मालां च कीर्तिमयीमुन्मुच्य, काञ्चनीं स्वरूपतोऽप्यमृतमयीं नित्यसद्गुणरूपाम् । निर्दोषगुणवान् भूत्वा रेजे । एवं स्वाभाविकीमवस्थामापन्नः स्वलङ्कृतो जातः, लिप्तश्चाङ्गरागैः । सर्वेषां दर्शनीय एव जातः, न तु गुप्त इति दृष्टान्तमाह **माहेन्द्र इव वारण** इति । ऐरावत इव ॥ ३० ॥

**श्रीसुबोधिनी-सारः**

हे भगवन् भगवतस्तव परं भावम् अजानतीं मां प्रपन्नां शरणं गतां मोक्तुं त्यक्तुमर्हसि हे विश्वात्मन् हे भक्तवत्सल ॥ २७ ॥ ततोऽनंतरं भगवान् बलो याचितः तया संप्रार्थितो यमुनाम् अत्यजत् । स्त्रीभिः सह जलं रामो विजगाह प्रविवेश करेणुभिर्गजीभिरिभराट् दंती बलेंद्र इव ॥ २८ ॥ कामं यथेच्छं विहृत्य क्रीडित्वा सलिलाज्जलादुत्तीर्णाय बहिर्निर्गताय बलाय कांतिर्लक्ष्मीः महार्हाणि अमूल्यानि भूषणानि शुभां स्रजं मालां ददौ ॥ २९ ॥ नीले द्वे वाससी वसित्वा परिधाय कांचनीं सुवर्णमयीं मालां कंठे आमुच्य बद्ध्वा धृत्वा सुष्ठु अलंकृतो भूषितो लिप्तश्चंदनेन माहेंद्रो वारण ऐरावत इव ॥ ३० ॥

### श्रीविट्ठलरायात्मजश्रीवल्लभकृतलेखः

**कामं विहृत्येत्यत्र**। **चतुर्थी शक्तिरिति**। 'श्रिया पुष्टये'तिगणनायां चतुर्थीत्यर्थः। **अन्यथेति**। भगवच्छक्त्या सत्काराभावे भगवदीयाया यमुनाया आकर्षणरूपापराधस्मरणाद् ग्लान्या स्वावतारसमाप्तिं बलः कुर्यादित्यर्थः। रमणं भगवद्वाक्यात्कायिकसान्त्वनार्थं कृतम्। यमुनाकर्षणं तु स्वेच्छया कृतमिति तस्यापराधत्वमिति भावः। **अन्तस्ताप** इति। पूर्वोक्तग्लानिरूप इत्यर्थः। **वसित्वेत्यत्र**। **सजातीयेनैवेति**। वाससी नीले, मालिन्यमपि नीलमितिलोकप्रसिद्धिः। अतः सजातीयत्वम्। **स्वरूपतोऽपीति**। हिरण्मयस्य ब्रह्मधर्मत्वोपपादनान्मरणादिदोषराहित्यं नित्यसद्गुणरूपत्वं च। 'निर्दोषपूर्णगुणविग्रह' इति वाक्यादिति भावः।

### गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

दुर्ज्ञेयत्वं सूचयन्ती सम्बोधयति—भगवन्निति। मां मोक्तुं त्यक्तुमर्हसि। तत्र हेतुं सूचयन्ती—सम्बोधयति—भक्तवत्सलेति। आत्मनो भक्तत्वमाह—प्रपन्नामिति। 'अज्ञानादेव तवावज्ञा जाताऽतोपि ममापराधः सोढव्य' इत्याशयेनाह—भगवतस्तव परं प्रभावमजानतीमिति। 'तव कोपेन च मम कुतोपि न निस्तार' इति सूचयन्ती सम्बोधयति—विश्वात्मन्निति ॥ २७ ॥ एवं याचितः सम्प्रार्थितो बलः यमुनां व्यमुञ्चत्। ततः स्त्रीभिः सह जलं विजगाह प्रविश्य चिक्रीडे। 'कथमेवं मर्यादां त्यक्त्वा विहारं कृतवान्' तत्राह—भगवानिति। दोषासंस्पर्शित्वात् स्वतन्त्रत्वाच्च। तथाक्रीडायां दृष्टान्तमाह—करेणुभिः सह यथेभराट् मत्तो गजो मर्यादां हित्वा क्रीडति तद्वदिति ॥ २८ ॥ कामं यथेच्छं विहृत्योत्तीर्णाय जलाद्बहिर्निर्गताय रामाय असिते नीले अंबरे, महार्हाणि अनर्घ्याणि भूषणानि, शुभां अम्लानश्रियं स्रजं च, कान्तिर्लक्ष्मीर्ददावित्यन्वयः। अत्र कान्तिर्लक्ष्मीः। यथोक्तं वैष्णवे—'वरुणप्रहिता चास्मै मालामम्लानपङ्कजाम्। समुद्राभे तथा वस्त्रे नीले लक्ष्मीरयच्छत' इति॥ हरिवंशे च बलंप्रति लक्ष्मीवाक्यम्—"जातरूपमयं चैकं कुण्डलं वज्रभूषणम्। आदिपद्मं च पद्माख्यं दिव्यं श्रवणभूषणम्॥ देवेमां प्रतिगृह्णीष्व पौराणीं भूषणक्रियाम्" इत्यादि ॥ २९ ॥ नीले वाससी वसित्वा परिधाय तथा काञ्चनीं स्वर्णमयीं मालामामुच्य कण्ठे निधाय तथान्यैरपि भूषणैः स्वलंकृतस्तथा चन्दनादिना लिप्तो रामः माहेन्द्रो वारण ऐरावतो यथा करेणुभिः सह रमते तथा स्त्रीभिः सह वने रेमे इत्यन्वयः ॥ ३० ॥

### अन्वितार्थप्रकाशिका

परमिति। हे भगवन्! हे विश्वात्मन्! हे भक्तवत्सल! भगवतस्तव परं भावं महासङ्कर्षणरूपं त्वत्स्वरूपमजानतीं प्रपन्नां मां मोक्तुमर्हसि ॥ २७ ॥ तत इति। ततः एवं याचितो भगवान् बलः यमुनां व्यमुञ्चत्। ततः करेणुभिः इभराट् इव स्त्रीभिः सह जलं विजगाहे प्रविश्य चिक्रीड ॥ २८ ॥ काममिति। कामं यथेच्छं विहृत्योत्तीर्णाय जलाद्बहिर्निर्गताय रामाय असिते नीले अम्बरे महार्हाणि अनर्घ्याणि भूषणानि शुभाम् अम्लानश्रियं स्रजं च कान्तिर्लक्ष्मीर्मूर्तिविशेषः इयमेव द्वितीयव्यूहस्य सङ्कर्षणस्य स्त्रीति प्राहुः ददौ। तथा च वैष्णवे समुद्राभे तथा वस्त्रे नीले लक्ष्मीरयच्छतेति ॥ २९ ॥ वसित्वेति। नीले वाससी वसित्वा परिधाय तथा काञ्चनीं स्वर्णमयीं मालामामुच्य कण्ठे निधाय तथान्यैरपि भूषणैः स्वलंकृतस्तथा चन्दनलिप्तो रामः माहेन्द्रो वारण ऐरावतो यथा करेणुभिः सह रमते तथा स्त्रीभिः सह वने रमे ॥ ३० ॥

### श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्

भगवतः समर्थस्य तव परं भावं संकर्षणरूपं ॥ २७ ॥ करेणुभिर्गजीभिः जलं प्रति विजगाह प्रवेशनं चकार ॥ २८ ॥ सलिलात् उत्तीर्णाय बहिर्निर्गताय रामाय असिताम्बरे द्वेश्यामवस्त्रे भूषणादीनि च कांतिर्लक्ष्मीः ददौ तदुक्तं विष्णुपुराणे वरुणप्रहितां चास्मै मालामम्लानपंकजां समुद्राभे तथा वस्त्रे नीले लक्ष्मीरयच्छतेति। हरिवंशे च रामं प्रतिलक्ष्मीवचनं जातरूपमयं चैव कुंडलं वज्रभूषणं। आदि पद्मं च पद्माख्यं दिव्यं श्रवणभूषणं। देवेमां प्रतिगृह्णीष्वपौराणीं भूषणक्रियामित्यादि ॥ २९ ॥ वाससी वस्त्रे वसित्वा परिधाय मालां आमुच्य कंठे धृत्वा लिप्तः। केसरचंदनादिर्चर्चितः ॥ ३० ॥

### भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

परमिति ॥ हे भगवन्, हे विश्वात्मन्, हे भक्तवत्सल, भगवतस्तव, परं निरवधिकं, भावं प्रभावं, अजानतीं, प्रपन्नामधुना त्वच्छरणं प्राप्तां, मां मोक्तुं अर्हसि ॥ २७ ॥ तत इति ॥ ततः, भगवान् बलः, याचितः यमुनयेत्थं कृतप्रार्थनः सन्, यमुनां व्यमुञ्चत्, यथापूर्वं गमयामासेत्यर्थः। ततः इभराडैरावतः, करेणुभिः सह, इव स्त्रीभिः सह, जलं यामुनमम्भः, विजगाह ॥ २८ ॥ काममिति ॥ कामं यथेच्छं, विहृत्य जले विहारं कृत्वा, सलिलात् उत्तीर्णाय जलाद्बहिर्निर्गताय रामाय, असिताम्बरे नीलाम्बरे, महार्हाणि महामूल्यानि, भूषणानि, कान्तिमतीमम्लानश्रियं, स्रजं मालां च, ददौ। लक्ष्मीरिति शेषः। तथा चोक्तं वैष्णवे। 'वरुणप्रहितां चास्मै मालामम्लानपङ्कजाम्। समुद्राभे तथा वस्त्रे नीले लक्ष्मीरयच्छत' इति। केचित्तु यमुनेति शेष

इत्युक्त्वा, वैष्णवं वचनं पठित्वा, लक्ष्मीर्दर्शनीयरूपा मूर्त्तिधरा यमुनेति व्याख्येयमित्याहुस्तच्चिन्त्यं, विष्णुपुराणे तट्टीकायां च लक्ष्मीशब्दोपादानात्। तत्र संमतित्वेन लिखिते हरिवंशवाक्येऽपि लक्ष्म्या एवाभिधानात्॥ २९॥ वसित्वेति॥ रामः नीले वाससी, वसित्वा परिधाय, काञ्चनीं स्वर्णमयीं मालां, आमुच्य कण्ठे निधाय, काञ्चनीं मालामित्यनुक्तभूषणोपलक्षणम्। वर्त्तमानः स्वलंकृतः सुष्ठ्वलंकृतः, लिप्तः चन्दनाभिरालिप्तः, माहेन्द्र इन्द्रसंबन्धी, वारणः हस्ती इव, रेजे॥ ३०॥

**कृष्णप्रिया**

हे महाराज! हे भगवन्! आप ऐश्वर्यसम्पन्न हैं। मैं इस महिमा को भूल गयी थी। अब आपकी ही अनुकम्पा से आपके वास्तविक स्वरूप को पहिचाना। अज्ञात अवस्था के अपराध क्षम्य माने जाते हैं। हे विश्वात्मन्! हे भक्तवत्सलनाथ! मैं आपकी शरणागत हूँ, अब क्षमा कीजिये और अपराध से मुक्त कीजिये॥ २७॥ श्रीनन्दालय से दूर गयी जलधारा पुनः निकट आयी। नन्द यशोदाजी को प्रसन्न देखकर बलरामजी पूर्ण प्रसन्न हो गये, उसकी प्रार्थना स्वीकार करके क्षमा का दान दिया। पुनः सन्तुष्ट बलभद्रजी जैसे बलशाली गजराज हस्तिनियों के साथ क्रीड़ा करता है वैसे ही बलराम महाराज गोपियों के साथ जल-विहार करने लगे॥ २८॥ मनोभिलषित जलविहार करके बलरामजी जब यमुनाजी से बाहर पधारे तब भगवती कान्ति-लक्ष्मीजी ने दाऊजी को दिव्य नीलाम्बर महामूल्य आभूषण और अत्यंत सुन्दर सुवर्ण का हार दिया॥ २९॥ श्री श्वेतस्वरूप बलभद्रजी ने नीलाम्बर धारण किया और रमणीय सुवर्ण माला अपने कण्ठ में धारण कर ली। तदनन्तर अंगराग श्रीअङ्ग में लगाया, जब और भी आभूषण धारण कर लिये तब तो आप ऐसे सुशोभित बने मानो कि राजा इन्द्र का श्वेत वर्णवाला ऐरावत सुशोभित हो रहा है॥ ३०॥

**अद्यापि दृश्यते राजन् यमुनाऽऽकृष्टवर्त्मना। बलस्यानन्तवीर्यस्य वीर्यं सूचयतीव हि॥ ३१॥**
**एवं सर्वा निशा याता एकेव [1]रमतो व्रजे। रामस्याक्षिप्तचित्तस्य माधुर्यैर्व्रजयोषिताम्॥ ३२॥**

**इति श्रीमद्भागवते महापुराणे[2] दशमस्कन्धे[3] बलदेवविजये यमुनाकर्षणं नाम [4]पञ्चषष्टितमोऽध्यायः॥ ६५॥**

**कर्दमक्षमा**

अन्वयः—राजन्, अद्यापि, आकृष्टवर्त्मना, यमुना, अनन्तवीर्यस्य, बलस्य, वीर्यम्, सूचयति, इव, दृश्यते॥ ३१॥ व्रजयोषिताम्, माधुर्यैः, आक्षिप्तचित्तस्य, एवम्, व्रजे, चरतः, रामस्य, सर्वाः, निशाः, एका, इव, याता॥ ३२॥

इति श्रीमद्भागवतस्य दशमस्कन्धस्य निरोधलीलायामुत्तरार्द्धे बलभद्रविजये पञ्चषष्टितमेऽध्याये अन्वयाः समाप्ताः॥ ६५॥

**श्रीधरस्वामिविरचिता भावार्थदीपिका**

एकेव एकेव निशा यथा तथा माधुर्यैर्विलासैः॥ ३२॥

इति श्रीमद्भागवते दशमस्कन्धे उत्तरार्द्धे श्रीध० टीकायां पंचषष्टितमोऽध्यायः॥ ६५॥

**श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः**

आकृष्टवर्त्मनाऽऽकर्षणमार्गेण उपलक्षिता॥ ३१॥ आक्षिप्तचित्तस्य वशीकृतमनसः। एकैवेति प्रतिरजनि नवनवाय-मानानुभवात्॥ ३२॥

इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे दशमस्कन्धोत्तरार्धे पञ्चषष्टितमोऽध्यायः॥ ६५॥

**श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी**

श्रीबलदेवप्रीत्या तथैवाद्यापि वहतीत्याह—अद्येति। कृष्टेन हलखातेन वर्त्मना लक्षिता किम्वा तेन वीर्यं सूचयन्ती स्वावस्थाविशेषेण किञ्चिज्ज्ञापयन्ती इवेत्यबुद्धिपूर्वकत्वात् किञ्चित्वे हेतुः अनन्तेति हि प्रसिद्धौ तथाच तां प्रति तस्याज्ञा श्रीहरिवंशे—

"लाङ्गलादिष्ट मार्गात्वमिमं मे प्रियदर्शने।
देशमम्बुप्रदानेन प्लावयस्वाखिलं शुभम्। यावत्स्थास्यति लोकोऽयं तावत्स्थास्यति मे यशः॥ इति॥ ३१॥

एकेवेति। प्रतिरजनि नवनवायमानानुभवात् इति देवीवर्गतोपि तासां माधुर्यविशेषो दर्शितः तदेवमपूर्वं भोगवृन्दं श्रीमद्व्रजसान्त्वनसन्तुष्टहृदयेन श्रीकृष्णेनैव तस्मै दूरतोपि दापितमिति गम्यते। अत्र यद्यपि श्रीरामोऽसौ श्रीकृष्णबन्धूनां सर्वेषां

१. रमतो—श्रीधर. वंशी. जीव. वीर. विज.। २. पारमहंस्यां संहितायां—प्रा. पा.। ३. उत्तरार्धे बलदेवविजये नास्ति—प्रा. पा.।
४. अष्टाशीति—विज.।

स्वस्य प्रेयसीनाञ्च स्वगमनसमये पूर्वतोऽप्यधिकं नित्यलीलानुभावनादिना नूनं सान्त्वनं कृतवानेवास्ति एतदर्थमेवागतत्वात् तथैव हि तेन श्रीकृष्णोपि सान्त्वयिष्यते हरिवंशे "सर्वेषां कुशलं कृष्ण येषां कुशलमिच्छसि" इति तथाप्यापाततः प्रकटलीला-दर्शनेन दुःखांशसद्भावमयत्नात्तद्गमनं न वर्णितमिति ज्ञेयं किञ्चित् तूद्दिष्टं विष्णुपुराणे "मासद्वयेन यातश्च पुनः स द्वारकां पुरीम्" इति ततः श्रीकृष्णमिलनन्तु हरिवंशे—

"तथैवाध्वगवेषेण सोपस्पृष्टो जनार्द्दनम्। प्रत्यग्रवनमालेन वक्षसातिविराजता ॥
स दृष्ट्वा तूर्णमात्मानं रामं लाङ्गलधारिणम्। सहसोत्थाय गोविन्दः प्रददावसनोत्तमम् ॥
उपविष्टं ततो रामं पप्रच्छ कुशलं व्रजे। बान्धवेषु च सर्वेषु गोषु चैव जनार्द्दनः ॥
प्रत्युवाच ततो रामो भ्रातरं साधु भाषिणम्। सर्वेषां कुशलं कृष्ण येषां कुशलमिच्छसि ॥
ततस्तयोर्विचित्रार्थाः पौराण्यश्चाभवन् कथाः। वसुदेवाग्रतः पुण्या रामकेशवयोस्तदा ॥" इति

तत्र सभोपविष्टत्वादापाततः सामान्यत एव प्रश्नोत्तरे इमे श्रीकृष्णगोकुलप्रेयसीपर्य्यन्तविषये ज्ञेये विशेषस्त्वेकान्त एवाभवदिति गम्यते ॥ ३२ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिण्यां पञ्चषष्टितमोऽध्यायः ॥ ६५ ॥

## श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी

भूषणानि वज्रखचित-स्वर्णैककुण्डलपद्मादीनि, शुभामम्लानस्वर्णपंकजग्रथितामित्यर्थः। कान्तिः श्रीयमुनाया विकर्षणेन मोचनेन सन्तुष्टाया लक्ष्म्या मूर्त्तिविशेषः। श्रीविष्णुपुराणादौ च लक्ष्मीरिति अंशांशिभेदाभावाभिप्रायेण। इयमेव द्वितीय-व्यूहस्य श्रीसंकर्षणस्य पत्नी ॥ ३१ ॥ सुष्ठु अलंकृतः कुण्डलादिभिः, लिप्तो मृगमदादिपंकेन, रेजे अशोभत ॥ ३२ ॥ श्रीबलदेव-प्रीत्याद्यापि श्रीयमुना तथैव वहतीत्याह—अद्येति। कृष्टेन हलखातेन वर्त्मना विशिष्टा, किंवा तेन वीर्य्यं सूचयन्ती इवेति। तत्त्वतो गाढाकर्षणेन प्रवाहवक्रगतिस्वभावेन वा श्रीवृन्दावनान्तर्भ्रमणलोभेन वान्यत्र गमनाशक्तेः। यद्वा, लौकिकोक्तिरीत्य-पेक्षया अनधिकार्थम्, हि निश्चितम्। ननु तद्वीर्य्यसूचनेनात्मनो लघुतैव पर्य्यवस्यति ? नेत्याह—अनन्तेति। यतो बलस्य महत्त-मस्य विक्रमसूचनेन महिमैव स्यादिति भावः। यद्वा, तद्वीर्य्यसूचने हेतुः—अनन्तेति। तादृशस्य तस्याज्ञालङ्घनाशक्तेरिति भावः। तथा च तां प्रति तस्याज्ञा श्रीहरिवंशे ( विष्णु० प० ४६।५०, ५२ )—

'लांगलादिष्टमार्गा त्वमिमं मे प्रियदर्शने। देशमम्बुप्रदानेन प्लावयस्वाखिलं शुभम् ॥
यावत् स्थास्यति लोकोऽयं तावत् स्थास्यति मे यशः ॥

इति। हे राजन्! इति चिरकालेऽपि तस्यास्तथैव वृत्त्या श्रीबलदेवस्य च वीर्य्यातिशयेन परमकौतुकात् ॥ ३३ ॥ एवमनेनोक्तप्रकारेण वारुणीपानपूर्वकविचित्रवेशादिना रममाणस्य सर्वाः किञ्चिदधिकमासद्वयवर्त्तिन्यो बहुला अपि निशा रामस्य एकेव याताः। व्रज इति तत्रैव तद्योग्यतां बोधयति। कुतः ? व्रजयोषितां माधुर्य्यैः परमसौन्दर्य्य-वैदग्ध्यादिभिरा-क्षिप्तमाकृष्टं चित्तं यस्य तस्य, इवेति तत्त्वतो निशानां बाहुल्यात्। पाठान्तरे कण्डुमुनेरिवानुसन्धानाभावेन तस्यैकेति प्रतीतिः। इति द्वारकादौ श्रीरेवत्यादिभिः सह रतेरप्यस्यानन्दविशेष उक्तः। इत्यपूर्वानुभूतसुखार्थमपि स्नेहभरेण श्रीभगवतासौ तत्र प्रस्थापितस्तदुक्तिबलाद्देवताभिः सह तथा रेम इति ज्ञेयम्। ततश्च द्वारकां गत इति वक्तुमपेक्ष्यमपि नोक्तं पुनर्व्रजात्तद्गमनेन तत्रत्यानां द्विगुणित–महार्त्तिवार्त्तयात्मनो राज्ञश्च दुःखविशेषेण किञ्चिद्दृष्टं श्रीविष्णुपुराणे ( ५।२५।१८ )—'मासद्वयेन यातश्च पुनः स द्वारकां पुरीम्' इति; ततः श्रीकृष्णमिलनन्तु श्रीहरिवंशे ( विष्णु० प० ४६।५६-६० )—

'तथैवाध्वगवेषेण सोपश्लिष्य जनार्द्दनम्। प्रत्यग्रवनमालेन वक्षसातिविराजता ॥
स दृष्ट्वा तूर्णमायान्तं रामं लांगलधारिणम्। सहसोत्थाय गोविन्दो प्रददावासनोत्तमम् ॥
उपविष्टं तदा रामं पप्रच्छ कुशलं व्रजे। बान्धवेषु च सर्वेषु गोषु चैव जनार्द्दन ॥
प्रत्युवाच ततो रामो भ्रातरं साधुभाषिणम्। सर्वेषां कुशलं कृष्ण येषां कुशलमिच्छसि ॥
ततस्तयोर्विचित्रार्थाः पौराण्यश्चाभवन् कथाः। वसुदेवाग्रतः पुण्या रामकेशवयोस्तदा' ॥ इति ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे उत्तरार्द्धे श्री-श्रील-सनातन-गोस्वामिपाद-कृतायां श्रीबृहद्वैष्णवतोषण्यां श्रीदशम-टिप्पण्यां पञ्चषष्टितमोऽध्यायः ॥ ६५ ॥

## श्रीसुदर्शनसूरिकृतशुकपक्षीयम्

आकृष्टवर्त्मना सूचयतीत्यन्वयः ॥ ३१-३२ ॥

इति श्रीमद्भागवतव्याख्याने दशमस्कन्धे श्रीसुदर्शनसूरिकृतशुकपक्षीये पञ्चषष्टितमोऽध्यायः ॥ ६५ ॥

## श्रीमद्वीरराघवाचार्यकृता भागवतचन्द्रचन्द्रिका

हलेनाकृष्टा यमुनेत्येतदसम्भावितं मन्वानस्य राज्ञः संशयनिराचिकीर्षयाह—अद्यापीति। हे राजन्! अनन्तं वीर्यं यस्य तस्य बलस्य रामस्य वीर्यं सूचयतीव "लक्षणहेत्वोः" इति शत्रन्तात् ङीप् सूचयितुमित्यर्थः। आकृष्टवर्त्मना हलाकृष्टमार्गेण यमुना स्यन्दमानेति शेषः ॥ ३१ ॥ एवमिति। आक्षिप्तं रिरंसाप्रवणं चित्तं यस्य तस्य व्रजे रमतो रामस्य माधुर्यैर्विलासैः सर्वा निशाः रात्रयः योषितामेकेव याता गता एकनिशाप्राया बभूवुरित्यर्थः ॥ ३२ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायां पञ्चषष्टितमोऽध्यायः ॥ ६५ ॥

## श्रीविजयध्वजतीर्थकृता पदरत्नावली

आकृष्टेन वर्त्मना मार्गेण दृश्यते ॥ ३१ ॥ एका निशेव व्रजस्त्रीणां माधुर्यैः सौन्दर्यैः कर्णरम्यवचनैः आक्षिप्तमाकृष्टं चित्तं यस्य स तथा तस्य ॥ ३२ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम् पञ्चषष्टितमोऽध्यायः ॥ ६५ ॥

( श्रीविजयध्वजतीर्थरीत्या अष्टाशीतितमोऽध्यायः ॥ ८८ ॥ )

## श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

आकृष्टवर्त्मना उपलक्षिता ॥ ३१ ॥ एकेवेति प्रतिरजनि नवनवायमानानुभावात् ॥ ३२ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम्। पञ्चषष्टितमोऽध्यायः दशमेऽजनि सङ्गतः ॥ ६५ ॥

## गूढार्थदीपिनी

आकृष्टवर्त्मना हलाकर्षणमार्गेण उपलक्षिता स्यन्दमाना वा ॥ ३१ ॥ माधुर्यैः विलासैः। सर्वानिशा एकेव याता एक निशावत् बभूवुः प्रतिरजनि नवनवायमानानुभवात् ॥ ३२ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां दशमस्कन्धोत्तरार्द्धे गूढार्थदीपिन्यां पञ्चषष्टितमोऽध्यायः ॥ ६५ ॥

## श्रीमद्वल्लभाचार्य्यकृता सुबोधिनी

तस्य माहात्म्यमग्रेऽपि दृश्यत इत्याह अद्यापि दृश्यत इति। अन्यथा अग्रे अपकीर्तिः स्यादिति। आकृष्टवर्त्मना हलाकर्षणमार्गेण। महत एव वीर्यस्य वीर्यं सूचयतीव सा जाता, न तु तावदेव बलमिति। वस्तुतस्तु तदप्रयोजकम्, न पूर्णमाहात्म्यसूचकं भवितुमर्हतीति इव शब्दः ॥ ३१ ॥ एवमेकदिनकृत्यमुक्त्वा यावत्कालं स्थितः सर्वेष्वेव दिवसेषु तदतिदिशति। एवं सर्वा निशा याता इति। एकेवेति प्रकारे विशेषाभावः। व्रजे चरत इति स्थानस्य समानत्वाद्वैलक्षण्यं न प्रकाशितवान्, तत्वसामर्थ्यादिति सूचितम्। स्वपौरुषख्यापनमपि न कृतवानित्यत्र हेतुमाह व्रजयोषितां माधुर्यैराक्षिप्तचित्तत्वेति। रामो हि साधनप्रधानः, भगवद्गुणाः तत्र प्रकाशन्त इति तत्साधनार्थमितरापेक्षया तत्समीचीनमिति तावन्मात्रेण पर्यवसितमतिर्माधुर्यैर्भगवद्धर्मैर्वशीकृतचित्तस्य एकेव निशा यातेत्यर्थः ॥ ३२ ॥

इति श्रीभागवतसुबोधिन्यां श्रीमल्लक्ष्मणभट्टात्मजश्रीमद्वल्लभदीक्षितविरचितायां दशमस्कन्धविवरणे उत्तरार्धे षोडशोऽध्यायः ॥ १६ ॥

## श्रीसुबोधिनी—सारः

हे राजन् अद्यापीदानीमपि आकृष्टेन वर्त्मना मार्गेणानंतवीर्यस्य बलस्य वीर्यं बलं सूचयतीव यमुना दृश्यते हि युक्तम् ॥ ३१ ॥ माधुर्यैर्वचनादिविलासैर्व्रजस्त्रीणाम् आक्षिप्तमार्कषितं चित्तं यस्य तस्य रामस्य व्रजे रमतः सतः सर्वा निशा रात्रय एका इव याता व्यतीताः ॥ ३२ ॥

इति श्रीमद्भा० दशमस्कन्धे उ० सुबोधिन्यां टीकायां पञ्चषष्टितमोध्यायः ॥ ६५ ॥

## श्रीविट्ठलरायात्मजश्रीवल्लभकृतलेखः

अद्यापीत्यत्र। आकृष्टवर्त्मनेति। बलस्यानन्तं वीर्यं तत्सम्बन्धिना आकृष्टवर्त्मना करणेन वीर्यं सूचयतीव दृश्यते इति मूलेऽन्वयः। एवं सर्वा इत्यत्र। भगवद्गुणाः तत्रेति। तत्र व्रजे भगवद्गुणाः प्रकाशन्ते इति हेतोर्भगवद्गुणप्राकट्यसाधनार्थमितरापेक्षया व्रजरूपमेव स्थानं समीचीनमिति हेतोस्तत्रत्ययोषितां माधुर्येषु व्रजसम्बन्धमात्रेण हेतुना पर्यवसितमतिजात इत्यर्थः। माधुर्यपदार्थमाहुः भगवद्धर्मैरिति। भगवति प्रकाश्यैरनुकल्परूपैः कटाक्षादिधर्मैरित्यर्थः।

## गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

'यमुना हलेन आकृष्टा' इत्येतदसम्भावितं मन्वानस्य राज्ञः संशयं निराचिकीर्षन्नाह—अद्यापीति। हे राजन्! अनन्तं वीर्यं यस्य तस्य बलस्य वीर्यं सूचयतीव आकृष्टवर्त्मना हलाकृष्टमार्गेण स्पन्दमाना यमुनाद्यापि दृश्यते इत्यन्वयः। हिशब्दः प्रसिद्धिद्योतकः॥ ३१॥ एवमेकदिनवृत्तमुक्त्वा यावत्कालं संस्थितस्तावत्सर्वदिनवृत्तमाह—एवमिति। व्रजयोषितां माधुर्यैर्विलासैः आक्षिप्तं रिरंसाप्रवणं चित्तं यस्य तस्य, अत एव एवं व्रजे रमतो रममाणस्य रामस्य सर्वा निशा एकेव याता एकनिशावद्बभूवुरित्यर्थः॥ ३२॥

इति श्रीवल्लभाचार्य-वंश्यगोपालसूनुना। श्रीमन्मुकुन्दरायाणां पादसेवाधिकारिणा॥ १॥
श्रीमद्गिरिधराख्येन भजनानन्दसिद्धये। श्रीमद्भागवतस्येयं टीका बालप्रबोधिनी॥ २॥
रचिता दशमे तत्र सात्त्विकानां निरोधने। पञ्चषष्टितमो यातो यमुनाकर्षबोधकः॥ ३॥

## अन्वितार्थप्रकाशिका

अद्यापीति। हे राजन्! आकृष्टेन हलखातेन वर्त्मना मार्गेण स्यन्दमाना यमुनाऽद्यापि अनन्तं वीर्यं यस्य तस्य बलस्य वीर्यं सूचयतीव दृश्यते॥ ३१॥ एवमिति। व्रजयोषितां माधुर्यैर्विलासैः आक्षिप्तं रिरंसाप्रवणं चित्तं यस्य तस्य अत एव एवं व्रजे रमतो रममाणस्य। शतार्थः। रामस्य सर्वा निशा एकेव याता एकनिशावद्बभूवुः॥ ३२॥

इति श्रीभागवते दशमस्कन्धेऽन्वितार्थप्रकाशिकायां पञ्चषष्टितमोऽध्यायः॥ ६५॥

## श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्

कृष्टेन हलखातेन यद्वा हलाकृष्टेन वर्त्मना उपलक्षिता॥ ३१॥ माधुर्यैर्विलासैः एकेव यथा एका निशा गता तथा सर्वा निशाः याता गताः॥ ३२॥

इति श्रीशुद्धैकांतधर्मप्रवर्त्तकगुरुराजेन्द्रश्रीसहजानंदस्वामिशिष्यगोपालानंदमुनिविरचिते निगूढार्थप्रकाशके श्रीमद्भागवतस्य दशमस्कंध-व्याख्याने बलदेवकृतयमुनाकर्षणं नाम पञ्चषष्टितमोऽध्यायः॥ ६५॥

## भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

हलेनाकृष्टा यमुनेत्येतदसंभावितं मन्वानस्य राज्ञः संशयनिराचिकीर्षयाऽऽह॥ अद्यापीति॥ हे राजन्, अनन्तं वीर्यं यस्य तस्य, बलस्य रामस्य, वीर्यं, पश्यती इव, 'लक्षणहेत्वोः'—इति शत्रन्तात् ङीप्। सूचयितुमिवेत्यर्थः। यमुना आकृष्टवर्त्मना हलाकृष्टमार्गेण, स्यन्दमाना इति शेषः। अद्यापि, दृश्यते हि॥ ३१॥ एवमिति॥ एवं व्रजे रमतो रममाणस्य, व्रजयोषितां, माधुर्यैर्विलासैः, आक्षिप्तं रिरंसाप्रवणं चित्तं यस्य तस्य, रामस्य, सर्वाः निशाः, मासद्वयपरा च, एका इव, एकरात्रिरिवेत्यर्थः। याताः। केचित्तु रामस्य माधुर्यैः योषितां, सर्वाः निशाः, एका रात्रिरिव, याताः इति व्याख्यां चक्रुः॥ ३२॥

इति श्रीधर्मधुरंधरश्रीधर्मात्मजप्रत्यक्षपुरुषोत्तमश्रीसहजानन्दस्वामिसुतश्रीरघुवीराचार्यसूनुभगवत्प्रसादाचार्यविरचितायामन्व-यार्थावबोधिन्यां भक्तमनोरञ्जन्याख्यायां श्रीमद्भागवतटीकायां दशमस्कन्धोत्तरार्द्धे पञ्चषष्टितमोऽध्यायः॥ ६५॥

## कृष्णप्रिया

राजन्! यह दृश्य आज भी नेत्रों के सामने ऐसा लग रहा है कि बलभद्रजी के खींचे हुए मार्ग से भगवती यमुनाजी बह रही हैं, मान लीजिये कि अनन्तशक्ति भगवान् बलरामजी का यशोगान गा रही हैं॥ ३१॥ व्रजनिवासिनी गोपियों के माधुर्यों से बलरामजी का चित्त इस प्रकार मुग्ध हो गया कि चैत्र-वैशाख मास की रात्रियाँ कैसे पसार हो गयी इसका अनुसन्धान न रहा, मानों एक रात के समान पसार हो गया॥ ३२॥

इति श्रीमद्भागवते दशमस्कन्धे उत्तरार्द्धे बलदेवकृतयमुनाकर्षणं नाम पञ्चषष्टितमोऽध्यायः॥ ६५॥

# अथ षट्षष्टितमोऽध्यायः

| श्लोकाः | अनु. | मि. उ. | वं. | उ. | श्लो. अ. | उ. अ. | अ. अ. | सं. श्लो. अ. | सं. श्लो. |
|---|---|---|---|---|---|---|---|---|---|
| ४३ | ३८ | ४ | १ | २ | १४६२ | १२ | ४२ | १५१६ | ४७। |

### श्रीशुक[1] उवाच[2]

[3]नन्दव्रजं गते रामे करूषाधिपतिर्नृप । वासुदेवोऽहमित्यज्ञो दूतं कृष्णाय प्राहिणोत् ॥ १ ॥
त्वं वासुदेवो भगवानवतीर्णो जगत्पतिः । इति प्रस्तोभितो बालैर्मेन आत्मानमच्युतम् ॥ २ ॥
[4]दूतं च प्राहिणोन्मन्दः कृष्णायाव्यक्तवर्त्मने । द्वारकायां यथा बालो नृपो [5]बालकृतोऽबुधः ॥ ३ ॥
दूतस्तु द्वारकामेत्य सभायामास्थितं प्रभुम् । कृष्णं कमलपत्राक्षं राजसंदेशमब्रवीत् ॥ ४ ॥[6]

### कर्दमक्षमा

अन्वयः—श्रीशुक उवाच—नृप, रामे, नन्दव्रजम्, गते, अज्ञः, करूषाधिपतिः, अहम्, वासुदेवः, इति, कृष्णाय, दूतम्, प्राहिणोत् ।। १ ।। त्वम्, भगवान्, जगत्पतिः, वासुदेवः, अवतीर्णः, इति, बालैः, प्रस्तोभितः, सः ( पौण्ड्रकः ) आत्मानम्, अच्युतम्, मेने ।। २ ।। यथा, बालकृतः, बालः, नृपः, तथा, मन्दः ( पौण्ड्रकः ), अव्यक्तवर्त्मने, कृष्णाय, द्वारिकायाम्, दूतम्, च, ( सन्देशं ), प्राहिणोत् ।।३।। दूतः, तु, द्वारिकाम्, एत्य, सभायाम्, आस्थितम्, कमलपत्राक्षम्, कृष्णम्, प्रभुम्, राजसन्देशम्, अब्रवीत् ।। ४ ।।

### श्रीधरस्वामिविरचिता भावार्थदीपिका

षड्युक्षष्टितमे काशीं गत्वाऽहन् पौंड्रकं हरिः । तन्मित्रं च ततो वृत्तं सुदक्षिणवधादिकम् ॥ १ ॥ १ ॥

प्रस्तोभितः स्तुत्या प्रोत्साहितः । बालैरज्ञैः ।। २ ।। बालकृतो नृपो बालैर्नृपत्वेन क्रीडायां परिकल्पितः ।। ३–७ ।।

---

१. बादरायणि–प्रा. पा. । २. पञ्चदश अधिकाः–विज. ।

**श्रीशुक उवाच—**

पौण्ड्रको नाम राजा वै तस्मिन्काले कुरूद्वह । द्वारकां वृष्णिनिलयां निरुध्य बहुसैनिकः ॥ १ ॥
अर्दयामास कृष्णेन विदित्वा रहितां निशि । तं कामपालः शैनेयो वसुदेवोद्धवादयः ॥ २ ॥
उग्रसेनश्च कौरव्य ये चान्ये यदुपुङ्गवाः । अपंयामासुरायान्तं कालयोग्यमिवातिथिम् ॥ ३ ॥

**राजोवाच—**

कश्चासौ पौण्ड्रको नाम कस्मिन्देशे महीपतिः । कस्य वा तनयो ब्रह्मन्सर्वमेतद्वदस्व मे ॥ ४ ॥

**श्रीशुक उवाच—**

अपुत्रः काशिराजो वै कन्यां सुतनुसंज्ञिताम् । प्रायच्छद्वसुदेवाय राज्यशुल्कां कुरूद्वह ॥ ५ ॥
तत्र जज्ञे महाबाहुर्दिवाकरसमद्युतिः । कुमारः पौण्ड्रको नाम बलवीर्यमदान्वितः ॥ ६ ॥
वसुदेवसुतत्वाच्च वासुदेवेति शब्दितः । जाते तस्मिन्महाराजो वसुदेवो महाद्युतिः ॥ ७ ॥
राज्यं तस्मिन्समारोप्य सकोशबलवाहनम् । उवाह कंसावरजां देवकीं देवतोपमाम् ॥ ८ ॥
निरुद्धो भोजराजेन कंसेनानकदुन्दुभिः । कदाचिदपि न प्रायात्करवीरपुरीमपि ॥ ९ ॥
असह्यं मातृसापत्न्यमभ्रातृत्वं तथाऽऽत्मनः । स्मरमाणः स काशीशो यदूनुद्विजतेऽनिशम् ॥ १० ॥
स कृष्णरहितां श्रुत्वा समेत्य द्वारकां निशि । विमृद्य बलभद्रेण शैनेयेनापि निर्जितः ॥ ११ ॥
निहतानेकसाहस्रहयकुञ्जरसैनिकः । जगाम परशर्वर्यां पुरीं वाराणसीं नृप ॥ १२ ॥
प्रभातायां तु शर्वर्यां हरिर्बदरिकाश्रमात् । आययौ तार्क्ष्यमारुह्य द्वारकां रामपालिताम् ॥ १३ ॥
सपताकैः सार्घ्यपाद्यैर्यदुवृष्ण्यन्धकादिभिः । अभिवर्णितवृत्तान्तः प्राविशत्केशवः सभाम् ॥ १४ ॥
कदाचित्पौण्ड्रको नाम काशिराजः प्रतापवान् ॥ १५ ॥

३. इदमर्धं नास्ति–विज. । ४. अयं श्लोको नास्ति–विज. । ५. बालैः–वीर. । ६. कारण उवाच–च. पु. टि. ।

## श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

तन्मित्रं पौंड्रकमित्रं काशीशम् । ततः काशीशमरणोत्तरम् । वृत्तं जातम् । आदिपदात्काशीदाहादिग्रहः ( १ ) । करूषो देशविशेषस्तदधिपतिः ॥ १ ॥ आत्मानं निजम् ॥ २ ॥ द्वारकायां कृष्णायेत्यन्वयः । तथा त्वमबुध आत्मानं कृष्णं मेन इति पूर्वेणान्वयः ॥ ३ ॥ राजसंदेशं पौंड्रकाज्ञाम् ॥ ४-५ ॥

## श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी

एवं श्रीरामकृतगोकुलसान्त्वनस्मरणेन स्वस्थचित्तस्तस्य व्रजगमनानन्तरं द्वारकायां कौतुकविशेषं स्मृत्वाऽऽह—नन्देति । रामे नन्दव्रजं गते इति श्रीकृष्णमेकाकिनं मत्वेति भावः । अन्यथा तत्र श्रीरामे स्थिते दुर्निवारतत्क्रोधजन्मतो वक्ष्यमाणकौतुकं न स्यादिति च वासुदेवः परमेश्वरोऽहमिति सन्दिश्येत्यर्थः । यतोऽज्ञो निर्बुद्धिः अज्ञत्वादेव स्ववत् श्रीकृष्णेऽपि भगवत्त्वमारोपितं मन्यमान इत्यर्थः । नृपेति सकौतुकं सम्बोधनम् ॥ १ ॥ अज्ञत्वमेव विवृण्वन् दूतप्रस्थापनं विवृणोति—त्वमिति द्वाभ्याम् । सर्वान्तर्यामित्वेन वासुदेवाख्यो भगवान् सर्वैश्वर्य्ययुक्तः अतो जगत्पतिर्यः स एव त्वमतीर्णोऽसीति अच्युतं सर्वैश्वर्य्यपूर्णं भगवन्तम् ॥ २ ॥ न केवलं मेने द्वारकायां तादृशदेवमुनिराजादिसम्बलितायां दूतञ्च प्राहिणोदिति तस्यात्यन्तदुर्बुद्धित्वेन कौतुकात् पुनरुक्तिः अतो मन्दोऽत्यधमः निर्बुद्धिः यतो यथा बालैरन्यैर्नृपत्वेन कल्पितः कश्चिदबुधो बालस्तादृश इत्यर्थः । किञ्च न व्यक्तं वर्त्मापि यस्य तस्मै इति तस्य तु सुतरां तत्त्वज्ञानाशक्त्या तद्युक्तमेवेति भावः । यथा स बालः तद्वदबुधः ॥ ३ ॥ तुशब्देन दूतस्य ततोऽपि निर्बुद्धित्वं बोधयति, तदेवाह—द्वारकामित्येत्यादिना । तत्र द्वारकां तादृशालौकिकसम्पत्तिमती सभायां तत्तन्महानुभावपालितायां प्रभुं सर्वशक्तियुक्तं कृष्णं स्वयं भगवन्तं कमलपत्राक्षं माधुर्य्येण च सर्वोत्कृष्टमित्यर्थः । एषु क्रमाधिक्यमपिशब्दश्च सर्वत्र गम्यं तेन तेन च तस्मैव भगवत्त्वयोग्यतोक्ता कमलपत्राक्षमित्यनेन दूतं प्रति सकौतुकनिरीक्षणात् श्रीनेत्रयोः प्रसत्तिविशेषश्चाभिप्रेतः ॥ ४ ॥

## श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी

'रामे नन्दव्रजं गते' इति वक्ष्यमाणपौण्ड्रक-वधादि-श्रीकृष्णचरितस्यास्य तदानन्तर्य्यं बोधयति । किञ्च, एकाकिनैव तेन तद्वधे तथैकाकिनं तं मत्वा दुर्बुद्धिना पौण्ड्रकेण दूतप्रस्थापनादौ चायं हेतुर्द्रष्टव्यः । कृष्णाय साक्षाद्भगवतेऽपि वासुदेवः परमेश्वरोऽहमित्येवं प्राहिणोत्, यतोऽज्ञः, अतोऽतिकौतुकेन सम्बोधयति—नृपेति ॥ १ ॥ अज्ञत्वमेव दर्शयति—त्वमिति । सर्व्वान्तर्य्यामित्वेम वासुदेवाख्यो भगवान् सर्व्वैश्वर्य्ययुक्तोऽतो जगत्पतिर्यः स एव त्वमवतीर्णोऽसीति; अच्युतं सर्व्वैश्वर्य्यपूर्णं भगवन्तम् ॥ २ ॥ न केवलं मेने, दूतं प्राहिणोच्चेति । तस्यात्यन्तनिर्बुद्धित्वेनातिकौतुकादुक्तस्यापि पुनरुक्तिः । मन्दोऽधमः, तत्र हेतुः—अभक्तेष्वव्यक्तरूपायेत्यर्थः । यद्वा, आ सम्यक् सर्व्वैश्वर्य्यप्रकटनाद्व्यक्तं रूपं तत्त्वं तद्वतेऽपि प्राहिणोत् । 'अव्यक्तवर्त्मने' इति पाठे पाठान्तरे—न व्यक्तं वर्त्मापि यस्य तस्मा इति । तत्तत्त्वज्ञानाशक्त्या तस्य तद्युक्तमेवेति भावः । किंवा अबुधत्वमेव व्यञ्जितम् । बालकृतो नृपो बालो यथात्मानं नृपं मन्यते, तथा मेन इति पूर्व्वेणान्वयः, यद्वा, यथा स बालस्तद्वदबुधः ॥ ३ ॥ 'तु' अपि, दूरतोऽपि, इति तस्याप्यबुधत्वं बोधयति, तदेवाह—सभायामित्यादिना । प्रभुं यादवानां जगतो वा ईश्वरम्, यतः कृष्णं साक्षाद्भगवन्तम्, अतः प्रभुं सर्वशक्तिमन्तं कमलपत्राक्षञ्च, इति परमैश्वर्य्यं सौन्दर्य्यञ्चोद्दिष्टम् । तेन च तस्यैव भगवत्त्वयोग्यता चोक्ता । यद्वा, कमलपत्राक्षमिति दूतं प्रति कौतुकेन निरीक्षणाच्छ्रीनेत्रयोः प्रसक्तिविशेषाभिप्रायेणेति दिक् ॥ ४ ॥

## श्रीसुदर्शनसूरिकृतशुकपक्षीयम्

यथा बाला अज्ञतुल्यः बालकृतोऽबुधः बालैरज्ञैरबुधः कृतः ॥ १-७ ॥

## श्रीमद्वीरराघवाचार्यकृता भागवतचन्द्रचन्द्रिका

अथ श्रीकृष्णस्य चरितं पौण्ड्रकवधकाशीपुरदहनात्मकमनुवर्णयति—नन्दव्रजमित्यादिना । हे नृप ! करूषाणां देशानामधिपतिरहमेव वासुदेव इत्यभिमन्यमानोऽत एवाज्ञः कृष्णाय दूतं प्राहिणोत् प्रेषयामास दूतमुखेन वक्ष्यमाणं वचः प्राहिणोदित्यर्थः ॥ १ ॥ तदेवाह—त्वमिति । इतीत्थं बालैरज्ञैस्त्वं प्रस्तोभितः स्तुत्या मुधा प्रोत्साहितः अहन्त्वात्मानमेवाच्युतं वासुदेवं मेने मनवै ॥ २ ॥ दूतमिति । अस्यै तदव्यक्तमित्यादि न व्यक्तं वर्त्मयाथात्म्यं यस्य तस्मै किं वक्तुमित्यत आह—द्वारकायामिति । बालैरज्ञैर्यथा बालः क्रीडायां नृपः कृतः नृपत्वेन कल्प्यते तथा त्वमपि अबुधोऽज्ञो द्वारकायां नृपत्वेन कल्पित इत्यतस्त्वं वासुदेव इति पूर्वोक्तञ्च वक्तुमित्यर्थः ॥ ३ ॥ दूत इति । तत् ततः राजसन्देशं राज्ञः पौण्ड्रकस्य सन्देशम् ॥ ४ ॥

## श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

षट्षष्टितम ऐश्वर्यं पौण्ड्रकस्याद्यदीश्वरः। तत्तन्मित्रश्च तत्पुत्रः काश्यदह्यत चारिणा ॥

नन्दव्रजं गते सति राम इति कृष्णमेकाकिनं मत्वेति भावः। वासुदेवोऽहमिति मत्वेति शेषः ॥ १ ॥ प्रस्तोभितः स्तुत्या प्रोत्साहितः ॥ २ ॥ दूतश्च प्राहिणोदिति तस्यातिनिर्बुद्धित्वेन विस्मयात् पुनरुक्तिः। बालकृतः क्रीडायां बालैर्नृपत्वेन कल्पितः कश्चिद्बालो यथा ॥ ३-४ ॥

## गूढार्थदीपिनी

षट्षष्टितम ईशेन समित्रः पौण्ड्रको दृतः। सुदक्षिणश्च कृत्याग्नेः दग्धा चक्रेण काशिका ॥ १ ॥

करूषो देशः काशीसमीपवर्ती। तस्य अधिपतिः पौण्ड्रकः। प्राहिणोत् प्रेषयामास ॥ १ ॥ बालैः अज्ञैः प्रस्तोभितः प्रोत्साहितः ॥ २ ॥ यथा अबुधो बालः क्रीडायां बालैरेव नृपः कृतः कल्पितः आत्मानं नृपं मन्यते तथा सोऽपि ॥ ३-४ ॥

## श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

पौण्ड्रकवधादिकं हरिचेष्टितं वर्णयति-नन्दव्रजङ्गते इति षट् षष्टितमे ॥ १ ॥ प्रस्तोभितः प्रोत्साहितः ॥ २ ॥ यः क्रीडायां बालैर्बालो नृपः कृतस्तद्वत् ॥ ३-७ ॥

## श्रीमद्वल्लभाचार्यकृता सुबोधिनी

कामस्य पूर्तिमुक्त्वात्र क्रोधस्यापि निरूप्यते। कंसादेरिव दुष्टानां मोक्षोऽत्र विनिरूप्यते ॥ १ ॥

सस्थानस्य सदेवस्य पोषकैः सहितस्य च। विपक्षिणो नाशरूपः पूर्वस्माद्वचसा पृथक् ॥ २ ॥

लौकिकैरपि वाक्यैर्यः कामादौ प्रविशेत् पुमान्। तं कृष्णो मोचयेत् सत्यं सर्वथेति निरूप्यते ॥ ३ ॥

पौण्ड्रकस्य समित्रस्य कर्मोपासनसंयुतौ। साधारवंशमात्रस्य नाशः सप्तदशोऽभवत् ॥ ४ ॥

पूर्वाध्याये पूर्वोक्तानां तामसप्रभृतीनां सात्त्विकत्वापादनात् गोपिकानां सकामत्वात् सात्त्विकप्रकरणे कामः पूरितः। अधुना कंसवत् प्राकृतैरपि वाक्यैः ये भावं कृतवन्तः, तेषां मोक्षरूपो निरोधो निरूप्यते। दैत्यांशानां द्विष्टानां साक्षान्मोक्षो नास्तीति निरोधरूप एव मोक्षो निरूप्यते। तत्रापि कामक्रोधयोः समानकाले प्रादुर्भाव इति शक्तिरपि विभक्तेति यदेव गोपिकानिरोधार्थं भगवान् रामो गतः, तदेव साक्षाद्भगवतोऽपि नियोगं वक्तुं काशीदाहकथा आरभ्यते। तस्याः प्रस्तावनामाह। 'करूषान्मानवादास'न्निति कारूषा एव करूषाः क्षत्रियाः, ते वस्तुतः उत्तरापथराजानः ब्राह्मणभक्ता धर्मपराश्च। तेषामधिपतिः कश्चित्कस्यचिद्वसुदेवनाम्नः पुत्रः पुराणेषु वासुदेवोऽवतरिष्यतीति श्रुत्वा, वसुदेवपुत्रत्वादहमेव वासुदेव इति भगवदिच्छया तस्य वासुदेवोऽहमिति निरन्तरं भावनोत्पन्ना। तद्देहात्मवादिन एवेति बहिर्मुखस्यैव वासुदेवभावनया स्वदेशं परित्यज्य काश्यां वासे बुद्धिरुत्पन्ना। ततः काशिराजेन सह मैत्रीं विधाय काश्यामेव स्थितः। एवं स्थितौ वासुदेवद्वैविध्यं शास्त्रसिद्धं न भवतीति स्वस्मिन् वासुदेवभावना दृढेति अन्तर्बहिरेकरूपता युक्तेति बहिरपि भगवच्चिह्नानि धृत्वा, स्थानवशान्महादेवकृपया च सानुभावोऽपि सन्, भगवतो दुर्गाश्रयणादिव्यामोहकलीलां संचिन्त्य, वासुदेवे तदनुपपन्नामिति स्वयमेव वासुदेवः, नान्य इति निश्चित्य, मुख्यनिषेधार्थं कृष्णाय भगवते दूतं प्राहिणोत्। ननु स्वयं वासुदेवो भवत्येव, नापि द्वैधमस्ति, अवतारबाहुल्येऽपि समानकालीने न विरोध इति किमिति प्राहिणोदिति चेत्। तत्राह अज्ञ इति। नायं किञ्चिच्छास्त्रतोऽनुभवतो वा जानाति ॥ १ ॥ तर्हि कथमेवं कृतवानित्याशङ्क्याह त्वं वासुदेवो भगवानिति। बाला अनभिज्ञाः दुर्ज्ञमूर्खबालकाः, ते वासुदेवो लोके अवतीर्ण इति श्रुत्वा सन्निहितपरित्यागे कारणाभावात् निकटस्थमेव तं वासुदेवं वासुदेवनामानं पौण्ड्रक इत्यपराभिधेयं त्वं वासुदेव इत्याहुः। अतो बालकवाक्यात् तैः प्रस्तोभित आत्मानमच्युतं मेने। वासुदेव इति योगव्यावृत्त्यर्थं भगवानिति। तादृशस्य कथं जन्मेत्याशङ्क्याह अवतीर्ण इति। किमर्थमवतीर्ण इत्याकाङ्क्षायामाह जगत्पतिरिति। जगदुद्धरार्थमवतीर्ण इत्युक्तं भवति। एवं प्रस्तोभितः प्रोत्साहितो बालकवत् आत्मानमच्युतमेव मेने ॥ २ ॥ तदा द्वैतबुद्धिर्बाधिकेति अज्ञत्वात् बहिर्मुखत्वात् मुख्याद्वैतमज्ञात्वा बाह्यद्वैतं निराकर्तुं दूतं च प्राहिणोत्। बहिर्मुखस्य तथाभावनमेवैकोपराधः, सुतरां भगवते दूतप्रेषणमिति अपराधसमुच्चयार्थश्चकारः। ननु कथं सद्भिर्न निवारित इति चेत्। तत्राह मन्द इति। मन्दस्तुच्छः हीनबुद्धिरिति यावत्। तेन सद्भिरुपेक्षित इत्यर्थः। तर्हि स्वापेक्षयापि भगवत्युत्कर्षं पश्यन् गोवर्धनोद्धरणादिकमपि शृण्वन् कथं प्रतिस्पर्धी कृतवानित्याशङ्क्याह अव्यक्तवर्त्मने कृष्णायेति। भगवन्मार्गः कुत्रापि नाभिव्यक्तः, अतो माहात्म्यस्य अस्पष्टत्वात्तथाकरणमुचितमेवेत्यर्थः। तथापि द्वारकायाम्। 'काश्येव द्वारका प्रोक्ता कलौ नान्या कथञ्चने'ति वाक्यात् भ्रान्तपरिकल्पितादन्या द्वारकापि न भवतीति

निश्चित्य, द्वारकायामेव स्थिताय भगवति नाट्यक्रीडायामिव उन्मत्तवाक्यमिव प्रेषितवान्। सर्वथा अप्रसिद्धोर्थः पुरःस्फूर्तिकबाधे सर्वसम्मतो न भवतीति। एतादृशोऽपि लोके व्यवहारोऽस्तीति ज्ञापयितुं दृष्टान्तमाह **यथा बालो नृपो बालकृत** इति। सोऽपि स्वक्रीडायामेव स्वकीयेषु वदति, नतु मुख्ये समागत्येति चेत्। तत्राह **अबुध** इति। एतदपि न जानातीत्यर्थः॥ ३॥ दूतोऽपि स इव भ्रान्त इति तस्य कथं गमनमित्याशङ्क्यां निवारयन् कृत्यमाह **दूतस्त्विति**। द्वारकां समागत्य, तत्रापि सभायां स्थितम्, प्रभुं तत्र सभायां स एव प्रभुरिति सर्वैरङ्गीक्रियमाणम्। वस्तुतोपि कृष्णं सदानन्दम्। दृष्ट्यैव सर्वतापनाशकं सानुभावं कमलपत्राक्षम्। राज्ञः पौण्ड्रकस्य सन्देशमब्रवीत्। अनेनावश्यकवक्तव्यत्वं दोषाभावश्च सूचितः॥ ४॥

## श्रीसुबोधिनी-सारः

शुकोक्तिः। रामे नंदस्य व्रजं गते सति करूषस्य देशस्याधिपतिर्भूपः वासुदेवोहमिति। हेतोरज्ञो मूढो दूतं कृष्णाय प्रेषयत् हे नृप॥ १॥ जगतां पतिर्वासुदेवो भगवांस्त्वमवतीर्णोऽसीति बालैः प्रस्तोभितः पुण्यजनवत् प्रोत्साहित आत्मानमच्युतं हरिं मेने॥ २॥ अव्यक्तमलक्ष्यं वर्त्म मार्गो यस्य तस्मै कृष्णाय द्वारकायां मंदो मूर्खो दूतं प्राहिणोत् बालैः कृतोबुऽधोऽज्ञो बालो नृपोऽप्राणिराजेव॥ ३॥ दूतो द्वारकामेत्य प्राप्य सभायामास्थितं प्रभुं कमलदलनेत्रं कृष्णं राज्ञः संदेशमब्रवीत्॥ ४॥

## श्रीविट्ठलरायात्मजश्रीवल्लभकृतलेखः

**सप्तदशेऽध्याये सस्थानस्येति**। बाणासुरप्रसङ्गे तस्य स्थानं स्थापितम्। अत्र काशीस्थानसहितस्य विपक्षिणो नाशः। तत्र देवे महारुद्रे प्रसादः। अत्र देवस्याभिचाराग्नेर्नाशः। तत्र पोषकाणां रुद्रगणानां स्कन्दादीनां च स्थापनम्। अत्र पोषकाणां रुद्रगणानां स्कन्दादीनां च स्थापनम्। अत्र पोषकाणां सुदक्षिणर्त्विजां नाशः। तत्र विपक्षिणो दर्पदूरीकरणमात्रम्। अत्र विपक्षिणो नाशः। एवंप्रकारैरयं मोक्षरूपो निरोधः पूर्वस्माद्बाणासुरनिरोधात्पृथग्भिन्नप्रकारकः। तत्र हेतुः वचसेति। तत्र 'प्रह्लादाय वरो दत्त' इति वाक्यात्तथा। अत्र तादृशवचनाभावादित्यर्थः। **लौकिकैरिति**। एता गोप्यः 'श्रुतपूर्वा बलं दृष्ट्वे'ति वाक्यात् लोकवाक्यश्रवणाद्भगवद्विषयककामे प्रविष्टाः। पौण्ड्रकश्च' इति प्रस्तोभितो बालै'रिति वाक्यात् लोकवाक्यश्रवणात् भगवद्विषयकक्रोधे प्रविष्ट इति भावः। **कर्णोपासनेति**। एतत्संयुतो सत्यामित्यर्थः। आधारभूतं यद्वंशमात्रं तत्सहितस्य मित्र-काशीराजसहितस्य पौण्ड्रकस्य नाशोऽभवदिति सप्तदशे निरूप्यते इति पूर्वेणान्वयः। **साक्षान्मोक्ष** इति। भक्तानामिव भगवता सह सर्वकामाशनरूपं 'सोऽश्नुते सर्वान्कामा'निति श्रुत्युक्तं सायुज्यमित्यर्थः। **निरोधरूप** इति। 'निरोधोस्यानुशयन'मिति-वाक्यात् भगवतस्तैः सह तदधिकारोचितरूपेण स्थितिस्ततस्तत्र लय इत्यर्थः। नन्दव्रजमित्यत्र। **वासुदेव** इतीत्यरयानन्तरं भाव-यामासेति शेषो ज्ञेयः। **तद्देहात्मवादिन** इति। तद्वासुदेवत्वभावनं देहस्य वसुदेवपुत्रत्वेन वासुदेवत्वादात्मापि वासुदेव इति बुद्ध्येव जातम्, नतु भगवतः सर्वरूपत्वात्तद्रूपोहमिति ब्रह्मात्मवादबुद्ध्येत्यर्थः। **वासुदेवो भवत्येवेति**। भगवतः सर्वरूपत्वादिति भावः। **नापि द्वैविध्यमिति**। 'एकमेवाद्वितीय'मिति श्रुतेरित्यर्थः।

## गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

षड्युक्षष्टितमेऽध्याये दम्भिनो हरिणा कृतः। पौण्ड्रकस्य समित्रस्य विनाशो विनिरूप्यते॥ १॥

एवं रामचरितं निरूप्य पुनः कृष्णचरितं निरूपयन् तत्प्रसङ्गमाह—नन्देति। हे नृप! रामे नन्दव्रजं गते सति करूषदेशाधिपतिः पौण्ड्रको वासुदेवोऽहमिति मत्वा कृष्णं प्रति दूतं प्राहिणोत् प्रेषितवान्। 'कथमेवं तद्बुद्धिवैपरीत्यं जातं' तत्राह—अज्ञ इति॥ १॥ एतदेव स्पष्टयति—त्वमिति। जगत्पालको भगवान् वासुदेवस्त्वमेवावतीर्णो इत्येवं बालैरज्ञैः प्रस्तोभितः स्तुत्या मुधैव प्रोत्साहितः आत्मानमच्युतं ऐश्वर्यादिपूर्णं भगवन्तं मेने॥ २॥ तत्र दृष्टान्तमाह—यथेति। यथा अबुधो बालः क्रीडायां बालैरेव कृतो नृपः नृपत्वेन कल्पितो आत्मानं नृपं मन्यते तथेति। एवं मत्वा च स मन्दः मन्दबुद्धिर्द्वार-कायां वर्तमानाय कृष्णाय दूतं च प्राहिणोत्। ननु 'कृष्णमाहात्म्यस्य प्रसिद्धत्वात् कथं तस्य तथा तथाभिमानः कथं वा निर्भय-तया दूतप्रेषणं सम्भवति' तत्राह—अव्यक्तवर्त्मन इति। तं प्रति न व्यक्तं वर्त्म मार्गो माहात्म्यं यस्य तस्मा इत्यर्थः॥ ३॥ दूतस्तु द्वारकामेत्य आगत्य सुधर्मायां सभायामास्थितं कृष्णं प्रति राज्ञः पौण्ड्रकस्य सन्देशमब्रवीत्। कृष्णस्य तत्र मुख्यत्वं सूचयन्नाह—प्रभुमिति। तस्य सर्वतापनिवर्तकत्वं सौन्दर्यं च सूचयन्नाह—कमलपत्राक्षमिति॥ ४॥

## अन्वितार्थप्रकाशिका

षट्षष्टितमके मित्रयुक्तपौण्ड्रकमारणम्। सुदक्षिणवधाद्यं च तत्र श्लोकास्त्रिवार्द्धयः (४३)॥
द्वे (२) उवाचेत्यङ्घ्रिपञ्चचत्वारिंशदनुष्टुभः (४५।)॥ ६६॥

नन्देति॥ हे नृप! रामे नन्दव्रजं गते सति अज्ञः करूषदेशाधिपतिः पौण्ड्रकः वासुदेवोऽहमिति मत्वा कृष्णं प्रति दूतं प्राहिणोत् प्रेषितवान्॥ १॥ त्वमिति॥ जगत्पालको भवान् वासुदेवस्त्वमेवावतीर्णं इत्येवं बालैरज्ञैः प्रस्तोभितः स्तुत्या मुधैव

प्रोत्साहितः आत्मानमच्युतं मेने मेनिथे। प्रथम आर्षः ॥ २ ॥ दूतमिति ॥ यथा अबुधो बालः क्रीडायां बालैरेव कृतो नृपः नृपत्वेन कल्पितः आत्मानं नृपं मन्यते तथेति एवं मत्वा च स मन्द। मन्दबुद्धिर्द्वारकायां वर्तमानाय अव्यक्तवर्त्मने तेनाविदित-माहात्म्याय कृष्णाय दूतं च प्राहिणोत् ॥ ३ ॥ दूत इति ॥ दूतस्तु द्वारकामेत्य आगत्य सुधर्मायां सभायामास्थितं प्रभु कमल-पत्राक्षं कृष्णं प्रति राज्ञः पौण्ड्रकस्य संदेशमब्रवीत् ॥ ४ ॥

### श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्

अथ षट्षष्टितमेऽध्याये स काशीराजपौंड्रकहननं वाराणसीदहनं च कथ्यते। करूषाधिपतिः। करूषदेशाधिपः पौंड्रकः ॥ १ ॥ त्वं वासुदेवः अवतीर्णः इति बालैरज्ञजनैः प्रस्तोभितः प्रशंसया प्रोत्साहितः। आत्मानं स्वं ॥ २ ॥ बालैः कृतः नृपो नृपतित्वेन रमणक्रियायां परिकल्पितः बालो यथाऽबुधः ॥ ३ ॥ राजसंदेशं पौंड्रकसंदेशं ॥ ४ ॥

### भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

कृष्णोऽहन् पौण्ड्रकं काशीं गत्वा तन्मित्रमीश्वरः। षड्युक्षष्टितमे चक्रं सुदक्षिणमनाशयत् ॥ १ ॥

अथ पौण्ड्रकवधकाशीपुरदहनात्मकं श्रीकृष्णचरितमनुवर्णयति। नन्दव्रजमित्यादिना एकश्लोकेन ॥ नन्देति ॥ हे नृप, रामे नन्दव्रजं गते, करूषाणामधिपतिः करूषदेशाधिपतिः, अहं एव, वासुदेवः इति, अभिमन्यमान इति शेषः। अत एव, अज्ञः अत एव, कृष्णाय दूतं प्राहिणोत् प्रेषयामास। दूतमुखेन वक्ष्यमाणवचः प्राहिणोदित्यर्थः ॥ १ ॥ तदेवाह ॥ त्वमिति ॥ त्वं तु, वासुदेवः जगत्पतिः, भगवान्, अवतीर्णः, असि। इत्येवं, बालैः प्रस्तोभितः अज्ञैरेव मुधा स्तुत्या प्रोत्साहितः। अहं तु, आत्मानं स्वत एव, अच्युतं वासुदेवं, मेने मनवै ॥ २ ॥ दूतमिति ॥ बालैरज्ञैः, यथा बालः कश्चन बालकः, नृपः कृतः। क्रीडायां नृपत्वेन कल्प्यते, तथा त्वमपि, अबुधोऽज्ञः द्वारकायां, नृपः कृतः, नृपत्वेन कल्पितः। इति दूतं शिक्षयित्वेति शेषः। मन्दः पौण्ड्रकः, अव्यक्तवर्त्मने कृष्णाय, दूतं च प्राहिणोत् ॥ ३ ॥ दूत इति ॥ दूतस्तु, द्वारकां एत्य, सभायां, आस्थितं प्रभुं, कमल-पत्राक्षं कृष्णं, राजसंदेशं पौण्ड्रकसंदेशं, अब्रवीत् ॥ ४ ॥

### कृष्णप्रिया

#### भगवान् श्रीकृष्ण के करकमलो से पौंड्रक एवं काशिराज का कल्याण

श्री शुकदेवजी ने कहा—महाराज परीक्षित् ! नन्दगाँव गोकुल में जब श्री बलरामजी पधारे थे भगवान् श्रीकृष्ण द्वारिका में विराजते थे तब करूष देशाधिपति पौण्ड्रक ने अज्ञानवश भगवान श्रीकृष्ण के पास द्वारिका के दरबार में एक दूत भेजकर यह कहलाया कि मैं ही साक्षात् भगवान् वासुदेव हूँ ॥१॥ मूर्ख जनों ने पौण्ड्रक को अतिशय बहकाया था कि पौण्ड्रक ! आप ही भगवान् वासुदेव हैं और विश्व संरक्षण के भूमितल पर अवतीर्ण हुए हैं। इस प्रकार लोगों की बातें सुनकर अपने को ही भगवान् मान बैठा ॥ २ ॥ कभी-कभी बालक खेलने के समय किसी एक बालक को राजा बना देते हैं राजा की तरह उनके साथ व्यवहार करने लगते हैं वह बालक भी अपने को राजा मानकर व्यवहार करता है वैसे मन्दबुद्धि पौण्ड्रक भगवान् कृष्ण की लीलाओं एवं सामर्थ्य को न जानकर द्वारिका में भगवान श्रीकृष्ण के पास दूत भेज दिया ॥ ३ ॥ वह दूत द्वारिका में आया और राजसभा में विराजमान राजाधिराज कमललोचन भगवान् श्रीकृष्ण को अपने राजा पौण्ड्रक का सन्देश सुनाया ॥ ४ ॥

**वासुदेवोऽवतीर्णोऽहमेक एव न चापरः। भूतानामनुकम्पार्थं त्वं तु मिथ्याभिधां त्यज ॥ ५ ॥**

**यानि त्वमस्मच्चिह्नानि मौढ्याद् बिभर्षि[1] सात्वत। त्यक्त्वैहि मां त्वं शरणं नो चेद् देहि ममाहवम् ॥ ६ ॥**

### श्रीशुक उवाच

**कत्थनं तदुपाकर्ण्य पौण्ड्रकस्याल्पमेधसः। उग्रसेनादयः सभ्या उच्चकैर्जहसुस्तदा ॥ ७ ॥**

**उवाच दूतं भगवान् परिहासकथामनु। उत्स्रक्ष्ये मूढ चिह्नानि यैस्त्वमेवं विकत्थसे ॥ ८ ॥**

### कर्ममक्षमा

अन्वयः—भूतानाम्, अनुकम्पार्थम्, अहम्, एक, एव, वासुदेव, अवतीर्णः, न, च, अपरः, इति, त्वम्, तु, मिथ्या-भिधाम्, त्यज ॥ ५ ॥ हे सात्वत, त्वम्, तु, मौढ्यात्, अस्मत्, चिह्नानि, बिभर्ति, तानि, त्यक्त्वा, माम्, शरणम्, एहि, नो चेत्,

---

१. बिभर्ष्यभीतवत्—विज.।

मम, आहवम्, देहि ॥ ६ ॥ श्रीशुक उवाच—अल्पमेधसः, पौण्ड्रकस्य, तत्, कत्थनम्, उपाकर्ण्य, तदा, उग्रसेनादयः, सभ्याः, उच्चकैः, जहसुः ॥ ७ ॥ भगवान्, परिहासकथाम्, अनु, दूतम्, उवाच । यैः मूढ ! चिह्नानि त्वमेवं, विकत्थसे, उत्स्रक्ष्ये ॥ ८ ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

हे मूढ उत्स्रक्ष्ये त्वयि प्रक्षेप्स्यामि । यैः सह त्वमेवं विकत्थसे तेष्वपीत्यर्थः । यद्वा यैः कृत्रिमैः सुदर्शनादिभिस्त्वमेवं श्लाघसे तान्युत्स्रक्ष्ये त्याजयिष्यामीत्यर्थः ॥ ८ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

अस्मच्चिह्नानि चक्रादीनि । सात्वतेति हे यादवविशेषेति अनादरात् । वस्तुतस्तु न चाहं भूतानामनुकंपार्थं वासुदेवोऽवतीर्णः यतोऽपरः अश्रेष्ठस्तुच्छ इत्यर्थः । किन्तु त्वमेवावतीर्णः । अतः शुक्तौ रजतस्येव मयि या तव मिथ्याभिधा तां त्यज त्याजयेत्यर्थः । साक्षात्तं प्रति वक्ष्यते स्वयं भगवानेव "त्याजयिष्येऽभिधानं मे यत्त्वयाज्ञ मृषा धृतम्" इति । तथा मौढ्याद्धेतोर्यान्यस्मच्चिह्नानि कल्पितचक्रादीनि बिभर्षि तानि त्यक्त्वा प्रक्षिप्य शरणं मुक्तिदत्वादाश्रयस्तन्मामेहि स्वीकुर्वित्यर्थः । यदि सहसाऽस्त्रविमोक्षं न करोषि तदा मह्यं युद्धं देहीति । युधि मां हत्वा मोक्षं प्रापयेति भावः । "ये ये हताश्चक्रवरेण विष्णुना त्रैलोक्यनाथेन जनार्दनेन । ते ते गता विष्णुपुरीं नरेंद्राः क्रोधोऽपि देवस्य वरेण तुल्यः ॥" इत्युक्तेः ॥ ६ ॥ कत्थनम् व्यर्थभाषणम् । तदहं वासुदेव इत्येवं रूपम् । तदा श्रवणकाले ॥ ७ ॥ यैः पार्श्वस्थैर्नरैः न इत्यर्थ इति—मूर्खैस्सहितो मूर्ख उच्छृंखलो भवसीत्यतस्तैस्सहैव तव नाश उचित इति भावः । तत्प्रोत्साहकानामत्रानुक्तेरर्थान्तरमाह—यद्वेति । इत्यर्थं इति—अंतर्भावितण्यर्थः उत्स्रक्ष्ये उत्सर्जयिष्यामीति ध्येयम् । यद्वा—चिह्नानि स्वीयसुदर्शनादीनि उत्स्रक्ष्ये प्रक्षेप्स्यामि यैः सह त्वमेवं विकत्थसे भाषसे तेष्वपीत्यर्थः ॥ ८ ॥

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी

भूतानामनुकम्पार्थमेक एव वासुदेवो यः सोहमेवावतीर्णः न चापरः कश्चिद्वासुदेवः ईश्वरस्यैकत्वात् अतो मिथ्याभिधां वासुदेव इति मिथ्याभिधां ( संज्ञां ) त्यज सर्वभूतावासत्वादिनिरुक्त्याविषयत्वात् वसुदेवपुत्रत्वेऽपि वृद्धिवृत्त्यभावादितिभावः । भूतानामिति कृतेन ससैन्यराजादिवधेन मत्प्रातिकूल्यं तव नोचितमिति भावः । किं वा भूतानामनुकम्पार्थं त्यज अन्यथा आवयोर्युद्धे सर्वप्राणिनां किं वा द्वारकावासिनां पीडा स्यादिति भावः ॥ ५ ॥ किञ्च, यानीति । अस्मादीयान्येव चिह्नानि चक्रादीनि सात्वत हे यादवविशेष ! इत्यनादरात् वस्तुतस्तु न चाहं भूतानामनुकम्पार्थं वासुदेवोऽवतीर्णः यतोऽपरः अश्रेष्ठस्तुच्छ इत्यर्थः । किन्तु एकस्त्वमेवावतीर्णः अतः शुक्तौ रजतस्येव मयि तव या मिथ्याऽभिधा तां त्यज त्याजय इत्यर्थः । तथा च प्रतिवक्ष्यते साक्षात्तं प्रति भगवानेव "त्याजयिष्येऽभिधानं मे यत्त्वयाऽज्ञ मृषा धृतम्" इति तथा मौढ्याद्धेतोर्यान्यस्मच्चिह्नानि कल्पितानि चक्रादीनि तद्रूपाणि त्वं बिभर्षि नित्यमेव धरसि अतस्तानि त्यक्त्वा प्रक्षिप्य शरणं मुक्तिदत्वादाश्रयस्सन् मामेहि स्वीकुर्वित्यर्थः । नोचेद्यदि सहसास्त्रविमोक्षं न करोषि तदा मम मह्यम् आहवं युद्धं देहीति अत्रास्त्रमोक्षणं यथावदेव प्रतिवक्ष्यते दूतम्प्रति तम्प्रति च "उत्स्रक्ष्ये मूढचिह्नानि" इति तान्यस्त्राणि उत्सृजामि त इति च शरणापत्तिस्तु "मल्लानामशनिः" इत्यादिवत्तस्मिन् समरसरे सोपहासोक्तेरेव युक्तत्वादन्यथाऽन्यथैव प्रतिवक्ष्यते "भविता शरणं शुनाम्" इति "व्रजामि शरणं तेऽद्य यदि नेच्छामि संयुगम्" इति च ॥ ६ ॥ कत्थनमात्मश्लाघनम् अल्पमेधसस्तुच्छबुद्धेः उप श्रीभगवत्समीप एवाकर्ण्य ॥७॥ परिहासकथामन्विति सभ्यानामुच्चैर्हासानन्तरं या मिथो दूतं प्रति च तत्कथा तदनन्तरमित्यर्थः । तत्रास्त्रत्यागो य आदिष्टः तं करिष्याम्येवेत्याह—उत्स्रक्ष्य इति । तैर्व्याख्यातं यद्वा यैर्मदीयैः चिह्नैरात्मीयत्वेन विकत्थसे संश्लाघसे तान्युत्स्रक्ष्ये त्वयि विक्षेप्स्यामीत्यर्थः ॥ ८ ॥

### श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी

भूतानामनुकम्पार्थमवतीर्ण एव प्रवाहं वासुदेवः, न चापरः कश्चिद् वासुदेवः, ईश्वरस्यैक्यात्; अतो मिथ्याभिधां वासुदेव इति नाम मत्सनामत्वात्त्यजेति सूचयति—भूतानामिति । ससैन्यराजादिवधेन मत्प्रातिकूल्यं तव नोचितमिति भावः । किंवा भूतानामनुकम्पार्थं त्यज, अन्यथावयोर्युद्धेन सर्व्वप्राणिनां किंवा द्वारकावासिजनानां दुःखं भवितेति भावः ॥ ५ ॥ किञ्च, यानीति—अस्मदीयान्येव चिह्नानि चक्रादीनि, सात्वत ! हे यादव ! हे भक्तेति वा, अनादरात्, वस्तुतस्तु दुष्टस्यापि तस्योक्तौ देवोद्भुतोऽयमर्थः—अवतीर्णोऽहमिति मम मिथ्याभिधां त्यज त्याजय, यथा मौढ्यादन्यान्यस्मच्चिह्नानि तानि च मां प्रति त्याजयित्वा मद्गृहमेहि स्वीकुर्व्विति ॥ ६ ॥ अल्पमेधसस्तुच्छबुद्धेस्तत् उक्तमपूर्व्व-कथनमात्मश्लाघनं गर्गवाक्यं वा, पौण्ड्रकस्येति तत्संज्ञस्य नाम च वासुदेव इति ज्ञेयम् । उप श्रीभगवत्समीप एवाकर्ण्य तथा सद्य एवोच्चकैः सस्वनं जहसुः, सभ्याः सभास्थिताः सर्व्व एव ॥ ७ ॥ परिहासकथामन्विति । अवहेलया नर्म्मकथया क्षणं विलम्ब्य परिहसन्नेवेत्यर्थः, यतो भगवान्—अनन्ताद्भुतचातुर्य्यादिगुणयुक्तः ॥ ८ ॥

**श्रीसुदर्शनसूरिकृतशुकपक्षीयम्**

यैर्विकत्थसे मन्निमित्तं विकत्थसे ॥ ८-१२ ॥

**श्रीमद्वीरराघवाचार्यकृता भागवतचन्द्रचन्द्रिका**

तदेवाह—वासुदेव इति। न चापरः न त्वं वासुदेव इति भावः। किन्तु त्वं भूतानां स्वसम्बन्धविषयभूतानामनुकम्पार्थं मिथ्या वासुदेवोऽतस्तामभिधामाख्यां त्यज ॥ ५ ॥ यानीति। हे सात्वत! अस्मदसाधारणानि यानि चिह्नानि शङ्खचक्रादीनि त्वं मौढ्याद्विभर्षि तानि त्यक्त्वा मां शरणमेहि आगच्छ नोचेच्छरणं नाभ्येषि तर्ह्याहवं युद्धं देहि युध्यस्व इत्यर्थः ॥ ६ ॥ विकत्थनमिति। तद्दूतोक्तम् अल्पबुद्धेः पौण्ड्रकस्य विकत्थनमाकर्ण्य सभ्याः सभायां स्थिताः जहसुर्हसितवन्तः ॥ ७ ॥ उवाचेति। परिहासकथामनु उग्रसेनादीनां परिहासकथनानन्तरं प्राह, तदेवाह—उत्स्रक्ष्य इति। हे मूढ! चिह्नानि त्वया धृतानि उत्स्रक्ष्ये त्याजयिष्यामि तत्र हेतुत्वेन विशिनष्टि—यैः चिह्नैः त्वमेव विकत्थसे ॥ ८ ॥

**श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः**

यैः काशीराजादिभिः ॥ ८-१४ ॥

**श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी**

श्लोकद्वयस्य सरस्वत्या अभिमतो वास्तवार्थो यथा अवतीर्ण इति भागुरिमतेऽकारलोपे सति पुनर्नञोऽकारः वासुदेवोऽहं न अवतीर्णः किन्तु भूतानामनुकम्पार्थं त्वमेक एव वासुदेवो नान्यः अतः शुक्तौ रजतस्येव मयि या मिथ्याभिधा तां त्यज त्याजयेत्यर्थः। अत एव भगवता प्रतिवक्ष्यते "त्याजयिष्येऽभिधानम्" इति ॥ ५ ॥ मौढ्यादेव हेतोरस्मच्चिह्नानि कृत्रिमशङ्खचक्रादीनि यानि वर्त्तन्ते तानि बिभर्षि अस्मन्निग्रहाकरणात् त्वमेव पालयसि नतु दूरीकरोषि एतदन्यार्थ्यमिति भावः। तस्मान्मां त्यक्त्वा तानि चिह्नानि त्याजयित्वा एहि मोक्षदानार्थं कृपया आगच्छ नोऽस्माकमसुराणां मोक्षदातृत्वात्त्वमेव शरणं संसारात् रक्षिता चेद्भवसि तदा मम मह्यम् आहवं युद्धं देहि युद्धे मां हत्वा मोक्षं प्रापयेति भावः ॥ ६-७ ॥ हे मूढ! चिह्नानि उत्स्रक्ष्ये त्याजयिष्यामीत्यर्थः। यद्वा चिह्नानि स्वीयसुदर्शनादीनि उत्स्रक्ष्ये त्वयि प्रक्षेप्स्यामि यैस्सह त्वमेवं विकत्थसे तेष्वपीत्यर्थः ॥ ८ ॥

**गूढार्थदीपिनी**

वस्तुतस्तु अहं न यतोऽपरः अश्रेष्ठः तुच्छ इत्यर्थः। किन्तु त्वमेव अवतीर्णः। मौढ्यादेव यानि एतानि अस्माभिः कल्पितानि कृत्रिमाणि सन्ति त्वं तु नित्यान्येव तानि विभर्षि अतः त्यक्त्वा मयि प्रक्षिप्य शरणं मुक्तिप्रदत्वात् आश्रयः सन् मामेहि स्वीकुरु। न चेदेवं तर्हि आहवं युद्धेन मोक्षं देहीति वागर्थः। त्यज त्याजय ॥ ५-६ ॥ कत्थनम् आत्मश्लाघनम् ॥ ७ ॥ उत्स्तक्ष्ये त्वयि प्रक्षेप्स्यामि। विकत्थसे श्लाघसे ॥ ८ ॥

**श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः**

यैः कृत्रिमैश्चिह्नैस्त्वमेवम्विकत्थसे श्लाघसे तानुत्स्रक्ष्ये त्याजयिष्यामि ॥ ८ ॥

**श्रीमद्वल्लभाचार्य्यकृता सुबोधिनी**

राजवाक्यमाह द्वयेन। **वासुदेवोऽवतीर्णो**ऽहमिति। स एक एव भवितुमर्हति। उभयोः प्रयोजनाभावात्। तर्हीदं वाक्यं विपरीतं कुतो न भवतीत्याशङ्क्याह **न चापर** इति। अपरः यो न राजा सामान्यभावं च प्राप्तः स न भवतीत्याशयः। किञ्च। कार्यमपि त्वयि विरुध्यते, न मयीत्याशयेनाह **भूतानामनुकम्पार्थ**मिति। त्वया अक्षौहिणीवधेन भूतानुकम्पा न क्रियत इत्यभिप्रायः। नन्वेवमस्तु, दूतः किमिति प्रेष्यत इति चेत्। तत्राह **त्वं त्विति**। **मिथ्याभिधां** वसुदेवपुत्रत्वेन वासुदेव इति संज्ञाम्। सरस्वती तु 'सत्त्वं विशुद्धं वसुदेवशब्दित'मिति वाक्यात् शुद्धसत्त्वे आविर्भूतत्वमेव, अतो मिथ्याभिधात्वमिति ॥ ५ ॥ ननु योगस्य विद्यमानत्वात्कथं मिथ्यात्वम्, कथं वा त्यागः कर्तुं शक्यत इति चेत्। सत्यम्। नहि लोके पितृपुत्रत्वेन नाम भवति। अन्यथा नामकरणं व्यर्थं स्यात्। अतो योगो विद्यमानोऽपि व्यवहारे न वक्तव्यः। अयमेव च त्यागः यल्लौकिकवैदिकव्यवहारेषु तन्नामाख्यापनम्, भ्रमजनकत्वात् मिथ्यात्वमिति मन्यते, वासुदेवः परब्रह्मणोऽपि नामेति, अन्यान्यपि चिह्नानि त्यक्तव्यानीत्याह **यानि त्वमस्मच्चिह्नानी**ति। पूर्वं स्वमिन् वासुदेवत्वं सिद्धमिति अस्मच्चिह्नत्वं चक्रादीनाम्। नन्वस्मास्वन्यचिह्नानि कथं भवेयुः, अतोऽस्मच्चिह्नान्येव तानीत्याशङ्कायामाह **मौढ्याद्बिभर्षी**ति। अस्मन्मौढ्याच्चिह्नानि बिभर्षीति वास्तवोर्थः। जीवा भगवदाविर्भावेऽपि भगवन्तं न जानन्तीति भगवान् चिह्नानि बिभर्ति। अस्मदिति पञ्चमीबहुवचनम्। अस्मद्धेतोः।

तत्रापि प्रयोजकधर्मात् मौढ्याद्धेतुत्वमुद्धाराद्यमेव । नाशस्य पूर्वमेव सिद्धत्वात् । सात्वतेति वंशनाम्ना वैष्णवनाम्ना वा सम्बोधनम् । तेन वैष्णवन्यायेन शङ्खचक्रादिधारणं न निषिध्यत इति सूचितम् । सत्त्वप्रधानाः सात्वाः । सात्वत इति तसिल् । विसर्गपाठो वा । लोपो वा द्रष्टव्यः । भक्तजनानुरोधात् बिभर्षीति । एवं विरुद्धनिराकरणं स्वबुद्ध्योक्त्वा, स्वस्य कृपालुतामाविष्कुर्वन्नाह **एहि मां त्वं शरणमिति** । लौकिकदृष्ट्या सामर्थ्यं न दृष्टमिति यदि नागमनम्, तदा मम आहवं देहि । आ समन्तात् त्वं मामेहि प्राप्नुहि । यथा निकटे गते मम सायुज्यसिद्धिर्भवति । अहमितः त्वत्स्थाने गन्तुमशक्त इति । इदमपि कृपाकार्यं स्वयमागत्योद्धरणम् । नोचेत्, मम वं आह । मह्यमेतावत्सुखं दास्यामीति वद । तदा निश्चिन्ततया सन्देहाभावात् त्वत्समीपागमने यत्नं करिष्यामीति ॥ ६ ॥ एतद्वाक्याद्भगवद्भक्तानां क्रोधे उत्पन्ने तस्य परलोकसिद्धिरपि न भवतीति तेषां तच्छ्रवणेन कौतुकरस एव जात इत्याह **कत्थनं तदुपाकर्ण्येति** । **कत्थनं** स्वश्लाघाम् । पौण्ड्रकमिति नाम्ना तस्य हीनत्वमुक्तमेव । पुण्ड्रा हीनाः चण्डालविशेषाः, तद्भावादुत्पन्नः पौण्ड्रः, कुत्सितार्थे कप्रत्ययः, अधमस्वभावोत्पन्नेष्वप्यधम इति । तत्रापि न देह एव तस्य दुष्टः, किन्त्वन्तःकरणमपीति ज्ञापयितुमाह **अल्पमेधस** इति । **सभ्याः** सभार्हाः । उग्रसेनो राजा येषामिति धर्मविचारो निरूपितः । सर्व एव विचारकाः प्रमेयमत्यन्तं बाधितमिति **उच्चकैर्जहसुः** । तदेति विचारात्पूर्वमेव ॥ ७ ॥ ततः परिहासकथां कृतवन्तः । अज्ञा इव भूत्वा कीदृशोऽयं वासुदेवः, कथं भक्तपरायण इत्यादिप्रस्तोभनावाक्यैः । उपहासकथामुक्त्वा स्थितेषु **तेषु भगवान् दूतमुवाच** । भगवद्भावं प्राप्तो वदतीति तस्य वाक्याकरणे तस्याग्रे भगवत्त्वमपि न सेत्स्यतीति तद्वाक्यं यथाकथञ्चित्सत्यं करोति । **उत्स्रक्ष्ये मूढ चिह्नानीति** । यैर्धर्मैर्मौढ्यं प्रतीतं भवति, जीवत्वं वा प्राकृतत्वं वा । मूढेति सम्बोधनम् । लोकप्रतीत्या यैः कृत्वा त्वमेवं विकत्थसे, आत्मानमेव बहु मन्यसे, यद्यहमज्ञत्वादिधर्मप्राकट्यं न कुर्याम्, तदा तवैवं विकत्थनं न भवतीति । अत एव अस्मच्चिह्नानीति जीवधर्माणां ग्रहणं निरूपितम् । मद्धर्मपरित्यागद्वारा मामेव परित्यज्य मां शरणमेहि । शरणरूपं मां प्राप्नुहि । जीवाश्रयो भगवान् भवतीति जीवाश्रितश्च तिष्ठतीति । शिष्टमङ्गीकृतं न विरुद्धमिति ॥ ८ ॥

### श्रीसुबोधिनी-सारः

तद्वाक्यानि द्वाभ्यामाह । भूतानामनुकंपार्थं वासुदेव एक एवाहमवतीर्णोऽस्मि अपरोऽन्यो न च त्वं तु मिथ्याभिधां कपटनाम त्यज ॥ ५ ॥ हे सात्वत अस्माकं चिह्नानि शंखचक्रादीनि यानि त्वं मौर्ख्याद्धेतोर्बिभर्षि धारयसि तानि त्यक्त्वा मां शरणं त्वमेहि आगच्छ नो चेदेवं नो कुर्यास्तर्हि मम मह्यमाहवं संग्रामं त्वं देहि ॥ ६ ॥ शुकोक्तिः । अल्पा तुच्छा मेधा बुद्धिर्यस्य तस्य पौंड्रकस्यैतत्कत्थनमात्मश्लाघावाक्यम् उपाकर्ण्य श्रुत्वा उग्रसेनादयः सभ्याः सभार्हा उच्चैस्तदा जहसुः ॥ ७ ॥ परिहासकथामनु भगवान् दूतमुवाच हे मूढ यैश्चिह्नैस्त्वमेवं विकत्थसे आत्मानं श्लाघसे तानि चिह्नानि उत्स्रक्ष्ये त्याजयिष्यामि अंतर्भावितणिचा । यद्वा यैः सह त्वमेवं विकत्थसे तेषु त्वयि च चिह्नानि चक्रादीनि उत्स्रक्ष्ये प्रक्षेप्स्यामि ॥ ८ ॥

### श्रीविट्ठलरायात्मजश्रीवल्लभकृतलेखः

यानि त्वमित्यत्र । वास्तवार्थपक्षे सात्वतपदस्यार्थमाहुः **सत्त्वप्रधाना** इति । तथा चास्मदितिपञ्चमीबहुवचनान्तस्य सात्वत इति तसिलन्तं विशेषणम् । वं आहेति व्याख्याने लोटो मध्यमपुरुषस्य च व्यत्ययेन लट्प्रथमपुरुषश्च । मामेहि ततः शरणं शरणमार्गं देहि, नोचेन्मम वं वदेत्यन्वयः । **उत्स्रक्ष्ये मूढेत्यत्र** । **अत एवेति** । अज्ञत्वादिधर्मप्राकट्यादेव त्वया एवं निरूपितम् । तथापि त्वदुक्तमेवास्तु । अस्मच्चिह्नानि बिभर्षीत्यस्य त्वदभिमतव्याख्यानेपि त्वयैव जीवधर्माणां ग्रहणं निरूपितम् । अतस्त्वया स्वपरत्वेनोक्तं त्यक्त्वेहि मामितिवाक्यं मत्परत्वेन जानीहि । तत्पक्षे मूले मां भगवन्तं परित्यज्य मां भगवन्तं शरणमेहीत्यन्वयः । भगवत्परित्यागपदार्थमाहुः **धर्मपरित्यागद्वारेति** । धर्माणां भगवतश्च भेदाभेदव्यवस्थापनात्तत्परित्यागः परम्परया भगवत्परित्यागः । तथा च मां परित्यज्येत्यस्य मद्धर्मान्परित्यज्येत्यर्थः । ततो मां शरणमेहीति मूलेर्थः । तद्धर्मेति । तत्त्वदुक्तं जीवधर्मग्रहणं धर्मेत्यादिप्रकारकमित्यर्थः । त्वदभिप्रेतार्थस्तु विरुद्धत्वान्न मन्तव्य इत्याशयेन तदभिप्रेतार्थमनुवदन्ति **जीवाश्रितश्चेति** । **शिष्टमिति** । शरणत्वातिरिक्तमित्यर्थः । शरणत्वं तु न मन्तव्यमित्याहुः **यदुक्तमिति** ।

### गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधनी

पौण्ड्रकवचनमेव दूतोऽनुवदति—वासुदेव इति । भगवान् वासुदेवोऽहमेवावतीर्णः, स च एक एव न चापरः, एकावतारेणैव प्रयोजनसिद्धाववतारान्तरस्य प्रयोजनाभावात् । अवतारप्रयोजनमाह—भूतानां प्राणिनामनुकम्पार्थं अनुग्रहार्थमिति । त्वं तु मिथ्यैव वासुदेव इत्यभिधां धत्से, अतस्तां त्यज ॥ ५ ॥ हे सात्वत ! यान्यस्मदसाधारणानि चिह्नानि शङ्खचक्रादीनि मौढ्यात्त्वं बिभर्षि तानि त्यक्त्वा मां शरणमेहि आगच्छ, नो चेत् शरणं नाभ्येषि चेत् तर्हि ममाहवं युद्धं देहि युद्धयस्व ॥ ६ ॥ अल्पमेधसः मन्दभाग्यस्य पौण्ड्रकस्य तत् दूतोक्तं कत्थनं दुर्वचनमाकर्ण्य श्रुत्वा सभ्याः सभायां स्थिताः उग्रसेनादयस्तदा उच्चकैर्जहसुः ॥ ७ ॥ परिहासकथां अनु अनन्तरं भगवान् कृष्णो दूतमुवाच । भगवद्वचनमाह—उत्स्रक्ष्ये इति । हे मूढ ! यैः कृत्रिमैः धृतैश्चिह्नैः त्वमेवं विकत्थसे आत्मानं श्लाघसे, तानि त्वया धृतानि चिह्नानि उत्स्रक्ष्ये त्याजयिष्यामि ॥ ८ ॥

### अन्वितार्थप्रकाशिका

वासुदेव इति ॥ भूतानामनुकम्पार्थं भगवान् वासुदेवोऽहमेवावतीर्णः स च एक एव न चापरः त्वं तु मिथ्यैव वासुदेव इत्यभिधां धत्से अतस्तां त्यज। वस्तुतः अपरः अश्रेष्ठः अहं भूतानामनुकम्पार्थं वासुदेवः न अवतीर्णः किन्त्वेकस्त्वमेवावतीर्णः अतस्तव या मयि मिथ्याभिधा तां त्यज त्याजय। "त्याजयिष्येऽभिधानं मे" इति प्रतिवचनात् ॥५॥ यानीति ॥ हे सात्वत! यान्यस्मदसाधारणानि चिह्नानि शङ्खचक्रादीनि मौढ्यात्त्वं बिभर्षि तानि त्यक्त्वा मां शरणमेहि आगच्छ। नोचेत् शरणं नाभ्येषि चेत् तर्हि ममाहवं युद्धं देहि युद्धयस्व। वस्तुतः मौढ्याद्धेतोर्यान्यस्मच्चिह्नानि अस्माभिः स्वस्मिन् लक्षणतया कल्पितानि चक्रादिरूपाणि त्वं नित्यमेव धारयसि। अतस्तानि त्यक्त्वा मयि प्रक्षिप्य शरणं मुक्तिदत्वादाश्रयः सन् मामेहि स्वीकुरु। एवञ्च करोषि चेन्ममाहवं देहि युद्धेन मोक्षं देहि ॥ ६ ॥ कत्थनमिति ॥ अल्पमेधसः मन्दभाग्यस्य। असिजार्षः। पौण्ड्रकस्य तत् दूतोक्तं कत्थनं दुर्वचनमाकर्ण्य श्रुत्वा सभ्याः सभायां स्थिताः उग्रसेनादयस्तदा उच्चैर्जहसुः ॥ ७ ॥ उवाचेति ॥ परिहासकथाम् अनु अनन्तरं भगवान् कृष्णो दूतमुवाच। हे मूढ! यैः काशिराजादिभिः सह त्वमेवं विकत्थसे तेष्वपि त्वयि च चिह्नानि चक्रादीनि उत्स्रक्ष्ये प्रक्षेप्स्यामि। यद्वा। यैः कृत्रिमैः धृतैश्चिह्नैस्त्वमेवं विकत्थसे आत्मानं श्लाघसे तानि त्वया धृतानि चिह्नानि उत्स्रक्ष्ये त्याजयिष्यामि ॥ ८ ॥

### श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्

तथाहि ॥ ५-७ ॥ हे मूढ यैः कृत्रिमैः सुदर्शनादिचिह्नैः त्वमेवं विकत्थसे स्वश्लाघां करोषि तानि चिह्नानि अहमुत्स्रक्ष्ये त्याजयिष्यामि ॥ ८ ॥

### भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

तदेवाह ॥ वासुदेव इति ॥ भूतानां, अनुकम्पार्थं, अवतीर्णः वासुदेवः, अहं एकः एव अपरः, न च नैव, त्वं तु, मिथ्याभिधां मिथ्यैवाङ्गीकृतं भगवन्नाम, त्यज जहि ॥ ५ ॥ यानीति ॥ हे सात्वत सात्वतकुलोत्पन्न, त्वं यानि अस्मच्चिह्नानि शङ्खचक्रादीनि, मौढ्यात्, बिभर्षि। तानि, त्यक्त्वा, मां शरणं एहि आगच्छ। नो चेत् शरणं नाभ्येषि तर्हि, मम, आहवं युद्धं, देहि। मया युद्धयस्वेत्यर्थः ॥ ६ ॥ कत्थनमिति ॥ अल्पमेधसोऽल्पबुद्धेः, पौण्ड्रकस्य, तत्पूर्वोक्तं, कत्थनं, उपाकर्ण्य, तदा, उग्रसेनादयः, सभ्याः, उच्चकैरुच्चस्वरेण, जहसुर्हासं चक्रुः ॥ ७ ॥ उवाचेति ॥ परिहासकथामनु, उग्रसेनादिकृतपरिहासकथायाः पश्चादित्यर्थः। भगवान् दूतं, उवाच। हे मूढ, यैः चिह्नैः, त्वं एवं, विकत्थसे, तानि चिह्नानि, त्वया धृतानीति शेषः। उत्स्रक्ष्ये त्याजयिष्यामि ॥ ८ ॥

### कृष्णप्रिया

हे कृष्ण! इस भूतल पर केवल मैं ही वासुदेव हूँ और कोई वासुदेव नहीं है। भूतमात्र पर अनुग्रह करने के लिए मैंने ही अवतार ग्रहण किया है। आपने मिथ्या ही मेरा नाम धारण किया है। मैं आपको सूचना देता हूँ कि अब संज्ञा को छोड़ दीजिये ॥ ५ ॥ अबुध पौण्ड्रक भगवान को सन्देश भेजता है कि हे सात्वत्! हे यदुवंशी कृष्ण! आपने मूढतावश वासुदेव बनकर गदा-शंखादि मेरे चिह्न धारण कर लिये हैं। प्रथम तो ये सर्व चिह्नों का आप त्याग करें, फिर मेरी शरण में आओ, यदि मेरी इस बात को स्वीकार नहीं करते हो तब आप मेरे साथ संग्राम करें ॥ ६ ॥ श्री शुकदेवजी ने कहा—राजन्! अल्पबुद्धि पौण्ड्रक का यह प्रजल्पन सुनकर महाराज उग्रसेन आदि सभासद एवं सारी सभा उच्चस्वर से हँसने लगी ॥ ७ ॥ जब सभा एवं सभासदों की हँसी समाप्त हो गयी तब भगवान् श्रीकृष्ण ने दूत को कहा—भैया तुम जाकर अपने राजा को कह देना कि हे मूढ! मैं अपने शंख चक्र आदि शस्त्रों का निष्क्रियता से त्याग नहीं करूँगा लेकिन इन चिह्नों को अस्त्रों को तुझपर ही छोड़ूँगा और साथ-साथ तुझको बहकाने वाले साथियों पर छोड़ूँगा जिनके बहकाने से तू आज इतना बहक रहा है॥ ८ ॥

**मुखं तदपिधायाज्ञ [१]कङ्कगृध्रवटैर्वृतः। शयिष्यसे हतस्तत्र भविता शरणं शुनाम् ॥ ९ ॥**
**इति दूतस्तदाक्षेपं[२] स्वामिने सर्वमाहरत्। कृष्णोऽपि रथमास्थाय[३] काशीमुपजगाम ह ॥ १० ॥**
**पौण्ड्रकोऽपि तदुद्योगमुपलभ्य महारथः। अक्षौहिणीभ्यां संयुक्तो निश्चक्राम पुराद् [३]द्रुतम् ॥ ११ ॥**
**[४]तस्य काशिपतिर्मित्रं पार्ष्णिग्राहोऽन्वयान्नृप। अक्षौहिणीभिस्तिसृभिरपश्यत् पौण्ड्रकं हरिः[५]॥ १२ ॥**

---

१. बलै।—वीर ; गृध्रबलैर्वृतम्—विज.। २. तमाक्षेपं—श्रीधर. टि.। ३. मारुह्य प्रायात्काशीं ससैनिकः—विज.। ३. बहि—वीर.। ४. अयं श्लोको नास्ति—विज.।

५. तमायान्तं रथोपस्थे सुवर्णं गरुडे स्थितम्। सुवर्णबाहुयुगलमपश्यत्पौण्ड्रकं हरिः ॥—अयमधिकः विज.।

## कर्दमक्षमा

अन्वयः—हे अज्ञ, हतः, तत्, मुखम्, अभिधाय, कंकगृध्रवटैः, वृतः, शयिष्यसे, शुनाम्, शरणम्, भविता ॥ ९ ॥ इति, दूतः, तत्, सर्वम्, आक्षेपम्, स्वामिने, आहरत्, कृष्णः, अपि, रथम्, आस्थाय, काशीम्, उपजगाम, ह ॥ १० ॥ तत्, उद्योगम्, उपलभ्य, महारथः, पौण्ड्रकः, अपि, अक्षौहिणीभ्याम्, संयुक्तः, पुरात्, द्रुतम्, निश्चक्राम ॥ ११ ॥ नृप ! तस्य, मित्रम्, काशिपतिः, तिसृभिः, अक्षौहिणीभिः, पार्ष्णिग्राहः, अन्वयात्, हरिः, पौण्ड्रकम्, अपश्यत ॥ १२ ॥

## श्रीधरस्वामिविरचिता भावार्थदीपिका

मां शरणमेहीत्यस्योत्तरम् । मुखमिति । वटाः कंकादिवत्पक्षिविशेषाः । तत्र तदा शुनां शरणमाश्रयो भविताऽसि ॥९॥ काशीमिति । पौंड्रकस्यापि तदा मित्रपुरेऽवस्थानात् ॥ १०-११ ॥ पार्ष्णिग्राहः पृष्ठतो रक्षकः ॥ १२-१३ ॥

## श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

तत्ततोऽर्थान्मदत्यागोत्तरम् । यद्वा—येन मुखेन संप्रत्येवं ब्रूषे तन्मुखम् । अपिधायाच्छाद्य । शुनां सारमेयाणाम् । श्वानस्त्वां सुखेन भोक्ष्यन्तीति भावः ॥ ९ ॥ इत्युक्तम् । स्वामिने पौंड्रकाय । तदा प्रेषणादिसमये । मित्रपुरे काश्याम् ॥ १० ॥ तदुद्योगं कृष्णोद्योगम् । द्रुतं क्षिप्रम् ॥ ११ ॥ तस्य पौंड्रकस्य । काशीशब्दो विभाषया ङीषंतः "कृदिकारादक्तिनः" इति विधानात् । काशते प्रलयेऽपि प्रकाशते तेजोरूपेणेति काशी 'काशृ-दीप्तौ' अतो धातोरिः । मित्रमासीदिति शेषः ॥ १२ ॥

## श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी

किन्तु मां शरणमेहीति यदादिष्टं तद्भागधेयं शुनामेव सम्पत्स्यते नान्येषामित्याह—मुखमिति । तत्कत्थनपरं मुखमपिधाय अधोमुखतया निपातेन बालुकादिभिराच्छाद्य अन्योपि शयानो मुखं वस्त्रेणाच्छाद्य शेते कङ्कादिभिर्वृत इति तदाप्याधुनिकवत्सहायास्तव भविष्यन्तीति भावः । वटा मांसाहारितीक्ष्णतुण्डाः भवितेति तृच्प्रत्ययान्तः शयिष्यस इति मध्यमपुरुषेण त्वम्पदलाभात् भवितासीत्यर्थः । अन्यत्तैः यद्वा उत्स्रक्ष्ये त्वयि मोक्ष्यामि यैरुत्सृष्टैस्त्वं शयिष्यसे येनैव विकत्थसे तन्मुखञ्चापिधायेत्यन्वयः ॥ ९ ॥ तं पूर्वोक्तमाक्षेपं पाठान्तरे तदाक्षेपं तत्कृतमाक्षेपम् उप काशीसमीपे जगाम ह हर्षे अन्यत्तैर्व्याख्यातं । यद्वा काशीतिकाशी करुषदेशयोर्नैकत्व्यात् ॥ १० ॥ महारथः महायोद्धा यद्वा गरुडध्वजरथारोहणात् ॥ ११ ॥ तस्येत्यर्द्धकम् । नृप इति समृद्धि सूचयति नृपेति क्वचित्पाठः अक्षौहिणीभिरिति सार्द्धद्वयकम् । श्रीवत्सोपि पररोमरोपणया कृत्रिम एव वेषं कृत्रिममिति वक्ष्यमाणात् श्रीविष्णुपुराणेपि "वक्षस्यलङ्कृतञ्चास्य श्रीवत्सं ददृशे हरिः" इति आदिशब्दात् पद्मादि इति चतुर्भुजत्वं महादेववरेणेति पाद्मोत्तरखण्डे असेः कक्षाधःप्रतिमुक्तत्वात् एतदपि रचितं ज्ञेयम् ॥ १२-१३ ॥

## श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी

तत् कत्थनकरं मुखमपिधाय अधोमुखतया निपातेन बालुकादिभिराच्छाद्य, अन्योऽपि शयानो मुखं वस्त्रेणाच्छाद्य शेते, तदेव त्वत्कत्थनमपयास्यतीति । किंवा कत्थनस्य फलं भक्ष्यस इति भावः । वटाः—मांसाहारितीक्ष्णतुण्डाः; भवितेति तृच्प्रत्ययान्तम्, भविष्यसि । अतएव तैरपि व्याख्यातम् । भवितासीति, अन्यच्च तैर्व्याख्यातम् । यद्वा, उत्स्रक्ष्ये त्वयि मोक्ष्यामि । यैरुत्सृष्टैस्त्वं शयिष्यसे, येनैव विकत्थसे, तन्मुखञ्चापिधायेत्यन्वयः ॥ ९ ॥ उप काशीसमीपे जगाम, ह हर्षे; अन्यत्तैर्व्याख्यातम् । यद्वा, काशीमिति काशी-करूषदेशयोर्नैकत्व्यात् ॥ १० ॥ महारथो महायोद्धा; यद्वा, गरुडध्वजरथारोहणात् ॥११॥ नृप इति समृद्धि सूचयति । तामेव दर्शयति—तिसृभिरक्षौहिणीभिः सहेति । हरिरि त सहजनिजवेशादिना मनोहरणात्, किंवा कर्त्तव्य-पौण्ड्रकादिप्राणहरणाभिप्रायेण, एवमग्रेऽपि ॥ १२ ॥

## श्रीमद्वीरराघवाचार्यकृता भागवतचन्द्रचन्द्रिका

मां शरणमेहीत्यस्योत्तरमाह—मुखमिति । हे अज्ञ । तत् येन इत्थं विकत्थितं तन्मुखमपिधायाच्छाद्य कङ्कादिभिर्वृतः शयिष्यसे वटाः कङ्कादिवत्पक्षिविशेषाः ततः तत्र शयनस्थले भवान् शुनां शरणं भविता भविष्यति मया हतं शायितं च त्वा स्वसृगालादयः खादिष्यन्तीति भावः ॥९॥ इतीति । आक्षेपमधिक्षेपं स्वामिने पौण्ड्रकाय समाहरत्—आगत्य न्यवेदयदित्यर्थः । कृष्णोपीति । रथमास्थायाधिष्ठाय काशीमुपजगाम तत्समीपमुपजगामेत्यर्थः ॥ १० ॥ पौण्ड्रकोपीति । तस्य कृष्णस्योद्योगमुपगम्य उपलभ्य ज्ञात्वा द्रुतं शीघ्रं पुरात्कारुषपुरान्निश्चक्राम यद्वा पौण्ड्रकस्य तदा मित्रपुरे अवस्थानात्काशीपुरादिति वार्थः ॥११॥ तस्येति । तस्य पौण्ड्रकस्य मित्रं सखा काशिपतिः काशीराजः पार्ष्णिग्राहः पृष्ठतो रक्षकः सहायभूतस्सन् तिसृभिरक्षौहिणीभिः सहान्वयादनुजगाम तदा हरिः कृष्णः पौण्ड्रकं ददर्श ॥ १२॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

येन मुखेन सम्प्रत्येवं ब्रूषे तन्मुखम् अपिधाय आच्छाद्य वटाः कङ्कादिवत् पक्षिविशेषाः शुनां शरणं भवितासीति श्वानस्त्वां सुखेन भोक्ष्यन्ते इति भावः ॥ ९-१३ ॥

### गूढार्थदीपिनी

अपिधाय आच्छाद्य । तत्र रणभूमौ कङ्कः चीलपक्षी वटः ( वटेर पक्षी ) ॥९॥ हृ हर्षे ॥१०॥ उपलभ्य ज्ञात्वा ॥११॥ पार्ष्णिग्राहः पृष्ठरक्षकः सन् । तमनुजगाम ॥ १२ ॥

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः

त्यक्त्वैहि मां त्वं शरणमित्यस्योत्तरमाह—सुखमिति ॥ ९ ॥ तदानीं पौण्ड्रकस्य मित्रपुरेऽवस्थानात् काशीमुपजगाम हेत्युक्तम् ॥ १०-११ ॥ पार्ष्णिग्राहः पृष्ठतो रक्षकः ॥ १२-१६ ॥

### श्रीमद्वल्लभाचार्य्यकृता सुबोधिनी

यदुक्तमहं शरणार्ह इति, तज्जीवानां नाश्रयत्वम्. किन्तु ब्रह्मण एवेति प्रार्थितं च देयमिति शरणे निर्णयमाह **मुखं तदपिधायेति** । तत्रैव काशीनिकटे त्वं शुनां शरणं भविता । अहोरात्रसमसङ्ख्याताः तद्देवताः यमालये श्वानः तिष्ठन्तीति प्रसिद्धिः । जीवाश्च श्वान इत्यपरे । 'गतिसामान्यात्' । 'क्षुत्परीतो यथा दीन' इति वाक्यात् । इन्द्रियाणि वा कुत्सितानि । त एव हि तादृशं शरीरमाश्रयन्ति । कालावयवा जीवा इन्द्रियाणि वा । मुखपिधानकर्ता पुत्रादिर्भवति । सर्व एव मारणीया इति मुखस्यापिधानमेव । अज्ञेति । ज्ञानिनो ज्ञानेन देहो दग्धो भवतीति शेषप्रतिपत्तिः, यथाकथञ्चिदपि भवतीति अपिधानं 'तदा' न दूषणं भवेत् । अतस्तद्व्यावृत्त्यर्थं संबोधनम् । कङ्कास्तामसाः, गृध्रा राजसाः, बकाः सात्त्विका इति त्रिविधैरपि भक्षकैर्वेष्टितः । आधिभौतिकाद्यभिमानिन्यो देवताः सर्वाश्चातः परं न परिपालयिष्यन्तीति । शरणं हि तेषामनुद्वेजकं भवति, तज्जीवतो न भवतीति, हतः सन् यथा शयिष्यसे, तदा शुनां शरणं भवितेति संस्काराभावोऽप्युक्तः । देहस्य येयं प्रतिपत्तिरुक्ता, साऽस्मृता । अन्ते युद्धसमये तत्रासक्तो न भविष्यतीति बोधनार्था । तदेव तस्य मोक्षो भवेदिति मोक्षदात्रा तथैव वक्तव्यम् ॥ ९ ॥ स दूतस्तथैवोक्तवानिति दूतो गुरुस्थाने जात इत्याह **इति दूत इति** । तद्भगवतोक्तमाक्षेपं स्वामिने स पोषक इति तद्धितार्थं सर्वमेवाहरत्, नत्वन्यथाभावं न्यूनं वा कृतवानित्यर्थः । वाक्यं प्रेषयित्वा स्वयमपि प्रस्थित इत्याह **कृष्णोऽपि रथमास्थायेति** । यद्यपि भगवान् तत्रैव प्रादुर्भूतः तस्य मुक्तिं दातुं शक्तः, तत्रापि कृष्णः फलरूपः भक्तकृपालुर्वा । सोऽप्यभेदमार्गेण भक्तो भवतीति, तत्स्त्रीणां दुःखं भवतीति, यद्यपि भगवता न गन्तव्यम्, तथापि रथमास्थाय रथस्थितः सुस्थो भक्तकार्यं करोतीति काशीमुपजगाम । तामसस्थाने भगवदाविर्भावः सहसा न भवतीति स्वयमपि काश्यां न प्रविष्टः, अन्यथा काशीत्वमेव न स्यात् । अत एव उप समीप एव जगाम ॥ १० ॥ सोऽपि ग्रामाद्बहिर्भगवन्तं द्रष्टुमागत इत्याह **पौण्ड्रकोऽपीति** । अन्यथा तस्य काश्यां किंवा भवेदिति तस्य भगवत उद्योगमेतावद्दूरं समागमनम् । **महारथ** इति युद्धाभिनिवेशात् शौर्यलक्षणः स्वधर्म उक्तः । अक्षौहिणीभ्यां सहितः, तस्य तावत् बलं सहजम्, सर्वसामग्र्या सहितो भगवत्समीपं गच्छेदिति । द्रुतं पुरान्निश्चक्रामेति । भगवदिच्छया समागतः कालः तत्रैव शरीरं गृह्णीयादिति भयाद्द्रुतमेव पुरान्निर्गमनम् ॥११॥ काशिराजोऽपि तन्मित्रमिति तस्याप्यधर्गतिर्भविष्यतीति तस्याप्यागमनमाह । **तस्य काशिपतिरिति** । मित्रत्वात्पार्ष्णिग्राहो भूत्वा अन्वयात् । नृपेति सम्बोधनम् । राजधर्मस्तथाविध इति ज्ञापयितुम् । तिसृभिरक्षौहिणीभिः सहित इति । तस्य तावदेव बलम् । तत्र भगवान् प्रथमं कृपया पौण्ड्रकं दृष्टवानित्याह **अपश्यत्पौण्ड्रकमिति** । भगवज्ज्ञानेन विद्धः स्वाभाविकं दोषं त्यजतीति । यतो हरिः ॥ १२ ॥

### श्रीसुबोधिनी-सारः

'त्यक्त्वैहि मां त्वं शरणम्' इति येनोक्तं तन्मुखमपिधाय नावृत्य कंकादिभिः पक्षिविशेषैर्वृतः तत्र युद्धे हतो मया शयिष्यसे शुनां श्वशृगालादीनां शरणं भविताश्रयो भविष्यसि ॥९॥ तस्याक्षेपम् इत्येवं सर्वं स्वामिने पौण्ड्रकाय दूत आहरन्न्यवेदयत् कृष्णोपि रथमाश्रित्य काशीमुपाययौ तदानीं मित्रपुरे पौंड्रकस्या वस्थानात् काशीनिरुक्तिरात्मपुराणे "गंगायाः सेवनान्नित्यं महादेवस्य वासतः ॥ सौभाग्यस्य च काशेन काशीत्येषाभवत्पुरी" ॥ १० ॥ तस्य कृष्णस्योद्योगमुद्यममुपलभ्य श्रुत्वा दृष्ट्वा च महारथः पौंड्रकोपि कपटवासुदेवोपि अक्षौहिणीभ्यां द्वाभ्यां संयुक्तो द्रुतं शीघ्रं पुरात्काशीतो निश्चक्राम ॥ ११ ॥ तस्य मित्रं काशीराजो पार्ष्णिग्राहः पृष्ठरक्षकः तिसृभिरक्षौहिणीभिरन्वयात् हे नृप हरिः पौंड्रकमपश्यत् ॥ १२ ॥

### श्रीविट्ठलरायात्मजश्रीवल्लभकृतलेखः

**मुखं तदपिधायेत्यत्र** । पक्षत्रयार्थान् क्रमेणाहुः **कालावयवा** इति । **देहो दग्ध** इति । लिङ्गशरीरं ज्ञानेन दग्धं भवतीत्यर्थः । शेषःप्रतिपत्तिरिति । शेषस्य स्थूलदेहस्य प्रतिपत्तिर्गतिरित्यर्थः । **इति दूत** इत्यत्र । **स्वामिने** इत्यस्यार्थमाहुः **स पोषक** इति । स पौण्ड्रको दूतस्य पोषको भवति इति हेतोस्तस्य हितार्थं सर्वमाहरदित्यर्थः । तथा च स्वामिने इति तादर्थ्यचतुर्थी । स्वामिहितार्थमित्यर्थः । **यद्यपीति** । 'स्वाप्ययसम्पत्त्योरन्यतरापेक्ष'मितिन्यायेन तत्रैव पौण्ड्रकहृदयप्रदेशे प्रादुर्भावेन मुक्तिदानसामर्थ्यस्य विद्यमानत्वात्तत्र गमनं नोचितम्, तथापि कृष्णत्वाद्गत इत्यर्थः । तथापि भक्तार्थमेव गन्तव्यम्, नत्वेतादृशार्थमित्यत आहुः **सोप्यभेदेति** । सोपि भक्त एव भवति । मार्गभेद एव, न तु प्राप्यभेदः । 'गोप्यः कामा'दित्यत्र तथोक्तेः । अतो गत इत्यर्थः । कृष्णपदस्य फलरूपत्वपक्षे आहुः **तत्स्त्रीणामिति** । हृदये एवाविर्भावे तत्स्त्रीणां भगवद्दर्शनं न स्यात्, तदा तासां दुःखं तिष्ठेदेव । अतस्तासु कृपया स्वदर्शनेन तासां कृतार्थत्वाय तत्र गत इत्यर्थः । भक्तकृपालुतावाचकत्वपक्षे आहुः **यद्यपीति** । ननु भक्तत्वे तु सुतरामत्रैवाकारणीयः, न तु तत्र स्वयं गन्तव्यमिति यद्यपि भवति, तथापि सुस्थो भगवान्भक्तकार्यं करोतीति सूचयितुं जगामेत्यर्थः । हेत्यनेनोक्तमाश्चर्यं यद्यपि भगवांस्तत्रैवेत्यारभ्य विवृतम् । एतावत्करणमाश्चर्यं तथापि कृतवानित्यर्थः । ननु हृदये आविर्भावेनापि भक्तकार्यं तु सिध्यत्येवेत्यत आहुः **तामसेति** । तस्य तामसस्थानस्थितत्वात्तद्धृदये सहसा साधनव्यतिरेकेणाविर्भावो न भवतीत्यर्थः । साधनैस्तामसत्वदोषे निवृत्ते तत्राप्याविर्भावो भवति, नतु साधनव्यतिरेकेणेति सहसेत्युक्तम् । अतो भक्तकृपालुत्वात्तत्कार्यार्थं गत इत्यर्थः । **स्वयमपि नेति** । तत्राविर्भूतो न भवत्यन्यत्र मथुरायामाविर्भूतोपि स्वयं न प्रविष्ट इत्यपि शब्दः । **अन्यथेति** । भगवतस्तत्र प्रवेशे काशीत्वमेव गच्छेत् । महत एव प्रसिद्धिहेतुत्वेन विष्णुपुरीत्वापत्त्या मथुरात्वं द्वारकात्वं वा स्यादित्यर्थः । **पौण्ड्रकोपीत्यत्र** । **अन्यथेति** । बहिर्गमनाभावे काश्यां स्थितस्य तस्य किं वा कार्यं भवेत् । तत्र भगवत्सान्निध्याभावान्मुक्तियुद्धादिकं किमपि कार्यं न भवेदित्यर्थः ।

### गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

'मां शरणमेहि' इति यदुक्तं तदुत्तरमाह—मुखमिति । हे अज्ञ ! येनैवं विकत्थसे तन्मुखमपिधाय व्यादाय कङ्कादिभिः पक्षिविशेषैर्वृतो यदा हतः शयिष्यसे तत्र रणभूमौ त्वं शुनां शरणं भविता भविष्यसि । मया हतं त्वां श्वसृगालादयः खादिष्यन्तीति भावः ॥ ९ ॥ इत्येवं तत् भगवदुक्तमाक्षेपवचनं सर्वं दूतः स्वस्वामिने पौण्ड्रकायाहरत् आगत्य निवेदितवान् । कृष्णोपीति स्पष्टम् । हेति निर्भयत्वं सूचयति । पौण्ड्रकस्य तदा मित्रपुरे काश्यामेवावस्थानम् ॥ १० ॥ महारथः पौण्ड्रकोपि तस्य कृष्णस्य युद्धोद्योगमुपलभ्य दृष्ट्वा अक्षौहिणीभ्यां संयुक्तो द्रुतं शीघ्रमेव पुरान्निश्चक्राम ॥ ११ ॥ हे नृप ! तस्य पौण्ड्रकस्य मित्रं काशिपतिः पार्ष्णिग्राहः पृष्ठतो रक्षकः सहायभूतः संस्तिसृभिरक्षौहिणीभिः सह अन्वयात् अनुजगाम, तदा हरिः पौण्ड्रकं ददर्श ॥ १२ ॥

### अन्वितार्थप्रकाशिका

मुखमिति ॥ हे अज्ञ ! येन मुखनैवं विकत्थसे तन्मुखमपिधाय व्यादाय आच्छाद्य वा कङ्कादिभिः पक्षिविशेषैर्वृतो यदा हतः शयिष्यसे तत्र रणभूमौ भवान् शुनां शरणं भविता भविष्यति । मया हतं त्वां श्वसृगालादयः खादिष्यन्तीति भावः । वटोऽप्यत्र पक्षिविशेष एव ॥ ९ ॥ इतीति ॥ इत्येवं तत् भगवदुक्तमाक्षेपवचनं सर्वं दूतः स्वस्वामिने पौण्ड्रकायाहरत् आगत्य निवेदितवान् । कृष्णः अपि रथमास्थाय काशीमुपजगाम । तत्समीपे पौण्ड्रकस्य तदा मित्रपुरे काश्यामेवावस्थानात् काशीकरूषदेशयोः प्रायो नैकत्वाद्वा ॥ १० ॥ पौण्ड्रक इति ॥ महारथः पौण्ड्रकोऽपि तस्य कृष्णस्य युद्धोद्योगमुपलभ्य दृष्ट्वा अक्षौहिणीभ्यां संयुक्तो द्रुतं शीघ्रमेव पुरान्निश्चक्राम ॥ ११ ॥ तस्येति त्रयम् ॥ हे नृप ! तस्य पौण्ड्रकस्य मित्रं काशिपतिः पार्ष्णिग्राहः पृष्ठतो रक्षकः सहायभूतः संस्तिसृभिरक्षौहिणीभिः सह अन्वयात् अनुजगाम । तदा हरिः शङ्खादिविशिष्टं पौण्ड्रकं ददर्श । अरि अरयुक्तं चक्रम् अमूल्यः अनर्घ्यो मौलिरन्यानि चाभरणानि यस्य तं स्पष्टं शेषम् । अत्र श्रीवत्सगरुडादीनि कृत्रिमाणि ज्ञेयानि ॥ १२-१४ ॥

### श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्

मां शरणमेहीत्यस्योत्तरमाह मुखमिति हे अज्ञ तत् स्वश्लाघां कुर्वाणं मुखं अपिधाय व्यादाय बटाः तीक्ष्णतुंडाः पक्षिविशेषाः तत्र तदा ॥ ९ ॥ काशीमुपजगाम । काशीसमीपवर्त्तिनं करूषदेशं जगाम ॥ १०-११ ॥ पार्ष्णिग्राहः पृष्ठतः सहायकारकः ॥ १२-१३ ॥

### भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

मां शरणमेहीत्यस्योत्तरमाह । मुखमिति ।। हे अज्ञ, तत् मुखं येनेत्थं विकत्थितं, तन्मुखमित्यर्थः । हतः सन्, अपिधायाच्छाद्य, कङ्काश्च गृध्राश्च बटाश्च तैः वृतः, शयिष्यसे, बटाः कङ्कादिवत्पक्षिविशेषाः । तत्र शयनस्थले, भवान् शुनां, शरणं

भविता भविष्यति। मया हतं शयितं च, त्वां शृगालादयः खादिष्यन्तीति भावः॥ ९॥ इतीति॥ इतीत्थं कृष्णेनाभिहित इत्यर्थः। दूतः, तदाक्षेपं, श्रीकृष्णकृताक्षेपं सर्वमपि, स्वामिने पौण्ड्रकाय, आहरत् व्याजहार। कृष्णः अपि, रथं आस्थाय, काशीं, उपजगाम। हेत्यामर्षिकहर्षे। तत् समीपे जगामेत्यर्थः। गोपालानन्दस्वामिनस्तु काशीसमीपवर्त्तिनं करूषदेशमित्याहुः। अन्ये तु तदा तस्य मित्रपुरेऽवस्थानात् काशीमेवेत्याहुः॥ १०॥ पौण्ड्रक इति॥ पौण्ड्रकः अपि, तदुद्योगं श्रीकृष्णकृतस्वमारणोद्योगं, उपलभ्य ज्ञात्वा, महान् रथो यस्य तथाभूतः, अक्षौहिणीभ्यां संयुक्तः सन्, द्रुतं शीघ्रं, पुरात् करूषपुरात्, काशीपुराद्वा, निश्चक्राम। कृष्णेन योद्धुमिति शेषः॥ ११॥ तस्येति॥ तस्य पौण्ड्रकस्य, मित्रं सखा, काशीपतिः काशिराजः, पार्ष्णिग्राहः पृष्ठतो रक्षकः, सहायभूतः सन्निति यावत्। तिसृभिः अक्षौहिणीभिः सह, अन्वयात् अनुजगाम। तदा, हरिः, पौण्ड्रकं अपश्यद्ददर्श॥ १२॥

### कृष्णप्रिया

हे अज्ञ! हे मूर्ख! उस समय तू अपना मुंह छिपाकर-अधोमुख गिरकर चील, गीध, बहरे आदि पक्षियों से घिरा हुआ नींद लेता होगा और मैं तेरा शरणागत नहीं बनूंगा, लेकिन तू उन श्वानों का शरण होगा जो तेरे शरीर का मांस नोंच-नोंच कर खाते होंगे॥ ९॥ राजन्! पौण्ड्रक के वह दूत ने भगवान श्रीकृष्ण का तिरस्कारपूर्वक यह उत्तर लेकर अपने स्वामी के समीप जाकर सम्पूर्ण सुनाया। यहाँ भगवान् श्रीकृष्ण ने रथारूढ होकर काशीनगर पर आक्रमण किया। कारण कि पौण्ड्रक उन दिनों में अपने मित्र काशिराज के समीप निवास करता था॥ १०॥ हे राजन्! भगवान् श्रीकृष्ण सज्ज होकर आक्रमण के लिए काशीपुर में आ रहे हैं यह वृत्तान्त जानकर प्रतीकार करने के लिये महारथी पौण्ड्रक भी दो अक्षौहिणी सेना से सज्ज होकर वेग से विना विलम्ब किये काशीनगर से बाहर आ गया॥११॥ काशीनरेश पौण्ड्रक का मित्र था वह भी अपने मित्र की सहायता के लिये तीन अक्षौहिणी सेना के साथ पौण्ड्रक के पीछे-पीछे आया। हे राजन्। भगवान् श्रीकृष्ण ने पौण्ड्रक को देखा॥ १२॥

**शङ्खार्यसिगदा[1]शार्ङ्गश्रीवत्साद्युपलक्षितम्। बिभ्राणं कौस्तुभमणिं वनमालाविभूषितम्॥ १३॥**
**कौशेयवाससी पीते वसानं गरुडध्वजम्।[2]अमूल्यमौल्याभरणं स्फुरन्मकरकुण्डलम्॥ १४॥**
**दृष्ट्वा तमात्मन[3]स्तुल्यवेषं कृत्रिममास्थितम्। यथा नटं रङ्गगतं विजहास भृशं हरिः॥ १५॥[4]**
**शूलैर्गदाभिः परिघैः शक्त्यृष्टिप्रासतोमरैः। असिभिः पट्टिशैर्बाणैः प्राहरन्नरयो हरिम्॥ १६॥[5]**

### कर्दमक्षमा

अन्वयः—शङ्खार्यसिगदा शार्ङ्गश्रीवत्साद्युपलक्षितम्, कौस्तुभः, मणिम्, बिभ्राणम्, वनमालाविभूषितम्, पीतकौशेयवाससी, वसानम्, अमूल्यमौल्याभरणम्, स्फुरन्मकरकुण्डलम्, गरुडध्वजम्, कृत्रिमम्, आत्मन्, तुल्यवेषम्, आस्थितम्, तम्, यथा, रङ्गम्, गतम्, नटम्, दृष्ट्वा, हरिः, भृशम्, विजहास॥१३-१५॥ अरयः, शूलैः, गदाभिः, परिघैः, शक्त्यृष्टिप्रासतोमरैः, असिभिः, पट्टिशैः, बाणैः, हरिम्, प्राहरत्॥ १६॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

गरुडः कृत्रिमो ध्वजे यस्य तम्। अमूल्योऽनर्घ्यो मौलिराभरणं च यस्य तम्॥ १४-१६॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

अरि चक्रम्। आदिना नंदकादिग्रहः॥ १३॥ मौलिर्मुकुटम्। आभरणं कंकणोर्मिकादिरूपम्। "मौलिः किरीटे धम्मिल्ले चूडायामनपुंसकम्। नाऽसावद्रौ स्त्रियां भूमौ" इति मेदिनी। अमूल्योऽल्पमूल्यः कृत्रिमत्वात्॥१४॥ तं पौंड्रकम्॥१५॥ अरयः पौंड्रसैनिकाः॥ १६॥

१. शार्ङ्गं दधत् श्रीवत्सलक्षितम्—विज.। २. आमुक्तमाल्या—विज.। ३. आत्मना—वीर.; आत्मना साम्यं—विज.।

४. क्षणेन तं काशिपतेः सैनिका दृढधन्विनः। शरैराच्छादयामासुः मेघाः शैलमिवांभसा॥
केचिद् गजान् रथानश्वानास्थाय रणमूर्धनि॥ १॥—अधिकः विज.।

५. तस्य काशिपतेर्मित्रं पार्ष्णिग्राहोऽपरो नृपः। अक्षौहिणीभिस्तिसृभिरुपायान्नृपसङ्गरम्॥ १॥
प्राच्यपुस्तके १२ श्लोकोऽत्र पाठभेदेन विजये दृश्यते।

### श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी

अमूल्येति। यत्नतो दिव्यभगवन्मुकुटानुकरणार्थं ज्ञेयम् ॥ १४ ॥ आत्मनस्तुल्यम् आत्मना तुल्यमिति वा पाठः। कृत्रिममिति श्रीभगवच्छङ्खादीनां तु स्वाभाविकत्वं सूचयति ॥ १५ ॥ अरय इति। प्रहारे नैष्ठुर्य्यं सूचितम् ॥ १६ ॥

### श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी

श्रीवत्सः कृत्रिम एव, वेषं कृत्रिममिति, वक्ष्यमाणत्वात्, श्रीविष्णुपुराणेऽपि (५।३४।१७)-'वक्षःस्थलकृतं चास्य श्रीवत्सं ददृशे हरिः' इति, आदि-शब्दात् पद्मादि, इति चतुर्भुजत्वम्, ततश्च बाहुद्वयमन्यदपि सर्वं प्रयत्नात् किञ्चित्सादृश्येन रचितं ज्ञेयम्। अमूल्येति दिव्यश्रीभगवन्मुकुटानुकारार्थम् ॥ १३-१४ ॥ तुल्यश्चासौ वेषश्च तं कृत्रिममिति श्रीभगवच्छङ्खादीनां नित्यत्वेन सहजत्वं सूचयति—यथेति दृष्टान्तेन; वेषधारणे नैपुण्यादिकं सूचितम्, अतो विशेषेण उच्चैर्जहास ॥ १५ ॥ अरय इति प्रहारनैष्ठुर्य्यं सूचितम् ॥ १६ ॥

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम्

अरि अरयुक्तं चक्रम् ॥ १३-१९ ॥

### श्रीमद्वीरराघवाचार्यकृता भागवतचन्द्रचन्द्रिका

कथम्भूतं शङ्खादिभिरुपलक्षितं तत्र अरि अरयुक्तं चक्रं कौस्तुभमणिं बिभ्राणं वनमालया विराजितम् ॥ १३ ॥ पीते पिशङ्गे कौशेयवस्त्रे वसानं परिदधानं गरुडः कृत्रिमो ध्वजे यस्य तममूल्यमनर्घं मौल्याभरणं यस्य स्फुरन्ती मकरे कुण्डले यस्य तम् ॥ १४ ॥ आत्मना कृष्णेन तुल्यो वेषो यस्य तम् अथापि कृत्रिमं वेषमास्थितं तत्र दृष्टान्तः, यथा नटं रङ्गगतमिति रङ्गे नृत्यस्थले नटमिव गतं स्थितमित्यर्थः। तमेवम्विधं दृष्ट्वा हरिर्भृशं प्रहसितवान् ॥ १५ ॥ शूलैरिति। तदा अरयः शत्रवः कृष्णं शूलादिभिः प्राहरन् प्रत्याहृतवन्तः ॥ १६ ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

वेषं कृत्रिममास्थितमित्यत्र महादेववरप्राप्तित्वादिति पाद्मोत्तरखण्डाल्लभ्यते ॥ १५-२८ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

गरुडः कृत्रिममूर्त्तिर्ध्वजे यस्य तम् अमूल्यः कृत्रिमत्वादल्पमूल्यो मौलिराभरणं यस्य तम् ॥ १४-१६ ॥

### गूढार्थदीपिनी

तस्येति त्रयम् अरि चक्रम्। वसानं धारयन्तम्। अमूल्यम् अल्पमूल्यम्। कृत्रिमत्वात्। अत्र अल्पार्थे नञ्। 'तदन्यत्वं तदल्पता' इति भूषणोक्तेः मौलिः मुकुटम् ॥ १३-१५ ॥ परिघो लोहदण्डः। ऋष्टिः उभयतोधारखड्गः। प्रासः प्रक्षेपास्त्रम्। तोमरः ( गड़ांसा ) पट्टिशः शस्त्रभेदः ॥ १६ ॥

### श्रीमद्वल्लभाचार्य्यकृता सुबोधिनी

तथा कृपायां तस्य जीवत एव सारूप्यं हेतुत्वेन वर्णयति शङ्खेति। कृत्रिमसहजभुजेषु शङ्खं अरिश्चक्रं च सहजयोर्धृतवान्। गदाशार्ङ्गे कृत्रिमयोः। श्रीवत्सादिचिह्नान्यपि कृतवान्। कौस्तुभसमानाकृतिमणिं कृत्वा कण्ठे स्थापितवान्। अन्ये तु श्रीवत्सकौस्तुभौ चर्म छित्वा तत्र स्थापितवानित्याहुः। तथा सत्यकृत्रिमता स्यादिति। वनमालाविभूषितमिति। यथैव नित्यनूतना भवति, तथा वनमालां सम्पादयतीति ॥१३॥ कौशेयवाससी पीते, भगवानिव वसानः समागतः, न तु कञ्चुकादिकं परिधाय, अन्यथा अन्ते वेषवशादन्यथा गतिः स्यात्। गरुडध्वजमिति। चित्रमयीं दारुमयीं वा गरुडमूर्तिं ध्वजे स्थापितवानिति। भजनीयोऽन्यो नास्तीति, धर्मश्चान्यो न कर्तव्य इति, भक्तैः सह स्वयमात्मानमेव पूजयतीति, अमूल्यमेव मौलिमाभरणानि च सम्पादितवान्। तथैव मकराकृतिकुण्डले। ध्यानेन भगवदावेशाच्च सर्व एव भगवद्धर्मास्तत्राविष्टा इति स्फुरत्पदेन सूचितम् ॥१४॥ तस्य रूपं दृष्ट्वा भगवान् संतुष्टः अभिनन्दनं कृतवानित्याह। दृष्ट्वा तमात्मनस्तुल्यं वेषं कृत्रिममास्थितमिति। परं कृत्रिमम्। आस्थितमिति तत्रासक्तिर्महतीति वेषस्य न केनाप्यंशेन भङ्गः सूचितः। कृत्रिमत्वे गतिर्न भविष्यतीत्याशङ्क्य, रसोत्पादकत्वात् 'स्थाय्येव भावो रस' इति 'अधिकं तत्रानुप्रविष्ट'मिति निरूपयितुमाह यथा नटं रङ्गगतमिति। अतिहर्षात् भृशं विजहास। तस्य सर्वं भावं स्मृत्वा सर्वस्यैवाभिनन्दनं कृतवानित्यर्थः। यतो हरिः ॥१५॥ ततः सेनायाः प्रथमं भगवत्यतिक्रममाह शूलैरिति। शिवप्राधान्यात् प्रथमं शूलग्रहणम्। दशभिरायुधैः सर्वप्रकारेण हरिं तूष्णीं स्थितं तान् गणयन्तं प्राहरन् ॥ १६ ॥

### श्रीसुबोधिनी—सारः

शंखः प्रसिद्धोऽरिश्चक्रम् असिः खड्गः गदा शार्ङ्गं श्रीवत्सस्तदादिभिरुपलक्षितं कौस्तुभमणि बिभ्राणं धरंतं वनमालया विभूषितम् ॥ १३ ॥ पीते कौशेये कृमिकीटोत्थे वाससी वसानं गरुडो ध्वजे यस्य तम् अमूल्यानि मौलौ मुकुटे आभरणानि यस्य तं स्फुरंती मकाराकारे कुंडले यस्य तम् ॥१४॥ कृत्रिममतात्त्विकमात्मनस्तुल्यं वेषम् आश्रितं तं छद्मवासुदेवं दृष्ट्वा हरिः श्रीकृष्णो भृशम् अत्यर्थं विजहास रंगं गतं नटमिव ॥ १५ ॥ शूलादिभिः शस्त्रैररयः शत्रवो हरिं प्राहरन् ॥ १६ ॥

### श्रीविट्ठलरायात्मजश्रीवल्लभकृतलेखः

गरुडध्वजमित्यत्र । ध्वजस्थापनस्य तात्पर्यत्रयमाहुः भजनीये इति । धर्मश्चेति । भक्तेः सहेति । दृष्ट्वा तमित्यत्र । कृत्रिमत्वे इति । रसस्य स्थायित्वनियमाद्रसो न हीयते, किन्तु कृत्रिमत्वमधिकं प्रविष्टं व्यभिचारिभाववदिति निरूपयितुं रसोत्पादकत्वमाहेत्यर्थः । शूलैरिति । शूलादिदशसंख्यातात्पर्यमाहुः सर्वप्रकारेणेति । सगुणनिर्गुणप्रकारेणेत्यर्थः । हरिपदस्यार्थमाहुः । तूष्णीं स्थितमिति ।

### गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

तं विशिनष्टि द्वाभ्याम् । शङ्खादिभिरुपलक्षितम् । अरि अरयुक्तं चक्रम् ॥ १३ ॥ पीते कौशेये कीटनिर्मितकोशजन्यतन्तुनिर्मिते वाससी वसानं परिदधानम् । गरुडः कृत्रिमो ध्वजे यस्य तम् । अमूल्यः अनर्घ्यो मौलिरन्यानि चाभरणानि यस्य तम् । स्फुरती मकराकारे कुण्डले यस्य तम् ॥ १४ ॥ कृत्रिमं आत्मनः स्वस्य तुल्यं वेषमास्थितं स्वीकृतवन्तम् । तत्र दृष्टान्तमाह—यथा रङ्गे नृत्यस्थाने राजादिवेषधारिणं नटमिति । एवंविधं तं पौण्ड्रकं दृष्ट्वा हरिर्भृशं विजहासेति सम्बन्धः ॥ १५ ॥ ततश्चारयः शत्रवः शूलादिभिः शस्त्रैर्हरिं प्राहरन् ॥ १६ ॥

### अन्वितार्थप्रकाशिका

दृष्ट्वेति ॥ कृत्रिमम् आत्मनः स्वस्य तुल्यं वेषमास्थितं स्वीकृतवन्तं यथा रङ्गे नृत्यस्थाने राजादिवेषधारिणं नटमिति एवंविधं तं पौण्ड्रकं दृष्ट्वा हरिर्भृशं विजहास ॥ १५ ॥ शूलैरिति ॥ ततश्चारयः शत्रवः शूलादिभिः शस्त्रैर्हरिं प्राहरन् ॥ १६ ॥

### श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्

वसानं परिदधानं गरुडः कृत्रिमो ध्वजे यस्य तं अमूल्यं बहुमूल्यं मौल्याभरणं मौलिर्मुकुटाख्यमाभरणं यस्य तं ॥ १४-१५ ॥ प्रासतोमरैः महदल्पभल्लैः अरयः शत्रवः ॥ १६ ॥

### भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

कथंभूतं ददर्शेत्यतस्तं विशिनष्टि शङ्खेति ॥ शङ्खश्च अरि चक्रं च असिः खड्गश्च गदा च शार्ङ्गं च श्रीवत्सश्च आदिर्यस्य पद्मस्य तेनोपलक्षितस्तं, कौस्तुभमणिं, बिभ्राणं, वनमालया विभूषितस्तम् ॥ १३ ॥ कौशेयेति । पीते पिशङ्गे, कौशेयवाससी कौशेयवस्त्रे, वसानं परिदधानं, गरुडः कृत्रिमः पन्नगारिर्ध्वजे यस्य तं, अमूल्यं मौल्याभरणं यस्य तं, स्फुरती मकराकारे कुण्डले यस्य तम् ॥ १४ ॥ दृष्ट्वेति ॥ आत्मना स्वेन श्रीकृष्णेन, तुल्यं, कृत्रिमं वेषं; आस्थितं तं पुण्ड्रकं, रङ्गगतं नटं यथा तथा, दृष्ट्वा, हरिः भृशं, विजहास ॥ १५ ॥ शूलैरिति ॥ तदा अरयः शत्रवः, शूलैः, गदाभिः, परिघैः, शक्तिश्च ऋष्टिश्च प्रासश्च तोमरश्च तैः, असिभिः, पट्टिशैः, बाणैः, हरिं श्रीकृष्णं, प्राहरन् प्रहृतवन्तः ॥ १६ ॥

### कृष्णप्रिया

पौण्ड्रक ने भगवान् श्रीकृष्ण की भाँति शंख, चक्र, तलवार, गदा, शार्ङ्ग धनुष एवं श्रीवत्स चिह्न आदि स्वाङ्ग सजाया था। कौस्तुभमणि तो एक ही होता है लेकिन उसने कृत्रिम बना लिया था और धारण किया था। और कृत्रिम वनमाला भी वक्षःस्थल को विभूषित कर रही थी ॥ १३ ॥ रेशम के दो पीताम्बर धारण किये थे। रथ पर गरुड के चिह्न वाली ध्वजा फहरा रही थी। अनमोल रत्नखचित मुकुट धारण किया था। कानों में मकराकृति दो कुण्डल जगमगा रहे थे ॥ १४ ॥ पौण्ड्रक का यह सारा स्वाङ्ग कृत्रिम था। जैसे रङ्गभूमि पर कोई नट अभिनय करने के लिये सज्ज बनकर आया हो वैसे भगवान् का सम्पूर्ण स्वाङ्ग सजाकर आये हुए पौण्ड्रक को देखकर भगवान् श्रीकृष्ण ने अत्यन्त प्रसन्नतापूर्वक हास्य किया ॥ १५ ॥ पौण्ड्रक एवं उनके सैनिकों ने भगवान् श्रीकृष्ण पर शूल-गदा, परिघ, मुद्गर, शक्ति, ऋष्टि ( शस्त्र का नाम ऋष्टि ) प्रास ( दूर से फेंकने का शस्त्र ) तोमर तलवार पट्टिश बाण आदि अस्त्र एवं शस्त्रों से भारी प्रहार किया ॥ १६ ॥

कृष्णस्तु तत्पौण्ड्रककाशिराजयोर्बलं गजस्यन्दनवाजिपत्तिमत् ।
गदासिचक्रेषुभिरार्दयद् भृशं यथा युगान्ते हुतभुक् पृथक् [1]प्रजाः ॥ १७ ॥
आयोधनं तद्रथवाजिकुञ्जरद्विपत्खरोष्ट्रै [2]ररिणावखण्डितैः ।
बभौ चितं [3]मोदवहं मनस्विनामाक्रीडनं भूतपतेरिवोल्बणम् ॥ १८ ॥
अथाह पौण्ड्रकं शौरिर्भो भोः पौण्ड्रक यद् भवान् । दूतवाक्येन मामाह तान्यस्त्राण्युत्सृजामि ते ॥ १९ ॥
त्याजयिष्येऽभिधानं मे यत्त्वयाज्ञ [4] मृषा धृतम् । व्रजामि शरणं तेऽद्य यदि नेच्छामि संयुगम् ॥ २० ॥

**कवंमक्षमा**

**अन्वयः**—युगान्ते, यथा, हुतभुक्, पृथक्, प्रजाः, तथा, कृष्णः, तु, तत्, पौण्ड्रककाशिराजयोः, गजस्यन्दनवाजिपत्तिमत्, तत्, बलम्, गदासिचक्रेषुभिः, भृशम्, आर्दयत् ॥ १७ ॥ तत्, आयोधनम्, अरिणा, अवखण्डितैः, रथवाजिकुञ्जरद्विपत्खरोष्ट्रैः, भूतपतेः, उल्बणम्, आक्रीडनम्, इव, मनस्विनाम्, चितम्, मोदवहम्, बभौ ॥ १८ ॥ अथ, शौरिः, पौण्ड्रकम्, आह, भो भोः ! पौण्ड्रक, यद्, भवान्, दूतवाक्येन, माम्, आह, तानि, अस्त्राणि, ते, उत्सृजामि ॥ १९ ॥ हे अज्ञ, यत्, त्वया, मे, अभिधानम्, मृषा, धृतम्, त्याजयिष्ये, यदि, ते, अद्य, संयुगम्, न, इच्छामि, शरणम्, व्रजामि ॥ २० ॥

**श्रीधरस्वामिविरचिता भावार्थदीपिका**

गजस्यंदनादिचतुरंगबलमर्दितवान् । पृथक् प्रजाश्चतुर्विधं भूतग्रामं यथा युगांताग्निररिति ॥ १७ ॥ आयोधनं रणस्थानम् । अरिणा चक्रेण चितमाक्रीडनमिव कल्पांत रुद्रस्य क्रीडास्थानमिव ॥ १८-२० ॥

**श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः**

तद्बलम् । युगांते प्रलये ॥ १७ ॥ मनस्विनां शूराणाम् 'मनस्वी योगिशूरयोः' इति धरणिः । भूतपतेः रुद्रस्य ॥ १८ ॥ अथ सेनाछेदोत्तरम् । वासुदेवोऽवतीर्णोऽहं यानि त्वमस्माच्चिह्नानीत्यादिकं यदाह—ते तानि उत्सृजानि मुंचामि ते त्वयि वेत्यर्थः ॥ १९ ॥ त्याजयिष्ये हापयिष्यामि ॥ २० ॥

**श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी**

तुशब्दो वैशिष्ट्ये अरयः प्राहरन्नेव नतु किञ्चित्कर्त्तुं शक्तवन्तः श्रीकृष्णस्तु भृशमत्यर्थमार्दयत् सञ्जहारेत्यर्थः ॥१७॥ तत्र विशेषतोऽशेषायुधश्रेष्ठचक्रकृतमाह—आयोधनमिति । रथादीनां यथापूर्वं युद्धार्थमग्रेऽभिगमने श्रेष्ठ्यात्तत्तत्क्रमेणावखण्डनम् उल्बणम् अन्येषां भयङ्करमित्यर्थः ॥ १८ ॥ अथ अर्द्दनानन्तरं सम्यग्व्यवधाने गते शौरिः शूरवंशे ऽवतीर्णः स्वयं भगवान् भोभो इत्युपहासात् अत एव भवानिति च यदाह तेन तानि त्वदुक्तानि तुभ्यमुत्सृजामि ॥ १९ ॥ त्वन्तु मिथ्याभिधान्त्यजेति यदुक्तं तत्राह—त्याजयिष्य इति । धातूनामन्तर्भूतण्यर्थतयापि प्रयोगदर्शनादनन्यथार्थमेव कारयिष्यामीतिभावः । ननु दूतवाक्यानुसारेण व्यवहरसि चेर्त्तहि मां शरणमेहि तत्राह—व्रजामीति । त्यक्त्वैहि मां त्वं शरणमित्यादौ तत्राऽऽह्वस्यैव प्रथमविहितत्वादिति भावः । अद्य त्वद्दर्शनावसरे अज्ञेति पाठेऽपि न विद्यते ज्ञो यस्मादित्युपहासव्यञ्जना ॥ २० ॥

**श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी**

तु शब्देन तत्तत्प्रहारस्य वैफल्यम्, किं वा तस्मात् प्रागेवेति बोधयति । भृशमत्यर्थमार्द्दयत् संजहारेत्यर्थः । गजादीनां यथोत्तरं सेनांगत्वे तथा गदादीनाञ्चार्द्दनसाधनत्वे न्यूनत्वम्, तत्र चर्म्मणेति चर्म्मावरणकरत्वेनैवार्द्दनसाधनम्, चक्रकृतञ्च वक्ष्यत्येव । पाठान्तरे चक्रेति पाठः स्पष्टः ॥ १७ ॥ तत्र विशेषतोऽशेषायुधश्रेष्ठचक्रकृतमाह—आयोधनमिति । रथादीनां यथापूर्वं युद्धार्थमग्रेऽभिगमने श्रैष्ठ्यात्, तत्तत्क्रमेणावखण्डनम्, उल्बणम्—अन्येषां भयंकरमित्यर्थः ॥ १८ ॥ अथ अर्द्दनानन्तरमेव, शौरिः—निजाशेषैश्वर्य्यप्रकटनार्थं शूरवंशेऽवतीर्ण इति, तादृश्युक्तिस्तस्य योग्यैवेति भावः । 'भो भोः' इति क्रोधादुपहासाद्वा, अत एव भवानिति च यदाह तेन तानि त्वदुद्दिष्टानि, ते तुभ्यमुत्सृजामि ॥१९॥ अभिधानञ्च वासुदेव इति नामाद्य त्याजयिष्ये । अज्ञेति पाठे मौढ्यादेव धृतमित्यर्थः । ननु दूतवाक्यानुसारेण व्यवहरति चेर्त्तहि मां शरणमेहि, तत्राह—व्रजामीति । त्यक्त्वैहि मां त्वं शरणमित्यादिदूतवाक्यानुसारादेव युद्धेऽयं त्वां हस्तीति भावः । अयमाक्षेपविशेषः ॥ २० ॥

**श्रीसुदर्शनसूरिकृतशुकपक्षीयम्**

व्रजामि संयुगं नेच्छामि चेत् संयुगाद्भीतोऽस्मि चेत् त्वां शरणं व्रजामि नाहं भीत इत्यर्थः ॥ २०-२३ ॥

---

१. प्रमाथ्बलम्—विज. । २. रोष्ट्रै रिपुणा च—विज । ३. चिरं—वीर ; च तन्मान वहं—विज । ४. यत् त्वयाद्य मृषा कृतम्—विज. ।

## श्रीमद्वीरराघवाचार्यकृता भागवतचन्द्रचन्द्रिका

कृष्णस्त्विति । गजादयोऽस्य सन्तीति तथा चतुरङ्गमित्यर्थः । तत्पौण्ड्रककाशीराजयोर्बलं गदादिभिर्भृशमर्दयत्पीडयामास आजघ्ने इति यावत् यथा युगान्ताग्निः पृथक् प्रजाः चतुर्विधभूतग्रामानर्दयिष्यति तद्वत् ॥ १७ ॥ आयोधनमिति । अरिणा चक्रेण चकाराद्गदादिभिश्च खण्डितैः रथादिभिस्तदायोधनं युद्धस्थलं मनस्विनां शूराणां चिरं सन्तोषावहं सद्वेजे आक्रीडनमिव कल्पान्ते रुद्रस्य क्रीडास्थानमिव उल्बणं दारुणं सद्बभौ इति सम्बन्धः ॥ १८ ॥ अथेति । उक्तिमेवाह—भो भो इत्यादिना संयुगमित्यन्तेन । भो भो पौण्ड्रक ! दूतवाक्यमुखेन भवान् मां प्रति यदाह "यानि त्वमस्मच्चिह्नानि" इत्यादि तान्येवास्त्राण्युत्सृजामि प्रयोक्ष्यामि ॥ १९ ॥ हे अज्ञ ! मे मत्सम्बन्धि मदसाधारणमभिधानं नाम ते त्वया मृषा धृतं तत्त्याजयिष्ये यदि संयुगं नेच्छामि संयुगाद्भीतोऽस्मि चेत्त्वां शरणं व्रजामि नाहं भीत इत्यर्थः ॥ २० ॥

## श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शिनी

हुतभुक् प्रलयाग्निः पृथक् प्रजाः जरायुजादिपृथग्भेद—प्रजाः ॥ १७ ॥ आयोधनं युद्धस्थानं रथादिभिश्चितं व्याप्तम् अरिणा चक्रेण ॥ १८–२१ ॥

## गूढार्थदीपिनी

गजादियुक्तं तत् बलं सैन्यं गदादिभिः अमर्दयत् । यथा हुतभुक् प्रलयाग्निः पृथक् चतुर्विधा प्रजाः जरायुजादिभेदेन ॥ १७ ॥ अरिणा चक्रेण खण्डितैः रथादिभिः चितं व्याप्तं तत् आयोधनं युद्धस्थलं बभौ इत्यन्वयः । भूतपते रुद्रस्य उल्वणं भयजनकम् । आक्रीडनं श्मशानमिव । 'श्मशानेष्वाक्रीडा' इत्युक्तेः ॥ १८ ॥ ते त्वद्वधार्थं उत्सृजामि प्रक्षिपामि ॥ १९–२० ॥

## श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः

पृथक् प्रजाः जरायुजादिचतुर्विधाः प्रजाः ॥ १७ ॥ अरिणा चक्रेण ॥ १८–२० ॥

## श्रीमद्वल्लभाचार्य्यकृता सुबोधिनी

ततोऽक्लिष्टकर्मा भगवान् तां सेनां दूरीकृतवानित्याह कृष्णस्त्विति । तुशब्देन भगवतो जयमाह । तद्बलं प्रहरणकर्तृ । पौण्ड्रककाशिराजयोरिति सात्त्विकतामसभावापन्नयोरपि । राजसा एव हन्तव्या इति तयोरमारणमाशङ्क्य नामग्रहणम् । अङ्गानि गणयति गजेति । तयोरराजसत्वात् सेनाव्यवस्था कदाचिन्न भवेदिति तदर्थं गणना । गदादिभिः चतुर्भिरेव आसमन्तादार्दयत् पीडितवान् । अस्त्रादिसहितैर्बाणैः कृत्वा दाहपर्यन्तं कृतवानिति वक्तुं दृष्टान्तमाह यथा युगान्त इति । प्रजानां क्षयो यस्मात् तादृशो हुतभुक् प्रलयाग्निः ॥ १७ ॥ ननु महादेवः कथं तत्साहाय्यं न कृतवानित्याशङ्क्याह आयोधनमिति । चक्रेण खण्डितै रथादिभिः कृत्वा आयोधनं रणभूमिर्बभौ । तैश्चितं व्याप्तं प्रसारितम् । तर्हि तद्दृष्ट्वा मूलभूतो पलायितो भविष्यत इत्याशंक्याह मोदवहं मनस्विनामिति । मोदं वहतीति । भूतपतेर्महादेवस्याक्रीडनं क्रीडास्थानं कृतवान् । तत्राप्युल्बणमत्युत्कटम्, येन भक्तोऽपि न स्मृतः ॥ १८ ॥ अथ पौण्ड्रकवधार्थमुद्यतः स्वोपदिष्टोऽर्थस्तेन विस्मृतो मा भवत्विति पुनः स्मारयति अथाहेति द्वाभ्याम् । शौरिरिति पितृपितामहनाम्ना भगवत उत्कर्षं पौण्ड्रकेति तस्यापकर्षं चाह भो भो पौण्ड्रकेति । तस्य सहजो दोषः भगवता कीर्तित इति तन्नाशो निरूपितः । यद्भवान् दूतवाक्येन मामाह, तान्यस्त्राणि सहजानि ते तुभ्यं तदर्थं उत्सृजामि, यैस्त्वं सहजस्तादृशो भविष्यसि । मे अभिधानं वासुदेवेति यत्त्वया मृषा धृतम्, भगवद्भावात् पूर्वमेव बालकवाक्येन स्थापितम्, तत्त्याजयिष्ये । सहजं तु दास्यामीति । यदि संयुगे न हनिष्यामि, तदा निकटे समागत्य सायुज्यं दास्यामि । इदानीं युद्धार्थमेवागत इति सारूप्यमेव प्रयच्छामि । अयं दोषः दूतप्रेषणाज्जातः, अन्यथा सायुज्यमेव भवेत् । यदि तूष्णीं तिष्ठेदित्यर्थः । अनेनैवमपि सूचितम् । इदानीमपि चरणे चेत्पतति, सायुज्यमेव दास्यामीति ॥ २० ॥

## श्रीसुबोधिनी–सारः

हस्तिरथाश्वपदातिविशिष्टं चतुरंगं तत् पौंड्रककाशिराजयोर्बलं सैन्यं कृष्णोपि भृशमपीडयत् गदाकृपाणचक्रबाणैः युगान्ते प्रलये हुतभुक् अग्निः पृथक् प्रजाः चतुर्विधं प्राणिसंघम् इव ॥ १७ ॥ अरिणा चक्रेणावखंडितैः छिन्नभिन्नरथाश्वहस्तिनरखरोष्ट्रैः चितं व्याप्तम् उल्वणं घोरं मनस्विनां शूराणां मोदवहमानंदकरं तदाऽऽयोधनं युद्धस्थानं बभौ शुशुभे भूतपतेः श्रीरुद्रस्याक्रीडनमिव विहारभूमिरिव ॥ १८ ॥ अथानंतरं पौंड्रकं शौरिः श्रीकृष्ण आह भो भो पौंड्रक दूतवाक्येन मां भवान् यदाह तानि अस्त्राणि ते तुभ्यम् उत्सृजामि प्रक्षिपामि ॥ १९ ॥ हे अज्ञ मे ममाभिधानं नाम मृषा मिथ्या धृतं त्वया यत्तत् अहं त्याजयिष्ये विमोचयिष्यामि यदि संयुगम् युद्धं नेच्छामि अद्य इदानीं तर्हि ते तव शरणं यामि ॥ २० ॥

## श्रीविट्ठलरायात्मजश्रीवल्लभकृतलेखः

आयोधनमित्यत्र । मूलभूताविति । सेनायां मुख्यौ पौण्ड्रककाशिराजावित्यर्थः । त्याज्ययिष्य इत्यत्र । व्रजामि शरण-मित्यस्यार्थमाहुः सायुज्यं दास्यामीति । तथा च त्वदर्थं शरणत्वं व्रजामि प्राप्नोमीति तदर्थः ।

## गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

कृष्णस्तु गजादिचतुरङ्गयुक्तं पौण्ड्रककाशिराजयोस्तद्बलं गदादिभिर्भृशमार्दयत् पीडयामास नाशितवानित्यर्थः। तत्र दृष्टान्तमाह—यथेति। युगान्ते प्रलयसमये हुतभुक् अग्निः पृथक्प्रजाः जरायुजादिचतुर्विधभूतग्रामान् यथा नाशयति तथेत्यर्थः ॥ १७ ॥ चक्रेणावखण्डितै रथादिभिश्चितं व्याप्तं तदायोधनं युद्धस्थलं मनस्विनां शूराणां मोदवहं हर्षकरं बभावि-त्यन्वयः। तत्र दृष्टान्तमाह—कल्पान्ते उल्बणं भयंकरं भूतपतेः रुद्रस्य क्रीडास्थानमिवेति ॥ १८ ॥ शौरिः कृष्णः पौण्ड्रकमाह। तदुक्तिमाह—भो भो पौण्ड्रक ! दूतमुखेन यान्यस्मदस्त्राणि बिभर्षि तानि त्यजेति यद्भवान् आह, तान्यस्त्राणि ते तुभ्यं त्वद्वधार्थमुत्सृजामि प्रक्षिपामि ॥ १९ ॥ किंच हे अज्ञ ! वासुदेव इति यन्ममाभिधानं मृषैव त्वया धृतं तत्त्याजयिष्ये। यदुक्तं 'शरणमेहि' इति तत्राह—व्रजामीति। संयुगं नेच्छामि संयुगात् यदि भीतः ॥ २० ॥

## अन्वितार्थप्रकाशिका

कृष्ण इति ॥ कृष्णस्तु गजस्यन्दनवाजिपत्तिरूपचतुरङ्गयुक्तं पौण्ड्रककाशिराजयोस्तद्बलं युगान्ते प्रलयसमये हुतभुक् अग्निः पृथक् प्रजाः जरायुजादिचतुर्विधभूतग्रामान् यथा नाशयति तथा गदासिचक्रेषुभिः भृशमार्दयत् अपीडयत् ॥ १७ ॥ आयोधनमिति ॥ अरिणा चक्रेणावखण्डितै रथादिभिश्चितं व्याप्तं तदायोधनं युद्धस्थलं कल्पान्ते उल्बणं भयंकरं भूतपतेः रुद्रस्य आक्रीडनं क्रीडास्थानमिव मनस्विनां शूराणां मोदवहं हर्षकरं बभौ ॥ १८ ॥ अथेति ॥ अथ शौरिः कृष्णः पौण्ड्रकमाह स्म। भो भोः पौण्ड्रक ! दूतमुखेन यान्यस्मदस्त्राणि बिभर्षि तानि त्यजेति यद्भवान् आह स्म तान्यस्त्राणि ते तुभ्यं त्वद्वधार्थ-मुत्सृजामि प्रक्षिपामि ॥ १९ ॥ त्याजयिष्य इति ॥ हे अज्ञ ! वासुदेव इति यन्ममाभिधानं मृषैव त्वया धृतं तत्त्याजयिष्ये। अथ यदि भीतः सन् संयुगं नेच्छामि तर्हि अद्य ते शरणं व्रजामि ॥ २० ॥

## श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्

गजादिमत् चतुरंगसैन्यं आर्दयत् पीडितवान् हुतभुक् वह्निः पृथक् प्रजाः उद्भिज्जादिचतुर्विधं जतुवृंदं यथा तथा पीडितवान् ॥ १७ ॥ अरिणा चक्रेण अवखण्डितैः हतैः तस्य पौंड्रकस्य रथादिभिः चितं व्याप्तं आयोधनं संग्रामस्थानं प्रलये भूतपतेः रुद्रस्य आक्रीडनं रमणस्थानमिव अन्येषां उल्बणं भयंकरं बभौ ॥ १८-१९ ॥ हे अज्ञ यत् वासुदेवेत्यभिधानं त्वया मृषा धृतमिति यत्त्वया मह्यमुक्तं तदहं त्याजयिष्ये ॥ २० ॥

## भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

कृष्णस्त्विति ॥ तदा कृष्णः तु, गजाश्च स्यन्दनाश्च वाजिनश्च पत्तयश्च अस्मिन् सन्तीति तथा चतुरङ्गमित्यर्थः। तत् पौण्ड्रककाशिराजयोः, बलं गदा कौमोदकी च असिर्नन्दकाख्यः खड्गश्च चक्रं सुदर्शनं च इषवः शार्ङ्गमुक्ता बाणाश्च तैः, युगान्ते हुतभुग्युगान्तकाले वृद्धिं प्राप्तः प्रलयाग्निः, पृथक् प्रजाः, चतुर्विधभूतग्रामान्, यथा तद्वत्, भृशं आर्दयत् पीडयामास, आजघ्ने इति यावत् ॥ १७ ॥ आयोधनमिति ॥ अरिणा चक्रेण, चकाराद्गदादिभिश्च, खण्डितैः, रथाश्च वाजिनश्च कुञ्जराश्च द्विपदः पदातयश्च खराश्च उष्ट्राश्च तैः, तत् आयोधनं युद्धस्थलं, मनस्विनां शूराणां, चिरं मोदवहं सन्तोषावहं सत्, भूतपतेः रुद्रस्य, उल्बणं दारुणं, आक्रीडनं इव, प्रलयकालीनं रौद्रं क्रीडास्थानमिवेत्यर्थः। बभौ ॥ १८ ॥ अथेति ॥ अथानन्तरं, शौरिः श्रीकृष्णः, पौण्ड्रकं, आह। उक्तिमेवाह भो भो इत्यादिना संयुगमित्यन्तेन। भो भो पौण्ड्रक, दूतवाक्येन दूतवाक्यमुखेन, भवान् मां प्रति, यत् आह, 'यानि त्वमस्मच्चिह्नानि' इति प्रोक्तवानित्यर्थः। तान्येव, ते तव, अस्त्राणि उत् सृजामि वियोक्ष्यामि ॥१९॥ त्याजयिष्ये इति ॥ हे अज्ञ, मे मत्संबन्धि, मदसाधारणमित्यर्थः। यत् अभिधानं नाम, त्वया मृषा मिथ्यैव, धृतं तत्, अद्य त्याजयिष्ये। यदि, संयुगं, न इच्छामि, संयुगाद्भीतोऽस्मि चेदित्यर्थः, तर्हि, ते तव, शरणं व्रजामि। नाहं भीत इत्यर्थः ॥ २० ॥

## कृष्णप्रिया

जैसे युग समाप्ति में प्रलयकाल में प्रलयाग्नि सर्व प्रकार की प्रजा को भस्म कर देती है उसी प्रकार भगवान् कृष्ण ने गदा, खड्ग, चक्र, बाण इत्यादि शस्त्रास्त्रों से करूषाधिराज पौण्ड्रक एवं काशीराज की दो और तीन अक्षौहिणी सेना के गज, रथ, अश्व एवं पैदल, चतुरङ्ग सैन्य का क्षय कर दिया ॥ १७ ॥ वह समराङ्गण श्रीकृष्ण के तीक्ष्ण नेमि सुदर्शन चक्र से चूर्ण हुए खण्डित हुए दोनों के सैन्य के रथ, अश्व, कुञ्जर-हाथी, पैदल, गर्दभ और ऊँटों से छा गया। तब यह काशिनगर का

समराङ्गण ऐसा लगता था कि भूतनाथ भगवान् त्र्यम्बक का भयानक क्रीडाङ्गण बन गया है। उस भयङ्कर समराङ्गण को देखकर वीरवरों में युद्ध का उत्साह बढ़ रहा था ॥ १८ ॥ अब शूरतनय भगवान वासुदेव पौण्ड्रक को कह रहे हैं कि भैया पौण्ड्रक ! आपने दूतमुख से द्वारिका के दरबार में जो सन्देश पहुँचाया था कि मेरे चिह्न सुदर्शनादि अस्त्र-शस्त्रों का त्याग करें। अब मैं उन अस्त्रों को तुझ पर ही छोड़ रहा हूँ ॥ १९ ॥ हे अज्ञ ! हे पौण्ड्रक ! तेरा नाम तो पौण्ड्रक है, फिर लोगों के बहकाने से मोहवश मेरा नाम रख लिया है। अब मैं तेरी देह को छुड़ाकर नाम भी छुड़ा रहा हूँ। बात रही तेरे शरण में होने की, यदि मैं तुझसे समराङ्गण न कर पाया तब शरणागत हो जाऊँगा ॥ २० ॥

**इति क्षिप्त्वा शितैर्बाणैर्विरथीकृत्य पौण्ड्रकम्। शिरोऽवृश्चद्[१] रथाङ्गेन वज्रेणेन्द्रो यथा गिरेः ॥ २१ ॥**

**तथा काशिपतेः कायाच्छिर उत्कृत्य पत्रिभिः। न्यपातयत् काशिपुर्यां पद्मकोशमिवानिलः ॥ २२ ॥**

**एवं मत्सरिणं हत्वा पौण्ड्रकं ससखं हरिः। द्वारकामाविशत् सिद्धैर्गीयमानकथामृतः ॥ २३ ॥**

**[२]स नित्यं भगवद्ध्यानप्रध्वस्ताखिलबन्धनः। बिभ्राणश्च हरे [३]रूपं स्वरूपं तन्मयोऽभवत् ॥ २४ ॥**

### कर्दमक्षमा

अन्वयः—इत्थम्, क्षिप्त्वा, पौण्ड्रकम्, शितैः, बाणैः, विरथीकृत्य, यथा, इन्द्रः, गिरेः, शिरः, इव, रथाङ्गेन, तस्य, शिरः, अवृश्चत् ॥ २१ ॥ तथा, पत्रिभिः, काशिपतेः, कायात्, शिरः, उत्कृत्य, अनिलः, पद्मकोशम्, इव, काशिपुर्याम्, न्यपातयत् ॥२२॥ एवम्, मत्सरिणम्, ससखम्, पौण्ड्रकम्, हत्वा, हरिः, सिद्धैः, गीयमानकथामृतः, द्वारिकाम्, आविशत्॥२३॥ राजन्, सः, हरेः, स्वरूपम्, बिभ्राणः, नित्यम्, भगवद्ध्यानप्रध्वस्ताखिलबन्धनः, तन्मयः, अभवत् ॥ २४ ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

गिरेः शृंगं यथेति ॥ २१–२४ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

रथांगेन चक्रेण। "रथांगं न द्वयोश्चक्रे ना चक्रांगविहंगमे" इति मेदिनी ॥ २१ ॥ यथा पौण्ड्रकस्य रथांगेन तथा काशिपतेः पत्रिभिरिति योज्यम्। पद्मकोशाः पद्ममुकुलम्। काशीराजस्य शिरसः काशीमध्यनिक्षेपे इदं कारणमुन्नेयम्—भो भोः काशिस्था अद्य शत्रोः शिर एव काशीमध्य उन्नेष्यामि मात्रसंशेध्वमिति प्रतिज्ञायैव युद्धाय काशीराजो यदगच्छत् अस्मद्भर्तापि द्वारकापतेः शिरोऽवश्यमानेष्यतीति तत्पत्न्योऽपि पापिन्यः सप्रौढिस्ववयस्याः प्रति यदजल्पंस्तत एव हेतोस्तस्यैव शिरः काशीमध्ये तत्रत्यजनान्विस्मापयितुं प्रवेशयामास कौतुकी भगवानिति ॥ २२ ॥ एवमुक्तरीत्या ॥ २३ ॥ स पौंड्रकः। तन्मयः कृष्णस्वरूपः कृष्णसारूप्यमेव पेशस्कारीहृतकीटवदिति भावः ॥ २४–२६ ॥

### श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी

क्षिप्त्वा आक्षिप्य ॥ २१ ॥ अनिल इत्यदृश्यकर्तृत्वेनोपमानीकृतं तथा पत्रिणामपि तत्प्रक्षिप्त्यैव निवृत्तेरदृश्यकरणत्वेन च ॥ २२ ॥ मत्सरिणं भगवदुत्कर्षासहनं सिद्धैर्जीवन्मुक्तैर्विमानगामिभिश्च सर्वैस्तन्महाकौतुकदर्शनार्थमागतैर्गीयमानं कथामृतं पौण्ड्रकवधादिलक्षणं यस्य तथाभूतस्सन् ॥ २३ ॥ मत्सरावेशमपि दर्शयन् द्वेष्यादिवन्मुक्तिमाह—स पौंड्रकः हरेः स्वरूपं स्वीयं रूपं चतुर्भुजत्वादि तद्बिभ्राणः अनुकुर्वाणः तन्मयः प्राचुर्येण तद्रूपोऽभवत् सारूप्यं प्रापेत्यर्थः। यतो नित्यमित्यादि तादृशभावनया पेशस्कारिहृतकीटवदिति भावः ॥ २४ ॥

### श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी

इति—एवम्, क्षिप्त्वा आक्षिप्य, यथेति दृष्टान्तेन शिरोव्रश्चने अनायासत्व-शीघ्रत्वादिकं सूचयति। विशेषेण पुरान्तर्महाशब्दादिना अपातयत् ॥ २१ ॥ पत्रिभिरिति बहुत्वं तत्र पातनार्थम्, तेषां बाहुल्याद् गौरवाद्वा। पद्मेति दृष्टान्तेनाकस्मादाकाशवर्त्मना पातनादिकं द्योतयति ॥ २२ ॥ मत्सरिणमिति, तस्य प्रायो भगवदुत्कर्षासहनात्; सिद्धैर्जीवन्मुक्तैर्विमानगामिभिर्वा सर्वैः, गीयमानं कथामृतं पौण्ड्रकवधादिलक्षणं यस्य तथाभूतः सन् ॥ २३ ॥ स पौण्ड्रकः, तत् ब्रह्म, तन्मयो भूतः, मोक्षं प्रापेत्यर्थः। कुतः ? नित्यं यद्भगवतो ध्यानं मात्सर्येण चिन्तनविशेषस्तेन प्रकर्षेण ध्वस्तमखिलं बन्धनं संसारबन्धः, किंवा

१. हरद्रथा–विज। २. अयं श्लोको नास्ति–विज.। ३. राजन्–श्रीधर. वंशी. जीव. वीर. विज. विश्व.।

वध्यन्ते जीवा एतैरिति बन्धनानि कर्म्माणि प्रध्वस्तानि अखिलानि पापपुण्यलक्षणानि यस्य सः, प्र-शब्देनाखिल-शब्देन च श्रीभगवन्मात्सर्य्यादिदोषध्वंसोऽपि द्योतितः। भोगं विनापि सर्व्वकर्म्मप्रध्वंसो भगवद्ध्यानप्रभावादेव, अन्यथा मोक्षासिद्धिः। नित्यभगवद्ध्याने हेतुः—हरेः स्वकीयमसाधारणं रूपं वेशं बिभ्राण इति। चकारात्तन्मित्र काशिराजश्च; अथवा नित्येति सर्व्वपापबन्धप्रध्वंस उक्तः,—मात्सर्य्यादिना तद्ध्यानेन सदा महादुःखोद्गमात्। पुण्यध्वंसं चाह—बिभ्राण इति। च समुच्चये, तद्रूपधारणेन सुखविशेषोदयादिति भावः। हरेरिति रूपस्यापि मनोहरता सूचिता। हे राजन्निति भगवद्ध्यानस्याश्चर्य्य-प्रभावात्॥ २४॥

**श्रीसुदर्शनसूरिकृतशुकपक्षीयम्**

स्वरूपं वेषं बिभ्राणस्तन्मयोऽभवत् तदीयवेषप्रचुरोऽभवत् शिरश्च्छेदेन दोषस्य प्रायश्चित्तं कृतम् अतो भगवद्ध्या-नस्य फलमनन्तरमित्यभिप्रायः॥ २०॥

**श्रीमद्वीरराघवाचार्यकृता भागवतचन्द्रचन्द्रिका**

इतीति। उक्त्वेति शेषः। रथाङ्गेन चक्रेण शिरोऽवृश्चत् चिच्छेद यथेन्द्रो वज्रेण गिरेः शृङ्गं तद्वदित्यर्थः॥ २१॥ तथेति। पत्त्रिभिर्बाणैः काशिपतेः कायाच्छिर उत्कृत्य उत्प्लुतं यथा तथा छित्त्वा काशीपुर्यां न्यपातयदनिलो वायुः पद्मकोश-मिव॥ २२॥ एवमिति। ससखं सकाशिराजं मत्सरिणं शत्रुं पौण्ड्रकं हत्वा सिद्धैः गीयमाना कथैवामृतं यस्य स हरिर्द्वारकां विवेश॥ २३॥ स इति। स पौण्ड्रकः भगवतः श्रीकृष्णस्य ध्यानेन ध्वस्तान्यखिलानि बन्धनानि कर्मबन्धनानि यस्य सः हेतुगर्भमिदं तथा हरेः कृष्णस्य रूपं रूपतुल्यं स्वरूपं स्ववेषं बिभ्राणम् इत्यपि तत्त्वात्तन्मयस्तदीयवेषप्रचुरो बभूव साधर्म्यं गत इत्यर्थः। शिरश्छेदेन दोषस्य प्रायश्चित्तं कृतमतो भगवद्ध्यानस्य फलं तत्साधर्म्यं लब्धमिति भावः॥ २४॥

**श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी**

काशिराजस्य शिरसः काशीमध्ये निक्षेपे इदं कारणमुन्नेयं भोभो काशीस्थाः! अद्य शत्रोः शिर एव काशीमध्य-मानेष्यामि मात्र संक्षेध्वमिति प्रतिज्ञायैव युद्धाय काशिराजो यदगच्छत् अस्मद्भर्त्ता द्वारकापतिः शिरोऽस्यावश्यमेवानेष्यतीति तत्पत्न्योऽपि पापिन्यः सप्रौढिस्ववयस्याः प्रति यदजल्पंस्तत एव हेतोस्तस्यैव शिरः काशीमध्ये तत्रत्यजनान् विस्मापयितुं प्रवेशयामास कौतुकी भगवानिति॥ २२-२३॥ हरेः स्वरूपं चतुर्भुजत्वम्॥ २४॥

**गूढार्थदीपिनी**

शितैः तीक्ष्णैः। अवृश्चत् चिच्छेद। गिरेः शृङ्गमिति शेषः॥ २१॥ पत्त्रिभिः बाणैः उत्कृत्य छित्त्वा। 'कृतो छेदने' धातुः॥ २२॥ परोत्कर्षासहनं मत्सरः तद्वान् मत्सरी॥ २३॥ बन्धनम् अविद्यालक्षणम्॥ २४॥

**श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः**

यथा गिरेः शृङ्गमित्यध्याहृत्य योज्यम्॥ २१-२३॥ तन्मयोभवत् भगवत्साधर्म्यलक्षणं प्राप्तवानित्यर्थः॥ २४॥

**श्रीमद्वल्लभाचार्यकृता सुबोधिनी**

तथाप्यनिवृत्तं भगवान्मारितवानित्याह **इति क्षिप्त्वेति**। क्षेपो दोषस्मारणम्, सितैः तीक्ष्णैर्बाणैः अश्वान् हत्वा विरथीकृत्य चक्रेण शिरश्चिच्छेद। भक्तवधोऽनुचित इत्याशङ्क्य, परोपद्रवकारित्वात् मारितवानिति ज्ञापयितुं दृष्टान्तमाह **वज्रेणेन्द्र इति**। यद्यपि 'विष्णुः पर्वतानामधिपतिः' इति तेषां पक्षच्छेदोऽनुचितः, तथापि लोकेऽयुपद्रवकर्तृत्वाद्धननमिन्द्रद्वारा। पक्षावेव शिरःस्थानीयौ॥ २१॥ सात्त्विकवधमुक्त्वा तामसवधमप्याह **तथा काशिपतेरिति**। विरथीकृत्य तमप्याक्षिप्य। चक्रेण हतो मुक्तो भविष्यतीति, छिन्नमपि शिरश्चेद्भगवान् पश्येत्, तथापि मुक्तो भवेदिति कालावयवभूतैः **पत्त्रिभिर्बाणैः** शिर उत्कृत्य काशिपुर्यां व्यपातयत्। साहाय्यं शरीरेणैव कृतमिति शरीरांशः तस्य मुक्तः कृतः। तस्य मध्ये पतनादिकमाशङ्क्य दृष्टान्तमाह **पद्मकोशमिवानिल इति**। अनेन व्याजेन भगवान् महादेवे तच्छिरःकमलपूजां कृतवानिति द्योतितम्॥ २२॥ युद्धमुपसंहरन् भगवतो द्वारकागमनमाह **एवं मत्सरिणं हत्वेति**। भक्तस्यापि हनने मात्सर्यमेव हेतुः, काशिराजवधे तत्सखित्वं हेतुरिति। ततो भगवत्कृतं लोकशास्त्राविरुद्धमिति ज्ञापयितुं **सिद्धैर्गीयमानकथामृत** इत्युक्तम्। एवं सर्वदुःखहर्ता तेषां दुःखं दूरीकृत्य द्वारकामाविशत्॥ २३॥ पौण्ड्रकस्य हननानन्तरं या गतिर्जाता तामाह **स नित्यमिति**। स तन्मयोऽभवत्, तेन व्यासोऽभवत्। आत्मनि परमात्मा आविष्टः तेनावेशी जातः। शरीरेन्द्रियप्राणान्तःकरणसद्भावे आधिदैविकानि शरीरादीनि तत्राविष्टानि, अन्यथा तु स्वतन्त्रावेशीव भगवद्गणो जातः, तत्र च भगवत इव तस्यापि लीला भविष्यतीति मुख्यः पक्षः।

विष्णुदेवतानुरूपत्वे तु वैष्णवलोके तथात्वमिति शङ्खचक्रादिभावस्यैव प्राधान्यादिति केचित्। तस्य तथात्वे हेतुमाह। **नित्यं** भगवद्ध्यानेन प्रध्वस्तानि अविद्याकामकर्मादीनि मात्सर्यादीनि च पश्चादुत्पन्नानि उभयविधान्यपि बन्धनानि यस्य। **अनेन** देहान्तरोत्पादकं कर्म निर्वर्तितम्। भगवदावेशे हेतुमाह **बिभ्राणश्च हरे रूपमिति**। हरिः रूप्यते अनेनेति शङ्खचक्रादिभाव-समुदायः। तं बहिर्बिभ्रत्। स्वरूपं तु मनसा बिभ्रत्। चकारात्तत्क्रियादीनां सर्वेषामाधानमुक्तम्। एवं सर्वसामग्र्यां तन्मयत्वं युक्तमेव। पौण्ड्रकस्य गतिमुक्त्वा तेन सहागतस्य काशिराजस्यापि कथं सा न गतिरिति शङ्कां वारयितुं तदुत्पन्नानां तदीयानां सर्वेषामेव परमं दोषमाह यावदध्यायपरिसमाप्ति। अर्थात्तेऽपि निरुद्धाः, तीर्थमपि निरुद्धं भवतीति निरूपितम् ॥ २४ ॥

### श्रीसुबोधिनी-सारः

इत्येवं क्षिप्त्वाऽऽक्षेपं कृत्वा शितैः तीक्ष्णैर्बाणैः पौंड्रकं विरथीकृत्य रथांगेन चक्रेण तस्य शिरोच्छिनत् गिरेः पर्वतस्य शिरो वज्रेणेंद्र इव ॥ २१ ॥ तथा तद्वत् काशीपतेः सत्सख्युः सेनजितः कायात् शिर उत्कृत्य छित्वा पत्रिभिर्बाणैः काशीपुर्यां न्यपातयत् पद्मकोशमनिलो वायुरिव ॥ २२ ॥ एवं ससखं समित्रं मत्सरिणं परोत्कर्षाऽसहिष्णुं पौंड्रकं हत्वा सिद्धैर्गीयमानं कथामृतं यस्य स द्वारकामाविशत् हरिः प्राविशत् ॥ २३ ॥ नित्यं भगवतो ध्यानेन प्रध्वस्तान्यखिलानि बंधनानि यस्य स हरे रूपं वेषं बिभ्राणः संदधत् स मिथ्यावासुदेवस्तद्रूपोभवत् हे राजन् ॥ २४ ॥

### श्रीविट्ठलरायात्मजश्रीवल्लभकृतलेखः

**तथा** काशिपतेरित्यत्र। **मुक्तः कृत** इति। मस्तकाच्छिन्नः कृतः। शरीरं पौण्ड्रकसमीपे मस्तकं काश्यां पतितमित्यर्थः। **अनेनेति**। पद्मकोशदृष्टान्तेनेत्यर्थः। **स नित्यमित्यत्र**। **शरीरेन्द्रियेति**। 'तमुत्क्रामन्तं प्राणोऽनूत्क्रामती'ति पक्षे वासनात्मक-देहादिसद्भावे तत्र वासनात्मकदेहादौ आधिदैविकानि शरीरादीन्याधिष्ठानीत्यर्थः। **अन्यथा त्विति**। 'इहैव समवनीयन्ते प्राणा' इति पक्षे तु देहादिकं विनैव 'चिति तन्मात्रेणे'ति न्यायेन भगवत्पार्षदो जात इत्यर्थः। **तत्र चेति**। भगवत्पार्षदत्वे जाते सतीत्यर्थः। **भगवत इवेति**। यथा भगवतो देहादिरहितस्यैव लीला, तथैतस्यापीत्यर्थः।

### गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

इत्येवं वचनैः क्षिप्त्वा तिरस्कृत्य रथाङ्गेन चक्रेण तस्य शिरोऽवृश्चत् चिच्छेद। यथेन्द्रो वज्रेण गिरेः शृङ्गं तथेति ॥ २१ ॥ तथा पौण्ड्रकशिरवत् तन्मित्रस्य काशिपतेः शिरः पत्रिभिर्बाणैः कायादुत्कृत्य च्छित्वा काशिपुर्यां न्यपातयत्। तत्र दृष्टान्तमाह—अनिलो वायुः यथा पद्मकोशमुत्कृत्य पातयति तथेति ॥ २२ ॥ एवं ससखं काशिराजसहितं मत्सरिणं स्वोत्कर्षासहं शत्रुं पौण्ड्रकं हत्वा सिद्धैर्गीयमाना कथैवामृतं यस्य स हरिर्द्वारकामाविशत् आगच्छत् ॥ २३ ॥ 'भगवद्ध्यान-माहात्म्याश्चर्यं शृणु' इति सम्बोधयति—राजन्निति। स पौण्ड्रकः नित्यं वैरेणापि भगवतः कृष्णस्य ध्यानेन ध्वस्तान्यखिलानि बन्धनानि कर्मवासनारूपाणि अविद्यादीनि यस्य सः हरेः स्वरूपं समानं रूपं बिभ्राणस्तन्मयोऽभवत् तल्लोकं गत्वा तल्लीला-परिकरे प्रविष्टोऽभूदित्यर्थः ॥ २४ ॥

### अन्वितार्थप्रकाशिका

इतीति ॥ इत्येवं वचनैः पौण्ड्रकं क्षिप्त्वा तिरस्कृत्य शितैर्बाणैः विरथीकृत्य च यथेन्द्रो वज्रेण गिरेः शृङ्गं वृश्चति तथा रथाङ्गेन चक्रेण तस्य शिरोऽवृश्चत् चिच्छेद ॥ २१ ॥ तथेति ॥ तथा पौण्ड्रकशिरोवत् तन्मित्रस्य काशिपतेः शिरः पत्रिभि-र्बाणैः कायादुत्कृत्य छित्वा काशिपुर्यां न्यपातयत्। यथा अनिलो वायुः पद्मकोशमुत्कृत्य पातयति तथेति ॥ २२ ॥ एवमिति ॥ ससखं काशिराजसहितम्। बहुव्रीहौ टजार्षः। मत्सरिणं स्वोत्कर्षासहं शत्रुं पौण्ड्रकं हत्वा सिद्धैर्गीयमाना कथैवामृतं यस्य स हरिर्द्वारकामाविशत् आगच्छत् ॥२३॥ स इति ॥ हे राजन्! स पौण्ड्रकः नित्यं वैरेणापि भगवतः कृष्णस्य ध्यानेन प्रध्वस्तान्यखि-लानि बन्धनानि कर्मवासनारूपाणि अविद्यादीनि यस्य सः हरेः स्वरूपं समानं रूपं चतुर्भुजत्वादि बिभ्राणस्तन्मयोऽभवत् ॥२४॥

### श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्

गिरेः शिखरं यथा तथा शिरोऽवृश्चत् चिच्छेद ॥२१॥ पौण्ड्रकमित्रस्य काशिपतेः ॥२२-२३॥ सः पौंड्रकः तन्मयो हरि-तेजसि लीन इत्यर्थः ॥ २४ ॥

### भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

इतीति। इति उक्त्वेति शेषः। क्षिप्त्वा तिरस्कृत्य च, शितैस्तीक्ष्णैः, बाणैः पौण्ड्रकं, विरथीकृत्य, इन्द्रः वज्रेण, गिरेः शृङ्गमिति शेषः। यथा, पर्वतस्य शिखरमिवेत्यर्थः। रथाङ्गेन चक्रेण, तस्य शिरः, अवृश्चत् ॥ २१ ॥ तथेति ॥ तथा,

पत्त्रिभिर्बाणैः, काशीपतेः कायात्, शिरः उत्कृत्य उत्प्लवं यथा तथा छित्त्वा, अनिलः पद्मकोशं इव, काशिपुर्यां, न्यपातयत् ॥ २२ ॥ एवमिति । हरिः श्रीकृष्णः, ससखं सकाशीराजं, मत्सरिणं शत्रुं पौण्ड्रकं हत्वा, सिद्धैः गीयमानं कथैवामृतं यस्य सः, तथाभूतः सन्, द्वारकां आविशत् प्रविवेश ॥ २३ ॥ स इति । सः पौण्ड्रकः, नित्यं भगवतः श्रीकृष्णस्य ध्यानेन प्रध्वस्तान्यखिलानि बन्धनानि कर्मबन्धनानि यस्य सः, हेतुगर्भमिदं, तत्त्वात् हरेः श्रीकृष्णस्य, स्वरूपं तद्रूपतुल्यस्वरूपं, बिभ्राणः संश्च, हे राजन्, तन्मयः, अभवत् । साधर्म्यं गत इत्यर्थः ॥ २४ ॥

### कृष्णप्रिया

इस प्रकार वाग् बाणों से पौण्ड्रक के मनोबल का वध करके भगवान् श्रीकृष्ण ने अपने शार्ङ्ग धनुष से छोड़े हुए तीक्ष्ण बाणों से पौण्ड्रक के रथ का सर्वथा नाश कर दिया । पुनः सुदर्शन चक्र की तीक्ष्ण धारा से पौण्ड्रक के मस्तक को ऐसे उतार लिया कि जैसे नाकनरेश इन्द्र ने गिरिवर के शिखर को अपने वज्र से उतार दिया था ।। २१ ।। पुनः पृष्ठग्राही काशीनरेश के मस्तक को भी धड़ से उपर उड़ाकर काशीपुरी में गिराया; मानो वायुदेवता ने कमल के पुष्प को कमलनाल से गिरा दिया था ।। २२ ।। महाराज परीक्षित् ! इस प्रकार मत्सरवाले पौण्ड्रक को एवं पौण्ड्रक के मित्र काशिराज को युद्ध में मारकर भगवान् श्रीहरि अपनी राजधानी द्वारिका नगरी में पधारे । नाथ के द्वारिका नगर प्रवेश के समय सारे सिद्ध लोग भगवान् श्रीकृष्ण की मङ्गलमयी कथासुधा का गान करते थे ।। २३ ।। महाराज परीक्षित् ! कृपानिधान श्रीकृष्ण की करुणा की महिमा सुनें ! पौण्ड्रक भगवान् श्रीकृष्ण का चतुर्भुज स्वरूप का चिन्तन एवं नाटक कर रहा था । उसका भाव भक्तिसंभर हो या मत्सरपूर्ण, लेकिन चिन्तन तो सच्चिदानन्द का ही था । यदि ऐसे मत्सरभाव से भी चिन्तन करने वालों की उर्ध्वगति दयानिधि भगवान् श्रीकृष्ण कर देते हैं तब अनन्य भाव से भजने वालों के लिये क्या कहा जाय ।। २४ ।।

**शिरः पतितमालोक्य राजद्वारे[1] सकुण्डलम् । किमिदं कस्य वा वक्त्रमिति संशिशियरे जनाः ॥ २५ ॥**

**राज्ञः काशिपतेर्ज्ञात्वा महिष्यः पुत्रबान्धवाः । पौराश्च हा हता राजन् नाथ नाथेति[2] प्रारुदन् ॥ २६ ॥**

**सुदक्षिणस्तस्य सुतः कृत्वा संस्थाविधिं पितुः । निहत्य पितृहन्तारं यास्याम्यपचितिं पितुः ॥ २७ ॥**

**इत्यात्मनाभिसंधाय सोपाध्यायो महेश्वरम् । सुदक्षिणोऽर्चयामास परमेण समाधिना ॥ २८ ॥**

### कर्दमक्षमा

अन्वयः—राजद्वारे, पतितम्, सकुण्डलम्, शिरः, पतितम्, आलोक्य, इदम्, किम् ? वा, कस्य, इदम्, वक्त्रम्, इति, जनाः, संशिशियरे ॥ २५ ॥ काशिपतेः, राज्ञः, इति, ज्ञात्वा, महिष्यः, पुत्रबान्धवाः, च, पौराः, हा राजन् ! हा नाथ !, इति, प्रारुदन् ॥२६॥ तस्य, सुतः, सुदक्षिणः, पितुः, संस्थाविधिम्, कृत्वा, पितृहन्तारम्, निहत्य, पितुः, अपचितिम्, यास्यामि ॥२७॥ सुदक्षिणः, इति, आत्मना, अभिसन्धाय, सोपाध्यायः, सुदक्षिणः, परमेण, समाधिना, महेश्वरम्, अर्चयामास ॥ २८ ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

प्रथमं किमिदमिति पश्चाद्वक्त्रमिति विभाव्य कस्य चेति संशयं कृतवंत इति ॥२५-२६॥ संस्थाविधिमुत्तरक्रियाम् । अपचितिं निष्कृतिम् ॥ २७ ॥ आत्मनाऽभिसंधाय बुद्ध्या व्यवस्य । सुदक्षिणोऽत्युदारः ॥ २८ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

तत्पुत्रस्ततोऽपि दुर्बुद्धिरित्याह—तस्य काशिपतेः । "भवेदपचितिः पूजाव्ययनिष्कृतिहानिषु" इति मेदिनी ॥ २७ ॥ इतीत्थम् । समाधिना ध्यानेन "समाधिर्ना समर्थने । ध्याने नीवाकनियमे काव्यस्य च गुणांतरे" इति मेदिनी । नीवाको धान्यसञ्चयः ॥ २८ ॥

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी

संशिशियरे तस्य वाऽन्यस्य वेदमिति नानाप्रकारं तर्कयामासुः जनाः साधारणाः ॥ २५ ॥ हा हताः स्म इति शेषः ॥ २६ ॥ तत्सुतस्तु ततोऽपि दुर्बुद्धिरित्याह—सुदक्षिण इत्यादिना । तत्रादौ द्वयं युग्मकं सुदक्षिणस्तत्संज्ञः सोपाध्यायः पुरोहितसहितः समाधिना एकाग्रचित्ततया ॥ २७-२८ ॥

---

१. द्वारि-वीर. विज. । २. नाथेत्युपाद्रवन्-विज. ।

### श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी

कस्य चेति संशिशियिरे, निश्चेतुं न शक्ता इत्यर्थः। यतो जनाः पौरप्रजाः॥ २५॥ ज्ञात्वा परिचित्य, यतस्तस्य महिष्यादयः, अतः प्रकर्षेण उच्चैरार्त्तस्वरादिनाऽरुदन्। कथम्? राजन्! हे भूपते! नाथ! 'हे अस्मत्स्वामिन्! हा हताः स्मः' इत्येवं वीप्सादि शोकात् महिष्यादीनां यथापूर्वं ज्ञाने प्ररोदने चाधिक्यम्॥ २६॥ सुदक्षिणस्तत्संज्ञः॥ २७॥ सोपाध्यायः पुरोहितसहितः, समाधिना एकाग्रचित्ततया, अन्यत्तैर्व्याख्यातम्। यद्वा, आत्मना स्वयमेवाभिसन्धाय संकल्प्य; इति तादृशदुष्ट-संकल्पे तस्यैव प्राधान्यं सूचितम्॥ २८॥

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम्

संशिशियिरे संशयञ्चक्रुः॥ २५-४०॥

### श्रीमद्वीरराघवाचार्यकृता भागवतचन्द्रचन्द्रिका

शिर इति। प्रथमं किमिदमिति पश्चात् सकुण्डलत्वाच्छिर इति ततः कस्येदं मुखमिति संशिशियिरे संशयञ्चक्रुः॥२५॥ राज्ञ इति। ततः क्रमेण काशीपतेः राज्ञ एवेदं शिर इति ज्ञात्वा निश्चित्य महिष्यस्तस्य भार्याः पुत्रादयश्चेत्थं रुरुदुः॥ २६॥ पुत्र इति। तस्य काशीराजस्य सुदक्षिणो नाम पुत्रः आसीदिति वाक्यान्तरं स च सुदक्षिणः पितुः संस्थाविधिम् उत्तरक्रियां कृत्वा मत्पितृहन्तारं हत्वा पितुरपचितिम् ऋणापनयनात्मिकां निष्कृतिं यास्यामि॥ २७॥ इतीत्थमभिसन्धाय उपाध्यायेन सहितः परमेण समाधिना ध्यानयोगेन महेश्वरं रुद्रमाराधयामासेति सम्बन्धः॥ २८॥

### श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शिनी

प्रथमं किमिदमिति पश्चाद्वक्त्रमिति संशिशियिरे सन्देहं प्रापुः॥ २५-२८॥

### गूढार्थदीपिनी

संशिशियिरे संशयं प्रापुः। 'संशयिरे' इत्यपपाठः॥२५-२६॥ संस्थाविधिं मृतकक्रियाम्। अपचितिम् आनृण्यम्॥२७॥ आत्मना मनसा अभिसन्धाय सङ्कल्प्य। समाधिना चित्तैकाग्र्येण॥ २८॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

संशिशियिरे संशयं चक्रुः॥ २५-२८॥

### श्रीमद्वल्लभाचार्य्यकृता सुबोधिनी

यद्भगवता पत्रिभिः शिरश्छिन्नम्, तद्राजद्वारि पतितम्, तदालोक्य। राजत्वज्ञापनाय सकुण्डलमिति। मुखं रुधिरा-विलमिति कुण्डले अभिज्ञापके निरूपिते। आदौ पतनसमये किमिदं पतितमिति बुद्धिरुत्पन्ना, ततः शिर इति ज्ञात्वा कस्येति, ततो राज्ञो भविष्यतीति ज्ञातेऽपि वक्तुमयुक्तत्वात्संशिशियिरे। संशयं प्राप्ताः॥ २६॥ ततोन्तरङ्गाः समागत्य निश्चयं चक्रुरि-त्याह राज्ञः काशिपतेरिति। महिष्यः स्त्रियः, बान्धवा गोत्रिणः, पौराः सेवकाः, चकारादन्येऽपि साधारणाः, तथा वक्तुमनु-चितमित्याशङ्क्य, तेषां तुल्यव्यसनत्वं निरूपयितुमाह हा हता राजन्निति। माहात्म्ये राजन्निति। स्नेहे नाथेति। यथा स्ववधे राजा बोध्यते, तद्वद्बोधयांचक्रुरित्यर्थः। चकारात्पितः स्वामिन्नित्याद्यपि। स्ववधे यथा क्लेशेन रोदनम्, तथा मुखतो वदन्त एव रोदनं कृतवन्तः॥ २६॥ ततः क्षत्रिय इति मानभङ्गार्थं भगवतैवं प्रदर्शितमिति वैरं सिसाधयिषुः विष्णोः समानौ ब्रह्मशिवौ ज्ञात्वा तयोराराधनार्थं प्रवृत्त इत्याह सुदक्षिणस्तस्य सुत इति। ब्रह्ममहादेवौ पितृहन्ता तस्य सहजो देहादिदोष इति तद्वधार्थं प्रयत्नं करोतीति तूष्णीं स्थितौ। जातश्चार्थस्तथैव। बहुदक्षिणयज्ञादुत्पन्नः। सुदक्षिण इति वैदिकप्रकारे तस्य श्रद्धा, अन्यथा राज्ञामनुवृत्तिमेव लौकिकीं कुर्यात्। संस्थाविधिः पारलौकिकी क्रिया। पितृत्वात्तदावश्यकम्। ततोऽपि क्षत्रियो न निष्कृतो भवतीति पितृहन्तारं स्वादृष्टशरीरादिकं हत्वैव अपचितिं यास्यामीति॥ २७॥ स्वबुद्धयै विचारितवानित्याह इत्यात्मनाभि-संधायेति। सोपाध्यायो ब्राह्मणसहितः। महेश्वरमिति। ब्राह्मणादपि महादेवं महान्तं मन्यते। कदाचिद्ब्राह्मणाः, ब्रह्मण्यो भगवानिति पक्षपातं कुर्युरिति। परमेण समाधिनेति। योगेन महादेवस्तुष्यतीति। परमः साक्षान्महादेवप्रीतिजनकः। समाधिः चित्तैकाग्र्यम्, तेन तुष्यतीति शैवतन्त्रसिद्धत्वात्तथा कृतवान्॥ २८॥

### श्रीसुबोधिनी-सारः

राजद्वारे सकुंडलं पतितं शिर आलोक्य दृष्ट्वा इदं किं कस्य वा वक्त्रं मुखमिदमिति जनाः संशयं चक्रुः॥ २५॥ ततो निश्चित्याह। काशिपतेः संज्ञायां ह्रस्वः राज्ञो ज्ञात्वा तस्य महिष्यः पट्टराज्ञ्यः पुत्रबांधवाः पौरा नागरा हा कष्टं वयं हता मृता इति प्रारुदन् हे नाथनाथ॥ २६॥ तस्य काशिराजस्य सुतः सुदक्षिणः पितुः संस्थाविधिं मरणक्रियां कृत्वा पितुर्हन्तारं

घातकं निहत्य हत्वा पितुरपचितिमानृण्यमहं यास्यामि ॥ २७ ॥ इत्येवमात्मना मनसाऽभिसंधाय संकल्प्य सोपाध्यायः गुरुसहितः सुदक्षिणः परमेण समाधिना महादेवं पूजयामास ॥ २८ ॥

### श्रीविट्ठलरायात्मजश्रीवल्लभकृतलेखः

**शिरःपतनमित्यस्याभासे।** **निरुद्धा इति।** विरुद्धप्रकारेणापि भगवत्येव चित्तवृत्तीनां निरोध इत्यर्थः। **तीर्थमपीति।** तीर्थस्था अपीत्यर्थः। **सुदक्षिणस्तस्य सुत इत्यत्र।** ननु भगवद्द्रोहार्थं प्रवृत्तो ब्राह्मणैः ऋत्विग्भिर्देवेन महारुद्रेण च कुतो न निवारित इत्यत आहुः **ब्राह्मणेति।** अयं पितृहन्तृवधार्थं यतते, पितृहन्ता तु सहजोऽस्यैव देहादिदोषः। देहेन साहाय्यं कृतमतो मारितः। हेतुत्वेपि प्राधान्यविवक्षया कर्तृत्वम्। तथा च तस्य सुदक्षिणस्य पितृहन्ता पितृदेह एव, तद्वधार्थं प्रयत्नं करोति, न तु भगवति किञ्चित्, अतस्तूष्णीं स्थितौ न निवारितवन्तावित्यर्थः। **जातश्चार्थ इति।** कार्यकारणयोरभेदेन 'आत्मा वै पुत्रनामासी'ति श्रुतेश्च पितापुत्रदेहयोरैक्येन सुदक्षिणदेहनाश एव जात इत्यर्थः। **स्वादृष्टशरीरादिकमिति।** स्वस्य सुदक्षिणस्यादृष्टं उक्तरीत्या भेदेन शरीरादिकं च पितृहन्तृ इत्यर्थः। **इत्यात्मनेत्यत्र।** भगवत्सांनिध्ये इति पूज्यदेवसांनिध्ये इत्यर्थः।

### गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

काश्यां राजद्वारे सकुण्डलं शिरः पतितमालोक्य जनाः प्रथमं "किमिदमिति, पश्चात्सकुण्डलत्वात् शिर इति, ततः कस्येदं वक्त्रं मुखम्" इति संशिशियिरे संशयं चक्रुरित्यर्थः॥ २५ ॥ ततश्च काशिपतेः राज्ञ एवेदं शिर इति ज्ञात्वा निश्चित्य तस्य महिष्यो भार्याः पुत्रादयः हे राजन्! हे नाथ नाथ! त्वयि हते सति त्वदनुयायिनो वयं सर्व एव हताः स्मेति वदन्तः प्रारुदन्॥ २६ ॥ तस्य काशिराजस्य सुदक्षिणो नाम सुतः आसीत्। स च पितुः संस्थाविधिं उत्तरक्रियां कृत्वा स्वपितृहन्तारं निहत्य पितुरपचितिं ऋणापनयात्मिकां निष्कृतिं यास्यामि॥ २७ ॥ इत्येवमात्मनाऽभिसन्धाय बुद्ध्या निश्चित्य सोपाध्यायः उपाध्यायेन सहितः सुदक्षिणः सुष्ठु दक्षिणा यस्य स अत्युदारः परमेण समाधिना एकाग्रेण चित्तेन महेश्वरं रुद्रमर्चयामासेत्यन्वयः॥ २८ ॥

### अन्वितार्थप्रकाशिका

शिर इति॥ काश्यां राजद्वारे सकुण्डलं शिरः पतितमालोक्य जनाः प्रथमं किमिदमिति पश्चात्सकुण्डलत्वात् शिरः इति ततः कस्येदं वक्त्रं मुखमिति संशिशियिरे संशयं प्रापुः। संशयिरे इति बहुषु पुस्तकेषु दृश्यमानः पाठस्त्वार्षः॥ २५ ॥ राज्ञ इति॥ काशिपतेः राज्ञ एवेदं शिर इति ज्ञात्वा निश्चित्य तस्य महिष्यो भार्याः पुत्राः बान्धवाश्च हे राजन्! हे नाथ नाथ! त्वयि हते सति त्वदनुयायिनो वयं सर्व एव हताः स्मेति वदन्तः प्रारुदन्॥ २६ ॥ तत्पुत्रस्ततोऽपि दुर्बुद्धिरित्याह—सुदक्षिण इति॥ तस्य काशिराजस्य सुदक्षिणो नाम सुतः आसीत्। स च पितुः संस्थाविधिम् उत्तरक्रियां कृत्वा स्वपितृहन्तारं निहत्य पितुरपचितिम्। ऋणापनयात्मिकां निष्कृतिं यास्यामि॥ २७ ॥ इतीति॥ इत्येवमात्मनाऽभिसन्धाय बुद्ध्या निश्चित्य सोपाध्यायः उपाध्यायेन सहितः सुदक्षिणः सुष्ठु दक्षिणा यस्य सः अत्युदारः परमेण समाधिना एकाग्रेण चित्तेन महेश्वरं रुद्रमर्चयामास॥ २८ ॥

### श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्

संशिशियिरे संदेहं चक्रुः॥ २५ ॥ हा हताः स्मेति शेषः॥ २६ ॥ संस्थाविधिं मृतस्यौर्ध्वदेहिकीं क्रियां पितुः अपचितिं वैरनिवारणं यास्यामि॥ २७ ॥ आत्मना मनसा अभिसंधाय विचार्य। समाधिना चित्तैकाग्र्येण॥ २८ ॥

### भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

शिर इति॥ जनाः प्रथमं, इदं किं इति, पश्चात् सकुण्डलं हेतुगर्भमिदं सकुण्डलत्वादित्यर्थः। शिरः, इति, ततः कस्य वा, इदं वक्त्रं मुखं इति, राजद्वारि पतितं आलोक्य, संशयिरे संशयं चक्रुः॥ २५ ॥ राज्ञ इति॥ ततः, हे राजन्, क्रमेण काशीपतेः, राज्ञः शिर एतदिति शेषः। ज्ञात्वा, महिष्यस्तत्पट्टराज्यः, पुत्राश्च बान्धवाश्च ते, पौराः पुरजनाश्च, हा इति खेदे। हे नाथ, हे नाथ, हताः इति उक्त्वा, प्रारुदन्॥ २६ ॥ पुत्र इति॥ सुदक्षिणः सुदक्षिणाख्यः, तस्य राज्ञः, पुत्रः आसीदिति वाक्यान्तरं, स च, पितुः संस्थाविधिमुत्तरक्रियां कृत्वा, पितृहन्तारं, निहत्य हत्वा, पितुः अपचितिमृणापनयनात्मिकां निष्कृतिं, यास्यामि॥ २७ ॥ इतीति॥ इतीत्थं, आत्मना बुद्ध्या, अभिसंधाय व्यवस्य, सोपाध्याय उपाध्यायेन सहितः, सुदक्षिणः परमेण समाधिना ध्यानयोगेन, महेश्वरं रुद्रं, अर्च्चयामास॥ २८ ॥

### कृष्णप्रिया

राजन् परीक्षित् ! काशीपुरी में राजमहल के द्वार पर कुण्डल से समलङ्कृत गिरे हुए मस्तक को देखकर नगर के नागरिकजन विविध प्रकार के सन्देह करने लगे एवं विचार करने लगे कि यह मस्तक यहाँ राजमहल के द्वार पर कैसे आया एवं यह मस्तक किस व्यक्ति का होगा ॥ २५ ॥ राजपरिवार को यह पता लगा कि यह मस्तक तो महाराज काशीनरेश का ही है, तब पट्टरानियाँ, पुत्रलोग, बन्धु-स्वजन एवं पौरजन विलाप करते रोने लगे कि हा नाथ ! हा नाथ ! आपके जाने से आज हम सब अनाथ हो गये ॥ २६ ॥ काशिनरेश के वियोग न खिन्न उनके पुत्र सुदक्षिण ने पिता का अग्नि प्रदान संस्कार करके श्राद्ध आदि संस्कार शास्त्रोक्त विधि से किये। पुनः अपने मन से यह निश्चय किया मेरे पिताजी को मारने वाले को मारकर ही मैं पितृऋण से मुक्त बनूँगा। उस संकल्प की सिद्धि के लिये सुदक्षिण अपने कुलाचार्य एवं कुलपुरोहितों से मिलकर अत्यन्त तन्मयता और निष्ठा से भगवान् काशीनाथ की आराधना करने लगा ॥ २७-२८ ॥

[1]प्रीतोऽविमुक्ते भगवांस्तस्मै वरमदाद् भवः । पितृहन्तृवधोपायं स वव्रे [2]वरमीप्सितम् ॥ २९ ॥
दक्षिणाग्निं परिचर ब्राह्मणैः [3]सममृत्विजम् । अभिचारविधानेन स चाग्निः प्रमथैर्वृतः ॥ ३० ॥
साधयिष्यति संकल्पमब्रह्मण्ये प्रयोजितः । इत्यादिष्टस्तथा चक्रे कृष्णायाभिचरन् [4]कुधीः ॥ ३१ ॥
ततोऽग्निरुत्थितः कुण्डान्मूर्तिमानतिभीषणः । तप्तताम्रशिखाश्मश्रुरङ्गारोद्गारिलोचनः ॥ ३२ ॥

### कर्दमक्षमा

अन्वयः—अविमुक्ते, तस्मै, प्रीतः, भगवान्, भव, वरम्, अदात्, सः, पितृहन्तृवधोपायम्, अभीप्सितम्, वरम्, वव्रे ॥ २९ ॥ त्वम्, ब्राह्मणैः, समम्, ऋत्विजम्, दक्षिणाग्निम्, अभिचारविधानेन, परिचर, च, प्रमथैः, वृतः, सः, अग्निः, अब्रह्मण्ये, प्रयोजितः, सङ्कल्पम्, साधयिष्यति, इति, आदिष्टः, व्रती, कृष्णाय, अभिचरन्, तथा, चक्रे ॥ ३०-३१ ॥ ततः, कुण्डात्, मूर्तिमान्, अतिभीषणः, तप्तताम्रशिखाश्मश्रुः, अङ्गारो द्गारिलोचनः ॥ ३२ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

वरमदात् वृणीष्वेत्युक्तवानित्यर्थः ॥ २९ ॥ ऋत्विजमृत्विजमिव स्वनियोगकारिणम् । "यज्ञस्य देवमृत्विजम्" इति श्रुतेः ॥३०॥ अब्रह्मण्ये प्रयोजित इति कृष्णे प्रयोजितो विपरीतो भविष्यतीति सूचितम् । अभिचरन्नभिचारं कुर्वन् । व्रती गृहीतनियमः ॥३१॥ तप्तं ताम्रमिव शिखा श्मश्रूणि च यस्य सः । अंगारोद्गारीणि ज्वलदंगारान्वमंति लोचनानि यस्य सः ॥३२॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

अविमुक्तो महादेवः । 'अविमुक्तं हि मे गृहम्' इति हरिवंशे पार्वतीं शिवः । "सो विमुक्ते प्रतिष्ठितः" इति जाबालश्रुतेश्च कुत्र तदविमुक्तमित्याकांक्षायाम् । "वरणायांनास्यां च मध्ये प्रतिष्ठितः" इति श्रुतेर्वाराणसीक्षेत्रं लभ्यते तत्रस्थत्वाच्छिवोऽप्यविमुक्त इत्युच्यते। तस्मै सुदक्षिणाय। स सुदक्षिणः। इत्यर्थ इति—वरशब्दस्य जामात्राद्यर्थकत्वादित्थं व्याख्येयमिति भावः। प्रीत इति तत्प्रतीत्यपेक्षया अविमुक्तस्तत्रत्याविमुक्ताख्यक्षेत्राधिष्ठातृत्वेन तत्संज्ञः। "अविमुक्ते महाक्षेत्रे भाषितस्तेन शंकरः" इति वैष्णवोक्तेः। भगवानिति—सर्वज्ञत्वादेव सव्याजं वरं ददाविति भावः। वधस्योपायमेव न तु वधमिति तदानीमपि बुद्धिविभ्रंशं चकारेति लक्ष्यते। ब्राह्मणैः सममिति तस्य यज्ञस्य तन्मूलत्वात्तद्भक्ते तु स न द्विष्यात्, एते च ब्राह्मणा न भवन्तीति भावः ॥ २९ ॥ दक्षिणाग्निमन्वाहार्यनामानम्। "अग्निमीडे पुरोहितम्, यज्ञस्य देवं मुख्यं कृष्णस्य ब्रह्मण्यत्वात्, नमो ब्रह्मदेवाय" इति मंत्रात्। 'तद्ब्रह्मण्याग्रणीर्भवान्' इति वसुदेवया गोपाख्याने मुन्युक्तेश्च ॥ ३० ॥ विपरीतः संकल्पनाशकः। अभिचरन्निति शत्रुवधकामः। तथैवाह—अब्रह्मण्यम् इति। ब्रह्मण्ये तु न किञ्चित्करिष्यतीति ब्रह्मण्यदेवे तु तस्मिन्प्रयोजितः सन्प्रयोजयितॄणाम् 'हलांतं ब्रह्मवर्चसम्' इति ब्राह्मण्यादिकं नाशयन्देहनाशमपि करिष्यतीति श्रीरुद्राभिप्रायः, क्वचिद्ब्राह्मणानामपि कृष्णनमनादिश्रवणात्कृष्णस्य विप्रनमस्कारजिघृक्षोर्ब्रह्मण्यता नैवास्तीति सुदक्षिणादेरभिप्रायः। ननु 'ब्राह्मणैस्समम्' इत्युक्तेः कथं हिंसारूपेऽभिचारे विदुषां प्रवृत्तिः। "श्येनेनाभिचरन्यजेत्" इति वेदविहितत्वादिति चेन्न, वेदोक्तोऽभिचारो वेदविहितो न भवति फलत्वात् फलं न विधेयं किन्तु फलमुद्दिश्य तत्साधनत्वेन कर्मैव विधेयमिति सिद्धान्तात्। अतोऽभिचारस्याविहितत्वेन प्रत्यवायजनकत्वेन तत्र न विदुषां प्रवृत्तिः किन्तु कर्मणि सा भवत्येवेत्यलम् ॥ ३१ ॥ ततोऽभिचारविधिना यजनोत्तरम्। अंगाराण्युद्गिरंतीत्यंगारोद्गारीणि ॥ ३२ ॥

---

१. विविक्ते-वीर. । २. परमेश्वरम्-वीर. । ३. सम्यगृत्विजम्-वीर. ; सह ऋत्विजः-विज. । ४. व्रती-श्रीधर. वंशी. जीव. ; कुधीः-वीर. ; नृप-विज. ।

### श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी

प्रीत इति तत्प्रीत्यपेक्षया अविमुक्तः तत्रत्याविमुक्ताख्यतीर्थाधिष्ठातृत्वेन तत्संज्ञः तथा च श्रीविष्णुपुराणे "अविमुक्ते महाक्षेत्रे तोषितस्तेन शङ्करः" इति भगवानिति सर्वज्ञत्वादेव सव्याजं वरं ददाविति भावः। वधस्य उपायमेव नतु वध इति तदानीमपि बुद्धिविभ्रंशं तस्य चकारेति लक्ष्यते ॥ २९ ॥ दक्षिणेति युग्मकम्। ब्राह्मणैस्समिति तस्यापि यज्ञस्य तन्मूलत्वात् तदुक्ते तु स न द्विष्यात् एते च ब्राह्मणा न भवन्तीति भावः। तथैवाह—अब्रह्मण्य इति। ब्रह्मण्ये तु न किञ्चित् करिष्यति ब्रह्मण्यदेवे तु तस्मिन् प्रयोजितः सन् प्रयोजयितॄणां हलान्तं ब्रह्मवर्चसमितिवद्ब्रह्मण्यादिकं नाशयन् देहनाशं करिष्यतीति श्रीरुद्राभिप्रायः क्वचिदब्रह्मण्यानामपि तस्मिन्नमस्कारादिश्रवणान्न तस्य ब्रह्मण्यत्वमिति सुदक्षिणादीनामभिप्रायः। वस्तुतस्त्वेवं ज्ञेयं सर्वाराध्योऽपि भगवान् क्वचिदाराधकत्वेन च यल्लीलायते तत्रोभयत्र च स्वस्मिन् प्रेमदानमेव मुख्यं प्रयोजनं "भक्तियोगविधानार्थं कथं पश्येमहि स्त्रियः" इति श्रीकुन्तीवाक्यात् भक्तियोगविधानार्थमवतीर्णं त्वामिति टीकाश्च मुख्यत्वञ्च तस्य सालोक्येत्यादिवाक्यशतात् तत्प्रेम च तत्कर्तृकाराधनेन विप्रादीनां तद्गौरवातिक्रमरूपं दोषमपि निरस्य हिताय प्रवर्त्तते श्रीनारदादीनां परमतद्भक्तत्वाव्यभिचारश्रवणात् श्रीभगवत्स्फुरणमात्रस्यापि तथा स्वभावः श्रूयते किमुत तत्प्रेम्णः तत्र तत्कर्मकाराधनं तन्महिमज्ञानपूर्वमिति भक्त्यात्मकं प्रेम जनयति तत्कर्तृकाराधनन्तु तादृशमहिम्नोऽपि तस्य विनयादिसाद्गुण्यदर्शनाविशेषेणापि तेन शुद्धं प्रेम निदधाति यत्खलु क्वचित्तन्महिमस्फूर्त्तिमत्याच्छादयति तदिदं शुद्धप्रेम च परमत्वेन स्तूयते नेमं विरिञ्च इत्यादौ इत्थं सतामित्यादौ नायं श्रियोऽङ्ग इत्यादौ च तस्मादाराधकतयाराध्यतया च ब्राह्मणादीनामेतादृशप्रेमदानाद्ब्राह्मणानां सर्वेषामपि हितमेवाचरतीति न ब्रह्मण्यताव्यभिचारः प्रत्युतान्येषां तथा हिताचरणाशक्तेर्ब्रह्मण्यदेवत्वमेव तस्य सिद्धयतीति ( नितरामाराधयिष्यतीति भावः। ) सम्यगिति पाठे क्रियाविशेषणं अर्थः स एव सङ्कल्पं त्वदभीष्टं कृष्णाय साक्षाद्भगवदर्थमप्यभिचरन् हिंसात्मकक्रियां कुर्वन् ॥३०-३१॥ तत इति युग्मकम्। ततश्चिरकालात्तत्कर्मसमाप्त्यनन्तरम् ॥३२॥

### श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी

अविमुक्तस्तत्रत्याविमुक्ताख्य—तीर्थाधिष्ठातृत्वेन तत्संज्ञाकः, किंवा भक्तवश्यत्वादविमुक्तोऽस्वतन्त्र इत्यर्थः। यद्वा, अविमुक्ते तीर्थ इति सप्तम्यन्तपाठः। तथा च श्रीविष्णुपुराणे ( ५।३४।३० )—'अविमुक्ते महाक्षेत्रे तोषितस्तेन शंकरः' इति; भगवान् भक्तवत्सल इति वरदाने हेतुः। यद्वा, सर्वज्ञ इति तदीप्सितवरस्य वैफल्यं वैपरीत्यञ्च जानन्नपि ददौ, यतो भवो भक्तश्रेयोरूप इत्यर्थः। यद्वा, सर्वज्ञत्वादेवाब्रह्मणा इति सच्छिद्रं वरं ददाविति भावः। वधस्योपायमेव न तु वधम् ॥ २९ ॥ परिचर सेवस्व; समं सहित इति तैः सह परिचरणेन ब्रह्मण्यदेवे स्वत एवाभिचारवैफल्यादिकं सेत्स्यतीति भावः। सम्यगिति पाठे क्रियाविशेषणम्, अर्थः स एव ॥ ३० ॥ संकल्पं त्वदभीष्टम्, कृष्णाय साक्षाद्भगवतेऽपि, अभिचरन् हिंसितुमिच्छन् ॥ ३१ ॥ ततस्तत्पश्चादिति बहुकालविलम्बं बोधयति। अतिभीषणत्वमेव दर्शयति—तप्तेत्यादि तलमित्यन्तेन ॥ ३२ ॥

### श्रीमद्वीरराघवाचार्यकृता भागवतचन्द्रचन्द्रिका

पितृहन्तुरिति। स सुदक्षिणः प्रसन्नं परमेश्वरं रुद्रं प्रति वधोपायमेव वरं वव्रे "शास्त्रदृष्ट्या तूपदेशो वामदेववत्' ( १-१-३१ ) इति न्यायेन महेश्वरं परमेश्वरमिति च मुनिप्रयोगः। प्रीत इति। विविक्ते एकान्ते प्रीतः प्रसन्नो भवो रुद्रस्तस्मै वरम् ददौ ॥ २९ ॥ वरमेवाह—त्वमिति। सम्यक् ऋत्विजो यस्य तं दक्षिणाग्निमभिचारहोमेन परिचर आराधय स च परिचरितोऽग्निः प्रमथैः परिवृतः ॥३०॥ अब्रह्मण्ये प्रयुक्तः (प्रयोजितः) सङ्कल्पं त्वदभिसन्धिं साधयिष्यति ब्रह्मण्ये प्रयोजितस्तु स्वयमेव हन्यत इति भावः। इतीति। इतीत्थमादिष्टः कुबुद्धिः सुदक्षिणः तथा यथोक्तं कृष्णायाभिचरन् द्रुह्यन् चक्रे ॥ ३१ ॥ तत इति। कथम्भूतोऽग्निर्मूर्त्तिमान् विग्रहधारी अतिदारुणः तप्तं यत्ताम्रं तद्वच्छिखाः श्मश्रूणि च यस्य अङ्गारोद्गारीणि लोचने यस्य ॥ ३२ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

अविमुक्तो महादेवः वरमदात् वृणुष्वेत्यवदत् ॥ २९ ॥ ऋत्विजम् ऋत्विजमिव स्वनियोगकारिणं "यज्ञस्य देवमृत्विजम्" इति श्रुतिः। अब्रह्मण्ये प्रयोजित इति श्रीकृष्णे तु प्रयोजितो विपरीतो भविष्यतीति श्रीरुद्राभिप्रायः। क्वचिदब्राह्मणानामपि कृष्णे नमस्कारश्रवणात् कृष्णस्य विप्रनमस्कारजिघृक्षोर्ब्राह्मण्यता नैवास्तीति सुदक्षिणादेरभिप्रायः ॥ ३०-३३ ॥

### गूढार्थदीपिनी

अविमुक्ते क्षेत्रे प्रथमान्तपाठोऽपि साधीयान् ॥ २९ ॥ दक्षिणेति सार्द्धम्। ब्राह्मणैः समं सह दक्षिणाग्निं परिचर आराधय। कीदृशम्। ऋत्विजमिव कार्यकारिणम्। अभिचारो मारणप्रयोगः ॥३०॥ इतीति अर्द्धम्। अभिचरन् द्रुह्यन् ॥३१॥

तत इति त्रयम्। ततः कुण्डात् उत्थितः मूर्तिमान् अग्निः दश दिशः प्रदहन् सन् द्वारकामभ्यधावदिति त्रयाणामेकान्वयः। कथंभूता। तप्तताम्रवत् शिखाःश्मश्रूणि यस्य अङ्गाराणामुद्गारिणो लोचने यस्य दंष्ट्राभिः उग्रैः भ्रुकुटीदण्डैश्च कठोरं क्रूरं मुखं यस्य। सृक्विकणी ओष्ठप्रान्तौ आलिहन् संस्पृशन्। त्रिशिखं त्रिशूलं कम्पयन् सन्॥ ३२-३४॥

**श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः**

अविमुक्तसंज्ञो भवो महादेवः॥ २९॥ ऋत्विजम् ऋत्विजमिव स्वनियोगकरिणम् "यज्ञस्य देवमृत्विजम्" इति श्रुतेः। सङ्कल्पं त्वदभिसन्धिम् अब्रह्मण्ये प्रयोजितः साधयिष्यति ब्रह्मण्ये प्रयोजितस्तु विपरीतो भविष्यतीति भावः॥ ३०-३१॥ भङ्गारोद्गारीणि लोचनानि यस्य सः॥ ३२॥

**श्रीमद्वल्लभाचार्य्यकृता सुबोधिनी**

ततः प्रीतो महादेवः। ननु भगवत्सान्निध्य एव समाधिः फलसाधक इत्याशङ्क्याह **अविमुक्त** इति। तत्र हि पूर्वं महादेवः पञ्चमं शिरो ब्रह्मणश्छित्वा, ब्रह्महत्यया व्याप्तः, नारायणाश्रमं गत्वा, पृष्टो बदरीनाथः, कथं ब्रह्मवधाद्विमोक इति, तदाह भगवान्, स्वस्थानं गच्छ, यत्र चास्य कपालस्य पतनम्, ततश्चाव्यावृत्तिः कर्तव्येति। ततः काश्यामागतस्य तथा जातमिति, ततःप्रभृति महादेवेन न तद्विमुक्तम्। अतो नित्यसान्निध्यात् महादेवस्तत्र प्रसन्नः, स च भगवान् भवति। तामसकल्पेषु तद्रूप एव भगवानिति। यत उद्भवरूपः। अतस्तस्मै वरं दत्तवान्। वरं ब्रूहि, दास्यामीत्युक्तवानित्यर्थः। ततः स्वाभिलषितमाह **पितृहन्तुरिति**। ननु कथमस्य वरत्वम्, दुःखाभावसुखरूपत्वाभावात्, तत्राह **ईप्सितमिति**। न हि वरो नाम कश्चिन्नियतोऽस्ति। य एव कश्चन मनस्यभिलषितो भवति, स एव वर इति॥ २९॥ तदा महादेवः उभयथाप्यनिष्टमिति ज्ञात्वा, भक्तहितार्थं व्याजेन साधनमुपदिशति, अन्यथा न निवृत्तो भवतीति। शिववाक्यमाह **त्वं दक्षिणाग्निं परिचरेति**। 'अग्नये रुद्रवते पुरोडाशमष्टाकपालं निर्वपेदभिचरन् एषा वास्य घोरा तनूर्यद्रुद्रस्तस्मा एवैनमावृश्चति ता जगतिमाच्छंती'ति श्रुतेः। दक्षिणाग्नावेवाभिचारहोमः। अत आह **त्वं दक्षिणाग्निं परिचरेति**। तत्राप्येकाकिना न कर्तव्यमिति **ब्राह्मणैः** सममित्युक्तम्। ऋत्विजां मध्ये ऋत्विजां सम्बन्धी वा। तेन चातुर्होत्रविधानेन कर्तव्यमिति, तत्राप्यभिचारविधानेन, इष्टिप्रकृतिकश्चेत्, न शरमयादि। पशुप्रकृतिकत्वे तु तूपरः। पशुः स्फ्यो यूपः शरमयं बर्हिः वैभीतिक इध्मः। अत्र तु पुरोडाश एव। यतोऽग्निरेव देवः। स च प्रमथैर्वृतः। अतो रुद्रवानेवाग्निः। अभिचारसामान्यात् शरमयादिर्वा। ततो यद्भविष्यति, तदाह **स चाग्निरिति**। तव कः प्रसाद इति चेत्। अग्निरपि प्रसन्नो मत्कृपया, अन्योऽपि प्रसाद इति वक्तुं प्रमथैर्भूतगणैर्वृत इत्युक्तम्। ततस्ते संङ्कल्पं साधयिष्यति। यदि अब्रह्मण्ये प्रयोजितो भविष्यति, अन्यथा विपरीतो भूत्वा त्वामेव भक्षयिष्यतीति भावः। 'तस्मादग्निर्नाचल्लाभिचरितवै प्रत्यगेनमभिचारस्तृणुत' इति श्रुतेः। सुदक्षिणस्तु भगवन्तं ब्रह्मण्यं न जानाति। चकारात्तदङ्गदेवता अपि कार्यं करिष्यन्तीति सूचितम्॥ ३०½॥ एवं महादेवेनाज्ञप्तस्तथैव चक्रे, परमुद्देश्यो न तदुक्त इति ज्ञापयितुमाह **कृष्णायाभिचरन्निति**। कृष्णो ब्राह्मणानां फलरूपः, ब्राह्मणहितश्च। अतः कुधीः॥ ३१॥ उत्पादने वैगुण्याभावात् अग्निरुत्थित इत्याह **अग्निरुत्थितः कुण्डादिति**। दक्षिणाग्निकुण्डात्। ज्वालारूपतां वारयति **मूर्तिमानिति**। प्रसन्नदेवतारूपतां वारयति **अतिभीषण इति**। मृत्युरूपतां वक्तुं तं वर्णयति **तप्तताम्रेति** द्वयेन। तप्तताम्रसदृशानि श्मश्रूणि यस्य। अङ्गारानेवोद्गिरन्ति लोचनानि यस्य। यथा कालीयादेः। अङ्गारोद्गारिलोचनः॥ ३२॥

**श्रीसुबोधिनी-सारः**

अविमुक्तनामा भगवान् भवः शिवस्तस्मै सुदक्षिणाय वरमदात् वरं वृणीष्वेत्याह स सुदक्षिणः पितृहंतुर्वधस्योपायमीप्सितं वाञ्छितं वरं वव्रे॥ २९॥ शिवोक्तिः। ब्राह्मणैः समं सह ऋत्विजमृत्विग्वन्नियोगकारिणम् "यज्ञस्य देवमृत्विजम्" इति श्रुतेः। ऋत्विग्भिः सममित्येके प्रथमांतपाठे दक्षिणाग्निमभिचारस्य कार्मणस्याभिधानेन परिचरत्वमुपास्य स चाग्निः आभिचारीयो वह्निः प्रमथैर्वृतो युक्तः॥ ३०॥ अब्रह्मण्ये पापे दुष्टे नीचे वेति यावत् प्रयोजितो नियुक्तः संकल्पं साधयिष्यति ब्रह्मण्ये तु न संकल्पपूरकः किमुत ब्रह्मण्यदेवे इत्येवं शिवेनादिष्ट आज्ञप्तो व्रतमस्यास्तीति कृष्णाय कृष्णमुद्दिश्याभिचारं कुर्वन् तथा चक्रे दक्षिणाग्निमुपासांचक्रे॥ ३१॥ तत उपासनाकुंडात् मूर्त्तिमानग्निरुत्पन्नोऽतिभीषणोऽतिभयंकरः तप्तं ताम्रमिव शिखा श्मश्रूणि यस्य अंगारोद्गारीणि लोचनानि यस्य सः॥ ३२॥

**गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी**

ततश्च भगवान्, भवः प्रीतस्तस्मै वरमदात् वरं गृहाणेत्युक्तवान्। स च सुदक्षिणः स्वेप्सितं पितृहन्तुर्वधोपायं वव्रे। पूर्वं हि महादेवो ब्रह्मणः पञ्चमं शिरश्छित्वा ब्रह्महत्यया व्याप्तः सर्वत्र भ्रमन् बदर्याश्रमे नारायणोपदेशात् अत्र काश्यामागतस्तदा

तद्धस्ते लग्नं ब्रह्मशिरः पतितं हत्यया च विमुक्तो जातस्ततःप्रभृति काशीं कदापि न परित्यजति, अत्राराधितश्च शीघ्रमेव प्रसन्नो भवति, अत एवास्य क्षेत्रस्य 'अविमुक्तम्' इति नाम। तस्याप्यविमुक्त इति नामेत्येतत्सूचयन्नाह—अविमुक्त इति ॥२९॥ एवं वृतो रुद्र आह—ब्राह्मणैः समं सह अभिचारविधानेन शत्रुमारणोक्तप्रकारेण ऋत्विजं "यज्ञस्य देवमृत्विजम्" इति श्रुतेः ऋत्विजमिव स्वनियोगकारिणं दक्षिणाग्निं त्वं परिचर आराधय। स चाग्निः मदनुचरैः प्रमथैर्वृतः तव सङ्कल्पं साधयिष्यति, परं त्वब्रह्मण्ये प्रयोजितः, ब्रह्मण्ये प्रयोजितस्तु विपरीतो भविष्यति। अभिचरन् द्रुह्यन्। व्रती गृहीताहारादिनियमः ॥३०-३१॥ ततः कुण्डात् भीषणत्वं स्पष्टयन्, वितप्तताम्रमिव शिखाः श्मश्रू च यस्य सः, अङ्गारान् उद्गारिणी लोचने यस्य सः ॥ ३२ ॥

## अन्वितार्थप्रकाशिका

प्रीत इति ॥ अविमुक्तः अविमुक्ताख्यकाशीक्षेत्राधीशः भगवान्भवः प्रीतस्तस्मै वरमदात् वरं गृहाणेत्युक्तवान्। स च सुदक्षिणः स्वेप्सितं पितृहन्तुर्वधोपायं वव्रे। नतु वधमिति कुम्भकर्णवद्बुद्धिभ्रंशो व्यज्यते। पूर्वं हि महादेवो ब्रह्मणः पञ्चमं शिरश्छित्त्वा ब्रह्महत्यया व्याप्तः सर्वत्र भ्रमन् बदर्याश्रमे नारायणोपदेशात् अत्र काश्यामागतस्तदा तद्धस्ते लग्नं ब्रह्मशिरः पतितं हत्यया च विमुक्तो जातः। ततः प्रभृति काशीस्थं तत्क्षेत्रं शिवः कदापि न मुञ्चति। अतस्तत्क्षेत्रम् अविमुक्तं नाम अभूत्। सप्तम्यन्तपाठे अविमुक्ते क्षेत्रे ॥ २९ ॥ दक्षिणेति सार्द्धम्। एवं वृतो रुद्र आह स्म। ब्राह्मणैः समं सह अभिचारविधानेन शत्रुमारणोक्तप्रकारेण ऋत्विजं "यज्ञस्य देवमृत्विजम्" इति श्रुतेः। ऋत्विजमिव स्वनियोगकारिणं दक्षिणाग्निं त्वं परिचर आराधय। स चाग्निः अब्रह्मण्ये प्रयोजितश्चेत् यदनुचरैः प्रमथैर्वृतः तव सङ्कल्पं साधयिष्यति। ब्रह्मण्ये कृष्णे प्रयोजितस्तु विपरीतो भविष्यति इति श्रीरुद्राशयः। वैपरीत्यमेवातो जातं सुदक्षिणस्तु श्रीकृष्णे ब्रह्मण्यत्वं न बुद्धवान् ॥ ३० ॥ इतीति अर्द्धम् ॥ इति आदिष्टः कृष्णाय अभिचरन् द्रुह्यन् व्रती गृहीताहारादिनियमः स तथा चक्रे ॥ ३१ ॥ तत इति त्रयम् ॥ ततः कुण्डात् अतिभीषणः तप्तताम्रमिव शिखाः श्मश्रूणि च यस्य सः अङ्गाराणाम् उद्गारिणी लोचने यस्य दंष्ट्राभिरुग्रैः भ्रुकुटीदण्डैश्च कठोरं क्रूरमास्यं यस्य सः स्वजिह्वया सृक्किणी उत्तरोध्वौष्ठप्रान्तौ आलिहन् नग्नः ज्वलन् त्रिशिखं त्रिमूलं विधुन्वन् मूर्तिमान् अग्निः उत्थितः स चाग्निभूतैः प्रमथैर्वृतः सर्वतो दिशः प्रदहन् तालप्रमाणाभ्यां पद्भ्यामवनीतलं कम्पयन् द्वारकामभिमुखीकृत्याधावत् ॥ ३२-३४ ॥

## श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्

अविमुक्तः अविमुक्ताख्यक्षेत्राधीशः भवः शिवः ॥ २९ ॥ ब्राह्मणैः समं सहितं ऋत्विजं ऋत्विजमिव स्वेप्सितकार्यकारिणं अग्निमिले पुरोहितं यज्ञस्य देवमृत्विजमिति श्रुतेः अभिचारविधानेन परिचर आराधय ॥ ३० ॥ व्रती ब्रह्मचर्यादिव्रतयुक्तः ॥ ३१ ॥ उद्गिरंती वमंतीत्येवंशीलानि उद्गारीणि अंगाराणां उद्गारीणि लोचनानि यस्य सः ॥ ३२ ॥

## भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

प्रीत इति। प्रीतः भगवान् भवः, विविक्ते एकान्ते, तस्मै सुदक्षिणाय, वरं, अदात्। स सुदक्षिणोऽपि, पितृहन्तुः, वधोपायं ईप्सितं वरं, वव्रे ॥ २९ ॥ दक्षिणाग्निमिति। हे सुदक्षिण, ब्राह्मणैः सह, ऋत्विजं ऋत्विग्वत् स्वनियोगकारिणं, दक्षिणाग्निं, अभिचारविधानेन, परिचर। सः अभिचारविधानेन परिचरितः, अग्निश्च, प्रमथैः वृतः परिवृतः सन् ॥ ३० ॥ साधयिष्यतीति। अब्रह्मण्ये प्रयोजितश्चेत्, तव संकल्पं, साधयिष्यति। ब्रह्मण्ये प्रयोजितस्तु स्वयमेव हन्यते इति भावः। इतीत्थं, आदिष्टः, अभिचरन् अभिचारं कुर्वन्, व्रती गृहीतनियमः, सः सुदक्षिणः, कृष्णाय कृष्णं हन्तुं, तथा यथोक्तं तथैव, चक्रे। इति द्वयोः संबन्धः ॥ ३१ ॥ तत इति। ततः, मूर्त्तिमान्, अतिभीषणः, तप्तताम्रवच्छिखाश्मश्रूणि शिखाश्मश्रुकेशा यस्य सः। अङ्गारोद्गारिणी अङ्गारानुद्गिरन्ती लोचने यस्य सः। अग्निः, कुण्डात्, उत्थितः ॥ ३२ ॥

## कृष्णप्रिया

इस अविमुक्त क्षेत्र श्रीकाशीपुरी में उसकी आराधना से प्रसन्न होकर भगवान् भवनाथ ने उससे कहा कि सुदक्षिण एक अभीष्ट वरदान माँग लीजिये। तब सुदक्षिण ने भगवान् भवानी शंकर से करबद्ध निवेदन किया कि मेरे पितृचरणों को मारने वाले पुरुष को मारने का उपाय दिखलाइये ॥ २९ ॥ भगवान् काशीनाथ ने कहा—सुदक्षिण ! आप अपनी कामना की सिद्धि के लिये वेदज्ञ विप्रों के साथ मिलकर यज्ञ के अधीश्वर ऋत्विग्भूत दक्षिणाग्नि का अभिचार विधि से अनुष्ठान करें। लेकिन इस बात का स्मरण करना कि यदि तुमने यह प्रयोग ब्राह्मणों के अभक्तों पर किया, तभी तुम्हें सफलता मिलेगी। भगवान् काशीश्वर के आदेशानुसार अनुष्ठान के उपयोगी नियम-व्रत को उसने ग्रहण किया और ब्रह्मण्यदेव भगवान् कृष्ण को मारने के लिये अभिचार मारण पुरश्चरण का आरम्भ किया ॥ ३०-३१ ॥ यहाँ अभिचारविधि समाप्त होने पर कुण्ड से भयानक उग्रस्वरूप मूर्तिमान् अग्नि प्रकट हुआ। अग्नि के केश और दाढी-मूँछ संतप्त ताम्र-समान आरक्त वर्ण के थे, उसके नेत्रों से अंगारे बरसते थे ॥ ३२ ॥

दंष्ट्रोग्रभ्रुकुटीदण्ड[1] कठोरास्यः स्वजिह्वया । आलिहन् सृक्किणी नग्नो विधुन्वंस्त्रिशिखं ज्वलन् ॥ ३३ ॥
पद्भ्यां तालप्रमाणाभ्यां कम्पयन्नवनीतलम्[3] । सोऽभ्यधावद्[4]वृतो भूतैर्द्वारकां प्रदहन् दिशः ॥ ३४ ॥
तमाभिचारदहनमायान्तं द्वारकौकसः । विलोक्य तत्रसुः सर्वे वनदाहे[5]मृगा यथा ॥ ३५ ॥
अक्षैः सभायां क्रीडन्तं भगवन्तं भयातुराः । पाहि[6]पाहि त्रिलोकेश वह्नेः प्रदहतः पुरम् ॥ ३६ ॥

### कर्दमक्षमा

अन्वयः—दंष्ट्रोग्रभ्रुकुटी, दण्ड, कठोरास्यः, स्वजिह्वया, सृक्किणी, आलिहन्, नग्नः, ज्वलन्, त्रिशिखम्, विधुन्वन्, तालप्रमाणाभ्याम्, पद्भ्याम्, अवनीतलम्, कम्पयन्, भूतैः, वृतः, सः, अग्नि, दिशः, प्रदहन्, द्वारिकाम्, अभ्यधावत्, द्वारकौकसः, आयान्तम्, अभिचारदहनम्; विलोक्य, यथा, वनदाहे; मृगाः, तथा, सर्वे, तत्रसुः ॥ ३३-३५ ॥ भयातुराः, सर्वे, अक्षैः, सभायाम्, क्रीडन्तम्, त्रिलोकेशपुरम्, प्रदहतः, वह्नेः, त्राहि, त्राहि ॥ ३६ ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

दंष्ट्राभिश्चोग्रैर्भ्रुकुटीदंडैश्च कठोरं क्रूरमास्यं यस्य स त्रिशिखं त्रिशूलम् ॥ ३३ ॥ दिशः प्रदहन् ॥ ३४-३५ ॥ त्राहि-त्राहीत्याहुरिति शेषः ॥ ३६ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

"भृकुटी भ्रुकुटी चाथो भ्रूकुटिरूदूर्ध्वदेशके । नेत्रयोर्धनुवद्वक्रे रोमसंघसमाकुले ॥" इति शब्दार्थकल्पद्रुमे ॥ ३३ ॥ "अंगुष्ठस्य प्रदेशिन्या व्यासः प्रादेश उच्यते । तालः स्मृतो मध्यमया" इति कोषात् । क्वचित्तु 'तालो हस्तचतुष्टयम्' इत्यपि । सोऽभिचाराग्निः ॥ ३४-३५ ॥ अक्षैर्दुरोदरैः ॥ ३६ ॥

### श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी

अतिभीषणत्वमेव दर्शयति—दिश इत्यन्तेन । स्वया विस्तीर्णत्वादितोऽसाधारणया जिह्वया सृक्किणी सृक्किण्यौ आ सर्वतो लिहन् ॥ ३३ ॥ ततश्च पद्भ्यामिति । भूतैः प्रमथैः ॥ ३४ ॥ वनेति दृष्टान्तेन गम्यस्थानान्तराभावादिना त्रासाधिक्यं सूचितम् ॥ ३५ ॥ अक्षैरिति । प्रागुक्तार्थमेव पुरं प्रकर्षेण दहतः दग्धुं समीपमागतस्य वह्नेः सकाशात् त्राहि त्रायस्व पुरं वीप्सातिभयात् त्रिलोकेशेति लोकत्रयरक्षकेण त्वयैतत् सुकरमेवेति भावः ॥ ३६ ॥

### श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी

स्वया विस्तीर्णत्वादिनासाधारणया जिह्वया सृक्किण्या आ सर्वतो लिहन् ॥ ३३ ॥ भूतैः प्रमथैः, वनेति दृष्टान्तेन गम्यस्थानान्तराभावादिना त्रासाधिक्यं सूचितम् ॥ ३४-३५ ॥ अक्षैरिति प्रागुक्तार्थमेव पुरं प्रकर्षेण दहतो दग्धुमिच्छतो वह्नेः सकाशात् त्राहि त्रायस्व; पुरस्मान् वा, वीप्सातिभयात्; हे त्रिलोकेशेति लोकत्रयरक्षकस्य तवैतत् सुकरमेवेति भावः ॥ ३६ ॥

### श्रीमद्वीरराघवाचार्यकृता भागवतचन्द्रचन्द्रिका

दंष्ट्राभिरुग्रैश्च भ्रुकुट्या दन्तैः कठोरं क्रूरमास्यं यस्य सः स्वजिह्वया सृक्किणीम् उत्तरोष्ठोदूर्ध्वदेशमालिहन्नास्वादयमानः तिस्रः शिखाः यस्य तं शूलं धुन्वन् कम्पयन् ॥ ३३ ॥ स इति । सोऽग्निर्भूतैः प्रमथैर्वृतः ॥ ३४ ॥ तमिति । आयान्तमागच्छन्तं विलोक्य तत्रसुः वनदाहे सति यथा मृगाः त्रस्यन्ति तद्वत् ॥ ३५ ॥ अक्षैरिति । पुरं द्वारकां प्रदहतो वह्नेः सकाशादस्मान् त्राहीत्याहुरिति शेषः ॥ ३६ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

द्वारकामभिमुखीकृत्य अभ्यधावत् दिशः प्रदहन् ॥ ३४ ॥ आयान्तं दूरादेव विलोक्य वनदाहे भविष्यति सति यथा मृगाः त्रस्यन्ति ॥ ३५ ॥ त्राहि त्राहि त्रायस्व त्रायस्वेत्याहुरिति शेषः ॥ ३६ ॥

### गूढार्थदीपिनी

अभिचारदहनं कृत्यानलम् । तत्रसुः बभूवुः ॥ ३५ ॥ त्राहीत्याहुरिति शेषः ॥ ३६ ॥

---

१. चण्ड–प्रा. पा. । २. रक्तं–विज. । ३. धरणीतलम्–वीर. विज. । ४. भूतैः पादैः–प्रा. पा. । ५. यथा मृगाः–प्रा. पा. । ६. त्राहि त्राहि–श्रीधर. वंशी. जीव. वीर. विज. विश्व. ।

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः

दंष्ट्राभिरुग्रैर्भ्रुकुटीदण्डैश्च कठोरं क्रूरमास्यं यस्य सः ज्वलत् त्रिशिखं त्रिशूलम् ॥ ३३ ॥ दिशः प्रदहन् ॥ ३४-३५ ॥ त्राहि त्राहि त्रायस्व त्रायस्वेति प्राहुरिति शेषः ॥ ३६-३८ ॥

### श्रीमद्वल्लभाचार्यकृता सुबोधिनी

दंष्ट्रया उग्रः, भ्रुकुटी च दण्डरूपा, एताभ्यां स्वरूपतोऽपि कठोरमास्यं यस्य । **स्वजिह्वया सृक्किणी** आलिहन्निति कार्याभिनिवेशो निरूपितः । **नग्न** इति स्वदेहमपि न जानातीत्युक्तम् । तेनाविचार्यैव क्रूरं करिष्यतीति । साधनमपि **तथा-**विधमाह **विधुन्वंस्त्रिशिखमिति** । ज्वलन्निति क्रोधादिना ॥ ३३ ॥ अग्नित्वात् स्वभावतोऽपि गतिसामर्थ्यार्थमाह पद्भ्यां **तालप्रमाणाभ्यामिति** । अग्रे कार्यं भविष्यतीति ज्ञापयितुमिदानीं तस्य तस्योद्योगमाह **कम्पयन्नवनीतलमिति** । **तस्योद्योग-**माह **सोऽभ्यधावदिति** । भूतैः प्रमथगणैर्वृतः ॥ ३४ ॥ ततो द्वारकायामपि तद्दर्शनेन भयं जातमित्याह **तमाभिचारदहनमिति** । यतो दिशः प्रदहन् समागतः । अतस्तं दृष्ट्वा उत्पत्तिविचारेणापि आभिचारदहन इति । **तत्राप्यायान्तम्** । **द्वारकौकस इति** पूर्वमेव स्थानं त्यक्त्वा यथाकथञ्चिदत्र स्थितम् । अत्रापि भये किं कर्तव्यमिति विलोक्यैव तत्रसुः । अहन्यमाना अपि । तत्र बलिष्ठाः शूरा न तथा भविष्यन्तीत्याशङ्क्याह **सर्व** इति । उपजीव्यनाशात् प्रतिक्रियायामसामर्थ्यात् महतोऽपि भयमिति ज्ञापयितुं दृष्टान्तमाह **वनदाहे यथा मृगा** इति ॥ ३५ ॥ अन्यत्रालब्धशरणाः निश्चिन्तं भगवन्तं विज्ञापयामासुरित्याह **अक्षैः** सभायां क्रीडन्तमिति । अनेनान्तर्बहिः चिन्ताभावो निरूपितः । सभ्याधानार्थं क्रीडयतीति ज्ञापयितुं सभायामित्युक्तम् । **यत** उत्थानं न सम्भवति । **भगवन्तमिति** सर्वथा समर्थम् । **भयातुरा** इति न तेषामवसरानवसरपरिज्ञानमिति सूचितम् । भीतानां वाक्यमाह पाहि पाहि इति । त्राहि त्राहीति क्वचित्पाठः । तत्रापि परस्मैपदं छान्दसमिति केचित् । उभयपदी धातुरित्यपरे । **त्रिलोकेशेति** । महादेवादिनिराकरणेऽपि सामर्थ्यं सूचितम् । पुरं प्रदहतो वह्नेः सकाशात् पालयेति, यथा पुरदाहो न भवति, **तथा** यत्नं कुर्विति ॥ ३६ ॥

### श्रीसुबोधिनी-सारः

दंष्ट्राभिरुग्रैर्भ्रूकुटीदंडैः कठोरं क्रूरमास्यं मुखं यस्य सः स्वजिह्वया सृक्किणी ओष्ठप्रांती आलिहन् ग्रसन् नग्नो दिगंबरः ज्वलत्त्रिशूलं विधुन्वन् कंपयन् ॥ ३३ ॥ तालप्रमाणाभ्यां पद्भ्यां षष्टिहस्तप्रमिताभ्यां पादाभ्यां अवनीतलं भूतलं कंपयन् भूतैर्वृतः सोऽग्निर्दिशः प्रदहन् द्वारकामभ्ययात् ॥ ३४ ॥ आभिचारमभिचारसाध्यं दहनम् अग्निमायांतं तं विलोक्य दृष्ट्वा सर्वे द्वारकावासिनः तत्रसुः त्रासमापुः वनदाहे मृगा इव ॥ ३५ ॥ सभायामक्षैः पाशकैः क्रीडंतं भगवंतम् इत्यूचुरिति शेषः । हे त्रिलोकेश पुरं नगरं प्रदहतो वह्नेः सकाशात् त्वं पाहिपाहि ॥ ३६ ॥

### श्रीविट्ठलरायात्मजश्रीवल्लभकृतलेखः

**दंष्ट्रोग्र** इत्यत्र । **एताभ्यामिति** । द्वाभ्यां भ्रुकुटीभ्यामित्यर्थः । तथा च दंष्ट्रया उग्रो भृकुटीरूपो दण्डस्ताभ्यां कठो-रास्य इति विग्रहः । दंष्ट्रोग्रत्वं भृकुटीदण्डस्य न सम्भवतीत्यत आहुः **स्वरूपतोऽपीति** । **तथा च** दंष्ट्रया उग्रः । भृकुटी दण्डरूपा यस्य तादृशः । कठोरमास्यं यस्य तादृशश्चेति कर्मधारयः । **तमाभिचारेत्यत्र** । तमित्यस्यार्थमाहुः **यत** इति । **उपजीव्य-नाशादिति** । उपजीव्या द्वारिका, तद्दाहो न भविष्यतीत्यर्थः । **अक्षैः सभायामित्यत्र** । **सभ्याधानार्थमिति** । 'शतमक्षान्वि-जानातो'ति सभ्येषु विद्यास्थापनार्थमित्यर्थः ।

### गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

दंष्ट्राभिरुग्रैर्भृकुटीदण्डैश्च कठोरं क्रूरमास्यं यस्य सः, स्वजिह्वया सृक्किणी उत्तरोध्वौष्ठप्रान्तौ आलिहन् ॥ ३३ ॥ सोऽग्निः भूतैः प्रमथैर्वृतः सर्वतोदिशः प्रदहन् तालप्रमाणाभ्यां पद्भ्यामवनीतलं कम्पयन् द्वारकां प्रत्यभ्यधावदित्यन्वयः ॥३४॥ **तमग्निम्** । स्पष्टम् । त्रासे दृष्टान्तमाह—**वनदाह** इति ॥ ३५ ॥ पुरं द्वारकां प्रदहतः वह्नेः सकाशादस्मान् त्राहि त्राहीति **सभायां क्रीडन्तं भगवन्तं भयातुरा जना** विज्ञापयामासुरित्यन्वयः । 'रक्षायां च तव सामर्थ्यमस्ति' इति सूचयन् संबोधयन्ति—**त्रिलोकेशेति** ॥ ३६ ॥

### अन्वितार्थप्रकाशिका

**तमिति** ॥ सर्वे द्वारकौकसः तम् आभिचारं दहनम् आयान्तं विलोक्य तत्रसुः । यथा वनदाहे मृगास्त्रसन्ति तथा ॥३५॥ **अक्षैरिति** ॥ ततश्च भयातुरा जनाः अक्षैः सभायां क्रीडन्तं भगवन्तं प्रति हे त्रिलोकेश ! पुरं द्वारकां प्रदहतः वह्नेः सकाशात् अस्मान्त्राहि त्राहि इत्यवदन् । तङभाव आर्षः । बहुलं छन्दसि इत्यदादिभिन्नेऽपि शप्लुक् ऐकारस्याकारः ॥ ३६ ॥

**श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्**

दंष्ट्राभिरुग्रभ्रुकुटीदंडैश्च कठोरे क्रूरं आस्यं मुखं यस्य सः सृक्किणीहृष्टप्रांतभागौ। ज्वलत् त्रिशिखं त्रिशूलं विधुन्वन् कंपयन् ॥ ३३ ॥ भूतैः प्रमथैः दिशः प्रदहन् ॥ ३४ ॥ आभिचारं अभिचारात् मारणप्रयोगादुत्पन्नं दहनमग्निं वनदाह इत्यनेन गम्यस्थानाभावात् त्रासाधिक्यं व्यज्यते ॥ ३५ ॥ अक्षैः पाशकैः वक्त्रैरनत्वात्। अस्मान्। त्वं त्राहि त्राहीति प्रोचुः ॥ ३६ ॥

**भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी**

दंष्ट्रेति ॥ दंष्ट्राभिः उग्रैः भृकुट्या कुटिलीकृतभ्रुवा सह दन्तैश्च कठोरमास्यं यस्य सः, क्वचित्तु दन्तस्थाने दण्ड इति पाठः। स्वजिह्वया, सृक्किणीः, आलिहन् ज्वलन् नग्नः, त्रिशिखं त्रिशूलं, विधुन्वन् ॥ ३३ ॥ पद्भ्यामिति ॥ तालप्रमाणाभ्यां पद्भ्यां, अवनीतलं कम्पयन् सोऽभिचाराग्निः, भूतैः प्रमथादिभिः, वृतः दिशः, प्रदहन् द्वारकां, अभ्यधावत्। इति द्वयोरेकसंबन्धः ॥ ३४ ॥ तमिति ॥ तं आभिचारदहनं, आयान्तमागच्छन्तं, विलोक्य, द्वारकौकसो द्वारकावासिनः, सर्वे जनाः, वनदाहे मृगाः, यथा तथा, तत्रसुः ॥ ३५ ॥ अक्षैरिति ॥ भयातुराः जनाः, सभायां, अक्षैः पाशकैः, क्रीडन्तं, भगवन्तं श्रीकृष्णं, हे त्रिलोकेश, पुरं प्रदहतः, वह्नेः, त्राहि त्राहि त्रायस्व त्रायस्व इति आहुरिति शेषः ॥ ३६ ॥

**कृष्णप्रिया**

उग्र दाढों और वक्र भृकुटियों के कारण उसके मुँह से क्रूरता टपक रही थी। वह दक्षिणाग्नि अपनी जिह्वा से मुख के दोनों कोने चाट रहा था। उसका देह सर्वथा वस्त्ररहित था, हाथ में त्रिशूल धारण किया था और उस त्रिशूल को सतत घूमाता था और त्रिशूल में से अग्नि की ज्वालायें निकल रही थीं ॥ ३३ ॥ ताड़ वृक्ष के समान उनकी लम्बी टाँगे थी। वह अग्निपुरुष अपने चलने के वेग से भूमितल को कम्पाता हुआ और दश दिशाओं को जलाता हुआ द्वारिकापुरी की ओर दौड़ा और क्षण मात्र में द्वारिका आ पहुँचा, वह भूतवृन्द से आवृत्त था ॥ ३४ ॥ उस अभिचाराग्नि को निकट में आये हुए देखकर द्वारिकानिवासी जन वैसे ही भयभीत हो गये जैसे किसी वन में प्रकट हुए दावानल को देखकर मृगवृन्द भयभीत हो जाता है ॥३५॥ अभिचाराग्नि की ज्वाला से भयभीत बने हुए द्वारिका के प्रजाजन भगवान् श्रीकृष्ण के निकट दौड़ कर आये। उस समय भगवान् श्रीकृष्ण सभा में क्षेत्रज खेल रहे थे। तब समीप आकर पुरजनों ने निवेदन किया—नाथ! आप एक ही तीनों लोकों के एकमात्र स्वामी हैं। इस भयानक अग्नि से यह द्वारिकापुरी भस्म होने जा रही है। आप कृपया हमारी रक्षा करें, आपके विना इस पुरी की रक्षा और कोई नहीं कर सकता ॥ ३६ ॥

**श्रुत्वा तज्जनवैक्लव्यं दृष्ट्वा स्वानां च साध्वसम्। शरण्यः सम्प्रहस्याह मा भैष्टेत्यवितास्म्यहम् ॥ ३७ ॥**
**सर्वस्यान्तर्बहिःसाक्षी कृत्यां माहेश्वरीं विभुः। विज्ञाय तद्विघातार्थं पार्श्वस्थं चक्रमादिशत् ॥ ३८ ॥**
**तत् सूर्यकोटिप्रतिमं सुदर्शनं जाज्वल्यमानं प्रलयानलप्रभम्।**
**स्वतेजसा खं ककुभोऽथ रोदसी [1]चक्रं मुकुन्दास्त्रमथाग्निमार्दयत् ॥ ३९ ॥**
**कृत्यानलः प्रतिहतः स [2]रथाङ्गपाणेरस्त्रौजसा स नृप भग्नमुखो निवृत्तः।**
**वाराणसीं परिसमेत्य सुदक्षिणं तं [3]सर्त्विग्जनं समदहत् स्वकृतोऽभिचारः ॥ ४० ॥**

**कर्दमक्षमा**

अन्वयः—स्वानाम्, तत्, जनवैक्लव्यम्, साध्वसम्, दृष्ट्वा, श्रुत्वा, सम्प्रहस्य, आह, मा भैष्ट, अहम्, अविता, अस्मि ॥ ३७ ॥ सर्वस्य, अन्तः, बहिः, साक्षी, विभुः, माहेश्वरीम्, कृत्याम्, विज्ञाय, तद्, विघातार्थम्, पार्श्वस्थम्, चक्रम्, आदिशत् ॥ ३८ ॥ तत्, सूर्यकोटिप्रतिमम्, जाज्वल्यमानम्, प्रलयानलप्रभम्, मुकुन्दास्त्रम्, चक्रम्, सुदर्शनम्, स्वतेजसा, अथ, ककुभः, रोदसी, खम्, अग्निम्, आर्दयत् ॥ ३९ ॥ हे नृप! रथाङ्गपाणेः, अस्त्रौजसा, प्रतिहतः, भग्नमुखः, निवृत्तः, स, स्वकृतः, अभिचारः, सः, कृत्यानलः, वाराणसीम्, परिसमेत्य, तम्, सुदक्षिणम्, सर्त्विग्जनम्, समदहत् ॥ ४० ॥

**श्रीधरस्वामिविरचिता भावार्थदीपिका**

अहमवितास्मि रक्षिष्यामीति ॥ ३७-३८ ॥ रोदसी च प्रकाशयदिति शेषः। यद्वा स्वतेजसा खादीन्प्रति जाज्वल्यमानमत्यर्थं प्रकाशमानमित्यर्थः। आर्दयदपीडयत् ॥ ३९ ॥ अर्दितोऽग्निर्यत्कृतवांस्तदाह कृत्यानल इति सहर्त्विग्भिर्जनैश्च वर्तमानम्। अभिचर्यते मार्यतेऽनेनेत्यभिचारः कृत्यानलः ॥ ४० ॥

---

१. सोऽथ—विज.। २. ग्रसन्—वीर.; चक्रं मुकुन्दस्य सहित्यपूरयत्—विज.। ३. पाणेस्तत्तेजसा—वीर.। ४. संनिर्जितं—विज.; ऋत्विक्समेतमदहत्—प्रा. पा.।

## श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

तद् त्राहित्राहीत्येवंरूपम्। साध्वसं भयम् ॥ ३७ ॥ अक्षैः सह भवतीति साक्षं ज्ञानं तदत्ति जानातीति साक्षात् ज्ञातेत्यर्थः। तद्विघातार्थं कृत्याविघातार्थम्। यदा भगवदाज्ञापेक्षया मूर्तिमत्त्वेन समीपेऽवतिष्ठमानं सुदर्शनमित्यर्थः ॥ ३८ ॥ अथ भगवदाज्ञानन्तरम्। अध्याहारे गौरवमाशंक्याह—यद्वेति। इत्यर्थं इति—गम्यमानप्रतियोगे द्वितीया। खं व्योम। ककुभो दिशः। अथात्र चार्थे ॥ ३९ ॥ स सुदक्षिणोत्पादितः। अक्षोजसा सुदर्शनतेजसा। प्रतिहत आस बभूव ॥ ४० ॥

## श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी

जनानां पौराणां वैक्लव्यं भयार्तिवाक्यं स्वानां यादवानां साध्वसमापातशङ्कां सम्यगुच्चैः प्रकर्षेण अवहेलया भङ्गी-विशेषेण हसित्वेति तदर्तिलाघवादिबोधनाय तच्च तेषां भयनिवृत्त्यर्थं यतः शरण्यः निजजनरक्षापरः अहमित्याश्वासनार्थं स्वप्रभावं द्योतयति ॥ ३७ ॥ विशेषतः स्वभक्तमहेश्वरस्य तादृशाभिप्रायसमेतं ज्ञात्वा पार्श्वस्थमिति सदा श्रीभगवदाज्ञापेक्षया मूर्त्तिमत्त्वेन समीपेऽवतिष्ठमानमित्यर्थः ॥ ३८ ॥ अथ आदेशानन्तरमेव कार्त्स्न्येनार्द्दयत् सुदर्शनमिति। तादृशतिग्मतेजोमय-त्वेऽपि भक्तैः सुदृश्यत्वं बोधयति मुकुन्देति तद्दग्धानां मुक्तिप्राप्तिश्च ॥ ३९ ॥ कृत्येतियुग्मकम्। रथाङ्गपाणेरिति तस्य सदा चक्र-हस्तत्वेन चक्रस्य माहात्म्यं सूचितं विभग्नमुखः पराङ्मुखः सन् वाराणसीं प्रति समेत्य प्रतिकूलतया सम्यग्भूतगणसाहित्येनेत्य सम्यक् भस्मावशेषतयाऽदहत् स्वकृत इत्याश्चर्य्येण आनन्देन च प्रयोगः ॥ ४० ॥

## श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी

जनानां पौराणां वैक्लव्यं भयार्त्तिवाक्यम्, स्वानां यादवानां स्नेहभरेण तदर्थभयम्, सम्यगुच्चैः प्रकर्षेणावहेलया भंगीविशेषेण हसित्वेति तदग्निलाघवत्वादिबोधनाय। तच्च तेषां भयनिवृत्त्यर्थम्, यतः शरण्यो निजजनरक्षापरः; अहमित्या-श्वासनार्थं स्वप्रभावं द्योतयति ॥ ३७ ॥ विशेषतः समूलतया सच्छिद्रत्वादिना च ज्ञात्वा, यतः सर्वस्य जगतो बहिरन्तश्च साक्षी साक्षाद्द्रष्टा, यतो विभुः सर्वैश्वर्य्यपरिपूर्णः; यद्वा, ननु प्रियतमस्य महेश्वरस्य कृत्याविघातनेन तदर्च्चक-घातनादिना चानादरः स्यात्तत्राह—सर्वस्येति। 'अब्रह्मण्ये प्रयोजितः' इति तस्य बहिर्वाक्यं तद्दुष्टवधादौ चान्तरिच्छां जानातीति भावः। पार्श्वस्थमिति सदा श्रीभगवदाज्ञापेक्षया मूर्त्तिमत्त्वेन समीपेऽवतिष्ठमानमित्यर्थः ॥ ३८ ॥ अथ आदेशानन्तरमेवार्द्दयत्, यतो मुकुन्दस्य श्रीरुद्रादीनामपि भक्त्यानन्दप्रदस्य भगवतोऽस्त्रम्, अतस्तदग्न्यर्द्दनसामर्थ्याय ततोऽधिकाधिक-माहात्म्यं दर्शयन् विशिनष्टि—सूर्य्येत्यादिना। सुदर्शनमिति तादृश-तिग्मतेजोमयत्वेऽपि सुदृश्यतां बोधयति। स्वेन असाधारणेन तेजसा; अथ च, रोदस्यौ च ॥ ३९ ॥ रथांगपाणेरिति सदा चक्रयुक्तहस्तत्वेन चक्रस्य माहात्म्यं सूचितम्। विभग्नमुखो विनष्टदर्पः पराङ्मुखो वा सन्, हे नृपेति प्रहर्षात्; वाराणसीं प्रति वाराणस्याम्; यद्वा, प्रति प्रतिकूलतया सम्यग् भूतगणसाहित्येनेत्य सम्यग् भस्मावशेषतया अदहत्। कुतः ? स्वयमेव कृतः; अस्थाने प्रयुक्तस्याभिचारस्य तस्मिन् वैयर्थ्येन विपरीतफलत्वात्, अत एव तत्सहायान् ऋत्विगादीनप्यदहत् ॥ ४० ॥

## श्रीमद्वीरराघवाचार्यकृता भागवतचन्द्रचन्द्रिका

श्रुत्वेति। तज्जनानां वैक्लव्यं अधैर्यं (दैन्यं) श्रुत्वा स्वानां साध्वसं भयं च दृष्ट्वा प्रहस्योवाच, तदेवाह—शरण्योऽह-मविता चास्मि भयं माकुरुत दुष्टजनात्संसाराच्च सम्भवद्भयं वो न विद्यते इति ॥ ३७ ॥ सर्वस्येति। सर्वस्य लोकस्यान्तर्बहिश्च साक्षाद्द्रष्टा हेतुगर्भमिदम् अतो माहेश्वरीं कृत्यां विज्ञाय तद्विघातार्थं कृत्यानाशनार्थं पार्श्वस्थं चक्रं सुदर्शनमाज्ञापयामास ॥३८॥ तद्भगवताऽऽदिष्टं चक्रं कर्तृ अग्निमार्द्दयत् कथंभूतं चक्रं सूर्याणां कोटिः प्रतिमा तुला यस्य तत् सुदर्शनाख्यमतिशयेन ज्वलत् प्रलयाग्नेरिव प्रभा यस्य तत् स्वतेजसा खमन्तरिक्षं रोदसी द्यावापृथिव्यौ ककुभो दिशश्च प्रकाशयदिति शेषः। मुकुन्दस्यैवा-साधारणमस्त्रम् ॥ ३९ ॥ अर्दितस्सन् किमकरोदित्यत आह—कृत्यानल इति। रथाङ्गपाणेस्तेन प्रोक्तेन तेजसा तेजःप्रचुरेण सुदर्शनेन भग्नं मुखं यस्य सः प्रतिहतश्चात एव निवृत्तः सः प्रसिद्धः कृत्यानलो हे नृप! वाराणसीं प्रत्यागत्य स्वेन कृतः अभिचारो येन तमृत्विग्जनैः सहितं प्रथमान्तपाठे ऋत्विग्भिर्जनैश्च वर्तमानमभिचरति मारयतीति तथा स कृत्यानलः तं सुदक्षिणमदहत् ॥ ४० ॥

## श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शिनी

जनानां पौराणां वैक्लव्यं स्वानां तत्पालकानां यादवानाञ्च साध्वसं कारणाज्ञानाद्भयम् ॥ ३७ ॥ चक्रमादिशदित्यल्पस्य कार्यस्य हेतोर्मे द्यूतक्रीडासुखभङ्गो मा भवत्वित्यभिप्रायेण ॥ ३८ ॥ रोदसी च व्याप्येति शेषः चक्रं कर्तृ अग्निं कृत्यानलम् आर्दयत् ॥ ३९-४२ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम्। षट्षष्टितमोऽध्यायः दशमेऽस्मिन् सङ्गतः ॥ ६६ ॥

## गूढार्थदीपिनी

वैक्लव्यं व्याकुलताम्। साध्वसं भयम्। अवितास्मि रक्षिष्यामि ॥३७॥ साक्षीं गता ॥ ३८ ॥ तत् मुकुन्दास्त्रं सुदर्शनं चक्रं कर्तृ अग्निं कृत्यानलम् अमर्दयत् इत्यन्वयः। कथंभूतम्। खादीन् प्रति जाज्वल्यमानं प्रकाशं कुर्वाणम्। रोदसी द्यावाभूमी ॥ ३९ ॥ प्रतिहतः अत एव निवृत्तः सन् सुदक्षिणं समदहत्। स्वेनैव कृतः अभिचारः मारणप्रयोगः स्वस्यैव नाशहेतुरभवत्। यद्वा। सुष्ठु ब्रह्मण्ये अकारपदवाच्ये हरौ कृतः ॥ ४० ॥

## श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

खादीन् व्याप्येति शेषः अग्निं कृत्यानलमार्दयत् ॥ ३९ ॥ स्वकृतः स्वप्रवर्तितः अभिचर्यतेऽनेनेत्यभिचारः कृत्यानलः ॥ ४० ॥

## श्रीमद्वल्लभाचार्य्यकृता सुबोधिनी

क्षणं चेत्ते न वदेयुः, तदा भगवान् तूष्णीं स्थितः दाहप्रारम्भपर्यन्तम्। पश्चादतिक्रोधे पक्षान्तराणां मूलच्छेदमेव कुर्यात्। यथा न कदापि भगवद्विपक्षाणामुद्गमः स्यात्। तावद्विलम्बं लोका न सहन्त इति भगवान् भक्तकृपालुः तद्वैक्लव्यात् सामिकार्यमेव कृतवानित्याह श्रुत्वा तज्जनवैक्लव्यमिति। तत्प्रसिद्धं जनानां वैक्लव्यं दृष्ट्वा च निमित्तं तेषां साध्वसं भयं च दृष्ट्वा स्वयं शरणार्हः प्रहस्याह स्वनाशार्थं कृतवानिति। मा भैष्टेत्याह। हेतुवाक्यव्यतिरेकेण भयस्यानिवृत्तावाह अवितास्म्यहमिति ॥ ३७ ॥ निदानार्थपरिज्ञानेऽपि सुदर्शनं सर्वार्थमिति सुदर्शनावलम्बनेनैव कदाचित्प्रतीकारं कुर्यादित्याशङ्क्याह सर्वस्यान्तर्बहिःसाक्षीति। माहेश्वरीं कृत्यां विभुत्वाद्विज्ञाय तद्वधार्थं पार्श्वस्थं चक्रमादिशत्, चक्रं हि सचेतनं चक्ररूपेणैव। विभुत्वान्न चक्रसामर्थ्येन किञ्चित्, किन्तु स्वसामर्थ्येनैवेत्युक्तम्। तस्य विघातः अग्नेः कार्यप्रतिघातः, न तु स्वरूपनाशः। पार्श्वस्थ इति स सर्वथा हृदयाभिज्ञः ॥ ३८ ॥ ततो भगवदिच्छानुसारेण चक्रकृत्यमाह तत्सूर्यकोटिप्रतिममिति। सूर्यकोटिसमानतेजस्त्वं स्वाभाविकी शक्तिः। जाज्वल्यमानमिति तस्योत्साहो निरूपितः। प्रलयानलप्रभमिति तस्य क्रोधावेशः। ततः क्रोधवशादुक्तदृष्टान्तसधर्मा जात इत्याह स्वतेजसा खं ककुभो रोदसी च अर्दयदिति। अन्तरिक्षं दश दिशः द्यावापृथिव्यौ च ज्वालयतीव। एतत्सामर्थ्यं न स्वस्य, किन्तु भगवत इति वक्तुं मुकुन्दास्त्रमित्युक्तम्। एवं सर्वं दग्ध्वेव, पश्चाद्भिन्नप्रक्रमेण अग्निमार्दयत्। आ सर्वतः सर्वथैव भग्नसङ्कल्पं कृतवान् ॥ ३९ ॥ ततो यज्जातं तदाह कृत्यानलः प्रतिहत इति। स स्वतन्त्रोऽपि रथाङ्गपाणेरिति तस्य लौकिकवैदिकसामर्थ्यनाशकत्वमुक्तम्। तत्रापि अप्रतिहतरूपमेव। तत्रापि तस्य ओजः तेन हतः सन् भग्नमुखो भूत्वा निवृत्तो जातः। ततो वाराणसीमपि महानिति प्रति समेत्य व्याघुट्य समागत्य स्वस्थाने समागत्य सुदक्षिणं त स्वोत्पादकं सर्त्विग्जनं ऋत्विग्जनसहितं सम्यगदहत्। अनेन ब्राह्मणा हता इति न भगवद्दोषः कोऽपि। यतः स्वकृत एवाभिचारः, आत्मीयश्चेद्बाणः स्वात्मानं विध्यति, तदा न कस्यापि दोष इति ते सर्वे कृत्यानलेन भस्मसात्कृता इत्यर्थः ॥४०॥

## श्रीसुबोधिनी-सारः

तत् जनानां वैक्लव्यं विकलतां श्रुत्वा स्वानामात्मीयानां साध्वसं संभ्रमं च दृष्ट्वा सम्यक् प्रहस्य शरण्यः श्रीकृष्ण आह यूयं माभैष्ट अहमविता रक्षकोऽस्मि ॥ ३७ ॥ सर्वस्यांतर्बहिः साक्षी सर्वज्ञो विभुर्माहेश्वरीं कृत्यां विज्ञाय ज्ञात्वा तस्या विघातार्थं नाशार्थं पार्श्वस्थं सुदर्शनं चक्रमाज्ञप्तवान् ॥ ३८ ॥ सूर्यकोटितुल्यम् अतिशयेन ज्वलत् प्रलयाग्निसदृशं मुकुंदस्य हरेरस्त्रं तत्सुदर्शनं चक्रं स्वतेजसा खमाकाशं ककुभो दिशः रोदसी द्यावाभूमी अथाग्निं कृत्यानलमपीडयत् खादीन् प्रकाशयदिति स्वामी ॥ ३९ ॥ रथांगं चक्रं पाणौ यस्य तस्य हरेरस्त्रौजसा चक्रतेजसा स कृत्यानलः प्रतिहत आस बभूव। भग्नं मुखं यस्य सोऽग्निर्निवृत्तः वाराणसीं वराणसोऽदूरभवां काशीं प्रत्येत्य सर्त्विग्जनम् ऋत्विग्जनैः सहितं सुदक्षिणं तं स्वकृतोऽभिचारः समदहत् ॥ ४० ॥

## श्रीविट्ठलरायात्मजश्रीवल्लभकृतलेखः

सर्वस्येत्यत्र। सचेतनमिति। चेतनासहितमित्यर्थः। तत्सूर्यकोटीत्यत्र। उक्तदृष्टान्तसधर्मा जात इति। उक्तदृष्टान्तस्य प्रलयानलस्य कार्यं कृतवानित्यर्थः।

इति सप्तदशाध्यायव्याख्या समाप्ता।

## गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

तत् जनानां वैक्लव्यं व्याकुलतां दृष्ट्वा तथा स्वानां भक्तानां तेषां साध्वसं दुःखं च दृष्ट्वा शरण्यः समर्थत्वात् रक्षको भगवान् प्रहस्य 'मा भैष्ट भयं मा कुरुत, अहं भविता रक्षकोऽस्मि' इत्याहेत्यन्वयः ॥ ३७ ॥ यतो विभुः सर्वत्र व्यापकः, अतः

स्थावरजङ्गमात्मकस्य जगतोन्तर्बहिःसाक्षी साक्षाद्द्रष्टा, अतएव तां माहेश्वरीं कृत्यां विज्ञाय तस्य कृत्यानलस्य विघातार्थं स्वपार्श्वस्थं चक्रं सुदर्शनमादिशत् आज्ञापयामास ॥ ३८ ॥ सूर्याणां कोटिः प्रतिमा तुल्या यस्य तत् । अत एव प्रलयानलस्येवातिशयेन ज्वलन्ती प्रभा यस्य तत् । अत एव जाज्वल्यमानम् । अत एव स्वतेजसा खमन्तरिक्षं, ककुभो दिशः, अथ रोदसी द्यावापृथिव्यौ, च प्रकाशयत् तत् मुकुन्दस्यास्त्रं सुदर्शनं चक्रमग्निमार्दयत् पीडयामास ॥ ३९ ॥ 'अर्दितः सन् स किमकरोत्' इत्यत आह—कृत्यानल इति । हे नृप ! स कृत्यानलः सरथाङ्गपाणेः चक्रधरस्यास्त्रौजसा चक्रतेजसा प्रतिहतः, अत एव भग्नमुखः ततो निवृत्तः वाराणसीं परिसमेत्य ऋत्विग्भिरन्यैश्च जनैः सहितं तं सुदक्षिणं सम्यगदहत् । 'नन्वेवं चेद्भगवतोऽपि ब्राह्मणदाहदोषप्रसङ्गः' इत्याशङ्क्याह—स्वकृतोभिचार इति । अभिचरति मारयतीत्यभिचारः कृत्यानलः, तस्य स्वकृतत्वान्न भगवतो दोषप्रसङ्ग इत्यर्थः ॥ ४० ॥

### अन्वितार्थप्रकाशिका

श्रुत्वेति ॥ तत् जनानां वैक्लव्यं व्याकुलतां दृष्ट्वा तथा स्वानां भक्तानां तेषां साध्वसं भयं च दृष्ट्वा शरण्यः समर्थत्वात् रक्षको भगवान् प्रहस्य मा भैष्ट भयं मा कुरुत। अहम् अविताऽस्मि रक्षिष्यामीत्याह स्म ॥ ३७ ॥ सर्वस्येति ॥ यतो विभुः सर्वत्र व्यापकः अतः स्थावरजङ्गमात्मकस्य जगतोऽन्तर्बहिः साक्षी साक्षाद्द्रष्टा अत एव तां माहेश्वरीं कृत्यां कृत्यानलस्य विघातार्थं स्वपार्श्वस्थं चक्रं सुदर्शनमादिशत् ॥ तदिति ॥ सूर्याणां कोटिः प्रतिभा तुल्या यस्य तत् अत एव प्रलयानलस्येवातिशयेन ज्वलन्ती प्रभा यस्य तत् अत एव जाज्वल्यमानम् अत एव स्वतेजसा खमन्तरिक्षं ककुभो दिशः अथ रोदसी द्यावापृथिव्यौ च प्रकाशयत् इति शेषः । यद्वा । स्वतेजसा खादीन् प्रति जाज्वल्यमानं तत् मुकुन्दस्यास्त्रं सुदर्शनं चक्रं कर्तृ अग्निमार्दयत् पीडयामास ॥ ३८–३९ ॥ कृत्येति ॥ हे नृप ! स कृत्यानलः रथाङ्गपाणेः चक्रधरस्यास्त्रौजसा चक्रतेजसा प्रतिहतः अत एव स भग्नमुखः ततो निवृत्तः वाराणसीं परिसमेत्य ऋत्विग्भिरन्यैश्च जनैः सहितं तं सुदक्षिणं सम्यगदहत् । यतः सः अभिचारः कृत्यानलः स्वेन प्रयोक्त्रा एव कृतः अतस्तन्नाशहेतुरेवाभूत् ॥ ४० ॥

### श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्

साध्वसं भयं । अहं अवितास्मि रक्षिष्यामि ॥ ३७–३८ ॥ सूर्यकोटयः प्रतिमा उपमा यस्य तत् । स्वतेजसा आकाशादीनप्रकाशयत् सत् । अग्निमार्दयत् पीडयामास रोदसी द्यावापृथिवी ॥ ३९ ॥ एवं सुदर्शनेन पीडितोऽग्निः किं कृतवांस्तत्राह कृत्यानल इति हे नृप प्रतिहतः पराभूतः विभग्नमुखः निर्वृत्तः सन् स्वकृतः अभिचारः मारणप्रयोगरूपः सः कृत्यानलः ऋत्विग्जनैः सहितं सुदक्षिणसंज्ञं काशिराजसुतं समदहत् सम्यक् ददाह ॥ ४० ॥

### भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

श्रुत्वेति । तत् जनवैक्लव्यं जनानां दीनवचनं श्रुत्वा, स्वानामात्मीयजनानां, साध्वसं भयं च दृष्ट्वा, शरण्यः शरणागतसाधुः कृष्णः, संप्रहस्य, अहं अविता रक्षिता, अस्मि । इति हेतोः, मा भैष्ट भयं मा कुरुत इत्याह ॥ ३७ ॥ सर्वस्येति । सर्वस्य लोकस्य, अन्तःबहिश्च, साक्षी साक्षाद्द्रष्टा, हेतुगर्भमिदं, तत्त्वात् विभुः श्रीकृष्णः, माहेश्वरीं कृत्यां विज्ञाय, तद्विघातार्थं कृत्यानाशार्थं, पार्श्वस्थं चक्रं सुदर्शनं, आदिशदाज्ञापयामास ॥ ३८ ॥ तदिति । अथ सूर्याणां कोटिः प्रतिमा तुल्या यस्य तं, अतिशयेन ज्वलतीति जाज्वल्यमानं, प्रलयानलस्येव प्रभा यस्य तत्, स्वतेजसा खमाकाशं, ककुभो दिशः, अथ रोदसी द्यावापृथिव्यौ, प्रकाशयदिति शेषः। मुकुन्दस्य भगवतोऽस्त्रमस्त्रभूतं, तद्भगवदादिष्टं, सुदर्शनं सुदर्शनाख्यं, चक्रं, अग्निं कृत्यानलं, आर्दयत् ॥३९॥ अर्दितः सः किमकरोदित्यत्राह । कृत्यानल इति । हे नृप, रथाङ्गपाणेः श्रीकृष्णस्य, अस्त्रौजसा सुदर्शनास्त्रतेजसा, भग्नमुखः प्रतिहतश्च, अत एव निवृत्तः अभिचर्यतेऽनेनेत्यभिचारः स्वेन कृतः स चासावभिचारः स्वकृताभिचारात्मकः सः, कृत्यानलः, वाराणसीं परिसमेत्य, सर्त्विग्जनं तं सुदक्षिणं, समदहत् ॥ ४० ॥

### कृष्णप्रिया

शरणागतवत्सल भगवान् श्रीकृष्ण ने देखा कि द्वारिका के प्रजाजन-हमारे स्वजन भयभीत हो गये हैं, और विह्वल होकर रक्षण के लिये प्रार्थना कर रहे हैं। इस परिस्थिति को अपनी नजरों से निहारकर करुणानिधि ने स्मितपूर्वक कहा—आप डरो मत, मैं आप लोगों की सर्वविध रक्षा करूँगा ॥३७॥ राजन् परीक्षित ! भगवान तो सर्वज्ञ हैं, प्राणीमात्र के अंतर एवं बाहर के ज्ञाता है और सर्वसमर्थ एवं दयालु हैं। वे जानते थे कि यह काशी मे आयी हुई माहेश्वरी कृत्या हैं। भगवान् ने कृत्या के प्रतिकार के लिये अपने समीप ही विराजमान सुदर्शन चक्र को आदेश दिया ॥ ३८ ॥ कोटि-कोटि सूर्य के समान तेजोमय, प्रलयकाल की अग्नि के समान प्रज्वलित मुकुन्द भगवान् का अतिशय प्रिय उस तेजोमय सुदर्शन चक्र के तेज से दश

दिशाएँ अन्तरिक्ष आदि सारा ब्रह्माण्ड चमक उठा और तेजोमय सुदर्शन जी ने अभिचार अग्नि की कृत्या को भस्म कर डाला ॥ ३९ ॥ राजन् ! यह तो विश्वविदित वार्ता है कि अभिचार क्रिया का यदि किसी सर्वसमर्थ शक्ति ने प्रतीकार किया तब वह अभिचार विधि करने वालों का ही नाश करती है। भगवान् शंकर ने कहा था कि किसी ब्रह्मदेव पर इस कृत्या का प्रयोग न करना। अन्यथा यह कृत्या प्रयोजक के विनाश का कारण बनेगी। सुदक्षिण ने ब्रह्मण्यदेव और स्वयं ब्रह्म भगवान् श्रीकृष्ण पर प्रयोग किया। भगवान् श्रीकृष्ण के अस्त्र श्री सुदर्शन चक्र ने अपने तेज से कृत्यानल का मुंह तोड़ दिया, कृत्यानल के तेज को नष्ट कर दिया। उसकी शक्ति कुण्ठित हो गयी, पुनः द्वारिका से लौटकर वह काशी आया और वरण किये गये ऋत्विज् आचार्यों के साथ यजमान सुदक्षिण को भस्मसात् कर दिया ॥ ४० ॥

**चक्रं च विष्णोस्तदनुप्रविष्टं वाराणसीं साट्टसभालयापणाम्।**
**सगोपुराट्टालककोष्ठसंकुलां[1] सकोशहस्त्यश्वरथान्नशालाम्[2] ॥ ४१ ॥**

**दग्ध्वा वाराणसीं सर्वां [3]विष्णुचक्रं सुदर्शनम्। भूयः पार्श्वमुपातिष्ठत् कृष्णस्याक्लिष्टकर्मणः ॥ ४२ ॥**
**य [4]एतच्छ्रावयेन्मर्त्य उत्तमश्लोकविक्रमम्[5]। समाहितो वा शृणुयात् सर्वपापैः प्रमुच्यते ॥ ४३ ॥[6]**

**इति श्रीमद्भागवते महापुराणे[7] दशमस्कन्धे[8] पौण्ड्रकादिवधो नाम [9]षट्षष्टितमोऽध्यायः ॥ ६६ ॥**

### कर्दमक्षमा

**अन्वयः**—च, तद्, विष्णोः, चक्रम्, साट्टसभालयापणम्, सगोपुराट्टालक, कोष्ठसङ्कुलाम्, सकोशहस्त्यश्वरथान्नशालाम्, वाराणसीम्, अनुप्रविष्टम्, प्रविश्य, सर्वाम्, वाराणसीम्, दग्ध्वा, विष्णोः, चक्रम्, सुदर्शनम्, भूयः, अक्लिष्टकर्मणः, कृष्णस्य, पार्श्वम्, उपातिष्ठत् ॥ ४१-४२ ॥ यः, मर्त्यः, एतत्, उत्तमश्लोकविक्रमम्, श्रावयेत्, वा, समाहितः, शृणुयात्, सर्वपापैः, प्रमुच्यते ॥ ४३ ॥

श्रीमद्भागवते दशमस्कन्धे षट्षष्टितमोऽध्यायः ॥ ६६ ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

अट्टादिसहिताम्। अट्टा मंचः ॥ ४१-४३ ॥

इति श्रीमद्भागवते दशमस्कंधोत्तरार्धे श्रीध० टी० षट्षष्टितमोऽध्यायः ॥ ६६ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

तदनु सुदक्षिणदाहोत्तरम्। "अट्टं भक्ते मंचशुष्के क्षौमेऽत्यर्थे गृहांतरे" इति धरणिः। कोष्ठमंतर्गृहम्। कोशो धनागारम् ॥ ४१-४३ ॥

इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे दशमस्कन्धोत्तरार्द्धे षट्षष्टितमोऽध्यायः ॥ ६६ ॥

### श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी

चक्रं च वाराणसीं प्रति समदहत् इति पूर्वेणान्वयः शालिनीमिति शालामिति वा पाठः ॥ ४१ ॥ सुदर्शनमिति सुदृश्यरूपं सदिति भावः। न चेदमाश्चर्यमिति तस्य स्वभावमनुवदति अक्लिष्टेति ॥ ४२ ॥ एतद्भगवद्बहिर्मुखानां काशीवासिनां दमनरूपमाख्यानम् उत्तमश्लोकस्य विक्रमा यस्मिन् तत् एतमिति पाठः स्पष्टः समाहितः सावधानः सश्रद्ध इत्यर्थः। किं वक्तव्यं स्वपरहितकारी श्रावयित्वा प्रमुच्यत इति केवलमात्महितकर्तृवत् श्रोतापि प्रमुच्यत इति वाशब्दार्थः ॥ ४३ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिण्यां षट्षष्टितमोऽध्यायः ॥ ६६ ॥

### श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी

चक्रञ्च वाराणसीं समदहत्, तस्याः कृत्याया अनु पश्चात् प्रविष्टं सत्; विष्णोर्विश्वव्यापकस्येति तच्चक्रस्यापि व्यापकत्वं सूचितम्। अतएवाट्टादि-सहितां कोशादिशालासहिताञ्चेति। सर्वां शालिनीमिति वा पाठः ॥ ४१ ॥ दग्ध्वेत्यादिपुनरुक्तिः

---

१. तोरणां-विज.; संकुलः-त. पु. मु.। २. वरूथमन्दिराम्-विज.; श्वरथान्न शालिनीम्-श्रीधर. टि.। ३. विष्णोश्चक्रं-श्रीधर. वंशी. जीव. वीर. विज. विश्व.। ४. एनं-त. पु. मु.। ५. चेष्टितम्-वीर.।

६. तावुभौ सर्वपापेभ्यो ब्रह्महत्यादिभिर्नृप। विमुच्य देहावसाने विष्णुलोकं प्रयास्यतः ॥-अधिकः विज.।
७. पारमहंस्यां संहितायां-प्रा. पा.। ८. पौण्ड्रककाशिराजवधः षट्-प्रा. पा.। ९. एकोनसप्ततितमोऽध्यायः-विज.।

सम्यक् सर्व्वतो दाहाद्यभिप्रायेणोक्तपोषन्यायात् । तत्र विष्णुचक्रमित्युक्त्यभिप्रायमेव । यद्वा, तस्य तदेकस्वामित्वं तेनासाधारणत्वञ्चोक्तम्, अतएव भूय उप उपासकतया तिष्ठदाश्रयत् । सुदर्शनमिति सुदृश्यरूपं तदिति भावः । यतः कृष्णस्य सर्व्वगुणरूपादियुक्तस्येत्यर्थः । अतएवाक्लिष्टं सर्व्वसुखावहम्, किंवा अनायासेनैव तत्तदाचरणात् क्लेशरहितं कर्म्म यस्य तस्य ॥ ४२ ॥ अहो किं वक्तव्यम्, महातीर्थ-काशी-तन्निवासिलोकादि-दहनमयुक्तमिति दुष्ट-तत्संग्यादिदण्डेन श्रीभगवतो माहात्म्यविशेषसम्पत्त्या तच्छ्रवणादिनापि समूल-सर्व्वदुःखतो विमुक्तिः स्यादित्याह—य इति । एतदाख्यानम्, उत्तमश्लोकस्य विक्रमो यस्मिंस्तत्; एनमिति पाठः स्पष्टः । मर्त्त्य इति मरणधर्म्मत्वाच्छ्रावणश्रवणयोरपेक्षकताधिकारानपेक्षा चोक्ता । समाहितः श्रद्धयेहितः सन्निति । अन्यथा नास्तिकत्वादिप्रसक्तिः । यद्वा, श्रीकृष्णार्पितचित्तः, किंवा स मर्त्यो मया लक्ष्म्या हितः श्रीभगवद्भक्त्या स्नेहविषयः सन् सर्व्वैः समूलैः फलोन्मुखैश्च पापैः प्रकर्षेण वैकुण्ठप्राप्तियोग्यत्वादिना मुच्यते । अतएवोत्तमश्लोक-शब्दप्रयोगः । किं वक्तव्यम्, स्वपरहितकारी श्रावकः प्रमुच्यत इति केवलमात्महितकृच्छ्रोतोऽपि प्रमुच्यत इति वाशब्दार्थः ॥ ४३ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे उत्तरार्द्धे श्री-श्रील-सनातन-गोस्वामिपाद-कृतायां श्रीबृहद्वैष्णवतोषण्यां श्रीदशम-टिप्पण्यां षट्षष्टितमोऽध्यायः ॥ ६६ ॥

## श्रीसुदर्शनसूरिकृतशुकपक्षीयम्

चक्रं च विष्णोरिति समदहदित्यनुषङ्गः ॥ ४१-४३ ॥

इति श्रीमद्भागवतव्याख्याने दशमस्कन्धे श्रीसुदर्शनसूरिकृतशुकपक्षीये षट्षष्टितमोऽध्यायः ॥ ६६ ॥

## श्रीमद्वीरराघवाचार्यकृता भागवतचन्द्रचन्द्रिका

किञ्च, चक्रमिति । तद्विष्णोश्चक्रं वाराणसीमनुकृत्यानलमनुसृत्य प्रविष्टं सददहदिति पूर्वेण सम्बन्धः कथम्भूताम्? अट्टादिभिः सहितां तत्र सभालया सभागृहाणि सभा आलयाश्चेति वा अट्टालकाः उपरीतनप्रदेशाः गोपुरादिसहितैर्गोकुलैर्व्याप्तां सङ्कुलां कोशादीनां शालादिभिस्सहितां तत्र कोशो धनम् ॥ ४१ ॥ दग्ध्वेति । भूयः पुनरक्लिष्टकर्मणः उदारचेष्टितस्य कृष्णस्य पार्श्वमुपातिष्ठत् पार्श्वसमीपे तस्थौ इत्यर्थः ॥ ४२ ॥ उक्तकथाश्रवणादिफलमाह—य इति । यः पुमानेतदुत्तमश्लोकस्य चेष्टितं मर्त्यान्प्रति श्रावयेत् यद्वा समाहितः शृणुयात् स सर्वैः पापैर्मुक्तो भवेत् ॥ ४३ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायां षट्षष्टितमोऽध्यायः ॥ ६६ ॥

## गूढार्थदीपिनी

तदनु वाराणसीं च समदहदित्यनुषङ्गः । अट्टाः मञ्चाः । गोपुरं नगरद्वारम् अट्टालकाः गृहोपरिभागाः (अटारी) ॥४१॥ विक्रमः अस्त्यस्मिन्निति चरितमित्यर्थः मत्वर्थीयोऽच् प्रत्ययः ॥ ४२-४३ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां दशमस्कन्धोत्तरार्द्धे गूढार्थदीपिन्यां षट्षष्टितमोऽध्यायः ॥ ६६ ॥

## श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

चक्रं च वाराणसीं समदहदित्यनुषङ्गः ॥ ४१-४३ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धीये श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे षट्षष्टितमोऽध्यायार्थप्रकाशः ॥ ६६ ॥

## श्रीमद्वल्लभाचार्यकृता सुबोधिनी

ततः सुदर्शनं भगवद्धृदयं जानातीति काशीमपि पीडितवदित्याह चक्रं च विष्णोरिति । तदनु कृत्यानलमनुप्रविष्टं सत् वाराणसीं समदहदिति सम्बन्धः । विष्णोश्चक्रत्वान्न तस्य भयम् । छर्दीष्येव दग्धानि इति शङ्कां वारयितुं साट्टसभालयापणामित्युक्तम् । अट्टादयः सौधगृहाः । सभास्थानान्यपि । तथा आपणः पण्यवीथी । एते अद्यापि लोके सुधाधवलिता भवन्ति । साधारणा एत इति विशिष्टानामपि दाहं निरूपयति सगोपुरेति । पुरद्वारसहिताम्, अट्टालकाः हर्म्याः धनिनां गृहाः । कोष्ठानि दुर्गादावन्नसंग्रहस्थानानि । सगोकुलाट्टालसगोष्ठसंकुलामिति पाठे गोष्ठादीनां गोकुलस्य । तत्रापि प्रसिद्धगोपानां अट्टालकसहितस्य कदाचिद्दाहं न कुर्यादिति शङ्का स्यात्, तन्निवृत्त्यर्थमेवमुक्तम् । लक्ष्म्या आयतनं न पीडयिष्यतीत्याशङ्क्याह सकोशहस्त्यश्वरथान्नशालामिति । कोशा भाण्डारगृहाः । हस्त्याद्यन्नान्तानां च शालाः । रथनिर्माणं यत्र क्रियते, सा रथशाला । स्थापिता अपि रथा गृहेष्वेव तिष्ठन्ति । अन्यथा धर्माद्युपद्रवो भवतीति ॥४१॥ एवं सामान्यविशेषप्रकारेण दाहमुक्त्वा सर्वदाहो न भविष्यतीत्याशङ्क्य, विशेषं वदन्नुपसंहरति दग्ध्वा वाराणसीं सर्वामिति । विष्णुचक्रत्वात् कार्यसिद्धिः । सुदर्शनमिति ।

एवं कर्तुरपि दोषाभावः। पुनरग्रेऽपि कार्यं एतादृशं भविष्यतीत्याशङ्कया कृष्णस्यैव पार्श्वमुपातिष्ठत्। ननु भगवान् स्वयमेव करिष्यति, किं सुदर्शनेनेत्याशङ्कयाह अक्लिष्टकर्मण इति। न हि भगवान् क्लिष्टं करोति, कदाचिच्च तथा कर्तव्ये भवति, तदा गतः, अनेन सुदर्शनस्यापि निरोधो निरूपितः ॥ ४२ ॥ कदाचिदियं कथा काशीदाहं प्रतिपादयतीति स्वधर्महेतुभिः न श्रोतव्या भवेत्, तदर्थमाह य एतच्छ्रावयेन्मर्त्यं इति। हेत्वपेक्षायामाह उत्तमश्लोकस्य विक्रममिति। उत्तमः श्लोकयति इति स्वभावत एव भगवच्चरित्रं श्रोतव्यम्। तत्रापि विक्रमः पराक्रमोऽयम्। यः श्रावयेत्, यो वा समाहितः शृणुयात्, अवहेलां न कुर्यात्, स सर्वपापैः प्रमुच्यत इति। भक्तैरिव धर्मपरैरपि श्रोतव्यमिति निरूपितम् ॥ ४३ ॥

इति श्रीभागवतसुबोधिन्यां श्रीमल्लक्ष्मणभट्टात्मजश्रीमद्वल्लभदीक्षितविरचितायां दशमस्कन्धविवरणे उत्तरार्धे सप्तदशोऽध्यायः ॥ १७ ॥

## श्रीसुबोधिनी-सारः

तत्तस्यानु पश्चात् प्रविष्टं विष्णोः चक्रं अट्टैः सभाभिरालयैः स्थानैरापणैर्हट्टैः सहितां सगोपुरैरट्टालकैः कोष्ठैः संकुलां व्याप्तां कोषादिसहितां वाराणसीं च समदहत् ॥ ४१ ॥ सर्वां वाराणसीं काशीं दग्ध्वा विष्णोः सुदर्शनं चक्रं भूयः पुनः अक्लिष्टं सात्त्विकं कर्म यस्य तस्य कृष्णस्य पार्श्वं समीपमागात् ॥ ४२ ॥ एवम् उत्तमश्लोकस्य विक्रमं पराक्रमं समाहितो यो मर्त्यः शृणुयात् सर्वपापैः प्रमुच्यते "पापोपदेष्टा कर्त्ता च तत्संगी नगरं गृहम् सर्वं नश्यति तेनेह श्रेयोऽर्थी शुभमाचरेत् ॥" इति भावार्थः संगृहीतः ॥ ४३ ॥

इति श्रीमद्भा० दशमस्कन्धे उ० सुबोधिन्यां टीकायां षट्षष्टितमोऽध्यायः ॥ ६६ ॥

## गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

तदनुप्रविष्टं तं कृत्यानलमनुसृत्य प्रविष्टं विष्णोश्चक्रं च वाराणसीं समदहदिति पूर्वस्यैवानुषङ्गः। तां विशिनष्टि—अट्टादिभिः सहिताम्। अट्टा मञ्चाः, सभाः प्रसिद्धाः, आलयानि गृहाश्च, आपणाः हट्टाः। तथा गोपुरैः सहितैरट्टालकादिभिश्च सङ्कुलाम्। गोपुराणि पुरद्वाराणि, अट्टालकाः उपरितनप्रदेशाः, कोष्ठानि अन्नसङ्ग्रहदुर्गाणि। तथा कोशादीनां शालादिभिः सहिताम्। तत्र कोशं धनम् ॥ ४१ ॥ सुदर्शनं चक्रं सर्वां वाराणसीं पुरीं दग्ध्वा भूयः अक्लिष्टकर्मणः उदारचेष्टितस्य कृष्णस्य पार्श्वमुपातिष्ठत् इत्यन्वयः ॥ ४२ ॥ एतच्छ्रवणादिफलमाह—य इति। यः पुमान् एतदुत्तमश्लोकस्य कृष्णस्य चेष्टितं समाहितः एकाग्रचित्तः सन् मर्त्यान् श्रावयेत् स्वयं वा शृणुयात् स सर्वपापैः प्रमुक्तो भवेत् ॥ ४३ ॥

इति श्रीवल्लभाचार्य-वंश्यगोपालसूनुना। श्रीमन्मुकुन्दरायाणां पादसेवाधिकारिणा ॥ १ ॥
श्रीमद्गिरिधराख्येन भजनानन्दसिद्धये। श्रीमद्भागवतस्येयं टीका बालप्रबोधिनी ॥ २ ॥
रचिता दशमे तत्र सात्त्विकानां निरोधने। षड्युक्षष्टितमो यातः पौण्ड्रकवधबोधकः ॥ ३ ॥

## अन्वितार्थप्रकाशिका

चक्रमिति ॥ तदनु प्रविष्टं तं कृत्यानलमनुसृत्य प्रविष्टं विष्णोश्चक्रम् अट्टादिभिः सहितां तथा गोपुरैः सहितैरट्टालकादिभिश्च संकुलं तथा कोशहस्त्यश्वरथान्नशालाभिः सहितां वाराणसीं समदहदित्यनुषङ्गः। अट्टा मञ्चाः सभाः प्रसिद्धाः आलया गृहाश्च आपणाः हट्टा गोपुराणि पुरद्वाराणि अट्टालकाः उपरितनप्रदेशाः कोष्ठानि अन्नसंग्रहस्थानानि ॥ ४१ ॥ दग्ध्वेति ॥ सुदर्शनं चक्रं सर्वां वाराणसीं पुरीं दग्ध्वा भूयः अक्लिष्टकर्मणः उदारचेष्टितस्य कृष्णस्य पार्श्वमुपातिष्ठत् ॥ ४२ ॥ य इति ॥ यः पुमान् एतदुत्तमश्लोकस्य कृष्णस्य चेष्टितम्। विक्रममिति च पाठः। समाहितः एकाग्रचित्तः सन्मर्त्यान् श्रावयेत् स्वयं वा शृणुयात् स सर्वपापैः प्रमुच्यते ॥ ४३ ॥

इति श्रीकृष्णसेवार्थमन्वितार्थप्रकाशिकाम्। गङ्गासहायो दशमे षड्युक्षष्टितमे व्यधात् ॥

इति श्रीभागवते दशमस्कन्धेऽन्वितार्थप्रकाशिकायां षट्षष्टितमोऽध्यायः ॥ ६६ ॥

## श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्

तस्य कृत्यानलस्यानुप्रविष्टं। अट्टैर्मञ्चैश्च सभालयैः सभास्थानैः। आपणैर्हट्टैश्च सहितां वाराणसीं समदहदिति पूर्वेणान्वयः ॥ ४१ ॥ एवं सर्वां वाराणसीं दग्ध्वा ॥ ४२ ॥ समाहितः सावधानः ॥ ४३ ॥

इति श्रीशुद्धैकान्तधर्मप्रवर्तकगुरुराजेन्द्रश्रीसहजानंदस्वामिशिष्यगोपालानंदमुनिविरचिते निगूढार्थप्रकाशके श्रीमद्भागवतस्य दशमस्कंधव्याख्याने पौण्ड्रकादिवधो नाम षट्षष्टितमोऽध्यायः ॥ ६६ ॥

## भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

किं च ॥ चक्रमिति ॥ तदनु कृत्यानलदहनानन्तरं, प्रविष्टं पुरे कृतप्रवेशं, विष्णोः चक्रं चापि, साट्टसभालयापणां, अट्टैः सभाभिरालयैरापणैश्च सहितां, तत्राट्टा मञ्चाः, सभाः सदोगृहाणि, आलयानि गृहाणि, सभा आलयानि चेति वा, सगोपुरा अट्टालकाः कोष्ठाश्च तैः संकुला तां, कोशाश्च हस्तिनश्च अश्वाश्च अन्नानि च तेषां शालाभिः सह वर्त्तमानां तां, वाराणसीं काशीं, समदहदिति पूर्वेण संबन्धः ॥ ४१ ॥ दग्ध्वेति । विष्णोश्चक्रं, सुदर्शनं, सर्वां वाराणसीं, दग्ध्वा, अक्लिष्टकर्मणः कृष्णस्य, पार्श्वं, भूयः उपातिष्ठत् ॥४२॥ य इति ॥ यः मर्त्यः, एनं उत्तमश्लोकविक्रमं, श्रावयेत्, समाहित एकाग्रचित्तः सन्, शृणुयात् वा, सः, सर्वपापैः, प्रमुच्यते ॥ ४३ ॥

इति श्रीधर्मधुरंधरश्रीधर्मात्मजप्रत्यक्षपुरुषोत्तमश्रीसहजानन्दस्वामिसुतश्रीरघुवीराचार्यसूनुभगवत्प्रसादाचार्यविरचितायामन्वयार्थविबोधिन्यां भक्तमनोरञ्जन्याख्यायां श्रीमद्भागवतटीकायां दशमस्कन्धोत्तरार्द्धे षट्षष्टितमोऽध्यायः ॥ ६६ ॥

## कृष्णप्रिया

भगवान् श्रीकृष्ण का सुदर्शन चक्र भगवान् की आज्ञा से कृत्या के पीछे-पीछे चला और काशीपुरी पहुँचा । काशीपुरी विकसित, सुशोभित एवं बड़ी विशाल नगरी थी । काशीपुरी में भवनों की अटारियाँ अतिशय विशाल थीं, अनेक सभा भवन थे, बाजार विशाल थे, नगर के दरवाजे सुंदर और विशाल थे, द्वारों के शिखर कलामय और गगनचूंबी थे, हस्तीशाला, अश्वशाला, रथशाला आकर्षक एवं अत्यन्त विशाल थी, अन्न के कोष्ठों से नगरी सुसज्जित थी, चहारदीवारियाँ सबके चित्त को खींचती थी, खजाने सुरक्षित थे ॥ ४१ ॥ भगवान् श्रीकृष्ण से प्रेरित सुदर्शन चक्र ने सम्पूर्ण काशीनगर को जलाकर भस्म कर दिया । अपना कार्य पूर्ण करके पुनः सुदर्शन चक्र रसमय एवं रहस्यमय लीला करने वाले आनन्दमय भगवान् श्रीकृष्ण के चरण कमलों में लौट आया एवं विनम्रता से श्रीनाथ के चरणों में नमस्कार कर आज्ञा प्राप्त कर आसन किया ॥ ४२ ॥ जो भक्तजन एकाग्रता से उत्तमश्लोक भगवान् श्रीकृष्ण के रसमय अद्भुत चरित्र का श्रवण करेगा, वह पुण्यात्मा सर्व प्रकार के पापों से मुक्त हो जाएगा ॥ ४३ ॥

इति श्रीमद्भागवते दशमस्कन्धे निरोधलीलायां पौण्ड्रकवधकथावर्णने षट्षष्टितमाध्यायस्य भाषान्तरं समाप्तम् ॥ ६६ ॥

## [1]अथ सप्तषष्टितमोऽध्यायः

| श्लोकाः | अनु. | उ. | श्लो. अ. | उ. अ. | अ. अ. | सं. श्लो. अ. | सं. श्लो. | अक्ष. |
|---|---|---|---|---|---|---|---|---|
| २८ | २८ | २ | ८६६ | १० | ४३ | ९४९ | २९॥ | ५ |

### राजोवाच

भूयोऽहं श्रोतुमिच्छामि रामस्याद्भुतकर्मणः । अनन्तस्याप्रमेयस्य यदन्यत् कृतवान् प्रभुः ॥ १ ॥

### श्रीशुक उवाच

नरकस्य सखा कश्चिद् द्विविदो नाम वानरः। सुग्रीवसचिवः सोऽथ भ्राता मैन्दस्य वीर्यवान् ॥ २ ॥
सख्युः सोऽपचितिं कुर्वन् वानरो राष्ट्रविप्लवम्। पुरग्रामाकरान् घोषानदहद् [2]वह्निनोत्सृजन् ॥ ३ ॥
क्वचित् स शैलानुत्पाट्य [3]तैर्देशस्थानमचूर्णयत् । आनर्तान् सुतरामेव [4]यत्रास्ते मित्रहा[4] हरिः ॥ ४ ॥

### कर्दमक्षमा

अन्वयः—राजोवाच—भूयः, अहम्, अद्भुतकर्मणः, अप्रमेयस्य, अनन्तस्य, रामस्य, यत्, अन्यत्, कृतवान्, तत्, श्रोतुम्, इच्छामि ॥ १ ॥ श्रीशुक उवाच–द्विविदः, नाम, कश्चिद्, वानरः, नरकस्य, सखा, सुग्रीवः, रुचिरः, अथ, सः, तीर्थवान्, मैन्दस्य, भ्राता ( आसीत् ) ॥ २ ॥ सः, वानरः, सख्युः, अपचितिम्, कुर्वन्, पुरग्रामाकरान्, घोषान्, वह्निम्, उत्सृजन्, अदहत् ॥३॥ कच्चित्, स, शैलान्, उत्पाट्य, तैः, यत्र, मित्रहा, हरिः, आस्ते, सुतराम्, आनर्तान्, एव, देशान्, समचूर्णयत् ॥४॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

सप्तषष्टितमे रामो गिरौ रैवतके मदात् । स्वैरं युवतिभिः क्रीडन्नवधीद् द्विविदं खलम् ॥ १ ॥

कालिंदीविदारणानंतरं रामचरित्रं द्विविदवधादिसंगतमप्यनुक्त्वा तत्पूर्वभावित्वेन पौंड्रकवधादि निरूप्येदानीं तदेव प्रस्तौति भूयोऽहमित्यादिना। रामचरित्रश्रवणेच्छायामद्भुतकर्मत्वं हेतुस्तत्र चानंतत्वं तत्राप्यप्रमेयत्वमिति ॥ १ ॥ नरकस्य सखेति हरिणा वैरे कारणम् । सुग्रीवसचिव इति तस्य मंत्रबलम् । मैंदस्य भ्रातेति रामायणेऽतिप्रसिद्धत्वेन वीर्याधिक्य-मुक्तमिति ॥ २ ॥ सख्युर्नरकस्यापचितिमानृण्यम् । राष्ट्रस्य विप्लवो नाशो यथा भवति तथा पुरादीनदहदिति ॥ ३ ॥ किंच क्वचिदिति । कदाचित्स द्विविदः मित्रहा सखिहंता ॥ ४ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

द्विविदं वानरम् ( १ ) । तत्पूर्वभावित्वेन द्विविदवधात्प्राक्तनत्वेन । तदेव रामचरितमेव । तत्राद्भुतकर्मत्वे । तत्राप्य-नंतत्वेपि । अन्यत् कालिंदीकर्षणेतरत् । यत्कर्म ॥ १ ॥ 'सचिवो मंत्रिचेटयोः' इति मेदिनी । मैन्दोऽपि वानरः नरकस्य सखेति–महाभक्तराजसुग्रीवसचिवत्वेऽपि दुःसंगदोषस्यानर्थकारित्वज्ञापनार्थमुक्तम्, दुःसंगस्यापि कारणं श्रीमल्लक्ष्मणे तस्य पूर्वमनादर आसीदिति यद्यपि मैन्दद्विविदादीनां श्रीरामपूजायामावरणदेवत्वादेव नित्यं सिद्धत्वमेव तदपि महदपराधदुःसंगदोषादि-ज्ञापनार्थं जयविजयवदेकेन प्रकाशेनैव द्विविदस्य भ्रंशोऽयं दर्शितः। संदर्भस्तु—श्रीरामपूजावरणदेवौ तु तदीयवैकुंठस्थावन्यावेव, एतौ पुनस्तच्छक्त्यावेशिनावेवेत्याह । द्विविदो रात्रौ लंकां गत्वा राक्षसीर्नग्नाः कृत्वा तासां योनीः परपर्श तज्ज्ञात्वा ततो रामेण सैन्यान्निष्कासितस्तत्प्रार्थितेन पुनरुक्तम् बलदेवाद्द्वापरे मृत्युं प्राप्य पुनः स्वर्लोकं गमिष्यतीत्युक्तमन्यत्र ॥२॥ राष्ट्रं श्रीद्वारिका-निकटं सौराष्ट्रादि, तस्य विप्लवो येन तद्यथा स्यात्तथार्दयत् । उत्सृजन्ददत् ॥ ३ ॥ तैः शैलैः । यत्रानर्तेषु ॥ ४ ॥

### श्रीमज्जीवगोस्वामिकृत वैष्णवतोषिणी

कालिन्दीत्यादिटीकायामेवमेव ज्ञेयं प्रस्तुतश्रीरामलीलामध्ये यत् पौण्ड्रकवधादि निरूपितं तत्तस्य तत्रैव जातत्वा-द्युक्तमेव अतस्तद्विच्छेदशङ्कया राजा प्रस्तौति पृच्छतीति निरूप्य स्थितं श्रीशुकमिति वाक्यशेषात् भूय इत्यादौ कर्मेति शेषः।

---

१. अयमध्यायः क्रमे एकोननवतितमः ( ८९ ) इति विजयध्वजक्रमः । २. वह्निमु–श्रीधर. वंशी. जीव. वीर. विज. विश्व. ; वह्निना भृशम्–प्रा. पा. । ३. देशान् सम–श्रीधर. वंशी. जीव. वीर. विज. विश्व. । ४. मेत्य–विज. ।

तदेवाह यदन्यदिति विभुः सर्वशक्तिपूर्णः इति सर्वत्र हेतुः ॥ १ ॥ यद्यपि श्रीसुग्रीवसङ्गी तथापि वक्ष्यमाणदुर्बुद्धित्वे हेतुरयमित्याह—नरकस्येति। एवं दुस्सङ्गस्य दौरात्म्यातिशयो दर्शितः तस्य कारणञ्च बलगर्वितत्वात् श्रीलक्ष्मणादिष्वनादर एवेति ज्ञेयं योतु मैन्दद्विविदौ श्रीरामपूजायामावरणदेवौ तौ तदीयवैकुण्ठस्थावन्यावेव एतौ पुनस्तच्छक्त्याविशिनाविवेति च ज्ञेयं तयोस्तदसम्भवात् जयविजयवत् सदपराधफलदर्शनार्थं तादृशबुद्धित्ववादेर्बहिरेव व्यञ्जनमिति वा अथेत्यानन्तर्य्ये मैन्दस्यानन्तर एवायं भ्रातेति तेनातिसादृश्यबोधनाय ॥ २ ॥ अपचितिरानृण्यलक्षणः सम्मानः वानर इति पुनरुक्तिर्जात्यैव तावच्चञ्चलदुष्टप्रकृतिरिति व्यञ्जनाय राष्ट्रं श्रीद्वारकानिकटवर्त्तिसौराष्ट्रादि तस्य विप्लवो यत्र तादृशं यथा स्यात् यद्वा राष्ट्रविप्लवरूपामपचितिं पुरादीनां यथोत्तरं न्यूनत्वं कैमुतिकन्यायेन व्याख्येयम् ॥ ३ ॥ तैः प्रक्षिप्तैः ॥ ४ ॥

### श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी

विभुः सर्व्वशक्तिपूर्णः, अतोऽन्यत् उक्ताच्छ्रीकालिन्द्याकर्षणादेः परं यत् कृतवान्, तत् रामस्य व्रजजनरमणस्य रौहिणेयस्य श्रोतुमिच्छामि। तत्रैव हेत्वन्तरम्—अद्भुतानि श्रीयमुनाकर्षणादीनि कर्म्माणि यस्य तस्येति ॥ १ ॥ कश्चिदेकः, किंवा वीर्य्यादिना लोकोत्तरः। अथ तु, स तु मैन्दस्य भ्रातेति सर्व्वत्र सुविख्यात एवेति भावः। अतो वीर्य्यवान् वानर इति नरतुल्यचेष्टां सूचयति ॥ २ ॥ तामेव दर्शयति—राष्ट्रेत्यादिना। राष्ट्रं श्रीद्वारकानिकटवर्त्तिसौराष्ट्रादिपुरादीनां यथोत्तरं न्यूनत्वं कैमुतिकन्यायेनैव व्याख्येयम् ॥ ३ ॥ तैः प्रक्षिप्तैः सम्यक् चरस्थिरसमेतत्वादिनाचूर्णयत्; हरिरिति तन्मित्रप्राणहरणात् ॥ ४ ॥

### श्रीमद्वीरराघवाचार्यकृता भागवतचन्द्रचन्द्रिका

एवमन्तरागर्भिणीतिन्यायेन श्रुतश्रीकृष्णचरित्रः पुनः बलभद्रचरित्रबुभुत्सया पृच्छति राजा-भूय इति। अद्भुतं कर्म चेष्टितं यस्य तस्य अनन्तस्य अनन्तावताररूपस्य अप्रमेयस्य अपारमहिम्नो रामस्य चेष्टितं श्रोतुमिच्छामि किं पूर्वोक्तं नेत्याह—यदन्यदिति। विभू रामः यदन्यत्कृतवांस्तच्चेष्टितम् ॥ १ ॥ द्विविदवधात्मकं कर्माख्यातुं तावद्द्विविदस्य दुश्चेष्टितमाचष्टे—नरकस्येत्यादिना। द्विविदो नाम कश्चिद्वानरः स च नरकस्य सखा सुग्रीवस्य सचिवो मन्त्री मैन्दस्य भ्राता च वीर्यवांश्चेति रामायणादौ प्रसिद्ध इति तात्पर्यम् ॥ २ ॥ सख्युरिति स द्विविदः सख्युर्नरकस्य अपचितिमानृण्यं कुर्वन् "लक्षणहेत्वोः" इति शता कर्त्तुं राष्ट्रस्य विप्लवो नाशो यथा तथा पुरादीन् वह्निमुत्सृजन् ददाह ॥ ३ ॥ क्वचिदिति। स द्विविदः तैरुत्पाटितैः शैलैर्देशांस्तत्राप्यानर्त्तान्सुतरामचूर्णयत् तत्र हेतुत्वेन तान् विशिनष्टि यत्र येष्वानर्त्तेषु मित्रहा नरकघ्नो हरिरास्ते ॥ ४ ॥

### श्रीविजयध्वजतीर्थकृता पदरत्नावली

अनन्तस्य शेषस्य एन विष्णुना प्रमेयस्य ज्ञेयस्य ॥ १-२ ॥ सख्युर्नरकस्य अपचितिंनिष्कृतिम् ॥ ३-४ ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

रामस्येति चरितमिति शेषः। तदेवाह—यदन्यदिति ॥ १ ॥ यद्यपि श्रीरामचन्द्रसङ्गी तथापि वक्ष्यमाणदुर्बुद्धित्वे हेतुरयमित्याह—नरकस्येति। दुःसङ्गदोषादिति भावः। तत्कारणञ्च श्रीलक्ष्मणादौ बलगर्वितत्वेनानादर एवेति ज्ञेयम्। यौ तु मैन्दद्विविदौ श्रीरामपूजायामावरणदेवौ तौ तु तदीयवैकुण्ठस्थावन्यावेव एतौ पुनस्तच्छक्त्यावेशिनाविति ॥ २-१८ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

गिरौ रैवतके क्रीडन् प्रेयसीभिरहन् कपिम्। कदर्थयन्तं द्विविदं सप्तषष्टितमे बलः ॥

कृष्णलीलायामत्यावेशाद्रामलीलां काञ्चिदुल्लङ्घ्य महामुनिरवं माधावर्त्तीति पृच्छति—भूय इति। अद्भुतकर्मण इति स्वमज्जनार्थं नदीं कोऽपि स्वान्तिकं नानीतवानिति भावः। नचैतावदेव तत्कर्मेति वाच्यं यतोऽनन्तस्य न च तत्कर्माणि त्वं जानास्येवेति वाच्यं यतोऽप्रमेयस्य मादृशबुद्ध्या प्रमातुमशक्यत्वात् ॥ १ ॥ नरकस्य सखेति महाभक्तराजसुग्रीवसचिवत्वेऽपि दुस्सङ्गदोषस्यानर्थकारित्वज्ञापनार्थमुक्तं दुस्सङ्गस्यापि कारणं श्रीमल्लक्ष्मणे तस्य पूर्वमनादर आसीदिति ज्ञेयं यद्यपि मैन्दद्विविदादीनां श्रीरामपूजायामावरणदेवत्वान्नित्यसिद्धत्वमेव तदपि महदपराधदुस्सङ्गादिदोषज्ञापनार्थं जयविजयवदेकेन प्रकाशेनैव द्विविदस्य अंशोऽयं दर्शितः ॥२॥ सख्युर्नरकस्य अपचितिरानृण्यं राष्ट्रस्य विप्लवो नाशो येन तद्यथा स्यात्तथाऽदहत् ॥३-४॥

### गूढार्थदीपिनी

सप्तषष्टितमे स्त्रीभिः क्रीडन् रैवतके गिरौ। दौर्जन्यात् द्विविदं युद्धे मुष्टिभिर्न्यवधीत् बलः ॥ १ ॥

द्विविदो हि रात्रौ लङ्कां प्रविश्य राक्षसीर्नग्नाः कृत्वा तासां योनीः संस्पर्श। ज्ञात्वैतत् रामेण स्वसैन्यान्निष्कासितः। उक्तं च द्वापरे श्रीबलदेवात् मृत्युं प्राप्य स्वर्लोकं प्राप्स्यतीत्येतदभिप्रेत्यैवायमुपक्रमः। मैन्दोऽपि वानरः नरकस्य सखा ॥ १-२ ॥ अपचितिम् आनृण्यम्। राष्ट्रस्य विप्लवो नाशो यथा भवति तथा अदहत् क्रियाविशेषणम्। उत्सृजन् प्रक्षिपन् ॥ ३ ॥ आनर्तान् द्वारकासमीपवर्तिनो देशान् ॥ ४ ॥

## श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः

पुनर्बलभद्रचरितबुभुत्सुं राजानं प्रति द्विविदवधरूपं तच्चरितं सप्तषष्टितमे वर्णयति ॥ १-२ ॥ अपचितिमानृण्यं राष्ट्रस्य विप्लवो नाशो यथा स्यात्तथा पुरादीनदहत् ॥ ३-४ ॥

## श्रीमद्वल्लभाचार्यकृता सुबोधिनी

बलस्य चरितं वक्ष्यन् तदभावात्तु पौण्ड्रकः । तथोक्तवानिति ह्युक्तं अर्थादितद्‌बलस्य हि ॥ १ ॥
बलरूपहरेः कार्यं न समाप्तमिति स्थितिः । अतो विशेषतो वक्तुं प्रश्नो राज्ञो निरूप्यते ॥ २ ॥
अष्टादशे तु द्विविदवधः सम्यङ् निरूप्यते । गोपिकानामिवात्रापि स्त्रीणां माहात्म्यबोधने ॥ ३ ॥
बलस्त्रियोऽन्यथा स्वत्र निरुद्धा न भवन्ति हि । तदा विभागो व्यर्थः स्यान्निरोधानुपयोगतः ॥ ४ ॥
ततः सर्वजनीनं च चरित्रं हि करिष्यति । यस्यावेशस्य चरितमेवं तस्य किमद्भुतम् ॥ ५ ॥

पूर्वाध्याये 'नन्दव्रजं मते राम' इति रामे विद्यमाने नैवं पौण्ड्रको वक्तुं शक्त इति प्रतिभातम् । अतो बलस्य विशेषं ( चरित्रं ) पृच्छति **भूयोऽहमिति** । यमुनाकर्षणादि माहात्म्यं श्रुतम् । अन्यदपि श्रोतुमिच्छामि । **अद्भुतकर्मण इति** । अलौकिकचरित्रं तस्य वर्तत एव तद्वक्तव्यमिति प्रश्नः । यथा भगवतः कार्यकरणार्थं गते तस्मिन् बह्वेव कार्यं भगवत आपतितम्, तथान्यदपि भविष्यतीत्याशयेन अद्भुतकर्मत्वमुक्तम् । **अनन्तस्येति** । चरित्राणामप्यनन्तता, तेन तादृशचरित्रबाहुल्यम् । **अप्रमेयस्येति** । स्वतः कल्पयितुमशक्यम् । अत एव तादृशस्य अन्यदपि चरित्रं श्रोतुमिच्छामि । तच्च चरित्रं देवाज्जातं न वक्तव्यम्, किन्तु समर्थो भूत्वा यत् कृतवान्, तदेव वक्तव्यमिति ॥ १ ॥ निरोधे स्त्रिय एव मुख्या इति तदर्थमेवान्यदिति निरूपयन् द्विविदवधमाह **नरकस्य सखा कश्चिदिति** । नरकासुरो भगवता हृत इति, स्त्रीणामेवार्थ इति च, तत्सखाप्येवमेव मारणीय इति, वध्योऽपि स एतावत्कालमुपेक्षित इत्युक्तम् । कश्चिदिति विशेषतः दैत्यत्वेन वा देवत्वेन वा न निर्वक्तव्यः । **द्विविद** इति । द्विधा वित् ज्ञानं यस्येति द्विःस्वभावोऽयम् । तेन रामावतारे भक्तोऽप्ययं सांप्रतमन्यथा जात इति । अनेन द्विःस्वभावा अपि वध्या एवेति निरूपितम् । **वानर** इत्युपेक्षायां हेतुः । भगवतैवार्धनराः कृताः, पुनः किमर्थं वध्या इति । तर्हि तद्वधे रामस्य किं माहात्म्यमित्याशङ्क्य माहात्म्यमाह । **अथ** भिन्नप्रक्रमेण । **सुग्रीवसचिवः** । चत्वारो मन्त्रिणस्तस्य हनुमदादयः, तन्मध्ये परिगणनात् तत्तुल्यतापि निरूपिता । **स** इति । स्वभावतोऽपि रामायणे प्रसिद्धः । **मैन्दस्य भ्रातेति** रामायणे मैन्दशौर्यं निरूपितम् । तद्भ्रातापि तत्तुल्य इति । ततोऽपि विशेषमाह **वीर्यवानिति** ॥ २ ॥ तर्ह्येतादृशो महान् प्रसिद्धश्च कथं विरुद्धो जात इति चेत्, तत्राह **सख्युः सोऽपचितिमिति** । नरको भगवता मारित इति अपचितिं कुर्वन् । क्षुद्रः केनापि न प्रतिपक्षतया विचार्यत इति राष्ट्रविप्लवं कृतवान् । **यथा** सर्वमेव राष्ट्रं नष्टं भवति । नाशमेवाह **पुरग्रामेति** । राष्ट्रविप्लवो यथा भवति, तथेति सर्वक्रियासु सम्बध्यते । **पुराणि** नगराणि । **ग्रामा** अल्पाः । **आकरा** रत्नादिस्थानानि । **घोषा** आभीरग्रामाः । लौकिकास्त्रिविधा निरुक्ताः । वैदिकातिदोषसिद्ध्यर्थं घोषा उक्ताः । **वह्निना** वह्निदाहेन । अनेन चौर्येण दाहो निरूपितः । अन्यथा वह्निपदं व्यर्थं स्यात् ॥ ३ ॥ अग्निना उपद्रवमुक्त्वा पर्वतैराह **क्वचित्स शैलानुत्पाट्येति** । स्थानादुत्पाट्य देशोपरि पातयित्वा देशस्थानचूर्णयदिति । सुतरामेव भगवदीयानित्याह **आनर्तान् सुतरामेवेति** । तत्र हेतुः । **यत्रास्ते नरकघाती गोविन्दः** ॥ ४ ॥

## श्रीसुबोधिनी-सारः

राजोक्तिः । अद्भुतं कर्म यमुनाकर्षणादि यस्य तस्यानंतस्याऽप्रमेयस्य तत्कर्म भूयोऽहं श्रोतुमिच्छामि प्रभुर्बलो यदन्यत्कृतवान् ॥ १ ॥ शुकोक्तिः । नरकस्य भौमासुरस्य कश्चित्सखा मित्रं द्विविदो नाम वानरः सुग्रीवस्य सचिवो मंत्री मैंदस्य भ्राता वीर्यवान् बली सः ॥ २ ॥ सख्युर्भौमस्यापचितिम् आनृण्यं कुर्वन् राष्ट्रविप्लवं देशनाशं यथा भवति तथा वह्निमग्निमुत्सृजन्ददत् पुराणि ग्रामानाकरान् घोषान् व्रजानदहत् ॥ ३ ॥ क्वचित्कदाचित् शैलान् पर्वतानुत्पाट्य तैः शैलैः स द्विविदो देशानपिनट् आनर्त्तान् द्वारकासन्नान् देशांस्तु सुतरां भृशं समचूर्णयत् । तत्र हेतुः यत्रानर्त्ते मित्रहा भौमादिहंता हरिरास्ते ॥ ४ ॥

## श्रीविट्ठलरायात्मजश्रीवल्लभकृतलेखः

**अष्टादशेऽध्याये । इति ह्युक्तमिति** । पूर्वाध्यायारम्भे इदमुपपादितमित्यर्थः । **एतद्‌बलस्य हीति** । बलस्थित्यभावादेतावज्जातमित्युक्त्या अर्थाद्‌बलस्यैव माहात्म्यमुक्तं जातमित्यर्थः । **बलरूपेति** । बलदेवे रूपं स्वरूपं यस्य तादृशस्य । बलाविष्टस्य हरेरित्यर्थः । तथा च पूर्वाध्यायोक्तमपि माहात्म्यं बलाविष्टस्य भगवत एवेति स्थितिर्मर्यादेत्यर्थः । **अतो विशेषत इति** । पूर्वाध्याये आर्थिकत्वात्सामान्यत उक्तम् । अत्र विशेषतो वक्तुं राज्ञः प्रश्नो बलकार्यसमाप्त्यभावान्निरूप्यते इत्यर्थः । **माहात्म्यबोधन** इति । निमित्तसप्तमीयम् । बलस्त्रीणां माहात्म्यज्ञानसिद्ध्यर्थमित्यर्थः । **अन्यथा त्विति** । आवेशातिरिक्तप्रकारेण साक्षा-

भगवता बलस्त्रीणां निरोधो न सम्भवतीत्यर्थः । तदेति । एवं प्रकारेण बलस्त्रीणां निरोधाभावे पूर्वमुक्तः शक्तिविभागो निरोधानुपयोगाद्धेतोर्व्यर्थः स्यात् । व्युपसर्गो विरोधार्थकः । स्कन्धार्थविरुद्धः स्यादित्यर्थः । तत इति । इदं गुप्तचरित्रमुक्तम् । तदनन्तरं लक्ष्मणाप्रसङ्गे सर्वजनीनं चरित्रं करिष्यतीत्यर्थः । एवं विशेषनिरोधप्रकरणे चतुर्भिरप्यध्यायैर्बलचरित्रमेव निरूपितमित्युक्तम् । तस्य तात्पर्यवृत्त्या भगवच्चरित्रतामाहुः यस्येति । तथा च कैमुतिकन्यायेन भगवच्चरित्रमेवेदमिति भावः । भूयोऽहमित्यत्र । भगवतः कार्यकरणार्थमिति । गोपिकासान्त्वनं भगवतः कार्यं तत्करणार्थं गते सतीत्यर्थः । चरित्रं श्रोतुमिच्छामीत्येतावतैव चारितार्थ्येऽपि यदन्यत्कृतवानिति यदुक्तं तत्तात्पर्यमाहुः देवाज्जातमिति । पौण्ड्रकवधरूपमार्थिकं चरित्रं बलस्येत्युक्तम् । तादृशं न वक्तव्यमित्यर्थः ।

## गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

सप्तषष्टितमेऽध्याये रामेण क्रीडता गिरौ । दुष्टस्य द्विविदस्यात्र संहारो विनिरूप्यते ॥ १ ॥

एवं श्रीकृष्णचरितं श्रुत्वा पुनः रामचरितं पृच्छति—भूय इति । रामस्य चरितमहं भूयः श्रोतुमिच्छामि । श्रवणेच्छायां हेतुमाह—अद्भुतकर्मण इति । अद्भुतमाश्चर्यजनकं कर्म यस्य तस्येत्यर्थः । अद्भुतकर्मत्वे हेतुमाह—अप्रमेयस्येति । यो हि प्रमाविषयो भवति तस्य चेष्टायां नाश्चर्यम्, ज्ञातत्वात् । अयं मनोगोचरः, अतो भवति तल्लीलायामाश्चर्यमिति भावः । अप्रमेयत्वे हेतुमाह—अनन्तस्येति । अनन्ताचिन्त्यगुणत्वात् इत्यर्थः । अतो विभुः सर्वकरणसमर्थो रामो यदन्यत् कर्म कृतवान् तद्ब्रूहीति शेषः ॥ १ ॥ एवं पृष्टस्तच्चरितान्तरमाह—नरकस्येति । द्विविदो नाम कश्चिद्वानरः । स च नरकस्य सखेति कृष्णेन सह वैरे कारणम् । 'सुग्रीवसचिव' इति तस्य मन्त्रबलं दर्शितम् । स्वयं च वीर्यवानिति । 'तद्वीर्यं च रामायणे प्रसिद्धम्' इति सूचयन्नाह—मैन्दस्य भ्रातेति ॥ २ ॥ स द्विविदो वानरः मृतस्य सख्युः नरकस्यापचितिं आनृण्यं कुर्वन् राष्ट्रस्य देशस्य विप्लवो नाशो यथा भवति तथा वह्निमुत्सृजन् प्रक्षिपन् पुरग्रामादीन् अदहदित्यन्वयः ॥ ३ ॥ क्वचित् स द्विविदः शैलानुत्पाट्य तैः शैलैः देशान् समचूर्णयत् । आनर्तान् द्वारकासमीपदेशान् एत्य आगत्य तु सुतरां समचूर्णयत् । तत्र हेतुमाह—यत्र मित्रहा नरकासुरहन्ता हरिरास्त इति ॥ ४ ॥

## अन्वितार्थप्रकाशिका

सप्तषष्टितमे स्त्रीभिः क्रीडन् रैवतके बलः । अवधीद्द्विविदं तत्र श्लोका विंशतिरष्टयुक् ( २८ ) ॥
उवाचेति वचोद्वन्द्वं ( २ ) श्लोकतुल्या ( २८ ) अनुष्टुभः ॥ ६७ ॥

भूय इति । अद्भुतकर्मणः नद्याकर्षणादिकृतः अनन्तस्याप्रमेयस्य रामस्य चरितं भूयः श्रोतुमिच्छामि । अतो विभुः रामो यदन्यत्कर्म कृतवान् तद् ब्रूहीति शेषः ॥ १ ॥ नरकस्येति । द्विविदो नाम कश्चिद्वानरः स च नरकस्य भौमस्य सखा इति वैरहेतुः सुग्रीवस्य सचिव इति मन्त्रबलं मैन्दस्य भ्राता इति रामायणे प्रसिद्धया पराक्रमोत्कर्षः स्वयं वीर्यवांश्चाभूत् । श्रीरामावरणपूजायामावरणदेवत्वान्नित्यसिद्धस्यास्य जयविजयवद्देवेन प्रकाशेनैव भ्रंशः न तु स्वरूपेण नरकदुःसङ्गदोषात् तस्यापि कारणं लक्ष्मणे पूर्वमनादरः कल्प्य इति भागवताः ॥ २ ॥ सख्युरिति । स द्विविदो वानरः मृतस्य सख्युर्नरकस्यापचितिम् आनृण्यं कुर्वन् राष्ट्रस्य देशस्य विप्लवो नाशो यथा भवति तथा वह्निमुत्सृजन् प्रक्षिपन् पुरग्रामादीनदहत् ॥ ३ ॥ क्वचिदिति । क्वचित्कदाचित्स द्विविदः शैलानुत्पाट्य तैः शैलैः देशान् समचूर्णयत् । आनर्तान् द्वारकासमीपदेशान् एत्य आगत्य तु सुतरां समचूर्णयत् । यत्र येषु आनर्तेषु मित्रहा तन्मित्रनरकासुरहन्ता हरिरास्त इति ॥ ४ ॥

## श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्

अधुना सप्तषष्टितमेऽध्याये पुनर्द्विविदहननरूपं रामचरित्रं निरूपयति भूय इति । रामस्य तच्चरित्रं श्रोतुमिच्छामि प्रभुः स रामो यदन्यच्चरित्रं कृतवान् ॥ १ ॥ नरकस्य सखेत्यनेन कृष्णेन सह वैरे हेतुः सूचितः सुग्रीवस्य सचिवो मंत्री । मैंदस्य तन्नाम्नो वानरस्य भ्राता अतो वीर्यवान् बलाधिकः । एतद्रामायणे प्रसिद्धं ॥ २ ॥ सख्युर्भौमस्यापचितिं वैरनिवारणरूपां राष्ट्रस्य विप्लवं नाशं कुर्वन् सन् पुरादीन् प्रादहत् ॥ ३ ॥ क्वचित् कदाचित् स द्विविदः मित्रहा नरकहंता ॥ ४ ॥

## भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

क्रीडन् युवतिभिः स्वैरं रामो रैवतके गिरौ । सप्तषष्टितमे दुष्टं द्विविदं चावधीत् मदात् ॥ १ ॥

कालिन्दीविदारणानन्तरं द्विविदवधादिरामचरितं संगतमप्यनुक्त्वा तत्पूर्वभावित्वेन पौण्ड्रकवधादि निरूप्येदानीं तदेव प्रस्तौति भूयोऽहमित्यादिना । भूय इति । प्रभू रामः, यत् अन्यत् कृतवान्, अद्भुतकर्मणः, अनन्तस्य, अप्रमेयस्य, रामस्य, तच्चेष्टितं, भूयः पुनरपि, अहं श्रोतुं, इच्छामि । भूयो रामचरितश्रवणेच्छायामद्भुतकर्मत्वं हेतुस्तत्र चानन्तत्वं तत्राप्यमेयत्वमिति ॥ १ ॥ द्विविदवधात्मकं कर्माख्यातुं तावत् द्विविदस्य चेष्टितमाचष्टे नरकस्येत्यादिना एकश्लोकेन । नरकस्येति ।

कश्चित् अथ कात्स्र्येन, सुग्रीवसचिवः सः, प्रसिद्धः, सुग्रीवसचिवत्वेन जगत् प्रख्यात इत्यर्थः। मैन्दस्य वानरस्य, भ्राता, वीर्यवान् प्रशस्तबलः, नरकस्य नरकासुरस्य, सखा मित्रं, द्विविदः नाम द्विविद इति नाम्ना प्रसिद्धः, वानरः, आसीदिति शेषः ॥ २ ॥ सख्युरिति। वानरः, स द्विविदः सख्युः, नरकस्य, अपचितिमानृण्यं, कुर्वन्, राष्ट्रस्य विप्लवो नाशो यथा भवति तथा, पुरग्रामाकरान्, घ षान्, वह्नि उत्सृजन्, अदहत् ॥ ३ ॥ क्वचिदिति। क्वचित्, स द्विविदः, शैलान् उत्पाट्य, तैरुत्पाटितैः शैलैः, देशान् तत्रापि, आनर्त्तांस्तु, सुतरामेव, समचूर्णयत्। तत्र हेतुत्वेन तान्विशिनष्टि। यत्र येष्वानर्त्तेषु, मित्रहा स्वमित्रनरकघ्नः, हरिः, आस्ते अतः ॥ ४ ॥

### कृष्णप्रिया

महाराज परीक्षितजी ने विनयपूर्वक प्रश्न किया कि महाराज शुकाचार्यजी! श्री बलभद्रजी के पराक्रम अत्यन्त अद्भुत हैं—वह स्वयं भगवान् अनन्तस्वरूप हैं। उनका स्वरूप गुण-लीला आदि भी मन वाणी क्रिया से पर हैं। बलरामजी ने जो और अलौकिक लीला की हो, मैं सारी कथा सुनना चाहता हूँ ॥ १ ॥ भगवान् श्रीशुकाचार्यजी ने कहा—राजन् परीक्षित्! द्विविद् नाम का एक वानर था। वह भौमासुर का सखा, सुग्रीव का सचिव एवं मैन्द का शक्तिमान् भाई था ॥ २ ॥ भगवान् श्रीकृष्ण ने उसके सखा भौमासुर को मार दिया, यह वृत्तान्त जानकर अपने मित्र की मैत्री ऋण से ऋणमुक्ति के कारण राष्ट्रविप्लव करने का उसने निर्णय किया। वह द्विविद वानर बड़े-बड़े नगरों-गाँवों में आकर श्वानों और आहीरों के निवासों में आग लगाकर जलाने लगा ॥ ३ ॥ कभी-कभी तो वह बड़े-बड़े पर्वतों को उखाड़कर उनसे बड़े-बड़े देशों को चूर्ण कर देता था। प्रायः यह विनाशकार्य आनर्त-सौराष्ट्र देश में करता था। कारण कि, उसके मित्र नरक को मारने वाले भगवान् श्रीकृष्ण उसी देश में रहते थे ॥ ४ ॥

**क्वचित् समुद्रमध्यस्थो दोर्भ्यामुद्धृत्य[1] तज्जलम्। देशान् नागायुतप्राणो वेलाकूलानमज्जयत् ॥ ५ ॥**

**आश्रमानृषि[2]मुख्यानां कृत्वा [3]भग्नवनस्पतीन्। अदूषयच्छकृन्मूत्रैरग्नीन् वैतानिकान् खलः ॥ ६ ॥**

**पुरुषान् योषितो दृप्तः क्ष्माभृद् द्रोणीगुहासु सः। निक्षिप्य चाप्यधाच्छैलैः[4] पेशस्कारीव कीटकम् ॥ ७ ॥**

**[5]एवं देशान् विप्रकुर्वन् दूषयंश्च कुलस्त्रियः। श्रुत्वा सुललितं गीतं गिरिं रैवतकं ययौ ॥ ८ ॥**

### कर्दमक्षमा

अन्वयः—नागायुतप्राणः, क्वचिद्, समुद्रमध्यस्थः, तज्जलम्, दोर्भ्याम्, उत्क्षिप्य, वेलाकूलान्, देशान्, अमज्जयत् ॥५॥ खलः, ऋषिमुख्यानाम्, आश्रमान्, भग्नवनस्पतीन्, कृत्वा, वैतानिकान्, अग्नीन्, शकृत्, मूत्रैः अदूषयत् ॥ ६ ॥ पेशस्कारी, कीटकम्, इव, दृप्तः, सः, पुरुषान्, योषितः, क्ष्माभृत्, द्रोणीगुहासु, निक्षिप्य, च, शैलैः, अप्यधात् ॥ ७ ॥ एवम्, देशान्, विप्रकुर्वन्, च, कुलस्त्रियः, दूषयन्, सुललितम्, गीतम्, श्रुत्वा, रैवतकम्, गिरिम्, ययौ ॥ ८ ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

तस्य समुद्रस्य जलं बाहुभ्यामुत्क्षिप्य वेलायाः कूले वर्तमानान् देशान् प्लावयामासेति ॥ ५ ॥ आश्रमस्थान्वनस्पतीन् भंक्त्वा आहवनीयाद्यग्निषु मूत्रादि कृतवान् ॥ ६ ॥ अप्यधात्पिदधे। पेशस्कारी भ्रमरः ॥ ७-९ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

वेला समुद्रजलं तस्य कूलं तटं समीपं तत्रत्यान्देशान्। तज्जलं समुद्रांबु। प्लावयामासानाशयदित्यर्थः ॥ ५ ॥ भंक्त्वा त्रोटयित्वा। आहवनीयाद्यग्निषु कुंडस्थेषु। शकृत्पुरीषम्। वितानो यज्ञस्तत्संबंधिनस्तथा तान् ॥ ६ ॥ क्ष्माभृतो गिरेर्द्रोण्यां नितंबदेशे या गुहा गह्वरदेशास्तासु "द्रोणी काष्ठांबुवाहिन्यां गिर्यंतरनितम्बयो" इति धरणिः। स द्विविदः। "पेशस्कारी पक्षिकीटस्स्वगृहे कीटगोपके" इति निरुक्तिः ॥ ७ ॥ एवं वह्निदाहादिना। विप्रकुर्वन्विरूपयन्। विष्णुपुराणे तु–"कामरूपी महारूपं कृत्वा सस्यान्यशेषतः। लुठन् भ्रमणसंमर्दैः संचूर्णयति वानरः ॥" इति तद्दौष्ट्याधिक्यमप्युक्तम् ॥ ८ ॥

---

१. मुत्क्षिप्य–श्रीधर. वंशी. जीव. ; मुधृत्य–वीर. विज. । २. मुनि–प्रा. पा. । ३. भस्म–वीर. । ४. मूर्ध्न–वीर. विज. । ५. तं देशं विप्रकुर्वन् वै धर्षयंश्च–विज. ।

### श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी

वेलाकूले वर्त्तमानानिति शेषः। कूलानिति पाठेऽपि स एवार्थः। अर्श आद्यच्। प्राणो बलम् ॥ ५॥ ऋषिमुख्यानां भगवद्भक्तर्षीणाम् ॥ ६॥ योषितश्चेत्यन्वयः दृप्तः बलेन गर्वितः कीटकमिति जात्येकत्वम् ॥ ७॥ विप्रकुर्वन् पीडयन् एवमुत्तरोत्तरं तस्य दुष्टत्वाधिक्यं ज्ञेयम्। अन्यच्चोक्तं श्रीविष्णुपुराणे—

"कामरूपी महारूपं कृत्वा स्वस्यान्यशेषतः। लुठन् भ्रमणसम्मर्दैः सञ्चूर्णयति वानरः" ॥ इति ॥ ८॥

### श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी

योषितश्चेत्यन्वयः। दृप्तो बलिष्ठो बलेन गर्व्वितो वा, अतः क्ष्माभृतः द्रोणीषु गुहासु च निक्षिप्यमाण-पुरुषादीनाञ्च महाभयेन किञ्चित् करणासामर्थ्यादिकं सूचयति—पेशस्कारीवेति ॥ ७॥ विप्रकुर्व्वन् पीडयन्; एवमुत्तरोत्तरं तस्य दुष्टताधिक्यं ज्ञेयम्; अन्यच्चोक्तं श्रीविष्णुपुराणे (५।३६।९,१०)—'कामरूपी महारूपं कृत्वा संस्थानशेषतः। लुठन् भ्रमणसम्मर्द्दैः संचूर्णयति वानरः।' इति तादृश-दुष्टस्यापि श्रीभगवतोपेक्षणं श्रीरघुनाथावतारे भक्तत्वापेक्षयेति ज्ञेयम् ॥ ८॥

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम्

अप्यधात् पिहितवान् छादितवान् पेशस्कारित्वमपि प्रकुर्वन् अपीडयत् ॥ ७-१४॥

### श्रीमद्वीरराघवाचार्यकृता भागवतचन्द्रचन्द्रिका

क्वचिदिति। दोर्भ्यां बाहुभ्यां तत्सामुद्रं जलम् उद्धृत्य उत्क्षिप्य वेलायां कूले वर्त्तमानान् देशानमज्जयत् तत्र हेतुत्वेन तं विशिनष्टि नागायुतप्राणः नागानां गजानामयुतस्य दशसहस्रस्य प्राणो बलं यस्य सः ॥ ५॥ आश्रमानिति। ऋषिमुख्यानामाश्रयभूतान् वनस्पतीन् भस्मसात्कृत्वा दग्ध्वेत्यर्थः। भग्नवनस्पतीनिति पाठे भग्ना वनस्पतयो येषु तथाभूतान् कृत्वा शकृन्मूत्रैः मलमूत्रैर्वैतानिकान् यज्ञीयानाहवनीयादीनग्नीनदूषयत् यतः स खलः दुरात्मा ॥ ६॥ पुरुषाविति। दुष्टो द्विविदो गिरेः कन्दरेषु गुहासु च निक्षिप्य शृङ्गैः गिरिशृङ्गैरप्यधात्पिहितवान् पेशस्कारी भ्रमरः कीटमिव ॥ ७॥ एवमिति। विप्रकुर्वन् पीडयन् तत्र-तत्र कुलस्त्रीर्दूषयंश्च सललितं मधुरं गीतं श्रुत्वा रैवतकं पर्वतं ययौ ॥ ८॥

### श्रीविजयध्वजतीर्थकृता पदरत्नावली

वेलया समुद्रजलाभिवृद्ध्या कूलान्नीचभूमीः समुद्रतीरनिकटवर्तिदेशान् अनाशयदित्यर्थः ॥ ५॥ वैतानिकान् यज्ञसम्बन्धिनः ॥ ६॥ क्ष्माभृद्द्रोणीगुहासु पर्वतनितम्बगुहासु ॥ ७-९॥

### श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शिनी

वेला समुद्रजलं तत्कूलभवान् देशान् पुंस्त्वमार्षम् ॥ ५-६॥ अप्यधात् आच्छादयामास ॥ ७-८॥

### गूढार्थदीपिनी

नागायुतस्येव प्राणो बलं यस्य सः। वेला समुद्रजलं तत्कूलभवान्। अत्र भवार्थेऽण्। संज्ञापूर्वकत्वात् वृद्ध्यभावः। आर्शं आद्यजन्तो वा ॥ ५॥ वैतानिकान् यज्ञसम्बन्धिनः ॥ ६॥ दृप्त गर्वितः। क्ष्माभृतोः पर्वतयोः द्रोणी अन्तरालभूमिः। अप्यधात् आच्छादयामास। पेशस्कारी भृङ्गीसंज्ञकः ॥ ७॥ विप्रकुर्वन् पीडयन् ॥ ८॥

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः

वेलायाः कूले वर्तमानान् ॥ ५॥ भग्ना वनस्पतयो येषु तथाभूतान् कृत्वा शकृन्मूत्रैर्मलमूत्रैः वैतानिकान् यज्ञीयान् ॥ ६॥ अप्यधात् छादयामास पेशस्कारी भ्रमरः ॥ ७॥ विप्रकुर्वन् पीडयन् ॥ ८॥

### श्रीमद्वल्लभाचार्य्यकृता सुबोधिनी

जलकृतोपद्रवमाह **क्वचित्समुद्रमध्यस्थ** इति। **दोर्भ्यामुद्धृत्येति** बाह्वोः स्थूलता निरूपिता। देशान् समुद्रतीरस्थान्। आपाततः केनापि मारयितुं न शक्य इति वक्तुं **नागायुतप्राण** इत्युक्तम्। दशसहस्रहस्तिबलः। वेलाकूले यस्येति मज्जने सौकर्यमुपपत्तिश्चोक्ता ॥ ५॥ साधारणानामुपद्रवमुक्त्वा वैदिकानामप्युपद्रवमाह **आश्रमानृषिमुख्यानामिति**। तेषां पूर्तस्येष्टस्य च नाशं करोतीति वक्तुं भग्नवनस्पतीन् कृत्वा **वैतानिकान्** वैदिकान् अग्नीन् गार्हपत्यादीन् अदूषयत्। नन्वेवं कृते स्वस्य कः

पुरुषार्थः, न हि ब्राह्मणा नरकस्यान्यस्य वा द्विष्टा भवन्ति, तत्राह खल इति। दुरात्मायम्। अतो निष्प्रयोजनमपि परोपतापार्थं करोतीति॥ ६॥ देशोपद्रवं पृथिव्यप्तेजोभिरुक्त्वा, वैदिकान् देशस्थानपि निरूप्य, अन्यान् स्त्रीपुरुषसाधारण्येन तदुपद्रुतान् निरूपयति पुरुषान्योषितो दृप्त इति। सहस्थितान् तत्सङ्गभङ्गार्थं रसं च बीभत्सयितुम्। दृप्त उच्छृङ्खलः। क्ष्माभृतः पर्वतस्य द्रोणीगुहासु द्रोण्यां उभयपर्वतमध्ये गुहासु च 'अत्र रमध्व'मिति उपहसन्निक्षिप्य अप्यधात्। शैलैस्तदुपरि पर्वतान् आरोपयति। तथाकरणे हेतुमाह पेशस्कारीव कीटकमिति। स हि स्वस्मरणेन स्वतुल्यः कीटो भवत्विति तथा करोति, तथायमपि विश्वस्यैव मदात्मकता भवतु, न भगवदात्मकत्वेति, तथा कृतवान्॥ ७॥ एवं सह्यमुपद्रवं निरूप्य, तदुपसंहरन् असह्यं निरूपयति एवं देशान्विप्रकुर्वन्निति। असह्यमेतत् दूषयंश्चेति। इतरदूषणं न दोषायेति कुलपदम्। अनेन नरकगृहाद्भगवता समानीतास्ता इति तथा करोतीति सूचितम्। एवमुत्कृष्टे पापे तेनैव मरणार्थं स्वयमेव समुद्यत इत्याह श्रुत्वा सुललितं गीतमिति। यथा सर्वे विषयान्वेन निराकृताः सर्वेषाम्, तथा सुललितमपि गीतम्। मयि स्थिते को वा गायतीति तन्निराकरणार्थं रैवतकं ययौ। तेनैव गीतानुमानात्॥ ८॥

## श्रीसुबोधिनी—सारः

कदाचित्समुद्रस्य मध्ये स्थितो नागानां हस्तिनामयुतं दशसहस्रं तद्वत्प्राणो बलं यस्य स दोर्भ्यां हस्ताभ्यां तज्जलं समुद्राम्भ उत्क्षिप्य उद्धृत्य वेलायाः कूले वर्त्तमानान् देशान् अबोडयत्॥ ५॥ भग्ना वनस्पतयो येषु तान् ऋषिमुख्यानां वसिष्ठादीनामाश्रमान् कृत्वा वैतानिकान् यज्ञार्हानग्नीन् शकृद्भिर्विष्ठाभिर्मूत्रैः खलो दुष्टोऽदूषयत्॥ ६॥ दृप्तो गर्वितः स द्विविदः पुरुषान् योषितः स्त्रीः क्ष्माभृतां भूधराणां द्रोणीषु गुहासु दीर्घह्रस्वासु निक्षिप्य शैलैः शिलाभिर्द्वारमप्यधात् अरुधत् पेशस्कारी भ्रमरः कीटमिव॥ ७॥ एवं देशान् विकारीकुर्वन् कुलस्त्रियो दूषयन् व्यभिचरन् सुललितं मंजुलं गीतं श्रुत्वा रैवतकं पर्वतं ययौ॥ ८॥

## श्रीविट्ठलरायात्मजश्रीवल्लभकृतलेखः

श्रुत्वा सुललितमित्यत्र। तेनैवेति। पशुत्वेन स्वराद्यज्ञानाल्लालित्येनैव गीतत्वमनुमितम्। अन्यथोच्चैर्भाषणमेव ज्ञातं स्यादित्यर्थः।

## गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

क्वचित् समुद्रमध्यस्थो दोर्भ्यां बाहुभ्यां तत्सामुद्रं जलमुद्धृत्योत्क्षिप्य वेलायां तीरे वर्तमानान् देशान् संन्यमज्जयत्। तत्र तत्सामर्थ्यमाह—नागानां गजानां अयुतस्य दशसहस्रस्य प्राणो बलं यस्य स इति॥ ५॥ ऋषिमुख्यानामाश्रमान् भग्ना वनस्पतयो वृक्षा येषां ते तथाभूतान् कृत्वा शकृता मलेन मूत्रैश्च तेषां वैतानिकान्, यज्ञियान् आहवनीयादीन् अग्नीनदूषयत्। 'एवं धर्ममार्गदूषणे को हेतुः' इत्यपेक्षायामाह—खल इति। दुरात्मेत्यर्थः॥ ६॥ दुष्टो द्विविदो वानरः क्ष्माभृतः पर्वतस्य द्रोणीषु गुहासु च पुरुषान् योषितश्च निक्षिप्य शैलैः शृङ्गैरप्यधात् पिहितवान्। तत्र दृष्टान्तमाह—पेशस्कारी भ्रमरः कीटमिवेति॥७॥ एवं देशान् विप्रकुर्वन् पीडयन् तत्र तत्र च कुलस्त्रीर्दूषयन् सुललितं मधुरं बलेन क्रियमाणं गीतं श्रुत्वा रैवतं पर्वतं ययौ॥ ८॥

## अन्वितार्थप्रकाशिका

क्वचिदिति॥ नागानां गजानाम् अयुतस्य दशसहस्रस्य प्राणो बलं यस्य सः क्वचित्समुद्रमध्यस्थो दोर्भ्यां बाहुभ्यां तत्सामुद्रं जलमुद्धृत्योत्क्षिप्य वेलासमुद्रजलं तत्कूलभवान्। तत्र भव इत्यण्। संज्ञापूर्वकत्वान्न वृद्धिः। यद्वाऽत्र लक्षणा। पुंस्त्वं त्वार्षम्। कूलशब्दादर्श आद्यजित्यन्ये। कूले इत्यपि पाठः। देशान् संन्यमज्जयत्॥ ५॥ आश्रमानिति॥ खलः सः ऋषिमुख्यानामाश्रमान् भग्ना वनस्पतयो वृक्षा येषां वै तथाभूतान् कृत्वा शकृता मलेन मूत्रैश्च तेषां वैतानिकान् यज्ञियान् आहवनीयादीन् अग्नीनदूषयत्। अग्निषु शकृन्मूत्राण्युत्सृष्टवान्॥ ६॥ पुरुषानिति॥ स दुष्टो द्विविदः। दृप्त इत्यपि पाठः। क्ष्माभृतः पर्वतस्य द्रोणीषु सन्धिषु गुहासु च पुरुषान् योषितश्च निक्षिप्य शैलैः शृङ्गैरप्यधात् पिहितवान्। यथा पेशस्कारी भ्रमरः कीटकमपिदधाति तथा॥ ७॥ एवमिति॥ एवं देशान् विप्रकुर्वन् पीडयन् तत्र तत्र च कुलस्त्रीर्दूषयन् सुललितं मधुरं बलेन क्रियमाणं गीतं श्रुत्वा रैवतं पर्वतं ययौ॥ ८॥

## श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्

तस्य सागरस्य जलं दोर्भ्यां उत्क्षिप्योद्धृत्य गजायुतबलः। वेलायाः कूले जलस्पृष्टस्थानस्योपरिभागे स्थितान् देशान्। अमज्जयन् प्लावयामास॥ ५॥ वैतानिकान् यजनस्थानस्थितान् शकृन्मूत्रैः विण्मूत्रैः अदूषयत्॥ ६॥ क्ष्माभृतः पर्वतस्य द्रोण्यो गर्त्ताः गुहाश्च तासु पुरुषान् योषितश्च निक्षिप्य शैलैः शृङ्गैः अप्यधात् आच्छादयामास यथा पेशस्कारी पेशस्करिणी भ्रमरी कीटकं तथा पुंस्त्वमत्रार्षं॥ ७॥ विप्रकुर्वन् पीडयन्॥ ८-९॥

## भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

क्वचिदिति ॥ क्वचित् कदाचित्, नागायुतप्राणः दशसहस्रहस्तिबलः, द्विविदः समुद्रमध्यस्थः सन्, दोर्भ्यां बाहुभ्यां, तज्जलं सामुद्रं जलं, उद्धृत्योत्क्षिप्य, वेलाकूले, वर्त्तमानानिति शेषः। देशान् न्यमज्जयत् प्लावयामास ॥ ५ ॥ आश्रमानिति ॥ खलः सः, ऋषिमुख्यानां आश्रमान्, भग्नाः वनस्पतयो वृक्षा येषां तान् कृत्वा, दग्धवनस्पतीनिति पाठे, दग्धा भस्मसात् कृताः वनस्पतयो येषां तथाभूतान् कृत्वेत्यर्थः। वैतानिकान् यज्ञीयान्, अग्नीनाहवनीयादीन्, शकृन्मूत्रैः, अदूषयत् ॥ ६ ॥ पुरुषानिति। दृप्तो बलगर्वितः, स द्विविदः, पुरुषान्, योषितश्च, क्ष्माभृद्द्रोणीगुहासु पर्वतसंबन्धिकन्दरासु गुहासु चेत्यर्थः। पेशस्कारो भ्रमरविशेषः, कीटकं इव, निःक्षिप्य, शैलैः अप्यधात् पिहितवान् ॥ ७ ॥ एवमिति ॥ एवममुना प्रकारेण, देशान्, विप्रकुर्वन्, पीडयन्, कुलस्त्रियः दूषयंश्च, द्विविदः, सुललितं गीतं श्रुत्वा, रैवतकं गिरिं, ययौ ॥ ८ ॥

## कृष्णप्रिया

वह द्विविद वानर दस हजार हाथियों के बल वाला था। कभी-कभी वह खल समुद्र के बीच में खड़ा रहकर दोनों हाथों से रत्नाजल उछालता था कि समुद्र के तट के देश भी डूब जाते थे ॥ ५ ॥ वह खल उत्तम बड़े समर्थ ऋषि मुनियों के आश्रमों के लता-वनस्थलियों को तोड़ मरोड़ कर धराशायी कर देता था और यज्ञसम्बन्धी यज्ञकुण्डों में मल-मूत्र डालकर अग्नियों को दूषित कर देता था ॥ ६ ॥ जैसे भृङ्गी नामका कीट और कीटों को ले जाकर अपने बिल में कैद कर देता हैं वैसे ही मदोन्मत्त वह द्विविद स्त्रियों को और पुरुषों को ले जाता था और पर्वतों की कन्दराओं में रख देता था और बड़ी-बड़ी चट्टानें रख कर गुहों के द्वारों को बन्द कर देता था ॥ ७ ॥ इस प्रकार देशवासियों को त्रास देता था और कुलीन स्त्रियों को भी दूषित कर देता था। एक दिन वह दुष्ट द्विविद माधुर्यपूर्ण संगीत सुनकर रैवतक गिरिवर पर गया ॥ ८ ॥

**तत्रापश्यद् यदुपतिं रामं पुष्करमालिनम्। सुदर्शनीयसर्वाङ्गं ललनायूथमध्यगम् ॥ ९ ॥**
**गायन्तं [१]वारुणीं पीत्वा मदविह्वललोचनम्। विभ्राजमानं वपुषा [२]प्रभिन्नमिव वारणम् ॥ १० ॥**
**दुष्टः शाखामृगः शाखामारूढः कम्पयन्[३] द्रुमान्। चक्रे किलकिलाशब्दमात्मानं सम्प्रदर्शयन् ॥ ११ ॥**
**तस्य धाष्टर्यं कपेर्वीक्ष्य तरुण्यो जातिचापलाः[४]। हास्यप्रिया विजहसुर्बलदेवपरिग्रहाः ॥ १२ ॥**

## कर्दमक्षमा

अन्वयः—तत्र, पुष्करमालिनम्, यदुपतिम्, रामम्, सुदर्शनीयसर्वाङ्गम्, ललनायूथमध्यगम्, अपश्यत् ॥ ९ ॥ वारुणीम्, पीत्वा, गायन्तम्, मदविह्वललोचनम्, वपुषा, विभ्राजमानम्, प्रभिन्नम्, वारणम्, इव, तत्र, अपश्यत् ॥ १० ॥ दुष्टः, शाखामृगः, शाखारूढः, द्रुमान्, कम्पयन्, आत्मानम्, सम्प्रदर्शयन्, किलकिलाशब्दम्, चक्रे ॥११॥ जातिचापलाः, हास्यप्रियाः, तरुण्यः, बलदेवपरिग्रहः, तस्य, कपेः, धाष्टर्यम्, वीक्ष्य, विजहसुः ॥ १२ ॥

## श्रीधरस्वामिविरचिता भावार्थदीपिका

प्रभिन्नं मत्तम् ॥ १०-११ ॥ जात्या स्वभावेनैव चापलं यासां ताः ॥ १२ ॥

## श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

तत्र रैवतके ॥ ९ ॥ गलन्मदो गजः प्रभिन्नः ॥ १० ॥ किलकिलेति वानरजातिशब्दानुकरणम् ॥ ११ ॥ 'जातिर्जाति-निसर्गयोः' इति धरणिः। बलदेवस्य परिग्रहाः पत्न्यः "परिग्रहः परिजने पत्न्यां स्वीकारमूलयोः" इति मेदिनी ॥ १२ ॥

## श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी

तत्रेति युग्मकम्। यदूनां पतिमिति सर्ववैभवपूर्णत्वं परमसुखित्वादिकञ्चाह राममिति स्वभावत एव रमणरसिकत्वं पुष्करेति तदुपलक्षितविदग्धवन्यवेषत्वं सुदर्शनीयेति स्वतोऽपि सौन्दर्य्यं ललनेति तदुचितपरिकरशोभमानत्वम् ॥ ९ ॥ गायन्तमिति। वैदग्धीं विलासञ्च मदेति तत्र स्वाभाविकं विलासं वारुणीमिति तत्र तत्रातिशयं विभ्राजमानमिति तेजस्वित्वं दृष्टान्तस्तु प्राकृतश्रोतृचित्ते तत्तद्विशेषमाधुरीस्फूर्त्तिसोपानत्वाय ॥ १० ॥ एकशाखारूढत्वेऽपि बहुद्रुमकम्पनमतिघनीभूतत्वात् किलकिलाशब्दमव्यक्तरावमित्यर्थः। प्रकर्षेण बृहत्त्वप्रकटनेन तत्रापि सम्यक्त्वेन पराक्रमप्रकटनेन च दर्शयन् ॥ ११ ॥ विशेषेण उच्चैर्जहसुः यतो हास्यमेव प्रियं यासां ताः तत्र हेतुः जातीति तत्रापि तरुण्य इति नच महादुष्टादपि तस्माद्भयादिकमित्याह— बलेति ॥ १२ ॥

---

१. मदिरां–विज. । २. प्रमत्त–प्रा. पा. । ३. रुषा–प्रा. पा. । ४. चापलं–विज. ।

### श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी

सुललितगीतकरणमेव दर्शयितुं श्रीरामस्य क्रीडां वदन् तद्धेतुत्वेन तद्देशादिकं वर्णयति—तत्रेति द्वाभ्याम् । यदूनां पतिमिति सर्व्ववैभवपूर्णत्वं परमसुखित्वादिकञ्च, तथा यदुषु तदपकाराशक्तिञ्च सूचयति । राममिति श्रीरेवत्यादिभिः सह तत्र क्रीडनाभिप्रायेण; पुष्करेति वेशमुद्दिश्य सौन्दर्य्यमाह । ललना परमसुन्दरस्त्रियः श्रीरेवत्याद्यास्तासां यूथं समूहस्तन्मध्यगमिति ॥ ९ ॥ माधुर्य्यमाह—मदेति, प्रभावमाह—वपुषेव पुष्ट्यादिमता महातेजस्विना रत्नालंकाराद्यनपेक्षयापि विशेषतः सूर्य्यचन्द्रादिभ्योऽप्याधिक्येन भ्राजमानम् । विशेषणानामेषां यथोत्तरं क्रीडोपकरणत्वे श्रेष्ठ्यम् ॥ १० ॥ किलकिलेति तज्जातिशब्दानुकरणम् । सम्यक् सर्वांगप्रतारणादिना प्रकर्षेण च निकटागमनादिना दर्शयन् ॥ ११ ॥ विशेषेणोच्चैर्जहसुः, यतो हास्यमेव प्रियं यासां ताः, तत्र हेतुः-जातीति, तत्रापि तरुण्य इति, न च महादुष्टादपि तासां किञ्चिद्भयादिकमित्याह—बलेति ॥१२॥

### श्रीमद्वीरराघवाचार्यकृता भागवतचन्द्रचन्द्रिका

तत्रेति । तत्र रैवतकोपवने पुष्करमाला पद्ममालाऽस्यास्तीति तथा तं व्रीह्यादित्वान्मत्वर्थीय इनिः सुष्ठु दर्शनीयानि सर्वाण्यङ्गानि यस्य तं योषित्समूहमध्यगतम् ॥ ९ ॥ गायन्तमिति । वारुणीं मदिरां पीत्वा मदेन विह्वले घूर्णिते लोचने यस्य तं प्रभिन्नं मत्तं वारणमैरावतमिव स्थितं राममपश्यदितिसम्बन्धः ॥ १० ॥ दुष्ट इति । दुष्टश्चासौ शाखामृगश्च शाखामृग इत्यनेन स्वभावत एव दौष्ट्यं व्यज्यते । दुष्ट इत्यनेन तत्रापि किलकिलेत्यनुकरणम् आत्मानं स्वशरीरं दर्शयाञ्चक्रे ॥ ११ ॥ तस्येति । तस्य द्विविदस्य धाष्ट्यं दौष्ट्यं प्रागल्भ्यं दृष्ट्वा जात्या स्वभावेनैव चापलं यासां हास्यं प्रियं यासां ताः परिगृह्णन्त इति परिग्रहाः बलदेवस्य परिग्रहाः तत्प्रतिगृहीता इत्यर्थः । हेतुगर्भाण्येतानि अतो विजहसुः प्रहसितवत्यः ॥ १२ ॥

### श्रीविजयध्वजतीर्थकृता पदरत्नावली

प्रभिन्नं मदजलस्राविणम् ॥ १०-११ ॥ कपिजातिचापलं दृष्ट्वा ॥ १२ ॥

### श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शिनी

प्रभिन्नं मत्तम् ॥ ९-११ ॥ जात्या स्वभावेन चापलमगाम्भीर्य्यं यासां ताः ॥ १२ ॥

### गूढार्थदीपिनी

तत्रेति युग्मम् । प्रभिन्नं मत्तं गजमिव ॥ ९-११ ॥ जात्या स्वभावेनैव चापलाः । परिग्रहाः पत्न्यः । परिग्रहः परिजनं पत्न्याम्—इति मेदिनी ॥ १२ ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

प्रभिन्नं मत्तम् ॥ ९-१० ॥ जात्या स्वभावेन चापलं यासां ताः तत्रापि तरुण्यः विजहसुः हास्यं चक्रुः ॥ ११ ॥ हेलयामास भ्रूक्षेपैः सन्मुखागमनादिभिः आदिना दन्तप्रदर्शनादिसङ्ग्रहः रामस्य पश्यत इत्यनादरे षष्ठी राममनादृत्य तासां स्वगुदं दर्शयन् ताः हेलयामास अवज्ञातवान् ॥ १२ ॥

### श्रीमद्वल्लभाचार्य्यकृता सुबोधिनी

ततो गीतकर्तारं दृष्टवानित्याह तत्रापश्यदिति । तस्य मात्सर्योत्पत्त्यर्थं रामस्य दशगुणान्वर्णयति । एतावन्त एव गुणा इति । तत्रादावैश्वर्यं दृष्टवानित्याह यदुपतिमिति । यादवानां स्वामी । स्वामिचिह्नानि बिभर्तीति । तथा ज्ञानं परिचयोऽप्यस्तीति वा । अनेन कर्तुमकर्तुमन्यथाकर्तुं सामर्थ्यमुक्तम् । इदं लौकिकम् । अलौकिकमाह राममिति । विभक्तवीर्यत्वात् । सर्वलोकानुरञ्जनमपि तस्यासाधारणो गुणः । स्वरूपतः कार्यतश्चोत्कर्ष उक्तः । पुष्करमालिनमिति । कमलमालया लक्ष्म्या वृत इति ज्ञापयन् भूषितत्वमाह इत्यैश्वर्यादयस्त्रय उक्ताः । सुष्ठु दर्शनीयानि सर्वाण्यङ्गानि यस्येति । सौन्दर्येण शारीरकीर्तिरुक्ता । ललनायूथमध्यगमिति । बहिः कीर्तिरुक्ता । शोभाजनिवेयं कीर्तिरिति ॥ ९ ॥ गायन्तमिति । स्वानन्दपूर्णता ज्ञानफलरूपा निरूपिता । वारुणीं पीत्वेति । देहविस्मरणं ज्ञानफलं द्विविधमप्युक्तम् । मदेन विह्वले लोचने यस्येति बहिर्ज्ञानदृष्टिः विह्वला वैराग्यफलरूपा निरूपिता । विभ्राजमानं वपुषेति । विगतभ्राजनं वा विशिष्टभ्राजनं वा विकलतया उभयमपि वैराग्यकार्यं भवति । शरीरेण विराजमानम् । ततो वैराग्यस्वरूपमाह प्रभिन्नमिव वारणमिति । स ह्यमर्यादो भवति, यः प्रकर्षेण भिन्नः स्रवन्मदः । एवं कारणफलसहिताः षड्गुणा भगवति निरूपिताः ॥ १० ॥ एतादृशमपि दृष्ट्वा स्वदौष्ट्यं प्रकटितवानित्याह दुष्टः शाखामृग इति । भगवन्तं दृष्ट्वा किलकिलाशब्दं चक्रे । तज्जातीयशब्दः तादृशः । यदा सर्वस्मिन्महत्त्वबुद्धिर्भवति, तदा स्वजातिशब्दं कुर्वन्ति । प्रकृते तु भगवन्तमपि दृष्ट्वा तथाकरणे हेतुर्दुष्ट इति । दोषस्तस्य सहज इति ख्यापयितुं शाखामृग इति । भूमि

भूरुहं वा नाश्रयति, किन्तु शाखा एव। शाखां चारूढ इति स्वल्पः स्वस्थाने स्थितो मत्तो भवतीति सूचितम्। द्रुमान् कम्पयन्निति। स्वाश्रयाश्रयाणामप्यवगणना निरूपिता। तादृशस्येश्वरावगणना युक्तेति। निलीय रसजननार्थमपि तथा कुर्यादिति पक्षं व्यावर्तयितुमाह आत्मानं सम्प्रदर्शयन्निति। स्वस्वरूपं गुह्यदेशं वा ॥ ११ ॥ अल्पस्यैवंकरणमयुक्तमिति भण्डमिव तं दृष्ट्वा केवलेन तेन क्षोभो न भवेदपीति स्त्रीणां हास्यमाह तस्य धाष्ट्र्यं कपेर्वीक्ष्येति। तस्यापराधकरणाद्वध्यस्य। कपेस्तुच्छजीवस्य। धाष्ट्र्यं तथाकरणम्। वीक्ष्य। तरुण्यो जात्यैव चपलाः, वयोऽपि स्वभावोऽपि तासामस्थिरतां सम्पादयतीति। हास्यमेव प्रियं यासामिति इन्द्रियान्तःकरणधर्मोऽपि तादृश इति। बलदेवस्य निर्भयस्य पूर्वोक्तस्य वा परिग्रहाः विवाहिताः स्त्रियः सर्वथा निर्भयाः। अनियामकानां चतुर्विधगुणानां विद्यमानत्वात् विजहसुः। रामस्तु न किञ्चिदुक्तवान्, गणनाया एवाभावात् ॥ १२ ॥

### श्रीसुबोधिनी-सारः

तत्र पर्वते यदूनां पतिं कमलमालिनं सुष्ठु दर्शनीयानि सर्वाण्यंगानि यस्य तं ललनानां स्त्रीणां यूथस्य मध्यगं मध्यवर्तिनं राममपश्यत् ॥ ९ ॥ वारुणीं मदिरां पीत्वा गायंतं मदेन विह्वले लोचने यस्य तं वपुषा शरीरेण विभ्राजमानं प्रकाशमानं प्रभिन्नं मत्तं वारणं गजमिव ॥ १० ॥ दुष्टः पापी शाखामृगो द्विविदः शाखामारूढो द्रुमान् वृक्षान् कंपयन् आत्मानं स्वदेहं संप्रदर्शयन् किलकिलाशब्दं चकार ॥ ११ ॥ तस्य कपेः धाष्ट्र्यम् औद्धत्यं वीक्ष्य दृष्ट्वा जात्या स्वभावेनैव चापलं यासां हास्यं प्रियं यासां बलदेवः परिग्रहो रक्षको यासां ताः तरुण्यो युवत्यो जहसुः ॥ १२ ॥

### श्रीविट्ठलरायात्मजश्रीवल्लभकृतलेखः

तत्रापश्यदित्यत्र। दशगुणानिति। विभ्राजमानमित्यस्यार्थद्वयमभिप्रेत्य दशेत्युक्तम्। संख्यातात्पर्यमाहुः एतावन्त इति। दशविधैव लीलेत्यर्थः।

इत्यष्टादशाध्यायव्याख्या समाप्ता।

### गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

तत्र रैवतकोपवने राममपश्यत्। तं विशिनष्टि—यदुपतिं यादवानां पालकम्। पुष्करं कमलं तस्य माला अस्यास्तीति तथा तम्। सुदर्शनीयानि सर्वाण्यङ्गानि यस्य तम् ॥ ९ ॥ मदिरामदेन विह्वले घूर्णिते लोचने यस्य तम्। प्रभिन्नं मत्तं वारणं गजमिव वपुषा विभ्राजमानम् ॥ १० ॥ स दुष्टः शाखामृगो वानरः शाखामारूढः सन् द्रुमान् कम्पयन् तेनात्मानं संप्रदर्शयन् 'किलकिल' इति वानरजातिशब्दं चक्रे ॥ ११ ॥ तस्य द्विविदस्य धाष्ट्र्यं प्रागल्भ्यं दृष्ट्वा तरुण्यो विजहसुरित्यन्वयः। तत्र हेतुगर्भाणि विशेषणान्याह—जात्या स्वभावेनैव चापलं यासां ताः। हास्यं प्रियं यासां ताः। बलदेवस्य परिग्रहो यासां ताः, अनेन तासां भयाभावोऽपि सूचितः ॥ १२ ॥

### अन्वितार्थप्रकाशिका

तत्रेति युग्मम् ॥ तत्र रैवतकोपवने यदुपतिं यादवानां पालकं पुष्करं कमलं तस्य माला अस्यास्तीति तथा तं सुदर्शनीयानि सर्वाण्यङ्गानि यस्य तं ललनानां यूथस्य मध्यगं वारुणीं मदिरां पीत्वा गायन्तं मदिरामदेन विह्वले घूर्णिते लोचने यस्य तं प्रभिन्नं मत्तं वारणं गजमिव वपुषा विभ्राजमानं राममपश्यत् ॥ ९-१० ॥ दुष्ट इति ॥ स दुष्टः शाखामृगो वानरः शाखामारूढः सन् द्रुमान् कम्पयन् तेनात्मानं संप्रदर्शयन् किलकिलेति वानरजातिशब्दं चक्रे ॥ ११ ॥ तस्येति ॥ तस्य द्विविदस्य धाष्ट्र्यं दृष्ट्वा जात्या स्वभावेनैव चापलं यासां ताः हास्यं प्रियं यासां ता बलदेवस्य परिग्रहो यासां ता अतो निर्भयाः तरुण्यो विजहसुः ॥ १२ ॥

### श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्

प्रभिन्नं मत्तं वारणं गजमिव ॥ १० ॥ एकशाखामारूढस्तत्समीपस्थान् बहुद्रुमान् कंपयन् शाखामृगो वानरः किलकीलाशब्दं वानरजातिरवं ॥ ११ ॥ धाष्ट्र्यं दुश्चेष्टितं बलदेवस्य परिग्रहाः युवत्यः ॥ १२ ॥

### भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

तत्रेति ॥ गायन्तमिति ॥ तत्र रैवतकोपवने, पुष्करमाला पद्ममालाऽस्यास्तीति तं, व्रीह्यादित्वात् मत्वर्थीय इनिः। सुष्ठु दर्शनीयानि सर्वाण्यङ्गानि यस्य तं, ललनायूथमध्यगं योषित् समूहमध्यगतं, वारुणीं मदिरां, पीत्वा, गायन्तं मदेन विह्वले विघूर्णिते लोचने यस्य तं, प्रभिन्नं मत्तं वारणमैरावतमिव, स्थितं, वपुषा विभ्राजमानं, यदुपतिं रामं, अपश्यत्, द्वयोरेकसंबन्धः ॥ ९-१० ॥ दुष्ट इति ॥ दुष्टः, द्रुमान्, कम्पयन्, शाखां वनरपतेरिति शेषः। आरूढः सन्, शाखामृगो वानरो द्विविदः,

आत्मानं स्वशरीरं, संप्रदर्शयन्, स्वगुह्याङ्गप्रेक्षणं कारयन्नित्यर्थः। किलकिलाशब्दं, चक्रे ॥ ११ ॥ तस्येति ॥ जातिचापलाः जातित एव चपलतोपेताः, तत्रापि बलदेवपरिग्रहाः, हास्यप्रियाः, तरुण्यः स्त्रियः, तस्य कपेर्वानरस्य, धाष्टर्यं प्रागल्भ्यं दौष्ट्य-मित्यर्थः। वीक्ष्य, विजहसुः। जातिचापलाः इत्यादीनि विशेषणानि हेतुगर्भाणि। तत्त्वात् जहसुः ॥ १२ ॥

**कृष्णप्रिया**

वहाँ उसने देखा कि यदुवर भगवान् श्री बलरामजी युवती सर्वाङ्गसुन्दरी व्रजनारियों के वृन्द में विराजमान हैं। श्रीबलभद्रजी सर्वाङ्ग सुन्दर और अत्यन्त दर्शनीय स्वरूप हैं और उनके श्रीवक्षःस्थल पर वनमाला विराजमान है ॥ ९॥ श्रीदाऊजी सुगन्धमय मधु का पान करके हृदयंगम संगीत का गान कर रहे थे और बलभद्रजी आनन्दोल्लास से विह्वल हो रहे थे। उनका श्रीविग्रह किसी मदमत्त गजराज के समान शोभायमान हो रहा था ॥ १० ॥ वह दुष्ट द्विविद वानर वृक्षों की शाखाओं पर चढ़ जाता था और सम्पूर्ण शाखाओं को झक-झोर देता था, कभी तो स्त्रियों के सामने किलकारी भी करता था ॥ ११ ॥ तरुणी नारियाँ स्वभाव से चंचल होती हैं। हास-परिहास में सहज अनुराग रखती हैं, अतः इस द्विविद वानर की धृष्टता को देख बलभद्रजी की स्त्रियाँ हंसने लगीं ॥ १२ ॥

**ता हेलयामास कपिर्भ्रूक्षेपैः सम्मुखादिभिः। दर्शयन् स्वगुदं तासां रामस्य च निरीक्षतः ॥ १३ ॥**
**तं ग्राव्णा प्राहरत् क्रुद्धो बलः प्रहरतां वरः। स वञ्चयित्वा ग्रावाणं मदिराकलशं कपिः ॥ १४ ॥**
**गृहीत्वा हेलयामास धूर्तस्तं कोपयन् हसन्। निर्भिद्य कलशं [१]दुष्टो वासांस्यास्फोटयद् बलम् ॥ १५ ॥**
**कदर्थीकृत्य बलवान् विप्रचक्रे मदोद्धतः। तं [२]तस्याविनयं दृष्ट्वा देशांश्च तदुपद्रुतान् ॥ १६ ॥**

**कर्दमक्षमा**

अन्वयः—सः, कपिः, भ्रूक्षेपैः, सम्मुखादिभिः, तासाम्, च, रामस्य, निरीक्षतः स्वगुदम्, दर्शयन्, ताः, हेलयामास ॥१३॥ क्रुद्धः, प्रहरताम्, वरः, बलः, तम्, ग्राव्णा, प्राहरत्, सः, कपिः, तम्, ग्रावाणम्, वञ्चयित्वा, मदिराकलशम्, गृहीत्वा, धूर्तः, कलशम्, निर्भिद्य, तम्, हेलयामास, दुष्टः, वासांसि, आस्फालयत् ॥ १४-१५ ॥ मदोद्धतः, बलवान्, सः, तम्, ( रामम् ) कदर्थीकृत्य, विप्रचक्रे, तस्य, अविनयम्, दृष्ट्वा, च, देशान्, तदुपद्रुतान्, दृष्ट्वा ॥ १६ ॥

**श्रीधरस्वामिविरचिता भावार्थदीपिका**

हेलयामासावजज्ञे। निरीक्षतो निरीक्षमाणस्य तमनादृत्येत्यर्थः ॥ १३-१४ ॥ आस्फालयद्योषितां वासांस्याकृष्य पाटितवान् ॥ १५ ॥ विप्रचक्रे एवमपकृतवान् ॥ १६ ॥

**श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः**

ता बलदेवपत्नीः। भ्रूक्षेपैर्भ्रूचालनैः। इत्यर्थ इति—अनादराधिक्यषष्ठ्याऽयमर्थ इति भावः ॥ १३ ॥ तं द्विविदम्। ग्राव्णा पाषाणेन 'पाषाणग्रावप्रस्तराः' इति कोशात्। स द्विविदः ॥ १४ ॥ तं बलम्। 'स्फाल—कूर्दनपाटनयोः' चुरादिः ॥१५॥ कदर्थीकृत्य तिरस्कृत्य। तस्य द्विविदस्य। अविनयमौद्धत्यम् "विनया तु कलायां स्त्री शिक्षायां प्रणतौ पुमान्" इति मेदिनी। तदुपद्रुतान् द्विविदकृतोपद्रवयुक्तान् ॥ १६-१७ ॥

**श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी**

सम्यक् नानागतिसुखं यत्र तदादिभिः तासां ताः प्रति ॥ १३ ॥ तमित्यर्द्धकम् ॥ १४ ॥ कोपयन् कोपयितुं हसन् यद्वा पूर्वं कोपयन् पश्चात्तद्दर्शनेन हसन् बलं सर्वतोऽधिकबलमपि कदर्थीकृत्य मुहुः खेदयित्वा यतो मदेन गर्वेणोद्धतः अविनीतः उच्चैर्हत इति तु श्लेषः हेतुः बलवानिति ॥ १५ ॥ देशांश्चेतदुपप्लवेनैव भग्नान् दृष्ट्वा अनुसन्धाय ॥ १६ ॥

**श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी**

सम्मुखं विविधभंग्या मुखप्रदर्शनं मुखविक्रिया वा, आदिशब्दात् दन्तदर्शन-वाग्विकारादयः, तासां ताः प्रत्येव च, अपि निरीक्षमाणस्यापि ॥ १३ ॥ बलत्वात् प्रहरतां मध्ये वरोऽपि तथा क्रुद्धोऽपि ग्राव्णैव प्राहरत्, न तु मुषलेन,—तस्य पूर्व-भक्त्यपेक्षयेत्यर्थः। स तु महादुष्टतामेवातनोदित्याह—स इति द्वाभ्याम्। वञ्चयित्वा द्रुतमुत्प्लुत्यान्यत्र गमनेनातिक्रम्य ॥ १४ ॥

१. भृष्ठ—विज. । २. दृप्तो वासांस्याकृष्य योषितां—वीर. ; दुष्टो वासांस्यास्फा—श्रीधर. वंशी. जीव. विज. विश्व. । ३. तस्याव्य—बिज. ।

धूर्तः खलः, अत एव कोपयन् कोपयितुं हसन्, दुष्टः स्त्रीणां वस्त्रास्फालनात्; बलं सर्वतोऽधिकबलवन्तमपि कदर्थीकृत्य अवज्ञाय, यतो मदेन गर्वेणोद्धतोऽविनीत उच्चैर्हतो वा, मदे हेतुः—बलवानिति । ननु पूर्वभक्तयपेक्षया तस्याविनयः क्षन्तुं युज्येत, तत्राह—देशांश्चेति । अतः क्रुद्धः सन्, अत एव अरेर्निजप्रातिकूल्येनारित्वं प्राप्तस्य तस्य जिघांसया प्रहरणेच्छया आदत्त ॥१६॥

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम्

हेलयामास अपराधेन कलुषीचकार ॥ १५ ॥ विप्रचक्रे विकारः अनिष्टाचरणम् ॥ १६-१८ ॥

### श्रीमद्वीरराघवाचार्यकृता भागवतचन्द्रचन्द्रिका

ता इति । कपिर्द्विविदः भ्रूविक्षेपैः सम्मुखागमनादिभिः आदिशब्देन दन्तप्रदर्शनादिसङ्ग्रहः स्वगुदं तासां दर्शयन् रामस्य पश्यतस्तत एव ताः हेलयामास अवजज्ञे ॥ १३ ॥ तमिति । ग्राव्णा पाषाणेन तं कपिं प्राहरत् स कपिः तं रामं कोपयन् हसंश्च हेलयामास अवमतवान् ॥ १४ ॥ किञ्च; निर्भिद्येति । दृप्तो गर्वितः कलशं मदिरापात्रं निर्भिद्य योषितां वासांसि आकृष्य आत्मानं प्रापितवान् मदेनोद्धतो बलवांश्च कपिरेवं बलं रामं कदर्थीकृत्य तुच्छीकृत्य विप्रचक्रेऽपचकार तं कपिं तस्याविनयं धाष्ट्र्यं ( दौष्ट्यं ) तेनोपद्रुतान् देशांश्च विलोक्य ॥ १५-१६ ॥

### श्रीविजयध्वजतीर्थकृता पदरत्नावली

हेलयामास अवज्ञातांश्चक्रे सम्मुखादिभिः पुरः स्थित्यादिभिः ॥ १३-१८ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

हेलयामास अवज्ञातवान् सम्मुखादिभिः सम्मुखस्थितिगतिमूत्रणादिभिः तासां ताः रामस्य निरीक्षमाणस्येत्यनादरे षष्ठी ॥ १३-१४ ॥ वासांसि शय्योपरिस्थितानि आस्फालयत् आकृष्य पाटितवान् ॥१५॥ विप्रचक्रे एवमपकृतवान् ॥१६-१८॥

### गूढार्थदीपिनी

ताः पत्नीः । हेलयामास अवज्ञातवान् । भ्रूचालनैः ॥ १३ ॥ तमिति सार्द्धम् । ग्राव्णा पाषाणेन प्राहरत् । कलशं गृहीत्वा ॥ १४ ॥ वासांसि स्त्रीणां वस्त्राणि आस्फालयत् आकृष्य पाटितवान् । कदर्थीकृत्य तिरस्कृत्य । विप्रचक्रे अपकृतवान् ॥ १५ ॥ अविनयम् औद्धत्यम् । आदत्त गृहीतवान् ॥ १६ ॥

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः

ग्राव्णा पाषाणेन ॥ १३ ॥ तं रामं कोपयन् हेलयामास अवज्ञातवान् ॥ १४ ॥ आस्फालयत् पाटितवान् इत्थं विप्रचक्रे अपकृतवान् ॥ १५-१७ ॥

### श्रीमद्वल्लभाचार्य्यकृता सुबोधिनी

उभयम प स्वस्य हीनत्वापादकमिति तासामवगणनां कृतवानित्याह ता हेलयामासेति । अवहेला मुखतः जातिचेष्टाभिरपीत्याह । भ्रूक्षेपैः तिर्यक् निरीक्षणयुक्तैः । सम्यक् मुखं यत्रेति सम्मुखादिभिर्विकारैः । परितोऽग्रतश्च हेलनमुक्त्वा पृष्ठतोऽप्याह दर्शयन्स्वगुदं तासामिति । तूष्णींभावेनावगणित इति रामस्याप्यवहेलनं कृतवानित्याह रामस्य च निरीक्षत इति । निरीक्षतः सतस्तासामपि निरीक्षतीनां सतीनाम् । दर्शने सर्वेषां साधारणस्यापि सङ्कोचो भवति । अस्य तु तथात्वेऽपि न जातमिति दोषं वक्तुं वर्णितम् ॥ १३ ॥ ततो विचारमकृत्वैव अल्पदोषे अल्पैव शिक्षेति वा ज्ञापयितुं पाषाणप्रक्षेपमात्रं कृतवानित्याह तं ग्राव्णेति । वानराः कृतोपकारा दयाविषयाश्चेति उपेक्षां परित्यज्य किमिति ग्राव्णा प्राहरत्, तत्राह क्रुद्ध इति । क्रोधे तस्याल्पस्य महदतिक्रमो हेतुः । अनावेशात् हलमुशलस्मरणात्पूर्वं सर्वं कृतवान् । तेन नाविचारकृतो दोषः । बल इति । तस्य माहात्म्यं ज्ञात्वापि स्वस्य बलिष्ठत्वादेव तथा कृतवान् । काकादिष्विव केवलं निवारणार्थतां प्रहरणस्य निवारयति प्रहरतां वर इति । ततस्तेनैव व्यथितो भवेदिति तथा प्रकारं कृतवान् । स तु पूर्वं परमेश्वरस्य भक्त आसीदिति भगवत्कृपयैव तस्य जातं सामर्थ्यमनुवदति स वञ्चयित्वेति । तस्योद्धतस्य स्वत एव मरणार्थं प्रवृत्तस्य अपराधे असह्ये क्रोधान्मारणमिति वक्तुं तादृशमतिक्रममाह ग्रावाणं वञ्चयित्वा मदिराकलशं गृहीत्वा हेलयामासेति । यतो धूर्तः । पानव्यसनिनां तदपहारे महान् क्रोधो भवतीति जानाति । अपकारार्थं नेदं करणम्, किन्तु कोपयन् । केवलं कोपार्थताप्रदर्शनार्थं हसन् । तर्हि पानार्थं नयनं भविष्यतीत्याशङ्क्य अग्रे तत्कृतं चरित्रमाह निर्भिद्येति । कलशं निर्भिद्य । तथा कृते जीवनमपि गमिष्यतीति शङ्काभावायाह । ततः स्थापितानि जलक्रीडोत्तरं परिधेयानि स्त्रीणां बलस्य च वासांसि च निर्भिद्य, बहुधा छित्वा, ततो बलमास्फोटयत् । मल्ल इव

युद्धकरणार्थं बाहुस्फोटं कृतवान् ॥ १४-१५ ॥ नन्वल्पः कथमेवं करोतीत्याशङ्क्याह बलवानिति । ननु बलोऽपि बलवान्, नहि तुल्येऽप्येवं क्रियते, तत्राह कदर्थीकृत्येति । तुच्छीकृत्य । तदपि स्वमनस्येवेति वक्तुमाह मदोद्धत इति । विप्रचक्रे अपकारं कृतवान् । ततो बलः विचारपूर्वकं भगवदाविष्टः तद्वधार्थं यत्नं कृतवानित्याह तं तस्याविनयमिति । वस्तुतस्त्विदं द्वारमात्रम्, मुख्यस्तु अपराधः तदुपद्रुतान् देशान् विलोक्येति । यद्यपि पूर्वं दृष्टम्, तथापीदानीं स्मृतमित्येके । इदानीमेव भगवदावेश इति । तस्य चापरोक्षज्ञानमेव सर्वत्रेति इदानीमेव दृष्ट्वेति युक्तम् ॥ १६ ॥

### श्रीसुबोधिनी-सारः

भ्रुवः क्षेपैराक्षेपैः संमुखादिभिः ताः स्त्रीः कपिर्हेलयामासावजज्ञे तासां स्त्रीणां स्वगुदं दर्शयन् सन् रामस्य पश्यतः सतः ॥ १३ ॥ प्रहरतां वरः श्रेष्ठो बलः क्रुद्धस्तं कपिं ग्राव्णा दृषदा प्राहरत् ग्रावाणं वञ्चयित्वा स कपिर्मदिरायाः कलशं गृहीत्वा ॥ १४ ॥ धूर्तो हसन् तं रामं कोपयन् हेलयामास ताः कलशं निर्भिद्य भंक्त्वा धृष्टो द्विविदस्तासां वासांस्यास्फालयत् आकृष्यापाटयत् बलं रामं कदर्थीकृत्य तुच्छीकृत्यावज्ञाय तत्र हेतुः बलवान् मदव्याप्तो विप्रचक्रे विकारं कृतवान् ॥ १५ ॥ तस्य कपेस्तमविनयं धृष्टतां दृष्ट्वा तेनोपद्रुतान् दुःखितान् देशस्थान्देशांश्च दृष्ट्वा क्रुद्धो मुसलमादत्ताग्रहीत् अरेः शत्रोर्हन्तुमिच्छया हलं चादत्त ॥ १६ ॥

### गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

स द्विविदः रामस्य पश्यत एव सतस्तमनादृत्य भ्रूविक्षेपैः संमुखागमनादिभिः, आदिशब्देन दन्तप्रदर्शनादिभिश्च तासां स्वगुदं दर्शयन् ताः स्त्रीर्हेलयामास अवजज्ञे ॥ १३ ॥ बलश्च क्रुद्धस्तं वानरं ग्राव्णा पाषाणेन प्राहरत् । 'तत्प्रहारेणापि तस्य किं स्यात् प्रबलत्वात्' इत्याशङ्क्याह—प्रहरतां वर इति । स च कपिः हसन् बलं कोपयन् ग्रावाणं वञ्चयित्वा मदिराकलशं च गृहीत्वा तं हेलयामास अवमतवान् । तत्र हेतुमाह—धूर्त इति ॥ १४ ॥ ततश्च बलं कदर्थीकृत्य अगणयित्वा विप्रचक्रे तदपकारं कृतवान् । तदपकारमेवाह—मदिराकलशं निर्भिद्य योषितां वासांसि आस्फालयत् आकृष्य पाटितवान् । तत्र हेतुमाह—मदेनोद्धतः विवेकशून्यः । मदे हेतुमाह—बलवानिति । 'बलवत्त्वेपि यदि सुस्वभावः स्यात्तदा तस्य मदो न स्यात्' इत्याशङ्क्याह—धृष्ट इति ॥ १५ ॥ तस्य कपेस्तमविनयं दौष्ट्यं तेनोपद्रुतान् देशांश्च दृष्ट्वा क्रुद्धो रामः अरेस्तस्य जिघांसया हलं मुसलं चाददे ॥ १६ ॥

### अन्वितार्थप्रकाशिका

ता इति ॥ स द्विविदः रामस्य निरीक्षतः पश्यत एव सतः । अनादराधिक्ये भावलक्षणे षष्ठी । शता आर्षः । तासां स्त्रीणां स्वगुदं दर्शयन् भ्रूविक्षेपैः संमुखागमनादिभिः आदिशब्देन दन्तप्रदर्शनादिभिश्च ताः स्त्रीर्हेलयामास अवजज्ञे ॥ १३ ॥ तमिति सार्द्धम् ॥ प्रहरतां वरः बलश्च क्रुद्धस्तं वानरं ग्राव्णा पाषाणेन प्राहरत् । स च धूर्तः कपिः हसन् बलं कोपयन् ग्रावाणं वञ्चयित्वा मदिराकलशं च गृहीत्वा तं बलं हेलयामास अवमतवान् ॥ १४ ॥ निर्भिद्येति ॥ ततश्च दुष्टः बलवान् मदोद्धतः सः मदिराकलशं निर्भिद्य योषितां वासांसि शय्योपरिस्थितानि आस्फालयत् आकृष्य पाटितवान् । एवं बलं कदर्थीकृत्य अगणयित्वा विप्रचक्रे तदपकारं कृतवान् ॥ १५ ॥ तमिति ॥ तस्य कपेः तमविनयं दौष्ट्यं दृष्ट्वा तेनोपद्रुतान् देशांश्च श्रुत्वा क्रुद्धो रामः अरेस्तस्य जिघांसया हलं मुसलं चादत्त ॥ १६ ॥

### श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्

संमुखादिभिः संमुखमेत्य दंतदर्शनादिभिः ताः हेलयामास ता सामवज्ञां चकारेत्यर्थः ॥ १३ ॥ ग्राव्णा पाषाणेन ॥१४॥ धृष्टो दुष्टः आस्फालयद्विदारयामास कदर्थीकृत्य तिरस्कृत्य ॥ विप्रचक्रे अपमानं चक्रे ॥ १५-१६ ॥

### भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

ता इति ॥ रामस्य निरीक्षतः पश्यतः सतश्च, तासां स्वगुदं दर्शयन्, कपिर्द्विविदः, भ्रूक्षेपैः संमुखादिभिः संमुखागमनादिभिः, आदिशब्देन दन्तप्रदर्शनादेर्ग्रहणम् । ताः स्त्रियः, हेलयामास अवजज्ञे ॥ १३ ॥ तमिति ॥ प्रहरतां वरः बलः, क्रुद्धः सन्, तं कपिं, ग्राव्णा दृषत् पुत्रेण, प्राहरत् । सः कपिः, ग्रावाणं वञ्चयित्वा, मदिराकलशं गृहीत्वा, धूर्तः हेतुगर्भं, तत्त्वात् हसन् सन्, तं बलं, कोपयन्, हेलयामासावमतवान् ॥ १४ ॥ निर्भिद्येति ॥ दृप्तः द्विविदः, यतः, बलवान् मदोद्धतः, अतः बलं, कदर्थीकृत्य तुच्छीकृत्य, कलशं मदिराकुम्भं, निर्भिद्य, वासांसि योषितां वसनानि, आकृष्येति शेषः । आस्फालयन् विपाटयन्,

विप्रचक्रे तमपकृतवान् ॥ १५ ॥ तमिति ॥ क्रुद्धः बलः, तमुक्तप्रकारं, तस्य अविनयं दृष्ट्वा, देशांश्च, तदुपद्रुतांस्तेन पीडितान् दृष्ट्वा, अरिजिघांसया, मुसलं हलं च, आदत्त गृहीतवान् ॥ १६ ॥

### कृष्णप्रिया

अब वह दुष्ट द्विविद श्रीबलदेवजी के सामने ही उन सन्नारियों की अवहेलना और अनादर करने लगा। वह खल कभी अपनी उन नारियों को कभी गुप्ताङ्ग तो कभी भौंहें मटकाता कभी गर्जना करता करता अपमान करता था ॥१३॥ प्रहार करनेवालों में अत्यंत बलवान श्री बलरामजी ने क्रुद्ध होकर उस वानर पर एक पत्थर का टुकड़ा फेंका। लेकिन उस पत्थर प्रहार से अपने को बचाकर उस मधु-कलश को उठा लिया और बलभद्रजी का अनादर करने लगा। अन्ततोगत्वा उस धूर्त द्विविद ने मधुकलश को तो तोड़ ही डाला। स्त्रियों के वस्त्र भी फाड़ डाले। पुनः वारंवार हंसकर श्रीबलदेवजी को क्रोधित करने लगा ॥ १४-१५ ॥ महाराज! जब इस प्रकार यह खल द्विविद वानर श्रीबलभद्रजी को नीचा दिखाने का तथा श्रीबलरामजी को गुस्से करने कुचेष्टा आदि करने लगा तब उसकी दुष्टता को देखकर और समुद्र तट के देशों की दुर्दशा देखकर इस शत्रु का वध करना उचित है ॥ १६ ॥

**क्रुद्धो मुसलमादत्त हलं चारिजिघांसया। द्विविदोऽपि महावीर्यः [1]शालमुत्पाट्य[2] पाणिना ॥ १७ ॥**
**अभ्येत्य तरसा तेन बलं मूर्धन्यताडयत्। तं तु संकर्षणो मूर्ध्नि पतन्तमचलो यथा ॥ १८ ॥**
**प्रतिजग्राह [3]बलवान् [4]सुनन्देनाहनच्च[5] तम्। मुसलाहतमस्तिष्को विरेजे रक्तधारया ॥ १९ ॥**
**गिरिर्यथा गैरिकया प्रहारं [6]नानुचिन्तयन्। पुनरन्यं समुत्क्षिप्य कृत्वा निष्पत्रमोजसा ॥ २० ॥**

### कर्दमक्षमा

**अन्वयः—**क्रुद्धः, अरिजिघांसया, हलम्, च, मुसलम्, आदत्त, महावीर्यः, द्विविदः अपि, पाणिना, शालम्, उत्पाट्य ।१७। तरसा, अभ्येत्य, तेन, बलम्, मूर्ध्नि, अताडयत्, संकर्षणः, मूर्ध्नि, पतन्तम्, तम्, तु, यथा, अचलः ॥ १८ ॥ प्रतिजग्राह, च, बलवान्, संकर्षणः, सुनन्दनेन, तम्, अहनत्, मुसलाहतमस्तिष्कः ॥ १९ ॥ सः, प्रहारम्, न, अनुचिन्तयन्, किन्तु, गैरिकया, यथा, गिरिः, विरेजे, रक्तधारया, विरेजे, सः, पुनः, ओजसा, तम्, समुत्क्षिप्य, निष्पत्रम्, कृत्वा ॥ २० ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

शालं वृक्षम् ॥ १७ ॥ सुनंदेन मुसलेनाहनत्। अहन्नित्यर्थः ॥ तं वानरम्। मस्तिष्कं मस्तकावयवविशेषः ॥ १९ ॥ गैरिकया लोहितधातुना। नानुचिंतयन्नगणयन् ॥ २०-२३ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

अभ्येत्य संमुखमागत्य। तेन शालेन तं वृक्षम् ॥ १८ ॥ तं कपिम्। इत्यर्थ इति—शबार्षोऽत्रेति बोध्यम्। "सुनन्दो बलदेवस्य मुशले विष्णुपार्षदे" इति वारतांतविः। 'मस्तिष्कं मस्तकांतरम्' इति धरणिः ॥ १९ ॥ अन्यं वृक्षम्। समुत्क्षिप्योत्पाट्य ॥ २० ॥

### श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी

क्रुद्धः पुनरतिक्रुद्धः सन् [ पादेनैकेन ] पाणिनैकेनोत्पाट्य अभ्येत्य अभिमुखमेत्य ॥१७-१८॥ प्रतिजग्राह स्वीकृतवान् अचलो यथेति तस्य तेनाकिञ्चित् करत्वं सूचितं तदिदं च क्षमा पौनःपुन्यं तस्य श्रीराघवेन्द्रसेवाप्राग्भावमनुसन्धाय कृतमिति गम्यते। मुसलेति युग्मकं। नानुचिन्तयन्नित्यस्य परेणान्वयः ॥ १९-२० ॥

### श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी

ततः सोऽपि क्रुद्धः सन् निजविक्रमं दर्शयामासेत्याह— द्विविदोऽपीति। पाणिनैकेनोत्पाट्य, यतो महावीर्य्यः, अतस्तरसा वेगेनाभिमुखमेत्य तेन सालेन तं सालम्, अचलं यथेति तस्य गुरुत्वादिकं सूचितम्, प्रति आभिमुख्येन जग्राह, पाणिना हलेन वा, यतः संकर्षणो द्वितीयव्यूहः, अतो भगवान् साक्षादीश्वरः, तं द्विविदं प्राहरत्। यद्वा, युगपत् प्रतिग्रहणे हनने च

१. शैल-विज. । २. मुद्यम्य-श्रीधर. वंशी. जीव. वीर. विज. विश्व. । ३. भगवान्-च. पु. टि. । ४. मुसलेना-विज. । ५. द्रुहिरम्-विज. । ६. नान्व-विज. ।

योग्यतामाह— भगवान् सर्वशक्तिमान्, यतः संकर्षणः श्रीकृष्णादपृथग्भूतः। विशेषेण पूर्वतोऽप्याधिक्येन रेजेऽशोभत। तत्रैव हेत्वन्तरम्—प्रहारमनुचिन्तयन्निति महावीरस्वभावप्रदर्शनादिति भावः। यद्वा, अस्य परेणान्वयः॥ १९॥ अन्यं सालं सम्यक् समूलतयोत्क्षिप्य उत्पाट्य, ओजसा बलेन। सुसंक्रुद्धः सन् अहनत्, तं हन्तुं चिक्षेपेत्यर्थः। सुसंक्रुद्धः इति हननस्य दार्ढ्यादिकं सूचयति; एवमग्रेऽपि। जघ्ने द्विविदः, अभिनत् बलः; भगवतेऽपि, तथापि भक्तवात्सल्येन प्रायस्तत्प्रहारप्रतिकारमेवाकरोत्, न तु तं प्राणतो मारयतीति भावः॥ २२॥

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम्

सुनन्देनाहनत् मुसलेनाहनत्॥ १९–२३॥ अरूरुजत् अयोथवत्॥ २४–२८॥

इति श्रीमद्भागवतव्याख्याने दशमस्कन्धे श्रीसुदर्शनसूरिकृतशुकपक्षीये सप्तषष्टितमोऽध्यायः॥ ६७॥

### श्रीमद्वीरराघवाचार्यकृता भागवतचन्द्रचन्द्रिका

क्रुद्धो रामः हलं मुसलञ्चाददे। द्विविदोपीति। महद्वीर्यं यस्य सः द्विविदोपि सालवृक्षमुत्पाट्य॥ १७॥ बलमूर्द्धनि राममूर्द्धनि तेन सालेनाताडयत्। तमिति। पतन्तं तं सालं प्रतिजग्राह गृहीतवान् तत्प्रहारमङ्गीकृतवानित्यर्थः। यथा पर्वतः तद्वत्॥ १८॥ ततः सुनन्देन मुसलेन हरिं कपिमहनत्ताडयामास। मुसलेनाहतो मस्तिष्कः मस्तकावयवविशेषो यस्य सः अत एव रक्तधारया रेजे॥१९॥ यथा गिरिर्गैरिकधारया राजते तद्वत् ततस्तं प्रहारमनुचिन्तयन् पुनरन्यं रसालमोजसा बलेनोत्पाट्य पर्णरहितं कृत्वा॥ २०॥

### श्रीविजयध्वजतीर्थकृता पदरत्नावली

गैरिकया गिरिधातुरसधारया॥ १९–२०॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

मस्तिष्कं मस्तकमज्जा॥ १९–२८॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धीये श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे सप्तषष्टितमोऽध्यायः॥ ६७॥

### श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शिनी

सुनन्देन मुसलेन मस्तिष्कं मस्तकावयवविशेषः॥ १९–२३॥

### गूढार्थदीपिनी

अभ्येत्य सम्मुख आगत्य॥ १७॥ सुनन्देन मुसलेन॥ १८॥ मुसलेति युग्मम्। गैरिकया लोहितधातुना॥ १९॥ समुत्क्षिप्य उत्पाट्य॥ २०॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

तं सालं जग्राह तं वानरं सुनन्देन मुसलेन अहनत् ताडयामास॥ १८॥ मुसलेन आहतं मस्तिष्कं मस्तकावयवविशेषो यस्य सः॥ १९–२२॥

### श्रीमद्वल्लभाचार्य्यकृता सुबोधिनी

भगवता सहैव मुसलादीनामप्यागमनात् मुसलं हलं च तज्जिघांसया आधत्त। आयुधवच्चिह्नार्थमग्रहणमाह क्रुद्ध इति। भक्तत्वशङ्काव्यावृत्त्यर्थमरीति। चकारात् अन्येऽपि धर्मा भगवता आविष्कृता इति अलौकिकं बलमपि ज्ञातव्यम्। तावतापि न निवृत्त इति अक्लिष्टकर्मत्वं भगवतो वदन्नाह द्विविदोऽपीति। युद्धं वक्तुं तस्य प्रसिद्धनामग्रहणम्। महावीर्य इति। रामायणादौ तत्पराक्रमो निरूपितः स्मार्यते, युद्धस्मरणाभिनिवेशाय। एकेन पाणिना शालवृक्षमुत्पाट्येति बलस्य कार्यम्, न तु केवलं प्रशंसापरमिति ज्ञापयितुम्॥ १७॥ अभ्येत्य निकटे समागत्य, तरसा रामोद्यमात्पूर्वमेव तेन शालेन मूर्ध्नि प्रदेशे अताडयत्, गृहीत्वैव लकुटेनेव ताडितवान्। बलपदाच्छ्रोतुर्भयाभावः सूचितः। ततस्तन्निराकरणमाह तं तु सङ्कर्षण इति। पर्वते वृक्षप्रक्षेपः न पर्वतस्य भयजनक इति मूर्ध्नि पतन्तमपि वृक्षं यथा अचलः पर्वतो गृह्णाति॥ १८॥ तस्य हि वृक्षा लोमप्रायाः तं हस्तेन गृहीतवान्, वज्रेणेऽपि भूमिस्ताडिता भवतीति। ततः सुनन्देन मुसलेन तमाहनत् हतवान्। चकारात् वृक्षमपि तेनैव हत्वा तदुपरि प्रक्षिप्तवान्। तस्य वृक्ष इव मुसलमपि कार्यव्यभिचारि भविष्यतीत्याशङ्क्याह मुसलाहतमस्तिष्क इति। मस्तिष्कं मस्तकास्थि। ततो रुधिरप्रवाहोऽपि जातः। तेनापि विरेजे, नतु मूर्च्छितः, हतो वा॥ १९॥ ननु प्रहारेण सकार्येण कथं शोभेत्याशङ्क्य दृष्टान्तमाह गिरिर्यथा गैरिकयेति। नन्वाकृतिसाम्येऽपि अन्तर्दुःखानुभवात् म्लानतैव युक्ता, न तु शोभेति चेत्, तत्राह

प्रहारं नानुचिन्तयन् रेज इति पूर्वेण सम्बन्धः। उत्तरत्र वा पुनरन्यं समुत्क्षिप्येति। 'त्रिषत्या देवा' इति समानमपि युद्धं वारत्रयमुच्यते। त्रिर्यजुषेतिवत्। अन्यं मूलात्समुत्क्षिप्य निष्पत्रं च कृत्वा, अन्यथा सर्वाः अग्रभागे हस्ते धर्तुं न योग्या भवन्तीति मूलभागेन च ताडयितुं निष्पत्रकरणम्। ओजसेति शीघ्रम्॥ २०॥

### श्रीसुबोधिनी-सारः

महावीर्यो द्विविदोपि पाणिना हस्तेन शालमुद्यम्य गृहीत्वा तरसा बलेनाभ्येत्य प्राप्य तेन शालेन मूर्द्धनि शिरसि अताडयत् बलम्॥१७॥ अचलः पर्वत इव मूर्ध्नि पतन्तं तं शालं बलवान्संकर्षणः प्रतिजग्राह सुनंदेन मुसलेन तं द्विविदं चाहनत् गणकार्यस्यानित्यत्वात् हवामह इत्यादिवत्॥ १८॥ मुसलेनाहतं मस्तिष्कं शिरो यस्य स रक्तस्य रुधिरस्य धारया विरेजे गैरिकया गिरिः पर्वत इव प्रहारं कपिर्नागणयत्॥ १९॥ पुनरन्यं वृक्षमुत्पाट्य ओजसा बलेन निष्पत्रं कृत्वा सुसंक्रुद्धस्तेन वृक्षेणाहनत् बलस्तं शतधाच्छिनत्॥ २०॥

### गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

द्विविदोऽपि पाणिना शालवृक्षमुत्पाट्य तरसाऽभ्येत्य वेगेनागत्य बलं मूर्धन्यताडयत्। तत्र सामर्थ्यमाह—महावीर्य इति॥ १७॥ स्वमूर्धनि पतन्तं तं शालं सङ्कर्षणः प्रतिजग्राह हस्तेन गृहीतवान्। अचलो यथेति। पर्वतवत्तत्प्रहारवेगात् नाचलदित्यर्थः। तत्र सामर्थ्यमाह—भगवानिति। तं द्विविदं च सुनन्दाख्येन मुशलेनाहनत्॥ १८॥ मुशलेनाहतो मस्तिष्को मस्तकावयवविशेषो यस्य सः, अत एव गैरिकधारया यथा गिरिः राजते तथा रक्तधारया रेजे। ततश्च तत्प्रहारं नानुचिन्तयन् सुसङ्क्रुद्धः पुनरन्यं शालं समुत्क्षिप्य उत्पाट्य तं च निष्पत्रं कृत्वा तेन शालेन ओजसा वेगेन तं बलमहनत् तं प्रति चिक्षेप। तं च शालं बलः शतधाऽभिनत् चिच्छेद इति द्वयोरन्वयः॥ १९-२०॥

### अन्वितार्थप्रकाशिका

द्विविद इति॥ महावीर्यो द्विविदोऽपि पाणिना शालवृक्षमुत्पाट्य। उद्यम्येति च पाठः। तरसाऽभ्येत्य वेगेनागत्य बलं मूर्धन्यताडयत्॥ १७॥ तमिति॥ स्वमूर्धनि पतन्तं शालं भगवान् संकर्षणः प्रतिजग्राह हस्तेन गृहीतवान्। अचलो यथेति पर्वतवत्तत्प्रहारवेगात् नाचलदित्यर्थः। तं द्विविदं च सुनन्दाख्येन मुसलेनाहनत्। शब्लुगभाव आर्षः॥१८॥ मुसलेति युग्मम्॥ मुसलेनाहतो मस्तिष्को मस्तकावयवविशेषो यस्य सः अत एव गैरिकया गैरिकधारया यथा गिरिः राजते तथा रक्तधारया रेजे। ततश्च तत्प्रहारं नानुचिन्तयन् सुसंक्रुद्धः पुनरन्यं शालं समुत्क्षिप्य उत्पाट्य तं च निष्पत्रं कृत्वा तेन शालेन ओजसा वेगेन तं बलमहनत्। तं प्रति चिक्षेप। शब्लुगभाव आर्षः। तं च शालं बलः शतधाऽच्छिनत्॥ १९-२०॥

### श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्

शालतरुं उद्यम्य उत्पाट्येति वा पाठः॥ १७॥ सुनंदेन तत् संज्ञेन मुसलेन अहनत् अहन्॥ १८॥ मुसलेनाऽऽहतं मस्तिष्कं मस्तकैकदेशो यस्य सः नानुचिंतयन् अगणयन्॥ १९॥ अन्यं तरुं तं वृक्षं अहनत् अहन्॥ २०॥

### भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

द्विविदोऽपीति॥ महावीर्यः द्विविदः अपि, पाणिना, शालं शालतरुं, उत्पाट्य, तरसा, अभ्येत्य, तेन तरुणा, बलं मूर्द्धनि, अताडयत्॥ १७॥ तमिति॥ भगवान् संकर्षणः, अचलोपमं पर्वतोपमानं, मूर्ध्नि, पतन्तं तं तरुं तु, प्रतिजग्राह हस्तेन गृहीतवान्, अचलं यथेति पाठे, पतन्तमचलं यथा तथेत्यर्थः। अचलो यथेति पाठे, मूर्ध्नि पतन्तं तरुं यथाऽचलो गृह्णाति, तथा गृहीतवानदुःखं यथा तथाऽङ्गीकृतवान्। ततः, सुनन्देन मुसलेन, तं अरिं चापि, अहनत् अहन्। अहनदरिमित्यपि पाठः॥१८॥ मुसलेति॥ मुसलेन आहतो मस्तिष्को मस्तकावयवविशेषो यस्य सः, तथापि प्रहारं, न अनुचिन्तयन्, द्विविदः, रक्तधारया रुधिरधारया, गैरिकया गैरिकसंबन्धिन्या धारया, गिरिः पर्वतः यथा तथा, विरेजे॥ १९॥ पुनरिति॥ द्विविदः पुनः, ओजसा बलेन, अन्यं वृक्षं समुत्क्षिप्य, निष्पत्रं कृत्वा, सुसंक्रुद्धः सन्, तेनान्येन तरुणा, तं बलं, अहनत्। बलः शतधा अभिनदऽच्छिनत् तरुमिति शेषः। सः ततः, अन्येन, रुषा, जघ्ने। बलः तं चापि, शतधा अभिनत्॥ २०॥

### कृष्णप्रिया

यह निश्चय कर अत्यंत क्रुद्ध श्रीबलभद्रजी ने अपना हल-मुसल उठाया। द्विविद वानर भी अत्यंत बलवान था उसने भी एक हाथ से शाल का एक वृक्ष भूमि से उखाड़कर वह दौड़ा और जाकर मारा॥ १७॥ भगवान् बलभद्रजी गिरिवर की तरह अविचल खड़े रहे बलरामजी ने अपने सिर पर गिरते उस शाल वृक्ष को पकड़ लिया॥ १८॥ पुनः अपने सुनन्द नाम

के मुसल से उसके मस्तक पर प्रहार किया। मुसल लगते ही द्विविद का मस्तक फट गया और उस मस्तक से खून की धारा बहने लगी ॥ १९ ॥ तब ऐसा लग रहा था कि किसी पर्वत से गेरु का स्रोत बह रहा हो। द्विविद वानर ने इस प्रहार की कोई परवाह न करते हुए एक दूसरा तरु उखाड़ा और उस पेड़ को झाड़-झूड़कर शाखाओं और पत्तों से रहित बनाकर बड़े जोर से बलरामजी पर प्रहार किया ॥ २० ॥

**तेनाहनत् सुसंक्रुद्धस्तं बलः शतधाभिनत्[१] । ततोऽन्येन रुषा जघ्ने तं चापि शतधाभिनत्[२] ॥ २१ ॥**
**एवं युध्यन् भगवता भग्ने भग्ने पुनः पुनः । आकृष्य सर्वतो वृक्षान् निर्वृक्षमकरोद् वनम् ॥ २२ ॥**
**ततोऽमुञ्चच्छिलावर्षं बलस्योपर्यमर्षितः । तत् सर्वं चूर्णयामास लीलया मुसलायुधः ॥ २३ ॥**
**स बाहू तालसंकाशौ मुष्टीकृत्य कपीश्वरः । आसाद्य रोहिणीपुत्रं [४]ताभ्यां वक्षस्यरूरुजत् ॥ २४ ॥**

### कर्वमक्षमा

अन्वयः—सुसंक्रुद्धः, तेन, अहनत्, तम्, बलः, शतधा, अच्छिनत्, ततः, तम्, रुषा, अन्येन, जघ्ने, तम्, च, अपि, शतधा, अच्छिनत् ॥ २१ ॥ एवम्, भग्ने, भग्ने, पुनः, पुनः, वृक्षान्, सर्वतः, आकृष्य, भगवता, युध्यत्, वनम्, निर्वृक्षम्, अकरोत् ॥ २२ ॥ ततः, अमर्षितः, बलस्य, उपरि, शिलावर्षम्, अमुञ्चत्, मुसलायुधः, लीलया, तत्, सर्वम्, चूर्णयामास ॥ २३ ॥ सः, कपीश्वरः, ताल संकाशो, बाहू, मुष्टीकृत्य, रोहिणीपुत्रम्, आसाद्य, ताभ्याम्, वक्षसि, अरूरुजत् ॥ २४ ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

अरूरुजत्ताडयामास ॥ २४ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

तेन वृक्षेण। तं वृक्षम्। ततस्तद्वृक्षच्छेदानंतरम् ॥ २१-२२ ॥ ततो वृक्षाभावानंतरम् ॥ २३ ॥ स द्विविदः। ताल-संकाशो तालतरुवल्लंबौ। ताभ्यां मुष्टीकृतबाहुभ्याम् ॥ २४ ॥

### श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी

तत इत्यर्द्धकम्। जघ्ने द्विविदः अभिनद्बलः ॥ २१ ॥ भगवतेति प्रायस्तत्कृतप्रहारप्रतीकारमेवाकरोत् नतु तं तदापि प्राणतो मारयत् लीलामात्रप्रयोजनत्वादिति भावः ॥ २२ ॥ ततो वृक्षाभावे सतीत्यर्थः ॥ २३ ॥ शिलानामप्यभावे सति बाहू मुष्टीकृत्य दृढबद्धकराग्रौ कृत्वा रोहिणीपुत्रमिति श्रीरोहिणीप्रेमस्मरणेन तत्र मुनेर्दुःखोक्तिः ॥ २४ ॥

### श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी

ततो वृक्षाभावे सतीत्यर्थः; शिलानां वर्षं वृष्टिवदविच्छिन्नत्वादिना परम्पराम्; लीलया अनायासेन; मुषलायुध इति मुसलेनैव चूर्णयामासेत्यर्थः ॥ २३ ॥ शिलावर्षेण, शिलानामप्यभावे सति बाहू मुष्टीकृत्य दृढबद्धकराग्रौ कृत्वा; तालसंकाशाविति मुष्टेर्गुरुत्व-दार्ढ्यादिकमभिप्रेतम्। यतः कपीश्वरो वानरश्रेष्ठः; आसाद्य सन्निधौ गत्वा; रोहिण्याः पुत्रमिति तादृशताडनायोग्य-त्वमाह, श्रीवादरायणिर्भक्तिविशेषेण शोकात्। यद्वा, देवक्यां श्रीकृष्णवत्-स्वप्रभावप्रकटनार्थं रोहिण्यामाविर्भूतमिति तस्य सर्व्वशक्तिमत्त्वं सूचयति ॥ २४ ॥

### श्रीमद्वीरराघवाचार्यकृता भागवतचन्द्रचन्द्रिका

तेन सालेनाहनत् तं सालं बलो रामः शतधा चिच्छेद ततोऽन्यमुत्पाट्य प्रयुक्तं तथा चिच्छेद ॥ २१ ॥ एवमिति। प्रयुक्ते साले भग्ने सति सर्वतो वृक्षानाकृष्य तद्वनं वृक्षरहितं चकार ॥ २२ ॥ तत इति। बलस्य रामस्योपरि तच्छिलाजालं सर्वम् ॥ २३ ॥ स बाहू इति। ताभ्यां मुष्टीकृताभ्याम् अरूरुजदताड़यत् ॥ २४ ॥

### श्रीविजयध्वजतीर्थकृता पदरत्नावली

अरूरुजत् चूर्णयामास ॥ २१-२५ ॥

### श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शिनी

मुष्टीकृत्य मुष्टिमन्तौ कृत्वेत्यर्थः। अरूरुजत् ताडयामास ॥ २४ ॥

---

१. च्छिनत्—श्रीधर. वंशी. जीव. वीर.; ऽरुजत् विज.। २. ततोऽन्यं तरुमुत्पाट्य—वीर.; ततोऽन्यमुत्पाट्यजघ्ने—विज.। ३. च्छिनत्—श्रीधर. वंशी. जीव. वीर. विज. विश्व.। ४. दोर्म्या—विज.।

### गूढार्थदीपिनी

तत इत्यर्द्धम् ॥ २१-२३ ॥ संकाशौ तालप्रमाणौ । अरूरुजत् अताडयत् ॥ २४ ॥

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः

अरूरुजत् अताडयत् ॥ २३ ॥ जत्रौ कण्ठबाहुमूले ॥ २४ ॥

### श्रीमद्वल्लभाचार्यकृता सुबोधिनी

**सुतरां सम्यक् क्रुद्धः** । प्रहारवीर्ययोराविर्भूतत्वात्तस्य प्रतिग्रहो न पौरुषायेति बलस्तं शतधाभिनत् विदीर्णं कृतवान् । तृतीयपर्याये पुनराह **ततोऽन्येनेति** ॥ २१ ॥ ततोऽनन्तयुद्धमतिदिशति **एवं युद्ध्यन्निति** । भगवता सह युध्यन् भगवतैव वृक्षे भग्ने क्रमेण सर्वेष्वेव वृक्षेषु पुनः पुनराकृष्य इक्षुदण्डमिव मूलादुत्पाट्य सर्वत्र एवंकरणेन वनं वनभूमि निर्वृक्षमकरोत् । लतागुल्मादीनां विद्यमानत्वात् वृक्षमात्रमेव गतम्, न तु वनमेव ॥२२॥ ततः पाषाणवृष्टि भग्नोद्यमः सन् कृतवानित्याह **ततोऽमुञ्चच्छिलावर्षमिति** । तत् प्रक्षिप्तं सर्वमेव चूर्णयामासेति तस्य साधनस्य भगवत्प्रतिकूलस्य पुनः साधनतां निवारयति । तत्र क्लेशमाशङ्कयाह **लीलयेति** । अलौकिकप्रकारं वारयितुमाह **मुसलायुध** इति ॥ २३ ॥ ततो भग्नसाधनो बाहुयुद्धार्थमागत इत्याह **स बाहू** इति । **तालसङ्काशाविति** दीर्घस्थौल्यपरुषत्वान्युक्तानि । मुद्गरवन्मुष्टीकरणम् । तथोद्यमे मोहितत्वं शङ्कितं व्यावर्तयितुमाह **कपीश्वर** इति । मारणपर्यन्तं तूष्णीं स्थित इति **रोहिणीपुत्रमित्युक्तम्** । ताभ्यां हस्ताभ्यां मिलिताभ्यां **वक्षसि अरूरुजत्** । पीडां कारितवान् ॥ २४ ॥

### श्रीसुबोधिनी-सारः

ततोऽनंतरम् अन्येन वृक्षेण रुषा क्रोधेन जघ्ने तमपि शतधाऽच्छिनत् एवं भगवता रामेण युद्धयन् मुहुर्मुहुर्भग्ने भग्ने वृक्षे सति ॥२१॥ सर्वतः चतुर्दिशातो वृक्षानाकृष्य सर्वान् बृक्षानिति साधुः निर्वृक्षं वृक्षशून्यमकरोत् ततो वृक्षाभावाद्धेतोर्बलस्योपरि अमर्षितः क्रुद्धः शिलावर्षमकरोत् तत्सर्वं लीलया चूर्णयामास मुसलमायुधं यस्य स रामः ॥ २२ ॥ तालतुल्यौ बाहू मुष्टीकृत्य स कपीश्वरो द्विविदः रोहिण्याः पुत्रम् आसाद्य प्राप्य ताभ्यां वक्षसि अताडयत् ॥ २३ ॥ यादवेंद्रोपि बलदेवो मुसललांगले त्यक्त्वा दोर्भ्यां तं द्विविदं जत्रौ अभ्यर्दयत् क्रुद्धः रुधिरं वमन्सन् स द्विविदोऽपतत् ॥ २४ ॥

### गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

ततो द्विविदोऽन्येन शालेन रुषा क्रोधेन तं बलं जघ्ने । तमपि शालं स बलः शतधाऽहनत् कृतवानित्यर्थः ॥ २१ ॥ एवं स भगवता स युद्धयन् प्रयुक्ते प्रयुक्ते अङ्गे वृक्षे भग्ने भग्ने सति सर्वतो वृक्षानाकृष्य उत्पाट्य प्रक्षिपन् तद्वनं निर्वृक्षमकरोत् ॥ २२ ॥ ततश्चामर्षितः क्रुद्धो द्विविदो बलस्योपरि शिलावर्षममुञ्चत् । तत्सर्वं शिलावर्षं हलायुधः रामो हलेन लीलया अनायासेनैव चूर्णयामास ॥ २३ ॥ ततश्च कपीश्वरो तालप्रमाणौ बाहू मुष्टीकृत्य रोहिणीपुत्रं राममासाद्य प्राप्य ताभ्यां मुष्टीकृताभ्यां बाहुभ्यां तस्य वक्षसि अरूरुजत् अताडयत् ॥ २४ ॥

### अन्वितार्थप्रकाशिका

तत इत्यर्धम् ॥ ततो द्विविदोऽन्येन शालेन रुषा क्रोधेन तं बलं जघ्ने । तदार्षः । तमपि शालं स बलः शतधाऽच्छिनत् कृतवानित्यर्थः ॥ एवमिति । एवं भगवता सह युद्धयन् । शता आर्षः । प्रयुक्ते प्रयुक्ते अङ्गे वृक्षे भग्ने भग्ने सति सर्वतो वृक्षानाकृष्य उत्पाट्य प्रक्षिपन् तद्वनं निर्वृक्षमकरोत् ॥ २१-२२ ॥ तत इति ॥ ततश्चामर्षितः क्रुद्धो द्विविदो बलस्योपरि शिलावर्षममुञ्चत् । तत्सर्वं शिलावर्षं मुसलायुधः रामो हलेन लीलया अनायासेनैव चूर्णयामास ॥ २३ ॥ स इति ॥ स कपीश्वरः तालसंकाशौ तालप्रमाणौ बाहू मुष्टीकृत्य बद्धमुष्टी कृत्वा रोहिणीपुत्रं राममासाद्य प्राप्य ताभ्यां मुष्टीकृताभ्यां बाहुभ्यां तस्य वक्षसि अरूरुजत् अताडयत् ॥ २४ ॥

### श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्

भगवता बलेन ॥ २१-२२ ॥ अरूरुजत् तताड ॥ २३ ॥ जत्रौ कंठबाहुमूले अभ्यर्दयत् प्रभ्यार्दयत् पीडयामास ॥२४॥

### भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

एवमिति । एवं युद्धयन् द्विविदः, भगवता पुनः पुनः, भग्ने भग्ने, सर्वतः वृक्षान्, आकृष्य, वनं निर्वृक्षं, अकरोत् ॥२१॥ तत इति । ततः, अमर्षितः द्विविदः, बलस्य उपरि, शिलावर्षं, अमुञ्चत् । तत् सर्वं, मुसलायुधः, लीलया चूर्णयामास ॥ २२ ॥

स इति । ततः सः कपीश्वरः, तालसंकाशौ तालसमानौ, बाहू मुष्टीकृत्य, रोहिणीपुत्रं रामं, आसाद्य, ताभ्यां वक्षसि, अरूरुजत् अताडयत् ॥ २३ ॥ यादवेन्द्र इति । यादवेन्द्रः रामोऽपि, क्रुद्धः सन्, मुसललाङ्गले हलमुसले त्यक्त्वा, तं द्विविदं, दोर्भ्यां, जत्रौ अभ्यर्दयत् । स द्विविदः, रुधिरं वमन्, अपतत् ॥ २४ ॥

**कृष्णप्रिया**

बलरामजी ने उस वृक्ष के सैकड़ों टुकड़े कर दिये । तब द्विविद वानर ने दूसरा वृक्ष उखाड़ा । श्री बलरामजी ने उस वृक्ष के सैकड़ों टुकड़े कर डाले । इस प्रकार द्विविद वानर युद्ध करता रहा । एक पेड़ टूटने पर दूसरा वृक्ष उखाड़ता रहा और उससे युद्ध चलता ही रहा । इस प्रकार लड़ते-लड़ते उसने सारे वन को वृक्षहीन कर डाला ॥ २१-२२ ॥ जब वन में वृक्ष न रहा तब द्विविद का क्रोध और बढ़ गया तथा वह अत्यंत चिढ़कर श्री बलरामजी पर बड़ी-बड़ी शिलाओं की वर्षा करने लगा । परंतु श्री बलरामजी ने अपने मूसल से उन सभी शिलाओं को आसानी से चकनाचूर कर दिया ॥ २३ ॥ अन्त में कपिवर द्विविद वानर अपनी ताड़वृक्ष के लम्बी बाँहों से घूंसा बाँधकर बलभद्रजी की ओर झपटा और उनके समीप जाकर उसने उनकी छाती पर प्रहार किया ॥ २४ ॥

**यादवेन्द्रोऽपि तं दोर्भ्यां त्यक्त्वा [1]मुसललाङ्गले । जत्रावभ्यर्दयत्क्रुद्धः सोऽपतद् रुधिरं वमन् ॥ २५ ॥**
**चकम्पे तेन पतता [2]सटङ्कः सवनस्पतिः । [3]पर्वतः कुरुशार्दूल वायुना नौरिवाम्भसि ॥ २६ ॥**
**जयशब्दो नमःशब्दः साधु साध्विति चाम्बरे । सुरसिद्धमुनीन्द्राणामासीत् कुसुमवर्षिणाम् ॥ २७ ॥**
**एवं निहत्य द्विविदं जगद्व्यतिकरावहम् । संस्तूयमानो भगवाञ्जनैः स्वपुरमाविशत् ॥ २८ ॥**

**इति श्रीमद्भागवते महापुराणे[4] दशमस्कन्धे[5] द्विविदवधो नाम [6]सप्तषष्टितमोऽध्यायः ॥ ६७ ॥**

**कर्दमक्षमा**

अन्वयः—अथ, यादवेन्द्रः, अपि, क्रुद्धः, मुसललाङ्गले, त्यक्त्वा, तम्, दोर्भ्याम्, जत्रौ, अभ्यर्दयत्, सः, रुधिरम्, वमन्, अपतत् ॥ २५ ॥ कुरुशार्दूलः, तेन, पतता, सटङ्कः, सवनस्पतिः, पर्वतः, वायुना, अम्भसि, नौ, इव चकम्पे ॥ २६ ॥ कुसुमवर्षिणाम्, सुरसिद्धः, मुनीन्द्राणाम्, जयः, शब्दः, नमः, शब्दः, इति, च, साधु, साधु, इति, शब्दः, अम्बरे, आसीत् ॥२७॥ एवम्, जगत्, व्यतिकरावहम्, द्विविदम्, एवम्, निहत्य जनैः, संस्तूयमानः, भगवान्, स्वपुरम्, आविशत् ॥२८॥

इति श्रीमद्भागवते दशमस्कन्धे सप्तषष्टितमोऽध्याये अन्वयः ॥ ६७ ॥

**श्रीधरस्वामिविरचिता भावार्थदीपिका**

यादवेंद्रः संकर्षणः क्रुद्धः सन् । जत्रौ कंठबाहुमूले ॥ २५ ॥ टंकाः सतोयविवराणि तत्सहितः ॥ २६-२७ ॥ जगतो व्यतिकरं नाशमावहतीति तथा तम् ॥ २८ ॥

इति श्रीमद्भागवते दशमस्कंधोत्तरार्धे श्रीध० टी० सप्तषष्टितमोऽध्यायः ॥ ६७ ॥

**श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः**

तं द्विविदम् । स द्विविदः ॥ २५ ॥ "टंकस्सतोयविवरे कोपासिग्रावदारणे । मानभेदे खनित्रे च जंघायां स्त्री" इति धरणिः ॥२६-२७॥ "व्यतिकरस्तु संघाते व्यसनव्यतिषंगयोः । अल्पग्राह्यकरे देशे नाशे क्षोभे विपर्यये ॥" इति निरुक्तिः ॥२८॥

इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे दशमस्कन्धोत्तरार्द्धे सप्तषष्टितमोऽध्यायः ॥ ६७ ॥

**श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी**

मुसललाङ्गली त्यक्त्वेति । तस्य निरायुधत्वेन तन्न्याय्यत्वात् दोर्भ्यां तद्वत् समुद्धिभ्यामेव अभित आर्द्दयत् आङ्भाव आर्षः स द्विविदः ॥ २५ ॥ सटङ्क इति । तेन जलप्लावनं व्यञ्जितं "जङ्घायामद्रिभित्तौ च खनित्रे ग्रावदारुणे । कपित्थे चास्त्रियां टङ्कः" इति तु त्रिकाण्डशेषः ततश्च सावरण इत्यर्थः ॥ २६ ॥ साधु साध्विति शब्दश्चासीत् सुरादिषु इन्द्राणां श्रेष्ठानाम् एते च

---

१. ङ्गलो-प्रा. पा. । २. सकण्टकवनस्पतिः-वीर. विज. । ३. पर्वतो नृप-विज. । ४. पारमहंस्यां संहितायां-प्रा. पा. । ५. न्धे द्विविदवधः सप्त-प्रा. पा. । ६. एकोननवतितमोऽध्यायः-विज. ।

शब्दाः सर्वेषां प्रत्येकमेवानन्दभक्तिविस्मयैर्जाताः भावभेदेन सुरेन्द्रादीनां यथासङ्ख्यमेव वा ॥ २७ ॥ जनैः स्वर्गस्थैर्भूमिष्ठैश्च भगवानिति सार्वज्ञ्यकारुण्यादिव्यञ्जनात् एवं द्रोण्यादिषु द्विविदरुद्धलोकमोचनादिकञ्च ज्ञेयम् । स्वशब्देन स्वजनसमागममहोत्सवश्च सूचितः ॥ २८ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिण्यां सप्तषष्टितमोऽध्यायः ॥ ६७ ॥

## श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी

यादवेन्द्र इति तद्वधेनैव यदूनामपि हितं स्यादिति भावः । अतः क्रुद्धः सन् मुषल-लांगले त्यक्त्वेति निरायुधेन सह निरायुधतयैव योद्धव्यमिति युद्धधर्म्मापेक्षया दोर्भ्यां तद्वत् समुष्टिभ्यामेवाभितोऽर्द्दयत्; स द्विविदः ॥ २५ ॥ वायुनेति दृष्टान्तेन मूलतोऽतिकम्पः सूचितः, हे कुरुशार्दूलेति भारतयुद्धेऽपि तादृशं न वृत्तमिति परमविस्मयात् ॥ २६ ॥ ततश्च यादवानां सर्व्व-मनुष्याणां वा, प्रहर्षोऽभूदिति किं वक्तव्यम्, इन्द्रादीनामपि वृत्त इत्याह—जयेति । साध्विति शब्दश्च सुरादिषु इन्द्राणां श्रेष्ठानाम् ॥ २८ ॥ जनैः स्वजनैः सर्व्वलोकैर्वा, सम्यग् भक्त्या भगवत्प्रतिपादनादिना स्तूयमानः सन्; यद्वा, एवं सुरेन्द्रादिभिः स्तूयमानो जनैः श्रीरेवत्यादिभिः सह स्वकीयं पुरम् आ सम्यक् मंगलगीतादिमहोत्सवपूर्व्वकमविशत्, भगवान् सर्व्वलोकोप-कारक इत्यर्थः । अयं निहनने संस्तवे च हेतुः । एवं द्रोण्यादिषु द्विविदरुद्धलोकमोचनादिकञ्च ज्ञेयम् । स्वशब्देन तादृश-महा-दुष्टोपद्रववेषेणापि तस्याभिभवं सदामंगलत्वञ्च सूचयति ॥ २८ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे उत्तरार्द्धे श्री-श्रील-सनातन-गोस्वामिपाद-कृतायां श्रीबृहद्वैष्णवतोषण्यां श्रीदशम-टिप्पण्यां सप्तषष्टितमोऽध्यायः ॥ ६७ ॥

## श्रीमद्वीरराघवाचार्यकृता भागवतचन्द्रचन्द्रिका

यादवेन्द्रो रामोपि मुसललाङ्गलौ त्यक्त्वा दोर्भ्यामेव तं कपिं जत्रौ कण्ठबाहुमूलेऽभ्यर्द्दयदताडयत् स कपिः रुधिरं वमन्नुद्गिरन् पपात च ॥ २५ ॥ चकम्प इति । पतता तेन द्विविदेन कण्ठादिसहितो गिरिश्चकम्पे चचाल हे कुरुशार्दूल ! यथा वायुना नौरम्भसि कम्पते तद्वत् ॥ २६ ॥ जयशब्द इति । कुसुमानि वर्षन्ते इति तथा तेषां सुरादीनां यथायोग्यं जय-शब्दादिरासीत् ॥ २७ ॥ एवमिति । जगतो व्यतिकरं नाशमावहत्यापादयतीति तथाभूतं द्विविदमेवं निहत्य जनैः संस्तूयमानो भगवान् रामः स्वपुरं द्वारकां प्रविवेश ॥ २८ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायां सप्तषष्टितमोऽध्यायः ॥ ६७ ॥

## श्रीविजयध्वजतीर्थकृता पदरत्नावली

सकण्टकाः वनस्पतयो यस्मिन् स तथा ॥ २६ ॥ जगतो व्यतिकरं नाशमावहति करोतीति जगद्व्यतिकरा-वहस्तम् ॥ २७-२८ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्यां सप्तषष्टितमोऽध्यायः ॥ ६७ ॥
( श्रीविजयध्वजतीर्थरीत्या एकोननवतितमोऽध्यायः ॥ ८९ ॥ )

## श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शिनी

त्यक्त्वा मुसललाङ्गलाविति तस्य निरायुधत्वे सति स्वस्यापि निरायुधत्वौचित्यात् जत्रौ कण्ठबाहुमूले ॥ २५ ॥ सटङ्कः भित्तिसहितः पर्वतः रैवतकः "जङ्घायामद्रिभित्तौ च खनित्रे ग्रावदारणे । कपित्थे चास्त्रियां टङ्कः" इति त्रिकाण्ड-शेषः ॥ २६-२८ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् । सप्तषष्टितमोऽध्यायः दशमेऽजनि सङ्गतः ॥ ६७ ॥

## गूढार्थदीपिनी

दोर्भ्यां मुष्टीकृतबाहुभ्याम् । जत्रौ कण्ठबाहुमूले ॥ २५ ॥ सवनस्पतिः वृक्षसहितः । सटङ्कः निर्झरादिसहितः । 'टङ्कः सतायविवरे इति धरणिः ॥ २६ ॥ अम्बरे आकाशे ॥ २७ ॥ जगतो व्यतिकरं नाशम् आवहति प्रापयतीति तथा स्वपुरं द्वारकाम् ॥ २८ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां दशमस्कन्धोत्तरार्द्धे गूढार्थदीपिन्यां सप्तषष्टितमोऽध्यायः ॥ ६७ ॥

## श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

सटङ्कः सजलविवरसहितः ॥ २६-२७ ॥ जगतो व्यतिकरं नाशमावहतीति तम् ॥ २८ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धीये श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे सप्तषष्टितमोऽध्यायार्थप्रकाशः ॥ ६७ ॥

## श्रीमद्वल्लभाचार्य्यकृता सुबोधिनी

ततः स्वयमपि, अशस्त्रेण सह सशस्त्रो न युध्येदिति, स्वयमपि त्यक्त्वा मुसललाङ्गले, दोर्भ्यां जत्रावभ्यर्दयत्, तथा सामर्थ्ये धर्मज्ञाने च लौकिकमेव साधनमित्याह यादवेन्द्र इति । यतः पूर्वमपि स रामभक्त इति तथा करणम् । जत्रुः कण्ठाधः-स्थितमस्थि । तस्मिन्भग्ने म्रियत एवेति । अतो रुधिरं वमन् पतितः ।। २५ ।। तस्य पराक्रममुक्त्वा देहस्यापि महत्त्वमाह चकम्प इति । सटङ्कः प्रसिद्धः पर्वतः वनस्पतिसहितः । सम्यक् परिज्ञानार्थमेतदुक्तम् । सर्वतश्चकम्पे । टङ्कशब्देन उपरितनो भागः बलभीसदृशः वप्रापरपर्यायः । तत्सहितः पर्वत एव भवति । स पर्वत इति पाठस्तु सुगमः । विश्वासार्थं सम्बोधनम् । अधिक-दोलनार्थं दृष्टान्तः । तत्रत्यानां भयोत्पादनार्थं वा । तेन तस्मिन् पतिते सर्वाः स्त्रियो राममालिङ्गितवत्य इति कामरसेन मध्ये न विघ्नः, किन्तु तत्पोषक एव जात इति फलति ।। २६ ।। भक्तत्वादल्पत्वाच्च कदाचिदयुक्तो भवेदिति देवानां सम्मतिमाह जयशब्द इति । उत्कृष्टानां जयशब्दः, मध्यमानां नमःशब्दः, शिष्टः साधुशब्द इति त्रिविधानामपि सम्मतिरुक्ता । पूर्वं जयशब्दः आशीरूपः, पश्चान्मारणार्थं प्रार्थनारूपो नमःशब्दः, साधु साध्विति मारणानन्तरम् । दिवीत्यन्यथावचने ततः पात एव भवेदिति सूचितम् । सुरसिद्धमुनीन्द्राणामिति त्रिविधानामपि तथात्वम् । कुसुमवर्षिणामिति । कायिको व्यापारः । एवं सर्वात्मना देवानामनुमोदनमुक्तम् ।। २७ ।। भूमिष्ठानामप्याह एवं निहत्य द्विविदमिति । हनने हेतुर्जगतो व्यतिकरं नाशमावहतीति । अत एव जनैः संस्तूयमानः । एतावत्स्वोपपत्तिर्भगवानिति । पूर्वं तस्य प्रत्यापत्तिरनुक्तेति । मध्ये भगवतः कार्यं पतितम् । अग्रेऽपि तथा पतिष्यतीत्याशङ्क्य तस्य द्वारकाप्रवेश उच्यते स्वपुरमाविशदिति ।। २८ ।।

इति श्रीभागवतसुबोधिन्यां श्रीमल्लक्ष्मणभट्टात्मजश्रीमद्वल्लभदीक्षितविरचितायां दशमस्कन्धविवरणे उत्तरार्धेऽष्टादशोऽध्यायः ।। १८ ।।

## श्रीसुबोधिनी-सारः

टंकाः तोयविवराणि तैः सहितः सवनस्पतिः सवृक्षः पर्वतः पतता तेन द्विविदेन सह चकंपे कुरुशार्दूल अंभसि जले वायुना नौरिव ।। २५ ।। जयशब्दो नमःशब्दः साधुसाध्विति च पुष्पवर्षिणां सुरसिद्धमुनींद्राणामासीत् अंबरे आकाशे ।। २६ ।। जगतो व्यतिकरं दुःखमावहतीति तथा तं द्विविदमेवं निहत्य जनैः संस्तूयमानो भगवान् स्वपुरमाविशत् रामो द्वारकां प्राविशत् ।। २७-२८ ।।

इति श्रीमद्भा० दशमस्कन्धे उ० सुबोधिन्यां टीकायां सप्तषष्टितमोऽध्यायः ।। ६७ ।।

## गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

यादवेन्द्रो रामोपि मुशललाङ्गले त्यक्त्वा दोर्भ्यामेव तं कपिं जत्रौ कण्ठबाहुमूले अमर्दयत् अताडयत् । स कपी रुधिरं वमन् उद्गिरन्नपतत् ।। २५ ।। हे 'कुरुशार्दूल' इति सम्बोधनं विश्वासार्थम् । पतता तेन द्विविदेन हेतुना टण्काः सतोयविवराणि तत्सहितः पर्वतो रैवताख्यश्चकम्पे । तत्र दृष्टान्तमाह—यथा वायुना अम्भसि स्थिता नौः कम्पते तद्वदिति ।। २६ ।। तदा च बलस्योपरि कुसुमानि वर्षन्त इति तथा तेषां सुरादीनां यथायोग्यं अम्बरे आकाशे जयशब्दादिरासीत् ।। २७ ।। एवं द्विविदं हि निहत्य तेन हेतुना जनैः संस्तूयमानो भगवान् बलः स्वपुरं द्वारकामाविशत् आजगाम । जयशब्दादिभिर्देवादीनां तद्धननेन महानन्दो जात इति सूचितम् । तत्र हेतुं सूचयन् विशिनष्टि—जगतो व्यतिकरं नाशमावहतीति तथा तमिति ।। २८ ।।

इति श्रीवल्लभाचार्य-वंश्यगोपालसूनुना । श्रीमन्मुकुन्दरायाणां पादसेवाधिकारिणा ।। १ ।।
श्रीमद्गिरिधराख्येन भजनानन्दसिद्धये । श्रीमद्भागवतस्येयं टीका बालप्रबोधिनी ।। २ ।।
रचिता दशमे तत्र सात्त्विकानां निरोधने । सप्तषष्टितमो यातः कपिनाशनिरूपकः ।। ३ ।।

## अन्वितार्थप्रकाशिका

यादवेदि ।। यादवेन्द्रो रामोऽपि द्विविदं निरायुधं दृष्ट्वा स्वयमपि मुसललाङ्गले त्यक्त्वा दोर्भ्यामेव तं कपिं जत्रौ कण्ठबाहुमूले अभ्यार्दयत् अताडयत् । आडभाववान्पाठ आर्षः । स कपी रुधिरं वमन् उद्गिरन्नपतत् ।। २५ ।। चकम्प इति ।। हे कुरुशार्दूल ! पतता तेन द्विविदेन हेतुना टङ्काः सतोयविवराणि इति स्वामिपादाः । यद्वा । टङ्काः रैवतस्य भित्तयः "जंघाया-मद्रिभित्तौ च खनित्रे ग्रावदारणे ।। कपित्थे चास्त्रियां टङ्कः" इति त्रिकाण्डशेषः । तत्सहितः सवनस्पतिः वृक्षैर्युतः पर्वतः रैव-ताख्यश्चकम्पे यथा वायुनाऽम्भसि स्थिता नौः कम्पते तद्वदिति ।। २६ ।। जयेति ।। बलस्योपरि कुसुमानि वर्षन्ति इति तथा तेषां सुरादीनां यथायोग्यम् अम्बरे आकाशे जयशब्दो नमःशब्दः साधु साध्विति च शब्दः आसीत् ।। २७ ।। एवमिति ।। जगतो

व्यतिकरं नाशमावहतीति तथा तं द्विविदं निहत्य तेन हेतुना जनैः संस्तूयमानो भगवान् बलः स्वपुरं द्वारकामाविशत् आजगाम ॥ २८ ॥

इति श्रीकृष्णसेवार्थमन्वितार्थप्रकाशिकाम् । गङ्गासहायो दशमे षड्युक्षष्टितमे व्यधात् ॥

इति श्रीभागवते दशमस्कन्धेऽन्वितार्थप्रकाशिकायां सप्तषष्टितमोऽध्यायः ॥ ६७ ॥

### श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्

तेन द्विविदेन टंकाः सजलाः पाषाणमयाजलाधिकरणभूताः प्रदेशास्तैः सहितः ॥ २५-२६ ॥ जगतो व्यतिकरं नाशमावहतीति तथाभूतं ॥ २७ ॥

इति श्रीशुद्धैकांतधर्मप्रवर्त्तकगुरुराजेन्द्रश्रीसहजानंदस्वामिशिष्यगोपालानंदमुनिविरचिते निगूढार्थप्रकाशके श्रीमद्भागवतस्य दशमस्कंधव्याख्याने द्विविदवधो नाम सप्तषष्टितमोऽध्यायः ॥ ६७ ॥

### भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

चकम्प इति । पतता तेन द्विविवेन कृत्वा, सटङ्कः टङ्काः सतोयविवराणि तत्सहितः, सवनस्पतिर्वृक्षसहितः, पर्वतः, हे कुरुशार्दूल, अम्भसि वायुना, नौः इव, चकम्पे ॥ २५ ॥ जयशब्द इति । अम्बरे आकाशे, कुसुमानि वर्षन्त इति तेषां, सुरा देवाश्च सिद्धाश्च मुनीन्द्राश्च तेषां, जयशब्दः नमःशब्दः, साधु साध्विति शब्दश्च, आसीत् ॥ २६ ॥ एवमिति । जगतो व्यतिकरं नाशमावहत्यापादयतीति तथाभूतं, द्विविदं एवं निहत्य, जनैः संस्तूयमानः, भगवान् रामः, स्वपुरं, आविशत् ॥ २७ ॥

इति श्रीधर्मधुरंधरश्रीधर्मात्मजप्रत्यक्षपुरुषोत्तमश्रीसहजानन्दस्वामिसुतश्रीरघुवीराचार्यसूनुभगवत्प्रसादाचार्यविरचितायामन्वयार्थावबोधिन्यां भक्तमनोरञ्जन्याख्यायां श्रीमद्भागवतटीकायां दशमस्कन्धोत्तरार्द्धे सप्तषष्टितमोऽध्यायः ॥ ६७ ॥

### कृष्णप्रिया

पुनः यादवशिरोमणि श्री बलभद्रजी ने हल और मूसल अलग रख लिये और क्रोधाविष्ट होकर अपने दोनों हस्तों से उसके जत्रुस्थान पर प्रहार किया । परिणाम में वानर खून उगलता धरती पर गिर पड़ा ॥ २५ ॥ महाराज परीक्षित ! आँधी आनेपर जैसे नाव डगमगाने लगती है वैसे ही उसके गिरने पर बड़े-बड़े तरुवर और शिखरों के साथ गिरिवर हिल उठा ॥२६॥ देवलोक में देवतागण जय हो-जय हो, सिद्धलोक नमो नमः और समर्थ ऋषि मुनिवृन्द साधु-साधु के नारे लगाने लगे और श्री बलरामजी भैयाजू पर पुष्पों की वृष्टि करने लगे ॥ २७ ॥ राजन् परीक्षित ! इस द्विविद वानर ने विश्व में असाधारण उपद्रव मचा रखा था इसलिए भगवान् बलभद्रजी ने उस वानर को इस प्रकार मार दिया । पुनः श्रीबलरामजी द्वारावती नगरी में पधारे । उस अवसर पर सारे पुरजन-स्वजन एवं परिचरजन श्री बलरामजी की स्तुति करने लगे ॥ २८ ॥

इति श्रीमद्भागवते दशमस्कन्धे निरोधलीलायां द्विविदवधो नाम सप्तषष्टितमाध्यायस्य भाषान्तरं समाप्तम् ॥ ६७ ॥

## [1]अथाष्टषष्टितमोऽध्यायः

| श्लोकाः | अनु. | मि. उ. | व. | उ. | श्लो. अ. | उ. अ. | अ. अ. | सं. श्लो. अ. | सं. श्लो. | अक्ष. |
|---|---|---|---|---|---|---|---|---|---|---|
| ५४ | ५० | ३ | १ | ३ | १७९६ | १८ | ५३ | १८६७ | ५८। | ३ |

### श्रीशुक उवाच

दुर्योधनसुतां राजन् लक्ष्मणां समितिंजयः । स्वयंवरस्थामहरत् साम्बो जाम्बवतीसुतः ॥ १ ॥
[2]कौरवाः कुपिता [3]ऊचुर्दुर्विनीतोऽयमर्भकः । कदर्थीकृत्य नः कन्यामकामामहरद् बलात् ॥ २ ॥
बध्नीतेमं दुर्विनीतं किं करिष्यन्ति वृष्णयः । [4]येऽस्मत्प्रसादोपचितां दत्तां नो भुञ्जते महीम् ॥ ३ ॥
निगृहीतं सुतं श्रुत्वा यद्येष्यन्तीह वृष्णयः । भग्नदर्पाः शमं यान्ति [5]प्राणा इव सुसंयताः ॥ ४ ॥

### कर्दमक्षमा

अन्वयः—श्रीशुक उवाच—राजन् ! समिति जयः, जाम्बवतीसुतः, साम्बः, स्वयंवरस्थाम्, दुर्योधनसुताम्, लक्ष्मणाम्, अहरत् ॥ १ ॥ कुपिताः, कौरवाः, उचुः, अयम्, अर्भकः, दुर्विनीतः, नः, कदर्थीकृत्य, कन्याम्, बलात्, अहरत् ॥ २ ॥ इमम्, दुर्विनीतम्, बन्धीत, वृष्णयः, किम्, करिष्यन्ति, ये, अस्मत् प्रसादोपचिताम्, नः दत्ताम्, महीम्, भुञ्जते ॥ ३ ॥ सुतम्, निगृहीतम्, श्रुत्वा, वृष्णयः, यदि, इह, एष्यन्ति, भग्नदर्पाः, सुसंयताः, प्राणा, इव, शमम्, यान्ति ॥ ४ ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

अष्टषष्टितमे सांबे निरुद्धे कौरवैर्युधि । तद्विमोक्षाय रामेण गजाह्वयविकर्षणम् ॥ १ ॥

रामचरित्रांतरं निरूपयितुमाह । दुर्योधनसुतामिति । समितिंजयः संग्रामजित् ॥ १–२ ॥ नोऽस्माकं महीमस्माभिर्दत्ताम् । न ते भूपतय इति भावः ॥ ३ ॥ यांति यास्यंति । प्राणा इंद्रियाणीव । सुसंयताः प्राणायामादिभिर्दमिताः ॥ ४ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

तद्विमोक्षाय सांबवियोक्षाय ( १ ) । "हृतो यदैव प्रद्युम्नः शंबरेणात्मघातिना । मासेऽस्मिन्नेव सांबस्तु जांबवत्याम-जायत ॥" इति हरिवंशोक्त्या प्रद्युम्नसवयस्कत्वात्तस्योद्वाहः पूर्वमेव वृत्तोप्यत्र संकर्षणमाहात्म्यप्रसंगादाह—दुर्योधनेति । जांबवतीसुत इति तस्या सौभाग्याधिक्यसूचनेन तस्मिन्पितृस्नेहाधिक्यं दर्शितम् । अतिस्नेहेनाम्बया सह वर्तत इति सांब इत्यन्वर्थताज्ञापनार्थं यत्र तत्र जांबवतीसुत इति विशेषणं दीयते । समिति संग्रामं सभां च जयतीति समितिंजयः । बलेन शास्त्रेण चोभयजयी । "समितिः संपराये स्यात् । सभायां संगमेऽपि च" इति मेदिनी ॥ १ ॥ अकामामजातकामविकाराम् । यद्वा—तद्वरेच्छारहिताम् ॥ २ ॥ इमं सांबम् । दुर्विनीतम शिक्षितम् । ये वृष्णयः । इति भाव इति—यदुशप्तत्वात्तेषां राज्याधिकार एव नास्तीत्याशयः । बध्नीतेनि हननिषेधो द्योत्यते । तत्स्पृष्टायाः कन्याया वरान्तरायोग्यत्वेन जामातृत्वावश्यकत्वात्, श्रीभीष्मविदुरादीनां संमतेश्च । अत एवाग्रे जिघृक्षव इति । बंधने हेतुः—दुर्विनीतमिति । अन्यथास्माकं पराभव एव जनैर्दृश्यत इति भावः ॥ ३ ॥ निगृहीतं बद्धम् । इह हास्तिनपुरे । शमं यांति—अस्मद्वश्या भवन्तीति भावः । दुर्वश्यानामपि वश्यत्वे दृष्टांतः—प्राणा इति ॥ ४ ॥

### श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी

"हृतो यदैव प्रद्युम्नः शम्बरेणात्मघातिनाः । मासेऽस्मिन्नेव साम्बस्तु जाम्बवत्यात्मजायत" ॥

इति श्रीहरिवंशोक्त्या प्रायः प्रद्युम्नसमवयस्कत्वाच्छ्रीसाम्बस्य पूर्ववृत्तमपि विवाहं श्रीबलदेवविक्रमप्रसङ्गादत्राह—दुर्योधनेत्यादिना । पूर्वं टीकायां प्रद्युम्नजन्मजाम्बवत्यादिविवाहयोर्व्यतिक्रमेण स्वीकारस्त्वत्र यथाक्रमश्रवणापेक्षयेति ज्ञेयम् । जाम्बवत्याः सुत इति तस्याः सौभाग्याधिक्यसूचनेन तस्मिन् पितृस्नेहाधिक्यं दर्शितम् अत एव तस्यास्ततसमसुन्दरपुत्रप्रार्थनया श्रीभगवता स्वभक्तवरशिवस्य माहात्म्यं तन्वता तमाराध्य स प्राप्त इति दानधर्मे अत एव स्नेहेनान्वया सदा वर्तत इति साम्बः

---

१. नवतितमोध्यायः–विज. । २. कुरवः–विज. । ३. प्रोचु–प्रा. पा. । ४. प्रतापोप–वीर. । ५. शीर्णदन्ता इवाहयः–विज. ।

अत एव यत्र तत्र तद्विशेषणत्वं तस्य श्रूयते एवं सति जाम्बवतीसुतस्यास्य नाम्नि दन्त्यएवोष्मा ननु तालव्य इत्यायातम् ॥१॥ कौरवाः दुर्य्योधनादयः अर्भकोपि विनयरहितः सगर्व इत्यर्थः। यद्वा अर्भकोऽयं पित्रादिभिरशिक्षित इति तानप्यधिक्षिपन्ति यतः कदर्थीकृत्य खेदयित्वा तत्रापि अकामां तद्वरणेच्छारहिताम् ॥ २ ॥ दध्नीतेति हननिषेधो द्योत्यते स चाधुना तत्स्पृष्टायाः कन्यायाः वरान्तरायोग्यत्वेन जामातृत्वावश्यकत्वात् श्रीभीष्मविदुरादीनां तथा सम्मतेश्च अत एवाग्रे जिघृक्षव इति बन्धने हेतुः दुर्विनीतमिति अन्यथाऽस्माकं पराभव एव जनैर्दृश्यत इति भावः ॥ ३ ॥ शमं यान्ति अस्माकं वश्या भविष्यन्तीत्यर्थः। दुर्वशीनामपि वश्यत्वे दृष्टान्तः प्राणा इति ॥ ४ ॥

## श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी

'हृतो यदैव प्रद्युम्नः शम्बरेणात्मघातिना। मासेऽस्मिन्नेव साम्बस्तु जाम्बवत्यामजायत ॥' इति (विष्णु० प० ११०।१) श्रीहरिवंशोक्त्या प्रायः श्रीप्रद्युम्नसमवयस्त्वाच्छ्रीसाम्बस्य पूर्ववृत्तमपि विवाहं श्रीबलदेवविक्रमप्रसंगादत्राह—दुर्योधनेत्यादिना। समितिञ्जयो महावीर इत्यर्थः। अतोऽहरत्, यद्वा, समिति जय इति स्वयम्वरे समागतान् तान् सर्वान् राज्ञो युद्धे जित्वेति भावः। हे राजन्निति क्षत्रियस्यायं धर्म्म एवेति भावः। यद्वा, निजशौर्य्यादिना राजमानः सन्, यतो जाम्बवत्याः सुत इति तस्याः प्रेमप्रार्थनया श्रीभगवता प्रियतमस्य श्रीशिवस्य माहात्म्यं तत्वता बहुलतपस्यया तमाराध्य श्रीसाम्बस्य प्राप्त्या श्रीप्रद्युम्नसमसौन्दर्य्यादिकं दानधर्म्मोक्तानुसारेण सूचितम्। अत एव महास्नेहेन अम्बया सदैव वर्त्तत इति साम्ब-नामेति ज्ञेयम् ॥ १ ॥ कौरवा दुर्य्योधनाद्याः, दुर्व्विनीतोऽशिक्षितः, यतोऽर्भकः, किंवा अर्भकोऽपि विनयरहितः सगर्व्व इत्यर्थः। ननु बलाद्धरणं क्षत्रियस्य युक्तमेव ? तत्राहुः—अकामां तद्वरणेच्छारहिताम् ॥ २ ॥ बध्नीतैवेति, न घ्नतेत्युक्तिः, श्रीभगवत्पुत्रत्वात् जामातृत्वाच्च, अत एवाग्रे च जिघृक्षव इति। बन्धने हेतुः—दुर्विनीतमिति, शिक्षार्थमेवेति भावः। अत एवास्य पुनरुक्तिः, न तु स्वयमुपार्ज्जिताम्, यतोऽस्माभिरेव दत्ताम्, अतो दत्तापहारदोषशंकयापराधेऽप्यनाच्छिद्यमानामिति भावः। यतो नोऽस्मदीयामेव, न तु तेषामराजत्वादिति। तेषां स्वतः सामर्थ्यं निरस्तम्। भुञ्जत इति तथापि भोगमात्रमेव, न तु तेषां तत्स्वामित्वमिति भावः ॥ ३ ॥ ननु तथापि पुत्रस्नेहेन ते त्ववश्यमुद्यमं कुर्य्युरेव, तत्राहुः—निगृहीतमिति। सुतमिति महास्नेहपात्रतोक्ता; वृष्णयः श्रीकृष्णाद्याः, रामं यान्ति, अस्माकं वश्या भविष्यन्तीत्यर्थः। दुर्वशानामपि वश्यत्वे दृष्टान्तः—प्राणा इति ॥४॥

## श्रीमद्वीरराघवाचार्यकृता भागवतचन्द्रचन्द्रिका

रामस्यैव चेष्टितान्तरमनुवर्णयितुमुपोद्घातमाहाष्टषष्टितमेन दुर्योधनसुतामित्यादिना। समितौ सङ्ग्रामे जयतीति तथा समितिश्शत्रुस्तं जयतीति वा स जाम्बवत्याः सुतः साम्बो लक्ष्मणां नाम दुर्योधनस्य सुतां स्वयम्वरस्थां हृतवान् ॥ १ ॥ कौरवा इति। उक्तिमेवाह—दुर्विनीत इत्यादिना सुसंयता इत्यन्तेन। नोऽस्मान् कदर्थीकृत्य तुच्छीकृत्य बलादकामयमानामपि कन्यामहरत् ॥ २ ॥ अत एव दुर्विनीतं मूर्खं बध्नीत बन्धयत वृष्णयः किं करिष्यन्ति न किमपीत्यर्थः। तत्र हेतुः, य इति. ये वृष्णयः अस्माकं प्रतापेन पराक्रमेण उपचितामेधितां समृद्धामिति यावत् नोऽस्माभिर्दत्ताञ्च महीं भुञ्जते अनुभवन्ति ते न भूमिपतयो बभूवुरिति भावः ॥ ३ ॥ निगृहीतमिति। निगृहीतं बद्धं सुतं श्रुत्वा यदि वृष्णयः आगमिष्यन्ति तर्हि भग्नो दर्पो येषां ते तथाभूताः शमं शान्तिं यास्यन्ति सुसंयताः प्राणायामादिभिः दारिताः प्राणा इन्द्रियाणीव ॥ ४ ॥

## श्रीविजयध्वजतीर्थकृता पदरत्नावली

समितिशब्देन सङ्गरसभे गृह्येते उभे अपि शब्देन वाचा जयतीति समितिञ्जयः खश्प्रत्ययो मुमागमोऽनुस्वारः समितिः संगरसभयोरित्यभिधानम् ॥ १ ॥ अकामां कुमारिकामविधुरान् ॥ २ ॥ अस्मत्प्रसादेनोपचिताः सर्म्वधिताः अत एव नो महीं भुञ्जते दत्तामस्माभिरिति शेषः ॥ ३ ॥ निगृहीतं बद्धं शीर्णदन्ताः भग्नदन्ताः ॥ ४ ॥

## श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

अष्टषष्टितमे साम्बे निरुद्धे कुरुभिर्हली। दुरुक्त्या कोपितश्चक्रे गजाह्वयविकर्षणम् ॥

समितिञ्जयः सङ्ग्रामजित् ॥ १-२ ॥ नोऽस्माकं महीमस्माभिर्दत्तां न ते भूपतयः इति भावः ॥ ३ ॥ यान्ति यास्यन्ति प्राणा इन्द्रियाणीव ॥ ४ ॥

## गूढार्थदीपिनी

अष्टषष्टितमे साम्बो लक्ष्मणामाहरन् युधि। बद्धस्तैरस्य मोक्षार्थं रामोऽकर्षद् गजाह्वयम् ॥ १ ॥

समितिः संग्रामं सभां वा जयतीति समितिञ्जयः ॥ १ ॥ कदर्थीकृत्य अकामां तद्वरेच्छारहिताम् ॥ २ ॥ उपचित्तां समृद्धाम्। नोऽस्माभिः ॥ ३ ॥ वशे यान्ति यास्यन्ति। सुसंयताः दमिताः प्राणा इन्द्रियाणीव ॥ ४ ॥

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः

अथाष्टषष्टितमे रामचरितान्तरं वर्णयितुं प्रथममुपोद्घातमाह—दुर्योधनसुतामित्यादिना। समितौ सङ्ग्रामे जयतीति तथा ॥ १-२ ॥ ये अस्माकं प्रसादेन पराक्रमेणोपचितां समृद्धां नोऽस्माभिर्दत्तां महीं भुञ्जते न स्वतो महीपतय इति भावः ॥३॥ यान्ति यास्यन्ति प्राणा ईन्द्रियाणि ॥ ४ ॥

### श्रीमद्वल्लभाचार्य्यकृता सुबोधिनी

अत्यलौकिकमाश्चर्यंचरित्रमधुनोच्यते । एकोनविंशे रामस्य सर्वलोकातिशायिनः ॥ १ ॥
एवं रामस्य कृष्णस्य त्रितयं त्रितयं द्वयोः। चरित्रमीरितं च स्यात् षड्गुणानां विभागकृत् ॥ २ ॥
धर्मः सिद्धो भगवति कामः सिद्धस्तथापरे। अद्वितीयहरित्वं तु कृष्णे सिद्धं फलत्वतः ॥ ३ ॥
जगद्दोषनिवृत्तिस्तु रामे सिद्धा हि साधने। अलौकिकं साधनस्थं रामे कृष्णे फलं तथा ॥ ४ ॥
अत्रावान्तरभेदानां धर्मिणः पृथगीरिताः। विभागज्ञापनार्थाय यथैवं विनिरूप्यते ॥ ५ ॥
यमुनायां पर्वते च कृतं पूर्वं निरूपितम्। गङ्गायामपि यत्कार्यं तदत्र स्फुटमुच्यते ॥ ६ ॥
लक्ष्मणोद्वहने बद्धः साम्बो रामेण मोचितः। निगृहीता विपक्षाश्च तदत्र विनिरूप्यते ॥ ७ ॥

पूर्वाध्याये दुष्टनिवारणलक्षणं चरित्रमुक्त्वा शिष्टशिक्षणरूपं चरित्रमाह। तत्र साम्बाहृतलक्ष्मणा प्रसङ्गभूता निरूप्यते दुर्योधनसुतामिति राजनिति राजकन्यायाः स्वयंवर एव धर्म इति ज्ञापयति। लक्षणैर्विशिष्टेति लक्ष्मणा। सर्वत्र भगवदीयाः स्वयंवरे गच्छन्ति, तत्र सकामामकामां वा बलं विचार्याविचार्य वा हरन्ति। तथायमपि अविचार्यैव स्वयंवरस्थाने तूष्णीं स्थितामहरत्। समितिजय इति तस्य धार्ष्ट्ये हेतुः। जाम्बवतीसुत इत्यविचारे ॥ १ ॥ एवं हरणे निमित्ते जाते कौरवाणां भगवन्मार्गोल्लङ्घनजातं अपराधं निरूपयति कौरवा कुपिता ऊचुरिति त्रिभिः। पाण्डवा अपि कौरवाः, तथापि ते न तत्र तिष्ठन्ति। यद्यपि भीष्मादयः भगवद्भक्ताः, तथापि मर्यादास्थिता इति शास्त्रव्यतिरेकेण भगवदीयानपि न मन्यन्ते। वरणानन्तरमेव कन्या तदीया भवतीति बलाद्धरणं सम्भाव्य कुपिता जाताः। कौरवा महान्तः कुलकर्मभ्यां श्रेष्ठाः। ऊचुः स्वगोष्ठ्यामेव। दुर्विनीतोऽयमर्भक इति। महतो बालकस्य विनयोऽपेक्ष्यते, तदत्र नास्तीति बन्धनेऽपि न दोष इति। अथवा। केश्चिदुक्तं दुर्विनीतोऽयमिति, केश्चिदर्भक इति। दोषाभावार्थमनेन हृतापि न दुष्यतीत्यपि सूचितम्। नहि बालकस्पृष्टा दुष्यति। ननु को दोषः, कुतो निवार्यत इति चेत्, तत्र दोषमाह कदर्थीकृत्येति। अस्मान् तिरस्कृत्य, क्षत्रियाणां मानं हृत्वा, नोऽस्माकं कन्या कुलीनानाम्। अनेन ऋक्षनप्ता न कुलीन इति सूचितम्। किञ्च। कन्याप्यकामा। वरणं दूरे, इच्छापि तस्या नास्ति। नन्ववश्यं केनचिज्ज्ञेया, देयैव च कन्या, तत्राह बलादिति। क्षत्रियामासेभ्य एव बलिष्ठैर्नीयते बलात् ॥ २ ॥ तर्ह्येवं सति किं कर्तव्यम्, तत्राहुः बध्नीतेमं दुर्विनीतमिति। दुर्विनय एव बन्धने हेतुः। नन्वेवं कृते यादवाः क्रोधं करिष्यन्तीति चेत्, तत्राहुः किं करिष्यन्ति वृष्णय इति। कथं न करिष्यन्तीत्याशङ्कायामाहुः येऽस्मत्प्रसादोपचितामिति। उपजीव्यत्वात् अस्मासु क्रोधं न करिष्यन्ति। स्वयमागत्य युद्धादिकरणसम्भावनैव नास्तीत्याहुः येऽस्मत्प्रसादोपचिताम्। जीवनपर्याप्ता तु सेवायामपि प्राप्यते। कृष्यादिना च। अतः पुष्टा प्राप्तव्या। सा यादवानां स्वाभाविकी न भवतीति परकीया ग्राह्या। तत्र परस्य दुर्बलत्वेऽपि न्यायसिद्धत्वात् बलिष्ठैः सेवया रक्ष्यते। तत्र पक्षपाते भूमिस्तस्य गच्छति। तथा यादवानामस्मत्प्रसादोपचिता भूमिर्भवति। किञ्च। मण्डलेश्वरराज्ञा तत्तद्भूमिस्तेभ्यस्तेभ्यो दीयते, यदाभिषिक्तो भवति। अतो वयं पूरुवंशोद्भवत्वात् राजानः। अतः सामान्यविशेषप्रकारेण अस्मद्दत्तामेवं भूमिं भुञ्जते ॥ ३ ॥ ननु पुत्रे धृते भूम्यपेक्षामपि त्यक्ष्यन्तीति चेत्, तत्राहुः निगृहीतं सुतं श्रुत्वेति। भग्नो दर्पो यैरिति स्तुतिः। येषामिति निन्दा। यदीति श्रुत्वापि नायास्यन्त्येव, यथा कृपयास्माभिर्भूमिर्दीयते। तत्र पुत्रमपि प्रेषयिष्यन्तीति विश्वासात्, तदा प्रेषयिष्याम इति हृदयम्। अथ यदि अस्मास्वविश्वासं कृत्वा, स्वस्य वा बलोत्कर्षं मत्वा, आयास्यन्ति, तत्रापीह विषमदुर्गे, तदा पूर्वसिद्धोऽपि दर्पः अत्रोपक्षीणो भविष्यतीति शमं शान्तिमेव यान्ति। ते नूनमुपजीवका इति न निराकार्याः, किन्तु बहुकालं निरुद्धाः सन्तः गतदर्पाः प्रार्थनया गृहं गमिष्यन्तीति भावः। वशे वा स्थास्यन्ति। तत्र दृष्टान्तमाह प्राणा इवेति। यद्यप्यन्येषां प्राणाः स्वतन्त्रा भवन्ति, तथापि योगिनः संयता एवेति स्वात्मानं योगिस्थानीयं मन्यन्ते ॥ ४ ॥

### श्रीसुबोधिनी—सारः

शुकउवाच। हे राजन् दुर्योधनस्य सुतां पुत्रीं लक्ष्मणां स्वयंवरे तिष्ठतीति तथा तां समितिं संग्रामं जयतीति खश् प्रत्ययः जांबवत्याः सुतः सांबोऽहरत् ॥ १ ॥ कुपिताः कौरवाः कुरुवंशीया इत्यूचुः अयमर्भको बालको दुर्विनीतो धृष्टः नोस्मान् कदर्थीकृत्यावज्ञायाऽकामामनिच्छतीं कन्यां बलादहरत् ॥ २ ॥ अत एवं कार्यं दुर्विनीतमिमं यूयं बध्नीत न चैवं तत्कुलकोपाद्भयशंकेति वाच्यं वृष्णयः किंकरिष्यंति अस्मदधीनत्वात्तेषामित्याहुः अस्माकं प्रसादोऽनुग्रहस्तेनोपचितां समृद्धां नोस्माभिर्दत्तां

महीं भूमिं भुंजते ।। ३ ।। संरंभ्योचुः निगृहीतं बद्धं सुतं पुत्रं श्रुत्वा यदि वृष्णय एष्यंति आगमिष्यंति इहात्र तर्हि भग्नो दर्पो गर्वो येषां ते शमं यांति निर्वृत्तिं गमिष्यंति सुसंयताः प्राणायामादिभिः संनिरुद्धाः प्राणा इन्द्रियाणीव ।। ४ ।।

### गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

अष्टषष्टितमेऽध्याये हस्तिनापुरकर्षणम् । बलभद्रेण साम्बस्य विवाहश्च निरूप्यते ।। १ ।।

रामस्यैव चरितान्तरमनुवर्णयितुं तदुपोद्घातमाह--दुर्योधनेति । हे राजन्! समितिः शत्रुस्तं जयतीति तथाभूतो जाम्बवतीसुतः साम्बो नाम स्वयंवरस्थां दुर्योधनसुतां लक्ष्मणां जहारेत्यन्वयः ।। १ ।। तदा च कौरवा भीष्मादयः कुपिताः सन्तः परस्परमूचुः । तदुक्तिमेवाह—अयमर्भकः साम्बः दुर्विनीतः । तस्य दुर्विनयमेवाहुः—यो नोऽस्मान् कदर्थीकृत्य तुच्छान् मत्वा अकामां अनिच्छन्तीमेवास्माकं कन्यां बलादहरत् ।। २ ।। अत एनं बध्नीत, दुर्विनीतत्वात् । 'एवं कृते वृष्णयः क्रोधं करिष्यन्ति' इत्याशङ्कयाहुः—वृष्णयो यादवा उग्रसेनादयः किं करिष्यन्ति ? कुपिता अपि ते नास्माकं किमपि कर्तुं समर्था इत्यर्थः । तत्र हेतुमाहुः—ये यादवाः अस्माकं प्रसादेन पराक्रमेणोपचितां समृद्धां नोऽस्माभिर्दत्तां महीं भुञ्जते । अतो न ते भूमिपतय इत्याशयः ।।३।। यदि कदाचित् सुतं निगृहीतं बद्धं श्रुत्वा वृष्णयः युद्धार्थमिह एष्यन्ति आगमिष्यन्ति तर्हि भग्नो दर्पो गर्वो येषां ते तथाभूताः शमं शान्तिं यास्यन्ति । तत्र दृष्टान्तमाह—सुसंयताः प्राणायामादिभिर्दमिताः प्राणा इन्द्रियाणीव ।। ४ ।।

### अन्वितार्थप्रकाशिका

अष्टषष्टितमे साम्बे निरुद्धे कुरुभिर्बलः ।। गजाह्वयं चकर्षात्र श्लोका जलधिमार्गणाः ( ५४ ) ।।
त्रीण्यु ( ३ ) वाचेत्यङ्घ्रियुक्ताः षट्पञ्चाशदनुष्टुभः ( ५६। ) ।। ६८ ।।

हृतो यदैव प्रद्युम्नः शम्बरेणात्मघातिना । मासेऽस्मिन्नेव साम्बस्तु जाम्बवत्यामजायत ।।" इति हरिवंशोक्त्या प्रद्युम्नसवयस्त्वात्साम्बविवाहः पूर्ववृत्तोऽपि रामविक्रमप्रसङ्गादत्रोक्तः । स्वामिपादैस्तु यथाश्रुतक्रममनुसृत्य प्रद्युम्नजन्मोत्तरं जाम्बवतीविवाह इति प्रागुक्तम् । दुर्योधनेति ।। हे राजन्! समितिंजयः संग्रामजित् जाम्बवतीसुतः साम्बो नाम स्वयंवरस्थां दुर्योधनसुतां लक्ष्मणां जहार ।। १ ।। कौरवा इति ।। कौरवाः भीष्मादयः कुपिताः सन्तः परस्परमूचुः । यो नोऽस्मान् कदर्थीकृत्य तुच्छान् मत्वा अकामां साम्बवरणमनिच्छन्तीमेवास्माकं कन्यां बलादहरत् । अतोऽयमर्भकः साम्बः दुर्विनीतः ।।२।। बध्नीतेति ।। इमं दुर्विनीतं बध्नीत । वृष्णयो यादवाः किं करिष्यन्ति । ये यादवाः अस्माकं प्रसादेन पराक्रमेणोपचितां समृद्धां नोऽस्माभि-र्दत्तां महीं भुञ्जते । न ते स्वयं भूपतय इति भावः ।। ३ ।। निगृहीतमिति ।। यदि कदाचित् सुतं निगृहीतं बद्धं श्रुत्वा वृष्णयः युद्धार्थमिह एष्यन्ति तर्हि भग्नो दर्पो गर्वो येषां ते तथाभूताः सुसंयताः प्राणायामाभिर्दमिताः प्राणा इन्द्रियाणीव शमं यान्ति यास्यन्ति ।। ४ ।।

### श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्

अष्टषष्टितमेऽध्याये चरित्रमेतदुच्यते सांबोहरिशिशुश्चित्रं निरुद्धो वीरहस्तिभिः । मोचितो हलहस्तेन हस्तिनापुर-कर्षणात् । सांबप्रद्युम्नयोः समकालजनितत्वात् सांबविवाहं प्रद्युम्नविवाहसमकालिकमपि बलरामविक्रमप्रसंगादत्राह । तथा हि हृतोयदैवप्रद्युम्नः शंबरेणात्मघातिना । मासेस्मिन्नेव सांबस्तु जांबवत्यामजायतेति हरिवंशप्रसिद्धेः दुर्योधनेति । समितिंजयः । संग्रामजित् ।। १ ।। कौरवाः दुर्योधनादयः ।। २ ।। दुर्विनीतं पित्रादिभिरशिक्षितं नोऽस्माकं महीं अस्मत्प्रसादेनोपचितां वृद्धिं प्राप्तां अस्माभिर्दत्तां भुंजते । न ते भूमिपा इति भावः ।। ३ ।। सुसंयताः प्राणायामादिभिः वशीकृताः प्राणा इंद्रियाणीव । शमं शांतिं यांति यास्यंति ।। ४ ।।

### भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

कौरवैर्युधि संरुद्धे साम्बे तन्मोक्षहेतवे । अष्टषष्टितमे रामो व्यकर्षद्गजसाह्वयम् ।। १ ।।

रामस्यैव चरित्रान्तरं निरूपयितुमुपोद्घातमाह ।। दुर्योधनसुतामिति ।। हे राजन्, जाम्बवतीसुतः, समितिंजयः, साम्बः, स्वयंवरस्थां लक्ष्मणां लक्ष्मणासंज्ञां, दुर्योधनसुतां अहरत् ।। १ ।। कौरवा इति ।। तदा कुपिताः कौरवाः, वक्ष्यमाण-प्रकारेणेति शेषः । ऊचुः । दुर्विनीतः विनयवर्जितः, अयं अर्भकः, नोऽस्मान्, कदर्थीकृत्य तुच्छीकृत्य, अकामामकामयमानामपि, कन्यां बलात्, अहरत् ।। २ ।। बध्नीतेति ।। अतः, दुर्विनीतं मूर्खं, इममेनं, बध्नीत बन्धयत । ननु वृष्णिकुमारोऽयं कथं बन्धनीय इत्यत्राहुः । ये वृष्णयः, अस्माकं यः प्रसादः पराक्रमस्तेनोपचिता समृद्धा तां, नोऽस्माभिः दत्तां च, महीं पृथिवीं, भुञ्जते अनु-भवन्ति । अस्मद्दत्तभूमिं प्राप्य भूमिपतयो बभूवुरित्यर्थः । ते वृष्णयः, किं करिष्यन्ति । न किमपि कर्त्तुं समर्था इत्यर्थः ।। ३ ।। निगृहीतमिति ।। वृष्णयः, सुतं निगृहीतं श्रुत्वा, यदि इह एष्यन्ति, तदा, सुसंयताः प्राणायामादिभिर्दमिताः, प्राणाः इन्द्रियाणि इव, भग्नदर्पाः विनष्टाजेयतादर्पाः सन्तः, शमं यान्ति यास्यन्तीत्यर्थः ।। ४ ।।

### कृष्णप्रिया

श्रीशुकाचार्यजी महाराज ने कहा राजन् ! महान् समरविजयी श्री जाम्बवतीकुमार श्री साम्बजी स्वयंवर में स्थित दुर्योधन राजकुमारी श्री लक्ष्मणाजी को हर लाये ॥ १ ॥ साम्ब के इस कार्य से सर्व कौरवों को क्रोध आया और वे कहने लगे कि यह बालक अत्यंत धृष्ट है इस बालक ने हमको नीचा दिखाया और बलपूर्वक हमारी पुत्री का अपहरण कर लिया ॥२॥ इसलिए इस धृष्ट को पकड़कर बाँध लेना चाहिए। यदि यादवलोग हमपर रूठ जायेंगे तो हमारा क्या बिगाड़ लेंगे ? वे लोग हमारी ही दी हुई धन-धान्य परिपूर्ण पृथ्वी का उपभोग करते हैं ॥ ३ ॥ यदि वे लोग अपने पुत्र साम्ब का वंदी होने का समाचार सुनकर यहाँ आयेंगे तो हमलोग उनका सारा अभिमान चूर्ण कर देंगे और उन लोगों के मिजाज वैसे ही शीतल हो जायेंगे। जैसे किसी संयमी पुरुष के द्वारा प्राणायाम प्रत्याहार आदि साधनों से वश की गई हुई इन्द्रियाँ ॥ ४ ॥

[1]इति कर्णः शलो भूरिर्यज्ञकेतुः सुयोधनः। साम्बमारेभिरे बद्धुं कुरुवृद्धानुमोदिताः[2] ॥ ५ ॥
दृष्ट्वानुधावतः साम्बो धार्तराष्ट्रान् महारथः। प्रगृह्य रुचिरं चापं तस्थौ सिंह इवैकलः ॥ ६ ॥
[3]तं तं जिघृक्षवः क्रुद्धास्तिष्ठ तिष्ठेति भाषिणः। आसाद्य धन्विनो बाणैः[4]कर्णाग्रण्यः समाकिरन् ॥ ७ ॥
[5]सोऽपविद्धः कुरुश्रेष्ठ कुरुभिर्यदुनन्दनः। [6]नामृष्यत्तदचिन्त्यार्भः सिंह क्षुद्रमृगैरिव ॥ ८ ॥

### कर्दमक्षमा

अन्वयः—इति, कुरुवृद्धानुमोदिताः, कर्णः, शलः, भूरिश्रवाः, यज्ञकेतुः, सुयोधनः, साम्बम्, बद्धुम्, आरेभिरे ॥५॥ महारथः, साम्बः, धार्तराष्ट्रान्, अनुधावतः, दृष्ट्वा, रुचिरम्, चापम्, प्रगृह्य, सिंह, इव, एकलः, तस्थौ ॥ ६ ॥ कर्णाग्रण्यः, जिघृक्षवः, ते, तम्, क्रुद्धाः, तिष्ठ, तिष्ठ, इति भाषिणः, धन्विनः, तम्, आसाद्य, बाणैः, समाकिरन् ॥ ७ ॥ कुरुश्रेष्ठ ! कुरुभिः, अपविद्धः, सः, यदुनन्दनः, क्षुद्रमृगैः, अपविद्ध, सिंहः, इव, अचिन्त्यार्भः, तत्, नामृष्यत् ॥ ८ ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

कुरुवृद्धो भीष्मस्तेनानुमोदितास्तत्सहिताः षडेत इत्यर्थः ॥ ५-६ ॥ कर्णोऽग्रगोर्येषां ते ॥ ७ ॥ नामृष्यत् असहत् अचिन्त्यस्य भगवतोऽर्भोऽर्भकः। अचिन्त्यश्चासावर्भश्चेति वा ॥ ८-९ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

इति एवमुक्त्वा। शलादयस्त्रयो बाह्लीकात्मजसोमदत्तात्मजाः। यज्ञकेतुर्भूरिश्रवाः। यज्ञशब्देनात्र यूपो लक्ष्यते। इत्यर्थ इति-क्षत्रधर्मनिष्ठत्वात्पराभवमसहमानो वृद्धोऽपि भीष्मस्सांबबंधनार्थं ययाविति भावः ॥ ५ ॥ धार्तराष्ट्रसंबोधनः। एक एवैकलः। स्वार्थे लः। यद्वा—एकान्प्रधानानपि लुनाति छिनत्तीत्येकलः। लुनातेर्डः एके मुख्यान्यकेवलाः' इत्यमरः। 'शूरतमः ॥ ६ ॥ तं सांबम्। ते कर्णादयः ॥ ७ ॥ स सांबः। अपविद्धस्ताडितः। तत्कुरुताडनम्। 'अंधादंधो न जायेत' इति न्यायेन नहि पितृसम एव प्रायः पुत्रो भवतीति भावः। हे कुरुश्रेष्ठेति पूर्वेषां दुर्विनयेन लज्जमानं सांत्वयतीति भावः। अचिन्त्यार्भ इति श्रीभगवल्लीलाविशेषेच्छयैवानिरुद्धवत्तज्जातमिति भावः ॥ ८ ॥

### श्रीमज्जीवगोस्वामिकृत वैष्णवतोषिणी

शलादयस्त्रयः सोमदत्तपुत्राः तत्र यज्ञकेतुर्भूरिश्रवाः। कुरुवृद्धेति तेषामुत्साहकारणं तेन तु तेषामभिमानव्यञ्जनार्थमेवानुमोदनमिति। ज्ञेयम् ॥ ५ ॥ प्रकर्षेण सज्जीकरणादिना गृहीत्वा ॥ ६ ॥ सम्यगाकिरन् व्याप्तुवन् ॥ ७ ॥ अतिशयेन विद्धः पाठान्तरे अपकर्षणात् विद्धः हे कुरुश्रेष्ठेति पूर्वेषां दुर्विनयेन लज्जमानं राजानं सान्त्वयति यदुनन्दन इति—

"बाल्यात् प्रभृति रामेण सोऽस्त्रेषु विनियोजितः। रामादनन्तरश्चैव मानितः सर्ववृष्णिभिः" ॥

इति श्रीहरिवंशोक्तं माहात्म्यं सूचयति स्वरूपतश्चाऽचिन्त्यार्भः ॥ ८ ॥

---

१. इति कर्णं समालोक्य भूरिश्रवसुयोधनौ। सदुःशासनगान्धारौ दुर्मन्त्रैकान्तशीलिनौ ॥
एतेऽतिक्रम्य विदुरं गान्धारीं च यशस्विना।

२. वृद्धैरसङ्गताः। ३. तं ते-श्रीधर. वंशी. जीव. वीर. विज. विश्व.। ४. कर्णमुख्याः-विज.। ५. सोऽभि-वीर.; सोऽतिवद्धः-विज.। ६. तत्परिभवं दण्डाहत इवोरगः-विज.।

### श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी

शलादयस्त्रयः सोमदत्तपुत्राः, तत्र यज्ञकेतुर्भूरिश्रवाः, कुरुवृद्धेति ज्ञातीनां लज्जया कुलश्रेष्ठस्य लज्जोत्पत्तेस्तेनानुमोदिता इति तेषामुत्साहः सूचितः। वस्तुतश्चायं भावः। दुर्योधनादीनां महाभिमानिनां कदाचित् कत्थनं श्रुत्वा तान् प्रति यादवानां माहात्म्यं दर्शयितुमिच्छता तत्तत्त्वाभिज्ञेन भागवतप्रवरेण भीष्मेणावसरं प्राप्य तदर्थं प्रेरिता इति ॥ ५ ॥ अनु पश्चात्, धावतो वेगेन गच्छतः, प्रकर्षेण दृढसज्जीकरणादिना गृहीत्वा, रुचिरं शार्ङ्गजातित्वात्, इति तस्य दाढ्यादिकमुक्तम्। एकत्र एव तस्थौ, यतो महारथो वीरप्रवरः, सिंह इवेति निर्भयत्वादिकं द्योतयति ॥ ६ ॥ आसाद्य निकटे प्राप्य; धन्विनो धनुर्विद्यादक्षा इत्यर्थः। अतः सम्यगाकिरन् व्याऽनुवन् ॥ ७ ॥ हे कुरुश्रेष्ठेति तदतिवेधेन शोकात्, किंवा अमर्षेण प्रहर्षात्; यद्वा, पूर्व्वेषां दुर्विनयेन लज्जमानं राजानं सान्त्वयति,—यदुनन्दन इति। यदुवंश्यत्वेनापि तेभ्यः कुरुभ्यः श्रैष्ठ्यं किंवा तदतिश्रेष्ठ्यार्थमेव ( विष्णु० प० ११०।२ )—'बाल्यात् प्रभृति रामेण सोऽस्त्रेषु विनियोजितः। रामादनन्तरञ्चैव मानिनः सर्व्ववृष्णिभिः॥' इति श्रीहरिवंशोक्तं माहात्म्यं सूचयति। यद्वा, यदुनामानन्दनार्थमिति भावः। न च बालकत्वेन तेभ्योऽस्य न्यूनतेत्याह—अचिन्त्योऽद्भुतो लोकातीतोऽर्भकः। क्षुद्रमृगैरुपद्रुतः सिंहो यथा तदुपद्रवं न सहते, किन्तु तान् हन्त्येव, तद्वदित्यर्थः ॥ ८ ॥

### श्रीमद्वीरराघवाचार्यकृता भागवतचन्द्रचन्द्रिका

इतीत्थं निश्चित्य कर्णादयः कुरुवृद्धैः धृतराष्ट्रादिभिरनुमोदिताः साम्बं बद्धुमारेभिरे आरब्धवन्तः ॥ ५ ॥ दृष्ट्वेति। अनुधावतः पृष्ठतः आगन्तॄन् दृष्ट्वा एकलोऽसहायः सिंह इव तस्थौ ॥ ६ ॥ तत इति। ते धार्त्तराष्ट्राः तं साम्बं जिघृक्षवः गृहीतुमिच्छवः कर्णः अग्रणीः पुरतो नायको येषां तथाभूताः आसाद्य समीपमेत्य बाणैः समाकिरन् पिदधुः ॥ ७ ॥ स इति। हे कुरुश्रेष्ठ ! कुरुभिरमितो विद्धस्ताडितः स यदुनन्दनः साम्ब अचिन्त्यस्य भगवतोऽर्भः अर्भकः हेतुगर्भमिदमतस्तद्वेधनं नामृष्यत् न सहे तत्र दृष्टान्तः क्षुद्रमृगैर्विद्धः सिंह इव ॥ ८ ॥

### श्रीविजयध्वजतीर्थकृता पदरत्नावली

एते इत्यवलोक्य साम्बं बद्धुमारेभिरे असङ्गताः विनाभूताः ॥ ५ ॥ एकलः अपुरुषद्वितीयः ॥ ६ ॥ जिघृक्षवः ग्रहीतुकामाः ॥ ७-८ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

शलादयस्त्रयः सोमदत्तपुत्राः यज्ञकेतुर्भूरिश्रवाः कुरुवृद्धो भीष्मस्तेनानुमोदिता इत्येतत् स्पृष्टायाः कन्यायाः वरान्तरायोग्यादयमेव वरो भवेत् किन्त्वेतदन्यायस्वशौर्य्ययोर्द्योतनार्थमयं बन्धनीय एव नतु वध्य इति कृतानुमोदनाः ततश्च तेनापि सहिताः कर्णादयः षडित्यर्थः ॥ ५-६ ॥ समाकिरन् सम्यगाकीर्णं चक्रुः ॥ ७ ॥ अपविद्धः अपकर्मणा अन्यायेन विद्धः नामृष्यत् नसहत अचिन्त्यस्य भगवतोऽर्भः ॥ ८-९ ॥

### गूढार्थदीपिनी

कुरुवृद्धो भीष्मः तेन सह षट् ॥ ५ ॥ एक एव एकलः। स्वार्थे लः। यद्वा एकान् प्रधानानपि लुनाति छिनत्तीति। लुनातेर्डः। शूरतम इत्यर्थः ॥ ६ ॥ तं समाकिरन् आच्छादितवन्त कर्णः अग्रणी येषां ते ॥७॥ नामृष्यत् न असहत्। अचिन्त्यस्य भगवतः अर्भकः कर्मधारयो वा। अपविद्धः ताडितः ॥ ८ ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

कुरुवृद्धेन भीष्मेणानुमोदिताः तत्समाहिताः ॥ ५-७ ॥ अचिन्त्यस्य श्रीकृष्णस्यार्भः नामृष्यत् नासहत् ॥ ८-११ ॥

### श्रीमद्वल्लभाचार्य्यकृता सुबोधिनी

एतादृशं वाक्यं भीष्मादीनामपि चेत्, तदा सम्बद्धार्थमपि भवेदिति वक्तॄन् गणयन्ति इतीति। इतिशब्दः प्रकारवाची। एवंविधान्यन्यान्यपि वाक्यानि। दुष्टाश्चत्वारोऽत्र वक्तारः ये भारते, कर्णः, शलः शल्यः, भूरिश्रवसो भ्राता भूरिः, यज्ञकेतुश्च तेषामेव प्रधानभूतः। त्रय एते मध्ये दोषरूपा गणिताः। चतुर्णां प्रधानभूतावाद्यन्तयोर्गणितौ। दुःशासनोऽप्यत्रानुसन्धेयः। अग्रे 'षड्रथा'निति वचनात्। साम्बं बद्धुमारेभिरे। परितः समागत्य धृत्वा बन्धनीय इति। ननु जामातायं जात एव, तथा सति बन्धने कुले दूषणं भवेदित्याशङ्क्याह कुरुवृद्धानुमोदिता इति। अनेनैतत्कथानिरूपणस्य दशमे प्रयोजनमुक्तम्। यतो भक्ता अप्येते बहिर्मुखा जाताः। अतः सात्त्विका अपि निरोधयोग्या इति। अन्यथा निरोधो न युक्तः स्यात् ॥ ५ ॥ ततोऽस्य साम्बस्य त्रिधा गतिः सम्भवति। कन्यया सह पलायनम्, तां त्यक्त्वा वा सम्मुखतया युद्धम्, दैन्यं वेति। तत्र पलायनदैन्ये अकृत्वा

युद्धार्थमुद्युक्त इत्याह दृष्ट्वानुधावत इति। स्वपृष्ठभागे स्वात्मानं धर्तुमनुधावतः षड्रथान् दृष्ट्वा साम्बः। तेऽपि पुनः पितुरेव पुत्रा धार्तराष्ट्राः। स्वयं तु महारथः, न पितुर्न मातुरग्रे बद्ध इति इदानीं युध्यतीति। रुचिरं स्वाभिलषितं चापं परिगृह्य स्वान्तरङ्गसेवकेष्वपि पलायितेषु एकल एव तस्थौ। शङ्काभावाय सिंह इवेति। न हि सिंहः सहायमपेक्षते ॥ ६ ॥ ततस्ते स्थितमपि स्वप्रौढिख्यापनार्थं ग्रहणेच्छया न मारणीय इति दूराद्बाणप्रयोगमकृत्वा, आसाद्य निकटे समागत्य, धन्विनो भूत्वा, कर्ण एवाग्रणीर्येषां ते धनुर्विद्यायामतिनिपुणाः पश्चाद्बाणैः समाकिरन् ॥ ७ ॥ ततो भीतस्य दैन्यमाशङ्क्य निराकरोति सोऽपि विद्ध इति। न केवलं परितो बाणप्रक्षेपः, किन्तु सोऽपि विद्धः। अपिशब्दादश्वाः सारथिश्च। निपुणास्त इति न कन्या विद्धा। स्ववंशस्य हीनतां श्रुत्वा श्रवणे विरक्तो भविष्यतीति तन्निराकरणार्थं सम्बोधनं कुरुश्रेष्ठेति। ते तु कौरवमात्रम्, अत एव कुरुभिरिति। अग्रे पौरुषं करिष्यतीति यदुनन्दनः। तत्तेषां वेधनं नामृष्यत्। यतः अचिन्त्यस्य भगवतः अर्भो बालकः, यस्य पिता अन्यैरपि न चिन्त्यः, स कथं स्वयं चिन्तां कुर्यात्। मौढ्यादप्येवं भवति, ज्ञानादपीति, तत्पक्षद्वयं निराकर्तुं दृष्टान्तमाह सिंहः क्षुद्रमृगैरिवेति। न हि शृगालादिपीडां सिंहो मन्यते ॥ ८ ॥

### श्रीसुबोधिनी-सारः

इति हेतोः कर्ण शलो भूरिर्यज्ञकेतुर्दुर्योधनः कुरुवृद्धो भीष्मस्तेनानुमोदिताः तत्सहिताः षट् सांबं बद्धुमारेभिरे उद्यताः षट् सांबं बद्धुमारेभिरे उद्यताः बभूवुः यज्ञः केतुरिति पाठः साधुः भीष्मस्य संसर्गदोषेणानुमोदन हेतुत्वात् युक्तं चैतत् अनंतरमेव धार्त्तराष्ट्रानित्युक्तेश्च ॥ ५ ॥ अनुधावतः पृष्ठत आयातान् धार्त्तराष्ट्रान् धृतराष्ट्रपक्षीयान् तत्पुत्रांश्च दृष्ट्वा रुचिरं चापं रम्यं धनुः प्रगृह्य महारथः सांब एकल एक एव मत्वर्थीयो लच्प्रत्ययः तस्थौ योद्धुं स्थिरो बभूव ॥ ६ ॥ ग्रहीतुमिच्छंतस्ते क्रुद्धाः तिष्ठतिष्ठेति वदंतो धनुर्धराः कर्णोऽग्रण्यः प्रधानो येषां ते आसाद्य प्राप्य तं सांबं बाणैरावृण्वन् ॥ ७ ॥ हे कुरुश्रेष्ठ कुरुभिरप विद्धस्तिरस्कृतो यदुनंदनः सौर्भो बालकः साम्बः तत्प्रहारं तेषां कर्म वा नाक्षमत अचिंत्यागणय्य एकपदे तु कर्मधारयः क्षुद्रमृगैरधिक्षिप्तः सिंह इव ॥ ८ ॥

### गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

इति निश्चित्य कुरूद्वहेन भीष्मेण अनुमोदिताः कर्णादयः साम्वं बद्धुमारेभिरे ॥ ५ ॥ ततश्च साम्बो धार्तराष्ट्रान् दुर्योधनादीन् अनुधावतः पृष्ठतः आगच्छतः दृष्ट्वा चापं धनुः प्रगृह्य सिंह इव एकल एव तस्थौ। तत्र हेतुः—महारथ इति ॥ ६ ॥ कर्णः अग्रणीः नायको येषां ते जिघृक्षवः तं गृहीतुमिच्छन्तः तमासाद्य तं प्रत्यागत्य बाणैः समाकिरन् छादितवन्तः। तत्र हेतुः—क्रुद्धा धन्विनश्चेति ॥ ७ ॥ हे कुरुश्रेष्ठ! कुरुभिरभितो विद्धस्ताडितः स यदुनन्दनः साम्बः तद्वेधनं नामृष्यत् न सेहे। तत्र हेतुमाह—अचिन्त्यस्य अचिन्त्यप्रभावस्य अर्भः पुत्र इति। तत्र दृष्टान्तमाह-क्षुद्रैर्मृगैस्ताडितः सिंहो यथा तन्न सहते तथेति ॥८॥

### अन्वितार्थप्रकाशिका

इतीति ॥ इति निश्चित्य कुरुवृद्धेन भीष्मेणानुमोदिताः तत्सहिताः कर्णादयः इति षडेते साम्वं बद्धुमारेभिरे। मन्द्धुमिति नकारवान्साधुः पाठस्तद्रहितस्त्वार्षः। अत्र शलादयस्त्रयः सोमदत्तस्य पुत्राः यज्ञकेतुर्भूरिश्रवाः यद्वा कुरुवृद्धानुमोदिताः इति कन्यायाः अकामत्वानिश्चयादनेन स्पृष्टतया वरान्तरायोगादयमेव वरो भवेत् परन्त्वेतदन्यायस्वशौर्यद्योतनार्थंवयं बन्धनीय एव नतु वध्य इति भीष्मेण कृतःनुमोदनास्तेनापि सहिताः षडित्यर्थः ॥ ५ ॥ दृष्ट्वेति ॥ महारथः साम्बो धार्तराष्ट्रान् दुर्योधनादीन् अनुधावतः पृष्ठतः आगच्छतः दृष्ट्वा चापं धनुः प्रगृह्य सिंह इव एकल एव तस्थौ ॥ ६ ॥ तमिति ॥ क्रुद्धा धन्विनश्च कर्णः अग्रणीः नायको येषां ते जिघृक्षवः तं ग्रहीतुमिच्छतः तिष्ठ तिष्ठेति भाषिणश्च सन्तः तमासाद्य प्रत्यागत्य बाणैः समाकिरन् छादितवन्तः ॥ ७ ॥ स इति ॥ हे कुरुश्रेष्ठ! अचिन्त्यस्य भगवतः अर्भः पुत्रः अचिन्त्यस्य भगवतः अर्भः पुत्रः अचिन्त्यश्चासावर्भश्चेति वा कुरुभिरपविद्धः अपकर्मणा अन्यायेन विद्धः स यदुनन्दनः साम्बः तद्वेधनं नामृष्यत् न सेहे। यथा क्षुद्रैर्मृगैः ताडितः सिंहो यथा तन्न सहते तथा ॥ ८ ॥

### श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्

शलादयस्त्रयः सोमदत्तपुत्राः। भूरिः भूरिश्रवाः। कुरुवृद्धेन भीष्मेणानुमोदिताः तत्सहिताः षडेते इत्यर्थः ॥ ५-६ ॥ कर्णोऽग्रणीर्युद्धे प्रथमं गतो येषां ते बाणैः समाकिरन् बाणान् ववृषुः ॥ ७ ॥ नामृष्यत् नासहत्। अचिंत्यस्य हरेरर्भकः ॥ ८ ॥

### भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

इतीति। इतीत्थं, निश्चित्येति शेषः। कर्णः, शलः, भूरिः, यज्ञकेतुः, सुयोधनः एते पञ्च, कुरुवृद्धो भीष्मस्तेनानुमोदिताः, तत्सहिता इत्यर्थः। षडपि, साम्बं बद्धुं, आरेभिरे आरब्धवन्तः ॥ ५ ॥ दृष्ट्वेति। महारथः साम्बः, अनुधावतः

धार्त्तराष्ट्रान्, दृष्ट्वा, रुचिरं चापं प्रगृह्य, सिंहः इव, एकलः असहायः एव, तस्थौ। योद्धुमिति शेषः ॥ ६ ॥ त इति। तिष्ठ तिष्ठ इति भाषिणः, क्रुद्धाः, कर्णाग्रण्यः, धन्विनः ते कौरवाः, जिधृक्षवस्तं ग्रहीतुमिच्छवः सन्तः, आसाद्य तं प्राप्य, तं साम्बं, बाणैः समाकिरन् ॥ ७ ॥ स इति। हे कुरुश्रेष्ठ, यदुनन्दनः, अचिन्त्यो भगवांस्तस्यार्भः पुत्रः, सः साम्बः, क्षुद्रमृगैः सिंहः इव, कुरुभिः अपविद्धः बाणैस्ताडितः सन्, तत् तत्कृतमपवेधनं, न अमृष्यत् न सेहे ॥ ८ ॥

### कृष्णप्रिया

ऐसा निर्णय करके कर्ण, शल, भूरिश्रवा, यज्ञकेतु एवं दुर्योधनादि वीर लोगों ने कुरुवंश के वृद्धजनों की अनुमति ली और साम्ब को पकड़ लेने की तैयारी भी की ॥ ५ ॥ महारथी श्रीसाम्बजी ने देखा कि धृतराष्ट्र के पुत्र मेरा पीछा कर रहे हैं तब वह एक सुन्दर धनुष को सज्जकर सिंह के समान अकेले ही रणसंग्राम में डट गये ॥ ६ ॥ यहाँ पर कर्ण को अग्रसर बनाकर कौरववीर धनुष सज्ज करते हुए साम्ब के पास आ पहुँचे। और क्रोध से भयंकर साम्ब को पकड़ लेने की इच्छा से खड़ा रह इस प्रकार ललकारते हुए बाणों की वृष्टि करने लगे ॥ ७ ॥ राजन् परीक्षित्! हे कुरुश्रेष्ठ! यदुनन्दन श्री साम्बकुमार अचित्य ऐश्वर्य से परिपूर्ण भगवान् श्रीकृष्ण के पुत्र थे। कौरवों के प्रहार से वे उनपर क्रुद्ध हो गये जैसे कोई सिंह क्षुद्र हरिनों का पराक्रम देखकर क्रुद्ध हो जाता है ॥ ८ ॥

**विस्फूर्ज्य रुचिरं चापं सर्वान् विव्याध सायकैः। कर्णादीन् [1]षड्रथान् वीरांस्तावद्भिर्युगपत् पृथक् ॥ ९ ॥**
**चतुर्भिश्चतुरो वाहानेकैकेन च सारथीन्। रथिनश्च [2]महेष्वासांस्तस्य तत्तेऽभ्यपूजयन् ॥ १० ॥**
**तं तु ते विरथं चक्रुश्चत्वारश्चतुरो हयान्। एकस्तु सारथिं जघ्ने चिच्छेदान्यः शरासनम् ॥ ११ ॥**
**तं [3]बद्ध्वा विरथीकृत्य कृच्छ्रेण कुरवो युधि। [4]स्वं कुमारं स्वकन्यां च स्वपुरं जयिनोऽविशन् ॥ १२ ॥**

### कर्दमक्षमा

अन्वयः—रुचिरम्, चापम्, विस्फूर्ज्य, साधकैः, सर्वान्, कर्णादीन्, षडस्थान्, वीरान्, तावद्भिः, सायकैः, पृथक्, पृथक्, विव्याध ॥ ९ ॥ चतुर्भिः, चतुरः, वाहान्, एकैकेन, सारथीन्, च, एकैकेन, महेश्वासान् रथिन्, विव्याध, तस्य, तत्, ते, कर्म, अभ्यपूजयन् ॥ १० ॥ ते, षड्, तु, तम्, विरथम्, चक्रुः, चत्वारः, चतुरः, हयान्, एकेन, सारथिम्, जघ्ने, च, अन्यः, शरासनम् चिच्छेद ॥ ११ ॥ कुरवः, कृच्छ्रेण, युधि, तम्, विरथीकृत्य, कुमारम्, च, कन्याम्, बद्ध्वा, जयिनः, स्वपुरम्, आविशन् ॥ १२ ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

तत्प्रपंचयति चतुर्भिरिति चतुर्भिश्चतुर इत्यत्र वीप्साऽनुसंधेया। तत्कर्म ते संमानितवंतः ॥ ९-११ ॥ स्वस्य दुर्योधनस्य कन्यां च नीत्वेति ॥ १२-१३ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

यावंतस्ते तावद्भिः। षड्भिः तत्रापि प्रत्येकं, तत्रापि युगपदिति सश्लाघिरे ॥ ९ ॥ तत् षट्संख्याकबाणैस्ताडनम्। तस्य सांबस्य। तत्कर्म युगपत्ताडनरूपम्। ते कर्णादयः ॥ १० ॥ तं सांबम्। ते कर्णादयः ॥ ११ ॥ तं सांबम्। जयिनो जेतुकामा न तु लब्धजयाः। कुमारमिति—प्रौढैर्वृद्धैर्बहुभिश्च बालस्यैकस्य बंधनादिकमन्याय्यमिति भावः। गृहीत्वेति शेषः ॥ १२ ॥

### श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी

विस्फूर्ज्येति युग्मकम्। गाढमाकृष्य रुचिरं यथा स्यात् तावद्भिः षड्भिः पृथक् प्रत्येकं तत्रापि युगपत् अभितः अपूजयन् शश्लाघिरे ॥ ९-१० ॥ कथं चक्रुस्तदाह—चत्वार इति पदाभ्याम् एकः कर्णः अन्यो भीष्मः ॥ ११ ॥ विरथीकृत्य पश्चाद्बद्ध्वा अन्यथा तत्राशक्तेः कन्याश्चादायेतिशेषः। कुमारमिति। प्रौढैर्वृद्धैर्बहुभिश्च बालकस्यैकस्य बन्धनादिकमन्याय्यमिति भावः। जयिनः सन्तः अचिन्त्यार्भ इत्युक्तत्वादेतदपि श्रीमदनिरुद्धवच्छ्रीभगवल्लीलाविशेषेच्छयैव जातमिति भावः ॥ १२ ॥

### श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी

विस्फुर्ज्य गाढमाकृष्य, रुचिरमिति पुनरुक्तिस्तस्योत्कृष्टत्वबोधनाय। यद्वा, रुचिरं यथा स्यात्, तावद्भिः षड्भिर्युगपत् तत्रापि पृथक् प्रत्येकं पृथकत्वेन विव्याध, यतो वीरो युद्धसमर्थः ॥ ९ ॥ महेष्वासा इति महावीरत्वमुक्तम्, अतोऽभितोऽ-

---

१. सहयाग्रण्यांस्तावद्भि-विज.। २. ष्वासास्त-वीर. विज.। ३. तं तथा-वीर.; ते तथा विरथं कृत्वा-विज.। ४. कुमारं स्वस्य कन्यां च-श्रीधर. वंशी. जीव. वीर. विश्व.; कुमारं गृह्य कन्यां च-विज.।

पूजयन्, साधु साध्विति शंसनादिर इत्यर्थः। महावीराणामन्यवीर्य्यविशेषदर्शनेन प्रहर्षोदयात्, यद्वा, 'च' अपि, महेष्वासा अप्यभ्यपूजयन्, आत्मनो महारथादिसद्भावेऽपि तादृश-शक्त्यभावादित्यर्थः ॥ १० ॥ कथञ्चक्रुः? तदाह—चत्वार इति पादाभ्याम्; एकः कर्णः, अन्यो भीष्मः ॥ ११ ॥ युधि कृच्छ्रेणैव विरथीकृत्येत्युक्तपोषण्यायात्, विरथीकृत्यैव पश्चाद्बद्धा, अन्यथा तत्राशक्तिरिति भावः। कन्याचादायेति शेषः। कुमारमिति प्रौढैर्वृद्धैश्च बहुभिर्बालकस्यैकस्य बन्धनादिकमन्याय्यमिति भावः, जयिनः सन्तः ॥ १२ ॥

**श्रीसुदर्शनसूरिकृतशुकपक्षीयम्**

चतुर्भिरिति विव्याध इत्यन्वयः ॥ १०-१५ ॥

**श्रीमद्वीरराघवाचार्यकृता भागवतचन्द्रचन्द्रिका**

विस्फूर्ज्येति। आरोपितज्यं चापं विस्फूर्ज्य वज्रनिर्घोषवत् ध्वनयित्वा वीरस्साम्बः कर्णादीन् पूर्वोक्तान् षट्सङ्ख्याकान् तावतो रथांश्च तावद्भिः सायकैः बाणैः युगपत्पृथक् प्रत्येकं विव्याध ॥ ९ ॥ तथा चतुर्भिश्चतुर्भिः सायकैश्चतुरो वाहानश्वानेकैकेन बाणेन सारथींश्च विव्याध रथिनश्चेति ते रथिनः कर्णादयः तस्य साम्बस्य तत्कर्म अपूजयन्नभ्यनन्दन् ॥१०॥ तमिति। ते कर्णादयस्तं साम्बं विरथं चक्रुः तदेवाह चत्वार इति। आजघ्नुरिति वचनपरिणामेन चत्वार इत्यस्य सम्बन्धः। तमिति। एवं युद्धे तं साम्बं कृच्छ्रेण प्रयासेन विरथीकृत्य जयिनः प्राप्तजयाः कुमारं साम्बं स्वकन्यां स्वस्य दुर्योधनस्य कन्यां चादायेति शेषः। पुरं हास्तिनपुरमाविशन् ॥ ११-१२ ॥

**श्रीविजयध्वजतीर्थकृता पदरत्नावली**

हयानामग्रण्यम् अग्रणीभवं कर्म तेन सह वर्तन्त इति सहयाग्र्यास्तान् यावन्तः तावद्भिः शरैः ॥ ९ ॥ एतदेव विवृणोति—चतुर्भिरिति। साम्बस्य तत्कर्म सन्दृश्य कुरवः किमकुर्वन्नत्राह—महेष्वासा इति ॥ १० ॥ अत्र साम्बस्य पराजयो नास्तीति भावेनाह—चत्वार इति ॥ ११ ॥ गृह्य गृहीत्वा जयिनो जेतुकामा एव न तु लब्धजया इति तात्पर्यार्थः ॥ १२ ॥

**श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शिनी**

चतुर्भिश्चतुर इत्यत्र वीप्साऽनुसन्धेया तत्कर्म ते सम्मानितवन्तः ॥१०-११॥ कुमारं कन्याञ्च गृहीत्वेतिशेषः ॥१२-१३॥

**गूढार्थदीपिनी**

यावन्तस्ते तावद्भिः। तत्रापि प्रत्येकं, तत्रापि युगपदिति विस्फूर्ज्यटङ्कारायित्वा ॥९॥ अपूजयन् प्रशशंसुः ॥१०-१२॥

**श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः**

स्वस्य दुर्योधनस्य कन्यां च नीत्वेति शेषः ॥ १२-१५ ॥

**श्रीमद्वल्लभाचार्य्यकृता सुबोधिनी**

ततस्तस्य पौरुषमाह विस्फूर्ज्येति। वरो हि क्षत्रियाणां शौर्येणोत्कृष्टो भवति। अतः स्वपरोक्षां प्रयच्छन्निव लघुहस्ततां प्रदर्शयति। सर्वान् कर्णादीन् षड्भिः षड्भिर्बाणैः एकैकं युगपदविध्यत् ॥ ९ ॥ षड्बाणानां विनियोगमाह चतुर्भिश्चतुरो वाहानिति। एतदपि कौशलम्, यथा सर्व एव विद्धा भवन्ति समागताः। अन्यथा तं तथा न स्मरेयुः। एकैकेन सर्वानेव सारथीन्, एकैकेनैव रथिनः कर्णादीन्। तर्हि अप्रयोजकास्ते भविष्यन्तीत्याशङ्क्याह महेष्वासानिति। अनवहिता भविष्यन्तीत्याशङ्क्याह तस्य तत्तेऽभ्यपूजयन्निति। साम्बस्य तत्कर्म महारथिनोऽपि कर्णादयः अभ्यपूजयन्। साधु साध्विति प्रशंसां कृतवन्तः। एतदेव साम्बस्य बन्धने निमित्तं जातम्। तैः स्तुतः प्रतीकारं न कृतवान्। अन्यथा ब्रह्मास्त्रादिभिः युद्धं कुर्यात्॥१०॥ ततो यज्जातं तदाह तं बद्ध्वेदि। कृच्छ्रेण आदौ तं विरथीकृत्य, पश्चाल्लौकिकन्यायेन बद्ध्वा, यतः कुरवः, कुरुणा हि भूयान् धर्मः कृत इति, तद्वंश्यानामपि मनोरथसिद्धिः। युधीति। बन्धनेऽपि लज्जा भाव उक्तः। युद्धे हि जयपराजययोरनियमात्। किञ्च। स्वकुमारं स्वकन्यां चेति। सुतरामेव बन्धने न विमानन्। दुर्योधनो हि बलस्य जामाता, तस्य चैषा कन्या, अत उभयोरपि स्वकीयत्वमेव। कुमारं स्वस्य कन्यामिति पाठे स्वकन्यासहितं कुमारमद्यापि विवाहरहितमिति बन्धने हेतुरुक्तः। मध्ये स्थापिते कश्चिन्नेष्यति, पलाय्य वा गमिष्यतीति स्वपुरं प्राविशन्। जयिन इति प्रवेशे सन्तोषो निरूपितः ॥ १२ ॥

**श्रीसुबोधिनी-सारः**

रुचिरं चापं धनुर्विस्फूर्ज्याकृष्य टंकारयित्वेत्यन्ये वीरः शूरः कर्णादीन् षट्स्थान्सर्वान् तावद्भिः षड्भिः सायकैर्बाणैः पृथक् एकैकं युगपत्समकालमेव विव्याध ॥ ९ ॥ तद्यथा चतुर्भिः शरैः चतुरोऽश्वान् एकैकेन सारथीन् महानिष्वासो धनुर्येषां तान् रथिनश्चेति तस्य सांबस्य तत्कर्म ते कर्णादयः साध्विति प्राशंसन् ॥ १० ॥ तं सांबं ते विरथं रथहीनं चक्रुः कथमित्यत आह

चत्वारो भटाः चतुरो वाहानश्वान् जघ्नुः एकस्तु सारथिं जघ्नेऽन्यः षष्ठः शरा अस्यंते क्षिप्यंते येन तद्धनुः चिच्छेद ॥ ११ ॥ कुरवः संज्ञायाः प्रधानाश्रयत्वेन निर्देशः युधि संग्रामे कृच्छ्रेण विरथीकृत्य तं सांबं बद्धा स्वस्य दुर्योधनस्य कन्यां च बद्धा गृहीत्वा धातूनामनेकार्थत्वात् जेतुं शीलमेषां ते इति केचित् गुरवस्तु जयोस्त्येषु इत्याहुः स्वपुरं हस्तिनापुरम् आयुः ॥ १२ ॥

### गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

रुचिरं आरोपितज्यं चापं विस्फूर्ज्य निर्घोषयित्वा स वीरः सर्वान् षट्सङ्ख्यायुक्तान् कर्णादीन् तावतो रथांश्च तावद्भिः सायकैः युगपदेकदैव पृथक् प्रत्येकं विव्याध ॥ ९ ॥ षट्बाणानां विनियोगमाह—चतुर्भिरिति । प्रत्येकरणानां चतुर्भिश्चतुर्भिः सायकैः चतुरश्चतुरो वाहान् अश्वान्, एकैकेन च सायकेन सारथीन्, एकैकेन रथिनश्च विव्याध । महाधनुर्धरा अपि ते रथिनः कर्णादयस्तस्य साम्बस्य तत्कर्म अपूजयन् स्तुतवन्तः ॥ १० ॥ ते तु कर्णादयः सर्वे मिलित्वा तमेकं साम्बं विरथं चक्रुः । तु शब्दस्तेषामपकर्षसूचनार्थः । तस्य प्रकारमाह—चत्वार इति । तेषु चत्वारस्तु चतुरो हयान् जघ्नुः । एकस्त्वित स्पष्टम् ॥ ११ ॥ एवं युद्धे तं साम्बं कृच्छ्रेण अतिप्रयासेन विरथीकृत्य बद्ध्वा च जयिनः प्राप्तजयाः कुरवस्तं यदुकुमारं स्वकन्यां चादाय स्वपुरमाविशन् ॥ १२ ॥

### अन्वितार्थप्रकाशिका

विस्फूर्ज्येति । रुचिरम् आरोपितज्यं चापं विस्फूर्ज्य निर्घोष्य स वीरः सर्वान् षट्संख्यायुक्तान् कर्णादीन् तावतो रथांश्च तावद्भिः सायकैः युगपदेकदैव पृथक् पृथक् प्रत्येकं विव्याध ॥ ९ ॥ तत्प्रपञ्चयति—चतुर्भिरिति । प्रत्येकं रथानां चतुर्भिश्चतुर्भिः सायकैः चतुरश्चतुरो वाहान् अश्वान् इति वीप्सा ज्ञेया । एकैकेन च सायकेन एकैकान् सारथीन् एकैकेन सायकेन एकैकान् रथिनश्च विव्याध । महेष्वासाः महाधनुर्धरा अपि ते रथिनः कर्णादयस्तस्य साम्बस्य तत्कर्म अपूजयन् स्तुतवन्तः ॥ १० ॥ तमिति । ते तु कर्णादयः सर्वे मिलित्वा तमेकं साम्बं विरथं चक्रुः । तेषु चत्वारस्तु चतुरो हयान् जघ्नुः । एकस्तु सारथिं जघ्ने । तज्ञार्थः । अन्यः शरासनं चिच्छेद ॥ ११ ॥ तमिति । एवं युद्धे तं साम्बं कृच्छ्रेण अतिप्रयासेन विरथीकृत्य बद्ध्वा च जयिनः प्राप्तजयाः कुरवस्तं यदुकुमारं स्वकन्यां चादायेति शेषः । स्वपुरमाविशन् । एतदपि अनिरुद्धवद्भगवदिच्छयैवेति ज्ञेवम् ॥ १२ ॥

### श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्

विस्फूर्ज्यशब्दायमानं कृत्वा । सायकैर्बाणैः ॥९॥ इषवो वाणा अस्यं ते क्षिप्यं ते एभिरिति इष्वासानि धनूंषि महांति इष्वासानि येषां ते महेश्वासाः महाचापाः ते कर्णादयः तस्य सांबस्य तत् कर्म अभ्यपूजयन् ॥१०॥ ते कथं चक्रुस्तदाह तमिति । षण्णां मध्ये चत्वारो राजानो बाणैर्जघ्नुः ॥ ११ ॥ कुमारं सांबं स्वस्य दुर्योधनस्य कन्यां चादायेति शेषः ॥ १२-१३ ॥

### भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

विस्फार्येति रुचिरं चापं धनुः, विस्फार्य वज्रनिर्घोषवत् ध्वनयित्वा, वीरः साम्ब, कर्णादीन् पूर्वोक्तान् षट, तावतः रथांश्च, तावद्भिः सायकैः, सर्वान्, युगपत्, पृथक् विव्याध ॥ ९ ॥ चतुर्भिरिति । तथा चतुर्भिः सायकैः, चतुरः, वाहानश्वान्, एकैकेन बाणेन, सारथींश्च, रथिनश्च, विव्याध । महेष्वासाः, ते कर्णादयः, तस्य तत् कर्म, अभ्यपूजयन् अभ्यनन्दन् ॥ १० ॥ तमिति ॥ ते कर्णादयः षट् तु, तं साम्बं, विरथं चक्रुरिति संबन्धः ॥ ११ ॥ तमिति ॥ एवं कुरवः, तं साम्बं, युधि कृच्छ्रेण, विरथीकृत्य बद्धा, जयिनः संप्राप्तजयास्ते, कुमारं साम्बं, स्वस्य कन्यां च, आदायेति शेषः । स्वपुरं हास्तिनपुरं, अविशन् ॥१२॥

### कृष्णप्रिया

श्री साम्बजी ने अपने दिव्य धनुष का टंकार करके कर्ण आदि छः महावीरों पर जो पृथक् पृथक् अपने रथों पर सवार थे उन सबको एक साथ छः छः बाणों से अलग-अलग प्रहार किया ॥ ९ ॥ उनमें से चार चार उनके चार-चार घोड़ों पर एक-एक उनके सारथियों पर एवं एक एक उन महान् धनुषधारी रथी वीरों पर छोड़ा । साम्ब के इस अलौकिक एवं अद्भुत हस्तलाघवको देखकर विपसी वीर लोग भी मुक्त कण्ठ से साम्बकी प्रशंसा करने लगे ॥ १० ॥ तदनन्तर उन छहों वीरों ने एक ही साथ मिलकर साम्ब को रथहीन कर दिया चार वीरों ने एक-एक बाण से साम्ब के चार घोड़ों को मारा, एक ने सारथिको और एक ने साम्ब का धनुष्य तोड़ डाला ॥ ११ ॥ इस प्रकार कौरवों ने संग्राम में अत्यन्त कष्ट से एवं भरसक प्रयास से साम्ब को रथहीन बनाया और बांध लिया, पुनः वे कौरव श्री साम्ब को एवं अपनी पुत्री लक्ष्मणा को लेकर अपनी विजय मनाते हस्तिनापुर की ओर लौट आया ॥ १२ ॥

तच्छ्रुत्वा नारदोक्तेन राजन् संजातमन्यवः। कुरून् प्रत्युद्यमं चक्रुरुग्रसेनप्रचोदिताः ॥ १३ ॥
सान्त्वयित्वा तु तान् रामः [1]संनद्धान् वृष्णिपुङ्गवान्। नैच्छत् कुरूणां वृष्णीनां कलिं कलिमलापहः[2] ॥ १४ ॥
जगाम हास्तिनपुरं रथेनादित्यवर्चसा। ब्राह्मणैः कुलवृद्धैश्च वृतश्चन्द्र इव ग्रहैः ॥ १५ ॥
गत्वा गजाह्वयं रामो बाह्योपवनमास्थितः। उद्धवं प्रेषयामास [3]धृतराष्ट्रबुभुत्सया ॥ १६ ॥

**कर्दमक्षमा**

अन्वयः—राजन्, तत्, श्रुत्वा, सञ्जातमन्यवः, उग्रसेनप्रचोदिताः, कुरून्, प्रति, उद्यमम्, चक्रुः ॥१३॥ कलिमलापहः, तु, रामः, कुरुणाम्, वृष्णीनाम्, कलिम्, न, ऐच्छत, सन्नद्धान्, वृष्णिपुङ्गवान्, सान्त्वयित्वा, ब्राह्मणैः, कुलवृद्धैः, वृतः, ग्रहैः, वृतः, चन्द्र, इव, आदित्यवर्चसा, रथेन, हस्तिनापुरम्, जगाम ॥ १४-१५ ॥ रामः, गजाह्वयम्, गत्वा, बाह्योपवनम्, आस्थितः, धृतराष्टं बुभुत्सया, उद्धवम्, प्रेषयामास ॥ १६ ॥

**श्रीधरस्वामिविरचिता भावार्थदीपिका**

यतः कलिं नैच्छदतः सांत्वयित्वा जगामेति ॥ १४-१५ ॥ धृतराष्ट्रं प्रति बुभुत्सयेति अभिप्रायजिज्ञासयेत्यर्थः ॥ १६ ॥

**श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः**

तत् सांबबंधनम् ॥ १३ ॥ सन्नद्धान् युद्धार्थे परिणद्धकवचान्। कुरूणां वृष्णीनामिति। श्रीरोहिणीकुंत्यादिसंबंधेनैक्यतां प्राप्तत्वादिति भावः। कलेर्दुर्योधनस्य मलम् भिमानमपहंति तन्मात्रं दूरीकरोति न तु तमपि हंतुमिच्छति करुणस्वभावत्वादितिभावः। युग्मान्वयः। उग्रसेनेति श्रीकृष्णेन न तु प्रेरिताः परमात्मीये ज्येष्ठे बंधुवृंदे सति स्वपुत्रार्थोद्यमानर्हत्वात् ॥ १४-१५ ॥ बुभुत्सया बोधयितुमिच्छया। अंतर्भावितण्यर्थोयम्। तदभिप्रायजिज्ञासया दुर्योधनादीनां दुर्बुद्धेरपि धृतराष्ट्रमूलकत्वात् ॥ १६ ॥

**श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी**

नारदेनोक्तमुक्तिस्तेन तद्द्वारेण उग्रसेनेनैव चोदिता यादवाः नतु श्रीकृष्णेन परमात्मीये ज्येष्ठे च भवद्बन्धुवृन्दे सति स्वयं स्वपुत्राद्यर्थमुद्यमस्यानर्हत्वात् अग्रजाभिप्रायज्ञानात् उग्रसेने दत्तराज्यसम्माननत्वाच्च ॥ १३ ॥ सान्त्वयित्वेति युग्मकम्। कुरूणां वृष्णीनामिति श्रीरोहिणीकुन्त्यादिसम्बन्धेनैकतां प्राप्तत्वादितिभावः। कलिं कलहं नैच्छत् यतः सामान्यतोपि कलहादिकलिकालदोषापहः यद्वा कलेर्दुर्योधनस्य मलमभिमानादिकमपहन्ति तन्मात्रं दूरीकरोति नतु तमपि हन्तुमिच्छतीति तथा करुणस्वभावत्वादिति भावः। एवं भगवद्भागवतद्वेषदोपस्य स्वेनापि दुरुन्मूलत्वं दर्शितमिति च ॥ १४-१५ ॥ धृतराष्ट्रमिति। राजत्वात् दुर्योधनादीनां दुर्बुद्धेस्तन्मूलकत्वाच्च ॥ १६ ॥

**श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी**

नारदेनोक्तं यद्वृत्तं तेन, किंवा उक्तमुक्तिस्तेन द्वारेण; तत् साम्बबन्धनादिकं श्रुत्वा; उग्रसेनेनैव, न तु श्रीकृष्णेन, अग्रजाभिप्रायज्ञानात् उग्रसेनप्रतिष्ठार्थं वा, प्रकृष्टेन चोदिता यादवाः। अतएवाग्रे श्रीबलदेवो वक्ष्यति—उग्रसेन इत्यादि। हे राजन्निति प्रहर्षात्, किंवा राज्ञां स्वभावोऽयं भवता ज्ञायत एवेति भावः ॥ १३ ॥ वृष्णिपुंगवान् उग्रसेनादीन्; कलिं कलहं नैच्छत्, यतः कलहादि-कलिकालदोषापह इति शिष्यत्वापेक्षया दुर्य्योधनस्य स्नेहेन गमनं परिहृतम्। एवं कुरुवृष्णिकुलयो रमणाद्रामः ॥ १४ ॥ आदित्यवर्च्चसेति रविवच्छीघ्रगतित्वम्, तेन सद्य एव गमनञ्च सूचयति—ब्राह्मणादिभिर्वृत इति। दुर्बुद्धीनां प्रबोधनार्थम्, तथा निजयुयुत्साहित्य-द्योतनार्थञ्च ॥ १५ ॥ धृतराष्ट्रमिति दुर्य्योधनादीनां दुर्बुद्धेस्तन्मूलकत्वात् ॥ १६ ॥

**श्रीसुदर्शनसूरिकृतशुकपक्षीयम्**

समीप्सया सुखेप्सया ॥ १६-१९ ॥

**श्रीमद्वीरराघवाचार्यकृता भागवतचन्द्रचन्द्रिका**

तदिति। हे राजन्! नारदोक्त्या तद्वृत्तान्तं श्रुत्वा सञ्जातो मन्युर्येषां ते उग्रसेनप्रचोदिताश्च यदवः कुरुन्प्रत्युद्यम प्रतिचिकीर्षां चक्रुः ॥ १३ ॥ सान्त्वयित्वेति। सन्नद्धान् गन्तुमायत्तानाशु सान्त्वयित्वा रामः कुरूणां वृष्णीनाञ्च मिथः कलिं

---

१. संक्रुद्धान्–विज. । २. कलहशंकितः–विज. । ३. धृतराष्ट्रं तु–श्रीधर. वंशी. जीव.; राजंस्तेषां–वीर.; धृतराष्ट्राय शान्तये–विज. ।

कलहं नैच्छत् यतः स कलिमलंकलहात्मकं मलमपहन्तीति तथा ॥ १४ ॥ किन्तु आदित्यस्येव वर्चो यस्य तेन रथेन गमनसाधनेन ग्रहैर्गुरुशुक्रादिभिः चन्द्र इव ब्राह्मणादिभिः परिवृतो हास्तिनपुरं जगाम ॥ १५ ॥ गत्वेति । गजाह्वयं हास्तिनपुरं हे राजन् ! तेषां कुरूणां बुभुत्सयाऽभिप्रायजिज्ञासया उद्धवं प्रेषयामास ॥ १६ ॥

**श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली**

नारदोक्तेन नारदवचनेन ॥ १३ ॥ कलिं विरोधम् ॥ १४-१९ ॥

**श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी**

सान्त्वयित्वा जगामेत्यन्वयः यतो नैच्छदित्यादि ॥ १४-१५ ॥ बुभुत्सया तदभिप्रायजिज्ञासया ॥ १६ ॥

**गूढार्थदीपिनी**

तत् साम्बबन्धनम् । प्रत्युद्यमं युद्धोद्यमम् ॥१३॥ कलिं विरोधोभम् । कलेर्दुर्योधनस्य मलमभिमानाम् अपहन्तीति॥१४॥ वर्चः तेजः ॥ १५ ॥ बुभुत्सया तदभिप्रायजिज्ञासया ॥ १६ ॥

**श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः**

धृतराष्ट्रं प्रति उद्धवं प्रेषयामास बुभुत्सया तदभिप्रायजिज्ञासया ॥ १६-२१ ॥

**श्रीमद्वल्लभाचार्यकृता सुबोधिनी**

नारदो हि निरोधनिदानमिति सात्त्विकानां स्वासक्तिसिद्ध्यर्थं नारदः समागत्य वृत्तमित्याह तच्छ्रुत्वेति । भगवान् विलष्टकर्मा पुत्रसाहाय्यं न करिष्यतीति उग्रसेनेनैव प्रचोदिताः यादवाः कुरून्प्रत्युद्यमं चक्रुः । सञ्जातमन्युत्वं युक्तमिति राजसम्बोधनम् । उपाहरणे विपक्षस्यैव दोषः, अत्र तु न तथेति तूष्णींभावो भगवतः ॥ १३ ॥ तदा साधनशक्तिर्मुख्या बल इति, अत्रत्यं कार्यं भगवत एवेति, कुरुर्मूलभूतो भगवत इति, यदुवंश इव कुरुवंशेऽपि देवा एवावतीर्णा इति, देवानामन्योन्यविरोधो धर्मनाशकः पापपोषक इति, तान् नप्त्रोपाख्याने शपथकरणाद्य एव प्रथमं द्रुह्यति, स नष्टो भवतीति, बहुदोषदुष्टत्वात् कलहस्य तन्निवारणार्थं रामः प्रवृत्त इत्याह सान्त्वयित्वेति । वृष्णिपुङ्गवानिति महत्त्वम् । सान्त्वने हेतुः सन्नद्धानिति । तत्कार्यं स्वयं चेत्कुर्यात्, तदैव सान्त्विता भवन्तीति ज्ञापितम् । कार्यं साम्बस्य सभार्यस्यानयनम्, तत्प्रीत्यैव चेद्भवति, तदा कलहो व्यर्थ इति कुरूणां वृष्णीनां नैच्छत् । उभयेषां देवभावात् । रामश्च कलिमलापहः । देवविरोधे सत्त्वस्य सर्वथा तिरोभावात्तमः केन हन्येत । कारणसत्त्वेन सह विरोधाभावात् । अन्यथा तमसः तत्कार्याणां च स्थितिर्न स्यात् । अन्यथा कलावुत्पत्स्यमानानामुद्धारो न भवतीति जन्मकारणनिर्धारो व्यर्थः स्यात् । तु शब्दः कुरुपक्षपातं व्यावर्तयति । तान् प्रसिद्धानिति हीनभावोऽपि नाश्रयणीय इति सूचितम् । तेन ऋजुमार्गेणासिद्धौ वक्रेणापि तत्करिष्यतीति सिद्धम् । ज्ञानशक्तिरत्र न पूर्णेति केचित् । लोकानुरोधी भगवानित्यपरे । नीतिमार्गानुसारिणी साधनशक्तिः, पुष्टिमार्गानुसारिणी फलशक्तिरिति सिद्धान्तः ॥ १४ ॥ सान्त्वनसिद्ध्यर्थं रामस्य गमनमाह जगामेति । हस्तिनो नात्र सहभाव इति ऋतुभावेन गमनम् । आदित्यवर्चसेति तेषां प्रतिबोधनम् । नीतिमार्गोपयोगिन आह । ब्राह्मणैः कुलवृद्धैः, चकारादन्यैरपि शाब्दिभिः । कुरूणामनभिप्रेतं साम्बविमोचनं भवतीति, तत्तापार्थं गच्छतीत्याशङ्क्य, तेषां तापापनोदार्थं गच्छतीति वक्तुं दृष्टान्तमाह चन्द्र इव ग्रहैरिति । बृहस्पतिप्रभृतिभि ॥ १५ ॥ नीतिपरैवेयं शक्तिरिति ज्ञापयितुं लोकदृष्ट्यापि द्विषतां पुरं न प्रविशेदिति बहिःस्थित एव स्वागमनं ज्ञापितवानित्याह गत्वेति । अत एव रामः । बाह्योपवनमिति नगरसीमाप्रवेश उक्तः । आस्थितिस्तत्र विमोचनम् । नीतिज्ञ उद्धवः । धृतराष्ट्रो गन्धर्वो दैत्यावेशसहितो देवांशः । स बुध्यतामिति बुभुत्सा । धृतराष्ट्रं प्रति बोधयितुमिच्छया वा ॥ १६ ॥

**श्रीसुबोधिनी-सारः**

हे राजन् नारदस्योक्तेन वचसा तद्वृत्तं श्रुत्वा सम्यक् जातो मन्युः क्रोधो येषां ते यादवा उग्रसेनेन प्रचोदिताः प्रेरिता दत्ताज्ञाः कुरून् प्रति उद्यमं चक्रुः ॥ १३ ॥ सन्नद्धान् कवचिनो वृष्णिश्रेष्ठान् तान् सांत्वयित्वा क्षमाप्य रामः कुरूणां यादवानां च कलिं कलहं विरोधमिति यावत् नैच्छत् नावद् तत्र हेतुः कलिरेव मलस्तमपहरतीति ॥ १४ ॥ सूर्यतुल्यप्रभेण रथेन हास्तिनपुरं जगाम ब्राह्मणैः कुलवृद्धैर्जरद्यादवैः वृतः ग्रहैर्भौमादिभिर्वृतश्चंद्र इव ॥ १५ ॥ गजाह्वयं गत्वा प्राप्य बाह्यमुपवनमास्थितो राम उद्धवं प्रेषयांबभूव धृतराष्ट्रं प्रति बुभुत्सया तदभिप्रायजिज्ञासया वस्तुतस्तु स्वागमनविजिज्ञापयिषयेति ॥ १६ ॥

**श्रीविट्ठलरायात्मजश्रीवल्लभकृतलेखः**

एकोनविंशे । सान्त्वयित्वेत्यत्र । अन्यथा तमस इति । कारणसत्त्वेन सह विरोधे तमसस्तत्कार्याणां च मूलत एव नाशः स्यादित्यर्थः । अन्यथा कलाविति । देवविरोधेन सत्त्वतिरोभावे इत्यर्थः । नन्वेते दुष्टा भूभाररूपा अग्रेपि मारणीया एवेति

युद्धं कुतो निवारितवानित्याशङ्क्य समाधानत्रयमाहुः ज्ञानेति। लोकेति। नीतिति। जगामेत्यत्र। हस्तिनापुरमित्यनुक्त्वा हास्तिनपुरमित्युक्तं तत्तात्पर्यमाहुः हस्तिन इति। तथा सति तृतीयया सहभावोपि प्रतीयेतेति पुरे हस्तिसहभावोक्त्या वक्तव्यं सूचितं स्यात्। तादृशे पुरे च ऋजुमार्गेण गमनं नीतिविरुद्धं स्यात्, अतः सम्बन्धमात्रसूचनाय तद्धितान्तो हास्तिनशब्द उक्तः। गत्वा गजाह्वयमित्यत्र। स बुध्यतामितीति। राम आगत इति धृतराष्ट्रो बुध्यतामितीच्छेति प्रथमपक्षे। साम्बो मोचनीय इति धृतराष्ट्रस्य प्रतिबोधनं तस्येच्छेति द्वितीयपक्षेऽर्थः।

## गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

ततश्च नारदवाक्येन तत्साम्बस्य बन्धनं श्रुत्वा सञ्जातो मन्युः क्रोधो येषां ते तथोग्रसेनेन प्रचोदिता यादवाः कुरून् प्रति युद्धोद्यमं चक्रुः॥ १३॥ सन्नद्धान् गन्तुमुद्युक्तांस्तान् यादवान् रामः सान्त्वयित्वा ब्राह्मणादिभिर्वृतः आदित्यतुल्यं वर्चो यस्य तेन रथेन हास्तिनपुरं जगामेति द्वयोरन्वयः। तस्य शोभातिशयं सूचयन् दृष्टान्तमाह—ग्रहैः शुक्रादिभिर्वृतश्चन्द्र इवेति। सान्त्वने हेतुमाह–कुरूणां वृष्णीनां च कलिं विरोधं नैच्छदिति। तत्र हेतुमाह–कलिं कलहात्मकं मलमपहन्तीति तथा तमिति॥१४–१५॥ द्विषतां पुरं न वेष्टव्यमिति गजाह्वयं गत्वा रामो बाह्योपवनमाश्रितः। ततः बुभुत्सया कौरवाभिप्रायजिज्ञासया धृतराष्ट्रं प्रति उद्धवं प्रेषयामास॥ १६॥

## अन्वितार्थप्रकाशिका

तदिति॥ हे राजन्! नारदोक्तेन वाक्येन तत्साम्बस्य बन्धनं श्रुत्वा सञ्जातो मन्युः क्रोधो येषां ते तथोग्रसेनेन प्रचोदिता यादवाः कुरून्प्रति युद्धोद्यमं चक्रुः॥ १३॥ सान्त्वयित्वेति। कलिमलापहः रामः सन्नद्धान् तान् वृष्णिपुङ्गवान् सान्त्वयित्वा कुरूणां वृष्णीनां च कलिं नैच्छत् अतो यादवान्सान्त्वितवान्। कृष्णस्त्वत्र रामाशयं ज्ञात्वा तूष्णीमेवासीत्॥१४॥ जगामेति। ततश्च रामः ग्रहैर्वृतश्चन्द्र इव ब्राह्मणैः कुलवृद्धैश्च वृतः आदित्यतुल्यं वर्चस्तेजो यस्य तेन रथेन हास्तिनपुरं जगाम॥ १५॥ गत्वेति। द्विषतां पुरं न प्रवेष्टव्यमिति गजाह्वयं गत्वा रामो बाह्योपवनमाश्रितः। ततः बुभुत्सया कौरवाभिप्रायजिज्ञासया धृतराष्ट्रं प्रति उद्धवं प्रेषयामास॥ १६॥

## श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्

सन्नद्धान् धृतकवचान्। वृष्णिपु पुंगवान् श्रेष्ठान्॥ १४॥ ग्रहैर्नक्षत्रैः॥ १५॥ बुभुत्सया तदभिप्रायं ज्ञातुमिच्छयेत्यर्थः॥ १६॥

## भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

तदिति। हे राजन्, तत् नारदोक्तेन श्रुत्वा, नारदोक्त्या तद्वृत्तान्तमाकर्ण्येत्यर्थः। संजातः मन्युर्येषां ते, उग्रसेनप्रचोदिताः यदवः, कुरून् प्रति, उद्यमं प्रतिचिकीर्षोद्योगं, चक्रुः॥ १३॥ सान्त्वयित्वेति। कलिमलं कलहात्मकं मलमपहन्तीति तथाभूतः रामः, आशु संनद्धान् गन्तुमादृतान्, वृष्णिपुङ्गवान्, तान् सान्त्वयित्वा, कुरूणां वृष्णीनां च, कलिं कलहं, न ऐच्छत्॥ १४॥ जगामेति। रामः, आदित्यस्येव वर्चस्तेजो यस्य तेन, रथेन, ग्रहैः वृतः परिवृतः, चन्द्रः इव, ब्राह्मणैः, कुलवृद्धैश्च, वृतः सन्नेव, हास्तिनपुरं, जगाम॥ १५॥ गत्वेति। रामः, गजाह्वयं हस्तिनापुरं गत्वा, बाह्योपवनं आश्रितः सन्, बुभुत्सया तदभिप्रायजिज्ञासया, धृतराष्ट्रं प्रति, उद्धवं, प्रेषयामास॥ १६॥

## कृष्णप्रिया

राजन् परीक्षित्! श्री नारद महर्षि के मुख से यह वृत्तान्त जानकर यादवों को अत्यन्त क्रोध आया और वे सब उग्रसेन महाराज की आज्ञा से कौरवों पर चढ़ाई करने की तैयारी में लग गये॥ १३॥ श्री बलभद्रजी क्लेशप्रधान कलियुग के समस्त पाप-संलाप को मिटानेवाले हैं उन्होंने कुरुवंश और यदुवंश के परस्पर में संग्राम होना अच्छा न माना, यद्यपि यादव अपनी सर्व प्रकार से तैयारी कर चुके थे। फिर भी श्री दाऊजी ने सबको शांत कर दिये और स्वयं भगवान् भास्कर के समान तेजोमय रथपर चढ़कर हस्तिनापुर पधारे। अपने साथ कतिपय विप्रों को और यदुवंश के मान्य वृद्धों को भी ले गये। उन विप्रों और मान्यों के मध्य में बलभद्रजी की ऐसी दिव्य शोभा बढ़ रही थी कि मानों भगवान् चन्द्रग्रहों के बीच में विराजमान मालुम हो रहे थे॥ १४–१५॥ भगवान् बलभद्रजी हस्तिनापुर पहुँचे और नगर के बाहर किसी उपवन में ठहर गये। पुनः कौरव लोग क्या करना चाहते हैं इस विषय का ताग लगाने के लिए बलभद्रजी ने उद्धवजी को महाराज धृतराष्ट्रजी के समीप भेजे॥ १६॥

सोऽभिवन्द्याम्बिकापुत्रं भीष्मं द्रोणं च बाह्लिकम् । दुर्योधनं च विधिवद् राममागतमब्रवीत् ॥ १७ ॥
तेऽतिप्रीतास्तमाकर्ण्य प्राप्तं रामं सुहृत्तमम् । तमर्चयित्वाभिययुः सर्वे मङ्गलपाणयः ॥ १८ ॥
तं संगम्य यथान्यायं गामर्घ्यं च न्यवेदयन् । तेषां ते तत्प्रभावज्ञाः प्रणेमुः शिरसा बलम् ॥ १९ ॥
बन्धून् कुशलिनः श्रुत्वा पृष्ट्वा शिवमनामयन् । परस्परमथो रामो बभाषेऽविक्लवं वचः ॥ २० ॥

### कर्दमक्षमा

अन्वयः—सः, अम्बिकापुत्रम्, भीष्मम्, द्रोणम्, वाह्लिकम्, च, दुर्योधनम्, विधिवत्, अभिवन्ध, आगतम्, रामम्, अब्रवीत् ॥ १७ ॥ सुहृत्तमम्, तम्, रामम्, प्राप्तम्, आकर्ण्य, ते, अतिप्रीताः, अर्चयित्वा, मङ्गलयाणयः, सर्वे, अभिययुः ॥ १८ ॥ यथा, न्यायं, तम्, सगम्य, गाम्, च, अर्घ्यं, न्यवेदयन्, तेषाम्, ( मध्ये ) ये, तत्, प्रभावज्ञाः, ते, बलम्, शिरसा, प्रणेमुः ॥१९॥ बन्धून्, कुशलिनः, श्रुत्वा, परस्परम्, शिवम्, च, अनामयम्, पृष्ट्वा, रामः, अविक्लवम्, वचः, बभाषे ॥ २० ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

विधिवदभिवंद्य ॥१७॥ तमुद्धवमर्चयित्वा सत्कृत्य । मंगलपाणय उपायनहस्ताः ॥१८॥ वृद्धा अपि प्रणेमुः ॥१९-२१॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

स उद्धवः । युधिष्ठिरादीनामभिवादनेऽनुक्तिस्तु तेषां तदेन्द्रप्रस्थेऽवस्थानात् ॥ १७ ॥ ते भीष्मादयः । सुहृत्तममिति-सुहृदो यादवाः, सुहृत्तराः श्रीवसुदेवादयः, तेष्वपि पौरव्याः श्रीरोहिण्याः पुत्रत्वेन सुहृत्तमम् । यद्वा-दुर्योधनं प्रति गदाविद्याप्रदत्वे न पूज्यं बलरामम् । तमुद्धवम् ॥ १८ ॥ तं रामम् । तेषां मध्ये ॥ १९ ॥ अथ कुशलप्रश्नोत्तरम् ॥ २० ॥

### श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी

अभिवादने श्रीयुधिष्ठिरादीनामनुक्तिस्तदानीमिन्द्रप्रस्थवासात् दुर्योधनञ्चेति चकारो निष्कर्षे स च तस्यानर्हत्वेऽपि लोकरीत्यैवेदं बहिरभिवन्दनमिति बोधयति अन्तस्तु तद्विधशास्तृसर्वान्तर्यामित्वदृष्ट्यैवेति ॥ १७ ॥ सुहृदो यादवाः सुहृत्तराः श्रीवसुदेवादयः तेष्वपि पौरव्याः श्रीरोहिण्याः पुत्रत्वेन सुहृत्तमं यद्वा परमोपकारिणं दुर्योधनं प्रति गदादिशिक्षणात् अतोऽतिप्रीताः यद्वा साम्बमोचनार्थमस्माननुनेतुं प्राप्तमित्यभिप्रेत्यातिप्रीताः ॥ १८ ॥ ये श्रीभीष्मादयः ॥ १९ ॥ श्रुत्वेत्यत्र हेतुः, शिवं क्षेमम् अनामयञ्चारोग्यं परस्परञ्च पृष्ट्वेति तदेवं ( दृ ) पृष्ट्वा श्रुत्वा स्थितेष्विति शेषः । अथो तत्प्रश्नानन्तमेव अविक्लवं निर्भयम् ॥ २० ॥

### श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी

अतएव प्राक् तमभिवन्द्य, एषामेवाभिवन्दनादिकं कुरुषु मुख्यत्वात्, श्रीयुधिष्ठरादीनां चानुक्तिस्तदानीं तेषामिन्द्रप्रस्थे निवासात्, साम्बबन्धने च साहाय्याद्यभावात् ॥१७॥ सुहृदो यादवाः, सुहृत्तराः श्रीवसुदेवादयः, तेष्वपि पौरव्याः श्रीरोहिण्याः पुत्रत्वेन सुहृत्तमम्; यद्वा, परमोपकारिणं दुर्योधनं प्रति गदायुद्धादि-शिक्षणात्, अतः प्रीताः; पाठान्तरेऽपि स एवार्थः । सर्व्वे इति प्रत्येकं सर्व्वेषां मंगलपाणित्वादिकं बोधयति ॥ १८ ॥ यथान्यायमिति धृतराष्ट्रादयः साशिर्व्वादालिंगनादिना दुर्य्योधनादयश्च प्रणामादिना संगम्येत्यर्थः । ये श्रीभीष्मादयः, शिरसेति भूमिस्पर्शनेऽतिभक्तिरुक्ता ॥ १९ ॥ शिवं क्षेमम्, अनामयं चारोग्यम्, परस्परं पृष्ट्वा, अथोतत्प्रश्नानन्तरमेव; अविक्लवं स्पष्टाक्षरमदैन्यं वा, निर्भयत्वात् ॥ २० ॥

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम्

अविक्लवमिति पदम् ॥ २०-२१ ॥

### श्रीमद्वीरराघवाचार्यकृता भागवतचन्द्रचन्द्रिका

स इति । उद्धवः अम्बिकायाः पुत्रं भीष्मं बाह्लीकेन सहितं दुर्योधनञ्च विधिवदभिवन्द्य ॥१७॥ तेपीति । तेपि भीष्मादयोपि राममागतं श्रुत्वा प्रीताः तमुद्धवं सुहृद्भिर्वृतमर्चयित्वा सर्वे मङ्गलद्रव्याणि पाणिषु येषां तथाभूताः राममभिजग्मुः ॥१८॥ तमिति । तं रामं यथान्यायं स्वस्ववयस्थानाद्यनुरूपमालिङ्गनादिभिः आलिङ्गय सम्यक् गां धेनुमर्घ्यञ्च तस्मै न्यवेदयन् तेषां मध्ये ये तत्प्रभावज्ञाः रामप्रभावविदस्ते बलं रामं शिरसा प्रणेमुः ॥ १९ ॥ बन्धूनिति । रामः परस्परं बन्धून् कुशलिन श्रुत्वा अनामयमारोग्यं शिवं शुभं च पृष्ट्वा च अविक्लवमिति छेदः । अदीन वचो उभाषे ॥ २० ॥

**श्रीविजयध्वजतीर्थकृता पदरत्नावली**

परस्परं शिवं सुखमनामयम् आरोग्यमविक्लवं धार्ष्ट्र्ययुक्तम् ॥ २०-२१ ॥

**श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः**

सोऽभिवन्द्य ॥ १७-२३ ॥

**श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी**

युधिष्ठिरादीनामभिवादनेऽनुल्लेखस्तदानीं तेषामिन्द्रप्रस्थेऽवस्थानात् ॥ १७ ॥ तमुद्धवं सत्कृत्य ॥ १८ ॥ तेषां मध्ये ये भीष्मादयस्ते प्रणेमुः ॥ १९ ॥ परस्परं श्रुत्वा पृष्ट्वा स्थितेषु तेष्विति शेषः ॥ २० ॥

**गूढार्थदीपिनी**

स उद्धवः। विधिवत् अभिवन्ध ॥ १७ ॥ ते भीष्मादयः। मङ्गलम् उपायनम्। दुर्योधन प्रति गदाविद्याप्रदत्वेन सुहृत्तमं पूज्यम् ॥ १८ ॥ तं रामम् मिलित्वा। गां धेनुम्। तेऽपि भीष्मादयः ॥ १९। स्थितेषु तेषु। अनामयम् आरोग्यम्। अविक्लम् उदारम् ॥ २० ॥

**श्रीमद्वल्लभाचार्य्यकृता सुबोधिनी**

तस्य यथोचितं करणमाह **सोऽभिवन्द्येति**। अम्बिकापुत्रो धृतराष्ट्रः, बाह्लिकः शन्तनोर्भ्राता, चकारात्कृपादिब्राह्मणान्। दुर्योधनो वरःश्वशुर इति। चकारात्तत्पक्षपातिनः। एवमुभयविधा नमस्कृता बोधिताश्च। **विधिवदित्यन्तेन** तुल्यत्वाय। कथमागमनमिति प्रश्नसमये राममागतमब्रवीत् ॥ १७ ॥ ते तां वार्तां श्रुत्वैव प्रीताः। स हि सुहृत्तमः दुर्योधनश्वशुरः गुरुश्च। यादवपक्षपाते परमन्यथा भविष्यति। तमुद्धवमर्चयित्वा आभिमुख्येन ययुर्यथाशास्त्रम्। मङ्गलपाणयः ॥ १८ ॥ सङ्गतावपि सौहार्ददार्ढ्यमाह **तं संगम्येति**। प्रह्वादिप्रकारभेदैर्यथान्यायम्। अतिथिवन्मधुपर्कादिना पूजितवन्त इति ज्ञापयितुमाह **गामर्घ्यं चेति**। तेषां पूजकानां मध्ये ये तत्प्रभावाभिज्ञाः माहात्म्यविदः ते ज्येष्ठा अपि लौकिकीं दृष्टिं दूरीकृत्य प्रणेमुः। अनेन सर्वे लौकिकाः, केचनैव तत्प्रभावाभिज्ञा इति निरूपितम्। अभिज्ञा अपि बलं बलाधिक्येनैव, नत्वलौकिकानुभावेन। अन्यथा ते विषमान् बोधयेयुः ॥१९॥ एवं कायिकव्यवहारमुक्त्वा वाचनिकमाह **बन्धून्कुशलिन इति**। शिवं कल्याणं सुखरूपम्, अनामयं दुःखाभावरूपम्, **बन्धून्** धर्मिणः परस्परं कुशलिनः श्रुत्वा। एतदपि परस्परं पृष्ट्वा। अथो भिन्नप्रक्रमेण रामोऽविक्लवं अदीनम्, अन्यथा यादवानां दीनता स्यात्, भक्ताश्च ते ॥ २० ॥

**श्रीसुबोधिनी-सारः**

अंबिकायाः पुत्रं धृतराष्ट्रं भीष्मं द्रोणं बाह्लिकं दुर्योधनं च विधिवदभिवंद्य प्रणम्य स उद्धव आगतं राममब्रवीत् ॥१७॥ सुहृत्तममतिमित्रं तं प्राप्तं राममाकर्ण्य श्रुत्वाऽतिप्रीतास्ते कौरवास्तमुद्धवमर्चयित्वा संपूज्य मंगलं वस्तु पाणिषु येषां तेऽभिययुः संमुखमाजग्मुः ॥ १८ ॥ तं रामं संगम्य मिलित्वा यथान्यायं यथाविधि गां पाद्यमर्घ्यं च समार्पयन्। तेषां मध्ये तस्य रामस्य प्रभावज्ञा ये ते शिरसा बलं प्रणेमुः ॥ १९ ॥ कुशलमारोग्यमस्त्येषां ते तान् बंधून् श्रुत्वा शिवं मंगलं यथा भवति तथाऽनामयं सुखं पृष्ट्वा परस्परं मिथोऽथो अनंतरं रामोऽविक्लवं गंभीरं वचो जगाद ॥ २० ॥

**गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी**

स उद्धवः अम्बिकापुत्रो धृतराष्ट्रः तदादीन् विधिवदभिवन्द्य आगतं राममब्रवीत् ॥ १७ ॥ ते भीष्मादयो रामं प्राप्तमाकर्ण्य श्रुत्वाऽतिप्रीता जाताः। तत्र हेतुमाह—सुहृत्तममिति। प्रथमं तमुद्धवं समर्चयित्वा अर्घ्यपाद्यासनादिभिः सत्कृत्य मङ्गलद्रव्याणि पाणिषु येषां ते तथाभूताः सर्वे राममभिजग्मुः ॥ १८ ॥ यथान्यायं स्ववयःसम्बन्धाद्यनुरूपमालिङ्गनादिभिस्तं रामं सङ्गम्य गां धेनुं अर्घ्यं च तस्मै न्यवेदयन्। तेषां मध्ये ये तस्य बलस्य प्रभावं जानन्ति ते बलं शिरसा प्रणेमुः ॥ १९ ॥ रामः परस्परं बन्धून् कुशलिनः श्रुत्वा शिवं सुखमनामयं आरोग्यं च पृष्ट्वा अथ अनन्तरं अविक्लवं अदीनं वचः बभाषे ॥ २० ॥

**अन्वितार्थप्रकाशिका**

स इति ॥ स उद्धवः अम्बिकापुत्रं धृतराष्ट्रं भीष्मादींश्च विधिवदभिवन्द्य आगतं राममब्रवीत्। युधिष्ठिरादीनामिन्द्रप्रस्थे निवासादनुल्लेखः ॥ १७ ॥ त इति ॥ ते भीष्मादयः सुहृत्तममुपकारिणं दुर्योधनस्य गदादिशिक्षणात् रामं प्राप्तमाकर्ण्य

श्रुत्वाऽतिप्रीता जाताः। प्रथमं तमुद्धवम् अर्चयित्वा अर्घ्यपाद्यासनादिभिः सत्कृत्य मङ्गलद्रव्याणि उपायनानि पाणिषु येषु ते तथाभूताः सर्वे राममभिजग्मुः॥ १८॥ तमिति॥ यथान्यायं स्ववयःसम्बन्धाद्यनुरूपमालिङ्गनादिभिस्तं रामं सङ्गम्य गां धेनुं अर्घ्यं च तस्मै न्यवेदयन् तेषां मध्ये ये तस्य बलस्य प्रभावं जानन्ति ते भीष्मादयो वृद्धा अपि बलं शिरसा प्रणेमुः॥ १९॥ बन्धूनिति॥ रामः परस्परं बन्धून् कुशलिनः श्रुत्वा शिवं सुखमनामयम् आरोग्यं च पृष्ट्वा स्थितेषु तेष्विति शेषः। अथानन्तरम् अविक्लवम् अदीनं वचः बभाषे॥ २०॥

### श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्

बाह्लिकं सोमदत्तपितरं। कुरुं कुलवृद्धं॥ १७॥ तं उद्धवमर्च्चयित्वा॥ १८॥ गां न्यवेदयन्। तवेयं भूमिरिति कथितवंतः। अर्घ्यं च न्यवेदयत्॥ १९॥ अनामयरूपं शिवं कुशलं अविक्लवं निर्भयं वचः॥ २०॥

### भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

स इति॥ स उद्धवः, अम्बिकापुत्रं धृतराष्ट्रं, भीष्मं गाङ्गेयं, द्रोणं द्रोणाचार्यं, सबाह्लिकं बाह्लीकेन सहितं दुर्योधनं च, विधिवत् यथायोग्यं, अभिवन्द्य, रामं आगतं, अब्रवीत्॥ १७॥ तेऽपीति॥ सुहृत्तमं, तं रामं प्राप्तं आकर्ण्य, प्रीताः सर्वे अपि, ते कौरवाः, तमुद्धवं, अर्चयित्वा सत् कृत्य, मङ्गलानि मङ्गलद्रव्याणि पाणिषु येषां तथाभूताः, सन्तः, अभिययुः राममभिजग्मुः॥ १८॥ तमिति॥ तं रामं यथान्यायं संगम्य, गां स्वागतादिवाचं, अर्घ्यमर्घार्थं द्रव्यं च, न्यवेदयन्। तेषां कौरवाणां मध्ये, ये तत् प्रभावज्ञाः रामप्रभावविदः, वृद्धाः, ते बलं, शिरसा, प्रणेमुः॥ १९॥ बन्धूनिति॥ बन्धून्, कुशलिनः श्रुत्वा, परस्परं शिवं अनामयं, पृष्ट्वा, अथो तदनन्तरं, रामः, अविक्लवमदीनं वचः, बभाषे॥ २०॥

### कृष्णप्रिया

श्री उद्धवजी ने कौरवों की सभा में पहुँचकर महाराज धृतराष्ट्रजी, श्री भीष्मपितामहजी, श्री द्रोणाचार्यजी, बह्लिक एवं दुर्योधन को विधि पूर्वक वंदन किया, साथ में निवेदन किया कि महाराज बलभद्रजी वहाँ पधारे हैं॥ १७॥ कौरवों ने अपने परम हित चिंतक एवं अत्यंत प्रिय बलभद्रजी का पधारना जानकर उन लोगों की प्रसन्नता की सीमा न रही और श्री उद्धवजी का विधि पुरःसर सन्मान करके अपने करकमलों में माङ्गलिक सामग्री लेकर श्री बलरामजी का स्वागत करने के लिये चल पड़े। पुनः अपना सम्बन्ध वय एवं स्नेह के अनुसार सब कौरव बलभद्रजी से मिले तथा उनके सत्कार के लिए श्री बलभद्रजी को गौ समर्पण किया। साथ अर्घ्यप्रदान भी किया। इन कौरवों में जो लोग बलभद्रजी की महिमा जानते थे उन्होंने शिर नवाकर दाऊजी को प्रणाम किया॥ १८-१९॥ पुनः उन लोगों ने परस्पर एक दूसरे का कुशल मङ्गल पूछा, और यह सुनकर की सब भाई-बन्धु कुशल है श्री बलभद्रजी ने धैर्य पुरःसर और गंभीरता के साथ सारी बात कही॥ २०॥

**उग्रसेनः क्षितीशेशो यद् व आज्ञापयत् प्रभुः। तदव्यग्रधियः श्रुत्वा कुरुध्वं माविलम्बितम्॥ २१॥**
**यद् यूयं बहवस्त्वेकं जित्वाधर्मेण धार्मिकम्। अबध्नीताथ तन्मृष्ये बन्धूनामैक्यकाम्यया[1]॥ २२॥[2]**
**वीर्यशौर्यबलोन्नद्धमात्मशक्तिसमं वचः। कुरवो बलदेवस्य निशम्योचुः प्रकोपिताः॥ २३॥**
**अहो महच्चित्रमिदं कालगत्या दुरत्यया[3]। आरुरुक्षत्युपानद् वै शिरो मुकुटसेवितम्[4]॥ २४॥**

### कर्दमक्षमा

अन्वयः—क्षितिशेशः, उग्रसेनः, प्रभुः, वः, यत्, आज्ञापयत्, अव्यग्रधियः, श्रुत्वा, माविलम्बितम्, कुरुध्वम्॥ २१॥ यत्, बहवः, यूयम्, एकम्, धार्मिकम्, अधर्मेण, जित्वा, बध्नीत, अथ, तत्, बन्धूनाम्, ऐक्यकामया, मृष्ये॥ २२॥ कुरवः, बलदेवस्य, वीर्यशौर्य, बलोन्नद्धम्, आत्मशक्तिसमम् वचः, निशम्य, प्रकोपिताः, उचुः॥ २३॥ अहो, इदम्, महत्, चित्रम्, दुरत्यया, कालगत्या, वै, उपानत्, वै, मुकुटसेवितम्, शिरः, आरुरुक्षति॥ २४॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

यद्यूयमित्युग्रसेनवाक्यम्। मृष्ये सहे। अथाशु तमानीय समर्पयतेति शेषः॥ २२॥ वीर्यं प्रभावः शौर्यमुत्साहो बलं सत्त्वं तैरुन्नद्धमुच्छृंखलम्। कथम्। आत्मनः शक्तेः सममनुरूपम्॥ २३॥ उपानत्पादरक्षा शिर आरोढुमिच्छतीति हीना अस्मानाज्ञापयंतीत्यर्थः॥ २४॥

१. बन्धूनामिष्ट-विज.। २. श्रीशुक उवाच-च. पु. टि.। ३. त्ययं-विज.; त्यया-च. पु. टि.। ४. भूषितं-वीर.।

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

क्षितीशेशो राजाधिराजः। क्षितीशा यूयं तेषामीशो राजा तत्र हेतुः-प्रभुः। सुधर्मापारिजाताद्युपायनसमर्पका इंद्रादयो यदाज्ञाकारिणस्तत्र यूयं के वराका इति ययातिना यदूनां राजत्वमात्रं निषिद्धं न तु राजेशत्वमिति भावः। अव्यग्रधियः सन्त इत्यन्यथा स युष्मान् दंडयिष्यतीति भावः॥ २१॥ धार्मिकमितिक्षत्रियधर्मे स्वयंवरे कन्याहरणरूपे स्थितम्॥ २२॥ कुरवो दुर्योधनादयः॥ २३॥ 'दुरंतया' इति पाठः सम्यक्। दुरत्यया' इति पाठे तृतीयार्थे प्रथमार्षत्वात्, दुरत्यययेत्यर्थः। यद्वा—औणादिककप्रत्यय एतेर्बोध्यः। तथा चात्येतीत्यत्यो नाशः, दुर्गतोऽत्यो यस्यास्सा दुरत्या तया। पादौ रक्षतीति पादरक्षा। इत्यर्थ इति—सर्वथास्मदतुल्याः स्वाधिक्यवर्णनेन निर्लज्जा इति भावः॥ २४॥

### श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी

आज्ञापनयोग्यत्वमाह—क्षितीशेशः तत्र हेतुः प्रभुः महेन्द्रादीनामप्याज्ञापकः इति राजत्वमात्रं ययातिना निषिद्धं नतु राजेशत्वमिति न्यायाच्च दर्शितः अव्यग्रधियः सावधानास्सन्तः यद्वा तेन साम्नैवादिष्टमिति तत्रान्यथा शङ्कया भयमकुर्वाणा इत्यर्थः॥ २१॥ अधर्मेणेति छेदः। अथ कार्त्स्न्ये ऐक्यमभेदः॥ २२॥ अस्य वाक्यविशेषाकथनं च तेषां तावन्मात्रश्रवणेनैव दुर्वचने प्रवृत्तत्वात् प्रकर्षेण कोपितास्तद्वचसैव॥२३॥ अहो विस्मये नच चित्रमित्याहुः—कालस्य गत्या गतिः सोः स्थानेटादेशः छान्दसः दुरत्यया दुर्लङ्घ्या कदाचिदसम्भवोदयात् तदेव दर्शयति—आरुरुक्षतीति॥ २४॥

### श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी

आज्ञापनयोग्यतामाह—क्षितीशानां राज्ञामीशः सम्राडित्यर्थः। यतः प्रभुर्यादवानामस्माकमीश्वरः। यद्वा, अत एव सर्वेषां प्रभुः, अव्यग्रधियः सावधानाः सन्तः, ईदृश्युक्तिश्च तेषां राजत्वाभिमान-नाशनार्थम्, तथा प्रकोपनाय च। तच्च स्वविक्रमप्रदर्शनाय, तदपि कृपया दुर्बुद्धीनां सद्बुद्ध्यर्थमिति; तत्त्वग्रे व्यक्तं भावि॥ २१॥ अधर्मेणेति। बहूनामेकेन सह युद्धात्, धार्मिकमिति स्वयम्बरे कन्याहरणस्य क्षत्रियधर्म्मत्वादनपराधिनमपीत्यर्थः। यद्वा, बहुभिरेकस्य युद्धे कदाचिद्वैमुख्यमपि सम्भवेत्, तदभावादाभिमुख्यपरमिति। अथ मांगल्ये॥ २२॥ वीर्य्यादिभिर्मन इन्द्रियदेहशक्तिभिरुच्चैर्नद्धं बद्धं ग्रथितम्, तत्र हेतुः—आत्मेति॥ २३॥ अहो विस्मये, कालस्य गत्या गतिः, दूरत्यया दुर्लङ्घ्या, कदाचिदसम्भाव्यस्याप्युद्भवात्, तत्राहुः—आरुरुक्षतीति। वै अपि, मुकुटेन सेवितमपि॥ २४॥

### श्रीसुदर्शनसुरिकृतं शुकपक्षीयम्

अधर्मेणेति पदम्॥ २२॥ वीर्यम् अविकृतिः बलं धारणसामर्थ्यम्॥ २३-२४॥

### श्रीमद्वीरराघवाचार्यकृता भागवतचन्द्रचन्द्रिका

तदेवाह—उग्रसेन इति द्वाभ्याम्। तदाज्ञापितमव्यग्रधियः अवहितचित्तास्सन्तः श्रुत्वा कुरुध्वं तन्माविलम्बितम् इणन्तमिदं माविलम्बितव्यमित्यर्थः॥ २१॥ किञ्च यदीति। एकमसहायं धार्मिकञ्च बालं बह्वो यूयमधर्मेण जित्वा अवध्नीत बद्धवन्त इति यत्तदहं मृष्ये सोढवानस्मि कुतः बन्धूनामैक्यकाम्यया मिथः सौहार्दकामनया अथाशु तमानीय समर्पयतेति शेषः॥ २२॥ वीर्यमिति। वीर्यं युद्धे म्लान्यभावः शौर्यं तत्र स्वगृह इव प्रवेशसामर्थ्यं बलं धारणसामर्थ्यम् एभिरुन्नद्धमुच्छृङ्खलं बलदेवस्य वचो निशम्याकर्ण्य कुरवः प्रकोपिताः प्रोचुः॥ २३॥ उक्तिमेवाह—अहो इति षड्भिः। दुरत्ययया दुरतिक्रमणीयया कालगत्या अहो महदिदं चित्रं जातं किन्तदित्यत आह—आरुरुक्षतीति। उपानत् पादरक्षा मकुटेन भूषितं शिरो मूर्धानमारोढुमिच्छति उपानत्स्थानीया यदवः किरीटालङ्कृतशिरःस्थानीयान् अस्मानाज्ञापयन्तीत्येतदतिचित्रम् इति भावः॥ २४॥

### श्रीविजयध्वजतीर्थकृता पदरत्नावली

अधर्मेण अवध्नीत बन्धनमकार्ष्ट मृष्ये सहेयम्॥ २२-२३॥ आरुरुक्षति आरोढुमिच्छति॥ २४॥

### श्रीमज्जीवगोस्वामीकृतः क्रमसन्दर्भः

गत्या गतिः। सौटादेशश्छान्दसः॥ २४-२६॥

### श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शिनी

क्षितीशा यूयं युष्माकमपीशो राजा तत्र हेतुः प्रभुः सुधर्मापारिजाताद्युपायनसमर्पका महेन्द्रादयोपि यस्याज्ञाकारिणस्तत्र के यूयं वराका इति ययातिना यदूनां राजत्वमात्रं निषिद्धं नतु राजेशत्वमिति भावः। अव्यग्रधियः सन्त इत्यन्यथा स

युष्मान् दण्डयिष्यतीति भावः ॥ २१ ॥ यद्यूयमित्युग्रसेनस्य वाक्यम् अधर्मेण जित्वेति तन्मृष्ये सहे तस्मादाशु तमानीय समर्पयेति वाक्यशेषस्याप्रयोगस्तेषां तावन्मात्रश्रवणेनापि दुर्वचने प्रवृत्तत्वात् ॥ २२ ॥ वीर्य्यं प्रभावः शौर्य्यमुत्साहः बलञ्च तैरुन्नद्धमुच्छ्रितम् आत्मनः शक्तेरनुरूपं समं प्रकोपिताः अर्थाद्वचसैव ॥ २३ ॥ कालगत्या कालगतिः उपानत् चर्मपादुकापि शिरस्तच्चापि मुकुटयुक्तम् ॥ २४ ॥

## गूढार्थदीपिनी

वः युष्मान् ॥ २१ ॥ मृष्ये सोढवानस्मि ॥ २२ ॥ शौर्यम् उत्साहः । उन्नद्धम् उच्छृङ्खलम् ॥ २३ ॥ चित्रमाश्चर्यम् । दुरन्तया इति पाठः सम्यक् इति वंशीधरी ॥ २४ ॥

## श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः

यद्यूयमित्युग्रसेनाज्ञा मृष्ये सहे अथ शीघ्रं तमानीय समर्पयतेति भावः ॥ २२ ॥ वीर्यं प्रभावः शौर्यमुत्साहः बलं सत्त्वं तैरुद्धमुच्छृङ्खलं बलदेवस्य वचः निशम्य आत्मनः शक्तेः समं यथा भवति तथा प्रोचुः कथम्भूताः प्रकोपिताः वचसेति शेषः ।२३। आरुरुक्षति आरोढुमिच्छति उपानत्स्थानीयाः निकृष्टाः यादवाः शिरस्स्थानीयानुत्कृष्टान् अस्मान् आज्ञापयन्तीति महद्वैपरीत्यमित्यर्थः ॥ २४ ॥

## श्रीमद्वल्लभाचार्यकृता सुबोधिनी

सर्वदेवाधिपत्यं भगवतोग्रसेनाय दत्तमिति तदाज्ञा सर्वैरेव देवैः कर्तव्या, अतो यादवान् परित्यज्य उग्रसेनाज्ञापनमाह उग्रसेन इति । तस्याज्ञा भिन्ने राजभिः कथं कर्तव्येत्याशङ्क्याह । क्षितीशानां सर्वेषामेव राज्ञामीश इति । यद्वो युष्मान् प्रति आज्ञापयत् । आज्ञापनावाक्यमग्रे वक्तव्यम्, साम्बः सभार्यः प्रस्थापनीय इति । तद्वाक्यात् पूर्वमेव अपराधक्षमावाक्य एव क्रुद्धाः परुषभाषिणो जाता इति तदकथनम् । तदग्रे विवक्षितं कर्तव्यमिति हितोपदेशो रामस्य । मा विलम्बतमिति द्वितीयम् । अन्यथेश्वरः राज्ञां राज्ञां न सहत इति पश्चात् कृतमपि व्यर्थं स्यादिति ईश्वरवचनोल्लङ्घने अनिष्टं शीघ्रमिति ज्ञापितम् । ईश्वरत्वमाह प्रभुरिति ॥ २१ ॥ कदाचित्कृतापराधस्य दण्डं करिष्यतीत्याशङ्कायामाह । यद्यूयमिति । यद्यपि भवन्तो दण्डार्हाः, तथापि बान्धवानामन्योन्यं कलहो भविष्यतीति तदपराधं मृष्ये । ईश्वरेणापि क्रियमाणे दण्डे बन्धुभिरेव कारितमिति कदाचिद्वैमनस्थं स्यात्, तन्नाभिप्रेतम्, किन्तु ऐक्यमेवाभिप्रेतम्, शास्त्रनिषिद्धं ह्येकेन सह बहूनां युद्धम् । तथाकरणे च दण्डो राज्ञावश्यं कर्तव्यः । ततस्तमपराधमनुवदति । यूयं बहवः । तु शब्देनान्यथाकरणं निवार्यते । महास्त्रप्रयोगः पलायनं चाधर्म इति । अधर्मेण एककाले बहवो युद्धाभिज्ञा बालकं स्वीरक्षायां व्यग्रं खण्डशः साधननाशेन जितवन्त इति । बन्धनं चापरो दोषः ॥२२॥ एतावच्छ्रुत्वा रुष्टा जाता इत्याह वीर्येति । वीर्यं क्रियाशक्तिः, शौर्यं स्वभावः, बलं देहस्य, त्रिभिरुन्नद्धं वचः फलपर्यवसायीति । उग्रसेनो युष्मानाज्ञापयदिति वीर्येणोन्नद्धम् । क्षितीशेश इति शौर्येण । मा विलम्बितमिति बलेन । यद्यूयमिति आत्मशक्तिसमम् । कुरव इति अभिमानार्थम् । तद्धर्म एव युक्तः, न तु तदीयाः । राजानमप्रयोजकं जानन्त्येव । बलस्य परं तादृशं वचनम् यदि स्वयं वदेत्, ममाज्ञयैव एतत्कर्तव्यमिति, तदा क्रोधो न भवेत् । वस्तुत ईश्वरत्वात् अस्माकं तेषामपि भक्तत्वाविशेषेपि यद्यादवेष्वेवैश्वर्यं स्थापयित्वा अस्मास्वीशितव्यत्वं स्थापयति, तत्र हेतुर्न कुलीनत्वादिः, तथा सत्यस्मास्वेवोचितं स्यात् । साधारणलीलेयं न भवतीति न स्वेच्छया यथासुखं करणम्, भक्तार्थं हि भगवानवतीर्णः, सा च भक्तिः कारणानुरोधादुद्गता कौरवेष्वेव पुष्टा भवितुमर्हति, नाकौरवेषु । ईश्वरत्वाद्भक्तिमपि तेभ्य एव प्रयच्छतीति चेत् । न । तथा सति वैषम्यं स्यात् । अतः सिद्धामेव भक्तिमाश्रित्य भगवान् वदतीति कारणाधीनत्वं च भक्तेर्ज्ञात्वा स्वोत्कर्षं स्थापयितुं किञ्चिदुक्तवन्त इत्यर्थः । यतस्तैनैव वाक्यैः अन्तर्यामितया वा प्रकर्षेण कोपिताः ॥ २३ ॥ स्वोत्कर्षख्यापकानि पञ्चवाक्यान्याह अहो महच्चित्रमिति । देहेन्द्रियप्राणान्तःकरणात्मधर्मे उत्कर्षः क्रमान्निरूप्यते । तत्र देहोत्कर्षे वस्तुतो विचार्यमाणे यादवा धर्मरहिताः स्वेच्छाचाराः चर्मपुटप्रायाः, कौरवास्तु देवाधिष्ठिताः मुकुटाश्रयशिरस्थानीयाः । अयमर्थः परमार्थिकः । एवं सति कौरवेभ्योऽपि यादवोत्कर्षे वस्तुसामर्थ्याभावात् कालवशादेव तथा भवतीति, कालश्चेश्वरो नियन्तुमशक्य इति, पूर्वं कदाप्येवं न जातमिति, महच्चित्रं भवति । तत्र हेतुः दुरत्यया कालगत्येति । ईश्वरवाक्यात् दुरत्ययत्वम्, अन्यथा असम्बद्धवाक्यतायां न किञ्चिद्दूषणं स्यात् । वै निश्चयेन । उपानच्छिरः आरुरुक्षतीति । मुकुटैर्वस्त्रादिभिर्न्यासादिभिश्च सेवितम् ॥ २४ ॥

## श्रीसुबोधिनी-सारः

क्षितीशानां राज्ञामपीशो राजाधिराजः कृष्णेन राज्यप्रदानतः चक्रवर्तित्वात् उग्रसेनः प्रभुः वो युष्मान् यदाज्ञापयत् तत् श्रुत्वाऽव्यग्रा धीर्बुद्धिर्येषां वै एकाग्रचित्ता यूयं कुरुध्वं माविलंबितं शीघ्रं यथा भवति तथा ॥ २१ ॥ तद्यथा बहवो यूयम्

अधर्मेणान्यायेन धार्मिकमेकं सांबं जित्वाऽबध्नीतेति यत् तत् बंधूनामैक्यकाम्यया एकत्ववांछयाहं मृष्ये सहे ॥ २२ ॥ वीर्यं प्रभावः शौर्यमुत्साहो बलं सत्त्वं तैरुन्नद्धमुत्कटम् आत्मनः स्वस्य शक्त्या समं तुल्यं बलदेवस्य वचो निशम्य श्रुत्वा प्रकोपिताः कुरवः ऊचुः ॥ २३ ॥ अहो महच्चित्रमिदं भवति किं तत्तत्राहुः दुरत्यया वर्णलोपस्यार्षत्वाद्दुरत्ययया कालगत्या उपानत् पादत्राणं कर्त्री मुकुटयोग्यं शिर आरुरुक्षति आरोढुमिच्छतीति कालगत्येति प्रथमा सोः स्थाने ड्यादेशश्छांदसः । शिदनेतिवदिति तोषिणी तत्र कालस्य गतिर्दुरतिक्रमणीया इत्यर्थः ॥ २४ ॥

### श्रीविट्ठलरायात्मजश्रीवल्लभकृतलेखः

बन्धून् कुशलिन इत्यत्र बन्धून् धर्मिण इति । शिवमनामयं च धर्मः । एते धर्मिण इत्यर्थः । धर्मिप्रश्नः स्वरूपतः सन्तीति प्रश्नः ।

### गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

तद्वचनमाह—उग्रसेन इति । उग्रसेनो यत् वो युष्मान् आज्ञापयत् तत् अव्यग्रधियः समाहितचित्ताः सन्तो मत्तः श्रुत्वा मा विलम्बितं शीघ्रं कुरुध्वमित्यन्वयः । आज्ञायां तस्य सामर्थ्यमाह—प्रभुरिति । 'वयं राजानः, अस्मदाज्ञापने कथं स समर्थ' इति चेत्तत्राह—क्षितीशेश इति ॥ २१ ॥ तद्वाक्यमाह—यदिति । यत्तु यूयं बहव एकं धार्मिकं धर्मयुद्धे वर्तमानं बहूनामेकदैवैकप्रहारे प्रवृत्तिरधर्म एव, तेन जित्वा अबध्नीत तदपराधमहं बन्धूनामैक्यकाम्यया सौहार्देच्छया मृष्ये सोढवानस्मि । अथानन्तरमाशु तमानीय समर्पयतेति शेषः ॥ २२ ॥ बलदेवस्य वचो निशम्य तेन वाक्येन प्रकोपिताः कुरव ऊचुः । 'किमित्येवमुक्तवान्, येन तेषां कोपो जातः' इत्यपेक्षायामाह—आत्मनः शक्तेः सामर्थ्यस्य समं योग्यमिति । एतदेव स्पष्टयति-वीर्यं युद्धे ग्लान्यभावः, शौर्यं तत्रोत्साहः, बलं शरीरसामर्थ्यम्, एभिरुन्नद्धमुच्छृङ्खलमिति । तथाच तेषां कोपेऽपि स्वस्य भयशङ्काभावात् तथोक्तवानित्याशयः ॥ २३ ॥ तदुक्तिमेवाह—अहो इति षड्भिः । दुरत्यया दुरतिक्रमणीयया कालगत्या अहो आश्चर्यमिदं महच्चित्रं वैपरीत्यं जातम् । 'किं तत्' इत्यपेक्षायामाह—उपानत् पादरक्षा मुकुटेन सेवितं शिरो मूर्धानमारुरुक्षति आरोढुमिच्छति । उपानत्स्थानीया यादवाः किरीटालंकृतशिरःस्थानीयान् अस्मानाज्ञापयन्तीति एतच्चित्रमित्याशयः ॥ २४ ॥

### अन्वितार्थप्रकाशिका

उग्रसेन इति । क्षितीशानामीशः प्रभुः उग्रसेनो यत् वो युष्मान् आज्ञापयत् तत् अव्यग्रधियः समाहितचित्ताः सन्तो मत्तः श्रुत्वा मा विलम्बितं शीघ्रं कुरुध्वम् ॥ २१ ॥ यदिति । उग्रसेनवाक्यम् यत्तु यूयं बहव एकं धार्मिकं धर्मयुद्धे वर्त्तमानं बहूनामेकदैवैकप्रहारे प्रवृत्तिरधर्म एव तेन जित्वा अबध्नीत तदपराधमहं बन्धूनामैक्यकाम्यया सौहार्देच्छया मृष्ये सोढवानस्मि । अथानन्तरमाशु तमानीय समर्पयतेति शेषः ॥ २२ ॥ वीर्येति । वीर्यं युद्धे ग्लान्यभावः शौर्यं तत्रोत्साहः बलं शरीरसमर्थ्यं तैरुन्नद्धमुच्छृङ्खलम् आत्मशक्तेः समं योग्यं बलदेवस्य वचो निशम्य तेन वाक्येन प्रकोपिताः कुरव ऊचुः ॥ २३ ॥ अहो इति । अहो कालगत्या हेतुना इदं महच्चित्रं जातं यतः सा कालगतिः दुरत्यया दुरतिक्रमा अस्ति यतः उपानत् चर्ममयी पादरक्षा मुकुटेन सेवितं शिरो मूर्धानमारुरुक्षति आरोढुमिच्छति । उपानह इव यादवाः शिरांसि इवास्मानाज्ञापयन्ति । यद्वा । कालगत्या कालगतिः "सुपां सुलुक्" इति सोर्ड्यादेशः । यद्वा । कालगत्या हेतुना दुरत्यया उपानदिति ॥ २४ ॥

### श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्

यद्यस्मात् वो युष्मान् ॥ २१ ॥ राम उग्रसेनवाक्यमाह यद्वयमिति मृष्ये सहे । अतस्तंकुमारं तां वधूं च शीघ्रं समानीयार्पयतेति भावः ॥ २२ ॥ वीर्यं पराक्रमः शौर्यं युद्धोत्साहश्च बलं सामर्थ्यं च तैः उन्नद्धं उद्धतं आत्मशक्तेः समं योग्यं ॥ २३ ॥ दुरत्यया दुरत्ययया अत्र तृतीयार्थे प्रथमा आर्ष उपानत् । पादत्रणं मुकुटसेवितं शिरोमस्तकं आरुरुक्षति आरोटुमिच्छति यया तथा अतितुच्छाः यादवाः अस्मानाज्ञापयंतीत्यर्थः ॥ २४ ॥

### भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

तदेवाह उग्रसेन इति द्वाभ्याम् । उग्रसेन इति ॥ क्षितीशेशः, प्रभुः उग्रसेनः, वो युष्मान्, यत्, आज्ञापयत् । तत् श्रुत्वा, अव्यग्रधियः अवहितचित्ताः सन्तः, कुरुध्वं, मा विलम्बितं इदं मा विलम्बितव्यमित्यर्थः ॥ २१ ॥ यदिति ॥ बहवः यूयं तु, एकमसहायं, धार्मिकं च बालं, अधर्मेण जित्वा, अबध्नीत यत्, तत्, अथ कार्त्स्न्येन, बन्धूनां ऐक्यकाम्यया मिथः सौहार्द्दकामनया, मृष्ये सोढवानस्मि । अतः आशु, तमानीय समर्पयतेति शेषः ॥ २२ ॥ वीर्येति ॥ वीर्यं युद्धे ग्लान्यभावश्च शौर्यं युद्धे स्वगृह इव प्रवेशसामर्थ्यं च बलं धारणसामर्थ्यं च तैरुन्नद्धमुच्छृङ्खलं, केचित्तु वीर्यं प्रभावः शौर्यमुत्साहः बलं सत्त्वमित्याहुः । आत्मशक्तिसमं, बलदेवस्य वचः, निशम्याकर्ण्यः, कुरवः प्रकोपिताः सन्तः, ऊचुः ॥ २३ ॥ उक्तिमेवाह ॥ अहो, इति ॥ अहो

इदं महत् चित्रं, कालगत्या कालगतिरपि, दुरत्यया दुरतिक्रमणीया। हननं हत्येतिवद्गमनं गत्येति प्रथमान्तम्। स्त्रियां 'यजां भावे' इति क्यपि तत् सिद्धेः। केचित्तु गमनं गतिरिति ततस्तृतीयैकवचने गत्येति निश्चित्य दुरन्तयेति तृतीयान्तमामनन्ति, सा तेषां भ्रान्तिरेव। केचित्तु तृतीयार्थे आर्षी प्रथमेत्याहुः। किं कालगत्या दुरत्ययत्वं तत्राह। मुकुटसेवितं शिरः, उपानत्पादत्राणं, आरुरुक्षति आरोढुमिच्छति वै ॥ २४ ॥

### कृष्णप्रिया

राजाधिराज महाराज उग्रसेन ने आप लोगों को एक आज्ञा प्रदान किया है कि आप लोग उसको एकाग्रता और सावधानी से सुने और विना विलंब उसका पालन करे ॥ २१ ॥ आप सावधानी से सुनिए—महाराज उग्रसेन जी ने कहा है कि हम सब जानते हैं कि आपलोगों ने समूह में मिलकर अधर्म से, अनीति से अकेले धर्मनिष्ठ श्री साम्ब को पराजित करके बंदी बनाया है, यह सब हम इसलिए सह लेते हैं कि हम सव स्वजनों में परस्पर फूट-फाट न होने पाये और आपस की एकता बनी रहे ॥ २२ ॥ महाराज परीक्षित श्री बलभद्र जी की वाणी, वीरता, शौर्य और बल के उत्कर्ष से परिपूर्ण और उनकी शक्ति के अनुरुप ही थी, यह बात सुनकर कौरव क्रोध से तिलमिला उठे और आपस में कहने लगे कि यह तो अत्यन्त आश्चर्य की बात है, सचमुच काल की गति को कोई रोक नहीं सकता इसलिए तो आज चरणों की जूती पर शिर पर चढ़ना चाहती है के जो स्थान श्रेष्ठ मुकुट से सुशोभित हैं ॥ २३-२४ ॥

**एते [1]यौनेन सम्बद्धाः सहशय्यासनाशनाः। वृष्णयस्तुल्यतां नीता अस्मद्दत्तनृपासनाः ॥ २५ ॥**
**चामरव्यजने [2]शङ्खमातपत्रं च पाण्डुरम्। किरीटमासनं शय्यां भुञ्जन्त्यस्मदुपेक्षया ॥ २६ ॥**
**अलं यदूनां नरदेवलाञ्छनैर्[3]दातुः प्रतीपैः फणिनामिवामृतम्[4]।**
**[5]ये नः प्रसादोपचिता हि यादवा आज्ञापयन्त्यद्य गतत्रपा बत ॥ २७ ॥**
**कथमिन्द्रोऽपि कुरुभिर्भीष्मद्रोणार्जुनादिभिः। अदत्तमवरुन्धीत[6] सिंहग्रस्तमिवोरणः[7] ॥ २८ ॥**

### कर्दमक्षमा

अन्वयः—एते, वृष्णयः, सहशय्यासनाशनाः, यौनेन, सम्बद्धाः, अस्मद्दत्तनृपासनाः, तुल्यताम्, नीताः ॥ २५ ॥ चामरे, व्यजने, शङ्खम्, आपत्रम्, च, पाण्डुरम्, किरीटम्, आसनम्, शैय्याम्, अस्मदुपेक्षया, भुञ्जन्ति ॥ २६ ॥ फणिनाम्, अमृतम्, दातुः, प्रतीपैः, इव, यदूनाम्, नरदेवलाञ्छनैः, अलम्, ये, यादवाः, नः, प्रसादोपचिताः, अद्य, गतत्रपाः, आज्ञापयन्ति, बत ॥ २७ ॥ कथम्, इन्द्रः, अपि, भीष्मद्रोणार्जुनादिभिः, कुरुभिः, अदत्तम्, सिंहग्रस्तम्, उरणः, इव, अवरुन्धीत ॥ २८ ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

अस्यैव प्रपंच एत इति चतुर्भिः। यौनेन पृथाया विवाहेन ॥२५॥ किंच। चामरव्यजने इति। भुंजंत्युपभुंजत इत्यर्थः। अस्मदुपेक्षयाऽस्माकमनाग्रहेण ॥ २६ ॥ अलमिति। अतः परं तान्यपहरिष्याम इत्यर्थः ॥ २७ ॥ अवरुंधीत स्वीकुर्यात्। उरणो मेषः ॥ २८ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

एते यदवः। ततः किं तत्राह—सहेत्यादि ॥ २५ ॥ न केवलं सिंहासनादिभिरेवै मानिता अपि तु राजचिह्नै रपीत्याह—किंचेति। इत्यर्थ इति—भुंजंतीति परस्मैपदमार्षम् "भुजोऽनवने" इत्यात्मनेपदविधानादिति भावः। तीर्थस्तु-भुंजंति भजंति अन्योपद्रवमंतरेण रक्षंतीति पालनार्थमभिप्रेत्य परस्मैपदमेवोचितमित्याह। अनाग्रहेणोदासीन्येन ॥ २६ ॥ नैते राजचिह्नार्हा इत्याह—अलमिति। अतः परम् अद्यतनात्परम्। इत्यर्थ इति—मूषिकसिंहन्यायेन पूर्वसदृशान्करिष्याम अर्थान्नृपचिह्नान्येतेभ्य उत्तारयिष्याम इति भावः। दातुरस्मद्वंशस्य। प्रतीपैर्विरोधिभिः। दृष्टांतः—सर्पदत्तममृतोपलक्षितं दुग्धादिरसं यथा विषात्मना परिणतं दातुरेव सर्पस्योपकाराग्रहीतृत्वाद्दंशनद्वारा मृतिप्रदं तथैतान्यपीत्यर्थः। बत खेदे ॥ २७ ॥ अदत्तमप्रत्तम्। अस्माकमिंद्रोऽनुकूलोऽस्तीति यदहं कुरुध्वे तत्रापि रे यदवः शृणुध्वमित्याह—कथमिति। अवरुन्धीत ग्रहीतुं शक्नुयात्। उरण इति—यदीन्द्रमपि मेषमिव पश्यामस्तत्र यूयं के इति भावः ॥ २८ ॥

---

१. यौनेय–विच.। २. मह्यां–विज.। ३. दातु–विज.; दातुः प्रतीपा चरितोद्धतात्मनाम् च. पु. टि.। ४. मृतैः–विज.। ५. येऽस्मृत–श्रीजर. वंशी. जीव. विज. विश्व.; ये नः–वीर। ६. मुपयुञ्जीत–वीर.। ७. नातः तरंह्यग्रसेनो राजा भवितु मर्हति–च. पु. टि.।

### श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी

एत इति । साक्षाद्बलदेवोद्देशेन सम्बद्धाः सम्बन्धं प्रापिताः अतः सह एकत्र शय्यादयो येषां ते ॥ २५ ॥ चामरे एव व्यजने ॥ २६ ॥ दातृणामस्माकं प्रतीपैः प्रतिकूलैः अमृतं क्षीरं तैरित्यर्थः भिसः सुभावोपि छान्दसः नोऽस्माकं प्रसादेनानुग्रहेणै-वोपचितां वृद्धि प्राप्ताः हि प्रसिद्धौ ॥ २७ ॥ कथमपि तैरर्जुनस्य साहित्याभावेऽपि ग्रहणमात्मनो गौरवार्थम् ॥ २८ ॥

### श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी

एत इति साक्षाद्वर्त्तमान-श्रीबलदेवोद्देशेन, किंवा अतिदीना इत्यर्थः । सम्बन्धाः सम्बन्धं प्राप्ताः, अतः सह समाना एकत्र वा शय्यादयो येषां ते, किञ्च, अस्माभिर्दत्तं नृपासनं येभ्यस्ते, अराजत्वेन तेषां तदभावात् । एवमात्मतुल्यतां प्रापिताः ॥ २५ ॥ अत एव चामरादीनि राजार्हद्रव्याणि भुञ्जते, चामरे एव व्यजने, न चायोग्यत्वेनास्माभिस्तेष्वाच्छिद्यमानेषु सत्सु भोक्तुं शक्नुवन्तीत्याहुः—अस्मदिति ॥ २६ ॥ दातृणामस्माकं प्रतीपैः प्रतिकूलैः सद्द्रव्यदानेन हितयोग्येऽपि । प्रतिकूल-तायां दृष्टान्तः—क्षणिनामिति । अमृतं क्षीरम्, नोऽस्माकं प्रसादेनानुग्रहेणैवोपचिता वृद्धि प्राप्ताः; हि अपि, यादवा अपि । अद्येति प्राक् कदाप्यज्ञापनादगतत्रपाः, अनाज्ञाप्येषु अप्याज्ञापनात्, बत खेदे, अतो विज्ञापयन्तीत्येवं वक्तुमर्हन्तीति भावः ॥२७॥ ननु अवश्यदेयायाः कन्यायाः क्षत्रियत्वेन हरणात् कथमेतावत् वैरस्यमुत्थाप्यते ? सत्यम्, अस्माकमसम्मत्या बलाद्धरणान्मान-हानिः स्यादित्याशयेन, यद्वा, न चास्माभिरदीयमानं न ते किञ्चिद्भोक्तुं शक्नुवन्तीत्याहुः—कथमिति । आदिशब्दात् कर्णाद-यस्तैः, अर्जुनस्य साहित्याभावेऽपि ग्रहणं ज्ञातित्वेनैक्यात्, किंवा तेनाभिन्नतयात्मनो गौरवार्थम् ॥ २८ ॥

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम्

यौनेन विवाहेन ॥ २५-३० ॥

### श्रीमद्वीरराघवाचार्यकृता भागवतचन्द्रचन्द्रिका

एतदेव प्रपञ्चयति—चतुर्भिः । एते वृष्णयः यौनेन पृथाविवाहेन सम्बद्धाः सम्बन्धिनः सम्बन्धशब्दोत्रार्श आद्यजन्तः अतः सहास्माभिः सह शय्यासनभोजनानि येषां तेऽस्माभिर्दत्तं नृपासनं येषां ते अत एव तुल्यतामस्माभिः साम्यं प्रापिताः वस्तुतो न समा इति भावः ॥ २५ ॥ किञ्च, चामरेति । अस्मदुपेक्षया हेतुभूतया चामरादीन् भुञ्जते उपयुञ्जत इत्यर्थः । तत्रासनं नृपासनम् ॥ २६ ॥ अलमिति । यदूनां नरदेवलाञ्छनैः चामरादिभिरलमतःपरं तान्यपहरिष्याम इति भावः । तत्र हेतुत्वेन तानि विशिषन्ति दातुः प्रतीपैरिति दातृणमस्काकमेव प्रतीपैः प्रतिकूलैः तत्र दृष्टान्तः फणिनामिवामृतमिति । सर्पाणां पोषणाय यद्दत्तममृतं क्षीरं दातुरेव प्रतीपं तद्वत् एतदेवदार्ष्टान्तिकेऽनुगमयति—य इति । ये यादवा अस्मदनुग्रहेणोपचिता एधिता नोऽस्माने-वाधुना आज्ञापयन्ति अहो बतेति निर्लज्जाः खलु यद्वा गतत्रपाः सन्त आज्ञापयन्ति बतेत्याश्चर्ये ॥ २७ ॥ कथमिति । इन्द्रोऽपि इन्द्रोऽपि भीष्मादिभिः कुरुभिरदत्तं कथम् उपयुञ्जीत सिंहग्रस्तम् उरणो मेष इव ॥ २८ ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

यौनेयेन योनिनिमित्तेन सम्बन्धो येषां ते तथा ततः किमत्राह—सह इति ॥ २५ ॥ अस्मद्दत्तैरयुक्तं विवृणोति-चामरेति । मह्यं महनीयम् आसनं भुञ्जन्ति भजन्ति अन्योपद्रवमन्तरेण रक्षन्ति "भुजोनवने" इति पाणिनिः ॥ २६ ॥ दातृणाम-स्माकं प्रतीपैः विरोधिभिः दत्तैरमृतैः क्षीरादिरसः विषात्मना परिणतैः दातृणां मरणप्रदत्वेन प्रतीपैः ॥ २७ ॥ अवरुन्धीत प्राप्नोति सिंहग्रस्त उरणः अविर्यथा केवलं न गृह्णाति सिंहग्रस्तमिति पाठे केवलमादातुं न शक्तः ॥ २८ ॥

### श्रीमज्जीगोस्वामिकृतः क्रमसन्दर्भः

अमृतं क्षीरं तैरित्यर्थः ॥ २७-५४ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

एते यौनेन पृथाविवाहेनेति श्यालकभावो व्यञ्जितः ॥२५॥ भुञ्जन्ति अस्माकमुपेक्षयेति अपेक्षालक्षण आदरोऽस्माक-मेषु न सम्भवत्येव किन्तूपेक्षालक्षण अनादर एवास्ति हीनकुलत्वेनादृतत्वादेतदौद्धत्यं वयमुपेक्षामहे इति भावः ॥ २६ ॥ अतः परमेषामपराधोपेक्षाऽनुचितैवेत्याह—अलमिति । तेन एतेभ्यो नृपलाञ्छनान्युत्तारयिष्याम इति भावः ॥ २७ ॥ अस्माकमिन्द्रः खल्वनुकूलोस्तीति यदहङ्कुरुध्वे तत्रापि रे यदवः शृणुध्वमित्याह—कथमिति । अवरुध्धीत गृहीतुं शक्नुयात् उरणो मेष इति यत्रेन्द्रमपि मेषमिव पश्यामस्तत्र यूयं के इति भावः ॥ २८ ॥

### गूढार्थदीपिनी

एते यदवः। यौनेन कुन्तीविवाहेन। सहैव शय्यादीनि येषां ते ॥ २५ ॥ उपेक्षया अनुग्रहेणेत्यर्थः ॥ २६ ॥ यदूनां लाञ्छनैः राजचिह्नैः अलं न किञ्चित् प्रयोजनम्। अतः परं तानि अपहर्तव्यानीत्यर्थः। दातुरेव प्रतीपैः प्रतिकूलैः सर्पाणाम् अमृतं दुग्धमिव ये उपचिताः समृद्धाः अस्मान् आज्ञापयन्ति ॥ २७ ॥ कथम् अदत्तम् अवरुन्धीत गृहीतुं शक्नुयात्। उरणो मेषः ॥ २८ ॥

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः

यादवानां निकृष्टत्वं कौरवाणामुत्कृष्टत्वमाहुः—एते इति चतुर्भिः यौनेन कुन्त्यादिविवाहेन ॥ २५ ॥ भुञ्जन्ति उपयुञ्जत इत्यर्थः ॥ २६ ॥ अलमिति अधुना नृपलाञ्छनान्यपहर्तव्यानीति भावः ॥ २७ ॥ अवरुन्धीत उपयुञ्जीत ॥ २८ ॥

### श्रीमद्वल्लभाचार्य्यकृता सुबोधिनी

ऐन्द्रियकव्यवहारे विवाहशयनादौ हीनत्वमाह **एते यौनेन संबद्धा** इति। यूनो भावो विवाहो यौनम्, तेन संबद्धाः। पूर्वमेकोत्पन्ना अपि व्यवहारे हीना इति त्यक्त्वा अपि पुनः यौनेन संबद्धा इत्यर्थः। पृथादयः स्त्रियः तेभ्यः समानीता इति। ननु तथापि 'स्त्रीरत्नं दुष्कुलादपी'ति न्यायेन न समानयनमात्रेण तुल्यता भवतीति चेत्, तत्राह **सहशय्यासनाशना** इति। शयनमासनं भोजनं चेत् सह, येन सह तत्तुल्य एव भवतीति स्थितिः। अत एव वृष्णयस्तुल्यतां नीताः। अनेन अज्ञानान्निषिद्धाचरणे प्रायश्चित्तं कर्तव्यमिति पक्षो निवारितः। एवं कुलधर्मविचारेण स्वस्योत्कर्षमुक्त्वा ऐश्वर्यविचारेणाप्युत्कर्षमाह **अस्मद्दत्तनृपासना** इति। पूर्वं हि ययातिना पूरव एव राज्यं दत्तम्, अन्ये ज्येष्ठा अपि तदधीनाः ॥ २५ ॥ एवं साधनानि स्वाधीनान्युक्त्वा तेषां भोगोऽप्यस्मदधीन एवेत्याह **चामरव्यजने** इति। चामरव्यजने परितः। शङ्खोऽग्रे। आतपत्रं पश्चात्, तत्रापि **पाण्डुरं** श्वेतम्। **किरीटमुपरि। आसनमधः। शय्या** निद्रावस्थायाम्। एतानि सप्तमहाराजचिह्नानि अन्येषामयुक्तानि राजभिरवश्यं अन्यत्र दृष्टानि निषेद्धव्यानि। तथापि तुल्यतां नीता इति राजभिरस्माभिरुपेक्षितानि भुञ्जते। भोगः प्राणधर्म इति तदुत्कर्षो निरूपितः ॥ २६ ॥ आज्ञापनादिरन्तःकरणधर्म इति तदसहमानाः तन्निषेधपूर्वकं तदपकर्षमाहुः **अलं यदूनामिति**। नरदेवलाञ्छनानि पूर्वोक्तानि उपेक्षाविषयाणि। **अलमिति** निषेधार्थे। नरदेवलाञ्छनैरलम्। अतःपरं पूर्यताम्। अग्रे न स्थापनीयमित्यर्थः। दत्तापहारे हेतुः **दातुः प्रतीपैरिति**। अज्ञानाद्दत्तं स्वानिष्टसम्पादकत्वे निवारणीयमित्यत्र दृष्टान्तमाह **फणिनामिवामृतमिति**। 'सर्पस्य हि पयःपोषः पोषकस्याप्यनर्थकृ'दिति। स हि मत्ततां सम्पादयति, पश्चादन्धः सन् पोषकमपि भक्षयति। तदस्मासु जातमित्याह। ये यादवाः नः प्रसादोपचिताः, अद्य गतत्रपाः सन्तः, अस्मानेवाज्ञापयन्तीति। बतेति खेदे ॥ २७ ॥ वस्तुविचारेणात्मधर्ममाश्रित्याहुः **कथमिन्द्रोऽपीति**। भीष्मो हि कालकामपरशुरामादीनां जेता। ततोऽप्यधिको द्रोणः विद्यया तुल्योऽपि ब्राह्मण्यादधिकः। ततोऽप्यर्जुनः तच्छिष्योऽपि महादेवादिप्रसादैरुपचितः। एते त्रय आधिभौतिकादिरूपाः आदिभूता येषां तैः **अदत्तं इन्द्रोऽपि** कथमवरुन्धीत। इन्द्रो वस्तुतः सर्वाधिपतिः, तथाप्येते अधिकृताः, न हि देहादिषु प्रतिकूलेषु ईश्वरोऽपि भोगं प्राप्तुमर्हति। ननु स्वभागः, तेषां का दानापेक्षेत्याशङ्क्य दृष्टान्तमाह **सिंहग्रस्तमिवोरण** इति। यद्यप्युरणस्याल्पमेषस्य पुत्रो भार्या वा भागो भवति, तथापि सिंहग्रस्तः तत्कृपयैव प्राप्यते, तथैव साम्बः सभार्योऽस्मदवरुद्ध इत्यर्थः ॥ २८ ॥

### श्रीसुबोधिनी-सारः

यौनेन योनिसंबंधेन संबद्धाः पृथाविवाहात् सह शय्याऽऽसनम् अशनं भोजनं येषां तेऽस्माभिर्दत्तंनृपासनं येभ्यस्ते एते वृष्णयस्तुल्यतां साम्यं नीताः ॥ २५ ॥ चामरं व्यजनं शंखं पांडुरमातपत्रं छत्रं किरीटम् आसनम् शय्यां चास्माकमुपेक्षया भुंजंति उपभुंजते ॥ २६ ॥ फणिनां सर्पाणाममृतं पय इव दातुः प्रतीपैः दुःखंकरैर्नरदेवस्य राज्ञो लांछनैः चिह्नैः चामरादिभिर्यदूनामलं पर्याप्तम् अस्माकं प्रसादेनानुग्रहेणोपचिता ये हि यादवा अद्य इदानीं गता त्रपा लज्जा येषां तेऽस्मानाज्ञापयंति बत खेदे ॥ २७ ॥ न च स्वबलेनैतत्संपादितमिति वाच्यं भीष्मद्रोणार्जुनादिभिः कुरुभिरदत्तं राज्यभागम् इंद्रोपि कथं प्राप्नुयात् भुंजीत वा सिंहेन ग्रस्तं बलिमात्मसात्कर्तुमुरणो मेष इव ॥ २८ ॥

### गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

एतदेव प्रपञ्चयति—एत इति चतुर्भिः। एते वृष्णयो यौनेन कुन्तीविवाहेन सम्बद्धाः, अतोऽस्माभिः स्वतुल्यतां नीताः, अतोऽस्मदुपेक्षया चामरादीन् राजचिह्नानि मुञ्जन्त उपभुञ्जत इति द्वयोरन्वयः। तुल्यतानयनमेव स्पष्टयन्ति— अस्माभिः सह शय्या शयनम्, आसनं उपवेशनम्, अशनं भोजनं च येषां त इति। अस्माभिरेव दत्तं नृपासनं येषां ते इति ॥ २५-२६ ॥ यदूनां नरदेवलाञ्छनैश्चामरादिभिरलं पूर्णम्। अतःपरं तान्यपहरणीयान्येवेत्याशयः। तत्र हेतुमाहुः—दातुरस्मदादेरेव प्रतीपैः प्रति-

कूलैरिति। तत्र दृष्टान्तमाहुः—फणिनां सर्पाणां पोषणाय कृपया दत्तममृतं यथा दातुरेव प्रतीपं भवति तद्वदिति। स्वप्रातिकूल्यमेव स्पष्टयन्ति—ये यादवा नोऽस्माकं प्रसादेनोपचिताः समृद्धा अस्मानेव गतत्रपा निर्लज्जाः सन्तः आज्ञापयन्ति। हि अवधारणे। बतेत्याश्चर्ये ॥ २७ ॥ स्वोत्कर्षमाहुः—कथमिति। इन्द्रोपि भीष्मादिभिः कुरुभिरदत्तं कथमवरुन्धीत उपयुञ्जीत भोक्तुं समर्थो भवेत्? तत्र दृष्टान्तमाह–सिंहेन ग्रस्तं स्वीकृतं वस्तु यथा तद्दानं विना उरणो मेषो भोक्तुं न शक्नोति तद्वेति ॥२८॥

### अन्वितार्थप्रकाशिका

अस्यैव प्रपञ्चः—एते इति ॥ एते वृष्णयो यौनेन कुन्तीविवाहेन सम्बद्धा अस्माभिः सह भय्या शयनम् आसनम् उपवेशनम् अशनं भोजनम् च येषां ते अस्माभिरेव दत्तं नृपासनम् येभ्यस्ते अतोऽस्माभिः स्वतुल्यतां नीताः ॥ २५ ॥ चामरेति ॥ अतोऽस्मदुपेक्षया अपहरणेच्छाया अभावेन चामरे व्यजने शङ्खं पाण्डुरमातपत्रं चेत्यादिराजचिह्नानि भुजन्त उपभुञ्जते ॥ २६ ॥ अलमिति ॥ दातुरस्मदादेरेव प्रतीपैः प्रतिकूलैः यदूनां नरदेवलाञ्छनैश्चामरादिभिरलं पूर्णम् अतः परं तान्यपहरणीयान्येवेत्याशयः। यथा फणिनां सर्पाणां पोषणाय कृपया दत्तममृतं यथा दातुरेव प्रतीपं भवति तद्वत् ये यादवा नोऽस्माकं प्रसादेनोपचिताः समृद्धाः गतत्रपा निर्लज्जाः सन्तः अस्मानेव आज्ञापयन्ति ॥ २७ ॥ कथमिति ॥ इन्द्रोऽपि भीष्मादिभिः कुरुभिरदत्तं कथमवरुन्धीत उपयुञ्जीत भोक्तुं समर्थो भवेत्। यथा सिंहेन ग्रस्तं स्वीकृतं वस्तु यथा तद्दानं विना उरणो मेषो भोक्तुं न शक्नोति तथा यत्रेन्द्रोऽपि मेषायते तत्र के वराका यादवा इति भावः ॥ २८ ॥

### श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्

एतदेव विवृणोति चतुर्भिः एत इति एते यादवाः। यौनेन कुंत्याः विवाहेन संबद्धाः। अस्माभिः। सह संबंधं प्राप्ताः। अतः ॥ २५ ॥ चामररूपे द्वे व्यजने एतदादि राज्यपरिच्छदान्। अस्मदुपेक्षया अस्माकमनाग्रहेण भुंजंति भुंजते ॥ २६ ॥ दातृणामस्माकं प्रतीपैरननुकूलैः अलं अतःपरं राजचिह्नानि तेभ्यो गृह्णीम इत्यर्थः ॥ २७ ॥ अदत्तं कथमरुंधीत गृह्णीयात् उरणो मेषः ॥ २८ ॥

### भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

एत इति ॥ एते वृष्णयः, यौनेन पृथाया विवाहेन, संबद्धाः संबन्धिनः, अतः सहास्माभिः सह, शय्यासनाशनानि येषां ते, अस्माभिर्दत्तं नृपासनं येषां तथाभूताः सन्तः, अस्माभिरेवेति शेषः। तुल्यतां नीताः, वस्तुत एते नास्मत्समा इति भावः ॥ २५ ॥ किं च ॥ चामरेति ॥ चामरव्यजने, शंखं, पाण्डुरं श्वेतं, आतपत्रं, छत्रं, किरीटं, आसनं नृपासनं, शय्यां च अस्मदुपेक्षया हेतुभूतया, अस्मदनाग्रहेणेत्यर्थः। भुञ्जन्ति उपभुञ्जते इत्यर्थः ॥ २६ ॥ अलमिति ॥ फणिनां सर्पाणां, अमृतं क्षीरं इव, सर्पाणां पोषणाय दत्तं दुग्धं दातुरेव यद्वत् प्रतीपं तद्वदित्यर्थः। दातुर्दातृणामस्माकमित्यर्थः। प्रतीपैः प्रतिकूलैः, नरदेवलाञ्छनैश्छत्रचामरादिभिः, यदूनां अलं, अतः परं तान्यपहरिष्याम इति भावः। हि यतः, नः अस्माकं, प्रसादोऽनुग्रहः तेन उपचिता एधिताः, ये यादवाः, ते बत इति खेदे। अद्य, गतत्रपा निर्लज्जाः सन्तः, आज्ञापयन्ति। एधयितृभिरस्माभिराज्ञां कारयन्त्यहो दैवविचित्रतां तु पश्यतेति भावः ॥ २७ ॥ कथमिति ॥ इन्द्रोऽपि, भीष्मद्रोणार्जुनादिभिरस्माभिः, कुरुभिः, अदत्तं सिंहग्रस्तं केवलं, उरणो मेषः इव, कथं अवरुन्धीत स्वीकुर्यात् ॥ २८ ॥

### कृष्णप्रिया

इन यादवों के साथ किसी भी प्रकार हम लोगों ने विवाह का नाता बना दिया ये हमारे साथ शयन-बैठना एवं एक पंक्ति में सह भोजन करने लगे। अधिक क्या कहा जाय हमलोगों ने हि इन्हें राज-सिंहासन देकर राजा बनाया और अपने समान बना लिया ॥ २५ ॥ ये यदुवंशी हमारी रहम दृष्टि से ही चंवर, पंखा, शंख और छत्र, मुकुट राजसिंहासन और राजोचित शैया इत्यादि का उपयोग कर सकते हैं। अन्यथा उनके भाग्य में उन सब राजोचित चिह्नों का संभव ही कहाँ ॥ २६ ॥ बहुत हो चुका अब यादवों के लिए राजचिह्न रहने की कोई आवश्यकता नहीं है, उन लोगों से सब चिह्नों को छिन लेना चाहिए। सर्प को दूध पीलाना वह दूध पिलाने वाले के लिए विघातक हो जाता है, वैसे हि हमारे समर्पित राजचिह्नों को लेकर यादव हमसे हि विरोध बन चुके हैं। इस बात में कोई संदेह नही, हमारे अनुग्रह से हि इनकी इतनी तरक्की हुई। अब ये लज्जाशून्य होकर हमपर आदेश चलाना चाहते हैं बड़ी शर्म की बात है कि हम मुख बंध करके सह रहे हैं ॥ २७ ॥ औरों की बात छोड़िये स्वयं देवराज इन्द्र भी यदि भीष्म, द्रोण एवं अर्जुन आदि कौरव वीर यदि समर्पित न करे तो किसी वस्तु का उपभोग नहीं कर सके तो औरों के लिए तो क्या कहा जाय। जैसे सिंह का भाग कभी छोटा सा भेड़ा नहीं छीन सकता है तो दूसरे के लिए तो क्या कहना ॥ २८ ॥

[1]श्रीशुक उवाच

[2]जन्मबन्धुश्रियोन्नद्धमदास्ते भरतर्षभ। आश्राव्य रामं [3]दुर्वाक्यमसभ्याः पुरमाविशन् ॥ २९ ॥
दृष्ट्वा कुरूणां दौःशील्यं श्रुत्वा [4]वाच्यानि चाच्युतः। अवोचत् कोपसंरब्धो दुष्प्रेक्ष्यः [5]प्रहसन् [6]प्रभुः ॥ ३० ॥
नूनं नानामदोन्नद्धाः शान्तिं नेच्छन्त्यसाधवः। तेषां हि प्रशमो दण्डः पशूनां [7]लकुटो यथा ॥ ३१ ॥
अहो यदून् सुसंरब्धान् कृष्णं च कुपितं शनैः। सान्त्वयित्वाहमेतेषां शममिच्छन्निहागतः ॥ ३२ ॥

**कर्दमक्षमा**

अन्वयः—हे भरतर्षभ ! जन्मबन्धुश्रियोन्नद्धमदाः, ते, असभ्याः, समम्, दुर्वाच्यम्, आश्राव्य, पुरम्, आविशन् ॥२९॥ अच्युतः, कुरुणाम्, दौः, शीष्यम्, दृष्ट्वा, च, वाच्यानि, श्रुत्वा, कोपसंरब्धः, दुष्प्रेक्ष्य, प्रभुः, प्रहसन्, अवोचत् ॥ ३० ॥ नूनम्, नानामदोन्नद्धाः; असाधवः, शान्तिम्, न, इच्छन्ति, पशूनाम्, लकुटः, यथा, तेषाम्, दण्डः, हि, प्रशम् ॥३१॥ अहो, सुसंरब्धान्, यदून्, च, कुपितम्, कृष्णम्, शनैः, शान्त्वयित्वा, अहम्, एतेषाम्, शम्, इच्छन्, इह, आगतः ॥ ३२ ॥

**श्रीधरस्वामिविरचिता भावार्थदीपिका**

जन्मना बंधुभिश्चोपलक्षितया श्रिया उन्नद्ध उत्कटो मदो येषां ते। दुर्वाच्यं परुषं वाक्यम्। असभ्या दुर्जनाः ॥ २९ ॥ नानाधनाभिजनादिमदैरुन्नद्धास्तेषां दंड एव प्रशमः प्रकर्षेण शमयतीति तथा। यथा लगुडो दंडः ॥ ३१-३२ ॥

**श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः**

ते कुरवः ॥ २९ ॥ एते कियद्वा वदंति कियद्वा कुर्वन्ति यद्वदंतु कुर्वंतु बेत्यपेक्षया तदानीं तूष्णीमासीत्, गतेषु तेषु पौरलोकेषु च स्थितेषु स्वसमुचितं वक्तुं कर्तुं च कोपमाविश्चकारेत्याह—दृष्ट्वेति कोपाविष्टः। अवाच्यानि वक्तुमयोग्यानि ॥३०॥ तेषामसाधूनाम्। लगुडः 'लगुडः काष्ठदंडे स्यात्' इति कोशात् दंड एव नानामदान् शमयति न तु क्षमादिरित्यर्थः ॥ ३१ ॥ एतेषां कुरूणाम्। शममुपद्रवराहित्यमिच्छन्। इह हास्तिनपुरे ॥ ३२ ॥

**श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी**

आ सम्यक् महाकोपेनोच्चैरन्तिके श्रावयित्वा आ सम्यक् वेमुख्यद्रुतगत्यादिनाऽविशन् असभ्यः साधुव्यतिरिक्ताः श्रीभीष्मादयस्तु तत्रैव स्थिता इत्यर्थः। भरतर्षभा इति भरतर्षभेति वा पाठः ॥ २९ ॥ दौःशील्यं क्रोधावेशादिकम् अच्युतः सर्वशक्तिपूर्णः अतः कोपेन संरब्धः आविष्टः अत एव दुष्प्रेक्ष्यः भ्रुकुट्याद्याटोपेन द्रष्टुमशक्यः कोपादेव मुहुः प्रकर्षेण हसन् स हसन्निति क ॥ ३० ॥ हि एव दण्ड एव न शमादिः ॥ ३१ ॥ अहो इति खेदे सुसंरब्धान् योद्धुमभ्युद्यतान् अतिक्रुद्धान् वा अतः शनैः सान्त्वयित्वा शममुपद्रवराहित्यम् ॥ ३२ ॥

**श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी**

ते धृतराष्ट्रादयः; जन्मेत्यत्र हेतुः—भरतेति। राममिति तेषां सुखार्थगमनाभिप्रायेण, दुर्वाच्यं वक्तुमयोग्यमपि, किंवा निन्द्यमपि वच आ सम्यङ् महाकोपेनोच्चैरन्तिके श्रावयित्वा, आ सम्यक् तदनादरेण विमुखतया द्रुतगत्यादिनाविशन्। अन्यत्तैर्व्याख्यातम्। असभ्याः साधुव्यतिरिक्ताः, श्रीभीष्मादयस्तत्रैव स्थिता इत्यर्थः ॥ २९ ॥ दौः शील्यं पुरावेशादिकम्, अच्युतः सर्वशक्तिपूर्णः स बलदेवः, अतः कोपेन संरब्धः आविष्टः, अत एव दुष्प्रेक्ष्यः—भ्रुकुट्याद्याटोपेन द्रष्टुमशक्यः, किञ्च, मुहुर्हसन्नवोचत् स्वयमेव, अयमपि कोपस्वभाव एव ॥ ३० ॥ नूनं सत्यमेव, नानाविधैरैश्वर्यादिभिर्मदैरुन्नद्धाः, हि एव, दण्ड एव, न सामादि ॥ ३१ ॥ मदोन्नद्धलक्षणमाह—अहो इति द्वाभ्याम्, खेदे आश्चर्ये वा, सुसंरब्धान् योद्धुमभ्युद्यतान् अतिक्रुद्धान् वा, अतः शनैः सान्त्वयित्वा; शमं क्षेमम् ॥ ३२ ॥

**श्रीसुदर्शनसूरिकृतशुकपक्षीयम्**

लगुडः यष्टिविशेषः ॥ ३१-३६ ॥

---

१. बादरायणि-प्रा. पा। २. श्रिया लब्ध-वीर.। ३. दुर्वाच्य-श्रीधर वंशी. जीव. वीर. विश्व; दुर्वाक्यैरटव्यां पुर आविशत्-विज.। ४. वाच्यातिवाच्य तम्-विज। ५. स हसन्-श्रीधर. टि.। ६. मुहुः-श्रीधर. वंशी. जीव. वीर. विज. विश्व.। ७. लगुडो-श्रीधर. वंशी. जीव. वीर. विज. विश्व.।

### श्रीमद्वीरराघवाचार्यकृता भागवतचन्द्रचन्द्रिका

जन्मेति । हे भरतर्षभ ! अभिजनबन्धुसम्पद्भिर्लब्धः मदो येषां ते अत एव असभ्याः कुरवः इत्थं रामं प्रति दुर्वाच्यं पुरुषं वाक्यं श्रावयित्वा पुरं हस्तिनं विविशुः ॥ २९ ॥ दृष्ट्वेति । दौश्शील्यं दौर्जन्यं दृष्ट्वाऽवाच्यानि वचांसि श्रुत्वाऽच्युतः स्वासाधारणकल्याणगुणजातान्न च्यवत इत्यच्युतो रामः कोपेन संरब्धोऽत एव दुष्प्रेक्ष्यः पुनः पुनः प्रहसन्नुवाच ॥ ३० ॥ उक्तिमेवाह—नूनमिति । नानाधनादिमदैरुन्नद्धा असाधवो दुरात्मान एते नूनं शान्ति नेच्छन्त्यतस्तेषां दण्ड एव प्रशमः शान्तिकरः यथा पशूनां उद्वृत्तानां लगुडो यष्टिविशेषः तद्वत् ॥ ३१ ॥ अहो इति । सुसंरब्धान् हरिं कृष्णञ्च सान्त्वयित्वा शमं शान्तिपूर्वकं सन्धिम् इच्छन्निहागतोऽस्मि ॥ ३२ ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

अटव्यामुपवने स्थितं रामम् ॥ २९ ॥ वाच्यातिवाच्यताम् अपवादातिशयिताम् अपवादताम् ॥ ३० ॥ प्रशमः शान्तिकरः लकुटः यष्टिः ॥ ३१-३४ ॥

### श्रीमद्विश्वनाथचक्रवर्तीकृता सारार्थदर्शिनी

जन्म सत्कुलजत्वं बन्धवो भीष्मादयस्तद्रूपया सम्पत्त्या च उन्नद्ध उत्कटो मदो येषां ते दुर्वाच्यं परुषवाक्यम् ॥ २९ ॥ एते कियद्वा वदन्ति किं वा कुर्वन्ति तद्वदन्तु कुर्वन्त्वित्यपेक्षयैव तदानीं तूष्णीमासीत् गतेषु तेषु पौरलोकेषु तु स्थितेषु स्वसमुचितं वक्तुं कर्तुं च कोपमाविश्चकारेत्याह—दृष्ट्वेति । क्रोधसंरब्धः कोपाविष्टः ॥ ३०-३१ ॥ नानाधनादिमदैरुन्नद्धाः दण्ड एव नानामदान् प्रशमयतीति प्रशमः नतु सामादिरूपाय इत्यर्थः ॥ ३२ ॥

### गूढार्थदीपिनी

उन्नद्धः उत्कटः ॥ २९ ॥ अच्युतशक्तिः रामः । संरब्धः कोपाविष्टः ॥ ३० ॥ प्रशमो गर्वहरः । लगुडो दण्डः ॥ ३१ ॥ सुरब्धान् क्रोधाविष्टान् ॥ ३२ ॥

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः

जन्मना । सत्कुलजत्वेन बन्धुभिर्भीष्मादिभिः उपलक्षितया श्रिया उन्नद्धः उत्कण्ठो मदो येषां ते ॥ २९-३० ॥ प्रकर्षेण शमयतीति प्रशमः ॥ ३१-३२ ॥

### श्रीमद्वल्लभाचार्य्यकृता सुबोधिनी

एवं पञ्चावयवमहङ्कारवाक्यं श्रावयित्वा निर्गता इत्याह जन्मेति । वाचनिककायिकातिक्रमे निरूपिते मानसिकोऽपि निरूपितप्रायः । एवमतिक्रमे हेतुः जन्मबन्धुश्रियोन्नद्धमदा इति । जन्म सत्कुले, बन्धुः बान्धवः, श्रीः लक्ष्मीश्च । जन्मनि बन्धुकृता या श्रीः औत्पत्तिकलक्ष्मीः, तया वा उन्नद्धः मदो येषाम् । भरतर्षभेति सम्बोधनं राज्ञो मायामोहाभावाय । 'दौष्यन्तिरत्यगान्माया'मिति वाक्यात् । अन्यथा क्षत्रियः स्वकीयापकर्षं न सहत इति । इयं कथा श्रवणविघातिका स्यात् । इदं वाक्यं रामं प्रत्येव स्पष्टम् । नत्वन्तःकरणेनापि स्वकीयेषु । तदाह दुर्वाक्यं राममश्राव्यपुरमाविशन्निति । ननु गृहे समागते नैवं वक्तुमुचितमित्याशङ्क्याह असभ्या इति । सतामेवैषा कथा । श्रीमदेनैव तेषामसत्त्वम्, अन्यथा अग्रे ऋजुत्वं न स्यात् ॥ २९ ॥ ततो यज्जातं तदाह दृष्ट्वा कुरूणामिति । अवगणनां कृत्वा गमनं दौःशील्यम्, अन्यथा बान्धवातिक्रमो महदतिक्रमश्च न भवेदिति । अवाच्यान्यपि श्रुतवान् । अवाक्यानि तादृशवाक्यानि वा । अच्युत इति भयाभावाय । स्वयमपि तानि वाक्यानि दूषयितुं अवोचत् । अन्यथा देहेन निराकरणेऽपि वाक्येन ( न ) निराकृताः स्युः । कोपसंरब्ध इति । भगवत्कृतं न मन्यन्त इति । अन्तर्गुप्ते क्रोधे अपकार एव, झटिति कृते क्लिष्टता स्यादिति क्रोधस्य बाहराविष्कारमाह दुष्प्रेक्ष्य इति । प्रहसन्निति दुःखाभावाय । यतः प्रभुः ॥ ३० ॥ पञ्चवाक्यानामर्थं स्थानत्रयेण नवभिर्निराकृत्य नवभिः कर्तव्यं प्रतिज्ञाय दशमेनाध्यवस्यति नूनमिति दशभिः श्लोकैः । 'विद्यामदो धनमद' इत्यादिवाक्यैर्मदा निरूपिताः । तद्युक्ता नीतिवाक्यानि न मन्यन्ते । अतस्तेषां प्रतीकारः क्रियैव, न वाक्यानि । अतो यदेतैर्निराकृतमनङ्गीकरणवाक्यैः तद्युक्तमेव । अतः शमार्थं प्रयुक्ता विफला जाता इति क्रिययैव दण्डरूपया शमः कर्तव्यः, तदाह तेषां हि प्रशमो दण्ड इति । एतत्स्वोपक्रमानुसारेणोपक्रमविचारेणोक्तम् । उपसंहारे त्वन्यथा वक्तव्यम् । शममात्रमुपक्रमः, मारणमुपसंहारः, ततो विरोधः । मारणोद्यम एव शमो भवतीति । ननु क्रियया दण्डे सुतरामेव प्रकोपः स्यादित्याशङ्क्य दृष्टान्तमाह पशूनां लकुटो यथेति । स हि दण्डो लोकप्रसिद्धः । स यथा दृष्ट एव पशूनां भयजनको भवति, उद्यतो वा, तथा सर्वस्वनाशः उद्यतो ज्ञातो वा पशुतुल्यानां भयजनकः ॥ ३१ ॥

नन्वेवं शति यादवाः किमिति निवारिता इत्याशङ्क्य तथा सति वैषम्यं स्यात्, न दण्डः, नहि शत्रुजयादिर्दण्डी भवति, अतो हितकारिण एव वयमिति पूर्वोपक्रान्तां स्वक्रियामाह अहो इति । शान्तिकर्तरि प्रकोपश्चाश्चर्यम् । यदवः सर्वे सुसंरब्धाः मारणोन्मुखाः समर्थाश्च । नन्वदृष्टवशादुर्वरिताः, किं तव पौरुषमिति चेत्, तत्राह कृष्ण च कुपितमिति । भगवद्विचारमात्रेणैव सर्वं सिध्यति, किं पुनः कुपिते । कृष्ण इति भक्ताधीनः, कलात्मा वा । तेनादृष्टादयस्तदनुगुणा एवेति तेषां सर्वमेव प्रतिकूलम् । तान् सर्वान् शनैः सान्त्वयित्व न तु बलात्, च स्वसामर्थ्यप्रकाशनेन, तथाकरणे हेतुः अहमिति । अहङ्कारादेते बन्धनं कृतवन्त इति तदधिष्ठाता चाहमिति तेषां शान्तिमेव वाञ्छन्निहागतः ॥ ३२ ॥

### श्रीसुबोधिनी-सारः

शुकोक्तिः । हे भरतर्षभ त्रिमदोद्धतास्ते कौरवा दुर्वाच्यं परुषं वचो राममाश्राव्य श्रावयित्वाऽसभ्याः सभानर्हा दुष्टाः पुरं हस्तिनापुरमाविशन् बिनापि प्रत्ययं क्वचित्पूर्वोत्तरपदलोपविधानात् ॥ २९ ॥ कुरूणां बहुत्वेऽणो लुक् दौःशील्यं कुशीलतां दृष्ट्वाऽवाच्यानि वक्तुमयोग्यानि कुवचनानि श्रुत्वाऽच्युतो रामः कोपेन संरब्धो व्याप्तो दुष्प्रेक्ष्यो द्रष्टुमशक्यो मुहुरसकृत्प्रहसन् सन्नवोचत् ॥ ३० ॥ नानामदैरुन्नद्धा असाधवो दुष्टाः शांतिं नेच्छंति नूनं निश्चयेन तेषां प्रशमः शांतिकर्त्ता दंडो हि नान्यः पशूनां लगुडो यथा ॥ ३१ ॥ आत्मनि शोचति सुसंरब्धान् कुपितान् यदून् कुपितं कृष्णं च शनैः सांत्वयित्वा एतेषां शमभिच्छन्नहमिहागतोस्मि ॥ ३२ ॥

### गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

हे भरतर्षभ भरतकुलश्रेष्ठ ! कुरव एवं रामं प्रति दुर्वाच्यं परुषं वाक्यं श्रावयित्वा स्वपुरमाविशन् । तान्निन्दति— असभ्याः ते सभायोग्या न भवन्ति । तत्र हेतुमाह—जन्मेति । सत्कुलजन्मना, बन्धुभिः, श्रीभिः सम्पद्भिश्च उन्नद्ध उत्कटो मदो येषां ते ॥ २९ ॥ कुरूणां दौःशील्यं दुष्टत्वं दृष्ट्वा अवाच्यानि दुर्वचनानि च श्रुत्वा कोपेन संरब्धः व्याप्तः । तत्र हेतुमाह— अच्युतः पूर्णपराक्रमः । अतएव दुष्प्रेक्ष्यः भयंकरस्वरूपो रामो मुहुः पुनःपुनः प्रकर्षेण हसन् अवोचत् ॥ ३० ॥ तदुक्तिमेवाह— नूनमिति । नानाधनाभिजनादिमदैरुन्नद्धा उत्पथगामिनः शान्तिं नेच्छन्ति । तेषां हि दण्ड एव प्रशमः शान्तिकरः, न सान्त्वनम् । नूनं निश्चितमेव हि प्रसिद्धं च लोके । तत्र दृष्टान्तमाह—पशूनामुद्धतानामुद्वृत्तानां लकुटो यथा मार्गे प्रवर्तको भवति तद्वदिति ॥ ३१ ॥ अहो आश्चर्यं परमोपकारिणोपि ममापकारः । सुसंरब्धान् क्रोधावेशेन युद्धोन्मुखान् यदून् कुपितं कृष्णं च सान्त्वयित्वा एतेषां शमं शान्तिमिच्छन्नहमिहागतः ॥ ३२ ॥

### अन्वितार्थप्रकाशिका

जन्मेति । हे भरतर्षभ ! सत्कुलजन्मना बन्धुभिः वीरैरर्जुनादिभिश्च मुक्तया श्रिया सम्पत्त्या उन्नद्ध उत्कटो मदो येषां ते असभ्याः दुर्जनाः दुर्योधनाद्याः ते कुरवः एवं रामं प्रति दुर्वाच्यं परुषं वाक्यम् आश्राव्य श्रावयित्वा स्वपुरमाविशन् । एतेन भीष्मादयः सभ्यास्तु तत्रैव तस्थुरिति ॥ २९ ॥ दृष्ट्वेति । कुरूणां दौःशील्यं दुष्टत्वं दृष्ट्वा अवाच्यानि दुर्वचनानि च श्रुत्वा कोपेन संरब्धः व्याप्तः अच्युतः पूर्णपराक्रमोऽत एव दुष्प्रेक्ष्यः भयङ्करस्वरूपो रामो मुहुः पुनः पुनः प्रकर्षेण हसन् अवोचत् ॥ ३० ॥ नूनमिति । नानाधनाभिजनादिमदैरुन्नद्धा उत्पथगामिन असाधवः शान्तिं नेच्छन्ति । तेषां हि दण्ड एव प्रशमः शान्तिकरः न सान्त्वनं नूनं निश्चितमेव हि प्रसिद्धं च लोके यथा पशूनां लगुडो मार्गे प्रवर्त्तको भवति तद्वत् ॥ ३१ ॥ अहो इति । अहो सुसंरब्धान् क्रोधावेशेन युद्धोन्मुखाम् यदून् कुपितं कृष्णं च सान्त्वयित्वा एतेषां शमं शान्तिमिच्छन्नहमिहागतः ॥ ३२ ॥

### श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्

जन्म च बंधवश्च श्रीःराज्यलक्ष्मीश्च एतेषां समाहारो जन्मबंधु श्रीः अत्र नपुंसकत्वाभाव आर्षः तथा एतदुपलक्षितैरन्यैरपि मदकारणैः उन्नद्धो दृढतां प्राप्तो मदो येषां ते दुर्वाच्यं कठिनवाक्यं । असभ्याः खलाः ॥ २९-३० ॥ नानाविधैर्जात्यादिमदैः उन्नद्धा उच्छृङ्खलाः ॥ ३१-३२ ॥

### भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

जन्मेति ॥ हे भरतर्षभ, जन्म सत् कुले जनिप्राप्तिश्च बन्धवः प्रचुरबलवद्बन्धुप्राप्तिश्च तैरुपलक्षिता या श्रीः संपत्तिस्तया, उन्नद्ध उत्कटो मदो येषां ते, असभ्याः असाधवः, ते कुरवः, रामं दुर्वाच्यं आश्राव्य, तत उत्थायेति शेषः । पुरं आविशन् हस्तिनापुरे प्रवेशं चक्रुः ॥ २९ ॥ दृष्ट्वेति ॥ कुरूणां कौरवाणां, दौःशील्यं दुष्टतां दृष्ट्वा, अवाच्यानि वक्तुमयुक्तानि तद्वचनानि च श्रुत्वा, स्वासाधारणकल्यागुणजातान्न च्यवते इत्यच्युतो रामः, कोपेन क्रोधिन संरब्धः क्षुभितः, अत एव दुष्प्रेक्ष्यः सन्, मुहुः प्रहसन् संश्च; अवोचत् स्वान्तिकस्थोद्धवादीनां पुरतोऽब्रीत् ॥ ३० ॥ उक्तिमेवाह नवभिः ॥ नूनमिति ॥ नानामदैर्धनादिप्राचुर्य-

जनितैर्नानाविधमदैरुन्नद्धा उच्छृङ्खलतां प्राप्ताः, असाधवः दुरात्मानो जनाः, शिक्षां विनेति शेषः। शान्तिमुपशमं, न इच्छन्ति प्राप्नुवन्ति। हि अतः, पशूनां, लगुडः दण्ड, यथा प्रशमः, तथा तेषां प्रकर्षेण शमयतीति प्रशमः, दण्डः, नूनमेव ॥ ३१ ॥ अहो इति ॥ अहो सुसंरब्धान् सुतरां क्रुद्धान्, यदून्, कुपितं कृष्णं च, शनैः सान्त्वयित्वा, एवैषां शमं इच्छन्, अहं इह आगतः ॥ ३२ ॥

### कृष्णप्रिया

श्री शुकदेवजी कहते हैं—महाराज परीक्षित ! कौरव अपनी कुलीनता एवं बांधव परिवार धन के बल पर एवं धन सम्पत्ति के अभिमान में चकनाचूर हो रहे थे। उन्होंने सामान्य शिष्टाचार की परवा नहीं की और श्री बलराम भगवान को इस प्रकार के तिरस्कार वचन कहकर हस्तिनापुर की ओर चल पड़े ॥ २९ ॥ श्री बलभद्रजी ने कौरवों की असभ्यता एवं अशिष्टता देखी और उनके दुर्वचन भी सुने अब श्री बलभद्रजी का चेहरा क्रोध से लाल-पीला बन गया उस समय उनकी ओर देखा भी नहीं जाता और वे अट्टाट्ट हास्य करके कहने लगे ॥ ३० ॥ सत्य बात है कि दुष्टजनों को अपनी कुलीनता, बल, वीर्य एवं पुरुषातन का घमंड हो जाता है एवं धन का मद हो जाता है, वे शान्ति नहीं चाहते हैं, उनको दमन करने का और सही रास्ते पर लाने का उपाय समझाना नहीं होता परन्तु दंड देना ही उचित हैं, पशुओं को ठीक रास्ते पर लाने के लिए दंड प्रहार आवश्यक होता है ॥ ३१ ॥ पुनः बलरामजी कहते हैं—देखो तो सही कि सारे यादव एवं भगवान श्रीकृष्ण भी क्रोध से आविष्ट होकर संग्राम के लिये तत्पर हो रहे थे लेकिन मैंने उन लोगों को समझा बुझाकर इन लोगों के साथ समाधान करने का निर्णय करा करके मैं यहाँ आया ॥ ३२ ॥

**त इमे मन्दमतयः कलहाभिरताः खलाः। 'मामवज्ञाय मुहुर्दुर्भाष्यान्[2] मानिनोऽब्रुवन् ॥ ३३ ॥**
**नोग्रसेनः किल विभुर्भोजवृष्ण्यन्धकेश्वरः। शक्रादयो लोकपाला यस्यादेशानुवर्तिनः ॥ ३४ ॥**
**सुधर्माऽऽक्रम्यते येन पारिजातोऽमराङ्घ्रिपः। आनीय भुज्यते सोऽसौ न किलाध्यासनार्हणः ॥ ३५ ॥**
**यस्य पादयुगं साक्षात् श्रीरुपास्तेऽखिलेश्वरी। स नार्हति किल श्रीशो नरदेवपरिच्छदान् ॥ ३६ ॥**

### कर्दमक्षमा

अन्वयः—ते, इमे, मन्दमतयः, कलहाभिरताः, खलाः, मानिनः, तम्, माम्, अवज्ञाय, मुहुः, दुर्भाष्यान्, अब्रुवन् ।३३। यस्य, शक्रादयः, लोकपालाः, आदेशानुवर्तिनः, सः, भोजवृष्ण्यन्धकेश्वरः, उग्रसेनः, किल, न, विभुः ॥ ३४ ॥ येन, सुधर्मा, आक्रम्यते, येन, पारिजातः, अमराङ्घ्रिपः, आनीय, भुज्यते, सः, असौ, न, किल, अध्यासनार्हणः ॥ ३५ ॥ अखिलेश्वरी, श्रीः, साक्षात्, यस्य, पादयुगम्, उपास्ते, सः, श्रीशः, किल, नरदेवपरिच्छादान्, नः, अर्हति ॥ ३६ ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

दुर्भाषणमनुस्मरति षड्भिः नोग्रसेन इति। विभुराज्ञापयितुं समर्थः ॥ ३४ ॥ अहो धृष्टाः श्रीकृष्णमप्यधिक्षिपंतीति कुपित आह सुधर्मेत्यादिभिस्त्रिभिः ॥ ३५-३६ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

मानिनः श्रीमदांधाः ॥ ३३ न विभुः, अपि तु विभुरेव। यस्योग्रसेनस्य ॥ ३४ ॥ अलं यदूनामित्युक्त्या कृष्णस्य यादवत्वेन तमप्याक्षिपंतीति कुपित आह—सुधर्मेत्यादित्रिभिः येन कृष्णेन। सोऽसौ कृष्णः ॥ ३५ ॥ यस्य कृष्णस्य अर्हति तादृशोऽसौ तदति तुच्छं नार्हत्येवेत्यर्थं एवमग्रेपि ॥ ३६ ॥

### श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी

ते मया चिकीर्षितसमाः मन्दमतित्वादिकमेव दर्शयति—येमामिति तं मामिति क्वचित् ॥ ३३ ॥ ननु, त्वमप्ययुक्तमेवावोचत इति चेत्तत्राह—नेति। किल किमर्थे अनृते वा अपि तु विभुरेवेत्यर्थः। यद्वा उग्रसेनः किल निश्चयेन विभुरिति विरोधलक्षणया ॥ ३४ ॥ टीकायां कृष्णमप्याक्षिप्तवन्त इत्यत्र समुदायोक्तेरिति भावः। अमराणामङ्घ्रिय इति मनुष्याभोग्यत्वं तथा तदर्थमिन्द्रादिदेवनिर्जयादिकञ्च सूचितं न अध्यासनं सिंहासनम् अर्हतीति तथा सः किल शिरश्चालने उपहासे वा किन्तु सुतरामेव तदर्हण इति यद्वा किल निश्चये तादृशोऽसौ तदति तुच्छ नार्हत्येवेत्यर्थः। एवमग्रेपि ॥ ३५ ॥ अहो कियद्वा तावन्माहात्म्यं यतो यस्येति साक्षाच्छ्रीः स्वरूपशक्तिरूपा वैकुण्ठेश्वरी यद्वा ततोपि पूर्णाविर्भावा रुक्मिणीरूपा अत एवाखिलानां मत्पर्यन्तानामीश्वरी तत्र वा का वराकी मायावृत्तिरूपा स्वर्गादिश्रीरित्यर्थः। श्रीश इति पुनरनुवादस्तद्दार्ढ्यार्थः ॥ ३६ ॥

---

१. तस्मात्तं मामवज्ञाय दुर्भाषां—वीर विज. ; ये मामव—श्रीधर टि.। २. दुर्भाषान्—श्रीधर. वंशी. जीव. ; दुर्मर्षान्—इति कस्यचित्।

### श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी

ते मया चिकीर्षितशमा इमे मन्दमतयः कुबुद्धयः. यतः कलहेऽभितो रताः, यतः खला दुष्टाः। खलत्वमेव दर्शयति—बे मामिति। मानिनः सगर्व्वाः सन्तः; यद्वा, इमे तु ये ते सर्व्व एवेत्यर्थः। अन्यत् समानम् ॥ ३३ ॥ ननु त्वमप्यवाच्यमवोच इति चेत्तत्राह—नेति; किल किम् ? अपि तु विधुरेवेत्यर्थः। यद्वा, उग्रसेनः किल न विभुरिति क्रोधावेशोक्तिः, यतो भोजादीनां सर्व्वेषामेव यादवानामीश्वरः; किञ्च, शक्रेति ॥ ३४ ॥ तथापि स्वपूर्व्वपुरुषश्रेष्ठययातिशापापेक्षया नृपासनादिकं किल यादवा नार्हन्तु, साक्षाद्भगवान् श्रीकृष्णो नार्हत्वेव, तमपि तत्राविविच्योचुरिति सक्रोधमाह—सुधर्म्मेति द्वाभ्याम्। अमराणामर्ह्यपि इति मनुष्याभोग्यत्वं तथा तदर्थमिन्द्रादिदेवनिर्ज्जयादिकञ्च सूचयति। सोऽनिर्व्वचनीयैश्वर्य्यः, नृपस्याध्यासनं सिंहासनमर्हतीति तथा सः; पाठान्तरे किलेति पाठे अध्यासनं किल, अपि असावपि; यद्वा उपहासे; एवमग्रेऽपि ॥ ३५ ॥ अखिलानां श्रीब्रह्मादीनामीश्वरी सेव्यापि साक्षात् स्वयमुपास्ते, यद्वा, रुक्मिणीरूपेण-साक्षाद्भूता, श्रीशः लक्ष्मीपतिरपि, किंवा भक्तेभ्योऽखिलविभूतिप्रदानसमर्थोऽपि, नरदेवस्य राज्ञः परिच्छदान् चामरादीन् ॥ ३६ ॥

### श्रीमद्वीरराघवाचार्यकृता भागवतचन्द्रचन्द्रिका

त इम इति। खलमूर्खाश्च मामवज्ञाय अवहेल्य मानिनो दुरहङ्कारिणो दुर्वाक्यान्यूचुः ॥ ३३ ॥ दुर्भाषणमेवानुस्मरति नेति। उग्रसेनो विभुः न प्रभुः किलेति काकुः काका सूचितमनुशयमेव व्यञ्जयितुं विशिनष्टि—भोजवृष्ण्यन्धकेश्वर इति। एवमग्रेपि इन्द्रादयो यस्य यदुराजस्य आज्ञानुवर्त्तितः किल पूर्ववद्विशिनष्टि लोकपाला इति ॥ ३४ ॥ सुधर्मेति। सुधर्मा नाम सभा येनाक्रम्यते अधिष्ठीयते सोऽसौ कृष्णः सिंहासनार्हो न किल ॥ ३५ ॥ पुनस्तमेव विशिषन्नेतदेवाह—यस्येति द्वाभ्याम्। अखिलानां ब्रह्मादीनां ईश्वरी लक्ष्मीः साक्षाद्यस्य पादयुग्मम् उपास्ते सोऽसौ भगवान् श्रियःपतिर्नरदेवचिह्नानि नार्हति किल श्रीश इति पाठे त्रिलोकेशः ॥ ३६ ॥

### श्रीविजयध्वजतीर्थकृता पदरत्नावली

सोऽसौ कृष्णः ॥ ३५-३६ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

तं प्रसिद्धमेतेषां हितकारिणमपि माम् ॥ ३३ ॥ दुर्भाषणान्यमनुस्मरति षड्भिः—नोग्रसेन इति ॥ ३४ ॥ अहो धृष्टाः अलं यदूनामित्युक्त्या कृष्णमप्याक्षिपन्तीति कुपित आह—सुधर्मेत्यादिभिस्त्रिभिः अध्यासनं नृपसिंहासनं तदपि नार्हति ॥३५-३६॥

### गूढार्थदीपिनी

दुर्भाषान् कटुवाक्यानि खल् प्रत्ययान्तः ॥ ३३-३४ ॥ येन। कृष्णेन न अध्यासनार्हणः न सिंहासनयोग्य ॥ ३५ ॥ परिच्छदान् राजचिह्नानि छत्रचामरादीनि नार्हति ॥ ३६ ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

दुर्भाषान् अवाच्यान् ऊचुः ॥ ३३ ॥ दुर्भाषणमनुस्मरति—नेति षड्भिः। शक्रादयो देवा लोकपालाः यस्यादेशानुवर्तिनः स उग्रसेनः विभुराज्ञापयितुं समर्थो न भवति नरान् भूखण्डपालकान् कौरवान् प्रतीति भावः ॥ ३४ ॥ अलं यदूनामित्यनेन सामान्यतः श्रीकृष्णमप्याक्षिप्तवन्तः अत एव क्रुद्धः सुधर्मेति त्रिभिराह—येन श्रीकृष्णेन सुधर्मा नाम सभा आक्रम्यते अधिष्ठीयते ॥ ३५ ॥ साक्षात् श्रीरुक्मिणी ॥ ३६ ॥

### श्रीमद्वल्लभाचार्य्यकृता सुबोधिनी

सा च शान्तिर्वाक्यैर्न जातेति क्रियार्थमाह **त इम** इति। यतो मन्दमतयः। तर्हि युद्धोद्यमे लौकिके शान्ता भविष्यन्तीत्याशङ्क्याह **कलहाभिरता** इति। परस्परकलह एव अभितो रतिर्येषाम्। कलहे तु युद्धे मरणमेव, शान्तिर्नेति। नन्वन्तर्यामितया प्रेरणीया इति चेत्, तत्राह **खला** इति। मूलेच्छया तानन्तर्यामी तथैव प्रेरयतीति। तथापि त्वया शमार्थमुद्यमः कृत इति तदेव कर्तव्यमिति चेत्, तत्राह **तन्मामवज्ञायेति**। तादृशशमकर्तारं माम्। तत्तत्र वा। अङ्गीकारे हि वाक्यैः हिताचरणादिभिश्च प्रबोधो भवति, नान्यथा। ते त्ववज्ञानेव कुर्वन्ति। **मुहुरिति** पुनः। परीक्षा निषिद्धा। अवज्ञया मानसो दोष उक्तः। **दुर्भाष्यान्** दुष्टवाक्यानि चाब्रुवन्। अयं वाचनिको दोषः। **मानिन** इत्यग्रेऽप्यसमाधानम् ॥ ३३ ॥ ननु युक्तमेतेषां वाक्यम्, उग्रसेनवाक्यत्वेन त्वयापि किमित्युच्यत इत्याशङ्क्योग्रसेनस्य सर्वराजाधिपत्यं साधयति **नोग्रसेनः किल विभुरिति**। स्वतो वचनाभावायाह **किलेति**। नाम्नैव तस्येश्वरत्वं पूर्वसिद्धं सूचितम्। तत्रापि **विभुः** लौकिकन्यायेनापि समर्थः। अन्यथा तत्पुत्रः

कंसो राजा न भवेत्। किञ्च। साम्प्रतं भोजवृष्ण्यन्धकानामीश्वरः। त्रिविधानामपि यादवानां प्रभुः। अलौकिकं सामर्थ्यमाह शक्रादयो लोकपाला इति। भगवतः इच्छया आज्ञया वा। 'मयि भृत्य उपासीन' इत्यत्रैव तद्विवृतम्। यस्योग्रसेनस्य आदेशमाज्ञां अनुवर्तन्त इति। अन्यथा यथाभिलषितवृष्ट्यादि न भवेत्॥ ३४॥ किञ्च। येन सुधर्मा आक्रम्यते, इन्द्रादयोऽपि नमस्कृत्य तां सभामारोहन्ति, तादृशीमाक्रामति। अमराङ्घ्रिपश्च पारिजातः आक्रम्यते। तन्मर्यादादूरीकरणात्तस्याप्याक्रमणम्। इन्द्रादीनामननुमतौ कथमेतद्द्वयं स्यात्। भगवत्सामर्थ्यमेतदिति नाशङ्कनीयम्। भगवतैवोग्रसेने ऐश्वर्यकला स्थापितेति नरत्ववत्तदधीनत्वमप्यङ्गीकृतमिति, 'अङ्गीकृता ग्लानिर्न दोषाय'। अनधिकारिण एतेऽस्माभिस्तुल्यतां नीताः, राज्यं च दत्तमिति यदुक्तम्, तन्निराकरोति आनीय भुज्यते सोऽसौ न किलाध्यासनार्हण इति। न हि सर्वे राजानो भवन्ति। यद्येको राज्यार्हो न भवेत्, तदेव तद्वचनं सार्थकं स्यात्। तत्र भाग्यं क्रियाशक्तिश्च प्रयोजिके। तत्रापि क्रियाशक्तिः प्रयोजिका। यदिन्द्रं निर्जित्य पारिजातः आनीय भुज्यते। ननु सा शक्तिः साम्प्रतं कुण्ठिता भविष्यतीति चेत्, तत्राह सोऽसाविति। स एव भगवानिदानीं ममाग्रे तिष्ठति, मैवं किलेत्युपलम्भार्थं प्रसिद्धिः॥ ३५॥ भाग्योत्कर्षमाह यस्य पादयुगमिति। सर्वेषां भाग्यं लक्ष्म्यधीनम्। अतः सा सर्वेश्वरी। सापि नोचतया भगवच्चरणारविन्दं सेवते। साक्षादित्याधिदैविकी, न तु दिव्यस्त्रीरूपा, नापि राज्यलक्ष्मीरूपा। यदाहुः 'चामरव्यजने शङ्ख'मिति, तद्दूषणार्थं हेतुमुक्त्वा, तदनूद्य दूषयति स नार्हति किल श्रीश इति। चामरव्यजनादयो नरदेवपरिच्छदाः। अनर्हत्वे हि तदुपेक्षया भोगो भवति। अन्यथा इन्द्रादीनामपि तथात्वं स्यात्॥ ३६॥

## श्रीसुबोधिनी–सारः

ते इमे मंदबुद्धयः कलहप्रिया खलाः दुष्ट मानिनस्तं मामवज्ञाय तिरस्कृत्य मुहुः पुनःपुनर्दुर्भाषान् अवाच्यवादान् अब्रुवन्॥ ३३॥ तान्नुस्मरति इंद्रादयो लोकपतयो यस्याज्ञाकराः स भोजवृष्ण्यंधकानामीश्वरो राजा उग्रसेनो विभुर्न आज्ञापयितुं न समर्थः किलैव॥ ३४॥ येन सुधर्मा इंद्रसभाऽऽक्रम्यते अमराणामंघ्रिपो वृक्षः पारिजात आनीय भुज्यते सोऽसौ श्रीकृष्णः किल निश्चये अध्यासनयोग्यो नास्ति॥ ३५॥ "अलं यदूनां नरदेवलांछनैः" इत्युत्तरमाह। यस्य चरणद्वंद्वं सर्वेश्वरी श्रीर्लक्ष्मीः साक्षादुपास्ते सेवते स श्रीशो हरिर्नरदेवपरिच्छदान् राज्यचिह्नानि नार्हति किल संभावनायाम्॥ ३६॥

## गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

ते इमे तमुपकारिणमपि मामवज्ञाय मुहुः पुनः पुनः दुर्भाषान् दुर्वाक्यानि अब्रुवन्। तत्र हेतुमाह—कलहाभिरता इति। तत्र हेतुमाह—खला इति, दुर्जनाः। तत्र हेतुः—मानिन इति, प्रवृद्धाहङ्काराः। तत्र हेतुः—मन्दमतय इति, विवेकशून्या इत्यर्थः॥ ३३॥ तेषां दुर्भाषणमेवानुस्मरति–नेति। शक्रादयो लोकपाला यस्याज्ञानुवर्तिनः स भोजादीनामधिपः उग्रसेनोऽपि न विभुर्भूमिराज्ये समर्थो न किलेति। कुरुवाक्यस्मरणपूर्वकं काकुं सूचयति—एते वदन्ति स न राज्यार्हः। स कथं न तथा स्यात्? अपि तु तत्र समर्थ एवेत्यर्थः॥ ३४॥ येन सुधर्माख्या सभा आक्रम्यते, अमराङ्घ्रिपः देवतरुः पारिजात आनीय भुज्यते सोऽसौ कृष्णोपि अध्यासनार्हणः मनुष्यराजसिंहासनयोग्यः न किलेति पूर्ववत्॥ ३५॥ कृष्णमेव विशिषन् पुनरेतदेवाह–यस्येति द्वाभ्याम्। अखिलानां सम्पदामीश्वरी श्रीर्लक्ष्मीः साक्षात् यस्य पादयुगुपास्ते स श्रीशः श्रियः पतिः श्रीकृष्णो नरदेवानां परिच्छदान् चामरादि चिह्नानि प्रति नार्हति न योग्यो भवति किल?॥ ३६॥

## अन्वितार्थप्रकाशिका

त इति। मन्दमतयः कलहे अभिरताः खलाः मानिनस्त इमे उपकारिणमपि मामवज्ञाय मुहुः पुनः दुर्भाषान् दुर्वाक्यानि। घ्नन्तोऽयं खलन्तो वा। अब्रुवन्॥ ३३॥ दुर्भाषान् अनुस्मृत्याह—नेति। शक्रादयो लोकपाला यस्याज्ञानुवर्तिनः स भोजादीनामधिपः उग्रसेनोऽपि न विभुर्भूमिराज्ये समर्थो न। किलेति काकु समर्थ एवेति॥ ३४॥ अलं यदूनामित्युक्त्या कृष्णेऽप्याक्षेपं मत्वाह—सुधर्मेति। येन सुधर्माख्या सभा आक्रम्यते अमराङ्घ्रिपः देवतरुः पारिजात आनीय भुज्यते सोऽसौ कृष्णोऽपि आध्यासनार्हणः मनुष्यराजसिंहासनयोग्यः न किलेति पूर्ववत्काकुः॥ ३५॥ यस्येति। अखिलानां सम्पदामीश्वरो श्रीर्लक्ष्मीः साक्षात् यस्य पादयुगलमुपास्ते स श्रीशः श्रियः पतिः श्रीकृष्णो नरदेवानां परिच्छदान् चामरादिचिह्नानि प्रति नार्हति योग्यो न भवति किल॥ ३६॥

## श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्

दुर्भाषान् अपशब्दान्॥ ३३॥ रामस्तेषां दुर्वचनानि स्मरन्नाह नेति यस्योग्रसेनस्य॥ ३४॥ अथ रामः श्रीकृष्णपराक्रमं स्मरन्नाह सुधर्मेति आक्रम्यते आनीयते॥३५॥ यस्य कृष्णस्य स श्रीकृष्णः राजन्यपरिच्छदान् न अर्हति अर्हत्येव॥३६॥

## भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

त इति॥ तमेतेषामुपकर्तृतया प्रसिद्धं, मामपि अवज्ञायावमत्य मन्दमतयः, कलहाभिरताः कलहप्रियाः, खलाः, मानिनः, ते इमे कौरवाः, मुहुः, दुर्भाषानवाच्यशब्दान्, अब्रुवन् ऊचुः॥ ३३॥ नोग्रसेन इति॥ शक्रादय इन्द्रादयः, लोकपालाः,

यस्योग्रसेनस्य, आदेशानुवर्त्तिन आज्ञानुवर्त्तिनः, भोजाश्च वृष्णयश्च अन्धकाश्च तेषामीश्वरः, विभुः सर्वानाज्ञापयितुं समर्थः, उग्रसेनः, न किल। क्षितीश्वर इति शेषः। क्षितीशेशो न किलेत्यर्थः॥ ३४॥ श्रीकृष्णेनोग्रसेनस्य क्षितीशेशत्वापादनात् तं विशिनष्टि॥ सुधर्मेति॥ येन श्रीकृष्णेन, सुधर्मा सुधर्मा नाम सभा, आक्रम्यते अधिष्ठीयते, येन श्रीकृष्णेन, अमराङ्घ्रियः देवतरुः, पारिजातः, आनीय, भुज्यते। सः, असौ, श्रीकृष्णः, अध्यासनार्हणः राज्यासनयोग्यः, न किलेति काकुः॥ ३५॥ पुनस्तमेव विशिषन्नेतदेवाह यस्येति द्वाभ्याम्॥ यस्येति॥ अखिलानां ब्रह्मादीनामीश्वरी, साक्षात् प्रत्यक्षा, श्रीर्लक्ष्मीः, यस्य श्रीकृष्णस्य, पादयुगं, उपास्ते। श्रीशो लक्ष्मीकान्तः, स श्रीकृष्णः, नरदेवपरिच्छदान् छत्रचामरादीन्, न अर्हति किल। अत्रापि काकुः॥ ३६॥

**कृष्णप्रिया**

क्या कहा जाय आखिर तो ये मूर्ख हैं इसलिए ऐसी दुष्टता कर रहे हैं इन लोगों को शान्ति प्रिय नहीं है, लेकिन कलह ही प्रिय हैं। ये इतने उन्मत्त हो रहे हैं कि पुनः पुनः मेरा तिरस्कार करके व्यर्थ गालियाँ सुना गये॥ ३३॥ और नरपतियों की बात को छोड़ दीजिए लेकिन त्रिलोकीनाथ महाराज इन्द्र आदि लोकपाल जिनकी आज्ञा का नित्य पालन करते हैं वे भगवान् श्रीकृष्ण अथवा महाराज उग्रसेन भी राजाधिराज नहीं हैं वे तो मात्र वृष्णि भोज अन्धक वंश के यादवों के ही राजा हैं॥ ३४॥ सुधर्मा नाम की सभा को स्वाधीन करके जो उसी सभा में विराजते हैं और अमरों के तरुवर पारिजातक को नाक लोक से उखाड़कर ले आये हैं उसका यथेच्छ उपभोग करते हैं वे भगवान् श्रीकृष्ण भी राजसिंहासन के अधिकारी नहीं है॥ ३५॥ अखिल विश्व की अधिष्ठात्री भगवती श्रीदेवी जिनके श्रीचरण कमलों की सेवा करती हैं वे पूर्ण पुरुषोत्तम भगवान् श्रीकृष्ण छत्र, सिंहासन चामर आदि राजचिह्नों को धारण नहीं कर सकते हैं॥ ३६॥

**यस्याङ्घ्रिपङ्कजरजोऽखिललोकपालै[1]र्मौल्युत्तमैर्धृतमुपासिततीर्थतीर्थम् ।**
**ब्रह्मा भवोऽहमपि यस्य कलाः [2]कलायाः श्रीश्चोद्वहेम चिरमस्य नृपासनं क्व ॥ ३७ ॥**
**[3]भुञ्जते कुरुभिर्दत्तं भूखण्डं [4]वृष्णयः किल । उपानहः किल वयं स्वयं तु कुरवः शिरः ॥ ३८ ॥**
**अहो ऐश्वर्यमत्तानां मत्तानामिव मानिनाम् । असम्बद्धा गिरो रुक्षाः कः सहेतानुशासिता ॥ ३९ ॥**
**अद्य निष्कौरवीं पृथ्वीं करिष्यामीत्यमर्षितः । गृहीत्वा हलमुत्तस्थौ दहन्निव जगत्त्रयम् ॥ ४० ॥**

**कर्दमक्षमा**

अन्वयः—अखिललोकपालैः, उपासीत, तीर्थतीर्थम्, यस्य, अङ्घ्रिपङ्कजरजः, मौल्युत्तमैः, धृतम्, ब्रह्मा, भवः, अहम्, अपि, यस्य, कलायाः, कला, श्रीः, अपि, अङ्घ्रिपङ्कजरजः, चिरम्, उद्वहेम, अस्य, नृपासनम्, क्व ?॥ ३७॥ वृष्णयः, किल, कुरुभिः, दत्तम्, भूखण्डम्, किल, भुञ्जते ? वयम्, किल, उपानहः, कुरवः, स्वयम्, तु, शिरः॥ ३८॥ मत्तानाम्, मानिनाम्, ऐश्वर्यमत्तानाम्, अहो. रुक्षाः, असम्बद्धाः, गिरः, अनुशासिताः, कः, सहेत ?॥ ३९॥ अद्य, निष्कौरवीम्, पृथ्वीम्, करिष्यामि, इति, अमर्षितः, जगत्त्रयम्, दहन्, इव, हलम्, गृहीत्वा, उत्तस्थौ॥ ४०॥

**श्रीधरस्वामिविरचिता भावार्थदीपिका**

मौल्युत्तमैर्मौलियुक्तैरुत्तमांगैः उत्तमैर्मौलिभिरिति वा। उपासितानि तीर्थानि यैर्योगिभिस्तेषामपि तीर्थम्। यद्वा उपासितं सर्वैः सेवितं तीर्थं गंगा तस्यास्तीर्थं तीर्थत्वनिमित्तम्। किंच ब्रह्मा भव श्रीश्चाहमपि उद्वहेम। कथंभूता वयम्। यस्य कलाया अंशस्य कला अंशाः॥ ३७-३८॥ मत्तानामिव मद्यादिना रूक्षाः परुषाः। अनुशासिता स्वयं दंडधरः सन्॥ ३९-४०॥

**श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः**

एकदेशन्यायाश्रयणे गौरवं मत्वाह—उत्तमैरिति। तीर्थानि शास्त्राणि गुरवो वा तीर्थं पावित्र्यापादकम्। सर्वप्रसिद्धिमादाय—यद्वेति। तीर्थत्वं पवित्रहेतुत्वम्। तस्य निमित्तं कारणम्, भगवत्पदोद्भूतत्वमेव गंगायाः पावनत्वे हेतुरिति भावः। न केवलं गंगोत्पत्तिहेतुत्वादेव श्रीकृष्णस्याधिक्यमपि तु ब्रह्माद्युपास्यत्वादपीत्याह—किंचेति। उद्वहेम शिरसि धारयामः। अस्य कृष्णस्य। कलायाः पुरुषरूपायाः। ब्रह्मैव युष्मद्विधानां स्रष्टा इन्द्रादिभ्योऽप्यैश्वर्येणाधिकस्ततोपि भवस्ततोपि भवरततोऽप्यहं तथाऽसमस्तः सर्वेभ्योप्यधिका श्रीस्वरूपभूता शक्तिः उत्कर्षेण धारयामः। अस्य नृपासनं क्व किं तेभ्यः सकाशाद्धिक्षित्वैव तत्कृपयैव लभ्यं स्यादिति वक्रोक्तिः॥ ३७॥ उपानहस्तद्वत्ताडनशीलाः। शिरस्तद्वत्ताड्या इति ध्वनिः॥ ३८॥

१. पाल–मौर. विज. । २. कलाकलांशाः श्रद्धामहे सुचिर–विज. । ३. भुज्यते–विज. । ४. वृष्णिभिः–विज. ।

असंबद्धा अयोग्याः । रूक्षाः शब्दतोऽर्थतश्च कर्कशाः । अनुशासिता दंडकर्ता मादृशः कः सहेत अन्यथाऽनुशासितत्वहान्या सर्वेषामुच्छृंखलता स्यादिति भावः ॥ ३९ ॥ पालनार्थमवतीर्णत्वादिवोपादानम् । लांगलाग्रेण तदिच्छया वर्द्धितलांगलाग्रेण विचकर्ष बलाज्जलांतिकमानिनाय । किं कर्तुं प्रहरिष्यन्प्रहर्तुं सांबं विना सर्वमेव नगरं खजलेनैवं प्रहृत्य बध्यतामिति गंगां प्रत्यादेशात् ॥ ४० ॥

### श्रीमज्जीवगोस्वामिकृत वैष्णवतोषिणी

अथाखिलानामखिलैश्वर्यास्तस्याश्चोपास्यत्वं विशेषतो दर्शयन्नाह—यस्येति । अङ्घ्रिपङ्कजस्य रज इति जात्यैकत्वविवक्षया यत्किञ्चिदेकमपि रजः कथञ्चित्कुत्रचिरप्राप्तम् अस्य ईदृशस्य नृपासनं क्व अपितु कुत्रापि नास्तीति क्रोधोपहासः वस्तुतस्तु क्वेत्यतिनिकृष्ट एव पद इत्यर्थः ॥३७॥ ननु, श्रीभगवन्तमुद्दिश्य नोक्तं किन्त्वन्यानेव यादवानित्याशङ्कयापि सोपहासमाह—भुञ्जत इति । दत्तमेव तत्रापि भूखण्डं कतिपयानेव देशान् अहोऽस्माकमपि यादवत्वादस्मानप्युद्दिश्योचुरिति पुनः सक्रोधोद्रेकमाह—उपेति ॥ ३८ ॥ ऐश्वर्य्येण मत्तानां हतविचाराणाम् अतो मानिनामभिमानिनाम् अत एवासम्बद्धा निरर्गला उन्मर्यादा इत्यर्थः । किञ्च रूक्षाः शब्दतश्चार्थतश्च कर्कशाः अनुशासितेत्यन्यथानुशासितृत्वहान्या सर्वेषामप्युच्छृङ्खलतापत्तिः स्यादिति भावः ॥३९॥ अतोऽद्यैव करिष्यामि इत्येतद्वदन् अमर्षितः क्रुद्धस्सन् ॥ ४० ॥

### श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी

उक्तमेव क्रोधभरात् पुनरप्यनुवदन्नाह—यस्येति । अङ्घ्रिपंकजस्य रज एकमेव कथञ्चित् कुत्रापि प्राप्तमखिललोकपालैरिन्द्रादिभिः । एवं विभूतिप्रदत्वमुक्त्वा मुक्तिप्रदत्वञ्चाह—उपासितेति । भक्तिप्रदत्वमप्याह—ब्रह्मेति । अहमधुनाग्रजत्वं प्राप्तोऽपि । ननु यूयं पुत्रत्वादिना तत्तुल्या एव कुतो वहथ ? तत्राह—यस्येति । कलायाश्चिच्छक्तेः कला अंशा नित्यभृत्या इत्यर्थः । अस्य ईदृशस्य नृपासनं क्व, अपि तु कुत्रापि नास्त्येवेति क्रोधोपहासः ॥ ३७ ॥ ननु श्रीभगवन्तमुद्दिश्य नोक्तम्, किन्तु अन्यानेव यादवानिति चेत्तथाप्ययुक्तमित्याह—भुञ्जत इति । दत्तमेव किल, तत्रापि भूखण्डं कतिपयान् देशान् । अहो अस्माकमपि यादवत्वादस्मानप्युद्दिश्योचुरेवेति क्रोधोद्रेकेणाह—उपेति । एवं दुर्भाषाणां यथोत्तरं श्रैष्ठ्यमूह्यम्, तदपेक्षया क्रोधोद्रेकेणैव वा तदुक्तक्रमातिक्रमणं वा ॥ ३८ ॥ ऐश्वर्य्येण मत्तानां हतविचाराणाम्, अतो मानिनामभिमानवताम्, अत एवासंबद्धा अयोग्या दुष्टा वा, किञ्च, रूक्षाः कः सहेत, अपि तु न कश्चित् सहेत, अन्यथानुशासितृत्वहान्या सर्वेषामुच्छृङ्खलतापत्तेरित्यर्थः ॥ ३९ ॥ अतोऽद्यैव करिष्यामीत्येतद्वदन्नमर्षितं क्रुद्धः सन् ॥ ४० ॥

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम्

अधीशः त्रिलोकेशः । उपासिततीर्थतीर्थं परमं पवित्रं यद्वा उपासितगुरुमन्त्राणां सतामपि तीर्थं पावनम् ॥ ३७-४२ ॥

### श्रीमद्वीरराघवाचार्यकृता भागवतचन्द्रचन्द्रिका

यस्येति । अखिलैर्लोकपालैः कर्तृभिर्मौल्युत्तमैर्मौलियुक्तैरुत्तमैरुत्तमाङ्गैः शिरोभिर्यस्याङ्घ्रिरजो धृतं कथम्भूतम् उपासिततीर्थतीर्थम् उपासितानि तीर्थानि गङ्गादीनि यैर्योगिभिस्तेषामपि तीर्थं पावनं यद्वा उपासितगुरूणां सतामपि पावनम् उपासितानां गङ्गादितीर्थानामपि पावनं वा यस्य च कलायाः कला अशांशभूताः अहमनन्तः श्रीर्लक्ष्मीः उद्वहेम विभुमः अङ्घ्रिरज इत्यनुषज्यते अस्यैवम्भूतस्य नृपासनं क्व कथं वा तदधिकारः इति काकुः ॥ ३७ ॥ भुञ्जत इति भुञ्जते किल ॥ ३८ ॥ अहो इति । मत्तानां मद्यादिना प्रमत्तानां मानिनां स्वैरिणाम् इवैषामैश्वर्येण मत्तानामसम्बद्धाः रूक्षाः परुषाश्च गिरः कोवा अनुशासिता दण्डयितुं समर्थश्चेत्सहेत ॥ ३९ ॥ अतोऽद्य भूमिं निष्कौरवां करिष्यामीत्यभिसन्धायेति शेषः । अतिक्रुद्धो जगत्त्रयं दहन्निव हलं जगृहे गृहीत्वोदतिष्ठत् ॥ ४० ॥

### श्रीविजयध्वजतीर्थकृता पदरत्नावली

श्रद्धामहे आकाङ्क्षामहे सर्वैरुपासितं निषेवितं तीर्थं भागीरथी अस्या अपि तीर्थं शुद्धिकरम् अस्य कृष्णस्य ॥३७-३८॥ अनुशासिता शिक्षाकरः ॥ ३९-४३ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

मौल्युत्तमैर्मौल्युत्तमेषु धृतम् उपासिततीर्था योगीन्द्रास्तेषामपि तीर्थरूपं किञ्च ब्रह्मैव युष्मद्विधानां स्रष्टा इन्द्रादिभ्योऽप्यैश्वर्य्येणाधिकः ततोपि भवः ततोऽप्यहमेवमेते ब्रह्मादयो वयं यस्य कलाया एकस्या एव कलाः तथा अस्मत्तः सर्वेभ्योऽप्य-

धिकश्रीः स्वरूपभूता शक्तिः उद्वहेम उत्कर्षेण वहामः अस्य कृष्णस्य नृपासनं क किन्त्वेतेभ्यः सकाशात् भिक्षित्वैव एतत्कृपयैव लभ्यं स्यादिति वक्रोक्तिः ॥ ३७–३८ ॥ एवं वक्रोक्त्या उपहस्य तत्त्वमाह—सार्द्धपादाधिकेन श्लोकेन अहो इति। मत्तानां मदिरामत्तानामिव मानिनां गर्ववताम् अनुशासिता स्वयं दण्डकर्त्ता सन् मादृशः खलु कः सहेत अन्यः सहतां नामेति भावः ॥ ३९–४० ॥

### गूढार्थदीपिनी

मौल्युत्तमैः मुकुटयुक्तशिरोभिः। उपासिततीर्थाः योगिनः तेषां तीर्थं पवित्रत्वापादकम्। उपासिततीर्थं गङ्गा वा। कलाः अंशांशा। सर्वे वयं यत् पाद रजः शिरसा धारयामः ॥ ३७–३८ ॥ मदिरामत्तानामिव अहङ्कारिणां रूक्षा कर्कशाः सिकः मादृशः कः सहेत न कोऽपीत्यर्थः ॥ ३९ ॥ अत्यमर्षितः अतीवक्रुद्धः सन् ॥ ४० ॥

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः

यस्य श्रीकृष्णस्य अङ्घ्रिपङ्कजरजः अखिलैः सकलैर्लोकपालैरिन्द्रादिभिः मौल्युत्तमैः शिरोभूषणयुक्तैः शिरेभिर्धृतम् किम्बहुना यस्य कलायाः कलाभूताः ब्रह्मा अहं श्रीश्च भवः उपासितानां तीर्थानामपि तीर्थं शुद्धेर्निदानम् अङ्घ्रिरजः उद्वहेम अस्य क नृपासनम् ॥३७–३८॥ मत्तानां मदिरादिना मनो गर्वस्तद्वतां रूक्षाः नीरसाः अनुशासिता स्वयं दण्डकर्ता कः ॥३९-४०॥

### श्रीमद्वल्लभाचार्य्यकृता सुबोधिनी

यदप्युक्तं 'अलं यदूना'मिति, तत्तदा स्यात्, यदि स्वतः सिंहासनं न स्यादिति वक्तुं तस्य सिंहासनोपपत्तिमाह **यस्याङ्घ्रिपङ्कजरजः** इति। अष्टौ लोकपालाः परितः, उपरि ब्रह्मा, अधः शेषोऽहम्। एतेषां दशानामाशापालकानां मध्ये प्रभुणा भाव्यम्। स एव मुख्यो राजशब्दार्थः। प्रभुत्वं च दिक्पालकानां सर्वथा हीनभावावलम्बने भवति। एतत्तु सर्वैरेव दृष्टमिति सिद्धवन्निरूप्यते। यस्य चरणकमलरजः अखिललोकपालैः सर्वैरेव पूर्वोक्तैः। **मौल्युत्तमै**रिति करणम्। तेषामपि भगवदीयत्वसिद्ध्यर्थं लौकिकन्यायेन स्वामिसेवायां वा ऐश्वर्योत्कर्षमुक्त्वा धर्मोत्कर्षमाह। उपासिता तीर्थानामपि तीर्थभूता गङ्गा यस्य। कीर्तिमाह **ब्रह्मा भवोऽहमपि यस्य कलाः कलाया** इति। भगवतः कला जगदुत्पत्तिस्थितिविनाशकर्त्री काचित्। तस्यास्त्रयोंऽशाः सत्त्वादयः। तत्र रजो ब्रह्मा तमो भवः। अहं सत्त्वम्, भूधरत्वात्। श्रियमाह **श्रीश्चे**ति। चकारादन्तःस्थिते ज्ञानवैराग्ये निरूपिते। वयं सर्व एव यस्य रजः शिरसि स्थापयामः, तस्य नृपासनं क भवतीति व्यङ्ग्योक्तिः ॥ ३७ ॥ एवमभिप्रेतार्थं निरूप्य साक्षात्तदुक्तमर्थं खण्डयति **भुञ्जते कुरुभिर्दत्त**मिति। यद्दत्तं भूखण्डमात्रमेव भवति। तत्रापि स्वरूपतोऽपि हीनत्वम्। **उपानह किल वय**मिति। उत्कर्षस्य निरूपितत्वाद्बाधितार्थत्वं स्पष्टमेव ॥ ३८ ॥ तर्ह्येवं सति किं कर्तव्यमिति चेत्, तत्राह **अहो ऐश्वर्यमत्तानामि**ति। तेषां वाक्यं न सोढव्यम्। ततो यत्कर्तव्यम्, तदग्रे वक्ष्यते। आदरणीयानां वाक्यं कर्तव्यम्। लोकेऽपि मत्तास्त्वनादरणीयाः। तत्राप्यैश्वर्येण निरूमत्ताः। बहिर्व्यवहारे माननीयत्वमाशङ्क्य मत्तत्वज्ञानादेव तथात्वमिति ज्ञापयन् दृष्टान्तमाह **मत्तानामिवे**ति। इवेत्यग्रेऽपि सम्बध्यते। मानिनामिवेति च। आत्मानमेव बहु मन्यमाना उन्मत्ता भवन्ति। ते सर्वदैव न माननीया इति दृष्टान्तद्वयम्। किञ्च। वाक्यान्यप्यसम्बद्धार्थानीत्याह असम्बद्धा गिरो रूक्षा इति। स्नेहेन बाधितार्था अपि प्रयोजका भवन्तीति तदभावमाह रूक्षा इति। तत्र सहनमुभयेषां सम्भवति, विवेकिनामसमर्थानां च। वयं तु नोभयविधा इत्याह अनुशासितेति। लोके अनुशासनाधिकारिभिर्न सोढव्या इति ॥ ३९ ॥ ततो यत्कर्तव्यं तत्प्रतिजानीते **अद्य निष्कौरवीं पृथ्वीं करिष्यामी**ति। यादवेभ्यः कौरवमात्रस्यैव तैरुत्कर्षो निरूपित इति, भगवद्धस्ते मृतानां स्वर्गोऽस्तीति भूमिमेव निष्कौरवीं प्रतिजानीते। आदौ मनसि तस्योद्यममाह **अमर्षित** इति। कायिकमाह **गृहीत्वा हलमुत्तस्था**विति। तस्योद्यमः सर्वजनीनो जात इति ज्ञापयितुं दृष्टान्तमाह **दहन्निव जगत्त्रय**मिति। सङ्कर्षणो हि प्रलये तथोत्तिष्ठति, यस्य मुखाद्वह्निरुद्गच्छति, त्र्यक्षश्च महादेवः, तद्रूपं प्रकटितवानित्यर्थः ॥ ४० ॥

### श्रीसुबोधिनी–सारः

सर्वलोकपालैः मौल्युत्तमैः मुकुटवरैर्धृतम् उपासितानि सेवितानि तीर्थानि यैर्योगिभिस्तेषामपि तीर्थं शुद्धिकरम् उपासितस्य तीर्थस्य गंगाया अपि तीर्थं स्थानभूत यस्य चरणकमलरेणुं यस्य कलायाः अंशस्य कला ब्रह्मा भवः शिवः अहं संकर्षणः श्रीश्च चिरम् उद्वहेम धारयेम अस्य श्रीकृष्णस्य नृपासनं क इत्यस्मद्दत्तनृपासना इत्युत्तरम् ॥ ३७ ॥ कुरुभिर्दत्तं भूखंडं माथुरादिदेशं वृष्णयो भुंजते किलेव आरुरुक्षतीत्यस्यार्थमाह वयम् उपानहः पादरक्षणस्थानीयाः स्म स्वयं कुरवस्तु शिरः ॥३८॥ ऐश्वर्येण मत्तानां मत्तानां सुरापायिनामिव मानिनां रूक्षाः कर्कशा असंबद्धा अत्यंतानुचिता गिरो वाचोऽनुशासिता शिक्षाकरः कः सहेत न कोपि ॥ ३९ ॥ "शतं दीनोक्तयो हुं कं बलं तत्राधिकं भवेत्" इति नीतिमाश्रित्याह अद्य इदानीं निष्कौरवीं कौरवशून्यां पृथिवीं करिष्यामीति हेतोरमर्षितः क्रुद्धो रामो जगत्त्रयं त्रिलोकीं दहन्निव हलं गृहीत्वोत्तस्थौ ॥ ४० ॥

### श्रीविट्ठलरायात्मजश्रीवल्लभकृतलेखः

यस्याङ्घ्रिपङ्कजेत्यत्र । उपासितेति विग्रहकथनम् । तदर्थस्तु । यस्य रजसः सम्बन्धिनी तीर्थतीर्थरूपा गङ्गा उपासिता । सर्वैरितिशेषः । संकर्षणस्य तामसत्वात्कथं सत्त्वरूपत्वमित्याहुः भूधरत्वादिति । शेषत्वेन भूधरत्वमात्रधर्ममादाय सत्त्वरूपत्वमित्यर्थः । अद्येत्यत्र । त्र्यक्षश्च महादेव इति । यस्य मुखादुद्गच्छतीति पूर्वेणान्वयः । पञ्चमस्कन्धे पञ्चविंशेऽध्याये इदं निरूपितम् ।

### गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

अखिलैर्लोकपालैः मौल्युत्तमैर्मौलियुक्तैरुत्तमाङ्गैः शिरोभिर्यस्याङ्घ्रिरजो धृतं तथा ब्रह्मादयोपि वयं यस्याङ्घ्रिरजो शिरसा चिरं उद्वहेम तस्यास्य नृपासनं क? कथं वा न तदधिकारयोग्यत्वेति काकुः। रजोमाहात्म्यमाह—उपासितेति। उपासितानां श्रेयोर्थिभिः सेवितानां तीर्थादीनां गङ्गादीनामपि तीर्थं पावनत्वनिमित्तमित्यर्थः। अन्येषां तत्सेवावश्यकीत्यत्र हेतुमाह—यस्य कलायाः कलाः अंशांशा इति। अहं शेषः। श्रीर्लक्ष्मीः ॥ ३७ ॥ भुञ्जत इति स्पष्टम् ॥ ३८ ॥ 'एवं चेत्तर्हि किं कर्तव्यम्' इत्यपेक्षाया सहेतुकं दण्डमेव निश्चिनोति—अहो इति। अतिशयेनैश्वर्येण मत्तानामसम्बद्धाः अनन्विता गिरः कः सहेतेत्यन्वयः। सत्पुरुषाणामैश्वर्ये सत्यपि मदो न भवतीति तेषां दुर्बुद्धित्वमाह—मानिनामिति। गुरुशास्त्रानुशासनमशृण्वतामात्मानमेव बहु मन्यमानानामित्यर्थः। 'लोकेपि विवेकिवाक्यान्येवादरणीयानि भवन्ति, न मद्यादिमत्तवाक्यानि' इति दृष्टान्तेनाह—मत्तानामिवेति। स्नेहयुक्तानामसम्बद्धानां मत्तवाक्यानामपि लोके सहनं दृश्यते, अत आह—रूक्षा इति। अविवेकिभिरसमर्थैश्च किं न सोढव्यम्' इत्याशङ्क्याह—अनुशासितेति। तद्विवेकेन दण्डयितुं समर्थ इत्यर्थः॥ ३९ ॥ अतोऽद्य भूमिं निष्कौरवीं करिष्यामीति निश्चित्य जगत्त्रयं त्रिलोकीं दहन्निव अत्यमर्षितः अति क्रुद्धो हलं गृहीत्वा उत्तस्थावित्यन्वयः॥ ४० ॥

### अन्वितार्थप्रकाशिका

यस्येति ॥ यस्य कलायाः कलाः अंशांशाः ब्रह्मा भवः अहं शेषः श्री लक्ष्मीश्च इति वयं उपासितानि तीर्थानि यैस्तेषां योगिनामपि तीर्थम्। यद्वा। उपासितानां श्रेयोऽर्थिभिः सेवितानां तीर्थादीनां गङ्गादीनामपि तीर्थं पावनत्वनिमित्तमित्यर्थः। अखिलैः लोकपालैः मौल्युत्तमैर्मौलियुक्तैरुत्तमाङ्गैः शिरोभिः उत्तमैर्मौलिभिर्वा धृतं यस्याङ्घ्रिपङ्कजरजः शिरसा चिरं वहेम। तस्यास्य नृपासनं क कथं वा न तदधिकारयोग्यत्वेति काकुः॥ ३७ ॥ भुञ्जत इति ॥ वृष्णयः किल कुरुभिर्दत्तमेव भूखण्डमेव नतु सर्वां भुवं भुञ्जते। इति वयं उपानहः किल। कुलवस्तु स्वयं शिरः किलेति काकवः॥ ३८ ॥ अहो इति ॥ अहो ऐश्वर्येण मत्तानाम् उन्मादेन मत्तानामिव मानिनाम् आत्मानमेव बहुमन्यमानां खलानाम् असम्बद्धाः रूक्षाश्च गिरः कर्माणि को नाम अनुशासिता दण्डनसमर्थः सन् सहेत ॥ ३९ ॥ अद्येति ॥ अतोऽद्य पृथ्वीं निष्कौरवीम् उपसर्जनान्। ङीबार्षः। करिष्यामीति निश्चित्य जगत्त्रयं त्रिलोकीं दहन्निव अत्यमर्षित अतिक्रुद्धो हलं गृहीत्वा उत्तस्थौ ॥ ४० ॥

### श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्

मौलय उत्तमायेषु तैः शिरोभिः कृत्वा धृतं स्वकल्याणायजनैः उपासितं तीर्थं पादजलं येषां तथाभूता ये नारदादयस्तेषामपि तीर्थं सेव्यं। यस्य कृष्णस्य कलायाः कला ऐश्वर्य्यलेशं प्राप्ता इत्यर्थः ब्रह्माभवः शिवः श्रीः अहं संकर्षणोपि एते वयं सर्वे यद्रजः उद्वहेम। एवंभूतस्य अस्य हरेः क नृपासनमिति यत् खलावदंत तन्महदाश्चर्य्यमितिभावः॥ ३७-३८ ॥ मद्यादिनामत्तानामिव। असंबद्धाः नयविरुद्धाः रूक्षाः कविनाः अनुशासिता शिक्षकः सन् ॥ ३९-४० ॥

### भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

यस्येति। यस्य श्रीकृष्णस्य, उपासितानि तीर्थानि गङ्गादीनि यैर्योगिभिः तेषामपि तीर्थं पावनं, अङ्घ्रिपङ्कजरजः चरणकमलरेणुः, अखिललोकपालैः कर्तृभिः, मौल्युत्तमैर्मौलियुक्तैरुत्तमैरुत्तमाङ्गैः शिरोभिः करणैः, धृतं ध्रियते इत्यर्थः। यस्य श्रीकृष्णस्य, कलाया अंशस्यापि, कला अंशभूताः, ब्रह्मा, भवो रुद्रः, अहं संकर्षणः, एते ब्रह्मादयो वयमित्यर्थः। श्रीश्च स्वयं लक्ष्मीरपि, चिरं उद्वहेम बिभृम। अङ्घ्रिरज इत्यनुषज्यते। अस्यैवंभूतस्य कृष्णस्य, नृपासनं क। कथं वा तदधिकार इति काकुः॥ ३७ ॥ भुञ्जत इति। वृष्णयो यादवाः, कुरुभिः दत्तं भूखण्डं, भुञ्जते किल। इत्यपि काकुः। वयं उपानहः किल। स्वयं कुरवः तु, शिरः किल। अत्रापि काकुः॥ ३८ ॥ अहो इति। अहो, मत्तानां मद्यपानादिना प्रमत्तानामिव, ऐश्वर्यमत्तानां, मानिनां स्वैरिणां, एतेषां असंबद्धा अनन्विताः, रूक्षाः परुषाश्च, गिरः, अनुशासिता दण्डयितुं समर्थश्चेत्, को वा सहेत ॥ ३९ ॥ अद्येति। अतः अद्य, पृथ्वीं भूमिं, निष्कौरवीं, करिष्यामि इत्यभिधार्येति शेषः। अमर्षितोऽतिक्रुद्धः, जगत्त्रयं त्रिलोकीं, दहन्निव, हलं गृहीत्वा, उत्तस्थौ उदतिष्ठत् ॥ ४० ॥

## कृष्णप्रिया

जिनके पदपङ्कजों की रज समर्थ संतजन संसेवित गङ्गा आदि महत्तीर्थों को भी तीर्थ बना देती हैं, और समर्थ लोकपाल भी अपने अपने उत्तम किरीटों पर जिनके पदपंकजपराग को आदर से धारण करते हैं, एवं में ब्रह्माजी और लक्ष्मीजी भी जिन भगवान् की कला की भी छोटी कला है उन भगवान् श्रीकृष्ण के लिए राजसिंहासन कहाँ बड़ी आश्चर्य की बात है ॥ ३७ ॥ और भी कौरवों के घमंड का अन्त नहीं, वे मानते हैं कि बेचारे यादव तो कौरवों का अर्पित किया हुआ भूमि का एक अंश-टूकड़ा भोगते हैं और यादव उनकी जूती हैं और वे कुरुवंशी स्वयं मस्तिष्क हैं। ऐसा कौरवों के उन्माद का कोई ठिकाना नहीं वे लोग ऐश्वर्य से उन्मत्त हुए है और घमंडी पागल सरीखे हो गये हैं, इनकी बाते खलता से कटुता से भरी हैं और पागलों के जैसी हैं। शिर रहित कबन्ध जैसी हैं, अब मुझे इन लोगों का शासन कर उनके होंश-कोंश को ठिकाने लाना चाहिए भला इनकी बातों को कैसे सामान्य जन भी सहन कर सकता है ॥ ३८-३९ ॥ रोषाविष्ट श्री बलभद्रजी ने आखिर में निर्णय किया कि आज मैं इस धरातल को कौरव रहित कर डालुङ्गा, ऐसा कहते हुए बलभद्रजी रोष से ऐसे भर गये कि मानों तीनों-लोक को भस्म कर देंगे वे अपने हल-मूशल को लेकर खड़े हो गये ॥ ४० ॥

**लाङ्गलाग्रेण नगरमुद्विदार्य गजाह्वयम् । विचकर्ष स गङ्गायां प्रहरिष्यन्नमर्षितः ॥ ४१ ॥**
**जलयानमिवाघूर्णं गङ्गायां नगरं पतत् । आकृष्यमाणमालोक्य कौरवा जातसम्भ्रमाः ॥ ४२ ॥**
**तमेव शरणं जग्मुः सकुटुम्बा जिजीषवः[1] । सलक्ष्मणं पुरस्कृत्य साम्बं प्राञ्जलयः[2] प्रभुम् ॥ ४३ ॥**
**राम रामाखिलाधार प्रभावं न विदाम[3] हे । मूढानां नः कुबु[4]द्धीनां क्षन्तुमर्हस्यधीश्वरः[5] ॥ ४४ ॥**

## कर्दमक्षमा

अन्वयः—अमर्षितः, सः, लाङ्गलाग्रेण, गजाह्वयम्, विदार्य, गङ्गायाम्, प्रहरिष्यन्, विचकर्ष ॥४१॥ आकृष्यमाणम्, जलयानम्, इव, आघूर्णम्, नगरम्, गङ्गायाम्, पतत्, अवलोक्य, कौरवाः, जातसम्भ्रमाः ॥ ४२ ॥ सकुटुम्बाः, जिजीविषः, प्राञ्जलयः, सलक्ष्मणम्, साम्बम्, पुरस्कृत्य, प्रभुम्, शरत्रम्, ययुः ॥ ४३ ॥ हे राम । राम । अखिलाधारः, प्रभावम्, न, विदाम, अधीश्वरः, मूढानाम्, कुबुद्धीनाम्, नः, क्षन्तुम्, अर्हसि ॥ ४४ ॥

## श्रीधरस्वामिविरचिता भावार्थदीपिका

लांगलाग्रेण दक्षिणतः प्राकारमूले निखातेन उद्विदार्य उत्पाट्य ॥४१-४२॥ जिजीविषव इत्यक्षराधिक्यं सोढव्यम् ॥४३॥ मूढानां प्रभावानभिज्ञानाम् । अतिक्रममपराधम् ॥ ४४-४५ ॥

## श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

स रामः ॥ ४१ ॥ जलयानमुडुपम् । जातसंभ्रमा उत्पन्नभयाः ॥ ४२ ॥ तं रामम् । सोढव्यमार्षत्वात्, यद्वा—'शेषं गाथा' इत्युक्तेर्गाथाख्यवृत्तमिदम् ॥ ४३ ॥ अतिक्रममपराधम् । कथं शरणं जग्मुस्तदाह—रामेति । हे जगत्सुखप्रद वीप्साऽतिभयात् । ननु भक्तानेव रमयामि न त्वन्यानिति चेत्सत्यम्, तथापि जगतस्त्वमेव गतिर्न त्वन्यः कोऽपीत्याहुः—हे अखिलाधार । तत्र हेतुः—अधीश्वरेति । हे ब्रह्मादीनामपीश्वरेति । अतो नास्माकमपराध इति शेषः । यद्वा—नोऽस्मान् क्षंतुमर्हसि । ननु महापराधिनो यूयं न क्षंतव्यास्तत्राहुः—मूढानामज्ञानामत एव कुबुद्धीनां दुरभिमानिनां दुष्टविचाराणां वा यतस्तव प्रभावं न विद्मो अतोऽस्मदादीनामपराधो दीनवात्सल्येन न ग्राह्य एवेति भावः ॥ ४४ ॥

## श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी

गङ्गायां विचकर्ष बलादानेतुमारभत किमर्थं प्रहरिष्यन् संहर्तुं मित्यर्थः । किं वा गङ्गायां प्रहरिष्यन् प्रकर्षेण पातयिष्यन् निमज्जयितुमित्यर्थः । एवं तदिच्छया लाङ्गलस्य दैर्घ्यादिकं ज्ञेयम् ॥ ४१ ॥ जलेति युग्मकम् । आदावाघूर्णतीत्याघूर्णं पश्चात् पतदालोक्य तत्पश्चाच्चाकृष्यमाणं तेन जिजीविषव एवेति सर्वाभिमानो निरस्तः प्रभुमिति परमेश्वरबुद्ध्या शरणं जग्मुरित्यर्थः । यद्वा सर्वापराधक्षमासमर्थम् इति शरणे योग्यतोक्ता यद्वा साम्बस्य विशेषणं प्रभुभावेन पुरस्कृत्य एतच्च पुरीपतनेनैतयोरनिष्टं स्यादित्यभिप्रायव्यञ्जनेन श्रीरामस्य प्रीतये प्राक् तदपेक्षितसमर्पणेन च श्रीरामस्य तु साम्बपतनशङ्कानपेक्षा

---

१. जिजीविषः-विज. ; जिजीविषवः-श्रीधर. वंशी. जीव. वीर. विश्व. । २. योऽब्रुवम्-वीर. विज. । ३. ते-श्रीधर. वंशी. जीव. वीर. विज. । ४. कुटुंबिना-विज. । ५. स्यधीश्वर-वीर. विज. ; स्यतिक्रमम्-श्रीधर. वंशी. जीव. विश्व. ।

पुर्याकर्षणस्य भीषणतामात्रतात्पर्य्येण ॥ ४२-४३ ॥ कथं शरणं जग्मुस्तदाह—रामेति । हे जगत्सुखप्रद ! वीप्साति भयात् ननु भक्तानेव रमयामि नत्वन्यानिति चेत्सत्यं तथापि जगतस्त्वयेव गतिः नत्वन्यः कोपीत्याहुः हे अखिलानामाधार आश्रयेति तत्र हेतुः अधीश्वर हे ब्रह्मादीनामपीश्वरेति अतोऽस्माकं अपराधमिति शेषः यद्वा नः अस्मान् क्षन्तुमर्हसि ननु महापराधिनो यूयं न क्षमायोग्याः तत्राहुः मूढानामज्ञानाम् अतः कुबुद्धीनां दुरभिमानिनां दुष्टविचाराणां वा यतस्तव प्रभावं न विद्मः अतोस्मदादीनामपराधो दीनवात्सल्येन न ग्राह्य एवेति भावः ॥ ४४ ॥

### श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी

गंगायां विचकर्ष बलादानेतुमारभत । किमर्थम् ? प्रहरिष्यन् संहर्त्तुमित्यर्थः । किंवा गंगायां प्रहरिष्यन् पातयिष्यन् निमज्जयितुमित्यर्थः । एवं तदिच्छया लांगलस्य दैर्घ्यादिकं ज्ञेयम् ॥ ४१ ॥ आदावाघूर्णत् सञ्चलन्; आघूर्णमिति पाठे पाठान्तरेऽपि स एवार्थः । पश्चात् पतदालोका, यत आकृष्यमाणं तेन; यद्वा, तत्कारणं तदाकर्षणं बालोकयेत्यर्थः ॥ ४२ ॥ जिजीविषव एवेति सर्व्वाभिमानो निरस्तः, प्रभुमिति परमेश्वर-बुद्धया शरणं जग्मुरित्यर्थः । यद्वा, सर्व्वापराधक्षमासमर्थ इति शरणयोग्यतोक्ता; यद्वा, साम्बस्य विशेषणं वा । प्रभुभावेन पुरस्कृत्य, एतच्च पुरीपतनेनैव तयोरप्यनिष्टं स्यादित्यभिप्रायेण; यद्वा, श्रीरामस्य प्रीतये प्राक् तदपेक्षित-समर्पणार्थमुपायनवदिति ॥ ४३ ॥ कथं शरणं जग्मुः ? तदाह—रामेति । हे जगत्सुखप्रद ! वीप्सातिभयात् । ननु भक्तानेव रमयामि, न त्वन्यानिति चेत्, सत्यम्, तथापि जगतस्त्वमेव गतिः, न त्वन्यः कोऽपीत्याहुः— हे अखिलानामाधार ! आश्रयेति । तत्र हेतुः—अधीश्वर ! हे श्रीब्रह्मादीनामपीश्वरेति, अतो, नोऽस्माकमपराधमिति शेषः । ननु महापराधिनो यूयं न क्षमायोग्याः, तत्राहुः—मूढानामज्ञानाम्, अतः कुबुद्धीनां दुरभिमानिनां दुष्टविचाराणां वा, यतस्तव प्रभावं न विद्मः, अतो महादीनानामपराधो दीनवत्सलेन भवता न ग्राह्य एवेति भावः । अथवा 'रमन्ते योगिनोऽनन्ते सत्यानन्दे चिदात्मनि' इत्यादिवचनात् राम हे परब्रह्मन्नित्यर्थः । किञ्च, अखिलाधार ! हे परमात्मन्नित्यर्थः । सर्व्वेन्द्रियादिशक्तेस्तदेकमूलत्वात्; किञ्च; अधीश्वर ! हे परमेश्वर ! अतो न विद्म, अतएव मूढानां कुबुद्धीनाञ्च, अतः क्षन्तुमेवार्हसि, इति जगदीशतया स्तुतिर्महाभयात्, किंवा, अवतारत्वादिना तत्त्वतः श्रीकृष्णेनाभेदात् ॥ ४४ ॥

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम्

सलक्ष्मणं लक्ष्मणया स्वभार्यया सहितम् ॥ ४३-४५ ॥

### श्रीमद्वीरराघवाचार्यकृता भागवतचन्द्रचन्द्रिका

लाङ्गलाग्रेणेति । स रामः गजाह्वयं नगरमुद्विदार्य दक्षिणतः प्राकारमूले निखातेनोत्पाट्य गङ्गायां प्रहरिष्यन् पातयितुं इत्यर्थः विचकर्षाकृष्टवान् यतोऽमर्षितः ॥ ४१ ॥ जलयानमिवेति । आकृष्यमाणमत एव जलयानं प्लवमिवाघूर्णं भ्रमद्गङ्गायां पतच्च नगरमालोक्य जातः सम्भ्रमः सम्यक् भ्रमः कम्पो येषां ते ॥ ४२ ॥ जिजीविषवः जीवितुमिच्छवः कुटुम्बैः सहिताः तं राममेव शरणं ययुः सलक्ष्मणं लक्ष्मणया सहितं साम्ब पुरस्कृत्य पुरतो निधाय बद्धाञ्जलयः प्रोचुश्च ॥ ४३ ॥ उक्तिमेवाह— रामरामेति पञ्चभिः । कुबुद्धीनां नोस्माकमपराधमिति शेषः ॥ ४४ ॥

### श्रीविजयध्वजतीर्थकृता पदरत्नावली

कुटुम्बीनामिति दीर्घश्छान्दसः ॥ ४४ ॥

### श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शिनी

लाङ्गलाग्रेण तदिच्छया वर्द्धितस्य लाङ्गलस्याग्रेण दक्षिणतः प्राकारमूले निखातेन उद्विदार्य्य उत्पाट्य विचकर्ष बलाज्जलान्तिकमानिनाय किं कर्तुं प्रहरिष्यन् प्रहर्तुं साम्बं विना सर्वमेव नगरं स्वजलेनैव प्रहृत्य बध्यतामिति गङ्गां प्रतीत्यादेशात् निष्कौरवां पृथ्वीं करिष्य इति प्राक्प्रतिज्ञातश्च सर्वनगरनिमज्जनेऽपि साम्बस्य न किमप्यमङ्गलमभविष्यदिति ज्ञेयम् ॥ ४१ ॥ जलयानमुडुपमिव आ समन्तात् घूर्णत इत्याघूर्णं जिजीविषव इत्यक्षराधिक्यं न दोषः नवाक्षरैकपादो वृत्तभेदोस्तीति भाषावृत्तावुक्तः सलक्ष्मणं साम्बं पुरस्कृत्येति रामं सद्यः प्रसादयितुम् ॥ ४२-४५ ॥

### गूढार्थदीपिनी

प्रहरिष्यन् पातयितुं तच्च साम्बव्यतिरेकेणेति ज्ञातव्यम् ॥ ४१ ॥ ज्ञातसंभ्रमा उत्पन्नभयाः ॥ ४२ ॥ जिजीविषेति इदं गाथाख्यवृत्तमक्षराधिक्याद् ॥ ४३ ॥ अतिक्रमम् अपराधम् ॥ ४४ ॥

**श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः**

उद्विदार्य उत्पाट्य गङ्गायां प्रहरिष्यन् निमज्जयितुमित्यर्थः। विचकर्ष आकृष्टवान् लाङ्गलवृद्धिः साम्बयोविप्रादिरक्षासु तत्सङ्कल्पादेवेति ज्ञेयम् ॥ ४१-४३ ॥ क्षन्तुमर्हसि अपराधमितिशेषः ॥ ४४ ॥

**श्रीमद्वल्लभाचार्य्यकृता सुबोधिनी**

क्रियामाह **लाङ्गलाग्रेणेति** स्त्रियो बालाश्च युद्धे मारयितुमशक्या इति तस्यां भूमावुत्पन्नाः कौरवा एवेति, लोके प्रसिद्धा भविष्यन्तीति, नगरमेवोद्विदार्य जन्मान्तरेऽपि तथात्वाभावाय गङ्गायां प्रहरिष्यन् विचकर्ष। क्रियाद्वयं निष्पन्नम्, तृतीयां क्रियां निवारयितुं चकारः। प्रहरणे विलम्बहेतुमाह **अमर्षित इति**। अतिक्रोधावेशान्न कृतवान्। अविचारे वा, प्रहरणसङ्कल्पे हेतुः ॥४१॥ कथमेतावता शिक्षा जातेत्याकाङ्क्षायामाह **जलयानमिति**। आ समन्तात् घूर्णा यस्मिन् तदाघूर्णं नगरम्। शत्रन्तं क्रिया वा। भिन्नं वाक्यं गङ्गायां पतदिति। मरणावश्यकताप्रतिबोधनं मरणं च ज्ञापितवान्। तत्र हेत्वन्तरनिराकरणाय बलक्रियादर्शनं कौरवाणामाह **आकृष्यमाणमिति**। कौरवत्वात्सहजदोषाभावः। **जातसम्भ्रमा** भीताः। अनेन गर्वनिवृत्तिरुक्ता। अतो दोषस्य निवृत्तत्वात् गुणस्य च विद्यमानत्वात् तमेव शरणं जग्मुः। ऐकमत्यमाह **सकुटुम्बा इति**। मोक्षाभावायाह **जिजीषव** इति। निमित्ते विद्यमाने शरणागतिमपि नाङ्गीकुर्यादिति साम्बस्य सभार्यस्यानयनमाह **सलक्ष्मणमिति**। लक्ष्मणासहितम्। प्राञ्जलयो विज्ञापनार्थाः। कथमपकर्षोऽङ्गीक्रियत इति चेत्, तत्राह **प्रभुमिति** ॥४२-४३॥ ते हि पूर्वं वार्तामात्रहारित्वं भगवतो ज्ञातवन्तः, पश्चात्क्रोधे कृते भीताः स्तोत्रमाहुः **पञ्चभिः राम रामेति**। पूर्वं कृतापराधस्य क्षमापनमिहोच्यते।

क्रीडार्थत्वं तत्र हेतुर्महत्त्वं चापि सान्त्वने। अन्यार्थं च समारम्भः शरणं च वयं गताः ॥ १ ॥

तत्रापराधक्षमायां पञ्चहेतूनाह **रामेति**। रमणात्मकस्यादरेण द्विःसम्बोधनम्। अयमपि हेतुः। परं भगवद्धर्मः। **अखिलाधारेति**। वयमाधेयाः। न हि यो यं विभर्ति, स तदपराधं मन्यते। अज्ञानमपि हेतुरित्याह **प्रभावं न विद्मह इति**। यद्यपि सहजः प्रभावो ज्ञायते, तथाप्यत्राविष्कारं ( न ) करिष्यसीति न जानीमः। सर्वत्रावतारेषु प्रतिज्ञातार्थमात्रपूरकत्वात्। नन्वेतादृशोऽप्यर्थः प्रतिज्ञासिद्ध एवेति कथमज्ञानम्, तत्राह **मूढानामिति**। विचाररहितानामिति। ननु सर्वेषां कथं विचाराभावः, तत्राह **कुबुद्धीनामिति**। दुर्बुद्धित्वात् कैश्चिदुक्तमपि न गृहीतमित्यर्थः।

बुद्धिर्न शुद्धा नो शास्त्रं नापि ज्ञानं स्वतः क्वचित्। प्रभुः स्वामी भवांश्चापि धारकः क्षन्तुमर्हति ॥ २ ॥ ४४ ॥

**श्रीसुबोधिनी-सारः**

हलाग्रेण हस्तिनापुरमुत्पाट्य गंगायां प्रहरिष्यन् प्रहर्त्तुं प्रक्षेप्तुममर्षितः स विचकर्ष ॥ ४१ ॥ जलयानं नौरिवाघूर्णं कंपितं नगरम् आकृष्यमाणं गंगायां पतत् आलोक्य दृष्ट्वा जातः संभ्रमो येषां ते कौरवाः ॥ ४२ ॥ कुटुंबेन सहिता जिजीविषवः वर्णलोप आर्षः। लक्ष्मणया सहितं सांबं पुरस्कृत्याग्रे कृत्वा प्रांजलयः तमेव प्रभुं शरणं ययुः ॥४३॥ हे रामराम हे अखिलाधार ते तव प्रभावं वयं न जानीम मूढानां कुत्सिता बुद्धिर्येषां नोऽस्माकम् अतिक्रममपराधं क्षंतुं त्वमर्हसि ॥ ४४ ॥

**श्रीविट्ठलरायात्मजश्रीवल्लभकृतलेखः**

**राम रामेत्यत्र। बुद्धिर्न शुद्धेति** कारिकया पूर्वार्धेन क्षमायां कौरवनिष्ठं हेतुत्रयं प्रातिलोम्येन निरूपितम्। रामनिष्ठं हेतुद्वयमानुलोम्येनाहुः **प्रभुरिति। भवांश्चेति। तवाहेति।** इति कौरवोक्तं जगतो लीलास्थानत्वं शुक आहेत्यर्थः।

**गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी**

स अमर्षितः संक्रुद्धो रामो गजाह्वयं नगरं उद्विदार्य उत्पाट्य गङ्गायां प्रहरिष्यन् पातयितुं तं लाङ्गलाग्रेण विचकर्ष आकृष्टवान्। युद्धे पुरुषमारणेपि स्त्रीबालानामवशिष्टत्वे पुनः पृथ्वी सकौरवा स्यात्, अतः स्त्र्यादिसहितमेव नगरं पातयितुमाकृष्टवानिति ज्ञेयम् ॥ ४१ ॥ आकृष्यमाणमतएव जलयानमिवाघूर्णं भ्रमत् गङ्गायां पतच्च नगरं व्यालोक्य जातः सम्भ्रमो भयं येषां ते कौरवाः सलक्ष्मणं लक्ष्मणासहितं साम्बं पुरस्कृत्य स्वयं च प्राञ्जलयः सन्तस्तमेव प्रभुं रामं शरणं जग्मुरिति द्वयोरन्वयः। तत्र हेतुमाह—जिजीषवः जीवितुमिच्छव इति। तत्र हेतुमाह—सकुटुम्बा इति। कुटुम्बासक्तत्वादित्यर्थः ॥ ४२-४३ ॥ शरणमागतानां स्तुतिमाहु—राम रामेति चतुर्भिः। भयमादरं सूचयन्तो बहुधा संबोधयन्ति—हे अखिलाधार हे अधीश्वर ! ते तव प्रभावं वयं न जानीमः, अतो नोऽस्माकपराधं क्षन्तुमर्हसीत्यन्वयः। अज्ञाने हेतुमाहुः—कुबुद्धीनामिति। तत्र हेतुमाहुः—मूढानामिति। अविद्यया मोहितानामित्यर्थः ॥ ४४ ॥

### अन्वितार्थप्रकाशिका

लाङ्गलेति ॥ सः अर्मषितः संक्रुद्धो रामो गजाह्वयं नगरं लाङ्गलस्य तदिच्छया वर्द्धितस्याग्रेण दक्षिणतः प्राकारमूले निखातेन उद्विदार्य उत्पाट्य गङ्गायां प्रहरिष्यन् पातयितुं विचकर्षाकृष्टवान्। बलाञ्जलान्तिकमानेतुमारभत ॥ ४१ ॥ जलेति युग्मम् ॥ आकृष्यमाणमत एव जलयानमुडुपमिवाघूर्णं भ्रमत् गङ्गायां पतच्च नगरमालोक्य जातः सम्भ्रमो येषां ते जिजीविषवः जीवितुमिच्छवः। अक्षराधिक्यं सोढव्यम्। सकुटुम्बाः कौरवाः रामं सद्यः प्रसादयितुं सलक्ष्मणं लक्ष्मणासहितं साम्बं पुरस्कृत्य स्वयं च प्राञ्जलयः सन्तस्तमेव प्रभुं रामं शरणं जग्मुः ॥ ४२-४३ ॥ रामेति ॥ हे राम राम ! हे अखिलाधार ! वयं ते प्रभावं न विदाम न विद्मः। आर्षः प्रयोगः। मूढानां प्रभावानभिज्ञानां कुबुद्धीनां नः अतिक्रममपराधं क्षन्तुमर्हसि ॥ ४४ ॥

### श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्

लांगलाग्रेण प्राकारमूले धृतेन हलाग्रेण नगरमुद्विदार्य उत्पाट्य गंगायां प्रहरिष्यन् निःक्षेपयिष्यन् सन् ॥ ४१ ॥ जलयानं नौरिव आघूर्णं कंपमानं ॥ ४२ ॥ सकुटुंबा जिजीविषव इति द्वितीयपादेऽक्षराधिक्यमार्षं ॥ ४३-४५ ॥

### भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

लाङ्गलाग्रेणेति। अर्मषितः स रामः, गजाह्वयं, नगरं, लाङ्गलाग्रेण दक्षिणतः प्राकारमूले निखातेन हलाग्रभागेन, उद्विदार्य उत्पाट्य, गङ्गायां, प्रहरिष्यन् पातयितुमित्यर्थः। विचकर्ष आकृष्टवान् ॥ ४१ ॥ जलयानमिवेति। आकृष्यमाणमत एव, जलयानं प्लवमिव, आघूर्णं भ्रमत्, गङ्गायां पतच्च, नगरं आलोक्य विलोक्य, जातसंभ्रमाः सम्यक्संजातकम्पाः, कौरवाः ॥ ४२ ॥ तमेवेति। जिजीविषवः जीवितुमिच्छवः, सकुटुम्बाः कुटुम्बैः सहिताः सन्तः, सलक्ष्मणं लक्ष्मणया सहितं, साम्बं, पुरस्कृत्य पुरतो निधाय, प्राञ्जलयः बद्धाञ्जलयः सन्तश्च, प्रभुं, तं राममेव, शरणं जग्मुः। प्रोचुश्चेति शेषः। द्वयोरेकसंबन्धः ॥ ४३ ॥ उक्तिमेवाह। रामेति। हे राम, हे राम, हे अखिलाधार, वयं, ते तव, प्रभावं महिमानं, न विदाम, अतः, हे अधीश्वर, मूढानां कुबुद्धीनां नोऽस्माकं, अपराधमिति शेषः। क्षन्तुं अर्हसि ॥ ४४ ॥

### कृष्णप्रिया

पुनः दाऊजी ने हलकी नोंक से पुनः पुनः भूमि में चोट करते हुए हस्तिनापुर नगर को उखाड़ दिया और नगर को डूबाने के लिए अतिशय आवेश से गङ्गाजी की ओर खींचने लगे ॥ ४१ ॥ हल की नोंक से उखाड़ के खींचने पर सम्पूर्ण हस्तिनापुर इस प्रकार काँपने लगा कि मानो पानी में कोई नौका डग-मगा रही हैं, जब उन लोगों ने अपनी नजरों से देखा कि हमारी नगरी गङ्गाजी में गिर रही है तब वे लोग घबड़ा गये ॥ ४२ ॥ पुनः दीन बनकर सारे कौरव श्री लक्ष्मणा जी के साथ साम्ब कुमार को आगे रखकर अपने प्राणों के रक्षण के लिये अपने कुटुम्ब-परिवार को साथ लेकर अंजलिबद्ध होकर सर्व समर्थ भगवान् बलभद्रजी के शरण में गये ॥ ४३ ॥ शरण में जाकर दैन्य से निवेदन करने लगे हे लोकाभिराम ! हे बलराम ! आप समस्त विश्व के आधार शेष भगवान हैं, हम आपकी महिमा नहीं जानते हे नाथ ! हम लोग मूढ़ बन रहे हैं हमारी मति भ्रष्ट हो चुकी है, अतः आप हम दीन लोगों के अपराध को क्षमा करें ॥ ४४ ॥

**स्थित्युत्पत्त्यप्ययानां त्वमेको हेतुर्निराश्रयः। लोकान् [1]क्रीडनकानीश क्रीडतस्ते वदन्ति हि ॥ ४५ ॥**

**त्वमेव मूर्ध्नीदमनन्त लीलया भूमण्डलं बिभर्षि सहस्रमूर्धन्।**

**अन्ते च यः स्वात्मनि रूद्धविश्वः शेषेऽद्वितीयः परिशिष्यमाणः ॥ ४६ ॥**

**[2]कोपस्तेऽखिलशिक्षार्थो न द्वेषान्न च मत्सरात्। गृह्णतो [3]भगवत्सत्त्वं स्थितिपालनतत्पर ॥ ४७ ॥**

**नमस्ते सर्वभूतात्मन् सर्वशक्तिधराव्यय। विश्वकर्मन् नमस्तेऽस्तु त्वां वयं शरणं गताः ॥ ४८ ॥**

### कर्दमक्षमा

अन्वयः—त्वम्, एकः, निराश्रयः, स्थित्युत्पत्त्यप्ययानाम्, हेतुः, हे ईश ! , क्रीडन्, ते, लोकान्, क्रीडनकानि, वदन्ति, हि ॥४५॥ अनन्त !, सहस्रमूर्धिन्, लीलया, इदम्, भूमण्डलम्, त्वम्, एव, मूर्ध्नि बिभर्षि, च, अन्ते, परिशिष्यमाणः, अद्वितीयः, यः, स्वात्मनि, रुद्धविश्वः, शेषे ॥ ४६ ॥ स्थितिपालनतत्पर !, भगवत्सत्त्वम्, गृह्णतः, ते, कोपः, अखिलशिक्षार्थं, न, द्वेषात्, न, च, मत्सरात् ॥४७॥ सर्वभूतात्मन् !, सर्वशक्तिधर, अव्यय, विश्वकर्मन्, ते, नमः, अस्तु, त्वाम्, वयम्, शरणम्, गताः ॥४८॥

---

१. वहतास्ते—विज. । २. स्ते खिलशिक्षार्थं सर्वेषां—च. पु. टि. ; स्ते खलु—प्रा. पा. । ३. बिभ्रतो भगवन्—श्रीधर. वंशी. जीव. वीर. विज. ।

### श्रीधरस्वामिविरचिता भावार्थदीपिका

शेषे शयनं करोषि शेषपर्यंके परिशिष्यमाणो यः स च त्वमेवेति वा ॥ ४६ ॥ अस्मासु कोपश्च तवायमनुचित एवेत्याहुः। कोपस्तु इति स्थितिपालने तत्परस्तात्पर्यवान्कोपः। पाठांतरे संबोधनम् ॥ ४७ ॥ विश्वं कर्म कृत्यं यस्य स त्वमिति सम्बोधनम् ॥ ४८ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

स्थितेरादौ निर्देशः पालनापेक्षया। तेषु तवान्यापेक्षा नास्ति इत्याहुः—निजाश्रयः। 'निराश्रयः' इति पाठेपि स एवार्थः। न च तैः प्रयोजनमस्तीत्याहुः—लोकानिति। 'लोकवत्तु लीलाकैवल्यम्' इति न्यायेनेति भावः। तदुक्तम्—"सृष्ट्यादिकं हरिर्नैव प्रयोजनमपेक्ष्य तु। कुरुते केवलानंदाद्यथा मत्तस्य नर्तनम् ॥" इति। अतः क्रीडया त्वया वयं यथा नियुक्तास्तथैव प्रवृत्ताः। अतः कुबुद्धित्वेऽपि को नामास्नाकं दोष इति भावः। ईशेति पाठे हे सर्वनियन्त इत्यर्थः ॥ ४५ ॥ किमहं जीववन्निद्रालुरित्याशंकायामर्थांतरमाह—शेषे पर्यंके इति। परमकृपालुतया त्वं हे अनन्तापरिच्छिन्न अधुना स्वस्मिन् जगद्बिभर्षि न तद्वृत्तौ किञ्चित्प्रयास इत्याहुः-हे सहस्रमूर्द्धन्। सहस्रमूर्द्धत्वेकस्मिन्नेव धृतमिदमज्ञातप्रायमेवोष्णीषसक्तरोमवदिति भावः ॥४६॥ मत्सरात्परोत्कर्षासहनात्। पाठांतरे निर्विसर्गपाठे। स्थितेः शिष्टमर्यादायाः पालने तत्परस्त्वं, तव कोपः शिक्षार्थमेव यतः पूर्वं दुष्टास्त्वामपश्यंतो मदांधा एव स्म इदानीं शिष्टा जाता इति भावः ॥ ४७ ॥ हे सर्वभूतात्मन्निति, सर्वभूतांतर्गता वयमपीति भावः। अहं दुष्टान्वधिष्याम्येवेति चेत्तत्राहुः—हे सर्वशक्तिधरेति। अस्मन्मारणे पालने च त्वं शक्त एवेति भावः। किञ्च हे विश्वकर्मन्निति विश्वमिदं तवैव कार्यमतोऽस्मान् जीवयितुमेवार्हसीति भावः ॥ ४८ ॥

### श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी

तदंशभूतसङ्कर्षणाख्यमहत्स्रष्टृपुरुषाभेदेनाधीश्वरत्वमेवाभिव्यञ्जयन्ति—स्थितीति। स्थितेरादौ निर्देशः सम्प्रति पालनापेक्षया न च तेषु तवान्यापेक्षाऽस्तीत्याहुः निजाश्रय इति पाठः क्वचित् नच तैः प्रयोजनमपीत्याहुः लोकानिति। "लोकवत्तु लीलाकैवल्यम्" इतिन्यायेनेति भावः। तदुक्तं नारायणाध्यात्म्ये—

"सृष्ट्यादिकं हरिर्नैव प्रयोजनमपेक्ष्य तु। कुरुते केवलानन्दात् यथा मत्तस्य नर्त्तनम्" ॥ इति।

किन्तु सङ्कल्पमात्राद्यथावत्करणाच्च त्वयि सर्वज्ञत्वादिकन्तु विशेष इति भावः। अतः क्रीडता त्वया वयं यथा नियुक्ताः स्मः तथैव प्रवृत्ता इति कुबुद्धित्वेप्यस्माकं को नाम दोषस्तत् क्षन्तुमेवार्हसीति तात्पर्यं निजाश्रय इति पाठे भक्तमात्रापेक्षया स्थित्यादिकर्त्ताप्यानुषङ्गिकतयान्येषामपि स्थित्यादिकर्त्ता भवसीति व्याख्येयम् ॥ ४५ ॥ तत्रापि निजमूर्त्तिविशेषेण परमकृपया पृथ्वीधारणात् पालनमेव तव मुख्यमित्याहुः—त्वमिति। अनन्त हे अपरिच्छिन्नत्वादनन्तसंज्ञक अतो हे सहस्रमूर्द्धन्! अतो लीलयैव तेष्वेकेन मूर्द्ध्ना इदं सर्वाधारं बिभर्षि नच प्रलयेपि पालकत्वं व्यभिचरसीत्याहुः—अन्तेचेति। नैमित्तिकप्रलये स्वस्य आत्मनि विग्रहे निरुद्धं स्थापितं संरक्षितं विश्वं येन स गर्भोदकशायिरूपेण शेषे अद्वितीय इति तदानीं त्रैलोक्ये न विद्यते द्वितीयो यस्य सः ॥४६॥ अतः कोपोपि तव जगत्पालनायैवेत्याहुः—कोप इति। खलु निश्चितम् अखिलेति पाठे अखिलस्य शिक्षार्थं हितायेत्यर्थः। यतः स्थितये यत्पालनं तत्परः अत एव न द्वेषान्न च मत्सरात् यतः सत्त्वं गुणं श्रीविष्णुरूपेण बिभ्रतः पुष्णतः तेन च न तवोपकृतिरित्याहुः—हे भगवन्! स्वाभाविकशक्तिविलासैश्वर्यादिप्रशस्तेति अतो लोकदययैव तत्पोषणमिति भावः ॥ ४७ ॥ तथाप्याकर्षणादनिवृत्तं दृष्ट्वा अतिभीत्या तत्प्रियनामसङ्कीर्त्तनेन मुहुः प्रणमन्तः शरणं यान्ति—नम इति। नमस्कारे हेतुः हे सर्वेषाम्भूतानाम् आत्मन् अन्तर्यामिन्! अत एव सर्वशक्तिधर सर्वेन्द्रियविविधवृत्तिप्रवर्त्तनात् यतोऽव्यय हे सर्वैश्वर्य्यपूर्ण! अतो विश्वकर्मन् हे जगत्स्रष्टरित्यर्थः। अस्त्वित नमस्कारस्य नित्यसत्तां प्रार्थयन्ते शरणगमनयोग्यता च तैरेव विशेषणैः तत्र सर्वेति परमैश्वर्य्यमुक्तं तत्र हेतुः सर्वशक्तिधरेति तत्राप्यव्ययेति तदेव दर्शयन्ति विश्वेति ॥ ४८ ॥

### श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी

अधीश्वरत्वमेवाभिव्यञ्जयन्ति—स्थितीति। स्थितेरादौ स निर्देशः सम्प्रति पालनापेक्षया, न च तेषु तवान्यापेक्षास्तीत्याहुः—निजाश्रयेति। नापि तैः प्रयोजनमपीत्याहुः—लोकानिति। क्रीडतः सदा क्रीडापरस्य, वदन्ति तत्त्वज्ञाः, हि निश्चये; ननु क्रीडायां को हेतुः? तत्राहुः—हे ईशेति। ईश्वराभिप्रायस्य दुर्वितर्क्यत्वात् स केन ज्ञातुं शक्य इति भावः। अतः क्रीडता त्वया वयं यथा नियुक्ताः स्मस्तथैव प्रवृत्ता इति कुबुद्धित्वेऽप्यस्माकं को नाम दोषस्तत् क्षन्तुमेवार्हसीति तात्पर्य्यम् ॥ ४५ ॥ तत्रापि निजमूर्त्तिविशेषेण परमकृपया पृथ्वीधारणात् पालनमेव तव मुख्यमित्याहुः—त्वमिति। अनन्त! हे अपरिच्छिन्नत्वादनन्तसंज्ञक! अतो हे सहस्रमूर्द्धन्! अतो लीलयैव तेष्वेकेन मूर्द्ध्ना, पाठान्तरेऽपि स एवार्थः। इदं सर्व्वाधारं बिभर्षि। ननु

धरणीधरः शेषोऽहं परमेश्वराद्भिन्नः, कथमभेदेन स्तूये ? तत्राहुः—अन्ते चेति तैर्व्याख्यातम्; यद्वा, न च प्रलयेऽपि पालकत्वं व्यभिचरतीत्याहुः—अन्ते चेति; स्वस्य आत्मनि श्रीविग्रहे निरुद्धं स्थापितं संरक्षितं विश्वं येन सः, किंवा अद्वितीयः, अतः परितः शिष्यमाणो भगवच्छेषतां प्राप्नुवन् शेषे, अतएव शेषनामापि त्वमिति भावः। अथवा अनन्त ! हे अपरिच्छिन्न ! अतो हे सहस्रमूर्द्धन् अपरिमितशीर्षन् ! तच्च पुरुषसूक्तादौ व्यक्तमेव, अतएव लीलया अशेषरूपेणेदं विभर्षि, अन्यत् समानम् ॥ ४६ ॥ अतः कोपोऽपि तव जगत्पालनायैवेत्याहुः—कोप इति। खलु निश्चिते, अखिलेति पाठे, पाठान्तरे अखिलस्य शिक्षार्थं हितायेत्यर्थः। यतः स्थितये यत्पालनं तत्परः, अतएव न द्वेषान्न च मत्सरात् पालकस्य पाल्येषु तदसम्भवादित्यर्थः। यतः सत्त्वं गुणं बिभ्रतः पुष्णतः, तच्च सहजकारुण्येनैवेत्याहुः—भगवन् ! हे परमदयालो ! खलेति पाठे दुष्टानां दण्डार्थमित्यर्थः। तत्र हेतुः—स्थितीति। अन्यथा जगत्पालनासिद्धिरिति भावः ॥ ४७ ॥ तथाप्याकर्षणादनिवृत्तं दृष्ट्वातिभीत्या तत्प्रियनामसंकीर्तनेन मुहुः प्रणमन्त आहुः—नम इति। नमस्कारे हेतुः—हे सर्व्वेषां भूतानामात्मन् ! अन्तर्य्यामिन् ! अतएव हे सर्व्वशक्तिधर ! सर्वेन्द्रिय विविधवृत्तिप्रवर्त्तनात्। यतोऽव्यय ! हे सर्व्वैश्वर्य्यपूर्ण ! अतो विश्वकर्म्मन् ! हे जगत्स्रष्टुरित्यर्थः। अस्त्विति नमस्कारस्य नित्यसत्तां प्रार्थयन्ते। यद्वा, शरणगमनयोग्यतामाहुः। तत्र सर्व्वेति परमैश्वर्य्यमुक्तम्। तत्र हेतुः—सर्व्वशक्तिधरेति तत्राप्यव्ययेति। तदेव दर्शयन्ति—विश्वेति। अन्यत् समानम् ॥ ४८ ॥

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम्

अद्वितीयः समाभ्यधिकरहितः रुद्धवीर्यः स्वभावः कार्योन्मुखं कुर्वन् ॥ ४६–४८ ॥

### श्रीमद्वीरराघवाचार्यकृता भागवतचन्द्रचन्द्रिका

स्थितीति। अप्ययः प्रलयः तेषां त्वमेक एव हेतुराधारतयेतिभावः। कस्तर्हि मम हेतुस्तत्राहुः—निजाश्रय इति। निज आत्मा आधारो यस्य सः हे ईश ! क्रीडतस्ते तवेति क्रीडनकान् क्रीडोपकरणभूतान् वदन्ति त्वद्याथात्म्यविदः ॥ ४५ ॥ त्वमेको हेतुरित्येतदेव प्रपञ्चयति—त्वमिति। हे अनन्त मूर्द्ध्वैत्वस्य सहस्रेत्यादिः सहस्रमूर्द्धा त्वमेक एवेदं कृत्स्नं भूमण्डलं मूर्द्धिन लीलयैव विभर्षि अन्ते प्रलये स्वात्मनि रुद्धं लीनं विश्वं यस्य स अत एवावशिष्यमाणोऽत एवचाद्वितोयः समाभ्यधिकरहितः शेषे शयिष्यसे परमात्मदृष्ट्येदमुक्तम् ॥ ४६ ॥ कोप इति। हे क्षितिपालनतत्पर ! हे भगवन् ! सत्त्वं शुद्धसत्त्वमयं शरीरं बिभ्रतस्तव कोपः केवलं शिक्षार्थमेव न तु द्वेषान्नापि मत्सराच्च द्वेषोऽप्रीतिः मत्सरः कौटिल्यम् ॥ ४७ ॥ शरण्यत्वोपयुक्तगुणैः सम्बोधयन्तः शरणं व्रजन्ति—सर्वभूतात्मन्नित्यनेन सार्वज्ञं सर्वशक्तिधरेत्यनेन स्वशक्तित्वम् अव्ययेत्यनेन रागद्वेषादिविकार-राहित्यम् अत एव सर्व सुहृत्त्वं विश्वकर्मन् इत्यनेन परत्वञ्चोक्तं भवति क्रियत इति कर्म कार्यं विश्वं यस्य कार्यं तथाभूतेत्यर्थः। सर्वमिदं परमात्मदृष्ट्योक्तम् ॥ ४८ ॥

### श्रीविजयध्वजतीर्थकृता पदरत्नावली

क्रीडनकान् क्रीडासाधनानि ॥ ४५ ॥ अन्ते जगत्संहारे परिशिष्यमणोऽद्वितीयः शेषे ॥ ४६ ॥ जगद्विभ्रतः ते कोपोऽखिलशिक्षार्थं सत्त्वं स्थित्यादितत्परः सद्भिरत्र हलधरे यथोचितं ग्राह्यमनुचितमन्तर्यामिविषयमिति तात्पर्यमवगन्तव्यं विश्वस्य प्रपञ्चस्यानुग्रहार्थं कर्म विक्रमलक्षणो व्यापारो यस्य स तथा तस्य सम्बुद्धिः हे विश्वकर्मन् ॥ ४७–४८ ॥

### श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शिनी

शेषे स्वपिषि शेषपर्य्यङ्केऽद्वितीयः त्रैलोक्ये त्वदन्यस्य तदानीमविद्यमानत्वात् ॥ ४६ ॥ सत्त्व पालनार्थकं सत्त्वगुणमिदानीं बिभ्रतस्तव कोपोयमखिलानां शिक्षणार्थमेव कोपः कीदृशः स्थितेः शिष्टमर्य्यादायाः पालने तत्परस्तात्पर्य्यवान् यदयङ्कोपः कृतस्तत एव वयं शिष्टाः सम्प्रत्यभूम पूर्वन्तु दुष्टास्त्वामपश्यन्तो गर्वान्धा एवास्मेति भावः निर्विसर्गपाठे सम्बोधनपदम् ॥ ४७ ॥ दुष्टान् वो वधिष्याम्येति चेत्त्राह—सर्वशक्तिधर अस्माकं मारणेपि पालनेपि शक्ति दधास्येव अव्ययेत्यस्माकं जीवने मरणे वा तव न किमपि व्येति किञ्च हे विश्वकर्मन्निति विश्वमिदं तवैव कर्म कार्य्यमिति जीवयितुमेवास्मानर्हसीतिभावः ॥ ४८ ॥

### गूढार्थदीपिनी

क्रीडनकान् क्रीडोपकरणीभूतान् ॥ ४५ ॥ इदं विश्वं लीलया अनायासेन त्वमेव विभर्षि। अन्ते च प्रलये स्वात्मनि रुद्धं लीनं विश्वं येन सः। शेषे शयनं करोषि। शेषपर्यङ्के वा यः सोऽपि त्वमेवेत्यभेदेन निर्देशः ॥ ४६ ॥ अखिलानाम् उत्पथगामिनाम्। स्थितेः शिष्टमर्यादायाः ॥ ४७–४८ ॥

## श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

क्रीडनकान् क्रीडोपकरणान् ॥ ४५ ॥ अन्ते संहारे स्वात्मनि रुद्धविश्वः रुद्धं प्रलीनं विश्वं यस्मिन् सः अत एव परिशिष्यमाणः अत एव अद्वितीयः निस्समानातिशयः शेषे स्वपिष्यसि व्यूहाङ्गिदृष्टयेदं बोध्यम् ॥ ४६ ॥ इष्टद्रुहो दण्ड्या इति अखिलानां शिक्षार्थम् ॥ ४७-४८ ॥

## श्रीमद्वल्लभाचार्य्यकृता सुबोधिनी

किञ्च । अस्माभिरेवमपि न प्रार्थयितव्यम्, अतस्तवैव लीलास्थानं जगदिति, तदाह स्थित्युत्पत्तीति । एकेनैवोत्पत्त्यादिकं क्रियते, स्वस्मिन्नेव स्थितेन । तत्र तथा करणे प्रयोजनं लीला । तदाह लोकान्क्रीडनकानिति । ईश इति सम्बोधनमन्यथा न कुर्यादिति ज्ञापयति । क्रीडनका यन्त्रादयः । अन्यक्रीडार्थपक्षं व्यावर्तयति क्रीडतस्त इति । वदन्तीति प्रमाणं व्यासादयः । युक्तश्चायमर्थः । पूर्णस्यान्यथा प्रवृत्तिरयुक्ता ॥ ४५ ॥ किञ्च । समानेषु दण्डः क्रियते, न तु मशकतुल्येषु, अतोऽतितुच्छत्वादस्मासु क्रोधो न युक्त इत्याशयेनाह त्वमेव मूर्ध्नीदमिति । अस्य नगरस्य कियती वार्ता, पञ्चाशत्कोटिविस्तीर्णं भूमण्डलं हे अनन्त मूर्ध्नि लीलया बिभर्षि । तादृशसहस्रमूर्धा भवान् । भूमण्डलादधिकमात्रपरिमाणमायातिं, न व्यापकत्वेत्यनन्तेति । न केवलमन्यप्रेरणया धारणम्, किन्तु स्वरुच्या । यतः अन्ते स्वात्मनि रुद्धं विश्वं यतस्तादृशो भवान् अद्वितीयः शेषे शिष्टो भवसि । यतः परिशिष्यमाणः स्वयमेव । अतः शेषनामेति भावः ॥ ४६ ॥ एवमपि महतः अत्यल्पेषु क्रियाविष्कारोऽनुचित इति निरूप्य कृतस्य कोपस्यान्यथा विनियोगमाह कोपस्त इति । लोके द्वेधा कोपो भवति, द्विष्टे वा, महत्युत्कर्षासहनाद्वा । तदुभयं न प्रकृते, किन्तु शिक्षार्थमेव । सर्व एव भगवतो बालका इति ज्ञापयितुमखिलपदम् । तत्र हेतुः गृह्णतो भगवन्सत्त्वमिति । गुणान्तरैरसंस्पृष्टसत्त्वम् । अन्यथा बाधितं स्यात् । सत्त्वस्य च महत्प्रयोजनमित्याह स्थितिपालनतत्पर इति । जगतो मर्यादापालनं चान्यथा न स्यात् ॥ ४७ ॥ शरणागतिं प्रार्थयितुं नमस्यन्ति नमस्त इति । नमनमात्रेणैव प्रसादयोगाय । सर्वभूतात्मन्निति । आत्मा स्वल्पेनापि तुष्यति । सर्वशक्तिधरेत्यस्मदादितामसशक्तयोऽपि तवैव । अस्मदीयं सर्वं धर्माधर्मश्च भवानित्युक्तम् । एवं सत्यस्मदीयदोषसम्बन्धः स्यादित्याशङ्क्याह अव्ययेति । किञ्च । एतत्पुरभङ्गे पुनरप्येतत्कर्तव्यं स्यादित्याशयेनाह विश्वकर्मन्निति । विश्वं कर्म यस्येति । अन्यदाप्यतिक्रमाभावाय नमनं प्रार्थयन्ते नमस्तेऽस्त्विति । एवं प्रसन्नं विधायाहुः त्वां वयं शरणं गता इति ॥ ४८ ॥

## श्रीसुबोधिनी-सारः

पालनोत्पत्तिसंहाराणां त्वमेको हेतुः कारणं स्वयं निराश्रयः स्वाश्रयः हे ईश क्रीडतस्ते तव लोकान् क्रीडनकान् क्रीडासाधनानि आहुः ऋषयो हि युक्तम् ॥ ४५ ॥ हे अनंत हे सहस्रमूर्द्धन् इदं भूमंडलं मूर्ध्नि शिरसि त्वं बिभर्षि लीलया अंते प्रलये स्वात्मनि रुद्धं विश्वं येन सोऽद्वितीयः परिशिष्यमाणः उर्वरितो यस्त्वं शेषे शयनं करोषि शेषपर्यंके वा ॥ ४६ ॥ हे भगवन् सत्त्वं बिभ्रतस्ते तव कोपोऽखिलशिक्षार्थम् एव न द्वेषात् मत्सराच्च न स्थितिपालने तत्परः तात्पर्यवान् अविसर्गपाठे संबोधनम् ॥४७॥ हे सर्वभूतात्मन् हे सर्वशक्तिधर हे अव्यय ते तुभ्यं नमः हे विश्वकर्मन् त्वां शरणं वयं गताः ते नमोस्तु ॥४८॥

## गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

ईश्वरत्वमेवोपपादयति—हे ईश ! स्थित्यादीनां हेतुः उपादानं निमित्तं च द्विविधमपि कारणं त्वमेक एव, हि यस्मात् लोकान् क्रीडतः ते तव क्रीडनकान् क्रीडोपकरणभूतान् सर्वज्ञा ऋषयो वदन्ति । त्वं तु स्वयं निराश्रयः आधारादिकारणरहित एव ॥ ४५ ॥ अखिलाधारत्वं प्रपञ्चयन्ति । 'परिच्छिन्नस्यैतन्न भवति' इति व्यापकत्वेन संबोधयन्ति—हे अनन्तेति । हे सहस्रमूर्द्धन् ! इदं भूमण्डलं लीलयाऽनायासेनैव स्वमूर्ध्नि बिभर्षि धत्से । अन्ते प्रलये च स्वात्मनि रुद्धं लीनं विश्वं यस्य सः, अत एव परिशिष्यमाणः, अत एव चाद्वितीयः एवंभूतो यः शेते त्वमेव शेषे । श्रीनारायणाभेददृष्ट्येदमुक्तम् ॥ ४६ ॥ एवंभूतस्य ते तवायं कोपः अखिलानामुत्पथानां प्राणिनां शिक्षार्थं सन्मार्गे प्रवृत्त्यर्थमेव, न द्वेषान्न च मत्सरात् न चोत्कर्षासहनात् । शिक्षायां हेतुमाहुः—सत्त्वं गुणं बिभ्रत इति । सत्त्वगुणधारणे हेतुमाहुः—हे भगवन् सर्वज्ञ ! यतो भवान् स्थितेर्वर्तमानस्य प्रपञ्चस्य पालने तत्परः, अन्यथा तव कोपेन प्रलय एव स्यादिति भावः ॥ ४७ ॥ शरण्यत्वोपयुक्तगुणैः संबोधयन्तः नमस्यन्तः शरणं व्रजन्ति । सर्वोपादानत्वमाहुः—सर्वभूतात्मन्निति । निमित्तत्वमाहुः—विश्वकर्मन्निति । उभयत्र सामर्थ्यमाहुः—सर्वशक्तिधरेति । अविकारित्वमाहुः—अव्ययेति । स्पष्टमन्यत् ॥ ४८ ॥

## अन्वितार्थप्रकाशिका

स्थितीति ॥ त्वम् एक एव स्थित्यादीनां हेतुः स्वयं च निराश्रयः । हे ईश ! हि यस्मात् लोकान् क्रीडतः ते तव क्रीडनकान् क्रीडोपकरणभूतान् सर्वज्ञा ऋषयो वदन्ति ॥ ४५ ॥ त्वमिति । हे अनन्त ! हे सहस्रमूर्द्धन् ! इदं भूमण्डलं लीलयाऽ-

नायासेनैव त्वमेव स्वमूर्ध्नि बिभर्षि धत्से । अन्ते प्रलये च स्वात्मनि रुद्धं लीनं विश्वं यस्य सः अत एव परिशिष्यमाणः अत एव चाद्वितीयः त्वं शेषे शयनं करोषि । एवंभूतो यः स शेषे शेषपर्यङ्के परिशिष्यमाणो यः स त्वमेवेति वा श्रीनारायणाभेद-दृष्ट्येदमुक्तम् ॥ ४६ ॥ कोप इति । हे भगवन् ! सत्त्वं गुणं बिभ्रतस्ते योऽयं कोपः अखिलानामुत्पथानां प्राणिनां शिक्षार्थं सन्मार्गे प्रवृत्त्यर्थमेव न द्वेषान्न च मत्सरात् न चोत्कर्षासहनात् यतस्त्वं स्थितेः शिष्टमर्यादायाः पालने तत्परः असि । यद्वा । स्थितिपालने तत्परः तात्पर्यवान् कोपः निर्विसर्गपाठे सम्बोधनम् ॥ ४७ ॥ नम इति । हे सर्वभूतानामात्मन् ! हे सर्वशक्तिधर ! हे अव्यय ! ते नमः । हे विश्वं कर्म कृत्यं यस्य ते नमोऽस्तु । वयं त्वां शरणं गताः ॥ ४८ ॥

## श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्

अंते निमित्तप्रलये स्वात्मनि स्वदेहे रुद्धविश्वः परिशिष्यमाणः अवशेषतया स्थितः अद्वितीयः तत्र स्थाने भवादृशो द्वितीयो नास्तीति तथाभूतः त्वं शेषे पर्य्यंके स्थितोऽसि यद्वा अवशिष्यमाणस्त्वं शेषे शयनं करोषि ॥ ४६ ॥ हे भगवन् सत्वं सत्त्वगुणं बिभ्रतस्ते कोपः यतस्त्वं स्थितिपालने तत्परः सावधानोऽसि । पाठांतरे स्थितिपालनतत्परेति संबोधनं वा ॥ ४७ ॥ एतावत् स्तवने कृतेपि पुरकर्षणात्यागं दृष्ट्वा भीताः संतस्ते कौरवा मुहुर्मुहुः संबोधयंति नम इति । विश्वं कर्मकृत्यं यस्य तत्संबुद्धिः ॥ ४८ ॥

## भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

स्थितीति । स्थितिश्च उत्पत्तिश्च अप्ययः प्रलयश्च तेषामुत्पत्तिस्थितिप्रलयानामित्यर्थः । हेतुः कारणभूतः, त्वमेव एकः, असि । स्वयं निजाश्रय आत्माऽऽधारः, सर्वेषामाधारः स्वयमनाधार इत्यर्थः । हे ईश, लोकान् क्रीडतः, ते तव, क्रीडनकान् क्रीडोपकरणरूपान्, वदन्ति कथयन्ति हि । त्वद्याथात्म्यविदः इति शेषः ॥ ४५ ॥ त्वमेको हेतुरित्येतदेव प्रपञ्चयति । त्वमिति । हे अनन्त, हे सहस्रमूर्द्धन्, त्वं एव, इदं भूमण्डलं, लीलया मूर्द्धिन, बिभर्षि । अन्ते प्रलये च, यस्त्वं, स्वात्मनि रुद्धं लीनं विश्वं यस्य सः, अत एव, परिशिष्यमाणः, अत एव, अद्वितीयः समाभ्यधिकराहितः, शेषे शयिष्यसे । परमात्मदृष्ट्येदमुक्तम् ॥ ४६ ॥ तवास्मासु कोपोऽनुचित एवेत्याहुः । कोप इति । हे स्थितिपालनतत्पर, हे भगवन्, सत्त्वं शुद्धसत्त्वमयं शरीरं, बिभ्रतः ते तव, कोपः केवलं, अखिलशिक्षार्थमेव न तु द्वेषात् । नापि मत्सराच्च, द्वेषोऽप्रीतिः, मत्सरः कौटिल्यम् ॥ ४७ ॥ शरण्यत्वोपयुक्तगुणैः संबोधयन्तः शरणं व्रजन्ति । नम इति । हे सर्वभूतात्मन्, अनेन सार्वज्ञम् । हे सर्वशक्तिधर, अनेन सर्वशक्तिमत्त्वम् । हे अव्यय, अनेन रागद्वेषादिविकाररहिततया सर्वसुहृत्त्वम् । क्रियते इति कर्म कार्यं विश्वं कर्म कार्यं यस्य तत्संबोधने हे विश्वकर्मन्, अनेन परत्वं प्रोक्तं भवति । ते तुभ्यं, नमः । पुनरपि, ते नमः अस्तु, वयं, त्वां, शरणं गताः । सर्वमिदं परमात्मदृष्ट्योक्तम् ॥४८॥

## कृष्णप्रिया

आप विश्व की उत्पत्ति, स्थिति और प्रलय के एकमात्र कारण हैं लेकिन आप का कोई आधार नहीं, सर्व समर्थ हे नाथ ! बड़े-बड़े ऋषिमहर्षि कहते हैं कि आप एक खिलाड़ी हैं और यह सारा जगत आपका एक खिलौना है ॥ ४५ ॥ हे अनन्त ! आपके तो अनन्तमस्तक हैं एवं आप खेल-खेल में ही इस समस्त भूमण्डल को अपने एक शिर पर रखते हैं, जब प्रलयकाल आता है तब आप सारे विश्व को अपने भीतर लीन कर देते हैं। और केवल आप ही अवशिष्ट रहकर अद्वितीय स्वरुप से पौढते हैं ॥ ४६ ॥ हे नाथ ! आपका क्रोध समस्त विश्व को शिक्षा के लिये है माने उपदेश के लिये है । द्वेष से नहीं है या मात्सर्य से नहीं है । हे नाथ आप विश्व की उत्पत्ति स्थिति एवं लय के लिये विशुद्ध सत्वमय श्री विग्रह को धारण करते हैं ॥ ४७ ॥ हे समस्त शक्तियों को धारण करने वाले एवं सर्व प्राणी-स्वरुप अविनाशी नाथ आपके श्री चरणों में हम नमस्कार करते हैं, आप अविनाशी हैं, सर्व प्राणी स्वरुप है, समग्र विश्व के विधाता है हे भगवन् ! हम बार-बार आपको नमस्कार करते हैं । हम सब आपकी शरण में हैं हे कृपानाथ कृपा करके आप हमारी रक्षा करें ॥ ४८ ॥

## श्रीशुक[1] उवाच

**एवं प्रपन्नैः संविग्नैर्वेपमाना[2]यनैर्बलः । प्रसादितः [3]प्रसन्नोऽसौ मा भैष्टेत्यभयं ददौ ॥ ४९ ॥**
**दुर्योधनः पारिबर्हं कुञ्जरान् षष्टिहायनान् । ददौ च [4]द्वादशशतान्ययुतानि तुरङ्गमान् ॥ ५० ॥**
**रथानां षट्सहस्राणि रौक्माणां सूर्यवर्चसाम् । दासीनां निष्ककण्ठीनां सहस्रं दुहितृवत्सलः ॥ ५१ ॥**
**प्रतिगृह्य तु तत् सर्वं भगवान् सात्वतर्षभः । ससुतः सस्नुषः [5]प्रायात् सुहृद्भिरनुमोदितः[6] ॥ ५२ ॥**

---

१. बादरायणि–प्रा. पा. । २. मानैर्हलायुधः–वीर. । ३. सुप्रसन्नो–श्रीधर. वंशी. जीव. वीर. विज. विश्व. । ४. द्विषतसाहस्रं हयानामयुतानि च–प्रा. पा. । ५. प्रागात्–श्रीधर. वंसी. जीव. वीर. विज. विश्व. । ६. ऽभिनन्दितः–श्रीधर. वंशी. जीव. वीर. विज. विश्व. ।

### कर्वमक्षमा

अन्वयः—श्रीशुक उवाच—एवम्, प्रपन्नैः, संविग्नैः, वेपमानैः, बलः, प्रसादितः, प्रसन्नः, असौ, मा, भैष्ट, इति, अभयम्, ददौ ॥ ४९ ॥ दुर्योधनः, दुहितृवत्सलः, षष्टिहायनान्, कुञ्जरान्, द्वादशशतानि, पारिबर्हम्, ददौ, च, अयुतानि, तुरङ्गमान्, ददौ ॥ ५० ॥ दुहितृवत्सलः, दुर्योधनः, सूर्यवर्चसाम्, रुक्मणाम्, रथानाम्, षट्सहस्राणि, निष्ककण्ठीनाम्, दासीनाम्, सहस्रम्, ददौ ॥ ५१ ॥ सात्वतर्षभः, भगवान्, तत्, सर्वम्, प्रतिगृह्य, सुहृद्भिः, अनुमोदितः, ससुतः, सस्नुषः, प्रायात् ॥ ५२ ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

वेपमानमयनं पुरं येषां तैः ॥ ४९ ॥ तुरंगमांश्च द्वादशायुतानि ॥ ५०-५१ ॥ सुहृद्भिः कौरवैः ॥ ५२ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

"अयनं गमने गेहे ज्ञाने च पुरवर्त्मनोः" इति निरुक्तिः ॥ ४९-५० ॥ रौक्माणां हैमानाम् ॥ ५१-५२ ॥

### श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी

सम्यगुद्विग्नैर्भीतैः तत्र हेतुः—वेपेति । सम्प्रसन्नस्त्यक्तकोपोऽभूत् ततश्च प्राकारमूलाद्धलमुद्धृत्य सम्वृतवानिति ज्ञेयम् ॥ ४९ ॥ [illegible]रिति युग्मकम् । तावज्ज्ञाने हेतुः, दुहित्रिति । अनेन श्रीबलदेवे न तत्रत्ये च लोके प्रीतिः सति मम दुहितृरनादरो न स्यादिति विचिन्त्येति भावः ॥ ५०-५१ ॥ भगवान् सर्वैश्वर्य्यपूर्णोऽपि प्रतिगृह्य स्वीकृत्य कुतः सात्वतर्षभः श्रीभीष्मादिभक्तवात्सल्यादिति भावः । यद्वा यादवश्रेष्ठः यदुकुलप्रीत्यर्थमिति अभिनन्दितः अनुमोदितः आनन्दप्रदानेन अनुज्ञात इत्यर्थः ॥ ५२ ॥

### श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी

सम्यग् विग्नैर्भीतैः । तत्र हेतुः—वेपेति । प्रसन्नस्त्यक्तकोपोऽभूत्, यतो बलः कृपाकोमलस्वभाव इति भावः । ततश्च प्राकारमूलाद्धलमुद्धृत्य संवृतवानिति ज्ञेयम् ॥ ४९ ॥ षष्टिहायनान् तरुणानित्यर्थः,—तदानीमेव तेषां यौवनसम्पत्तेः । सूर्य्यवर्च्चसामिति स्वर्णस्योत्कृष्टतां बहुलमहारत्नखचिततां च बोधयति । तावद्दाने हेतुः—दुहित्रिति; तच्च सर्व्वं श्रीबलदेवप्रीत्यर्थमेवेति ज्ञेयम् ॥ ५०-५१ ॥ भगवान् सर्व्वैश्वर्य्यपूर्णोऽपि, प्रतिगृह्य स्वीकृत्य; कुतः? सात्वतर्षभः, भक्तवात्सल्यादिति भावः । यद्वा, यादवश्रेष्ठो यदुकुलप्रीत्यर्थमिति अभिनन्दितोऽनुमोदितोऽनुज्ञात इत्यर्थः । यद्वा, अभितो नन्दितो हर्षितः सन्, प्रायात् प्रस्थानं चक्रे ॥ ५२ ॥

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम्

वेपमानैः कम्पमानैः भीतैः ॥ ४९-५४ ॥

इति श्रीमद्भागवतव्याख्याने दशमस्कन्धे श्रीसुदर्शनसूरिकृतशुकपक्षीये अष्टषष्टितमोऽध्यायः ॥ ६८ ॥

### श्रीमद्वीरराघवाचार्यकृता भागवतचन्द्रचन्द्रिका

एवमिति । संविग्नैः भीतैरत एव कम्पमानैरत एव प्रपन्नैः प्रसादितः प्रसन्नश्चासौ हलायुधः रामः भयं माकार्ष्टेत्येवमभयं ददौ ॥ ४९ ॥ दुर्योधन इति । पारिबर्हमुपायनं ददाविति सम्बन्धः, तदेव प्रपञ्चयति—द्वितीयान्तैः षष्टि हायना वत्सरा येषां तान् द्विशतञ्च साहस्रञ्च तयोः समाहारः तावतो गजान् ददौ द्वादशसाहस्रमितिपाठान्तरे तु स्पष्टोऽर्थः । तुरङ्गमांश्च द्वादशनियुतानि ददौ ॥ ५० ॥ रथानामिति । रौक्माणां स्वर्णालङ्कृतानां सूर्यस्येव वर्चो येषां तेषां रथानां निष्कं पदकाख्यं भूषणं कण्ठे यासां तासां दासीनां सहस्रं ददौ तत्र हेतुः दुहितृवत्सल इति ॥ ५१ ॥ प्रतिगृह्येति । तत्सर्वम् उपायनं प्रतिगृह्य सात्वतर्षभो रामः सुतेन स्नुषया च सहितः सुहृद्भिः कौरवैरभिनन्दितो ययौ ॥ ५२ ॥

### श्रीविजयध्वजतीर्थकृता पदरत्नावली

सम्विग्नैर्भयसङ्घातैः वेपमानानां कम्पमानानाम् अङ्गोपाङ्गानाम् अवनैराश्रयैः ॥ ४९-५० ॥ रौक्माणि हेमचितान्याभरणान्येषां सन्तीति रौक्मिमणस्तेषाम् ॥ ५१-५३ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

वेपमानमयनं पुरं येषां तैः ॥ ४९ ॥ कुञ्जरान् द्वादशशतानि तुरङ्गमांस्तु द्वादशायुतानि ॥ ५०-५४ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् । अष्टषष्टितमोऽध्यायः दशमेऽजनि सङ्गतः ॥ ६८ ॥

## गूढार्थदीपिनी

प्रपन्नैः शरणागतैः । वेपमानं कम्पमानम् 'अयनं नगरं येषां तैः' ॥ ४९ ॥ पारिवर्हं कन्यादेयद्रव्यम् । द्वादशतानि कुञ्जरान् । द्वादश अयुतानि तुरङ्गमानिति योज्यम् ॥ ५० ॥ रौक्मार्णा हैमानाम् । वर्चः कान्तिः ॥ ५१–५२ ॥

## श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः

वेपमानं कम्पमानमयनं पुरं येषां तैः ॥ ४९ ॥ पारिवर्हं विवाहकाले देयम् कुञ्जरान् द्वादशशतानि तुरङ्गमांश्च द्वादशायुतानि ॥ ५०–५४ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धीये श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे अष्टषष्टितमोऽध्यायार्थप्रकाशः ॥ ६८ ॥

## श्रीमद्वल्लभाचार्य्यकृता सुबोधिनी

तैः स्वाभिप्रायो ज्ञात इति प्रसन्नो जात इत्याह एवमिति । प्रपत्तिः प्रतीकारः । संविग्ना मनसि पूर्वधर्मरहिताः । वेपमानमयनं स्थानं गृहं शरीरं च येषामिति भये हेतुः । शरीरे च गर्वाभाव उक्तः । अतस्त्रेधोत्तमधर्मवद्भिः प्रसादितः प्रसन्नो जातः प्रसादकार्यं कृतवानित्याह मा भैष्टेत्यभयं ददाविति । वाचा सह कायिकमकृत्वा मानसमभयं ददौ ॥ ४९ ॥ भयात्कन्यासमर्पणं वारयितुं पारिबर्हदानमाह दुर्योधन इति । षष्टिहायनाः पूर्णसंवत्सराः सहस्रं शतद्वयं च गजा द्वादशैवायुतानि तुरङ्गमाः ॥ ५० ॥ रुक्मसम्बद्धानां रथानामिति । बलप्रीतिः सूचिता । सूर्यवर्चसां सर्वलोकप्रसिद्धानाम् । मासाः संवत्सरा ऋतवश्च शतादिसङ्ख्यया प्रीणिता इति कालस्त्रेधा सन्तोषितः । साम्बश्च महादेवावतारः, बलश्च, तथा क्रोधश्च त्रयोऽपि प्रीणिताः । अम्बां प्रीणयति दासीनामिति सहस्रेण । दुहितृवत्सल इति । दाने तस्याभिप्रायः । अदाने कदाचित्ते दुहितरि कोपं कुर्य्युरिति ॥ ५१ ॥ तेषां प्रणिपत्तिमुक्त्वा बलभद्रस्य तदङ्गीकारमाह प्रतिगृह्येति । दानाभिनन्दनार्थं प्रतिग्रहपदम् । अभयं स्वयं दत्तवान्, स्वयं च तद्दत्तं गृहीतवान् । तत्सर्वमिति । असङ्कोचात् शुद्धभावः तस्य स्थापितः । तत्र हेतुर्न दानम्, किन्तु स्वपक्षे भगवान्, तत्पक्षे सात्वतर्षभ इति । भक्तानां स्वामी । अन्यजीवाः सापराधा एव भवन्तीति तथाविधस्यानङ्गीकारे भक्तिमार्ग उत्पन्नः स्यात् । स्वस्य तद्ग्रहणं वारयति ससुतः सस्नुष इति । सुहृद्भिरनुमोदित इति । पराक्रमेण वैषम्याभाव उक्तः ॥ ५२ ॥

## श्रीसुबोधिनी–सारः

शुकोक्तिः । एवं प्रपन्नैः शरणं गतैः संविग्नैः कंपितैर्वेपमानमयनं स्थानं येषां तैः प्रसादितो बलः सुतुष्टो मा भैष्ट यूयम् इत्यभयं ददौ ॥ ४९ ॥ ततो दुर्योधनः पारिब्रर्हम् उपस्करं ददौ षष्टिहायनानि वर्षाणि येषां तान् कुंजरान् गजान् द्वादशशतानि ददौ अयुतानि अश्वान् ददौ ॥ ५० ॥ सूर्यप्रभाणां रौक्माणां सुवर्णमयानां रथानां षट् सहस्राणि ददौ निष्काः कंठे यासां तासां दासीनां सहस्रं ददौ तत्र हेतुः दुहितृवत्सलः पुत्र्यनुरागी ॥ ५१ ॥ तत्सर्वं प्रतिगृह्य सुतेन सांबेन सहितः स्नुषया पुत्रवध्वा सहितः सात्वतर्षभो भगवान् सुहृद्भिः कौरवैरभिनंदितोऽगात् ॥ ५२ ॥

## श्रीविट्ठलरायात्मजश्रीवल्लभकृतलेखः

एवं प्रपन्नैरित्यत्र । आभासोक्तं वाक्यार्थं स्पष्टार्थमुपसंहरन्ति प्रसन्नो जात इति । तथाच सकार्यः प्रसादो वाक्यार्थः । दुर्योधन इत्यत्र । कुञ्जरान् द्वादशशतानि तुरङ्गमान् द्वादशायुतानित्यन्वय इत्याशयेनाहुः सहस्रं शतद्वयं च गजा इति । अयुतमिति वक्तव्येऽयुतानीति बहुबचनात् द्वादशसंख्या तत्राप्यन्वेति । द्वादशेतिपदस्य सान्निध्याच्च कपिञ्जलन्यायः । बल-प्रीतिरिति । बलस्य रूप्यवर्णत्वात् रूप्यसंयुक्तरथदानेन प्रीतिरित्यर्थः । मासा इति । द्वादशसंख्यया मासाः प्रीणिताः । हायनेषु षष्टिसंख्यया प्रभवादिसंवत्सराः प्रीणिताः । षट्संख्यया ऋतवः प्रीणिताः । बलश्च तथेति । एवं त्रयोपि कालरूपाः । नगर-प्रहरणे साम्बो निमित्तम् । बलः कर्ता । क्रोधः करणमिति विभागः । प्रतिगृह्येत्यत्र । स्वपक्षे इति । शुद्धभावस्थापने भगवत्त्वं रामनिष्ठो हेतुः । सात्वतत्वं तन्निष्ठो हेतुः । तथाच स्वपक्षे हेतुनिरूपणे भगवानिति पदमुक्तम् । तत्पक्षे हेतुनिरूपणे सात्वतर्षभ इति पदमुक्तमित्यर्थः ।

## गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

वेपमानमयनं गृहं येषां तैः, अतएव संविग्नैर्भीतैः, अत एव प्रपन्नैः कुरुभिः प्रसादितः, अतः सुप्रसन्नश्च बलो मा भैष्ट भयं मा कार्ष्टेत्येवमभयं ददावित्यन्वयः ॥ ४९ ॥ तदा दुर्योधनः पारिवर्हमुपायनं ददावित्यन्वयः । तदेव दर्शयति—षष्टिहायनाः संवत्सरा येषां तथाभूतान् द्वादशशतसङ्ख्यायुक्तान् कुञ्जरान् । द्वादशायुतानि तुरंगमान् ॥ ५० ॥ रौक्माणां स्वर्णालंकृतानां

सूर्यस्येव वर्चो येषां तेषां रथानां षट्सहस्राणि। निष्कः पदकाख्यं भूषणं कण्ठे यासां तासां दासीनां सहस्रम्। एवं दाने हेतुमाह—दुहितृवत्सल इति। दुहितरि स्नेहाधिक्यादेवं दाने तत्सत्काराधिक्यं स्यादित्याशयेन ददावित्यर्थः॥ ५१॥ तत्सर्वं दुर्योधनदत्तमुपायनं प्रतिगृह्य भगवान् सात्वतर्षभो रामः ससुतः साम्बसहितः सस्नुषः स्नुषया लक्ष्मणया च सहितः सुहृद्भिः कौरवैश्चाभिनन्दितः स्वपुरं प्रायात्॥ ५२॥

### अन्वितार्थप्रकाशिका

एवमिति। वेपमानमयनं पुरं येषां तैः अतः एव संविग्नैर्भीतैः अत एव प्रपन्नैः कुरुभिः प्रसादितः अतः सुप्रसन्नश्च बलो मा भैष्ट भयं मा कार्ष्टेत्येवमभयं ददौ। ततः प्राकारमूलाद्धलं निष्कासितवानिति ज्ञेयम्॥ ४९॥ दुर्योधन इति युग्मम्। दुहितृवत्सलः दुर्योधनः षष्टिहायनाः संवत्सरा येषां तथाभूतान् द्वादशशतसंख्यायुक्तान् कुञ्जरान् द्वादशायुतानि तुरङ्गमांश्च पारिबर्हं ददौ॥ ५०॥ रथानामिति। रौक्माणां स्वर्णालंकृतानां सूर्यस्येव वर्चो येषां तेषां रथानां षट् सहस्राणि निष्कः पदकाख्यं भूषणं कण्ठे यासां तासां दासीनां सहस्रं पारिबर्हं ददौ इत्यनुषङ्गः॥ ५१॥ प्रतीति। तत्सर्वं दुर्योधनदत्तमुपायनं प्रतिगृह्य भगवान् सात्वतर्षभो रामः ससुतः साम्बसहितः सस्नुषः स्नुषया लक्ष्मणया च सहितः सुहृद्भिः कौरवैश्चाभिनन्दितः स्वपुरं प्रायात्॥ ५२॥

### श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्

संविग्नैः उद्विग्नैः वेपमानं कंपमानं अयनं नगरं येषां तैः प्रसादितः प्रसन्नीकृतः॥ ४९॥ षष्टिहायनानि वयो वर्षाणि येषां तान् द्वादशशतपरिमितान् कुंजरान्। द्वादशायुतपरिमितान् तुरंगमान्॥ ५०-५१॥ सुहृद्भिः भीष्मादिकौरवैः सस्नुषः पुत्रवधूसहितः॥ ५२॥

### भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

एवमिति। एवं, वेपमानं कम्पमानमयनं पुरं येषां तैः, अत एव, संविग्नैर्भीतैः, अत एव प्रपन्नैः प्रपत्तिं गतैः कौरवैः, प्रसादितः, अत एव, सुप्रसन्नः बलः, मा भैष्ट, इति अभयं, ददौ॥ ४९॥ दुर्योधन इति। दुर्योधनः, षष्टिहायना वत्सरा येषां तान्, द्वादश शतानि, कुञ्जरान्, द्वादश अयुतानि, तुरंगमांश्च, पारिबर्हमुपायनं, ददौ॥ ५०॥ रथानामिति। दुहितृवत्सलः दुर्योधनः, रौक्माणां स्वर्णालंकृतानां, सूर्यस्येव वर्चो येषां तेषां, रथानां षट् सहस्राणि, निष्ककण्ठीनां दासीनां सहस्रं, पारिबर्हं, ददौ॥ ५१॥ प्रतिगृह्येति। सात्वतर्षभः भगवान् रामः, सर्वं तत्पारिबर्हं, प्रतिगृह्य तु प्रतिगृह्यैव, ससुतः सुतेन साम्बेन सहितः, सस्नुषः स्नुषया लक्ष्मणया, च सहितः, सुहृद्भिः कौरवैः, अभिनन्दितः कृतप्रशंसनः सन्, प्रायात् प्रययौ॥ ५२॥

### कृष्णप्रिया

श्रीशुकाचार्य जी ने कहा—महाराज! कौरवपुरी इस प्रकार डगमगा रही थी और वे सम्पूर्ण घबड़ाहट में थे ऐसी अवस्था में सारे कुरुवंशी श्री बलभद्रजी की शरण में आये और उनकी प्रार्थना की, तब श्री दाऊजी प्रसन्न हो गये और मधुर वचन बोले मत डरो-मत डरो॥ ४९॥ राजा दुर्योधन भी अपनी कन्या लक्ष्मणा से अत्यन्त स्नेह रखता था उसने दहेज में साठ-साठ वर्ष के बारह सौ हाथी, दस हजार अश्व सूर्य के समान चमकते हुए सुवर्ण के छः हजार रथ और सुवर्ण के हार वाली दस हजार दासियों को समर्पण की॥ ५०-५१॥ भगवान् यदुकुलनाथ बलभद्रजी अपने साथ समस्त दहेज का स्वीकार करके अपने पुत्र एवं पुत्र वधू श्री लक्ष्मणाजी को लेकर स्वजनों से सन्मानित किये हुए द्वारिका की ओर पधारे॥ ५२॥

**ततः प्रविष्टः स्वपुरीं हलायुधः समेत्य बन्धूननुरक्तचेतसः।**
**शशंस सर्वं यदुपुङ्गवानां मध्ये सभायां कुरुषु स्वचेष्टितम्॥ ५३॥**

**अद्यापि च[1] पुरं ह्येतत् सूचयद् रामविक्रमम्। समुन्नतं दक्षिणतो गङ्गायामनुदृश्यते॥ ५४॥**

**इति श्रीमद्भागवते महापुराणे[2] दशमस्कन्धे[3] हास्तिनपुरकर्षणरूपसङ्कर्षणविजयो[4] नामाष्टषष्टितमोऽध्यायः॥ ६८॥**

---

१. पुरं—श्रीजर. वंशी. जीव. वीर. विज. विश्व.। २. वः—च. पु. टि.। ३. पारमहंस्यां संहितायां—प्रा. पा.। ४. न्धे बलदेव विजयोऽष्ट—प्रा. पा.। ५. नवतितमोऽध्याय—विज.।

### कर्दमक्षमा

अन्वयः—ततः, हलायुधः, स्वपुरीम्, प्रविष्टः, अनुरक्तचेतसः, बन्धून्, समेत्य, यदुपुङ्गवानाम्, सभायाम्, मध्ये, कुरुषु, सर्वम्, स्वचेष्टितम्, शशंस ।। ५३ ।। अद्य, अपि, रामविक्रमम्, सूचयत्, एतत्, पुरम्, दक्षिणतः, गङ्गायाम्, समुन्नतम्, अनुदृश्यते ।। ५४ ।।

इति श्रीमद्भागवते दशमस्कन्धे उत्तरार्धेऽन्वयेषु अष्टषष्टितमोऽध्याये ।। ६८ ।।

### श्रीधरस्वामिविरचिता भावार्थदीपिका

मध्येसभायां सभामध्ये ।। ५३-५४ ।।

इति श्रीमद्भागवते दशमस्कंधोत्तरार्धे श्रीध० टीकायामष्टषष्टितमोऽध्यायः ।। ६८ ।।

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

ततस्सुहृदभिनंदनानंतरम् । स्वचेष्टितं नगराकर्षणरूपम् ।। ५३ ।। रामविक्रमोऽचिरविनाशी नेत्याह—अद्यापीति । एतत्पुरं हास्तिननगरम् । गंगाया दक्षिणे पुरीदक्षिणभाग इत्याह—तोषिणी ।। ५४ ।।

इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे दशमस्कन्धोत्तरार्धेऽष्टषष्टितमोऽध्यायः ।। ६८ ।।

### श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी

स्वीयां पुरीम् अतः प्रकर्षेण गीतमङ्गलवादित्रादिनाऽऽविष्टः सन् बन्धून् श्रीकृष्णवसुदेवादीन् यतोऽनुरक्तचेतसः अनुरागेण सदा तद्वर्त्मनिरीक्षकानित्यर्थः । पश्चाद्यदुपुङ्गवानुग्रसेनादीन् प्रति शशंस सभायां विषये यन्मध्यं तस्मिन् सभामध्य इति सर्वेषामेव प्रहर्षणाय अतः स्वस्य चेष्टितमेव प्राधान्येन तेषां दुरुक्तिस्तु यत्किञ्चिदेवेत्यर्थः ।। ५३ ।। अहो महान् प्रभावः श्रीमतो बलदेवस्येति सहर्षमाह—अद्यापीति । च इति चेति वा पाठद्वयम् एतदिति साक्षाद्दर्शयति दक्षिणतो गङ्गायां गङ्गाया दक्षिण पुरी दक्षिणभाग इत्यर्थः । अनु निरन्तरं दृश्यते ।। ५४ ।।

अहो धार्ष्ट्यं साहसञ्च सन्तः पश्यन्तु मेऽद्भुतम् । स्वाम्यसौ मौनकृद्यत्र तत्र वाचालतां भजे ।।

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिण्यां अष्टषष्टितमोऽध्यायः ।। ६८ ।।

### श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी

ततः प्रयाणादनन्तरमेव, सद्य इत्यर्थः । स्वकीयां पुरीम्, अतः प्रकर्षेण मंगलगीतवाद्यादिनाविष्टः सन् । हलायुध इति हलेनैव तदभीष्टसाधनाभिप्रायेण, बन्धून् श्रीकृष्णवसुदेवादीनादावालिंगनादिना समेत्य, यतोऽनुरक्तचेतसः—अनुरागेण सदा तद्वर्त्मनिरीक्षकानित्यर्थः, पश्चाद् यदुपुंगवान् उग्रसेनादीन् प्रति शशंस । सभामध्य इति सर्व्वेषामेव प्रहर्षणाय, अतः स्वस्य चेष्टितमेव, न तु तेषां दुरुक्तिमित्यर्थः ।। ५३ ।। अहो महाप्रभावः श्रीबलदेवस्येति सहर्षमाह—अद्यापीति । 'वः' इति बहुत्वं कुरुकुलापेक्षया गौरवाद्वा; हि निश्चितम्; एतदिति तदन्तिक एव कथनात्, किंवा साक्षादेव दक्षिणतो गंगायां गंगायाः दक्षिणे पुरीदक्षिणभाग इत्यर्थः । सम्यगुन्नतमुच्चम् । ननु हे राजन्नित्यर्थः ।। ५४ ।।

अहो धार्ष्ट्यं साहसं वा सन्तः पश्यन्तु मेऽद्भुतम् । स्वाम्यसौ मौनकृद्यत्र तत्र वाचालतां भजे ।।

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे उत्तरार्द्धे श्री-श्रील-सनातन-गोस्वामिपाद-कृतायां श्रीबृहद्वैष्णवतोषिण्यां श्रीदशम-टिप्पण्यामष्टषष्टितमोऽध्यायः ।। ६८ ।।

### श्रीमद्वीरराघवाचार्यकृता भागवतचन्द्रचन्द्रिका

तत इति । स्वपुरीं द्वारकाम् अनुरक्तं चेतो येषां तान् बन्धून् यदून् समेत्य यदुपुङ्गवानां मध्येसभायां सभायामद्ध्ये यत्कुरुषु स्वचेष्टितं तत्सर्वं शशंस कथयामास ।। ५३ ।। ह्रहलेन गङ्गायां पुरपातनं तदसम्भावितं मन्वानं राजानं प्रत्याह मुनिः—अद्यापीति । वो युष्माकं पुरं हास्तिनं रामपराक्रमद्यादि सूचयद्वर्त्तते तत्र लिङ्गमाह—समुन्नतमिति । गङ्गायां दक्षिणतः समुन्नतं सत् दृश्यते ननु ।। ५४ ।।

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायां अष्टषष्टितमोऽध्यायः ।। ६८ ।।

### श्रीविजयध्वजतीर्थकृता पदरत्नावली

रामविक्रमो जलरेखावत् नश्वरो न किन्तु सर्वचक्षुर्विषय इत्याह-अद्यापीति । रामविक्रमं सूचयत् गङ्गायां दक्षिणतः समुन्नतं दृश्यत इत्यन्वयः ॥ ५४ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्यां अष्टषष्टितमोऽध्यायः ॥ ६८ ॥

( श्रीविजयध्वजतीर्थरीत्या नवतितमोऽध्यायः ॥ ९० ॥ )

### गूढार्थदीपिनी

समेत्य मिलित्वा । स्वचेष्टितं नगराकर्षणरूपम् ॥ ५३ ॥ इदानीं तु तन्नगरं गङ्गायां पतितमिति ज्ञातव्यम् । 'गजाह्वये हृते नद्या इति द्वादशोक्तेः । कथनसमये तु दृश्यते एवेति श्रीवल्लभाचार्याः ॥ ५४ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां दशमस्कन्धोत्तरार्द्धे गूढार्थदीपिन्यां अष्टषष्टितमोऽध्यायः ॥ ६८ ॥

### श्रीमद्वल्लभाचार्यकृता सुबोधिनी

बलभद्रचरित्रस्य प्रत्यापत्तिमाह **ततः प्रविष्ट** इति । अन्यथा 'नन्दव्रजं गत' इतिवत् भगवतः किञ्चित्कर्तव्यशङ्का स्यात् । **स्वपुरीं द्वारकाम्** । निर्विचारप्रवेशार्थमुक्तम् । **हलायुध** इति विचाराभावः । सर्वान् ज्ञापयित्वा समलङ्कृते पुरे प्रवेष्टव्यम् । विवाहे विरोधो वा न कर्तव्यः, मैत्री वेति उभयकरणाद्विचाराभावः । ततः पुरप्रवेशानन्तरं बन्धून् समेत्य । असम्मत्यभावाद्यानुरक्तचेतस इति । स्वपौरुषं च स्वयमेवोक्तवान् । तन्निमित्तं च स्वचेष्टितं नगराकर्षणम् ॥ ५३ ॥ तस्य चरित्रस्य सर्वलोकप्रसिद्धत्वमाह **अद्यापीति** । एतत् हास्तिनपुरम् । **गङ्गायां** गङ्गासमीपे गङ्गामध्य इव वा । तस्य सहजरूपं तन्न भवतीत्याह **सूचयद्रामविक्रममिति** । अतो दक्षिणतः समुन्नतं कूलस्थानम् । कूलप्रदेश एवोन्नतो भवति, नत्वपरः । इदं तु विपरीतमिति रामपराक्रमस्य सूचकं भवति । इदानीं तु तन्नगरं पतितम्, गङ्गायां पतितमिति ज्ञातव्यम् । 'गजाह्वये हृते नद्या' द्वादशे वक्ष्यति । अतो न दर्शनविरोधः शङ्कनीयः । भागवतकथनसमये तु दृश्यत एव ॥ ५४ ॥

इति श्रीभागवतसुबोधिन्यां श्रीमल्लक्ष्मणभट्टात्मजश्रीमद्वल्लभदीक्षितविरचितायां दशमस्कन्धविवरणे उत्तरार्धे एकोनविंशोऽध्यायः ॥ १९ ॥

### श्रीसुबोधिनी-सारः

ततोनंतरं स्वपुरं द्वारकां प्रविष्टो हलायुधो रामोऽनुरक्तं स्निग्धं चेतो येषां तान् बंधून् समेत्य संप्राप्य मिलित्वा यदुश्रेष्ठानां सभायां मध्ये कुरुषु स्वचेष्टितम् आत्मकर्म सर्वं शशंस ववाद ॥ ५३ ॥ शुकोक्तिः । अद्यापीदानीमप्येतत् पुरं हास्तिनं रामस्य विक्रमं पराक्रमं सूचयत् प्रदर्शयत्सद्दक्षिणतः समुन्नतं गंगायां सर्वैरनुदृश्यते ॥ ५४ ॥

इति श्रीमद्भा० दशमस्कन्धे उ० सुबोधिन्यां टीकायामष्टषष्टितमोऽध्यायः ॥ ६८ ॥

### श्रीविट्ठलरायात्मजश्रीवल्लभकृतलेखः

**ततः प्रविष्ट** इत्यस्याभासे **बलभद्रचरित्रस्येति** । भगवता बलभद्रे आविश्य कृतस्य निरोधरूपचरित्रस्य प्रत्यापत्ति स्वस्थाने भगवति समागमनमाह । अध्यायचतुष्टये बलदेवे आविश्य निरोधं कृतवान् अतः परं स्वयमेव करिष्यतीत्यर्थः । अत्र विचाराभावादिकथनेन बलेऽनावेशः सूचित इति वाक्यतात्पर्यार्थः प्रत्यापत्तिरेवेति भावः । **व्याख्याने** । पाठक्रममपेक्ष्याहुः **पुरप्रवेशानन्तरमिति** । **स्वपौरुषं चेति** । पूर्वविचाराभाव **उक्तः**, अनेनापि विचाराभाव उच्यते इति चकारः । महतः स्वपौरुषं स्वयं न वक्तव्यमिति भावः । अतोपि विचाराभाव इति शेषः । **तन्निमित्तं चेति** । कुरुष्वति निमित्तसप्तमी । तथा च कुरुनिमित्तं चेष्टितं नगराकर्षणम् । मूले सर्वपदाच्चकारेण गमनावधि सर्वमुक्तवानिति पूर्वेणान्वयः ।

इत्येकोनविंशाध्यायव्याख्या समाप्ता ।

### गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

ततश्च हलायुधो रामः स्वपुरं द्वारकां प्रविष्टः अनुरक्तं चेतो येषां तान् बन्धून् यदून् समेत्य यदुपुङ्गवानां सभायां मध्ये कुरुषु यत्स्वचेष्टितं नगरकर्षणादिकं तत्सर्वं शशंस कथयामास ॥ ५३ ॥ हस्तिनापुराकर्षणमसंभावितं मन्वानं राजानं प्रत्याह— अद्यापि इति । अद्याप्येतद्धस्तिनापुरं रामविक्रमं सूचयदेव वर्तते । कथं तत्राह—गङ्गायां दक्षिणतः समुन्नतमनुदृश्यते । हीत्यवधारणे ॥ ५४ ॥

इति श्रीवल्लभाचार्य-वंश्यगोपालसूनुना । श्रीमन्मुकुन्दरायाणां पादसेवाधिकारिणा ॥ १ ॥
श्रीमद्गिरिधराख्येन भजनानन्दसिद्धये । श्रीमद्भागवतस्येयं टीका बालप्रबोधिनी ॥ २ ॥
रचिता दशमे तत्र सात्त्विकानां निरोधने । अष्टषष्टितमो यातः सांबोद्वाहनिरूपकः ॥ ३ ॥

## अन्वितार्थप्रकाशिका

तत इति। हलायुधो रामः स्वपुरं द्वारकां प्रविष्टः अनुरक्तं चेतो येषां तान् बन्धून् यदून् समेत्य यदुपुङ्गवानां सभायां मध्ये कुरुषु यत्स्वचेष्टितं नगरकर्षणादिकं तत्सर्वं शशंस कथयामास ॥ ५३ ॥ अद्यापीति। अद्याप्येतद्धस्तिनापुरं रामविक्रमं सूचयदेव वर्तते। कथं तत्राह। गङ्गायां दक्षिणतः समुन्नतमनु निरन्तरं दृश्यते ॥ ५४ ॥

इति श्रीकृष्णसेवार्थमन्वितार्थप्रकाशिकाम्। गङ्गासहायो दशमस्याष्टषष्टितमे व्यधात् ॥

इति श्रीभागवते दशमस्कन्धे उत्तरार्धेऽन्वितार्थप्रकाशिकायामष्टषष्टितमोऽध्यायः ॥ ६८ ॥

## श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्

यदुपुंगवानां मध्ये। सभायां सभामध्ये सर्वं शशंस कथयामास ॥५३॥ दक्षिणतः समुन्नतं दक्षिणस्यां दिशि उद्ध्वंगतं गंगायां अनुनतं दृश्यतेजनैरितिशेषः ॥ ५४ ॥

इति श्रीशुद्धैकांतधर्मप्रवर्त्तकगुरुराजेन्द्रश्रीसहजानंदस्वामिशिष्यगोपालानंदमुनिविरचिते निगूढार्थप्रकाशके श्रीमद्भागवतस्य दशमस्कंध-व्याख्याने स्तिनापुरकर्षणरूपसंकर्षणविजयो नामाष्टषष्टितमोऽध्यायः ॥ ६८ ॥

## भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

तत इति। ततः, स्वपुरीं प्रविष्टः; हलायुधो बलः, अनुरक्तचेतसः स्वस्मिन्ननुरागयुक्तमानसान्, बन्धून् समेत्य, सभायां यदुपुङ्गवानां मध्ये, यत् कुरुषु, स्वचेष्टितं, तत् सर्वं, शशंस ॥ ५३ ॥ यद्बलेन समारब्धं गङ्गायां पुरपातनं तदसंभावितं मन्वानं राजानं प्रत्याह। अद्यापीति। वो युष्माकं, एतत् पुरं हास्तिननगरं, रामविक्रमं सूचयत्सत्, अद्यापि, दक्षिणतः, गङ्गायां समुन्नतं, अनुदृश्यते हि ननु ॥ ५४ ॥

इति श्रीधर्मधुरंधरश्रीधर्मात्मजप्रत्यक्षपुरुषोत्तमश्रीसहजानन्दस्वामिसुतश्रीरघुवीराचार्यसूनुभगवत्प्रसादाचार्यविरचितायामन्व-यार्थावबोधिन्यां भक्तमनोरञ्जन्याख्यायां श्रीमद्भागवतटीकायां दशमस्कन्धोत्तरार्धे अष्टषष्टितमोऽध्यायः ॥ ६८ ॥

## कृष्णप्रिया

पुनः श्री बलभद्रजी अपनी नगरी द्वारिकापुरी में पहुँचे और अपने स्नेह संपन्न स्वजन समाचार को जानने के लिये उत्कंठित थे, उन सबको मिले, फिर बलभद्रजी ने अपने यादवों को भरी सभा में अपना सारा प्रसङ्ग सुनाया जो हस्तिनापुर में कौरवों के साथ किया था ॥ ५३ ॥ हे महाराज परीक्षित! आज भी दक्षिण दिशा की ओर ऊँचा और गङ्गाजी की ओर कुछ अंश में झुका हुआ हस्तिनापुर भगवान बलभद्रजी के पराक्रम को सूचित कर रहा है ॥ ५४ ॥

इति श्रीमद्भागवते दशमस्कन्धे निरोधलीलायां हस्तिनापुर समाकर्षण संज्ञक श्रीसंकर्षणविजयो नाम अष्टषष्टितमोऽध्याय भाषान्तरं समाप्तम् ॥ ६८ ॥

## [1]अथैकोनसप्ततितमोऽध्यायः

| श्लोकाः | अनु. | मि. उ. | व. | उ. | श्लो. अ. | उ. अ. | अ. अ. | सं. श्लो. अ. | सं. श्लो. | अक्ष. |
|---|---|---|---|---|---|---|---|---|---|---|
| ४५ | ३५ | १ | ९ | ४ | १६७२ | २५ | ४८ | १७४५ | ५७॥ | १ |

श्रीशुक [2]उवाच

[3]नरकं निहतं श्रुत्वा तथोद्वाहं च योषिताम् । कृष्णेनैकेन बह्वीनां तद्[4] दिदृक्षुः स्म नारदः ॥ १ ॥
चित्रं बतैतदेकेन वपुषा युगपत् पृथक् । गृहेषु द्व्यष्टसाहस्रं स्त्रिय एक [5]उदावहत् ॥ २ ॥
इत्युत्सुको द्वारवतीं देवर्षिर्द्रष्टुमागमत् । पुष्पितोपवनारामद्विजालिकुलनादिताम् ॥ ३ ॥
उत्फुल्लेन्दीवराम्भोजकह्लारकुमुदोत्पलैः । छुरितेषु सरस्सूच्चैः कूजितां हंससारसैः ॥ ४ ॥

**कर्दमक्षमा**

**अन्वयः**—श्रीशुक उवाच—नरकम्, निहतम्, श्रुत्वा, च, एकेन, कृष्णेन, बह्वीनाम्, उद्वाहम्, श्रुत्वा, तत्, दिदृक्षुः, नारदः ॥ १ ॥ बत, एतत्, चित्रम्, एकेन, वपुषा, युगपत्, एकः, कृष्णः, द्व्यष्टसाहस्रम्, स्त्रियः, उदावहत्, इति, द्रष्टुम्, उत्सुकः, नारदः, देवर्षिः, पुष्पितोपवनारामद्विजालिकुलनादिताम्, द्वारवतीम्, आगमत् ॥ २–३ ॥ उत्फुल्लेन्दीवराम्भोजकह्लार-कुमुदोत्पलैः, छुरितेषु, सरस्सु, उच्चैः, हंससारसैः, कूजिताम् ॥ ४ ॥

**श्रीधरस्वामिविरचिता भावार्थदीपिका**

एकोनसप्ततितमे गार्हस्थ्यं प्रतिमंदिरम् । कृष्णस्य नारदो दृष्ट्वा विस्मितोऽगात्ततः स्तुवन् ॥ १ ॥ १ ॥

दिदृक्षामभिनयेनाह । चित्रमिति । द्व्यष्टसहस्रस्त्रीरुदावहत्परिणीतवान् ॥ २ ॥ तां द्वारवतीमनुवर्णयति पुष्पितेति सार्धत्रयेण । पुष्पितेषूपवनेष्वारामेषूद्यानेषु च द्विजानामलीनां च कुलानि तैर्नादिताम् ॥ ३ ॥ छुरितेषु व्याप्तेषु ॥ ४ ॥

**श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः**

ततो द्वारकातः (१) । तद्दिदृक्षुस्तस्य वृत्तं तद्वृत्तं तस्य दिदृक्षुरत्र समासावस्थायां मध्यपदलोपः । कृष्णवृत्तं दिदृक्षुरित्यर्थः ॥ १ ॥ अभिनयो निमित्तम् "निमित्तेऽभिनयः प्रोक्तो व्यंजकेऽनुकृतौ नये" इति निरुक्तिः । बताहो सौभर्यादयो हि कायव्यूहं कृत्वा युगपदनेकस्त्रीभी रमन्ते स्म न त्वेकेनैव कायेनेति चित्रम् । उदावहदिति छान्दसः । स च छंदसि "व्यवहिताश्च" इति न्यायेन आसम्यगुदवहदिति योज्यम् ॥ २ ॥ इतीत्थम् । उत्सुको जातोत्कंठः ॥ ३ ॥ "छुरितं मिश्रितं व्याप्तं छिन्नमेकार्थवाचकम्" इति कोशांतरात् । इंदीवरकुमुदोत्पलानि नीलश्वेतरक्तान्युत्पलान्येव । कह्लारं सौगंधिकमपि तद्भेद एव । अंभोजश्च विविधम्, एषामेतत्क्रमेणैव तत्र स्थितेरित्थम् निर्देशः ॥ ४ ॥

**श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी**

नरकं हत्वा तद्गृहादानीतानां तासां कन्यकानां विवाहानन्तरमेव तद्दिदृक्षया श्रीनारदागमनसम्भवात्तदानीमेव वक्तुं योग्यमप्येतद्वृत्तं तत्तत्प्रसेन प्रसक्तानुप्रसक्तं चरितान्तरं समाधाय एकचित्तः प्रस्तौति—नरकमित्यादिना । कृष्णेन नितरां ससैन्यत्वादिना हतं श्रुत्वेति तस्य प्रहर्षः सूचितः तथा चित्रं बतेति वक्ष्यमाणरीत्या तेनैव बह्वीनां योषितामुद्वाहं च श्रुत्वेति तस्य विस्मयश्च सूचितः तत्र सर्वज्ञत्वेन स्वतस्तद्विज्ञानसम्भवेऽपि श्रुत्वेति परमाश्चर्यतया सर्वतोगीयमानत्वेन तयोराधिक्यं

---

१. अथ सप्तसप्ततितमोऽध्यायः–विज. । २. बादरायणि–प्रा. पा. ।

३. श्रीशुक उवाच—तथा ताभिर्वरस्त्रीभी रममाणो जनार्दनः । दिनानि हतसापत्नः सुबहूनत्यवासयत् ॥ १ ॥
राजोवाच—तासां षोडशसाहस्रमहिषीणां जनार्दनः । तृप्तिं कथं चकारैको मानुषं देहमाश्रितः ॥ २ ॥
श्रीशुक उवाच—हन्त ते कथयिष्यामि श्रोतॄणां विस्मयावहम् । यथा चकार बह्वीनामेकस्तृप्तिं जनार्दनः ॥ ३ ॥
विजयेऽधिकाः ।

४. तं–वीर. । ५. उवाह यत्–प्रा. पा. ।

सूचितम् अत एव तत्तादृशं श्रीकृष्णस्य वैभवं दिदृक्षुरभूत् स्म प्रसिद्धौ एतत्सुविख्यातमेवेत्यर्थः ॥१॥ तस्य विस्मयमेव प्राधान्येन दर्शयंस्तद्धेतुकतादृशश्रीकृष्णवैभवदर्शनार्थद्वारकागमनं कथयंस्तत्पोषणाय द्वारकामपि वर्णयंश्चित्रमित्यादि पञ्चकमाह—अत्र च विस्मयदर्शकेनैकेन द्वारकागमनकथनमर्द्धं प्रथमतो योज्यम् एतद्वत् अहो चित्रम् अस्मदाद्यचिन्त्यं शक्तिमयं किं तत् एको द्व्यष्टसाहस्रं स्त्रिय उदावहदिति नन्वन्येषामितोप्यधिका विवाहा दृश्यन्ते तत्राह—युगपदिति। ननु, सौभर्य्यादिवच्छ्रीनारदादिष्वपि कायव्यूहकर्तृत्वादिशक्तयः सन्ति तर्हि यौगपद्येपि सिद्धे कथं तस्यापि विस्मयस्तत्राह एकेन वपुषेति नन्वेकस्मिन्नेव वपुषि विस्तीर्णानेककरादित्वं विधाय तत् येषामपि न चित्रं स्यात् सौभर्य्यादितोपि महाप्रभावत्वात् तत्राह गृहेषु पृथगिति तत्र गृहे पृथक् आविर्भावादिकं विधायेत्यर्थः। अत एव उदावहदित्यत्रायं प्रयोगः स च छन्दसि व्यवहितश्चेति न्यायेन आ सम्यक् उदवहदिति योज्यम् ॥ २ ॥ अथ तद्धेतुकं तस्य द्वारकायामागमनमाहार्द्धेन—इतीति एतद्विभाव्येत्यर्थः। द्रष्टुं तादृशश्रीकृष्णवैभवमिति शेषः। श्रीद्वारवतीमेव क्रमेण सार्द्धैस्त्रिभिर्वर्णयत्रादौ तस्या बाह्यं भागं वर्णयति पुष्पितेतिसार्द्धेन तैर्नादितां कारितनादामित्यर्थः ॥ ३ ॥ उत्फुल्लानि इन्दीवरादीनि तैश्छुरितेषु इन्दीवरकुमुदोत्पलानि नीलश्वेतरक्तान्युत्पलान्येव कह्लारं सौगन्धिकमपि तद्भेद एव अम्भोजञ्च विपिधम् एषामपि क्रमेण निर्देशस्तथैव तत्र स्थितेः सरस्सु उपवनाद्यन्तास्तद्बहिश्च वर्त्तमानेषु उच्चैरिति तत्तद्रसपानादिना मत्तत्वात् हंसादीनामेवोक्तिः प्राधान्यात् ॥ ४ ॥

### श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी

नरकं हत्वा तद्गृहादानीतानां तासां कन्यानां विवाहानन्तरमेव तद्दिदृक्षया श्रीनारदागमनसम्भवात्तदानीमेव वक्तुं योग्यमप्येतद्वृत्तं तत्तद्रसेन प्रसक्तानुप्रसक्त चरितान्तरं समाधायैकचित्तः प्रस्तौति—नरकमित्यादिना। नितरां ससैन्यत्वादिना हतम्, श्रुत्वेति दिदृक्षाहेतुत्वेन तद्विज्ञानसम्भवेऽपि, श्रुत्वेति परमाश्चर्य्यतया सर्व्वलोकैर्गीयमानत्वेन तदाश्चर्यं तेन प्रहर्षाधिक्यञ्च सूचयति, तथा तेन प्रकारेण तमेवाह—एकेन बह्वीनामिति। यद्वा, तेन प्रतिगृहं श्रीवसुदेवदेवक्यादीनामपि स्थित्याद्विप्रकारेण, कृष्णेनेति तादृशाश्चर्य्येण सर्व्वचित्ताकर्षणात्। अतएव तस्यैकतमं कृष्णस्य दिदृक्षुः साक्षाद्द्रष्टुमिच्छुः, किंवा तस्य तादृशोद्वाहस्य तत्त्वं ज्ञातुमिच्छुरभूत्, स्म प्रसिद्धौ, एतत् सुविख्यातमेवेत्यर्थः ॥ १ ॥ दिदृक्षाहेतुमेव विस्तारयत् उक्तपोषण्यायेनाह—चित्रमिति सार्द्धेन। आश्चर्य्यम्, बत हर्षे; ननु किं नामात्र चित्रम् सौभरिप्रभृतयो मुनयोऽपि बहुरूपधारणेनैवं किल कुर्व्वन्ति, तत्राह—एकेनैव वपुषा, न तु बहुरूपधारणेनेत्यर्थः। एतच्चान्ते व्यक्तं भावि; पृथगित्यत्र वीप्सा द्रष्टव्य, प्रत्येकं सर्व्वेष्वेवैकदोद्वाहात्। यद्वा, पृथग्गृहेषु नानागारेषु तावत्स्वेव, अर्थः स एव। आ सम्यक् पितृमातृपुरोहितादिभिः सह तत्तत्कृत्यविधिना उदवहत्। आकारस्यान्तःप्रयोगः 'छन्दसि व्यवहिताश्च' इति छान्दसत्वाददोषः ॥ २ ॥ देवः श्रीभगवत्पार्षदश्चासौ ऋषिश्चेति महाभागवतोत्तमत्वेन श्रीभगवत्प्रियत्वम्, तेन परमकौतुकित्वादिकञ्च सूचितम् श्रीद्वारवतीमेव क्रमेण सार्द्धैस्त्रिभिर्वर्णयन्नादौ तस्या बाह्यं भागं वर्णयति—पुष्पितेति सार्द्धेन ॥ ३ ॥ उत्फुल्लानि यानीन्दीवरादीनि तैश्छुरितेषु इन्दीवरकुमुदोत्पलानि नीलश्वेतरक्तान्युत्पलान्येव कह्लारं सौगन्धिकमपि तद्भेद एव, अम्भोजं कमलं द्विविधम्, एषां यथोत्तरं बाहुल्येन छुरिततायामाधिक्यम्, सरःसु उपवनाद्यन्तस्तद्बहिश्च वर्त्तमानेषु। उच्चैरिति तत्तद्रसपानादिना मत्तत्वात्; तत्पक्षिणामन्येषां सद्भावेऽपि हंसादीनामेवोक्तिः प्राधान्यात् ॥ ४ ॥

### श्रीमद्वीरराघवाचार्यकृता भागवतचन्द्रचन्द्रिका

अथैको भगवानष्टाधिकषोडशसहस्रपत्नीभिः सह कथं रमते इति दिदृक्षवाऽऽगताय नारदाय प्रदर्शितम्भगवच्चेष्टितमनुवर्णयति—नरकमित्यादिना। एकेन कृष्णेन सह कर्त्रा वा बह्वीनां योषिताम् उद्वाहञ्च श्रुत्वा नारदस्तं कृष्ण दिदृक्षुरासीदिति शेषः। अत्रोद्वाहशब्देन तत्पूर्वकक्रीडा च विवक्षिता ॥ १ ॥ दिदृक्षामेवाभिनयति—चित्रमिति। एतच्चित्रं बत इति चित्रमित्यर्थः। किं तद्यदेकेन वपुषा विग्रहेण युगपदेव पृथक् गृहेषु बहुषु गृहेषु योषित्समानसङ्ख्याकगृहेष्वित्यर्थः। द्व्यष्टसाहस्रं षोडशसहस्रसङ्ख्याकाः स्त्रियः स्त्रीः एक उपयेम इत्येतत् ॥ २ ॥ इतीति। इत्थं द्रष्टुमुत्सुको देवर्षिर्नारदः द्वारकां ययौ तां विशिनष्टि—सार्द्धत्रयेण। पुष्पितेषूपवनेष्वारामेषूद्यानवनेषु च द्विजानां पक्षिणामलीनां च कुलैर्नादिताम् ॥ ३ ॥ उत्फुल्लैरिन्दीवरादिभिः छुरितेषु व्याप्तेषु सरस्सु हंसैः सारसैः चोच्चैर्नादिताम् ॥ ४ ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

( अस्याध्यायस्यारम्भपठित श्लोकत्रये चतुश्शतसङ्ख्यात्मके पृष्ठे द्रष्टव्यम् )

नरकं निहतं श्रुत्वा तथा एकेन कृष्णेन बह्वीनां योषिताञ्चोद्वाहं श्रुत्वा नारदस्तद्वृत्तिं दिदृक्षुरभूदित्यन्वयः ॥ १ ॥ ततः किमिति तत्राह—चित्रमिति। एकः एकेन वपुषा पृथक् गृहेषु द्व्यष्टसाहस्रं स्त्रिय एकस्मिन् मुहूर्ते उदावहदिति यत्तदिदं

विचित्रमाश्चर्यमिति च ।। २ ।। सन्तोषादुत्सुको भूत्वा देवर्षिः कृष्णचेष्टितं द्रष्टुं द्वारवतीमागमदित्यन्वयः । कीदृशं द्वारवतीनामपुरं पुष्पिताः उपवनारामाः यस्मिंस्तत् द्विजानामलीनां पक्षिणां कुलेन नादितम् ।। ३ ।। उत्फुल्लेन्दीवरादिभिः छुरितेषु मिश्रितेषु सरस्सु हंसादिभिरुच्चैः प्लुतस्वरेण कूजितं यद्वा सामान्यत उक्तं नारदागमनं विशिनष्टि–पुष्पितेत्यादिना । प्रथमतो द्विजादिनादितं पुष्पितोपवनारामं प्राप पश्चादुत्फुल्लेन्दीवरादिभिः छुरितेषु सरस्सु हंसादिभिरुच्चैः कूजितं स्वनमाप ।। ४ ।।

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

चित्रम् ।। १-३ ।।

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

एकोनसप्ततितमे कृष्णो मुनिमदीदृशत् । स्वस्यैकस्यापि वपुषः प्रकाशान् प्रतिमन्दिरम् ।।

दिदृक्षुरभूत् ।। १ ।। एकेनैव वपुषा युगपदेकस्मिन्नेव क्षणे पृथक् पृथक् गृहेषु पृथक् पृथक् प्राचीराद्यावृतद्व्यष्टसहस्रसङ्ख्यगृहाङ्गणेषु उदवहत् परिणीतवान् चित्रं बतैतदिति । सौभर्यादयो हि कायव्यूहं कृत्वैव युगपत् बह्वीभिः स्त्रीभीरमन्ते स्म नत्वेकेनैव कायेनेति भावः । इत्यत एव हेतोः ।। २-३ ।। द्वारवतीं वर्णयति सार्द्धत्रयेण । छुरितेषु व्याप्तेषु ।। ४ ।।

### गूढार्थदीपिनी

नवषष्टितमे द्रष्टुं गार्हस्थ्यं श्रीहरेर्मुनिः । गतः प्रत्यालयं सोऽभूत् विस्मितोऽनुस्मरन् ययौ ।। १ ।।

तत् कृष्णरहस्यं दिदृक्षुः आसीदिति शेषः ।। १ ।। चित्रं बतेति अत्याश्चर्ये । उदावहत् आ सम्यक् उदवहत् इति योज्यम् । 'छन्दसि व्यवहिताश्च' इति नियमात् ।।२।। इत्युत्सुकः सन् तं द्रष्टुं द्वारवतीमागमत् । कीदृशीम् । पुष्पितेषु उपवनादिषु पक्षिभ्रमरकुलैः नादिताम् । आरामः क्रीडावनम् ।। ३ ।। इन्दीवरं नीलम् । अम्भोजं विविधवर्णम् । कल्हारं सौगन्धिकम् । कुमुदं श्वेतम् । उत्पलं रक्तं चेति कमलजातयः । एतैः छुरितेषु व्याप्तेषु सरःसु हंसैः उच्चैः कूजिताम् ।। ४ ।।

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः

बह्वीभिः प्रियाभिः सहैको हरिः कथं रमते इत्येवं सन्दिहानं देवर्षिं प्रति हरिणा प्रतिमन्दिरं दर्शितं रूपं वर्णयति नरकमित्येकोनसप्ततितमे । स्त्रियः स्त्री उदावहत् उपयेमे एतत् चित्रमत्याश्चर्यम् ।। १-२ ।। इति इत्थं द्रष्टुमुत्सुको देवर्षिर्द्वारवतीमागमत् तामनुवर्णयति—पुष्पितेति सार्द्धैस्त्रिभिः । पुष्पाणि सञ्जातानि येषां तेषूपवनेष्वारामेषूद्यानेषु द्विजानामलीनाञ्च यानि कुलानि तैर्नादिताम् उत्फुल्लैर्विकसितैरिन्दीवरादिभिः छुरितेषु व्याप्तेषु सरस्सु हंसादिभिरुच्चैः कूजितां नादिताम् ।।३ ४।।

### श्रीसत्यधर्मकृता श्रीभागवतटिप्पणी

।। हरिः ॐ ।। ताभिर्वरस्त्रीभिः सह रममाणो जनार्दनो यथातथा हृतसापत्नो मारितवैरी सुबहूनि दिनान्यत्यवासयदतिक्रम्य वासराकार्षीत् ।। १ ।। एकोऽनेकाभिः कामिनीभिः क्रीडां कुर्वन्कथमतर्पयदिति चित्रितचित्तः परीक्षित्पृच्छति । तासामिति । देहं मानुषं तत्सदृशम् । ननु नानेन विनेयेनेयं पृच्छाकर्तुमुचिता । कोट्यादिरमणीरमणचित्रकेत्वादिचरितश्रोतृत्वात् । न च विस्मरणं तस्येति वाच्यम् । महाधिकारवतस्तथात्वस्यासम्भावितत्वात् । ज्ञातैतद्विस्मरणस्वभावस्य स्वभावतः सर्वज्ञस्य शुकस्य प्रवचनप्रवर्तनानुपपत्तेरिति चेन्न । परीक्षिदपेक्षया परीक्षकोऽसि पवित्रकेतुनिकेतनीनां स्मरसि तत्र त्वतृप्तिः कृता सम्भाविता च मानिनीनाम् । तस्य चामरपामरत्वात् । साक्षात्सर्वसुपर्वाध्यक्षरमणं रमणीनां वा तर्पणमिति सम्भवतीति प्रच्छताच्छतामृच्छेदेव । अत एव मूले तृप्ति चकारेक इत्युक्तिः । तृप्तिस्तु बह्वपत्यतयाऽत्रानुमेया । तत्र त्वेकान्यातृप्तिश्च तथेति मन्तव्यमेव । एकस्यैवं तोकस्योत्पत्तेः । अन्यास्वनुत्पत्तेः । अन्यथा कथमरीरमदित्यवक्ष्यत् ।। २ ।। हन्त हर्षेण । अरम्यदित इति । अनुकम्पयित्वेति वा । हन्त हर्षे विषादे च वाक्यारम्भानुकम्पयोरिति विश्वः । एको जनार्दनो यथा बह्वीनां तृप्तिं चकार तत्करणं श्रोतृणां विस्मयावहं ते कथयिष्यामीत्यन्वयः ।। ३ ।। उद्वाहं विवाहं तत्सृत्या चरमकर्म दिदृक्षुर्नारद एकेन वपुषैकः कृष्णो युगपदेकस्मिन्नेव मूहूर्ते पृथकारितगृहेषु द्व्यष्टसाहस्ररूप उदावहदित्येतच्चित्रमित्येवमुत्सुको देवर्षिः । षष्ठीसमासः कर्मधारयश्चैतत् । दृष्टुमागमत् । पुष्पितान्युपवनानि जलानि येषु त आरामा उपवनानि यस्यां सा ताम् । द्विजाः पक्षिणोऽलयो भृङ्गा द्विजानामान्यस्तत्कुलं सङ्घस्तेन नादिताम् ।। ३ ।। उत्फुल्लेति सर्वत्र सम्बन्धनीयम् । तेषु व्याप्तेषु हंसैः श्वेतगरुद्भिः सारसैः । सारसः पक्षिभेदे स्यादिति विश्वः । कूजितम् ।। ४ ।।

### श्रीमद्वल्लभाचार्य्यकृता सुबोधिनी

सात्त्विकानां निरोधे तु मुख्यो नारद ईरितः। अतस्तस्यापि वक्तव्यं पूर्वबुद्धेर्निवारणम् ॥ १ ॥
भक्तिमार्गानुरोजस्य पृथक्त्वं स्याद्यतः स्फुटम्। विशे नारददृष्टानां कृष्णानां चरितं महत् ॥ २ ॥
अलौकिकत्वसिद्धयर्थं निरोधे विनिरूप्यते। प्रकीर्णके प्रकरणे न सङ्गतिरिहोच्यते ॥ ३ ॥
तथापि शाम्बकथने समायातस्तथाकरोत्। भ्रान्त्यभावाय भगवान् बोधयामास तादृशम् ॥ ४ ॥
निरोधस्तेन संसिद्धः सात्त्विकानामतः परम्।

पूर्वाध्याये साम्बवृत्तज्ञापनार्थं समागतो नारदः शास्त्रदृष्ट्या निर्दोषपूर्णगुणविग्रहो भगवानिति, लोके च पुत्रं हत्वा तदवरोधात् बह्व्यः स्त्रियः समानीता इति शास्त्रलोकविरोधमाशङ्क्य, तं विरोधं स्वदृष्ट्या साधयन् पश्चादन्यतरनिर्धारं करिष्यन् स्वयं द्रष्टुं प्रवृत्त इत्याह नरकं निहतं श्रुत्वेति। केचित्तु इतःप्रभृति सात्त्विकप्रकरणमाहुः त्रयस्त्रिंशदध्यायैः पूर्वं इति च। तत्र नारदः सात्त्विकेषु मुख्य इति स निरूप्य इति। तत्रैवैकादशैकेकादशभिः तेषामवान्तरप्रकरणव्यवस्था। सात्त्विकास्तु द्विविधा एव सकामनिष्कामभेदेनेति। तेषां मते दशेन्द्रियाणि अन्तःकरणं च निरुध्यत इति निरोधसिद्धिः। एतन्मतमवष्टभ्यास्माभिर्निबन्धे निरूपितं लक्ष्मणाहरणावधीति। एतावता स्त्रियः समाप्ताः। तासु भोगो भगवत्कृतः शास्त्रविरोधान्न मन्तव्य इति प्रामाण्यार्थं नारददृष्टिरनुवर्ण्यते। नारदो हि भगवदीयशास्त्रेषु अक्लिष्टचरित्राण्येव श्रुतवानिति नरकवधादिकं न पूर्वं श्रुतवान्। यद्यपि नरकवधमात्रं पूर्वसिद्धम्, तथापि तदवरोधाद्विवाहः साम्प्रतमेव श्रुत इति स विचारणीयः। इदं चरित्रं न पूर्वं ऋषिभिर्विचारितम्। अतः परं सहस्रेष्वपि चरित्रेषु मीमांसितमेव चरित्रं विचार्यते। अत एव जाता लौकिकदृष्टिर्भगवतैवाग्रे निवारणीया। यदैव नरको हतः, तदैव तेनैव प्रक्रमेण योषितामुद्वाहश्च श्रुतः। एकस्मिन् क्षणे नानागारेषु विद्यमानानां एकेन कृष्णेन, तत्र यद्यपि रूपभेदः स्पष्ट एव, 'उरुरूप' इति वाक्यात्। तथा सति अवतारान्तरन्यायेन भिन्नावतारत्वं स्यात्। ततः कृष्णेनैव विवाहिता न भवेयुः। न हि सर्वास्ता देवकीपुत्रवध्वो भवन्ति। तस्यैवानन्तरूपत्वं तु पूर्वावतारेषु न सिद्धमिति वैमर्शः कर्तुमुचितः। वाक्योक्तं तु युक्त्या बाधितुं शक्यते, न तु दृष्टम्। 'न हि दृष्टे अनुपपन्नं नामे'ति। बह्वीनामेकेन कृष्णेन उद्वाहो विचित्रमिति तद्दिदृक्षुर्नारदो जात इत्यर्थः ॥ १ ॥ ननु भगवच्चरित्रे किमिदमाश्चर्यम्, यतो नारदस्यापि दिदृक्षेत्याशङ्क्य, वैचित्र्यमुपपादयति चित्रमिति। बत इति हर्षे। तदा सर्वत्रैव स्थिता भक्ता भगवता अनुग्राह्या इति न क्वापि गमनक्लेश इति। एकेन वपुषेति। वपुषो ब्रह्मवदचिन्त्यैश्वर्यं न शास्त्रसिद्धम्। वपुर्भेदे तु कृष्णपत्नीत्वं तासु न स्यात्। अतो वपुषो ब्रह्मधर्मत्वं वा अवपुष्ट्वं वा कल्पनीयं स्यात्। तत्रावपुष्ट्वे लौकिकधर्मसम्बन्धो न युक्तः। ब्रह्मधर्मत्वे तु वैलक्षण्यमावश्यकम्। ब्रह्मणोऽप्येकत्र यो धर्मः, स नान्यत्रेति। लोके तथा दर्शनात्। नारदश्च सूक्ष्मदर्शी। तत उभयमपि अनुपपन्नमिति चित्रम्। युगपदेकस्मिन् काले एकेन वपुषा करणेन पृथक् पृथक् गृहेषु स्थिताः द्व्यष्टसहस्रसङ्ख्या व्याप्ताः। कलानामिवानन्त्यपक्षेऽपि ध्रुवाया नानन्त्यमिति षोडशसहस्रे भवत्येव वैचित्र्यम्। स्त्रिय इति तासां योगजधर्मो निवारितः, येनैकत्र जातो दृश्येत। आकाशवत्परिच्छेदभेदेन मायावदयथात्वेन वा विवाहपक्षं व्यावर्तयति एक इति। उद्वाहश्च यावदवतारं परिपालनीय इति न प्रदर्शनमात्रपरत्वम् ॥ २ ॥ अतो हेतोरुत्सुको जात इत्याह इत्युत्सुको द्वारवतीमिति। स हि देवगुह्यमपि जानाति। अतो देवर्षिः देवानामपि मन्त्रद्रष्टा। अयं हि गुप्तार्थोपदेष्टा। अतो द्रष्टुमागमत्। नारदस्य द्वारकायां लौकिकबुद्धिसिद्ध्यर्थं तां वर्णयति पुष्पितोपवनामिति सार्धैस्त्रिभिः। पुष्पितान्युपवनानि येषु ये आरामाः क्रीडास्थानानि तेषु द्विजानामलीनां च यानि कुलानि अवान्तरजातिभेदाः। तैर्नादितां तच्छब्दप्रचुरामिति सहजो मधुरः शब्दस्तत्रत्यो निरूपितः ॥ ३ ॥ द्वारका वनजलस्थलरूपा त्रिविधा भवति, तत्र वनरूपा निरूपिता, जलरूपां निरूपयति उत्फुल्लेति। उत्फुल्लानीन्दीवरादीनि यानि पञ्चविधानि पुष्पाणि तैश्छुरितेषु व्याप्तेषु सरस्सु हंसैः सारसैः तत्र कूजद्भिर्जुष्टामित्यग्रेण सम्बन्धः ॥ ४ ॥

### श्रीसुबोधिनी–सारः

शुकोक्तिः। कृष्णेन निहतं नरकं भौमं श्रुत्वा तथा बह्वीनां योषितां स्त्रीणाम् एकेनोद्वाहं विवाहं च श्रुत्वा नारदः तद्दिदृक्षुर्द्रष्टुमिच्छुः स्म अभूत् ॥ १ ॥ चित्रमाश्चर्यमेतत् तथाहि एकेन वपुषा शरीरेण पृथक् भिन्ना द्व्यष्टसाहस्रम् अनुक्तमपि शतोत्तरं योज्यं युक्तत्वात् स्त्रियः पृथक् गृहेषु एकः परिणीतवान् ॥ २ ॥ इत्येवमुत्सुक उत्कंठितो देवर्षिर्द्रष्टुं द्वारवतीमायात् तां वर्णयति। पुष्पितेषु उपवनेषु आरामेषु द्विजानां पक्षिणामलीनां भ्रमराणां कुलैर्नादिताम् ॥ ३ ॥ उत्फुल्लादिभिः पुष्पभेदैः छुरितेषु व्याप्तेषु सरःसु हंससारसैरुच्चैः कूजितां शब्दायमानाम्। बहुवचनस्याद्यर्थत्वाद्धंससारसादिभिरित्येके ॥ ४ ॥

### श्रीविट्ठलरायात्मजश्रीवल्लभकृतलेखः

विंशेऽध्याये। कारिकासु। पूर्वबुद्धेर्निवारणमिति। प्रपञ्चविस्मरणमित्यर्थः। सात्त्विकानां निरोधे वक्तव्ये तन्मुख्यत्वान्नारदस्येदं वक्तव्यमित्यन्वयः। आसक्त्यंशस्तु पूर्वमेवास्तीति भावः। पृथक्त्वमिति। स्नेहो भक्तिः। तस्य प्रपञ्चविस्मृति-

साहित्ये निरोध इति पृथक्त्वं नारदस्य प्रपञ्चविस्मृतिकथनात्स्फुटं स्यात्। नारदस्य पूर्वं भक्तिमात्रं स्थितम्, प्रपञ्चविस्मरणे सति निरोधो जात इति ज्ञाने ज्ञातं स्यादित्यर्थः। यतः प्रपञ्चविस्मृतिकथनादित्यर्थः। नरकं निहतमित्यत्र। यद्यपि नरकवधमात्रमिति। तस्यानु शङ्खयवनमुराणां नरकस्य चेति स्वयमेव निरूपणात्तावन्मात्रं योगदृष्ट्या जानाति। श्रुतं त्वधुनैव। योषितामुद्वाहं तु योगेनापि पूर्वं न ज्ञातवान्। स्वच्छन्दचरित्रस्य योगाद्यगम्यत्वात्। अत एव विवाहं तत्र नोक्तवान्। श्रवणस्य दिदृक्षाहेतुत्वोक्त्या पूर्वं न श्रुतवानिति ज्ञायते इति भावः। पूर्वसिद्धं पूर्वज्ञातमित्यर्थः। श्रुत इति। विवाहस्तु साम्प्रतमेव निर्धारविषयोकृतः। पूर्वं योगेनापि ज्ञातो नेत्येवकारः। चित्रमित्यत्र। अवपुद्ध्वं वेति। ब्रह्मत्वमित्यर्थः। लौकिकधर्मसम्बन्धनिराकरणेनायमग्रे सिद्धान्तः कर्तव्यः। न युक्त इति। अतोग्रे सिद्धान्ते निराकर्तव्य इति शेषः।

## गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

एकोनसप्ततितमे स्वप्रभावमदर्शयत्। श्रीकृष्णो नारदायेति विशेषेण निरूप्यते ॥ १ ॥

कृष्णेन नरकं हतं श्रुत्वा तथा तेनैकेन सह बह्वीनां योषितां विवाहं च श्रुत्वा नारदस्तत् ताभिः सह तस्य रमणं दिदृक्षुरासीत् इति शेषः। स्मेति पादपूरणे ॥ १ ॥ तद्दिदृक्षामेवाभिनयति—चित्रमिति। चित्रं बत एतदत्याश्चर्यम्। किं तत् ? यदेको भगवानेकेन वपुषाऽवतीर्णः युगपदेकस्मिन्नेव काले पृथक्गृहेषु योषित्समसङ्ख्याकगृहेषु द्व्यष्टसाहस्रं षोडशसहस्रसङ्ख्याकाः स्त्रियः स्त्रीः उदावहत् तद्वृत्तं द्रष्टव्यमिति शेषः ॥ २ ॥ इत्येवमुत्साहयुक्तो देवर्षिस्तं द्रष्टुं द्वारवतीमागमत्। तां विशिनष्टि—पुष्पितेति सार्धत्रयेण। पुष्पितेषु उपवनेषु आरामेषु उद्यानेषु च द्विजानां पक्षिणां अलीनां च कुलैर्नादिताम् ॥ ३ ॥ उत्फुल्लैरिन्दीवरादिभिः छुरितेषु व्याप्तेषु सरस्सु हंसैः सारसैश्चोच्चैः कूजितां नादिताम् ॥ ४ ॥

## अन्वितार्थप्रकाशिका

एकोनसप्ततितमे पश्यन्प्रतिगृहं हरिम्। नारदो विस्मितोऽस्तौत्तं तत्र श्लोका शराब्धयः ( ४५ ) ॥
चत्वार्युवाचेति ( ४ ) सांघ्रिद्वापञ्चाशदनुष्टुभः ( ५१। ) ॥ ६९ ॥

नरकमिति। कृष्णेन नरकं निहतं श्रुत्वा तथा तेनैकेन सह बह्वीनां योषिताम् उद्वाहं च श्रुत्वा नारदस्तत् ताभिः सह तस्य स्थित्यादिकं दिदृक्षुरासीत्। इदं च नारदस्यागमनं षोडशसहस्रविवाहानन्तरमेव। पूर्वमनुक्तिस्तु प्रसक्तानुप्रसक्ततयेति दारैर्वैरैस्तत्सदृशैरित्यादिकथनं तु पट्टमहिषीपुत्राभिप्रायकं योगमायाकल्पितं वेत्याहुः ॥ १ ॥ दिदृक्षामभिनयन्नाह—चित्रमिति। चित्रं बत एतदत्याश्चर्यं किं तत् यदेको भगवानेकेन वपुषाऽवतीर्णः युगपदेकस्मिन्नेव काले पृथक् गृहेषु योषित्समसंख्याकगृहेषु द्व्यष्टसाहस्रं षोडशसहस्रसंख्याकाः स्त्रियः स्त्रीः उदावहत् तद्वृत्तं प्रष्टव्यमिति शेषः। अत्र कायव्यूहरीत्या परिणयादिकं नास्ति। अपि तु एकस्यैव वपुषः सूर्यस्येव प्रकाशभेदरीत्यैवेति भागवताः। सूर्यस्य विभुत्वं नास्ति। अस्य विभोरपि सर्वेषामप्रतीतिस्तादृशपुण्याभावात् ॥ २ ॥ इतीति अर्द्धम्। इत्येवमुत्सुक उत्साहयुक्तो देवर्षिस्तं द्रष्टुं द्वारवतीमागमत्। तां विशिनष्टि—पुष्पितेति अर्द्धम्। पुष्पितेषु उपवनेषु आरामेषु उद्यानेषु च द्विजानां पक्षिणाम् अलीनां च कुलैर्नादिताम् ॥ ३ ॥ उत्फुल्लेति। उत्फुल्लैरिन्दीवरादिभिः छुरितेषु व्याप्तेषु सरःसु हंसैः सारसैश्चोच्चैः कूजितां नादिताम् ॥ ४ ॥

## श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्

अथैकोनसप्ततितमेऽध्याये नारदः श्रीकृष्णगार्हस्थ्यं दृष्टुकामः एककालपरिणीतानां षोडशसहस्रस्त्रीणां गृहेषु श्रीकृष्णस्य पृथक् पृथक् स्थितिं दृष्ट्वा विस्मितः सन् स्तुतिं चकारेत्याह नरकमिति ॥१॥ स्त्रियः स्त्रीः उदावहद्विवाही चकार ॥२॥ अथ द्वारकां वर्णयन्नाह पुष्पितेति सार्द्धत्रिभिः पुष्पितेषु उपवनेषु आरामेषु गृहसमीपोद्यानेषु च द्विजालीनां पक्षिभ्रमराणां कुलैर्वृंदैर्नादितां ॥ ३ ॥ उत्फुल्लानि इंदीवराणि नीलपद्मानि च। अंभोजानि नानाविधवर्णपद्मानि च कह्लाराणि सुगंधिपद्मानि च कुमुदानि श्वेतानि च उत्पलानि रक्तानि च तैः छुरितेषु व्याप्तेषु ॥ ४ ॥

## भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

गार्हस्थ्यं श्रीहरेर्दृष्ट्वा नारदः प्रतिमन्दिरम्। एकोनसप्ततितमे विस्मितोऽगात्स्तुवंस्तुतः ॥ १ ॥

अथैको भगवानष्टोत्तरशताधिकषोडशसहस्रपत्नीभिः सह कथं रमते इति दिदृक्षयाऽऽगताय नारदाय प्रदर्शितं भगवच्चेष्टितमनुवर्णयति नरकमित्यादिना एकश्लोकेन। नरकमिति। नारदः, नरकं नरकासुरं, कृष्णेन, निहतं श्रुत्वा, तथा एकेन कृष्णेन सह, कर्त्रा वा, बह्वीनां योषितां, उद्वाहं चापि, श्रुत्वा, तद्दिदृक्षुः, आसीत् स्म। अत्रोद्वाहशब्देन तत्पूर्वकक्रीडा च विवक्षिता ॥ १ ॥ दिदृक्षामेवाभिनयति। चित्रमिति। बत एतत्, चित्रम्। किं तत्। यत्, एकेन वपुषा विग्रहेण, युगपत्, पृथक् गृहेषु योषित्समानसंख्याकगृहेष्वित्यर्थः। द्व्यष्टसाहस्रं, षोडशसहस्रसंख्याका इत्यर्थः। स्त्रियः स्त्रीः, एकः, उदावहदुपयेमे

इत्येतत् ॥ २ ॥ इतीति । इतीत्थं, द्रष्टुं उत्सुकः देवर्षिः, द्वारवतीं आगमत् । तां विशिनष्टि सार्द्धत्रयेण । पुष्पितानि यानि उपवनानि आरामा उद्यानानि च तेषु द्विजानां पक्षिणामलीनां भ्रमराणां च कुलानि समूहास्तैर्नादिता ताम् ॥३॥ उत्फुल्लेति । उत्फुल्लानि यानि इन्दीवराम्भोजकह्लारकुमुदोत्पलानि तैः, इन्दीवरादयः कमलजातिभेदाः । छुरितेषु व्याप्तेषु, सरस्सु, हंससारसैः उच्चैः, कूजिताम् ॥ ४ ॥

### कृष्णप्रिया

महाराज शुकदेवजी कहते हैं—राजन् परीक्षित् ! महर्षि देवर्षिजी के कर्ण पथ पर जब यह बधाई आयी कि भगवान् पूर्ण पुरुषोत्तम श्रीकृष्णचन्द्र ने नरकासुर का वध करके स्वयं अकेले ही समस्त षोडश सहस्र कुमारियों के साथ लग्न कर लिया है, तब मुनिवर के मन में श्रीकृष्ण की रहन-सहन कैसी होगी यह जानने की जिज्ञासा हुई ॥ १ ॥ देवर्षिजी सोचने लगे कि—यह कितने आश्चर्य की वार्ता है कि भगवान् श्रीकृष्ण ने एक ही श्रीविग्रह से एक ही समय सोलह हजार महलों में पृथक्-पृथक् सोलह हजार कुमारियों का पाणिग्रहण किया ॥ २ ॥ देवर्षिवर्य नारदजी इस उत्कण्ठा से प्रेरित होकर पूर्ण पुरुषोत्तम श्रीकृष्णचन्द्रजी की लीलाओं का अवलोकन करने के कारण श्री द्वारिकापुरी आ पहुँचे । द्वारिका के उपवन और उद्यान विकसित विविध रङ्ग के कुसुमों से लदे हुए तरुवरों से परिपूर्ण थे । उन तरुवरों पै तरह तरह के पक्षी चहक रहे थे और भ्रमर गुंजारण कर रहे थे ॥ ३ ॥ स्वच्छ सलिल से परिपूर्ण सरोवरों में श्याम-लाल एवं श्वेत रंग के विविध प्रकार के कमल खिले हुए थे । कुमुद और उत्पल नाम के कमलों की भीड़ लगी हुई थी । उन कमलों के वन में हंस और सारस नाम के पंछी कलरव कर रहे थे ॥ ४ ॥

**प्रासादलक्षैर्नवभिर्जुष्टां स्फाटिकराजतैः । महामरकतप्रख्यैः स्वर्णरत्नपरिच्छदैः ॥ ५ ॥**
**विभक्तरथ्यापथचत्वरापणैः शालासभाभि रुचिरां सुरालयैः ।**
**संसिक्तमार्गाङ्गणवीथि[1] देहलीं पतत्पताकाध्वजवारितातपाम्[2] ॥ ६ ॥**
**तस्यामन्तःपुरं श्रीमदर्चितं सर्वधिष्ण्यपैः । 'हरेः स्वकौशलं यत्र त्वष्ट्रा कार्त्स्न्येन दर्शितम्' ॥ ७ ॥**
**तत्र षोडशभिः सद्मसहस्रैः समलंकृतम् । विवेशैकतमं शौरेः पत्नीनां भवनं महत् ॥ ८ ॥**

### कर्दमक्षमा

अन्वयः—नवभिः, प्रासादलक्षैः, स्फाटिकराजतैः, महामरकतप्रख्यैः, स्वर्णरत्नपरिच्छदैः, जुष्टाम्, विभक्तरथ्यापथ-चत्वरापणैः, शालासभाभिः, सुरालयैः, रुचिराम्, संसिक्तमार्गाङ्गणवीथिदेहलीम्, पतत्पताकाध्वजवारितातपाम्, तस्याम्, सर्वधिष्ण्यपैः, अर्चितम्, हरेः, श्रीमद्, अन्तःपुरम्, यत्र, त्वष्ट्रा, कार्त्स्न्येन, स्वकौशलम्, दर्शितम्, तत्र, षोडशभिः, सद्मसहस्रैः, समलङ्कृतम्, शौरेः, पत्नीनाम्, एकतमम्, महत्, भवनम्, विवेश ॥ ५-८ ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

महामरकतैः प्रख्यायंते प्रकाशंत इति तथा तैः । स्वर्णरत्नमयाः परिच्छदाः परिकरा येषु तैः ॥ ५ ॥ पतंत्यः प्रचलंत्यः पताका येषां तैर्ध्वजैर्वारित आतपो यस्यां ताम् ॥६॥ तस्यां द्वारकायाम् । सर्वैर्धिष्ण्यपैर्लोकपालैरर्चितम् । षोडशभिः सद्मसहस्रैः समलंकृतं हरेरंतःपुरम् । विवेश । तत्र च तस्य शौरेः पत्नीनां भवनेष्वेकतमं विवेशेत्यन्वयः । यत्र च स्वकौशलं त्वष्ट्रा दर्शितमित्यंतःपुरभवनयोर्विशेषणम् ॥ ७-८ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

नवभिर्नवसंख्याकैः ॥ ५ ॥ रथ्यापथा रथमार्गाः, चत्वरं पथां श्लेषः; आपणो निषद्या । "चत्वरं तु पथां श्लेषे स्थंडिलांगणयोरपि" इति हैमः । "गृहपंक्तिपुरो मार्गो वीथी प्रोक्ता, गृहेऽपि वीथिरुच्यते" इति निरुक्तिः । विश्वनाथस्तु—रथ्या राजमार्गाः, पथा अन्ये मार्गाः । शाला अश्वादिगृहाः । सभाश्च वर्गशः पृथक्पृथक्त्वस्वस्थान्य इत्याह ॥६॥ तस्यां द्वारकायाम् ।

---

१. वीथिशोभां—प्रा. पा. ।

२. उत्फुल्लेन्दीवराम्भोजकह्लारकुमुदोत्पलैः । छुरितेषु सरस्सुच्चैः कूजितां हंससारसैः ॥
पुष्पितोपवनारामद्विजालिकुलनादिताम् ॥—अधिकः प्रा. पा. ।

३. सर्वविस्मायकं यत्नात्—प्रा. पा. । ४. निर्मितम्—प्रा. पा. ।

अन्तर्मध्ये हरेः पुरं सर्वसंपत्तिपूर्णं स्थानमस्तीति शेषः। पुरं गृहसमुदायो वा। तत्र पुरे। एकतमं भवनम्। यत्र पुरे। 'धिष्ण्यं लोहाग्निसद्मसु' इति निरुक्तिः। "पुरं स्याद्गृहसंदोहे नगरे वर्ष्मणि गृहे" इति धरणिः। यत्र त्वष्ट्रा विश्वकर्मणा कौशल्यं शिल्पनैपुण्यं दर्शितं प्रकटितं प्रागुक्तेस्योऽस्योत्कर्षोऽसूचीत्यनेन। यद्वा—यत्र हरेः स्वकौशलं कार्त्स्न्येन त्वष्ट्रा दर्शितं तमिच्छक्षयेव त्वष्ट्रा सर्वं कृतं न तु स्वशक्त्या किञ्चित्कृतमित्यर्थः। तद्गृहं च श्रीरुक्मिण्या एवति सहसोत्थितः श्रीपर्यंकत इत्युक्तेः॥ ७-८॥

## श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी

आन्तरं वर्णयति—प्रासादति। स्फाटिकैः राजतैश्च॥ ५॥ आनन्दादन्ते दीर्घश्छन्दसा मध्यं वर्णयति—विभक्तेति। विभक्ता असङ्कीर्णतया रचिता ये रथ्यादयस्तैः रथ्या राजमार्गाः पन्थानोऽन्ये विविधाः शालाः अश्वादिगृहाः सभाश्च वर्गशः पृथक् पृथक् स्वस्वास्थान्यः ताभि सुरालयैश्च रुचिरां रथ्यादीनां यथोत्तरं रुचिरतासाधनत्वे श्रैष्ठ्यं सम्यक् सिक्ताः सुगन्धिजलादिभिरभ्युक्षिता मार्गादयो यस्यास्तां वीथयो गृहसंलग्नचत्वराणि देहल्यो गृहद्वारवेदिकाः मार्गादीनां यथोत्तरमान्तरत्वम् उपरितमं वर्णयति पतदिति॥ ६॥ तस्यामिति षट्कम्। तत्राद्यद्वयं मिथोऽन्वितं श्रियः सर्वाः शोभाः सम्पत्तयश्च तद्युक्तं स्वीयमसाधारणं कौशलं शिल्पनैपुण्यं त्वष्ट्रा दर्शितं प्रकटितं इति प्रागुक्तप्रासादवर्णेभ्यः सद्मनामेषां महोत्कर्ष उक्तः अत एव सम्यगलङ्कृतं महदित्यनेन सर्वज्येष्ठायाः श्रेष्ठायाः श्रीरुक्मिण्या इति बोध्यते वक्ष्यते च सहसोत्थितः श्रीपर्य्यङ्कान्त इति। अयमेव प्राक् तत्प्रवेशे हेतुश्च अन्यत्तेः यद्वा यत्र हरेः स्वकौशलं कार्त्स्न्येन त्वष्ट्रा दर्शितमिति तच्छिक्षयैव त्वष्ट्रा सर्वं प्रकटितमिति नतु स्वशक्त्या नतु वा रचित इत्यर्थः॥ ७-८॥

## श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी

आन्तरं वर्णयति—प्रासादिति। स्फाटिकै राजतैश्च॥ ५॥ मध्यं वर्णयति—विभक्तेति। विभक्ता असंकीर्णतया रचिता ये रथ्यादयस्तैः; रथ्या राजमार्गाः, पन्थानोऽन्ये विविधाः, शाला अश्वादिगृहाः, सभाश्च वर्गशः पृथक् पृथक् स्वस्वास्थान्यस्ताभिः सुरालयैश्च रुचिराम्। रथ्यादीनां यथोत्तरं रुचिरतासाधनत्वे श्रैष्ठ्यम्। सम्यक् सिक्ताः सुगन्धिजलादिभिरभ्युक्षिता मार्गादयो यस्यास्ताम्, वीथयः; उदुम्बराणि, आपणस्थानेति चित्सुखः, मार्गादीनां यथोत्तरमान्तरत्वम्; उपरितमं वर्णयति—पतदिति॥ ६॥ श्रीः सर्व्वा शोभा सम्पत्तिर्वा, तद्युक्तम्; हरेः सर्व्वमनोहरस्येत्यन्तःपुरस्यापि तादृशत्वं सूचयति, स्वकीयमसाधारणं कौशलं शिल्पनैपुण्यं दर्शितं प्रकटितम्, इति प्रागुक्तप्रासादवर्गेभ्यः सद्मनामेषां महोत्कर्ष उक्तः। अतएव सम्यगलंकृतम्; महदित्यनेन सर्व्वज्येष्ठायाः श्रेष्ठायाः श्रीरुक्मिण्याः इति बोध्यते। अयमेव प्राक् तत्प्रवेशे हेतुश्च। शौरेर्निजाशेषभगवत्ताप्रकटनार्थं शूरवंशे अवतीर्णस्येति लक्ष्मीतः पत्नीनां वैकुण्ठभवनादप्यस्य भवनस्य माहात्म्यं सूचितम्॥ ७-८॥

## श्रीमद्वीरराघवाचार्यकृता भागवतचन्द्रचन्द्रिका

नवभिः प्रासादानां लक्षैर्जुष्टामित्यर्थः। कथम्भूतैः स्फाटिकमयैः रजतमयैश्च महामरकतस्येन्द्रनीलस्य स्वर्णश्रेष्ठस्य रत्नानाञ्च परिच्छदास्तन्मयाः परिच्छदाः उपकरणानि येषु तैः महामरकत प्रख्यैरिति पाठे महामरकतैः प्रख्यान्ति प्रकाशन्त इति तथा तैः स्वर्णरत्नमयाः परिकरा येषु तैः॥ ५॥ किञ्च, विभक्तेति। विभक्तैः रथ्यापथादिभिः शालादिभिः सभाभिसुराणां देवताप्रतिमानामालयैश्च रुचिरां शोभमानां रथ्यापथाः राजवीथयः संसिक्ता मार्गादयो यस्यां तां पतन्तीभिश्चलन्तीभिः पताकाभिर्ध्वजैश्च वारित आतपो यस्यां ताम्॥ ६॥ तस्यामिति। तस्यां द्वारकायामन्तःपुरं तत्रापि शौरेरेकतमं भवनं गृहे विवेशेति उत्तरेण सम्बन्धः। अन्तःपुरं विशिनष्टि—श्रीमत् भोग्यभोगोपकरणादिसमृद्धिमत् सर्वैः धिष्ण्यपैः लोकाधिपतिभिरर्चितम् बहुमतं त्वष्ट्रा त्विश्वकर्मणा विनिर्मितैः मुक्तादामानि विलम्बयन्ति इति तैः वितानैरुल्लोचनैरुपलक्षितमिति शेषः अर्चितमित्यस्य वानुषक्तस्यालङ्कृतमित्यर्थः। किम्बहुना यत्र यस्मिन्नन्तःपुरे हरेः हरये त्वष्ट्रा स्वकौशलं स्वशिल्पनैपुण्यं कार्त्स्न्येन प्रदर्शितम्॥ ७॥ किञ्च, तत्रेति। षोडशभिः शौरेः पत्नीनां गृहसहस्रैः समलङ्कृतम्॥ ८॥

## श्रीविजयध्वजतीर्थकृता पदरत्नावली

ततः पश्चात्स्फाटिकराजतैः स्फटिकादिनिर्मितैः नवभिः नूतनैः प्रासादलक्षणैर्जुष्टं स्थलमाप कीदृशैर्महामरकतप्रख्यैः इन्द्रनीलविहितसोपानैः स्वर्णरत्नानि सुवर्णश्रेष्ठानि परिच्छदा येषां तानि यथा अत्युत्तमसुवर्णस्थलविचित्रितानीत्यर्थः तैः॥५॥ किञ्च, विभक्तेः विभक्तरथ्यापथैः रथमार्गैश्चत्वरैरापणैश्च शोभितां ततः परं शालाभिः सभाभिरतिरुचिरां सुरालयैः देवगृहैश्च मनोरमां गोमयचन्दनोदकादिना संसिक्ता मार्गाश्च अङ्गनानि च वीवीयश्च गृहपङ्क्तपुरोमार्गाश्च संसिक्तमार्गाङ्गणवीथयः ताश्च गेहानि चास्याः सन्तीति संसिक्तमार्गाङ्गणवीथिगेहिनी तां पतन्त्यः विवरणावरणे कुर्वन्त्यः पताका येषां ते पतत्पताकाः तेच ध्वजाः पतत्पताकाध्वजास्तैः वारितस्तम्भितः आतपो यत्र सा तथा ताम् एवम्विधायां तस्यां कुशस्थल्यामन्तर्भागे हरेः पुरं सर्वसम्पदा पूर्णं स्थानमस्तीति शेषः। सर्वधिष्ण्यपैः समस्तैः ब्रह्मादिभिरर्चितं धिष्ण्यं गृहं मध्यगृहपतिर्ब्रह्मा परितः पतय

इन्द्रादयः यत्र पुरे त्वष्ट्रा विश्वकर्मणा ॥ ६-७ ॥ ततः परितः कृष्णस्य पत्नीनां षोडशभिः सप्तसहस्रैः गृहसहस्रैरसन्दर्शनीयतयाऽलङ्कृतं भवनानामेकतमं भवनम् ॥ ८ ॥

**श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः**

यत्र हरेः स्वकौशलं कार्त्स्न्येन त्वष्ट्रा दर्शितमिति तच्छिक्षयेव त्वष्ट्रा सर्व्वं प्रकटितं ननु स्वशक्त्या नतु वा रचितमित्यर्थः ॥ ७-१५ ॥

**श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शिनी**

महामारकतैश्चूडावलभ्यादिगतैः प्रख्या शोभा येषां तैः । स्वर्णरत्नमयाः परिच्छदाः परिकरा येषु तैः ॥ ५ ॥ रथ्या राजमार्गाः पन्थानोऽन्यमार्गाः पतन्त्यश्चलन्त्यः पताकाः येषु तैर्ध्वजैः ॥ ६ ॥ तस्यामन्तःपुरं समलङ्कृतं वर्त्तते । तत्रान्तःपुरे पत्नीनामेकतमं भवनं विवेशेत्यन्वयः ॥ ७-८ ॥

**गूढार्थदीपिनी**

स्फटिकमयैः रजतमयैः महामरकतैश्च प्रख्यान्ति प्रकाशन्ते तथा तैः । प्रासादलक्षैः जुष्टाम् । परिच्छदाः तन्मयाः विविधसामाग्र्यः येषु तैः ॥ ५ ॥ रथ्याः राजमार्गाः पथाः अवान्तराः । शाला अश्वशाला । सभा विश्रामस्थानम् तदादिभिः रुचिरम् । पतत्पताकाभिः ध्वजैश्च निवारितः आतपो यस्यां ताम् ॥ ६ ॥ तस्यामिति युग्मम् । तस्यां द्वारकायां । सर्वं धिष्ण्यपैः लोकपालैः अर्चितं प्रशंसितम् । त्वष्ट्रा विश्वकर्मणा ॥ ७ ॥ हरेः अन्तःपुरं तत्रापि एकतमं श्रीरुक्मिणीभवनम् विवेश ॥ ८ ॥

**श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः**

प्रासादानां लक्षैर्नवभिर्जुष्टाम् कीदृशैः स्फटिकमयैः रजतमयैश्च महामरकतैः प्रख्यायन्ते प्रकाशन्ते इति तथा तैः स्वर्णरत्नमयाः परिच्छदाः परिकरा येषु तैः ॥ ५ ॥ विभक्तैः यथास्थानं रचितैः रथ्यादिभिः शालासभाभिश्च सुराणां देवप्रतिमानामालयैश्च रुचिरां संसिक्ताः मार्गाद्याः । यस्यां तां पतन्त्यः पताका येषु तैर्ध्वजैर्वारित आतपो यस्यां ताम् ॥ ६ ॥ तस्यां द्वारवत्यां हरेः अन्तःपुरम् गुह्यस्थानं श्रीमत् श्रीः रुक्मिणी परमा सम्पत् विद्यते यत्र तत् अत एव सर्वैः धिष्ण्यपैः सर्वलोकाधिपतिभिरर्चितं पूजितं त्वष्ट्रा विश्वकर्मणा यत्र अन्तःपुरे स्वस्य कौशलं नैपुण्यं दर्शितम् ॥ ७ ॥ यत्र यस्मिन् अन्तःपुरे शौरेः पत्नीनां षोडशभिः सप्तसहस्रैः समलङ्कृतम् एकतमं भवनं विवेश श्रीनारद इति शेषः । अत एव महत् सर्वेभ्यः सप्तभ्यः श्रेष्ठं रुक्मिण्या भवनमित्यर्थः ॥ ८ ॥

**श्रीसत्यधर्मकृता श्रीभागवतटिप्पणी**

प्रासादानां लक्षाणि तैः । तत्सङ्ख्यामाह ॥ नवभिरिति । नवलक्षैः । नूतनैरित्यर्थपक्षे नवशब्दपर्यायोऽयं नवशब्द इति ऐसादेशाभावश्छान्दसतया वेति ज्ञेयम् । स्फाटकराजतैस्तदुभयमयैर्महामरकतानां प्रख्याभिरख्या येषां ते तैः । स्वर्णरत्नात्मकपरिकरैश्च जुष्टामित्यन्वयः ॥ ५ ॥ रथ्या रथसङ्घस्तस्य पन्था रथ्यापथो रथसञ्चरणसरणिः । रथ्या रथौघविशिखवर्तनी चत्वरेषु च । रथ्या प्रतोली विशिखेति विश्वामरौ चत्वरैरापणैः शालाभिर्गृहैस्तदेकदेशैस्तरुस्कन्धशाखाभिर्वा । शालागृहे तरुस्कन्धशाखागारैकदेशयोरिति विश्वः । सभाभिरभिरुचिरां मनोहरां सुरालयैर्देवालयैः रुचिरां च संसिक्ता मार्गा अङ्गणानि च वीथयश्च यस्यां सा च सा महानि सन्त्यस्यामितीत्यर्थः । प्राशस्त्यं प्रशस्तगृहवतीति गेहिनी च ताम् । पतत्पताकाध्वजेति सुपठम् । पतत्पताकाध्वजेति पाठे पतत्पताका येषां ते च ते ध्वजाश्चेति व्याख्येयम् । तैः । विशेषतः प्राच्युदक्षितोऽनुसन्धेयः । वास्ति आतपो यस्यां सा ताम् ॥ ६ ॥ क्रमान्नारदागमनमिति तथैवावर्णयत् । तस्यां कुशस्थाल्यामन्तर्मध्ये सर्वधिष्ण्यपैर्ब्रह्मादिभिरर्चितं श्रीमद्धरेः पुरम् । यत्र पुरे त्वष्ट्रा विश्वकर्मणा स्वकौशलं कार्त्स्न्येन सामस्त्येन दर्शितम् ॥ ७ ॥ तत्र पुरे षोडशभिः सप्तसहस्रैः समलङ्कृतं सम्यगलङ्कृतम् । शौरेः पत्नीनामेकतमं महद्भवनं विवेश । यन्महद्भवनं लोके तद्येन समलं मलसहितं कलङ्कितुच्छमिति यावत् कृतम् । तन्महद्भवनमिति ॥ ८ ॥

**श्रीमद्वल्लभाचार्य्यकृता सुबोधिनी**

भूमिरूपां वर्णयति प्रासादलक्षैरिति । नवलक्षप्रासादाः महतां गृहाः । स्फटिकमयाः रजतमयाश्च भित्तिस्तम्भभेदेन ; राजताः स्तम्भाः महामरकतनिर्मिता भूः तया प्रख्याः प्रसिद्धाः प्रासादाः । स्वर्णरत्नमयानि परिच्छदानि येषु । यथा गृहे दारुमयानि, तथा स्वर्णमयानि, यथा शिलामयानि, तथा रत्नानि । गृहोपकरणान्यपि परिच्छदानीत्युच्यन्ते । तथाप्यनव-

सरत्वान्न तानि ग्राह्याणि ।।५।। एवं पुरीं बहिर्वर्णयित्वा अन्तस्तां वर्णयति **विभक्तेति** । विभक्ताः पृथक् पृथक् कृता रथ्यादयः, न तु सङ्कीर्णाः रथ्या राजमार्गाः पन्थानः । चत्वरमङ्गणम् । आपणः पण्यवीथिका । गतिस्थानान्येतानि । **स्थितिस्थानान्याह** । **शाला** अन्नादिभोजनस्थानानि । **सभा** उपवेशनस्थानानि । ताभिः रुचिराम् । ऐहिकार्यं द्वयमेव । पारलौकिकार्थमाह **सुरालयैश्च रुचिरामिति** । नैमित्तिकातिशयमाह **संसिक्तेति** । सम्यक् सिक्ताः मार्गादिदेशत्यन्ता यस्याम् । उपरिशोभामाह । पतत्पताकाध्वजैः वारितः आतपो यस्यामिति ।। ६ ।। सामान्यतो नगरीं वर्णयित्वा विशेषतो भगवद्गृहं वर्णयति, **नारददृष्टम्** । एवंप्रकारेण नारदो दृष्टवानिति । तदा लौकिकोत्कर्षः सम्पद्यते । तच्च तस्यानभिप्रेतमिति । सिद्धे हि लौकिकत्वे तत्र बुद्धिस्थैर्ये लौकिकस्य निरोधः सम्पद्यत इति । **तस्यां** द्वारकायाम् । हरेरन्तःपुरं **श्रीमत्**, स्वतः शोभायुक्तम् । अनेन वैकुण्ठातिरेक तत्र निरूपितः । लक्ष्मीस्थितिर्वा । अन्यत्रावतारेषु अवतीर्णैव लक्ष्मीस्तिष्ठति, न मूलरूपेणेति । उपपत्त्या अन्तःपुरं वर्णयति । **सर्वधिष्ण्यपैरर्चितं स्वकौशलं त्वष्ट्रा कार्त्स्न्येन प्रदर्शितमिति** प्रकारद्वयेन । रत्नस्वर्णादयस्तु पुरे एव निरूपिताः न भगवदन्तःपुरे विशेषं सम्पादयन्ति । वक्तव्यश्च विशेषः । अतो भूमिष्ठाः पदार्थाः साधनभावान्निरूपिताः । इन्द्रादयो हि धिष्ण्यपाः लोकपालाः । तेषामपि परम्परोपार्जितान्यतिदुर्लभानि रत्नादीनि पूजासाधनानि भवन्ति । तैरर्चितमिति । तन्निर्माणार्थं तैस्तानि दत्तानीत्येके, यतः अग्रे त्वष्ट्रा विश्वकर्मणा शिल्पाचार्येण हरेरर्थे स्वकौशलं प्रदर्शितम्, अतिनैपुण्येन निर्मितम् । रत्नानि इन्द्रादिभिर्दत्तानि, विश्वकर्मणा तु सम्यग्योजितानीत्यर्थः ।। ७ ।। एवं सामान्यतोऽन्तःपुरं वर्णयित्वा, तत्रस्थान् गृहान् प्रत्येकं वर्णयितुं विभागमुक्त्वैकं गृहं वर्णयति **तत्र षोडशभिरिति** । ते गृहाः स्वतः प्रधानभूता अपि परस्परमेकस्यापि सर्वे शोभाजनका भवन्ति । समप्राधान्ये तु विशिष्टो रसो नोत्पद्यत इति यदेव गृहं निकटे स्थितम्, तत्रैव नारदस्य विशिष्टबुद्धिरुत्पन्नेति तत्र प्रविष्टः । एकमपि गृहं षोडशभिः सद्मसहस्रैः समलङ्कृतम् । ते च गृहाः पत्नीनामेव । तन्निकटे गतस्य तदेव गृहं महत्त्वेन भासत इति **महदित्युक्तम्**, न तु गृहेषु न्यूनाधिकभावोऽस्ति । तथा सति भगवतस्तत्र वैषम्यं स्यात् । सर्वत्र विवाहरमणपुत्रसम्पदां तुल्यत्वात् ।। ८ ।।

## श्रीसुबोधिनी-सारः

स्फाटिकमये रजतमयैश्च महामरकतैः प्रख्यायंते प्रकाशंत इति तैः स्वर्णमया रत्नमयाः परिच्छदा उपस्करा येषु तैर्नवभिः प्रासादलक्षैर्जुष्टाम् ।। ५ ।। विभक्ते रथ्यादिभिः शालाभिः सभाभिः सुरालयैर्देवमंदिरैः रुचिरां मनोहरां संसिक्ता गंधजलैरार्द्रीकृता मार्गा अंगणानि वीथयो देहल्यो यस्यां तां पतत्यः पताका येषु तैर्ध्वजैर्वारितो दूरीकृत आतपोर्कधर्मो यस्यां ताम् ।। ६ ।। तस्यां द्वारकायां हरेरंतःपुरं श्रीमत् कांतियुक्तं सर्वैर्धिष्ण्यपैर्लोकपालैरर्चितं पूजितं मानितं यत्र यस्मिन्नंतःपुरे त्वष्ट्रा विश्वकर्मणा स्वकौशलमात्मचातुर्यं कार्त्स्न्येन साकल्येन दर्शितम् ।।७।। तत्र च हरेः पत्नीनां स्त्रीणां षोडशभिः गृहसहस्रैः समलंकृतम् एकतमं महद्भवनं गृहं नारदो विवेश ।। ८ ।।

## श्रीविट्ठलरायात्मजश्रीवल्लभकृतलेखः

**तस्यामित्यत्र । तच्च तस्येति** । लौकिकोत्कर्षसम्पादनं नारदस्यानभिप्रेतं सन्देह जनकत्वादित्यर्थः । एतत्सम्पादने भगवदाशयमाहुः **सिद्धे हीति** । लौकिकस्य पूर्वं लौकिकत्वेनैव बुद्धिस्थैर्ये जाते तदनन्तरं लौकिकत्वांशो निवारणीयः, पदार्थास्तु त एवेति भावः । **वैकुण्ठावेश इति** । तस्य रमाक्रीडत्वादिति भावः । **श्रीमदित्यनेनाधारत्वमात्रमुक्तम्**, न तु क्रीडेत्याशयेन पक्षान्तरमाहुः **लक्ष्मीस्थितिर्वेति** । **साधनभावादिति** । साधनत्वेन इन्द्रादिपूजासाधनानि रत्नान्यत्र भूमिनिर्माणे साधनानि इति प्रकारेण निरूपिता इत्यर्थः ।

## गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

नवभिः प्रासादानां महतां गृहाणां लक्षैर्जुष्टां युक्ताम् प्रासादान् वर्णयति—स्फटिकमयै रजतमयैश्च महामरकतैश्च प्रख्यान्ति प्रकाशन्ते इति तथा तैः । स्वर्णमया रत्नमयाश्च परिच्छदाः परिकरा येषु तैः ।। ५ ।। विभक्तै रथ्यादिभिः रुचिरां शोभमानाम् । रथ्या राजमार्गाः, पन्थानोऽन्ये मार्गाः, चत्वराणि अङ्गणानि, आपणाः पण्यवीथयः, तैः । शाला अन्नसङ्ग्रहभोजनादिस्थानानि, सभा उपवेशनस्थानानि, ताभिः । सुराणां देवानां आलया मन्दिराणि तैः । संसिक्ता मार्गादयो यस्यां ताम् । पतन्तीभिश्चलन्तीभिः पताकाभिर्ध्वजैश्च वारित आतपो धर्मो यस्यां ताम् । पताकाध्वजयोरल्पत्वमहत्त्वेनावान्तरभेदो ज्ञेयः ।। ६ ।। तस्यां द्वारकायां हरेरन्तःपुरं विवेश, तत्रापि शौरेः पत्नीनां भवनेष्वेकतमं भवनं विवेशेति द्वयोरन्वयः । अन्तःपुरं विशिनष्टि—श्रीमत् भोगोपकरणादिसमृद्धिमत् । सर्वधिष्ण्यपैः लोकाधिपतिभिरर्चितं बहुमतम् । तत्र हेतुमाह—यत्र त्वष्ट्रा शिल्पाचार्येण विश्वकर्मणा कार्त्स्न्येन साकल्येन स्वकौशलं शिल्पनैपुण्यं प्रदर्शितम् ।। ७ ।। तत्रेति स्पष्टम् ।। ८ ।।

### अन्वितार्थप्रकाशिका

प्रासादेति। स्फटिकमयै रजतमयैश्च महामरकतैश्च प्रख्यान्ति प्रकाशन्ते इति तथा तैः स्वर्णमया रत्नमयाश्च परिच्छदाः परिकरा येषु तैः नवभिः प्रासादानां महागृहाणां लक्षैर्जुष्टाम् ॥ ५ ॥ विभक्तेति। विभक्ता रथ्या राजमार्गाः यथा अन्ये च मार्गाः चत्वराणि अङ्गणानि आपणाः पण्यवीथयस्तैः शाला अन्नसंग्रहभोजनादिस्थानानि सभा उपवेशनस्थानानि ताभिः सुराणां देवानाम् आलया मन्दिराणि तैः रुचिरां शोभमानां संसिक्ता मार्गादयो यस्याम्। नवभाव आर्षः। पतन्तीभिश्चलन्तीभिः पताकाभिः पतद्भिर्ध्वजैश्च वारित आतपो धर्मो यस्यां तां पताकाध्वजश्चयोरल्पत्वमहत्त्वेनावान्तरभेदो ज्ञेयः। पतन्त्यः पताका येषु तैर्ध्वजैरिति व्याख्यातृणां मते ककारो ह्रस्वः पाठ्यः ॥ ६ ॥ तस्यामिति युग्मम्। तस्यां द्वारकायां यत्र त्वष्ट्रा शिल्पाचार्येण विश्वकर्मणा कार्त्स्न्येन साकल्येन स्वकौशलं शिल्पनैपुण्यं दर्शितम् इति पुरभवनयोर्विशेषणम्। तत् श्रीमत् भोगोपकरणादिसमृद्धिमत् सर्वैर्धिष्ण्यपैर्लोकाधिपतिभिरर्चितं बहुमतं षोडशभिः सद्मनां सहस्रैः समलंकृतं हरेरन्तःपुरं विवेश। तत्रापि शौरेः पत्नीनां भवनेष्वेकतमं भवनं विवेश ॥ ७-८ ॥

### श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्

स्फटिकैः राजितानि शोभितानि तैः महामरकतैः प्रख्यानि प्रकाशमानानि तेःस वर्णरत्नमयाः परिच्छदाः पर्यंकादि परिकरा येषु तैः जुष्टां ॥ ५ ॥ विभक्ता असंकीर्णाः रथ्या राजमार्गाः पंथानोऽन्यमार्गाश्च चत्वराण्यंगणानि च आपणाः पण्यविथयश्च तैः शालाः धर्मशालाः सभाः स्वस्वसभास्थानानि च ताभिः संसिक्ताः मार्गादयो यस्यां तां। देहल्यो गृहद्वारवेदिकाः पतंत्यः चलंत्यः पताकायेषु तैर्ध्वजैः निवारितातपां ॥ ६ ॥ तस्यां द्वारवत्यां सर्वे धिष्ण्यपा इंद्रादिलोकाधिपास्तैरर्चितं। त्वष्ट्रा विश्वकर्मणा ॥ ७ ॥ तत्र अंतःपुरे शौरेः पत्नीनां षोडशभिः गृहसहस्रैः सम्यगलंकृतं महत् भवनं। सर्वश्रेष्ठाया रुक्मिण्या गेहमित्यर्थः ॥ ८ ॥

### भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

प्रासादेति। स्फटिकराजतैः स्फटिकमयैः रजतमयैश्च, महामरकतैः प्रख्यन्ति प्रकाशन्ते इति तथा तैः, स्वर्णरत्नमयाः परिच्छदाः परिकरा येषु तैः, नवभिः प्रासादलक्षैः, जुष्टाम् ॥ ५ ॥ रथ्याश्च पन्थानश्च चत्वराणि च आपणानि च विभक्तान्यसंकीर्णानि यानि रथ्यादीनि तैः, शालाश्च सभाश्च ताभिः, सुराणां देवताप्रतिमानामालयानि तैः, रुचिरामतिसुन्दरां, संसिक्ताः मार्गाः अङ्गणानि वीथयः देहल्यश्च यस्यां तां, पतन्त्यः प्रचलन्त्यः पताकाः ध्वजाश्च तैर्वारित आतपो यस्यां तां, द्रष्टुं, देवर्षिरागमदिति संबन्धः ॥६॥ तस्यामिति। तस्यां द्वारकायां, सर्वधिष्ण्यपैर्लोकपालैः अर्चितं, यत्र, त्वष्ट्रा कार्त्स्न्येन, स्वकौशलं, दर्शितं तथाविधं, श्रीमत् हरेः, अन्तःपुरं, भवति ॥ ७ ॥ तत्रेति। शौरेः, पत्नीनां, षोडशभिः सद्मसहस्रैः, युक्ते तत्रान्तःपुरे, समलंकृतं महत्, एकतमं भवनं, विवेश ॥ ८ ॥

### कृष्णप्रिया

इस पावन नगरी द्वारिका में श्वेतमणि-स्फटिक मणि और रजत के नव लाख महल थे। वे महल महामरकतमणि प्रभु की कान्ति से जगमगा रहे थे। उन महलों में सुवर्ण और रत्न आदि की विविध सामग्रियां शोभायमान थी। याने उत्तम प्रकार की चीजें भीतर थी। उस नगरी में विशाल राजमार्ग, गलियाँ, चौराहे एवं बाजार अत्यंत मनोहर थे। अश्वशाला-गजशाला पशुओं के निवासस्थान सभाभवन एवं देवालयों के कारण पुरी का सौंदर्य अधिक बढ़ गया था। नगरी के राजमार्ग गली चौक और दरवाजों पर सुगन्धित जल का छिड़काव किया गया था। छोटी-छोटी असंख्य झंडियां एवं बड़े-बड़े झंडे अनेक स्थानों में फहरा रहे थे जिससे मार्ग में धूप नहीं आ सकती ॥ ५-६ ॥ उसी दिव्य नगरी द्वारिका में भगवान् श्रीकृष्ण का अत्यन्त सुन्दर अन्तःपुर विराजमान था। जिसकी लोकपाल भी चर्चा करते थे स्तुति करते थे। उस नगर निर्माण करने में श्री विश्वकर्मा जी ने अपना पूरा कौशल्य और कला दी थी ॥ ७ ॥ उस अन्तःपुर में भगवान की अर्धाङ्गिनीओं के सोलह हजार से अधिक भवन विराजमान थे। उनमें से एक बड़े महल में देवर्षि वर श्री नारद जी ने प्रवेश किया ॥ ८ ॥

विष्टब्धं विद्रुमस्तम्भैर्वैडूर्यफलकोत्तमैः[1]। इन्द्रनीलमयैः कुड्यैर्जगत्या चाहतत्विषा ॥ ९ ॥
वितानैर्निर्मितैस्त्वष्ट्रा मुक्तादामविलम्बिभिः। दान्तैरासनपर्यङ्कैर्मण्युत्तमपरिष्कृतैः ॥ १० ॥
दासीभिर्निष्ककण्ठीभिः सुवासोभिरलंकृतम्। पुम्भिः सकञ्चुकोष्णीष सुवस्त्रमणिकुण्डलैः[2] ॥ ११ ॥
रत्नप्रदीपनिकरद्युतिभिर्निरस्तध्वान्तं विचित्रवलभीषु शिखण्डिनोऽङ्ग।
नृत्यन्ति यत्र विहितागुरुधूपमक्षैर्निर्यान्तमीक्ष्य घनबुद्धय उन्नदन्तः ॥ १२ ॥

---

१. जालैः स्तंभैर्मरकतोत्तमैः—वीर. ; जालैर्मरकतोत्तमैः। २. वै. सुवासो—प्रा. पा.।

### कर्दमक्षमा

अन्वयः—वैडूर्यफलकोत्तमैः, विद्रुमस्तम्भैः, विष्टब्धम्, जगत्याः, इन्द्रनीलमयैः, कुड्यैः, च, आहतत्विषा, मुक्तादामविलम्बिभिः, त्वष्ट्रा, निर्मितैः, वितानैः, दान्तैः, मण्युत्तमपरिष्कृतैः, आसनपर्यङ्कैः, निष्ककण्ठीभिः, सुवासोभिः, दासीभिः, सकञ्चुकोष्णीषसुवस्त्रमणिकुण्डलैः, पुम्भिः, अलंकृतम् ॥ ९-११ ॥ रत्नप्रदीपनिकरद्युतिभिः, निरस्तध्वान्तम्, अङ्ग !, विचित्रवल्लभीषु, शिखण्डिनः, यत्र, विहितागुरुधूपम्, अक्षैः, नियन्तिम्, ईक्ष्य, घनबुद्धयः, उन्नदन्तः ॥ १२ ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

तदनुवर्णयति चतुर्भिः । विष्टब्धमिति । विद्रुमस्तंभैर्विष्टब्धं विधृतम् । वैदूर्यमयानि फलकोत्तमानि स्तंभाश्रयणानि छादनानि तैरिन्द्रनीलमयैः कुड्यादिभिश्चोपलक्षितम् । जगत्या भूमिकया चेंद्रनीलमय्या । न हृता त्विड् यस्यास्तया ॥ ९ ॥ मुक्तादाम्नां विलंवा विविधानि लम्बनानि विद्यंते येषु तैः मण्युत्तमैः परिष्कृतैर्भूषितैः ॥ १०-११ ॥ ईक्ष्य समीक्ष्य । घनो मेघोऽयमिति बुद्धिर्येषां ते ॥ १२ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

तद्गृहम् । "स्तंभानामाश्रये तेषां छादने फलकं मतम्" इति स्वामी । न हृता त्विट् कांतिर्यस्यास्तया ॥ ९ ॥ मुक्तादामविलंबिभिरवलंबमानमौक्तिकमालैः । दांतैर्गजदंतैर्निर्मितैः ॥ १०-११ ॥ यत्र सद्मनि । अक्षैर्गवाक्षैः ॥ १२ ॥

### श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी

तच्चैकतमं वर्णयन्नादौ तस्य मुख्याङ्गं वर्णयति—विष्टब्धमिति । अहतत्विषेति कथमपि मालिन्याद्यप्राप्तेरुक्तोयं वर्त्तमान एव ॥ ९ ॥ वितानैरिति द्वयम् । मिथोऽन्वितं तत्र मुख्यपरिच्छदान् वर्णयति—वितानैरिति । त्वष्ट्रा निर्म्मितैरिति पूर्ववत् आसनानि च पर्य्यङ्काश्च तैः ॥ १० ॥ तत्र परिवारान् वर्णयति—दासीभिरिति । पुम्भिश्च बालकादिभिर्दासैरलङ्कृतं सुवस्त्राणि शोभनान्यधः परिधानीयादीनि ॥ ११ ॥ ऊर्द्ध्वशोभां वर्णयति—रत्नेति । एषां गृहान्तःस्थितिरपि बोध्या अनेन रात्रावेवागमनस्य बोधितं तदेव तस्य युगपत्प्रतिगृहस्थितेः सुष्ठु परीक्षणीयत्वात् अग्रे च श्रीभगवतः प्रियापर्य्यङ्कस्थितत्वेन वर्णयिष्यमाणत्वात् अगुरुधूपस्य शिखण्डिभिर्निश्यपि दर्शनन्तु तादृशरत्नप्रदीपसद्भावादेव यत्र भवने एवमन्यासामपि श्रीमहिषीणां गृहाणि ज्ञेयानि ॥ १२ ॥

### श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी

तत्रादौ मुख्यांगं वर्णयति—विष्टब्धमिति । अहतत्विषेति बहुललोकसम्मर्द्देनापि क्षुण्णताद्यप्राप्तेः; यद्वा, सूर्य्यादितेजसाप्यहतत्विषा ॥ ९ ॥ मुख्यपरिच्छदान् वर्णयति—वितानैरिति । त्वष्ट्रा विनिर्म्मितैरिति दिव्यातिदिव्यत्वं द्योतयति; अतोऽस्य वचनविभक्तिविपरिणामेनापि सर्व्वैरेवान्वयः । आसनानि च पर्य्यंकाश्च, तैः ॥ १० ॥ मुख्यपरिवारान् वर्णयति—दासीभिरिति । अन्यानेकस्त्रीभूषणसद्भावेऽपि निष्कस्यैवोक्तिः स्त्रीभूषणेषु तस्य श्रैष्ठ्यात् स्त्रीभिरवश्यापेक्षत्वाच्च । एवमग्रेऽपि ज्ञेयम् । पुम्भिश्च बालकादिभिर्दासैरलंकृतम्, सुवस्त्राणि शोभनान्यधः परिधानीयादीनि; कञ्चुकादीनां यथोत्तरं स्वरूपत्वेऽलक्ष्यत्वम् ॥ ११ ॥ किञ्च, रत्नेति, अनेनागुरुधूमस्य निश्यपि शिखण्डिदर्शनं बोधयति । यद्वा, दिव्यै रत्नप्रदीपानां सदा सद्भावादन्तर्गृहे ध्वान्तस्य निबासो ज्ञेयः । अतो वितानादिवत् परिच्छदान्त-वर्ण्यस्याप्यस्य शिखण्डिनृत्यादिहेतुत्वेनात्र वर्णनम्; अंगेति सहर्षसम्बोधने; यत्र भवने उच्चैर्नदन्त इति धूमस्थानिकः सूचितः, नीलमेघसादृश्यात्; एवं धूमादिभिर्यथोत्तरं शोभाधिक्यमूह्यम् । इत्याद्या गृहे उपलक्षणतयोक्तम्; सर्व्वाण्येवान्यान्यपि श्रीमहिषीणां गृहाणीह ज्ञेयानि ॥ १२ ॥

### श्रीमद्वीरराघवाचार्यकृता भागवतचन्द्रचन्द्रिका

पुरं भवनञ्चैव विशिनष्टि–विष्टब्धमिति चतुर्भिः । विद्रुमस्तम्भैः वैदूर्यमयानि फलकोत्तमानि स्तम्भाश्रयाणि छादनानि तैश्च विष्टब्धं प्रतिबद्धम् इन्द्रनीलमयैर्जालैर्गवाक्षैर्मरकतमयैरुत्तमैश्च स्तम्भैर्विष्टब्धम् ॥ ९ ॥ त्वष्ट्रा विश्वकर्मणानिर्मितैः मुक्तादामानि विलम्बयन्तीति तथा तैः वितानैः उल्लोचैः दान्तैः निर्मलैः मणिश्रेष्ठालङ्कृतैश्चासनैः पर्यङ्कैश्च उपलक्षितमतिशोभम् । अलङ्कृतमित्युपरिष्टात्सम्बन्धो वा ॥ १० ॥ शोभनानि वासांसि यासान्ताभिर्दासीभिः शोभनानि कञ्चुकादीनि येषां तैः पुम्भिश्चालङ्कृतम् ॥ ११ ॥ रत्नप्रदीपानां ये निकराः समूहास्तेषां द्युतिभिर्निरस्तं तमो यस्मिंस्तत् किञ्च यत्रान्तःपुरे भवने च वल्भीषु स्तम्भाग्रप्रसारितवक्रदारुविशेषेषु शिखण्डिनो मयूराः गवाक्षमार्गेः निर्यान्तं कृतमगरुधूपं वीक्ष्य घनो नीलाम्बुदोऽयमिति बुद्धिर्येषां तथाभूताः अत एव उन्नदन्तः उच्चैर्नदन्त नृत्यन्ति तथाभूतञ्च ॥ १२ ॥

### श्रीविजयध्वजतीर्थकृता पदरत्नावली

कीदृशं तद्गृहमत्राह—विष्टब्धमिति। मूले अग्रे च फलकोत्तमानि येषां ते तथा तैः जालैः गवाक्षैः ॥ ९॥ मुक्तादामविलम्बिभिः अवलम्बमानमौक्तिकमालैः दान्तैर्गजदन्तनिर्मितैः ॥ १०-११ ॥ अक्षैर्गवाक्षैः निर्यान्तं निर्गतं विहितागुरुचूर्णं धूपं दृष्ट्वा शिखण्डिनो मयूराः ॥ १२॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

भवनं वर्णयति—चतुर्भिः। विष्टब्धं विधृतं वैदूर्य्यमयानि फलकोत्तमानि स्तम्भाश्रयाणि छादनानि तैर्जगत्या भूमिकया ॥ ९-११ ॥ विहितमगुरुधूमम् अक्षैर्गवाक्षमार्गैः निर्यान्तम् ईक्ष्य वीक्ष्य घनोऽयमिति बुद्धिर्येषां ते ॥ १२॥

### गूढार्थदीपिनी

कथंभूतं भवनम्। तत् वर्णयति चतुर्भिः। विष्टब्धमिति। वैदूर्यमयानि फलकोत्तमानि स्तम्भाच्छादनानि येषु तैः विद्रुमस्तम्भैः विष्टब्धं धृतम्। पुनश्च। इन्द्रनीलमयैः कुड्यैः भित्तिभिः जगत्या भूमिकया च अलङ्कृतम् ॥९॥ त्वष्ट्रा विश्वकर्मणा विनिर्मितैः वितानैः मण्युत्तमैः परिष्कृतैः अलङ्कृतैः दान्तैः हस्तिदन्तनिर्मितैः आसनैः पर्यङ्कैश्च अलङ्कृतम्। मुक्तानां दामानि माला विलम्बन्ते येषु तैः वितानैः। सूर्यादिभिरपि न हता त्विट् कान्तिर्यस्यास्तया जगत्या। पुनश्च। निष्ककण्ठीभिः दासीभिः पुम्भिश्च अलंकृतम्। कथंभूतैः पुम्भिः। सुष्ठूनि कञ्चुकादीनि येषां तैः ॥ १०-११ ॥ पुनः कथंभूतम्। रत्नप्रदीपानां निकराः समूहाः तेषां द्युतिभिः निरस्तं ध्वान्तं तमो यस्मिन् तत् इति पृथक् भवनविशेषणम्। अङ्ग हे राजन्। यत्र भवने वलभीषु चन्द्रशालोपरि ( छज्जा ) इति स्थिताः शिखण्डिनः गवाक्षमार्गैः निर्यान्तं अगुरुधूपम् एक्ष्य घनोऽयमिति बुद्धिर्येषां ते तथाभूताः उन्नदन्तश्च सन्तः नृत्यन्तीत्यन्वयः ॥ १२ ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

भवनं विशिनष्टि—विष्टब्धमिति चतुर्भिः। विद्रुमस्तम्भैः वैदूर्यमयानि फलकोत्तमानि स्तम्भाश्रयाणि छादनानि तैश्च कुड्यादिभिश्च विष्टब्धं विधृतं प्रतिबद्धमित्यर्थः ॥ ९ ॥ मुक्तादाम्नां विलम्बाः विविधानि लम्बमानानि विद्यन्ते येषु तैर्वितानैः मण्युत्तमैः परिष्कृतैर्भूषितैर्दान्तैर्गजदन्तमयैशसनपर्यङ्कैश्च अलङ्कृतमित्युत्तरेण सम्बन्धः ॥ १० ॥ निष्कानि पदकानि कण्ठे यासां ताभिः शोभनानि वासांसि यासां ताभिः शोभनानि वस्त्रादीनि येषां तैः पुम्भिश्चालङ्कृतम् ॥११॥ रत्नप्रदीपनिकराणां द्युतिभिर्निरस्तं तमो यस्मिन् तं यत्र विहितमगुरुधूपम् अक्षैर्गवाक्षमार्गैर्निर्यान्तम् ईक्ष्य वीक्ष्य घनोऽयमिति बुद्धिर्येषां ते विचित्रवलभीषु शिखण्डिनो मयूराः नन्दतः सन्तः नृत्यन्ति ॥ १२ ॥

### श्रीसत्यधर्मकृता भागवतटिप्पणी

तद्भवनसुभगतामुपवर्णयति। विष्टब्धमिति। विद्रुसस्तम्भैः प्रवालस्तम्भैः। ननु क्वचित्स्थले स्थाणुस्तम्भा अपि वर्तेरन्नित्यप्याह। विद्रुमस्तम्भैरिति। न विद्यन्ते सामानाधिकरण्येन द्रुमात्मकस्तम्भा येषां तैः। विष्टब्धं विवृतं वैडूर्याण्येव फलकोत्तमान्यधोभाग उपरिभागे च येषां ते तैः। मद्दिगिगडपीत्यसमदमभ्रष्टभाषया। इन्द्रनीलात्मकैः कुड्यैर्भितिभिर्मरकतोत्तमैस्तत्कृतैर्जालैर्गवाक्षैः ॥ ९ ॥ मुक्तादामानि विलम्बीनि येषां ते तैः। त्वष्ट्रा निर्मितैर्वितानैरुल्लोचैर्दान्तैर्दन्तिदन्तविकृतैर्मण्युत्तमपरिष्कृतैरलङ्कृतैः ॥ १० ॥ सुवासोभिर्निष्ककण्ठीभिर्दासीभिरलङ्कृतं तथा कञ्चुकं कवचं उष्णीषं शिरोवेष्टनं सुवस्त्रमुत्तरीयादिकमणिमयानि कुण्डलानि च तैः सहितैः पुम्भिरलङ्कृतम् ॥ ११ ॥ रागात्मकप्रदीपानां निकरस्य द्युतयस्ताभिर्निरस्तं ध्वान्तं गृहान्तर्गतान्वाससं यस्य तत्। यस्य विचित्रवलभीषु वक्रदारुषु शिखण्डिनो मयूरा नृत्यंति घनमण्डलं दृष्ट्वा ताण्डवं कुर्वतां शिखण्डीनां कथमकारणं नटनमित्यत आह। यत्र गृहे विहितोऽगुरुगन्धोऽगुरुधूपस्तमक्षैर्गवाक्षैर्निर्यान्तमीक्ष्य घना एत इति बुद्धिर्येषां ते तथा सन्त उन्नदन्तो नादं कुर्वत इति ॥ १२ ॥

### श्रीमद्वल्लभाचार्य्यकृता सुबोधिनी

अतस्तं वर्णयति स्थालीपुलाकन्यायेन विष्टब्धमिति। पुरुषार्थचतुष्टयसम्पन्नमिति ज्ञापयितुं चतुर्भिः। प्रवालस्तम्भैर्विष्टब्धं धृतम्। वैडूर्यनिर्मितफलकैस्तदाच्छन्नम्। अनेन स्तम्भा उपरिप्रसारितदारुरूपाश्च द्विविधा ज्ञातव्याः। उपरिफलकानामेव वैडूर्यमयत्वम्। स्थूलफलकाः स्तम्भेष्वेव विशालाः स्थापिताः। तत्रापि कक्ष्यान्तर्गतस्तम्भानां तथात्वं वक्तव्यमिति धरणीस्तम्भाश्चात्र विद्रुममया ज्ञातव्याः। इन्द्रनीलमयैर्मणिभिः कुड्यानि। जगती भूमिः कुट्टिमा तत्रत्या। अलङ्कृतमिति सम्बध्यते। न सूर्यादिभिरहता त्विड्यस्याः सादृश्या जगत्यालङ्कृतमिति ॥ ९ ॥ वितानैश्चन्द्रातपैस्त्वष्ट्रा निर्मितैरित्यद्भुतत्वम्।

मुक्तादामानि विलम्बन्ते येष्विति । दन्तनिर्मितैरासनैः पर्यङ्कैश्चालङ्कृतम् । मण्युत्तमैर्मणिश्रेष्ठैरलङ्कृता आसनपर्यङ्काः ॥ १० ॥ स्त्रियः पुरुषाश्च दासीदासरूपाः शोभायामवश्यं वक्तव्या इति तान्निर्दिशति दासीभिरिति । नित्याभरणेषु सत्स्वेव पदकाभरणमिति निष्ककण्ठीभिरित्यनेन कटककुण्डलाद्याभरणानि सूचितानि । सुवासोभिरिति । सर्वतः शोभार्थमुक्तम् । यादृशैरेव वस्त्रैः शोभा सम्पद्यते । अन्यथा शोभाकथनं व्यर्थं स्यात् । पुम्भिरप्यलङ्कृतम् । पाश्चात्यो वेष इति । उत्तमानि कञ्चुकानि उष्णीषाणि मध्ये बन्धकानि मणियुक्तानि कुण्डलानि च येषामिति सर्वतोऽलङ्कारो भगवद्गृहदासानामुक्तः ॥११॥ सार्वकालीनशोभामुक्त्वा रात्रौ विशेषतः शोभामाह रत्नप्रदीपनिकरेति । रत्नसमूहकान्तिभिर्निरस्तं ध्वान्तमन्धकारो यत्र । रात्रौ गार्हस्थ्ये कामरसो वर्ण्यत इति उद्दीपनविभावान्वर्णयति । विचित्रवलभीषु मणिमया निर्मितवक्रदारुषु मयूराः स्थिताः सन्तो नृत्यन्ति । अङ्गेति सम्बोधनं स्नेहसूचकम् । तेनास्याः कथायाः भगवद्भोगविषयत्वाद्योगिचिन्त्यत्वमेव, न तु बाह्यतया साधारणत्वमिति सूचितम् । नृत्ये अलौकिकं हेतुं वर्णयति । यत्र विहितागुरुधूपं गृहसंस्कारार्थं कृतं गवाक्षमार्गेण निर्यान्तं निरीक्ष्य घनोऽयमिति तेषां बुद्धिरुत्पन्नेति घनबुद्धयः । अत एव ऊर्ध्वं नदन्तो जाताः । मेघागमे हि तेषां नृत्यं भवति । नृत्यदर्शने च रस आविर्भूतो भवतीति, गीतवाद्यरहितं नृत्यं न शोभां करोतीति, उन्नादो हि द्विःस्वभावो निरूपितः ॥ १२ ॥

### श्रीसुबोधिनी—सारः

तद्विशिनष्टि चतुर्भिः । वैदूर्यमयानि फलकोत्तमानि स्तंभाश्रयाणि छादनानि येषु तैर्विद्रुमैः प्रवालमयैः स्तंभैर्विष्टब्धं धृतम् इंद्रनीलमयैः कुड्यैः समं कृतमिति सर्वत्र संबध्यते अहता अखंडिता त्विट् दीप्तिर्यस्या दिव्यभूमित्वात्तया जगत्या पृथिव्या ॥ ९ ॥ त्वष्ट्रा विश्वकर्मणा निर्मिते रचितैर्मुक्तानां दामानि विलंबंते इत्येवं शीलैः मुक्तादामानां विलंबा विद्यते येष्विति गुरवः तैर्वितानैः दांतैर्गजदंतमयैरासनैः पर्यंकैः शय्याभिः मण्युत्तमैः श्रेष्ठमणिभिः परिष्कृतैः खचितैः ॥ १० ॥ सुष्ठु वासांसि यासां ताभिर्निष्ककंठीभिर्दासीभिरलंकृतं कंचुकादिसहितैः पुंभिः समलंकृतम् ॥ ११ ॥ रत्नमयानां प्रदीपानां निकरः समूहस्तस्य द्युतिभिर्दीप्तिभिर्निरस्तं ध्वांतं तमो यस्मिन् तत् यत्र गृहे विहितं देवार्थं प्रयुक्तमगुरुधूपम् अक्षैर्जालरन्ध्रैर्निर्यातं बहिर्निर्गच्छंतम् ईक्ष्य घना मेघोयमिति बुद्धिर्येषां ते शिखिनो मयूरा उन्नदंतः केकां ब्रुवंतो वलभीषु अट्टालोपरि तिर्यक् भूमिषु नृत्यंति हे अंग ॥ १२ ॥

### श्रीविट्ठलरायात्मजश्रीवल्लभकृतलेखः

विष्टब्धमित्यस्याभासे । स्थालीपुलाकन्यायेनेति । यथा स्थालीस्थमेकमपि पुलाकमुपमर्द्य तस्मिन्पक्वे सर्वेपि पुलाकाः पक्वा ज्ञायन्ते, तथैकस्मिन्गृहे वर्णिते सर्वेपि गृहास्तादृशा एव ज्ञाता भवन्तीत्यर्थः । अयं न्यायः सप्तमाध्याये चतुर्थचरणे उक्तः । रत्नप्रदीपेत्यत्र । उन्नादो हि द्विःस्वभाव इति । गीतस्वभावस्ततः सुषिरवाद्याभिव्यक्तस्वरस्वभावश्चेत्यर्थः । नादस्याक्षराद्यभावेन स्वरमात्ररूपत्वाद्विःस्वभावत्वं युक्तमिति हिशब्दः ।

### गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

भवनं विशिनष्टि—विष्टब्धमिति । विद्रुमस्तम्भैः वैदूर्यमयानि फलकोत्तमानि स्तम्भाश्रयाणि छादनानि तैश्च विष्टब्धं प्रतिबद्धम् । सूर्यादिभिरप्यहता त्विट् यस्यास्तया जगत्या भूमिकया चालंकृतम् ॥ ९ ॥ त्वष्ट्रा निर्मितैर्मुक्तादामानि विलम्बन्तीति तथा तैर्वितानैर्मण्युत्तमैः परिष्कृतैरलंकृतैर्दान्तैर्हस्तिदन्तनिर्मितैरासनैः पर्यङ्कैश्चालंकृतम् ॥ १० ॥ निष्ककण्ठीभिः सुवासोभिर्दासीभिः तथा शोभनानि कञ्चुकादीनि येषां तैः पुम्भिश्चालंकृतम् ॥ ११ ॥ रत्नप्रदीपानां ये निकराः समूहास्तेषां द्युतिभिः निरस्तं ध्वान्तं तमो यस्मिंस्तत् । यत्रान्तःपुरे भवने च बलभीषु स्तम्भाग्रप्रसारितवक्रदारुविशेषेषु स्थिताः शिखण्डिनो मयूराः अक्षैर्गवाक्षमार्गैर्निर्यान्तं विहितागुरुधूममीक्ष्य दृष्ट्वा घनबुद्धयः 'नीलाम्बुदोऽयम्' इति बुद्धिर्येषां तथाभूता उन्नदन्तश्च सन्तो नृत्यन्ति ॥ १२ ॥

### अन्वितार्थप्रकाशिका

भवनं विशिनष्टि—विष्टब्धमिति । विद्रुमस्तम्भैः वैदूर्यमयानि फलकोत्तमानि स्तम्भाश्रयाणि छादनानि तैश्च विष्टब्धं प्रतिबद्धम् इन्द्रनीलमयैः कुड्यैर्भित्तिभिः सूर्यादिभिरप्यहता त्विट् यस्यास्तया इन्द्रनीलमय्या जगत्या भूमिकया चालंकृतम् ॥९॥ वितानैरिति । त्वष्ट्रा विश्वकर्मणा निर्मितैः मुक्तादाम्नां विलम्बाः विविधानि लम्बनानि विद्यन्ते येषु तैर्वितानैर्मण्युत्तमैः परिष्कृतैरलंकृतैर्दान्तैर्हस्तिदन्तनिर्मितैरासनैः पर्यङ्कैश्चालंकृतम् ॥ १० ॥ दासीभिरिति । निष्ककण्ठीभिः सुवासोभिर्दासीभिः अलंकृतम् तथा शोभनानि कञ्चुकादीनि येषां तैः पुम्भिर्दासैश्चालंकृतम् ॥ ११ ॥ रत्नेति । अङ्ग हे राजन् ! रत्नप्रदीपानां ये निकराः समूहास्तेषां द्युतिभिः निरस्तं ध्वान्तं तमो यस्मिंस्तत् यत्रान्तःपुरे भवने च बिचित्रबलभीषु स्तम्भाग्रप्रसारितवक्रदारु-

विशेषेषु चन्द्रशालोपरि वा स्थिताः शिखण्डिनो मयूराः अक्षैर्गवाक्षमार्गैर्निर्यान्तं विहितागरुधूममीक्ष्य दृष्ट्वा ल्यवार्थः एक्ष्येति पाठो वा। घनबुद्धय। नीलाम्बुदोऽयमिति वुद्धिर्येषां तथाभूता उन्नदन्तश्च सन्तो नृत्यन्तः तत् अनेन रात्रौ मुनेरागमो व्यज्यते। तदैव तस्य युगपत्प्रतिगृहं स्थितिः स्यादित्याशयात् रत्नदीपसद्भावाभिप्यपि शिखण्डिनृत्यादि ॥ १२ ॥

**श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्**

इतः श्लोकचतुष्टयेन रुक्मणी भवनं वर्णयति विष्टब्धमिति। विद्रुमस्तंभैः विष्टब्धमवष्टंभित वैदूर्यमयैः फलकोत्तमैः स्तंभमूर्द्धस्थछादनैः। इंद्रनीलमयैः कुड्यैर्भितिकाभिः। न हता त्विट्कांतिर्यस्यास्तया जगत्याक्षित्या च उपलक्षितम् ॥९॥ त्वष्ट्रा विश्वकर्मणानिर्मितैः। रचितैः मुक्तानां दामानि मालास्तेषां विविधलंबाः संति येष तैः। मण्युत्तमैः। परिष्कृतैरलंकृतैः। आसनपर्यंकैः अलंकृतमित्युत्तरेणान्वयः ॥१०॥ निष्ककंठाभरणं कंठे यासां ताभिः पंभिर्दासैः उष्णीषं शिरो वेष्टनं ॥११॥ अक्षैर्गवाक्षैः निर्यांतं विहितं कृतं अगुरुधूपं। ईक्ष्यनिरीक्ष्यघनः पयोदोयमिति वुद्धिर्येषां ते। विचित्रवलभीषुस्थिताः शिखंडिनो नृत्यंति ॥१२॥

**भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी**

तदेव विशिनष्टि विष्टब्धमिति चतुर्भिः। विष्टब्धमिति। विद्रुमाणां रक्तमणीनां स्तम्भास्तैः, वैडूर्यमयानि फलकोत्तमानि स्तम्भाश्रयाणि छादनानि तैश्च, विष्टब्धं प्रतिबद्धम्। इन्द्रनीलमयैः कुड्यैः, अहतत्विषा जगत्या भूमिकया च, विष्टब्धं विधृतम् ॥९॥ वितानैरिति। त्वष्ट्रा, निर्मितैः मुक्तादामविलम्बिभिः, वितानैरुल्लोचैः, दान्तैर्गजदन्तनिर्मितैः, मण्युत्तमपरिष्कृतैः मणिश्रेष्ठालंकृतैः, आसनपर्यङ्कैरासनैः पर्यङ्कैश्चेत्यर्थः। उपलक्षितं, अलंकृतमित्युपरिष्टात् संबन्धो वा ॥ १० ॥ दासीभिरिति। निष्ककण्ठीभिः कण्ठधृतनिष्काभरणाभिः, सुवासोभिः शोभनवस्त्रयुताभिः, दासीभिः, अलंकृतं, सकञ्चुकोष्णीषैः सुवस्त्रमणिकुण्डलैः, पुम्भिश्च, अलंकृतम् ॥ ११ ॥ रत्नेति। रत्नप्रदीपानां ये निकराः समूहास्तेषां द्युतिभिः प्रभाभिः, निरस्तं ध्वान्तं तमो यस्मिंस्तत्, किं च। यत्र भवने, अङ्ग हे राजन्, विचित्रवलभीषु स्तम्भाग्रप्रसारितवक्रदारुविशेषेषु, शिखण्डिनो मयूराः, अक्षैर्गवाक्षमार्गैः, निर्यान्तं, विहितागुरुधूपं, ईक्ष्य समीक्ष्य, घनो नीलाम्बुदोऽयमिति वुद्धिर्येषां ते तथाभूताः, अत एव, उन्नदन्तः सन्तः, नृत्यन्ति तथाभूतं च ॥ १२ ॥

**कृष्णप्रिया**

श्री नारदजी ने जिस भवन में प्रवेश किया उसकी दिव्यता का गान कैसे किया जाय उस भवन के खम्भे विद्रुम मणि के थे और वैडूर्य मणि के प्रासाद पृष्ठ थे और इन्द्रनील मणि की दीवारें जगमगा रही थी। अधिक क्या कहे, इन भवनों के छजने-गजने भी इन्द्रनील मणि से बनी थी जिनकी शोभा किसी भी प्रकार से कम नहीं थी ॥ ९ ॥ विश्वकर्मा जी ने अत्यंत कौशल्य से राजभवन के भीतर अद्भुत चंदोवे बना रखे थे, जिन चंदोवे में शुद्ध मौक्तिक की लड़ियां की झालरे लटक रही थी ध्यानाकर्षण करती थी। महल की शोभा बढ़ाने वाले हाथी दाँत के बने हुए सिंहासन और आसन एवं पर्यंक थे, जिन आसन पर्यङ्को में अत्यंत उत्तम मणि जड़ी हुई थी ॥ १० ॥ असंख्य दासियाँ अपने कण्ठ में सुवर्ण के हार पहने एवं कौशेय वस्त्रों से समलङ्कृत होकर और महलों के सेवक जन भी जामा-पगड़ी और उत्तम वस्त्राभूषण धारण कर एवं कुण्डल पहने तथा जड़ाऊ, धारण किये अपने-अपने कार्य में व्यस्त थे और राजमहल का सौंदर्य बढ़ा रहे थे ॥ ११ ॥ अगणित संख्या में रत्नदीप निजी तेज से भवन का अन्धकार निवारण कर रहे थे अगर की धूप देने के कारण वातायनों से धूआँ निकल रहा था। उस धूआँ को देखकर विविध रङ्गवाले रत्नों से रचित छज्जों पर बैठे हुए मयूर बादलों की भ्रान्ति से मधुर-मधुर केका शब्द कर-कर नृत्य करते थे ॥ १२ ॥

> तस्मिन् समानगुणरूपवयस्सुवेषदासीसहस्रयुतयानुसवं गृहिण्या।
> विप्रो ददर्श चमरव्यजनेन रुक्मदण्डेन सात्वतपतिं परिवीजयन्त्या ॥ १३ ॥
> तं संनिरीक्ष्य भगवान् सहसोत्थितः श्रीपर्यङ्कतः सकलधर्मभृतां वरिष्ठः।
> आनम्य पादयुगलं शिरसा किरीटजुष्टेन साञ्जलिरवीविशदासनेस्वे ॥ १४ ॥
> तस्यावनिज्य चरणौ तदपः स्वमूर्ध्ना बिभ्रज्जगद्गुरुतरोऽपि सतां पतिर्हि।
> ब्रह्मण्यदेव इति यद्गुणनाम युक्तं तस्यैव यच्चरणशौचमशेषतीर्थम् ॥ १५ ॥
> सम्पूज्य देवऋषिवर्यमृषिः पुराणो नारायणो नरसखो विधिनोदितेन।
> वाण्याभिभाष्य मितयामृतमिष्टया[१] तं प्राह प्रभो भगवते करवाम[२] ते किम् ॥ १६ ॥

---

१. याऽमृत जुष्टया च–वीर. ; याऽमृतकल्पया च–विज. । २. हे–श्रीधर. वंशी. जीव. विश्व. ; करवाम किं ते–वीर. विज.।

### कर्दमक्षमा

अन्वयः—तस्मिन्, समानगुणरुपवयस्सुवेषदासीसहस्त्रयुतया, गृहिण्या, अनुसवम्, रुक्मदण्डेन, चामरव्यजनेन, परिवीजयन्त्या, सात्वतपतिम्, विप्रः, ददर्श ॥ १३ ॥ तम्, सन्निरीक्ष्य, सकलधर्मभृताम्, वरिष्ठः, भगवान्, श्रीपर्यङ्कतः, सहसा उत्थितः, किरीटजुष्टेन, शिरसा, पादयुगलम्, आनम्य, साञ्जलिः, स्वे, आसने, अवीविशत् ॥ १४ ॥ जगद्गुरुत्तरः, अपि, सताम्, पतिः, तस्य, चरणौ, अवनिज्य, तदपः, स्वमूर्ध्नि, अबिभ्रत्, ब्रह्मण्यदेवः, इति, यद्, गुणनाम, तद्‌दुक्तम्, तस्य, एव, यत्, चरणशौचम्, अशेषतीर्थम् ॥ १५ ॥ पुराणः, ऋषिः, नरसखः, नारायणः, उदितेन, त्रिधिना, देवऋषिवर्यम्, सम्पूज्य, अमृतमिष्टया, मितया, वाण्या, अभिभाष्य, प्राह, हे प्रभो ! भगवते, ते, किम्, करवाम ? ॥ १६ ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

अनुसवं सर्वकालम् । आत्मना समानानि गुणरूपवयांसि सुवेषोऽलंकारश्च यस्य तेन दासीसहस्रेण युतया गृहिण्या सह ॥ १३ ॥ श्रियो रुक्मिण्याः पर्यंकतः अवीविशदुपवेशयामास ॥ १४ ॥ अबिभ्रदबिभः दधारेत्यर्थः । बिभ्रदिति शत्रंतं वा । तदा संपूज्याभिभाष्य च प्राहेत्युत्तरेणान्वयः । कथंभूतः । यस्य चरणशौचं गंगा अशेषतीर्थं सः । अत एव जगद्गुरुत्तरोऽपि सतां धर्मभृतां पतित्वादेवमकरोदित्यर्थः । सतांपतित्वे हेतुः । ब्रह्मण्यदेव इति । यद्गुणकृतं नाम तस्यैव यतो युक्तं समंजसमतस्तद्धर्मप्रवर्तनायेवमाचरणमित्यर्थः ॥ १५ ॥ अभिभाष्य दिष्ट्याऽत्र त्वदागमनमित्यादि प्रियमुक्त्वा ॥ १६ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

तस्मिन् गृहे । "सवो यागेऽनेहसि च प्रसवे प्रेरणासवे" इति निरुक्तिः । चमरमेव व्यजनं तेन ॥१३॥ तं नारदम् ॥१४॥ तस्य नारदस्य । इत्यर्थ इति—छांदसोऽडागम इति । छांदसकल्पने गौरवं मत्वाह—बिभ्रदिति । ननु स्वदासस्य नारदस्य चरणक्षालनादिकमयुक्तं तत्राह—ब्रह्मण्यदेव इति । यस्य गुणनाम गुणसूचकं नाम तद्युक्तं नारदस्य ब्राह्मणत्वात्तस्य ब्रह्मण्यदेवत्वादेत्तदुचितमेवेति । न च स्वपाविश्यार्थमिदमिति वाच्यम् । यद्यस्मात्तस्यैव चरणशौचं गंगाऽशेषतीर्थमस्ति, नारदस्तु दास्येऽपि स्वप्रभोरिच्छाप्रातिकूल्ये प्रभुत्वं नाविश्वकारेति ज्ञेयम् । तदा ततः । अशेषांस्तीर्थयति शुद्धीकरोतीत्यशेषतीर्थम् । यद्वा—अशेषाणि तीर्थानि यस्मिंस्तत्तथा । अत एवाशेषशोधकत्वादेव । जगद्गुरुः शिवस्ततोऽपि विशिष्टः । इत्यर्थ इति—"संतः स्वधर्मनिष्ठाः स्युः शास्तारोऽनाशिनस्तथा" इत्युक्तेः । ब्रह्म ब्राह्मणसामान्यं देवोऽर्च्यो यस्य स तथा, पृषोदरादित्वात्साधुः । यद्वा—"यस्यात्मात्मजगेहस्त्रीभूधनाद्यखिलं वसु । नाऽदेयं विद्यते लोके ब्राह्मणाय नरोत्तम । ब्राह्मणा हि परं ब्रह्म न तेभ्यो विद्यते परम् । यश्चैवं मन्यते नित्यं स ब्रह्मण्य इतीर्यते ॥" इत्युक्तलक्षणोपेतश्चासौ देवो ब्रह्मण्यदेव इति । गुणेन ब्राह्मणार्चनादिरूपेण कृतं तन्नाम तस्य नाम्न एव । यद्वा—यद्यस्य गुणकृतमिति नाम तस्य हरेरित्यर्थः । यतो हेतोः । अतोऽन्वर्थनामत्वात् । तद्धर्मप्रवर्तनाय नामोचितधर्मप्रवृत्तये—गृहागतब्राह्मणस्य जगत्पूज्येनापि पादप्रक्षालनादिरूपमर्चनं कर्तव्यमेवेति बोधनाय । एवमाचरणं नारदं पूजितवानित्यर्थः । "तुष्यति स्वागतेनाग्निरासनेन शतक्रतुः । पितरः पादशौचेन ह्यन्नाद्येन प्रजापतिः ॥" इति स्मृत्युक्ताचरणं शिक्षितवानिति भावः ॥ १५ ॥ देवऋषीत्यत्र "ऋत्यकः" इति प्रकृतिभावः । तं नारदम् । हे नारद भगवते साक्षात्परमेशमूर्तये त्वामुद्दिश्य किं करवाम इत्याज्ञापयेत्यर्थः । यद्वा—हे भगवः ते किं करवामेत्यन्वयः । विसर्गलोपस्त्वार्षः । विधिवत्पूज्यविज्ञत्वे हेतुः—ऋषिमंत्रप्रवर्तकस्तत्रापि पुराणः पुरापि नवः स्वयं भगवत्त्वात् । किञ्च—नारायणो नरसखः । तादृशधर्मप्रवर्तनाय लोकेऽपि तद्रूपेणावतीर्णः । अभेदनिर्देशोयं तत्र श्रीनारायणर्षेरपि प्रवेशाभिप्रायेण । तस्य तत्र तादृशलीलाविर्भावे हेतुः—ऋषिवर्यमिति । पुरोहितादिवद्भक्तविशेषाविर्भावानुरूप्यादिति भावः । ननु स तु सर्वादिऋषिः नारायणत्वे च तस्य साक्षादेव गुरुरिति कथमेतत्पूजनं योग्यमित्यत्रापि सिद्धांतः—विधिमोदितेनेति । संप्रत्यविष्कृतक्षत्रियलीलस्य यस्य ब्राह्मणपूजा योग्येव लोकवत्तु लीलाकैवल्यादिति भावः । "सत्यं ब्रूयात्प्रियं ब्रूयात्" इति शास्त्रेण मितया सिद्धया तथाभूतवन्मिष्टया वाण्याभिभाष्य स्तुत्वा प्राह प्रार्थयामास । हे प्रभो विप्रत्वेनास्मत्स्वामिन् किं करवाम वयं तदाज्ञापयेत्यर्थः । भवत इति वक्तव्ये भगवत इति गौरवात् । एतच्च सर्वैश्वर्याय तुभ्यं मनुष्या वयं किं करवाम कर्तुं शक्नुमः, अपि तु न किञ्चिदिति व्यंजनायेति कौतुकविशेषाय तं प्रति वचसा तु निजैश्वर्यमत्यंतमाच्छादितं तादृशनिजवैभवं प्रति तस्य तादृशस्याप्याश्चर्यबुद्धित्वं दृष्ट्वा किंचिदुपालब्धमिव चेति तोषिणीकारतंदर्भौ ॥ १६ ॥

### श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी

तस्मिन् भवने समानगुणादिकेन दासीसहस्रेण युतयाऽपि गृहिण्या गृहेश्वर्या रुक्मिण्या स्वयमेव प्रेम्णा परितः सर्वाङ्गेषु वीजयन्त्या चमरस्य मृगविशेषस्य पुच्छरूपेण व्यजनेन ननु कथमसौ सहसान्तःपुरं प्रविष्टवान् तत्राह—विप्र इति । तज्जातिमात्रत्वमपि तत्र हेतुरिति भावः । सात्वतपतिमिति सात्वतपद्धतिगुरोः श्रीनारदस्य तद्दर्शने भक्तिविशेषोदयद्योतकं श्रीयदूनां

पतिमिति वा तच्चाविर्भावविशेषेण चमत्कारविशेषद्योतकम् ॥ १३ ॥ तमिति । सहसागमनेन सन्निधौ निरीक्ष्य प्रसन्नदृष्ट्याऽविलोक्य सहसा सपदि भगवानपि कौस्तुभादिताद्दशभगवत्त्वाभिव्यञ्जकपरमकिरीटजुष्टेन तत्सेवार्हेणापि आसक्त्या तत्स्पर्शनादिना नत्वा तत्र हेतुः सकलेति सद्धर्मप्रवर्त्तनतादृशलीलारसाविष्ट इत्यर्थः । स्वे स्वीये ॥ १४ ॥ जगतो गुरुतमः महापूज्योपीत्यर्थः । हि हेतौ अस्य परेणान्वयः । अशेषाणि तीर्थानि यस्मिन् तत् सर्वतीर्थस्वरूपं वा यस्य चरणशौचं सोपि ॥ १५ ॥ विधिवत्पूजाविज्ञतायां हेतुः ऋषिर्मन्त्रप्रवर्त्तकः तत्रापि पुराणः परापि नवः स्वयं भगवत्त्वादनादित एव तादृशतया वर्त्तमान इत्यर्थः । यद्वा तथापि तस्याङ्घ्रियुगं नवन्नवमित्याद्युक्तन्यायेन सदा येन व इति न पुराणः किन्तु पुराणवदाचरतीत्येव पुराणः किञ्च नारायणो नरसखः तादृशधर्मविधिप्रवर्त्तनाय लोकेपि तद्रूपेणावतीर्णः अभेदनिर्देशोऽयं तत्र नारायणर्षेरपि प्रवेशोभिप्रायेण तदुक्तं चतुर्थे—

''ताविमौ वै भगवतो हरेरंशाविहागतौ । भारव्ययाय च भुवः कृष्णौ यदुकुरूद्वहौ ॥''

इति तौ चांशरूपौ कर्तृभूतौ कृष्णौ कर्मभूतौ आगतौ आगतवन्तौ प्रविष्टवन्तावित्यर्थः । ''एते चांशकलाः इत्यादेः तस्य तत्र तादृशलीलाविर्भावे हेतुः, ऋषिवर्य्यमिति । भक्ताविर्भावानुरूप्यादितिभावः । ननु, सतु सर्वादि ऋषिर्नारायणत्वे च तस्य साक्षादेव गुरुरिति कथं तेन तत्पूजनं योग्यम् ? इत्यत्रापि सिद्धान्तः विधिनोदितेनेति । सत्प्रत्याविष्क्रतक्षत्रियलीलास्य स्वस्य ब्राह्मणपूजाविधियोग्येव लोकवत् लीलाकैवल्यादिति भावः । यद्वा ''नारायणस्त्वं नहि सर्वदेहिनाम्'' इत्यादिब्रह्मास्तवरीत्या स्वयं भगवानपि नरसखः नरलील इत्यर्थः । अतो विधिनोदितेयेति अतः ''सत्यं ब्रूयात्प्रियं ब्रूयात्'' इति स्मृत्यनुसारेण प्राक् पूर्वं मितया शास्त्रादिप्रमाणसिद्धत्वेन सत्यतया अमृतमिष्ट्या प्रियया च वाण्या अभिभाष्य स्तुत्वा प्राह प्रार्थयामासेत्यर्थः । प्रार्थनमेव दर्शयति—प्रभो इति । हे प्रभो विप्रत्वेनास्मत्स्वामिन् अतः किङ्करवाम किं कर्त्तुं शक्नुमः अपितु न किञ्चिदिति व्यञ्जनाय इति कौतुकविशेषाय तं प्रति वचसा तु निजैश्वर्य्यमत्यन्तमाच्छादितं तादृशनिजवैभवं प्रति तस्य तादृशस्याप्याश्चर्य्यबुद्धित्वं दृष्ट्वा किञ्चिदुपालब्धमिव च ॥ १६ ॥

### श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी

तस्मिन् भवने समानगुणादिकेन दासीसहस्रेण युतयापि गृहिण्या गृहेश्वर्य्या श्रीरुक्मिण्या स्वयमेव प्रेम्णा परितः सर्व्वांगेषु वीजयन्त्या। अनुसवमिति दासीनामपि गुणादिनित्यत्वं द्योतयति। तादृश-दासीनां सद्भावोऽपि सर्व्वत्रैव ज्ञेयः। चमरस्य मृग-विशेषस्य पुच्छरूपेण व्यजनेन चामरेणेत्यर्थः। विप्र इत्यन्तः पुरप्रवेशे तादृशदर्शने च हेतुः—ब्राह्मणत्वेनानिवार्य्यगतित्वादात्मीयत्वाच्च, यतः सात्वतपति ब्रह्मण्यदेवत्वादिनिजाशेषगुणप्रकटनार्थं यदुकुलेऽवतीर्णमित्यर्थः। किवा पूर्व्वतोऽप्यधिक-रूप-गुणादिसेवितमिति अशेषभगवत्ताप्रकटनात्; यद्वा, किञ्च, भक्तानां पालकम्, अतो विप्रत्वेन तत्रापि भक्तप्रवरत्वेन तदुचितमेवेति भावः। एवं दर्शनेऽपि प्रेम्णा परमानन्दोदयः सूचितः ॥ १३ ॥ सं सहसा शीघ्रगमनेन सन्निधौ निरीक्ष्य प्रसन्नदृष्ट्यावलोक्य, किंवा अव्ययानामनेकार्थत्वाद्दूरतो दृष्ट्वेत्यर्थः, सहसा सपदि भगवान् साक्षात् परमेश्वरोऽपि किरीटजुष्टेनापि, आ सम्यक् तत्स्पर्शनादिना नत्वा, तत्र हेतुः—सकलेति; सद्धर्म्मप्रवर्तनार्थमित्यर्थः। स्वे स्वकीये, किंवा तदर्थमेव प्राक् कल्पिते ॥ १४ ॥ जगतो गुरुतरो महापूज्योऽपीत्यर्थः। हि हेतौ, अस्य परेणान्वयः। अशेषाणि तीर्थानि यस्मिंस्तत् सर्व्वतीर्थस्वरूपं वा, यस्य चरणशौचं सोऽपि ॥ १५ ॥ पुराण आद्य ऋषिः, यतो नरसखो नारायणः, तस्य वदरिकाश्रमे नित्यतपःपरत्वात्; इति श्रीनारदगुरुत्वमपि सूचितम्। अवतारतया च श्रीकृष्णेन सह तस्याभेदः प्रसिद्ध एव; यद्वा, पुराण ऋषिर्मन्त्रदर्श्यपि, यतो नारायणः परमेश्वरत्वेन सर्व्वजीवाश्रयः, नराणां जीवानां सखा परमात्मतया सत्कर्म्मसु प्रवर्त्तनेन स हितकार्य्यपि; उदितेन शास्त्रोक्तेन विधिना सम्यक् पूजयित्वा, यतो देवर्षिषु देवत्वादिषु वर्य्यम्; यद्वा, पुराणोऽनादिर्भगवान् देव ऋषिवर्य्यं संपूज्य यो विधिनोदितेन चतुर्थस्कन्धे उक्तेन विधिना प्रकारेण; नरसखो नारायण ऋषिः; तथाहि चतुर्थे ( भा० ४।१।५७ ) 'ताविमौ वै भगवतो हरेरंशाविहागतौ। भारव्ययाय च भुवः कृष्णौ यदुकुरूद्वहौ ॥' अस्यार्थः—ताविमौ नरनारायणरूपौ हरेरंशौ कर्त्तृभूतौ इह चन्द्रवंशे कृष्णौ कर्म्मभूतौ आगतौ प्रविष्टौ। अतोंऽशेन यो नारायण इति निर्गलितार्थः। अतः प्राक् अभिभाष्य पश्चात् प्रकर्षेणाह। प्र-शब्दार्थमेवाभिव्यञ्जयति—अमृतादपि मिष्टया मधुरया मितया च सहजधैर्य्यात्तद्गौरवाद्वा, अस्योभयतोऽप्यन्वयः। हे प्रभो ! विप्रत्वेनास्मत्स्वामिन् ! अतः किं करवाम वयं सर्व्वे, तदाज्ञापयेत्यर्थः। भवत इति वक्तव्ये भगवत इति गौरवात्; यद्वा, सर्व्वैश्वर्य्यपूर्णाय तुभ्यं मनुष्या किं करवाम करिष्यामः, अपि तु न किञ्चित् कर्त्तुं शक्ताः स्म इत्यर्थः ॥ १६ ॥

### श्रीमद्वीरराघवाचार्यकृता भागवतचन्द्रचन्द्रिका

तस्मिन्निति । तस्मिन्नेव भवने गृहिण्या भार्यया रुक्मिण्या समं सहितमित्यर्थः । सात्वतपतिं श्रीकृष्णं विप्रो नारदो ददर्श कथम्भूतया अनुसवं सर्वकालमात्मना समानानि गुणरूपवयांसि सुवेष अलङ्कारश्च यस्य तेन दासीनां सहस्रेण युक्तया

रुक्ममयो दण्डो यस्य तेन चामरव्यजनेन वीजयन्त्या च ॥ १३ ॥ तमिति । तं दृष्टवन्तं नारदं सम्यक् निरीक्ष्य भगवान् श्रियो रुक्मिण्याः पर्यङ्कादाशूत्थितः तदिष्टदेवतभूतः किमित्युत्थित इत्यतो विशिनष्टि—सकलधर्मभृतां वरिष्ठः धर्मात्मभिर्महत्स्वेवं वर्त्तितव्यमिति प्रदर्शनार्थमिति भावः । अत एव च किरीटालङ्कृतेन शिरसा तस्य पादयुगलं प्रणम्य अञ्जलिना सहितः स्वे स्वकीये आसने अवीविशदुपवेशयामासेत्यर्थः ॥ १४ ॥ तस्येति । स भगवान् जगतां साधुजनानां गुरुतरोपि परमगुरुरपि हि यतः सतां पतिरपि तस्य नारदस्य चरणो अवनिज्य प्रक्षाल्य तदपः अवनेजनजलानि मूर्द्ध्नि विभ्रत् विभ्राणः आसेति शेषः। दधारेत्यर्थः । अविभ्रत् इति वा छेदः अविभ्रत् अविभरत् दधारेत्यर्थः । युक्तञ्चैतदित्याह—ब्रह्मण्येति । ब्रह्माणि ब्राह्मणकुले साधवो ब्रह्मण्यास्तेषां देव इति यद्गुणनाम अन्वर्थं नाम तस्यैव यतो भगवत एवासाधारणमित्यर्थः । अतः युक्तं ब्रह्मण्यदेवत्वाद्विप्राङ्घ्रिजलधारणमित्येतदुचितमेवेत्यर्थः । अन्यथा तु न घटत इत्यभिप्रयन् विशिनष्टि–यच्चरणशौचं यस्य भगवतश्चरणसम्बन्धाच्छौचं पवित्रता यस्य तथाभूतमशेषं गङ्गादितीर्थं तस्यैवम्विधस्योक्तादेव हेतोस्तदुचितमित्यर्थः ॥ १५ ॥ सम्पूज्येति । नरस्य सखा नारायणः पुराण ऋषिरप्युक्तादेव हेतोर्देवर्षिवर्यं नारदं शास्त्रोक्तेन विधिना सम्पूज्यामतेन जुष्टया अमृतवर्षिण्येत्यर्थः । मितयाचाल्याक्षरया वाण्याऽभिभाष्य सम्बोध्य प्राह—उक्तिमेवाह–प्रभो भगवते करवाम किन्वे । हे प्रभो ! भगवते तुभ्यं किङ्करवाम किङ्करा वयमित्यर्थः । किमिष्टं करवामेति वा किं यत्किञ्चिदिष्टमस्ति तत्करवामेति वा ॥ १६ ॥

### श्रीविजयध्वजतीर्थकृता पदरत्नावली

चामरव्यजनेन चामराख्यव्यजनेन तस्मिन् भवने आविवेश उपविष्टः ॥ १३–१४ ॥ भो परीक्षिन्नैतच्चित्रमित्याह—ब्रह्मण्यदेव इतीति । यस्य चरणशौचजलमशेषांस्तीर्थयति शुद्धान् करोतीति अशेषतीर्थं यद्वा अशेषाणि तीर्थानि यस्मिंस्तत्तस्य हरेः ब्रह्मण्यदेव इति यत्तद्गुणनाम तस्यैव युक्तमित्यवधारयेत्यर्थः ॥ १५ ॥ शास्त्रोदितेन विधिना सम्पूज्य ॥ १६ ॥

### श्रीमज्जीवगोस्वामीकृतः क्रमसन्दर्भः

विधिपूजाविज्ञतायां हेतुः ऋषिर्मन्त्रप्रवर्त्तकः तत्रापि पुराणः पुरापि नवः स्वयं भगवत्त्वादिना त्वयेव तादृशतया वर्त्तमान इत्यर्थः । किञ्च नारायणो नरसखः तादृशधर्म्मविधिप्रवर्त्तनाय लोकेऽपि तद्रूपेणावतीर्णः अभेदनिर्द्देशोऽयं तत्र श्रीनारायणर्षेरपि प्रवेशाभिप्रायेण तस्य तत्र तादृशलीलाविर्भावे हेतुः, ऋषिवर्य्यमिति । पूरोहितादिवद्भक्तविशेषाविर्भावानुरूप्यादिति भावः। ननु, सतु सर्व्वादि ऋषिः नारायणत्वे च तस्य साक्षादेव गुरुरिति कथने तत्पूजनयोग्यम् इत्यत्रापि सिद्धान्तः । विधिनोदितेति सम्प्रत्याविष्कृतक्षत्रियलीलस्य स्वस्य ब्राह्मणपूजा योग्यैव लोकवत्तु लीलाकैवल्यादिति भावः । जनतायाः भक्तवृन्दस्यापवर्गं परमपुरुषार्थरूपं ब्रह्मादिभिर्म्मुक्तैरपि हृदि विचिन्त्यं संसारकूपपतितानां मुमुक्षूणामुत्तरणमवलम्बमिति ॥१६–२१॥

### श्रीमज्जीवगोस्वामिकृतः बृहत्क्रमसन्दर्भः

सम्पूज्येत्यादि । देवः श्रीकृष्णः ऋषिवर्यं नारदं सम्पूज्य प्राह कीदृशः ? पुराण आदिः तर्हि किं नारायणः ? न, ततोऽपि चर इत्यादि । अनारायणोऽजलशायी अनरसखः अनरा अजीवा सखायो यस्य, ऋषिरलिप्त एवम्भूतो गार्हस्थोऽपि नासक्तः ॥ १६–३७ ॥

### श्रीनाथचक्रवर्तिविरचिता चैतन्यमतमञ्जूषा

पुराणो नरसख इत्यादि । पुराणो नारायणो नारायणादपि पुराण इत्यर्थः। अनरा अमर्त्या एव सखायो यस्य ॥१६–३६॥

### श्रीमद्विश्वनाथचक्रवर्तीकृता सारार्थदर्शिनी

तस्मिन् गृहिण्या सहितं सात्वतपतिं ददर्श । अनुसवं समुचितं प्रतिसमयम् ॥ १३ ॥ अवीविशत् उपवेशयामास ॥१४॥ तस्य चरणौ अवनिज्य प्रक्षाल्य सतां पतिः प्राहेत्युत्तरेणान्वयः । ननु, स्वदासस्य नारदस्य चरणक्षालनादिकमनुचितं तत्राह—ब्रह्मण्यदेव इति । यस्य गुणनाम गुणसूचकं नाम तद्युक्तं नारदस्य ब्राह्मणत्वात् तस्य ब्रह्मण्यदेवत्वादेतत् सर्व्वमुचितमेवेत्यर्थः । नच स स्वपवित्रीकरणार्थमेवेदञ्चकारेति वाच्यमित्याह यत् यस्मात् तस्यैव चरणशौचं गङ्गा अशेषतीर्थं भवति । नारदस्तु दासोऽपि स्वप्रभोरिच्छाप्रातिकूल्ये प्रभुत्वं नाविश्चकारेति ज्ञेयम् ॥ १५ ॥ उदितेन शास्त्रोक्तेन विधिना सम्पूज्येत्यत्र हेतुः ऋषिर्मन्त्रप्रवर्त्तकः किञ्च पुराणः स्वयं भगवत्त्वात् नवः यः खलु तादृशधर्म्मप्रवर्त्तनार्थमत्र भारतभूमौ नरसखो नारायणो भवतीत्यर्थः मितया परिमितया अमृतेनापि जुष्टया सेवितया परममधुरयेत्यर्थः । हे प्रभो विप्रत्वेनास्मत्स्वामिन् ॥ १६ ॥

### गूढार्थदीपिनी

तस्मिन् अन्तर्गृहे विप्रो नारदः गृहिण्या रुक्मिण्या सहितं सात्वतपतिं यदुपतिं श्रीकृष्णं ददर्शेत्यन्वयः । कथंभूतया । चमरमेव व्यजनं तेन परिवीजयन्त्या वायुं प्रसारयन्त्या । पुनश्च । आत्मसमानगुणरूपादियुक्तदासीसहस्रेण युतया । अनुसवं

सर्वकालम् ॥ १३ ॥ भगवान् तं नारदं सन्निरीक्ष्य श्रीपर्यङ्कतः सहसा उत्थितः पादयुगलम् शिरसा आनम्य साञ्जलिः सन् स्वे आसने अवीविशत् उपवेशयामासेत्यन्वयः ॥ १४ ॥ यस्य गुणानुसारि अन्वर्थमिति नाम तत् तस्यैव युक्तं नान्यस्य । यस्य पादशौचं गङ्गाजलम् अशेषाणां लोकानां तीर्थं पावनकरं स गुरुतरः पूज्यतमोऽपि तस्य नारदस्य चरणौ प्रक्षाल्य तदपः स्वमूर्ध्ना विभ्रत् सन् प्राहेत्युत्तरेणान्वयः ॥ १५ ॥ नारायणः ऋषिः उदितेन शास्त्रोक्तेन विधिना देवर्षि सम्पूज्य वाण्या अभिभाष्य सम्बोध्य च प्राह हे प्रभो भगवद्वि भवतं किं करवामेति सम्बन्धः । अमृतवत् मिष्टया मधुरया मितया स्वल्पया । नरस्य अर्जुनस्य सखा । टच् प्रत्ययः ॥ १६ ॥

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः

तस्मिन् भवने अनुसवं सर्वसमयम् आत्मना समानानि समानकल्यानि गुणरूपवयांसि सुवेषः सुष्ठ्वलङ्कारश्च यस्य तेन दासीसहस्रेण युतया ददर्श ॥ १३ ॥ तं देवर्षि सन्निरीक्ष्य श्रीपर्यङ्कतः रुक्मिण्या पर्यङ्कात् आशूत्थितः शिरसा पादयुगलमानम्य स्वे आसने अवीविशत् उपवेशयामास । ननु, सर्वेश्वरस्य सन्निरीक्षणोत्थानादिचेष्टितं किमभिप्रायमत्राह—धर्मभृतां वरिष्ठः धर्मशिक्षकः महत्यागते धर्मभृद्भिरेवं कर्तव्यमिति लोकशिक्षार्थमित्यर्थः । यथोक्तं महाभारते—

"चक्षुर्दद्यान्मनो दद्याद्वाचं दद्यात्सुसूनृताम् । उत्थाय चासनं दद्यात्स यज्ञः पञ्चदक्षिणः ॥ इति ॥ १४ ॥

जगतामनन्तकोटिब्रह्मादीनां सर्वेषां पतिः स्वाम्यपि यत् यस्य चरणशौचं चरणप्रक्षालनजलं श्रीगङ्गादिरूपमशेषतीर्थं स एवम्विधोपि तस्य ब्रह्मपुत्रस्य स्वानन्यदासस्य स्वामिलीलाप्रातिकूल्यभयात् तूष्णींस्थितस्य सर्वत्र प्रसिद्धस्य चरणौ अवनिज्य प्रक्षाल्य स्वमूर्ध्ना विभ्रत् विभ्राणः देवर्षिवर्यं सम्पूज्य अभिभाष्य च प्राहेत्युत्तरेणान्वयः । एवम्विधे आचरणे करणे कारणं दर्शयति–ब्रह्मण्यदेव इति । यद्गुणकृतं नाम तस्यैव युक्तं नान्यस्य अयमर्थः ब्राह्मणेभ्यः वेदविप्रपरश्वरेभ्यो हितकृतो ब्रह्मण्याः धार्मिकास्तेषु शिक्षकरूपेण नानावतारैर्दीव्यतीति देवः लोकशिक्षायै, तथाविधमाचरणं कृतवानिति फलितार्थः ॥ १५ ॥ ऋषि-र्मन्त्रप्रवर्तकः पुराणः पुराहि नवः नारस्य नरसमूहस्य अयममाशयः नरसखः अभिभाष्य स्वागतमित्यादिप्रियमुक्त्वा ॥ १६ ॥

### श्रीसत्यधर्मकृता भागवतटिप्पणी

तस्मिन्यस्मिन्प्रविष्टस्तत्र । समानगुणवयः सुवेषं यद्दासीसहस्रं तेन युतेन रुक्मदण्डेन चमरसम्बन्धिव्यजनेन चाम-रेणानुसवं धारा अविच्छेदेनेत्यनुक्षणं परिवीजयन्त्या गृहिण्या भार्यया सहितं सात्वतपतिं विप्रो ददर्श । ब्रह्मपुत्रत्वाद्विप्र इत्युक्तिः ॥ १३ ॥ भगवांस्तं नारदम् । तमित्यावर्तितमागतमित्यर्थे । तकरश्चागत इति विश्वः । सन्निरीक्ष्य सहसा झटिति श्रीपर्यङ्कतः श्रीमत्पर्यङ्कत उत्थितः । तत्रोत्तरत्र तन्त्रं धर्मभृतां वरिष्ठ इति । किरीटजुष्टेन शिरसा पादयुगलमानम्य नत्वा साञ्जलिर्घटितकरसम्पुटिः स्वे आसने न्यवीविशदुपवेशयामास ॥ १४ ॥ जगद्गुरुतरोऽपि हि यतः सतां पतिस्ततस्तस्य चरणा-ववनिज्य प्रक्षाल्य तस्य प्रक्षालनस्य सम्बन्धिनीरपः स्वमूर्ध्ना विभ्रत्संस्तमभिभाष्याहेत्युत्तरेणान्वयः । अभिभ्रत् अविभ्र इति व्यत्ययेनान्वय इति केचित् । तदा त्वत्रैवान्वयः । अतो ब्रह्मण्यदेवेति यद्गुणमाम गुणलब्धं नामान्वर्थमिति यावत् । तस्यैव कृष्णस्यैव युक्तम् । किं तन्माहात्म्यमित्यत आह । यस्य चरणयोः शौचं शौचनिःसृतसरित्प्रवरोदकमशेषान्धात्रादींस्तीर्थयति पवित्रयतीति स तथा । एवं स्वविभवे सति स्वमूर्ध्ना नारदनीरं दधारेति ब्रह्मण्य देवनामगुणानुरूपमिति तात्पर्यम् ॥ १५ ॥ नरसखो नारायण इत्यादि ऋषिः । पुराणः सकलकलेवरगत उदितेनातिथिपूजनं यथा शास्त्र उदितं तेनोदितेन विधिना देवर्षि सम्पूज्य । उभयत्र ऋत्यक इति प्रकृतिभावः । मितया शब्दतोऽमृतकल्पया वाण्याऽभिभाष्य स्वामिन्मद्वचनं शृण्वित्युक्त्वा स्वमुखं विधायेति यावत् । हे प्रभो भगवतस्तव किं करवामेति प्राह ॥ १६ ॥

### श्रीमद्वल्लभाचार्य्यकृता सुबोधिनी

यदर्थमेतन्निरूपितं तन्निरूपयति तस्मिन्निति । समाना गुणा औदार्यादयः रत्युपयोगिनो वा मृदुत्वादयः । रूपं सौन्दर्यम् । वयस्तारुण्यम् । सुवेषो वस्त्रादिभिः । रसो हि निर्बद्धः शङ्कां करोतीति, स्वल्पश्च न पोषको भवतीति, महारसानु-भवार्थं दास्यो निरूप्यन्ते । नायिकानां मेलने भिन्नस्वभावत्वात् रसो नोत्पद्यत इति, तासां च कामना नैवंविधेति, केवलभोग-श्चोत्वं वारयितुमाह गृहिण्येति । तनुसवं सर्वकालं दासीसहस्रयुतया भार्यया चमरव्यजनेन सात्वतपतिं वस्तुतः स्वपतिं परि-वीजयन्त्या सह सात्वतपतिं ददर्शति सम्बन्धः । चमरकृतं व्यजनं उद्दीपनकरम्, तथा सुवर्णदण्डयुक्तं च । अयं भगवत्यद्भुतः प्रकारो निरूपितः । नैवंविधः समानानां प्रकारो लोके सामान्यानां सम्भवति । अनेन रात्रावयं भोगकाले गत इति सूचितम् ॥ १३ ॥ तत्र भगवता आतिथ्यप्रकारमाह तं सन्निरीक्ष्येति त्रिभिः । कायिकमानसिकवाचनिकैः । कायिकपूजा सर्वेणापि स्वयोग्या कर्तव्या । अतो भगवानपि तं दृष्ट्वा स्वपदे निवेशितवानिति निरूप्यते । नह्येतस्मादधिका पूजा सम्भवति । अन्या या लौकिको सा सर्वसाधारणो अन्यदोषत्वेन निरूप्यते । एवंकरणे हेतुमाह भगवानिति । अन्यथा अन्यस्माद्भगवति को

विशेषः स्यात्। यदि स्वपदे नोपवेशयेत्। **सहसोत्थित** इति तं प्रति लौकिकभावस्थैर्यं सूचितम्। अन्यथा स्वधर्मविभावे सेवकं प्रति भगवदुत्थानं नोचितं स्यात्। 'ये यथा मां प्रपद्यन्त' इति भगवत्प्रतिज्ञा। स च लौकिकबुद्ध्या भगवन्तं दृष्टवानिति भगवानपि तथैव चकार। **श्रीपर्यङ्कत** इति। अनौचित्यं निरूपितम्। केवललौकिकप्रकारेणापि तथात्वं भवतीति वैदिकप्रकारमाह **सकलधर्मभृतां वरिष्ठ** इति। धर्मभृतो निरन्तरधर्मकर्तारः। ते जीवा एव भवन्ति। तेषां मध्ये श्रेष्ठ इति सजातीयोत्कर्षात् बहिर्दृष्टिरेव तस्य स्थिरीक्रियते। अत एव भगवान् पादयुगलमानम्य। तत्रापि शिरसा धर्मनिष्ठां सूचयितुम्। **किरीटजुष्टेनेति** लोकानिष्ठा। न केवलं स्वयं तद्धर्मावलम्बनं कृतवान्, किन्तु तं चापि स्वधर्मेयोजितवानित्याह **साञ्जलिः स्वे आसने अवीविशदिति**। स्वासने तं निवेशयामासेत्यर्थः। अन्तर्भावितणिच्प्रयोगः। भगवानेव तत्र वस्तुतः स्वधर्मं स्थापितवानिति स्वयमेव तत्रोपविष्ट इति धर्मव्यत्यासं स्थापयितुं अवीविशदित्युक्तवान्। आसनं च श्रीपर्यङ्कमित्येव लक्ष्यते। तत एवोत्थित **इति** स्वपदेनापि तदेवेति गम्यते। आसनपदेन स्वसिंहासनमिति। तथापि अग्रे पृथुकोपाख्याने 'निवासितः प्रियाजुष्टे पर्यङ्के' इति वाक्यात् पर्यङ्कमेवासनस्थानीयम्॥ १४॥ **ततस्तस्य चरणाववनिज्येति** कायिकोऽपि व्यापारः मानसशेषत्वेन निरूप्यते। स्वतः प्रक्षालनं भक्त्यैव सम्भवति। **तदपः** पादावनेजनीरापः स्वस्मिन् नारदधर्मविशाद्भक्तानां भगवच्चरणारविन्दोदकं धार्यमेवेति स्वमूर्ध्ना अबिभ्रत्। नन्वेवमपि लोको भगवन्माहात्म्याभिज्ञः कथं मन्येत, तत्राह **जगद्गुरुतरोऽपीति**। यद्यपि जगतामत्यन्तं गुरुः शास्त्रप्रणेता उपदेष्टा प्रेरकः उपदेशश्च। तथापि सतां पतिर्भवति। 'यद्यदाचरति श्रेष्ठ'निति वाक्यात् भगवत्कृतमेव भगवदीयः करोतीति सतां पालनार्थं तथा कृतवान्। अन्यथा गजेन्द्रवद्वैष्णवानामुपद्रवोऽपि सम्भवेत्। तस्माद्भगवता युक्तमेव भक्तरक्षार्थं कृतमिति हिशब्दार्थः। नन्वेवं सति भक्तिमार्गे विरोधः स्यात्, तत्राह **ब्रह्मण्यदेव** इति। ब्राह्मणानां हितस्तेषां कार्यसाधको देवः। ब्रह्मण्यश्चासौ देवश्चेति तेषामेव पूज्यः। इदं भगवतो गुणनाम **तदेव** युक्तं भवति, यदि तन्मनोरथं साधयेत्। ब्राह्मणाश्च पूजां वाञ्छन्ति, नत्वन्नसत्रम्। तद्भगवत्येव तद्धर्मप्रवर्तके अन्यः प्रवर्तेत, न तु यस्मिन्कस्मिंश्चित्। ननु एतावतापि कथं लोकः प्रवर्तेत, तत्राह **तस्यैव यच्चरणशौचमिति**। अशेषाणि तीर्थानि यस्मिन् गङ्गाजले 'तिस्रः कोट्योऽर्धकोटी चे'ति वाक्यात्। अनेन स्वापकर्षाभावोऽपि निरूपितः॥ १५॥ स्तोत्रमाह **सम्पूज्येति**। पूजाया अनुवादः उत्तरशेषत्वेन। तेन पूजा वाक्यापेक्षया हीना निरूपिता। **देवर्षिवर्यमिति**। अनेन देवा ऋषयश्च पूजितेन प्रीता भवन्तीति। गार्हस्थ्ये ऋणत्रयापाकरणे आवश्यके द्वयमनेनैव भवसीति तस्यावश्यकता सूचिता। ऋषिरिति। नारायणोऽयं अनिरुद्धांशेनैवं करोतीति सूचितम्। पुराणः ऋषिर्नारायण एव, तथापि वेदोद्गमरूपोऽपि भवतीति तन्निराकरणार्थं **नारायणो नरसख** इति निरूपितम्। तस्य च अस्यैव प्रकरणस्यान्ते प्रत्यापत्तिं वक्ष्यति। 'प्रत्यैष्यतां निकाशं म' इति वाक्ये। **विधिनोदितेनेति** पूजायां प्रकार **उक्तः**। अन्यथा ऐश्वर्येण राजसी पूजा प्राप्नोति। वाण्या अमृतया अतिमिष्टया आभाष्य, भो भो नारदेत्युक्त्वा, तं नारदं प्राह। सर्वोत्कर्षः स्वस्वामित्वं स्वस्य च तदाज्ञाकारित्वं पदत्रयेणाह **भगवते, हे प्रभो, ते किं करवामेति**। तृतीयं पदत्रयात्मकं स्वसेवा त्रिविधाप्यत्र कर्तव्येति सूचनार्थम्। तदाज्ञापयेति वाक्यशेषाभिप्रायः॥ १६॥

### श्रीसुबोधिनी-सारः

तस्मिन् गृहे समानान्यात्मतुल्यानि गुणरूपवयांसि सुवेषोऽलंकृतिश्च यस्य तेन दासीसहस्रेण युतया अनुसवं त्रिकालं रुक्मस्य सुवर्णस्य दंडो यस्य तेन चमरव्यजनेन परिवीजनं कुर्वंत्या गृहिण्या श्रिया सह सात्वतपतिं श्रीकृष्णं विप्रो नारदो ददर्श॥ १३॥ तं नारदं संनिरीक्ष्य श्रियो रुक्मिण्याः पर्यंकतः शय्यातः सहसा झटिति उत्थितः सर्वधर्मधारिणां श्रेष्ठो भगवान् तस्य पादयुगलं चरणद्वंद्वं मुकुटसेवितेन शिरसाऽऽनम्य प्रणम्य सांजलिः संयतहस्तः स्वे स्वकीये आसने उपावेशयत्॥ १४॥ तस्य नारदस्य चरणौ अवनिज्य प्रक्षाल्य सतां पतिर्जगद्गुरुतरोऽपि श्रीकृष्णः तदपो जलं स्वमूर्ध्नाऽऽत्मशिरसाधारयत् अशेषतीर्थं सर्वतीर्थमयी गंगा यस्य चरणशौचं पादावनेजनं भवति तस्य हरेर्ब्रह्मण्यदेव इत्येव गुणैर्नाम युक्तं हि निश्चये॥ १५॥ देवः स्वप्रकाशः पुराणो नारायण ऋषिर्नरः सखा यस्य नरस्य सखेति स्वरभेदान्निर्णयः उदितेन वेदोक्तेन विधिना ऋषिवर्यं नारदं संपूज्य अमृतवत् मिष्टया मितयाल्पाक्षरया वाण्याभिभाष्य संबोध्य तं नारदं प्राह हे प्रभो भगवते किं करवामेति॥ १६॥

### श्रीविट्ठलरायात्मजश्रीवल्लभकृतलेखः

**तस्मिन्नित्यत्र। रसो हीति**। कामरसो हि रहसि भोग्यत्वान्निर्बन्धयुक्तो भवति। अतः प्रतिबन्धकागमनशङ्कां करोति। शङ्कायां तु न रसः। अतः प्रतिबन्धकनिवृत्त्यर्थं दास्योऽपेक्ष्यन्ते इत्यर्थः। **स्वल्पश्चेति**। स्वल्प एव नायिकारूपो विभावो रसपोषको न भवति, **तथाचापुष्ट** एव रसोऽनुभूयेत, न तु महारसः। अनेकविभावसत्त्वे तु तैरनेकैरनेककटाक्षादिभिः पोषितो महानेवोद्दीप्तो भवति। ततो मुख्यायामनुभूयेतेत्यर्थः। तर्हि नायिका एव सर्वा मेलनीया इत्याशङ्क्याहुः **नायिकानामिति। केवलभोगेति**। धर्मोपयोगित्वं ज्येष्ठाया एव मुख्यम्, अन्यासां गौणम्, अतः **केवलपदम्**। वीजनक्रियायां दर्शनक्रियायां च 'सात्वतपति'मित्येव कर्मेति वारद्वयमुक्तम्। **व्याख्याने**। तत्तात्पर्यमाहुः **वस्तुतः स्वपतिमिति**। स्वस्यापि भग-

दीयत्वेन सात्त्वतत्वादिति भावः । अयमिति । गृहिण्या परिवीजनरूपः प्रकार इत्यर्थः । नैवंविध इति लोके सामान्यानां जनानां मध्ये कुलशीलादिना समानानां पत्नीनां परिवीजनरूपः प्रकारो न सम्भवति, तस्य दासधर्मत्वादितिभावः । अनेनेति । गृहिणी-साहित्यकथनेनेत्यर्थः । तं सन्निरीक्ष्येत्यत्र । अवीविशदिति यङ्लुगन्ताल्लङा णिजर्थस्त्वन्तर्भावित इत्याहुः अन्तर्भावितणिच्-प्रयोग इति । धर्मव्यत्यासमिति । नारदस्थाने स्वयमुपविष्टः, स्वस्थाने नारद इति वेशनधर्मव्यत्यासः । इदमेव पौनःपुन्यमिति-भावः । तस्यावनिज्येत्यत्र । गुरुतर इति । तरप्प्रत्ययार्थमाहुः शास्त्रेतिपदचतुष्टयेन । नामात्मकमपि भगवत्स्वरूपमेवेत्याशयेन उपदेशरूपोपि स्वयमेवेत्युक्तम् । सम्पूज्येत्यत्र । प्रकरणस्थान्त इति । अन्ते इति सामीप्यसप्तमी । मतान्तरसिद्धस्य सात्त्विक-प्रकरणस्यान्तसमीपेऽध्याये । अन्तात्पूर्वाध्याये द्विजात्मजा अमी इति श्लोके इत्यर्थः ।

### गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

तस्मिन् भवने गृहिण्या रुक्मिण्या सहितं सात्वतपतिं श्रीकृष्णं विप्रो नारदो ददर्शेत्यन्वयः । रुक्मिण्याः कृष्णे स्नेहा-धिक्यं सूचयंस्तां विशिनष्टि—अनुसवं सर्वकालं आत्मना समानानि गुणरूपवयांसि सुवेषः अलंकारश्च यस्य तेन दासीनां सहस्रेण युतयापि रुक्ममयो दण्डो यस्य तेन चामरव्यजनेन तं वीजयन्त्या ॥ १३ ॥ तं नारदं सम्यक् निरीक्ष्य भगवान् श्रियो रुक्मिण्याः पर्यङ्कात् सहसा आशु उत्थितः सन् किरीटजुष्टेन शिरसा तस्य पादयुगलं प्रणम्य साञ्जलिः सन् स्वकीये आसने अवीविशत् उपवेशयामासेत्यन्वयः । एवं मुनिसंमानने हेतुमाह—सकल धर्मभृतां वरिष्ठमिति । धर्मनिष्ठैरेवं साधुसन्माननं कर्तव्यमिति शिक्षार्थम् ॥ १४ ॥ जगतां ब्रह्मादिप्राणिनां गुरुतरोपि पूज्यतमोपि तस्य नारदस्य चरणौ अवनिज्य प्रक्षाल्य तदपः प्रक्षालनजलानि स्वमूर्ध्ना अबिभ्रत् अभिदधारेत्यर्थः । तत्रोक्तमेव हेतुमाह—सतांपतिरिति । हि यस्मात् सतां धर्ममार्गवर्तिनां पतिः पालकः, अतस्तच्छिक्षार्थं तच्चरणोदकं मूर्ध्नि दधारेत्यन्वयः । अतः ब्राह्मणकुले साधवो ब्रह्मण्यास्तेषां देवः प्रवर्तकः फलदश्चेति यद्गुणनाम अन्वर्थं नाम तत्तस्यैव युक्तम् । जगद्गुरुतरत्वमेव स्पष्टयति—यच्चरणेति । यस्य चरणशौचं गङ्गा अशेषाणां ब्रह्मादीनां सर्वेषां तीर्थं पावित्र्यकरमित्यर्थः ॥ १५ ॥ नरस्य सखा नारायणः उदितेन शास्त्रोक्तेन विधिना एवं देवर्षिवर्यं तमृषिं नारदं संपूज्य अमृतेन जुष्टया अमृतवर्षिण्या मितया स्वल्पाक्षरया वाण्या हे प्रभो ! इति तं अभिभाष्य संबोध्य भगवते ऐश्वर्यादिपूर्णाय तुभ्यं किं करवामेति प्राहेत्यन्वयः ॥ १६ ॥

### अन्वितार्थप्रकाशिका

तस्मिन्निति ॥ तस्मिन् भवने अनुसवं सर्वकालम् आत्मना समानानि गुणरूपवयांसि सुवेषः अलङ्कारश्च यस्य तेन दासीनां सहस्रेण युतयाऽपि रुक्ममयो दण्डो यस्य तेन चमरव्यजनेन तं वीजयन्त्या गृहिण्या रुक्मिण्या सहितं सात्वतपतिं श्रीकृष्णं विप्रो नारदो ददर्श ॥ १३ ॥ तमिति ॥ तं नारदं सम्यक् निरीक्ष्य सकलधर्मभृतां वरिष्ठो भगवान् श्रियो रुक्मिण्याः पर्यङ्कात् सहसा आशु उत्थितः सन् किरीटजुष्टेन शिरसा तस्य पादयुगलं आनम्य साञ्जलिः सन् स्वे स्वकीये आसने अवीविशत् उपवेशयामास ॥ १४ ॥ तस्येति ॥ ब्राह्मणकुले साधवो ब्रह्मण्यास्तेषां देवः प्रवर्तकः फलदश्चेति यद्गुणनाम अन्वर्थं नाम तत्तस्यैव युक्तं समञ्जसं यस्य चरणशौचं गङ्गा अशेषाणां ब्रह्मादीनां सर्वेषां तीर्थं पावित्र्यकरं सः जगतां ब्रह्मादिप्राणिनां गुरुतरोऽपि पूज्यतमोऽपि हि यस्मात् सतां पतिः पालकः अतः तच्छिक्षार्थं न तु स्वपावित्र्यार्थं तस्य नारदस्य चरणौ अवनिज्य प्रक्षाल्य तदपः प्रक्षालनजलानि स्वमूर्ध्ना बिभ्रत् धारयन् उपविवेशेति शेषः । यद्वा । अबिभ्रत् अबिभः दधार । आर्षः ॥ १५ ॥ संपूज्येति ॥ पुराणः ऋषिः मन्त्रप्रवर्त्तकः नरस्य सखा नारायणः उदितेन शास्त्रोक्तेन विधिना एवं देवर्षिवर्यं नारदं संपूज्य अमृतेन जुष्टया अमृतवर्षिण्या मिष्टयेति वा पाठः । मितया स्वल्पाक्षरया वाण्या हे प्रभो ! दिष्ट्या त्वदागमनम् इति तम् अभिभाष्य सम्बोध्य भगवते ऐश्वर्यादिपूर्णाय तुभ्यं किं करवामेति प्राह स्म । हे इति पृथक् छेदः ॥ १६ ॥

### श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्

तस्मिन्गृहे । अनुसवं समग्रकालं समानास्तुल्याः गुणादयो यस्य तेन दासीसहस्रेण युतया गृहिण्या रुक्मिण्या सहितं श्रीकृष्णं ॥ १३ ॥ तं नारदं समीक्ष्य श्रीपर्य्यंकतो भैष्मी पर्यंकात् सहसोत्थितः । स्वे स्वकीये आसने । अवीविशत् उपवेशयां चकार ॥ १४ ॥ तदपः नारदचरणप्रक्षालनावशिष्टानि जलानि । बिभ्रत् दधत् अबिभ्रत् दधारेति वा पदच्छेदः यतः ब्रह्मण्यदेव इति तस्य श्रीकृष्णस्य यत् गुणेन सहितं नाम अभिधानं युक्तं योग्यमस्ति । कीदृशस्य तस्य यस्य चरणशौचं भागिरथी । अशेषाणि तीर्थानि यस्मिंस्तथाभूतं भवति । एवंभूतोपि श्रीकृष्णः सन्माहात्म्यं सूचयन् सन्नेवं कृतवानिति बोध्यं ॥ १५ ॥ अभिभाष्य महाभाग्येन तव दर्शनं जातमित्युक्त्वा । भगवते तुभ्यं ॥ १६ ॥

### भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

तस्मिन्निति । तस्मिन् उक्तविधभवने, समानान्यात्मना तुल्यानि गुणरूपवयांसि सुवेषोऽलंकारश्च यस्य सत्य तद्दासी-सहस्रं च तेन युता तया, रुक्मदण्डेन चमरव्यजनेन, अनुसवं सर्वकालं, परिवीजयन्त्या च, गृहिण्या रुक्मिण्या भार्यया, सह

वर्तमानं, सात्वतपतिं श्रीकृष्णं, विप्रो नारदः, ददर्श ॥ १३ ॥ तमिति । सकलधर्मभृतां वरिष्ठः भगवान् श्रीकृष्णः, तं नारदं, संनिरीक्ष्य, सहसा तत्क्षणमेव, श्रीपर्यङ्कतः रुक्मिण्याः पर्यङ्कात्, उत्थितः सन्, किरीटजुष्टेन शिरसा, पादयुगलं नारदाङ्घ्रिद्वन्द्वं, आनम्य, साञ्जलिः सन्, स्वे स्वकीये, आसने अवीविशदुपवेशयामास ॥ १४ ॥ तस्येति । जगद्गुरुतरः जनानामतिशयेन परमगुरुः अपि, यस्य श्रीकृष्णस्य चरणशौचं गङ्गा अशेषतीर्थं, सः, सतां पतिः श्रीकृष्णः, तस्य नारदस्य, चरणौ, अवनिज्य, तदपो नारदपादावनेजनजलानि, स्वमूर्ध्ना स्वशिरसा, अबिभ्रत् । हि यतः, ब्रह्माणि साधवो ब्रह्मण्यास्तेषां देवः, इति यद्गुणनाम गुणैः कृत्वा जातं यदन्वर्थं नाम, तत् तस्य श्रीकृष्णस्यैव, युक्तं योग्यं, अस्ति । ब्रह्मण्यदेवत्वादस्य शिरसि विप्राङ्घ्रिक्षालनजलधारणमुचितमेवेति भावः ॥ १५ ॥ संपूज्येति । पुराणः ऋषिः, कल्पादौ ब्रह्मणोऽप्युपदेष्टृत्वात्पुराणः ऋषिः, गोपालोपनिषदि 'कल्पादौ विरिञ्चि कृष्ण उपादिशत्' इत्युक्तेः । कृष्णस्य पुराणर्षित्वं, न तु नारायणर्ष्यवतारत्वम् 'एते चांशकलाः पुंसः कृष्णस्तु भगवान् स्वयम्' इत्युक्तेर्नारायणस्यांशावतारत्वात् कृष्णस्य पूर्णावतारत्वाच्च । नराणां स्वभक्तजनानां सखेति नरसखः, 'नरैः सार्द्धं विहारित्वान्नरधर्मानुकाराद्वा नरसख इति लघुभागवतामृते दर्शनात् । नारं जीवसमूहः स अयनमन्तर्यामितयाऽऽवासस्थानं यस्य स नारायणः श्रीकृष्णः, उदितेन शास्त्राभिहितेन विधिना, देवऋषिवर्यं नारदं, संपूज्य, अमृतमिष्टया अमृततोऽपि मधुरया, मितया परिमिताक्षरया, वाण्या, तं नारदं, आभभाष्य दिष्ट्याऽत्र त्वदागमनमित्यादि प्रियमुक्त्वा, हे प्रभो, भगवते पूज्याय तुभ्यं, किं करवामहे भवदीयं किमिष्टं करवामेति, प्राह । अत्र नारायणनरसखशब्दाभ्यां धरिष्यमाणस्वावतारार्थोऽपि संदर्शितः । स यथा नरन्ति स्ववचनानुसारेण धर्मपालनादौ स्वाङ्गानि नयन्तीति नरा मुक्तानन्दब्रह्मानन्दादयो मुनयस्ते सखाय इव यस्येति नरसखः । नरो धर्मस्तत्यापत्यं नारायण इति ॥ १६ ॥

### कृष्णप्रिया

राजमहल में प्रवेश करके देवर्षि नारदजी ने देखा कि भगवान् श्रीकृष्णचन्द्रजी उस भवन की महारानीजी श्री रुक्मिणी जी के साथ बैठे हुए हैं, और श्री स्वामिनी श्री रुक्मिणीजी अपने कर कमलों से श्री द्वारिकानाथ जी को सुवर्ण की डाँडीवाले चामर से सेवा कर रही थी ॥ १३ ॥ नारदजी को देखते ही समस्त धार्मिकों के मुकुटमणि भगवान् श्रीकृष्ण रुक्मिणीजी के पलँग से सहसा उठ खड़े हुए । उन्होंने देवर्षि नारद के युगलचरणों में मुकुटयुक्त सिर से प्रणाम किया और हाथ जोड़कर उन्हें अपने आसनपर बैठाया ॥ १४ ॥ परीक्षित् ! इसमें सन्देह नहीं कि भगवान् श्रीकृष्ण चराचर जगत् के परम गुरु हैं और उनके चरणों का धोवन गङ्गाजल सारे जगत् को पवित्र करने वाला है । फिर भी वे परमभक्तवत्सल और संतों के परम आदर्श, उनके स्वामी हैं । उनका एक असाधारण नाम ब्रह्मण्यदेव भी है । वे ब्राह्मणों को ही अपना आराध्यदेव मानते हैं । उनका यह नाम उनके गुण के अनुरूप एवं उचित ही है । तभी तो भगवान् श्रीकृष्ण ने स्वयं ही नारदजी के पाँव पखारे और उनका चरणामृत अपने सिरपर धारण किया ॥ १५ ॥ नरशिरोमणि नर के सखा सर्वदर्शी पुराणपुरुष भगवान् नारायण ने शास्त्रोक्त विधि से देवर्षिशिरोमणि भगवान् नारद की पूजा की । इसके बाद अमृत से भी मीठे किन्तु थोड़े शब्दों में उनका स्वागत-सत्कार किया और फिर कहा—'प्रभो ! आप तो स्वयं समग्र ज्ञान, वैराग्य, धर्म, यश, श्री और ऐश्वर्य से पूर्ण हैं । आपकी हम क्या सेवा करें ?' ॥ १६ ॥

### नारद उवाच

नैवाद्भुतं त्वयि विभोऽखिललोकनाथे मैत्री जनेषु सकलेषु दमः खलानाम् ।
निःश्रेयसाय हि [१]जगत्स्थितिरक्षणाभ्यां [२]स्वेच्छावतार उरुगाय विदाम सुष्ठु ॥ १७ ॥
दृष्टं तवाङ्घ्रियुगलं जनतापवर्गं ब्रह्मादिभिर्हृदि विचिन्त्यमगाधबोधैः[३] ।
संसारकूपपतितोत्तरणावलम्बं ध्यायंश्चराम्यनुगृहाण यथा स्मृतिः स्यात् ॥ १८ ॥
ततोऽन्यदाविशद् गेहं कृष्णपत्न्याः स[४] नारदः । योगेश्वरेश्वरस्याङ्ग योगमायाविवित्सया ॥ १९ ॥
दीव्यन्तमक्षैस्तत्रापि प्रियया चोद्धवेन च । पूजितः परया भक्त्या प्रत्युत्थानासनादिभिः ॥ २० ॥
पृष्टश्चाविदुषेवासौ कदाऽऽयातो भवानिति । क्रियते किं नु पूर्णानामपूर्णैरस्मदादिभिः ॥ २१ ॥
अथापि ब्रूहि नो ब्रह्मन् जन्मैतच्छोभनं कुरु । स तु विस्मित उत्थाय [५]तूर्णमन्यदगाद् गृहम् ॥ २२ ॥

---

१. जगतां स्थिति-विज. । २. स्वैरा-श्रीधर. वंशी. जीव. वीर. विज. विश्व. । ३. बोधं-वीर. । ४. स्म नारदः-श्रीधर. वंशी. जीव. विज. विश्व. । ५. तूष्णीं-श्रीधर. वंशी. जीव. वीर. विज. विश्व. ।

### कर्दमक्षमा

अन्वयः—नारद उवाच—हे विभो ! अखिललोकनाथे, त्वयि; एतत्, अद्भूतम्, न, यत्, खलानाम्, दमः, सकलेषु, जनेषु, मैत्री, जगत्, स्थितिरक्षणाभ्याम्, निःश्रेयसाय, हि, ते, स्वेच्छावतारः, उरुगाय, सुष्ठु, विदाम ॥ १७ ॥ अगाधबोधैः, ब्रह्मादिभिः, हृदि, विचिन्त्यम्, जनतापवर्ग, संसारकूपवनितोन्त, रणावलम्बम्, तव, अङ्घ्रियुगलम्, दृष्टम्, ध्यायन्, चरामि, यथा, स्मृतिः, स्यात् ॥ १८ ॥ हे अङ्ग, ततः, सः, नारदः, योगेश्वरस्य, योगमाया, विवत्सया, कृष्णपत्न्याः, अन्यत्, गेहम् ॥१९॥ तत्र, अपि, प्रियया, च, उद्धवेन, अक्षैः, दीव्यन्तम्, अपश्यत्, तत्र, परया, भक्त्या, प्रत्युत्थानादिभिः, पूजितः ॥ २० ॥ असौ, अविदुषा, इव, पृष्टः, कदा, भवान्, आयातः, इति, अपूर्णैः, अस्मदादिभिः, पूर्णानाम्, किं नु, क्रियते ॥ २१ ॥ ब्रह्मन्, अथ, अपि, नः, ब्रूहि, एतत्, नः, जन्म, शोभनम्, कुरु, सः, तु, विस्मितः, उत्थाय, तूर्णम्, अन्यत्, गृहम्, अगात् ॥ २२ ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

भगवता स्वस्यार्हणमनर्हं मन्यमानस्तत्संभावयन्नाह । नैवेति । सर्वमित्रत्वादेवमर्हणं न तु मम गौरवात् तर्हि कथं कंसादिष्वमैत्री तत्राह । खलानां दमश्च नैवाद्भुतमिति । कुतः । जगतः स्थितिर्धारणं रक्षणं पालनं ताभ्यां सह तस्य निःश्रेयसाय तवायं स्वेच्छावतार इति वयं सुष्ठु सम्यग्विद्मः । अतः खलदमः साधुसंमाननं च युक्तमिति भावः ॥ १७ ॥ यदुक्तं प्रभो किं करवामेति तत्राह । दृष्टमिति । भक्तजनताया अपवर्गरूपम् । किंच अतिदुर्लभतया ब्रह्मादिभिर्योगेश्वरैरपि हृदि विचिंत्यम् । किंच संसारकूपे पतितानामुत्तरणायावलंबमाश्रयम् । एवंभूतं तवांघ्रियुगलं मया दृष्टमतः कृतकृत्योऽस्मि । तथापि त्वत्स्मृतिर्यथा स्यात्तथाऽनुगृहाण ततस्तद्ध्यायन्नेव नित्यं चरामीति ॥ १८-१९ ॥ अक्षैर्दीव्यंतमित्यादौ ददर्शेति ज्ञातव्यम् ॥ २०-२३ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

तत् अर्हणम् । संभावयन्संभवं मन्वानः । तत्राक्षेपे । अद्भुताभावमाशंक्य समाधत्ते—कुत इति । तस्य जगतः । लोके हि सेव्यो यदि सेवकमर्चयेत्तदा तस्यामंगलं भवेत्त्वं तु स्वतंत्रः स्वसेवकं संपूज्यापि तस्मात्पूजां गृहीत्वापि तं दंडयित्वापि तस्य यथार्हं मंगलमेव करोषीत्याह—नैवेति । तत्राखिललोकानां नाथत्वादखिललोकानां जीवत्वात्त्वत्सेवकत्वमेव वस्तुतो भवेत् । तदुक्तं पाद्मे—"अकारेणोच्यते विष्णुः श्रीरुकारेण कथ्यते । मकारस्तु तयोर्दासः पंचविंशः प्रकीर्तितः ॥" इति । पञ्चविंशो जीवः । तत्र केषांचिदस्माकं विप्राणां त्वामभीक्ष्णं सेवमानानामपि त्वत्कर्तृकं पूजनमस्मन्मनोतिदुःखदं केषांचिदुद्धवविदुरादीनां त्वां सेवमानानां त्वत्कर्तृकं पूजाग्रहणं तन्मनोतिदुःखदम् । अन्येषां पशुतुल्यसंसारिणां त्वामभजतां त्वत्कर्तृककृपावलोकः । अन्येषां खलानां जरासंधादीनां दमस्त्वत्कर्तृकं सर्वमिदं ते मैत्रीं हितकारित्वमेव यतो जगतः स्थितिर्धारणं रक्षणं पालनं ताभ्यां सह निःश्रेयसाय प्रेमभक्तियोगाय मोक्षाय च स्वैरोऽयमवतार इति जानीम इति विश्वनाथः ॥ १७ ॥ भगवत्प्रश्नोत्तरमाह—भो मुने किमर्थमागमनं किमत्रैव तिष्ठासान्यत्र प्रतिष्ठासेत्यपेक्षायामाह—दृष्टमिति । किमित्याक्षेपे कुत इत्यर्थः । विचिंत्यमेव न तु प्राप्यमित्यर्थः । इतोऽपि विशेषमाह—किञ्चेति । उत्तरणायोपर्य्यागमनाय । अतस्तवांघ्रिदर्शनात् । ततस्तवानुग्रहात् । तत् चरणद्वंद्वम् । ननु तद्ध्यानं तव मनःसाध्यमेव किं प्रार्थनया तत्राह—यथा स्मृतिस्स्यात्तथाऽनुगृहाणेति । तदपि त्वदनुग्रहसाध्यं नान्यसाध्यमित्यर्थः । यद्वा—यथा च स्मृतिर्मद्विषयकं कृपानुसंधानं तव स्यात्तथानुगृहाणेत्यर्थः ॥१८॥ ततो भगवत्प्रार्थनोत्तरम् । स कृष्णसत्कृतः । अंगेति संबोधने । कृष्णपत्न्याः क्रमप्राप्तत्वात्सत्यभामाया गेहमाविशत् योगमाया परमाचिंत्यशक्तिस्तस्या विवित्सया कार्यद्वारानुभवेच्छया ॥ १९ ॥ तत्रापि तस्मिन्नपि गेहे ॥ २० ॥ असौ नारदः । अविदुषेव पूर्वं गृहे नारदागमनमजानतेव । पूर्णानां विरक्तानां युष्माकम् । अपूर्णगृहस्थैः । गृहकृत्यानामनंतत्वेन पूरयितुमशक्नुवद्भिरित्यर्थः । मनुष्यनाट्यविडंबनमेतत् ॥ २१ ॥ यद्यपि वयमनिच्छास्तथाप्यस्मत्पावनार्थमित्यर्थः । स नारदः ॥ २२ ॥

### श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी

नैवाद्भुतमिति सामान्यविवक्षया नपुंसकत्वमेकत्वञ्च किं तदित्यपेक्षायां विशेषविवक्षयाह मैत्री यथार्हसत्कारः अखिललोकनाथ इति तद्रूपत्वेन स्वतस्तत्र तत्र तुल्योऽपि तद्द्वयं नैवाद्भुतमित्यर्थः । तत्र हेतुः, निःश्रेयसायेति । तत्र निःश्रेयसे स्वभक्तिप्रचुरमङ्गलं मुक्तिमात्रञ्च तद्द्वयं यथायथं दत्तमित्यर्थः । तत्र तत्र सामर्थ्ये हेतुः, विभो इति । अत एव हे उरुगाय ! सर्वतो गीतकीर्त्ते ॥ १७ ॥ जनतेति सिद्धशुद्धपरिजनभावानां पर्य्यवसानफलरूपं ब्रह्मादिभिरित्यन्येषां परममहतामपि हृदि परमरहस्यहृद्वृत्तिविशेषे विचिन्त्यं यत्नातिशयेन स्मरणीयं संसारेति किं बहुना सर्वेषामपि संसारिणां संसारकूपोत्तरणार्थमाश्रययोग्यं तवाङ्घ्रियुगलं दृष्टम् अहो मम भाग्यमहिमेतिभावः । अथ तादृशस्य भाग्यस्य स्थैर्यं दुर्लभं मन्यमानः प्रार्थयते—ध्यायन्निति । चरामि चरेयमित्यर्थः । ननु तत्तव मनःसाध्यमेव किं प्रार्थनया तत्राह यथा स्मृतिः स्यात्तथाऽनुगृहाणेति तदपि त्वदनुग्रहैकसाध्यं नान्यसाध्यमित्यर्थः । यद्वा यथा ध्यायंश्चरामि तथाऽनुगृहाण यथा च स्मृतिर्मद्विषयककृपानुसन्धानं तव

स्यात्तथा चानुगृहाणेत्यर्थः ॥ १८ ॥ तस्तदनंतरम् अन्यत् श्रीरुक्मिणीगृहादपरं पत्न्याः क्रमप्राप्तत्वात् श्रीसत्यभामायाः गेहमाविशत् । योगमाया चित्रं बतैतदित्यादिना तर्किता परमाचिन्त्यशक्तिः तस्या विवित्सया कार्य्यद्वारा अनुभवेच्छया ॥ १९ ॥ तत्रापि श्रीकृष्णं ददर्शेति शेषः । किम्वा अचष्टेति वक्ष्यमाणेनैवान्वयः । उद्धवेन च तत्र साक्षितया स्थापितेन चकाराभ्याम् देवने द्वयोरपि प्राधान्यं बोध्यते साक्षिणोपि तत्क्रीडासाहाय्यात् पूजितोऽसौ श्रीभगवता ॥ २० ॥ पप्रच्छ इति सार्द्धकम् । अविदुषा तदागमनादिकमजानतेव पृष्टश्च किन्तत् कदेत्यादि क्रियत इत्यादि च । इतिशब्दस्य कुर्वित्यन्तेष्वन्वयात् अस्मदिति बहुत्वं श्रीबलदेवाद्यपेक्षया ब्रूहि किञ्चिदादिश ॥ २१ ॥ अचष्ट अपश्यत् गोविन्दं तादृशलीलाकौतुकाय पृथ्व्यामवतीर्णं साक्षाद्भगवन्तं तत्रापि तथाग्रे सर्वतोपि तस्य पूर्ववत्पूजादिकं ज्ञेयं पूर्वत्र तत्रापीत्यादिशब्दस्वारस्यात् इत्यर्थधर्मकामेष्वित्यत्र तथैव व्याख्यास्यमानत्वाच्च शिशून् सुतानिति सुतान् शिशूनिति वा पाठः ॥ २२ ॥

### श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी

अखिललोकानां नाथेऽपि त्वयि नैवाद्भुतं मदर्हणादिकमेतदिति शेषः। यतो जनेषु तव मैत्री स्नेहः, न च सा लोकानामिव किञ्चिदपेक्षयेत्याह—विभो ! हे सर्व्वथा परिपूर्णेति । हि हेतौ, स्वैरावतारः स्वेच्छया वैकुण्ठलोकादवतरणम्, अतएव ऊरुगाय । सर्व्वलोकेषु यशो गानं यस्येति तत्सम्बोधनम् । अन्यत्तैर्व्याख्यातम् । यद्वा, जनेषु मादृशेषु भक्तेषु मैत्री, खलानामभक्तानां दमो दण्डश्चेत्येतत् अखिललोकनाथत्वात् सर्व्वत्र तुल्येऽपि त्वयि नैवाद्भुतम्, यतः सम्यक् समीचीनोऽयं स्वैरावतारः सर्व्वेषां निःश्रेयसाय मंगलाय । कथम् ? जगतः स्थितिः स्वभक्तमैत्र्या भक्तिप्रवर्त्तनेन स्थैर्य्यं पोषणं वा, रक्षणञ्च खलदमेन भक्तिविघ्नविनाशात्, ताभ्याम्; एतत् प्रकारद्वयेनेत्यर्थः । यथा समत्वेन विरुद्धमपि तद्द्वयं त्वयि नैवाद्भुतं तथा दासस्य मम प्रभुणा त्वयार्हणादिकं विरुद्धमपि तव सम्यक् स्वैरत्वादद्भुतं नैवेति भावः ॥ १७ ॥ विचिन्त्यमङ्घ्र्योर्युगलमपि विलम्बेनैव चिन्त्यम्, जनतेति मोक्षापेक्षकैरेव प्रीत्या सेव्यत्वम्, ब्रह्मेति मुक्तैरप्यदृश्यत्वम्, संसारेति मुमुक्षूणां परमापेक्षत्वमिति महादौर्लभ्यमुक्तम् । एवमात्मनो भक्तत्वादिराहित्यं सूचयति,—परमभक्त्या दैन्येन तत्तदभिमानाभावात् । अन्यत्तैर्व्याख्यातम् । यद्वा, जनानां भक्तानां तापस्य विरहजस्य वर्गः साक्षाद्दर्शनादिना वर्ज्जनं यस्मात्तत्; इति भक्तैः प्राप्यत्वं चरामि चरिष्याम्येव; यद्वा, अत्र गृहे गृहं चरामि, यतो दृष्टं साक्षाद्दृष्टतया स्वतः सदान्तःपरिस्फूर्त्तेः, किन्तु यथा कर्तृका मत्स्मृतिः स्यात्तथानुगृहाण, सदाविघ्नेन त्वं मां स्मरेस्तमनुग्रहं कुर्व्वित्यर्थः ॥ १८ ॥ ततस्तदनन्तरम्; अन्यत् श्रीरुक्मिण्या गृहाद्भिन्नम्, कृष्णस्य प्रेमभरेण चित्ताकर्षकस्य, पत्न्याः श्रीसत्यभामाया गेहमाविशत्, योग ऐश्वर्य्यम्, तस्य माया विभूतिस्तस्या विवित्सया तत्त्वजिज्ञासया, किंवा विद्लाभे साक्षादनुभवेच्छया योगेश्वराणां श्रीकर्द्दमादीनामपीश्वरस्येति योगमायाया असाधारण्यं सूचितम् । अंग ! हे राजन् ! यद्वा, अंगं श्रीमूर्त्तिस्तस्य योगमाया एकस्यापि बाहुल्ये शक्तिविशेषस्तद्विवित्सया ॥ १९ ॥ अपि तु तत्र तु, दीव्यन्तं भगवन्तम्; यद्वा, तत्रापि कृष्णं ददर्शेति शेषः । किंवा अचष्ट गोविन्दमिति वक्ष्यमाणेनैवान्वयः । च-काराभ्यां देवने द्वयोरपि प्राधान्यम्, तेन चोद्धवं प्रति प्रीतौ तयोः साम्यमपि द्योतयति । पूजितोऽसौ श्रीभगवता, आदि-शब्दात् पाद्यादयः ॥ २० ॥ अविदुषा तदागमनादिकमजानतेव, उक्तञ्च क्रियत इत्यादिकम्, अस्मदादिभिर्मनुष्यैर्यादवैरीश्वरैर्वा वा, अस्मदिति बहुत्वं श्रीबलदेवाद्यपेक्षया, किंवा निजसर्व्वैश्वर्य्यपूर्णताबोधनार्थं गौरवात् ॥ २१ ॥ ब्रूहि किञ्चिदादिश; किमर्थम् ? तदाह—नोऽस्माकं जन्मेति । ब्रह्मन् ! हे सर्व्ववेदस्वरूपेति तद्योग्यतोक्ता ॥ २२ ॥

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम्

नरनारायणीयं हि वैभवं वर्णयन् मुनिः । कृष्णं नारायणश्चाहानन्तमूर्ति स्वशेषिणम् ॥

स्थितिः रक्षणञ्च विरोधिनिरसनं ताभ्यां तदर्थं निःश्रेयसाय मोक्षप्रदानाय स्वैरावतारः स्वेच्छावतारः ॥ १८-१८ ॥

योगमाया आश्चर्यशक्तिः ॥ १९-४४ ॥

### श्रीमद्वीरराघवाचार्यकृता भागवतचन्द्रचन्द्रिका

इत्युक्तः प्राह नारदः—नैवेति द्वाभ्याम् । तावदात्माहंणमनर्हणम्मन्यमानस्तत्सम्भावयन्नाह—नैवेति । सर्वेषु जनेषु विषयभूतेषु मैत्रीत्येतल्लोकनाथे त्वयि नैव चित्रं सर्वमित्रत्वा देवमर्हणं नतु ( मयि ) गौरवादितभावः । कथं तर्हि कंसादिष्वमैत्री ? तत्राह—दम इत्यादि । खलानां दमश्च नैवाद्भुतम् इति भावः । कुतः हि यस्मात् हे उरुगाय जगतः स्थितिर्द्धारणं रक्षणं पालनं ताभ्यां चतुर्थ्यन्तमिथं निःश्रेयसाय मोक्षप्रदानाय च ताभ्यां सह मोक्षप्रदानायेति वा स्वैरावतारः स्वेच्छावतारः इति वयं सुष्ठु सम्यक् विद्मः अतः खलदमनः साधुसम्माननञ्च तव युक्तमिति भावः । वयमिति भगवन् कृतार्थत्वादात्मानं बहुमन्यमानः प्राहेत्यर्थः ॥१७॥ यदुक्तं प्रभो भगवते करवाम किं त इति तत्र स्वमनोचितं तत्प्रार्थ्यते— दृष्टमिति । तावत्ताङ्घ्रियुगलं

दृष्टं मयेति शेषः। कथम्भूतम् ? जनतायाः प्रपन्नजनसमूहस्यापवर्गमपवर्गसाधनं फलभूतं वा किञ्चातिदुर्लभतया ब्रह्मादिभिर्योगीश्वरैरपि हृदि विचिन्त्यः अगाधः बोधो विज्ञानं यस्मात् तथाभूतं संसारकूपे पतितानाम् उत्तारणामावलम्बमाश्रयम् एवम्भूतं दृष्ट्वा कृतार्थोऽहमस्मीति भावः। अतस्तदेव ध्यायन् चरामि किन्तु तद्विषया स्मृतिर्यथा स्यात्तथाऽनुगृहाण ॥ १८ ॥ तत इति। स नारदः अन्यत्कृष्णपत्न्यागृहमाविशत् किं कर्त्तुमिच्छया अङ्ग हे राजन्! योगीश्वरेश्वरस्य भगवतो योगमायामाश्चर्यशक्ति वेत्तुमिच्छया ॥ १९ ॥ दीव्यन्तमिति। तत्रापि गृहे प्रिययोद्धवेन च सहाक्षेर्देवनाक्षेर्दीव्यन्तं क्रीडन्तं ददर्शेति शेषः। असौ नारदः प्रत्युत्थानादिभिः उत्कृष्टया भक्त्या तत्पूर्वकं पूजितः ॥ २० ॥ अविदुषाऽजानतेव भगवता पृष्टश्च, प्रश्नमेवाह—कदेत्यादिना कुर्वित्यन्तेन। इति शब्दः कुर्वित्यनन्तरं योज्यः इति पृष्टश्चेत्यन्वयः। आयात इति छेदः अपूर्णरागन्तुकपूर्त्तिरहितैः स्वत एव परिपूर्णैरवाप्तसमस्तकामैरिति यावत् तैरप्यस्मदादिभिः पूर्णानां युष्माकं किं क्रियते निरपेक्षत्वात् किमपि न क्रियत एवेति भावः ॥ २१ ॥ यद्यप्येवमथापि हे ब्रह्मन् ? ब्रूहि ममैतज्जन्म शोभनं कुरु सफलं कुर्वित्यर्थः। भागवतकैङ्कर्यमकुर्वतः शरीरमशुभमिति भावः। सत्विति। सतु नारदोपि विस्मितस्तूष्णीम् उत्थायान्यदपि गृहमाजगाम ॥ २२ ॥

### श्रीविजयध्वजतीर्थकृता पदरत्नावली

तत्र नारदः प्रतिवक्ति-नेति। त्वयि अद्भुतं नैव मानादिदानमितिशेषः। स्वैरावतारः स्वेच्छावतार इति सुष्ठु विदाम ॥ १७ ॥ अद्य दृष्टं तवाङ्घ्रियुगलं ध्यायन् चरामि यथा स्मृतिः स्यात्तथा अनुगृहाण ॥ १८–१९ ॥ अक्षभिरक्षैः दीव्यन्तं देवनक्रियां कुर्वन्तम् ॥२०॥ अविदुषेव पूर्वं गृहे नारदागमनमजानतेव हरिणा भवान् कदाऽऽयात इत्यसौ नारदः पृष्टः ॥२१–२३॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

अन्यत् अन्यस्या इत्यर्थः ॥ २२–३६ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

लोके हि सेव्यो यदि सेवकं पूजयेत् तदा सेवकस्यामङ्गलं भवेत् त्वन्तु स्वतन्त्रः स्वसेवकं सम्पूज्यापि तस्मात् पूजां गृहीत्वापि तं दण्डयित्वापि तस्य यथार्हं मङ्गलमेव करोषीत्याह—नैवेति। अखिललोकनाथे त्वयि नाद्भुतमेतत् किन्तदित्यत आह सकलेषु जनेषु मैत्री हितकारित्वमेव। तवाखिललोकनाथत्वादखिललोकानां जीवत्वात् त्वत्सेवकत्वमेव वस्तुतो भवेत्। यदुक्तं पाद्मे प्रणव व्याख्याने "अकारेणोच्यते विष्णुः श्रीरुकारेण कथ्यते। मकारस्तु तयोः दासः पञ्चविंशः प्रकीर्त्तितः॥" इति पञ्चविंशो जीवः। तत्र केषाञ्चिदस्माकं विप्राणां त्वामभीक्ष्णं सेवमानानामपि त्वत्कर्तृकं पूजनम् अस्मन्मनोप्रतिदुःखप्रदं केषाञ्चिदन्येषामुद्धवविदुरादीनां त्वां सेवमानानां त्वत्कर्तृकं पूजाग्रहणं तन्मनोऽतिदुःखप्रदम् अन्येषां पशुतुल्यसांसारिकजनानां त्वामभजतां त्वत्कर्तृकः कृपावलोकः। अपरेषां खलानां जरासन्धादीनां दमस्त्वत्कर्तृकः सर्वमिदं ते मैत्री हितकारित्वमेव यतो जगतः स्थितिर्धारणं रक्षणं पालनं ताभ्यां सह निःश्रेयसाय प्रेमभक्तियोगाय मोक्षाय च स्वैरोऽयमवतार इति जानीमः ॥ १७ ॥ भो महामुने! किमर्थकमिदमागमनं किमत्रैव तिष्ठा सा अन्यत्र वा प्रतिष्ठा सेत्यपेक्षायामाह—दृष्टमिति ॥ १८ ॥ विवित्सया उपलम्भेच्छया ॥ १९ ॥ तत्र सत्यभामागृहेऽक्षैः दीव्यन्तं तं ददर्श ॥ २०–२१ ॥ तूष्णीं स्थितं नारदमतिविस्मितं प्रत्याह—अथापीति ॥ २२ ॥

### गूढार्थदीपिनी

हे उरुगाय। सकलेषु साधुषु मैत्री खलानां दमश्च एतत् द्वयमपि त्वयि अद्भुतम् असम्भावितं नास्ति। यतः जगतः स्थितिरक्षणाभ्यां सह निःश्रेयसाय तवायं स्वेच्छावतार इति वयं सुष्ठु विद्मः। उरु बहुधा शास्त्रेषु गीयते इति उरुगाय। स्थितिः धारणम् ॥ १७ ॥ हे भगवन्। तव अङ्घ्रियुगलं दृष्टं न च तृप्तोऽस्मि अतः तदेव ध्यायन् विचरामि स्मृतिश्च यथावत् स्यात् तथा मामनुगृहाणेत्यन्वयः। कथंभूतम्। जनताया अपवर्गो मोक्षो यस्मात्। जनानां तापस्य वर्गो वर्जनं यस्मात्। पुनश्च ब्रह्मादिभिः हृदि विचिन्त्यम्। पुनश्च। संसारकूपपतितानामुद्धरणाय अवलम्बम् आश्रयीभूतं सहायकर्मित्यर्थः ॥ १८ ॥ अङ्ग हे राजन्। कृष्णपत्न्याः क्रमप्राप्तसत्यभामायाः गृहम्। विवित्सया ज्ञातुमिच्छया। विन्दतेः रूपम् ॥ १९ ॥ पाशैः दीव्यन्तं ददर्शेति शेषः। अविदुषेव अजानतेव पृष्टः कदेति ॥ २० ॥ पूर्णानां विरक्तानां युष्माकम्। अपूर्णैः गृहस्थैः किं नु क्रियते अथापि। किञ्चित् कार्यं ब्रूहि। शोभनं सफलम् जन्म च ॥ २१ ॥ अचष्ट अपश्यत्। एवमग्रेऽपि सर्वत्र योजनीयम् ॥ २२ ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

इत्थं सत्कृतः श्रीनारद उवाच—नैवाद्भुतमिति द्वाभ्याम्। हे विभो! सकलेषु जनेषु मैत्रीत्येतल्लोकनाथे त्वयि न चित्रम् सर्वजनमित्रत्वादित्थं मम सत्कारस्त्वया कृतो नतु मयि गौरवादितिभावः। ननु कंसादिषु अमैत्र्यपि प्रसिद्धा तत्कथं

सकलजनमित्रत्वं ममेत्यत आह—दम इति। हि निश्चितं खलेषु दमोपि त्वत्कर्तृको निःश्रेयसाय तेषां कल्याणाय निखिलमित्रत्वं प्रतिपादयति—हे उरुगाय! जगतां स्थितिरक्षणाभ्यां धारणाय पालनाय च स चायं तव स्वैरावतारः जातावेकवचनं तव स्वेच्छावतारा इति वयं सम्यक् विद्मः॥ १७॥ भगवते किं कुर्वामिति यदुक्तं तत्राह—दृष्टमिति। तवाङ्घ्रियुगलं दृष्टमेतावतैव कृतार्थोऽस्मीति भावः। तथापि यथा स्मृतिः तवाङ्घ्रियुगलस्मृतिः स्यात् तथाऽनुगृहाण तदेव ध्यायन् नित्यं चरामि॥१८-१९॥ दीव्यन्तं क्रीडन्तं ददर्शेति शेषः। तत्रापि भक्त्या पूर्ववत् पूजितः॥ २०॥ कदाऽऽयातो भवानिति अविदुषेव पृष्टः एवं पूजनप्रश्नादिकमग्रेपि बोध्यम्॥ २१-२२॥

### श्रीसत्यधर्मकृता श्रीभागवतटिप्पणी

एवं देवसत्कृतः किं कृतवान्नारद इत्यत आह। नेति। हे विभो विविधभवनशक्त। अखिललोकनाथे त्वयि मदर्हणमद्भुतम्। नैव जनेषु मैत्री भजतः। अनेन सज्जनमात्रमित्रत्वात्सहजं तव मदर्चनं न त्वर्चनीयमन्माहात्म्यादतोऽद्भुतं नैवेति योजना। खलानां दमं शिक्षां च दधतो हे उरुगाय तवायं जगतां सदसदादीनां स्थितिं च रक्षणं च ताभ्यां सह निःश्रेयसाय सतेऽसते च मोक्षाय स्वैरावतारः स्वेच्छोपात्तोऽवतारो न कर्मायत्त इति सुष्ठु निःसन्देहं विदाम विद्मः॥१७॥ स्वाशयं प्रकटयति। दृष्टमिति। संसारकूपपतितोत्तरणावलम्बमगाधबोधैर्ब्रह्मादिभिर्हृदि विचिन्त्य जनानां तापस्य वर्गो वर्जनं येन तत्। अनन्तरं जनतायाः खलातिरिक्ताया अपवर्गो मोक्षो यस्मात्तत्। सामान्यजनसङ्गापवर्गो यस्मादिति वा। अङ्घ्रियुगलं पादयुगलं दृष्टं तदेव देव ध्यायंश्चरामि। यथा मम तत्स्मृतिः स्यात्तथाऽनुगृहाणानुग्रहं कुरु॥ १८॥ अन्यदा किञ्चित्कालान्तरेऽन्यत्कृष्णपत्न्या गेहं नारद अविशत्। अङ्ग हे राजन्। योगेश्वरेश्वरस्य कृष्णस्य योगमायां वेदितुमिच्छा विवित्सा तथेति। अङ्गनानां प्रातिस्विकं कलेवराणां योगः सम्बन्धस्तद्विषयिण्या मायायाः शक्तेर्विवित्सा तयाऽऽविशदिति वा॥ १९॥ तत्र तस्मिन्गेहेऽक्षभिरक्षैर्दीव्यन्तं क्रीडन्तम्। दीव्यन्तमक्षैस्तत्रापीति पाठः सरलः। प्रियया तद्गृहगतगृहिण्या उद्धवेन स्वामान्येन चोत्सवेनेत्याप्यर्थः। प्रत्युत्थानासनादिभिः परया भक्त्या पूजितः॥ २०॥ कदा भवानायात इत्यविदुषेव पृष्टश्च। पूर्णानां भवादृशानामपूर्णैरस्मदादिभिः किन्तु क्रियते कर्तव्यान्तराभावादिति भावः॥ २१॥ अथाऽपि तव पूर्णकामत्वे मम पूर्णत्वे सत्यपि हे ब्रह्मन् ब्रूहि करणीयमिति शेषः। एतज्जन्म शोभनं भवेत्सेवोपयातमङ्गलं कुरु। स त्वेवमुक्तो नारदो विस्मित उत्थाय तूर्णमन्यदगात्॥ २२॥

### श्रीमद्वल्लभाचार्यकृता सुबोधिनी

तत्रोत्तरमाह नारदः नैवाद्भुतमिति। वक्तव्यं तु न किञ्चित्, कृतानुमोदनं तु कर्तव्यं भवति। अन्यथा पूजा कृतेव न स्यात्। अनङ्गीकारात्। तत्त्वतोऽङ्गीकारे अयुक्तं स्यात्, अतो भगवदीयधर्मत्वेनाभिनन्दनमुच्यते। हे विभो, सर्वकरणसमर्थ। एतद्ब्राह्मणपूजनं त्वयि नाद्भुतम्, अखिललोकाः शिक्षणीया इति। भगवांश्चाखिललोकनाथः। त्रिविधं हि कर्म जगद्रक्षार्थं क्रियते। खलानां दमः, अन्तर्यामितया सर्वसख्यम्, एतादृशी ब्राह्मणपूजा च। एतस्य कर्मणः बन्धहेतुत्वमाशङ्क्य निराकरोति निःश्रेयसायेति। अन्येषामपि मोक्षार्थमेतत्करणं श्रोतॄणां कीर्तयितॄणां च। युक्तश्चायमर्थः। अन्यथा त्रिविधानि कर्माणि लोकानां न शान्तानि भवेयुः। सजातीयनिवर्तकाभावात्। एतज्जीवैरपि कर्तुं शक्यत इति भगवतो विशेषं वक्तुमाह जगत्स्थितिरक्षणाभ्यां सहेति। स हि जगत् स्वात्मनि धारयति, पालयति च। स्वेच्छावतारेति सम्बोधनं तादृशस्यापि कर्मकरणं लीलार्थमिति सूचयति। सप्तम्यन्तं वा पदं हेतुप्रकथनाय, अन्यथा कथं लोकाः कीर्तयेयुः, कथं वा मुक्ता भवेयुरिति। अत्र प्रमाणमाह विदामेति। सुष्ठ्विति अनुभवश्रुतिभ्याम्, न तु तर्कमात्रेण॥ १७॥ एवं कृताभिनन्दनं कृत्वा भगवदुक्तं नान्यथा कर्तव्यमित्यभिप्रेत्य स्वाभिलषितं किञ्चित् प्रसङ्गात् प्रार्थयते दृष्टं तवाङ्घ्रियुगलमिति। यदेतत् दृष्टम्, तद्ध्यायन् सर्वत्र चरामीति स्वाध्यवसायः। अत्र यथा स्मृतिः स्यात्, तथा अनुगृहाणेति कर्तव्यप्रार्थना। दुर्लभं ह्येतदेव। प्राप्तेऽपि बहवो बाधकाः। अतः स्मृतिर्भविष्यतीति न विश्वासः। कर्तव्यं च मम नान्यत्। अतश्चरणस्मरणार्थमनुग्रह एव कर्तव्यः। दृष्टमित्यनेन ज्ञानपक्षो निराकृतः। भगवच्चरणयोरेव जीवब्रह्मत्वात् स्वात्मपरमात्मसाक्षात्कारः सिद्ध एव। मोक्षपक्षमपि व्यावर्तयति। जनताया एवापवर्गं करोतीति। तत्रास्मदपवर्गे कः सन्देह इति भावः। एतस्मान्नान्यद्दुर्लभमस्तीत्यभिप्रायेणाह। अगाधबोधैः पूर्णज्ञानैरपि ब्रह्मादिभिर्हृदि विचिन्त्यमेव, न तु साक्षाद्द्रष्टुं शक्यम्। तस्माद्ब्रह्मादीनामप्येतदेव दुर्लभमिति नातः परतरं किञ्चिन्मृग्यम्। अनेन चरणस्य ऐहिकपारलौकिकफलेभ्योऽपि महत्त्वं निरूपितम्। किञ्च। भक्तिमार्गस्यैतदेव प्रवर्तकमित्याह संसारकूपेति। 'यावन्नृकाय'मिति न्यायेन शास्त्रानुसारेण ये स्वहितं न कृतवन्तः, 'तान्नो चेत् प्रमत्त'मिति न्यायेन विषयाः कूपे ( निपातयन्ति। ते कूपे ) पतिताः, तेषामुत्तरणे तीर्थाभावात् पक्षाभावाच्च कर्मवल्ली अन्तरेव संवृता नोपरिनयतीति, ज्ञानं च सूत्रवत् नो पर्याकर्षतीति, भगवच्चरणारविन्दद्वयमेव संसारकूपे पतितानां तत उत्तरणे अवलम्बनं भवति। अतो मार्गत्रयेऽप्येतदेव शरणमिति ध्यायंश्चरामि। एतावदुक्त्वा भगवता अनुज्ञातः निर्गत इति ज्ञातव्यम्॥ १८॥ ततो निर्गतस्य गृहान्तरप्रवेशमाह ततोऽन्यदाविशद्गेहमिति। अन्यत्पूर्वोक्तं समानम्। कृष्णपत्न्या इति। भगवान् पूर्वगृहे दृष्ट इति नारदस्य भगवत्पत्नी वात्र

स्थास्यतीति बुद्धिरिति **कृष्णपत्न्या** इत्युक्तम् । स तु कृपां प्रार्थयित्वा निर्गतः । ततोऽपि बहिर्मुखत्वाद्गृहान्तरमेव प्रविष्टः । यतो नारं द्यति खण्डयति व्यसनस्वभावः । तस्य गृहान्तरप्रवेशे मनीषितमाह **योगेश्वरेश्वरस्येति** । योगस्यैव गतिर्दुर्ज्ञेया, अलौकिकत्वात् । तत्रापि योगेश्वरस्य । यो योगमपि वशीकृतवान्, तेषामपीश्वरो भगवान् । तस्यापि योगमाया । तस्या विधित्सा, यस्याः वैभवं भगवानपि न मन्यते एतावदिति । अङ्गेत्यप्रतारणार्थं सम्बोधनम् ॥ १९ ॥ तत्र स्थितस्य भगवतः पूर्वदृष्टापेक्षया भिन्नमेव सन्निवेशमाह **दीव्यन्तमक्षैरिति** । सर्वत्र तादृश एव सन्निवेशो वक्तव्यः, येन पूर्वगृहे स्थितस्य शीघ्रं समागमनशङ्कापि न सम्भवति । तत्रापि 'भगवन्तं ददर्शे'ति पूर्वा क्रियैवानुसन्धेया । परं प्रियया भार्यया उद्धवेन च सह अक्षैर्दीव्यन्तमिति ॥२०॥ तस्य नारदस्य भगवान् मायया तथा प्रदर्शयतीति बुद्धिव्यावृत्त्यर्थं भगवान् किञ्चिदुक्तवानित्याह **पृष्टश्चाविदुषेवासाविति** । असौ पूर्वदृष्ट एव भगवान्, प्रत्यभिज्ञानस्य दृष्टत्वात्, तथापि कदायातो **भवान् इति** पृष्टवान् । असौ नारदो भगवता पृष्टः, यथा सः स्वाकारगोपनं करोति परीक्षार्थम्, तथा भगवानपि कृतवानित्यभिप्रायेणाह **तथा अविदुषेवेति** । चकारात्पूजा । कृतं सर्वं कृतवान् । स्तुतिं च कृतवानित्याह **क्रियते किं नु पूर्णानामिति** । पूर्ववद्भगवन्नारदयोः धर्मव्यत्यासो द्रष्टव्यः । तदोपपद्यत एव । पूर्णानां भवतां अपूर्णैरस्मदादिभिः किं कर्तव्यमिति । यथा अज्ञाननाट्यम्, एवं तत्कार्यनाट्यवाक्यमपीति केचित् । लौकिकी वा भाषा तन्मोहार्था, तद्बुद्धौ भगवान्परिच्छिन्नो भासत इति । 'ये यथा मां प्रपद्यन्त' इति न्यायेन भगवद्वचनमित्यपरे ॥ २१ ॥ तथापि समागतस्य भगवद्गुणनिर्धारार्थं प्रवर्तमानस्य हितं कर्तव्यमिति भक्तिशास्त्रमनुसृत्याह **अथापि ब्रूहि नो ब्रह्मन्निति** । अस्मान्प्रति ब्रूहि, किञ्चित्प्रार्थयेत्यर्थः । **ब्रह्मन्निति** ब्राह्मणस्य याचनमुचितमिति । किञ्च । एतन्मम जन्म अवतारः भक्तोद्धारक एवेति । तत्र मुख्यो भवानिति स्वात्मानं पूर्णं कुर्वन् जन्म शोभनं कुरु । स्वजन्म वा । ततो यज्जातं तदाह **स तु विस्मित उत्थायेति** । पारमार्थिकमेतद्वचनं न भवतीति स्वमनसि निश्चित्य, मां वञ्चयति, शीघ्रं तत आगत्येति सम्भावनां कुर्वन्, शीघ्रमुत्थाय, ततो गत इत्याह । हेत्वदर्शनाद्विस्मितो जातः । भगवतो वैभवेन समागमनं निराकरोति तुशब्दः । उत्थाय तूर्णमेव अन्यद्गृहमगात् ॥२२॥

## श्रीसुबोधिनी-सारः

नारदोक्तिः । हे विभो हे अखिललोकनाथ सकलेषु जनेषु मैत्री खलानां पापिनां कंसादीनां दम इत्यद्भुतमाश्चर्यं नैव जगतः स्थितिधारणं रक्षणं पालनं च ताभ्यां सह तव स्वैरं काममवतारो निःश्रेयसाय मंगलार्थं भवतीति सुष्ठु सम्यग् वयं विदामो विद्मः हि युक्तम् ॥ १७ ॥ अगाधो बोधो ज्ञानं येषां तैर्ब्रह्मादिभिर्हृदि मनसि विचिन्त्य जनताया जीवसंघस्यापवर्गं मोक्षरूपं तवांघ्रियुगलं पादद्वंद्वं दृष्टमस्माभिः संसारकूपे पतितानामुत्तारणायावलंबमाश्रयं तत् ध्यायन् अहं चरामि स्वैरं पर्यटामि एतेन कृतार्थतामाशास्ते यथा स्मृतिः स्यात्तथा त्वमनुगृहाण मामनुकंपय ॥ १८ ॥ ततो गृहात् कृष्णपत्न्याः अन्यद्गेहं स नारद आविशत् योगेश्वराणामपि ईश्वरस्य योगमायां वेत्तुमिच्छया ॥१९॥ तत्र द्वितीयगेहेपि प्रियया स्त्रिया उद्धवेन च सहाक्षैः पाशकैर्दीव्यंतं क्रीडंतं ददर्शेति शेषः सम्मुखागमनासनादिभिः परया भक्त्या पूजितः ॥ २० ॥ अविदुषाऽज्ञेनेव श्रीकृष्णे नासौ नारदः पृष्टः भवान् कदायात आगत इति पूर्णानां भवताम् अपूर्णैरस्मदादिभिः किं नु क्रियते ॥ २१ ॥ अथापि एवं सत्यपि हे ब्रह्मन् त्वं ब्रूहि कार्यं प्रार्थयेत्यन्ये नोऽस्माकमेतज्जन्म शोभनं सफलं कुरु स तु नारदः तूष्णीमब्रुवन्नेवोत्थाय विस्मितोऽन्यद्गृहमगात् ॥२२॥

## श्रीविट्ठलरायात्मजश्रीवल्लभकृतलेखः

दृष्टमित्यत्र । **भगवच्चरणयोरेवेति** । चरणयोरक्षरात्मकत्वाज्जीवब्रह्मणोश्चांशांशिभेदेनाक्षरात्मकत्वादिति भावः । **मोक्षपक्षमपीति** । मोक्षः प्रार्थनीय इतिपक्षमित्यर्थः । **तेषामुत्तरणे इति** । संसारकूपपतितानामूर्ध्वतरणेऽवलम्बनाभावात्पक्षिणामिवोर्ध्वगत्यभावाच्चेत्यर्थः । **ज्ञानं चेति** । यथा कूपे पतितेन ध्रियमाणं सूत्रमवलम्बनाभावे स्वयमपि पतति, कुतस्तमाकर्षेत्, तथा स्वात्मज्ञानमपि भगवच्चरणावलम्बनाभावे स्वयमपि संसारे एवान्ततः पतति, न तु जीवमुपर्याकर्षति, 'ज्ञानिनामपि चेतांसी'तिवाक्यादित्यर्थः । **ततोऽन्यदाविशदित्यत्र** । **भगवत्पत्नी वेति** । 'सत्यव्रत'मित्यस्य व्याख्याने 'यद्वा सर्वोत्कृष्ट'मित्यत्र वाशब्द एवकारार्थे टिप्पण्यां व्याख्यातः, तथात्रापि । अत्र गृहेऽन्या भगवत्पत्न्येव स्थास्यति, भगवांस्तु पूर्वगृहे दृष्टस्तत्रैव स्थितो भविष्यतीत्यर्थः । **स तु कृपामिति** । भगवांस्तत्रैव **स्थित इति** तद्व्यावृत्त्यर्थं तुशब्दः । बहिर्मुखत्वे हेतुमाहुः **यत इति** । नरधर्मान्व्यसनानि खण्डयति इति हेताः खण्डनार्थं व्यसनपर्यालोचनस्वभावाद्बहिर्मुख इत्यर्थः ।

## गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

इत्युक्तो नारदः प्राह—नैवेति द्वाभ्याम् । हे विभो सर्वथासर्वकरणसमर्थ ! सकलेषु साधुजनेषु मैत्री तच्छिक्षार्थमसमत्सन्माननं खलानां परपीडाकराणां दमो दण्डश्च त्वय्यद्भुतं असंभावितं नैव भवति, हि यस्मात् जगतः स्थितिधारणं रक्षणं च ताभ्यां सह निःश्रेयसाय साधुजनानां धर्मादिचतुर्विधपुरुषार्थसिद्धये तवायं स्वैरावतारः स्वेच्छयावतार इति वयं सुष्ठु सम्यक् विदामः विद्मः । 'जनोद्धारार्थकीर्तनयोग्यस्वयशोविस्तारार्थमप्ययमवतार' इति सूचयन् संबोधयति—उरुगाय इति । 'युक्तमेवैतद् स्वामित्वात्, अन्यथा साधनवैफल्यं स्यात्' इत्याशयेनाह—अखिललोकनाथ इति ॥ १७ ॥ यदुक्तं 'किं करवाम' तत्राह—

दृष्टमिति। तवाङ्घ्रियुगुलं मया दृष्टम्, अतो यद्यपि तद्दर्शनेनैव कृतार्थोऽस्मि तथापि यथा निरन्तरं तत्स्मृतिश्च स्यात्तद्धयायन्नेव चरामि तथानुगृहाणेत्यन्वयः। एवं प्रार्थनायां तत्प्रभावं हेतुं सूचयन् विशिनष्टि—जनताया अपवर्गं मोक्षरूपं परमफलमिति। अतएवागाधबोधैः सर्वज्ञैरपि ब्रह्मादिभिः केवलं हृदि विचिन्त्यम्, तद्दर्शनं तु दुर्लभमेव। साधनरूपत्वमप्याह—दुस्तरत्वात् संसार एव कूपः तस्मिन्निपतितानामुत्तरणायावलम्बमाश्रयमिति ॥ १८ ॥ 'हे अङ्ग' इति संबोधनेन 'एतद्रहस्यश्रवणयोग्यत्वम्, अस्मदादिवद्विषयविमुखत्वात्' इति सूचयति। भगवतानुगृहीतोऽनुज्ञातश्च ततो गृहाद्विनिःसृतः स नारदः योगेश्वराणामपि ईश्वरस्य शक्तिप्रदस्य श्रीकृष्णस्य योगमायां अचिन्त्यशक्तिं विविदिषया कृष्णपत्न्याः अन्यद्गेहमाविशदित्यन्वयः ॥ १९ ॥ तत्रापि गृहे प्रियया भार्यया उद्धवेन च सह अक्षैर्दीव्यन्तं क्रीडन्तं भगवन्तं ददर्शेति शेषः। सर्वत्र विलक्षणस्तादृश एव सन्निवेशो भगवता प्रदर्शितः, येन पूर्वदृष्टगृहे स्थितस्य शीघ्रमत्र समागमनशङ्का न स्यादिति ज्ञेयम्। ततश्च तेन पूजित इत्यादि स्पष्टम्। 'भवान्कदा आयात' इत्यविदुषा अजानतेव भगवताऽसौ नारदः पृष्टश्चेत्यन्वयः ॥ २० ॥ अपूर्णैर्धनपुत्रगृहादिष्वासक्तैरस्मदादिभिः पूर्णानां युष्माकं किं नु कार्यं क्रियते कर्तुं शक्यते। तेषामपेक्षारहितत्वादित्याशयः। यद्यप्येवमथापि 'हे ब्रह्मन्! किञ्चित्कार्यं ब्रूहि, स्वनियोगेन ममैतज्जन्म शोभनं सफलं कुरु' इति प्रार्थितश्चेति शेषः। अत्र पूर्णस्यापि भगवतो अपूर्णैरित्याद्युक्तिर्लोकशिक्षार्था, अतो नारदोऽप्येवमेव ज्ञात्वा दूरत एव तत्र तत्र तद्वृत्तं दृष्टवान्, न समीपतो भाषणपूर्वकमिति ज्ञेयम् ॥ २१ ॥ तत्रापि शिशून् बालान् सुतान् लालयन्तं उपच्छन्दयन्तं अचष्ट अपश्यत् ॥ २२ ॥

### अन्वितार्थप्रकाशिका

नेति ॥ हे विभो! हे उरुगाय! सकलेषु साधुजनेषु मैत्री तच्छिक्षार्थमस्मत्सम्माननं खलानां परपीडाकराणां दमो दण्डश्च अखिललोकनाथे त्वयि अद्भुतम् असम्भावितं नैव भवति। सामान्ये नपुंसकमेकत्वं च। हि यस्मात् जगतः स्थितिर्धारणं रक्षणं च ताभ्यां सह निःश्रेयसाय साधुजनानां कल्याणाय तवायं स्वैरावतारः स्वेच्छयावतार इति वयं सुष्ठु सम्यक् विदाम विद्मः। आर्षः। अतः साधुसम्माननं खलदमश्च युज्यते ॥ १७ ॥ किं करवामेत्युक्तं तत्राह—दृष्टमिति ॥ जनताया अपवर्गः मोक्षो यस्मात् यद्वा जनानां तापस्य वर्गो वर्जनं यस्मात् तत् अत एवागाधबोधैः सर्वज्ञैरपि ब्रह्मादिभिः केवलं हृदि विचिन्त्यं तद्दर्शनं तु दुर्लभमेव। संसार एव दुःखदत्वात् कूपः तस्मिन्निपतितानामुत्तरणायावलम्ब आश्रयणं यस्य तत्। व्याख्यानान्तरेऽपवर्गाव-लम्बयोः क्लैव्यमार्षमिति वक्तव्यं स्यात्। तवांघ्रियुगलं मया दृष्टम्। अतो यद्यपि तद्दर्शनेनैव कृतार्थोऽस्मि तथापि यथा निरन्तरं तत्स्मृतिः स्यात्तद्धयायन्नेव च चरामि चरेयं तथाऽनुगृहाण। यद्वा। यथा त्वत्स्मृतिः स्यात्तथाऽनुगृहाण। अतस्तद्धयायन्नेव चरामीति ॥ १८ ॥ तत इति ॥ अङ्ग हे राजन्! भगवताऽनुगृहीतोऽनुज्ञातश्च ततो गृहाद्विनिःसृतः स नारदः योगेश्वराणामपि ईश्वरस्य श्रीकृष्णस्य योगमायायाः विविदिषया ज्ञातुमिच्छया। इडभाव आर्षः। विन्दतेर्वा उपलम्भार्थता कृष्णपत्न्याः अन्यद् गेहं समीपस्थं सत्यभामागृहमाविशत् ॥ १९ ॥ दीव्यन्तमिति सार्द्धम् ॥ तत्रापि गृहे प्रियया भार्यया उद्धवेन च सह अक्षैर्दीव्यन्तं क्रीडन्तं भगवन्तं ददर्शेति सर्वत्र शेषः। इह सर्वत्र विलक्षणस्तादृश एव सन्निवेशो भगवता प्रदर्शितो येन पूर्वदृष्टगृहे स्थितस्य शीघ्रमत्र समागमनशङ्का न स्यादिति ज्ञेयम्। एवं योगमाययैव योगपद्यं कालभेदक्रियाभेदेष्वपि ज्ञेयम्। यथा मज्जनाय कृतोद्य-ममिति प्रातः पञ्चभिर्मखैरिति मध्याह्नः भुञ्जानमवशेषितमित्यपराह्णः क्वचिच्छयानमिति रात्रिशेष इत्यादि। ततश्च भगवता नारदः परया भक्त्या प्रत्युत्थानासनादिभिः पूजितो भवान् कदा आयातः इत्यविदुषा अजानतेव भगवताऽसौ नारदः पृष्टश्च ॥ २० ॥ क्रियते इति ॥ अपूर्णैर्धनपुत्रगृहादिष्वासक्तैरस्मदादिभिः पूर्णानां युष्माकं किं नु कार्यं क्रियते कर्तुं शक्यते। तेषामपेक्षारहितत्वादित्याशयः। यद्यप्येवमथापि हे ब्रह्मन्! नोऽस्मान् प्रति किंचित्कार्यं ब्रूहि स्वनियोगेन ममैतज्जन्म शोभनं सफलं कुरु इति प्रार्थितश्चेति शेषः ॥ २१ ॥ स इति ॥ स नारदस्तु विस्मितः सन् उत्थाय तूष्णीमन्यद्गृहमगात्। तत्रापि गोविन्दं शिशून् बालान् सुतान् लालयन्तम् अचष्ट अपश्यत् ॥ २२ ॥

### श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्

एवं भगवत्कृतं स्वपूजनमयोग्यं मत्वा नारदस्तं स्तुवन्नाह नेति सकलेषु जनेषु मैत्री यथा योग्यं सत्कारः जगतः स्थितये धारणाय रक्षणायर्वलनाय च। मुमुक्षूणां निःश्रेयसाय भक्तैः उरु बहुगीयते उरुगायस्तत्संबुद्धिः तवायं स्वैरावतारः स्वेच्छावतार इति वयं सुष्ठु विदाम विद्मः ॥ १७ ॥ तुभ्यं किं करवामेति यदुक्तं तस्योत्तरमाह दृष्टमिति जनतायाः जनसमूहस्यापवर्गं मोक्षप्रदं अगाधः बोधो ज्ञानं येषां तैः संसारकूपे पतितानां उत्तरणाय अवलंबं आश्रणीयं यत्त्वांघ्रियुगलमया दृष्टं तद्ध्यायन् सन् लोके चरामिचरेयं तस्य यथा स्मृतिः स्यात्तथा मामनुगृहाण ॥ १८ ॥ अंग हे राजन् ॥ १९ ॥ तत्रापि पूजितः अक्षैर्दीव्यंतं कृष्णम-चष्टेतिचतुर्थश्लोकेनान्वयः ॥ २० ॥ अविदुषा अजानतेव। हरिणा पृष्टः ॥ २१ ॥ ददर्शेत्युत्तरस्थं पदं सर्वत्र योज्यं ॥ २२-२३ ॥

### भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

इत्युक्तो नारदः प्राह नैवेति द्वाभ्याम्। नैवेति। हे विभो, सकलेषु सर्वेषु जनेषु धर्मवर्त्तिषु लोकेषु, मैत्री तव मित्र-भावः, इत्येतत्, अखिललोकनाथे, त्वयि, अद्भुतमाश्चर्यं, नैव। सर्वमित्रत्वादेव मदर्हणं, न तु मयि गौरवादिति भावः। कथं

तर्हि कंसादिष्वमैत्रीतत्राह। खलानां दमः एतदपि न चित्रम्। कुतः। हि यस्मात्, हे उरुगाय, जगतः स्थितिर्धारणं रक्षणं पालनं च ताभ्यां, चतुर्थ्यन्तमिदम्। निश्श्रेयसाय मोक्षप्रदानाय च। यद्वा। ताभ्यां सह मोक्षप्रदानाय, तव स्वैरावतारः स्वेच्छावतारः, भवति। वयं सम्यक् विदाम विद्मः। अतः खलदमनं साधुसंमाननं च तव युक्तमिति भावः॥ १७॥ यदुक्तं 'प्रभो भगवद्वि करवाम किं त' इति तत्र स्वमनीषितं प्रार्थयते। दृष्टमिति। हे भगवन्, जनतायाः प्रपन्नजनसमूहस्यापवर्गमपवर्गसाधनभूतं, फलभूतं वा। किं चातिदुर्लभतया, ब्रह्मादिभिर्विद्यादियोगीश्वरैरपि, हृदि विचिन्त्यं, अगाधः बोधो विज्ञानं यस्मात्तथाभूतं, संसारः एव कूपः प्रहिस्तत्र ये पतितास्तेषामुत्तरणायावलम्बमाश्रयभूतं, तव अङ्घ्रियुगलं, दृष्टं मयेति शेषः। अतः तदेव ध्यायन्, चरामि। किं तु स्मृतिरखण्डं तद्विषयं स्मरणं, यथा स्यात् तथा, अनुगृहाण॥ १८॥ तत इति। ततः, अङ्ग हे राजन्, योगेश्वरेश्वरस्य, योगमायाविवित्सया, सः नारदः, कृष्णपत्न्याः, अन्यत् गेहं, आविशत्॥ १९॥ दीव्यन्तमिति। तत्र तस्मिन् गृहेऽपि, प्रियया स्वपत्न्या, उद्धवेन च साकं, अक्षैः पाशकैः, दीव्यन्तं क्रीडन्तं भगवन्तं, ददर्श। तत्रापि, नारदः भगवता प्रत्युत्थानासनादिभिः, परया भक्त्या, पूजितः च॥ २०॥ पृष्ट इति। भवान् कदा, आयातः इत्येवं, अविदुषा इव, असौ नारदः, पृष्टश्च। अपूर्णैरागन्तुकपूर्त्तिरहितैः स्वत एव परिपूर्णैः, अवाप्तसमस्तकामैरिति यावत्। अस्मदादिभिः, पूर्णानां युष्माकं, किं नु क्रियते। निरपेक्षत्वादपेक्षिताभावाच्च किमपि न क्रियत इति भावः। यद्यप्येवमथापि, हे ब्रह्मन्, नोऽस्मान्, ब्रूहि किमपि कथय। एतत्, जन्म अस्माकमिदं जनुः, शोभनं कुरु सफलं कुर्वित्यर्थः। भागवतकैंकर्यमकुर्वतः शरीरमशुभमिति भावः॥ २१॥ स त्विति। स तु स नारदोऽपि, विस्मितः सन्, उत्थाय, तूष्णीं अन्यत् गृहं अगात्। तत्र तस्मिन् गृहेऽपि, गोविन्दं, शिशून् सुतान्, लालयन्तमुपच्छन्दयन्तं, आचष्ट॥ २२॥

### कृष्णप्रिया

देवर्षि नारद ने कहा—भगवन्! आप समस्त लोकों के एकमात्र स्वामी हैं। आपके लिये यह कोई नयी बात नहीं है कि आप अपने भक्तजनों से प्रेम करते हैं और दुष्टों को दण्ड देते हैं। परमयशस्वी प्रभो! आपने जगत् की स्थिति और रक्षा के द्वारा समस्त जीवों का कल्याण करने के लिये स्वेच्छा से अवतार ग्रहण किया है। भगवन्! यह बात हम भलीभाँति जानते हैं॥ १७॥ यह बड़े सौभाग्य की बात है कि आज मुझे आपके चरणकमलों के दर्शन हुए हैं। आपके ये चरणकमल सम्पूर्ण जनता को परम साम्य, मोक्ष देने में समर्थ हैं। जिनके ज्ञान की कोई सीमा ही नहीं है वे ब्रह्मा, शङ्कर आदि सदा-सर्वदा अपने हृदय में उनका चिन्तन करते रहते हैं। वास्तव में वे श्रीचरण ही संसाररूप कूएँ में गिरे हुए लोगों के बाहर निकलने के लिये अवलम्बन हैं। आप ऐसी कृपा कीजिये कि आपके उन चरणकमलों की स्मृति सर्वदा बनी रहे और मैं चाहे जहाँ जैसे रहूँ, उनके ध्यान में तन्मय रहूँ॥१८॥ परीक्षित्! इसके बाद देवर्षि नारदजी योगेश्वरों के भी ईश्वर भगवान् श्रीकृष्ण की योगमाया का रहस्य जानने के लिये उनकी दूसरी पत्नी के महल में गये॥ १९॥ वहाँ उन्होंने देखा कि भगवान् श्रीकृष्ण अपनी प्राणप्रिया और उद्धवजी के साथ चौसर खेल रहे हैं। वहाँ भी भगवान् ने खड़े होकर उनका स्वागत किया, आसनपर बैठाया और विविध सामग्रियों द्वारा बड़ी भक्ति से उनकी अर्चा-पूजा की॥ २०॥ इसके बाद भगवान् ने नारदजी से अनजान की तरह पूछा—'आप यहाँ कब पधारे! आप तो परिपूर्ण आत्माराम-आप्तकाम हैं और हमलोग हैं अपूर्ण। ऐसी अवस्था में भला हम आपकी क्या सेवा कर सकते हैं॥ २१॥ फिर भी ब्रह्मस्वरूप नारदजी! आप कुछ-न-कुछ आज्ञा अवश्य कीजिये और हमें सेवा का अवसर देकर हमारा जन्म सफल कीजिये।' नारदजी यह सब देख-सुनकर चकित और विस्मित हो रहे थे। वे वहाँ से उठकर चुपचाप दूसरे महल में चले गये॥ २२॥

**तत्राप्यचष्ट गोविन्दं लालयन्तं [1]सुताञ्छिशून्। ततोऽन्यस्मिन् गृहेऽपश्यन्मज्जनाय कृतोद्यमम्॥ २३॥**
**जुह्वन्तं च वितानाग्नीन् यजन्तं पञ्चभिर्मखैः। भोजयन्तं द्विजान् क्वापि भुञ्जानमवशेषितम्॥ २४॥**
**क्वापि संध्यामुपासीनं जपन्तं ब्रह्म वाग्यतम्। एकत्र चासिचर्मभ्यां चरन्तमसिवर्त्मसु॥ २५॥**
**अश्वैर्गजै रथैः क्वापि विचरन्तं गदाग्रजम्। क्वचिच्छयानं पर्यङ्के स्तूयमानं च वन्दिभिः॥ २६॥**
**मन्त्रयन्तं च कस्मिंश्चिन्मन्त्रिभिश्चोद्धवादिभिः। जलक्रीडारतं क्वापि वारमुख्याबलावृतम्॥ २७॥**
**कुत्रचिद् द्विजमुख्येभ्यो ददतं गाः स्वलंकृताः। इतिहासपुराणानि शृण्वन्तं[2] मङ्गलानि च॥ २८॥**

---

१. शिशून् सुतान्—प्रा. पा.। २. गायन्तं—प्रा. पा.।

**कर्दमक्षमा**

अन्वयः—तत्र, अपि, सुतान्, शिशून्, लालयन्तम्, गोविन्दम्, आचष्ट, ततः, अन्यस्मिन्, गृहे, उन्मज्जाय, कृतो, अपश्यत् ॥ २३ ॥ वितानाग्नीन्, जुह्वन्तम्, पञ्चभिः, मखैः, यजन्तम्, क, अपि, द्विजान्, भोजयन्तम्, क, अपि, अवशेषितम्, भुञ्जानम् ।।२४।। क, अपि, संध्याम्, उपासीनम्, क, अपि, वाग्यतम्, ब्रह्म, जपन्तम्, च, एकत्र, असिचर्मभ्याम्, असिवर्त्मसु, चरन्तम् ॥ २५ ॥ क, अपि, अश्वैः, गजैः, रथैः, विचरन्तम्, गदाग्रजम्, क्वचित्, शयानम्, क्वचित्, वन्दिभिः, पर्यङ्के, स्तूयमानम् ॥ २६ ॥ कस्मिन्चित्, उद्धवादिभिः, मन्त्रिभिः, मन्त्रयन्तम्, क, अपि, जलक्रीडारतम्, वारमुख्याबलावृतम् ॥ २७ ॥ कुत्रचित्, द्विजमुख्येभ्यः, स्वलंकृताः, गाः, ददतम्, मङ्गलानि, इतिहासपुराणानि, शृण्वन्तम्, अपश्यत् ॥ २८ ॥

**श्रीधरस्वामिविरचिता भावार्थदीपिका**

वितानाग्नीनाहवनीयादीनग्निहोत्रेण । पंचभिर्मखैर्महायज्ञैर्यजंतम् ॥ २४-३१ ॥

**श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः**

तत्राऽप्यन्यगृहेऽपि । अचष्टाऽपश्यदिति सर्वत्राग्रेऽपि ज्ञेयम् । अत्रैकस्य कृष्णवपुषो यथा बहून् प्रकाशानभिमानभेदक्रियाभेदसहितानपश्यत् तथैव एकेषामेवोद्धवादिवपुषामपि बहून्प्रकाशान् । किञ्चैकस्मिन् क्षणे मनोवेगेन प्रत्येकं षोडशसहस्रगृहान् गतो मुनिः पृथक्पृथक्कालभेदान् क्रियाभेदांश्चापश्यदित्यत एकक्षणमध्यमेव षड्घटिकं कालं पृथक्पृथक्स्थले प्रातरादिस्वभागांस्तदुचितक्रियाभेदसहितान् प्रकाशयन्प्राविशदित्यतः प्रातरादिकालानां षड्घटिकानां क्रियाणामपि सर्वकालवर्तित्वं मुनिर्ज्ञातवानिति ज्ञेयम् । मज्जनायेति प्रातःसमयो व्यंजितः । ततः सुतलालनपरदर्शनानंतरम् ॥ २३ ॥ जुह्वंतं होमं कुर्वंतमिति पूर्वाह्णः । पंचभिः पाठहोमातिथ्यर्चनतर्पणबलिभिर्यजंतमिति मध्याह्नः । क्वापि गृहे ब्राह्मणभोजनादवशिष्टमन्नं भुंजानमित्यपराह्णः ॥ २४ ॥ ब्रह्म गायत्री, गायत्रीजपे सर्ववेदजपस्यांतर्भूतत्वात् 'गायत्री परमं ब्रह्म' इति स्मृतेरिति सायाह्नः । एकत्र एकस्मिन् गृहे । असिवर्त्मसु कोक्षेयकपरिवर्तनावर्तनोद्वर्तनादिमार्गेषु चरंतं शिष्यान् शिक्षयंतमिति पुनः प्रातः ॥ २५ ॥ अश्वैर्गजैरिति पुनर्मध्याह्नः । क्वचिच्छयानमिति रात्रिशेषः ॥ २६ ॥ मंत्रयंतमिति प्रदोषः । जलक्रीडेत्यपराह्णः । वारे द्वारे मुखं गताऽऽगतपुरुषनिरीक्षणार्थं यासां ता वारमुख्याः ताश्च ता अवलाश्चेति वारमुख्यावलास्ताभिरावृतः । मुखमेव मुख्यं स्वार्थे यत् । "वारो द्वारे हरे कुब्जवृक्षे सूर्यादिवासरे । समूहेऽवसरे क्षणे" इति वारतांतविः ॥ २७ ॥ द्विजमुख्येभ्य इत्युक्तेः क्षत्रियादीनां दानस्वीकारानधिकार उक्त इति पूर्वाह्णः । चोत्र पादपूरणे । मंगलानीति पुराणेतिहासविशेषणम् । "इतिहासपुराणानां श्रवणं मंगलं परम् । गीयते सर्वथैवेषु मंगलायतनो हरिः ॥" इति नारदीये । अत्रापराह्णः । "इतिहासपुराणाभ्यां षष्ठसप्तमकौ नयेत्" इति स्मृतेः ॥ २८ ॥

**श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी**

तत इति सार्द्धत्रयोदशकम् । तत्र तस्य रात्रावागमनेपि योगीन्द्रत्वान्मनोजवत्वेपि वक्ष्यमाणनानासमयलीलादर्शनं योगमायाविलासेनैव युगपत्समयवैचित्र्यात् अन्यथा तस्य विस्मय एव न स्यात् तत्र मज्जनाय स्नानायेति प्रातर्लीला ॥ २३ ॥ "पाठो होमश्चातिथीनां सपर्य्या तर्पणं बलिः" एतैः पञ्चभिः महायज्ञैर्यजन्तम् अवशेषितम् अवशिष्टं भुञ्जानमित्यन्तं मध्याह्नस्य ॥ २४ ॥ क्वापि केषुचित् सन्ध्यामुपासीनं ब्रह्म गायत्रीं वाग्यतं वाचो यतं यमनं यत्र तत्कृतमौनं यथा स्यादित्यर्थः । इति कालत्रयस्यैव असिवर्त्मसु खड्गविद्याशिक्षामार्गेषु ॥ २५ ॥ क्वापि केषुचित् स्थानेषु अश्वादिभिर्विविधतया चरन्तमिति प्रायः पूर्वाह्नस्य गदाग्रजमिति तत्सहितमिति भावः पर्य्यङ्के शयानमिति रात्रिशेषस्य वन्दिभिः स्तूयमानत्वात् ॥ २६ ॥ आदिशब्दाद्विकद्वादिभिः चकाराच्छ्रीबलदेवादिभिश्च एवमुद्धवादीनामपि प्रतिगृहं स्थितिरुद्दिष्टा वारमुख्याबलावृतं वारमुख्या वेश्याश्रेष्ठाः अबला महिष्याद्याः ताभिरावृतम् ॥ २७ ॥ सुष्ठ्वलङ्कृताः सौवर्णशृङ्गादिभिः इति प्रायो मध्याह्नस्य मङ्गलानि शान्तिसूक्तानि पुण्यगीतादीनीति वा प्रायोऽपराह्नस्य इतिहासपुराणाभ्यां षष्ठसप्तमकौ नयेदिति विधानात् ॥ २८ ॥

**श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी**

अचष्ट अपश्यत्, गोविन्दं निजाशेषैश्वर्य्यप्रकटनाय पृथ्व्यामवतीर्णं साक्षाद्भगवन्तम्; अत्रापि तथाग्रे सर्व्वत्रापि पूर्व्ववच्छ्रीभगवता तस्य पूजनप्रश्नादिकमपि ज्ञेयम्, सर्व्वत्रैव सद्धर्म्मप्रदर्शनात्; यद्वा, महाश्चर्य्यप्रदर्शनेन सुविस्मितस्य दिदृक्षोद्रेकेण परिश्रमतो विश्रामाभावेनातिथ्याद्यनपेक्षया वा तत्तत् सिद्धमिति वोद्धव्यम् । मज्जनाय माध्याह्निकस्थानाय ॥ २३ ॥ पाठो होमश्च, अतिथीनां सपर्य्या, तर्पणम्, बलिः, एतैः पञ्चभिर्महायज्ञैर्जुह्वन्तमित्यादेः क्रियत्यनेनैवान्वयः । यजनादेर्माध्याह्निककृत्यस्यैव तत्र तत्र दृश्यमानत्वात् । एवं तस्य मध्याह्न एवागमनम्, किवा श्रीकृष्णसम्भाषणादिना तत्र मध्याह्नो वृत्त इति

ज्ञेयम् ॥ २४ ॥ सन्ध्यां माध्याह्निकीमेव; यद्वा सायन्तनीम्; परमैश्वर्य्यप्राकट्यात् सर्व्वं समञ्जसम्; ब्रह्म गायत्रीम्, वाग्यतं कृतमौनम्, असिवर्त्मसु खड्गविद्याशिक्षागतिषु ॥२५॥ क्वापि गृहे अश्वादिभिर्विविधतया चरन्तमिति तदगनादेः सुविस्तीर्णतया, किंवा तस्य बहिःप्रदेशोपवनादिषु ज्ञेयम् । एवमग्रेऽपि । क्वचिदेकस्मिन्नेव गृहे अश्वैर्विचरन्तं तदनु गजैस्तदनन्तरं रथैरिति । यद्वा, क्वचिदश्वैः, क्वचिद्गजैः, क्वचित् रथैरिति ज्ञेयम् । गदाग्रज इति तत्सहितमिति भावः । पर्य्यंके शयानमिति मध्याह्नभोजनानन्तरमेव, किंवा रात्रिशेषे, अतएव वन्दिभिः स्तूयमानम्, आदि-शब्दाद्विरुद्धादयः, चकाराच्छ्रीबलदेवादिभिश्च ॥ २६ ॥ एवमुद्धवादीनामपि प्रतिगृहं स्थितिरुद्दिष्टा; वारमुख्याबलावृतं वारमुख्या वेश्या श्रेष्ठाः, अबला महिष्याद्यास्ताभिरावृतम् ॥२७॥ सुष्ठ्वलंकृताः सौवर्णशृंगादिभिः, इतिहासा भारतादयः, मंगलानि शान्तिसूक्तानि पुण्यगीतादीनि वा ॥ २८ ॥

## श्रीमद्वीरराघवाचार्यकृता भागवतचन्द्रचन्द्रिका

तत्रापि गृहे गोविन्दमाचष्ट ददर्श कथम्भूतं लालयन्तम् उपच्छन्दयन्तं । तत इति । मज्जनाय स्नानाय कृत उद्यमो यत्नो येन तथाभूतम् ॥२३॥ जुह्वन्तमित्यादिद्वितीयान्तानां क्वचिदित्यादि ददर्शेत्यन्तः वितानाग्नीन् यज्ञीयानाहवनीयाद्यग्नीन् पञ्चभिर्मखैर्महायज्ञैः । भोजयन्तमिति । अवशेषितं परिवेषणावशेषितम् ॥ २४ ॥ क्वचिद्ब्रह्म स्वात्मानं जपन्तमवलोकयन्तमित्यर्थः । ब्रह्म प्रणवं वा यद्वा ब्रह्म वेदं जपन्तं "वेदमेव जपेन्नित्यम्" इति शास्त्रात् क्वचिद्वाग्यतं मौनीभूतं स्थितम् एकत्र क्वचिदसिचर्मभ्यां खड्गे खेटाभ्या सहासिवर्त्मसु खड्गभ्रामणगतिषु चरन्तं गदाग्रजं कृष्णं । क्वचिच्छयानमिति । वन्दिभिः स्तुतिपाठकैः स्तूयमानञ्च ॥ २५-२६ ॥ स नारदः क्वचिदुद्धवादिभिः मन्त्रिभिर्मन्त्रयन्तं वारमुख्याभिर्गणिकाश्रेष्ठाभिरबलाभिः स्त्रीभिः परिवृतम् ॥ २७ ॥ सुलष्ठ्वङ्कृताः धेनूर्ददतं प्रत्यच्छन्तम् मङ्गलानि मङ्गलस्तुतीश्च शृण्वन्तम् ॥ २८ ॥

## श्रीविजयध्वजतीर्थकृता पदरत्नावली

क्वापि गृहे ब्राह्मणदत्तावशेषितमन्नम् ॥ २४ ॥ असिचर्मभ्यां शिष्यवर्त्मसु चरन्तं शिष्यान्छिक्षयन्तम् ॥ २५-२६ ॥ वारमुख्याभिरबलाभिरावृतं वेष्टितम् ॥२७॥ ददतमिति पाठः । ददन्तमिति पाठे "दद दाने" इत्यस्य धातोः शत्रादेशः ॥२८-३१॥

## श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

तत्राप्यचष्ट अपश्यदिति तत्रैव गृहेषु प्रायः कृष्णकर्तृकपूजास्तुत्यादिकं ज्ञेयम् अपश्यदित्येव क्रिया अतः परेष्वपि सार्द्धचतुर्दशश्लोकेष्वनुवर्त्तनीया । अत्रैकस्य कृष्णवपुषो यथा बहून् प्रकाशान् अभिमानभेदक्रियाभेदसहितान् अपश्यत् एकेषामेवोद्धवादिवपुषामपि बहून् प्रकाशान् किञ्चैकस्मिन्नेव क्षणे मनोवेगेन प्रत्येकं षोडशसहस्रगृहान् गतो मुनिः पृथक् पृथक् कालभेदान् क्रियाभेदांश्चापश्यदित्यत एक क्षणमध्यमेव षष्टिघटिकं कालं पृथक् पृथक् स्थले प्रातरादिस्वभागांस्तदुचितक्रियाभेदसहितान् प्रकाशयन् प्राविशदित्यतः प्रातरादिकालानामपि षष्टिघटिकीनां क्रियाणामपि सर्वकालवर्त्तित्वं मुनिर्ज्ञातवानिति ज्ञेयं । मज्जनायेति प्रातः समयो व्यञ्जितः ॥ २३ ॥ क्वचिद्वितानाग्नीनाहवनीयादीन् अग्निहोत्रेण जुह्वन्तमिति पूर्वाह्नः क्वापि पञ्चभिर्मखैरिति । "पाठो होमश्चातिथीनां सपर्य्या तर्पणं बलिः" इति पञ्चमहायज्ञैः यजन्तमिति मध्याह्नः भोजयन्तं भुञ्जानमित्यपराह्नः ॥ २४ ॥ सन्ध्यामुपासीनमिति सायाह्नः । असिचर्मभ्यामिति पुनः प्रातः ॥ २५ ॥ अश्वैर्गजैरिति पुनर्मध्याह्नः क्वचिच्छयानमिति रात्रिशेषः ॥ २६ ॥ मन्त्रयन्तञ्चेति प्रदोषः । जलक्रीडारतमित्यपराह्नः ॥ २७ ॥ गाः ददतमिति पूर्वाह्नः इतिहासैरित्यपराह्नः । इतिहासपुराणाभ्यां षष्ठसप्तमकौ नयेदिति स्मृतेः ॥ २८ ॥

## गूढार्थदीपिनी

मज्जनाय स्नानाय वितानाग्नीन् यज्ञाग्नीन् आहवनीयादीन् । पञ्चभिः मखैः यज्ञैः पाठहोमातिथ्यार्चनतर्पणैः जुह्वन्तम् होमं कुर्वन्तम् । नुमार्षः ॥ २३ ॥ ब्रह्म गायत्रीम् । वाग्यतं मौनं यथा स्यात्तथा ॥ २४ ॥ एकत्र एकस्मिन् गृहे । वर्त्मसु खड्गभ्रमणःमार्गेषु चरन्तं शिष्यान् शिक्षयन्तम् गदाग्रजं श्रीकृष्णम् ॥ २५ ॥ मन्त्रयन्तं षड्गुणचिन्तनं मन्त्रः । गुणाश्च सन्धिविग्रहयानासनद्वैधीभावसमाश्रयाख्या ज्ञेयाः । इति नीतिशास्त्रम् ॥ २६ ॥ वारमुख्या स्वाबला एव न तु वेश्याः वरमेव वारमतिसुन्दरं मुखं यासां ताः । यद्वा । वारे द्वारे मुखं भगवत्प्रतीक्षार्थं यासां ताः ताश्च ताः अबलाश्चेति ताभिरावृतम् । मुखमेव मुख्यं स्वार्थे यत् । 'वारो द्वारे हरे'-इति वारतान्तविः ॥ २७ ॥ अप्यर्थे चकारः । मङ्गलानि 'इतिहासपुराणानां श्रवणं मङ्गलं परम्' इति नारदीये ॥ २८-२९ ॥

## श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

तत्राप्याचष्टापश्यत् मज्जनाय कृतोद्यममपश्यत् अपश्यदित्यग्रेऽपि सम्बध्यते ॥ २३ ॥ वितानाग्नीन् आहवनीयादीन् अग्निहोत्रेण जुह्वन्तम् पाठहोमातिथिसपर्य्यातर्पणबलिदानाख्यैः, पञ्चमखैः ॥ २४-३१ ॥

## श्रीसत्यधर्मकृता भागवतटिप्पणी

शिशून्सुतान् । वयस्तारतम्यात्पृथगुक्त्युपपत्तिः । शिशून्पौत्रादीन्सुतान्स्वसुतानिति वा । गोविन्दमाचष्टेऽपश्यत् । ततस्तद्गेहान्मज्जनाय स्नानाय ॥ २३ ॥ वितानाग्नीनाहवनीयादीनग्निं जुह्वन्तं पञ्चभिर्मखैर्महायज्ञैर्यजन्तं द्विजान्क्वापि भोजयन्तमवशेषितं तद्भुक्त्यवशेषं भक्तं भुञ्जानम् ॥ २४ ॥ ब्रह्मगायत्रीं जपन्तं वाक् यता नियमिता येनेति वाग्यतम् । शिष्यवर्त्मसु शिक्षणीयमार्गेषु । असिश्च चर्म च ताभ्यां चरन्तम् । एवं चरत्वमिति तान्प्रति बोधनाय स्वयं चरन्तम् ॥ २५ ॥ क्वाप्यश्वैः क्वापि रथैः क्वापि च गजैश्चरन्तं पर्यङ्के क्वचिच्छयानं क्वचिद्बन्दिभिः स्तूयमानं ददर्श ॥२६॥ मन्त्रिभिरुद्धवादिभिः कस्मिंश्चिद्गेहे मन्त्रयन्तं क्वापि वारमुख्याबालाभिरावृतम् ॥ २७ ॥ स्वलङ्कृता अत्यलङ्कृता गा ददन्तम् । इतिहासो । इतिह आसेति बोधनं यत्र स इति तिङ्गां सुपा समासः । भारतादिः पुराणान्यष्टादशसङ्ख्यानि मङ्गलानि तत्प्रदानि शृण्वन्तम् ॥ २८ ॥

## श्रीमद्वल्लभाचार्यकृता सुबोधिनी

तत्र सन्निवेशान्तरमाह तत्राप्यचष्टेति । शिशून् पुत्रादीन् । तत्र भगवन्तं दूरादेव सन्निवेशान्तरस्थितं दृष्ट्वा, तत्त्वसङ्ख्यापर्यन्तं तत्तद्भावस्थितं भगवन्तं पश्यन्, तत्र तत्र प्रविश्य, ततस्ततो निर्गत इत्याह ततोऽन्यस्मिन्नित्यादि । अथोवाचेत्यतः प्राक्तनेन । मज्जनाय मर्दनानन्तरं स्नानाय कृत उद्यमो येन ॥ २३ ॥ वितानाग्नीन् यज्ञविताने स्थितान् गार्हपत्यादीन् । 'सोमं विधाय अवभृथस्नानानन्तरं सा यावद्रात्रेः संतिष्ठत' इति न्यायेन मध्यरात्रावप्यग्निहोत्रहोमः । तथैवान्यत्र पञ्च मखाः देवयज्ञादयः पञ्चगृहेषु । क्वापि गृहे द्विजान् भोजयन्तं रात्रिभोजनेन । ततोऽवशेषितं भुञ्जानं गृहान्तरे । एवं नव गृहाः पूर्वोक्तैः सह द्वादश ॥२४॥ पुरुषार्थचतुष्टयं साधयन्तमाह । तत्र धर्मे क्वापि सन्ध्यामुपासीनम्, अन्यत्र जपन्तम्, तस्यैव विशेषणं वाग्यतमिति । मौनव्रतधरं भिन्नमितिविमर्शः । एकत्र असिचर्मभ्यां चरन्तं असिवर्त्मसु शास्त्रोक्तखड्गमार्गशिक्षासु ॥ २५ ॥ तथैव अश्वै रथैर्गजैः सह विचरन्तन् । गदाग्रजं भक्तरक्षार्थं तथा यतमानमित्यर्थः । पर्यङ्के क्वचिच्छयानम् । अन्यत्र बन्दिभिः स्तूयमानम् । दशधाऽयं धर्मो निरूपितः ॥ २६ ॥ अर्थं निरूपयति मन्त्रयन्तमिति । कामं निरूपयति जलक्रीडारतमिति ॥ २७ ॥ मोक्षं निरूपयन् सर्वाण्यङ्गानि निरूपयति कुत्रचिद्द्विजमुख्येभ्य इति । शृण्वन्तमिति इतिहासपुराणानीति विशेषः । मङ्गलानि भगवद्गुणान् ॥ २८ ॥

## श्रीसुबोधिनी-सारः

तत्र तस्मिन्गृहेपि सुतान् शिशून् बालान् लालयंतं गोविंदमचष्टापश्यत् ततोन्यस्मिन् गेहे मज्जनाय स्नानार्थं कृत उद्यमो येन तं श्रीकृष्णमपश्यत् ॥ २३ ॥ वितानाग्नीन् आहवनीयादीन् जुह्वंतं होमं कुर्वंतमग्निहोत्रविधिना पंचभिर्मखैर्महायज्ञैर्यजंतं क्वपि गृहे द्विजान् ब्राह्मणान् भोजयंतं भोजनं कारयंतम् अवशेषितमुर्वरितमन्नं क्वापि भंजानम् ॥ २४ ॥ क्वापि संध्यामुपासीनं वाग्यतं मौनं यथा भवति तथा ब्रह्म गायत्रीं ॐकारं वा जपंतं एकत्र एकस्मिन् गृहेसिचर्मभ्याम् असेः खड्गस्य वर्त्मसु मार्गेषु चरंतं मंडलाकारेण भ्रमंतम् ॥ २५ ॥ क्वापि गृहेऽश्वैः क्वापि गजैर्हस्तिभिः क्वापि रथैर्विचरंतं गदाग्रजं हरिमपश्यदित्यन्वयः सर्वत्र क्वचित् गेहे पर्यंके शय्योपरि शयानं क्वापि बंदिभिः स्तूयमानं च ॥ २६ ॥ कस्मिंश्चिद्गृहे उद्धव आदिर्येषाम् इत्यतद्गुणो बहुव्रीहिरिति गुरवः । उद्धवद्वयमिति माथुरीयहरिवंशे इति भट्टाः । तैर्मंत्रिभिर्मंत्रयंतं क्वापि गृहे जलक्रीडायां रतं वारमुख्या वेश्या अबलाः स्त्रियस्ताभिर्वृतं कर्मधारयो वा ॥ २७ ॥ कुत्रचिद्गृहे विप्रोत्तमेभ्यः स्वलंकृताः सुभूषिता गा ददतम् इतिहासो भारतं पुराणानि मंगलानि स्वस्तिपठनादीनि च शृण्वंतम् ॥ २८ ॥

## श्रीविट्ठलरायात्मजश्रीवल्लभकृतलेखः

तत्राप्यचष्टेत्यत्र । शिशूनिति । बालकान् सुतान्, ननु प्रौढानित्यर्थः । ततोऽन्यस्मिन्नित्यस्याभासे । अत्र तत इति आनन्तर्यवाचकं पदमुक्तम् । अग्रेऽष्टाविंशतिसंख्यापर्यन्तं मध्ये तत इत्यादिपदाभावादत आरभ्यैकं प्रकरणमित्याशयेनाहुः तत्त्वसङ्ख्यापर्यन्तमिति । भोजयन्तं द्विजानित्यत्र । एते नव गृहा इति । 'यजन्तं पञ्चभिर्मखै'रिति 'देवयज्ञः पितृयज्ञो भूतयज्ञो मनुष्ययज्ञो ब्रह्मयज्ञश्चे'ति पञ्चापि मखा भिन्नगेहेषु । 'अतस्ततोऽन्यस्मि'न्नित्यारभ्य 'भुञ्जानमवशेषित'मितिपर्यन्तं नवगृहाः । ते पूर्वोक्तैस्त्रिभिः सहिता द्वादशगृहा जाताः । तत्त्वप्रकारकगणनायां तु पञ्चापि मखा मखत्वप्रकारेणैक एव । अत'स्ततोऽन्यस्मि'न्नित्यारभ्य पञ्चैव प्रकारा जाता इति भावः । अग्रे धर्मसाधने गृहा दश । प्रकारस्तु धर्मरूपेणैक एव । मोक्षसाधने गृहद्वयम् । प्रकारस्तु मोक्षत्वेनैक एव । तथा 'चेतिहासपुराणानि शृण्वन्त'मितिपर्यन्तं षड्विंशतिगृहाः । प्रकारा नव । त्रिविधायां गुरुसेवायां गृहास्त्रयः । प्रकारस्त्वेक एव । अन्यत्र तु यथाश्रुतमेव ।

## गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

मज्जनाय स्नानाय कृत उद्यमो येन तम् । वितानाग्नीनाहवनीयादीन् जुह्वन्तम् । पञ्च मखा देवयज्ञादयस्तैर्देवादीन् यजन्तम् ॥ २३ ॥ अवशेषितं ब्राह्मणभोजनावशिष्टम् । ब्रह्म मन्त्रं प्रणवं वा जपन्तम् । वाग्यतं मौनिनम् । अपश्यदिति सर्वत्र

द्वितीयान्तेनान्वयः ॥ २४ ॥ असिचर्मभ्यां खड्गखेटाभ्यां सहासिवर्त्मसु खड्गभ्रामणमार्गेषु चरन्तं गदाग्रजं कृष्णम् ॥ २५-२६ ॥ वराणां समूहो वारं स एव मुख्यो यासां ता वारमुख्या वेश्यास्तासां बलेन गणेनावृतं जलक्रीडारतं क्वापि ददर्श ॥ २७ ॥ मङ्गलानि शुभावहानि इतिहासादीनि शृण्वन्तम् । कदाचित् क्वचित् गृहे प्रियया सह हास्यकथया हसन्तम् ॥ २८ ॥

### अन्वितार्थप्रकाशिका

तत इति ॥ ततः अन्यस्मिन् गृहे मज्जनाय स्नानाय कृतोद्यमम् अपश्यत् क्वचिद् वितानाग्नीन् आहवनीयादीन् जुह्वन्तम् । नुमार्षः । क्वचित् पञ्चभिर्मखैः देवयज्ञादिभिर्महायज्ञैः देवादीन्यजन्तम् अपश्यत् ॥ २३ ॥ भोजयन्तमिति ॥ क्वापि द्विजान् भोजयन्तं क्वापि अवशेषितं ब्राह्मणभोजनावशिष्टं भुञ्जानं क्वापि सन्ध्यामुपासीनं क्वापि ब्रह्म गायत्रीमन्त्रं प्रणवं वा जपन्तं वाग्यतं मौनिनम् अपश्यत् । वाचो यतं यमनं यत्रेति जपक्रियाविशेषणं वा ॥ २४ ॥ एकत्रेति ॥ एकत्र क्वचित् असि-चर्मभ्यां खड्गखेटाभ्यां सहासिवर्त्मसु खड्गभ्रमणमार्गेषु चरन्तं क्वापि अश्वैः गजैः रथैश्च विचरन्तं गदाग्रजम् अपश्यत् ॥ २५ ॥ क्वचिदिति ॥ क्वचित् पर्यङ्के शयानं वन्दिभिः स्तूयमानं चापश्यत् । कस्मिंश्चित्काले उद्धवादिभिर्मन्त्रिभिर्मन्त्रयन्तम् अपश्यत् । शता आर्षः । निवृत्तप्रेषणाण्णो वा । प्रतिगृहमुद्धवादिभेदो ज्ञेयः ॥ २६ ॥ जलेति ॥ क्वापि वारमुख्याः वेश्या तासां बलेन गणेनावृतं जलक्रीडारतमपश्यत् । कुत्रचित् द्विजमुख्येभ्यः स्वलंकृताः गाः ददतमपश्यत् ॥ २७ ॥ इतिहासेति ॥ मङ्गलानि शुभावहानि इतिहासादीनि शृण्वन्तं कदाचित्क्वचित् गृहे प्रियया सह हास्यकथया हसन्तमपश्यत् ॥ २८ ॥

### श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्

श्रीगोपीनाथजीमहाराजसत्पछे । सर्वेनेनमो हरिकृष्णाये । इत ऊर्ध्ववितानाग्नीन् आहवनीयादीन् अग्निहोत्रेण जुह्वंतं । पंचभिर्मखैर्महायज्ञैः यजंतं ॥ २४ ॥ वाग्यतं वाग्यतानियमिता यस्मिन् तत् । ब्रह्मगायत्रीरूपं वेदाख्यं ॥ २५-२६ ॥ वारमुख्या वेश्या अबला महिष्यश्च ताभिरावृतं । यद्वा वारमुख्याश्च ता अबलाश्च ताभिरावृतं ॥ २७-२९ ॥

### भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

तत इति । ततः नारदः, अन्यस्मिन् गृहे, मज्जनाय स्नानाय, कृत उद्यमो येन तथाभूतं, अपश्यत् । क्वचित् विता-नाग्नीन्, यज्ञीयानाहवनीयादीन् जुह्वन्तं च, अपश्यत् । क्वचित्, पञ्चभिः मखैर्महायज्ञैः, यजन्तं, अपश्यत् ॥ २३ ॥ भोज-यन्तमिति । क्वापि, कस्मिंश्चिद्गृहे, द्विजान् भोजयन्तं, क्वापि अवशेषितं परिवेषणावशेषितं, विघसान्नमित्यर्थः । भुञ्जान-मश्नन्तं, क्वापि संध्यां, उपासीनमुपासितवन्तं, क्वापि, ब्रह्म ब्रह्मस्वरूपं स्वात्मानं, जपन्तमवलोकयन्तं, क्वापि, वाग्यतं मौनीभूय स्थितं, नारदः अपश्यत् ॥ २४ ॥ एकत्रेति । एकत्र एकस्मिन् गृहे, असिचर्मभ्यां खड्गखेटाभ्यां सह, असिवर्त्मसु खड्गभ्रामण-गतिषु, चरन्तं, गदाग्रजं श्रीकृष्णं, क्वापि, अश्वैः चरन्तं, क्वापि रथैः चरन्तं, क्वापि गजैः विचरन्तं च, नारदः अपश्यत् ॥२५॥ क्वचिदिति । नारदः, क्वचिद्गृहे, पर्यङ्के शय्यायां शयानं, बन्दिभिः स्तूयमानं च, अपश्यत् । कस्मिंश्चिद्गृहे, उद्धवादिभिः, मन्त्रिभिश्च मन्त्रिभिरपि, मन्त्रयन्तमालोचयन्तं च ॥ २६ ॥ जलक्रीडेति । क्वापि कस्मिंश्चिद्गृहे, जलक्रीडारतं, क्वापि वारमुख्या गणिकाश्रेष्ठाश्च ता अबलाश्च ताभिर्वृतस्तं, कुत्रचिद्गृहे, द्विजमुख्येभ्यः, स्वलंकृताः, गा धेनूः, ददतं अपश्यत् ॥ २७ ॥ इतिहासेति । क्वापि, इतिहासपुराणानि, मङ्गलानि मङ्गलार्थकाः स्तुतीश्च, शृण्वन्तं, कदाचित् क्वचित् गृहे, प्रियया सह, हास्यकथया हसन्तं, अपश्यत् ॥ २८ ॥

### कृष्णप्रिया

उस महल में भी देवर्षि नारद ने देखा कि भगवान् श्रीकृष्ण अपने नन्हें-नन्हें बच्चों को दुलार रहे हैं। वहाँ से फिर दूसरे महल में गये तो क्या देखते हैं कि भगवान् श्रीकृष्ण स्नान की तैयारी कर रहे हैं ॥ २३ ॥ ( इसी प्रकार देवर्षि नारद ने विभिन्न महलों में भगवान् को भिन्न-भिन्न कार्य करते देखा । ) कहीं वे यज्ञकुण्डों में हवन कर रहे हैं तो कहीं पञ्चमहायज्ञों से देवता आदि की आराधना कर रहे हैं। कहीं ब्राह्मणों को भोजन करा रहे हैं, तो कहीं यज्ञ का अवशेष स्वयं भोजन कर रहे हैं ॥ २४ ॥ कहीं सन्ध्या कर रहे हैं, तो कहीं मौन होकर गायत्री का जप कर रहे हैं। कहीं हाथों में ढाल-तलवार लेकर उनको चलाने के पैतरे बदल रहे हैं ॥ २५ ॥ कहीं घोड़े, हाथी अथवा रथपर सवार होकर श्रीकृष्ण विचरण कर रहे हैं। कहीं पलंगपर सो रहे हैं, तो कहीं वंदीजन उनकी स्तुति कर रहे हैं ॥ २६ ॥ किसी महल में उद्धव आदि मन्त्रियों के साथ किसी गम्भीर विषयपर परामर्श कर रहे हैं, तो कहीं उत्तमोत्तम वाराङ्गनाओं से घिरकर जलक्रीडा कर रहे हैं ॥ २७ ॥ कहीं श्रेष्ठ ब्राह्मणों को वस्त्राभूषण से सुसज्जित गौओं का दान कर रहे हैं, तो कहीं मङ्गलमय इतिहास-पुराणों का श्रवण कर रहे हैं ॥२८॥

हसन्तं हास्यकथया कदाचित् प्रियया गृहे। क्वापि धर्मं सेवमानमर्थकामौ च कुत्रचित् ॥ २९ ॥
[1]ध्यायन्त मेकमासीनं पुरुषं प्रकृतेः परम्। शुश्रूषन्तं गुरून् क्वापि कामैर्भोगैः सपर्यया ॥ ३० ॥
कुर्वन्तं विग्रहं कैश्चित् संधिं [2]चान्यत्र [3]केवलम्। कुत्रापि सह रामेण चिन्तयन्तं सतां शिवम् ॥ ३१ ॥
पुत्राणां दुहितॄणां च काले विध्युपपादनम्[4]। दारैर्वरैस्तत्सदृशैः कल्पयन्तं विभूतिभिः ॥ ३२ ॥
प्रस्थापनोपानयनैरपत्यानां महोत्सवान्। वीक्ष्य योगेश्वरेशस्य येषां लोका विसिस्मिरे ॥ ३३ ॥
यजन्तं [5]स्वकलान् देवान् क्वापि क्रतुभिरूर्जितैः। पूर्तयन्तं क्वचिद् धर्मं कूपाराम [6]मठादिभिः ॥ ३४ ॥

### कर्वमक्षमा

अन्वयः—कदाचित्, हास्यकथया, गृहे, प्रियया, हसन्तम्, क्व, अपि, धर्मम्, सेवमानम्, च, कुत्रचित्, अर्थकामौ, सेवमानम्, अपश्यत् ॥ २९ ॥ प्रकृतेः, परम्, एकम्, पुरुषम्, ध्यायन्तम्, आसीनम्, क्व, अपि, गुरुन्, कामैः, भोगैः, सपर्यया, शुश्रूषन्तम्, अपश्यत् ॥ ३० ॥ केश्चित्, विग्रहम्, कुर्वन्तम्, च, अन्यत्र, केवलम्, सन्धिम्, कुर्वन्तम्, अपि, कुत्र, रामेण, सह, सताम्, शिवम्, चिन्तयन्तम्, अपश्यत् ॥ ३१ ॥ पुत्राणाम्, च, दुहितृणाम्, तत्, सदृशैः, वरैः, च, दारैः, च, विभूतिभिः, काले, विध्युपपादनम्, कल्पयन्तम्, अपश्यत् ॥३२॥ येषाम्, अपत्यानाम्, प्रस्थापनोपानयनैः, योगेश्वरस्य, महोत्सवान्, वीक्ष्य, लोकाः, विसिस्मिरे ॥ ३३ ॥ क्व, अपि, सकलान्, देवान्, उर्जितैः, क्रतुभिः, यजन्तम्, क्वचित्, कूपाराम, मठादिभिः, धर्मम्, पूरयन्तम्, अपश्यत् ॥ ३४ ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

काले तत्तत्समये विधिना उपयापनं प्रापणं विवाहमित्यर्थः। कल्पयंतं घटयंतम्। विभूतिभिर्विभवैः ॥ ३२ ॥ प्रस्थापनं दुहितृजामात्रादीनां स्वगृहात्तत्तद्गृहं प्रति नयनम्। उपानयनं तत्तगृहात्पुनरानयनम्। तैर्महोत्सवान्कल्पयंतम्। योगेश्वरेशस्य तेषामपत्यानां महोत्सवान्वीक्ष्य लोकाः सर्वे विसिस्मिरे विस्मयं चक्रुः। तथाभूतान् कल्पयंतम् ॥ ३३-३५ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

कदाचित् रत्यवसरे, इति निशीथः। क्वापि धर्ममित्यादिना दिनरात्री ॥ २९ ॥ गुरूनाचार्यादीन्। अत्र तोषिणी—त्रिवर्गपराणां लीलामुक्त्वा मोक्षपरां तामाह—ध्यायंतमिति। मनुष्यचेष्टानुकरणलीलामात्रत्वान्न वैष्णवसिद्धान्तहानिरिति तयोरावश्यकमुख्यलीलामाह—गुरूञ्छ्रीसांदीपनिगर्गवसुदेवादीन्। कामादिभिः कामा अभीष्टपदार्था, भोगा उपभोगार्हपदार्थाः। सपर्या परिचर्या, देवशुश्रूषा त्वग्रे वक्ष्यते, इति मध्याह्नादिः ॥ ३० ॥ कुर्वंतं कर्तुमिच्छंतमारभमाणं वा केशवं तत्रतत्र ब्रह्मेशयोरपि मोहनाद्व्यक्तीकृततन्नानार्थम्। सतां पांडवादीनाम्। कथमेषां शिवं स्यादिति चिन्तयन्तम् ॥ ३१ ॥ इत्यर्थ इति—उपयाप्यते प्राप्यते वरकन्याभ्यां श्वशुरगृहं यत्र तदुपयापनमिति निरुक्तेः। विभूतिभिर्बहुसंभारैः 'विभूतिर्विभवो वसु' इति नाममाला ॥ ३२ ॥ तथाभूतान् विस्मयजनकान्। योगेश्वराः सनकाद्यास्तेषां प्रभोर्वैकुण्ठनाथस्य लोका गरुडादयोऽपि विसिस्मिरे ॥ ३३ ॥ पूर्तं करोतीति पूर्तयति, ततः शतृप्रत्ययः। धर्मं धर्मस्वरूपमपि लोकसंग्रहाय तथा चरंतमित्यर्थः। धर्मं पूर्तयंतं पूरयन्तम्। 'पूर्तं कर्मणि पूरणे' इति निरुक्तिकोशात्। स्वस्य कलाः प्रतिमादिरूपान्साक्षाच्छ्रीविष्णवादिरूपांश्च क्रतुभिरर्चनात्मकैर्होमात्मकैर्वा। आलया देवादिगृहाणि तैः। पूर्ततया संपादयन्तम्। विश्वनाथस्तु—क्वचिद्यजन्तं चैत्रादौ चातुर्मास्यादौ युगादौ चेत्याह ॥ ३४ ॥

### श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी

गृहे कस्मिंश्चित् धर्मं सेवमानं भक्त्याऽनुतिष्ठन्तं कामं सेवमानम् उपभुञ्जानम् अर्थं सेवमानं साधयन्तम् ॥ २९ ॥ एवं त्रिवर्गपरतालीलामुक्त्वा मोक्षपरतालीलामाह—ध्यायन्तमिति। मनुष्यचेष्टानुकरणलीलामात्रत्वान्न वैष्णवसिद्धान्तहानिरिति भावः। तयोरावश्यकमुख्याङ्गलीलामाह—गुरून् श्रीसान्दीपनिगर्गवसुदेवादीन् कामादिभिः शुश्रूषन्तं कामाः अभीष्टपदार्थाः भोगा उपभोगार्हपदार्थाः सपर्या परिचर्या देवशुश्रूषयात्वग्रे वक्ष्यत इति मध्याह्नादेः एवमुत्तरत्रापि समया उन्नेयाः ॥ ३० ॥ कुर्वन्तं कर्तुमिच्छन्तमारभमाणं वा केशवं तत्रतत्र ब्रह्मेशयोरपि मोहनाद्व्यक्तीकृततन्नामार्थं कैश्चिदित्यनेन अन्यैश्चेत्यनेन च

१. मात्मानं-वीर. विज.; ध्यायन्नास्ते क्व चात्मानं-प्रा. पा.। २. चान्यैश्च-श्रीधर. टि.। ३. केशवम्-श्रीधर. वंशी. जीव. वीर. विज. विश्व.। ४. नायनं-विज.; यापतम्-श्रीधर. वंशी. जीव. वीर. विश्व.। ५. सकलान्-श्रीधर. वंशी. जीव. विज. विश्व.; स्वकलान्-वीर.। ६. रामालयादिभिः-वीर. विज.।

तत्तत्पृथग्गृहद्वये ज्ञेयम् । अन्यत्रेति क्वचित्पाठः सतां पाण्डवादीनां शिवं कथं स्यादिति विचारयन्तमित्यर्थः ।। ३१ ।। कुलकमध्य एव पुत्राणामिति युग्मकम् । तत्सदृशैः पुत्रसदृशैर्दारैः पुत्राणां दुहितृसदृशैर्वरैर्दुहितॄणां विभूतिभिः कृत्वा अस्य परेणान्वयः । तत्रे केषुचिद्गृहेषु पुत्राणां केषुचिद्गृहेषु दुहितॄणामिति ज्ञेयम् ।। ३२ ।। एवमग्रेपि लोका, विसिस्मिरे लोकातीतत्वात् तत्कुतः योगेश्वराणामीशस्य यद्वा योगेश्वरस्य सनकादिप्रभोः श्रीवैकुण्ठनाथस्य लोकाः श्रीगरुडादयोपि विसिस्मिर ।। ३३ ।। स्वस्य कलाः प्रतिमादिरूपान् साक्षाच्छ्रीविष्ण्वादिरूपांश्च क्रतुभिरर्चनात्मकैर्होमात्मकैश्च ऊर्ज्जितैः समृद्धैः पूर्त्तयन्तं पूर्त्ताख्यतया सम्पादयन्तम् आलया देवादिगृहाणि ।। ३४ ।।

## श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी

कयाचित् सुगुह्यया लोकोत्तरया वा प्रियया निजेष्टया हास्यकथया, प्रियया सहेति वा; गृहे कस्मिंश्चिद्धर्म्मं सेवमानं भक्त्यानुतिष्ठन्तं कामं सेवमानमुपभुञ्जानम्, अर्थं सेवमानं साधयन्तम् ।। २९ ।। त्रिवर्गपरतामुक्त्वा मोक्षपरतामाह—ध्यायन्तमिति । आत्मानं निजश्रीविग्रहम्, पुरुषं मनुष्याकारम्, प्रकृतेः परं सच्चिदानन्दघनमित्यर्थः । इति तस्य ध्यानेकशुभाश्रयत्वेन समाधिहेतुतोक्ता । यद्वा, आत्मानमात्मस्वरूपं प्रकृतेः परं पुरुषम्; भक्तिपरतामाह—शुश्रूषन्तमिति । आत्मानमेव श्रीशालग्रामादिभिः शुश्रूषन्तं च शुश्रूषमाणं पूजयन्तं गुरूंश्च सान्दीपनिगर्ग-वसुदेवादीन्, तैरेव शुश्रूषन्तम्, कामा नृत्यगीतादयः, भोगा उपभोगार्हद्रव्याणि, सपर्य्या परिचर्य्या गुरुषु च कामादयो यथायथमूह्याः, कामादीनां यथोत्तरं शुश्रूषणसाधनत्वे श्रैष्ठ्यम् ।।३०।। कुर्व्वन्तं कर्त्तुमिच्छन्तमारभमाणं वा, च अपि, केशवं साक्षात् परमेश्वरमपि; कैश्चिदित्यनेन अन्यैश्चेत्यनेन च तत्तत्पृथग्गृहद्वये ज्ञेयम् । किंवा कुत्रापीति परेणैवान्वयादेकस्मिन् सर्व्वं ततश्च रामेण सहेत्यस्य पूर्व्वेणाप्यन्वयः ।। ३१ ।। तत्सदृशैः पुत्रसदृशैर्दारैः पुत्राणाम्, दुहितृसदृशैर्वरैर्दुहितॄणाम्, विभूतिभिः कृत्वा, अस्य परेणाप्यन्वयः । तत्र क्वचित् क्वचिद् गृहे पुत्राणाम्, क्वचित् क्वचिच्च दुहितॄणामिति विवेचनीयम् । एवमग्रेऽपि । किंवा पूर्व्ववत् क्वापीत्यादेरप्रयोगेण कुत्रापीति पूर्व्वेणैवान्वयात् रामेण सह तत्तत् सर्व्वमेकस्मिन्नेव गृहे ज्ञेयम् । पतिगृहं दुहितुरेकत्वेऽपि दुहितॄणामिति बहुत्वं भ्रातृपुत्रादीनां कन्यापेक्षया अग्रे च बहुत्वं तत्तद्बाहुल्यात् । लोका विसिष्मिरे, लोकातीतत्वात्; तत् कुतः ? योगेश्वराणामीशस्य । अन्यत्तैर्व्याख्यातम् । यद्वा, विभूतिभिः सह उपानयनं पुत्रस्नुषादीनां श्वशुरादिगृहात् स्वसमीपे आनयनम्, योगेश्वरेशस्य श्रीसनकादिप्रभोः श्रीवैकुण्ठनाथस्य लोकाः श्रीगरुडादयः सेवका येषां महोत्सवानां तान् प्रति विसिष्मिरे, वैकुण्ठेऽपि तदभावात् ।। ३२-३३ ।। स्वस्य कला विभूतिरूपान् यजन्तम्, यद्वा, स्वकला अपि देवान् इन्द्रादीन् श्रीविष्ण्वादीन् वा ऊर्ज्जितैः समृद्धैः, पूर्त्तयन्तं पूर्त्ताख्यं धर्म्ममाचरन्तम्, आलया देवादिगृहाणि, कूपादीनां यथोत्तरं श्रैष्ठ्यम् । आदि-शब्दाद्वापी-तड़ागादयः ।। ३४ ।।

## श्रीमद्वीरराघवाचार्यकृता भागवतचन्द्रचन्द्रिका

कदाचित् क्वचिद्गृहे प्रियया सह हास्यकथया हसन्तम् ।। २९ ।। प्रकृतेः "भूमिरापोनलो वायुः" इत्यादिश्लोकद्वयोक्तप्रकृतिद्वयात्परं विलक्षणं परमपुरुषभूतं स्वात्मानं ध्यायन्तमनुभवन्तम् सपर्यया पूजया च गुरून् शुश्रूषन्तं परिचरन्तम् ।। ३० ।। कैश्चिद्विग्रहं विरोधं कुर्वन्तमन्यत्र गृहे सन्धिं कुर्वन्तं केशवं सतां साधूनां शिवं योगक्षेमं चिन्तयन्तम् ।। ३१ ।। पुत्राणामिति । काले तत्तत्समये पुत्राणां तत्सदृशैर्दारैः दुहितॄणान्तु तत्सदृशैर्वरैश्च विधिना शास्त्रोक्तेन उपयापनं प्रापणं विवाहमित्यर्थः । तद्विभवैः कल्पयन्तं घटयन्तम् ।। ३२ ।। प्रस्थापनेति । प्रस्थापनं दुहितृस्नुषाजामात्रादीनां स्वगृहं प्रति नयनं तद्गृहात्पुनरानयनम् उपानयनं तैरपत्यादीनां पुत्राणां दुहितॄणां च महोत्सवान् कल्पन्तं तान्विशिनष्टि, योगेश्वरेशस्य भगवत एवमपत्यादीनां महोत्सवान् वीक्ष्य लोकाः सर्वेपि विसिस्मिरे विस्मयञ्चक्रुः तथाभूतानुत्सवान्कल्पयन्तमितिसम्बन्धः ।। ३३ ।। यजन्तमिति । स्वकलान् स्वांशभूतान् देवानिन्द्रादीनूर्जितैर्बहुदक्षिणैः क्रतुभिर्यजन्तं कूपादिनिर्माणैर्धर्मं पूरयन्तं पूर्त्तं स्मार्त्तं धर्मं कुर्वन्तमित्यर्थः । पूर्त्तशब्दात्तत्करोतीति णिजन्ताच्छतानविशेषणानां वृत्तिर्नेत्यादिनिषेधस्य विशेष्यविषयत्वात् अत्र पूर्त्तस्य धर्मं प्रति विशेषणत्वात् सापेक्षस्यापि नामधातुवृत्तिरवगन्तव्यः ।। ३४ ।।

## श्रीविजयध्वजतीर्थकृता पदरत्नावली

काले प्राप्ते विध्युक्तप्रकारेण उपनायनम् उपनयनं स्वगृहं प्रत्यानयनं ब्राह्मणीकारणं कल्पयन्तं पुत्राणां दारैः सह दुहितॄणां वरैः सह योगं कल्पयन्तम् ।। ३२ ।। प्रस्थापनं परगृहं प्रति दुहितृप्रेषणम् उपनयनं स्वगृहं प्रत्यानयनं येषामिति षष्ठीद्वितीयार्थे लोकाः यानि कर्माणि वीक्ष्य विसिस्मिरे तानि कुर्वन्तं कर्मणामाचरणं वीक्ष्येति वा ।। ३३ ।। कूपादिभिः पूर्तयन्तं पूर्ताख्यधर्ममाचरन्तम् ।। ३४ ।।

## श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शिनी

हास्यकथयेति निशीथसमयः धर्ममर्थकामाविति दिनरात्री ।। २९ ।। ध्यायन्तमिति ब्राह्ममुहूर्त्तः ।। ३०-३१ ।। विधिना उपयापनं प्रापणं विवाहमित्यर्थः । कल्पयन्तं कारयन्तं विभूतिभिर्बहुसम्भारैः । वार्षिकोत्सवसमाप्तौ प्रस्थापनं दुहितृजामात्रादीनां

स्वगृहात्तद्गृहप्रापणं उत्सवारम्भे उपानयनं तद्गृहात् पुनरानयनं तैर्महोत्सवान् कल्पयन्तम् ॥ ३२ ॥ योगेश्वरस्य कृष्णस्य येषाम् अपत्यानां महोत्सवान् वीक्ष्य लोकाः विस्मयं प्रापुः ॥ ३३ ॥ क्वचिद्देवान् यजन्तमिति चैत्रादौ चातुर्मासे वा पुण्यकाले क्वचिद्युगाद्यादौ पूर्त्तयन्तं पूर्त्ततया सम्पादयन्तम् ॥ ३४ ॥

### गूढार्थदीपिनी

कामैः अभीष्टपदार्थैः ॥ ३० ॥ कुत्रापीत्यर्द्धम् । सतां भक्तानां शिवं योगक्षेमम् । यद्वा । पाण्डवादीनां शिवं कथं स्यादिति ॥ ३१ ॥ पुत्राणां तत्सदृशैः दारैः दुहितॄणां च तत्सदृशैः वरैः विधिना उपयापनं प्रापणं विवाहमित्यर्थः । उपयाप्यते प्राप्यते वरकन्याभ्यां श्वशुरगृहं यत्र तदुपयापनमिति निरुक्तेः । विभूतिभिः बहुसंभारैः कल्पयन्तं सम्पादयन्तम् ॥३२॥ उपानयनं तत्तद्गृहात्पुनरानयनम् । येषामपत्यानां महोत्सवान् वीक्ष्य लोका जना विस्मयं चक्रुः । णिलोपः छान्दसः विसिस्मियिरे इति भाव्यम् ॥ ३३ ॥ ऊर्जितैः बहुदक्षिणैः । पूर्तयन्तं पूरयन्तम् अपश्यत् । 'पूर्त कर्मणि पूरणे' इति निरुक्तिकोशात् । आरामः क्रीडावनम् । देवान् इन्द्रादीन् ॥ ३४ ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

काले तत्तद्विवाहसमये पुत्राणां तत्तत्सदृशैर्दारैः दुहितॄणाञ्च तत्तत्सदृशैर्वरैः विधिना उपयापनं प्रापणं विवाहं तत्तद्विभूतिभिर्विभवैः कल्पयन्तं कारयन्तम् ॥ ३२ ॥ प्रस्थापनानि भार्यानयनार्थं पुत्राणां तत्तद्भर्तृगृहे भर्तृसहितानां दुहितॄणाञ्च स्वगृहात् उपानयनं दुहितॄणां सभार्य्याणां पुत्राणाञ्च स्वगृहं प्रति तैः अपत्यानां पुत्राणां दुहितॄणाञ्च महोत्सवान् कल्पयन्तम् अपश्यत् प्रसङ्गात् लोकविस्मयमाह—योगेश्वरेशस्य येषामपत्यानां महोत्सवान् वीक्ष्य लोकाः विसिस्मिरे विस्मयं प्रापुः ॥ ३३ ॥ कूपारामालयादिभिः क्रियमाणैः धर्मं पूर्तयन्तं पूरयन्तम् ॥ ३४-३५ ॥

### श्रीसत्यधर्मकृता श्रीभागवतटिप्पणी

कदाचित्प्रियया हास्यकथया हसन्तं क्वापि धर्मं सेवमानं तत्साधनं सेवमानमर्थकामौ तथा साधयन्तम् ॥ २९ ॥ एकं प्रधानं प्रकृतेः परं पुरुषात्मानं स्वामिन्नहरि ध्यायन्तं कामैस्तदपेक्षितैर्भोगैः सपर्यया पूजया गुरून् शुश्रूषन्तं सेवमानं गुरून्सपर्यया स्वकृतया सहैव शुश्रूषन्तं श्रोतुमिच्छन्तं तमिति वा ॥ ३० ॥ विग्रहः कलहः सन्धिः समाधिः रामेणाग्रजेन सह सतां शिवं मङ्गलं चिन्तयन्तम् ॥ ३१ ॥ पुत्राणां तथा दुहितॄणां काले विहिते विधिनोपनायनमुपनीतिर्क्रीति स्त्रीणां प्रदानकर्मैव यथोपनयनं तथेत्यादेस्तासामपि तत्सम्भवति । यद्वोपनयनं पतिवसतेः स्ववसतिं प्रत्यायनं दारैः पुत्राणां तु वरैस्तत्सदृशैरिति दारदारिकावरानपि विभूतिभिः सहालङ्काराद्यैश्वर्येण सह कल्पयन्तमयं वर इयं कन्यावर इति योजयन्तम् ॥ ३२ ॥ प्रस्थापनं श्वश्रूश्च प्रतिप्रेषणं उपनयनैराकारणैरपत्यानाम् । एवं योगेश्वरेशस्य महोत्सवान् येषामुत्सवानां सकाशाल्लोका विसिस्मिरे । तान्वीक्ष्य स्वयं विसिस्मिरे । ये येषां कर्मणामुत्सवान्वीक्ष्य लोका विसिस्मिरे तान्कुर्वन्तं ददर्शेति वा ॥ ३३ ॥ सकलान्सोमाहान्स्वकलया सहितानिति वा इष्टिं कृत्वा क्वचित्पूर्तयन्तं रूपादिकं कृत्वा पूर्तरूपधर्मं कुर्वन्तम् ॥ ३४ ॥

### श्रीमद्वल्लभाचार्य्यकृता सुबोधिनी

ऋणमपाकुर्वन्निवाह हसन्तमिति । त्रैवर्गिकं तत्रैव शेषभूतमाह धर्मं सेवमानमिति ॥ २९ ॥ ध्यायन्तमेकमिति निदिध्यासितम् । शुश्रूषन्तं गुरूनिति । गुरुसेवा त्रिविधा ॥ ३० ॥ एवमलौकिकपुरुषार्थानुक्त्वा लौकिकं व्यवहारमाह कुर्वन्तं विग्रहं कैश्चिदिति । राज्यान्तरशिष्टा नाङ्गीकृताः । सन्धावङ्गीकृताः । केवलमित्यनेन समयभेदेनापि सन्धिविग्रहौ निरूपितौ । ततो लोकन्यायेन बलभद्रेण सह मन्त्रणं कथं सतां शिवं भवेदिति । अलौकिकेन वा कलावुत्पत्स्यमानानाम् ॥ ३१ ॥ पुत्राणां विवाहो दुहितॄणां च । विधिपूर्वकमुपपादनं काले युक्तसमये । किञ्च । पुत्राणां दारैः सह विभूतिभिः कल्पयन्तम् । क्वचिद्गृहे पुत्रं सभार्यं परमोत्सवयुक्तं करोतीत्यर्थः । तथा दुहितॄणामपि तत्सदृशैर्वरैः सहितानां विभूतिभिः कल्पयन्तम् । जामातृसहिता दुहितरः ऐश्वर्यादिसम्पन्नाः कृता इत्यर्थः ॥ ३२ ॥ तासामेव प्रस्थापनं उपनयनं च भर्तृगृहात्स्वगृहे समानयनम् । पुत्रवधूनां वा अपत्यानां महोत्सवान् कल्पयन्तमिति सम्बन्धः । आवश्यकत्वादनभिनिवेशेन करणं सम्भवतीति तद्व्यावृत्त्यर्थं महतीं समृद्धिमुपपादयति वीक्ष्येति । योगेश्वराणामपीश्वरत्वात्सामग्रीमनेकविधां अनायासेन शीघ्रं सम्पादयति । ततो येषां महोत्सवानां सम्बन्धिनो लोकाः तां दृष्ट्वा अभूतपूर्वत्वाद्विसिस्मिरे ॥ ३३ ॥ एवं लौकिकधर्मेषु केवललौकिकानुपपाद्य तदनुरूपधर्माननुपपादयति यजन्तं स्वकलान् देवानिति । स्वस्य कला येषु । भगवदावेशयुक्तान् । ऊर्जितैः लौकिकसाधनैः पुष्टैः । क्रतुभिर्यज्ञादिभिः शान्तिकपौष्टिकैर्वा । पूर्तमप्याह पूर्तयन्तमिति । कूपारामादिप्रतिष्ठार्थं देवतावाहनं कृत्वा अधिवासने उपविष्टमित्यर्थः । आरामा वाटिकाः, तत्र आलयाः गृहाः, देवस्थानानि वा । तामसादिभेदा उक्ता इति । अन्येषां तदादित्वम् ॥ ३४ ॥

### श्रीसुबोधिनी-सारः

कदाचिद्गृहे प्रियया पत्न्या सह हास्यकथया नर्मगोष्ठ्या हसंतं क्वापि धर्मं सेवमानं कुर्वंतं कुत्र चिद्गृहेऽर्थकामौ सेवमानम् ॥२९॥ क्वापि प्रकृतेः परं पुरुषम् एकं ध्यायंतमासीनं क्वापि वांछितभोगप्रदानैः सेवया च गुरून् सेवमानमपश्यत् ॥३०॥ कैश्चित्सह विग्रहं विरोधं कुर्वंतम् अन्यत्र गृहे संधि कुर्वंतं केशवम् अपश्यत् कुत्रापि गृहे रामेण सह सतां भक्तानां शिवं कल्याणं चिंतयंतम् ॥ ३१ ॥ काले समये पुत्राणां पुत्रीणां विधि विवाहमुपयापनं प्रस्थापनं विभूतिभिः संपद्भिः सह तत्सदृशैर्दारैः स्त्रीभिर्वरैः पुंभिः कल्पयंतं रचयंतम् ॥ ३२ ॥ एषामपत्यानां पुत्रपुत्रीणां प्रस्थापनोपानयनैर्महोत्सवान् वीक्ष्य योगेश्वराणामीश्वरस्य लोका विस्मयं प्रापुः ॥ ३३ ॥ क्वापि गृहे ऊर्जितैः समृद्धैः क्रतुभिर्यज्ञैः सकलान् देवान् यजंतं क्वचित् कूपाराममंदिरादिभिर्धर्मं पूर्त्तयंतं प्रवर्त्तयंतम् ॥ ३४ ॥

### गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

प्रकृतेः परं पुरुषोत्तममेकमात्मानं ध्यायन्तं कुत्रचिद्ददर्श ॥ २९ ॥ सपर्यया पूजासामग्र्या कामैर्वस्त्रादिविषयैस्तज्जन्यभोगैश्च गुरून् शुश्रूषन्तं सेवमानम्। कुत्रचित्कैश्चित्सह विग्रहं विरोधं कुर्वन्तम्। अन्यत्र गृहे च कैश्चित्सह सन्धि कुर्वन्तम् ॥३०॥ शिवं योगक्षेमं चिन्तयन्तम् ॥ ३१ ॥ काले इति समये पुत्राणां तत्सदृशैर्दारैः, दुहितॄणां तु तत्सदृशैर्वरैश्च विधिना शास्त्रोक्तप्रकारेण उपयापनं प्रापणं विवाहं कल्पयन्तं घटयन्तम्। विवाहितांश्च तान् विभूतिभिः कल्पयन्तं विभवप्रदानेन तत्संपन्नान् कुर्वन्तमित्यर्थः ॥ ३२ ॥ प्रस्थापनं दुहितृजामात्रादीनां स्वगृहात्तद्गृहं प्रतिनयनम्, उपायनं पुनस्तद्गृहात्स्वगृहानयनम्, तैः कल्पितान् येषां योगेश्वरेशस्य कृष्णस्यापत्यानां महोत्सवान् वीक्ष्य लोकाः सर्वे जना विसिस्मिरे विस्मयं चक्रुरित्यन्वयः ॥ ३३ ॥ क्वापि कुत्रचित् गृहे स्वकलान् स्वस्यैव कला अंशा येषु तान् स्वांशभूतान् देवानिन्द्रादीन् ऊर्जितैर्बहुदक्षिणैः क्रतुभिर्यजन्तम्। क्वचिच्च कूपारामादिनिर्माणैर्धर्मं पूर्तयन्तं स्मार्तं पूर्तसंज्ञकं धर्ममनुतिष्ठन्तमित्यर्थः ॥ ३४ ॥

### अन्वितार्थप्रकाशिका

क्वापीति ॥ क्वापि धर्मं सेवमानं कुत्रचित् अर्थं कामं च सेवमानं कुत्रचित् प्रकृतेः परं पुरुषम् एकमात्मनि ध्यायन्तमासीनमपश्यत् ॥ २९ ॥ शुश्रूषन्तमिति ॥ सपर्यया पूजासामग्र्या कामैर्वस्त्रादिविषयैस्तज्जन्यभोगैश्च गुरून् गर्गवसुदेवादीन् शुश्रूषन्तं सेवमानम्। शता आर्षः। कुत्रचित्कैश्चित्सह विग्रहं विरोधं कुर्वन्तं कर्त्तुमारभमाणम् अन्यत्र गृहे च कैश्चित्सह सन्धि कुर्वन्तं केशवमपश्यत् ॥ ३० ॥ कुत्रापीत्यर्द्धम् ॥ कुत्रापि रामेण सह सतां शिवं योगक्षेमं चिन्तयन्तम् अपश्यत् ॥ ३१ ॥ पुत्राणामिति ॥ काले तत्तत्समये पुत्राणां तत्सदृशैर्दारैः दुहितॄणां च तत्सदृशैर्वरैः विधिना उपयापनं प्रापणं विवाहमित्यर्थः। विभूतिभिः विभवैः कल्पयन्तं घटयन्तम् अपश्यत् ॥ ३२ ॥ प्रस्थापनेति ॥ वार्षिकोत्सवसमाप्तौ प्रस्थापनं दुहितृजामात्रादीनां स्वगृहात्तद्गृहं प्रति नयनम् उत्सवारम्भे च उपानयनं पुनस्तद्गृहात्स्वगृहानयनं तैर्महोत्सवान् कल्पयन्तं येषां योगेश्वरेशस्य कृष्णस्यापत्यानां महोत्सवान् वीक्ष्य लोकाः सर्वे जना विसिस्मिरे विस्मयं चक्रुः। णिलोपश्छान्दसः ॥ ३३ ॥ यजन्तमिति ॥ क्वापि कुत्रचित् गृहे स्वकलान् स्वस्यैव कला अंशो येषु तान् स्वांशभूतान्। सकलान् इति च पाठः। देवानिन्द्रादीन् ऊर्जितैर्बहुदक्षिणैः क्रतुभिर्यजन्तं क्वचिच्च कूपारामादिनिर्माणैः स्मार्त्तं धर्मं पूर्तयन्तं पूर्ततया सम्पादयन्तम् अपश्यत् ॥ ३४ ॥

### श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्

सपर्यया पूजया ॥ ३०-३१ ॥ काले विवाहयितुं योग्ये समये विधिना उपयापनं उद्वाहनं तत्सदृशैः पुत्रसदृशैः दारैः सह पुत्राणां कल्पयंतं कुर्वंतं क्वचिद्गृहेषु दुहितॄणां कन्यानांतत्सत्सदृशैर्वरैः सह विभूतिभिः समृद्धिभिः कृत्वा कल्पयंतं कुर्वंतं ॥ ३२ ॥ प्रस्थापनं स्वगृहात् दुहितृजामात्रादिनां तद्गृहं प्रतिप्रापणं उपानयनं तत्तद्गृहेभ्यः भूयः स्वगृहेषु आनयनं च तैः अपत्यानां महोत्सवान् कुर्वंतं श्रीकृष्णं योगेश्वरेशस्य तस्य येषां पुत्रादीनां महोत्सवांश्चवीक्ष्य। लोकाः विसिष्मिरे विसिष्मियिरे। विस्मयं प्रापुः ॥ ३३ ॥ ऊर्जितैर्हिस्ततया शोभितैः पूर्त्तयंतं पूर्त्तसंज्ञं कर्म कुर्वंतं ॥ ३४ ॥

### भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

कापीति। क्वापि कस्मिंश्चिद्गृहे, धर्मं सेवमानं, कुत्रचिद्गृहे, अर्थकामौ च सेवमानं, कुत्रचित् एकं प्रकृतेः 'भूमिरापोऽनलो वायुः खं मनो बुद्धिरेव च' इत्यादिश्लोकद्वयोक्तप्रकृतिद्वयात्, परं विलक्षणं, पुरुषं परमपुरुषभूतं, आत्मानं स्वात्मानं, ध्यायन्तमनुभवन्तं, अपश्यत् ॥ २९ ॥ शुश्रूषन्तमिति। क्वापि कामैः, भोगैः, सपर्यया पूजया च, गुरून् शुश्रूषन्तं, क्वापि कैश्चित् विग्रहं कुर्वन्तं, अन्यत्रान्यस्मिन् गृहे, संधिं कुर्वन्तं, केशवं कृष्णं, अपश्यत्। कुत्रापि कस्मिंश्चिद्गृहेऽपि, रामेण सह, सतां साधूनां, शिवं योगक्षेमं, चिन्तयन्तम् ॥ ३० ॥ पुत्राणामिति। क्वचित् काले तत्तत्समये, पुत्राणां दुहितॄणां च, तत्सदृशैः दारैः,

वरैश्च, विध्युपयापनं शास्त्रोक्तेन विधिना विवाहं, विभूतिभिः तद्विभवैः, कल्पयन्तं, अपश्यत् ॥ ३१ ॥ प्रस्थापनेति। येषां योगेश्वरेशस्य अपत्यानां पुत्राणां दुहितॄणां च, प्रस्थापनानि दुहितृस्नुषाजामात्रादीनां स्वगृहं प्रति नयनानि, उपानयनानि तद्गृहात्पुनरानयनानि च तैः, प्रासान् महोत्सवान्, कल्पयन्तं भगवन्तं वीक्ष्य, लोकाः, विसिस्मिरे ॥ ३२ ॥ यजन्तमिति। क्वापि कस्मिंश्चिद्गृहे, ऊर्जितैः भूरिदक्षिणैः, क्रतुभिर्यज्ञैः, स्वकलान् देवान्, यजन्तं, क्वचिद्गृहे, कूपारामालयादिभिः, धर्मं पूर्त्तयन्तं, स्मार्त्तं धर्मं कुर्वन्तमित्यर्थः। अपश्यत्। तत्र कूपशब्देन सर्वोपयोगिप्रहिखननं, आरामशब्देन देवसेवोपयोगिपुष्पफलप्रधानतर्वादियुतोपवनविधापनम्। आलयशब्देन विष्ण्वादिदेवतास्थापनार्थकमन्दिरादिविधापनम् ॥ ३३ ॥ चरन्तमिति। क्वापि क्वचित्, मेध्यान् पशून् दृष्ट्वा, सैन्धवं सिन्धुदेशोद्भवं, हयमश्वं, आरुह्य, मृगयां चरन्तं, मृगयां कुर्वन्तं कंचनजनमित्यर्थः। मारयन्तं, स्वस्याहिंसनशीलत्वं जानद्भिः स्वानुगैः वने हिंसां कुर्वन्तं विलोक्य बद्ध्वा स्वचतुष्कमानीतं तं मृगघ्नं तैरेव ताडयन्तं भगवन्तमित्यर्थः। अपश्यत्। क्वापि यदुपुङ्गवैर्यादवश्रेष्ठैः, परीतं परिवृतं, अपश्यत् ॥ ३४ ॥

### कृष्णप्रिया

कहीं किसी पत्नी के महल में अपनी प्राणप्रिया के साथ हास्य-विनोद की बातें करके हँस रहे हैं, तो कहीं धर्म का सेवन कर रहे हैं। कहीं अर्थ का सेवन कर रहे हैं—धन-संग्रह और धनवृद्धि के कार्य में लगे हुए हैं, तो कहीं धर्मानुकूल गृहस्थोचित विषयों का उपभोग कर रहे हैं ॥ २९ ॥ कहीं एकान्त में बैठकर प्रकृति से अतीत पुराण पुरुष का ध्यान कर रहे हैं, तो कहीं गुरुजनों को इच्छित भोग-सामग्री समर्पित करके उनकी सेवा-सुश्रूषा कर रहे हैं ॥ ३० ॥ देवर्षि नारद ने देखा कि भगवान् श्रीकृष्ण किसी के साथ युद्ध की बात कर रहे हैं, तो किसी के साथ सन्धि की। कहीं भगवान् बलरामजी के साथ बैठकर सत्पुरुषों के कल्याण के बारे में विचार कर रहे हैं ॥ ३१ ॥ कहीं उचित समय पर पुत्र और कन्याओं का उनके सदृश पत्नी और वरों के साथ बड़ी धूमधाम से विधिवत् विवाह कर रहे हैं ॥ ३२ ॥ कहीं घर से कन्याओं को बिदा कर रहे हैं, तो कहीं बुलाने की तैयारी में लगे हुए हैं। योगेश्वरेश्वर भगवान् श्रीकृष्ण के इन विराट् उत्सवों को देखकर सभी लोग विस्मित-चकित हो जाते थे ॥ ३३ ॥ कहीं बड़े-बड़े यज्ञों के द्वारा समस्त देवताओं का यजन-पूजन और कहीं कूएँ, बगीचे तथा मठ आदि बनवाकर इष्टापूर्त धर्म का आचरण कर रहे हैं ॥ ३४ ॥

**चरन्तं मृगयां क्वापि हयमारुह्य सैन्धवम्। घ्नन्तं ततः पशून् मेध्यान् परीतं यदुपुङ्गवैः ॥ ३५ ॥**
**अव्यक्तलिङ्गं प्रकृतिष्वन्तः[1] पुरगृहादिषु। क्वचिच्चरन्तं योगेशं तत्तद्भावबुभुत्सया ॥ ३६ ॥**
**अथोवाच हृषीकेशं नारदः प्रहसन्निव। योगमायोदयं वीक्ष्य मानुषीमीयुषो गतिम् ॥ ३७ ॥**
**विदाम योगमायास्ते दुर्दर्शा अपि योगिनाम्[3]। योगेश्वरात्मन् निर्माता भवत्पादनिषेवया ॥ ३८ ॥**
**अनुजानीहि मां देव लोकांस्ते यशसाऽऽप्लुतान्। पर्यटामि तवोद्गायन् लीला[4] भुवनपावनीः ॥ ३९ ॥**

**श्रीभगवानुवाच**

**ब्रह्मन् धर्मस्य वक्ताहं कर्ता तदनुमोदिता[5]। तच्छिक्षयँल्लोकमिममास्थितः पुत्र मा खिदः ॥ ४० ॥**

### कर्दमक्षमा

**अन्वयः**—सैन्धवम्, हयम्, आरुह्य, क्व, अपि, मृगयाम्, चरन्तम्, यदुपुङ्गवैः, परीतम्, मेध्यान्, पशून्, घ्नन्तम्, अपश्यत् ॥ ३५ ॥ क्वचित्, अन्तःपुरगृहादिषु, प्रकृतिषु, अव्यक्तलिङ्गम्, तत् भावबुभुत्सया, चरन्तम्, योगेशम्, अपश्यत् ॥३६॥ अथ, नारदः, योगमायोदयम्, वीक्ष्य, प्रहसत्, इव, हृषीकेशम्, उवाच, योगिनाम्, अपि, दुर्दशाः, ते, योगमायाः, मानुषीम्, गतिम्, ईयुषः, वयम्, कथम्, विदाम ? हे योगेश्वरात्मन्, भवत्, पादनिषेवया, निर्माता ॥ ३७-३८ ॥ देव ! माम्, अनुजानीहि, यशसा, आप्लुतान्, ते, लोकान्, भुवनपावनीः, ते, लीलाः, उदगायन्, पर्यटामि ॥ ३९ ॥ श्रीभगवान् उवाच—ब्रह्मन्, अहम्, धर्मस्य, वक्ता, कर्ता, तत्, अनुमोदिता, तत्, शिक्षयन्, इमम्, लोकम्, आस्थितः, पुत्र ! मा, खिद ॥ ४० ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

अव्यक्तलिंगं वेषांतरेण छन्नम् ॥ ३६-३७ ॥ हे योगेश्वर आत्मन् आत्मनि मम मनसि तव स्वरूपे वा निर्भाताः प्रतीतास्तव योगमायाः केवलं विदाम विद्मः न तु त्वत्परमार्थमिति भावः ॥ ३८ ॥ त्वन्मानुष्यनाट्येन मुह्याम्यतो मां प्रस्था-

---

१. मन्ता:-विज. । २. मावलं-विज. । ३. मायिनाम्-श्रीधर. वंशी. जीव. वीर. विज. विश्व. । ४. लीलां भुवनपावनीम्-श्रीधर. वंशी. जीव. वीर. विज. विश्व. । ५. तमनुमोदकः-विज. ।

पयेत्याह। अनुजानीहीति ॥ ३९ ॥ तत्तस्माल्लोकं शिक्षयन्निमं धर्ममास्थितो न तु तत्त्वतः हे पुत्र मा खिदः मोहं मा प्राप्नुहीति ॥ ४० ॥

**श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः**

सैंधवं सिन्धुदेशोद्भवम्। ततो मृगयायाम् मेध्यान् यज्ञियान् ॥ ३५ ॥ प्रकृतिषु राज्यांगेषु। तस्यतस्य प्रकृत्यादेर्भावस्याभिप्रायस्य जिज्ञासया। एते धर्मपरास्तद्धीना वेति ज्ञातुमिच्छयेत्यर्थः। यद्वा—प्रकृतिष्वन्तःपुरादिषु तत्रत्यजनाभिप्रायं ज्ञातुम् अव्यक्तलिंगं वेषान्तरेणाच्छन्नं योगेशं सर्वज्ञमपि प्रेममय्या लीलाशक्त्यैव सर्वज्ञताशक्तेराच्छादनादिति भावः ॥ ३६ ॥ अथानंतलीलादर्शनानन्तरम्। रतिं क्रीडाम्। इवपदमाश्चर्यभावमाह। आत्ममायामन्तर्धाय कोन्वर्थो दुर्घटो भवतीत्युक्तत्वात्। प्रहसन्निवेति—सर्वज्ञत्वेपि बुभुत्सादृष्ट्या प्रहासः। इवेत्याश्चर्यदृष्ट्या संकोचात्तत्संवरणमुद्रा च ॥ ३७ ॥ दुर्दर्शानां मनस्यपि भानं न संभवतीत्यरुच्याह—तवेत्यादि। इति भाव इति—अनंतत्वान्मायाया इत्याशयः। विदाम वेदाम। साक्षादनुभवितुं प्रार्थयामेति प्रार्थनायां लोट्। ननु युष्मद्विधैः सर्वज्ञैः किं दुर्दर्शं तत्राह—योगिनां योगिभी रुद्रादिभिरपि दुर्दर्शा द्रष्टुमशक्याः कुतोऽनुभवितुं कुतोन्तरां कर्तुमिति भावः। हे योगेश्वर आत्मन्नात्मनि त्वय्येव निर्भाता अपि भवत्पादनिषेवया विदाम इति विश्वनाथः ॥ ३८ ॥ तवैता लीला अद्भुता दृष्ट्वा धैर्यं कर्तुं न शक्नोम्यतः स्वेष्टबंधुभ्यो नानादिग्वर्तिभ्यो वक्तुं यामीत्याह—अनुजानीहीति। अतो मोहजनकत्वात् ॥ ३९ ॥ यतोऽहमेव धर्मस्य वक्त्रादिस्तत्तस्माद्धेतोः। न तत्त्वतो वस्तुतः विधिनिषेधातीतत्वान्ममेति भावः। ननु पूर्वं पूजयित्वा पश्चात्कथं पुत्रेत्युक्तं तत्राह—हे पुत्र तद्वत्प्रिय। यद्वा—"स्यादात्मजे च सुहृदि पवित्रे पवने हरौ। अग्नौ मंत्रे च पुत्रोक्तिः" इति निरुक्तिः। यद्वा—पुत्रं कृत्वा त्यक्त इतिवद्धास्यसंबुद्धिः। ननु "पूर्वं संपूज्य तं पश्चान्निकृष्टयेन न योजयेत्" इति स्मृतेः कथं श्रीकृष्णेन क्रियते किन्तु पूर्णानामपूर्णैरस्मदादिभिः "पूजितः परया भक्त्या प्रत्युत्थानासनादिभिः", 'जन्मे तच्छोभनं कुरु' इत्याद्युक्तेः पुनः पुत्र मा खिद इति निकृष्टता दर्शितेति चेदर्थान्तरमाह—मखानां समूहो माखम्। "तस्य समूहः" इत्यण्, तदस्यास्तीति माखी परिषत् "यस्येदं देवयजनमनुयज्ञं वितन्वते" इत्युक्तेः। पुत्रैः प्रचेतोभिर्युतो माखी पुत्रमाखी, तं दयते पालयति पुरंजनोपाख्यानेन 'तज्जन्म तानि कर्माणि' इत्यारभ्य "नृणां येनेह विश्वात्मा सेव्यते हरिरीश्वरः" इत्यंतेनोपदेशकदम्बेन संसाराद्रक्षतीति पुत्रमाखिदस्तत्सम्बुद्धौ तथा। अर्थाद्धे सर्वतारक अहं तु लोकशिक्षार्थमेव सर्वमाचरामीति भावः। "तीर्थे देवे गुरौ विप्रे पुत्रः स्यान्नन्दने तथा" इति कोशांतराच्च। हे पुत्र हे विप्र सर्वनियतानियतकालेऽपि शोधक "पूर्णेष्वपि च कालेषु न शुद्धिर्ब्राह्मणैर्विना। अपूर्णेष्वपि कालेषु शोधयन्ति द्विजोत्तमाः॥" इत्यापरतन्त्रस्मृतेः। त्वदेकांतदासस्य मम त्वन्निकटस्थिताविदमेव महद्दुःखं यन्मे शश्वत्पर्यटनदुर्भगौ पादौ स्वहस्तकमलाभ्यां प्रक्षालयसि तत्राह—ब्रह्मन्निति। तत्तस्माल्लोकं शिक्षयन्निमं धर्ममाश्रित आह—तावत् क्षत्रियो गृहस्थस्त्वां ब्राह्मणं गृहागतं यदि नार्चयामि तदा स्वाचरणेन मत्प्रचारितो धर्मः कथं तिष्ठेत् 'यद्यदाचरति श्रेष्ठः' इति न्यायात्तेन धर्मप्रचारणार्थमेव त्वत्पादावद्य क्षालितौ न तु वस्तुतः। यदा तु मया धर्मप्रचारणलीला नारब्धा तदा केशिवधानन्तरं मत्पार्श्वागतस्य तत्कृतस्तुत्यादिकमश्रौषमेव नाणुमात्रमप्यर्हणाद्यकरवमिति विचार्य पश्येति भावः। ननु तदपीदानीं त्वत्कर्तृकावनेजनकर्मणि स्वपदस्पृष्टतत्पाने ममापराधो भवत्येवेत्यत आह—हे पुत्रेति। स्नेहं ज्ञापयित्वा सांत्वयति—यथा पितरि तदंकनिहितपादोऽपि पुत्रस्य नापराधस्तथैव मयि तवेति बुद्ध्यस्वेति भावः ॥ ४० ॥

**श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी**

सैन्धवं सिन्धुदेशोद्भवं द्रुतगतित्वाय ततस्तत्र मेध्यानिति यज्ञार्थमिति बोधयति यदुपुङ्गवैः सात्यक्यादिभिः ॥ ३५ ॥ प्रकृतिषु अमात्येषु निजान्तःपुरादिषु चाव्यक्तलिङ्गम् आकारान्तरेणाच्छन्नं यतो योगेशं सर्वज्ञमपीत्युभयत्राप्युपोद्बलकं लीलेच्छया कस्याश्चिच्छक्तेः प्रकटनात् कस्याश्चित्तिरोधानाच्च प्रकृतीनामन्तःपुरस्थादीनाञ्च भावोऽभिप्रायः तस्य बुभुत्सया एवमन्यत्रापि दृष्टं किन्तु विस्तारशङ्कया न सर्वमुक्तमिति यद्वा श्रीनारद एव मुग्धस्तदन्वेषणान्निवृत्त इति ज्ञेयम् ॥३६॥ उवाच तस्मिन्नेवान्ये गेहे हृषीकेशमिति यच्च तेन दृष्टमैश्वर्य्येण सङ्कोचादव्यक्तमत्र नोक्तं तदपि स्वयं ज्ञातमिति व्यक्तीभावित्वादुचितपदन्यासः इवेति सङ्कोचात् प्रहासस्य सम्वरणमुद्रामपि बोधयति प्रहासे हेतुः मानुषीं रतिमीयुषः मनुष्यक्रीडाविष्टस्यैव योगमायोदयं तदानुकूल्येनैवाचिन्त्यशक्त्याविर्भावं तत्राप्याच्छन्नवेषत्वादिकं वीक्ष्येति ॥ ३७ ॥ विदामेत्यादौ ब्रह्मन्निति वक्ष्यमाणश्रीभगवत्प्रतिवचनानुसारेणेदं गम्यते तदेवं श्रीनारदः सर्वां महाविनोदमयीं लीलां दृष्ट्वा महासुखमेव लब्धवान् किन्तु तत्तद्देवताद्युपासनादिमयधर्माचरणं दृष्ट्वा खेदः तन्तु सङ्कोचेन साक्षादप्रकटयन् भङ्ग्या प्रकटयति—विदामेति द्वाभ्याम्। ते तव योगमायाः स्वरूपभूताचिन्त्यशक्तिवृत्तिरेता विदाम किमर्थं कां प्रकटयसीति वेत्तुं प्रार्थयामहे कीदृशीरपि योगिनां नानाशक्तिधारिणां दुर्दर्शा अपि तथा भवत्पादनिषेवया ये योगेश्वरास्तेषामेवात्मनि मनसि निर्भाताः स्वयम्प्रकाशमाना अपि यद्वा, हे योगेश्वर! स्वरूपभूतत्वात् आत्मनि त्वय्येव निर्भाताः प्रकाशमाना अपि भवत्पादनिषेवया विदाम ॥ ३८ ॥ तह्यंत्रैव स्थित्वा क्रमेण जानीहीत्या-

शङ्कयाह—अन्विति । तवान्योपासानां द्रष्टुं न शक्नुम इति भावः तत्र च तद्यशोमाहात्म्योक्तिस्तदत्यन्तायोग्यताव्यक्त्यर्थमेव तथा हे देव ! सर्वाराध्येति च आप्लुतान् व्याप्तान् आप्लुतशब्देन यशसः सर्वतीर्थमयत्वं ध्वन्यते ॥३९॥ हृषीकेशत्वेन तदभिप्रायं विज्ञाय प्रतिवक्ति—ब्रह्मन्निति । यस्माद्धर्मस्य वक्ता तत्तस्मात्कर्त्ताऽनुमोदिता च परैः क्रियमाणस्य प्रीत्याऽभिनन्दकः अन्यथा न कश्चिन्मन्येतेति भावः । अत एव तद्धर्मं लोकं प्रति शिक्षयन् एवं वचसा कर्मणा भावेन चात्मनो धर्मप्रवर्त्तकत्वमुक्तं हे ब्रह्मन्निति वेदमयत्वात्त्वं तद्वेत्स्येवेति वेदमार्गरक्षणेन त्वादृशामेव सुखार्थमिति भावः । आस्थितः अनुतिष्ठन्नस्मि तथापि लीलाकीर्त्तनादिना तद्भक्तिमात्रप्रवर्त्तनेच्छोः तस्य खेदशान्तिमदृष्ट्वा तदनभिमतं भावगौरवं परित्यज्य तदभिमतभावेनानुग्रहेण सलालनं सम्बोधयति पुत्रेति ॥ ४० ॥

### श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी

सैन्धवं सिन्धुदेशोद्भवम्, द्रुतगतित्वादिना तस्यैव मृगयायोग्यत्वात्, ततस्तया मृगयाया हेतोः, मेध्यानिति यज्ञार्थमिति बोधयति । यदुपुंगवैरुद्धवादिभिः सात्यक्यादिभिर्वा, परीतं वेष्टितम् ॥ ३५ ॥ प्रकृतिष्वमात्येषु, अव्यक्तलिंगं योगेशं सर्व्वज्ञमपि तासां तासां तेषां तेषां प्रकृतीनां भावोऽभिप्रायस्तद्बुभुत्सया, तेषामेवान्तःपुरादिषु चरन्तं भ्रमन्तम्, आदि-शब्दात् सभाचत्वरादयः; यद्वा, यस्यान्तःपुरादिषु चरन्तं चररूपेण वर्त्तमानं तासां तासां महिषीणां प्रेमविलासादिरूपस्य भावस्य बुभुत्सया दिदृक्षयेत्यर्थः । गृहिधर्म्मापेक्षया श्रीभगवतस्तत्तदखिलकर्म्मणां प्रायः एकस्मिन्नेव गृहे सम्भवेऽपि गृहभेदेन कर्म्मभेदोक्तिः श्रीनारदं प्रति तद्वैचित्रीदर्शनार्थम्, तत्र तत्र तस्यागमनादिति । एवमष्टोत्तरशताधिक-षोडश-सहस्रेष्वेव गृहेषु परिभ्रमन् ददर्श, तस्य च विस्तरेण कथनं बहुदिनसाध्यमिति न विवृतोक्तमिति ज्ञेयम् । यद्वा, सर्व्वासु ज्येष्ठायाः श्रीरुक्मिण्याः प्रियतमायाश्च श्रीसत्यभामाया इति गृहद्वये दृष्ट्वा पश्चादन्यासां जाम्बवतीप्रभृतीनां तावद्गृहेषु दृष्ट्वा कौतुकोद्रेकेण महामुग्धो दर्शनान्निवृत्त इति ज्ञेयम् ॥ ३६ ॥ अथ पश्चादिति महाकौतुक-विवशतया सद्यो वक्तुमशक्तेः । उवाच तस्मिन्नेवान्त्ये गृहे प्रहसन् सहजमुखप्रसादात् स्मयमान इव । यद्वा, प्रहर्षवैवश्येन धैर्य्यापगमात् प्रकर्षेणोच्चस्वरादिना हसन्, इवेति लोकोक्तौ, हृषीकेशं सर्व्वेन्द्रियप्रवर्त्तकमिति तस्य वैवश्यनिवृत्त्यर्थमन्तर्यामिरूपेण श्रीभगवतैव तत्र प्रवर्त्तित इति भावः । एवमन्तर्य्यामितया बहुधा जीवानां प्रवर्त्तनेन हृदि हृदि सदा क्रीड़तोऽपि तस्य मानुषीं रतिं क्रीड़ामीयुषः प्राप्तस्य, अतएव योगमायाया उदयमुत्कर्षं वीक्ष्य साक्षादनुभूय ॥ ३७ ॥ योगः समाधिर्ब्रह्मप्राप्तिर्वा, तद्वतामपि दुर्दर्शा दुर्ज्ञेयाः, आत्मन्निर्भाता इति तासां नित्यत्वादिकमभिप्रेतम् । तत्र हेतुः—योगश्चिच्छक्तिस्तदीश्वरेति त्वच्छक्तिविशेषादित्यर्थः । भवतः पादयोर्नितरां सेवया विदामो वयम्, बहुत्वं भक्तवर्गापेक्षया, तज्ज्ञानेनात्मनो बहुमानाद्वा; अन्यत्तैर्व्याख्यातम् । यद्वा, योगिनां योगसाधकानां दुर्दर्शा ज्ञातुमप्यशक्याः, योगेश्वराणां सिद्धयोगानामात्मनि मनस्येव निर्भाता अपि भवत्पादनिषेवयैव विदामेति प्रार्थना । परमेश्वरस्य तवेदृशी गृहस्थधर्म्मे रतिः किमर्थं तत्तत्त्वं निजसेवाप्रसादविस्तारणेन विज्ञापयेत्यर्थः ॥ ३८ ॥ देव ! हे गृहक्रीड़ापर ! आप्लुतान् व्याप्तान्, अप्लुत-शब्देन यशसः सर्व्वतीर्थमयत्वं ध्वन्यते, तव भक्तवात्सल्यादियशः सर्व्वत्र शृण्वन्निति भावः । किञ्च, लीला दृष्टा एता गार्हस्थ्यक्रीड़ा उच्चैर्गायन्, किमर्थम् ? भुवनपावनीः चतुर्द्दश भुवनानि भक्तिविघ्नसर्व्वदोषात् शोधयितुमित्यर्थः । एतन्मधुरमधुरलीलाश्रवणेन स्वत एव सर्व्वेषां सर्व्वनैरपेक्ष्येण त्वयि विशुद्धा भक्तिः स्यादेवेति भावः । अन्यत्तैर्व्याख्यातम् । किञ्च, अनुजानीहि । किमर्थम् ? तदाह—लोकानित्यादि । देव ! हे स्वामिन् ! अन्यत् समानम् ॥ ३९ ॥ तस्य धर्म्मस्य तत्तस्माद्वा अनुमोदिता च परैः क्रियमाणस्य प्रीत्याभिनन्दकः । एवं वचसा कर्म्मणा भावेन चात्मनो धर्म्मप्रवर्त्तकत्वमुक्तम् । हे ब्रह्मन्निति वेदमयत्वात्त्वं तद्वेत्स्येवेति । यद्वा, वेदमार्गरक्षणेन त्वादृशामेव सुखार्थमिति भावः । आस्थितोऽनुतिष्ठन्नस्मि, हे पुत्रेति स्वस्नेहपात्रताबोधनेनाश्वासयति । पक्षान्तरे—एवं तत्तत्त्वाज्ञानेन मौग्ध्यदुःखं नाप्नुहीत्यर्थः । मद्भक्तप्रवरेण त्वया मम भावो विज्ञायत एवेत्याशयेन सलालनं सम्बोधयति—पुत्रेति ॥ ४० ॥

### श्रीमद्वीरराघवाचार्यकृता भागवतचन्द्रचन्द्रिका

चरन्तमिति । सैन्धवं सिन्धुदेशोद्भवं हयमश्वमारुह्य मृगयां चरन्तं मेध्यान् यागार्हान् पशून् विशसन्तं क्वचिद्यदुश्रेष्ठैः परिवृतम् ॥ ३५ ॥ प्रकृतिष्वमात्यादिष्वन्तःपुरचरादिषु तत्तदभिप्रायं बोद्धुमिच्छया अव्यक्तं वेषान्तरेण छन्नं लिङ्गं स्वासाधारणचिह्नं यस्य तं चरन्तं ददर्श ॥ ३६ ॥ अथेति । मानुषीं गतिं चेष्टां तनुं वा ईयुषः प्राप्तवतः परिगृहीतवत इति यावत् तस्य भगवतो योगमायोदयमाश्चर्य्यशक्तिवैभवमवलोक्य प्रहसन्निव प्राह—अचिन्त्यविविधविचित्रशक्तावस्मिन्नेतच्चित्रम् इतीवशब्दाभिप्रायः ॥ ३७ ॥ उक्तिमेवाह—विदाम इति द्वाभ्याम् । हे योगेश्वर ! योगिनां दुर्दर्शामपि ते तव योगमायामाश्चर्यशक्तिं भवत्पादनिषेवाप्रभावेनात्मन्यात्मनि मनसि निर्भातां नितरां भातां विदामः जानीमः ॥ ३८ ॥ किन्तु, हि हे देव ! मामनुजानीहि आज्ञापय तव यशसा व्याप्तान् लोकान् चरामि भुवनपावनीं तव लीलामुद्गायन् परितः चरामि ॥ ३९ ॥ इत्युक्तः प्राह भगवान्—ब्रह्मन्निति । हे ब्रह्मन् वक्ता उपदेष्टा तद्धर्मोपदेशात्तदनुष्ठानतदनुमोदनादिकं शिक्षयन् शिक्षयितुं जनान् प्रतीति शेषः

इमं लोकं मनुष्यदेहमास्थितः परिगृहीतवानस्मि प्राकृतचेष्टामनुवर्त्त इति भावः। अतो हे पुत्र ! मा खिदः स्वयमीश्वरोप्यधुना प्राकृतो बभूवेत्येवम्विधं मोहं न प्राप्नुहीत्यर्थः ॥ ४० ॥

### श्रीविजयध्वजतीर्थकृता पदरत्नावली

सैन्धवं सिन्धुदेशभवं तीर्थे शास्त्रे विहितान् पात्रे प्राप्ते वा यज्ञे वा ॥ ३५ ॥ अव्यक्तलिङ्गप्रकृतिम् अस्पष्टलक्षणस्वभावं तेषां तेषां भावानां पादार्थानां बुभुत्सया स्वभावजिज्ञासया ॥ ३६ ॥ मानुषीं रतिं मनुष्यक्रीडाम् ॥ ३७ ॥ आत्मनि हृदये निर्भातस्य भवतः पादयोर्निषेवया ॥ ३८ ॥ आप्लुतानिति पाठे यशसा तीर्थेन स्नातानित्यर्थः ॥३९॥ लोकानुकारिचरितदर्शनेन नारदस्यान्यथाज्ञानं निवारयन्निति तत्त्वमुपदिशति—ब्रह्मन्निति। इमं लोकमास्थित। अस्मिन् लोके स्थितः तं धर्मकर्तारम् अनुमोदकः अनुज्ञाता ॥ ४० ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

मानुषीमपि रतिं क्रीडामीयुषः प्राप्तस्य योगमायानामचिन्त्यानां स्वरूपशक्तीनामुदयमिति ॥ ३७ ॥ कौतुकविशेषो दर्शितः ताश्च यत्किञ्चिज्जाता इति व्यञ्जयितुमात्मनो भावि सम्यक् तज्ज्ञानतां सम्भावयति। भवत्पादनिषेवया विदाम वेदाम वेत्स्याम इत्यर्थः। तन्निषेवाच ममेयमेवेति प्रार्थयते ॥ ३८ ॥ अन्विति। तत्र यज्ञादौ देवतान्तरोपासनादिना जातं तस्य खेदं निवर्त्तयति—ब्रह्मन्निति। श्रीशुकदेवोऽपि धर्म्माचरणे नानात्वे च सिद्धान्तसारमाह—इतीति। गृहीतानां श्रवणादीनामपि पवित्रताहेतून् धर्मान् एकं एकविग्रहम् ॥ ३९-४२ ॥

### श्रीमज्जीवगोस्वामिकृतः बृहत्क्रमसन्दर्भः

विदामेत्यादि। ते तव योगमाया विदाम। कीदृशीः ? योगिनामपि दुर्दर्शा दुर्ज्ञेयाः; तत्कथं भवन्तो विदन्तीति नाशङ्कनीयम् ? वयं भक्ता इति गूढं व्यङ्ग्यम्। तदेव प्रकटयति–योगेश्वरात्मन्नित्यादि। भवत्पादनिषेवया निर्भाताः ॥३९-४०॥

### श्रीनाथचक्रवर्तिपादविरचिता चैतन्यमतमञ्जूषा

मानुषीं रतिमीयुषः। मनुष्याणामिमां मानुषीं मनुष्यकर्त्तृकां रतिं स्वीकुर्वतः ॥ ३७ ॥ विदामेत्यादि। तव योगमाया विदाम योगिनामपि दुर्दर्शाः दुर्ज्ञेयाः, न तु भक्तानामस्माकमित्यर्थः। योगिनामपि दुर्दर्शतया कथं यूयं ज्ञातवन्त इत्याह—तत्पादपद्मनिषेवयेति ॥ ३८-४० ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

चरन्तमिति सैन्धवं सिन्धुदेशोद्भवम् ॥ ३५ ॥ प्रकृतिष्वमात्यपुरेषु निजान्तःपुरादिषु च। तत्तद्भावबुभुत्सया तत्रत्य-जनानामभिप्रायान् ज्ञातुम् अव्यक्तलिङ्गं वेषान्तरेणाच्छन्नं योगेशं सर्वज्ञमपीति प्रेममय्या लीलाशक्त्यैव सर्वज्ञताशक्तेराच्छाद-नादिति भावः ॥ ३६ ॥ प्रहसन्निवेति। सर्वज्ञत्वेपि बुभुत्सादृष्ट्या प्रहासः। इवेत्यैश्वर्य्यदृष्ट्या सङ्कोचात्तत्सम्वरणमुद्रा च। मानुषीं रतिमीयुषः स्वीयमनुष्यक्रीडाविष्टस्यापि योगमायोदयं वीक्ष्येति विस्मयो व्यञ्जितः ॥ ३७ ॥ भवतः पादनिषेवया विदाम वेदाम प्रार्थनायां लोट् साक्षादनुभवितु प्रार्थयामह इत्यर्थः। ननु, युष्मद्विधैः सर्वज्ञैः किं दुर्वेद्यं तत्राह योगिनामपि योगिभिः श्रीरुद्राद्यैरपि दुर्दर्शाः द्रष्टुमप्यशक्याः कुतोऽनुभवितुं कुतस्तरां कर्तुमिति भावः। हे योगेश्वर आत्मन् आत्मनि स्वय्येव निर्भाताः ॥ ३८ ॥ तवैता अद्भुता लीलाः दृष्ट्वा धैर्यं कर्तुं न शक्नोम्यतः स्वेष्टमित्र बन्धुभ्यो नानादिग्देशवर्त्तिभ्यो वक्तुं यामीत्याह—अनुजा-नीहीति ॥ ३९ ॥ किञ्च। त्वदेकान्तदासस्य मम त्वन्निकटस्थिताविदमेव महद्दुःखं यन्मे शश्वत् पर्य्यटनकठोरौ दुर्भगौ पादौ त्वद्धस्तकमलाभ्यां प्रक्षालयसीति, तत्राह—ब्रह्मन्निति। तत्तस्मात् लोकं शिक्षयन् इमं धर्मम् आस्थितः। अहं तावत् क्षत्रियो गृहस्थस्त्वां ब्राह्मणं स्वगृहमायातं यदि नार्च्चयामि तदा स्वाचरणेन मत्प्रचारितो धर्मः कथं तिष्ठेत् ? "यद्यदाचरति श्रेष्ठस्तत्त-देवेतरोजनः" इति न्यायात्तेन धर्मप्रचारणार्थमेव त्वत्पादौ मयाद्य क्षालितौ ननु वस्तुतः। यदा तु मया धर्मप्रचारणलीला नारब्धा तदा केशिवधानन्तरं मदन्तिकमायातस्य तव बहुस्तुत्यादिकमश्रौषमेव ननु किमप्यणुमात्रमप्यर्हणमकरवमिति स्मृत्वा पश्येति भावः। ननु तदपीदानीं तत्कर्तृकावनेजनकर्मणि स्वपदस्पृष्ट त्वत्पाने ममापराधो भवत्येवेत्यत आह—हे पुत्रेति। स्नेहं ज्ञापयित्वा सान्त्वयति। यथा पितरि तदङ्कनिहितपादोऽपि पुत्रस्य नापराधस्तथैव मयि तवेति बुध्यस्वेति भावः ॥ ४० ॥

### गूढार्थदीपिनी

सैन्धवं सिन्धुदेशोद्भवम्। मृगयामुद्दिश्य चरन्तं विचरन्तम्। मेध्यार्हान् यज्ञार्हान् चरन्तमिवेति लुप्तोपमा। एतच्च लीलानुकरणमेव न वस्तुतस्तस्याविधित्वादिति सिद्धान्तः ॥ ३५ ॥ अव्यक्तं वेषान्तरेण छन्नं लिङ्गं स्वरूपं यस्य तं तथाभूतं कृष्णं प्रकृतिषु अमात्यादिषु चरन्तमपश्यदिति सर्वत्र योज्यम्। प्रकृत्यादेः तत्तद्भावस्य अभिप्रायस्य जिज्ञासया ॥ ३६ ॥ गति

चेष्टाम् ईयुषः प्राप्तवतः भगवतः योगमायाया वैभवं वीक्ष्य प्रहसन्निव कृष्णमुवाचेत्यन्वयः ॥ ३७ ॥ विदामेति साक्षादनुभवितुं प्रार्थयामेति प्रार्थनायां लोट् । आत्मन्निति लुप्तसप्तम्यन्तम् । आत्मनि त्वय्येव निर्भाता स्फुरिता इति सेवयैव विद्मः न तु स्वतपरमार्थमिति भावः ॥ ३८ ॥ अनुजानीहि गन्तुमाज्ञां देहि । आप्लुतान् व्याप्तान् ॥ ३९ ॥ तत् तस्मात् लोकं शिक्षयन् इमं धर्मं स्वत्सम्माननादिरूपमास्थितः न तत्त्वतः अतो मा खिदः । किमभिप्रायकमेतच्चेष्टितमिति संशयं मा कुर्वित्यर्थः ॥ ४० ॥

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः

अव्यक्तलिङ्गम् सुगुप्तवेषम् ॥ ३६ ॥ मानुषीं गतिं चेष्टामीयुषः गार्हस्थ्यमेवम्विधं प्रवृत्तिधर्मनिष्ठैरनुष्ठेयमिति द्योतयितुं मनुष्यचेष्टामनुकुर्वत इत्यर्थः ॥ ३७ ॥ स्वस्य भगवतः कृपामात्रतां दर्शयति—विदाम इति । हे योगेश्वर ! याः योगिनामपि दुर्दर्शाः द्रष्टुमशक्याः ताः योगमायाः अत्याद्भुताः शक्तीः आत्मन् आत्मनि बुद्धौ नितरां भाताः वयं विदाम विद्मः अहो ऽस्माकं भाग्यमितिभावः ॥३८॥ योगमायोदयं त्वद्भक्तेभ्यस्तत्रतत्रानुवर्णयिष्यामीत्याशयेन प्रस्थापयेति हृष्ट आह–अनुजानीहीति ॥३९॥ अक्षिसङ्कोचनेनैव तमनुज्ञाप्य पूर्णकामः पञ्चयज्ञादिकं किमर्थं करोतीति संशयं मा कुरु इत्याह—ब्रह्मन्निति । लोकं प्रवृत्तिनिष्ठं शिक्षयन् धर्मं पूर्वोक्तमास्थितः अतो मा खिदः पूर्णकामस्येदृशं चेष्टितं किमभिप्रायमिति संशयं मा प्राप्नुहीति फलितार्थः ॥ ४० ॥

### श्रीसत्यधर्मकृता श्रीभागवतटिप्पणी

सैन्धवं हयमारुह्य मृगयां चरन्तं तीर्थे शास्त्रे मेध्यान्मेध्यत्वेनोक्तान् तीर्थे सत्पात्र आयात इति वा यदुपुङ्गवैः सह घ्नन्तम् ॥ ३५ ॥ अन्तःपुरवरादिष्वव्यक्तं लिङ्गं चिन्हं यस्याः सा प्रकृतिः स्वभावो यस्य सः । अप्रकाशितस्वाशयमिति यावत् । तद्भावस्य बुभुत्सया बोद्धुमिच्छया योगेशं चरन्तमिति तदज्ञाततया तद्व्यापारज्ञानार्थं चरन्तमिति यावत् ॥ ३६ ॥ मानुषीं मनुष्यसम्बन्धिनीं रतिं रमणं क्रीडामीयुषो गतवतो योगमायाबलं च नारदो वीक्ष्य प्रहसन्निव हृषीकेशमथोवाच ॥ ३७ ॥ योगिनामपि दुर्दर्शां दृष्टुमशक्यां स्वतस्तां ते योगमायां वयं विदाम जानीमः । हे योगेश्वर आत्मन् । हृदये निदये निर्भातो ध्यानपथमायातोऽनुगृहाण यथा स्मृतिः स्यादिति प्राक् प्रार्थनात् । यो भवत्पादस्तन्निषेवया सेवयोपासनारूपया हे योगेश्वरे-श्वात्मा मनो यस्य तत्सम्बुद्धिरिति वा । निर्भातेति सर्वत्र प्रकाशमानो भवत्पादौ तयोर्निषेवया । सर्वत्र विदितात्मनामित्या-देरिति वा ॥ ३८ ॥ एवमेवानुसवनं सदनप्रत्यासादने सम्भ्रमवशाच्चित्रभ्रमोऽयमेको मानव इति स्याद्धरे सत्वरमहं प्रस्थापनीय इति विज्ञापयति । अनुजानीहीति । हे देव देवलोकानिति वा । ते यशसाऽऽप्लुतांस्तत्तीर्थस्नातान् लोकान्देवलोकान्वा कर्तुं भुवनपावनीं तव लीलामुद्गायन्पर्यटामि । अतो मामनुजानीहि । गमनमनस्कमाज्ञापय ॥ ३९ ॥ मत्कर्ममर्माजानन्मामकोऽयं नान्योऽयमिति दयापयोधिस्तस्य चञ्चलचेतसो लघुना वचनेनैव स्वस्थितिमुपदिशति । ब्रह्मन्निति । अहं धर्मस्य वक्ता तथा कर्ताऽनुमोदकः कर्तारमितरमनुमोदकः सम्यक्कृतामित्यनुमोदनकर्ता यत्तत इमं लोकं जनं शिक्षयन्निमं धर्ममास्थितः । लोके लोकैरेवं कर्तव्यमिति शिक्षणार्थमेवैतं मम प्रवृत्तिर्न कर्मायत्तेति पुत्र मा खिदः स्वाभाविकचर्येयं किमिति दैन्यं मा त्वं गाः ॥ ४० ॥

### श्रीमद्वल्लभाचार्य्यकृता सुबोधिनी

ततोऽन्तःपुरस्थपर्वतोपवनादिषु सैन्धवं समुद्रोद्भवं हयमारुह्य मृगयां चरन्तम् । रात्रावपि गृहे प्रविष्टः गृहस्थैस्तथोक्तः मृगयास्थाने तथाविधं दृष्टवानित्यर्थः । तथैव क्वचिन्मेध्यान्पशून् श्राद्धाद्यर्थं घ्नन्तम् । तत्रान्येषामप्यर्थे तथा करोतीति ख्यापयितुं परीतं यदुपुङ्गवैरित्युक्तम् ॥ ३५ ॥ गुप्तचर्यां चरन्तं दृष्टवानित्याह अव्यक्तलिङ्गेति । अव्यक्तानि लिङ्गानि सत्त्वासत्त्व-ख्यापकानि । यासां प्रकृतीनां स्त्रीणामन्तःपुरे गृहादिकं येषां तेषामपि तस्य तस्य सतोऽसतो वा भावबुभुत्सया क्वचिच्चरन्तम् । गूढरीत्या यथा राज्ञां गुप्तचर्या भवति । तत्रैव नारदः स्वयमपि तादृशधर्मपर इति । नारदादीन् भगवान् पुनरन्वेषतीति । 'ये यथा मां प्रपद्यन्त' इति समानशीलत्वात्तत्र भगवत्साक्षात्कारो जातः ॥ ३६ ॥ ततो निकटे मिलितः, पलायनेऽप्यशक्तः, लज्जितः सन् किञ्चिद्भगवन्तमुवाचेत्याह अथोवाचेति । हृषीकेशत्यनेन स्वापराधो निवारितः । भगवतैव तथा प्रेरित इति । आदावन्यो-न्यदर्शनेन प्रहसनम् । ततो लज्जया विषादादिर्वेति । एतावद्दर्शनेन नारदस्य किं मौढ्यमासीत्, आहोस्विद्भगवदचिन्त्यैश्वर्य-परिज्ञानेन तथात्वम्, अथवा मायैवेति । मायापक्षे सर्वथा प्राकृतबुद्धिः । प्रथमपक्षे तु नारदस्य सर्वथा प्राकृतत्वम् । मध्यमे तूभयोरुत्तमत्वमिति । त्रयोऽपि बुद्धिविशेषा नारदबुद्धौ न स्फुरिताः, किन्तु योगगतिरेवेति स्वस्य भगवतश्च तुल्यतया परिज्ञानं मध्यमभावश्च स्फुरित इति ज्ञापयन्नाह योगमायोदयं वीक्ष्येति । योगमाय(ा)या दिव्या अपि गतयो भवन्तीति कथमियमेव लीला दृष्टेत्याशङ्क्याह मानुषीमीयुषो गतिमिति । योगेश्वरो हि यादृशीं रतिं वाञ्छति, तदनुरूपा भवति । योगमाया योगस्याधिदैविकी देवता, साधनरूपा वा भगवच्छक्तिस्तथेति ॥ ३७ ॥ तावन्मात्रं ज्ञातं विनिश्चित्य तत्रैव पर्यवसितमतिः अधिकार्थापरिज्ञानात् नायकोत्कर्षाभावे प्रमेयभक्तिमार्गो न साधीयानिति ततो निवृत्तिं वाञ्छन्निव प्रमाणबलेनैव भक्तिमार्गमुपदेक्ष्यामीति निश्चित्य भगवन्तं प्रार्थयति विदामेति द्वाभ्याम् । ते योगमायाः यथेच्छं प्रवर्तमानस्य तत्तदिच्छापूरिकाः विदामः । इदं ज्ञानं

स्वस्यैवासाधारणमिति ज्ञापयितुमाह दुर्दर्शा अपि योगिनामिति। कारणपरिज्ञानं योगिनामपि दुर्लभम्। कार्यस्य लौकिकपरिज्ञानात्कारणजिज्ञासैव नोत्पद्यत इति। तर्हि तव कथमुत्पन्नेत्याशङ्कायामाह योगेश्वरात्मन् भवत्पादनिषेवया निर्भाता इति। योगेश्वराणामस्मदादीनामात्मत्वेन स्फुरितो भवानेव पादावजने हेतुरिति सम्बोधनम्। चरणसेवा तु योगमायापरिज्ञाने हेतुः। अत एतावत्कालं कृता प्रमेयबलभक्तिः एतदर्थपरिज्ञान एवोपक्षीणा जातेति एतन्मतपरित्यागेन कीर्तनमार्गेणैव स्थास्यामीति प्रार्थयते अनुजानीहीति देवलोकानिन्द्रादिस्थानानि ते यशसा आप्लुतान् व्याप्तानि उद्गायन् पर्यटामि। भुवनपावनीः लीलाः पूर्वसिद्धा एव। एतासामदृष्टानां शास्त्रे प्रसिद्ध्यभावात् एता असम्मता इत्यर्थादुक्तं भवति ॥ ३९ ॥ तत्र भगवान् विचारार्थं प्रवृत्तोऽपि अपरिज्ञानात् खिन्नो जातः मार्गमेव परित्यक्तुं वाञ्छतीति निश्चित्य प्रबोधयति ब्रह्मन् धर्मस्येति। केवलकथने वेदादौ क्रियाप्रवेशाभावे लोको न मन्यत इति धर्मस्याहं कर्तापि यदि क्रियमाणस्यानुमोदनं न कुर्यां वचनाचरणादिभिः, तदापि लोको न प्रवर्तेतेति तस्य धर्मस्यानुमोदिताप्यहम्। अतो लोके धर्मप्रवृत्त्यर्थं तच्छिक्षयन् लोके धर्मं ग्राहयन् इमं लोकमास्थितः। अयं भावः समाश्रित इत्यर्थः। इति स्वकृतस्य नानाविधधर्मस्याभिप्रायो वर्णितः। ननु त्वद्वञ्चनार्थं माया प्रदर्शितेति पक्षं निवारयितुं सम्बोधनमाह पुत्रेति। लीलायाः तत्त्वापरिज्ञानान्मा खिद। तत्त्वं तूक्तमिति ॥ ४० ॥

## श्रीसुबोधिनी–सारः

क्वापि मृगयां गच्छंतं सैंधवं सिंधुदेशजं हयं घोटकमारुह्य ततोऽनंतरं मेध्यान् पशून् श्राद्धार्हान् घ्नंतं यदुवरैः परीतं परिवेष्टितम् ॥ ३५ ॥ अव्यक्तं लिंगं वेषो यस्य तं प्रकृतिष्वमात्यादिषु अंतःपुरगृहादिषु चरंतं वर्त्तमानं योगेशं क्वचिद्गृहेपश्यत् तत्तद्भावानां बुभुत्सया बोद्धुमिच्छया ॥ ३६ ॥ अथानंतरं मानुषीं गतिमीयुषः सेवमानस्य हरेर्योगमायाया उदयं वीक्ष्य दृष्ट्वा प्रहसन्निव नारद उवाच हृषीकेशं श्रीकृष्णम् ॥ ३७ ॥ हे योगेश्वर आत्मन् मनसि त्वयि वा निर्भाताः प्रतीतास्ते तव योगमाया मायिनामपि दुर्दर्शा अलक्ष्या वयं विदाम जानीम भवतः पादयोर्निषेवया ॥ ३८ ॥ हे देव ते तव यशसाऽऽप्लुतान् व्याप्तान् लोकान् तव भुवनपावनीं जगदुद्धारिणीं लीलामुद्गायन्नहं पर्यटामि विचरामि मां त्वमनुज्ञां देहि ॥ ३९ ॥ कृष्णोक्तिः। हे ब्रह्मन् धर्मस्य वक्ता कर्त्ताऽनुमोदिताहं तद्धर्मादि शिक्षयन् इमं लोकं देहं वा स्थितोऽस्मि हे पुत्र माखिद मा मोहमेहि ॥ ४० ॥

## श्रीविट्ठलरायात्मजश्रीवल्लभकृतलेखः

अव्यक्तलिङ्गेत्यत्र। अव्यक्तानि लिङ्गानि यासां तादृशीषु प्रकृतिषु स्त्रीषु। अन्तःपुरे गृहादिकं येषां तादृशेषु पुरुषेषु चेत्यर्थः। दासीदासादिष्विति यावत्। तथा धर्मपर इतीति। नारदोपि गुप्तचर्याधर्मपर इति हेतोस्तत्रैव भगवन्तं दृष्टवानिति शेषः। नारदादीनिति। आदिशब्दः प्रकारार्थे। नारदप्रकारकान्गुप्ततया स्थितानित्यर्थः। अथोवाचेत्यत्र। तथात्वमिति। पुरुषोत्तमस्वरूपवित्त्वमित्यर्थः। सर्वथेति। एतद्बुद्ध्या भगवत्यपि प्राकृतत्वमित्यर्थः। प्रथमपक्षे त्विति। मोक्ष्यपक्षे नारदस्य प्राकृतत्वम्। भगवत्स्वरूपस्य त्वज्ञानमेवेति तुशब्दः। मध्यमभाव इति। ब्रह्मैवानन्तमूर्तीति भाव उत्तमः। योगबलेन नानारूपाणि करोतीति मध्यमभाव इत्यर्थः। नायकोत्कर्षाभावे इति। प्रमेयमार्गे साधनान्तराभावाद्भगवानेव नायकः स्वरूपप्रापणकर्ता तस्योत्कर्षः स्वरूपबलप्राकट्यं तद्भावे इत्यर्थः। विदामेत्यत्र। लौकिकपरिज्ञानादिति। लौकिकत्वेन परिज्ञानादित्यर्थः। एतदर्थपरिज्ञाने एवेति। योगमायापरिज्ञाने मध्यमभावस्फुरणे इत्यर्थः। ब्रह्मन्धर्मस्येत्यत्र। केवलेति। एतस्यैव विवरणं वेदादाविति। केवलमितिहासादिरीत्या कथने वेदादौ क्रियाया धर्मस्य प्रवेशाभावे उपनिबन्धनाभावे इत्यर्थः। तथाच मूले कर्तेत्यस्य उपनिबन्धनकर्ता इत्यर्थः।

## गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

यदुपुङ्गवैः परीतं सैन्धवं सिन्धुदेशोद्भवं हयं अश्वमारुह्य क्वापि मृगयां चरन्तम्, ततस्तस्यां मृगयायां मेध्यान् श्राद्धादियोग्यान् पशून् घ्नन्तमपश्यदित्यन्वयः ॥ ३५ ॥ प्रकृतिष्वमात्यादिष्वन्तःपुरगृहादिषु च तेषां भावानां बुभुत्सया बोद्धुमिच्छया अव्यक्तं वेषान्तरेणच्छन्नं लिङ्गं स्वासाधारणं चिह्नं यस्य तथाभूतं क्वचिच्चरन्तं योगेशं सर्वथाभवनसमर्थं कृष्णमपश्यत् ॥ ३६ ॥ अथानंतरं मानुषीं गतिं तनुं चेष्टां चेयुषः प्राप्तवतः परिगृहीतवतो भगवतो योगमायोदयं अचिन्त्यशक्तिविभवं वीक्ष्यावलोक्य प्रहसन् इव नारदः अथानन्तरं हृषीकेशं हृषीकाणि इन्द्रियाणि तेषामीशं नियन्तारं सर्वान्तर्यामिणं श्रीकृष्णमुवाचेत्यन्वयः। 'प्रभावदर्शनात् सङ्कोचोप्यस्ति' इति सूचयितुमिवशब्दः ॥ ३७ ॥ तदुक्तिमाह— विदामेति द्वाभ्याम्। 'तव न किञ्चिदशक्यम्' इति सूचयन् संबोधयति—योगेश्वरेति। मायिनां ब्रह्मादीनामपि दुर्दर्शा दुर्ज्ञेयास्ते तव योगमायाः भवत्पादानिषेवणप्रभावेणात्मनि स्वमनसि निर्भाताः स्फुरितास्त्वद्भक्ता वयं विदाम जानीमः, अतो नेतरवत् मोह इत्याशयः ॥ ३८ ॥ अथ च भुवनपावनीस्तव लीला उद्गायन् ते यशसाप्लुतान् व्याप्तान् कुर्वन् लोकान् अहं यथा पर्यटामि तथा हे देव! मामनुजानीहि आज्ञां देहीत्यन्वयः। ३९ ॥ एवमुक्तवन्तं 'अनुज्ञां दापिता मम पादसेवनादिकृतं तन्मम जुगुप्सितम्' इति खेदं कुर्वन्तं प्रति

भगवानाह—ब्रह्मन्निति। 'तवाप्येतद्विदितमेव' इति 'ब्रह्मन्' इति संबोधनेन सूचितम्। अहं धर्मस्य वक्ता शास्त्रे उपदेष्टा। उपदिष्टमपि धर्मं यदि स्वयं न कुर्यां तदा तत्र सन्देहाल्लोकस्य प्रवृत्तिर्न स्यात्, तदर्थं तस्य कर्ताप्यहम्। एवमपि यदि तत्र प्रवृत्तस्य फलदानादिनानुमोदनं न कुर्यां तदापि निष्फलतया धर्ममार्गः प्रतिरुद्धः स्यात्, अतस्तस्यानुमोदिताप्यहम्। यस्मादेवं तस्मात् लोकं शिक्षयन् धर्मं ग्राहयितुमिमं त्वत्संमाननादिधर्ममहमास्थितः कृतवान्, अतो हे पुत्र! मा खिदः। संबोधनं स्नेहसूचकम् ॥ ४० ॥

### अन्वितार्थप्रकाशिका

चरन्तमिति ॥ यदुपुङ्गवैः परीतं सैन्धवं सिन्धुदेशोद्भवं हयम् अश्वमारुह्य क्वापि मृगयां चरन्तं ततस्तस्यां मृगयायां मेध्यान् श्राद्धादियोग्यान् पशून् घ्नन्तमपश्यत् ॥ ३५ ॥ अव्यक्तेति ॥ प्रकृतिष्वमात्यादिष्वन्तःपुरगृहादिषु च तेषां भावानां बुभुत्सया बोद्धुमिच्छया अव्यक्तं वेषान्तरेण छन्नं लिङ्गं स्वासाधारणचिह्नं यस्य तथाभूतं क्वचिच्चरन्तं योगेशं कृष्णमपश्यत्। एवमन्यदप्यन्यत्र दृष्टमूह्यम्। यद्वा। एतावद्दृष्ट्वा मोहेनाग्रे निवृत्तः ॥ ३६ ॥ अथेति ॥ मानुषीं गतिं तनुं चेष्टां चेयुषः प्राप्तवतः भगवतो योगमायोदयं वीक्ष्य अथ प्रहसन् इव नारदः हृषीकेशं श्रीकृष्णमुवाच ॥ ३७ ॥ विदामेति ॥ हे योगेश्वर! मायिनां ब्रह्मादीनामपि दुर्दर्शा दुर्ज्ञेयास्ते भवत्पादनिषेवया तत्प्रभावेणात्मन् आत्मनि स्वमनसि। ङिलुक् छान्दसः। निर्भाताः स्फुरिताः ते तव योगमायाः विदाम विद्मः। आर्षः। न तु त्वत्स्वरूपमित्यर्थः। यद्वा। प्रार्थनायां लोट्। किमर्थमिमां प्रकटयसीति साक्षादनुभवितुं प्रार्थयामहे ॥ ३८ ॥ अनुजानीहीति ॥ हे देव! भुवनपावनीस्तव लीला उद्गायन् ते यशसा प्लुतान् व्याप्तान् लोकान् अहं यथा पर्यटामि तथा मामनुजानीहि गमनायानुज्ञां देहि ॥ ३९ ॥ ब्रह्मन्निति ॥ हे ब्रह्मन्! अहं धर्मस्य वक्ता उपदेष्टा लोकसङ्ग्रहार्थं स्वयं तस्य कर्ता फलदानादिना तस्य अनुमोदिताऽप्यहं तत् तस्मात् लोकं शिक्षयन् धर्मं ग्राहयितुमिमं त्वत्सम्माननादिधर्ममहमास्थितः न तु तत्त्वतः। अतो हे पुत्र! मा खिदः मोहं मा प्राप्नुहि। आर्षोऽयं प्रयोगः ॥ ४० ॥

### श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्

सैंधवं सिंधुदेशोत्पन्नं ॥ ३५ ॥ अंतःपुरगृहादिषु प्रकृतिषु प्रधानादि प्रजासु च येषां तेषां भावोऽभिप्रायस्तस्य बुभुत्सया ज्ञातुमिच्छया अव्यक्तं वेषांतरेणच्छन्नं लिंगं वसुदेवपुत्रत्वं येन तं चरंतं ददर्श ॥ ३६ ॥ मानुषीं गतिमनुष्यभावं। ईयुषः प्राप्तस्य योगमायाया योगैश्वर्यस्य उदयं वैभवं ॥ ३७ ॥ मायिनां योगैश्वर्यवतामपि योगिनामित्यपिपाठः दुर्दशाः द्रष्टुमशक्याः याः योगमायाः योगैश्वर्याणि ताः। हे योगेश्वर भवत्पादनिषेवया आत्मन् आत्मनि मम मनसि यद्वा आत्मनि त्वयि निर्भाताः प्रकाशमानाः वयं विदाम वेदाम विद्मः ॥ ३८ ॥ मनुष्यनाट्यं दृष्ट्वा मुह्यन्नाह अन्विति। अनुजानीहि आज्ञापय ॥ ३९ ॥ धर्मस्य कर्त्ता स्थापकः तस्य धर्मस्य अनुमोदिता पालकानां प्रोत्साहजनकः। तत् तं धर्मं लोकं प्रतिशिक्षयम् आस्थितः तस्मिन्ननुतिष्ठन्नहमस्मि। हे पुत्र माखिद। पुत्रेति लालनवचन ॥ ४० ॥

### भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

अव्यक्तेति। क्वचित् अन्तःपुरचरादिषु प्रकृतिष्वमात्यादिषु च, तत्तद्भावबुभुत्सया तत्तदभिप्रायाणां बोद्धुमिच्छया, चरन्तं, अव्यक्तं वेषान्तरेणाच्छन्नं लिङ्गं स्वासाधारणचिह्नं यस्य तं, योगेशं, अपश्यत् ॥३५॥ अथेति। मानुषीं मनुष्यसंबन्धिनीं, गतिं चेष्टां तनुं वा, ईयुषः प्राप्तवतः, परिगृहीतवत इति यावत्। तस्य, योगमायोदयमाश्चर्यशक्तिवैभवं, वीक्ष्यावलोक्य, अथ नारदः, प्रहसन्निव, हृषीकेशं उवाच। अचिन्त्यविविधविचित्रशक्तौ त्वयि न चित्रमितीवशब्दाभिप्रायः ॥ ३६ ॥ उक्तमेवाह द्वाभ्याम्। विदाम इति। हे योगेश्वर, योगिनां दुर्दर्शा अपि, ते तव, योगमाया आश्चर्यशक्तीः, भवत्पादनिषेवया भवत्पादसेवाप्रभावेण, आत्मन्नात्मनि मनसि, निर्भाता नितरां भाताः, विदाम ॥ ३७ ॥ अनुजानीहीति ॥ हे देव, मां अनुजानीहि आज्ञापय। ते तव, यशसा आप्लुतान् व्याप्तान्, लोकान्, भुवनपावनीः, तव लीलाः, उद्गायन् पर्यटामि ॥ ३८ ॥ इत्युक्तः प्राह भगवान्। ब्रह्मन्निति। हे ब्रह्मन्, धर्मस्य वक्तोपदेष्टा, कर्त्ता, तदनुमोदिता, अहं भवामि। अतः, तत् धर्मोपदेशतदनुष्ठानतदनुमोदनादिकं, शिक्षयन् जनान् शिक्षयितुं, इमं लोकं मनुष्यदेहं, आस्थितः आश्रितः परिगृहीतवानस्मि। मनुष्यचेष्टामनुवर्त्तयामीति भावः। अतः, हे पुत्र, नारकान् भगवदुपदेशेन तारकः, मा खिद। स्वयमीश्वरः सन्नपि, अधुना मनुष्यचेष्टितः कथं बभूवेत्येवंविधं मोहं न प्राप्नुहीत्यर्थः ॥ ३९ ॥ इतीति। इतीत्थं, नारदः, गृहमेधिनां गृहस्थाश्रमिणां, पावनान्, सद्धर्मान् आचरन्तं, सर्वगेहेषु सन्तं विद्यमानं, एकं एव, तं श्रीकृष्णं, हृत स्फुटमेव ददर्श ॥ ४० ॥

### कृष्णप्रिया

कहीं श्रेष्ठ यादवों से घिरे हुए सिन्धुदेशीय घोड़ेपर चढ़कर मृगया कर रहे हैं, और उसमें यज्ञ के लिये मेध्य पशुओं का ही वध कर रहे हैं ॥ ३५ ॥ और कहीं प्रजा में तथा अन्तःपुर के महलों में वेष बदलकर छिपे रूप से सबका अभिप्राय

जानने के लिये विचरण कर रहे हैं। क्यों न हो, भगवान् योगेश्वर जो हैं ॥ ३६ ॥ परीक्षित्! इस प्रकार मनुष्य की-सी लीला करते हुए हृषीकेश भगवान् श्रीकृष्ण की योगमाया का वैभव देखकर देवर्षि नारदजी ने मुसकराते हुए उनसे कहा ॥ ३७ ॥ 'योगेश्वर! आत्मदेव! आपकी योगमाया ब्रह्माजी आदि बड़े-बड़े मायावियों के लिये भी अगम्य है। परन्तु हम आपकी योगमाया का रहस्य जानते हैं। क्योंकि आपके चरणकमलों की सेवा करने से वह स्वयं ही हमारे सामने प्रकट हो गयी है ॥ ३८ ॥ देवताओं के भी आराध्यदेव भगवन्! चौदहों भुवन आपके सुयश से परिपूर्ण हो रहे हैं। अब मुझे आज्ञा दीजिये कि मैं आपकी त्रिभुवनपावनी लीला का गान करता हुआ उन लोगों में विचरण करूँ' ॥ ३९ ॥ भगवान् श्रीकृष्ण ने कहा—देवर्षि नारदजी! मैं ही धर्म का उपदेशक, पालन करनेवाला और उसका अनुष्ठान करने वालों का अनुमोदनकर्ता भी हूँ। इसलिये संसार को धर्म की शिक्षा देने के उद्देश्य से ही मैं इस प्रकार धर्म का आचरण करता हूँ। मेरे प्यारे पुत्र! तुम मेरी यह योगमाया देखकर मोहित मत होना ॥ ४० ॥

### श्रीशुक उवाच

इत्याचरन्तं सद्धर्मान् [1]पावनान् गृहमेधिनाम्। तमेव सर्वगेहेषु सन्तमेकं ददर्श ह ॥ ४१ ॥
कृष्णस्यानन्तवीर्यस्य योगमायामहोदयम्। मुहुर्दृष्ट्वा ऋषिरभूद् विस्मितो जातकौतुकः ॥ ४२ ॥
इत्यर्थकामधर्मेषु कृष्णेन श्रद्धितात्मना। सम्यक् सभाजितः प्रीतस्तमेवानुस्मरन् ययौ ॥ ४३ ॥

एवं मनुष्यपदवीमनुवर्तमानो नारायणोऽखिलभवाय गृहीतशक्तिः।
[2]मेनेऽङ्ग षोडशसहस्रवराङ्गनानां सव्रीडसौहृदनिरीक्षणहासजुष्टः ॥ ४४ ॥
यानीह विश्वविलयोद्भववृत्तिहेतुः कर्माण्यनन्यविषयाणि हरिश्चकार।
यस्त्वङ्ग गायति शृणोत्यनुमोदते वा [3]भक्तिं लभेत भगवत्यपवर्गमार्गे ॥ ४५ ॥

इति श्रीमद्भागवते महापुराणे[4] दशमस्कन्धे[5] कृष्णगार्हस्थ्यदर्शनं [6]नामैकोनसप्ततितमोऽध्यायः ॥ ६९ ॥

### अन्वयः

अन्वयः—श्रीशुक उवाच—गृहमेधिनाम्, पावनान्, सद्धर्मान्, आचरन्तम्, सर्वेगेहेषु, सन्तम्, तम्, एव, एकम्, ददर्श, ह ॥ ४१ ॥ अनन्तवीर्यस्य, कृष्णस्य, योगमायामहोदयम्, मुहुः, दृष्ट्वा, जातकौतुकः, ऋषिः, विस्मितः, अभूत् ॥ ४२ ॥ इति, अर्थकामधर्मेषु, श्रद्धितात्मना, कृष्णेन, सम्यक्, सभाजितः, प्रीतः, तम्, एक, अनुस्मरन्, ययौ ॥ ४३ ॥ हे अङ्ग, षोडशसहस्रवराङ्गनानाम्, सव्रीरसौहृदनिरीक्षणहासजुष्टः, मनुष्यपदवीम्, अनुवर्तमानः, अखिलभवाय, गृहीतशक्तिः, नारायणः, इति, मने ॥ ४४ ॥ हे अङ्ग, विश्वविलयोद्भववृत्तिहेतुः, हरिः, इह, यानि, अनन्तविषयाणि, चकार, तानि, ये, तु, गायति, श्रुणोति, वा, अनुमोदते, अपवर्गमार्गे, भगवति, भक्तिम्, लभेत ॥ ४५ ॥

इति श्रीदशमस्कन्धे एकोनसप्ततितमेऽध्याये अन्वयः समाप्तः ॥ ६९ ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

इत्येवमनुगृहीतस्तमेकमेव संतं ददर्शेति ॥ ४१ ॥ मुहुर्मुहुर्दृष्ट्वा जातकौतुको मुनिर्विस्मितोऽभूदिति ॥ ४२ ॥ श्रद्धितः श्रद्धया युक्त आत्मा यस्य तेन ॥४३॥ नारददृष्टां श्रीकृष्णलीलां निगमयति। एवमिति अखिलस्य भवायोद्भवाय गृहीताः शक्तयो नानामूर्तयो येन सः सव्रीडं च तत्सौहृदं च तेन निरीक्षणं हासश्च ताभ्यां जुष्टः ॥ ४४ ॥ अनन्यविषयाण्यसाधारणानि। अपवर्गमार्गे मोक्षप्रदे ॥ ४५ ॥

इति श्रीमद्भागवते दशमस्कंधोत्तरार्धे श्रीध० टीकायामेकोनसप्ततितमोऽध्यायः ॥ ६९ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

इतिशब्दः प्रकारे। सद्धर्मान् वेदविहितान्। तं कृष्णम् ॥ ४१-४२ ॥ इतीत्थम्। तं कृष्णम् ॥ ४३ ॥ हे अङ्ग ॥४४॥ असाधारणान्यन्येन कर्तुमशक्यानि। हि यस्माद्भक्तिर्भवति तस्मान्मुमुक्षुणा सेव्यानीति भावः। यद्वा—अनन्यविषयाणि स्वैक-

१. नादिष्टान्—वीर.; प्राक् सृष्टान्—विज.। २. रेनेऽङ्ग—श्रीधर. वंशी. जीव. वीर. विश्व.; रेमे च—विज.। ३. भक्तिर्भवेद्भगवति ह्य—श्रीधर. वंशी. जीव. वीर. विज. विश्व.। ४. पारमहंस्यां संहितायां—प्रा. पा.। ५. न्धे एकोन—प्रा. पा.। ६. सप्ततितमोऽध्यायः—विज.।

तात्पर्यकाणि, यद्वा—अन्या भक्ता विषया उद्देश्या येषां तानि । अपवर्गो मोक्षमार्गः प्राप्त्युपायो यस्य सः संसारक्लेशध्वंसे सत्येव निर्विघ्नभक्तिसिद्धया प्राप्यत्वात्, "ब्रह्मभूतः प्रसन्नात्मा न शोचति न कांक्षति । समः सर्वेषु भूतेषु मद्भक्तिं लभते पराम् ॥" इति गीताभ्यः । यद्वा—अपवर्गो भक्तियोग एव मार्गो यस्य तत्र । यद्वा—अपवर्गा उपेक्षितचतुर्वर्गास्तैर्मार्ग्यतेऽन्वेष्यत इति तोषिणी ॥ ४५ ॥

इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे दशमस्कन्धोत्तरार्द्धे एकोनसप्ततितमोऽध्यायः ॥ ६९ ॥

## श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी

इति एवमाग्रहेण सतां धर्मात् सदाचारात् गृहमेधिनां पावनात् प्रायो ग्रहस्थधर्मशिक्षया तेषामेव सर्वमलशोधनात् यद्वा गृहमेधिनां ये सन्तः उत्तमा धर्मास्तान् तत्सेवनादिना सामान्येन सर्वलोकानां पावनाम् एवं सर्वगेहेषु बहुधास्थितमपि एकमेव तं ददर्श एकत्वश्चेदं श्रीविग्रहपरमेव श्रीभगवति विग्रहविग्रहिभावस्य निषिद्धत्वात् विग्रह एव विभुत्वादेर्दर्शितत्वात् विग्रहिणस्तु विभुत्वे साध्ये श्रीनारदस्य सन्देहे तदुपगमानुपपत्तेः कृतकायव्यूहैः सौभर्य्यादिभिस्तुल्यतापत्तेश्चित्रत्वानुपपत्तेश्च अतश्च अमीलितदृग्व्यधारयदिति मम दृशि गोचर एष आविरात्मेति श्रीविग्रहतात्पर्य्यकेण यथोक्तं श्रीभीष्मेण "प्रतिदृशमिव नैकधाऽर्कमेकं समधिगतोस्मि विधूतभेदमोहः" इति अर्कस्य दूरस्थविस्तीर्णमण्डलत्वेन तथात्वं श्रीभगवद्विग्रहस्याचिन्त्यशक्त्येति विशेषेपि दृष्टान्तोयमेकस्यैव तत्रतत्र स्फुरितत्वांशे एवं "चित्रं बतैतदेकेन वपुषा" इत्यादिचिन्तनानुरूपमेवानुभूतमिति ॥ ४१ ॥ अतः ऋषिः सर्वज्ञोपि स्वस्यापि बुद्धयगोचरं योगमायामहोदयं सर्वोत्कृष्टाविर्भावं दृष्ट्वा तं च जातकौतुकः सन् मुहुर्दृष्ट्वा विस्मितोऽभूदित्यर्थः ॥ ४२ ॥ अर्थेषु उत्तमपदार्थेषु कामेषु उपभोगेषु धर्मेषु यज्ञादिषु सम्यग्यथा स्यात्तथा सभाजितः श्रीकृष्णकौतुकार्थं स्वकौतुकार्थं परार्थं वा तेषु यत्रयत्र तस्येच्छाऽऽसीत् तत्तत्सम्पाद्य पूजित इत्यर्थः । तत्र हेतुः श्रद्धितात्मनेति एवं कतिचिद्दिनानि विलम्बोपि बोधितः ॥ ४३ ॥ एवं श्रीनारददृष्टां लीलां निगमयंस्तासामङ्गाङ्गिभावं दर्शयति—एवं मनुष्यपदवीं तल्लीलामनुवर्त्तमानो यो नारायणः "नारायणस्त्वं नहि सर्वदेहिनाम्" इत्याद्युक्तलक्षणः इतरसर्वनारायणानां स्वयमङ्गी तत एव मुख्यो महान् नारायणः स्वयं भगवान् कृष्णः सम्प्रति चाखिलानां भवाय स्वस्मिन् आकृष्टतत्तन्निजांशः सः षोडशसहस्रसङ्ख्यानां वराङ्गनानां सव्रीडो यः सौहृदविशेषः तत्पूर्वकनिरीक्षणहासाभ्यां जुष्टः प्रीतिमवापेति ॥ ४४ ॥ एतत्प्रसङ्गेन सकलानामपि श्रीकृष्णलीलानां गानादिफलमुत्तरोत्तरक्रमेण सकैमुत्यमाह—विश्वविलयादिहेतुरपि हरिरिह परमपूर्णावतारे यानि कर्माणि चकार कीदृशानि अनन्यविषयाणि स्वैकतात्पर्य्यकाणि स्वस्वरूपैकपर्य्यवसानानि यद्वा अनन्या भक्ता एव विषया उद्देश्या येषां तानि नतु विश्वविलयादिवदन्यविषयाण्यपि भगवति "कृष्णस्तु भगवान् स्वयम्" इति प्रसिद्धपूर्णभगवत्त्वे तस्य दौर्लभ्यमाह—अपवर्गो मोक्षमार्गः प्राप्त्युपायो यस्य सः संसारक्लेशध्वंसे सत्येव निर्विघ्नभक्तिसिद्धया प्राप्यत्वात्—

"ब्रह्मभूतः प्रसन्नात्मा न शोचति न काङ्क्षति । समः सर्वेषु भूतेषु मद्भक्तिं लभते पराम्" ॥ इति

श्रीगीताभ्यः यद्वा अपवर्गो भक्तियोगः स एव मार्गो यस्य तस्मिन् यद्वा अपवर्गा अपगतवर्गाः उपेक्षितचतुर्वर्गा भक्तास्तैरति मृग्यत इति तस्मिन् ॥ ४५ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिण्याम् एकोनसप्ततितमोऽध्यायः ॥ ६९ ॥

## श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी

सतां धर्म्मान् सदाचारान्, गृहमेधिनां पावनान्, प्रायो गार्हस्थ्यधर्म्मशिक्षया तेषामेव सर्व्वमलशोधनात्; यद्वा, गृहमेधिनां ये सन्त उत्तमा धर्म्मास्तान् तच्छ्रवणादिना सामान्येन सर्व्वलोकानां पावनान्, आचरन्तमिति तदर्थं प्रत्येकं सर्व्वगृहेष्ववस्थितया बहुरूपता सूचिता । एवं सर्व्वगेहेषु बहुधा स्थितमपि एकमेव तं ददर्श । अतः कायव्यूहं विनापि निजशक्तिविशेषेण तस्यैकस्यैव कालदेशादिव्यवच्छेदाभावात् सर्व्वत्र स्थितेः । सिद्धान्तोऽयं सूक्ष्मातिसूक्ष्मो भक्तप्रवरहृदयैकगम्यो यथाशक्ति श्रीभागवतामृतोत्तरखण्डे विवृतोऽस्त्येव । एवमारम्भे प्रागुक्तस्य 'एकेन वपुषा' इत्यादेः समाधानं सिद्धम् ॥ ४१ ॥ कृष्णस्य निजाशेषैश्वर्य्यप्रदर्शनार्थमवतीर्णस्य साक्षाद्भगवतः, अतोऽनन्तं वीर्य्यं शक्तिर्यस्य तस्य, अतएव योगमायाया महोदयम्, ऋषिः सर्व्वज्ञोऽपि मुहुर्महादुर्वितर्क्यत्वेनासन्देहार्थं पुनः पुनर्दृष्ट्वा; अन्यत्तैर्व्याख्यातम् । यद्वा, विस्मितोऽत्याश्चर्य्याज्जातं कौतुकं हर्षोदयो यस्य तथाभूतश्चाभूत् ॥ ४२ ॥ श्रीभगवतः शक्तिविशेषदर्शनात् सम्यक् सभाजने हेतुः—अर्थादिषु तत्साधनेषु श्रद्धितात्मना तच्छिक्षणार्थं श्रद्धायुक्तचित्तेनेति; यद्वा, अर्थाश्चतुः पुरुषार्थास्तद्रूपो धर्म्मो भक्तिलक्षणस्तत्कामेषु जनेषु प्रीतात्मना अनु निरन्तरं स्मरन् ॥ ४३ ॥ अखिलेत्यवतारित्वमुक्तम्, यतो नारायणः साक्षाद्भगवान्, तथाप्येवमुक्तप्रकारेण मनुष्यलीलामनुवर्त्तमानोऽनुतिष्ठन् रेमे । यद्वा, मनुष्यलीलां कुर्व्वन्नपि अखिललोकस्य भवाय गार्हस्थ्यधर्म्मप्रदर्शनादिना क्षेमाय गृहीताः प्रकटिताः शक्तयो बहुलमहिषीगृहेषु गृहधर्म्मसमर्था बहुलमूर्त्तयः, किंवाखिलानां गृहाणां भवाय गृहीता शक्तिरेकस्यैव सर्व्वत्र पृथक्त्वेन स्थिति-

लक्षणा येन सः, यतो नारायणः सर्व्वजीवैकाश्रयः। रतौ हेतुमाह—अंगेत्यादि। अंग! हे राजन्! यद्वा, अंगं निज-श्रीविग्रहस्त-द्वत्प्रियतमाः सौन्दर्य्यादियुक्ता वा याः षोडशसहस्रवरांगनास्तासाम्। अन्यत्तैर्व्याख्यातम्। यद्वा, सव्रीड़ौ यौ सौहृदेन प्रेम्णा निरीक्षण-हासौ ताभ्यां जुष्टः सेवितः, प्रीतो वा सन् ॥ ४४ ॥ तादृशविचित्रगार्हस्थ्यलीलाया मुख्यप्रयोजनमाह—यानीति। इह लोके विश्वस्य विलयादिहेतुरपि, विलयः प्रलयः, उद्भवः सृष्टिः, वृत्तिः स्थितिः पालनम्; एषां यथोत्तरं श्रैष्ठ्यम्, इति तेभ्योऽपि कर्म्मणामेषां माहात्म्यम्, हरेरिति च कर्म्मणामपि मनोहरत्वं सूचितम्। तु—एव, य एवेत्यनेनाधिकारापेक्षापि निरस्ता। गानादीनां यथोत्तरं न्यूनत्वं कैमुतिकन्यायेनैव व्याख्येयम्। अंगेति सहर्षसम्बोधने, तच्च तत्र तत्र राज्ञः प्रवर्त्तनार्थम्, तस्य भक्तिः, हि निश्चितम्, भगवति सर्व्वैश्वर्य्यप्रकटनपरे श्रीकृष्णे। तस्य दौर्लभ्यमाह—अपवर्गो मोक्षो मार्गः प्राप्त्युपायो यस्य, संसारदुःखध्वंसे सत्येव निर्विघ्नभक्तिसिद्ध्या प्राप्यत्वात्। यद्वा, अपवर्गो भक्तियोगलक्षणः, स एव मार्गो यस्य तस्मिन्; यद्वा, अपवर्गा उपेक्षितचतुर्वर्गा भक्तास्तैरपि मृग्यत इति मार्गस्तस्मिन्निति ॥ ४५ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे उत्तरार्द्धे श्री-श्रील-सनातन-गोस्वामिपाद-कृतायां श्रीबृहद्वैष्णवतोषिण्यां श्रीदशम-टिप्पण्यामेकोनसप्ततितमोऽध्यायः ॥ ६९ ॥

## श्रीसुदर्शनसूरिकृतशुकपक्षीयम्

पूर्वं बदरिकाश्रमे तवाग्रे स्वस्य नारायणत्वात् ॥ ४५ ॥

इति श्रीमद्भागवतव्याख्याने दशमस्कन्धे श्रीसुदर्शनसूरिकृतशुकपक्षीये एकोनसप्ततितमोऽध्यायः ॥ ६९ ॥

## श्रीमद्वीरराघवाचार्यकृता भागवतचन्द्रचन्द्रिका

कदाचिदपि तस्य मोहसम्भावनामपि निवर्त्तयितुं भगवता प्रदर्शितं सार्वात्म्यं ददर्श विस्मितश्च बभूव मुनिरित्याह—इतीति द्वाभ्याम्। गृहमेधिनामादिष्टान् विहितान् धर्मानेवम् आचरन्तं तदेव पुनः सर्वदेहेषु एकरूपेणात्मतया सन्तं वर्त्तमानं ददर्श ॥ ४१ ॥ कृष्णस्येति। अनन्तवीर्यस्य अपरिच्छिन्नस्य कल्याणगुणस्य कृष्णस्याश्चर्यशक्तेर्माहात्म्यं वैभवम् उत्सुकस्सन् मुहुर्मुहुर्दृष्ट्वा ऋषिर्नारदो विस्मितो बभूव ॥ ४२ ॥ इतीति। अर्थादिषु श्रद्धितः लोकशिक्षार्थं सञ्जातश्रद्धः आत्मा मनो यस्य तेन कृष्णेन सभाजितो बहुमतः प्रीतश्च तं कृष्णमेवानुस्मरन् ययौ ॥ ४३ ॥ नारदाय दर्शितं योगमायोदयं निगमयति—एवमिति स्वयं नारायणस्सन् अखिलानां भवायाभ्युदयाय गृहीता उपात्ता शक्तिः दिव्यतनुर्येन सः मनुष्यचेष्टामनुवर्त्तमानः अङ्ग हे राजन्! सव्रीडश्च तत्सौहृदश्च तेन निरीक्षणं हासश्च ताभ्यां जुष्टः ॥ ४४ ॥ उक्तविधभगवच्चेष्टितगानादिफलमाह—यानीति। विश्वस्य विलयः प्रलयः उद्भवः उत्पत्तिः स्थितिरासां हेतुर्हरिर्यानि ईदृशेषु अवतारेषु इह लोके वा अनन्यसाधारणानि कर्माणि चकार तानि अङ्ग हे राजन्! यः पुमान् गायति तस्यापवर्गमार्गे मोक्षप्रापके "अमृतस्येषसेतुः" इति श्रुतेः। मार्गशब्दः प्रापकपरः भगवति भक्तिर्भवेत् ॥ ४५ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम् एकोनसप्ततितमोऽध्यायः ॥ ६९ ॥

## श्रीविजयध्वजतीर्थकृता पदरत्नावली

उपसंहरति—इतीति। इतिशब्द आदिवचनः ॥ ४१-४२ ॥ इत्यर्थधर्मकामेषु अवहितात्मना कृष्णेन ॥ ४३-४४ ॥ साक्षान्मोक्षहेतुत्वात् भगवच्चरितमिदं बुभुक्षुभिरभ्यसनीयमाश्वसनीयं नतु विटवृत्तवदुपेक्षणीयमिति भावेनाह—यानीति। अङ्ग विष्णुरात! विश्वविलयोद्भववृत्तिषु हेतुर्हरिः यानि अनन्यविषयाणि कर्माणि चकार यस्तु तानि गायति शृणोति अनुजानाति वा तस्य स पुंसोऽपवर्गमार्गे भगवति भक्तिर्भवति हि यस्मात्तस्मादवश्यं मुमुक्षुणा सेव्यानीति ॥ ४५ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम् एकोनसप्ततितमोऽध्यायः ॥ ६९ ॥

( श्रीविजयध्वजतीर्थरीत्या सप्तसप्ततितमोऽध्यायः ॥ ७७ ॥ )

## श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

अर्थेषु उत्तमपदार्थेषु धर्मेषु यज्ञादिषु कामेषु उपभोगेषु सम्यक् यथा स्यात्तथा सभाजितः श्रीकृष्णकौतुकार्थं स्वकौतुकार्थं परार्थं वा तेषु यत्र यत्र तस्येच्छाऽऽसीत् तत्तत् सम्पाद्य पूजित। इत्यर्थः। तत्र हेतुः श्रद्धितात्मनेति ॥ ४३ ॥ एवं कतिचिद्दिनानि विलम्बोऽपि बोधितः अपवर्ग एव मार्गो यस्य तस्मिन् "ब्रह्मभूतः प्रसन्नात्मा" इत्यादि ॥ ४४-४५ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धीये श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे एकोनसप्ततितमोऽध्यायः ॥ ६९ ॥

### श्रीमज्जीवगोस्वामिकृतः बृहत्क्रमसन्दर्भः

इत्याचरन्तमित्यादि। तमेव श्रीकृष्णमेव सर्वगेहेषु सन्तम्, अथ च एकं ददर्श, नतु पृथगिति ज्ञातवान्। एतेन श्रीकृष्णविग्रहस्य व्यापकत्वमुक्तं भवति। सन्तमिति वर्तमानकालनिर्देशः ॥ ४१ ॥ ( १८ श-श्लो० ) "योगमाया विदाम" इति यत् पूर्वमुक्तं तदहङ्कारशमनं वर्णयन्नाह—कृष्णस्यानन्तवीर्यस्येत्यादि। योगमाया महोदयं वीक्ष्य जातकौतुकः सन् विस्मतः नतु तत्वं वेद ॥ ४२-४३ ॥ एवमित्यादि। मनुष्यपदवीं मनुष्यवर्त्म मनुष्यलीलामित्यर्थः। नारायणः श्रीकृष्णः। नारो नयः, नृ नये' घञि रूपम्, तस्यायनं यस्मात्। नारायण इति नाम त्रयाणामेव प्रसिद्धम्—शेषशायिनो नारायणस्य भारतवर्ष देवस्य च स्वयं भगवतः श्रीकृष्णस्य च—कृष्णाष्टके पठितत्वात्। आगमेषु 'कृष्णाय नमः, नारायणाय नमः, वासुदेवाय नमः', इत्यादि। तेनायं नारायणनामैव, न त्वहिशयनशायी यमक्रूराय, दर्शयामास। गृहीता शक्तिर्लीलाख्या नित्यशक्तिर्येन ॥४४-४५॥

इति श्रीदशमे श्रीबृहत्क्रमसन्दर्भे एकोनसप्ततितमोऽध्यायः ॥ ६९ ॥

### श्रीनाथचक्रवर्तिविरचिता चैतन्यमतमञ्जूषा

इत्येवंप्रकारेण सर्वेषु गृहेषु एकमेव सन्तं ददर्श, अतः श्रीकृष्णविग्रहस्य व्यापकत्वम्, सर्वेषु गृहेषु एकमेव सन्तमेवेति वर्त्तमान-कालनिर्देशात् ॥ ४१ ॥ ( ३८ श-श्लो० ) "योगमायास्ते विदाम" इति यत् पूर्वमुक्तम्, तस्याऽहङ्कारोपशमनमधुना कृतं वर्ण्यते-कृष्णस्यानन्तवीर्यस्येत्यादि। योगमायामहोदयं मुहुर्दृष्ट्वा जातकौतुकः सन् विस्मितोऽभूत् ॥४२-४३॥ एवमित्यादि। मनुष्य-पदवीं मनुष्यलीलां मनुष्याणां पदवीं धरणीं वा नारायणः श्रीकृष्णोऽखिलानां भवाय प्रेमवृद्धये गृहीता रुक्मिण्याद्याः शक्तयो येन; यद्वा, स्वस्य योगशक्तिः ॥ ४४ ॥ यस्त्वङ्गेत्यादि। अपवर्गस्य मार्गः पन्थास्तस्मिन् तथाभूतेऽपि शक्तिरेव भवति, नापवर्गः ॥ ४५ ॥

इत्येकोनसप्ततितमोऽध्यायः ॥ ६९ ॥

### श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शिनी

उक्तमर्थमेकेनैव श्लोकेन सङ्क्षिप्याह—इतीति। एकम् एकवपुषम् एकेन वपुषेति पूर्व्वोक्तेः। अत्र नारदस्य तथा द्रष्टुमिच्छया भगवतश्च दर्शयितुमिच्छयैव तथा दर्शनमभूत् किन्तु द्वारकावासिनस्तु ये यत्रत्यास्ते तत्पुर एव कृष्णं पश्यन्ति न त्वन्यत्र पुरेषु कार्य्यान्तराय तत्र तत्र कदाचिद्गच्छन्तोपीति ज्ञेयम् ॥ ४१-४२ ॥ श्रद्धितः श्रद्धायुक्त आत्मा यस्य तेन ॥ ४३ ॥ ननु, परमेश्वरस्य अर्थादिश्रद्धया किमित्यत आह—एवमिति। मनुष्यवर्त्मानुसृत्या तस्य किमित्यत आह। अखिलानां भवाय मनुष्यचेष्टा हि मनुष्यैः सुखेन स्मर्य्यन्त इति तादृशस्वलीलास्मारणया तेषां संसारं निवर्त्तयितुमित्यर्थः। तत्संसारनिवर्त्तनया तस्य किमित्यत आह—गृहीता शक्तिः कृपाख्या येन सः किञ्च शाश्वतिकया मनुष्यचेष्टया न केवलमेतावदेव प्रयोजनं किन्तु स्वरूपभूतस्वप्रेयसीभिर्मानुषीभिः लक्ष्म्यादिभ्योऽप्युत्कृष्टाभिर्मानुषाकृतिः स्वस्य वैकुण्ठनाथादीनामप्यं थांशिनो अनन्या भक्ता एव बिषया येषां तानिति वा। शाश्वतिकं रमणमपीत्याह—रेमे इति ॥ ४४ ॥ नच कृष्णलीला केवलं संसारमोक्षार्थैवा किन्तु प्रेमभक्तिप्रदा चेत्याह—यानीति। विलयश्च उद्भवश्च वृत्तिः स्थितिश्च तासां हेतुरपि कृष्णो यानि कर्माण्यनन्यविषयाणि स्वरूपान्तरासाधारणानि। अनन्या भक्ता एव विषया उद्देश्या येषां तानिति वा। अपवर्गो मोक्षो मार्गे भजनलक्षणे वर्त्मन्येव लभ्यो यस्य तस्मिन्। भगवति भक्तिः प्रेमविलक्षणा तस्य तरेत् संसारान्मोक्षस्तु भजनारम्भ एव स्यादिति ॥ ४५ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम्। एकोनसप्ततितमोऽध्यायः दशमेऽजनि सङ्गतः ॥ ६९ ॥

### गूढार्थदीपिनी

एवं भगवताऽनुगृहीतो नारदस्तदा सर्वगेहेषु एकरूपमेव सन्तं श्रीकृष्णं ददर्शेत्यन्वयः। ह हर्षेति शंकानिवृत्त्यर्थम् ॥४१॥ महोदयं महावैभवं मुहुर्मुहुः दृष्ट्वा जातकौतुकः उत्कण्ठायुक्तः सन् विस्मितोऽभूत् इति ॥ ४२ ॥ इत्येवमर्थादिषु श्रद्धितः श्रद्धायुक्तः आत्मा मनो यस्य तेन कृष्णेन सभाजितः सत्कृतो नारदः तमेव स्मरन् ययौ ॥ ४३ ॥ अङ्ग हे राजन्! अखिलभवाय जगत्कल्याणाय गृहीताः शक्तयो नानामूर्तया अवताराः येन स भगवान् ताभिः सह रेमे। कथंभूतः। तासां व्रीडासहितं यत् सौहृदं तेन निरीक्षणं हासश्च ताभ्यां जुष्टः सेवितः आकृष्ट इत्यर्थः ॥ ४४ ॥ अङ्ग हे राजन्! हरिः अनन्यविषयाणि असाधारणानि यानि कर्माणि चकार तानि यस्तु गायति शृणोति वा तस्य भगवति भक्तिर्भवेदित्यन्वयः। कथंभूते। अपवर्ग मार्गे मोक्षप्रदे। कथंभूतो हरिः। विश्वस्य प्रलयादौ हेतुः कारणभूतः। उद्भवः सृष्टिः वृत्तिः पालनम् ॥ ४५ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां दशमस्कन्धोत्तरार्द्धे गूढार्थदीपिन्यामेकोनसप्ततितमोऽध्यायः ॥ ६९ ॥

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः

पावनान् पशुवृत्तिदोषनिर्नाशकान् ॥४१-४३॥ गृहीताः शक्तयो नानामूर्तयो येन सः अखिलानां श्रोतॄणां श्रावयितॄणां भवायोद्भवाय मनुष्याणां पदवीं चेष्टामनुवर्तमानोऽनुकुर्वाणः सव्रीडश्च निरीक्षणं हासश्च ताभ्यां जुष्टः हे अङ्ग राजन् ! रेमे ॥४४॥ भगवल्लीलागानादिफलमाह—यानीति। विश्वस्य संहारोत्पत्तिस्थितिहेतुः अनन्यविषयाणि स्वासाधारणानि कर्माणि चकार तानि अपवर्गमार्गे मुक्तिप्रदे तस्य भक्तिर्भवेत् ॥ ४५ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धीये श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे एकोनसप्ततितमोऽध्यायार्थप्रकाशः ॥ ६९ ॥

### श्रीसत्यधर्मकृता श्रीभागवतटिप्पणी

प्राक् सृष्टान्स्वेनैव धर्मान्गृहमेधिनामाचरन्तं सर्वगेहेषु सन्तमेकं तमेवमिति ददर्श। हेति प्रसिद्धौ ॥ ४१ ॥ ऋषिर्मुहुर्मुहुर्दृष्ट्वा। हे अजात उत्पत्तिमदन्य स्वामिन् कौतुको भूमौ तु सर्वत्र कः सम इति विस्मितोऽभूत्। जातकौतुकः सन्विस्मितोऽभूदिति सर्वे ॥ ४२ ॥ कृष्णेन सम्यक् सभाजितः प्रीतः। अर्थधर्मकामेष्ववहित आत्मा मनस्तेनार्थधर्मकामेष्ववहिता हितदा एते न किन्तु बन्धका इत्यात्मना मनसा ऐकान्तिकत्वात्। अर्थकामसन्दष्टो धर्मोऽत्र कामः। इति न हि हितहेतुताऽतत्त्रयाणामिति मन्तव्यम्। तमेवानुस्मरन्ययौ ॥ ४३ ॥ अखिलभवाय सर्वमङ्गलाय गृहीता शक्तिर्यस्य स मनुष्यपदवीमनुवर्तमानो नारायणः षोडशसहस्रवराङ्गनानां सव्रीडसौहृदनिरीक्षणो यो हासस्तेन जुष्ट एवं रेमे। व्रीडया व्रीडेन वा सहितो हासः। व्रीडा व्रीडश्चेति द्विरूपकोशः ॥ ४४ ॥ विश्वविलयोद्भववृत्तिहेतुः वृत्तिः स्थितिः। यान्यनन्यविषयाणि अन्ये विषयाः कर्तृतया येषां तानि न भवन्तीत्यनन्यविषयाणि। मनसाऽपीतरैः कर्तुमशक्यानि हरिश्चकार तानि। अङ्ग हे राजन्। यो गायति यश्च शृणोति अनुमोदते वा तस्यापवर्गमार्गे भगवति भक्तिर्भवेत्। अवश्यमेतच्छ्रवणादिकमतः कर्तव्यमिति ॥ ४५ ॥

इति श्रीभागवतटिप्पण्यां सत्यधर्मकृतायां दशम उत्तरार्धे एकोनाशीतितमोऽध्यायः ॥ १०-७९ ॥

### श्रीमद्वल्लभाचार्यकृता सुबोधिनी

ततस्तस्य दृष्टं दर्शनानन्तरमध्यवसायं च श्लोकद्वयेनाह इत्याचरन्तमिति। सतां त्रिविधानां सर्वविधान् धर्मान् गृहमेधिनां पावनान् पवित्रकरान्। एवं चेत्कश्चिदाचरति भगवानाचचारेति, तदा पवित्रो भवतीति। अतोऽनन्तमूर्ति तमेव सर्वगेहेषु सन्तं ददर्श। ततो यज्जातं तदाह कृष्णस्येति। अनन्तानि वीर्याणि यस्येति। लीलयैवं स्त्रीषु स्थितिः, न तु वस्तुतः। यतोऽयं सर्वशक्तिः। तत्रापि योगमायायाः महानुदयोऽयम्। न कदाप्येवं दृष्टः। अतो धर्मधर्मिणोरलौकिको भावो दृष्ट इति विस्मितः। पुनर्दर्शने जातकौतुकश्च जातः ॥ ४१-४२ ॥ ततः सादरदर्शनानन्तरमर्थकामधर्मेषु श्रद्धितात्मना भगवता सम्यक् सभाजितो ब्राह्मणबुद्ध्या ऋषिबुद्ध्या च यथेष्टं भोजनादिना सन्तुष्टः तमेव भगवन्तमनुस्मरन् ययौ न तु प्रमाणबलमाश्रित्य ॥४३॥ एवं नारददृष्टां भगवल्लीलामुपपाद्योपसंहरति एवं मनुष्यपदवीमिति। तद्धर्माणामनाचरणे तत्तदनुसर्पणं न भवतीति मनुष्यपदवीमनुवर्तमानः षोडशसहस्रवराङ्गनानां सव्रीडादिभिर्जुष्टो मेने। मनुष्यपदव्यामप्यागतः मूलरूप एवेति ज्ञापयितुमाह नारायण इति। तस्यैवंकरणे किं प्रयोजनमित्याशङ्क्याह अखिलभवाय गृहीतशक्तिरिति। सर्वेषामुद्भवार्थं सात्त्विक्यः शक्तयः सर्वाः संगृहीताः। तत्र मनुष्येषु धर्माप्रवृत्तौ सर्वेषामुद्भवो न भवतीति तथा करणम्। अङ्गेत्यप्रतारणाय सम्बोधनम्। अष्टमहिषीणां न विवाद इति नरकासुरपरिगृहीतानामेव षोडशसहस्रवराङ्गनानामिति वरशब्देन तत्तद्दास्यो व्यावर्तिताः। अन्या वा गोप्यः संगृहीताः। व्रीडापूर्वको योऽयं सौहृदनिरीक्षणविशेषः तत्पूर्वको हासः तेन जुष्ट इति। त्रिविधो भावो निरूपितः तामससात्त्विकादिभेदेन ॥ ४४ ॥ एवं रमणमुपसंहृत्य लौकिकीयं लीला धर्मार्थिभिर्न श्रोतव्येति शङ्कां वारयितुं फलश्रुतिमाह यानीति। सर्वविधकर्मकरणे भगवतो हेतुमाह। विश्वस्य विलयः। उद्भव उत्पत्तिः, वृत्तिः स्थितिः, तेषां हेतुः। अत एवानन्यविषयाणि कर्माणि चकार। नह्यन्यो जगदुत्पत्त्यादिहेतुर्भवति, लीलायां च नान्यं प्रवेशयति, किन्तु स्वयमेव तत्र तत्राविष्टः तथा करोति। अतो नान्या विषयः। विशेषलीलायाः प्रयोजनं हरिरिति। अतो य एतां लीलां गायति, स्वत एवानन्देन कीर्तयति वा, अन्यैर्गीयमानां शृणोति, असन्निहितः सन्निहितो वा, कालान्तरे कथावसाने वा, अनुमोदते, श्रोतृवक्तृकथाः, सः भक्तिं लभेत, भगवति पूर्णपुरुषे। भक्तेरन्यत्र विनियोगाभावायाह अपवर्गमार्ग इति। मोक्षे नान्यो मार्गोऽस्तीत्यर्थः ॥ ४५ ॥

इति श्रीभागवतसुबोधिन्यां श्रीमल्लक्ष्मणभट्टात्मजश्रीमद्वल्लभदीक्षितविरचितायां दशमस्कन्धविवरणे उत्तरार्धे विंशोऽध्यायः ॥ २० ॥

### श्रीसुबोधिनी-सारः

शुकोक्तिः। गृहमेधिनां गृहस्थानां पावनान् पावनहेतून् सद्धर्मान् इत्येवमाचरन्तं सर्वगेहेषु तमेकं सन्तं वर्तमानं नारदो ददर्श ह स्फुटम् ॥४१॥ अनंतबलस्य कृष्णस्य योगमायाया महोदयं महद्वैभवं मुहुरसकृत् दृष्ट्वा जातं कौतुकं यस्य स ऋषिर्नारदो

विस्मितोभूत् ॥ ४२ ॥ इत्येवं त्रिवर्गेषु श्रद्धित आत्मा मनो यस्य तेन कृष्णेन सम्यक् प्रशंसितः प्रीतो नारदस्तमेव हरिं स्मरन् जगाम ॥ ४३ ॥ एवं मनुष्यलीलामनुवर्त्तमानो नारायणोऽखिलानां सर्वेषां भवाय समृद्धये गृहीता शक्तिर्येन स षोडशसहस्रं वराः श्रेष्ठा अंगनाः स्त्रियस्तासां सव्रीडं सलज्जितं सौहृदं सप्रेमनिरीक्षणं हासश्च ताभ्यां जुष्टो रेमे हे अंग ॥ ४४ ॥ विश्वस्य विलयोद्भववृत्तीनां संहारोत्पत्तिपालनानां हेतुर्हरिरनन्यविषयाणि आत्मसाधारणानि यानि कर्माणि चकार तानि यो गायति शृणोति अनुमोदति हृष्यति वा हे अंग तस्यापवर्गमार्गे मोक्षप्रदे भगवति भक्तिर्भवेत् हि युक्तम् ॥ ४५ ॥

इति श्रीमद्भा० दशमस्कन्धे उ० सुबोधिन्यां टीकायामेकोनसप्ततितमोऽध्यायः ॥ ६९ ॥

## श्रीविट्ठलरायात्मजश्रीवल्लभकृतलेखः

**अग्रिमे । त्रिविधानामिति ।** धर्मार्थकामयुक्तानामित्यर्थः । **अग्रिमे । नतु वस्तुत इति ।** नारदबुद्धिमनुसृत्यैवमुक्तम् । **इत्यर्थकामेत्यत्र । एवकारस्यार्थमाहुः न तु प्रमाणबलमिति ।** प्रमेयमार्गं त्यक्तुमिच्छुर्भगवता समाहित इत्यर्थः । **आश्रितेति ।** किन्तु प्रमेयमार्गमेवाश्रित इत्यर्थः । **एवं मनुष्येत्यत्र । व्रीडापूर्वक इति ।** भावप्रधानमिदम् । व्रीडापूर्वकत्वं निरीक्षणे विशेष **इत्यर्थः ।**

इति विंशाध्यायव्याख्या समाप्ता ।

## गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

नारदेन कृष्णचरितदर्शनादिकमुपसंहरति—इतीति द्वयेन । इत्येवं गृहमेधिनां गृहसंबन्धिनां हिंसावतां गृहस्थानां पावनान् पावित्र्यकरान् सद्धर्मान् शास्त्रविहितकर्माणि आचरन्तं अनुतिष्ठन्तं तमेकं कृष्णमेव सर्वेषु गृहेषु सन्तं वर्तमानं ददर्श । भगवच्छक्तेराश्चर्यं सूचयति—हेति । हिंसाश्च गृहस्थानाम्—"कण्डणी पेषणी चुल्ली उदकुम्भो च मार्जनी । पञ्चसूना गृहस्थस्य निरयस्याभिसूचिका" इति स्मृत्युक्ताः तथा स्वतःप्रवृत्तिजन्याश्च विविधा ज्ञेयाः ॥ ४१ ॥ एवं जातकौतुकः सञ्जातदर्शनोत्साहः ऋषिर्नारदः अनन्तवीर्यस्यानन्तशक्तेः कृष्णस्य योगमायामहोदयं अचिन्त्यशक्तिप्रभावं मुहुः पुनः सर्वत्र गृहेषु दृष्ट्वा विस्मितः आश्चर्ययुक्तोऽभूदित्यन्वयः ॥ ४२ ॥ इत्येवं कृष्णेन सम्यक् सभाजितः सत्कृतः, अत एव प्रीतो नारदस्तमेव कृष्णमनुस्मरन् ययावित्यन्वयः । भगवतोपि मुनिसत्कारे हेतुमाह—अर्थेति । लोकप्रवृत्त्यर्थमर्थादिषु श्रद्धितः श्रद्धायुक्तः आत्मा चित्तं यस्य तेनेत्यर्थः ॥ ४३ ॥ एवं वर्णितां भगवतः पत्नीभिः सह रमणरूपां लीलामुपसंहरति—एवमिति । एतद्रहस्यश्रवणाधिकारित्वं सूचयन् संबोधयति—अङ्गेति । एवं षोडशसहस्रं या वराङ्गना उत्तमस्त्रियस्तासां सव्रीडं च तत् सौहृदं च तेन निरीक्षणं हासश्च ताभ्यां जुष्टः सेवितो नारायणो रेमे इत्यन्वयः । षोडशसहस्रेत्यष्टोत्तरशताधिक्यस्याप्युपलक्षणम् । ननु 'श्रीनारायणस्यैवं रमणं कथं संभवति ? पूर्णानन्दत्वात्' इत्यपेक्षायामाह—मनुष्याणां पदवीं रीतिमनुवर्तमान इति । एकस्य बह्वीभिः सह रमणे सामर्थ्यं तत्प्रयोजनं चाह—अखिलेति । अखिलानां प्राणिनां भवाय धर्मादिचतुर्विधपुरुषार्थलाभाय गृहीता नानाविधाः शक्तयो येन सः ॥४४॥ भगवल्लीलाकीर्तनादिफलमाह—यानीहेति । उक्ताभिप्रायेण पुनः संबोधयति—अङ्गेति । इह अस्मिन् श्रीकृष्णावतारे यानि कर्माणि हरिश्चकार तानि यस्तु मनुष्यो गायति अनधिकारिणं प्रति कीर्तयति स्वतो वा गायति, शृणोति वा, अनुमोदते श्रुत्वा प्रशंसति वा, तस्य भगवति भक्तिर्भवेदित्यन्वयः । 'तद्भक्तेः किं फलम्' इत्यपेक्षायां 'संसारदुःखनिवृत्तिपूर्वकतत्प्राप्तिलक्षणमोक्ष एव' इत्याशयेनाह—अपवर्गमार्गे मोक्षप्रापके इति । कर्मणां श्रवणादियोग्यत्वमाह—अनन्यविषयाणीति । अन्यैः कर्तुमशक्यानीत्यर्थः । 'श्रीकृष्णस्य किमपि नाशक्यम्, सङ्कल्पमात्रेणैव जगज्जन्मादिहेतुत्वात्' इत्याह—विश्वस्य विलयः प्रलयः, उद्भव उत्पत्तिः, वृत्तिः स्थितिः पालनम्, तद्धेतुरिति ॥ ४५ ॥

इति श्रीवल्लभाचार्य-वंश्यगोपालसूनुना । श्रीमन्मुकुन्दरायाणां पादसेवाधिकारिणा ॥ १ ॥
श्रीमद्गिरिधराख्येन भजनानन्दसिद्धये । रचिता दशमे तत्र सात्त्विकानां निरोधने ॥ २ ॥
नारददृष्टश्रीकृष्ण-चरितस्य निरूपका । नवषष्टितमोऽध्यायो ह्लादिनीं विवृतिं गतः ॥ ३ ॥

## अन्वितार्थप्रकाशिका

इतीति ॥ इत्येवं गृहमेधिनां पावनान् पावित्र्यकरान् सद्धर्मान् शास्त्रविहितकर्माणि आचरन्तम् अनुतिष्ठन्तं तमेकं कृष्णमेव सर्वेषु गेहेषु सन्तं वर्तमानं ददर्श ॥ ४१ ॥ कृष्णस्येति ॥ एवं जातकौतुकः सञ्जातदर्शनोत्साहः ऋषिर्नारदः अनन्तवीर्यस्यानन्तशक्तेः कृष्णस्य योगमायामहोदयं मुहुः पुनः सर्वत्र गृहेषु दृष्ट्वा विस्मितः आश्चर्ययुक्तोऽभूत् ॥ ४२ ॥ इतीति ॥ इत्येवं लोकप्रवृत्त्यर्थमर्थादिषु श्रद्धितः श्रद्धायुक्तः आत्मा चित्तं यस्य तेन कृष्णेन सम्यक् सभाजितः सत्कृतः अत एव प्रीतो नारदस्तमेव कृष्णमनुस्मरन् ययौ ॥ ४३ ॥ एवमिति ॥ अङ्ग हे राजन् ! एवं मनुष्याणां पदवी रीतिमनुवर्त्तमानः अखिलानां प्राणिनां भवाय

धर्मादिलाभाय गृहीता नानाविधाः शक्तयो मूर्त्तयो येन षोडशसहस्रं या वराङ्गना उत्तमस्त्रियस्तासां सव्रीडं च तत्सौहृदं च तेन निरीक्षणं हासश्च ताभ्यां जुष्टः सेवितो नारायणो रेमे ॥ ४४ ॥ यानीति ॥ अङ्ग हे राजन् ! इह अस्मिन् श्रीकृष्णावतारे विश्वस्य विलयः प्रलयः उद्भव उत्पत्तिः वृत्तिः स्थितिः पालनं तद्धेतुर्हरिः अनन्यविषयाणि अन्यैः कर्तुमशक्यानि यानि कर्माणि चकार तानि यस्तु मनुष्यो गायति शृणोति वा अनुमोदने श्रुत्वा प्रशंसति वा तस्य अपवर्गमार्गे मोक्षप्रापके भगवति भक्तिर्भवेत् ॥४५॥

इति श्रीभागवते महापुराणे दशमस्कन्धेऽन्वितार्थप्रकाशिकायामेकोनसप्ततितमोऽध्यायः ॥ ६९ ॥

## श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्

तमेकमेव श्रीकृष्णं सर्वगेहेषु पृथक्पृथक्तया संतं वर्त्तमानं ददर्श ॥ ४१-४२ ॥ श्रद्धितः श्रद्धां प्राप्तः आत्मा अंतःकरणं यस्य तेन सभाजितः सत्कृतः ॥ ४३ ॥ इत्थं नारदावलोकित वसुदेवनंदनलीलामाह एवमिति अखिलानां लोकानां भवाय वृद्धये गृहीताः शक्तयो नानाविधसामर्थ्यानि येन सः । व्रीडया सहितेन सौहृदेन निरीक्षणेन च हासेन च जुष्टः सेवितः ॥ ४४ ॥ वृत्तिःस्थितिः नास्ति अन्यस्य भगवदितरस्य विषयो निर्माणसामर्थ्यं येषां तानि अंग हे राजन् अनुमोदते प्रशंसति । अपवर्गो मार्गो यस्य तस्मिन् भगवति ॥ ४५ ॥

इति श्रीशुद्धैकांतधर्मप्रवर्त्तकगुरुराजेन्द्रश्रीसहजानंदस्वामिशिष्यगोपालानंदमुनिविरचिते निगूढार्थप्रकाशके श्रीमद्भागवतस्य दशमस्कंध-व्याख्याने नारदायस्ववैभवप्रदर्शनोनाम एकोनसप्ततितमोऽध्यायः ॥ ६९ ॥

## भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

कृष्णस्येति । हे राजन्, ऋषिर्नारदः, अनन्तवीर्यस्य अनन्तकल्याणगुणगणस्य, कृष्णस्य, योगमायामहोदयमाश्चर्य-शक्तेर्महान्तं वैभवं, मुहुः दृष्ट्वा, विस्मितः जातकौतुकश्च, अभूत् ॥ ४१ ॥ इतीति । अर्थकामधर्मेषु, इत्युक्तप्रकारेण, श्रद्धितात्मना संजातश्रद्धात्मना, कृष्णेन, सम्यक् सभाजितः पूजितः, अत एव प्रीतो नारदः, तं श्रीकृष्णं, अनुस्मरन् सन्नेव, ययौ ततः प्रयातः ॥ ४२ ॥ नारदाय श्रीकृष्णेन संदर्शितं योगमायोदयं निगमयति । एवमिति । स्वयं, नारायणः सन्, अखिलभवाय सकलजनाभ्युदयाय, गृहीतोपात्ता शक्तिर्दिव्यतनुर्येन सः; एवमुक्तप्रकारेण, मनुष्यपदवीं मनुष्यचेष्टां, अनुवर्त्तमानः, श्रीकृष्णः, अङ्ग हे राजन्, षोडशसहस्रवराङ्गनानां, सव्रीडं च तत् सौहृदं च तेन निरीक्षणं हासश्च ताभ्यां जुष्टः सेवितः सन्, रेमे ॥ ४३ ॥ अथ विविधभगवच्चेष्टितगानादिफलमाह । यानीति । विश्वस्य विलयः प्रलयः उद्भव उत्पत्तिः वृत्तिः स्थितिः तासां हेतुः, हरिः श्रीकृष्णः, इह भुवि, अनन्यविषयाण्यनन्यसाधारणानि, यानि चरित्राणि, चकार, अङ्ग हे राजन्, तानि यस्तु, शृणोति, गायति, अनुमोदते, वा, तस्य अपवर्गमार्गे मोक्षप्रापके, भगवति, भक्तिः भवेत् हि ॥ ४४ ॥

इति श्रीधर्मधुरंधरश्रीधर्मात्मजप्रत्यक्षपुरुषोत्तमश्रीसहजानन्दस्वामिसुतश्रीरघुवीराचार्यसूनुभगवत्प्रसादाचार्यविरचितायामन्व-यार्थविबोधिन्यां भक्तमनोरञ्जन्याख्यायां श्रीमद्भागवतटीकायां दशमस्कन्धोत्तरार्धे एकोनसप्ततितमोऽध्यायः ॥ ६९ ॥

## कृष्णप्रिया

श्रीशुकदेवजी कहते हैं—इस प्रकार भगवान् श्रीकृष्ण गृहस्थों को पवित्र करनेवाले श्रेष्ठ धर्मों का आचरण कर रहे थे। यद्यपि वे एक ही हैं, फिर भी देवर्षि नारदजी ने उनको उनकी प्रत्येक पत्नी के महल में अलग-अलग देखा ॥४१॥ भगवान् श्रीकृष्ण की शक्ति अनन्त है। उनकी योगमाया का परम ऐश्वर्य बार-बार देखकर देवर्षि नारद के विस्मय और कौतूहल की सीमा न रही ॥ ४२ ॥ द्वारका में भगवान् श्रीकृष्ण गृहस्थ की भाँति ऐसा आचरण करते थे, मानों धर्म, अर्थ और कामरूप पुरुषार्थों में उनकी बड़ी श्रद्धा हो। उन्होंने देवर्षि नारद का बहुत सम्मान किया। वे अत्यन्त प्रसन्न होकर भगवान् का स्मरण करते हुए वहाँ से चले गये ॥४३॥ राजन् ! भगवान् नारायण सारे जगत् के कल्याण के लिये अपनी अचिन्त्य महाशक्ति योगमाया को स्वीकार करते हैं और इस प्रकार मनुष्यों की-सी लीला करते हैं। द्वारकापुरी में सोलह हजार से भी अधिक पत्नियाँ अपनी सलज्ज एवं प्रेमभरी चितवन तथा मन्द-मन्द मुसकान से उनकी सेवा करती थीं और वे उनके साथ विहार करते थे ॥ ४४ ॥ भगवान् श्रीकृष्ण ने जो लीलाएँ की हैं, उन्हें दूसरा कोई नहीं कर सकता। परीक्षित् ! वे विश्व की उत्पत्ति, स्थिति और प्रलय के परम कारण हैं। जो उनकी लीलाओं का गान, श्रवण और गान-श्रवण करनेवालों का अनुमोदन करता है, उसे मोक्ष के मार्गस्वरूप भगवान् श्रीकृष्ण के चरणों में परम प्रेममयी भक्ति प्राप्त हो जाती है ॥ ४५ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां दशमस्कन्धे उत्तरार्धे कृष्णगार्हस्थ्यदर्शनं नामैकोनसप्ततितमोऽध्यायः ॥ ६९ ॥

# [1]अथ सप्ततितमोऽध्यायः

| श्लोकाः | अनु. | मि. उ. | वं. | इ. वं. | ब. | उ. | श्लो. अ. | उ. अ. | अ. अ. | सं. श्लो. अ. | सं. श्लो. | अक्ष. |
|---|---|---|---|---|---|---|---|---|---|---|---|---|
| ४७ | ३५ | ४ | १ | १ | ६ | ६ | १७४३ | ३७ | ४२ | १८२२ | ५६॥। | ६ |

**श्रीशुक[2] उवाच**

**अथोपस्युपवृत्तायां कुक्कुटान् कूजतोऽशपन् । गृहीतकण्ठ्यः पतिभिर्माधव्यो विरहातुराः ॥ १ ॥**
**वयांस्यरूरुवन् कृष्णं बोधयन्तीव वन्दिनः । गायत्स्वलिष्वनिद्राणि[3] मन्दारवनवायुभिः ॥ २ ॥**
**मुहूर्तं तं तु वैदर्भी नामृष्यदतिशोभनम् । परिरम्भणविश्लेषात् प्रियबाह्वन्तरं गता ॥ ३ ॥**
**ब्राह्मे मुहूर्त उत्थाय वार्युपस्पृश्य माधवः । दध्यौ प्रसन्नकरण आत्मानं तमसः परम् ॥ ४ ॥**

### कर्दमक्षमा

अन्वयः—श्रीशुक उवाच—अथ, उषसि, उपवृत्तायाम्, पतिभिः, गृहीतकण्ठ्यः, विरहातुराः, माधव्यः, कूजतः, कुक्कुटान्, अशपन् ॥ १ ॥ मन्दार, वायुभिः, अलिषु, गायत्सु; अनिद्राणि, वयांसि, वन्दिनः, इव, बोधयन्ति, अरुरुवन् ॥ २ ॥ परिरम्भणविश्लेषात्, प्रियबाह्वन्तरं, गता, वैदर्भी, अतिशोभनम्, तम्, तु मुहूर्तम्, न, अमृष्यत् ॥ ३ ॥ प्रसन्नकरणः, माधवः, ब्राह्मे, मुहूर्ते, उत्थाय, वारि, उपस्पृश्य, तमसः, परम्, आत्मानम्, दध्यौ ॥ ४ ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

ततस्तु सप्ततितमे कृष्णस्याह्निककर्मणि । दूतनारदयोः कार्ये कार्यमंत्रविचारणम् ॥ १ ॥
जगन्मंगलचारित्रमाह्निकं जगदीशितुः । नारदेन क्वचित्किंचिद्दृष्टमाह यथाक्रमम् ॥ २ ॥

अथेति । "इत्यर्थकामधर्मेषु कृष्णेन श्रद्धितात्मना" इति प्रस्तुतस्य श्रीकृष्णस्याह्निकस्याधिकारेऽथशब्दः । उपवृत्तायामासन्नायाम् । पतिभिः श्रीकृष्णैः । माधव्यो माधवस्य भार्याः ॥ १ ॥ बंदिन इव श्रीकृष्णं बोधयंति संति वयांसि पक्षिणोऽरूरुवन्नतिशयेनाकूजन् । मंदारवनवायुभिर्गायत्स्वलिष्वनिद्राणि निद्रारहितानि वयांसि ॥ २ ॥ वैदर्भीत्युपलक्षणम् । परिरंभणविश्लेषात्तं पर्यालोच्य ॥ ३–४ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

ततो नारदगमनोत्तरम् । दूतकार्यं जरासन्धबद्धनृपमोक्षणरूपम्, नारदकार्यं युधिष्ठिरयज्ञे कृष्णप्रेषणरूपमेवमुभयोः कार्ये प्राप्ते कार्यमंत्रविचारणं कर्तव्यमंत्रविमर्शनम् ( १ ) । अह्नि कर्तव्यमाह्निकम् ( २ ) । आसन्नायां व्यतीतप्रायायाम् । माधव्यो रुक्मिण्याद्याः । पतिभिरिति बहुत्वं प्रकाशबाहुल्यात् । अशपन्—रेरे कुक्कुटाः प्रियविच्छेदकप्रातर्बोधका यूयं शीघ्रमेव म्रियध्वमिति शापं ददुः ॥ १–२ ॥ मुहूर्तं मुहूर्तोपलक्षितं कालम् । तं परिरंभणविश्लेषम् । आलोच्य विमृश्य "ल्यब्लोप–" इति पंचमी । बाह्वन्तरं वक्षःस्थलम् ॥ ३ ॥ ब्राह्मे मुहूर्ते चतुर्घटिकावशिष्टरात्रौ "अरुणोदयकालो हि मुहूर्तो ब्राह्म उच्यते । रात्रेः पश्चिमयामोऽपि मुहूर्तो ब्राह्म उच्यते ॥ ब्राह्मे मुहूर्ते या निद्रा सा पुण्यक्षयकारिणी । तां कुर्वाणो द्विजो मोहात्पादकृच्छ्रेण शुद्ध्यति ॥" इत्याद्युक्तेः ॥ ४ ॥

### श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी

श्रीनारददृष्टसदाचारप्रसङ्गात् श्रीभगवत आह्निकमाह—अथेत्यादिना कथा इत्यन्तेन । गृहीतकण्ठ्य इति पतिभिरङ्के शायितानामुपधानतया कल्पितेन श्रीवामभुजेन । कण्ठग्रहणात् इति महासौख्यमुक्तम् अत एव विरहेण प्रातर्भाविनाप्यातुराः विकलाः सत्यः कुक्कुटान् क्रीडाकुक्कुटविशेषान् अशपन् म्रियन्तामिति मूकीभवन्त्विति वा चुक्रुशुः तत्कूजनेन प्रातर्ज्ञानात् स्नानाद्यर्थं स्वपरित्यागेन पत्युरुत्थानोपपत्तेः पतिभिरिति बहुत्वं प्रकाशभेदात् ॥ १ ॥ वन्दिन इवेति तेऽपि प्रबोधयन्तो बहुधोच्चैरस्तुवन्नित्यर्थः । ननु, तान्येव कथमादौ प्रबुद्धानि तत्राह—गायत्स्विति । प्रातः स्वभावेनादौ शीतवातः ततो महावृक्षाणां

---

१. अथ अष्टसप्ततितमोऽध्यायः–विज. । २. बादरायणि–प्रा. पा. । ३. ष्वनिद्रेषु–वीर. ; ष्वदभ्रेषु–विज. ।

प्रचलनं तद्वः पुष्पादिस्थितानामलीनां गानं तेनानिद्राणि गतनिद्राणीत्यर्थः। एवं सङ्क्षेपेण प्रातर्वर्णनम् ॥ २ ॥ विश्लेषो विघ्नः ॥ ३ ॥ ब्राह्म इति युग्मकम् "रात्रेश्चतुर्दशो भागो मुहूर्त्तो ब्राह्म उच्यते" लोकशिक्षापणार्थमेव नरलीलाकौतुकार्थञ्च दध्यावित्यादिकं तत्तदर्थानुकरणलीलाख्यानं तथैव प्रसन्नकरणः प्राणायामादिना स्थिरचित्तः सन्नित्यर्थः। तमसः प्रकृतेः परं परमेश्वररूपमात्मानं दध्यौ ॥ ४ ॥

**श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी**

श्रीनारददृष्टसदाचारप्रसंगाच्छ्रीभगवत आह्निकमाह—अथेत्यादिना ( २१ श-श्लो० ) 'कथाः' इत्यन्तेन। गृहीतकण्ठ्य इति पतिभिरंके शायितानामुपधानतया कल्पितेन श्रीवामभुजेन कण्ठग्रहणादिति महासौख्यमुक्तम्। अतएव विरहेण प्रातर्भाविनाप्यातुरा विकलाः सत्योऽशपन् जगर्हिरे। कुक्कुटान् क्रीडाकुक्कुटविशेषान्, तत्कूजनेन प्रातर्ज्ञानात्, स्नानाद्यर्थं स्वपरित्यागेन प्रत्युत्थानोपपत्तेः; पतिभिरिति बहुत्वं प्रतिगृहं शक्तिविशेषेण पृथक् पृथगवस्थित्या नानात्वस्यैव प्राप्तेः ॥ १ ॥ कृष्णं रात्रिक्रीडानन्दपूर्णम्, किंवा रतिवैदग्ध्यादिना सर्व्वांगोदित-रतिचिह्नैर्वा चित्ताकर्षकम्, अतो रतिश्रान्त्या रात्रिशेषे शयानमिति भावः। अतएव बोधयन्ति, जागरयन्ति सन्ति, वन्दिन इवेति तेऽपि प्रबोधयन्तो बहुधोच्चैरस्तुवन्नित्यर्थः। किंवा तत्स्तुतिवत् कूजनस्य वैचित्र्यादिकं सूचयति। ननु तान्येव कथमादौ प्रबुद्धानि ? तत्राह—गायत्स्विति। प्रातःकाल-स्वभावेनादौ शीतवातः, ततो महावृद्धाणां प्रचलनेन तत्पुष्पादिस्थितानामलीनां गानम्, तेनानिद्राणि गतनिद्राणीत्यर्थः। एवं संक्षेपेण प्रातर्वर्णनम् ॥ २ ॥ प्रियस्य बाह्वोरन्तरं मध्यं श्रीवक्षःस्थलं गता आलिग्यांके शयनेन प्राप्ता सती शोभनमपि नामृष्यत् नासहत, दुष्टमन्यतेत्यर्थः। कुतः ? परिरम्भणस्य विश्लेषाद्विघ्नात् ॥ ३ ॥ ब्राह्मे श्रीब्रह्मदैवत्ये रात्रेरन्ते, सन्ध्यातः पूर्व्वस्मिन्; तल्लक्षणञ्चोक्तम्—'रात्रेश्चतुर्दशो भागो मुहूर्त्तो ब्राह्म उच्यते'; माधवः सद्धर्म्मे प्रवर्त्तनाद्यर्थं मधुकुलेऽवतीर्ण इति सदाचारपरतोक्ता। स्वतएव प्रसन्नानि करणानि सर्व्वेन्द्रियाणि यस्य सः; यद्वा, लोकशिक्षार्थं प्राणायामादिना स्थिरचित्तः सन्नित्यर्थः। तमसः प्रकृतेः परं परमेश्वरं तद्रूपेण दध्यावित्यर्थः ॥ ४ ॥

**श्रीमद्वीरराघवाचार्यकृता भागवतचन्द्रचन्द्रिका**

अथ भगवतो दिनचर्यात्मकं चेष्टितमनुवर्णयन् मागधनिरुद्धराजसन्देशहर्तृसन्निवेदितवृत्तान्तयुधिष्ठिराभिप्रायाभिज्ञ—नारदनिवेदिततद्वृत्तान्तान्यतरनिश्चिचीषाप्रयुक्तमुद्धवोद्देशात्मकं भगवत्प्रश्नमाह—अथेत्यादिना। अथ ननु हे राजन् ! यद्वात्राथशब्दो भगवद्दिनचर्याप्रस्तावद्योतकः अथ भगवद्दिनचर्याप्रारभ्यत इत्यर्थः। उषसि प्रभातवेलायामुपवृत्तायामासन्नायां सत्यां पतिभिः कृष्णैर्गृहीताः कण्ठाः यासां ताः माधव्यः श्रीकृष्णस्य स्त्रियः विरहेण भाविना आतुराः कूजतः शब्दायमानान् कुक्कुटानशपन् ॥ १ ॥ वयांसीति। वन्दिन इव कृष्णं बोधयन्ति सन्ति वयांसि पक्षिणो मन्दारवनवायुभिरनिद्रेष्वलिषु गायत्सु सत्सु अरूरुवन् पुनः पुनरकूजन् ॥ २ ॥ मुहूर्त्तमिति। प्रियस्य बाह्वोरन्तरं गता वैदर्भीत्यन्यासामप्युपलक्षणं परिरम्भविश्लेषाद्धेतोस्तं मुहूर्त्तमतिशोभनमपि नामृष्यन्न सेहे असमीचीनममन्यतेत्यर्थः ॥ ३ ॥ ब्राह्म इति। वारि शुद्धं जलमुपस्पृश्य आचम्य प्रसन्नानि करणानि इन्द्रियाणि यस्य सः तमसः प्रकृतेः परं विलक्षणमात्मानं दध्यौ ध्यातवान् स्वात्मावलोकनपरो बभूवेत्यर्थः ॥ ४ ॥

**श्रीविजयध्वजतीर्थकृता पदरत्नावली**

राज्ञां दैनन्दिननित्यनियमप्रकारं कथयत्यस्मिन्नध्याये तत्रादौ माधवीनां ग्राम्यधर्मलौल्यातिशयं कथयति—अथेत्यादिना ॥ १ ॥ वयांसि कोकिलादीनि वन्दिनः कृष्णं बोधयन्तीवोपतस्थुः नित्योद्बुद्धत्वादिवेति। मन्दारवनवायुभिः पारिजातवनवायुभिः सह ॥ २ ॥ तं मुहूर्तोपलक्षितकालं प्रियस्य कृष्णस्य बाह्वन्तरं वक्षःस्थलम् ॥ ३ ॥ नित्यप्रसन्नान्तःकरणः आत्मानं स्वमेव ॥ ४ ॥

**श्रीमज्जीवगोस्वामीकृतः क्रमसन्दर्भः**

साधारणलोकशिक्षार्थमेव दध्यावित्यादिकं तदर्थानुकरणलीलाख्यानं नृलोके क्रीडापरमित्यर्थः ॥ ४-४० ॥

**श्रीमज्जीवगोस्वामिकृतः बृहत्क्रमसन्दर्भः**

दध्यौ प्रसन्नकरण इत्यादि। प्रसन्नानि प्रसादयुक्तानि करणानि कार्याणि लीला यस्य, आत्मानं स्वयमेव स्वं दध्यौ ॥ ४ ॥

**श्रीनाथचक्रवर्तिविरचिता चैतन्यमतमञ्जूषा**

दध्यौ प्रसन्नकरणः प्रसन्नानि करणानि कार्याणि यस्य ॥ ४ ॥

### श्रीमद्विश्वनाथचक्रवर्तीकृता सारार्थदर्शिनी

अध्याये सप्ततितमे प्रातःकृत्यकथा हरेः। सुधर्मायां दूतनारदयोः कार्य्यविचारणा॥

इत्यर्थधर्म्मकामेषु कृष्णेन श्रद्धितात्मनेत्युक्तमतो ब्राह्ममुहूर्त्तमारभ्य कीदृशं धर्माचरणमित्यपेक्षायामाह—अथेति। उप आधिक्येन वृत्तायां जातायां सत्यां पतिभिरिति प्रकाशबाहुल्याद्बहुत्वं माधव्यो रुक्मिण्याद्याः अशपन्। रे रे कुक्कुटाः प्रियविच्छेदकप्रातःसमयप्रादुर्भावकाः! यूयं शीघ्रमेव म्रियद्ध्वमिति शापं ददुः॥ १॥ मन्दारवनवायुभिः सुगन्धैः प्रबुद्ध्य गायत्सु सत्सु अलिषु तद्गानशब्देन अनिद्राणि वयांसि पक्षिणः कीदृशानि वन्दिन इव कृष्णं बोधयन्ति॥ २॥ परिरम्भणस्य विश्लेषात् विश्लेषहेतुत्वात् तं ब्राह्मं मुहूर्तं शोभनमपि न अमृष्यत् अशोभनमेव मेने इत्यर्थः। वैदर्भीत्युपलक्षणं सर्व्वा एव॥३॥ आत्मानं स्वं दध्यौ। यथान्यजनो ब्राह्ममुहूर्त्ते तं ध्यायति तथैव सोऽपि स्वमेव दध्यौ तमसः प्रकृतेः परम्। एकमितीश्वरस्यैकस्यैवौचित्याद्। अतः स्वयंज्जोति स्वयमेव प्रकाशमानं ननु सङ्कर्षणादयोऽपीश्वराः श्रूयन्ते, तत्राह—अनन्यं न कोऽप्यवतारोऽन्यो यस्मात्तं किञ्च सङ्कर्षणादिषु स्वांशावतारेषु पृथङ्नित्यं वर्त्तमानेष्वप्यव्ययं परिपूर्णमित्यर्थः। प्रादुर्भावे तु कृपैव कारणमित्याह—स्वसंस्थया स्वस्य सम्यक् सर्वजनदृश्यतया स्थित्या निवृत्तं कल्मषमविद्या यस्मात् किञ्च ब्रह्मण आख्या सम्यक् ख्याति प्रकाशो यस्मात् तं यदुक्तमष्टमे "मदीयं महिमानञ्च परं ब्रह्मेति शब्दितं वेत्स्यस्यनुगृहीतं मे" इत्यादि "ब्रह्मणो हि प्रतिष्ठाहम्" इत्यादि च यद्वा "ब्रह्माख्यं ब्रह्मनामकं "ब्रह्मेति परमात्मेति भगवानिति शब्द्यते" इत्युक्तेः सर्व्वश्रैष्ठ्यमाह अस्य विश्वस्य उद्भवः उद्रिक्तो भवः संसारस्तस्य नाशहेतुभिः स्वशक्तिभिर्ज्ञानप्रदत्वभक्तिप्रदत्वादिभिर्लक्षिता सर्वत्रानुभूता भावानां मर्त्यादीनां निर्वृतिः यस्मात्तं तत्र भक्तानां तद्दत्तप्रेमातिशयेन शिष्टानां तत्पृत्यसुष्ठु पालनेन दुष्टानां तद्वधानन्तरमुक्तिप्राप्त्या निर्वृतिः॥ ४-५॥

### गूढार्थदीपिनी

कृष्णस्य सप्ततितमे कृत्यमाह्निकमादितः। देवर्षिदूतसन्देशे किं कार्यं चेति मन्त्र्यते॥ १॥

उषसि प्रभातवेलायाम् उपवृत्तायामासन्नायां सत्याम् माधव्यः कृष्णपत्न्यः रुक्मिण्याद्याः कूजतः प्लुतध्वनिं कुर्वतः कुक्कुटान् अशपन् शापं ददुः। रे रे कुक्कुटाः प्रियविच्छेदप्रातर्बोधका यूयं शीघ्रमेव किं न म्रियध्वम्॥ १॥ वन्दिन इव कृष्णं बोधयन्ति वयांसि पक्षिणः अरूरुवन् अतिशयेन अकूकुजन्। कथंभूतानि। मन्दारवन वायुभिः अलिषु भ्रमरेषु गायत्सु सत्सु अनिद्राणि निद्रारहितानि॥ २॥ प्रियस्य बाह्वन्तरं वक्षःस्थलं गता वैदर्भी परिरम्भणमालिङ्गनं तस्य वियोगात् हेतोः तं पर्यालोच्य नामृष्यत न सेहे॥ ३॥ उपस्पृश्य आचम्य। तमसः प्रकृतेः परम् आत्मानं स्वरूपभूतं ब्रह्म दध्यौ। प्रसन्नकरणः स्वस्थचित्तः सन्। एतच्च लोकशिक्षार्थं लोका अपि एवं कुर्युरिति॥ ४॥

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः

श्रीकृष्णाह्निकं दूतवर्णिते जरासन्धनिरुद्धराजकार्ये श्रीनारदवर्णिते युधिष्ठिरकार्ये च कर्तव्ये प्रथमं किङ्कर्तव्यमिति उद्धवं प्रति भगवत्प्रश्नश्चानुवर्णयति। सप्ततितमेनाध्यायेन, क्वापि धर्मं सेवमानमिति श्रीनारदेन दृष्टं लोकसङ्ग्रहार्थं भगवता कृतमाह्निकं तदधिकारीन् ग्राहयितुं विस्तरेण वर्णयति, अथेति। उषसि प्रातर्वेलायाम् उपवृत्तायामासन्नायां पतिभिः। श्रीकृष्णैः माधव्यो माधवभार्य्या विरहातुराः कृत्यकालसूचनेन पतिविरहे हेतवो यूयमाशु म्रियध्वमित्यशपन् शापं ददुः॥ १॥ मन्दारवनवायुभिः हर्षं प्राप्य गायत्सु अलिषु तद्गानेन अनिद्राणि वयांसि पक्षिणः वन्दिन इव कृष्णं बोधयन्ति सन्ति अरूरुवन् अतिशयेनाकूजन्॥ २॥ वैदर्भी रुक्मिणी सर्वैश्वर्याधिष्ठात्री अपि परिरम्भणविश्लेषाद्धेतोः शोभनमपि तं मुहूर्तं नामृष्यत् न सेहे तुशब्दादन्या न सेहिरे इति किमु वक्तव्यम्॥ ३॥ उपस्पृश्याचम्य आत्मानं दध्यौ ध्यातवान् प्रकृतिवैलक्षण्यं भगवतो दर्शयति—तमसः परं प्रकृतिविलक्षणम्॥ ४॥

### श्रीसत्यधर्मकृता भागवतटिप्पणी

॥ हरिः ॐ॥ दैनन्दिनी जनमनुकुर्वतो जनार्दनस्य चर्यां कथयत्यस्मिन्नध्याये। तत्रादौ भगवदङ्गालिङ्गनविरहकातराणां तरुणीनामितरासां ग्राम्यधर्माणां रुक्मिण्या उपलक्षणया सत्यायाश्च नटनं च कथयति। अथेति। उषसि प्रातःसन्ध्यायाम्। सकारान्तःस्त्रीलिङ्गोऽयं सन्ध्यावाची दस्रभार्यावाचिशब्दवज्ज्ञेयः। तमश्विनावूचतुरुषसं स्तुहीति स उषसं तुष्टावेति ब्राह्मणम्। सूर्यो देवीमुषसं रोचमानमित्यादेः। उषः प्रत्युषसी क्लीबं पितृप्रस्वां च योषितीत्यमरभानुः। उपवृत्तायां सन्निहितायां कूजन्तः कुक्कुटास्ताम्रचूडान्पतिभिः। कृष्णगृहीताकारविशेषैरिति पतिभिः। गृहीताः कण्ठा न्यासान्ता यैः स्वयं गृहीतकण्ठ्यः। पेषणार्थमन्यगूढोतकण्ठ्य इवापद्गुता ईत्यन्यान्तरङ्गिको भावः। माधव्यो माधवयोषितो विरहातुरा अशपन् आचुक्रुशुः। न

पतयोऽन्येऽन्याश्च यादवयोषित इति सरसम्। प्रक्रमातिक्रमात् ॥ १ ॥ अदभ्रेषु मन्दारवनवायुभिः पारिजातवनानिलैः सहालिषु गायत्सु वयांसीतरे पक्षिणो बन्दिनः स्तुतिपाठकः बोधयन्तीवारुरुवन् अशब्दयन् ॥२॥ शोभनं सत्क्रियोपयोगित्वान्मङ्गलरूपमपि तं मुहूर्तं मङ्गलदेवी वैदर्भी नामृष्यन्न सेहे। कीदृशी प्रियस्य बाह्वोरन्तरम्। अथाप्लुतोऽम्भस्यमल इति वक्ष्यमाणत्वात्। तमसः परमिति नाज्ञानहान्येयेदं ज्ञानम्। तथाऽऽत्मानमिति न स्वभिन्नं किन्तु स्वमेवेति भावमावेदयति। प्रसन्नानि करणानीन्द्रियाणि यस्य स दध्यौ। तमश्चाज्ञानं तन्मूलभूतप्रकृतिरिति वा ॥ ४ ॥

## श्रीमद्वल्लभाचार्य्यकृता सुबोधिनी

सात्त्विकानां निरोधे तु प्रमेयबलतः पुरा। षड्भिः सर्वे निरुद्धास्ते साधनेनोच्यतेऽधुना ॥ १ ॥
षड्भिरेव तथाध्यायैर्धर्मोऽत्र भगवत्कृतः। कारितश्च द्विरूपो हि वर्ण्यतेऽन्यनिषेधने ॥ २ ॥
तत्रैकविंशे त्वध्याये धर्मो हि भगवत्कृतः। निरूप्यते यतो लोका जाता हरिपराः स्वतः ॥ ३ ॥
सर्वान् धर्मान् विशेषेण तत्तद्भेदेन चैव हि। पूर्वाध्याये निरूप्यैव ह्याह्निकं ह्यत्र रूप्यते ॥ ४ ॥
तेनैव शुद्धचित्तास्ते राजानः सात्त्विकास्तथा। प्रपन्नाः सर्वथा कृष्णे प्रयोजनमिदं मतम् ॥ ५ ॥
अन्यथा ह्याह्निको धर्मो निष्प्रयोजनतां व्रजेत्। सभायां गमनं चैव रक्षां सूचयति ह्यतः ॥ ६ ॥

एवं पूर्वाध्यायैः भगवता प्रमेयबलमाश्रित्य सर्वे आत्मसात् कृताः, इदानीं धर्मादिसाधनैर्भगवानात्मसात्करोति, तत्र प्रथमं भगवत आह्निको नित्यो धर्मो निरूप्यते, ततो धर्मपरस्य यत्कृत्यम्, तत्कालनिमित्तकमेवेति अरुणोदयावधि पूर्वाह्णकृत्यं सर्वं निरूपयति अथेति। अवान्तरप्रकरणभेदप्रतिपादकोऽयमथशब्दः। उषस्यरुणोदये। उपवृत्तायामारब्धप्राये। चतस्रो घटिकाः प्रातररुणोदय उच्यत इति धर्मार्थकामानां आवृत्तिर्भगवता क्रियत इति ज्ञापयितुं कामपराणां स्त्रीणां धर्मासहिष्णुत्वमाह कुक्कुटान् कूजतोऽशपन्निति। तत्र हेतुः। पतिभिः कृष्णैर्गृहीतकण्ठ्यः। ननु गार्हस्थ्ये भोजनवत् भोगस्यापि नियतत्वात् प्रातःकालसूचककुक्कुटशापः कथमिति चेत्। तत्राह विरहातुरा इति। तत्र हेतुः माधव्य इति। माधवस्य स्त्रियः। मायाधव इति स्वविश्लेषमात्रेणैव लक्ष्म्याः सम्बन्धसम्भवात्, अतो विरहः सम्भावित इति, प्राप्तफलानां साधने द्वेषो युक्त इति, भगवत्कृतधर्मस्य च सात्त्विकनिरोधपरत्वात्सम्बद्धानामिच्छामात्रेणैव निरोधः सिद्ध इति कुक्कुटशापो युक्तः ॥ १ ॥ ननु कुक्कुटादयो वा किमिति भगवदनभिप्रेतं कुर्वन्तीत्याशङ्कायामाह वयांस्यरूरुवन्निति। वयसामपि पक्षिणां भगवल्लावण्यामृतप्राप्तिरभीष्टेति स्वार्थमेते बोधयन्ति। तथा सत्यपराधो भवेदिति शङ्कां वारयितुं दृष्टान्तमाह बन्दिन इवेति। तेन प्रबोधने अधिकृता अपि पक्षिण इति सूचितम्। ननु बहिरङ्गा एते भगवदभिप्रायमज्ञात्वा कथं नित्यं बोधयन्तीत्याशङ्कायामाह गायत्स्वलिष्विति। ये ह्यातरङ्गाः अलयः भगवदभिप्रेतं ज्ञात्वैव गायन्ति। न च स्वभावादेव वयांस्यरूरुवन्नित्याशङ्कनीयम्। यतः अनिद्राणि। तत्रापि निद्राभावः सहेतुक इत्याह मन्दारवनवायुभिरिति। आमोदेनाकृष्टचित्तानि देवताधिष्ठानाच्च साक्षाद्भोगेऽप्यशक्तानि। अत आकाङ्क्षाया विद्यमानत्वात् अनिद्राण्येव ॥ २ ॥ एतत्सर्वस्त्रीणां न भविष्यतीत्याशङ्क्य मुख्याया रुक्मिण्या अप्येतदित्याह मुहूर्तमिति। तं प्रसिद्धं ब्रह्मसम्बन्धिनम्। तुशब्देनान्यथापक्षं व्यावर्तयति। ननु लक्ष्म्या अवतारः कथमेवमवददित्याह वैदर्भीति। दर्भाभावेन कर्मराहित्यमुक्तम्। अतिशोभनमपि सर्वोद्बोधकत्वात्सर्वपुरुषार्थसाधकत्वाच्च। तथापि नामृष्यत्। तत्र हेतुः फलानुभव इत्याह प्रियबाह्वन्तरं गतेति। तादृश्याः परिरम्भणविश्लेषः अनङ्गीकारे हेतुः ॥ ३ ॥ एवं सर्वासामनभिप्रेतत्वे तद्वश्यश्चेद्भगवानपि नोत्तिष्ठेदिति तन्निराकरणार्थं भगवत उत्थानपूर्विकाः सर्वाः क्रिया निरूपयति ब्राह्मे मुहूर्ते इति। उत्थानं निद्रापगमलीला शय्यातो वा। ततो वार्युपस्पर्शनम्। हस्तादिप्रक्षालनमात्रमिति केचित्। स्नानमित्यपरे। आचमनमात्रमिति सिद्धान्तः। ध्यानस्यापि शुद्ध्यर्थमेव क्रियमाणत्वात्। अन्तःशुद्धिलीलां कृत्वैव बहिःशुद्धिलीला कर्तव्येति, यथाद्यस्नानेन शौचम्, स्नानान्तरेण च धर्मः, तथा ध्यानेऽपि ज्ञातव्यम्। ननु पूर्णो भगवान् बोभूयमानस्वरूपः परमानन्द एव, अन्तःकरणाद्यभावात् कथं प्रणिधानं कृतवानित्याशङ्क्याह माधव इति। लक्ष्मीं शक्तिं स्वीकरोतीति। मधुवंशे चावतीर्ण इति। यथैषा लीला, तथा ध्यानमपीत्यर्थः। प्रसन्नानि करणानि इन्द्रियाणि यस्येति शुद्धसत्त्वस्य सर्वत्राविर्भावः सूचितः। तत आत्मानमेव दध्यौ। 'अथ योऽन्यां देवतामुपास्त' इति आत्मातिरिक्तदेवतायाः ध्याननिषेधात्। नन्वात्मनः प्रत्यक्षस्य स्फीतालोकवर्तिघटवत् प्रकाशमानस्य किं ध्यानेनेत्याशङ्क्याह तमसः परमिति। कालस्याप्यग्रे तमस्तिष्ठति, तस्याग्रे भगवान्। स एव तमोगुण इति केचित्। सत्त्वगुणो बहिरावरणमिव ॥ ४ ॥

## श्रीसुबोधिनी-सारः

शुकोक्तिः। अथाह्निककर्मोच्यते उषसि वेलायामुपवृत्तायां प्राप्तौ सत्यां कूजतः शब्दं कुर्वतः कुक्कुटान् पतिभिर्नाना-कृष्णैर्गृहीतकण्ठ्यो माधव्यो रुक्मिण्याद्या विरहेण वियोगेनातुराः पीडिता अशपन् शापमदुः ॥ १ ॥ वंदिन इव कृष्णं बोधयंति वयांसि पक्षिणो रूरुवन् ध्वनिमकृत कल्पवृक्षवनपवनैरलिषु भ्रमरेषु गायत्सु गायमानेषु सत्सु न निद्रा येषां तानि ॥ २ ॥

अतिशोभनं प्रशस्तमपि तं मुहूर्तं ब्राह्मं वैदर्भी रुक्मिणी नासहत् । तत्र हेतुः । परिरंभणात्परिष्वंगाद्विश्लेषो वियोगस्तस्मात् प्रियस्य पत्युर्बाह्वोरंतरं गता प्राप्ता सती ।। ३ ।। ब्राह्मे मुहूर्ते उत्थाय इत्यनेन तत्समये निद्राया दोषकारित्वमुक्तम् वारिजलमुपस्पृश्याचम्य प्रसन्नकरणः स्वस्थचित्तो माधवस्तमसः परमात्मानं दध्यौ ।। ४ ।।

## श्रीविट्ठलरायात्मजश्रीवल्लभकृतलेखः

**एकविंशेऽध्याये । अथोषसीत्यत्र । उषस्यरुणोदये** इति । अग्रे 'ब्राह्मे मुहूर्ते' इत्युक्तेस्तदनुरोधेनात्राप्युषःपदेनारुणोदय एवोच्यते, नत्वष्टपञ्चाशद्घटिका इत्यर्थः । **अतो विरह** इति । लक्ष्मीसम्बन्धे तामेव गृह्णीयात्तदास्माकं विरह एव सिध्येदित्यर्थः । **वयांसीत्यस्याभासे आहेति** । कूजनप्रयोजनमितिशेषः । तथाच पूर्वोक्तकूजनानुवादेन प्रयोजनकथनं वाक्यार्थ इति भावः । पूर्वश्लोके सर्वासां विरहासहने उक्ते रुक्मिण्या अपि तथात्वं प्राप्तमेवेति 'मुहूर्तं तं त्वि'तिश्लोकः किमर्थ इत्याशङ्क्य तदाभासमाहुः **एतत्सर्वेति** । कासाञ्चिदेवं भविष्यतीत्याशङ्क्य ज्येष्ठाया धर्मोपयोगित्वेपि तथात्वे, अन्यासां तु कैमुत्येनैव तथात्वं प्राप्तमित्यर्थः । **ब्राह्मे मुहूर्ते** इत्यत्र । ननु स्नात्वा ध्यानं कर्तव्यमत आचमनमात्रसिद्धान्तः कथमुक्त इत्यत आहुः **ध्यानस्यापीति** । इदं ध्यानं शुद्ध्यर्थमेव, नतु कर्माङ्गमित्यर्थः । **बहिरावरणमिवेति** । भगवतो बहिरावरणं सत्त्वगुणः, तदावरणं तम इति भगवतो गूढत्वात्तत्प्रकाशनार्थं ध्यानमावश्यकमिति जीवान् शिक्षयितुं स्वयं दध्याविर्त्यर्थः ।

## गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

सप्ततितम अध्याये कृष्णस्य जगदीशितुः । सर्वमङ्गलहेतुत्वादाह्निकं विनिरूप्यते ॥ १ ॥

अथोशब्दोऽथन्तिरे । पूर्वोक्तात् प्रकारान्तरेण प्रतिदिनं भगवताऽनुष्ठीयमानं धर्मादि निरूप्यते इत्यर्थः । 'इत्यर्थधर्मकामेषु कृष्णेन श्रद्धितात्मना' इत्युक्त्या 'धर्मार्थकामानामावृत्तिर्भगवता प्रतिदिनं क्रियते' इति सूचितम् । तत्र कामपराणां स्त्रीणां धर्मासहिष्णुत्वमाह—उषसीति । उषसि प्रभातवेलायां उपवृत्तायामासन्नायां सत्यां पतिभिर्नानाकृष्णमूर्तिभिर्गृहीताः कण्ठा यासां ता माधव्यः माधवस्य कृष्णस्य स्त्रियः कूजतः शब्दं कुर्वतः कुक्कुटान् अशपन् 'प्रातःकालसूचनेन सुप्तं कृष्णं प्रबोधयन्तो यूयमाशु म्रियध्वम्' इति शापं ददुः । तत्र हेतुमाह—भाविना तद्विरहेणातुरा दुःखिता इति ॥ १ ॥ मन्दारवायुभिर्हेतुभिः अलिषु भ्रमरिषु गायत्सु सत्सु अनिद्राणि वयांसि पक्षिणो बन्दिन इव सुप्तं कृष्णं बोधयन्ति सन्ति अरूरुवन् पुनःपुनरकूजयन् ॥ २ ॥ स्नानपूजादियोग्यत्वात् तं तु मुहूर्तमतिशोभनमपि वैदर्भी रुक्मिणी नामृष्यत् न सेहे असमीचीन इति अमन्यतेत्यर्थः । 'वैदर्भी' इत्यन्यासामपि तत्पत्नीनां उपलक्षणम् तत्र हेतुमाह—परिरम्भणेति । यतः प्रियस्य कृष्णस्य बाह्वोरन्तरं गता परिरम्भिता, अतस्तस्य परिरम्भणस्य विश्लेषाद्धेतोर्नामृष्यदित्यर्थः ॥ ३ ॥ माधवः कृष्णो ब्राह्मे मुहूर्ते चोत्थाय वारि जलं उपस्पृश्य हस्तपादादिप्रक्षालनपूर्वकमाचम्य प्रसन्नानि सावधानानि करणानीन्द्रियाणि यस्य स तथाभूतः सन् तमसः प्रकृतेः परं शुद्धमात्मानं दध्यौ ध्यातवान् ॥ ४ ॥

## अन्वितार्थप्रकाशिका

आह्निके सप्ततितमे दूतनारदकार्ययोः । विचारणमभूत्तत्र सार्धाः श्लोका नगाब्धयः ( ४७॥ ) ॥
षडुवाचेति ( ६ ) पञ्चाढ्याः पञ्चाशत्स्युरनुष्टुभः ( ५५ ) ॥ ७० ॥

इत्यर्थधर्मकामेषु कृष्णेन श्रद्धितात्मनेत्युक्तमतः प्रातरारभ्य कृष्णस्याह्निकमाह–अथेति ॥ अथ उषसि प्रभातवेलायाम् उपवृत्तायामासन्नायां सत्याम् । स्त्रीत्वमार्षम् । भाविना भगवद्विरहेणातुराः पतिभिः कृष्णमूर्तिभिः गृहीताः कण्ठा यासां ता माधव्यः माधवस्य कृष्णस्य स्त्रियः कूजतः शब्दं कुर्वतः कुक्कुटान् अशपन् । प्रातःकालसूचनेन कृष्णविरहहेतवो यूयं निर्हेतुदुःखदा इति पतिभिरिति प्रतीतिभेदाद्बहुत्वम् ॥ १ ॥ वयांसीति ॥ मन्दारवनस्य वायुभिः हेतुभिः अलिषु भ्रमरेषु गायत्सु सत्सु अनिद्राणि वयांसि पक्षिणो वन्दिन इव सुप्त कृष्णं बोधयन्ति सन्ति अरूरुवन् पुनः पुनरकूजन् । अरोरवुरिति वक्तव्ये अभ्यासगुणजुसभावावार्षौ ॥ २ ॥ मुहूर्तमिति ॥ प्रियस्य कृष्णस्य बाह्वोरन्तरं गता परिरम्भिता वैदर्भी रुक्मिणी उपलक्षणतया सत्यभामादिरपि स्नानपूजादियोग्यत्वात् तत्तु मुहूर्तमतिशोभनमपि प्रियपरिरम्भणस्य विश्लेषाद्धेतोर्नामृष्यन्न सेहे ॥ ३ ॥ ब्राह्मे इति ॥ माधवः कृष्णो ब्राह्मे मुहूर्ते यामार्धावशिष्टायां रात्रौ चोत्थाय वारि जलम् उपस्पृश्य हस्तपादादिप्रक्षालनपूर्वकमाचम्य प्रसन्नानि सावधानानि करणानीन्द्रियाणि यस्य स तथाभूतः सन् तमसः प्रकृतेः परं शुद्धमात्मानं दध्यौ ॥ ४ ॥

## श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्

अथ सप्ततितमेऽध्याये श्रीकृष्णाह्निककर्मदूतनारदयोः कार्यविचारणं निरूपयति । अथेत्यादि सार्द्धैकविंशतिभिः श्लोकैर्दिनक्रियामाह । अथेत्यधिकारे उषसि प्रातःकाले उपवृत्तायां आसन्नायां सत्यां । पतिभिः प्रतिगृहं स्थितत्वाद्बहुवचनं

तासां गृहेषु पृथक पृथक् स्थितेन श्रीकृष्णेन गृहीतकण्ठ्यः माधव्यः माधवस्य पत्न्यः प्रभातबोधकशब्दान् कूजतः । कुक्कुटान् म्रियतां मूकावाभवं इत्याद्यशपन् ॥ १ ॥ मंदारवनवायुभिः कृत्वा अलिषु गायत्सु सत्सु । अनिद्राणि गत निद्राणि वयांसि पतत्त्रिणः बंदिन इव कृष्णं बोधयंति संति अरूरुवन् । अतिशयेन शब्दान् अकुर्वन् ॥ २ ॥ प्रियबाह्वंतरंगता वैदर्भी अतिशोभनं मुहूर्त्तमात्रं तं प्रातःकालमपि परिरंभणविश्लेषात् आलिंगनवियोगं प्राप्यनामृष्यत न सेहे ॥ ३ ॥ तमसः प्रकृतेः परं । आत्मानं स्वकीयपुरुषोत्तमस्वरूपं दध्यौ अहं पुरुषोत्तम इत्यचिंतयत् ॥ ४॥

**भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी**

कृष्णस्य सप्ततितमे प्रोक्तमाह्निककर्मणि । देवर्षिदूतयोः कार्ये कार्यमन्त्रविचारणम् ॥ १ ॥

जगन्नाथाह्निकं कर्म जगन्मङ्गलकारकम् । दृष्टं देवर्षिणा किंचित् क्वचित्तत्क्रमतोऽवदत् ॥ २ ॥

अथ भगवतो दिनचर्यात्मकं चेष्टितमनुवर्णयन् मागधनिरुद्धराजसंदेशहर्तृसंनिवेदितवृत्तान्तयुधिष्ठिराभिप्रायाभिज्ञनारदनिवेदिततद्वनान्तान्यतरनिश्चिकीर्षाप्रयुक्तमुद्धवोद्दे शात्मकं भगवत्प्रश्नमाहाथेत्यादिना । अथेति । अथेति भगवद्दिनचर्याप्रारम्भमङ्गले । केचित्तु अर्थधर्मकामेषु कृष्णेन श्रद्धितात्मनेति प्रस्तुतस्य श्रीकृष्णस्याह्निकस्याधिकारेऽथशब्द इत्याहुः । उषसि प्रभातवेलायां, उपवत्तायामासन्नायां सत्यामित्यर्थः । पतिभिः श्रीकृष्णैः, गृहीताः कण्ठा यासां ताः, माधव्यः श्रीकृष्णस्त्रियः, विरहेण भाविना वियोगेनातुराः, अत एव, कूजतः शब्दायतः, कुक्कुटान्, अशपन् ॥ १ ॥ वयांसीति । मन्दारवनवायुभिः, अलिषु भ्रमरेषु, गायत्सु सत्सु, अनिद्राणि निद्रारहितानि, वयांसि पक्षिणः, बन्दिन इव, कृष्णं बोधयन्ति सन्ति, अरूरुवन् ॥२॥ मुहूर्त्तमिति । प्रियस्य श्रीकृष्णस्य बाह्वोर्यदन्तरं तत्, गता, वैदर्भी रुक्मिणी, वैदर्भीत्यन्यासामप्युपलक्षणम् । परिरम्भणं स्वप्रियकृताश्लेषस्ततो यो विश्लेषस्तस्मात् हेतोः, अतिशोभनमपि, तं मुहूर्त्तं तु, न अमृष्यन्न सेहे । असमीचीनमेवामन्यतेत्यर्थः ॥३॥ ब्राह्म इति । माधवः श्रीकृष्णः, ब्राह्मे मुहूर्त्ते, उत्थाय, वारि शुद्धं जलं, उपस्पृश्याचम्य, प्रसन्नानि करणानीन्द्रियाणि यस्य तथाभूतः सन्, तमसः प्रकृतेः, परं विलक्षणं, आत्मानं, दध्यौ ध्यातवान्, स्वात्मावलोकनपरो बभूवेत्यर्थः ॥ ४ ॥

**कृष्णप्रिया**

**भगवान् श्रीकृष्ण की नित्यचर्या और उनके पास जरासन्ध के कैदी राजाओं के दूत का आना**

श्रीशुकदेवजी कहते हैं—परीक्षित् ! जब सवेरा होने लगता, कुक्कुट ( मुरगे ) बोलने लगते, तब वे श्रीकृष्ण-पत्नियाँ, जिनके कण्ठ में श्रीकृष्ण ने अपनी भुजा डाल रखी है, उनके विछोह की आशङ्का से व्याकुल हो जातीं और उन मुरगों को कोसने लगती ॥ १ ॥ उस समय पारिजात की सुगन्ध से सुवासित भीनी-भीनी वायु बहने लगती। भौंरे तालस्वर से अपने सङ्गीत की तान छेड देते । पक्षियों की नींद उचट जाती और वे बंदीजनों की भाँति भगवान् श्रीकृष्ण को जगाने के लिये मधुर स्वर से कलरव करने लगते ॥ २ ॥ रुक्मिणीजी अपने प्रियतम के भुजपाश से बँधी रहने पर भी आलिङ्गन छूट जाने की आशङ्का से अत्यन्त सुहावने और पवित्र ब्राह्ममुहूर्त को भी असह्य समझने लगती थीं ॥ ३ ॥ भगवान् श्रीकृष्ण प्रतिदिन ब्राह्ममुहूर्त में ही उठ जाते और हाथ-मुँह धोकर अपने मायातीत आत्मस्वरूप का ध्यान करने लगते । उस समय उनका रोम-रोम आनन्द से खिल उठता था ॥ ४ ॥

**एकं [1]स्वयंज्योतिरनन्यमव्ययं[2] स्वसंस्थया नित्यनिवृ[3]त्तकल्मषम् ।**
**ब्रह्माख्यमस्योद्भवनाशहेतुभिः स्वशक्तिभिर्लक्षितभावनिर्वृ[4]तिम् ॥ ५ ॥**
**अथाप्लुतोऽम्भस्यमले यथाविधि क्रियाकलापं परिधाय वाससी ।**
**चकार संध्योपगमादि [5]सत्कृतो हुतानलो ब्रह्म जजाप वाग्यतः ॥ ६ ॥**
**उपस्थायार्कमुद्यन्तं तर्पयित्वाऽऽत्मनः कलाः । देवानृषीन् पितॄन् वृद्धान् विप्रानभ्यर्च्य चात्मवान् ॥ ७ ॥**
**धेनूनां रुक्मशृङ्गीणां[5] साध्वीनां मौक्तिकस्रजाम् । पयस्विनीनां गृष्टीनां [6]सवत्सानां सुवाससाम् ॥ ८ ॥**

---

१. परं–विज. । २. मद्वयं–प्रा. पा. । ३. निरस्त–श्रीधर. वंशी. जीव. वीर. विज. विश्व. । ४. सत्तमो–श्रीधर. वंशी. जीव. वीर. विज. विश्व. । ५. शृङ्गाणां–वीर. । ६. सु–वीर. ।

**कर्दमक्षमा**

**अन्वयः**—एकम्, स्वयंज्योतिः, अनन्यम्, अव्ययम्, स्वसंस्थया, नित्यनिवृत्तकल्मषम्, ब्रह्माख्यम्, अस्य, उद्भवनाशहेतुभिः, स्वशक्तिभिः, लक्षितभावनिर्वृतिम् ॥ ५ ॥ अथ, यथाविधि, अमले, अम्भसि, आप्लुतः, वाससी, परिधाय, सत्कृतः, संध्योपगमादि, क्रियाकलापम्, चकार, हुतानलः, वाग्यतः, ब्रह्म, जजाप ॥ ६ ॥ उद्यन्तम्, अर्कम्, उपस्थाय, आत्मनः, कलाः, तर्पयित्वा, आत्मवान्, देवान्, ऋषीन्, पितॄन्, वृद्धान्, विप्रान्, अभ्यर्च्य ॥ ७ ॥ रुक्मशृङ्गीणाम्, साध्वीनाम्, मौक्तिकस्रजाम्, सुवाससाम्, सवत्सानाम्, गृष्टीनाम्, पयस्विनीनाम् ॥ ८ ॥

**श्रीधरस्वामिविरचिता भावार्थदीपिका**

एकमखंडम् । तत्र हेतुः । अनन्यं निरुपाधिम् अत एवाव्ययं नित्यम् । स्वयंज्योतिष्ट्वे हेतुः । नित्यनिरस्तं नित्यनिवृत्तं कल्मषमविद्या यस्मात्तम् । उपलक्षणमाह । अस्येति । अस्य विश्वस्य लक्षितभावश्चासौ निर्वृतिश्च । भावः सत्ता । निर्वृतिरानंदः । तथाहि । गुणक्षोभात्पूर्वं सत्तामात्रं यः "सदेव सोम्येदमग्र आसीत्" इत्यादिश्रुतेः । स एवानंदश्च "विज्ञानमानंदम्" इत्यादिश्रुतेः । तं सदानंदमित्यर्थः ॥ ५ ॥ आप्लुतः स्नातः संध्याया उपगमउपासनमादिर्यथा भवति तथा क्रियाकलापं चकार । काण्वत्वादुदयात्पूर्वमेव हुतानलः । ब्रह्म गायत्रीं जजाप ॥ ६ ॥ कला अंशान्देवान् ऋषीन्पितॄंश्च तर्पयित्वा ॥ ७ ॥ गृष्टीनां प्रथमप्रसूतानाम् ॥ ८ ॥

**श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः**

तत्राऽखंडत्वे । अत एव निरुपाधित्वादेव । उपलक्ष्यते ज्ञायतेऽनेनेति तथा । तटस्थस्वरूपलक्षणोभयरूपमित्यर्थः । इत्यर्थ इति तात्पर्यम् । सर्वगृहेषु बहुधा स्थितमप्येकमेव तं ददर्श । एकत्वञ्चेदं श्रीविग्रहपरमेव, भगवति विग्रहविग्रहिभावस्य निषिद्धत्वाद्विग्रह एव विभुत्वादेर्दर्शितत्वात् । विग्रहिणस्तु विभुत्वे साध्ये श्रीनारदस्यासंदेहे तदुपगमनानुपपत्तेः, कृतकायव्यूहैः सौभर्यादितुल्यत्वापत्तेश्चित्रत्वानुपपत्तेश्च । विश्वनाथस्तु—एकमित्यस्येत्थमर्थमाह आत्मानं स्वं दध्यौ यथान्यो जनो ब्राह्मे मुहूर्ते तं ध्यायति तथा सोपि स्वमेव दध्यौ । तमसः प्रकृतेः परमेकमितीश्वरस्यैकस्यैवौचित्यात् । अतः स्वयं ज्योतिः स्वयमेव प्रकाशमानम् । ननु संकर्षणादयोऽपीश्वराः श्रूयंते तत्राह—अनन्यं न कोप्यवतारोऽन्यो यस्मात्तं संकर्षणादिषु स्वांशावतारेषु पृथङ्नित्यं वर्तमानेष्वप्यव्ययं परिपूर्णमित्यर्थः । प्रादुर्भावे तु कृपैव कारणमित्याह—स्वसंस्थया स्वस्य सम्यक्सर्वजनदृश्यतया स्थित्या निवृत्तं कल्मषमविद्या यस्मात्तम् । किञ्च—ब्रह्मण आख्या सम्यक्ख्यातिः प्रकाशो यस्मात्तम् "मदीयं महिमानं च परं ब्रह्मेति शब्दितम्" इति श्रीमत्स्योक्तेः 'ब्रह्मणो हि प्रतिष्ठाहम्' इति गीताभ्यश्च । यद्वा—ब्रह्माख्यं ब्रह्मनामकम् । "ब्रह्मेति परमात्मेति भगवानिति शब्द्यते" इति प्रथमस्कंधोक्तेः । सर्वश्रेष्ठ्यमाह—अस्य विश्वस्य उद्भव उद्रिक्तोभवः संसारस्तस्य नाशहेतुभिः स्वशक्तिभिः ज्ञानप्रदत्वभक्तिप्रदत्वादिभिर्लक्षिता सर्वत्रानुभूता भावानां मर्त्यादीनां निर्वृतिर्यस्मात्तम् । तत्र भक्तानां तद्दत्तप्रेमातिशयेन शिष्टानां तत्कृतसुष्ठुपालनेन दुष्टानां तद्वधानंतरमुक्तिप्राप्त्या निर्वृतिरिति ॥ ५ ॥ अथात्मस्वरूपध्यानोत्तरम् । एतेन प्रातरुत्थायादावात्मध्यानं कार्यम् "सुप्तप्रबोधयोः संधावात्मनो गतिमात्मदृक्" इत्याद्युक्तेः । तदभावे त्वीश्वरस्यापि जीवता स्यादिति बोधनायैव भगवदाह्निककर्मण्येतदुक्तमिति भावः । संधौ दिनरात्र्योः पूर्वाह्णापराह्णयोश्च या क्रियते सा संध्या प्राणायामोपस्पर्शनमार्जनादिपूर्वकगायत्र्युपासनरूपनित्यकर्मविशेषः तस्योपगम उपासनं तदादिकर्माणि सत्तमः परमकुशलः क्रियाकलापं संध्योपासनोत्तरामरार्चनादिरूपम् । एतेन सर्वकर्मणामुपक्रमः संध्योपासनमेव । तथाह दक्षः—"संध्याहीनो द्विजो नित्यमनर्हः सर्वकर्मसु । यदन्यत्कुरुते कर्म न तस्य फलभाग्भवेत् ॥" इति । कर्म नित्यनैमित्तिकम् । सा च—"उत्तमा तारकोपेता मध्यमा लुप्ततारका । अधमा सूर्यसहिता प्रातःसंध्या त्रिधा मता ॥ उत्तमा सूर्यसहिता मध्यमा लुप्तसूर्यका । अधमा तारकोपेता सायंसंध्या त्रिधा मता ॥" पारिजाते तु—"उदयास्तमयादूर्ध्वं यावत्स्याद्घटिकात्रयम् । तावत्संध्यामुपासीत प्रायश्चित्तमतः परम् ॥" तच्च "संध्याकाले त्वतिक्रांते स्नात्वाऽऽचम्य यथाविधि । जपेदष्टशतं देवीं ततस्संध्यां समाचरेत् ॥" इति शातातपः । देवीं गायत्रीम् । "कालातिक्रमणे चैव चतुर्थार्घं प्रदापयेत्" इति पारिजाते । "गृहे त्वेकगुणा संध्या गोष्ठे दशगुणा स्मृता । शतसाहस्त्रिका नद्यामनंता विष्णुसंनिधौ ॥" इति व्यासः । मध्याह्नसंध्याकालस्तु शातातपेनोक्तः—"अध्यर्द्धयामादासायं संध्या माध्याह्निकी मता" इति । 'दशधेनुसमा संध्या' इत्यादिभिर्वाक्यैर्वाल्स्यादिभिरस्याः फलं बहुधोक्तमित्यलं प्रसक्तानुप्रसक्तेन । उदितात्पूर्वमिति "उदिते जुहोत्यनुदिते च" इति श्रुतेः । दक्षोऽप्याह—"संध्याकर्मावसाने तु स्वयं होमो विधीयते । ऋत्विक्पुत्रो गुरुर्भ्राता भागिनेयोऽथ विट्पतिः ॥ एभिरपि हुतं यत्स्यात्तद्धुतं स्वयमेव हि" । तच्च 'कुंडे वा स्थंडिले अपि' इति वचनात्स्वेच्छया कुर्यात् । "धमनीमंतरं कृत्वा तृणं वा काष्ठमेव वा । मुखेनाग्निं समिंधीत मुखादग्निरजायत ॥" इति । "अंगुल्यग्रे न होतव्यं न कृत्वांगुलिभेदनम् । अंगुल्युत्तरपार्श्वेन होतव्यमिति हि स्मृतम् । कुंडे दोषबहुत्वाच्च स्थंडिलं शोभनं मतम् ॥" होमस्तु व्याहृतिभिरेव कार्य इत्यलं प्रपञ्चेन । वाससीत्युक्तेः "नैकवस्त्रः प्रवर्तेत स्नानदानादिकर्मणि" इत्युक्तेर्वस्त्रद्वयं धार्यम् । धौतवस्त्र-

मुपवस्त्रं च "स्नात्वैव वाससी धौतेऽक्लिष्टे विपरिधाय च। प्रक्षाल्योरू मृदद्भिश्च हस्तौ प्रक्षालयेन्न वा॥" इति। अक्लिष्टे रजकाक्षालिते। तेऽपि सदशे "अच्छिन्नाग्रं तु यद्धौतं तच्छुचि मनुरब्रवीत्"। ते अपि शुष्के "नार्द्रमेकं हि वसनं परिदध्यात्कथंचन" इत्युक्तेः। सप्तवाताहतमार्द्रमपि परिदध्यात् 'सप्तवाताहतं शुष्कवद्भवति' इति शातातपोक्तेः। पाद्मे—"प्रत्यहं क्षालयेद्वस्त्रं दैवे पित्र्ये च कर्मणि। तोयैर्विण्मूत्रशुक्रैस्तु दूषितं तु मृदंबुभिः। कार्पासं कटिनिर्मुक्तं कौशेयं भोजने धृतम्। क्षालनाच्छुद्धिमाप्नोति ऊर्णा वातेन शुद्ध्यति॥" इति "ईषद्धौतं नवं श्वेतं सदशं यन्न धारितम्। अहतं तद्भवेद्वासः पावनं सर्वकर्मसु॥" ईषद्धौतमक्षारधौतम्। नवं तद्दिनधौतं प्रत्यहं नवस्यासंभवात्। तत्राप्यकृत्रिमदशम्। तथाच—"अकृत्रिमदशं वस्त्रं प्रशस्तं सर्वकर्मसु। अकृत्रिमा दशा ज्ञेया सिद्धा वायनकर्मणि॥" इति भारते। "अधौतवस्त्रसंस्पृष्टं स्त्रीधौतं क्षालनाच्छुचि" इत्यलम्। ब्रह्म जजाप नियतस्वाध्यायाध्ययनं चकार। गायत्रीं वेत्युक्तं स्वामिना। "जपभोजनहोमेषु मूत्रोच्चारे च वाग्यतः" इत्युक्तेर्जपे मौनमेव न्याय्यम्। "सकृदुच्चरिते शब्दे प्रणवं समुदीरयेत्। प्रोक्ते पारशिके शब्दे प्राणायामं समाचरेत्॥ बहुप्रलापीत्वाचम्य न्यस्यांगानि ततो जपेत्॥" इति तंत्रसारोक्तेः॥ ६॥ उपस्थाय "अदृश्रमस्य केतवः" इत्यादिमंत्रैः संस्तुत्य। पितॄन्नित्युक्तेर्जीवत्पितृकस्यापि दिव्यपितृतर्पणेऽधिकारात् "देवानृषीन्मनुष्यांश्च दिव्यान्पितॄन्यमांस्तथा। जीवत्पितापि प्रीणीयान्नित्यं स्नात्वा द्विजोत्तमः॥" इति स्मृतेः। वृद्धान् नत्यादिना, विप्रान् दानमानादिना, आत्मा वेदः स विद्यते पाल्यतयायस्य स आत्मवान् "वेदविप्रौ ममात्मानौ मुख्यौ गावस्तथैव हि। वेदगोविप्ररक्षार्थे सर्वदा ध्रियते तनुः॥" इति श्रीमुखोक्तेः॥ ७॥ गृष्टीनां सकृत्प्रसूतानाम्। साध्वीनां पादबंधनादिक्रियानपेक्षाणाम्॥ ८॥

### श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी

परमेश्वरत्वमेवाह—एकमिति। अस्येत्यादिना जीवात्मतो वैलक्षण्यमुक्तम् उद्धवनाशेत्युपलक्षणम् अन्यत्तैः यद्वा आत्मानं स्वस्वरूपं दध्यौ तस्य तावच्छुद्धत्वमाह—तमसः परमिति। "तमसः परस्तात्" इति श्रुतेः। सङ्घातरूपत्वं निषेधति एकमिति "एकमेवाद्वितीयं ब्रह्म" इतिश्रुतेः। एकत्वेपि स्वाभाविकशक्तित्वं व्यञ्जयति—स्वयञ्ज्योतिरिति। स्वयमात्मनैव ज्योतिर्नानाप्रकाशो यस्य तम् "आत्मप्रकाशम्" इतिश्रुतेः। अत एव न विद्यते अन्यत् यत्र तं "नेह नानास्ति किञ्चन" इतिश्रुतेः अत एव "न तस्य कार्य्यं करणं च विद्यते न तत्समश्चाभ्यधिकश्च दृश्यते परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च" इतिमन्त्रोपि अनयैव शक्त्या प्रकृतीक्षणञ्चाभ्युपगतं भाष्यकृद्भिः अतः प्राकृतविलक्षणत्वादव्ययम् अपक्षयादिशून्यम् एवं तत्स्वरूपस्य स्वतः शुद्धत्वं दर्शयित्वा तत्रान्यच्छायाशाबल्यमपि निषेधति स्वसंस्थया स्वप्रभावेनैव नित्यं निरस्तं निवृत्तं कल्मषं स्वसान्निद्ध्यमात्रे प्रक्रियमाणया मायया शाबल्याभासोपि यत्र तम् "अयमात्मा अपहतपाप्मा" इतिश्रुतेः। एवं स्वरूपेण गुणेन च सर्वतो बृहत्तमत्वाद्ब्रह्मेत्याख्या यस्य तादृशम् "न तस्य कार्य्यम्" इत्यादेरेव श्रुतेः। तथैव तं कार्य्यद्वारापि लक्षयति—अस्येति। भावः स्वभावः स्वरूपशक्तिरित्यर्थः। निवृत्तिरानन्दैकस्वरूपत्वं तच्छक्तिभिस्ते लक्षिते यत्र तम् अस्येति हि दृश्यमानजाड्यादिदोषयुक्तत्वं सूचयित्वा तदुद्भवादिशक्तीनामपि सदोषत्वं दर्शितं ततो बहिरङ्गत्वञ्च ततस्तद्दोषास्पृष्टया तदुपजीव्या चान्या स्वरूपभूता शक्तिर्बोधिता सर्वात्मत्वेन परमानन्दरूपं तत्स्वरूपञ्चेति। यद्वा एकमिति "स एक एवेतरथामिथोभयम्" इत्याद्युक्तन्यायेन ईश्वरस्यैकस्यैव युक्तत्वात् अतः स्वयञ्ज्योतिश्च स्वयमेव प्रकाशमानमित्यर्थः। ननु, सङ्कर्षणादयोपीश्वराः श्रूयन्ते तत्राह—अनन्यं न कश्चिद्व्यूहोऽन्यो भिन्नोस्ति यस्मात्तं स एव लीलया चतुर्व्यूहादिरूपेण वर्त्तते नतु ते ततो भिन्ना इत्यर्थः। तत्तत्प्रादुर्भावकत्वेप्यलं क्षपयिष्णुसरोवरवदव्ययम् अत एव स्वीयया असाधारणरूपया संस्थया सम्यक् स्थित्या निवृत्तं कल्मषं निकर्षरूपं यस्मात्तं किञ्च ब्रह्मणोपि आख्या ख्यातिः प्रकाशो यस्मात्तं तदुक्तमष्टमे श्रीमत्स्यदेवेन—

"मदीयं महिमानञ्च परं ब्रह्मेति शब्दितम्। वेत्स्यस्यनुगृहीतं मे सम्प्रश्नैर्विवृतं हृदि॥" इति

श्रीविष्णुपुराणे च "शुभाश्रयः स चित्तस्य सर्वगस्य तथाऽऽत्मनः" इति। श्रीभगवद्गीतासु च "ब्रह्मणो हि प्रतिष्ठाहम्" इति अस्येत्यादि पूर्ववत्॥ ५॥ अथानन्तरमेव अम्भसि तीर्थमये प्रातः स्नाने तीर्थस्यापेक्षत्वात् इति प्रत्यन्तःपुरबहिर्भागगमनं बोध्यते सत्तम इति, सतां धर्मप्रदर्शनार्थमिति भावः। अन्यत्तैः। यद्वा सन्ध्योपगमादिषु कर्मसु सत्तमः परमकुशलः॥ ६॥ क्रियाकलापमेवाह—पक्षान्तरे चादिशब्दार्थमेवाभिव्यञ्जयति-उपस्थायेति त्रिकेण। कला विभूतीः श्रीत्रिविक्रमादिप्रतिमाश्च वृद्धान् कुलवृद्धान् विप्रांश्च आत्मा धृतिर्बुद्धिर्वा तद्वान् वत्तद्विधो सावधानस्सन्नित्यर्थः॥ ७॥ साध्वीनां गुणरूपलक्षणादिभिरुत्तमानां तेनैवादो स्वर्णकुण्डलादिभिः अलङ्कृतेभ्यः प्रतिगृहं बद्धदानात्तु एकविंशतिकोटयः सप्तलक्षाणि सप्तपञ्चाशत्सहस्राणि वा सप्तत्यधिकानि ( २१०७५७०७२ ) दिनेदिने इत्यत्रैव वीप्सया नित्यकर्मत्वे लब्धे बद्धमित्यत्र पुनर्वीप्सातिदार्ढ्याय प्रतिदिनमेव बद्धस्य बहुत्वबोधनाय वा बद्धमित्यत्र दकारसंयोगितया बद्धमित्येव श्रोतेषु प्रसिद्धम्॥ ८-९॥

### श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी

परमेश्वरत्वमेवाह—एकमिति। अस्येत्यादिना जीवतत्त्वाद्वैलक्षण्यमुक्तम्। अन्यत्तैर्व्यञ्जितम्। यद्वा, एकमिति ( भा० ५।१८।२० ) 'स एक एवेतरथा मिथो भयम्' इत्याद्युक्तन्यायेनेश्वरस्यैकत्वोपपत्तेः। अतः स्वयंज्योतिः स्वयमेव प्रकाशमान-

मित्यर्थः। परमात्मत्वेन तस्य सर्व्वप्रकाशकत्वात्तेनान्यप्रकाश्यत्वाभावाच्च। ननु संकर्षणादयोऽपीश्वराः श्रूयन्ते ? तत्राह—अनन्यं न कश्चिदन्यो भिन्नोऽस्ति यस्मात्तम्, स एव लीलया चतुर्व्यूहादिरूपेण वर्त्तते, न तु ते ततो भिन्ना इत्यर्थः। किञ्च, अव्ययं सर्व्वशक्तिपरिपूर्णमिति। तच्छक्त्यैव संकर्षणादीनां तत्तच्छक्तिरिति भावः। अतएव स्वकीयया असाधारणया संस्थया परमानन्दघनरूपया सम्यक् स्थित्या विशिष्टम्, अतो नित्यं निवृत्तं कल्मषं भक्तानां सर्व्वदुःखं यस्मात्तम्; यद्वा, स्वेषु भक्तेषु संस्थया सदा साक्षादिव परिस्फूर्त्या कृत्वा नित्यनिवृत्तकल्मषम्; किञ्च, ब्रह्मणोऽखण्डचैतन्यस्य श्रीचतुर्मुखस्य वा आख्या प्रसिद्धिर्यस्मात्, अखण्डत्वस्य तस्मादेवाभिव्यक्तेः, सूर्य्यादिवरश्मिजालस्य च तन्नाभिपद्मोद्भवत्वात्; यद्वा, ब्रह्मस्वरूपमाख्या नाम यस्य तम्, नाम्नो हि सच्चिदानन्दरूपत्वात्। इति तेनापि नित्यकल्मषनिवृत्तिरभिप्रेता। किञ्च, उद्भवनं सृष्टिः, आदि-शब्दात् स्थितिप्रलयौ श्रीवैकुण्ठवैभवादिवैचित्र्यञ्च, तद्धेतुभिः, स्वस्य स्वाधीनाभिर्वा शक्तिभिर्मायाचिद्विलासरूपादिभिर्विशिष्टम्, अतएवास्य विश्वस्य लक्षित-लक्षणैर्दशभावनिर्वृतिः प्रेमानन्दो यस्मात्तम्। एवं सर्व्वथा जीवतत्त्वाद्वैलक्षण्यम्; विशेषणानां चैषां यथोत्तरं तत्र श्रैष्ठ्यमूह्यम् ॥ ५ ॥ अथ अनन्तरमेव, अम्भसि गोमत्यादेः, प्रातःस्नाने तीर्थस्यापेक्षत्वात्। सत्तम इति सतां धर्म्मप्रदर्शनार्थमिति भावः अन्यत्तैर्व्याख्यातम्। यद्वा, सन्ध्योपगमादिकर्म्मसु सत्तमः परमकुशलः। एवं क्रियाकलापः संक्षेपेणाभिव्यञ्जित एव, तत्तदाख्यञ्चोक्तम् ॥ ६ ॥ क्रियाकलापमेवाह, पक्षान्तरे चादिशब्दार्थमेवाभिव्यञ्जयति,—उपस्थायेति। वृद्धान् कुलवृद्धान् विप्रांश्च, च-काराच्छ्रीशालग्रामशिलादींश्चाभ्यर्च्य, देवादीनां यथाक्रमं तर्पणे वृद्धादीनां चाभ्यर्च्चने श्रैष्ठ्यम्, आत्मा धृतिबुद्धिर्वा, तद्वान्, तत्तद्विधौ सावधानः सन्नित्यर्थः ॥ ७ ॥ साध्वीनां रूपगुणादिभिः ॥ ८ ॥

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम्

एकं समाभ्यधिकरहितम् अद्वयं जात्यादिकल्पनारहितं स्वसंस्था स्वगतशक्तिभिर्लक्षितभाववृत्ति दृष्ट्या दृग्भिरुपलक्षितम् ॥ ५-१२ ॥

### श्रीमद्वीरराघवाचार्यकृता भागवतचन्द्रचन्द्रिका

कोसौ तमसः पर आत्मा ? तं विशिनष्टि—एकमिति। एकं समाभ्यधिकरहितं जीवस्तु विपरीत इति भावः। स्वयञ्ज्योतिः स्वयं प्रकाशस्वरूपम् अनन्यं न विद्यतेऽन्यदशरीरभूतं वस्तु यस्य तम् अव्ययं जात्यादिकल्पनारहितं स्वस्मिन् संस्था सम्यगविकृतत्वेन अवस्थितिस्तया नित्यं निरस्तं प्रतिक्षिप्तं कल्मषं पुण्यपापात्मकं हेयं यस्य तं ब्रह्मेत्याख्या बृहति बृंहयतीति निरुक्तिर्यस्य तम् अस्य जगतः उत्पत्तिनाशहेतुभिः स्वशक्तिभिः उद्भवनाशग्रहणं स्थितेरित्युपलक्षणं शक्तिरपृथक्-सिद्धविशेषणं ततश्चोत्पत्तिकारणत्वस्थितिकारत्वलयकारणत्वरूपैर्द्धर्मैरित्यर्थः। भावः सत्ता सा च मानसं बन्धार्हत्वरूपा भाव-शब्दश्चात्र धर्मिपरः लक्षितो भावः सत्ताविशिष्टं स्वरूपं निर्वृतिरानन्दात्मकं यस्य तथाभूतम् अत्रास्येत्यादिना। भावेत्यन्तेन प्रकृतेः परस्यात्मनो लक्षणमभिप्रेतं जगज्जन्मादिकारणत्वं हि ब्रह्मणो लक्षणं निर्वृतिपदेनानन्दवाचिना "सत्यं ज्ञानमनन्तम्" "विज्ञानमानन्दम्" इति स्वरूपशोधकवाक्यार्थः स्मारितः अत्र कोसौ प्रकृतेः पर आत्मेत्यतो ब्रह्माख्यमित्युक्तं ब्रह्मशब्दस्यानेकार्थसाधारण्यात्कि तत् ब्रह्मेत्यपेक्षायामस्येत्यादिना जगत्कारणत्वं लक्षितमिति कारणत्वं चिदचिद्विशिष्टगतमिति विशेष्यभूत-ब्रह्मस्वरूपजिज्ञासायां निर्वृतिपदं प्रयुक्तं जगत्कारणत्वस्य हिरण्यगर्भादेरिव सुकृतविशेषप्रयुक्तत्वशङ्काव्युदासाय स्वसंस्थया नित्यनिरस्तकल्मषमित्युक्तम् कारणत्वप्रयुक्तविकाराश्रयत्वशङ्काव्युदासायाव्ययमित्यधिष्ठात्रन्तरशङ्काव्युदासायैकमिति कारण-त्वप्रयुक्तकार्यानन्यत्वं वक्तुमनन्यमित्युक्तमिति द्रष्टव्यं सच्छब्दापरपर्यायभावशब्देनोक्तार्थे वेदान्तानां प्रमापकत्वं सूचितम् ॥ ५ ॥ अथेति। अथ सत्तमो भगवानम्भस्याप्लुतः स्नातः वाससी परिधाय क्रियाकलापं चकारेति सम्बन्धः। कोसौ क्रियाकलापः ? इत्यतस्तं प्रपञ्चयति—सन्ध्येत्यादिना। सन्ध्योपगमादि क्रियाकलापमित्यर्थः। सन्ध्योपगमः सन्ध्योपासनम् आदिशब्दसङ्गृहीतानाह—हुतानल इत्यादिना। हुतः अनलः आहवनीयो येन सः वाग्यतः वाचं यच्छतीति तथा मौनीभूतेत्यर्थः। ब्रह्म गायत्रीम् ॥ ६ ॥ उपस्थायेत्यादिश्लोकत्रयमेकान्वयम् आत्मनः स्वस्य कलाः अंशभूतान् देवादींस्तर्पयित्वा वृद्धान् कुलवृद्धान् विप्रांश्चात्मवान् श्रद्धायुक्तस्सन्नभ्यर्च्य दिनेदिने अलङ्कृतेभ्यः विप्रेभ्यः क्षौमकृष्णाजिनतिलैः सह धेनूनां पद्मं पद्मं ददौ पद्मं पद्ममिति महासङ्ख्यायुक्तसङ्ख्याभिधानं कथम्भूतानां रुक्म स्वर्णालङ्कारः शृङ्गयोः यासां मौक्तिकानां स्रजो यासां बहुक्षीराणां गृष्टीनां प्रथमप्रसूतानां शोभनो वत्सो यासां शोभनं वासो यासां तासां रौप्यं रजतालङ्कारः खुराग्रेषु यासां तासाम् ॥ ७-९ ॥

### श्रीविजयध्वजतीर्थकृता पदरत्नावली

इतरवस्तुभ्य आत्मानं व्यावर्तयति—एकमिति। एकं मुख्यं स्वरूपभेदशून्यं वा आदित्यादिज्योतिभ्यः परं विलक्षणं "परं ज्योतिरुपं सम्पद्य" इति श्रुतेः। अनन्यम् अन्याधीनस्वभावरहितम् अन्यः स्वतन्त्रो यस्मात्स तथा तं वा अद्वयम् असदृशं स्वसंस्थया स्वव्यवस्थया स्वमहिम्ना स्वाकारेण वा नित्यनिरस्तदोषं किं तस्य नामधेयमत्राह—ब्रह्माख्यमिति। स्वलक्षणैः

स्वरूपलक्षणैः व्यावर्तकधर्मैः अस्य जगतः उद्भवनादिहेतुभिः सृष्ट्यादिहेतुभिर्लक्षिता भावनिर्वृतिः स्वरूपानन्दो यस्य स तथा तं "यदेष आकाश आनन्दो न स्यात्" इतिश्रुतेः ॥ ५ ॥ सन्ध्योपगमादि सन्ध्योपासनादिकं क्रियाकलापं चकार ब्रह्म जजाप नियतस्वाध्यायाध्ययनं कृतवान् गायत्रीं वा जप्तवान् ॥ ६ ॥ स आत्मनः कलाः स्वसन्निधानविशेषोपेतान् आत्मवान् स्वाधीनप्रयत्नः स्वाधीनमना वा ॥ ७ ॥ साध्वीनां पादबन्धनादिक्रियानपेक्षाणां गृष्टीनां प्रथमप्रसूतानाम् ॥ ८ ॥

### श्रीमज्जीवगोस्वामिकृतः बृहत्क्रमसन्दर्भः

तदेव स्पष्टयति—एकमित्यादि। एकं ध्येय ध्यातृभावेऽप्येकम्, स्वयं ज्योतिः स्वयमेवानन्दमयमेव ज्योतिः प्रकाशो यस्य इत्यादि सर्वमात्मानमित्युक्तस्य विशेषणम्। पुनः कीदृशम्? ब्रह्माख्यं ब्रह्मेति आख्यैव यस्य नतु निर्विशेषं ब्रह्मेत्यपि तं केचिदामनन्तीति भावः। अस्य विश्वस्योद्भव-नाशादि हेतुभिर्ब्रह्मादिभिः स्व-शक्तिर्लक्षिता, भावस्य बिलासादि-भावस्य निर्वृतिर्यस्य, तेषु न्यस्त-भावतया स्वस्थ विलासत्वात्, स्वसंस्थया स्वमर्यादया नित्यः शाश्वतो निरस्तकल्मषः क्षीणक्लेशश्च यस्मात्, स च स च तम्। आत्मशब्दोऽत्र विग्रहपरः। स्वमेव विग्रहं दध्यौ इति भावः। स्वविग्रहः स्वस्यापि ध्येय इत्यर्थः। उक्तञ्च—( भा० ३।२।१२ ) "विस्मापनं स्वस्य च" इत्यादि ॥ ५ ॥ अथेत्यादि। ब्राह्ममुहूर्तोत्थानादात्मध्यानानन्तरमम्भसिकासारादौ, न तूद्धृतेनाम्भसाप्लुतो ब्रह्म निजनाम जजाप। मनुष्यपदवीमनुवर्तमान इत्ययमयं प्रपञ्चः। एवं सन्ध्योपगमादावपि सच्चिदानन्दघनविग्रहस्य तस्यान्यविग्रहवन्मैत्र्यादिकर्म नास्त्येवेति दर्शयितुमाह्निकानुवर्णनम्। तत्र च ब्राह्ममुहूर्तोत्थानमारभ्य स्नानसन्ध्यादिवर्णनपर्यन्तम् तस्यानुक्तत्वात् ॥ ७-२६ ॥

### श्रीनाथचक्रवर्तिपादविरचिता चैतन्यमतमञ्जूषा

आत्मानमिति विवृणोति—एकमिति। ध्येय-ध्यातृत्वादिभेदरहितम्, ब्रह्माख्यं ब्रह्मणोऽपि आख्या प्रतिष्ठा यस्मात्, स्वशक्तिभिर्ब्रह्म-विष्णुमहेशरूपाभिरस्य विश्वस्योद्भव-नाशादिहेतुभिर्लक्षिता भाव-निर्वृतिः स्वानन्दो यस्य सृष्टेः प्रागन्तमध्यवर्त्तिनामित्यर्थः। स्वसंस्थया आत्ममर्यादया अविकारेणैव—( भा० २।९।३२ ), "अहमेवासमेवाग्रे" इत्युक्तेः। अतएव नित्यनिरस्तकल्मषं नित्यनिरस्ताविल्यमतः स्वयंज्योतिः। एवम्भूतात्मनः श्रीविग्रहं दध्यौ, अहो सौन्दर्यमस्येति चिन्तितवान्। उक्तञ्च—( भा० ३।२।१२ ) "विस्मापनं स्वस्य च सौभगर्द्धेः" इत्यादि ॥ ५ ॥ अथेत्यादि। ब्राह्ममुहूर्त्तोत्थानादात्मध्यानानन्तरमम्भसि कासारादौ न तूद्धृतजलेनाप्लुतो वाससी परिधाय सन्ध्योपगमादि क्रियाकलापं चकार। सन्ध्योपगमादि क्रियाविशेषणम् कलापस्य पुंस्त्वात्। सच्चिदानन्दमूर्त्तेर्नखत् मैत्र्यादिकर्म नास्त्येवेत्यादिकमनुवर्णयता दर्शितमिति भावः ॥ ७-२६ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

क्रियाकलापं चकारेत्यन्वयः। सन्ध्याया उपगम उपासनं तदादिषु सत्तमः परमकुशलः ब्रह्म गायत्रीम् ॥ ६ ॥ आत्मवान् धैर्ययुक्तः ॥ ७ ॥ गृष्टीनां प्रथमप्रसूतानां गवां दिनेदिने प्रतिदिनं बद्धं चतुरशीत्यधिकानि त्रयोदशसहस्राणि ददौ यदुक्तं "बद्धं चतुरशीत्यग्रसहस्राणि त्रयोदश" इति बद्धं बद्धम् एकमेकं बद्धमित्यर्थः ॥ ८-९ ॥

### गूढार्थदीपिनी

आत्मानं विशिनष्टि। एकमखण्डं ब्रह्माख्यमात्मानं दध्यौ इति पूर्वेणान्वयः। तस्य पञ्च विशेषणानि क्रमेण योज्यानि। तथाहि। अनन्यं निरुपाधिम्। अत एव अव्ययम्। ज्योतिष्ट्वे हेतुः। स्वरूपस्थितया नित्यनिवृत्तं कल्मषमविद्या यस्मात्। पुनश्च। अस्य विश्वस्य उद्भवादिषु हेतुभूताभिः स्वशक्तिभिः रज आद्याभिः लक्षितो भावः सत्ता निर्वृतिः आनन्दरूपता च यस्य तम् ॥ ५ ॥ अथ ध्यानानन्तरम्। सत्तमः धर्मनिष्ठो भगवान् अमले अम्भसि जले आप्लुतः स्नातः सन् वाससी च परिधाय सन्ध्योपासनादि क्रियाकलापं चकारेत्यन्वयः। पुनश्च। वाग्यतः मौनी सन् ब्रह्म गायत्रीं जजाप। उपगम उपासनम् ॥ ६ ॥ उपेति त्रयम् क्रियाकलापमाह—आत्मवान् भगवान् अर्कमुपस्थाप्य आत्मनः कलाः अंशान् देवादीन् तर्पयित्वा विप्रांश्च अभ्यर्च्य तेभ्यः धेनूनां बद्धं बद्धं क्षौमवस्त्रादिभिः सह प्रतिदिनं ददौ इति त्रयाणामेकान्वयः। रुक्मं सुवर्णम्। गृष्टीनां सकृत्प्रसूतानाम्। रुक्मं सुवर्णं शृङ्गयोः यासाम्। रूप्यं रजतं खुराग्रे यासाम्। आत्मा वेदः स विद्यते पाल्यतया यस्य स आत्मवान् शब्दार्थः ॥ ७-९ ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

प्रकृतिविलक्षणो जीवोपि ततो वैलक्षण्यमाह—एकमिति। निस्समानातिशयं कालादिभ्यो वैलक्षण्यमाह—स्वयञ्ज्योतिरिति। स्वप्रकाशमित्यर्थः। स्वाश्रयत्वमाह—अनन्यं स्वाश्रयम् निर्विकारस्वरूपत्वमाह—अव्ययमिति। स्वभावतोपास्तसमस्तदोषत्वमाह—स्वसंस्थया स्वभावेन निरस्तकल्मषमिति निरतिशयबृहत्त्वं सर्वशक्त्याश्रयत्वं विश्वहेतुत्वञ्च वदन् सत्यत्वादिगुणवत्त्वमाह—अस्य विश्वस्योद्भवादिहेतुभिः प्रकृतिकालादिभिः लक्षितः अनन्तगुणशक्त्याद्याश्रयत्वेन द्योतितो भावः सत्ता

लक्षणश्चासौ निर्वृतिरानन्दश्च स तथा तम् सदानन्दमित्यर्थः ॥ ५ ॥ आप्लुतः स्नातः सन्ध्या उपासनम् आदिर्येषां तेषु सत्तमः क्रियाकलापं चकार ब्रह्म गायत्रीम् ॥ ६ ॥ कलाः अंशानपि लोकसङ्ग्रहार्थं देवादीन् तर्पयित्वा गृष्टीनां प्रथमं प्रसूतानां दिनेदिने प्रतिदिनं प्रतिगृहृश्च बद्धम् एकमेकं बद्धम् अलङ्कृतेभ्यः तपोव्रताद्यलङ्कारयुक्तेभ्यो ददौ चतुरशीत्यधिकानि त्रयोदशसहस्राणाम् एकं बद्धम् ॥ ७-९ ॥

## श्रीसत्यधर्मकृता भागवतटिप्पणी

इतरविलक्षण आत्मा स इति निर्धारयितुं तल्लक्षणानि स्वरूपभूतान्याह । एकमिति । एकं मुख्यं गुणकर्मभिरभिन्नं वा । परंज्योतिः परमित्यव्ययं ज्योतिर्भ्यः सूर्यादिप्रकाशकार्थेभ्यः परमिति परञ्ज्योतिश्च । स्वानन्यश्चेति पदमेकम् । आत्मपदान्वयनाय रूपादिपदाध्याहारबलेशासाधकत्वात् । परञ्ज्योतिरुपसम्पद्येत्यादेः । स्वानधीनवस्तुहीनत्वान्न विद्यतेऽन्यः स्वानधीनो यस्येति विग्रहः । अद्वयं समाधिकरहितम् । तन्त्रभागवतवचनमाचार्यैः श्रुतिगीताव्याख्यावसरे वक्ष्यमाणम् । स्वरूपमस्मरत्कृष्ण एकं स्वस्मिन्नभेदतः । अत्र तन्त्रस्य राहित्यादनन्यं सदृशोज्झितेः । अद्वयं नित्यनिवृत्त्यभावनिवृत्तमीश्वरमित्यनुसन्धेयम् । स्वसंस्थया स्वरूपस्थित्या नित्यं निरस्ताः कल्मषा येन तम् । ब्रह्मेत्याख्या यस्य स तम् । अस्य जगत उद्भवनमुत्पत्तिस्तदेवादिर्यस्य जन्माद्यष्टकस्य हेतुभिः स्वलक्षणैः स्वरूपधर्मैर्लक्षितभावो निर्वृत्तिश्च भावो ज्ञानं निर्वृतिरानन्दश्च ते यस्य स तम् । अत्रात्मेति विशेष्यमिति भावनिर्वृतीति काचित्कः पाठो नादरणीयः । अत एव यत्तत्परञ्ज्योतिरिति पाठो लेखकहस्ते व्यत्यस्थित इति ज्ञेयम् । मान एकं स्वस्मिन्नभेद इति विवृतेः । तथोक्तं सुधापरिमले पूर्वश्लोकोक्तात्मविशेषत्वाद्भावनिर्वृतमित्युक्तम् । ज्योतिरित्यस्यापि ज्योती रूपमित्यर्थः । अत एवानन्यमिति साधु । अत एवानन्यदिति स्यादिति । जन्मादिकारणत्वादिकं स्वरूपलक्षणं न तटस्थमित्यत्र तदेतदनुपपन्नमित्यारभ्य तस्मात्सूत्रकारस्यैवायमभिप्रायो यज्जन्मादिकारणत्वं ब्रह्मणः स्वरूपान्तर्गतमेव लक्षणमिति । तथा च तदीयविस्पष्टवाक्यान्तरबलादस्यापि सूत्रस्य स्वरूपलक्षणपरत्वमेवेत्यन्तग्रन्थसुधाऽनुसन्धेया ॥५॥ अथ मन्त्रस्नानानुष्ठेयध्यानानन्तरममलेऽम्भस्याप्लुतः । अनेन तदनुद्धृता ध्वन्यते । यथाविधीति यथायथमन्वेति । क्रियाकलापं जले क्रियमाणक्रियासङ्घम् । कलापः संहतौ बर्हे तूणीरे भूषणे हर इति विश्वः । चकार । अथ वाससी पीते वस्त्रे परिधाय वसित्वा सन्ध्योपगमस्तदुपस्थापनमादिर्यस्य तत्कर्म चकार । सन्ध्योपगमादीति क्रियाकलापपदेनान्वयनपक्षे वाससी परिधायेत्यादितो निधायान्वेतव्यम् । कलापशब्दः पुलिङ्गतया विभक्तिकतया निर्देशः । सन्ध्यापगमादीति स्वीकृत्य चान्वयो वा । सन्ध्योपगम आदिर्यस्मिन्कर्मणि तद्यथा भवति तथा चकारेति क्रियाविशेषणत्वेनान्वयो ज्ञेयः । सन्ध्योपगम आदावादिर्येषां ते च ते सन्तश्च तच्छ्रेष्ठ इति पदमेकं वा । हुतोऽनलोऽग्निर्येन स सन्वाग्यतो यतवाक् ब्रह्म स्वाभिन्नं हरिं वा गायत्रीं वा जजाप । नियतस्वाध्यायाध्यनं कृतवानिति वा । ननूत्तरत्रोपस्थायार्कमुद्यन्तमिति श्रवणादयमनुदितहोम इति ज्ञायते स च न युक्तः । बह्वृचब्राह्मणे पञ्चमपञ्चकपञ्चमाध्याय एकोनविंशतिखण्डमारभ्यैकविंशतिखण्डपर्यन्तामिति त्रिखण्डया तस्य दोषानाविष्कृत्य फलविलम्बस्य चाभिधानात् । तथा हि । वृषवृष्मो ह वा ताव त उवाच जातकर्ण्यो वक्तास्मो वा इदं देवेभ्यो यद्वैतदग्निहोत्रमुभयेद्युरहूयतान्येद्युर्वाव तदेतर्हि हूयत इत्येतदुहैनोवाच कुमारी गन्धर्वगृहीता वक्तास्मो वा इदं पितृभ्यो यद्वैतदग्निहोत्रमुभयेद्युरहूयतान्येद्युर्वाव तर्हि हूयत इत्येतद्वाऽग्निहोत्रमन्येद्युर्हूयते यदस्तमिते सायं जुहोत्यनुदिते प्रातरथैतदग्निहोत्रमुभयेद्युर्हूयते यदस्तमिते सायं जुहोत्युदिते प्रातस्तस्मादुदिते होतव्यं चतुर्विंशो हवै संवत्सरेऽनुदितहोमी गायत्री लोकमाप्नोति द्वादश उदितहोमी स यदा द्वौ संवत्सरावनुदिते जुहोत्यथ हास्यैको हुतो भवत्यथ य उदिते जुहोति संवत्सरेणैव संवत्सरमाप्नोति । य एवं विद्वानुदिते जुहोति तस्मादुदिते होतव्यमेव हवा अहोरात्रयोस्तेजसि जुहोति योऽस्तमिते सायं जुहोत्युदिते प्रातरग्निना वै तेजसा रात्रिस्तेजस्वत्यादित्येन तेजसाहस्तेजस्वदहोरात्रयोर्हास्य तेजसि हुतं भवति । य एवं विद्वानुदिते जुहोति तस्मादुदिते होतव्यम् ॥ १९ ॥ एवै हवै संवत्सरस्य चक्रे यदहोरात्रे ताभ्यामेव तत्संवत्सरमिति स योऽनुदिते जुहोति यथैकतश्चक्रेण यायात्तादृक्तदथ य उदिते जुहोति यथोभयतश्चक्रेण यायात्क्षिप्रमध्वानं समश्नुवीत तादृक्तदेषाभियज्ञगाथा गीयते । बृहद्रथान्तराभ्यामिदमेति युक्तं यद्भूतं भविष्यच्चापि सर्वं ताभ्यामियादग्निनाधाय धीरो दिवैतान्यज्जुहुयान्यक्तमन्यदिति राथन्तरी वै राध्यहर्याहंतमग्निर्वै रथन्तरमादित्यो बृहदेते हवा एनं देवते ब्रध्नस्य विष्टपं स्वर्गं लोकं गमयतो य एवं विद्वानुदिते जुहोति तस्मादुदिते होतव्यं तदेषाभियज्ञगाथा गीयते । यथा हवा स्थूरिणैकेन यायादकृत्वाऽन्यदुपयोजनाय एवं यान्ति ते बहवो जनासः पुरोदयाज्जुह्वति येऽग्निहोत्रमिति तां वा एतां देवतां प्रयन्तीं सर्वमिदमनुप्रैति यदिदं किञ्चैतस्यै हीदं देवताया अनुचरत्सर्वं यदिदं किञ्च सैषा अनुचरवती देवता विन्दते हवा अनुचरं भवत्यस्यानुचरो य एवं वेद स वा एष एकातिथिः । स एष जुह्वत्सु वसति तद्यददो गाथा भवत्यनेन समेनसासोभिशस्तादेनस्वतो वापहरादेन एकातिथिमपसायं रुणद्धि विसानिस्तेनो अपसो जहारेत्येष हवै सकातिथिः स एष जुह्वत्सु वसत्येतां वाव स देवतामपरुणद्धि यो तमग्निहोत्राय सन्नाग्निहोत्रं जुहोति तमेषा देवतापरुद्धापरुणद्धस्माच्च लोकादमुष्माच्चोभाभ्यां योलमग्निहोत्राय सन्नाग्निहोत्रं जुहोति तस्माद्योलमग्निहोत्राय स्याज्जुहुयात्तस्मादाहुर्नं सायमतिथिरपरुद्ध इत्येतद्ध स्म वैतद्विद्वान्नगरीजानश्रुते य उदितहोमिनमैकादशाक्षं मानुतन्तव्यमुवाच । प्रजायामेनं विज्ञातास्मो

यदि विद्वान्वा जुहोत्यविद्वान्वेति तस्यो देकादशाक्षे राष्ट्रमिव प्रजा बभूव राष्ट्रमिव हवा अस्य प्रजा भवति एवं विद्वानुदिते जुहोति तस्मादुदिते होतव्यम् ॥ २० ॥ उद्यन्नु खलु वा आदित्य आहवनीयेन रश्मोन्सन्दधाति । स योऽनुदिते जुहोति यथा कुमाराय वा वत्साय वा जाताय स्तनं प्रतिदध्यात्तादृक्तदथ य उदिते जुहोति यथा कुमाराय वा वत्साय वा जाताय स्तनं प्रतिदध्यात्तादृक्तत्तमस्मै प्रतिधोयमानमुभयोर्लोकयोरन्नाद्यमनुप्रतिधीयतेऽस्माच्च लोकादमुष्माच्चोभाभ्यां स यं ऽनुदिते जुहोति यथा पुरुषाय वा हस्तिने वा प्रयते हस्त आदध्यात्तादृक्तदथ य उदिते जुहोति यथा पुरुषाय वा हस्तिने वा प्रयते हस्त आदध्यात्तादृक्तत्तमेव एतेनैव हस्तेनोर्ध्वं हृत्वा स्वर्गे लोक आदधाति य एवं विद्वानुदिते जुहोति तस्मादुदिते होतव्यमुद्यन्नु खलु वा आदित्यः सर्वाणि भूतानि प्रणयति तस्मादेनं प्राण इत्याचक्षते प्राणो ह्यस्य सम्प्रति हुतं भवति य एवं विद्वानुदिते जुहोति तस्मादुदिते होतव्यमेष हवै सत्यं वदन्सत्ये जुहोति योऽस्तमिते सायं जुहोत्युदिते प्रातर्भूर्भुवः स्वरो३मग्निर्ज्योतिर्ज्योतिरग्निरिति सायं जुहोति भूर्भुवः स्वरो३सूर्यो ज्योतिर्ज्योतिः सूर्य इति प्रातः सत्यं ह्यस्य वदतः सत्ये हुतं भवति य एवं विद्वानुदिते जुहोति तस्मादुदिते होतव्यम् । तदेषाभियज्ञगाथा गोयते । प्रातः प्रातरनृतं ते वदन्ति पुरोक्ष्याज्जुह्वति येऽग्निहोत्रं । दिवा कोर्त्यममदिव्रा कोर्तयता सूर्यो ज्योतिर्न तदा ज्योतिरेषामिति ॥ २१ ॥ खण्डत्रिकार्थः सङ्गृह्य कथ्यते मन्दसंविदे । वतावत्यस्यापत्यं वृषशुष्मो वृषस्य शुष्मो बलं यस्य स जातूकर्ण्यस्य पौत्रो जातूकर्ण्योऽग्निहोत्रिणामयने कदाचित्प्रसङ्गादिदमुवाच । हे अग्निहोत्रिणो भवदोयमिदमाचरण देवेभ्यो वयं वक्ताः स्म । अस्मदो द्वयोश्चेत्युक्तेर्वयमित्युक्तम् । किं तदित्यत आह ॥ एतदग्निहोत्रमित्यादिना । एतदग्निहोत्रं महर्षिभिरुभयेद्युरहूयत दिनद्वयेन हुतमासीत् । पूर्वदिनस्य रात्रावग्निमुद्दिश्य परदिनप्रातः सूर्यमुद्दिश्य च होम इत्येवं दिनद्विकाधानं कृतम् । कृतं च तदुल्लङ्घ्य मानवैरिदानोमन्येद्युरस्तमयादूर्ध्वमग्नये स्वाहेति पुनरपि सूर्योदयात्प्रागेव सूर्याय स्वाहेति होमः सूर्यायेत्येकस्यामेव रात्रौ होमद्वयमनुचितं क्रियत इति देवाग्रे कथयिष्यामि । बह्वृचवाक्यमत्र कुमारोवाक्यं चोदाहरति ॥ एतदुहै वोवाचेति । काचन कुमारी गन्धर्वगृहीता केनचिद्गृहस्वामिना गन्धर्वेण गृहीता सती यक्षविशेषाविष्टा गन्धर्वगृहीतेति वा । इतरसामान्यकामिन्या वेदानधिकारात् प्रसङ्गादेतदेव । शिष्टं प्राग्वत् । पितृभ्य इति प्रोक्तविशेषः । तस्मादुदिते होतव्यमित्यन्तं स्फुटार्थम् । एवमेकस्मिन्दिन एव होमिनां निन्दां विधाय प्रकारान्तरणोदिते होमं प्रशंसति । चतुर्विश इति । अनुदितो होमोऽस्तोति सः । चतुर्विंशे तत्सङ्ख्यापूरके संवत्सरे सोऽनुदितहोमेऽतीते गायत्रीलोकं तत्प्रवर्तकदेवताया लोकं प्राप्नोति । तावत्संवत्सरैस्तत्साधननिष्पत्तेः । उदितहोमो तु द्वादशे संवत्सरेऽतीते गायत्रीलोकमाप्नोति । उभयत्र युक्ति वक्ति ॥ स यदेति । सोऽनुदितहोमो यदा द्वौ संवत्सरावनुदिते जुहोति । अथास्यैकं हुतो हुतं भवतीति संवत्सरचतुर्विंशकेति सम्पद्यते द्वयोरेकः संवत्सरस्तस्मिन्गते फललाभः । यश्चोदिते जुहोति स संवत्सरेणेकेनैव संवत्सरमाप्नोति । य एवमुदिते जुहोति स विद्वान्संवत्सरसंवत्सरोकरणेन तत्फलभाक्त्वात् । निगमयति ॥ तस्मादुदिते होतव्यमिति । प्रकारान्तरेण तं स्तोति ॥ एष हवेति । एष उदितहोमो अहोरात्रयोस्तेजसि जुहोति । तदुपपादयति ॥ य इति । योऽस्तमितरवौ सायं जुहोति यश्च प्रातरुदिते जुहोति तस्य रात्रिरग्निना तदभिन्नेन तेजसा तेजस्वती भवति । तदहश्चादित्येन तेजसा तेजस्वो तु भवत्यतोऽहोरात्रयोरस्योदितहोमिनस्तेजस्येव हुतं भवति । शिष्टं स्पष्टम् ॥ २९ ॥ सदृष्टान्तं तदेव स्पष्टयति ॥ एत इति । ये अहोरात्रे विद्येते ते संवत्सरस्य रथरूपस्य चक्रे ताभ्यां चक्राभ्यामेव स उदितहोमी तत्संवत्सरं स चासौ संवत्सरश्च तमेति । योऽनुदिते जुहोति स यथा एकत एकेन चक्रेण यायात्कश्चित्तादृक् । एकेन चक्रेणैकपार्श्वगेन सहितो रथो यथा मत्परं गच्छति तथाऽयं विलम्बेन फलमाप्नोति । अत्र रथमेकचक्रमित्युक्तसूर्यरथव्यतिरिक्तो रथो ग्राह्य इति प्रायेण तथात्वमित्यभिप्रायाच्च न व्याप्त्यनाप्तिः । यथोक्तं ऋग्भाष्यटोकाटिप्पणोषु । चक्रं रथस्य ये ममन्युः । एकं चक्रं गिरेर्मूर्ध्नि अन्यदपरं च चक्रं चक्रस्थानीयाक्षप्रदेशः । सप्त युञ्जन्ति रथमेकचक्रमिति श्रुतौ सौररथस्यापरचक्राभावात् । अपरं चक्रमित्यस्याभिप्रेतार्थमाह ॥ चक्रस्थानीयमिति । यद्वक्ष्यति । बृहद्रथन्तराभ्यामित्यादेः । य उदिते जुहोति यथोभयतश्चक्रेणोभाभ्यां यान्पुमानक्षिप्रमध्वानं गन्तव्यं मार्गमश्नुवीत । तदुदितहोमकर्म तादृक् चक्रद्वन्द्वसहितरथगमनवत् । गाथाकथनेनोक्तं दृढयति ॥ तदिति । तत्तस्मिन्कालद्वयहोमविषये । अभि सर्वेरपि यज्ञगाथा गोयते । तां चोदाहरति ॥ बृहद्रथान्तराभ्यामिति । यद्भूतमतीतं भविष्यद्भावि चाद्वर्तमानमपि सर्वं जगद्बृहद्रथान्तराभ्यां युक्तं याति । ताभ्यां बृहद्रथान्तराभ्यामियात् । सोमयागं नित्याहुतिरूपं वेयादनुष्ठेत् । एवमग्नीनाधाय धीरो वक्ष्यमाणबुद्धिरतो दिवान्यत्सूर्यदेवकं नक्तं रात्रावन्यदग्निदेवकं होमं जुहुयाद्द्यात् । इतिशब्दो गाथासमाप्त्यर्थः । बृहद्रथान्तरशब्दार्थं ब्राह्मणं स्वयमेवाह । तत्र श्लोके बृहद्रथन्तरेत्युक्तिः क्रमो रथन्तरी वै रात्रिरिति व्युत्क्रमेण व्याख्याने धरणमुभयोरप्यावश्यकतासाम्यव्युत्पादनायेति ज्ञेयम् । रथन्तरी रात्रिर्वै प्रसिद्धा । अहः बृहत इदं बार्हतम् । तद्देवते आह ॥ अग्निरिति । रथन्तरदेवताऽग्निबृहदादित्य एते द्वे देवते एनमुदितहोमिनं ब्रध्नस्यादित्यस्य विष्टपं स्थानं स्वर्गलोकं गमयतः । अतो य एवमिति पूर्ववत् । प्रशस्योदितहोममेतदवश्यानुष्ठेयतायै निन्दाऽनुदितहोमस्यावश्यकीति तत्प्रतिपादिकां गाथां प्रतिज्ञायोदाहरति ॥ तदिति । स्फुटम् ॥ यथेति । यथा लोके कश्चिन्मन्दमतिरेकेनाऽस्थूरिरिति रथाश्वस्तेनैकेन । केचिदस्थूरिरिति वाजीति व्याचक्रुः । तन्न । अस्थूरित्वा गार्हपत्योपनिषदि पुरुषसम्मितो वा एष यज्ञोऽस्थूरिः सर्वं ह्यस्थूरिणाभ्यश्नुत इत्यादिनिरवकाशज्ञापकात् । एकपार्श्ववर्तिना

रथे योजितेनान्यदन्यमश्वमप्रयोजनाय योजयितुमकृत्वा स्वान्तरमसंयोज्य यायात् । उपयोजनाय उप समीपे । तत्किमात्मकं सामीप्यमित्यत आह ॥ योजनायेति । एकायोजनव्यवहितं स्थानं यायादिति काकुः । इत्यावृत्त्याऽन्वयः । एवं बहवो जनास्‌। आज्जसेरसुगिति असुक् । जना य उदयात्पुराग्निहोत्रं जुह्वति त एवं यन्तीत्यविवेकिन इत्यर्थः । उदितहोम माहात्म्योपयोगि-वृहदिति प्रसक्तादित्यमाहात्म्यमाह ॥ तामित्यादिना । यत्किञ्चेदं सर्वचराचरं तामेवादित्यनाम्नीं देवतां प्रयतीमदयास्तमयो-यन्ती । अनु पश्चात्प्रेति प्रवर्तते । तथा च शाखान्तरे पठ्यते । योऽसौ तपन्नुदेति स सर्वेषां प्राणानादायोदेति । अथो योऽस्तमेति सर्वेषां प्राणानादायास्तमेतीति । सवितरि सत्युदिते चेष्टते न चेष्टते चास्तं गते लोक इति । एतस्या देवतायाः सर्वमनुचरं भृत्यरूपं सैषा पूषाख्या देवताऽनुचरवत्येतदात्मकभृत्ययुक्ता । एतज्ज्ञानं फललाभेन स्तौति । एवं यः सर्वमनुचरं रवेर्वेदास्य वेदितुरनुचरो यथायोग्यं भृत्यवर्गो भवतीति । पुनः प्रकारान्तरेणादित्यदेवतास्तवनपूर्वकमुदितहोमं विधत्ते ॥ एष इति । स एष आदित्य एकातिथिः एकश्चासावतिथिश्च । अकः अतिथिरिति वक्तव्य एकातिथिरिति वदन्वेदपुरुषः शाखोदितोदितहोमा-भावे पूर्वोक्तरीत्यैकातिथिरेव भवतीत्यर्थमपि सूचयामासेत्यवधेयम् । स एष जुह्वत्स्वग्निहोत्रिष वसति प्रातरागत्य तिष्ठति । काञ्चिद्गाथामस्मिन्नेवार्थे कथयति ॥ तददो गाथा भवतीति । तदादित्यैकातिथित्वविषये । अदोगाथेति पदमेकम् । असौ चासौ गाथा चेति विग्रहः । भवति वर्तते । का सेत्यतस्तामुदाहरति ॥ अनेनसमिति । पुरा चारब्धे सप्तर्षिसंवादे कश्चित्पुमान् विसस्तै-न्यात्मकमपवादं प्राप्तमृषीणामग्रे परिहर्तुं स्वयं शपथं चकारेति तच्छपथोक्तिरूपिणी चेयं गाथेति माधवः । वस्तुतस्तु परस्परं मुनीनां साऽरुन्धती पशुसखश्च सखानामेव शपथः । यथोक्तमानुशासनिके मोक्षधर्मे । केन क्षुधापरीतानामस्माकं पापकर्मणि । नृशंसेनापनीतानि विसान्याहारकाङ्क्षिणाम् । ते शङ्कमानास्त्वन्योन्यं प्रपच्छुर्द्विजसत्तमाः । त उचुः शपथं सर्वे कुर्म इत्यरि-कर्शन । त उक्त्वा बाढमित्येवं सर्व एव तदासनम् । क्षुधार्ताः सुपरिश्रान्ताः शपथायोपचक्रमुः । अत्रिः स गां स्पृशतु पादेनेत्या-रभ्य देवतेष्वनमस्कारो विसस्तैन्यं करोति य इत्यन्तेन । न चेयं गाथाऽन्यविषयेति न वस्ततस्त्विति वचनं सम्भवतीति वाच्यम् । पुरा चारब्धे सप्तर्षिसंवाद इत्येतद्विषयताज्ञापकचिन्हस्यापन्होतुमशक्यत्वात् । अतः कश्चित्पुमानित्यंशशंसनं कथाव्य-त्यस्तेति मन्तव्यम् । योपसः कर्मणो विसा निजहारकमलमूलान्यपाहर्षीत् स स्तेन इत्येतत्पापं यायात् । किं तदित्यत आह ॥ अनेनसमिति । योऽनेनसमपापं किञ्चिदेनसा केनचित्पातकेनाभिशस्तात् संयोज्य मतन्त्यं कुर्यात । तत्पापं विसस्तैनो यायात् । कश्चिदेनस्वतः स्वतः पापवतो यदेनोऽपाहरत् स्वयं तत्पातकनिपाताय स्वकृतगङ्गाश्रीगममेत्वादिस्नानादिसकृतं तस्मा अर्पयति कृष्णार्पणपूर्वकं गृहीत्वा वित्तं तस्य यः प्रत्यवायस्तं सायं सायङ्काले प्राप्तमेकातिथिं देशान्तरादसमये निरन्नं चैकमतिथिं अ ईषत । गुणश्छान्दसो वा । अर्यरुणत् अपारुणत् । नान्नं गच्छेत्युपरुरोध । तेन निःसारणरुपोपरोधे नेय इत्यादि यथापूर्वम् । अपसोऽज-हारेत्यत्र सोऽजहारेत्यन्वयो वा । विसानिनाऽपहृतानि चेदित्थं पापपरम्परा ममागच्छन्त्विति शपथं चकारेति । प्रस्तुते किमाया-तमित्यतः सङ्गतिमावेदयति वेदपुरुषः ॥ एष हवा इति । एष एकातिथिः । स क इत्यत आह ॥ स इति । जुह्वत्स्वग्निहोत्रिष होमं मदुदयानन्तरं मह्यं दधुरयेत इति वसति । स एतां देवतामेकमतिथिमिवापरुणन्निरुरोध । न तस्य सामर्थ्यं स किं कुर्यादि-त्यत आह ॥ य इति । यश्चाग्निहोत्राय तदुदयानन्तरं होमायालं समर्थः सन्नप्यग्निहोत्रं न जुह्वति तं पुरुषमेषा देवता स्वयमेव मयि रुद्धा सती अस्माल्लोकात्तथामुष्मात्परस्ताच्च लोकादित्युभाभ्यामपारुणदुभयभ्रष्टं रुष्टा करोति । दार्ढ्याय पुनः सम्पुटीं तनोति ॥ योऽलमिति । योऽग्निहोत्रायोक्तरूपायालं स्यात्स जुहुयात्तस्माद्धोमात्सायमनेनातिथिर्भक्तभक्तो यथा नोपरुद्धस्तथैवं देवताप्रातरायाता नोपरुद्धेत्याहुः । अनेनैतद्विषये बहुसम्मतिरुक्ता वेदितव्या । एतद्विद्वान् जानश्रुतिस्तस्य पुत्रो राजजात इति नगरी गामवासी । यद्वा जानश्रुतिः काचिद्राजपुत्री सा च कस्यविदृषेर्भार्या तस्यां जातो जानश्रुतेयः ऋषिर्नगरी मातू रात्रपुत्री-त्वान्नगरवासी । उदितहोमिनं कञ्चनैकादशाक्षं तन्नामकराजपौत्रम् । तत्पितृनामाप्याह ॥ मानुनन्तव्यमिति । न च विनिगमना-विरहः । प्रथमप्राप्तेरेव तथात्वात् । मनुतन्तव्यापत्यमुद्दिश्योवाच । मनस्येव मा लुलोच । कि तदित्यत आह ॥ यदि विद्वानिति । यद्ययं विद्वान् जुहोति । अथवा विद्वानिति प्रजायां विद्वान् जुहोति चेत्प्रजाभिवृद्धा भवतीत्येनं तद्विषये विज्ञाताः स्मः । ज्ञास्यामः । विद्वत्वाविद्वत्वविषये नः संशयोऽस्त्यतो विज्ञास्यामः । कार्येण कारणानुमानमिति तदाह ॥ तस्येति । एकादशाक्षैः । बाह्यादी-यन्त इतीकारान्तस्तस्य राष्ट्रमिव व्याप्ता प्रजा बभूव । एतदन्यथाऽनुपपत्त्या चायं विद्वानिति जानीमः । निगमयन्नुपसंहरति । य एवं विद्वानुदिते जुहोति तस्य प्रजा भवति । तस्मादुदिते होतव्यम् । अग्निसूर्यात्मकातिथिद्वयभोजनमेवं होमे भवतीत्युदिते होतव्यमिति ॥ ३० ॥ प्रकारान्तरेणानुदितहोमोदितहोमनिन्दानिन्दे अभिनयेन दर्शयति ॥ उद्यन्निति । स्वयमादित्य उद्यन्नेवो-द्गच्छन्नेवाहवनीयेन तन्नाम्नाऽग्निना सह रश्मीन्स्वान्सन्दधाति संयं जयति । खलु वाक्यालङ्कारे । नु निश्चयेन । खलु स्याद्वा-क्यभूषायां नु निश्चय इति विश्वः । स योऽधिकारी अनुदिते जुहोति स खलु निषेध्यो मूढ इति यावत् । तत्र दृष्टान्तः । अजाताय कुमाराय गर्भगाय स्तनम् । तथा जाताय वत्साय योषिद्गौश्च प्रतिदध्यात्पातुं समर्पयेत्तत्सोऽनुदितहोमस्तादृगात । अथ यश्चोदिते जुहोति कुमाराय वत्साय वा जाताय यथा स्तनं प्रतिदध्यात्तत्तादृगस्मै प्रतिधीयमानमुभयोर्लोकयोरन्नाद्यमत्रान्नं परत्र सुखमनु प्रतिनिधीयते । उभयोर्लोकयोरिति स्वयं विवृणोति । अस्मादमुष्मादित्युभाभ्यामस्मिन्नमुष्मिन्नित्युभयोरित्यर्थः । पुनरप्यनन्दन-

मभिनन्दनं चानुदितोदितहोमयोः स दृष्टान्तमाचष्टे ॥ स इति । अनुदितहोमो पुरुषाय हस्तिन इति तयोरप्रयतेऽप्रसारिते करे आदध्यादन्नम् । तद्यथा तथा तादृगय होमः । य ध्रोदिते जुहोति पुरुषाय वा हस्तिने वा तयोः प्रयते प्रसारिते हस्ते आदध्यात्-तादृक् तमेतं हविःप्रदमेष आदित्यः । एतेन हविर्ग्रहणार्णं प्रसारितेन करेणोर्ध्वं हृत्वा स्वर्गे लोके आदधाति । शिष्टं स्पष्टम् । उदितं होमं प्रशस्य सत्ये चायं होम इत्युक्तत्रोपसंहरति ॥ उद्यन्निति । उद्यन्नेवादित्यः सर्वाणि भूतानि प्रणयति चेष्टयति । प्रणयतीति प्राण इति व्युत्पत्त्या तन्नामायमाहुरित्याह ॥ तस्मादिति । एनमितमस्योदितहोतुः । प्राणे सम्प्रति हुतं साक्षाद्दत्तं-विन्यस्तमिति दत्तं वा हुतं वा भवत्यतो य एषः सत्यं वदन्निति सत्ये जुहोति । योऽस्तमिते सायं जुहोत्युदिते च प्रातर्जुहोत्येष पुमान्सत्ये जुहोति सायमग्नेः प्रातः सूर्यस्य सत्त्वान्मन्त्रोऽर्थवाञ्जात इति सत्ये होता भवतीति भावः । मन्त्रौ तावाह ॥ भूर्भवः स्वरोमिति । सायन्तनो मन्त्रो भूरादयो लोकास्तदभिमानिनो देवा ओमिममाहुतिमोङ्कुर्वन्तु स्वीकुर्वन्तु । ज्योतिरितरत्सोऽग्नि-र्देव एव । एवमेव सूर्यो ज्योतिः सूर्य इति प्रातर्मन्त्रः । इतरः प्रकाशात्मने रवये स्वाहुतमिदमस्तु । इति सत्यमुभयोः सत्ता तदेति सत्यं वदतोऽस्य होतुः । पूर्ववद्दुर्वरितम् । अनुदितहोमिनोऽनृतवादिन इति तन्निन्दनमिषेण भूषयन्तीमदितहोमं न हि निन्दानयेन काञ्चिद्गाथां प्रतिश्रुत्य वक्ति ॥ तदेषेति । ये उदयात्पुराऽग्निहोत्रं प्रातः प्रातरिति प्रारिप्सया कादाचित्कं नानुदिते सूर्ये उपांश्वन्तर्यामौ जुहुयाद्यदि त्वरेतानुदित उपांशुं जुहुयादुदितेऽन्तर्यामं उभावनुदिते होतव्याविन्येक इति सौमपञ्चकीय-महाराजप्रश्नोक्तं उपांश्वन्तर्यामहोमादिबह्वृचाचीनां व्यावर्तयन्ति । तेऽनृतं वदन्ति । सवितुरभावात्तदेत्याह । दिवाकीर्त्य-मदिवा सवितुरनाविर्भावसमये कीर्तयन्तोऽसूर्यो ज्योतिः सूर्य इति कीर्तयन्तो येषां तदा सूर्यो न ज्योतिर्ज्योतिर्नेत्यनृतहोमिनस्त-दुदिते होतव्यम् । अनेनानेनसां नाथः कुरुतात्करुणां गुरुः ॥ इमावेव श्लोकावुदाहृत्य सदाचारस्मतिव्याकृतावानुदिनहोमिनो माध्यन्दिना अत एव वाजसनेयं ब्राह्मण उदितहोमिनां विच्छिन्नमग्निहोत्रं मन्यामहे इत्युदितहोमनिन्दापूर्वकमनुदितहोमः समर्थित इति व्याख्यातवन्त आस्माकीना अनेके । परव्याख्याने श्रीधरीये च काण्वत्वादनुदितहोम इत्युक्तेरुदाहृतखण्डत्रिके खण्डमण्डनादनुदितहोमस्येति कथं निर्णय इति चेन्न । सर्ववर्णाः सर्वाश्रमाः सर्वधर्माः । यदा चानियता देवा विधिश्च स्वेच्छानि-यतस्तदा लोकमनुकुर्वतो हरेर्न वयमनुदितहोममात्रेण तत्त्वतस्तत्त्वमवधारयितुं धीराः किन्तु पूर्णस्य न लभ्यं फलमिति यथायथं होमसम्भवात् । अन्यथा यावदानुबन्धिनोऽसङ्ख्यास्तेषामेतदन्यतरत्वं कल्पनीयम् । अथवाऽऽश्वलादीनां कात्यायनादीनामनु-बन्धो वा कल्पनीय इति बहुकल्पनीयं स्यात् । अत एवद्वितकालानले द्वितीयज्वालायामनुदित उदिते वाह्याहुतेर्निदितत्वात्समय-पुरुषभेदात्तद्व्यवस्थाऽतिसुस्थेत्युक्त्वा त एकोदितानुदितहोमनिन्दाबलादुभयहोमयोः प्रयोगभेदेन वा शाखाविशेषाध्येतृपुरुष-भेदेन वा व्यवस्था युक्तेति निष्कर्षो दुष्कर इति साम्मग्ध्येनाभ्यदधुः । व्युत्क्रमेण वाऽन्वय इति न शङ्काशक इति दिक् । सोमे स्वमूले लसति तत्काले होमदाने तत्तोषस्तत्सन्निधाने जाम्बवत्प्रदर्शिततद्वंश्यरामाकारस्य तत्सम्माननं चावश्यकमित्येव देवश्च-कारेति केचिदुत्प्रेक्षयन्ति ॥ ६ ॥ उद्यन्तमर्कमुपस्थाय तदुपस्थानं विधायात्मनः कलाः सन्निधानविशेषसहितान्देवर्षीदींस्तर्पयि-त्वाऽऽत्मवान्यतचित्तोऽभ्यर्च्य पूजयित्वा ॥७॥ गृष्टीनामेकवारं प्रसूता गौर्गृष्टिरित्यभिधीयत इत्युक्तेः सकृत्प्रसूतानां धेनूनाम् ॥८॥

## श्रीमद्वल्लभाचार्यकृता सुबोधिनी

सर्वस्यैवात्मत्वात् सर्वोपासकानामात्मोपासकत्वमाशङ्क्य केवलमात्मोपासकत्वसिद्ध्यर्थं आत्मानं विशिनष्टि एकमिति । तदात्मस्वरूपं षड्गुणैश्वर्ययुक्तं ब्रह्मैवेति वक्तुं सप्त विशेषणान्युच्यन्ते । एकमित्यसहायेन ऐश्वर्यमित्युक्तम् । स्वयंज्योतिरित्य-लौकिकवीर्यम् । अनन्यमिति कीर्तिः । अव्ययमिति लक्ष्मीः । स्वसंस्थया स्वरूपस्थित्यैव नित्यनिवृत्तानि कल्मषाणि यस्येति ज्ञानम् । ब्रह्माख्या यस्येति प्रापञ्चिकसर्ववैलक्षण्येन वैराग्यम् । धर्मिणमाह 'जन्माद्यस्य यत' इति न्यायेन । अस्य जगतः उद्भवनाशहेतुभिः । उद्भवः सत्त्वम्, अभिवृद्धेस्तद्धेतुकत्वात्, नाशस्तमः, हेतू रजः । एताश्च स्वशक्तय एव । तैर्लक्षिता भावाः सात्त्विकादयोऽन्तःकरणस्य तेषां निर्वृतिः अपगतिः, यत्र भावैः सहितं निर्वृतिं चेति वा । अनेन प्रपञ्चकर्ता प्रपञ्चरहितश्चेति विरुद्धसर्वधर्माश्रयत्वेन निरूपितम् । अनेन वा वैराग्यम् । ब्रह्माख्यमिति धर्मी । आत्मत्वेन सर्वत्र भेदनिराकरणार्थं पञ्चभेदनिरा-करणार्थं वा एकपदम् । प्रमाणाभावाय स्वयंज्योतिष्ट्वम् । अनन्यत्वं भिन्नधर्मनिराकरणाय । अव्ययत्वं ब्रह्मधर्माणां नित्यत्वाय । साङ्ख्यादिमते अब्रह्मधर्मा एव ब्रह्मणि समागत्य गच्छन्तीति तन्निराकरणार्थमेतदवश्यं वक्तव्यम् । स्वरूपस्थितिश्च संसारात्म-वदविद्यानिराकरणाय । नित्यपदेन ज्ञानानन्तरनिवृत्तिनिराकृता । ब्रह्मपदेन सर्वश्रुतिसमन्वयः । सर्वेषां बन्धमोक्षदातृत्वाय विरुद्धधर्माः ॥ ५ ॥ एवं भगवत्त्वं भावयित्वा तत्कार्यं च स्वनिष्ठः सन्नपि तां निष्ठां परित्यज्य बहिर्धर्मनिव अन्तस्तथाभूतोऽपि भिन्नप्रक्रमेण कृतवानित्याह अथेति । अम्भसि आप्लुत इति । गोमत्यादाववगाह्य स्नानम्, ननूद्धृतजलैः । अमले वाससी परिधायेति विशेषणविशेष्ययोर्दूरे समन्वयः । स्नानेऽपि रात्रिवासःपरित्यागेनामले वाससी परिधाय पुनः स्नात्वामलवाससोः परिधानमाह । यथाविधीति स्नानपरिधानयोः क्रियाकलापे चान्वेति । क्रियाकलापमेव विशेषेणाह संध्योपगमादीति । वाग्यत इति सन्ध्यायां मौनं कर्माङ्गत्वेनैव कृतवानिति ज्ञापयति । अर्घ्यदानान्ता सन्ध्या, ततोऽग्निहोत्रहोमः, ततो ब्रह्मजपः गायत्री-

मन्त्रजपः। सत्कृत इति तिलकाद्यलङ्करणभूषणादिपरिधानमुक्तम्। एवमेव कृतः धर्मो भवतीति क्रमविधाने निरूपिते। अरुणकर-ग्रासात्पूर्वं ध्यानम्, अरुणकरग्रासे स्नानम्, ततः सन्ध्या अर्घ्यान्ता, ततोऽग्निहोत्रम्, ततो जपः सूर्योदयावधि ॥ ६ ॥ उदिते सूर्ये तूपस्थानम्, तदाह उपस्थायार्कमुद्यन्तमिति। ततो देवर्षिपितृतर्पणमाह आत्मनः कलास्तर्पयित्वेति। 'ऋषयो मनवो देवा' इति वाक्यात् भगवत्कला एव। यथा अवयवाङ्गानां पुष्ट्यर्थमवयविना यत्नः क्रियते, एवं कलानां पोषार्थं यत्नः, न तूपास्यत्वेनेति ज्ञापनार्थं कलापदम्। 'ततः प्रभृति पूज्यन्त' इति वाक्यात् लोकशिक्षापरत्वेनापि सिध्यति। सत्तम इति पाठे सप्तमो भगवान् षड्विधं देशादिनिरूपितं धर्मं कृतवानिति सूचितम्। कला एव गणयति देवानृषीन्पितॄनिति। वृद्धान् स्वजातीयान् क्षत्रियान्, विप्रान् सर्वानेव। एतेषामभ्यर्चनं गन्धादिभिः। आत्मवानिति। निष्कामत्वमुक्तम्। कामनयाप्येतेषां पूजनसम्भवात्। अग्रेऽप्ये-तद्विशेषणं सम्बध्यते ॥ ७ ॥ ततो गोदानस्य नित्यत्वात्प्रत्येकापेक्षया समुदायस्योत्कृष्टत्वात् समुदाये अलङ्करणं न सम्भवतीति विचार्य अलङ्कारगुणान्निरूपयन् दानमाह धेनूनामिति द्वाभ्याम्। आदौ गावः सवत्साः दोग्ध्र्यः। एतादृश एव समुदाय इति पशूनां भाग्यातिशयो निरूपितः, न हि द्वारकायां कश्चिद्विसदृशादृष्टो भवतीति ज्ञापनार्थमुक्तम्। अन्यथा धेनूनां बद्वता न सम्भवेत्। रुक्ममये सुवर्णमये शृङ्गे यासाम्। रौप्यमयाः अङ्घ्रयो यासां प्रत्येकम्। सुष्ठु वाससी प्रत्येकं यासाम्। साध्व्यः शान्तस्वभावाः। पयस्विन्यः बहुदोग्ध्र्यः, गृष्टयः सकृत्प्रसूताः। सर्वासां जीवद्वत्सत्वाय सवत्सानामित्युक्तम्। मौक्तिकानां स्रजो माला यासाम्। पूर्वार्धविशेषणमेतत् ॥ ८ ॥

**श्रीसुबोधिनी–सारः**

तं विशिनष्टि। एकं स्वयंप्रभमनन्यं निरुपाधिकम् स्वसंस्थया स्वरूपस्फूर्त्या नित्यं निरस्तं कल्मषं विद्यावरणं येन तम् अस्य विश्वस्योत्पत्तिनाशकारणैः स्वशक्तिभिर्गुणैर्लक्षितो भावः सत्ता निर्वृत्तिरानंदो यस्य लक्षिता भावेषु निर्वृत्तिर्यस्य तं ब्रह्मनामकम् ॥ ५ ॥ अथानन्तरं गुदमुखप्रक्षालनत इति बोध्यम् अमले शुद्धेऽम्भसि जले यथाविधि स्नातः वाससी धौते वस्त्रे परिधाय संध्योपासनादिक्रियाकलापं चकार। एतेन जले संध्या निषिद्धेति ध्वनितम्। सत्तमः श्रेष्ठः परमार्थसत्यो वा हुतोऽनलो येन स वाग्यतो मौनी ब्रह्मगायत्रीं जजाप ॐकारं वा ॥ ६ ॥ उद्यंतमुद्गच्छंतमर्कं सूर्यमुपस्थाय आत्मनः कला देवादीन् तर्पयित्वा वृद्धान् विप्रान् अभ्यर्च्य संपूज्यात्मवान् जितेंद्रियः ॥ ७ ॥ मौक्तिकानां स्रजो यासां तासां साध्वीनां सुवर्णश्रृंगीणां दुग्धवतीनां गृष्टीनां सकृत्प्रसूतानां सवत्सानां सुवाससां धेनूनां रूप्यखुराग्राणां बद्वंबद्वं दिनेदिने प्रतिदिनं प्रतिगेहं च क्षौममतसीतंतुनिर्मितम् अजिनं मृगचर्म तिलानि प्रसिद्धानि तैः सह अलंकृतेभ्यो विप्रेभ्यो ददौ "चतुर्दशानां लक्षाणां सप्ताधिकशतां शकः ॥ बद्वं चतुर-शीत्यग्रसहस्राणि त्रयोदश" इति बद्वप्रमाणं सर्वगोसंख्या २१०७५७०७२ एकविंशतिकोटयः सप्तलक्षाणि सप्तपंचाशत्सहस्राणि द्वासप्तत्यधिका चेति प्रत्यहं ददौ इति भावः ॥ ८–९ ॥

**श्रीविट्ठलरायात्मजश्रीवल्लभकृतलेखः**

एकमित्यत्र। निर्वृतिं चेति वेति। निर्वृतिरानन्दस्तद्युक्तमित्यर्थः। अनेनेति। निर्वृतमितिपाठपक्षे तादृशभाववत्त्वेन प्रपञ्चकर्तृत्वं निर्वृतत्वेन प्रपञ्चराहित्यं चोक्तम्। तथा च विरुद्धधर्मनिरूपणाद्धर्मिस्वरूपं निरूपितमितिभावः। पञ्चभेवेति। वीर्यादिपञ्चगुणेभ्य ऐश्वर्यं भिन्नं नास्ति, किन्तु पञ्चस्वप्यनुस्यूतम्। आद्ये तथा कथनमुपलक्षणेन सर्वेपि गुणा अन्योन्यमनुस्यूता इतिज्ञापनार्थम्। प्रमाणाभावायेति। चक्षुराद्यगम्यत्वायेत्यर्थः। भिन्नधर्मेति। धर्मा 'अहिकुण्डला'दिन्यायत्रयेपि स्वरूपाद्भिन्ना नेत्यर्थः। अथाप्लुत इत्यत्र। विशेषणविशेष्ययोर्दूरे कथनस्य तात्पर्यमाहुः स्नानेपीति। स्नानवाक्ये अमले इति विशेषणकथनं विशेष्यमाकृष्य स्नानेप्यमलवासःपरिधानसूचनार्थम्। पुनरित्यमलवाससोरित्यनेनान्वेति। स्नात्वा पुनरमलवाससोः परिधान-मुभयान्वितपदकथनेन शुक आहेत्यर्थः। उपस्थायार्कमित्यत्र। पितृतर्पणमिति। अग्निष्वात्तादिसामान्यपितृतर्पणमित्यर्थः। धेनूनामित्यत्र। अन्यथेति। विसदृशादृष्टसत्त्वे नवसूतिकानां गोष्ठता न भवेत्। गोष्ठे सर्वा नवसूतिका न भवेयुरित्यर्थः। एतादृशीः गा इति। एतन्मते गवामिति संबन्धविवक्षया द्वितीयार्थे षष्ठी। बद्वमितिक्रियाविशेषणम्। बद्वसंख्याकं दानम्। बद्वं यथा स्यात्तथा गा ददौ। क्षौमाजिनतिलांश्च ददौ। सर्वेषां दानं मिलित्वा बद्वसंख्याकं दानमित्यर्थः। समुदाय एवेति। अस्मिन्मते क्षौमाजिनतिलसहितानां बद्वसंख्याकानां गवां दानमेकमेवेत्यर्थः। स्वमते तु बद्वशब्दं गोष्ठपर्यायं वक्ष्यन्तीतिभावः। न तु गार्हस्थ्ये इति। सम्पूर्णगृहस्थाश्रमवर्षाणां मेलने एतावद्दानं सम्पन्नमिति नेत्यर्थः। उपक्रमे इति। अथोषसीतिश्लोके पतिभिरिति बहुवचनोपक्रमादित्यर्थः।

**गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी**

'कोऽसावात्मा' इत्यपेक्षायामाह—ब्रह्माख्यमिति। सकलवेदान्ततात्पर्यगोचरम्। "वेदैश्च सर्वैरहमेव वेद्यः" "सर्वे वेदा यत्पदमामनन्ति" इत्यादिवचनेभ्यः। 'किं तत्स्वरूपम्' इत्यपेक्षायामाह— अनन्यमिति। सर्वात्मकमित्यर्थः। तत्र हेतुमाह–

एकमिति । तथात्वे विकारित्वमाशङ्क्याह—अव्ययमिति । तत्र हेतुमाह—स्वसंस्थया स्वरूपसंस्थित्या निरस्तं कल्मषमविद्यादि दोषो यस्मात्तम् । अतः स्वयंज्योतिः स्वतःप्रकाशम् । उद्भवनाशशब्दाभ्यां पालनमप्युपलक्ष्यते । तस्य विश्वस्योद्भवादिहेतुभिः स्वशक्तिभिः रजःसत्त्वतमोगुणैर्लक्षितो भावः जडानां रजआदीनां स्वतःप्रवृत्त्यसंभवात्तदधिष्ठातृचैतन्यतया सत्ता यस्य स चासौ निवृत्तिरानन्दरूपश्च तमात्मानं दध्याविति पूर्वेणेवान्वयः ॥ ५ ॥ अथानन्तरं अमले शुद्धे अंभसि जले आप्लुतः स्नातः सन् वाससी परिधाय सन्ध्योपगमादिक्रियाकलापं क्रियासमूहं यथाविधि चकारेत्यन्वयः । सन्ध्योपगमः सन्ध्योपासनम् । आदिशब्द-गृहीतानाह—काण्वशाखात्वात् सूर्योदयात् पूर्वमेव हुतः अनलः आहवनीयो येन सः । वाग्यतः वाचं यच्छतीति तथा मौनी सन् ब्रह्म गायत्रीं जजाप ॥ ६ ॥ उद्यन्तमर्कं सूर्यमुपस्थाय प्रत्युत्थानादिपूर्वकमर्घं प्रदाय आत्मनः कलाः स्वस्यांशभूतान् देवादीन् तर्पयित्वा वृद्धादींश्चाभ्यर्च्य तेभ्योऽलंकृतेभ्यो विप्रेभ्यो क्षौमाजिनतिलैः सह धेनूनां बद्वं बद्वं दिने दिने ददाविति त्रयाणामन्वयः । एवं कर्मानुष्ठानेन प्राप्तां जीवसाम्यशङ्कां वारयन्नाह—आत्मवानिति । स्वरूपज्ञानवानिति । 'तर्हि किमित्येवं कर्मानुष्ठानम्' इत्याशङ्क्याह—सत्तम इति । "यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः ॥ स यत् प्रमाणं कुरुते लोकस्तदनुवर्तते" इति सिद्धान्तात्तस्य च श्रेष्ठत्वाज्जनशिक्षार्थमेवेतदाचरणमिति भावः ॥ ७ ॥ धेनूः विशिनष्टि—रुक्मं सुवर्णं शृङ्गयोर्यासां तासाम् । साध्वीनां सुस्वभावानाम् । मौक्तिकानां स्रजो माला यासां तासाम् । पयस्विनीनां बहुक्षीराणाम् । गृष्टीनां प्रथमप्रसूतानाम् । सवत्सानां वत्सवतीनाम् । शोभनं वासो यासां तासाम् ॥ ८ ॥

## अन्वितार्थप्रकाशिका

एकमिति ॥ आत्मानं विशिनष्टि एकं स्वयंज्योतिः अनन्यं निरुपाधि सर्वात्मकम् अव्ययं स्वसंस्थया स्वरूपसंस्थित्या नित्यं निरस्तं निवृत्तं कल्मषमविद्यादिदोषो यस्मात्तम् अस्य विश्वस्य उद्भवनाशौ उपलक्षणतया पालनमपि तेषां हेतुभिः स्वशक्तिभिः रजस्तमःसत्त्वगुणैर्लक्षितो भावः जडानां रजआदीनां स्वतः प्रवृत्त्यसंभवात्तदधिष्ठानचैतन्यतया सत्ता यस्य स चासौ निर्वृतिरानन्दरूपश्च तं ब्रह्माख्यं वेदान्ततात्पर्यगोचरम् आत्मानं दध्याविव्यनुषङ्गः ॥ ५ ॥ अथेति ॥ अथानन्तरं सत्तमो भगवान् अमले शुद्धे अम्भसि जले आप्लुतः स्नातः सन् वाससी परिधाय सन्ध्योपगमादि सन्ध्योपासनादि क्रियाकलापं क्रियासमूहं यथाविधि चकार । तत्र च श्रीकृष्णस्य काण्वशाखावत्त्वात् सूर्योदयात्पूर्वमेव हुतः अनलः आहवनीयो येन स वाग्यतः मौनी सन् ब्रह्म गायत्रीं जजाप ॥ ६ ॥ क्रियाकलापमाह—उपेति त्रयम् ॥ आत्मवान् सावधानः उद्यन्तमर्कमुपस्थाय अर्घं प्रदायोपस्थानं च कृत्वा आत्मनः कलाः स्वस्यांशभूतान् देवादीन् ददौ । तर्पयित्वा कुले वृद्धादींश्चाभ्यर्च्य तेभ्योऽलंकृतेभ्यो विप्रेभ्यः क्षौमं वस्त्र-विशेषः अजिनं कृष्णमृगाजिनं तिलाश्च तैः सह रुक्मं सुवर्णं शृङ्गयोर्यासां तासां साध्वीनां सुस्वभावानां मौक्तिकानां स्रजो माला यासां तासां पयस्विनीनां बहुक्षीराणां गृष्टीनां प्रथमप्रसूतानां सवत्सानां वत्सवतीनां शोभनं वासो यासां तासां रूप्यं खुराग्रे यासां तासां धेनूनां बद्वं बद्वं दिने दिने ददौ । बद्वशब्दो बकारोपधो मध्यस्थतवर्गतृतीयश्च दिने दिने इति प्रतिगृहं चेत्यपि ज्ञेयम् । "बद्वं चतुरशीत्यग्रं सहस्राणि त्रयोदश ( १३०८४ ) ॥ गृहं गृहे तद्दानादेकविंशतिकोटयः ॥ सप्तलक्षी सप्तपञ्चाशत्सहस्राणि चाधिका ॥ द्विसप्ततिरिति ज्ञेया गवां संख्या ( २१०७५७०७२ , दिने दिने ॥" ॥ ७-९ ॥

## श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्

तत्स्वरूपं निरूपयति एकमिति । एकं सर्वचेतनाचेतनानां एकमेवनियामकं । अतोऽनन्यं नास्ति तत्तुल्योऽन्यो यस्य तं । अव्ययं अविनाशिनं स्वयं ज्योतिः स्वयमेव प्रकाशमानं स्वसंस्थया स्वरूपस्थित्या नित्यं निरंतरं निरस्तं नाशितं कल्मषं जनपापं येन । अस्य विश्वस्य उत्पत्त्यादीनां हेतुभिः स्वशक्तिभिः प्रकृतिपुरुषकालादिविभूतिभिः लक्षितः सूचितो भावः सत्यत्वं च निर्वृत्तिरानंदश्च यस्मिंस्तं । उत्पत्तिस्थिति प्रलयेषु सत्स्वपि ततः । पूर्वमपि सत्यानंदस्वरूपमित्यर्थः । ब्रह्माख्यं परब्रह्मसंज्ञं आत्मानं दध्याविति पूर्वेण संबंधः ॥ ५ ॥ आप्लुतः स्नातः संध्याया उपगम उपासनं आदिर्यथा भवति तथा । क्रियाकलापं यथाविधि चकारः ततः सत्तमः कर्मकर्तृभ्यः श्रेष्ठः । आदौ हुतानलः सन् तदनंतरं वाग्यतो गृहीतमौनः सन् ब्रह्मगायत्रीं जजाप ॥ ६ ॥ श्लोकत्रयेण क्रियाकलापमाह उपेति उपस्थाय वेदमंत्रैः स्तुत्वा आत्मनः । स्वस्य कलाः तनुभूतान् त्रीन् देवादीन् तर्पयित्वा ॥ ७ ॥ गृष्टीनां सकृत्प्रसूतानां ॥ ८ ॥

## भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

कोऽसौ तमसः पर आत्मा किं जीव एव वाऽतस्तं विशिनष्टि । एकमिति । एकं समाभ्यधिकरहितं, जीवस्तु विपरीत इति भावः । स्वयंज्योतिः स्वयंप्रकाशस्वरूपं, अनन्यं, न विद्यते अन्यदशरीरभूतं वस्तु यस्य तं, अव्ययं तत्त्वादिकल्पनारहितं, स्वस्मिन् संस्था सम्यगविकृतत्वेनावस्थितिस्तया, नित्यनिरस्तं प्रतिभटितं कल्मषं पुण्यपापात्मकं हेयं यस्य तं, बृहति बृंहयतीति ब्रह्म इत्याख्या निरुक्तिर्यस्य तं, अस्य जगतः, उद्भवनाशहेतुभिः उत्पत्तिविनाशहेतुभूताभिः, स्वशक्तिभिः, उद्भवनाशशब्दौ स्थितेरप्युपलक्षणम् । शक्तिरपृथक्सिद्धविशेषणम् । ततश्चोत्पत्तिकारणत्वस्थितिकारणत्वलयकारणत्वरूपैर्धर्मैरित्यर्थः । लक्षिते

भावनिर्वृती यस्य तं, तत्र भावः सत्ताविशिष्टं स्वरूपं, निर्वृतिरानन्दात्मकं स्वरूपम् ॥ ५ ॥ अथेति। अथ सत्तमः भगवान्, अम्भसि आप्लुतः स्नातः सन्, अमले वाससी परिधाय, संध्योपगमादि संध्योपासनादि, क्रियाकलापं, यथाविधि, चकार। हुत आहुतोऽनल आहवनीयो येन सः, वाग्यतः मौनीभूयेत्यर्थः। ब्रह्म गायत्रीं, जजाप ॥ ६ ॥ उपस्थायेति। धेनूनामिति। ददाविति। ततः उद्यन्तमुदय मुपगच्छन्तं अर्कं सूर्यं, उपस्थाय उदयसमय एव सूर्योपस्थानं कृत्वेत्यर्थः। आत्मनः स्वस्य, कला अंशभूतान् देवान्, ऋषीन्, पितॄंश्च, तर्पयित्वा, आत्मवान् श्रद्धायुक्तः सन्, वृद्धान् कुलवृद्धान्, विप्रान् ब्राह्मणांश्च, अभ्यर्च्य, रुक्मशृङ्गीणां सुवर्णशृङ्गवतीनां, साध्वीनाममारकत्वदोहनकालपादबन्धनादिक्रियानपेक्षत्वादिसाधुगुणवतीनां, मौक्तिकस्रजां मुक्ताहारवतीनां, पयस्विनीनां प्रशस्तपयोयुक्तानां, गृष्टीनां प्रथमप्रसूतानां, सवत्सानां वत्ससहितानां, सुवाससां प्रावृतशोभनवस्त्राणां, रूप्यखुराग्राणां खुरपरिधारितरूप्यालंकाराणां, धेनूनाम्, बद्धं बद्धं दिने दिने प्रतिदिनं, क्षौमाजिनतिलैः सह, प्रसूतिगृहमिति शेषः। अलंकृतेभ्यः विप्रेभ्यः, ददौ। तत्र बद्धमिति चतुरशीत्यग्रत्रयोदशसहस्राणि १३०८४ 'बद्धं चतुरशीत्यग्रसहस्राणि त्रयोदश' इत्युक्तेः। नवमस्कन्धे भरतमधिकृत्यैतद्विशदमुक्तमस्ति। अष्टोत्तरशताधिकषोडशसहस्रगृहेषु भगवत्प्रदत्तगवां संख्या २१०, ७, ५७०, ७२, एकविंशतिकोट्यः, सप्त लक्षाणि, सप्तपञ्चाशत्सहस्राणि, द्विसप्ततिपरिमिता बोध्या। इति त्रयाणामेकसंबन्धः ॥ ७-९ ॥

## कृष्णप्रिया

परीक्षित्! भगवान् का वह आत्मस्वरूप सजातीय, विजातीय और स्वगतभेद से रहित एक, अखण्ड है। क्योंकि उसमें किसी प्रकार की उपाधि या उपाधि के कारण होने वाला अन्य वस्तु का अस्तित्व नहीं है। और यही कारण है कि वह अविनाशी सत्य है। जैसे चन्द्रमा-सूर्य आदि नेत्र इन्द्रिय के द्वारा और नेत्र-इन्द्रिय चन्द्रमा-सूर्य आदि के द्वारा प्रकाशित होती है, वैसे वह आत्मस्वरूप दूसरे के द्वारा प्रकाशित नहीं, स्वयंप्रकाश है। इसका कारण यह है कि अपने स्वरूप में ही सदा-सर्वदा और काल की सीमा के परे भी एकरस स्थित रहने के कारण अविद्या उसका स्पर्श भी नहीं कर सकती। इसी से प्रकाश्य-प्रकाशकभाव उसमें नहीं है। जगत् की उत्पत्ति, स्थिति और नाश की कारणभूता ब्रह्मशक्ति, विष्णुशक्ति और रुद्रशक्तियों के द्वारा केवल इस बात का अनुमान हो सकता है कि वह स्वरूप एकरस सत्तारूप और आनन्दस्वरूप है। उसीको समझाने के लिये 'ब्रह्म' नाम से कहा जाता है। भगवान् श्रीकृष्ण अपने उसी आत्मस्वरूप का प्रतिदिन ध्यान करते ॥ ५ ॥ इसके बाद वे विधिपूर्वक निर्मल और पवित्र जल में स्नान करते। फिर शुद्ध धोती पहनकर, दुपट्टा ओढ़कर यथाविधि नित्यकर्म सन्ध्या-वन्दन आदि करते। इसके बाद हवन करते और मौन होकर गायत्री का जप करते। क्यों न हो, वे सत्पुरुषों के पात्र आदर्श जो हैं ॥ ६ ॥ इसके बाद सूर्योदय होने के समय सूर्योपस्थान करते और अपने कलास्वरूप देवता, ऋषि तथा पितरों का तर्पण करते। फिर कुल के बड़े-बूढ़ों और ब्राह्मणों की विधिपूर्वक पूजा करते। इसके बाद परम मनस्वी श्रीकृष्ण दुधार, पहले-पहल ब्यायी हुई, बछड़ोंवाली सीधी-शान्त गौओं का दान करते। उस समय उन्हें सुन्दर वस्त्र और मोतियों की माला पहना दी जाती। सींग में सोना और खुरों में चाँदी मढ़ दी जाती। वे ब्राह्मणों को वस्त्राभूषणों से सुसज्जित करके रेशमी वस्त्र, मृगचर्म और तिल के साथ प्रतिदिन तेरह हजार चौरासी गौएँ इस प्रकार दान करते ॥ ७-९ ॥

**ददौ रूप्यखुराग्राणां क्षौमाजिनतिलैः सह। अलङ्कृतेभ्यो विप्रेभ्यो 'बद्धं बद्धं[1] दिने दिने ॥ ९ ॥**
**गोविप्रदेवता[2]वृद्धगुरून् भूतानि सर्वशः। नमस्कृत्यात्म[3]सम्भूतीर्मङ्गलानि समस्पृशत् ॥ १० ॥**
**आत्मानं भूषयामास नरलोकविभूषणम्। वासोभिर्भूषणैः स्वीयैर्दिव्यगन्धानुलेपनैः ॥ ११ ॥**
**[4]अवेक्ष्याज्यं तथाऽऽदर्शं गोवृषद्विजदेवताः।**
**[5]कामग सर्ववर्णानां पौरान्तःपुरचारिणाम्। [6]प्रदाप्य प्रकृतीः कामैः प्रतोष्य प्रत्यनन्दत ॥ १२ ॥**

## कर्बमक्षमा

अन्वयः—रूप्यखुराग्राणाम्, क्षौमाजिनतिलैः, सह, अलंकृतेभ्यः, विप्रेभ्यः, दिने, दिने, बद्धम्, बद्धम्, ददौ ॥ ९ ॥ आत्मसम्भूतीः, गोविप्रदेवतावृद्धगुरून्, भूतानि, सर्वशः, नमस्कृत्य, मङ्गलानि, समस्पृशत् ॥ १० ॥ नरलोकविभूषणम्, आत्मानम्, दिव्यगन्धानुलेपनैः, स्वीयैः, वासोभिः, भूषणैः, भूषयामास ॥ ११ ॥ अथ, आज्यम्, आदर्शम्, गोवृषद्विजदेवताः, अवेक्ष्य, च, सर्ववर्णानाम्, पौरान्तःचारिणाम्, कामान्, प्रदाप्य, प्रकृतीः, कामैः, प्रतोष्य, प्रत्यनन्दत ॥ १२ ॥

१. द्वन्द्वं—च. पु. टि.; पद्मं पद्मं—वीर.। २. वृद्धान्—प्रा. पा.। ३. त्मनो भूती—प्रा. पा.। ४. स्रग—श्रीधर. वंशी. जीव. वीर. विज. विश्व.। ५. इदमर्धमर्धत्रयादन्तरं वर्त्तते—वीर.। ६. कामांश्च—श्रीधर. वंशी. जीव. वीर. विश्व.; कामिनां—विज.। ७. प्रादात्कामान् पृथक् कामैः—विज.।

### श्रीधरस्वामिविरचिता भावार्थदीपिका

बद्वमिति। "हिरण्येन परीवृतान् कृष्णाञ्छुक्लदतो मृगान्॥ मष्णारे भरतोऽददाच्छतं बद्वानि सप्त च" इति श्रुत्युक्तानि सप्तोत्तरशतं बद्वान्येकीकृत्य पुराणे चतुर्दशलक्षत्वेन गणितानि। यथोक्तं भरतमेवाधिकृत्य नवमस्कंधे "मृगाञ्छुक्लदतः कृष्णान्सुवर्णेन परिष्कृतान्। अदात्कर्मणि मष्णारे नियुतानि चतुर्दश" इति। ततश्चेयं बद्वसंख्या श्लोकेन संगृह्यते। "चतुर्दशानां लक्षाणां सप्ताधिकशतांशकः॥ बद्वं चतुरशीत्यग्रसहस्राणि त्रयोदश" इति। दिनेदिने च प्रतिगृहं चेति॥ ९॥ आत्मसंभूतीः स्वविभूतीः मंगलानि कपिलादीनि॥ १०॥ नरलोकस्य विभूषणरूपमात्मानम्। स्वीयैः पीतांबरकौस्तुभादिभिः॥ ११॥ कामानभिलषितानर्थान्॥ १२॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

अलंकृतेभ्यो दानात्प्राक् स्वयमेव स्वर्णकुंडलादिभिर्भूषितेभ्यः। मृगान् गजविशेषान्। ततश्च गणितशास्त्रानुसारात्। यद्यपि किंचिन्न्यूनचतुर्दशलक्षाणि सप्तोत्तरशतबद्वान्येकीकृतानि भवंति तथापि किंचिन्न्यूनमनन्यवदिति न्यायेन तावंत्येवोक्तानि। चतुर्दशलक्षसप्ताधिकशतांशकः बद्वसंज्ञः, स च चतुरशीत्यधिकत्रयोदशसहस्रसंख्यः १३०८४। दिनेदिने प्रत्यहं प्रतिगृहं चेति सर्वगेहेषु स्थितत्वान्मूर्तिभेदेन भगवतः प्रतिगृहं बद्वदानात्तु एकविंशतिकोटयः सप्तलक्षाणि पञ्चायुतानि सप्तसहस्राणि सप्तत्यधिकानि। दिनेदिने इत्यत्र वीप्सया नित्यकर्मत्वे लब्धे बद्वमिह पुनर्वप्सयातिदार्ढ्यमुक्तम्। बद्वइह दकारधकारसंयोगितयां श्रौतेषु बद्वमित्युक्तम्। क्षौमवस्त्रावृतं सोपस्करं मृगचर्मदानमपि प्रतिदिनमकरोदित्यर्थः। "कृष्णः कृष्णाचलो देवः कृष्णाजिनधरस्तथा। त्वत्स्पृष्ट्या धूतपापस्य प्रीयतां मे नमोनमः॥ त्रयस्त्रिंशत्सुराणां हि त्वमाधारे व्यवस्थितः। कृष्णोऽसि मूर्तिमान्साक्षात्कृष्णाजिन नमोस्तु ते॥" इत्यादिमंत्राणां तद्दाने प्रमाणत्वात्॥ ९॥ "कपिला दधि दूर्वा च हेम शंखोक्षतास्तथा। मौक्तिकं मणयो विप्रा आदर्शो वारि वारिजम्॥ एतान्यन्यानि द्रव्याणि मंगलानि स्पृशेन्नरः। पावित्र्यं परमाप्नोति शुभं क्षेमं च विंदति॥" इत्याद्युक्तेः। "अनलो गौर्हिरण्यञ्च दूर्वा गोरोचनामृतम्। अक्षतं दधि चेत्यष्टौ मंगलानि प्रचक्षते॥" इति नीलकंठोपि। भूतानि स्थावराण्यश्वत्थादीनि, जंगमानां गवादीनामुक्तत्वात्। देवताः श्रीशालग्रामादिरूपाः। नमस्कृत्य प्रत्येकं साक्षादेव किंवा गोभ्यो नमो विप्रेभ्यो नम इत्यभिवाद्य॥ १०-११॥ अवेक्ष्याज्यमित्यनेन नित्यं छायापात्रदानमुक्तम्॥ १२॥

### श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी

गाः वन्दनार्थमानीता विप्राशीर्वादार्थमागतान् गुरून् श्रीवसुदेवादीन् निकटगुप्तवर्त्मलब्धनिजनिजगृहस्थितान् सर्वभूतानि मनसि भावितानि अभिवाद्य यतः आत्मसम्भूतीः तेषां सम्माननप्रवर्त्तनार्थमिति भावः। यद्वा आत्मविभूतीरपि नरलीलाकौतुकेनैवेतिभावः॥ १०॥ नरलोकस्य जीवलोकस्य विशिष्टभूषणरूपमपि वासोभिरिति बहुत्वं राजवेषत्वात् स्वीयैरात्मीयत्वेन नित्यप्रसिद्धैस्तैस्तैरिति त्रिष्वेव योज्यं दिव्यशब्देन वनमालादीनामम्लायित्वं बोधयित्वा तदेव कैमुत्येन साधयति॥ ११॥ अवेक्ष्येति सार्द्धकम्। गोवृषः गोषु स्थितोऽशिक्षितो वृषः गोश्रेष्ठो वा द्विजो विप्रः देवता निजेष्टदेवतामूर्त्तिः ताश्चावेक्ष्य प्रागभ्यर्चनादौ तेषां दर्शने सिद्धेपि पुनरवेक्षणं यतो मङ्गलार्थं प्रकर्षेण दातुमाज्ञाप्य प्रत्यनन्दत् तेषां सन्तोषणेन स्वयमधिकं प्रीतोऽभूत्॥ १२॥

### श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी

बद्वमिति वीप्सादिकं चरितकथनेन स्वत एव तद्दानस्य नित्यकृत्यत्वे सिद्धेऽप्यसम्भावनासंशयात् तद्द्रढयति॥ ९॥ देवताः श्रीशालग्रामादिरूपा, नमस्कृत्य प्रत्येकं साक्षादेव; किञ्च, 'गोभ्यो नमः, विप्रेभ्यो नमः' इत्येवमभिवाद्य, यतश्चात्मसंभूतीस्तेषां सम्माननप्रवर्त्तनार्थमिति भावः। यद्वा, आत्मविभूतीरपि सम्यक् श्रीहस्तेन स्वयमेव भक्त्याऽस्पृशत्॥ १०॥ नरलोकस्य विशिष्टभूषणरूपमपि; यद्वा, नरान् मनुष्यान्, अहो किं वक्तव्यम्, तानिति लोकान् सर्व्वान् जीवान् चतुर्दशभुवनानि वा विशेषेण भूषयतीति तथा तम्; दिव्यशब्देन वनमाला-पीतवर्णानुलेपनानीति तथा तेन तद्योग्यताञ्च बोधयति। यद्वा, स्वीयैरित्यस्यात्राप्यन्वयः। दिव्येति स्वरूपमात्रनिर्देशः॥ ११॥ तथेति समुच्चये; गोवृषः—गोषु स्थितोऽशिक्षितो वृषः, उत्तमवलीवर्द्दो वा। द्विजो विप्रः, देवता निजेष्टदेवमूर्त्तिः, ताश्च अवेक्ष्य प्रागभ्यर्च्चनादौ तेषां दर्शने सिद्धेऽपि पुनरवेक्षणं यात्रामंगलार्थम्, पौराणामन्तःपुरचारिणाञ्च वामनादि-भृत्यानां प्रकर्षेण तत्तद्गृहादौ प्रस्थापनादिना दापयित्वा दातुमाज्ञाप्य प्रकर्षेण तोषयित्वा प्रत्यनन्दत, तेषां सन्तोषणेन स्वयमधिकं प्रीतोऽभूत्; यद्वा, अन्तर्भूत-ण्यन्तकारितं प्रत्येकमनन्दयदित्यर्थः॥ १२॥

### श्रीमद्वीरराघवाचार्यकृता भागवतचन्द्रचन्द्रिका

गोविप्रेति। गवादीनां द्वन्द्वः तत्र वृद्धाः कुलवृद्धाः तानात्मनः स्वस्य सम्भूतीर्विभूतिभूतान्नमस्कृत्य मङ्गलानि कपिलादीनि मङ्गलद्रव्याणि समस्पृशत्॥ १०॥ आत्मानमिति। नरलोकस्य भूषणरूपमात्मानं कौस्तुभपीताम्बरादिभिर्भूषयामास॥ ११॥ कामानभिलषितानर्थान् प्रदाप्य प्रकृतीरमात्यादीन् प्रतोष्य तोषयित्वा प्रतिनन्दितवान्॥ १२॥

**श्रीविजयध्वजतीर्थकृता पदरत्नावली**

बद्धं बद्धं द्वयं द्वयं एकैकस्मै विप्राय ॥ ९ ॥ गोविप्रदेवताः वयोवृद्धांश्च गुरुभूतान्यश्वत्थादीनि नमस्कृत्य एतत्सर्वं कीदृशमत्राह आत्मेति आत्मनः सम्भूतिं सन्निधेः प्रतिमां मङ्गलानि तिलादीनि ॥ १० ॥ नरलोकस्य मुक्तामुक्तस्य भूषणं अलङ्कारभूतम् ॥ ११ ॥ आदर्शं दर्पणं गवादींश्च प्रेक्ष्य देवताः प्रतिष्ठिताः कामिनामर्थिनां कामान् काम्यान् पदार्थान् किं बहुना सर्वान् कामैः पृथक् पृथक् प्रतोष्य सन्तोषं जनयित्वा स्वयमपि प्रत्यनन्दत सन्तुष्टोऽभूदित्यन्वयः ॥ १२ ॥

**श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी**

मङ्गलानि कपिलादीनि ॥ १०-११ ॥ प्रकृतीर्मन्त्रिणः ॥ १२ ॥

**गूढार्थदीपिनी**

आत्मसंभूतीः स्वविभूतीः गोविप्रादीन् । भूतानि स्थावराणि अश्वत्थादीनि । मङ्गलानि कपिलादीनि दत्तवान् ॥१०॥ स्वीयैः आत्मीयैः पीताम्बरकौस्तुभादिभिः ॥ ११ ॥ अवेक्ष्येति सार्द्धम् । आज्यं घृतं तदादीन् अवेक्ष्य वर्णानां कामान् अभीष्टपदार्थान् प्रदाप्य तैरेव प्रकृतीः अमात्यादींश्च प्रतोष्य स्वयमपि प्रत्यनन्दत् सन्तुष्टोऽभूत् । अवेक्ष्याज्यमित्यनेन प्रतिदिनं छायापात्रदानमुक्तम् ॥ १२ ॥

**श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः**

आत्मसम्भूतीः स्वविभूतिभूतान् गवादीन् मङ्गलानि कपिलादीनि मङ्गलद्रव्याणि स्पर्शनादिना मङ्गलावहानि ॥१०॥ नरलोकेत्युपलक्षणमन्यलोकानां सर्वलोकानां विभूषणमात्मानं स्वीयैः पीताम्बरकौस्तुभादिभिः भूषयामास ॥ ११ ॥ आज्यादीनवेक्ष्य दृष्ट्वा कामान् वाञ्छितानर्थान् प्रदाप्य प्रकृतीः अमात्यादीन् प्रतोष्य तोषयित्वा प्रत्यनन्दत प्रतिनन्दितवान् ॥ १२ ॥

**श्रीसत्यधर्मकृता श्रीभागवतटिप्पणी**

अलङ्कृतेभ्यो विप्रेभ्यो मनीषी ब्राह्मणेभ्यः बद्धम् । बद्धं बद्धमित्यपपाठः । बद्धपदार्थो नवमे भरतमधिकृत्य प्रवृत्तग्रन्थविवरणे स्फुटं प्रदर्शितः । दिने दिने प्रतिदिनम् । एवं प्रतिग्रहमपि बद्धं शतकोटिसङ्ख्यात्मकमनुसन्धेयम् । गोविप्रदेवता नमस्कृत्येति सर्वान्वयि । आत्मसम्भूति स्वप्रादुर्भावमपेक्ष्य वृद्धान्वयसा गुरुभूतान्यचलप्रतिमादीनि सर्वशो मङ्गलानि दधिदूर्वादीन्यस्पृशत्पस्पर्श ददाविति वा । नरदेवास्तल्लोकविभूषणम् ॥ ११ ॥ आदर्शं दर्पणं गा वृषान् द्विजान्देवतांश्चावेक्ष्य सर्ववर्णानामविशेषेण कामिनां कामान्काम्यान् पृथक्पृथक्कामैः प्रतोष्य स्वयं प्रत्यनन्दत प्रत्यनन्दत्तुतोष ॥ १२ ॥

**श्रीमद्वल्लभाचार्य्यकृता सुबोधिनी**

एतादृशीः गाः ददौ । दानक्रियाणां समुदाये बद्धसङ्ख्या सम्बध्यत इति केचित् । समुदाय एव दानमित्यपरे । क्षौमाजिनतिलानां सहभावः शास्त्रीयः । तदेकमेव विशिष्टं दानं भवति । अलंकृतेभ्यो विप्रेभ्य इति देयसमसङ्ख्या ब्राह्मणानां निरूपिता । गोसमसङ्ख्या बद्धसमसङ्ख्या वा । बद्धं बद्धमित्येव पाठः । बद्धं बद्धमिति वैदिकः शब्दः, स नात्रानुसन्धेयः । तत्रापि बद्धशब्दो बद्धपर्यायः । चतुरशीत्यग्रसहस्राणि त्रयोदशेति केचित् । तन्नवमे विचारितं निराकृतं च । तस्माद्गोष्ठपर्यायो बद्धशब्दः । अत्र च विशेषसङ्ख्या उपयोगाभावः । अयुतलक्षादीनामेव नित्यदाने उपयोगाच्च । दिने दिने, न तु गार्हस्थ्ये । नापि वर्षे प्रतिगृहमिति । उपक्रमे बहुवचनस्योक्तत्वादध्यवसेयम् ॥ ९ ॥ ततो नमस्कारादिकमाह गोविप्रेति । गावो हर्विविप्रा मन्त्राः देवताश्च त्रितयं मिलितं यागो भवतीति क्रमो निरूपितः । वृद्धाः सर्वे सभासदः । गुरवः कर्मोपदेष्टारः । सर्वश इति शिष्यप्रशिष्यादिसहितान् । एतेषां नमस्कारे हीनता भवतीति शङ्कां निवारयति आत्मसम्भूतीरिति । एते सर्वे सम्भूतिरूपाः । यथा स्वयं स्वपादक्षालनं करोति, तद्वदित्यर्थः । ततो मङ्गलानि सम्यगस्पृशत् । गोहिरण्यादीनि मङ्गलानि ॥ १० ॥ धर्मपरिष्कारमुक्त्वा धर्मिपरिष्कारमाह आत्मानं भूषयामासेति । स्वस्य सच्चिदानन्दं रूपं देहं भूषयतीति पक्षं व्यावर्तयितुमात्मपदम्, किन्त्वात्मानमेव । अध्यासादात्मपदं शरीरेऽपि वर्तते जीवेषु, न तु भगवतीति । भूषणस्य प्रयोजनमाह नरलोकविभूषणमिति । न हि स्वार्थमलङ्करणं करोति । निरतिशयानन्दत्वात् । किन्तु जगतो भूषणं तद्रूपं जगच्च लौकिकोत्कर्षमपेक्षते । अतो यथा भूषणसंस्कारे भूषितः संस्कृतो भवति, एवं जगद्भगवता संस्कृतमित्यर्थः । पूर्वपरिधानीयवस्त्रापेक्षया भिन्नान्येतानीति ज्ञापयितुं भूषणकरणानां नामतो निरूपणमाह वासोभिरिति । कञ्चुकोष्णीषादिभिः भूषणरूपैः स्वीयैः असाधारणैः मकरकुण्डलादिभिश्च । दिव्यो गन्धो यस्य एतानि अनुलेपनानि बहुविधानि । ततः सर्वाभरणभूषितः ॥ ११ ॥ आत्मानं तेजोमयं कर्तुमाज्यावेक्षणं कृतवान् । तेन सर्व एव लोकदृष्ट्या रोगादयो निवृत्ता भवन्ति । ततः कान्तियोगार्थमादर्शं दृष्टवान् । गोवृषद्विजदेवतानां च

दर्शनं कृतवान्। अत्र देवा देवालयस्थाः। ततो लौकिकोचितदानमाह काममगमिति। कामं गच्छति पूरयति प्राप्नोतीति वा कामगाः मनोहरा विषयाः, सर्वेषामेकं न भवतीति ज्ञापयितुं सर्ववर्णानां मुख्यानां गौणानां चेत्युक्तम्। पौरान्तःपुरचारिणामिति। लौकिकप्राधान्यार्थमुक्तम्। साक्षात्तेषां दानं तेषामभीष्टं न भवतीति गोप्यार्थं प्रदाप्येत्युक्तम्। प्रकृतीः। मन्त्रिणः अन्तःपुरस्त्रियो वा। कामैः प्रतोष्य ततस्तत्कृतां पूजां प्रत्यनन्दत ॥ १२॥

## श्रीसुबोधिनी-सारः

गोब्राह्मणादीनि आत्मनः संभूतीः सर्वशो नमस्कृत्य मंगलानि अष्टौ धर्मशास्त्रोक्तानि समालभत् ॥ १०॥ नरलोकस्य विभूषणमात्मानं स्वीयैर्वस्त्रैर्भूषणैर्दिव्यैः मालाचंदनैः संचस्कार ॥ ११॥ आज्यं घृतम् अवेक्ष्य दृष्ट्वा एतेन छायापात्रदानं सूचितम्। तथादर्शं दर्पणं गां वृषं च द्विजदेवताविप्रान् देवांश्चावेक्ष्य सर्ववर्णानां पौराणामंतःपुरचारिणां कामांश्च भोगान् प्रदाप्य प्रकृतीर्मंत्रिभृत्यादीन् कामैरिष्टदानैः प्रतोष्य प्रीणयित्वा सभाजयत् ॥ १२॥

## गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

रूप्यं खुराग्रे यासां तासाम्। क्षौमं वस्त्रविशेषः। अजिनं कृष्णमृगाजिनम्। तिलाः प्रसिद्धाः। बद्वसङ्ख्या तु नवमस्कन्धे भरताख्याने टीकायामुक्ता—"चतुर्दशानां लक्षाणां सप्ताधिकशतांशकः॥ बद्वं चतुरशीत्यग्रसहस्राणि त्रयोदश" इति। दिने दिनेति प्रतिगृहं चेति ज्ञेयम् ॥ ९॥ ततश्चात्मसंभूतीः स्वविभूतिरूपान् गवादीन्नमस्कृत्य मङ्गलानि कपिलादिमङ्गलद्रव्याणि समस्पृशत् ॥ १०॥ नरलोकस्य विभूषणभूतमात्मानं स्वीयैर्वासोभिः पीताम्बरादिभिः, भूषणैश्च कौस्तुभादिभिः, दिव्यैः स्रगादिभिश्च भूषयामास ॥ ११॥ आज्यं घृतम्। घृतादीनि अवेक्ष्य मङ्गलार्थं दृष्ट्वा पौरादीनां सर्ववर्णानां कामान् अभिलषितार्थान् प्रदापयित्वा प्रकृतीः अमात्यादीन् कामैस्तदभिलषितविषयैः प्रतोष्य प्रत्यनन्दत ॥ १२॥

## अन्वितार्थप्रकाशिका

गोविप्रेति ॥ आत्मसम्भूतीः स्वविभूतीः गोविप्रादीन् सर्वशः भूतानि च नमस्कृत्य मङ्गलानि कपिलगव्यादिमङ्गलद्रव्याणि समस्पृशत् ॥ १०॥ आत्मानमिति ॥ नरलोकस्य विभूषणभूतमात्मानं स्वीयैर्वासोभिः पीताम्बरादिभिर्भूषणैश्च कौस्तुभादिभिः दिव्यैः स्रगादिभिश्च भूषयामास ॥ ११॥ अवेक्ष्येति सार्द्धम् ॥ आज्यं घृतं तथा आदर्शादीन् अवेक्ष्य मङ्गलार्थं दृष्ट्वा पौरादीनां सर्ववर्णानां कामान् अभिलषितार्थान् प्रदाप्य दापयित्वा दातुमाज्ञाप्य वा। प्रकृतीः अमात्यादीन् कामैस्तदभिलषितविषयैः प्रतोष्य प्रत्यनन्दत। तद्भार्षः ॥ १२॥

## श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्

तासां बद्वं बद्वं दिनेदिने प्रतिदिनं ददौ बद्वसंख्या चोक्ता चतुर्दशानां लक्षाणां सप्ताधिकं शतांशकः बद्वं चतुरशीत्यग्रसहस्राणि त्रयोदशेति अस्यार्थः चतुर्दशलक्षाणां सप्ताऽधिकशततमः भागः बद्वं ज्ञेयं। तत्तु त्रयोदशसहस्राणि चतुरशीतिश्चेति बद्व संख्या ॥१३०॥९४॥९॥ आत्मसंभूतीः स्वविभूतिरूपान् गवादीन्। नमस्कृत्यमङ्गलानि कपिलधेन्वादिमंगलवस्तूनि ॥ १०॥ स्वीयैः पीतांबरकौस्तुभादिभिः ॥११॥ आज्यादीन् अवेक्ष्य। कामान ईप्सितार्थान् प्रदाप्यदापयित्वा। प्रकृतीः अमात्यान् ॥ १२॥

## भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

गोविप्रेति। ततः गोविप्रदेवतावृद्धगुरून् गाः विप्रान् देवताः वृद्धान् गुरूंश्चेत्यर्थः। आत्मसंभूतीः स्वस्य विभूतीभूतानि, सर्वशः भूतानि नमस्कृत्य, मङ्गलानि कपिलादीनि मङ्गलद्रव्याणि, समस्पृशत् ॥ १०॥ आत्मानमिति। ततः नरलोकविभूषणं मनुष्यलोकस्य भूषणभूतं, आत्मानं, वासोभिर्वस्त्रैः, स्वीयैरात्मीयैः, भूषणैः कौस्तुभाद्याभरणैः, दिव्यस्रगनुलेपनैः, दिव्याभिर्मौक्तिकादिस्रग्भिर्दिव्यैरनुलेपनैश्च, भूषयामास ॥ ११॥ अवेक्ष्येति। ततः आज्यं अवेक्ष्य, कांस्यपात्रे घृतं भृत्वा तत्र स्वमुखं वीक्ष्य तत् सदक्षिणं विप्राय दत्त्वेत्यर्थः तथा, आदर्शं अवेक्ष्य, दर्पणे स्वमुखावलोकनं कृत्वेत्यर्थः। गावश्च वृषाश्च द्विजाश्च देवताश्च ताश्च, अवेक्ष्य, शुभानामेतेषां दर्शनं विधायेत्यर्थः। सर्ववर्णानां, पौरान्तःपुरचारिणां स्वपुरस्थान्तःपुरचारिणां, कामानभिलषितार्थान्, प्रदाप्य, प्रकृतीरमात्यादीन्, कामैः, प्रतोष्य च प्रत्यनन्दत ॥ १२॥

## कृष्णप्रिया

तदनन्तर अपनी विभूतिरूप गौ, ब्राह्मण, देवता, कुल के बड़े-बूढ़े, गुरुजन और समस्त प्राणियों को प्रणाम करके माङ्गलिक वस्तुओं का स्पर्श करते ॥ १०॥ परीक्षित्! यद्यपि भगवान् के शरीर का सहज सौन्दर्य ही मनुष्य-लोक का अलङ्कार है, फिर भी वे अपने पीताम्बरादि दिव्य वस्त्र, कौस्तुभादि आभूषण, पुष्पों के हार और चन्दनादि दिव्य अङ्गराग से अपने को

आभूषित करते ॥ ११ ॥ इसके बाद वे घी और दर्पण में अपना मुखारविन्द देखते; गाय, बैल, ब्राह्मण और देव-प्रतिमाओं का दर्शन करते । फिर पुरवासी और अन्तःपुर में रहनेवाले चारों वर्णों के लोगों की अभिलाषाएँ पूर्ण करते और फिर अपनी अन्य ( ग्रामवासी ) प्रजा की कामनापूर्ति करके उसे सन्तुष्ट करते और इन सबको प्रसन्न देखकर स्वयं बहुत ही आनन्दित होते ॥ १२ ॥

संविभज्याग्रतो विप्रान् स्रक्ताम्बूलानुलेपनैः । सुहृदः प्रकृतीर्दारान्[1]पायुङ्क्त ततः स्वयम् ॥ १३ ॥
तावत् सूत उपानीय स्यन्दनं परमाद्भुतम् । सुग्रीवाद्यैर्हयैर्युक्तं प्रणम्यावस्थितोऽग्रतः ॥ १४ ॥
गृहीत्वा पाणिना [2]पाणिं सारथेस्तमथारुहत् । सात्यक्युद्धवसंयुक्तः पूर्वाद्रिमिव भास्करः ॥ १५ ॥
ईक्षितोऽन्तःपुरस्त्रीणां सव्रीडप्रेमवीक्षितैः[3] । कृच्छ्राद् विसृष्टो निरगाज्जातहासो हरन् मनः ॥ १६ ॥[4]
सुधर्माख्यां सभां सर्वैर्वृष्णिभिः परिवारितः । प्राविशद् यन्निविष्टानां न सन्त्यङ्ग षडूर्मयः ॥ १७ ॥

तत्रोपविष्टः परमासने विभुर्बभौ स्वभासा [5]ककुभोऽवभासयन् ।
वृतो नृसिंहैर्यदुभिर्यदूत्तमो यथोडुराजो दिवि तारकागणैः ॥ १८ ॥

### कर्दमक्षमा

अन्वयः—अग्रतः, विप्रान्, स्रक्ताम्बूलानुलेपनैः, अग्रतः, संविभज्य, ततः, सुहृदः, प्रकृतीः, दारान्, संविज्य, स्वयम्, उपयुङ्क्त ॥१३॥ तावत्, सूतः, परमाद्भुतम्, सुग्रीवाद्यैः, हयैः, युक्तम्, स्यन्दनम्, उपानीय, प्रणम्य, अग्रतः, अवस्थितः ॥१४॥ सुग्रीवाद्यैः, हयैः, युक्तम्, तम्, रथम्, सारथेः, पाणी, पाणिना, गृहीत्वा, भास्करः, पूर्वाद्रिम, इव, आरुहत् ॥ १५ ॥ अन्तःपुरस्त्रीणाम्, सव्रीडप्रेमवीक्षितैः, ईक्षितः, कृच्छ्रात्, विसृष्टः, नातहाराः, मनः, हरन्, निरगात् ॥ १६ ॥ हे अङ्ग !, सर्वैः, वृष्णिभिः, परिवारितः, सुधर्माख्याम्, सभाम्, प्राविशत्, यन्निविष्टानाम्, षडूर्मयः, न, सन्ति ॥ १७ ॥ तत्र, परमासने, नृसिंहैः, यदुभिः, वृतः, उपविष्टः, विभुः, यदुत्तमः, यथा, दिवि, तारकागणैः, वृतः, उडुराजः, तथा, स्वभासा, ककुभः, अवभासयन्, बभौ ॥१८॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

विप्रादीन्स्रगादिभिः संविभज्य तेभ्यस्तानि दत्त्वेत्यर्थः। उपायुंक्त भोगार्थमग्रहीत् ॥ १३-१४ ॥ पाणीकृतेंजली गृहीत्वा ॥ १५ ॥ सव्रीडप्रेमवीक्षितैरीक्षितः क्षणं स्थितस्ताभिरेव वीक्षितैः कृच्छ्राद्विसृष्टो निरगादिति ॥ १६ ॥ एवं सर्वगृहेभ्यः पृथक्पृथङ्निर्गत्यानंतरमेक एव सन्सुधर्मां प्राविशत् । यन्निविष्टानां यत्र प्रविष्टानाम् ॥ १७ ॥ नृसिंहैर्नृषु श्रेष्ठैः ॥ १८ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

तेभ्यो विप्रादिभ्यः । तानि स्रगादीनि । इत्यर्थ इति—पूर्वं ब्राह्मणेभ्यो दत्त्वाऽन्येभ्यो भोग्यं वस्तु देयम् 'क्षेत्रज्ञं ब्राह्मणाननु' इति नारदोक्तेरिति भावः । गृहस्थस्य शेषभोजित्वविधेः ॥ १३ ॥ ततो विभागानंतरम् । तावत्तदाग्रतोऽवस्थितोऽभूदित्यन्वयः ॥ १४ ॥ अथातः । तं रथम् । पूर्वाद्रिमुदयाचलम् । एतद्दृष्टांतेन रथस्य बृहत्त्वस्वरत्वादिकं श्रीभगवतः स्वतो भूषणादिकांत्या च तेजोमत्त्वं सूचितम् ॥ १५ ॥ श्रीकृष्णः प्रथममीक्षितोऽथात्सात्यक्यादिभिः, कीदृश ईक्षितः अंतःपुरस्त्रीणां सव्रीडप्रेमवीक्षितैस्तद्विरहतापं कथं सहामह इति वैयग्र्यव्यंजकैर्बद्ध इति शेषः । ततश्च भो अधीरा एतन्मात्रविरहेण विह्वलीभवथ । अयमहमधुनैव भोक्तुमेष्यामीत्याश्वासव्यंजको हासो जातो यस्य सः । ततश्च मन्ये तादृशहासेनैव मनोहरन् कृच्छ्रादेव विसृष्टस्तत्प्रेमावलोकबंधाद्विमुक्तः सन्निरगादिति विश्वनाथः । ताभिरंतःपुरस्त्रीभिः । निरगान्निरससारेत्यर्थः ॥ १६ ॥ इत्थमेकैकान्मंदिरादेकैकेन प्रकाशेन बहिर्भूय तत्तत्पुरस्थैस्तत्तत्प्रतिवेशिभिश्च जनैरेव लक्षितो न त्वन्यैः पृथक्पृथक्प्रतोल्यां सुधर्मासभागोपुरवर्त्मपर्यंतमागत्य तत्र पुनरेकीभूय सुधर्मां तु पुनरेकेनैव प्रकाशेन प्राविशति स्मेत्याह—सुधर्माख्यामिति । हे अंग प्रियतम । न संति न बाधन्ते ॥ १७ ॥ तत्र सुधर्मायाम् ॥ १८ ॥

### श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी

ततः पश्चादिति गृहस्थस्य शेषभोजित्वात् ॥ १३ ॥ अथ गुरुविप्रादिविसर्जनानन्तरं चरितमाह—तावदिति । अग्रत इति तत्तदन्तःपुरनिष्क्रमणमार्गाणामेकताप्राप्तिपदाग्रभागस्थमहागोपुराग्रभाग इत्यर्थः ॥ १४ ॥ पूर्वाद्रिमिवेति दृष्टान्तेन रथस्य

---

१. दारान् प्रायुङ्क्त–विज. । २. पाणी–श्रीधर. वंशी. जीव. ; पाणिं सारथे रथमारुहत्–वीर. विज. । ३. क्षणैः–प्रा. पा. ।
४. एवं च सर्वदाराणां गृहेभ्यो भगवान् विभुः । नानारूपो विनिर्गत्य एक रूपः सभां ययौ ॥ च. पु. टि. ।
५. भो विराजयन्–प्रा. पा. ।

बृहत्तरत्वादिकं तथा श्रीभगवतः स्वतो भूषणादिना च महातेजस्वित्वादिकं तथा तेनैव रथस्य शोभाभरजननादिकञ्च सूचितम् ॥ १५ ॥ अथ पुनस्तद्रथारोहात्पूर्वं वृत्तं दर्शयति—तत्र च पूर्वसूचितसर्वबहिर्जनतानिष्क्रमणानन्तरमेकान्ततामागते तस्मिन् नित्यकृत्यमङ्गलास्पदे सर्वमध्यमान्तःपुर बहिःस्थितकक्ष्याविशेषे प्रस्थानमङ्गलद्रव्यसङ्गततया सङ्गतानां तदङ्गनानां प्रेमपरिपाटीं वर्णयति प्रथममन्तःपुरस्त्रीणां प्रेमवीक्षितैरीक्षितः विषयीकृतः चलितुमुद्यतोपिक्षणं स्थगित इत्यर्थः। पश्चात्कृच्छ्रेण किञ्चित् दृष्टिनमनादिना विसृष्टः प्रस्थानेऽनुमत इत्यर्थः। जातहास इति तत्पश्चाच्च अहो प्रेमावृतविवेके कथं वृथा दूयसे मध्याह्न एव भोजनाद्यर्थमागच्छानीति सूचकेन हासेन तासां सान्त्वनेच्छया व्यञ्जितहास इत्यर्थः ॥ १६ ॥ सर्वैरिति। श्रीभगवदागमनं विना स्वयं सभामप्रविष्टचरैरिति ज्ञेयं प्रकर्षेण गीतवाद्यादिनाऽविशत् सुधर्माख्यामिति सूचितं स्वर्गस्थत्वेपि तत्तन्महिमयुक्तत्वं किमुत श्रीकृष्णपुरस्थत्व इत्याह—यदिति ॥ १७ ॥ तत्र तस्मिन् यत्परमासनं सर्वश्रेष्ठतमासनं तस्मिन् यथा दत्तसारूप्यादावपि स्वगणे तस्य रूपादिपरमत्वेन भासते तद्वत्परमतया विहितेष्वप्युग्रसेनाद्यासनेषु तस्यासनं परमतया भासत इति भावः। तत्र च विभुः परः सहस्रान्तः सद्मयमहासद्मरूपायां नानासभामय्यां तस्यां सुधर्मायां सर्वस्यामेव भासमान इत्यर्थः। अतः स्वीययेव भासा कान्त्या अव समन्तात् भासयन् तथापि यदुभिर्वृतो बभौ यतो नृसिंहैस्तदीयनिजपरिकरत्वेन सर्वपुरुषश्रेष्ठतया तादृशैरेवे-त्यर्थः यतः सोपि यदूत्तमः तज्जातीयश्रेष्ठतयैव विभुत्वं प्रकाशयन्नित्यर्थः। तथैव दृष्टान्तः यथेति ॥ १८ ॥

### श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी

ततः पश्चादिति गृहस्थस्य शेषभोजित्वात् ॥ १३ ॥ उप उपायनवत् समीपे वानीय, परमाद्भुतमप्राकृतत्वादिना लोकातीतम्, किंवा रूपगुणादिनात्यनिर्व्वचनीयमित्यर्थः। आद्य-शब्दात् शैव्य-मेघपुष्प-बलाहकाः; प्रणम्य भगवन्तम्, अग्रत-स्तस्यैव ॥१४॥ अथ मंगले, सात्यक्युद्धवाभ्यां संयुक्त इति प्रेष्ठसेवकत्वेन ताभ्यां पार्श्वद्वये छत्रचामरादिग्रहणात्। पूर्व्वाद्रिमिवेति दृष्टान्तेन रथस्य बृहत्तरत्वादिकं यथा श्रीभगवतः स्वतो भूषणादिना च महातेजस्वितादिकं तथा तेनैव रथस्य शोभाभरजनना-दिकञ्च सूचितम् ॥ १५ ॥ जातहास इति सदा सुप्रसन्नचित्ततया स्मितोदयात्, किंवा तासां विरहार्त्तिलाघवार्थं हासेन रसान्तरा-पादनात्, अतएव तासां मने हरन्; अन्यत्तैर्व्याख्यातम्। यद्वा, विसृष्टः शुभं विजयस्वेति प्रस्थापितः सन् ॥ १६ ॥ सर्व्वैरिति सभाया उत्थायाभिगतैः, किंवा सद्यः स्वस्वगृहादागतैः, ततश्च श्रीभगवतैव सह सर्व्वेषां सभाप्रवेशो न च कस्यापि तस्मात् प्रागिति बोधयति। प्रकर्षेण गीतवाद्यादिना अविशत् सुधर्म्माख्यामिति सूचितम्। दिव्यत्वं दर्शयति—यदिति। 'शोकमोहौ जरामृत्यु क्षुत्पिपासे षडूर्म्मयः'; अंग! हे राजन् ॥ १७ ॥ तत्र तस्यां यत् परमासनं सर्व्वश्रेष्ठतरासनं तस्मिन् विभुः सर्व्वशोभादि-परिपूर्णं, अतः स्वकीययैव भासा कान्त्या अव व्याप्त्या भासयन्नपि यदुभिर्वृतो बभौ अशोभत, यतो नृसिंहैस्तद्भक्तिविशेषेण सर्व्वलोकश्रेष्ठतां प्राप्तैः, किंवा महाविक्रमादिना परमात्मीयत्वेन च श्रीनृसिंहदेवतुल्यैः, भक्तवत्सलस्य भक्तसाहित्येनैव शोभाधि-क्यसम्पत्तेरिति भावः। तत्रैव हेतुः—यदुत्तम इति; भक्तवात्सल्याद्यशेषगुणप्रकटनार्थमेव यदुकुले श्रेष्ठतयावतीर्णत्वादिति भावः। स्वतः सर्व्वशोभावतः, तत्रैव हेतुः—यदुत्तम इति। स्थानविशेषे स्वजनैर्वृतस्यैव, स्वतः शोभाभरोदये दृष्टान्तः—यथेति ॥ १८ ॥

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम्

विप्रान् सम्विभज्य सम्विभागेन प्रीणयित्वा ॥ १३-१६ ॥ षडूर्मयः अशनायापिपासाशोकमोहजरामृत्यवः ॥१७-२६॥

### श्रीमद्वीरराघवाचार्यकृता भागवतचन्द्रचन्द्रिका

सम्विभज्येति। अग्रतः पुरतः उपवेशितानितिशेषः। विप्रान् स्रगादिभिः सम्विभज्य सम्यग्विभागेन प्रीणयित्वा आज्यादीनवलोक्य तत्रादर्शो दर्पणं सुहृदो मित्राणि दाराः पत्नीश्च उपायुङ्क्त यथायोग्यमन्ववर्त्ततेत्यर्थः ॥ १३ ॥ तावदिति। सुग्रीवाद्यैरित्यादिशब्देन मेघपुष्पवलाहकसङ्ग्रहः तैरश्वैर्युक्तं स्यन्दनं रथमानीय प्रणम्याग्रतः अवतस्थौ ॥ १४ ॥ सारथेः पाणि स्वपाणिना गृहीत्वा उदयाद्रिं भास्करः सूर्य इव आरुरोह ॥ १५ ॥ ईक्षित इति। व्रीडाप्रेमाभ्यां युक्तैर्वीक्षितैरीक्ष्यमाणः ताभि-स्तैरेव वीक्षितैः कृच्छ्रात्कथञ्चिद्विसृष्टः तासां मनोहरन् सञ्जातः हासो यस्य तथाभूतो निर्जगाम ॥ १६ ॥ सुधर्मामिति। तां विशिनष्टि—यत्र सभायाम् उपविष्टानां षडूर्मयः अशनायापिपासाशोकमोहजरामृत्यवो न सन्ति तथाभूतामित्यर्थः ॥ १७ ॥ तत्र सुधर्मायां स्वभासा स्वदीप्त्या ककुभो दिशः भासयन् नृसिंहैर्यदुश्रेष्ठैर्यदुभिः परिवृतो बभौ यथा दिव्याकाशे नक्षत्रगणैः चन्द्रो भाति तद्वत् ॥ १८ ॥

### श्रीविजयध्वजतीर्थकृता पदरत्नावली

द्रव्यसम्विभागक्रममाह—सम्विभज्येति। विप्रादीनुद्दिश्य स्रगादिभिस्तृतीया च द्वितीयार्थे प्रायुङ्क्तः स्वयं स्वीच-कार ॥ १३ ॥ तावत्तदा ॥ १४-१५ ॥ स्त्रीणां मनः ॥ १६ ॥ यन्निविष्टानां यत्र सभायामुपविष्टानाम् अशनपानादिषडूर्मयो न सन्ति न बाधन्ते ॥ १७ ॥ नृसिंहैः पुरुषश्रेष्ठैः १८ ॥

### श्रीमद्विश्वनाथचक्रवर्तीकृता सारार्थदर्शिनी

सम्विभज्य भागशो दत्वा विप्रान् विप्रेभ्यः स्रगादिभिः स्रगादीन् उपायुङ्क्त भोगार्थं जग्राह ॥ १३-१४ ॥ पाणी अञ्जलीभूतौ दक्षिणेन पाणिना गृहीत्वा ॥ १५ ॥ कृष्णः प्रथममीक्षितः अर्थात् सात्यक्युद्धवादिभिः । कीदृशः ईक्षितः अन्तःपुरस्त्रीणां सव्रीडप्रेमवीक्षितैस्त्वद्विरहतापमिमं कथं सहामहे इति वैयग्र्यव्यञ्जकैर्बद्ध इति शेषः । ततश्च भो अधीराः ! एतन्मात्रविरहेणैव विह्वलीभवथ अयमहमधुनैव भोक्तुमेष्यामीत्याश्वासव्यञ्जका हासो जातो यस्य सः । ततश्च मन्ये तादृशहासेनैव मनो हरन् कृच्छ्रादेव विसृष्टः तत्प्रेमावलोकबन्धाद्विमुक्तः सन् निरगात् ॥ १६ ॥ इत्थमेकैकस्मान्मन्दिरादेकैकेन प्रकाशेन बहिर्भूय तत्तत्पुरस्थैस्तत्तत्प्रतिवेशिभिश्च जनैरेव लक्षितो नत्वन्यैः पृथक् पृथक् प्रतोल्यां सुधर्म्मा सभा गोपुरवर्त्मपर्य्यन्तमागत्य तत्र पुनरेकीभूय सुधर्म्मां सभान्त्वेकेनैव प्रकाशेन प्रविशति समेत्याह सुधर्म्माख्यामिति । परिवारितः वृतः ॥ १७ ॥ नृसिंहैर्नृषु श्रेष्ठैः ॥ १८ ॥

### गूढार्थदीपिनी

स्रगादिभिः विप्रादीन् संविभज्य तेभ्यः पूर्वं दत्वा पुनः स्वयम् उपायुङ्क्त भुक्तवान् गृहस्थस्य शेषभोजित्वविधानात् ॥ १३ ॥ यावत् भुक्तवान् तावत् सूतः सारथिः स्यन्दनमुपानीय अग्रे समुपस्थितः ॥ १४ ॥ भगवान् स्वदक्षिणपाणिना सारथेः पाणी अञ्जलीभूतौ गृहीत्वा रथमारुहत् । यथा उदयाचलं सूर्यः आरोहति तथा ॥ १५ ॥ ईक्षितः कटाक्षविषयीकृतस्तदा क्षणं स्थितः मध्याह्ने भोजनार्थमेष्यामीति किमिति खिद्यसे इति प्रत्येकं सूचयन् जातहासश्च सन् ताभिः कृच्छ्रात् क्लेशात् विसृष्टः गन्तुमनुज्ञातः तासां मनो हरन् गृहाद् निरगात् ॥ १६ ॥ अङ्ग हे राजन् । एवं सर्वगृहेभ्यः पृथक् पृथक् निर्गत्य पुनः अभिन्नमूर्तिः एक एव सन् सभां प्राविशत् । यत् यस्यां प्रविष्टानां षड् ऊर्मयः न सन्ति ॥ १७ ॥ तत्र सभायां सिंहासने उपविष्टः भगवान्-यदुभिर्वृतः बभौ । ककुभः अवभासयन् दिशः प्रकाशयन् सन् । यथा दिवि आकाशे तारागणैः वृतः उडुराजः चन्द्रः भाति तथा ॥ १८ ॥

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः

अग्रतः पुरतः अक्षिगोचरानित्यर्थः । विप्रादीन् यथायोग्यं स्रगादिभिः सम्विभज्य लब्धभागान् विधाय ततः स्वयं भोगार्थमुपायुङ्क्त जग्राह ॥ १३-१४ ॥ सारथेः पाणी अञ्जलीभूतौ पाणिना गृहीत्वा तं स्यन्दनमारुहत् ॥ १५ ॥ अन्तःपुरस्त्रीणां रुक्मिण्यादीनां सव्रीडप्रेमवीक्षितैरीक्षितः भक्तवत्सलत्वात् तत्प्रेमबद्धः क्षणं स्थितः पुनस्ताभिरेव वीक्षितैः कृच्छ्राद्विसृष्टो निरगादित्यर्थः ॥ १६ ॥ गृहेभ्यो बहुभ्यः बहुभिः रूपैर्निर्गत्य सुधर्माख्यां सभान्तु एकामेक एव प्राविशत् इति भावः ॥ १७-१८ ॥

### श्रीसत्यधर्मकृता भागवतटिप्पणी

अग्रतः प्राक् । स्रक्ताम्बूलानुलेपनैः सभाजयित्वा संविभज्य सुहृदः प्रकृतीर्दारान्भार्याः । ततः सर्वसत्क्रियानन्तरं स्वयं प्रायुङ्क्त स्वोपयुक्तं तेश्चकार ॥ १३ ॥ तावत्सूतो दारुकः सुग्रीवाद्यैश्चतुर्भिः ॥ १४ ॥ सात्यकिः शैनेय उद्धवश्च ताभ्यां संयुक्तः पूर्वाद्रिमुदयपर्वतम् ॥ १५ ॥ सव्रीडानिव सव्रीडं यथा प्रेमवीक्षितैः स्नेहसहितकटाक्षवीक्षितैः । व्रीडश्च प्रेमा च व्रीडप्रेमे ताभ्यां सहितानि वीक्षितानि च तैर्वा । कृच्छ्रात्कष्टाद्विसृष्टस्तासामन्तःपुरस्त्रीणां मनोहरन् जातहासश्च निरगात् ॥ १६ ॥ अङ्ग हे परीक्षित् । यन्निविष्टानां षडूर्मयोऽशनायादयः षट् ऊर्मयो न सन्ति । तां सुधर्माख्यां वृष्णिभिः परिवारितः प्राविशत् । यो ग्रामः परिवारितः परितो वार्भिरितः संयुतः स तस्मिन्सुधर्माख्यां सभां प्राविशदिति वा ॥ १७ ॥ तत्र सुधर्मायां परमासने उत्तमासने उपविष्टः परेषां मासं यत्तस्या असने निरसने परेषां न आसनं मासनं तस्मिन् । तन्निराश्रयीभवनविषय इति यावत् । उपविष्टः स्वभासा ककुभो दिशोऽवभासयन् । यथा तारकगणैर्दिवि वृत उडुराजो भाति तथा नृसिंहैर्नखरैर्यदुभिर्वृतो यदूत्तमो बभौ ॥ १८ ॥

### श्रीमद्वल्लभाचार्य्यकृता सुबोधिनी

ततो भोगं वक्तुं मुख्यत्वात्ताम्बूलादिस्वीकारमाह संविभज्येति । अग्रतः प्रथमं विप्रान् संविभज्य विप्रेभ्यो दत्वा स्रक्ताम्बूलानुलेपनानि । सर्वैः सर्वेषां संविभागः । लौकिकदाने सुहृदः प्रथमाः, प्रकृतयः मन्त्रिणः, ततो दाराः । यद्यपि प्रथमं स्वस्योपयोगः, तथापि संविभागः सर्वेषां प्रथम एव । भगवदुपभोगानन्तरं पदार्थोत्पत्त्यसम्भवात् । अतः पश्चात्स्वयमुपायुङ्क्त । शिष्टस्य सेवकगामित्वात् ॥ १३ ॥ ततस्त्रैलोक्यरक्षार्थमुद्यतस्य सुधर्मायां गमनं निरूप्यते तावत्सूत इति चतुर्भिः । परमाद्भुतमिति । वैकुण्ठात्समागतरथव्युदासः, किन्तु धर्ममयो रथः, स तु सङ्कर्षणोपकारी । अश्वाः सूतश्च त एवेत्याह सुग्रीवाद्यैर्युक्तमिति । अनिरुद्धप्राधान्यात्सुग्रीवाद्यैरित्युक्तम् । प्रणामः पूर्वस्माद्वैशिष्ट्यद्योतकः, अग्रे तूष्णीमवस्थानं कार्यस्य लौकिकत्वाभावाय । ततः अप्रेरितोऽपि भगवान् सारथेः पाणिं पाणिना गृहीत्वा रथमारुहत् । तस्य क्रियाशक्तिः स्वक्रियाशक्त्या निबद्धा, अन्यथा धर्मप्रेरकोऽन्यथा प्रेरयेत् । पूर्वाविशिष्टत्वात् । तं रथमारुहदिति । भगवदारूढो धर्मः सर्वत्र सुस्थिरो भवतीति

**त**मित्युक्तम्। रक्षारूपा क्रियाशक्तिः। भक्तिश्च साधनत्वे धर्मे ग्राह्येति **सात्यक्युद्धवसंयुक्त** इत्युक्तम्। उद्धवो भक्तिः अधिकारिणामेव प्रकाशको भविष्यतीत्याशङ्क्य दृष्टान्तमाह **पूर्वाद्रिमिव भास्कर** इति। प्रातः सर्वेषामेव प्रबोधो भवति, न केवलमधिकारिणाम्। ततो धर्मे कामनिवृत्तिमाशङ्क्य तन्निराकरणार्थमाह। **ईक्षितोऽन्तःपुरस्त्रीणामि**ति। **स्त्रीणा**मिति षष्ठीबहुवचनं न केवलं दर्शनमात्रम्, किन्तु तासां सम्बन्ध्यपि भगवानिति द्योतयति। ज्ञानद्वारा सम्बन्धः। आन्तरः बाह्यो निवर्तक इति ज्ञाने त्रैविध्यमाह **सव्रीडप्रेमवीक्षितै**रिति। व्रीडा तामसी, प्रेम राजसम्, वीक्षितं सात्त्विकमिति। ततो भावेन बद्धः। 'ये यथा मां प्रपद्यन्त' इति न्यायेन। तासामपेक्षया स्वच्छन्दं धर्मपरता न भविष्यतीति तासां निर्बन्धाभावमाह **कृच्छ्राद्विसृष्ट** इति। कष्टेन ताभिर्विसृष्टः, धर्मानुरोधान्निर्गच्छत्विति विचारितः। ततो निरगात्। **जातहास** इति। तासामपि धर्मानुरोधमालक्ष्य हास्यम्। न हि स्त्रीणां कामादुपरतिरस्ति। तथापि धर्मपरताप्यासां मा भूदिति ज्ञापनार्थं धर्मपरत्वम्। **हरन्मन** इति निरोधार्थम्। अन्यथा लोके धर्मे वा चित्तमासक्तं भवेत्। भगवान् विसृष्ट इति। **सुधर्माख्या**मिति। सुष्ठु धर्मो यत्रेति नाम्नैव धर्मपरत्वं सिध्यति। सभा स्वभावतोऽपि धर्मनिर्णयस्थानम्। **सर्ववृष्णिभिः परिवारित** इत्येकमत्यम्। तस्यामाधिदैविकधर्मत्वज्ञापनार्थम्। कालधर्मातिक्रममाह **यन्निविष्टाना**मिति। यत्रोपविष्टानां षडूर्मयो देहादिधर्माः आवश्यका अपि न सन्ति, तत्रानावश्यकाः सुतरामेव न भविष्यन्तीति अर्थादुक्तम्॥ १७॥ एवं सुधर्मामाहात्म्यमुक्त्वा तत्रोपवेशने धर्म एव केवल इत्याशङ्क्य सच निर्बन्धात्मक इति सुखोपवेशनमाह **तत्रोपविष्ट** इति। तत्र सभायाम्। तत्रापि मध्ये भगवदुपवेशनस्थानं परमासनम्। प्रान्ते पश्चिमभागे कुड्यसमीपे राज्ञः स्थानम्, मध्ये तत्सम्मुखे भगवत्स्थानमिति विमर्शः। सभासदां मध्ये भगवतोऽनुप्रवेशं निवारयितुमाह **स्वभासा ककुभोऽवभासयन्नि**ति। तत्र सामर्थ्यं **विभु**रिति। राज्ञो मुख्यत्वादभानमाशङ्क्याह **बभा**विति। सभाधर्मेण देवधर्मेण वा तथात्वमाशङ्क्य **स्वभासेति**। अप्रधानेनापि प्रधानभानं सम्भवतीति तन्निराकरणार्थं दश दिश एवोक्ताः। ननु तत्रत्या एव केवलाः। अनेन सभया भगवद्भानं निवारितम्। एवं तर्हि सभासदामप्रयोजकत्वमेव स्यादित्याशङ्क्य निराकरोति **वृतो नृसिंहै**रिति। तेषामागन्तुकत्वं निराकरोति **यदुभि**रिति। अन्यथा नृसिंहाः परशुरामव्यासादयो भवेयुः। तुल्यतामाशङ्क्याह **यदूत्तम** इति। तेषामेकत्र निवेशनमात्रं भगवतस्ततोऽप्युत्तमत्व एव स्यात्। ननु नियामकत्वम्। ततो धर्म एकमुखो न भवेदिति तेषां पतिर्भगवानिति दृष्टान्तेन निरूपयति **यथोडुराज** इति। **दिवी**त्याधिभौतिकं निवारितम्, यथा देवरूपम्। ग्रहनक्षत्राणामपि केनचिदंशेन तुल्यतापोषकत्वं चास्तीति **तारकागणै**रित्युक्तम्। **उडुराज** इत्यनेन स्वकीयानां तदधीनत्वमुक्तमेव॥ १८॥

## श्रीसुबोधिनी-सारः

अग्रतः प्रथमं स्रक्ताम्बूलानुलेपनैर्विप्रान् संविभज्य तानि तेभ्यो दत्त्वेत्यर्थः ततोऽनंतरं सुहृदो मित्राणि प्रकृतीर्दारान् स्त्रीश्च संविभज्य स्वयम् उपायुंक्ताग्रहीत्॥ १३॥ तावदेव सुग्रीवाद्यैर्हयैरश्वैर्युक्तं परमाद्भुतं स्यंदनं रथमुपानीय समीपमानीय श्रीकृष्णं प्रणम्य सूतो दारुकः सारथिरग्रतोऽग्रेऽवस्थितोऽभूत्॥ १४॥ पाणिना हस्तेन सारथेः पाणी संयतत्वाद्द्विवचनम्। गृहीत्वा सात्यक्युद्धवाभ्यां संयुक्तः श्रीकृष्णस्तं रथमारुहत् पूर्वाद्रिम् उदयाचलं भास्करोऽर्क इव॥ १५॥ अंतःपुरस्त्रीणां सलज्जप्रेमदर्शनैरीक्षितः कृच्छ्राद्विसृष्टः त्यक्तः सर्वगृहेभ्यः पृथक् पृथक् निर्गत्य तासां मनोहरन् जातो हासो यस्य स निरगात्॥ १६॥ सर्वैर्वृष्णिभिः परिवारितः सर्वतो युक्त एको भूत्वा सुधर्माख्यां सभां प्राविशत् यत् यस्यां सभायां प्रविष्टानां जनानां षडूर्मयः क्षुत्पिपासाशोकमोहजन्ममृत्युरूपा न संति तदुक्तम्। "प्राणस्य क्षुत्पिपासे द्वे शोकमोहौ तथात्मनः। जन्ममृत्यू शरीरस्य षडूर्मिरहितः शिवः॥" हे अंग॥ १७॥ तत्र सभायां परमासने उपविष्टः स्वस्य भासा दीप्त्या ककुभो दिशोऽवभासयन् नृसिंहैः पुरुषोत्तमैर्यदुभिर्वृतो यदूत्तमो विभुर्हरिर्बभौ शुशुभे दिवि स्वर्ग तारकागणैर्वृत उडुराजश्चंद्र इव॥ १८॥

## श्रीविट्ठलरायात्मजश्रीवल्लभकृतलेखः

**तावत्सूत** इत्यस्याभासे। अत्र श्लोकत्रयेण निर्गमनं निरूप्य चतुर्थेन सुधर्माप्रवेश उच्यते। तत्र श्लोकत्रयसंख्यातात्पर्यमाहुः **त्रैलोक्ये**ति। **व्याख्याने**। **अनिरुद्धे**ति। सङ्कर्षणकार्ये सैन्याश्वस्य प्राधान्यात्तदादित्वमुक्तम्। अनिरुद्धकार्ये सुग्रीवस्य प्राधान्यात्सुग्रीवाद्यैरित्युक्तम्। अयं सुष्ठु ग्रीवा यस्येति रजस्तमसोरभावात् धर्मोपयोगी। स तु सैन्यवत्संहारकत्वात्संहारोपयोगीतिभावः। **अन्यथे**ति। दारुकक्रियाशक्तेर्निबन्धनाभावे संहारधर्मे प्रेरकः सङ्कर्षणस्तं संहारकार्ये प्रेरयेत्, नतु धर्मकार्ये। तस्य तत्कार्यार्थमेवागतत्वात्। तत्र हेतुः **पूर्वे**ति। एतस्यापि रथारोहणस्य संहारार्थरथारोहणतुल्यत्वात्। अनिरुद्धांशेन निर्बन्धने स न तथा कुर्यादित्यर्थः। **रक्षे**ति। अधुना सात्यकेः पुराध्यक्षत्वाद्रक्षारूपक्रियाशक्तिरूपत्वम्। **ईक्षित** इत्यत्र। **बाह्य** इति। बाह्यो दाम्पत्यसम्बन्ध एतस्मिन्समये भगवतः सकाशादेतासां निवर्तकः। एतस्य सभागमनकालत्वादित्यर्थः। **तथापि धर्मपरतापी**ति। यत्किञ्चिद्धर्मानुरोधेपि धर्मनिष्ठता आसां मा भूदिति भगवदाशय इति हेतोर्लोकेषु धार्मिकत्वं ज्ञापयितुं 'यद्यदाचरति श्रेष्ठ' इतिन्यायेन लोकान् शिक्षयितुं बाह्यतः स्वस्य धर्मकरणम्। अन्तस्तु जातहासत्वात्काम रसमनुभवतीत्यर्थः।

धर्मद्वेषवत्केवलधर्मनिष्ठताप्यासामयुक्तेत्यपिशब्दः । अन्यथेति । निरोधाभावे स्त्रीणां चित्तं लौकिकपदार्थे धर्मे वासक्तं भवेत्, भगवतो विसृष्टत्वादित्यर्थः । अत एवाभासे कामनिवृत्तिनिराकरणमेव वाक्यतात्पर्यार्थ उक्तः । सुधर्माख्यामित्यस्य वाक्यार्थ- 'स्तावत्सूत' इतिश्लोकाभासे उक्त एवेति नात्राभास उक्तः । षडूर्मय इति । 'क्षुत्पिपासे शोकमोहौ जरामृत्यू षडूर्मयः ।' तत्रोपविष्ट इत्यस्याभासे । सुखोपवशनमाहेति । भगवतो भानस्य स्वतःसिद्धत्वात्तदनुवादेनोपवेशनमेव वाक्यार्थ इति भावः । अत एव बभावितिपदस्याभानशङ्कानिवृत्त्यर्थकत्वमेव वक्ष्यन्ति । व्याख्याने । दिवीत्याधिभौतिकमिति । आधिभौतिकं रूपं ज्योतिश्चक्रे तिष्ठति, न तु स्वर्गे इत्यर्थः । परितोष(र्थ)माहेति । अयं वाक्यतात्पर्यार्थ उक्तः, शब्दार्थस्तूपस्थानमेव ।

### गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

ततोऽग्रतः प्रथमतो विप्रान्, सुहृदो मित्राणि, प्रकृतीर्दाराश्च स्रगादिभिः संविभज्य तेभ्यस्तानि दत्वा स्वयमुपायुङ्क्त भुक्तवान् । अत्र भगवद्भोगानन्तरमेव मित्रादिभोगो ज्ञेयः, प्रथमतस्तु विभागमात्रमेव । ततो भगवद्भोगावशिष्टस्य सेवकगामित्वमिति ज्ञेयम् ॥ १३ ॥ यावत् सर्वजनसन्मानपूर्वकं भोजनं भगवान् कृतवान् तावत् सूतः सुग्रीवाद्यैर्हयैर्युक्तं परमाद्भुतं स्यन्दनं रथमुपानीयाग्रतः प्रणम्यावस्थित इत्यन्वयः । आद्यशब्देन मेघपुष्पबलाहकानां सङ्ग्रहः ॥ १४ ॥ स्वपाणिना सारथेः पाणिं गृहीत्वा सात्यक्युद्धवसंयुक्तो भगवांस्तं रथं अथानन्तरमेवारुहत् । तच्छोभातिशयं सूचयन् दृष्टान्तमाह—पूर्वाद्रिं उदयाचलं यथा भास्करः सूर्य आरोहति तथेति ॥ १५ ॥ व्रीडा लज्जा, प्रेम च ताभ्यां सहितैरन्तःपुरस्त्रीणां वीक्षितैः दृष्टिभिरीक्षितः निरीक्ष्यमाणस्ततश्च ताभिः कृच्छ्रात् क्लेशात् विसृष्टः गन्तुमनुज्ञातो जातहासश्च ततो गृहान्निरगात् । हासप्रयोजनमाह—तासां मनो हरन्निति । 'हासो जनोन्मादकरी च माया' इति वचनात् । हासेन परमप्रेमवत्यस्ता मोहयित्वा तदनुमतिं संपाद्य ययौ, अन्यथा विरहेण ता व्याकुलाः स्युरित्याशयः ॥ १६ ॥ एवं सर्वगृहेभ्यः पृथक्पृथक् निर्गत्यानन्तरमेक एव सन् सर्वैर्वृष्णिभिः परिवारितः सुधर्माख्यां सभां प्राविशत् । हे अङ्ग हे राजन् ! यस्यां सभायां निविष्टानां क्षुत्पिपासे प्राणस्य, शोकमोहौ मनसः, जरामृत्यू शरीरस्य, इति षडूर्मयो न सन्ति न भवन्ति ॥ १७ ॥ तत्र सभायां परमासने उपविष्टः नृसिंहैर्मनुष्यश्रेष्ठैः यदुभिर्वृतः । तत्र हेतुः—यदूत्तमः विभुः कृष्णः स्वभासा स्वदीप्त्या ककुभो दिशोऽवभासयन् बभौ । तत्र दृष्टान्तमाह—यथेति । दिवि आकाशे स्थितस्तारकागणैः वृतः उडुराजः चन्द्रो यथा सर्वा दिशोऽवभासयन् भाति तथेति ॥ १८ ॥

### अन्वितार्थप्रकाशिका

संविभज्येति ॥ ततोऽग्रतः प्रथमतो विप्रान् सुहृदो मित्राणि प्रकृतीर्दाराश्च स्रगादिभिः संविभज्य तेभ्यस्तानि दत्वा स्वयमुपायुङ्क्त भुक्तवान् । गृहस्थस्य शेषभोजित्वात् ॥ १३ ॥ तावदिति ॥ यावत्सर्वजनसम्मानपूर्वकं भोजनं भगवान् कृतवान् तावत्सूतः सुग्रीवाद्यैर्हयैर्युक्तं परमाद्भुतं स्यन्दनं रथमुपानीयाग्रतः प्रणम्यावस्थितः । यद्वा । अग्रतः तत्तत्स्त्रीगृहनिर्गममार्गाणामेकताप्राप्तिस्थाने तद्गोपुराग्रभागे रथमुपानीय ॥ १४ ॥ गृहीत्वेति ॥ स्वदक्षिणपाणिना सारथेः पाणी अञ्जलीभूतौ गृहीत्वा सात्यक्युद्धवसंयुक्तो भगवांस्तं रथमथानन्तरमेवारुहत् । रुहेरङ् छान्दसः । पूर्वाद्रिम् उदयाचलं यथा भास्करः सूर्य आरोहति तथा ॥ १५ ॥ अथ पुनस्तद्रथारोहात्पूर्ववृत्तं सिंहावलोकनन्यायेनाह—ईक्षित इति ॥ अन्तःपुरस्त्रीणां व्रीडा लज्जा प्रेम च ताभ्यां सहितैः वीक्षितैः दृष्टिभिरीक्षितः निरीक्ष्यमाणस्ततश्च ताभिः कृच्छ्रात् क्लेशात् विसृष्टः गन्तुमनुज्ञातः मध्याह्न एव भोजनार्थमेष्याम्येव किमिति तप्यसे इति प्रत्येकं सूचयन् जातहासश्च तासां मनो हरन् गृहान्निरगात् ॥१६॥ सुधर्मेति ॥ अङ्ग हे राजन् ! एवं सर्वगृहेभ्यः पृथक् पृथक् निर्गत्यानन्तरमेक एव अभिन्नमूर्त्तिर्दृष्टः । सर्वैर्वृष्णिभिः परिवारितः सुधर्माख्यां सभां प्राविशत् । यस्यां सभायां निविष्टानां क्षुत्पिपासे प्राणस्य शोकमोहौ मनसः जरामृत्यू शरीरस्येति षडूर्मयो न सन्ति न भवन्ति ॥ १७ ॥ तत्रेति ॥ तत्र सभायां परमासने उपविष्टः नृसिंहैर्मनुष्यश्रेष्ठैः यदुभिर्वृतः यदूत्तमः विभुः कृष्णः स्वभासा स्वदीप्त्या ककुभो दिशोऽवभासयन् बभौ । यथा दिवि आकाशे स्थितस्तारकागणैः वृतः उडुराजः चन्द्रः सर्वा दिशोऽवभासयन् भाति तथा ॥ १८ ॥

### श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्

विप्रादिदारांतान् स्रगादिभिः संविभज्यतेभ्यस्तानिस्वेप्सर्थः । तत स्वयमुपायुंक्त तानि जग्राह ॥ १३-१४ ॥ पूर्वाद्रिमुदयाचलमिव ॥ १५ ॥ सव्रीडप्रेमवीक्षितैः । वियोगासहनव्यंजकैः ईक्षितश्चलितुद्यतोऽपिक्षणं स्थिरीकृत इत्यर्थः । पश्चात् कृच्छ्रात् कृच्छ्रेण विसृष्टः दृष्ट्या प्रस्थानेऽनुमतः ॥१६॥ यस्यां निविष्टानां प्रविष्टानां अंग हे परीक्षित् ॥१७॥ ककुभोदिशः ॥१८॥

### भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

संविभज्येति । ततः, स्रक्ताम्बूलानुलेपनैः, अग्रतः विप्रान्, संविभज्य विप्रेभ्यः स्रगाद्यर्पणं कृत्वेत्यर्थः । सुहृदः, प्रकृतीः, दारान् स्रगादिभिः प्रतोष्य, ततः स्वयं उपायुङ्क्त भोगार्थमग्रहीत् ॥ १३ ॥ तावदिति । तावत् सूतो दारुकः, सुग्रीवाद्यैः हयैः, युक्तं, परमाद्भुतं, स्यन्दनं रथं, उपानीय प्रणम्य, अग्रतः अवस्थितः अभवत् ॥ १४ ॥ गृहीत्वेति । ततः पाणिना स्वहस्तेन,

सारथेर्दारुकस्य, पाणिं गृहीत्वा, अथ तं रथं, भास्करः सूर्यः, पूर्वाद्रिं पूर्वपर्वतं इव, सात्यक्युद्धवसंयुक्तः सन्, आरुहत् समारुरोह ॥१५॥ वीक्षित इति । व्रीडो व्रीडा च प्रेम च ताभ्यां सहितानि वीक्षितानि तैः, व्रीडाप्रेमयुक्तवीक्षणैः अन्तःपुरस्त्रीणां, मनः हरन्, ताभिः, तथैव वीक्षितः, कृच्छ्रात्, विसृष्टः, जातहासः, भगवान् निरगात् चचाल ॥ १६ ॥ सुधर्मामिति । अङ्ग हे राजन्, यन्निविष्टानां यस्यां प्रविश्य कृतोपवेशनानां, षडूर्मयः अशनापिपासाशोकमोहजरामृत्युरूपाः, न सन्ति । तथाभूतां, सुधर्माख्यां, सभां, सर्वैः वृष्णिभिः, परिवारितः सन्, प्राविशत् ॥ १७ ॥ तत्रेति । तत्र सुधर्मायां, स्वभासा स्वस्य दीप्त्या, ककुभो दिशः, अवभासयन्, नृसिंहैः मनुष्येषु शौर्यवीर्यादिभिः सिंहसमानताभाग्भिरित्यर्थः । यदुभिर्यादवैः वृतः, विभुः, वरूत्तमः श्रीकृष्णः, परमासने, उपविष्टः सन्, दिवि तारकागणैः वृतः, उडुराजश्चन्द्रः, यथा तथा, बभौ ॥ १८ ॥

### कृष्णप्रिया

वे पुष्पमाला, ताम्बूल, चन्दन और अङ्गराग आदि वस्तुएँ पहले ब्राह्मण, स्वजनसम्बन्धी, मन्त्री और रानियों को बाँट देते; और उनसे बची हुई स्वयं अपने काम में लाते ॥ १३ ॥ भगवान् यह सब करते होते, तबतक दारुक नामका सारथी सुग्रीव आदि घोड़ों से जुता हुआ अत्यन्त अद्भुत रथ ले आता और प्रणाम करके भगवान् के सामने खड़ा हो जाता ॥ १४ ॥ इसके बाद भगवान् श्रीकृष्ण सात्यकि और उद्धवजी के साथ अपने हाथ से सारथी का हाथ पकड़कर रथपर सवार होते—ठीक वैसे ही जैसे भुवनभास्कर भगवान् सूर्य उदयाचलपर आरूढ़ होते हैं ॥ १५ ॥ उस समय रनिवास की स्त्रियाँ लज्जा एवं प्रेम से भरी चितवन से उन्हें निहारने लगतीं और बड़े कष्ट से उन्हें विदा करतीं । भगवान् मुसकराकर उनके चित्त को चुराते हुए महल से निकलते ॥ १६ ॥ परीक्षित् ! तदनन्तर भगवान् श्रीकृष्ण समस्त यदुवंशियों के साथ सुधर्मा नामकी सभा में प्रवेश करते । उस सभा की ऐसी महिमा है कि जो लोग उस सभा में जा बैठते हैं, उन्हें भूख-प्यास, शोक-मोह और जरामृत्यु—ये छः ऊर्मियाँ नहीं सतातीं ॥ १७ ॥ इस प्रकार भगवान् श्रीकृष्ण सब रानियों से अलग-अलग विदा होकर एक ही रूप में सुधर्मा-सभा में प्रवेश करते और वहाँ जाकर श्रेष्ठ सिंहासनपर विराज जाते । उनकी अङ्गकान्ति से दिशाएँ प्रकाशित होती रहतीं । उस समय यदुवंशी वीरों के बीच में यदुवंशशिरोमणि भगवान् श्रीकृष्ण की ऐसी शोभा होती, जैसे आकाश में तारों से घिरे हुए चन्द्रदेव शोभायमान होते हैं ॥ १८ ॥

तत्रोपमन्त्रिणो राजन् नानाहास्यरसैर्विभुम् । उपतस्थुर्नटाचार्या नर्तक्यस्ताण्डवैः पृथक्[1] ॥ १९ ॥
मृदङ्गवीणामुरजवेणुतालदरस्वनैः । ननृतुर्जगुस्तुष्टुवुश्च सूतमागधवन्दिनः ॥ २० ॥
[2]तत्रस्थाः ब्राह्मणाः केचिदासीना ब्रह्मवादिनः । पूर्वेषां पुण्ययशसां राज्ञां चाकथयन् कथाः ॥ २१ ॥
तत्रैकः पुरुषो राजन्नागतोऽपूर्वदर्शनः । विज्ञापितो भगवते प्रतीहारैः प्रवेशितः ॥ २२ ॥
स नमस्कृत्य कृष्णाय परेशाय कृताञ्जलिः । राज्ञामावेदयद्दुःखं जरासन्ध[3]निरोधजम् ॥ २३ ॥
ये च दिग्विजये तस्य सन्नतिं न ययुर्नृपाः । प्रसह्य रुद्धास्तेनासन्नयुते द्वे गिरिव्रजे ॥ २४ ॥

### कर्दमक्षमा

अन्वयः—राजन् ! तत्र, उपमंत्रिणः, नानाहास्यरसैः, नटाचार्याः, च, नर्तक्यः, ताण्डवैः, पृथक् पृथक्, विभुम्, उपतस्थुः ॥ १९ ॥ सूतमागधवन्दिनः, मृदङ्गवीणा मुरजवेणुतालदरस्वनैः, तुष्टुवुः, जगुः, च, ननृतुः ॥ २० ॥ तत्र, आसीनाः, केचित्, ब्राह्मणाः, ब्रह्मवादिनः, पुण्ययशसाम्, पूर्वेषाम्, च, राज्ञाम्, कथाः, च, अकथयन् ॥ २१ ॥ राजन् ! अपूर्वदर्शनः, एकः, पुरुषः, आगतः, प्रतीहारैः, भगवते, विज्ञापितः, च, प्रवेशितः ॥२२॥ कृताञ्जलिः, सः, नमस्कृत्य, परेशाय, कृष्णाय, कृताञ्जलिः, जरासन्धनिरोधजम्, राज्ञाम्, दुःखम्, आवेदयत् ॥ २३ ॥ तस्य, दिग्विजये, ये, नृपाः, सन्नतिम्, न, ययुः, च, तेन, प्रसह्य, द्वे, अयुते, गिरिव्रजे, रुद्धाः, तेषाम्, दुःखम्, आवेदयत् ॥ २४ ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

उपमंत्रिणः परिहासकाः । पृथक्पृथक् स्वस्वसमुदायैः ॥ १९ ॥ मृदंगादयः प्रसिद्धाः । दरः शंखः । सूतादयस्तुष्टुवुः ॥ २० ॥ ब्राह्मणा ब्रह्म वेदमाहुर्मंत्रान्व्याचक्षतेत्यर्थः । वादिनो वदनचतुराः ॥ २१-२३ ॥ गिरिव्रजे तत्संज्ञके दुर्गे रुद्धा आसन् । तेषां च दुःखमावेदयदित्यन्वयः ॥ २४ ॥

---

१. समं–विज. । २. तत्रस्थाः–वीर. विज. ; तत्राहु–श्रीधर. बंशी. जीव. ; तत्रस्था ब्राह्मणाः केचिदाहुर्वै ब्रह्मवादिनः–श्रीधर. टि. । ३. सन्वोप–विज. ; सन्वविरोध–प्रा. पा. ।

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

राजन्निति राजसभायामेतत्संभवत्येवेति भावः । तत्र सभायाम् ॥१९-२०॥ गानोत्तरं कः प्रसंगस्तत्राह-तत्राहुरिति । इत्यर्थ इति । वेदव्याख्यानमकुर्वन्नित्यर्थः । वादिनो वदनचतुराः । केचिदिति तद्वैरल्यमाह—आसीना इत्यनेन वेदेतिहासपुराणवक्तृणामीश्वरेऽप्यागते नोत्थानं कार्यमिति ध्वनितम्, तच्च ब्राह्मणा इत्युक्तेर्ब्राह्मणस्यैवेति सूचितमत एव सूतस्य बलदेवेनानुत्थाने वधः कृत इत्यग्रे स्फुटीभविष्यति । इत्यभिप्रेत्यैव संहितायाम्—"व्यासासनोपविष्टस्तु विप्रो व्यासो न संशयः । गुरुविप्रनृपेभ्यापि वृद्धैः पितृपितामहैः ॥ पूजनीयः प्रयत्नेन तथा धर्मो न हीयते । नो नमेन्नाशिवं चोद्यान्नाभ्युत्थानं तदासनात् ॥ कुर्वीत च महाप्राज्ञः सर्वपूज्यस्तदा हि सः ।" इत्युक्तम् । पुण्ययशसां नलादीनाम् ॥ २१ ॥ तत्र कथावसरे । अपूर्वदर्शनोऽदृष्टपूर्वः ॥ २२ ॥ सोऽपूर्वपुरुषः । ते राजानः ॥ २३ ॥ तस्य जरासन्धस्य । ये राजानः ते । तेन जरासंधेन । द्वे अयुते विंशतिसहस्राणि । साष्टशतानि द्वे अयुते चेत्यपि ज्ञेयम् । शतान्यष्टाविति वक्ष्यमाणत्वात् । रोधनप्रयोजनं चोक्तं सभापर्वणि युधिष्ठिरं प्रति श्रीकृष्णेन । "स हि राजा जरासन्धो यियक्षुर्वसुधाधिपैः । महादेवं महात्मानमुमापतिमरिंदम् ॥" इति प्रथमस्कंधेऽपि राजानं प्रति द्वारकातः समागतेनार्जुनेनाप्युक्तम्—"तेनाहृताः प्रमथनाथमखाय भूपाः" इति लक्षसंख्यराजबलिभिर्महादेवयजने तस्य कामनेति कथा भारतादिप्रसिद्धास्तीति ॥ २४ ॥

### श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी

विभुं सर्वरसपरिपूर्णं हे राजन् इति कौतुकात् ताण्डवैः नृत्यैः उपतस्थुः असेवन्त ॥ १९ ॥ सूतादीनां नर्त्तनगाने पूर्वतो विलक्षणे ज्ञेये ॥ २० ॥ ब्राह्मणाः वेदार्थाभिज्ञाः कथाश्च कथयन् इतिहासपुराणवचनादिना ॥ २१ ॥ अपूर्वदर्शनः अदृष्टपूर्वः प्रतीहारैरित्यस्योभयत्रान्वयः ॥२२॥ परेशायेति । दूतस्य तादृशस्फूर्तिद्योतकं कृष्णाय राज्ञां दुःखमावेदयत् अर्थात्तमेव नमस्कृत्य दुःखमिति दुःखोत्तरं वचनमित्यर्थः ॥ २३ ॥ के ते राजानः ! इत्यपेक्षायामाह—येचेति । तस्य जरासन्धयस्य सन्नतिं तस्मिन्नत्यन्तनम्रतां ये न ययुः ये च येन हेतुना तेन जरासन्धेन रुद्धाश्चासन् रोधनप्रयोजनश्चोक्तं सभापर्वणि युधिष्ठिरं प्रति श्रीभगवतैव—

"स हि राजा जरासन्धो यियक्षुर्वसुधाधिपैः । महादेवं महात्मानमुमापतिमरिन्दम ॥" इति ॥ २४ ॥

### श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी

विभुं सर्व्वरसपरिपूर्णम्, हे राजन्निति कौतुकात्, यद्वा, राजन्तः कमनीया ये नानाविधा हास्यरसास्तैः, ताण्डवैर्नृत्यैरुपतस्थुरसेवन्त । तदेवोक्तपोषण्यायेनाह—मृदंगेत्यादिना जगुरित्यन्तेन । यद्वा, ताण्डवैरभिनयैर्नटाचार्य्या उपतस्थुः, नर्तवयश्च मृदंगादिस्वनैर्ननृतुर्जगुश्च; मुरजो मृदंगभेदः ॥ १९-२० ॥ वादिनो वेदव्याख्यानिपुणाः, किंवा वादपरा इति वेदार्थाभिज्ञतोक्ता; कथा अकथयन् इतिहासपुराणवाचनादिना ॥ २१ ॥ एवमुपलक्षणतया पौर्व्वाह्णिकचरितमुक्त्वा कदाचित्तादृशसमय एव कश्चिद् राजदूत आगत इति प्रसंगसाजात्यादाह—तत्रेति । अपूर्व्वदर्शनोऽदृष्टपूर्व्वः, हे राजन्निति प्रसंगान्तरेण रसविशेषात्; यद्वा, राज्ञामाप्तदूतत्वादिना राजमानः; यद्वा, अकारप्रश्लेषेण अराजन्निति स्वामिनां तेषां महादुःखेन म्लायमान इत्यर्थः । भगवते विज्ञापित इति सर्व्वैश्वर्य्यप्रकटनेन तस्मिन् द्वारपालानां तादृशव्यवहारो युक्त एवेति भावः । यद्वा, भगवते सर्व्वज्ञायापि विज्ञापितः सन्, यद्वा, पश्चात्तदाज्ञया प्रवेशितश्च ॥ २२ ॥ कृष्णाय सर्व्वसुखप्रदाय, यतः परेशाय साक्षात्परमेश्वराय; यद्वा, कृष्णाय साक्षाद्भगवते, अतः परेशाय सर्व्वशक्तिमते, अतएवावेदयत्, निभृतं राजभिर्विलिख्य दत्तया विज्ञप्तिपत्रिकया ॥ २३ ॥ सन्नतिमत्यन्तनम्रताम्; ते तेन जरासन्धेन रुद्धा आसन्, अन्यत्तैर्व्याख्यातम् । तत्र च ये सन्नतिं न ययुस्तेन हेतुना, ये जरासन्धनिरुद्धा आसन्निति, अथवा के ते राजान इत्यपेक्षायामाह—ये चेति । अर्थः स एव । रोधने प्रयोजनं चोक्तं सभापर्व्वणि श्रीयुधिष्ठिरं प्रति श्रीभगवतैव-'स हि राजा जरासन्धो यियक्षुर्बसुधाधिपैः । महादेवं महात्मानमुमापतिमरिन्दम ॥" इति ॥२४॥

### श्रीमद्वीरराघवाचार्यकृता भागवतचन्द्रचन्द्रिका

तत्रेति । तत्र तदा हे राजन् ! उपमन्त्रिणः परिहासकाः हास्यरसैर्विभुं श्रीकृष्णम् उपतस्थुः तथा पृथक् स्वस्य समुदायैः नटाचार्यास्ताण्डवादिभिः ॥ १९ ॥ मृदङ्गादयः प्रसिद्धाः दरः शङ्खः तेषां स्वनैः ननृतुर्जगुश्च सूतादयः तुष्टुवुः तत्र मागधाः वंशावलीपाठकाः बन्दिनः स्तुतिपाठकाः ॥ २० ॥ तत्रस्थाः सभायां स्थिताः पुण्यं यशो येषां तेषां पूर्वेषां राज्ञां कथाः कथयामासुः ॥ २१ ॥ एवमाह्निकमनुर्वणितम् । अथ जरासन्धनिरुद्धराजसन्देशहरागमनं प्रस्तौति—तत्रेति । इत्थं नीयमानदिनानाम् एकस्मिन् दिने हे राजन् ! अपूर्वदर्शनः न पूर्वं दर्शनं यस्य सः एकोऽसहायः कश्चित्पुरुष आगतः प्रतिहारैर्द्वारपालैर्भगवते ज्ञापितः ततः प्रवेशितश्च ॥ २२ ॥ स इति । स आगतः पुरुषः कृताञ्जलिर्बद्धोऽञ्जलिर्येन सः जरासन्धेन यो निरोधः तत्प्रभवं राज्ञां दुःखमावेदयत् ॥ २३ ॥ येचेति । तस्य जरासन्धस्य दिग्विजये ये ये नृपाः सन्नतिं नम्रतां न ययुः न प्रापुः ते द्वेऽयुते नृपाः गिरिव्रजसंज्ञके दुर्गे तेन जरासन्धेन बलान्निरुद्धाः आसन् तेषां राज्ञामिति पूर्वेण सम्बन्धः ॥ २४ ॥

### श्रीविजयध्वजतीर्थकृता पदरत्नावली

नानाविधैः हास्यैः हसनविषयैः रसैः रागजनकवचनैः ॥ १९ ॥ नटादयो ननृतुः सूतादयो जगुः ॥ २० ॥ गानानान्तरं कः प्रसङ्ग इत्यत्राह—तत्रस्था इति । ष्ठा गतिनिवृत्ति वाचिना शयित्वमुपतिष्ठत्वं वा सूच्यते अत्र तयोः को विवक्ष्यत इत्यत उक्तम् आसीना इति ॥ २१ ॥ तत्र तस्यामवस्थाम् ॥ २२ ॥ जरासन्धेन कृतोपरोधो निरोधः तस्माज्जातम् ॥ २३ ॥ गिरिव्रजे नगरे ॥ २४ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

उपमन्त्रिणः परिहासकाः नटाचार्य्याश्च ऐन्द्रजालिकाद्याः पृथक् स्वस्वसमुदायैः ॥ १९ ॥ ते ते तत्र ननृतुर्जगुश्च । सूताद्यास्तुष्टुवुरेव ॥ २० ॥ ब्राह्मणा ब्रह्म वेदमाहुः वादिनो वदनचतुराः ॥ २१-२३ ॥ जरासन्धनिरोध एव कथमित्यमेपेक्षायामाह—ये चेति । सन्नतिं करदानादिना नम्रत्वेन तदीयत्वस्वीकारं ते प्रसह्य बलात् गिरिव्रजसंज्ञके दुर्गे तेन जरासन्धेन रुद्धा आसन् कियन्तस्ते इत्यपेक्षायामाह द्वे अयुते विंशतिसहस्राणि अत्र लक्षसङ्ख्यराजवलिभिः महाभैरवस्य यजने तस्य कामना इति कथा भारतादिषु प्रसिद्धा ॥ २४ ॥

### गूढार्थदीपिनी

तत्रेति युग्मम् । उपमन्त्रिणः परिहासका विदूषका इत्यर्थः हास्यरसैः विभुं श्रीकृष्णमुपतस्थुः सेवितवन्तः । नटाचार्याः मृदङ्गादिस्वनैः सह ताण्डवनृत्यैः उपतस्थुः नर्तकयश्च पृथक् पृथक् स्वसमुदायैः सह ननृतुः जगुश्च । सूतादयश्च तुष्टुवुरिति योज्यम् । दरः शंखः ॥ १९-२० ॥ तत्र सभायामासीनाः केचित् ब्राह्मणा वेदज्ञा ब्रह्म वेदमाहुः मन्त्रान् व्याख्यातवन्तः । अन्ये वादिनश्च वदनचतुराः कथाः अकथयन् पुण्ययशसां नलादीनाम् । 'पुण्यश्लोको नलो राजा' इत्युक्तेः ॥ २१ ॥ अपूर्वदर्शनः अदृष्टपूर्वः पुरुषः । प्रतीहारैः द्वारपालैः भगवते विज्ञापितः । तदाज्ञया अन्तःप्रवेशितश्च ॥२२॥ कृष्णाय कृष्णं प्रसादयितुम् ॥२३॥ ये नृपाः सन्नतिं नम्रतापूर्वकं साहाय्यं न ददुः तेन जरासन्धेन गिरिव्रजे दुर्गे निरुद्धाः आसन् । द्वे अयुते विंशतिसहस्राणि अष्टौ शतानीति अनुक्तमपि ज्ञेयमत्र अग्रे वक्ष्यमाणत्वात् ॥ २४-२५ ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

तत्र मृदङ्गादिस्वनैः तदनुसारेण नटा तर्तक्यश्च ननृतुर्जगुश्च सूतादयश्च स्वस्वकर्मणा तुष्टुवुः ॥ २० ॥ तत्र सभायामासीना केचिद्ब्रह्मवादिनः उभयब्रह्मवादिनः ब्राह्मणाः आहुः उभे ब्रह्मणीति कर्मपदाध्याहारः केचिद्ब्राह्मणास्तु राज्ञां कथाश्च अकथयन् कथयामासुः ॥ २१-२३ ॥ तेन जरासन्धेन गिरिव्रजे ये रुद्धा आसन् तेषां दुःखमावेदयदित्यन्वयः ॥ २४ ॥

### श्रीसत्यधर्मकृता श्रीभागवतटिप्पणी

उपमन्त्रिण इति पाठे विदूषका इत्यर्थः । तत्राथ मन्त्रिण इति पाठे द्वितीयाबहुवचनम् । विभुं तथा मन्त्रिणश्च । हास्यरसैर्हासाह्लादकवचनैरुपतस्थुरुपासाञ्चक्रुः । नटाचार्य इतरनटशिक्षकास्तद्गुरवो नर्तक्योऽप्सरसश्च ताण्डवैः, सममुपतस्थुः ॥ १९ ॥ मृदङ्गः किञ्चिन्महान् मुरजः किञ्चित्सङ्कुचितमुखस्तद्विशेषः । मृदङ्गा मुरजाभेदा इत्यमरः । मृदेवाङ्गं यस्य स मृदङ्गो घटवाद्यं वा । तालस्तलसम्बन्धी दरः शङ्खश्च तेषां स्वनैः । तालतलेति पाठे तालं कांशस्य वाद्यभाण्डम् । वाद्यभाण्डे तु कांशस्य तालमिति विश्वः । नटादयो ननृतुर्मन्त्र्यादयस्तुष्टुवुः ॥ २० ॥ तत्रस्थाः सुप्सुपेति समासः । ब्राह्मणा ब्रह्मवादिन आसीनाश्च पुण्ययशसां पूर्वेषां राज्ञां कथाश्चाकथयन् ॥ २१ ॥ अपूर्वदर्शनो न विद्यते पूर्वं दर्शनं यस्य सः । नूतनः कदाऽप्यदृष्टः कश्चित्पुरुष आगतः । प्रतीहारैः प्रतिहारैः । प्रतीहारप्रतिहाराविति द्विरूपकोशः । द्वारपालैर्भगवता विज्ञापितः पुनस्तदाज्ञया तैरन्तःप्रवेशितः ॥ २२ ॥ स पुरुषः परेशाय कृष्णाय नमस्कृत्य तमनुकूलयितुं कृताञ्जलिः सन् राज्ञां जरासन्धोपरोधनं तन्निरोधाज्जातं दुःखमावेदयन्निवेदयामास ॥ २३ ॥ ते च क इत्यत आह । ये त्विति । तस्य जरासुतस्य दिग्विजये ये सन्नतिं प्रावण्यं नाययुर्न गतवन्तस्ते तेन जरासन्धेनायुते द्वे सहस्रे चेत्याहृत्य द्वाविंशतिसहस्राणि तथाऽष्टौ शतानीति शेषे तदुपर्यष्टशतसङ्ख्यालाभः । वक्ष्यति चैवम् । प्रसह्य बलात्कारेण गिरिव्रजे तन्नामके दुर्गे निरुद्धा आसंस्तेषां राज्ञामित्यन्वयः ॥ २४ ॥

### श्रीमद्वल्लभाचार्य्यकृता सुबोधिनी

ततो धर्मफलमिव वदन् मनसः परितोषार्थमाह तत्रोपमन्त्रिण इति । उपमन्त्रिणः कौतुकिनः । राजन्निति ज्ञापनार्थं सम्बोधनम् । नानाविधा हास्यरसाः । लौकिकीभाषेयं धर्मे चित्तोद्वेगनिवारणार्थमुक्ता । विभुत्वादप्रेरिता अपि तथा उपतस्थुः । न केवलं हास्यरसा एव, किन्तु शृङ्गारादयोऽपि विभावादिभिः प्रकाशिता इत्याह उपतस्थुरिति । नटाः रसाभिनयनकर्तारः

मुद्धस्वाङ्गप्रदर्शकाः । स्त्रियो नर्तक्यः लास्यप्रदर्शिकाः । उभयविधा अपि सभात्वात् ताण्डवैरेव पृथक् पृथक् उपतस्थुः । नरा नार्य इति वा पाठः ।। १९ ।। भगवतः सभायां गमनमुत्सवरूपमिति ज्ञापयितुं वाद्यमाह मृदङ्गेति । षड्विधानां स्वनैः सह ननृतुर्जगुस्तुष्टुवुः । स्तोत्रे नटादयो नात्यन्तमभिज्ञा इति सूतादीन्निर्दिशति सूतमागधवन्दिन इति ।। २० ।। लौकिकोत्सवमुक्त्वा तस्य धर्मफलत्वं ज्ञापयितुमाह तत्रस्था ब्राह्मणाः केचिदिति । ते हि सभासदः सभायामधिकृताः धर्मनिर्णयार्थम्, यतो ब्रह्मवादिनः सर्वज्ञाः । अन्ये हि धर्मं न विदुः । केचिदिति साधारणाः, न तु वसिष्ठादयः । धर्मः परम्परागत एव कर्तव्य इति तादृश एव भगवता क्रियत इति ज्ञापयितुं ब्राह्मणैस्तथा निरूप्यत इत्याह पूर्वेषां पुण्ययशसामिति । इक्ष्वाकुप्रभृतीनां धर्मे यादृशं वर्तनम् । पुण्यं यशो येषामिति लोकेऽप्यविगीतानाम् । चकाराद्ब्राह्मणादीनामपि कथाः धर्मोपयुक्ताः अकथयन् । यतो धर्मवार्तेव सभायाम्, नत्वन्यवार्तेति ज्ञापितम् ।। २१ ।। यदर्थमेषा धर्मकथा निरूपिता, तं सात्त्विकानां निरोधं निरूपयितुं प्रस्तावनामाह तत्रैकः पुरुष इति त्रिभिः । धर्मेणालौकिकप्रकारेण निरुद्धाः बहिः जरासन्धद्वारा च उपायान्तरान्निवृत्ताः भगवन्तमेव विज्ञापयामासुः । तथापि भगवान् लोकन्यायेन लीलां करोतीति निश्चित्य दूतं प्रेषितवन्तः । तस्यागमनं निरूप्यते । एकः असहायः । पुरुषः समर्थः । सम्बोधनं ज्ञापनाय । अपूर्वं दर्शनं यस्येति अदृष्टपूर्वः । भिन्नप्रक्रमार्थं निरूपितः । स पूर्वं दौवारिकैर्विशेषेण ज्ञापितः । राजधर्मा एवैः । ततो भगवताभ्यनुज्ञातः प्रतीहारैः प्रवेशितः बहुभिरेकः । नीतिरेषा । तस्य कृत्यमाह स नमस्कृत्य इति । कृष्णाय, न तु राज्ञे, अलौकिकत्वात् । तत्र हेतुः परेशाय । कालादृष्टादीनामपि नियामकाय । न हि राज्ञा कालादयो निवारयितुं शक्याः । कृताञ्जलिरिति । दूतस्यापि सात्त्विकत्वं निरूपितम् । राजत्वाद्दुःखानुभवः । अत एव जरासन्धनिरोधादेव उत्पन्नं दुःखं भगवते आवेदयत् । भगवद्भक्तानां दुःखमनुचितमित्याशङ्क्य भक्तिविरुद्धधर्मसम्भवात् तेषां दुःखमिति वक्तुमभिमानमाह ये च दिग्विजय इति । नृपत्वात्सम्यङ्नतिं नम्रतां न ययुः । न तु भगवदीया इति । भगवद्विमुखो जरासन्ध इति । अतोऽन्तर्यामिप्रेरणया प्रसह्य तेनैव रुद्धाः द्वे अयुते गिरिव्रजे आसन् । अहन्ताया ममतायाश्च चतुर्दश चतुर्दश स्थानानीति सहस्रशः शतशश्च तेषां वृत्तय इति विंशतिसहस्राण्यष्टशतानि च सङ्ख्या भवति । अष्टशतान्युपसंहारे निरूपितानि । गिरीणां व्रजो यत्रेति कूटवत् पर्वताः परितो दुर्गत्वाय निरूपिताः ।। २४ ।।

### श्रीसुबोधिनी-सारः

तत्र स्थाने उपमंत्रिणः परिहासका नानाहास्यरसैर्विभुं कृष्णमुपतस्थुः भेजुः नटानामाचार्या नर्तक्यो वेश्याः पृथक् तांडवैरुपतस्थुः मृदंगादिशब्दैः सूतमागधवंदिनो ननृतुर्जगुः तुष्टुवुः ।। १९-२० ।। तत्र सभायामासीना वेदवादिनो ब्राह्मणाः केचित् पुण्यं यशो येषां तेषां पूर्वेषां राज्ञां कथा अवर्णयन् ।। २१ ।। तत्र स्थानेऽपूर्वदर्शनो नवीन एकः पुरुष आगतः प्रतीहारैर्द्वारपालैर्भगवते श्रीकृष्णाय विज्ञापितोनंतरं प्रवेशितः ।। २२ ।। परेषां ब्रह्मादीनामपीशाय नियंत्रे कृष्णाय नमस्कृत्य स पुरुषो राज्ञां जरासंधनिरोधाज्जातं दुःखमावेदयत् ।। २३ ।। ये च नृपा दिशां विजये तस्य सन्नतिं प्रणतिं न ययुर्न जग्मुस्ते द्वे अयुते विंशतिसहस्राणि अष्टशतानि चेत्यनुक्तमप्यत्र योज्यम् "अयुते द्वे शतान्यष्टौ" इत्यग्रे निरूपणात् । प्रसह्य बलात् तेन जरासंधेन गिरिव्रजे पर्वतदुर्गे निरुद्धा आसन् ।। २४ ।।

### श्रीविट्ठलरायात्मजश्रीवल्लभकृतलेखः

तत्रोपविष्ट इत्यस्याभासे । सुखोपवेशनमाहेति । भगवतो भानस्य स्वतःसिद्धत्वात्तदनुवादेनोपवेशनमेव वाक्यार्थ इति भावः । अत एव बभाविति पदस्याभानशङ्कानिवृत्त्यर्थकत्वमेव वक्ष्यन्ति । व्याख्याने । दिवौकसामाधिभौतिकमिति । आधिभौतिकं रूपं ज्योतिश्चक्रे तिष्ठति, न तु स्वर्गे इत्यर्थः । परितोष( र्थ )माहेति । अयं वाक्यतात्पर्यार्थ उक्तः, वाक्यार्थस्तूपस्थानमेव । तत्रस्था इत्यस्याभासे । धर्मफलत्वमिति । धर्मः फलं यत्र तादृशार्थत्वं धर्मार्थत्वमित्यर्थः । ये च दिग्विजये इत्यत्र । अहन्तेति । दशेन्द्रियान्तःकरणचतुष्टयमेवं चतुर्दशस्थानान्यहन्ताया ममतायाश्चेत्यष्टाविंशतिः । तथा च निरोध्येषु तावत्संख्यया वृत्तिसहिताहन्ताममतास्थानत्वादेते निरुद्धा इत्यभिमानस्य निरोधहेतुत्वं सूचितम् । पूर्वश्लोके दुःखजनकत्वेन जरासन्धनिरोधस्योक्तत्वादत्र निरोधानुवादेन तद्धेतुत्वभिमाननिरूपणं वाक्यार्थ इत्याशयेनाभासे तथोक्तम् ।

### गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

'राज्ञामेवमेवोत्सवो भवति, तं तु त्वं जानास्येव' इति सूचयन् सम्बोधयति—राजन्निति । तत्र सभायामुपमन्त्रिणः परिहासका नानाहास्यरसैर्विभुं कृष्णमुपतस्थुः सेवितवन्तः प्रसन्नं कृतवन्तः । तथा मृदङ्गादिस्वनैः सह नटानामाचार्याः पृथक् स्वस्वसमुदायेन ताण्डवैः नृत्यविशेषैः तमुपतस्थुरित्यन्वयः । तथा नर्तक्यश्च पृथक् मृदङ्गादिस्वनैः सह ननृतुः जगुश्चेत्यन्वयः । तथा सूतादयस्तं तुष्टुवुश्च । तत्र सूताः पौराणिकाः । मागधाः वंशप्रशंसकाः । बन्दिनस्तावकाः ।। १९-२० ।। तत्र सभायामासीनाः केचिद्ब्राह्मणा ब्रह्म आहुः मन्त्रान् व्याचक्षतेत्यर्थः । अन्ये च वादिनो वदनचतुराः सूताः पुण्यं यशो येषां पूर्वेषां राज्ञां कथाः अकथयन् । 'तत्रस्था' इति पाठे तु ब्रह्मवादिन इति एकमेव पदम्, कथा अकथयन्नित्येक एवान्वयश्च ।। २१ ।। एवं

प्रतिदिनं क्रियमाणमुक्त्वा कस्मिंश्चिद्दिवसे जातं वृत्तान्तान्तरमाह—तत्रेति । हे राजन् ! तत्र सभामध्ये न पूर्वं दर्शनं यस्य एवंभूतः कश्चिदेकः पुरुष आगतः प्रतीहारैः द्वारपालैर्भगवते ज्ञापितः ततस्तदाज्ञयान्तःप्रवेशितश्च स कृष्णाय नमस्कृत्य कृताञ्जलिः सन् जरासन्धनिरोधजं राज्ञां दुःखमावेदयदिति द्वयोरन्वयः । 'तस्मै निवेदनेन किम्' इत्यपेक्षायां 'तद्विमोचने तस्यैव सामर्थ्यात्' इत्याशयेनाह—परेशां कालकर्मादीनामपीशाय नियामकायेति ॥ २२-२३ ॥ 'के ते नृपाः कथं च ते निरुद्धा' इत्यपेक्षायामाह—ये चेति । तस्य जरासन्धस्य दिग्विजये ये च नृपाः संनतिं नम्रतां न ययुस्ते द्वे अयुते द्वे शतान्यष्टाविंशत्यपि ज्ञेयम् गिरिव्रजसंज्ञके दुर्गे तेन जरासन्धेन प्रसह्य बलान्निरुद्धा आसन्नित्यन्वयः ॥ २४ ॥

### अन्वितार्थप्रकाशिका

तत्रेति युग्मम् ॥ हे राजन् ! तत्र सभायामुपमन्त्रिणः परिहासका नानाहास्यरसैर्विभुं कृष्णमुपतस्थुः सेवितवन्तः । तथा मृदङ्गादीनां दरस्य शङ्खस्य च स्वनैः सह नटानामाचार्याः पृथक् स्वस्वसमुदायेन ताण्डवैः नृत्यविशेषैस्तमुपतस्थुः । नर्तक्यश्च पृथक् ननृतुः जगुश्च । तथा सूतमागधबन्दिनः तुष्टुवुः ॥ १९-२० ॥ तत्राहुरिति ॥ तत्र सभायामासीनाः केचिद् ब्राह्मणा ब्रह्म आहुः स्म मन्त्रान् व्याचक्षतेत्यर्थः । अन्ये च वादिनो वदनचतुराः सूताः पुण्यं यशो येषां तेषां पूर्वेषां राज्ञां कथाः अकथयन् । तत्राहुरित्यत्र तत्रस्था इति पाठे च ब्रह्मवादिन इति एकमेव पदम् एकवाक्यता च ॥ २१ ॥ तत्रैक इति ॥ हे राजन् ! तत्र सभामध्ये न पूर्वं दर्शनं यस्य एवंभूतः कश्चिदेकः पुरुष आगतः । प्रतीहारैः द्वारपालैर्भगवते विज्ञापितः ततस्तदाज्ञयाऽन्तः प्रवेशितश्च ॥ २२ ॥ स इति ॥ पुरुषः परेषां कालादीनामीशाय नियामकाय कृष्णाय कृष्णमनुकूलयितुं नमस्कृत्य कृताञ्जलिः सन् जरासन्धनिरोधजं राज्ञां दुःखं दुःखसूचकं वचनमावेदयत् ॥ २३ ॥ ये चेति ॥ तस्य जरासन्धस्य दिग्विजये ये नृपाः संनतिं नम्रतां न ययुस्ते द्वे अयुते विंशतिः सहस्राणि शतान्यष्टावित्यपि ज्ञेयम् । अग्रे तथोक्तेः गिरिव्रजसंज्ञके दुर्गे तेन जरासन्धेन प्रसह्य बलान्निरुद्धा आसन् । अत्र लक्षसंख्यराजबलिभिर्महाभैरवपूजाकामनयेति भारतादौ प्रसिद्धम् ॥ २४ ॥

### श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्

उपमंत्रिण उपहासकाः पृथक् पृथक् उपतस्थुः सिषेविरे ॥ १९ ॥ दरःशंखः ॥ २०-२१ ॥ प्रतिहारैर्विज्ञापितः प्रवेशितश्च ॥ २२-२३ ॥ संनतिं प्रणामं । कर्त्तुमितिशेषः गिरिव्रजे गिरिव्रजाख्ये दुर्गे । प्रसह्यबलात् । रुद्धाः आसन् । तेषां दुःखमावेदयदिति पूर्वेणान्वयः ॥ २४ ॥

### भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

तत्रेति । हे राजन्, तत्र तदा, उपमन्त्रिणः परिहासकाः, नानाहास्यरसैः, विभुं श्रीकृष्णं, उपतस्थुः परिचेरुः । तथा नटाचार्याः पृथक् स्वस्वसमुदायैः सह, उपतस्थुः । नर्त्तक्यः ताण्डवैः सह, पृथक् उपतस्थुः ॥ १९ ॥ मदङ्गेति । तत्र नटादयः, मृदङ्गवीणामुरजवेणुतालदरस्वनैः, ननृतुः जगुश्च । सूतमागधबन्दिनः तुष्टुवुः । तत्र सूताः पुराणवार्त्ताप्रवक्तारः, मागधा वंशावलीपाठकाः, बन्दिनः स्तुतिपाठकाः ॥ २० ॥ तत्रेति । तत्र सभायां, आसीनाः सम्यगुपविष्टाः, केचित् ब्राह्मणाः, ब्रह्म वेदमन्त्रान्, आहुर्व्याचक्षन्तः, केचित्, वादिनो वदनचतुराः, ब्राह्मणाः, पुण्ययशसां पवित्रकीर्त्तीनां, पूर्वेषां राज्ञां, कथाश्च, अकथयन् ॥ २१ ॥ एवमादिकमुपोद्घाताय वर्णयित्वाऽथ जरासंधसंरुद्धराजसंदेशहरागमनं प्रस्तौति । तत्रेति । तत्र सभायां, हे राजन्, अपूर्वं दर्शनं यस्य सः अपूर्वदर्शनः, एकोऽसहायः, पुरुषः कश्चित्पुमान्, आगतः । प्रतीहारैर्द्वारपालैः, भगवते, विज्ञापितः, प्रवेशितः । भगवदाज्ञयेति शेषः ॥ २२ ॥ स इति । सः पुरुषः, परेशाय परमेश्वराय, कृष्णाय, नमस्कृत्य, कृताञ्जलिः सन्, राज्ञां जरासंधेन यो निरोधस्तस्माज्जातं, यत् दुःखं, तत् आवेदयत् निवेदितवान् ॥ २३ ॥ ये चेति । तस्य जरासंधस्य, दिग्विजये, ये नृपाः, संनतिं च सम्यक् नमनमपि, न ययुः, ते द्वे अयुते विंशतिसहस्रसंख्याकाः नृपाः, गिरिव्रजे गिरिव्रजसंज्ञिके दुर्गे, प्रसह्य, तेन जरासंधेन, रुद्धाः आसन्, तेषां राज्ञामिति पूर्वेण संबन्धः ॥ २४ ॥

### कृष्णप्रिया

परीक्षित् ! सभा में विदूषकलोग विभिन्न प्रकार के हास्यविनोद से, नटाचार्य अभिनय से और नर्तकियाँ कलापूर्ण नृत्यों से अलग-अलग अपनी टोलियों के साथ भगवान् की सेवा करतीं ॥ १९ ॥ उस समय मृदङ्ग, वीणा, पखावज, बाँसुरी, झाँझ और शङ्ख बजने लगते और सूत, मागध तथा वंदीजन नाचते-गाते और भगवान् की स्तुति करते ॥ २० ॥ कोई-कोई व्याख्याकुशल ब्राह्मण वहाँ बैठकर वेदमन्त्रों की व्याख्या करते और कोई पूर्वकालीन पवित्रकीर्ति नरपतियों के चरित्र कह-कहकर सुनाते ॥२१॥ एक दिन की बात है, द्वारकापुरी में राजसभा के द्वारपर एक नया मनुष्य आया । द्वारपालों ने भगवान्

को उसके आने की सूचना देकर उसे सभाभवन में उपस्थित किया ॥ २२ ॥ उस मनुष्य ने परमेश्वर भगवान् श्रीकृष्ण को हाथ जोड़कर नमस्कार किया और उन राजाओं का, जिन्होंने जरासन्ध के दिग्विजय के समय उसके सामने सिर नहीं झुकाया था और बलपूर्वक कैद कर लिये गये थे, जिनकी संख्या बीस हजार थी, जरासन्ध के बंदी बनने का दुःख श्रीकृष्ण के सामने निवेदन किया ॥ २३-२४ ॥

[1]कृष्ण कृष्णाप्रमेयात्मन् प्रपन्नभयभञ्जन । वयं त्वां शरणंयामो भवभीताः पृथग्धियः[2] ॥ २५ ॥
लोको विकर्मनिरतः कुशले प्रमत्तः कर्मण्ययं[3] त्वदुदिते भवदर्चने स्वे ।
[4]यस्तावदस्य बलवानिह जीविताशां सद्यश्छिनत्त्यनिमिषाय नमोऽस्तु तस्मै ॥ २६ ॥
लोके[5] भवाञ्जगदिनः कलयावतीर्णः सद्रक्षणाय खलनिग्रहणाय चान्यः[6] ।
कश्चित् त्वदीयमतियाति निदेशमीश किं वा जनः स्वकृतमृच्छति तन्न विद्मः ॥ २७ ॥
स्वप्नायितं नृपसुखं परतन्त्रमीश शश्वद्भयेन मृतकेन धुरं वहामः ।
हित्वा [7]तदात्मनि सुखं [8]त्वदनीहलभ्यं क्लिश्यामहेऽतिकृपणास्तव माययेह[9] ॥ २८ ॥
तन्नो भवान् प्रणतशोकहराङ्घ्रियुग्मो[10] बद्धान् वियुङ्क्ष्व [11]मगधाह्वयकर्मपाशात् ।
यो भूभुजोऽयुतमतङ्गजवीर्यमेको बिभ्रद् रुरोध भवने [12]मृगराडिवावीः ॥ २९ ॥
यो वै त्वया द्विनवकृत्व उदात्तचक्र भग्नो मृधे खलु भवन्तमनन्तवीर्यम् ।
जित्वा नृलोकनिरतं [13]सकृदूढदर्पो युष्मत्प्रजा [14]रुजति [15]नोऽजित तद् विधेहि ॥ ३० ॥

**अन्वयः**

**अन्वयः**—हे कृष्ण ! हे कृष्ण ! हे अप्रमेयात्मन्, प्रपन्नभयभञ्जनः, भवभीताः, पृथग्धियः, वयम्, त्वाम्, शरणं, यामः ॥ २५ ॥ अयम्, लोकः, विकर्मनिरतः, कुशले, त्वदुदितेभवदर्चनेस्वे, कर्मणिप्रमत्तः, यः, तावद्, बलवान्, भवान्, अस्य, जीविताशाम्, सद्यः, छिनत्ति, अनिमिषाय, तस्मै, नमः, अस्तु ॥ २६ ॥ लोके, इनः, भवान् , सद्रक्षणाय, खलनिग्रहणाय, कलया, जगद्, अवतीर्णः, हे इशान, च, अन्यः, कश्चित्, ईश, तव, निदेशम्, अतियाति, किम्, जनः, स्वकृतम्, एच्छति, तत्, न, विद्मः ॥२७॥ ईश ! परतन्त्रम्, नृपसुखम्, स्वप्नायितम्, शश्वत्, भयेन, मृतकेन, धुरम्, वहामः, त्वदनीहलभ्यम्, तद्, आत्मनि, सुखम्, हित्वा, अतिकृपणाः, इह, तव, मायया, क्लिश्यामहे ॥ २८ ॥ तत्, प्रणतशोकहराङ्घ्रियुग्मः, भवान्, मगधाह्वयकर्मपाशात्, बद्धान्, वियुङ्क्ष्व, यः, एकः, अयुतमतङ्गजवीर्यम्, बिभ्रद्, मृगराट्, अवीः, इव, भवने, रुरोध ॥ २९ ॥ उदात्तचक्र! यः, वै, त्वया, द्विनवकृत्वः, मृधे, भग्नः, नृलोकनिरतम्, अनन्तवीर्यम्, भवन्तम्, सकृत्, जित्वा, उढदर्पः, नः, युष्मत्प्रजाः, रुजति, तद्, विधेहि ॥ ३० ॥

**श्रीधरस्वामिविरचिता भावार्थदीपिका**

कृष्णकृष्णेति षट्च्छ्लोको राज्ञां विज्ञप्तिस्तत्र प्रथमेन शरणाश्रयणं त्रिभिर्भयानुवादो द्वाभ्यां प्रार्थनमिति ॥ २५ ॥ पृथग्दर्शिनो लोकस्य भवभयं विवृण्वंतो नमंति । लोक इति । विकर्म निषिद्धं काम्यं च तस्मिन्नितरां रतः । स्वे कुशले धर्मे । भवतोऽर्चने त्वयोदिते पंचरात्रे । सामान्यतश्च गीतासु । "यत्करोषि यदश्नासि यज्जुहोषि ददासि यत् । यत्तपस्यसि कौन्तेय तत्कुरुष्व मदर्पणम् ॥" इति । प्रमत्तोऽनवहितो यावदयं लोकस्तावदेवास्य लोकस्य यः सद्यो जीविताशां छिनत्ति तस्मै तुभ्यमनिमिषाय कालात्मने नम इति ॥ २६ ॥ सेयं लोकस्य गतिस्त्वियं तु त्वद्भक्ता अतोऽस्माकं कुत एतद्दुःखमापन्नमित्याश्चर्येणाहुः । लोक इति । भो ईश । जगत इन ईश्वरः त्वयि सद्रक्षणार्थमवतीर्णेऽपि चेदस्माकं दुःखं स्यात्तर्हि किमन्यः कश्चिज्जरासंधादिस्त्वदाज्ञामपि लंघयति । किंच त्वया रक्ष्यमाणोऽपि जनः स्वकर्मजं दुःखं प्राप्नोत्येवेति न विद्मः न चैतदुभयमपि युक्तमिति भावः ॥ २७ ॥ किं दुःखं तदाहुः । स्वप्नायितमिति । स्वप्नवज्जातं नृपसुखं नृपोचितं सुखम् । यतः । परतंत्रं विषय-

---

१. राजान ऊचुः—त. पु. मू. । २. दृशः—वीर. । ३. ण्यपि—प्रा. पा. । ४. यास्ता—विज. । ५. त्वमीश जगतः—वीर. ; कालो भवान् जगदिदं—विज. ; भवान् भगवतः—च. पु. टि. । ६. चाद्य—वीर. ; चान्यत्—विज. । ७. यदा—विज. । ८. तदनीह—विज. । ९. येति—विज. । १०. युग्मबद्धा—वीर. ; युग्मो रुद्धान्—विज. । ११. मगधाधिप—विज. । १२. द्विजान्—च. पु. टि. । १३. स तु रूढ—विज. । १४. क्षिपति—विज. । १५. नोऽजितशं—वीर. ; चाशु च तद्—विज. ।

साध्यम् । किंच संप्रति शश्वद्भयं यस्मिंस्तेन मृतकतुल्येन शरीरेण धुरं पुत्रदारादिर्चिता केवलं वहामः । अहो कष्टं नः ये वयमितः पूर्वमेव निष्कामाः संतस्त्वां नाश्रिता इत्याहुः । हित्वेति । त्वत् त्वत्तो यदनीहैर्निष्कामैर्लभ्यमात्मनि स्वतः सिद्धं सुखं तद्धित्वा क्लिश्याम इति ॥ २८ ॥ त्वन्मायाकृतं कर्मबंधं त्वमेव निवर्तयेति प्रार्थयंते । तन्न इति । वियुंक्ष्व मोचय । मागधो जरासंधस्तत्संज्ञकात्कर्मपाशात् । भवद्भिरेव विक्रम्य ततो निर्गम्यतामिति चेदत आहुः । य इति । एक एवायुतमतंगजानां वीर्यं बिभ्रत्सन्स्वभवने भूभुजोऽस्मान् रुरोध । सिंहो मेषीरिव ॥ २९ ॥ किंच युष्मदीया वयमित्यस्मानधिकं बाधत इत्याहुः । यो वा इति । हे उदात्तचक्र उद्यतसुदर्शन यो वै द्विनवकृत्वोऽष्टादशवारांस्त्वया सह मृधे वर्तमाने तत्र सप्तदशकृत्वस्त्वया खलु भग्नः पराजितः पश्चादनंतवीर्यमपि नृलोके निरतं नरशरीरविनोदं भवंतं सकृज्जित्वोद्धदर्पः प्राप्तगर्वो युष्मत्प्रजा नो रुजति पीडयति तत्तत्र यद्युक्तं तद्विधेहीत्यर्थः ॥ ३० ॥

**श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः**

षण्णां श्लोकानां समाहारः षट्श्लोकी । विज्ञप्तिः प्रार्थना । तत्र षट्सु ॥ २५ ॥ पृथग्दर्शिनो यथार्थज्ञानशून्याः । तस्मिन्निषिद्धे काम्ये च ॥ २६ ॥ अहो त्वद्भक्तानामीदृशी गतिरित्युपालभंत इवाहुः—सेयमित्यादिना । किमत्र संशये वितर्के वा । तदुभयं त्वदाज्ञालंघनम्, त्वद्रक्ष्यमाणस्य दुःखं चेत्युभयम् । किंच लोके भवानिति जगदिनः साक्षात्सर्वेश्वर एव कलयांशेन श्रीबलदेवेन अन्यो निगृह्यमाणः खलः किं कस्मादन्यस्मात्कारणादित्यर्थः । हे ईशेति । जरासंधादेरपि त्वदधीनत्वं तज्जनस्यापि कर्माधीनत्वं सूचितम्, तद्द्वयं न विद्मः । अन्यत्तैः । तत्र चेदस्माकमित्यस्य स्थाने जनः स्वकर्मजमिति पाठोऽसभ्यः । तथा सद्रक्षणार्थमित्यत्र चकारपातश्च ज्ञेयः ॥ २७ ॥ तद्दुःखम् । ननु राज्यसुखं तु मरणलभ्यात्स्वर्गसुखादप्यधिकमिति चेदाहुः—स्वप्नायितमिति । विषयसाध्यमपि नानंदजनकमित्याह–किं चेति । इतो जरासंधबंधात् ॥२८॥ किमिदानीमावश्यकमित्याहु—त्वन्मायेति । विक्रम्य पुरुषार्थं कृत्वा । ततः पाशात् । अतोऽत्र । यो जरासंधः । मतंगजानां गजानाम् । वीर्यं पराक्रमम् । 'अविर्नाथे रवौ मेषे' इति मेदिनी ॥ २९ ॥ भगवत्कोपमुद्दीपयंत आहुः—किंचेति । यो जरासंधः । इत्यर्थ इति—यद्युक्तमित्यध्याहृत्य व्याख्येयमिति भावः ॥ ३० ॥

**श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी**

किं तेषां वचनं तत्राह—कृष्णेति षड्भिः । कृष्ण हे स्वयं भगवन् ! वीप्सादैन्यात् स्वयं भगवत्त्वादेवाप्रमेयात्मन् सर्वातीतवैभव ! एवं सर्वोत्तमत्वेपि प्रपन्नेति अतस्त्वामेव शरणं यामः किमर्थं भवात् संसारदुःखाद्भीताः भवभयात्त्राणार्थमित्यर्थः । तद्भयं कुतः ? पृथग्धियः त्वत्तः पृथग्बुद्धयः त्वद्भक्तिरहितत्वादित्यर्थः ॥ २५ ॥ नन्वेतावन्तं काल कथं न भजध्वम् ? कथं वा अधुना जातैतादृशबुद्धयो जाताः स्थ ? तत्राहुः—लोक इति । अस्मद्विध इत्यर्थः । कुशल इति सर्वार्थप्रदत्वं सर्वानर्थहरत्वं च स्वे इति सार्ववर्णिकस्वधर्मत्वं त्वदुदित इति अन्योदितधर्मान्तरातिक्रमित्वं भवदर्चन इति त्वदुदितधर्मान्तरातिक्रमित्वञ्च सूचितं यथैवोदितञ्च—

"सर्वगुह्यतमं भूयः श्रृणु मे परमं वचः । इष्टोसि मे दृढमिति ततो वक्ष्यामि ते हितम् ।
मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु" ॥

इत्यादि । तथापि तस्मिन् प्रमत्तः जीवितस्याशां शरणानुसन्धाननिरसनेन विकर्मतयोक्ते तद्विरुद्धकर्मणि प्रवर्तनीं कुशले च प्रमादकारिणीं दृढवाञ्छालतां न चासौ कथञ्चित् परिहर्त्तुं शक्यतेत्याहुः—बलवानिति । अनिमिषायेत्यनेन च तस्याः प्रमत्तता च सूचिता तस्मै नम इति तद्भयेनैवाधुना त्वद्भजनोद्यमात् यथोक्तं "मर्त्यो मृत्युव्यालभीतः पलायन्" इत्यादि ॥२६॥ किञ्च, लोके भवानिति । जगदिनः साक्षात्सर्वेश्वर एव कलया अंशेन श्रीबलदेवेन सह अन्यः अनिगृह्यमाणः खलः किं कस्मादन्यस्मात् कारणादित्यर्थः । हे ईशेति जरासन्धादेरपि त्वदधीनत्वं तज्जनस्यापि कर्माधीनत्वं सूचितं तद्द्वयं न विद्मः अन्यत्तैः । तत्र चेदस्माकमित्यस्य स्थाने जनः स्वकर्मजमिति पाठो ऽसभ्यः तथा सद्रक्षणार्थमित्यत्र चकारपातश्च ज्ञेयः ॥ २७ ॥ तथाप्यद्यापि न वयं तव मायया सम्यक् त्यक्ता इत्याहुः स्वप्नेति । अन्यत्तैः । यद्वा तव मायया अतिकृपणाः अतिशयेन हृतबुद्धयः सन्तः क्लिश्यामहे तत्र हेतुः मृतकेन स्वतोऽचेतनत्वेन तद्रूपेण देहेन या धृतां मृतकरूपं भारं वहाम इत्यर्थः । न केवलं मृतकभारवाहित्वमेव क्लेशाय तत्रान्यच्चेत्याहुः—शश्वदिति । पुनःपुनः भूतप्रेतादित इव रोगकालादितो भयं यस्मिन् तेन किमर्थं वहथ तत्राहुः नृपस्य सुखं स्वस्मिस्तद्यथा स्यात् तत्प्राप्त्यर्थमधुनापि तां न मुञ्चाम इत्यर्थः । तदेतदतीव गर्हितमिति भावः । न च तत्सुखे वास्तवत्वमपि यतः स्वप्नायितं नचैतावत्त्वमेव दोषाय अपितु दुःखमयत्वमपीत्याहुः परतन्त्रं राज्याद्यनेकाकाङ्क्षाधीनतामयं भवत्वपि तन्नाम यदन्यन्महासुखं स्वतःसिद्धं न स्यादित्याहुः—हित्वेति । तत् सकलनिगमप्रसिद्धमनिर्वचनीयं परमपुरुषार्थरूपं सुखं हित्वेति न चेदं वा परतन्त्रं किन्तु स्वत एवात्मनि प्रकाशमानात् त्वत्तः सकाशादनीहैरेव भक्तैर्लभ्यमिति ॥ २८ ॥ अतोऽस्माकं परमकृपणानामनीहत्वाभावादात्मनि तत्र सिद्ध्येदिति स्वयमेव त्वं प्रकटयितुं तद्व्याघातकं बन्धं विमोचयेत्याहुः—

तत्र इति । तत्तस्मात् त्वन्मायाकृतकार्पण्याद्धेतोः तद्दृष्ट्वेत्यर्थः । नोऽस्मान् त्वमेव विमोचय यतो भवान् प्रणतानां शोकहर-मङ्घ्रियुग्मं यस्य तथाभूतः यद्वा अकारप्रश्लेषेण न विद्यते भवः श्रेयो येषु तान् परमार्त्तानित्यर्थः । मागधेति नाममात्रेणैव जरासन्धः तत्त्वतस्त्वस्माकं कर्मपाश एवायं मूर्तिमान् तस्मादित्यर्थः । अन्यत्तैः । यद्वा अन्यथा तस्येदृशी शक्तिर्न स्यादित्या-शयेनाहुः—य इति ॥ २९ ॥ हे उदात्तचक्रेति चक्रग्रहणमात्रेणैव भग्न इति भावः नृलोके निरतमिति मनुष्यलोके क्रीडा-परमित्यर्थः ॥ ३० ॥

### श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी

श्रीभगवदाज्ञया मुद्रामुन्मुच्य पत्रिकां दूतो वाचयति—कृष्णेति । हे साक्षात्परमेश्वर ! वीप्सा दैन्यात्, अतएव अप्रमे-यात्मन् ! दुर्वितर्क्यतत्त्व ! किञ्च, प्रपन्नेति, अतस्त्वामेव शरणं यामः' किमर्थम् ? भवात् संसारदुःखाद्भीताः, भवभयात्राणार्थ-मित्यर्थः । तदपि कुतः ? पृथग्धियः, तत्त्वतो जीवानामैक्येऽपि शत्रु-मित्रत्वादिना भेद-दर्शिनः; किंवा अंशत्वेनात्मनस्त्वद-धीनत्वेऽपि स्वतन्त्रबुद्धयः; यद्वा, त्वत्तः पृथग्बुद्धयः, त्वद्भक्तिरहिता इत्यर्थः ॥ २५ ॥ कुशल इत्यनेन स्वे स्वकीयेऽपीत्यनेन चात्मनो हितत्वादवश्यकृत्यत्वमुक्तम् । अकरणे चेश्वराज्ञातिक्रमान्महापराध एवेत्याहुः—त्वदुदित इति । तच्चानायास-साध्यं महाफलप्रदं परमसुखमयञ्चेत्याहुः—भवदर्च्चन इति । भवतां भवतो भवदीयानाञ्चार्च्चनरूपे, तथापि तस्मिन् प्रमत्तः, जीवित-स्याशां मरणानुसन्धान-निरसनेन विकर्म्मणि प्रवर्त्तिनीं कुशले च प्रमादकारिणीं दृढ़वाञ्छालताम्, किंवा महादुष्टरोगादिना आशामपि, किमुत जीवितम्; न चासौ कथञ्चित् परिहर्त्तुं शक्येत्याहुः—बलवानिति । अनिमिषायेत्यनेन च तस्याप्रमत्तता सूचिता; तथा चोक्तं श्रीमुचुकुन्देन ( भा० ४।२४।६६ )—'त्वमप्रमत्तः सहसाभिपद्यसे' इति; अन्यत्तैर्व्याख्यातम् । यद्वा, भवभये भवरूपस्य कालस्य मुख्यकारणत्वादादौ तद्भीत्या शरणं याम इत्याशयेन कालमेव प्रणमन्ति—लोक इति, अस्मदादिः । अन्यत् समानम् ॥ २६ ॥ जगदिनः साक्षाज्जगदीश्वर एव कलया अंशेन श्रीबलदेवेन, किंवा सर्व्वशोभया निजाशेषैश्वर्य्येण सह मर्त्य-लोकेऽवतीर्णः; यद्वा, सद्रक्षणाद्यर्थमवतीर्णत्वे·हेतुः—जगदिन इति, अन्यथा जगत्स्थित्यसिद्धिः; अन्योऽनिगृह्यमाणः खलः किं कस्मात् कारणादित्यर्थः । हे ईशेति—जरासन्धादेरपि त्वदधीनत्वं त्वज्जनस्यापि कर्म्माधीनत्वं सूचितम् । तद्वयं तद्द्वयकारणं न विद्मः; अन्यत्तैर्व्याख्यातम् । तत्र जन इत्यादिकं तर्हीत्यन्तं केनापि मन्दबुद्धिना अधिकं कल्पितमिति । तथा सद्रक्षणाद्यर्थमिति लेख्ये 'द्य' वर्णपातो लेखकभ्रमादिति ज्ञेयम् । अथवा निदेशमतियाति, सतः पीड़यति, खलाननुगृह्णातीत्यर्थः । हे ईशेति तच्च परमेशत्वेन तव स्वातन्त्र्यात् त्वदिच्छया, किंवा जनः स्वकृतं स्वकर्म्मफलं भुङ्क्ते, जरासन्धादेस्त्वज्जनस्यापि तादृशनिजकर्म्म-भोगावश्यकतयेति न विद्मः, विचारणे नैवावगच्छामः, सद्रक्षणाद्यर्थमवतीर्णस्य साक्षात् परमेश्वरस्य तत्र तवेच्छया तथा कर्म्म-निबन्धापेक्षयापि तत्तदसिद्धेरिति भावः ॥ २७ ॥ स्वप्नायितमित्यनित्यत्वं मायिकत्वञ्चोक्तम्, तेन तत्र सुखाभावः सूचितः। तद्भोगसाधनदेहस्य नित्यरोगादिना दुःखप्राप्तिञ्चाह—शश्वदिति । भयं रोगादिजम्; मृतकेनेति मरणनिर्द्धारात्, किंवा घृणा-स्पदत्वं तस्योक्तम् । एवमुभयथा जीवने दुःखं बोधितम् । हे ईशेति त्वदीया अपि वयमिति भावः । तत् सुखं यत् त्वत् त्वदनु-ग्रहाल्लभ्यं स्वतत्त्वानुभवलक्षणम्, किंवा त्वद्ध्यानादिलक्षणम्; इह संसारे क्लिश्यामः, अतस्तत् बहुधा दुःखमनुभवामः, यतस्तवेश्वरस्य मायया दुर्लङ्घ्यया अतिकृपणाः परमनिर्बुद्धयः । अन्यत्तैर्व्याख्यातम्; यद्वा, नृपसुखं राज्योपभोगसुखमेव धुरं भारं वहामः, अतस्तदनिर्व्वचनीयम्, आत्मनि चित्ते स्वस्वरूपे वा, यत्त्वत्तः सुखं त्वत्पादाब्जप्रेमलक्षणम्, तद्धित्वा, इह त्वत्प्रा-कट्यभूषिते मर्त्यलोकेऽपि; अन्यत् समानम् । पक्षान्तरे न केवलं जरासन्धादेव, त्वन्मायया च सदैव दूयामहे, किंवा स्वदुःखेन जरासन्धं किं दूषयामः, वयं सदात्मदोषेणैव महादुःखिता इत्याहुः—स्वप्नेति; अर्थः स एव ॥ २८ ॥ तत्तस्मात् तन्मायाकृत-क्लेशाद्धेतोः, नोऽस्मान्, वियुङ्क्ष्वबत्वम्, यतो भवान् प्रणतानां प्रपन्नानां शोकहरमङ्घ्रियुग्मं यस्य तथाभूतः; यद्वा, अकार-प्रश्लेषेण न विद्यते भावः श्रेयो येषु तान्, परमार्त्तानित्यर्थः । मगध इति आह्वयो नाममात्रं यस्य कर्म्मपाशस्य तस्मात्; नाम-मात्रेणैव जरासन्धः, तत्त्वतस्त्वस्माकं कर्म्मपाश एवायं मूर्त्तिमान्, तस्मादित्यर्थः । अन्यत्तैर्व्याख्यातम् । यद्वा, अन्यथा तस्येदृशी शक्तिर्न स्यादित्याशयेनाहुः—य इति ॥ २९ ॥ हे उदात्तचक्रेति चक्रग्रहणमात्रेणैव भग्न इति भावः । वै प्रसिद्धौ, खलु अपि, भग्नोऽपि, अनन्तवीर्य्यमपीत्येव वा युष्माकं प्रजाः पाल्यान् जनानित्यर्थः । युष्मदिति श्रीबलदेवादीनाम्, किंवा महादैन्येन सर्व्वभक्तानामपेक्षया; हे अजितेति तत्त्वतस्तदानीमपि तेनाजितत्वात्; यद्वा, कदापि केनाप्यजित ! हे सदा विजयिन्नित्यर्थः; अन्यत्तैर्व्याख्यातम् । यद्वा, नृलोकनिरतमिति क्षत्रियैः कदाचित् पलायितव्यमपीति नृलोकाचारं शिक्षयन्तमित्यर्थः । किंवा नृलोके नितरां रतं मनुष्यक्रीड़ापरम्, ऊढ़दर्पोऽभूत् ; यथा न रुजति तत्तथा विधेहि ॥ ३० ॥

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम्

कच्चित् किं त्वदीयं निदेशनम् आज्ञाम् अतियाति किम्वा तन्निरपेक्ष एव जनः स्वकर्मानुभवति तन्न विद्मः कर्मानु-गुणमीश्वरो नियच्छतीत्यविरोधनिष्कर्षस्य दुर्विज्ञेयत्वमुक्तं भवति ॥ २७ ॥ मृतकेन शरीरेण धुरं वहामः शरीरारम्भभरं वहामः ॥ २८ ॥ वियुङ्क्ष्व वियोजय अबीन् अजान् ॥ २९-३० ॥

**श्रीमद्वीरराघवाचार्यकृता भागवतचन्द्रचन्द्रिका**

तेषां विज्ञप्तिमेवाह—षड्भिः। तावच्छरण्यत्वोपयुक्तगुण विशिष्टं सम्बोधयन्तः शरणं व्रजन्ति—कृष्णकृष्णेति। "कृषिर्भूवाचकः शब्दः" इत्यादिना निरुक्तेन कृष्णशब्देन निन्नोन्नतानादरेण सर्वलोकानन्दकरत्वमत एव वैषम्यनैर्घृण्यादि-राहित्यञ्च विवक्षितम् अप्रमेयात्मन् अपरिच्छेद्यस्वरूप ! अनेन अस्मदन्तरात्मतया ऽस्मद्दुःखं जानास्येवेति विवक्षितम् अत एव सर्वज्ञत्वञ्च प्रपन्नभयभञ्जनेत्यनेन वात्सल्यं विवक्षितं त्वां शरणं रक्षणोपायं यामः व्रजामोऽध्यवस्यामः यातिरत्रगत्यर्थः प्रावण्यस्य गतिपूर्वकत्वात् गत्यर्थानां बुद्ध्यर्थत्वात् कार्पण्यद्योतनायात्मनः विशिषन्ति—भवभीताः भवशब्दोऽत्र सांसारिकमरण-दुःखपरः भवाद्भीताः पृथग्दृशः ( पृथग्दर्शिनः ) भिन्नमतयोऽज्ञाः तद्भयनिवर्त्तनोपायानभिज्ञाः इति यावत् ॥ २५ ॥ प्रपन्नभय-भञ्जनेत्यनेनाप्रपन्नजनमरणभयाभञ्जनत्वं सूचितं तदेव विवृण्वन्तः प्रणमन्ति—लोक इति। तृतीयस्कन्धे ब्रह्मस्तुतौ पठितोऽप्ययं श्लोको विज्ञप्तिसाम्यादर्थसौष्ठवाच्च अत्र विपर्ययेद् यो लोको जनः विकर्मणि विविधे कर्मणि वैषयिकसुखार्थे कर्मणीति यावत् निरतः त्वदुदिते पञ्चरात्रगीतादिमुखेन भवतोपदिष्टे भगवदाराधनात्मके कुशले श्रेयस्साधने स्वानुरूपे च शरणवरणादिरूपधर्मे यावत्प्रमत्तः अनवहितस्तावत्तस्य यो जीविताशां सद्यः छिनत्ति तस्मै अनिमिषाय कालात्मने तुभ्यं नमोऽस्तु ॥ २६ ॥ न ह्येतावता लोकहिताचरणैकशीलस्य तव वैषम्यमस्तीत्यभिप्रयन्त आहुः—लोक इति। भो जगत ईश्वर ! त्वं सतां रक्षणाय खलानां दुष्टानां निग्रहाय च कलयांशेन बलभद्रेण सह अवतीर्णः जगतः आद्यः आदौ भवः कारणभूत इति वा सम्बन्धः खल-निग्रहेण विना सद्रक्षणासम्भवात्तस्यापि तादर्थ्यात् केवलहितैककारीत्वमिति भावः। यद्वा खलानां निग्रहस्यापि तेषामन्ततो हितत्वे पर्यवसानात्सोपि हितमेवेति भावः। तह्र्येवम्भूते सति मयि कुतः कश्चित् दुःख्यतीत्यत्र कारणद्वयं सम्भावयन्तोऽन्यन्न विद्म इत्याहुः—हे ईश ! कश्चिज्जनस्त्वदीयं निदेशमाज्ञामतियात्यतिक्रामति किम्वा स्वकृतं पापफलं प्राप्नोति तदुभयव्यतिरिक्तं कारणान्तरं न विद्मः अन्यतरन्निश्चेतुं न क्षमा इति वा कर्मानुरूपम् ईश्वरो नियच्छतीत्यविरोधः॥ २७ ॥ प्रकृतं स्वदुःखं निवेदयिष्यन्तस्तावदवुनैव न क्लिश्यामः किन्तु सदापीत्यभिप्रयन्त आहुः—स्वप्नायितमिति। हे ईश ! नृपसुखं यन्नृपाणां सुखं तत्स्वप्नायितं स्वप्नसुखतुल्यं क्षणिकमतितुच्छञ्चेत्यर्थः तत्र हेतुत्वेन विशिषन्ति परतन्त्रमिति। परतन्त्रं कर्मायत्तम् अतोऽस्माकं बन्धनात्पूर्वमपि न सुखमिति भावः। ननु कल्याणतरनृपदेहसम्बन्ध एव सुखरूप इत्यत आहुः—शश्वदिति। शश्वत्सदा भयम-मित्रेभ्यो यस्य तेन मृतकेन शवतुल्येन देहेन धुरं वहाम मृतकतुल्यशरीराद्यभारं वहाम इत्यर्थः। मृतकेनेति कर्मणः करणत्व-विवक्षया तृतीया यद्वा लोके मृतकेनोह्यमानेन या धूर्भारस्तादृशीं धुरं भारं वहाम इत्यर्थः। नहि शवं वहतां तत्सम्बन्धः सुखरूपः किन्तु भारापादकतया दुःखरूप एव ( तथा नृप एव ) तथा नृपदेहसम्बन्धोपीति भावः। अतो हे ईश ! स्वत्वत्त्वतः त्वदनुग्रहादित्यर्थः। यदनीहैः निष्कामैः लभ्यमात्मनि त्वयि विषये सुखं तद्धित्वा ऽत एव नितरां कृपणास्तव मायया मोहिता इति शेषः। इह लोके क्लिश्यामहे ॥ २८ ॥ प्रकृतमात्मदुःखं निवेदयन्तस्तन्निराकरणं प्रार्थयन्ते—तन्न इति। प्रणतानां शोकहर-मङ्घ्रियुग्मं यस्य तथाभूतेति सम्बोधनं तानुक्तविधानघुना बद्धांश्च नोऽस्मान् मगधाह्वयो जरासन्धव्याजरूपो यः कर्मपाशस्त-स्माद्वियुङ्क्ष्व वियोजय भवद्भिरेव विक्रम्य ततो निष्क्रम्यतामित्यतो मागधं विशिषन्ति—य इति। अयुतसङ्ख्यानां मतङ्गजानां वीर्यं बलमेक एव बिभ्राणः भूभुजोऽस्मान् सिंहो ऽवीः मेषीरिव भवने रुरोध निरुद्धवान् तथाभूतमगधाह्वयकर्मपाशादिति सम्बन्धः। न वयं निर्गन्तुं शक्नुम इति भावः ॥ २९ ॥ किञ्च भवदीया वयमित्यस्मान् भृशं बाधत इत्याहुः—यो वा इति। भो उदात्तचक्र उद्यतसुदर्शन ! द्विनवकृत्वः अष्टादशवारं त्वया सह मृधे युद्धे प्रवृत्ते सति तत्र सप्तदशकृत्वो भग्नः पराजितः खलु पश्चादनन्तं वीर्यं यस्य तमपि नृलोकनिरतं मनुष्यचेष्टामनुवर्त्तमानमित्यर्थः। हेतुगर्भमिदम् अतस्त्वां सकृज्जित्वा प्राप्तदर्पः युष्मत्प्रजाः भवदीयान् अस्मान् रुजति पीडयत्यतस्त्वं सुखं विधेहि कुरु ॥ ३० ॥

**श्रीविजयध्वजतीर्थकृता पदरत्नावली**

पृथग्धियः यथार्थज्ञानशून्याः ॥ २५ ॥ अयथार्थज्ञानो किङ्करोति किञ्च तस्य फलमिति तत्राह लोक इति। उक्तार्थोयम् ॥ २६ ॥ भगवानत्र किमर्थमवतीर्ण इति तत्राह—काल इति। च शब्दः एवार्थे समुच्चये वा सतां रक्षणाय खलानां दुष्टानां निग्रहाय इदं जगत् अस्मिन् जगति कलयाऽवतीर्णो भगवानिति किम्वदन्ती एतद्द्वयं विना नान्यत् कार्यं किं न किमपि कुतः कालेः तत्तत्काले तत्तत्कार्यसाधनसमर्थत्वात् कः खलः कोवाऽसन्निति विशिनष्टि—कश्चिदिति। हे ईश ! कश्चिज्जनस्त्वदीयं निदेशमतियाति अतिक्रामति स खलः किं सुकृतमृच्छति किंस्वित्त्वदीयं निदेशमतियाति लङ्घयति सोऽसत्किं सुकृतमृच्छतीति वयं न विद्मः एकः सुखच्छेदकं लोकम् एकः सुखकरम् ऋच्छतीति भवान्वेत्तीति वाक्यार्थः "अतिस्यादधिकार्थोक्तौ प्रशंसाया-मतिक्रमे" इति ॥ २७ ॥ स्वर्गादिसुखस्य निर्विषयत्वेन राज्यसुखात्परं न किमपीति केषाञ्चित्प्रवादस्तत्राह—स्वप्नायितमिति। स्वप्नायितं स्वप्नवत् क्षणिकं तदपि न स्वाधीनमित्याहुः—परतन्त्रमिति। तत्र तन्नित्यमित्याशयश्च तन्मरणतयोपेतेन मृतकेन शवकल्पेन शरीरेण राज्यधुरं वहामः इत्यस्यान्यत्किं सुखमस्तीति तर्हि तद्धानौ बह्वायासात्क्लेशः स्यादिति तत्राह—हित्वेति। यदनीहलभ्यं निवृत्तिमार्गलभ्यैः साध्यमात्मनि सुखं तद्धित्वा कृपणा वयं क्लिश्यामहे एवम्विधं ज्ञानमस्तिचेत् किमिति क्लेश

इत्यत उक्तं तवेति ॥ २८ ॥ किमिदानीमावश्यकं तद्वद किम्बहुसिद्धानुवादेनेति तत्राह—तन्न इति। वियुंक्ष्व वियोजय अयुतमतङ्गजवीर्यम् अयुतगजपराक्रमं बिभ्रत् ॥ २९ ॥ उदात्तम् उन्नतं चक्रं सैन्यं यस्य स उदात्तचक्रः आशु च आश्वेव तस्य प्रतिक्रियाम् ॥ ३०-३४ ॥

### श्रीमज्जीवगोस्वामिकृतः बृहत्क्रमसन्दर्भः

लोके भवानित्यादि। जगदिनः जगत्प्रभुः, कलया बलदेवेन ॥ २७-४२ ॥

### श्रीनाथचक्रवर्तिविरचिता चैतन्यमतमञ्जूषा

लोके भवानित्यादि। जगदिनो जगत्प्रभुः कलया बलदेवेन ॥ २७-४२ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

तेषां विज्ञप्तिमाह षड्भिः। तत्र ते प्रथमं शरणमाश्रयन्ते, कृष्ण कृष्णेत्यादिर्द्वित्वम् अप्रमेयात्मन्निति त्वत्स्वरूपमज्ञात्वापि प्रपन्ने इति प्रपन्नपालकत्वमेव ज्ञात्वा शरणं यामः पृथग्धियः तद्भक्तौ प्रार्थनां परित्यज्य त्वत्तः पृथग्भूते स्वीयदुःखत्राणे एव धीः येषां ते ॥ २५ ॥ भवभीतत्वं विवृण्वन्तो नमन्ति-लोकोऽस्मद्विधः कुशले कर्मणि प्रमत्तः किं पुण्यकर्मणि न त्वद्बुद्धिर्हि किं ज्ञानयोगसाधकशमदमयमनियमादिकर्मणि न भवदर्च्चने त्वद्भजने स्व इति तदेव लोकस्य वास्तवं स्वं धनम् भवदुःखनिवर्तकं त्वत्प्रेमसुखभोगप्रदायकं चेति भावः। किन्तु विकर्म्मणि स्त्रीपुत्रादिवैषयिकसुखसाधके कर्मणि नितरां रतः किञ्च तत्सुखमपि दुर्भगस्यास्य न सिद्ध्यतीत्याहुः—यस्त्वावदिति। अनिमिषाय कालाय त्वच्छक्तिरूपाय नम इति त्वदभक्तस्य तेन तथा करणं समुचितमेवेति भावः ॥ २६ ॥ किञ्च साक्षादेव त्वां त्वद्भक्तांश्च यः कश्चिदिह द्वेष्टि स कथं कालसंहृतो न भवतीत्यस्माकं महान् विस्मय इत्याह, लोक इति। जगदिनः जगदीश्वरः "कलना कालयाः कला" इति नानार्थकोशात् कलया कालेनावतीर्णः यद्वा बलदेवेन सह अन्यः खलः कश्चिज्जरासन्धादिस्त्वदीयं निदेशमतिक्राम्यति साधून् द्वेष्टि खलान् पालयतीत्यर्थः। तत्र खलानुग्राहके त्वय्यवतीर्णेऽपि यत् खलो वर्द्धते तत् किं स खलः स्वकृतमृच्छति स्वप्रारब्धकर्मफलं सुखं भुङ्क्ते तथा सद्रक्षके त्वय्यवतीर्णेपि साधुजनस्त्वत्पीडितो यद्भवति तत् किं सोऽपि स्वकर्मफलं दुःखं भुङ्क्ते इदं न विद्मः निश्चेतुं न शक्नुमः त्वत्तोऽपि कर्मयोगस्य जडस्य प्राबल्यमनुचितमिति भावः ॥२७॥ ननु, तर्हि यूयं तावत् के मद्भक्ता मद्विद्वेषिणो वा? तत्र न वयमुभये किन्तु सांसारिका जीवाः साम्प्रतं त्वां प्रपन्ना इत्याहुः—स्वप्नायितम् अचिरस्थायित्वात् स्वप्नतुल्यम् अमात्यसुहृत् सेनाद्यधीनत्वात् परतन्त्रं नृपसुखं नृपा वयमित्यभिमानमात्रेणैव सुखं वस्तुतस्तु धुरं सन्धिविग्रहाद्यायासबाहुल्यप्रदत्वन्महाभारमेव शश्वद्भयं यस्मिंस्तेन मृतकतुल्येन शरीरेण वहामः अहो कष्टं नः ये वयमितः पूर्व्वमेव निष्कामाः सन्तः त्वां नाश्रिता इत्याहुः। तत्सकलसज्जनैःस्तुतत्वात् प्रसिद्धं ननु नृपसुखमिव तैर्निन्दितम् आत्मनि स्वतः सिद्धमेव ननु परतन्त्रं। त्वत् त्वत्तः सकाशादेव ननु दुर्विषयेभ्यो जातम् अनीहैर्निष्किञ्चनभक्तैः लभ्यं ननु सकामैः लब्धुं शक्यं सुखं हित्वा क्लिश्यामः ॥ २८ ॥ तस्मात्त्वन्मायाकृतं कर्म्मबन्धं त्वमेव निवर्तयेति प्रार्थयन्ते तन्न इति। वियुङ्क्ष्व विमोक्षय मगधो जरासन्धस्तत्संज्ञकात् कर्मपाशात् भवद्भिरेव विक्रम्य निर्गम्यतामिति चेत्तत्राहुर्य इति। य एक एव अयुतमतङ्गजानां वीर्यं बिभ्रत् सत् स्वभवने भूभुजो ऽस्मान् रुरोध सिंहोऽवीम्पीरिव ॥ २९ ॥ किञ्च स त्वद्विद्वेषी संप्रत्यस्मान् त्वत्प्रपन्नान् ज्ञात्वा प्रतिदिनमधिकं बाधत इत्याहुर्यो वा इति। हे उदात्तचक्र उत्कर्षेण धृतसुदर्शन! द्विनवकृत्वः अष्टादशवारान् त्वया सह सङ्ग्रामे वर्त्तमाने सप्तदशकृत्वस्त्वया भग्नः पराजितः। नृलोक निरतं नृणां पलायनधर्मजिघृक्षाकौतुकिनं त्वां सकृदेकवारमेव जित्वा ऊढदर्पस्सन्नस्मान् युष्मत्प्रजाः रुजति पीडयति तत्तत्र यत् युक्तम् तत् विधेहि ॥ ३० ॥

### गूढार्थदीपिनी

अयं लोको जनः विकर्मणि निषिद्धे काम्ये कर्मणि निरतः त्वया उदिते कथिते पाञ्चरात्रे स्वे कुशले कर्मणि भवदर्चनलक्षणे यावत्प्रमत्तः तावदेव यो बलवान् कालः अस्य जीविताशां सद्यः छिनत्ति तस्मै अनिमिषाय कालरूपाय ते तुभ्यं नमः ॥ २६ ॥ जगतः इनः स्वामी भवान् सतीं रक्षणाय खलानां निग्रहणाय च लोके अवतीर्णः। एवं सति कश्चिदन्यः द्वेष्टा जरासन्धादिः त्वदीयं निदेशमाज्ञामतियाति उल्लङ्घयति स च सुखी किं वा त्वदीयो जनः सेवकः स्वकृतं कर्मफलम् ऋच्छति भुङ्क्ते दुःखं प्राप्नोतीति न विद्मः निश्चेतुं न शक्नुमः इत्यर्थः 'इनः सूर्ये प्रभौ' इत्यमरः। कलया बलदेवेन सह ॥ २७ ॥ नृपसुखं परतन्त्रमस्ति तदर्थं धुरं सन्धिविग्रहाद्यायासरूपं भारमेव मृतकतुल्येन देहेन वहामः अत एव अतिकृपणाः सन्तः क्लिश्याम दुःखमनुभवामः। किं कृत्वा। त्वत्तः त्वदनुग्रहात् अनीहैः निष्कामैः आत्मनि लभ्यं यत् ब्रह्म सुखं तत् हित्वा। शश्वत् निरन्तरं भयं यस्मिन् तेन मृतकेन। हे पृथक् पदम् ॥ २८ ॥ यतः प्रणतानां शोकहरं अङ्घ्रियुग्मं यस्य स भवान् ततस्त्वं मगधाह्वयात् जरासन्धसंज्ञकात् कर्मपाशात् बद्धान् नोऽस्मान् वियुङ्क्ष्व विमोचय। य एक एव भूभुजोऽस्मान् भवने कारागारे रुरोध आवृतवान्

यथा मृगराट् सिंहः अवीः मेषी रुणद्धि तद्वत् । कथंभूतः । अयुतगजानां वीर्यं बलं पराक्रमं च बिभ्रत् । यद्वा । अभवान् इत्यत्र अकार प्रश्लेषेण न विद्यते भवाःश्रेयो येषु तान् परमार्तानित्यर्थः ।। २९ ।। हे उदात्तचक्र उद्यतसुदर्शन । वै प्रसिद्धो यो जरासन्धः मृधे युद्धे द्विनवकृत्यः अष्टादशवारान् त्वया भग्नः पराजितः । पश्चात् नृलोकनिरतं त्वां सकृत् एकवारं जित्वा ऊढदर्पः प्राप्तगर्वः सन् युष्मत्प्रजा नः रुजति पीडयति अत्र यत् युक्तं तत् विधेहि । विमोक्षणं वा ।। ३० ।।

**श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः**

राज्ञां विज्ञप्ति तल्लिखितपत्रिकाञ्च कथयति कृष्णकृष्णेति षड्भिः । आदरे द्विरुक्तिः हे कृष्ण ! सदानन्द अप्रमेयात्मन् इयत्तानवच्छिन्न ! परमात्मन् हे प्रपन्नभयभञ्जन ! प्रपन्नानां भवभयभञ्जन वयं सांसारिकानन्दलुब्धाः पृथग्धियः विभिन्नबुद्धयः पृथक्पृथक् अन्तःकरणपरिच्छिन्नस्वस्वरूपाः जीवात्मानः भवभीताः त्वां शरणं यामः ।। २५ ।। एवमात्मपरमात्मविवेकपूर्वकं प्रपन्नानां संसारभयभञ्जनं भगवन्तं शरणीकृत्य स्वविमुखानान्तु संसारभयदोऽसीति वदन्तो नमस्कुर्वन्ति—लोक इति । यावत् लोको जनो विकर्मणि निषिद्धे काम्ये च संसारप्रदे कर्मणि नितरां रतः कुशले मुक्तिप्रदे गीतापञ्चरात्रादिषु त्वयोदिते त्वदाराधनरूपे स्वे स्वधर्मे प्रमत्तोऽनवहितः तावदेवास्य जनस्य यः सद्यो जीविताशां छिनत्ति पुनःपुनर्जन्ममरणलक्षणं संसारं ददाति तस्मै अनिमिषाय कालात्मने तुभ्यं नमः ।। २६ ।। ननु, प्रपन्नभयभञ्जनेत्यनेन प्रपन्नमुक्तिप्रदत्वं जीविताशां छिनत्तीत्यनेन स्वपराङ्मुखसंसारप्रदत्वं मम भवद्भिर्वर्णितं तत्र वैषम्यं नैर्घृण्यञ्च प्राप्नोतीत्यत्र नेत्याहुः—हे ईश ! जनः स्वकृतमृच्छति प्राप्नोतीति वयं किं वा न विद्मः अपितु विद्मः मोक्षप्रदत्वे शुभं संसारप्रदत्वेत्वशुभं जीवकृतं कर्म निमित्तमतो न वैषम्यनैर्घृण्य त्वयि भवतः तथाच सूत्रं "वैषम्यनैर्घृण्ये न कर्मसापेक्षत्वात्" ( २-१-३४ ) इति । अत एव जगदिनः जगदीश्वरोपि सर्वसमोपि भवान् सद्रक्षणाय खलनिग्रहणाय च कलया बलेन सह लोके अवतीर्णः खललक्षणमाहुः—यः कश्चित्त्वदीयं निदेशमाज्ञामतियाति अतिलङ्घयति स अन्यः खल इत्यर्थः । तद्विपरीतः सदिति सल्लक्षणमर्थादुक्तं भवति ।। २७ ।। जरासन्धकृतनिरोधादिदुःखमप्यस्मत्कर्मफलमेव तद्विमुक्तिमपि भवतो नृपसुखार्थं न प्रार्थयामः किन्तु सुखपूर्वकत्वद्ध्यानार्थमित्याहुः—स्वप्नायितमिति त्रिभिः । हे ईश ! यदर्थं शश्वद्भयं यस्मिन् तेन मृतकेन मृतकतुल्येन देहेन धुरं गृहकलत्रादिचिन्तां वहामस्तत् नृपसुखं नृपाणां सुखं स्वप्नायितं स्वप्नसुखतुल्यमनित्यमित्यर्थः । परतन्त्रं परमतात्मभूतप्राकृतदेहगेहादिकं तत्तन्त्रम् तदस्माकमिष्टं नेति भावः । किमिष्टमित्यतः स्वेष्टं सूचयन्ति-हित्वेति । यत् त्वत्प्रसन्नात् त्वत्तः अनीहैर्निष्कामैर्लभ्यम् आत्मनि सुखं ध्यानानन्दं हित्वा तव मायया शब्दादिविषयरूपया कृपणाः क्लिश्यामहे ।। २८ ।। तत्तथाभूतान् नृपसुखात् विरक्तान् त्वद्ध्यानसुखकामान् नोऽस्मान् मगधो जरासन्धस्तत्संज्ञककर्मपाशात् जरासन्धव्याजेनास्मत्कर्मैव पाशस्तस्मात् वियुङ्क्ष्व विमोचय बहूनामेकेन निरोधे कारणमाहुः—य इति । य एक एवायुतमतङ्गजवीर्यं बिभ्रत् सन् भूभुजो बहून् भूपालान् स्वभवने रुरोध मृगराट् सिंहः अवीः मेषीरिव ।। २९ ।। किञ्च भवद्द्विट् स भवदीयान्नो विशेषेतो बाधते अतो यत्र यद्युक्तं तत्कुर्वित्याहुः—यो वा इति । हे उदात्तचक्र उदूर्ध्वं मात्तं गृहीतं चक्रं येन स तथाभूत ! यः द्विनवकृत्वः अष्टादशवारान् त्वया सङ्ग्रामे प्रवृत्ते सति सप्तदशकृत्वः स्त्वया खलु भग्नः पराजितः पश्चादनन्तवीर्यमपरिमितबलमपि नृलोकनिरतं नृलोककार्यविशेषं पलायनेनैव साधयन्तं सकृज्जित्वा ऊढदर्पो सन् युष्मत्प्रजा नो ऽस्मान् रुजति पीडयति त तत्र यद्युक्तं तद्विधेहि कुरु ।। ३० ।।

**श्रीसत्यधर्मकृता भागवतटिप्पणी**

आगतः पुरुषोत्तमं प्रति तद्वचनमनुवदन्वदति ।। कृष्ण कृष्णेति । षट्श्लोक्या राज्ञां विज्ञाय तत्र शरणवरणं त्रिभिरुभयविधभयानुवचनं द्वाभ्यां कर्तव्यप्रार्थनमेकेनेति विवेकः । अप्रमेय आत्मा मनो यस्य । प्रपन्नानां भयं भञ्जयतीति स तथा । भयस्य भञ्जनं येनेति वा । अनेनास्मद्भयं गतमिति निश्चित्य प्रवृत्ता वयमिति ध्वनयन्ति । अतो वयं भयभीताः । तत्र तन्त्रं पृथग्धिय इति मूर्खाः ।। २५ ।। तामेव धियं धिक्कुर्वंति तद्दुच्चर्यावचनेन । विकर्मणि विपरीते कर्मणि । विना रवैरनिवर्त्यतां विनाऽनुग्रहं तवेति दर्शयति । त्वदुदिते पञ्चरात्रादौ भवदर्चने तद्रूपे कर्मणि सति प्रमत्तो यदतः स्वे कुशले स्वक्षेमविषयेऽपि अथ लोकः प्रमत्तः । यश्चैवमस्य लोकस्येह संसृतौ जीविताशां सद्योऽपेक्षितोऽपेक्षणादिना तावच्छिनत्ति । प्रसादमनासाद्य स्थितस्य नापायपरिणोपाय इत्यत्र हेतुमाह ।। बलवानिति । तस्मा अनिमिषाय देवाय कालात्मने वा मत्स्याद्यात्मने वा नमोऽस्तु । प्राग्वितत्य व्याकृतोऽयं श्लोकः ।। २६ ।। यद्यहमीश्वरस्तर्हि किमर्थमत्रागममित्यतः स्वामिन्येतदर्थमेव नापरोऽर्थस्तव पूर्णस्येति वर्णयन्ति ।। काल इति । कालो भवांस्तद्रूपोदं जगदस्मिञ्जगति कलयाऽवतीर्णः सद्रक्षणाय यदन्यत्सद्रक्षणात्तस्मै खलनिग्रहाय चावतीर्णः । कश्चिज्जनः प्रागुक्तः पृथग्धीस्त्वदीयं निदेशं यत्करोषि यदश्नासीत्यादि गीतापञ्चरात्रादिगीतं निदेशमाज्ञामतियात्यतिक्रम्य वर्तते स किं सुकृतमृच्छति प्राप्नोतीति च । ईश वयं न विद्मो न जानीमः । यद्वाऽन्यत्किं न किमपि तदुभयातिरिक्तं प्रयोजनं तव । किञ्च खलाखलफलं वयमेतादृगिति न विद्म इति वदन्ति ।। क इति । चित्त्वदीयं चित्ते ज्ञानार्थमुक्तं तव निदेशं योऽतियाति स को जनः कुत्सितः सन्स किं सुकृतमृच्छति न प्राप्नोत्येव । यञ्च सन् त्वदीया मतिर्यस्मिन्कर्मणि तद्यथा भवति

तथा तव निदर्शनं याति। अनुतिष्ठति स किं किं परिमाणं सुकृतं पुण्यमृच्छति प्राप्नोतीति तन्नविद्मः। तस्यापारत्वेन वर्णनासुशका वयमिति न जानीम इति भावः। जगज्जगति इ विस्मयावहया दं कलया पत्नी दं रमा तस्याः कलया रुक्मिण्यादिरूपिण्या सहावतीर्णः। हे शमीश। शमिति सुखवाच्यव्ययम्। सुखेशनशील शमिनां शान्तिमतामीश वा। निदेऽप्रदे त्वयि सन्वाऽसन्वा कश्चित्कोऽपि सुकृतमृच्छति तन्न ऋच्छतीति वयं न विद्मः। किन्तु सुकृतदुष्कृतप्राप्ती त्वदायत्ते इति भावः। दं कलत्रं बुधैः प्रोक्तमित्यनेकार्थध्वनिपदमञ्जरी। ब्रह्मादयश्चेदपि तव निदेशातिक्रान्तिमन्तो यतोऽज्ञा इत्यपि विज्ञापयन्ति। कश्चित्कोऽपि हिरण्यगर्भो मः शिवोऽपि यन्न वित्। पृथक् पृथगन्वयः। अज्ञोऽतो निदेशमतिक्रान्तर्मात चेत्सुकृतमृच्छति किं नेत्यर्थः। को ब्रह्मा मः शिवे मा रमायां चेति विश्वो ॥२७॥ प्राज्ये राज्यसुखे सति किं संसृतितो भीतिरित्युच्यत इत्यतस्तत्राहुः। स्वाप्नायितमिति। नृपसुखं नृपैः प्राप्यराज्यसुखं स्वप्नायितं स्वाप्नपदार्थसममस्थिरमित्यर्थः। न तत्र रथा इत्यादिना तत्पारतन्त्र्यं प्रतिपाद्यत इदं न तथेति नेत्याह ॥ परतन्त्रमिति। तत्त्वतश्छलं सुखमुद्दिश्य शश्वद्भूयेन सदा भूयिष्ठभयेन मृतकेन शवसदृशेन धुरं संसाराख्यरथधुरं वहामः। किमप्यपश्यन् भित्तिं गृहीत्वा रोदितीति तद्वत्मन्तिरं नास्ति किं कर्तव्यमिति न स्वामिन्नित्याहुः ॥ हित्वेति। आत्मनि स्वरूपसत् अनीहलभ्यं निष्कामकर्मसाध्यं बहिरन्तरतोऽनीहोऽबिलष्टकारीति त्वयैव निष्कामकर्म प्रसन्नेन लभ्यमित्यर्थः। तद्धित्वाऽतिकृपणाः क्लिश्यामहे ज्ञात्वाऽपि तद्धित्वाऽनुष्ठानं विपरीतस्य कुत इत्यत इत इति वदन्ति ॥ तव माययेति। अस्मत्कर्मानुसारिण्या तव बाधकशक्त्याऽतिकृपणा इत्यन्वयः। हे अतिकृपणाः परायुधेन स्वयं क्लिश्यन्तोऽरीनपि क्लेशयन्त इति क्लिश्याम इत्यर्थ इति वा ॥ २८ ॥ यस्मात्त्वं प्रणतशोकहरमङ्घ्रियुग्मं यस्य सः। वो मृगराट् सिंहोऽवीर्मेषीरिव तथा। अयुतमतङ्गजा अयुतसङ्ख्या गजास्तेषां वीर्यं बिभ्रद्दधत्। अनेन स्वाशक्त्यपरिहृतिस्तदपहृतिस्तदपहृतिरिति ध्वनयन्ति स्म। भवने। भूभुजोऽस्मान्नुद्धारस्तस्मान्मगधाधिपरूपात्कर्मपाशाद्बद्धानिति सुबद्धः पाठः। रुद्धानित्यप्यनिरुद्धः। त्वं नो नियुङ्क्ष्व। तथा भवभीता इति प्रागुक्तसंसारभयं च मोचयेति गदन्ति। भवानिति बहुवचनं प्राप्य नानायोनिभवनविवक्षया। संसारान्नियुङ्क्ष्व वियोजय। अनियमस्तु प्राग्व्युत्पादितोऽनुसन्धेयः। यद्वा भवानित्यननुगुणो वियुङ्क्ष्वेति मध्यमपुरुष इतीव भवमोचनसूचनं नाचारि भवभीता इति वदद्भिरिति शङ्किता कृतान्वय एवमिति ज्ञेयम् ॥२९॥ उदात्तं चक्रं सुदर्शनं यस्य स यस्त्वं तेन त्वया। द्विनवकृत्वोऽष्टादशवारमुदात्तचक्रं सेना यस्य स इति मगधविशेषणं च। मृधे। भग्नः खलु। एकदा अनन्तवीर्यं भवन्तं नृलोकमनुवर्तिनं जित्वा जित इति विशेषसूचकस्तुः। स रूढो दर्पो यस्य स बह्वहङ्कृतः। युष्मत्प्रजाः। क्षिपति च। आशु तत्संहरणं विधेहि कुरु। चक्रमस्यास्तीति चक्रश्चक्रवत्कृष्णः। उदात्तश्चासौ चक्रश्च। उदात्तः सारथिर्मत इति तात्पर्योक्तिः ॥ ३० ॥

## श्रीमद्वल्लभाचार्यकृता सुबोधिनी

दूतस्तेषां वचनान्याह कृष्ण कृष्णेति षड्भिः। ऐश्वर्यादयो धर्मा भगवदीयाः क्रमेण निरूप्यन्ते। भगवानेव हि जीवानां स्वगुणैर्मोचक इति। तत्रैश्वर्यं निरूपयन्ति। आदरे वीप्सा स्नेहादरयोर्नैश्वर्यं बाधकम्। अदृष्टकालादीनां बाधकत्वात् साधारणाधिकारित्वाच्च। कथं भवतां दुःखनिवृत्तिरिति चेत्। तत्राह अप्रमेयात्मन्निति। प्रमातुं योग्ये हि कालादिविचारः, नत्वयोग्ये। तथाप्युदासीनो भवेदित्याशङ्क्याहुः प्रपन्नभयभञ्जनेति। 'सङ्ग्रामे विप्रपन्नाना'मित्यादिवाक्यात् प्रपन्नभयनिवारकत्वं तत्रावश्यकम्। अतो वयं प्रपन्ना भवाम इत्याहुः वयं त्वां शरणं याम इति। जरासन्धाद्विमोकपक्षं वारयन्ति भवभीता इति। नह्येकस्माद्भयात्कश्चिन्निवृत्तिं वाञ्छति, सर्वभयनिवृत्तिसम्भवे। बहिर्मुखानां संसारे सर्वतोभयम्, तदाहुः पृथग्धिय इति। अनेन ज्ञानादिपक्षा निवारिताः ॥ २५ ॥ ननु सर्वे येन प्रकारेण संसारनिवृत्तिं वाञ्छन्ति, तेनैव प्रकारेण संसारो निवर्तनीयः, किं मच्छरणागमनेनेत्याशङ्कायामाहुः लोको विकर्मनिरत इति। कालरूपश्च त्वमेव। अतस्त्वच्छरणागमनेनैव भयनिवृत्तिः, नान्यथा। यतस्तवाज्ञोल्लङ्घने त्वमेव भक्षयसि। आज्ञोल्लङ्घनं प्रपञ्चयन्ति विकर्मणि निषिद्धे विहितोल्लङ्घने वा निरतः तदेवादरेण करोति। लोकस्य तत्रैव महती श्रद्धा। कुशले विहिते प्रमत्तः असावधानः। तत्पुनरीश्वरवाक्योल्लङ्घनरूपमिति वक्तुमाहुः त्वदुदित इति। वीर्यवता वेदादिकर्त्रा त्वयैव तन्निरूपितम्। तत्रापि भवदर्चने भवत्पूजारूपे तन्त्रोक्ते साक्षाद्भगवतैवावतीर्णेन निरूपिते। तत्रापि स्वे श्रवणादिरूपे। त्रिविधं कर्म भगवता निरूपितम्, वैदिकं पाञ्चरात्रं भागवतं च। उत्तरोत्तरं प्राणिनामश्रद्धातिशयः। अतः प्रमत्तः। भगवानपि प्रमत्त इव न तूष्णीं तिष्ठति, यतो जगत्कर्ता, तदाहुः यस्तावदिति। सद्यधिकृतः, अन्यथा प्रलयो न सम्भवेत्, जीवधर्मापेक्षया ब्रह्मधर्मा विशिष्टा इति। तावदिति यावत् प्रमत्त एव तिष्ठति। आज्ञोल्लङ्घनसमनन्तरमेव अघः तत्तरणं प्रमाणं वा स्वानुभवरूपं निरूप्यते। एतत्करणे यो गुणः प्रधानभूतः तं निर्दिशति बलवानिति। साक्षान्मारणे न जानीयात्। न हि मरणे जन्मान्तरे वा मरणक्लेशस्मृतिरस्ति। अतो जीविताशामेव रोगादिना निराकरोति, येन सर्वेषामेव मरणप्रतीतिर्भवेत्। सर्वथा आज्ञोल्लङ्घने महान्तं व्याध्यादिकमुत्पादयतीत्यर्थः। जीववद्भगवानपि कदाचिदसावधानो भवेदित्याशङ्कायामाहुः अनिमिषायेति। अतिसावधानाय। अतस्तस्मै नमः पूर्वापराधक्षमापनार्थम्। शरणागतिस्तु मोक्षार्था। अपराधे विद्यमाने साधनैरपि मोक्षो दुर्लभ इति ॥ २६ ॥ एवमैश्वर्यवीर्ये निरूप्य यशो निरूपयिष्य-

न्तश्चोद्धरणाभावे तत्र न्यूनतां भावयमानाः सिद्धान्तापरिज्ञानात्पृच्छन्त इवाहुः **लोके भवानिति**। जगदिनो जगत्स्वामी **भवान्** लोके कलया सहावतीर्णः ससहायः। तत्र प्रयोजनद्वयम्, सद्रक्षणाय **खलनिग्रहणाय चेति**। ईश्वरः साधारण्येन पालनार्थमेव तथा करोति, सुतरां विशेषप्रयत्नवान्। चकाराद्भक्तरक्षार्थम्। एवं त्रिविधकार्यसन्दर्भेऽप्यस्मासु। कस्माद्धेतोरन्यस्तुच्छः अनीश्वरः कारणकार्यप्रेरकस्य तव निदेशमाज्ञामतियाति स्वगर्वादिति चेत्, तत्राहुः **ईशेति**। संबोधनमुल्लङ्घ्य वाक्यत्वबोधनार्थम्। 'मां प्रपन्नो जनः कश्चिन्न भूयोऽर्हति शोचितुम्। सङ्ग्रामे च प्रपन्नानां तवास्मीति च यो वदेत्। अभयं सर्वभूतेभ्यो ददाम्येतद्व्रतं मम'। साधारणस्तु स्वप्रारब्धमनुभवतीत्याह **किं वा जन इति**। एवं भगवद्वाक्यं साधारणमिति मन्यमाना वयं दुःखं चानुभूय सदत्र निर्णीतं न विद्मः। दुःखानुभवो न निर्णायकः, शास्त्रमात्रोच्छेदप्रसङ्गात्। अतः स्ववाक्यपरिपालनार्थं मोचयेति तात्पर्यम् ॥ २७ ॥ ननु प्रत्यक्षविरोधिनं संदिग्धमिमं मार्गं विहाय ज्ञानमार्ग एव सर्वत्यागात्मको निरभिमानात्मको वा कुतो नाश्रीयत इत्याशङ्कां परिहरन्तो भगवच्छ्रियं निरूपयन्ति **स्वप्नायितमिति**। वस्तुतो ज्ञानमार्गयोग्यो विषयोऽस्ति, तथाप्यपरित्यागे हेतुः **तव माया श्रीरूपा**। अतो वाक्यं वा पालय, मायां वा व्यावर्तयेति। स्वप्नो मायामात्रमिति स्थितम्। नृपाणां सुखं लोके प्रसिद्धम्, तन्मायिकमेव, व्यवहारे कापट्याधिक्यात्, माया हि कुहकाधीना, अन्तर्यामिप्रतिनिर्धारित्वेन लोकं निरूपयन् भगवान् प्रतिकूल इति ज्ञापयितुं सुखं विशिनष्टि **परतन्त्रमिति**। अन्तर्यामिणः सख्युः अनुचितमेतदित्याशङ्क्य सम्बोधयति **ईशेति**। माया स्वकार्यभोग्या, नत्वात्मभोग्येति ज्ञापयितुं साधनमाह **मृतकेनेति**। चेतनसंबन्धाभावाय तथा वचनम्। मायाकार्यं साधने स्पष्टमित्याह **शश्वद्धुर्येनेति**। तेन भारवहनमत्यन्तं मायामोहितकार्यम्। लोका मृतकमेव कथञ्चिद्वहन्ति, त्यजन्ति वा, न तु मृतकेन किञ्चिद्वहन्ति, वयं तु तेन धुरं वहाम इति स्पष्टोऽस्मासु मोहः। ननु सुखासक्त्या असाधनेऽपि प्रवर्तते, प्रकारान्तरेण सुखमलभमान इति चेत्, तत्राह **हित्वा तवात्मनीति**। सुखस्य परमोत्कर्षमाह **तदिति**। **आत्मनीति** गमनक्लेशाभावः। क्रियाप्रयासं व्यावर्तयति **अनीहलभ्यमिति**। तुशब्देन न्यायसिद्धान्तवन्निरानन्दात्मपक्षो व्यावर्त्यते। सुखप्राप्तिर्ज्ञानादनीहया च। निरोधादनीहा सम्भवतीति 'सर्वेहोपरतिस्तनु'रिति वाक्यात् सुखप्राप्तिः। तथाप्यन्यार्भिनिवेशाद्दीनम्। 'भोक्ता तारतम्यं जानाती'ति न्यायात् विषयसुखमेव सर्वोत्कृष्टं भविष्यति, अन्यथा चित्तं कथं प्रवर्तेतेत्याशङ्क्याह **विमृश्य अह** इति। **त्वदनीहलभ्यमिति** पाठे त्वत्स्मरणेन तत्सुखस्य सुलभता निरूपिता। क्लेशस्यानुभवसिद्धत्वाद्विपरीतहेतुत्वेन अलौकिकत्वेनानान्तरीयत्वाच्च क्लेशपर्यवसानानुभवेऽपि अनिवृत्तत्वादतिकृपणाः। अनालोचनेन याचनादिना अतिदीनाः। तत्र हेतुस्तवैव माया, अतो विज्ञापना। अन्यथेह विषयेच्छा न स्यात्, वैराग्यहेतूनामानन्त्यात् ॥ २८ ॥ एवं श्रियं निरूप्य भगवतो ज्ञानशक्तिं निरूपयन्तः तत्फलं मोक्षं प्रार्थयन्ते **तन्नो भवानिति**। ब्रह्मज्ञानं मोक्षहेतुः, तदक्षरम्, अवतारे तस्य पादत्वम्, भक्तार्थमेव अवतार इति अस्मद्व्यापारव्यतिरेकेणापि स्वत एव **तवाङ्घ्रिद्वयं प्रणतशोकहरं** भवति। तेन तव या ज्ञानशक्तिः, सा चरणेन संवलिता प्रणतानां शोकं हरति। तत्रापि नो भवान् समानकालावतारान् अतो बद्धान् वियुङ्क्ष्व। नन्वेतादृशलौकिकबन्धनान्मोक्ष इति न ज्ञानसाध्यम्, तत्कथमसाधनेन साध्यप्रार्थनेति चेत्। तत्राहुः। **मगधो मागधो जरासन्धः कर्मपाश**स्यैव नामान्तरं तत्। 'क्षीयन्ते चास्य कर्माणी'ति वाक्यात्। देशनाम्ना स्थितया अधिककर्मणोत्पत्तिसम्भवात् न भोगेन क्षयसिद्धिः। ननु मागधस्य कर्मत्वे किं प्रमाणम्, तत्राहुः **यो भूभुज इति**। न हि कर्माधीनः कश्चिदयुतमतङ्गजवीर्यो भवति। अतो भूभुजामस्माकं भोगहेतुभूतमाधिभौतिकं कर्म निवार्य स्वयमाधिदैविकः। केवलं ज्ञानैकनिवर्त्यो भवति। तर्हि तस्मै राज्यं दत्वा तत्सेवका एव कुतो न भवन्ति, तत्राहुः **मृगराडिवावीरिति**। स हि भक्षणार्थमेव मेषीः स्थापयति। तथायमपि प्रमथनाथमखाय वधार्थमेव स्थापितवानित्यर्थः। अतस्तामसदेवतायै समर्पितानां तत्रैव प्रवेशात् कालान्तरेऽपि मोक्षो नास्तीति मरणात्पूर्वमेव वयं मोचनीया इति भावः। तद्भवने निरोधात् न पलायनसम्भावना ॥ २९ ॥ भगवतो भोगासक्तिं निवारयन्त इव, रक्षासक्तिं प्रकटयन्तः भगवदीयत्वं स्वस्य वदन्तः भगवतो वैराग्यशक्तिमुररीकुर्वन्तः वैषम्यनैर्घृण्यपरिहारार्थं पूर्वं भगवद्वृत्तान्तमाहुः **यो वै त्वयेति**। वस्तुतस्त्वष्टादशेऽपि कार्यस्यासिद्धत्वाद्भङ्ग एव, अत आह **द्विनवकृत्व इति** प्रजापतिर्वा विद्या वा न तस्य जयहेतुरिति रजस्तमोगुणावेव इतरसंश्लेषादाधिदैविकादिभेदापन्नौ हेतू इति नवसङ्ख्यायाः आवृत्तिरुक्ता। भगवन्माहात्म्यात्तद्गताधिदैविकैरेव भङ्गं व्यावर्तयितुमाह **उदात्तचक्रेति**। चक्रेण कालशक्त्यैव भक्षणार्थं व्यात्तया मृधे स भग्नः। **खल्विति**। नात्र तिरोहितं किञ्चिदिति सूचितम्। ननु जयापजययोरव्यवस्थितत्वात् कथमेकस्यैव पराजय इति चेत्। तत्राहुः **भवन्तमनन्तवीर्यमिति**। परिमितबलानामेव जयाजयव्यवस्था। तथापि कपटवेषलीलायाः प्रकटितत्वात्तद्विरोधाभावाय नृलोकनिरतम्। सकृद्घुणाक्षरन्यायेन गूढहेतोर्वा जित्वा ऊढदर्पो जातः। वयं तु केवलं भवत्परिपाल्या एव, मर्यादापरित्यागेन पुष्टिमार्गावलम्बनात्। अतो यस्य भवदपेक्षाभावः तेन सर्वथैव बाध्याः। अतो युष्मत्प्रजाः रुजति पीडयति। तर्हि लोकन्यायस्य स्वीकृतत्वात् कथं मोचनमिति चेत्। तत्राहुः **हे अजितेति**। तव स्वरूपमजितेति। 'द्रव्यसंस्कारविरोधे द्रव्यं बलीय' इति न्यायेन लीलाप्रदर्शनं दूरीकृत्य अस्मान् पालयन् तत्स्वस्याजितत्वं विधेहि। अनेन सर्वे सन्देहा अनुपपत्तयश्च निवारिताः ॥३०॥

## श्रीसुबोधिनी-सारः

"तेषां विज्ञापनं षड्भिर्नारदागमनं ततः। उद्धवेन परो मंत्रस्ततः कार्यप्रसाधनम्" इति संग्रहः। हे कृष्णकृष्ण हे अप्रमेयात्मन् हे प्रपन्नभयभंजन पृथग्धियो भिन्नमतयः संसारभीता वयं त्वां शरणं यामो व्रजामः॥ २५॥ त्वयोदिते "यत्करोषि यदश्नासि" इत्युक्ते भवतोऽर्चने पूजनरूपे स्वे स्वकीये कुशले कर्मणि मंगलकार्ये प्रमत्तोऽसमाहितः विकर्मनिषिद्धं काम्यं कर्म बंधनहेतुस्तस्मिन्निरतः "यज्ञार्थात्कर्मणोऽन्यत्र लोकोयं कर्मबंधनः" इति प्रतिज्ञातत्वात् तावदादौ लोकः सर्वो जनो वा साकल्यार्थत्वात्तावत् इति गुरवः। अस्य लोकस्य जीवनेच्छां बलवान् यः छिनत्ति तस्मै अनिमिषाय कालरूपाय नमोस्तु॥ २६॥ हे ईश जगति इनः सूर्यरूपो भवानवतीर्णः सतां रक्षणाय खलानां निग्रहाय च तत्र भक्तानां दुःखं कश्चित् खलो जरासंधादिः त्वदीयं निदेशमाज्ञामतियाति खंडयति उल्लंध्य वर्त्तते तत्किं जनः स्वकृतमृच्छति भंक्ते वा न इति वयं न विजानीमः॥ २७॥ राज्यसुखं स्वप्नतुल्यं परतंत्रं देवाधीनत्वात् हे ईश शश्वन्निरंतरं भयं यस्मिन् तेन मृतकतुल्येन शरीरेण धुरं पुत्रभार्यादिभारचिंतां वयं वहामः अहो कष्टमित्यूचुः। त्वत्वत्तो यदनीहैर्निष्कामैर्लभ्यम् आत्मनि स्वस्मिन्सुखं तत् हित्वा त्यक्त्वाऽतिकृपणा वयं तव मायया इह लोके क्लिश्यामहे दुःख्यामः॥ २८॥ तत्तस्माद्धेतोः प्रणतानां शोकहरमंघ्रियुग्मं चरणद्वंद्वं यस्य स भवानस्ति यतः मगधेन देशेन सहाह्वयो नाम यस्य स जरासंधस्तद्रूपात्कर्मपाशात् बद्धान्नोस्मान् वियुंक्ष्व त्वं विमोचय अस्मद्विक्रमस्तत्र न फलतीत्याहुः य एकोऽयुतदशसहस्रं मतंगजानां हस्तिनां वीर्यं बलं बिभ्रत् दधत् सन् भूभुजो माण्डलिकनृपान् भवने स्वगृहे रुरोध अवीर्मेषीः सिंह इव॥ २९॥ हे उदात्तचक्र द्विनवकृत्वोष्टादश वारान् मृधे संग्रामे त्वया भग्नः पराजितः सप्तदशवारं यो वारेकं नृलोकनिरतं मनुष्यचेष्टानिरतं भवंतम् अनंतबलं जित्वा ऊढदर्पो जातगर्वः खलु निश्चयेन युष्माकं प्रजा नोस्मान् रुजति पीडयति यदत्र युक्तं तत्त्वं विधेहि कुरु॥ ३०॥

## श्रीविट्ठलरायात्मजश्रीवल्लभकृतलेखः

**लोको विकर्मे**त्यत्र। **वीर्यवते**ति। वीर्यस्य वाक्यार्थत्वादेवमुक्तम्। त्वया एतच्छ्लोकवाक्यार्थरूपेणोदिते इत्यर्थः। **जगत्कर्त्ते**ति। वेदादिकर्ता, अतः स्वाज्ञोल्लङ्घने दण्डयतीत्यर्थः। कालस्य दोषमाशंक्याहुः **स हो**ति। कालो मारणेऽधिकृत इत्यर्थः। कालस्य जीवात् प्राबल्ये हेतुमाहुः **जीवे**ति। प्रमादो जीवधर्मः, अधिकारो भगवद्धर्म इत्यर्थः। **स्वप्नायित**मित्यत्र। **ज्ञानमार्गयोग्य** इति। ज्ञानमार्गीयत्यागयोग्य इत्यर्थः। **अन्तर्यामिप्रतिनिधित्वेने**ति। यथान्तर्यामी प्रेरयति, तथा करोतीति प्रतिनिधित्वम्। त्वदनीहेतिपाठे त्वदितिपञ्चम्येकवचनम्। त्वत्तो हेतोरनीहलभ्यमित्यर्थः। **क्लेशस्ये**ति। विषयसुखानन्तरं क्लेशोनुभवसिद्धः। अतो विषयसुखं विपरीतस्य क्लेशस्य हेतुः। नान्तरीयत्वे सोप्यविगीतो भवेत्, सत्वलौकिकोऽप्रत्यक्षैर्विद्यादिभिर्जातोऽतोननान्तरीयकः। **अनिवृत्तत्वात्**। क्लेशस्येतिशेषः। अतोनुत्कृष्टत्वं विषयसुखस्य। तादृशसुखयाचका वयमति कृपणाः। अतः क्लिश्यामहे इत्यर्थः। **तन्नो भवानि**त्यत्र। **चरणेन संवलिते**ति। धर्मरूपज्ञानात्मकश्चरणः शक्तिरूपं ज्ञानं तत्संवलितमित्यर्थः। **नहि कर्माधीन** इति। मूलेऽ'युतमतङ्गजवीर्यं बिभ्र'दित्युक्तम्। तदर्थोत्र बहुव्रीहिणायुतमतङ्गजवीर्य इत्यनेन विवृतः। **यो वं त्वये**त्यस्याभासे। **वैराग्यशक्ति**मिति। अन्येषु रागाभावो भक्तेष्वेव राग इत्यर्थः। **वैषम्ये**ति। पूर्ववृत्तान्तकथनेन दर्पयुतोऽयमतस्तस्य हितार्थमेव हन्तव्यः। अतो वैषम्यनैर्घृण्यपरिहारः। **व्याख्याने**। **रजस्तमोगुणावि**ति। सत्त्वेन तमसा च रजस संश्लेष इतिद्वयम्। तमसश्च सत्त्वेन संश्लेषः। एवं त्रयः। त्रयाणामपि गुणप्रधानभावभेदेन षट्। षण्णामाधिदैविकादिभेदत्रयेऽष्टादशेत्यर्थः। **उदात्तचक्रेण करणेन भग्न इति समासः**।

## गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

दूतस्तेषां विज्ञप्तिमेवाह षड्भिः। तत्र प्रथमेन प्रथमं शरणं व्रजन्ति—कृष्ण कृष्णेति। वीप्सा आदरार्था। वयं त्वां शरणं यामो रक्षकतया स्वीकुर्मः। 'कुतो भयमागतम्' इत्यपेक्षायामाहुः—भवात् जन्ममरणादिलक्षणात् संसारात् भीता इति। 'भवभयमपि कथम्' इत्यपेक्षायामाहुः—पृथग्धिय इति। 'भयं द्वितीयाभिनिवेशतः स्यात्' इति सिद्धान्ताद्भेददर्शित्वाद्भयं प्राप्तमित्यर्थः। 'तर्हि मच्चरणत्वेऽपि कथं भयनिवृत्तिः' इत्यपेक्षायामाहुः—प्रपन्नभयभञ्जनेति। 'तत्रापि सामर्थ्यमपेक्षितम्' इति तत् सूचयन्तः सम्बोधयन्ति—अप्रमेयात्मन्निति॥२५॥ 'त्वद्विमुखानां तु संसारभयं नैव निवर्तते' इति सूचयन्तः प्रणमन्ति—लोक इति। इह संसारे अयं लोकः सर्वोपि जनो यावत् विकर्मणि निषिद्धे काम्ये च नरकादिदुःखहेतुभूते पापकर्माणि निरतः स्वे स्वकीये कुशले उद्धारहेतुभूते कर्मणि धर्मे प्रमत्तः असावधानो वर्तते, तावदेव योऽस्य जनस्य जरारोगादिसंपादनेन जीविताशामेव छिनत्ति तस्मै अनिमिषाय निमेषरहिताय सर्वदा सावधानाय कालरूपाय तुभ्यं नमोस्त्वित्यन्वयः। 'त्वदाज्ञोल्लङ्घनेन तव कोपान्न कदापि दुःखान्निस्तार' इत्याशयेनाहुः—त्वदुदित इति। 'न च त्वदुदितं कर्म कृच्छ्रादिवद्दुष्करम्, किंतु सुकरमेव' इत्याशयेनाहुः—भवदर्चने इति। 'प्रमत्तस्यानुसन्धानाभावादायुःपरिमितोऽपि कालः क्षणप्रायो गच्छति' इति सूचयन्त आहुः—सद्य इति। 'कालकृतजरादिप्रतिरोध आराधितैर्देवादिभिरपि दुष्कर' इति सूचयन्त आहुः—बलवानिति॥ २६॥ एवं भगवतः

प्राबल्यमुक्त्वा तद्भक्तानां दुःखासंभवात् आत्मनस्तथात्वेऽपि दुःखानुभवादाश्चर्यं सूचयन्त आत्मदुःखं निवेदयन्ति—लोक इति। हे ईश! सतां स्वभक्तानां रमणाय तद्रक्षायाः खलनिग्रहं विना असंभवात्तेषां खलानां निग्रहाय च कलया स्वांशेन सङ्कर्षणेन सह भगवान् अस्मिल्लोकेऽवतीर्णः। तत्र हेतुमाहुः—जगदिन इति। जगत इनः स्वामी। अन्यस्य जगद्रक्षायां सामर्थ्याभावात् स्वेनारक्षणे सर्वविलय एव स्यात् इति भावः। एवं सत्यपि कश्चिदन्यो जरासन्धादिजनः त्वदीयं निदेशं "तेषां सततयुक्तानां योगक्षेमं वहाम्यहम्" "कौन्तेय प्रतिजानीहि न मे भक्तः प्रणश्यति" इत्यादिप्रतिज्ञामतियाति उल्लङ्घयति येन त्वद्भक्तानस्मान् पीडयति, किंवा त्वया रक्ष्यमाणोऽप्यस्मदादिजनः स्वकृतमृच्छति स्वकर्मजं दुःखं प्राप्नोत्येव तदेतन्न विद्मः निश्चेतुं न शक्नुमः। उभयत्राप्यसंभावनासत्त्वादित्याशयः ॥२७॥ दुःखान्तरमाहुः—स्वप्नेति। 'सर्वनियन्तृत्वात् साक्षित्वाच्च तवाग्रे किं बहु वक्तव्यम्' इत्याशयेन संबोधयन्ति—ईशेति। त्वत्तः त्वदनुग्रहात् अनीहैर्निष्कामैर्लभ्यमात्मनि स्वस्मिन्नेव वर्तमानं यत् स्वरूपसुखं तद्धित्वा उपेक्ष्य स्वप्नायितं स्वाप्नसुखतुल्यं यत् नृपाणां सुखं तदर्थं शश्वद्भयं यस्मिंस्तेन, अतएव मृतकतुल्येन देहेन धुरं वहामः स्त्रीपुत्राणामात्मभृत्यादिभारं वहाम इत्यर्थः। तत्र हेतुमाहुः—परतन्त्रमिति। यस्मात्तत्सुखं स्त्र्याद्यधीनमित्यर्थः। अत इह संसारे क्लिश्यामहे। ननु एवं जानतां 'कथं दुःखसाधने प्रवृत्तिः' इत्याशङ्क्याहुः—तव मायया कृपणा मोहेन विषयासक्ता इति ॥ २८ ॥ एवं स्वदुःखं निवेद्य ततो विमोक्षणं प्रार्थयन्ते–तन्न इति। यस्माद्भवान् प्रणतानां शोकहरमङ्घ्रियुग्मं यस्य तथाभूतस्तत्तस्मात्त्वं बद्धान् नोऽस्मान् मगधाह्वयात् जरासन्धाख्यात् कर्मपाशाच्च वियुङ्क्ष्व वियोजय। 'ननु भवद्भिरेव विक्रम्य ततो निर्गम्यताम्' इत्याशङ्क्याहुः—यो जरासन्ध एक एव भूभुजो राज्ञोऽस्मान् स्वभवने रुरोध। अत्र सामर्थ्यमाहुः—अयुतसङ्ख्यानां मतंगजानां वीर्यं बलं बिभ्राण इति। संरोधे दृष्टान्तमाहुः—मृगराट् सिंहः अवी मेषीरिवेति। अतो न वयं स्वप्रयत्नेन ततो विमोक्तुं शक्ता इत्याशयः ॥ २९ ॥ 'त्वयि तु पराजयशङ्कैव नास्ति' इति सूचयन्तः संबोधयन्ति—अजितेति। तत्र हेतुत्वेन साधनसंपत्तिं सूचयन्तः पुनः संबोधयन्ति—उदात्तचक्रेति। द्विनवकृत्वः अष्टादशवारं त्वया सह मृधे युद्धे प्रवृत्ते सति तत्र सप्तदशकृत्वो भग्नः पराजितः, पश्चादनन्तं वीर्यं यस्य तथाभूतमपि भवन्तं सकृदेकदा जित्वा ऊढदर्पः प्राप्तगर्वो यो वै प्रसिद्धो जरासन्धो युष्मत्प्रजा नोऽस्मान् रुजति पीडयति तत्तस्माद्विमोक्षणं विधेहि। 'अजितत्वं पराजितत्वं विरुद्धं कथं संभवति' तत्राहुः—नृलोकनिरतं मनुष्यचेष्टां स्वीकृतवन्तमिति। अतः स्वेच्छयैव पराजय इति। न विरोध इति भावः ॥ ३० ॥

## अन्वितार्थप्रकाशिका

कृष्णेति ॥ हे कृष्णेत्यादीनि सम्बोधनानि भवात्संसारात् भीताः पृथग्धियः पृथग्दर्शिनः वयं त्वां शरणं यामः ॥ २५ ॥ लोक इति ॥ इह संसारे अयम् अस्मद्विधः लोकः सर्वोऽपि जनो यावत् विकर्मणि निषिद्धे काम्ये च कर्मणि निरतः त्वया उदिते पाञ्चरात्रे "यत्करोषि यदश्नासि" इत्यादि गीतासु चोक्ते भवदर्चने त्वत्पूजनरूपे स्वे स्वकीये कुशले उद्धारहेतुभूते कर्मणि धर्मे प्रमत्तः असावधानो वर्तते। तावदेव यो बलवान् कालः सद्य एव अस्य जनस्य जरारोगादिसम्पादनेन जीविताशामपि छिनत्ति। तस्मै अनिमिषाय कालरूपाय वै तुभ्यं नमोऽस्तु ॥ २६ ॥ लोक इति ॥ हे ईश! सतां स्वभक्तानां रक्षणाय तद्रक्षायाः खलनिग्रहं विना असम्भवात्तेषां खलानां निग्रहाय च कलया स्वांशेन सङ्कर्षणेन सह जगतामिनः स्वामी भवान् अस्मिन् लोकेऽवतीर्णः एवं सत्यपि कश्चिदन्यो जरासन्धादिर्जनः त्वदीयं निदेशं शास्त्ररूपं "न मे भक्तः प्रणश्यति, संग्रामे प्रपन्नो न वध्यः" इत्यादिकम् अतियाति उल्लंघयति येन त्वद्भक्तानस्मान् पीडयति किंवा त्वया रक्ष्यमाणोऽप्यस्मदादिर्जनः स्वकृतमृच्छति स्वकर्मजं दुःखं प्राप्नोत्येव तदेतन्न विद्मः निश्चेतुं न शक्नुमः। उभयत्राप्यसम्भावनासत्त्वादित्याशयः ॥ २७ ॥ स्वप्नेति ॥ हे ईश! तव मायया मोहितत्वात् अतिकृपणाः विषयासक्ताः वयं त्वत् त्वत्तः त्वदनुग्रहात् अनीहैर्निष्कामैर्लभ्यमात्मनि स्वस्मिन्नेव वर्तमानं यत्स्वरूपसुखं तद्धित्वा उपेक्ष्य स्वप्नायितं स्वल्पकालस्थायित्वात् स्वाप्नसुखतुल्यं परतन्त्रं स्त्र्याद्यधीनं यत् नृपाणां सुखं तदर्थं शश्वद्भयं यस्मिंस्तेन अत एव मृतकतुल्येन देहेन धुरं वहामः। स्त्रीपुत्राणां चिन्ताभारं वहाम इत्यर्थः। अत इह संसारे क्लिश्यामहे ॥ २८ ॥ तन्नेति ॥ यस्मात् भवान् प्रणतानां शोकहरमङ्घ्रियुग्मं यस्य तथाभूतस्तस्मात्त्वं बद्धान् नोऽस्मान् मगधाह्वयात् जरासन्धाख्यात् कर्मपाशाच्च वियुङ्क्ष्व वियोजय। अयुतसंख्यानां मतङ्गजानां वीर्यं बिभ्रत् यो जरासन्धः एक एव भूभुजो राज्ञोऽस्मान् मृगराट् सिंहः अवीर्मेषीः इव स्वभवने रुरोध ॥ २९ ॥ य इति ॥ हे अजित! हे उदात्तचक्र उद्यतसुदर्शन! द्विनवकृत्वः अष्टादशवारान् त्वया सह मृधे युद्धे प्रवृत्ते सति तत्र सप्तदशकृत्वो भग्नः पराजितः। पश्चादनन्तं वीर्यं यस्य तथाभूतमपि नृलोकनिरतं मनुष्यचेष्टां स्वीकृतवन्तं भवन्तं सकृदेकदा जित्वा ऊढदर्पः प्राप्तगर्वो यो वै प्रसिद्धो जरासन्धो युष्मत्प्रजा नोऽस्मान् रुजति पीडयति तत्तस्माद्विमोक्षणं विधेहि ॥ ३० ॥

## श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्

षड्श्लोकैः राज्ञां विज्ञप्तिमाह कृष्णेति त्वत्तः पृथक् धियः विषयासक्ताः अतोभीताः। अप्रमेयः प्राकृतकरणैः प्रमातुमशक्यः आत्मास्वरूपं यस्य तत्संबुद्धिः ॥ २५ ॥ विकर्मणि त्वदुपासनविरुद्धे कर्मणि निरतः अत्यासक्तः। त्वदुदिते यत्करोषि

यदश्नासीति मन्मनाभवमद्भक्तो मद्याजिमां नमस्कुर्वित्यादिना त्वया उक्ते भवदर्चनरूपे । स्वे स्वकीये कुशले कर्त्तृहितकारके कर्मणि । प्रमत्तः । असावधानः । यावदयं लोको वर्त्तते तावद्बलवान् यः कालः अस्य लोकस्य इह जीविताशां सद्यः । छिनत्ति तस्मै अनिमिषाय कालप्रवर्त्तकाय । तुभ्यं नमोऽस्तु ॥ २६ ॥ जगतो विश्वस्य इनः पतिः कलया संकर्षणेन सह भवानवतीर्णोऽस्ति खलनिग्रहाय त्वयि अवतीर्णेऽपि अन्यः जरासंधादिः कश्चित् खलजनः त्वदीयं दुःखरहिततया जनपालनरूपं निदेशं आज्ञां अतियाति अस्माकं दुःखदानेन अतिक्राम्यति किंवाजन अस्मदादिजनः समूहः स्वकृतं स्वकर्मजं दुखं मृच्छति प्राप्नोति तयोरु-भयोर्मध्ये एकमपि वयं न विद्मः अतोभवतैवाऽऽस्माकं रक्षणं कार्यमितिभावः ॥ २७ ॥ नृपसुखं निंदंत आहुः स्वप्नेति । स्वप्ना-यितं स्वप्नतुल्यं परतंत्रं पराधीनं । नृपसुखं नृपार्हसुखमालंब्य । हे ईश शश्वत् सदा भयं यस्मिन् तेन मृतकेन मरणधर्मणा देहेन वित्तकलत्रादि चिंतारूपां धुरं वहामः । यतस्तवमायया अतिकृपणाः । हृतबुद्धयः अनीहैः विषयाभिलाषा हीनैस्त्वद्भक्तैर्नारदा-दिभिः आत्मनि मनसि लभ्यं यत्तवध्यानरूपं सुखं तत् हित्वा इह वयं क्लिश्यामः ॥ २८ ॥ स्वदुःखविमोचनाय प्रार्थनां चक्रुः तदिति प्रणतशोकहरांघ्रियुग्मो भवानऽस्ति ततस्माद्धेतोः मगधाद्वयात् जरासंधसंज्ञात् कर्मपाशात् बद्धान् नोऽस्मान् वियुंक्ष्व त्वं मोचय ननु युष्माकं बहूनां एकेन जरासंधेन कथं बंधनमिति चेत्तत्राहुः य एकः अयुतमतंगजानां वीर्यं बलं बिभ्रत् सन् भूभुजोऽ-स्मान् नृपान् मृगराड् अवीर्मेषीरिव भवने स्वदुर्गे रुरोध ॥ २९ ॥ किंच अस्मान् युष्मदीयान् ज्ञात्वा सोऽधिकतया व्यथां करोतीत्यूचुः य इति । हे उदात्तचक्र आद्विनवकृत्वः । ईषन्नून्यद्विनववारान् एकोनाष्टादशवारानिति यावत् । त्वयामृधे भग्नोजितो यो मागधः सः । अनंतवीर्यं अपरिमितसामर्थ्यं । नृलोकनिरतं मनुष्यचेष्टातत्परं अतो भवंतं सकृत् एकवारं जित्वा । ऊढदर्पः प्राप्तगर्वः । सन् युष्मत्प्रजाः नोऽस्मान् रुजति व्यथते अतः हे अजित अस्मत्पीडानिवर्त्तने यत्कर्त्तव्यं तत् विधेहि ॥ ३० ॥

### भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

तेषां विज्ञप्तिमाह षड्भिः । तत्र तावच्छरणत्वोपयुक्तगुणविशिष्टं संबोधयन्तः शरणं व्रजन्ति । कृष्ण कृष्णेति । हे कृष्ण, हे कृष्ण, अनेन सर्वलोकानन्दकरत्वं वैषम्यनैर्घृण्यादिराहित्यं च विवक्षितम् । हे अप्रमेयात्मन् अपरिच्छेद्यस्वरूप, अनेनास्मदन्तरात्मतयाऽस्मद्दुःखं जानास्येवेति सूचितम् । अत एव सर्वज्ञत्वं च । हे प्रपन्नभयभञ्जन शरणागतभीतिनिवर्त्तक, अनेन वात्सल्यं विवक्षितम् । भवभीताः भवाद्भीताः, पृथग्दृशः पृथग्दर्शिनः, वयं तं त्वां, शरणं रक्षणोपायं, यामो व्रजामः ॥२५॥ प्रपन्नभयभञ्जनेत्यनेनाप्रपन्नजन्ममरणभयाभञ्जनत्वं सूचितं तदेव विवृण्वन्तः प्रणमन्ति । लोक इति । अयं लोको जनः, विकर्मणि विविधे कर्मणि वैषयिकसुखार्थे कर्मणीति यावत् । निरतः, त्वदुदिते पञ्चरात्रगीतादिमुखेन भवतोपदिष्टे, भवदर्चने भवदाराध-नात्मके, कुशले श्रेयःसाधने, स्वे स्वानुरूपे, कर्मणि धर्मे, यावत्, प्रमत्तोऽनवहितः, तावत्, अस्य इह लोके, जीविताशां, बलवान्, यः सद्यः, छिनत्ति, अनिमिषाय कालात्मने तस्मै तुभ्यं, नमः अस्तु । तृतीयस्कन्धे ब्रह्मस्तुतौ व्याख्यातोऽप्ययं श्लोकः विज्ञप्ति-साम्यादर्थसौष्ठवाच्चात्रापि व्याख्यातः ॥ २६ ॥ न ह्येतावता लोकहिताचरणैकशीलस्य तव वैषम्यमस्तीत्यभिप्रयन्त आहुः । लोक इति । हे कृष्ण, जगदिनः जगदीश्वरः, आद्यः आदौ भवः कारणभूत इत्यर्थः । भवान् त्वं, लोके, सद्रक्षणाय सतां परि-त्राणाय, खलानां दुष्टानां निग्रहाय च, कलया स्वांशभूतेन बलभद्रेण सह, अवतीर्णः भवति । तर्ह्येवंभूते मयि सति कुतः कश्चित् दुःख्यतीत्यत्र कारणद्वयं संभावयन्तोऽन्यन्न विद्म इत्याहुः । हे ईश, कश्चित् जनः, चाद्यः, स्थाने चान्यः, इतिपाठे अन्यः कश्चित् जरासंधादिः, त्वदीयं निदेशमाज्ञां, अतियात्यतिक्रमते, किं वा स्वकृतं पापफलं, ऋच्छति प्राप्नोति । तत्तदुभयव्यतिरिक्तं कारणं, न विद्मः । अयं भावः । जरासंधस्त्वद्भक्तान्नः पीडयन् प्रजापालनरूपां त्वदाज्ञामतिक्रामति । वयं वा तत्कृतार्दनात्मकं पूर्वदुष्कृतफलं भुञ्ज्मः, एतद्द्वयातिरिक्तं त्वयि विद्यमानेऽन्यत् कारणं न विद्म इति ॥ २७ ॥ एवं प्रकृतं स्वदुःखं निवेदयिष्य-न्तस्तावदधुनैव न वयं क्लिश्यामः, किं तु सदापीत्यभिप्रयन्त आहुः । स्वप्नायितमिति । हे ईश, नृपसुखं यदस्माकं नृपाणां सुखं, परतन्त्रं कर्मायत्तं, अतोऽस्माकं बन्धनात् पूर्वमपि न सुखमिति भावः । तच्च, स्वप्नायितं स्वप्नसुखतुल्यं क्षणिकमतितुच्छ-मित्यर्थः । ननु कल्याणतरनृपदेहसंबन्ध एवेत्यत आहुः । शश्वत् सदा भयममित्रेभ्यो यस्य तेन, मृतकेन राजेत्यभिमतेन शव-तुल्येन देहेन, धुरं वहामः । मृतकतुल्यशरीराख्यं भारमात्रमेव वहाम इत्यर्थः । मृतकेनेति कर्मणः करणत्वविवक्षया तृतीया । यद्वा । लोके मृतकेनोह्यमानेन या धूर्भारस्तादृशीं धुरं भारं, वहाम इति । न हि शवं वहतां तत्संबन्धः सुखरूप एव, तथा नृपदेहसंबन्धोऽस्माकमिति भावः । अतः, हे ईश, त्वत्त्वत्तः, त्वदनुग्रहादित्यर्थः । यत् अनीहलभ्यं निष्कामैः संप्राप्यं, आत्मनि त्वयि विषये, सुखं, तत् हित्वा परित्यज्य, अतिकृपणाः वयं, तव मायया, मोहिताः सन्त इति शेषः । इह लोके, क्लिश्यामहे ॥२८॥ प्रकृतमात्मदुःखं निवेदयन्तस्तन्निराकरणं प्रार्थयन्ते । तानिति । प्रणतानां शोकहरमङ्घ्रियुग्मं यस्य तत्संबुद्धौ हे प्रणतशोक-हराङ्घ्रियुग्म, भवान् त्वं, तानुक्तविधान्, अधुना बद्धान्, नोऽस्मान्, मगधाह्वयकर्मपाशात् जरासंधव्याजरूपकर्मपाशतः, इत्यर्थः । वियुङ्क्ष्व वियोजय । भवद्भिरेव विक्रम्यतामित्याशङ्कानिवृत्त्यर्थं मागधं विशिषन्ति । यः, अयुतानामयुतसंख्यानां मतंगजानां वीर्यं, एक एव, बिभ्रद्बिभ्राणः, भवति । अतः, भूभुजोऽस्मान्, मृगराट् सिंहः अवीर्मेषीः इव, भवने रुरोध । तथाविधमगधाह्वयकर्मपाशादिति संबन्धः । न वयं ततो निर्गन्तुं शक्नुम इति भावः ॥ २९ ॥ किं च भवदीया वयमित्यस्मान्

भृशं बाधत इत्याहुः। यो वा इति। भो उदात्तचक्र उद्यतसुदर्शन, यो जरासंधः, द्विनवकृत्वः अष्टादशवारान्, त्वया सह, मृधे युद्धे, प्रवृत्ते सति, तत्र सप्तदशकृत्वः, इति शेषः। भग्नः पराजितः, वै खलु। पश्चात्, अनन्तं वीर्यं यस्य तमपि, नृलोकनिरतं मनुष्यचेष्टामनुकुर्वन्तमित्यर्थः। हेतुगर्भमिदम्। तत्त्वात्, भवन्तं त्वां, सकृत् जित्वा, ऊढदर्पः संप्राप्तगर्वः सन्, हे अजित, युष्मत्-प्रजाः भवदीयप्रजारूपान्, नोऽस्मान्, रुजति पीडयति। तदत्र यद्युक्तं तदित्यर्थः। विधेहि। अवश्यं नः सुखिनः कुर्विति भावः॥३०॥

कृष्णप्रिया

'सच्चिदानन्दस्वरूप श्रीकृष्ण! आप मन और वाणी के अगोचर हैं। जो आपकी शरण में आता है, उसके सारे भय आप नष्ट कर देते हैं। प्रभो! हमारी भेद-बुद्धि मिटी नहीं है। हम जन्म-मृत्युरूप संसार के चक्कर से भयभीत होकर आपकी शरण में आये हैं॥ २५॥ भगवन्! अधिकांश जीव ऐसे सकाम और निषिद्ध कर्मों में फँसे हुए हैं कि वे आपके बतलाये हुए अपने परम कल्याणकारी कर्म, आपकी उपासना से विमुख हो गये हैं और अपने जीवन एवं जीवनसम्बन्धी आशा-अभिलाषाओं में भ्रम-भटक रहे हैं। परन्तु आप बड़े बलवान् हैं। आप कालरूप से सदा-सर्वदा सावधान रहकर उनकी आशालता का तुरंत समूल उच्छेद कर डालते हैं। हम आपके उस कालरूप को नमस्कार करते हैं॥ २६॥ आप स्वयं जगदीश्वर हैं और आपने जगत् में अपने ज्ञान, बल आदि कलाओं के साथ इसलिये अवतार ग्रहण किया है कि संतों की रक्षा करें और दुष्टों को दण्ड दें। ऐसी अवस्था में प्रभो! जरासन्ध आदि कोई दूसरे राजा आपकी इच्छा और आज्ञा के विपरीत हमें कैसे कष्ट दे रहे हैं, यह बात हमारी समझ में नहीं आती। यदि यह कहा जाय कि जरासंध हमें कष्ट नहीं देता, उसके रूप में—उसे निमित्त बनाकर हमारे अशुभ कर्म ही हमें दुःख पहुँचा रहे हैं; तो यह भी ठीक नहीं। क्योंकि जब हमलोग आपके अपने हैं, तब हमारे दुष्कर्म हमें फल देने में कैसे समर्थ हो सकते हैं? इसलिये आप कृपा करके अवश्य ही हमें इस क्लेश से मुक्त कीजिये॥ २७॥ प्रभो! हम जानते हैं कि राजापने का सुख प्रारब्ध के अधीन एवं विषयसाध्य है। और सच कहें तो स्वप्न-सुख के समान अत्यन्त तुच्छ और असत् है। साथ ही उस सुख को भोगनेवाला यह शरीर भी एक प्रकार से मुर्दा ही है और इसके पीछे सदा-सर्वदा सैकड़ों प्रकार के भय लगे रहते हैं। परन्तु हम तो इसी के द्वारा जगत् के अनेकों भार ढो रहे हैं और यही कारण है कि हमने अन्तःकरण के निष्कामभाव और निस्सङ्कल्प स्थिति से प्राप्त होनेवाले आत्मसुख का परित्याग कर दिया है। सचमुच हम अत्यन्त अज्ञानी हैं और आपकी माया के फंदे में फँसकर क्लेश-पर क्लेश भोगते जा रहे हैं॥ २८॥ भगवन्! आपके चरणकमल शरणागत पुरुषों के समस्त शोक और मोहों को नष्ट कर देने वाले हैं। इसीलिये आप ही जरासन्धरूप कर्मों के बन्धन से हमें छुड़ाइये। प्रभो! यह अकेला ही दस हजार हाथियों की शक्ति रखता है और हमलोगों को उसी प्रकार बंदी बनाये हुए हैं, जैसे सिंह भेड़ों को घेर रक्खे॥ २९॥ चक्रपाणे! आपने अठारह बार जरासन्ध से युद्ध किया और सत्रह बार उसका मान-मर्दन करके उसे छोड़ दिया। परन्तु एक बार उसने आपको जीत लिया। हम जानते हैं कि आपकी शक्ति आपका बल-पौरुष अनन्त है। फिर भी मनुष्यों का सा आचरण करते हुए आपने हारने का अभिनय किया। परन्तु इसी से उसका घमंड बढ़ गया है। हे अजित! अब वह यह जानकर हमलोगों को और भी सताता है कि हम आपके भक्त हैं, आपकी प्रजा हैं। अब आपकी जैसी इच्छा हो, वैसा कीजिये'॥ ३०॥

दूत उवाच

इति मागधसंरुद्धा भवद्दर्शनकाङ्क्षिणः। प्रपन्नाः पादमूलं ते दीनानां शं विधीयताम्॥ ३१॥

श्रीशुक उवाच

राजदूते ब्रुवत्येवं [1]देवर्षिः परमद्युतिः। बिभ्रत् पिङ्गजटाभारं प्रादुरासीद् यथा रविः॥ ३२॥[2]

तं दृष्ट्वा भगवान् कृष्णः सर्वलोकेश्वरेश्वरः। ववन्द उत्थितः शीर्ष्णा ससभ्यः सानुगो मुदा॥ ३३॥

सभाजयित्वा विधिवत् कृतासनपरिग्रहम्। बभाषे [3]सूनृतैर्वाक्यैः श्रद्धया तर्पयन् मुनिम्॥ ३४॥

अपि स्विदद्य लोकानां त्रयाणामकुतोभयम्। ननु भूयान् भगवतो लोकान् पर्यटतो गुणः॥ ३५॥

न हि तेऽविदितं किंचिल्लोकेष्वीश्वरकर्तृषु। अथ पृच्छामहे युष्मान् पाण्डवानां चिकीर्षितम्॥ ३६॥

---

१. देवर्षिः—श्रीधर. वंशी. जीव. वीर. विज.।

२. प्रियस्य तस्य कृष्णस्य गायन् कर्माणि जन्म च। कृष्णं संबाध्य लोकांश्च द्रावयन् रमयन् भृशम्॥—अधिकः वीर.। गायन् गिरा मधुरया प्रियकर्माणि जन्म च। द्रावयन्नसङ्घांश्च लोकांश्चिरमयन् भृशम्॥—विज.।

३. मधुरैः—वीर.।

**कर्दमक्षमा**

अन्वयः—दूत उवाच—भवद्, दर्शनकाङ्क्षिणः, मागधसंरुद्धाः, इति, ते, पादमूलम्, प्रपन्नाः, दीनानाम्, शम्, विधीयताम् ॥ ३१ ॥ श्रीशुक उवाच—राजदूते, एवम्, ब्रुवति, परमद्युतिः, पिङ्गजटाभारम्, बिभ्रत्, देवर्षिः, रविः, यथा, प्रादुरासीत् ॥ ३२ ॥ सर्वलोकेश्वरः, भगवान्, कृष्णः, तम्, दृष्ट्वा, ससभ्यः, सानुगः, मुदा, उत्थितः, शीर्ष्णा, ववन्दे ॥ ३३ ॥ कृतासनपरिग्रहम्, मुनिम्, विधिवत्, सभाजयित्वा, सुनृतैः, वाक्यैः, श्रद्धया, तर्पयन्, बभाषे ॥ ३४ ॥ अपिस्वित्, अद्य, त्रयाणाम्, लोकानाम्, अकुतोऽभयम्, ननु, भगवतः, लोकान्, पर्यटतः, महान्, गुणः ॥ ३५ ॥ ईश्वर, कर्तृषु, लोकेषु, ते, किञ्चित्, अविदितम्, न, हि, अथ, पाण्डवानाम्, चिकीर्षितम्, युष्मान्, पृच्छामहे ॥ ३६ ॥

**श्रीधरस्वामिविरचिता भावार्थदीपिका**

दूत आह। इतीति ॥ ३१–३४ ॥ भूयान्महान्गुणो लाभोऽयमस्माकं यत्सर्वलोकवृत्तांतज्ञानमिति ॥ ३५ ॥ ईश्वरः कर्ता येषां तेषु ॥ ३६ ॥

**श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः**

इतीत्थं प्रार्थयंतः ॥ ३१ ॥ प्रादुरासीत्तत्राजगाम ॥३२॥ तं देवर्षिम् ॥ ३३–३४ ॥ अद्य त्रयाणां लोकानामकुतोभयम्, अपिस्विदिति वितर्के कुतोऽपि भयं नास्ति। ननु यतः पर्यटतो भगवतस्तव लोकान् लोकानां भूयान् गुणः। सर्ववृत्तांतश्रवणादिति वा योज्यम् ॥ ३५–३६ ॥

**श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी**

एवं तन्निवेदनद्वारा तद्दुःखं निवेद्य निगमयति—इतीति। इत्येवं महार्त्या प्रपन्नाः यतो मागधेन सम्यक् गिरिद्रोण्यां बन्धनादिना रुद्धाः अतः पित्रोर्बाला इव भवतो दर्शनकाङ्क्षिणः न केवलं संरोधनात्तेषां मोचनं कार्य्यं साक्षाद्दर्शनञ्च देयमिति भावः। तस्माद्दीनानां तेषां मङ्गलं क्रियताम् ॥ ३१ ॥ परमद्युतिरिति। तदानीं तद्दीप्तेरधिकं प्राकट्यं सूचयति तच्च प्रथमतस्तद्वचनमाननाय श्रीभगवत एव तथाऽभिप्रायात् ॥ ३२ ॥ सर्वलोकेश्वराणां ब्रह्मादीनामीश्वरोपि मुदा आसनादुत्थितः सन् शीर्ष्णा ववन्दे यतो भगवान् ब्रह्मण्यदेवत्वाद्यशेषात्मसत्कीर्त्यादिगुणप्रकाशनशील इत्यर्थः। सभ्याः पुरोहितादयः अनुगा उद्धवादयः ॥३३॥ विधिवत् स्वागतादिनीराजनान्तविधिनेत्यर्थः। श्रद्धया प्रीत्या यानि सूनृतानि तैः किम्वा श्रद्धया च तर्पयन् यतो मुनिं परमपूज्यमित्यर्थः। किम्वा श्रीभगवतस्तादृशचेष्टादर्शनादिना परमविस्मयोदयात् कृतमौनम् ॥३४॥ अपिस्वित्प्रश्ने त्रयाणां लोकानां सर्वब्रह्माण्डगतानामित्यर्थः। ईश्वरकर्तृष्विति वक्ष्यमाणात् तत्र तत्र भवतो भ्रमणमस्मद्धितार्थमेवेत्याह—नन्विति वितर्के निश्चये वा भगवतः परमादरणीयाद्भवतः सकाशात् अन्यत्तैः यद्वा नन्वहं तत्सर्वं कथं जानामि तत्राह नन्विति गुणप्रभावः ॥ ३५ ॥ कोसौ ? तमाह—नहीति। ईश्वरकर्तृष्विति लीलया स्वस्य मनुष्यत्वं व्यञ्जयति अथ अतो हेतोः हे अयि पूज्यपादाः एवं पाण्डवानामेव सर्वासु सृष्टिषु निजपरमापेक्षणीयत्वं व्यञ्जितम् ॥ ३६ ॥

**श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी**

एवं पत्रिकां वाचयित्वा सन्देशं प्रतिपादयन्निव प्रार्थयति—इतीति, पत्रिकासमाप्तिबोधनार्थम्, किंवा इत्येवं महार्त्या प्रपन्नाः, यतो मागधेन सम्यग्गिरिद्रोण्यां बन्धनादिना रुद्धाः; किंवा भवद्दर्शनकाङ्क्षिणः, न केवलं संरोधात्तेषां मोचनं कार्य्यम्, साक्षात् दर्शनञ्च देयमिति भावः। एवं शं मंगलं त्वया क्रियताम् ॥ ३१ ॥ राजदूते एवमीदृशं ब्रुवेति सतीति तं प्रति श्रीभगवतः किञ्चिदुत्तरप्रसादे न वृत्ते सति, तद्वाक्यमध्य एवाविर्भूतः, आदौ श्रीभगवतः श्रीयुधिष्ठिरगृहे प्रयाणार्थमिति भावः। पाठान्तरेऽप्यर्थः स एव। परमा द्युतिस्तपो वा दीप्तिर्यस्य सः। अतः पिंगवर्णजटाभारं बिभ्रत्, अतएव रविर्यथेति; इत्थं तदानीमाविर्भावः स्वभावप्रदर्शनेनात्मवाग्ग्रहणार्थं किंवा भाविनापि श्रीयुधिष्ठिरगृहे श्रीभगवतो गमनेन तदिष्टराजसूय-सम्पादनेन च प्रहर्षोदयात्; यद्वा, तदानीं तस्य तथा वर्णनं श्रीयुधिष्ठिरप्रयोजनार्थं तदागमनेन श्रीबादरायणेस्तस्मिन् भक्तिभरोदयार्दात। अथवा परमा-द्युतिस्तपः प्रभावो यस्य सः इति सर्व्वज्ञत्वमुक्तम्। आदौ श्रीयुधिष्ठिरगृहे श्रीभगवतोऽपि यात्रां जानंस्तत्सिद्धये द्रुतमाविर्भूत इत्यर्थः। तपः प्रभावमेव दर्शयति—बिभ्रदिति। अतएव रविर्यथेति परमं तेजस्वित्वं जगत्पूज्यत्वादिकं वा सूचयति ॥ ३२ ॥ सर्व्वलोकेश्वराणां श्रीनारदजनक-ब्रह्मादीनामीश्वरोऽपि मुदा आसनादुत्थितः सन् शीर्ष्णा ववन्दे, यतो भगवान् ब्रह्मण्यदेवत्वाद्य-शेषात्मगुणप्रकटनपर इत्यर्थः। अतएव कृष्णो मुनीनामपि चित्ताकर्षकः; सभ्याः—उग्रसेनादयः, अनुगाः—उद्धवादयः ॥ ३३ ॥ विधिवत् यथाविधीति स्वागतादि-नीराजनान्तविधिनेत्यर्थः। श्रद्धया प्रीत्या यानि सुनृतानि तैः, किंवा श्रद्धया च तर्पयन्, यतो मुनिं परमपूज्यमित्यर्थः। किंवा श्रीभगवतस्तादृशचेष्टादर्शनादिना परमविस्मयोदयात् कृतमौनम् ॥ ३४ ॥ अपिस्वित्

प्रश्ने; अकुतोभयं किम्? तत्र तत्र भवतो भगवतः सन्निधानार्थमेवेत्याह—नन्विति वितर्के निश्चये वा; भगवतः सकाशात्; भवत इति वक्तव्ये भगवत इत्यादरात्, पर्यटनशक्तिविशेषाभिप्रायेण वा ॥ ३५ ॥ हि एव, नैवाविदितमस्ति; ईश्वरकर्तृष्विति सर्व्वेष्वेवेत्यर्थः; यद्वा, ईश्वरस्याप्यभिप्रायं वेत्सि, किं पुनस्तत्सृष्टलोकानामिति सर्व्वं विदितमेवेति भावः। अथ अतो हेतोः; हे पूज्यपादाः! युष्मानिति बहुत्वं गौरवात्; आदावेवेदृशः प्रश्नो जरासन्धवधार्थं श्रीभगवतः श्रीयुधिष्ठिरगृहे प्रागुजिगमिषां द्योतयत्येव ॥ ३६ ॥

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम्

शं सुखम् ॥ ३१–३५ ॥ ईश्वरकर्तृषु श्रीभगवत्प्रेरितचिन्तितादिसकलकर्मसु ॥ ३६ ॥

### श्रीमद्वीरराघवाचार्यकृता भागवतचन्द्रचन्द्रिका

इतीति श्लोको दूतवचनम् दीनानां तेषां राज्ञां शं सुखं विधीयतां क्रियताम् ॥३१॥ अथ नारदागमनादिकं प्रस्तौति—राजदूत इत्यादिना। राज्ञां दूते ब्रुवति सति परमा द्युतिर्यस्य सः बिभ्रद्विभ्राणः प्रियस्य भगवतः कर्माणि जन्म च गायन् तं कृष्णं सङ्घान् सभ्यसङ्घांश्च द्रावयन्नार्द्रचित्तान् कुर्वन् भृशमितरलोकान् रमयंश्चाविरासीदिति सम्बन्धः ॥ ३२ ॥ तमिति तं नारदं मुदा हर्षेण ववन्दे ॥ ३३ ॥ सभाजयित्वेति। यथाविधि सभाजयित्वा पूजयित्वा कृत आसनपरिग्रहो येन त मुनिं श्रद्धया मधुरैर्वाक्यैश्च तर्पयन् बभाषे ॥ ३४ ॥ तदेवाह—द्वाभ्याम् अपिस्विति। अधुना लोकानामकुतोभयं न कुतश्चिदपि भयं तदपिस्वित् अभयं कच्चिदिति इष्टप्रश्नः ननु हे ब्रह्मन् लोकान्पर्यटतो भगवतः त्वत्तः अस्माकमयं भूयान् महान् गुणः लाभः यत्सर्वलोकवृत्तान्तज्ञानमिति वाक्यशेषः ॥ ३५ ॥ नहीति। ईश्वरकर्तृषु स्वकर्तृकेषु लोकेषु किञ्चिदपि तवाविदितं न किन्तु सर्वं विदितमेवेत्यर्थः अथातः युष्मान् प्रति पृच्छामहे ॥ ३६ ॥

### श्रीविजयध्वजतीर्थकृता पदरत्नावली

अद्य त्रयाणां लोकानामकुतोभयमपिस्वित्कुतोपि भयं नास्ति हि लोककुशलाकुशलजिज्ञासया पर्यटतो भवतो महान् गुणो भवतीत्याह—नन्विति ॥ ३५ ॥ पक्षिवत्पर्यटताऽज्ञेन मया किं प्रयोजनमत्राह—नहीति। ईश्वरः कर्ता येषां तथा तेषु अथ तस्मात् ॥ ३६ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

दूत आह—इतीति ॥ ३१–३४ ॥ तवाकुशलासम्भवादेव कुशलप्रश्नानौचित्यात् लोकानामेव कुशलं त्वां पृच्छामीत्याह—अपिस्विदिति। ननु तदहं कथं जानामीति तत्राह—नन्विति। भगवतस्तव पर्यटतो भूयानयं गुणो यतस्त्वत्त एव सर्व्वलोकवृत्तान्तज्ञानं भवेदतः पृच्छामीति भावः ॥ ३५ ॥ ईश्वरः कर्ता येषां तेषु अथेति प्रस्तुता जरासन्धवधो भीमादेव सम्भवेदिति प्रकारं जानत एव भगवतः पाण्डवचिकीर्षिते प्रश्नोऽयं ज्ञेयः ॥ ३६ ॥

### गूढार्थदीपिनी

शं कल्याणं सुखं वा ॥ ३१ ॥ पीतं जटाभारं जटामण्डलम् ॥ ३२ ॥ शीर्ष्णा शिरसा तं ववन्दे इति योज्यम्। सभ्याः सभासदः ॥ ३३ ॥ कृतः आसनस्य परिग्रहः स्वीकारो येन तं नारदं सभाजयित्वा पूजयित्वा सूनृतैः मधुरैः ॥ ३४ ॥ स्वित् वितर्के। अपि किं लोकानां कुतश्चित् भयं तु नास्ति। ननु अहो पर्यटतस्तव अयं भूयान् महान् गुणः सर्वलोकवृत्तान्तज्ञानमिति ॥ ३५ ॥ लोकेषु किञ्चिदपि तव अविदितं नास्ति अथ अतः युष्मान् प्रति पृच्छाम। प्रार्थनायां लोट्। हे इति पृथक् पदम् ॥ ३६ ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

एवं राज्ञां वाक्यं श्रावयित्वा दूत आह—इतीति ॥ ३१ ॥ परमा द्युतिः कान्तिर्यस्य सः ॥ ३२ ॥ लोकान् शिक्षयितुं ववन्दे ॥ ३३ ॥ श्रद्धया विधिवत्सभाजयित्वा पूजयित्वा कृतः आसनपरिग्रहो येन तं मुनेर्भयासम्भवात् ॥ ३४ ॥ तदभयप्रश्नमकृत्वैव लोकानामभयं पृच्छति—अपिस्विदिति। ननु निश्चितं लोकान् पर्यटतः भवतः सकाशात् भूयान् महान् गुणः लाभः अस्माकमिति शेषः। त्वत्तोऽस्माकं सर्वलोकवृत्तान्तज्ञानं भवतीत्यर्थः ॥ ३५ ॥ ईश्वराः कर्ता येषां तेषु युष्मान् इति बहुवचनं पूजार्थम् ॥ ३६ ॥

### श्रीसत्यधर्मकृता श्रीभागवतटिप्पणी

पुरुषो भाषते। इतीति। दीनानां शं सुखम् ॥ ३१ ॥ पिङ्गाश्च ता जटाश्च तासां भारस्तम्। पिङ्गः पिशङ्गे पिङ्गी तु शय्यापिङ्गे तु चालक इति विश्वः। बिभ्रत्। महार्द्युतिर्यथा रविस्तथा प्रादुरासीत्। पक्षी गरुडो यथा बिस्तथाऽऽतरिति

वा ॥ ३२ ॥ प्रियस्य कर्माणि प्रियाणि च तानि कर्माणि च तथा जन्म । मधुरया गिरा । गीरत्र स्वरः । अवसङ्ख्याश्च द्रावयन् लोकान् । नायं निर् किन्तु निः । तेन न ढ्लोपशाक्ष्मप्रवृत्तिः । नितरां रमयन्प्रादुरासीदित्यन्वयः ॥ ३३ ॥ तं नारदं ससभ्यः सानुगश्चोत्थितः सञ्छीर्ष्णा ववन्दे ॥ ३४ ॥ कृत आसनस्य परिग्रहो येन तम् । श्रद्धया भक्त्या बहिः । अन्तस्तदीयया भक्त्या तं तर्पयत्सूनृतैर्वाक्यैर्बभाषे ॥ ३५ ॥ हे देवर्षे त्रयाणां लोकानामद्याकुतो भयं कुतोऽपि भयाभावोऽपि स्विदिति किलेति पप्रच्छ । सामान्यन्यायेन तद्गुणं सम्मान्यं वक्ति । लोकान्पर्यटतो जनस्य महान्गुणः । कुशलाकुशलवार्ताविषयाद्यात्मकः । तस्यात्तु मम किमित्यत आह । भगवतः पूज्यस्य तव स भूयान्ननु निश्चयः । सामानाधिकरण्येनान्वयो वा ॥ ३६ ॥

## श्रीमद्वल्लभाचार्यकृता सुबोधिनी

तेषां प्रार्थना आज्ञापनरूपत्वात् दोषाय मा भवत्विति प्रपत्तिरूपतां सम्पादयितुं दूतस्तात्पर्यमाह इतीति । इति ते पादमूलं प्रपन्नाः, मागधेन च संरुद्धाः, 'दृष्टं स्मृतैर्विलिष्ठ'मिति स्मरणेन कार्यं न सेत्स्यतीति भवद्दर्शनकाङ्क्षिणः । दीनानां प्रार्थितदानेन शं विधीयतामिति । दूतस्य भगवत्साक्षात्कारे जाते तत्फलस्यैव प्रार्थना येन प्रार्थनाद्वयं दर्शनफलं चेति भवति साधकत्रयम् ॥ ३१ ॥ एवं राजसानां भगवद्धर्मेण भगवत्परतां निरूप्य सात्त्विकानामपि भगवत्परतां निरूपयितुं सात्त्विकमुख्यस्य नारदस्य सात्त्विककार्यपरस्य समागमनं निरूप्यते । अन्यथा भगवत्कार्यं राजसमात्रपर्यवसायि स्यात् । क्षणमात्रविलम्बेऽपि भगवान् भक्तदुःखे विलम्बं न सुहृत इति राजदूते एवं वदत्येव समागत इत्याह राजदूत इति । देवानामपि मन्त्रद्रष्टृत्वात् तदानीमागमनमुचितम् । अन्येषां बाधकानां तेजोदूरीकरणाय परमद्युतिरिति । अधिकारिणो नात्यन्तं वचनमादरणीयमिति शङ्कां वारयितुमाह बिभ्रत्पिङ्गजटाभारमिति । तपोरूपमेतत् । तत्रत्यानां तमोदोषव्यावृत्त्यर्थं यथा रविरिति । रविपदेनैव भगवत्सान्निध्ये तमःसम्भावना सूचिता । अन्यथा दिनरात्रिव्यवस्था न स्यात् । प्रादुरासीदिति न दूतवत्तस्यागमनम् ॥ ३२ ॥ ततः तस्यागतस्य वाक्यसन्माननार्थं लौकिकसन्माननं निरूप्यते तं दृष्ट्वेति त्रिभिः । कायिकमानसिकवाचनिकैः । तत्र कायिकमुत्थानं वन्दनं च सर्वैः सहेति त्रयम् । हर्षो मानसः । भगवत्त्वादनुचितत्वेऽपि कृष्णत्वेनावतीर्ण इति तथात्वमुचितम् । शिक्षार्थमेतदिति ज्ञापयितुमाह सर्वलोकेश्वरेश्वर इति । ऋषित्वाल्लोकस्थानीयः गुरुत्वादीश्वरो वा । अतोऽवनतिर्न दोषाय । सर्वपदेन देवर्षित्वकृतोऽप्युत्कर्षो निवारितः ॥ ३३ ॥ सभाजनं तन्मनःप्रीतिकरणं लौकिकम् । ऋषित्वादेवाभिनिवेश इति, तदप्याह विधिवदिति । ईश्वरधर्मविचारेण कदाचिदनङ्गीकारे कृतं व्यर्थं स्यादित्यत आह कृतासनपरिग्रहमिति । दत्तासनस्वीकारः परिग्रहः । ततो वाचनिकारम्भमाह बभाषे सूनृतैरिति । स हि श्रद्धया परितुष्यति, तदाह श्रद्धया तर्पयन्निति । मानसमेतत् । सोऽपि मुनिस्तेनैव परितुष्यति ॥ ३४ ॥ वाचनिकं द्वयेनाह अपि स्विदिति । सर्वलोकाधिकारिणो लोकत्रयस्य गृहत्वात् तत्कुशलप्रश्न एव कर्तुमुचितः स्तुतिरूपश्च भवति । अपि स्विदिति सन्देहगर्भितसम्भावना । राज्ञां बन्धनस्य श्रुतत्वात् सन्देहः । अकुतोभयमिति । स्वत एवाज्ञानाद्भयम्, न त्वन्यत इति रहस्यम् । ननु लोकेश्वरस्य कथं पर्यटनमित्याशङ्क्याह ननु भूयान् भगवत इति । लोकान् पर्यटतो भगवतस्तव सतः भूयानेव गुणो भवतीत्यर्थः । अतः सर्वलोकहितार्थं परिभ्रमणमित्यर्थः । अनेन तस्य स्तुतिरुक्ता ॥ ३५ ॥ प्रकृतोपयोगिकार्यं प्रष्टुं तस्य ज्ञानमाह न हि तेऽविदितं किञ्चिदिति । अयं हीश्वरस्येच्छाशक्तेराधिभौतिकरूपः, यावद्भगवानिच्छति, करोति च, तत्सर्वमस्य विदितम् । ईश्वर इति । मूलभूतः काल इति विमर्शः । अत ईश्वरेच्छया पाण्डवानां यच्चिकीर्षितम्, तत्तव विदितमेवेति युष्मान् पृच्छामहे । हे आयुष्मन्निति वा । अथशब्दो हेत्वर्थः आनन्तर्यपर्यायः ॥ ३६ ॥

## श्रीसुबोधिनी-सारः

दूतोक्तिः इत्येवं मागधेन संरुद्धाः भवतो दर्शनेच्छवो भूपास्ते तव पादमूलं प्रपन्नाः संति दीनानामनाथानां शं सुखं त्वया विधीयताम् ॥ ३१ ॥ शुकोक्तिः । एवं राज्ञां दूते ब्रुवति वदति सति परमोत्कृष्टा द्युतिर्दीप्तिर्यस्य स पिंगायाः पिशंगवर्णाया जटाया भारं बिभ्रत् देवर्षिर्नारदः प्रादुरभूत् सूर्य इव ॥ ३२ ॥ सर्वलोकेश्वराणामीश्वरो भगवान् कृष्णः सभ्यैः सभार्हैः सहितः सानुगः सभृत्यः तं नारदं दृष्ट्वा उत्थितो मुदा हर्षेण शीर्ष्णा शिरसा ववंदे प्रणनाम ॥ ३३ ॥ विधिवत् कृत आसनपरिग्रहो येन तं मुनिं सभाजयित्वा प्रशस्य श्रद्धया सूनृतैर्मधुरैर्वचनैः तर्पयन् प्रीणयन् उवाच ॥ ३४ ॥ त्रयाणां लोकानाम् अद्य इदानीमकुतोभयमपि स्वित् किं भवतस्तव लोकान् पर्यटतः सतो भूयान्महान् गुणो ननु एव ॥ ३५ ॥ ईश्वररचितेषु लोकेषु अविदितमज्ञातं किंचिदपि ते नहि अथातः युष्मत् भवद्भ्यः सकाशात् पांडवानां कर्त्तुमिष्टं वयं पृच्छामः ॥ ३६ ॥

## श्रीविट्ठलरायात्मजश्रीवल्लभकृतलेखः

इतीत्यत्र । प्रार्थनाद्वयमिति । भवभयविमोकप्रार्थना मगधकर्मपाशविमोकप्रार्थना चेत्यर्थः । साधकत्रयमिति । मागधवधे त्रयं साधकं हेतुरित्यर्थः । राजदूते इत्यत्र । अन्यथेति । रविं विना भगवत्सान्निध्येनैव तमःसंभावनाभावे भगवल्लीलायां दिनरात्रिव्यवस्थानं न स्यात् । तथा नारदं विना भगवत्सांनिध्येनैवाज्ञानसंभावनाभावे भगवल्लीलायां ज्ञानाज्ञान-

व्यवस्थानं न स्यात् । लीलार्थमज्ञानमपि स्थापनीयमितिभावः । तं दृष्ट्वेतित्रिभिरिति । एतच्छ्लोकमारभ्य त्रिभिः प्रकारैः, नतु श्लोकैरित्यर्थः । ऋषित्वादिति । नारदस्य लोकत्वपक्षे ईश्वरत्वपक्षे वा तस्यापीश्वरस्य भगवतो नारदवन्दनं शिक्षार्थमेव । अत इति । शिक्षार्थत्वादित्यर्थः । अपि स्विदित्यत्र । ननु लोकेश्वरस्येति । पूर्वतरश्लोके गुरुत्वाल्लोकेश्वरत्वेनोक्तस्य नारदस्येत्यर्थः ।

## गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

एवं राजसन्देशमुक्त्वा दूतः स्वयमाह—इतीति । मागधेन संरुद्धा भवद्दर्शनकाङ्क्षिणो राजान इत्येवं ते पादमूलं प्रपन्ना इति अतस्तेषां दीनानां शं सुखं विधीयताम् ॥ ३१ ॥ राज्ञा दूते एवं ब्रुवति सति परमा द्युतिर्यस्य सः पिङ्गं पीतं जटाभारं बिभ्रत् बिभ्राणः देवर्षिर्नारदः प्रादुरासीत् अकस्मादागतः । परमद्युतित्वे दृष्टान्तमाह—यथा रविरिति ॥ ३२ ॥ तमागतं नारदं दृष्ट्वा सर्वलोकेश्वरा ब्रह्मरुद्रेन्द्रादयः तेषामीश्वरो नियन्ता पालकोपि भगवान् कृष्णः सभ्यैः सहितो तथा अनुगैर्भृत्यादिभिः सहितश्च उत्थितः सन् मुदा हर्षेण शीर्ष्णा ववन्दे इत्यन्वयः ॥ ३३ ॥ विधिवद्यथाविधि सभाजयित्वा तं पूजयित्वा कृत आसनस्य परिग्रहः स्वीकारः येन तं मुनिं श्रद्धया स्नेहविशेषेण सूनृतैर्मधुरैः वाक्यैश्च तर्पयन् प्रीणयन् बभाषे ॥ ३४ ॥ तद्भाषणमेवाह—अपिस्विदिति द्वाभ्याम् । अद्य अधुना त्रयाणां लोकानां किंस्विदकुतोभयं अभयमस्ति । ननु हे ब्रह्मन् ! पर्यटतो भगवतस्त्वत्तोऽस्माकमयं भूयान् महान् गुणः लाभः, यत्सर्वलोकवृत्तान्तज्ञानमिति शेषः ॥ ३५ ॥ हि यस्मादीश्वरः कर्ता येषां तेषु लोकेषु तत्राविदितं किञ्चिन्नास्ति, अथ तस्मात् पाण्डवानां यच्चिकीर्षितं तत् युष्मान्प्रति पृच्छामहे इत्यन्वयः ॥ ३६ ॥

## अन्वितार्थप्रकाशिका

दूत आह—इतीति ॥ मागधेन संरुद्धा भवद्दर्शनकांक्षिणो राजान इत्येवं ते पादमूलं प्रपन्ना इति । अतस्तेषां दीनानां शं सुखं विधीयताम् ॥ ३१ ॥ राजेति ॥ राज्ञां दूते एवं ब्रुवति सति परमा द्युतिर्यस्य स पिङ्गं पीतं जटाभारं बिभ्रत् बिभ्राणः देवर्षिर्नारदः यथा रविस्तथा प्रादुरासीत् ॥ ३२ ॥ तमिति ॥ तमागतं नारदं दृष्ट्वा सर्वेषां लोकेश्वराणामीश्वरो भगवान् कृष्णः सभ्यैः सहितः तथा अनुगैर्भृत्यादिभिः सहितश्च उत्थितः सन् मुदा हर्षेण शीर्ष्णा ववन्दे ॥३३॥ सभाजयित्वेति ॥ कृत आसनस्य परिग्रहः स्वीकारो येन तं मुनिं श्रद्धया विधिवत्सभाजयित्वा पूजयित्वा सूनृतैर्मधुरैः वाक्यैश्च तर्पयन् प्रीणयन् बभाषे ॥ ३४ ॥ अपीति ॥ अद्य अधुना त्रयाणां लोकानां अपिस्वित् किंस्विदकुतोभयम् अभयं कुशलमस्ति तव तु सदैव कुशलवत्त्वात्कुशलं न पृच्छ्यते इति भावः । ननु हे ब्रह्मन् ! लोकान् पर्यटतो भगवतस्त्वत्तोऽस्माकमयं भूयान् महान्गुणः लाभः यत्सर्वलोकवृत्तान्तज्ञानमिति शेषः ॥ ३५ ॥ नेति ॥ हि यस्मादीश्वरः कर्ता येषां तेषु । कबभाव आर्षः । लोकेषु तवाविदितं किंचिन्नास्ति अथ तस्मात् पाण्डवानां यच्चिकीर्षितं तत् युष्मान् प्रति पृच्छामहे । तङार्षः । यद्वा । हे इति पृथक् पदं प्रार्थने लोट् ॥ ३६ ॥

## श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्

इतिति दूतवचनं ॥ ३१-३३ ॥ कृत आसनादिपरिग्रहः । पूजापरिकरो यस्य तं ॥ ३४ ॥ लोकान्पर्यटतः भगवतः सकाशात् भूयान् महान् गुणः निखिलजनवृत्तांतवेदनरूपो लाभोऽस्माकमस्ति ॥ ३५ ॥ ईश्वरः कर्ता येषां तेषु अथ अतः ॥ ३६ ॥

## भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

एवं राज्ञां संदेशमुक्त्वा दूतः स्वयमाह । इतीति । हे भगवन्, इतीत्थं, मागधसंरुद्धाः नृपाः, भवद्दर्शनकाङ्क्षिणः, ते तव, पादमूलं प्रपन्नाः, वर्त्तन्ते । अतः, दीनानां तेषां, शं सुखं, विधीयतां इति दूतवाक्यम् ॥ ३१ ॥ अथ तदानीं नारदागमनादिकं प्रस्तौति । राजदूत इति । राजदूते, एवं ब्रुवति सति, परमा द्युतिर्यस्य सः, पिङ्गजटाभारं पिङ्गलवर्णजटागुम्फं, बिभ्रत् बिभ्राणः, देवर्षिर्नारदः, रविः यथा तथा, प्रादुरासीत् ॥ ३२ ॥ तमिति । तं नारदं, दृष्ट्वा सर्वलोकानामीश्वरा ये ब्रह्मादयस्तेषामीश्वरः, भगवान् कृष्णः, ससभ्यः, सानुगः, मुदा उत्थितः सन्, शीर्ष्णा शिरसा, ववन्दे ॥ ३३ ॥ सभाजयित्वेति । भगवान्, कृत आसनपरिग्रहो येन तं, मुनिं नारदं, विधिवत् श्रद्धया, सभाजयित्वा, सूनृतैर्मधुरैः, वाक्यैः तर्पयन् संप्रीणयन्, बभाषे ॥ ३४ ॥ तदेवाह द्वाभ्याम् । अपि स्विदिति । अद्य, त्रयाणां लोकानां, अकुतोभयं अपि स्वित् । त्रिलोक्यां सर्वे जना अकुतोभया वर्त्तन्ते किमु इति भावः । हे ब्रह्मन्, लोकान् पर्यटतः, भगवतस्त्वत्तः, अस्माकमयं, भूयान् गुणो लाभः ननु । यत् सर्वं लोकवृत्तान्तज्ञानमिति वाक्यशेषः ॥ ३५ ॥ न हीति । ईश्वरः कर्त्ता येषां तेषु, लोकेषु, ते तव, अविदितं किंचित्, न हि । सर्वं तव विदितमेवास्तीत्यर्थः । अथातो हेतोः, युष्मान्, पाण्डवानां, चिकीर्षितं, पृच्छामहे ॥ ३६ ॥

### कृष्णप्रिया

दूत ने कहा—भगवन्! जरासंध के बंदी नरपतियों ने इस प्रकार आप से प्रार्थना की है। वे आपके चरणकमलों की शरण में हैं और आपका दर्शन चाहते हैं। आप कृपा करके उन दीनों का कल्याण कीजिये ॥ ३१ ॥ श्रीशुकदेवजी कहते हैं—परीक्षित्! राजाओं का दूत इस प्रकार कह ही रहा था कि परमतेजस्वी देवर्षि नारदजी वहाँ आ पहुँचे। उनकी सुनहरी जटाएँ चमक रही थीं। उन्हें देखकर ऐसा मालूम हो रहा था, मानो साक्षात् भगवान् सूर्य ही उदय हो गये हों ॥ ३२ ॥ ब्रह्मा आदि समस्त लोकपालों के एकमात्र स्वामी भगवान् श्रीकृष्ण उन्हें देखते ही सभासदों और सेवकों के साथ हर्षित होकर उठ खड़े हुए और सिर झुकाकर उनकी वन्दना करने लगे ॥ ३३ ॥ जब देवर्षि नारद आसन स्वीकार करके बैठ गये, तब भगवान् ने उनकी विधिपूर्वक पूजा की और अपनी श्रद्धा से उनको सन्तुष्ट करते हुए वे मधुर वाणी से बोले ॥ ३४ ॥ 'देवर्षे! इस समय तीनों लोकों में कुशल-मङ्गल तो है न? आप तीनों लोकों में विचरण करते रहते हैं, इससे हमें यह बहुत लाभ है कि घर बैठे सबका समाचार मिल जाता है ॥ ३५ ॥ ईश्वर के द्वारा रचे हुए तीनों लोकों में ऐसी कोई बात नहीं है, जिसे आप न जानते हों। अतः हम आप से यह जानना चाहते हैं कि युधिष्ठिर आदि पाण्डव इस समय क्या करना चाहते हैं?' ॥ ३६ ॥

### श्रीनारद उवाच

दृष्टा मया ते बहुशो दुरत्यया माया विभो विश्वसृजश्च[1] मायिनः।
भूतेषु भूमंश्चरतः स्वशक्तिभिर्वह्नेरिवच्छन्नरुचो[2] न मेऽद्भुतम् ॥ ३७ ॥
तवेहितं कोऽर्हति साधु वेदितुं स्वमाययेदं सृजतो नियच्छतः।
यद् विद्यमानात्मतयावभासते[3] तस्मै नमस्ते स्वविलक्षणात्मने ॥ ३८ ॥
जीवस्य यः संसरतो विमोक्षणं न[4] जानतोऽनर्थवहाच्छरीरतः।
लीलावतारैः स्वयशःप्रदीपकं प्राज्वालयत्त्वा[5] तमहं प्रपद्ये ॥ ३९ ॥
अथाप्याश्रावये ब्रह्म नरलोकविडम्बनम्। राज्ञः पैतृष्वस्रेयस्य[7] भक्तस्य च चिकीर्षितम् ॥ ४० ॥

### कर्दमक्षमा

अन्वयः—नारद उवाच—विभो! भूमन्! विश्वसृजः, मायिनः, भूतेषु, स्वशक्तिभिः, वह्नेः, इव, चरतः, छन्नरुचेः, ते, मायाः, मया, बहुशः, दुरत्यया, दृष्टाः, न, मे, अद्भुतम् ॥ ३७ ॥ स्वमायया, इदम्, सृजतः, नियच्छतः, तव, इहितम्, साधु, वेदितुम्, कः, अर्हति, यद्, विद्यमानात्मतया, अवभासते, स्वविलक्षणात्मने, तस्मै, नमस्ते ॥ ३८ ॥ अनर्थवहात्, शरीरतः, संसरतः, विमोक्षणम्, जीवस्य, न, जानतः, लीलावतारैः, स्वयशः, प्रदीपकम्, प्रज्वालयत्, तम्, अहम्, त्वाम्, शरणम्, प्रपद्ये ॥ ३९ ॥ हे ब्रह्मन्, अथ, अपि, आश्रावये, नरलोकविडम्बनम्, राज्ञः, च, भक्तस्य, पैतृष्वस्रेयस्य, चिकीर्षितम् ॥ ४० ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

एवमविदुषेव सर्वज्ञेन जरासंधवधार्थमेव पांडवचिकीर्षितं पृष्टो नारदो मायेयमिति ज्ञात्वाह दृष्टा इति त्रिभिः। विश्वसृजश्च ब्रह्मणोऽपि मायिनो मोहकस्य ते स्वशक्तिभिर्विद्यादिभिर्भूतेष्वंतर्यामितया चरतो वर्तमानस्य यद्यहं भूतेषु वर्ते तर्हि भूतानि मां किं न पश्यंति तत्राह। वह्नेरिवच्छन्नरुच इति। स्वशक्तिभिरेव छन्ना रुक् प्रकाशो यस्य तस्य अतस्तवेदं प्रश्नादि न मेऽद्भुतम् ॥ ३७ ॥ इदं जगत्। कथंभूतम्। असदेव यत्तव मायया विद्यमानात्मतया भासते तज्जगत्सृजतः किंतु केवलं तुभ्यं नमनमेव शक्यमित्याह। तस्मै नम इति। कुतः। स्वेन रूपेण सर्वतो विलक्षणात्मने अचिन्त्यायेत्यर्थः ॥ ३८ ॥ नन्वेवंभूतस्य किं मायाचेष्टितैरित्यत आह। जीवस्येति। अविद्यातमसावृतत्वेनानर्थ प्रापकाच्छरीरात्संसरतः तेनैव तपसा तस्माच्छरीराद्विमोक्षोपायमजानतः। प्राज्वालयत्प्रदीपितवान् तं त्वा त्वाम्। यशःश्रवणादिभिर्जीवस्य मोक्षार्थमित्यर्थः ॥ ३९ ॥ आश्रावये श्रावयिष्यामि। नरलोकविडंबनं ब्रह्म त्वाम्। ब्रह्मन्निति पाठेऽपि हे ब्रह्मन्परमात्मन्नरलोकानुकारिणं त्वां श्रावयिष्यामीति ॥ ४०-४१ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

श्रीभगवता लोकत्रयाकुतोभयं यत्पृष्टं तस्याज्ञातत्वेन पांडवतात्पर्यकत्वेन चोत्तरमदत्वा स्वस्मिन्सर्वदर्शित्वं यदुक्तं तत्तु तच्छक्तिमयत्वेनैवांगीकरोति—दृष्टा इति। माया मायिककार्याणि नानाब्रह्मांडगतानि तथा विश्वसृजस्तत्तदन्तर्याम-

१. शश्वच्च–विज.। २. रुचोऽद्भुताः–विज.। ३. यो विष–विज.। ४. तयाऽवसीयते–वीर. विज.। ५. न जायते–विज.।
५. प्रज्वालयेस्त्वं तदहं–विज.। ७. ष्वसे–श्रीधर. वंशी. जीव. वीर. विज. विश्व.।

ब्रह्मविष्ण्वादयो मायिनस्तच्छक्त्यंशधारिणश्च दृष्टाः। तच्च 'त्वं पर्यटन्नर्क इव त्रिलोकीम्' इति व्यासोक्त्यनुसारेण स्वस्य तव शक्तिभिस्त्वद्भक्तिमयमच्छक्तिभिरेव वा सर्वव्यापकवह्नेरिव छन्नरुच आच्छादितसर्वज्ञस्य स्वतो भूतेषु चरतो मम नाद्भुतमिति तोषिणी। वृत्त्यभिप्रायेण बहुत्वं माया इति ॥ ३७ ॥ विद्यमानात्मतया स्वरूपस्थित्येति लब्धवत्तया। इत्यर्थ इति। असदपि सत्कुर्वतस्तव मायावैभवमतर्क्यमिति भावः ॥ ३८ ॥ इत्यर्थ इति—"भवेऽस्मिन् क्लिश्यमानानामविद्याकामकर्मभिः। श्रवणस्मरणार्हाणि" इत्याद्युक्तेरिति भावः ॥ ३९ ॥ श्रावये भविष्यति लट् आङ्पूर्वः। ब्रह्मेति पूर्णब्रह्मस्वरूपः। नलोपस्य संबुद्धौ विकल्पः ॥ ४० ॥

### श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी

श्रीभगवता लोकत्रयाकुतोभयं यत्पृष्टं तस्य ज्ञातत्वेन चोत्तरमदत्वा स्वस्मिन् सर्वदर्शित्वं यदुक्तं तत् तच्छक्तिमयत्वेनैवाङ्गीकरोति—दृष्टा इति। मायाः मायिककार्य्याणि नाना ब्रह्माण्डगतानि तथा विश्वसृजः तत्तदन्तर्यामिब्रह्मविष्ण्वादयो मायिनस्त्वच्छक्तिधारिणश्च दृष्टाः तच्च त्वं पर्य्यटन्नर्क इव त्रिलोकीमित्यादि प्रथमस्कन्धस्थ श्रीव्यासोक्त्यनुसारेण स्वस्य तव शक्तिभिस्त्वद्भक्तिमयमच्छक्तिभिरेव वा सर्वव्यापकवह्नेरिव छन्नरुचः सतो भूतेषु चरतो मम नाद्भुतमिति ॥ ३७ ॥ किन्तु तवेहितं सर्वज्ञत्वादौ सत्यपीदृशप्रश्नादिना सम्पादयितुमिष्टं को मद्विधो महत्तमो वा साधु सुष्ठु यथा स्यात्तथा वेदितुमर्हति तत्र हेतुः यत्पृष्टव्यं प्रश्नस्य गौणमुख्यकर्मभूतं तदिदं सर्वं सृजतः नियच्छतः नियन्तृतया प्रवर्त्तयतश्चेति किञ्च तत्रेदं सर्वं यस्य विद्यमानस्वरूपतया करतलविद्योतमानस्फटिकगोलकतुल्यतया अवभासते प्रकाशते तस्मै तुभ्यं केवलं नमः नतु स त्वमूहितुमर्हस इत्यर्थः। यतः स्वस्मात् विलक्षण आत्मा यस्य तादृशायेति ॥ ३८ ॥ अहो आस्तान्तावत् त्वदीहितं जीवस्य स्वमोक्षणप्रकारमप्यजानतस्तस्यार्थे यः परमकारुणिकः स्वयशोरूपं प्रदीपकं तद्यदि सर्वार्थप्रकाशकं प्राज्वालयत् तं त्वामेवाहं प्रपद्य इति त्वाज्ञानादिप्रकाशनादिना (मो) मुह्यमानस्यापि मम त्वमेव शरणमिति भावः ॥ ३९ ॥ यद्यप्येवं त्वमेव सर्वज्ञः अथापि आ सम्यक् श्रावयामि कुतः नरलोकविडम्बनं तत्सदृशमित्यर्थः। अतः प्रश्नश्चायं भगवतो योग्य एवेत्याह—पितृष्वसुस्तद्भावप्राचुर्य्येण परमवत्सलायाः श्रीपृथाया अपत्यस्य स्वयमपि तथैव भक्तस्येत्यर्थः ॥ ४० ॥

### श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी

विभोर्व्यापकस्येति मायाया अपि व्यापकत्वम्; मायिन इति श्रीब्रह्मादिमोहकत्वञ्च सूचितम्; अतो दुरत्यया दुर्व्वितर्क्या अपि बहुशो दृष्टाः। न च केवलं बाह्या एव, किन्तु आन्तर्य्याश्चेत्याह—भूतेष्विति। भूमन्! हे अपरिच्छिन्न! तथापि प्रत्येकं सर्व्वजीवानामन्तर्यामितया स्वशक्तिभिस्तत्तद्विचित्रसर्व्वेन्द्रियवृत्तिप्रवर्त्तनादिना तेषु चरतो नाद्भुतं मायिकत्वादिति भावः। अन्यत्तैर्व्याख्यातम्। यद्वा, भूमन्! हे सर्व्वव्यापक! अतः काष्ठेषु वह्नेरिव, किंवा अग्निवत् जाज्वल्यमानतया सर्व्वभुवेषु चरतोऽपि तवेदं प्रश्नादिकं स्वस्य तव शक्तिभिर्मायातदंशाविद्यादिभिश्छन्नरुचोऽपि मे नाद्भुतम्। तत्र हेतुः—दृष्टेति, अतोऽयं प्रश्नो माययैवेति भावः। अन्यत् समानम् ॥ ३७ ॥ ननु मया किं प्रयोजनमिति चेत्तत् केन ज्ञातुं शक्यमिति, किंवा न च प्रश्नोऽयं केवलं माययैव, किन्तु केनचिदभिप्रायेणापि, स तु केन ज्ञातुं शक्यतामित्याशयेनाह—तवेति। साधु यथा स्यात्तथा कोऽर्हति, अपितु तत् प्रयोजनादिकं कोऽपि न ज्ञातुं शक्नोतीत्यर्थः। कुतः? स्वस्यैव मायया सृजतो नियच्छतश्च नाशयतः, सृष्टेर्नाशेन सह विरोधादिति भावः। किञ्च, क्वचिन्मायाया अपि सत्यार्थत्वादित्याह—यदिति। अतः स्वत एव सर्व्वतोविलक्षणस्वभावाय नमः। अन्यत्तैर्व्याख्यातम्। यद्वा, यत्तवेहितं विद्यमानात्मतया सर्व्वेषां प्रत्यक्षत्वेन यद्यप्यवभासते द्योतते, तथापि वेदितुं कोऽर्हति? अन्यत् समानम् ॥ ३८ ॥ ननु मदीहिताज्ञानेन भक्त्यसिद्धया लोकाः कथं निस्तरेयुः? तत्राह—जीवस्येति। अनर्थवहादपि शरीरात् विशेषतोऽपुनर्भवत्वादिना मोक्षणं न जानतः; यद्वा, अज्ञाने हेतुः—अनर्थेति। स्वयश एव प्रदीपकः, अज्ञानतमोनाशकत्वात्, तं प्रकर्षेणाज्वालयद् यो भवान् तं त्वामहमनन्यगतिः, अभिप्रायाज्ञानेऽपि सति त्वद्यशः श्रवणादिना सुखं निस्तारो भवितेवेति भावः ॥ ३९ ॥ आश्रावये सम्यक् श्रावयाम्येव, कुतः? नरलोकं भूतलम्, किंवा नरान् लोकांश्च सर्व्वान्; यद्वा, सर्व्वजीवलोकान् विडम्बयति, डलयोरेकत्वान्मनुष्यक्रीड़या स्थिरीकरोतीति तथा सः, तम्; किञ्च, राज्ञ इति धर्म्मराजस्य श्रीयुधिष्ठिरस्य राजत्वादीनां यथोत्तरमाश्रावणहेतुत्वे श्रैष्ठ्यमूह्यम्। अन्यत्तैर्व्याख्यातम्, यद्वा, नरलोकस्य विडम्बनमवलम्बनमनुकारकं वा चिकीर्षितम् ॥ ४० ॥

### श्रीसुदर्शनसुरिकृतं शुकपक्षीयम्

मायाः आश्चर्यशक्तयः ॥ ३७ ॥ विद्यमानात्मतया जन्मादिविकाररहिततया अवभासते यत् तत्सदा अस्त्येव अध्यवसीयते स्वतो विलक्षणस्य चिदचिद्वस्तुनः आत्मने शरीरिणे अस्वविलक्षणात्मने न स्वस्मात् स्वरूपात् विलक्षणः आत्मा विग्रहो यस्य तस्मै ॥ ३८ ॥ अनर्थवहात् दुःखवहाच्छरीरात् प्रज्वालय सम्प्रकाशय ॥ ३९–४२ ॥

## श्रीमद्वीरराघवाचार्यकृता भागवतचन्द्रचन्द्रिका

इत्थं सर्वज्ञेनाप्यविदुषेव जरासन्धवधार्थमेव पाण्डवचिकीर्षितं पृष्टो नारदः केवलमिदं जनव्यामोहनमिति ज्ञात्वाऽऽह दृष्टेति त्रिभिः। हे विभो! हे भूमन्! स्वशक्तितः सर्वज्ञत्वादिस्वशक्तिभिरेव सह भूतेष्वन्तरात्मतया चरतस्तव अनेन पाण्डवादिचिकीर्षितं तव विदितमेवेत्यभिप्रेतं विश्वसृजो ब्रह्मणोपि मायिनो व्यामोहकस्य तव पाण्डवानां चिकीर्षितं पृच्छाम इत्येतद् दुरतिक्रमणीया माया दृष्टा व्यामोहनमात्रमेतदिति निश्चितमित्यर्थः। बहुशो दुरत्ययेत्यनेन त्वत्प्रपन्नैः स्वत्ययैवेति सूचितं यद्वा बहुशो दृष्टेति सम्बन्धः यथा मह्यं योगमायोदयः प्रदर्शितस्तदद्वयं प्रश्नोपीति भावः। ननु भूतेषु चरामि तैः किं न दृश्य इत्यतो विशिनष्टि-भस्मना वह्नेरिति-वह्नेः छन्ना गूढा रुक् प्रकाशो यस्य तवेति सम्बन्धः अतस्तदेवं प्रश्नादिकं मम नाद्भुतमित्यर्थः॥ ३७॥ पाण्डववृत्तान्तप्रश्नव्याजेन मागधजिघांसेवाभिप्रेतेत्यपि न निश्चेतुं शक्नुम इत्यभिप्रयन्नाह—तवेति। ईहितमभिप्रेतं साधु यथा तथा तद्वेदितुं को वार्हति न कोपीत्यर्थः। तत्र हेतुत्वेन तं विशिनष्टि-स्वमायया स्वसङ्कल्पेनेदं जगत् सृजतः नियच्छतोऽन्तरात्मतया प्रशासितुश्च तवेति सम्बन्धः त्वत्सृज्यस्त्वन्नियाम्यश्च अयञ्जनः कथं वेत्तुमर्हतीतिभावः। किन्तु यद्विद्यमानात्मतया यस्मिंस्त्वयि विद्यमान आत्मा भावोऽभिप्राय इति यावत् तत्त्वेनाध्यवसीयते निश्चीयते मयेति शेषः यस्य तवायमेवाभिप्राय इति मया न निश्चीयत इत्यर्थः। स्वेन स्वासाधरणस्वभावेन सर्वस्माद्विलक्षण आत्मा स्वरूपं यस्य तस्मै तुभ्यं नमः केवलं नमस्करोमि न त्वीहितं निश्चेतुं शक्नोमीति भावः॥ ३८॥ यद्यप्येवमथापि त्वदवतारः केवलं साधुपरित्राणाय दुष्कृद्विनाशाय चेत्ये तत्तु निश्चिनोमीत्यभिप्रयन् प्रपद्यते जीवस्येति। यो भवान् संसरतोऽनर्थात् दुःखवहाच्छरीरान्मोक्षणं मोक्षणोपायमजानतश्च जीवस्य यश एव प्रदीपस्तं लीलावतारैः प्रज्वालयन् सन्दीपितवान् तं त्वामहं शरणं प्रपद्ये मुक्त्युपायमजानतः संसरतो जीवस्य यथान्धतमसावृतघटपटादीनजानतस्तद्ज्ञानोपायभूतप्रदीपप्रज्वलनं तद्वत् शृण्वतोऽनुस्मरतः कथयतश्च मुक्त्युपायभूतं यशो विस्तृतवानित्यर्थः॥ ३९॥ अथापीति। यद्यप्येवमथापि नरलोकं विडम्बयन्ननुवर्तसे इति तथा तं त्वां प्रति राज्ञो युधिष्ठिरस्य चिकीर्षितं श्रावये॥ ४०॥

## श्रीविजयध्वजतीर्थकृता पदरत्नावली

मायामाहात्म्यानि मायिनः नित्याव्याहतमाहात्म्यस्य दारुषु छन्नरुचः वह्नेः रुच इव तव रुचोप्यद्भुताः अचिन्त्याः॥३७॥ वह्नेः रुचो मथनादिना व्यज्यन्ते न तथा तव रुच इति भावेनाह— तवेति। कुतो निर्वेदनमिति तत्राह—य इति। यो भवान्-विद्ययाऽज्ञानेनात्मतया अस्वामितयाऽवसीयते निश्चीयते शरीरिभिरिति शेषः। इति यदतो वेदनं दुःशकमित्यर्थः। तर्हि तत्सत्यं किं नेत्याह स्वेति। स्वतो विलक्षणस्वरूपाय तस्मात्स्वामित्वमेव सत्यमिति तत्राज्ञानमेव कारणमित्यर्थः। स्वरूपतो विरुद्धलक्षणस्वामिने कदाप्यनुपहतस्वामिन इत्यर्थः इति वा॥ ३८॥ अज्ञानं मां कदापि न स्पृशेत्प्रत्युत ज्ञानमेव नित्यं प्रज्वलितं भूयादिति प्रार्थयते—जीवस्येति। अज्ञानतः संसरतो जीवस्यानर्थवहात् शरीरविमोक्षणं न जायत इति यत्तस्मादेतद्देहहानाय लीलावतारैस्त्वं स्वयशःप्रदीपकं ज्ञानं प्रज्वालयेस्तदर्थमहं शरणं प्रपद्य इत्यन्वयः। अनेन लीलावतारविषयाज्ञानं दूरीकृत्य तत्त्वज्ञानमेव विकसितं कुर्वित्युक्तं भवति॥ ३९॥ यतस्त्वत्प्रसादादस्मदादेर्विज्ञानं तत्र किञ्चिदपि विज्ञाप्यं न पश्यामि अथापि तथापि अशेषपुरुषार्थप्राप्तौ भगवद्भक्तेः मुख्यहेतुत्वेपि नरदेवानां विडम्बनं यज्ञकरणम्॥ ४०॥

## श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

स्वमाययैव त्रीन् लोकान् मोहयसि अथच तेषामकुतोभयन्न प्रच्छसीत्यद्भुतं ते चरित्रमपि नरलीलस्य नेदमद्भुतमित्याह—दृष्टा इति। विश्वसृजश्च ब्रह्मादेरपि मायिनो मोहकस्य किञ्च हे भूमन्! सर्व्वव्यापक! भूतेष्वपि शक्तिभिर्मायादिभिः सहान्तर्यामितया चरतो वर्तमानस्य माया एव बहुशो दृष्टा किन्तु नरलीलत्वेन छन्ना कौतुकार्थमावृता येन तस्य तवेतादृशप्रश्नादिकं न मे मयि अद्भुतम्॥ ३७॥ किञ्च यत् विश्वं विद्यमान आत्मा अन्तर्यामी यत्र तत्तयैव अवभासते चेतनीभवति तदेवेदं विश्वं कदाचित् सृजतः कदाचिन्नियच्छतस्तव ईहितमभिप्रायं तस्मात् स्वतःस्वभावादेव सर्व्वतो विलक्षणात्मने अतर्क्याय तुभ्यं नमः॥ ३८॥ किञ्च विश्वस्याकुतोभयप्रश्नः स इच्छते चेत्याह—जीवस्येति। शरीरतो बन्धरूपात् विमोक्षणं न जानतो जीवस्य सम्बन्धे स्वयशोरूपं प्रदीपकं यः प्राज्वालयत् स्वतस्त्वं दर्शयितुमिति भावः। त्वा त्वां तस्मात् जगत्यस्मिंस्त्वन्मायामोहिताः सभयाश्च दृष्टा त्वदीययशःश्रवणकीर्तनपराः अकुतोभयाश्च बहवो दृष्टा इति श्लोकत्रयेण द्योतितम्॥ ३९॥ द्वितीयप्रश्नस्योत्तरमाह—अथापीति पञ्चभिः। हे ब्रह्म पूनर्ब्रह्म स्वरुप! ब्रह्मन्निति पाठेऽपि स एवार्थः। सम्बुद्धौ नलोपस्यवैकल्पिकत्वात्। यद्यपि सर्व्वज्ञत्वात् जानास्येव तदप्याश्रावये यतो नरलोकं विडम्बयतीति व्यतिरेकालङ्कारेण नरलोकसमशीलमित्यर्थः॥४०॥

## गूढार्थदीपिनी

हे विभो! विश्वसृजश्च ब्रह्मणोऽपि मायिनः मोहकस्य ते माया मायिककार्याणि ब्रह्माण्डगतानि बहुशो दृष्टा। कथंभूता। दुरत्यया दुःखेनापि अत्येतुमुल्लङ्घयितुमशक्यया ज्ञातुं वा। कथंभूतस्य ते। भूतेषु अन्तर्यामितया चरतः वर्तमानस्य।

तर्हि मां कथं न पश्यन्ति। भस्मना छन्नवह्नेरिव: स्वशक्तिभि: सत्त्वादिगुणै: छन्ना रुक् प्रकाशो यस्य तस्य नाहं प्रकाश: सर्वस्य योगमायासमावृत: इत्युक्ते:। अत: सर्वज्ञस्यापि साधारणजनवत् ते प्रश्नकरणं मेऽद्भुतमाश्चर्यकरं नास्ति ॥ ३७ ॥ तेव ईहितं साधु सम्यक्तया को वेदितुमर्हति न कोऽपि। कथंभूतस्य तव। इदं जगत् नियच्छत: संहरत: पालयतश्चेति योज्यम्। किञ्च असदपि यत् जगत् तव मायया विद्यमानात्मतया सत्यस्वरूपतया प्रतीयते तस्यै स्वेन रूपेण विलक्षणात्मने अचिन्त्यरूपाय ते नम: ॥ ३८ ॥ किं च संसरतो नानायोनिषु भ्रमत: जीवस्य हेतो: य लीलावतारै: मुक्तिप्रदं स्वयशोरूपं दीपं प्राज्वालयत् तं त्वामहं शरणं प्रपद्ये इत्यन्वय:। कथंभूतस्य जीवस्य। अनर्थं प्रापकात् शरीरद्वयात् विमोक्षणं न जानत:। अनर्थो दु:खपरम्परा जन्ममरणादिरूपा ॥ ३९ ॥ हे ब्रह्मन् यद्यपि तवाविदितं किञ्चिन्नास्ति अथापि त्वाम् पैतृष्वसेयस्य युधिष्ठिरस्य चिकीर्षितं आश्रावये श्रावयिष्यामि। भविष्यदर्थे लट्। कथंभूतम्। नरलोकं विडम्बयति अनुकरोतीति तथाभूतम्। पितृष्वसा कुन्ती वसुदेवभगिनी ॥ ४० ॥

### श्रीमच्छुकदेवकृत: सिद्धान्तप्रदीप:

इत्थं सर्वलोकेश्वरेश्वरेण सर्वज्ञेन अर्चनपूर्वकं प्रश्नं कृतवता केवलं मयि कृपा कृतेति दृष्ट आह—दृष्टेति। ते तव भक्तवत्सलस्य माया कृपादृष्ट्या अनुभूता कथम्भूता बहुश: बहुभि: प्रकारै: दुरत्यया प्रतिकर्त्तमशक्या यतो हे विभो! विश्वसृजो ब्रह्मणोपि मायागुणमयी बन्धनरज्जुस्थानीयास्यास्तीति तथा तस्य नियन्तुरित्यर्थ:। मे मयि दासे यद्विविवर्दनं शक्तिभिर्ज्ञानादिभि: भूतेषु चराचरेषु चरत: साक्षात् सर्वद्रष्टु: प्रश्नश्च म अद्भुतम् नन्वित्थं मामन्ये कुतो न जानन्त्यत आह—वह्नेरिवच्छन्नरुच इति। वह्निर्यथा सूक्ष्मरूप: छन्नरुक् भवति काष्ठादिषु वह्नि तदुपासक एव जानाति न सर्वो जन इत्यर्थ:। तथा छन्नरुच: छन्ना गुप्ता सर्वजनाविषया रुक् प्रकाशो यस्य तस्य "नाहं प्रकाश: सर्वस्य" इति श्रीमुखवचनात् ॥ ३७ ॥ आस्तान्तावत् दुर्ज्ञेयत्वत्कार्यविश्वं तवाभिप्रेतं च कोपि न जानातीत्याह—तवेति विद्यमानस्य प्रतीयमानस्य वृष्ट्यान्नादे: कार्यजातस्यात्मतया कारणत्वेन यत्प्रतीयते नतु स्वरूपतो विश्वं कोपि जानाति तदिदं विश्वं स्वमायया स्वशक्त्या सृजतो नियच्छतश्च तवेहितं साधु वेदितुं कोर्हति न कोपीत्यर्थ:। अत: स्वविलक्षणात्मने जीवविलक्षणस्वरूपाय ते केवलं नम: कर्तव्यं जीवेनेति शेष: ॥ ३८ ॥ अज्ञस्यापि त्वद्यशश्श्रवणादिना मुक्तिर्भवतीति दर्शयन् स्वविलक्षणात्मत्वं प्रपञ्चयति—जीवस्येति। त्वां त्वदीहितं त्वत्कृतं विश्वञ्च अज्ञानत: जीवस्य शरीरत: पुन: पुनर्जन्मबीजतया अनर्थवहात् विमोक्षणं मुक्तिदं स्वयश:प्रदीपकं य: प्राज्वालयत् प्रदीपितवान् तं त्वा त्वां प्रपद्ये ॥ ३९ ॥ यद्यपि सर्वज्ञस्य पाण्डवानां चिकीर्षितं पृच्छामहे इति प्रश्नमपि कृपाद्योतकम् अथापि हे ब्रह्मन्! परमात्मन्। नरलोकविडम्बनं नरलोकानुकारिणं त्वाम् आश्रावये नरलोकानुकारित्वं सम्भावनया श्रावयिष्यामीत्यर्थ: ॥ ४० ॥

### श्रीसत्यधर्मकृता श्रीभागवतटिप्पणी

ईश्वर: कर्ता येषां तेषु। यद्यपि नद्यृतश्चेति कपा भाव्यम्। छान्दसस्तदभाव:। लोकेषु हिते हितविषये भवद्भि: किञ्चिदविदितं न। न हि तेऽप्यविदितं किं न किमपीत्यन्वय:। सत्येवं युष्मानित्यायुष्मन्विजातीहि सुलग्नमिति। हे मुनय:। अथ पाण्डवानां चिकीर्षितं किमिति युष्मान्पृच्छाम:। शृङ्ग्राहिकया पाण्डवानामगृह्णान: स्वस्य सर्वज्ञत्वेऽपि लोकनटनं कुर्वतो मम प्रश्न इति दध्वान। अन्यथा लोकैकदेशपाण्डवचिकीर्षितप्रश्ने करणीये लोकान्पर्यटत इत्युक्ति: र्कािञ्चदवाङ्मुखी भूयादिति ज्ञेयम्। यद्वा पाण्डवचिकीर्षितत्वे प्रीतिं न वद लोकानटतो नाविदितमस्तीति तद्वेदने हेतूक्ति:। यत्र क्व च नाशनादिव्यासक्तचित्तस्य वार्तावित्ति: सम्भावितेति न प्रीतिं वक्तुं युक्तमिति न वदेति वा तया सम्बोधयन्वक्ति। अथेति। न विद्यते यमन्नं तदपेक्षेति यावत्। यस्य तत्सम्बुद्धि:। उक्त्वा पृच्छतां वृत्तं कण्ठ: शुष्क इति दुष्करं व्याकरणमिति नेत्याह। पृच्छामह इति। तव वक्तुं महे उत्सवे सत्येव मम प्रच्छा प्रश्नोऽयमिति ममापि तद्वार्ता महे सत्येव पृच्छेयमिति वा। अटनमपि न घटितसहयायिजनस्य तवेति वक्तुं त इत्येकवचनं। युष्मानिति बहुवचनं तत्पूज्यताया युज्यत इति तथोक्तिर्वा ॥ ३७ ॥ नारदोऽपि तस्य स्थितिं कैश्चिच्छ्लोकैराकलय्य पृष्टं वक्तीति वक्ति। नारद इति। यो भवान्बहुश: पूर्णसुखस्तस्य ते बहुश:। शस् स्वार्थे। बहुला माया: शक्तयो मया दृष्टास्तदतिक्रमणं च न विना त्वदनुग्रहमित्याह। दुरत्यया इति। विश्वसृज: प्रजासर्जकस्य। सा नोपाधिकीत्याह। मायिन इति। शिखादि:। विभवित्यादिकं तद्दुरत्ययतायां हेतुरिति मन्तव्यम्। सदेति शश्वत्। भूतेषु। चरतस्तव न तत्सम्बन्धबन्धनादिकं तवेत्याह। स्वशक्तिर्भिरिति। स्वरूपभूतशक्तिभि:। नैकाकिनश्चरणं तवेत्यप्याह। स्वशक्तिभि: शक्यत्वाच्छक्तयो भार्या इत्युक्ते: श्रीभूदुर्गाभि: सहेति। न ता अपि स्वातन्त्र्येण किञ्चिदुदञ्चयितुं शक्ता इत्यपि वक्ति। सु अत्यन्तं न विद्यते शक्तिर्यासां ता इति स्वशक्तिभिरिति। स्वरूपशक्तय: कुतो न व्यक्ता। इत्यत आह। छन्नरुच: काष्ठान्तर्गता रुचो रुचीषि यस्य तस्य वह्ने:। अद्भुता अपि रुचो यथा ता न प्रकाशन्ते तथा तव शक्तय इति ॥ ३८ ॥ ननु तर्हि मथनादिनाऽस्मदाद्युपलम्भात्तद्वन्मम शक्तय: पुरुषप्रयत्नसुमिलव्यक्तय इत्यायातमिति तत्राह। तवेति। साधु सम्यक् स्वमायया स्वेच्छया।

नैन्द्रजालिकजलादिनिर्माणकृष्णमायेवेयमित्यप्याह। सु अमाययेति। सृजतो नियच्छतः संहरतो मध्यमे तु नान्यपथान्यकर्तृताविषयिणीति तदनुक्तिः। तवेहितं चेष्टितं वेदितुं कोऽर्हति न कोऽपि तत्र समर्थः। वेदितुमर्हति चेत्को ब्रह्माऽर्हति। कश्छन्दसां योगमावेदेतिवत्। सोऽपि न साकल्येन वेदितुमर्हतीति तात्पर्यम्। कुतो वेदितुं कोऽपि नार्हतीत्यत इत इत्याह। य इति। यो भवानविद्यया स्वकर्मायत्ताज्ञानेन करणेन प्राणिभिः कर्तृभिरनात्मतयाऽस्वामित्वेनावसीयते निश्चीयते। स्वविलक्षणात्मने स्वत एव बिलक्षण आत्मा स्वरूपं यस्य तस्मै। न स्थानकृतं न वा रूपकृतं नापि व्यापारकृतं वैलक्षण्यं त्वयीत्यप्याह। स्विति। तस्मै ते इव नमः। तस्मा इव तस्मै नमः। अथवा तस्मै वै तन्नारायणात्मन इति वा। तव ईहितमिति छेदः। ई रमा साधु ब्रह्मापेक्षया सम्यग्वेदितुमर्हति। साऽपि साधु साकल्येन नार्हतीति वा॥ ३९॥ यथा तदज्ञानं मां त्यजेद्भवेच्च तव ज्ञानं तथा दयां विधेहि। मया त्वनुष्ठेयं तदर्थमियदित्याह। जीवस्येति। यतोऽज्ञानात्संसारतो जीवस्य वहतीति वहमनर्थस्य वहं तस्माच्छरीरतो बिमोक्षणम्। प्राग्विशिष्टं मया त्वज्ञानरसेनोक्षणं संसक्तता न जायते यतस्ततो विमोक्षणं लिङ्गभङ्गादिर्न जायते। साधनानेषनात्र मोक्षो भवतीति भावः। नान्यः पन्था अयनायेत्यादेः। त्वमेव लीलवतारैरिदमादिभिः स्वयशःप्रदीपकं ज्ञानोद्दीपकं प्रज्वालयेः प्रज्वलयेः। यशःश्रवणेन ज्ञानं प्रज्वलितं भवति। तत्राप्येवं चेद्गात्रं कारणमितीरयति। अनर्थवहाद्द्रव्याद्यविषयवहाच्छरीरतः शरीरादिति। तत्तस्मादहमावृत्याऽहम्। अहेयत्वादहं नामेत्युक्तेरहमहेयं त्वां प्रपद्ये॥ ४०॥ त्वत्प्रसादासाधितसंविदा गोविन्दविज्ञातसर्वस्व त्वां प्रति नास्ति विज्ञाप्यं तथाऽपि नाज्ञावज्ञानं कार्यमिति तत्कार्यं विनिवेदयामीति वक्ति। अथाऽपीति। पैतृष्वसेयस्य पितृष्वसुः सुतस्य। पैतृष्वसेयः स्यात्पैतृष्वस्रीयश्च पितृष्वसुः सुत इत्यमरः। राजसत्व भक्तस्य चिकीर्षितं हे ब्रह्मन् पूर्णं नरदेवविडम्बितं नं नरलोकविडम्बनमित्यपि पठन्ति। नरान्देवांश्च विडम्बयत्यज्ञवत्प्रस्तुतप्रश्नादिना देववन्नराशक्यगोवर्धनोद्धारेणेत्युभयविडम्बक इति नरलोकं विडम्बयतीति स तमित्युभयत्रार्थः। तं त्वां श्रावये श्रावयिष्यामि॥४१॥

### श्रीमद्वल्लभाचार्यकृता सुबोधिनी

भगवत्कृतं कायिकं वाचनिकं च तथा नोचितमिति, कदाचिदुपस्थितमन्यथा कुर्यादिति, तन्निराकरणार्थं मायाभावं प्रार्थयते दृष्ट्वा मयेति त्रिभिः। अनेकधा सर्वजनव्यामोहिकाः बहुधा प्रवर्तमाना मया दृष्टाः। तत्र स्वाज्ञानप्रकटनेन हीनभावप्रकटनेन च केवलमेकस्य मम व्यामोहनं किमाश्चर्यमिति वाक्यार्थः। मायायाः स्वरूपज्ञानमेवात्ययोतिक्रमः। तद्भगवन्मायासु न कस्यापि भवतीति दुरत्ययाः। वस्तुव्यभिचारे सकृदवगते पुनः प्रदर्शिता माया ज्ञाता भवतीति शङ्कां वारयितुं बहुश इत्युक्तम्। एका सहस्रधा प्रदर्शितापि न बुध्यत इति। एवं करणे सामर्थ्यमाह बिभो इति। प्रयोजनमाह विश्वसृज इति। मायया जोवव्यामोहाभावे विश्वोत्पत्तिर्न स्यात्। चकारात्स्थितिप्रलयौ। किञ्च। मायी भगवान्, मायानामेक एवाश्रयः, तासामप्रदर्शने प्रचार एव न स्यादित्यावश्यकत्वमुक्तम्। किञ्च। मायानामप्रकटीकरणे महत्त्वे वानुपपत्तिरित्यभिप्रायेणाह भूतेषु भूमंश्चरत इति। चरणावश्यकत्वाय संबोधनम्। सकलभूतसम्बन्धो हि भूमा। तद्गतदोषसम्बन्धाभावाय स्वशक्तिभिरित्यसाधारणसामर्थ्यैः। अन्यथाभिमानमात्रे जोवे सर्वावस्थाः प्रवृत्तयश्च न भवेयुः। ननु भगवतः सर्वे गुणाः सर्वत्र प्रसिद्धाः, मायागुणः क प्रसिद्ध इत्याशङ्क्य दृष्टान्तमाह वह्नेरिव छन्नरुच इति। वह्निर्जलादौ प्रविष्टः स्वकार्यं कुर्वन्नपि छन्नरुग्भवति। रूपस्पर्शयोर्मध्ये अन्यतरप्राकट्यं ज्ञातधर्मस्य मायया विना न सम्भवतीति वह्नेः प्रथमोत्पन्नस्य स्वधर्मः प्रकट इत्यर्थः। यस्तु भगवतो माहात्म्यं जीवेषु रामत्वादिकं च पश्यति, तस्य विरुद्धधर्मदर्शनादद्भुतज्ञानं भवति। मम तु दर्शनेऽपि सिद्धान्तार्थपरिज्ञानान्नाद्भुतं आश्चर्यज्ञानजनकं न भवतीत्यर्थः। इममेवार्थं पुरस्कृत्य मायया विरोधसमाधानमिति वाक्यं भ्रमादन्यथा कैश्चिद्योजितम्॥ ३७॥ नन्वद्भुतकर्मा भगवान्, कथं तस्य चरित्रदर्शनेनाश्चर्यमिति चेत्, तत्राह तवेहितं कोऽर्हतीति। इदमित्थतया चरित्रज्ञाने प्रतिनियतधर्मे च चरित्रे विरोधज्ञानादाश्चर्यं भवति। तदेव तु न सम्भवति, यतः को वा तवेहितं साधु इदमित्थतया वेदितुमर्हति। तत्र हेतुः स्वमाययेदं सृजतो नियच्छत इति। मायाबहिर्भूतो हि वस्तुनो मायया वा याथात्म्यं जानाति, विश्वमेव हि मायया सृजति, हरति, तस्मादिह लोके परलोके वा न कोऽपि तत्त्वं जानाति। ननु बाधितार्थत्वेन मायायास्तत्त्वं कुतो न ज्ञायत इति चेत्, तत्राह यद्विद्यमानात्मतयावसीयत इति। यदविद्यमानमपि विद्यमानात्मतया निश्चीयते। अतो ज्ञानाभावात्केवलं तस्मै ते नमः। जोवस्वरूपान्नमस्कारयोग्यत्वाय सर्ववैलक्षण्यमाह स्वविलक्षणात्मन इति। स्वत एव सर्वविलक्षणः आत्मा यस्येति॥ ३८॥ नन्वेवं सति भगवाननर्थहेतुः कथं सेव्य इति चेत्, तत्राह जीवस्येति। यः स्वयशःप्रदीपकं प्राज्वालयत्, तं त्वामहं प्रपद्य इति सम्बन्धः। तदा भगवाननर्थहेतुः स्यात्, यद्यनन्तं संसारं सृजेत्, द्वाराभावं वा सर्वथाऽज्ञानं वा। प्रत्युत सर्वपदार्थज्ञानाय स्वयशःप्रदीपकं वेदपुराणेषु प्रसिद्धमवतारं गृहीत्वा प्राज्वालयत्। अन्यथा शब्दैकनिष्ठस्य न कदापि धर्मः प्रसिद्धो भवेत्। भगवन्मायान्धकारे यश एव प्रदीपो भवति, न ज्ञानादि, 'ज्ञानकाशये'ति वाक्यात्। प्रज्वालनहेतवोऽपि न दुःखसम्पाद्याः, किन्तु लीलावताराः। तत्प्रपन्नायैव प्रज्वालयतीति तं त्वामहं प्रपद्ये॥ ३९॥ अतो यद्यपि ज्ञात्वैव व्यामोहार्थमज्ञाननाट्यं करोषि, तथापि पृष्टेर्थे उत्तरं दास्ये इत्याह अथापीति। भूमन्निति। तवात्मसङ्गोपनमावश्यकमिति। कथने हेतुः ब्रह्मन्निति। वेदवत्तवाज्ञा सर्वैरेव कर्तुं शक्येति सूचितम्। यदस्मत्सन्तोषार्थं लोककुशलं पृष्टम्, तस्य स्तुतिपरत्वा-

तत्रोत्तरं न दास्यामि, किन्तु पैतृष्वस्रेयस्य युधिष्ठिरस्य चिकीर्षितमाश्रावयिष्ये। राज्ञो हि चिकीर्षितं प्रजानां हितकारि भवति, बन्धोर्बन्धूनां भक्तस्य भगवतः चकारात्सर्वेषां हितकारि गुणवतः॥ ४०॥

### श्रीसुबोधिनी-सारः

नारदोक्तिः। हे विभो विश्वसृजो जगत्कर्त्तुः मायिन ईश्वरस्य "मायिनं तु महेश्वरम्" इति श्रुतेः भूतेषु चरतोंतर्यामिरूपेण स्वशक्तिभिर्गुणैः छन्नाऽऽवृता रुक् दीप्तिः प्रकाशो यस्य तस्य ते तव बहुशो दुरत्यया अचिन्त्या माया मया दृष्टाः स्त्रीरूपेणेति रहस्यं मे नाद्भुतं नाश्चर्यं हे भूमन्॥ ३७॥ स्वमायया इदं विश्वं सृजतो नियच्छतः तवेहितं चेष्टितं वेदितुं ज्ञातुं साधु यथा स्यात्तथा कोर्हति न कोपि तत्र हेतुः। असदेवेदं विद्यमानात्मतया तद्रूपेण प्रतीयते स्वेन रूपेण विलक्षणः पूर्णसच्चिदानंदरूपं यस्य तस्मै ते तुभ्यं नमः॥ ३८॥ अवर्थवहाद्दोषकर्त्तुः शरीरतो विमोक्षणं न जानतो जीवस्य संसरतः संसारं भजतः लीलावतारैः स्वदीपकं स्वप्रकाशकं यशो यः प्राज्वालयत्प्रोद्दीपितवान् तं त्वा त्वां प्रपद्येऽहम्॥ ३९॥ अथापि एवं सत्यपि हे ब्रह्मन् नरलोकविडंबनं यथा भवति तथा ब्रह्मेति पाठे त्वद्विशेषणम्। पितुः स्वसा भगिनी कुंती तस्या अपत्यस्य युधिष्ठिरस्य भक्तस्य च कर्त्तुमिष्टं कार्यमहं वर्णयिष्यामि॥ ४०॥

### श्रीविट्ठलरायात्मजश्रीवल्लभकृतलेखः

दृष्टा मयेत्यस्याभासे। उपस्थितमिति। उपस्थितं भगवत्प्रश्नं मल्लक्षणो जनोऽन्यथा कुर्यान्निवदेत्। अनुचितत्वज्ञाने हि न वदेत्। भगवत्कृतेऽनुचितत्वज्ञानं तु मायाकार्यम्, अतो मायाभावप्रार्थनेत्यर्थः। भूतेषु भूमन्नित्यत्र। सकलेति। सकलभूतेषु सम्बन्धो यस्येतिव्यधिकरणपदो बहुव्रीहिः। अन्यथेति। एतस्यैव विवरणमभिमानमात्रे इति। वस्तुतो भूतेषु चरणं नास्ति, किन्तु अभिमानमात्रमिति सतीत्यर्थः। वह्निर्जलादाविति। उष्णे जले प्रविष्टो वह्निः स्वकार्यं धूमादिकं कुर्वन्नपि छन्नरुग्भवति। यथा 'वह्निरग्नेराप' इतिश्रुत्युक्तक्रमात्स्वस्माज्जातेन स्वधर्मरूपेण जलेन छादकत्वान्मायारूपेण छन्नस्वरूपो भवति, तथा भगवानपि सर्वं प्रकाशयन्नपि मायया स्वशक्त्या छन्नस्वरूप इति वाक्यार्थः। रूपेति। ज्ञाता वह्निधर्मा रूपस्पर्शादयो येन तादृशस्य पुरुषस्याग्रे वह्नेः रूपं वायुसमन्वयेनागतः स्पर्शश्चानयोर्मध्येऽन्यतरस्य स्पर्शमात्रस्य प्राकट्यम्। अप्राकट्यमितिपाठेऽन्यतरस्य रूपमात्रस्याप्राकट्यं मायया स्वाच्छादकधर्मेण विना न सम्भवतीति हेतोर्जलात्प्रथमोत्पन्नस्य वह्नेः स्वधर्मो जलरूपः प्रकटः। तेन वह्निरूपाच्छादनं भवतीति दार्ष्टान्तिके जलस्थानीयया मायया छन्नस्वरूप इति भगवदाच्छादकत्वं मायागुणः प्रपञ्चे प्रसिद्ध इत्यर्थः। प्रकाशकत्वेन स्थिताप्यज्ञाने हेतुमाहुः यस्त्विति। भगवन्माहात्म्यं सर्वप्रकाशकत्वं जीवेषु च सर्वेष्वन्योन्यं सर्वसमत्वं च यः पश्यति, तस्य विरुद्धधर्मदर्शनादतिहीनेषु महतश्चरणमाश्चर्यमिति ज्ञानं भवति। भगवन्माहात्म्यं त्ववाङ्मनोगोचरम्, अतो न कस्याप्यद्भुतत्वज्ञानमित्यर्थः। तर्हि नारदस्याप्यज्ञानादेव नाश्चर्यमित्याशङ्क्य तत्र भिन्नं हेतुमाहुः मम त्विति। माहात्म्यदर्शनेपि नाश्चर्यम्, तत्र हेतुः सिद्धान्तेति। भगवान् स्वशक्त्या छन्नस्वरूपः, अतो हीनेषु स्थितोपि न सम्बध्यते इति ज्ञानादित्यर्थः। इममेवेति। सिद्धान्तार्थमेव पुरस्कृत्य स्थितमिदं भ्रमादन्यथा योजितम्। सर्वं मायिकमतो भगवत्स्थितिरपि मायिक्येवेति प्रकारेण योजितमित्यर्थः। तवेहितमित्यत्र। प्रतिनियतधर्मे चेति। ज्ञाते इति शेषः। यद्यविद्यमानमपीति। माया हि भगवन्तमाच्छादयति, घटत्वादिकं च प्रकाशयति। यद्यस्मादविद्यमानमपि घटत्वादिकं विद्यमानत्वेन निश्चीयते। अतो भगवज्ज्ञानाभावादेतादृशभगवतः स्थितो प्रपञ्चस्य हीनत्वकथन बाधितार्थमिति ज्ञानाभावेनाच्छादकत्वं मायातत्त्वमपि न ज्ञायते इत्यर्थः। अत इति। अविद्यमानस्यैव विद्यमानत्वनिश्चयाद्भगवज्ज्ञानाभावात्केवलं ज्ञानादिमार्गराहित्येन नमनमेवास्त्वित्यर्थः। जीवस्वरूपादिति। भावप्रधानो निर्देशः, स्वस्य जीवस्वरूपत्वाद्भगवतः सर्वविलक्षणत्वान्नमनयोग्यतेत्यर्थः। जीवस्येत्यत्र। सर्वथाऽज्ञानं वेति। साधयेदितिशेषः। अन्यथेति। अवताराभावे शब्दैकानष्टस्य श्रुतिभागवतादिष्वेव प्रसिद्धस्य यशोरूपो धर्मः प्रसिद्धो न भवेदित्यर्थः। अथापीत्यत्र। राज्ञः पैतृष्वस्रेयस्य भक्तस्येति पदत्रयस्य तात्पर्यमाहुः राज्ञो हीति। बन्धोरिति। भक्तस्येति। बन्धोश्चिकीर्षितं बन्धूनां हितकारि भवति। भक्तस्य चिकीर्षितं भगवतो हितकारि भवतीत्यर्थः।

### गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

एवं सर्वज्ञेनाप्यविदुषेव पृष्टो नारद आह—दृष्टेति त्रिभिः। सामर्थ्यं सूचयन् संबोधयति—विभो इति। दुरत्यया अत्येतुमुल्लङ्घयितुं ज्ञातुं वा अशक्या ते तव माया बहुशो मया दृष्टा। दुरत्ययत्वे हेतुं सूचयन् भगवन्तं विशिनष्टि—सर्वभूतेष्वन्तर्यामितया चरतः। विश्वसृजो ब्रह्मणोपि मायिनोपि मोहकस्येत्यर्थः। परिच्छिन्नस्य सर्वप्राणिषु सञ्चरणासंभवात् व्यापकतया संबोधयति—भूमन्निति। 'सर्वत्र वर्तमानश्चेत्तर्हि सर्वे कुतो न पश्यन्ति' इत्याशङ्क्याह—भस्मना वह्नेरिव स्वशक्तिभिः सत्त्वादिगुणैश्छन्ना रुक् प्रकाशो यस्य तस्येति। अतो भवत्पादनिषेवया भवत्प्रभावस्य विदितत्वात् मनुष्यनाट्येन सर्वज्ञस्या-

प्रश्नप्रश्नादिकं मे ममाद्भुतमाश्चर्यकरं न भवति ॥ ३७ ॥ त्वदनुग्रहं विना तु स्वमायया स्वेच्छाशक्त्येदं विश्वं सृजतः पालयतः, नियच्छतः संहरतश्च तवेहितं चेष्टितमभिप्रेतं वा साधु सम्यक् वेदितुं ज्ञातुं कोऽर्हति ? अतो यत् यस्य विद्यमानात्मतयाऽवसीयते सर्वं साक्षादेव प्रतीयते तस्मै स्वविलक्षणात्मने स्वेन स्वरूपेण सर्वतो विलक्षणात्मने चिद्रूपतया सर्वसाक्षिणे तुभ्यं नमः ॥ ३८ ॥ 'एवं भगवदनुग्रहंविना तत्प्रभावज्ञानस्य स्वरूपज्ञानस्य संसारादुद्धारस्य च दुर्लभत्वात्तदर्थं स एव समाराधनीय' इति सूचयंस्तं नमस्कृत्येदानीं तदुपकारं दर्शयंस्तमेव शरणं व्रजति—जीवस्येति । अनर्थं दुःखपरंपरामावहतीति तथाभूताद् शरीरतः स्थूलसूक्ष्मशरीरद्वयात्मकाद्बन्धनात् विमोक्षणं विमुक्त्युपायं स्वभजनमात्मतत्त्वं चाजानतः, अत एव संसरतः जन्ममृत्युजराव्याधिदुःखदोषाननुभवतो जीवस्य हेतोर्यो भवांल्लीलावतारैः स्वयशोरूपं प्रदीपं आवरकाज्ञाननिवर्तकं आत्मस्वरूपादिप्रकाशकं च प्राज्वालयत् सन्दीपितवान् तं त्वामहं शरणं प्रपद्ये ॥ ३९ ॥ यद्यपि सर्वसाक्षित्वात् तवाविदितं किञ्चिन्नास्ति, अथापि नरलोकं विडम्बयत्यनुसरतीति तथा तं त्वां प्रति राज्ञो युधिष्ठिरस्य चिकीर्षितमाश्रावये । 'संबन्धित्वाद्भक्तत्वाच्च तच्चिकीर्षितं त्वया संपादनीयम्' इत्याशयेनाह—पैतृष्वस्रीयस्य भक्तस्य चेति । 'परब्रह्मत्वेन तवाज्ञाऽवश्यमनुसर्तव्या, अतो विदितवृत्तमपि त्वां श्रावये' इति सूचयन् संबोधयति—ब्रह्मन्निति ॥ ४० ॥

## अन्वितार्थप्रकाशिका

सर्वज्ञेनाप्यविदुषेव भगवता पृष्टो नारदो मायेयमिति ज्ञात्वाऽऽह—दृष्टेति ॥ हे विभो ! हे भूमन् ! सर्वभूतेष्वन्तर्यामितया चरतः विश्वसृजो ब्रह्मणोऽपि मायिनोऽपि मोहकस्य भस्मना वह्नेरिव स्वशक्तिभिः सत्त्वादिगुणैश्छन्ना रुक् प्रकाशो यस्य तस्य ते दुरत्यया अत्येतुमुल्लङ्घयितुं ज्ञातुं वा अशक्या ते तव माया बहुशो मया दृष्टाः । अतः सर्वज्ञस्याप्यज्ञवत् प्रश्नादिकं मे ममाद्भुतमाश्चर्यकरं न भवति ॥ ३७ ॥ तवेति ॥ त्वदनुग्रहं विना तु स्वमायया इदं विश्वं सृजतः पालयतः नियच्छतः संहरतश्च तवेहितं चेष्टितमभिप्रेतं वा साधु सम्यक् वेदितुं ज्ञातुं कोऽर्हति । अतो यत् इदं जगदसदपि तव मायया विद्यमानात्मतयाऽवसीयते सर्वं सदिति प्रतीयते । अवभासत इत्यपि पाठः । तस्मै स्वविलक्षणात्मने स्वेन रूपेण सर्वतो विलक्षणात्मने अचिन्त्याय ते तुभ्यं नमः ॥ ३८ ॥ जीवस्येति ॥ अनर्थं दुःखपरम्परां वहतीति तथाभूतात् शरीरतः स्थूलसूक्ष्मशरीरद्वयात्मकाद्बन्धनात् विमोक्षणं विमुक्त्युपायं स्वभजनमात्मतत्त्वं च न जानतः अत एव संसरतः जन्ममरणाननुभवतो जीवस्य हेतोर्यो भवांल्लीलावतारैः स्वयशोरूपं प्रदीपं श्रवणादिभिर्जीवस्य मोक्षार्थम् आवरकाज्ञाननिवर्तकम् आत्मस्वरूपादिप्रकाशं च प्राज्वालयत् दीपितवान् तं त्वामहं शरणं प्रपद्ये ॥ ३९ ॥ अथेति ॥ हे ब्रह्मन् ! यद्यपि तवाविदितं किंचिन्नास्ति अथापि नरलोकं विडम्बयत्यनुसरतीति तथा तं त्वां प्रति पैतृष्वसेयस्य । ढकि लोप इति प्राप्त्या रकाररहित एव पाठः साधुः । भक्तस्य च राज्ञो युधिष्ठिरस्य चिकीर्षितमाश्रावये श्रावयिष्यामि ॥ ४० ॥

## श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्

एवं भगवतापृष्टो नारद आहत्रिभिः दृष्टा इति । विश्वसृजोविधेरपि मायिनोमोहकस्य । भूतेषु मनुष्येषु स्वशक्तिभिः सत्यज्ञानप्रकाशाद्यैश्वर्यैः सह चरतो विचरतः छन्नरुचः । वह्नेरिव मनुष्यतया वर्त्तमानस्याऽग्नेरिव मनुष्यनाट्यतया छन्नैश्वर्यस्य । ते तव दुरत्यया अचिन्त्या बहुशः मायामहैश्वर्याणि मया दृष्टाः अतोऽजानन्निव मां पृच्छसि । तत्र मेऽद्भुतं नास्ति ॥३७॥ सर्वोत्कृष्टस्य तवेहितं दुर्ज्ञेयमित्याह तवेति स्वमायया स्वसंकल्पेन इदं विश्वं सृजतः । नियच्छतो नियमे प्रवर्त्तयतस्तव इहितं चेष्टितं साधु सम्यक् वेदितुं कोर्हति एवं कथमिति चेत्तत्राह यत् यस्य तव विद्यमाना । आत्मता चिदचिद्मिश्रे । विश्वे विकासिताया अंतर्यामि शक्तिस्तया विश्वं असीयते विभक्तनामरूपं निश्चीयते स्वस्य तव विलक्षणो भिन्नतया ब्रह्मपुरे वर्त्तमानः । आत्मामूर्त्तिर्यस्य तस्मै तुभ्यं नमः ॥ ३८ ॥ नन्वीदृशस्य ममावतारैः । किं प्रयोजनं तत्राह जीवस्येति अनर्थवहात् शरीरात् विमोक्षणं अजानतः । न जानत इत्यपिपाठः । अतएव संसरतो जीव वृंदस्य प्रदीपकं मोक्षप्रकाशकं स्वयशः यो भवात् लीलावतारैः । प्राज्वालयत् प्रकाशयामास तं त्वा त्वामहं प्रपद्ये ॥ ३९ ॥ अथापि नरलोकस्य विडंबनं अनुसरणं यस्य तं त्वां पैतृष्वस्रेयस्य पितृ भगिनी पुत्रस्य चिकीर्षितं आश्रावये श्रावयिष्यामि ॥ ४० ॥

## भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

इत्थं सर्वज्ञेनाप्यविदुषेव जरासंधवधार्थमेव पाण्डवचिकीर्षितं पृष्टो नारदः केवलमिदं जनव्यामोहनमिति ज्ञात्वाऽऽह दृष्टा इति त्रिभिः । दृष्टा इति । हे विभो, हे भूमन्, विश्वसृजो ब्रह्मणोऽपि, चकारादन्यस्यापि, मायिनो मोहकस्य, भस्मना वह्नेः इव, छन्ना रुक् प्रकाशो यस्य तस्य, स्वशक्तिभिः सर्वज्ञत्वादिस्वशक्तिभिः सहैव, भूतेषु अन्तरात्मतया, चरतः ते तव, अनेन पाण्डवादिचिकीर्षितं तव विदितमेवास्तीत्यभिप्रेतं, दुरत्यया दुरतिक्रमणीयाः, मायाः बहुशः, मया दृष्टाः । अतस्तवेदं प्रश्नादिकं, मे मम, अद्भुतमाश्चर्यावहं, न ॥३७॥ पाण्डववृत्तान्तप्रश्नव्याजेन मागधजिघांसेवाभिप्रेतेत्यपि न निश्चेतुं शक्नोमि, इत्यभिप्रयन्नाह । तवेति । स्वमायया स्वसंकल्पेन, इदं जगत्, सृजतः, नियच्छतोऽन्तरात्मतया प्रशासितुश्च, तव, ईहितमभि-

प्रेतं, साधु यथा तथा, वेदितुं ज्ञातुं, कः अर्हति । न कोऽपीत्यर्थः । यदि कदाचित् किंचित् ज्ञायते तदपि, यस्मिंस्त्वयि विद्यमाना या आत्मता तया, अवसीयते । त्वद्ध्याने आत्मानं त्वन्मूर्त्तौ संयोज्य तद्द्वारा कथंचित् ज्ञायते इत्यर्थः । अतः, स्वेन स्वासाधारणस्वभावेन विलक्षणः सर्वेभ्यो विलक्षण आत्मा स्वरूपं यस्य तस्मै, तस्मै प्रसिद्धाय, ते तुभ्यं, नमः ॥ ३८ ॥ यद्यप्येवं तथापि त्वदवतारः केवलं साधुपरित्राणाय दुष्कृतिविनाशाय चेत्येतत्तु यथार्थतया निश्चिनोमीत्यभिप्रयन् प्रपद्यति । जीवस्येति । यो भवान्, संसरतः अनर्थावहात् शरीरतः, विमोक्षणं मोक्षोपायं, न जानतोऽनवबुद्धयमानस्य च, जीवस्य, स्वयश एव प्रदीपकस्तं, लीलावतारैः प्राज्वालयत् संदीपितवान्, तं त्वा त्वां, अहं शरणं प्रपद्ये । यथान्धतमसावृतघटपटादीनजानतस्तज्ज्ञानोपायभूतप्रदीपप्रज्वालनं, तद्वत्स्वयशः श्रृण्वतोऽनुस्मरतः कथयतश्च जीवस्य मुक्त्युपायभूतमस्त्यतस्तद्विरतृतवानित्यर्थः ॥ ३९ ॥ अथापिति । यद्यप्येवमथापि, हे ब्रह्मन् परमेश्वर, नरलोकं विडम्बयत्यनुवर्त्तते इति तथाभूतं, त्वां प्रति, पैतृष्वस्रेयस्य, भक्तस्य च, राज्ञो युधिष्ठिरस्य, चिकीर्षितं, आश्रावये श्रावयिष्यामि ॥ ४० ॥

### कृष्णप्रिया

देवर्षि नारजी ने कहा—सर्वव्यापक अनन्त ! आप विश्व के निर्माता हैं और इतने बड़े मायावी हैं कि बड़े-बड़े मायावी ब्रह्माजी आदि भी आपकी माया का पार नहीं पा सकते । प्रभो ! आप सबके घट-घट में अपनी अचिन्त्य शक्ति से व्याप्त रहते हैं—ठीक वैसे ही; जैसे अग्नि लकड़ियों में अपने को छिपाये रखता है । लोगों की दृष्टि सत्त्व आदि गुणों पर ही अटक जाती है, इससे आपको वे नहीं देख पाते । मैंने एक बार नहीं, अनेकों बार आपकी माया देखी है । इसलिये आप जो यों अनजान बनकर पाण्डवों का समाचार पूछते हैं; इससे मुझे कोई कौतूहल नहीं हो रहा है ॥ ३७ ॥ भगवन् ! आप अपनी माया से ही इस जगत् की रचना और संहार करते हैं, और आपकी माया के कारण ही यह असत्य होने पर भी सत्य के समान प्रतीत होता है । आप कब क्या करना चाहते हैं, यह बात भलीभाँति कौन समझ सकता है । आपका स्वरूप सर्वथा अचिन्तनीय है । मैं तो केवल बार-बार आपको नमस्कार करता हूँ ॥ ३८ ॥ शरीर और इससे सम्बन्ध रखनेवाली वासनाओं में फँसकर जीव जन्म-मृत्यु के चक्कर में भटकता रहता है तथा यह नहीं जानता कि मैं इस शरीर से कैसे मुक्त हो सकता हूँ । वास्तव में उसी के हित के लिये आप नाना प्रकार के लीलावतार ग्रहण करके अपने पवित्र यश का दीपक जला देते हैं, जिसके सहारे वह इस अनर्थकारी शरीर से मुक्त हो सके । इसलिये मैं आपकी शरण में हूँ ॥ ३९ ॥ प्रभो ! आप स्वयं परब्रह्म हैं, तथापि मनुष्यों की-सी लीला का नाट्य करते हुए मुझसे पूछ रहे हैं । इसलिये आपके फुफेरे भाई और प्रेमी भक्त राजा युधिष्ठिर क्या करना चाहते हैं, यह बात मैं आपको सुनाता हूँ ॥ ४० ॥

**यक्ष्यति त्वां मखेन्द्रेण राजसूयेन पाण्डवः । [1]पारमेष्ठ्यकामो नृपतिस्तद् भवाननुमोदताम् ॥ ४१ ॥**
**[2]तस्मिन् देव क्रतुवरे भवन्तं वै सुरादयः । दिदृक्षवः समेष्यन्ति राजानश्च यशस्विनः ॥ ४२ ॥**
**श्रवणात् कीर्तनाद् ध्यानात् पूयन्तेऽन्तेवसायिनः । तव ब्रह्ममयस्येश [3]किमुतेक्षाभिमर्शिनः ॥ ४३ ॥**
**यस्यामलं दिवि यशः प्रथितं रसायां भूमौ च ते [4]भुवनमङ्गल दिग्वितानम् ।**
**[5]मन्दाकिनीति दिवि भोगवतीति चाधो गङ्गेति चेह चरणाम्बु पुनाति विश्वम् ॥ ४४ ॥[6]**

### कर्दमक्षमा

अन्वयः—पारमेष्ठ्यकामः, पाण्डवः, नृपतिः, राजसूयेन, मखेन्द्रेण, त्वाम्, यक्ष्यति, भवान्, अनुमोदताम् ॥ ४१ ॥ देव ! तस्मिन्, क्रतुवरे, भवन्तम्, वै, दिदृक्षवः, सुरादयः, च, यशस्विनः, राजानः, समेष्यन्ति ॥ ४२ ॥ नाथ ! श्रवणात्, कीर्तनात्, ध्यानात्, अन्तेवसायिनः, पूयन्ते, हे ईशः ! ब्रह्ममयस्य, किमुत, ईक्षाभिमर्शिनः ॥ ४३ ॥ हे भुवनमङ्गल, यस्य, ते, अमलम्, यशः, दिवि, भुवि, रसायाम्, दिग्वितानम्, च, चरणाम्बु, दिवि, मन्दाकिनी, च, अधः, भोगवती, च, इह, गङ्गा, इति, विश्वम्, पुनाति ॥ ४४ ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

न चात्रेवानुमोदनं कार्यं किं तु तत्रागंतव्यमित्याशयेनाह । तस्मिन्निति ॥ ४२ ॥ तत्रागताश्च सर्वे त्वद्दर्शनादिना पूता भविष्यंतीत्याह । श्रवणादिति । अंतेवसायिनः श्वपचा अपि । ब्रह्ममयस्य ब्रह्मघनमूर्त्तेः । ईक्षा च अभिमर्शः स्पर्शनं च तौ

१. नृपतिः पारमेष्ठ्येप्सुः—वीर. ; नृपतिः पारमेष्ठ्येन—विज. । २. इदमर्धं नास्ति—वीर. । ३. किमुता—वीर. । ४. तेऽमलयशोऽथ दिशां वितानं—विज. । ५. मन्दाकिनी च तव पादरजोवहोर्मि श्रीमत्पदास्पदगताऽथ पुनाति—विज. । ६. अतः परं त्रयः श्लोकाः न सन्ति—विज. ।

विद्येते येषाम् ॥ ४३ ॥ कैमुत्यमतिशयेनाह । यस्येति । हे भुवनानां मंगलरूप दिवि पाताले भूमौ च प्रथितं यस्य यशो विश्वं पुनाति । कथम् । प्रथितं दिग्वितानं दिग्भवनानां वितानवदलंकरणम् । तथा चरणांबु च प्रथितं पुनाति । कथं तत्प्रथितम् । दिवि मंदाकिनीति अधश्च भोगवतीति इह च भूमौ गंगेति । तस्य तवागमनात्सर्वं मंगलं पवित्रं च भविष्यतीति भावः ॥ ४४ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

पारमेष्ठ्यकामः ब्रह्मपदकामः सर्वश्लाघ्यत्वकामो वा । "सर्वश्लाघ्ये पारमेष्ठ्यं हरौ ब्रह्मपदेऽपि च" इति निरुक्तिः ॥४१॥ त्यजतु राज्ञां धर्म एवायमिति चेत्तत्राह—न चेति । किं लाभस्तत्र गमने तत्राह—भवंतमिति ॥ ४२ ॥ अंतेवसायिनो मातंगादयश्चां डालाः ॥ ४३ ॥ अतिशयेन तात्पर्येण । "तात्पर्ये निश्चयाधिक्यजागरूकेष्वतिक्रमे । भवेदतिशयः" इति निरुक्तिः । इति भाव ईति—यस्य नाम्ना त्रैलोक्यशोधकस्य तवागमने यदि तत्रत्याः पूता भविष्यंतीति किमवक्तव्यमित्यर्थः ॥ ४४ ॥

### श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी

स राजसूयाख्येन मखेन्द्रेण सर्वराजगणसर्वदेवगणवशीकारितया मखानां श्रेष्ठेन पारमेष्ठ्यकामस्त्वद्यजनोचितपरमसम्पत्तिकामो नृपतिस्त्वां यक्ष्यति मुहुर्गृहागतं सेविष्यते सिषेविषत इत्यर्थः । त्वां विना सर्वसम्पत्तेस्तस्मा अरोचकत्वादितिभावः तदुक्तं प्रथमे—

"किन्ते कामाः सुरस्याहाँ मुकुन्दमनसो द्विज । अधिजह्रुः प्रियं राज्ञः क्षुधितस्य पथेतरः ॥" इति

तथा पारमेष्ठ्यशब्देन तदीयामैहिकमहासम्पत्तिमेवानूद्य तदनुभवसुखे तेषां तदेकचक्षुष्ट्वमुक्त्वाऽन्यथा वृथात्वं वक्ष्यते च—

"सभायां मयक्लृप्तायां क्वापि धर्मसुतोधिराट् । वृतोनुजैर्बन्धुभिश्च कृष्णेनापि स्वचक्षुषा ॥
आसीनः काञ्चने साक्षादासने मघवानिव । पारमेष्ठ्यश्रिया जुष्टः स्तूयमानश्च वन्दिभिः ॥" इति ॥ ४१ ॥

यशस्विनः साधव इत्यर्थः ॥ ४२ ॥ पूयन्ते जात्यादिदोषात् अन्त्यजैः । यद्वा ईक्षया द्वारा अभिमर्शः स्पर्शोऽनुभवः तच्छालिनो द्रष्टार इत्यर्थः ॥ ४३ ॥ तदेवं श्रवणादिमात्रस्य माहात्म्यमुक्त्वा यशःश्रवणादेर्वैशिष्ट्यं दर्शयति—यस्येति । यस्य ते तव यशः न विद्यते श्रवणादिकर्तृष्वपि मलं यस्मात्तादृशं तथा भुवनमङ्गलं यद्दिशां वितानं सर्वोपरि शोभाकरत्वात्तादृशं तथा भुवनमङ्गलं यद्दिशां वितानं सर्वोपरि शोभाकरत्वात्तदृशञ्च प्रथितं विख्यातमेव तच्च परमपुण्यात्मकसत्ख्यातिरूपत्वाद्युक्तमेवेति भावः । अहो तव चरणाम्बु तत्रतत्र मन्दाकिनीत्यादिनामभिः प्रसिद्धं सत् विश्वं पुनाति तत्तु पादाम्बुनो दूरतः परिवर्जनीयत्वेनाऽन्यत्र प्रसिद्धेः परमाश्चर्य्यमिति भावः ॥ ४४ ॥

### श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी

मखेषु इन्द्रः, दिग्विजयादिना साध्यत्वात् परमश्रेष्ठस्तेन त्वामेव, न त्वन्यं यक्ष्यति, यतः पाण्डवः पाण्डुपुत्रत्वेन त्वदेकभक्तत्वादिति भावः । नन्वहं त्वदीय एव, किं यज्ञप्रयासेन ? तत्राह—पारमेष्ठ्यं साम्राज्यं तत्कामः, तेन सर्व्वलोकेषु सुखं त्वद्भक्तिप्रवर्त्तनसिद्धेः; यद्वा, परमे प्रेमलक्षणे भक्तिपदे तिष्ठतीति परमेष्ठी प्रेष्ठ-त्वद्भक्तः, तस्य भावः पारमेष्ठ्यं प्रेमभक्तिमित्यर्थः; किंवा सर्व्वश्रेष्ठपदं त्वत्सामीप्यादि श्रीवैकुण्ठलोकादि, तत्कामः । ननु तस्य तत्प्राप्तिः स्वतोऽधिकं भात्येव, तत्राह—नृपतिः सर्व्वैरेव नृभिः सहेति भावः ॥ ४१ ॥ भवन्तमेव, वै अपि, सुरादयोऽपि, आदि-शब्दान्मुन्यादयो यशस्विनः साधव इत्यर्थः । ध्यानं सर्व्वांगचिन्तनम्, पूयन्ते जात्यादिदोषात्, तच्च त्वत्प्रभावादेवेत्याह—हे ईशेति । ब्रह्ममयस्य वीक्षाभिमर्शौ तद्वन्तः; अन्यत्तैर्व्याख्यातम्; यद्वा, ईक्षाया अभिमर्शः स्पर्शस्तच्छालिनो द्रष्टार इत्यर्थः ॥ ४२-४३ ॥ अहो किं वक्तव्यम्, तवेक्षाभिमर्शिनः पूयन्त इति, त्वद्यशसैव जगतः पावित्र्यं मंगलञ्च सम्पन्नमित्याह—यस्येति । हे भुवनमंगलेति यशसा चतुर्दशभुवनानां मंगलमभिप्रेतमेव; यद्वा, भुवनमंगलञ्च तद् दिग्वितानं च, अस्योत्तरेणान्वयः । अहो बत किं वक्तव्यम्, यशः पुनातीति पादाब्जशौचमपि तद्वदित्याह—मन्दाकिनीति । च कारत्रयेण सर्व्वासामपि पावने प्राधान्यं बोधयति; दिव्यादीनाञ्च यथोत्तरं भाव्यत्वे श्रेष्ठ्यम् ॥ ४४ ॥

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम्

अन्तेवसायिनश्चण्डालाः ईक्षाभिमर्शिनः चक्षुषा पश्यन्तः ॥ ४३-४४ ॥

### श्रीमद्वीरराघवाचार्यकृता भागवतचन्द्रचन्द्रिका

किं तदित्यत आह—यक्ष्यतीति । पाण्डवो युधिष्ठिरः राजसूयाख्येन मखश्रेष्ठेन त्वामाराधयिष्यति तत्तदभिप्रेतं भवाननुमोदतां त्वया निर्वर्त्यतामित्यर्थः । अतस्तत्रगम्यताम् इति—भावः ॥ ४१ ॥ तद्व्याजेन शिशुपालादिवधोऽपि भविष्य-

तीत्यभिप्रयन्नाह—दिदृक्षव इति। यशस्विनः प्रसिद्धाः राजानश्चैद्यादयो दिदृक्षवः राजसूयमिति शेषः। समेष्यन्त्यागमिष्यन्ति ॥ ४२ ॥ ततः किमत आह–श्रवणादिति। अन्तेवसायिनश्चण्डालादयोऽपि साक्षात्परब्रह्मभूतस्य तव नामश्रवणादिभिरपि कामक्रोधभयादिकृतैः पूयन्ते किमुत अक्ष्णा अभिमृशन्ति विषयीकुर्वन्तीति तथा ते शिशुपालादयः पूयन्ते इति किमु वक्तव्यं त्वां पश्यन्तो हठाच्च मुक्ता भवन्तीति भावः ॥ ४३ ॥ कैमुत्यनयेन भङ्ग्यन्तरेणाऽऽह—यस्येति। हे भुवनानां मङ्गलरूप! दिवि पाताले भूमौ च प्रथितं प्रख्यातं यस्य तव यशो विश्वं पुनाति कथं प्रथितम्? दिग्वितानं दिशां वितानमुल्लोचः तद्वदलङ्करणं तथा चरणाम्बु प्रथितं दिवि मन्दाकिनीत्यध पाताले भोगवतीति इह लोके गङ्गेति च ॥ ४४ ॥

## श्रीविजयध्वजतीर्थकृता पदरत्नावली

पारमेष्ठ्येन उत्तमकल्पेन ब्रह्मपदप्राप्तिहेतुना वा ॥ ४१-४२ ॥ अन्त्यावसायिनः अन्त्यजातयोपि ईक्षा दर्शनमभिमर्शनं स्पर्शनादिलक्षणञ्चैषाम् इतीक्षाभिमर्शिनः ॥ ४३ ॥ उक्तमेव स्फोरयति—यस्येति। हे अमलयशः मङ्गलकीर्त्तन! यस्य तवाथ कल्याणमत एवामलं निर्दोषं यशः विश्वं पुनाति ननु मितत्वे यशसो विश्वपुनानत्वं कथमित्यत उक्तं दिवीत्यादि। घटान्तरदीपवत् अस्पष्टस्यापि कथमित्यत उक्तं दिशां वितानमिति दिशामन्तेषु विशेषेण ताना विस्तारो यस्य तत्तथा तथापि न चोरवदित्याह प्रथितमिति। अथ जन्मप्रभृति श्रीमत्पादलक्षणास्पदं गता तव पादरजोवहोर्मिर्मन्दाकिनी च विश्वं पुनाति अतस्तव माहात्म्यं किं वक्ष्यामीत्यतो नमो नम इत्युपरमामीति वाक्यार्थः ॥ ४४-४७ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम् सप्ततितमोऽध्यायः ॥ ७० ॥

( श्रीविजयध्वजतीर्थरीत्या अष्टसप्ततितमोऽध्यायः ॥ ७८ ॥ )

## श्रीमज्जीगोस्वामिकृतः क्रमसन्दर्भः

यक्ष्यति त्वाम् ॥ ४१ ॥ अस्यानन्तरं दृश्यराजसूयस्य चात्र फलविशेषं खादिरयूपाध्यायेन भगवत्सम्बन्धादेव ज्ञेयः। तस्मिन् क्रतुवरे इति तं क्रतुवरं ये दिदृक्षवः सुरादयो राजानश्च ते तत्र गमनमध्या त्वत् कृत्या भवन्तमपि समेष्यन्तीत्यवश्यमेव गन्तव्यमित्यर्थः ॥ ४२-४७ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धीयं श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे सप्ततितमोऽध्यायः ॥ ७० ॥

## श्रीमज्जीवगोस्वामिकृतः बृहत्क्रमसन्दर्भः

श्रवणादित्यादि। तव कीदृशस्य ? ब्रह्ममयस्य ब्रह्म परमहः तन्मयस्य ॥ ४४-४७ ॥

इति श्रीदशमे श्रीबृहत्क्रमसन्दर्भे सप्ततितमोऽध्यायः ॥ ७० ॥

## श्रीनाथचक्रवर्तिपादविरचिता चैतन्यमतमञ्जूषा

ब्रह्ममयस्य ब्रह्म परमैश्वर्यं तन्मयस्य ॥ ४४-४७ ॥

इति सप्ततितमोऽध्यायः ॥ ७० ॥

## श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

न केवलमनुमोदनमेवात्र स्थित्वा कार्य्यं किन्तु तत्र गन्तव्यमेवेत्याह—तस्मिन्निति ॥ ४२ ॥ ननु तेषां मद्दिदृक्षायां किं प्रयोजनं तत्राह–श्रवणादिति। ब्रह्ममयस्य ब्रह्मघनमूर्तेरिति श्रीस्वामिचरणाः ॥ ४३ ॥ तेषां मद्दिदृक्षैव किं कारणा तत्राह। यस्य तव अमलं यशः दिवि रसायां भूमौच प्रथितं दिग्वितान दिग्भवनानां वितानवदलङ्करणं सत् विश्वं पुनात्यतः पूतान्तःकरणत्वादेव तेषां तद्दिदृक्षा अभूदिति भावः। यद्वा। यस्य यशश्चरणाम्बुच त्रिजगत् पावनं स साक्षादेव त्वं तेन राज्ञा निमन्त्रितोऽसि यज्ञे तत्र पावनवस्तूनामपेक्षणीयत्वादिति भावः ॥ ४४ ॥

## गूढार्थदीपिनी

पारमेष्ठ्यकामः साम्राज्यकामः ॥ ४१ ॥ क्रतुवरे राजसूये समेष्यन्ति आगमिष्यन्ति। भवन्तं दिदृक्षवः ॥ ४२ ॥ श्रवणादिभिः अन्तेवसायिनः चाण्डालादयोऽपि पूयन्ते तदा ईक्षाभिमर्शिनः दर्शनस्पर्शनकारिणः पूयन्ते इति किमुत वक्तव्यम्। ईक्षा च अभिमर्शश्च नो विद्येते येषां ते। द्वन्द्वगर्भितबहुव्रीहिः ॥ ४३ ॥ दिवि स्वर्गे। रसायां पाताले। हे भुवनमङ्गल। वितानं वितानवत् सर्वदिक्षु व्याप्तम् अलङ्काररूपम् ॥ ४४ ॥

## श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः

पारमेष्ठ्यकामः परमेष्ठिनस्तव यो भावस्तत्प्राप्तिकाम इत्यर्थः। यतस्त्वां यक्ष्यति "यान्ति मद्याजिनोपि माम्" इति वचनात् ॥ ४१ ॥ भवन्तं तस्मिन् क्रतुश्रेष्ठे प्राप्तमिति शेषः। तत्र त्वया गन्तव्यमिति भावः ॥ ४२ ॥ ब्रह्ममयस्य त्वन्मयस्य

जनस्य श्रवणादिना अन्तेवसायिनः अपि पूयन्ते साक्षात्तवैव ईक्षाभिमर्शिनः दर्शनस्पर्शनवन्तः सुरादयः पूयन्ते इति किमुत वक्तव्यम् ॥ ४३ ॥ हे भुवनमङ्गल ! यस्य तव दिग्वितानं दिशां सन्तापहरं शान्तिकरं च दिवि पाताले भूमौ च प्रथितं यशः विश्वं पुनाति तथा दिवि मन्दाकिनीति अधश्च भोगवतीति इह भूमौ च गङ्गेति प्रथितं चरणाम्बु विश्वं पुनाति तत्रागन्ता अहो तत्रत्यानां भाग्यमित्याशयः ॥ ४४ ॥

### श्रीसत्यधर्मकृता भागवतटिप्पणी

पाण्डवो धर्मः पती राजा मखेन्द्रेण पारमेष्ठ्येन मुख्यतो भीमविवक्षया चतुर्षु वायुरित्युक्तेरेतच्चतुष्टयाविष्टतद्विवक्षया ब्रह्मपदफलकत्वेनेत्युक्तिः। तन्नामाह। राजसूयेनेति। त्वां यक्षति यष्टुमिच्छति तद्यजनं भवाननुमोदताम्। अन्यथा तन्न सिद्ध्येदिति भावः ॥ ४२ ॥ हे देव तस्मिन्क्रतुवरे आरब्धे सुरादयो भवन्तं दिदृक्षवो द्रष्टुमिच्छवः समेष्यन्ति। यशस्विनो राजानश्चात्समेष्यन्तीत्यन्वेतीव दिदृक्षव इत्यप्यन्वेति ॥ ४३ ॥ हे ईश। तव श्रवणाच्चरितस्य तथा कीर्तनाद्ध्यानादन्त्यावसायिनः पुल्कसादयोऽपि पूयन्ते पवित्रिता भवन्ति। न त्वं लोकमध्यकरण इत्याह। ब्रह्ममयस्य साक्षाद्ब्रह्मात्मकस्येति। ब्रह्ममयस्य सर्वप्रधानस्येति वा। ईक्षाभिमर्शिन ईक्षा दर्शनं चाभिमर्शः पादस्पर्शश्च तौ येषां ते तथा पूयेरन्निति किमु वक्तव्यम्। श्रवणादेः पारोक्षिकव्यापाराद्यदाऽन्त्यावसायिनः पूयन्ते तदा पारोक्षिकादीक्षादेः पूयेरन्नित्यवचनेऽपि सोऽर्थो लभ्यत इति भावः ॥ ४४ ॥ बहुषु पुस्तकसम्पुटीषु। यस्यामलं दिवि यशः प्रथितं रसायां भूमौ च ते भुवनमङ्गल दिग्वितानम्। मन्दाकिनी च दिवि भोगवती चाधोगङ्गेति चेह चरणाम्बु पुनाति विश्वमिति दृश्यते पाठो दृश्यश्च। न पुनरुक्त्यादिपरिहरणायासश्चेति तमेव धृत्वा व्याचक्रुः। तथा हि। तत्कैमुत्यमुज्जीवयन्नाह। यस्येति। हे भुवनमङ्गल दिग्वितानं दिक्षु वितानो विस्तारो यस्य तत् दिग्गृहवितानरूपं वा। अस्त्री वितानमुल्लोच इत्यमरः। यस्य तव यशोऽमलं दिवि भुवि रसायां प्रथितं विश्वं पुनाति। तथा दिवि मन्दाकिनीति। अधो रसायां भोगवतीति। इह भूमौ च गङ्गेति नामवच्चरणाम्बु विश्वं पुनाति। इतीक्षास्पर्शने पूनीत इति किं वक्तव्यमिति। पाठान्तरे त्वयमर्थः। हे अमलयशः। यस्य यशो यस्य तव दिविरसायां भूमौ च दिशां वितानं विशेषेण तानो यस्य विस्तृतिस्तत्तथा यशः प्रथितम्। तव पादरजसां धूलीनां वहो ऊर्मयो यस्यां तरङ्गाः सा मन्दाकिनी वियद्गङ्गा पादरजोवहत्वं तस्या नासम्भवीत्याह। श्रीमत्पदास्पदं नखान्तं गता प्राप्तेति श्वं पुनाति। अथ तादृशस्य तवेक्षणस्पर्शनानन्तरं पावित्र्यमिति किं वक्तव्यमिति ॥ ४५ ॥

इति श्रीभागवतटिप्पण्यां सत्यधर्मकृतायां दशम उत्तरार्धेऽशीतितमोऽध्यायः ॥ १०-८० ॥

### श्रीमद्वल्लभाचार्य्यकृता सुबोधिनी

तदेवाह यक्ष्यतीति। त्रिधा हि यज्ञकृतिः, फलार्था भौतिकी, शुद्ध्यर्थाध्यात्मिकी, भगवदर्थाधिदैविकीति। 'यज्ञेन यज्ञमयजन्ते'ति श्रुत्या सैव निरूपिता। तत्र प्रतिबन्धकनिवृत्तिः भगवतैव कर्तव्या, इज्यान्तराभावादित्यभिप्रेत्याह त्वां यक्ष्यतीति। 'यज्ञो वै मख' इति श्रुतेः। आधिदैविक एव यज्ञो मखो भवति। प्रकरणवशात् क्षत्रियस्य राजसूयादन्यः यज्ञः श्रेष्ठो नास्तीति। उपरतानां क्षत्रियाणां ब्राह्मणानामेव दीर्घसत्रेष्वधिकारात्। महति च बहवो विघ्नाः। पाण्डव इति पाण्डुवाक्यात् अवश्यकर्तव्यत्वम्। भगवान् सर्वभावेन सेव्यः प्राणिना ( तदा, ) यदा कदाचित् तादृशी सेवा नियतकालसाधनसम्पत्तौ भवति। सा सम्पत्तिः परमेष्ठिन एव, नान्यस्य इति पारमेष्ठ्यकामः। अन्तरस्तथा सेवायामनधिकारमाह नृपतिरिति। तत्रेज्यानुमतिः प्रयोजिका, तदभावे तोषाभावात्। देवतातः फलमिति पक्षे न फलं कर्मणः। कर्मणः फलमित्यपि पक्षे देवताप्रीतिः साधनत्वेन सिद्धेति तदभावे न फलम्। 'तृप्त एवैनमिन्द्रः प्रजया पशुभिस्तर्पयती'ति श्रुतेः। अतः पूजायां पूज्यानुमोदनमावश्यकमिति भवाननुमोदताम्। इदमनुमोदनं समीपे स्थित्वा। पूजापूज्ययोः देशान्यत्वासम्भवात्। अनेनैव यशः स्वर्गहेतुभूतमन्तःकरणशुद्धिश्च भविष्यतः ॥ ४१ ॥ अत एकेनैव त्रैविध्यमपि सेत्स्यतीत्यभिप्रायेणाह तस्मिन् देव इति द्वाभ्याम्। कीर्तिर्लोकद्वये राजभिर्देवैश्च भवति। तत्र यद्यपि भागाभावात् यागार्थं देवानामनागमनेऽपि त्वां दिदृक्षवः समेष्यन्ति। राजानश्च स्पर्धिनोऽपि। कौतुकार्थमागमने तु न यश इति। देवेति सम्बोधनम्। क्रतुवरे यथा महोत्सवे देवदर्शनं महोत्सवकर्तुर्यशस्करं भवति। यशस्विन इति। तेषामपि यशोऽत्र मिलितं भवतीत्युक्तं भवति। आदिशब्देन सिद्धादयोऽपि ॥ ४२ ॥ प्रसङ्गादेव शुद्धिमप्याह श्रवणादिति। प्रमाणबले आदौ श्रवणकीर्तनस्मरणान्येवोक्तानि। ध्यानमेकाग्रतया स्मरणम्। एवं भक्ता एव कर्मत्यागादिभिः तथात्वमापन्नाः पूर्ववासनया श्रवणादिना तद्दोषं परिहरन्तीति केचित्। अन्यथाप्यन्तेवसायिनां श्रवणादिसम्भवे तादृशजन्मसम्पादकदोषनाशक इति विमर्शः। तवेति सम्मत्यर्थं युष्मच्छब्दप्रयोगः। प्राकृतबुद्ध्या श्रवणादौ मर्यादाभक्तानां मते प्रमेयबलाभावात् न फलम्। अन्यथा सर्वेषामेव नाम्नां भगवद्वाचकत्वात् कस्यापि बन्धो न स्यात्। तत आह ब्रह्ममयस्येति। ब्रह्मप्रचुरस्य परमानन्दमूर्तेः सच्चिद्रूपप्राचुर्यात् सर्ववेदमयस्य वा। ईशेति। शुद्धौ सामर्थ्यम्। ईक्षाभिमर्शनं प्रमेयबलम्। साक्षात्कारसम्बन्धो हि फलरू-

पाविति तत्सिद्धौ साधनसिद्धिर्नान्तरीयकेति कैमुतिकन्यायेनाह **किमुतेति**। अन्तेवसायिव्यावृत्त्यर्थमीक्षाभिमर्शयोः सहप्रयोगः ॥ ४३ ॥ भगवद्दर्शनादेः शोधकत्वं कैमुतिकन्यायेन वक्तुं चरणोदकस्य माहात्म्यमाह **यस्यामलमिति**। भगवतः कीर्तिद्वयं तीर्थरूपं चरणद्वयान्निर्गतं भक्तानां हितार्थम्। तत्रैकममलं यशः दिवि। रसायां भूमौ च प्रथितम्। सर्वाणि कर्माणि दोषसहितानीति 'सर्वारम्भा हि दोषेणे'ति वाक्यादवगत्याह **अमलमिति**। सन्नियोगशिष्टदोषरहितगुणत्वाद्भगवतः। अतो भगवान् सर्वभुवनेषु मङ्गलरूपः, भुवनमङ्गलत्वाद्वा। तत्रत्यानां यशोगानं लोकत्रयेऽपि। प्रान्तभावेषु तदभावमाशङ्क्याह **दिग्वितानमिति**। दिशामाच्छादकम्। द्वितीयमाह **मन्दाकिनीति**। दिवि मन्दाकिनी, अधो भोगवती, पृथिव्यां गङ्गेति चरणाम्बु कमण्डलुसम्भूतं विश्वं पुनाति ॥ ४४ ॥

### श्रीसुबोधिनी-सारः

पारमेष्ठ्यकामः ब्रह्मपदाभिलाषुको नृपतिः राजा पांडवो धर्मपुत्रो मखेन्द्रेण यज्ञोत्तमेन राजसूयेन त्वा त्वां यक्ष्यति यजनं करिष्यति तत् भवाननुमोदताम् ॥ ४१ ॥ हे देव क्रतुवरे यज्ञश्रेष्ठे तस्मिन् भवंतं त्वां दिदृक्षवो द्रष्टुमिच्छवः सुरादयो देवादयो यशस्विनः कीर्त्तिमंतो राजानश्च समेष्यंति समागमिष्यंति वै एव ॥ ४२ ॥ ब्रह्ममयस्य ब्रह्मघनमूर्तेस्तव श्रवणात्कीर्त्तनात् ध्यानात् अंतेवसायिनः चांडाला अपि पूयंते ईक्षादर्शमभिमर्शः स्पर्शनं तौ विद्येते येषां ते पूयंते इति किमुत वक्तव्यम् ॥ ४३ ॥ हे भुवनमंगल दिवि स्वर्गे भूमौ रसायां पाताले च प्रथितं विस्तृतं विख्यातं यस्य यशो विश्वं पुनाति दिशां वितानवत् अलंकारमात्रं कथमित्यत आह। दिवि मंदाकिनी अधः पाताले भोगवती इह भूतले गगेति ते तव चरणांबु पादोदकं तत् ॥ ४४ ॥

### श्रीविट्ठलरायात्मजश्रीवल्लभकृतलेखः

**यक्ष्यति त्वामित्यत्र**। **भगवानिति**। नियतकालमपेक्षितसमयेऽलंकारादिसाधनसम्पत्तौ सत्यां कदाचित्तादृशी सेवा यदा भवति, तदा सर्वभावेन सेव्यो भवति, न तु नित्यं सेवा भवति। पारमेष्ठ्यसम्पत्तौ तु नित्यं तादृशसाधनसद्भावात्सेवा भवतीत्यर्थः। **तस्मिन् देवेत्यत्र**। **भागाभावादिति**। भगवदवयवत्वेन हि तेषां भागः श्रुतावुक्तः। अत्र साक्षादेव भगवदवयवानां विद्यमानत्वान्न प्रतिनिधीनामाधिभौतिकावयवरूपाणां तेषां भाग इत्यर्थः। **श्रवणादित्यत्र**। **तथात्वमिति**। विहितकर्मत्यागेन, आदिपदान्निषिद्धकरणेन अन्तेवसायित्वमापन्ना इत्यर्थः। अत्रापि 'वेदनिन्दाया'मितिवाक्यमनुसन्धातव्यम्। **अन्यथापीति**। पूर्वजन्मनि भक्तत्वाभावेपीत्यर्थः। **ईक्षाभिमर्शनमिति**। ईक्षा अभिमर्शनं चेत्यर्थः। मूले ईक्षादर्शनम्, अभिमर्शः सम्बन्धः, तद्युक्ता इति मत्वर्थीय इनिः।

### गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

एवं श्रावणं प्रतिज्ञाय तच्चिकीर्षितं श्रावयति—यक्ष्यतीति। पारमेष्ठ्यकामः चक्रवर्तित्वकामो नृपतिः पाण्डवः राजा युधिष्ठिरः मखेन्द्रेण यज्ञश्रेष्ठेन राजसूयेन त्वां यक्ष्यति आराधयिष्यति। तत्तस्याभिप्रेतं भवाननुमोदताम् ॥ ४१ ॥ 'न चात्रैव स्थित्वाऽनुमोदनं कार्यम्, किंतु तत्र गन्तव्यम्, बहूनामुपकारात्' इत्याह—तस्मिन्निति। दिदृक्षायां हेतुं सूचयन् संबोधयति—देवेति। तस्मिन् क्रतुवरे भवन्तं दिदृक्षवः सुरादयो यशस्विनो राजानश्च समेष्यन्ति अवश्यमेव श्रद्धयाऽऽगमिष्यन्ति ॥ ४२ ॥ 'एवं मद्दर्शनेन किं फलम्' इत्यपेक्षायामाह—श्रवणादिति। ईश्वरत्वादिति हेतुं सूचयन् संबोधयति—ईशेति। ब्रह्ममयस्य नराकृतिपरब्रह्ममूर्तेस्तव ध्यानादिभिः अन्तेवसायिनश्चाण्डालादयोपि पूयन्ते शुद्धा भवन्ति। ईक्षया दृष्ट्या अभिमृशन्ति विषयीकुर्वन्तीति तथाभूता वर्णाश्रमादिमन्तः पूयन्ते इति किमु वक्तव्यम् ? ॥ ४३ ॥ उक्तं कैमुत्यन्यायमेव प्रकारान्तरेणाह—यस्येति। हे भुवनानां मङ्गलरूप ! यस्य तव अमलं पापमलनिवर्तकं यशो दिग्वितानं वितानवत् सर्वदिक्षु व्याप्तं तदलंकरणभूतम्, अतएव दिवि स्वर्गे रसायां पाताले भूमौ च प्रथितं ख्यातं च सद्विश्वं पुनाति। तथा दिवि मन्दाकिनीति, अधः पाताले भोगवतीति, इह भूलोके च गङ्गेति त्रिषु लोकेषु स्थितं यस्य चरणांबु विश्वं पुनाति तस्य साक्षाद्दर्शनादिभिः पावित्र्ये कः सन्देहः ? ॥ ४४ ॥

### अन्वितार्थप्रकाशिका

यक्ष्यतीति ॥ पारमेष्ठ्यकामः साम्राज्यकामो नृपतिः पाण्डवः राजा युधिष्ठिरः मखेन्द्रेण यज्ञश्रेष्ठेन राजसूयेन त्वां यक्ष्यति आराधयिष्यति। तत्तस्याभिप्रेतं भवाननुमोदताम् ॥ ४१ ॥ तत्र भवता गन्तव्यमपीत्याह—तस्मिन्निति। हे देव ! तस्मिन् क्रतुवरे भवन्तं दिदृक्षवः सुरादयो यशस्विनो राजानश्च समेष्यन्ति आगमिष्यन्ति ॥ ४२ ॥ श्रवणादिति ॥ हे ईश ! ब्रह्ममयस्य नराकृतिपरब्रह्मघनमूर्तेस्तव श्रवणात्कीर्त्तनात् ध्यानात् अन्तेवसायिनश्चाण्डालादयोऽपि पूयन्ते शुद्धा भवन्ति। ईक्षया दृष्ट्या अभिमृशन्ति विषयीकुर्वन्तीति तथाभूता ईक्षा चाभिमर्शश्च तौ विद्येते येषामिति वा वर्णाश्रमादिमन्तः पूयन्ते इति किमु वक्तव्यम् ॥ ४३ ॥ यस्येति ॥ हे भुवनानां मङ्गलरूप ! यस्य वै तव अमलं पापमलनिवर्तकं यशो दिग्वितानं वितान-

वत्सर्वदिक्षु व्याप्तं तदलङ्करणभूतम् अत एव दिवि स्वर्गे रसायां पाताले भूमौ च प्रथितं ख्यातं च सद्विश्वं पुनाति तथा दिवि मन्दाकिनीति अधः पाताले भोगवतीति इह भूलोके गङ्गेति त्रिषु लोकेषु स्थितं यस्य चरणाम्बु विश्वं पुनाति तस्य साक्षाद्दर्शनादिभिः पावित्र्ये कः संदेहः ॥ ४४ ॥

### श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्

पारमेष्ठ्यकामो स्वोत्कर्षेच्छुः अनुमोदतां संपाद्यतां ॥ ४१ ॥ तत्र सुरादयः राजानश्च समेष्यंति अतस्त्वया तत्र गंतव्यमितिभावः ॥ ४२ ॥ तत्र गतस्य तव दर्शनादिना जनाः पवित्रा भविष्यंतीत्याह श्रवणादिति ब्रह्ममयीं तनुं मयते प्रतिददाति भक्तानिति ब्रह्ममयस्तस्य तव मय इति मेङ्प्रणिदाने इत्यस्य धातोरूपं प्रणिदानं प्रत्यर्पणमिति तदर्थः श्रवणादिना अंतेवसायिनः अंत्यजाः पूयंते ईक्षा दर्शनं च अभिमर्शः स्पर्शनं च ते द्वे विद्येते येषां ते पूयंते तत्र किमुत वक्तव्यं ॥ ४३ ॥ तवदर्शनादिना जनाः पवित्रा भवंतीत्युक्त्वेदानीं त्वत्पादस्पृष्टजलमपि तान् पुनातीत्याह यस्येति हे भुवनमंगल त्रिभुवनानां मंगलरूपदिशां वितानं वितानवच्छोभाकरं यस्य अमलं यशः स्वर्गादिषु त्रिभुवनेषु प्रथितं विख्यातमस्ति । तस्य तव चरणांबु अपि दिवि मंदाकिनीति अधः भोगवतीति च इह भूमौ गंगेति त्रिनामभिः विख्यातं सत् विश्वं पुनाति ॥ ४४ ॥

### भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

किं तदित्यत आह । यक्ष्यतीति । पाण्डवः पाण्डोः पुत्रः, नृपतिर्युधिष्ठिरः, राजसूयेन राजसूयाख्येन, मखेन्द्रेण मखश्रेष्ठेन, पारमेष्ठ्यकामः सन्, त्वां यक्ष्यति सर्वथा त्वामाराधयिष्यति । भवान्, तत्तदभिप्रेतं, अनुमोदतां, तत्र त्वया गम्यतामित्यर्थः ॥ ४१ ॥ तद्व्याजेन शिशुपालादिवधोऽपि भविष्यतीत्यभिप्रयन्नाह । तस्मिन्निति । हे देव, तस्मिन् क्रतुवरे राजसूये, भवन्तं दिदृक्षवः सुरादयः, यशस्विनः प्रसिद्धाश्चैद्यादयः, राजानश्च, समेष्यन्ति वै ॥ ४२ ॥ ततः किमत आह । श्रवणादिति । हे ईश, अन्तेवसायिनश्चाण्डालादयोऽपि, ब्रह्ममयस्य परब्रह्मभूतस्य, तव, श्रवणान्नाममात्राकर्णनात्, कीर्त्तनाच्चारित्रकथनात्, ध्यानाच्छ्रीमूर्त्तेश्चिन्तनात्, पूयन्ते कामक्रोधादिकृतैः पापैर्विमुक्ता भवन्ति । तर्हि ईक्षा साक्षाद्दर्शनं च अभिमर्शः स्पर्शनं च तौ विद्येते एषामिति ते पूयन्ते, तत्र किमुत किं वक्तव्यम् । अक्ष्णाभिमर्शिन इति पाठे, अक्ष्णा नेत्रेण, अभिमृशन्ति विषयीकुर्वन्तीति ते शिशुपालादयः, पूयन्ते इति किमु वक्तव्यम् । त्वां पश्यन्तो हताश्च मुक्ता भविष्यन्तीति भावः ॥ ४३ ॥ कैमुत्यनयमेव भङ्ग्यन्तरेणाह । यस्येति । हे भुवनानां मङ्गलरूप, दिवि स्वर्गे, रसायां पातालरूपबिलस्वर्गे, भूमौ च, प्रथितं प्रख्यातं, अमलं निर्दोषं, दिग्वितानं दिग्भवनानां वितानवदलंकरणं, यस्य, ते तव, यशः कीर्त्यात्मकं तीर्थं, विश्वं पुनाति । तथा, चरणाम्बु गङ्गाजलरूपं तीर्थं च, दिवि मन्दाकिनीति, अधः पाताले, भोगवतीति, च, इह भूलोके, गङ्गेति च, प्रथितं सत्, विश्वं पुनाति ॥ ४४ ॥

### कृष्णप्रिया

इसमें सन्देह नहीं कि ब्रह्मलोक में किसी को जो भोग प्राप्त हो सकता है, वह राजा युधिष्ठिर को यहीं प्राप्त है। उन्हें किसी वस्तु की कामना नहीं है। फिर भी वे श्रेष्ठ यज्ञ राजसूय के द्वारा आपकी प्राप्ति के लिये आपकी आराधना करना चाहते हैं। आप कृपा करके उनकी इस अभिलाषा का अनुमोदन कीजिये ॥ ४१ ॥ भगवन् ! उस श्रेष्ठ यज्ञ में आपका दर्शन करने के लिये बड़े-बड़े देवता और यशस्वी नरपतिगण एकत्र होंगे ॥ ४२ ॥ प्रभो ! आप स्वयं विज्ञानानन्दघन ब्रह्म हैं। आपके श्रवण, कीर्तन और ध्यान करने मात्र से अन्त्यज भी पवित्र हो जाते हैं। फिर जो आपका दर्शन और स्पर्श प्राप्त करते हैं, उनके सम्बन्ध में तो कहना ही क्या है ॥ ४३ ॥ त्रिभुवनमङ्गल ! आपकी निर्मल कीर्ति समस्त दिशाओं में छा रही है तथा स्वर्ग, पृथ्वी और पाताल में व्याप्त हो रही है; ठीक वैसे ही, जैसे आपकी चरणामृतधारा स्वर्ग में मन्दाकिनी, पाताल में भोगवती और मर्त्यलोक में गङ्गा के नाम से प्रवाहित होकर सारे विश्व को पवित्र कर रही है ॥ ४४ ॥

### श्रीशुक उवाच

**तत्र [1]तेष्वात्मपक्षेष्वगृह्णत्सु विजिगीषया । वाचःपेशैः स्मयन् भृत्यमुद्धवं प्राह केशवः ॥ ४५ ॥**

### श्रीभगवानुवाच

**त्वं हि नः परमं चक्षुः सुहृन्मन्त्रार्थतत्त्ववित् । [2]तथात्र ब्रूह्यनुष्ठेयं श्रद्दध्मः करवाम तत् ॥ ४६ ॥**

**इत्युपामन्त्रितो भर्त्रा सर्वज्ञेनापि मुग्धवत् । निदेशं शिरसाऽऽधाय उद्धवः प्रत्यभाषत ॥ ४७ ॥**

[3]इति श्रीमद्भागवते महापुराणे[4] दशमस्कन्धे भगवद्यानविचारे [5]सप्ततितमोऽध्यायः ॥ ७० ॥

---

१. पक्षेषु प्रगृह्णत्सु—वीर. । २. अत्रोऽत्र—वीर. । ३. प्राच्यपुस्तकेऽत्राध्यायसमाप्तिर्नास्ति पराध्यायस्य २० श्लोकाः खण्डिताः सन्ति । ४. पारमहंस्यां संहितायां—प्रा. पा. । ५. अष्टसप्ततितमोऽध्यायः ।

## कर्दमक्षमा

अन्वयः—श्रीशुक उवाच—तत्र, तेषु, आत्मयक्षेषु, विजिगीषया, ( जरासन्ध ) अगृणत्सुवाचः, पेशैः, स्मयन्, केशवः, उद्धवम्, प्राह ॥ ४५ ॥ श्रीभगवान उवाच !, त्वम्, हि, नः, परमम्, चक्षुः, सुहृत्, मन्त्रार्थतत्त्ववित्, अथ, अत्र, अनुष्ठेयम्, ब्रूहि, तत्, करवाम, श्रद्धमः ॥ ४६ ॥ श्रीशुक उवाच—इति, सर्वज्ञेन, अपि, भर्त्रा, मुग्धवत्, पृष्टः, उद्धवः, निदेशम्, शिरसा, आधाय, प्रत्यभाषत ॥ ४७ ॥

श्रीमद्भागवते दशमस्कन्धेऽन्वयलेखने सप्ततितमोऽध्याया ॥ ७० ॥

## श्रीधरस्वामिविरचिता भावार्थदीपिका

तत्रैवं नारदोक्तं तेषु वर्तमानेष्वात्मीयपक्षेषु यादवेषु जरासंधस्य विजिगीषया अगृह्णत्स्वमन्यमानेषु । वाचःपेशैः पेशलवाग्भिरित्यर्थः ॥ ४५ ॥ चक्षुष्ट्वे हेतुः । मंत्रार्थानां मंत्रसाध्यानां तत्त्ववित्परिपाकवेदिता ॥ ४६-४७ ॥

इति श्रीमद्भागवते दशमस्कंधोत्तरार्धे श्रीध० टीकायां सप्ततितमोऽध्यायः ॥ ७० ॥

## श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

तत्र तदा । तेषु सभ्येषु । इत्यर्थ इति—'पेशस्सौंदर्यचूर्णयोः' इति धरणिः । वाचो वाण्याः पेशैः सौंदर्यगांभीर्यमाधुर्याल्पाक्षरबह्वर्थादिभिरिति भावः । केशव इति—यथा गोकुलसुखार्थं केशिनं हतवांस्तथोद्धवस्य निजभक्तस्य कीर्त्युत्कर्षेण सुखार्थं तमाहेति भावः ।।४५।। चक्षुश्चक्षुर्वत्प्रकाशकम् । यथाऽत्रानुष्ठेयं तथा ब्रूहि । अत्र राजमोक्षणराजसूयगमनरूपोभयकार्ये इत्यर्थः । त्वदुक्तौ श्रद्दध्मः श्रद्धां करिष्यामः । तदेव करिष्याम च "सर्वं वाक्यं सावधारणम्" इति न्यायागत एवकारः । उभयत्र भविष्यति लट्लोटौ ॥ ४६ ॥ इतीत्थम् । उपामन्त्रितः पृष्टः । मुग्धवदज्ञातवत् । 'मुग्धः सुन्दरमूढयोः' इति विश्वः ॥ ४७ ॥

इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे दशमस्कन्धोत्तरार्द्धे सप्ततितमोऽध्यायः ॥ ७० ॥

## श्रीमज्जीवगोस्वामिकृता वैष्णवतोषिणी

अगृह्णत्सु मौनमालम्बमानेष्वित्यर्थः । पाठोयमसन्धिरेव ससन्धिपाठे ऽगृह्णत्सु चेति क्वचित् । भृत्यमिति स्वभक्तस्य तस्य माहात्म्यविस्तारणार्थमिति भावः । यतः केशवः गोकुलसुखार्थं केशिहन्ता तत्रत्यजनप्रिये तस्मिन् श्रीमदुद्धवेपि स्नेहविशेषवानितिभावः । अत एव वाचःपेशैः प्रकर्षेणाह—यत उद्धवं सर्वेषामुत्सवरूपमिति भावः । स्मयन् उद्धवज्ञेयाभिप्रायविशेषेण स्मयमानः ॥ ४५ ॥ त्वं हि त्वमेव नोऽस्माकं यादवानां चक्षुष्ट्वे हेतुः सुहृन्निरुपाधिकहितकारी मन्त्रार्थतत्त्वविदिति च परममिति प्रसिद्धं चक्षुषः सकाशात् आधिक्यमुक्तं मन्त्रेण भाविदूरस्थादिप्रदर्शनात् अथ अतो हेतोः अत्रास्मिन् कृत्यद्वये यदादावनुष्ठेयं तद्ब्रूहि न च वक्तव्यं तदेते न गृहीष्यन्तीत्याह तदेव श्रद्दध्मः श्रद्धया गृह्णीमः गृहिष्यामः करवाम करिष्यामश्चेति अयं भक्तवात्सल्यभरेण प्रोत्साहनविशेषः ॥ ४६ ॥ उपामन्त्रितः स्नेहेन प्रार्थनावदादिष्टः भर्त्रेति तदादेशस्यावश्यपाल्यता सूचिता अत एव भक्त्या स्वशिरसा तस्य निदेशमाधाय शिरोबद्धाञ्जलितयाऽऽदृत्येत्यर्थः ॥ ४७ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिण्याम् सप्ततितमोऽध्यायः ॥ ७० ॥

## श्रीमत्सनातनगोस्वामिकृता बृहद्वैष्णवतोषिणी

भृत्यामिति स्वभक्तस्य माहात्म्यविस्तारणार्थमिति भावः । यतः केशवो भक्तवात्सल्याद्यशेषगुणप्रकटनार्थमवतीर्णः साक्षात्परमेश्वरः, किंवा गोकुलसुखार्थं केशिहन्ता, इति तत्रत्यजनप्रियत्वेन तस्मिन् स्नेहविशेषः सूचितः । अतएव वाचः पेशैः प्रकर्षेणाह—यत उद्धवं सर्व्वेषामुत्सवरूपमिति भावः । स्मयन् सदा श्रीमुखप्रसादस्वभावात् स्मयमानः, किंवा संकेतेनैव स्मितेन स्वाभिप्रायबोधनार्थम्; यद्वा, निजाभिप्रायस्योद्धवैकगम्यस्य तदुक्त्या प्रकाशनार्थमिति दिक् ॥ ४५ ॥ हि एव, त्वमेव, नोऽस्माकं यादवानां परममिति समीपवर्त्ति-द्रव्यमात्रदर्शि-प्रसिद्धचक्षुषः सकाशादाधिक्यमुक्तम् । मन्त्रेण भावि-दुरवस्थादिप्रदर्शनात्, यतः सुहृत् स्वज्ञातिः; यद्वा, अतएव सुहृत् परमोपकारी, किंवा सु शोभनं हृच्च, अथ अतो हेतोः, अनु अनुसन्धानपूर्व्वकं ब्रूहि; पाठान्तरे अत्रास्मिन् कृत्यद्वये यदादावनुष्ठेयं तद्ब्रूहि, न च मन्तव्यम्, तदेते न ग्रहीष्यन्तीत्याह—तदेव श्रद्दध्मः श्रद्धया गृह्णीमः करवाम चेति । अयं भक्तवात्सल्यभरेण प्रोत्साहनविशेषः ॥ ४६ ॥ उपामन्त्रितः स्नेहेनादिष्टः; भर्त्रेति—तदादेशस्यावश्यपाल्यता सूचिता । यद्वा, भर्त्तृत्वेन भृत्ययशोविस्तारणार्थमिति भावः । अतएव भक्त्या स्वशिरसा तस्य निदेशमाधाय शिरोबद्धाञ्जलिनादृत्येत्यर्थः ॥ ४७ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे उत्तरार्द्धे श्री-श्रील-सनातन-गोस्वामिपाद-कृतायां श्रीबृहद्वैष्णवतोषिण्यां श्रीदशम-टिप्पण्यां सप्ततितमोऽध्यायः ॥ ७० ॥

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम्

अगृणत्सु जिगीषया स्वानपेक्षया अन्येषु राजसूयगमनपरेषु क्ष्वेडनं कुर्वत्सु ॥ ४५-४७ ॥

इति श्रीमद्भागवतव्याख्याने दशमस्कन्धे श्रीसुदर्शनसूरिकृतशुकपक्षीये सप्ततितमोऽध्यायः ॥ ७० ॥

### श्रीमद्वीरराघवाचार्यकृता भागवतचन्द्रचन्द्रिका

तत्रेति। इत्थं श्रुतराजवृत्तान्तयुधिष्ठिरवृत्तान्तेषु सभास्थेषु आत्मपक्षेषु यदुषु जिगीषया प्रगृणत्सु मगधजिगीषामुत्पादयितुं प्रगृणत्सु तावन्मागधं प्रत्येव गन्तव्यम् इत्येवं वदत्सु सत्सु वाचःपेशैः मदुवचोभिरुद्धवं प्राह ॥ ४५ ॥ तदेवाह—त्वंहीति। हि यस्मात्त्वं नोऽस्माकं चक्षुस्तत्स्थानीय इत्यर्थः। सुहृत् मन्त्रार्थानामालोचनसाध्यानामर्थानां तत्त्वं याथात्म्यं वेत्सीति तथा चातोऽधुना यदनुष्ठेयं कर्तव्यं तत्ब्रूहि तद्भवदुपदिष्टं कर्तव्यमर्थं श्रद्दध्मः विश्वसिमः करवाम च ॥ ४६ ॥ इतीति। इत्थं सर्वज्ञेनापि भर्त्रा भगवता मुग्धवदज्ञेनैव उपामन्त्रितः मन्त्रार्थं प्रचोदितः उद्धवः सन्देशमाज्ञां शिरसा आधाय ऊद्ध्वा प्रत्यभाषत प्रत्युत्तरं ददौ इत्यर्थः ॥ ४७ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम् सप्ततितमोऽध्यायः ॥ ७० ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

तत्र सभायां तेषु यादवेषु आत्मीयपक्षेषु जरासन्धस्य जिगीषया हेतुना मुनेस्तद्वचः अगृणत्सु अमन्यमानेषु सत्सु वाचः वचनस्य पेशैरवयवैः स्वाभिप्रेतैरर्थैरुद्धवहृद्यारोपितैः स्मयमानः ऊद्धवं प्राहेति तस्यैव मन्त्रणाभिज्ञतोत्कर्षख्यापनार्थमिति भावः ॥ ४१-४७ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम्। दशमे सप्ततितमः सङ्गतः सङ्गतस्सताम् ॥ ७० ॥

### गूढार्थदीपिनी

तत्र सभायाम्। तेषु यादवेषु जरासन्धविजिगीषया नारदोक्तं हस्तिनापुरगमनम् अगृह्णत्सु सत्सु कृष्णः उद्धवं प्राहेत्यन्वयः। वाचः पेशैः सुन्दरवचोभिः। 'पेशः सौन्दर्यचूर्णयोः' इति धरणिः ॥ ४५ ॥ चक्षुः चक्षुर्वदर्थप्रकाशकः। मन्त्राणां सन्धिविग्रहादीनामर्थमुपयोगं तत्त्वं परिणामं च वेत्तीति तथा। अत्रपक्षद्वये यथा अनुष्ठेयं तथा ब्रूहि। त्वदुक्तौ श्रद्दध्मः श्रद्धां करवामः तदेव करिष्याम च। उभयत्र भविष्यदर्थे लट्लोटौ ॥ ४६ ॥ उपामन्त्रितः पृष्टः। मुग्धवत् अज्ञातवत्। निदेशम् आज्ञाम् ॥ ४७ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां दशमस्कन्धे उत्तरार्द्धे गूढार्थदीपिन्यां सप्ततितमोऽध्यायः ॥ ७० ॥

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः

आत्मपक्षेषु यादवेषु जरासन्धस्य विजिगीषया अगृह्णत्सु मुनिवाक्यममन्यमानेषु वाचःपेशैः पेशलवाग्भिरुद्धवमाह ॥ ४५ ॥ चक्षुःकार्याकार्यद्रष्टा ॥ ४६-४७ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धीये श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे सप्ततितमाऽध्यायार्थप्रकाशः ॥ ७० ॥

### श्रीमद्वल्लभाचार्यकृता सुबोधिनी

एवमुभयोर्दूतनारदयोः स्वस्वार्थं प्रार्थनायां यज्जातं तदाह तत्र तेष्विति। तत्र प्रसङ्गे अन्यतरदेशगमने। तेषु तत्रत्येषु सहायभूतेषु। विजिगीषया गृणत्सु सत्सु जरासन्धवधार्थमेव गन्तव्यमिति लौकिकबुद्धेः प्राथम्यात् नारदेष्टाकरणे सति। उभयसमाधानार्थं स्वस्य मध्यस्थत्वात् उभयमताभिज्ञं उद्धवं ब्रह्मशिवयोरपि नियन्ता सुखदाता च वचनोत्तमः प्राह। स्मयेन तमपि मोहयन् वाङ्माधुर्यात्सादरं शृणुयात्। अन्यथा सर्वेश्वरत्वं जानातीति न शृणुयादपि। नारदहिताकरणे ब्रह्मपक्षहानिः, जरासन्धवधे महादेवपक्षनाश इति यज्ञार्थमेव गमनमायाति। अतोऽङ्गप्रधानयोर्विरोधे क्रीडा सुखदा न भवतीति तदभिज्ञमुद्धवं सर्वसम्मतं बोधयामास ॥ ४५ ॥ भगवद्वाक्यमाह त्वं हि न इति। सर्वज्ञस्य स्वत एव ज्ञात्वा करणमुचितम्, नत्वसर्वज्ञस्य वाक्यात्। व्यामोहकत्वं वा स्यात्। अतस्तत्परिहारार्थमुद्धवं स्वावयवत्वेन निरूपयति त्वं नश्चक्षुरिति। आधिदैविकं परमानन्दरूपम्, चक्षुपश्चक्षुर्वा। तस्यैवायमवतार इति। लोकोक्तिश्च 'मन्त्री ज्ञानचक्षु'रिति। अतो न इति बहुवचनम्। केवलं शास्त्रपरतां वारयितुमाह सुहृदिति। पर्यवसानज्ञानमाह। मन्त्रार्थस्य फलस्य तत्त्वं पर्यवसानं वेत्तीति। अथ अतः कारणादत्रार्थे अनुष्ठेयं ब्रूहि। उभये वयं श्रद्दध्मः। तदेव च करवाम। अन्यतरस्याप्यश्रद्धां करणाभावं च वारयति ॥ ४६ ॥ तत उद्धवो

महामन्त्री तद्वाक्यममोहकं मत्वा उत्तरकथनार्थमुद्युक्त इत्याह इत्युपामन्त्रित इति। उद्धवो हि न युद्धादावुपदिश्यते, ज्ञानांशत्वात्। यदि ज्ञानेऽपि न विनियुज्येत, तस्य भरणं व्यर्थं स्यात्। एतत्सूचयति भर्त्रेति। दोषं निवारयति सर्वज्ञेनापीति। निदेशमाज्ञां प्रति शिरसा आधाय अभाषत अङ्गीकृतवान्, उत्तरं विचार्य वक्ष्यामीति उक्तवानित्यर्थः ॥ ४७ ॥

इति श्रीभागवतसुबोधिन्यां श्रीमल्लक्ष्मणभट्टात्मजश्रीमद्वल्लभदीक्षितविरचितायां दशमस्कन्धविवरणे उत्तरार्धे एकविंशोऽध्यायः ॥ २१ ॥

## श्रीसुबोधिनी-सारः

शुकोक्तिः। तत्र सभायामात्मपक्षेषु यादवेषु जरासंधस्य जेतुमिच्छया नारदोक्तमगृह्णत्सु सत्सु वाचःपेशैः चातुर्यैर्भृत्यमुद्धवं स्मयन् ईषद्धसमानः केशवः प्राह ॥ ४५ ॥ श्रीकृष्णोक्तिः। त्वं हि नोऽस्माकं परमं चक्षुः नेत्रमसि "चारैः पश्यंति राजानः" इत्युक्तेः। मंत्राणामर्थतत्त्वं सिद्धांतं वेत्तीति सुहृत्सखा तथाऽत्र कर्त्तव्येऽस्माभिर्यदनुष्ठेयं कार्यं तत्त्वं ब्रूहि करवाम श्रद्दध्मो वयं तत् ॥ ४ ॥ इत्येवं सर्वज्ञेनापि भर्त्रा श्रीकृष्णेन उपामंत्रितः पृष्टः उद्धवो निदेशं कृष्णाज्ञां शिरसाधाय गृहीत्वा प्रत्युत्तरमब्रवीत् ॥ ४७ ॥

इति श्रीमद्भा० दशमस्कन्धे उत्तरार्धे सुबोधिन्यां टीकायां सप्ततितमोऽध्यायः ॥ ७० ॥

## श्रीविट्ठलरायात्मजश्रीवल्लभकृतलेखः

तत्र तेष्वित्यत्र। नारदेति। दूतवाक्यकरणे नारदहिताकरणात् ब्रह्मपक्षहानिः जरासन्धवधान्महादेवपक्षहानिश्च भवेत्। अतो नारदवाक्यस्यैव कर्तव्यता आयातीत्यर्थः। अङ्गप्रधानयोरिति। दूतवाक्यकरणे अङ्गयोर्ब्रह्ममहादेवयोर्विरोधः, नारदवाक्यकरणे भक्तदुःखनिवृत्तौ विलम्बेन प्रधानस्य स्वरूपस्य विरोधः। स्वरूपस्य भक्तदुःखासहिष्णुत्वादित्यर्थः।

इत्येकविंशाध्यायव्याख्या समाप्ता।

## गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

तत्र सभायां तेषु श्रुतयुधिष्ठिरवृत्तान्तेषु आत्मपक्षेषु यादवेषु जरासन्धविजिगीषया नारदोक्तं हस्तिनापुरगमनमगृह्णत्सु अमन्यमानेषु सत्सु। 'गृणत्सु' इति पाठे मागधविजयार्थमेव गन्तव्यमिति वदत्सु सत्सु केशवः ब्रह्मरुद्रयोरपि वशयिता कृष्णः स्मयन् हासस्य मायात्मकत्वात्तान् मोहयितुं प्रहसन् वाचः पेशैः मधुरैर्वचनैः भृत्यमुद्धवं प्राहेत्यन्वयः ॥४५॥ तद्वचनमाह—त्वमिति। हि यस्मात् त्वं नोऽस्माकं परमं चक्षुः चक्षुवदर्थप्रकाशकः। तत्र हेतुमाह—मन्त्रेति। मन्त्रार्थानां आलोचनसाध्यफलानां तत्त्वं याथात्म्यं वेत्सीति तथा। 'एवंभूतोपि यदि दुष्टः स्यात् तदा तन्मन्त्रेण किं स्यात्' इत्यत आह—सुहृदिति। अथ तस्मात् अत्रेदानीं निवेदितपक्षद्वये यदनुष्ठेयं तद्ब्रूहि। तत्त्वदुक्तिमेव श्रद्दध्मः विश्वसिमः, करवाम च ॥ ४६ ॥ इत्येवं सर्वज्ञेनापि भर्त्रा भगवता मुग्धवत् अज्ञेनेव उपामन्त्रितः विचारार्थं प्रचोदित उद्धवस्तस्य निदेशमाज्ञां शिरसाऽऽधाय बहुमानेन स्वीकृत्य प्रत्यभाषत प्रत्युत्तरं ददौ ॥ ४७ ॥

इति श्रीवल्लभाचार्य-वंश्यगोपालसूनुना। श्रीमन्मुकुन्दरायाणां पादसेवाधिकारिणा ॥ १ ॥
श्रीमद्गिरिधराख्येन भजनानन्दसिद्धये। श्रीमद्भागवतस्येयं टीका बालप्रबोधिनी ॥ २ ॥
रचिता दशमे तत्र सात्त्विकानां निरोधने। विवृतः सप्ततितमः कृष्णाह्निकनिरूपकः ॥ ३ ॥

## अन्वितार्थप्रकाशिका

तत्रेति ॥ तत्र सभायां तेषु श्रुतयुधिष्ठिरवृत्तान्तेषु आत्मपक्षेषु यादवेषु जरासन्धविजिगीषया नारदोक्तं हस्तिनापुरगमनमगृह्णत्सु अमन्यमानेषु सत्सु केशवः कृष्णः स्मयन् हासस्य मायात्मकत्वान्मोहयितुं मन्दं हसन्। शतार्पः। वाचः पेशैः मधुरैर्वचनैः भृत्यमुद्धवं प्राह स्म ॥ ४५ ॥ त्वमिति ॥ हि यस्मात् त्वं नोऽस्माकं परमं चक्षुः चक्षुर्वदर्थकाशकः मन्त्रार्थानां आलोचनसाध्यफलानां तत्त्वं याथात्म्यं परिणामं वा वेत्तीति तथा सुहृच्च अथ तस्मात् तथेत्यपि पाठः। अत्रेदानीं निवेदितपक्षद्वये यदनुष्ठेयं तद्ब्रूहि तत्त्वदुक्तिमेव श्रद्दध्मः विश्वसिमः करवाम च ॥ ४६ ॥ इतीति ॥ सर्वज्ञेनापि भर्त्रा इत्येवं मुग्धवत् अज्ञेनेव उपामन्त्रितः पृष्टः उद्धवः तस्य निदेशमाज्ञां शिरसाऽऽधाय प्रत्यभाषत ॥ ४७ ॥

इति श्रीभागवते महापुराणे दशमस्कन्धेऽन्वितार्थप्रकाशिकायां सप्ततितमोऽध्यायः ॥ ७० ॥

## श्रीगोपालानन्दमुनिविरचितं निगूढार्थप्रकाशव्याख्यानम्

तत्र सभायामेवं नारदेनोक्ते सति तेषु सभायामासीनेषु आत्मपक्षेषु स्वपक्षीयेषु यादवेषु मागधस्य जिगीषया नारदवचनान्यगृणत्सु अमन्यमानेषु सत्सु वाचः पेशैः मधुरवचनैः उद्धवं स्मयन्सन्नाह ॥ ४५ ॥ हे सुहृत् मंत्रार्थानां विचारसाध्यानां

प्रयोजनानां तत्त्ववित् यथार्थवेदिता। त्वं नोऽस्माकं चक्षुः कृत्याकृत्यविवेकदातासि अतोऽत्रोभयविधकार्ये अनुष्ठेयं कर्तव्य ब्रूहि तत्र वयं श्रद्दध्मो विश्वासं कुर्मः तत्करवाम ॥ ४६ ॥ मुग्धवदज्ञेन यथा उपामंत्रितः पृष्टः ॥ ४७ ॥

इति श्रीशुद्धैकांतधर्मप्रवर्त्तकगुरुराजेन्द्रश्रीसहजानंदस्वामिशिष्यगोपालानंदमुनिविरचिते निगूढार्थप्रकाशके श्रीमद्भागवतस्य दशमस्कंध-व्याख्याने प्रयाणमंत्रोनाम सप्ततिततमोऽध्यायः जेतेस पूरणययोः ॥ ७० ॥

## भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

तत्रेति। तत्रैवं नारदेनोक्ते; तेषु आत्मपक्षेषु यादवेषु, विजिगीषया, गृणत्सु, सभायां विश्रुतराजवृत्तान्तयुधिष्ठिर-वृत्तेष्वात्मीययादवेषु प्रथमं मागधविजिगीषामालम्ब्य प्रगृणत्सु सत्स्वित्यर्थः। केशवः श्रीकृष्णः, वाचःपेशैर्मृदुवचोभिः, स्मयन् सन्, उद्धवं भृत्यं, प्राह ॥ ४५ ॥ त्वमिति। हे उद्धव, हि यस्मात्, त्वं, नोऽस्माकं, परमं चक्षुश्चक्षुःस्थानीयः। सुहृत्, मन्त्रार्थ-तत्त्ववित् मन्त्रसाध्यानामर्थानां परिपाकवित्, तथा ततो हेतोरित्यर्थः। अत्र, यत् अनुष्ठेयं, तत् ब्रूहि। ननु बलदृप्ता एते मदुक्तं न स्वीकर्त्तार इत्यत्राह। वयं तत्त्वदुक्तमेव, श्रद्दध्मः, तदेव करवाम च ॥ ४६ ॥ इतीति। सर्वज्ञेनापि, भर्त्रा स्वस्वामिना कृष्णेन, मुग्धवदज्ञेनेव, इतीत्थमुक्तप्रकारेण, उपामन्त्रितः मन्त्रार्थं प्रणोदितः, उद्धवः, निदेशं भगवदाज्ञां, शिरसा, आधाय ऊढ्वा, प्रत्यभाषत उत्तरं ददावित्यर्थः ॥ ४७ ॥

इति श्रीधर्मधुरंधरश्रीधर्मात्मजप्रत्यक्षपुरुषोत्तमश्रीसहजानन्दस्वामिसुतश्रीरघुवीराचार्यसूनुभगवत्प्रसादाचार्यविरचितायामन्व-यार्थावबोधिन्यां भक्तमनोरञ्जन्याख्यायां श्रीमद्भागवतटीकायां दशमस्कन्धोत्तरार्द्धे सप्ततितमोऽध्यायः ॥ ७० ॥

## कृष्णप्रिया

श्रीशुकदेवजी कहते हैं—परीक्षित्! सभा में जितने यदुवंशी बैठे थे, वे सब इस बात के लिये अत्यन्त उत्सुक हो रहे थे कि पहले जरासन्धपर चढ़ाई करके उसे जीत लिया जाय। अतः उन्हें नारदजी की बात पसंद न आयी। तब ब्रह्मा आदि के शासक भगवान् श्रीकृष्ण ने तनिक मुसकराकर बड़ी मीठी वाणी में उद्धवजी से कहा ॥ ४५ ॥ भगवान् श्रीकृष्ण ने कहा—'उद्धव! तुम मेरे हितैषी सुहृद् हो। शुभ सम्मति देनेवाले और कार्य के तत्त्व को भलीभाँति समझने वाले हो, इसीलिये हम तुम्हें अपना उत्तम नेत्र मानते हैं। अब तुम्हीं बताओ कि इस विषय में हमें क्या करना चाहिये। तुम्हारी बातपर हमारी श्रद्धा है। इसलिये हम तुम्हारी सलाह के अनुसार ही काम करेंगे' ॥ ४६ ॥ जब उद्धवजी ने देखा कि भगवान् श्रीकृष्ण सर्वज्ञ होनेपर भी अनजान की तरह सलाह पूछ रहे हैं, तब वे उनकी आज्ञा शिरोधार्य करके बोले ॥ ४७ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां दशमस्कन्धे उत्तरार्धे भगवद्यानविचारे सप्ततितमोऽध्यायः ॥ ७० ॥

[ अकारादिक्रमेण ]

# श्रीमद्भागवतदशमस्कन्धीयपञ्चाशत्तमोऽध्यायतः सप्ततितमोऽध्याय-पर्यन्तश्लोकानुक्रमणिका